कृतं पापं चौरेणात्मापहारिणा" "नैषा तर्केण मतिरापनेया" इत्यादि श्रुतेश्च । अतः "स हैतावानास" "तदात्मानं स्वयमकुरूत" "आत्मैवेदं सर्वं" "यतो वा इमानि भूतानि जायन्ते" इत्यादि श्रुतीनाम् । "जन्माद्यस्य यतः शास्त्रयोनित्वात्" "तत्तु समन्वयात्" इत्यादि सूत्राणाम् । "अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा" "जन्माद्यस्य यतोन्वयादितरतः" इत्यादिस्मृतिप्रमाणैः शुद्धब्रह्मण एव सर्वकर्तृत्वं सर्वभोक्तृत्वम् "अत्ता चराचर ग्रहणात्"। तत्कर्तृत्वं स्वाभाविकमेव न तु शाङ्करमतवन्मायिकमिति । "स एकाकी न रमते स द्वितीयमैच्छत्" इति श्रुतेः "क्रीडार्थमात्मन इदं त्रिजगत् कृतं ते" इति स्मृतेश्च ब्रह्मैव रमणार्थं जगद्रूपेणाविर्भूय तत्र लीलां करोति, स्वयं च अविकृतमेव सत् परिणमते । तत्र दृष्टान्तः कामधेनुचिन्तामणिकल्पवृक्षप्रभृतयः स्पष्टाः। "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" (१।४।२३) इति सूत्रात् ब्रह्म एव जगतः निमित्तसमवायिकारणमिति। "यथा एकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं भवति" अत्र अलीकत्वनिवारणाय "मृत्तिकेत्येव सत्यमिति" उक्तम् । अतः प्रपञ्चो भगवत्कार्यः न तु मायाकार्यः। किन्त्वत्र केचिन्मुग्धाः संसारप्रपञ्चयोः भेदज्ञानशून्याः संसारं प्रपञ्चं च एकमेव मन्यमानाः संसारेण सह प्रापञ्चिकं जगदपि मायाकार्यं कथयन्तः मिथ्या मन्यन्ते तन्नयुक्तम् —

प्रपञ्चो भगवत्कार्यस्तद्रूपो मायया॒ऽभवत् ।
तच्छक्त्याऽविद्ययात्वस्य जीवसंसार उच्यते ।।

*(त.दी.नि. शा.प्र. २७)*

इत्यत्र प्रकाशे "।।अविद्ययेति।। अविद्यापि तच्छक्तिः। मुख्यासु द्वादशशक्तिषु गणनात् । श्रियापुष्ट्या गिरेति वाक्यात् । एवं सति "स वै नैव रेमे, तस्मादेकाकी न रमते स द्वितीयमैच्छत्, स हैतावानासेति" श्रुतौ रमणार्थमेव प्रपञ्चरूपेणाविर्भावोक्तेर्वैचित्र्यं विना तदसम्भवो यतः। तस्माद्धेतोरस्य भगवतः शक्त्या अविद्यया जीवस्य संसार उच्यते न तु जायते। अभिमत्यात्मकत्वात् । असत्त्वेनास्य गणनात्। अज्ञानं भ्रमः असदित्यादिशब्दा अहं ममेति रूपे संसार एव प्रवर्त्तन्ते, न तु प्रपञ्च इत्यर्थः। तस्य ब्रह्मात्मकत्वात्।" अतः सिद्धान्ते "तदनन्यत्वमारम्भणशब्दादिभ्यः" (ब्र.सू. २।१।१४) इति सूत्र न्यायेन जगतो ब्रह्मणश्चाभेदः। प्रापञ्चिकजगतः मायिकत्वं नास्ति किन्तु ब्रह्मणः आधिभौतिकस्वरूपं जगत्, ब्रह्मणः आध्यात्मिकं स्वरूपमक्षरब्रह्म, तथैव आधिदैविकं स्वरूपं परब्रह्म। एवमनेन प्रकारेण ब्रह्म जगतोरनन्यत्वमिति । कार्यस्य कारणानन्यत्वं, मिथ्यात्वं न भवति ।

अतः एकस्यैव शुद्धब्रह्मणः आधाराधेयत्वं कारणकार्यत्वादिकं स्वीकर्त्तव्यम्। तथा च मायावादिमते तु भगवान्व्यासः "अथातो ब्रह्मजिज्ञासा" इति निर्गुणनिराकारब्रह्मविषयकजिज्ञासां प्रतिज्ञाय "जन्माद्यस्येत्यादि सूत्रैर्जगत्कर्तृत्वविशिष्टं ब्रह्म प्रतिपादयति । अतः भवद्विवक्षित-निर्विशेषब्रह्मजिज्ञासाप्रतिज्ञानन्तरं सविशेषब्रह्मप्रतिपादनात् व्यासप्रतिज्ञाहानिरूपमहान्दोषापत्तिः, सूत्रेषु च कृतहान्यकृताभ्यागमदोषप्रसङ्गः। तथा चाविद्योपाधिस्वीकारे अविद्याब्रह्मणोरुपाध्युपाधेय-योरुभयोरनादित्वेनोपहितस्याप्यनादितया तादृशमायोपहितस्यैव च त्वन्मते कर्तृत्वेन स्वीकारादनवरतं सर्ग एव स्यान्न प्रलयः कदाचन ।

तथा चात्र मायावादी प्रष्टव्यः। यद्भवताऽत्र एतादृशी मायिकी कार्यकारणादि व्यवस्था कुत्रतः कृता, यदि श्रुतितः तर्हि तु "अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः" इत्यादिः "यो ब्रह्माणं विदधाति पूर्वं" "यो वै वेदांश्च प्रहिणोति तस्मै, वेदो नारायणः साक्षात् स्वयम्भूरिति शुश्रुम" "वेदैश्च सर्वैरहमेव वेद्यः" इत्यादि श्रुतिस्मृतिभ्यां वेदः किमु स्वस्यैवाज्ञानकल्पितत्वं वदति ?। तथा च त्वन्मतानुसारेण तु प्रथमं वेदानां पारमार्थिकसत्त्वं ज्ञात्वा तदनन्तरञ्च श्रुत्यादीनामौदासीन्येन सम्यगध्ययनेन च श्रुतेः श्रुतित एवाज्ञानकल्पितत्त्वं श्रुत्वा गुरूपदेशादिकैः "न माता पिता वा न देवा न लोका न वेदा" तथा च "न शास्ता न शास्त्रं न शिष्यो न शिक्षा" इत्यादि प्रमाणैः असत्तुल्यैः परमार्थरूपं ब्रह्मज्ञानं कथं फलिष्यतीति विचार्य न कोऽपि प्रवर्तेत । अप्रवर्त्तनेन च वेदमार्गोच्छेदापत्तिः। अतः समग्रवेदस्य प्रामाण्यमविशेषेणैव ग्राह्यम् । वस्तुतस्तु ब्रह्मणोऽलौकिकत्वादचिन्त्यैश्वर्यत्वाच्छुत्येकसमधिगम्यत्वाच्च विशेषतो लोकयुक्तीनां तत्राप्रवेश एवेत्युक्तम् । तस्माच्छुद्धं ब्रह्मैव जगन्निमित्तसमवायिकारणमिति सिद्धम् ।

सिद्धान्तस्तु - **उत्पत्तिस्थितिनाशानां जगतः कर्तृ वै बृहत् ।**
**वेदेनबोधितं तद्धि नान्यथा भवितुं क्षमम् ।।** (अ.भा.का. १।१)

**।। सिद्धान्ते जगत्संसारयोर्भेदः ।।**

सिद्धान्ते प्रपञ्चः - जगद् भिन्नः, अहंताममतात्मकः संसारः भिन्नः। अयं सूक्ष्मभेदः केनाप्याचार्यैः न कृतः। एतयोः पृथक्त्वं श्रीवल्लभाचार्यचरणैरेव श्रुतिस्मृतिसूत्रभागवतवाक्यानां समन्वयेन शास्त्रीययुक्त्योपपाद्य प्रकटीकृतम्। जगत्संसारयोः लक्षणम् पृथक् । भगवदिच्छया चिदानन्दांशतिरोभावेन सदंशादाविर्भावितं यत्तज्जगदिति कथ्यते शास्त्रेषु । अविद्यया जीवेन कल्पितोऽहंताममातात्मकः यः सः संसार इति उच्यते शास्त्रेषु । अस्या अविद्यायाः पञ्चपर्वाणि—

**स्वरूपाज्ञानमेकं हि पर्व देहेन्द्रियासवः ।**
**अन्तःकरणमेषां हि चतुर्धाऽध्यास उच्यते ।**
**पंचपर्वा त्वविद्येयं यद्बद्धो याति संसृतिम् ।।**

*(शा.प्र.का. ३६)*

इत्याचार्यवचनात् — स्वरूपाज्ञानं, देहाध्यासः, इन्द्रियाध्यासः, प्राणाध्यासः अन्तःकरणाध्यासश्चेति पञ्चपर्वाणि । अनयाऽविद्यया बद्धो जीवः संसृतिं नाम संसारं प्राप्नोति । अतः संसृतेः अविद्याकल्पितत्वाज्ज्ञानेन नाशः। ब्रह्मरूपत्वाज्जगतस्तु न नाशः। ननु द्वैतमाविद्यकं मिथ्या इति चेन्न । "स एकाकी न रमते स द्वितीयमैच्छत्" "तदात्मानं स्वयमकुरुत" इत्यादिश्रुतेः द्वैतं नाविद्यकं, ब्रह्मेच्छया उद्भूतत्वात्, किन्तु द्वैतज्ञानमाविद्यकम् । अनेन द्वैतज्ञानेन जीव एव बध्यते न तु ब्रह्म । अत्र अविद्यायाः ब्रह्मगतत्वं न सम्भवति । तत्र प्रथमन्तु मायावादे उपाध्युपाधेययोरविद्याब्रह्मणोर्द्वयोरनादित्वेन तयोर्मध्ये

सम्बन्ध: क: त्वया स्वीक्रियते ? तत्र संयोगादिसम्बन्धे स्वीक्रियमाणे तयोर्विभुत्वसामान्यात् नित्यसम्बन्धाऽऽपत्त्याऽनिर्मोक्षप्रसङ्गः। तथा च नाप्यध्यास: तस्याप्यभावात् । शुद्धब्रह्मणि अविद्योपाधिसम्बन्ध: सर्वथाऽशक्यवचन: तस्य अज्ञत्वापादकत्वात् । अत: अविद्याया: जीवगतत्वमेव न तु ब्रह्मगतत्वमिति—

**"एकस्यैव ममांशस्य जीवस्यैव महामते ।**
**बन्धोऽस्याऽविद्ययाऽनादिर्विद्यया च तथेतर: ।।"**

*(श्रीमद्भागवत)*

तथा च—"अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तव:" इत्यत्र जीवोत्पत्तौ अविद्याया: न कारणत्वं किन्तु भगवदिच्छयारमणार्थमानन्दांशतिरोभावे सोऽविद्यया बध्यते। तत्रापि भगवदिच्छैव । तदा स: संसारीत्यभिधीयते । एवमहम्ममतात्मक: संसार: अविद्याजन्य: अत: ज्ञानेन नश्यति। तथा हि। जगत: निमित्तसमवायिकारणं ब्रह्म । संसारस्य कल्पितत्वात् अविद्या तन्निमित्तकारणम् । संसारस्य मिथ्यात्वेन स ज्ञानोत्पत्ते: प्राक् अवतिष्ठते । अतएव मुक्तौ तल्लय:— नाश:, न तु प्रपञ्चस्येति, भगवत्कार्यत्वात् ।

**"संसारस्य लयो मुक्तौ न प्रपञ्चस्य कर्हिचित्"**

*(शा.प्र.का. २८)*

अत: संसार निवृत्तौ जीवन्मुक्ति:। तत्र देहेन्द्रियादीनामध्यासमात्रस्य निवृत्ति: न तु देहेन्द्रियादीनाम् । यतस्ते जगदन्त: पातिन:। सुखदु:खाद्यधिष्ठानं संसार: न तु जगत् । तत्र दृष्टान्त: जीवन्मुक्ता:। एतादृशा: बहवो जीवन्मुक्ता: अस्यां भारतभूमौ संजाता, येषां देहेन्द्रियादीनां सत्यत्वेपि न सुखदु:खानुभव:। अत: जगत्सत्यं संसारो मिथ्या इति जगत्संसारयोर्भेद: श्रीवल्लभाचार्यैरेव प्रकटित: इत्यलं विस्तरेण ।

## ।। सिद्धान्ते जीवस्वरूपम् ।।

**"जीवस्त्वाराग्रमात्रो हि गन्धवद् व्यतिरेकवान्"**

*(शा.प्र.का. ५७)*

"स ईक्षां चक्रे" "एकोऽहं बहुस्यां प्रजायेय" "स एकाकी न रमते" "स द्वितीयमैच्छत्" "तदात्मानं स्वयमकुरुत" इत्यादिश्रुते ब्रह्म स्वेच्छयैव क्रीडनार्थं स्वकीयमानन्दाशं तिरोभावयित्वा जीवस्वरूपं गृह्णाति । एवं बहुभवनेच्छया ब्रह्मण: सकाशाद् "यथाग्ने: क्षुद्रा: विस्फुलिङ्गा: व्युच्चरन्ति" तथैव सूक्ष्मपरिच्छिन्ना: चित्प्रधाना: जीवांशा: निर्गच्छन्ति । तस्य जीवस्य परिमाणमाराग्रमात्रोऽणु: "आराग्रमात्रो ह्यपरोऽपि दृष्ट:" इति श्रुते:। ननु आराग्रमात्रत्वे कथं सर्वदेहव्यापीति प्रश्ने—गन्धवद् व्यतिरेकवानिति । यथा पुष्पगन्ध: पुष्पापेक्षयाऽधिकदेशं व्याप्नोति तथैवाणुमात्रमपि चैतन्यं सर्वदेहव्यापीत्यर्थ:। अत: "ममैवांशो जीवलोके जीवभूत: सनातन:" "अंशो नानाव्यपदेशात्" इत्यादि प्रमाणाज्जीवो ब्रह्मणोंश एवेति । ननु जीवस्याशंत्वस्वीकारे ब्रह्म सावयवं भवेज्जीवस्यावयववत्वादत: प्रतिबिम्बवादानुसारेण जीवस्थिति:

स्वीकर्तव्येति चेन्न। ब्रह्म प्रतिबिम्बो जीव इति पक्षस्तु सर्वथा न यौक्तिकः। प्रतिबिम्बवाद-स्वीकारे ब्रह्मणि दृष्टृत्वापत्तिः, जीवस्य प्रतिबिम्बत्वे च बिम्बप्रतिबिम्बयोरेकत्र स्थितिर्न भवतीति, श्रुतौ तयोः जीवब्रह्मणोः "समानं वृक्षं परिषस्वजाते" इति वाक्येन एकत्र स्थितिप्रतिपादनाच्छ्रुतिव्याकोपः अतः जीवस्तु ब्रह्मणोंश एव। यतोऽत्र श्रुतीनामेव प्रामाण्यं ग्राह्यम्। न तु लौकिकयुक्तीनाम्। उक्तञ्चाचार्यैः —

**अलौकिको हि वेदार्थो न युक्त्या प्रतिपद्यते।**
**तपसा वेद युक्त्या तु प्रसादात् परमात्मनः॥**

*(अणु भा०का० १।१)*

अत्र हि वेदार्थस्यालौकिकत्वात्तस्य युक्त्या न प्रतिपत्तिः। कथं तर्हि प्रतिपत्तिरिति प्रश्ने—वेदयुक्त्या, न्यग्रोधफलमाहरेत्यादिरूपया वेदोक्तयुक्त्या प्रतिपत्तव्यमिति। अत्र आचार्याः "नहि स्वबुद्ध्या वेदार्थं परिकल्प्य तदर्थं विचारः कर्तुं शक्यः ब्रह्म पुनर्यादृशं वेदान्तेष्ववगतं तादृशमेव मन्तव्यम्। अणुमात्रान्यथाकल्पनेऽपि दोषः स्यात्"। अतः विस्फुलिङ्गन्यायेन जडजीवानां निर्गमनम्। जडनिर्गमने चिदानन्दांशयोस्तिरोभावः। जीवनिर्गमने आनन्दांशतिरोभावः। एवं सच्चिदात्मकं उभयं ब्रह्माभिन्नं ब्रह्मरूपञ्च। अत एक विज्ञानेन सर्वविज्ञानमिति श्रुतिप्रतिज्ञा। नन्वेवमंशभूतस्य जीवस्य दुःखमशिनः ब्रह्मणोऽपि स्यादिति चेन्न। "अनश्नन्नन्यो अभिचाकशीति" "एकस्तथा सर्वभूतान्तरात्मा, न लिप्यते लोकदुःखेन बाह्यः" "न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा" इत्यादि श्रुतिस्मृतिप्रमाणैर्ब्रह्मणो निर्लेपत्वमुद्घोष्यते यतः सूर्यप्रकाशस्थघटपटादिवस्तुनो दोषेण यथा सूर्य प्रकाशो न दुष्यते तथैव जीवस्थ दुःखादि दोषैरंशि ब्रह्मापि न लिप्यते। अतः जीवब्रह्मसम्बन्धविचारे ब्रह्मणोंऽश एव जीव इति निर्णीयते। कुतः "अंशो नानाव्यपदेशात्" इति सूत्रात्—अत्र विद्वन्मण्डने प्रभुचरणाः आज्ञापयन्ति, "नानाव्यपदेशाद्, नानाविधो यो व्यपदेशः। क्वचिद्ब्रह्मत्वेन क्वचिदुत्पन्नत्वेन, क्वचिद्ज्ञत्वेन, क्वचिच्छिन्नद्रूपत्वेन, क्वचिदीशितव्यत्वेन, अणुत्वेन च व्यापकत्वेन च, निरूपणादेकस्यैव विरूद्धधर्माश्रयत्वं ब्रह्मातिरिक्तस्य न सम्भवतीति ब्रह्मांश एव जीव इत्यर्थः। अथवा नाना व्यपदेशाद्भेदेन व्यपदेशात्तथेत्यर्थः" तात्पर्यं जीवस्य ब्रह्मोपाधिकत्वमौपचारिकमंशत्वमङ्गीकृत्य प्रतिम्बिम्बत्वेन अलीकत्वं न कल्पनीयम्। ब्रह्म वेदैकसमधिगम्यम् अतः यथा तत्र निरूपितं तथैव मन्तव्यम् "नैषातर्केण मतिरापनेया" "अलौकिकास्तु ये भावा न तास्तर्केण योजयेत्" इत्यादि श्रुतेः स्मृतेश्च।

ब्रह्म पूर्णप्रकटानन्दम् जीवस्तु तिरोहितानन्दः। यदा भगवत्कृपया इच्छया च जीवे भगवान् आनन्दाशमाविर्भावयति तदोभयोर्जीवब्रह्मणोरभेदः। अत्र जहदजहल्लक्षणादि-कानामावश्यकता नास्ति "सर्वे वेदायत्पदमामनन्ति" इति श्रुतेः सर्ववेदा ब्रह्मणोऽनवगाह्य-माहात्म्यमेव बोधयितुं प्रवृत्ताः। यदा जीवः तिरोहितानन्दः तदा तत्र ब्रह्मत्वं नास्ति "अधिकं तु भेद निर्देशादिति" (२।१।२२) सूत्रात्। अत्र भाष्यम् "तु शब्दः पक्षं व्यावर्तयति। यदि ब्रह्म तावन्मात्रं भवेत् तदायं दोषः। तत् पुनर्जीवाज्जगतश्चाधिकम्। कुतः?। भेदनिर्देशाद्"।

अनेन स्पष्टं भवति यत् तत्साम्यमाधिक्यराहित्यं अस्ति । "नतत्समश्चाप्यधिकश्चदृश्यते" इति श्रुतेः। एवं चाशांशिभावेनैव जीवब्रह्मणोरभेदः श्रुतौ पठ्यते । अत्र मायावादिनः "तत्त्वमसी" त्येतन्मात्रं महावाक्यं मन्वानाः जीवमेव ब्रह्मेति कथयन्ति । अत्र प्रसङ्गप्राप्तः सर्वमतसंग्रहश्लोकः —

**"केचित्तत्त्वमसीति वाक्यविषये तत्त्वम्पदे लक्षणां,**
**केचित्तत्रङसो लुकं विदधते भाष्यं तु केचिज्जगुः ।**
**केचिच्चिद्विषयादभेदमपरे छिन्दन्त्यतत्त्वं पदं,**
**सिद्धान्ते तु सुवर्णवज्जगदिदं ब्रह्मैव जीवस्तथा ।।"**

अस्यार्थस्तु केचित्=शङ्कराचार्याः तत् पदेन सर्वज्ञं ब्रह्म त्वम्पदेन अल्पज्ञं जीवस्तयोरभेदो न सम्भवत्यतः 'सोऽयं देवदत्त' इति वज्जहदजहल्लक्षणां स्वीकुर्वन्ति । केचिद् रामानुजमाध्वशैवाः तत्सम्बन्धीत्वमिति मन्यमानाः ङसो लुकं विदधते । तस्य त्वमसि । तत्सम्बन्ध्यसीति । केचिद् निम्बार्काश्चित्वसाधर्म्यादभेदः। अपरे माध्वैकदेशिनः 'अतत् त्वमसि' अर्थात् जीवोऽसि इति पदं छिन्दन्ति । सिद्धान्ते यथा सुवर्णांशाः सुवर्णरूपाः तथा ब्रह्मणोंऽशा ब्रह्मरूपाः। ब्रह्मणः सदंशः जगत् चिदंशो जीवः इति । वस्तुतः मतान्तरवत् 'तत्त्वमसी' त्येतन्मात्रं महावाक्यमिति न किन्त्वखिलं प्रपाठकम् ग्राह्यम् । वेदानामर्थानुसंधानं प्रकरणेन कार्यम् "प्रकरणाच्च" इति सूत्रात् प्रकरणानुरोधेनैव अर्थः ग्राह्यो न तु प्रकरणं हित्वा स्वानुकूलोऽर्थः कार्य इति ।

अस्य जीवस्य त्रिविधाऽवस्था भवति। शुद्धः मुक्तः संसारीति भेदात् । व्युच्चरणोत्तरमानन्दांशतिरोभावे सति अविद्यासम्बन्धात्पूर्वा याऽवस्था तस्यामवस्थायां शुद्धजीव इति कथ्यते। मायासम्बन्धरहितत्वं शुद्धत्वम् । "पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्ध विपर्ययौ" (३।२।५) इति तत्वसूत्रात् । परस्य भगवतोऽभितोध्यानं नाम सर्वतो भोगेच्छा तेनानन्दांशः तिरोहितः येन जीवभावः । ततश्चतुर्णामैश्वर्यवीर्ययशश्रीरूपाणां धर्माणां तिरोभावाद्बन्धः, ज्ञानवैराग्यतिरोभावाद्विपर्ययः। तदा भगवान् केषुचिज्जीवेषु मुक्त्यधिकाररूपं दैवत्वं सम्पादयति तदैव जीवाः मुक्तियोग्याः भवन्ति। पञ्चपर्वात्मिकयाऽविद्यया बद्धः जीवः संसृतिं याति । ततः संसारधर्माननुभवन् भगवत्कृपया सत्संगादिना पञ्चपर्वात्मिकां विद्यां प्राप्य परमानन्दलक्षणभूतां, मुक्तिं प्राप्नोति ।

**वैराग्यं सांख्ययोगौ च तपो भक्तिश्च केशवे ।**
**पञ्चपर्वेति विद्येयं यया विद्वान् हरिं विशेत् ।।**

*(शा.प्र.का. ४८)*

इति वाक्यात् यावत् विद्यां न प्राप्नोति तावत् संसारीति व्यवह्रियते । तदग्रे मुक्त इति । मुक्ता अपि द्विविधाः जीवन्मुक्ताः मुक्ताश्चेति । जीवन्मुक्ताः सनकादयः। मुक्ताः अक्षरब्रह्मप्राप्ताः। अत्रापि मूलतः जीवाः द्विविधाः। दैवाः आसुराश्चः। तत्र दैवाः द्विविधाः, मर्यादामार्गीयाः पुष्टिमार्गीयाश्च । एतयोः मुक्तौ भेदः वर्त्तते तं चाग्रे दर्शयिष्यामः ।

## ।। अविकृतपरिणामवादः ।।

श्रीमदाचार्यचरणैर्हि साकारब्रह्मवादः प्रामुख्येन स्वसिद्धान्तत्वेन संस्थापितः। प्रस्थानतः प्रमेयतः साधनतः फलतः सर्वशास्त्रतश्च ब्रह्मातिरिक्तपदार्थाभावात् सर्वसमन्वयो ब्रह्मण्येवेति सिद्धान्तः। तच्च कनकमृत्कामधेनुचिन्तामणिकल्पवृक्षादिरिव स्वयमविकृतमेव स्थितं सत् जगद्रूपेण परिणमतेति सिद्धान्तः। यथा कनकं कटककुण्डलादिपरिणामदशायां कनकत्वान्न विक्रियते तथैव ब्रह्मापि जगद्रूपेण परिणामेप्यविकृतम् । अयमेव श्रुतिस्मृतिसूत्र-श्रीभागवतप्रतिपादितः अविकृतपरिणामवादः। एकमेवाविकृतं कारणं नानाकार्यरूपं भवति । तेनैव एकविज्ञानेन सर्व विज्ञानं भवति । एक विज्ञानेन सर्वविज्ञानरूपवेदान्तानां प्रतिज्ञा तदैव सफला भवति यदा शुद्धब्रह्म एव जगत्कारणं (निमित्त समवायिकारणं) भवेत्। अयं वादः वैदिक इति राद्धान्तः। अतः अविकृतपरिणामवादसाधकानि वचांसि अधुना किंचित् प्रदर्श्यन्ते ।

श्रुतिषु "एकं सद्विप्रा बहुधा वदन्ति" "असद्वा इदमग्र आसीत्ततो वै सदजायत" (आभ्याम् श्रुतिभ्याम् जगदव्यक्तं व्यक्तमभूदित्युक्तम्भवति) "ब्रह्म विश्वमिदं जगद्" "तमेव भान्तमनुभान्ति सर्वं तस्य भासा सर्वमिदं विभाति" सर्वकामः सर्वगन्धः सर्वरसः सर्वकर्त्ता सर्वभोक्ता य स सर्वविद" "परास्य शक्तिर्विविधैवश्रूयते स्वाभाविकी ज्ञानबलक्रिया च" (आभिः श्रुतिभिः सर्वकर्तृत्वादीनां स्वाभाविकधर्मत्वं उक्तम्) "अणोरणीयान्महतो महीयान्" (अनया श्रुत्या ब्रह्मणो विरुद्धधर्माश्रयत्वं बोध्यते) "एकमेवा द्वितीयं ब्रह्म, एकोऽहं बहुस्यां प्रजायेय, स एकाकी न रमते स द्वितीयमैच्छत्", "स हैतावानास" (आभिः श्रुतिभिः अविकृतपरिणामवादो बोध्यते) "एतदात्म्यमिदं सर्वम् तत्सत्यं स आत्मा तत्वमसि" "एष ह्येवानन्दयति" "एकोदेवो सर्वभूतेषु गूढः" (आभिः श्रुतिभिः सर्वान्तर्यामित्वम्) "सर्वं खल्विदं ब्रह्म" "कथमसतः सज्जायेत" 'तत्सत्यमित्याचक्षते" इत्यादीनि ।

स्मृतिषु = "अहं सर्वस्यजगतः प्रभवः प्रलयस्तथा" मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम्" "अहं बीजप्रदः पिता" "वासुदेवः सर्वमिति" इत्यादीनि ।

सूत्राणि = "जन्माद्यस्य यतः शास्त्रयोनित्वात्" (१।१।२) ततु समन्वयात् (१।१।३) आत्मकृतेः परिणामात् (१।४।२६) योनिश्च हि गीयते (१।४।२३) तदनन्यत्वमारम्भणशब्दादिभ्यः (२।१।१४) सर्वधर्मोपपत्तेश्च (२।१।३७) प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः (३।२।२२) प्रकाशाश्रयवद्वा तेजस्त्वात् (३।२।२८) इत्यादीनि ।

श्रीभागवते = "जन्माद्यस्य यतोन्वयादितरतः०" "त्वय्यग्र आसीत्०" "क्रीडार्थमात्मन इदं त्रिजगत् कृतं ते०" "विश्वस्य कर्त्ता भुवनस्य गोप्ता०" इत्यादीनि ।

इदमत्रावधेयम् = अन्यैः आचार्यशङ्करप्रभृतिभिराचार्यैः स्वस्वसिद्धान्तसाधने प्रमाणत्वेन प्रस्थानत्रयी स्वीकृता उपनिषद्, भगवद्गीता व्याससूत्राणि च । किन्तवस्माकमाचार्यैः प्रमाणत्वेन प्रस्थानचतुष्टयम् स्वीकृतम् तच्च —

"वेदाः श्रीकृष्णवाक्यानि व्याससूत्राणि चैव हि ।
समाधिभाषा व्यासस्य प्रमाणं तच्चतुष्टयम् ।।
उत्तरं पूर्वसन्देहवारकं परिकीर्त्तितम् ।।"

(शा.प्र.का.७।८)

अत्र प्रकाशः ="वेदाः सर्व एव काण्डद्वयस्थिताः। अर्थवादादिरूपा अपि । स्मृतित्वेन कृष्णवाक्यानि वेदत्वेऽपि पृथगुक्तानि। व्याससूत्राणि चकाराज्जैमिनिसूत्राणि च । एवकारेण व्याससूत्राविरोधेनैव तदङ्गीकरणम् । ..........व्यासस्य समाधिभाषा भागवतम् । ..........यावत् समाधौ स्वयमनुभूय निरूपितं सा समाधिभाषा । एतच्चतुष्टयमेकवाक्यतापन्नं प्रमाजनकमित्यर्थः।"

आचार्यैः श्रीभागवतस्यापि प्रस्थाने ग्रहणं कृतम् । अत्र उत्तरोत्तरं पूर्वपूर्वसन्देह-वारकम् । अर्थात् सर्वसन्देहवारकत्वं श्रीमद्भागवते फलितम् । श्रीभागवतस्य "निगम कल्पतरोर्गलितं फलम्" इत्यनेन फलरूपत्वादिति।

## ।। आविर्भावतिरोभावः ।।

तदेतदक्षयं नित्यं जगन्मुनिवराऽखिलम् ।
आविर्भावतिरोभावजन्मनाशविकल्पवत् ।।

(विष्णु०पु०अं०प्र०)

वस्तुतः आविर्भावतिरोभावौ ब्रह्मणः शक्ती । "आविर्भावतिरोभावौ शक्तिर्वै मुरवैरिणः" एते शक्ती ब्रह्मतोऽभिन्ने ब्रह्माधीने च । "सर्वं खल्विदं ब्रह्मेति" श्रुतेः सर्वस्य ब्रह्मरूपत्वेन ब्रह्म स्वेच्छया जगद्रूपेणाविकृतपरिणामं प्राप्य पुनः स्वेच्छयैव सर्वमन्तर्भावयति । इमावेवा-विर्भावतिरोभावौ उत्पत्तिविनाशावित्युच्येते लोकैः। वस्तुतस्तुः="नासतो विद्यते भावो नाभावो विद्यते सतः" (गीता) इति वाक्यात् असतः भावः नास्ति सतः अभावः नास्ति । ब्रह्मवादे सर्वत्र ब्रह्मस्फूर्त्याऽभावस्य प्रश्न एव नास्ति । ननु तदा भावित्वेन भूतत्वेन वस्तुनोः सत्ता न स्यात् तथा च घटादेः प्रागभावप्रध्वंसाभावान्योन्याभावात्यन्ताभावादि निषेधात् सर्वव्यवहा-रोच्छेदः। इति चेन्मैवम् । सर्वत्र भगवदिच्छाया एव नियामकत्वात् —

"एवं सति यत्कालावच्छेदेन सर्वेषां मिथोऽनुभवाविषयत्वं भगवदभिमतं स प्रलयकाल इति निगद्यते। यदवच्छेदेन सर्वेषां मिथोऽनुभवविषयत्वं तथा स सृष्टिकाल इत्युच्यते। सर्वत्र विशिष्टेच्छैव नियामिकेति सर्वमनवद्यम्"। (विद्वन्मण्डने)

एवं च निर्गुणमविकृतं नित्यशक्तिमद्ब्रह्माविर्भावतिरोभावाभ्यामक्षरजीवजगद्रूपैः स्वेच्छया क्रीडति इति । अतः प्रागभावादयः सर्वे अत्रैव अन्तर्निहिताः सर्वस्य ब्रह्मात्मकत्वसिद्धान्तेऽत्यन्ताभावाभावः । "एवं सत्यस्मिन्कालेऽस्मिन्देशे इदंकार्यमेवं भवत्वितीच्छाविषयत्वमाविर्भावः तदा तत्र तन्मा भवत्वितीच्छा विषयत्वं तिरोभावः"। (विद्वन्मण्डने)

अतः एवोच्यते "अनुभवविषयत्वयोग्यता आविर्भावः। तदविषयत्वयोग्यता तिरोभावः। ते च वस्तुसत्त्वेनैवावच्छिद्येते । न ह्यलीके ते सम्भवतः तयोर्धर्मत्त्वेन निराश्रयत्वासम्भवात्"। (विद्वन्मण्डने)

तस्मात् "पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यमि" त्यादिश्रुतेः भगवत्कार्यरूपप्रपञ्चस्यापि ब्रह्मात्म त्वे नावगमात्पुरुषस्य नित्यत्वेन तदात्मकस्यापि नित्यवर्तमानत्वेन स्थितत्त्वाज्जगतः उत्पत्तिनाशौ आविर्भावतिरोभावाभ्यामेव संगच्छेते । अतः आविर्भावतिरोभावेनैव जगतो जन्मनाश इति । जन्म आविर्भाव वाचकः नाशः तिरोभाववाचकः। "आत्मत आविर्भावतिरोभावौ" इति छान्दोग्यश्रुतेः एतयोराविर्भावतिरोभावयोरनित्यत्वादिकं न शङ्कनीयमिति ।

## ।। ब्रह्मणः विरुद्धधर्माश्रयत्वम् ।।

ननु ब्रह्मणि सर्वधर्मयुक्तत्वस्वीकारे तत्र विरूद्धधर्माणामपि समावेशात् एकमेव वस्तु एकस्मिन्नेव समये एककालावच्छेदेन द्विधा भवितुं न शक्नोत्यतः निर्धर्मकं निर्विशेषं निराकारमेव ब्रह्म स्वीकार्यम्, तत्तु केवलं मायावशात्सगुणं साकारं प्रतिभासत इति चेन्न। केवलश्रुतिप्रतिपाद्ये ब्रह्मणि केवलयुक्त्युपयोगस्यानुपयुक्तत्वाच्छ्रुतौ च "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इत्यादिना ब्रह्मणि धर्मान्निषिध्य पुनस्तत्प्रकरणे एव "आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन" इत्यादिना आनन्दधर्मस्य कथनम् । अत एव व्याससूत्रे "दर्शनाच्च" इति सूत्रात् भगवति सर्वे विरुद्धधर्माः दृश्यन्ते अतः ब्रह्मणः सर्वविरुद्धधर्माश्रयत्वं श्रुतिस्मृतिप्रत्यक्षसिद्धम् । तथा च "प्रकृतैतावत्त्वं हि प्रतिषेधति ब्रवीति च ततो भूयः" (३।२।२२) इत्यनेन परमार्थतः शास्त्रतः विरोधपरिहारं कृत्वा युक्त्याऽपि विरोधपरिहारः क्रियते । ब्रह्मणि प्रकृतैतावत्त्वं नाम प्राकृतधर्मान्निषिध्य ततः तदनन्तरं भूयः पुनः अप्राकृतधर्मान् ब्रवीति इति । एवं च ब्रह्मणि सर्वे अप्राकृताः अलौकिकाः विरुद्धा अपि धर्माः सन्ति । किन्तु ते स्वाभाविका एव न तु मायिकाः। "उभयव्यपदेशादहि कुण्डलवत्" (३।२।२७) प्रकाशाश्रयवद्वा तेजस्त्वात्" (३।२।२८) इत्यादिना ब्रह्मणि विरुद्धधर्मवत्वस्वीकारः। ब्रह्मणि विरुद्धधर्मवत्वन्तु श्रुति सिद्धमेवास्ति । "अणोरणीयान्महतो महीयान्" "समो नागेन समो मशकेन" "न तत्समश्चाभ्यधिकं तु दृश्यते" इत्याद्यनेकैः शास्त्रवाक्यैः अनवगाह्यमाहात्म्ये ब्रह्मणि सर्वे विरुद्धधर्मा सहजतया विराजन्ते। एकस्मिन्समये एककालावच्छेदेन ब्रह्म द्विधा भवितुमपि शक्नोति तथा च एककालावच्छेदेन एकमेव ब्रह्म अनेकत्रस्थातुमपि शक्तम् । यथा षोडशसहस्रमहिषीनामन्तःपुरे । अयमनुभवः श्रीनारदेन प्रत्यक्षीकृतः। अतः नारदानुभवप्रामाण्यादपि ब्रह्म विरुद्धसर्वधर्माश्रयः, कर्तुं अकर्तुं अन्यथा कर्तुं समर्थम् एवञ्च लोकेऽपि विरुद्धदयामारकत्वादीनि विषयभेदेनैकस्मिन् क्षणे एकस्यामेवव्यक्तौ प्रतीयन्ते तदाऽलौकिके किमु । अत्र श्रीपुरुषोत्तमचरणाः "एवञ्च शब्दबलविचारेण विरुद्धसर्वधर्माश्रयो ब्रह्मेति निर्णयः। श्रुत्युक्तयुक्त्या विचारे तु लौकिकधर्मशून्यमलौकिकसर्वधर्मयुक्तमिति निर्णयः। अर्थबलविचारे तु विरुद्धसर्वधर्मरूपमिति निर्णय इति बोधनार्थमत्र त्रेधा विचारितम् ।" अतो ब्रह्मणो विरुद्धधर्मवत्वं न दूषणाय अपितु भूषणाय भवति। एवमेव ब्रह्मणि वैषम्यनैर्घृण्यादयः

न सम्भवति आत्मसृष्टत्वादिति उच्यते च "आत्मसृष्टेर्न वैषम्यं नैर्घृण्यं चापि विद्यते" इत्याचार्याः॥

## ॥ भगवल्लीला ॥

किमु भगवल्लीलायाः मायिकत्वमुत न वेति विचारे भगवत्येकनिष्ठत्वात् सच्चिदानन्दात्मके ब्रह्मण्यनन्यत्वेन स्थितत्वात् स्वरूपात्मकत्वान्न मायिकत्वमिति। भगवल्लीला किमपि प्रयोजनमधिकृत्य न प्रचलति "न प्रयोजनवत्त्वात्" (ब्र.सू. २।१।३२) इति सूत्रन्यायेन। किन्तु "लोकवत्तु लीला कैवल्यम्" (ब्र.सू. २।१।३३) इति सूत्रात् सा लीलैव कैवल्यं मोक्षः। तस्याः कीर्त्तनेऽपि मोक्षः। इति भाष्ये प्रतिपादनाल्लीलायाः स्वरूपात्मकत्वाद्भगवत्कृतत्वादलौकिकत्वाच्च न सर्वथा मायिकत्वमिति वाच्यम्। अस्याः लीलायाः लक्षणं यथा सुबोधिन्याम् = "कौतुकाधिष्ठितेन अनायासत्वेन क्रियमाणं कर्म लीला" यद्वा "अनायासेन हर्षात्क्रियमाणा चेष्टा लीला" इति। नन्विहैव दृश्यमानगिरिगह्वरकाननादि- सम्बन्धि लीलायाः प्रपञ्चमध्यपातित्वादनित्यत्वमिति चेन्न। "प्रपञ्चोभगवत्कार्यः" इत्याचार्यवचनात् प्रपञ्चस्य भगवत्कार्यत्वेन भगवत्कार्यरूपप्रपञ्च-सम्बन्धिनीनां लीलानां —

"जयति जननिवासो देवकी जन्मवादो
यदुवरपरिषत्स्वैर्दोर्भिरस्यन्नधर्मम्।
स्थिरचरवृजिनघ्नः सुस्मितश्रीमुखेन
व्रजपुरवनितानां वर्धयन् कामदेवम्॥

(भागवते १०।९०।४८)

इति चतुर्थप्रस्थानश्रीभागवतप्रमाणात्—श्लोके 'जयतीति' वर्त्तमानप्रयोगेणातीतानां व्रजलीला-नामपि वर्त्तमानत्वं बोधयन् श्लोकसमाप्तौ 'वर्धयन्निति' पदेन शतृप्रत्ययेन तस्मिन्कथाकाले तस्मिन् क्षणे तत्रैव सर्वपरोक्षलीलानां स्थितिः उच्यते। तथा च भगवतः नामकरणप्रसङ्गे भागवते गर्गवाक्येनापि भगवल्लीलानां त्रिकालातीतत्वं नित्यवर्त्तमानत्वं प्रवर्त्तमानत्वञ्च ज्ञाप्यते।

"बहूनि सन्ति नामानि रूपाणि च सुतस्य ते।
गुणकर्मानुरूपाणि तान्यहं वेद नो जनाः॥

(भागवते १०।८।१५)

इत्यत्र 'सन्तीति' पदप्रयोगदर्शनाल्लीलानां नित्यवर्त्तमानत्वं स्पष्टमेव। ननु लोके पाचकपाठकवद् भवतु नाम, यथा पाठनकार्ये अप्रवृत्तेऽपि पाठकोऽयमिति प्रयोगदर्शनादत्रापि तथैवास्त्विति चेन्नैतत्। लोकासिद्धत्वादलौकिकीलीलालोकसम्बन्धिन्यपि लोकदृष्टान्तेन न साधनीया। लोके तु भीरुपुरुषेऽपि नरसिंहवीरवरेत्यादिनामनिदर्शनान्न तथा। अत्र तु गर्गवाक्यानुसारेण यथा नाम, तथा गुणाः, यथा च कर्म तथा रूपमिति। तच्च गां

पालयतीति गोपाल:, मुक्तिं ददातीति मुकुन्दः इत्यादिः। तथा हि नामकरणसमये लीलानाम्भावित्वाल्लीलानुसारिनामकरणमसम्भवमिति न शङ्क्यम्, भगवल्लीलायाः नित्यत्वान्नित्यप्रवर्त्तमानत्वाच्चेति । एवं पूतनाशकटभञ्जनकालियदमनादिलीलानां पूर्वमेव सिद्धत्वादपि भगवदिच्छयाऽनाविर्भावः। अतः भगवल्लीलानां नित्यसिद्धत्वात्कालाद्यनवच्छिन्नत्वात्सर्वत्रैकत्र च सर्वरूपेण भिन्नभिन्नरूपेण च यथा तथा भगवदिच्छयैव स्थितत्वान्न कदापि मायिकत्वमिति । ननु भवतु नाम अलौकिकीनां भगवल्लीलानाममायिकत्वं किन्तु लोकवल्लीलानां तु मायिकत्वं भवति न वेति प्रश्ने सर्वथा तदपि नेत्युत्तरम् । "तत्त्वभावे सन्ध्यवदुपपत्तेः" (ब्र.सू. ४।४।१३) इति सूत्रन्यायेन भगवानासुरव्यामोहनार्थं स्वस्य प्राकृतत्वं प्रदर्शयति न तु तथा भवति । तत्र दूषितदृष्टीनामासुराणां कृते, यथा—श्रीमद्भगवद्गीतायाम्—"मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः" (१६।१८) इत्यत आरभ्य "ततो यान्त्यधमां गतिम्" (१६।२०) इत्यन्तमुक्तम् । एतेषामासुरत्वेन मुक्त्यनधिकारादिति । एवं भगवल्लीलायां दोषादर्शने उपपत्तिमुक्त्वा अग्रिम सूत्रेण गुणदर्शने उपपत्तिमाह "भावे जाग्रद्वद्" (ब्र.सू. ४।४।१४) इति सूत्रन्यायेन लौकिकवद्भासमाने भगवल्लीलापदार्थे लीलायाञ्च भक्तानां यद्दर्शनं तत्त्वलौकिकत्वेनैव। यथा मोहनिवृत्तस्य पुरुषस्य सत एवार्थस्य दर्शनम् । एवं भगवान् स्वेच्छयैव भक्तानां मायापसारणेन तत्तद्रसानुभवार्थं तत्तल्लीलां तथा तथा करोति । तथा च कुत्रचित् मोहलीलामपि करोति यथा सौभयुद्धे। तथा चासुराणां व्यामोहनार्थं लोकवल्लीलां करोतीति । अत्र भाष्ये = "अत एव लीलाया अनेकरूपत्त्वाद् ब्रह्मणश्च श्रुतौ सैन्धवदृष्टान्तेनैकरसत्वनिरूपणाच्छुद्धब्रह्मधर्मत्वं न सम्भवतीति शङ्कानिरासाय ("लोकवत्तु लीला कैवल्यम्") कैवल्यमित्युक्तम् । साक्षी चेता केवलो निर्गुणश्चेत्यादिश्रुतिषु याऽन्यधर्मराहित्यलक्षणा केवलतोक्ता सा लीलात्मिकैव लीलाविशिष्टमेव शुद्धं परं ब्रह्म, न कदाचित् तद्रहितमित्यर्थः पर्यवस्यति । तेन स्वरूपात्मकत्वं लीलायाः पर्यवस्यति । तेन च नित्यत्वम् ।" (ब्र.सू. ४।४।१४ भाष्ये) एवं यथा पृथिव्यामेव गन्धरूपेणाविर्भावः न जलादौ । एवमेवाविर्भावतिरोभावाभ्यां भगवल्लीलायाः अनुभवः अननुभवश्च भक्तानामभक्तानाञ्च कृते भवतः। अधुनाऽपि क्वचिद् क्वचिद् भगवदिच्छया कृपया च तादृशे भक्ते परोक्षलीलानामनुभवः श्रूयते । एवं भगवांस्तु नित्यलीलाविशिष्ट एव सर्वदा सर्वत्र विराजते । श्रीगोवर्धनधरः भक्तमनोरथपूरणार्थमिच्छया कृपया चाविर्भवति तिरोभवति च। तस्माल्लीलायाः कदापि मायिकत्वं सर्वथा नेति सिद्धान्तः।

"प्रभोरेव फलत्वं निर्दोषत्वञ्च वर्ण्यते ।
लीलानित्यवतः पूर्णगुणत्वं च ततोऽखिलम् ।।"

*(इत्याचार्यकारिका)*

## ।। भक्तिनिरूपणम् ।।

भक्तेर्लक्षणमाचार्यचरणैरुक्तं निबन्धे —

"माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः ।
स्नेहोभक्तिरिति प्रोक्तस्तथामुक्तिर्न चान्यथा ।।

(शा.प्र.का. ४५)

अनया कारिकया आचार्यैः भक्तिस्वरूपमुक्तम् । स्नेहो भक्तिः। स्नेहस्तु भगवत्यात्मत्वेन ज्ञाते भवति । "गौणश्चेन्नात्मशब्दात्" (ब्र.सू. १।१।५) इति सूत्र न्यायेन गुण युक्तत्वाद्गौणः इति न वक्तव्यम्, आत्मशब्दात् । अत्र भाष्ये—"आत्मशब्दः पुनः सर्वेषु वेदान्तेषु निर्गुणपरब्रह्मवाचकत्वेनैव सिद्धः। तस्यैव जगत्कर्तृत्वं श्रुतिराह ।" इति वचनात् निर्गुणसाकारपरब्रह्म एव जगत्कर्त्ता स एवात्मा स एव भगवान् श्रीकृष्णः। "कृषिर्भूर्वाचकः शब्दो णश्च निर्वृति वाचकः तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते" इति गोपालतापनीयश्रुतेः भगवतः श्रीयशोदोत्संगलालितस्य श्रीकृष्णस्यैव परब्रह्मत्वं श्रुतिस्मृत्यादिशास्त्रेषु सर्वत्र उद्घोष्यतेऽतः भक्तिपदं श्रीकृष्णस्नेहे मुख्यमन्यत्र तु तत्प्रयोगो भाक्त इति। सच्चिदानन्दात्मकं परब्रह्म त्रिविधं जगति क्रीडति । तत्र आधिभौतिकं जगत् । आध्यात्मिकं अक्षरब्रह्म। आधिदैविकं परं ब्रह्म "पुरुषश्चाधिदैवतम्" इति स्मृतेः। एवमेव रमणार्थं मार्गत्रयम्—आधिभौतिकमार्गः कर्म, आध्यात्मिकमार्गो ज्ञानम्, आधिदैविको मार्गो भक्तिः। तत्र प्रथमः आधिभौतिकः कर्ममार्गः लोकपर्यवसायी, द्वितीयो ज्ञानमार्गः अक्षर पर्यवसायी, तृतीयो भक्तिमार्गः पुरुषोत्तम (परब्रह्म) पर्यवसायीति। ज्ञानिनस्तु अक्षरब्रह्मैव परमफलत्वेन मन्यन्ते । भक्तास्तु अक्षरब्रह्म परब्रह्मपूर्णपुरुषोत्तमस्य धामेति स्वीकुर्वन्ति । तत्र प्रमाणम् —

अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।
यं प्राप्य न निवर्त्तन्ते तद्धाम परमं मम ।।

(गीता ८।२१)

तथा च – यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ।।

(गीता १५/१८)

इत्यादि प्रमाणैर्वेदादिशास्त्राणामर्थो भक्तिरिति ज्ञायते ।

ननु वेदादि शास्त्राणामर्थो भक्तिरिति कथम्प्रतिपाद्यते भवद्भिरिति चेदुच्यते । "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति, स भूमा स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीडआत्ममिथुन आत्मानन्दः स स्वराड् भवति" "परं ब्रह्मैतद्यो ध्यायति रसति भजति सोऽमृतो भवति" "नाहं वेदैर्न तपसा न दानेन न चेज्यया, शक्य एवं विधो दृष्टुं दृष्टवानसि मां यथा"। "भक्त्या त्वनन्यया शक्यः०" "अहं भक्तपराधीनो" "भक्त्या तुतोष भगवान् गजयूथपाय०" इत्यादि श्रुतिस्मृतिप्रमाणैर्भक्तिरेव प्रतिपाद्यते । एतेन सर्वात्मभावरूपा भक्तिरेवोच्यते । छान्दोग्ये सनत्कुमारनारदसंवादे भूमविद्यायां यत्र

नान्यत्पश्यतीत्यादिनाऽन्यदर्शनादिराहित्यस्योक्तत्वाद्भगवद्विरहावस्थायां प्रपञ्चविस्मृतिपूर्विका या परमाऽऽसक्तिस्तया विगाढभावेन सर्वत्र भगवत्स्वरूपमेव स्फुरतीति स एवोच्यते "स एवाधस्तात्स एवोपरिष्टात्सपश्चादित्यादि" तदनन्तरं भगवद्विरहभावगतस्फूर्तिरूपाणां ज्ञानानां व्यभिचारिभावत्वेनानियतत्त्वं ज्ञापयितुमहंकारादेशः "अहमेवाधस्तादहमेवोपरिष्टादित्यादिः" तत आत्मादेशः इति । "आत्मैवाधस्तादात्मोपरिष्टादित्यादिः"। तथा चाग्रे आत्मरत्यादि पदैः "आत्मरतिः आत्मक्रीड आत्ममिथुन" इत्यादिभिः रसरूपं भगवन्तं भक्तो भजति ।

अत्रात्मशब्देन सिद्धान्ते पूर्णपुरुषोत्तम एवोच्यते। नत्वक्षरं जीवो वेति । "गौणश्चेन्नात्मशब्दादिति" सूत्रन्यायेन परमकाष्ठापन्नं यद्वस्तु तदेव सर्वत्र वेदान्तेषु मुख्यतया प्रतिपाद्यम् । अनेन परब्रह्मणि सर्वात्मभावरूपा व्यसनात्मिका भक्तिः सैव मुख्या । सा च भगवदनुग्रहैकसाध्या । तच्चोक्तम् श्रुतौ —

"नायमात्मा प्रवचनेन लभ्यो
न मेधया न बहुना श्रुतेन
यमेवैष वृणुते तेन लभ्यः
तस्यैष आत्मा विवृणुते तनुं स्वाम्" ।।

(का. १।२।२३)

अत्र आत्मशब्दः पुरुषोत्तमवाचकः, प्रवचनेन नाम सस्वरवेदाध्ययनेनेति । अनेन पुष्टिभक्तेः केवलं भगवद्वरणलभ्यत्वमेव । अत्र स्वपदस्यात्मीयवाचकत्वेन स्वीयत्वेन वरणे सर्वात्मभावरूपा पुष्टिभक्तिः प्रयच्छति । भाष्ये च "निसर्गतः सर्वेषां जीवानां भगवान् भवत्येव प्रभुर्यद्यपि तथापि यं स्वीयत्वेन वृणुते तस्य विवाहितः पतिरिव भर्त्ता सन् वरणजस्नेहातिशयेन भक्तेनापि भ्रियमाणः सन्, स भक्त इव स्वयमपि तं स्वस्मिन् बिभर्त्ति"। (अ.भा. ४।४।१५)

इत्यनेन भक्तौ स्नेहस्यप्राधान्यादयोगोलकादि दृष्टान्तं विहाय प्रदीप दृष्टान्तमुक्तवान् व्यासः "प्रदीपवदावेशस्तथा हि दर्शयति" (४।४।१५) । स स्नेहस्तु व्रजसीमन्तिनीनां रतिस्थायिभावत्वेन मुख्यत्वाच्छृंगार एव भक्तिरसः इति वक्तुं शक्यते । स चालौकिक एव । तस्य च संयोगविप्रयोगात्मकत्वम् । अलौकिक शृंगारस्य लौकिकसदृशत्वेऽपि न लौकिकत्वमलौकिकप्रमाणप्राप्तत्वाल्लौकिकप्रमाणाप्राप्तत्वाच्च । वस्तुतस्तु अत्र लौकिकत्वशङ्का निरर्थका इति । वात्स्यायनादिऋषिभिरपि भगवद्भावभावनार्थमेव शास्त्रप्रणयनम् । न तु ऋषीणां कदापि लौकिके तात्पर्यं भवति। अत एवोक्तम्—"तदेतद् ब्रह्मचर्येण परमेण समाधिना विहितो लोकयात्रार्थं न रागार्थोऽस्य संविधिः, रक्षन् धर्मार्थकामांस्त्रीन् सम्पश्यंल्लोकवर्तिनाम्। अस्य शास्त्रास्य तत्त्वज्ञो भवत्येव जितेन्द्रियः"। इति लौकिके तात्पर्ये सति शास्त्रकारः जितेन्द्रियभवनरूपफलं न वदेत् । अर्थोयम् लिङ्गभूयस्त्वाधिकरणे, क्रतुवज्ज्यायस्त्वाधिकरणे च विस्तरेण प्रपञ्चितमाचार्यैर्भाष्ये, श्रीपुरुषोत्तमचरणैः प्रकाशे श्रीगोपेशचरणैश्च रश्मौ । ननु भक्तेः शृंगाररसरूपत्वात् शृंगारस्य च संयोगविप्रयोगात्मकत्वाद्विप्रयोगस्य विरहात्मकत्वेन

दुःखरूपत्वात्कथं सुखरूपत्वमिति चेदुच्यते भूम्नश्च । "यो वै भूमातत्सुखं" इति श्रुतेः सुखरूपत्वमेव । सर्वत्र वेदान्तेष्वपि मुक्तेः सुखरूपत्वमेव । पुष्टावपि भगवत्स्वरूपस्यानन्दमयत्वात्तल्लाभे परमानन्दलाभ एव न तु दुःखलाभ इति । अत्र = रश्मिकाराः योगिगोपेश्वरा आज्ञापन्ति = "अस्यैव चोपपत्तेरूष्मेति सूत्रभाष्ये । तथाहि अस्यानन्दात्मकरसरूपस्य भगवतः एवायं धर्मः। ऊष्मा विरहतापः। व्यापकस्य भगवतः सर्वत्र सत्त्वेऽपि मायया तिरोधानात्तद्विरहः सर्वसाधारणस्तथापि, न सर्वाऽनुभवगोचरोऽपि तु यस्य हृदि रसरूपभगवदाविर्भावो भवति तस्यैव तदप्राप्तिजतापानुभवो गोचरीभवतीत्यन्वयव्यतिरेक रूपोपपत्तेः। तथा च रसरूपस्य वस्तुन एव तथात्वात् स तापोऽपि रसात्मक एवेति"। अनेन सिद्ध्यति यत् अस्य दुःखस्य न कर्मजन्यत्वम्, कर्मजन्यत्वे सति अस्य मोक्षसुखमपि विलुप्येत। अत एवोक्तम्—"न पश्यो मृत्युं पश्यति न रोगं नोत् दुःखतामिति" श्रुत्या तादृशभक्तेः दुःखादिरूपत्वं निषिध्यते अतोस्य दुःखहेतुत्वेऽप्यनन्यलभ्यसाक्षात्पुरुषोत्तमानन्दप्राप्तिहेतुत्वेन सुखरूपत्वमेवेति । अन्यथा वियोगावस्थायां चित्तेस्फुरायमाणमानन्दत्वमिति न वदेत् । "को ह्येवान्यात्कः प्राण्यादि'ति, श्रुतेः वियोगावस्थायां हृदिविराजमानस्य भगवद्रूपस्यैव जीवनहेतुत्वमिति । तथैव श्रीभागवतेऽपि —

**"ता मन्मनस्का मत्प्राणा मदर्थे त्यक्तदैहिकाः ।**
**मामेव दयितं प्रेष्ठमात्मानं मनसा गताः ।**
**ये त्यक्तलोकधर्माश्च मदर्थे तान् विभर्म्यहम् ।।**

*(भा. १०/४६/४)*

अतः स्वपरमप्रियभगवद्दत्तं भगवत्सम्बन्धि यत्किमपि भक्तैः प्राप्यते तत्सर्वं सुखरूपमेव भवत्यतः भगवदलौकिकरसवार्त्ताऽनभिज्ञस्य तव कृते तु कण्टकवेधदृष्टान्तवत्कामिनीकुचकुम्भे प्रणयप्रसङ्गे रसोत्कर्षे प्रियकृतनखवेधस्यापि दुःखहेतुत्वं भविष्यतीत्यलं प्रलापेन ।

एवं "यो वै भूमा तत्सुखं नाल्पे सुखमस्तीति" श्रुत्या परब्रह्मण एव सूखरूपत्वात्प्रतीयमानं प्रियत्वादि ब्रह्मण्येव पर्यवस्यति । वस्तुतः जीवस्य प्रियं ब्रह्म एव। एतदेव श्रीभागवते उक्तम् —

**"अहमात्माऽऽत्मनां धातः प्रेष्ठः सन् प्रेयसामपि ।**
**अतो मयि रतिं कुर्याद्देहादिर्यत्कृते प्रिय ।।इति।।**

अत्रेदं बोध्यम् । सिद्धान्ते रसात्मकं विरुद्धधर्माश्रयं साकारमेव परब्रह्म । "आत्मैव पूर्वमासीत् पुरुषविध" इति श्रुतेः । फलं च ब्रह्मानन्दः । तथा च "परं ब्रह्मैतद्यो ध्यायति रसति भजति सोऽमृतो भवति" इत्यस्य प्रत्येकं सम्बन्धो ज्ञेयः। इयं च भक्तिः फलरूपा । तल्लक्षणं तु परब्रह्मश्रीकृष्णस्नेहत्वमिति । तत्र "यमेवैष वृणुते तेनलभ्यः" इति वरणश्रुत्या वरणस्य मर्यादा पुष्टिभेदेन द्वैविध्यम् । मर्यादापक्षे विहितानि साधनानि शास्त्रेषु बहूनि सन्ति तेषां कायिकवाचिकमानसिकरूपप्रभेदाः । पुष्टौ तु वरणमेव साधनमिति । पुष्टौ भगवदनुग्रहणैव सर्वपापक्षयः ।

तच्चोक्तम् — "स्वपादमूलं भजतः प्रियस्य
त्यक्तान्यभावस्य हरिः परेशः
विकर्म यच्चोत्पतितं कथञ्चिद्
धुनोति सर्वं हृदि सन्निविष्टः" ।।

(भा. ११/५/४२)

"प्रविष्ट कर्णरंध्रेण स्वानां भावसरोरुहम्
धुनोति शमलं कृष्ण पद्मपत्रमिवाम्भसा" ।।

एवं वरणेनैव पुष्टिभक्तेः प्राप्तिः। पुष्टिभक्तेः वरणैक लभ्यत्वात् । एवं भक्तिमार्गेण भक्ताः भगवत्समीपं गच्छन्ति । तत्र भगवत्प्राकट्ये रसानन्दप्राप्तिः। सर्वैरिन्द्रियैर्भगवत्स्वरूपेण सह संयोगादिलाभः। अतएवोक्तम् भागवते "अक्षण्वतां फलमिदं न परं विदामः"। स च सर्वो मनोरथः भगवता पूर्यते । "ब्रह्मैव सन् ब्रह्माप्येति" "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा" इत्यादि श्रुतेः। अयं रसानुभवः श्रेष्ठः। "ब्रह्मानन्दात्समुद्धृत्य भजनानन्दयोजने" इत्याचार्यवाक्यात् अक्षरब्रह्मानन्दस्य गणितानन्दत्वात् भजनानन्दस्य चागणितानन्दत्वादिति । अनयोः ज्ञानभक्त्योः तारतम्ये भक्तिः श्रेष्ठा ।

(१) भक्तौ कृपानन्दरसपानं च फलम् । ज्ञाने दुःखाभावमात्रं फलम् ।
(२) भक्तौ पूर्णानन्दानुभवः फलम् । ज्ञाने स्वरूपेण प्रकर्षतो लयः फलम् ।
(३) भक्तौ भगवत्कृतद्वैतस्थित्यानन्दानुभवः फलम् । ज्ञाने भेदाभावस्थितेरानन्दानुभवो न संगच्छते ।
(४) भक्तौ प्रारम्भतः एव निरतिशयानन्दः। ज्ञाने प्रथमतः कष्टमन्ते गणितानन्दप्राप्तिश्च ।
(५) भक्तौ पूर्णपुरुषोत्तमप्राप्तिः। ज्ञाने अक्षरप्राप्तिः ।

एवं ज्ञानभक्त्योः तारतम्ये भक्तेः अतिशयितत्वमिति ।

आत्मारामाश्च मुनयः निर्ग्रन्था अप्युरुक्रमे ।
कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः ।।

(भा. १/७/१०)

अतः ब्रह्मभावानन्तरमपि परा भक्तिरनुष्ठातुं शक्यते । इदमेव भगवतः पूर्णपुरुषोत्तमस्य श्रीकृष्णस्य अनवगाह्यमाहात्म्यम् । भक्तेरुत्कृष्टत्वञ्च । अत एव विद्वांसः रसज्ञाः भावुकाः भक्त्यैवात्मानं भगवते श्रीगोपीजनवल्लभाय समर्प्य रसानन्दनिमग्नाः भवन्ति । अतः "सर्वधर्मान्परित्यज्य" इति वाक्याद्भगवानेव शरणीकरणीयः। भगवान् स्वानुग्रहेणैव भक्तानां सर्वं साधयति । अत एवोक्तं श्रीभागवते—"पोषणं तदनुग्रहः" इति पुष्टेर्लक्षणम् । पुष्टिमार्गे भगवदनुग्रहस्यैव नियामकत्वम् ।

भक्तिः मर्यादापुष्टिभेदेन द्विधा भवति । मर्यादाभक्तिः भगवच्चरणारविन्दभक्तिः। पुष्टिभक्तिः भगवन्मुखारविन्दभक्तिः। मर्यादा भक्तिः अस्वतन्त्रा । पुष्टि भक्तिः स्वतन्त्रा ।

मर्यादाभक्तौ फलं सायुज्यम् । पुष्टौ साक्षाद्भगवान् । एवं यस्मिन् भगवत्कृपा भवति स पुष्टौ आयाति । सा च कृपा तन्मार्गरुच्यादिभिरनुमीयते । सा रुचिः भक्तिरेव । शुद्धपुष्टिभक्तिफलं तु नित्यलीला प्रवेशः पुरुषोत्तमलाभश्च । इत्यादिकं श्रीमदणुभाष्ये आचार्यैः विस्तरेण प्रतिपादितं पुरुषोत्तमचरणैश्च तत्प्रकाशे विस्तरेणालोडितं गोपेश्वरचरणैश्च तत्प्रकाशरश्मौ अतिविस्तरेण विवरितम् । अतः तत्रतोऽवगन्तव्यम् ।

अधुनात्र ब्रह्मणः मूलम् स्वरूपं विविच्य समाप्यते ।

तत्र — "**कृषिर्भूवाचकः शब्दो णश्च निर्वृति वाचकः**
**तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते ।।**
**ॐ तत्सत्परं ब्रह्म कृष्णात्मको नित्यानन्दैकस्वरूपः ।।** इति श्रुतेः

तथा च — **परिपूर्णतमः कृष्णो वैकुण्ठो गोकुलः स्वयम् ।**
**चतुर्भुजश्च वैकुण्ठे गोकुले द्विभुजः स्वयम् ।।**

*(ब्रह्मवैवर्त पु०)*

अत एव परमानन्दः पूर्णपुरुषोत्तमः परब्रह्म श्रीकृष्ण एव । अतः निखिलनिगमागमाधिगम्यमानस्वरूपः परब्रह्मश्रीकृष्ण एव प्रापणीयोऽयमेव परमपुरुषार्थः शुद्धाद्वैतब्रह्मवाद इति । तत्प्राप्तिः भक्त्या विना नेति । "नायमात्मा बलहीनेन लभ्यः" इति श्रुतेः। अत्र बलं भक्तिः। अतः शुद्धपुष्टिभक्तौ स्नेह एव नियामकः। निरुपधिस्नेहात्मिका भक्तिरेव सर्वात्मभावः। अयमेव पूर्णपुरुषोत्तमप्राप्तौ मुख्यं कारणम् । यस्मिन् भगवत्कृपा भवति स एव पुष्टिमार्गाधिकारी भवति । तस्मात् श्रीमदाचार्यचरणैः पुष्टिमार्गस्थापनाय प्रमाणानुरुद्धः प्रमेयमार्गः प्रकटीकृतः। अतः श्रीमदाचार्यानुग्रहीतेन पुष्टिपथेनानुसर्त्तव्यमिति ।

**"जानीत परमं तत्त्वं यशोदोत्सङ्गलालितम् ।**
**तदन्यदिति ये प्राहुरासुरांस्तानहो बुधाः ।।**

*(श्रीप्रभुचरणाः भाष्ये)*

## ।। श्रीमदाचार्यचरणानां वेदश्रद्धा ।।

भाष्येऽस्मिन् पुष्टिभक्तिमाहात्म्यमतीव विस्तरेण वर्णितं तथा च वेदविषये भाष्यकृद्भिः निरतिशया श्रद्धाऽपि स्थापिता । श्रीवल्लभाचार्याः वेदस्याक्षरमात्रस्याप्यन्यथाकल्पनम्, वेदेऽर्थवादं च नाङ्गीकुर्वन्ति । "उत्तरं पूर्वसन्देहवारकं परिकीर्त्तितम्" इति न्यायेन पूर्वपूर्वप्रस्थानसन्देहवारकत्वमुत्तरोत्तरप्रस्थानस्येति वर्णयन्त्याचार्याः ।

यथा वेदे - "अपाणिपादोजवनो ग्रहीता" इत्यत्र किं ब्रह्म प्राकृतपाणिपादरहितं यद्वा सामान्यनिषेधः, इति सन्देहे "सर्वतः पाणिपादान्तम्" इत्यादि गीतावाक्यं सन्देहवारकम् । गीतायाञ्च "नित्यः सर्वगतः स्थाणु०" "ममैवांशो जीवलोके" इत्यादौ सन्देहे "उत्क्रान्तिगत्यागतिभिः" "अंशो नानाव्यपदेशात्" इत्यादि सूत्रैर्निर्णयः। तथा च तत्वसूत्रे "जन्माद्यस्य यतः० इत्यत्र ब्रह्मणः जगत्कारणत्वं निमित्तत्वेनोपादानत्वेन वा इति सन्देहे "अन्वयव्यतिरेकाभ्यां

यः स्यात्सर्वत्र सर्वदा'' इत्यादि श्रीमद्भागवतवाक्यान्निर्णयः। एवं चतुर्णां प्रस्थानानामेकवाक्यत्वम्। अत्राचार्यैः समग्रस्य वेदस्योभयकाण्डात्मकस्य प्रामाण्यं स्वीकृतम् न तु 'वेदान्तो नाम उपनिषत्प्रमाणम्' इतिवत् केवलस्य उपनिषद् भागस्येति ज्ञेयम्। ''वेदस्याक्षरमात्रान्यथा कल्पनेऽपि दोषः स्यात्'' इत्याचार्याः।

तथा च — **वेदोक्तादणुमात्रेऽपि विपरीतं तु यद्भवेत्।**
**तादृशं वा स्वतन्त्रं च उभयं मूलतो मृषा॥**

*(अ.भा.का.)*

तथा च — **यज्ञरूपो हरिः पूर्वकाण्डे ब्रह्मतनुः परे।**
**अवतारी हरिः कृष्णः श्रीभागवत ईर्यते॥**

*(शा.प्र. ११)*

**अग्निहोत्रं तथा दर्शपूर्णमासः पशुस्तथा।**
**चातुर्मास्यानि सोमश्च क्रमात् पञ्चविधो हरिः॥**

*(तत्व. २।२)*

**असन्दिग्धोऽपि वेदार्थः स्थूणाखननवन्मतम्।**
**मीमांसानिर्णयः प्राज्ञे दुर्बुद्धेस्तु ततो द्वयम्॥**
**जैमिनिः कर्मतत्त्वज्ञो निर्णयं पूर्व उक्तवान्।**
**व्यासः स्वयं हि सर्वज्ञ उत्तरे निर्णयं जगौ॥**

*(तत्व. २।२९-३०)*

पुराणविषये आचार्याणां श्रद्धा —

**पुराणं वेदवत् पूर्वसिद्धं सर्वोपयोगि तत्'**

*(तत्व. २।४८)*

महाभारतविषये —

**''सर्वनिर्द्धारणार्थाय व्यासो भारतमुक्तवान्''**

*(तत्व. २।५७)*

ज्यौतिषविषये —

**''दर्शादिकालनिर्द्धारो ज्योतिः शास्त्रफलं स्मृतम्''**

*(तत्व. २।७५)*

व्याकरणविषये —

**''व्याकृतिः पाणिनीयं हि प्रातिशाख्यं तु शब्दगम्''**

*(तत्व. २।७७)*

आयुर्वेदादिविषये —

''आरोग्ये धर्मसिद्धिः स्याद्रक्षा च धनुषो भवेत्
उद्वेगहानिर्गान्धर्वे स्थापत्यं च स्रुगादिषु ।
काव्यादीनामसत्यत्वान्नोपयोगः कथञ्चन ।
धर्मे कर्त्तुः क्वचित् कीर्त्तिर्नैपुण्यं पाठतः क्वचित् ।

(तत्व. २।७९-८०)

रामायणविषये —

''रामायणमनन्तं हि पुराणमिव सन्मतम्
व्यासः पूर्वमनेकोक्तो वाल्मीकिः साम्प्रतं किल ।
समाधिभाषया प्राह प्रमाणं सर्वथैव तत् ।

(सर्व.प्र. ८१)

एवं सर्वशास्त्राणां विषये श्रीवल्लभाचार्याणां मतमुपरि संक्षेपेण स्पष्टीकृतम् ।

संन्यासविषये—कलिदोषात्कर्ममार्गे ज्ञानमार्गे च संन्यासो न कर्त्तव्यः, किन्तु पश्चात्तापनिवृत्यर्थं भक्तिमार्गे कर्त्तव्यः। भगवद्विरहानुभवैकार्थः परित्यागः प्रशस्यते । इत्यादिकं सर्वं आचार्यैः स्वकृतसन्यासनिर्णयग्रन्थे विस्तरेण विवृतम् । एवं कर्मज्ञानमार्गापेक्षया भक्तिमार्गे आचार्याणां समादरः विशेषः सिद्ध्यति ।

भाष्येऽस्मिन् आचार्याणां मायावादि खण्डने अतीव निर्बन्धः। बौद्धमतखण्डनप्रसंगेऽपि मायावादिखण्डनं निर्दिश्यते । ब्रह्मसूत्रे अन्ये आचार्याः (१) ''अथातो ब्रह्मजिज्ञासा'' (२) ''जन्माद्यस्य यतः'' (३) ''शास्त्रयोनित्वात्'' (४) ''तत्तु समन्वयात्'' इति सूत्रचतुष्टयात्मिकां चतुःसूत्रीं स्वीकुर्वन्ति । तथाहि श्रीवल्लभाचार्याः (१) अथातो ब्रह्मजिज्ञासा (२) जन्माद्यस्य यतः शास्त्रयोनित्वात् (३) तत्तु समन्वयात् इति सूत्रत्रयात्मिकां त्रिसूत्रीं स्वीकुर्वन्ति । श्रीवल्लभाचार्याणां मते 'जन्माद्यस्य यतः शास्त्रयोनित्वात्' इत्यभिन्नमेव सूत्रं वर्त्तते । इदमणुभाष्यम् तृतीयाध्यायद्वितीयपादस्य चतुःत्रिंशत् (३४) सूत्रतः प्राक् श्रीमद्वल्लभाचार्यरचितम् । तदनन्तरं श्रीविठ्ठलनाथानां कृतिः। प्राक्तनभाष्येऽपि 'आनन्दमयाधिकरणे' द्वितीयवर्णकं श्रीविठ्ठलेशरचितमेव । इत्यत्र भाष्यप्रकाशरचयितॄणां श्रीपुरुषोत्तमानामुक्तिरेव प्रमाणम् । तथा हि—''इत आरभ्य प्रभूणामिति (श्रीविठ्ठलेशानाम्) प्रतिभाति'' इति ''स्थानविशेषात्प्रकाशादिवत्'' (ब्र.सू. ३।२।३४) इति सूत्रभाष्यप्रकाशेउल्लिखितम् । तथा च ''साम्प्रतं तु प्रभुचरणौ;'' इत्यानन्दमयाधिकरणे । तथाहि—चतुर्थाध्यायसमाप्ति श्लोके —

''भाष्यपुष्पाञ्जलिः श्रीमदाचार्यचरणाम्बुजे ।
निवेदितस्तेन तुष्टा भवन्तु मयि ते सदा ।।

इत्यत्र भाष्यप्रकाशे श्रीपुरुषोत्तमाः—''गुणोपसंहारपादमारभ्य सर्द्धाध्यायस्य स्वयं करणात्तदाचार्येषु निवेदयन्तः समाप्तौ मङ्गलं कर्त्तव्यमिति शिष्टाचारं च शिक्षयन्त आचार्याणां प्रसादमाशासते'' इति लिखन्ति अनेन स्पष्टं प्रतीयते यत् अवशिष्टं भाष्यं निर्माय

श्रीवल्लभाचार्यचरणयोः समर्पितमिति । अत्र केचिद्विद्वांसः सम्पूर्णं भाष्यमाचार्यकृतमेवेति मन्यन्ते । तत्र श्रीमदाचार्यचरणाम्बुजमित्यस्यार्थो व्यासाचार्यचरणाम्बुजमिति ग्राह्यम् । "व्यासोऽस्माकं गुरुः" इत्याचार्यवाक्यात् । एवमेवान्यत्रापि समादधते । अन्यच्च श्रीमदाचार्याणामन्यदेकं बृहद्भाष्यमस्ति तन्मध्यस्थोऽनतिविस्तृतो भागोऽधुना नोपलभ्यते तस्यैव भाष्यस्य संक्षेपभूतमिदं भाष्यमित्यपि केचिद् वदन्ति । वस्तुतस्तु श्रीपुरुषोत्तमचरणैः प्रकाशे यदुक्तं तदेवास्त्यविचिकित्सितमिति । या या कृतिः श्रीवल्लभाचार्याणामस्ति तत्र तत्र श्रीपुरुषोत्तमानां टीकादिकमपि वर्त्तते । यत्र यत्र पुरुषोत्तमानां टीकादिकं किमपि नास्ति सा कृतिः श्रीवल्लभाचार्याणामस्ति नवेति सन्दिग्धोऽर्थः।

भाष्येऽस्मिन् चत्वारः अध्यायाः। ते च क्रमशः स्वरूपमतान्तरनिराससाधन-फलप्रतिपादकाः। तत्रापि प्रत्येकाध्याये पादचतुष्टयम् । अत्र प्रथमाध्याये ब्रह्मस्वरूपबोधक-वेदान्तवाक्यानां विचारः। तत्रापि प्रथमपादे—कार्यप्रतिपादकानि वाक्यानि, द्वितीयपादे—अन्तर्यामिप्रतिपादकानि वाक्यानि, तृतीयपादे—उपास्यरूपप्रतिपादकानि वाक्यानि, तथा चतुर्थपादे—प्रकीर्णानि वाक्यानिति । इत्येवं प्रथमाध्यायपदार्थसंग्रहः।

द्वितीयाध्याये मतान्तरनिराकरणम् । विना मतान्तरनिराकरणेन साधनफलयोरनुपयो-गादिति । तत्रपि द्वितीयाध्यायस्य प्रथमपादे—श्रुतिस्मृत्योः अविरोधः प्रदर्श्यते । द्वितीयपादे—न्यायमायावादादिमतानां निराकरणम् । तृतीयपादे श्रुतिवाक्ययोः परस्परविरोधपरिहारः। चतुर्थपादे—जीवशरीरमध्यवर्त्तिप्राणादीनां विचारः। इति द्वितीयाध्यायपदार्थसंग्रहः ।

तृतीयाध्यायः साधनाध्यायः। तत्र प्रथमपादे—जीवस्य ब्रह्मज्ञानोपयोगिजन्मविचारः। द्वितीयपादे—जीवस्य मुक्तियोग्यता, अत्रैव विरोधपरिहारेण ब्रह्मस्वरूपनिरूपणञ्चेति । तृतीयपादे—गुणोपसंहारः। चतुर्थपादे—कर्माद्यङ्गविचारः। इति तृतीयाध्यायपदार्थसंग्रहः ।

चतुर्थोऽध्यायः फलाध्यायः। तत्र प्रथमपादे—श्रवणादेर्विचारः। द्वितीयपादे—सर्वेन्द्रियलयादि विचारः। तृतीयपादे—क्रममुक्तिमार्गादिनिरूपणम् । चतुर्थपादे—पुष्टिमर्यादाभेदेन फलस्य लीलानित्य-त्वादिकस्य च निरूपणम् ।

अथ प्रतिपादमधिकरणानि वर्ण्यन्ते —

तत्र प्रथमाध्यायस्य प्रथमपादे दशसंख्यात्मकान्यधिकरणानि ।

तत्र प्रथमाध्यायस्य द्वितीयपादे अष्टसंख्यात्मकान्यधिकरणानि ।

तत्र प्रथमाध्यायस्य तृतीयपादे त्रयोदशसंख्यात्मकान्यधिकरणानि ।

तत्र प्रथमाध्यायस्य चतुर्थपादे नवसंख्यात्मकान्यधिकरणानि ।

द्वितीयाध्यायस्य प्रथमपादे द्वादशसंख्यात्मकान्यधिकरणानि ।

द्वितीयाध्यायस्य द्वितीयपादे अष्टसंख्यात्मकान्यधिकरणानि ।

द्वितीयाध्यायस्य तृतीयपादे षोडशसंख्यात्मकान्यधिकरणानि ।

द्वितीयाध्यायस्य चतुर्थपादे दशसंख्यात्मकान्यधिकरणानि ।

तृतीयाध्यायस्य प्रथमपादे अष्टसंख्यात्मकान्यधिकरणानि ।

तृतीयाध्यायस्य द्वितीयपादे एकादशसंख्यात्मकान्यधिकरणानि ।

तृतीयाध्यायस्य तृतीयपादे चतुर्विंशतिसंख्यात्मकान्यधिकरणानि ।
तृतीयाध्यायस्य चतुर्थपादे नवसंख्यात्मकान्यधिकरणानि ।
चतुर्थाध्यायस्य प्रथमपादे सप्तसंख्यात्मकान्यधिकरणानि ।
चतुर्थाध्यायस्य द्वितीयपादे षष्ठसंख्यात्मकान्यधिकरणानि ।
चतुर्थाध्यायस्य तृतीयपादे पञ्चसंख्यात्मकान्यधिकरणानि ।
चतुर्थाध्यायस्य चतुर्थपादे पञ्चसंख्यात्मकान्यधिकरणानि ।
इत्येवमतिसंक्षेपेण भाष्यपदार्थसंग्रहः प्रतिपादमधिकरणानि च वर्णितानि ।

## ।। श्रीमद्वल्लभाचार्याणां संक्षिप्तचरितम् ।।

दक्षिणप्रदेशे तैलङ्गदेशे 'कांकरवाड' नाम्निग्रामे दीक्षितसंज्ञासंज्ञितकृष्णयजुर्वेदीय-तैत्तिरीयशाखिनां प्रथितं कुलमासीत् । तस्मिन्कुले सर्वे कुलपुरुषाः सोमयाजिनः बभूवुः। अस्य कुलस्य मूलपुरुषाः श्रीनारायणयज्ञाः। अस्मिन्नेव कुले श्रीलक्ष्मणभट्टाः प्रादुर्बभूवुः। ते स्वपत्न्या सह एकवारं काशीयात्रार्थमगच्छन् । तदैव मार्गमध्ये मध्यप्रदेशे चम्पारण्यस्थले तत्पत्न्याः इल्लम्मागारोः कुक्षौ । (वि.सं. १५३५) वैशाखकृष्णैकादश्यां श्रीवल्लभाचार्याणां प्राकट्यमभवत् । तदा भवतां पितृचरणाः श्रीलक्ष्मणभट्टाः भार्यापुत्राभ्यां सह द्वादशवर्षाणि यावत् काश्यामवसन् । तदा काश्यामेव श्रीवल्लभाचार्याणां यज्ञोपवीतादयः संस्काराः अभवन् । श्रीवल्लभः निखिलान् वेदान् सर्वशास्त्राणि च झटिति अधीतवान् । ततः स्वदेशमागतास्ते त्रयः। ततः श्रीलक्ष्मणभट्टाः दिवं याताः। ततः पुनः श्रीवल्लभाचार्याः तीर्थयात्रार्थं प्रस्थिताः। तदा तीर्थयात्रायां श्रीवल्लभाचार्याणां बहुभिर्विद्वद्भिः सह शास्त्रचर्चा जाता यत्र विद्वांसः पराजिताः । आचार्याः त्रिवारं पृथ्वीपरिक्रमां विधाय स्वसिद्धान्तप्रचारं कृतवन्तः तत्रैव विजयनगरे श्रीकृष्णदेवरायनृपतेः राजसभायां सर्वान् वादीन् पराजित्य विधिवत् 'शुद्धाद्वैतब्रह्मवादनिर्गुणपुष्टिभक्तिमार्गाभिधं स्वसिद्धान्तं संस्थापितवन्तः । तत्र यात्रा मध्य एव श्रीगोवर्धनपर्वते श्रीनाथजीत्यपरपर्यायः परब्रह्म भगवान् श्रीकृष्णः श्रीवल्लभाचार्यसन्निधौ स्वेच्छया स्वयं प्रादुर्भूयात्मानं दर्शयामास । स्वसेवाकरणार्थमाज्ञापयच्च । स एव पुष्टिमार्गः श्रीवल्लभाचार्यैः प्रवर्त्तितः। तत्रैव तीर्थयात्राप्रसङ्गे श्रीवल्लभाचार्यचरणाः भगवतः पाण्डुरंगविट्ठलनाथस्याज्ञया काश्यां च स्वमातुरनुमत्या च स्वजातीय मधुमंगलनामक-तैलङ्गविद्वान्ब्राह्मणस्य सुयोग्यकन्यया सह विधिपूर्वकं विवाहं चक्रुः । तत्र श्रीगोपीनाथ-विट्ठलनाथाख्यौ द्वौ सुतौ यथाक्रमं (वि.सं. १५६८ आश्वि. कृ.१२ तथा वि.सं. १५७२ मि.पौ.कृ. ९) जन्म लेभाते । एवमाश्रमत्रयं प्रोत्तीर्य सर्वशास्त्रसम्मतं त्रिदण्डसंन्यासं परिगृह्य काश्यां हनुमानघाटेति प्रसिद्धस्थले वि.सं. १५८७ मि. आषा.शु. २ रविवासरे मध्यान्ह काले सुरसरित्प्रवाहे आत्मानं प्रवेशयामासुः। एवमासुराणां व्यामोहनार्थं स्वशरीरत्यागं कृतवन्तः। वस्तुतस्तु ते साक्षाद्भगवद्धाम प्रापुः ।

जगद्गुरुश्रीवल्लभाचार्यविरचिताः अनेके ग्रन्थाः सन्ति । ते च बृहद्ग्रन्थलघुग्रन्थभेदेन द्विविधाः। तत्र बृहद् ग्रन्थाः - (१) ब्रह्मसूत्राणुभाष्यम् । (२) तत्त्वदीपनिबन्धः। (३)

निबन्धप्रकाशः। (४) श्रीमद्भागवतसुबोधिनी । (५) पूर्वमीमांसाभाष्यम् । (६) गायत्रीभाष्यम् इत्यादयः ।

लघु ग्रन्थाः - (१) श्रीयमुनाष्टकम् । (२) बालबोधः । (३) सिद्धान्तमुक्तावली । (४) पुष्टिप्रवाहमर्यादाभेदः। (५) सिद्धान्तरहस्यम् । (६) नवरत्नम् । (७) अन्तःकरणप्रबोधः। (८) विवेकधैर्याश्रयः। (९) कृष्णाश्रयः। (१०) चतुःश्लोकी । (११) भक्तिवर्द्धिनी । (१२) जलभेदः। (१३) पञ्चपद्यानि । (१४) संन्यासनिर्णयः। (१५) निरोधलक्षणम् । (१६) सेवाफलम् ।

तथा च = पुरुषोत्तमसहस्रनाम । परिवृढाष्टकम् । पत्रावलम्बनम् । त्रिविधनामावली । शिक्षाश्लोका इत्यादयः ।

श्रीमद्वल्लभाचार्यविरचितं श्रीमद्भगवद्गीताभाष्यमनुपलब्धम् । कालवशाद्वा कस्माच्चित्कारणाल्लुप्तमिति मन्यन्ते ऐतिह्यज्ञाः ।

श्रीमद्वल्लभाचार्याणां प्रथमपुत्राः श्रीगोपीनाथाः। तेषामेक एव सुताः श्रीपुरुषोत्तमाः। तदग्रे वंशविस्तारो नास्ति ।

आचार्याणां द्वितीयसुताः श्रीविट्ठलेशाः। एतेषां ग्रन्था :- अणुभाष्योत्तरार्धः। विद्वन्मण्डनम् । शृंगाररसमण्डनम् । सुबोधिनी टिप्पणी । भक्तिहंसः। भक्तिहेतुनिर्णयः। इत्यादयः। एतेषां सप्तसुताः। ते च क्रमशः श्रीगिरिधराः, श्रीगोविन्दरायाः, श्रीबालकृष्णाः, श्रीगोकुलनाथाः, श्रीरघुनाथाः, श्रीयदुनाथाः श्रीघनश्यामाश्च ।

श्रीमद्विट्ठलेश्वर तृतीय सूनु श्रीबालकृष्णतः पुरुषगणनया चतुर्थवंश्यश्रीपीताम्बरगोस्वामिनामात्मजाः श्रीपुरुषोत्तमचरणाः दशदिगन्तविजयिनः स्वपितृव्याणां श्रीश्यामलसुतव्रजरायजीमहाराजानामुत्सङ्गे गताः। एतेषां श्रीपुरुषोत्तमचरणानां जन्म वि.सं. १७२४ मि.भा.शु. ११ अभूत् । ऐषां टीकाग्रन्थेषु सर्वश्रेष्ठः अणुभाष्यप्रकाशाभिधनिबन्धः। एषः निबन्धः अद्वितीयः । श्रीपुरुषोत्तमचरणसदृशाः विद्वांसः सुदुर्लभाः। एतद्विरचिताः ग्रन्थाः। नवलक्षश्लोकपरिमिताः सन्ति । तत्र केचित्कथयन्ति यन्नवलक्षसंख्यकाः ग्रन्थाः सन्ति । किन्त्वधुना तेषु अधिकग्रन्थाः लुप्ताः । श्रीपुरुषोत्तमचरणरचितेषु ग्रन्थेषुसुबोधिनीप्रकाशः, उपनिषद्दीपिका, आवरणभङ्गः, प्रस्थानरत्नाकरः, सुवर्णसूत्रम्, षोडशग्रन्थविवृतिः, वादावलिः इत्यादयः बहवो ग्रन्थाः पाण्डित्यपूर्णतया निबद्धाः एतेषां विषये साम्प्रदायिकौ श्लोकौ प्रसिद्धौ —

**श्रीमद्वल्लभदीक्षिताह्वयहरेर्वन्द्यान्वयेसप्तम-**
**स्तत्कारुण्यसुधाभिषेकविकसत्सौभाग्यभूमोदयः ।**
**दृप्यद्दुर्मदवादिविद्वदिभदुष्कूटोक्तिकुम्भस्थली-**
**सद्योभञ्जनकेलिकेसरपतिः पीताम्बरस्यात्मजः ।।१।।**
**नासीद्येन समः समस्तनिगमस्मृत्त्यादि तत्त्वार्थविद्**
**वक्ता चाप्रतिमः सदःसु विदुषामद्यापि भूमौ बुधः ।**

यः सर्वं नवलक्षपद्यकमितप्रौढप्रबन्धं व्यधात्
स श्रीमान् पुरुषोत्तमो विजयतामाचार्यचूडामणिः ।।२।।

एवमेतेषां विस्तृतं चरित्रं 'पुरुषोत्तमदिग्विजये' द्रष्टव्यं विशेषजिज्ञासायाम् । एतादृशाः, उत्कृष्टविद्वांसः सम्प्रदायान्तरे भूतलेऽपि च विरला एवेति ।

अणुभाष्यप्रकाशोपरि 'रश्मि' विवृति लेखकाः श्रीयोगिगोपेश्वराः श्रीविट्ठलेशतृतीयसुनुवंशोद्भवाः परन्तु श्रीविट्ठलेशद्वितीयसुनुश्रीगोविन्दरायवंशे दत्तकत्वेन समागताः विद्वद्वरेण्याः। एते प्रसिद्धा पण्डिताः। एभिः भाष्यप्रकाशोपरि रश्मिनामिका भाष्यात्मिका ग्रन्थाकारा वा टीका निरमायि, सा विद्वन्मान्या । श्रीगोपेश्वरचरणानां स्ववंशपरम्परा दत्तकवंशपरम्परा च संक्षेपेणात्र प्रदर्श्यते—श्रीमद्विट्ठलेश्वरतृतीयसुनु श्रीबालकृष्णानां चतुर्थपुत्राः श्रीपीताम्बराः तस्यान्वये क्रमेण श्रीश्यामलजितः, तत्पुत्राः श्रीव्रजरायजितः तद्दत्तकपुत्राः श्रीपुरुषोत्तमचरणाः दशदिगन्तविजयिनः तद्दत्तकपुत्राः श्रीपुरुषोत्तमाः (गो.आ.तृ.गृ.१ से) तत्पुत्राः श्रीगोवर्धनेशजितः (द्वि०) तद्दत्तकपुत्राः श्रीगोकुलोत्सवजितः (गो. आये द्वि.गृ.१.से) तत्पुत्राः श्रीयोगिगोपेश्वराः पण्डितप्रवराः रश्मिकाराः (गो.गये.द्वि.गृ.१. में विट्ठलेशरायजी के) तत्पुत्राः श्रीकृष्णरायमहाभागाः। इति योगिगोपेश्वराणां स्ववंशावलिः। अतः परं तेषां दत्तकवंशपरम्परा—श्रीमद्विट्ठलेश्वर द्वितीयसुनुश्रीगोविन्दरायाः तत्पुत्राः श्रीकल्याणरायाः तत्पुत्राः श्रीहरिरायाः शिक्षापत्ररचयितारः तद्दत्तकपुत्राः श्रीगिरिधरजीमहोदयाः (गो.आये.प्र.गृ.१. से.) तत्पुत्राः श्रीरघुनाथजितः तत्पुत्राः श्रीगोविन्दरायजितः (द्वि.) तत्पुत्राः श्रीविट्ठलेशरायजितः तद्दत्तकपुत्राः श्रीयोगिगोपेश्वर महाभागाः विद्वत्प्रवराः (गो. आये. तृ.गृ.२.से. प्रा.वि.सं. १८३५ मि.ज्ये.शु. ८) इति श्रीयोगिगोपेश्वराणां दत्तकवंशपरम्परा । किं चैभिः' भक्तिमार्त्तण्डादयः अन्येऽपि ग्रन्थाः सारगर्भिताः लिखिताः।

ब्रह्मसूत्रमिदं समग्रवेदान्तानां आकरग्रन्थः। ब्रह्मसूत्रेदं कदा निर्मितमित्यतिचिरन्तनवृत्तत्वाद्यद्यपि निश्चयेन वक्तुं न शक्यते तथापि महर्षिबादरायणव्यासरचितत्वादस्य रचनाकालः द्वापरयुगस्यान्तिमो भागः कलिकालस्य च प्रारम्भः अतः सम्भवतः पञ्चसहस्रवर्षाणि यावत् पूर्वमस्य कालः निश्चेतुं शक्यते । ब्रह्मसूत्ररचनाकालः अतिप्राचीनः इति प्राज्ञां मतम् । आधुनिकपाश्चात्यानामतानुसारेणास्य रचनाकालः चतुः शती ई०पू० वर्त्तते । अस्माकमैतिह्यानुसारेण श्रीमद्भागवतप्रथमस्कन्धोपाख्यानेन ज्ञायते यच्छ्रीमद्भागवतनिर्माणतः पूर्वमेव रचितमिति । श्रीमद्भागवते भगवतः श्रीकृष्णस्य लीलावर्णनमस्ति भगवान् श्रीकृष्णस्योद्भवः किञ्चिदधिक पञ्चसहस्राब्देभ्यः पूर्वतने काले आसीदिति । अतः श्रीवेदव्यासरचित- ब्रह्मसूत्रस्यापि कालः स एवेति निश्चीयते । एवमेव श्रीमद्भगवद्गीतायामपि "ब्रह्मसूत्रपदैश्चैव" इत्यादि श्लोके ब्रह्मसूत्रस्य नामोल्लेखात्स्पष्टं निश्चीयते यत्तत्त्वसूत्रस्य रचनाकालः श्रीभगवद्गीतातः अपि पूर्वमस्तीति ।

ब्रह्मसूत्रेऽस्मिन् सूत्रसंख्याऽपि विविधा तत्तद्भाष्यकारैर्निश्चिता । तत्र प्रमुखमतानि —

| | | सू.सं. | अधि.सं. |
|---|---|---|---|
| (१) | भाष्यकाराः आचार्यशङ्कराः | ५५५ | १९१ |

| | | | |
|---|---|---|---|
| (२) | भाष्यकाराः आचार्यरामानुजाः | ५४५ | १६० |
| (३) | भाष्यकाराः आचार्यमाध्वाः | ३६४ | २२३ |
| (४) | भाष्यकाराः आचार्यनिम्बार्काः | ५४९ | १६१ |
| (५) | भाष्यकाराः आचार्यवल्लभाः | ५५४ | १७१ |

एवं जगद्गुरुश्रीमदाचार्यचरणैकदर्शितः साकारब्रह्मवादापरपर्यायः "शुद्धाद्वैतब्रह्मवादनिर्गुणपुष्टिभक्तिमर्गो" नाम सन्मार्ग इत्यविचिकित्सितम् । श्रीमदाचार्यचरणैः श्रीमत्प्रभुचरणैश्च प्रदर्शितरीत्या तत्कृपयैव तत्सिद्धान्तसरणिमनुसृत्य श्रीमद्ब्रह्मसूत्राणुभाष्यस्य प्रकाशरश्मिसहितस्योपोद्घातोऽयं मया विलिखितः । अत्र निर्मत्सराः विद्वांसः गच्छतः स्खलनन्यायेन प्राप्तामशुद्धिं संशोध्य पठन्तु, मयि चोपकुर्वन्त्विति ।

।। धन्यवाद ज्ञापनम् ।।

भगवतः श्रीयशोदोत्संगलालितस्य श्रीगोपीजनवल्लभस्य श्रीमुकुन्दप्रभोः श्रीगोपालप्रभोश्च परमानुग्रहेण परमगहनस्यास्य तत्वसूत्रस्याणुभाष्यप्रकाशरश्मिरूपत्रीवेणिसङ्गमस्वरूपबृहद्ग्रन्थस्य पुनः प्रकाशने प्रयतमानाः सतनुवित्तदत्तचित्ताः श्रीहरिश्चन्द्रमहोदयः, श्रीसरोजकुमारगोयलः (एतौ दिल्लीवास्तव्यौ) श्रीदेवकुमार अग्रवालमहोदयः, श्रीघनश्यामजीशाहमहोदयः (एतौ काशीवास्तव्यौ) एते सर्वे शतशः धन्यवादार्हाः। इत्यलं विस्तरेणेति ॥

श्रीकृष्णाय नमः ।

# श्रीमद्ब्रह्मसूत्राणुभाष्यम् ।

शुद्धाद्वैतब्रह्मवादनिर्गुणभक्तिमार्गप्रवर्तकाचार्यचक्रचूडामणि-
श्रीमद्वल्लभाचार्यचरणप्रणीतम् ।

दशदिगन्तविजयिश्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणप्रणीत-
भाष्यप्रकाशसंपूर्णवेत्तृश्रीमद्गोस्वामिश्रीगोपेश्वर-
जिचरणप्रणीतभाष्यप्रकाशरश्मिपरिबृंहितम् ।

प्रथमाध्यायप्रथमपादस्यादिमसूत्रत्रयात्मकम्

( त्रिसूत्रीभाष्यम् )

'भगवद्धर्मपरायणसद्गतश्रेष्ठिगोवर्धनदास सुन्दरदास' इत्यस्य पुष्टिमार्गीय-
संस्कृतसाहित्यसमुद्धारार्थं निर्दिष्टद्रव्यसंग्रहतः 'प्राप्तभगवत्पद-
मूलचन्द्र तुलसीदास तेलीवाला, बी. ए., एलएल्. बी.,
वकील, हाइकोर्ट' इत्येतेषां सुहृद्भिः
संशोध्य 'निर्णयसागर' मुद्रणालये
मुद्रयित्वा प्रकटीकृतम् ।

श्रीवल्लभाब्दाः ४५७. संवत् १९९२.
मार्गशीर्ष कृष्ण ९.

मूल्यं रूप्यकद्वयम् ।

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# श्रीमद्ब्रह्मसूत्राणुभाष्यम् ।



## भाष्यप्रकाश-रश्मि-परिबृंहितम् ।

## अथ प्रथमोऽध्यायः ।

### प्रथमः पादः

---

भाष्यप्रकाशः ।

॥ श्रीकृष्णाय नमः ॥

संगीतं श्रुतिमूर्धभिस्तदविदां वागाद्यतीतं विदां

रश्मिः ।

श्रीकृष्णाय नमः । साकारब्रह्मवादस्थापकेभ्यः श्रीमदाचार्येभ्यो नमः ।

उद्धर्तुं ज्ञानरहितान्, माद्दशानपराधिनः ।

कृतश्रम इवाभासि यतस्त्वं विठ्ठलेश्वरः ॥ १ ॥

जयति जगति वाणी वेदवेदान्तयुक्ता विविधमहिमशुद्धाद्वैतविद्याकृतेऽलम् ।

प्रभवति खलु वादे मायिनीतीह यस्य जयति विजितमायः श्रीमदाचार्यवर्यः ॥ २ ॥

पितृचरणोदितसरणौ साकारब्रह्मस्थापिकायां तु ।

आदिमूर्तिभजनेषु प्रतिनिधीन् विठ्ठलान् नमामि ॥ ३ ॥

गुणत्रयातीतगुणाढ्यगेहे कृष्णाश्रयाद्याः सुरवर्यवृक्षाः ।

तदन्तरा मूलसुखार्थसारं शाखाद्विषट् शब्दसहस्रपर्णम् ॥ ४ ॥

मुक्तालिवृन्दैरभितः स्तुतं च जुष्टं रसाकाङ्क्षिशुकादिभक्तैः ।

दिव्यं पुराणं च सहस्रनामकल्पद्रुमं नौमि रसार्थकामी ॥ ५ ॥

श्रीवल्लभाचार्यपदाब्जयुग्मसंशोधिताशेषविशेषबुद्धिः ।

वेदान्तिहृत्पद्मविकासनेऽलं भाष्यप्रकाशे वितनोमि रश्मिम् ॥ ६ ॥

विविधदुरितपाशं व्याहतीकृत्य नस्त्वं प्रविश हृदयकञ्जं किंच योगं विधेहि ।

कथमिह खलु रश्मिर्मान्यतां पण्डितानां सदसि जलजपाणे लप्स्यते त्वन्यथायम् ॥ ७ ॥

भाष्याब्धिः क्वातिगम्भीरः क्वाहं मन्दमतिस्तथा ।

तथापि यामि तत्पारं कृपानौकासमाश्रितः ॥ ८ ॥

यदि भाष्यप्रकाशीयं रहस्यं वेत्तुमिच्छथ ।

तदा पश्यत विद्वांसो रश्मिं स्पष्टचमत्कृतिम् ॥ ९ ॥

अतिगूढार्थं भाष्यं विवरीतुं शास्त्रार्थत्वेनानिर्वचनीयं वस्तु निर्दिशन्ति संगीतमित्यादिना । संगीतमिति । शिवादयोपि गीता इति तद्व्युदसितुं समिति । तथा च शेषितया गीतमित्यर्थः । श्रुतिमूर्धभिरिति । वेदान्तैरित्यर्थः । 'ऋचां मूर्धानं यजुषामुत्तमाङ्गं साम्नां शिरोऽथर्वणां मुण्ड-

---

१. नामरूपयोर्भजने, यथा नामभजने श्रीमदाचार्यास्तथा स्वरूपभजने श्रीविठ्ठलेश्वराः । २. पद्मेति पाठः । ३. 'अलं वयं ते महिमाऽनुवर्णने' इति श्रीभागवतचतुर्थस्कन्धेऽलंयोगे चतुर्थीस्थले सप्तम्यपि दृश्यते ।

भाष्यप्रकाशः।

दूरं साधनसंपदां निरुपधिस्नेहैः सुलापं वृतैः।
रासोल्लासवशंवदव्रजवधूवृन्दे वसन्तं सदा
दासक्लेशहरं मुदा परतरं श्रीकृष्णदेवं श्रये ॥ १ ॥
मन्दान् वीक्ष्य जनान् विभुः श्रुतिगणं व्यस्याऽथ कारुण्यतः
स्त्रीशूद्रादिहिताय भारतमुखेनोक्त्वा तदर्थं पुनः।
बुद्धिं शोधयितुं चकार सुविदां यो ब्रह्मसूत्रात्मकं

रश्मिः।

मुण्डम्' इति कौषीतकिश्रुतेः। एतेन मुख्यं प्रमाणं प्रदर्शितम्। समन्वयरूपः प्रथमाध्यायार्थश्च दर्शितः। तदविदां वागाद्यतीतमिति। वेदान्ताविदां वागाद्यतीतं, न तु सर्वथेत्यर्थः। 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इत्युक्त्वा 'आनन्दं ब्रह्मणो विद्वान्' इति श्रुतेः। 'तं त्वौपनिषदं पुरुषं पृच्छामि' इति श्रुतेश्च। 'विदूरकाष्ठाय मुहुः कुयोगिनाम्' इति स्मृतेश्च। तेन मतान्तरनिराकरणरूपो द्वितीयाध्यायार्थ उक्तः। विदामित्यादि साधनानां संपद्येषां तेषां विदां दूरमित्यर्थः। 'यस्यामतं तस्य मतं मतं यस्य न वेद सः' इति श्रुतेः। 'नायमात्मा प्रवचनेन लभ्यः' इति श्रुतेश्च। तर्हि किमपि साधनं नास्तीत्याकाङ्क्षायामस्तीत्याहुः निरुपधिस्नेहैरिति। निरुपधिः स्नेहो येषां तैरित्यर्थः। 'नायमात्मा बलहीनेन लभ्यः' इति श्रुतेः, बलं भक्तिरिति सिद्धान्तः। 'वशीकुर्वन्ति मां भक्त्या' 'भक्त्याहमेकया ग्राह्यः' इत्यादिस्मृतिशताच्च। किंच 'ब्रह्मविदाप्नोति परम्' 'तमेव विदित्वातिमृत्युमेति' इत्यादावपि स्नेह एवोच्यते। प्रियत्वप्रकारकबुद्धेरेव स्नेहपदार्थत्वात्। पुत्रे स्निह्यतीत्यादौ पुत्रविषयिणीं प्रियत्वप्रकारां बुद्धिं करोतीति प्रत्ययात्। तेन साधनं दर्शितम्, तृतीयाध्यायार्थश्चोक्तः। कर्मधारयपक्षे तु बहुवचनं परिकरस्यापि साधनत्वाय। तेन भक्त्यंशानां साधनत्वम्, न तदतिरिक्तानामित्युक्तम्। तत्रापि प्रेम्णि विशेषमाहुः सुलापमिति। अधिकारिण आहुः वृतैरिति। 'यमेवैष वृणुते तेन लभ्यः' इति श्रुतेस्तथेत्यर्थः। फलाध्यायार्थमाहुः रासोल्लासेत्यादि। रसानां समूहो रासस्तत्र तेन वा य उल्लासः परस्परमाश्लिष्य क्रीडा स रासः, रससमूहत्वात्, भावे घञ् वा, उत्तरोत्तररमणेच्छा वा। तेन वशंवदे व्रजवधूवृन्दे सदा वसन्तमित्यर्थः। सप्तम्यत्राभिव्यापकाधारे बोध्या। 'तिलेषु तैलं दधनीव सर्पिः' इति श्रुतेः, सर्वस्मिन्नात्मास्तीति लौकिकः। तादृशोपि भक्तोन्मुख इति भजनीयत्वमाहुः दासक्लेशहरमिति। तथेत्यत्राप्यन्वेति। परतरमिति। 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' इति श्रुतेः। श्रीकृष्णदेवमिति। एतच्च फलाध्यायतृतीयपादे 'समान एवं चाभेदात्' इति सूत्रे उपपादितम्। अतिधृतिरत्र जातिः। शार्दूलविक्रीडितं छन्दः। 'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्' इति तल्लक्षणात्। दासक्लेशहरमितिपदेनाभिव्यज्यमानस्य भक्तनिष्ठभावस्य ग्रन्थकर्तृभावपोषणात्। भावस्य भावाङ्गत्वेन प्रेयोऽलंकारः। रसो भक्तिः। स च तृतीयाध्यायतृतीयपादे 'व्यतिहारो विशिंषन्ति हीतरवत्' इति सूत्रभाष्य उक्तः। यथास्या अतिरिक्तरसत्वं तथोपपादितं मया भक्तिमार्तण्डस्य प्रमेयप्रकरणे, एतद्रस्मौ चैतद्व्यक्ते ॥ १ ॥

उपक्रमकं स्तुवन्तो व्यासं नमन्ति युगलेन मन्दान्वीक्ष्येत्यादि। तदर्थमिति वेदार्थमित्यर्थः। बुद्धिं शोधयितुमिति 'वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्वाः' इति श्रुतेरित्यर्थः। चकारेति भारतकरणसूत्रकरणयोः पूर्वापरीभावस्तु 'कृतवान् भारतं यस्तस्य' 'जिज्ञासितमधीतं च' इति पाठक्रमात्। सोयं पूर्वतन्त्रे दशमस्य पञ्चमे पादे 'ऐन्द्रवायवस्याप्रवचनाद्

भाष्यप्रकाशः ।

वेदान्तार्थविकासकाद्भुतपदं शास्त्रं गुणैरुज्ज्वलम् ॥ २ ॥
एवं सर्वहितं परमपि यदाखिद्यत्तदा नारदात्
तत्रोपायमवेत्य खेदहतये दृष्ट्वा समाधौ हरिम् ।
श्रीमद्भागवतेन संशयमहन् भक्तिप्रचारोद्यत-
स्तं कृष्णं मुनिमानमामि करुणं ज्ञानावतारं हरेः ॥ ३ ॥
सर्गादौ स्वमतं समस्तविषये यं ब्रह्मवादं जगौ
कौन्तेयोद्धवयोः प्रकाश्य च पुनर्वेदान्तसारं हरिः ।
तं व्यासाशयगोचरं प्रथयितुं यैर्भाष्यमाभाषितं
तानाचार्यवरान्नमामि करुणान् श्रीवल्लभाख्यान् प्रभून् ॥ ४ ॥
श्रीवल्लभप्रतिनिधिं तेजोराशिं दयार्णवम् ।
गुणातीतं गुणनिधिं श्रीगोपीनाथमाश्रये ॥ ५ ॥
श्रीविट्ठलेशपादाब्जनखचन्द्रत्विषः सदा ।
अलंकुर्वन्तु मत्स्वान्तं मायावादतमोहराः ॥ ६ ॥

रश्मिः ।

दितः प्रतिकर्षः स्यात्' इत्यधिकरणे चिन्तितः । ज्योतिष्टोमे 'उपांश्वन्तर्यामौ धाराग्रहौ' धारया गृह्णातीत्युक्तेर्विधाय, ऐन्द्रवायवो ग्रहस्तृतीयः 'ऐन्द्रवायवाग्रा ग्रहा गृह्यन्ते' इति श्रूयते । स न तयोः पूर्वं गृह्यते पाठक्रमात्र ह्ययमग्रताविधिः, किंतु ग्रहविधिरतः स्वस्थानस्यैवैन्द्रवायवस्य ग्रहणमिति । गुणैरुज्ज्वलमिति व्यञ्जनाकाङ्क्षाप्रभृतिभिरुज्ज्वलमुत्तममित्यर्थः ॥ २ ॥

यदाखिद्यदिति । यदाखिद्यत्तदा नारदात् तत्रोपायमवेत्य खेदहतये भक्तिप्रचारोद्यतो जात इत्यन्वयः । तेन हेतुहेतुमद्भावाभावान्न लृङ्लिङौ ॥ ३ ॥

'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ, तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः' इतिश्रुतिमनुसंदधानाः सर्वाचार्यशिरोमणित्वेन ब्रह्मवादप्रवर्तकानाचार्यान्नमन्ति सर्गादावित्यादि । यं ब्रह्मवादमिति । द्वितीयस्कन्धे नवमे चतुःश्लोक्यां ब्रह्मवित्त्रपाठके च प्रसिद्धम्, नृसिंहोत्तरतापिनीये चेत्यर्थः । प्रकाश्येति व्यस्येत्यर्थः । अदृश्यत्वाधिकरणे स्फुटीकृत्येति यावत् । आचार्यवरानिति । 'जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम्' इति सूत्रेण बहुवचनम् । एकस्मिन्नर्थे वर्तमानः शब्दो बहूनामर्थानां वचनं बोधको भवतीत्यतिदेशोऽयम् । परंतु भावप्रत्ययं विना जातेः प्राधान्येनाख्यामपेक्ष्यते । जातौ शक्त्यङ्गीकारे चेदमेव मानम् । तथा च महाभाष्यं 'यावद्ब्रूयादेकोऽर्थो वा बहुवद्भवतीति तावदेकस्मिन्बहुवचनमिति' इति शेखरे स्पष्टम् । 'एकत्वं न प्रयुञ्जीत गुरावात्मनि चेश्वरे' इति वाक्याच्च । 'अत एव प्राणाः' इति श्रीव्याससूत्रेषु प्राणपदोत्तरबहुवचनदर्शनात्प्रमाणभूतात्च एवमेव प्रयोक्तव्यमस्तु ॥ ४ ॥

आचार्यज्येष्ठपुत्रानाश्रयन्ति श्रीवल्लभेत्यादि । वितानं छन्दः । 'वितानमाभ्यामन्यत्' इति लक्षणात् । आभ्यामित्युपलक्षणम् । विद्युन्मालादिभ्योऽखिलेभ्यो यदतिरिक्तमनुष्टुब्वृत्तं तदेव वितानमिति ॥ ५ ॥

मायावादतमोहरा इति । 'स्थानविशेषात्प्रकाशादिवत्' इति सूत्राष्टकसहितसार्धाध्यायस्य श्रीमद्विठ्ठलेश्वरचरणप्रणीतत्वादितिभावः ॥ ६ ॥

भाष्यप्रकाशः।

तत्पुत्रान् सह सूनुभिर्निजगुरून् श्रीकृष्णचन्द्राह्वयान्
भक्त्या नौमि पितामहं यदुपतिं तातं च पीताम्बरम्।
वन्दे च ब्रजराजमन्वयमणिं यद्रोचिषा माहशो-
ऽप्यासीन्मूर्ध्नि कृपापरः प्रभुवरः श्रीबालकृष्णः स्वयम् ॥ ७ ॥
श्रीवल्लभाचार्यपदाम्बुजाते भक्त्या मुदाऽन्तर्हृदि संनिवेश्य।
भाष्यप्रकाशे प्रयतेऽतिदीनो निःसाधनस्तत्करुणाबलेन ॥ ८ ॥
आचार्यवाचः प्रणमामि भाष्यसुबोधिनीस्था इतराश्च यास्ताः।
मत्स्वान्त आगत्य कृपाप्लुतास्ता मदीयवाचां रचयन्त्वलंकृतिम् ॥ ९ ॥

अथ स्वालौकिकानुभावप्रकटनहृदयस्य भगवत आज्ञया तदर्थमाविर्भूताः श्रीमदाचार्या-

रश्मिः।

सर्वानेव मान्यान् नमन्ति तत्पुत्रानिति ॥ ७ ॥

ग्रन्थकरणे स्वप्रतिभाहेतुं वदन्तस्तत्करणं प्रतिजानते श्रीवल्लभाचार्येत्यादि। त्रिष्टुप्जातिः। इन्द्रवज्राछन्दः। 'स्यादिन्द्रवज्रा यदि तौ जगौ गः' इति तल्लक्षणात्। भाष्यप्रकाश इति। प्रकाश-शब्द आतपं वक्ति। भाष्यसमाप्तौ 'आविष्कृतोऽयं भुवि भाष्यभास्करः' इति भाष्यस्य भास्करत्वोक्तेः। निमित्तत्वं सम्यर्थः ॥ ८ ॥

'मूर्तैर्महद्भिः' इति न्यायेन प्रार्थयन्ते आचार्यवाच इत्यादि। उपजातिः। 'अनन्तरोदीरित-लक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' इति लक्षणात्। गाथाछन्दः। वस्तुतस्तु रचयन्तु भूषामिति पाठः प्रतिभाति। तथा चाख्यानकीछन्दः 'आख्यानकी तौ जगुरू गमोजे जतावनोजे जगुरू गुरुश्चेत्' इतिलक्षणात्। ओजे विषमे पादे। अनोजे समे। हस्ताक्षरपुस्तके त्वयमपाठः, अन्याक्षरैर्लिखितश्च। आगत्य कृपाप्लुता इत्यनेन वाचामाधिदैविकत्वं ध्वन्यते ॥ ९ ॥

भाष्यमवतारयन्ति अथेत्यादिना। भाष्ये परसवर्णाभावस्तु वैकुण्ठस्थतास्फोरकः, न व्याकरण-विरोधाधायकः। सत्यलोक एव परसवर्णश्रवणात्। आकाशवाणीवत्। तथाहीति निदर्शनार्थस्यो-ल्लेखस्तु ब्रह्मभावात्। यतः सत्यलोकमभिव्याप्यैव तथाहीति प्रयोगो मया श्रुतः पूर्ववदेव। सोपि भाष्ये क्वचिदेव दृश्यते। वैकुण्ठस्थता तु श्रीमदाचार्याणां ब्रह्मभावेन सर्वरूपत्वात् स्फुटैव।

'नमामि हृदये शेषे लीलाक्षीराब्धिशायिनम्।
लक्ष्मीसहस्रलीलाभिः सेव्यमानं कलानिधिम्' इति-

दशमश्रीसुबोधिनीप्रारम्भश्लोकात्, असंधिस्तु शिवादिभिरपि अकरणात् तस्याः। मुक्त्वा सेति सारोत्र। अथेति, अथशब्दः आरम्भार्थकः,। न त्वानन्तर्यार्थकः, आचार्यैः सूत्रपाठात् पूर्वं मङ्गलाकरणात्। तथा चाहुराचार्याः सुबोधिन्यामथ व्याख्या इति। निबन्धाद्यानन्तर्यं वा तदर्थः। स्वालौकिकानुभावो ब्रह्मवादलक्षणो (पत्रावलम्बनोक्तः) मायावादव्यतिरिक्तः। स्वस्य ब्रह्मणोऽलौकिको लोकोत्तरोऽनुभावो ब्रह्मज्ञानमनु पश्चाद्भावो भक्तिः प्रेम च यौगिकोर्थः, रूढो भिन्नः। कीदृ-गित्याकाङ्क्षायां ब्रह्मणो वादो यत्र त्वलौकिकानुभावेन 'ज्ञानी चेद्भजते कृष्णं तस्मान्नास्त्यधिकः परः' इति

भाष्यप्रकाशः ।

तस्यानुभावस्य सर्ववेदान्ततात्पर्यगोचरत्वज्ञापनाय वेदार्थतामरसतरणेर्भगवतो बादरायणस्य सूत्राणि व्याकरिष्यमाणाः,

रश्मिः ।

निबन्धाज्ज्ञानमनु प्रज्ञभावो भक्तिः लक्ष्यते तेन लक्षणं, प्रज्ञवादो लक्षणं यस्य स्वालौकिकोनुभावस्य लक्ष्यस्य स तथोक्तः । अनुभावस्वरूपं प्रथमे सुबोधिन्यां सप्तदशाध्याये 'इत्थंभूतानुभावः' इत्यत्रास्ति । मृतोपि जीवन् तिष्ठतीत्थंभूतानुभावः इति । [तथा चायं निष्कर्षः । उक्ते प्रतीतस्याप्रतीतस्य चार्थस्य स्वस्य प्रज्ञण आचार्याणां चालौकिको लोकानधिगतो योयमनुभावः । मानुषीं तनुमाश्रितस्य सन्मनुष्याकृतेश्च जगज्जन्मादिकर्तृत्वं सकलमतनिरासपूर्वकं अध्यायद्वयप्रतिपाद्यं साधनफलत्वे च । आचार्याणां तत्प्रतिपादकत्वं चतुर्षु अध्यायेषु स प्रथमस्कन्धारूढो यौगिकश्चेति यौगिको ज्ञानमनुभावो भक्तिस्वरूपोपि । तदुक्तं वल्लभाष्टके 'तस्यैवात्मानुभावप्रकटनहृदयस्याज्ञया' इति । व्याख्यातं च टीकाकृद्भिः] सर्ववेदान्तेति सर्ववेदान्तानां तात्पर्यगोचरत्वस्य ज्ञापनाय । अत्रेदं ज्ञेयम् । शक्तिलक्षणातात्पर्येषु तिसृषु वृत्तिषु तात्पर्यवृत्तिगोचरत्वमित्यम् । ननु तात्पर्यवृत्तिरेव नास्ति । तात्पर्यानुपपत्तेर्लक्षणाबीजत्वस्य 'यष्टीः प्रवेशय' 'काकेभ्यो दधि रक्ष्यताम्' इत्यादिषु स्पष्टतया वृत्तेर्द्वैविध्यादिति चेत्, सत्यम्, वृत्तिद्वयपक्षोप्यस्ति । परेषामालंकारिकाणां वृत्तित्रयपक्षस्तु,

'भद्रात्मनो दुरधिरोहतनोर्विशालवंशोन्नतेः कृतशिलीमुखसंग्रहस्य,

यस्यानुपप्लुतगतेः परवारणस्य दानाम्बुसेकसुभगः सततं करोऽभूत्' इत्यादौ

व्यञ्जनावृत्तिमन्तरेण निर्वाहाभावादिष्टः । न चात्र लक्षणयैव निर्वाह इति वाच्यम् । राजासंबन्धिनि गजे तदयोगात् । दूषणानां यौक्तिकत्वेन 'युक्तं च सन्ति सर्वत्र भाषन्ते ब्राह्मणा यथा' इति कृष्णवाक्यान्मुख्यार्थस्य बाधाभावाच्च । स्फुटमन्यत्प्रस्थानरत्नाकरे । एवं च वृत्तिद्वयपक्षेपीदं युक्तम् । तथा हि प्रस्थानरत्नाकरे द्वैधावृत्तिप्रपञ्चे व्यञ्जनास्थले तात्पर्यवृत्त्या निर्वाह्याभिधागौणीतात्पर्यरूपास्तिस्रो वृत्तय आलंकारिकरीत्या वृत्तिपदसहिता व्यवस्थापिता इति 'भद्रात्मनः' इत्यादौ अभिधामूलव्यञ्जनास्थलेऽभिधामूलतात्पर्यवृत्तिस्वीकारः । दार्ष्टान्तिके तु तात्पर्यमात्रं न वृत्तिः । एवं च 'साद्यान्तिको लाक्षणिकः शब्दोत्र व्यञ्जकस्तथा' इत्यत्र 'साद्यान्तिको लाक्षणिकः शब्दस्तात्पर्यवांस्तथा' इत्येवं राद्धान्तिकपाठेपि 'यतो वाचो निवर्तन्ते' इति श्रुत्याऽस्यापि शब्दस्य निवृत्तेः । अतो मूले तात्पर्यमात्रमुक्तं, न वृत्तिपदम् । नन्वेवमप्यभिधामूलव्यञ्जनास्थले अभिधैव व्यापारो नातिरिक्ता व्यञ्जनेत्यादि उपपाद्य यथासंभवं तात्पर्यवृत्त्यर्थः धर्माभिधास्वन्तभावाञ्चातिरिक्ता व्यञ्जनेति पठनाद् 'भद्रात्मनः' इत्यादिस्थलेऽभिधादिवृत्तिप्राप्त्या दार्ष्टान्तिकेऽप्यभिधादिवृत्त्यावश्यकत्वात् त्रिविधशब्दस्य यच्छब्दार्थमूलब्रह्मणो निवृत्तिरिति चेत् मैवम् । ['यतो वाचः' इत्यस्य इदमित्यतया तत्स्वरूपे निरूपणनिषेधेन परत्वमत्रैव भाष्य ईक्षत्यधिकरणे चाशब्दत्वनिषेधेन सामान्यतो यच्छब्दार्थे ब्रह्मणि निर्गुणानन्दमात्रयच्छब्दाभिधायाः स्वीकारात् । नन्वेवं सति तात्पर्यगोचरत्वज्ञापनायेति मूलाशुद्धिरिति चेत्, न, सर्ववेदान्तपदपरत्वान्मूलस्य । एकापेक्षया बहूनामनुग्रहस्य न्याय्यत्वात् । 'ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः' इति गीतावाक्यादोमादाय सर्वाभिधादानं रमसात् । 'इदं सर्वं तस्योपव्याख्यानम्' इति श्रुतावुपोपसर्गेण पूर्वोक्तायादरणात् । यत उपे-

भाष्यप्रकाशः।

'सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः'॥

रश्मिः।

तस्य समीपार्थकत्वम्। अन्यथा यत इति श्रुतिभाष्यविरोधापातः। नन्वेवं सति विराजि नारायणादिरूपेषु 'नारायणादिरूपाणि'इत्यादिवक्ष्यमाणा वेदस्य वेदान्तानां चाभिधावृत्तिर्विराजि प्रमेयम्। 'मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्यते ह्यहम्। एतावान् सर्ववेदार्थः' इत्येकादशे निरुक्तात् जगद्व्यापारवर्जाधिकरणे यत्प्रभुक्तम्, तत्तु परं भावं जानतां तात्पर्यं, तद्गोचरत्वं च। तत्र नूनं परस्मिन्भावेऽभिधावृत्तिर्गौणी वोङ्कारोपव्याख्यानरूपत्वात्, सर्वस्य शब्दजातस्य घटादौ शक्तिसंकोच इत्याद्युपपादयिष्यते त्वया। किंच, तात्पर्यानुपपत्तिरूपबीजस्य सत्त्वाल्लक्षणया भवितव्यमिति चेत् न। परस्मिन्वृत्तिद्वयासंगतेः। 'यतः' इति श्रुत्येदमित्थतया वागप्राप्ये तद्व्यापारद्वयासंभवादिदमित्थतांशे। एवं च भाष्यप्रकाशोक्तवाक्येषु मूर्ध्नां तस्य परं पदे श्रीमहाविष्णावभिधया वृत्त्या प्रवृत्तानां वैदिकानां शब्दानां परब्रह्मनिर्गुणानन्दमात्राधिपदशक्त्यै तेषां

'संयोगो, विप्रयोगश्च, साहचर्यं, विरोधिता, ।
अर्थः, प्रकरणं, लिङ्गं, शब्दस्यान्यस्य संनिधिः॥
सामर्थ्यमौचिती, देशः, कालो, व्यक्तिः, स्वरादयः' इति

काव्यप्रकाशोदितैः प्रकरणादिभिः विशेषस्मारकैः परमस्मिन्तात्पर्येणान्येषां पदानां वैदान्तिकानां पुरुषोत्तमे प्रवृत्तिः। यथा 'भद्रात्मनः' इत्यादौ वारणपदसामर्थ्येन तात्पर्यव्यापकेनाभिधया वृत्त्या राज्ञि प्रवृत्तानामपि तात्पर्यवृत्तिर्वारणे इति। ननु व्यञ्जनावृत्तिर्वारणे न तात्पर्यवृत्तिः, सा तु ह्यभिहितान्वयवादिनां मतम्। आकाङ्क्षायोग्यतासंनिधिवशाद्वक्ष्यमाणानां पदानां समन्वये तात्पर्यार्थो विशेषवपुरपदार्थोपि वाक्यार्थः समुल्लसति। तत्रेति ये 'घटमानय, गामानय, शुक्लां दण्डेन देवदत्त' इत्यादौ पदानि स्वार्थमभिधायान्वितानि भवन्तीति वदन्ति तेऽभिहितान्वयवादिन इति चेत् न। यत् किंचित् घटमानय दुग्धां गामानयेत्यादौ यत्किंचित्त्वांशे दुग्धत्वांशे च तात्पर्यवृत्त्या पूर्वोक्तयैव निर्वाहात्। नन्वेवं सति जिज्ञासालक्षणसमन्वयेक्षत्यधिकरणेषु सामान्येषु विचाराभावेप्यानन्दमयाधिकरणेपि न विचारकः। परन्त्वन्तस्तद्धर्माधिकरणे सवितृमण्डलमध्यवर्तिनि शक्तिः, वैदिकानां पदानां नारायणादिरूपाणां न तात्पर्यम्। तल्लिङ्गाधिकरण आकाशादिपदानां सा, न तत्। अतिदेशाधिकरणे प्राणादिपदानां सा, न तत्। ज्योतिश्चरणाधिकरणे ज्योतिरादिपदानां शक्तिः, न तत्। अनुगमाधिकरणे प्राणपदस्य सा, न तत्। तात्पर्यं तु फलाध्याये ब्रह्मणि नित्यलीलाविशिष्टेऽतः प्रारम्भेऽभिधालक्षणशक्त्या विचारात् स्वालौकिकानुभावस्य तात्पर्यगोचरत्वं कथमिति चेत्, सत्यम्। उपासनया शुद्धान्तःकरणानां पुंसां भक्त्या पुरुषोत्तमाविर्भाव इति सिद्धान्तादुपासनाविषयाणां विभूतीनां भक्तिविषयस्य पुरुषोत्तमस्य अभिधया प्रतिपाद्यत्वेपि बाधकाभावात्। लौकिकानुभावत्वात्। नित्यलीलायां भक्तमनोरथपूरकस्य रसरूपस्य श्रीपुरुषोत्तमस्य तात्पर्यगोचरत्वमलौकिकानुभावत्वात्। यद्वा। निर्गुणात् सृष्टिरिति राद्धान्तात्तात्पर्यगोचरत्वमेवातिव्याप्तिवारणायेतराण्यधिकरणानीति निर्गुणत्वात् तेषां वाच्यांशे तात्पर्यगोचरत्वमेव। ननु सर्वैरेव भाष्यकृद्भिरेवं व्याख्यानात्

भाष्यप्रकाशः ।

इति भाष्यलक्षणात् सूत्रोपन्यास एवानुसरणसिद्धेः स्वकृतेरादित एव भाष्यत्वाय सूत्री-

रश्मिः ।

कथं स्वालौकिकानुभावप्रकटनमिति चेन्मैवम् । तैः सगुणब्रह्मणः सकाशात् सृष्टिरिति निरूपणान्न तात्पर्यविषयत्वम्, किंतु ह्यभिधेयत्वमिति, लौकिकत्वात् । तत्र ब्रह्मनिर्गुणादिपदानामभिधामूलं तात्पर्यम्, ब्रह्मणि नारायणादिपदानां कथमु तात्पर्यं, लक्षणाया अप्यभावेन लक्षणामूलव्यञ्जनापरपर्यायतात्पर्यस्याप्यभावादिति चेन्न । जन्यजनकभावसंबन्धस्य शक्यसंबन्धस्य सत्त्वेन लक्षणा गौणीरूपा भविष्यति, सति प्रमाणे तात्पर्यं त्वलौकिकपरमोत्कृष्टत्वे, यथा 'गङ्गायां घोष' इत्यत्र शक्यस्य प्रवाहस्य संबन्धः संयोगः, तस्य तीरे सत्त्वात्तीरे लक्षणा, शैत्यपावनादौ तदभावात्, तात्पर्यवृत्तिरालंकारिकाणां तथा तात्पर्यम् । फलं तु बृहद्वामनपुराणे उत्तरखिले च शाब्दं बोधरूपम् ।

'श्रुतय ऊचुः—नारायणादिरूपाणि ज्ञातान्यस्माभिरच्युत ।

सगुणं ब्रह्म सर्वेदं वस्तुबुद्धिर्न तेषु नः ॥ १ ॥
ब्रह्मेति पठ्यतेऽस्माभिर्यद्रूपं निर्गुणं परम् ।
वाङ्मनोगोचरातीतं ततो न ज्ञायते तु तत् ॥ २ ॥
आनन्दमात्रमिति यद्वदन्ति हि पुराविदः' इति ।

अत्रायं नारायण इत्यादौ ह्यभिधावृत्त्याऽखिलभागवतोक्तधर्मवत्त्वेन नारायणज्ञानमीप्सितम् । परं तु नराणां समूहो नारं तदयनं यस्येति सगुणनारायणपदविग्रहाभावे नारा आपः ता अयनं यस्येति विग्रहे, ब्रह्मेदमित्यादौ न तथापि तु ब्रह्मत्वेन ज्ञानमिति ह्यशेषतत्स्थधर्मवत्त्वेनाज्ञानमेव । तात्पर्यवृत्त्या तु ज्ञानमेव । 'काकेभ्यो दधि रक्ष्यताम्' इत्यत्र दध्युपघातकज्ञानवत् । प्रस्थानरत्नाकरे तु स्वमतनिरूपणावसरे यदुक्तमभिधामूलव्यञ्जनास्थलेप्यभिधैव व्यापारो नातिरिक्ता व्यञ्जना । वक्त्रा स्वविवक्षितबोधोत्पादनाय संयोगाद्यैस्तस्या एकत्र नियमनेप्यभिधेयान्तराभिधाविषयकसंस्कारस्य सदृशादिभिरुद्बोधे तयैवाभिधेयान्तरस्फूर्तिसिद्धौ वृत्त्यन्तरकल्पनस्य व्यसनमात्रत्वात् । न च संयोगादीनां संस्कारोद्बोधप्रतिबन्धकत्वं शक्यवचनम् । 'अस्याननं योनिरुदारवाचाम्' इत्यत्र पदान्तरसाहचर्येप्यश्लीलानुसंधानजन्यजुगुप्साया अनुभूयमानत्वादिति । तत्तु 'भद्रात्मनः' इत्यादौ विलक्षणबोधस्य गजांशेऽनुभूयमानस्य तथाङ्गीकारमाश्रित्य, पूर्वोक्तं तु तमाश्रित्येति ज्ञेयम् । प्रकृतमुच्यते । द्वेधावृत्तिपक्षेपि बुभुत्सितावाचकत्वे तत्प्रतीतिजनकत्वस्य तात्पर्यवृत्तिलक्षणत्वात् फललक्षणादिव्यञ्जनान्तानां तात्पर्यवृत्तावेवाभिनिवेशेन शक्तिगौणीरूपं वृत्तिद्वयमस्माकं शक्तिलक्षणात्मकं तु परेषाम् । परंतु तात्पर्यस्याभिधायामन्तर्भावे, अनन्तरभावे तु वृत्तित्रयम् ।] इति भाष्यलक्षणादिति । अत्र सूत्रानुसारित्वे सति यद्वाक्यघटकं स्वपदवर्णकं तत्त्वं भाष्यलक्षणं पर्यवसन्नम् । तच्च 'साङ्गोऽध्येयः' इत्यादि स्रोतस्य 'अर्थज्ञानार्थम्' इत्यादिना वर्णनादत्र समन्वितम् । महाभाष्येपि 'अथ शब्दानुशासनम्' इत्यादिस्रोतस्य 'अथेत्ययं शब्दोऽधिकारार्थः' इत्यादिना वर्णनात् समन्वितम् । पुरञ्जनोपाख्यानेऽतिव्याप्तिवारणाय सत्यन्तम् । वृत्तावतिव्याप्तिवारणाय विशेष्यम् । सूत्रानुसारित्वं च न सूत्रानुगुणत्वम् । तथा सति 'अर्वाग्बिलश्चमस ऊर्ध्वबुध्न इतीदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नः' इत्यादिश्रुतौ 'चमसवदविशेषात्' इति सूत्रानुगुणायामतिव्याप्तिः, अतः सूत्रानुसारिव्याख्यानत्वं तदर्थः । प्रसिद्धश्रुतावपि ज्ञेयम् । 'ब्रह्मविदाप्नोति परम्' इत्यादौ । तथा च सूत्राणां

# अथातो ब्रह्मजिज्ञासा ॥ १ ॥ ( १-१-१ )

भाष्यप्रकाशः ।

याथशब्देनैव मङ्गलसिद्धेश्च सूत्रमेवादौ पठन्ति अथातो ब्रह्मजिज्ञासेति । नच मङ्गलाचरणान्तरादर्शनाच्छिष्टाचारविरोधः शङ्कनीयः । महाभाष्ययोगभाष्ययोर्ग्रन्थकृत्कृतस्याथशब्दातिरिक्तस्य...

रश्मिः ।

श्रुत्यनुसारित्वान्नातिव्याप्तिः आर्थिकार्थस्पर्श्यध्यासभाष्येपि न सेति । यत्तु शंकराचार्यैः 'शास्त्रयोनित्वात्' इति सूत्रांशं प्रथमान्तत्वेनानन्दमयाधिकरणं च भक्त्वोत्सूत्रं व्याख्यातम्, 'भावे चोपलब्धेः' इति सूत्रं 'भावाच्चोपलब्धेः' इति पाठं भित्वा व्याख्यातम्, माध्वरामानुजभास्कराचार्यैः 'सामान्यापत्तिरुपपत्तेः' इति सूत्रं 'साम्यामान्यापत्तिः' इत्येवं पाठं भित्वा व्याख्यातम्' तत्राव्याप्तिर्न दोषाय, अन्यत्र तु गौण्या निर्वाहः । सूत्रमेवेति । सर्वतः सारभूतार्थबोधकत्वे सूचकत्वे च सति स्वल्पाक्षरपदत्वमिति सूत्रलक्षणम् । 'खल्वहं ब्रह्म सूत्रं' सूचनात्सूत्रम्' इत्यारुणिश्रुतेः ।

'लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च, ।
सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिणः' ॥

इति स्मृतेश्च । वस्तुतस्तु यत्राभियुक्तानां सूत्रत्वव्यवहारस्तानि सूत्राणीति । अतो महति 'अचतुरविचतुर'इत्यस्मिन्पाणिनीये सूत्रे नाव्याप्तिः ॥

**अथातो ब्रह्मजिज्ञासेति इति** ॥ १ ॥ प्रतीकमिदम्, क्रियाविशेषणं तृतीयान्तव्यतिरिक्तम् । तृतीयान्तं तु करणमिति विवेकः । ननु ब्रह्मपदेन किमुच्यते प्राणो वा ब्रह्मैव वा । तथाहि 'एष उ एव बृहस्पतिः' इति श्रुतेः प्राण एष प्राण इत्यर्थात् । न च प्राणेत्यनया श्रुत्या बृहस्पतित्वं विहितम्, न ब्रह्मत्वमिति वाच्यम् । 'ब्रह्म वै देवानां बृहस्पतिः' इत्यारण्यकसमाप्तिग्रन्थस्थश्रुतेरिति चेत्, मैवम् । द्वितीयाध्याये चतुर्थचरणे 'श्रेष्ठश्च' इत्यधिकरणे 'न वायुक्रिये पृथगुपदेशात्' इति सूत्रे प्राणस्योपपादिततत्त्वान्तरकत्वात् । न च ब्रह्मापेक्षया ब्रह्मणस्पतिजिज्ञासा प्रस्तोतव्येति शङ्क्यम् । बृहदारण्यके 'एष उ एव ब्रह्मणस्पतिर्वाग्वै ब्रह्म तस्या एष पतिस्तस्मादु ब्रह्मणस्पतिः' इतिश्रुत्योर्ब्रह्मपदेन वाग्ग्रहणेनादोषात्, तत्त्वान्तरत्वाच्चेति । अत एव जिज्ञासासूत्रे ब्रह्मपदेन वेदान्ता गृहीताः । 'वाग्वै ब्रह्म' इति श्रुतेः । न च शुकादिप्रभृतीनां जिज्ञासा जैमिनिसूत्रानुसारेणाधिकर्तव्येति वाच्यम् । पौर्वतन्त्रीयत्वात् । 'न च वेदादृते किञ्चिच्छास्त्रं ब्रह्माभिधायकम्' इति महाकौर्म्यात् । 'नन्वेवमपि स दोषस्तदवस्थ एवेति चेत्, न । जैमिनेर्भगवतो व्यासस्य शिष्यत्वाच्छास्त्रभेदाच्च । न च वेदजिज्ञासाधिकर्तव्या नामाख्यातोपसर्गनिपातादिभिर्धर्मजिज्ञासया षडङ्गैरितराङ्गैश्च तस्या निराकाङ्क्षत्वात् । इतरत् सर्वं साधनाध्यायतुर्यपादेऽङ्गीकृतमाचार्याः अतस्ततोऽवधेयम् । शङ्कनीय इति तर्कितव्य इत्यर्थः । आङ्पूर्वस्याप्ययमर्थः । ग्रन्थकृत्कृतस्येति । तत्र ग्रन्थो नाम संबन्धप्रयोजनज्ञानाधीनशुश्रूषाजन्यश्रुतिविषयः संदर्भः ।

'सिद्धार्थं सिद्धसंबन्धं श्रोतुं श्रोता प्रवर्तते ।
शास्त्रादौ तेन वक्तव्यः संबन्धः सप्रयोजनः' ॥

---

१. अस्मत्सविधे द्वित्राणि रश्मेः पुस्तकानि सन्ति, तेषां रश्मिकारसंशोधितं पुस्तकं शुद्धं समीचीनं च । तत्र इत आरभ्य एकोनविंशतिः पत्राणि न लभ्यन्ते तदर्थमतीव प्रयतितेपि तत् संपादने न सफलप्रयत्नाभवम् । ग्रन्थान्तराणि तु अशुद्धिपुञ्जदूषितानि न विश्वसनीयानि तथापि तदवलम्बनेन ग्रन्थसंशोधने कृते बहूनि स्खलितानि नयनपथातिथीनि भवन्ति तानि विद्वद्भिः संशोध्यानि इत्यभ्यर्थ्यते सुविज्ञैः ।

**इदमत्र विचार्यते । वेदान्तानां विचार आरम्भणीयो न वेति ।**

भाष्यप्रकाशः ।

रिक्तस्य मङ्गलस्यादर्शनेन, शाबरभाष्ये च 'अथातो धर्मजिज्ञासा' इति सूत्रमेवोपन्यस्य भाष्यारम्भदर्शनेन च विरोधाभावादिति । अस्यारम्भसूत्रत्वादत्राधिकारिविषयसंबन्धप्रयोजननिरूपणद्वारा शास्त्रारम्भः समर्थनीयः । शास्त्रप्रवृत्त्यावश्यकत्वहेतुरूपा संगतिश्च निरूपणीया । अन्यथा प्रेक्षावत्प्रवृत्त्यभावेन शास्त्रवैयर्थ्यं स्यात् । शास्त्रस्य वैधत्वमपि विचारणीयम् । अन्यथा वेदान्तानुपयुक्तत्वं, प्रामाणिकानादरणीयत्वं च स्यात् । तदिदं सर्वं हृदि कृत्वा भगवता श्रीबादरायणाचार्येणेदमधिकरणरूपं सूत्रं प्रणीयते, न तु ब्रह्मविचारप्रतिज्ञामात्रमत्र क्रियत इत्याशयेनाहुः इदमित्यादि ।

विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् ।
संगतिश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम्' ॥

इति लक्षणाद् विषयादिपञ्चकघटितं वाक्यमधिकरणम् । तेनास्मिन् सूत्रे, इदं वक्ष्यमाणं बुद्धिस्थं विचार्यते । अग्रिमसूत्रेषु वेदान्तानां विचारणीयत्वादुपोद्घातेन चिन्त्यत इत्यर्थः । विषयादिकमाहुः वेदान्तानामित्यादि । नन्वत्रायं विषयाद्युपन्यासो न युक्तः, असौत्रत्वात् ।

रश्मिः ।

इत्युक्तेः शुश्रूषायाः संबन्धप्रयोजनज्ञानाधीनत्वम् । तर्ह्यथेति मङ्गलेनापि भाव्यं तत्राहुः शाबरभाष्ये चेति । अन्यथेति वैधत्वाभाव इत्यर्थः । प्रणीयत इति । स्येति शेषः । उपोद्घातेनेति । तेनोपोद्घातोऽत्र संगतिरित्युक्तम् । तत्त्वं च प्रकृतसिद्ध्यनुकूलचिन्ताकालावच्छेदेन प्रकृतानुकूलत्वं प्रकृतोपपादकत्वं वा । एवमपि विशेषलक्षणसमन्वयेपि सामान्यलक्षणस्यानन्तर्याभिधानघटितत्वेनास्य सूत्रस्य च प्राथम्यान्न नैयायिकलक्षणसमन्वयः । किंतु, अधिकरणस्य पञ्चावयवत्वेन 'अथातो ब्रह्मजिज्ञासा' इति सावधानपुरुषप्रयुज्यमानवाक्यप्रयोजनकप्रकृतोपपादकत्वावच्छेदकेन ब्रह्मभक्तिविचारत्वेन रूपेण स्मृतस्य ब्रह्मभक्तिविचारस्योपेक्षानर्हत्वमित्येवं संगतिसिद्धान्तलक्षणसमन्वय इति बोध्यम् । इदं चेश्वत्यधिकरणे संगतिग्रन्थनिरूपणावसरे स्फुटमुपपाद्यम्, इयं चाध्यायानां पादानां च संगतिः । त्रिपदं जिज्ञासासूत्रं अथातो ब्रह्मजिज्ञासेति । तत्र अतःशब्दार्थः स्वयमग्रे वक्तव्यः । तस्याधिकरणरचनानुपयोगात् । ब्रह्मशब्दार्थो वेदान्तानामिति । जिज्ञासाशब्दार्थो विचारः । अथशब्दार्थः आरम्भः । कर्तव्यादिपदाध्याहारापेक्षयारम्भो यजन्तादिरत आरम्भणीयो रभिरनीयरप्रत्ययान्तः । अत उक्तं वेदान्तानां विचार आरम्भणीयो नवेति । अत्र प्रतीतार्थग्रहिलवादी तु शङ्कते नन्वत्रेति । असौत्रेति । सौत्रः प्रतीतोऽर्थः तद्भिन्नत्वात् । तद्विषयादिकमाहुः विषयादिकमाहुरिति । सूत्रे ब्रह्मपदस्य वेदेपि वृत्तिदर्शनेन तत्संबन्धिवेदान्तानां सूचनेन ब्रह्मपरत्वेपि ब्रह्मजिज्ञासेति शेषषष्ठ्या समासस्य वक्ष्यमाणत्वेन च जिज्ञासापदस्य विचारार्थकत्वस्य च तथात्वेनाथशब्दस्यारम्भापरपर्यायाधिकारार्थत्वस्यापि तथात्वेनायमेव विषयादिरित्याशयेन विषयादिकमाहुरित्यर्थः । **वेदान्तानां विचार आरम्भणीयो न वेति** भाष्यात् । आरम्भार्थ उद्यम एवोत्तरत्रानुवृत्तिरूपाधिकारनिवेशाद्वेति । तथाहि, उद्यमत्वे सत्युत्तरत्रानुवृत्तिरासमन्तात् ताच्छारम्भार्थः । भाष्ये विचार इति । सूत्रैर्वस्तुतत्त्वपरीक्षणमित्यर्थः । मीमांसेति यावत् । शेषे षष्ठी । अन्यथा, 'स्मृतेश्च' इत्यादिसूत्रेषु स्मृतीनां विचारकर्मता

भाष्यप्रकाशः ।

किंतु ब्रह्मजिज्ञासा कार्या न वा, ब्रह्म जिज्ञास्यं न वा, इत्येवं सूत्रानुसरणाद् युक्त इति चेन्न । तथोपन्यासे, 'तपसा ब्रह्म विजिज्ञासस्व' इतिश्रुत्या तपस एवोपदेशात् तद्विहाय व्यासपादैः किमिति वेदान्तवाक्यानि विचार्यन्ते, तपः कुतो नोपदिश्यत इत्याशङ्का स्यात्, श्रुतिविरुद्धत्वं च भायात् । एवमुपन्यासे त्वधीतवेदस्य, 'वेदान्तविज्ञानसुनिश्चितार्थाः' इति श्रुतिस्फुरणादस्यां च श्रुतावर्थनिश्चयं प्रति वेदान्तविज्ञानस्य हेतुताकथनात् तस्य च विचारसाध्यत्वात् तत्स्फूर्त्याशङ्कानुदयाद् युक्त इति ।

किंच । जिज्ञासापदस्य च यौगिकार्थ एव प्रायः प्रसिद्ध इति ब्रह्मज्ञानेच्छा कर्तव्या न वा, ब्रह्म ज्ञानेच्छाविषयं कार्यं न वेति प्रथमतो बोधे, ततस्तावन्मात्रस्यापुरुषार्थत्वात् तत्रानुपपत्तौ भातायां पश्चाद् विचारं लक्षयित्वा ततस्तत्कर्तव्यत्वादिकं विचार्यम् । तदपि वेदान्तैरेव वक्ष्यमाणरीत्या विचार्यम् । अन्यथाकस्मिकता स्यात् । अत आवश्यकत्वादपि युक्तः ।

रश्मिः ।

न स्यात् । स्मृतयो विचार्यन्त इति । कर्मषष्ठ्या स्मृतीनां विचाराकर्मत्वात् । तथाच कर्मषष्ठीपरिग्रहे प्रतिज्ञाहान्याख्यनिग्रहस्थानापत्तिः । प्रकृते किंतु ब्रह्मेति । ब्रह्मपदेन वेदान्ताः । अन्वयानुपपत्त्या अध्याहारनिवृत्तये वा पक्षान्तरमाहुः ब्रह्म जिज्ञास्यं न वेति । तपस्येति । नन्वियं श्रुतिः ब्रह्मप्रत्यक्षात्मकज्ञानसाधनविचारसाधनं तपः संतापात्मकमाह, द्वितीयस्कन्धनवमाध्याये तथोक्तेः । वेदान्तवाक्यानि तूपाङ्गत्वेन विचार्यन्त इति उपाङ्गविषयत्वाभावादिति चेत् तत्राहुः इत्याशङ्केति । तथा च तर्कस्यान्यथाज्ञानत्वादुपाङ्गविषयेपि प्रत्यक्षसाधकविचारसाधनतपःप्रतिपादकश्रुतिस्फुरणमिति भावः । विचार्यन्त इति । सूत्रान्तरेषु विचार्यन्त इत्यर्थः । श्रुतिस्फुरणादिति । नन्वितिकरणाभावात् कथं वेदान्तानामिति पदस्य 'वेदान्तविज्ञाने'ति श्रुतौ वेदान्तानामित्यन्तर्वर्तिविभक्तिमाश्रित्य वाक्यप्रतीकत्वमिति चेन्नैवम् । 'यावद्वत्सपवत्सकाल्पकवपुर्यावत्कराङ्घ्यादिकम्' इत्युपक्रम्य 'सर्वं विष्णुमयं गिरोङ्गवदजः सर्वस्वरूपो बभौ' इति प्रथमाध्यायश्लोके सर्वं विष्णुमयमिति पदद्वयस्येतिकरणाभावेपि सर्वं विष्णुमयं जगदिति वाक्यप्रतीकतायाः श्रीधरैः स्वीकारात् । आचार्यैरप्येवमिति । नन्वेवमपि सूत्रेण 'तपसा ब्रह्म विजिज्ञासस्व' इति श्रुतिस्फुरणस्य दुर्वारत्वेन तस्यां च तपसो ब्रह्मजिज्ञासाकारणतोपन्यासेन वेदान्तश्रुतिस्फुरणात्, तस्यां चार्थविचारस्य वेदान्तज्ञानकारणता, एवं चोभयोरर्थयोः स्फुरणमधिकम्, न तु शङ्कानुदय इत्यरुच्याहुः किंचेति । ब्रह्म, ज्ञानेच्छाविषयं कार्यं न वेति । क्रियाविशेषणत्वाद्द्वितीयान्तम्, आर्दि पचतीतिवत् । सार्थकप्रत्ययान्तधातूपस्थाप्यक्रियाविशेषणानां कर्मत्वमिति व्युत्पत्तेः । उभयलिङ्गता वा विषयपदस्य । तत्रेति यौगिकार्थ इत्यर्थः । लक्षयित्वेति स्वसाध्यत्वाख्यसंबन्धेन लक्षयित्वेत्यर्थः । नन्वेवमपि स्फुरितश्रुतिविरोधो नापैतीति चेत् न । तपो न मुख्यसाधनमित्यानन्दमयाधिकरणे वक्ष्यमाणत्वादिति, करणाभावश्रुतेरस्फुरणमेव वा । न्यायस्य क्वाचि-

१. अध्ययेति पाठः ।

भाष्यप्रकाशः।

किंच। व्यासप्रवृत्तिबीजबोधनार्थत्वेनापि युक्तः। तथाहि। प्रथमस्कन्धे चतुर्थाध्याये 'द्वापरे समनुप्राप्ते' इत्यारभ्य, 'एवं प्रवृत्तस्य सदा भूतानां श्रेयसि द्विजाः' इत्यन्तेन सर्वेषां श्रेयोऽर्थं प्रवृत्तिर्व्यासचरणानामुक्ता। पञ्चमे च, 'जिज्ञासितमधीतं च यत्तद् ब्रह्म सनातनम्' इति नारदेन ब्रह्मविचारान्तायाः कृतेस्तथात्वं बोधितम्। तथाच ज्ञानविधिनार्थज्ञानार्थं प्रवृत्तानपि यदा जैमिनीयादिदर्शनैरेकदेशीयविरुद्धज्ञानवतो दृष्टवांस्तदा भारतकरणोत्तरमत्र प्रवृत्तः वेदार्थनिश्चयो वेदान्तार्थनिश्चयं विना न भविष्यतीति। अत एवात्राग्रे वेदान्तवाक्यैरेव ब्रह्मविचारदर्शनं ब्रह्मणि सर्ववेदार्थत्वस्याग्रे स्थाप्यत्वाच्च। तदर्थं वेदान्तविचारावश्यकत्वमवश्यं साधनीयम्। तेन तत्र हेत्वाकाङ्क्षोपशमात्। अतस्तदुपोद्घाततयायं विचारोऽपि शेषषष्ठ्यन्तब्रह्मपदादेव बोध्यत इति सौत्रत्वाद् युक्त इति।

रश्मिः।

स्कत्वात्। वस्तुतस्तु निबन्धे विद्यापर्वसु विचाररूपतपोग्रहणादाह तपसा ब्रह्म विजिज्ञासस्वेति। अनशनादेर्विचारसाधकत्वात्। तस्मान्न विरोध इति। तत्त्वं तु तपसेति श्रुतिः प्रत्यक्षज्ञानसाधनं तपोरूपसंतापमाह। द्वितीयस्कन्धे नवमाध्याये यद्ब्रह्म कृतं नोपाङ्गरूपवेदान्तविचारोपयुक्तं किंचिदाह। 'अन्नं ब्रह्मेति व्यजनात्' इत्यादौ प्रत्यक्षज्ञानस्वीकारादत्र तु शाब्दमिति न 'तपसा'इत्यस्याः श्रुतेर्विषय इति। तथाप्यसौत्रत्वापरिहारो वेदान्तविचारस्येति पक्षान्तरमाह किंचेति। ज्ञानविधिनेति। ज्ञेयश्रेत्यनेनेत्यर्थः। वेदार्थेत्यादि। तथा च संहितानुक्रमणिकायां।

> 'रहस्यमूलं ऋक्पर्णो यजुःपुष्पप्रवालवान्।
> यज्ञकर्मफलः श्रीमान् विप्रभ्रमरसेवितः॥
> छन्दःस्कन्धः शाखाशाखो ब्राह्मो वृक्षः साक्षादेषः।
> यस्तं विद्वान् महर्षिर्विप्रवर्य स स्वर्गं गच्छेदास्वा कीर्तिम्।' इति। रहस्यं वेदान्ताः।

तत्रेति। अग्रिमसूत्रेषु वेदान्तविचार इत्यर्थः। युक्त इतीति। उपलक्षणमेतत्। ब्रह्म वेदवेदान्तौ, जिज्ञासा विचार इत्येवं सौत्रत्वस्य। एवं च 'जिज्ञासितमधीतं च यत् तत् ब्रह्म सनातनम्' इति वाक्यात् सूत्रेण वेदान्तानां विचार आरम्भणीयो[1] न वेति ब्रह्मपदाद् वेदवाचकादेव लभ्यते संशयः। वेदान्तत्वेन ब्रह्मोपादाने तु द्वितीयकोटौ बीजाभावमापद्येत। यद्यपि ब्रह्मशब्दो वेदे प्रयुक्तः उक्तवाक्ये, तथापि वेदपदमपहाय यद् ब्रह्मपदमुक्तं तेनार्थरूपब्रह्मजिज्ञासापि ध्वन्यते। तद्ध्वनितार्थमादाय भाष्यप्रकाशे संदर्भः कियान्प्रवृत्तो रश्मेरुत्तरोपि। इत्थं च यस्मात् कर्मादिभ्यो ज्ञानं माहात्म्यैक्यज्ञानरूपां भक्तिं व्यापारीकृत्य यद्वा गीतोक्तं ज्ञानं पुरुषार्थस्य दुःखाभावस्य सुखस्य च साधनमतः कारणान्माहात्म्यैक्यरूपज्ञानायाथवा गीतोक्ताय ब्रह्मणां वेदान्तानां विचारः, वेदान्तानामिति शेषे षष्ठी, तथा च वेदान्तप्रतिपाद्यवस्तुतत्त्वपरीक्षणमिति वेदान्तप्रतिपाद्यामिश्रविचार इति बोधः। प्रतिपाद्यप्रतिपादकभावसंबन्धे षष्ठीति सर्वं सुष्ठु। विचारान्तःप्रविष्टवस्तुरूपार्थमादायोत्तरः संदर्भो रश्मेः प्रपत्स्यते इति। पूर्वतःप्रसिद्धं विषयलक्षणमाहुः

१. आरम्भणीयानारम्भणीयविचारः।

किं तावत् प्राप्तम् । नारम्भणीय इति । कुतः ।

साङ्गोऽध्येयस्तथा ज्ञेयो वेदः

भाष्यप्रकाशः ।

तत्र विषयो नामापाततः प्रतिपन्नः संदिग्धोऽर्थः । तादृशश्चात्र वेदान्तविचारो न तु वेदान्ताः । तेषामग्रिमसूत्रेषु विचार्यत्वात् । विशयः संशयः । एकधर्मिकविरुद्धकोटिद्वयावगाहि ज्ञानम् । तदाकारश्चात्र, आरम्भणीयो न वेत्यनेनोक्तः । पूर्वपक्षः प्रतिवादिमतम् । तदाहुः नारम्भणीय इति । तत्र पृच्छति कुत इति । 'वेदान्तविज्ञानसुनिश्चितार्थाः' इति श्रुतावर्थनिश्चयं प्रति वेदान्तविज्ञानस्य हेतुताबोधनाद् विचारं विना च तदसंभवात् स आवश्यक इति कुतो नेत्युच्यत इत्यर्थः । एवं प्रश्ने प्रतिवादी अनारम्भणीयतामुपपादयन् गृह्णाति साङ्ग इत्यादि । अयमर्थः । वेदान्तविचारस्यारम्भणीयत्वं वदता सिद्धान्तिना विधिप्रयुक्तयारम्भणीयत्वं वक्तव्यम् । तत्र विचारे प्रत्यक्षविधेरदर्शनात् कथंचिद् कुतश्चिद् वैधत्वं साधनीयम् । ततश्च कर्मादिविधिभ्यस्तत्सिद्ध्यसंभवादध्ययनादिविधिभ्यः साधनीयम् । तत्र, 'स्वाध्यायोऽध्येतव्यः' इत्येकः । 'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत' इत्यपरः । 'साङ्गो वेदोऽध्येयो ज्ञेयश्च' इत्यन्यः । एते त्रयः पूर्वकाण्डस्थाः । 'श्रोतव्यः' इत्यादिरुत्तरकाण्डस्थश्चेतरः ।

तत्र भाट्टास्तावदेवं मन्यन्ते । अध्ययनविधेरक्षरग्रहणमात्रपर्यवसानेऽदृष्टकल्पनापत्तेरर्थज्ञानरूपदृष्टफलार्थतैव युक्ता । न च विमतं वेदाध्ययनमर्थज्ञानहेतुरध्ययनत्वाद् भारताध्ययनवदित्यनुमानेनाध्ययनस्य स्वाध्यायसंस्कारद्वाराऽर्थज्ञानहेतुत्वप्राप्तेर्न तावत्पर्यन्तं विधिव्यापारो युक्त इति वाच्यम् । विमतं वेदाध्ययनं नार्थज्ञानहेतुर्वेदाध्ययनत्वादाधुनिकाध्ययनवदिति प्रत्यनुमानेन तद्बाधात् । न च लोकेऽवगतसामर्थ्यानां शब्दानां वेदेऽपि बोधकत्वाल्लिखितपाठादिनाऽप्यर्थज्ञानसंभवाच्चार्थबलादेव तत्प्राप्तेरर्थज्ञानांशे तस्यापूर्वविधित्वाभावाच्च तत्पर्यन्तं विधिव्यापारो युज्यत

रश्मिः ।

तत्र विषय इत्यादि । वेदान्तविचार इति । 'जन्माद्यस्य यतः' इत्यारभ्य 'अनावृत्तिः शब्दादनावृत्तिः शब्दात्' इत्यन्तसूत्रजातं ब्रह्मविचारशास्त्रं तत्तादृशमित्यर्थः । वेदान्तविज्ञानेति बुद्धिर्विज्ञानं मन्तव्यमिति प्रसिद्धश्रुतिमपहाय श्रुत्यन्तरोपन्यासोनेकश्रुत्यनुगृहीतत्त्वार्थः । तदसंभवादिति । वेदान्तविज्ञानजन्यनिश्चितार्थे मुमुक्षु ( असंदिग्धोपि वेदार्थ इति भाष्येप्याह ) तस्यासंभवादित्यर्थः । गृह्णातीति हेतून् संगृह्णातीत्यर्थः । यदि च प्रतीकमत्र कर्मत्वेनान्वेति तदा तु शेषोपि पूरणीयः । प्रथमप्रतीकेपि सूत्रविशेषणं भवितुमर्हति प्रतीकं 'अथातो ब्रह्मजिज्ञासा'इति सूत्रमेवादौ पठन्तीति । तथा च त्रेधान्वयः प्रतीकस्य कर्मत्वेनाऽभेदेन करणत्वेन चेति सिद्धम् । तत्र स्वाध्याय इत्यादि । अत्राद्यं वाक्यं तैत्तिरीयब्राह्मणस्थम्, अन्यद्वाक्यद्वयं शाखान्तरीयम् । अध्यापयीतेत्यत्राध्यापयेदिति केचित् पठन्ति, तृतीयं च 'ब्राह्मणेन निष्कारणः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति पठन्ति । स्वाध्यायसंस्कारद्वारेति । 'अपहतपाप्मा स्वाध्यायो देवपवित्रमिति' श्रुतेरपहतपाप्मत्वमादिपदोक्तमयातयामत्वं च तद्रूपसंस्कारद्वारेत्यर्थः । अथवा स्वाध्याय एव संस्कारस्तद्द्वारेत्यर्थः । अध्ययनं वेदे स्वाध्यायतासंपादनं यदर्थज्ञानहेतुरिति यावत् । विधिव्यापार इति शाब्दी प्रवर्तनेत्यर्थः । दृष्टान्तवैषम्यात्रियमविधिमाक्षिपन् शङ्कां निषेधति

भाष्यप्रकाशः ।

इति वाच्यम् । अर्थज्ञानांशेऽस्य नियमविधित्वाङ्गीकारात् । न च यथाऽवघातनिष्पन्नैरेव तण्डुलैर्दर्शपूर्णमासापूर्वसिद्धिर्न पेषणादिनिष्पन्नैस्तथाऽध्ययनावगतेनैवार्थेन क्रत्वपूर्वसिद्धिर्नतु प्रकारान्तरावगतेनेति फलांशे नियमविधित्वं न युक्तम्, अनारभ्याधीतत्वेन श्रुत्याद्यभावेन च क्रत्वर्थताया अशक्यवचनत्वादिति वाच्यम् । वैदिकशब्दानां विलक्षणत्वेन पूर्वोक्तरीत्या सम्यगर्थज्ञानाभावे गृहस्थादीनां द्रव्यादियज्ञासिद्धेः सर्वधर्मलोपप्रसङ्गात् । अतः पूर्वोक्तदूषणेनापूर्वविधित्वनियमविधित्वयोरशक्यवचनत्वेऽपि, 'वसन्ते ब्राह्मणमुपनयीत' इत्यादिवाक्येषु द्वितीयानिर्देशेन तेषां संस्कार्यत्वावगमात् संस्कारस्य च कार्यान्तरयोग्यतासंपादनरूपत्वादुपनयनसंस्कृतानां त्रैवर्णिकानां कार्यान्तरापेक्षत्वेन तत्संनिधिपठितस्याध्ययनस्य चानिर्दिष्टकर्तृकतया कर्त्रपेक्षत्वेन परस्पराकाङ्क्षासंनिधियोग्यत्वैस्त्रैवर्णिकानां यज्ञरूपकार्यान्तराधिकारनियमार्थत्वस्याध्ययनविधौ सुखेन संभवात् । एवं चाधानाग्निहोत्रादिविधयस्त्रैवर्णिकेषु विद्वत्सु सत्सु तानेवाधिकुर्वन्ति । अन्यथा चतुर्थादेरप्याक्षिपेरन् । सोऽयमधिकारो वक्ष्यमाणेऽपशूद्राधिकरणेऽध्ययनविधिप्रसादलभ्य इत्यध्ययनविधिरर्थज्ञानपर्यवसायीति ।

प्राभाकरास्तु, 'संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः' इत्याचार्यकरणे विहितेनोपनयीतेत्यात्मनेपदेनोपनयनरूपस्य माणवकसंस्कारस्याचार्यत्वसिद्धिप्रयोजनताप्रत्ययेऽपि,

रश्मिः ।

**न च यथेति** । **दर्शपूर्णमासापूर्वसिद्धिरिति** । अवान्तरापूर्वद्वारेण दर्शपूर्णमासपरमापूर्वसिद्धिरित्यर्थः । **श्रुत्याद्यभावेनेति** । निरपेक्षो रवः श्रुतिः । आदिना लिङ्गादयः । **वैदिकेत्यादि** । स्वरादिकृतं वैलक्षण्यम् । स्फुटं प्रस्थानरत्नाकरे इदम् । **द्रव्यादियज्ञासिद्धेरिति** । 'द्रव्ययज्ञास्तपोयज्ञाः' इति गीतोदितास्त इत्यर्थः । **सर्वधर्मलोपप्रसङ्गादिति** । अतोऽनारभ्याधीतत्वेपि क्रत्वर्थतावश्यमभ्युपेयेत्यर्थः । **अत इति** । क्रत्वर्थत्वादित्यर्थः । सर्वधर्मलोपप्रसङ्गादित्यर्थो वा । एतच्च यज्ञरूपेत्यादिनान्वेति । **पूर्वोक्तदूषणेनेति** लिखितपाठादिनार्थज्ञानसंभवरूपेण दृष्टान्तवैषम्यरूपेण चेत्यर्थः । **संस्कार्यत्वावगमादिति** । आप्यत्वोत्पाद्यत्वयोरसंभवेन तथात्वावगमादित्यर्थः । **यज्ञरूपकार्यान्तरेति** । स्वाध्यायब्राह्मणे 'यत्स्वाध्यायमधीयीतैकामप्यृचं यजुः साम वा तत् ब्रह्मयज्ञः संतिष्ठते' इत्युपक्रम्य 'तस्मात्स्वाध्यायोऽध्येतव्यः' 'यं यं क्रतुमधीते तेन तेनास्येष्टं भवति'इति तदुत्तरश्रुतेरिति भावः । **एवं चाधानाग्निहोत्रादिविधय इति** । 'वसन्ते ब्राह्मणोग्निमादधाति', 'यावज्जीवमग्निहोत्रं जुहोति,' 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत'इत्येवमाद्या विधय इत्यर्थः । **तानेवाधिकुर्वन्तीति** । उक्तविधयस्तावद्विद्यार्जनमाक्षिपन्त्यनुपपत्त्या । यदा तु स्वाध्यायविधिविहिताध्ययनोपात्तविद्या द्विजन्मानो लभन्ते तदा तैरेव लब्धात्मानो न चतुर्थस्य विद्यामाक्षिपन्ति, अनुपपत्तिक्षयात् । यद्यपि चैवं विहितोपायसिद्धज्ञानवत एव विधयोऽधिकुर्वन्ति, तर्हि तदेव ज्ञानमकर्मकालोपात्तमप्यग्निवत् क्रत्वङ्गमिति तच्छून्यस्य स्वाच्छन्द्येन विद्यामर्जयतः शूद्रस्याधिकारो न सिद्ध्यतीति त्रैवर्णिकानेवाधिकुर्वन्तीत्यर्थः । **अन्यथेति** अध्ययनविध्याक्षिप्तत्वाभावे इत्यर्थः । **चतुर्थादेरिति** । अधिकारमिति शेषः । संबन्धसामान्यविवक्षया षष्ठी वा । इदमत्र श्रीजैमिन्यभिप्रायं निखिलं संगत्यर्थमाहुः **सोऽयमित्यादि** । **अपशूद्राधिकरण इति** । इद-

भाष्यप्रकाशः ।

'उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः ।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते' ॥

इति स्मृतौ क्त्वाप्रत्ययेनोपनयनस्याध्यापनाङ्गताप्रतीतेस्तत् कथमध्यापनस्योपकरोतीत्यपेक्षायां, 'शिष्यम्' इति, 'तमध्यापयेत्' इति च द्वितीयोक्तकर्मत्वलिङ्गादुपनेयासत्तिद्वारेति निश्चीयते। उपनीतोऽपि नाकिंचित्करोऽङ्गमिति तद्व्यापारापेक्षायां वाक्यान्तर उपनयनं प्रक्रम्य विहितं वेदाध्ययनमेवाध्यापनोपकारकत्वादुपनीतव्यापारतयाऽध्यवसीयते । तदेवं स्वाङ्गमुपनयनं प्रयुञ्जानोऽध्यापनविधिस्तद्द्वारेणाध्ययनं प्रयुङ्क्ते । ततश्चाध्ययनस्यापि प्रयोजने विचार्यमाणे स्वसमवेतत्वेनान्तरङ्गत्वादर्थज्ञानमेव तथात्वेन निश्चीयते, न त्वाचार्यत्वसिद्धिर्बहिरङ्गत्वात् । न च प्रथमावगतत्वेनाचार्यत्वसिद्धिरेवाध्ययनप्रयोजनं, न तु पश्चादवगतमर्थज्ञानमिति वाच्यम् । तत्सिद्धिं विनाऽप्यध्ययनानुष्ठानसंभवेन प्रथमं तदनवगमात् । न च शब्दादवगतो नियोग एव प्रयोजनमस्त्विति वाच्यम् । अर्थज्ञानस्यापि प्रतीयमानत्वेन त्यागायोगात् । नचैवमध्ययनस्यार्थज्ञानार्थत्वेऽध्ययनविधिनैवार्थज्ञानप्राप्तिः किमिति नाद्रियत इति शङ्क्यम् । अध्ययनविधेरधिकारशून्यत्वादाचार्यकरणविधिप्रयुक्त्याप्यात्मलाभानङ्गीकारे विश्वजिदादिवन्नियोज्यकल्पनापत्तेः । अतोऽध्यापनविधिप्रयुक्तमेवाध्ययनमर्थज्ञानं च, नाध्ययनविधिप्रयुक्तमित्याहुः ।

एवं मीमांसकमतद्वयेऽप्यर्थज्ञानस्य वैधत्वात् तदाक्षिप्तविचारस्यापि वैधत्वम् ।

रामानुजाचार्यास्तु, अध्ययनविधिना स्वाध्यायाख्यस्य वेदस्याक्षरराशेर्ग्रहणं विधीयते। तत्रेतिकर्तव्यताकाङ्क्षायामध्यापनविधिना,

'श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य यथाविधि ।
युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्धपञ्चमान्' ॥

रश्मिः ।

मधिकरणं षष्ठस्य षष्ठेस्ति । द्वितीयोक्तकर्मत्वलिङ्गादिति । तत्सामर्थ्यादित्यर्थः । स्वेत्यादि । स्वमात्मास्मन्मते मनस्तत्समवेतत्वेन स्वल्पापेक्षत्वरूपान्तरङ्गत्वादित्यर्थः । बहिरङ्गत्वादिति प्रयोगोपाधित्वेन तथात्वादित्यर्थः । तथाहि, संमाननेत्याद्युक्तसूत्रे उत्सञ्जनज्ञानव्ययविगणनानि नयतेर्वाच्यानि । इतरे तु प्रयोगोपाधयः । उत्सञ्जने दण्डमुन्नयते उत्क्षिपतीत्यर्थः । 'ब्राह्मणमुपनयीत' विधिनात्मसमीपं प्रापयेदित्यर्थः । उपनयनपूर्वकेणाध्यापनेनोपनेतरि ह्याचार्यत्वं क्रियत इति । आत्मलाभानङ्गीकार इति अधिकारिस्वरूपलाभानङ्गीकार इत्यर्थः । विश्वजिदादिवदिति । एतच्चतुर्थस्य तृतीयपादे 'चोदनायां फलाश्रुतेः कर्ममात्रं विधीयेत नह्यशब्दं प्रतीयते' इत्यधिकरणे 'विश्वजिता यजेत' इत्यत्र फलाश्रवणेपि अध्याहृतफलान्वयमङ्गीकृत्य तत्किमित्यपेक्षायां 'सः स्वर्गः स्यात् सर्वान् प्रत्यविशेषात्'इत्यधिकरणे स्वर्गः फलमिति चिन्तितं, तेन स्वर्गकामो नियोज्य इति सिद्धं, तद्वदित्यर्थः । अत इति । प्रयोगोपाधिनाप्याचार्यत्वकामात्मलाभेन लाघवादित्यर्थः । तदाक्षिप्तेति । अविचारिताश्च शब्दा नार्थं प्रत्याययन्तीति भाष्यात् । 'येन विना यदनुपपन्नं तद् तेनाक्षिप्यते' इति। प्रौष्ठपद्यामिति भाद्रपद्याम् । उपाकृत्येति उपकारं कृत्वेत्यर्थः । उपाकर्म कृत्वेति वार्थः । अर्धपञ्चमानिति । अर्धपञ्चमः पौषो माघो वा येषु भाद्रपदाश्विनकार्तिकमार्गशीर्षेषु आश्विन-

भाष्यप्रकाशः ।

इत्यादिभिश्चापेक्षितानि विधीयन्ते । तेनाचार्योच्चारणानूच्चारणरूपमध्ययनमक्षरराशिग्रहणफलकमित्यवगम्यते । तच्च चतुर्वर्गफलस्य विधिवाक्ये कर्मत्वेन बोधितस्य स्वाध्यायस्य कार्यान्तरयोग्यतासंपादनरूपः संस्कारः । तेनाध्ययनविधिरक्षरग्रहणमात्रपर्यवसायी । अध्ययनगृहीतं च स्वभावादेवार्थबोधकमिति स्वाध्यायस्यापि तथात्वात् तत्रापाततोऽवगम्यमानानामर्थानां स्वरूपप्रकारविशेषनिर्णयाय वेदवाक्यविचाररूपमीमांसाद्वयश्रवणेऽधीतवेदः पुरुषः स्वत एव प्रवर्तते । तत्र कर्मस्वरूपनिरूपणे तेषामल्पास्थिरफलत्वं दृष्ट्वाऽध्ययनगृहीतस्वाध्यायैकदेशोपनिषद्वाक्येषु चाऽमृतत्वरूपानन्तस्थिरफलापातप्रतीतेस्तन्निर्णयफलकवेदान्तविचाररूपशारीरकमीमांसायामधिकरोतीत्याहुः ।

शैवस्तु, अध्ययनविधेरक्षरग्रहणमात्रपरत्वमङ्गीकृत्याध्ययनेनाऽऽपाततोऽर्थप्रतीतेस्तदनु ब्रह्मस्थूलोपासनभूतज्योतिष्टोमादिविधायकानां सूक्ष्मोपासनभूतदहरादिविद्याविधायकानां चेतरेतरविरोधाभासं पश्यँस्तद्विचारे पुरुषार्थाकाङ्क्षी पुरुषः स्वयमेव प्रवर्ततेऽतो नानिबन्धनो विचार इत्याह ।

भट्टभास्कराचार्यास्तु स्वाध्यायविधेरर्थावबोधपर्यवसितत्वेऽपि ब्रह्मज्ञानं तेनाक्षेप्तुं न शक्यम् । 'यज्ञेन दानेन' इति, 'शान्तो दान्त उपरतस्तितिक्षुः श्रद्धान्वितो भूत्वा आत्मन्येवात्मानं पश्येत्' इति श्रुत्या ब्रह्मज्ञानस्योपायान्तरसापेक्षत्वात् । कर्मावबोधनसमर्थेषु पुरुषेष्वध्ययनविधेः कृतार्थत्वेनोपायान्तराक्षेपाक्षमत्वात् । 'श्रवणायापि बहुभिर्यो न लभ्यः' इत्यादिश्रुतेर्ब्रह्मणो दुर्ज्ञेयत्वाच्च । अतो ब्रह्मजिज्ञासा न तत्कारिता किंतु, 'श्रोतव्यो मन्तव्यः', 'सोन्वेष्टव्यः स विजिज्ञासितव्यः', 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' इत्यादिवेदान्तविधिकारिता वास्त्वित्याहुः ।

तत्राध्ययनविधेरर्थज्ञानार्थत्वकल्पनमसंगतम् । 'यं यं क्रतुमधीते तेन तेनास्येष्टं भवति' इतिवाक्येनाक्षरग्रहणमात्रेऽपि फलबोधने तदतिहाय फलान्तरकल्पनस्यायुक्तत्वात् ।

रश्मिः ।

कार्तिकमार्गशीर्षपौषेषु वा तादृशान् मासानित्यर्थः । चतुर्वर्गे त्वत्र बहुव्रीहिः । विधीति । 'स्वाध्यायोऽध्येतव्यः' इति वाक्ये । गृहीतं चेति शास्त्रमित्यर्थः । इत्याहुरिति । तेनात्राक्षरग्रहणमधिकमिति पूर्वस्माद्विशेषः । विरोधेत्यादि । 'आभासत्वे विरोधस्य विरोधाभास इष्यते' इत्यलंकारं लक्षयित्वा 'विनापि तन्वि हारेण वक्षोजौ तव हारिणौ' मनोहारिणौ इत्युदाहरणम् । 'घटाद्विना घटीयो धनेशः संराजतेऽध्वने'ति चोदाहरणम्, तत्र श्लेषादाभासः । एवं चैकशाखाद्विरोधः । साधनयोरेकत्र सहानवस्थानलक्षणः आभासो विरोधस्यैवं कर्माणि ज्ञानप्रयोजकतया मोक्षे समुच्चीयन्त इति वक्ष्यन्ति । भगवच्छैवाचार्य इति गुणकर्मत्वादङ्गत्वं ज्योतिष्टोमादीनामिति । इत्याहेति । तेनैतन्मते विचारसार्थक्यमात्रम्, न तु तस्य वैधत्वावैधत्वविवेचनमिति । ग्रामं गच्छतीत्यादौ ग्रामसंयोगोऽवान्तरसंयोगान् गृह्णातीति तदनुसारेणाध्ययनस्याक्षरग्रहणमात्रं फलमित्याशयेनाहुः तत्रेति । दूरान्वयदोषोपि मीमांसकमते यः सोपि न । अक्षरग्रहणमात्र इति । दृश्यमाने इष्ट इत्यर्थः । इदानीं 'लभ्यमाने फले दृष्टे नादृष्टफलकल्पना । विधेस्तु नियमार्थत्वान्नानर्थक्यं भविष्यति' इति वाक्यात् । स्वर्गब्रह्मज्ञानादि तु साधनान्तरयागविज्ञानादिभिरिष्टत्वेनोक्तं भवति ।

भाष्यप्रकाशः ।

वाक्यबलेनाऽदृष्टद्वारकत्वस्याप्यदुष्टत्वात् । तेन तेन क्रत्वध्ययनेनास्याध्येतुरिष्टं मनोवाञ्छितं भवतीति दृष्टफलार्थत्वस्यापि शक्यवचनत्वाच्च । नच प्रत्यक्षविरोधः । इदानीन्तनाध्ययनस्य व्यङ्गत्वेनादोषात् । नच व्यङ्गत्वे मानाभावः । स्वाध्यायपदस्य वेदे योगरूढ्या सुष्ठुसमन्तादध्यायो यस्येति योगस्यापि ग्राह्यत्वे देशकालगुरुशिष्यनिष्ठानां शोभनगुणानां पाठार्थानुष्ठानेषु शङ्काराहित्यरूपस्य समन्तत्वस्य च ग्रहणेन स्वाध्याय इति समाख्याया एव तत्र मानत्वात् । नचैवं सत्यर्थज्ञानस्यापि प्राप्तेः कथं तदर्थत्वकल्पनस्यासंगतिरिति शङ्क्यम् । नैस्तस्य माणवकाधिकाररहितैः ।

ननु तत्राधीत इत्यध्ययनस्य स्वर्गब्रह्मज्ञानपर्यन्तमस्थानादिष्टपदोक्तसाध्यसाधनभावव्याहतिरित्याशङ्क्याहुः वाक्यबलेनेत्यादि वाक्यं यं यं क्रतुमिति । अभ्युपगम्याहुः तेन तेनेति दृष्टफलार्थत्वेन । दृष्टफलार्थत्वस्येष्टार्थत्वस्येति यावत् । इति योगस्यापीति । पूर्वकाण्डविषयत्वेन रूढे शब्दे । देशकालेत्यादि । यज्ञाद्यनुष्ठापका देशादयः । पूर्वतन्त्रे एकादशस्य द्वितीये पादे 'एकदेशकालकर्तृत्वं' इत्यधिकरणे समे दर्शपूर्णमासाभ्यां यजेत पौर्णमास्यां पौर्णमास्या यजतीति समत्वपौर्णमासीत्वे देशकालयोर्गुणौ चिन्तितौ । गुरुशिष्ययोस्त्वत्रैव स्पष्टा इति । समाख्याया इति । यौगिकस्य शब्दस्येत्यर्थः । तन्मतमनुसृत्य दूषयन्ति नैस्तस्येति । मीमांसकैरित्यर्थः ।

सिद्धान्तस्तु प्राथमिकमध्ययनमध्यापनविधिप्रयुक्तम्, माणवकोपनयनस्याध्यापनाङ्गत्ववदध्ययनाङ्गत्वेपि तस्य बालत्वेन स्वतोध्ययने प्रवर्तनादर्शनात्, किंच 'द्वितीयं प्राप्यानुपूर्व्या जन्मोपनयनं द्विजः' इत्युपनीतमुपक्रम्य 'आचार्यं मां विजानीयात्' इति तस्याचार्ये भगवद्बुद्धिकरणं विहितम् । तथा 'गच्छेदाचार्यसंसदि' इति स्मृत्यन्तरे चाचार्यसंसद्गमनं च विहितम् । तदुभयमपि क्रीडनासक्तस्य बालस्य न संभवति । तस्माच्छ्रुतिचोदितोऽध्ययनज्ञानयोर्विधिर्न माणवकमधिकरोति । अपि च । त्रैवर्णिकाः कर्तव्यमपेक्षमाणा अध्ययनं च कर्तारमपेक्षमाणमुभये सापेक्षा अन्योन्यं भवन्ति । तत्र विद्वत्तायोग्यतदयोग्यौ कर्तारावपेक्षतेऽध्ययनम् । नाद्यः । फलोपधायकयोग्यमपेक्षमाणं न माणवकमपेक्षेत, नेतरः तादृशफलानिष्पत्तेः । न चैवं त्रैवर्णिकाधिकारनियमभङ्ग इति वाच्यम् । अष्टवर्षवाक्ये उपनयनाध्यापनयोः संनिधानादध्ययनं विना चाध्यापनासिद्धेस्तदाक्षिप्तेनैवाध्ययनेनोक्ताधिकारनियमसिद्धेः । न च स्वाध्यायवाक्यवैयर्थ्यमिति शङ्क्यम्, वेदस्य स्वाध्यायत्वबोधनेन तस्य कृतार्थत्वात् । एतेनाध्ययनविध्यभावे माणवकस्याध्ययनार्था प्रवृत्तिर्न स्यादिति प्रत्युक्तम् । स्वस्याचार्यत्वसिषाधयिषुणैव तेऽध्यापनीया इति । न च किमनेन निर्बन्धेन अध्ययनविधिरेव माणवकं प्रवर्तयत्विति शङ्क्यम्, विधिव्यापारकौण्ठ्यप्रसङ्गात् । यत्तूपनीतव्यापारापेक्षायामुपनयनमुपक्रम्य विहितमध्ययनमध्यापनोपकारकत्वेन तदङ्गं नार्थज्ञानाङ्गं साध्यद्वयस्यैकत्रासंभवादित्युक्तं तदपि न । एकस्यापि वाहनकरणकयानस्य सुखोद्देशदेशप्राप्त्योरङ्गत्वात् । तदप्यध्यापनाक्षिप्तमध्ययनं लौकिकमेवोररीकार्यम्, तावताप्यध्यापनसंभवात्; विहितस्यापि तत एवाङ्गीकारे तूद्देशाभावात् ततो नापूर्वं सिध्येदित्युक्तम्, तदपि तथा । लौकिकेन तेनाचार्यत्वासिद्धेः । वेदाध्ययनेनैव तत्स्मरणात् । न चापूर्वासिद्धिरिति वाच्यम्, आचार्यकृतोद्देशेनापि तत्सिद्धेः । पूर्वतन्त्रीयचतुर्थतार्तीयस्य 'फलसंयोगस्त्वचोदिते न स्यादशेषभूतत्वात्' इत्यधिकरणचिन्तितजातेष्टौ पितृकृतोद्देशवदिति दिक् ।

भाष्यप्रकाशः ।

त्वेनाङ्गीकारात् । वेदस्य गुरुमुखात् ग्रहणदशायां तं प्रति स्वाध्यायत्वस्य भावित्वेन तदानीमभावात् । 'वेदमनूच्याऽऽचार्योऽन्तेवासिनमनुशास्ति, सत्यं वद, धर्मं चर, स्वाध्यायान्मा प्रमद', इति तैत्तिरीयाणां शिक्षोपनिषच्छ्रुत्या तथानिश्चयात् । आधानाग्निहोत्रादिविधीनामपि तत्र तदाक्षेपकत्वस्वाध्ययनविधिप्रसादलभ्यत्वोपगमेन प्रसादस्य च माणवके सामर्थ्याभावादभावेन तेषामप्याक्षेपकतायां कौण्ठ्याच्च । आश्रिते चैकवाक्यत्वे, ज्ञेयश्चेति विध्यन्तरस्यापि संग्राह्यत्वात् तद्बलादेवार्थज्ञानमङ्गीकार्यम् । अन्यथा तद्वैयर्थ्यादिति । अत एव प्राथमिकाध्ययनस्यापि तदर्थत्वमसंगतम् । किंत्वध्यापनप्रयुक्तत्वं यदुक्तं तन्मात्रं युक्तम् । ज्ञातुर्नियोज्यस्याचार्यत्वकामिनस्तत्रैव विधौ सत्त्वेन लिङ्प्रयोगेण च तत्र विधित्वस्यासंदिग्धत्वात् । कृत्यानां त्वावश्यकार्थेऽप्यनुशासनात् । वयसा जातस्यातत्र्याणां त्रैवर्णिकानामध्ययनस्यावश्यकत्वबोधनेन वाक्यसार्थक्यसिद्धेः । एवं च यद्यप्यध्यापनविधावध्यापनमात्रं श्रुतं, तथापि, 'साङ्गो वेदोऽध्येयो ज्ञेयश्च' इतिश्रावणात् गुरुणाज्ञापाठनेर्थज्ञापने च तदसिद्ध्या वैयर्थ्ये वाक्यस्य प्रसक्ते तद्वारणाय तथाध्यापनमङ्गीकरणीयम् । आचार्यलक्षणस्मृतौ वेदस्य 'सकल्पं सरहस्यं च' इति विशेषणाच्च ।

रश्मिः ।

प्रकृतमनुसरामः । दूषणमाहुः वेदस्येत्यादि । अभावादिति । तथा च माणवकं प्रति स्वाध्यायसमाख्यासामर्थ्यविरहेणार्थज्ञानस्याप्यनुपलब्धेर्न तदर्थत्वकल्पनमिति भावः । ननु स्वस्यासाधारण्येन पितृपितामहादिपरंपराप्राप्ता शाखा स्वाध्याय इति योगस्य सायणीयेऽङ्गीकारात्, पूर्वोक्तं न साधीय इति शङ्कामपनुदन्तो वेदे स्वाध्यायत्वस्य भावित्वं श्रौतमित्याहुः वेदमनूच्येत्यादि । तथानिश्चयादिति वेदे स्वाध्यायत्वस्य भावित्वनिश्चयादित्यर्थः । अन्यथा स्वाध्यायमनूच्येत्येव वदेदिति भावः । तदाक्षेपकत्वस्येति विद्वत्त्रैवर्णिकाक्षेपकत्वस्येत्यर्थः । आक्षेपकतायामिति अर्थज्ञानाक्षेपकतायामित्यर्थः । अतः परमवशिष्टमर्थज्ञानांशे नियमविधित्वम्, तदपि प्राभाकरमतदूषणेन दूषितं भविष्यतीत्याशयेनाहुः आश्रिते चेति । इतीति । अयमत्र प्रकर्षं भूते । तथा च विधिवैयर्थ्यं प्रकृष्टो हेतुरित्यर्थः । प्रत्यक्षश्रुतिलभ्यत्वसंभवे चोदकप्राप्तत्वस्वीकारस्यानुचितत्वादित्यपरः । एतच्च पूर्वतन्त्रे द्वादशस्य चतुर्थे पादे 'विप्रतिषेधे परम्' इत्यधिकरणे चिन्तितम् । यत्रार्त्विज्ययाजमानयोः कर्मणोर्युगपदात्मलाभस्तत्र ये यजमानास्ते ऋत्विज इति विहितमार्त्विज्यं चोदकप्राप्तयाजमानाद् बलीय इति । विधाविति उपनयीतेति विधावित्यर्थः । पूर्वतन्त्रे अपूर्वत्वोपात्तसाक्षादध्ययनविधिप्रयोजनमाहुः कृत्यानामित्यादि । अनुशासनादिति । 'आवश्यकाधमर्णयोर्णिनि'इत्येतदनन्तरं 'कृत्याश्च'इत्यनुशासनादित्यर्थः । वाक्यसार्थक्यसिद्धेरिति । तेन नात्र नित्यानुवादगन्धोपीत्याशयः विधिपक्षेप्युपादेय इति वक्ष्यन्ति । न चैवमनधीयाना व्रात्या भवन्तीति वाक्यवैयर्थ्यम् । 'तयोरेव कृत्यक्तखलर्थाः' 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च'इत्यादिसूत्रैरनेकार्थेषु प्राप्तस्य तव्यस्यावश्यकार्थत्वावेदकत्वात् । वाक्यत्रयैकवाक्यतया यत्सिद्धं तदाहुः एवं चेत्यादि । विशेषणाच्चेति । अनेनाध्यापनविधौ नियोज्याभावादध्यापनसमभिव्याहृतेनोपनयीतेत्यात्मनेपदेनाचार्यकरणलाभे तत्कामिना नियोज्याकाङ्क्षा पूरणीया । तथा सत्यध्यापनस्याचार्यत्वसिद्धिः प्रयोजनं नत्वर्थज्ञापनमपि, ततश्च सिद्धे आचार्यत्वे तस्यार्थज्ञापनस्यानावश्यकत्वान्माणव-

भाष्यप्रकाशः ।

एवं साङ्गेऽधीते ज्ञाते च तस्य स्वाध्यायः सिध्यति । तदोक्तं फलमपि संपद्यत इति वाक्यत्रयैकवाक्यतयावसीयते तस्मात् प्राथमिकाध्ययनमध्यापनप्रयुक्तम्, अर्थज्ञानं च प्रत्यक्षश्रुतिलभ्यमिति भाट्टप्राभाकरयोः पूर्वोक्तकल्पना असंगतैव । कृत्यप्रत्यययोर्विध्यर्थकत्वपक्षेप्युक्त एव प्रकारो युक्तः । अन्यथा विधिकौण्ठ्यप्रसङ्गात् । एवंच रामानुजाचार्यैरध्ययनविधेरक्षरग्रहणपर्यवसायित्वं, स्वाध्यायस्य च स्वभावादर्थबोधकत्वं यदुक्तं तदप्युक्तदिशैव युक्तम् । नत्वन्यथापि । एवमेव भास्कराचार्योक्ते स्वाध्यायविधेरर्थावबोधपर्यवसितत्वेपि बोध्यम् । शैवस्तु विचारसार्थक्यमात्रमाह, न तु शास्त्रप्रयोजकं कंचन विधिमपीति तन्मते वैधत्वमेवायाति । तेन तदुदासीनप्रायम् । एवं वेदान्तस्थविधावपि श्रवणपदेन शब्दग्रहणं मननपदेनावबोधोऽन्वेषणविजिज्ञासापदाभ्यां चेच्छा विधीयत इति बोद्धव्यम् । नचेच्छाया अविधेयत्वम् । 'तिस्रः खलु एषणा एषितव्याः' इति चरके पतञ्जलिनाऽभिधानात् । अतः शंकराचार्याद्युक्तस्तद्विजिज्ञासस्व तद् ब्रह्मेति विधिरपि तथा । एवंच भैक्षवे ये विषय उक्ताः, 'आत्मेत्येवोपासीत,' 'स म आत्मेति विद्यात्' 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः' इति । तेऽपि ज्ञान एव, न विचारे । ये चापि मध्वाचार्यैर्जिज्ञासासूत्रे, 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्च' इति तेऽपि सर्वे ज्ञान एव पर्यवस्यन्ति ।

यत्तु शैवः । किमयं श्रोतव्य इति विधिर्नियमः परिसंख्या वा । नाद्यः । वेदान्तश्रवणं

रश्मिः ।

कस्याविद्वत्तायां यज्ञाद्यनधिकार इत्याशङ्कापास्ता । फलमिति 'तेन तेनास्येष्टं भवति' 'अग्नेर्वायोरादित्यस्य वा सायुज्यं गच्छति' इति फलमित्यर्थः । वाक्यत्रयैकवाक्यतयेति । सा चेत्थम् । अष्टवर्षमिति वाक्योक्तमध्यापनप्रयुक्तमध्ययनं स्वात्मलाभाय 'साङ्गः' इति वाक्योक्तसाङ्गत्वज्ञेयत्वासक्तमवगम्यते । तदनु शङ्काद्यपनुत्या स्वाध्याय इति । सिद्धमाहुः तस्मादिति । उक्त एव प्रकार इति वाक्यत्रयैकवाक्यताप्रकार एवेत्यर्थः । विधिकौण्ठ्यप्रसङ्गादिति 'स्वाध्यायो' 'ज्ञेयश्च' इति विधिकौण्ठ्यप्रसङ्गादित्यर्थः । एवं चेति । 'ज्ञेयश्च' इति प्रत्यक्षविधेरकौण्ठ्यस्यावश्यकत्वे चेत्यर्थः । विचारेति आपाततः प्रतीतार्थे तत्पोषकविचारः युक्तत्वायुक्तत्वपोषणनिरासाभ्यां युक्तत्वायुक्तत्वार्थाभ्यां सह वर्तमानो विचारः सार्थकः, तस्य भावः सार्थक्यम्, सार्थक्यमेव सार्थक्यमात्रम् । शास्त्रमिति शास्त्रं वेदान्तरूपं तदुपाङ्गं मीमांसा सापि शास्त्रमवयवी अनङ्गीकारात् । तस्य प्रयोजको विधिस्तम् । अवैधत्वमिति । न च श्रोतव्य इत्यत्र ब्रह्मवाचकपदानां ब्रह्मणि शक्तितात्पर्यनिर्धारः श्रवणमिति कथं अवैधत्वमिति शङ्क्यम्, अस्य विधित्वस्य तैरनङ्गीकारात् । सोऽत्रैवाग्रे स्फुटः संग्राह्यत्वात् । भास्करमतीयमविरुद्धमंशं व्याकुर्वन्ति एवं वेदान्तस्थेति । तथेति इच्छाविधायकत्वेन प्रकारेणेत्यर्थः ।

श्रोतव्य इत्यस्य विधित्वं निर्णेतुं तावच्छैवमतं प्रसङ्गादाहुः यत्तु शैव इति । विधिरिति अपूर्वविधिरित्यर्थः । प्रमाणान्तरेण यस्य यदर्थत्वमप्राप्तं तदर्थत्वेन तस्य विधिः सः । 'यजेत स्वर्गकामः' इति, यथा प्रमाणान्तरेण यागस्य स्वर्गार्थत्वानवगमाल्लक्षणसंगतिः । नियम इति पक्षे, अप्राप्तस्य विधिः सः । व्रीहीनवहन्ति इति । यथा नखविदलनादिना वितुषीकरणपक्षेऽप्राप्तस्यावहननस्य विधानात् । स चाप्राप्तांशपूरणात्मकः परिसंख्येति । उभयस्य युगपत् प्राप्तौ इतरव्या-

शब्दाश्च बोधकाः ।
निःसंदिग्धं तदर्थाश्च लोकवद् व्याकृतेः स्फुटाः ॥

भाष्यप्रकाशः ।

स्वविषयमात्रावगतिसाधनं शास्त्रश्रवणत्वाद् वैद्यकशास्त्रश्रवणवदित्यनुमानेनापि प्राप्ततयाऽपूर्वत्वाभावात् । न द्वितीयः । अवघातवद् दृष्टफलस्योपायान्तरस्याप्राप्तत्वात् । नेतरः । तथा सति श्रोतव्या एव वेदान्ता नाध्येया इति स्यात् । ततश्च विचारस्याप्ययोगात् पुरुषार्थासंभवः । एवं च वेदाध्ययनादिरपि निवर्तेतेति महानेवानयः स्यादिति विकल्पितवान् । तत्तुच्छम् । हेतोः साधारणत्वेनानुमानतोऽप्राप्तावपूर्वविधित्वस्य स्थिरत्वात् । कथं साधारणतेति चेद् वेदान्तश्रवणं न स्वविषयावगतिसाधनं शास्त्रश्रवणत्वात् सूत्रश्रवणवदित्येवमवधेहि । किंच, श्रवणपदं शब्दग्रहणमात्रपरं वा, वाक्यार्थज्ञानपरं वा । आद्ये विधिवैयर्थ्यापत्तिः । स्वाध्यायविधिनैव चारितार्थ्यात् । नचाध्ययननियमाभावाय पुनर्विधानमिति वाच्यम् । आचारविरोधात् । त्रैवर्णिकाधिकारस्यापि त्यागापत्तेश्च । द्वितीये तु निराबाधं विधित्वम् । अन्यथा वाक्यवैयर्थ्यापत्तेरिति ।

अतः पूर्वकाण्डविधेरर्थज्ञानमात्रार्थत्वेनोत्तरकाण्डीयस्यापि ब्राह्मणश्रमणन्यायेन विशेषार्थतया विचारस्यावैधत्वाभावारम्भणीयः । ननु संदेहाभावायाध्ययनादिविधौ विचार आक्षेप्य इत्यत आह शब्दाश्चेत्यादि ।

रश्मिः ।

वृत्तिपरो विधिः सा, पञ्च पञ्चनखा भक्ष्या इति । यथा । भक्षणस्य रागप्राप्तत्वात् पक्षेप्राप्तत्वाभावाच्च नापूर्वनियमोऽन्यपञ्चनखभक्षणनिवृत्तिपरत्वात् पञ्चनखापञ्चनखभक्षणस्य युगपत् प्राप्तत्वात् परिसंख्या । अत्र श्रुतस्य पञ्चनखभक्षणस्य हानाच्छ्रुतहानिः । अपञ्चनखभक्षणनिवृत्तिकल्पनादश्रुतकल्पना । अपञ्चनखभक्षणस्य बाधनात् प्राप्तबाध इति दोषत्रयवती । ततश्चेति अध्ययनाभावादेवेत्यर्थः । अनुभयस्य युगपत्प्राप्तावितरव्यावृत्तेरित्यर्थः । एवं चेति । पूर्वोक्तपरामर्शेनाध्यापनविधावपि परिसंख्यापत्त्येत्यर्थः । श्रवणपदमिति । इदं तव्यान्तप्रकृतिरूपं ज्ञेयम् । विधिवैयर्थ्यापत्तिरिति श्रोतव्य इति विधिवैयर्थ्यापत्तिरित्यर्थः । चारितार्थ्यादिति शब्दग्रहणस्यैवाध्ययनपदार्थत्वेन तथात्वादित्यर्थः । न चेत्यादि । श्रोतव्य इति पुनर्विधानं श्रवणेध्ययनानन्तर्यनियमाभावायेत्यर्थः । तयैवाचारमाशङ्क्य हेत्वन्तरमाहुः त्रैवर्णिकेत्यादि । अध्ययने त्रैवर्णिकाधिकारात् तस्य चाभावाच्छ्रवणविधिः सर्वानप्यधिकुर्यादित्यर्थः । निराबाधमिति । वाक्यार्थज्ञानस्याध्ययनविधिनानुपलब्धेर्निराबाधं श्रोतव्य इत्यस्य विधित्वमित्यर्थः । द्वितीयार्थादरे युक्तिमप्याहुः अन्यथेति । ब्राह्मणश्रमणन्यायेनेति । ब्राह्मणश्चेत् श्रमणास्तेन न्यायेनेत्यर्थः । यथा ब्राह्मणः सन् श्रमणो भवति, पश्चाद्भूतपूर्वगत्या श्रमण इत्युच्यते तथा । विशेषार्थेति । वेदान्तार्थज्ञानपरतयेत्यर्थः । एतावता 'साङ्गोऽध्येयस्तथा ज्ञेयः' इति भाष्यं हेतुद्वयसमर्पकं विवृतम् । शब्दाश्चेति । शब्दाश्च निःसंदिग्धं बोधकाः लोकवत् व्याकृतेर्व्याकरणात्तदर्थाश्च स्फुटा इत्यर्थः । व्याकरणत्वं च महाभाष्ये लक्ष्यलक्षणसमुदायत्वम् । लक्ष्याः प्रयोगाः सुप्युपास्यादयः । लक्षणानि सूत्राणि अइउणित्यादीनि वृद्धिरादैजित्यादीनि च । एवं लौकिकशब्दविषयं व्याकरणम् । अलौकिकशब्दविषयं तु विकल्पनादिविधिमल्लक्ष्यलक्षणसमुदायरूपम् । ननु ये एव लौकिकाः शब्दास्ते एव वैदिका इति शाबरभाष्ये शब्दाभेदाल्लक्षणभेदः कुत इति चेन्, न । निबन्धटीकायां वैदिकशब्दानां स्वरादिना

**अर्थज्ञानार्थं विचार आरम्भणीयः। तस्य च ब्रह्मरूपत्वात् तज्ज्ञाने पुरुषार्थो भवतीति न मन्तव्यम्। विचारं विनापि वेदादेव साक्षादर्थप्रतीतेः।**

---

भाष्यप्रकाशः।

विशेषबोधनाय स्वोक्तं विभजते अर्थज्ञानेत्यादि। सर्वोऽपि प्रयोजनमुद्दिश्य कार्यमारभते। तत्रास्य विचारस्य प्रयोजनं वेदार्थज्ञानं वाऽन्यद् वा। तत्रान्यस्यादर्शनाद्, 'वेदान्तविज्ञानसुनिश्चितार्थाः' इतिवाक्यबोधितमाद्यमेवादर्तव्यम्। तत्रापि तस्य स्वतोऽपुरुषार्थत्वात् प्रयोजनान्तरमेष्टव्यम्। तच्च प्रयोजनमनन्तविधमप्यैहिकामुष्मिकपुरुषार्थेऽन्तर्भूतत्वात् पुरुषार्थरूपम्। तच्च वेदार्थज्ञानेन भवतीति तदर्थं विचार आरम्भणीयो, न तु स्वतःपुरुषार्थत्वात्। वेदार्थश्च, 'सर्वे वेदा यत्पदमामनन्ति' इति, 'वेदैश्च सर्वैरहमेव वेद्यः,'

'वेदास्त्रिकाण्डविषया ब्रह्मात्मविषया इमे, परोक्षवादा ऋषयः परोक्षं च मम प्रियम्'

इत्यादिश्रुतिस्मृतिभिर्ब्रह्मरूपः। नच 'वेदोऽखिलो धर्ममूलम्'इत्यादिस्मृतिभिर्धर्मरूप इति वाच्यम्। 'यज्ञो वै विष्णुः' इति, 'धर्मो यस्यां मदात्मकः' इति श्रुतिस्मृतिभ्यां धर्मस्यापि ब्रह्मरूपत्वबोधनात् तद्रूपेणैवार्थत्वात्। ब्रह्मणस्तु ज्ञानादेव पुरुषार्थसिद्धिः। 'ब्रह्मविदाप्नोति परम्' 'आनन्दं ब्रह्म'इत्युपक्रम्य, 'य एवं वेद प्रतितिष्ठति, अन्नवानन्नादो भवति महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन महान् कीर्त्या'। दहरविद्यायां दहरपुण्डरीकवेश्मस्थितस्याकाशस्यैतदमृतमभयमेतद् ब्रह्मेत्यनेन ब्रह्मत्वमुक्त्वा, एवंवित् स्वर्गं लोकमेतीत्येवंविधेषु वाक्येष्वैहिकामुष्मिकपुरुषार्थस्य ज्ञानमात्रेणैव श्रावणात् तावतापि पुरुषार्थसिद्धेर्ब्रह्म न मन्तव्यं न विचार्यमित्यर्थः।

रश्मिः।

भेदकथनात्। महाभाष्येपि 'व्यत्ययो बहुलम्' इति योगविभागेन 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति परिभाषासाधितोक्तवेदेषु विकल्पनादिविधिमलक्ष्यलक्षणसमुदायसत्त्वे शब्दाद्भेदे आयान्त्येव। तथा वेदेषु योगरूढिः, वेदान्ते तु योगः। तदुक्तं पत्रावलम्बने

'लौकिको वैदिकश्चैव व्यवहारो द्विधा मतः।
लोकसिद्धं पुरस्कृत्य वैदिको बोध्यते यथा॥
लोके शब्दार्थसंबन्धो रूपं तेषां च यादृशम्।
न विवादस्तत्र कार्यो लोकोच्छित्तिस्तथा भवेत्॥
ब्रह्मवादे निरुक्तिस्तु न वक्तव्यैव कुत्रचित्।
वस्तुतो ब्रह्म सर्वं हि व्यवहारस्तु लोकतः॥
ये धातुशब्दा यत्रार्थ उपदेशे प्रकीर्तिताः।
तथैवार्थो वेदराशेः कर्तव्यो नान्यथा क्वचित्॥

इति योगकथनात्। पूर्वमीमांसाकारिकासु तु लौकिकवैदिकव्यवहारकथनावसरे 'जलाब्ध्योरिव संरक्षा तयोः कार्या मनीषिभिः' इत्युक्तम्। 'विचारो योगरूढितः' इत्यपि तत्र। स्वोक्तमिति स्वेन कारिकयोक्तमित्यर्थः। प्रयोजनमिति फलमित्यर्थः। तस्य इति वेदार्थज्ञानस्येत्यर्थः। तस्य चेत्यादिभाष्यं विवृण्वन्ति वेदार्थश्चेत्यादि। मीमांसकाशङ्कामनूद्य निषेधन्ति न चेत्यादि। तज्ज्ञान इत्यादि भाष्यं विवृण्वन्ति ब्रह्मणस्त्विति। वाक्यान्तरेण प्राप्तं ब्रह्मविचारं प्रत्याख्याति

नचार्थज्ञानमविहितम्, अविचारिताश्च शब्दा नार्थं प्रत्याययन्तीति वाच्यम्, ज्ञेयश्चेति विधानात्।

'गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः।
अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः'

इति बाधोपलब्धिश्च। शब्दश्चक्षुरादिवन्न संदिग्धार्थप्रतिपादकः। तदर्थश्च

भाष्यप्रकाशः।

न च श्रोतव्य इति विधिना श्रवणं विधाय तदर्थमननाय मन्तव्य इति विध्यन्तरदर्शनादवबोधसामान्यस्य तदर्थत्वेनाशक्यवचनत्वाद् युक्तिभिरनुचिन्तनमेव मननपदार्थो वक्तव्य इति विचारोऽपि प्राप्त एवेति वाच्यम्। तस्य शारीरपरत्वात्। प्रियत्वलिङ्गेन तथा निश्चयात्। नच वाक्यार्थः शारीरः परमात्मा वेति संदेहे लिङ्गादिभिस्तन्निश्चितार्थबोधार्थमेव विचार आक्षेप्य इति वाच्यम्। वेदे साङ्ग इति विशेषणादधीतनिगमनिरुक्तव्याकरणस्य विचारं विनापि तैरेव तत्संभवात्। तेषु श्रुतीनामेवोदाहृतत्वात्। न च मास्तु वाक्यार्थज्ञानार्थं विचारापेक्षा। पदार्थज्ञानार्थं त्वावश्यकः। शब्दानां प्रायशोऽनेकार्थत्वेनानेकवृत्तिकत्वेन च कया वृत्त्या कमर्थमत्र बोधयन्तीति निश्चयाभावात्, तदर्थज्ञानस्य चाविहितत्वेन तदविचारादिति शङ्कनीयम्। ध्येयत्ववत् साङ्गस्य ज्ञेयत्वविधानेन गुरुमुखादेव पदार्थज्ञानस्यापि सिद्धेः। नच विध्यभावाद् गुरुणार्थो न वक्तव्य इति शङ्का कार्या। वाक्यान्तरे बाधोपलब्धेः। तदिदमुक्तं, नचार्थेत्यादिना। नापि संदेहाभावाय तदपेक्षा। शब्दस्य निःसंदिग्धार्थबोधकत्वात्। न हि गौरित्युक्ते सत्त्वान्तरबोधो भवति।

रश्मिः।

न चेत्यादि। तस्येति। 'आत्मा वा अरे' इति वाक्यस्येत्यर्थः। अत्रोपक्रमं नियामकं करोति प्रियत्वेति। मैत्रेयीब्राह्मणे 'न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति' इत्यात्मानमुपक्रम्यास्य निर्देशेन शारीरपरत्वनिश्चयादित्यर्थः। अत्र मैत्रेय्याः स्त्रीत्वेन तदधिकारानुसारेण जीवोपक्रमात्तस्य पूर्वपक्षग्रन्थत्वान्न वाक्यान्वयाधिकरणविरोधः। तत्संभवादिति शारीरः परमात्मा वेति संदेहानुपपत्तिसंभवादित्यर्थः। तेष्विति निगमनिरुक्तव्याकरणेष्वित्यर्थः। स्पष्टम्। यदा तु समाहारद्वन्द्वात्, निगमे व्याकरणं यथा, अत्र च 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यः' इति निगमस्तत्र। न च जीवो द्रष्टव्यः श्रोतव्यः, कर्तृत्वात्, आत्मनश्च कर्मत्वादिति व्याकरणम्। एवमन्यत्रापि।

'अहमात्मात्मनां धातः प्रेष्ठः सन् प्रेयसामपि।
अतो मयि रतिं कुर्याद्देहादिर्यत्कृते प्रियः' इति।

भगवद्वाक्यमप्युपलक्षणविधया ज्ञेयम्। न चार्थज्ञानेत्यादिभाष्यमवतारयन्ति न च मास्त्विति। कारिकास्थं तथापदं विवृण्वन्तो 'ज्ञेयश्च' इति विधानादिति भाष्यार्थमाहुः ध्येयत्ववदिति। 'गीती शीघ्री' इति भाष्यमवतारयन्ति न चेति। वाक्यान्तरं पाणिनीयशिक्षास्थम्। यद्वा 'ज्ञेयश्च' इति वाक्यादन्यद्वाक्यं गीतीति वाक्यान्तरम्। बाधेति अधमत्वावहनं बाधः। बाधश्च विपरीतप्रमेति नैयायिकाः। भेदवादमाहुः। अधमत्वनिवृत्त्यर्थं गुरुणार्थो वक्तव्य इति प्रमाया विपरीतप्रमा। तदिदमिति। न च मास्त्वित्यारभ्य विवृतमित्यर्थः। शब्दश्चक्षुरित्यादिभाष्यमवतारयन्ति नापीति। नहीति। यथेति भाष्यतात्पर्यम्। तदर्थश्चेत्यादिभाष्यं

व्याकरणादिना निश्चीयते। यथा लौकिकवाक्ये तथा वेदेऽपि। न च तद्विरुद्धं निर्णेतव्यम्, । अप्रामाणिकत्वप्रसङ्गात् । तस्माद् वेदार्थज्ञानार्थं विचारो नारम्भणीयः।

स्यादेतत्

भाष्यप्रकाशः ।

अतोऽनेकार्थत्वादिसंकटेपि व्याकरणोक्तस्वरादिना सुखेन तन्निरासात् । किंच । लोके प्रत्यक्षादिसंक्रमाश्च तथा व्याकरणापेक्षेति तद्विरुद्धमपि क्वचिन्निर्णीयते। अत एव लौकिकशब्दार्थनिर्णायकत्वेऽपि न तत्र तेषामङ्गत्वप्रसिद्धिः। वेदे तु तेषामङ्गत्वस्य शास्त्रप्रसिद्धत्वात् प्रमेयस्य चात्यन्तालौकिकत्वेन विचारवादिनोऽपि तेषामाश्रयणीयत्वात् तद्धेतुन्यायेन तैरेवार्थज्ञानसिद्धेः कृतमजागलस्तनप्रायेण विचारेणेति। तदिदमुक्तं नचेत्यादिना।

अत्रैकदेशी स्वमतेन विचारकर्तव्यतामुपपादयति स्यादेतदिति वक्ष्यमाणप्रकारेण विचार-

रश्मिः ।

विवृण्वन्ति अत इति। व्याकरणेत्यादि। तथा च शिक्षायाम्।

'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ।

स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोपराधात्' ॥ इति ।

यथा दत्त इत्युक्ते, प्रत्ययार्थसहितं दानं संज्ञाश्चेति। संकटे आद्युदात्तत्वात्संज्ञाशब्दोऽयमिति तथा च सूत्रम् 'निष्ठा च द्व्यजनात्' इति । अथवा 'इन्द्रशत्रो' इत्यत्र स्वरेण समासनिर्णय आद्युदात्तत्वाद् बहुव्रीहिरिति, आदिना पदान्तरसमभिव्याहारादि पदान्तरसमभिव्याहार आदिर्येषां सामर्थ्यादीनां, पदान्तरसमभिव्याहारस्यादयः पदान्तरसमभिव्याहारादयः संयोगादयः, ते च ते तेषां समाहारः पदान्तरसमभिव्याहारादि, तेन 'सशङ्खचक्रो हरिः' इत्यत्र हरिशब्दो विष्णुवचन इति। न चेत्यादिभाष्यतात्पर्यमाहुः किंचेति । क्वचिदिति घटपटकालीनादिप्रयोगेषु इत्यर्थः। व्याकरणे तु घट चेष्टाभासचलनपरिमाणेषु, पट गतिभासप्रभृतिषु, कालाद्वन् इति। तेषामिति। छन्दःकल्पशिक्षानिरुक्तज्योतिषव्याकरणानामित्यर्थः। तद्धेतुन्यायेनेति। 'हेतुहेतुमतो हेतौ तद्धेतोरेव हेतुता' इत्यर्थः। तदिदमिति । किंचेत्यारभ्य विवृतमित्यर्थः। अस्यानर्थहेतोः प्रहाणायात्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्त इति वदन्तो विप्लववादिनो निरसितुमिदमित्याहुः। यद्वा। केवलवैदिककृतपूर्वपक्षे षडङ्गैर्निर्वाहः, परंतु 'स्वाध्यायोऽध्येतव्यः' इति श्रुतिविरोधः, वक्ष्यमाणभाष्यार्थाध्ययनाभावात्। इति केवलवैदिकं प्रति वैदिकश्चेत् मीमांसकः, स एकदेशी तस्याक्षेपस्वमाहुः अत्रैकदेशीति । ब्रह्मपुच्छश्रद्धालुत्वाभ्यासी पूर्वमीमांसको वैदिकैकदेशीति चार्थः ।

न वेदार्थज्ञानमात्राय विचारः । किंतु ब्रह्मज्ञानाय । तस्य चात्मरूपत्वात्

भाष्यप्रकाशः ।

स्यारम्भणीयत्वमुपपद्यतामित्यर्थः । तदाह न वेदार्थेत्यादि । तस्येति ब्रह्मणः । 'पटोलपत्रं पित्तघ्नं नाडी तस्य कफापहा' इत्यादिषु विशेषणमात्रस्यापि तत्पदेन ग्रहणदर्शनात् । अयमर्थः । अनुपपद्यमानत्वान्मास्तु वेदार्थमात्रत्वेन ब्रह्मज्ञानाय विचारः, परं त्वात्मत्वेन ब्रह्मज्ञानाय

रश्मिः ।

न वेदार्थेत्यादीति । अत्र न वेदार्थज्ञानमात्राय विचार इति भाष्ये । अयं षडङ्गमात्रेण वेदार्थकर्ता वैदिकः । अस्य भेदः मीमांसकपूर्वकषडङ्गैरर्थकर्ता वैदिकः । उक्तास्त्रयो विषयो वेदे यद्यपि, तथापि 'स्मृतेश्च' इति सूत्रभाष्ये वेदान्तानामपि वेदत्वोक्तेः वेदान्तेपि समानाः । अत एव वेदान्तमीमांसाया वेदविधिविचारः । अत एव वेदान्ती यस्य मन्तव्य इति विधेस्त्यागः द्रष्टव्य इति प्रथमविधेः दर्शनानन्तरं प्रवर्तते । किंतु ब्रह्मज्ञानायेति भाष्ये वेदान्ते ब्रह्मोक्तं तस्य ज्ञानाय तत्र ब्रह्मणि प्रकारद्वयम् । श्रुत्युदासीनात्मत्वं वेदार्थभूतात्मत्वं चेति भाष्यार्थो भविष्यति । तत्पदस्य पूर्वपरामर्शकत्वेन ब्रह्मज्ञानस्येत्यर्थेन भाष्यमित्याकाङ्क्षायां दृष्टान्तमाहुः पटोलपत्रमिति । वेदार्थमात्रत्वेनेति । पूर्वमीमांसका अङ्गीकुर्वन्ति वेदार्थमात्रत्वश्रुत्युदासीनात्मत्ववेदार्थभूतात्मत्वानि ब्रह्मणि धर्मान्, परंतु औपाधिकास्ते । तथाहि । पूर्वमीमांसाकारिकासु वैदिका उक्ताः, तैत्तिरीये अलूक्षा विमर्शिनः, पूर्वे उक्तास्ते पूर्वमतार्किकाः श्रद्धाऽभावात्, पद्मपुराण तर्कानादराच्च । तत्रापि व्याकरणपदपदार्थकज्ञानवन्तः । 'अलौकिको हि वेदार्थः' इति सिद्धान्तात् । श्रुत्येकशरणाः पूर्वमीमांसां नकृतवन्तः । मीमांसायाः पूर्वं जैमिनिसूत्रमात्रत्वाच्छबराचार्यप्रभृतिभिः करणात् । ते हि मीमांसारहितषडङ्गाष्टोपाङ्गपरिशिष्टविचारकाः पुरःस्फूर्तिकनिर्गुणं स्वीकुर्वन्तोपि वेदार्थमात्रत्वमङ्गीकुर्वन्ति । अन्यथा ब्रह्मज्ञानप्रसङ्गान्नापि व्यक्तिशक्तिमङ्गीकुर्वन्ति, प्रस्थानरत्नाकरस्याधुनिकत्वात् । अन्ये पुनर्मीमांसां कुर्वन्तस्तर्कं मीमांसायुतं कुर्वन्ति । तदा श्रुत्युदासीनात्मत्वमङ्गीकुर्वन्ति । भाट्टदीपिकायां मन्त्रमय्येव देवता, प्रातिपादिकार्थस्तु यः कश्चिद्भवतु । मम तु वदतोप्येवं वाणीं दूष्यतीत्युक्तत्वात् । शांकरादीनां वेदान्ते तु 'यतो वाचो निवर्तन्ते' इति श्रुत्या तथा, अन्यासामर्थ्यवादत्वाङ्गीकारात् । किंच, वेदार्थे न निष्पन्नात्मत्वं स्वीकुर्वन्ति निर्गुणत्वेपि । पूर्वं तादृशकुचोद्याभावात् । सोपाधिकत्वप्रसिद्धेरेवमुपपाद्यमानत्वादिति । भाट्टनैयायिकाश्च भाष्यं भाष्यप्रकाशे सुबोधिन्यनुसारेण विवृण्वन्ति । सुबोधिनी तु ब्रह्मत्वं ब्रह्मेति निर्विकल्पकज्ञानं ब्रह्मत्वविशिष्टब्रह्मेति ज्ञानं, सविकल्पकमात्मेत्युच्यते । तत्र पूर्वं निर्विकल्पकं, केवलवैदिकत्वात् । पश्चात् सविकल्पकं, मीमांसाया सत्वात् । तदुक्तं पूर्वम्, तथा च वेदार्थमात्रत्वावच्छिन्नब्रह्मत्वं ब्रह्मेति स्यादेतदित्यस्मात्पूर्वभाष्यस्य विषयः । मीमांसासहितस्य साङ्गोपाङ्गसपरिशिष्टवेदार्थत्वावच्छिन्नब्रह्मत्वविशिष्टब्रह्मेति ज्ञानमात्मा स स्यादेतदित्यादिभाष्यविषयः । अनुपपद्यमानस्त्वादिति । षडङ्गैरेव वेदार्थसंभवात् मीमांसाप्रयोजकत्वेनुपपद्यमानो वेदार्थत्वेन ब्रह्मज्ञानाय विचारः । न च वेदार्थत्वं षडङ्गसाध्यत्वं तज्ज्ञानमात्राय विचारः ।

१. क्षणिकविज्ञानवादिकब्रह्मेतीति वार्थः ।

भाष्यप्रकाशः ।

विचारो न प्रतिक्षेप्तुं शक्यः। नच संदिग्ध एव विषये विचारस्य प्रवृत्तेरात्मनश्चाहंप्रत्ययगोचरत्वेनासंदिग्धत्वादेवमप्यविचार्यत्वमेवेति शङ्क्यम्। अहंप्रत्ययस्य स्थूलोऽहं कृशोऽहं बधिरोऽहं गच्छाम्यहं श्वसिम्यहं जानाम्यहमित्यादौ देहाद्युपाधिगोचरत्वेन विपर्यस्तत्वात् तेन

रश्मिः ।

न प्रतिज्ञातत्वेपि चरममीमांसापाधकत्वाभावादिति भाष्यार्थे संभवान्मास्तु वेदार्थमात्रत्वेत्यादिः कुत इति वाच्यम्। वेदा वेदान्तास्तदर्थज्ञानं तदपि ब्रह्म 'वेदैश्च सर्वैरहमेव वेद्यः' इति वाक्यात्। तथा च वेदार्थमात्रत्वेन ज्ञानमात्राय ब्रह्मज्ञानाय विचारः इत्यर्थः संपन्नः। यद्वा, जैमिनिर्व्यासशिष्य इति धर्मजिज्ञासाया भाविनीत्वाद्वेदार्थकार्त्स्न्येन ज्ञानमात्ररूपाय ब्रह्मज्ञानायेत्यर्थः। अयमेव भाष्यार्थः। कर्ममार्गस्यापि भाष्ये दर्शनात्। यथा व्याकरणकार्त्स्न्यं निरुक्ते तथा वेदार्थकार्त्स्न्यं ब्रह्मज्ञाने तस्मै विचार इत्यर्थः। व्याख्यानतो विशेषप्रतिपत्तेर्न हि संदेहादलक्षणमिति महाभाष्यात्। इदमपि मास्तु ब्रह्मोद्देशसत्त्वेपि पूर्वमीमांसावत् सर्वविचाराभावात्। न चैतावदेव विचारः विस्तृतविचारस्य पूर्वमीमांसायां दर्शनेनोत्तरमीमांसाविचारमात्रायैतावतोऽसंभवात्। किंतु ब्रह्मेत्यादिभाष्यार्थमाहुः परंत्विति। नन्वत्रापि प्रतिज्ञातब्रह्मज्ञानायेति भाष्यार्थः संभवतीति चेन् न। ब्रह्मशब्दः सोपि वेदान्तरूपः सोपि ब्रह्म, तद्ब्रह्मावृत्त्यर्थत्वादित्याहुरात्मत्वेनेति। ब्रह्म आत्मा, तस्य चात्मरूपत्वादिति भाष्यात्। ब्रह्म ब्रह्मत्वमिति निर्विकल्पज्ञानं ब्रह्म, ब्रह्मब्रह्मत्वब्रह्मत्वस्वत्वरूपसंबन्धावगाहि ज्ञानमात्मा। तथा च ब्रह्मणो वेदार्थत्वेपि तत्त्वेन ज्ञानं नासंभावनाविपरीतभावनानिवर्तकं मीमांसासहितमात्मत्वेन, ब्रह्मज्ञानं तु ह्यसंभावनाविपरीतभावनानिवृत्त्युत्तरत्वेन तन्निवर्तकम्। आत्मत्वेनेति 'आत्मा देहो मनो ब्रह्म' इति विश्वात् ब्रह्म प्रोक्तम्। तथाध्यात्मदेवजातिषु सूरिभिरिति च। अहंप्रत्ययेति। सुखी अहमिति प्रत्ययगोचरत्वेनेत्यर्थः। अहंप्रत्ययस्याहंकारविषयत्वमपि यतः कर्ताहमिति प्रत्ययात्। स चिदचिद्ग्रन्थिरूपः। देहादीति। स्थूलोहं कृशोहमिति देहाध्यासः; बधिरोहमिति इन्द्रियवैकल्यम्, गच्छाम्यहमिति कार्याध्यासः, श्वसिम्यहमिति प्राणाध्यासः, त एत आत्माधिष्ठानकाः। जानाम्यहमिति अहंकारे चिदध्यासः आत्मनो ज्ञानाश्रयत्वात्। 'कामः संकल्पः' इति बृहदारण्यकात्। जीवेऽन्तःकरणाध्यासो वा तदायमप्यात्माधिष्ठानकः। अहंकारानतिरिक्तजीववादिमतेनाह। जगदान्ध्यापत्तिभिया नायमहंकारमात्राश्रयः। अहंकारमात्राश्रयत्वे जडत्वेनाहंकारस्य तथा जडाश्रितस्य गोलकाश्रितव्यतिरिक्तस्याप्रकाशकत्वनियमात्। यद्वा, अहंकारस्य 'आत्मा मनसा संयुज्यते' इत्यादिप्रणाड्यभावात्, तेन जानाम्यहमित्यत्र ज्ञानकर्ताहमिति बुद्धिर्नतु ज्ञानाश्रयोऽहमिति। अन्त्यायाः प्रत्यगात्मविषयत्वात्। पूर्वस्याहंकारविषयत्वात्। विपर्यस्तत्वादिति। 'शङ्खः पीतः' इतिवत् 'घटो भ्रमति' इतिवच्च करणदोषविषयदोषजन्यसंप्रयुक्तभिन्नार्थमात्रप्रतिपादकबाह्यज्ञानत्वादित्यर्थः संशयः। स्मृत्योर्वारणाय मात्रबाह्यपदे। तत्र विषयदोषजन्यत्वं त्यक्तुं शक्यम्। आवश्यकत्वलाघवाभ्यां तावतैव सिद्धेरिति सिद्धान्ते विशेषः। क्वचिद्विषयदोषोऽभ्युपेयते, यथा जीवपरमाण्वोरध्यासो दोष इति। एतच्च द्वितीयाध्याये तर्कपादे 'उप...यादि न कर्मातस्तदभावः' इति सूत्रभाष्यप्रकाशे 'चरमः सद्विशेषाणाम्' इति श्लोकार्थकथनावसरे

**तस्य चाविद्यावच्छिन्नत्वात् देहात्मभाववद्‌प्रतीतेस्तदतिरिक्तस्य ब्रह्मणोऽभावाच्च**

भाष्यप्रकाशः ।

संदेहनिवृत्तेरभावात् । नच देहादिरेवात्मेति युक्तम् । देहस्यावस्थाभेदेषु परिणामान्तरदर्शनेन नश्वरत्वनिश्चयात् । अहंवित्तिवेद्ये त्वात्मनि, यः कृशः पूर्वं स इदानीं स्थूल इति पूर्वापरकाले ऐक्यमानेन तदभावात् । नच सोऽहमिति प्रत्यभिज्ञया देहादेरात्मत्वं वक्तुं शक्यम् । प्रत्यभिज्ञायाः सोयं दीपस्तदिदं जलमितिवत् सजातीयविषयत्वेन पूर्वापरकालकृतदैक्यानिश्चायकतया तदविषयत्वात् । एवं तत्तदिन्द्रियनाशेऽपि जीवनदर्शनाच्छ्वासोच्छ्वासयोर्बहिरागच्छतः प्राणस्यापि ज्ञानादर्शनेनाचेतनत्वनिश्चयात् बुद्धिमनसोरपि करणत्वेन सिद्धतया कर्तृत्वेनासिद्धत्वात् विषयपार्थक्यस्य सर्वानुभवसाक्षिकत्वात् सर्वेषामिदंकाराऽऽस्पदत्वाच्च । नचेदंकारास्पदानामात्मत्वं युज्यते । पुरोऽवस्थित एव विषये तथाप्रयोगदर्शनात् । आत्मनश्च प्रत्यग्वित्तिवेद्यत्वेन तथात्वाभावात् । नचैवं सिद्धे देहादिभ्यो विवेके संदेहाभावादजिज्ञास्यत्वम् । तस्याविद्यावच्छिन्नत्वात् विदुषां शास्त्रपरिपक्वबुद्धीनामप्यहंप्रत्यये विविक्ततत्स्वरूपस्यागोचरत्वात् सुखदुःखादीनां

रश्मिः ।

वक्तव्यम् । गृह्यमाणारोप इति केचित् । स च परेण गृह्यमाणस्योत स्वयं गृह्यमाणस्य । आद्येऽतिप्रसङ्गो, ज्ञानस्य त्रिक्षणावस्थायित्वस्वीकारात् । द्वितीये तस्यैव बाधादिति । अन्यत्र गृह्यमाणस्यारोप इति चेत्, न । आन्यत्रिकग्रहणस्य तदानीं विरहाद् गृह्यमाणत्वस्याशक्यत्वात् । न च देहादिरिति । प्राणेन्द्रियक्रियाबुद्धिमनोविषया आदिशब्दवाच्याः । आत्मनोऽभेदे प्रत्यभिज्ञां प्रमाणयन्ति अहंवित्तीति । प्रत्यभिज्ञाया ऐक्यनियामकत्वे साम्यशङ्कामादाय निषेधन्ति न च सोहमिति । नेत्याह प्रत्यभिज्ञाया इति । पूर्वापरेति । पूर्वापरौ कालौ यस्य देहस्य तस्यैक्यानिश्चायकतया पूर्ववदैक्याविषयत्वान्न साम्यमित्यर्थः । तेन व्यक्त्यवलम्बना प्रत्यभिज्ञा ऐक्यमवगाहते 'सोयं घटः' इतिवत् । या तु जातिमवलम्बते न सैक्यमवगाहते, प्रवाहे तदिदं जलमितिवदित्युक्तम् । तेन च देहो नात्मेत्युक्तम् । तर्हीन्द्रियनिकुरम्बः प्रत्येकमिन्द्रियं वा प्राणादिर्वात्मा भविष्यति तत्राह एवमिति । सकलेन्द्रियनाशोऽपेरर्थः । करणत्वेनेति । बुद्ध्या पदार्थान् जानातीति प्रत्ययेन, सुखसाक्षात्कारः सकरणकः, जन्यसाक्षात्कारत्वात् । चाक्षुषसाक्षात्कारवदित्यनुमानेन च बुद्धिमनसोः करणत्वेन सिद्धतया ज्ञानाश्रयत्वेनासिद्धत्वादित्यर्थः । विषयेति मूलाणाणादिपार्थक्यस्येत्यर्थः । साधारणं हेतुमाह सर्वेषामिति । नासावात्मेदंकारास्पदं पुरोवस्थितत्वाभावादित्याह आत्मनश्चेति । प्रत्यग्वित्तीति । प्रातिलोम्येन जडादिसर्ववैलक्षण्येन सच्चित्सुखात्मतयाञ्चति प्रकाशत इति प्रत्यक् जीवः, श्रीधर्यां तथा व्याख्यानं तृतीयस्कन्धे, तद्वित्तिवेद्यत्वेनेत्यर्थः । सा चाहं प्रत्यगिति । तस्य चाविद्यावच्छिन्नत्वादिति भाष्यमवतारयन्ति न चैवं सिद्ध इति । विविक्ततत्स्वरूपाज्ञाने हेतुमाहुः अगोचरत्वादिति । सुखदुःखादीनामिति ।

निबन्धे 'तत्राज्ञावपि नो मुक्तिर्जाग्रत्स्वप्नवदुद्भवः ।
अविद्याविषयोस्तस्माद्भजनं सर्वथा मतम्' ॥ इति शास्त्रार्थे

**वेदमात्रादसंभावनाविपरीतभावनानिवर्तकं ज्ञानमुत्पद्यते । प्रत्युत देहात्मभावदृढप्रतीतेः श्रुतेरुपचरितार्थत्वं स्तुतित्वं वा कल्पयिष्यतीति ।**

**मैवम् ।**

---

भाष्यप्रकाशः ।

प्रादेशिकत्वस्य चाभिमानेन तथा निश्चयात् तेषामपि देहात्मभावदृढप्रतीतेरविद्यासंबन्धरहितस्य केवलस्यात्मनः प्रत्ययाभावेन दर्शनान्तरेऽपि व्यापकतया प्रतिपन्नस्य तस्यैव बृहत्त्वेन बृंहणत्वेन च तदतिरिक्तस्य ब्रह्मणोऽभावाद् विविक्ततत्स्वरूपज्ञानाय विचार आवश्यकः । **न च वेदमात्राद् विविक्तात्मस्वरूपविषयासंभावनाविपरीतभावनानिवर्तकं ज्ञानं सिद्ध्यति ।** प्रत्यक्षापेक्षया शब्दस्य निर्बलत्वात् । **प्रत्युत** प्रबलप्रमाणेन **देहात्मभावदृढप्रतीत्या** शास्त्रपक्वबुद्धिरपि दर्शनान्तराभिमानेन विविक्तात्मस्वरूपबोधिकायाः **श्रुतेः** कल्पनोपदेशतयोप**चरितार्थत्वं वा,** उपासनाशेषतया **स्तुतित्वं वा कल्पयिष्यति ।** अतोऽसंभावनाद्यपनयनेन श्रुतावुपचारादिनिवृत्त्यर्थं वेदार्थभूतात्मत्वेन ब्रह्मज्ञानाय विचार आवश्यक इति ।

एवमुक्तमेकदेशिमतं चोदकः प्रतिक्षिपति **मैवमिति** । यदुक्तं, न वेदार्थज्ञानमात्राय विचारः,

रश्मिः ।

तत्प्राप्तौ विद्याप्राप्तौ, तथा चाविद्योद्भवेनागोचरत्वात् आत्मगुणानाम् । **प्रादेशिकत्वस्येति** प्रदेशे भवत्वस्येत्यर्थः । अध्यात्मादेराकृतिगणत्वाट्ठञ् । **तथेति** अविद्योद्भवत्वस्य निश्चयात् । न चाणोर्जीवस्य धर्माणां प्रादेशिकत्वेप्यक्षतिरिति शङ्क्यम् । परमात्मविचारादणुभाष्यत्वेपि । **देहात्मेत्यादि** । न च सुखदुःखजनकपूर्वजन्मीयधर्माधर्माधारतया तस्य शरीरातिरिक्तत्वसिद्धिरिति वाच्यम् । मयूरचित्रादिवत् तयोरपि स्वाभाविकतया तज्जनकधर्माधर्मासिद्धौ तदाधारस्यात्मनोप्यसिद्धेरिति प्रत्यक्षैकप्रमाणवादिनो लोकायतिका आहुः, तेनाविद्यास्वरूपमप्युक्तम् । अभिमानस्याविद्याकार्यत्वेनाज्ञानरूपं तत्स्वरूपमुक्तम् । **दर्शनान्तर** इति शैवमते भास्कराचार्यमते च । **विविक्तेति** । सच्चिदानन्दं ब्रह्म स्वेच्छया सदानन्दरूपं, तस्य जगज्जन्मादिकर्त्री शक्तिः चिच्छक्तिर्व्यापिका, तस्या व्यामोहिका शक्तिरित्येवमिच्छायाः पूर्वमुत्तरं च विविक्ततत्स्वरूपज्ञानाय । तेन अविद्यास्वरूपमप्युक्तम् । **न वेदमात्रादिति** भाष्यं विवृण्वन्ति **न च वेदेति** । असंभावना देहातिरिक्तात्मासंभावना । विरुद्धसर्वधर्मानाधारत्वभावना विपरीतभावना 'अज्ञानमन्यथाज्ञानं ब्रह्मगं विनिवार्यते । कृष्णगमपीति भावः । मीमांसकास्तु प्रातिपदिकार्थः कश्चिदस्तु शब्दमयी देवतेत्याहुः । **निर्बलत्वादिति** । न हि शब्दशतेनापि दृश्यमानो घटो वारयितुं शक्यते । **प्रत्युतेति** भाष्यं विवृण्वन्ति **प्रत्युतेति** । **श्रुतेरिति** तत्त्वमस्यादिश्रुतेरित्यर्थः । **कल्पनेति** कल्पनोपदेशसूत्रे स्पष्टम् । **उपासनेति** मनोव्यापारविशेषो रामानुजाचार्यमतेन्यत्रापि । **स्तुतिरुत्कर्षाधायकगुणवर्णनम्** । अत्र पक्षे नोपचारः । **वेदार्थभूतात्मत्वेनेति** स्वबुद्ध्या वेदार्थं परिकल्प्य तादृशवदार्थभूतात्मत्वेन । [अत्रैव श्रुत्युदासीनात्मत्वेन ब्रह्मज्ञानाय विचारोप्यग्रे भाष्यप्रकाशेनूद्य नोदकप्रतिक्षेपे दूषयिष्यन्ति । अधस्तनरश्मौ तु तुर्यपङ्क्तौ । अधस्तनरश्मौ व्यवहारे वयं भाट्टा इति वदतो मते भाट्टीयब्रह्मज्ञानाय] । **चोदक** इति । केवलवैदिकः साङ्गोपाङ्गसपरिशिष्टवेदैः कृतमर्थं प्रतिक्षिपदेकदेशिमतम् । सिद्धान्त्येकदेशीत्यर्थः । तस्य च सच्चिदानन्दात्मकं ब्रह्म निराकारमेव,

**अलौकिको हि वेदार्थो न युक्त्या प्रतिपद्यते ।**
**तपसा वेदयुक्त्या तु प्रसादात् परमात्मनः ॥**

भाष्यप्रकाशः ।

**किंतु ब्रह्मज्ञानायेति** । तत्र किं दर्शनान्तरवच्छ्रुत्युदासीनात्मत्वेन ब्रह्मज्ञानाय वेदान्तविचारः । ततश्च वेदार्थज्ञानमानुषङ्गिकमिति तव मनीषितम्, उत वेदार्थभूतात्मत्वेन तदर्थं स इति । तत्राद्यस्तु दर्शनान्तरैरेव सिद्धो, न विवक्षितपदवीमधिरोहति । द्वितीयश्चेत् तदापि तन्न संगच्छत इत्यर्थः । उक्तरूपस्यात्मनो वेदार्थत्वाभावे हेतुं कारिकया गृह्णाति **अलौकिक इति** । **हिशब्दो हेतौ** । अलौकिकत्वादित्यर्थः । किं तेनेत्याह **न युक्त्येति** । कथं तर्हि तत्प्रतिपत्तिरित्यत आह **तपसेत्यादि** । तपोऽनशनादिरूपम् । **वेदोक्ता युक्तिर्वेदयुक्तिः** न्यग्रोधफलमाहरेत्यादिरूपा । **परमात्मप्रसादो** मुख्यं साधनम् । अन्यथा 'तेषां प्रकृतिवैचित्र्याचित्रा

रश्मिः ।

सर्वभवनसामर्थ्यसंपृक्तं निमित्तान्तरमन्तरेणैवांशतो धर्मरूपेण, तदनु क्रियारूपेण, ततः प्रपञ्चरूपेण संभवतीति मतम् । तदेतत्' 'अरूपवत्' सूत्रे तृतीयाध्याये वक्ष्यते । तेनात्रैवं ज्ञेयम् । भाष्ये आधिदैविकादिभेदेन नारम्भणीयः, स्यादेतत्, मैवमित्यादिग्रन्थैः त्रेधा पूर्वपक्षः । केवलवैदिककृतो नारम्भणीय इत्यादिग्रन्थविषयः । मीमांसकश्चेत् पूर्वोक्तस्तत्कृतः स्यादेतदित्यादिग्रन्थविषयः । सिद्धान्त्येकदेशिकृतो मैवमित्यादिग्रन्थविषयः । प्रथमपूर्वपक्षी वेदार्थमात्रत्वमङ्गीकरोति । द्वितीयः श्रुत्युदासीनात्मत्वमङ्गीकरोति । स्वबुद्ध्या वेदार्थं परिकल्प्य तादृशवेदार्थभूतात्मत्वं च । तृतीयस्तु वेदार्थभूतात्मत्वेन 'नाहं वेदैः' इत्यादिभिः वेदार्थभूतस्य 'वेदैश्च सर्वैरहमेव वेद्यः' इति स्वेच्छया विरुद्धसर्वधर्माधारत्वेन वा वेदार्थभूतात्मत्वमङ्गीकरोति, स एव सिद्धान्तः । प्राज्ञादप्याधिक्यात् । मुख्यमतं कृष्णमतमित्युपनिषदोत्तरत्र [ चिमनभातेपि अमतमित्यत्र मते रुचप्रचिवीति भानं ज्ञेयम् । ] **प्रतिक्षिपतीति** षडङ्गवेदविचारितब्रह्मौदासीन्येन स्वबुद्धिपरिकल्पितवेदार्थभूतात्मत्वे ब्रह्मज्ञानमापततीत्यरुच्या भ्रान्तत्वेन प्रतिक्षिपतीत्यर्थः [**प्रतिक्षिपतीति** । मीमांसाया अपि न स्वातन्त्र्यं येन देवताप्रतिपादिकोऽर्थो यः कश्चिदस्तु हीति युज्यतेऽपि तु 'तं त्वौपनिषदं पुरुषं पृच्छामि' इति श्रुतेस्तर्कैः अप्रतिपाद्यवेदानुकूलमीमांसायुततर्कैः प्रतिपाद्यरूपवेदार्थभूतत्वेन प्रतिपाद्यमित्येवं प्रतिक्षिपतीत्यर्थः] **दर्शनान्तरवदिति** । कणभक्षाक्षचरणशास्त्रवद्युक्त्या वेदान्तविचार इत्यन्वयाज्जीवः पराभिन्नः सच्चिदानन्दरूपत्वात्परमात्मवदित्यनुमानसाध्यात्मत्वेनेव साध्यार्थातिरिक्तार्थवादश्रुत्युदासीनात्मत्वेनेत्यर्थः । अत्राहमस्मि प्रिये जानामीति प्रतीतेः सच्चिदानन्दलक्षणो जीवः, शांकराणामपि अहं ब्रह्म इत्यनुमितिः अहं पराभिन्न इत्यनुमितिः । **आनुषङ्गिकमिति** । स्वबुद्ध्या वेदार्थान् परिकल्प्य तदर्थविचारे तदनुषङ्गेण दीव्यतीत्यानुषङ्गिकं 'तेन दीव्यति खनति जयति जितम्'इति ठक् । **वेदार्थेति** । स्वबुद्ध्या वेदार्थं परिकल्प्य तादृशवेदार्थभूतात्मत्वेनेत्यर्थः । श्रुत्युदासीनात्मत्वेन ज्ञानं निरीश्वरहतमिति सांख्ययोगनैयायिकभाट्टादीनाम् । **न विवक्षितेति** । वेदवेदान्तदर्शनपदवीं नार्हतीत्यर्थः । विचारान्तरतां नार्हतीत्यर्थः । **न संगच्छत इति** यौक्तिकत्वान्न संगच्छते । आचार्यमतत्वेपि तपआदिरहितं न संगच्छते, पञ्चगीतं विना न संगच्छत इत्यर्थः । **अनशनादीति** । आदिना वेदार्थत्वेति उक्तवेदार्थत्वाभावे (चिकाय)वेदार्थत्वं त्वस्यैव गीतोक्तम् । **न्यग्रोधेत्यादि** । छान्दोग्ये

१. न्यग्रोधफले न्यग्रोधसत्ता ब्रह्मणि सर्वमितिभावः । २ अर्थान्तरं स्यादिदम् ।

न हि स्वबुद्ध्या वेदार्थं परिकल्प्य तदर्थं विचारः कर्तुं शक्यः ।

भाष्यप्रकाशः ।

वाचः स्रवन्ति हि' इतिन्यायेनान्यदेव बुध्यतेति । एतदेव विभजते न हीत्यादि । अयमर्थः । भवान् हि श्रुतीनामनुपचरितार्थत्वाय दर्शनान्तरे आत्मगमकत्वेन स्वीकृतस्याहंप्रत्ययस्य प्रादेशिकग्राहकत्वं प्रदर्श्य तस्याविद्याख्योपाध्यवच्छिन्नात्मग्राहकत्वेन भ्रमत्वं च प्रदर्श्य तेन तन्निश्चयाभावात् कर्तृत्वभोक्तृत्वाद्यंशेऽपि तस्य भ्रमत्वं साधयितुं चिदेकरसस्यात्मनो ज्ञानाविषयत्वं च साधयितुमध्यासभाष्यसूचितां विषयत्वेन जडत्वेन व्याप्तिमङ्गीकृत्यैवमाह । अहंवित्तौ प्रकाश-

रश्मिः ।

'भूय एव मा भगवान् विज्ञापयतु' इति पुत्रेण श्वेतकेतुना पृष्ट आरुणिः 'तथा सोम्येति होवाच न्यग्रोधफलमाहरेतीदं भगव इति भिन्धीति भिन्नं भगव इति किमत्र पश्यसीत्यण्व्य इवेमा धाना भगव इत्यासामेकैकां भिन्धीति भिन्ना भगव इति किमत्र पश्यसीति न किंचन भगव इति तꣳ होवाच यं वै सौम्यैतमणिमानं न निभालयसे एतस्य वै सौम्यैषोणिम्न एवं महान्यग्रोधस्तिष्ठति श्रद्धत्स्व सौम्येति स एषोणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो' इत्येवंरूप इत्यर्थः । भगव इति संबोधनं, निभालयसे पश्यसि । मुख्यमिति वरणद्वारापि । न्यायेनेति एकादशस्कन्धोक्तेन तेनेत्यर्थः । प्राज्ञश्च केवलवैदिकैकदेशी त्वचोदकश्च तेषां वाचकानि पदानि, तैरुपात्तान् तान् प्राज्ञकेवलवैदिकैकदेशिपदोपात्तान् । एकदेशीयवस्तुसूचितशांकरं प्रत्याह । तपआदीनि वेदार्थभूतान्यवादी । भवानिति शांकरः कश्चित् । अनुपचरितेति । अनुपचरितार्थत्वं यथाशास्त्रदृष्टार्थत्वं तेन अर्थवादत्वने पूर्वोक्तपक्षे अनुपचरितार्थत्वाभावेपि अरुचिः । शंकराचार्यमतेऽपि व्यवहारे भाट्टप्रतारणादर्शवादत्वं वक्ष्यमाणपक्षेऽनुपचरितार्थत्वं तस्या इति वा । दर्शनान्तर इति वैदिकशास्त्रादन्यस्मिन् शांकरादिशास्त्रे । प्रादेशिकेति । सुख्यहमिति इत्येशे भगवत्त्वस्याग्राहकत्वम् । अविद्योपाध्यवच्छिन्नविषयग्राहकत्वेन भ्रमत्वम् । तेन तन्निश्चयाभावादिति भ्रमात्मकेनाहंप्रत्ययेनात्मनिश्चयाभावादित्यर्थः । कर्तृत्वेत्यादि । प्राकृतिकं कर्तृत्वादिकमात्मन्यारोपितमिति तथा । अध्यासभाष्यसूचितामिति अध्यासभाष्यस्य तत्त्वमस्यादिवाक्यावेदितैक्यविद्याप्रतिपत्तिप्रयोजनाहितजडमिथ्यात्वमवगमयितुमात्मनि अस्मत्प्रत्ययमात्रगोचरे जडतद्धर्माध्यासः कल्पितः, शुक्तौ रजतमिव । स चाविद्यास्वरूपो वस्तुस्वरूपावधारणेन विद्यारूपेण नश्यतीति । अधिष्ठानावधारणे रजतमिव । अस्यानर्थस्य प्रहाणाय वेदान्तारम्भ इति वाच्योऽर्थः । व्याप्तिस्तु संभावनापरेण न चायमस्ति नियमः पुरोवस्थित एव विषये विषयान्तरमध्यसितव्यमित्यादिभाष्येण तात्पर्यरूपया व्यञ्जनयोच्यत इत्यर्थः । सिद्धान्ते च बुभुत्सितार्थावाचकत्वे तत्प्रतीतिजनकत्वम् । तत्प्रतीतीच्छयोपचरितत्वं तात्पर्यमित्यालंकारिकाः, वृत्तेर्द्वैविध्यात् । तेन फललक्षणादिव्यञ्जनान्तानां तात्पर्ये निवेशः । एवमिति वक्ष्यमाणप्रकारेणेत्यर्थः । अनर्थप्रहाणफलका वेदान्तास्तदारम्भकत्वे अध्यासभाष्यशक्यार्थः । अत्रानर्थप्रहाणे जडो विषयत्वात् मिथ्याजडत्वादित्यनुमानयोः प्रविष्टत्वेनैतत्प्रतीतीच्छयोपचरितत्वमनर्थप्रहाणफलकत्वोपमरूपारम्भे वर्तते । अन्यथा तत्प्रहाणे जडमिथ्यात्वमवगमयितुमिति जातो धर्माध्यासः कल्पित इति न वदेत् । अयं बुभुत्सितोर्थोपि भवति, तदवाचिकत्वे तत्प्रतीतिजनकत्वमपि तादृशार्थप्रतीतिजनकत्वमपि । ननु रूपारम्भे तत्प्रतीतिजनकत्वं नास्ति, किंत्वनर्थप्रहाणबाधकभाष्ये इति चेन्न, न ह्यारम्भः पृथगेव वाच्यः, किंतु

भाष्यप्रकाशः ।

शमानस्यात्मनो ज्ञानान्तरविषयत्वेन जडत्वापत्तिः । सर्वास्वर्थवित्तिषु प्रकाशाश्रयत्वेन सिद्ध-स्यात्मनो घटमहं जानामीत्यादौ विषयत्वायोगः । चैत्रो ग्रामं गच्छतीत्यादौ क्रियाफलस्य संयोगस्योभयनिष्ठत्वेऽपि ग्रामादौ परसमवेतक्रियाफलशालित्वस्य कर्मत्वेन स्वसमवेतक्रियाफल-शालिन आत्मनः परत्वाभावेन आत्मानमहं जानामीत्यादौ ज्ञानविषयस्यात्मनः कर्मलक्षणा-नाक्रान्ततया कर्मत्वायोगः । तस्य कर्तृभेदाङ्गीकारे कर्मभूतस्य तस्यानात्मत्वप्रसङ्गः । अप्रका-शमानत्वस्यैव जडत्वेन स्वस्मिन्नप्रकाशमानतयापि जडत्वापत्तिः । अनुभवबलेन कर्मकर्तृविरोधे परिहृते सिद्धे चाभेदे प्रकाशाश्रयरूपकर्तृत्वेनैव प्रकाशत इत्यङ्गीकारेऽपि यस्मिन्नर्थात्मानौ प्रका-शेते तस्य ज्ञानरूपप्रकाशस्य स्वयमप्रकाशमानतया जडत्वे विषयाप्रकाशकत्वप्रसङ्गः । तस्या-

रश्मिः ।

तस्यानर्थस्य प्रहाणेन सहैकीकृतस्यार्थजातस्य वाचकभाष्यस्य नयतीति जघन्यत्वात् । अध्यास-भाष्यसूचितामिति भाष्यप्रकाशात् । एवं च काकेभ्यो दधि रक्ष्यतामित्यत्र दध्युपघातकत्वस्य काकेषु सत्त्वाद्भद्रात्मनः इति काव्यप्रकाशस्य वरवारणस्येत्यत्र समासान्तरस्य सत्त्वात्तद्वदत्राप्यध्यासभाष्ये तादृशारम्भत्वसत्त्वेपि अवगमयितुमित्यनेन ज्ञानबोधनेपि जडमिथ्यात्वादिपदसमभिव्याहारेणानुमिति-सूचनादशु(भ)मिति । विशिष्टत्वसत्त्वमयीति तेन रूपेणाध्यासभाष्यस्यानुमितिविशिष्टे लक्षणा तादृशभाष्येऽनुमितिविशिष्टयां व्याप्तौ चानुमितिसत्त्वादिति । एवमिति अवधारितमाहेत्यर्थः । तमाह अहंवित्ताविति अहं ब्रह्मास्मीत्याकारिकायामित्यर्थः । जडत्वापत्तिरिति आत्मा जडो विषयत्वात् घटवदित्यनुमानेन तथात्वापत्तिरित्यर्थः । प्रथमान्तानीमानि पदानीत्यतः फलरूपा संवित् स्वयंप्रकाशाभ्युपेतव्येत्यनेनानुपपत्तिः । स्वप्रकाशकं घटमहं जानामीत्याकारकं च सर्वमेव ज्ञानं घटादिकमिव स्वात्मानं स्वाधिकरणमात्मानं च गोचरीकुर्वत् त्रिपुटीप्रत्यक्षतां प्रथयति । मितिमातृमेयविषयत्वात् स्वस्येति । प्राभाकरमतमाक्षिपन्ति सर्वास्विति । अहं घटं जानामि घट-ज्ञानो घटं ज्ञातवान् ज्ञातो घट इत्येवंरूपासु घटविषयकज्ञानाश्रयोऽहमित्यादिबोधात् प्रकाशाश्र-यत्वेन सिद्धस्येत्यर्थः । विषयत्वायोग इति । स्वर्गमिच्छतीत्यादौ कर्तुस्तथात्वादर्शनात्तथेत्यर्थः । नैयायिकादीनाक्षिपति चैत्र इति । उभयनिष्ठत्वेपीति कर्तृकर्मनिष्ठत्वेपीत्यर्थः । तथाच क्रिया-फलशालित्वस्य कर्मलक्षणस्यातिव्याप्तत्वमिति भावः । तन्निवृत्तये परसमवेतविशेषणविशिष्टलक्षण-मित्याह ग्रामादाविति । तदव्याप्तमित्याह स्वसमवेतेति । परत्वाभावेनेति । कर्मभू-तात्मास्मदर्थाध्यस्यात्मनोरैक्यात्तथेत्यर्थः । ननु 'आत्मानमात्मना वेत्सि' इतिवदुपपद्यतामित्यत आह तस्येति । अनात्मत्वप्रसङ्ग इति जीवद्वयाङ्गीकारस्य निर्यौक्तिकत्वेनानात्मप्रसङ्ग इत्यर्थः । जडत्वापत्तिरूपं तत्फलमाह अप्रकाशेति । स्वस्मिन्निति । स्वविषयकप्रकाशकर्तृत्वाभावेनापि । अनुभवबलेनेति प्रमाणीभूतेनेत्यर्थः । प्रकाशत इति । कर्मापीति शेषः । यस्मिन्निति अहं जीव इत्यस्मिन् शुद्धाद्युपाधिप्रकारकात्मविशेष्यके ज्ञाने इत्यर्थः । स्वयमिति अर्थरूपविषय-

भाष्यप्रकाशः।

प्रकाशमानत्वेऽपि निलीयचक्षुरादिवत् प्रकाशकत्वे तत्फलस्यैवैतत्फलस्यैव स्वयम्प्रकाशतया आश्रयतयाऽस्य जडत्वापत्तिः। पूर्वज्ञानफलस्यैतस्य जडत्वे एतज्ज्ञानफलस्याग्रिमस्यापि जडत्वापत्तिः। परंपराङ्गीकारेऽनवस्था जगदान्ध्यापत्तिश्चेत्यतः फलरूपा संवित् स्वयंप्रकाशाऽभ्युपेतव्या, न तु निलीयचक्षुरादिवत् प्रकाशिका। ततश्च स्वयंप्रकाशत्वस्यैव चेतनत्वेन तदाश्रयतया प्रकाशमानस्यात्मनो विषयत्वेन जडत्वापत्तिस्तदवस्था। नचार्थात्मानौ विना केवलायाः संविदः प्रकाशाभावात् संविदर्थात्मनां परस्परप्रकाशकत्वमेवेति परतःप्रकाशत्वमेव चेतनत्वम्, ततश्च संवित्तुल्यत्वादात्मनोऽपि जडत्वमिति शङ्कयम्। तथा सत्यर्थस्यापि चेतनत्वापत्तेः। अथ संविदर्थात्मनां परस्पराविनाभावादात्यन्तभेद इति विभाव्यते, तदा तु संविद इव तयोरपि स्वयंप्रकाशत्वं सिद्धमित्यर्थात्मनोः संविदतिरेकेणानिर्वाच्यत्वात् संविदेव केवला सिद्ध्यति, न

रश्मिः।

जनकत्वेन संसर्गजन्यत्वेन च स्वयमप्रकाशमानतयेत्यर्थः। निलीयचक्षुरिति। लीङ् श्लेषणे निपूर्वः। ल्यबन्तस्तु न भवति। 'अचो यत्' 'शकि लिङ्च'इति सूत्रे चकारेण शक्यार्थविधानात् नितरां लातुं शक्यं चक्षुरित्यर्थः। गुणाभावस्तु चिन्त्यः। यद्वा। अव्ययमिति योगविभागाल्ल्यबन्तेन समासः। विषयेण नितरां संबध्य यच्चक्षुस्तद्वदित्यर्थः। अत्रापि यत्तदोरध्याहारो लक्षणा वा। निलीयेति विशेषणं तु अतथाभूतस्य चक्षुषो दृष्टान्तार्थकत्वात्। यद्वा। निलीय विषयतामप्राप्य चक्षुः आदिना श्रोत्रादि तद्वदित्यर्थः। प्रकाशकत्व इति। अभिमत इति शेषः। तत्फलस्येति चक्षुःफलस्य जन्यज्ञानस्यैवैतत्फलस्यार्थात्मविषयकस्याहं जीव इति ज्ञानस्य यत्फलमनुव्यवसायरूपं तस्यैव स्वयंप्रकाशता स्यात्। अस्यार्थात्मविषयकज्ञानस्य जडवत्संवित्प्रकाश इति ततश्च स्वयंप्रकाशत्वस्यैव चेतनत्वेन तदाश्रयतया प्रकाशमानस्यात्मनो विषयत्वेन जडत्वापत्तिस्तदवस्था। नचार्थात्मानौ विना केवलायाः संविदः प्रकाशाभावात् संविदर्थात्मनां परस्परप्रकाशकत्वमेवेति परतः प्रकाशमेव चेत् संवित्प्रकाश इति नैयायिका विरुद्धं मन्यन्ते। ननु जडत्वं नाम प्रकाशकतावच्छेदकं चक्षुरादौ व्यभिचारादित्याशङ्कयाह जडत्वापत्तिरिति। पूर्वज्ञानफलस्येति। इदं हि विशिष्टं ज्ञानम्। विशेषणज्ञानाधीनं दण्डीतिज्ञानवत्। तथा च बुद्ध्यादिज्ञानफलस्याहं जीव इति ज्ञानस्य जडत्व एतज्ज्ञानफलस्य बुद्ध्यादिनाहं ज्ञानाश्रय इत्यादिज्ञानस्याग्रिमस्य जडत्वापत्तिः। पूर्वसजातीयत्वलिङ्गकानुमानादित्यर्थः। जन्यं ज्ञानं विषयात् पूर्वं न भवतीत्यर्थात्मविषयकं ज्ञानं पूर्वज्ञानशब्देन (न) गृहीतम्। जगदान्ध्येति। ज्ञानस्यापि जडत्वे प्रकाशाभावात् तथेत्यर्थः। इत्यत इति। जडत्वापत्तेर्जगदान्ध्यापत्तेश्चेत्यर्थः। फलरूपेति अन्तःकरणपरिणामनिवृत्तावरणरूपा संविदित्यर्थः। तदुक्तं 'अहं ब्रह्मास्मि' 'ब्रह्मैवाहमस्मि' इत्यखण्डाकारवृत्तितया वृत्त्यविज्ञाने निवृत्तेऽब्रह्मत्वपरोक्षत्वादीनां निवृत्तत्वात् प्रत्यगात्मनोऽखण्डानन्दस्वरूपावस्थितिर्भवतीति। ननु निलीयेत्यादि। स्वयं स्वाप्रकाशतामावहन्ती प्रकाशिकेत्यर्थः। इदानीं तस्याः स्वप्रकाशत्वाय यतते। ततश्चेति। परतः प्रकाशादित्यर्थः। तथा सतीति परतः प्रकाशत्वस्य जडत्वनिवर्तकत्वे सतीत्यर्थः। नैयायिका ज्ञानं निर्विषयकं न मन्यन्ते तद्रीत्याह अथेति। विभाव्यते नैयायिकवद्विभाव्यते। संविदतिरेकेणेति संविद्रूपकारणसत्ताव्यतिरेकेण। तयोरर्थात्मनोरनिर्वाच्य-

भाष्यप्रकाशः ।

त्वर्थात्मभ्यां सहिता । वस्तुतस्तु संविदोऽर्थसहभावोऽपि न नियतः, अतीतानागतस्थले व्यभिचारात् । नच तत्राभाव एव विषय इति वाच्यं, तस्यासत्त्वात् । नच सोऽपि सन्निति वाच्यं, सत्त्वस्य निर्वक्तुमशक्यत्वात् । सत्त्वं हि सत्ताख्यसामान्यं समवायो वा, अर्थक्रियाकारित्वं वा प्रकाशमानत्वं वाऽभ्युपेयम् । तत्र नाद्यौ । सत्तायां सत्तासमवायाभावेन अर्थक्रियाकारित्वेऽर्थक्रियाकारित्वाभावेन च तयोरसत्त्वे तद्योगिनोऽप्यसत्त्वसिद्धेः । सत्तान्तराद्युपगमेऽनवस्थापाताच्च । न तृतीयः । मरुमरीचिकादेरपि तोयाद्यात्मना सत्त्वापातात् । नच मरुमरीचिकादीनां तोयाद्यात्मना असत्त्वेऽपि स्वरूपेण सत्त्वात् प्रकाशमानत्वं नानुपपन्नमिति वाच्यं तथापि सत्त्वस्य प्रकाशमानत्वातिरिक्तधर्मान्तरत्वेन प्रकाशमानत्वस्य तत्त्वाभावात् । अथ भावधर्म एव सत्त्वम् । अभावोऽपि भाव एव 'भावान्तरमभावोऽन्यो न कश्चिदनिरूपणात्'इति भावस्यैव भावान्तरात्मनाऽभावरूपत्वादिति विभाव्यते । तदापि स भावधर्मः को वा । व्यवहारयोग्यत्वमिति चेत् । को नाम तत्र व्यवहारः । अभिलाप इति चेत् । तद्योग्यत्वस्य खपुष्पेऽपि तुल्यत्वात् । अतोऽभावस्य खपुष्पतुल्यत्वेनातीतानागतस्थलेऽर्थवियुक्तैव संवित् । एवमर्थसहभावानियमे सिद्धे यत्र सहभावाभिमानस्तत्राप्यर्थसत्ताया निर्वक्तुमशक्यत्वादर्थस्यानिर्वाच्यत्वमेव । तथैवात्मनो व्यापकत्वेनाहंप्रत्यये प्रादेशिकत्वस्थूलत्वकृशत्वादिना भासमानस्य चन्द्रसद्भावे चन्द्रान्तरवद् भानात् तस्याप्यनिर्वाच्यत्वम् । तच्च सतो बाधाभावादसतश्चाभानात् सत्त्वासत्त्वयोरेकत्र विरोधेन सदसद्रूपताया अशक्यवचनत्वात् सदसद्विलक्षणत्वमेव । तथाच सति विषयत्वेन भासमानानां मरुमरीचितोयतुल्यत्वात् संविदेव केवला सती सिद्ध्यतीति सैवात्मा । तस्या अविषयत्वेऽपि तत्रैव कर्तृत्वभोक्तृत्वादयोऽध्यस्यन्ते, अप्रत्यक्ष आकाशे मालिन्यवदिति ।

रश्मिः ।

त्वमाविधकत्वेन खपुष्पादिवदनिर्वाच्यत्वं तस्मात् । एवं संविदोऽर्थसहभावं दृष्टं अङ्गीकृत्य तस्याध्यस्तत्वमन्तरेण स्वयंप्रकाशतासंभवात् स्वयमर्थो मिथ्येत्युक्तम् । इदानीमर्थाभावेपि संवित्प्रकाश इति मन्यते **वस्तुतस्त्विति** । **न च तत्रेति** । घटो भविष्यति, घटो ध्वस्त इत्यादिप्रत्यये इत्यर्थः । अभावोऽस्तीति प्रतीत्याशङ्क्य पराकरोति **न च सोपीति** । **सत्तायामिति** । अनङ्गीकारादसंभवाच्च । तत्र तयोरभावेन तयोः सत्ताख्यसामान्यसमवायार्थक्रियाकारित्वयोरसत्त्वेन तद्योगिनोऽभावस्याप्यसत्त्वसिद्धिरित्यर्थः । तयोः सत्ता स्वीक्रियत इत्यत आह **सत्तान्तरेति** । **भावान्तरमिति** । अभावो भावान्तरम्, नान्यः कश्चित्, अनिरूपणादित्यर्थः । **तच्चेति** अनिर्वाच्यमित्यर्थः । **सैवात्मेति** । श्रुत्युदासीनात्मत्वेन वेदार्थभूतात्मत्वस्वरूपेणात्मेत्यर्थः । **अध्यस्यन्त इति** । परत्र परावभासोऽध्यासः । आरोप्यात्यन्ताभाववत्त्वं परत्वमधिकरणत्वं त्वलोऽर्थः । अवभास्यते इत्यवभासो रजतादिः । एवं चैकावच्छेदेन स्वसंसृज्यमाने स्वात्यन्ताभाववति अवभास्यत्वमिति बुद्धिनिष्कर्षः । कपिसंयोगीत्यत्र संयोगेऽतिव्याप्तिवारणायैकावच्छेदेन इति । तस्य स्वसंसृज्यमाने स्वात्यन्ताभाववति इतरावभास्यत्वेपि स्वस्याभावयोर्मूलाग्रावच्छेदकभेदेनैकावच्छेदकत्वाभावात् । पूर्वं स्वाभाववति भूतले पश्चादानीतो घटश्चकास्तीति घटेऽतिव्याप्तिवारणाय स्वसंसृज्यमान इति अभावकाले प्रतियोगिसंसर्गस्य वर्तमानत्वं तदर्थः । भूत्वावच्छेदेनावभास्ये गन्धेऽ-

भाष्यप्रकाशः ।

तदसंगतम् । विषयत्वेन जडत्वेन व्याप्तेः प्रत्यक्षबाधितत्वात् । आत्मनश्चेतनत्वस्योभय-संमतत्वात्, तस्य च प्रत्यग्वित्तिवेद्यत्वात्, प्रत्यग्वित्तिगोचरत्वेन विषयत्वस्य व्यापकतया जड-त्वेन विषयत्वेन व्याप्तेरेव प्रत्यक्षसिद्धत्वाच्च । नच प्रत्यग्वित्तेश्चिदेकरसात्मग्राहकतया तदवि-षयत्वमेवेति वाच्यम् । तेन रूपेणाविषयत्वेऽपि प्रत्यक्त्वादिना रूपान्तरेण विषयत्वात् । अन्यथा विषयाभावेन तद्वित्तिलोपप्रसङ्गात् । 'सन्मात्रो नित्यः शुद्धो बुद्धः सत्यो मुक्तो निरञ्जनो विभु-रद्वय आनन्दः परः प्रत्यग्रसः प्रमाणैरेतैरवगतः' इति तापनीये प्रत्यक्त्वस्यापि तत्प्रमाणत्वेनैव श्रावणाच्च । नच तत्राहंकारस्यैव विषयत्वं, नात्मन इति वाच्यम् । न्यायादिमते आत्मन एव तथा भानात् । सांख्यादिमते च तस्य जडत्वेन तस्यां प्रतीतावहंत्वचैतन्ययोः सामानाधिक-रण्याभानप्रसङ्गात् । भासमाने च सामानाधिकरण्ये तस्यामहंकारविषयताया निवृत्तत्वात् प्रत्य-

रश्मिः ।

तिव्याप्तिनिरासाय स्वात्यन्ताभाववतीति । शुक्ताविदंत्वावच्छेदेन रजतसंसर्गकालेऽत्यन्ताभावोऽस्तीति नाव्याप्तिरिति व्याख्यानम् । नच बन्धस्य ज्ञाननिवृत्तयेऽध्यासवर्णना व्यर्थैव नित्यस्यापि नाशसंभ-वादिति वाच्यम् । पापादेः श्रद्धानियमादिसंपृक्तज्ञानानामनाश्यत्वेन ज्ञानमात्रनाश्यबन्धेऽत्र मूल-स्यैवामूलत्वादिति । तदेतन्निरस्यति वेदार्थभूतात्मत्वेनात्मनो विचारकः तदसङ्गतमिति । प्रत्यग्वित्तीति । तथा च यदि विषयत्वं जडत्वं निवृत्तसामानाधिकरणं स्यात् प्रत्यग्वित्तौ विषये जीवे जडत्वं भायात्, यतो न भाति ततो हि प्रत्यक्षबाधिता सेत्यर्थः । विषयत्वमपि साधारणो हेतु-रित्याहुः प्रत्यग्वित्तिगोचरत्वे चेति । आत्मन इत्यर्थः । एवेति 'व्याप्यस्य वचनं पूर्वं व्याप-कस्य ततः परम्' इति ह्यभिलापात् । व्याप्तेरिति सा च नियतधर्मसाहित्ये उभयोरेकतरस्य वा व्याप्ति-रिति सांख्यप्रवचनसूत्राद्धेतोर्नियतसामानाधिकरण्यरूपा तदेव व्यापकसामानाधिकरण्यमिति व्याप्तेः स्वरूपं मुक्तावल्यामित्यलमतिप्रसङ्गेन । विशेषस्तु प्रस्थानरत्नाकरे उपपादितः । हेतोः साधारणतां वारयन् शङ्कते न चेति । विषयत्वरूपहेतावपि विषयत्वमेवेति साध्यवदन्यवृत्तित्वाभावान्न सा-धारणत्वं विषयत्वरूपहेताविति भावः । अविषयत्वमेवेति साध्यवदन्यवृत्तित्वाभावात् न साधा-रणता इति भावः । तत्प्रमाणत्वेनेति प्रमापयति विषयत्वेन प्रमां जनयतीति प्रमाणं प्रत्य-क्षादि । नन्वादित्वाहुः । आत्मविशेष्यकप्रमाप्रकारत्वेनेत्यर्थः । प्रमीयतेऽनेन प्रत्यक्त्वेनेति करणत्वो-पचारो वा । यद्वा, तस्याः प्रत्यग्वित्तेः प्रमाणत्वेन प्रत्यक्त्वस्य शब्दस्य श्रावणादित्यर्थः । प्रत्यग्वि-त्तिलोपशङ्कां पराकरोति न च तत्राहमिति । अध्यासस्योक्तत्वात्तस्य

'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहंकारविमूढात्मा कर्ताहमिति मन्यते' ॥

इतिवाक्योक्तत्वान्निम्बार्काचार्यसंमतत्वादेवकारः । न्यायादिमत इति । अध्यक्षो विशेष-गुणयोगत इति न्यायमतम् । आदिपदेन शांकरमते माध्वमते च । तथा च निम्बार्कमतं न्यायादितर्कहतं मध्वाचार्यानभिमतं चेति निम्बार्कमतं सांप्रतं निर्बलमिति नेति भावः । तस्येति अहंकारस्येत्यर्थः । सामानाधिकरण्येत्यादि । ननु चैतन्यसामानाधिकरण्ये किं मानमिति चेन्न

भाष्यप्रकाशः ।

कृत्वेनेतराविषयतया पारिशेष्यादात्मविषयत्वस्यैव सिद्धेः । नचैवं सति तत्स्वरूपयाथात्म्यभानप्रसङ्गः । साधनान्तरवैकल्येन तथाऽऽपादयितुमशक्यत्वात् । लोकेऽपि मणिपरीक्षादौ तथा निर्णयात् । अन्यथा सांख्यादिशास्त्रतो नित्याऽनित्यवस्तुविवेकस्याप्यसंभवे त्वदभिमतविचाराधिकारस्याप्यसंभवापत्तेः । अतोऽनिच्छतापि प्रत्यग्वित्तिवेद्यत्वमात्मनोऽङ्गीकार्यम् । नचैवं परतःप्रकाशत्वेन जडत्वापत्तिः । इदानीं तथात्वेऽपि, अत्रात्मा स्वयंज्योतिर्भवतीति श्रुतेः स्वप्न एव तस्य स्वतःप्रकाशत्वेन जाग्रति तदभावेऽपि भस्मच्छन्नाग्निवददोषात् । जाग्रति तथाऽभ्युपगमस्योक्तश्रुतिविरुद्धत्वाच्छ्रौते मते चित्स्वरूपत्वे सति स्वयंप्रकाशसंविदाश्रयत्वस्यैव चेतनत्वात्, तेनै-

रश्मिः ।

अहमित्यस्याभिमाने योगाद् ब्रह्मणि रूढिरिति माध्वोक्तेः । वस्तुतस्तु असन्निवृत्तिकृतः पुरुषविधस्याहमिति सत्तारूपधर्मेणाविर्भावः । अस्तेभुवोर्थेकस्य शतरि कृते रूपमिदमिति । तर्हि अहमिति सत्ताकृत् स्वरूपं सत्तानित्यत्वे तत्कारणेच्छायां व्यापारः । व्यापारः कर्म स्वयमेवेति ब्रह्मणि योगः इति वेदान्तत्वादुपपन्नतरः । मीमांसाकारिकासु वेदान्ते योगमात्रादरात् । अहंकारेत्यादि अहंकारो विषयो यस्याः सा अहंकारविषया तस्याः भावो अहंकारविषयता तस्या इत्यर्थः । प्रत्यक्त्वेन रूपेण ज्ञानता कर्तृत्वादयो ये इतरे ते विषया यस्याः सेति पूर्ववत् । एवं सतीति आत्मविषयिण्या अभ्रमत्वे सतीत्यर्थः । साधनान्तरेति । मनः करणं 'एषो अणुरात्मा चेतसा वेदितव्यः' इति श्रुतेः, योगेन साधितमेव पश्यति, 'अन्तरेव च पश्यति' इति श्रुत्यन्तरात् 'अयं हि परमो धर्मो यद्योगेनात्मदर्शनम्' इति स्मृतेश्च योगादिसाधनान्तरवैकल्येनेत्यर्थः । तथेति माने प्रकारस्य याथात्म्यस्येत्यर्थः । नासौ न भ्रमः । अग्रे बाधादिति । तथा निर्णयादिति । वज्रयोगानन्यमनस्त्वादीनि साधनान्तराण्यत्र । अन्यथेति प्रत्यग्वित्त्यविषयत्वे प्रकारे । नित्यानित्येति नित्यानित्यवस्तुविवेकः शमदमादि वैराग्यं मुमुक्षुत्वं चेति साधनचतुष्टयवानधिकारी तत्र प्रकारो नित्यानित्येति, अविकारिशरीरे विशेषणत्वेन निविष्टस्येत्यर्थः । सिद्धमाह अत इति । एतावता व्याप्तेर्वैपरीत्यमङ्गीकारितमधुना दूषयितुमुपक्रमः । उक्तज्ञानान्तरविषयत्वे जडत्वापत्तिरित्यनुवदति न चेति । भस्मच्छन्नेति । भस्मस्थानीयं अविद्यादेहादि । उक्तश्रुतीति । अत्र आत्मा स्वयंज्योतिरिरिति श्रुतिविरुद्धत्वात् । एवं आत्मसंविदोः स्वयंप्रकाशत्वेन प्राप्तं तौल्यं निषिद्धम् । 'सत्यं ज्ञानम्' 'यः सर्वज्ञः' इति श्रुतिद्वयसिद्धं लक्षणमाह श्रौते मते इति । जीवजडयोरतिव्याप्तिवारणाय दलद्वयम् । स्वयंप्रकाशश्चासौ संविदाश्रयश्चेति कर्मधारयः ततः षष्ठीतत्पुरुषः । तेनैवेति संविदि विशेष्यशून्यत्वेन संविदात्मनोरर्थयोस्तौल्यस्य परिहारादित्यर्थः । यत्तु प्राभाकरमतमाक्षिप्तं तत्तु इष्टमेव । एकसत्त्वे द्वयं नास्तीति प्रतीत्याध्यापनविधिप्रयुक्ताध्ययनस्य सिद्धान्ते सत्त्वादिति । अर्थज्ञानस्य अध्ययनविधिप्रयुक्तत्वाभावात् स्वाध्यायादिविधिप्रयुक्तत्वस्यार्थज्ञाने सत्त्वात् । प्राभाकरमते ज्ञानविषययोरर्थः कश्चिद्भवतु । किंच ज्ञातता भट्टमते प्रत्यक्षेण, मुरारिमिश्रमते तु व्यवसायज्ञानेन ज्ञातता भवति तत्रानुव्यवसायानुक्तिः । किंच नात्मनश्चाक्षुषाध्यक्षविषयता आकाशे चाक्षुषग्रहवारणायोद्भूतरूपस्य कारणत्वात् । तस्य चात्मन्यभावात् । अपि च ज्ञानेन ज्ञानप्रामाण्यगृहीतिरपि न सांप्रतम् । तथा सति दूराहितज्ञाने प्रामाण्यसंशयानुदयप्रसङ्गात् । ज्ञानस्य ज्ञातत्वेन तन्निष्ठप्रामाण्यस्यापि ग्रहादिति । ज्ञातत्वाभावे च धर्म्यज्ञानात् संशयानुदय इति । अतो

भाष्यप्रकाशः।

वार्थतौल्यस्य परिहारात्, कर्मकर्तृविरोधस्यानुभवबलेनैव परिहृतत्वाच्च। एवमाश्रयाश्रयिभावेन सिद्धे आत्मसंविदोर्भेदे विषयत्वेनार्थोऽपि भिन्न एव। नच सत्त्वस्यानिर्वाच्यत्वात् तद्योगिनोस्तयोरनिर्वाच्यत्वं शङ्क्यं, सत्त्वनिर्वचनस्य तवाप्यावश्यकत्वात्। अन्यथा संविदोऽप्यसत्त्वापातात्। प्रकाशस्वरूपत्वमेव सत्त्वमितिचेत् सिद्धमेव तर्हि तद्योगित्वादात्मनः सत्त्वं, असत आश्रयत्वायोगात्। नच तत्प्रकाशस्वरूप एवात्मा, न तु तद्योगीति वक्तुं युक्तम्। प्रत्यक्त्वस्य तत्राभानात्। अहं जानामीति, ज्ञानवानहमित्येवमात्मधर्मत्वेनैव तस्य भानाच्च। एवं सिद्धं प्रकाशभिन्नस्यात्मनः सत्त्वम्, सिद्धं चानारोपितरूपेण विषयत्वादर्थस्यापि सत्त्वम्। असतोऽविषयत्वात्।

रश्मिः।

गुरुमतं पर्यवसितं ग्राह्यम्। स्वतो ज्ञानग्राहकसामग्रीग्राह्यं स्वतोग्राह्यमिति। सिद्धान्ते तु 'स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम' इति वाक्यमपि। नैयायिकमताक्षेपं वारयन्ति कर्मकर्त्रिति। तथाचानुभवबलेनैवात्मानमहं जानामीत्यत्र कर्मलक्षणसंगतिरिति भावः। पुनर्जडत्वापत्तिस्तु दत्तोत्तरा। यस्मिन्नर्थात्मानाविति ग्रन्थमाक्षिपन्नाह एवमिति। भेदे इति। नैयायिकास्तु संविदो निर्विषयत्वे ज्ञानत्वाभावः, सविषयत्वेपि जगतो विषयतोत[1] यस्यकस्यचित्। आद्ये सर्वज्ञतापत्तिः। द्वितीये विनिगमकाभावः, सुषुप्तिरपि निर्विषया न स्यात्। तदानीं निराकारचित्संततिस्वीकारस्तु तस्याः स्वयंप्रकाशत्वे प्रमाणाभावं द्रढयति। निर्विषयिण्या ज्ञानत्वे घटादीनामपि ज्ञानत्वापत्तिरत आत्मा ज्ञानभिन्न इत्याहुः। आत्मद्रव्यज्ञानं बुद्धिर्गुणः। ननु प्रकृतेपि परिहरणीयमेतन्न इत्याह विषयत्वेनेत्यादि। ब्रह्मत्वेनाभेदादवच्छेदकोक्तिः। सर्वभवनसमर्थत्वादचिन्त्यशक्तेश्च जातोर्थो भिन्न एवेत्यर्थः। तथा च नित्यज्ञानस्य प्रपञ्चविषयत्वे न सार्वज्ञ्यम्। अनित्यस्य यो विषयस्तद्विषयकत्वम्। सुषुप्तौ सामग्रीविरहाददोष इति न पूर्वोक्तं किंचिदिति भावः। अथवा। ननूक्तं विषयादिजन्यत्वे संविदो अहं जीव इत्याद्याकारिकाया जडत्वापत्तिरिति, तत्राह विषयत्वेनेति। तथा च चिदचिद्ग्रन्थिरूपाहंकारवैशिष्ट्येपि पुरुषविधब्राह्मणोक्तात्मरूपब्रह्मत्वेनाभेदात्तज्जन्यत्वेप्यक्षतेरिति हृदयम्। वस्तुतस्तु आविर्भावः विपरीतव्यासेन। एतेन पूर्वज्ञानफलस्येत्यादिनोक्ता जडत्वापत्तिर्जगदान्ध्यापत्तिश्च निरस्ता। संविदोपि कैवल्यं नास्त्येवेति विषयाविनाभावं नन्दयति। तेन वस्तुतस्त्वित्यादिनोक्तमर्थवियुक्तैव संविदिति तदप्युक्तप्रायम्। अहंवित्तौ सत्ताया इवान्यत्र दृश्यमानघटादीनामपलपितुमशक्यत्वादिति। ब्रह्मैव तदाकारतया चकास्तीति चेन्न अपसिद्धान्तापत्तेः। अत्रानिर्वचनीयां ख्यातिमाशङ्क्य निषेधति न च सत्त्वस्येति। तयोरिति आत्मार्थयोरित्यर्थः। सत्त्वस्वरूपमाह प्रकाशेति। उँ इत्याह सिद्धमेवेति। असत इति अनिर्वाच्यस्येत्यर्थः। तत्रेति ज्ञाने इत्यर्थः। आत्मनि सत्त्वस्याप्यभातत्वमाशङ्क्याह अहं जानामीति। ज्ञानानुकूलव्यापारवानहमित्यत्रास्मत्प्रत्ययगोचरस्यात्मनो धर्मः सत्तास्मच्छब्दे रूढेः। तत्कर्तृसमभिव्याहारे अहंकारो योगाभावान्नाहंकार इति तस्य सत्त्वस्य भानात्। अहंकारस्य सत्तासमभिव्याहारताकथनस्य सत्त्वमस्त्येव न सर्वान्तरत्वरूपप्रतीतित्वरूपप्रत्यक्त्वभानात् विशेष इति भावः। सिद्धमाह एवं सिद्धमिति। तदर्थस्यापीति। ब्रह्मकार्यत्वादिति भावः। युक्तिमाह असत इति। संहितायामित्यधिकारात्तस्याश्चात्राविवक्षितत्वादसंधिः। तदुक्तम्—

[1] तद्यथैति रश्मौ।

भाष्यप्रकाशः ।

खपुष्पं पश्याम्यनुभवामि प्रत्येमीत्याद्यप्रत्ययात् मरीचितोयादीनां चारोपितरूपेण विषयत्वात् ।

रश्मिः ।

'संहितैकपदे नित्या नित्या धातूपसर्गयोः ।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते' इति ।

असतोपि तोयादेर्विषयत्वं दृश्यते इति चेत्तत्राह **मरीचीति । आरोपितरूपेणेति ।** अयं भावः । भाट्टास्तावद्भ्रमः स्मृतेर्नातिरिच्यत इत्यख्यातिं वदन्ति, संस्कारजन्यत्वाविशेषात् । न च तत्तास्फुरणापत्तिरिति शङ्क्यम् । कर्तृदोषेण तत्प्रमोषात् । दोषाभावे तु रजतस्फूर्तिरधिष्ठानस्फूर्तिर्वा भवेत् । दोषाश्च रागादयः क्वचित्प्रबलालोकादिना विवेकासामर्थ्यं क्वचिदन्यचित्ततेत्येवमादयो अननुगतास्तथातथादर्शनादुन्नेयाः । अतः प्रमुष्टतत्ताका स्मृतिरेव भ्रमस्थले ज्ञेया । प्राभाकरास्तु रजतमनुभवामीत्यनुव्यवसायबाधं स्मरामीत्यनुव्यवसायापत्तिं च पश्यन्तो ग्रहणस्मरणात्मकं ज्ञानद्वयमगृहीतासंसर्गकमत्र ख्यातिरूपमिति वदन्ति । स्मृतिप्रमाणभेदेन ज्ञानस्य द्वैराश्यात् । न चानुव्यवसायद्वयापत्तिरिति वाच्यम्, स्मरणाभिमानस्य दोषेण प्रमोषात् । तस्माद्विविक्तज्ञानद्वयाङ्गीकारे न कोपि दोष इति । अत्राप्येकज्ञानतौल्येन ज्ञानद्वयस्याशक्यवचनत्वात् । न च तौल्यं नास्तीति वाच्यम् । यद्यगृहीतासंसर्गकं ज्ञानद्वयं स्यात्, एकज्ञानतुल्यता न स्यात्, यदि न स्यात् सा व्यवसायानुव्यवसाययोर्नोपलभ्येतेति तर्केण तन्मूलभूतव्यवसायानुव्यवसायाभ्यां चैकज्ञानतुल्यत्वनिश्चयात् । अपि च, ज्ञानद्वैराश्याग्रहेणात्र ज्ञानद्वयाङ्गीकारे सर्वत्र विशिष्टज्ञानोच्छेदः । घटोयमिति प्रमायामप्यगृहीतासंसर्गकवद्गृहीतज्ञानद्वयस्य शक्यवचनत्वात् । द्वैराश्ये मूलस्य चिन्त्यत्वाच्चेति मतद्वयेपि दोषान् पश्यता भवतानिर्वचनीया ख्यातिरादृता । इत्थं हि त्वदीयं व्युत्पादनम् । प्रमा द्वेधा । तत्र तत्त्वमस्यादिवाक्योत्था पारमार्थिकी, संसारप्रमा व्यावहारिकी । साचेत्थं एकैव संविच्चातुर्विध्यं धत्ते । तत्रान्तःकरणवैशिष्ट्येन प्रमातृताम्, अन्तःकरणवृत्तिवैशिष्ट्येन प्रमाणताम्, घटादिवैशिष्ट्येन विषयताम्, अन्तःकरणवृत्त्यभिव्यक्तत्वेन फलतामिति । पूर्वमिन्द्रियार्थसन्निकर्षः, ततश्चान्तःकरणस्य चक्षुरादिद्वारा विषयदेशगमनम्, तेन संयोगस्तदाकारेण परिणामो वृत्त्यात्मकः । यथा तडागोदकं छिद्रान्निर्गत्य कुल्याद्वारा केदारं प्रविश्य चतुःकोणाद्याकारेण परिणमते । तत्र परिणामे विषयसंवित्प्रतिफलनं भवति । तदैकदा वृत्तिविषययोरवस्थितिरेकदेश इति तत्प्रयुक्तभेदस्याकिंचित्करत्वात् तत्संविदोरैक्यम् । तदिदं प्रत्यक्षप्रमा तया च वृत्त्यावरणसहिताज्ञाननिवृत्तिः । ततोऽन्तःकरणविशिष्टसंविदा विषयस्फुरणमिति । यदा तु इन्द्रियविषययोर्दोषः, तदा भ्रमः । स च सदसद्विलक्षणत्वादनिर्वचनीय इति ।

तदिदं खलुल्लासमात्रम् । आरोपितरूपेण बुद्धिरूपेण विषयत्वात् । तथा हि । अहंकारभेदरूपा बुद्धिः स्थिरा मूर्ता सच्चिदानन्दब्रह्मभिन्ना ख्यायत इति अन्यख्यातिरेवोचितेति । एतद्वैशिष्ट्यज्ञानप्रनाडीनां द्वितीयाध्यायोपान्ते 'प्राणवता शब्दात्' इत्यधिकरणे विस्तृतिनिरस्ती वक्तव्ये इति ते अत्र नोच्येते । नन्वभावे सत्त्वस्य वक्तुमशक्यत्वादतीतानागतस्थलेऽर्थवियुक्तैव संवित्तद्वद्वर्तमानकालेप्यर्थो मिथ्या दृश्यत्वाच्छुक्तिरजतवदिति अनुमानेनार्थोऽनिर्वचनीय इति नार्थे नियामकतेति शङ्क्यते न चेति । ननु चाभावत्वेन प्रत्ययात्सोतिरिच्यत इति चेत्, न । घटे ध्वस्ते तत्प्रध्वं

भाष्यप्रकाशः ।

न चाभावे सत्ताव्यभिचारः । तस्यापि भावत्वात् । भावान्तरात्मना अननुभूयमानप्रतियोगिरूपेणैव तत्राभावव्यवहारात् । अन्यथा निष्प्रतियोगिकत्वेनापि तस्य प्रत्ययापत्तेः । नचैवं संविदोऽर्थाविनाभावेऽर्थं विना संविदप्रकाशात् स्वतःप्रकाशत्वहानिः । दीपादेस्तेजोरूपत्वस्येव संविदः प्रकाशस्वरूपत्वस्यैव स्वतःप्रकाशपदार्थत्वात् । अत एवात्मनोऽपि तथात्वात् । नचात्मनो व्यापकत्वेन सर्वत्र सत्त्वात् तत्रारोप्यमाणस्य शरीरादेर्मरीचिकादावारोप्यमाणतोयादेरिव सत्त्वदेशस्याशक्यवचनत्वादसत्त्वमास्थाय प्रतीयमानत्वमात्रेण सदसद्विलक्षणत्वमनिर्वाच्यत्वं चास्थीयत इत्यपि सांप्रतम् । वस्तुपरिच्छेदास्यातुर्मते तत्समवाय्यादीनां सत्त्वेन तेषामेव देशत्वसिद्धेः । तदनाख्यातुर्मते च ब्रह्मकार्यत्वाद् ब्रह्मण एव तथात्वसिद्धेः । एवं सिद्धे देशे शरीरादीनां च सिद्धत्वे तेषामात्मन्यारोपोऽपि सुकरः । अन्यथा खपुष्पादेरिव दुष्करः स्यात् । अप्रत्यक्ष आकाशे मालिन्याध्यासवदप्रत्यक्ष आत्मनि शरीराद्यध्यासोपपादनमप्यसंगतम् । बालानामवकाशरूपेण बुद्धानां वस्तुस्वभावेनैव चाकाशस्यापि प्रत्यक्षत्वात् । अतः कल्पनाया असंगतत्वात् 'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय' इति, 'भोक्ता भोग्यं प्रेरितारं च मत्वा' इत्यादिश्रुतिविरोधाच, न कर्तृत्वभोक्तृत्वादिरहित आत्मा । नच स वेदार्थः । ब्रह्मणो वेदार्थत्वात् । किंतु स्वबुद्ध्या तथा कल्पित इति, न तदर्थं विचारः शक्यवचनः । तदिदमुक्तं न हीत्यादि ।

रश्मिः ।

कपालत्वेनावतिष्ठते संज्ञानिवृत्तिमात्रं परम्, एवं कपाले ध्वस्ते तच्छकलात्मता ततोपि चूर्णीभावः ततश्च बहिःप्रक्षेपे पृथिव्यामेकीभावः, पुनः कपालं घटश्चेत्येवं भ्रमणेनानुभूयमानप्रतियोगिरूपेण कपालादिनाप्यभावप्रत्ययनिर्वाह इति । प्रत्यक्षविरोधस्य सहने फलाभावादिति । न चेह घटो ध्वस्त इत्याधाराधेयभावव्याघातः । घटाभावे घटाभाव इतिवदुपपत्तेः । तदाह भावान्तरात्मनेति । 'यदस्ति यन्नास्ति तदेव विष्णुः' इति विष्णुरूपभावान्तरात्मत्वमभावस्य, न अनुभूयमानोऽननुभूयमानस्ताद्दृशः प्रतियोगी संबन्धनिरूपको यस्येति । मुख्यधर्मेणैव व्यवहार इत्यत्र युक्तिमाह अन्यथेति । निर्गतः प्रतियोगी यस्मात् तत्त्वं भावान्तरधर्मस्तेन रूपेणेत्यर्थः । 'बुद्बुदपदस्य चाप्रत्ययस्य' इति पत्त्रम् । तद्रहितपाठस्तु प्रामादिकः । तेन खपुष्पेऽभिलापयोग्यत्वेपि अस्त्यादिक्रियान्वितत्वरूपसत्त्वाभावेन तद्तौल्यमपि सूचितम् । तथैवात्मनेत्यादिनिरुक्तमनुवदन्तीं शङ्कामपाकुरुते न चात्मन इति । सदसद्विलक्षणत्वमिति । अनिर्वचनीयत्वमेव सदसद्विलक्षणत्वमास्थीयत इति योजना । दूषयति वस्त्विति । वस्तुतो ब्रह्मणो वैश्वानराधिकरणे प्रादेशत्वाभिमानत्वरूपाङ्गीकारेणैव परिच्छेदास्यातुर्भगवतो व्यासस्य मते शरीरादिसमवाय्यादीनामित्यर्थः । तदनाख्यातुरिति प्रस्तुत एकदेशिनो मते इत्यर्थः । ब्रह्मण इति सर्वशक्तिमतो ब्रह्मण एकदेशत्वसिद्धेरित्यर्थः । तथाप्येवमावश्यकमित्याह एवं सिद्ध इति । तथा चानिर्वाच्यत्वनिरुक्तिर्निष्प्रयोजनेति भावः । दृष्टान्ताप्रसिद्धिमाह चाकाशमिति । आकाशस्यापीत्यादि । इदं चाग्रे व्युत्पाद्यम् । तदेषामिति श्रुत्यर्थस्तु, विज्ञानमयस्य सुप्तस्य विज्ञानराहित्ये अजातशत्रुणा हेतुरुच्यते तदेषामिति । एषामात्मप्राणादीनां विज्ञानं स्वविषयप्रकाशनसामर्थ्यं विज्ञानेन स्वचैतन्येन जीव आदायोपादाय हृदयाकाशे शेत इति । न च स वेदार्थ इति स्वात्मा न वेदार्थ इत्यर्थः । यदप्यध्यासलक्षणं तदप्यध्यासम् । न चेदंत्वावच्छेदेन तदत्यन्ताभावोऽस्तीति स्वतत्त्वाभावकति स्वातत्त्वप्रकारकं

अत्र पुनर्यादृशं वेदान्तेष्ववगतं तादृशमेव मन्तव्यम् । अणुमात्रमन्यथा-कल्पनेऽपि दोषः स्यात् ।

'योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चौरेणात्मापहारिणा' ॥

'नैषा तर्केण मतिरापनेया' इति श्रुतेश्च ।

---

भाष्यप्रकाशः ।

अथ 'सत्यं ज्ञानमनन्तं ब्रह्म,' 'अस्थूलमनणु'इत्यादिश्रुतिभ्योऽधिगत इति वदति तत्राह ब्रह्मेत्यादि । यथा हीदमस्थूलत्वादिकं वेदान्तेषूच्यते, तथा 'सर्वकामः सर्वगन्धः सर्वरसः, विश्वतश्चक्षुरुत विश्वतोमुखः' इत्यादिकमप्युच्यत इति तादृशमपि मन्तव्यं न तु निर्विशेषमात्रम् । न च तत्र स्वस्यान्यथाकल्पनं युज्यते, प्रतिज्ञाहानिदोषात् प्रतारकत्वापत्तेश्च । नच श्रोतुर्मन्दत्वे कश्चिदुपायो विधेय इति तदर्थं किंचित्कल्पनेऽप्यदोष इति वाच्यम् । तथा सति श्रुत्यभिप्रेतात्मस्वरूपाज्ञानेन श्रोतुः 'योऽन्यथा सन्तम्' इतिश्रुत्युक्तदोषापत्तेः । तथा वक्तुरपि, नैषा तर्केणेति श्रौतनिषेधातिक्रमदोषापत्तेः । श्रुतिविरोधदोषापत्तेश्च । तदिदमुक्तम् अणुमात्रमन्यथेत्यादि । नतु

रश्मिः ।

ज्ञानं तत्रात्यन्ताभावो निविष्टः, भावोऽस्तीति नाव्याप्तिरिति वाच्यम् । इदंत्वस्य पुरोवर्तित्वरूपस्य शुक्तिनिष्ठत्वे सदसत्ख्यात्यापत्तिः, अनुभवविरोधश्च । विशेषणानुभवो रजत इति । रजतनिष्ठत्वे तु प्रतिबन्धकोऽत्यन्ताभावं विघटयिष्यतीति । बन्धस्य नित्यता तु 'बन्धोस्याविद्यया-नादिः' इति वाक्यादविद्याकार्यत्वेन मिथ्यात्वात् । व्यावहारिकी माध्वैर्बन्धमिथ्यात्वखण्डने खण्डितेति । ननु कारणान्तरसमवधानान्न बन्धस्य विद्यामात्रनिवर्त्यत्वमिति चेन्न, एकेनैव दण्डादिना घटनाशदर्शनेन दृष्टान्तसंभवाच्च । 'असंदिग्धोपि वेदार्थः' इत्यत्र अस्य पक्षस्य संग्रहात् । सिद्धान्तपक्षमाहुः तादृशमपीति । निर्गुणमेव पश्चादनारोपितगुणसंपृक्तमित्यर्थः । इदमुभयव्यपदेशाधिकरणे तृतीयाध्याये स्पष्टीभविष्यति । अणुमात्रेत्यादि भाष्यं विवृण्वन्ति स्म न च तत्रेत्यादि । ब्रह्मणि धर्माणामध्यस्तत्वकल्पनमित्यर्थः । कुतः, अणुमात्रमन्यथाकल्पनमपि नेष्यत इत्यर्थः । प्रतिज्ञेति 'अथातो ब्रह्मजिज्ञासा' इति निर्गुणब्रह्मजिज्ञासां प्रतिज्ञाय 'जन्माद्यस्य यतः' इति वदतो व्यासस्य प्रतिज्ञाहानिदोषादित्यर्थः । अध्यस्तत्वेपि लक्षणतोपपत्तेराह प्रतारकत्वेति । केवला संवित्तदित्यसूत्रयतो भगवतो व्यासस्य तत्त्वापत्तेश्चेत्यर्थः । अत एव द्वितीयस्य नवमाध्याये इच्छानन्तरं सदानन्दस्य जगत्कर्त्री शक्तिः, चितस्तु व्यामोहिका शक्तिरिति विभाग उक्तः । अणुमात्रेत्यादि भाष्यमवतारयन्ति न च श्रोतुरिति । मन्दत्व इति तावदवधानशून्यत्व इत्यर्थः । योऽन्यथा सन्तमिति । अत्र प्रतिपद्यत इत्यस्य जानाति, प्रतिनिधिं पद्यते गच्छति प्रतिपत्तिं शरणागतिं कुरुते इति त्रयोऽर्थाः । प्रतिनिधिः कृष्णः प्रतिकृतिश्च । तदुक्तं सुबोधिन्यां 'नैभिन्त्यं वाचि पूर्ववत्' इति कृष्णविषये, प्रतिकृतिविषये तु 'हरिमूर्तिं प्रियां कृत्वा' इति । पुरुषोत्तमप्रतिष्ठायां गोस्वामि-

**नच विरुद्धवाक्यानां श्रवणात् तन्निर्धारार्थं विचारः । उभयोरपि प्रामाणिकत्वेनैकतरनिर्धारस्याशक्यत्वात् । अचिन्त्याऽनन्तशक्तिमति सर्वभवनसमर्थे ब्रह्मणि विरोधाभावाच ।**

**अत एवोपनिषत्सु तत्तदुपाख्याने बोधाभावे औपाधिकबोधे च तपस**

---

भाष्यप्रकाशः ।

विरुद्धवाक्यश्रवणे श्रोता संदेग्धि । संदेहे चावश्यमनिष्टम् । 'अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति' इति स्मरणात् । 'यस्य स्यादद्धा न विचिकित्सा'इति इति श्रुतेश्च । अतस्तन्निवारणायार्थं निर्धार आवश्यकः । स च विचाराधीन इति तदर्थं स कार्य एवेत्यत आह नचेत्यादि । विचारः कथं कार्यः किमेकतरबाधेन, किंवोभयसामञ्जस्येन । यद्याद्यः पक्षस्तदा तद्बाधनायाप्रामाणिकत्वं तस्य वक्तव्यम् । तथा सत्यन्यत्रापि तदापात इत्युपचारनिवृत्त्यर्थं यतमानस्याऽप्रामाणिकत्वापत्त्या वृश्चिकभिया पलायमानस्य विषमाशीविषमुखे निपातः । अथ द्वितीयस्तदा, 'परास्य शक्तिर्विविधैव श्रूयते,' 'स हैतावानास' इत्यादिश्रुतिभिर्ब्रह्मसामर्थ्येनैव विरोधस्य परिहारे विचारस्य वैफल्यमेवेति युक्त्या वेदार्थः सर्वथा न प्रतिपत्तुं शक्यः, इत्यतो वेदार्थज्ञानायोपायान्तरमेष्टव्यम् । तदपि श्रुत्यविरुद्धम् । तत्र प्रमाणमाह अत एवेत्यादि । तैत्तिरीये भृगोर्बोधाभावे वरुणेन 'तपसा ब्रह्म विजिज्ञासस्व' इति, छान्दोग्ये इन्द्रप्रजापतिसंवादे इन्द्रस्यौपाधिकबोधे प्रजापतिना, 'वस द्वात्रिंशतं वर्षाणि ब्रह्मचर्यम्'इति साधनान्तरस्य तपस एवोपदेशः

रश्मिः ।

नोपि 'ततः श्रीपुरुषोत्तमात्मकतायां जातायां स्वरूपे भगवान् श्रीगोकुलेशः श्रीकृष्णोयमिति बुद्धिः कर्तव्या, न स्वरूपादिबुद्धिः' इत्याहुः । नैषा तर्केणेति भाष्यं विवृण्वन्ति तथा वक्तुरिति । एषेति ब्रह्मविषयिणीत्यर्थः । अयमर्थः । द्वितीयाध्यायेऽणुकारणवादे वक्ष्यते । काठके इयं श्रुतिः । सा च 'अनन्यप्रोक्ते गतिरत्र नास्त्यणीयान् न ह्यतर्क्यमणुप्रमाणात्,' 'नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ' इत्यादिः । अनन्यः आचार्यः । 'अत एव चानन्याधिपतिः' इति सूत्रात् । अन्येन आगमाभिज्ञाचार्येण । 'नाहं किंचित्करोमि' इति वाक्यात् । न अन्यो भिन्नो विद्यते यस्येत्यागमाभिज्ञेन । तद्विदमिति । न च तत्रेत्यादिना विवृतमित्यर्थं इति । न च श्रोतुरित्यादिना विवृतमित्यर्थः । आरणे 'अन्धो मणिमविन्दत् तमनङ्गुलिरावयत् । अग्रीवः प्रत्यमुञ्चत् । तमजिह्व असश्चत्' । 'ऊर्ध्वमूलमवाक्छाखं वृक्षं यो वेद संप्रति । न स जातु जनः श्रद्दध्यात्' इति मृत्युर्मा मारयात्' इति । 'अणोरणीयान्महतो महीयान्' इति वेदान्ते । अविन्दत् ज्ञातवान् । परस्मैपदात्, लब्धवान्वा विरुद्धधर्माश्रय उक्तः । तमनङ्गुलिरिति 'अपाणिपादो जवनो ग्रहीता' इत्युक्तः । अग्रीव इति । सर्वतो हि शिरोमुखमित्युक्तः । तमजिह्व इति लिह आस्वादने आस्वादकतूरहितः । 'निर्गुणो गुणभोक्ता च' इति गीतोपबृंहिका । श्रुतिविरोधेति । यस्य स्यादद्धेति । यस्य विचिकित्सा संशयो नास्ति तस्याद्धा प्रत्यक्षं स्यादित्यर्थः । तस्येति उभयोरेकतरस्येत्यर्थः । विषमाशीविषमुख इति । विषमाशीविषः सर्पविशेषः । एतावता 'अलौकिको हि वेदार्थः' इत्यर्धकारिका व्याख्याता । उत्तरार्धं विवरीतुं संबन्धार्थमाह इत्यत इति । बोधाभाव इति । अन्नब्रह्मज्ञानानन्तरं 'तद्विज्ञाय पुनरेव च वरुणं पितरं उपससार अधीहि भगवो ब्रह्मेति, तꣳहोवाच तपसा ब्रह्मविजिज्ञासस्व' इति बोधाभाव इत्यर्थः । औपाधिकबोध इति । छान्दोग्ये च ब्रह्म-

एवोपदेशः। नच तपःशब्देन विचारः। तस्य पूर्वानाधिक्यात् तप एव। नचोपाख्यानानां मिथ्यात्वम्। तथा सति सर्वत्रैव मिथ्यात्वं भवेद् विशेषाभावात्।

भाष्यप्रकाशः।

कृत इत्यर्थः। ननु तप संताप इतिवत्, तप आलोचन इत्यपि धातुरिति तन्निष्पन्नोऽयं शब्दो विचारार्थक एव मन्तव्यः। तथा सति श्रुत्यैव विचारस्य प्राप्तिरित्यत आह नच तप इत्यादि। तप एवेति तप एव तपःशब्देनोच्यत इत्यर्थः। अयं भावः। विचारो ह्येकतरबाधेन वा, ब्रह्मणः सामर्थ्यादिप्रदर्शनेन वा साधनीयः। न तु श्रोतरि तेन कोऽपि विशेषः संपाद्यः। तथा सति पठितवेदस्य साधनान्तरश्रवणं विनाऽपि विचारे वेदार्थः स्फुरेदेवेति पूर्वानाधिक्यादुपसदनवैयर्थ्यापत्तिः। गुरुवाक्योत्तरं विचार इत्यङ्गीकारे गुरोः खलत्वापत्तिः। उपसदनोत्तरमपि तस्यैवायासोपदेशेन दयाराहित्यप्राकट्यात्। तपसोऽङ्गीकारे तु तेन शिष्ये विशेषाधानादधिकारसंपत्तौ साङ्गवेदवाक्येभ्य एव स्फूर्तिर्नच कोऽपि पूर्वोक्तदोष इति तपःशब्दो रूढ एवादरणीयः। तदेतदुक्तं, तप एवेति। अन्यथा छान्दोग्यविरोधस्यापरिहार इत्यपि बोधयितुं सावधारणमुक्तम्। ननु सत्यमुपनिषत्सु तप उपदिश्यते, तथाप्युपाख्यानेषु न तु ज्ञानसाधनत्वेन क्वापि पृथग् विधीयते। उपाख्यानानि तु विद्यास्तुत्यर्थमसदपि बोधयन्तीति, न तदनुरोधे निर्बन्धः कार्य इत्यत आह नचोपेत्यादि। तथाच श्वेतकेतूपाख्यानस्थयुक्तीनां त्रिवृत्करणादीनां

रश्मिः।

प्रपाठके ब्रह्मजिज्ञासुभ्यामिन्द्रविरोचनाभ्यां नोदितः प्रजापतिरुवाच 'साध्वलंकृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षेथाम्' इति। ततश्च तथा कृते 'एष आत्मेति होवाच ततस्तौ शान्तहृदयौ प्रवव्रजतुः'। तयोरिन्द्रस्तु शरीरालंकारनाशादिना तन्नाशाद्यनुसंधाय, 'नाहमत्र भोग्यं पश्यामि' इति पुनः प्रजापतिमुपजगामेत्यौपाधिकबोधे इत्यर्थः। तस्य विचारस्य श्रोतरि पूर्वापेक्षया विशेषरूपाधिक्यासंपादकत्वात् तपःशब्देनानशनादिरूपं विशेषाधायकं तप एवोच्यते इत्याशयमभिसंधाय विवृण्वन्ति अयं भाव इति। तेनेति विचारेणेत्यर्थः। ननु विचारेणाप्युत्तरोत्तरं प्रतिभारूपो विशेषः संपाद्य एवेति चेत्, तत्राहुः तथा सतीति। इति पूर्वानाधिक्यादिति इति हेतोः पूर्वोपसदनापेक्षया ब्रह्मोपसदनविषये विशेषरूपाधिक्यासंपादकत्वात्। विशेषश्चान्नादिब्रह्मबोधानुकूल्यमेव। ननु विचारेप्येवं वक्तुं शक्यमित्यत आह उपसदनेति। भृगोर्वरुणोपसरणवैयर्थ्यापत्तिः। विचारेणैव विशेषाधानाद्गुरोरप्रयोजकत्वादित्यर्थः। शिष्ये विशेषाधानादिति। 'अन्नं ब्रह्मेति व्यजानात्, प्राणो ब्रह्मेति व्यजानात्, मनो ब्रह्मेति व्यजानात्, विज्ञानं ब्रह्मेति व्यजानात्, आनन्दो ब्रह्मेति व्यजानात्' इत्येवमुत्तरोत्तरं फलवैजात्यात् साधनवैजात्याय शिष्ये विशेषाधानावश्यकत्वादित्यर्थः। तदुक्तं—

'अलौकिको हि वेदार्थो न युक्त्या प्रतिपद्यते।
तपसा वेदयुक्त्या तु प्रसादात्परमात्मनः' ॥ इति।

तपःशब्द इति। तपःशब्दः अरूढ इति पदच्छेदः। 'तप संतापे' इति धातुपाठात्। तेन वेदान्ते योगाङ्गीकारस्य न विरोधः। यद्वा तपःशब्दो रूढः शक्तिसंकोचवान्। अत्र तपो भगवानिति द्वितीयस्कन्धनवमाध्याये निरूपणान्न विचारः। ततः 'स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम' इति वाक्यात्तप एव। 'तदुक्तं तपसा ब्रह्म विजिज्ञासस्व', 'तपो ब्रह्म,' इति। 'अलौकिको हि वेदार्थो न युक्त्या प्रतिपद्यते। तपसा वेदयुक्त्या तु प्रसादात्परमात्मनः' इत्यत्र तप उक्तम्। न च वेदयुक्तिविचारः। अस्तु तथा, परंतु द्वितीयसुबोधिन्यां तपसंतापस्वीकारात्, 'स्वयमेवात्म-

न ह्यप्रामाणिकोक्ते विधौ वा उपाख्याने वा ब्रह्मस्वरूपे वा कस्यचिदपि विश्वासो यथा लोके । तस्माद् वेदे अक्षरमात्रस्याप्यसत्यार्थ(ज्ञान)स्याभावाद् वैदिकानां न संदेहोऽपि किं पुनर्विरुद्धार्थकल्पना । विद्यासु च तदश्रुतेः । यदि वेदार्थज्ञाने विचारस्योपयोगः स्यात्, अङ्गत्वेन व्याकरणस्येव विद्यासु श्रवणं स्यात् । स्थानत्वेन च पुराणादेरिव मीमांसाया अपि प्रकारभेदेन प्रतिपादकत्वं स्यात् । 'तं त्वौपनिषदं पुरुषं पृच्छामि'इति तु तेषां निषेधः । अन्यथाज्ञानं नोपनिषदुक्तं फलं समर्पयति । तस्मान्नारम्भणीय एव ब्रह्मविचारः ।

---

भाष्यप्रकाशः ।

च मिथ्यात्वं स्यात् । तथाच सर्वो वेद एवोच्छिद्येतेत्यर्थः । तत्र हेतुमाह न हीत्यादि । सिद्धं वदन् लोके प्रत्यक्षसंवादमप्याह तस्मादित्यादि । वैदिकानामिति प्राज्ञवैदिकानाम् । प्रकारान्तरेणापि विचारानर्थक्यमाह विद्यास्वित्यादि । स्फोक्तं व्याचष्टे यदीत्यादि । चरणव्यूहे, शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति षडङ्गान्युक्त्वा, 'तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते' इत्येवोच्यते । तस्मात् 'साङ्गो वेदोऽध्येयो ज्ञेयश्च' इति विधावपि नाक्षेपो युक्त इत्यर्थः । एवं विधित्रयेऽपि विचाराक्षेपस्याशक्यवचनत्वाद् विधिप्रयुक्त्यारम्भणीयत्वं निवारितम् । ननु मास्त्वङ्गमध्यपातस्तथापि पुराणादिवत् स्थानत्वेनैवारम्भणीयः । नचाऽप्रामाणिकत्वम् । प्रतिपदमनुपदं, छन्दो, भाषा, धर्मो, मीमांसा, न्यायस्तर्क इत्युपाङ्गानीति तत्रैवोपाङ्गेषु पाठात्, स्मृतावपि ।

'पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश' ॥ इति ।

विद्यासु गणनाच्चेति चेत्तत्राह स्थानत्वे चेत्यादि । तस्मादिति वेदार्थज्ञानार्थं ब्रह्मज्ञानार्थं चाऽनुपयोगात् ।

रश्मिः ।

ना'इति वाक्यात् विचारस्याप्राप्तिः, अभगवत्त्वात् । तथा च तस्य विचारस्य अभगवत्त्वेन पूर्वस्मात्संतापात्मकात्तपसो भगवद्रूपादस्यानाधिक्यात्तपःसन्तापात्मकमेव ग्राह्यमिति भाष्यार्थः । आधिक्यं स्वयं प्रकाशविघटकत्वम् । एकरसत्वं वा एकरसत्वेन पूर्वस्मादनाधिक्यं वा । मुख्यं हेतुमाह अन्यथेति तपसो विचारार्थकत्व इत्यर्थः । अपरिहार इति अपरिहारो मुख्यो हेतुरित्यपि बोधयितुमित्यर्थः । उपाख्यानानीति । एतच्च पूर्वतन्त्रे द्वितीयस्य द्वितीयपादे चिन्तितम् । त्रिवृत्करणादीनामिति । 'यथा नु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति । अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुः तत्पुरीषं भवति, यो मध्यमस्तन्मांसम्, योऽणिष्ठस्तन्मनः, आपः पीतास्त्रेधा विधीयन्ते, तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति, यो मध्यमस्तल्लोहितम्, योऽणिष्ठः स प्राणः, तेजो अशितं त्रेधा विधीयते, तस्य यः स्थविष्ठो धातुस्तदस्थि भवति, यो मध्यमः स मज्जा, योऽणिष्ठः सा वाक्, अन्नमयं हि सौम्य मनः, आपोमयः प्राणः, तेजोमयी वागिति' त्रिवृत्करणश्रुतिः । भाष्ये । असत्येति । न च सर्वरस इति श्रुतिविरोधे रस शब्द इति धातुपाठात् शब्दस्यासत्यर्थादिति शङ्क्यम् । क्षराक्षरपुरुषोत्तमभेदेनासत्यार्थ-

अनेन धर्मविचारोऽप्याक्षिप्त एव । न ह्येतन्निराकर्तुः सोऽयमतिभार इति पूर्वःपक्षः ।

सिद्धान्तस्तु ।

---

भाष्यप्रकाशः ।

ननु मास्तु ब्रह्मविचारस्यारम्भणीयत्वं,धर्मविचारे तु दोषाभावात् तदारम्भे को दोष इत्यत आह अनेनेत्यादि । 'स तृतीयमतप्यत, स एतं दीक्षितवादमपश्यत्'इत्यादौ तपस एव कथनेनेत्यर्थः । नन्विदमपि शास्त्रमृष्युक्तत्वात् प्रामाणिकमतः कथं निराक्रियत इत्यत आह नहीत्यादि । गुरोर्मते एव निराकृते शिष्यस्य का वा गणनेत्यर्थः । एवं च यथा मीमांसाकरणात् पूर्वमङ्गैरेव संदेहनिवृत्तिस्तथेदानीमपि भविष्यतीति व्यर्थं तत्करणमिति केवलवैदिककृतः पूर्वपक्षो निरूपितः ।

उत्तरं वक्तुं गृह्णन्ति सिद्धान्त इत्यादि । ननु शब्दस्य निःसंदिग्धमर्थप्रतिपादकत्वात्

रश्मिः ।

वाचकानां क्षराक्षरसंबन्धित्वेन पुरुषोत्तमनिःश्वासे वेदे असत्यार्थस्याभावात् । तेजो घृतादि । अर्थविधुराणां वैदिकानां धर्म्यज्ञानात्संशयो न घटत इति विक्षिपन्ति प्राज्ञेति । प्रज्ञ एव प्राज्ञः ते वेदार्थभूतात्मतत्त्वज्ञाः । पूर्वमीमांसाकारिकाणां भावार्थपादभाष्यस्य च तद्विषयकविचारो लाघवादत्रैव युक्त इत्याशयेनानेन इत्यादि भाष्यमित्याशयेन विवृण्वन्ति स्म स तृतीयमिति । इयं श्रुतिः संहितातृतीयाष्टकेऽस्ति । स प्रजापतिस्तृतीयं तपो अतप्यत तदन्वेतं दीक्षितवादं ज्ञातवानित्यर्थः । पूर्वं प्रकाशे प्राज्ञेति स्वयं विशेषणोक्तेः । ननु मीमांसकान्तरोत्थापकग्रन्थाभावात् पूर्वपक्षोपन्यासोऽयं दुर्बोध इति चेन्न, नात्र ब्रह्मपदेन प्रमितव्यम् । ब्रह्मपदस्य 'जिज्ञासितमधीतं च यत्तद्ब्रह्म'इत्यत्र वेदे प्रयुक्तत्वात् । वेदत्वेन वेदान्तविचारेपि संहतमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति वदतां ब्रह्मसूत्राणां प्राचीनवृत्तिकृतां वेदगतिप्रदर्शनार्थं ब्रह्मपदग्रथनस्य सत्त्वान्न ग्रन्थाभाव इति । सिद्धान्तग्रन्थमवतारयन्ति उत्तरमित्यादि । गृह्णन्तीति पूर्ववत् । भाष्ये संदेहवारकमिति द्वितीयाधिकरणे—

'संदेहवारकं शास्त्रं वेदप्रामाण्यवादिनाम् ।
क्रियाशक्तिज्ञानशक्ती संदिह्येते परस्थिते' ॥

इति वक्ष्यते। तत्र ज्ञानशक्तिक्रियाशक्ती किंनिष्ठे इति विशेषजिज्ञासाजनकत्वात् विशेषवेदार्थजिज्ञासा भवति । तर्हि कोऽत्र वेदार्थः यत्र संशयोदयः । ज्ञानशक्तिक्रियाशक्ती संदिह्येते परस्थिते इति भाष्यात् ज्ञानशक्तिक्रियाशक्तिविषयकः संशयः तस्योदय इत्यर्थः । अत्र ब्रूमः ।

'श्रुतिवृन्दैः सदा जुष्टं श्रुतिवृन्दैः सदाद्भुतम् ।
श्रुतिवृन्दैः सदा सन्तं श्रौतं श्रीकृष्णमाश्रये' ॥

इत्युक्तम् । अथ पुनर्याद्दशमित्यादिः फलिष्यति । 'शतं शुक्राणि यत्रैकं भवन्ति, सर्वे वेदा यत्रैकं भवन्ति, सर्वे होतारो यत्रैकं भवन्ति, स मानसीन आत्मा जनानाम्, वेदाहमेतं पुरुषं महान्तं आदित्यवर्णं तमसस्तु पारे । सर्वाणि रूपाणि विचित्य धीरः नामानि कृत्वाभिवदन्यदास्ते' इत्यत्र पूर्वस्यां शुक्रवेदज्योतिषामुत्पत्त्यादिमतां यत्रैकीभावः, स आत्मा जनानां, मनसि भव इति निरुक्तेर्मानसीनत्वस्य च रसानतिरिक्तानन्दलिङ्गत्वमित्यानन्दो ब्रह्म । द्वितीयस्यां चानन्दस्यैव पुरु-

संदेहधारकं शास्त्रं बुद्धिदोषात् तदुद्भवः ।
विरुद्धशास्त्रसंभेदादङ्गैश्चाशक्यनिश्चयः ॥
तस्मात् सूत्रानुसारेण कर्तव्यः सर्वनिर्णयः ।
अन्यथा भ्रश्यते स्वार्थान्मध्यमश्च तथाविमः ॥

परंपरया पाठवदर्थस्यापि गुरुमुखादेव श्रवणेऽपि मन्दमध्यमयोः संदेहो भवेत् समानधर्मदर्शनात् पदादिपाठवत् । तत्र यथा लक्षणानामुपयोग एवमेव मीमांसाया अपि ।

भाष्यप्रकाशः ।

संदेह एव कथमित्यत आहुः बुद्धीत्यादि । तन्निवृत्तिर्व्याकरणादिभिरेव भविष्यतीत्यत आहुः विरुद्धेति । सर्वनिर्णय इति पूर्वोत्तरकाण्डार्थनिर्णयः । कथमिदमित्यपेक्षायां व्याचक्षते परंपरयेत्यादि । समानधर्मदर्शनादिति अर्थे समानधर्मदर्शनात् । यथा 'अक्ताः शर्करा उपदधाति' इत्यत्राञ्जनकरणत्वं घृततैलवसादिषु समानम् । तथाच यथा संहिताध्ययनदशायां, 'देवाय ते यजमानाय शीकाय ते स्वाहा' इत्यादौ संदेहाभावेऽपि पदादिपाठकाले, देवय ते शीकय त इति ह्रस्वश्रुत्या संदेहे, अथादावुत्तरे विभागे ह्रस्वव्यञ्जनपर इत्यधिकारस्थस्य, देवाशीकेत्यादेः ।

रश्मिः ।

षत्वनिरवधित्वतेजोनिचयत्वरूपधर्मवत्त्वं तस्य साकारस्य तमसस्तु पार इत्यनेन निरविद्याजराधिकरणकत्वनिर्वचनेनाविद्यास्पर्शगन्धविरहं निरुच्य उत्तरार्धे सर्वरूपविचयननामकरणतदभिवदनानाभिवदतः स्थितेश्च श्रावणाद्रूपविचयादिलीलानां तत्संबन्धिनां तत्कर्तुर्महापुरुषस्य स्थितिं महत्त्वेन रूपादीनां तदभिन्नत्वं, धीरत्वेनाधिकारं, तुना कर्तृकर्मकरणानुसंधानरहितता । अयमर्थो द्वितीयनवमाध्याये चिन्मात्रोऽहं इति भावना तया च ब्रह्मभावलक्षणो मोक्ष इति मायावादनिरस्तिं च श्रावयति । तथा तैत्तिरीयोपनिषदि ब्रह्मवित्प्रपाठके रसरूपस्यैव आनन्दस्य परब्रह्मत्वं श्रुतम् । 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः । नानुध्यायाद् बहून् शब्दान्वाचो विग्लापनं हि तत्' इति सर्वात्मभावं विदधती साधनमाह । तथा छान्दोग्ये नारदसनत्कुमारसंवादेप्येतदेव साधनमाह । तथा च तेजोमयो व्यापक आनन्द एव रसः कमनीयः साकारो अचिन्त्यानेकशक्तिवृतः सर्वाश्रयः पुरुषः परं ब्रह्म सर्वात्मभाववद्भक्ते स्वे महिम्नि प्रतिष्ठितो रूपादिविचयादिलीलां चरीकुर्वन्वरीवर्तीति । यथायमर्थः सर्वेषां वेदान्तानां तथास्यां ब्रह्ममीमांसायां विशदयिष्याम इति । तन्मतेऽवस्थिते विरुद्धेति विरुद्धानां योगसांख्यवैष्णवतन्त्राणां नैयायिकशांकररामानुजशास्त्राणां संभेदान्मिश्रणादित्यर्थः । एवं च वेदार्थभूतात्मत्वेन ब्रह्मणि ज्ञानशक्तिक्रियाशक्तिव्यापकत्वादेरिति संदेहः । तद्बीजं तु विरुद्धशास्त्रसंभेदः तेन ज्ञानशक्तिक्रियाशक्ती स्तः न स्तो वा, व्यापकोऽव्यापको वेति । 'समान एवं चाभेदात्'इति सूत्रभाष्येऽव्यापकत्वमुपपादितम् । अयमर्थो द्वितीयनवमाध्यायेविरोधेन स्फुटमन्यत्रप्रतिपादितमिति संक्षेपः । प्रकृते । परंपरया पाठवदित्यादिभाष्यं विवृण्वन्ति तथा च यथेति । देवाशीकेत्यादि । षष्ठ्यन्तमिदं तस्येत्यध्याहरणीयम् । सूत्रविशेषणत्वादिति प्रतिभाति । यथा सूत्रस्येत्यनेनान्वेति । सूत्रस्य भाष्यम् । आदौ पदादौ उदात्ताकारे पदान्ते च वर्तमानः संहितायां यो दीर्घः असौ पदविभागपदसमे व्यञ्जनपरः सन् ह्रस्वमापद्यते । व्यञ्जनपरत्वं यथा

तदुक्तम् ।

असंदिग्धेऽपि वेदार्थे स्थूणाखननवन्मतः ।
मीमांसानिर्णयः प्राज्ञे दुर्बुद्धेस्तु ततो द्वयम् इति ॥

भाष्यप्रकाशः ।

'त्रपुश्च मे मिथुश्चरन्तं सुश्चन्द्रदस्म' इत्यादेः पदपाठे, त्रपु च मिथु चरन्तं, सुचन्द्रेति पाठात् संदेहे, त्रपुमिथुपूर्वः शकारश्च परः, सुपूर्वश्चन्द्रपर इति । उत स्वानासो दिविष॰तु, आपो हि ष्ठा मयोभुव इत्यादेः पदपाठे, उत स्वानासः, दिवि सन्तु, आपः हि स्थ इति पाठात् संदेहे, स्वानासो दिव्यापोहीत्यादिसूत्रस्योपयोग इति लक्षणानां प्रातिशाख्यसूत्राणां संदेहनिवृत्तावुपयोगः । तथाऽर्थश्रवणेऽपि वाजिभ्यो वाजिनमित्यत्र किमामिक्षाऽश्ववन्तो विश्वेदेवा वा वाजिनामानोन्ये वा वाजिनयागदेवताः । गायत्र्यां सविता, सूर्यो वा परब्रह्म वा । आकाशादेव समुत्पद्यन्त इत्यत्र भूताकाशो वा ब्रह्म वेति संदेहः समानधर्मदर्शनान्मन्दादीनां भवेदिति । तन्निवृत्त्यर्थं मीमांसाद्वयस्याप्युपयोग इति ज्ञानविधावुपाङ्गभूतयोस्तयोरप्याक्षेपो युक्त एवेत्यर्थः ।

अस्मिन्नर्थे प्राचां संमतिमाहुः तदुक्तमित्यादि । द्वयमिति संदेहाभावो दार्ढ्यं चेत्यर्थः ।

रश्मिः ।

संहितास्थं ज्ञेयम् । व्यञ्जनमस्मात्परं इति व्यञ्जनपर इति । देवाशीकासुस्वाध्वतायमुनाहृदयोत्याशुद्धेति सूत्रे अत्र भाष्यम् । देवाशीका इत्यादिषु ग्रहणे । अवग्रहेषु अन्त्यस्वरो विभागे ह्रस्व आपद्यते यथा देवाय त इत्यादि । यथा वा शीकाय ते स्वाहा शीकाय त इति शीकय ते स्वाहा इदं सप्तमाष्टके स्तुभ्नयन्तो हवामहे इत्यादिषु लक्षणम् । त्रपुमिथ्विति इति सूत्र, उपयुक्तं इति शेषः । यद्वा इति च सूत्रस्योपयोग इत्युत्तरत्रान्वयः । त्रपुमिथू पूर्वौ यस्य, चकारः परो यस्यैतादृशः शकारो भवति, सुः पूर्वो यस्य चन्द्रः परो यस्य तादृशः शकारो भवतीति सूत्रार्थः । त्रपुमिथुभ्यां परस्य चस्य सोः परस्य चन्द्रस्य च सुण् न भवतीति फलितोर्थः । अन्यत्र तु तृतीयेऽध्याये चन्द्रे सुशकारेणेति सूत्र्यते । चन्द्रे प्रत्यये सुशब्दशकारेणाव्यवधीयत इति च । भाष्ये । उपयोग इति । संतुस्थयोः सकारस्य शकारे उपयोग इत्यर्थः । मीमांसाद्वयस्याप्युपयोग इति । तत्राक्ताः शर्करा इत्यत्र तु तेजो वै घृतमिति वाक्यशेषोपयोगः । अर्थवादत्वेपि विशेषार्थतया विध्यविरुद्धत्वात्प्रामाण्यमिति पूर्वतन्त्रे प्रथमाध्यायोपान्ते 'संदिग्धेषु वाक्यशेषात्' इत्यधिकरणे चिन्तितम् । तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनम्'इत्यपि, द्वितीयस्य द्वितीये पादे 'गुणश्च न पूर्वसंयोगे वाक्ययोः समत्वात्' इत्यधिकरणे चिन्तितम् । घनीभूतपिण्ड आमिक्षापदार्थः, जलं वाजिनपदार्थः । तत्र वाज आमिक्षाद्रव्यमेषामस्तीति वाजिनो विश्वेदेवास्तदनुवादेन वाजिनद्रव्यरूपो गुणो विधीयते । आमिक्षाद्रव्येणास्य समुच्चयो विकल्पो वेति प्राप्तम् । तत्रोत्पत्तिशिष्टामिक्षया निवृत्तान्यकाङ्क्षे वैश्वदेवभागे उत्पन्नशिष्टं वाजिनद्रव्यं प्रवेशमलभमानं वाजिशब्दस्य देवतान्तरार्थतां वक्ति । एवं च द्रव्यदेवताभेदाद्धितकर्मान्तरतास्येति । यथा 'निष्कलं निष्क्रियं' 'यतो वा इमानि भूतानि जायन्ते' इति संदेहे जन्माद्यधिकरणम् । यथा गायत्र्यामित्यादिसंदेहे रूढेः सवितृप्राप्तिः तन्न इत्यत्रैवान्तस्तद्धर्माधिकरणे उक्तं भविष्यति । आकाशादेवेत्यादेस्तु तल्लिङ्गाधिकरण इति । ज्ञानविधाविति । ज्ञेयमेतस्मिन् स्वाध्यायविधौ वेद्याय । उपाङ्गेति । प्रतिपदमनुपदं छन्दो भाषेति

तथाच निर्णये येन केनचिद्दूरकृत्येहरिः स्वयं व्यासो विचारं चिकीर्षुस्तत्कर्तव्यतां बोधयति । ब्रह्मजिज्ञासा कर्तव्येति व्यासोक्तत्वादपि कर्तव्यता । कर्तव्यपदाध्याहारे स्वातन्त्र्यं न भवति । अन्यथा, 'अथ योगानुशासनम्' इतिवत् स्वतन्त्रता स्यात् । तथाच ज्ञानानुपयोगः । तथाहि । 'तं त्वौपनिषदं पुरुषं पृच्छामि' इति केवलोपनिषद्वेद्यं ब्रह्म, न शास्त्रान्तरवेद्यम् । तद् यदि मीमांसा स्वतन्त्रा स्यात् तज्जनितं ज्ञानं न ब्रह्मज्ञानं भवेत् ।

---

भाष्यप्रकाशः ।

एतेन शास्त्रप्रयोजनमारम्भसमर्थनायोक्तम् । विचारकर्तव्यतासमर्थनेनोपोद्घातरूपा अधिकरणसंगतिरपि बोधिता । अतः परं प्रयोजनवत्त्वेऽपीदं शास्त्रं कया संगत्या आगतम् । श्रुतौ च तपस उपदेशात् तदेव च कुतो नोक्तमित्याकाङ्क्षायां शास्त्रसंगतिं वदन्त एव सूत्राक्षराणि व्याकुर्वन्तः प्रथमतो वाक्यार्थमाहुः तथाचेत्यादि । उक्तरीत्या वेदार्थनिर्णयस्यावश्यकत्वात् तन्निर्णये येनकेन चिद्दूरकृत्ये यदा कालवशात् तपआदीनामसंभवं व्यक्ततया तेषामसाधकत्वं च दृष्टवाँस्तदा जगद्दुःखदूरीकरणार्थं हरिः स्वयं व्यासरूपेणावतीर्य वेदव्यासादिकार्यं कृत्वा सर्ववेदार्थनिर्णयार्थं ब्रह्मविचारं चिकीर्षुस्तत्कर्तव्यतां बोधयति ब्रह्मजिज्ञासा कर्तव्येति । धर्मादिवद् व्यासोक्तत्वादपि कर्तव्यता । अत इदानीं तपो न वेदार्थज्ञानसाधनं किंत्विदमेव साधनम् । किंच तापसानामृषीणामपि स्वभावभेदाल्लोकानां संदेहं यदा दृष्टवाँस्तदा करुणया कृतवानिति तदुक्तरीत्या प्रयतने प्रसादोऽपि भविष्यति, तेन वेदार्थबोधश्चेति नास्य गतार्थत्वम् । कृपैव च संगतिरित्यर्थः । ननु सूत्रे कर्तव्यपदाभावादध्याहारस्य च दोषत्वात् किमित्येवं व्याख्यायत इत्याकाङ्क्षायामाहुः कर्तव्यपदेत्यादि, भवेत् इत्यन्तम् । अत उक्तदोषनिवृत्त्यर्थमध्याहृत्य व्याख्यायत इत्यर्थः । अत्र सर्वसंमतत्वादेवमध्याहारपक्ष उक्तो वाक्यार्थश्च ।

रश्मिः ।

चरणोपाङ्गेष्वष्टसु मीमांसकोक्तेः । तयोरिति मीमांसयोरित्यर्थः । भाष्ये । वेदार्थ इति । ननु वेदार्थे ज्ञानक्रियाशक्तिरूपे वेदार्थभूतात्मरूपे उक्ताः संदेहाः संभवन्ति । तदन्वसंदिग्धो वेदार्थो भवति । सामान्ये अर्थे विशेषार्थे शत९शुक्राणीत्याद्युक्ते तु मीमांसानिर्णयः कथमिति चेन्न । ससंबोधो मोक्षो निःसंबोधो मोक्षो वेति संदेहे संपद्याविर्भावादिसूत्राणि वाक्यशेषरूपाणीति मुख्यः ससंबोधो मोक्ष इति मीमांसानिर्णयसत्त्वात् । स्थूणाखननवदिति । स्थूणा हि शङ्कुः सीम्नि निखन्यते निखातापीति तद्वदित्यर्थः । प्रकृते । शास्त्रप्रयोजनमिति । संदेहाभावरूपं दार्ढ्यरूपं चेत्यर्थः । उपोद्घातरूपेति पूर्वोक्ता तु अध्यायादेः संगतिरिति न पुनरुक्तिः । स्वयमिति । पाक्षिकप्रामाण्यप्रहाणायेदम् । वाक्यानि त्वग्रे वक्तव्यानि । ननु वेदार्थविचारेऽलौकिको हि वेदार्थ इत्यस्योपस्थित्या कालवरणतपआदीनामित्यत्र आदिशब्देन वेदयुक्तिः परमात्मप्रसादश्चेत्युभयं ग्राह्यम् । तदा तपआदीनामित्यत्र बहुवचनं विरुद्धम् । साधनान्तरग्रहणगौरवम् । वेदार्थे उक्तसाधनातिरिक्तसाधनग्रहणापत्तिश्चेत्यरुच्याहुः किं चेति । दृष्टवानिति वक्ष्यमाणपुराणप्रसिद्धम् । असंदिग्धमिति सूत्रविशेषणात् तापसानां ऋषीणामपि स्वभावभेदाल्लोकानां संदेहं विना विशेषणानुपपत्तेः । करुणयेति तपसा चेत्यपि द्रष्टव्यम् । कृतवानिति वेदोपयुक्तं मीमांसाशास्त्रं कृतवान् । कृपैवेति एतत्प्रथमस्कन्धे चतुर्थेऽस्ति । 'व्यासः कृपणवत्सलः' इति । एतच्च

अथवा, अध्याहारकरणापेक्षयाथशब्द एवाधिकारे व्याख्येयः। वेदाध्ययनानन्तर्यं तु सिद्धमेव। न ह्यनधीत एव विचारमर्हति तत्रैतत् स्यात् स्वतन्त्रतेति। तत्र प्रतिविधास्यामः। वेदार्थब्रह्मणो वेदानुकूलविचार इति। किमत्र युक्तम्।

भाष्यप्रकाशः।

अतः परं पदानामर्थं वदिष्यन्तः पूर्वोक्तः पक्षो वक्ष्यमाणदोषग्रासात्र साधुरित्याशयेन पक्षान्तरमाहुः अथवेत्यादि। अधिकारो नाम नियमविशेषः इति केचित्। यथा, 'आकडारादेका संज्ञा' इति। प्रारम्भ इत्यन्ये। यथा, 'अथ योगानुशासनम्' इति। प्राधान्येन निरूपणमित्यपरे। प्रस्ताव इति कैयटे, 'अथ शब्दानुशासनम्' इत्यत्र व्याख्यातः तत्रेदृशनियमस्य पूर्वप्रकृतसापेक्षत्वात् पूर्वं च कस्याप्यप्रकृतत्वात् सोऽत्र न युज्यते, अतः प्रारम्भादेः प्रस्तावाव्यतिरेकात् प्रस्तावे व्याख्येयः। तथाच ब्रह्मजिज्ञासारूपं शास्त्रमधिक्रियते प्रस्तूयत इति व्याख्याने कल्पनाराहित्यादिदं तदपेक्षया ज्याय इत्यर्थः। नन्वधिकारार्थत्वे आदृते कर्तव्यपदाध्याहाराभावेन ब्रह्मजिज्ञासाया विध्यनाक्षिप्तत्वाद् वैदिकाधिकारिणोऽप्यप्राप्तेः शूद्रादिरनधीतवेदोऽपि ब्रह्मजिज्ञासायामधिकुर्यादिति कथं ज्याय इत्यत आहुः वेदेत्यादि। अग्रे वेदवाक्यानामेव विचारदर्शनादेतद्विचारकस्येदानीन्तनस्यापि वेदाध्ययनानन्तर्यं त्वर्थादेव सिद्धमिति न वैदिकाधिकारिणोऽप्राप्तिरित्यतो ज्याय इत्यर्थः। ननु तथापि विध्यनाक्षिप्ततया पुराणादिवत् स्वातन्त्र्यं तु सिद्धम्। तथा सति पूर्वोक्तो ज्ञानानुपयोगरूपो दोषस्तु स्यादित्याकाङ्क्षायां, तत्रैतत् स्यादित्यादिना तदनूद्य प्रतिविधानप्रकारमाहुः तत्रेत्यादि। अनुपदमेव वक्ष्याम इत्यर्थः। ननु प्रक्षालनपङ्कन्यायेनैतदपेक्षया तदादरणमेव युक्तमित्यत आहुः वेदार्थेत्यादि। वेदार्थभूतं यद्ब्रह्म

रश्मिः।

संगतिलक्षणोपपादनावसरे ईक्षत्यधिकरणे स्पष्टम्। भाष्ये। न भवतीति वेदवेदान्तसंदेहवारणाय ब्रह्ममीमांसा कर्तव्येति विध्याक्षिप्तत्वेन पृथगारम्भाभावात् न भवतीत्यर्थः। अन्यथेति आरम्भार्थकत्व इत्यर्थः। स्वतन्त्रतेति प्रकारभेदेन प्रतिपादकतया वेदाङ्गता स्यादित्यर्थः। तथा च वेदाङ्गत्वमस्वातन्त्र्यं वेदानङ्गत्वं स्वातन्त्र्यमिति हृदयम्। प्रकृते। वक्ष्यमाणदोषग्रासादिति अधिकाकाङ्क्षेत्यादिदोषचतुष्टयग्रासादित्यर्थः। आक्षेप्यबोधनायावतरणमाहुः नन्वधीति। अधिकुर्यादिति अधिकारं प्राप्नुयादित्यर्थः। अत्र वैदिकानां वेदाध्ययनानन्तर्यमिति संस्कृतकानां मीमांसा सदितोच्यते तदग्रे अपाकरिष्यते। वक्ष्याम इति वयमित्यध्याहारः। 'अस्मदो द्वयोश्च' इति सूत्रेण एकत्वेपि बहुवचनम्। प्रतिविधानं वक्ष्यामः। प्रक्षालनपङ्कन्यायेनेति 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायेनेत्यर्थः। एतदपक्षयेति अधिकारेध्याहारादरणापेक्षया। तदादरणमध्याहारादरणं युक्तमङ्गत्वे विधेः। एव इति न्यायानुरोधादेवकारः। इत्यत आहुरिति इत्यतः शङ्कापूर्वाङ्गत्वादाहुरिति। ईश्वरमीमांसा सार्वविभक्तिकस्तसिः। इत्यतः शङ्का। ननु दोषतौल्ये कुतस्तदादरणमिति चेन्न। शङ्काग्रन्थत्वात्। भाष्ये। वेदार्थशब्दो न वेदार्थत्वेन ब्रह्मज्ञानाय विचार इत्यायुक्तः प्रथमवैदिकपूर्वपक्षोक्तार्थबाधकः। गौणमुख्यन्यायविरोधात्। अतो वेदार्थो मुख्यपूर्वपक्षोक्तः। वेदपदस्य 'स्मृतेश्च' इति सूत्रे वेदान्तपरत्वोक्तेरत आहुः वेदार्थभूत-

भाष्यप्रकाशः ।

तत्संबन्धी सपरिकरतज्ज्ञापको वेदानुकूलो वेदवाक्यानां विरोधपरिहारादिना तेषूपचारादिदोषनिवर्तको विचारो मीमांसारूप इति हेतोः । अत्र हि सर्ववेदार्थत्वेन ब्रह्म जिज्ञास्यम्, अन्यथा वेदवेदान्तयोरैकशास्त्र्यं न स्यात् । तदभावे च जैमिन्याद्युक्तदिशा मुमुक्षुप्रवृत्तिप्रतिघाते शास्त्रवैयर्थ्यमापद्येत । विचारस्य च यदि वेदानुकूल्यं न स्यात् तदाप्यास्तिका न प्रवर्तेरन् । अत आवश्यकत्वात् स्वातन्त्र्येऽपि विरोधाभावादानुकूल्येन तज्जनितज्ञानस्य ब्रह्मज्ञानरूपत्वात् प्रतिविधानमेव युक्तमित्यर्थः । अयं प्रकारो माध्वानामपि संमतः तद्बोधकस्कान्दवचनोपन्यासादवगन्तव्यः । अध्याहारपक्षेऽप्येवं वक्तुं शक्यत्वात् । तज्ज्यायांसं मन्यमानोऽनुयुङ्क्ते किमत्र युक्तमिति । स्वतन्त्र-

रश्मिः ।

मिति । सर्ववेदार्थत्वेनेति च । मुख्यपूर्वपक्षोक्तं मुख्यपूर्वपक्ष्यर्थत्वेनेति चार्थः । सपरिकरेति विशेषणं निःसंबोधमोक्षनिरासाय आत्मनो मोक्षत्वात् । विरोधनिराकरणादिरपि परिकरः । वेदान्तरूपपदं व्याचख्युः वेदवाक्यानामिति । आदिशब्देन साधनं मुख्यत्वादिकं फलं च संबोधत्वं चेति गृह्यते । तेन विरोधपरिहारोक्तोध्यायद्वयार्थः । आदिशब्दोक्तोध्यायद्वयार्थश्चेत्यध्यायचतुष्टयार्थः । तेष्वित्यध्यायेषु चतुर्षु । आदिशब्देनाकाङ्क्षायोग्यतासंनिधयः । इति हेतोरिति । न तदादरणमेव युक्तं, अध्याहृत्याध्याहारशेषनिवर्तनात् । दोषनिवर्तनं ततोपि अध्याहारदर्शनात्सर्वत्र । सर्ववेदेति । ननु वेदार्थत्वेनापि विद्यात्मत्वेन पूर्वस्य पुराणेपि सत्त्वात् द्वितीयस्यापि निरीश्वरमीमांसाविषयत्वात् । अत्र सूत्रे ब्रह्मपदेन वेदोक्तवेदार्थत्वेन ब्रह्म जिज्ञास्यम्, वेदार्थो ब्रह्म इति प्रतीतेः । यथा घटः पृथ्वीत्वेन घटप्रतीतेः । तथा च वेदार्थो ब्रह्म तस्य न तु पुराणाद्यर्थः पृथ्व्यर्थब्रह्मणो वेदानुकूलविचार इति भाष्यार्थः । ब्रह्मशब्देन वेदमात्राग्रहणे युक्तिमाहुः अन्यथेति । ऐकशास्त्र्यमिति । तच्चाग्रे भाष्ये वक्ष्यते । श्रुत्योरप्युक्तम् । 'यदेव विद्यया करोति' इति । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इति च । वृत्तिकृद्बौधायनोप्याह 'संहृतमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेन' । जैमिन्याद्युक्तदिशेति । यथाहुः 'चोदनालक्षणोर्थो धर्मः' इति सूत्रे कार्यरूप एव वेदार्थः, न तु सिद्धरूपः इति, द्वितीयपादे च 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते' इत्यधिकरणेऽर्थवादानां क्रियार्थत्वाभावेन स्वार्थे तात्पर्यविधुराणां स्तावकत्वमिति धर्मनिर्णयः । चतुर्लक्षण्या चोपासनात्मकधर्मनिर्णय इति । न च ब्रह्मज्ञाने उपयोग इति वाच्यम् । 'आत्मा वा अरे द्रष्टव्यः,' 'अयं हि परमो धर्मो यद्योगेनात्मदर्शनम्' इति, श्रुतिस्मृतिभ्यां तस्य धर्मत्वात् । न च सृष्ट्यादिवाक्यार्थं निर्णेतुमपेक्षत इति वाच्यम् । 'ब्रह्मिष्ठो ब्रह्मा तं दर्शपूर्णमासयोर्वृणीते' इति कल्पसूत्रात्

'इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या ।
दृढत्वमेतद्विषयः प्रबोधः प्रयाति वेदान्तनिषेवणेन' ॥

इत्युक्तेर्विध्येकवाक्यतयार्थवादत्वात् । किंच नवमे तृतीयचतुर्थयोः 'फलदेवतयोश्च' 'देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात्' इत्यधिकरणयोर्न देवता विग्रहवती, किंतु शब्दमात्रं देवता । अर्थस्तु प्रातिपदिकानुरोधाचेतनो वा कश्चित्स्वीक्रियते, न तु विग्रहादिमान् । उपासनादौ परं ध्यानमात्रमध्याहार्यमिति । अनया दिशेत्यर्थः । आदिना क्षणिकवादी ग्राह्यः । युक्तमित्यर्थ इति । वैधत्वस्य 'ज्ञेयश्च'इति विधिना प्राप्तत्वादिति भावः । तद्बोधकेत्यादि । स्कान्दे वचनानि त्विमानि ।

व्याख्यानमिति । व्याख्यानतो विशेषप्रतिपत्तेः । यथा कर्मणि 'दर्शपूर्णमासौ तु पूर्वं व्याख्यास्यामः' । 'अथातो दर्शपूर्णमासौ व्याख्यास्याम' इति ।

अथचैतर्हीमानि सिद्ध्यन्ति प्रयोजनानि । अधिकाकाङ्क्षा न भवेत् । अध्याहारश्च । पुरुषार्थश्च सिद्ध्येत् । उच्छेदश्च न भवेदिति । कथम् । अथशब्दोऽर्थचतुष्टये वर्तते, मङ्गले, अधिकारे, आनन्तर्ये, अर्थान्तरोपक्रमे च । तत्र श्रुतिमात्रेणैव

भाष्यप्रकाशः ।

ताप्रतिविधानस्यात्राप्यपेक्षितत्वेन प्रतिपत्तिगौरवदोपस्यात्रापि सत्त्वादध्याहारकरणाथशब्दव्याख्यानपक्षयोर्मध्ये किं युक्तं, तद्वक्तव्यमित्यर्थः । तत्रोत्तरमाहुः व्याख्यानमिति । अथशब्दव्याख्यानपक्ष एव युक्त इत्यर्थः । तत्र हेतुमाहुः व्याख्यानत इत्यादि । ननु कात्र विशेषप्रतिपत्तिरित्यत आहुः यथेत्यादि । तथाच यथा कल्पसूत्रेण प्रयोगप्रकारादिबोधनात् तत्तत्पदार्थसंदेहनिवृत्तिस्तथानया मीमांसया ब्रह्मणीति, तत्र यथाऽधिकारेऽथशब्दस्तथात्रापीति कल्पसूत्रतौल्यरूपविशेषस्य प्रतिपत्तिरित्यर्थः ।

नन्वध्याहारपक्षेऽपीदं सुवचमतः सर्वसंमतत्वादध्याहारपक्ष एव युक्तो नाऽथशब्दस्याधिकारव्याख्यानपक्ष इत्यत आहुः अथचेत्यादि । एतर्हीति व्याख्यानपक्षे । अत्र चोदयति कथमिति । स्वोक्तं विभजन्ते अथेत्यादि । तत्र मङ्गले,

'ओँकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्त्वा विनिष्क्रान्तौ तेन माङ्गलिकावुभौ' ॥ इति ।

अधिकारे, यथा, 'अथैष ज्योतिः' इति वेदे । 'अथ योगानुशासनम्' इत्यादि च

रश्मिः ।

'नारायणाद्विनिष्पन्नं ज्ञानं कृतयुगे स्थितम् । किञ्चित्तदन्यथा जातं त्रेतायां द्वापरे खिलम् ॥
गौतमस्य ऋषेः शापात् ज्ञाने त्वज्ञानतां गते । संकीर्णबुद्धयो देवा ब्रह्मरुद्रपुरःसराः ॥
शरण्यं शरणं जग्मुर्नारायणमनामयम् । तैर्विज्ञापितकार्यस्तु भगवान् पुरुषोत्तमः ॥
अवतीर्णो महायोगी सत्यवत्यां पराशरात् । उत्सन्नान् भगवान् वेदानुज्जहार हरिः स्वयम् ॥
चतुर्धा व्यभजत्तांश्च चतुर्विंशतिधा पुनः । शतधा चैकधा चैव तथैव च सहस्रधा ॥
कृष्णो द्वादशधा चैवं पुनस्तस्यार्थवित्तये । चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा ॥
अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम् । अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥
निर्विशेषितसूत्रत्वं ब्रह्मसूत्रस्य चाप्यतः । यथा व्यासत्वमेकस्य कृष्णस्यान्ये विशेषणात् ॥
सविशेषणसूत्राणि ह्यपराणि विदो विदुः । मुख्यस्य निर्विशेषेण शब्दोऽन्येषां विशेषतः ॥
इति वेदविदः प्राहुः शब्दतत्त्वार्थवेदिनः । सूत्रेषु येषु सर्वेऽपि निर्णयाः समुदीरिताः ॥
शब्दजातस्य सर्वस्य यत्प्रमाणश्च निर्णयः । एवंविधानि सूत्राणि कृत्वा व्यासो महायशाः ॥
ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु । ज्ञानं संस्थाप्य भगवान् क्रीडते पुरुषोत्तमः' ॥ इति ।

अधिकारे अथैष ज्योतिरिति । एतच्च पूर्वतन्त्रे द्वितीयस्य द्वितीये पादे 'संज्ञा चोत्पत्तिसंयोगात्' इत्यधिकरणे चिन्तितम् । तत्र ज्योतिष्टोमं प्रकृत्येदं श्रूयते । अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेतेति । तत्रैतच्छब्देन प्रकृतं ज्योतिष्टोमं परामृश्यत

मङ्गलसिद्धेरर्थान्तरस्य च पूर्वोक्तस्याभावान्नात्र तत्कल्पनम् । अथाऽवशिष्यते आनन्तर्ये वाऽधिकारे वेति । आनन्तर्ये त्वध्ययनस्य स्वतःसिद्धत्वादधिकाकाङ्क्षा भवति । तथा सति तदभावान्न विचारः सिद्ध्येत् ।

---

भाष्यप्रकाशः ।

लोके । आनन्तर्ये यथा, भुक्त्वा अथ व्रजतीति । अर्थान्तरोपक्रमे यथा, पूर्वं किंचिदुक्त्वा पुनर्विकल्पान्तरे क्रियमाण उच्यते, अथायमाशय इति । यद्यपि कोशे,

'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इति

'अथाथो संशये स्यातामधिकारे च मङ्गले ।
विकल्पानन्तरप्रश्नकार्त्स्न्यारम्भसमुच्चये' ॥

इत्यर्थान्तरमप्युक्तम् । गौडो भवान् अथेति ब्रूम इति प्रतिज्ञायामपि दृश्यते । तथापि प्रच्छकस्य संदेग्धुश्च कस्याप्यनुक्तत्वेन अथ शक्तोऽसि भोक्तुमित्यादिवत् प्रश्नसंशयव्यञ्जकवाक्याभावेन च प्रश्नसंशययोर्वक्तुमशक्यत्वात् स्वसंशयस्य स्वतोनिश्चयभावेन, स्वसंशयस्य, 'अविज्ञातं विजानताम्' इति श्रुतेः कृत्स्नस्य ब्रह्मणो विचारयितुमशक्यत्वेन कार्त्स्न्यस्य च प्रकृतविरुद्धत्वाद् विकल्पस्य पक्षान्तरात्मकत्वेनारम्भस्योपक्रमात्मकत्वेन चार्थान्तरोपक्रमानतिरेकात् समुच्चयनियमरूपाधिकारयोरप्यर्थान्तरसापेक्षत्वेन विकल्पतुल्यकक्षत्वादुपयुक्तविचारकार्त्स्न्यप्रतिज्ञयोरपि प्रस्तावाव्यतिरेकादथशब्दोऽत्रार्थचतुष्टये संभावितो वर्तते । तत्रान्यार्थकृतस्य पटहमृदङ्गादिध्वनेरिवाथशब्दस्यापि श्रवणमात्रेण मङ्गलसिद्धेः स्मृतिव्याकोपपरिहारात् तस्याः स्वरूपश्रवण-

रश्मिः ।

इत्याशङ्कायां अथशब्देन प्रकृतव्यवच्छेदोत्पत्तिसंयोगात्संज्ञया कर्मान्तरमिदमिति । एष इति तु प्रतिज्ञायमानकर्मान्तरवाचक इति । सुषुप्त्युत्क्रान्त्योर्भेदेनेति सूत्रे विशिष्य वक्तव्योयम् 'त्रयाणामेव चैवमुपन्यासः प्रश्नश्च' इति सूत्रे मध्वाचार्याः । 'अविज्ञातप्रार्थनं वा प्रश्न इत्यभिधीयते' इति वाक्यात् अविज्ञातप्रार्थनं प्रश्नः । तुः प्रतिज्ञायमानकर्मान्तरवाचक इति । (तथा च एष याग इत्यर्थः ।) अथेत्यस्य अधिक्रियत इत्यर्थः । लोक इति छन्दोवत्सूत्राणि भवन्तीति, लोके इत्यसंगतमिति यद्यपि तथापि चतुर्थचरणे सांख्यस्यावैदिकत्वमुक्तं 'एतेन योगः प्रत्युक्तः' इति चोक्तमतो लोक इति संगतम् । आदिशब्दार्थो द्रष्टव्यः । अथ व्रजतीति भोजनानन्तरं व्रजतीत्यर्थः । अथायमिति अर्थान्तरोपक्रमादयमाशय इत्यर्थः । तथा च एष याग इत्यर्थः । येषां यथायथमसंभवान्तर्भावाभ्यामवक्तव्यत्वमाहुः तथापीति । अथ शक्तोसीति । तृप्तं प्रति तृप्त्यनन्तरं भोक्तुं प्रवर्तमानं प्रति च वचनम् । प्रश्नसंशयेति परेच्छाप्रतिपत्तिफलकं वाक्यं प्रश्नः । स्वरसतो अथशब्दस्य प्रश्नसंशयार्थताभानात् तद्व्यञ्जकवाक्येत्युक्तम् । स्वत इति प्रतिज्ञातसंशयविषयग्रन्थात् । स्वसंशयस्येति वक्तुमशक्यत्वादिति पूर्वेणान्वयः । ननु कृत्स्नार्थको अथशब्दो विचारान्वयी न तु ब्रह्ममात्रान्वयीत्यत आहुः उपयुक्तेति । तत्र श्रुतीत्यादि भाष्यं विवृण्वन्ति स्म तत्र अन्यार्थमिति । वृत्त्यान्यार्थम् । अथशब्दस्येति अधिकारार्थे कृतस्य । स्मृतीति शिष्टाचारप्राप्तस्मृतीत्यर्थः । स्वरूपेति स्वरूपं मङ्गलश्रवणविषयः तदेव मङ्गलम् । मात्रपा प्रतिपाद्यत्वयोगव्यवच्छेदः क्रियते, न तु प्रतिपाद्यत्वेन यन्मङ्गलं तदाचरणेन तन्मात्रं कार्य-

भाष्यप्रकाशः ।

मात्रकार्यत्वेन मङ्गलस्यार्थान्तरबोधनाप्रतिरोधकत्वाच्च न तन्मात्रकल्पनं युक्तम् । पूर्वं कस्या-प्यर्थस्यानुक्तत्वादर्थान्तरोपक्रमस्यापि कल्पनं न युक्तम् । यत् पुनरानन्तर्यप्रस्तावरूपमर्थद्वयमव-शिष्यते, तत्रानन्तर्ये यस्य कस्यचिदानन्तर्यं तु स्वभावादेव प्राप्तमिति, न तस्य वक्तव्यत्वम् । यदि च शाबरभाष्योक्तमध्ययनानन्तर्यमङ्गीक्रियते, नह्यनधीतवेदो विचारेऽधिकरोतीति । तदा तस्य विचारार्थकजिज्ञासापदेनैवार्थात् सिद्धेरथशब्दोक्तानन्तर्यप्रतियोगिनोऽधिकाकाङ्क्षा भवति, अध्ययनातिरिक्तात् कस्मादनन्तरं ब्रह्म विचारयितव्यमिति । तस्यां च सत्यामध्ययनाति-रिक्तस्य कस्यापि तन्मतेऽदर्शनाच्च प्रकृतविचारसिद्धिरित्यर्थः । ननु 'संहतमेतच्छारीरकं जैमि-नीयेन षोडशलक्षणेन'इति वदद्भिः प्राचीनवृत्तिकारैर्द्वयोर्मीमांसयोरैकशास्त्र्यमङ्गीकृतम् । तत-श्चाग्नेयादिषट्कभेदवदध्यायभेदवच्चावान्तरप्रमेयभेदेन भेदेऽपि प्रयोजनैक्याद्, 'अथाऽतो धर्म-जिज्ञासा' इत्यारभ्य 'अनावृत्तिः शब्दात्' इत्यन्तमेकं शास्त्रमतः कर्मविचारानन्तर्यमस्येति रामानुजाचार्याः ।

आराधनाराध्यभूतयोर्धर्मब्रह्मणोः प्रतिपादकत्वेनैकशास्त्र्यं । 'अथाऽतो ब्रह्मजिज्ञासा' इति पृथगारम्भस्त्वथातः शेषलक्षणमित्यादिवदवान्तरपरिच्छेदार्थ इति तदेकदेशी नव्यः शैवः ।

पूर्वं धर्मजिज्ञासा कार्या, पुरुषमात्रविषयत्वात्, ब्रह्मज्ञानं तु कस्यचिदेव मुमुक्षोरिति धर्मवि-चारानन्तरं चतुर्णां प्रतिपन्नाश्रमान्तराणां सा । 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्'इति सूत्रयतः सूत्र-कारस्यापि ज्ञानकर्मसमुच्चयादेव मोक्षप्राप्तिरभिप्रेतेति ज्ञायते, अपरिज्ञाते, च कर्मणि केन समुच्चयः, केन नेति न ज्ञातुं शक्यम्, ज्ञाते तु तस्मिन् नित्यकाम्यनिषिद्धानां हेयोपादेयविभागविज्ञानात् काम्यनिषिद्धे हेये, नित्येन समुच्चय इति सुखेन ज्ञातुं शक्यते । किंच । तृतीये, कर्मसमृद्ध्यर्थाना-मुद्गीथाद्युपासनानां चिन्तनात् तेषां च कर्माधिकृतपुरुषमात्रविषयत्वात् कर्माविज्ञानेन तच्चिन्ताया अप्यनुपपत्तिरतोऽपि तदानन्तर्यमिति भट्टभास्कराचार्याः ।

रश्मिः ।

मवश्यं कार्यं यस्याः तत्त्वेन इत्यर्थः । अर्थान्तरेति । मङ्गलस्य विचारकर्तव्यतारूपे वाक्यार्थे कर्तृत्वादिनान्वयाभावादिति शंकरभाष्योक्तहेतुसंग्राहकश्चकारः । एवं मङ्गलविधिरधिकारपक्षेपीति ज्ञेयम् । मङ्गलस्य शक्यार्थत्वे वाक्यभेदश्च स्यात् । अर्थात्सिद्धेरिति आक्षेपात्सिद्धेरित्यर्थः । अथशब्दोक्तेति अथशब्दोक्तानन्तर्यनिरूपकस्येत्यर्थः । आकाङ्क्षास्वरूपमाहुः अध्ययनाति-रिक्तादिति । तथा सतीति भाष्यं विवृण्वन्ति स्म तस्यां चेति । कस्यापीति आनन्तर्य-निरूपकस्येत्यर्थः । षोडशलक्षणेनेति द्वादशलक्षणान्यध्यायाः कर्मकाण्डे, चत्वारोध्यायाः उपा-सनाकाण्ड इत्येवं षोडशलक्षणेनेत्यर्थः । प्राचीनवृत्तिकारैरिति । बोधायनप्रभृतिभिरित्यर्थः । प्रमेयेति प्रमाणभेदशेषत्वप्रयुक्तिक्रमाधिकारसामान्यातिदेशविशेषातिदेशोहबाधतन्त्रप्रसङ्गरूपप्रमेयं पूर्वतन्त्रे । उत्तरतन्त्रे तु समन्वयविरोधनिराकरणसाधनफलरूपमिति ज्ञेयम् । प्रयोजनेति आराधनाराध्यभूतयोर्धर्मब्रह्मणोः प्रतिपादनरूपप्रयोजनैक्यात् । ऐकशास्त्र्यमिति तच्च पूर्वोक्तैक-शास्त्रनिष्ठम् । अथातः शेषलक्षणमिति इदं च पूर्वतन्त्रे तृतीयाध्यायस्यारम्भसूत्रम् । अवा-न्तरपरिच्छेदार्थ इति अवान्तरविचारविशेषार्थ इत्यर्थः । कर्मसमृद्धिरिति । तमेतमिति वचनेन ब्राह्मणा विविदिषन्तीति श्रुतिरत्रानुसंधेया । तदानन्तर्यम् धर्मविचारानन्तर्यम् । 'यस्य-

**तथा हि, न तावद्धर्मविचारानन्तर्यम्। विपर्ययसंभवात्।**

भाष्यप्रकाशः।

किंच, 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः' इति श्रुतौ तर्कोपकरणेन शब्देन परमात्मानं सम्यग् ज्ञात्वा प्रज्ञाख्यभावनाविधानात्, पतञ्जलिनाऽपि, 'स तु दीर्घकालादरनैरन्तर्यसत्काराऽऽसेवितो दृढभूमिः' इति सूत्रयता दीर्घकालासेवितस्यान्यवधानासेवितस्य ब्रह्मचर्यतपःश्रद्धायज्ञादिरूपसत्कारासेवितस्य योगस्य दृढभूमित्वकथनाच्च क्रियमाणाया भावनाख्योपासनाया दृढत्वाय यज्ञोपयोगः कैश्चिदिष्यते।

तत्तत्फलार्थं विहितानामपि कर्मणां, 'तमेतं वेदानुवचनेन' इत्यादिश्रुत्या, 'एकस्य तूभयत्वे संयोगपृथक्त्वम्' इतिन्यायेन क्रत्वर्थखादिरत्वस्य वीर्यार्थत्ववद्ब्रह्मभावनार्थत्वं कैश्चिदिष्यते।

तथापरैः श्रेयःपरिपन्थिकल्मषनिबर्हणद्वारा यज्ञोपयोग इष्यते।

अन्यैः पुनः 'महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः,' 'यस्यैतेऽष्टाचत्वारिंशत् संस्कारा' इति स्मृत्या यज्ञादिसंस्कृतस्य पुरुषस्य दीर्घकालादरनैरन्तर्यैर्ब्रह्मभावनामासेवमानस्य समूलकाषमविद्यावासनानिवृत्त्या प्रत्यगात्मवैशद्यात् पुरुषसंस्कारद्वारा यज्ञोपयोग इष्यते।

तथेतरैः 'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्' इति स्मृत्या ऋणत्रयापाकरणेन कर्मणां ब्रह्मज्ञानोपयोग इष्यते इति नाना मतानि वाचस्पत्ये लिखितानि। अतः कर्मज्ञानसमुच्चयस्य बहुवादिसंमतत्वात् पूर्वोक्तरीत्या धर्मविचारेणाधिकाकाङ्क्षापूरणसंभवात् तदनन्तरं सुखेन ब्रह्मविचारसिद्धिरित्याकाङ्क्षायामाहुः तथाहि, नेत्यादि। तदुक्तरीत्या समुच्चयाङ्गीकारेऽपि धर्मविचारानन्तर्यं नोपपद्यते कुतः विपर्ययसंभवात्। 'हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथ वक्षसः' इतिवत् वेदवेदान्ताध्ययनक्रमनियामकप्रमाणाभावात्। नच कर्त्रैक्यात् क्रमनियमः शङ्क्यः।

रश्मिः।

केणानुसंधत्ते' इति 'तं त्वौपनिषदं पुरुषं पृच्छामि' इति च श्रुतिद्वयमनुकूलयन्ति तर्कोपकरणेन शब्देनेति। इत्यादिश्रुत्येत्यादि तेन उपसर्पति इति शेषः। ब्रह्मपावनमिति वचनेत्यादिश्रुत्या। 'एकस्य तूभयत्वे' इति पूर्वतन्त्रेयं न्यायश्चतुर्थस्य तृतीयपादे चिन्तितः। एकस्योभयशेषतानिमित्तं पृथक् संयोग इति न्यायार्थः। स यथा खादिरेऽग्नीषोमीयपशुबन्धोत्त्यनन्तरं खादिरं वीर्यकामस्य यूपं कुर्वीतेति पृथक् श्रुतिसंयोगाद्वीर्यार्थत्वे तद्वदित्यर्थः। समूलकाषमित्यादि। वासना लक्षणं तु—

दृढभावनया त्यक्त पूर्वापरविचारणम्।
यदादानपदार्थस्य वासनेति प्रकीर्तिता॥

प्रत्यगात्मा जीवः। ऋणत्रयेति देवपितृमनुष्याणामृणत्रयेत्यर्थः। हृदयस्येत्यादि इदं पूर्वतन्त्रे चतुर्थस्य प्रथमे पादे चिन्तितम्। अग्नीषोमीयं पशुमालभेतेति प्रकृत्य श्रुतम्। इतिवदिति इत्यत्र संख्यारूपस्थानं क्रमनियामकं यथा तद्वत्। नच कर्त्रैक्यादिति। अत्र वयं 'अथातो धर्मजिज्ञासा' इत्यारभ्य 'अनावृत्तिः शब्दात्' इत्यन्तमनेककर्तृकमपि परंतु वेदनिश्वसितुः कृष्णावतारत्वेन वेदान्तानामपि निश्वसितकर्तृकत्वमित्येककर्तृकं शास्त्रमिति मन्महे। क्रमनियम इति क्रमेण स्थानेन नियम इत्यर्थः। स्थानं क्रमपर्यायकम्। तदुक्तम्

'क्रमो हि द्विविधैर्वेद्यो देशसामान्यलक्षणः।
पाठानुकारसादेश्याद्विनियोगस्य कारणम्' इति॥

भाष्यप्रकाशः।

आघारदर्शपूर्णमासवत् कर्मब्रह्मविचारयोरेकाङ्गिप्रयुक्ताङ्गत्वेन वा, पञ्चप्रयाजवदेकाङ्गिप्रयुक्तानेकाङ्गत्वेन वा, गोदोहनादिवदधिकृताधिकारत्वेन वा, षड्यागवत् फलैक्येन वा कर्त्रैक्यं येन

रश्मिः।

स्थाने पठनीयक्रमपाठः। स्थानं च यथासंख्यपाठः संनिधिपाठः अनुष्ठानसादेश्यं च। प्रकृते तु यथासंख्यपाठरूपं स्थानम्। तथा च प्रथमस्य धर्मविचारस्य प्रथमप्राप्तिः। द्वितीयस्य ब्रह्मविचारस्य पश्चादित्येवं विनियोगः। न च अथशब्दः शास्त्रं विभजन्पूर्वोक्तं कर्त्रैक्यं विघटयिष्यतीति वाच्यम्। अथातः शेषलक्षणमिति तृतीयाध्यायसूत्रवत् अथशब्दस्य अविभाजकत्वात्। संनिधिपाठरूपं स्थानं च वैकृतान्यङ्गानि यत्र प्राकृताङ्गाननुवादेन विहितानि तेषां विकृतौ विनियोजकम्। तेषां कैमर्थ्याकाङ्क्षायाः मूलसिद्धविकृत्यविकृतिप्रीतादेवतासंबन्धेन पूर्वसंबन्धेनैवोपशमात्। अनुष्ठानसादेश्यरूपं स्थानं तु पशुधर्माणामग्नीषोमीयार्थत्वं प्रयोजयति। औपवस्थ्येऽहनि अग्नीषोमीयः पशुरनुष्ठीयते तस्मिन्नेव दिने ते धर्माः पठ्यन्ते, अतस्तेषां कैमर्थ्याकाङ्क्षायामनुष्ठानसदेशत्वेन उपस्थितं पशुः पशुप्रीतदेवता च पशुदेवताप्रीतिरेव वा अपूर्वमेव भाव्यत्वेन संबध्यते इति। तत्रापि तथेति भाष्यं विवृण्वन्तः कर्त्रैक्ये प्रमाणाभावमाहुः आघारेत्यादि। षष्ठ्यन्तात्द्वतिः। 'आघारमाघारयति। ऊर्ध्वमाघारयति। ऋजुमाघारयति'। 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत'इति श्रुतयोरेवाङ्गीप्रयुक्ताङ्गत्ववदित्यर्थः। आघारइदमग्निहोत्राधिकरणे द्वितीयस्य द्वितीयपादे चिन्तितम्। दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति तु सोमद्रव्यस्य दर्शाङ्गतामनुवन्दर्शादिकालः सोमे विधीयत इति चतुर्थस्य तृतीये पादे 'उत्पत्तिकालविशये कालः स्याद्वाक्यस्य तत्प्रधानत्वात्'इत्यधिकरणे चिन्तितम्। पञ्चप्रयाजवदिति। द्वितीयस्य द्वितीयपादे दर्शपूर्णमासयोः श्रूयन्ते 'समिधो यजति,' 'तनूनपातं यजति,' 'इडो यजति,' 'बर्हिर्यजति,' 'स्वाहाकारं यजति,' इति पञ्चप्रयाजाः तेषां यजत्यभ्यासाद्भेद इति चिन्तितम्, तद्वदित्यर्थः। गोदोहनादिवदिति। चमसेनापः प्रणयेदिति दर्शपूर्णमासाङ्गमपां प्रणयनमाश्रित्य गोदोहनेन पशुकामस्येति विहितस्यापां प्रणयनेधिकृताधिकारकस्य गोदोहनस्येवेत्यर्थः। तदिदं चतुर्थे 'यस्मिन्प्रीतिः पुरुषस्य लिप्सार्थलक्षणाविभक्तत्वात्'इत्यधिकरणे चिन्तितमन्यैः। षड्यागवदिति। त एवं द्वितीयस्य द्वितीयपादे, 'प्रकरणं तु पौर्णमास्यां रूपावचनात्'इत्यधिकरणे चिन्तिता आग्नेयादयः षड्यागाः। 'य एवं विद्वान्पौर्णमासीं यजते य एवं विद्वानमावास्यां यजते' इत्याम्नातम्। तत्र यदाग्नेयोष्टाकपालोमावास्यायां च पौर्णमास्यां चाच्युतो भवतीति। तावन्नूतामग्नीषोमावाज्यस्य एवं तावुपांशू पौर्णमास्यां यजन्निति। ताभ्यामेकमग्नीषोमीयमेकादशकपालं पौर्णमासे प्रायच्छदिति। ऐन्द्रं दध्यमावास्यायामिति। ऐन्द्रं पयोमावास्यायामिति प्रकृताः षडनूद्यन्ते। तत्राप्याग्नेयोपांशुयाजाग्नीषोमीयाणां पौर्णमासीकालविहितानां सह प्रयोगः। एवमितरत्रापि। एतौ समुदायौ पौर्णमास्यमावास्यापदाभ्यामुपलक्ष्येते इति नानुवादकतानुपपत्तिः। तेषां सर्वेषां दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति वाक्येन फलसंबन्धः। तदिदं वाक्यं चैकादशे 'प्रयोजनाभिसंबन्धात्पृथक्सतां ततः स्यादैककर्म्यमेकशब्दाभिसंयोगात्'इत्यधिकरणे। अत्र श्रुतं फलं सतां यागानां पृथगुत्पन्नतया पृथगेव फलाभिसंबन्धात्प्रत्येकं संबध्यत इति पूर्वपक्षं संगृह्य दर्शपूर्णमासरूपैकशब्दाभिसंयोगा-

भाष्यप्रकाशः।

बोध्येत तादृशप्रमाणस्याप्यनुपलम्भात्। न च, विद्यां चाविद्यां च यस्तद् वेदोभयं सह,' 'सत्येन लभ्यस्तपसा ह्येष आत्मा' इत्यादिश्रुतिरेव क्रमे प्रमाणमिति वाच्यम्। समुच्चयमात्रबोधनेन चारितार्थ्यात्। किंच। धर्मो न यथाकथंचिज्ज्ञातो विद्यया समुच्चेयोऽपि तु निर्णीतस्वरूपः। निर्णयस्तु यथा कर्मस्वरूपविषयकः पूर्वतन्त्रात्, तथा कर्मशेषभूतपुरुषस्वरूपविषयकत्तदाराध्यभूतब्रह्मस्वरूपविषयकश्चोत्तरतन्त्रात्। अतोऽभ्यर्हितत्वात् पूर्वं वेदान्तविचारेण तदवगन्तव्यम्। नानावादैरात्मस्वरूपे ब्रह्मस्वरूपे च विप्रतिपन्ने वैदिकानां वेदवाक्यैरेव तन्निरासस्यावश्यकत्वात्। ज्ञाते तयोः स्वरूपे कर्मणि सुखेन प्रवृत्तिसंभवादिति। नचाध्ययनादिविधेः कर्मावबोधनसमर्थेषु पुरुषेषु चरितार्थत्वेन, शान्तो दान्त इत्यादिश्रुत्युक्तसाधनान्तरसापेक्षब्रह्मज्ञानोपायभूतशमाद्याक्षेपासामर्थ्यात् पूर्वं धर्मविचारस्यैव प्राप्तिरिति वाच्यम्। शान्तो दान्त इति श्रुतौ पश्येदितिपदाच्छमादीनां दर्शनसाधनत्वेन विचारे तदपेक्षाभावात्। प्रह्लादकव्यादिवदाबाल्यान्मुमुक्षाशमादिमत्सु तदप्रवृत्तौ तेषां विचारमात्राप्रसक्तेर्यथाकथंचित् प्रवृत्तौ वाऽभ्यर्हितस्यैव प्राप्त्या नियमभङ्गाच्च तदेतदुक्तम्।

रश्मिः।

दैककर्म्यं समुदितस्यैव फलमिति चिन्तितं तद्वदित्यर्थः। अत्र क्रियत इति व्युत्पत्त्या कर्मफलं ऐककर्म्यमेकफलत्वम्, क्वचित्तु सूत्रे पृथक्त्वं ततः स्यादिति पठ्यते। सत्तामिति न पठ्यते। नचेत्यादि। अविद्यां कर्मरूपमित्यर्थः। ज्ञानमेवेच्छां प्रयुञ्जानो यत्नं संपादयतीत्यालोच्याहुः किंचेति। कर्मशेषेत्यादि। एतच्च तृतीये 'द्रव्यगुणसंस्कारेषु बादरिः' इत्यधिकरणे चिन्तितम्। पूर्वमिति 'अभ्यर्हितं च'इति सूत्रेणेत्यर्थः। ननु मीमांसायाः न किमपि प्रयोजनं पश्यामः, आदिज्ञानस्यान्यत एव संभवादित्यत आहुः नानावादैरिति। विप्रतिपन्न इति विविधप्रकारैर्ज्ञात इत्यर्थः। वेदवाक्यैरिति वेदवेदान्तवाक्यैः विचारविषयैः मीमांसासूत्रविषयवाक्यैरित्यर्थः। तन्निरासस्येति विप्रतिपत्तिगतसंशयनिरासस्यापि। प्रवृत्तीति, इच्छाद्वारा प्रवृत्तिसंभवात्, जानाति इच्छति यतत इति नैयायिकप्रवादात्। दृष्टानुवादिनीं 'शान्तो दान्तउपरतस्तितिक्षुश्रद्धान्वितो भूत्वात्मन्येवात्मानं पश्येत्' इति श्रुतिमनुरुध्य विपर्ययाभावशङ्का तामपाकुर्वते न चाध्ययनेत्यादि। पूर्वं धर्मविचारस्यैवेति। वैधत्वादिति भावः, अन्यथा श्रुतिविरोध इति भावः। विचारितधर्मेण विशेषचित्तशुद्धिः शमदमादिकारणम्। तदपेक्षाभावादिति शमाद्युपेतत्वेपि दर्शनानपेक्षत्वादित्यर्थः। तेन शमदमाद्युपेतसूत्र(श्रुत्यविरोधात्)विरोधः। तथा च श्रुतिविरोधाद्वेदविचारविधिस्तदन्तेपि प्रवर्तते, न तु विध्यन्तरमादरणीयं संभवेपीत्याशयः। तदप्रवृत्ताविति। शान्त्यादिकमुत्पाद्य आत्मानं पश्येदिति श्रुतिस्फूर्तेः शान्त्याद्युत्पादनाय विध्यप्रवृत्ताविलर्थः। सत्तामात्रमवलत्यर्थादेव पूर्वोक्तनिरस्तिं मन्यमाना आहुः यथाकथंचिदिति। भक्तिमार्गीयाणां स्वत एव शमादिसत्त्वेन वैधशमादिसत्तामात्रं भवत्यर्थाद्भक्तिमार्गीयाणां शमादिविधिप्रवृत्तौ। नियमभङ्गाच्चेति। धर्मब्रह्ममीमांसयोः पूर्वापरीभावनियमभङ्गाच्चेत्यर्थः। तदेतदुक्तमिति। तथा हि न तावद्धर्मविचारानन्तर्यम्, विपर्ययसंभवादिति भाष्येणेत्यर्थः। तत्रापि तथा

**नच पाठतो नियमः । तत्रापि तथा । नचाऽऽचारात् व्यवस्था । तत्राप्यनियमसंभवात् । प्रत्यवायाश्रवणात् । संभवेपि न वक्तव्यत्वमध्ययनवत् । तथाच ततोऽन्याकाङ्क्षा भवेत् । नच वैराग्यशमदमादिः पूर्वसिद्धः ।**

---

भाष्यप्रकाशः ।

ननु पूर्वं धर्मकाण्डं पठ्यते, अनन्तरं ज्ञानकाण्डमिति पाठस्य क्रमनियामकत्वमस्त्विति चेत् तत्राहुः नचेत्यादि । पाठक्रमे विद्यमानेऽपि पूर्वकाण्डं न सर्वैरादित आरभ्य पठ्यते । अपि तु यतःकुतश्चित् । अतोऽवान्तरकाण्डक्रमानियमवज्ज्ञानकाण्डक्रमानियमस्यापि शक्यवचनत्वात् तत्रापि तथेत्यर्थः । ननु पाठः शिष्टाचारादनियतोऽस्तु, न तु विचारोऽपीत्यत आहुः नचाचारेत्यादि । प्रत्यवायाश्रवणस्योभयत्र तौल्यात् तथेत्यर्थः । ननु धर्मस्य ब्रह्मबोधहेतुत्वात् तद्विचारोपयुक्तानां श्रुतिलिङ्गादीनां वेदचोदनार्थवादस्मृत्यादिप्रामाण्यप्रतिपादनानां ब्रह्मविचारोपयुक्तत्वाच धर्मविचारानन्तर्यं ब्रह्मविचारस्य नियमेन संभवतीति चेत् तत्राहुः संभवेपीत्यादि । स्फुटार्थमेतत् ।

ननु तर्हि, नित्यानित्यवस्तुविवेकः, ऐहिकामुष्मिकभोगविरागः, शमदमादिसाधनसंपन्मुमुक्षुत्वं चेति शंकराचार्योक्तं साधनचतुष्टयानन्तर्यमाद्रियतामित्याशङ्कायां, भास्कराचार्यैर्यद्यपि शमदमादयोऽन्तःकरणधर्माः पूर्वं न प्रकृताः स्वशब्देन चानिर्दिष्टा इति सूत्रकारस्य न विवक्षिता इत्येव दूषणं दत्तम् । रामानुजाचार्यैश्चैषां पूर्वमीमांसोक्तकर्मफलकरणेतिकर्तव्यताधिकारिविशेषानिश्चयानन्तरभावितदनित्यत्वज्ञानाऽऽत्मनित्यत्वज्ञानाधीनतया शास्त्रद्वयविचारोत्तरभावित्वं दूषणमुक्तम् । तथापि तन्न तथा स्फुटमिति प्रकारान्तरेण दूषणमाहुः नचेत्यादि । तदानन्तर्यं तदा

रश्मिः ।

इत्यादि भाष्यं विवृण्वन्ति स्म ननु पूर्वमिति । तत्रापि तथेत्यर्थ इति पाठतो नियमेपि विपर्ययसंभवादित्यर्थः । तेन तत्रापि तथेति भाष्यमपि विवृतम् । उभयत्रेति पाठे विचारे चेत्यर्थः । ब्रह्मविचारेति । यथानिरपेक्षो रवः श्रुतिः साच 'अथातो ब्रह्मजिज्ञासा' इत्यत्र विग्रहदशायां ब्रह्मण इति शेषषष्ठीश्रुत्या ब्रह्मसंबन्धिनां जिज्ञासार्थत्वमिति विनियोगः । 'आकाशस्तल्लिङ्गात्' इत्यत्र लिङ्गं, 'वाक्यान्वयात्'इत्यत्र वाक्यं, 'प्रकरणाच्च' इत्यत्र प्रकरणं, देशकालौ प्रकरणमिति निबन्धकारिकाविरोधेन, स्थानं द्रष्टव्यं, 'स्वपीति इत्याचक्षते स्वमपीतो भवति'इति अत्र अतिदेशसामान्यरूपात्स्थानात् स्वमित्यस्य स्वमपीतोऽर्थः, न तु स्वापनिमित्तकारणरूपकर्तेत्यर्थः । समाख्या यौगिकश्च शब्दः सापि 'अथातो ब्रह्मजिज्ञासा' इत्यत्र बृहत्त्वात् बृंहणत्वाच्च ब्रह्मेति योगात् यौगिकः शब्दः । स्ववाक्यस्वरूपलक्षणोक्तपदार्थानां ब्रह्मणश्च संनिधिं कल्पयति संनिहितयोः परस्पराकाङ्क्षयोरेकवाक्यत्वं प्रकल्प्य सामर्थ्यं चालोच्य ब्रह्मणा सत्यादिपदानां सामानाधिकरण्यं कुर्यादिति श्रुतिकल्पनेन ब्रह्मयौगिकार्थस्य तत्पदार्थैक्यं बोधयति । स्फुटेति अनन्यलभ्यस्य शब्दार्थत्वात् । अत्र अथशब्दार्थत्वेन वक्तव्यधर्मस्याक्षेपलभ्यत्वादित्येवं स्फुटार्थम् । भाष्ये । तथा च ततोपीत्यादि आक्षेपलभ्यत्वे च तं श्रुतिलिङ्गादिकमानन्तर्यनिरूपकमुपलभ्याप्यधिकाकाङ्क्षा भवेदित्यर्थः । प्रकृते । स्वशब्देन चेति शमादिवाचकशब्देन चेत्यर्थः । पूर्वमीमांसेत्यादि पूर्वमीमांसोक्ताः कर्म च फलं च करणं चेतिकर्तव्यता चाधिकारिविशेषश्चैतेषां निश्चयानन्तरभाविनी यद्

**तेषामेवाभावात्। न च यदैव संभवस्तदैव तत् कर्तव्यमिति वाच्यम्। तदसंभवापत्तेः। तथाहि। ब्रह्मणः परमपुरुषार्थत्वे ज्ञाते तज्ज्ञानस्यैव साधनत्वेऽवगते तच्छेषत्वे च यागादीनामवगते तदर्थकर्मकरणे चित्तशुद्धौ सत्यां वैराग्यादि। इदं च वेदान्तविचारव्यतिरेकेण न भवतीत्यन्योन्याश्रयः।**

---

भाष्यप्रकाशः।

युज्येत 'यदि तत्सत्ता पूर्वं स्यात्। सा त्वतिदुर्लभा। न हि नित्यानित्यवस्तुविवेकमन्तरेणेहामुत्रार्थभोगात् पुरुषो विरज्यते। न वा सांख्यदर्शनात्यन्ताभ्यासतदुदितसाधनाद्यन्तरेण तादृशविवेक उदेत्युदिते वा सर्वः शाम्यति दाम्यति वा। दुर्वासःप्रभृतिष्वपि तदभावस्य स्मरणात्। कथंचित् किंचित् कस्यचित् कदाचित् संभवेऽपि न सर्वसाधनानि तथा। तदेतदुक्तं, **तेषामेवाभावादिति**। तथाच समुदितसाधनचतुष्टयसंपदत्यन्तदुर्लभेति तदानन्तर्यमत्र न शक्यवचनमित्यर्थः। सांख्याद्यभ्यासाभावेऽपि लौकिकदुःखादिना विरज्यमाना दृश्यन्ते। किंचित्कामनयापि शाम्यन्ति दाम्यन्ति चेत्युक्तविवेकरहितवैराग्याद्यानन्तर्यमप्यत्र न युक्तम्। तदपायस्य भूयोदर्शनादित्याशयेन वैराग्यादीनामेव ग्रहणम्। ननु केषांचित् पूर्वं वैराग्याद्यभावेऽपि पश्चात् तानि दृश्यन्त इति तदानन्तर्यादरणे को दोष इत्यत आहुः **न च यदैवेत्यादि**। **तदसंभवापत्तेरिति** वैराग्यादेर्विचारस्य चासंभवापत्तेरित्यर्थः। कथमिदमित्याकाङ्क्षायामेतदेव विभजन्ते **तथाहीत्यादि**। दर्शनान्तराभिमानिनां ज्ञानकर्मसमुच्चयवादात् तत्तदुक्तज्ञानानां च भिन्नविधत्वात् तत्तदभिमतरीत्या साधनीभूतयागाद्यनुष्ठाने विवक्षितविचारोपयोगिचित्तशुद्ध्यभावात्

रश्मिः।

आत्मातिरिक्तानित्यत्वज्ञानात्मनित्यत्वज्ञाने तदधीनतयेत्यर्थः। **कथंचिदिति** ज्योतिषपञ्चाङ्गादिप्रकारेण। **कस्यचिदिति**। नित्यानित्यवस्तुविवेकादौ यस्यकस्यचित्। **कदाचिदिति** अस्मदादिर्दृष्टान्तः। **तथेति** सर्वत्वेन प्रकारेण संभवन्तीत्यर्थः। नन्वाशङ्काभाष्ये न च नित्यानित्यवस्तुविवेकवैराग्यशमदमादिरिति वक्तुं युक्तम्, प्रथमत्यागे मानाभावादित्याकाङ्क्षायामभूतपूर्वोक्तविवेकवैराग्यादिरपि नानन्तर्यनिरूपक इति बोधयितुं तयोपन्यास इत्याहुः **सांख्याद्यभ्यासेत्यादि**। **कामनयेति** शमजन्यफलकामनया, दमजन्यफलकामनया च। **भूयो दर्शनादिति**। अस्मदादिर्दृष्टान्तः। **तानीति** वैराग्यादीनीत्यर्थः। **असंभवेति** अन्योन्याश्रयस्य द्विनिष्ठत्वात् द्वयस्यासंभव उक्तविकल्पेन। **इदमिति** पूर्वोक्तम्। **एतदिति** समीपतरवर्तिभाष्यम्। **विभजन्ते** व्याकुर्वते। धर्मविचारस्य ब्रह्मशब्दसूचितस्य भाष्ये विचारात् समुच्चये स्फुरिते तेन सहैवाहुः **दर्शनेति**। **भिन्नविधत्वादिति**। स्मृत्यात्मकं ज्ञानं भक्तिरूपं साधनमिति रामानुजाचार्यमतम्। मध्वमते ज्ञानं भक्त्यात्मकम्। नैयायिकैस्तु 'द्रव्यगुणकर्मसामान्यविशेषसमवायानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानं निःश्रेयसहेतुः तच्चेश्वरनोदनाभिव्यक्ताद्धर्मादेवेत्युच्यत' इति भिन्नविधत्वादित्यर्थः। **साधनीभूतेत्यादि**। अयमर्थः। चित्तशुद्धिकारणता यागादेर्न सामान्यरूपेण, तथा सति विलक्षणचित्तशुद्ध्यनुत्पत्तिप्रसङ्गोपि तु तृणारणिमणिन्यायेन तत्तच्चित्तशुद्धिजनकत्वरूपेणेति तत्तन्मतीयविचारोपयोगिचित्तशुद्ध्युदयात् सिद्धान्तविचारोपयोगिचित्तशुद्ध्यभावादिति। एवमेव विचारचित्तशुद्ध्योरपि कार्यकारणभावः। **विवक्षितेति**। 'यदेकमव्यक्तमनन्त-

निर्धारिते तु वेदान्ते विचारो व्यर्थ एव । नच साक्षात्कारस्तत्फलम् । तस्य शब्दशेषत्वेन तत्कल्पनायां प्रमाणाभावात् । 'दशमस्त्वमसि' इत्यादौ प्रत्यक्ष-

भाष्यप्रकाशः ।

ब्रह्मणः परमपुरुषार्थत्वज्ञानार्थं, ज्ञानस्य केवलस्यैव साधनत्वज्ञानं चावश्यकमिति तदर्थं चैकदेशिना वेदान्तविचारः पूर्वं मृग्यः । तथा सत्युक्तरीत्या तत्करणमिति चक्रकान्योन्याश्रय इति तदसंभवापत्तिरित्यर्थः । नन्वध्ययनदशायां गुरुमुखात् साधनान्तराद्वा वेदान्तार्थे निर्धारिते सुखेन तत्संभवाच्चान्योन्याश्रय इति शङ्कायां दूषणान्तरमाहुः निर्धारित इत्यादि । विचारो ह्यर्थनिर्धारार्थः अर्थनिर्धारश्च वैराग्यादिप्रयोजकतया यदि पूर्वमभ्युपेतस्तदा फले जाते निःप्रयोजनत्वान्निःसंदिग्धविषयत्वाच्च स व्यर्थ इत्यर्थः । एवकारेण तदर्थकप्रवृत्तिविघातोपि संगृह्यते । नन्वर्थे निर्धारितेऽपि न विचारवैफल्यं, तस्यात्मसाक्षात्कारार्थत्वादित्यत आहुः न चेत्यादि । विचारस्यार्थज्ञानजनकतया शब्दाङ्गत्वेन तदुपकारकत्वस्यैव प्रत्यक्षसिद्धत्वेन तस्यात्मसाक्षात्कारफलकत्वकल्पनायां प्रमाणाभावादित्यर्थः । ननु दशमस्त्वमसीत्यादेः शब्दादपि दशमोऽहमित्याकारकात्मसाक्षात्काररूपं फलं विचारद्वारा दृश्यत इति तथा कल्पनायां दृष्टमेव प्रमाणमस्तीति कथं प्रमाणाभाव इत्याकाङ्क्षायां दृष्टान्तवैषम्यं स्फुटीकुर्वन्ति दशम इत्यादि । अयमर्थः । उक्तवाक्यदृष्टान्तेन विचारद्वारा आत्मसाक्षात्कारः कस्यापाद्यते । किं देहविशिष्टात्मवेदिनो वा देहात्मवेदिनो वा । तादृशस्यापि चक्षुष्मतोऽन्धस्य वा विविक्तात्मवेदिनो वा । तत्र नाद्यः । व्यामुग्धादिषु परेण बोध्यमानस्य दशमत्वस्य बाह्यत्वेन तद्विशिष्टस्य बाह्यस्यैव देहादेस्तथात्वसिद्ध्योक्तरीत्या तस्य ज्ञानस्यात्मविषयकत्वाभावात् । अत एव न द्वितीयः । अन्धस्येतराऽज्ञा-

रश्मिः ।

रूपम्'इति श्रुतेस्तत्तन्मार्गीयज्ञानानामनन्तरूपान्तर्गतत्वे तस्य मार्गाप्रविष्टस्यानन्तरूपान्तररूपान्तराविघटकतया स्वात्मप्रविष्टविवक्षितविचारेत्यादिः । एकदेशिनेति । उक्तार्थमेतत् । चक्रकान्योन्याश्रय इति । वेदान्तविचारेण साक्षात् वैराग्याद्याश्रीयते, वैराग्यादिभिस्तु साक्षात् परंपरयेति चक्रकम् । तौल्ये त्वन्योन्याश्रय इति भावः । भाष्ये तु विशेषो नाभ्युपगत इति बोध्यम् । साधनान्तराद्वेति तपआदिरूपात् व्याकरणादिरूपाद्वा तस्मादित्यर्थः । तस्यात्मसाक्षात्कारार्थत्वादिति । 'तत्त्वमसि'आदिवाक्यस्य ब्रह्मविचारस्य वा 'अहं ब्रह्मास्मि'इत्याकारकसाक्षात्कारफलकत्वादित्यर्थः । इत्यत आहुरिति इतीदमाशङ्क्य प्रतिविधानमाहुरित्यर्थः । आशङ्काभाष्यस्याभास एव विवृतत्वात् तस्येत्यादिप्रतिविधानभाष्यं विवृण्वन्ति विचारस्येत्यादि । शब्दाङ्गत्वेनेति । आकाङ्क्षायोग्यतासंनिधिवत् । 'अविचारिताश्च शब्दा नार्थं प्रत्यायन्ति' इति भाष्यात् । दशमेति । दशम इति वक्तव्ये दशमेति प्रतीकमुभयसाधुतायै । दृष्टमिति साक्षात् कारणत्वेन दृष्टं शब्दरूपम् । तत्र नाद्य इति । चक्षुष्मतो देहविशिष्टात्मवेदिनो देहात्मवेदिनो वापाद्यत इति न वक्तुं शक्यमित्यर्थः । व्यामुग्धादिष्विति । कस्तावदस्मासु दशम इत्येवं तथाभूतेष्वित्यर्थः । बाह्यत्वेनेति चाक्षुषत्वात् तथात्वेनेत्यर्थः । उक्तरीत्येति भाष्योक्तरीत्येत्यर्थः । तर्हि चक्षुष्मतो देहस्य प्रत्यक्षीकरणादस्तु तज्ज्ञानस्यात्माविषयकत्वम्, अन्धेन तु तथा करणात् तज्ज्ञानस्यात्मविषयकत्वं दुर्वारमित्यत आहुः अत एवेति । दशमत्वस्य चाक्षुषत्वेन बाह्यत्वादेवान्धस्य देहविशिष्टात्मवेदिनो देहात्मवेदिनो वापाद्यत इत्यपि न वक्तुं शक्यमित्यर्थः । अन्धस्येत्यादि । नवान्यान् पश्यत एव स्वस्मिन् दशमत्वबुद्धिरिति भावः ।

**सामग्र्या बलवत्त्वात् देहादेः प्रत्यक्षत्वात् स्वदेहमपि पश्यन् दशमोऽहमिति मन्यते। न तथा प्रकृते। मनननिदिध्यासनविधीनामानर्थक्यप्रसङ्गात्।**

---

भाष्यप्रकाशः।

नात्। तस्य प्रज्ञाचक्षुष्ट्वेन तया ज्ञायमानस्यापि चाक्षुषकल्पत्वाच्च न तृतीयः। तस्यात्मविस्मृत्यभावेन तत्र शब्दस्याऽकारणत्वात्। न च पूर्वविकल्पोक्तानामात्मनिष्ठमान्तरमेव दशमत्वं शब्दाद् भासत इति वाच्यम्। दशमत्वस्य वक्रपेक्षाबुद्धिजन्यत्वेन तस्यां च बुद्धौ संख्याघटकानां परात्मनां भानाभावेन स्वस्यापि दशमत्वाभानप्रसङ्गात्। अतो नवमत्वादिवद् दशमत्वस्यापि बाह्यत्वमेव। कृशोऽहमितिवद् दशमोऽहमितिप्रत्यग्विरस्यापि देहस्यैव वेद्यत्वाच्च। प्रकृते विचारे तु वेदान्तवाक्यैर्ब्रह्मत्वेनात्मसाक्षात्कारस्य तवाभिप्रेतत्वेन न तथा धर्मधर्मिणोरुभयोरप्यान्तरत्वाच्च दृष्टान्तसाम्यम्। न हि समीपवर्तिभिरिन्द्रियैरग्राह्य आत्मा तद्ग्राह्येण बाह्येन शब्दप्रमाणेन ग्राहयितुं

रश्मिः।

ननु स्पर्शेनानुमानेन वा नवान्यान् ज्ञास्यतीति, तत्राहुः तस्येत्यादि। प्रज्ञा लिङ्गपरामर्शो व्याप्तिज्ञानं वा। **चाक्षुषकल्पत्वाच्चेति**। त्वाचत्वेनानुमितित्वेन च त्वदिष्टाभावादीषदूनचाक्षुषत्वादित्यर्थः। अन्यथान्धस्य पुरोवस्थितो घटोऽस्तीति शब्दात् घटसाक्षात्कारापत्तिः। शब्दस्य कारणत्वे ततः पूर्वमात्मविस्मृतिः स्यादिति शब्दो न कारणमित्याहुः तस्यात्मेत्यादि। अभ्युपगमवादेनाशङ्कां निषेधन्ति **न च पूर्वेत्यादि**। चक्षुष्मतो देहविशिष्टात्मवेदिनोऽन्धस्य तथावेदिनो विविक्तात्मवेदिनश्चेत्यर्थः। **भानाभावेनेति**। परमनोव्यावृत्तमनस एवात्मप्रत्यक्षजनकत्वोपगमात् तथेत्यर्थः। **देहस्यैवेति**। ननु नापेक्षाबुद्धेः सजातीयविषयत्वनियम इति चेत्, तत्राहुः **कृशोऽहमित्यादि**। अन्यथात्मनो दशमत्वकृशत्वाद्यापत्तिरिति भावः। तेन दशमादेरहमो विशेषणत्वादस्मच्छब्दवाच्यात्मन एव दशमत्वमित्यपि निरस्तम्। **न तथा प्रकृत** इति भाष्यं विवृण्वन्ति **प्रकृत** इत्यादि। विषयत्वेन प्रकृते वेदान्तीये 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यः' इति श्रुतावतिप्रविष्टे च विचारे वाक्यैः'आत्मा वा अरे' इति 'दशमस्त्वमसि'इत्यादिभिरित्यर्थः। **न तथेति** भाष्यानुवादं वर्णयन्ति **धर्मधर्मिणोरिति** ब्रह्मत्वात्मनोरित्यर्थः। **तद्ग्राह्येणेति** श्रोत्रग्राह्येणेत्यर्थः। अत्र **भाष्ये। प्रत्यक्षसामग्र्या इति**। अयमर्थः। अत्र दशमोऽहमिति प्रतीतौ शब्दसामग्र्याः प्रत्यक्षसामग्र्याश्च सत्त्वेपि शब्दसामग्र्यैव प्रत्यक्षं किं न स्यात्। शब्दात् प्रत्येमीत्यनुव्यवसायात् न भविष्यति। घटं पश्यन् घटशब्दं शृण्वन् घटं पश्यामीत्यनुव्यवसायं प्राप्नोतीति सार्वजनीनम्। तथा च प्रत्यक्षसामग्रीं शब्दसामग्रीः प्रतिबध्नातीति मन्तव्यम्। यथा समाने विषये एकदा लौकिकप्रत्यक्षसामग्रीसत्त्वेऽनुमितिसामग्रीसत्त्वे लौकिकप्रत्यक्षमेवोत्पद्यते। तदनन्तरं साक्षात्करोमीत्यनुव्यवसायात्। अतः समानविषयेऽनुमितिं प्रति लौकिकप्रत्यक्षसामग्र्याः प्रतिबन्धकता। समानविषयत्वं च पर्वतोद्देश्यकसंयोगसंसर्गकवह्निविधेयकानुमितिं प्रति पर्वतोद्देश्यकसंयोगसंसर्गकवह्निप्रकारकलौकिकप्रत्यक्षसामग्रीत्वेन प्रतिबन्धकत्वम्। स्फुटमेतत् सामग्रीवादे। तथा च दशमः क इति संदिहानेषु दशमोऽहमिति पश्यत्सु दशमत्वानवच्छिन्नदेहमात्रं पश्यत्सु दशमस्त्वमसीति शब्दसामग्री प्रतिबध्यते। एवं च शब्दसामग्रीत्वेन समानविषयकप्रत्यक्षसामग्रीत्वेन प्रतिबध्यप्रतिबन्धकभावात् प्रत्यक्षसामग्र्या बलवत्त्वादिति। शब्दात् प्रत्येमीत्यध्यवसायस्तु भ्रमः। व्यामुग्धेषु दशमस्त्वमित्यस्य शब्दस्य दशमत्वसंदेहवारकत्वेन दशमत्वांशेपि चाक्षुषसं-

**न चाधिकारिभेदः कल्पनीयः । शब्दज्ञाने तत्कल्पनायां प्रमाणाभावात् ।**

भाष्यप्रकाशः ।

शक्यते । अथ दर्शनाव्यवधानेन श्रवणस्य विधानाच्छक्यत इत्युच्यते तदा मनननिदिध्यासनविधिवैयर्थ्यम् । तथाच दृष्टान्तवैषम्यान्मनननिदिध्यासनविधिविरोधाच्चात्मसाक्षात्कारस्य न श्रवणफलत्वं विचारफलत्वं वा वक्तुं शक्यमित्यर्थः । ननु मुख्याधिकारिणः शब्दादपरोक्षं भवति, न तु मन्दादेरिति तादृशेषु मननाद्युपयोगाच्च तद्विध्यानर्थक्यमिति चेत्तत्राहुः न चेत्यादि । शब्दजन्ये ज्ञानेऽधिकारिभेदस्तदा कल्प्यो यदि स विधिवैयर्थ्यं समादध्यात् । न तु तथा । मन्दस्य पदशक्त्यादिज्ञानशून्यतया मननाद्यसामर्थ्येन, मध्यमस्य च विदितपदपदार्थसंसर्गतयाऽऽकाङ्क्षादिबलेन दशमादिवदपरोक्षभवनसौकर्ये मननाद्यनुपयोगेन ताभ्यां तदसमाधानात् । तत्कल्पनायां श्रुतार्थापत्तिरूपप्रमाणाभावादित्यर्थः । ननु विदितपदपदार्थसंसर्गस्यापि वाक्यतात्पर्याज्ञाने दशमादि-

रश्मिः ।

श्रयात् । ननु 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुत्यनुकूलं शाब्दापरोक्षमित्येवमाशङ्कामुखेन मननेत्यादिभाष्यमवतारयन्ति अथ दर्शनेत्यादि । शक्यत इति शब्दादपरोक्षं शक्यते । आशङ्काप्रतिविधानभाष्यं विवृण्वन्ति नन्वित्यादि । तादृशेष्विति भिन्नाधिकारिष्वित्यर्थः । न चेत्यादीति । न चाधिकारिभेदः कल्पनीय इत्यादिर्यस्येत्यतद्गुणसंविज्ञानो बहुव्रीहिः । समाधानभाष्यं व्याकुर्वन्ति शब्दजन्य इत्यादि । न तु तथेति । अधिकारिभेदो विधिवैयर्थ्यं तु न समादधातीत्यर्थः । ताभ्यामिति मन्दमध्यमाभ्याम् । मननादिविध्यानर्थक्यासमाधानादित्यर्थः । श्रुतार्थापत्तिरूपेति । प्रत्यक्षेण शब्देन वा प्रमितस्यार्थस्यार्थान्तरमन्तरेणानुपपद्यमानस्योपपत्तयेऽर्थान्तरकल्पनमर्थापत्तिः । सा च प्रमाणान्तरमिति मीमांसकाः । लाघवादनुमानमिति नैयायिकाः । अर्थान्तरकल्पनया समाधेयत्वेनोच्यमानस्य प्रमाणसिद्धस्यार्थस्य मिथः प्रतिघातरूपान्यथानुपपत्तिस्तत्र कारणम् । तात्पर्यवृत्तावन्तर्भाव इति मम प्रतिभाति । जीवन्देवदत्तो गृहे नास्तीत्यस्य बहिःसत्त्वप्रतीतीच्छयोच्चारितत्वाद् गृहाधिकरणको जीवनविशिष्टबहिःस्थितदेवदत्तप्रतियोगिको भाव इति सुखेन बोधात् । अथवा । गृहाधिकरणकजीवनविशिष्टबहिःस्थितदेवदत्तनिष्ठा सत्ता तत्प्रतियोगिको भावस्तन्निष्ठा सेति बोधः । एवं पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्राप्यदृष्टार्थानुपपत्तावपि पीन इत्यस्य नक्तं भोजनानुषङ्गकपीनत्वे तात्पर्यात् न दोष इति । तस्मादन्यथानुपपत्तावर्थापत्त्यां निवृत्तायां प्रमितयोः संसृष्टबुद्धिः प्रमेयप्रमारूपा भवतीति ज्ञेयम् ।

तथा च 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यत्र प्रमाणसिद्धस्य आत्मा वा अरे द्रष्टव्यः श्रोतव्यः इति अंशस्यार्थान्तरकल्पनया समाधेयत्वेन उच्यमानस्य मन्तव्यो निदिध्यासितव्य इत्यस्यांशस्य च मिथः शेषशेषिभावे प्रतिघातः, श्रवणेनैवात्मदर्शनात् । इत्थमन्यथाऽनुपपत्तावर्थापत्तिकारणभूतायां प्राप्तायामत्र मन्तव्यो निदिध्यासितव्य इतिशब्देन प्रमितस्य मनननिदिध्यासनरूपस्यार्थस्य भिन्नाधिकारिरूपार्थान्तरमन्तरेणानुपपद्यमानस्योपपत्तये भिन्नाधिकारि-

१. जीवनसंसृष्टत्वगृहाधिकरणकाभावयोर्मिथः प्रतिघातः । २. दर्शनस्य न श्रवणशेषित्वं शाब्दाऽपरोक्षाप्राप्तेः, किंतु प्रेमशेषित्वं प्रेम्णा दर्शनमिति । ३. मननस्य मीमांसारूपस्य न निदिध्यासनशेषित्वं किंतु अन्यथाभावनाविपरीतभावनानिवर्तकत्वात् तच्छेषित्वम् ।

अत्यन्तासत्यप्यर्थे शब्दस्य ज्ञानजननात् प्रमाणसंकरापत्तिश्च।

---

भाष्यप्रकाशः।

वाक्यादप्यपरोक्षादर्शनान्मननादिना तज्ज्ञाने च तद्दर्शनात् तात्पर्यज्ञानशून्येनाधिकारिणा तत्समाधातुं शक्यत एवेति कथं प्रमाणाभाव इत्यत आहुः अत्यन्तेत्यादि। शब्दस्येति षष्ठ्या करणत्वं बोध्यते। तथाच खपुष्पं सुरभीत्युक्तेऽत्यन्तासतोऽपि ज्ञानं जायते। एवं गुर्वादिनोक्तवेदान्तवाक्ये अगोचरस्याप्यात्मनस्त्वदभिमतं ज्ञानं भविष्यतीत्युक्तविधिवैयर्थ्यं दुर्वारमतः प्रमाणाभाव इत्यर्थः। ननु विधिबलादेव ज्ञायते सर्वेषां न भवतीत्यतो न तदभाव इत्यत आहुः प्रमाणेत्यादि। संकरो मर्यादाभङ्गेन जायमानं कार्यम्। यथा वर्णसंकर इति। तथाच तत्र यथा न वर्णत्वमेवमत्रापि दशमस्त्वमसीतिवाक्यस्य युष्मत्पदस्मारितपदार्थोल्लङ्घनेनासत्पदार्थविषयकज्ञानजनने तस्य ज्ञानस्य प्रमाणत्वं न स्यादिति तादृशज्ञानोपपादनप्रयासवैफल्यम्। किंचैवं भग्नायां प्रमाणमर्यादायां तं

रश्मिः।

कल्पनम्। तेन दर्शनमननादिरूपयोः प्रमितयोः शेषशेषिभावेन संसृष्टबुद्धिरिति समन्वयः। सेयमधिकारिणि मननादिविध्यानर्थक्यस्य परिहर्त्र्येव भवति तादृशस्य तु प्रकृतेऽलाभाच्छ्रुतार्थापत्तिरूपप्रमाणाभावादित्यर्थः। तज्ज्ञान इति तात्पर्यज्ञाने चापरोक्षदर्शनादित्यर्थः। तदिति विध्यानर्थक्यमित्यर्थः। शब्दस्य ज्ञानजननादिति पाठं मत्वा आहुः षष्ठ्येत्यादि। फलानां तृप्त इति दृष्टान्तः। ज्ञानं जायत इति। अत्रैवं ज्ञेयम्। वाक्यं च सिद्धार्थं साध्यार्थं च, यद्यपि सर्वमेव वाक्यं सिद्धार्थं भवति। भावित्वभूतत्वयोर्धर्मत्वेन निराश्रयत्वासंभवाद्वर्तमानकाले भाविभूतयोर्वस्तुनोः सत्ता स्वीकार्येति। न च कालस्तदाश्रयो भवतीति शङ्क्यम्। भावी कालो भूतः कालः इति प्रतीत्यापत्तेरित्यादिकं स्थितं विद्वन्मण्डने। तथापि कारणकलापनिष्पाद्यव्यवहारनिबन्धनोयं साध्यत्वव्यवहार इति। वाक्ये द्वैविध्यम्। तत्र सिद्धार्थस्य वाक्यस्य संनिकृष्टे विषये प्रत्यक्षसहकारित्वात् प्रत्यक्षहेतुत्वमेव। विप्रकृष्टविषये तु तदानींतनार्थसत्तायाः संदिग्धत्वेन संभावनात्मकस्यैव ज्ञानस्य शब्दत्वेन संदिग्धमेव प्रामाण्यम्। बालादिवाक्येपि तथा। प्रतारकवाक्ये तु श्रोतुर्विश्वासजाड्यं प्रामाण्यबुद्ध्युत्पादकं न तु शब्दः। वक्तुरनाप्तत्वेन तत्र शब्दत्वविरहात्। भ्रान्तः सन् प्रतारको यद्वाक्यं प्रयुङ्क्ते तत्र तथा। प्रवृत्तिसामर्थ्ये तु वक्तृप्रतारकत्वबुद्ध्यभावहेतुका प्रामाण्यधीः प्रमेयबलेन श्रोतुर्जायत इति विश्वासजाड्यकृतत्वं तत्रेति। तस्य प्रतारकत्वज्ञानानन्तरं तु या प्रवृत्तिः सापि न शब्दकालाभ्यां किंतु अननुगतादेव कारणविशेषादिति न सापि प्रामाण्यावेदिका। भ्रान्तवाक्यस्य तु शब्दत्वेऽपि न तज्जन्यं ज्ञानं प्रमाणं, वक्तृदोषात्। अतः सिद्धार्थानि वाक्यानि गौणमेव प्रामाण्यं बिभ्रति। साध्यार्थे तु वाक्यार्थो बुद्धिपरिकल्पितः। संसर्गिण्याः क्रियायास्तदानीमभावेन तत्संसर्गस्याप्यभावात्। तस्माद्वक्तुर्दृष्टार्थवादित्वाभावेन तद्वाक्यस्याप्रामाण्यं यद्यपि तथापि प्रवृत्तिसामर्थ्यात् प्रमेयबलेनैव प्रामाण्यमिति। अत एव 'अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि' इति अभियुक्तोक्तिः। प्रमाणत्वं न स्यादिति। शाब्दबोधे पदजन्यपदार्थोपस्थितेः तन्त्रत्वादितिभावः। न च तत्र विपरीतलक्षणयैवोपस्थितिरिति वाच्यम्। यथा

'उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम्।
विदधदीदृशमेव सदा सखे! सुखितमास्स्व ततः शरदां शतम्'॥

मनसा तज्जननेऽपि तथा । तस्मात् प्रथमं शाब्दमेव ज्ञानमिति मन्तव्यम्, अनुभवसिद्धत्वात् । इदानीन्तनानामपि शमादिरहितानां निर्विचिकित्सितवेदार्थज्ञानोपलब्धेः । संन्यासानुपपत्तिश्च ।

भाष्यप्रकाशः ।

घटमानयेत्यत्रापि वाक्यार्थज्ञानं प्रत्यक्षं स्यात् । आत्मन इव घटस्यापि पूर्वमनुभूतत्वात् । चीत्कारेण गजानुमितिरपि न स्यात् । यद्वा, प्रमाणे ज्ञानेऽनुव्यवसीयमानयोः प्रत्यक्षत्वपरोक्षत्वयोर्जातित्वबाधकसंकरापत्तिः स्यात् । नचेष्टापत्तिः । व्यवहारे भट्टनयमुपगच्छतस्तथा वक्तुमयुक्तत्वात् । भारत आजगरेऽपि,

'जातिरत्र महासर्प मनुष्यत्वे महामते ।
संकरात् सर्ववर्णानां दुष्परीक्ष्येति मे मतिः' ॥ इति ।

युधिष्ठिरेण ब्राह्मणत्वजातिबाधकतया संकरस्योपगतत्वाच्च । अतोनेकदूषणग्रासादधिकारिभेदशब्दापरोक्षयोः कल्पनमेवायुक्तमित्यर्थः । ननु मास्तु शब्दादपरोक्षं, तथाऽपि दशमस्त्वमितिवाक्यसहकृतचक्षुषा दशमोऽहमितिवन्मनसैवानुद्रष्टव्य इति श्रुतेस्तत्त्वमस्यादिवाक्यसहकृतमनसैव विविक्तात्मसाक्षात्कारो भावीत्यधिकारिभेदो नायुक्त इति चेत्तत्राहुः मनसेत्यादि । वाक्यसहकृतमनसा यदि सर्वेषां साक्षात्कारस्तदा मननादिविधिवैयर्थ्यम् । यदि कस्यचिद् तदा यस्य न साक्षात्कारस्तस्य वेदान्तार्थनिर्धार एव विचारफलत्वेन वाच्यस्तथा सत्युक्तरीत्या वैराग्यादिसंपादकत्वेन तस्य प्रागेवापेक्षितत्वात् पूर्वोक्तान्योन्याश्रयादिदोषतादवस्थ्यमित्यर्थः । सिद्धमाहुः तस्मादित्यादि । मन्तव्यमिति सर्वेषां भवतीति मन्तव्यम् । अनुभवसिद्धत्वं विशदयन्ति इदानीमित्यादि । तथाच पूर्वोक्तं दूषणं दुरुद्धरमित्यर्थः । उक्तदार्ढ्याय दूषणान्तरमाहुः संन्यासेत्यादि । 'गृहाद्वा प्रव्रजेद् वनाद्वा प्रव्रजेद्' इतिश्रुतौ तत्तदाश्रमानन्तर्यकथनाद् दृढं वैराग्यं

रश्मिः ।

इत्यपकारिणं प्रति विपरीतलक्षणयोक्तिः । अपकारिणि उपकारित्वरूपेण मुख्यार्थे बाधिते सति विरोधरूपसंबन्धेन अपकारित्वलक्षणादिति वाच्यम् । तथा सति पारोक्ष्यापत्त्या प्रतिज्ञाव्याहतेः । वाक्यार्थज्ञानमिति वाक्यार्थस्य घटानयनस्य ज्ञानं प्रत्यक्षात्मकं स्यादित्यर्थः । पुरोवर्तिवाक्यार्थस्य ज्ञानं निशामनं भवतीति परोक्षवाचितत्पदेन घटो विशेत इति ज्ञेयम् । गजानुमितिरिति । शब्दापरोक्षप्रतिज्ञा गजवान् देश इत्यनुमितिरित्यर्थः । किंतु गजप्रत्यक्षं स्यादिति भावः । परस्परात्यन्ताभावसमानाधिकरणयोर्धर्मयोरेकत्र समावेशः संकरः इति नैयायिकोक्तं लक्षणमनुसृत्याहुर्यद्वा इति । प्रमीयत इति प्रमाणमिति । भावव्युत्पत्तिमत्त्वमाहुः प्रमाणे ज्ञान इति अहं ब्रह्मास्मीति ज्ञाने इत्यर्थः । अनुव्यवसीयेति ब्रह्म अहं जानामीति अनुव्यवसीयमानयोरित्यर्थः । अत्र ज्ञानानुकूलो व्यापार इत्यत्र ज्ञानस्य शाब्दत्वप्रत्यक्षत्वाभ्यां बोधः, न ज्ञानत्वेन प्रकारेण अन्वेषमाणे ज्ञानत्वस्य तत्रैव पर्यवसानात् । अयुक्तत्वादिति आकृत्यधिकरणविरोधेन तथात्वादित्यर्थः । यद्वा न भावव्युत्पत्तिः । करणव्युत्पत्तिरेव । तथा च व्यवसायज्ञानस्यानुव्यवसायकारणत्वात् प्रमीयतेऽनेन व्यवसायेन तत् प्रमाणं ज्ञानं ब्रह्म इत्याकारकं तस्मिन् सति अनुव्यवसीयमानयोरनुव्यवसायप्रत्यक्षत्वपरोक्षत्वप्रकारकज्ञानं विषयतासंबन्धेन तस्य कर्त्रोः । अत्र धात्वर्थफलमात्रं कृतिमत्त्वं कर्तृत्वं फलानुकूलव्यापारश्चानेकधा । भाष्ये इदानीमिति । 'अलौकिको हि वेदार्थः' इति श्रुत्युक्तसाधनवतामिति विशेषणीयम् । निर्विचिकित्सेत्यादि । विचिकित्सा तु संशयः । अकृते । पूर्वोक्तमिति अनुभवविरोधरूपमित्यर्थः । तत्तदाश्रमानन्तर्येति ।

किंच। अध्याहारश्च कर्तव्यः। स च कर्तव्यादिपदानाम्। यदि तत् स्वार्थं, व्यर्थमेव वाक्यं स्यात्। परार्थत्वे त्वशक्यं, न हि तैर्विचारः कर्तुं शक्यते। स्वकृतिवैयर्थ्यं च। असंगतिश्चास्य सूत्रस्य भवेत्।

किंचाधिकारपक्षे पुरुषार्थः सिद्ध्यति, नानन्तर्यपक्षे उक्तन्यायात्।

किंच, तादृशस्याधिकारिणः श्रवणमात्रेण कृतार्थस्य समाधिनिरतस्य प्रवचनासंभवाच्छास्त्रोच्छेदः शास्त्रविरोधश्च। साधनानामग्रे स्वयमेव वक्तव्यत्वात्। अतोऽनेकदोषदुष्टत्वादधिकारार्थ एव श्रेयान्।

भाष्यप्रकाशः।

संन्यासाङ्गमिति ज्ञायते।श्रुत्यन्तरे च 'वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद् यतयः शुद्धसत्त्वाः' इति वेदान्तार्थनिश्चयोत्तरं संन्यासस्योक्तत्वात् तदङ्गभूतवैराग्यस्य वेदान्तार्थनिश्चयोत्तरत्वमेवायाति। ततः पूर्वभावित्वं च विचारस्येति तत्तदभावे दृढवैराग्याभावात् संन्यासानुपपत्तिः। तथाचानन्तर्यपक्षे तन्निरूपकस्य वक्तुमशक्यत्वात् किमनन्तरमित्याकाङ्क्षायाः कथमपि न पूरणमित्यर्थः।

द्वितीयं दूषणं विवृण्वन्ति किंचेत्यादि। तदिति विचारकरणम्। तथाच स्वयमेव मनसि विचार्यमिति स्वार्थत्वे शास्त्रानर्थक्यमित्यर्थः। अशक्यमिति अशक्योपदेशरूपम्। तथाच फलाऽभावाद् वैयर्थ्यमित्यर्थः। असंगतिरिति परैः कर्तव्यमितिप्रतिज्ञाया अग्रिमसूत्रीयस्वयंकृतिविरुद्धत्वादसंगतिरित्यर्थः।

तृतीयं विवृण्वन्ति किंचाधिकारेत्यादि। उक्तन्यायादिति तदसंभवापत्तेरित्यनेनोक्तान्यायात्। विचारव्यतिरेकेण ब्रह्मणः परमपुरुषार्थत्वज्ञानाद्यभावात् तदभावे चित्तशुद्ध्याद्यभावेन विचाराभावात् तथेत्यर्थः।

चतुर्थं विवृण्वन्ति किंच, तादृशस्येत्यादि। तादृशस्येति साधनचतुष्टयसंपन्नस्य। साधनानामिति वैराग्यादिसाधनानाम्। अग्रे इति, तृतीयाध्याये। तथाचानन्तर्यनिरूपकतया पूर्वसिद्धानां पुनः कथनानर्हत्वात्, कथनेन च पूर्वं तदभावनिश्चयात् सिद्धत्वाङ्गीकारे व्याख्येयशास्त्रविरोध इत्यर्थः। एतेन यन्माध्वैर्जातिकृतं गुणकृतं च ब्रह्मविद्यायामधिकारत्रैविध्यमङ्गीकृत्य तदानन्तर्यमथशब्दार्थौ, न त्वध्ययनमात्रानन्तर्यमिति साधनाध्यायानुसारेणाङ्गीक्रियते, तदपि

रश्मिः।

'ब्रह्मचर्यं समाप्य गृही भवेत् गृहाद्वनी भूत्वा प्रव्रजेत्' इति आश्रमक्रमेण संन्यासः। गृहाद्वेति श्रुतौ तु अनियततत्तदाश्रमानन्तर्यकथनेनाश्रमा न संन्यासाङ्गानि अपि तु आश्रमानियमात् 'यदहरेव विरजेत् तदहरेव प्रव्रजेत्' इति श्रुत्यन्तराच्च दृढवैराग्यमित्यर्थः। तदङ्गभूतेति। हेतुगर्भं विशेषणमिदं तेन संन्यासाङ्गभूतत्वादित्यर्थः। एवायातीति। यथा भुक्त्वा पयः पिबतीत्यत्र पयःपानोपयोगिपात्रमपि भोजनोत्तरमेवायाति तद्वदित्यर्थः। तत्त इति वैराग्यादित्यर्थः। तत्तदभावे इति विचारवेदान्तविज्ञानाद्यभाव इत्यर्थः। द्वितीयमिति। अध्याहारश्चेति भाष्योक्तमित्यर्थः। अशक्येत्यादि। वैराग्याद्यनन्तरं साक्षात्कारामिनिष्पत्तये ब्रह्मजिज्ञासा कर्तव्येति तथाविधित्वं न स्यादिति भावः। तथा च सांख्यप्रवचनसूत्रं 'नाशक्योपदेशविधिरुपदिष्टेप्यनुपदेशः' इति। न च मात्र मूढिविधिरिति वाच्यम्। स्वाध्यायोध्येतव्य इत्यत्र भाट्टैरङ्गीकारेण तवाप्यावश्यकत्वात्। तृतीयमिति। पुरुषार्थश्च सिध्येदिति भाष्योक्तमित्यर्थः। न्यायादिति अन्योन्याश्रयादित्यर्थः। तमेवाहुर्विचारेत्यादि। चित्तशुद्ध्यादीति। आदि-

**नच ज्ञातुमिच्छा जिज्ञासा नाधिकर्तुं शक्येति वाच्यम् । जिज्ञासापदस्य विचारार्थत्वात् ।**

भाष्यप्रकाशः ।

प्रत्युक्तम्, विचारब्रह्मविषयोरैक्याभावात् । अतो न तदुपन्यस्तश्रुतिस्मृतीनामपि विरोधः ।

एवमथशब्दार्थं निर्णीय जिज्ञासाशब्दार्थं निश्चेतुमधिकारार्थविरुद्धं मतान्तरीयं तदर्थमनूद्य परिहरन्ति न चेत्यादि । ज्ञातुमिच्छा जिज्ञासेति 'धातोः कर्मणः' इति धातुवाच्यस्यार्थस्येप्सितत्वस्मरणाज्ज्ञानप्रधानेयमिच्छा प्रस्तोतुमशक्येत्यर्थः । विचारार्थत्वादिति जिज्ञासितं सुसंपन्नमपि ते महदद्भुतम्' इति, 'जिज्ञासितमधीतं च यत्तद् ब्रह्म सनातनम्' इति, 'अजिज्ञासितमद्धर्मो गुरुं मुनिमुपाव्रजेत्' इति, 'जिज्ञासायां संप्रवृत्तो नाद्रियेत् कर्मचोदनाम्' इत्यादिषु जिज्ञासितजिज्ञासापदयोरिच्छावाचकत्वे वाक्यार्थेऽनन्वयेन तत्र विचारार्थकत्वनिश्चयेन तथात्वात् । तथाचैवंविधाप्तवाक्य-

रश्मिः ।

पदेन वैराग्यशमदमादिः । चतुर्थमिति । उच्छेदश्च न भवेदिति भाष्योक्तमित्यर्थः । सिद्धत्वेत्यादि । आनन्तर्यनिरूपकत्वाङ्गीकारे साधनाध्यायविरोध इत्यर्थः । जातिकृतमित्यादि । ब्राह्मण्यादिजातित्रयकृतं सेवा( वैराग्या )दिगुणत्रयकृतं चेत्यर्थः । अधिकारश्चोक्तो भागवततन्त्रे ।

'मन्दमध्योत्तमत्वेन त्रिविधास्त्वधिकारिणः ।
तत्र मन्दा मनुष्येषु य उत्तमगुणा मताः ॥
मध्यमा ऋषिगन्धर्वा देवास्तत्रोत्तमा मताः ।
इति जातिकृतो भेदस्तथान्यो गुणपूर्वकः ॥
भक्तिमान्परमे विष्णौ यस्त्वध्ययनवान्नरः ।
अधमः शमादिसंयुक्तो मध्यमः स उदाहृतः ॥
आब्रह्मस्तम्बपर्यन्तमसारं चाप्यनित्यकम् ।
विज्ञाय जातवैराग्यो विष्णुपादैकसंश्रयः ॥
स उत्तमोऽधिकारी स्यात् संन्यस्ताखिलकर्मवान् ॥

इति स्मृतयो माध्वभाष्ये । ऐक्याभावादिति । हेतुहेतुमद्भावेन तथात्वादित्यर्थः । तदुपन्यस्तेति । 'शान्तो दान्त उपरतः' इति 'परीक्ष्य लोकान् कर्मचितान्' इति 'नास्त्यकृतः कृतेन' इति 'यमेव' इति 'यस्य देवे' इति श्रुतयः । स्मृतयस्तूक्ताः । विरोध इति । ब्रह्मविद्यापरत्वादिति भावः, भागवततन्त्रे विचाराभावात् । मतान्तरीयमिति । शंकराचार्यादिमतीयजिज्ञासापदार्थमनूद्य इत्यर्थः । अथशब्द आनन्तर्यार्थः परिगृह्यते नाधिकारार्थः ब्रह्मजिज्ञासाया अनधिकार्यत्वादिति । ज्ञातुमिच्छा जिज्ञासा इति च तद्भाष्यम् । अत्र भाष्याशयवर्णकः । जिज्ञासापदं ज्ञानेच्छां वक्ति विचारं लक्षयति वा । नाद्यः । अथशब्दस्यारम्भार्थत्वे ब्रह्मज्ञानेच्छाया अनारम्भ्यत्वात्सूत्रार्थासंगतिः । प्रत्यधिकरणविचारकरणेनेच्छाकरणाभावादिति । नापरः । कर्तव्यपदाध्याहारं विना अन्वयानुपपत्त्यभावेन विचारलक्षकत्वायोगात् । तदध्याहारे तु अथशब्दवैयर्थ्यम् । तेनैवारम्भोक्तेरिति भाष्याशय इति एतदुभयमालोच्याहुः धातोः कर्मण इति । 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' इति सूत्रम् । 'इषिकर्मणः इषिणैककर्तृकाद्धातोः सन्प्रत्ययो वा स्यादिच्छायाम्' इति वृत्तिः । असंदेहाय पुष्कलवाक्यान्याहुः जिज्ञासितमित्यादि । वाक्यार्थं इत्यादि । नारदकृतव्यासाभिनन्दनरूपे भारतादिकरणरूपस्वाभाविकधर्मेपि विशेष-

अत एव जिज्ञासितुमिच्छेदिति पुराविदां वचनानि। जिज्ञासापदेन चैतज्ज्ञापयति ब्रह्मज्ञानं पुरुषार्थसाधनत्वादिष्टम्। तदिच्छापूरणाय विचार आरभ्यत इति। यस्मात् कर्मादिभ्यो ज्ञानमेव पुरुषार्थसाधनमित्यतस्तज्ज्ञानाय विचारोऽधिक्रियत इति

---

भाष्यप्रकाशः।

प्राहितां रूढिमनादृत्य वृथा यौगिकादरणमप्रयोजकमित्यर्थः। अत्र शाबरभाष्यसंमतिमाहुः अत एवेत्यादि। ननु विचारे प्रारम्भणीये, अथातो ब्रह्मविचार इत्येव कुतो नोक्तमित्याशङ्कायामाहुः जिज्ञासापदेनेत्यादि। भृगुप्रपाठके, 'अधीहि भगवो ब्रह्म' इतिश्रुतेर्ब्रह्मज्ञानेच्छयोपसन्नाय भृगवे, 'यतो वा इमानि' इति ब्रह्मलक्षणकथनपूर्वकं तद्विजिज्ञासस्वेतिपदेन तदिच्छापूरणाय विचारोपदेशादिहापि तथैव विचार आरभ्यत इति ज्ञापयतीत्यर्थः। नचात्र तपोऽनुपदेशाच्छ्रुतिविरोधः शङ्क्यः। तपस इदानीमसाधनतायाः प्रागुपपादितत्वात्। नच विचारस्याश्रौतत्वं शङ्क्यम्। लक्षणवत्तदुपयोगस्य प्रागुपपादितत्वात्। नच मन्तव्यादिप्रत्यक्षविधिमूलकत्वं परित्यज्य किमिति ज्ञानविध्याक्षिप्तमङ्गीक्रियत इति वाच्यम्। तथा सति तत्रात्मादिपदात् तावन्मात्रत्वेनैव विचार्यत्वापत्त्याऽग्रिमसूत्राणां विरोधाद्यापत्तेः। तस्मादेतावदेवात्रार्थत्वेन ग्राह्यमित्येव युक्तम्। एवं जिज्ञासाशब्दार्थं निश्चित्य सिद्धान्तरीत्या सिद्धं वाक्यार्थं वदन्तोऽतःशब्दार्थमाहुः यस्मादित्यादि। अत्र केचन, क्षेमः सुभिक्षोऽयं देशोऽतोहमस्मिन् वसामीत्यादौ स्वोक्तस्य गम्यमानस्य वा वृत्तस्य हेतुभावे अतःशब्दप्रयोगदर्शनात् प्रकृते च कर्मज्ञानं पूर्वं वृत्तमिति तस्य हेतुत्वमतःशब्दोऽत्रोपदिशतीत्याहुः। अन्ये तु बृहदारण्यकीयसप्तान्नब्राह्मणस्थायाम्, 'अथाऽतो व्रतमीमांसा' इत्यादिश्रुतौ,

'अथाऽतो गोभिलोक्तानामन्येषां चैव कर्मणाम्।
अस्पष्टानां विधिं सम्यग् दर्शयिष्ये प्रदीपवत्' ॥ इति।

कात्ययनादिस्मृतौ चातःशब्दस्य पूर्वावधौ प्रयोगदर्शनादत्राप्यतःशब्देन पूर्वावधिरेवोच्यते।

रश्मिः।

रूपे च इत्येवमादौ वाक्यार्थे इष्टेच्छाया अभिनन्दनाय साधकतयाऽनन्वयेनेत्यर्थः। यौगिकादरणमिति। ज्ञातुमिच्छा जिज्ञासा इत्यत्र आकृतेरजहल्लक्षणया फलभूतज्ञानलक्षकत्वम्। प्रत्ययस्य इच्छासाध्यविचारलक्षकत्वं कर्तव्यपदान्वयानुरोधादिति शांकराचारटनमित्यर्थः। एवंविध भाष्यवादादन्यत्रापि प्रयोगो दृश्यते इत्याहुरत्र शाबरेति। तदिच्छापूरणायेति ब्रह्मज्ञानविषयिण्या इच्छायाः पूरणायेत्यर्थः। शाब्दं चैतज्ज्ञानमिति वेदितव्यम्। लक्षणवदिति प्रातिशाख्यसूत्रवदित्यर्थः। तथासतीति तत्रेति। 'आत्मा वा अरे' इत्युपक्रम्य श्रोतव्यमन्तव्यादिविधावित्यर्थः। अग्रिमसूत्राणामिति ब्रह्मविचारकाणामग्रिमसूत्राणां विरोधादनुपयोगापत्तेरित्यर्थः। एतावदेव इति ब्रह्मविचारमात्रमित्यर्थः। अत्र केचनेति रामानुजशंकराचार्यादय इत्यर्थः। क्षेम इति ताद्दशदेशत्वादित्यर्थः। स्वोक्तस्येत्यादि। क्षेमदेशसंबन्धिनः सुभिक्षदेशसंबन्धिनश्च सुखिनो वयं जाता भविष्याम इत्यादिवत्सुभिक्षदेशस्येत्यर्थः। कर्मज्ञानमिति उपलक्षणं चैतत्। अथशब्दार्थस्तु साधनचतुष्टयसंपदः। पूर्वावधाविति। अथोपासनोक्त्यनन्तरं यतो जिज्ञासाया सत्त्वमत एषां कर्मादीनां मध्ये कस्य कर्म व्रतत्वेन धारयितव्यमिति मीमांसा प्रवर्तत इत्यर्थावगमादित्यर्थः।

अतःशब्दार्थः ।

भाष्यप्रकाशः ।

तथाच, अतः—अज्ञानात्प्रभृत्यादारभ्येत्यर्थमाहुः । तत्र पूर्वस्मिन् मते देशदृष्टान्ताद्धर्मज्ञानस्य न तेन रूपेण हेतुत्वं, किंतु वृत्तत्वेन वाच्यम्, तस्यानन्तर्यपक्षदूषणादेवापास्तम् । धर्मज्ञानत्वेन हेतुत्वं तु प्रत्यक्षबाधितम् । द्वितीये तु, स्मृतौ कर्मणामस्पष्टत्वेन विशेषितत्वात् तदेवातःशब्देन गोचरीक्रियते, न तु पूर्वावधिरनुक्तसिद्धत्वात् । एवं श्रुतावपि पूर्वं, त एते सर्व एव समाः सर्वेऽनन्ता इत्यनेन प्राणानां वाङ्मनःप्राणानां साम्यबोधनादुपासकेन कस्य कर्म व्रतत्वेन धार्यमित्यपेक्षायां यस्य व्रतमुत्कृष्टं तन्निश्चायनार्थं व्रतमीमांसायाः प्रवर्तितत्वेन तदुत्कर्षज्ञापनमेव हेतुत्वेनाभिप्रेयते, न तु पूर्वावधिरिति बोध्यम् । तेन मतद्वयमप्ययुक्तमितिज्ञापनायोक्तमिति । अतःशब्दार्थ इति तथा च

रश्मिः ।

अज्ञानादिति कर्मज्ञानाधिकारादित्यर्थः । धर्मज्ञानस्येति । यद्यपि कर्मज्ञानमुक्तं पूर्वं 'देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे' इति यजुःसंहिताश्रुतेः, तथापि 'धर्मं चर' इति शिक्षाश्रुतेः धर्मज्ञानं पूर्वमित्याशयेनोक्तमत एव 'अथातो धर्मजिज्ञासा' इत्युक्तम् । 'कर्मैके तत्र दर्शनात्' इति सूत्रं त्वग्रे । न तेन रूपेणेति दृष्टान्ते देशत्वरूपेण हेतुत्वाभावादत्रापि न कर्मज्ञानत्वरूपेण हेतुत्वं किंतु क्षेमत्वेन सुभिक्षत्वेन च तद्वदत्रापि पूर्ववृत्तत्वेन वाच्यमित्यर्थः । आनन्तर्यपक्षदूषणादेवेति । अथातः साङ्गशिरसो वेदस्याधिगताल्पास्थिरफलके बलकर्मज्ञानतया संज्ञता मोक्षाभिलाषस्यानल्पस्थिरफलब्रह्मजिज्ञासास्यनन्तरभाविनीति तथात्वादित्यर्थः । तथा यदुक्तं 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' इति धर्मस्यापि नित्यफलमवगच्छतो विवेकाद्यसंभवादानन्तर्यसंभावनां ब्रूते अतःशब्द इति । तथा चोक्तश्रुतिः 'यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयते' इति श्रुतिबोधितेति । अतो विवेकादिसंभवादित्यर्थः । तस्यापि तथात्वादिति प्रत्यक्षबाधितमिति । धर्मजिज्ञासायाः प्रागपि अधीतवेदस्य ब्रह्मजिज्ञासोपपत्तेस्तथेत्यर्थः । कर्मत्वं तु क्रियासाधारणधर्मत्वं च चोदनालक्षणोर्थ इति विभेदः । सूचीकटाहन्यायेनाहुः द्वितीये तु । स्मृताविति । तदेवेति अस्पष्टत्वमेवेत्यर्थः । अन्यथा विशेषणवैयर्थ्यापत्तिरिति भावः । ते एत इति वाङ्मनःप्राणा इत्यर्थः । कर्म व्रतत्वेनेति व्यापारो व्रतत्वेनेति निश्चयविषयत्वेनेत्यर्थः । इत्यपेक्षायामिति । एतदग्रे यस्य व्रतमुत्कृष्टं तन्निश्चायनार्थमित्यपि दृश्यते । तदुत्कर्षेति यस्य व्रतमुत्कृष्टं तदुत्कर्षज्ञापनमित्यर्थः । तथा अत इत्यस्योत्कर्षज्ञापकत्वादित्यर्थः । उत्कृष्टश्च प्राणः 'यतश्चोदेति सूर्यः अस्तं यत्र च गच्छति' इति, 'प्राणाद्वा एष उदेति प्राणेऽस्तमेति' इति श्रुतेः । भाष्ये ज्ञानमेवेति । सर्वात्मभावाख्यः सर्वत्र विगाढभावहेतुकप्रह्वानुभवादिकार्यकः प्रियत्वानुभव इत्यर्थः । अयमेव स्नेहः । एतच्च 'अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम्' इति सूत्रविचारे साधनाध्याये स्पष्टयितव्यम् । अधिक्रियत इति । अधिकार उत्तरत्रानुवृत्तिः । अत एव 'उत्क्रमिष्यत' इति सूत्रभाष्यलिङ्गमित्यनुवर्तत इति । ननु तथाप्येवं सति भाष्ये एवं स्फुटमुक्तं स्यात्, मैवम् । जिज्ञासापदज्ञापितस्य भगवज्ज्ञानसाक्षाद्विषयगोचरस्य ज्ञानस्यैतादृशस्योल्लेखात् । 'पुरुषार्थोऽतःशब्दात् इति बादरायणः' इति सूत्रात् । अतः सर्वात्मभावात् । नच प्राणो वै बलमिति चेदत्र ब्रवीमि । स्मृतित्वानङ्गीकारात्, न च श्रुतिविरोधस्तदङ्गत्वात् । न च प्रमाणाभावः 'भक्त्या

भाष्यप्रकाशः ।

धर्मो यशःप्रदः सुखदश्चातः करोमीत्यादाविष्टेऽप्यतःपदप्रयोगदर्शनादयमेवार्थो न त्वन्यविध इत्यर्थः । नन्वस्य प्रथमसूत्रत्वादत्र प्रेक्षावत्प्रवृत्तिसिद्ध्यर्थमधिकारिविषयसंबन्धप्रयोजनानि

रश्मिः ।

संजातया भक्त्या' इति वाक्यानुभवात् । न च प्रमाणाभावः 'नायमात्मा बलहीनेन लभ्यः' इति श्रुतिलम्भात् । बलं भक्तिरिति भाष्यम् । न च प्राणो वै बलमिति शङ्क्यम्, अप्रकरणित्वात् । न च ज्ञानं तत्, 'ब्रह्मविदाप्नोति' इति श्रुतेः । मैवम् । 'भक्तिरहस्यभजनं तदिहामुत्र फलभोगनैराश्येनामुष्मिन्मनःकल्पनम्' इति उद्देश्यविधेयभावात् । ज्ञानत्वेन सर्वात्मभावमुद्दिश्य ज्ञानं तु गीतायां विहितमिति । किं च 'भक्त्याहमेकया ग्राह्यः' इति स्मृतिर्वेदविरोधाभावात्स्वमूलं श्रुतिं ज्ञापयिष्यति । ननु 'ब्रह्मविदाप्नोति परम्' 'तमेव विदित्वा' इत्यादिप्रत्यक्षश्रुतिविरोधात् न ज्ञापयिष्यति । एतद्भक्तौ निवेशयिष्यामहे, रसत्वात्तु तस्याः । वैपरीत्यमिति चेन्नेति ब्रवीमि, अरसत्वात्तस्य । ऐक्यमिति चेन्नेति ब्रवीमि, 'सत्यं विज्ञानमानन्दं ब्रह्म' इति भेदात् । आनन्दादुच्यते, नैष दोषः । 'रसँ ह्येवायं लब्ध्वानन्दी भवति' इत्यैक्यं श्रूयते । अपि च 'तस्य प्रियमेव शिरः' इति श्रूयते । एवं तर्ह्युपासेत्युच्यते । नेति ब्रवीमि 'सर्वेषां मदुपासनम्' इति प्रक्रम्य 'भक्तिं विन्दते' इति अरसत्वाच्चेति । तदानीं वैपरीत्यं प्रवर्त्स्यामहे । अरसत्वात्तस्या नेति ब्रवीमि । प्रज्ञेति चेन्न, स्मरणात्मकत्वेन तन्निवर्त्यत्वात् । श्रद्धेति चेन्न, साधारण्यात् । शाण्डिल्यसूत्रार्थस्तत्र स्पष्टः । अतो भक्तिरेव साधनमिति प्रतिज्ञायते यत्सुसंसिद्धम् । द्वेषादीनामप्येतर्हि तत्संश्लिष्टानां तदिति च । तत्संश्लिष्टानां मनःकल्पनरूपभक्तिसंश्लिष्टनाम् । प्रमेयबलं चैतत् । आनन्त्याधिपत्यात् 'यस्य देवे परा भक्तिः' इति साक्षाच्छ्रुतिं चोत्पश्यामः । न च 'योगाश्रयः' इति वाक्यविसंवादः । अहीनन्याये एतदुक्तं बहुकर्तृके सत्रे यजमानेषु यः कोऽपि शुक्रग्रहं स्पृशतु विशेषस्यावधारयितुमशक्यत्वादिति । न चात्र द्वादशचतुर्थपादीयाहीनन्यायेनाचार्यप्रवृत्तिरिति संभावयामः । स्मृतेर्निर्णीयत इति 'प्रेम्णोऽन्यत्साधनं लोके नास्ति' इति सर्वनिर्णयाच्च । गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय इति न्यायेन वाक्ये भक्तिर्मुख्या गृह्यते । ज्ञानं वा मुख्यं चतुःश्लोकीप्रोक्तं गृह्यते, भगवानेवाग्रे मध्ये पश्चाच्चेत्याकारकं, तयोरपि मार्गत्वात् । सर्वात्मभावो मुख्यभक्तिः । भजनानन्दः फलम् । श्रवणादिभक्तिमार्गो ज्ञानमार्गश्च तदपेक्षया गौणः । विशेषस्मृतिहेतुभिः संयोगविप्रयोगसाहचर्यादिभिः काव्यप्रकाशोक्तैर्वाच्योर्थः । तत्त्वज्ञानं तु भक्तिफलं, 'ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्' इति वाक्योक्तम् । एवं सति रङ्ग्यानुवादः सुष्ठु संगच्छते इत्यलम् । अथवा दृष्ट एव स्नेह इत्युपपत्तेर्ज्ञानमेव भक्तिसाधकम् । अतस्तज्ज्ञानाय इत्यर्थः । तच्च शाब्दं माहात्म्यविषयकमैक्यविषयकं च ज्ञानमिति ज्ञेयम् । व्यापारीभूतभक्तिसाधकमित्यर्थः । यद्वा कर्मादिभ्य इति वेदपञ्चरात्रसांख्ययोगपाशुपतमतरूपपञ्चशास्त्रोक्तेभ्यः कर्मादिभ्यः । ज्ञानं त्रिविधम् । तथाहि । 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' इति श्रुत्युक्तं सर्वात्मभावरूपम् । 'भक्त्या जानाति चाव्ययम्' इति श्रुत्युक्तम्, 'ब्रह्मविदाप्नोति परम्' इति श्रुत्युक्तं च । 'ब्रह्मविदाप्नोति परम्' इत्यत्र भक्तेर्व्यापारत्वं ज्ञानस्य व्यापारित्वमत एवकारः । प्रकृते । प्रेक्षावदिति सूक्ष्मदृष्टिमत्प्रवृत्तिसिद्ध्यर्थमित्यर्थः ।

१. भावना । २. इदञ्च सर्वनिर्णयवाक्यस्यानुवादः । ३. इत उपक्रम्यते रश्मिकाराणां हस्ताक्षर लिखितो ग्रन्थः ।
४. पण्डित ।

अधिकारी तु त्रैवर्णिक एव। न हि वेदविचारस्य वेदाधिकार्यतिरिक्तः शक्यते कल्पयितुम्। न हि मन्दमतेर्वेदो नायातीति त्रैवर्णिके मतिमत्त्वमधिकारिविशेषणं कल्प्यते। अन्धपङ्ग्वादीनामिव कर्मणि, गृहाद्यासक्तस्य मननाद्यसंभवात् साक्षात्कारो न भविष्यति।

नच धर्मन्यायेन गतार्थत्वमस्य। अप्रतिज्ञानादनुपलब्धेश्च। न च जगत्कारणं परमात्मा वा प्रकृतिर्वा परमाणवो वेति संदेहे किंचिदधिकरणमस्ति।

---

भाष्यप्रकाशः ।

वाच्यानि। तत्रानन्तर्यपक्षे विचारितधर्मो वा शमादिमान् वाधिकारी प्राप्यते। अधिकारपक्षे तु तदप्राप्त्या शास्त्रस्यानर्थक्यप्रसङ्गः, सर्वाधिकारकत्वं वा स्यादित्याशङ्कायामाहुः अधिकारी त्वित्यादि। तथाच ब्रह्मणो वेदार्थत्वात् तद्विचारेऽधिकृते ब्रह्मजिज्ञासापदादेव तत्प्राप्तेर्न पूर्वोक्तो दोष इत्यर्थः। नन्वेवं त्रैवर्णिकाधिकारोपगमे तेषां सर्वेषामधिकारप्राप्त्या, शान्तो दान्त इति श्रुतिविरोधात् तत्संकोच आवश्यक इति शमाद्यानन्तर्यपक्ष एव श्रेयानित्यत आहुः नहि मन्देत्यादि। तथाच तत्र यथा मतिमत्त्वस्यार्थात् प्राप्तिस्तथात्राप्युपयुक्तस्य विशेषणस्य प्राप्तिरिति संकोचस्यानावश्यकत्वादधिकारो न दुष्यतीत्यर्थः। ननु यद्येवं स्याच्छ्रुतिः किमिति वदेदित्याकाङ्क्षायामाहुः अन्धेत्यादि। तथाच तेषां यथाज्यावेक्षणविष्णुक्रमक्रमणादिकरणाशक्त्या तत्कृतकर्मणो व्यङ्गत्वात् फलाजनकत्वं, तथैतदीयशाब्दज्ञानस्यापि व्यङ्गत्वात् साक्षात्काराजनकत्वमिति बोधयितुं फलोपकाराय वदति, आत्मन्येवात्मानं पश्येदिति। अतो विचारे स्वरूपोपकारार्थं शमाद्यनङ्गीकारेऽपि न श्रुतिविरोध इत्यर्थः। ननु यदि त्रैवर्णिकाधिकारेणार्थादध्ययनानन्तर्यसिद्ध्या तदर्थं वेदार्थभूतब्रह्मविचारः प्रतिज्ञात इत्यायाति तदा शास्त्रवैयर्थ्यापत्तिः। धर्मजिज्ञासेत्यत्र धर्मशब्दस्य वेदार्थमात्रोपलक्षकतया पूर्वतन्त्रन्यायेनैव वेदार्थज्ञानसिद्धेरित्यत आहुः नचेत्यादि। धर्मन्यायेनेति पूर्वमीमांसया। अप्रतिज्ञानादिति जैमिनिना ब्रह्मविचारस्याप्रतिज्ञानात्। अनुपलब्धेरित्यस्यैव विवरणम्, न च जगदित्यादि।

रश्मिः ।

प्राप्यत इति यथायथं रामानुजशंकराचार्यमते प्राप्यत इत्यर्थः। तत्प्राप्तेरिति त्रैवर्णिकाधिकारप्राप्तेर्गीतोक्तजिज्ञासुप्राप्तेश्चेत्यर्थः। अधिकारो नाम ब्रह्मानन्दज्ञातृत्वम्। 'मन्दाः सुमन्दमतयो मन्दभाग्या ह्युपद्रुताः' इति श्रोतुर्विशेषणान्मतिमत्त्वम्। 'शान्तो दान्तः' इति श्रुत्युक्तमित्यादिशब्दः तृतीयाध्याये विचारयिष्यते। तत्संकोच इति त्रैवर्णिकानामधिकारविशेषसंकोच इत्यर्थः। तथा च तत्रेति पूर्वतन्त्र इत्यर्थः। अर्थादिति ज्ञानिनो विधेयत्वेन भक्तस्य स्वतःसिद्धत्वेन शमादय इति तत्रैवोक्तम्। एवं चाक्षेपादित्यर्थः। एवं स्यादिति अनावश्यकत्वं स्यादित्यर्थः। तेषां यथाज्येत्यादि। इदं पूर्वतन्त्रे षष्ठे 'फलार्थत्वात्तु कर्मणः शास्त्रं सर्वाधिकारं स्यात्' इत्यधिकरणे चिन्तितम्। व्यङ्गत्वादिति भावनाद्यसंभवाद्व्यङ्गत्वाद् 'अनियमः सर्वासाम्' इत्यधिकरणे महन्माहात्म्यवत्यां भक्तेरन्वङ्गं साधनत्वोक्तेः साक्षात्कारो न भविष्यतीत्यर्थः। न श्रुतिविरोध इत्यर्थ इति दर्शनविधिशेषत्वात्तस्या इत्यर्थः। तथा च शमादिसहकृतमननादित्वेनात्मसाक्षात्कारत्वेन कार्यकारणभावः। विचारत्वेन शाब्दत्वेन च कार्यकारणभाव इति भावः। ननु मुख्यफलाभावे व्यर्थो विचार इत्याशङ्का तु अग्रे फलकामनाया अनुपयोगादिति भाष्य-

स्यादेतत्। अथातो धर्मजिज्ञासेति धर्मविचारं प्रतिज्ञाय नोदकवाक्यार्थस्य धर्मत्वमुक्त्वा प्रामाण्यपुरःसरं सर्वे संदेहा निवारिताः। तत्र ब्रह्मज्ञानस्यापि धर्मत्वम् 'आत्मेत्येवोपासीत' 'आत्मानं श्लोकमुपासीत' 'तद् ब्रह्मेत्युपासीत' 'आत्मा वा अरे द्रष्टव्यः' इत्यादिनोदनावाक्यार्थत्वात्। 'अयं हि परमो धर्मो यद्योगेनात्मदर्शनम्' इति स्मृतेश्च। सृष्ट्यादिवाक्यानां त्वर्थवादत्वम्। आरोपाप-

भाष्यप्रकाशः।

एवमानन्तर्यपक्षे निरस्ते पूर्वमीमांसकोऽस्यास्त्रैवर्णिकाधिकारकत्वं सर्ववेदार्थज्ञानार्थत्वं च श्रुत्वा प्रत्यवतिष्ठते स्यादेतदित्यादि। यदि त्रैवर्णिक एवाधीतवेदोऽधिकारी, यदि च सर्ववेदार्थ एव ज्ञातुमिष्टस्तदा वक्ष्यमाणमेवाङ्गीकार्यमित्यर्थः। प्रामाण्यपुरःसरमिति औत्पत्तिकसूत्रे शब्दस्यान्यानपेक्षप्रामाण्यव्यवस्थापनपूर्वकम्। सर्व इति शब्दस्वरूपविषयकास्तदर्थविषयकाश्च। नन्वुक्तं, जगत्कारणविचारो न कृत इति तन्निश्चायनार्थत्वान्न गतार्थत्वमिति तत्राह सृष्ट्यादी-त्यादि। तथाच पूर्वमीमांसकानां मते प्रवाहनित्यतोपगमेन जगतः स्वातन्त्र्यात् कर्तुरभावेनोपासना-

रश्मिः।

विवरणे स्वयमेवापाकरिष्यते। गतार्थत्वं निषिध्य बोधायनवृत्त्या परस्परानुपयोगं निषेधतीत्याशयेन भाष्यमवतारयामासुरेवमिति। निरस्त इति धर्मन्यायेन गतार्थत्वे निरस्ते इत्यर्थः। मीमांसक आधुनिको ज्ञेयः। सर्ववेदेति जिज्ञासासूत्रे ब्रह्मशब्दादिति भावः। प्रत्यवतिष्ठत इति ब्रह्मजिज्ञासेत्यत्र वेदवाचकब्रह्मशब्दप्रयोगात् प्रत्यवतिष्ठते। तदुक्तं बोधायनवृत्तौ 'संहतमेतच्छास्त्रं जैमिनीयेन षोडशलक्षणेन' इति। अत्रार्थविचारेण ब्रह्मशब्दो वेदान्तपरो नतु वेदपर इति फलि-ष्यति। अतो वेदान्तानां विचार आरम्भणीयो न वा इति भाष्यस्य दुर्बोधत्वं न। वेदान्तशब्दं विहाय ब्रह्मशब्दस्तु सर्ववेदसूचकः। तेन 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' इत्यादौ नाप्रति-ज्ञातार्थत्वम्। 'समवप्रविभ्यः स्थः' इति सूत्रेणात्मनेपदम्। यदि च असंहतेभ्य एव परस्य स्थ आत्मनेपदं तदा तु 'प्रकाशनस्थेयाख्ययोश्च' इत्यनेनात्मनेपदम्। आशयं प्रकाशयतीत्यर्थः। पूर्वपक्षिणा पूर्वमाक्षिप्तमीमांसाद्वयस्य परस्परमङ्गाङ्गीभावं सिद्धान्ते प्रकाशयितुं 'संशय्य कर्णादिषु तिष्ठते यः' इत्यत्र स्थेयाख्ये, कर्णादीन् निर्णेतृत्वेनाश्रयतीत्यर्थात्। औपत्तिकसूत्र इति। 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धेस्तत्प्रमाणं बादरायण-स्यानपेक्षत्वात्' इति सूत्रे शब्दस्यार्थेन समं संबन्धः औत्पत्तिको नित्यः। तस्य प्रत्यक्षादिभिरनव-गतस्याग्निहोत्रादिलक्षणस्य धर्मस्य निमित्तम्। कथं उपदेशो हि भवति, विशिष्टस्य शब्दस्योच्चारण-मुपदेशः। अव्यतिरेको ज्ञानस्य। नहि तदुत्पन्नं ज्ञानं विपर्येति यच्च नाम ज्ञानं न विपर्येति न तच्छक्यते वक्तुम्। नैतदेवमिति तस्मात्तत्प्रमाणापेक्षत्वात् नह्येवं सति प्रत्ययान्तरमपेक्षितव्यं पुरुषा-न्तरं वा स्वयं प्रत्ययो ह्यसौ शुक्तिका रजतवत्प्रकाशते यतस्तेन हि प्रत्यक्षं व्यभिचरति तन्मूलत्वा-च्चानुमानादीन्यपि। तत्रापरीक्ष्य प्रवर्तमानोऽर्थाद्विहन्येत। अनर्थं च प्राप्नुयात् कदाचिन्नैतदेवं यत्प्रत्यक्षं तन्न व्यभिचरति यद्व्यभिचरति तन्न प्रत्यक्षमिति। बादरायणग्रहणं बादरायणस्येदं मतं कीर्त्यते। बादरायणं पूजयितुं नात्मीयं मतं पर्युदसितुमित्यर्थाच्छब्दस्यान्यानपेक्षत्वादि। शब्द-स्वरूपविषयका इति। 'कर्मैके तत्र दर्शनात्' इत्यधिकरणे शब्दस्य नित्यताव्यवस्थापना-त्तथेत्यर्थः। तत्र शब्दे प्रयत्नानन्तर्यदर्शनात्कर्म क्रिया तत्साध्यत इत्यर्थः। अनित्यतेति यावत्। इत्येके वदन्तीति सूत्रार्थः। तदर्थविषयका इति। आकृत्यधिकरणे आकृतिवाचकत्वव्यव-

**स्वविषयधर्मप्रतिपादकत्वेन विधेयोपासनाविषयस्तावकत्वात् ।**

**नच ज्ञानादीनामविधेयत्वं प्रमाणवस्तुपरतन्त्रत्वेनाकृतिसाध्यत्वादिति वाच्यम् । न हि सर्वात्मना असाध्यम् । प्रकारभेदस्त्वप्रयोजकः । सर्वस्यापि कारणेषु पुरुषव्यापृतिः । तदत्र वृत्तिसंपादने प्रमाणासंपादने वा पुरुषकृतिसाध्यत्वम् ।**

---

भाष्यप्रकाशः ।

विषयस्यात्मनः प्रशंसार्थं क्वचित् कर्तृत्वमारोप्यते, अन्यत्र च तदपोह्यते । क्वचित् सर्वकामत्वादिकं प्रतिपाद्यते, अन्यत्रापोह्यते । यदि तद्वास्तवं स्यान्नापोह्येतेति तर्केणारोपापवादविषयो यः कर्तृत्वादिधर्मस्तत्प्रतिपादकत्वेन तेषां विधेयस्तावकत्वनिश्चयात् । सिद्धेऽर्थवादत्वे तेषां स्वार्थे तात्पर्याभावेन ब्रह्मणि विरुद्धधर्माधारत्वादिकल्पनस्याप्रयोजकत्वात् । तदर्थत्वेऽपि गतार्थत्वमित्यर्थः । ननूपासनावाक्यशेषाणामस्त्वर्थवादत्वं, न तु ज्ञानवाक्यशेषाणामपि । ज्ञानस्य प्रमाणवस्तुभ्यां जायमानत्वेन तदर्थं कृत्यपेक्षाभावेन तस्य विध्यर्थत्वाभावात्, कृतिसाध्यत्वस्यैव विध्यर्थत्वात् । नच तव्यविरोधः आवश्यकार्थेऽपि जायमानत्वात् । अतस्तच्छेषाणां स्तावकत्वाभावेन तद्विचारस्यावश्यकत्वान्नास्य गतार्थत्वमिति । समाधानन्तर्यवादिनः शङ्कायामाह नचेत्यादि । आदिपदेनेच्छाप्रयत्नौ । तेन 'तदन्वेष्टव्यम्', 'तद्विजिज्ञासितव्यम्', 'मन्तव्यो निदिध्यासितव्यः' इत्यादीनां संग्रहः । तद् दूषयति नहीत्यादि । सन्निकर्षादिजनककृत्यपेक्षायास्तत्रापि सत्त्वात् तथेत्यर्थः । ननु तथापि कर्मवत् साक्षात्कृतिसाध्यत्वाभावात् कथं ज्ञानादीनां विधेयत्वमित्यत आह प्रकारेत्यादि । ज्ञानादेरविधेयत्वसाधनायैवं प्रकारभेदो यः कल्प्यते सत्वविधेयताप्रयोजको न भवति । यतो धर्मस्यापूर्वात्मकत्वेन तस्य सर्वस्यापि कारणीभूते क्रियाकलाप एव यत्नात्मा पुरुषव्यापारो दृश्यते, न तु साक्षात् । तत्तस्मादत्र ज्ञानादौ वृत्तिसंपादने बुद्धिजन्यायाः पदार्थान्तररूपाया बुद्ध्यवस्थाविशेष-

रश्मिः ।

स्थापनात्तथेत्यर्थः । अयं हीति निश्चयेन । परो मीयते ज्ञायते येन तादृशो धर्मः स कः यद्योगः स च कर्मसु कौशलं ब्रह्मसेवारूपं भगवता स्वैश्वर्यस्य निर्विषयत्वपरिजिहीर्षया जीवाय दत्तं तेनात्मदर्शनं ब्रह्मबोधनमिति योजना, इदमवान्तरफलं मुख्यमन्यदिति, सिद्धान्तमुक्तावल्यां स्फुटम् । क्वचिदिति 'यतो वा इमानि' इत्यादावित्यर्थः । आरोप्यत इति अध्यस्यत इत्यर्थः । अन्यत्रेति निष्कलं निष्क्रियमित्यादावित्यर्थः । क्वचिदिति सर्वकाम इत्यादावित्यर्थः । अन्यत्रेति अकाम इत्यादावित्यर्थः । विधेयस्तावकत्वेत्यादि विधेया योपासना तद्विषयीभूतात्मस्तावकत्वनिश्चयादित्यर्थः । ननु न प्रतीतं निषेधमत आह तदर्थत्वेऽपीति । विरुद्धधर्माधारत्वार्थत्वेऽपि, अर्थवादत्वेन गतार्थत्वमित्यर्थः । ज्ञानवाक्यशेषाणामिति । 'आत्मा वा अरे द्रष्टव्यः' इत्याद्युक्तानां ज्ञानानां वाक्यशेषा 'मैत्रेय्यात्मनो वा दर्शनेन श्रवणेन मत्या विज्ञानेन इदं सर्वं विदितम्' इत्याद्यास्तेषामित्यर्थः । प्रमाणवस्तुभ्यामिति इन्द्रियविषयाभ्यामित्यर्थः । शङ्कायामाहेति शङ्कायां प्राप्तायां न चेत्यादिनिषेधमाहेत्यर्थः । तथेति सर्वात्मना असाध्यत्वाभावनिश्चय इत्यर्थः । तदित्यव्ययमित्याशयेनाहुः तत्तस्मादिति । वृत्तिसंपादनेति पूर्वोक्तभाष्यं व्याकुर्वन्ति बुद्धिजन्याया इति । पदार्थान्तरेत्यादि । व्याख्यातमेतत् । सांख्यैराहंकारिके तत्त्वान्तररूपत्वमङ्गीक्रियते इति पदार्थान्तररूपायाः । तृतीयसुबोधिन्यनुसारेणाहुः बुद्ध्यवस्थेति ।

अन्यथा सिद्धान्तेऽपि मननादिशास्त्रवैफल्यापत्तेः । साधनप्रतिपादकश्रुतिविरोधश्च । येनापि सर्वक्रियाफलत्वं निराकार्यं तेनापि गुरूपसत्त्यादिना यतितव्यमेव ज्ञानार्थे । तस्माद् यत्रापि विध्यश्रवणं, तत्रापि विधिं परिकल्प्य तत्रत्यानां तच्छेषत्वं कल्प्यमिति, नार्थोऽनया मीमांसया । अन्यथा विरोधोऽपि ।

स्यादेतत् । ब्रह्मविचार एवारम्भणीयो, न धर्मविचारः । सर्ववेदव्यासकर्त्रा वेदव्यासेनाकृतत्वात् तुच्छफलत्वाच्च । कल्पोक्तप्रकारेण निःसन्दिग्धं करण-

---

भाष्यप्रकाशः ।

रूपाया वा तस्या उत्पादने प्रमाणसंपादने वा, 'आवृत्तचक्षुरमृतत्वमिच्छन्' इति, 'अतो निर्विषयं नित्यं मनः कार्यं मुमुक्षुणा' इत्यादिश्रुतेस्तादृशचक्षुरादिसंपादने वा तथात्वमिति, न ज्ञानादेरविधेयत्वमिति तव्योऽपि विधावेवेत्यर्थः । अविधेयत्वोपगमे दूषणमप्याह अन्यथेत्यादि । साधनप्रतिपादकश्रुतयस्तु, 'तपसा ब्रह्म विजिज्ञासस्व,' 'वसाऽपराणि पञ्च वर्षाणि,' 'शान्तो दान्तः' इत्याद्याः । तत्रत्यानामिति वाक्यानां ब्रह्मादिपदानां चेत्यर्थः । अन्यथेत्यादि विध्यकल्पने ऐक्यार्थाभावेन वाक्यभेदापत्तावैकशास्त्र्यविरोधः । अपिशब्दात् कर्मप्रतिपादनतन्निन्दनकृतो विरोधो वेदोऽखिलो धर्ममूलमित्यादिस्मृतिविरोधश्च संगृह्यते । अत्रैकदेशी वितण्डया प्रत्याह स्यादेतद्ब्रह्मेत्यादि । सर्ववेदेत्यादि । तथाच जैमिनिस्तच्छिष्यः सामगो, न सर्वज्ञ इति तदुक्तं न प्रमाण-

रश्मिः ।

तस्या इति वृत्तेर्नयनान्तरभूतायाः । नैयायिकास्तु नयनकिरणानां निर्गतेन न विषयसंनिकर्षोज्ज्ञानं तेन यावता संस्काराख्यं गुणान्तरं चरमस्मृतिनाश्यमात्मन्यङ्गीकुर्वन्तो वृत्तिपदार्थमेव नेच्छन्ति । प्रमाणसंपादनेति भाष्यमिदं अग्रे व्याख्यातम् । तथात्वमिति परंपरया कृत्यसाध्यत्वम् । भाष्ये अन्यथेत्यादि परंपरयापि कृतिसाध्यत्वाभावे । द्रष्टव्य इति उपक्रम्य पठितस्य युक्तिभिरनुचिन्तनरूपमननादिशास्त्रस्य वैफल्यापत्तेरित्यर्थः । श्रवेणैव दर्शनाङ्गीकाराद्विरोध इति प्रोक्तम् । स्वयमर्थवादत्वस्य विधिवाक्यातिरिक्तेऽङ्गीकारादपिपदम् । येनापि सर्वक्रियाफलत्वमिति । शब्दमात्रेण साक्षात्कारमङ्गीकुर्वतापि वैयाकरणेनापीति वा सर्वविधिव्यापारसाध्यत्वमित्यर्थः । यतितव्यमिति तथा चानिच्छतापि अनुभवबलात्परंपरया कृतिसाध्यत्वं स्वीकार्यमिति भावः । अन्यथासिद्धत्वं तु नैयायिकमते न तु मीमांसकमते 'इमामगृभ्णन्नशनामृतस्येत्यश्वाभिधानीमादत्ते' । यत्रापीति । 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः' इत्यत्र विधिश्रवणेपि यत्र मैत्रेयीब्राह्मणे 'आत्मा वा अरे द्रष्टव्यः' इत्यादौ तत्रापि तव्यादिं विधावङ्गीकृत्य 'न वा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय पतिः प्रियो भवति'. इत्यादीनामर्थवादत्वम् । आत्मा यत्र प्रियः किमुत वाच्यमात्मनोऽपि आत्मा प्रिय इति प्रियत्वाच्छीघ्रफलदाता स श्रोतव्य इत्येवं तत्रत्यानां तच्छेषत्वं विधिशेषत्वं कल्प्यमित्यर्थः । प्रकृते, ऐकार्थ्याभावेनेति । उभयोर्मीमांसयोरित्यर्थः । तथा चायं मीमांसकत्वोक्तिं न संगच्छतीत्यर्थः । संहतमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति बोधायनसूत्रात् । तन्निन्दनेति कर्मविच्छेदकस्य निन्दनं दुर्ज्ञाणत्वादिरूपं तत्कृत इत्यर्थः । अत्र तत्पदं कर्मपरामर्शविच्छेदकं लक्षयति । अत्र वितण्डयेति वादभेदेन स्वपक्षदोषमनुद्धृत्य परपक्षदोषदानरूपेण प्रतिकूलमाहेत्यर्थः । सामग इति 'सामगो जैमिनिः कविः' इति वाक्यादि-

संभवाच्च । आचारपरंपरयापि करणसंभवाच्च । एनमर्थमपि संदेहे सूत्रभाष्ययाज्ञिकानामेवानुवृत्तिः क्रियते, न मीमांसकस्य । तस्मात् साङ्गवेदाध्येतुर्निःसंदेहकरणसंभवान्न पूर्वयाऽपि कृत्यम् ।

किंच परमकृपालुर्वेदः संसारिणः संसारान्मोचयितुं कर्माणि चित्तशुद्ध्यर्थं बोधितवानिति कूपेऽन्धपातनवदप्रामाणिकत्वभियावसीयते । विपरीतबोधिका तु पूर्वमीमांसा तस्मादपि न कर्तव्येति ।

नैवम् । किं विचारमात्रं न कर्तव्यं, पूर्वकाण्डविचारो वा । नाद्यः । तुल्यत्वात् समर्थितत्वाच्च ।

द्वितीये सामान्यन्यायेन संदेहे निवार्ये लक्षणवत्तदुपयोगः । अनिष्टतया निरूपणं न मीमांसादोषः । किंतु विचारकाणां स्वभावभेदात् ।

---

भाष्यप्रकाशः ।

मित्यर्थः । उपासनायामप्यनुपयोगमाह आचारेत्यादि । सूत्रभाष्येति कल्पसूत्रभाष्येत्यर्थः । पूर्वयापीत्यत्रापिशब्दः पूर्वपक्षिगर्हार्थः । शेषमतिरोहितार्थम् ।

एवं केवलवैदिकरीत्या विचारे आक्षिप्ते पूर्ववादी समाधत्ते नैवमित्यादि । पूर्वयापि न कृत्यमिति न वक्तव्यम् । कुत इत्याकाङ्क्षायामपिशब्दस्य समुच्चायकत्वं मन्वानः पक्षद्वयं विकल्प्य प्रथमस्रुभयनिषेधाभावे हेतू आह तुल्यत्वादिति । 'यत्रोभयोः समो दोषः' इति न्यायेन परिहारसाम्यात् तवापीष्टसिद्धेरभावेन दूषणसाम्याद्वा, अप्रतिज्ञानादित्यादिभिस्त्वया समर्थितत्वाच्चेत्यर्थः । सामान्यन्यायेन संदेह इति 'अक्ताः शर्करा उपदधाति,' 'निर्मन्थ्येनेष्टकाः पचन्ति' इत्यादौ घृततैलवसानां चिरनिर्मथिताऽचिरनिर्मथितप्रभृतीनां चाञ्जनपाककरणयोग्यतादेः सामान्येन जाते संदेहे । ननु तुच्छफलत्वान्नोपयोग इत्युक्तं तत्राह अनिष्टतयेत्यादि । स्वभावभेदादिति

रश्मिः ।

त्यर्थः । अनुपयोगमिति चेतुर्लक्षण्या[1] अनुपयोगमित्यर्थः । पूर्वपक्षीति उभयोः करणाक्षेपाद्यार्थसंदेहयोरभावानिवृत्तिभ्यां तथेत्यर्थः । भाष्ये कूपेऽन्धपातनवदिति । कूपेन्धपातनवद्विषयेषु विषयिपातनादप्रामाणिकत्वं तत्संबन्धिनी भीस्तया परमकृपालुरित्याद्यवसीयते इत्यर्थः । प्रकृते । केवलवैदिकेति श्रुत्वा केवलवैदिकरीत्या । केवलवैदिकस्य रीतिः पूर्वमङ्गीकृता इति । अपिशब्दस्य न पूर्वयापि कृत्यमित्युक्तं तत्रत्यापिशब्दस्येत्यर्थः । यत्रोभयोरिति ।

'यत्रोभयोः समो दोषः परिहारश्च तत्समः ।
नैकः पर्यनुयोज्यः स्यात्तादृगर्थविचारणे ॥'

इति न्यायेनेत्यर्थः । तथा च तव पूर्ववादिनोपि विचाराकर्तव्यतापत्तिः 'स्वाध्यायोऽध्येतव्यः' इति श्रुतिविरोधादिति तु नोक्तम् । पुनः पूर्वोक्तयोरुभयत्र मण्डनखण्डनयोः प्राप्तेः । समर्थितत्वाच्चेति उभयोः समर्थितत्वाच्चेत्यर्थः । निर्मन्थ्येनेत्यादि । पूर्वतन्त्रे प्रथमस्य चतुर्थे तथा निर्मन्थ्येत्यधिकरणे चिन्तितम् । निर्मन्थ्यपदं वह्नित्वे रूढं यौगिकं योगरूढं वेति संशये निष्पन्नाग्नौ योगव्यभिचारः तदानीं निर्मन्थनकर्माभावात्, भूतपूर्वयोगस्यापि प्रतिक्षणमन्यान्यत्वाद्वह्नौ प्रवृत्त्यसामर्थ्यं, निर्मन्थननिष्पन्नस्याग्नेस्तदैव नाशात् आकृतेस्त्वव्यभिचाराद्रूढमिति प्राप्ते लौकिकनिर्मथनेन

---

१. द्वादशलक्षण्या ।

किंच । आवश्यकत्वादपि । निवृत्तानामपि यागादिज्ञानस्यावश्यकत्वं चित्तशुद्ध्यर्थत्वात् । परमाश्रमभेदेन प्रकारभेदः कायिकादिभेदात् । तत्राद्यस्य वाचिको द्वितीयतृतीययोः कायिकश्चतुर्थस्य मानसिक इत्याश्रमिणाम् । तस्मादेकेनैव चरितार्थत्वात् किं द्वितीयेनेति प्राप्ते । उच्यते । उपासनाया धर्मत्वेऽपि न ब्रह्मणो धर्मत्वं ज्ञानरूपत्वात् । धर्मस्य च क्रियारूपत्वात् ।

---

भाष्यप्रकाशः ।

'तेषां प्रकृतिवैचित्र्यात्'इत्येकादशस्कन्धीयवाक्योक्तरीतिकात् तस्मात् । अनुपयोगरूपं दूषणमुत्तरमीमांसायां हृदि कृत्वाह किंचेत्यादि । आवश्यकत्वं विवृणोति निवृत्तेत्यादि । तथाच त्रैवर्णिकाधिकारपक्षे शास्त्रवैयर्थ्यस्यापरिहार्यत्वात् तद्विहाय पूर्वतन्त्रमेवादरणीयमित्यर्थः ।

अत्र समादधते उच्यते । उपासनाया इत्यादि । त्रैवर्णिकाधिकारपक्षे स्यातां ब्रह्ममीमांसाया गतार्थत्वानुपयोगौ, यद्युत्तरकाण्डस्य मुख्यतयोपासनारूपधर्मप्रतिपादकत्वं स्यात् । तदेव तु न । किंतु ब्रह्मप्रतिपादकत्वं, ब्रह्मण एव सर्ववेदार्थत्वात् । 'सर्वे वेदा यत्पदमामनन्ति,' 'वेदास्त्रिकाण्डविषया ब्रह्मात्मविषया इमे', मां विधत्तेऽभिधत्ते माम्' 'इत्यादिवाक्येभ्यः । किं बहुना, धर्मोऽपि ब्रह्मात्मकत्वेनैव प्रतिपाद्यः' । 'धर्मो यस्यां मदात्मकः' इति वाक्यात् । जैमिनिस्तु पुरःस्फूर्तिक-

रश्मिः ।

चिरमथनेन च उत्पन्नमग्निं निषेद्धुं पङ्कजपदवद्योगरूढम् । नावनीतवत् । यथा घृतं प्राचीनं नवं च नवनीतोत्पन्नमपि नवमेव नावनीतत्वेनोच्यते । चिरनिर्मन्थितस्त्वाधानकाले निर्मन्थ्य गार्हपत्ये धृतो वह्निः अलौकिकमथनेन सद्यः संभूतोचिरनिर्मन्थितः । भूतपूर्वमपि योगं निमित्तीकृत्य प्रयोग इति । अत्र प्रभृतीनामित्यारभ्य आदिशब्दान्तस्य किं प्रयोजनमिति चेच्छृणु । अनेककोट्यवगाहिज्ञानस्य संशयत्वेन विवक्षितत्वात्प्रभृतीनामित्युक्तम् । तथा च चिरनिर्मथिताचिरनिर्मथितवह्निवह्नित्वलौकिकालौकिकभेदभिन्नानां च । एतेषां संदेह इत्यनेनान्वये विषयत्वं घृतादीनां स्यात्तदविवक्षितं, किंतु तत्संबन्धि अञ्जनं च पाककरणं च तयोर्योग्यतादिशब्देन भावस्तयोः संदेहविषयत्वं विवक्षितं तदाहुरञ्जनेत्यादि । तेषामञ्जनादियोग्यतादेः संदेहे जात इत्यन्वयः । घृतं वसा तैलं वेत्यादयः संदेहाकाराः । अत्र दूरत्वस्थानापन्नमाहुः सामान्येनेति । यथा स्थाणुर्वा पुरुषो वा इत्यत्र दूरत्वं तथात्र समानत्वं संदेहकारणं, भाष्ये तु सामान्यं न करणं ज्ञानिनामखण्डब्रह्मभाने तस्य घटपटादिसाधारण्यादतो विचारे सखण्डब्रह्मभाने सामान्यस्य यो न्यायो रीतिस्तेन न्यायेनेति करणत्वोपपादनम् । भाष्ये लक्षणवदिति उक्तार्थमेतत् । प्रकृते । आहेति उपयोगमाहेत्यर्थः । शास्त्रवैयर्थ्यस्येति उत्तरमीमांसावैयर्थ्यस्येत्यर्थः । भाष्ये । एकेनेति पूर्वकाण्डविचारेणेत्यर्थः । प्रकृते । गतार्थत्वेति । गतः पूर्वमीमांसया प्राप्तः अर्थः उपासनारूपः यया । यज्ञाद्युपासनायाः मनोव्यापाररूपाया उप समीपे स्थित्वा यथायोग्यकरणरूपाया वा पूर्वया प्राप्तत्वात् । उपासनायाः पूर्वमीमांसायां स्वमते शेषे वेदरूपसंकर्षणे प्रतिपादके विषयिणीत्वात् । 'स सर्पानसृजत' इति तृतीयाष्टके 'तस्मात् समानाः प्रजाः प्रजायन्ते' इति संहितायाम् । अतो नोपासनायां प्रतिपाद्यवृक्षपक्षिवृषभाणां विषयताप्रतिपादकत्वरूपेण मुख्याब्रह्मत्वेपि कृष्णाजिनं ब्रह्मेति संहिता । कृष्णाजिनस्य शेषत्वं दृष्टम् । अत उपासनायां ब्रह्ममीमांसाया अनुपयोगः । मुख्यत्वयेति । विषयत्वाभावादिति भावः । किंतु ब्रह्मेति । विषयत्वेन मुख्यत्वादिति भावः । पुरःस्फूर्तिकमिति यथा 'यत्पत्यपत्यसुहृदा-

भाष्यप्रकाशः ।

मेवोवाचेति न दोषः । ब्रह्म च न शारीरमात्रं, येन सृष्ट्यादिवाक्येषु वाचो धेनुत्ववत् तस्मिन् जगत्कर्तृत्वादीनामसंभवतां धर्माणामारोपापवादादिभिर्विधेयोपासनाविषयस्तावकतयोपासनाशेषता संभवन्ती गतार्थत्वानुपयोगौ दृढीकुर्यात् । किंचोपासनाविषये आत्मनि निरङ्कुशजगत्कर्तृत्वादयो ये धर्माः स्तुत्यर्थमारोप्यन्ते, ते किमत्यन्तासन्तः खपुष्पवद्, उत क्वचित् सन्तो रजतवत् । तत्राद्ये आरोप एव बाधितः । द्वितीये तु सिद्धमतिरिक्तेन ब्रह्मणा । तच्च पूर्वकाण्डे परोक्षवादत्वान्न स्फुटं प्रतिपादितमिति तत्प्रतिपादकमुत्तरकाण्डं न धर्मप्रतिपादकम् । अत उपासनाया धर्मत्वेऽपि नोत्तरमीमांसाया गतार्थत्वमित्यर्थः । नन्वस्त्वेवं, तथापि सृष्ट्यादिवाक्यानां विधिमन्त्रादिरूपत्वाभावादर्थवादत्वमेव वक्तव्यम् । ततश्च ब्रह्मस्तावकत्वात् तेषां न स्वार्थे प्रामाण्यमिति तद्विचारशास्त्रस्य

रश्मिः ।

मनुवृत्तिरङ्ग' इति श्लोकोक्तो धर्मः । अत एव धर्मजिज्ञासां चकार न तु कर्मजिज्ञासाम् । 'देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे' इति संहितोक्तत्वेपि निरोधलक्षणग्रन्थोक्ताधिदैविकश्रवणादिरूपमर्यादासेवात्वेन श्रुत्यधिकारिधर्मत्वात् । यथा 'अस्त्वेवमङ्ग उपदेशपदे त्वयीशे' इत्युक्त्वा 'प्रेष्ठो भवान् तनुभृतां खलु बन्धुरात्मा' इति श्रुत्यधिकारि यद्वाक्यं तदुक्तो धर्म आधिदैविकः । तथा च यथा 'धर्मं चर' इत्याचार्योपदेशेन भक्ता अपि भगवद्वाक्यानि पूर्वपक्षयाञ्चक्रुस्तथाचार्योपदेशेन धर्मजिज्ञासां चकार । कर्मणस्तूक्तस्य सर्वानधिकारान्मुख्यत्वेऽपि कर्मणे न कर्मजिज्ञासा इत्युवाच । अग्रे 'कर्मैके तत्र दर्शनात्' इति सूत्रं चकार । तथा चाध्यात्मिकमेवोवाचेत्यर्थः, आध्यात्मिकस्तु 'धर्मः प्रोज्झितकैतवोऽत्र' इति वाक्यादेकादशैकोनविंशाध्यायोक्तश्रवणादिसरणिरूपो धर्मः । **गतेति** । ब्रह्ममीमांसा यतः । **बाधित** इति । तादृशस्यादर्शनादिति भावः । **अतिरिक्तेने**ति सद्धर्माश्रयस्य वक्तव्यत्वात्तथेत्यर्थः । **परोक्षवादत्वा**दिति 'परोक्षवादो वेदोयम्' 'परोक्षं च मम प्रियम्' 'परोक्षप्रिया इव हि देवाः' इति वाक्यनिकुरम्बात् । **न धर्मप्रतिपादक**मिति । अपूर्वप्रतिपादकं नेत्यन्ये । सिद्धान्ते धर्मस्यैव फलपर्यन्तावस्थानोपगमात् । एतदेवाग्रे पूर्वखण्डने स्फुटिष्यति । तथाचोक्तम्—

'किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेत् ।
एतस्या हृदयं लोके नान्यो मद्वेद कश्चन ॥
मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्यते ह्यहम् ।
एतावान् सर्ववेदार्थः शब्द आस्थाय मां भिदाम् ॥
मायामात्रमनूद्यान्ते प्रतिषिध्य प्रसीदति' ॥ इति

नच वेदो मां स्वव्यापारावधिं कृत्वा भिदां मायामात्रमित्यनूद्य 'नेह नानास्ति किंचन' इति प्रतिषिध्य भेदं, प्रसीदति निवृत्तव्यापारो भवतीति निरुणद्धि इति वाच्यम् । सर्वसामर्थ्यस्य ब्रह्मणो मायाकृतां विपर्यस्तबुद्धिकृतां नेदं ब्रह्मकार्यमित्याकारिकां भिदामनूद्य प्रतिषेधति कार्यभावात्पूर्वं रूपं वक्तीत्येकदेशिनः । विरुद्धसर्वधर्माश्रयस्य आनन्दस्य प्रतीयमानां भिदां मायामात्रं क्रीडार्था माया या मुख्या शक्तिस्तन्मात्रं, नतु आविद्यकमित्यनूद्य प्रतिषेधति । ब्रह्मैव सर्वं, भेदो बुद्धिदोषाद्भातीति सिद्धान्तः । प्रकाशाश्रयाधिकरणे स्फुटमिदम् । न च मायाविद्ययोरेकीभाव इति सांप्रतम् । 'विद्याऽविद्यया शक्त्या मायया च निषेवितम्' इति वाक्येन भेदावगमात् । भाष्ये । **ज्ञानरूपत्वा**दिति

रश्मिः।

क्रियारूपत्वखण्डने तात्पर्यादेवमुक्तम्, आनन्दस्यैव त्रिषु मुख्यत्वात्। न च द्वैतापत्तिः। द्वैतं हि द्वयोर्भाव उच्यते 'प्रज्ञादिभ्यश्च' इत्यणा, ब्रह्मैव सर्वमिति क द्वौ। न ह्येकस्मिन्दीपे द्वाविति प्रतीतिरस्ति। तदुक्तम्—

'कार्यकारणवस्त्वैक्यमर्शनं पटतन्तुवत्।
अवस्तुत्वाद्विकल्पस्य भावाद्वैतं तदुच्यते' ॥ इति सप्तमस्कन्धे।

यदपि द्वयोर्भावो द्विता तत्र भवं द्वैतं संशयरूपं ज्ञानं, द्वाभ्यामितं प्रकारद्वयेन विरुद्धत्वाद्भिन्नाधारवर्तिना युक्तं वस्तु द्वीतं तत्र भवं द्वैतं तदेव संशयज्ञानमिति कैयटानुरोधे त्वद्वैतं संशयाभावः। अतश्च ब्रह्मैव सर्वमिति निश्चय इति तदप्यविरुद्धम्। अथवा यथाश्रुतोर्थः एकादशस्कन्धे सांख्यनिरूपणे स्फुटत्वात्, भाष्ये तु स्तुत्यानन्द आनन्दमये विश्रान्त इत्यदोषः। तत्र ज्ञानं दशधा इति तृतीयसुबोधिन्यां 'अथ ते तदनुज्ञाता' इत्यत्र निरूपितम्। एतच्च ज्ञानं 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतेर्ब्रह्मात्मकम्। तल्लक्षणं तु 'त्रितयं तत्र यो वेद स ह्यात्मा स्वाश्रयाश्रयः' इति वाक्ये आधिदैविकादित्रिकव्यतिरिक्तत्वे सति तत्त्रितयज्ञातृत्वमिति सिध्यति। स्वाश्रयश्चासौ आश्रयः इति कर्मधारय एवोद्देश्यविधेयभावात्स्वरूपकथनपूर्वकं लक्ष्यनिर्देशः, तच्च भावनयाभिव्यज्यते 'ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः' इति श्रुतेः। जीवानामपि अत्रैवाभिनिवेशः सजातीयत्वात्। तद्गुणोऽपि चैतन्यं तत्रैव निविशते तदविनाभूतत्वात् 'जीवस्यानुस्मृतिः सती' इत्युत्तरार्धे तत्स्वरूपमुक्तम्। पूर्वापरानुसंधानरूपा स्मृतिश्चैतन्यमिति। व्युच्चरणात्पूर्वमभेदेन, व्युच्चरणोत्तरमविद्यासंबन्धात्प्राक्कालवर्तिनो ज्ञानस्य सोहमिति पूर्वापरानुसंधानरूपस्यैव सिद्धत्वात् तत्त्वमस्याद्युपदेशोत्तरमपि तथैव प्रतिसंधानादजपायामपि तथात्वात्तादृशत्वनिश्चयः। अयमेव स्वरूपलाभो विद्यया संपाद्यः विस्मृतकण्ठमणिन्यायात्। तथापि नित्यम्। 'सत्त्वशुद्धौ ध्रुवा स्मृतिः' इति श्रुतेः। पूर्वोक्तमेव ज्ञानं धर्मात्मकप्रकाशरूपेणाविर्भवद् भगवद्गुणतां श्रयति सूर्यप्रकाशवत्। तदनित्यमपि 'तथैव तत्त्वविज्ञानमस्तु ते मदनुग्रहात्' 'युक्तं भगैः स्वैरितरत्र चाध्रुवैः' इत्यादिवाक्येभ्यः। चैतन्यमप्यत्रैव वा निविशते इति द्वितीयं, तृतीयं तु वेदशरीरं दधद्भवति।

'स एष जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः।
मनोमयं सूक्ष्ममुपेत्य रूपं मात्रा स्वरो वर्ण इति स्थविष्ठः॥'

इत्येकादशस्कन्धात् सृष्ट्यै भगवन्मनोमयादिसरण्या दधाति, तथाहि ब्रह्मणो हृदयाकाशे स्वयं ब्रह्म आसन्येन करणतामापन्नेन नादरूपं दधदाविर्भवति, तदुक्तं घोषेण गुहां प्रविष्टः इत्यन्तेन। स पूर्वमव्यक्त एव ततो नानावर्णादिसंकल्पकमनोमयं सूक्ष्मरूपमुपेत्य ब्रह्ममुखतः प्रकटः सन्मात्रास्वरवर्णात्मना स्थूलरूपेण शब्दब्रह्मात्मकवेदरूपश्चकास्ति। स च नादोऽस्मदादिष्वपि प्राणघोषरूपेण वर्तते व्यापकत्वात्, श्रावणस्तदनुभवस्तु श्रोत्रवृत्तिनिरोधसंपाद्यो भगवतैव कृत्वा जीवेन। नान्यः प्रकारः श्रावणे जीवानुभवे। जीवानुभवस्तु भगवतेति निरुद्धद्वारनिष्ठजीवो न कार्यं करोतीति। अयमेव नादः स्फोट इत्युच्यते स्फुटति वागनेनेति व्युत्पत्तेः। तदुक्तम्—

१. अनुभवजन्मत्वेऽपि।

रश्मिः ।

'समाहितात्मनो ब्रह्मन्ब्रह्मणः परमेष्ठिनः । हृद्याकाशादभून्नादो वृत्तिरोधाद्विभाव्यते ॥
शृणोति य इमं स्फोटं सुप्तश्रोत्रे च शून्यदृक् । येन वाग्व्यज्यते यस्य व्यक्तिराकाश आत्मनः ॥
स्वधाम्नो ब्रह्मणः साक्षाद्वाचकः परमात्मनः । स सर्वमन्त्रोपनिषद्वेदबीजं सनातनम्' ॥ इति ।

तेन स्फुटत्यर्थोऽनेन इति स्फोट इति वैयाकरणोक्तं प्रत्युक्तम् । नैयायिकास्तु स्फोटं नाद्रियन्ते । तथा हि । घट इत्युक्ते घकाराकारटकाराकारविसर्जनीयैरर्थप्रत्ययाभावाद्वर्णानां क्रमिकत्वेन पदवाक्यरूपवर्णसमुदायाभावेन ततोऽप्यर्थाप्रत्ययात्पूर्वपूर्ववर्णानुभवजन्यसंस्कारसहकृतान्तिमवर्णादप्यनेकादृष्टसंस्कारकल्पनागौरवप्रस्तावादर्थप्रत्ययाभावाद्वर्णाभिव्यङ्ग्योऽतिरिक्तः स्फोटाख्यः शब्दार्थं प्रत्याययति । एवं पदस्फोटो वाक्यस्फोटश्च । इति प्राञ्चो वैयाकरणाः । आधुनिकास्तु स एवायं घकार इति प्रत्यभिज्ञाबलाद्वर्णरूपः स्फोटः तथा पदवाक्यस्फोटावपि । न चेयमेकार्थबोधकत्वमवलम्बत इति शङ्क्यम् । जलाहरणादिरूपैकार्थजनकत्वस्य सोऽयं घट इत्यादौ शक्यवचनत्वादिति मन्यन्ते तन्न, तादृशसहकारिसंपन्नोऽन्तिमवर्ण एव वाचक इति स्फोटकल्पनायामपि गौरवतौल्याच्च । अपि च वर्णव्यङ्ग्यो यत्किंचिद्वर्णव्यङ्ग्यो वा तावद्वर्णाभिव्यक्तिव्यङ्ग्यो वा नेमौ । क्रमिकाणामाशुविनाशिनां यौगपद्यासंभवात् घकारमात्रोच्चारणे पदस्फोटप्रत्ययेऽर्थप्रत्ययापत्तिवर्णान्तरवैकल्याभ्यां तदसंभवाच्च । अथ पूर्ववर्णसंस्कारसहितचरमवर्णोपलम्भः तद्व्यञ्जक इति उच्यते तर्हि स एवार्थप्रत्यायकोऽस्तु कृतं स्फोटेन । न च पदप्रतीतिः स्फोटसाधिका तावद्वर्णगोचरप्रत्ययाभावेपि तावद्वर्णगोचरसंस्कारात्समूहालम्बनतावद्वर्णगोचरस्मरणसंभवात्क्रमविशेषवत्तावद्वर्णगोचरत्वेन स्फोटासाधकत्वात् । नहि वर्णमात्रं पदं सरोरसयोः नदीदीनयोः अविशेषापत्तेः । किंतु आनुपूर्वीविशेषविशिष्टतावद्वर्णरूपम् । नचाप्रत्ययः घोत्तरं शृणोमीति प्रत्ययात् घोत्तरत्वं हि टस्यानुपूर्वीति । ततः सृष्टिश्च 'शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम्' इति सूत्रभाष्ये स्फुटिष्यति । तादृशशरीरयुक्तमपि रूपं 'अनन्ता वै वेदाः' इति तैत्तिरीयब्राह्मणश्रुत्या अनन्तं विराडिव । तुरीयं तु इदमेव शरीरविशिष्टं भगवदाश्रितमेव पाश्चात्यां विक्लिष्टशक्तिमापद्य व्यष्टय इव विकृतास्तत्रासकरवालेत्यादिरूपाः सर्वे शब्दा भवन्त्यादिसृष्टौ । तथा हि पूर्वोक्तो नादः सुषुम्णामार्गेण आधारहृत्कण्ठमुखेषु संचरन् परापश्यन्तीमध्यमावैखरीरूपेणाविर्भवतीति । एतत्प्रामाण्योपपादनावसरे स्फुटमुपपाद्यम् । एतच्चतुर्विधं नित्यम् । ततः तादृशवेदविकृतशब्दात्मकद्विविधशरीरविशिष्टमेव तल्लोके प्रकटीभवितुं समवायित्वेन प्रमातारं निमित्तत्वेन प्रमेयं चाश्रयते । न च प्रमाणविरहः शङ्कनीयः । पश्यन्त्याख्यशब्दावस्थाबोधकश्रुतिसद्भावात् । 'चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहितानि नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति' इति श्रुतिः । आधारनाभिहृदयवदनरूपाणि चत्वारि पदानि स्थानानि । तत्र परापश्यन्तीमध्यमावैखरीरूपाश्चतस्रः शब्दावस्थास्तासु त्रीणि परापश्यन्तीमध्यमाख्यानि गुहायां निहितानि । अतः नेङ्गयन्ति न जानन्ति, तुरीयं वैखर्याख्यं अत एव केषांचित् ।

'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते' ॥ इति ।

प्रमेयाश्रयत्वं तु ज्ञानस्य शब्दानुविद्धत्वाच्छब्दस्य च नित्यमर्थसंबद्धत्वाच्छब्दविशिष्टस्यैव,

नचार्थवादानां धर्म इव ब्रह्मण्युपयोगः कर्तुं शक्यः। उत्पत्तिप्रकारफल-

भाष्यप्रकाशः।

कोपयोग इत्यत आहुः नचेत्यादि। स्यात् स्वार्थे अप्रामाण्यं, यदि कर्मणीव ब्रह्मण्युपयुज्येरन्। कर्मणि हि त्रेधा तेषामुपयोगः। यथा, असावादित्यो न व्यरोचतेत्यादीनां सौर्याद्युत्पत्तौ।

रश्मिः।

तादृशानुव्यवसायाकारात्। परमत्र शब्दोऽर्थश्च न्यग्भूतो भासते, पूर्वत्र तु ज्ञानं न्यग्भूतमिति विशेषः। न च अनेडमूकीयज्ञानस्य शब्दावैशिष्ट्यमिति शङ्क्यम्। अभिनयस्यैव तत्र शब्दस्थानापन्नत्वेन शब्दविशेषमनुसंधायैव बोधकेनाभिनयदर्शनात्परंपरया तस्यापि शब्दवैशिष्ट्यात्। इदं पञ्चमम्। प्रमातरि तु अन्तःकरणेन्द्रियाश्रयणात्पञ्चधा तत्रेन्द्रियेष्वेकधा, अन्तःकरणे चतुर्धा। मनसा जायमानं संशय इति व्यवह्रियते। संकल्पविकल्पात्मकत्वात्तस्य। अत एव शङ्कापिशाच्या उत्तरोत्तरं भिन्नभिन्नविरुद्धकोटिविधायिन्या अनिवृत्तिः। कथं तर्हि आत्मानं गृह्णाति इति चेद्द्वारात्म्यनिवृत्तौ प्रमास्यति। अहंकारेण कृता शरीराभिमतिस्तु बुद्ध्याश्रया। विपर्यासनिश्चयस्मृतीनां बुद्धिवृत्तित्वा-द्बुद्ध्याश्रयत्वम्। यदा तु शरीराभिमतिर्मोक्षशास्त्रीयसाधनैर्नाशमेति तदा तन्मूलास्तेऽपि नश्यन्ति। ज्योतिर्ब्राह्मणे आत्मज्योतिष्ट्वमुपक्रम्य स समानः सन् इति अहंकारसमानत्वेन सधियः स्वप्नात्मक-बुद्ध्यवभासकतया स्वप्नात्मकत्वादहंकारो बुद्ध्या सहितः स्वापं पश्यतीति स्वप्नज्ञानमहंकाराश्रयम्। चित्तं तु सुषुप्तावात्मानं पश्यत्यैक्येन अन्यदा तु लीनमिति निर्विषयं ज्ञानं चित्ताश्रयमेवं दशधा। तदिदं षड्विधं जन्यमन्तःकरणधर्मः 'कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भी-रित्येतत्सर्वं मन एव' इति श्रुतेः। स्थिरं च घटादिवत् न च त्रिक्षणावस्थायित्वम्। 'प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते,' 'स्थिरबुद्धिरसंमूढः,' 'ज्ञानं यथा न नश्येत' इत्यादिवाक्येभ्यः। न चैकज्ञानं सार्वदिकं स्यादिति शङ्क्यं, विषयान्तरज्ञानसामग्र्या जातेन ज्ञानेन तद्बाधात्। नचैव-मस्थिरत्वं शङ्क्यं, संस्काराख्यसूक्ष्मरूपेणावस्थानोपगमात्। न चैवमनुव्यवसायापत्तिस्तस्येति वाच्यम्। व्याप्तस्यापि गन्धस्य घ्राणेन ग्रह एव स्फुरणवन्मनसा तस्य ग्रहण एव स्फुरणात्। न च गन्ध-स्यागन्तुकत्वेन दृष्टान्तासाम्यमिति वाच्यं, रजसा व्यापारान्तरावेशेनोपपत्तेः। तमसा तदावरणाच्च तथा। न चैवं स्मृत्यजनकस्याप्यनुभवस्य स्थिरत्वापत्तिः। इन्द्रियैर्बुद्धिजननोत्तरं पौनःपुन्याद्यभावेन अदार्ढ्यात्, ज्ञानस्य तु लोकशास्त्राहितात्सिद्धिः। न चाधिष्ठानानिर्वाच्यता प्रयुक्ता तत्स्थित्यशक्य-वचनेति वाच्यम्। अन्तःकरणाधिष्ठानकत्वात्। अनिर्वचनीयत्वस्य निरस्तत्वात्। विरुद्धवृत्ति-तिरोभाव्यत्वाङ्गीकारान्न तन्नाशानुपपत्तिरिति प्रासङ्गिकं ज्ञेयम्। प्रकृते। विधिमन्त्रादीति। आदिना ब्राह्मणम्। यथाऽसावित्यादि। न व्यरोच्यत मेघाद्याच्छन्नोसावादित्यो न विगतदीप्तिमान्जात इति 'सौर्यं चरुं ब्रह्मवर्चसकामो निर्वपेत्' इति सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः इत्यस्योत्पत्तौ सौर्य-प्रथमाङ्गस्यैव तज्जनकवाक्यस्योपयोग इत्यर्थः। इदं पूर्वतन्त्रे सप्तमस्य चतुर्थे पादे 'इतिकर्तव्यता-विधेर्यजतेः पूर्ववत्त्वम्' इत्यधिकरणे चिन्तितम्। यदि च 'असौ आदित्यो न विशेषेण दीप्तिमान्जातः' इति पक्षोपि विभाव्यते, तदापि स एवार्थः। चरुस्तु दशमे 'चरुर्हविर्विकारः स्यादिज्यासंयोगात्' इत्यधिकरणे ओदनविशेषो न तु स्थाली, 'सौर्यम्' इति देवतासंयोगादिति चिन्तितम्। यत्तोखा स्थाली चरुरिति पर्यायतावाचकं निघण्टुवचनं तदपि 'हव्यपाके चरुः पुमान्' इति निघण्ट्वन्तराद-

भेदानामभावात् । प्रकृते तु माहात्म्यज्ञानार्थं तदुपयोगः । तस्य च ज्ञानोपयोगो

भाष्यप्रकाशः ।

यथावाप वै सोमेनेजानादित्यत्राष्टाक्षरा गायत्रीत्यस्याग्नेयपुरोडाशीयेऽष्टाकपालत्वरूपे प्रकारे । यथा च, वायुर्वै क्षेपिष्ठेत्यादीनां भूत्यादिरूपे फले । न तथा ब्रह्मणि । नित्यत्वात् सदैकरसत्वात् स्वस्यैव फलत्वाच्च । अस्ति तु माहात्म्यज्ञानार्थमुपयोगः । माहात्म्यं च सदेव ज्ञातं फलाय, न त्वसत् । असत्त्वे तदधिष्ठानस्यासमर्थतायां ततः फलाभावप्रसङ्गात् । तदाहुः तस्य चेत्यादि । माहात्म्यज्ञानेन भक्तिद्वारा साक्षात्कारोपयोग इति फलाध्याये प्रथमपादे, 'आदित्यादिमतयः' इतिसूत्रे वक्ष्यत इत्यर्थः । नन्वस्तु ब्रह्मणि माहात्म्यज्ञानार्थं सृष्ट्यादिवाक्योपयोगस्तथापि तेषां विध्युपयोगोवश्यं वक्तव्यः । नोचेदुपासनादिविधीनां प्ररोचनाभावेन व्यापारकौण्ठ्ये वाक्यवैयर्थ्यापत्तेः । एवं सिद्धे तेषां विधिशेषत्वे तेषु निरूप्यमाणं ब्रह्मापि तच्छेषमेवेत्युत्तरकाण्डस्य न तत्प्रतिपादकत्वम् ।

रश्मिः ।

विरुद्धम् । यथावापेति । एवं श्रूयते 'आग्नेयमष्टाकपालं निर्वपेद्वैश्वानरं द्वादशकपालमग्निमुद्वासयिष्यन्यदष्टाकपालो भवति अष्टाक्षरा गायत्री' इति । अन्यत्र च 'आप वै सोमेनेजानाद् देवताश्च यज्ञश्च क्रामन्त्याऽग्नेयं पञ्चकपालमुदवसानीयं निर्वपेत् अग्निः सर्वा देवताः' इति, तथापि अप वा इत्याद्यष्टाक्षरेषु गायत्रीत्वकल्पना । यथा यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति इत्यत्र अष्टत्वादिसंख्यासामान्यात्पुरोडाशानां गायत्रीत्वकल्पना । प्रथमस्य चतुर्थे 'पूर्ववन्तोऽविधानार्थास्तत्सामर्थ्यं समाम्नायः' इत्यधिकरणेऽस्ति यतोऽष्टाक्षराण्यतोऽष्टाक्षरा गायत्री अतोऽष्टाकपालमिति संख्यातात्पर्यकथनेनोपयोग इत्यर्थः । यथा च वायुरित्यादि । प्रथमस्य द्वितीयपादे 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते' इत्यधिकरणे 'वायुर्वै क्षेपिष्ठा' इत्यस्य 'वायव्यं श्वेतमालभेत भूतिकामः' इत्युपयोग इति चिन्तितम् । अत्र प्रथमोर्थवादो निन्दारूपेण विधिशेषभूतः प्राशस्त्येन वा विधिशेषभूतः । द्वौ प्राशस्त्येनैव विधिशेषभूतौ तथा नार्थवादलक्षणं 'प्राशस्त्यनिन्दान्यतररूपेण विधिशेषभूतं वाक्यमर्थवादः' इति मीमांसार्थप्रदीपे । न तथा ब्रह्मणीति । त्रेधा तेषामुपयोग इत्यन्वयः । अत्र हेतूनाहुर्नित्यत्वादिति । प्रथमज्ञप्तिष्वपि सत्यमित्यादिवाक्येनोत्पत्तिवाक्यत्वम् । प्रथमज्ञप्तेः साध्यविषयिण्या विवक्षितत्वात् उत्पत्तिपदस्वारस्यात् । अत उक्तं नित्यत्वादिति । सदैकरसत्वात्प्रकाराभावः, स्वस्यैव फलत्वाच्च फलान्तराभावः । अतो न धर्म इव उपयोग इत्यर्थः । तदानीं कथमुपयोगो ब्रह्मणि इत्यपेक्षायां प्रकृते त्वित्यादि भाष्यं विवृण्वति अस्ति त्विति । तत्त्वमस्यादिवाक्योक्तमैक्यमपि माहात्म्यमिति न पृथगुक्तम् । तस्य चेत्यादि भाष्यमवतारयन्ति माहात्म्यं चेति । असमर्थतायामिति निर्गुणत्वेन फलदातृत्वरूपगुणस्याप्यभावेनासमर्थतायामित्यर्थः । तत इति फलदातृत्वशून्यादित्यर्थः । भक्तिद्वारेति इदं च तत्रैवोपपादयिष्यते । प्ररोचनाभावेनेति अर्थवादाभावेन । यः स्तूयते स विधीयते इति नियमप्रवृत्त्यभावाद्विधिरूपव्यापारस्य छान्दसत्वेनान्यनिष्ठत्वरूपे कौण्ठ्ये इत्यर्थः । वाक्येत्यादि उपासनादिविधिवाक्यस्य निष्फलत्वरूपवैयर्थ्यापत्तेरित्यर्थः । तच्छेषमिति उपासनाविधिशेषमित्यर्थः । नेति ब्रह्मणं उपासनायाः सकाशान्मुख्यत्वेऽनधिगतार्थगन्तृत्वाभावेनाप्रामाण्यापत्त्या नेत्यर्थः ।

यथा तथा वक्ष्यते चतुर्थे । उपासनादर्शनादिपदानां मनोव्यापारत्वमेव । विचारस्यापि यथा ज्ञानोपयोगित्वं, तथाग्रे वक्ष्यते ।

किंचौपनिषदज्ञानस्यापि कर्मोपयोगित्वम् । 'यदेव विद्यया करोति श्रद्धयोपनिषदा वा तदेव वीर्यवत्तरं भवति' इति । अत एव ब्रह्मविदामेव जनकादीनां

भाष्यप्रकाशः ।

ततश्च सिद्धावुत्तरमीमांसाया गतार्थत्वादनुपयोगाविव्याकाङ्क्षायामाहुः उपासनेत्यादि । अस्त्वेवम् । तथापि विधेयानामुपासनाज्ञानादीनां मनोव्यापाररूपतया सविषयत्वेन विषयाधीनत्वात् तद्विषयस्य ब्रह्मणो न मुख्यत्वं हीयते । अहीयमाने च तस्मिन्नितरप्रमाणागोचरस्य तस्य ज्ञानायोत्तरकाण्डविचारस्यावश्यकत्वान्न तन्मीमांसाया गतार्थत्वादनुपयोगाविव्यर्थः । ननु तथापि ब्रह्मण आसंसारं प्रसिद्धानुभावत्वात् तज्ज्ञाने विचारस्यानुपयोगाद् वैयर्थ्यमस्य शास्त्रस्यानिवार्यमित्यत आहुः विचारस्येत्यादि । अग्रे वक्ष्यत इति तृतीयस्य द्वितीयपादे, उभयव्यपदेशाद्यधिकरणेषु वक्ष्यते ।

उपासनाद्यर्थमेव न ब्रह्म जिज्ञास्यं, किंतु पूर्वकाण्डोक्तेपि कर्मणि मुख्यफलाद्यर्थं तदवश्यं जिज्ञास्यमिति, नास्यागतार्थत्वादनुपयोगाविव्याहुः किंचौपनिषदेत्यादि । निगदव्याख्यातमेतत् । तथाच त्रैवर्णिकाधिकारपक्षो दोषरहित इत्यर्थः ।

रश्मिः ।

गतार्थत्वादनुपयोगाविति जैमिनीयचतुर्लक्षण्यास्तथेत्यर्थः । अस्ति सप्तग्रहाणां ब्रह्मत्वोपपादिका जैमिनीयचतुर्लक्षणी वैयासिकी वा । अस्त्वेवमित्यादि भाष्ये पदशब्दो व्यवसितौ 'पदं व्यवसितत्राण' इत्यमरात् । तथा च उपासनादर्शनादिनिश्चितानां 'आत्मेत्येवोपासीत,' 'आत्मा वा अरे द्रष्टव्यः,' 'य एवं वेद' इत्यादि श्रुतिनिश्चितोपासनादर्शनज्ञानानामिति यावत् । इत्येवं भाष्यार्थं मत्वाहुः विधेयानामिति । निश्चयेन विधेयानां न तु उप समीपे स्थित्वा यथायोग्यकरणरूपायास्तस्या अविहितत्वमपीति । मन इति 'कामः संकल्पः' इत्यारभ्य 'सर्वं मन एव' इति श्रुतेः । न च धियो व्यापारत्वं श्रुत्या सिद्ध्यति न तु उपासनायाः उप समीपे स्थित्वा यथायोग्यकरणरूपाया इति वाच्यं, धीवत् तस्या अपि व्यापारसापेक्षत्वात् । इतरप्रमाणागोचरस्येति । 'मनसैवानुद्रष्टव्यम्' इति श्रुतेस्तथेत्यर्थः । अनुमानाद्यगोचरस्येति वा । ज्ञानायेति । शेषितया शाब्दज्ञानायेत्यर्थः । वक्ष्यत इति विरुद्धधर्माश्रयत्वस्य आसंसारमप्रसिद्धस्य स्थापनं वक्ष्यत इति । तदर्थं इदं शास्त्रं इति वैयर्थ्यं निवार्यमित्यर्थः । मुख्यफलाद्यर्थमिति 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' इति श्रुतमक्षय्यं ब्रह्मलोकाख्यं फलं तदाद्यर्थमित्यर्थः । ज्ञानद्वारेति ज्ञेयम् । एतदक्षरधियामित्यधिकरणे वक्ष्यते । तेन न फलव्यभिचारो भक्तेः । एतेन अन्योन्याश्रयोपि नेति ज्ञापितम् । अनुष्ठाने तु श्रुतिभ्यामन्योन्याश्रयो वर्तत एव प्रमितावुक्तान्योन्याश्रयपरिहारोत्राप्यारोप्यः' ब्रह्मजिज्ञासया धर्मजिज्ञासा नाश्रीयत इति धर्मविचारानन्तर्यस्य प्राक्खण्डनात् । निगदेत्यादि । निगदेन व्यक्तरवेण 'यदेव विद्यया' इत्यादिना भाष्ये व्याख्यातम् । किंचौपनिषदज्ञानस्यापि कर्मोपयोगित्वमित्येतदित्यर्थः । तथा चेति । उभयोर्मीमांसयोरेवंविधैकशास्त्र्ये चेत्यर्थः । दोषरहित इति । कर्माधिकृताधिकारित्वादुत्तरमीमांसाचतुरोपि वर्णानधिकुर्यादिति दोषरहित इत्यर्थः ।

१. व्यक्तरवेण पाठभावेन ।

कर्मणि सर्वदेवसान्निध्यम् । अन्यथा आभासत्वमेव । नच ब्रह्मरूपात्मविज्ञाने देहाद्यध्यासाभावेन कर्तृत्वाभावात् कर्मानधिकार इति वाच्यम् । निरध्यस्तैरेव देहादिभिः कर्मकरणसंभवात् । अत एव जीवन्मुक्तानां सर्वे व्यापाराः । तथाच स्मृतिः ।

'नैव किंचित् करोमीति युक्तो मन्येत तत्त्ववित् ।
पश्यञ्शृण्वन् स्पृशन् जिघ्रन्नश्नन् गच्छन् स्वपन् श्वसन् ॥
प्रलपन् विसृजन् गृह्णन्नुन्मिषन्निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥
ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा' ॥ इति ।

अतो ब्रह्मविदामेव कृतं कर्म शुभफलं भवति । अतो धर्मविचारकाणामपि ब्रह्म जिज्ञास्यमेव । तस्मान्न गतार्थत्वानुपयोगौ ।

ननु फलप्रेप्सुरधिकारी । फलं च विचारस्य शाब्दं ज्ञानं, तस्य मननादि-द्वारानुभवः, तस्य चानर्थनिवृत्तिपूर्वकपरमानन्दावाप्तिः । तथाच विरक्तोऽनर्थ-जिहासुः परंप्रेप्सुश्चाधिकारी कस्मान्न भवति ।

'शब्दब्रह्मणि निष्णातो न निष्णायात् परे यदि ।
श्रमस्तस्य फलं मन्ये ह्यधेनुमिव रक्षतः' ॥

---

भाष्यप्रकाशः ।

एवं त्रैवर्णिकाधिकारपक्षे स्थिरीकृते आनन्तर्यवादी पुनः शङ्कते नन्वित्यादि । सिद्धान्ते ज्ञानविधिनार्थज्ञानप्राप्तेस्तत्र कैमर्थ्याकाङ्क्षायामुक्तप्रणाड्या, 'ब्रह्मविदाप्नोति परम्' इतिश्रुत्युक्तपर-प्राप्तिरूपफलार्थमिति वक्तव्यम् । अन्यथा प्रवृत्तिविघातापत्तेः । तत्कथने च सिद्धमसदुक्तेनाधिका-रिणा । तदेतदुक्तं कस्मान्न भवतीति । अथ वक्तव्यं, सूत्रे ब्रह्मजिज्ञासापदात् तज्ज्ञानस्यैव फलत्वं लभ्यत इति प्रणाडीसिद्धफलपर्यन्तता किमर्थमङ्गीकार्येति । तथा सति श्रीभागवतोक्तकेवलार्थवि-न्निन्दाशास्त्रविरोधापत्तिः । अतस्तदभावायोक्तफलपर्यन्तताऽवश्यमभ्युपेया । ततश्च सिद्धमुक्तेनाधि-

रश्मिः ।

भाष्ये सर्वदेवसान्निध्यमिति एतच्च श्रीभागवते स्फुटम् । अन्यथेति ब्रह्मवित्त्वाभावे इत्यर्थः । तथैवानुभवादेवकारः । देहाद्यध्यासाभावेनेति देहेन्द्रियादित आत्मनोऽविवेकाभावेनेत्यर्थः । तत्त्वविदिति जीवप्रत्यक्षज्ञानवानित्यर्थः । धर्मविचारकाणामिति मुख्यफलप्रेप्सूनामित्यर्थः । विशेषणमिदं न त्वर्थः । प्रकृते । आनन्तर्येति । आनन्तर्यवादी व्यवहारे भाट्टः । ननु फलप्रेप्सु-रित्यादि युष्मदुपपादितं तथा चैवंविधे सिद्धान्ते कस्माद्विरक्तोनर्थजिहासुः परप्रेप्सुरधिकारी न भवतीति योजनां मन्वाना आहुः सिद्धान्त इत्यादि । कैमर्थ्याकाङ्क्षायामिति । कोर्थः प्रयोजनं यस्येति किमर्थस्तस्य भावः कैमर्थ्यं तस्याकाङ्क्षायामित्यर्थः । वक्तव्यमिति सर्वात्मभावेन भजनानन्दोपि वक्तव्यः । अन्यथेति फलाभावे इत्यर्थः । तत्कथने इति फलकथने इत्यर्थः । असदु-क्तेनेति वैराग्यशमदमादिमतेत्यर्थः । शब्दब्रह्मणीति भाष्यमवतारयन्ति अथ वक्तव्यमित्या-दिना । श्रीभागवत इत्यादि । श्रीभागवतोक्तं यत्केवलार्थविषयकशाब्दज्ञानवतो निन्दाशास्त्रं

इति भगवद्वचनात् केवलस्य निन्दाश्रवणादिति चेत् । न । फलकामनाया अनुपयोगात् । अन्येनैव तत्समर्पणात् । नित्यत्वादप्यर्थज्ञानस्य न फलप्रेप्सुरधिकारी । निन्दार्थवादस्तु मननादिविधिशेष इति मन्तव्यम् ।

---

भाष्यप्रकाशः ।

कारिणेत्यनङ्गीक्रियमाणोऽपि वैराग्याद्यानन्तर्यपक्षोऽधिकारिबलादापतित इत्यर्थः ।

•अत्र समादधते नेत्यादि । विचाराधिकारत्वेन फलकामना तदोपयुज्येत, यदि ब्रह्म जिज्ञासापदात् प्राप्येत । तत्तु न । अनन्यलभ्यस्य शब्दार्थत्वात् । अतस्त्रैवर्णिकोऽर्थजिज्ञासुरेवाधिकारी । फलकामना तु, ब्रह्मविदाप्नोति परमित्यादिवाक्यार्थे ज्ञात उत्पद्यत इति तेन समर्पिता । फलं चार्थज्ञानस्य नैकम् । भार्गव्यां विद्यायामन्यत्र च, य एवं वेद प्रतितिष्ठतीत्यादिफलान्तराणामपि श्रावणात् । ततश्च भवदभिमताधिकार्यङ्गीकारेऽन्येषामनधिकारेण विचारे प्रवृत्तौ विहितायां तच्छास्त्रमेव व्यर्थं स्यात् । अतस्तदभावायार्थजिज्ञासोरेवाधिकारित्वं वक्तव्यम् । अर्थज्ञानं च नित्यम् । 'स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्' इत्यादिष्वनर्थज्ञनिन्दाश्रवणात् । अतोऽर्थज्ञानस्य नित्यत्वं ज्ञात्वा यो जिज्ञासति स एव मुख्योऽधिकारी । नच निन्दार्थवादविरोधः । तस्य मननविधिशेषत्वात् । शब्दब्रह्मणि निष्णातकथनोत्तरं तत्कथनेन तथार्थस्य लाभात् । विचारं विना

रश्मिः ।

शब्दब्रह्मणीत्यादि तस्य विरोधापत्तिरित्यर्थः । निष्णातोऽर्थविषयकशाब्दज्ञानवान्परं साधनैर्न निशामयेत् । अधेनुमप्रसूतिं गां रक्षतः श्रम इवेति वाक्यविषमपदार्थः । अत इति जिज्ञासापदादित्यर्थः । एवेति 'तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम्' इति वाक्यादेवकारः । अन्येनैवेत्यादि भाष्यं विवृण्वन्ति फलकामनेत्यादि । ज्ञात उत्पद्यत इति फलकामनाया फलेच्छारूपत्वेन जानाति इच्छति यतते इति ज्ञाते उत्पद्यते । एवकारसाफल्याद्ययुक्तिमप्याहुः फलं चेत्यादि । फलान्तराणामिति । प्रतिष्ठान्नवत्त्वान्नादत्वादीनामित्यर्थः । अन्येषामिति परप्रेप्सोरतिरिक्तानां प्रतिष्ठादिप्रेप्सूनामित्यर्थः । तच्छास्त्रमिति । 'य एवं वेद प्रतितिष्ठति' इत्यादि फलान्तरनिरूपकं शास्त्रमित्यर्थः । युक्तिस्तु यदि अर्थजिज्ञासुरधिकारी स्यात् फलान्तरनिरूपकं शास्त्रं व्यर्थं स्यादिति । नित्यत्वादित्यादि भाष्यं विवृण्वन्ति अर्थज्ञानं च नित्यमित्यादि । निन्दार्थवाद इति भाष्यं विवृण्वन्ति न च निन्दार्थवादेत्यादि । तस्य मननेत्यादि तस्य निन्दार्थवादस्य । 'नहि निन्दा निन्द्यं निन्दितुं प्रवर्तते अपि तु विधेयं स्तोतुम्' इति न्यायेन परं मन्वीत इत्याक्षिप्तस्य विधेः शेषत्वात् । तथा च अर्थज्ञानवतः पराद्रष्टुः श्रमः श्रमफल इति परं द्रष्टुं मन्वीतेति । यथा 'प्रातः प्रातरनृतं वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम्' इत्यस्यानुदितहोमनिन्दार्थवादस्योदितहोमस्तावकत्वं तद्वत् । ननु शब्दब्रह्मपाठी तदर्थज्ञानवांश्च भवेत्तदा दोष इति वदत्कथं परे व्याप्नोतीति चेत्तत्राहुः शब्दब्रह्मणीत्यादि । तथार्थस्येति उक्तार्थस्येत्यर्थः । तथा च निष्णातपदमहिम्ना परे व्याप्नोतीति भावः । नन्वेतर्ह्यपि दर्शनविधिशेषत्वमस्तु तत्राहुः विचारमिति । तथा चावश्यकत्वान् मननविधिशेषत्वमित्यर्थः । अथवा 'आत्मा वा अरे' इति श्रुत्युक्तमननविधिशेषत्वादित्यर्थः । विधिशब्देन पूर्वं पूर्वमीमांसायां तव्यो विधौ न त्वावश्यके, आनन्तर्यवादिनो व्यवहारे वयं भाक्ता इति वक्तृत्वात् । भाष्ये तु

---

१. य एवं वेद प्रतितिष्ठतीत्यादिफलान्तरनिरूपकं शास्त्रम् ।

ननु ब्रह्मणो विचारे प्रतिज्ञाते विरोधनिराकरणादीनामप्रतिज्ञातार्थत्वम् । नचावक्तव्यत्वम् । निर्विचिकित्सज्ञानानुदयप्रसङ्गादिति चेत् । न ।

ब्रह्मण इति न कर्मणि षष्ठी, किंतु शेषषष्ठी । तथाच ब्रह्मसंबन्धि

---

भाष्यप्रकाशः ।

परनिष्णातासंभवादिति । एवमत्राधिकारी प्रयोजनं चोक्तम् ।

अतः परं विषयसंबन्धौ वक्तुमाशङ्कामुखेन मतान्तरमाहुः नन्वित्यादि । ब्रह्मजिज्ञासेत्यत्र, 'कर्तृकर्मणोः कृति' इति विशेषविधानात् कर्मषष्ठ्यङ्गीकार्या यद्यपि, 'प्रतिपदविधाना षष्ठी न समस्यते' इति निषेधात् ब्रह्मणे जिज्ञासेति चतुर्थीसमासः शङ्क्यते तथापि, 'कृद्योगा च षष्ठी समस्यते' इति प्रतिप्रसवात् समाससिद्धेरत्र कर्मषष्ठ्यां गृहीतायां ब्रह्मविचार एव प्रतिज्ञातो भवति । नच शेषषष्ठी युक्ता । यद्यपि संबन्धसामान्यपरिग्रहेऽपि जिज्ञासायाः कर्मापेक्षतया ब्रह्मणः कर्मतालाभस्तथाप्याक्षेपतः प्राप्त्यपेक्षया आभिधानिकग्रहणस्यैव ज्यायस्त्वात् । तथा सति तद्व्यतिरिक्तानां विरोधनिराकरणादीनां ज्ञानपरिकरतया सिद्धावप्यप्रतिज्ञातार्थत्वम् । प्रतिज्ञा हि साध्यविशिष्टपक्षप्रतिपादकं वाक्यम् । तदत्र प्रथमसूत्रम् । तत्र च ब्रह्मण एव कर्मत्वेन जिज्ञास्यतया प्रतिज्ञानात् तदन्येषां तथात्वाभावात् । नचेष्टापत्तिः कर्तुं शक्या । तथा सति तेषामवचने निर्विचिकित्सब्रह्म-

रश्मिः ।

व्यवहिताव्यवहितसाधारणं शेषत्वं स्वीकृत्य मननादिविधिशेष इत्युक्तमिति भावः । एवमत्रेत्यादि पूर्वोक्तसरण्यात्राधिकरणे ब्रह्मजिज्ञासापदेनाधिकारी प्रयोजनं चोक्तमित्यर्थः । मतान्तरमिति शंकराचार्यरामानुजादिमतमित्यर्थः । चतुर्थीसमास इति धर्माय जिज्ञासा धर्मजिज्ञासा इति वदाशङ्क्यतेत्यर्थः । प्रतिप्रसवादिति कर्तृकर्मणोः कृतीति षष्ठीत्यस्य निषेधस्य कुण्ठितप्रवृत्तेः पुनः प्रवृत्तिजननादित्यर्थः । तथा च शेषे षष्ठी वक्तव्या सापि न संभवतीत्याहुः न च शेष इति । सामान्यतो विशेषो बलीयानिति । तद्व्यतिरिक्तानामिति ब्रह्मव्यतिरिक्तांशं द्वितीयाध्यायार्थम् । विरोधनिराकरणादीनामित्यर्थः । अयमर्थः फलाध्याये परनिरूपणमप्रतिज्ञातं स्यात् । 'अक्षरं ब्रह्म परमं वेदानां स्थानमुत्तमम्' इत्यक्षरपर्यवसानात्, तथा सति अन्यमतविशेषोपि, इदमिदमित्थतायाः प्रतिपादनं साकारत्वं च निःसंदिग्धं न स्यादतोन्यमततुल्यत्वपरिजिहीर्षुभिराचार्यैः शेषषष्ठ्यादृता । अन्यथा तन्मतदूषणानि वक्ष्यमाणानि व्यर्थानि स्युः । ततश्चाधाराधेयभावो जीवैरक्षरस्योपपाद्योपपादकरूपो विरोधनिराकरणेन प्राप्यप्रापकभावः साधनेनाधाराधेयभावः परेण संभवति । अदृश्यत्वाधिकरणेऽक्षराभिन्नत्वमक्षरे प्रतिष्ठितत्वं वक्ष्यमाणमिति । न चाक्षराभेदमादायापि परविचारस्य प्रतिज्ञातत्वसिद्ध्या शेषषष्ठी अक्षरत्वेन विरोधनिराकरणादीनां दृष्टानां कर्मत्वेपि बाधकाभावान्न युक्तेति शङ्क्यम् । भेदपक्षेऽप्रतिज्ञातत्वापत्तेः वैलक्षण्याच्चागणितानन्दत्वेन । 'नाणुरतच्छ्रुतेः' इति सूत्रात् । अत एव गीतात्रयोदशे ब्रह्मसूत्रपदैश्चेति क्षेत्रमुक्त्वाऽध्यात्मज्ञाननित्यत्वमुक्तम् । अध्यात्मत्वं तु परस्य जीवभाव एव, ब्रह्माण्डस्यापि जीवत्वं 'अग्नेः शिखाया मध्ये परमात्मा व्यवस्थितः । स हरिः सेन्द्रः सोक्षरः परमः स्वराट्' इति श्रुतेः । अतो गीताऽविरोधेन शारीरकभाष्यस्वमपि । अप्रतिज्ञातार्थत्वं पुनः स्फुटयन्ति प्रतिज्ञा हीत्यादि । न्यायप्रसिद्धमेतत् । यथाह पर्वतो वह्निमानिति प्रतिज्ञेति । तदङ्गेति ताच्छब्द्यमन्यमस्यां मीमांसायां ब्रह्मविचारे पक्षेपि कर्तव्यत्वसाधनादत इत्यन्त इति प्रथम-

भाष्यप्रकाशः ।

ज्ञानानुदयेन प्रतिज्ञावैयर्थ्यप्रसङ्गात् । तथाच कर्मषष्ठ्यङ्गीकारे द्वितीयाध्यायादीनामाकस्मिकत्वम् । शेषषष्ठ्यङ्गीकारे व्याकरणविरोधो, ब्रह्मण इतरतौल्याद् गौणत्वापत्तिश्चेत्युभयतःपाशारज्जुरित्यर्थः ।

अत्र समादधते नेत्यादि । कृद्योगे कर्मणिषष्ठ्यनुशासनेऽपि विभक्तीनां विवक्षाधीनत्वात् समासस्य सामर्थ्यमात्रापेक्षितत्वाच्च ब्रह्मणः कर्मत्वे अविवक्षिते कर्मषष्ठ्यभावेन शेषषष्ठ्यामपि सामर्थ्यात्-समाससिद्धेर्व्याकरणविरोधाभावः । सर्वेषां प्रतिज्ञातत्वसिद्ध्या न कस्याप्याकस्मिकत्वम् ।

रश्मिः ।

सूत्रमित्यर्थः । तथा च ब्रह्मजिज्ञासाधिक्रियते इति पदार्थफलकभाष्यम् । अधिकारार्थं एव श्रेयानिति । अवचन इति । प्राप्त इत्यत्र ज्ञेयम् । व्याकरणविरोध इति 'कर्तृकर्मणोः कृति' इति सूत्रविरोध इत्यर्थः । उभयतःपाशारज्जुरिति उभयतो बन्धनरज्जुरश्वादिर्यथा उभयदेशे निवृत्तव्यापारो भवति तथा संपन्नमित्यर्थः । अथवा उभयतः पाशौ बन्धनसाधने ग्रन्थी यस्याः सोभयतःपाशा तादृशी रज्जुर्जलाहरणविशेषादौ प्रसिद्धा क्वचित् । विवक्षाधीनत्वादिति षष्ठ्याहुः कर्मादीनामपि संबन्धमात्रविवक्षायां षष्ठ्येवेति । सामर्थ्यमात्रेत्यादि 'समर्थः पदविधिः' इति सूत्रादित्यर्थः । समासादिवृत्त्यवृत्तित्वेन सामर्थ्यमिह व्यपेक्षा नास्ति अपित्वेकार्थीभावः । स च विशेषणविशेष्यभावावगाह्युपस्थितिजनकत्वं संसृष्टार्थं समर्थ्यमिति भाष्योक्तेरिति शेखरे । पदविधिरिति पदमुद्दिश्य यो विधीयते समासादिः स समर्थ इत्युच्यते तथा च सामर्थ्यमित्यवसेयम् । तथाहि ग्रहवाक्यार्थाभिधाने शक्तत्वमिदमेव एकार्थीभाव इति व्यवह्रियते, व्यपेक्षेति नैयायिकाः, तत्र एतौ अजहत्स्वार्थायां जहत्स्वार्थायां चान्तर्भवतः । पदानि स्वाभिधेयानि न जहति यस्यां साऽजहत्स्वार्था सा चावगतसामर्थ्यानां शब्दानां समासघटकानां शक्तिलक्षणाभ्यां वाक्यार्थबोधाद्भवति । अत्र न समासादौ अन्या शक्तिः कुमशक्त्यैव निर्वाहात् तत्त्यागापत्तेश्च । इयमेव व्यपेक्षा इति । तच्च मतान्तरमिति महाभाष्यकृत् । 'सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणयोगो न' इति वार्तिकान् न ऋद्धस्य राजपुरुष इति प्रयोगापत्तिरत्र । एतद्विपरीता तु जहत्स्वार्था । तत्र वृषभयावकादिपदेषु वृषयवादि पदवत् समासघटकपदानां पुनर्बोधकतां विहाय समासे शक्तिः तयैव च राजसंबन्धिपुरुषबोध इति एकार्थीभावः । अन्यथा ऋद्धस्य राजपुरुष इत्यापद्येत । इत्येवंविधसामर्थ्यमात्रापेक्षित्वादित्यर्थः । अविवक्षित इति सर्पिषो जानीते इतिवदविवक्षित इत्यर्थः । कर्मषष्ठ्यभावेनेति । 'यतो वाचो निवर्तन्ते' इति श्रुतेः कारकत्वाभावादपि कर्मषष्ठ्यभावेनेत्यप्यर्थोत्र बोद्धव्यः । समाससिद्धेरिति 'कृद्योगा च षष्ठी समस्यते' इत्यत्र शेषे षष्ठ्यपि कृद्योगेति समाससिद्धेः । सर्वेषामिति ननु सर्वेषामित्यत्र निविष्टपुरुषमुख्यत्वेप्यक्षरस्य वेदार्थत्वेन वेदवाचकब्रह्मपदोपादानात्तत्पुरःसरं सर्वेषां प्रतिज्ञानत्वसिद्धेः परस्य पुरुषोत्तमस्य जगद्व्यापारवर्ज्याधिकरणस्यापि विषयस्याप्रतिज्ञानार्थत्वमिति चेन्न । ब्रह्मपदवाच्यवेदाभिधेयत्वस्याक्षर एव तात्पर्यवृत्त्या प्रतिपाद्यत्वस्य परे सत्त्वात् । 'सर्वे वेदा यत्पदमामनन्ति' इति श्रुतेः । तथाच ब्रह्मजिज्ञासेत्यस्या ब्राह्मीभिन्ना ब्रह्मसंबन्धिनी जिज्ञासेति बोधः । तथा चोक्तम् ।

'जहत्स्वार्थाजहत्स्वार्थे द्वे वृत्ती ते पुनस्त्रिधा ।
भेदः संसर्ग उभयं वेति वाच्यव्यवस्थितेः' । इति भूषणे ।

अर्थस्तु त्रैविध्यं वदत्यत्र भेद इत्यादि । भेदः अन्योन्याभावः । व्यर्थोयं प्रयास इति चेन्न ।

तज्ज्ञानोपयोगि सर्वमेव प्रतिज्ञातं वदितव्यम् । नच गौणतापत्तिरजिज्ञास्यत्वं च स्यादिति वाच्यम् । ब्रह्ममात्रे संदेहाभावात् । संदिग्धस्यैव जिज्ञास्यता । गौणत्वं तु शब्दत एव, न त्वर्थतः ।

---

भाष्यप्रकाशः ।

तर्हि गौणत्वाजिज्ञास्यत्वे स्यातामित्यत आहुः नचेत्यादि । केन प्रकारेणाजिज्ञास्यत्वमापाद्यते । किं ब्रह्मत्वेन, उत रूपान्तरेण । तत्राद्ये त्वोमिति ब्रूमः । अध्ययनादिदशायां, 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिवाक्यार्थावधारणादेव तत्स्वरूपे सत्तायां च संदेहाभावात् । किंतु यद् वेदे लक्षितं ब्रह्म, तत् किम् । येन वेदे नानापदार्थानां लक्षितत्वेऽप्याम्नायव्याख्यानरूपे भारते विवृतत्वेऽप्येत-

रश्मिः ।

राजपुरुषः सुन्दर इतिवद्राजपुरुषो देवदत्तस्य इति वारणायाभ्युपगमात् । भेदस्य वाच्यत्वे तु तद्विरुद्धोयमप्रयोगः । संबन्धस्यैव सार्वजनीनत्वादाह संसर्ग इति । एतदुभयं वाच्यमस्तु विनि-गमनाविरहादस्वामिकेपि राजपुरुष इत्यापत्तेश्चेत्याह उभयं वेति । तथाचाराजकीयभिन्नो राजसंब-न्धवांश्चायमिति बोधः । व्यपेक्षावादिनस्तु राजपुरुष इत्यत्र राजसंबन्ध्यभिन्नः पुरुष इति बोधः । राजपदस्य राजसंबन्धिनि लक्षणेत्यभ्युपगमात् । सविशेषणराजपदस्य सविशेषणतत्संबन्धिनि लक्ष-णोपगमात् । न शोभनराजपुरुष इत्यादौ एकदेशे राज्ञि शोभनान्वयानुपपत्तिः । उक्तं त्विष्टमेव । एवं सति पूर्वतन्त्रीयो निषादस्थपतिं याजयेदित्यत्र लक्षणादोषग्रस्तो न षष्ठीसमासः किंतु कर्मधारय इति सिद्धान्तः संगच्छते इति वदन्ति । तथा च ब्रह्मसंबन्धिनी जिज्ञासेत्येव बोधः । इत्यत आहुरिति इति इदमाशङ्क्य प्रतिविधानमाहुरित्यर्थः । ब्रह्ममात्र इत्यादि भाष्यं विवृण्वन्ति केनेत्यादि । रूपान्तरेणेति वेदलक्षितत्वेन सर्ववेदार्थनिर्वाहकरूपेण सर्वविरुद्धधर्माश्रयत्वेनेत्यर्थः । तत्स्वरूपे सत्तायां चेति सत्यज्ञानानन्दाः स्वरूपभूताः 'अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः' इति श्रुतेः सत्ता । यथा चन्द्रमसि द्वये चित्स्वरूपे आनन्दस्वरूपता, यथ्रजनकं तत्तद्गुणकमिति वक्ष्य-माणव्याप्तेः । दृष्टान्तत्वात्त्वानन्दगुणकता अत एव साकारता । तथाच श्रुत्यन्तरं 'सत्यं ज्ञान-मानन्दं ब्रह्म' इति 'आनन्दरूपममृतं यद्विभाति' इति च । इदानीं शेषषष्ठीपक्षं समर्थयन्तः संदिग्धस्येत्यादि भाष्यं विवृण्वन्त अन्यद्रूपमाहुः किंतु यदित्यादि । यद्वेदे जगत्कर्तृत्वादिना रूपान्तरेण लक्षितं ज्ञापितं ब्रह्म तदजिज्ञास्यमिति वक्तव्यमिति सशेषा योजना । किं त्विति वितर्के । तथा च वेदलक्षितत्वेन रूपान्तरेण तत्राजिज्ञास्यत्वमापादनीयमित्यर्थः । अत्र पृच्छन्ति किमिति तत्किमित्यर्थः । देहलीदीपन्यायेन तदित्यस्योभयान्वयित्वात् । एवमापादनं किंहेतुकमिति प्रश्नः न संभवतीति फलितोर्थः । तत्र हेतुमाहुः येन वेद इत्यादि । येनेत्येतज्जिज्ञासेत्यनेनान्वेति । तथा च वेदे नानापदार्थानामब्रादीनां जगत्कर्तृत्वेन लक्षितत्वेप्याम्नायव्याख्यानरूपे भारते विवृत-त्वेपि येन हेतुनैतस्य लक्षितब्रह्मणो जिज्ञासा प्रस्तूयते अतोस्य संदिग्धत्वेन जिज्ञास्यत्वमित्यर्थः । तथा चाब्रादि ब्रह्म आनन्दो वा ब्रह्म इत्येवं संदिग्धस्यैव जिज्ञास्यतेति भाष्यार्थः । अथवा प्रकृ-त्यादिगतं जगत्कर्तृत्वं ब्रह्मगतं वा तत् । अथवा 'क्रियाशक्तिज्ञानशक्ती संदिह्येते परस्थिते' इति हृदयम् । लक्षितजिज्ञासाप्रस्तावस्तु जन्माद्यस्य यत इति सूत्राद् बोध्यः । यदीत्यादि यदि ब्रह्मज्ञानस्य मोक्षसाधनत्वेन हेतुना एतज्जिज्ञासैव प्रस्तूयते इति मन्यते तर्हि कथमब्रादिज्ञानेषु ब्रह्मज्ञानस्यैव मोक्ष-

---

१. चित्स्वरूपे ब्रह्म ।  २. संबन्धाभाव ।

भाष्यप्रकाशः।

जिज्ञासैव प्रस्तूयतं। यदि तज्ज्ञानस्य मोक्षसाधनत्वेन, तर्हि कथं तज्ज्ञानस्यैव तथात्वम्। यदि वेदार्थत्वेन तज्ज्ञानस्य तथात्वं, तदा धर्मविचारेणैव गतार्थता। षोडशलक्षण्या सर्वस्यैव तस्य निर्णीतत्वात्। अत एव न वेदान्तार्थत्वेन। अतः सर्ववेदार्थतानिर्वाहकवक्ष्यमाणरीतिकगुणवत्तया जिज्ञास्यत्वं वक्तव्यम्। ततश्च तादृशगुणवत्त्वेनैतस्य जिज्ञास्यतासिद्धेर्नाजिज्ञास्यत्वम्। नापि गौणत्वापत्तिः। गुणजातस्य ब्रह्मसंबन्धित्वेन जिज्ञास्यतया ब्रह्मणो मुख्यत्वस्यैव सिद्धेः। शब्दतो गौणत्वं

रश्मिः।

साधनत्वमित्यर्थः। ब्रह्मण एव वेदार्थत्वादुपपन्नमित्याह यदि वेदार्थत्वेनेत्यादि। अतस्त-ज्जिज्ञासैव प्रस्तूयत इति पूर्वेणान्वयः। अथापि नतरां जिज्ञास्यमित्याहुः तदा धर्मेत्यादि। षोडश-लक्षण्येति उक्तार्थमेतत्। अत एवेति धर्मविचाराङ्गतया ब्रह्मविचारस्य प्रविष्टत्वादुक्तहेतोरेवे-त्यर्थः। सिद्धमाहुरत इति। लक्षितजिज्ञासायाः वितर्कासंभवादित्यर्थः। वक्ष्यमाणरीतिकेति अग्रिमाधिकरणवक्ष्यमाणरीतिकेत्यर्थः। तथा च यदि कर्मणिषष्ठी परिगृह्यते तदा ब्रह्म यदि प्रसिद्धं, तर्हि जिज्ञासाकर्मतानुपपत्तिः। अप्रसिद्धं चेत्सुतरां तदनुपपत्तिः। नह्यप्रसिद्धमुद्देश्यं भवति। यदि च प्रसिद्धत्वेपि चैतन्यविशिष्टं देहमात्रमात्मेति प्राकृतलोकायतिकयोः प्रसिद्धिः। चेतनानी-न्द्रियाणि आत्मेति तदेकदेशिनः। मन इत्यपि। तथा क्षणिकविज्ञानमात्रमित्यपि, एवं शून्य-मित्यपि। देहादिव्यतिरिक्तः संसारी कर्ता भोक्तेति वैशेषिकाः, भोक्तैव केवलं न कर्तेति सांख्याः, अस्ति तद्व्यतिरिक्त ईश्वरः सर्वज्ञः सर्वशक्तीरिति योगिनः। एवंविधप्रतिपन्नात्मविलक्षणस्य जीवस्य स्वरूपभूतात्मनः प्रतिपत्तये विचारात्कर्मताऽविरोधान्नानुपपत्तिरिति विभाव्येत तदापि ब्रह्म नात्ममात्रमिति जिज्ञासाकर्मतानुपपत्तिः पदार्थविरोधश्च। न च 'अयमात्मा ब्रह्म' इति श्रुतेर्न स इति वाच्यमंशत्वेनोपपत्तेः, अतः शेषषष्ठी युक्ता, अन्वयोपपत्तेरिति सूक्ष्मदृशावधेयम्। तेन प्रसिद्धकर्मत्यागेपि न पिण्डमुत्सृज्य करं लेढीति न्यायप्रसरः। गौणत्वं त्वित्यादि भाष्यं विवृण्वन्ति नापीत्यादि। न च अत्र ब्रह्मसंबन्धिनी जिज्ञासेत्यर्थात् ब्रह्मसंबन्धिसंबन्धिजिज्ञासाभावात्कथं गौणत्वापत्तिरिति वाच्यं, गुणजातस्याशेषस्य ब्रह्मत्वात्। न चैवं कर्मषष्ठीपरिग्रह एव श्रेयानित्यायातीति वाच्यं, ब्रह्मण एव ईप्सिततमत्वप्राप्त्या तच्छक्तीनां भेदपक्षेऽविचार्यतापत्तेः असंभवाच्चेत्युक्तम्। ननूक्तं तेषां ब्रह्मत्व-मिति चेत्, न, अंशत्वादुपपत्तेः। ननु 'तद्विजिज्ञासस्व तद्ब्रह्म' इति श्रुत्या ब्रह्मणः कर्मत्वात् कर्मषष्ठी-परिग्रहो ज्यायानिति चेन्न विरोधनिराकरणादीनामप्रतिज्ञातार्थत्वापत्त्या तस्याः श्रुतेरविषयत्वात्। किंतु 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुतेर्विषयः। मननस्य पद-ज्ञानपूर्वकत्वात् 'स्वाध्यायोऽध्येतव्यः' इति पूर्वमीमांसाकारिकासु तदुक्तं पूर्वम्। ननु एवमपि आत्मनः कर्मत्वात्कर्मषष्ठ्यापत्तिरिति चेन्न। जिज्ञासापदस्याकर्मकज्ञानेच्छाप्रकृतिकत्वात्। ज्ञा अव-बोधने। ज्ञातुमिच्छा जिज्ञासा इतिभावे घञ्। ननु घटं जानातीति सकर्मकत्वमिति चेन्न। अत्र फलव्यधिकरणव्यापारबोधकत्वादस्तु सकर्मकत्वमत्र तु फलसमानाधिकरणव्यापारबोधकत्वेनाकर्म-कत्वात्। न चात्रापि फलव्यधिकरणव्यापारोस्तु इति शङ्क्यम्। जिज्ञासापदस्य विचारे शक्तेः। विचारस्य च युक्तिभिरनुचिन्तनरूपस्य ब्रह्मविषयत्वात्। 'ज्ञानशक्तिक्रियाशक्ती संदिशेते परस्परं'

१. आदिशब्देनाबोधोपि। २. संबन्धिसंबन्धिनोपि।

वेदप्रामाण्यं तु प्रतितन्त्रसिद्धत्वान्न विचार्यते ।

भाष्यप्रकाशः ।

तु न स्वरूपमुख्यत्वविघातकम् । पुत्रः पित्रा सहागत इत्यादौ तथादर्शनादिति । नन्वस्त्वेवं, तथापि वेदार्थस्य ब्रह्मणो वेदानुकूलो विचारोऽत्र प्रतिज्ञात इति तदर्थं वेदप्रामाण्यमपि विचारणीयम् । तदत्र कुतो न विचारितम् । यतो न विचारितं, ततो न वेदार्थत्वेन विचार इति पक्षो न युक्त इत्यत आहुः वेदेत्यादि । प्रतितन्त्रसिद्धत्वादिति आस्तिकं तन्त्रमात्रं लक्ष्यीकृत्य सिद्धत्वात् । न हि नास्तिकनिग्रहायाचार्यस्य विचारे प्रवृत्तिः, किंत्वास्तिकशिक्षणाय । ते तु सर्वे वेदप्रामाण्ये निर्विचिकित्सा इति प्रयोजनाभावान्न विचार्यते । तावता न वेदानुकूलविचारत्वहानि-

रश्मिः ।

इति भाष्यकारिकायाः 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतेर्ब्रह्मणोऽसंदिग्धत्वात् । अत एव 'जन्माद्यस्य यतः' इत्यधिकरणे क्रियाशक्तिर्निरूपिता । ततश्च ब्रह्मण इति शेषषष्ठी न कर्मणि । 'तद्विजिज्ञासस्व' इतिश्रुतौ जिज्ञासाया विचारार्थकत्वे तच्छब्दात्षष्ठ्या लुक् ब्रह्मणः कर्मत्वाभावात् । किंतु ज्ञानशक्तेः क्रियाशक्तेर्वेदस्य कर्तृत्वम् । यद्वा तद्विजिज्ञासस्व इत्यर्थविषया अन्नादिरूपार्थब्रह्मपरत्वात् सूत्रे वेदान्तशब्दविषये न प्रवर्तत इति । तथादर्शनादिति पित्रेति सहार्थतृतीयान्तशब्दस्य पितृस्वरूपमुख्यत्वविघातत्वकाभावदर्शनादित्यर्थः । न वेदार्थत्वेनेति वेदानुकूलत्वान्न वेदार्थत्वेनेत्यर्थः । न युक्त इति प्रमाणवेदार्थत्वरूपप्रतियोगिज्ञानाभावान्न युक्तः । निर्विचिकित्सा इति । अत्र वदन्ति वैशेषिकाः शाब्दं हि उपनीतं मन्तव्यम् । श्रोत्रमात्रजन्यत्वात् । पदानां चोपनायकत्वात् । अन्वयधीरप्यनुमितिः एते पदार्थास्तात्पर्यविषये मिथःसंसर्गवन्तः आकाङ्क्षादिमत्पदस्मारिततद्योग्यतासत्तिमत्त्वे सति संसर्गापरपदस्मारितत्वाद्धेत्यनुमानात् । घटोस्तीत्यत्र घटोऽस्तित्ववान् तद्योग्यत्वात् पटवदित्यनुमानाद्वा । न चान्वयव्यतिरेकाभ्यां शब्दस्य कारणतेति वाच्यम् । हेतुशरीरघटकत्वेन हेतुत्वेन वान्वयव्यतिरेकानुविधानोपपत्तेस्तस्यातिरिक्तकारणताग्राहकत्वाभावात् । तस्मान्न शब्दः पृथक्मानं, अतो वेदस्योपनायकतामात्रमिति । अत्र नैयायिकास्तिष्ठन्ते, स्वाशयं प्रकाशयन्तीत्यर्थः । 'प्रकाशनस्थेयाख्ययोश्च' इति सूत्रेणात्मनेपदम् । बाधकप्रमाणाभावो योग्यता सा च न लिङ्गविशेषणम् । प्रमामात्रविरहस्य सर्वत्र निश्चेतुमशक्यत्वात् । तत्संशयेपि शब्दादन्वयबोधान्न । शब्दप्रामाण्ये योग्यतायाः संशयसाधारणं ज्ञानं प्रयोजकमिति शब्दप्रमाणमिति । किंचाकाङ्क्षाया हेतुशरीरनिविष्टायाः अन्वयबोधानुकूलानुपूर्वीपर्यवसायिन्या न भूतपूर्वत्वमतो न तद्घटितो हेतुः । नहि मिथःसंसर्गाज्ञातुर्देवदत्तो ग्रामं गच्छतीति वाक्यस्यान्वयबोधानुकूलायाः ग्रामं गच्छति देवदत्त इत्येवं विधानुपूर्व्या ज्ञानमस्ति, तथायोग्यत्वहेतुकानुमानेपि अज्ञातस्य तस्यानुपयोगात्, स्वरूपसत्ताया अकारणत्वेन हेतुतायास्तज्ज्ञाने पर्यवसानात्तज्ज्ञानं लिङ्गमिति वाच्यं, तत्तु बाधाभावनिश्चयमात्रं जनयित्वा कृतार्थमिति न हेतुतां निर्वोढुमलम् । अपि च अस्तित्वव्याप्ययोग्यतावान् गौरित्यनुमानस्यान्वयबुद्धित्वे घटः कर्मत्वमित्यादिस्थलीयस्य घटः कर्मत्वमानयनं कृतिस्तद्व्याप्ययोग्यत्ववान् युष्मदर्थः इत्यनुमानस्यापि शाब्द-

१. [illegible] ।

रश्मिः ।

बुद्धित्वापातः । किंच । योग्यतायाः संशयविषयिण्याः अप्यन्वयबुद्धिविघटकत्वाभावदर्शनादनुमिति-विघटकत्वदर्शनाच्च वैलक्षण्याद्वितो भेदः। तेनान्यान्येप्याकाङ्क्षाघटितलिङ्गकानि गौरस्तित्ववान् स्वधर्मिकास्तित्वान्वयबोधानुकूलाकाङ्क्षाश्रयपदस्मारितत्वात् घटवत्। गौरिति पदं अस्तिमद्बोधज्ञानपूर्वकं अस्तिपद-साकाङ्क्षगोपदत्वात् यन्नैवं तन्नैवमाकाशवत्। लौकिकानि पदानि वैदिकपदानि वा तात्पर्यविषयस्मारित-पदार्थसंसर्गज्ञानपूर्वकाणि आकाङ्क्षादिमत्पदकदम्बत्वात् घटमानयेति पदकदम्बवत्। इतीमान्यनु-मानानि प्रयुक्तानि। किंच व्याप्तिज्ञप्तिविधुरेणापि शाब्दबोधोनुभूयते इत्यविवादं नापि तत्र व्याप्ति-ज्ञप्तेः कल्पनं शब्दश्रवणानन्तरं द्रागेव बोधात्। सर्वेषु शाब्देषु व्याप्तिज्ञानकल्पनमिव यावदनुमिति-स्थले पदज्ञानं कल्पयित्वा शाब्दबोधस्यापि सुकरकल्पनत्वाच्च। अस्तु तर्हि श्रावणप्रत्यक्षता। मैवम्। हेतुसंस्कारयोरपि साकाङ्क्षपदवत् उपनायकतायाः शक्यवचनत्वेन तदुपस्थापितस्याप्युपनयमर्यादया भानापत्तेः। न चेष्टापत्तिः आकाङ्क्षादिमत्पदस्मारितत्वादिरूपाद्धेतोः पदजन्यसंस्काराद्वा प्रत्येमीत्यापत्तेः। भवति तु शब्दात् प्रत्येमीत्याद्यनुव्यवसायः। ननु तत्तदर्थविषयकशाब्दबुद्ध्यनुव्यवसायं प्रति शाब्द-बुद्धेस्तावत् तत्तदर्थकसाकाङ्क्षपदजन्यतत्तदर्थगोचरशाब्दत्वेन विषयविधया हेतुताद्रियतेऽतः शाब्दसं-बोपनयमर्यादया भानं न हेतुसंस्कारयोरिति चेन्न गौरवात्, घटेन जलमाहरेत्यादौ इतरबाधलब्ध-छिद्रेतरत्वादेरर्थाक्षिप्तस्यापदार्थस्यापि शाब्दबोधेवगाहात् प्राप्तस्य तद्विषयकानुव्यवसायस्य बाधाप्रसक्ते-र्गवादेरिवास्तित्वादौ गत्वादेरपि भानप्रसङ्गात्। अपि च शाब्दज्ञानस्य श्रवणजन्यत्वाभ्युपगमे पदा-र्थान्वयबोधदशायामपदार्थानामपि स्वसामग्रीबलेन प्रत्यक्षतापत्तिः। ननु श्रावणप्रत्यक्षसामग्री अप-दार्थानां श्रावणप्रत्यक्षे प्रतिबन्धिका भविष्यतीति चेन्न प्रत्यक्षसामान्यं प्रति शाब्दसामग्र्याः प्रत्यक्ष-सामग्रीकोटिनिविष्टतया प्रतिबन्धकताऽसंभवात्। न च शाब्दान्यप्रत्यक्षत्वावच्छिन्नं प्रति तस्या-स्तथात्वकल्पनाददोष इति वाच्यं, गौरवात्। तदपेक्षया शाब्दज्ञानस्य प्रत्यक्षभिन्नत्वकल्पनमेव लघीय इति। अतोन्वयबुद्धेः श्रवणेन्द्रियजन्यत्वाभावान्न प्रत्यक्षता। तस्माद्घटोस्ति गामानयेत्यादौ स्वस्वपदजन्यपदार्थोपस्थित्यनन्तरं घटादावस्तित्वाद्यन्वयविषयकस्य विलक्षणबोधस्यान्वयव्यतिरेकाभ्या-माकाङ्क्षादिमच्छब्दकारणकस्य नोपनीतभानता। नचान्वयबोधो नास्त्येवेति व्यर्थः प्रयास इति शङ्क्यम्। अनुभवविरुद्धत्वात् तस्यासाधकत्वेऽनुमितिरपि न स्यात्। न च वक्तव्यं पदजन्यसंस्कारजन्य-त्वात् शब्दसिद्धिः स्मृतिरूपास्तु शब्दात्प्रत्येमीत्यनुव्यवसायविरोधात्। किंच घटास्तित्वयोर्गो-कर्मत्वानयनानामेवोपस्थित्या तद्विषयकस्यैव संस्कारस्य जननेऽन्वयविषयस्याजननात्स्मृतित्वं न शक्य-वचनमतः शब्दोऽतिरिक्तां प्रमाणतां दधाति। परंतु शब्दशतादपि प्रत्यक्षविरुद्धं प्रतिपादयितुमश-क्यमिति शब्दः प्रत्यक्षमुपजीवति तेनानाप्तोक्ते न प्रामाण्यमिति। किंच। श्रोत्रसापेक्षः शब्दः। स्वस्व-रूपलाभेपीतः प्रत्यक्षं प्रबलमिति। अत्रापि अयं विशेषः। शब्दस्यैव प्राबल्यमिति स्थितमाकरे। तथाहि प्रामाण्यांशे श्रोत्रसापेक्षताभावेन स्वरूपलाभे सापेक्षता न प्राबल्यं विघटयति। श्रुतमात्रशब्दश्चक्षुरादिति-रस्कुर्वन्नेव पदार्थमुपस्थापयतीति। एवं च प्रत्यक्षं नोपजीवति शब्दः, वेदे तदभावात्। लोकानधि-गतस्याप्यग्निहोत्रादेर्विधानात्। न च सोपि योगिनां प्रत्यक्षः। मानाभावात्। योगादेर्मानान्त-रेण धर्मादिप्रत्यक्षजननसामर्थ्यस्याज्ञानात् तदर्थप्रवृत्त्यनुपपत्तिश्च। न चादृष्टं प्रवर्तकं, सत्कर्मकरणे-न तदुत्पत्तेः। परंपराप्यादिसर्गवादादवक्तव्या। अनादिसर्गप्रादिभिस्तु वेदोऽपौरुषेयो धर्मप्रमितिं

**तस्मात् ब्रह्म जिज्ञासितव्यमिति सिद्धम् ॥ १ ॥**

**॥ इति प्रथमाध्याये प्रथमपादे प्रथमं जिज्ञासाधिकरणम् १ ॥**

भाष्यप्रकाशः ।

रित्यर्थः । सिद्धमाहुः तस्मादित्यादि । ब्रह्मसंबन्धिनां विचारेऽपि ब्रह्मणो विषयत्वस्यार्थतः सिद्धत्वात् तादृशगुणकत्वेन ब्रह्म जिज्ञास्यमिति सिद्धमित्यर्थः । अपेक्षितगुणवत्तयैवात्र ब्रह्म जिज्ञास्यं, न त्वशेषविशेषशून्यतयेति शेषषष्ठ्येव युक्तेत्यत्र गमकमप्याहुः किंच इत्यादि', इतीत्यन्तम् । तथा च प्रथमसूत्रे ब्रह्मविचारं प्रतिज्ञाय ब्रह्मणो येन रूपेण वेदार्थता तानि रूपाणि प्रकारांश्च वक्तुमग्रिमे कार्यलक्षणं प्रमाणं च वदतीत्यतस्तथेत्यर्थः । एवं विषये निर्द्धारिते प्रतिपाद्यप्रतिपादकभावः संबन्धोऽप्यनुक्तसिद्ध एवेति प्रेक्षावत्प्रवृत्त्युपयुक्तं सर्वमत्र निरूपितम् । प्रकारभेदेन काण्डद्वयस्यापि ब्रह्म-

रश्मिः ।

जनयतीति स्वीकाराच्च । नापि स्वभावः प्रवर्तकः । तस्यापि मूलविमर्शे वेद एव विश्रान्तेः । ईश्वरेच्छयेत्यपि न युक्तं, शब्दं विना तस्या एवासिद्धेः । तदग्रे स्फुटिष्यति । निःश्वसितश्रुतेरबुद्धिपूर्वकमेवाभिव्यञ्जनान्नेश्वरप्रत्यक्षोपजीवकत्वं, तेन वेदः प्रमाणम् । इदं चौत्पत्तिकसूत्रतात्पर्यार्थकथने उक्तमपि स्पष्टप्रतिपत्तिप्रयोजनकम् । अस्मदादिमुखेनापि ब्रह्मैव क्रीडयितुं वाक्यं वदति इति सर्वाणि वाक्यानि वेदतुल्यानि ब्रह्मवाक्यत्वादिति सिद्धान्तः । 'स एष जीवो विवरप्रसूतिः' इत्यत्र 'एवं गतिः' इति श्रुतिदेशात् । अत्र श्रोत्रं प्रमाणकं शब्दस्त्वतिग्रहः 'श्रोत्रं वै ग्रहः स शब्देनातिग्रहेण गृहीतः श्रोत्रेण शब्दाञ्छृणोति' इति बृहदारण्यकश्रुतेः । 'चक्षुर्वै ग्रहः स रूपेणातिग्रहेण गृहीतः रूपं पश्यति' इतिवदानुपूर्व्या अभावात् । अत एव शब्दगुणकमाकाशमित्याकाशलक्षणे शब्दप्रवेशः । उष्णस्पर्शवत्त्वं तेजस्त्वमिति तेजोलक्षणेन रूपप्रवेशः कृत इति शुभम् । न चैवं सकलवाक्येषु निर्दुष्टत्वं स्यात् । न । योग्यावयवैरेव वाक्यनिर्माणोपगमात्, योग्यावयवैरेव पदार्थनिर्माणवत् । अन्यथा घोटकस्य निर्मातुः शृङ्गनिर्माणमप्यापद्येत । क्रीडैव प्रयोजिकेति तु तत्त्वम् । एवं निःसंदेहा इत्यर्थः । यथादर्शनमाहुः ब्रह्मसंबन्धिनामित्यादि । न च ब्रह्मपदस्य वेदान्तवाचकत्वं 'वेदान्तानां विचार आरम्भणीयो न वेति' भाष्येण सिद्ध्यति । ततश्च वेदान्तानां विचार आरम्भणीय इति सिद्धमिति भाष्यमस्तु । न तु ब्रह्मजिज्ञासितव्यमितिभाष्यं सिद्धकथनभाष्यत्वादिति वाच्यं 'षडङ्गो वेदोध्येयो ज्ञेयश्च' इतिश्रुतेः । षडङ्गैरेव निर्वाहे मीमांसाया अनङ्गत्वेन वेदान्तविचारानावश्यकत्वेऽस्य शास्त्रस्यानुपयोगेनारम्भणीयतास्य स्यात्तन्निवृत्त्यर्थमारम्भणीयताप्रतिपादनपुरस्कारेण वेदान्तेषु मुख्यतया प्रतिपाद्यस्फोरणाय अथातो वेदान्तविचारः' इत्यसूत्रयित्वा 'अथातो ब्रह्मजिज्ञासा' इति सूत्रणादत्रैव सूत्रान्त इति करणसामर्थ्यात्किंचेत्यस्यान्यचेत्यर्थात् च पूर्वशेषतायाः संभवदुक्तिकत्वाद्देहलीदीपन्यायेनाभासमवतारयन्ति अपेक्षितेत्यादि । अतस्तथेत्यर्थः । उक्तग्रन्थसंवादाच्छेषषष्ठ्येव युक्तेत्यर्थः । एतेन 'तद्विजिज्ञासस्व तद्ब्रह्म' इति श्रुत्येकवाक्यतायै कर्मणि षष्ठी युक्तेत्यपि प्रत्युक्तम् । स्वरूपलक्षणं परित्यज्य कार्यलक्षणकथनेन शेषषष्ठ्यामेव व्यासचरणानां तात्पर्यात् । प्रतिपाद्यप्रतिपादकभावसंबन्ध इति मीमांसाब्रह्मधर्मयोः स संबन्ध इत्यर्थः । अत्रेति जिज्ञासाधिकरण इत्यर्थः । प्रकारभेदेनेति क्रियाज्ञानत्वभेदेनेत्यर्थः ।

१. द्वितीयसूत्रविवरणे ग्रहणम् ।

भाष्यप्रकाशः ।

प्रतिपादकतयैकवाक्यत्वसमर्थनान्मीमांसाद्वयस्यैकशास्त्रत्वकथनेन वृत्तिकाराविरोधोऽपि बोधितः ।

शांकरास्तु ब्रह्म जिज्ञास्यं न वेति संदेहे, अहंवित्तिवेद्यत्वेन प्रत्यक्षस्यात्मन एव ब्रह्मत्वान्न जिज्ञास्यमिति पूर्वपक्षे कर्तृत्वादिशून्यनिर्विशेषचिदेकरसत्वेन जिज्ञास्यत्वमङ्गीकृत्य केवलज्ञानादेव मोक्षं चाङ्गीकृत्य मोक्षं प्रति केवलज्ञानस्यैव हेतुत्वाज्ज्ञानकर्मसमुच्चयं नाङ्गीकुर्वन्ति । तन्मते पूर्वोत्तरकाण्डयोः स्वर्गमोक्षरूपप्रयोजनभेदात् कर्मब्रह्मरूपाभिधेयभेदाच्छेषशेषिभावाद्यभावेन परस्पराकाङ्क्षाभावाचैकवाक्यत्वाभावे उत्तरकाण्डस्य वेदान्त इति समाख्याया विरोधः । नापि कर्मशेषभूतकर्तृस्वरूपप्रतिपादकत्वेनापेक्षा । कर्मानुपयुक्तकर्तृभोक्तृभावशून्यात्मप्रतिपादकताभ्युपगमात् । नापि कर्मपौष्कल्यजनकविद्याप्रतिपादकत्वेन सा । 'यदेव विद्यया करोति तदेवास्य वीर्यवत्तरं भवति' इति वाक्यस्योद्गीथविद्यामुपक्रम्य पठितत्वेन तन्मात्रस्य त्वन्मते तथात्वबोधकतया सर्वस्य काण्डस्य तथात्वसंपादनाक्षमत्वात् । मानवी ऋचौ धाय्ये कुर्यादितिवत् । न च वैदिकाभिधाने स्वरादिनियमयोगेनैकवाक्यत्वमिति शङ्क्यं अप्रयोजकत्वात्, सूत्रोक्तैकवाक्यलक्षणविरोधात् । न च

रश्मिः ।

वृत्तिकारेति संहृतमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति ब्रुवतो वृत्तिकारस्याविरोध इत्यर्थः । आत्मन एवेति जीवस्यैवेत्यर्थः । सेति पूर्वकाण्डस्योत्तरकाण्डापेक्षेत्यर्थः । त्वन्मत इति असन्मते तु यत्तदिति सामान्यनिर्देशस्य विवक्षितत्वान्न तथात्वमिति बोध्यम् । तन्मात्रस्येत्यादि उद्गीथविद्यामात्रस्य । कर्मपौष्कल्यजनकत्वबोधनात् न तथा सर्वस्योत्तरकाण्डस्य कर्मपौष्कल्यजनकविद्याप्रतिपादकत्वसंपादनाक्षमत्वादित्यर्थः । न च किंचौपनिषदज्ञानस्येत्यादि भाष्येऽप्ययं दोषः इति शङ्क्यं 'विदुषः कर्मसिद्धिः स्यात्तथा नाविदुषो भवेत्'इति न्यायमनुसृत्य श्रुतौ विद्याशब्दो न संकोचसहिष्णुरिति भाष्याशयात्, अत एवात्र त्वन्मत इत्युक्तम्' एवं च

'यदेव विद्ययेत्याह श्रद्धा ब्रह्मिष्ठ एव च ।
तज्ज्ञानं तेषु हि प्रोक्तं कर्तृशेषा यतस्तु ते' ॥

'ज्ञाननिष्ठाय देयानि कव्यानि' इति यथा तथेति पत्रावलम्बने विवरणे चास्या उद्गीथप्रकरणाधरुद्धत्वेन विद्यान्तरासंग्राहकत्वं यदुक्तं तदप्युक्तदिशैव 'त्वन्मते' इति कथनादिति ध्येयम् । मानवीत्यादि इयं श्रुतिर्द्वितीयाष्टकेस्ति विकृतिरूपे सौमारौद्रे चरावतिदेशतः प्राप्तासु सामिधेनीषु मध्ये द्वौ धाय्यासंज्ञिकौ मन्त्रौ प्रक्षेप्तव्यौ तौ मानवौ कर्तव्यावित्यर्थः । 'प्रवो वाजा अभिद्यव' इत्याद्या अग्निसमिन्धनार्था ऋचः सामिधेन्यस्तासु द्वयोरेव मानवीत्वकृतत्ववद्विद्यास्तूद्गीथविद्याया एव कर्माङ्गत्वमिति भावः । मतान्तरमुपक्षिप्य वारयन्ति न च वैदिकेत्यादि । वैदिकानामभिध्यानं वेदान्तेषु वेद इति वर्तते यतस्ते स्वरपूर्वकमनध्यायादित्यजन्तः वेदान्तान्पठन्ति पाठयन्ति च । अत एकवाक्यत्वं धर्मातिरिक्तब्रह्मप्रतिपादनादिति शङ्कामित्यर्थः । अत्र हेतुमाहुरप्रयोजकेत्यादि । ब्रह्मप्रतिपादकताया उक्तत्वादेव इति प्रसिद्धिमात्रेण तयोरेकवाक्यताया असिद्धेरस्वात्वादित्यर्थः । अत्रापि हेतुमाहुः सूत्रोक्तेत्यादि । द्वितीयाध्यायस्य 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्' इति सूत्रोक्तेत्यर्थः । उदाहरणं तु ।

१. किंचेति विकल्पे ।

भाष्यप्रकाशः ।

यज्ञानां विविदिषोत्पादकत्वेन पूर्वस्योत्तरकाण्डशेषतायामेकवाक्यत्वसंभव इति वाच्यम् । सन्प्रत्ययोक्तेच्छायामिष्यमाणपर्यन्तत्वं वादेन जिगीषतीत्यादौ दृष्टं, केवलाया अपुरुषार्थत्वं चेति तावन्मात्रान्तत्वस्यासंगतत्वात् । इष्यमाणपर्यन्तत्वस्य चानुपगमात् । अत एवं वदता, 'वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति' इति पूर्वकसमाप्तिश्रुतेः, 'वेदाः साङ्गोपनिषदः' इति पौराणिकपृथङ्निर्देशाच्चात्यन्तमेद एवास्थेयः । नचैवं वैदिकप्रसिद्धेर्वेदान्तशब्दो रूढ एवेति वाच्यम् । तथा सति स्वाध्यायादिविधौ तदनिवेशेन तदध्ययनार्थज्ञानविचाराणामवैधत्वापत्तेः । न च तद् विजिज्ञासस्व, तद् ब्रह्मेत्यादिविधिना विचारप्राप्तौ तेनाध्ययनाद्याक्षेपान्न दोष इति वाच्यम् । तथा सति जिज्ञासुमात्रप्राप्तौ त्रैवर्णिकाप्राप्त्या अधिकारविरोधापत्तेः । अतस्तन्मते उपनिषदां वेदान्तत्वं न कथमपि सिद्ध्यतीत्यवधेयम् ।

रामानुजाचार्यास्तु ब्रह्मपदस्य निर्दोषपूर्णगुणपुरुषोत्तमवाचकत्वं, तस्य च स्थूलसूक्ष्मचिदचिच्छरीरविशिष्टतया वेदान्तार्थत्वेन जिज्ञास्यत्वं चोपगम्य यज्ञादीनां विविदिषोपयोगमात्रश्रावणेऽपि व्यासपादैः'आप्रायणात्तत्रापि हि दृष्टम्'इत्यादिसूत्रेषु यावज्जीवं तत्करणबोधनाद् ध्रुवानुस्मृतिरूपोपासनाभक्त्यादिनामकदर्शनसमानाकारज्ञानजनकत्वेन भावनात्मकोपासनया समुच्चयमङ्गीकुर्वन्ति ।

भास्कराचार्यास्तु ब्रह्म प्रसिद्धं न जिज्ञास्यम् । अथाप्रसिद्धं नतरामिति पूर्वपक्षे, 'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्' इत्यादिषु जगत्कारणताश्रावणेन प्रसिद्धमपि ब्रह्म स्मृतिकारैस्त्रिगुणस्य प्रधानस्य परमाणूनां च तथात्वाङ्गीकाराद् विप्रतिपन्नमिति तन्निवृत्त्यर्थमत्र कारणकार्यजीव-

रश्मिः ।

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि' इति ।

सर्वाणीमानि पदानि निर्वापप्रकाशार्थानि विभागे च साकाङ्क्षाणीति । एकवाक्यत्वेत्यादि यावन्ति पदानि तानि ब्रह्मप्रकाशार्थानि विभागे च साकाङ्क्षाणीति एकवाक्यत्वसंभव इत्यर्थः । तावन्मात्रेति । विविदिषेत्यत्रेच्छामात्रान्तत्वस्येत्यर्थः । तथा च वादेन विजिगीषतीत्यत्र इवेच्छाविषयपर्यन्तत्वं वाच्यं, तत्राहुरिष्यमाणेत्यादि । एवं वदतेति । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति'इत्यत्र यज्ञानां विविदिषोत्पादकत्वं वदतेत्यर्थः । आस्थेय इति, वेदवेदान्तयोरास्थेय इत्यर्थः । न चैवमिति । वैदिकाभिध्यानेत्याद्युक्तदिशेत्यर्थः । तदनिवेशेनेति । वेदस्यान्त इति योगाभावेन तथेत्यर्थः । न कथमपीति । तदुक्तं पत्रावलम्बने । ननु वेदान्तत्वं कथमिति सिद्धान्ते तु एवं लोकसिद्धस्य जगतो लोकप्रतीतिं बाधित्वा ब्रह्मत्वेनालौकिकत्वं संपाद्यत इति अर्धजरतीयन्यायात्तदन्तत्वं यथा लोकसिद्धस्य व्रीह्यादेर्लोकप्रतीतिं बाधयित्वा प्रोक्षणादिनाऽलौकिकत्वं क्रियते तद्वत्, प्रोक्षणवत्साधनानुक्त्याऽर्धजरतीयत्वम् । रामानुजाचार्यास्त्विति एते विशिष्टाद्वैतवादिनः । समानाकारं ज्ञानं विविदिषति विविदिषेत्यत्र सनर्थस्य तद्भाष्ये अविवक्षितत्वाद्वेदनमात्रं समानाकारं ज्ञानम् । भावनेत्यादि वेदान्तोक्तया तज्जनकयज्ञादिकस्य समुच्चयम् । ध्रुवानुस्मृतीत्यादि ध्रुवानुस्मृतिरूपं यदुपासनाभक्त्यादिनामकं दर्शनेन समानाकारं ज्ञानं तज्जनकत्वेनेत्यर्थः ।

भास्कराचार्यास्त्विति । एते भेदाभेदवादिनः समन्वयाधिकरणे भेदाभेदनिरूपणेऽस्ति । विप्रतिपन्नमिति संदिग्धमित्यर्थः । नहु सांख्ये प्रसङ्गः इत्यत्र । परमाणुवादिनां स्वोपादानगोचरापरोक्ष-

भाष्यप्रकाशः ।

रूपैः वेदान्तोक्तेश्वररूपं जिज्ञास्यमित्युपगम्य पूर्ववत् समुच्चयमङ्गीकुर्वन्ति । सूत्राणि च शारीरकपदेनोपवर्षादिमतमनुसृत्य विशिंषन्ति । तन्मते पूर्वोत्तरकाण्डयोरभिधेयभेदेऽपि प्रयोजनैक्यादैकशास्त्र्यात्, 'सर्वे वेदा यत्पदमामनन्ति,' 'वेदैश्च सर्वैरहमेव वेद्यः,'

'वेदास्त्रिकाण्डविषया ब्रह्मात्मविषया इमे ।
परोक्षवादा ऋषयः परोक्षं च मम प्रियम् ॥
मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्यते ह्यहम् ।
एतावान् सर्ववेदार्थः शब्द आस्थाय मां भिदाम् ।
मायामात्रमनूद्यान्ते प्रतिषिध्य प्रसीदति' ॥

इति श्रुतिस्मृतिविरोधो दुर्वारः । गीतायां, ब्रह्मसूत्रपदैरित्युक्तेस्तद्विरोधश्च ।

भिक्षुभाष्ये तु, आत्मेत्येवोपासीतेत्यादिविहितज्ञानविषयं किं ब्रह्म, किं वा तस्य ब्रह्मतानिर्वाहकं गुणजातं, कीदृशं तस्य ज्ञानं, कीदृशं च तस्य ज्ञानस्य फलमित्यादिकं विशिष्य मुमुक्षूणां जिज्ञासितं भवतीत्येवं जिज्ञासामुखेन संशयमधिकारिणं चोपन्यस्य शाखाभेदेन श्रुतिष्वन्योन्यविरुद्धार्थतायाः प्रतिभासनादिति जिज्ञासाजनकसंशयहेतुं चोपन्यस्य तन्निर्णयार्थं ब्रह्ममीमांसाशास्त्रस्यापेक्षितत्वमुक्त्वा ब्रह्मज्ञानस्य चोदनालक्षणतया, 'अयं तु परमो धर्मो यद्योगेनात्मदर्शनम्' इत्यादिस्मृत्या च धर्मत्वेऽपि न पूर्वमीमांसया ब्रह्ममीमांसाया गतार्थत्वं कल्पसूत्रवदशेषतन्निर्धारणार्थत्वादित्यनेन धर्मस्य सर्ववेदार्थत्वं, ब्रह्ममीमांसायाः पूर्वमीमांसाशेषत्वं च प्रकटीकृत्य, 'सत्यं ज्ञानमनन्तं ब्रह्म' 'विज्ञानमानन्दं ब्रह्म' इत्यादिश्रुतिसिद्धत्वाद् ब्रह्मस्वरूपे जिज्ञासा नोपपद्यत इत्याशङ्क्य, ब्रह्मस्वरूपज्ञानं किं सांख्यसिद्धं जीवचैतन्यं, किं वा चैतन्यान्तरमिति जिज्ञासासत्त्वादाकाङ्क्षितं ब्रह्ममीमांसाशास्त्रं वेदव्यासः प्रतिजानीत इत्युक्तम् ।

तन्मतेऽपि पूर्वोक्तवाक्यविरोधो जैमिनेरकुशलत्वापत्तिश्च । किंचेदं शास्त्रं धर्मविशेषविचारार्थमिति चेत्

रश्मिः ।

ज्ञानचिकीर्षाकृतिमानीश्वर इति । प्रधानादेः संशयकोटौ कथं निवेश इति चेत्, न असङ्गपुरुषादेर्युक्त्याऽप्रयोजकत्वात्पूर्ववदिति, स्वभाष्ये पूर्वस्मिन्यथातथाऽयं समुच्चयोऽत्रैवाग्रे वक्तव्यः । एवं च कार्यकारणजीवजिज्ञासेति सूत्रयितुं युक्तं, अन्यथा धर्मजिज्ञासया गतार्थत्वं स्यात्तत्राहुः सूत्राणि चेत्यादि । स्फुटमिदं तद्भाष्ये । अत एव उपवर्षाचार्येणोक्तं प्रथमपादे, आत्मवादं तु शारीरके वक्ष्याम इति रूपे, अतः उपदेशविचारार्थत्वं संबन्धः न तु संहतत्वम् । अतः शारीरकाणि सूत्राणीति विशिंषन्ति अभिधेयभेदेऽपीति कर्मोपासनारूपाभिधेयभेदेपीत्यर्थः । गीतायामित्यादि त्रयोदशे इत्यर्थः । 'बहुधा गीतम्'इत्यन्वयः ।

भिक्षुभाष्ये त्विति । अयमविभागाद्वैतमङ्गीकुरुते यथा मधु मधुकृतो निस्तिष्ठन्तीति अथास्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते इति छान्दोग्यश्रुतिदर्शनात् । इदं द्वितीयस्य तृतीयपादे 'यावद्विकारं तु विभागो लोकवत्' इति सूत्रे वक्ष्यन्ति । अधिकरणमिति एतावद्ब्रह्मजिज्ञासुमित्यर्थः । श्रौतं विस्पष्टमेव ब्रह्मेत्याकाङ्क्षायामाह शाखाभेदेनेत्यादि । श्रुतिष्विति अधिकरणान्तरविषयभूतास्वित्यर्थः । जिज्ञासाजनकेत्यादि संशयो जिज्ञासाजन्मेति तथा । चोदनेत्यादि आत्मेत्येवोपासीतेति चोदना । अकुशलत्वापत्तिरिति । निःशेषधर्मविचारस्याकृतत्वात्तथेत्यर्थः ।

भाष्यप्रकाशः।

प्रवर्तितस्तुत ब्रह्मविचारार्थम्। आद्ये धर्मविशेषजिज्ञासा ब्रह्मज्ञानजिज्ञासेति वा प्रतिज्ञां कुर्यात्। प्रकरणिन एव ज्ञेयत्वेन तस्यैव प्रतिज्ञातव्यत्वात्। तदकरणेन व्यासस्याप्यकौशलमापद्यते। द्वितीये तु प्रतिपाद्यभेदात् पूर्वशेषत्वाभावेन कल्पसूत्रन्यायविरोधः। सिद्धान्ते तु ब्रह्मणः सर्ववेदार्थत्वा-ज्जैमिन्युक्त धर्मस्य तथात्वमपासितुं तथा शङ्कानिरासावावश्यकावित्यदोषः। तस्मादिदमपि पूर्वतुल्यम्।

यत्तु शैवो रामानुजमतैकदेशमादायाराधनाराध्यभूतधर्मब्रह्मप्रतिपादकयोर्मीमांसाशास्त्रयोः फलैक्यादैक्यम्। यथा हि व्रीहिप्रोक्षणं दर्शपूर्णमासोत्पत्त्यपूर्वहेतुतया स्वर्गे समुच्चीयते, तथा कर्माणि ज्ञानप्रयोजकतया मोक्षे समुच्चीयन्तेऽतो गुणकर्मत्वादङ्गत्वं ज्योतिष्टोमादीनाम्। नच नित्यविधिप्राप्तानां तेषामितिकर्तव्यताविरोधात् कथं संस्कारतासिद्धिरिति शङ्कयम्। करणतया स्व-तन्त्रविध्यन्तरविहितसौत्रामणीबृहस्पतिसवादेरग्निचयनवाजपेयाद्यङ्गत्ववदुभयविधिबलादुभयसिद्धेः। अतो ज्ञानोदयावधि कर्माणि कर्तव्यानि। नच विविदिषन्तीति श्रुत्या विविदिषोत्पत्तिपर्यन्तत्वं कर्मणां शङ्कयम्। इच्छाया अपुरुषार्थत्वात्। अतः पूर्ववदेव शास्त्रैक्यमित्यङ्गीकृत्य ततो रामानुजा-चार्यभूतेषु वाक्येषु परीक्ष्य लोकान् कर्मचितानित्यादिवाक्यत्रयं विषयत्वेनोपन्यस्य ब्रह्म विचारार्हं न वेति संदेहे, अयमात्मा ब्रह्मेतिश्रुतिरहंविधिप्रत्यक्षसिद्धमात्मानं ब्रह्मेत्युपदिशतीति संदेहा-भावात्। किंच, विचारफलं विषयपरिच्छेदः। वेदान्तविचारजन्यं ज्ञानं चेद् ब्रह्म परिच्छिनत्ति तदा परिच्छेदातीतत्वभङ्गप्रसङ्गः। यदि न परिच्छिनत्ति, तदा प्रकाशाभावाद् ब्रह्मविषयज्ञानस्यासंभवः।

रश्मिः।

कल्पसूत्र इत्यादि बौधायनकल्पसूत्रन्यायस्य दृष्टान्ततायां विरोध इत्यर्थः। ननु सिद्धान्ते कथ-मित्यत आहुः सिद्धान्ते त्वित्यादि। जैमिन्युक्तमिति वैशेषिकाद्यन्तर्गतपुराणप्रसिद्धजैमिन्युक्त-वैशेषिकादितुल्येश्वररूपस्य धर्मस्य तथात्वं सर्ववेदार्थत्वमित्यर्थः। शङ्केत्यादि 'जैमिनीये च वैयासे न विरोधोस्ति कश्चन' इतिपुराणोक्तवेदाविरुद्धजैमिनिमतस्थापनाय भगवद्भिक्षूक्तशङ्कानिरासौ आवश्यका-विति। तस्मादिति प्रयोजनैक्यादैकशास्त्र्यात्। पूर्वतुल्यमिति 'सर्वे वेदाः' इत्यादिपूर्वोक्तवाक्य-विरोधब्रह्मसूत्रपदैरितिगीताविरोधाभ्यां धर्माभ्यां भास्कराचार्यमतसदृशमित्यर्थः। शैव इति अयमपि विशिष्टाद्वैतवादी शिवो ब्रह्मेति। तदाह यथा हीत्यादिना। एतच्च पूर्वतन्त्रे द्वितीयाध्याय उक्तम्। दर्शपूर्णमासाभ्यामुत्पत्तिर्यस्यापूर्वस्य तद्धेतुतयेत्यर्थः। गुणकर्मत्वादिति व्रीहीनवहन्तीतिवत्संस्कारक-त्वादित्यर्थः। तेषामित्यादि प्राशस्त्यज्ञानस्य शाब्दभावनायामितिकर्तव्यत्वात् ज्योतिष्टोमादीनामर्थ-भावनायां करणत्वेन तद्विरोधात् कथं 'आत्मेत्येवोपासीत' इति भावनायामितिकर्तव्यतारूपसंस्कारकर्म-तासिद्धिरित्यर्थः। उभयविधिबलादिति ज्योतिष्टोमविधिः 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इति उभयविधिबलात् ज्ञानस्वर्गोभयरूपफलसिद्धेः करणतासंस्कारतयोर्वा सिद्धेरित्यर्थः। पूर्ववदेवेति फलैक्यादेवेत्यर्थः। वाक्येष्विति 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' 'अन्तवदेवास्य तद्भवति' 'न ह्यध्रुवैः प्राप्यते हि ध्रुवम्' 'प्लवा ह्येते अदृढा यज्ञरूपाः' 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन' 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्। तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय शमान्विताय। येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' 'ब्रह्मविदाप्नोति परम्' 'न पुनर्मृत्यवे तदेकं पश्यति' 'न पश्यो मृत्युं पश्यति' 'अकर्मपश्यो न स्वराड् भवति' 'तमेवं विद्वानमृत इह भवति' 'तमेव विदित्वातिमृत्यु-

भाष्यप्रकाशः ।

तस्मान्न विचार्यमिति पूर्वपक्षमुक्त्वा, विचारयोग्यं ब्रह्म, 'अयमात्मा ब्रह्म' इति श्रुत्याऽहंकारबद्धस्य संसारिण आत्मनो ब्रह्मत्वाभिधानादेव संदेहसंभवात् । निरस्तसमस्तोपप्लवकलङ्कस्य निरतिशयज्ञानानन्दादिशक्तिमहिमातिशयवत्त्वं हि ब्रह्मत्वम्, अनाद्यज्ञानवासनावष्टम्भविजृम्भितविचित्रकर्मफलभोगानुगुणबहुशरीरप्रवेशनिर्गमव्यापारपरवशनिःसीमतापसहिष्णुत्वं जीवत्वमिति तयोर्लक्षणेनेतरेतरभेदनिश्चये तयोरैक्यदार्ढ्यास्फूर्तेः । किंच । अन्नं ब्रह्म, मनो ब्रह्म, विज्ञानं ब्रह्म, आदित्यो ब्रह्म, नारायणं परं ब्रह्म इत्यादयोऽन्यमन्यमर्थं ब्रह्म इत्याहुः । तत्र किं ब्रह्मेत्येवं संदेहादपि विचारार्हं ब्रह्म । नचापरिच्छिन्नत्वाद् ब्रह्मणस्तद्विषयं ज्ञानं न संभवतीति शङ्क्यम् । ईदृगिदमिति ब्रह्मणः परिच्छेदासंभवेऽपि लक्षणमुखेनेतरव्यावृत्ततामात्रेण परिच्छेदसंभवात् लक्षणेन परिच्छेदो हि सर्वत्र लक्ष्यविषयकेतरव्यावृत्तताज्ञानरूप एव दृष्ट इत्यदुष्टः । अत उपदिष्टस्य ब्रह्मणो लक्षणे वेदान्तवाक्यैर्निरूपिते परीक्षिते च सति तल्लक्षणशून्येभ्यः सजातीयविजातीयेभ्यः सर्वेभ्यो व्यावृत्तं ब्रह्म विज्ञायत इति तदर्थं युक्तः शास्त्रारम्भ इत्याह । एतन्मतेऽपि तेषां वाक्यानां विरोधः पूर्ववदेव । जीवलक्षणं तु जीवप्रकरणे दूषयिष्यामः । किंच । 'ज्ञात्वा शिवं शान्तिमत्यन्तमेति,' 'ईशं तं ज्ञात्वा अमृता भवन्ति,' 'तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्,'

'आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
ध्याननिर्मथनादेव पाशं दहति पण्डितः' ॥

'ज्ञात्वा देवं मुच्यते सर्वपाशैः' इतिश्रुत्युक्तमोक्षप्राप्तिलिङ्गेन शिवस्य परब्रह्मत्वं यत्नेनोपगतं, तदप्यसंगतम् । 'ब्रह्मविदाप्नोति परम्' इति तदुपन्यस्ते फलवाक्ये, नारायणं परं ब्रह्मेति श्रुत्युक्तनारायणरूपग्रहणस्यैव युक्तत्वात् । उभयत्रापि परब्रह्मपदोपबन्धसाम्यात् । लिङ्गापेक्षया

रश्मिः ।

मेति नान्यः पन्था अयनाय विद्यते' 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति' इति वाक्येष्वित्यर्थः । **अहंकारबद्धस्येत्यादि** अयमित्यस्य तात्पर्यकथनमिदम् । **निरस्तसमस्तेति** आधाराभिधानमिदम् । **अनादीति** अनादिरज्ञानवासना सैवावष्टम्भः प्रारम्भः तेन विजृम्भितं उज्जृम्भितं चेष्टितमुत्फुल्लं वा यच्चित्रकर्मफलं तस्य भोगः साक्षात्कारः तस्यानुगुणानि बहूनि शरीराणि तेषु प्रवेशनिर्गमौ तावेव व्यापारौ ताभ्यां परवशस्य निःसीमतापः निरवधितापः तस्य सहिष्णुत्वम् । **लक्ष्यविषयकेत्यादि** । यमाकाशमितरव्यावृत्तमित्याकाशलक्षणेन ज्ञायते इति परिच्छेदो हीतरव्यावृत्तताप्रकारकलक्ष्यविषयकज्ञानरूप एवेति । **जीवप्रकरण** इति द्वितीयाध्याये तृतीयपाद इत्यर्थः । **आत्मानमित्यादि** मनसि प्रणवस्य भावनादेवं ज्ञात्वा मुच्यत इति फलितोर्थः । **मोक्षप्राप्तीत्यादि** । यदि शिवः परं ब्रह्म न स्यात्तर्हि तज्ज्ञानेन मोक्षो न स्यादिति मोक्षप्राप्तेर्लिङ्गं सामर्थ्यं तेनेत्यर्थः । **नारायणमित्यादि** नारा आपस्ता एवायनं यस्येति जलशायिनमित्यर्थः । दृष्टं यथा-वर्षजलशायिसूर्यमण्डलस्थं ब्रह्म यथा वा वर्षजलशायिमेघो गर्जति तथा ब्रह्म । अत उक्तं युक्तत्वादिति । हेत्वन्तरमाहुः **उभयत्रेत्यादि** । ननु लिङ्गस्य का गतिरत्राहुः **लिङ्गापेक्षयेत्यादि** ।

१. मिथुन्.।

भाष्यप्रकाशः ।

श्रुतेर्बलिष्ठत्वात् । 'ऋतं सत्यं परं ब्रह्म' इतिवाक्यस्यापि संदिग्धत्वात् । शिवेशादिपदानां च भगवद्वाचकत्वमेवेत्यादिकमस्माभिः प्रहस्ते निपुणतरमुपपादितम् । पुनरग्रेऽपि तत्र तत्रोपपादयिष्यते ।

माध्वास्तु शास्त्रे प्रवर्तनीया ब्रह्मजिज्ञासा विषयः, कर्तव्या न वेति संदेहः । तत्र प्रमाणाभावेन जीवव्यतिरिक्तस्य ब्रह्मणोऽभावाज्जीवस्य स्वप्रकाशत्वादहंवित्तौ प्रकाशमानत्वात् तस्यापि ज्ञायमानत्वेनानुभवान्तरान्वेषणेऽनवस्थाप्रसङ्गात् क्वचित् विश्रान्त्यङ्गीकारे आत्मन्येव तथात्वौचित्यात् । न च स्वप्रकाशसंविदाश्रयतयाऽऽत्मा भासत इति युक्तम् । औत्तरिकानुस्मृतिसिद्धसौषुप्तिकानुभवाभावप्रसङ्गात् । तत्र संविदाश्रयत्वेनात्मप्रतीतेरभावात् । अतः स्वप्रकाशात्मानतिरिक्तस्य ब्रह्मणः संदिग्धत्वाभावेनाविषयतया तज्जिज्ञासाया अपि तथात्वान्न कर्तव्येति पूर्वः पक्षः । सिद्धान्तस्तु, भवेदेतदेवं, यदि स्वप्रकाशजीवाभिन्नं ब्रह्म स्यात् । न त्वेवम् । जिज्ञास्ये ब्रह्मपदप्रयोगात्, तद्विजिज्ञासस्व, तद् ब्रह्मेति ब्रह्मशब्दस्य गुणपूर्णतां वक्ति । 'अथ कस्मादुच्यते ब्रह्मेति, बृहन्तो ह्यस्मिन् गुणाः' इति श्रुतेः । तथाच कथं तस्य जीवाभेदः । जीवस्याल्पगुणत्वेनानुभवात् । न च ब्रह्मणि गुणाध्यासः । परमार्थतोऽब्रह्मत्वप्रसङ्गात् । न च देशाद्यपरिच्छिन्नत्वं ब्रह्मत्वम्, उक्तश्रुतिविरोधात् । देशाद्यपरिच्छेदेनापि जीवभेदसिद्धेः । जीवाणुत्वस्य वक्ष्यमाणत्वात् । जीवस्य स्वप्रकाशत्वेपि तद्भिन्नब्रह्मणः संदिग्धत्वाद्विषयत्वम् । अतस्तज्जिज्ञासा कर्तव्येत्याहुः । ब्रह्मशब्दश्च विष्णावेव रूढः । 'यमन्तःसमुद्रे कवयोऽवयन्ति, यदक्षरे परमे प्रजाः, यतः प्रसूता जगतः प्रसूती तोयेन जीवान् व्यचसर्ज भूम्याम्' इत्युक्त्वा, 'तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम्' इति श्रुतौ समुद्रान्तःस्थत्वलिङ्गिते जगत्कर्तरि परब्रह्मत्वविधानात् । 'यो देवानां नामधा एक एव' इति श्रुतावेवकारेणैकस्य सर्वनामधारकत्वमुक्त्वाऽग्रे, 'अजस्य नाभावध्येकमर्पितं यस्मिन् विश्वानि भुवनानि तस्थुः' इति विश्वाधारपद्मस्य नाभ्यर्पितत्वश्रावणात् ।

रश्मिः ।

बलिष्ठत्वादिति । एतच्च तृतीयस्य तृतीयपादे 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' इत्यधिकरणे चिन्तितम् । 'ऐन्द्या गार्हपत्यमुपतिष्ठते' इत्युदाहरणम् । ननु परब्रह्मपदोपनिबन्धः शिवपरेपि वाच्ये दृश्यत इत्यत आहुः ऋतं सत्यमिति । कथं तर्हि ज्ञात्वा शिवमित्यादि तत्राहुः शिवेत्यादीत्यादि । द्वितीये वादे वस्तुतः सर्वेषां शब्दानां सर्वार्थत्वस्य महाभाष्याद्यभिमतत्वेन ब्रह्मवाचकत्वस्यैवाभिप्रेतत्वात् । प्रतिनियततावन्मात्रकार्यकरणेन भगवदनुकारितया व्यवहारार्थमेव शक्तिसंकोचेन शिवादिषु रुद्रवाचकत्वदर्शनेपि ब्रह्मवाचकत्वस्यापर्यवस्थेयत्वात् । इत्येवं निपुणतरमुपपादितमित्यर्थः । महाभाष्ये पस्पशाह्निके । आदिपदोक्ते वाक्यपदीये तु

'संबन्धिभेदात्सत्तैव भिद्यमाना गवादिषु । जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः ॥
तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते । सा नित्या सा महानात्मा तामाहुस्त्वतलादयः' ॥

इति स्फुटम् । इति तट्टीकायाम् ।

माध्वास्त्विति एते भेदवादिनः । नन्वहंवित्तौ विषयत्वेन प्रकाशमानस्य कथं स्वप्रकाशत्वं तत्राहुः तस्यापीत्यादि । तथात्वौचित्यादिति स्वप्रकाशत्वौचित्यादित्यर्थः । औत्तरिकेत्यादि सुषुप्त्यौत्तरिकेत्यर्थः । तादृशानुस्मृतिः न किंचिदवेदिषमित्याकारिका तया कार्यभूतया सिद्धो यः कारणात्मा । 'सुखमहमस्वाप्सम्' इत्याकारकः सौषुप्तिकानुभवः तस्याभावप्रसङ्गात् । तत्रेति सुखमहमस्वाप्सं न किंचिदवेदिषमित्यौत्तरिकानुस्मृतावित्यर्थः । तथात्वादिति अविषयत्वादित्यर्थः ।

भाष्यप्रकाशः।

'वेदे रामायणे चैव पुराणे भारते तथा।
आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते'॥

इति हरिवंशवाक्याच्चेत्यप्याहुः। तन्मतेऽपीज्यत्वेनैव वेदार्थत्वाङ्गीकारान्मां विधत्त इतिवाक्यविरोधः। यत्तु कर्मविधात्री श्रुतिर्मां प्रत्येव तद्विधत्ते, इन्द्राद्यभिधात्री च मामभिधत्ते, चत्वारि वागितिश्रुत्या अहं त्रिविधरूपत्वेन कल्प्यो, न सुरां पिबेदित्यादिश्रुत्याहमेवाप्रियादपोह्य इति व्याख्यातम्। तदप्यध्याहारवृत्तिसंकोचलक्षणादोषसंभवाच्चिन्त्यम्। प्रकृतमनुसरामः। एवंचात्र सूत्रे शेषषष्ठ्या ब्रह्मसंबन्धिनां जिज्ञास्यताबोधनेन साधारणाधिकारे ज्ञानकर्मसमुच्चयः उत्कृष्टाधिकारे च भक्तिमार्गीयः सर्वात्मभावः साधनमिति बोधितम्॥ १॥

इति प्रथमं जिज्ञासाधिकरणम्॥ १॥

रश्मिः।

इज्यत्वेनैवेति विष्णुत्वेनैव न तु कर्मत्वेन। 'यज्ञो वै विष्णुः'इति श्रुतेः। अस्वरसमाहुः तदप्यपीत्यादि। तद्विधत्त इति कर्माध्याहारः। इन्द्राद्यभिधात्रीणां भगवदभिधाने वृत्तिसंकोचः। चत्वारि वागित्यादौ वागादिलक्षणेत्येवं ज्ञेयम्। पादसेवनन्यायेन भक्तिमीमांसेयमिति बोधयितुं सूत्रनिष्कर्षार्थमाहुरेवं चेति। ब्रह्मणोऽजिज्ञास्यत्वेन शेषषष्ठ्यामेव व्यासचरणतात्पर्यं चेत्यर्थः। विरोधनिराकरणस्याप्रमुख्यसाधनसंबद्धत्वात्साधनाध्यायान्ते साक्षाद्ब्रह्मसंबन्धिन आहुः साधारणेत्यादि। ज्ञानकर्मसमुच्चयः 'यदेव विद्यया' इति 'तमेतम्' इति श्रुतिभ्यामुक्तः। द्वितीयः सर्वोत्तममार्गे कर्मणा चित्तशुद्ध्या भक्तिरिति। सर्वात्मभाव इति तन्निर्धारणाधिकरणे व्युत्पाद्यम्। अयमर्थः। सच्चिदानन्दस्य ब्रह्मणः सदंशस्य धर्मः कर्म, चिदंशस्य ज्ञानं, आनन्दस्य प्रेमा, आनन्दमयमुपक्रम्य 'तस्य प्रियमेव शिरः' इति श्रुतेः। तथा च सर्वात्मभावप्रतिज्ञासूत्रमिदं पूर्वाध्याये भक्तेर्विषयरूपं ब्रह्म प्रतिपाद्यते समन्वयप्रतिपादनद्वारा, द्वितीये तत्परिशोधः क्रियते, तृतीये प्रतिज्ञातः सर्वात्मभावो बोध्यते, चतुर्थे तत्फलमिति भक्तिमीमांसेयमिति सूत्रनिष्कर्षः। अथातो भक्तिजिज्ञासेति सूत्रयितुं युक्तं यद्यपि तथापि विषयस्य कारणत्वात्तत्पुरःसरं प्रतिज्ञातं वेदितव्यमिति। किंच न भक्तिज्ञानकर्मभिरेव मोचयति किंतु अवतारदशायां स्वरूपेणापीति सकलरूपब्रह्मसंबन्धिनां जिज्ञासार्थे ब्रह्मजिज्ञासा इत्येव युक्तमिति शुभम्। अत्र 'नानामतध्वान्तविनाशन' इति भाष्यान्ते वक्ष्यमाणत्वात् नानामतान्युक्त्वा ध्वान्तनाशनं कृतमिति ज्ञेयम्॥ १॥

इति प्रथमं जिज्ञासाधिकरणम्॥ १॥

**किंच, तत्र किं लक्षणं किं प्रमाणकमिति जिज्ञासायामाह सूत्रकारः ।**

भाष्यप्रकाशः ।

एवं पूर्वाधिकरणे वेदार्थभूतब्रह्मणो जिज्ञास्यत्वे साधिते कथं जिज्ञास्यमिति प्रकारविशेषाकाङ्क्षायां समन्वयाविरोधाभ्यां तस्य वक्तव्यत्वात् तद्बोधकमग्रिमसूत्रमवतारयन्ति तत्रेत्यादि । तेषु वक्तव्येषु तदुपजीव्यतया उक्तजिज्ञासायां लक्षणप्रमाणात्मकं प्रकारद्वयं पूर्वमाहेत्यर्थः ।

रश्मिः ।

पूर्वाधिकरणे ब्रह्मजिज्ञासापदेन त्रैवर्णिकोर्थजिज्ञासुरधिकारी, ब्रह्मसंबन्धी विषयः, प्रतिपाद्यप्रतिपादकभावः संबन्धः, शाब्दं ब्रह्मज्ञानं च फलम्, तस्याप्यानन्दावाप्तिः फलमित्यनुबन्धचतुष्टयमुक्तम् । अन्यच्च षडङ्गैरेव वेदार्थनिश्चयस्य संभवादधिकाकाङ्क्षायाश्च तपःप्रभृतिभिरेव पूरणात् वेदान्ता अजिज्ञास्या इत्याशङ्क्य ऋषिप्रणीतशास्त्रपार्थक्यबाहुल्यात् तच्छ्रवणे बुद्धिदोषान्मन्दानां संदेहे तन्निवृत्तये इदं शास्त्रं कर्तव्यम् । यद्यपि ‘सर्वे वेदा यत्पदमामनन्ति’ इत्यादिना ब्रह्मण एव वेदार्थता तथापि ‘तं त्वौपनिषदं पुरुषं पृच्छामि’ इति पुरुषरूपता ‘वेदान्तविज्ञानसुनिश्चितार्थाः’ इति वेदान्तानामर्थनिश्चायकता चाम्नायते । तस्मात् तपःप्रभृतीनामसंभवाद् वेदान्तविचारेणैव वेदार्थभूतब्रह्मस्वरूपनिश्चय इति ब्रह्मसंबन्धिविचारः श्रीमद्बादरायणाचार्यैः प्रस्तूयत इत्युक्तम् । अतो वक्ष्यमाणानि यावन्त्यधिकरणानि समाप्तिपर्यन्तानि तावन्त्यस्यैव विषय इत्युक्तं भवति । अतो विषयविषयिभावसंगत्याधिकरणमवतारयन्ति एवं पूर्वेत्यादिना । साधित इति ‘वेदार्थब्रह्मणो वेदानुकूलविचार इति’ इति भाष्येऽस्माभिः भूतपदं समावेश्य वेदार्थभूतं ब्रह्म वेदार्थब्रह्म इति समस्य साधित इत्यर्थः । साधनं तु वेदार्थावेदार्थभूतत्वेपि वेदार्थभूतत्वेन ब्रह्मग्रहणाद् भक्त्येकलभ्यत्वेवेदार्थत्वम् । अवेदार्थत्वे तु वेदानुकूलविचाराविचाराविषयत्वापत्तेः । नन्वेतस्य प्रकाशे सर्वपदं समावेश्य व्याख्यानं सर्ववेदार्थत्वेन ब्रह्म जिज्ञास्यमिति ग्रन्थेनेति चेन्न, सर्ववेदार्थत्वस्य वेदार्थमात्रपर्यायत्वेन वेदार्थभूतेत्याद्यनुपदस्वोक्तप्रकाशविरोधापत्तेः । तेन सर्ववेदार्थत्वं न वेदार्थमात्रत्वं किंतु वेदार्थभूतत्वं सर्ववेदार्थत्वप्रयोजकं[1] लक्षणयेति । एतेन ‘वेदैश्च सर्वैरहमेव वेद्यः’ इत्यपि व्याख्यातं, सर्ववेदार्थत्वं वेदार्थभूतत्वं विना न संभवतीति । प्रकारविशेषाकाङ्क्षायामिति । सामान्यप्रकारकजिज्ञासाया विशेषप्रकारकजिज्ञासाजनकत्वात् तादृशाकाङ्क्षायां सामान्यप्रकारेण बृहत्त्वबृंहणत्वरूपब्रह्मत्वेनाजिज्ञास्यत्वाद् विशेषपदोपादानम् । तस्येति प्रकारविशेषस्य कर्तृत्वलक्षणस्य । इदमध्यायद्वये स्पष्टम् । तद्बोधकमिति लक्षणप्रमाणबोधकम् । सर्वविरुद्धधर्माश्रयत्वरूपप्रकारविशेषस्य वक्तव्यत्वाद् ब्रह्मणो निमित्तत्वादिबोधकमित्यर्थः । तत्रेत्यादीति । अत्र किंच तत्रेत्यादीति वक्तव्येपि अवतरणान्तराभावेनान्यथेत्यर्थासंभवादारम्भो वक्तव्यः, स च कर्मानध्याहरन् न समर्थ इति अध्याहाराभावायैतावदेवोपात्तम् । किंचेति त्यक्तं तद्बीजं पूर्वमुक्तम् । तेषु वक्तव्येष्विति तत्र ब्रह्मणीति पूर्वत्रार्थः । अत्राभासे तु प्रकारविशेषेषु वक्तव्येषु इति तत्रेत्यस्यार्थः । ते च समन्वयसूत्रादारभ्याभिन्ननिमित्तोपादानतादयो विशेषप्रकाराः । संगतिमधिकरणयोराहुः तदुपजीव्यतयेति । लक्षणप्रमाणाभ्यां सामान्यप्रकाराभ्यां वस्तुसिद्धेर्वस्तूपजीव्याश्च तन्निष्ठाः प्रकाराः सामान्यविशेषरूपा इति तयेत्यर्थः । सधर्मकस्य निर्धर्मकाभिन्नत्वेनोक्तजिज्ञासाविषयत्वमत उक्तम् उक्तजिज्ञासायामिति उक्तजिज्ञासाविषये अधोक्षजपादेपि । लक्षणप्रमाणात्मकमित्यादिः । अतस्तदुपजीव्यता प्रकारविशेषोपजीव्यता तत्कारणता तया, तेनोपजीव्योपजीवकभावः संगतिरित्यर्थः ।

---

1. ‘पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः । शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी’ इति भिन्नार्थोऽयम् ।

# जन्माद्यस्य यतः शास्त्रयोनित्वात् ॥ २ ॥ ( १-१-२ )

भाष्यप्रकाशः।

जन्माद्यस्य यतः शास्त्रयोनित्वात् ॥ २ ॥ अत्र सर्वेऽपि योगविभागेन शास्त्रयोनित्वादिति सूत्रं भिन्नमभ्युपगच्छन्ति। तन्न युक्तम्। अग्रिमसूत्रेषु साध्यहेतुनिर्देशपूर्वकमेवाधिकरणरचनस्य दर्शनेनात्रापि तथैव युक्तत्वात्, सांख्ये ब्रह्मपदस्य प्रकृतौ प्रयुक्तत्वेन तद्वारणाय विवक्षितब्रह्मणि शास्त्रोक्तकर्तृत्वप्रतिपादनस्यावश्यकत्वाच्च। नच सूत्रभेदेऽप्यधिकरणस्य सूत्रत्रयात्मकत्वाङ्गीकारात् प्रथमसूत्रे विशेषतः प्रमाणानुक्तावप्यथशब्देन धर्मविचारानन्तर्ये ब्रह्मविचारस्य बोधिते ब्रह्मणो वेदान्तवेद्यतोपस्थितेः सुखेनोक्तदोषपरिहारात् सूत्रैक्यं न युक्तमिति वाच्यम्। अथशब्दस्यानेकार्थत्वेनानन्तर्यस्याप्यनेकविधत्वेन धर्मविचारानन्तर्यस्योपपादनसापेक्षत्वेन चाहत्य ब्रह्मणो वेदान्तवेद्यत्वानुपस्थित्या जन्माद्यधिकरणरचनायामनाश्वासप्रसङ्गात्। अतः सूत्रैक्यमेव युक्तमिति। ये तु जन्माद्यधिकरणं, शास्त्रयोनित्वाधिकरणं च भिन्नमङ्गीकुर्वन्ति तेषां मते प्रथमस्य हेतुशून्यत्वाद् द्वितीयस्य च साध्यशून्यत्वात् साकाङ्क्षतयाऽतिक्लिष्टत्वेन तद्विवक्षितप्रमेयासाधकत्वं बोध्यम्।

रश्मिः।

जन्माद्यस्य यतः शास्त्रयोनित्वादिति ॥ २ ॥ अत्रापीति अस्मिन् सूत्रेपि तथा। साध्यहेतुप्रतिपादकत्वप्रकारस्यैव युक्तत्वादित्यर्थः। आवश्यकत्वाच्चेति। चकारेण—

'ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक्। ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः' ॥

इति स्मृत्यनुग्रहः संगृहीतः। अत्र ब्रह्मसूत्रपदमुपनिषत्परमिति शांकराः। तत्र सूत्रपदप्रवृत्तिर्मृग्या। रामानुजानां भास्कराणां चाशङ्कामनूद्य निषेधमाहुः न च सूत्रेत्यादि। किंचेति त्यक्त्वा तत्रेत्याभासो राद्धान्ते अधिकरणं सूत्रद्वयात्मकं वा। सूत्रत्रयेति। वेदान्तवेद्यतेति धर्मस्य वेदवेद्यत्वे ब्रह्मणो वेदान्तवेद्यत्वं क्रियाकाण्डं ज्ञानकाण्डमिति समाख्याभ्याम्। उपपादनेति शंकराचार्यैः साधनचतुष्टयानन्तर्याङ्गीकारात् कचिदधिकारार्थताङ्गीकारादुपपादनेत्यादि। अनाश्वासेति शास्त्रान्तरेभावात् संशयात्तथा। युक्तमितीति। किंच शास्त्रयोनित्वादितिसूत्रानतिप्रयोजननिवर्तकत्वेनापि सूत्रैक्यं युक्तम्। तथाहि एतस्य शंकरभाष्ये यथोक्तमृग्वेदादिशास्त्रं योनिः कारणं प्रमाणमस्य ब्रह्मणो यथावत् स्वरूपाधिगम इत्याद्युक्त्वा शास्त्रमुदाहृतं पूर्वसूत्रे 'यतो वा इमानि भूतानि जायन्ते' इत्यादीति चोक्त्वा किमर्थं तर्हीदं सूत्रं यावता पूर्वसूत्र एव एवंजातीयकं शास्त्रमुदाहरता शास्त्रयोनित्वं ब्रह्मणो दर्शितमित्याशङ्क्य तत्र सूत्राक्षरेण विस्पष्टं शास्त्रस्यानुपादानात् जन्मादिसूत्रेण केवलमनुमानमुपन्यस्तमित्याशङ्क्येत तामाशङ्कां निवर्तयितुमिदं सूत्रं प्रववृते शास्त्रयोनित्वादितीति। समाधानग्रन्थेनानतिप्रयोजनत्वसूचनादिति। माध्वानां मतमाहुः ये त्वित्यादि। आसत्तिविरहादप्रमाणमित्याहुः तेषां मत इत्यादि। साध्येति जगज्जन्मादिकर्तृत्वं साध्यम्। अतीति यथाकथंचित्साधने सूत्रभेदः किमर्थः गीताविरोधश्चेत्……शब्दः। तद्वीति 'कृष्णायाक्लिष्टकारिणे' इति श्रुतेः तस्य व्याख्यानमाह विषयाविषयोपमर्ददशायां जातत्वेन आचार्यचरितत्वाभावापत्त्या आचार्यविवक्षितं मोक्षसाधकं यत्प्रमेयं तस्य स्मृतिसहायाज्जन्मरूपहेतुसाध्यकस्या-

ननु कथमत्र संदेहो यावता, सत्यं ज्ञानमनन्तं ब्रह्मेत्याह श्रुतिरेव ।

विरुद्धं चैतत् । स्वरूपलक्षणाकथने कार्यलक्षणस्य वक्तुमशक्यत्वात् । विवादाध्यासितत्वाच्च । न हि ब्रह्मणो जगत्कर्तृत्वं सर्वसंमतम् । न चागमोदितमिति वेदमात्रस्य ब्रह्मप्रमाणकत्वं वक्तुं शक्यते ।

---

भाष्यप्रकाशः ।

लक्षणे शङ्कते नन्वित्यादि । यत् संदिग्धं तत् सम्यक् परिच्छेत्तुं लक्षणीयम् । अत्र ब्रह्मणि कथं संदेहः । यावतेत्यवधारणे हेत्वर्थे वा । तथाच ब्रह्मणः सत्ता स्वरूपलक्षणं च श्रुतित एव सिद्धम् । तदवधारणे ततो हेतोर्वा ब्रह्मणोऽखिलविशेषशून्यत्वेन मिथ्या संदेहप्रयोजकप्रकाराभावात् संदेह एव न घटत इत्यर्थः ।

प्रकारान्तरेणापि तदभावमाह विरुद्धमित्यादि । यद्धि लोकाप्रसिद्धं तदलौकिकया श्रुत्या निर्णेयम् । श्रुतिस्तु पूर्वं स्वरूपलक्षणमुक्त्वाऽग्रिमे प्रपाठके कार्यलक्षणं वक्ति । अतः प्रथममेव तत्कथनं श्रुतिविरुद्धम् । न च स्वरूपलक्षणे संदेहाभावात् कार्यलक्षणमेवोच्यत इति युक्तम् । अन्नप्राणादिष्वपि तस्यातिप्रसङ्गदर्शनेन स्वरूपलक्षणाकथने केवलतत्कथनस्याप्रयोजकत्वात् । कैश्चिन्मायाशबलस्यान्यैः शुद्धसत्त्वात्मकशरीरविशिष्टस्येतरैः सत्त्वादिगुणत्रयात्मकस्य प्रधानस्यापरैर्नित्यज्ञानेच्छाप्रयत्नधर्मकस्य तथात्वाङ्गीकारेण तस्य विवादाध्यासितत्वाच्च । तदेव विभजति न हीत्यादि । ननु ब्रह्मणः कर्तृत्वस्य सर्वसंमतत्वाभावेऽपि वेदस्य प्रमाणमूर्धन्यत्वात् तदुक्तकोटेरौत्कट्यात् संदेहाभावाय लक्षणविचार उचित इति चेत् तत्राह न चेत्यादि । चोऽवधारणे । कर्ता आगमेन वेदरूपेण

रश्मिः ।

साधकत्वमित्यर्थः । यावतेत्युक्तसंबन्धार्थं तच्छब्दघटितफक्किकामाहुः तदवेति । अखिलेति सत्यत्वाद्यभावानामधिकरणरूपत्वेन परेषां तथा । संदेह इति संदेहे दूरत्वं कारणं स्थाणुर्वा पुरुषो वेत्यत्र स्थाणुत्वपुरुषत्वादिकं प्रयोजकं तद्वदत्र तदभावात् । तदभावमिति संदेहाभावमित्यर्थः । स्वरूपेत्यादि भाष्यं विवृण्वन्ति स्म यद्धीति । लोकाप्रेति अनधिगतार्थगन्तृत्वं श्रुतिप्रामाण्यं यतः । श्रुतिस्त्वित्यादि । तैत्तिरीयाणां ब्रह्मोपनिषदीत्यर्थः । अन्नेत्यादि । 'अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते' इत्यादिश्रुतिभिः कार्यलक्षणस्यातिव्याप्तिरेवं तु स्वरूपलक्षणलक्षिते कार्यलक्षणं विवक्षितमिति नातिव्याप्तिः । अन्नादीनां सत्यादिप्राधान्यान्न प्रकटसच्चिदानन्दत्वमिति नातिप्रसङ्ग इति भावः । हेतुभाष्यमवतारयितुं शङ्कानिषेधावाहुः नन्वित्यादि स्वरूपेत्यादि । केवलतत्कथनस्येति कार्यलक्षणकथनस्येत्यर्थः । अप्रयोजकत्वादिति । इदमशक्यत्वादित्यस्य विवरणम्, तथाहि कार्यलक्षणस्य किमन्यद् ब्रह्मज्ञानजनकमिति जिज्ञासया प्रवृत्तत्वेन जिज्ञासायाः स्वरूपलक्षणलक्षितब्रह्मघटितत्वेन विशेषणज्ञानाभावप्रयुक्तजिज्ञासाभावात् कारणविघटनेनाकारणकत्वरूपाप्रयोजकत्वमशक्यत्वमिति । विवादेत्यादिभाष्यं विवृण्वन्ति कैश्चिदिति । शांकरैरित्यर्थः । अन्यैरिति रामानुजभास्करमाध्वैरित्यर्थः । इतरैरिति सांख्यैरित्यर्थः । अपरैरिति नैयायिकैरित्यर्थः । तथात्वाङ्गीकारेणेति भूतादिकर्तृत्वाङ्गीकारेणेत्यर्थः । तस्येति भूतादिकर्तृत्वस्येत्यर्थः । तदेवेति विवादाध्यासितत्वमेवेत्यर्थः । तदुक्तेति वेदोक्तायाः कर्तृत्वकोटेः । लक्षणेति कार्यलक्षण-

---

१. कार्यलक्षणाभावमित्यर्थः ।

किंच व्यर्थश्चैवं विचारः । लक्षणप्रमाणाभ्यां हि वस्तुज्ञानं भवति । तच्च स्वरूपलक्षणेनैव भवतीति किमनेन । तस्मादयुक्तमुत्पश्याम इति ।

उच्यते ।

संदेहवारकं शास्त्रं वेदप्रामाण्यवादिनाम् ।
क्रियाशक्तिज्ञानशक्ती संदिह्येते परस्थिते ॥

न हि श्रुतिं व्याख्यातुं प्रवृत्तः सूत्रकारः किंतु संदेहं वारयितुम् । तत्र, 'सत्यं ज्ञानमनन्तम्', 'नित्यशुद्धमुक्तस्वभावम्' इतिश्रुत्या कर्तृत्वादिप्रापञ्चिकधर्मराहित्यं प्रतीयते । 'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत् प्रयन्त्यभिसंविशन्ति' इति कर्तृत्वं च ।

---

भाष्यप्रकाशः ।

मूलशास्त्रेणोदित इत्येतावता कृत्स्नस्य वेदस्यैव ब्रह्मणि प्रमाणत्वं न वक्तुं शक्यते । कल्पनोपदेशस्यापि तत्र शक्यवचनत्वादनुमानस्यापि तत्र प्रमाणत्वाच्चेत्यर्थः । अत्र ब्रह्मप्रमाणत्वमिति पाठः प्रतिभाति । अथ वेदोक्त एवाग्रहस्तदा दूषणान्तरमाह किंचेत्यादि । अयुक्तमिति सूत्रोक्तं लक्षणमयुक्तमित्यर्थः । शेषमतिरोहितार्थम् ।

अत्र समाधातुं गृह्णते उच्यत इत्यादि । प्रकारान्तरेणात्र संशय उच्यते । वेदप्रामाण्यवादिनाम् । 'सर्वे वेदा यत् पदमामनन्ति' इति श्रुत्यनुसारेण ब्रह्मण्येव सर्वस्य वेदस्य प्रामाण्यमन्यत्र प्रमाणाभासत्वमितिवादिनां वेदे यः संदेहस्तद्वारकमिदं वैयासं शास्त्रम् । तत्र कः संदेह इत्यपेक्षायां, परस्थिते 'ब्रह्मविदाप्नोति परम्' इत्यत्राप्नोतिकर्मभूतो यः पर उक्तस्तत्स्थिते क्रियाशक्तिज्ञानशक्ती स्वरूपलक्षणविरुद्धत्वाद् ब्रह्मणि संदिह्येते, स्तो न स्तो वेत्येष संदेह इत्यर्थः । गृहीतं विभजन्ते न हीत्यादि । यदुक्तं स्वरूपलक्षणाकथन इत्यादि, तदसंगतम् । यदि सूत्रकारः श्रुतिं व्याख्यातुं प्रवृत्तः स्याद् यथाक्रमं प्रतिपदं च व्याकुर्यात् । न तु तथा । किंतु संदेहं वारयितुम् । ततश्च यत् संदिग्धं तद्विवृणोति, व्याख्येयसमानार्थकैरन्यैश्च पदैर्विपक्षसपक्षबाधक-

रश्मिः ।

विचारः । कल्पनेति यथा 'वाचो धेनुमुपासीत' इत्यत्र वाचो धेनुत्वकल्पने कल्पनयोपदेशः । तत्रेति कृत्स्ने वेदे । प्रतिभातीति । एतेन ब्रह्मणि, प्रमाणं भावे ल्युट्, प्रमा येनेति व्यधिकरणपदो बहुव्रीहिः कप् साधक इत्यसूचि । 'यतो वाचो निवर्तन्ते' इति श्रुतेरज्ञाते कं साधयित्वा ब्रह्मणीदमित्थतांशे ज्ञानप्रमाणकत्वं वार्थः । यद्वा केनोपनिषदि 'यद्वाचाऽनभ्युदितं येन वागभ्युद्यते' इति श्रावणाद्ब्रह्म प्रमाणं यस्येत्येव बहुव्रीहिः । वेदोक्तेति वेदोक्तावेदोक्तयोर्वेदोक्तलक्षण इत्यर्थः । एवकारेण व्याख्यानव्यवच्छेदः । प्रकारान्तरेणेति प्रकारस्तु वेदोक्तस्वरूपलक्षणं व्याख्यानोक्तमसर्वाङ्गीकृतकर्तृत्वलक्षणं वा ब्रह्मेति । तत्स्थित इति अधोक्षजे परे स्थिते । अधोक्षजत्वान्न विचारस्तस्य । अत एव शेषषष्ठी । आर्थिकार्थमाहुः ततश्च यदित्यादि । विवृणोतीति विवृण्वन्ति । व्याख्येयेत्यादि । यद्यप्याचार्याः यत इत्यादौ आचार्य इवाचरणं करोति इति व्याख्येयसमानार्थकैः पदैरेव विवरणं दृश्यते, तथापि प्रकृतोपयोगि विवरणमिदं ज्ञेयम् । यथात्रैव सूत्रे समपदानि अन्यानि च । एवं सर्वत्राध्याये । द्वितीयाध्याये विपक्षो निश्चितसाध्याभाववान् यथा सांख्यानामसंगपुरुषः भूतकर्तृत्वरूपनिश्चितसाध्याभाववान् । तस्य बाधक-

तत्र संदेहः । किं ब्रह्म कर्तृ, आहोस्विदकर्तृ । किं तावत् प्राप्तम् । अकर्तृ ।

भाष्यप्रकाशः ।

साधकतर्कोपन्यासेन संदेहमपाकरोति । तत्र, सत्यमित्यादिके स्वरूपलक्षणे, यतो वेत्यादिकार्यलक्षणे, च ब्रह्मपदादेकस्यैव लक्षणद्वयमुतोभयत्र सामान्यशब्दप्रयोगेऽपि लक्ष्यस्वरूपभेदेन तदवच्छेदकभेदाद् ब्रह्मभेदः । तत्र यदि भेदस्तदा कस्य वेदार्थत्वं कस्य न, उतोभयोर्वेति पुनः संदेहसंभव इति तद्वारणार्थमेकं ब्रह्म वक्तव्यम् । तथा सत्युक्तरीतिकाद् विरोधात् संदेह इति प्रकारप्रश्नोत्तरत्वेन संदेहबीजमुक्तम् । स्वरूपलक्षणस्य हृदिकरणादकथनेऽप्यदोषश्च बोधितः । संदेहाकारमाहुः तत्रेत्यादि । तथा च परस्परविरुद्धार्थबोधकाभ्यां लक्षणाभ्यामेव संदेहाल्लक्षणकरणं युक्तमित्यर्थः । पूर्वपक्षं विवृण्वन्ति ब्रह्मेत्यादि । अयमर्थः । शेषलक्षणे, कर्म फलार्थत्वादित्यने-

रश्मिः ।

स्तर्कस्तदा सांख्यसूत्रानवकाशः स्यादिति तस्योपन्यासः । सपक्षो निश्चितसाध्यवान् स च प्रकृतिसमवायिपरमाणुमिश्रेश्वरदृष्टान्तादिरूपस्तद्बाधकस्तर्को यद्येवं स्यात् सिद्धान्तरूपस्तस्योपन्यासस्तेन । संदेहास्तत्रतन्नोक्ताः अत्रत्योऽत्रैव वाच्यस्तत्र सत्यमित्यादिना । यद्यपि उक्तरीतिकतर्कोपन्यासो नास्ति तथापि सामान्यन्यायेन बोध्यः । अत्रत्यसंदेहमाहुः तत्र सत्यमिति । ब्रह्मपदादिति 'तद्विजिज्ञासस्व तद्ब्रह्म' इति कार्यलक्षणे ब्रह्मपदं, तेन कार्यलक्षणलक्षितं स्वरूपलक्षणे परविपश्चित्पदाभ्यां परिधापितं ब्रह्म जिज्ञासासंबन्धीत्युक्तम् । तत्र जिज्ञासा विचाररूपा अधोक्षजत्वात्परे विपश्चिति न प्रवर्तते, यौगिकी तु प्रवर्तते विचारस्याशेषधर्मसापेक्षत्वेन इदमित्यतांशेऽभावेपि आहार्यज्ञानविषयिण्या इच्छाया अधोक्षजत्वेऽपि अबाधात् । धर्मत्वसामान्यप्रत्यासत्त्या सर्वे धर्मा इति ज्ञानसत्त्वात् विचारे त्वस्याप्रयोजकत्वात् । विचारस्य सर्वधर्मस्वरूपज्ञानसापेक्षत्वात् । अतः तद्विजिज्ञासस्व इत्यत्र तदिति लुप्तषष्ठीकं पदं विचारार्थपक्षे, द्वितीये तु यथोक्तम् । एकस्येति ब्रह्मण इत्यर्थः । उभयत्रेत्यादि कार्यलक्षणलक्षिते स्वरूपलक्षणलक्षिते चेत्यर्थः । ब्रह्मशब्दप्रयोगेपि लक्ष्यस्य कार्यलक्षणनिर्णयवाक्येन 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते, आनन्देन जातानि जीवन्ति, आनन्दं प्रयन्त्यभिसंविशन्ति' इत्यनेन आनन्दत्वनिर्वचनाल्लक्ष्य आनन्दः, स्वरूपं सत्यज्ञानानन्तरूपमिति भेदेन आनन्दत्वसंबृहत्त्वरूपशक्यतावच्छेदकभेदात् ब्रह्मभेद इत्यर्थः । बृहत्त्वबृंहणत्वे व्यापकत्वपोषकत्वरूपेऽवच्छेदकत्वेनोक्ते । सत्यज्ञानानन्तत्वमपि स्वरूपतावच्छेदकं ज्ञेयम् । तत्रेति लक्ष्यस्वरूपयोरित्यर्थः । एकं ब्रह्मेति विद्वन्मण्डने स्पष्टम् । तथासतीत्यादि एकस्मिन्ब्रह्मणि कार्यस्वरूपलक्षणलक्षिते सति । एकस्यैव लक्षणद्वयमित्युक्ता रीतिर्यस्मिन् संशयवर्णने तस्माद्विरोधात्कर्तृ आहोस्विदकर्तृ इत्येवंविधसंशयगतविरोधात् । अथवा भाष्योक्तरीतिकात्स्वरूपलक्षणविरोधात्कारिकोक्तः क्रियाशक्तिज्ञानशक्ती स्तः न स्तो वा इत्येवं संदेह इति । उच्यत इत्यस्यार्थकथने प्रकारान्तरेणेत्युक्तं तत्र प्रकारप्रश्नो भेदप्रतियोगिप्रकारः क इति आक्षेपलभ्यस्तदुत्तरत्वेन भाष्ये श्रुत्येति कार्यलक्षणफक्किकायामावृत्य श्रुतिबोधितत्वाविशेषरूपं कर्तृत्वांशे कोटिबीजमिति स्वरूपलक्षणविरोधरूपं च संदेहबीजमुक्तमित्यर्थः । भगवता व्यासेन स्वरूपलक्षणानुक्तौ हेतुमाहुः स्वरूपेत्यादि । अधोक्षजत्वादपि स्वरूपलक्षणं हृदिकृतम् । तत्रेस्याचीति कर्तृ ज्ञानक्रियाशक्तिमत्, अकर्तृ तद्रहितं तेन ज्ञानशक्तिक्रियाशक्ती संदिह्येते इति कारिकाविरोधो न । नहि परमस्ति न वेति संदेह उपपद्यतेऽसत्त्वप्रसङ्गात् । तथा चेति एकस्यैव लक्षणद्वयमित्येवं संशये नाकूतौ । पूर्वपक्षमिति अकर्मेति पूर्वपक्षमित्यर्थः । कर्म फलार्थत्वादिति । इदं सूत्रं पूर्वतन्त्रे तृतीयेऽस्ति ।

कथम् । 'ब्रह्मविदाप्नोति परम्' इति प्रधानवाक्यम् । फलसंबन्धात् । तच्चापि विवृतम् । 'सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति । फलार्थं च ब्रह्मज्ञानम् । फलं च फलवाक्योक्तधर्मज्ञानादेव, नान्यथा । कर्तृत्वं च परविवरणतयोक्तम् । परं किमित्युक्ते यः सर्वान्तर आनन्द इति । कथं सर्वान्तरमित्याकाङ्क्षायां परिचयार्थं

---

भाष्यप्रकाशः ।

नोपलक्षणविषया ज्ञानस्यापि फलशेषत्वे सिद्धे प्राधान्यं फलस्यैवेति तत्संबन्धादुक्तमेव प्रधानवाक्यं, न तु कार्यलक्षणवाक्यं तथा । न चैवं पूर्वकाण्डेऽस्तु, उत्तरकाण्डे तत् किमित्युपेयमिति वाच्यम् । तच्चापि विवृतम् । यदि तस्य प्राधान्यं न स्यात् किमिति विवृणुयादतोऽत्रापि तदादृतम् । तथा सति ज्ञानं फलार्थं, फलं च फलवाक्योक्तधर्मज्ञानात् परत्वज्ञानादेव । अतः परत्वज्ञानार्थं कर्तृत्वं परविवरणतयोक्तम् । स्वरूपलक्षणे प्रापञ्चिकधर्मराहित्यप्रतीतेर्ब्रह्मणि कर्तृत्वस्याश्रव्यवचनत्वात् । तस्माद्वा एतस्मादित्यादिना यत् कर्तृत्वमुक्तं तज्ज्ञेयात् फलरूपं परं पृथक्कृत्य तं विवरीतुमुक्तम् । ततस्तत्स्वरूपजिज्ञासायां सर्वान्तरत्वकथनपूर्वकमानन्द इति स्वरूपमुक्तम् । अन्यथा तन्निरूपणमसंगतं स्यात् । सर्वान्तरत्वं च तस्य परत्वनिर्वाहकतयोक्तम् । तत्रापि कथं-

रश्मिः ।

'कर्माण्यपि जैमिनिः फलार्थत्वात्' इति तदर्थकथनमिदम् । तथेति प्रधानत्वेनेत्यर्थः । तच्चापीत्यादि भाष्यमवतारयन्ति न चैवमित्यादि । न चैवमिति पूर्वतन्त्रीयन्यायादरणमित्यर्थः । यदि तस्येत्यादि यदि उत्तरकाण्डे फलसंबन्धिवाक्यस्य प्राधान्यं न स्यादित्यर्थः । अत्रापीत्यादि उत्तरकाण्डेपि फलसंबन्धात्प्राधान्यमादृतमित्यर्थः । फलार्थं चेत्यादि भाष्यं विवृण्वन्ति तथा सतीत्यादि । कोऽसौ धर्मो यज्ज्ञानात्फलमित्यत आहुः परत्वज्ञानादिति । ब्रह्मणो विशेषधर्माणां वाचोऽविषयत्वेन यतो वाच इति श्रुत्या चानुक्तिः । भाष्ये । एवकारेण ब्रह्मत्वेऽपि सर्वेषां कार्यकारणभावाभावादन्यफलकारणं व्यवच्छिद्यते । भाष्ये । नान्यथेति नान्यधर्मज्ञानैः कार्यकारणभावाभावादित्यर्थः । प्रकृते । कर्तृत्वं चेत्यादि भाष्यं विवृण्वन्ति अतः परत्वेत्यादि । उक्तमिति । 'परमे व्योमन्' इत्यन्तेन 'ब्रह्मवित्' इत्यंशविवरणं कृत्वा 'सोऽश्नुते' इत्यादि परविवरणे ब्रह्मणेति सहार्थेऽप्रधाने तृतीयया कर्तृत्वमुक्तमशनस्याप्रधानं मुख्यं तु कर्तृत्वम् । 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्यादिनोक्तं विवरीतुमिति 'यथाग्नेः क्षुद्रा विस्फुलिङ्गाः' इत्यादिश्रुत्युक्तमक्षरकर्तृत्वं तु 'कदाचित्पुनरन्यथा' इति निबन्धावरणरूपाक्षरद्वारेति फलितम् । तदेव स्फुटयन्ति स्वरूपलक्षणेत्यादि । ज्ञेयादिति ब्रह्मविदित्युक्तादित्यर्थः । परं किमित्यादि भाष्यं विवृण्वन्ति ततस्तदित्यादि । अत्र यद्यपीति शेषः । परं किमिति तत्स्वरूपजिज्ञासा ज्ञातुमिच्छा । प्रश्नश्चेप्सायाम् । किमः प्रश्ने । तथा च भाष्यं जिज्ञासापदेनेत्यादि । उक्तमिति ब्रह्मवित्प्रपाठके उक्तम् । स्वरूपमुक्तमिति 'तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मा आनन्दमयः' इति स्वरूपमुक्तमित्यर्थः । ननु स्वरूपलक्षण आत्मानन्दस्याभावात् कथमेवमित्याकाङ्क्षायामाह अन्यथेत्यादि । प्रकृते तु व्याख्येयव्याख्यानरूपा संगतिरिति ज्ञेयम् । शेषं तत्रापि[illegible]

[illegible] कथं सर्वान्तरमित्यादिभाष्यं विवृण्वन्ति सर्वान्तरत्वं चेत्यादि । तथा चानन्द एव सः

भूतभौतिकसृष्टिमुक्त्वा गौणानन्तर्यं परिहृतम् । गौणोपासनाफलं च प्रधानशेषतयोक्तम् । तत्राप्यन्यगतकर्तृत्वारोपानुवादोऽपि संभवति । ततश्च भृगुर्वै वारुणिरित्युपाख्यानेऽपि परिचायकत्वाद् गौणकर्तृत्वमेवानूद्यते, फलाश्रवणादिति पूर्वः पक्षः ।

सिद्धान्तस्तु ।

उत्पत्तिस्थितिनाशानां जगतः कर्तृ वै बृहत् ।
वेदेन बोधितं तद्धि नान्यथा भवितुं क्षमम् ॥
न हि श्रुतिविरोधोऽस्ति कल्पोऽपि न विरुध्यते ।
सर्वभावसमर्थत्वादचिन्त्यैश्वर्यवद् बृहत् ॥

---

भाष्यप्रकाशः ।

भावाकाङ्क्षायां तत्सिध्यर्थमाकाशादीनां भूतानामोषध्यादीनां भौतिकानां च सृष्टिकथनेन कर्तृत्वं प्रतिपाद्य तस्य सर्वान्तरत्वकथनेन चरमत्वाद् गौणमपर्यवसन्नं प्राणादीनामिवानन्तर्यं निवारितम् । 'सर्वं वै तेऽन्नमाप्नुवन्ति येऽन्नं ब्रह्मोपासते' इत्यादिनाऽन्नब्रह्माद्युपासनाफलं प्रधानशेषतया, 'अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः' इत्यादिनानुवाकचतुष्टयेन कथितस्य सत्त्वब्रह्मानन्दावाप्तिसर्वभयाभावरूपप्रधानफलस्य शेषतया सर्वोत्कृष्टत्वज्ञापनायोक्तमिति कर्तृत्वं परस्मिन् सिध्यति । तथापि स्वरूपलक्षणविरोधात् पूर्वकाण्डोक्तप्रजापतिगतस्य प्रकृतिगतस्य वा कर्तृत्वस्यारोपेणानुवादोऽपि संभवतीति द्वितीयप्रपाठकेऽपि फलाश्रवणेनाप्तुल्यत्वात् तत्राप्येवं नेतव्यम् । तथाच नास्य लक्षणत्वमिति पूर्वपक्षार्थः ।

सिद्धान्तमाहुः उत्पत्तीत्यादि । तदिति कर्तृत्वम् । अन्यथेति गौणम् । कल्प इति कल्पसूत्रम् । सर्वभावः सर्वभवनम् । तत्र समर्थत्वादकर्त्रपि कर्त्रित्यर्थः । गृहीतं विभजन्ते वेदेनेत्यादि । स्यादन्यगतकर्तृत्वारोपानुवादः कार्यलक्षणे यदि स्वरूपलक्षणं विरुध्येत । तदेव तु न ।

रश्मिः ।

इति भावः । लिङ्गं तु विज्ञानमयरूपजीवादप्यान्तरत्वम् । तत्रापीति अन्नादिसर्वान्तरत्वेपि मुख्यं तद्गौणं वेति कथंभावाकाङ्क्षायामित्यर्थः । गौणोपासनेत्यादि भाष्यं विवृण्वन्ति सर्वं वा इत्यादि । शेषत्वं विवृण्वन्ति अस्ति ब्रह्म इति । उक्तेनानुवाकेन सत्त्वं, असद्वा इदमित्यनुवाकेनापि सत्त्वं, भीषास्माद्वातः पवते इत्यनुवाकेन ब्रह्मानन्दावाप्तिः, 'यतो वाचो निवर्तन्त' इत्यनेन सर्वेषां वातादीनां भयाभावः । सर्वोत्कृष्टत्वेत्यादि सर्वेभ्य उपासनाफलेभ्यः परमाप्तेरुत्कृष्टत्वेन ज्ञापनार्थम् । तथापि नेत्याहेति वदन्तस्तत्रान्येत्यादि भाष्यं विवृण्वन्ति तथापीत्यादि । आरोपेणेति परस्मिन्नित्यर्थः । ततश्च भृगुर्वा इत्यादिभाष्यं विवृण्वन्ति द्वितीयप्रपाठक इति । यतो वा इत्यादिषु गौणं कर्तृत्वमुच्यते तद्ब्रह्मेति श्रावणेन पररूपफलाश्रवणादित्यर्थः । तथा चेत्यादि एवंविधेन विरोधेन प्रजापत्यादिगते कर्तृत्वेङ्गीकृते न भूतादिकर्तृत्वस्य लक्षणत्वमित्यर्थः । गौणमिति गौणत्वेन प्रकारेण गौणम् । कल्पसूत्रमिति तत्र कर्ता कारयिता हरिरिति वक्ष्यमाणम् । ननु लक्षणं न बृहतः किंतु परस्येत्यत आहुः तत्र समर्थत्वादिति । तथा चाक्षरस्य चरमत्वात् पुरुषविधस्य विरुद्धधर्माश्रयत्वात् न विरुद्धं जन्मादिकर्तृत्वं लक्षणमिति भावः ।

वेदेनैव तावज्जगत्कर्तृत्वं बोध्यते । वेदश्च परमाप्तोऽक्षरमात्रमप्यन्यथा न वदति । अन्यथा सर्वत्रैवाविश्वासप्रसङ्गात् । नच कर्तृत्वे विरोधोऽस्ति । सत्यत्वादि-

भाष्यप्रकाशः ।

विवरणर्चि परस्य तृतीयान्तेन ब्रह्मपदेनैव विवृतत्वात् । नच तत्र वेदहिरण्यगर्भब्राह्मणजातिजीवा अर्थत्वेन ग्रहीतुं शक्याः । परपदविवरणात् सान्तत्वादिना ब्रह्मापेक्षयोत्कर्षस्य तेष्वशक्यवचनत्वात् । परशब्दस्यान्यार्थकत्वोपगमेऽपि विवरणोक्तब्रह्मशब्दानुरोधादेत एव परत्वेन ग्राह्याः । तत्प्राप्तिस्तु कर्मणापीति साधनान्तरेण ज्ञानेन को वा विशेषः स्यात् । अत उत्कृष्टार्थकत्वमादरणीयम् । उत्कृष्टं च किमित्यपेक्षायां विवरणानुरोधाद् ब्रह्मान्तरं कल्प्यम् । तच्चाप्रसिद्धं, स्वरूपलक्षणहीनं च । न च प्रकृतिः । सांख्यमतेऽपि ज्ञानात्मकपुरुषापेक्षया तस्या हीनत्वात् परार्थत्वाच्च । अश्रौतत्वस्य वक्ष्यमाणत्वाच्च । अतो ब्रह्मापेक्षयान्यस्य परत्वेन वक्तुमशक्यत्वादुक्तलक्षणविशिष्टस्यैव ब्रह्मणः कर्तृत्वं वेदेन बोध्यते । नच तदारोपितमिति शक्यवचनम् । निरङ्कुशस्य तस्याऽन्यत्रासिद्धताया अनुपदमेव वक्ष्यमाणत्वात् ।

किंच । वेदः परमाप्तत्वादक्षरमात्रमपि मिथ्या न वदति । यदि क्वापि तथा वदेत्, स्वर्गकामो यजेतेत्यादिविध्यंशे स्वरूपलक्षणाद्यंशे चाविश्वसनीयः स्यात् । ततश्च सन्मार्गमात्रमुच्छिद्येत । अतो यद्यद्यथा वदति तत्तथेति मन्तव्यम् । तेन कर्तृत्वं वेदोक्तत्वादपि वास्तवमित्येव सिद्ध्यति । नच कर्तृत्वाङ्गीकारे स्वरूपलक्षणविरोधोऽस्ति, येन तदनुरोधादवास्तवत्वं तस्य कल्प्येत । तदुक्तसत्यत्वादिधर्मवत् कर्तृत्वस्याप्युपपत्तेः । नच ब्रह्म यावद्धर्मरहितमिति वक्तुं शक्यम् । स्वरूपलक्षणविरोधात् । तत्र ब्रह्मणि सत्यत्वादिधर्माङ्गीकारात् । नचासत्यजडसान्तव्या-

रश्मिः ।

कारिकायाम् । तृतीयान्तेनेति 'ब्रह्मणा विपश्चिता' इति तृतीयान्तेन । विविधभोगकर्तृत्वस्य सृष्टिमन्तरेणानुपपद्यमानस्य सामर्थ्याज्जगत्कर्तृत्वं न स्वरूपलक्षणविरुद्धमित्यर्थः । यत्तूपनिषद्भाष्ये विपश्चिता मेधाविना सर्वज्ञेनैवेत्यर्थः इति शंकराचार्यास्तदपि सर्वमन्तरेण सार्वज्ञ्यानुपपत्त्या सर्वकर्तृत्वं द्रढयति । न च भोगकर्तृत्वापेक्षया अशनकर्तृत्वं ज्याय इति शङ्क्यम् । अश्नुत इत्युक्ताशनस्य भोगत्वात् । अत्राप्रधानकर्तरि तृतीया 'सहयुक्तेऽप्रधाने' इति सूत्रेण । क्वचिदप्रधाने कर्मादौ तथाचाप्रधान इत्यस्य विभक्त्यर्थे अप्रधाने इत्यर्थः । न च तत्रेति तृतीयान्ते ब्रह्मपदे इत्यर्थः । यद्यपि ते परत्वमाश्रयन्ते तथापि ज्ञेयब्रह्मापेक्षया नाश्रयन्त इत्याहुः सान्तत्वादिनेत्यादि । आदिना सर्वोत्कृष्टत्वम् । ब्रह्मापेक्षयेति परविवरणब्रह्मापेक्षयेत्यर्थः । ननु परस्यान्यत्रानालवैरिदूरकेवलेष्वपि वृत्तिदर्शनात्तेऽर्थाः सन्तु इत्याशङ्क्य नेत्याहुः परशब्दस्येत्यादि । एत एवेति वेदादय इत्यर्थः । तथा सति ब्रह्मविदिति विशेषासमर्पकं भवेदित्याहुः तत्प्राप्तिस्त्वित्यादि । वक्ष्यमाणत्वाच्चेति आनुमानिकमप्येकेषामित्यानुमानिकाधिकरणे वक्ष्यमाणत्वादित्यर्थः । अन्यत्र सिद्धस्यैवारोपो दृष्टः प्रकृते तु तदभावादारोपोऽशक्यवचन इत्याहुः निरङ्कुशस्येत्यादि । अनुपदमिति अत्रैव सत्यत्वादिधर्मवदित्यादिना विशेषेण तु द्वितीयाध्यायद्वितीयपादे । वेदश्चेत्यादि भाष्यं विवृण्वन्ति किं च वेदेत्यादि । अन्यथेति भाष्यं विवृण्वन्ति स्म यदीति । न च कर्तृत्व इत्यादिभाष्यं विवृण्वन्ति न च कर्तृत्वेत्यादि । सर्वथेत्यादिभाष्यं विवृण्वन्ति न च ब्रह्मेत्यादि । ननु न सत्यत्वादिधर्मो ब्रह्मण्युपेयते अपित्वसत्यत्वादेरभावोऽधिकरणात्मकोऽभ्युपेयते इति निर्धर्मकं ब्रह्मेत्याशङ्क्य निषेधन्ति न चासत्येत्यादि ।

धर्मवत् कर्तृत्वस्याप्युपपत्तेः । सर्वथा निर्धर्मकत्वे सामानाधिकरण्यविरोधः । सत्यज्ञानादिपदानां धर्मभेदेनैव तदुपपत्तेः । नन्व कर्तृत्वं संसारिधर्मो, देहाद्यध्यासकृतत्वादिति वाच्यम् । प्रापञ्चिके कर्तृत्वे तथैव । न त्वलौकिककर्तृत्वे । अत एवाख्येत्याह । अस्येति पुरोवर्ती प्रपञ्च इदमा निर्दिश्यते । अनेकभूतभौतिकदेवतिर्यङ्मनुष्यानेकलोकाद्भुतरचनायुक्तब्रह्माण्डकोटिरूपस्य मनसाप्याकलयितुमशक्यरचनस्यानायासेनोत्पत्तिस्थितिभङ्गकरणं न लौकिकम् ।

---

भाष्यप्रकाशः ।

वृत्तत्वेनैक एवार्थः सत्यादिपदैरुच्यत इति वक्तुं युक्तम् । व्यर्थपौनरुक्त्यापत्तेः । तत्तद्भेदधर्मकत्वसिद्ध्या घटकुट्यां प्रभातात्व । अतः सत्यादिपदानां स्वार्थत्यागोऽपार्थ एव । तदेतदुक्तं धर्मभेदेनैव तदुपपत्तेरिति । स्फुटमग्रिमम् ।

ननु लक्षणद्वयस्यैकपरत्वे सर्वासु श्रुतिष्वेकमेव ब्रह्म प्रतिपाद्यम् । तदा, अस्थूलादिवाक्येष्वपि तदेव निरूप्यत इति निर्धर्मकत्वं बलादापतितमतः कर्तृत्वनिषेध एव युक्त इत्यत आहुः

रश्मिः ।

व्यर्थेत्यादि असत्यमात्रव्यावृत्त्या जडादिव्यावृत्तिसिद्ध्या तथेत्यर्थः । नैयायिकोक्तदूषणग्रासान्नाभावोधिकरणानतिरिक्तः इत्याशयेनाहुः तत्तद्भेदेत्यादि । असत्यमात्रव्यावृत्त्या इत्यत्र व्यावृत्तिर्भेदः स च ब्रह्मणीति तत्रासत्यादिव्यावृत्तयस्तत्तद्भेदास्तद्धर्मकत्वसिद्ध्या । न्यायमाहुः घटकुट्यामिति द्वितीयाध्यायोपान्तेस्ति ज्ञानप्रक्रियायाम् । प्रहस्ते चास्ति श्वेताश्वतरस्य शिवपरत्वखण्डने च । यथा कस्यचिद्भ्रमतः संन्यासिनः स्तेयकृतो वा मूलमलभमानस्य घटकुट्याः समाधिभेदकुम्भदास्या इभशिरःकुम्भदास्या निर्गतस्य तत्रैव प्रभातं तथा धर्मनिषेधाय भ्रमतो धर्म एव पर्यवसितिरित्यर्थः । अत्र विश्वकोशः 'घटः समाधिभेदेभशिरःकूटकुटेषु च । कुटः कोटे घटे गेहे शिलाकुट्टकपूरुषे । स्यात्कुटीकुम्भदास्यां च सुरायां चित्रगुच्छके' इति समाधिगेहान्निर्गतस्येत्यर्थः । अपार्थ एवेति एवकारस्तु सर्वत्र ग्रन्थेषूपपादनान्निर्धर्मकत्वव्यवच्छेदकः । तदेतदिति । न चासत्येत्यादिना विवृतमित्यर्थः । सत्यत्वादिधर्मभेदेनैव भिन्नप्रवृत्तिनिमित्तत्वे सत्येकार्थबोधकत्वरूपसामानाधिकरण्योपपत्तेरिति भाष्यार्थः । स्फुटमित्यादि तथाहि । भाष्ये । न चेत्यादि । अहन्ताममतात्मकः संसारः सोस्यास्तीति संसारी तस्य धर्मः यतोऽहं कर्तेत्यादिप्रतीत्याहंकारसमानाधिकरणं कर्तृत्वं, संसाराभावे तु अहं मुक्तो न कर्तेति अस्मत्प्रत्ययगोचरे कर्तृत्वतदभावौ । देहाद्यध्यासः प्रधानकार्यत्रिगुणात्मकदेहाद्यध्यासोहं कर्तेति ।

'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहंकारविमूढात्मा कर्ताहमिति मन्यते ॥'

इति वाक्याद् देहादिधर्मस्थौल्यादिकर्तृत्वं स्वस्मिन्नध्यस्यते भोक्तृत्ववत् । भोक्तृत्वमानन्दधर्मः 'आनन्दभुक्' इति श्रुतेरित्यर्थः । शङ्कितमनुमानं सत्प्रतिपक्षमित्याशयेनाहुः प्रापञ्चिक इत्यादि । तथा च कर्तृत्वं न संसारिधर्मः ब्राह्मत्वात् सत्यत्वादिवत् इति प्रतिपक्ष इति भावः । हेतुर्व्याप्यत्वासिद्ध इत्यपि लौकिकं कर्तृत्वमुपाधिः । सूत्रकारस्याप्ययमेव आशय इत्याहुः अत एवेत्यादि । अलौकिककर्तृत्वादेवेत्यर्थः । ब्रह्मणो भविष्यति नेत्याहुः अनेकेत्यादि । तथाच हिरण्यगर्भस्यापि सद्भूत्वे प्रमाणाभावोनायासेनेत्यर्थः । अतएव निरध्यस्तैरेव देहादिभिः कर्मकरणसंभवादितिपाप्यम् । एवमग्रिमं स्फुटमित्यर्थः । प्रकृते । निर्धर्मकत्वमिति श्रौतधर्मनिषेधादस्थूलादि-

प्रतीतं च निषेध्यम् । नाप्रतीतं, न श्रुतिप्रतीतम् । सत्यत्वादयश्च लौकिकाः । ततः सर्वनिषेधे तदज्ञानमेव भवेत् । नच सत्यत्वादिकं लोके नास्त्येव व्यवहारमात्रत्वात्, कारणगतमेव सत्यत्वं प्रपञ्चे भासत इति वाच्यम् । तर्हि कर्तृत्वं तथा कुतो नाङ्गीक्रियते । स्मृतिश्च स्वीकृता भवति 'कर्ता कारयिता हरिः' इति ।

नचारोपन्यायेन वक्तुं शक्यम् । तथा सत्यन्यस्य स्यात् । तत्र न प्रकृतेः । अग्रे स्वयमेव निषिध्यमानत्वात् । न जीवानामस्वातन्त्र्यात् । न चान्येषामुभय-

भाष्यप्रकाशः ।

प्रतीतमित्यादि । युक्तः प्रतिषेधः । परंत्वस्थूलादिवाक्ये लोकप्रतीता एव प्रतिषिद्ध्यन्त इत्यत्रापि प्रतीतमेव प्रतिषेध्यम् । अत एव नाप्रतीतम् । प्रसञ्जयितुमशक्यत्वेन प्रतिषेधानर्हत्वाच्च । न श्रुतिप्रतीतम् । तुल्यबलत्वात् प्रत्यायनवैयर्थ्यापाताच्च । श्रुत्युक्ताः सत्यत्वादयोऽपि यदि लौकिकत्वेनादृतास्ततो लोकश्रुतिप्रतीतसाधारण्येन सर्वनिषेधे ब्रह्माज्ञानमेव भवेत् । तथाच स्वरूपलक्षणवैयर्थ्यं सर्वनाशश्च स्यात् । नच तदभावाय लोकस्य व्यवहारमात्रत्वात् तत्रापि कारणगतमेव सत्यत्वमतो न तत् प्रतिषेध्यं, किं तु कर्तृत्वमेवेति वाच्यम् । तदा तु धर्मसंकोचस्य तौल्यात् कर्तृत्वमपि तथाङ्गीकार्यम् । तेन कल्पस्मृतिस्वीकाररूपगुणोऽपि भविष्यति । नन्वगत्या सत्यत्वं तथास्तु, न तु कर्तृत्वमपि । आरोपन्यायेन तस्य शक्यवचनत्वादित्यत आहुः न चेत्यादि । अन्येषामिति अभावकालस्वभावभूतग्रहलोकपालादीनाम् । ननु प्रकृते फलवाक्यविचारो भवतापि

रश्मिः ।

श्रुतिभिः । अत इति कर्तृत्वाकर्तृत्वयोः प्राप्तौ युक्तत्वादित्यर्थः । इत्यत्रापीति नित्यशुद्धबुद्धमुक्तस्वभावमित्यादिष्वित्यर्थः । प्रसञ्जयितुमिति अभावस्य प्रसक्तिं कर्तुम् । प्रतिषेधानर्हत्वाच्चेति । यथाहुः अभावलौकिकप्रत्यक्षं प्रति प्रतियोगिज्ञानस्य हेतुत्वमन्यथा प्रतियोगिज्ञानशून्यकाले नेत्याकारकप्रतियोग्यमिश्रिताभावलौकिकप्रत्यक्षं स्यादिति प्राञ्चो नैयायिकाः । तुल्यबलत्वादिति ।

उपजीव्यत्वतः श्रौतवाक्यतोन्यपरत्वतः ।
'अन्तरङ्गत्वतश्चापि तुल्यमत्रोभयोर्बलम्' इत्यर्थः ।

यथाहि निर्गुणप्रतिपादिकासु आधारनिरूपकत्वेनोपजीव्यत्वं कारणत्वमत एवान्यपरत्वं निर्गुणप्रतिपादकत्वरूपमत एवान्तरङ्गत्वं धर्मनिरपेक्षत्वेन स्वल्पापेक्षत्वरूपम् । एवं सगुणप्रतिपादिकास्वपि विरहप्रतियोगिनिरूपकत्वेनाधारनिरूपकत्वेन चोपजीव्यत्वमन्यपरत्वं च । कार्यस्वरूपयोरेकब्रह्मलक्षणत्वात् धर्मनिरपेक्षत्वस्य स्वरूपलक्षणेपि प्रकाशाश्रयन्यायेन वक्तव्यत्वात्प्रकृतेपि तत्संभवेनान्तरङ्गत्वं च तुल्यं, एवमप्युपपादनसौष्ठवाच्छ्रौता धर्मा निषेध्या इत्याकाङ्क्षायां हेत्वन्तरमाहुः प्रत्यायनेत्यादि । तथा सति प्रक्षालनपङ्कन्यायेन धर्मान्न प्रत्याययेदित्यर्थः । सत्यत्वादय इत्यादि भाष्यं विवृण्वन्ति श्रुत्युक्ता इत्यादि । सर्वनाश इति ब्रह्माज्ञाने तद्विषयकस्य दृढभक्त्यादेरुच्छेदात्तथा स्यादित्यर्थः । न च सत्यत्वेत्यादि भाष्यं विवृण्वन्ति न च तदित्यादि । तथाङ्गीकार्यमिति कारणगतमेव कर्तृत्वं लोकेऽङ्गीकार्यमित्यर्थः । स्मृतिश्चेत्यादिभाष्यं विवृण्वन्ति तेनेत्यादि । कल्पस्मृतीति भाष्योक्तकल्पस्मृतीत्यर्थः ।

भाष्ये तथासतीति आरोपोह्यन्यगतधर्मस्येति कर्तृत्वस्यान्यधर्मत्वे सतीत्यर्थः । अग्र इति यथा बर्हिर्देवसदनं दामीत्यत्र बर्हिर्लवनसामर्थ्यं दामीति शब्दादालोच्यानेन लवनं विदध्यादिति श्रुतिं कल्पयित्वा लवनाङ्गत्वं मन्त्रस्य । प्रकृते । अभावेत्यादि अभावो नास्तिकानां, कालस्वभावौ श्वेताश्वतरे, भूतो-

निषेधादेव । तस्माद् ब्रह्मगतमेव कर्तृत्वम् । एवं भोक्तृत्वमपि । न वा काचिं-च्छ्रुतिः कर्तृत्वं निषेधति । विरोधभानात् कल्प्या तु लौकिकपरा । फलवाक्ये-ऽप्यश्रुतानां गुणोपसंहारः कर्तव्यः । तथाचायं सूत्रार्थः । जन्म आदिर्येषा-मित्यवयवसमासादतद्गुणसंविज्ञानो बहुव्रीहिः ।

---

भाष्यप्रकाशः ।

स्वीकृतस्तथा सति तद्विवरणोक्तं भोक्तृत्वं तत्रास्तु, कर्तृत्वं तु कथमङ्गीकर्तुं शक्यमित्यत आहुः गुणोपसंहार इति सूत्रकृताग्रे तथाङ्गीकारात् तथेत्यर्थः । तस्माद् ब्रह्म कर्तृ इति सिद्धम् । एवं सिद्धान्तं व्याख्याय तस्य सूत्राविरोधित्वं बोधयितुं सूत्रं व्याकुर्वते तथाचेत्यादि । एवं कर्तृत्वे सिद्धे वक्ष्यमाणरीतिकः सूत्रार्थ इत्यर्थः । अत्र सर्वेऽपि तद्गुणसंविज्ञानं बहुव्रीहिमङ्गीकुर्वन्ति । तत्रोपसर्जनत्वेन पूर्वप्रयोगार्हस्यादिशब्दस्य परत्वाय राजदन्तादाकृतिगणीयत्वं कल्पनीयमित्यरुच्या प्रकारान्तरेण व्याकुर्वन्ति जन्मेत्यादि । जन्म आदिः प्रथमोऽवयवो येषां ते जन्मादि । सुपां सुलुगिति जसो लुगित्यवयवसमासादिति भावप्रधानो निर्देशः । तथाचादिपदविशेष्यकावयव-समासत्वादतद्गुणसंविज्ञानो बहुव्रीहिरित्यर्थः । न च, 'अङ्गं प्रतीकोऽवयवः' इति कोशादवयव-पदस्याङ्गवाचकत्वेनात्र च तदभावेन कथमवयवसमासत्वमिति शङ्क्यम् । एकदेशेऽप्यवयवपदप्र-योगात् । यथा पञ्चावयवमनुमानवाक्यमिति । कैयटेऽपि, 'एकाचो द्वे प्रथमस्य' इत्यत्र, एकोऽज् यस्य स एकाजिति विशिष्टावयवोपलक्षितस्यावयविन इत्यादिना, अज्झल्विशिष्टस्य शब्दस्यैकोऽज-

रश्मिः ।

न्यप्रविष्टः, ग्रहाः सूर्यादयः ज्योतिषे, एवं लोकपाला अपि । आदिशब्देन कामः 'असत्यमप्रतिष्ठं ते' इति वाक्यात् । भोक्तृत्वमिति द्वितीयाध्याये द्वितीयपादे 'रचनानुपपत्तेश्च' इत्यधिकरणेऽन्यत्र चेत्यर्थः । भाष्ये । अस्वातन्त्र्यादिति 'स्वतन्त्रः कर्ता' इत्यनुशासनात् कर्तृत्वे स्वातन्त्र्यस्य प्रयोजकत्वमिति भावः । उभयनिषेधादिति चिज्जडनिषेधादित्यर्थः । सिद्धमाहुः तस्मादित्यादि । आन्यत्रिकत्वा-भावेनारोपाभावादित्यर्थः । अतिदिशन्ति एवमिति । अश्रुत इत्युक्तं भोक्तृत्वं मुक्तजीवीयमपि सहा-र्थकतृतीयान्तप्रतिपाद्यब्रह्मगतमेवेत्यर्थः । इच्छया जीवे प्रधानीभूय भासत इत्यर्थः । कल्प्या त्विति कर्तृत्वनिषेधकत्वेन लिङ्गात्कल्प्या तु लौकिककर्तृत्वनिषेधपरेत्यर्थः । अथवा किमनया कुसृष्ट्येति वक्ष्यमाणत्वाद्यथाकथंचिद्व्याख्यायते । प्रकृते । अश्रुत इत्यस्याश्रातीत्यर्थाद्भोक्तृत्वम् । अग्र इति तृतीयस्य तृतीयपादे इत्यर्थः । तथेति भोक्तृत्वम् । सिद्धमाहुः तस्मादित्यादि । तृतीयस्य द्वितीयपादे उभयव्यपदेशाधिकरणे स्पष्टम् । अत्रेति । पूर्वप्रयोगार्हस्येति 'उपसर्जनं पूर्वम्' इति सूत्रात्पूर्वे-त्यादिः । जन्मादीतिपदे इत्यर्थः । कल्पनीयमिति पाणिनीयगणपाठे राजदन्तादिषु जन्मादिशब्दपाठा-भावेपि तत्त्वं कल्पनीयमित्यर्थः । तर्हि बहुवचनं स्यादित्याकाङ्क्षायामाहुः सुपामित्यादि । 'सुपां सुलुक् पूर्वसवर्णाच्छेयाडाड्यायाजालः' इति वैदिकीप्रक्रियायां सप्तमेध्याये सूत्रमुदाहरणानि च तत्रैव । भाष्ये । इत्यवयवसमासेति अवयवानां जायतेऽस्ति विपरिणमत इत्यादीनां समसनात् जन्मादीनां वा समसनात् । एवं चात्रावयवावयविनोरत्र समासाभावादतद्गुणत्वम् । प्रकृते । पञ्चावयवमिति प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चावयवाः । उक्तसूत्र इति षष्ठाध्या-यप्रथमपादस्य प्रथमाह्निकस्य उक्तसूत्र इत्यर्थः । विशिष्टावयवेति अज्झल्विशिष्टवयवोपल-

भाष्यप्रकाशः।

वयव इत्यङ्गीकाराच्च। तत्रैकस्याचो विशिष्टावयवत्ववदत्र आद्यादीनां समूहावयवत्वेन तद्वाचकपदानां समासेऽवयवसमासत्वस्य सुखेन संभवात्।

एतस्यातद्गुणसंविज्ञानत्वं त्वेवम्। तथाहि। उक्तसूत्रे कैयटेन तद्गुणसंविज्ञानपदं द्वेधा व्याख्यातम्। तस्य अन्यपदार्थस्य गुणो विशेषणं तस्य संविज्ञानं येनेति। स वर्तिपदार्थो गुणो यस्यान्यपदार्थस्य तस्य संविज्ञानं येनेति च। तत्रोदाहरणं तु शुक्लवाससमानयेति। तत्र शुक्लवासःसंयुक्तपुरुषानयने पृथगचोदितान्यपि वासांसि संबन्धसामर्थ्यादानयनेन संबद्ध्यन्त इत्युक्तम्। इदं च लम्बकर्णमानयेत्यादावपि तुल्यम्। एवं सत्यन्यपदार्थविशेषणस्य यत्र संबन्धसामर्थ्यात् कार्यसंबन्धस्तत्र तद्गुणसंविज्ञानः। यत्र तस्य संबन्धसामर्थ्यात् कार्ये संबन्धाभावस्तत्रातद्गुणसंविज्ञानः। यथा चित्रगुमानयेत्यत्र। अत्र हि पुरुषानयने समासवर्तिपदार्थभूतानां चित्राणां गवां सन्निधानाभावान्न कार्येण सह संबन्ध इति। एवं सति प्रकृतेऽन्यपदार्थभूतानां प्रधानानां स्थितिप्रलयाभिसंवेशानामेकदेशतया तद्विशेषणीभूतो य आदिस्तस्य प्रथमान्तरव्यावर्तकतया जन्म विशेषणम्। स्वयं तु वर्तिपदार्थे विशेष्यः। तस्य धर्मरूपं यत्प्राथम्यं तदपेक्षाबुद्धिजन्यम्। तस्य निरूप्यत्वमपि स्थित्यादिजन्यमतः सोऽत्र सूत्रेऽर्थादायातायां ब्रह्मकर्तृकभवनक्रियायां न सं-

रश्मिः।

क्षितस्य। आद्यादीनामिति आदेरादि जन्म आद्यादि, आदिरादिर्येषां स्थितिलयाभिसंवेशानां त आद्यादयः, आद्यादि च आद्यादयश्च आद्यादयः तेषामाद्यादीनाम्। येनेतीति येनेति तृतीयान्तान्यपदार्थकथनं तु तस्यान्यपदार्थस्य गुणो विशेषणं तस्य संविज्ञानं स वर्तिपदार्थो गुणोऽवयवो वा यस्यान्यपदार्थस्य तस्य संविज्ञानमित्यस्याग्रे संनिहितविशेषणस्यान्यपदार्थस्य विशिष्टसंबन्धाश्रयेण केनचिद्बहुव्रीहिणाभिधानादित्यर्थः। इत्युत्तरग्रन्थसूचितं ज्ञेयम्। शब्दरत्ने तु तस्यान्यपदार्थस्य गुणा विशेषणानि संज्ञायन्ते कार्यित्वादिना यत्रेति 'सर्वादीनि सर्वनामानि' इत्यत्र व्याख्यातम्। तद्गुणसंविज्ञान इति तथाच प्रायः संयोगसमवायान्यतरसंबन्धेन संबन्धी यत्र अन्यपदार्थस्तत्र तद्गुणत्वमिति शब्दरत्नोक्तं लक्षणं पर्यवसितं ज्ञेयम्। नैयायिकास्तु लक्ष्यतावच्छेदकस्य विशेष्यान्वय्यन्वयित्वं लक्षणमाहुः यत्र तस्येति। इदमपि संयोगसमवायातिरिक्तस्वस्वामिभावादिसंबन्धेन संबन्धी यत्रान्यपदार्थः तत्र तद्गुणत्वमिति शब्दरत्नोक्तं लक्षणं नातिवर्तते। नैयायिकास्तु लक्ष्यतावच्छेदकस्य विशेष्यान्वय्यनन्वयित्वं लक्षणमाहुः। अत्रैतावान् विशेषः। समासशक्तिवादिनां विशेषणस्य विशेष्यान्वय्यन्वयित्वे तदनन्वयित्वे उक्तसंबन्धो नियामकः। लक्षणावादिनां नैयायिकानां तु शब्दस्वभाव एव तन्त्रमिति। सन्निधानाभावादिति अत एव नागयज्ञोपवीती भोज्यतामित्यादौ यज्ञोपवीतस्य कार्यित्वाभावेपि तत्सन्निधानात्तद्गुणत्वमिति हरिग्रन्थः। नैयायिकानां मते तु अतद्गुणसंविज्ञान एव। प्रधानानामिति विशेष्याणामित्यर्थः। स्थितीत्यादि। अभिसंवेशः सुषुप्तिस्तत्सुखमित्यर्थः। प्रथमान्तरेति जन्मतः प्रथमान्तरेत्यर्थः। स्वयं स्विति आदिस्त्वित्यर्थः। तस्येति आदेरित्यर्थः। अत इति प्राथम्यस्य निरूप्यत्वस्य चापेक्षाबुद्धिजन्यत्वेन स्थित्यादिज्ञानजन्यत्वेन च साक्षाद्ब्रह्मजन्यत्वाभावादित्यर्थः। ब्रह्मकर्तृकेत्यादि यतो

१. कार्यकारणभावसंबन्धाश्रयेण। २. अभिधावृत्तिः पदधर्मः 'पदज्ञानं तु करणम्' इति भाषापरिच्छेदात्। ३. कार्यकारणभावसंबन्धस्तृतीयान्तान्यपदं सूचयतीति ग्रन्थसूचितम्। ४. विशेष्यान्वयित्वं कार्यम्।

भाष्यप्रकाशः ।

कजायते । तदसंबन्धे तद्द्वारा जन्मनोऽपि न संबन्ध इत्यस्य समासस्यातद्गुणसंविज्ञानत्वम् । इदं च तद्गुणसंविज्ञानस्य प्रथमलक्षणादरे बोध्यम् । द्वितीयलक्षणादरे तु तद्गुणकस्य विशेष्यस्यान्यपदार्थस्य संविज्ञानं समायाति । तच्च चित्रगुरित्यत्रापि वर्तत इति तद्वारणाय विशेषणसंबन्धपूर्वक एव तस्य क्रियासंबन्धो वक्तव्यः । तदाप्यत्र विशेष्यभूतानां स्थित्यादीनां विशेषणसंबन्धपूर्वको न क्रियासंबन्ध इति पूर्ववदेवातद्गुणसंविज्ञानत्वम् । यदि च संविज्ञानपदेन वर्तिपदार्थस्य तद्विशेष्यस्य वा प्रव्यक्तीभाव एवाद्रियते तदा तु विशेष्यविशेषणयोर्ज्ञाततत्वेनास्माकं तत्प्रव्यक्तीभावाभावाद् भाववृत्तसूक्ते, 'सोऽअङ्ग वेद यदि वा न वेद' इति श्रावणाच्चातद्गुणसंविज्ञानत्वमिति न कोऽपि शङ्कालेशः । अत्रैतत्समासादरेण भाववृत्तसूक्ते, यदि वा नेतिवाक्यबोधिताऽनाधानपक्षसूचना-

रश्मिः ।

जन्माद्योस्य भवन्तीति सूत्रान्वयाज्जन्मादिकर्तृका भवनक्रिया तथापि सूत्रे यत इति पञ्चमी 'जनिकर्तुः प्रकृतिः' इति सूत्रादित्याशयः । तदसंबन्ध इत्यादि आदेः प्राथम्यवाचकस्यापेक्षाबुद्धिजन्यत्वेन ब्रह्मजन्यत्वाभावात् तद्धेतुकभवनक्रिययाऽसंबन्धे तद्विशिष्टजन्मनोपि संबन्धेनो न विशेषणसंबन्धाभावप्रयुक्तो विशिष्टाभाव इत्यस्य समासस्यातद्गुणसंविज्ञानत्वमित्यर्थः । बोध्यमिति अन्यपदार्थस्य स्थित्यादेर्गुणो जन्म तस्यासंविज्ञानमत्रेत्येवं बोध्यमित्यर्थः । तद्गुणकस्येति समासवर्तिपदार्थगुणकस्यान्यपदार्थस्य स्थित्यादेरित्यर्थः । एवं कैय्यटोक्तलक्षणद्वयसमन्वयमुक्त्वा तद्गुणसंविज्ञान इत्यत्रान्यपदार्थगुणानां कार्यित्वादिना संविज्ञानमिति पक्षे संविज्ञानपदस्यान्वयलक्षकत्वं लक्ष्यतावच्छेदकस्य विशेष्यान्वय्यन्वयित्वमिति पक्षेपि तथेति वक्तव्यं तथा सति तद्गुणान्वय इति वक्तव्ये संविज्ञानपदकथनेन तस्य तद्गुणानां च प्रव्यक्तीभाव एवाभिप्रेत इत्याशयेन प्रकारान्तरमाहुः यदि चेत्यादि । तद्विशेष्यस्य वेति वर्तिपदार्थविशेष्यस्यान्यपदार्थस्य चेत्यर्थः । वाकारश्चकारार्थः । एतत्पक्षे प्रकृतेऽतद्गुणे संविज्ञानत्वं निगमयन्ति तदा त्वित्यादि । षड्भावविकाररूपयोर्जन्मप्राथम्यरूपयोर्वा विशेष्यविशेषणयोर्जनितत्वेन जगद्वत्वेन साक्षाद्ब्रह्मणस्तद्विषयकसंविज्ञानत्वाभावादित्यर्थः । शांकराणां सर्वस्य मायिकत्वादस्माकमित्युक्तम् । नन्वसार्वज्ञ्यापत्तिरेवं भवेदित्यतः श्रुतिं प्रमाणयन्ति भाववृत्तेत्यादि । इयं श्रुतिर्ब्राह्मणस्य द्वितीयाष्टकेस्ति तत्रैतस्याः पूर्वं 'नासदासीन्नो सदासीत्तदानीम्' इत्याद्युक्त्वा 'तम आसीत्तमसा गूढमग्रेऽप्रकेतम् । सलिलꣳसर्वमा इदम्' इत्यादिना सृष्टिं च । ततः 'को अद्धा वेद क इह प्रवोचत् कुत आजाता कुत इयं विसृष्टिः । अर्वाग्देवा अस्य विसर्जनाय । अथा को वेद यत आबभूव । इयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न । यो अस्याध्यक्षः परमेव्योमन्' इति श्रूयते । तथा च सोध्यक्षो विसृष्टिं जन्म वेद यदि वा विसृष्टिं न वेदेति जन्मनो ज्ञानाविषयत्वेनातद्गुणत्वमित्यर्थः । यदीत्यस्या यदा भगवान् सच्चिदानन्दरूपो धर्मरूपेणाविर्भवतीत्यादिक्रमेण ततो जाता तदा तु धर्मरूपेणादधे, यदा तु स्वयमेव तथाविर्भूतस्तदा न दधे । सर्वस्य ब्रह्मानतिरेकादित्यर्थः । तथा च विकारान्तरज्ञानदशायां जन्मनः प्रव्यक्तत्वाभावात्तदसंविज्ञानं नैतावताऽसार्वज्ञ्यमिति भावः । न कोपीति । या तु 'यस्मिन्निदꣳसं च विचैति सर्वम्' इति श्रुत्या जन्मनः सिद्धत्वेन श्रौतत्वात् तद्गुणसंविज्ञान एव युक्त इत्याशङ्का सापि नेत्यर्थः । जन्मनो ब्रह्मकर्तृकत्वेपि श्रौतास्तत्संदेहादज्ञानसूचनम्, विरुद्धधर्माश्रयत्वेन माहात्म्यज्ञानं च द्योतितम् । अनाधानपक्षेति

अथवा जन्मप्रभृति सर्वे भावविकारा आदिशब्देन गृह्यन्ते। तथाच जन्म च आदिश्चेत्येकवद्भावः। आदिशब्दश्च धर्मवाची। स च स्वसंबन्धिनं लक्षयति। तस्योभयसापेक्षत्वादुत्पत्तेर्विद्यमानत्वादन्यानेव भावविकारानुपलक्षयतीत्यादिशब्देनान्ये भावविकाराः।

भाष्यप्रकाशः।

जन्मस्थितिभङ्गादीनामाविर्भावादिरूपत्वबोधनेन भगवानेव तत्तद्रूपः क्रीडमाविस्तिरश्च भवतीति पुष्टिसृष्टिप्रकारो बोधितः। तथाच जन्म आविर्भाव आदिर्येषां प्रकाराणामित्यर्थो बोध्यः। प्रवाहसृष्टिबोधनाय प्रकारान्तरमाहुः अथवेत्यादि। प्रभृतिशब्दः पूर्वावधिवाचकः। सर्वे इति जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते नश्यतीतिप्रतीतिसिद्धा यास्कोक्ताः षट्। कथं गृह्यन्त इत्यपेक्षायामाहुः तथाचेत्यादि। सर्वोऽपि द्वन्द्वो विभाषैकवद्भवतीत्येकवद्भावः। आदिशब्दश्च प्राथम्यरूपधर्मवाची। पूर्वतन्त्रे शब्दानां धर्मवाचकत्वस्य सिद्धत्वात्। स च स्वसंबन्धिनं लक्षयति। तत्र कं लक्षयतीत्याकाङ्क्षायां तस्य यथोत्पत्तावाधारता तथाग्रिमेषु निरूपकता। प्राथम्यस्योभयसापेक्षत्वात्। अत उत्पत्तेरत्र कण्ठोक्तत्वेन विद्यमानत्वादन्यानेवोपलक्षयतीति तथेत्यर्थः। तेन विषयवाक्योदितौ स्थितिभङ्गौ प्रत्याहारन्यायेनान्येषामपि बोधकौ। कालादिगतमपि कर्तृत्वं भगवदीयमेव, न तु स्वतन्त्रमिति च बोधयितुमत्रादिपदोक्तिरिति तात्पर्यं सूचितम्। एवं व्याख्याने आदिपदस्य लाक्षणिकत्वम्। तथादिपदेन आदित्वधर्मवत्तया जन्मनोऽपि संग्रहीतुं शक्यत्वाज्जन्मपदवैयर्थ्या-

रश्मिः।

स्वस्यैव सर्वरूपत्वेन धारणपक्षेत्यर्थः। पुष्टिसृष्टिप्रकार इति अत्रैव कार्यकारणरूप इति प्रकार इत्यर्थः। 'पुष्टिं कायेन निश्चयः' इति पुष्टिप्रवाहमर्यादाग्रन्थवाक्यात्। अत्र पक्षे सर्वस्यानन्दरूपतया विकारविरहादर्थमाहुः तथा च जन्मेत्यादि। प्रकाराणामिति। 'लोकवत्तु लीलाकैवल्यम्' इति न्यायेन लौकिकभावविकारसदृशप्रकाराणामित्यर्थः। प्रवाहेत्यादि प्रवाहः प्रवहणम्। सर्गपरंपराया अविच्छेद इति यावत्। 'द्वौ भूतसर्गौ लोकेस्मिन् दैव आसुर एव च' 'द्वया ह प्राजापत्या देवाश्चासुराश्च' इति श्रुतिस्मृतिभ्याम्। अत्र समवायी मायामनोरूपः 'द्वे अस्य बीजे' इत्यारभ्य 'मायामयं वेद स वेद वेदम्' इति भगवद्वाक्यात्। मायामात्रस्यैव मिथ्यात्वं न सर्वस्य। प्रवाहस्य सदसद्ग्रन्थिरूपत्वात्। संध्याधिकरणे स्फुटिष्यतीदम्। प्रभृतीत्यादि तथा च जन्मपूर्वावधिकसर्वे भावविकारा इति भाष्यार्थः। यास्कोक्ता इति निरुक्तप्रसिद्धो यास्कर्षिः। सर्वोपीत्यादि परिभाषेयम्। आदिशब्द इति भाष्यं विवृण्वन्तिस्म आदिशब्दश्चेति। पूर्वतन्त्र इति आकृत्यधिकरण इत्यर्थः। स्वसंबन्धिनमाश्रयं, तं विना स्थातुं धर्मो न शक्नोतीति भावः। लक्षणायां संबन्धं वक्तुमाहुः तत्र कमित्यादि। तस्य यथेत्यादि प्राथम्यस्य यथा जन्मन्याधारता तथाग्रिमेष्वस्त्यादिषु निरूपकता, प्राथम्यस्यास्त्यादिनिरूप्यत्वात्। उभयसापेक्षत्वादिति आधारनिरूपकसापेक्षत्वादित्यर्थः। उपलक्षयतीति निरूपकतासंबन्धेनोपलक्षयतीत्यर्थः। ननु कथं तर्हि आदिशब्दप्रयोग इत्यत आहुः तेनेत्यादि। प्रत्याहारन्यायेनेति 'आदिरन्त्येन सहेता' इति सूत्रसिद्धेनेत्यर्थः। अन्येषामिति विपरिणामवर्धनापक्षयाणामित्यर्थः। कर्तृत्वमिति कालेन विपरिणमतीत्यादिप्रतीत्या विपरिणामादिकर्तृत्वमित्यर्थः। भगवदीयं तृतीयस्कन्धवाक्यात् कालादीनामीश्वराधीनकर्तृत्वात्। तथा चादि जन्मादि कर्तृत्वं सूचयितुमादिपदेनास्त्याद्युपलक्षणमिति भावः।

**अथवा जन्मनो नादित्वम् । तदाधारस्य पूर्वमविद्यमानत्वात् । अन्ये त्वादिमन्तः । तदाधारस्य पूर्वं विद्यमानत्वात् । अत आदिशब्दः स्वाधारसद्धर्मवाची तद्धर्माणामुपलक्षकः । अथवा गमनप्रवेशयोर्भेदाज्जन्म आदिर्येषामिति**

भाष्यप्रकाशः ।

पत्तिरित्यरुच्या प्रकारान्तरेण व्याकुर्वन्ति **अथवा जन्मन** इत्यादि । बहिर्विद्यमाने जन्माधारे पश्चाज्जन्म चेत्तदा जन्म प्रत्याधारस्य तद्गतधर्मस्य चादिता संभवति । प्रकृते तु तन्नास्तीति जन्मनो नादित्वम् । अन्येषां तु भावविकाराणामुक्तयुक्त्यादिमतो हेतोरादिशब्दः स्वाधारसद्धर्मवाची आदित्वाधारभूतोऽस्तिपदवाच्यो धर्मस्तस्यान्यापेक्षया प्राथम्यात् तत्पूर्वकमेव तं वदन्नादित्वस्य सापेक्षतया तद्धर्माणां विपरिणामादीनामुपलक्षक इति न स्वार्थत्यागदोषो, नापि जन्मपदवैयर्थ्यदोष इत्यर्थः । अस्मिन् पक्षे असत्कार्यवाद आपतति । तथापि यदेतस्य कथनं तन्नृसिंहोत्तरतापिन्याद्युक्तमायिकसृष्टिं प्रत्यपि भगवत एव कारणत्वमिति बोधयितुं, न तु पूर्वोक्तं पक्षं निराकर्तुमिति बोध्यम् । अथ मर्यादासृष्टिसंग्रहाय तद्गुणसंविज्ञानपक्षमभिसंधायाहुः **अथवा गमने**त्यादि । गमनप्र-

रश्मिः ।

**बहि**रिति तेन 'सत इदमुत्थितं सदिति चेन्न नु तर्कहतम्' इत्यस्य विषय इति ज्ञापितम् । तेन

'सद्बुद्ध्या सर्वथा सद्भिर्न सेव्यमखिलं जगत् ।
भ्रान्त्या सद्बुद्धिरत्रेति सन्तं कृष्णं भजेद्बुधः' ॥

इति तृतीयोऽध्याये विषयत्वेन सन् कृष्णः सिद्धः स च जगति त्वतलादिवाच्यस्तदा निरावरणसेवा भवति शुक्तिज्ञानवत् । **जन्माधार** इति आद्यक्षणसंबन्धो जन्म तदाधारे घटादावित्यर्थः । तदा सृष्ट्यन्तरपक्षे जन्मसंबन्धरूपजन्मस्वरूपस्योभयसापेक्षत्वात् तत्प्रत्याधारस्य जगतः विशिष्टशक्त्या तद्गतधर्मो जगत्त्वादिरूपस्तस्य, चकाराज्जन्मनोप्यादिता संभवति । **प्रकृते त्वि**ति प्रवाहसृष्टावित्यर्थः । **तन्नास्ति** भ्रान्त्या सद्बुद्धिस्तद्विषयभूतं जगदाधाररूपं नास्ति ततो जन्मापि **नास्तीति** अस्त्याद्यपेक्षया **जन्मनो नादित्वमिति** एतादृशसर्गपरंपरयास्त्यादीनामप्यादित्वसंभवात् जन्मनो न तथात्वमित्यर्थः । **उक्तयुक्त्येति** हेतुभाष्योक्तयुक्त्येत्यर्थः । **भाष्ये** । **तदाधारस्य** जन्माधारस्य । **प्रकृते** । **धर्म** इति सत्ताख्य इत्यर्थः । अत्र न विशिष्टे शक्तिः, आधारस्य सत्त्वात् । अतोऽस्तिपदवाच्यो धर्मः स आत्मा वाक्यपदीयात् । 'सत इदम्' इति श्लोके पूर्वमुक्तम् । **तत्पूर्वक**मित्यादि प्राथम्यपूर्वकमेव सत्ताख्यं धर्मं शक्त्या वदन् लक्षणया विपरिणामादीनां निरूपकाणामुपलक्षक इत्यादिपदस्य शक्यार्थस्वीकारेण न स्वार्थत्यागदोषो नापि जन्मपदवैयर्थ्यदोषो जन्मनोनादित्वेनादिपदवृत्तिद्वयासंभवादित्यर्थः । अत्राजहत्स्वार्थलक्षणायां कृतायां यथायोग्यं तीरे घोषः प्रवाहे मत्स्य इत्यन्वयो मञ्जूषायाम् । नच युगपद्वृत्तिद्वयविरोध इति वाच्यं, गङ्गायां घोषमत्स्यौ स्तः इतिवदुपपत्तेः । तथा चादित्वेन सत्तारूपात्मत्वेन सता भ्रान्तिविषयसज्जन्माक्षेपोत्र नापि तु वाक्षेप्यजन्मोक्तिः । **अस्मिन् पक्ष** इति प्रवाहपक्ष इत्यर्थः । **नृसिंहे**त्यादि 'सैषाविद्या जगत्सर्वम्' इत्यादिः । **अथ मर्यादे**ति कर्मज्ञानादितत्तत्प्रकारनियमो मर्यादा, सा तु विभागसार्थक्यादस्ति सचैवम् । विधिमन्त्रनामधेयनिषेधार्थवादात्मना हि विभक्तो वेद इति । तत्सृष्टिस्तु 'वचसा वेदमार्गं हि'

१. श्रीभागवतदशमे गुणप्रकरणे वेदस्तुतिरूपे तृतीयाध्याये ।

जात्यपेक्षयैकवचनम् । जन्म तु श्रुतत्वात् सिद्धम् ।

अथवा किमनया कुसृष्ट्या । जन्म आद्यस्य आकाशस्य यत इति ।

भाष्यप्रकाशः ।

वेशयोः पूर्वोत्तरावधिभूतसंचरप्रतिसंचरयोर्मध्ये कार्यस्वरूपस्य कारणतो भेदाज्जन्मादयो भवन्तीति जन्म आदिर्येषां तत्तज्जातीयं जन्मादि । जातिरत्र विकारत्वं क्रियात्वं वा । अत्र, 'ब्राह्मणो जन्मतः श्रेयान्', 'न ब्राह्मणान्मे दयितं रूपमेतच्चतुर्भुजम्' इत्यादाविव जात्यपेक्षयैकवचनम् । तथाच यद्यपि, सुपां सुलुगिति जसो लोपे जन्मादीति सिध्यति तथापि विकारान्तरसंग्रहस्तेन न भवत्यततदुपेक्षितम् । नपुंसकं तु सामान्ये । एतत्पक्षसंग्रहे बीजमाहुः जन्म तु श्रुतत्वात् सिद्धमिति । जन्म तु, 'यत्किञ्चिद॰ सं च विचेति सर्वम्' इति तैत्तिरीये श्रुतत्वात् व्ययनात्मकबहिर्गमनरूपं सिद्धम् । तच्च सजातीयसंवलनवियोगादि संगृह्णत् समयनरूपं प्रवेशं च ज्ञापयतीति तद्गुणसंविज्ञानोऽपि युक्त इत्यर्थः ।

एवं पक्षत्रयेण व्याख्यायैतेषामत्र बोधनस्यानतिप्रयोजनत्वात् प्रतिपत्तिगौरवाच्चारुचिं सूचयन्तः प्रकारान्तरेण सूत्रं व्याकुर्वन्ति अथवा किमित्यादि । नन्वेवं सत्याकाशजनकत्वस्यैव

रश्मिः ।

इति मनःपूर्वकं वचसा वेदमार्गं सृष्टवानित्यर्थः । शब्दादयोत्पत्तिश्च शब्द इति चेदित्यादि सूत्रभाष्ये स्फुटिष्यति । अत्र समवाय्यक्षरम् ।

'मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः' ॥

'अव्यक्तोऽक्षर इत्युक्तः' 'अव्यक्ताद्व्यक्तयः सर्वाः' इति वाक्येभ्यः । गमनं सच्चिदानन्दस्य भगवतो धर्मरूपेण भवनोत्तरं स्वस्मिन् लयः यत्प्रयन्तीत्युक्तः प्रवेशस्त्वभिसंविशन्तीत्युक्त इत्याशयेन गमनप्रवेशौ व्याकुर्वन्ति गमनेत्यादि । प्रतिसंचरः प्रतिनिधिसंचरः । तथा च पूर्वोत्तरावधिभूतयोः जननजीवनयोर्यौ संचरप्रतिसंचरौ तयोर्मध्ये । कारणत ब्रह्मण इति इत्यर्थः । जन्मादय इति विकारा इत्यर्थः । न भवतीति यतो वा इति श्रुतौ जननगमनप्रवेशयोर्मध्ये स्थितिमात्रोपादानान्न भवतीत्यर्थः । सामान्य इति दृढभक्तिरितिवत् । यद्यपीदमनियतलिङ्गविषयकमत एवादिं पचतीत्येव प्रयोगस्तथापि बहुव्रीहौ त्वनियतलिङ्गत्वादुपपन्नम् । सिद्धमिति ब्रह्मणः सिद्धमित्यर्थः तथाच तद्गुणसंविज्ञाने श्रुत्यनुकूलतैव बीजमित्यर्थः । व्ययनात्मकेति व्यवहिताश्चेति छन्दसि व्यवधानेपि प्रयोगात् समेति व्येतीत्यर्थात्तथेत्यर्थः । संगृह्णदिति तात्पर्योपलक्षणविधयापि गृह्णत् । ज्ञापयतीति संविज्ञानस्य शक्यार्थपक्षमाश्रित्येदम् । युक्त इति अस्मिन् पक्षे विग्रहस्त्वयमेव सर्वं आदिर्येषामितिवत् । इह आदिशब्दस्यावयववाचित्वादुद्भूतावयवभेदः समुदायः समासार्थः । उद्भूतावयवभेदत्वं चारोपितावयवगतसंख्यत्वम् । तस्य च समुदायस्य युगपत्क्रियान्वयासंभवात् तदन्तर्भूतानामवयवानामेव पृथगन्वयः । शांकराचार्यैस्तु जन्मादिर्यस्येति विगृहीतम् ।

एवं पक्षत्रयेणेति 'स आत्मान॰ स्वयमकुरुत' इति 'सोऽकामयत बहु स्याम्, प्रजायेय' इति 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इति तैत्तिरीयोक्तपुष्टिप्रवाहमर्यादाबोधकपक्षत्रयेणेत्यर्थः । एतेषामिति पुष्टिप्रवाहमर्यादानामित्यर्थः । भाष्ये । कुसृष्ट्येति कुसृष्टित्वं तु अवयवसमासपक्षे जन्मग्रहणप्रयासः अतद्गुणसंविज्ञान एव । अवयवसमासपक्षे तु समुदायस्य युगपत्क्रियान्वयक्लेशः । द्वन्द्वे तु आदिशब्दस्य आनर्थक्यं अनन्विष्यात्वं

'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्येव विचार्यते । फलसंबन्धित्वात् । तेनैकत्र सिद्धः शास्त्रार्थः प्रकारान्तरेऽपि । यतो वा इमानि भूतानीत्यत्र विस्फुलिङ्गवत् सर्वोत्पत्तिः । अत्र तु क्रमेणेति विशेषः । एतेन सर्व एव प्रकाराः

भाष्यप्रकाशः ।

लक्षणत्वमायाति, न तु सर्वभूतजनकत्वस्य तत्स्थित्यादिकर्तृत्वस्य च । तथा सति वाक्यान्तरे ब्रह्मभेदापत्तिरितिशङ्कायामाहुः तेनेत्यादि । यद्वा, यतो वेति वाक्यं विषयत्वेनादरणीयं तद्राप्ययं न्यायस्तु सर्वथाङ्गीकार्य एव । अन्यथा आकाशवाक्येऽपि ब्रह्मान्तरापत्तिः स्यात् । अतो जनन-प्रकारस्यैव भेदो न तु ब्रह्मण इति न कोऽपि दोष इत्यर्थः । यतो वेतिश्रुतौ, यत् प्रयन्त्यभिसंवि-शन्तीत्यस्य भागस्य यद् ब्रह्म प्रयन्ति प्रकर्षेण सृष्टिसामयिकदुःखराहित्येन प्रलये गच्छन्ति, अभितः संविशन्ति स्वपन्ति सुषुप्ताविव सत्संपन्ना भवन्तीत्यर्थो बोध्यः । एवं पक्षत्रयेण व्याख्याने बीज-माहुः एतेनेत्यादि । सूत्रे एवं श्लिष्टप्रयोगेण वेदोक्ताः सर्वे प्रकारा व्यासचरणैः संगृहीता ज्ञेयाः । तथाच क्वचित् साक्षात्, क्वचित् तटस्थत्वेन, क्वचित् किंचिद्द्वारा क्रमेणेति बोधनायास्माभिरपि

रश्मिः ।

व्याख्यात इति । न च यथा कतन्तेभ्यः कण्वादिभ्य इत्यत्र कतस्यान्तः कतन्तः शकन्ध्वा-दित्वात् पररूपम् । कतः अन्तो येषां ते कतन्ताः कतन्तश्च कतन्ताश्च कतन्तास्तेभ्य इत्येकशेषः । कण्व स्यादिः कण्वादिः कण्व आदिर्येषां ते कण्वादयः ततः पूर्ववदेव बहुव्रीहि-तत्पुरुषयोरेकशेषः । तद्वज्जन्म चादिर्जन्मादि जन्म आदिर्येषां तज्जन्मादि जन्मादिश्च जन्मादि च जन्मादि । नपुंसकमनपुंसकेनेति स्वरभिन्नानां यस्योत्तरस्वरः स शिष्यत इति वा बहुव्रीहेः शेषः । तथा च जन्मनस्तदादीनां च ग्रहणं भविष्यतीति वाच्यम् । एवं तर्हि जन्मादिरित्यत्र सारूप्यार्थमे-वादिशब्द उपादीयतेन्यस्य प्रयोजनस्याभावात्, तथा च गौरवग्रस्तार्थबोधकत्वाच्च्यर्थत्वमिति बोध्यम् । फलसंबन्धित्वादिति 'ब्रह्मविदाप्नोति परम्' इति फलमुपक्रम्य पठितत्वेन तत्पदेन फलरूपपदस्यैव परामर्शेन फलसंबन्धित्वादित्यर्थः । अत्रैवं प्रतिभाति सुगमव्याख्या । अवयवसमासे येषामिति बहुवचनं विकाराभिप्रायेण समर्थनीयं तदनुपपन्नमभिसंविशन्तीत्यनेनोक्ताभिसंवेशस्या-विकारत्वात् सुषुप्तिसुखत्वेन विकाराणां यथायथं जन्मस्थितिभङ्गेष्वन्तर्भावाज्जगतः स्थितिकाले संभा-व्यमानत्वाच्चेत्याशङ्क्या द्वन्द्वपक्ष उक्तः । अस्मिन्नपि पक्षे जगतो नित्यत्वापत्त्या लक्षणत्वव्याघातः । अवयविसमासे च समासार्थस्य समुदायस्य क्रियान्वयक्लेशः इति पूर्वोक्तमेव लक्षणं समर्थयन्त आहुः अथवा गमनेत्यादि । श्रुतौ प्रयन्तीति गमनमभिसंविशन्तीति प्रवेशः तयोर्गमनसुषुप्तिरूप-त्वेन भेदात् जन्म आदिर्येषां स्थितिगमनप्रवेशानामित्यवयवसमास इत्यर्थः । तथा च बहुवचनं स्यादित्याशङ्क्याहुः आत्म्यपेक्षयेति । एवं तर्हि जन्मासंग्रहस्तु स्यादतद्गुणसंविज्ञानपक्ष इत्याशङ्क्याहुः जन्मेत्यादि । यथा देवदत्तशालायां ब्राह्मणा आनीयतामित्युक्ते देवदत्तो यदि ब्राह्मणश्चेत्तदा सोप्या-नीयत एव, एवं स्थित्यादिकर्तृत्वसिद्धौ जन्मकर्तृत्वमपि श्रुतत्वात् सिद्धमिति । अस्मिन् पक्षे पक्षद्वयं ज्ञेयम् । इतोपि लाघवमाहुः अथवा किमित्यादि । भाष्ये । फलसंबन्धीति ब्रह्मवित्प्रपाठके 'ब्रह्म-विदाप्नोति परम्' इति फलमुपक्रम्य पठितत्वेन तत्पदेन फलरूपपरस्यैव परामर्शेन फलसंबन्धित्वात् । प्रकृते । ब्रह्मभेदापत्तिरिति जगत्कर्तृ ब्रह्म आकाशकर्तुर्भिन्नं स्यादित्यर्थः । न कोपीति एतेन जन्मस्थितिभङ्गनिरूपितं कारणत्वत्रयं मिलितं सदेव लक्षणमिति बोधयितुं सूत्रे समाहारो द्योतित इति पराकृतमित्यर्थः । श्लिष्टप्रयोगेणेति जन्माद्यस्येति श्लिष्टप्रयोगेणेत्यर्थः । तटस्थ-त्वेनेति । तल्लक्षणं तु 'ब्रह्मादिपिपीलिकापर्यन्तं सर्वप्राणिबुद्धिरहवशिष्टतयोपलक्ष्यमाणः सर्व-

सूचिता वेदितव्याः । ब्रह्मविचारे ब्रह्मणोऽप्यधिकृतत्वाद् ब्रह्मेत्यायाति । न त्वध्याहारः।

शास्त्रे योनिः शास्त्रयोनिः । शास्त्रोक्तकारणत्वादित्यर्थः । शास्तीति शास्त्रं वेदः । सामान्यग्रहणं पूर्वकाण्डे पूर्वसृष्टिवाक्यानां संग्रहार्थम् । यथाऽस्यैव कारणत्वं, नान्यस्य तथोपरिष्टाद् वक्ष्यामः। मतान्तरवज्जन्मादीनां न विकारित्वं किंत्वाविर्भावतिरोभावावेव तथोत्तरत्र वक्ष्यते, तदनन्यत्वाधिकरणे। नामलीलाया अपि न पृथङ् निरूपणं प्रपञ्चमध्यपातात्।

---

भाष्यप्रकाशः।

तदाशयं स्फुटीकर्तुं पक्षत्रयेण व्याख्यातमित्यर्थः ।

नन्वत्र लक्ष्यानिर्देशात् प्रतिज्ञायां च संबन्धिविचारस्यैवाधिकृतत्वेन ब्रह्मणोऽनधिकृतत्वादत्र ब्रह्मानुवृत्तेरशक्यवचनत्वेन ब्रह्मपदं ब्रह्म वाऽध्याहार्यम्। कर्मषष्ठीपक्षे तु प्रकृतत्वादेव तत्प्राप्तेर्नायं दोष इत्यत आहुः ब्रह्मेत्यादि । तथाचार्थादेव तत्प्राप्तेर्नोक्तदोष इत्यर्थः ।

एवं लक्षणबोधकं सूत्रांशं व्याख्याय प्रमाणबोधकमंशं व्याकुर्वन्ति शास्त्रे इत्यादि । शास्त्रे इति सप्तम्या वैषयिकमधिकरणं बोध्यते। शास्त्रविषयो योनिः शास्त्रयोनिः । विषयत्वं प्रतिपाद्यत्वम् । तदेतदभिसंधायाहुः शास्त्रोक्तेत्यादि। शास्तीति राजवदाज्ञापयति । एतेन तद्विरोधेऽपराधोऽपि बोधितः। नन्वत्रोत्तरकाण्डार्थ एव विचार्यत इति शास्त्रशब्दस्य कुतः प्रयोग इत्यत आहुः सामान्येत्यादि । पूर्वसृष्टिवाक्यानामिति । भाववृत्तसूक्तादीनाम् । एतेन वेदार्थतयैवात्र सूत्रकृतो ब्रह्म विवक्षितमिति स्वोक्ते बीजं प्रदर्शितम्। ननु योनिशब्दो निमित्तवाची प्रायो दृश्यते इति साधारणेन कारणपदेन कुतो व्याख्यायत इत्यत आहुः यथेत्यादि । उपरिष्टादिति अग्रिमसूत्रे, तथाचातो व्याख्यात इत्यर्थः । अत्र कश्चिज्जन्मादिसूत्रस्थेन यत इति पदेनैव विषयश्रुतेः स्मारणात् सिद्धे शास्त्रप्रमाणकत्वे, शास्त्रयोनित्वसूत्रं व्यर्थमित्याह । तन्न । यत इत्यस्य हेतुकोटौ प्रवेशे जन्माद्यस्येतिभागस्य प्रपञ्चवृत्तान्तपरतया ब्रह्मलक्षणत्वायोगेनासंगतत्वप्रसङ्गात् । नच लक्षणे प्रविष्टस्यैव यतःशब्दस्योक्तश्रुतिस्मारकत्वमित्यपि युक्तम् । श्रुतौ भूतानीति बहुवचनेन

रश्मिः ।

प्राणिबुद्धिस्थो यदा तदा कूटस्थ इत्युच्यते' इति सर्वोपनिषदि । अष्टविशिष्टता 'भूमिरापोऽनलः' इति गीतायामष्ट तद्विशिष्टता ।संबन्धीति ब्रह्मशब्देन वेदः तत्संबन्धिविचारस्य। एवकारेण ब्रह्मरूपार्थव्यवच्छेदः क्रियते । मीमांसकमतेनार्थाध्याहारमाहुः ब्रह्म वेति । तत्प्राप्तेरिति ब्रह्मरूपलक्ष्यप्राप्तेरित्यर्थः। भाववृत्तेत्यादि ब्राह्मणस्य द्वितीयाष्टकस्थानामित्यर्थः । आदिपदेन संहितोक्तानां 'प्रजापतिरकामयत प्रजाः सृजेय' इत्यादीनाम् ।,एतेनेति शास्त्रपदोपादानेनेत्यर्थः । निमित्तवाचीति 'तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता' इति मातृरूपत्वबोधनादित्यर्थः । अत इति अभिन्ननिमित्तोपादानत्वादित्यर्थः। हेतुकोटावित्यादि यत इत्यादिश्रुतेरित्येवं हेतुकोटौ प्रवेशस्य प्रपञ्चस्य जन्मादि भवतीत्येवं प्रपञ्चवृत्तान्तपरतया ब्रह्मलक्षणत्वायोगेन सूत्रस्याभासेनासंगतत्वप्रसङ्गादित्यर्थः ।न च यतः शास्त्रयोनित्वात् इति हेतुकोटिप्रवेशोऽस्त्विति शङ्क्यं परैरप्यनङ्गीकारात् । अन्त्यपक्षं समर्थयितुमप्याशङ्कामाहुः न च लक्षण इत्यादि। जगज्जन्मादिप्रपञ्चवृत्तान्ते आर्थिके लक्षणे प्रत्ययांशस्य प्रविष्टत्वेन यतःशब्दस्यापि प्रविष्टस्यैवेत्यर्थः। आभासोक्तपक्षे तु जन्माद्यस्य यत इति

केचित् पृथग्रूपनामप्रपञ्चकर्तृत्वं योगविभागेन प्रतिज्ञाय समन्वयादिसूत्रेष्वेव हेतून् वर्णयन्ति। अन्वयसिद्ध्यर्थं च अतति व्याप्नोतीत्यत्। शास्त्रे योनित्वं प्राप्तं तदिति नैतत् सूत्रकारसंमतमिति प्रतिभाति।

---

भाष्यप्रकाशः ।

लक्षणस्य तद्विरुद्धत्वापत्तेः । नच जात्यपेक्षयैकवचनान्न विरोध इति वाच्यम् । तथा सति वाक्यान्तरासंग्रहेण ब्रह्मभेदापत्तेः । तस्माच्छास्त्रयोनित्वादित्यवश्यं प्रणेतव्यम्। ननु तथापि साधारणशब्देन व्याख्यानमयुक्तम् । जन्मादीनामादिमत्तया असत्त्वेनाग्रिमसूत्रेऽपि तटस्थकारणताया एव सिद्धेरित्यत आहुः मतान्तरेत्यादि। न्यूनत्वरूपं प्रतिज्ञादोषं परिहरन्ति नामेत्यादि।

शांकरमतमनुवदन्ति केचिदित्यादि । तन्मते दशसूत्रं जन्माद्यधिकरणम्। तत्र द्वाभ्यां प्रतिज्ञा। तत्र द्वितीयसूत्रे पञ्चम्यनन्वयादन्वयसिद्ध्यर्थं तथा वर्णयन्तीत्यर्थः । तद् दूषयन्ति नैतदित्यादि । शास्त्रयोनिरित्येतावतैव प्रतिज्ञासिद्धावपि त्वादित्यधिककथनादग्रिमसूत्रे पुनः साध्यपरामर्शाच्च तथेत्यर्थः। यत्पुनः शास्त्रस्य योनिरिति षष्ठीतत्पुरुषमङ्गीकृत्य, महत ऋग्वेदादिशास्त्रस्य सर्वार्थावद्योतिनः सर्वज्ञकल्पस्य संभवो, न सर्वज्ञादन्यतः संभवतीत्येवं ब्रह्मणः सर्वज्ञत्वं समर्थितम्। 'अस्य महतो भूतस्य निःश्वसितं यद् ऋग्वेद' इत्यादिबृहदारण्यकीयश्रुतिमादाय पुरुष-

रश्मिः ।

लक्षणे प्रविष्टस्य । उक्तश्रुतिर्यत इति श्रुतिस्तत्स्मारकत्वं न तु 'तस्माद्वा एतस्मात्' इति श्रुतिस्मारकत्वम् । लक्षणस्येति आकाशमात्रभूतकर्तृत्वस्यान्तिमलक्षणस्य श्रुतिविरुद्धत्वापत्तेरित्यर्थः । अथवा एकजगज्जन्मादिकर्तृत्वस्य वसुभूतादिजन्मादिकर्तृत्वरूपश्रौतलक्षणादानुपूर्व्यंशेविरुद्धत्वापत्तेरित्यर्थः । न च जातीति भूतत्वरूपनित्यधर्मापेक्षयेत्यर्थः । यद्वा द्रव्यत्वापेक्षयायस्येत्येकवचनादित्यर्थः । तथासतीति लक्षणवाक्ये यत इति श्रुतिसंग्रहे विस्फुलिङ्गवत्सर्वोत्पादकाद्ब्रह्मणो वाक्यान्तरे क्रमसृष्टिबोधके ब्रह्मभेदापत्तेरित्यर्थः। यथा पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादेवं सर्वोत्पादकाद्ब्रह्मणः 'तस्माद्वा एतस्मात्' इति क्रमेणोत्पादक आत्मा भिद्यते यत इति श्रुत्यसंग्रहात्, आद्यस्याकाशस्य जनकत्वात्, इत्येवं ब्रह्मभेदो ज्ञेयः। शंकरभाष्ये तु जन्माद्यस्य यत इत्यत्र प्रदर्शितानुमानस्य स्वातन्त्र्यं मा भूदिति शास्त्रयोनित्वादित्युक्तमित्युक्तम् । तटस्थकारणताया इति जिज्ञास्यब्रह्मणो निर्गुणत्वेन जगत्कारणत्वं कथं लक्षणं संभवतीत्याशङ्क्य यज्जगत्कारणं तद्ब्रह्मेति कल्पितं कारणत्वं तटस्थं सदेव ब्रह्मलक्षणं यद्रजतं सा शुक्तिरिति शुक्तेर्लक्षणं रजतं तद्वदित्येवं तथेत्यर्थः। भाष्ये। उत्तरत्रेति द्वितीयाध्याय इत्यर्थः। तथा च 'आविर्भावतिरोभावौ शक्ती वै मुरवैरिणः' इति वाक्याद् ब्रह्मशक्तित्वेनादिमत्त्वाभावेनासत्त्वाभावान्न तटस्थलक्षणतेति भावः । दृष्टान्तासिद्धेश्च । प्रकृते। न्यूनत्वरूपमिति नामप्रपञ्चाकथनरूपं सूत्रे न्यूनत्वं तद्रूपमित्यर्थः। दशसूत्रमिति यद्यप्यन्यत्रान्यथा दृश्यते तथापि शंकरभाष्ये सर्वज्ञं ब्रह्मेत्युपक्षिप्तं तदेव द्रढयन्नाहेति शास्त्रयोनित्वसूत्रस्य तस्मान्न ब्रह्मणः शास्त्रयोनित्वमिति प्राप्ते उच्यते इति समन्वयसूत्रस्येदं सूत्रमारभ्यते इति ईक्षतिसूत्रस्यावतरणदर्शनाद् दशसूत्रमित्यर्थः । साध्यपरामर्शादिति तदिति साध्यपरामर्शादित्यर्थः। हेतूनां वर्णने स न स्यादिति भावः। एतच्च तद्ब्रह्मैव समवायिकारणमिति

भा०

निःश्वासवद् वेदसंभवश्च तत उक्तः। तत्तु मध्वभाष्यव्याख्यात्रा जयतीर्थेनैव दूषितम्। इदं शास्त्रस्य निर्मितत्वं किमर्थमुपलभ्य रचितत्वं वा, निःसृतमात्रत्वं वा, नाद्यः। कणादाक्षचरणानुसरणप्रसङ्गात्, श्रुत्यादिविरोधाच्च। न द्वितीयः। शास्त्रयोनित्वस्य सार्वज्ञ्यसाधकत्वाभावप्रसङ्गादिति। इदमपि शुक्तम्। पूर्वविकल्पे वेदस्यानित्यत्वप्रसङ्गात्। द्वितीये निःश्वासस्याबुद्धिपूर्वकत्वेन तथात्वादिति। एतेन, विमतं ब्रह्म वेदगतसर्वविषयप्रकाशनशक्त्याधारः। वेदोपादानत्वात्। दीपगतप्रकाशनशक्त्याधारदीपोपादानवह्निवदिति विवरणोक्तमनुमानं, निःश्वासात्मकवेदोपादानत्वेनाबुद्धिपूर्वकनिःश्वासोपादानपुरुषदृष्टान्तसनाथेन प्रतिसाधनेनापास्तम्।

यत्तु भामतीनिबन्धे, वर्णनित्यत्वपक्षेऽपि पदानामानुपूर्वीविशिष्टवर्णात्मकत्वाद् वाक्यानां च तादृशपदात्मकत्वादानुपूर्व्याश्च व्यक्तिधर्मत्वादानुपूर्व्युपगृहीतानां नित्यानामपि वर्णानां पदत्ववाक्यत्वयोरनित्यत्वेन लोके वेदे च न तयोः पौरुषेयत्वे विवादः। किं तु वेदवाक्ये पुरुषस्वातन्त्र्यास्वातन्त्र्ययोः। तत्र स्वातन्त्र्यकोटिः काणादादीनाम्। द्वितीयां तु जैमिनीया वेदाध्ययनं प्रति गुरुशिष्यपरंपरानादित्वेन समर्थयन्ति। वैयासास्तु, अनाद्यविद्योपधानलब्धसर्वशक्तिज्ञानस्य परमात्मनो वेदजनकत्वेऽपि पूर्वपूर्वसर्गानुसारितादृक्तादृगानुपूर्वीविरचनेन। अतः पुरुषास्वातन्त्र्यमात्रमेव वेदे अपौरुषेयत्वमित्युक्तम्। तदप्यसंगतम्। वर्णवद् वैदिकपदादीनामपि नित्यत्वात्। वाचा विरूपनित्ययेति, वेदो नारायणः साक्षात् स्वयंभूरिति शुश्रुम, वेदस्य चेश्वरात्मत्वादित्यादिश्रुतिपुराणवाक्येषु वेदपदादानुपूर्वीवैशिष्ट्य एव वेदत्वेन तादृशस्यैवेश्वरात्मकत्वात्। ईश्वरस्याविद्योपधानेन सार्वज्ञ्यलब्धेरप्यभ्युपगमैकशरणत्वात्। तादृशानुपूर्वीरचनया अस्वातन्त्र्ये राजाज्ञानुवादकराजदूतवदनुपूर्वीरचनामात्रेणेश्वरसार्वज्ञ्यासिद्ध्या व्याख्येयग्रन्थविरोधाच्च। अतः स्थितस्य गतिचिन्तनमात्रायायं प्रयासः। जगत्कर्तृत्वेनैवोभयविधतत्कर्तृत्वस्य, तेनैव सार्वज्ञस्यापि सिद्धौ भाष्यकारस्याप्यपार्थ एव प्रयास इति दिक्।

अन्यैस्तु शास्त्रं योनिः कारणं प्रमाणमस्येति व्याचक्षाणैर्बहुव्रीहिरङ्गीकृतः। सोऽप्ययुक्तः। लक्षणाप्रसङ्गात्। स्वारसिकार्थत्यागाच्च।

रश्मिः।

भाष्यस्य पुरःस्फूर्तिकमन्वयमादृत्योक्तं ज्ञेयम्। तेन तदनुभूतं प्रसिद्धं वा ब्रह्मैव, समवायिकारणं ब्रह्मैवेत्यन्वयः इति पक्षपरामर्शकस्य भाष्यप्रकाशस्य न विरोधः। मृष तितिक्षायां चुरादिः। यत्र तु तालव्यान्तं तत्र मृक्ष आमर्शने तुदादिर्बोध्यः तथाचानित्यः स्यादित्याहुः कणादेत्यादि। निःश्वसितरूपस्य निरपेक्षत्वस्य तत्सामर्थ्यस्य च विरोध इत्याहुः श्रुत्यादीत्यादि। आदिपदेन लिङ्गम्। श्रुतिस्मृतिविरोधाच्चेति वार्थः। प्रतिसाधनेनेति ब्रह्म वेदगतसर्वविषयप्रकाशनशक्त्यनाधारः निःश्वासात्मकवेदोपादानत्वात् अबुद्धिपूर्वकनिःश्वासोपादानपुरुषवदित्येवं प्रतिसाधनेनेत्यर्थः। पुरुषेत्यादि। विवाद इति संबन्धः। स्वातन्त्र्यं च कर्तृत्वं वेदवाक्यनिरूपितं पुरुषगतं कर्तृत्वमित्यर्थः। विरूपेति विविधरूपेत्यर्थः। विरूपेति देवतासंबोधनं वा। व्याख्येयेति व्याख्येयग्रन्थः सांख्यादिभाष्यं व्यासकृतं, तस्य प्रथमब्रह्मपदस्य विरोधात्। अत्र इति सर्वत्र शैथिल्यात्। उभयविधेत्यादि रूपनामविभिन्नजगत्कर्तृत्वस्येत्यर्थः।

अन्यैस्त्विति रामानुजप्रभृतिभिरित्यर्थः। लक्षणेति योनिपदस्य स्वसंबन्धिनि लक्षणा तस्या आपत्तेः। नायं वैयाकरणमत इत्यत आहुः स्वारसिकेत्यादि योनेरित्यर्थः।

**तस्मात् सर्वज्ञत्वं सर्वशक्तिमत्त्वं च सिद्धं निरङ्कुशजगत्कर्तृत्वेन ।**

भाष्यप्रकाशः ।

विज्ञानेन्द्रभिक्षुणा तु शास्त्रं योनिः मूलप्रमाणं यस्मिन्निति सप्तम्यर्थे बहुव्रीहिमङ्गीकृत्योक्तम् । अत्र शास्त्रादिति वक्तव्ये यच्छास्त्रयोनित्वादित्युक्तं, तच्छास्त्राविरुद्धानुमानस्मृतियोगिप्रत्यक्षादिसंग्रहाय । अत एवाग्रे, उपपत्तेश्चेत्यादावनुमानम् । स्मृतेश्चेत्यादौ स्मृतिः । आचारदर्शनाच्चेत्यादावाचारदर्शनमुखेन योगिप्रत्यक्षादिकं च संगृहीतमिति । तदत्रैवाग्रे मया दूष्यम् ।

उक्तार्थं निगमयन्ति तस्मादित्यादि । तथाचात्र निरङ्कुशजगत्कर्तृत्वेन शास्त्रप्रतिपाद्यत्वमिति लक्षणं सिद्धमित्यर्थः । तत्र धर्मादेर्वारणाय तृतीयान्तम् । प्रकृत्यादिवारणाय शेषम् । तेन लक्षणे विवादाध्यासितत्वदोषपरिहारः । प्रजापत्यादिवारणाय निरङ्कुशेति ज्ञेयम् ।

अत्रानादिसृष्टिवादिनो मीमांसका बीजाङ्कुरदृष्टान्तेन सृष्टिप्रवाहानादित्वं वदन्तस्तपोयज्ञाद्युपचितपुण्यविशेषलब्धशक्तीनां प्रजापतिप्रभृतीनां क्षेत्रज्ञानामेव तत्तत्कल्पेषु कारणत्वमभिमन्यमाना

रश्मिः ।

तथाचात्रेति । लक्षणं निरङ्कुशत्वं चानन्याधीनत्वं निष्क्रान्तमङ्कुशादिति 'निरादयः क्रान्ताद्यर्थे पञ्चम्याः' इति समासः । जगज्जन्मादिकर्तृत्वेनेत्युक्तावसंभव इति जगज्जन्मकर्तृत्वेनेत्युक्तौ स्थितिप्रलयकर्तर्यव्याप्तिर्जन्मादीति सौत्रादिपदासंग्रहश्चेति च दूषणप्रसरोऽतो जगत्कर्तृत्वेनेत्युक्तम् । न च कर्तृत्वं जन्मकर्तृत्वं जन्मादिकर्तृत्वं वा वाच्यमित्युभयथोभयदोषतादवस्थ्यमिति शङ्क्यं निरङ्कुशजगज्जन्मकर्तृत्वेन निरङ्कुशजगत्स्थितिकर्तृत्वेन निरङ्कुशजगल्लयकर्तृत्वेनेत्येवं प्रातिस्विकरूपेण लक्षणघटकतृतीयान्ताङ्गीकारात् । नन्वङ्कुशप्राप्तिरीश्वरीये कर्तृत्वे कुत इति चेन्न, ईश्वरे आत्तगजेन्द्रलीलत्वात् । अङ्क्यतेऽनेन, अकि लक्षणे 'सानसिवर्णसि' इति साधुः । अङ्कुशः । धर्मादेरिति यागज्ञानयोरित्यर्थः । ननु शास्त्राणि षट् वेदवेदान्तसांख्ययोगपाञ्चरात्रपाशुपतानि । तत्र तृतीयान्तपददानेपि लक्षणगमनादतिव्याप्तिरिति चेन्न, इष्टापत्तेः । 'एकं सद् विप्रा बहुधा वदन्ति' इति 'त्वामेवान्ये शिवोक्तेन मार्गेण शिवरूपिणम्' इति । 'यदेकमव्यक्तमनन्तरूपम्' इति च श्रुतिः । परमनेकरूपेष्वाचार्या नियामकाः 'आचार्यवान् पुरुषो वेद' 'आचार्यचैत्यवपुषा स्वगतिं व्यनक्ति' इति च । प्रकृत्यादीति प्रकृतिः स्वरूपं 'प्रकृतिमगन् किल यस्य गोपवध्वः' इति वाक्यात् । आदिपदेन शिवमायाकामाः । ननु 'अचेतनत्वेपि क्षीरवच्चेष्टितं प्रधानस्य' इति कापिलसांख्यप्रवचनसूत्रवृत्तेः सांख्यशास्त्रमादाय लक्षणस्य प्रकृतावतिव्याप्तिरिति चेन्न, प्रथमाध्याये प्रकृतेः कारणत्वाभावस्योपपादनात् । 'उपरागात् कर्तृत्वं चित्सांनिध्याच्चित्सांनिध्यात्' इति सूत्रमेकार्थीभावसामर्थ्येपीति ज्ञेयम् । ननु निरङ्कुशपदेनैव प्रकृत्यादिवारणे किं शेषेणेत्यत आहुः तेनेत्यादि । तथा च ये निरङ्कुशजगत्कर्तृत्वं प्रकृतौ मन्यन्ते तेप्यत्र पिहितमुखा इत्यर्थः । ननु भाष्ये निरङ्कुशपदाभावात् किं दलमावश्यकत्वमत आहुः प्रजापत्यादीति । वेदोक्तत्वेप्युपबृंहिते वेदोक्तेर्ये आदरः सूचितः । 'एकं सद् विप्रा बहुधा वदन्ति' इति वेदान्ते प्रजापतावपि तपोरूपब्रह्मणः स्रष्टृत्वात्, शब्दार्थयोरभेदात् । [प्रजापत्यादीति पुराणे ।

'सृजामि तन्नियुक्तोहं हरो हरति तद्वशः ।
विश्वं पुरुषरूपेण परिपाति त्रिशक्तिधृक्' इति वाक्यात् ।

१. प्रपंचमनादिकाः । २. 'एकः सन्' इतिपाठः ।

ननु न सर्वो वेदो ब्रह्मणो जगत्कर्तृत्वे मानम् । तपोयज्ञादियुक्तप्रजापतिप्रभृतीनामेव जगत्कारणत्वस्य पूर्वकाण्डे तत्तदुपाख्यानेष्ववगम्यमानत्वात् । तथावान्तरकारणत्वम् । परस्याश्रवणात् । उत्तरकाण्डे तु द्वयप्रतिपादनाद् विरोधः संदेहश्च । मीमांसायाः संदेहनिवारकत्वेऽप्येकांशस्याप्रामाण्यं स्यात् । उभयसमर्थने शास्त्रवैफल्यं वा । वेदप्रामाण्यादेव तत्सिद्धेः । बाधितार्थवचनं वेदे नास्तीत्यवोचाम ।

किंच । वेदान्ताः किं वेदशेषा, वेदा वा । नाद्यः । अनुपयोगात् । अनारभ्याधी-

भाष्यप्रकाशः ।

ब्रह्मणो निरङ्कुशं जगत्कर्तृत्वमसहमानाः प्रत्यवतिष्ठन्ते ननु नेत्यादि । तत्तदुपाख्यानेष्विति 'प्रजापतिरकामयत प्रजाः सृजेयेति स तपोऽतप्यत स सर्पानसृजत' इति । 'आपो वा इदमग्रे सलिलमासीत् । तस्मिन् प्रजापतिर्वायुर्भूत्वाऽचरत्' इत्यादिषु । तथैव पौराणेष्वपीत्यर्थः । परस्येति प्रजापत्यादिव्यतिरिक्तस्य । तथाच न पूर्वकाण्डस्य तत्र प्रामाण्यम् । ननु यथोपक्रमस्य संदिग्धत्वे निर्णय उपसंहारेण भवति, तथात्रोत्तरकाण्डेन निर्णय इति शङ्कायामाह उत्तरेत्यादि । द्वयप्रतिपादनादिति यतो वा इमानीत्यादौ ब्रह्मणः कर्तृत्वस्य, नित्यशुद्धबुद्धेत्यादावकर्तृत्वस्य प्रतिपादनाद्विरोध उभयत्रापि श्रौतत्वस्य साधारण्यादेकतरपक्षपातस्याशक्यत्वेन संदेहश्चेति तस्याः प्राबल्यान्नोत्तरकाण्डेन तन्निर्णय इत्यर्थः । तर्हि तन्मीमांसया निर्णयोऽस्त्वित्यत आह मीमांसाया इत्यादि । तथाच मीमांसायाः कर्तृत्वाकर्तृत्वान्यतरप्रसाधकत्वे अप्रसाधितांशबोधकवेदान्ताप्रामाण्यापत्तिरुभयप्रसाधकत्वे मीमांसाया एव वैयर्थ्यमित्युभयथापि कौण्ठ्यात्र तस्या निर्णायकत्वमिति सर्वस्मिन्नपि वेदे निरङ्कुशं जगत्कर्तृत्वं कुत्रापि कस्यापि न सिध्यतीत्यनादिसृष्टिवाद एवादरणीय इत्यर्थः ।

एवं ब्रह्मस्वरूपविचारेण जगत्कर्तृत्व आक्षिप्तेऽपि यदि तद्बोधकप्रमाणप्राबल्यं स्यात् तदानुपलब्धस्य धर्मस्येव तत्सिद्धिः स्यादिति वेदान्तानां प्रामाण्यमाक्षिपति किंचेत्यादि । यदि वेदशेषाः

रश्मिः ।

आदिशब्देन हरविष्णू ।] क्षेत्रज्ञानामिति जीवानाम् । प्रजापतिरिति, इयं संहितातृतीयाष्टकेस्ति । आपो वा इत्यादि, इयं सप्तमाष्टकेस्ति । पूर्वकाण्डे तत्तदुपाख्यानेषु चावगम्यमानत्वादिति भाष्येऽन्वयं मत्वाहुः पौराणेष्वपीति । तत्रेति ब्रह्मणः कर्तृत्व इत्यर्थः । उपसंहारेणेति । यथा छान्दोग्ये 'ॐमित्येतदुद्गीथमुपासीत' इत्युद्गीथोपासना ॐमितिपदात् ब्रह्मोपासना वेति संदिग्धत्व उपक्रमस्य 'स य एतमेवं विद्वानुपास्ते परोवरीय एव हास्यास्मिँल्लोके जीवनं भवति तथामुष्मिन् लोके' इत्युपसंहारेण परोवरीयस्त्वस्य परमात्मत्वस्य पूर्वोक्तस्वरप्राणादेः सकाशादतिशयेन परः परोवरीयानिति योगेन फलत्वकथकेन ब्रह्मोपासनापरत्वमुपक्रमस्य निर्णीयते । एवं पूर्वकाण्डे संदिग्धं कर्तृत्वं ब्रह्मण्युत्तरकाण्डे निर्णीयते इत्यर्थः । भाष्ये शास्त्रवैफल्ये हेतुः वेदेत्यादि । तत्सिद्धेरिति उभयसमर्थनसिद्धेरित्यर्थः । विचारमन्तरा कथं तत्सिद्धिरित्यत आहुः बाधितार्थेत्यादि । प्रकृते । धर्मस्येवेति अग्निहोत्रादेरिव कर्तृत्वसिद्धिः स्यादिति हेतोरित्यर्थः । कर्तृत्वसिद्धिस्तु वेदान्ताभावे गहना स्यात् ।

'कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः । अकर्मणोपि बोद्धव्यं गहना कर्मणो गतिः' ॥

इति गीतानुसंधेया । आक्षिपतीति अनादिसृष्टिवादी जगत्कर्तृत्वं कुत्रापि कस्यापि न सिध्यतीत्येतदर्थमाक्षिपति वेदानामन्ताभावादित्यर्थः । अनुपयोगादिति भाष्यं विवृण्वन्ति यदि

तत्त्वेन तदुपयोगित्वे पूर्वकाण्डविचारेणैव गतार्थत्वम् । विद्याप्रवेशश्च । न द्वितीयः । यज्ञाप्रतिपादनात् । मन्त्रब्राह्मणत्वाभावाच्च । तस्माद् वेदोत्तरा वेदान्ता इति

भाष्यप्रकाशः ।

स्युस्तदा द्रव्यदेवतादि प्रकाशयन्त इतिकर्तव्यतां वा बोधयन्तो वेदार्थे यागे क्वचिदुपयुक्ताः स्युः । तत्तु न दृश्यते । अथानारभ्याधीता अपि स्मृतयो गृह्यसूत्राणि च यथा, 'मानवी ऋचौ धाय्ये कुर्याद्' 'यद्वै किंच मनुरवदत्तद्भेषजम्' इति, 'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत' इत्यादिवाक्येनाग्निसमिन्धनादावुपनयनादौ चोपयुज्यमानाः शेषभावं भजन्ते । तथैते वेदान्ता अपि, 'यदेव विद्यया करोती'त्यादिवाक्येन वेदोक्तकर्मसूपयुज्यमाना वेदशेषा इत्युच्यते तदा पूर्वमीमांसायां तृतीये शेषशेषिभावस्याद्ये स्मृतिपादे तत्प्रामाण्यस्य च विचारितत्वात् तयैव गतार्थत्वाद् व्यर्थैवोत्तरमीमांसा वेदान्तानां च स्मृतिवद् विद्यास्वेव प्रवेशो, न वेद इति । नापि धर्माद्यन्यतमपुरुषार्थप्रकाशकत्वेन तत्र प्रवेशः । स्मृतावपि तौल्यात् । अत एव शिक्षोपनिषदि 'वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति'इति वेदानुवचनानन्तरमुपनिषदनुशासनं पठितम् । पुराणेऽपि साङ्गोपनिषद इति वेदेभ्यः पृथक् तन्निर्देशश्चेति युज्यत इति विद्याप्रवेशश्चेति चकारेण समुच्चीयते । यदि वेदास्तदा, 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्'इति, 'तद्भूतानां क्रियार्थेन समाम्नायः' इत्यादिपूर्वतन्त्रवाक्याद् 'वेदोऽखिलो धर्ममूलम्'इत्यादिस्मृतिवाक्याच्च यागतच्छेषान्यतरप्रतिपादकाः स्युः । यथा, 'अग्निहोत्रं जुहोति'इत्यादयः । 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा', 'वारणो यज्ञावचरः' इत्यादयश्च । ब्रह्म तु ज्ञानशेष इति नोभयरूपमिति तत्प्रतिपादकानां कथं वेदत्वम् ।

किंच । वेदो हि मन्त्रब्राह्मणसमुदायात्मकः । तत्र मन्त्रा नाम प्रयोगकालेऽनुष्ठानौपयिकार्थस्मारकाणि वाक्यानि । तद्भिन्नं च ब्राह्मणमिति, 'तच्चोदकेषु मन्त्राख्या', 'शेषे ब्राह्मणशब्दः' इति सूत्राभ्यां तल्लक्षणं निर्णीतम् । वेदान्तेषु तु विध्यनङ्गीकारेण प्रयोगाद्यभावात् तद्वाक्येषु मन्त्रत्वाद्यभावः । अत आर्यप्रसिद्धिमात्रेण वक्तव्ये वेदत्वे तेषामूषरभूमिवद् वेदोत्तरत्वेनापार्थत्वात् तेषां

रश्मिः ।

वेदेत्यादि । इतिकर्तव्यतामिति इतिशब्दः प्रकारं वदति । कर्तव्यता च क्रियाम् । तथा च क्रियाप्रकारमित्यर्थः । सामान्यस्य च भेदको विशेषः प्रकार इति तद्विदः । तत्स्विति क्वचिदप्युपयुक्तत्वं त्वित्यर्थः । अनारभ्येत्यादि भाष्यं विवृण्वन्ति अनारभ्येत्यादि । मानवी ऋचाविति व्याख्यातैषा । मनोक्तेर्भेजत्वेन तत्स्मृतयोग्निसमिन्धनादावुपयुज्यन्ते । उपयुज्यमाना इति विद्यापौष्कल्यजनकतयोपयुज्यमाना इत्यर्थः । स्मृतिवदित्यादि इतिहासपुराणमित्यपरविद्यायां श्रावणाद् 'यदेव विद्यया करोति श्रद्धया उपनिषदा वा'इति श्रुत्या तद्विद्यास्वेव प्रवेशो भवेन्न वेद इत्यापत्तिः । धर्मादीति, आदिपदेन ब्रह्माक्षरे, यद्वा आदिपदेनार्थकाममोक्षाः । तत्रेति वेदे इत्यर्थः । न द्वितीय इत्यादिभाष्यं विवृण्वन्ति यदि वेदा इत्यादि । पूर्वतन्त्रेत्यादि प्रथमाध्यायस्थसूत्राभ्यामित्यर्थः । 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते' 'तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात्' तेष्वेव पदार्थेषु भूतानां वर्तमानानां पदानामित्यर्थः । उभयोरेकतिङो दर्शनाद्वाक्यादित्युक्तम् । आमिक्षेति घनीभूतः पिण्ड इत्यर्थः । यज्ञावचर इति यज्ञप्रचारहेतुः । इत्यादयश्चेति यागतच्छेषप्रतिपादका इत्यर्थः । नोभयरूपमिति न यागतच्छेषरूपमित्यर्थः । सूत्राभ्यामिति द्वितीयाध्यायस्थाभ्यामित्यर्थः । प्रथमे 'शिष्टकोपे विरुद्धमिति

तेषां किं स्यादिति चेत् । मैवम्। अस्ति तावद् वेदत्वम् । अध्ययनादिभ्यः स्मरणाच।प्रमाणं च सर्वोऽपि वेदः स्वार्थे। स च न यज्ञमेव् ब्रह्म भवतु । न चैतावता अवेदत्वम्। अतिप्रसङ्गात्।शक्यते ह्यग्निहोत्रादीनामन्यतरदनन्तर्भाव्य

---

भाष्यप्रकाशः ।

विचारे किं फलं स्यात्। सर्वोऽपि प्रयोजनोद्देशेनैव प्रवर्तत इति फलाभावात् प्रवृत्तिविघाते तन्मीमांसाऽप्यपार्थेति तत्साधिते ब्रह्मणो जगत्कर्तृत्वेऽत्यन्ताभिनिवेशो न कार्य इत्यर्थः।

अत्र समादधते मैवमित्यादि। न वेदान्तेषु वेदोपरत्वं, किंतु वेदत्वमेव । अध्ययनाध्यापनज्ञानविधिभिर्वेदं पठन्तः पाठयन्तोऽर्थं चावगच्छन्त आर्याः स्वरपूर्वकमनध्यायशूद्राऽश्रवणादिनियमान् पालयन्त एव तथा कुर्वन्तीत्याचारपरंपरया,

'स्वयंभूरेष भगवान् वेदो गीतस्त्वया पुरा।
शिवाद्या ऋषिपर्यन्ताः स्मर्तारोऽस्य न कारकाः' ॥ इति

पुराणोक्तस्य स्मरणस्यात्रापि तुल्यत्वेन च तन्निर्धारात् । किंचौत्पत्तिकसूत्रे बादरायणग्रहणं पूजार्थं कृत्वा अलौकिकेऽर्थे परानपेक्षं वेदस्य प्रामाण्यं जैमिनिना प्रतिपादितम्। ततश्च सोऽलौकिकोऽर्थः को वेत्यपेक्षायां यथा तन्मते यज्ञस्तथा व्यासमते ब्रह्म। अनुपलब्धार्थत्वस्योभयत्रापि तौल्यात्।

किंच। यागप्रतिपादकत्वेन वेदत्वं मन्वानो भवान् ब्रूताम् । किं यावद्यज्ञप्रतिपादकत्वं वेदत्वम्, उत यत्किंचित्तत्प्रतिपादकत्वम्, अथवा यथाकथंचित् तत्प्रतिपादकत्वमिति । नाद्यः । अग्निहोत्रादिप्रतिपादकस्य भागस्य तदितरयज्ञाप्रतिपादकत्वेनावेदत्वप्रसङ्गात् । न द्वितीयः । सर्वस्य तथात्वप्रसङ्गात् । मनुः पुत्रेभ्यो दायं व्यभजदित्याद्यर्थवादस्यापि तथात्वप्रसङ्गाच्च । तृतीयश्चेत् सिद्धं ब्रह्मप्रतिपादकत्वेऽपि वेदत्वम्। वक्ष्यमाणरीत्या तेषामपि यज्ञार्थत्वेन तथात्वादिति। तदेतदुक्तं शक्यते हीत्यादिना। अत्रान्यतममिति वक्तव्ये अन्यतरदिति प्रयोगस्तु, महाभाष्ये 'प्रत्ययः' 'परश्च' इत्यत्र निमित्तविचारं प्रकृत्य तदुदाहरणे तद्यथा बहुष्वासीनेषु कश्चित् कंचित् पृच्छति, कतरो देवदत्त इत्यत्रोपाख्यनङ्गीकाराद् बोध्यः।

रश्मिः ।

चेत्' 'न, शास्त्रपरिमाणत्वात्'इत्यधिकरणे। आचारस्यापि प्रामाण्यादाहुः अध्ययनेत्यादि। प्रमाणं चेत्यादि भाष्यं विवृण्वन्ति किंचौत्पत्तिकेत्यादि । अनुपलब्धेति अनधिगतार्थगन्तृत्वं प्रमाणमिति लक्षणस्मारकपदम् । अवेदत्वप्रसङ्गादिति । एतेनातिप्रसङ्गादिति भाष्यं विवृतम् । शक्यते हीत्यादिभाष्यस्यातिप्रसङ्गादिति भाष्यविवरकत्वात् । तथात्वादिति यथाकथंचिद्यज्ञप्रतिपादकत्वादित्यर्थः । तदेतदिति किंच यागेत्यादिना विवृतमित्यर्थः। न चैतावता ब्रह्मप्रतिपादकत्वेनावेदत्वमग्निहोत्रादिप्रतिपादकवेदभागेषु। अतिप्रसङ्गादवेदत्वप्रसङ्गात्। यतोग्निहोत्रदर्शपूर्णमासादीनां मन्त्रविधिनिषेधनामधेयार्थवादसंबन्धिनां मध्येन्यतरद् एकतरद् वेदेनन्तर्भाव्य वेदाद्बहिःकृत्य वेदे वेदत्वं वक्तुं शक्यतेऽपि तु न, तस्मादतिप्रसङ्ग इति भाष्यार्थः। अग्निहोत्रादिषु लक्षणापर्याप्तिं मत्वा न प्रति तद्वेदलक्षणं न वक्तव्यमतो यथाकथंचित्तत्प्रतिपादकत्वं वेदत्वं तच्च वेदान्तेष्वपीति फलितोर्थः । उपाख्यनङ्गीकारादिति । अन्नायमाशयः । कतरकत-

तथा वक्तुम् । तस्माद् ब्रह्मापि प्रतिपादयन्तो वेदान्ता वेदत्वं न व्यभिचरन्तीति । मन्त्रब्राह्मणरूपत्वं चोत्पश्यामः । क्रमेण मन्त्रः ।

---

भाष्यप्रकाशः ।

स्वरूपतः संदेहं वारयन्ति मन्त्रेत्यादि । तच्चोदकेत्यादिसूत्राणां विचारे आम्नातत्वे सति कर्मसाधनत्वेन विधिबोधितोच्चारणकः शब्दो मन्त्रः । तथात्वे सति मन्त्रभिन्नः शब्दो ब्राह्मणमिति तयोर्लक्षणम् । तदुभयात्मकत्वं च वेदलक्षणं सिद्ध्यति । न तु विधेयार्थस्मारको मन्त्र इति लक्षणम् । तस्य, वसन्ताय कपिञ्जलानालभेतेत्यत्राऽव्याप्तेः । एवं मननहेतुर्मन्त्र इत्यस्य

रश्मिः ।

मौ हि 'किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्' 'वा बहूनां जातिपरिप्रश्ने डतमच्' इति सूत्राभ्यां विहितौ तत्रैतादृशमहाभाष्यप्रयोगात् बहूनां निर्धारणेपि डतरचः इष्टत्वात्पूर्वसूत्रे द्वयोर्ग्रहणं प्रायोभिप्रायम् । तथा च वार्तिकम् 'किमादीनां द्विबह्वर्थे प्रत्ययविधानादुपाख्यानर्थक्यम्' इति अत्र कैयटः द्वयोरिति जातिपरिप्रश्ने इति च न कर्तव्यमिति भावः । इतीति मनोरमायामुक्तम् । अन्यतरान्यतमशब्दौ तु स्वभावादेव द्विबहुविषये निर्धारणे वर्तेते । तत्र हेतुस्तु किंयत्तद्भ्य एव तयोर्विधानादिति शेखरे उक्तः । तथा च सूत्रे द्वयोर्ग्रहणं प्रायोभिप्रायमिति स्वभावाद् द्विबहुविषये निर्धारणे वर्तेते इत्यत्रापि द्विशब्दोपादानं प्रायोभिप्रायमिति बहूनां निर्धारणेप्यन्यतरदिति प्रयोगः साधुरेवेति । द्वयोर्बहूनामिति चोपाधी तयोर्नाङ्गीकारादित्यर्थः । तथाच भागवतैकादशे भगवद्वाक्यं

'आसीज्ज्ञानमथो ह्यर्थ एकमेवाविकल्पितम्' इत्युपक्रम्य,

'वाङ्मनोगोचरातीतं द्विधा समभवद् बृहत् ।
तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका ।
ज्ञानं त्वन्यतमो भावः पुरुषः सोभिधीयते' ।

इत्यत्र तयोरन्यतम इति । न च किमोस्मिन् विषये डतरजपीत्यनेन बहूनां निर्धारणे किमः एव डतरजिति नियम्यत इति शङ्क्यम् । न तत्सूत्रं किंतूक्तमहाभाष्यसिद्धं वाक्यमित्यदोषात् । स्वरूपत इति मन्त्रब्राह्मणे वेदस्य स्वरूपे 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' इति । स्वमतं व्याकर्तुं मीमांसकमतेनाहुः तच्चोदकेत्यादिसूत्राणामिति पूर्वतन्त्रे द्वितीये 'तच्चोदकेषु मन्त्राख्या', 'शेषे ब्राह्मणशब्दः', 'अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः स्यात्', इति सूत्राणां विचार इत्यर्थः । यद्यपि शास्त्रदीपिकायां यत्राभियुक्तानां मन्त्र इति प्रसिद्धिः स मन्त्रः अवशिष्टं ब्राह्मणमिति लक्षणं तृतीयसूत्रे चोहप्रवरनामधेयानामभियुक्तप्रसिद्ध्यभावादेवामन्त्रत्वमिति स्थितं तथापि सूत्रत्रयविचारे त्विदमेव लक्षणमिति विचारपदसामर्थ्यम् । तथाचाम्नातेष्विति सूत्रभाष्यं 'आम्नातत्वे सति तच्चोदकेषु मन्त्राख्या तथात्वे सत्येव शेषे ब्राह्मणशब्दः' तदाह आम्नातेषु विभागो द्विविधः इति 'पत्नि कति ते जाराः' इत्यादिप्रश्नोत्तरीभूतलौकिकवाक्यानां संकल्पस्य च मन्त्रत्ववारणाय सत्यन्तम् । अध्ययनविधिना सर्वमेवोच्चारणं प्रेरितमिति ब्राह्मणेतिव्याप्तिवारणाय तृतीयान्तम् । विविषमनुष्ठानं यत्र विधिना बोध्यते तत्र मन्त्रस्य साधनत्वेन बोधनादनेनेदं कुर्यादिति । तत्त्वेन चोदका इति न चास्य लक्षणस्य प्रलगाशीर्मन्त्रादिष्वव्याप्तिः, विषयत्वेन तेषामपि अपसाधनत्वात् । मीमांसकानां सिद्धान्तलक्षणं वक्तुं तन्मतमनुवदन्ति न त्विचत्यादि

भाष्यप्रकाशः।

ब्राह्मणेऽतिव्याप्तेः। असन्तस्त्वान्त उत्तमपुरुषान्त इत्यादीनां परस्परं प्रयोगकरणभूतः शब्द इत्यस्य प्रत्यगाशीर्मन्त्रे चाव्याप्तेः। किंत्वभियुक्तानां यत्र मन्त्र इति समाख्यानं स मन्त्र इति लक्षणमङ्गीक्रियते। यदि तु चरणव्यूहानुरोधेन वसन्तायेत्यादीनां ब्राह्मणत्वमङ्गीकृत्य प्रयोगकरणभूतः शब्दो मन्त्र इति सौत्रमेव लक्षणमाद्रियते, तदापि जपोपासनादिप्रयोगं प्रत्यपि प्रत्यगाशीःप्रभृतिमन्त्राणां विषयत्वादिना करणत्वमस्त्येवेत्यदोषः। तच्चर्क्सामयजुःष्वेव प्रसिद्धम्। निगदादीनामपि तत्रैव निवेशः। ब्राह्मणलक्षणमप्यत एव सिद्धम्। वेदान्तेषु च, सत्यं ज्ञानमि-

रश्मिः।

अङ्गीक्रियते इत्यन्तम्। अव्याप्तेरिति अस्य मन्त्रस्य विधिरूपत्वेन विधेयार्थाभिधायकत्वेन तत्त्वाभावात्। असन्त इत्यादि 'विप्रुषा५ शान्तिरसी'त्यसिपदान्तः, 'इषे त्वे'ति त्वान्तः, वाचा त्वा होत्रा प्राणेनोद्गात्रा चक्षुषाध्वर्युणा मनसा ब्रह्मणा श्रोत्रेणाग्नीध्रेरेतैस्त्वा पञ्चभिर्दैव्यैरृत्विग्भिरुद्धरामीत्युत्तमपुरुषान्तः, बर्हिर्देवसदनं दामीति च। परस्परमिति अव्याप्तिरिति शेषः। त्रिषु परस्परमेकलक्षणप्रवेशेन लक्षणान्तराप्रवेशात्। प्रत्यगाशीरिति 'आयुर्घृतम्', 'अग्ने आयुर्मे देहि' इति मन्त्रे इत्यर्थः। अङ्गीक्रियत इति मीमांसकैरिति शेषः। दूषणं तु भावार्थपादेऽनाम्नातेष्विति सूत्रभाष्ये उक्तम्। तथा हि इदं लक्षणं प्रकरणभेदेन स्थितयोः ऋक्सामयोरेव संभवति न तु कृशररूपयजुःशाखान्तरेपि। वाजसनेयके ब्राह्मणे ब्राह्मणं वसन्ताय कपिञ्जलानालभेत ग्रीष्माय कलविङ्कानिति न मन्त्रौ। ननु कथं मन्त्रमध्ये पठितयोरमन्त्रत्वमिति चेन्न त्रिगुणपाठाय यजुर्वेदार्थममन्त्रयोरपि तत्र प्रक्षेपात्।

त्रिगुणं पठ्यते यत्र मन्त्रब्राह्मणयोः सह।
यजुर्वेदः स विज्ञेयः शेषाः शाखान्तराः स्मृताः॥

इति चरणव्यूहवाक्यादिति तद्विवरणे चैतदतिरिक्तस्थले विधायकत्वं न क्वापि मन्त्रे दृष्टम्। अत्र च मन्त्रत्वं संदिग्धम्। ब्राह्मणे तु विधायकत्वं प्रसिद्धमिति लिङ्गभूतं लिङ्गं च स्थानाद्बलिष्ठमिति। अत उक्तमेव लक्षणं ज्याय इति। ननु कथं तर्हि चोदकेषु मन्त्राख्येति सूत्रे अतः कर्मणि यागजपादौ यः साधनभूतः शब्दः स मन्त्रः कर्मकरणः शब्दो मन्त्र इत्युक्तं भवतीति भाष्यमित्याशङ्क्य तत्रेष्टमापादयन्ति यदि त्वित्यादि। चरणव्यूहस्तु 'त्रिगुणं पठ्यते यत्र' इति वाक्यम्। आद्रियत इति द्रा कुत्सितगतौ 'द्युमास्थे'तीत्वम्। जपोपासनेति आदिशब्देन किंचिद्ग्राह्यम्। विषयत्वादिनेति आदिशब्देनाशिष्ट्वम्। अदोष इति तथा चोभयमपि सिद्धान्तलक्षणमिति हृदयम्। तच्चेति मन्त्रलक्षणं चेत्यर्थः। निगदादीनामिति परप्रत्यायनार्था मन्त्रा निगदाः प्रोक्षणीरासादयः इध्माबर्हिरुपसादयः इन्द्र आगच्छ हरिव आगच्छ इत्यादयः। आदिपदेन निविन्मन्त्राः अग्ने महानसि ब्राह्मणभारतेत्येवंरूपाः। तत्रैवेति। 'यजूंषि वा तद्रूपत्वात्' इति सूत्रेण यजुष्ष्वेवेत्यर्थः। ब्राह्मणेत्यादि अत एव पत्नि कति ते जारा इत्यादिलौकिकवाक्यानां संकल्पस्य च ब्राह्मणत्ववारणस्यावश्यकत्वादेव सिद्धान्तलक्षणं सिद्धमित्यर्थः। सत्यन्ताभावे लौकिकवाक्ये संकल्पे चातिव्याप्तिरिति भावः। नापीति करणबहुलं ब्राह्मणं इत्यददाः इत्ययजथा, इत्यपचथा इति ब्राह्मणो गायेदित्यस्मिन् ब्राह्मणेन गातव्ये मन्त्रेतिव्याप्तेः। इत्याहेति वाक्योपनिबद्धं ब्राह्मणमित्यपि न। राजाविषं भगं भक्षीत्याह यो वां रथाः क्षुधिरस्मीत्याहेत्यनयोरतिव्याप्तेः। आख्यायिकारूपं ब्राह्मणमित्यपि न, यमयमीसंवादसूक्तादावतिव्याप्तेः। नापि हेत्वाद्यन्यतमत्वं तत्त्वं, मन्त्रेष्वपि हेत्वादिसत्त्वात्। ब्राह्मणे तेन ह्यन्नं क्रियते इति हेतुः। तदङ्गो दधित्वमिति निर्वचनं,

ब्रह्मप्रतिपादकं ब्राह्मणम्, तच्छेषाः सृष्ट्यादिप्रतिपादकाः । यद्यपि न विधीयते, तथापि तादृशमेव ज्ञानं फलायेति युक्तमुत्पश्यामः । पूर्ववैलक्षण्यं तु भूषणाय ।

भाष्यप्रकाशः ।

त्यादीनामृचाम्, अच्युतमसीत्यादीनां यजुषां, हावु हावु हावु इत्यादीनां साम्नां च विद्यमानत्वात् तान्येव मन्त्रः । ऋगित्युपलक्षणम् । तद्भिन्नं ब्रह्मप्रतिपादकं ब्राह्मणम् । ब्रह्मप्रतिपादकभागशेषाः सृष्ट्यादिप्रतिपादका भागा ब्राह्मण एव निविशन्ते । ततश्च मन्त्रब्राह्मणसमुदायरूपत्वात् सिद्धं वेदान्तानां वेदत्वमिति । तर्हि वेदोपरत्वं कथं निवर्ततामित्यत आहुः यद्यपीत्यादि । तथाच वेदे बाधितार्थवचनस्याभावादविधीयमानमपि ज्ञानं यथोक्तं फलं जनयिष्यत्येवेति नोपरत्वमित्यर्थः । ननु पूर्वमीमांसायां विहितस्यैव फलवत्त्वं साधितमिति कथं तथेत्यत आहुः पूर्वेत्यादि । तथाच, गुणे त्वन्यायकल्पनेति तत्रैवोक्तत्वात् वेदगुणभूतस्य जैमिनीयस्यैव निर्णयस्य हीनाधिकारिपरत्वं वेदविरोधे कल्पनीयमित्यर्थः ।

रश्मिः ।

अमेध्या वै माषा इति निन्दा, वायुर्वै क्षेपिष्ठा देवतेति प्रशंसा, तद्विचिकित्सन् जुहवानीति संशयः, यजमानेनेत्यादि विधिः, माषानेव मह्यं पचतेति परकृतिः, पुरा ब्राह्मणा अभैषुरिति पुराकल्पः, यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणान् चतुःकपालान्निर्वपेदिति विशेषावधारणकल्पना । एवं मन्त्रेऽपि इन्दवो वामुशन्ति हीति हेतुः, उदानिषुर्महीरिति तस्मादुदकमुच्यते इति निर्वचनं, मोघमन्नं विन्दते अप्रचेता इति निन्दा, अग्निर्मूर्धा दिवः ककुत्पतिरिति प्रशंसा, अधःस्विदासीदुपरिस्विदासीदिति संशयः, कपिञ्जलानालभेत इति विधिः, सहस्रमयुतं ददिति परकृतिः, यज्ञेन यज्ञमयजन्त देवाः इति पुराकल्पः । ऋगेव मन्त्र इति भाष्यं व्याकुर्वन्ति वेदान्तेषु चेत्यादि । ऋचामिति 'तेषामृग्यत्रार्थवशेन पादव्यवस्था' इति सूत्रोक्तमर्थवशेन व्यवस्थितपादत्वरूपं लक्षणमन्त्रानुस्यूतमिति ऋचामित्यर्थः । तेषामित्यस्य मन्त्राणामित्यर्थः । अर्थवशेनेत्यनेन छन्दोनुरोधेन मगणादिकृता 'पादव्यवस्था व्यावर्तिता । यजुषामिति 'शेषे यजुःशब्दः' इति सूत्रोक्तमृक्सामातिरिक्तमन्त्रत्वरूपं लक्षणमन्त्रानुस्यूतमिति यजुषामित्यर्थः । साम्नामिति 'गीतिषु सामाख्या' इतिसूत्रोक्तं ऋक्षु यद्गानं तद्रूपत्वरूपं लक्षणमन्त्रानुस्यूतमिति साम्नामित्यर्थः । तान्येव मन्त्र इति मन्त्रपदोत्तरं यदेकत्वं तत्प्रकृत्यर्थावच्छेदके मन्त्रत्वेऽन्वेति मन्त्रत्वं च ऋग्यजुःसामनिष्ठमेकमेवेति नायोग्यता । न च पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति व्युत्पत्तिविरोधः । अनेकव्रीहिव्यक्तितात्पर्यके संपन्नो व्रीहिरितिवाक्येऽप्येकवचनदर्शनेन तादृशव्युत्पत्तिसंकोचस्यावश्यकत्वादित्यन्यत्र विस्तरः । ननु भाष्ये ऋगित्युक्तेः कुतो यजुःसाम्नोर्ग्रहणमित्यत आहुः ऋगित्यादि । ब्रह्मप्रतीत्यादि भाष्यं विवृण्वन्ति तद्भिन्नमित्यादि । साधितमिति द्वितीयाधिकरणे साधितमित्यर्थः । तथाच शाबरभाष्यम् 'यः पुरुषं निःश्रेयसेन संयुनक्ति स धर्मशब्देनोच्यते' इति । तत्रैवेत्यादि पूर्वतन्त्रे नवमस्य तृतीयपादे 'विप्रतिपत्तौ विकल्पः स्यात् समत्वाद् गुणे त्वन्यायकल्पनैकदेशत्वात्' इत्यधिकरणे अदितिः पाशां प्रमुमोक्तुं अदितिः पाशान् प्रमुमोक्तैतानिति पाशमन्त्रावेकवचनान्तबहुवचनान्तौ तत्र बहुवचनान्तः किंप्रकृतावेवाग्नीषोमीये निविशते उत बहुपाशकेषु पशुगणेषूत्कृष्यते नोत्कर्षः किंतु गुणे कारकगतसंख्याभिधायित्वेन गुणभूते बहुवचने लक्षणाकल्पना पाशावयवगतैव बहुत्वं लक्ष्यते इति । एवमुपात्तेषु गणनाद्वेदगुणभूतायां पूर्वमीमांसायामेव तत्त्वं कल्पनीयमित्यर्थः । उपलक्षणादैलक्षण्यशाब्दमेवरूपंभूषणायेति

काण्डद्वयस्यान्योन्योपकारित्वाय साधारणग्रहणम् । 'यदेव विद्यया करोति' इत्यादिना पूर्वशेषत्वं सर्वस्य । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इत्यादिना सर्वस्योत्तरशेषत्वम् । कर्मब्रह्मणोः क्रियाज्ञानयोर्धर्मिपरत्वेनैक्यात् कर्तृवाक्येषु सर्वत्र न विरोधः । तस्माच्छास्त्रयोनित्वं सिद्धम् ।

---

भाष्यप्रकाशः ।

एवं माष्ट्रादिकृतं पूर्वपक्षं परिहृत्य काण्डद्वयस्यैकवाक्यत्वबोधनाय शास्त्रपदप्रयोग इति पर्यवसितं तदर्थमाहुः काण्डेत्यादि । एकवाक्यत्वप्रकारमाहुः यदेवेत्यादि इदं चतुर्थाध्याये, 'यदेव विद्ययेति हि' इतिसूत्रे व्युत्पादयिष्यते । ऐक्यादिति अभिधेयप्रयोजनयोरैक्यात् । तथाच, 'यज्ञो वै विष्णुः' इति श्रुतेर्धर्मो यस्मां मदात्मकः,

'मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्यते ह्यहम्,
एतावान् सर्ववेदार्थः शब्द आस्थाय मां भिदाम् ।
मायामात्रमनूद्यान्ते प्रतिषिध्य प्रसीदति' ॥

इत्येकादशस्कन्धे भगवद्वाक्याच्च ब्रह्मवादेन सर्वस्य ब्रह्मात्मत्वावगतिरुपनिषत् 'विद्यात्मनि भिदाबाधः' इति वाक्याद् भेदबुद्धिबाधो विद्या तत्पूर्वकं यज्ञादिकरणे कर्मपौष्कल्यम् । ते च वेदान्ताधीने इति पूर्वकाण्डस्य वेदान्तापेक्षित्वं, वेदानुवचनयागादिसाधनैर्भगवत्प्रसादाच्छुद्धे चेतसि विद्योदेतीति साधनावबोधकवेदभागापेक्षित्वं वेदान्तानाम् । यद्यप्युभयत्र पुरःस्फूर्त्या कर्म ज्ञानं च यथायथं प्रतीयते, तथापि पूर्वोक्तश्रुतिस्मृतीनां वक्ष्यमाणानां च तासां विचारे क्रियाज्ञानयोर्धर्म्यात्मकत्वेनाभिधेयस्यैक्यम् । समुच्चिताभ्यां ताभ्यां यथाधिकारं ब्रह्मभावः, परप्राप्तिश्च फलमिति प्रयोजनस्याप्यैक्यमित्येवं सिद्धं एकवाक्यत्वे

रश्मिः ।

न व्याख्यातम् । माष्ट्रादीति पूर्वमीमांसायां विहितस्यैवेत्यादिना पूर्वं कृतम् । काण्डद्वयस्येत्यादि भाष्यमारभ्य विवृतम् 'अभिधेयप्रयोजनयोरैक्या'दित्यन्तं स्फुटीकुर्वन्ति स्म तथाचेति । ब्रह्मात्मकत्वेति श्रुत्यन्तरे च 'यो वा एतदक्षरमविदित्वा गार्गि अस्मिन् लोके जुहोति ददाति तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवानेवास्य स लोको भवति' इति बृहदारण्यके, 'य एवास्मि स सन् यजे' इति ब्रह्मात्मकत्वावगतिर्यज्ञाङ्गम् । उप समीपे सीदतीत्युपनिषत् । ते चेति उपनिषद्विद्ये इत्यर्थः । यदेव विद्ययेति भाष्यं स्फोटयित्वा तमेतमिति भाष्यं स्फुटीकुर्वन्ति वेदानुवचनेति वेदानुवचनानि यागादीनि साधनानि तैः 'तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्' इति श्वेताश्वतरे दर्शनसाधनत्वेन प्रसाद उक्तः । स शुद्धिहेतुरित्याशयेनाहुः भगवदिति । सप्तम्यन्तचेतःपदोपादानेन दर्शनं सर्वात्मभावरूपं विवक्ष्यते तस्य 'स मानसीन आत्मा जनानाम्' इतिश्रुत्या चेतसि विद्यात्मकस्योदय इति मुख्यविद्या । सर्वत्र तु यागादिसाधनैः शुद्धमनसि ज्ञानं भक्तिर्वोदेतीति । कर्मब्रह्मणोरित्यादिभाष्यं विवृण्वन्ति यद्यपीत्यादि । अभिधेयस्येति पूर्वोत्तरकाण्डाभिधेयस्य कर्मज्ञानरूपस्य धर्मिणैक्यम् । ताभ्यामिति कर्मज्ञानाभ्याम् । समुच्चयोऽत्र न रामानुजभाष्याभिमतः सिद्धान्तग्रन्थत्वात् । तथाचोक्तभाष्योक्तसमुच्चय एवं च यथाधिकारमित्यैकाल्यालिकचित्तशुद्धी अनतिक्रम्य ब्रह्मभावः । ज्ञानद्वारा ब्रह्मत्वं, भक्तिद्वारा परप्राप्तिः । अप्यैक्यमिति 'ते प्राप्नुवन्ति मामेव' इति गीतावाक्यः । अक्षरप्राप्तानां स्वमार्गत्वात् । कर्तृवाक्ये-

## केचिदत्र जन्मादिसूत्रं लक्षणत्वादनुमानमिति वर्णयन्ति ।

भाष्यप्रकाशः ।

सर्वत्र कर्तृत्वेनोच्यत इति न पूर्वोत्तरकाण्डयोर्विरोधः । शेषशेषिभावस्याविशिष्टत्वेऽपि पुरुषकर्मफलेषु यथा आशंसायाः फले पर्यवसानात् फलमेव पूर्वकाण्डे मुख्यं तथात्राऽपीति फलवाक्यवत् वेदान्तानामेव मुख्यत्वज्ञापनाय कौषीतकिब्राह्मणे 'ऋचां मूर्धानं यजुषामुत्तमाङ्गं साम्नां शिरोऽथर्वणां मुण्डमुण्डम्' इति मूर्धत्वादि श्राव्यते । तस्मादुपरलगन्धस्याप्यभावात् ब्रह्मणः शास्त्रोक्तकारणत्वं निःप्रत्यूहमित्यर्थः ।

एवं सिद्धान्तमुक्त्वा आधुनिकानामन्येषां भाष्यकृतां ब्रह्मणः कर्तृत्वस्य शास्त्रैकप्रमाणकत्वांशे विप्रतिपत्त्यभावात् तन्मतानुवादमकृत्वा केषांचिद् वैशेषिकाद्यनुसारिणां मतमनुवदन्ति केचिदित्यादि । अत्रैवं बोध्यम् । वैशेषिकादिदर्शनाभिमानिनस्तावद् बाह्यानां मीमांसकानां कापिलानां च निरासाय निखिलजगदेककर्तारमीश्वरमनुमानेनैव साधयन्ति । तथाहि । जगत् कार्यं सावयवत्वात्, महत्त्वे सति क्रियावत्त्वात्, महत्त्वे सति मूर्तत्वाच्च घटादिवदिति जगतः कार्यत्वे सिद्धे, जगत् बुद्धिमत्कारणपूर्वकं कार्यत्वात् घटादिवदिति साधनेन जगतस्तथात्वे सिद्धे, स बुद्धिमान् को वेत्यपेक्षायामत्र जगत्त्वेन क्षित्यादिवायुपर्यन्तानां विचित्राणां महाभूतानां संग्रहात् तादृशां तेषां जगत्त्वेन तदुपादानोपकरणसंप्रदानप्रयोजनाभिज्ञः कश्चिदेकः पुरुष आस्थेयः । कार्यत्वस्य तदुपादानोपकरणसंप्रदानप्रयोजनाभिज्ञकर्तृकत्वव्याप्तत्वात् । एवं च क्षेत्रज्ञानां तादृशाभिज्ञत्वाभावेन प्रकृतेश्चेतनत्वाभावेन च जगत्कर्तृत्वनिवृत्तौ सुखेन जगत्कर्तुरीश्वरस्य सिद्धिरिति । एवं प्रमाणान्तरेणेश्वरस्य तज्जगत्कर्तृत्वस्य च सिद्धौ जन्मादिसूत्रस्यापि लक्षणत्वात् तदितरभेदसाधने पृथिवीत्ववदीश्वरश्चेतनान्तरव्यतिरिक्तः, जगज्जन्मादिकर्तृत्वात्

रश्मिः ।

व्वित्यंशं व्याचक्रुः सर्वत्रेति । ब्रह्मैवेति धर्म्येव । विरोध इति ज्ञानक्रियाशक्तिप्रतिपादनविरोधः । अत्रान्योन्याश्रयाभावायाहुः शेषशेषीति । पूर्वकाण्ड इति इदं तृतीयस्य प्रथमपादे 'द्रव्यगुणसंस्कारेषु बादरिः' 'कर्माण्यपि जैमिनिः फलार्थत्वात्'इत्यादिसूत्रेषु चिन्तितम् । आशंसा-इच्छा तस्याः । मूर्धत्वादीति आदिशब्देनोत्तमाङ्गत्वादिः । तस्मादिति मन्त्रब्राह्मणरूपत्वे सति अविहितज्ञानस्य फलसाधकत्वात् । तथाच ब्रह्मावन्योन्याश्रयो नास्तीति भावः । वस्तुतस्तु शास्त्रमेकमेवेति नान्योन्याश्रयशङ्का । निःप्रत्यूहमिति निष्प्रत्यूहमिति पाठो भाति 'इदुदुपधस्य चाप्रत्ययस्य' इतिसूत्रात् । निर्भिन्नस्येदुदुपधस्य वा वाच्यम् 'निःप्रत्यूहो महान् भोगः' इति सेवाफले श्रीमदाचार्यप्रयोगात् । पौराणप्रयोगो वा बोध्यः । भाष्ये । तस्मादिति कर्तृज्ञानयोर्धर्मिरूपत्वेन ग्रहणात् । सिद्धमिति ब्रह्मणः । प्रकृते । वैशेषिकादीति वैशेषिकाः प्रमाणद्वयवादिनः । आदिशब्दोक्ता नैयायिकाः प्रमाणचतुष्टयवादिनः । मूर्तत्वाच्चेति तत्त्वं च परिच्छिन्नपरिमाणवत्त्वम् । तथात्व इति बुद्धिमत्कारणपूर्वकत्व इत्यर्थः । तदुपादानेत्यादि तस्य कार्यस्योपादानं चोपकरणं च संप्रदानं च प्रयोजनं चेति द्वन्द्वोत्तरं षष्ठीतत्पुरुषोऽपि तेष्वभिज्ञ इति सप्तमीसमासः । लक्षणेति इतरभेदसाधने हेतुः । लक्षणत्वमितरभेदसाधकत्वमिति । तदितरेत्यादि तस्येश्वरस्येतरस्माद्भेदसाधने पृथिवीत्ववत् पृथिवी इतरेभ्यो

भाष्यप्रकाशः।

यन्नैवं तन्नैवमित्यनुमानरूपं सूत्रमित्येकं मतम्। तदसंगतम्। जगत्कर्तृसाधकस्य कार्यत्वस्य हेत्वाभासत्वात्। यथाहुर्भास्कराचार्याः। जगत् न बुद्धिमत्कारणपूर्वकं कार्यत्वाद् बीजोत्पन्नाङ्कुरवदिति साधारणो हेतुः। किं च जगता सहेश्वरसंबन्धस्यात्यन्तापरिदृष्टत्वेन साध्यस्य पक्षधर्मत्वाभावादयं विरुद्धोऽपि। यस्यकस्यापि बुद्धिमतः साधने सिद्धसाधनत्वं च। तथा घटादिदृष्टान्तबलेन कार्यत्वसमानाधिकरणस्यानीश्वरासर्वज्ञशरीरेन्द्रियादिमत्कर्तृकत्वस्य सिद्ध्या विवक्षितेश्वरासिद्धिश्च। तादृशजीवसिद्ध्याऽर्थान्तरत्वेनापि तदसिद्धिश्च। नचैवं घटादिदृष्टान्तेन शब्दे कृतकत्वादनित्यत्वसाधने दृष्टान्तीयानां पाक्यत्वादीनामापत्त्याऽनुमानोच्छेदप्रसङ्गः। लिङ्गिनः शब्दस्य प्रमाणान्तरगोचरत्वेन शब्दे पाक्यत्वादीनां निवृत्त्या तदनुच्छेदात्। अत्यन्तापरिदृष्टे ब्रह्मणि त्वन्वयव्यतिरेकपरिशुद्धानां तेषां निवर्तकस्याभावेन तादृशधर्मापत्तेरनिवार्यत्वात्। अतः शास्त्रैकसमधिगम्यं ब्रह्मेति।

रामानुजाचार्यास्त्वेतेषु दूषणेषु शैथिल्यं प्रदर्श्य प्रकारान्तरेण शास्त्रैकसमधिगम्यत्वं

रश्मिः।

भिद्यते गन्धवत्वात् इत्यनुमानलिङ्गवदित्यर्थः। यन्नैवं तन्नैवमिति देवदत्तवदित्यर्थः। अनुमानरूपमिति अस्येति जगतो जन्मादि यत इति 'जनिकर्तुः प्रकृतिः' इतिसूत्रेण पञ्चम्यन्तम्। तस्य लक्षणत्वाद्धेतुत्वं तत एव इतरभेदसाधकत्वमित्यनुमानरूपत्वं जगज्जन्मादिकर्तृत्वसिद्धौ हि तेन चेतनान्तरव्यतिरिक्तत्वं साधनीयं तत्सिद्धिस्तु जगत् बुद्धिमत्कारणपूर्वकं कार्यत्वात् घटवदित्यनुमानसाध्या। तदेवानुमानं दुष्टं किंतरामेतदित्याशयेनाहुः जगत्कर्त्रित्यादि। साधारण इति साध्यवदन्यवृत्तित्वं विपक्षवृत्तित्वं वा साधारणत्वम्। साध्यं बुद्धिमत्कारणपूर्वकत्वतदभावस्तद्वान् बीजोत्पन्नाङ्कुरादिस्तदन्यो घटादिस्तद्वृत्तित्वं कार्यत्व इति। विपक्षो बीजाङ्कुरादिः तद्वृत्तित्वं कार्यत्व इति च लक्षणसंगतिः। तथाचान्वयव्याप्त्या साध्यतदभावयोः साधकः साधारण इति फलितम्। यथा धूमवान् वह्नेरिति। तत्रायोगोलके साध्याभावसाधकत्वं बोध्यम्। साध्यस्येति बुद्धिमत्कारणपूर्वकत्वस्येत्यर्थः। विरुद्धोपीति विरुद्धत्वं तु साध्यासामानाधिकरण्यं तथाच साध्यानधिकरणे बीजाङ्कुरादौ कार्यत्वस्य सत्त्वात्तदसामानाधिकरण्यम्। दूषकताबीजभेदादुभयोर्भेदः। बाधितोपीति वक्तुं युक्तम्। पक्षे साध्यशून्यत्वस्य तल्लक्षणत्वात्। यथा जलादिपक्षे वह्न्यभावः जलं वह्निमज्जलत्वात् इत्यत्र बाधवत् साधारणोपि हेतुः। साध्यवान् पर्वतादिः तदन्यो जलह्रदादिस्तद्वृत्ति जलत्वं साध्यवदन्यत्वादिगतो हेतुः। ननु दृष्टोन्यबुद्धिमत्संबन्धो जगतीति न विरुद्ध इति चेत्तत्राहुः यस्यकस्यापीति। तथेति यथा घटादिदृष्टान्तबलेन कार्यत्वलिङ्गेन च बुद्धिमत्कारणपूर्वकत्वसिद्धिस्तथेत्यर्थः। सिद्ध्येति जगद् अनीश्वरासर्वज्ञशरीरेन्द्रियादिमत्कर्तृपूर्वकं कार्यत्वात् घटवदित्येवं सिद्ध्येत्यर्थः। ननु नैवं सिद्धिर्भविष्यति क्षित्यादिवायुपर्यन्तानां विचित्राणां महाभूतानां जगत्त्वेन तदुपादानोपकरणसंप्रदानप्रयोजनाभिज्ञो नानीश्वरासर्वज्ञादिरित्यत आहुः तादृशजीवेत्यादि। उपासोपचितसार्वज्ञ्यादिशक्तिमतो जीवस्य सिद्ध्येत्यर्थः। न चैवमिति दृष्टान्तबलेन दृष्टान्तीयाशेषधर्माणां पक्षवृत्तित्वाङ्गीकारे इत्यर्थः। तेषामित्यादि अनीश्वरासर्वज्ञत्वादीनां श्रवणवन्निवर्तकस्य चक्षुरादिप्रमाणान्तरस्याभावेनेत्यर्थः। अत इति प्रत्यक्षस्य तन्मूलकानुमानस्य चाप्रवृत्तेः शब्दस्य पराक्रमप्रतिपादनद्वारा प्रवृ-

भाष्यप्रकाशः ।

साधयन्ति । तथाहि । सावयवत्वादिलिङ्गकैः पूर्वोक्तानुमानैः कृत्वा सिद्धत्वेन जगतः कार्यत्वं न प्रत्याख्यातुं शक्यते । नच जगदकार्यम्, अशक्यक्रियत्वात् अशक्योपादानादिविज्ञानत्वाच्च, आकाशवदिति प्रतिपक्षसद्भावात् प्रत्याख्यातुं शक्यमिति वाच्यम् । आकाशे निरवयवत्वस्यानुकूलतर्कस्य सत्त्वेन तस्याकार्यत्वेऽपि जगद्रूपेषु महीमहीधरादिषु वाय्वन्तेषु तदभावेन तयोरप्रयोजकतयाकाशदृष्टान्तेन तेष्वकार्यत्वस्य साधयितुमशक्यत्वात् । एवं निरवयवत्वेनोपाधिनैव क्षित्यादिवायुपर्यन्तानि अकार्याणि महाभूतशब्दवाच्यत्वात् आकाशवदित्यपि प्रत्यनुमानं निरस्तम् । एवं सिद्धे कार्यत्वे शक्यक्रियत्वशक्योपादानादिविज्ञानत्वयोरपि कार्यत्वेनैव सिद्ध्या तयोरपि प्रतिपन्नत्वमेव । तथाहि । घटमणिकादिषु कृतेषु कार्यदर्शनानुगतकर्तृगततन्निर्माणशक्तिज्ञानः पुरुषोऽदृष्टपूर्वं विचित्रसन्निवेशं नरेन्द्रभवनमालोक्य अवयवसन्निवेशविशेषेण तस्य कार्यत्वं निश्चित्य तदानीमेव कर्तुस्तज्ज्ञानशक्तिवैचित्र्यमनुमिनोति । अतस्तु भुवनादेः कार्यत्वे सिद्धे

रश्मिः ।

तेष्वेत्यर्थः । **प्रतिपक्षेति** साध्याभावसाधकहेत्वित्यर्थः । सावयवादिहेतूनां सत्प्रतिपक्षत्वमिति भावः । साध्याभावसाधकं हेत्वन्तरं यस्य स सत्प्रतिपक्षः । **अनुकूलतर्कस्येति** यद्यकार्यं न स्यान्निरवयवो न स्यात् इति शङ्कानिवर्तकस्य निरवयवत्वं यद्यकार्यत्वव्यभिचारि स्यान्निरवयवत्वमकार्यसाधकं न स्यात् इति व्याप्तिग्राहकस्य चानुकूलतर्कस्य सत्त्वेनेत्यर्थः । **तदभावेनेत्यादि** निरवयवत्वरूपानुकूलतर्काभावेनाशक्येत्यादिहेत्वोरप्रयोजकतयेत्यर्थः । **तेष्विति** जगद्रूपेषु महीमहीधरादिष्वित्यर्थः । **उपाधिनेति** साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधित्वमत्राकाशमादाय साधनव्यापकत्वमिति चेन्न । यद्धर्मावच्छिन्नसाध्यव्यापकत्वं तद्धर्मावच्छिन्नसाधनाव्यापकत्वमुपाधिरिति लक्षणस्य विवक्षितत्वात् यद्धर्मः कार्यत्वत्वं तथा चाकार्यत्वत्वावच्छिन्नसाधनं नाकाशमिति नाकाशमादाय साधनव्यापकत्वमिति भावः । यदभावेन यद्वदन्यत्वेन वा साधनवति साध्याभाव उन्नीयते स उपाधिः लाघवादिति नव्याः । स श्यामो मित्रातनयत्वादित्यत्र शाकपाकजत्वमुपाधिः शाकपाकजत्वाभाववति घटादौ श्यामत्वसत्त्वाच्छ्यामत्वव्यापकत्वाभावेपि मित्रातनयत्वावच्छिन्नश्यामत्वव्यापकत्वात् । एवं प्रकृतेपि यद्धर्मावच्छिन्नाकार्यत्वव्यापकं निरवयवत्वमाकाशादौ तद्धर्मावच्छिन्नमहाभूतशब्दवाच्यत्वाव्यापकं निरवयवत्वं पृथिव्यादाविति लक्षणसंगतिः । एवं यथार्द्रेन्धनाभावेनार्द्रेन्धनवत्पर्वताद्यन्यत्वेन साधनवति वह्निमत्ययःपिण्डे धूमाभाव उन्नीयते इत्यार्द्रेन्धनमुपाधिस्तद्वत् निरवयवत्वाभावेन निरवयवत्ववदाकाशाद्यन्यत्वेन वा साधनवत्क्षित्यादिषु साध्यस्याकार्यत्वस्याभाव उन्नीयत इति । **कार्यत्वेनेति** कार्यत्वलिङ्गेन घटादिदृष्टान्तसनाथेनेत्यर्थः । **तयोरपीति** तयोः शक्यक्रियत्वशक्योपादानादिविज्ञानत्वयोरपि प्रतिपन्नत्वं प्राप्तत्वं प्रागल्भ्यं चैवेत्यर्थः । तथा चाशक्यक्रियत्वाशक्योपादानादिविज्ञानत्वयोर्हेत्वोरप्यसिद्धिरिति भावः । **घटमणिकेति** मणिकः गुर्जरदेशे गृहे मिष्टजलार्थं स्थलं 'टांका' इत्युच्यते । **कार्यदर्शनेत्यादि** कार्यदर्शनेनानुमिते कर्तृगते कार्यनिर्माणस्य शक्तिज्ञाने येनेत्यर्थः । **अदृष्टपूर्वमिति** न दृष्टं पूर्वं यत्तददृष्टपूर्वम् । **विचित्रः** स्थलविशेषसन्निवेशो यत्र तथाविधं चेत्यर्थः ।

१. अकार्यत्वधर्मावच्छिन्नेत्यर्थः ।

भाष्यप्रकाशः ।

तावत्सर्वसाक्षात्कारतन्निर्माणादिनिपुणः कश्चित् सिद्ध्यत्येव । विवादाध्यासितं भूभूधरादिकं स्वनिर्माणसमर्थकर्तृपूर्वकं कार्यत्वात् सार्वभौमसदनवदिति प्रयोगात् । किंच सर्वचेतनानां सुखदुःखभोगस्य धर्माधर्मसाध्यत्वेऽपि धर्माधर्मयोरचेतनत्वाच्चेतनाधिष्ठानमन्तरेण तयोः फलहेतुत्वानुपपत्तेः सर्वकर्मानुगुणसर्वफलदानचतुरः कश्चिदास्थेयः । वर्धकिनानधिष्ठितस्य वास्यादेरचेतनस्य देशकालाद्यनेकपरिकरसन्निधानेऽपि यूपादिनिर्माणसाधनत्वादर्शनात् । तथाच प्रयोगः । धर्माधर्मौ चेतनाधिष्ठितत्वेनैव फलोपधायकौ अचेतनत्वात् वास्यादिवदिति । नच पूर्वानुमाने कार्यत्वस्य हेतोर्बीजोत्पन्नाङ्कुरदृष्टान्तेन साधारणत्वं शङ्क्यम् । अङ्कुरादौ संदेहस्यानन्याहितत्वेन पक्षसमतया पक्ष एवान्तर्भावात् । एतेनैव सुखादिदृष्टान्तोऽपि प्रत्युक्तः । नच लाघवादुभयवादिप्रतिपन्नक्षेत्रज्ञानामेवाधिष्ठातृत्वमत्र कल्पयितुं शक्यम् । तेषां सूक्ष्मव्यवहितविप्रकृष्टदर्शनाशक्तिनिश्चयात् । कल्पनाया दर्शनानुसारित्वस्यैव युक्तत्वात् । नचेश्वरेऽप्येतादृगशक्त्यापत्तिः । तत्र तन्निश्चायकप्रमाणाभावात् । अतः प्रमाणान्तरतो न तत्सिद्ध्यनुपपत्तिः । तथाचोक्तानुमानेन सिद्ध्यन् स्वाभाविकसर्वार्थसाक्षात्कारतन्नियमनसामर्थ्यसंपन्न एव सेत्स्यतीति न तस्मिन्नन्वयव्यतिरेकपरिशुद्धमप्यनैश्वर्याद्यापादयितुं शक्यम् । समर्थकर्तृपूर्वकत्वनियतकार्यत्वरूपहेतुबलादेव तन्निवृत्तेः । तथाहि, केनचित् क्रियमाणं किंचित् स्वोत्पत्तये कर्तुः स्वनिर्माणसामर्थ्यं स्वोपादनोपकरणविज्ञानं च निर्वाहकत्वेनापेक्षते । न त्वन्यासामर्थ्यमन्याज्ञानं वा । हेत्वभावात् । उक्तसामर्थ्योक्तज्ञानाभ्यामेवोत्पत्त्यनुपपन्नायां संबन्धितया दृष्टानामकिंचित्कराणामन्येषां कल्पनायोगात् । अन्यथानुमानोच्छेदप्रसङ्गात् । अथ तदप्युपयोगीति चेत्, किं क्रियमाणवस्तुव्यतिरिक्ताज्ञानादिकं सर्वविषयं क्रियोपयोगि, उत कतिपयविषयम् । नाद्यः । कुलालादेरपि क्रियमाणवस्तुव्यतिरिक्त-

रश्मिः ।

साधारणत्वमिति भूभूधरादिकं स्वनिर्माणसमर्थकर्त्रपूर्वकं कार्यत्वात् बीजोत्पन्नाङ्कुरवदित्येवं साध्यतदभावयोः साधकत्वमित्यर्थः । संदिग्धसाध्यवत्त्वं पक्षत्वमिति लक्षणं मत्वाहुः अङ्कुरादाविति । अनन्याहितत्वेनेति कर्त्रनुपलम्भमात्रोत्पन्नतया उपाधिसत्प्रतिपक्षादिदोषानाहितत्वेनेत्यर्थः । न अन्यः पक्षभिन्नः अङ्कुरादिः पक्षरूप इत्यर्थस्तदाहितत्वेन । एतेनैवेत्यादि पूर्वोक्तरीत्या पक्ष एवान्तर्भावेन वायूपनीतचन्दनादिगन्धजन्यसुखादिदृष्टान्तोपीत्यर्थः । पक्षभिन्नत्वस्य दृष्टान्ते तन्त्रत्वादित्यर्थः । धर्माधर्माविति । द्वितीयानुमानेपि किंचिदाहुः न च लाघवादिति । क्षेत्रज्ञानामिति जीवानामित्यर्थः । अत्रेति धर्माधर्मयोरित्यर्थः । द्वितीयानुमाने इति वा । अत्त इति अनुमाननिर्दुष्टत्वात् शब्दप्रमाणादन्यत्प्रमाणमनुमानरूपम् । तत्सिद्धीत्यादि ईश्वरसिद्ध्यनुपपत्तिरित्यर्थः । समर्थेत्यादि समर्थकर्तृपूर्वकत्वस्य साध्यस्य यो नियतसहचारी कार्यत्वरूपो हेतुस्तद्बलादेवानैश्वर्यादिनिवृत्तेरित्यर्थः । स्वनिर्माणसमर्थकर्तृपूर्वकं कार्यत्वात् सार्वभौमसदनवत् इति पूर्वोक्तानुमानमनुसंधेयम् । स्वोत्पत्तय इति स्वस्य क्रियमाणस्योत्पत्तय इत्यर्थः । हेत्वभावादिति कल्प्यमानहेतूनामन्यथासिद्धत्वेनाभावात् । अकिंचिदिति अन्यथासिद्धानाम् । अन्येषामिति अन्याज्ञानान्यासामर्थ्यादीनामित्यर्थः । अन्यथेति अनुपयोगिसाधकत्वे घटः पृथ्वी गन्धवत्त्वादिति सद्धेतुना पृथ्वीत्ववत्तावत्परिमाणलिङ्गतत्कर्तृकत्वानां सिद्ध्यापत्त्यानुमानोच्छेदप्रसङ्गादित्यर्थः । तदपीति अन्यदप्युपयोगि सिद्ध्यतु नाम न तावत्परिमाणादीतिचेदित्यर्थः ।

भाष्यप्रकाशः ।

ज्ञानाद्यदर्शनात् । नापरः । सर्वेषु कर्तृषु तत्तदज्ञानाशक्त्यनियमेन सर्वेषामज्ञानादीनां व्यभिचारात् । न च निर्वाहकापेक्षाङ्गीकारे ईश्वरेऽपि शरीरेन्द्रियाद्यापत्तिरिति शङ्क्यम् । संकल्पमात्रेण परशरीरगतभूतवेतालज्वराद्यपगमदर्शनात् । न च कथमशरीरस्य प्रवर्तनरूपः संकल्प इति शङ्क्यम् । संकल्पस्य मनोजन्यत्वेन शरीरानपेक्षत्वात् । मनसस्त्वीश्वरेऽप्युपगमात् । पूर्वोक्तहेतुनैव ज्ञानशक्तिवन्मनसोऽपि प्राप्तत्वात् । न च मानसोऽपि संकल्पः सशरीरस्यैव, तस्यैव समनस्कत्वादिति वाच्यम् । मनसो नित्यत्वेन देहाद्यपगमेऽपि तत्सद्भावेनानैकान्तिकत्वात् । अत ईदृशस्य विचित्रस्य जगतो निर्माणे पुण्यपापपरवशः परिमितशक्तिज्ञानः क्षेत्रज्ञो न समर्थ इति तद्विलक्षण ईश्वरः संकल्पमात्रेण सर्वकरणसमर्थोऽनुमानेन सिद्ध्यति । प्रयोगान्तरेण च । जगद् एकचेतनाधीनम्, अचेतनारब्धत्वान्नीरोगस्वशरीरवदिति । तस्मान्न पूर्वोक्तप्रकारेण शास्त्रैकसमधिगम्यत्वं ब्रह्मणः सिद्ध्यति ।

कथं तर्हि तत्सिद्धिरितिचेद्, उच्यते । नाचेतनारब्धत्वेन हेतुना ईश्वरसिद्धिः । तथाहि । यदत्र साध्यतया निर्दिष्टं, किं तदेकचेतनाधीनत्वम् । न तावदेकचेतनायत्तोत्पत्तिस्थितिकत्वम् । दृष्टान्ते साध्यवैकल्यात् । अरोगस्यापि शरीरस्य पितृपुत्राद्यनेकचेतनाभोग्यत्वात् तत्तददृष्टजन्यत्वेन तदुत्पत्तिस्थित्योस्तदधीनत्वेनैकचेतनाधीनत्वाभावात् । किं च । शरीरस्य स्थितिरपि, किं स्वावयवसमवेतता, उत प्राणनम् । आद्ये अवयवाधीनत्वान्न चेतनापेक्षा, घटादिवत् । द्वितीये क्षित्यादीनां शरीररूपत्वभावेन पक्षे असंभव इति पक्षसपक्षानुगतस्थित्यनुपलम्भः । नाप्येकाचेतनाधीनप्रवृत्तिकत्वं तत् ।

रश्मिः ।

व्यभिचारादिति कुलालत्वेन घटादित्वेन हि कार्यकारणभावः तत्रान्याशक्त्यान्याज्ञाने सहकारिणी तत्रान्यपदार्थो हि पटादिस्तथा च पटादिज्ञानवता कुलालेन क्रियमाणे घटादौ अन्याज्ञानादिनियतसहचरितत्वव्यभिचारादित्यर्थः । उपयोग्यभावेपि कार्यदर्शनात् । परशरीरेत्यादि तथाच संकल्प एव निर्वाहको न तु शरीरादिरतो नेश्वरे तदापत्तिरित्यर्थः । पूर्वोक्तेत्यादि स्वनिर्माणसमर्थकर्तृपूर्वकत्वनियतकार्यत्वहेतुनैवेत्यर्थः । प्राप्तत्वादिति समर्थपदेन तथात्वादित्यर्थः । तस्यैवेति सशरीरस्यैवेत्यर्थः । अनैकान्तिकत्वादिति साधारणाद्यन्यतमत्वमनैकान्तिकत्वं सशरीरः समनस्कः संकल्पवत्वात् क्षेत्रज्ञवत् । इत्यत्र समनस्कत्वस्य संकल्पाभाववति मुक्तात्मनि सत्वात् । इत्यनैकान्तिकत्वादनुपसंहारित्वादित्यर्थः । अनुपसंहारी च तद्वन्निष्ठात्यन्ताभावप्रतियोगिसाध्यकादिः तथाचानुपसंहार्यनैकान्तिकत्वादित्यर्थः । अनुमानेनेति । अचेतनेति कामबीजाद्यारब्धत्वात् । तत्सिद्धिरिति शास्त्रैकसमधिगम्यत्वसिद्धिरित्यर्थः । उच्यत इति अस्मामी रामानुजाचार्यैरुच्यते । सूचीकटाहन्यायेन प्रथमतो द्वितीयमनुमानं दूषयन्ति नाचेतनेत्यादि । तदेति । एकचेतनायत्तेति आयत्ते यति प्रयत्ने आसमन्तात् प्रयत्नविषये उत्पत्तिस्थिती यस्य जगतस्तत्कत्वम् । उपलक्ष्यते लयः । साध्यवैकल्यमेव साधयन्ति अरोगस्येत्यादि । साध्यलक्षणघटकीभूता स्थितिः शरीरनिष्ठा वाच्या । तत्राच यत्सिद्धं तदाहुः शरीरस्येत्यादि । असंभव इति जीवनासंभव इति सपक्षरूपनीरोगस्वशरीरानुगतजीवनरूपस्थित्यनुपलम्भः पक्ष इति बाधित इत्यर्थः । सपक्षेति निश्चितसाध्यवत्वं सपक्षत्वम् । अनुपलम्भ इति पक्षेऽनुपलम्भः । तदिति एकचेतनाधीनत्वरूपं साध्यमित्यर्थः ।

भाष्यप्रकाशः ।

पक्षान्तर्भूतेषु गुरुतररथशिलामहीरुहादिष्वनेकचेतनसाध्यप्रवृत्तिकत्वेन व्यभिचारात् । नापि चेतनमात्राधीनत्वम् । सिद्धसाधनत्वात् । किं च । उभयवादिसिद्धानां जीवानामेव नियामकत्वाभ्युपगमो युक्तः । लाघवात् । नच जीवानां पूर्वोक्तरीतिकोपादानादिविज्ञानतन्निर्माणशक्त्यभावः शङ्कनीयः । तपोयागादिभिस्तेष्वपि तादृशज्ञानसामर्थ्ययोरुपगमे बाधकाभावात् । एतदपेक्षयेश्वराख्यपुरुषकल्पनस्य तत्र सामर्थ्यविशेषकल्पनस्य चात्यन्तापरिदृष्टत्वेनातिगुरुत्वात् । अतोऽचेतनारब्धत्वलिङ्गकानुमानेन नेश्वरसिद्धिः ।

नापि कार्यत्वलिङ्गकेन । महीमहार्णवादीनां सावयवत्वेन कार्यत्वेऽप्यनेकत्वात् ते सर्वे एकदैवैकेन निर्मिता इत्यत्र प्रमाणाभावात् । न चैकघटवत् सर्वेषामेककार्यत्वं, येनैकदैवैकः कर्ता स्यात् । पृथग्भूतेषु कार्येषु कालभेदकर्तृभेददर्शनेन कर्तृकालैक्यस्य नियन्तुमशक्यत्वात् । नच जीवानां तादृशनिर्माणशक्त्यदर्शनेन तन्निवृत्तौ कार्यत्वबलेनैव तत्सिद्धिरिति वाच्यम् । पूर्वमशक्तानामपि पश्चात् पुण्यविशेषोपचयेन शक्तिदर्शनात्, तद्विशेषोपचयेनातिशयितादृष्टसंभावनया च तादृशविलक्षणकार्यकर्तृत्वस्यापि संभवादित्युक्तम् । किं च । युगपत् सर्वोच्छित्तिः सर्वोत्पत्तिश्च न प्रमाणपदवीमधिरोहतः । अदर्शनात् । क्रमेणैवोत्पत्तिविनाशयोः कल्प्यमानयोर्दर्शनानुगुण्येन तथा कल्पनायामपि विरोधाभावाच्च । अतो बुद्धिमदेककर्तृकत्वे साध्ये कार्यत्वस्यानैकान्तिकत्वम् ।

रश्मिः ।

व्यभिचारादिति साध्याभाववत्सु गुरुतररथादिषु स्वसमवाय्यारब्धेषु साध्यशून्येषु हेतोर्व्यभिचारादित्यर्थः । साधारणो हेतुरित्यर्थः । साध्यं प्रकारान्तरेण लक्षयित्वा दूषयन्ति नापीत्यादि । सिद्धेत्यादि । शरीरादौ तथात्वादित्यर्थः । अयं दोषः पक्षताविघटकः । सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता । एतच्च हेत्वाभासान्तरं जगति नायमित्यतो दूषणान्तरमाहुः किंचेत्यादि । कार्यत्वलिङ्गकं स्वरूपासिद्धत्वमित्याहुः महीत्यादि । तथाच पक्षे व्याप्यत्वाभिमतस्येश्वरसाधकस्य कार्यत्वस्य विरहात् स्वरूपासिद्धत्वमित्यर्थः । सावयवत्वं लिङ्गमपि बाधितमिति कार्यं सावयवत्वादित्यनुमानमपि दुष्टमिति भावः । पक्षे साध्याभावो बाधः इति तल्लक्षणात् । प्रतिज्ञान्तररूपं निग्रहस्थानं वा व्याख्येयम् । सर्वेषामित्यादि महीमहार्णवादीनामेकस्य कार्यत्वमित्यर्थः । तत्सिद्धिरिति स्वनिर्माणसमर्थकर्तृपूर्वकत्वसिद्धिरित्यर्थः । संभवादिति यथा प्रियव्रतः 'प्रियव्रतकृतं कर्म कोनुकुर्याद्विनेश्वरम्' इतिवाक्यात् । दर्शनेति न्यायशास्त्रानुगुण्येन । तथाकल्पनायामिति पुण्यविशेषोपचयेनातिशयितादृष्टसंभावनया च तादृशविलक्षणकार्यकर्तृत्वकल्पनायाम् । अत इति विवादाध्यासितं भूभूधरादिकं बुद्धिमदेककर्तृपूर्वकं कार्यत्वात् । घटादिवदित्यनुमाने तथेत्यर्थः । अनैकान्तिकत्वमिति सार्वभौमसदनेति च विवादाध्यासितं भूभूधरादिकं बुद्धिमदनेककर्तृपूर्वकं कार्यत्वात् सार्वभौमसदनवदित्यनेन बुद्धिमदनेककर्तृकत्वे सिद्धे एतत्साध्याभाववति भूभूधरादिके कार्यत्वरूपहेतोर्वृत्तेः साधारणानैकान्तिकत्वमित्यर्थः । तथाच सार्वभौमसदनदृष्टान्तेन बुद्धिमदनेककर्तृत्वे सिद्धे एतत्साध्याभाववति भूभूधरादिके कार्यत्वरूपहेतोर्वृत्तेस्तथात्वावगमात् साधारण्यानैकान्तिकत्वावगमादिति सार्वभौमेतिफक्किकार्थः । कार्यत्वं बुद्धिमदेककर्तृकत्वसाधकं घटनिष्ठत्वात् घटनिष्ठकार्यत्ववदित्यनुमानमपि । कार्यत्वं न बुद्धिमदेककर्तृकत्वसाधकं महादिभूतसमूहनिष्ठत्वात् घटपटस्तम्भसमूहनिष्ठकार्यत्ववदित्यनुमानेन सत्प्रतिपक्षमित्याहु

भाष्यप्रकाशः ।

सार्वभौमसदनदृष्टान्तेन तथाऽवगमात् । महादिभूतसमूहनिष्ठत्वाच्च घटपटस्तम्भसमूहनिष्ठकार्यत्ववत् । साध्यतावच्छेदकराहित्येन दृष्टान्तस्य साध्यविकलत्वं च । सर्वनिर्माणचतुरस्यैकस्याप्रसिद्धेः । पक्षस्याप्रसिद्धविशेषणत्वं च । तादृशसाध्याप्रसिद्ध्या विवादाध्यासाभावात् । बुद्धिमत्कर्तृकत्वमात्रे साध्ये सिद्धसाध्यत्वं च । किं च । सार्वज्ञ्यसर्वशक्तियुक्तस्य कस्यचिदेकस्य साधकमिदं कार्यत्वं, युगपदुत्पद्यमानसर्ववस्तुगतं वा, क्रमेणोत्पद्यमानसर्ववस्तुगतं वा । आद्ये, आश्रयासिद्धत्वम् । द्वितीयेऽनेककर्तृकत्वसाधनाद् विरुद्धत्वम् । अपिच । सर्वेषां कार्याणां शरीराणां सुखाद्यन्वयदर्शनेन तन्मूलभूतं सत्त्वादिकमवश्याश्रयणीयम् । पुरुषस्य तद्योगश्च कर्मभिरन्तःकरण-

रश्मिः ।

महादीत्यादि । तथाचाभासोक्तरीत्या सत्प्रतिपक्षत्वमिति भावः । साध्यतावच्छेदकेत्यादि कार्यत्वलिङ्गकानुमाने क्षित्यादेः पक्षस्य विजातीयद्रव्यसमूहकत्वाद् घटादिवदिति दृष्टान्तेपि विजातीयद्रव्यसमूहस्यैव दृष्टान्तत्वेन प्रवेशात् । तत्र साध्यतावच्छेदकस्य कर्त्रैक्यस्य प्रत्यक्षविरुद्धतया राहित्येनेत्यर्थः । तथाच दृष्टान्ताभाव इति भावः । साध्याप्रसिद्धिरग्रे वाच्या । किंच कार्यत्वलिङ्गकमनुमानमाश्रयासिद्धमित्याहुः सर्वनिर्माणेत्यादि । सार्वभौमसदने सर्वनिर्माणचतुराणामनेकेषां दर्शनादेकस्याप्रसिद्धेश्च विवादाध्यासितत्वाभावेन भूभूधरादेः पक्षस्य तथात्वमित्यर्थः । यथा काञ्चनमयः पर्वतो वह्निमानिति तथा च पक्षे पक्षतावच्छेदकाभावात् आश्रयासिद्धत्वमिति भावः । किंच व्याप्यत्वासिद्धमपीति सूचयन्तस्तत्र हेतुमप्याहुस्तादृशेत्यादि । साध्याप्रसिद्ध्येति । साध्ये साध्यतावच्छेदकाभावः साध्याप्रसिद्धिः यथा काञ्चनमयवह्निमान् धूमात् इति । तथा च बुद्धिमदेकत्वस्य साध्यतावच्छेदकस्य कर्तर्यभावाद्व्याप्यत्वासिद्धत्वमित्यर्थः । ननु साध्ये एकपदं न निवेश्यते एवं च न साध्ये साध्यतावच्छेदकाभाव इत्यत आहुः बुद्धिमदित्यादि । सिद्धसाध्यत्वमिति बुद्धिमत्कर्तृपूर्वकत्वस्य सर्वत्र सिद्धत्वात् । आश्रयासिद्धत्वमिति युगपदुत्पद्यमानस्य सर्वस्य केनापि लौकिकप्रमाणेनासिद्धत्वात्तथात्वमित्यर्थः । किंच संदिग्धसाध्यत्वं पक्षत्वमिति लक्षणेन साध्यासंदेहात्पक्षे संदिग्धत्वरूपपक्षतावच्छेदकाभावात् । पक्षे पक्षतावच्छेदकाभावरूपाश्रयासिद्धिः । तथा सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता । तस्याः पक्षेऽभावादाश्रयासिद्धिः । अनेकेत्यादि क्रमिकाणामनेककर्तृकत्वस्य प्रत्यक्षादिसिद्धत्वात्तथेत्यर्थः । विरुद्धत्वमिति साध्याभावसाधकहेतुर्विरुद्ध इति तल्लक्षणाद्विरुद्धत्वमित्यर्थः । सांख्यमतमनुसृत्य दूषयन्ति अपि चेत्यादि । तन्मूलभूतमित्यादि । शरीरमूलभूतं सत्त्वादिगुणान्यतमं

'अनादिरात्मा पुरुषो निर्गुणः प्रकृतेः परः ।
प्रत्यग्धामा स्वयं ज्योतिर्विश्वं येन समन्वितम् ॥
स एष प्रकृतिं सूक्ष्मां दैवीं गुणमयीं विभुः ।
यदृच्छयैवोपगतामभ्यपद्यत लीलया ॥
गुणैर्विचित्राः सृजतीं सरूपाः प्रकृतिं प्रजाः ।
विलोक्य मुमुहे सद्यः स इह ज्ञानगूहया ॥
एवं पराभिध्यानेन कर्तृत्वं प्रकृतेः पुमान् ।
कर्मसु क्रियमाणेषु गुणैरात्मनि मन्यते ॥
तदस्य संसृतिर्बन्धः पारतन्त्र्यं च तत्कृतम् ।

भाष्यप्रकाशः।

विकारद्वारेण भवतीति विचित्रकार्यविशेषारम्भायैव ज्ञानशक्तिवत् कर्मसंबन्धोऽप्यवश्याभयणीयः। ज्ञानशक्तिवैचित्र्यस्यापि कर्ममूलत्वाच्च। इच्छायाः कर्मारम्भहेतुत्वेऽपि विषयविशेषितायास्तस्याः सत्त्वादिमूलत्वेन कर्मसंबन्धोऽवर्जनीयः। एवं सिद्धे कर्मसंबन्धे क्षेत्रज्ञा एव कर्तारः सिद्ध्यन्ति, न तु तद्विलक्षणः कश्चिदनुमानात् सिद्ध्यति।

भवन्ति चात्र प्रयोगाः। तनुभवनादिकं क्षेत्रज्ञकर्तृकं, कार्यत्वात् घटवत्। ईश्वरः कर्ता न भवति प्रयोजनशून्यत्वात् मुक्तात्मवत्। तथा, अशरीरत्वात् तद्वदेव। न च क्षेत्रज्ञानां स्वशरीराधिष्ठाने व्यभिचारः। तत्राप्यनादेः सूक्ष्मशरीरस्य भावात्। विमतिविषयः कालो न लोकशून्यः कालत्वात् वर्तमानकालवत्। किंच। ईश्वरः किमशरीरः सशरीरो वा कार्यं करोति। नाद्यः। मनसो नित्यत्वेऽपि अशरीरेषु मुक्तेषु मानसकार्यादर्शनादीश्वरेऽप्यकर्तृत्वापत्तेः। नेतरः। विकल्पासहत्वात्। तन्नित्यमनित्यं वा। न तावन्नित्यम्। सावयवस्य नित्यत्वे जगतोऽपि नित्यत्वाविरोधादीश्वरासिद्धेः। नाप्यनित्यम्। तद्व्यतिरिक्तस्य तच्छरीरहेतोस्तदानीमभावात्। नच स्वयमेव हेतुरिति युक्तम्। अशरीरस्य तदयोगात्। नाप्यन्यशरीरेण शरीरवान्। अनवस्थानात्। किंच। सव्यापारो निर्व्यापारो वा। नाद्यः। अशरीरस्य तदसंभवात्।

रश्मिः।

भवत्यकर्तुरीशस्य साक्षिणो निर्वृतात्मनः॥
कार्यकारणकर्तृत्वे कारणं प्रकृतिं विदुः।
भोक्तृत्वे सुखदुःखानां पुरुषं प्रकृतेः परम्'॥
'प्रकृतिस्थोपि पुरुषो नाज्यते प्राकृतैर्गुणैः।
अविकारादकर्तृत्वान्निर्गुणत्वाज्जलार्कवत्'॥
'यत्तत्त्रिगुणमव्यक्तं नित्यं सदसदात्मकम्।
प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत्'॥
'एतद्भगवतो रूपं ब्रह्मणः परमात्मनः।
परं प्रधानं पुरुषं दैवं कर्म विचेष्टितम्'॥

इत्यादि पुराणप्रामाण्यादवश्यमाश्रयणीयमित्यर्थः। सत्त्वाद्याश्रयेण यद्भवति तदाहुः पुरुषस्येत्यादि। ईश्वराख्यस्यात्मनः सत्त्वादियोग इत्यर्थः। अवश्येत्यादि लोके तथा दर्शनात्तथेत्यर्थः। विचित्रकार्यारम्भो न ज्ञानवैचित्र्यात् किं तु इच्छावैचित्र्यात् तस्याश्चाकर्ममूलत्वाददोष इत्यत आहुः इच्छाया इत्यादि। इच्छाया हेतुत्वेऽपि न सामान्यरूपेण तथा सति सृष्टीच्छया प्रलयः स्यादतः सृष्टिविषयिणीच्छात्वेन सृष्टिहेतुत्वमेवमन्यत्रेत्येवं आत्मप्रसादजसुखं स्यादित्येवं विषयविशेषितायास्तस्या हेतुभूतायाः सत्त्वादिरूपप्रधानाभिपत्तिमूलत्वेनेति सत्त्वादिहेतुकर्मसंबन्धो वर्जनीय इत्यर्थः। ननु सृष्ट्यादौ शरीराणामनुत्पन्नत्वात्क्षेत्रज्ञानां स्वशरीराधिष्ठानासंभवे कर्तृत्वव्यभिचार इत्याशङ्क्य पराकुर्वन्ति न च क्षेत्रज्ञानामित्यादि। प्रवाहानादित्वमभिप्रेत्य स्थूलशरीरसत्तासाधनायाहुः विमतीत्यादि। प्रवाहानादित्वसादित्वरूपविविधमतिविषयः। मनस इति करणभूतस्य मनस इत्यर्थः। तदिति शरीरमित्यर्थः। तद्व्यतिरिक्तस्येत्यादि ईश्वरव्यतिरिक्तस्येश्वरशरीरहेतोः सृष्टिप्राक्काले ऽभावादित्यर्थः। क्षेत्रज्ञव्यतिरिक्तस्य क्षेत्रशरीरहेतोः सृष्टिप्राक्कालेऽभावादित्यर्थो वा। स्वयमिति ईश्वर इत्यर्थः। तदयोगादिति हेतुत्वायोगादित्यर्थः। अनवेत्यादि अवस्थानं शरीरस्थिति-

भाष्यप्रकाशः ।

न द्वितीयः । मुक्तात्मवदकर्तृत्वापातात् । कार्यं जगद् इच्छामात्रव्यापारिकर्तृकमित्युच्यमाने पक्षस्याप्रसिद्धविशेषणत्वम् । दृष्टान्तस्य साध्यहीनता च । अतो दर्शनानुगुण्येनेश्वरानुमानं दर्शनानुगुण्यपराहतमिति शास्त्रैकप्रमाणकः परमेश्वरः परब्रह्मभूतः पुरुषोत्तमः । शास्त्रं तु सकलेतरप्रमाणापरिदृष्टं समस्तविजातीयं सार्वज्ञ्यसत्यसङ्कल्पत्वादिमिश्रानवधिकातिशयापरिमितगुणोदारं निखिलहेयप्रत्यनीकं स्वरूपं प्रतिपादयतीति, न प्रमाणान्तरावसितवस्तुसाधर्म्यप्रयुक्तदोषप्रसङ्ग इति ।

अत्रोदयनाचार्यैरीश्वरसाधने नवानुमानानि कुसुमाञ्जलौ दर्शितानि ।

'कार्यायोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः ।
वाक्यात् संख्याविशेषाच्च साध्यो विश्वविदव्ययः' ॥

इति । अत्र कार्यादिपदानि भावप्रधानानि । तानि चैवं व्याख्यातानि । आयोजनं सर्गाद्यकालीनद्व्यणुकारम्भकपरमाणुद्वयसंयोगजनकं कर्म । धृतिर्धारणं गुरुत्ववतो ब्रह्माण्डादेः पतनाभावः । आदिपदाद् ब्रह्माण्डादेर्नाशः । पदं घटादिसंप्रदायव्यवहारः । घटादिपदप्रयोगो वा । प्रत्ययो वेदजन्यं धर्मादिज्ञानम् । श्रुतिर्वेदः । वाक्यं पदसमूहः । संख्याविशेषः सर्गादौ परमाणुनिष्ठद्वित्वादिसंख्याजन्यं परिमाणमित्यादि । प्रयोगास्तु क्षित्यादिकं कर्तृजन्यं कार्यत्वाद् घटवत् । अन्ये तु जन्यत्वादित्यपि प्रयुञ्जते । तथा, क्षितिः, उपादानगोचरापरोक्षज्ञानोपायेच्छा तादृशकृतिजन्या, ज्ञानजन्या, इच्छाजन्या, कृतिजन्या वा, जन्यत्वाद् घटादिवदित्यपि । पूर्वोक्तं कर्म चेतनप्रयत्नपूर्वकं कर्मत्वाद् अस्मदादिशरीरजन्यक्रियावत् । उक्ता धृतिः,

रश्मिः ।

स्वदभावादित्यर्थः । कार्यमिति हेतुगर्भं विशेषणमिदं, कार्यत्वादित्यर्थः । अप्रसिद्धेत्यादि तादृशस्य कर्तुरप्रसिद्धत्वाज् जगतो विशेषणं कार्यं तदप्यप्रसिद्धमित्यर्थः । दृष्टान्तस्येति घटादेरित्यर्थः । तथा च दृष्टान्ताभाव इति भावः । नैयायिकानुमानानि सांख्यशास्त्रपराहतानीति वदन्तः सिद्धमाहुः अतो दर्शनेत्यादि । दर्शनं सांख्यशास्त्रम् । न प्रमाणान्तरेति शब्दादन्यत्प्रमाणं प्रमाणान्तरं ततोवसितं निश्चितं वस्तु ब्रह्माख्यं तत्साधर्म्यं कर्तृत्वादिना तत्प्रयुक्तो दोषः ज्ञानिनामपि श्रवणमात्रेण पातित्वं तस्य प्रसङ्गः ।

इत्यादीति इत्यादि यथा स्यात्तथाव्याख्यातानि इति पूर्वेणान्वयः । तेन पदव्याख्यानत्वात् हेतुसमुदायपतितस्यायोजनस्य पक्षत्वेपि न क्षतिः । अन्ये त्वायोजनं कर्मेत्याहुः तेन न प्रायपाठविरोधः । गोपीनाथमौनी तु परमाणुः अपरोक्षज्ञानचिकीर्षाकृतिविषयः कार्यात् कपालवत् इति यथाश्रुतं व्याचक्रे । अत्र हेतुतावच्छेदकसंबन्धः समवायः । उक्तानुमाने साधारण्यं मन्यमानानां विजातीयद्रव्यसमूहस्य पक्षत्वे पूर्वोक्तरीत्या कर्त्रैक्यदौर्घट्यादेकैकं द्रव्यं पक्षत्वेन प्रयुञ्जानानां च मतमाहुः अन्ये त्वित्यादि । जन्यत्वं जननशालित्वं तच्च ध्वंसप्रतियोगित्वशालित्वं स्वीकृतं चिकीर्षासत्त्वात् अंशतः साधारणत्वमतो जन्यत्वादित्यपि प्रयुञ्जते, ध्वंसस्य जन्यत्वात् तथाच ध्वंसे साधारणत्ववारणाय प्रयुञ्जत इत्यर्थः । अस्वरसस्तु पक्षे ध्वंसाप्रवेशः । तथात्वे सति पक्षे पक्षतावच्छेदकध्वंसाप्रवेशादाश्रयासिद्धमनुमानमिति । उपादानेत्यादि उपादानविषयकं यदपरोक्षज्ञानं उपायेच्छा उपादानविषयिणी कृतिश्च तज्जन्येत्यर्थः । कार्यमात्रं प्रति ज्ञानत्वेनेच्छात्वेन कृतित्वेनान्वयव्यतिरेकाभ्यां पृथक्कारणत्वं यौगपद्यासंभवादित्याशयेनाहुः ज्ञानजन्येत्यादि । इत्यपीति प्रयुञ्जत इत्यन्वयः । पूर्वोक्तमिति सर्गाद्यकालिकद्व्यणुकारम्भकपरमाणुद्वयसंयोगजनकमित्यर्थः । उक्तेति गुरुत्ववद्ब्रह्माण्डादिपतनाभावात्मिकेत्यर्थः । पूर्वोक्तमिति वेदजन्यधर्मादिज्ञानरूपमित्यर्थः ।

भाष्यप्रकाशः ।

चेतनप्रयत्नपूर्विका धृतित्वाद् वियति विहङ्गमधृतिवत् । ब्रह्माण्डादि प्रयत्नवद्विनाश्यं विनाशित्वात् पाट्यमानपटवत् । उक्तव्यवहारः स्वतन्त्रप्रयोज्यः, व्यवहारत्वाद् आधुनिकलिप्यादिव्यवहारवत् । पूर्वोक्तं ज्ञानं कारणगुणजन्यं प्रमात्वात् प्रत्यक्षादिप्रमावत् । वेदः पौरुषेयो वेदत्वाद् यन्नैवं तन्नैवम्, आकाशवत् । वेदः पौरुषेयो वाक्यत्वाद् भारतादिवत् । अणुकपरिमाणं संख्याजन्यं परिमाणप्रचयाजन्यत्वे सति जन्यपरिमाणत्वात् तुल्यपरिमाणकपालद्वयारब्धघटपरिमाणवदिति । अत्र प्रथमे प्रयोगे कर्तृजन्यत्वं तु स्वोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमददृष्टाद्वारकजन्यत्वम् । अत्रादृष्टाद्वारकेतिविशेषणान्न जीवात्मनिरूपितादृष्टद्वारकजन्यत्वेन सिद्धसाधनमर्थान्तरं वा । जीवानां क्षित्याद्युपादानीभूतपरमाण्वादिगोचरापरोक्षज्ञानाभावेन तज्जन्यत्वे बाधान्न तैरपि तथा । नच क्षितिघटादिसाधारणस्यैकस्य साध्यस्याभावेन स्वपदार्थाननुगमात् कथं व्याप्तिग्रह इति वाच्यम् । स्वपदार्थाननुगमस्यादोषत्वात् । अन्यथेच्छादिना ज्ञाना-

रश्मिः ।

**परिमाणे**त्यादि परिमाणं च प्रचयश्च परिमाणप्रचयौ ताभ्यामजन्यत्वे । प्रचयः शिथिलसंयोगः तज्जन्यं परिमाणं तूलकादौ । एवं च स्थलभेदेन परिमाणप्रचयसंख्याभिः परिमाणं जन्यते । कार्यत्वं प्रागभावप्रतियोगित्वम् । एवं सति पक्षे ध्वंसे ध्वंसप्रतियोगित्वशालित्वरूपं जन्यत्वाभावेन साध्याभाववति पक्षे तस्य लिङ्गस्य परिमाणस्य स्वोत्कृष्टपरिमाणजनकत्वनियमादेतादृशं परिमाणं नाणुपरिमाणजन्यं किंतु संख्याजन्यमित्याशयेन दृष्टान्तमाहुः **तुल्यपरिमाणे**त्यादि । तथाच तादृशपरिमाणं कपालपरिमाणादुत्कृष्टत्वाभावात्संख्याजन्यमिति भावः। **इत्नी**ति एतस्याग्रे आश्रये सिद्धे द्व्यणुकपरिमाणजनिका संख्या अपेक्षाबुद्धिजन्या, एकत्वान्यसंख्यात्वात्, अयमेकोऽयमेक इमौ द्वौ इति द्वित्वसंख्यावदित्यनुमानेऽस्मदाद्यपेक्षाबुद्धिजन्यत्वबाधात्तदाश्रयत्वेनेश्वरसिद्धिरित्येतावती त्रुटिरत्रास्ति । तेन परिमाणप्रचयाजन्यत्वे सति जन्यपरिमाणत्वादित्यनुमानेनेश्वरासिद्धावपि न क्षतिः । न च द्व्यणुकपरिमाणं परिमाणजन्यमेवास्त्विति वाच्यम् । द्व्यणुकपरिमाणं न परिमाणजन्यं, अणुपरिमाणत्वात् परमाणुपरिमाणवदित्यनुमानेन तस्य परिमाणाजन्यत्वादित्यर्थः । **विशेषणा**दिति जन्यत्वविशेषणादित्यर्थः । **जीवे**ति जीवश्चोपास्यासिद्धात्मा तन्निरूपितेत्यादिः । **अर्थान्तरं वे**ति ईश्वरसाधने यतमानस्य जीवसिद्ध्यार्थान्तरमित्यर्थः । अत्र ज्ञानलक्षणासामान्यलक्षणायोगजधर्मैर्यत्किंचिदुपादानगोचरत्वविवक्षणेन च तादृशज्ञानादिमतां जीवानां कर्तृत्वान्न स्वोपादानेत्यादिविशेषणेन तद्धेतुत्वनिवृत्तिः । स्वोपादानेत्यादिविशेषणप्रयोजनमाह **जीवाना**मित्यादि । **तथे**ति । सिद्धसाधनमर्थान्तरं वेत्यर्थः । मीमांसकस्यानादिसृष्टिवादित्वात् तद्वारणायेदमुक्तम् । **अभावेने**ति घटादीनां कुलालादिकर्तृकत्वस्य प्रत्यक्षात् । स्वपदार्थाननुगमात् । स्वपदेन क्षित्यादिसंग्रहे दृष्टान्ते साध्यस्याभावेन घटादिसंग्रहे तु पक्षे तदभावेन पक्षनिष्ठात्यन्ताभावप्रतियोगिनः स्वोपादानेत्यादिसाध्यस्य हेतुः कार्यत्वमित्यनुपसंहारिकार्यत्वम् । तत्फलं च व्याप्तिज्ञानप्रतिबन्ध इति कथं व्याप्तिग्रह इत्यर्थः । न च तद्वन्निष्ठात्यन्ताभावप्रतियोगिसाध्यकादित्वमनुपसंहारित्वम् । एवं च स्वपदेन घटादिग्रहवेलायां पक्षस्य साध्यत्वाभावेन कथं तद्वन्निष्ठत्वमत्यन्ताभावस्येति शङ्क्यम् । स्वपदेन क्षित्यादिसंग्रहे तद्वत्त्वसत्त्वादिति । **अदोषत्वा**दिति इच्छादिना ज्ञानानुमाने यो यदिच्छावान् स तज्ज्ञानवानित्येवं व्याप्तिग्रहे यत्तत्पदाभ्यां विवक्षितमेव गृह्यते तदेवात्र स्वपदेनोक्तमिति प्रातिस्विकरूपेण व्याप्त्यग्रहेऽपि विवक्षितत्वेन रूपेणानुगमाददोषत्वादित्यर्थः । **अन्यथे**त्यादि तस्य दोषत्वे, अयं

भाष्यप्रकाशः ।

घनुमानं न स्यात् । स्वविशेष्यकस्वत्वप्रकारकज्ञानत्वादिनैव तत्र कार्यकारणभावात् । अत्र च सकर्तृकत्वादिसाध्यकानुमाने कर्तृत्वेनैव कारणता, ज्ञानजन्यादिसाधके च ज्ञानत्वादिना । एवं कार्यतापि कार्यत्वेन जन्यत्वेन च । नच शरीरगौरवेणाप्रयोजकत्वं शङ्क्यम् । अवच्छेदककोटौ घटत्वादीनां प्रवेशे आनन्त्यगौरवाद्, ध्वंसस्य जन्यत्वेन तस्य च जन्याभावत्वेनावच्छेदकतया प्रवेशे शरीरगौरवाच्च । एवं तु विवक्षितविवेके जन्याभावत्वैकदेशस्य जन्यत्वस्यैव प्रवेश इति शरीरलाघवात् सामान्यलाघवादेकत्वलाघवात् कल्पनालाघवादुपस्थितिलाघवाच्च जन्यत्वेनैव कार्यता, न घटत्वादिना । कार्यत्वं च स्वसमवायिजन्यताख्येन परंपरासंबन्धेन कृतित्वमेवेति, न तत्रापि गौरवम् । नच विशिष्यान्वयव्यतिरेकाभ्यां घटत्वकुलालत्वादिना विशिष्य-कार्यकारणभावस्यावश्यकत्वात् सर्वमेतद्विरुद्धमिति वाच्यम् । कार्यमात्रवृत्तीनां जातीनां कार्य-तावच्छेदकत्वमिति सिद्धान्तसमुद्घोषात् । नचाङ्कुरादौ हेतोर्विपक्षगामित्वेनानैकान्तिकत्वं शङ्क्यम् ।

रश्मिः ।

स्वज्ञानवान् स्वेच्छावत्त्वात् देवदत्तवदित्यनुमानं न स्यादित्यर्थः । आदिशब्देन स्वेच्छावान् स्वयत्नाद् देवदत्तवत् ! स्वविशेष्यकेत्यादि आदिना स्वविशेष्यकस्वत्वप्रकारकेच्छात्वतादृशयत्नत्वे ग्राह्ये । अन्ये त्वेतद्दोषभिया स्वपदरहितं साध्यमङ्गीकुर्वन्ति तदुक्तं अत्रेत्यादि । पूर्वोक्तानुमानद्वयमध्य इत्यर्थः । सकर्तृकत्वं पर्यायत्वेनादिर्यस्य कर्तृजन्यत्वस्य तदादिसाध्यमस्मिन् अनुमाने । द्वितीयानुमान आहुः ज्ञानजन्यादीति । आदिना इच्छाजन्या कृतिजन्येति साध्यद्वयम् । एवमिति कारणतावदित्यर्थः । नन्वेवं सामान्यतः कार्यकारणभावे कार्यत्वं कृतिसाध्यत्वरूपं प्रागभावप्रतियोगित्वरूपं वा । जन्यत्वं जननशालित्वरूपं च कार्यतावच्छेदकद्वयं शरीरगौरवग्रस्तं कृतिसाध्यत्वस्य प्रागभावप्रतियोगित्वरूपत्वात् । जननशालित्वस्य ध्वंसप्रतियोगित्वशालित्वरूपत्वात् । कम्बुग्रीवादिमत्त्वरूपघटत्वेन कार्यतायां लाघव-मित्याशङ्क्य निराकुर्वन्ति न च शरीरेत्यादि । आनन्त्यगौरवादिति घटत्वपटत्वादीनामानन्त्यात् कार्यतावच्छेदकानन्त्येनानन्त्यगौरवादित्यर्थः । अन्यदपि साध्य आह ध्वंसस्येत्यादि । तस्य चेति ध्वंसस्य चेत्यर्थः । अवच्छेदकतयेति साध्यतावच्छेदकतया । एवं त्विति जन्यत्वेन रूपेण विव-क्षितस्य हेतोर्विवरण इत्यर्थः । विवक्षितेति कार्यता कार्यत्वेनैव चेत्तर्हि पूर्वोक्तसाधारण्यं, तन्निवृत्त्यर्थं जन्यत्वेनैव कार्यता तर्ह्याश्रयासिद्धिः पूर्वोक्तेति तदुभयनिवृत्तये कार्यता कार्यत्वजन्यत्वान्यतररूपेण विवक्षितेति विवक्षितविवेकस्तस्मिन् । शरीरलाघवादित्यादि कार्यताव्यवच्छेदकशरीरलाघवात् कृतित्वेन जन्यत्वेन कार्यत्वेन च कार्यकारणभावे यत्र जन्यत्वं कार्यत्वं च तत्र कृतित्वमिति सामान्य-व्याप्तिलाघवाद् घटत्वावच्छेदकानन्त्यापेक्षया सामान्यावच्छेदकैकत्वे लाघवादित्यर्थः । कार्यत्वस्य शरीरगौरवं परिहरन्ति कार्यत्वं चेत्यादि । स्वं कृतिस्तत्समवायी-आत्मा तज्जन्यत्वं यथा कार्यस्य तथा कृतेरपीति तादृशेन परंपरासंबन्धेनेत्यर्थः । विरुद्धमिति अनावश्यकत्वादसंगतमित्यर्थः । जातीना-मिति सामान्यानां धर्माणामित्यर्थः । सिद्धान्तेत्यादि तथा च कार्यत्वेन कर्तृत्वेन सामान्यकार्य-कारणभावानङ्गीकारे कार्यमात्रवृत्तिमहापृथिवीत्वस्य कार्यतानवच्छेदकत्वप्रसङ्गेन सैद्धान्तिकनियम-भङ्गापत्तिरिति तदभावाय सोऽप्यावश्यक इत्यर्थः । विपक्षगामित्वेनेत्यादि हेतोरङ्कुरादौ साध्या-भाववद्गामित्वेन । क्षितिः कर्तृजन्या कार्यत्वादङ्कुरादिवदिति विरुद्धगर्भितसाधारणानैकान्तिकत्वमित्यर्थः ।

भाष्यप्रकाशः।

तत्र साध्यसंदेहस्यानन्याहितत्वेन तस्य पक्षसमत्वात्। नच शरीरजन्यत्वस्योपाधेर्विद्यमानत्वाच्छरीराजन्यत्वस्य प्रतिसाधनस्य सत्त्वाच्च साध्यसंदेहस्यान्याहिततत्वेनानैकान्तिकत्वं सिद्धमिति शङ्क्यम्। कर्त्रादिजन्यतायामपि गुरुभूतस्य शरीरजन्यत्वस्यानवच्छेदकत्वाल्लघुभूतस्य जन्यत्वमात्रस्यैवावच्छेदकत्वेन तस्य च साधनव्यापकत्वेनानुपाधित्वे हेतोरदुष्टत्वात्। एवं च कर्त्रादिजन्यतायामिव शरीरजन्यतायामपि जन्यत्वस्यैवावच्छेदकत्वादीश्वरे नित्यज्ञानादिकमिव नित्यशरीरवत्त्वस्याप्यङ्गीकारेण प्रतिसाधनदोषस्याप्यभावात्। अनुमानं च, क्षित्यादिकं शरीरजन्यं जन्यत्वाद् घटवत्। ईश्वरः शरीरी कर्तृत्वात् कुलालवदिति। अनुकूलतर्कश्चात्र कर्तृत्वजन्यत्वाभ्यामिव शरीरित्वजन्यत्वाभ्यामपि पूर्वोक्तयुक्तितुल्ययुक्तिकः कार्यकारणभाव एव। श्रुतिश्च, 'यतो वा इमानि भूतानि जायन्ते' इत्यादि, 'सहस्रशीर्षा पुरुषः' इत्यादि, 'आकाशशरीरं ब्रह्म' इत्यादि च। श्रुतीनां चानुकूलतर्कविषया स्वतन्त्रतया च ब्रह्मणि प्रामाण्यमिति नवीनमतम्।

सांप्रदायिकमते शरीरस्य कुलालशरीरत्वादिनैव कारणत्वं, नतु शरीरत्वेनेतीश्वरस्यानित्यं शरीरं लोकानुग्रहेण व्यवहारप्रवर्तनार्थम्। अतोऽस्मदाद्यदृष्टजनिते रामकृष्णादिनामके शरीरे भूतावेशन्यायेनावेशः। कार्यकरणानन्तरं च त्याग इति।

अभिनवमते तु महेश्वरस्य विश्वमेव शरीरम्। तच्च नित्यानित्यपुञ्जघटितमित्यनित्यांशविरामेऽपि नित्यांशमादाय नित्यमेव। आकाशात्मकं च नित्यमेव। रामकृष्णादिनामकं त्वाविर्भावतिरोभावशालि भक्तानुग्रहेण कदाचित् क्वचिदाविर्भवति तिरोभवति च। अत एव तत्त्ववादिभिर्मूर्तमपि तन्नित्यं विभु चेत्यङ्गीक्रियते। सर्वत्र सर्वदा तथाभूतभक्तभावनया भक्तैः साक्षात्क्रियमाणत्वात्। तादृशसाक्षात्काराणां प्रमात्वे संभवति भ्रमत्वकल्पनस्यान्याय्यत्वात्। तदुक्तम्, औत्सर्गिकं धियां प्रमात्वमिति। विश्वात्मकं तु योगिप्रत्यक्षगम्यमपि विश्वरूपदर्शनादिषु श्रूयत

रश्मिः।

साधारणानैकान्तिकत्वमात्रं वा। तत्रेत्यादि विपक्षे अङ्कुरादौ कर्तृजन्यत्वसंदेहस्य कर्त्रनुपलम्भमात्रोत्पन्नतयोपाधिसत्प्रतिपक्षादिदोषानाहितत्वेनाङ्कुरादेः पक्षसमत्वेन पक्षानतिरेकात्। उपाधेरिति घटादौ कर्तृजन्यत्वसाध्यवति शरीरजन्यत्वाभावाभावात्साध्यव्यापकत्वं क्षित्यादौ च साधनवति शरीरजन्यत्वाभाव इति साधनाव्यापकत्वं चात उपाधेरित्यर्थः। प्रतिसाधनस्येति क्षितिः कर्त्रजन्या शरीराजन्यत्वात् अङ्कुरादिवद् इति प्रतिसाधनस्येत्यर्थः। अनैकान्तिकत्वमिति अङ्कुरादेः पक्षसमत्वाभावेन तत्र साधारणानैकान्तिकत्वमित्यर्थः। गुरुभूतस्येति पदार्थान्तरप्रवेशेन गुरुभूतस्येत्यर्थः। तस्य चेत्यादि जन्यत्वस्य च जन्यत्वरूपसाधनव्यापकत्वेनेत्यर्थः। एवं चेति लाघवाज्जन्यत्वस्यैवावच्छेदकत्वे सतीत्यर्थः। अभावादिति तथाचैवं रामानुजोक्तं दूषणमपि निरस्तं भवतीत्यर्थः। रामानुजाचार्यैः सांख्यमवलम्ब्य दत्तं सत्कर्मसंबन्धिरूपं दूषणं परिहरन्ति श्रुतिश्चेत्यादि। लोकानुग्रहेणेति लोकानुसारेणेत्यर्थः। रामकृष्णादीति आदिपदेन महाक्षितिजनकत्वाय चतुर्मुखादिशरीरस्य संग्रहः।

उक्ते मते उक्तानां शरीराणां जन्यत्वादशरीरस्येश्वरस्य तदकर्तृत्वापत्त्या व्यवहारप्रवर्तकत्वासंभवात् सांप्रदायिकमतं विहायाभिनवमतं वदन्ति अभिनवेत्यादि। तत्त्ववादिभिरिति कृष्णानुसारिभिः 'तत्त्वान्युक्तानि मे नव' इत्येकादशे। 'भूमिरापोऽनलः' इति गीतायाम्। औत्सर्गिक-

भाष्यप्रकाशः ।

एव सहस्राक्षः । एवं श्रुत्यादिभिः शरीरेऽङ्गीकृते तदनुसारिसकर्तृकत्वानुमानं निर्दुष्टमेव । एवमेकेनेश्वरेण सकलक्षित्यादिकार्यसंभवे सति प्रमाणाभावाद् गौरवाच्च नानेकेश्वरसिद्धिः । किंचानेकेश्वराङ्गीकारे तेषामैकमत्यं वैमत्यं वा स्यात् । तत्राद्ये स्वातन्त्र्याभावादैश्वर्यहानिः । द्वितीये तु कार्यासिद्धिरिति कार्यदर्शनात्, 'एकमेवाद्वितीयं ब्रह्म' इत्यादिश्रुतिभ्यस्तादृशैः पुराणैश्चैकस्यैव सिद्धिरिति न पूर्वोक्तं किमपि दूषणम् । एवमेकेश्वरसिद्धौ कर्मत्वादिलिङ्गकान्यप्यनुमानानि तमेकमेव साधयन्तीति न कोऽपि क्वापि दोष इति मैथिलभयदेवमिश्राः ।

ज्ञानेन्द्रभिक्षुस्तु, बुद्धिप्रभृतिकार्यम्, उपादानगोचरप्रत्यक्षजन्यं कार्यत्वात् घटादिवत् । यदि चोपादानगोचरापरोक्षवृत्तेरेव कार्यहेतुत्वं लाघवात् । न तु चैतन्यस्य गौरवादिति । तदा तु

रश्मिः ।

मिति धियां ज्ञानानां प्रमात्वमौत्सर्गिकं स्वाभाविकं भ्रमत्वादि त्वनौत्सर्गिकमित्यर्थः । पुत्रान्मदशक्तिवददृष्टपुत्रात्क्षित्यादिकार्याङ्गीकारे बाधकमाह किं चानेकेत्यादि । साधयन्तीति । न चान्तिमस्येश्वरासाधकत्वं शङ्क्यम् । तेन द्व्यणुकपरिमाणस्य संख्याजन्यत्वे सिद्धे द्व्यणुकपरिमाणजनिका संख्याऽपेक्षाबुद्धिजन्या एकत्वान्यसंख्यात्वात् । अयमेकः अयमेकः इमौ द्वौ इति द्वित्वसंख्यावत् इत्यस्मदाद्यपेक्षाबुद्धिजन्यत्वबाधात्तदाश्रयत्वेनेश्वरसिद्धेः । न च द्व्यणुकपरिमाणं परिमाणजन्यमेवास्तु इति वाच्यम् । द्व्यणुकपरिमाणं न परिमाणजन्यं अणुपरिमाणत्वात् परमाणुपरिमाणवदित्यनुमानेन तस्य परिमाणाजन्यत्वात् । मैथिलभयदेवमिश्रा इति । एवमेतेषु मतेषु कार्यत्वलिंङ्गकानुमाने शरीराजन्यत्वस्य दूषणस्य प्रबलत्वात्तत्परिहारायेश्वरे सशरीरत्वमावश्यकम् । शरीरस्यापि नित्यानित्यविकल्पकृतदोषपरिहाराय श्रुत्यालम्बनमावश्यकम् । अन्यथा नैयायिकादिभिरपि न तेनेश्वरसिद्धिरिति बोध्यम् । उपादानेत्यादि प्रकृते उपादानं प्रकृत्यंशरजःसत्त्वं तत्र तद्विषयकं प्रत्यक्षं यस्य तज्जन्यमित्यर्थः । तादृशप्रत्यक्षाश्रयत्वेनेश्वरसिद्धिरिति भावः । यदि चेति उपादानगोचरापरोक्षं च तद्वृत्तिः कर्मधारयः । चैतन्यस्येति उक्तप्रत्यक्षाश्रयत्वेनाक्षेप्यस्य बहुव्रीहिप्राप्तस्य वा । गौरवादिति उपादानगोचरप्रत्यक्षाश्रयत्वस्य साध्यतावच्छेदकत्वे शरीरगौरवादित्यर्थः । अत्र विभाव्यते इति शेषः । तथा चानेनानुमानेनोपादानगोचरप्रत्यक्षकृतिसिद्धेर्नेश्वरसिद्धिरिति भावः । कार्यहेतुत्वमिति कार्यं कार्यत्वं हेतुर्यस्येति तथोक्तम् । कार्यायोजनेति कारिकया कार्यपदं दत्तम् । यद्यपि तादृशप्रत्यक्षाश्रयत्वेनेश्वरसिद्धिरनुमानान्तरेण भवति तथापि प्रकारान्तरेण साधनायानुमानान्तरमाह तदा त्वित्यादि । न च स्वरूपासिद्धिरत्रेति वाच्यम् । उपादानगोचरप्रत्यक्षं साधिष्ठानं गुणत्वाद् रूपादिवदित्यनुमानेन तदधिष्ठानसिद्धौ तादृशाधिष्ठानं जन्यं कार्यत्वात् घटवदित्यनुमानेन तद्द्वारणसंभवादेवं चोपादानगोचरप्रत्यक्षपदं तादृशाधिष्ठाने गौणम् । उपादानगोचरप्रत्यक्षाधिष्ठानवृत्तीच्छाकृतिमजन्यत्वादिति हेतुः । वृत्तिः पदार्थान्तररूपा नात्र । नन्वेवमपि प्रकृतिसिद्धासङ्गपुरुषे व्याप्यत्वाभिमतस्य पक्षेऽभावः स्वरूपासिद्धिः । यथा ह्रदो द्रव्यं धूमादित्यत्र ह्रदे धूमाभावः । 'अविभक्तं च भूतेषु विभक्तमिव च स्थितम्' इति गीतोक्तेः स्वरूपासिद्धिस्तदवस्थेति चेन्न, उपादानगोचरप्रत्यक्षवृत्तीच्छाकृतिमत्त्वस्य समवायसमवाय्युपरागान्यतरसंबन्धेन विवक्षितत्वात् । न चैवमपीश्वरे हेतोः साध्याभाववद्वृत्तित्वेन साधारण्यमिति वाच्यम् । स्वरूपासिद्धिनिवृत्तिमात्रप्रयोजनकत्वेन वृत्त्यनियामकसंबन्धस्य तत्र साधारण्यसंपादकत्वाभावात् । व्याप्तिग्रहवेलायां

अन्ये पुनः श्रुत्यनुवादकमाहुः। सर्वज्ञत्वाय श्रुत्यनुसार्यनुमानं च ब्रह्मणि प्रमाणमिति।

तत्तु, 'तं त्वौपनिषदं पुरुषं पृच्छामि' इति केवलोपनिषद्वेद्यत्वादुपेक्ष्यम्।

भाष्यप्रकाशः।

शुक्लादीनि सकारणकानि, उपादानगोचरप्रत्यक्षवृत्तीच्छाकृतिमज्जन्यत्वात् घटादिवदित्येवं कारणीभूतसत्त्वस्य सिद्ध्यनन्तरं, तत्कारणसत्त्वं परस्य भोग्यम्, इच्छादिमत्त्वाज्जीवोपाधिवदिति कारणसत्त्वभोक्तृतयेश्वरोऽनुमेय इत्याह।

एवं चाभिनवोक्तरीत्याऽनुमानस्य श्रुत्यनुसारित्वेन प्रामाण्याद् व्यासचरणानां च श्रुत्यर्थनिर्णयाय प्रवृत्तत्वात् सूत्रमनुमानोपष्टम्भकश्रुत्यनुवादकम्। अनुमानस्य ब्रह्मणि प्रामाण्येऽनङ्गीकृते, यतो वेत्यादिश्रुतौ केवलं कर्तृत्वस्योक्तत्वादुपादानादिगोचरापरोक्षज्ञानवत्त्वस्यासिद्धेः। अङ्गीकृते तु तस्मिन् कर्तृत्वस्योक्तज्ञानव्याप्तत्वात् सुखेन सर्वज्ञत्वस्य सिद्धेरिति।

द्वितीयं मतमनुवदन्ति अन्य इत्यादि। तदुभयमेकहेलया दूषयन्ति तत्त्वित्यादि। अयमर्थः। बृहदारण्यके शाकल्यब्राह्मणे उदानप्रतिष्ठोत्तरश्रवणानन्तरं तूष्णींभूते शाकल्ये तं प्रति याज्ञवल्क्येन, 'स एष नेति नेत्यात्मा अगृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गोऽसितो न सज्जते न व्यथत इत्येतान्यष्टावायतनान्यष्टौ लोका अष्टौ पुरुषाः स यस्तान् पुरुषान् व्युदुह्य प्रत्युह्यात्यक्रामीत् तं त्वौपनिषदं पुरुषं पृच्छामि' इति वाक्ये मूर्तामूर्तब्राह्मणवदेतावत्त्वादिनिषेधपूर्वकं

रश्मिः।

गौणमुख्यन्यायेन समवायस्यैव ग्रहणात्। इत्याहेति सांख्यादिमतमवलम्ब्याहेत्यर्थः। नैयायिकस्यान्येषां च मतेन भाष्ये यत्सिद्धं तत्सिद्धान्ते यादृक् तादृशं वक्तुमाहुः एवं चेति। अयमर्थः। भाष्ये केचिदिति नैयायिकमतमुक्त्वान्येषां मतोक्तौ संगत्यर्थं प्रकाश एवं चेत्युक्तम्। शुष्कानुमानिकपक्षस्य वेदान्तानुपयोगस्य द्वितीयाध्यायद्वितीयपादे वक्ष्यमाणत्वात्। तथा च एवं चेत्यस्य शुष्कानुमानोक्तौ सत्यां चेत्यर्थः। वेदान्तापेक्षायामन्यमतेऽभिनवोक्तरीत्या श्रुतिप्रवेशाय हेतुभाष्यस्य श्रुत्यनुसार्यनुमानमित्यादेरर्थः प्रामाण्यादित्यन्तेन प्रकाशेनोक्तः। इतिर्हेतौ व्याकृतः। श्रुत्यनुवादकमिति भाष्यं तु व्यासेत्यादिप्रकाशेन व्याकृतम्। आहुरित्यत्रान्वेति। अनुमानस्येत्यादिप्रकाशेन सर्वज्ञेत्यादि भाष्यं व्याकृतम्। कर्तृत्वस्येति ईश्वरः उपादानादिगोचरापरोक्षज्ञानवान् कर्तृत्वात् कुलालवदित्येवं कर्तृत्वस्योक्तज्ञानव्याप्तत्वं तस्मात्। उक्तज्ञानेति उपादानादिगोचरापरोक्षज्ञानवान् कर्तृत्वात् इत्येवमुक्तज्ञानव्याप्तत्वात्। इति द्वितीयमिति एवंप्रकारकं द्वितीयमित्यर्थः। एकहेलयेति एकेनावज्ञानेन विलासेन वेत्यर्थः। तदित्थं पूर्वोक्तेषु मतेषु कार्यत्वलिङ्गकानुमाने शरीराजन्यत्वस्य दूषणस्य प्रबलत्वात् तत्परिहारायेश्वरे सशरीरत्वमावश्यकम्। शरीरस्यापि नित्यानित्यविकल्पकृतदोषपरिहाराय श्रुत्यालम्बनमावश्यकम्, अन्यथा महानैयायिकादिभिरपि न तेनेश्वरसिद्धिरिति। अत उक्तं भाष्ये उपेक्ष्यमिति। उदानेत्यादि कस्मिन्नुदानः प्रतिष्ठितः इति समान इति उदानप्रतिष्ठोत्तरश्रवणानन्तरमित्यर्थः। अत्रापि समानोन्तर्यामिणि प्रतिष्ठितः सोऽप्यक्षर इत्यर्थस्यौज्ञेयत्वाद् ब्रह्मणः स्वरूपमाहेत्याशयेन व्याकुर्वन्ति मूर्तामूर्तेत्यादि। मूर्तामूर्तब्राह्मणे हि मूर्तामूर्ते ब्रह्मणो रूपे उक्त्वोच्यते 'अथात आदेशो नेति नेति' इति तत्र निषेधो 'द्वे वा व ब्रह्मणो रूपे' इति षष्ठ्या आवितस्य भेदस्य रूपद्वयनिराकरणे 'सर्वतः पाणिपादं तत्' इत्यादयो विरुध्येरन्। तथा च रूपद्वयं ब्रह्मैव न तु ब्रह्मण इति सिद्ध्यति। तद्वदत्रापि नेति नेत्यनेन

भाष्यप्रकाशः।

करणाद्यग्राह्यो नित्योऽसङ्गो निर्दुःखः शारीराद्यानष्टौ पुरुषान् पृथिव्याद्यायतनेषु तत्तल्लोकेषु च विशेषेणोच्चैः स्थापयित्वा पुनस्तत उपसंहृत्य, योऽतिक्रान्तवानेतादृश उपनिषद्वेद्यः पुरुषः पृष्टः। तत्राग्राह्यपदे यदि केवलेन्द्रियाग्राह्यत्वं विवक्षितं भवेत् तदानुमानादिनापि वेद्यत्वादौपनिषदपदमनतिप्रयोजनं स्यादतस्तत्र यावत्प्रमाणागोचरत्वमेवाख्येयम्। तथासत्यौपनिषदपदे(न) प्रतिप्रसव एवोपनिषदां सिद्ध्यतीति ब्रह्मणः केवलोपनिषद्वेद्यत्वमेव श्रुतिविवक्षितम्।

यत्तु भैक्षवे, उपनिषन्मूलप्रमाणकमुपनिषन्महातात्पर्यविषयं वा औपनिषदं, 'सर्वे वेदा यत्पदमामनन्ति', 'वेदैश्च सर्वैरहमेव वेद्यः' इतिश्रुतिस्मृतिभ्यामित्युक्तम्। तस्मिन्नपि पक्षे अग्राह्यपदोक्तप्रतिषेधस्य तुल्यत्वान्नैतः कोऽपि विशेषः सिद्ध्यति। किंतूक्तश्रुतिस्मृत्योर्मध्ये वेदपदात् पूर्वकाण्डवेद्यत्वमात्रमधिकमायातीत्यग्राह्यपदविरोधः पूर्ववदेव। नचाधिकागमने केवलोपनिषद्वेद्यत्वहानिः शङ्क्या। 'सर्वे वेदाः' इतिवाक्यस्याप्यौपनिषदत्वेन 'मनसैवानुद्रष्टव्य' इत्युक्तमनोवेद्यत्ववत् सर्ववेदवेद्यत्वस्याप्युपनिषन्मात्रसिद्धत्वात्। एवं च मनसोऽपि श्रुत्युक्तसाधनैः शुद्धस्य एव दर्शनकरणत्वं, वेदानामपि वेदान्तविज्ञानसुनिश्चितार्थानामेव वेदनकरणत्वमित्युपनिषद एव मूलप्रमाणत्वमिति, न केवलोपनिषद्वेद्यत्वहानिः। अतः प्रमाणान्तरावेद्यत्वात् सूत्रस्यानुमानत्वकथनमप्रयोजकम्। श्रुतिविचारार्थमेव सूत्रकृतः प्रवृत्तेरिति। एतदेवाभिप्रेत्य भट्टभास्करादिभिरनुमानानि दूषितानीति युक्त्या विचारे ईश्वरपक्षकं पूर्वोक्तमितरव्यतिरिक्तसाध्यकानुमानमप्याश्रयासिद्धमेव।

अथ नव्याभिनववादिमतमालम्ब्य शरीरिण ईश्वरस्य कर्तृत्वमङ्गीक्रियते तदापि नानुमानस्य श्रुत्यनुसारित्वम्। कर्तृत्वनिर्वाहकतयाज्ञानादिवच्छरीरस्यापि जगत्पूर्ववर्तिताया आवश्य-

रश्मिः।

पूर्वोक्तैतावद्ग्राह्यनिषेधपूर्वकमित्यर्थः। शारीराद्यानित्यादि शारीरादित्यस्थवायुस्थचन्द्रस्थाग्निस्थछायामयाप्सुप्रतिष्ठपुत्रमयान्पुरुषान् पृथिवीरूपाकाशकामतेजस्तमोरेतोरूपेष्वायतनेषु 'पृथिव्येव यस्यायतनं रूपाण्येव यस्यायतनं' इत्यादिश्रुतिभिः तत्तल्लोकेषु चक्षूरूपेषु सर्वत्र चक्षुर्लोक इति श्रावणात्। अग्निर्लोक इत्यादिपाठे तु अग्न्यादिरूपेषु व्युदुह्य विशेषेणोच्चैः स्थापयित्वा प्रत्यूह्य पुनस्तत उपसंहृत्य अत्यक्रामीद्योऽतिक्रान्तवानित्यर्थः। अग्राह्यः करणागोचर इति व्याख्यां दूषयितुमाहुः तत्राग्राह्येत्यादि। तत्र यावदिति अग्राह्यपद इत्यर्थः। तुल्यत्वादित्यादि केवलेन्द्रियाग्राह्यत्वपरत्वेन तुल्यत्वान्न शांकरव्याख्यानतः कोपि विशेषः सिद्ध्यतीत्यर्थः। पूर्ववदेवेति अनुमानादिवेद्यत्वेनौपनिषदमनतिप्रयोजनं स्यादतोऽग्राह्यपदविरोध औपनिषदपदेनेति तादृशविरोधपराकरणायास्मदुक्त एवार्थ इत्यर्थः। श्रुतिस्मृत्योर्विरोधं सिद्धान्ते पराकुर्वन्ति न चाधिकेत्यादि। मनसैवेत्यादि मनसैव भक्तिभावनादेरनु पश्चाद्धृदयादौ द्रष्टव्योऽयमर्थः। अप्रयोजकमिति शुष्कानुमानस्य तर्कत्वेपि वेदयुक्तित्वाभावेन मीमांसातर्कत्वे न तु प्रयोजकम्। पूर्वोक्तमिति वैशेषिकमतोपन्याससमाप्तिस्थल उक्तम्। आश्रयासिद्धमिति घम्मीत्ववदीश्वर इति पक्षे पृथिवीत्ववत्तत्रूपपक्षतावच्छेदकाभावात्। काञ्चनमय-

भाष्यप्रकाशः।

कत्वेन तदानींतनस्य तस्य नित्यानित्यपुञ्जात्मकविश्वरूपरूपताया वक्तुमशक्यत्वात्। नच नित्यांशमादाय सिद्धिः। तेषां नानात्वेन तेषु शरीरत्वस्य प्रत्येकपर्याप्त्या तद्धर्मैः सूक्ष्मत्वानवयवत्वादिभिर्जगत्करणप्रतिबन्धापत्तेः। नच नित्यपुञ्जात्मकमेव तदङ्गीकार्यमिति वाच्यम्। यस्य पृथिवी शरीरमित्यादौ पृथिव्यादिगतैकत्वव्याकोपात्। 'सर्वतः पाणिपादं तत्'इत्यादिविरोधापत्तेः। सृष्टिप्रकरणेषु सच्चिदानन्दातिरिक्ततदनुक्त्या तद्विरोधापत्तेश्च। अतो नव्यादिमतीयानुमानस्यापि न श्रुत्यनुसारित्वम्। एतेनैव मैक्षवमपि दत्तोत्तरम्। प्रथमानुमानस्य नैयायिकतुल्यकक्षत्वात्। द्वितीयेऽपि प्रयोगे यदालम्ब्य सत्त्वस्य कारणत्वेन सिद्धिः क्रियते तेषु प्रकरणेषु सत्त्वस्य सर्वकारणताया अनिश्चायितत्वेनानुमानस्याप्रयोजकत्वात्। नच स्मृत्या तत्परिहरणीयमिति वाच्यम्। श्रुतिविरुद्धायास्तस्या एवानादरणीयत्वात्। मैत्रायणीयश्रुतौ, 'तमो वा इदमग्र आसीदेकं तत्परे स्यात् तत्परेणेरितं विषमत्वं प्रयात्येतद्रूपं वै रजस्तद्रजः खल्वीरितं विषमत्वं प्रयात्येतद्वै सत्त्वस्य रूपम्' इत्येवं परप्रेरणेन रजसः सत्त्वस्य च भवनकथनात्। तृतीयेऽपि प्रयोगे सत्त्वस्य परभोग्यत्वेनोपाधित्वाङ्गीकारात् तदुत्पत्तेः पूर्वं परस्य निरुपाधिकत्वेनेच्छाद्यभावात् प्रेरणस्याप्यसंभवापत्तेः। नैयायिकादिवन्नित्यज्ञानेच्छादीनामीश्वरसमवेतत्वाङ्गीकारे शरीराभावप्रयुक्तदोषतादवस्थ्यात्, सांख्यादिमतालम्बनाडम्बरवैयर्थ्याच्च। अतः श्रुत्यनुसारित्वाभावान्नानुमानं ब्रह्मप्रमितिजननायालम्। नापि योगिप्रत्यक्षम्। 'विदूरकाष्ठाय मुहुः कुयोगिनाम्' इति द्वितीयस्कन्धवाक्यात्। 'यमेवैष वृणुते' इति, 'धातुः प्रसादात्'इति श्रुतेश्च। नच गीतोक्तविश्वरूपदर्शनादिविरोधः। तस्य मूलरूपत्वाभावात्। कालोऽस्मीति तत्रैव निर्धारणात्। तत्रापि, 'रूपं परं दर्शितमात्मयोगात्' इति वाक्येन तस्यापि भगवद्बलेनैव दर्शनेन योगस्याप्रयोजकत्वाच्च। उपपत्तेश्चेत्यादौ यदुपपत्त्युपन्यसनं, तदपि न ब्रह्मस्वरूपज्ञापकतया, किंतु हेत्वाभासैः परान्तरशङ्कानिरासकतयेति वक्ष्यते।

रश्मिः।

पर्वत इतिपक्षे काञ्चनमयत्ववत्। **अशक्यत्वादिति** अनुत्पन्नतया तथात्वादित्यर्थः। **सिद्धिरिति** तदानींतनशरीरसिद्धिरित्यर्थः। **सूक्ष्मेति** आदिशब्देनैक्यभ्रमजनकत्वम्। **नित्यपुञ्जात्मकमिति**। ननु प्रत्येकपर्याप्त्येत्यर्थः। एवं सति श्रुत्यनुसारित्वमुद्घोषयतस्तव शरीरत्वस्य प्रत्येकपर्याप्तिबोधकश्रुतिविरोध इत्याहुः **यस्य पृथिवीत्यादि**। **सच्चिदित्यादि**। एतदतिरिक्तशरीरानुक्त्येत्यर्थः। **नैयायिकेत्यादि** बुद्धिप्रभृति कार्यं नोपादानगोचरप्रत्यक्षजन्यं कार्यत्वादङ्कुरवत्, इति साधारणविरुद्धत्वाभ्यां हेतोस्तथेत्यर्थः। **यदालम्ब्येति** सांख्यमालम्ब्येत्यर्थः। **अप्रयोजकत्वादिति** निश्चितसर्वकारणताकसत्त्वातिरिक्तकारणसिद्ध्याप्रयोजकत्वादित्यर्थः। **स्मृत्येति** 'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः' इति स्मृत्या। **तदुत्पत्तेरिति** सत्त्वोत्पत्तेरित्यर्थः। **इच्छाद्यभावादिति** आदिना ज्ञानयत्नौ। **प्रेरणस्येति** सत्त्वप्रयोजकस्य तमसः प्रेरणस्येत्यर्थः। **द्वितीयेत्यादि** तथाच 'अनागतमतीतं च' इत्यत्रापि ब्रह्मभिन्नमिति वाच्यमिति भावः। **कालोऽस्मीति** श्वेताश्वतरे 'कालः स्वभावो नियतिर्यदृच्छा' इत्यत्राचिन्त्यत्वेनोक्तोऽस्मीति तात्पर्येण कालकर्मस्वभावशक्तिषु श्रीभागवतोक्तासु निवेशात्। ननु 'सदेव सोम्येदमग्र आसीत्' इत्यत्राद्वितीयत्वाय कालस्यापि ब्रह्मत्वसाधनेपि काल उपदेश इति धातुपाठयोग आवश्यकः सिद्धान्त इति कथमेवमिति चेत्तत्राहुः **तत्रापीत्यादि**। **अप्रयोजकत्वादिति** उपदेशस्य शक्तिपरत्वेपि

**अनधिगतार्थगन्तृत्वात् प्रमाणस्य । मनननिदिध्यासनयोः श्रवणाङ्गत्वम् ।**

भाष्यप्रकाशः ।

'आचारदर्शनात्' इति सूत्रं तु कर्मविषये, न तु ब्रह्मविषय इति न किंचिदेतत् । अतस्तदुपेक्ष्यमेव ।

ननु श्रुत्युक्तं सच्चिदानन्दात्मकं शरीरमङ्गीकृत्यानुमानदोषनिरासे दोषाभावात् कथमुपेक्ष्यत्वमित्यत आहुः **अनधीत्यादि** । तथाच सिद्धसाधनत्वाच्छ्रुत्युक्तसकलविशेषविषयकप्रमित्यजनकत्वाच्चाप्रामाण्यमित्यर्थः। ननु 'मन्तव्यः' इति श्रुत्या मननं विहितम् । तच्च युक्तिभिरनुचिन्तनम् । युक्तयश्चानुमानरूपा इति श्रुत्यनुकूलानुमानस्य प्रामाण्यं श्रुत्यैव सूच्यत इति कथं पूर्वोक्तमतस्योपेक्ष्यत्वमुच्यत इत्याशङ्कायामाहुः **मननेत्यादि** । तथाच मननादेरङ्गत्वबोधनादनुमानादेः सहकारित्वं न निवार्यते, किंतु करणत्वमतस्तदंशे उपेक्ष्यत्वम् नच सर्वज्ञत्वासिद्धिः । विपश्चित्त्वश्रुतेः 'यः सर्वज्ञः सर्ववित्' इति श्रुत्यन्तराच्च तत्सिद्धेरिति 'उपपत्तेश्च' इत्यादिसूत्रेष्वप्यत एव

रश्मिः ।

संभवेन मूलरूपत्वसाधनेऽप्रयोजकत्वात् । **अतस्तदिति** नैयायिकतुल्यत्वाद् भैक्षवमपीत्यर्थः । **शरीरमिति** आनन्दस्याकारसमर्पकत्वात्तथा । **सिद्धसाधनत्वादित्यादि** श्रुतिसिद्धानां साधनत्वाद्धेतुष्वनुमानानां च श्रुत्युक्तसकलविषयकप्रमित्यजनकत्वाच्चाप्रामाण्यमत् उपेक्ष्यत्वमित्यर्थः । इदं च लक्षणं वाक्यमात्रप्रामाण्यापेक्षं तेन गगनकुसुममित्यादौ वाक्येऽप्रमाणे नातिव्याप्तिः। तेनेश्वरसिद्ध्यधीनं वेदप्रामाण्यं वेदप्रामाण्याधीनेश्वरसिद्धिरित्यन्योन्याश्रयोपि व्याख्यातः । आप्तोक्तं वाक्यं प्रमाणमितिलक्षण एव तत्प्रसरात् । प्रमाणेन शब्देन श्रोत्रेण वानधिगतस्य स्वर्गादिसाधनत्वस्य यागादावर्थस्य गन्तृत्वमर्थविषयकप्रमाकरणत्वात् प्रापकत्वम् । न चैवं वैयाकरणव्युत्पत्तिविरोधः । प्रमीयते अनेनेति प्रमाणमिति करणे ल्युट् । ननु प्रमाकरणं प्रमाणमिति प्रसिद्धलक्षणं कुतो नादृतम् । अन्योन्याश्रयान्नादृतमिति चेद्धारणया वृत्त्यानुगमिष्यतीति चेन्न । तस्य व्याकरणादिप्रसिद्धत्वेऽपि 'परोक्षवादो वेदोयम्' इति 'परोक्षं च मम प्रियम्' इति च कथनादनधिगतार्थस्य परोक्षत्वात् । न च फलांशे परोक्षवादो यथा 'स्वर्गकामो यजेत' इत्यत्रात्मसुखमादाय स्वर्गपदेऽर्थ इति वाच्यम् । निबन्धटीकाया विष्णुस्वामिमतीयत्वाद् एतस्यैकादशसुबोधिनीमतत्वादोम् । **मननमित्यादीति** श्रुतौ श्रवणं नाम भगवद्वाचकपदवाक्यानां ब्रह्मणि शक्तितात्पर्यनिर्धारः । स च मनननिदिध्यासने विना न संभवतीति श्रवणाङ्गत्वं निदिध्यासनद्वारा मननस्येत्यर्थः । अथवा मनननिदिध्यासननिरूपितं श्रवणस्याङ्गत्वम् । स्मरणं हि मननं श्रुतस्य भवतीति श्रवणमननयोः कार्यकारणभावबोधकस्मर्यमाणसूत्रभाष्यात् । न तु मननमात्राङ्गत्वं श्रवणनिदिध्यासनयोरतो निदिध्यासनाङ्गं मननं न विरुद्धमित्यर्थः । न चैवं मननस्य निदिध्यासनाङ्गत्वमित्येवं भाष्येऽत्र तु मनननिदिध्यासनयोः श्रवणाङ्गत्वमितीति शङ्क्यम् । श्रवणानन्तरं मननं पुनश्च श्रवणं निदिध्यासनं चेत्यर्थद्वारा निदिध्यासनदार्ढ्ये तात्पर्यात् तावन्मात्रोक्ते साधनसरण्या तात्पर्याज्ञानात् । द्वितीयपादेऽप्येवं वक्ष्यन्ति सर्वत्र प्रसिद्धोपदेशाधिकरणे । **तदंश इति** करणत्वाभ्युपगमांशे इत्यर्थः । एतेन —

'अत्र मां मार्गयन्त्यद्धा युक्ता हेतुमिरीश्वरम् ।
गृह्यमाणगुणैर्लिङ्गैरग्राह्यमनुमानतः' ॥

इति श्रीभागवतवाक्यमपि व्याख्यातम् । **अत एवेत्यादि** साधनाध्याये द्वितीयपादे सहकारि-

संदेहवारकत्वाच्छास्त्रस्यापि तदङ्गत्वमिति ॥ २ ॥

इति प्रथमाध्याये प्रथमपादे द्वितीयं जन्माद्यधिकरणम् ॥ २ ॥

---

भाष्यप्रकाशः ।

तन्निर्देशो, न तु करणत्वेनेत्यर्थः । एतदेवोपकारकत्वं स्मृत्यादिष्वपीत्यतिदेष्टुमाहुः संदेहेत्यादि । तदङ्गत्वमिति मननाङ्गत्वम् । अत एव, 'स्मृतेश्च' इत्यादिसूत्राणि ।

'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं चालयिष्यति' ॥

॥ इत्यादिवाक्यानि च । एतस्यैव निष्कर्षो निबन्ध उक्तः ।

'वेदाः श्रीकृष्णवाक्यानि व्याससूत्राणि चैव हि ।
समाधिभाषा व्यासस्य प्रमाणं तच्चतुष्टयम् ।
उत्तरं पूर्वसंदेहवारकं परिकीर्तितम्' ॥

इति । तथाच संदेहवारकतया कल्पसूत्रवद् व्याख्यानरूपत्वान्नानुवादकत्वमित्यर्थः । कारिकार्थस्तु तद्विवरणग्रन्थाद् बोध्यः ।

इति द्वितीयं जन्माद्यधिकरणम् ॥ २ ॥

एवं जिज्ञास्यस्य ब्रह्मणो लक्षणं तत्र प्रमाणं च निर्णीय तस्य किं ब्रह्मणः कारणतामात्रे तात्पर्यमुत तच्चद्विशेषविशिष्टायां तस्यामिति संशयमपनेतुमग्रिममधिकरणमित्याशयेन तदवतारयन्ति

रश्मिः ।

त्वादेव श्रुतिनिर्देश इत्यर्थः । स्मृत्यादिष्विति । आदिशब्देन मीमांसा । तदङ्गत्वमितीति शास्त्रस्य मीमांसारूपस्यापि श्रवणाङ्गत्वं भाष्यात् । अपिशब्देनेतिहासपुराणे । तत्पक्षे तदङ्गत्वपदार्थमाहुः मननाङ्गत्वमिति । स्मृतेश्चेति इमानि सूत्राणि द्वितीयपादे वक्ष्यन्ते, स्मृतिर्मीमांसारूपापि । चैव हीति चकारेण जैमिनिस्मृतिः । संदेहेत्यादिभाष्यनिष्कर्षमाहुः तथा चेत्यादि । नानुवादकत्वमिति स्मृतिशास्त्रस्य जन्मादिसूत्रस्य वा नानुमानोपष्टम्भकश्रुत्यर्थानुवादकत्वमित्यर्थः । तद्विवरणेत्यादि तत्त्वदीपावरणभङ्गाद्येत्यर्थः । तत्र ननु चतुर्णां कोपयोगः एकेनैव चरितार्थत्वाच्चेत्याशङ्क्याहुः उत्तरमित्यादि उत्तरोत्तरं पूर्वपूर्वस्य संदेहवारकं प्रकर्षेण कीर्तितम् । यथा 'अपाणिपादो जवनो ग्रहीता' इत्यत्र किं प्राकृतपाणिरहितं ब्रह्म आहोस्वित् सामान्यनिषेध इति संदेहे सर्वतःपाणिपादान्तमित्यादि गीतावाक्यं निर्णायकं, तथा गीतायां 'नित्यः सर्वगतः स्थाणुः' 'ममैवांशो जीवलोके' इत्यादिषु संदेहे सूत्रैर्निर्णयः । 'उत्क्रान्तिगत्यागतीनाम्' इत्यादिभिः । तथा 'जन्माद्यस्य यतः' इति संदेहे 'अन्वयव्यतिरेकतः' इति भागवतेन, निर्णय इति तत्त्वदीपे । उत्क्रान्त्यादिसूत्रैरंशत्वनिर्णयः अन्वयव्यतिरेकत इति । श्रीभागवतवाक्ययोः 'अन्वयव्यतिरेकाभ्यां यत्स्यात् सर्वत्र सर्वदा' 'समन्वयेन व्यतिरेकतश्च' इति द्वितीयैकादशस्थयोरर्थकथनम् । तथाचैतयोर्वाक्ययोर्जन्मादिसूत्रे शबलस्य ब्रह्मणो वा कार्यलक्षणमिति संदेहे निर्णायकत्वमित्यावरणभङ्गे । 'जन्माद्यस्य यतोन्वयादितरतः' इति वाक्यमपि संग्रहीतुं शक्यम् । तदुक्तं कौर्म्ये 'न च वेदादृते किंचिच्छास्त्रं ब्रह्माभिधायकम्' इति ।

॥ इति द्वितीयं जन्माद्यधिकरणम् ॥ २ ॥

प्रसङ्गसंगत्या हेतुतासंगत्या वाधिकरणमवतारयन्ति एवमित्यादि । तस्येति लक्षणस्येत्यर्थः । तद्विशेषेत्यादि तच्चद्विशेषः समवायित्वनिमित्तत्वकर्तृत्वरूपस्तद्विशिष्टायां कारणतायामित्यर्थः ।

तत्रैतत् स्यात्। तत्र किं समवायि निमित्तं कर्तृ वा। किमतो यद्येवम्। एवमेतत् स्यात्। यद्येकमेव स्यात् तदा क्रियाज्ञानशक्त्योर्निरतिशयत्वं भज्येत। मृदादिसाधारण्यं च स्यात्।

मतान्तरवत् कथमेवं संदेहो यावता, 'यतो वा इमानि' इत्यादिभ्यो निःसंदेहश्रवणात्। एवं हि सः। पञ्चमी श्रूयते यत इति। पञ्चम्यास्तसिलिति। आत्मन इत्यपि पञ्चमी, निमित्तत्वे न संदेहः। पञ्चम्या निमित्तत्वकथनात्। उपादानत्वे

भाष्यप्रकाशः।

तत्रैतत् स्यादित्यादि संदेहवारकेऽस्मिञ्छास्त्रे वक्ष्यमाणं विचार्यं स्यात्। तदाहुः तत्र किमित्यादि। तत्रेति श्रुतौ। मम तु तदिति प्रथमान्तपाठोऽत्र प्रतिभाति। चोदयति किमतो यद्येवमिति। कारणतामात्रादरेणैव जगत्कारणीभूतब्रह्मप्रमित्या प्रमाणसाफल्ये जाते पुनः संशयपङ्कं निपात्य तन्निरसनार्थकात् प्रयासात् किं फलान्तरं संपाद्यमित्यर्थः। तत्रोत्तरमाहुः एवमेतत् स्यादिति। वक्ष्यमाणेन विचारेण वक्ष्यमाणदोषनिवृत्तिरूपं फलं स्यादित्यर्थः। तदुपपादयन्ति यद्येकमित्यादि। यदि कारणतामात्रादरेण प्रमितेः पूर्तिरङ्गीकार्या तदैकं निमित्तादिषु वक्तव्यम्। तत्र यदि दण्डादिवन्निमित्तं, यदि वा प्रयोज्यवत् कर्तृ, तदा यथायथं क्रियाशक्तेर्ज्ञानशक्तेश्च निरतिशयत्वभङ्गः। दण्डाद्यपेक्षया कर्तरि क्रियाशक्तेः प्रयोज्यापेक्षया प्रयोजके ज्ञानशक्तेराधिक्यदर्शनात्। यदि मृद्वत् समवायित्वं, यदि वा कुलालादिवत् कर्तृत्वं, तदा तत्साधारण्यं, विकृतत्वमनाप्तकामत्वं चेति। तथाचैतद्दोषनिरासः फलमित्यर्थः। अत्र चोदयति मतान्तरवदित्यादि सांख्यन्यायादिरूपस्य मतान्तरस्य स्मृतिरूपत्वात् तज्जनकानुभवे दुष्टत्वस्य संभावितत्वात् तत्रोचितः संदेहः। अत्र तु तदभावान्न तस्य संभावनेत्यर्थः। संदेहोत्पत्तिप्रकारमाहुः एवमित्यादि। निमित्तत्वकथनादिति 'विभाषा गुणेऽस्त्रियाम्' इत्यत्राकारप्रश्लेषे अगुणादपि हेतोः पञ्चम्यङ्गीकृता। यथा धूमाद् वह्निमानित्यादौ। एवं प्रकृतेऽपि

रश्मिः।

सामानाधिकरण्येऽन्वयसौष्ठवादाहुः मम त्वित्यादि। कर्तुरपि निमित्तत्वेन पृथङ्निर्देशानुपपत्तिमाशङ्क्य तयोर्भेदसाधनायाहुः तत्र यदीत्यादि। 'स्वतन्त्रः कर्ता' 'साधकतमं करणम्' इति लक्षणभेदात् कर्ता करणं हेतुरिति संज्ञाभेदात् कारकपञ्चकत्वापत्तेश्च कर्ता पृथक्। न च गौरवमिति शङ्क्यम्। 'शिक्षा कल्पो व्याकरणम्' इतिश्रुतेर्नैयायिकलाघवस्यायुक्तत्वादसमवायिकारणस्य निमित्तत्वाच्च। मृदादीत्यादि भाष्यमवतारयन्ति यदि मृदित्यादि। साधारण्यमेवाहुः विकृतत्वमित्यादि। एतद्दोषेति मृत्कुलालादिसाधारण्यदोषनिरास इत्यर्थः। मतान्तरेति भाष्यं देहलीप्रदीपन्यायेनोत्तरत्रापि मतान्तरे ब्रह्मणि विकृतत्वाद्यनङ्गीकाराद् दृष्टान्तः परत्रेति मतान्तरवत्कथमित्यादि चोदकं भाष्यमित्याशयेनावतारयन्ति अत्रेत्यादि। स्मृतिरूपत्वादिति लोकप्रमितार्थान् स्मृत्वा युक्त्या यथाबुद्धि संशोध्य शास्त्रप्रणयनेन तथात्वादित्यर्थः। संभावितत्वादिति करणदोषेण बुद्धिदोषरूपेण तथात्वादित्यर्थः। तदभावादिति श्रुत्यवलम्बनान्मानसीनानुग्रहेण चक्षुरादिकरणे दोषाभावादित्यर्थः। [वस्तुतस्तु सांख्यमते प्रकृतेरिव ब्रह्मणोऽपि विकृतत्वापातः इति मतान्तरवदिति भाष्यं यथाश्रुतमेव साधीयः] भाष्ये। श्रूयत इति सूत्रविषयवाक्ययोः श्रूयते इत्यर्थः। प्रकृते। अकारेत्यादि। इदं च बाहुलकं

१. तसिरिति।

कर्तृत्वे च संदेहः । तद्वाचकाश्रवणात् कल्पनायां प्रमाणाभावात् । समवायित्वे पुनः सुतरां संदेहः । एवं प्राप्त आह ।

तत्तु समन्वयात् ॥ ३ ॥ ( १।१।३ )

तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । निमित्तत्वस्य श्रुतिसिद्धत्वात् मतान्तरनिराकरणत्वेनाग्रे वक्ष्यते । तत् ब्रह्मैव समवायि कारणम् । कुतः । समन्वयात्

भाष्यप्रकाशः ।

तत्कथनात् । तथाच तावन्मात्राङ्गीकारे उक्तरीत्या क्रियाज्ञानशक्त्योर्निरतिशयत्वभङ्गप्रसङ्गः । तन्निवृत्त्यर्थमुपादानत्वकर्तृत्वयोरप्यङ्गीकारे प्रमाणाभावात् संदेहः । समवायस्याग्रे दूषितत्वात् समवायित्वे विकृतत्वस्यापत्तेश्च तत्र सुतरां तथेत्येवं समवायित्वेऽत्यन्तं संदिग्धे सूत्रमाहेत्यर्थः । एतेनास्याधिकरणस्य पूर्वेण सह सामान्यविशेषभावः संगतिरपि दर्शिता ।

तत्तु समन्वयात् ॥ ३ ॥ एवं पक्षत्रयेऽपि दोषा इति तान् विहाय श्रुत्युपपत्त्यर्थं केवलं तटस्थकारणत्वमादरणीयमित्याशयेन पूर्वपक्षयुक्तिमाहुः निमित्तत्वस्येत्यादि । ननु तुशब्दो विशेषावधारणपूजाव्यावृत्तिपादपूरणार्थहेतुषु दृष्टस्तत् कथं व्यावृत्त्यर्थ एवात्र गृह्यत इत्यत आहुः मतान्तरेत्यादि । 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्'इत्यादौ तथा दर्शनादत्रापि तथेत्यर्थः । तत् ब्रह्मैव समवायिकारणमिति तत् अनुभूतं प्रसिद्धं वा समवायिकारणं ब्रह्मैवेत्यन्वयः ।

रश्मिः ।

प्रकृतेस्तदनुद्धेरिति वार्तिकप्रयोगाद्गुणेऽस्त्रियामिति प्रायिकमित्यन्य इति शेखरे केषांचिन्मतमनूदितं तदनुसारेण बोध्यम् । तथाचाकारप्रश्लेषाद्धूमाद्वह्निमानित्यस्य अस्त्रियामित्यत्राकारप्रश्लेषे नास्ति घटोऽनुपलब्धेरित्यस्य च प्रयोगस्य सिद्धिरित्याशयः । यद्वा उभयत्रापि अकारप्रश्लेषाप्रश्लेषाभ्यां जाड्येन आड्याद्वा बद्धः धूमाद्वह्निमान् नास्ति घटोनुपलब्धेरिति प्रयोगत्रयसिद्धिरित्याशयः । दीक्षितैस्तु हरदत्तग्रन्थानुसारेण विभाषेति योगं भङ्क्त्वा अगुणे स्त्रियां च पञ्चमी साधितेति ध्येयम् । यथा धूमादिति धूमपदं स्वज्ञाने वह्निमत्पदं स्वज्ञानविषये लाक्षणिकमत्र ज्ञेयम् । हेतुहेतुमद्भावोपपत्तये । उपादानत्व इत्यादिभाष्यं विवृण्वन्ति तन्निवृत्तीत्यादि । भाष्ये । ननु मृदः कुलालाच्च घट इति प्रयोगात् कर्तृत्वोपादानत्ववाचकपञ्चमीश्रवणं यत इति आत्मन इति चेति कथं तद्वाचकाश्रवणमत आहुः कल्पनायामित्यादि । प्रकृते । समवायित्व इत्यादि भाष्यं विवृण्वन्ति समवायस्येत्यादि । अग्र इति द्वितीयाध्यायद्वितीयपादे 'समवायाभ्युपगमाच्च साम्यादनवस्थितेः' इति सूत्र इत्यर्थः । तथेति संदेहत्वेन प्रकारेण संदेह इत्यर्थः । सामान्येत्यादि प्रसङ्गस्यावान्तरभेदो हेतुतास्य इत्यर्थः ।

तत्तु समन्वयात् ॥ ३ ॥ दोषा इति निमित्तत्वे क्रियाज्ञानशक्त्योर्निरतिशयत्वभङ्गः, कर्तृत्वे प्रमाणाभावः, उपादानत्वे विकृतत्वमिति दोषा इत्यर्थः । निमित्तत्वस्येत्यादीति ल्यब्लोपे पञ्चम्यत्र निमित्तत्वमात्रस्य श्रुतिसिद्धत्वमङ्गीकृत्य समवायित्वे कर्तृत्वे च ब्रह्मणो न संदेग्धव्यमित्येतत्तुशब्द आहेति वृत्त्यनुसारेणार्थः । विशेषेत्यादि समुच्चयोप्युपलक्षणीयः । तथा च विश्वः 'तुः पादपूरणे भेदे समुच्चयेऽवधारणे' इति । अत्र तत्पदेन ब्रह्मपरामर्शभ्रमं वारयन्तोऽधिकारसूत्रलभ्यत्वात्, पर्वतो धूमादिति प्रयोगादर्शनात् वह्निमान्धूमादिति दर्शनात्, रूपादावंशतो बाधसंभवात् । समवायित्वस्य साध्यताभ्रममनुमानत्वाय वारयन्ति तदित्यादि । ब्रह्मैव तत्समवायिकारणमिति योजना । समन्वयपदसमभिव्याहारात् सूत्रे सोपयु-

१. क्वचिदेवं पाठः । अन्यत्र भिन्नः पाठः ।

**सम्यगनुवृत्तत्वात् । अस्तिभातिप्रियत्वेन सच्चिदानन्दरूपेणान्वयात् ।**

भाष्यप्रकाशः ।

ननु सम्यगनुवृत्तत्वमनारोपितानागन्तुकरूपेण सर्वं लक्ष्यीकृत्य वर्तमानत्वम् । तज्जगति ब्रह्मणः कथम् । न हि जगति ब्रह्मणोऽनारोपितानागन्तुकेन ब्रह्मत्वेन रूपेणान्वयोऽवगम्यते, यथा पटे तन्तोर्घटे वा मृद इत्याकाङ्क्षायां तदाहुः अस्तीत्यादि । तेषु तेषु वस्तुषु तत्तत्पुरुषप्रतीतिविषयेणास्तित्वादिधर्मेणावगम्यमानात् सदादिरूपेणान्वयात् । यो हि यदन्वितः स स्वस्मिंस्तद्विषयां प्रतीतिमाधत्ते, यथा घटादिः पृथिवीत्यादिप्रतीतिम् । तथात्र सर्वमस्तीत्यादिप्रतीतिजनकत्वात् सदाद्यन्वितम् ।

रश्मिः ।

ज्यते न ब्रह्मेत्यनुवर्तते, तथा च भाष्येऽनुमानप्रतीतावपि औपनिषदत्वविघटिकेति न सोपयुज्यते । एवं मदुक्तप्रकारेण योजने नानुमानप्रतीतिः । तथाहि । अत्र समवायिकारणमिति न पक्षः । तथा सति समवायिनो द्रव्यमात्रस्य ब्रह्मत्वसिद्ध्या ब्रह्मणस्तदतिरिक्तस्यापि समवायित्वासिद्धेः पर्वतो धूमादिति प्रयोगापत्तेश्च । नाप्यनुभूतं स्वप्ने तदंशस्य मायारूपस्य पक्षत्वं, अथ कार्ये प्रसिद्धं श्रुत्यादौ च प्रसिद्धं ब्रह्मैव पक्षः 'ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इति गीताप्रामाण्यानुरोध्यागामिभाष्यानुरोधेन ततो विशेषितत्वे तु समवायिकारणस्य पूर्वसूत्रवासनया जगतः समवायिनि वक्तव्ये जगत्समवायी पक्षः । ब्रह्मत्वं साध्यम् । एवकारः प्रकृत्यादिकं व्यवच्छिनत्ति । पक्षत्वे त्रिषु व्याख्यानेषु मध्ये भाष्यीयं मध्यमं व्याख्यानम् । अस्तिभातिप्रियात्मकेनानागन्तुकानारोपितरूपेण सर्वत्रानुवृत्तत्वं हेतुः । यत्रानारोपितानागन्तुकरूपेण समन्वितत्वं तत्र तदात्मकत्वमिति सामान्यव्याप्तिः । यथा मृदोऽनारोपितानागन्तुकेन मृत्त्वेन रूपेण समन्वितत्वात् मृदात्मकत्वं घटस्य । रूपादौ च घटादेर्घटत्वेन रूपेणानुवृत्त्यभावान्न रूपादौ घटात्मकत्वम् । अत्र स्वरूपासिद्धिं शङ्कते नन्वित्यादि । अनारोपितेत्यादि । आरोपितमध्यस्तम्, आगन्तुकं रूपित्वादि । यदि चाध्यस्तमप्यागन्तुकं तर्ह्येकमेवोपादत्तं, द्वितीयं त्ववस्तुत्वादुपादत्तमप्यनुपादत्तम् । इदं तादात्म्येन संबन्धेन वर्तते । तदाहुरिति अनारोपितानागन्तुकरूपेण वर्तमानत्वमाहुरित्यर्थः । अस्तित्वेत्यादि । अत्र भाष्ये द्वन्द्वान्ते श्रूयमाणं त्वप्रत्ययं प्रत्येकं संबध्यास्तित्वादीत्युक्तम् । तत्रास्तित्वाद्याश्रये ब्रह्मणि सति अस्तित्वादिना समन्वयाभावाज्जगति ब्रह्मसत्त्वासिद्धेः । नन्वेकत्वात् साध्यसाधिकदेशवृत्तित्वं व्यापकत्वान्नानुमानदोषकरमिति चेद् ब्रह्मत्वास्तिभात्यादिसमन्वययोः कार्यकारणभावोऽस्त्येव तस्य ग्राहकावन्वयव्यतिरेकौ तयोरेवाभावात् । ब्रह्मत्वे सत्युक्तसमन्वयेऽब्रह्मत्वाभावे सति समन्वयाभाव इति । ब्रह्मणि तदुभयाभावान्न साध्यहेतुभाव इति दोषो न । अथवा स्वप्नसृष्टिमायाकृतभेदव्यतिरिक्तसृष्टिदृष्टोपादानभेदे वा ब्रह्मत्वरूपसाध्याभाववति हेतोः सत्त्वात्साधारण्यम् । अत्रोच्यते धर्मधर्मिणोरभेदात् सदादिरूपेणावगम्यमानादन्वयादिति योजना । पृथिवीत्यादि पृथ्वीत्वान्वितत्वात् पृथिवीत्वविषयामित्यर्थः । तथात्र सर्वमित्यादि सर्वमिति पक्षः, सदाद्यन्वितत्वं साध्यं, अस्तीत्यादिहेतुः, यन्नैवं तन्नैवं खपुष्पवदिति दृष्टान्तः । अस्तीत्यादिप्रतीतिजनकत्वं त्वेवं साधितम् । 'अन्वयव्यतिरेकाभ्यां यत्स्यात् सर्वत्र सर्वदा' इत्यस्य सुबोधिन्याम् । तथाहि । घटः सन् पटः सन् भासते इति प्रिय इति च सर्वत्रैवैकस्य ब्रह्मणोऽन्वयः, अन्यथा एकशब्दानुवृत्तिः प्रतीत्यनुगतिश्च न स्यात् । विशेषेणातिरिच्यत इति व्यतिरेकः घटादिभ्यः किमतिरिच्यते घटस्तु घटान्नातिरिच्यते तथा पटः

१. हेतौ हेतुतावच्छेदकाभावः स्वरूपासिद्धिः । अन्वयत्वापेक्षया समन्वयत्वस्य गुरुतया हेतुतावच्छेदकत्वाभावात्, गौरवदूषणमत्र ।

नामरूपयोः कार्यरूपत्वात् ।

भाष्यप्रकाशः ।

ततश्च सदाद्यात्मकं सच्चिदानन्दात्मकं च ब्रह्मेति तेन रूपेण ब्रह्मान्वयोऽवगम्यत एवेत्यर्थः । ननु जगत्यस्त्यादिसमन्वयो न ब्रह्मणः समवायित्वगमकः । नामरूपयोरपि समन्वयात् । नच तयोर्नानात्वान्नान्वय इति शङ्क्यम् । तयोः प्रतिनियतरूपेणानन्वयेऽप्यवच्छेदकावच्छेदेनान्वयस्य निराबाधानुभवात् । नच रूपस्य व्यभिचारः शङ्क्यः । तस्य व्यवहार्यत्वपरत्वात् । अवकाशादिरूपेण व्यवहार्यत्वस्याकाशादावपि सत्त्वादिति चेत् तत्राहुः नामरूपयोः कार्यरूपत्वादिति । नामरूपे कर्मणोऽप्युपलक्षके । 'अयं वा इदं नाम रूपं कर्म' इति श्रुतेः प्रपञ्चस्यैतत्त्रयात्मकत्वात् । तथाच, 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इति श्रुतेर्नाम्नां रूपेषु नियमने कृत एव जगतः

रश्मिः ।

पटात् किं तु सद्घटादप्यतिरिच्यते पटादपि, एवं सर्वत्र, यत्सर्वं सत्सर्वस्मादतिरिच्यते तद्ब्रह्म । नन्वेकमेव ब्रह्मत्वसाधकमस्तु किं द्वाभ्यामिति चेन्न । अन्वयेन ब्रह्मत्वं न सिद्ध्यति जगति जगतोप्यन्वयात् । यद्यपि घटादेर्व्यतिरिच्यते जगत्तथापि जगतो न व्यतिरिच्यते, खपुष्पादिकं तु जगतो व्यतिरिच्यते परं नान्वेति, सज्जगतो व्यतिरिच्यते भगवतोपि सत्त्वात्, कारणस्याक्षरस्यापि सत्त्वात्, अतो यस्यान्वयव्यतिरेकौ तदेव सर्वमिति । तत्र यदि सर्वमस्तीति प्रतीतिजनकं घटोस्ति भूतले घटाभावो स्तीत्यादिप्रतीतेर्ननु भातिप्रियत्वप्रतीतिजनकं घटो ज्ञानं घटो जानाति घटः प्रीणातीत्याद्यप्रतीतेः । घटो भासते इत्यत्र तु नाश्रयत्वं तदर्थः किं तु विषयत्वमित्याग्रृह्यते, तदा तु अत्रैव युक्तिनिरूपणे भातिप्रियत्वयोरपि घटादिवृत्तित्वस्य मया व्युत्पाद्यत्वाद् घटादीनां तद्धर्मकत्वे सिद्धे तदप्रतीतावप्यक्षतिः । जीवे आनन्दांशस्य जडे चिदानन्दयोरप्राकट्यस्य वक्ष्यमाणत्वात् । अतो न पद्मसरसि भृङ्गे शङ्कृतिपराकृतमशकशुङ्कारः । हेतुघटिका प्रतीतिश्च प्रत्यक्षानुमित्यन्यतरपरा । तेन सदन्वयः प्रतीतिसाक्षिकश्चिदानन्दयोस्त्वानुमानिक इति ज्ञेयम् । तेनेति सच्चिदानन्दरूपेणेत्यर्थः । नन्वस्त्यादयो यथा ब्रह्मधर्मास्तथा नामरूपे अपीति नामरूपरूपेणान्वयः कुतो न स्यादित्याशङ्कते ननु जगतीत्यादि । समवायित्वेत्यादि भाष्यप्रकाशीययथाश्रुतव्याख्यानपक्षे समवायित्वस्य साध्यत्वाभावाद्गमक इत्युक्तम् । समवायिनि ब्रह्मत्वे सिद्धे ब्रह्मणः समवायित्वं गमयतीत्यर्थः । समन्वयादिति तथा च जगतोऽपि जगत्समवायित्वं स्यादिति प्रश्नः । नान्वय इति घटनामरूपयोः पटे नान्वयः । तन्नामरूपयोर्भिन्नत्वादित्यर्थः । प्रतिनियतेत्यादि देवदत्तविष्णुमित्रत्वादिरूपेण नीलत्वपीतत्वरूपेण चेत्यर्थः । अवच्छेदकेत्यादि नामत्वरूपत्वरूपेणेत्यर्थः । पदार्थतावच्छेदकं गुणत्वं तस्यावच्छेदो द्वैधीकरणं येन नामत्वरूपत्वरूपेण करणे प्रत्ययः । उपदेश आद्योच्चारणमित्यत्रोपदेशपदात्प्रत्ययवत् करणनिष्ठव्यापारो वा धात्वर्थः । पचादेराकृतिगणत्वादच् । व्यभिचार इति आकाशादौ रूपव्यभिचार इत्यर्थः । व्यवहार्येत्यादि रूपवान् विशेषतो व्यवहार्यो भवतीति कार्यताख्यसंबन्धेन व्यवहार्यत्वलक्षकत्वादित्यर्थः । श्रुतेरिति बृहदारण्यकेऽस्ति नामरूपयोरागन्तुकरूपत्वान्न तयोर्ब्रह्मसमवायित्वबाधकत्वमिति वदन्तो भाष्ये द्वयोपादाने उपपत्तिमपि वदन्ति स्म तथाचेत्यादि । नामरूपकर्मणां प्रपञ्चरूपत्वे सति । व्याकरणेत्यादि । अनेनेत्यादिव्याकरणश्रुतेर्जीवरूपेण प्रवेशकरणोत्तरमित्यर्थः ।

भाष्यप्रकाशः ।

कार्यत्वेन प्रतीतेस्ते एव कार्यस्य कार्यताव्यञ्जकस्वरूपभूते । यदा हि पृथुबुध्नोदराकारोऽर्थो भवति तदा तत्र तादृशं रूपं घट इति नाम च भवति । तदपि न स्वतः किंतु व्याकरणश्रुतेस्तत्करणोत्तरम् । यथा हि बालके जाते तदवयवानालोक्य व्यक्तौ निश्चितायां नाम नियमयति, एतन्नामाऽयमिति तद्वत् । अतः कर्मापि मूलवस्तूत्तरकालीनं कार्यस्वरूप एव प्रविशतीत्यागन्तुकत्वान्न तत्समन्वयः, किंत्वन्वयमात्रं तेषामतो न ब्रह्मणः समवायित्वबाधकमित्यर्थः ।

ननु तथाप्यस्त्यादिसमन्वयस्य न ब्रह्मसमवायितागमकत्वम् । कार्यमात्रे प्रकृत्यात्मकानां सत्त्वरजस्तमसामनुवृत्तिदर्शनात् । यथाहुः सांख्याः ।

'प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः ।
अन्योऽन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः' ॥

इति गुणानां स्वरूपं वृत्तीश्चोक्त्वा

'सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः ।
गुरुवरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः' ॥ इति ।

एतदर्थस्तु सत्त्वादयो गुणाः सुखदुःखमोहस्वरूपाः प्रकाशप्रवृत्तिनिग्रहफलका यथाक्रमं बोध्याः । ते पुनरन्योन्याभिभवनान्योन्याधारत्वान्योन्यजननान्योन्यमिथुनक्रियावृत्तयः स्वत एव सन्तो यथा वर्तितैले अग्निविरोधिनी सहाग्निना रूपप्रकाशनं कार्यं कुरुतो यथा वा वातपित्तकफा दोषाः परस्परविरुद्धा अपि शरीरधारणलक्षणं कार्यं कुर्वन्ति, तथैते परस्परविरुद्धा अप्यनुवर्तन्ते, कार्यं च कुर्वन्तीति । तथाच प्रयोगः । महदादिकार्यं सुखदुःखमोहगुणकद्रव्यजन्यं कार्यत्वे सति सुखदुःखमोहगुणकद्रव्यत्वात् । यथैका रूपयौवनशीलवती स्त्री भर्तुः सुखदा, सपत्नीनां दुःखदा, पुरुषान्तरस्य मोहदेति, तद्वदिति । नच सुखादीनामान्तरत्वेनानुभवात् स्त्र्यादीनां सुखादिगुणकत्वे मानाभावः शङ्कनीयः । स्त्रीचन्दनादिजन्यस्य सुखस्य तत्तदवयवेषु

रश्मिः ।

अत इति धर्मत्वादित्यर्थः । मूलवस्त्वित्यादि ऋतुप्रयोगादिमांसपिण्डाद्युत्तरकालिकं प्रसिद्धमित्यर्थः । समवायित्वेत्यादि अन्वयमात्रमित्यर्थः । तदित्थं पूर्वोक्तानुमाने न ब्रह्मणि समवायित्वं सिद्ध्यति तदप्यनागन्तुकानारोपितरूपेणानुवर्तनात् । जगति जगत्त्वं खलु जङ्गन्ति परमागन्तुकरूपेणेति जगतो यथान्वयेपि न तत्समवायित्वबाधकत्वमेवं ब्रह्मणोप्यन्वये तु न । समवायित्वमित्येवंविधबाधकत्वं नेत्यर्थः । अत्र प्रयोगः ब्रह्म न भूतादिसमवायि अन्वयात् नामरूपादिवत् इति विरुद्धरूपहेत्वाभासोत्थापनेन । गुणा इत्यस्यार्थमाहुः सत्त्वेत्यादि । प्रीतीत्यादेरर्थमाहुः सुखेत्यादि । प्रदीपवच्चेत्येतद्विवृण्वन्ति यथा वर्तितैले अग्नीत्यादि अत्राकारो लेखककरदोषात्पतितः प्रमाद्वा पूर्वसवर्णदीर्घः । 'ईदूदेद्द्विवचनं प्रगृह्यम्' इति सूत्रात्प्रगृह्यसंज्ञायां प्रकृतिभावात् । अग्निनेति दीपरूपेणेत्यर्थः । चकारार्थमाहुः यथा वेत्यादि । सुखेत्यादि । तादृशं द्रव्यं प्रकृत्यात्मकम् । कार्यत्वे सतीति प्रकृतेस्तादृशद्रव्यजन्यत्वापत्तिवारणायेदम् । 'प्रकृतिपुरुषयोरन्यत्सर्वमनित्यम्' इति पञ्चमाध्यायस्थसांख्यप्रवचनसूत्रात् । तथाच सत्यन्ताभावे प्रकृतौ साधारणानैकान्तिकत्वम् । तद्वदितीति व्यतिरेके केवलचेतनवदिति दृष्टान्तः । स्त्र्यादीनामिति बाह्यानामाधिभौतिकानामित्यर्थः । मानाभाव इति आध्यात्मिकादीनामाधिभौतिकत्वादिधर्मत्वे

भाष्यप्रकाशः ।

बहिरेवानुभवेन तज्जनकेषु रूपादिष्वपि तस्य बहिरेव सत्तानिश्चयात् । नच तस्यानुभवस्य भ्रान्तत्वं शक्यवचनम् । तथा सति देहे मे सुखं, शिरसि मे वेदनेत्याद्यनुभवान्तरस्यापि बाधप्रसङ्गात् । एवं तु स्त्रीसुखं चन्दनसुखमित्याद्यभिलापोऽपि युज्यते । आन्तरत्वेनानुभवस्तु मानसस्यैव । एवं सिद्धे तेषां बाह्यत्वे रूपादिसंसर्गेण बहिरेव तेऽभिव्यज्यन्ते । घृतद्रवत्वादिवत् । तथाच प्रयोगः । विमताः सुखादयो न साक्षादात्मधर्माः । बाह्यत्वे सत्यात्मनि प्रतीयमानत्वात् । गौरत्वादिवदिति । तथा, रूपादयः सुखादिगुणकाः सुखादिजनकत्वात् । यद् यज्जनकं तत् तद्गुणकं, प्रकाशशैत्यादिजनकवन्हिचन्दनादिवदिति च । एवं सिद्धे तेषां तद्गुणकत्वे तेषां द्रव्याणां तद्गुणात्मकत्वमप्यनुमेयम् । तथाच प्रयोगः । विमताः सुखाद्यात्मकाः, सुखाद्यविनाभूतत्वात् । तन्मात्राविनाभूतमहाभूतवत् । तथा, सुखादयो द्रव्यसूक्ष्मावस्थारूपाः । तदविनाभूतत्वे सति तज्जनकत्वात् । महाभूताविनाभूततज्जनकतन्मात्रवदिति । नच प्रथमे क्षणे द्रव्यं यावद्गुणशून्यमेवोत्पद्यत इति वाच्यम् । प्रत्यक्षबाधितत्वात् । अपाकजस्य रूपादेरुत्पत्तिदशायामप्यनुभवात् । एवं सुखादावपि बोद्धव्यम् । पुत्राद्युत्पत्तिकाल एव पुरुषभेदेन सुखदुःखाद्युत्पत्तिदर्शनतत्तस्य बालादेस्तदानीमपि तज्जनकतया तद्गुणकत्वतदविनाभावयोर्निश्चयादिति । एवं मैत्रायणीये, 'तमो वा इदमेकमेवाग्र आसीत् तत्परे स्यात् तत्परेणेरितं विषमत्वं प्रयाति' इति । श्वेताश्वतरेऽपि, 'प्रधानक्षेत्रज्ञपतिर्गुणेशः' इति तमःशब्दवाच्यायाः प्रकृतेर्गुणानां च सृष्ट्यादौ सत्ताश्रावणात् पुराणेषु मन्वादिषु

रश्मिः ।

मानाभाव इत्यर्थः । तस्येति । घृतेत्यादि वह्निसंसर्गेणेत्यादिः । विमता इति रूपादयः सुखादिगुणकाः आध्यात्मिकस्य सुखादेरित्यर्थः । गौरत्वेत्यादिभास्वरं गौरत्वमात्मनीति दृष्टान्तः । तन्मात्रेति तेन यद् यदविनाभूतं तत् तदात्मकं इति व्याप्तिः सामान्या । तज्जनकत्वादिति द्रव्यजनकत्वात् । न च रूपादिवदन्यथासिद्धत्वमिति वाच्यम् । घटादिकं प्रति दण्डादिकस्य रूपवन्न भवत्यन्यथासिद्धत्वम् । द्रव्यस्य सुखत्वेनाकारणकत्वापत्तेः कार्यस्य । प्रथमक्षणिकद्रव्यमादाय हेत्वोरंशतः स्वरूपासिद्धत्वमाशङ्क्य पराकुर्वन्ति न च प्रथम इत्यादि । तथाच पक्षैकांशतः ह्रदे पर्वते चाद्यक्षणावच्छेदेन सुखाद्यविनाभूतत्वरूपहेत्वभावाद् ह्रदो द्रव्यं धूमादितिवत् पक्षे हेत्वभावात्स्वरूपासिद्धिः सिद्धान्तमुक्तावल्युक्ता, पर्वते सुखादिरूपे आद्यक्षणावच्छेदेन हेतुतावच्छेदकस्य तदविनाभूतत्वसमानाधिकरणतज्जनकत्वरूपस्य गौरवेणाभावात् स्वरूपासिद्धिर्मन्नयुक्ता । अपाकेत्यादि पाकोऽग्निसंयोगः । निश्चयादिति तथाच प्रथमक्षणावच्छेदेनापि द्रव्यस्य सगुणत्वात् न हेत्वोः स्वरूपासिद्धत्वमिति भावः । पुराणेष्विति एकादशे—

'तमो रजः सत्वमिति प्रकृतेरभवन् गुणाः ।
मया प्रक्षोभ्यमाणायाः पुरुषानुमतेन च ॥
तेभ्यः समभवत्सूत्रं महान् सूत्रेण संयुतः ।
ततो विकुर्वतो जातो योऽहंकारो विमोहनः' ॥

इत्यादिष्वित्यर्थः । मन्वादिष्विति ।

'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ।

प्रकृतेरपि स्वमते तदंशत्वात् । अज्ञानात् परिच्छेदाप्रियत्वे । ज्ञाने न बाध-

भाष्यप्रकाशः ।

तथा अरवात् सिद्धे प्रकृतेः सत्त्वे सर्वस्य त्रिगुणत्वेन गुणमय्याः प्रकृतेरेव समन्वयस्य सिद्धत्वाद् ब्रह्मणः समवायित्वसिद्धिरित्यत आहुः प्रकृतेरित्यादि ।

'आसीज्ज्ञानमयो ह्यर्थ एकमेवाविकल्पितम् ।
यदा विवेकनिपुणा आदौ कृतयुगेऽयुगे ॥
तन्मायाफलरूपेण केवलं निर्विकल्पितम् ।
वाङ्मनोगोचरातीतं द्विधा समभवद् बृहत् ॥
तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका ।
ज्ञानं त्वन्यतमो भावः पुरुषः सोऽभिधीयते' ॥

इत्याद्येकादशस्कन्धीयभगवद्वाक्यैस्तस्या अंशत्वे जन्यत्वे च निश्चिते तद्रूपस्याप्यागन्तुकत्वेन तदन्वयस्यापि समन्वयत्वाभावाच्च तेन ब्रह्मणः समवायित्वभङ्ग इत्यर्थः । ननु भवत्वेवं, तथापि तदन्वयस्य सांख्यैः साधितत्वात् तेनैव रूपेण ब्रह्मान्वयोऽस्तु किमस्त्यादिरूपान्वयाग्रहेणेत्याशङ्कायामाहुः अज्ञानादित्यादि । अयमर्थः । प्राकृती या प्रीतिः सा आज्ञानिकी, न तु वास्तवी । तत्र गमको देशतः कालतश्च परिच्छेदः । यथा कस्यचित् किंचित् प्रियं किंचिन्न । तदपि कदाचित् प्रियं, कदाचिन्न । तथा सति तस्या औपाधिकत्वम् । मैत्रेयीब्राह्मणे तथैव सिद्धत्वात् ।

रश्मिः ।

'अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ।
ततः स्वयंभूर्भगवानव्यक्तो व्यञ्जयन्निदम् ।
महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः' ॥

इत्यादिष्वित्यर्थः । प्रकृतेरेवेति अस्त्यादीनामपि प्राकृतत्वसंभवादेवकारः । न ब्रह्मण इति ब्रह्म न समवायि सत्त्वादिना समन्वयादिति । अस्त्यादिसमन्वयरूपहेतोः सत्प्रतिपक्षत्वात्तथा । ज्ञानमय इति 'ज्ञानमयो ह्यर्थः इत्यपि पाठः । कार्त्स्न्यमयोश्शब्दार्थः । अयुग इति युगेभ्यः पूर्वं प्रलये चेत्यर्थः । तन्मायेत्यादि माया तत्फलं दृश्यं सर्वं तद्रूपेणेत्यर्थः । उभयात्मिकेति कार्यकारणरूपिणीत्यर्थः । तद्रूपस्येति मायारूपस्य सत्त्वरजस्तमोरूपस्य धर्मस्येत्यर्थः । समवायित्वभङ्ग इति । एतच्च चतुर्थपादे 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' इत्यधिकरणे स्फुटम् । यद्यप्येवं ब्रह्मणः समवायित्वे सिद्धे परिच्छेदाप्रियत्वे विरुद्धे इत्याशङ्क्याहुः अज्ञानादिति । इत्येवं तथापि ब्राह्मणानां संतोषो न भवति सुगमव्याख्यान इति विस्तरेणाहुः ननु भवत्वित्यादिना । तदन्वयस्येति प्रकृत्यन्वयस्येत्यर्थः । तेनैवेति प्राकृतप्रियत्वादिरूपेणेत्यर्थः । देशतः परिच्छेदमाहुः यथेत्यादि । कालतः परिच्छेदमाहुस्तदपीत्यादि । तस्या इत्यादि प्रीतेर्धनसौन्दर्यादियुक्तशुद्धदेशशुद्धानुद्रेजककालरूपोपाध्याहितत्वमित्यर्थः । मैत्रेयीत्यादि । एतच्च चतुर्थपादे वाक्यान्वयाधिकरणे स्पष्टम् । तथा चाज्ञानाद्बालकानन्दे परिच्छेदोऽप्रियत्वं च लोके भवतो न तु प्राकृतं प्रियत्वमस्ति, तथा च श्रुतिः 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति । तथा च प्राकृतप्रियत्वस्यैवाभाव इति दूरे तेन रूपेण समन्वय इति भावः । व्यतिरेकमुखेन ज्ञानेन

भाष्यप्रकाशः ।

वास्तवस्य नैसर्गिकतायां वस्तुसद्भावे ज्ञानेन तद्बाधायोगाच्च । अतो वास्तवं प्रियत्वमात्मन्येवेत्यात्मन एव दर्शनादिकमावश्यकमिति बोधयित्वा 'इदं सर्वं यदयमात्मा' इत्यनेन सर्वस्यात्माभिन्नत्वं श्रावयति । तथा तैत्तिरीये, 'आनन्दं ब्रह्मणो विद्वान्'इत्युपक्रम्य, 'एतꣳ ह वाव न तपति किमहꣳ साधु नाकरवं किमहं पापमकरवम्'इति 'स य एवं विद्वानेते आत्मानꣳ स्पृणुते' इत्यात्मत्वानुसंधानेन तत्कृततापाभावं च श्रावयति । अत एवमात्मानन्दज्ञानेन प्राकृतिकप्रियत्वादौ बाधदर्शनाच्च तद्रूपेणान्वय आद्रियते किं त्वात्मत्वेन । सर्वस्मिन्निरुपधिप्रियत्वस्य बोधनादबाधितेनैव रूपेण श्रुत्यविरोध इति तदन्वय एवाद्रियत इत्यर्थः । ननु यद्येवं तदा नानात्वमपि नादर-

रश्मिः ।

बाधदर्शनादिति भाष्यं विवृण्वन्ति वास्तवस्येत्यादि । भाष्ये । सुगमव्याख्या त्वेवं बोध्या । तथाहि । प्रतिपादितोऽस्तिभातिप्रियत्वेन ब्रह्मसमन्वयोऽनुपपन्नः परिच्छेदाप्रियत्वयोर्दर्शनादित्याशङ्क्याहुः अज्ञानादित्यादि । तथा च न ते वास्तवे इति तत्प्रतीतावपि न समन्वयानुपपत्तिरित्यर्थः । किंच नायं नियमो यदुपादानधर्माणां उपादेये भानमिति । विभागेनापरिच्छेदतिरोभावस्य सांख्येप्यङ्गीकारात् । संयोगेन महत्त्वस्य नैयायिकैरप्यङ्गीकाराच्च । तयोरवास्तवत्वे हेतुमाहुः ज्ञानेनेत्यादि । वाचारम्भणवाक्योक्तरीतिकज्ञानेन विकल्पबुद्धेर्बाधस्य श्वेतकेत्वादिषु दर्शनादित्यर्थः । प्रकृते । सिद्धमाहुः अत इत्यादि यतः सर्वत्रौपाधिकी सा, अत इत्यर्थः । बोधयित्वेति सहोवाचेत्याद्यनुवाकद्वयं 'न वा अरे' इत्यारभ्य 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदꣳ सर्वं विदितम्' इत्यंशेन बोधयित्वा 'ब्रह्म तं परादात्' इत्यारभ्य 'इदं सर्वं यदयमात्मा' इत्यन्तेनांशेन सर्वस्यात्माभिन्नत्वं श्रावयतीत्यर्थः । तथाचान्यत्र प्रतीयमानं प्रियत्वं तदंश इति भावः । एतमित्यादि पूर्वोक्तानन्दविदं न तपति नोद्वेजयति समे एते साध्वसाधुनी एवं तापहेतू इति विद्वान् आत्मानं स्पृणुते स्नेहयतीत्यर्थः । स्पृ प्रीतिपालनयोः स्वादिः । बाधदर्शनादिति 'किमहꣳ साधु नाकरवम्'इत्यादिश्रुतेस्तथेत्यर्थः । बोधनादिति 'न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति' इत्यादिना बोधनादित्यर्थः । एवाद्रियत इति एवकारेण प्राकृतानां सत्त्वरजस्तमसां व्युदस्तिः । तथाहि । माभूत् प्राकृतसत्त्वरजस्तमोरूपेण ब्रह्मान्वयः परंतु भागवतरूपेण तु स्यात् ।

'सत्त्वं रजस्तम इति निर्गुणस्य गुणास्त्रयः ।
स्थितिसर्गनिरोधेषु गृहीता मायया विभोः' ॥

इति वाक्यात् नैवम् । एतेषामप्यागन्तुकत्वादेतस्य सुबोधिन्यां सद्रूपेण निर्गतं सत्त्वमित्युच्यते, केवलचिद्रूपेण निर्गतं क्रियाशक्तिप्रधानत्वात्सदानन्दानन्दाभावाच्च रज इत्युच्यते, आनन्दांशाच्च तमः, ते भगवद्रूपा एव भगवता सृष्टाः । न च ते पूर्वं भगवति स्थिताः इति प्रतिपादनात् । अबाधितेन नानात्वेन धर्मेण प्रकृतेरन्वयात् तस्या अपि समवायित्वं निर्दुष्टमित्याशङ्काप्रमुखेनाभासमाहुः नन्वित्यादि । अथवा ननु यदि ब्रह्मोपादेयता प्रपञ्चे स्यात् तदा ब्रह्मण एकरसत्वेन तथै-

दर्शनात् । नानात्वं त्वैच्छिकमेव । जडजीवान्तर्यामिष्वेकैकांशप्राकट्यात् । कथमेवमिति चेत् । न । सद्रूपे घटरूपक्रियास्विव तारतम्येनाविर्भाववज्जडेऽपि भानत्वादिप्रतीतेस्तारतम्येनाविर्भावोऽङ्गीकर्तव्यः । भगवदिच्छाया नियामकत्वात् ।

---

भाष्यप्रकाशः

जीयम् । तस्यापि प्राकृतिकत्वादित्यत आहुः नानात्वमित्यादि । 'बहु स्याम्' इति श्रावणात् तन्न प्राकृतिकमित्यर्थः । ननु यदीदमप्राकृतं स्यादत्राप्यस्त्यायंशत्रयानुवृत्तिरनुभूयेत, सा तु न दृश्यतेऽतो न तथेत्यत आहुः जडेत्यादि । जडे सदंशस्य, जीवे 'ज्ञानं त्वन्यतमो भावः' इति वाक्याज्ज्ञानांशस्यान्तर्यामिण्यानन्दांशस्य प्राकट्यात् । तथाच प्राकट्याभावहेतुकमदर्शनं नानुवृत्तिबाधकमित्यर्थः । अत्र चोदयति कथमित्यादि । सर्वत्र त्रितयसद्भावेऽपि तत्र तत्रैकैकांशप्राकट्यं कयोपपत्त्याङ्गीक्रियत इत्यर्थः । अत्र समादधते नेत्यादि । एवमाक्षेपो न युक्तः । यतोऽस्तीतिप्रत्ययगोचरे सद्रूप एकस्मिन्नेवार्थे घट इति गुणित्वेन, रूपमिति तदुपसर्जनतया गुणत्वेन, क्रियेति त्रिक्षणावस्थायितयाऽऽशुतरविनाशित्वेन यथा सदंशस्य तारतम्येनाविर्भावस्तथा जडेऽपि भानत्वप्रियत्वयोस्तारतम्येनाविर्भावोऽङ्गीकार्यः । नन्वेवमङ्गीकारे का वा युक्तिरितिचेद् उच्यते । श्रीभागवते कंसस्यारिष्टदर्शनस्थले, 'अदर्शनं स्वशिरसः प्रतिरूपेषु सत्स्वपि' इत्यासन्नमृत्योः शिरःप्रतिबिम्बादर्शनमुक्तम् । तथा द्वितीयस्कन्धे, 'घ्राणं च गन्धः' इत्यादिवाक्यैरिन्द्रियाणां सजातीयग्राहकत्वं च बोधितम् । एवं सत्युक्तस्थले यच्छिरसोऽग्रहणं तत्र हेतुत्वेन विषयस्य चक्षुषो वा आवरणं वक्तव्यम् । तत्र न शिरसः । तस्यान्येन दर्शनात् । नापि चक्षुषः । तदानीं तेन विषयान्तरदर्शनात् । अत उभयोपपत्त्यर्थं विषयनिष्ठज्ञानांशस्य तच्चक्षुः प्रत्येवावरणमिति वक्तव्यम् । एवं लोकाञ्जनस्थले वैषयिकज्ञानांशावरणम् । सदंशावरणे तु स्पार्शनमपि तस्य न स्यादिति । एवमेकत्र

रश्मिः ।

त्यर्थः । न प्राकृतिकमिति तथा च तेन रूपेणापि ब्रह्मण एवान्वयान्न प्रकृतिसमन्वय इति भावः । ऐच्छिकत्वेनागन्तुकत्वान्न समन्वयः । अत्रेति ऐच्छिकनानात्वावच्छिन्ने जगतीत्यर्थः । न दृश्यत इति । किं तु सदंशमात्रस्य दृश्यत इत्यर्थः । न तथेति नानात्वमप्राकृतिकं नेत्यर्थः । अदर्शनमिति चिदानन्दयोरित्यर्थः[1] । क्रियेतीति कृतिजन्या क्रियेति प्रथमं भगवदिच्छया क्रिया, ततो द्वितीयक्षणे स्थितिः, ततस्तृतीयक्षणेऽधःसंयोगेनाशुतरविनाशित्वं ज्ञेयम् । प्रतिरूपेष्विति दर्पणादिष्वित्यर्थः । विषयस्य न संभवतीत्याहुः तत्र नेत्यादि । चक्षुष इति करणस्य । तदानीमिति समकाल इत्यर्थः । उभयोपपत्त्यर्थमिति स्वस्य शिरःप्रतिबिम्बादर्शनविषयकरणोभयतः अग्राहकत्वं चक्षुर्दोषस्तस्योपपत्त्यर्थमित्यर्थः । तच्चक्षुरिति स्वमद्रष्टृचक्षुरित्यर्थः । एवं लोकेत्यादि यादृशाञ्जनेन तमन्यो न पश्यति तादृशस्थल इत्यर्थः । सर्वोऽपि तं न पश्यतीति शरीरावरणमेव तत्र वक्तव्यं किं ज्ञानांशावरणकल्पनयेत्यत आहुः सदंशेत्यादि । स्पार्शनमिति प्रत्यक्षमित्यर्थः । एवं सदंश उपपाद्य ज्ञानप्रियत्वांशयोराहुः एवमेकत्रेति सदंशे । अन्यत्र ज्ञानांशे । तथेति नित्यज्ञानरूपे भानरूपक्रियास्विव तारतम्याभावेऽपि विषयताविषयकज्ञानेन ज्ञानमिति गुणित्वेन रूपमिति तदुप-

---

१. चिति सदानन्दयोस्तनन्दे सचितोरदर्शनमित्यर्थः । २. स्वमितिकेन ।

भाष्यप्रकाशः।

ज्ञानांशसिद्धावन्यत्रापि तथा सिद्ध्यति। एवं प्रियत्वांशेऽपि बोध्यम्। यद्वा पदार्थमात्रस्य ज्ञानेनैव प्रकाशाज्ज्ञानजनकत्वाच्च सांख्योक्तप्रकारेणैव ज्ञानाविनाभावसिद्धौ ज्ञानात्मकत्वस्यापि सिद्धिः। परंतु तत्र जडे सदंशवत् प्रकटम्। सन् घटः, सन् पट इतिवज्ज्ञानं घट इति सामानाधिकरण्याप्रतीतेः। प्रियत्वे तु ततोऽप्यप्रकटम्। तत्तदसाधारणत्वात्। जीवे तु चिदंशस्यापि प्राकट्यम्। चेतनत्वेनैव सदा प्रतीयमानत्वात्। सदंशस्तु न्यग्भूतः। विशेषणतयैव प्रतीयमानत्वात्। प्रियत्वं तु ततो न्यग्भूतम्। उक्तयुक्तेः। अन्तर्यामिणि तु प्रियत्वमेव मुख्यमन्यदुभयं न्यग्भूतम्। तद्द्रष्टॄणां प्रियत्वेनैवानुभवगोचरत्वादिति। अत्र नियामिका तु, प्रजायेयेति भगवदिच्छैव। अन्यथा पूर्वोक्ताकारेणैव नानाभावात् सृष्टिसिद्धावेतदाकारान्तर-

रश्मिः।

सर्जनतया गुणत्वेन क्रियेति त्रिक्षणावस्थायित्वेन आशुतरविनाशितया ज्ञानांशस्य तारतम्येनाविर्भावः। ज्ञानस्य विषयताविषयकस्य त्रिक्षणावस्थायित्वात्। तदुक्तं तथा सिद्ध्यतीति। प्रियत्वेतिदिशन्तिस्म एवमिति। बोध्यमिति पुत्रादौ बोध्यमित्यर्थः। आत्मनि प्रियरूपे प्रियरूपक्रियास्विव तारतम्याभावेपि पुत्रादौ प्रिये प्रिय इति गुणित्वेन रूपमिति तदुपसर्जनतया गुणत्वेन क्रियेति त्रिक्षणावस्थायित्वेनाशुतरविनाशितयाऽऽनन्दांशस्य तारतम्येनाविर्भावः। यथा सूर्ये रूपं श्यामं सूर्यत्वं च तदाच्छादिका क्रिया त्रिक्षणावस्थायिनी। दीपादावपि प्रसिद्धम्। अन्वयव्यतिरेकाभ्यामित्यस्य सुबोधिन्यनुसारेण पक्षान्तरमाहुः यद्वेत्यादि। ज्ञानेनैवेत्यादि घटो भासत इत्यादिप्रतीतेस्तथेत्यर्थः। ज्ञानजनकत्वादिति विषयविधयेति बोध्यम्। सांख्योक्तेत्यादि। घटादयो ज्ञानगुणकाः ज्ञानजनकत्वात् प्रकाशनैत्यादिजनकवह्निचन्दनादिवदित्यनुमानेनेत्यर्थः। ज्ञानात्मेत्यादि विमता घटादयः ज्ञानात्मकाः ज्ञानाविनाभूतत्वात्। तन्मात्राविनाभूतमहाभूतवदित्येवं ज्ञानात्मकत्वस्यापीत्यर्थः। किंच चित्त्वं व्यापकं घटादिवृत्ति वा मुख्यब्रह्मधर्मत्वात्, सत्त्ववत् इति। पटादौ व्यभिचारवारणाय मुख्येति हेतुविशेषणम्। सत्यादित्रयान्यतमत्वं तदर्थः। तथाच मुख्यब्रह्मधर्मत्वेन व्यापकत्वेन घटादिवृत्तित्वेनानुकूलस्तर्क एव युक्तिः। सामानेत्यादि भिन्नप्रवृत्तिनिमित्तत्वे सत्येकार्थबोधकत्वं सामानाधिकरण्यं तदप्रतीतेरित्यर्थः। प्रियत्वमिति प्रीतिजनकत्वदर्शनेन। घटादयः, प्रियत्वगुणकाः प्रीतिजनकत्वात्, प्रकाशनैत्यादिजनकवह्निचन्दनादिवत्। घटादयः प्रीत्यात्मकाः प्रीत्यविनाभूतत्वात्। तन्मात्राविनाभूतमहाभूतवदित्यनुमानाभ्यां घटाद्यात्मकं प्रियत्वमित्यर्थः। किंच प्रियत्वं व्यापकं घटादिवृत्ति वा मुख्यब्रह्मधर्मत्वात् सत्त्ववदित्यपि ज्ञेयम्। आनन्दो घट इत्यप्रतीतिस्तु तमस्स्वभावत्वाप्रतीतिवत्। सिद्धान्तमुक्तावलीटीकायां स्फुटमेतत्। तत्तदित्यादि इन्दुक्ययाद्यसाधारणधर्मत्वादित्यर्थः। न्यग्भूत इति गुणभूत इत्यर्थः। उक्तयुक्तेरिति तत्तदसाधारणत्वादित्यर्थः। तद्द्रष्टॄणामिति 'आनन्दो ब्रह्मेति व्यजानात्' इति श्रुतेर्भृग्वादीनामित्यर्थः। भगवदित्यादिभाष्यं विवृण्वन्ति अत्रेत्यादि। सा तु यथाकार्यं भगवदिच्छानुमेयेति भावः। पूर्वोक्तेत्यादि 'एकोऽहं बहु स्याम्' इतीच्छाकारेणैव नानाभावात्सृष्टिसिद्धावेतदाकारान्तररूपमस्य 'प्रजायेय' इतीच्छाकारान्तरकथनस्य

भाष्यप्रकाशः ।

कथनस्य वैयर्थ्यापत्तेः । उच्चनीचभावादिनाऽऽविर्भावस्यैव प्रकर्षपदार्थत्वेन विवक्षितत्वादिति । एतेन दुष्टत्वादिप्रतीतावपि भगवदिच्छैव हेतुरिति न तयापि समवायित्वे दोषप्रसक्तिः । क्रीडार्थं तथैव गुणगुणोत्पादनात् । एतदप्येकादशस्कन्धीयविंशैकविंशाध्यायस्थैर्गुणदोषदर्शनस्य कर्मनियमार्थत्वबोधकवाक्यैरवसीयत इति नात्रापि शङ्कालेशः । अत एव न क्वचिदपि कुत्सितत्वं ब्रह्मविदां भासते । अत एवैकादश एवोक्तम्,

'किं वर्णितेन बहुना लक्षणं गुणदोषयोः ।
गुणदोषदृशिर्दोषो गुणस्तूभयवर्जितः' इति ॥

नन्वेवं ब्रह्मणः समवायित्वे, 'सैषाऽविद्या जगत् सर्वम्' इत्यादितापिनीयश्रुतिविरोधः शङ्क्यः । तस्याग्रे, न विलक्षणत्वाधिकरणे समाधेयत्वात् । तत्रापि तस्मादात्मन एव त्रैविध्यं सर्वत्र योनित्वमपीतिवक्ष्यमाणत्वादिति । अत एव श्रीभागवतारम्भश्लोकेऽपि ब्रह्मणः समवायित्वं

रश्मिः ।

वैयर्थ्यापत्तेरित्यर्थः । विवक्षितत्वादितीति 'गर्दभीतराभवद्गर्दभ इतरः' इति श्रुत्यन्तरे तथादर्शनादिति भावः । इतरा शतरूपा, इतरो मनुः । भाष्योक्तहेतुसमाप्तावितिशब्दः । एतेनेति एतादृशप्रकर्षपदार्थेनेत्यर्थः । क्रीडार्थमिति एतच्च द्वितीयेध्याये 'लोकवत्तु लीलाकैवल्यम्' इति सूत्रे स्पष्टम् । कर्मनियमेत्यादि ।

'विधिश्च प्रतिषेधश्च निगमो हीश्वरस्य ते ।
अवेक्षतेरविन्दाक्ष गुणं दोषं च कर्मणाम्' ॥ इत्यादिना
गुणदोषदृशिर्दोषो गुणस्तूभयवर्जितः' । इत्युक्तमाक्षिप्तम् । ततो भगवता
'स्वे स्वेधिकारे या श्रद्धा स गुणः परिकीर्तितः ।
कर्मणां जात्यशुद्धानामनेन नियमः कृतः ॥
गुणदोषविधानेन सङ्गानां त्याजनेच्छया' । इति विंशे, एकविंशे च
'शुद्ध्यशुद्धी विधीयेते समानेष्वपि वस्तुषु ।
द्रव्यस्य विचिकित्सार्थं गुणदोषौ शुभाशुभौ ॥
धर्मार्थं व्यवहारार्थं यात्रार्थमिति चानघ ।
दर्शितोयं मयाचारो धर्ममुद्वहतां धुरम्' ॥

इति कर्मनियमार्थत्वबोधकवाक्यैः क्रीडार्थत्वमवसीयत इत्यर्थः । वाक्यार्थस्तु श्रीधर्यां स्फुटः । शङ्कालेश इति एतच्च द्वितीयाध्याये स्फुटतरमिति न शङ्कालेश इत्युक्तम् । क्वचिदिति लोके कुत्सितत्वेन प्रतीयमानेपीत्यर्थः । ब्रह्मविदामिति निरस्ताविद्यानां भरतादीनामित्यर्थः । साविद्यानां प्रतीतिस्त्वविद्याकृतेति न प्रपञ्चवास्तविककुत्सितत्वसंपादनायालम् । शङ्कादौ वास्तवपीतत्वसंपादने सकामलस्य प्रतीतिरिवेति भावः । एकादश इति एकोनविंश इत्यर्थः । अग्रे इति द्वितीयाध्याय इत्यर्थः । तत्रापीति तापिनीय इत्यर्थः । त्रैविध्यमिति ब्रह्मविष्णुशिवरूपत्वमित्यर्थः । इतिवक्ष्यमाणत्वादिति इत्यात्मनः समवायित्वस्य वक्ष्यमाणत्वादित्यर्थः । समवायित्वमिति अभिन्ननिमित्तोपादानत्वयोर्मध्य इत्यर्थः । अतोऽभिन्ननिमित्तोपादानं जगद् ब्रह्मकारणक-

नच साधारण्येन सर्वजगत् प्रति परमाण्वादीनामन्वयः संभवति।

भाष्यप्रकाशः।

ग्राहयितुं, 'जन्माद्यस्य यतोऽन्वयात्' इत्यनेनान्वय एव हेतुत्वेनोक्तः। नच तत्रेतरत इत्यनेन व्यतिरेकस्याप्युक्तत्वात् तस्यात्र कुतो नोक्तिरिति शङ्क्यम्। ब्रह्मणो व्यापकत्वेनाभावरूपस्य व्यतिरेकस्याभावाद्विशेषेणातिरिक्तत्वरूपो व्यतिरेकः कृत्स्नप्रसक्तिवारणायात्र विवक्षितः। स त्वनारोपितानागन्तुकरूपबोधकेन समुपसर्गेणैव बोधित इत्यतः पृथगनुक्तेः। एवं चतुःश्लोक्यामप्यन्वयव्यतिरेकाभ्यामित्यत्रापि बोध्यम्। एतदेवैकादशस्कन्धीये,

'यथा हिरण्यं सुकृतं पुरस्तात् पश्चाच्च सर्वस्य हिरण्मयस्य।
तदेव मध्ये व्यवहार्यमाणं नानापदेशैरहमस्य तद्वत्' ॥

इति वाक्येऽपि निष्कृष्य दृष्टान्तेन बोधितं ज्ञेयम्। प्रकृतमनुसरामः। नन्वेतादृशोपपादनसापेक्षब्रह्मान्वयोपगमापेक्षया तदनपेक्षः परमाणूनां भूतानां वान्वयो ज्यायान् प्रतिपत्तिसौकर्यात्। तदर्थमेव सर्वेषां प्रयत्नादित्याशङ्कायामाहुः नचेत्यादि। परमाण्वादीनामित्यादिपदेन, 'कालः स्वभावो नियतिर्यदृच्छा'इति श्रुत्युक्तानां कालादीनां संग्रहः। जगदन्तःपातिषु दिगाकाशादिषु परमाणूनामन्वयाभावात्। तेषां नित्यत्वाभ्युपगमेऽपि स्वभावान्वयस्त्ववश्यं वाच्यः। एवं मतान्तरे कालस्य प्रकृतेश्च वाच्यः। तथा सति विप्रतिपन्नानामनेकेषां परमाणूनां चानेकेषाम-

रश्मिः।

मित्युक्तं भवतीति सुबोधिनीस्वारस्यात्। अत एव तथा चैवं विचारे ब्रह्मणः सर्वविधं कारणत्वं श्रुतिवाक्याभ्यां प्रमाणाभ्यां सिद्धमिति भाष्ये वक्ष्यते। व्यतिरेकस्येति निमित्तकारणत्वरूपस्येत्यर्थः। व्यतिरेक इति निमित्तकारणमित्यर्थः। इतरन् निमित्तकारणमिति सुबोधिनीस्वारस्यात्। कारणत्वे सति विशेषेणातिरिक्तत्वं निमित्तस्यैवेति। स त्विति निमित्तकारणरूपो व्यतिरेक इत्यर्थः। अनारोपितेति 'विषवृक्षोपि संवर्ध्य स्वयं छेत्तुमसांप्रतम्' इत्यत्र असांप्रतमित्यस्य न युज्यते इत्यर्थान् निपातानां वाचकत्वमपीष्टमिति भावः। वस्तुतस्तु द्योतकेनेत्यर्थः। अनागन्तुकनारोपितरूपस्य व्यञ्जनया बोधकेनेत्यर्थात्। बोधित इति व्यतिरेके सति ब्रह्मणो जगत्यन्वयः स्यात्तदैव समन्वयः, अस्त्यादिनान्वयः। अन्यथा तु कृत्स्नस्य ब्रह्मणो जगत्त्वप्रसक्तिरिति समन्वयो न स्यादिति भावः। एवं चतुरिति एतच्चैतस्य सुबोधिन्यां व्याख्यातं प्रागुक्तं च। तदर्थमिति समन्वयसंपादनार्थमित्यर्थः। काल इत्यादि श्वेताश्वतरेऽस्ति। तेषामिति दिगाकाशादीनाम्। नित्यस्येत्यादि तच्चैकं विभु नित्यं चेति तर्कसंग्रहे इत्यभ्युपगमपदम्। स्वभावान्वयो नित्येष्वपि वाच्य इत्यर्थः। अन्यथा शब्दगुणकत्वं न स्यात्। मतान्तर इति व्याहृति ब्रह्मवादे सांख्ये चेत्यर्थः। व्याहृति ब्रह्म कालः। द्वितीयाध्याये दशमस्य कालात्मा संकर्षण उक्तः। स वेदः। काल उपदेश इति धातुपाठात्। आत्मशब्दस्तु 'कालोस्मि' इति गीतावाक्यात्। मतं तु

'प्रथमं महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितम्।
तृतीयं सर्वभूतस्थं यज्ज्ञात्वा मुच्यते बुधः' ॥

इत्यत्र व्याहृति ब्रह्म। अण्डसंस्थितं द्वितीयम्। वाच्य इति अन्वयो वाच्यः। एकत्रिंशत्त्वादि भाष्यं विवृण्वन्ति तथा सतीत्यादि। विप्रतिपन्नानामिति दीधितिकृ-

१. यथार्थतत्त्वविवेचनाख्ये ग्रन्थे।

एकस्मिन्ननुस्यूते संभवत्यनेककल्पनाया अन्याय्यत्वात् । लोके कर्तृविशेषवदुपादानविशेषग्रहणेऽपि न ब्रह्मणि व्यभिचारः । अलीकप्रतीतेऽस्तित्वादिप्रतीतावपि सम्यगन्वयाभावान्न कार्यत्वव्यभिचारौ । तस्माद् ब्रह्मण एव समवायित्वम् ।

भाष्यप्रकाशः ।

न्वयकल्पनस्य न्यायविरुद्धत्वं प्रतिपत्त्यसौकर्यात् । किंत्वेकस्मिन् ब्रह्मणोऽन्वये संभवति तस्यैवानुस्यूतस्य समवायित्वं युक्तमित्यर्थः । एकस्मिन् समवायिनीति वार्थः । नन्वनेकसमवायिकल्पनस्यान्याय्यत्वे मृत्तन्त्वादेरपि समवायित्वं न स्यात् । तथाच प्रत्यक्षविरोध इत्यत आहुः लोक इत्यादि । तथाच यथा लोके कुलालादीनां चतुर्मुखान्तानां कर्तृत्वेऽपि तत्तन्मते प्रकृतेरीश्वरस्य च सर्वनियामकत्वान्न कर्तृत्वं हीयते एवं लोके तन्त्वादीनां परमाण्वन्तानां प्रकृत्यन्तानां वोपादानत्वेन ग्रहणेऽप्यस्मन्मते ब्रह्मणो मूलकारणत्वान्न समवायित्वहानिरित्यर्थः । ननु शुक्तिरजतादौ स्वाप्निकेषु चास्तित्वं प्रतीयत इति तेषु सदन्वयो वक्तव्यस्तथा सति तस्यापि ब्रह्मकार्यत्वे जगत्तुल्यतया सत्यत्वं स्यात् । तत्तु विशेषदर्शनबाधितत्वादशक्यवचनम् । ततश्च न तस्य ब्रह्मकार्यत्वमपि । अतोऽकार्येऽपि सदन्वयात्र तेन ब्रह्मणः समवायित्वसिद्धिरित्यत आहुः अलीकेत्यादि । तथाचान्वयस्य न गमकत्वमपि तु समन्वयस्य । समन्वयस्त्वनारोपितानागन्तुकरूपेणान्वयः । अलीकप्रतीतरजतादौ तु सत्ता आरोपितेति सत आरोपितरूपेणान्वयान्न तस्य ब्रह्मकार्यतागमकत्वम् । तस्यैवाभावाच्च न ब्रह्मणोऽपि समवायित्वव्यभिचार इत्यर्थः । सिद्धमाहुः तस्मादित्यादि । नामरूपयोः कर्मणः सुखदुःखमोहानां चागन्तुकत्वेन, परमाण्वादीनां चासाधारणत्वेन, कालादेस्तथात्वे विप्रतिपन्नत्वेन, अलीकप्रतीतेः सत्त्वस्यारोपितत्वेन तेषामन्वयस्यासम्यक्तया प्रकटाप्रकटानां वास्तविकानां सच्चिदानन्दानामेव समन्वयाद् ब्रह्मण एव समवायित्वं निश्चेयमि-

रश्मिः ।

तापि परमाणुद्व्यणुकयोश्च प्रमाणाभाव इति वदता, त्रसरेणावेव विश्रान्त्यङ्गीकारेण संदिग्धानामित्यर्थः । यद्वा चकारान्न विशेष्यविशेषणभावोऽतो विप्रतिपन्नानां कालादीनाम् । विप्रतिपत्तिर्नैयायिकप्रसिद्धा । अनेकेषामिति परमाणुस्वभावकालादीनामित्यर्थः । प्रतिपत्तीत्यादि गौरवात्तथेत्यर्थः । कालादीनां तु किं कारणं ब्रह्म कुतोऽस्य जाता जीवाम इति कारणजिज्ञासायां 'कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम्' इति श्रुतावेव चिन्त्यत्वनिर्वचनादेव कारणत्वस्य निरासादिति । एकस्मिन्निति अत्र संभवतीत्यन्तेन एकस्मिन्ननुस्यूते संभवतीति भाष्यं विवृतम् । तस्यैवेत्यादिनानेककल्पनाया अन्याय्यत्वादिति भाष्यस्य फलितार्थकथनमिति बोध्यम् । तत्तन्मत इति सांख्यनैयायिकादिमत इत्यर्थः । समन्वयलक्षणस्यानारोपितपदकृत्यं वक्तुं हेतोर्व्यभिचारित्वं शङ्कामुखेनाहुः नन्वित्यादि । विशेषदर्शनेत्यादि दोषनिवृत्तौ नेदं रजतमिति नेमे स्वाप्निका इति च विशेषदर्शनेत्यर्थः । ततश्चेत्यादि सत्यत्वाभावाच्चेत्यर्थः । तेनेति व्यभिचरितेन समन्वयेन हेतुनेत्यर्थः । ब्रह्मण इत्यादि उभयपक्षेपीति बोध्यम् । आरोपितेति पूर्वमसत्त्वात्तथेत्यर्थः । तस्येति आरोपितरूपेणान्वयस्येत्यर्थः । ब्रह्मकार्यतेति अनुमानपक्षेणेदमुक्तम् । भाष्ये तु व्याख्यानपक्ष इति न गमकशब्दः । तेन ब्रह्मकार्यतासाधकत्वमित्यर्थः । न कार्यत्वव्यभिचाराविति भाष्यीयकार्यत्वशब्दं व्याकृत्य व्यभिचारशब्दं व्याकुर्वन्तिस्म तस्यैवेत्यादि । आरोपितरूपेणान्वयस्य शुक्तिरजतादिवदभावाच्चेत्यर्थः । व्यभिचारो हानिः । असाधारणत्वेनेति आकाशाद्यवृत्तित्वेन तथेत्यर्थः । तथात्व इति कारणत्व इत्यर्थः ।

एतत् सर्वं श्रुतिरेवाह। 'स आत्मान१ स्वयमकुरुत' इति। निमित्तत्वं तु स्पष्टमेव सर्ववादिसंमतम्।

---

भाष्यप्रकाशः।

इत्यर्थः। नन्वेवं वादिविसंमताग्रहे किं बीजमत आहुः एतदित्यादि। पूर्वाधिकरणोक्तं कर्तृत्वं शास्त्रप्रमाणकत्वम्, एतदधिकरणोक्तं समवायित्वं च कर्तृकर्मत्वबोधकविभक्तिभ्यामेकस्यैव श्रुतिर्वदतीत्येतदेव बीजमित्यर्थः। अन्यथा श्रुतावुपचारापत्तेः। एवंच, यत इत्यत्र हेतौ या पञ्चमी सा, 'जनिकर्तुः प्रकृतिः' इत्यत्र प्रकृतिपदेन समवायिरूपं कारणं परामृश्य विहितेति निमित्तवदुपादानमपि सैव वक्तीति वाचकशब्दश्रवणमप्रत्यूहम्। तथाचैवं विचारे ब्रह्मणः सर्वविधं कारणत्वं श्रुतिवाक्याभ्यां प्रमाणाभ्यां सिद्धम्। तत्र स्वस्यैव समवायित्वेन कर्तृदोषभूतमनाप्तकामत्वं, क्रियाज्ञानयोः सातिशयत्वं च वारितम्। कर्मणि आत्मपदेनाविकृतत्वबोधनाद् विकृतत्वं च वारितम्। तेन दोषरहिता ब्रह्मणः सर्वविधा कारणतेत्यनेनाधिकरणेन निर्णीतम्। समन्वयपदव्याख्यानेनात्र समवायस्वरूपमपि बोधितम्। अनारोपितानागन्तुकरूपेणानुवृत्तिरेव समवाय इति। इदमेव च तादात्म्यम्। आगन्तुकरूपेण भेदसहिष्णुत्वेऽप्यनागन्तुकरूपेणाभेदादिति। न तु

रश्मिः।

कर्त्रित्यादि ताभ्यां विभक्तिभ्यामित्यर्थः। अन्यथेति पूर्वोक्तद्वयानङ्गीकार इत्यर्थः। उपचारेति। तदिति तच्छब्दे। कर्ता वाच्यः समवाय्यभिन्नकर्तरि लक्षणापत्तेरित्यर्थः। परामृश्येति प्रकृतिपदमुपादानमात्रपरमिति भाष्यकैय्यटमतमिति मनोरमायामुक्तत्वात् तथेत्यर्थः। निमित्तवदिति वृत्तिकृन्मते प्रकृतिपदस्य हेतुमात्रपरत्वादिति भावः। सैव वक्तीति 'जायमानस्य हेतुरुपादानं स्यात्' इति वृत्तौ हेतुपदं भाष्यकैय्यटसंमत्या स्वभावेन चाभिन्ननिमित्तोपादानं वक्तीत्यर्थः। श्रुतीति यत इति विभक्तिरूपा विनियोक्त्री श्रुतिः 'यतो वा इमानि भूतानि' इति साध्यत्वादिवाचकद्वितीयाद्यभावे वस्तुतः शेषशेषिणोः सहोच्चारणरूपसमभिव्याहारात्मकं वाक्यं ताभ्यामित्यर्थः। समवाय इति न चानारोपितानागन्तुकरूपेण घटत्वादिना रूपादौ घटादीनामनुवृत्तेरभावात्समवायित्वं न स्यादिति शङ्क्यं, तादात्म्यस्वीकारात्। एतच्च द्वितीयस्य द्वितीयपादे स्फुटिष्यति समवायेत्यादिसूत्रे। आगन्तुकेत्यादि यथागन्तुकरूपेण घटत्वादिना मृदो भेदसहिष्णुत्वेपि अनागन्तुकरूपेण मृत्त्वेनाभेदात्। तथागन्तुकेन रूपेण रूपनामादिना ब्रह्मणो भेदसहिष्णुत्वेपि अनागन्तुकरूपेण सत्यत्वादिनाभेदादित्यर्थः। तथा च प्रत्ययः। मृद् घटो न, घटो मृत्, ब्रह्म जगन्न, अधिकत्वात्, जगद् ब्रह्मेति भेदस्यैच्छिकत्वान्न तयोर्विरोधः। नागेशभट्टोपीदं लक्षणं मञ्जूषायामनुमेने। शब्दार्थयोस्तादात्म्यं च तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वम्। अभेदस्याध्यस्तत्वाच्च न तयोर्विरोधः। तत्र भेदस्योद्भूतत्वविवक्षयास्यार्थस्यायं वाचकः उञः प्रगृह्यं तस्य वाचकः प्रणव इत्यादौ षष्ठी। अभेदस्य तत्त्वविवक्षया तु प्रथमा 'वृद्धिरादैच्' 'ओमित्येकाक्षरं ब्रह्म' इत्यादिषु। अत एवार्थे शब्दधर्मत्वव्यवहारः। अत्यन्ताभेदेऽश्वपुरुषयोरिव तद्व्यवहाराभावात्। नात्यन्तभेदे सः।

भाष्यप्रकाशः ।

वैशेषिकप्रतिपन्न इति न कोऽपि विरोधः । एतस्य संबन्धत्वमैच्छिकभेदोत्तरं द्विनिष्ठत्वे विशिष्टबुद्धिनियामकत्वाज्ज्ञेयम् ।

विज्ञानेन्द्रभिक्षुस्तु जन्मादिसूत्रे अधिष्ठानकारणमतिरिक्तमङ्गीकृत्य, यत्राविभक्तं येनोपष्टब्धं च सत् उपादानकारणं कार्याकारेण परिणमते तदधिष्ठानकारणम् । यथा सर्गादौ जलाविभक्ताः पार्थिवसूक्ष्मांशास्तन्मात्राख्या जलेनैवोपष्टम्भात् पृथिव्याकारेण परिणमन्त इत्यतो जलं पृथिव्या अधिष्ठानकारणमिति । अत्र प्रमाणं तु,

'आधारमानन्दमखण्डबोधं यस्मिँल्लयं याति पुरत्रयं च' ।

रश्मिः ।

घटे स्वधर्मत्वव्यवहाराभावादिति । न कोऽपीति समवायदूषकस्य 'समवायाभ्युपगमाच्च साम्यादनवस्थितेः' इति सूत्रस्यापि न विरोध इत्यर्थः । अत्र वदन्ति तादात्म्यं न संबन्धः किं तु नीलं घटमानयेत्यादौ विशेषणीभूतनीलादिपदोत्तरं विभक्त्यर्थकर्मत्वं तस्य नान्वयः क्वापि । विशेषणपदोत्तरं विभक्तेः साधुत्वार्थं प्रयोगात् । अभेद एव वा विशेषणविभक्तेरर्थः । अयमेव तादात्म्यम् । अभेदस्य संसर्गमर्यादया भानं तु समासस्थल एव । लुप्तविभक्त्यनुसंधानाभावेपि शाब्दबुद्धेरानुभविकत्वात् । न च विशेषणविभक्तेरभेदार्थकत्वं न संभवति, घटे नील इत्यादावप्यभेदान्वयबोधापत्तेः । धान्येन धनमस्येत्यादौ तृतीययाऽभेदबोधनात् । नाभेदप्रकारकबोधे विरुद्धविभक्तिराहित्यं प्रयोजकमिति शङ्क्यम् । द्वितीयादिनाभेदबोधने द्वितीयान्तविशेष्यवाचकपदसमभिव्याहारस्य प्रयोजकताभ्युपगमादिति तदमञ्जुलम् । अभेदस्य संसर्गता नीलो घट इत्याद्यसमस्तस्थलेप्यविरुद्धा गौरवाभावात् । एवंचासमस्तस्थले विशेषणविभक्तेरभेदे शक्तिकल्पनमनुचितम् । ननु विशेषणविभक्तेरभेदे शक्तिभ्रमस्थलेऽभेदस्य संसर्गतावादिमतेऽभेदस्य प्रकारतावादिमते च नीलो घट इति वाक्यादभेदप्रकारकबोधः संभवति । एवं च द्वितीयादिनाऽभेदबोधने द्वितीयान्तविशेष्यवाचकपदसमभिव्याहारस्य प्रयोजकत्वं यदभ्युपगतं तदभेदस्य संसर्गतया शक्त्या च बोधनद्वये हेतुरिति हेतुताद्वयकल्पने गौरवम्, अभेदस्य संसर्गतावादिनः इत्यादीति चेन्न । अभेदे शक्तिभ्रमस्थलेपि तत्संसर्गबोधस्यैवोपगमादभेदस्य संसर्गतावादिनेति तच्छक्तित्वावच्छिन्नभेदाभाव एव नीलत्वादिप्रकारेण भासमानानां तत्तच्छक्तीनां स्वस्मिन्संबन्धतया भासत इति भट्टगदाधरः । तदेतदाहुः एतस्य संबन्धत्वमिति । द्विनिष्ठत्व इत्यादि ब्रह्मजगन्निष्ठत्वे जगद् ब्रह्मेति । विशिष्टबुद्धिनियामकत्वाज्ज्ञेयमित्यर्थः । अत्रेयं लिपिर्बोध्या । तच्छोधितावरणभङ्गे तज्ज्ञानफलमिति दर्शनात्, तेन जकारञकारयोर्योगे ज्ञ इत्युच्चारणमात्रं न त्वस्य वर्णान्तरत्वमिति शुद्धं भवत्येवेति कथं नात्र तदिति कुचोद्यं निरस्तम् । अथवा मातृकाविद्यायां पञ्चाशद्वर्णा इति पक्षः । तत्र षोडश स्वराः पञ्चविंशतिः स्पर्शाः यादयोऽष्टौ क्षकारोन्तिमः । संध्यक्षरत्वेपि पृथगुपादानं भिन्नश्रुत्या क्षकारस्याप्युपलक्षकमिति शकारचवर्गयोर्योगाभावाच्च शुद्धम् । शिक्षोक्तचतुःषष्टिपक्षत्रिषष्टिपक्षयोस्तु क्षज्ञयोर्भिन्नाक्षरत्वे न संदेहः । एवमेकपञ्चाशद्द्विपञ्चाशत्पक्षेपि बोध्यम् । एतच्च 'पञ्चाशद्वर्णरूपश्च' इति निबन्धे स्पष्टम् । अतोस्मिन्पक्षे मनोरमोक्तं शुद्धं भवत्येवेत्येवामञ्जुलमेवेति ध्येयम् । कुम्भस्यैव कारणत्वं कुम्भाकुम्भयोः कुम्भस्यैव प्राधान्यमिति वक्तुं निर्वेक्तुं मतान्याहुः विज्ञानेत्यादि इति । तन्व्याख्येति कन्यात्वा । अन्तेन आमकवृन्तेन । अन्येति मयनोऽभिज्ञाकाशजस्य इत्यर्थः ।

भाष्यप्रकाशः ।

'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' ॥

इति कैवल्योपनिषद्वाक्यम् ।

'यस्य यत् कारणं प्रोक्तं तस्य साक्षान्महेश्वरः ।
अधिष्ठानतया स्थित्वा सदैवोपकरोति च' ॥

इति पुराणान्तरवाक्यं च । एतादृशकारणत्वमेवाधिष्ठानकारणत्वमिति मूलकारणत्वमिति चोच्यते । ब्रह्मणश्च स्वाविभक्तप्रकृत्याद्युपष्टम्भकत्वं साक्षितामात्रेणेति जगत्कारणत्वेऽपि ब्रह्मणो न विकारित्वम् । न वा प्रकृतिपुरुषादिष्वतिप्रसङ्गः । सर्गात् पूर्वमन्येषां साक्षित्वासंभवात् । अत एवाविकारिचिन्मात्रत्वेऽपि ब्रह्मणो जगदुपादानत्वं, जगदभेदश्चोपपद्यते । विकारिकारणवदधिष्ठानकारणस्याप्युपादानत्वव्यवहारात् । कार्याविभागाधारत्वस्यैवोपादानसामान्यलक्षणत्वात् । अविभागश्चाधारतावत् स्वरूपसंबन्धविशेषोऽत्यन्तसंमिश्रणरूपो दुग्धजलाद्येकताप्रत्ययनियामकः । तत्र समवायसंबन्धेन यत्राविभागस्तद्धि विकारिकारणम् । यत्र कार्यस्य कारणाविभागेनाविभागस्तदधिष्ठानकारणम् । यथा जलं पृथिव्या इति । न हि जलस्य पृथिवी साक्षादेव विकारः । तन्मात्राणां भूतप्रकृतित्वश्रुतिस्मृतिविरोधात् । नच द्वयोरेवोपादानत्वम् । विजातीयानामनारम्भकत्वात् । एवमाकाशादीनां वाय्वाद्युपादानत्वमप्यधिष्ठानतयैव द्रष्टव्यम् । संभवत्यविरोधे सृष्टिप्रक्रियायां वैशेषिकसांख्ययोरुभयोरप्यत्र विरोधानौचित्यादिति । वैशेषिकादिभिरपीदृशं ब्रह्मणः कारणत्वमिष्यत एव । परंतु तैरिदमपि निमित्तकारणत्वमिति परिभाष्यते । अस्माभिस्तु समवाय्यसमवायिभ्यामुदासीनं निमित्तकारणेभ्यश्च विलक्षणतया चतुर्थमाधारकारणत्वमिति । ब्रह्मणश्च जगत्कर्तृत्वं स्वोपाधिमायौपाधिकम् । परिणामित्वरूपोपादानत्वं च प्रकृतितत्कार्यौपाधिकमित्याह ।

तदसंगतम् । 'आत्मैवेदमग्र आसीत्' इत्यादिश्रुतिषु दृश्यमानस्य जगतः पूर्वमात्मरूपत्वादिबोधनेनेतराभावसिद्धावविभागाख्यस्य स्वरूपसंबन्धस्य तदानीं वक्तुमशक्यत्वेन लक्षणेऽव्याप्तेः । गार्गीब्राह्मणे भूतभव्यस्याकाशे आकाशस्य चाक्षरे ओतप्रोतत्वकथनेन तादृशत्वस्य च, 'ओतप्रोतमिदं यस्मिंस्तन्तुष्वङ्ग यथा पटः' इत्यादावुपादानतागमकत्वेन, आथर्वणानां गोपथब्राह्मणारम्भे 'ब्रह्म ह वा इदमग्र आसीत् स्वयं त्वेकमेव तदैक्षत महद् वै यक्षं तदेकमेवास्मि

रश्मिः ।

अतिप्रसङ्ग इति अधिष्ठानकारणत्वस्येत्यर्थः । दुग्धजलादीति आदिशब्देनोदकसैन्धवखिल्यादिग्रहणम् । कार्येत्यादि सामान्यलक्षणं योजयते तत्रेत्यादि । यत्रेत्यादि च । जलं पृथिव्या इति अद्भ्यः पृथिवीति श्रुतेः । भूतेति । श्रुतिस्मृतिकैवल्योपनिषत्पुराणान्तररूपे पूर्वोक्ते । द्वयोरिति जलतन्मात्रयोरित्यर्थः । विजातीयेत्यादि । तथाच विजातीयजलस्य पृथिव्यनारम्भकत्वमिति भावः । वाय्वादीत्यादि 'आकाशाद्वायुः । वायोरग्निः' इत्यादिश्रुतावित्यर्थः । विरोधानौचित्यादिति परस्परं वैशेषिकसांख्ययोर्विरोधो बोध्यः । स्वोपाधिमायेति माया शुद्धसत्त्वप्रधाना । प्रकृतिः सत्त्वरजस्तमःसाम्यावस्था । इत्यादीति आदिशब्दार्थसङ्ग्राह्ये ग्रन्थः । दृश्यमानस्येति

भाष्यप्रकाशः ।

इन्ताहं मदेव मन्मात्रं द्वितीयं तदेव निर्मम' इति द्वितीयस्य ब्रह्ममात्रत्वभावणपूर्वकं सृष्टिकथनेन

'विश्वं वै ब्रह्मतन्मात्रं संस्थितं विष्णुमायया ।
यथेदानीं तथाग्रे च पश्चादप्येतदीदृशम्' ॥

इति तृतीयस्कन्धे विश्वस्य ब्रह्मतन्मात्रत्वकथनेन च द्वितीयस्य विश्वस्य च साक्षादुपादेयत्वे ब्रह्मण उपादानत्वस्यादण्डवारितत्वाच्च । नचोक्तकैवल्यश्रुतिविरोधः । तस्या अवान्तरसृष्टिविषयकत्वात् । एवकाराग्रपदाद्यभावेन पुरत्रयलयलिङ्गेन च तथा निश्चयात् । नापि स्मार्तसदापदविरोधः । प्राथमिकसृष्ट्यनन्तरं तथात्वेऽप्यविरोधात् । उक्तश्रुताविवेहापि प्राथमिकसृष्ट्यारम्भकालगमकस्याभावात् । उक्तदृष्टान्तोऽप्यसंगतः । पृथिव्यादितन्मात्रस्यैव साक्षाज्जलादिजन्यत्वात् ।

'रसमात्राद् विकुर्वाणादम्भसो दैवनोदितात् ।
गन्धमात्रमभूत् तस्मात् पृथ्वी घ्राणस्तु गन्धगः' ॥

इत्यादितृतीयस्कन्धवाक्यैस्तथानिश्चयात् । विजातीयारम्भस्यात्रापि तादवस्थ्यात् । न च विजातीयानामनारम्भकत्वम् । तन्तुत्वपटत्वयोर्भेदेन तत्रैव विजातीयारम्भदर्शनात् । द्रव्यत्वादिना साजात्यस्य भवदनभिमतेऽपि सत्त्वात् । नच द्रव्यत्वव्याप्यजातिभिरेव साजात्यं विवक्षितमिति वाच्यम् । अप्रयोजकत्वाद् गोमयादिभ्यो वृश्चिकाद्युत्पत्तिदर्शनात् । चलत्यनिले स्वल्पानलेनापि यत्र महान् दावानलस्तत्रानलावयवानां स्वल्पत्वेन ततो महानलस्याशक्यवचनतयाऽनिलेनैव तदुत्पत्तेः सार्वजनीनत्वाच्च । 'यत्र क्वचन स्विद्यति शोचते वा पुरुषस्तेजस एव तदध्यापो जायन्ते' इत्यादिश्रुतिभिरपि तथा निश्चयाच्च । सांख्यवैशेषिकादीनां परस्पराविरश्मिः ।

णत्वं लेखकप्रमादात् । द्वितीयस्येति जगत इत्यर्थः । अदण्डेत्यादि दण्डो दुष्टगोरानयनेऽस्ति दोषात्तद्वदुपादानत्वेपि विकारित्वादिदोषावचनाच्चेति दण्डेन हेयत्वापत्त्या वारितं भवत्येव । 'वाचो धेनुमुपासीत' इति श्रुत्या शब्दात्मनो धेनुत्वेनोपासनमत्र ज्ञेयम् । क्लृप्तकारणभावेनैव निर्वाहेऽतिरिक्तकल्पनायां गौरवमिति चकारार्थः । अवान्तरेति 'तम (एवाग्र) आसीत्तमसा गूढमग्रे प्रकेतम्' इति श्रुत्यावान्तरेत्यादिः । 'आपमापामपः सर्वाः' इति श्रुतिवत् । पुरत्रयेत्यादि तमोधिष्ठातुस्त्रिपुरारेर्हि लिङ्गमिदमिति, अन्यथा लोकत्रयमित्युक्तं स्यात् । स्मार्तसदेत्यादि अधिष्ठानतया स्थित्यधिष्ठानकारणं तत्कृतस्य सर्वकालबोधकस्मार्तसदापदेत्यर्थः । तथात्व इति अधिष्ठानतया स्थित्या सदोपकार इत्यर्थः । प्राथमिकेत्यादि अग्रपदादेरिवेत्यर्थः । विजातीयस्यानारम्भकतामुपगम्य जलस्य न साक्षाद्विकारः पृथिवीत्युक्तं तन्नेत्याहुः उक्तेत्यादि । यथा जलं पृथिव्या इत्युक्तदृष्टान्तः । विजातीयेत्यादि । अत्रापीति त्वयाप्यभ्युपगते गन्धरूपतन्मात्रस्य पृथिव्युपादानत्वेपीत्यर्थः । गन्धत्वपृथिवीत्वाभ्यां वैजात्यं बोध्यं पुराणे । नैयायिकः प्रत्यवतिष्ठते नचेत्यादि । तत्रैवेति प्रसिद्धयोस्तन्तुपटयोरेव । भवदित्यादि तन्तुपटयोः कार्यकारणभाव इत्यर्थः । तथाच तन्तुभ्यो घटोप्युत्पद्येतेति भावः । न च द्रव्यत्वेत्यादि पृथिवीत्वात्वादिभिरित्यर्थः । अप्रयोजकेति द्रव्यत्वव्याप्या जातिः पृथिवीत्वं तस्य तन्तुपटयोः सत्त्वेन विजातीयानारम्भासाधकत्वात् । हेतौ हेतुमाहुः गोमयेत्यादि । एतच्च गोमयस्यापृथ्वीत्वे । गोमयस्य पृथ्वीत्वाद्धेत्वन्तरमाहुः चलतीत्यादि । तथाच द्रव्यत्वव्याप्या जातिरनिलत्वं तेनानले साजात्याभावादप्रयोजकत्वादिति भावः । स्विद्यतीत्यादि स्वेदयुक्तो भवत्यभूमि मुञ्चतीत्यर्थः । तथेत्यादि द्रव्यत्वव्याप्यतेजस्त्वेनापां

भाष्यप्रकाशः ।

शेषाक्षरस्य प्रकृतानुपयोगित्वेन तथायासस्यापार्थत्वाच्च । एवं ब्रह्मणो मायौपाधिकं कर्तृत्वं प्रकृतितत्कार्यौपाधिकं परिणाम्युपादानत्वमप्यवान्तरसृष्टिविषयकमेव । 'आनन्दरूपममृतं यद् विभाति,' 'सच्चिदानन्दरूपाय' इत्यादिश्रुतिभिः 'आनन्दमात्रकरपादमुखोदरादिः' इत्यादि-स्मृतिभिश्च ब्रह्मण आनन्दाकारत्वे सिद्धे मूलरूपस्यौपाधिकत्वकल्पनाया असंगतत्वात् । नच विकारित्वादि शङ्क्यम् । तस्याग्रे तदनन्यत्वाधिकरणे परिहरणीयत्वात् । एवमन्यदपि यद्यद् विरुद्धमविरुद्धं वा तत्सर्वं प्रसङ्गे व्यवस्थापयिष्याम‌ः ।

भट्टभास्कराचार्यास्तु ब्रह्मण एवोपादानत्वमङ्गीकृत्य कार्यस्य जगतः कारणाद् भेदाभेदौ प्रतीत्या व्यवस्थापयन्ति । तथाह्याहुः—

'एकस्यैकत्वमस्तीति प्रमाणादवगम्यते ।
नानात्वं तस्य तत्पूर्वं कस्माद् भेदोऽपि नेष्यते ॥
यत्प्रमाणैः परिच्छिन्नमविरुद्धं हि तत् तथा ।
वस्तुजातं गवाश्वादि भिन्नाभिन्नं प्रतीयते' ॥

नह्यभिन्नं भिन्नमेव वा क्वचिद् दर्शयितुं शक्यते । सत्ताज्ञेयत्वद्रव्यत्वादिसामान्यात्मना सर्वमभिन्नं, व्यक्त्यात्मना तु परस्परवैलक्षण्याद् भिन्नम् । तथाहि—

'प्रतीयते चेदुभयं विरोधः कोऽयमुच्यते ।
विरोधे चाविरोधे च प्रमाणं कारणं मतम् ॥
एकरूपं प्रतीतत्वाद् द्विरूपं तत् तथेष्यताम् ।
एकरूपं भवेदेकमिति नेश्वरभाषितम्' ॥

रश्मिः ।

साक्षात्त्वाभावेऽप्युपादानत्वबोधनेनाप्रयोजकत्वनिश्चयादित्यर्थः । तथेति अविरोधप्रकारस्येत्यर्थः । अवान्तरेति 'माया च तमोरूपा' इति नृसिंहतापनीयात् । सत्त्वरजस्तमसां साम्यावस्था प्रकृतिरि-त्युभयस्यापि तमसः सृष्टिरवान्तरसृष्टिस्तद्विषयकम् । व्यवस्था सर्वसंमतेत्येवकारः । अग्र इति द्वितीया-ध्याय इत्यर्थः । प्रमाणादिति चक्षूरूपादित्यर्थः । तत्पूर्वमिति एकत्वपुरःसरमतो हेतोस्तथेत्यर्थः । एकैव मृद्बानाघटाद्याकारेण भवतीति निदर्शनमत्र बोध्यम् । यत्प्रमाणैरिति प्रमाणैश्चक्षुरादिभिर्य-द्वस्तु परिच्छिन्नं यद्विशिष्टं निश्चितं यथैकस्मिन् घटे द्रव्यत्वपृथ्वीत्वघटत्वादयः रूपरसपरिमाणादयश्च प्रमाणनिश्चिता इति तद्विशिष्टं घटरूपं वस्तु तत्तथैवाविरुद्धम् । निश्चितोयमर्थ इति हिशब्दार्थः । तथैव गवाश्वादिवस्तुजातं वक्ष्यमाणरीत्या भिन्नाभिन्नं प्रतीयतेऽतो भिन्नत्वाऽभिन्नत्वावच्छिन्नमेव वस्तु-जातमविरुद्धमित्यर्थः । उपपादयन्ति नहीत्यादि । एवेति अयमभिन्नमित्यत्रापि । सर्वमिति अन्ये सत्तादिकं सर्वत्र मन्यन्ते । परस्परेत्यादि परस्परं घटपटाद्याकारवैलक्षण्यादित्यर्थः । एवं भेदाभेदयोरविरोधमुत्पाद्य प्रकृते योजयन्ति तथाहीत्यादि । तत्तथेष्यतामिति तत्र च यथाप्रतीतत्वात् श्रुत्यैकरूपं तथा चक्षुषा प्रतीतत्वाद् द्विरूपमप्यनिच्छतेष्यतामित्यर्थः । अन्यथैवं सति 'एकमेवाद्वितीयं ब्रह्म' इतीश्वरभाषणविरोध इति चेत्तत्राहुः एकरूपमित्यादि । एवं ब्रह्म-

भाष्यप्रकाशः ।

ननु शीतोष्णयोर्यथा परस्परं विरोधस्तथा भेदाभेदयोः, किमिदमुच्यते नास्ति विरोध इति । अत्रोच्यते । भवतः प्रज्ञापराधोऽयं, न वस्तुविरोधः । कथम् । सहानवस्थानं, छायातपवद्भिन्नदेशवर्तित्वं वा शीतोष्णवद्विरोधो नाम । एतदुभयमिह कार्यकारणयोर्ब्रह्मप्रपञ्चयोर्नास्ति । यत उत्पत्तेस्तत्रैवावस्थितेस्तत्रैव प्रलयात् । विरोधे हि त्रयमेतन्नोपपद्यते । नहि कृशानुनाङ्कुरोत्पत्त्यादिलक्षणः संबन्धो दृश्यते । कारणेन हि मृत्सुवर्णादिना कार्यं सर्वदानुस्यूतं दृश्यते । तत्राक्षिणी निमील्य परस्परासंगतिलक्षणो विरोधो वैयात्याद् वक्तव्यो भवेत्, प्राथमिकश्रोत्रियश्रोत्रप्रतारणार्थं वा । शीतोष्णयोर्भिन्नाधारवर्तिनोर्न कदाचिदुत्पाद्योत्पादकलक्षणः संबन्धो, नाप्याधाराधेयलक्षण इति युक्तस्तयोः परस्परविरोधः । तस्माच्छीतोष्णवदित्ययुक्तं दृष्टान्ताभिधानम् । अत्र प्रागल्भ्यात् कश्चिदाह । यथा संशयज्ञानं स्थाणुर्वा पुरुषो वेत्यप्रमाणं, तथा भेदाभेदज्ञानमिति । तदसत् ।

'परस्परोपमर्देन न कदाचित् सह स्थितिः ।
प्रमेयानिश्चयाच्चैव संशयस्याप्रमाणता' ॥

अत्र पुनः कारणं पूर्वसिद्धं मृत्सुवर्णादिलक्षणम् । ततः कार्यं पश्चाज्जायमानं तदाश्रितमेव जायते । कारणसमानार्थतया हि कार्यबुद्धिः । न कारणस्वरूपोपमर्देन देशतः कालतो वा

रश्मिः ।

रूपमेव भवेदितीश्वरभाषितं न किंतु एकोहं बहु स्यामिति एकं बहुरूपं भवेदितीश्वरभाषितमित्यर्थः । यद्वा । गोपालतापिनीये कथं चतुर्भिरेको देवो भवेदिति प्रश्ने एकमेवाद्वितीयं ब्रह्मेत्युत्तरात्तथा । कृशानुनेति निमित्तकारणेन वह्निनेत्यर्थः । कारणेनेति समवायिनेत्यर्थः । दृश्यत इति तथा च न जगतो ब्रह्मणा सहानवस्थानं नापि भिन्नदेशवर्तित्वमित्यर्थः । तत्राक्षिणी इत्यादि उभयविधलक्षणासंभवे सति भवज्ज्ञानशक्तिं तिरोभाव्येत्यर्थः । वैयात्यादिति गत्यन्तरविरहात्तद्विरुद्धं तदसंगतमिति दर्शनाच्चेत्यर्थः । एतदपि ब्रह्मजगतोर्गवाश्वादेश्च नास्तीति तत्प्रयोजनमाहुः प्राथमिकेत्यादि । साङ्गोपाङ्गवेदमात्रेण वेदार्थमवगच्छन्तः पूर्वकालीनशिष्टानुयायिनः छन्दोध्येतारः श्रोत्रियास्तेषां श्रोत्राणि भेदाभेदबोधकशब्दानेव गृहीतवन्तीति तेषामुक्तरीत्याऽसंगतिलक्षणविरोधप्रदर्शनेन दुर्बुद्ध्युत्पादनार्थमित्यर्थः । वक्तव्य इत्यादि पूर्वेणान्वेति । उत्पाद्येति ब्रह्म जगद्वदित्यादिः । तस्मादिति विरोधलक्षणाभावेपि विरुद्धत्वादित्यर्थः । प्रागल्भ्यादिति प्रतिभातिशयादित्यर्थः । धार्ष्ट्याद्वा । गल्भ धार्ष्ट्ये इति । अप्रमाणमिति भावे ल्युट्, अप्रमेत्यर्थः । अत्र भेदाभेदवादी किंचिदाह तदसदिति । अत्रापि विषमो दृष्टान्त इत्याशयेनाहुः परस्परेत्यादि । स्थाणुत्वपुरुषत्वादीनां तमस्त्वेन तथेत्यर्थः । तथा प्रमेयानिश्चायकत्वात्संशयस्याप्रमात्वं चेत्यर्थे भावे ल्युट् विषमत्वमुपपादयन्ति अत्र पुनरित्यादि । तदाश्रितमिति कारणसमवेतमित्यर्थः । दृष्टान्ते तु स्थाणुत्वपुरुषत्वयोर्न कदाचित्सहस्थितिरित्यर्थः । एतद्विषयकं ज्ञानमपि प्रमात्मकमित्याहुः कारणेत्यादि । कारणं मृत्सुवर्णादिः कार्यं घटकुण्डलादि । [illegible] विषयत्वेन यस्यां तत्तथा हि घटो मृदिति बुद्धिः [illegible] । [illegible] घटो न मृत् अस्मिन्काले घटो न मृदिति च न पृथग्भूतं कार्यं

भाष्यप्रकाशः।

पृथग्भूतं कार्यं दृश्यते। तस्मान्न किंचिदेतत्। तदयं संग्रहश्लोकः—

'कार्यरूपेण नानात्वमभेदः कारणात्मना।
हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा'॥ इति।

अत्र वाचस्पतिमिश्रा उक्तां कारिकामुपन्यस्याहुः—कः पुनरयं भेदो नाम, यः सहाभेदेनैकत्र भवेत्। परस्पराभाव इति चेत् किमयं कार्यकारणयोः कटकहाटकयोरस्ति न वा। न चेत् एकत्वमेव वास्तवं न भेदः। अस्ति चेत् भेद एव, नाभेदः। न च भावाभावयोरविरोधः। सहासंभवात्। संभवे वा कटकवर्धमानकयोरपि तत्त्वेनाऽभेदप्रसङ्गः। भेदस्याभेदाविरोधात्। अपि च। कटकस्य हाटकादभेदे यथा हाटकात्मना कटकमुकुटकुण्डलादयो न भिद्यन्ते, एवं कटकात्मना न भिद्येरन्। कटकस्य हाटकादभेदात्। तथाच हाटकत्वमेव वस्तु सन्न कटकादयोऽभेदस्याप्रतिभासनात्। अथ हाटकत्वेनैवाभेदो, न कटकत्वेन। तेन तु भेद एव कुण्डलादेः। यदि हाटकादभिन्नः कटकः, कथमयं कुण्डलादिषु नानुवर्तते। नानुवर्तते चेत् कथं हाटकादभिन्नः। ये हि यस्मिन्ननुवर्तमाने व्यावर्तन्ते ते ततो भिन्ना एव। यथा सूत्रात् कुसुमभेदाः। नानुवर्तन्ते चानुवर्तमानेऽपि हाटकत्वे कुण्डलादयः। तस्मात् तेऽपि हाटकाद्भिन्ना एवेति। सहानुवृत्त्या च सर्ववस्त्वनुगमे, इदमिह नेदमस्मादिदमिदमिदानीं नेदमिदमेवं नेदमेवमिति विभागो न स्यात्। कस्यचित् क्वचित् कदाचित् कथंचित् विवेकहेतोरभावात्।

रश्मिः।

दृश्यत इत्यर्थः। तस्मादिति कार्यस्य कारणाश्रितत्वेन तज्ज्ञानस्य यथार्थत्वेन च दृष्टान्तस्य विरुद्धत्वादित्यर्थः। तदयमिति तदित्यव्ययं हेत्वर्थकम्। नानात्वमिति भेद इत्यर्थः। तस्य नानात्वनिबन्धनत्वात्। अभेद इति कुण्डलं सुवर्णमिति सामानाधिकरण्यप्रतीतेरभेद इत्यर्थः। भिदेति सुवर्णं कुण्डलं नेति प्रतीतेर्भिदेत्यर्थः। नचेदिति कटकसुवर्णयोरन्योन्याभावो यदि न तर्हि एकस्मिन् घटे स्वभेदाभाववति एकत्वमिवैकत्वमेव। तथा कटकं सुवर्णमिति प्रतीतेः सुवर्णं कटकं नेति प्रतीतिसत्त्वेपि न भेद इत्यर्थः। नाभेद इति अन्योन्याभाववतोर्घटपटयोरिव नाभेद इत्यर्थः। संभव इति घटतदत्यन्ताभावयोरिव संबन्धाभावदशायां भेदतदभावयोः संभवे वा कटकशरावयोः परस्पराभाववतोरपि कटकत्ववर्धमानकत्वरूपेण तथेत्यर्थः। ननु तथाप्रतीत्यभावान्नाभेद इति चेत्तत्र दूषणान्तरमाहुः अपि चेत्यादि। भेदस्येति हाटको न कटक इति भेदेऽस्यात्यन्ताभावरूपस्य भेदाभावस्याभेदस्याप्रतिभासमानत्वात्। अयं, न कटकादय इत्यत्र हेतुः। यद्वा कटकं हाटकमिति प्रतीत्याभेदस्याप्रतिभासनादित्यर्थः। कुण्डलादेरिति। इति विभाव्यते तदा इति शेषः। अयमिति कटक इत्यर्थः। ननु कटकत्वं हाटकत्वं न व्यभिचरतीति कथं भिन्ना इति चेत्तत्राहुः सहानुवृत्त्येत्यादि। अनुगम इति। सर्वत्रेति शेषः। इदमित्यादि इह क्षीरं इदं दधि नेदं तैलमिति संसर्गतदभावव्यवस्था न स्यात्। तथा कुम्भादिदं पटादिकं भिद्यते इदं कुम्भमस्मात्कुम्भान्न भिद्यते इत्यसंकरो न स्यात्। एवमिदं कोकिलरुतमिदानीं वसन्तसमयेस्ति, इदमम्बुदध्वानं नेति व्यवस्था न स्यात्, तथेदं घटादि एवं कम्बुग्रीवत्वादिप्रकारकं इदं पटादिकं एवं नेति प्रकारासंकरो न स्यादित्यर्थः। उक्तास्वव्यवस्थासु हेतुमाहुः कस्यचिदित्यादि। कुतश्चिदपीति ध्येयम्। अभावादिति सर्वस्यैव भिन्नाभिन्नत्वेन

भाष्यप्रकाशः ।

अपि च । दूरात् कनकमित्यवगते, न तस्य कुण्डलादयो विशेषा जिज्ञासेरन् । कनकादभेदात् तेषाम् । तस्य च ज्ञातत्वात् । अथ भेदोऽप्यस्ति कनकात् कुण्डलादीनामिति कनकावगमेऽपि अज्ञातास्ते । नन्वभेदोऽप्यस्तीति, किं न ज्ञाताः । प्रत्युत ज्ञानमेव तेषां युक्तम् । कारणाभावे हि कार्याभाव औत्सर्गिकः । स च कारणसत्तयाऽपोद्यते । अस्ति चाभेदे कारणसत्तेति । कनके ज्ञाते ज्ञाता एव कुण्डलादय इति तज्जिज्ञासाज्ञानानि चानर्थकानि स्युः । तेन यस्मिन् गृह्यमाणे यन्न गृह्यते तत् ततो भिद्यते । यथा करभे गृह्यमाणे अगृह्यमाणो रासभः करभात् । गृह्यमाणे च दूरतो हेम्नि न गृह्यन्ते तस्य भेदाः कुण्डलादयः । तस्मात् ते हेम्नो भिद्यन्ते । कथं तर्हि हेम कुण्डलमिति सामानाधिकरण्यमिति चेत् । नह्याधाराधेयभावे समानाश्रयत्वे वा सामानाधिकरण्यमित्युक्तम् । अथानुवृत्तिव्यावृत्तिव्यवस्था च हेम्नि ज्ञाते कुण्डलादिजिज्ञासा च कथम् । न खल्वभेद ऐकान्तिकेऽनैकान्तिके चैतदुभयमुपपद्यते यत इत्युक्तम् । तस्माद् भेदा-

रश्मिः ।

तथेत्यर्थः । तस्येति हाटकस्येत्यर्थः । तस्य चेति कनकस्य चेत्यर्थः । तेषामिति कुण्डलादीनामित्यर्थः । एवं युक्त्या भेदापवादेनाभेदं व्यवस्थाप्य श्रुत्यापि भेदं कारणत्वेन निराकुर्वन्तिस्म अभेदो हि वास्तवो भेदोऽनिर्वचनीय इति । अथेत्यादि । कारणाभाव इति कारणं हि 'अथात आदेशो नेति नेति' इति श्रुत्या मूर्तामूर्तापोदितं ब्रह्म तदद्वैतमभावः, तस्मिन् हि सति कार्य भेदो मायामात्रं तद्रूपोऽभावः । स चेति कार्याभाव इत्यर्थः । अपोद्यत इति उक्तश्रुत्यापोद्यते । अस्ति चेति अभेदेऽद्वैते सति । एवं कनकाभेदे कटकादिकारणे सत्तोन्नेया । ज्ञाता एवेति एवकारस्तु एकविज्ञानेन सर्वविज्ञानश्रुत्यनुरोधात् । तज्जिज्ञासेत्यादि तेषां कुण्डलादीनां जिज्ञासा ज्ञानानि चेत्यर्थः । कार्यकारणयोरभेदाभावं सप्रमाणमुपसंहरन्ति तेनेत्यादि । अपोद्यं कार्ये भेदं दर्शयन्ति स्म यथेति । कारणेपि भेदं दर्शयितुं दृष्टान्तेपि भेदं दर्शयन्ति स्म गृह्यमाण इति । दूरत इति समीपतस्तु शास्त्रदृष्टिकैर्गृह्यन्त इत्यभेदवादाशोक्तं सूचितं परम् । कुण्डलहाटकयोर्भेदाभेदावेव वाच्यौ सामानाधिकरण्यानुरोधात्, न ह्यत्यन्तभेदे तदस्ति, कुण्डलकटकयोरदर्शनात्, अत्यन्ताभेदेपि न हेमहेमेत्यनुपलम्भादिति । भास्कराचार्योक्तमनुवदन्ति कथं तर्हीत्यारभ्य—इत्युक्तमित्यन्तेन । ननु न हेम कुण्डलमिति प्रतीतिरत आहुः सामानेत्यादि । भिन्नप्रवृत्तिनिमित्तत्वे सति एकार्थबोधकत्वं सामानाधिकरण्यं, तथा च नेयं प्रतीतिः किं तु सामानाधिकरण्योक्तिरिति भावः । यद्वा सामानाधिकरण्यमेकदेशवृत्तित्वम् । नहीति हेमकुण्डलयोर्नाधाराधेयभावः, ब्रह्मजगतोस्तु वर्तते इति दृष्टान्तवैषम्यम्, घटकपालयोस्तु वर्तते आधाराधेयभावः स न दृष्टान्तः । शीतोष्णयोर्भिन्नाधारवर्तित्वेन समानाश्रयत्वं नास्ति ब्रह्मजगतोस्तु वर्तते 'स आत्मा स्वाश्रयाश्रयः' इति वाक्यादित्याहुः समानाश्रयत्व इति । उक्तं उक्तप्रायम् । यदि हेम्नः सकाशात् कुण्डलादीनां भेदाभेदौ स्यातां तर्हि तेषामनुवृत्तहेम्नः सकाशादभेदादितरेतरव्यावृत्तिर्न स्यान्न स्याच्च हेम्नि निर्णीते संशय इति प्रतितर्केण मिथोविरोधास्येन सामानाधिकरण्यानुपपत्तिरूपं तर्कं वितण्डया दूषयन्ति अथानुवृत्तीत्यादि । इदमिह नेदमित्यादिनोक्तेत्यर्थः । नन्वत्यन्ताभेदे मा भूदनुवृत्तिव्यावृत्तिव्यवस्था मा भूच्च हेम्नि ज्ञाते कुण्डलादिजिज्ञासा भेदाभेदमते ते किं न स्यातामित्याशङ्क्य पूर्वोक्तमविनिगममुत्सर्गापवादं च स्मारयन्ति न खल्वित्यादि । ऐकान्तिक इति भेदाभाववद्वृत्तिनि अभेदे तदभाववर्तिनि चानुवृत्तिव्यावृत्तिव्यवस्था कुण्डलादिजिज्ञासा चेत्येतदुभयमित्यर्थः । स्वमतेन सामानाधिकरण्यमुपपादयन्ति तस्मादित्यादि

भाष्यप्रकाशः ।

भेदयोरन्यतरस्मिन्नहेये । अभेदोपादानैव भेदकल्पना, न भेदोपादाना अभेदकल्पनेति युक्तम् । भिद्यमानतन्त्रत्वाद् भेदस्य, भिद्यमानानां च प्रत्येकमेकत्वात् । एकाभावे नानाश्रयस्य भेदस्यायोगात् । एकस्य च भेदानधीनत्वात् । नायमयमिति च भेदग्रहस्य प्रतियोगिग्रहसापेक्षत्वादेकत्वग्रहस्य चान्यानपेक्षत्वादभेदोपादानैवानिर्वचनीयकल्पनेति सांप्रतम् । तथा च श्रुतिः, 'मृत्तिकेत्येव सत्यम्' इति । तस्मात् कूटस्थनित्यतैव पारमार्थिकी, न परिणामिनित्यतेति सिद्धमिति । तदनवधानविजृम्भितमेव । उक्ते मते भेदाभेदयोर्नानात्वैकत्वरूपतया भेदस्यान्योन्याभावरूपत्वानङ्गीकारेण तदादाय तन्मतदूषणस्य गगनकुसुमसौरभ्यकल्पत्वात् । परस्पराभावरूपत्वेऽपि घटतदत्यन्ताभावयोर्घटतद्भेदयोश्च भूतल एव सहावस्थानदर्शनेन भेदस्य तदभावेनाभेदेन सह न विरोधः । अत्यन्ताभावस्य नित्यव्यापकत्वेन सर्वत्र सत्त्वात् । प्रतियोग्यानयनोत्तरं तदभावबुद्धिप्रतिबन्धमात्रपरम् । एवं सति यत्र भेदस्तत्राप्यभेदो वर्तत एवेति तयोः सहासंभवाद्विरोधकथनस्यापि तथात्वम् । एवं, संभवे वेत्यादिना कटकवर्धमानकयोरभेदप्रसञ्जनस्यापि तथात्वम् । अविरोधस्यैक्यापादकतायाः क्वाप्यदृष्टत्वात् । यदपि, कटकस्य हाटकादित्यादिना कटकादीनां हाटकाद् भेदव्युत्पादनं, तदपि तथा । तेषां तदवस्थारूपत्वात् । अवस्थानां चावस्थावतः सकाशतो भिन्नाभिन्नत्वात् । पट्पद्यां समुद्रतरङ्गयोस्तथात्वस्य

रश्मिः ।

उभयप्रत्ययादित्यर्थः । अहेय इति तेनाभेदस्थापनेऽभिप्रायो न तु भेदखण्डने इति द्योतितम् । विरोधादन्यतरबाधेप्यभेदो बाध्य इति सौगतमतमाशङ्क्याहुः अभेदेत्यादि । नानाश्रयस्येति नानानिमित्तप्रयुक्तत्वेन तथेत्यर्थः । यथा घटः पटो न, कुड्यं पटो न, कुसूलं पटो नेत्यादि । अयोगादिति तथाचैक्यरूपाभेदतन्त्रत्वाद्भेदस्य न भेदोपादानाऽभेदकल्पनेत्यर्थः । एकस्य चेति भिद्यमानस्येत्यर्थः । भिद्यमानतन्त्रत्वं साधयन्ति नायमित्यादि । अयं घटः नायं पटो नेत्यर्थः । अनिर्वचनीयेति अध्यस्तभेदकल्पनेत्यर्थः । सांप्रतमिति युज्यत इत्यर्थः । सत्यमिति वाचारम्भणं घटादिर्विकार इति भावः । कूटस्थेति ब्रह्मादिपिपीलिकापर्यन्तं सर्वप्राणिबुद्धिरदृष्टविशिष्टतयोपलभ्यमानः सर्वप्राणिबुद्धिस्थो यदा तदा कूटस्थ इत्युच्यते इति सर्वोपनिषदुक्तकूटस्थनित्यता । परिणामीति प्रकृतिपरिणामिनित्यतेति । सिद्धान्ते अद्वैतेपि व्यासपादसंगृहीतैकदेशिमते अनुकूलमिदमिति । पूर्वतन्त्रे षष्ठस्य तृतीयपादे द्रव्यकर्मणोस्तादात्म्यं भेदाभेदावङ्गीकृत्य वर्णिताविति स्वयमङ्गीकाराच्च । मतान्तरं समर्थयन्ति तदनवेत्यादि । तदिति वाचस्पत्युक्तम् । अन्योन्येति ऐच्छिकमपि नानात्वमन्योन्याभावजन्यमित्युपलक्षणायै उक्तम् । तदादायेति भेदस्यान्योन्याभावरूपत्वमादायेत्यर्थः । भूतल इति घटवद्भूतलं घटो नेति प्रतीतेस्तथेत्यर्थः । तस्येति घटस्येत्यर्थः । अभेदेनेति पाठे तु भेदात्यन्ताभावेन सह तस्य भेदस्य न विरोध इत्यर्थः । अत्र हेतुं वक्तुमत्यन्ताभावेन सह प्रतियोगिनः स्थितिमाहुः अत्यन्तेत्यादि । तथा च सति घटे घटो नास्तीति प्रतीत्यापत्तिः किं न स्यात्तत्राहुः प्रतियोगीत्यादि । तदभावेत्यादि । तद्वत्ताज्ञानस्य तदभाववत्ताज्ञानं प्रति प्रतिबन्धकत्वात् प्रतियोग्यत्यन्ताभावेत्यर्थः । एवं सतीति अत्यन्ताभावस्य नित्यव्यापकत्वे सतीत्यर्थः । अभेद इति भेदात्यन्ताभावरूपः । तथात्वमिति गगनकुसुमसौरभ्यकल्पत्वमित्यर्थः । क्वापीति तथा सति घटत्वद्रव्यत्वादीनामभेदापत्तिरिति भावः । तथात्वस्येति भेदाभेदस्येत्यर्थः ।

१. श्रुतिरापोऽग्नरोवानुरित्यत्र । २. व्यासतया ।

भाष्यप्रकाशः ।

शंकराचार्यैरेवोक्तत्वात् । अतः परं सहानुपलम्भ्यादिनोक्तो दूषणत्वेन प्रतीतिविरोधो वक्तव्यः । स चेद् विद्यमानेऽपि कुण्डलादिना भेदे कनकत्वेनाभेदः प्रतीयते तदा न प्रतीतिविरोधोऽपि । प्रमाणेनाधिगमात् । प्रमिते च तस्मिन्, दूरात् कनकमित्यादिनोक्तानां विकल्पानामनवसरपराहतत्वादिति प्रतीयते चेदुभयमितिकारिकयैवोक्तं व्युत्पादितं च । अतो मुकुटकटकादीनामवस्थात्वेन हेमसामानाधिकरण्यस्य सामयिकत्वेन च व्यावृत्तिव्यवस्थाजिज्ञासाजनकत्वयोरुपपत्तेर्भेदस्यागन्तुकत्वमेव, न त्वनिर्वचनीयत्वम् । नच श्रुतिविरोधः । उक्तश्रुतौ परिणामिनो मृदादीनेव दृष्टान्तीकृत्य, एवं सौम्य स आदेशो भवतीति दार्ष्टान्तिकेऽतिदेशेन परिणामिनित्यताया एव श्रुत्यभिप्रेतत्वात् । नचात्र कारणे सत्यत्वस्य कार्ये वाचारम्भणत्वस्य चोक्तत्वेन कार्यमिथ्यात्वसिद्धौ कूटस्थनित्यत्वमेव सेत्स्यतीति वाच्यम् । घटः पट इत्यादिवाचारम्भणरूपस्य विकारस्यैव नामधेयत्वाभिधानेन नामधेयस्य विकारत्वविधानेन वा स्वरूपमिथ्यात्वस्य श्रुत्यनभिप्रेतत्वात् । यदि कार्यस्वरूपस्यापि वाङ्मात्रतामभिप्रेयात्, वाचारम्भणं नामधेयमिति पदद्वयं न ब्रूयात् । एकेनैव चारितार्थ्यात् । इदं यथा तथा तदनन्यत्वाधिकरणे प्रपञ्चयिष्यते । सिद्धान्ते यो विशेषः सोऽपि तत्रैव व्युत्पादयिष्यते । तस्मादस्मिन्नंशे भास्कराचार्यमतमदुष्टमेव ।

रामानुजाचार्यास्तु, 'अस्मान्मायी सृजते विश्वमेतत् । तस्मिँश्चान्यो मायया सन्निरुद्धः' ।

रश्मिः ।

'सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वम् ।
सामुद्रो हि तरङ्गः क्वचन समुद्रो न तारङ्गः' ॥

इत्यनेनेत्यर्थः । तेन कार्यसमवायिनोरेव भेदाभेदावङ्गीकृतौ इति यथा करभे गृह्यमाणे इत्यादिदृष्टान्तासंगतिरपि द्रष्टव्या । प्रतीतिविरोध इति । इदमिहेत्यादि विभागाभावात्तादृशप्रतीतिविरोध इत्यर्थः । तस्मिन्निति भिन्नाभिन्नत्व इत्यर्थः । तथा च प्रत्यक्षतस्तर्कस्य नैर्बल्यात् प्रतीत्यनुरोधेन भेदाभेदावेवास्थेयावित्यर्थः । व्यावृत्तीत्यादि हेम्नि गृह्यमाणेपि कुण्डलाद्यग्रहणात्कुण्डलादिव्यावृत्तिर्यासां न भेदनिबन्धना, अपि तु मुकुटादीनामवस्थात्वेन हेम्नस्तदवस्थाभावनिबन्धना सामानाधिकरण्यस्य कार्यतासमयजन्यत्वेन तदानीं सामानाधिकरण्याभावाच्च तन्निबन्धना च । एवं कुण्डलादिविशेषजिज्ञासापि न भेदनिबन्धना एवं तयोरुपपत्तेरित्यर्थः । न त्वनिर्वचनीयत्वमिति दृष्टान्ताभावान्मानाभावात्खण्डितत्वाच्चेत्यर्थः । यदप्यभेदोपादानेनैवेत्यादिनाऽभेदस्य भेदानधीनत्वं भेदस्य चाभेदाधीनत्वमित्युक्तं तदपि न मञ्जुलम् । अभेदस्य भेदाभावरूपत्वेन भेदरूपप्रतियोगिसापेक्षत्वादित्यपि ध्येयम् । स्वरूपेत्यादि घटादिस्वरूपेत्यर्थः । तथा च घटः पट इत्यादिनामधेयमेव मिथ्या न तु कम्बुग्रीवाद्याकारोपीति भावः । एवेति पूर्वतन्त्रे षष्ठस्य तृतीयपादे द्रव्यकर्मणोस्तादात्म्यं भेदाभेदावङ्गीकृत्य वर्णितौ वैयाकरणानामपि तौ संमतावित्येवकारः । प्रकृते तु भेदाभेदौ पूर्वतन्त्र एव विधेः प्रेरकत्ववत् न तूत्तरतन्त्रे 'प्रवर्तकत्वं कृष्णस्य न विध्यर्थस्य कर्हिचित्' इतिवाक्यात्तद्वदभेदः । अस्मानित्यादि नश्वराणामुदयो यतो भवत्यस्मात्प्रत्यक्षात् । अस्मानित्यादि शसन्तं पदं वा, अन्यः सन्निरुद्ध इत्युक्तसन्निरोधार्थम् । अन्य इति अस्मत्पदार्थो जीवः । संनिरुद्धः 'अपश्यत् पुरुषं पूर्णं मायां च तदपाश्रयाम् । यया संमोहितो जीवः' इतिवाक्यानुगुणः । श्वेताश्वतरस्था चतुर्थाध्यायस्था

भाष्यप्रकाशः ।

'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्'इत्यादिश्रुतिष्वचिदृस्तुचिद्वस्त्वीश्वराणां यथायथं भोग्यत्वभोक्तृत्वनियन्तृत्वैः स्वरूपविवेकात् त्रयोऽपि भिन्नाः । तथा, 'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति एष त आत्मान्तर्याम्यमृतः' इत्यारभ्याऽऽपोऽग्निरन्तरिक्षं वायुर्द्यौरादित्यो दिशश्चन्द्रतारकमाकाशस्तमस्तेजः सर्वाणि भूतानि प्राणा वाक् चक्षुः श्रोत्रं मनस्त्वग् विज्ञानं रेत इत्येतानि काण्वपाठेन, विज्ञान-स्थाने, आत्मा लोकयज्ञवेदाश्चाधिका माध्यन्दिनपाठेन, वाजसनेयके बृहदारण्यकेऽन्तर्यामि-ब्राह्मणे ब्रह्मशरीरत्वेनोक्ता ब्रह्मण आत्मत्वं चोक्तम् । सुबालोपनिषदि तु वाजसनेयक उक्ताः पृथिव्यादयस्तत्रानुक्ताश्च बुद्धिचित्ताव्यक्ताक्षरमृत्यवश्च शरीरत्वेनोक्ताः । 'यः पृथिवीमन्तरे संचरन् यस्य पृथिवी शरीरं यं पृथिवी न वेद एष सर्वभूतान्तरात्मा दिव्यो देव एको नारायणः' इत्यारभ्य 'यस्य मृत्युः शरीरम्' इत्यन्तेन तथोक्तम् । तेन पृथिव्यादीनां स्थूलानामव्यक्ता-दीनां सूक्ष्माणां च शरीरत्वश्रावणात् । स्थूलसूक्ष्मभेदेन द्विविधस्याप्यचिद्वस्तुनो ब्रह्मशरीरत्वम् । अव्यक्तादीनि त्वव्यक्ताऽक्षरतमांसि गुणत्रयसाम्यावस्थारूपायाः प्रकृतेरेव सूक्ष्मपरिणामविशि-ष्टानि रूपान्तराणि तेषु मूलभूतरूपं तमः । सुबालोपनिषद्येव प्रलयप्रकरणे, 'पृथिवी अप्सु लीयते आपस्तेजसि तेजो वायौ वायुराकाशे आकाशमिन्द्रियेषु इन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ भूतादिमर्हति महान् अव्यक्ते अव्यक्तमक्षरे अक्षरं तमसि लीयते तमः परे देव एकी-भवति' इत्यविभागापत्तिदशायां विभागव्यपदेशानर्हरूपेण तस्यैवावस्थानात् । शरीरकथनप्रस्तावे च तमःस्थाने मृत्योः श्रावणान्मृत्युशब्देनात्र तम उच्यत इति निश्चीयत इति तस्यापि शरी-रत्वं निर्बाधम् । एवं काण्वोक्तविज्ञानस्थाने आत्मनः श्रावणाच्चिद्वस्तुनोऽपि ब्रह्मशरीरत्वमसं-दिग्धम् । एवं सर्वावस्थावस्थितचिदचिद्वस्तुशरीरतया तत्प्रकारः परमपुरुष एवेति 'सदेव सोम्येदमग्र आसीत्' 'सत्यं चानृतं च सत्यमभवत्' इत्यादौ जगतो ब्रह्मत्ववादः । प्रपञ्चरूपे

रश्मिः ।

श्रुतिरेव । श्रुत्यंशमायिमायापदे व्याकरोति मायां त्वित्यादि । अचिदित्यादि विश्वमित्यचित्, मायया संनिरुद्धोऽन्यश्चित्, मायीश्वरस्तेषां यथायथं श्वेताश्वतरपञ्चमाध्याये

'वालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते' ॥

इत्युपक्रम्य कर्मानुगान्यनुक्रमेण देही स्थानेषु रूपाण्यभिसंपद्यते 'स्थूलानि सूक्ष्माणि बहूनि चैव रूपाणि देही स्वगुणैर्वृणोति' इति भोग्यत्वभोक्तृत्वे 'सर्वाधिपत्यं कुरुते महात्मा' इति नियन्तृत्वं चोक्तं तैरित्यर्थः । आदिशब्दार्थभूतां श्रुतिमाहुः यः पृथिव्यामित्यादि । आपोऽग्निरित्यादि 'योऽप्सु तिष्ठन् अपामन्तरः' इत्यादि । एवं 'अग्नौ तिष्ठन्नग्नेरन्तरः' इत्यादिः । एवमग्रेऽपि । बुद्धिचित्तेति यो बुद्धि-मन्तरे संचरन् यस्य बुद्धिः शरीरमित्यादिः । एवमग्रेऽपि । श्रुतिमाहुः यः पृथिवीमित्यादि । तथोक्त-मिति पृथिव्यादीनि शरीरत्वेनोक्त्वा ब्रह्मण आत्मत्वं चोक्तम् । इति भोग्यभोक्तृनियन्तृत्वान्युक्तानि । तस्यैवेति तमस एवेत्यर्थः । अत्यन्तविस्मरणरूपमृत्योः कथं शरीरत्वमित्यतो मृत्योः शरीरत्वं कथयन्ति शरीरेत्यादि । अत्रेति शरीरप्रस्ताव इत्यर्थः । तस्यापीति मृत्योरपीत्यर्थः । अन्यथा सुबालोपनि-षच्छरीरप्रस्तावप्रलयप्रकरणयोरेकवाक्यता न स्यादिति भावः । सत्यं चानृतं चेति चिदचिदेत्यर्थः ।

भाष्यप्रकाशः ।

शरीरे प्रलयदशायां तमःशब्दवाच्यातिसूक्ष्माचिद्वस्त्वेकशेषे सति तमसि च स्वशरीरतया विनिर्देशानर्हातिसूक्ष्मदशापत्त्या स्वस्मिन्नेकतापन्ने सति तथाभूततमःशरीरं ब्रह्म पूर्ववत्, विभक्तनामरूपचिदचिन्मिश्रप्रपञ्चरूपः स्यामिति संकल्प्याप्ययक्रमेण जगच्छरीरतयाऽऽत्मानं परिणामयतीति सर्वेषु वेदान्तेषु परिणामोपदेशः । अतः स्थूलसूक्ष्मचिदचित्प्रकारं ब्रह्मैव कार्यं कारणं चेति जगतो ब्रह्मोपादानकत्वेऽपि सूक्ष्मचिदचिदीश्वरसंघातस्यैवोपादानत्वेन चिदचितोर्ब्रह्मणश्च भोक्तृत्वभोग्यत्वनियामकत्वरूपस्वभावासंकरोऽप्युपपन्नतरः । शुक्लकृष्णरक्ततन्तुसंघातोपादानके चित्रपटे तत्तत्तन्तुप्रदेश एव शौक्ल्यादिवत् तत्र तत्र भोक्तृत्वादीनां शक्यवचनत्वात् । एतावान् परं विशेषः । तन्तूनां पृथक्स्थितियोग्यत्वात् पुरुषेच्छया कदाचित् संघातात् कारणत्वं कार्यत्वं च कादाचित्कम् । इह तु चिदचितोः सर्वावस्थयोः परमपुरुषशरीरत्वेन तत्प्रकारतयैव पदार्थत्वात् सर्वदा सर्वैः शब्दैस्तत्प्रकारः परमपुरुष एव वाच्य इति। 'अहमिमास्तिस्रो देवता अनेन जीवेनात्मानुप्रविश्य नामरूपे व्याकरवाणि' इत्यत्र तिस्रो देवता इत्यनेन सर्वमचिद्वस्तु निर्दिश्य तत्र स्वात्मकजीवानुप्रवेशेन नामरूपव्याकरणवचनात् सर्वे वाचकाः शब्दा अचिज्जीवविशिष्टपरमात्मन एव वाचका इति कारणावस्थपरमात्मवाचिना शब्देन कार्यवाचिनः शब्दस्य सामानाधिकरण्यं मुख्यवृत्तमिति विशिष्टाद्वैतवादमङ्गीकृत्य चिदचिद्विशिष्टस्यैवोपादानत्वं रोचयन्ते ।

तदपि चिन्त्यम् । आदिसृष्टिप्राकाले सूक्ष्मचिदचिच्छरीरवैशिष्ट्यस्य वक्तुमशक्यत्वात् । 'सदेव सोम्येदमग्र आसीत्' 'एकमेवाद्वितीयम्' इत्यत्रैवकारादिभिरितरव्यवच्छेदात् । न च तैः शरीर्यन्तरं मुख्यान्तरं मिथदन्तरं च व्यवच्छेद्यते, न तु शरीरममुख्यममिथद्वेति वाच्यम् । पुरुषविधब्राह्मणे, 'आत्मैवेदमग्र आसीत् पुरुषविधः सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत्' इत्यनुवीक्षाया अन्यदर्शननिषेधस्य च विरोधापत्तेः । नच तत्राप्यन्यपदेन शरीर्येव

रश्मिः ।

सद्वासदेति वार्थः । प्रलयदशायां विशिष्टाद्वैतं साधयन्ति प्रपञ्चेत्यादि । पूर्ववदिति पूर्वसृष्टाविवेत्यर्थः। अप्ययक्रमेणेति पृथ्वी अप्सु लीयत इत्याद्युक्तक्रमेणेत्यर्थः। संघातादिति संघातभावं प्राप्येत्यर्थः। इमा इति अनुप्रवेशकर्मशब्देन स्थूलसूक्ष्मचिदचित्प्रकारब्रह्मेतिशब्देन। शब्दस्येति स्थूलसूक्ष्मचिदचित्प्रकारं ब्रह्मैव कार्यमिति शब्दस्य सामानाधिकरण्यं भिन्नप्रवृत्तिनिमित्तत्वे सत्येकार्थबोधकत्वरूपम्। अयं न ब्रह्माद्वैतवाद इतीमं पक्षं दूषयन्ति तदपीत्यादि। आदिसृष्टीत्यादि हिरण्यगर्भसृष्टेरादिसृष्टिः वक्ष्यमाणा । तैरिति सदिदमग्रेकाद्वितीयपदैरित्यर्थः। तत्र सदिदंपदाभ्यां शरीर्यन्तरं, सद्वेदं चैवासीदित्यर्थात्। मुख्यवाचिनैकपदेन मुख्यान्तरमद्वितीयमित्यनेन द्वितीयं, सव्यापारं वस्तु यत्र नास्तीति मिथदन्तरमिति। नस्विस्यादि इदं जगत् सदात्मनैवासीन्न तु पृथगित्यर्थेन शरीररूपजगद्व्यवच्छेद्यते। एकमेवेत्यनेनामुख्यमद्वितीयमित्यनेन सव्यापारमिति नार्थ इत्यर्थः। आत्मैवेदमित्यादि। अग्रे सृष्टिप्राकाले अनुवीक्ष्य स्वस्मिन् लयात्पश्चादात्मानं वीक्ष्येत्यर्थः। विरोधेत्यादि तमोविशिष्टात्मानुवीक्षणेनान्यसत्त्वेन च विरोधापत्तेरित्यर्थः। शरीर्येवेत्यादि तथाचान्यत् शरीरि चिदचिद्विशिष्टं वा नापश्यदित्यर्थान्न विरोध इत्यर्थः। एवकारेण शरीरं द्वितीयैवकारेण वैशिष्ट्यं चिदचिद्विशिष्टान्तरं वा व्यवच्छिद्यते। यथात्मनः शरीरित्वं चिदचिद्विशिष्टत्वं वा सिद्ध्येयदात्मनोऽन्यच्छरीरि चिदचिद्विशिष्टं वा नापश्यदित्यर्थो भवेत्

भाष्यप्रकाशः।

विशिष्ट एव वा परामृश्यतेऽतो न विरोध इति वाच्यम्। तत्र तादृशपरामर्शस्याशक्यवचनत्वात्। तथाहि—तत्रात्मा किं स्वशरीरं विशेषणत्वेन शरीरत्वेन वा अभिन्नत्वेन वा परामृश्यत्यात्मत्वेन वा। नाद्यः। तस्य पार्थक्ये सत्यात्मानुवीक्षणस्य तदन्यादर्शनस्य च यथायथं भ्रमत्वाज्ञतापादकत्वयोरापत्तेः। तमस एकीभावस्य स्वशरीरतया विनिर्देशानर्हातिसूक्ष्मदशापत्तिरूपताङ्गीकारेण तदानीं पार्थक्यस्य शरीरत्वस्य वानभिमतत्वाच्च। न तुरीयः। आत्मत्वेन परामर्शे तेन प्रमाणज्ञानेनैवाभेदसिद्धौ भेदापादकप्रमाणाभावेन वैशिष्ट्याभावे केवलब्रह्माद्वैतवादस्यैव सिद्धेः। नच सुबालोपनिषद्यन्येषां प्रलयकथनात् तमसस्तदनुक्त्वैकीभावकथनादन्येभ्यः कश्चिद्विशेषो वक्तव्यः। स च स्वरूपातिरोभावपूर्वकाविभागापत्तिरूप एव युक्तः। अन्यथा शब्दान्तरवैयर्थ्यप्रसङ्गात्। सिद्धे चैवं तमःस्वरूपातिरोभावे तदानीं वैशिष्ट्यस्याविलोपादुत्पत्तौ च, 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' इति प्रतिसृष्टिपूर्वतुल्यताश्रावणेन सर्वदा सृष्टिप्रलयक्रमस्यैकरूप्ये सृष्टावपि शरीरित्वेन वैशिष्ट्याद् विशिष्टाद्वैतवादस्यैव सिद्धिर्न केवलब्रह्माद्वैतवादस्येति तदानीं विशिष्टेतरादर्शनमेव तदर्थ इति वाच्यम्। उक्तश्रुत्योरवान्तरयत्किंचित्प्रलयसृष्टिविषयत्वेनाप्युपपत्तौ सर्वदैकरूप्यस्य नियन्तुमशक्यत्वात्। 'यथा सुदीप्तात् पावकाद् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः। तथाऽक्षराद् विविधाः सौम्य भावाः प्रजायन्ते तत्र चैवापियन्ति' इति विस्फुलिङ्गन्यायेन सहोत्पत्तिप्रलयश्रावणात्। सूर्याचन्द्रमसावितिलिङ्गेनास्या अवान्तरविषयत्वावगमात् अनुवीक्षणादिश्रुत्यनुरोधेन सौबालवाक्येऽपि तथात्वस्य वक्तुं युक्तत्वात्।

रश्मिः।

तदेव पुनर्न संभवतीति वक्तुमात्मनः शरीरित्वं विकल्प्य दूषयन्ति तत्रात्मेत्यादि। चिदचिच्छरीरविशिष्ट आत्मेत्यत्र शरीरे विशेषणत्वं शरीरत्वमात्मत्वं व्यापाराहित्यं च सृष्टिप्राक्कालीनत्वादस्ति, आनन्दरूपत्वे त्वात्मत्वम्। अनुवीक्ष्येत्यस्य कर्मत्वेनार्थादात्मैवान्वेतीत्याशयेनाहुः आत्मानुवीक्षणस्येति। भ्रमत्वेत्यादि तमोविशिष्टे आत्मनि द्रष्टव्ये आत्ममात्रदर्शनस्य भ्रमत्वमात्मान्यस्य सत्त्वात्। तददर्शनेऽज्ञतेति बोध्यम्। स्वमते तु शुद्धात्मनो विषयत्वेन ज्ञानस्य विषयताविषयत्वात् तथात्वापत्तेः। तेनेति आत्मत्वप्रकारेणेत्यर्थः। प्रमाणमात्मा 'अत्र प्रमाणं भगवान्' इतिवाक्यात्। तथाच प्रमाणविषयकज्ञानेन प्रमाणेत्यत्र भावे ल्युट् प्रमेत्यर्थः। प्रमात्मकज्ञानेनेत्यर्थः। वैशिष्ट्येत्यादि वैशिष्ट्यस्य भेदनिबन्धनत्वाद्वैशिष्ट्याभाव। इत्यर्थः। तदनुक्त्वेति प्रलयमनुक्त्वेत्यर्थः। अन्येभ्य इति पृथिव्यादिभ्यस्तमसि विशेषः इत्यर्थः। सचेति तमोनिष्ठो विशेष इत्यर्थः। शब्दान्तरेत्यादि लीयत इति शब्दादन्य एकीभवतीति शब्दस्तस्य वैयर्थ्यप्रसङ्गादित्यर्थः। मयूरव्यंसकादेराकृतिगणत्वात्समासः पूर्वपदार्थप्रधानः। तदर्थ इति नान्यदपश्यदित्यस्यार्थ इत्यर्थः। उक्तेत्यादि पृथिव्यप्सु लीयते इत्यादिसूर्याचन्द्रमसावित्यादिश्रुत्योरित्यर्थः। अवान्तरसृष्टिप्रलयविषयत्वे हेतूनाहुः यथेत्यादि। सहेत्यादि तथाचादिसृष्टौ सहोत्पत्तिप्रलयाविति क्रमसृष्टिप्रलयाववान्तरावित्यर्थः। पूर्वाधिकरणान्तिमवर्णके क्रमसृष्टिर्ब्रह्मण उक्तेति कथमेवमित्यरुच्या हेत्वन्तरमाहुः सूर्येत्यादि। लिङ्गेनेति सामर्थ्येन शक्त्यार्थेनेति यावत्। अवान्तरेत्यादि अन्यथा सर्वेषां कर्मत्वमुक्तं स्यादित्यर्थः। अनुवीक्ष्यादि अत्रेदं हृदयम्। इदमात्मैवेत्यत्रैवकारोऽन्ययोगव्यवच्छेदकः विशेष्यसंगतत्वात्। तथाचात्मान्यस्मिन्निदंत्वव्यवच्छेद आत्मनि चेदंत्वं प्रतीयते। एवं चात्मातिरिक्तमिदं जगन्न भवतीति फलति। कथं तर्हि जगदन्तर्गततमःसत्वेति। एवमनुरोधेनेत्यर्थः। सौबालेत्यादि तमः परे देव एकीभव-

भाष्यप्रकाशः ।

त्वाच्च । अस्तु वा सौबालवाक्यस्यादिसृष्टिविषयत्वं, तथापि न तदानीं वैशिष्ट्यसिद्धिः । पृथिव्यादीनां नादेयसामुद्रसलिलैक्यवदविभागापत्तिरूपप्रलयस्य तमसश्च करकाणां जलैक्यवत् पूर्वभावापत्तिरूपस्य ब्रह्मैक्यस्य शक्यवचनत्वात् । आत्मपदस्य केवलात्मवाचित्वेन विशेषणान्तरसंग्रहाक्षमत्वात् । अन्यथा देहविशिष्टात्मप्रत्ययस्यापि प्रामाण्यापत्तेः । नच निर्विशेषत्वापत्तिः । सच्चिदानन्दरूपाकारस्य 'कृत्स्नः प्रज्ञानघनः', 'आनन्दरूपममृतं यद् विभाति' इत्यादिश्रुतिभिस्तत्सिद्धेः । तस्मात्, 'सदेव सोम्य' इत्यत्र सच्छब्देन केवलं ब्रह्मैव परामृश्यत इति मन्तव्यम् । आत्मपदवत् सत्पदस्यापि केवलब्रह्माभिधायित्वात् । 'ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इति गीतावाक्येन तथा निर्णयात् । एवं तैत्तिरीयेऽपि सत्यज्ञानादिलक्षणं ब्रह्म प्रकृत्य तत एव सर्वज्ञादाकाशादिक्रमेण सृष्टिमुक्त्वा, उपादानतां च, 'सोऽकामयत बहु स्यां प्रजायेय' इति स्थिरीकृत्य केवलस्यैवोपादानत्वाय 'तदात्मानं स्वयमकुरुत' इत्यात्मन एव कर्मत्वं कर्तृत्वं च श्राव्यते । 'सत्यं चानृतं च सत्यमभवत्' इति केवलब्रह्मवाचकसत्यपदेन प्रपञ्चस्यापि ब्रह्मता विधीयत इति तत्रापि पूर्वोक्त एवार्थ इति प्रथमसृष्टौ शुद्धं ब्रह्मैवोपादानम् ।

किंच । श्रुतौ हि प्रकारद्वयेन निरूपणम् । आत्मत्वेन ब्रह्मत्वेन च । आत्मैवेदं सर्वं, ब्रह्मैवेदं सर्वमिति । इदं च पदद्वयं व्याप्तिं बृंहणत्वं चापेक्ष्य । यद्यप्युभयोः स्वरूपमानन्दस्तथापि सप्रकार आत्मा, निष्प्रकारं ब्रह्मेति भेदः । तत्रायमात्मा ब्रह्म विज्ञानमय इत्यात्मनोऽपि ब्रह्मत्वविधानाद् व्यासेनापि ब्रह्मजिज्ञासाया एव प्रतिज्ञानाच्च निष्प्रकारमेव मुख्यम् । तस्यैव चाग्रे कारणत्वविचारणमित्यतोऽपि तादृशमेवोपादानम् ।

किंच । अन्तर्यामिब्राह्मणे सुबालोपनिषदि च, 'यं पृथिवी न वेद, यं मृत्युर्न वेद,' इत्येवं सर्वावस्थावस्थितस्याचिद्वस्तुनोऽवेधृत्वं श्रावितम् । तच्च वेदनयोग्यत्व एव घटते, यमात्मा न

रश्मिः ।

तीति वाक्येपि तथात्वस्यावान्तरविषयत्वस्येत्यर्थः । श्रुतित्वाविशेषाद्विपरीतं किं न स्यादित्याशङ्क्याहुः अस्तु वेत्यादि । तदानीमिति प्रलयदशायामित्यर्थः । शब्दान्तरप्रयुक्तितात्पर्यमाहुः पृथिवीत्यादि । अन्यथेति आत्मनो विशिष्टत्व इत्यर्थः । प्रामाण्यापत्तेरित्यस्य प्रमात्वापत्तेरित्यर्थः । तत्सिद्धेरिति प्रसिद्धसिद्धेरित्यर्थः । एतदानन्दमयाधिकरणे स्फुटिष्यति । तस्मादिति सकलश्रुतिसारस्यादित्यर्थः । विधीयत इति न तु सर्वावस्थावस्थितचिदचिद्वस्तुशरीर ईश्वर इति जगतो ब्रह्मत्वप्रवादोऽनया क्रियत इति भावः । पूर्वोक्त इति सदेव सोम्येत्यत्रोक्त इत्यर्थः । निष्प्रकारमिति एतच्चारूपवदेव हीति पञ्चसूत्र्युक्तमेकदेशिमतमप्यङ्गीकुर्वता व्यासेन निर्णीतं पूर्ववद्वेति सूत्रे तदनुसारेण ज्ञेयम् । तदेतत्तृतीयाध्याये स्फुटम् । अथवा भौतिकशरीरराहित्येन केवलानन्दरूपमित्यर्थः । इदं रूपद्वयं प्रयोगे । इन्दं न्यश्च पात्राणि प्रयुनक्तीति गृह्यसूत्रात् । अर्चिपूजने । इन्दं शुक्लशुवारिरूपमेवं ब्रह्मात्मेति इन्दुरम् । स्वरूपलक्षणयुक्तं ब्रह्म समष्टिः । 'सदेव सोम्य' इत्यत्र 'तत्तेज ऐक्षत' 'आनन्दाद्ध्येव खल्विमानि' इत्यादौ व्यष्टिः । व्याहृतिर्ब्रह्म, श्रीभागवतद्वितीयस्कन्धे । अन्नादिपञ्चविरहानुभवार्थमित्यानन्दमयाधिकरणे, वायुः प्रत्यक्षं ब्रह्म । मुख्यनिष्प्रकारकमिति निर्जिता प्रकाराः सत्त्वादयो यस्मात् । द्वितीयस्कन्धनवमाध्याय उपहृत्यमिदं मतमित्येवकारः । अत-

केचिदत्र शास्त्रयोनित्वपूर्वपक्षनिराकरणाय, तत्तु समन्वयादिति योजयन्ति। तत् पूर्वपक्षसिद्धान्तयोर्द्वयोरप्यसंगतत्वादुपेक्ष्यम्।

भाष्यप्रकाशः।

वेदेतिवत् न त्वयोग्यत्वे। घटो न वेदेत्यादिप्रयोगादर्शनात्। अतः सर्वत्र चिदन्वयोऽवश्यमुपेयः। सदन्वयस्तु प्रत्यक्षसिद्ध आनन्दान्वयश्चेत्यतोऽपि ब्रह्मैवोपादानम्। नच मृदब्रवीदित्यादाविवाभिमानिनमादाय तथोक्तिरिति वक्तुं शक्यम्। जीवानुप्रवेशकृततद्वैशिष्ट्यस्य पाश्चात्यत्वेन पूर्वं युष्माभिस्तथा वक्तुमशक्यत्वात्। अनुप्रवेशश्रुतिविरोधेन सर्वदा वैशिष्ट्यस्याशक्यवचनत्वात्। सदैवाविनाभावे चिदचिदविवेकप्रसङ्गात्। आत्मा न वेदेति पृथङ्निर्देशवैयर्थ्यप्रसङ्गाच्च। अत उक्तलिङ्गेनापि ब्रह्मण एव केवलस्य परिणामनिश्चयादुपादानत्वम्। नच स्वभावसांकर्यप्रसङ्गः। प्रजायेयेतीच्छयैवोच्चनीचादिभावसिद्धौ सांकर्याभावात्। सृष्टिप्राक्काले त्वितराभावेनैवाशङ्कानुत्थानात्। अतो विशिष्टाद्वैतवादस्यार्वाचीनत्वात्। सर्ववस्तूनां ब्रह्मपरिणामत्वेन ब्रह्माभिन्नतयैव पदार्थत्वात् सर्वैः शब्दैस्तत्तद्रूपं ब्रह्मैवोच्यत इति कारणावस्थब्रह्मवाचिना शब्देन कार्यवाचिनां शब्दानां सामानाधिकरण्यमुपपादनमन्तरेणापि मुख्यवृत्तमिति राद्धान्तपन्थाः।

प्रकृतमनुसरामः। अस्मिन् सूत्रे रामानुजाचार्यादिमतमुपक्षिपन्ति केचिदित्यादि। ते हि पूर्वपक्षसिद्धान्तावेवमाहुः। तथाहि। यद्यपि शास्त्रयोनित्वसूत्रे ब्रह्मणः शास्त्रमात्रप्रमाणकत्वं साधितं तथापि तन्नोपपद्यते। 'चोदनालक्षणोऽर्थो धर्मः,' 'तस्य ज्ञानमुपदेशः', 'तद्भूतानां क्रियार्थेन समाम्नायः', 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' इति जैमिनिना तत्र तत्र

रश्मिः।

एव मुख्यमिति। अत इति प्रसक्तस्य निषेधायोगादित्यर्थः। आनन्देत्यादि स्त्रीपुत्रादयः प्रिया इति प्रतीतेः प्रत्यक्षसिद्ध इति शेषः। तथोक्तिरिति यं पृथिवी न वेद इत्याद्युक्तिरित्यर्थः। तद्वैशिष्ट्यस्येति अभिमानिवैशिष्ट्यस्येत्यर्थः। पूर्वमिति जीवप्रवेशात्पूर्वमित्यर्थः। ननु सर्वावस्थावस्थितं विशिष्टमिति चेत्तत्राहुः अनुप्रवेशेत्यादि। अनुप्रवेशो हि भूतपूर्वे अचिद्वस्तुनि चितः पश्चात्प्रवेशः स च सर्वदा वैशिष्ट्ये न घटत इत्यर्थः। ननु तिस्रो देवता इत्यनुप्रवेशश्रुतौ श्रावणाद्देवताविशिष्टे एवाचिद्वस्तुनि जीवप्रवेशे नानोरनर्थकत्वात्सर्वदा वैशिष्ट्यं शक्यवचनमिति चेत्तत्राहुः सदैवेत्यादि। ननु पृथिवीशरीरयोरात्मवैशिष्ट्येन मा भूद्विवेकः परं तु शारीरशरीरयोस्तु विवेको भविष्यतीति कथंचिदचिदविवेकप्रसङ्ग इति चेत्तत्राहुः आत्मेत्यादि। पृथगित्यादि अचितः पृथिव्या इत्यर्थः। तथाच पृथिवी न वेदेत्यत्राचित्त्वमेव विवक्षितमिति भावः। उक्तलिङ्गेनेति अचितोऽवेत्तृत्वकथनसामर्थ्येनेत्यर्थः। ब्रह्मण इति सच्चिदानन्दानां कार्ये दर्शनाद्ब्रह्मण एव न त्वात्मन इत्यर्थः। स्वभावेति चित्त्वादिस्वभावेत्यर्थः। सच्चिदानन्देषु क्रमेण नीचोच्चोच्चतरेषु सांकर्यं नीचत्वादिभ्यामुच्चतरसांकर्यं मेलनम्। परस्परात्यन्ताभावसमानाधिकरणयोर्धर्मयोरेकत्र समावेशः संकरोप्ययम्। सांकर्येति दुष्टसांकर्याभावात्। इतरेति अचिदित्यर्थः। अत इति चि(स)दानन्दयोः फलत्वात्। अर्वाचीनेत्यादि अचिदधीनत्वेन सृष्टेः पाश्चात्त्यादित्यर्थः। सर्वैः शब्दैरिति 'ॐमित्येतदक्षरमिद९ सर्वं तस्योपव्याख्यानम्' इति माण्डूक्यश्रुतेः। तत्तद्रूपमिति 'यदेकमव्यक्तमनन्तरूपम्' इति श्रुतेः मुख्यवृत्तमिति आकाशस्तल्लिङ्गाद्यधिकरणेषु स्फुटमेतत्। भाष्ये। शास्त्रेत्यादि शास्त्रयोनित्वे पूर्वपक्षः शास्त्रयोनित्वपूर्वपक्षः पात्रे समितादीनामाकृतिगणत्वात् 'पात्रे समिताद्यश्च' इतिसूत्रेण समासः। सुप् सुपेति वा समासः। प्रकृते। ते हीति रामानुजभास्करशंकरशैवाचार्या इत्यर्थः। तत्र तत्रेत्यादि शुद्धब्रह्मणा प्रमा-

भाष्यप्रकाशः ।

वेदस्य प्रवृत्तिनिवृत्तिजनकक्रियापरताया एवानुक्रान्तत्वाद् ब्रह्मरूपसिद्धार्थपरत्वे प्रयोजनशून्यत्वप्रसङ्गात् । नच प्रत्यक्षादीनां वस्तुयाथात्म्यावबोधपर्यवसानदर्शनाच्छास्त्रेऽपि तथात्वमस्त्विति शङ्क्यम् । लोके वेदे च प्रयोजनरहितवाक्यप्रयोगस्यादर्शनात् । प्रयोजनं च प्रवृत्तिनिवृत्तिसाध्येष्टानिष्टप्राप्तिपरिहारात्मकमेवोपलब्धम् । तदनुद्दिश्य न केनापि किंचिद्वाक्यं प्रयुज्यते श्रूयते वा । अतो वेदेऽपि तथात्वं युक्तम् । नच पुत्रस्ते जातो, नायं सर्पो रज्जुरेषेत्यादिषु लौकिकवाक्येषु हर्षभयनिवृत्त्यादिरूपपुरुषार्थान्वयदर्शनात् सिद्धार्थपराणामपि वाक्यानां प्रयोजनवत्त्वं शङ्कनीयम् । तत्रापि वाक्यार्थज्ञानादेव तत्प्राप्तेर्वाक्यस्य प्रतारणया प्रयोगेऽपि तत्संभवाद् वाक्यस्यार्थपरताया निश्चेतुमशक्यत्वात् । किंच । पचति गच्छतीत्यादिप्रयोगस्य प्रमाणान्तरेणावगमोत्तरमेव दर्शनात् । सिद्धार्थवाक्यानां गृहीतग्राहित्वात् प्रामाण्यमपि न । साध्यार्थपराणां तु गामानयेत्यादीनां प्रयोजनवत्त्वमगृहीतग्राहित्वं चाविवादम् । अतो लोकवद् वेदेऽपि वाक्यानां प्रवृत्तिनिवृत्तिपरत्वेन ज्ञानपरत्वेन वा प्रयोजन एव पर्यवसानमिति परिनिष्पन्ने ब्रह्मणि तात्पर्याभावाच्च वेदान्तानां ब्रह्मणि तात्पर्यमित्येकः पूर्वपक्षः ।

तथाऽन्योऽपि । तथाहि । वेदान्तवाक्यान्यपि कार्यपरतयैव ब्रह्मणि प्रमाणभावमनुभवन्ति । अद्वितीयं ज्ञानैकरसं परिनिष्पन्नमपि ब्रह्म अनाद्यविद्यया सप्रपञ्चतया प्रतीयमानं निष्प्रपञ्चं कुर्यादिति ब्रह्मणः प्रपञ्चविलायनद्वारेण विधिविषयत्वात् । स च विधिः, 'न दृष्टेर्द्रष्टारं पश्येर्न मतेर्मन्तारं मन्वीथा' इत्येवमादिर्बोध्यः । तत्र द्रष्टृदृश्यभेदशून्यं ब्रह्म कुर्या-

रश्मिः ।

ध्याय इत्यर्थः । प्रथमपादे द्वितीयपादे चेति वार्थः । तथात्वमिति सिद्धार्थब्रह्मयाथात्म्यावबोधपर्यवसानं प्रयोजनमस्त्वित्यर्थः । प्रवृत्तीत्यादि प्रवृत्तिनिवृत्तिभ्यां साध्यौ इष्टानिष्टयोः प्राप्तिपरिहारौ यौ तदात्मकमित्यर्थः । अर्थार्थी राजकुलं गच्छेत्, मन्दाग्निर्नाम्बु पिबेत्, स्वर्गकामो यजेत, न कलञ्जं भक्षयेदित्यादिषु द्रष्टव्यम् । तत्प्राप्तेरिति हर्षस्य भयनिवृत्त्यादेश्च प्राप्तेरित्यर्थः । तत्संभवादिति हर्षभयनिवृत्त्यादिसंभवादित्यर्थः । अर्थेत्यादि प्रयोजनपरताया इत्यर्थः । प्रमाणेत्यादि प्रत्यक्षप्रमाणेनेत्यर्थः । अवगमेत्यादि पाककर्तुर्गमनकर्तुश्चेत्यर्थः । गृहीतेत्यादि चक्षुषा गृहीतं यत्पात्ररज्ज्वादि तद्ग्राहित्वादित्यर्थः । नेति अनधिगतार्थगन्तृत्वस्य प्रमाणलक्षणत्वादिति भावः । अगृहीतेत्यादि अगृहीतं साध्यं गवां नयनादि तद्ग्राहित्वम् । वाक्यानामित्यादि सिद्धार्थपराणां साध्यार्थपराणां च । प्रवृत्तीत्यादि व्याख्यातम् । प्रयोजन एवेति ब्रह्मज्ञानमपि फलं साध्यमिति प्रयोजन एव तत्तु सिद्धमित्यर्थः । ब्रह्मणीति सिद्धार्थे । वेदान्तेत्यादि ब्रह्मणीत्यत्र सप्तम्या विषयत्वमर्थः । तथा च ब्रह्मविषयकप्रमाजनकत्वं वेदान्तवाक्यान्यनुभवन्त्याश्रयन्ते धातूनामनेकार्थत्वादित्यर्थः । निष्प्रपञ्चमित्यादि द्रष्टृदृश्यरूपप्रपञ्चविलयद्वारेण ज्ञानैकरसं ब्रह्म कुर्यात् भावयेद् ज्ञानविषयीकुर्यादित्यर्थः । विधीत्यादि सिद्धस्यापि घटस्य निर्जलं (सजलं) घटं कुर्यादिति विधिविषयत्ववत्त्वयेत्यर्थः । द्रष्टृदृश्येत्यादि दृशिमात्रं ब्रह्म कुर्यादित्यर्थः, गुणविधिरयं ब्रह्मणः सिद्धत्वात्, दध्ना जुहोतीतिवत् । तत्र धात्वर्थस्य दृशेः भावनायां कर्मत्वेनान्वयः, न तु करणत्वेन । गुणकामाधिकरणे दध्नेन्द्रियकामस्य जुहुयादित्यत्राश्रयत्वेन

भाष्यप्रकाशः ।

दित्येवमर्थसिद्धेः । अतः स्वनिबन्धनाया उपाधिनिबन्धनायाश्च कर्तव्यतायाः प्रामाण्ये विशेषाभावात् सिद्धस्यापि ब्रह्मणोऽनिष्पन्नतारूपेण साध्यत्वाविरोधात् वेदान्तानां ब्रह्मणि कार्यपरतयैव प्रामाण्यं, न स्वातन्त्र्येणेति द्वितीयः पूर्वपक्षः ।

तथाऽपरोऽपि । यद्यपि वेदान्तवाक्यानां स्वातन्त्र्येण सिद्धरूपब्रह्मस्वरूपपरतया न प्रामाण्यं, तथापि 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः,' 'य आत्माऽपहतपाप्मा सोऽन्वेष्टव्यः स विजिज्ञासितव्यः,' 'आत्मेत्येवोपासीत,' 'आत्मानमेव लोकमुपासीत' इत्यादिध्यानविषयो नियोगः स्वविषयभूतध्यानस्य ध्येयैकनिरूपणीयतया ध्येयमाक्षिपन्, 'सत्यं ज्ञानमनन्तं ब्रह्म,' 'सदेव सौम्येदमग्र आसीत्,' 'इदं सर्वं यदयमात्मा,' 'अयमात्मा ब्रह्म सर्वानुभूः' इत्यादिस्वरूपतद्विशेषपरवाक्यनिर्दिष्टस्वरूपमेवात्मानमाक्षिपतीत्येषां वाक्यानां ध्यानविधिशेषतयैव प्रामाण्यात्, तद्विधिविषयीभूतध्यानशरीरानुप्रविष्टब्रह्मस्वरूपेऽपि तात्पर्याद्, ब्रह्मस्वरूपमपि सिद्ध्यत्येवेति चेन्न । प्रवृत्तिनिवृत्तिप्रयोजनविधुराणां वेदान्तवाक्यानां ध्यानविधिशेषत्वेऽपि ध्येयविशेषस्वरूपसमर्पणमात्रपर्यवसानात् तत्र स्वातन्त्र्येऽपि बालातुराद्युपच्छन्दनवाक्य-

रश्मिः ।

धात्वर्थान्वयस्वीकारेण तस्यानियतत्वात् । यद्यप्यत्र कर्मत्वबोधकद्वितीयाभावस्तथापि भावनायां धात्वर्थ( प्रेक्षण )संबन्धस्य प्रतीतेः स साध्यत्वेन स्वीक्रियत इति कर्मत्वेनान्वयो निराबाधः । द्रष्टारमित्यस्य धात्वर्थेन सहाश्रयतासंसर्गेणान्वयः द्रष्टुः प्रेक्षणाश्रयाभेदात् । दृष्टेरित्यत्र पञ्चम्या भेदोर्थः । नञस्त्वभावरूपोर्थः । दृष्टिपदं स्वविषये स्वाविनाभूते दृश्ये लाक्षणिकं सद् दृश्यमात्रोपलक्षकम् । तद्भेदस्य द्रष्टृदृश्यभेदरूपस्य प्रतियोगितासंबन्धेन नञर्थेऽभावेऽन्वयः । तस्य च स्वीयसंबन्धेन धात्वर्थेऽन्वयः । एवं न मतेर्मन्तारमित्यत्रापि द्रष्टव्यम् । तदाहुः एवमर्थसिद्धेरिति । एवं च दृष्टेर्न इत्यंशस्य द्रष्टृदृश्यभेदशून्यमित्यर्थः । द्रष्टारमित्यस्य ब्रह्मेत्यर्थः । चक्षुराद्यपेक्षया ब्रह्मणो द्रष्टृत्वात् । पश्येत् द्रष्टृदृश्याधारं पश्येत् । द्रष्टृदृश्यभेदरूपाधेयशून्यं कुर्यादित्यर्थः । अतः स्वेत्यादि साध्यस्थले स्वनिबन्धना सिद्धस्थले तूपाधिनिबन्धना निष्प्रपञ्चादिधर्मनिबन्धनेत्यर्थः । अनिष्पन्नेत्यादि उक्तरीतिकज्ञानविषयत्वेन रूपेणेत्यर्थः । पूर्वपक्षायाशङ्कते यद्यपीत्यादि । न प्रामाण्यमिति गृहीतग्राहित्वान्नेत्यर्थः । साध्यस्वरूपपरत्वान्नेति वा । ध्यानेति निदिध्यासनं तन्मते ध्यानं तदेकवाक्यतया विजिज्ञासादीनां ध्यानत्वमतो ध्यानविषय इत्यर्थः । नियोग इति विधिरित्यर्थः । ध्येयैकेति ध्येय आत्मैव एको मुख्यस्तेन निरूपणीयतया, ज्ञानविशेषत्वेन घटादिज्ञानवत् । श्रुतावयमात्मा जीवात्मा । तद्विशेषेति जीव इत्यर्थः । ध्यानविधीति पारार्थ्यं शेषलक्षणम् । विध्यर्थतव्यलिङादीनां प्रामाण्यं तव्यादिविशिष्टवाक्यानां तु विधिशेषतयैव प्रामाण्यमिति प्रामाण्यपदमुक्तमन्वयपदं विहाय । तद्विधीति आत्मविषयकं निदिध्यासनमित्यादिरूपे ध्यानशरीरे अपिशब्दौ विधिशेषेण साकं ब्रह्मस्वरूपसमुच्चायकौ । ध्यानमनु पश्चान्निरूपकतयानुप्रविष्टेत्यर्थः । प्रवृत्तीत्यादि द्विपदद्वन्द्वं कृत्वा प्रयोजनशब्देन कर्मधारयस्ततस्ताभ्यां विधुराणामिति तत्पुरुषः । ध्येयविशेषेति मात्रशब्देन ध्यानव्यवच्छेदः । बालेत्यादि यथौषधकटुतायामपि

भाष्यप्रकाशः ।

यज्ज्ञानमात्रेणैव पुरुषार्थतासिद्धेः परिनिष्पन्नवस्तुसत्यतागोचरत्वाभावाद् ब्रह्मणः शास्त्रप्रमाणकत्वं न संभवतीति तृतीयः पूर्वपक्षः ।

सिद्धान्तस्तु, समन्वयः सम्यगन्वयः पुरुषार्थतयाऽन्वयः । तथाच, 'यतो वा इमानि भूतानि जायन्ते,' 'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्,' 'तदैक्षत बहु स्यां प्रजायेय' इति,' 'तत्तेजोऽसृजत्,' 'ब्रह्म वा इदमेकमेवाग्र आसीत्,' 'आत्मा वा इदमेकमेवाग्र आसीत्,' 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः,' 'एको ह वै नारायण आसीत्' 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिषु परमपुरुषार्थभूतस्यानवधिकातिशयानन्दस्वरूपस्य ब्रह्मणोऽभिधेयतयाऽन्वयाच्छास्त्रप्रमाणकत्वं ब्रह्मणः सिद्ध्यत्येवेत्यर्थः । अन्यथा सर्वप्रमाणानां यत् स्वविषयावबोधपर्यवसायित्वं, तच्छास्त्रानिवर्तमानं शास्त्रस्याबोधकत्वरूपमप्रामाण्यमादध्यात् । नच प्रवृत्तिनिवृत्त्यन्वयविरहिणः प्रयोजनशून्यत्वं, पुरुषार्थान्वयप्रतीतेः । स्वरूपपरस्यापि पुत्रस्ते जातः, नायं सर्पो रज्जुरेषेत्यादेर्वाक्यस्य हर्षभयनिवृत्त्यादिरूपप्रयोजनदर्शनाच्च । अयमर्थः । अनादिकर्मरूपाविद्यावृतपरावरतत्त्वयाथात्म्यस्वस्वरूपज्ञानानां देवादिदूर्वान्तानां क्षेत्रज्ञानां व्यवस्थितधारकपोषकभोग्यविशेषाणां मुक्तानां स्वस्य चाविशेषेणानुभवसंभवे स्वरूपगुणविभावचेष्टितैर्निरवध्यानन्दजननं ब्रह्मास्तीति बोधयदेव वाक्यंप्रयोजनपर्यवसायि । प्रवृत्त्यादिनिष्ठं तु यावत्पुरुषार्थान्वयबोधं न प्रयोजनपर्यवसायि । एवंभूतं कथं लभ्यत इत्यपेक्षायां तत्प्राप्त्युपायतया, 'ब्रह्मविदाप्नोति परम्', 'आत्मानमेव

रश्मिः ।

बालादियथार्थाशनाय नेदं कटुरिति वाक्यवदित्यर्थः । पुरुषार्थेत्यादि पुरुषेणार्थ्यते प्रार्थ्यते इति पुरुषार्थ आनन्दः साध्यत्वं वा तस्यान्वयप्रतीतिसिद्धेरित्यर्थः । परिनिष्पन्नेत्यादि विधिविषयभूतध्यानशरीरानुप्रविष्टब्रह्मस्वरूपं परिनिष्पन्नवस्तु । सिद्ध्यत्येवेति अत्यन्तायोगव्यवच्छेदैवकारप्रयोगः कृतः । अन्यथेति पूर्वपक्षरीतिकशास्त्रार्थत्वे । अबोधकत्वेति योग्यताविरहप्रयुक्तमबोधकत्वरूपं वह्निना सिञ्चतीतिवाक्याप्रामाण्यवदप्रामाण्यमादध्यादित्यर्थः । न च प्रवृत्तीति प्रवृत्तिश्च निवृत्तिश्च स्वर्गान्वयश्च तेषामभाववतो वेदान्तस्य । पुरुषार्थेति निरवध्यानन्दान्वयस्य प्रतीतेः । स्वरूपपरस्येति सिद्धस्वरूपपरस्य । वेदशास्त्राच्छास्त्रान्तरवेदान्ते प्रवृत्तिनिवृत्त्योः स्वर्गान्वयात्प्रसिद्धाद्विवस्य प्रयोजनीभूतानन्दान्वयस्य दुरुपपादत्वादाहुः अयमर्थ इति । अनादीत्यादि अनादिकर्मरूपयाऽविद्यया आवृतपरावरतत्त्वयाथात्म्यरूपस्य स्वस्वरूपस्य ज्ञानं येषां तेषामित्यर्थः । व्यवस्थितेत्यादि इदं क्षेत्रज्ञानामेव विशेषणं न मुक्तानामसंभवात् । अत्र धारको ब्रह्मा ब्रह्मन् पुंसि चेति सूत्रात् । पोषको विष्णुः । शिवो नोक्तः । अनुभवसंभव इत्यस्य कर्तरि षष्ठ्या । तमसोनुभवावकरत्वात् शिवस्य तामसत्वात् । भोग्यविशेषा दूर्वास्तेषाम् । स्वस्येत्यादि मुक्तानां वा स्वस्य विशेषेणानुभवसंभव इति योजना । कर्मणि षष्ठी अनुभवसंभव इत्यस्य स्वस्येत्यत्रानुभवविषयमाहुः स्वरूपेति । स्वरूपमालम्बनविभावः, गुणाः अनुभावा, विभावाः संचारिणो वैराग्यादयः, चेष्टितमुद्दीपनविभावस्तैः निरवध्यानन्दो रसात्मकः तस्य जननं यस्मात् ब्रह्मण इति बहुव्रीहिः । वाक्यमिति पुत्रस्ते जातः नायं सर्पो रज्जुरेषेत्यादिरूपस्य । यावदित्यादि स्वर्गादिरूपपुरुषार्थान्वयबोधमनतिक्रम्येत्यव्ययीभावः । वर्तत इति शेषः । नेत्यादि न निरवध्यानन्दपर्यवसायीत्यर्थः । आनन्द-

भाष्यप्रकाशः ।

लोकमुपासीत' इति वेदनादिशब्दैरुपासनं विधीयते । यथा वेश्मनि निधिरस्तीति वाक्येन निधिसद्भावं ज्ञात्वा पश्चात् तदुपादाने प्रयतते । यथाच कश्चिद् राजकुमारो बालक्रीडासक्तो नरेन्द्रभवनान्निष्क्रान्तो मार्गभ्रष्टो नष्ट इति राज्ञा विज्ञातः स्वयं चाज्ञातपितृकः केनचिद्विवर्धितोऽधिगतवेदशास्त्रः षोडशवर्षो गुणसंपन्नस्तिष्ठन् केनचिदभियुक्तेन प्रयुक्तं 'पिता ते सर्वलोकाधिपतिः प्रशस्तगुणः पुरवरे त्वामेव नष्टं पुत्रं दिदृक्षुस्तिष्ठति' इति वाक्यं शृणोति चेत्तदानीमेवाहं तावज्जीवतः पुत्रोऽस्मत्पिता च सर्वसंपत्समृद्ध इति महाहर्षान्वितो भवति । राजा च स्वपुत्रं जीवन्तं सकलगुणसंपन्नं श्रुत्वाऽवाप्तसर्वार्थो भवति पश्चात्तावुभौ संगच्छेते च । यत्तु परिनिष्पन्नवस्तुगोचरवाक्यार्थज्ञानमात्रेणापि पुरुषार्थपर्यवसानाद् बालातुराद्युपच्छन्दनवाक्यवन्नार्थसद्भावे प्रामाण्यमित्युक्तम् । तदसत् । निश्चितेऽर्थाभावे पूर्वं ज्ञातस्याप्यर्थस्य पुरुषार्थानुपयोगात् । बालातुरादीनामप्यर्थसद्भावभ्रान्त्या पूर्वं हर्षाद्युत्पत्तावपि पश्चात् तदभावनिश्चये हर्षादिनिवृत्तिदर्शनात् । एवमौपनिषदेष्वपि वाक्येषु ब्रह्मसत्तायां तात्पर्याभावे निश्चिते पूर्वमुत्पन्नमपि ब्रह्मज्ञानं न पुरुषार्थपर्यवसायि स्यात् । तस्माद्, 'यतो वा इमानि' इत्यादिवाक्यं स्वोक्तप्रकारकब्रह्मास्तित्वं बोधयदेव प्रमाणं भवतीति सिद्धमिति रामानुजाचार्याः ।

भास्कराचार्यास्तु प्रपञ्चप्रविलायनद्वारेण ब्रह्मणः शास्त्रप्रमाणकत्वं न स्वत इति पूर्वपक्षे एवं प्रत्युत्तरमाहुः । तथाहि । ब्रह्मण आत्मत्वेन नित्यत्वेन चाभ्युपगतस्य कथं कार्यत्वम् । नित्यत्वकार्यत्वयोर्विरोधात् । नचोपाधेर्विद्यमानत्वात् तद्विलायनेनोपधाननिवृत्तेस्तद्द्वारा कार्यत्वमिति वाच्यम् । तथा सति घटे कृते नभसोऽपि कार्यत्वापत्तेः । नचोक्तदूषणभयात् प्रपञ्चप्रविलायनं कुर्यादिति वाक्यं कल्पनीयमिति वाच्यम् । पुरुषमात्रेण महदादीनां महाभूतानां विलायनस्य कर्तुमशक्यत्वेन विधेर्वैयर्थ्यात् । समाधौ सुषुप्तौ च सर्वतिरोधानेऽपि व्युत्थानदशायां सर्वस्य पुरो-

रश्मिः ।

मीमांसायां तैत्तिरीये स्पष्टम् । एवंभूत इत्याद्युक्तदृष्टान्तमाहुः यथेत्यादि । ब्रह्मविदाप्नोति परमित्याद्यभियुक्तप्रयुक्तवाक्यस्थानीयम् । तृतीयपूर्वपक्षं दूषयितुमनुवदन्ति स्म यत्तु इत्यादिना । बोधयदिति । वाक्ये शक्तेरिति भावः । रामानुजेति । अत्रैव पूर्वपक्षभर इति प्रथमद्वितीयौ पक्षौ नानूदितौ रामानुजाचार्यमते । पूर्वोक्तेषु द्वितीयं पूर्वपक्षमाहुः प्रपञ्चेत्यादि । तद्द्वारेति उपधानकार्यत्वनिवृत्तिद्वारा यद्वा उपाधिद्वारेत्यर्थः । उपाधिरुपधेय उपधानं च । उपधीयतेऽनेन व्यापारेणेत्युपधानम्, करणे ल्युट्, तादृशोपधाननिवृत्तेः कार्यत्वात्तदाश्रयब्रह्मणोपि कार्यत्वमित्यर्थः । एवं युक्त्या प्रत्युत्तरमनूद्य नियोगविचारेण प्रत्युत्तरमनूदितुमाहुः शङ्कां मीमांसकस्य । न चोक्तदूषणेत्यादि इमानि दूषणानि प्रथमपूर्वपक्ष उक्तानि द्वितीये पक्षे वा । प्रपञ्चेति वाक्यकल्पने विधिस्तु पूर्वोक्तो न द्रष्टव्यद्वारं पश्येदित्यादिः । अत्र द्रष्टृदृश्यभेदशून्यब्रह्मप्रकरणे नञादीनां सामर्थ्यमालोच्य प्रपञ्चप्रविलयनं कुर्यादित्यभिधात्री श्रुतिः कल्प्यते सा वाक्यशब्देनोच्यते । अत्र तथा नञर्थस्य भेदेनान्वयात्तद्ब्रह्मत्वं बोध्यते । दृष्टिपदस्य लक्षणाब्रह्मत्वं बोध्यत इत्यर्थगतसामर्थ्यम् । शब्दगतसामर्थ्यं तु पश्येदितिशब्दात् द्रष्टृदृश्यभेदशून्यब्रह्मप्रकरणे सामर्थ्यमालोच्यानेन प्रपञ्चप्रविलायनं कुर्यादिति श्रुतिं कल्पयति । ततश्च दर्शनाब्रह्म बोधनमिति । नियोज्यासंभवाद्विधिवैयर्थ्यं भवेदित्याहुः पुरुषेत्यादि । ननु दृष्टं प्रविलायनकर्तृत्वमिति चेदित्याहुः समाधावित्यादि । तथा च एतादृशं प्रविलायनकर्तृत्वम-

भाष्यप्रकाशः ।

ऽनवस्थानात् । प्रपञ्चप्रविलायने उपायाभावाच । प्रपञ्चेनैव प्रपञ्चप्रविलायनेऽनवस्थाप्रसङ्गाच । प्रपञ्चस्य साधारणत्वेन तत्प्रविलायने सर्वमुक्तिप्रसङ्गादिदानीं जगदप्रतीतिप्रसङ्गाच । अथात्मीयबन्धकारणस्याविद्याकामकर्मलक्षणस्य नाशनमेव प्रपञ्चप्रविलायनमिति मन्यसे तत्र न विसंवादः । किंच । नियोगस्य नियोज्यसापेक्षत्वेन तदाकाङ्क्षायां यदि तादृशप्रपञ्चकर्ता नियोगकर्ता वा नियोज्यः स्यात् तर्हीदानीं नियोज्याभावान्नियोगो न क्रियेत । किंचात्र प्रतीतिवेलायां प्रपञ्चविलयोऽभ्युपगम्यते । अग्निहोत्रादौ तु प्रतीतिकालोऽनुष्ठानकालश्च भिन्नस्तदप्यसंगतम् । अत्रैव तत्रापि प्रतीतिमात्रेणैव नियोगसिद्धावनुष्ठानलोपप्रसङ्गात् । किंच प्रविलायनं व्यापारो वा अभावो वा । नाद्यः । तस्य सत्त्वेन प्रपञ्चतादवस्थ्यात् । न द्वितीयः । तस्यावस्तुत्वेन प्रतिज्ञानाच्छशविषाणतुल्यत्वेन तद्विषयकनियोगानुपपत्तेः । अथात्मज्ञानविषयो नियोगः परिकल्प्यते, आत्मज्ञानं कुर्यादिति । तदप्यसंगतम् । ज्ञानस्य प्रमाणप्रमेयाधीनत्वेन क्रियावत् पुरुषेच्छानधीनतया नियोगविषयत्वस्य तत्राशक्यवचनत्वात् । नच द्रष्टव्यादिविधिविरोधः । तस्योपायपरत्वात् । श्रोतव्यादिपदैस्तस्यैव विवरणात् । नचाध्ययनविधिनाऽर्थज्ञानं विधीयत इति

रश्मिः ।

प्रविलायनकर्तृत्वमित्यर्थः । ननु दण्डादिप्रपञ्चेन घटादिप्रपञ्चः प्रविलीयतामिति चेन्नेत्याहुः प्रपञ्चेनेत्यादि । अनवस्थेति बहुभिरपि कर्तुमशक्यत्वादनवस्थेत्यर्थः । यद्वाऽविलायकप्रपञ्चविलायकप्रपञ्चकल्पनेन व्यवस्था योगसंपन्नतनुयोगेन करिष्यतीति चेन्नेत्याहुः प्रपञ्चस्येत्यादि । साधारणत्वेनेति प्रविलायकाप्रविलायकसाधारणत्वेनेत्यर्थः । न विसंवाद इति । स्यादिति शेषः । नियोज्यविचारेण दूषयन्ति किंचेति । न क्रियेतेति नियोज्यस्यैव विलायनत्ववाक्यकल्पकत्वस्यापि संभावयितुं शक्यत्वान्नियोज्येनैव विलयसिद्धौ विधेर्निरर्थकत्वमियेदानीं न क्रियेतेत्यर्थः । इदानींतनो नियोज्योऽस्त्वित्याकाङ्क्षायां दूषणान्तरमाहुः किंचात्रेत्यादि । प्रतीतीत्यादि समष्ट्या व्यष्ट्याश्च प्रतीतेः काल इत्यर्थः । भिन्न इति उदिते जुहोत्यनुदिते जुहोतीत्याद्युक्तः । न हि प्रतीतिमात्रेण नियोगसिद्धिरिष्यते किंतु तत्तत्तिथिवारनक्षत्रादिका स इति भिन्नः । इत्थं चेदानींतननियोज्यं प्रत्यपि नियोगो न क्रियेत प्रतीतिमात्रसिद्ध्या नियोगसिद्धेरभावादिति भावः । तदपीत्यादि अथात्मीयेत्यादिनोक्तम् । अत्रैव तत्रापीति प्रतीतिकाल इवानुष्ठानकाले । प्रतीतीति ज्ञानकाण्डत्वादिति भावः । गीतायां ज्ञानयज्ञादिस्मृतेरित्येवकारः । तथा च स्वसंबन्धनाशनस्य प्रपञ्चप्रविलायनत्वाङ्गीकारे ब्रह्मणो निष्प्रपञ्चतायाः सिद्धिः । तथाच वेदान्तवाक्यानां कार्यपरतया ब्रह्मणि प्रमाणत्वमिति यत् प्रतिज्ञातं तदसंगतं भवेदिति निग्रहस्थानप्राप्त्यासंगतमित्यर्थः । नियोगसिद्धाविति नियोगोऽत्र विधिस्तस्य सिद्धावित्यर्थः । अयं प्रलाप इदानींतनब्रह्मविन्नियोज्यमनतिक्रम्य ज्ञेयः । सत्त्वेनेति तादृशनाशानुकूलव्यापारस्य मुक्तात्मन्यनङ्गीकारे प्रविलायनाभावापत्त्या सत्त्वमवश्यं वाच्यं, व्यापारश्च प्रपञ्चांश इति प्रपञ्चतादवस्थ्याप्रविलयविरुद्धसत्त्वावस्थत्वादित्यर्थः । प्रलयविषयनियोगविचारस्य वृत्तत्वात् भिन्नप्रक्रमेणाहुः अथात्मेति । आत्मज्ञानमिति दृश्यभिन्नद्रष्टृविषयकज्ञानं कुर्यात्, स्वं सर्वस्यात्मविषयकं ज्ञानं कुर्यादित्यर्थः । क्रियावदित्यादि क्रियाया इव क्रियावदत्र जानातीच्छति यतते इति परंपरा बोध्या । तत्रेति ज्ञान इत्यर्थः । न चेत्यादि । तस्य ज्ञानस्य पुरुषेच्छाधीनत्वादिति भावः । श्रोतव्यादीत्यादि तथाच द्रष्टव्य इत्यस्यैवार्थः श्रोतव्यो

भाष्यप्रकाशः ।

शङ्क्यम् । तत्रार्थज्ञानरूपफलायाक्षरग्रहणरूपाध्ययनस्य विधानात् फलस्याविधेयत्वात् । किंच । नियोगविषयभूतमात्मज्ञानं यद्यनुत्पन्नं तदा यागवत् साध्यत्वाभावाद् विषयत्वासिद्ध्या तद्विषयक-नियोगस्यासिद्धिः । यदि च श्रवणाद्युत्पन्नं तदा श्रवणादिनैवात्मज्ञानसिद्धेः किमन्तर्गडुना नियोगेन । नच फलार्थं तदपेक्षा । 'तमेव विदित्वा' इति श्रुतौ नियोगनिरपेक्षाज्ज्ञानादेव मुक्तेरुक्त-त्वात् । किंच । ज्ञाननियोगयोः परस्परमसंबन्धे वाक्यानर्थक्यात् संबन्धोऽवश्यं वक्तव्यः । स च गुणप्रधानभावेनैव दृष्ट इत्येकस्यावश्यं प्राधान्यं वक्तव्यम् । तद्यदि ज्ञानस्येत्युच्यते तदा नियोगस्य वाक्यार्थतया प्राधान्यं सर्वत्र यत्प्रतिज्ञातं तद्धीयेत । यदि नियोगस्यैव तदुच्यते तदा ज्ञानस्य नियोगार्थत्वान्मुक्त्यर्थत्वं न स्यात् । तस्योभयार्थत्वे प्रमाणाभावात् । नच नियोगो मुक्त्यर्थः । अश्रुतत्वात् । तमेव विदित्वेति ज्ञानस्यैव साक्षात्तदुद्देशेन श्रुतत्वादिति । एतदग्रे च, यो रामा-नुजमतोपन्यासेऽस्माभिः प्रथीयःपूर्वपक्ष उक्तो, यद्यपि 'शास्त्रयोनित्वात्' इत्यादिना, यश्च तृतीय उक्तो यद्यपि वेदान्तवाक्यानामित्यादिना, तदुभयमुपन्यस्य ततः पूर्ववदेव सृष्टिवाक्यप्रभृतीनां सम्य-गन्वयः समन्वय इति समन्वयपदार्थमुक्त्वा युक्तीरेवमाहुः । नच तेषां ब्रह्मपराणामर्थान्तरकल्पना युक्ता । श्रुतहान्यश्रुतकल्पनाप्रसङ्गात् । नच कार्य एव प्रामाण्यं प्रतिपत्तुं युक्तम् । स्वरूपाव-बोधेऽपि प्रामाण्यस्याविशिष्टत्वात् । अपौरुषेयत्वस्यैव प्रामाण्ये तन्त्रत्वात् । नचाग्निहोत्रादिवाक्येषु कार्यावगतिः प्रामाण्ये तन्त्रमिति शङ्क्यम् । तस्य चैत्यवन्दनादिवाक्येऽपि तुल्यत्वात् । अथापौ-रुषेयत्वे सत्यनपेक्षत्वं तन्त्रमिति विभाव्यते । तदा तु वेदान्तेऽपि तस्य तुल्यत्वात् स्वरूपपर-त्वेऽपि प्रामाण्यमक्षुण्णमेव । किंच । पदानां स्वार्थप्रत्यायनेऽनपेक्षत्वं लोकवेदसाधारणम् । वाक्यानां तु लोके परापेक्षमेव प्रामाण्यम् । अन्यथा खपुष्पं तिष्ठति पश्येत्यादीनामपि तत् स्यात् ।

रश्मिः ।

मन्तव्य इत्यादिः । दर्शनस्य प्रत्यक्षेतरत्वादिति भावः । विधानादिति न तु ज्ञानस्य विधा-नात् । फलस्य ज्ञानस्य । अनुत्पन्नमिति श्रवणादिभिस्तथेत्यर्थः । किंतु सिद्धमिति भावः । श्रवणादिनेति विधिविषयेण । आत्मज्ञानसिद्धिरौषधफलवत् । अन्तरिति व्यर्थं न द्रष्टव्य इति । नियोगेन विधिना । तदपेक्षेति नियोगापेक्षेत्यर्थः । नियोगेत्यादि विदित्वेत्यत्र लिङ्-लोट्तव्यादीनां विरहेण तथेत्यर्थः । असंबन्ध इति संबन्धः सहोच्चारणं असंबन्धोऽसहोच्चारि-तत्वं तस्मिन् सति । आनर्थक्यमप्रामाण्यं तस्मात् । दृष्ट इति धवखदिरौ छिन्धीत्यत्र धवखदिरादिव्यतिरिक्तस्थले दृष्ट इत्यर्थः । धवखदिरयोर्गुणप्रधानभावाभावात् । मामून्मुक्त्य-र्थत्वं ज्ञानस्य नियोगस्य तद्भविष्यतीत्याशङ्क्य निषेधन्ति न च नीत्यादि । निषेधे हेतुमाहुः अश्रुतेत्यादि । तदुद्देशेनेति मुक्त्युद्देशेनेत्यर्थः । पूर्ववदिति रामानुजसिद्धान्तवदित्यर्थः । युक्तीरिति धर्मं (ब्रह्मणि) एव समन्वये युक्तीरित्यर्थः । अपौरुषेयत्वस्यैवेति एवकारेण कार्यावगतिव्यवच्छेदः । तन्त्रत्वं प्रयोजकत्वं तस्मात् । कार्यावगतिरिति जुहुयादिति होमे कृतिसाध्यत्वावगतिः । तस्येति कार्यावगतिरूपतन्त्रस्य चैत्यवन्दनं कुर्यादिति वाक्येपीत्यर्थः । स्वरूपेति स्वरूपावबोधकत्वेपीत्यर्थः । परापेक्षमिति आकाङ्क्षायोग्यतासंनिध्यपेक्षमित्यर्थः । सघटकपदार्थसत्त्वापेक्षं वा । खपुष्पमिति पश्य शशो धावतीतिवदन्वयः । तत्स्यादिति प्रामाण्यं

भाष्यप्रकाशः ।

वेदे तु तेषामप्यपौरुषेयत्वात् प्रमाणान्तरानधिगतमूलकारणगमकत्वे तदनपेक्षमेव । मीमांसकमते प्रमाणान्तरानधिगतार्थगन्तृत्वस्यैव प्रामाण्ये तन्त्रत्वाङ्गीकारात् । श्रौतानां तथैवेष्टत्वाच्च । अतः प्रत्यक्षवत् सृष्टिवाक्यस्यापि प्रामाण्यं तुल्यमेवेत्यादिभिर्बहुधा नियोगपरत्वं वाक्यानां दूषयित्वा शरीरेन्द्रियमनसामात्माधिष्ठितानां चेष्टाविशेषः प्रयत्नः सर्वधात्वर्थसाधारणः । स एव च साध्यत्वाद् वाक्यार्थो लोकवेदयोः । नियोगस्तु न वाक्यार्थः । पूर्वमीमांसाभाष्ये पूर्वोत्तरतन्त्रसूत्रयोश्च तत्सूचकाक्षराभावात् । किंतु प्रवृत्तौ निमित्तमात्रं सः । रागादिवत् । भावना तु भवति वाक्यार्थः । ये प्राहुः किमपि भावयेदिति ते स्वर्गकामपदसंबन्धात् स्वर्गं भावयेदिति ब्रूयुरिति भावार्थाधिकरणभाष्ये स्पष्टत्वात् । कृतप्रयत्नापेक्षस्त्विति व्याससूत्रेऽपि स्पष्टत्वाच्चेति वाक्यार्थविषये भावनामाहृतवन्तः । यत् पुनर्वेदान्तानां कर्तृप्रतिपादनपरत्वं वा जपार्थत्वं वेति नियोगवादिभिरुक्तं, तत्तु सर्वजगत्कारणस्य ब्रह्मणो नियोज्यत्वाभावान्नियोज्यस्य जीवस्य सत्ताया अहमिति प्रत्यक्षेणैव सिद्धेरात्मवादे साधितत्वाच्च न वेदान्तस्य तत्परत्वं, प्रकरणाद्यभावाच्च न कर्मशेषजपार्थत्वमित्येवं नियोगवादिनं दूषयित्वा ततो भेदाभेदवादं स्थापयित्वा ततो मायावादिमतं दूषयित्वा ज्ञानकर्मसमुच्चयं स्थापितवन्तः । एवमुक्ते मतद्वये त्रिसूत्र्या जन्माद्यधिकरणसमाप्तिः ।

शंकराचार्यमतेऽप्येत एव पूर्वपक्षाः । सिद्धान्तस्तु मायावादेन निर्विशेषब्रह्मजीवैक्यप्रतिपादनपरः । अधिकरणसमाप्तिस्तु श्रुतत्वाच्चेति दशमे सूत्रे ।

शैवमतेऽप्येत एव पूर्वपक्षाः । सिद्धान्ते तु समन्वयो नामोपक्रमादिभिर्लिङ्गैस्तात्पर्यनिर्णय इत्युक्त्वा तैः शिवपरत्वं वेदान्तवाक्यानामित्युक्तम् ।

रश्मिः ।

स्यादित्यर्थः । तेषामिति वाक्यानामित्यर्थः । मूलकारणेति एकप्राणरूपमूलकारणवद् ब्रह्मरूपमूलकारणगमकत्वे । तदित्यादि आकाङ्क्षाद्यनपेक्षमित्यर्थः । स एवेत्यादि आर्थीभावनारूपः प्रयत्न एव शाब्दीभावनासाध्यत्वादित्यर्थः । पूर्वतन्त्रे द्वितीयेऽध्याये यजेतेत्याख्यातान्तेनापूर्वं प्रतिपाद्यते पदान्तरं तु तच्छेषतां भजत इति । अपूर्वं वा अर्थं इति स्थितं तद्दूषयन्ति नियोग इति अपूर्वमित्यर्थः । विधिर्वा । पूर्वोत्तरेत्यादि व्यासजैमिनिसूत्रयोरित्यर्थः । नियोगेति सर्वैः पूर्वमीमांसकैः नियोगरूपभावनायास्त्रिक्षणावस्थायित्वेन नियोगो न विधिविषयः किंत्वपूर्वमिति नियोगवादिनः । तत्परत्वमिति नियोज्यपरत्वमित्यर्थः । तत्परत्वे चाप्रामाण्यापत्तिरिति भावः । 'जन्माद्यस्य यतः' इत्यारभ्य श्रुतत्वाच्चेत्येवमन्तैः सूत्रैः यान्युदाहृतानि वेदान्तवाक्यानि तेषां सर्वज्ञः सर्वशक्तिरीश्वरो जगतो जन्मस्थितिलयकारणमित्येतस्यार्थस्य प्रतिपादकत्वमिति भाष्यस्यारम्भस्योक्तत्वाच्च दशसूत्रमधिकरणमिदम् । तदीयाधिकरणमालायां या ईक्षत्यधिकरणसमाप्तिरस्मिन् सूत्र उक्ता सा सत्प्रज्ञाविलास इत्याशयेनाहुः अधीत्यादि । यद्वा ईक्षत्यधिकरणसमाप्त्या सप्तसूत्रमेवाधिकरणम् । भास्कराचार्यमते चीलादिः तथाच भास्करभाष्यम् । सांख्यास्तु त्रिगुणमचेतनं प्रधानं जगत्कारणमनुमीय तत्रैव वेदान्तवाक्यानि योजयन्तः प्रत्यवतिष्ठन्ते । चेतनस्य ब्रह्मणो जगत्कारणत्वे यत्प्रतिज्ञातं शास्त्रयोनित्वं 'सदेव सोम्येदमग्र आसीत्' इत्यादिवाक्यसमन्वयासदसिद्धं, सच्छब्दो वस्तुमात्रवाची प्रधानेऽप्यवकल्पतेऽतो न चेतनं जगत्कारणमिति प्राप्ते ब्रवीति 'ईक्षतेर्नाशब्दम्' इति । सूत्रस्य दशमत्वं तु 'जन्माद्यस्य यतः शास्त्रयोनित्वात्' इत्यनेकसूत्रमितिपक्षे । तैरिति उपक्-

तथाहि। जैमिनिर्धर्मजिज्ञासामेव प्रतिज्ञाय तत्प्रतिपादकस्य पूर्वकाण्डस्य समन्वयमाह।

अवान्तरवाक्यानां प्रकारशेषत्वात्। न च सर्वस्मिन् वेदे धर्म एव जिज्ञास्यः। तद्गुरुणैव व्यासेन ब्रह्मजिज्ञासायाः प्रतिज्ञातत्वात्।

---

भाष्यप्रकाशः।

तत्र सिद्धान्तानामसंगतिः पश्चात् व्युत्पाद्या। पूर्वं तु सर्वो वेदः क्रियापर इति पूर्वपक्षस्यासंगतिं व्युत्पादयन्ति तथाहीत्यादिना। समन्वयमिति धर्मे सर्ववाक्यानां तात्पर्यलिङ्गैः संदेहनिरसनपूर्वकं संबन्धम्। अवान्तरवाक्यानामिति अर्थवादमन्त्रादिरूपाणाम्। साधकत्वमिति प्रमितिजनकत्वम्। अयमर्थः। पूर्वकाण्डे ह्यग्निहोत्रादीनि कर्माणि प्रतिपाद्यन्ते। तेषां च न तेन रूपेण तदभिधेयत्वम्। शास्त्रभेदप्रसङ्गात्। किं तु धर्मत्वेनेत्येतद् बोधनाय जैमिनिर्धर्मजिज्ञासामेव प्रतिज्ञाय धर्मप्रतिपादकस्य पूर्वकाण्डस्य धर्मे समन्वयम्, आम्नायस्य क्रियार्थत्वादित्यादिभिः सूत्रैराह। तत्र मन्त्रार्थवादादीनां कथं क्रियार्थत्वमित्याकाङ्क्षायां तेषामवान्तरवाक्यानां धर्मप्रकारभूतद्रव्यदेवताकर्मस्तुत्यादिप्रकाशकत्वेन धर्मशेषत्वात् सर्वस्य पूर्वकाण्डस्य तत्रैव समन्वयः। न च तेष्वाम्नायादिपदात् सर्वस्मिन् वेदे धर्म एव जिज्ञास्य इति शङ्क्यम्। तद्गुरुणैव व्यासेन ब्रह्मजिज्ञासायाः प्रतिज्ञातत्वात्। न च व्यासस्य तद्गुरुत्वे संदेहः। मार्कण्डेयपुराणारम्भ एव।

'व्यासशिष्यो महातेजा जैमिनिः पर्यपृच्छत।
यस्माग्रे भारताख्यानं व्यासेनोक्तं महात्मना'। इति॥

श्रीभागवतेऽपि द्वादशस्कन्धे व्यासशिष्यान् प्रस्तुत्य, 'साम्नां जैमिनये प्राह तथा छन्दोगसंहिताम्' इति कथनात्। न च सोऽन्य एवेति शङ्क्यम्। औत्पत्तिकसूत्रे, बादरायणस्यानपेक्षत्वादिति पूजार्थं बादरायणग्रहणेनापि तथावगतेः। न च ब्रह्मजिज्ञासायाः क्रत्वर्थपुरुषार्थजिज्ञासावदवान्तरशेषविशेषविषयत्वं शङ्क्यम्। तथा सति जैमिनिरेव क्रत्वर्थादिजिज्ञासावत्

रश्मिः।

आदिलिङ्गैरित्यर्थः। भाष्यास्तु शास्त्रयोनित्वलक्षणस्य ब्रह्मशिवादिष्वतिव्याप्तिरित्यलक्षणमिदमिति पूर्वपक्षे, तच्छब्दस्य विष्णुवाचकत्वमङ्गीकृत्यान्वयादुपक्रमादिलिङ्गसमुदायाद् विष्णुरेव जगज्जन्मादिकारणत्वेन शास्त्रयोनिर्न तु हिरण्यगर्भादिरिति सिद्धान्तयन्ति। तदेतन्मतं 'अनुकृतेस्तस्य च' इत्यधिकरणे सर्वेषां ब्रह्मण्यनुकरणत्वस्य व्यवस्थाप्यत्वादत्रैतच्चिन्तनस्यानुपयुक्तत्वान्नानूदितमिति ज्ञेयम्। धर्म इत्यादि अयं सम्रुपसर्गार्थः। संबन्धमित्यन्वयपदस्यार्थः। अर्थवादेति आदिशब्देन विधिनिषेधनामधेयानि। प्रमितीति मन्त्रब्राह्मणयोर्वेदनामधेयमिति ब्राह्मणे एव धर्मप्रमितिजनकत्वमिति नेति भावः। जैमिनिर्धर्मजिज्ञासामित्यादि अप्रामाण्यं स्यादित्यन्तं भाष्यं व्युत्पादयन्ति अयमर्थ इत्यादि। तेनेति अग्निहोत्रत्वादिरूपेण पूर्वकाण्डाभिधेयत्वमग्निहोत्रप्रतिपादकाग्निष्टोमप्रतिपादकयोर्वेदयोर्भेदप्रसंगात् प्रतिपाद्यभेदस्य प्रतिपादकभेदकत्वादित्यर्थः। प्रतिज्ञायेति 'अथातो धर्मजिज्ञासा' इति प्रतिज्ञायेत्यर्थः। अवान्तरेत्यादि भाष्यं विवृण्वन्ति तत्रेत्यादि। तत्रैवेति धर्म एवेत्यर्थः। न चेत्यादि भाष्यं विवृण्वन्ति न च तेष्वित्यादि सूत्रेष्वित्यर्थः। अपीति अपिर्मार्कण्डेयश्रीभागवताभ्यामौत्पत्तिकसूत्रस्य समुच्चये। तथावगतेरिति व्यासशिष्यत्वावगतेः। क्रत्वर्थेत्यादि

संदेहमात्रवारकत्वाज्जिज्ञासयोः। न त्वलौकिकार्थसाधकत्वम्। तथा सति वेदानामन्याधीनत्वेनाप्रामाण्यं स्यात् वेदजिज्ञासेत्येवोक्तं स्यात्।

---

भाष्यप्रकाशः।

तामपि प्रतिजानीयात्। तस्या अपि शास्त्रपूर्व्यर्थमवश्यमपेक्षितत्वात्। अतः कर्तृभेदाद् भिन्ने एवोभे अपि जिज्ञासे। ते च पूर्वोत्तरकाण्डाभ्यां प्रमिते धर्मे ब्रह्मणि च मन्दमध्यमयोर्बुद्धिदोषात् संदेहसंभवमालोच्यैव कृते, न त्वन्योऽन्यमतदूषणाय। जैमिन्युक्तानामभ्यासादीनां व्यासपादैरुपन्यासाद् व्यासाभिप्रेतस्यानपेक्षत्वस्य जैमिनिनोपन्यासात्। नापि धर्मब्रह्मप्रमितिजननाय। यदि तथा स्यात् तदा मीमांसाऽधीने वेदस्य प्रमितिजनकत्वे उभावपि वेदस्य प्रामाण्येऽनपेक्षत्वं न ब्रूयाताम्। अत इदमपि सर्वस्य वेदस्याक्रियार्थत्वगमकम्। तदेतदुक्तं संदेहेत्यादि, अप्रामाण्यं स्यादित्यन्तेन। अथ यदि कर्मार्थतैव वेदस्य जैमिन्यभिप्रेता स्यात् तदा बादरायणमतं जानानेन तदनादराय वेदजिज्ञासेत्येवं प्रतिज्ञावाक्यमुक्तं स्यात्। अत उक्तहेतुत्रयात् सर्वस्य वेदस्य क्रियार्थत्वं न जैमिन्यभिप्रेतम्। किं चाम्नायस्येति तु पूर्वपक्षसूत्रं, तद्भूतसूत्रस्थं क्रियार्थपदं तु तिङन्तवाचकं, न तु साध्यार्थपरम्। तेन तदर्थं जैमिनिसूत्रानुसरणमपार्थमेवेति।

रश्मिः।

चतुर्थेऽध्याये 'अथातः क्रत्वर्थपुरुषार्थत्वयोः जिज्ञासा' इति सूत्रेणेत्यर्थः। अवान्तरेत्यादि अङ्गविशेषविषयत्वमित्यर्थः। नास्तिक्यनिराकरणाय ब्रह्मत्वार्थं च कर्मणि ब्रह्मज्ञानस्यापेक्षितत्वादिति भावः। तामिति ब्रह्मजिज्ञासामित्यर्थः। संदेहेत्यादि 'संदेहवारकं शास्त्रं बुद्धिदोषात्तदुद्भवः' इति पूर्वं कारिकयोक्तम्। जैमिन्युक्तानामिति द्वितीयस्य द्वितीयपादे उक्तानामित्यर्थः। उपन्यासादिति 'आनन्दमयोऽभ्यासात्' इति सूत्र उपन्यासादित्यर्थः। आदिशब्देन श्रुत्यादि। व्यासेत्यादि अत्रैव तृतीयपादे 'शब्द इति चेन्न' इत्यादिसूत्रेऽभिप्रेतस्येत्यर्थः। उपन्यासादिति 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धस्तस्य ज्ञानमुपदेशो व्यतिरेकश्चार्थेनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्' इति सूत्रे इत्यर्थः। तथा च शाबरभाष्यं बादरायणग्रहणं बादरायणस्येदं मतं कीर्त्यते बादरायणं पूजयितुं नात्मीयं मतं पर्युदसितुमिति। न त्वित्यादि भाष्यं विवृण्वन्ति नापीत्यादि। ब्रह्मेत्यादिः अलौकिकार्थेत्यस्यार्थः। प्रमितीत्यादिः साधकत्वमित्यस्यार्थः। जिज्ञासे इति बोध्यम्। तथेत्यादिति भाष्यं विवृण्वन्ति यदीत्यादि। उभाविति व्यासजैमिनी इत्यर्थः। इदमपीति भिन्नकर्तृकत्वमपीत्यर्थः। तदेतदिति न च ब्रह्मजिज्ञासाया इत्यारभ्योपपादितमित्यर्थः। वेदेत्यादिभाष्यं विवृण्वन्ति अथेत्यादि। उक्तेत्यादि जैमिनेर्व्यासशिष्यत्वात्, मीमांसयोर्भिन्नकर्तृकत्वात्, अथातो वेदजिज्ञासेत्यप्रतिज्ञानाच्चेति हेतुत्रयादित्यर्थः। उक्ते धर्मे समन्वयेऽधिकां युक्तिमाहुः किंचेत्यादि। तदेतद्भाष्यशास्त्रदीपिकादौ प्रसिद्धम्। सिद्धान्तसूत्रं तु 'विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः' इति। तिङन्तेत्यादि 'तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात्' इति सूत्रम्। तेष्वेव पदार्थेषु भूतानां वर्तमानानां पदानां क्रियार्थेन तिङन्तेन समुच्चारणमर्थस्य पदनिमित्तत्वादिति सूत्रार्थः। साध्यार्थेत्यादि साध्योर्थो जन्ययागस्तत्परत्वं नेत्यर्थः। अयमर्थः लिङादिप्रयोगे आख्यातत्वलिङ्त्वाभ्यां भावनैवोच्यते। सा च भवितुर्भवनानुकूलो भावकव्यापारविशेषः तत्र शाब्दी भावना आर्थी भावना च। पुरुषप्रवृत्त्यनुकूलो व्यापारविशेषः शाब्दी भावना लिङ्वाच्या, अयं मां प्रवर्तयति प्रवृत्त्यनुकूलव्यापारवानयमिति लिङ्श्रवणे प्रत्य-

किंच। साधनं च फलं चैव सर्वस्याह श्रुतिः स्फुटम्।
न प्रवर्तयितुं शक्ता तथा चेन्नरको न हि॥
प्रवर्तकस्तु सर्वत्र सर्वात्मा हरिरेव हि।

---

भाष्यप्रकाशः।

ननु तथापि पूर्वकाण्डस्य क्रियार्थत्वे तु न विवादः। तथा सत्यैकशास्त्र्यानुरोधादुत्तरकाण्डस्यापि पूर्वशेषतैव येन केनापि प्रकारेणादरणीया। नच विपरीतमाशङ्कनीयम्। सिद्धे ब्रह्मणि साध्यार्थानां वाक्यानामन्वयायोगात्। नच प्रापकत्वेनान्वयः। तत्तद्वाक्यगतफलोक्तिबाधप्रसङ्गात्। अतो वेदस्य साध्यार्थपरतां निश्चित्य तच्छेषतैवोत्तरकाण्डार्थस्यादरणीया। यदि चोपासनाशेषत्वं ज्ञानशेषत्वं वाङ्गीक्रियते तदापि तयोर्विधेयत्वेन धर्मत्वादुत्तरार्थस्य ब्रह्मणः प्रवर्तकश्रुतिवाक्यशेषता दुर्वारैवेति सर्वस्य वेदस्य धर्मार्थत्वमर्थादेव सिद्धमित्यत आहुः किंचेत्यादि। चकारद्वयं व्यापारस्य स्वरूपस्य च समुच्चायकम्। सर्वस्येति कर्मणः। सर्वस्यैव स्फुटमाहेत्यन्वयः। सर्वत्रेति विहिते निषिद्धे च। सर्वात्मेति 'स आत्मानꣳ स्वयमकुरुत'

रश्मिः।

त्वात्। यथा गोशब्दश्रवणे गोत्वं प्रतीयते इति गोत्वं गोशब्दार्थः। स च व्यापारविशेषः। वेदे पुरुषाभावाल्लिङादिशब्दनिष्ठ एव। अतः शाब्दीभावना। तस्याश्च साध्यसाधनेतिकर्तव्यतारूपांशत्रयापेक्षिण्या अंशत्रयोपेतार्थीभावना साध्यत्वेन संबद्ध्यते, न तु संख्यादयोऽयोग्या भावयितुम्। एवं च साध्यार्थं आर्थीभावना तत्परत्वं नेति। क्रियार्थपदस्य प्रकृतिप्रत्ययरूपतिङन्तवाचकत्वं, न तु लिङादिमात्रप्रत्ययार्थपरत्वमिति पर्यवसन्नोर्थः। तेनेत्यादि जैमिनिसूत्रविचार एतत्सूत्रद्वयं क्रियार्थत्वसाधकं वक्तव्यं तस्य तु तथात्वाभावेन सर्वस्य वेदस्य क्रियार्थत्वार्थत्वमित्यर्थः। किंच साधनमित्यादिभाष्यं विवरीतुमाभासमाहुः ननु तथेत्यादि। क्रियार्थत्व इति स्वाध्यायविधिना तु सर्वो वेदः पुरुषार्थाय नीयते। तदर्थमर्थवादानां भूतार्थप्रतिपादनेन प्रयोजनविधुराणामयं प्राशस्त्यरूपो लक्ष्यमाणोर्थः क्षिप्रदेवतासाध्यं कर्म क्षिप्रमेव फलं दास्यतीति। अन्यथा प्रयोजनवदर्थपर्यवसानं न स्यादतो विधिना अर्थवादानां प्राशस्त्ये तात्पर्यं बोध्यते। तात्पर्याच्च लक्षणा। ततश्चैककार्यकरत्वरूपैकवाक्यत्वं विधीनाम्। विधिमन्तरेण पुरुषप्रवर्तनासंभवात्। अतश्चार्थवादाः प्रयोजनपर्यवसायिनः स्युरिति सिद्धान्तसूत्रार्थात् क्रियार्थत्वे श्रुति'र्न प्रवर्तयितुं शक्ता तथा चेन्नरको नहि' हिर्हेतावतो हेतोः साधनं चेत्यादिरित्यन्वयं मन्वाना आहुः चेदस्येति। विधिविषययागार्थत्वे तु न विवाद इत्यर्थः। विपरीतमिति पूर्वकाण्डस्योत्तरशेषतेत्यर्थः। प्रापकत्वेनेति अन्तःकरणशुद्धिद्वारा ब्रह्मप्रापकत्वेन कर्मणां ज्ञानभक्त्योरन्वय इत्यर्थः। तत्तदित्यादि यजेत स्वर्गकामः, तरति तरति ब्रह्महत्यां योश्वमेधेन यजते, इत्यादिवाक्येत्यर्थः। अन्तःकरणशुद्धिद्वारा ज्ञानभक्तिस्वर्गादिकं चेत्युभयं फलत्वं नार्हेदिति भावः। अङ्गीक्रियत इति कर्मणोङ्गीक्रियत इत्यर्थः। तयोरिति ज्ञानोपासनयोः। विधेयत्वेनेति आत्मेत्येवोपासीतेति प्रज्ञां कुर्वीत इत्युभयोर्विधिकर्मत्वेन विध्यर्हत्वेन। धर्मत्वादिति 'चोदनालक्षणोर्थो धर्मः' इति जैमिनिसूत्रोक्तधर्मलक्षणाक्रान्तत्वात्। प्रवर्तकेत्यादि आत्मेत्येवोपासीत 'आत्मा वा अरे द्रष्टव्यः' इत्यादिवाक्यशेषतेत्यर्थः। यद्वा विधिवाक्यशेषता। व्यापारस्येति देवताप्रीतिरूपस्येत्यर्थः। इदं तृतीयाध्याये स्फुटीकरिष्यते। स्वरूपस्येति ब्रह्मप्राप्तिफलवद् ब्रह्मणोपि फलत्वं 'भगवानेव हि फलम्' इति निरोधलक्षणग्रन्थात्। स्फुटमाहेति क्रियाविशेषणत्वात्। कारिका उप-

यज्ञ एव हि पूर्वत्र चोद्यते स्वर्गसिद्धये ॥

---

भाष्यप्रकाशः ।

इति श्रुतेः सर्ववस्तुस्वरूपोऽन्तर्यामिब्राह्मणात् सौबालश्रुतेश्च सर्वान्तर्यामी । अयमर्थः । वेदस्य या साध्यार्थपरता त्वयाङ्गीकृता सा श्रुतेः प्रवर्तकत्वानुरोधात् । तत्र श्रुतेर्यत् प्रवर्तकत्वं तत् किं यावदधिकारिणः प्रति साधारणं, किं वा असाधारणम् । आद्ये कस्यापि त्रैवर्णिकस्य नरको न स्यात् । तथा राजदण्डादेरपि लोके कोऽपि विषयो न स्यात् । रोगी च नोपलभ्येत । अविहिताभिषिद्धाच्च निवृत्तेरपि तत एव संभवात् । तदभावे नरकादेरप्यसंभवात् । अथ पूर्वकर्मजन्यदुरदृष्टवशादविहितादौ प्रवृत्तिः । तर्हि तादृशेन शुभादृष्टेन विहितेऽपि प्रवृत्तिसंभवान्न श्रुतेः प्रवर्तकत्वसिद्धिः । अथासाधारणम्, तर्हि तदसाधारण्यं स्वभावतो वक्तुमशक्यं, हेत्वन्तरसाहाय्येन साधनीयम् । तत्र कालादेः साधारणत्वात् तत्तज्जीवादृष्टस्य तथात्वं कल्पनीयम् । तथा सति तेनैव प्रवृत्तिसंभवान्न श्रुतौ प्रवर्तकत्वनिर्धारः कर्तुं शक्यः । अथ प्रवृत्तेः शब्दश्रवणान्तरभावित्वदर्शनाददृष्टादेः सहकारित्वेनैव प्रवेशो, न करणत्वेनेति विभाव्यते, तर्ह्यदृष्टसंपादितदृष्टसामग्रीसत्तायां प्रवृत्तिरकुण्ठितैव स्यात् । अवतमसे चाक्षुषदर्शनेन सहकारिदौर्बल्येऽपि कार्योत्पत्तिनिर्धारात् । अतः कौण्ठ्यदर्शनात् फलमुखं प्रवर्तकत्वं न श्रुतेः शक्यवचनम् । तेन

रश्मिः ।

पादयन्ति अयमर्थ इत्यादि । साध्यार्थपरतेति 'चोदनालक्षणोऽर्थो धर्मः' इति सूत्रे कार्ये धर्मे चोदना प्रमाणमिति कार्यपरत्वं वेदप्रामाण्यव्यापकमिति साध्यार्थपरतेत्यर्थः । प्रवर्तकत्वेत्यादि । अयमर्थः । 'यजेत स्वर्गकामः' इत्यादौ यजेतेत्यत्रास्त्यंशद्वयं प्रकृतिप्रत्ययरूपम् । तत्राख्यातत्वलिङ्त्वाभ्यां प्रत्ययो युक्तो भवति । ताभ्यां भावनैवाभिधीयते, विधिनिमन्त्रणेत्यादिशासनात् । विधिः प्रेरणं, भावना च भवितुर्भवनानुकूलो भावकव्यापारविशेषः । सा च शाब्दीभावनार्थीभावना च । तत्र पुरुषप्रवृत्त्यनुकूलो व्यापारविशेषः शाब्दीभावना लिङ्वाच्या । अयं मां प्रवर्तयति प्रवृत्त्यनुकूलव्यापारवानयमिति लिङ्श्रवणे प्रत्ययात् । यथा गोशब्दश्रवणे गोत्वं प्रतीयते इति गोत्वं गोशब्दार्थः । ननु स च व्यापारविशेषो न विध्यर्थोऽपि तु इष्टसाधनत्वं तदर्थ इति चेन्न । यागस्तु इष्टसाधनं तस्मात्तं त्वं कुरु इति सहप्रयोगात् । पर्यायतायां तु सहप्रयोगो न स्यात् । स च लोके पुरुषनिष्ठः । वेदे तु पुरुषाभावाच्छब्दनिष्ठ एव सः । अतो वेदः प्रवर्तयति । एतादृशप्रवर्तकत्वं तु वेदस्य साध्यार्थपरत्वे, न तु सिद्धार्थपरत्वे इति प्रवर्तकत्वानुरोधात्तथेत्यर्थः । साध्यार्थे प्रवृत्तिर्न तु सिद्धार्थे इति भावः । तत एवेति विधित एवेत्यर्थः । तदभाव इति अविहितनिषिद्धाचरणभाव इत्यर्थः । श्रुतेरिति विधिश्रुतेरित्यर्थः । तथात्वमिति हेतुत्वमित्यर्थः । संभवादिति प्रवृत्तिसंभवादित्यर्थः । तर्ह्यदृष्टेति अदृष्टसंपादितदृष्टसामग्रीसत्तायामित्यत्र सामानाधिकरण्यं सप्तम्यर्थः । तथा च तादृशसत्तासमानाधिकरणा शब्दश्रवणानन्तरं जायमाना प्रवृत्तिरकुण्ठितैव स्यादित्यर्थः । नन्वदृष्टं तथा न प्रबलमिति कुण्ठिता प्रवृत्तिरिति चेत्तत्राहुः अवेत्यादि । अवहीनं तमः अवतमसं 'अवसमन्धेभ्यस्तमसः' इति सूत्रेणाच् तस्मिन्नित्यर्थः । सहकारीत्यादि आलोकसंयोगदौर्बल्येपीत्यर्थः । निर्धारादिति शब्दश्रवणमन्तरेणापि बाल्यादृष्टवशात् स्तनपाने प्रवृत्तिदर्शनाच्चेत्यपि द्रष्टव्यम् । फलमुखेति फलमिष्टमनिष्टं च तदुपायभूतप्रवर्तकत्वम् । न श्रुतेरिति अदृष्टस्य चान्यस्य वा वक्तव्यमिति भावः । पूर्वार्धे साधनं करणमुक्तमतो व्यापारकथनः । फलमर्द फलत्वावच्छिन्ने योगरूढमतो [illegible] फलमित्याहुः तेनेति । द्वितीयां

सिद्ध एव हि सर्वत्र वेदार्थो वेदवादिनाम् ।

भाष्यप्रकाशः ।

साधनव्यापारफलस्वरूपाणि कर्मणां श्रुतिर्बोधयतीत्येतावन्मात्रमङ्गीकार्यम् । नच प्रवृत्तिनिवृत्त्यनुपपत्तिः । ईश्वरस्यैव प्रवर्तकस्य निवर्तकस्य सत्त्वात् । नचात्र कल्पना । 'एष उ एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति, एष उ एवासाधु कारयति तं यमधो निनीषति' इत्यादिश्रुतेः । नच वैषम्यनैर्घृण्यापातः । आत्मसृष्टेरेव श्रुत्यभिप्रेतत्वेन भेदाभावादिति वैषम्यनैर्घृण्यसूत्रे व्युत्पादयिष्यामः । अतः श्रुतेः प्रवर्तकत्वाभावेन साध्यार्थपरतैवासंगता । नच तर्हि पूर्वकाण्डे यज्ञबोधनं व्यर्थमिति शङ्क्यम् । तस्य स्वर्गसिद्ध्यर्थत्वात् । विध्यादीनां क्रीडेच्छाव्यापारत्वाच्च तद्वैयर्थ्यमिति कृतप्रयत्नापेक्षसूत्रे व्युत्पादयिष्यामः । एवं सिद्धे विध्यादीनां क्रीडेच्छाव्यापारत्वे तदर्थानां तत्फलानां च क्रीडाशेषतैवेति तत्प्रतिपादकत्वेनैवोभयोरैकशास्त्र्यं, न कर्मप्रतिपादकतयेति मन्तव्यम् । पुरःस्फूर्तिकमादाय क्रियापरत्वाङ्गीकारेऽपि तेन पूर्वकाण्डस्यैव धर्मार्थत्वसिद्धिर्न सर्वस्य वेदस्येति तावन्मात्रस्य साध्यार्थतोपगमेन पूर्वमीमांसकमतं द्वाभ्यां दूषितम् । अतः परं पूर्वकाण्डस्यापि साध्यार्थत्वमनुपगम्य दूषयन्ति सार्धेन सिद्ध एवेत्यादि । सर्वत्रेति काण्डद्वये । पूर्वत्रेतिपाठे अपेरध्याहारः । वेदवादिनामिति सर्ववेदप्रामाण्यज्ञान-

रश्मिः ।

कारिकां विवृण्वन्ति न च प्रवृत्तीत्यादि । अत्रेति ईश्वरस्य प्रवर्तकत्वे निवर्तकत्वे चेत्यर्थः । श्रुतेरिति उपलक्षणमेतत् । लोकदृष्टान्तेनेश्वरे संभवति प्रवर्तकत्वादौ शब्दे दृष्टान्ताभाव इति । यज्ञ एवेत्युत्तरार्धं विवरीतुमाहुः न च तर्हीति । साध्यो यज्ञस्तत्परत्वाभाव(काल)इत्यर्थः । स्वर्गेत्यादि न तु प्रवृत्त्यर्थत्वमिति भावः । विधिनिमन्त्रणेति सूत्रे पुरुषनिष्ठमेव प्रेरणं लिङाभिधीयते । नन्वीश्वरोऽदृष्टद्वारेण प्रवर्तयिष्यति किं विहितप्रतिषिद्धविधानेनेति चेत्तत्राहुः विध्यादीनामित्यादि । तद्वैयर्थ्यमिति विहितप्रतिषिद्धवैयर्थ्यमित्यर्थः । व्युदिति द्वितीयाध्यायतृतीयपादे व्युत्पादयिष्याम इत्यर्थः । क्रीडेच्छेत्यादि तज्जन्यत्वे सति तज्जन्यजनको हि व्यापारः । इच्छाजन्यत्वे सति व्यापारत्वमिच्छाजन्यक्रीडाजनकत्वं, क्रीडेच्छाया व्यापारत्वम् । तदर्थानामिति विध्याद्यर्थानामित्यर्थः । क्रीडाशेषता दत्तविषलीलार्थता, पारार्थ्यं शेषलक्षणमिति । तथा च क्रीडा यागादिस्तदर्थः विध्यर्थः प्रेरणादिः । एवकारस्तु, ननु यागादिर्जीवधर्मः इति जीवक्रीडा नात्मक्रीडा तच्छेषता चेन्न, परात्तु तच्छ्रुतेरिति ईश्वरक्रीडा तच्छेषता चेति । क्रीडा । तच्छेषतेतरव्यवच्छेदकः । यद्वा न यागादिः किंतु 'यतो वा इमानि भूतानि जायन्ते' इत्याद्युक्ता सर्गादिर्वेदान्ते तच्छेषता विध्याद्यर्थे प्रेरणादौ इत्यर्थः । तत्प्रतीति दत्तविषलीला तच्छेषप्रेरणादिप्रतिपादकत्वेन । साध्यार्थपरताया दूषितत्वादेवकारः । उभयोर्वेदवेदान्तयोः । ऐकशास्त्र्यं तु 'यदेव विद्यया करोति' इति 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इतिश्रुतिभ्याम् । न कर्मेति साध्यार्थपरतया नेत्यर्थः । मन्तव्यमिति मननार्हम् । 'क्रीडार्थमात्मन इदं त्रिजगत्कृतं ते' इतिवाक्यात् । न चैवमीश्वरः प्रवर्तयतीति मतं दृष्टविरोधीति 'चोदना पुनरारम्भः' इतिसूत्रस्य भाष्यविरोध इति वाच्यम् । लौकिकानुग्रहाय जैमिनेः प्रवृत्तत्वेन दृष्ट एव तेषां विश्वासात् तत्र विधेः प्रवर्तकत्वोक्तेरिति । यद्वा 'यदेव विद्यया करोति श्रद्धयोपनिषदा वा' इति श्रुतिप्राप्तविकल्पोक्तानुष्ठानकरणे तथैव वर्तते । अधुना तु 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इतिश्रुत्युक्तानुष्ठानमिति न किंचिदेतच्छास्त्रभेदात् । ननु न तथा प्रतीयत इतिचेत्तत्राहुः पुर इत्यादि । तावदित्यादि पूर्वकाण्डमात्रस्येत्यर्थः । द्वाभ्यामिति कारिकाभ्याम् । अध्याहार इति । उत्तरकाण्डसंग्रहायेति भावः ।

मन्त्राणां कर्मणां चैव दर्शनश्रवणाच्छ्रुतौ ।
कृतिश्च सिद्धतुल्यत्वं वेदः स्वार्थे च सन्मतः ।

'प्रजापतिरकामयत प्रजायेय' इति । 'स एतदग्निहोत्रं मिथुनमपश्यत्' । 'प्रजापतिर्यज्ञानसृजताग्निहोत्रं चाग्निष्टोमं च पौर्णमासीं चोकथ्यं चामावास्यां चातिरात्रं च तानुदमिमीत यावदग्निहोत्रमासीत् तावानग्निष्टोम' इत्यादि । न ह्युपाख्यानानां मिथ्यार्थत्वं बुद्धजन्मनः पुरोक्तं युक्तं वा । तथा सति वेदानाम-प्रामाण्यमेव स्यात् । मिथ्योपाख्यानप्रतिपादकलोकवत् ।

भाष्यप्रकाशः ।

पूर्वकं तदनुसारिणाम् । चैवेति चकारो 'अपश्यत् पुरोडाशं कूर्मं भूत९ सर्पन्तम्' इति द्रव्यादीनां दर्शनस्य समुच्चायकः । मन्त्राणां दर्शनं तु, 'स एतं कसर्णीरः काद्रवेयो मन्त्रमपश्यत्, स एतं दीक्षितवादमपश्यत्' इत्यादिषु बोध्यम् । स्वार्थे चेति चोऽप्यर्थे । अतः स्तुतिं समुच्चिनोति । उक्तं विभजन्तो दर्शनस्य श्रुती आहुः प्रजापतिरित्यादि । अत्राद्या तैत्तिरीय-ब्राह्मणस्था । अस्यामपश्यदित्यस्य ज्ञानार्थताया अपि शक्यवचनत्वात् सिद्धार्थत्वं न निःसंदिग्धं स्यादित्यतो द्वितीयस्या उपन्यासः । सा च संहिताप्रथमाष्टकस्था । तत्रोक्तस्योन्मानस्य कर्मणामसिद्धत्वेऽशक्यवचनत्वादिति । न हीत्यादिकं विभागभाष्यम् । तेनायमर्थः । व्यासादधीतवेदः श्रुतभारतः स्वयमृषिर्जैमिनिर्यदि धर्मरूपायाः क्रियायाः सिद्धत्वं नाभिप्रेयात् तदा भावार्थाधिकरणे, 'भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेत' इत्यनेन सिद्धाव-

रश्मिः ।

कर्मदर्शनश्रुतेर्भाष्ये वक्तव्यत्वान् मन्त्रदर्शनश्रुतेश्चानुक्तत्वात्तां दर्शयन्ति मन्त्राणामित्यादि । भाष्ये । कृतेश्चेति[1] कृतिर्यज्ञस्तस्य नित्यत्वेपि क्रीडार्थमाविर्भावतिरोभावाभ्यां साध्यत्वभानेपि सिद्धतुल्यत्वं, सर्वस्य नित्यत्वादिति । प्रकृते । दर्शनश्रुती इति दर्शनश्रुती इति द्विवचनान्तमिदम् । ज्ञानार्थताया इति एवं भविष्यतीति ज्ञातवानित्येवं साध्यज्ञानार्थताया उक्तप्रकारेण वा इत्यर्थः । उक्तस्येति उदमिमीतेत्युक्तस्येत्यर्थः । इतीति । नहि साध्यस्य घटस्योन्मानं संभवतीति भावः । विभागभाष्यमिति 'वेदः स्वार्थे' इत्यादिकारिकैकदेशव्याख्याशुलोर्व्याख्यानभाष्यम् । विभागशब्दस्तावद्व्याख्यानेषु प्रयुज्यते विशिष्य तु भाष्यविभागे प्रतिविधास्यामः इति सृष्टिभेदवादे कथनात् । अर्थपरोत्र विभागशब्दः । स्वरूपपरो यथाह 'शब्दचित्रं वाच्यचित्रमव्यङ्ग्यमवरं स्मृतम्' इत्यत्राव्यङ्ग्यमधममभिप्रेत्यैतावदधमकाव्यलक्षणमितरद्विभागपरमिति । तथात्र नहीत्यादि वेदस्वरूपपरं न भवति किंतु व्याख्यानभाष्यमित्यर्थः । तथापि स एवार्थः । यद्वा । यथा संहिता एकप्राणस्य योगः । वायुः शब्दतामापद्यते इति शब्दः । तद्वद्भगवद्व्यासस्य सूत्राणि तदीयैकप्राणयोगः एकस्य विभज्य धारणार्थं विभागस्य भाष्यं युक्तमिति । अत एव शैवभाष्ये व्याख्यायते इति वक्तव्ये विभज्यत इत्युक्तम् । तेनेति एकदेशभाष्यस्य पूर्वकारिकाव्याख्यानसापेक्षत्वेनेत्यर्थः । वेदस्वरूपेतरव्याख्यानं तत्परत्वेनेति वार्थः । अयमिति मीमांसकादिनिरासको वक्ष्यमाणोर्थ इत्यर्थः । तदर्थं सार्धकारिकार्थमाहुः व्यासादित्यादि । भावार्थेत्यादि द्वितीयाध्याये इत्यर्थः । सिद्धेत्यादि भावार्था इत्यत्र भावशब्दस्तावद् 'भावे घञ्' इति सूत्रनिष्पन्नः

1. 'कृतिश्च' इति भाष्यपाठे रश्मिकारैः कृतेश्चेति सौकर्यात् व्याख्यातोऽस्ति ।

भाष्यप्रकाशः ।

स्थापकधात्वर्थाभिधायकानां नामपदानां क्रियाप्रत्यायकत्वं न वदेत् । नच तत्र भावार्थपदेन भावनार्था इत्येवोच्यत इति वाच्यम् । तथा सति कर्मशब्दपदवैयर्थ्यापत्तेः । भावार्थैः क्रिया प्रतीयेतैतावतैव चारितार्थ्यात् । तथा 'सर्वेषां भावोऽर्थ इति चेत्'इत्यग्रिमसूत्रं च न वदेत् । क्रियाबोधकाख्यातपदानां भावनार्थत्वस्य सर्वजनीनत्वेन सर्वेषां भावोऽर्थ इति संदेहस्यैवानुदयात् । तथा अग्रिमसूत्रद्वये क्रमेण नाम्नां पुरुषानपेक्षक्रियाप्रतिपादकत्वम्, आख्यातानां तु पुरुषापेक्षक्रियाप्रतिपादकत्वमिति विभागं च न कुर्यात् । साध्यैकस्वभावक्रियावादे पुरुषानपेक्षक्रियाया एवाभावात् ।

किंच । यागादिधर्मरूपा क्रिया यदि सर्वदा साध्यावस्थैव स्यान्न कदापि सिद्धावस्था, तदा तन्निष्पत्तेः कदाप्यभावाच्चोदनापि नोच्येत । 'चोदना पुनरारम्भ' इति लक्षणमपि तस्या न क्रियेत ।

रश्मिः ।

इति तथेत्यर्थः । मीमांसकाभिमानिशङ्कामनूद्य निषेधन्ति न च तत्रेत्यादि । भावनार्था इति । भावनार्था आख्यातशब्दास्तेभ्योऽपूर्वं प्रतीयत इतिसूत्रार्थात् । यथाहुः—

'द्रव्यादिशब्दतोऽपूर्वधीर्भावार्थपदादुत ।
द्रव्यादीनां फलार्थत्वात् तच्छब्देन ह्यपूर्वधीः' ॥
'क्रियाद्वारमृते द्रव्यं फलेन नहि युज्यते ।
भावनावाचिनोऽपूर्वमाख्यातादवगम्यते' ॥

इति 'सोमेन यजेत' 'हिरण्यमात्रेयाय ददाति' इत्यादौ भावार्थस्य यागदानादेः साध्यत्वेन फलं प्रति असाधनत्वान्नापूर्वप्रत्यायकत्वं किंतु सोमादिद्रव्यादीनामिति पूर्वपक्षः । क्रियामन्तरेणाफलवन्तो भवन्तो द्रव्यादयः काष्ठादिदृष्टान्तमनुरुन्धाना भावनावाचितां समर्पयन्ति । यजति ददातीत्यादीनामपूर्वबोधकतामाख्यातानाम् । धात्वर्थव्यतिरिक्ता सर्वधात्वर्थसंबद्धकरोत्यर्थरूपा भावनेति । चतुःसूत्रमधिकरणमिदं द्वितीये त्वेकसूत्रे 'चोदना पुनरारम्भ' इत्यस्मिन्नधिकरणेऽपूर्वसदसद्भावे संशयः । यागस्य क्रियारूपत्वेन त्रिक्षणावस्थायितया कालान्तरभाविफलजननासामर्थ्यान्मध्ये व्यापाररूपमपूर्वद्वारं कल्प्यतेऽतोऽपूर्वमस्तीति सिद्धान्तयन्ति, तदिदं सूत्रं विरुणद्धि । सूत्रेष्वपूर्ववाचकपदाभावात् न च यागस्य करणत्वानुपपत्तिः । आख्यातानां क्रियासामान्यवाचितया समानपदोपात्तस्य धातोश्चातीन्द्रियक्रियाविशेषवाचितया तन्निष्ठस्य करणत्वस्य देवताप्रीतिरूपव्यापारेण सिद्धयानुपपत्त्यभावात् । साधकतमं करणमिति करणलक्षणाङ्गीकारे तु स्वरूपेण निर्वाहान्न व्यापारापेक्षात आख्यातपदैस्तत्कल्पनस्याशक्यत्वात् । पुरुषप्रवृत्तिस्तु न यागः तदभिव्यञ्जकतया तदेकदेशत्वात् । यथाहि उद्यमननिपतनरूपपुरुषव्यापारसहकृतेन परशुनाघातात्मकद्रव्यसंयोगद्वारा छिदा साध्यते तथा चोदनाप्रयुक्तपुरुषव्यापाराभिव्यक्तयागेन देवताप्रीतिद्वारा फलं साध्यते, अतः प्रवर्तकत्वेनाप्यपूर्वकल्पनमशक्यमिति । एतद्दूषणं स्फुटमिति प्रकारान्तरमाहुः तथासतीत्यादि । अग्रिमेत्यादि 'येषामुत्पत्तौ स्वे प्रयोगे रूपोपलब्धिस्तानि नामानि तस्मात्तेभ्यः पराकाङ्क्षा भूतत्वात्स्वे प्रयोगे' । 'येषां तूत्पत्तौ अर्थे स्वप्रयोगो न विद्यते तान्याख्यातानि तस्मात्तेभ्यः प्रतीयेताश्रितत्वात्प्रयोगस्य' इति सूत्रद्वये इत्यर्थः । चोदनापीति 'चोदनालक्षणोऽर्थो धर्मः' इति सूत्र इत्यर्थः । क्रियायाः प्रवर्तकं वचनं चोदनेत्युच्यते तस्याश्च कृदन्तत्वमिति सिद्धावस्थाबोधिका सा नोच्येत धर्मलक्षणत्वेनेत्यर्थः । तस्या इति चोदनाया इत्यर्थः । न क्रियेतेति

भाष्यप्रकाशः ।

अतो जैमिनेरपि वेदस्य सिद्धार्थपरतैवाभिप्रेता । इदं यथा तथा भावार्थाधिकरणभाष्ये व्युत्पादितमाचार्यचरणैः । मयापि तद्विवरणे निपुणतरं प्रपञ्चितमिति नात्र लिख्यते ।

रश्मिः ।

सिद्धावस्थापन्नधात्वर्थबोधकघञन्तारम्भपदेन न क्रियेतेत्यर्थः । न च स्वर्गादिरारभ्यते येन तदपूर्वमारम्भः इति न घञन्तमिदमिति वाच्यं 'चोदनालक्षणोर्थो धर्मः' इत्यत्रानन्वयात् अपूर्वानङ्गीकारात् स्फुटीभविष्यति चैतदुपरिष्टात् । न च करणत्वोपपत्तये व्यापारावश्यकतेति शङ्क्यम् । देवताप्रीतेर्व्यापारत्वात् । न च वैयधिकरण्यम्, विषयतासंबन्धेन यजमाने सत्त्वात्तस्याः । अत इति धर्मलक्षणं चोदना तस्याश्च घञन्तारम्भपदेन विवरणादित्यर्थः । व्युत्पादितमिति अत्र स्पष्टप्रतिपत्तये तद्विवरणेन सहार्थं उपादीयते । तथाहि 'भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते' इति सूत्रं न सर्वेषु धर्मोपि तु केषुचिदेव पदेषु इत्यत्र हेतुनिर्णयाय प्रववृते । अस्यार्थः क्रियावाचिनां धातुत्वानुशासनात्सर्वधातुष्वनुगतरूपं यत्क्रियासामान्यं स भावः, सोर्थो विधेयो येषां ते भावार्थास्तादृशा ये शब्दाः ते कर्मवाचका इत्यर्थः । इदमेवानुगतरूपं क्रियासामान्यमितिभाष्यम् । तथाच यजत्यादयो धातुत्वेन रूपेण क्रियासामान्यं यजतित्वादिना प्रतिनियतरूपेण क्रियासामान्यव्याप्यं यागसामान्यरूपं विशेषं प्रतिपादयन्तीत्यर्थः पर्यवसन्नः । ननु किं क्रियाया रूपद्वयनिरूपणेन पूर्वोक्त एवार्थोस्तु सूत्रस्येति चेन्न, पुरुषक्रियामात्रस्य धर्मत्वाभावात् वेदैकसमधिगम्यातीन्द्रियस्थिरयागस्यैव धर्मत्वात् । स्थिरत्वस्य च यजतिना यागसामान्यबोधन एव संभवात् सामान्यस्य च नित्यत्वात् । अतो रूपद्वयनिरूपणस्यावश्यकत्वात् । ननु क्रिया प्रत्यक्षा यजतीतिप्रत्ययाभिलापयोः क्रियाविशेषं कुर्वाणं दृष्ट्वैव संभवादतीन्द्रियत्वं कथमिति चेन्न, द्रव्यदेवतासंबन्धो हि यागः । चतुर्थेध्याये 'यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात्' इति सूत्रे द्रव्यदेवताक्रियासमुदायस्य तल्लक्षणत्वात् द्रव्यदेवते यागस्य रूपमिति–आमिक्षाधिकरणे सिद्धत्वाच्च, तयोश्च संबन्धः प्रीतिहेतुत्वेन स्वीकारः,

'देवान् भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ' ॥

इति वाक्यात् । स च देवताया अतीन्द्रियत्वात्परात्मधर्मत्वाच्चातीन्द्रिय इति । न च देवता यजतीति प्रयोगापत्तिः । तादृशस्वीकारस्य देवनिष्ठत्वादिति वाच्यम् । तादृशव्यापारस्य फलत्वेन कर्मनिष्ठत्वात् । तेन देवदत्तो यजतीति प्रयोगानापत्तिरपि दत्तोत्तरा । ऋत्विजो यजन्तीति त्विष्टमेव योधा युद्ध्यन्तीतिवत् । प्रैषे होतर्यजेति प्रयोगात् । अतः फलरूपो यागोऽतीन्द्रियः 'चातुर्होत्रं च सत्तम' इति क्रियायाः पुरुषावयवेषु गणनाच्च । ननु देवतोद्देशेन द्रव्यत्याग एव यागोस्तु अग्नय इदं न ममेति त्यागवाक्यानुरोधाद्दानस्यापि यजत्यर्थत्वाच्चेतिचेन्न, परस्वत्वापादनरूपदानस्याप्यतीन्द्रियत्वात् । लोकप्रयोगस्तु न तात्त्विकः, शास्त्रदृष्टयभावात् । न च 'व्रीहीनवहन्ति' 'अग्नीषोमीयं पशुमालभेत' इत्यादिक्रियाणां प्रत्यक्षत्वादेतद्दृष्टान्तेन यागोपि प्रत्यक्षो भवतु इति शङ्क्यम् । मन्त्रेण चावघातो, देवपत्न्यश्च कर्म्यः, लौकिके 'हविष्कृदेहि' 'उभौ हि वै देवाना१शमितारौ' इत्यादिभिस्तदावाहनादतीन्द्रियत्वात् । फले संपन्नेऽलौकिकक्रियायाः कर्तुश्च तिरोभावः । न च नार्हति स्वीकारो नित्यो भवितुं द्रव्यस्य व्रीह्यादेरनित्यत्वेन तजन्यहोमोत्तरभावित्वादिति शङ्क्यम् । 'अप-

रश्मिः।

दयन् पुरोडाशं कूर्मं भूत्वसर्पन्तम्' इत्याद्यर्थवादेषु द्रव्यस्यालौकिकत्वकथनात्। किं च पुरुषसूक्तविवरणाध्याये—

'इति संभृतसंभारः पुरुषावयवैरहम्।
तमेव यज्ञं पुरुषं तेनैवायजमीश्वरम्' ॥

इतिवाक्याद्द्रव्यादीनामलौकिकत्वं निराबाधम्। 'यज्ञेन यज्ञमयजन्त देवाः' इति श्रुतेश्च। ते प्रोक्षणादिसंस्कारैरिदानीं लौकिकेषु द्रव्यादिषु संनिधाप्यन्ते, मूर्तौ देवतावत्। लौकिकैरेव यागनिष्पत्तौ तु संस्कारा व्यर्थतां गच्छेयुः। अतो ये क्षणिकत्वमदृष्टं वा कल्पयन्ति ते न यागपदार्थं विदुः। अतःपरमेव ह्यर्थो विधीयत इति सूत्रशेषार्थः। एष योऽतीन्द्रियत्वादिधर्मवान् सोऽर्थः। लौकिकस्तु संसारहेतुत्वादनर्थ इत्यर्थः। स्थिरत्वेन विद्यमानत्वादेव विधीयते चोदनया पुरुषः प्रवर्तते तत्र। प्रलये तु 'स्वाभाविकी ज्ञानबलक्रिया च' इति श्रुतेर्नित्यक्रियाया ईश्वरधर्मत्वेन तन्निष्ठता, तेन धर्मानित्यत्वादिना क्रियात्वादिजातौ पदशक्तिरङ्गीकार्या। सा च धर्म इति तत्स्थित्यर्थं धर्मिणः प्रावाहिकी सत्ताभ्युपगन्तव्या। अहोरात्रन्यायेन कल्पस्य कल्पपूर्वकत्वात्तद्रात्रिरूपे प्रलये सर्वनाशात्। ये पुनर्जीवन्ति ते स्वापाच्च क्रियाप्रवाहोपरमे तस्या जातेरनाधारत्वापत्त्या कालादौ तत्स्थितिर्निराधारत्वं वा कल्पनीयम्। शाब्दबोधसमये च क्रियायाः आक्षेपलभ्यत्वं कल्पनीयं, कर्मदर्शनादिश्रुतीनां च स्वार्थे तात्पर्यराहित्यं कल्पनीयमिति वरं धर्मनित्यत्वमित्यलम्। उक्तेऽर्थे शङ्कते सर्वेषां भावोऽर्थ इतिचेत्। यदि भावार्थेभ्य एव धर्मः प्रतीयत इति उच्यते तदा सर्वे शब्दाः भावार्थाः क्रियावाचकाश्च सर्वे धातुजाः। कृत्प्रत्ययेन च भावोभिधीयत इतीत्यर्थः। न सर्वे शब्दाः धर्मवाचकाः धर्मस्य पुरुषार्थत्वात्। भावार्थशब्दैर्नामभिस्तु धर्मः प्रत्याय्यते परंतूदासीनतया न तु पुरुषार्थतया अतो धर्मप्रमितिसंपादने भावार्थकर्मशब्दत्वमेव न प्रयोजकं किं तु पुरुषस्यापेक्षापीतः सापेक्षानपेक्षविभागं वदन्परिहरति येषां तूत्पत्तौ स्वे प्रयोगे रूपोपलब्धिस्तानि नामानि तस्मात्तेभ्यः पराकाङ्क्षा न भूतत्वात्स्वे प्रयोगे, स्व इति षष्ठ्यर्थसप्तम्यन्तं स्वीयत्वेनार्थबोधि। तथाच येषां शब्दानामर्थस्योत्पत्तौ सत्यां प्रयोगकाले रूपोपलब्धिर्जायते तानि नामानि। निरुक्ते नामाख्यात इत्यादिशब्दविभागवचनात्। अतः स्वयं नमन्ति कारकतया क्रियाशेषा वाक्ये भवन्ति नामयन्ति, स्वार्थमाख्यातार्थं प्रति, स्वार्थमाख्यातार्थप्रयोजनाय शेषभूतं कुर्वन्तीति नामसंज्ञा तेषां शब्दानामर्थस्य परार्थत्वज्ञापिका। अतः परार्थत्वेन स्वातन्त्र्याभावाद्वाक्यार्थबोधावसरे नामभ्यो धर्मः पुरुषार्थतया न प्रमीयत इत्ययमर्थो नामशब्दार्थकथनेन बोध्यते। तच्छ्रवणानन्तरं पुरुषाकाङ्क्षा न भवति। यथा पचतीत्युक्ते कः इत्याकाङ्क्षा, न तथा घट इत्युक्ते, नापि पाक इत्युक्ते। अतःपरं भूतत्वात्स्वे प्रयोगे इति सूत्रांशः, स्वप्रयोगकाले भूतत्वात् सिद्धत्वादित्यर्थः। अतस्तन्निष्पादनार्थं न पुरुषापेक्षेति भावः। तथाच नामभ्योऽनपेक्षत्वेन स्थिरत्वेन धर्मप्रमितावपि पुरुषार्थत्वेन न प्रमीयत अतो भावार्थकर्मशब्दत्वं तत्स्वरूपप्रमित्युपयोग्येव न तु पुरुषार्थरूपत्वघटिततत्प्रमित्युपयोगीति सिद्धम्। येषां तूत्पत्तावर्थे स्वप्रयोगो न विद्यते तान्याख्यातानि तस्मात्तेभ्यः क्रिया प्रतीयेताश्रितत्वात्प्रयोगस्य। यथा नामभ्यः पुरुषार्थत्वेनाप्रवृत्तिस्तथाख्यातेभ्योपीति शङ्कां वारयति तुशब्दः। उत्पत्ताविति सतिसप्तमी आनन्तर्यज्ञापिका। अर्थ इति विषयसप्तमी। स्वप्रयोग इति शब्दप्रयोगः। तथा चायं सूत्रार्थः, येषां शब्दानामर्थोत्पत्त्यनन्तरमर्थे

भाष्यप्रकाशः ।

किंच । अर्थवादाधिकरणेऽर्थवादानां विधेयस्तावकत्वेन प्रामाण्यकथनादपि तथा । यदि हि बालातुराद्युपच्छन्दनवदर्थवादानां स्तावकत्वमभिप्रेयात् प्रामाण्यं तेषां न ब्रूयात् । तदुपच्छन्द-

रश्मिः ।

प्रयोगो न विद्यते अर्थं प्रदर्श्य प्रयोगो न विद्यते यथा अयं घट इति उत्पत्तिसमये प्रयोगो नात्र निषिध्यते तेषामाख्यात इति संज्ञा, यैर्धर्म आख्यायत इति ज्ञापनार्थम् । तस्मादविद्यमानार्थत्वात्स्वनिष्पत्त्यर्थं पुरुषाकाङ्क्षाया विद्यमानत्वात्तेभ्यः पदेभ्यो धर्मः कर्तव्यत्वेन प्रतीयेत । किंचाश्रितत्वाप्रयोगस्येति प्रतीतौ हेत्वन्तरम् । प्रयोगो ह्यनुष्ठानं तत्पुरुषाश्रितं भवति । पुरुषप्रयत्नव्यतिरेकेण धर्मो न निष्पद्यते । आख्यातार्थश्च भावना उत्पादनात्मिका क्रिया पुरुषधर्मः । अतः स्वनिष्पत्त्यर्थं पुनः पुनः प्रयोगार्थं च पुरुषोऽपेक्ष्यते इति पुरुषार्थो धर्मस्तेभ्यः प्रतीयत इत्यर्थः । नामभ्यस्त्वौदासीन्येनेत्युक्तम् । एवमाख्यातस्य धर्मप्रत्यायकत्वे सिद्धे आख्यातविशेषो लिङ् तदर्थे प्रवर्तकत्वं वदन् चोदनालक्षणोऽर्थो धर्म इति पूर्वमुक्तं तत्र चोदनास्वरूपमाह'चोदना पुनरारम्भ'इति न त्विदमधिकरणान्तरं पूर्वशेषत्वात् विषयान्तरादर्शनाच । चोदना तु प्रथमतः प्रवृत्तिजनकत्वादारम्भ इत्यर्थः । पुनःशब्दो हि त्वर्थः । चोदना हि प्रवर्तकं वाक्यं तेन चाख्यातपदोक्ता भावना विधीयते, अयं मां प्रवर्तयतीति प्रेरणया नियोज्ये प्रवृत्तिरूपारम्भजननात् । तथाच विधेयत्वेन चोदनाविषयोर्थो धर्म इति । अतस्तस्य वाक्यस्य धर्मत्वज्ञापकत्वमतो भावार्थैः कर्मशब्दैर्यागो दानं होम इत्यादिभिः यथासिद्धत्वेन धर्मः प्रतिपाद्यते, यथा चाख्यातैर्विशेषणत्वेन यागेन भावयेदिति यजेतेत्यस्यार्थात् तथानेन वाक्येन विशेष्यत्वेन धर्मो न प्रतिपाद्यते, पुरुषविशेषणत्वेनैव धर्मप्रमितिः विशेषणं चौदासीनप्रच्युत्या आरम्भः पुरुषविशेषणं पुरुषधर्मस्तन्निष्ठ इति यावत् । आरम्भस्तद्योग्यो धर्म इति पुरुषविशेषणमारम्भ इति । स च निष्पादनार्थं प्रवृत्तिरित्येतावान् लिङर्थे विशेषः । न च प्रवर्तकवाक्यस्य धर्मत्वज्ञापकत्वे धर्माज्ञापकत्वादव्याप्तिर्लक्षणे शङ्क्या । आरम्भत्वेन धर्मप्रमितेरपि भवनात् । नन्वाख्यातत्वाविशेषेपि लिङर्थे विशेष इत्यत्र को हेतुरिति चेन्मैवं, यथाख्यातानां भावनालक्षणः क्रियारूपोर्थनिष्ठो व्यापारोऽभिधेयः तथा लिङोभिधानलक्षणः अङ्गैः कर्म भावयेत् कर्मणा फलं भावयेत् इति पूर्वापरीभावापन्नः शब्दनिष्ठो व्यापारोऽभिधेयः । तादृशेन शब्दनिष्ठव्यापारेण पुरुषः कर्मणि प्रवर्तत इति तस्य पुरुषे प्रेरणासंबन्ध इति । न चात्र विप्रतिपत्तव्यम् । लोके घटमानय इत्यादिशब्दश्रवणानन्तरभाविन्यां प्रवृत्तौ अयं मां प्रवर्तयतीति प्रतीतेस्तदनुरोधेन वेदेपि तथा कल्पनात् । न चैवं एषउ एव साधुकर्म कारयतीति श्रुत्युक्तमीश्वरस्य प्रवर्तकत्वं कथं घटते इति शङ्क्यम् । ईश्वरः प्रवर्तयतीति मतं ब्रह्मवादानुसारीति लौकिकानां दृष्टे विश्वस्तानामत्र संमुखीकरणार्थत्वात् । अतोऽस्मिन्नधिकरणे सिद्धावस्थापन्नधात्वर्थरूपक्रियात्मको धर्म उदासीनो नामपदेभ्यः प्रतीयते, साध्यावस्थापन्नधात्वर्थः क्रियात्मकः पुरुषापेक्षः पुरुषार्थरूप आख्यातेभ्यः । तत्रापि लिङंशेनारम्भतया । अतः पुरुषार्थतया तदारम्भतया च प्रतीतिजननादाख्यातपदानि भजन्ते प्रमितिजननेन मुख्यतां, नामपदानि तु सिद्धतद्बोधकतया तदुपकारकाणीति सिद्धम् । एवं व्युत्पादितं प्रपञ्चितं चेत्यर्थः । एवं सिद्ध एवेत्यादर्थकारिका विवृता । मन्त्राणामित्यादि विवरीतुं मन्त्रादीनामर्थवादत्वमपीति तदंशं विचारयन्ति किंचार्थेत्यादि । अर्थवादेत्यादि इदमधिकरणं पूर्वतन्त्रे प्रथमस्य द्वितीयपादेस्ति । तथेति अर्थवादानां सिद्धार्थ-

भाष्यप्रकाशः ।

नस्य प्रतारणरूपत्वात् । ननूपच्छन्दनवाक्यस्य फलांश एव प्रतारणरूपत्वं, न प्रवर्तनांश इति, न तत्रैवात्रापि दोष इति चेन्न । स्वर्गादिरूपस्य फलस्याप्रत्यक्षत्वेन विधिवाक्योक्तफलांशेऽपि तथात्व-प्रसङ्गात् । अत उपाख्यानानां मिथ्यार्थप्रतिपादकत्वकथनं ताथागतवासनावलम्बनमेव । नच—

'परोक्षवादो वेदोऽयं बालानामनुशासनम् ।
कर्ममोक्षाय कर्माणि विधत्ते ह्यगदं यथा' ॥ इति,
'फलश्रुतिरियं नृणां न श्रेयो रोचनं परम् ।
श्रेयोविवक्षया प्रोक्ता यथा भैषज्यरोचनम्' ॥

इतिपुराणवाक्यादुपच्छन्दनन्यायेन मिथ्यात्वमाद्रियत इति वाच्यम् । तत्रैवमर्थाभावात् । सर्वथा सन्मार्गविमुखानां नानाकामानां सहसा कामानिवृत्तिमालोच्य ताँस्ततो निवर्तयितुं स्वर्गादिरूपं तदभीष्टं सदेव नश्वरं फलं प्रदर्श्य तेन तेषां सन्मार्गवर्तित्वविधानेन कर्ममोक्षेऽधिकारिणः कर्तुं कुसुमरूपं तदिति तत्र मिथ्यात्वगन्धस्यापि वक्तुमशक्यत्वात् । 'फलश्रुतिं कुसुमितां न वेदज्ञा वदन्ति हि' । 'पुष्पेषु फलबुद्धयः' इत्यादिवाक्यैस्तथानिश्चयात् । अतस्तत्र विश्रान्त्या मायावादेन वा ये भ्रान्तास्तेषामेव वेदार्थे तथा भानं, न वेदवादिनामित्यर्थवादा अपि स्वार्थप्रमितिं जनयन्त एव स्तावका इति निश्चेयम् ।

किंच । अग्निहोत्रमिथुनदर्शनोत्तरं पठ्यते । 'तदुदिते सूर्येऽजुहोत्,' 'यस्यैवं विदुष उदिते सूर्येऽग्निहोत्रं जुह्वति प्रैव जायते' इति । उन्मानानन्तरं च पठ्यते,'य एवं विद्वानग्निहोत्रं जुहोति यावद-ग्निष्टोमेनोपाप्नोति तावदुपाप्नोति' इति । एताभ्यां च विद्वद्वाक्याभ्यामर्थवादश्रावितार्थविषयकज्ञानस्य फलाङ्गता बोध्यते । यदि स उपच्छन्दनाय मिथ्या श्रावितः स्यात् ततो विद्वद्वाक्यमपि मृषा स्यात् । एवमन्यत्रापि । ततश्च सर्वस्य वेदस्य प्रामाण्यमपि विलुप्येत । अतस्तदभावाय सत्यार्थ-कथनेनैवोपच्छन्दनमुपगन्तव्यम् । तेन श्रुतिपुराणयोरुभयोरपि सामञ्जस्यात् । ततः कर्मादि-

रश्मिः ।

बोधकता न तु प्रतारकतेत्यर्थः । फलांश इति कटूनि मधुरत्वरूपफलांश इत्यर्थः । ताथागतेत्यादि ताथागता बौद्धभेद इति प्रतिभाति । कर्ममोक्षायेति कर्ममोचन इत्यर्थः । तथेत्यादि पूर्वोक्तार्थाभावनिश्चयादित्यर्थः । तत्रेति स्तुतिमात्र इत्यर्थः । स्वार्थेत्यादि अत एव ग्रावाणः प्लवन्ते इत्यस्याः सेतुबन्धे संवादोपि संगच्छते । कचिद्देशे ग्राव्णां त्रयाणां पूजार्थं तरणेनागमनमितिश्रुतमपि । प्रैवेति प्रजायते एवेत्यर्थः । विद्वदित्यादि विद्वत्पदघटितवाक्याभ्यामित्यर्थः[1] यदि स इति अर्थवाद इत्यर्थः । श्रावितः स्यादिति 'वा शरि' इत्यस्य वैकल्पिकत्वात् पक्षे 'विसर्जनीयस्य सः' इति सत्वम् । विद्वद्वाक्यमिति परोक्षवादो वेदोयमितिवाक्यम् । अन्यत्रापीति गोअश्वा एव पशवो अन्ये त्वपशव, आदित्यो यूप, इत्यादावपि । त्रयः पशूनां[2] हस्तादानाः पुरुषो हस्ती मर्कटः पशुपतिः पशूनां चतुष्पदामुत च द्विपदामित्यादिश्रुत्यन्तरेऽन्येषां पुरुषादीनामपि पशुत्वश्रावणात् तद्विरोधेनापशवः इत्यत्र पशुपदगौण्या उचितत्वात् । एवमादित्यो यूप इत्यादिपूह्येयम् । सच्चिदानन्दरूपयूपस्य संस्कारेण चित्प्राधान्यात् । इदानींतनानां सर्ववेदादर्शित्वात् । ततश्चेति मिथ्यार्थकथनाचेत्यर्थः । तेन श्रुतीत्यादि 'परोक्षप्रिया इव हि देवाः' इतिश्रुतिः पुराणं तूक्तं तयोरित्यर्थः । एतावता प्रकृते किमायतमित्यपेक्षायामुपयोगं मन्त्राणां कर्मणामित्यत्र स्फुटयन्तः सिद्धमाहुः ततः कर्मे-

१. विद्वत्पदघटित इति. २. अप्रशस्ताः पशवः ।

**तस्मात् पूर्वमीमांसानभिज्ञाः क्रियापरत्वं सर्वस्यापि वेदस्य वदन्तो मूर्खा**

भाष्यप्रकाशः ।

दर्शनश्रुतीनां स्वार्थे प्रामाण्यमकलङ्कमिति पूर्वकाण्डस्यापि सिद्धार्थपरत्वमेव । नच जुहुयाद् यजेतेत्यादीनां साध्यकृतिबोधकपदानां व्याकोपः । सिद्धस्य कर्मणः प्रकारज्ञानपूर्वकं करणे फलसंबन्धं बोधयता विद्वद्वाक्येनातिदेशसिद्ध्या कृतेः सिद्धतुल्यत्वेन साध्यकृतिव्यञ्जकस्य सिद्धस्यैव धर्मस्य तत्र विवक्षिततया बालोपच्छन्दनायोक्ते साध्यार्थे तात्पर्याभावनिश्चयात् । एकत्र दृष्टः शास्त्रार्थोऽपरत्रापि तथेति न्यायेन विद्वद्वाक्यशून्यस्थलेऽपि तथाऽवसायाच्च । अतः पूर्वकाण्डस्य साध्यार्थपरत्वमयुक्तमेव । उत्तरकाण्डस्य तु ज्ञानादिप्रतिपादकत्वेऽपि ज्ञानोपासनादीनां विषयभूतब्रह्मणैव स्वरूपलाभेन ज्ञानादिभिर्ब्रह्मण एव प्राप्यतया फलत्वेन च तस्यैव शेषित्वम् । पूर्वकाण्डोक्तफलस्याप्येतस्यैवानन्दस्यान्यानीतिश्रुतेस्तदंशत्वाच्च । कर्म फलार्थत्वादितिन्यायात् । इदं फलत्वमप्युपाख्यानगम्यमिति । तदेतदुक्तं नहीत्यादिना । सिद्धमाहुः तस्मादित्यादि । यस्मादुक्तरीत्या विचारे न सर्वस्याम्नायस्य क्रियार्थत्वं, न वा पूर्वकाण्डस्य साध्यार्थपरत्वं तस्मात् ते तथेति तद्वाक्येन शास्त्रयोनित्वव्याकुलीभावाभावात् पूर्वपक्षोऽसंगत

रश्मिः ।

इत्यादि । तत इति अर्थवादानां स्वार्थप्रमितिजनयतामेव स्तावकत्वादित्यर्थः । इतीति इति हेतोस्तत्र साध्यस्य दर्शनायोगेन सिद्धस्य कर्मणो दर्शनात्तथेत्यर्थः । कृतिश्चेत्यादि भाष्यं विवरीतु माहुः न चेत्यादि । साध्यकृतीति पुरुषनिष्ठा शाब्दीभावनासाध्यार्थीभावनेत्यर्थः । अतिदेशेत्यादि ।

अन्यत्रैव प्रतीतायाः कृत्स्नायाः धर्मसन्ततेः ।
अन्यत्र कार्यतः प्राप्तिरतिदेशोऽभिधीयते ॥
प्राकृतात्कर्मणो यस्मात्तत्समानेषु कर्मसु ।
धर्मप्रवेशो येन स्यात् सोऽतिदेश इति स्मृतः ॥

इति द्विधालक्षितातिदेशस्यान्यत्राग्निहोत्रे प्रतीतायाः प्रकारज्ञानपूर्वककरणरूपायाः धर्मसन्ततेरन्यत्र जुहुयात् सोमेन यजेत इत्यादावतीन्द्रिययागादौ कार्यतः फलसंबन्धार्थं प्राप्तेः सिद्धज्ञानश्वरस्य फलासंबन्धादाख्यातबोधितकृतेः सिद्धतुल्यत्वेनेत्यर्थः । 'यज्ञो वै विष्णुः' इतिश्रुतेः सिद्धतुल्यत्वाभावे तया विष्णुद्रव्यसंबन्धरूपातीन्द्रिययागोऽभिव्यक्तो न स्यात् । 'स्वयमेवात्मनात्मानम्' इतिवाक्यविषयत्वात् । अतिदेशे विद्वद्वाक्यं प्रमाणमुक्तं 'परोक्षवादो वेदोयम्' इत्यादि । सिद्धस्येति अतीन्द्रियस्य । तत्रेति जुहुयात् यजेत इत्यादावित्यर्थः । किमत्रातिदेशकमित्यपेक्षायामाहुः एकत्रेत्यादि तथाच पूर्वत्रापि न्यायेनातिदिश्यत इत्यर्थः । अत इति फलसंबन्धस्याहेयत्वादित्यर्थः । तस्यैवेति ब्रह्मण एवेत्यर्थः । पञ्चप्रकृतियागानामात्मसुखमेव फलं न स्वर्गलोकाख्यं 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' इति श्रुतेः । इदं यथा तथा प्रतिपादितं सर्वनिर्णये इति तद्दिक्कृत्याहुः पूर्वकाण्ड इत्यादि । कर्मेत्यादि 'कर्मण्यपि जैमिनिः फलार्थत्वात्' इति सूत्रस्यार्थकथनमिदम् । एतच्च तृतीयाध्याये चिन्तितम् । इदमित्यादि । आनन्दस्य फलत्वमिदमुपनिषद्गम्यमिति तन्न्यायेन न मिथ्यार्थत्वमुपाख्यानानामित्यर्थः । तदेतदिति कारिकाव्याख्यानव्याख्येयमित्यर्थः । ते इति पूर्वमीमांसाभिज्ञा इत्यर्थः । भाष्ये । मूर्खा इति बन्धहेतौ प्रवृत्तत्वेन बन्धाज्ञानान्मूर्खा इत्यर्थः । 'पण्डितो

१. कृतेश्चेति पाठः २. धर्मोपदेशो येन इति पाठः ।

एव । उत्तरवादिनोऽपि पूर्वाज्ञानमङ्गीकृत्य पूर्वानुपयोगित्वं ब्रह्मज्ञानस्य वदन्तो वेदानभिज्ञा एव । 'यदेव विद्यया करोति श्रद्धयोपनिषदा वा तदेव वीर्यवत्तरं भवति' इत्युपनिषज्ज्ञानस्य श्रुतिसिद्धैव कारणता ।

---

भाष्यप्रकाशः ।

इत्यर्थः । एवं पूर्वपक्षासंगतिमुद्भाव्य सिद्धान्तासंगतिमुद्भाटयन्तः पूर्वं शंकरमतस्यासंगतत्वमाहुः उत्तरेत्यादि । अनभिज्ञा इत्यन्तं ग्रहणकभाष्यम् । तत्रायमर्थः । सर्वस्य वेदस्य क्रियापरत्वमभिसंधाय शुद्धबुद्धोदासीनभूतब्रह्माभिधायके वेदान्ते भागे प्रयोजनशून्यतयाऽनर्थक्यं प्रत्यक्षादिसमानविषयतया लौकिकवाक्यवदनुवादकतायामनपेक्षप्रामाण्यभङ्गं च दर्शयतां स्वाध्यायविधिगृहीतत्वेन तस्सार्थक्याय दूरतरयज्ञादिकर्मापेक्षितकर्तृदेवतादिप्रतिपादकत्वेन क्रियार्थत्वं वा, सन्निहितोपासनादिक्रियापेक्षितविषयप्रतिपादकत्वेन तादर्थ्यं वाभिमन्यमानानां पूर्वेषां वादिनां तदनुसारिणां च वेदान्ताज्ञानमङ्गीकृत्य शुद्धबुद्धोदासीनस्य ब्रह्मणः प्रमाणान्तरानधिगतत्वादितरनैरपेक्ष्येण तद्बोधकतया प्रामाण्यं हेयोपादेयशून्यब्रह्मात्मावगमादेवावस्तुभूताविद्यासमारोपितसकलक्लेशनिवर्तकतया सार्थक्यं च वेदान्तेषु प्रदर्श्य तत्सिद्धस्य ब्रह्मज्ञानस्य यज्ञानुपयोगित्वं वदन्तो वेदज्ञानरहिता इत्यर्थः । नन्वेवं युक्तियुक्तमर्थं वदन्तः कथं तथेत्याकाङ्क्षायां छान्दोग्यारम्भदेशस्थश्रुत्युपन्यासेन तदुक्तं दूषयन्तो विभजन्ते यदेवेत्यादि प्रवृत्तिरित्यन्तम् । कारणतेति सहकारकारणता । अस्यां श्रुतौ विद्यापदेनात्मभिदाबाधकं ज्ञानम् । श्रद्धापदेन वेदोक्ते आस्तिक्यबुद्धिः । उपनिषत्पदेन परमात्मस्वरूपविषयकं रहस्यज्ञानमुच्यते । तेन तत्सयुक्तो यत् कर्म वेदोक्तं करोति तदेव कर्म वीर्यवत्तरमनश्वरफलं मोक्षपर्यवसायि भवतीत्यर्थः । यत्तु केचित् विद्या विज्ञानं, श्रद्धा कर्मश्रद्धा, उपनिषद् योग इति व्याख्यातम् । तन्न । विद्यापदस्य विज्ञाने उपनिषत्पदस्य योगे च शक्त्यदर्शनात् । 'विद्याऽऽत्मनि भिदाबाधः' इत्येकादशस्कन्धवाक्येन, उपनिषद् रहस्यविद्येति शंकराचार्यविद्यारण्यादिव्याख्यानेन चोक्तार्थ एव

रश्मिः ।

बन्धमोक्षवित्' इतिवाक्यात् । पूर्वाज्ञानमिति पूर्वं कर्म, अज्ञानमविद्या, पूर्वायामज्ञानाख्यं कर्म वा तत्पूर्वाज्ञानं पूर्वस्य कर्मणः अनुपयोगोस्यास्तीति अनुपयोगि तस्य भावस्तत्त्वम् । प्रकृते । ग्रहणकेत्यादि परमतीयत्वाद् ग्रहणकभाष्यमित्यर्थः । द्वितीयाध्याये 'स्मरन्ति च' इति सूत्रे स्मरन्ति च ऋषय इति भाष्यवत् । दूषणार्थं ग्रहणाद् ग्रहणकम् । स्वार्थे कः । गृह्यते परमते सूत्रापेक्षितं येन तद्ग्रहणकं न तु व्याख्यानं 'करणाधिकरणयोश्च' इतिसूत्रेण ल्युट् । कस्य सूत्रांशस्येदं ग्रहणमिति ग्रहणकम् । 'अज्ञाते' इतिसूत्रेण कप्रत्ययो वा । प्रत्यक्षादीत्यादि अग्निर्हिमस्य भेषजमिति वाक्यमुदाहरणम् । स्वाध्यायेत्यादि वेदान्तानामित्यादिर्बोध्यः । वेदानामर्थे शङ्काराहित्यांशे वेदान्तानां स्वाध्यायविधिगृहीतत्वं बोध्यम् । तस्येत्यादि वेदान्तसाफल्यायेत्यर्थः । काण्डभेदादाहुः दूरतरेति । संनिहितेति 'आत्मेत्येवोपासीत' इत्यादीनामेकवाक्योदितेत्यर्थः । आत्मानं लोकमुपासीतेति । तादर्थ्यमिति क्रियार्थत्वमित्यर्थः । पूर्वेषामिति मीमांसकानामित्यर्थः । ननु यागः क्रिया तत्र च कारकं कारणमिति कथमेवमित्यत आहुः सहकारीत्यादि । कारणं तु लोकप्रक्रमपठितप्रयाजादिकं तदाहुः अस्यामिति । भवतीति । न च 'यदेव विद्ययेति हि' इतिसूत्रभाष्यविरोधः । एतद्भाष्यास्वरसेनैव तत्र पक्षान्तरोक्ते-

न च बाधितत्वात् त्यज्यत इति वाच्यम् । ब्रह्मात्मज्ञानवत एव वशिष्ठादे-र्यज्ञाधिकारात् । नचैवं किमनेनेति वाच्यम् । इत्थंभूतत्वाद्यज्ञस्य ।

---

भाष्यप्रकाशः ।

श्रुतिनिश्चयाच्च । तथाच परमात्मरहस्यज्ञानात्मकब्रह्मज्ञानस्य श्रुतिसिद्धकारणताया अज्ञानाद् वेदानभिज्ञा इत्यर्थः । ननु सिद्धे फले साधनान्तरस्यानुपयोगेन, उत्कृष्टस्य निकृष्टशेषताया-श्चासंगतत्वेन तस्याः श्रुतिसिद्धाया अनादराज्ञानमिज्ञत्वमिति समाधिं दूषयन्ति नचेत्यादि । त्यज्यत इति नाद्रियते । अधिकारपदेनात्र मुख्याधिकारो विवक्षितः । तथाच यदि ज्ञानमात्रे-णाविद्यानिवृत्त्यादि स्याद् वशिष्ठादिर्ज्ञानी यागादिकं न कुर्यात् । यदि स ज्ञानित्वेन भवद्-भिमतो न स्यात् तद्वचनानि नाद्रियेरन् । अतः पुराणादिप्रसिद्धैर्भवदादृतैरपि यागादिकरणेन तत्रादरवद्वचनात् तद्विरोधेन ज्ञानस्य सहकारितानादरे सुतरामनभिज्ञतेत्यर्थः । ननूपनिषदात्मक-ज्ञानपूर्वकेण वशिष्ठाद्यधिकारेण वेदान्तविचारे किं सिध्यति, येनैवमाग्रहः क्रियत इत्याकाङ्क्षाया-माहुः न चैवमित्यादि । अयमाशयः । 'यज्ञो वै विष्णुः' इति श्रुतेर्यज्ञोऽप्येकं ब्रह्मण एव क्रियात्मकं रूपम् । न च तत्राधिष्ठातृत्वमेव बोध्यते, न तु क्रियात्मकत्वमपीति शङ्क्यम् । 'धर्मो यस्यां मदात्मकः,' 'मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्यते ह्यहम्, एतावान् सर्ववेदार्थः' इत्याद्येकादशस्कन्धीयभगवद्वाक्यैस्तथात्वस्यापि निश्चयात् । स च द्रव्यदेवतायजमानयज्ञावय-वादिभिरभिव्यज्यते । स चेल्लौकिकैरेवाभिव्यज्येत तदा प्रोक्षणादिसंस्कारा अवहननादीनां च नियमा मुधैव स्युः । अतो वेदोक्तफलसिद्ध्यर्थं यथा ते तथा मोक्षफलार्थमुपनिषदप्युपयुज्यते । तदभावे तु साङ्गस्य यज्ञस्य लौकिकेष्ववयवेष्वध्यसमानत्वात् तदङ्गानां लौकिकत्वे तैराधि-दैविकयज्ञस्वरूपानाविर्भावात् । उपनिषदा त्ववगते सर्वस्य ब्रह्मत्वे ब्रह्मभूतैरङ्गैराधिदैविकयज्ञा-

रश्मिः ।

स्यात् । शक्तीत्यादि तेन विद्या उद्गीथाद्यंशमात्रविषया, श्रद्धा तात्पर्यं, उपनिषद् देवताविषयोपासनेति विश्वेश्वरव्याख्यानमपि परास्तम् । मात्रशब्दपरित्यागे तु युक्तम् । यदेव विद्ययेत्यादिभाष्यविरोधा-भावात्, तथास्तिक्यबुद्धिः श्रद्धेति बहुस्थलेषु प्रसिद्धेः । तथैवोपनिषच्छब्दरूपा न तूपासनारूपार्थ-रूपेत्यपि प्रसिद्धमिति च । उत्कृष्टस्येति आत्मज्ञानस्येत्यर्थः । तस्या इति कारणताया इत्यर्थः । समाधिमित्यादि बाधितत्वात्त्यज्यत इति समाधिमिति न च वाच्यमित्यनेन दूषयन्तीत्यर्थः । मुख्याधिकार इति । गौणमुख्यन्यायादितिभावः । तेन काम्यकर्माधिकाराज्ज्ञानात् पूर्वं न विरुध्यन्त इति बोध्यम् । नाद्रियेरन्निति द्वितीयाध्याये 'स्मरन्ति च' इति सूत्रे स्मरन्ति च व्यासादयः इति नाद्रियेरन्नित्यर्थः । तत्रेति श्रुतिसिद्धकारणतायामित्यर्थः । उपनिषदात्मकज्ञानेति अर्थे ज्ञान उपनिषच्छब्दः आत्मज्ञाग्रन्थत्वात् । तत्रेति विष्णावित्यर्थः । तथात्वस्येति यज्ञात्मकत्वस्येत्यर्थः । अपि च अधिष्ठातृत्वबोधने लक्षणाप्यापाद्येत । स च द्रव्येति । यज्ञावयवो यज्ञप्रचारहेतुः । यथा त इति । यथा प्रोक्षणादिसंस्कारा इत्यर्थः । तदभाव इति 'तं त्वौपनिषदं पुरुषं पृच्छामि' इतिश्रुते-रुपनिषच्छब्दरूपकारणाभावे । यज्ञस्यावयविनः लौकिकेष्ववयवेष्वङ्गेषु । अध्यवसमानस्येति कारणा-भावाद्यज्ञाविर्भावाभावे यज्ञ इति प्रतीतिर्भ्रम इत्यध्यवसमानत्वं तस्मात् । अत्र हेतुमाहुः तदङ्गाना-

किंच । कर्मफलवद् ब्रह्मफलस्यापि लौकिकत्वात् । 'य एवं वेद प्रतितिष्ठति, अन्नवानन्नादो भवति महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन महान् कीर्त्या' इति । अत्यन्ताविद्यावतो यज्ञानधिकारात् तन्निषेधार्थं ज्ञानमुपयुज्यते ।

---

भाष्यप्रकाशः ।

विर्भावः । तथा तादृशां यज्ञे यज्ञाधिष्ठातुर्भगवतोऽप्याविर्भावः । यथा विश्वसृजां सहस्रसमे हिरण्मयशकुनिरूपस्य ब्रह्मणस्तथैव पृथुनाभिप्रभृतीनां यागेषु रूपान्तरेण । तदभावादेव नेतरेषां यागेषु तदाविर्भावः । तथा यागस्य विद्योपयोग आचार्यस्यापि संमत इति तु, सर्वापेक्षा च यज्ञादिश्रुतेरित्यादिसूत्रप्रणयनादेव गम्यते । नच मोक्षस्य जन्यत्वम् । ब्रह्मण आप्यत्वस्य वक्ष्यमाणत्वात् । अतो मुमुक्षूणां यज्ञस्यावश्यकत्वात् तत्रेत्थंभूतमधिकारं बोधयितुमयमाग्रह इति । तदेतदुक्तम् । ननु मुमुक्षूणां यज्ञा नावश्यकाः । कर्मफलस्य लौकिकत्वात् । अधिकारिभेदेऽपि मनुष्यादिब्रह्मान्तानां शरीरवतामेव तद्भोगकथनेन तथानिश्चयात् । नच किं तेनेति वाच्यम् । 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' इति श्रुत्या दुःखसंभेदकथनेन तस्य संसाररूपत्वबोधनात् । अतो मुमुक्षूणां शरीरसंबन्धस्यानाकाङ्क्षितत्वाद् यज्ञानां कारणता श्रुतिसिद्धापि नाद्रियत इत्याशङ्कायामाहुः किंच, कर्मेत्यादि । ब्रह्मफलस्येति ब्रह्मज्ञानफलस्य । श्रुतिस्तु तैत्तिरीयाणां भृगूपनिषदि भार्गव्या विद्यायाः समाप्तिस्था । तत्र, 'सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिता य एवं वेद प्रतितिष्ठति' इति । अत्र परमे व्योम्नि

रश्मिः ।

मित्यादि । यज्ञाधिष्ठातुरिति 'यज्ञेन यज्ञमयजन्त देवाः' इत्यत्र द्वितीयान्तयज्ञपदोक्ताया यज्ञाधिदैविकयज्ञाद्व्यतिरिक्तातीन्द्रिययज्ञाधिष्ठातुः । आदिना आधिदैविकयज्ञेन समुच्चयः । विश्वसृजामिति 'विश्वसृजः प्रथमाः सत्रमासत' इतिश्रुतेः । हिरण्मयेत्यादि 'ततो ह जज्ञे भुवनस्य गोपाः हिरण्मयः शकुनिर्ब्रह्मनाम' इतिश्रुतेराविर्भाव इत्यर्थः । पृथुनाभीत्यादि एतच्च श्रीभागवते स्फुटम् । आधुनिकानामधिष्ठात्राधिदैविकानाविर्भावे हेतुमाहुः तदभावादेवेति उपनिषच्छन्दरूपकारणाभावादेव नाधिष्ठात्राधिदैविकाविर्भावः । आचार्यस्येति व्यासस्य । जन्यत्वमिति जन्यत्वात्साध्यत्वं घटादिवत् सिद्धत्वेन जन्याप्यविकारिसंस्कार्येषु कर्मसु मोक्षरूपब्रह्मणः आप्यकर्मत्वेन जन्यकर्मत्वाभावान्न जन्यत्वमित्याहुः आप्यत्वस्येति 'ब्रह्मविदाप्नोति परम्' इत्यादौ परमित्यादेः क्रियाजन्यफलशालित्वरूपाप्यकर्मत्वादित्यर्थः । वक्ष्यमाणत्वादिति अधिकरणसमाप्ताविवत्यर्थः । इत्थंभूतत्वादिति भाष्यं विवृण्वन्तिस्म तत्रेत्थमिति । तदेतदुक्तमिति अयमाग्रह इत्यारभ्य व्याख्यातं न चैवं किमनेनेतिवाच्यम् इत्थंभूतत्वाद्यज्ञस्येति भाष्येणोक्तमित्यर्थः । शरीरवतामिति 'अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः' इति 'विदेहं सन्तमात्मानं सुखदुःखे न स्पृशतः' इति वदन्त्याः शरीरवतामेव कर्मफलयोः सुखदुःखयोर्भोगकथनेनेत्यर्थः । किं तेनेति शरीरवतामेव तद्भोगकथनेन किं स्यादिति प्रश्नः । दुःखेत्यादि दुःखमिश्रीभावकथनेनेत्यर्थः । ब्रह्मज्ञानेति ब्रह्म च तज्ज्ञानं चेति कर्मधारयः, ब्रह्मज्ञानं च तत्फलं च ब्रह्मज्ञानफलं, तस्येत्यर्थः । परमे व्योमन्निति 'सुपां सुलुक्' इति सप्तम्या लुक् । परमव्योम्नीति परो मीयते ज्ञायतेऽनेनेति परमं तस्मिन् । आकाशशरीरं ब्रह्मेति श्रुतेः । श्रुतौ एकतिङ्वाक्यमिति प्रतिवाक्यमाश्रयभेद इत्याशयेनाहुः

**नच देहाध्यासस्य कारणत्वम् । ब्रह्मार्पणं ब्रह्महविरित्यादिस्मृतेः । तस्मादन्योन्योपयोगित्वे न कोऽपि दोषः ।**

भाष्यप्रकाशः ।

प्रतिष्ठाकथनेनास्या विद्याया अत्युत्कृष्टत्वं दुर्लभत्वं च बोध्यते । विद्यापदोक्त्या फलेषूपासनाफलत्वभ्रमो निवार्यते । तत्तत्फलकथनमुखेन गृहस्थाद्यधिकारश्च बोध्यते । तेनायमर्थः । कर्मणो विद्यायाश्च फलस्येतरेतरवैलक्षण्यं प्रदर्श्य कर्मफलस्य शरीरिभोग्यतया संसारात्मकत्वात् तादृशफलजनकत्वेन तस्य विद्याजनकत्वमनादृत्य यदि कर्म त्यज्यते, तदा तस्य दोषस्य ब्रह्मविद्यायामपि तौल्यात् तस्या अपि त्याज्यत्वापत्तिः । अथ यद्यधिकारजाघन्यात् त्यज्यते, तदा तूक्तश्रुत्या विद्यासाहित्यबोधनेन जाघन्यस्य निवारितत्वान्न कर्मणस्त्याग उचितः । यदि च विद्यावत्त्वेऽपि देहाध्यासस्यानिवृत्तत्वात् तस्यैव कर्मकारणत्वमिति विभाव्यते, तदा तु ब्रह्मार्पणमित्यादिस्मृत्या, 'य एवास्मि स सन् यजे' इत्यादिश्रुत्या चाध्यासस्य कारणतानिवारणात् तासामेव विरोध इति वेदानभिज्ञत्वमनिवार्यमेवेत्यर्थः । एवं विद्यास्वातन्त्र्यवादिशांकरमतमपास्यान्येषामेकदेशिनां संग्रहायाहुः तस्मादित्यादि । वेदानभिज्ञत्वस्य विद्यास्वातन्त्र्यवादिन्येव पर्यवसानात् कर्मणां विद्याकारणत्वस्योपनिषदश्च कर्मसहकारित्वस्य श्रुत्यैव बोधनान्मूर्खोद्भावित इतरेतराश्रयदोषोऽपि व्यक्तिभेदादेव निवृत्तः । नच छान्दोग्य औषस्त्य अविदुषामपि

रश्मिः ।

दुर्लभत्वमिति भक्त्येकलभ्यत्वात् शुद्धभावप्रसादाच्च । **उपासनाफलत्वभ्रम** इति ।

'उपास्तिं मन्यन्ते मधुमथनभक्तिं निजकृता-
र्थतां तत्रोपास्यं परमपुरुषं चापि सुविदः ।
द्वयोः सारूप्यात्तद्भ्रमहतिकृते मानसगतं
मुदा भक्तेर्हंसं प्रकटमकरोद्विट्ठलकृती ॥' इति भक्तिहंसात् ।

**गृहस्थादीत्यादि** प्रतिष्ठान्नवत्त्वान्नादत्वप्रजापशुवत्त्वानि गृहस्थाधिकारं बोधयन्ति ब्रह्मवर्चसं ब्रह्मचार्यधिकारं, कीर्तिस्तु 'मोक्षकाम उदारधीः' इतिवाक्यात् वानप्रस्थसंन्यासाधिकारमिति विभागः। **प्रदर्श्येति** तयोश्चोदनालक्षणयोरर्थानर्थयोर्धर्माधर्मयोः फले प्रत्यक्षे सुखदुःखे शरीरवाङ्मनोभिरेवोपभुज्यमाने विषयेन्द्रियसंयोगजन्ये ब्रह्मादिस्थावरान्तेषु प्रसिद्धे । अतएवानुष्ठेयफलविलक्षणं मोक्षाख्यमशरीरत्वं नित्यमिति भाष्येण प्रदर्श्येत्यर्थः । **तस्येति** शरीरभोग्यस्य प्रतिष्ठादेः फलस्य संसारात्मकस्य यज्जनकत्वं तस्येत्यर्थः । अत्यन्तेत्यादिभाष्यं विवरीतुमाहुः **अथ यदीत्यादि** । विवृण्वन्ति **तदा त्वित्यादि** । तदा त्वत्यन्ताविद्यावतो यज्ञानधिकारमालोच्य ज्ञानरहितस्याधिकारनिषेधार्थं यज्ञे ज्ञानमुपयुज्यते इति वदन्त्या उक्तश्रुत्या तथेत्यर्थः । **न च देहेत्यादि** भाष्यं विवृण्वन्ति **यदि चेत्यादि** । **य एवेत्यादि** यः प्रकटश्चिदंशोऽस्मि स एव सन् यजे यागं कुर्वे इत्यर्थः। **व्यक्तिभेदादिति** अयमर्थः। न वयं कर्मस्वरूपज्ञाने ब्रह्मज्ञानस्य कारणत्वं ब्रूमः । न वा ज्ञानस्वरूपज्ञाने कर्मस्वरूपज्ञानस्य येन हलन्त्यमिति न्यायेनान्योन्याश्रयो दोषाय भवेत् किंतु ब्रह्मज्ञाने यज्ञानां कारणत्वं यज्ञे चात्मभिदाबाधकं ज्ञानं जीवस्वरूपज्ञानं सहकारिकारणमिति विषयभेदभिन्नज्ञानव्यक्तिभेदादित्यर्थः। न च जिज्ञासाधिकरणस्थकिंचोपनिषदेत्यादिभाष्येणास्यार्थस्योक्तेः पुनरुक्तिः शङ्क्या तस्य ब्रह्मजिज्ञासायाः आवश्यकत्वसाधनपरत्वात् । अत्र तूत्तरवादिदूषणाय तदुपक्षेपस्यावश्यकत्वाच्च । **औषस्त्येति** तृतीयप्रपाठक इत्यर्थः । चक्रस्यापत्यमुष-

१. प्रदर्श्य इति प्रकाशे ।

क्रियाज्ञानयोः स्वातन्त्र्येण पुरुषार्थसिद्ध्यर्थं भिन्नतया शास्त्रप्रवृत्तिः।

किंच। वेदान्तवाक्यानामभिज्ञाच्छास्त्रे समन्वय एव प्रतिपाद्यते संदेहनिराकरणद्वारा। तत् कथं सिद्धवद्धेतुत्वेन निर्देशः। अग्रिमवैयर्थ्यं च स्यात्।

---

भाष्यप्रकाशः।

यजमानादीनां श्रावणात् कर्मणामविद्वदधिकारकत्वमेवेति शङ्क्यम्। तत्राप्यविद्वत्तायां मूर्धविपातश्रावणेनात्यन्ताविदुषामनधिकारस्यैव बोधनात्। अतः पूर्वसूत्रभाष्य उक्ते ज्ञानकर्मसमुच्चये न कोऽपि दोषः। तेन मायावादिव्यतिरिक्ता अस्मिन्नंशे सर्वेऽप्येकदेशिनो वेदाविरुद्धवादिन इत्यर्थः। नन्वेवं परस्परसाकाङ्क्षत्वे ऐकशास्त्र्यमेव स्यान्न तु शास्त्रभेदः। ततश्च वेदमनूच्येत्यादिपृथक्समाप्तिश्रावणव्याकोप इति शङ्कायामाहुः क्रियेत्यादि। तथा च त्रिवर्गसाधन उभयोरपि स्वातन्त्र्यात् सिद्धे शास्त्रभेदे पूर्वोक्तदोषस्य न लेश इत्यर्थः।

एवं वेदानभिज्ञत्वं शांकराणां बोधयित्वा सूत्रार्थानभिज्ञत्वं सर्वेषामेव बोधयन्ति किंच वेदान्तेत्यादि। अयमर्थः। शंकराचार्यैर्हि, सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिलयकारणं ब्रह्म वेदान्तशास्त्रादवगम्यत इति प्रतिज्ञाय, समन्वयादिति हेतुः सर्वेषु हि वेदान्तेषु वाक्यानि तात्पर्येणैतस्यार्थस्य प्रतिपादकत्वेन समनुगतानीत्येवं व्याख्यातः। तत्रोक्तधर्मवत्त्वसाध्यकं ब्रह्मपक्षकं वाक्यसमनुगतत्वहेतुकमनुमानमभिसंहितं प्रतीयते।

भास्कराचार्यैस्तु ब्रह्मस्वरूपं शास्त्रमवबोधयति, न केवलं कार्यमेव। कुतः। समन्वयात्। समन्वितानि हि ब्रह्मस्वरूपप्रतिपादनपरत्वेन सृष्टिप्रकरणगतानि वाक्यानीत्येवं हेतुर्व्याख्यातः। तेन तन्मते शास्त्रपक्षकम्। तथैव शैवस्य च मते।

रामानुजाचार्यास्तु समन्वयः सम्यगन्वयः पुरुषार्थतयाऽन्वय इति हेतोरर्थमुक्त्वा परम-

रश्मिः।

स्तिर्नाम तत्संबन्धिनीत्यर्थात्। यजमानादीनामिति। आदिशब्देन प्रस्तोता। श्रावणादिति 'मा भवानवोचत् कतमा सा देवतेति प्राण इति होवाच' इत्यादिश्रुतिभिस्तथेत्यर्थः। कतमा सेतिशब्देन यजमानस्याविद्वत्त्वम्। मूर्धेत्यादि 'स ह प्रस्तोतारमुवाच प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेद्विद्वान् प्रस्तोष्यति मूर्धा ते विपतिष्यति' इत्यादिना तथेत्यर्थः। इदानीं जिज्ञासाधिकरणे उक्तोऽप्ययमर्थो नोपपादितोऽत्रोपपादित इति न पुनरुक्तिरिति वदन्ति अतः पूर्वेत्यादि। दोष इति अन्योन्याश्रयदोषः। अन्योन्याश्रये गते पूर्वोक्तमितरदोषनिवारणं सूपपन्नमिति। न कोपीति दोषविशेषणम्। एकदेशिन इति आचार्यमतस्य सर्वोत्तमस्य सर्वोत्तमत्वे ज्ञाते न्यूनाधिकभावेनैकदेशित्वं बोध्यम्। तेन भेदाभेदमते भेदोधिकः। भेदमतयोर्नित्यक्रीडास्थ इवार्थे भेदे प्रापञ्चिकत्वमपीत्याधिक्यम्। विशिष्टाद्वैतयोर्वैशिष्ट्यस्य पदार्थान्तरत्वादाधिक्यम्। एवमविभागाद्वैतेऽपि वैपरीत्यम्। पूर्वं यदेकमव्यक्तमनन्तरूपं पश्चादेकमेवेति नानावृक्षरसानामेकत्वमनुवत्। त्रिवर्गेति। फलयोस्त्वङ्गाङ्गिभाव इतिभावः। पूर्वोक्तदोषस्येति आभासोक्तकशांकररूपस्य। उक्तधर्मेत्यादि सर्वज्ञशक्तिमत्त्वसाध्यकमित्यर्थः। ब्रह्म सर्वशक्तिमत् वाक्यसमनुगतत्वात् कम्बुग्रीवादिमान् घट इतिवाक्यसमनुगतघटवदित्यनुमानम्। कार्यमेवेति धर्ममात्रमित्यर्थः। शास्त्रेति शास्त्रं ब्रह्मस्वरूपप्रतिपादकं सृष्टिप्रतिपादकवाक्यानां ब्रह्मस्वरूपप्रतिपादनपरत्वेन समन्वयात्। हेतुः शोभितोऽग्रे वाच्यः। एवं रामानुजाचार्यमतेऽपि ज्ञेयम्। शैवस्य चेति

**अथ प्रतिज्ञागर्भितहेतुत्वम् । अनुपयोगात् । गौणमुख्यभावे परं विवादः ।**

भाष्यप्रकाशः ।

पुरुषार्थभूतज्ञानबधिकातिशयानन्दस्वरूपस्य ब्रह्मणोऽभिधेयतयान्वयाच्छास्त्रप्रमाणकत्वं सिद्धमत्येवेति व्याचक्रुः । तत्र शांकरे व्याख्याने यथावस्थिते हेतोः स्वरूपासिद्धत्वम् । अतस्तत्रापि शास्त्रपक्षकमेवानुमानं वक्तव्यम् । ततश्च वेदान्तशास्त्रं ब्रह्मस्वरूपस्य प्रतिपादकं, तद्वाक्यानामेतदर्थप्रतिपादने समनुगतत्वात् यदीयं वाक्यं यदर्थप्रतिपादने तात्पर्येण समनुगतम्, तच्छास्त्रं तस्यार्थस्य प्रतिपादकम् । क्रियार्थप्रतिपादकपूर्वकाण्डवदित्यनुमानं मतत्रयेऽपि कर्मवादिवारणाय प्रयुक्तमिति फलति । तत्रेदं विवेचनीयम् । किमयं हेतुरविप्रतिपन्नः सिद्ध उत साध्यः । तत्राविप्रतिपन्न इति तु न वक्तुं शक्यम् । तथा सति पूर्वपक्षस्यैवानुत्थानप्रसङ्गात् । नापि सिद्धः । अधिकरणस्य संदेहनिराकरणद्वारा तस्यैव प्रतिपाद्यत्वात् । सिद्धत्वेऽग्रिमस्य समन्वयसाधकग्रन्थस्य वैयर्थ्यप्रसङ्गाच्च । अतस्तस्य सिद्धत्वनिर्देशो न युक्त इति । अथ वुद्धिस्थं यथा प्रतिज्ञायते, तथा वुद्धिस्थमत्र हेतुक्रियत इति समन्वयसाधनप्रतिज्ञागर्भितस्य हेतोः सिद्धत्वनिर्देशेऽपि न दोष इति विभाव्यते तदाप्ययुक्तमित्याहुः नचेत्यादि । भवद्भिर्हि भाट्टप्राभाकरयोस्तदनुसारिण एकदेशिनश्च निराकरणायायं हेतुरेवं व्याख्यायते । तत्र प्रतिज्ञाया वुद्धिस्थत्वेन वादिनिग्रहवेलायां साधनस्याभावेन हेतोः साध्यसमतया तदनिग्राहकत्वादनुपयोगः । किं च । तैरपि वेदान्तानां ब्रह्मप्रतिपादकता न स्वीक्रियते इति तु न । किं तु गौणत्वेन । तथा सति गौणमुख्यभाव एव विवादो न तु प्रतिपादकत्व इति विवक्षितासाधकत्वादप्यनुपयोगः । अथ सम्यक्त्वकृथो मुख्यतां निवेश्य ब्रह्मणो मुख्यतया प्रतिपादनेऽनुगतत्वादित्येवं विभाव्यते, तदापि शांकराणां शैवानां च मतमयुक्तमित्याहुः

रश्मिः ।

चकारेण माध्वस्य । स्वरूपासिद्धत्वमिति समनुगतत्वस्य शास्त्रनिष्ठतया पक्षधर्मत्वाभावात्तथेत्यर्थः । तत्रापीति शांकरमतेपीत्यर्थः । मतत्रय इति । प्रसिद्धोपात्ताभिप्रायोऽयं ग्रन्थः, कर्मवादिवारणं त्रयाणामेव वा । अयमिति समन्वयादिति हेतुः । अविप्रतिपन्न इति निःसंदिग्ध इत्यर्थः । तथासतीति ब्रह्मप्रतिपादने निःसंदिग्धत्वे सति साध्यार्थपर एव वेदो न सिद्धार्थपर इति पूर्वपक्षस्य ब्रह्मणि समन्वयनिःसंदिग्धत्वेनानुत्थानप्रसङ्गादित्यर्थः । वेदान्तवाक्यानामित्यादिभाष्यं विवृण्वन्ति अधिकरणेत्यादि । तस्यैवेत्यादि समन्वयस्यैव साध्यत्वादित्यर्थः । अग्रिमेत्यादिभाष्यं विवृण्वन्ति सिद्धत्व इत्यादि । तत्कथमित्यादिभाष्यं विवृण्वन्ति अतस्तस्येति । साध्यत्वात्समन्वयरूपस्य हेतोरित्यर्थः । यथेति 'वैयाकरणसिद्धान्तकौमुदीयं विरच्यते' इति यथा प्रतिज्ञायते इत्यर्थः । एकदेशिन इति ब्रह्मपरित्यागादेकदेशित्वम् । साध्यसमेति हेतोः साध्यत्वेन साध्येन समता । अनुपेति उपलक्षणमेतत् । 'जन्माद्यस्य यतः' इत्यत्र सूत्र एव यच्छब्दार्थे कारणे प्रकृतिर्यच्छब्दार्थः कर्तृ कारणं प्रलयस्थलिरर्थः समवायिकारणं प्रकृतिप्रत्ययो सहार्थं भूतस्तयोस्तु प्रलयः प्राधान्येनेति नियमादतोनुपयोगादित्यस्य । गौणमुख्येत्यादिभाष्यं व्याचक्षते किंच तैरित्यादि । गौणत्वेनेति नियोज्यप्रतिपादकत्वात् नास्तिक्यनिराकरणाय धर्माङ्गतयेत्यर्थः । अनुपयोगादिति भाष्यमावृत्त्या योजयन्ति विवक्षितेत्यादि । गौणत्वेन ब्रह्मप्रतिपादकत्वासाधकत्वेन भाट्टादिनिराकरणासाधकत्वाद्धेतोरनुपयोग इत्यर्थः । अन्यस्त्वनुपयोगः समन्वयो हि मुख्यतयानुगतत्वं न च तैर्मुख्यतयानुगतत्वमुररीक्रियते इत्याहुः अथ मुख्यमित्यादि । विभाव्यत इति । हेतुरवेत्यर्थः । अयुक्तमिति आनन्दमयाधिकरणस्थमता-

**नच येन रूपेण समन्वयो मतान्तरस्थैर्विचारितस्तथाग्रे सूत्रेषु निर्णयोऽस्ति ।**

भाष्यप्रकाशः ।

**नच येनेत्यादि ।** शांकरैर्हि जगत्कारणरूपे वाक्यानां समनुगतत्वं व्याख्यायाग्रे उच्यते । नच तेषां कर्तृस्वरूपप्रतिपादनपरतावसीयते, तत् केन कं पश्येदिति क्रियाकारकफलनिराकरणश्रुतेरिति । ततश्च तन्मते यावद्धर्मशून्ये रूपे समन्वयो विचारितो भवति । तेन रूपेण समन्वयविचारस्त्वाध्यायसमाप्त्याशास्त्रसमाप्तिवाचकेष्वपि सूत्रेषु न दृश्यते । सर्वत्र तत्तद्धर्मपुरःसरं कर्त्रादिरूपेणैव तेषां तेषां वाक्यानां ब्रह्मप्रतिपादकताया निर्णीतत्वात् । अतोऽपि व्याख्याताकारस्य हेतोरनुपयोगः । एवं चानुपयोगादिति गृहीतो हेतुरस्तीत्यन्तेन विभक्तो बोध्यः । एवं शैवमतस्याप्यसंगतिर्बोध्या । शिवरूपेणापि निर्णयस्य सूत्राक्षरेष्वनुपलम्भात् । तन्मतमर्वाचीनमित्याचार्यैर्न तदर्थं किमप्युक्तम् । मया तु प्रहस्ताख्ये भिन्दिपालाख्ये च वादे शिवतत्त्वविवेकादिग्रन्थदूषणेन निपुणतरं दूषितमिति न तदर्थमिह संरम्भः क्रियते । तथापि तत्र तत्र प्रसङ्गेन दूषयिष्यामि । तत्र तावत्, सदेव सौम्येदमग्र आसीदित्युपक्रमस्तत्त्वमसीत्युपसंहारः शिवरूपगमक इति यत् तदसंगतम् । 'ॐ तत् सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इति गीतायां ब्रह्मवाचकत्वस्यैवोक्तत्वेन तयोः शिवाकारगमकत्वाभावात् । नापि, 'धातुः प्रसादान्महिमानमीशम्'इति, 'यः परः स महेश्वरः' इत्यनयोरुपक्रमोपसंहारयोः । उपक्रमे 'अणोरणीयान् महतो महीयान् आत्मा गुहायां निहितोऽस्य जन्तोः । तमक्रतुं पश्यति वीतशोकः' इति पादत्रयोत्तरं, 'धातुः प्रसादात्' इति तुरीयपादः । तत्र तमित्यनेन पूर्वोक्तं महतो महीयांसमात्मानं दर्शनकर्मतया परामृश्य तद्विभूतिरूपमीशं पश्यतीत्याह । अन्यथा पौनरुक्त्यापत्तेः । महिमपदस्य विभूतिवाचकत्वं च, 'गो अश्वमिह महिमेत्याचक्षते हस्तिहिरण्यं दास-

रश्मिः ।

च्छिवरूपप्रतिपादनाभ्यामयुक्तम् । भास्कररामानुजाचार्यौ तु नानन्दमयखण्डकौ नापि शिवरूपप्रतिपादकौ अतस्तन्मते नोक्ते । **क्रियेति** व्यापारः, कारके कर्मकरणे फलम् । **तेनेति** यावद्धर्मशून्यत्वेनेत्यर्थः । **आध्यायेत्यादि** आशास्त्रसमाप्तीतिच्छेदः । अत्राप्यनुपयोगादिति भाष्यमावर्तयन्ति **अतोपीत्यादि** । अव्यवहितहेतोरपि । **संरम्भ** इति उद्यम इत्यर्थः । मयापि ग्रन्थविस्तृतिभिया न वितन्यते तथापि संक्षिप्तवरयुक्तयस्तु वक्तव्या इत्याहुः **तथापीत्यादि** । एवं प्रासङ्गिके दूषयितव्ये प्रकृतेऽपि तत्पदं शिववाचकमिति यत्तदपि दूष्यमिति तत्पदार्थस्य शिवरूपत्वं यदभ्युपगतं तदनुवदन्ति **तत्रेत्यादि** । **तयोरिति** सत्तत्पदयोरित्यर्थः । **तत्रेति** मन्त्र इत्यर्थः । अत्र विशेषणविशेष्यभावप्रतीतेश्चकारानुक्तेश्च नायमर्थः साधीयानिति शङ्कामपनेतुं महिमपदस्य महत्वावच्छिन्नमर्थं परित्यज्य विभूतिपरत्वोपवर्णने च युक्तिमाहुः **अन्यथेत्यादि** । **अन्यथेति** तथा व्याख्यान इत्यर्थः । अत्रेदं बोध्यम् । महत इति महान्, शतृ, अतिशयेन महान्, महीयान्; ईयसुन् । एवं महतीति महत इति वा महिमेति वक्तव्यं, महिमशब्दस्य ब्रह्मपरत्वं वदता । तत्रेमनिचो 'हृभृधृसस्तृशृभ्य इमनिच्', 'जनिमृङ्भ्यामिमनिन्', 'वेञः सर्वत्र' इति सूत्रैर्विशेषविहितत्वेन महेः 'उणादयो बहुलम्' इति सूत्रेणेमनिच् साधनीयः । एवमप्यतिशयमात्राधिक्ये पुनरुक्तिरिति । 'पृथ्वादिभ्य इमनिज्वा' इति 'वर्णदृढादिभ्यः ष्यञ्च' इति भावे विहित इमनिच् तु श्रुत्यननुगृहीतोऽपीत्याहुः महिमेत्यादि । तथा च महतो भावो महिमेति विभूतिरेवार्थ इति भावः । ईयसुनोऽतिशयत्वमाह[illegible]

भाष्यप्रकाशः ।

मार्यम्' इति छान्दोग्यश्रुतौ सिद्धम् । किंचेशमहेश्वरशब्दौ रूढौ शिवे । वैयासे तु दर्शने लिङ्गा-दिभिर्निर्णयस्याभिप्रेतत्वं तल्लिङ्गाद्यधिकरणेषु दृश्यत इति रूढिरप्रयोजिका । किंच,

'नारायणः शिवो विष्णुः शंकरः परमेश्वरः ।
एतैस्तु नामभिर्ब्रह्म परं प्रोक्तं सनातनम्' ॥

इति वाराहपुराणवाक्ये रुद्रादिशब्दानां परब्रह्मनामत्वेनैव व्यवस्थापनात् त्रिलोच-नादिविशिष्टरूपस्य ततोऽप्यसिद्धेः । नृसिंहतापनीये नृकेसरिशक्तिगणनायां 'श्रियं लक्ष्मीमौ-पलामम्बिकां गाम्' इति श्रावणात् । वाराहे, ॐमित्येकाक्षरीभूताया उमाया नारायणदारत्वेन कथनाच्च । नाम्बिकापत्युमापतिपदाभ्यामपि तत्सिद्धिः । नापि 'यो वै रुद्रः स भगवान्' इत्यथर्व-शिरोवाक्येन । 'अथर्वशिरःशिखाध्यायिशतमेकमेकेन मन्त्रराजजापकेन तत्समम्' इति पूर्वताप-नीये नृसिंहमन्त्रराजजापकस्योत्कर्षश्रावणाद् विद्यावदुत्कर्षस्य च विद्योत्कर्षाधीनत्वाद् विद्यो-त्कर्षस्य च वेद्योत्कर्षाधीनत्वान्मन्त्रराजवेद्ये नृकेसरिण्येवोत्कर्षविश्रान्तेरथर्वशिरःशिखावेद्यस्य ब्रह्मरूपत्वेऽपि तत्र परत्वस्यापर्यवसानात् । एवमन्यत्रापि द्रष्टव्यम् । ब्रह्मरूपत्वं सर्वविद्येशानत्वं सर्वदेहीश्वरत्वं गुरुत्वोपाधिना मोक्षदातृत्वं तु तत्तच्छ्रुतिपुराणानुसारेणानुमन्यामह इति दिक् ।

रश्मिः ।

न पुनरुक्तिरित्यत आहुः । किंचेशेत्यादि । अप्रयोजिकेति अत एव सायणीये रुर्वैदिकः शब्दस्तं-द्रवति प्राप्नोतीति रुद्रः इति योगेन ब्रह्मपरत्वमुक्तम् । योगस्तु ईष्ट इति ईशः महांश्चासावीश्वरश्चेति । तत्रेशू ऐश्वर्ये चेश्वरस्य भावः ईश्वरश्च व्यापकः, 'अश्नोतेराशुकर्मणि वरट् च' इति सूत्रेण चकारेणोपधाया ईत्वं, विदधता निष्पन्नत्वात् । यदि चेष्ट इतीश्वरस्तदा 'स्थेशभासपिसकसो वरच्' इति सूत्रेण वरच् । नन्वयं योगोऽपि शिवे वर्तते 'एको हि रुद्रो न द्वितीयाय तस्थुः य इमान् लोकानीशत ईशनीभिः' इतिश्रुतेरिति चेत्तत्राहुः किंचेत्यादि । ततोऽपीति श्रुतितोऽपीत्यर्थः । अपी रूढीं समुच्चिनोति तेन सर्वा श्वेताश्वतरोपनि-षद् ब्रह्मपरेत्युक्तम् । यः परः स महेश्वर इत्युपसंहारोऽपि ब्रह्मपर इति च 'सन्महत्परमोत्तमोत्कृष्टाः पूज्य-मानैः' इति समासशास्त्रात्पूज्यत्वस्येश्वरशब्देनैवोपस्थापनान्महच्छब्दो निरतिशयं पूज्यत्वमाचष्टे इति । इदानीं महानारायणोपनिषदि 'अम्बिकापतय उमापतये नमो नमः' इतिश्रुत्या प्रत्यवतिष्ठमानं प्रत्याहुः नृसिंहेत्यादि । तत्सिद्धिरिति त्रिलोचनादिविशिष्टरूपसिद्धिरित्यर्थः । तेन महानारायणीयोपनिषदपि निष्प्रत्यूहं नारायणपरत्वे गर्जति । अथर्वशिरसः शिवप्रतिपादकत्वमपि जलधिशायिनृकेसरितोपकृष्टत्वे-नेत्याहुः नापीत्यादि । अतिदिशन्ति एवमित्यादि । अन्यत्रेति महोपनिषदि—

'ऋतं सत्यं परं ब्रह्म पुरुषं नृकेसरि-
विग्रहं कृष्णपिङ्गलमूर्ध्वरेतं विरूपाक्षं शंकरम् ।
नीललोहितमुमापतिं पशुपतिं पिनाकिं ह्यमितद्युतिम्' ॥

इत्यादावित्यर्थः । ऋतमनारोपितं, पिङ्गं तडिद्गौरं व्रजभक्तरूपं लाति गृह्णातीति पिङ्गलः, कृष्णश्चासौ पिङ्ग-लश्च कृष्णपिङ्गलस्तं निष्कामत्वादूर्ध्वरेतसं विशिष्टं सुन्दरं रूपं निरुपमं ययोस्तादृशेऽक्षिणी यस्य तं, शं कल्याणं करोतीति शंकरस्तं, नीललोहितं मेघश्यामं पशुपतिं गोपतिं पिनाकिं पिनाकादयश्चेति 'पाते-राक इत्वं नुम्च'इति विषमपदव्याख्या । ननु तर्हि ब्रह्मरूपत्वादिबोधिका अप्यन्यथा नेया इति चेन्नेत्याहुः ब्रह्मेत्यादि । तत्तच्छ्रुतीत्यादि ताश्च 'यो वै रुद्रः स भगवान् अथ कस्मादुच्यते प्रणवो यस्मादुच्चार्य-

शास्त्रारम्भस्तु प्रथमसूत्र एव समर्थितः। तस्मात् समवायिकारणत्वमेवानेन

भाष्यप्रकाशः।

प्रकृतमनुसरामः। ननु भवन्मते सर्वस्य वेदस्य सिद्धार्थपरत्वेन सिद्धस्वरूपब्रह्मप्रतिपादकत्वे संदेहाभावाच्च तदर्थं शास्त्रारम्भो वक्तुं शक्यः। ज्ञानकर्मसमुच्चयस्याप्यङ्गीकारेण कर्मण्यपि गौणतात्पर्यस्य विद्यमानत्वाच्च तदर्थमपि। ब्रह्मणः कारणतायास्तेषु तेषु रूपेषु पर्यायेणाङ्गीकरिष्यमाणत्वाच्च न विष्णुशिवादिष्वतिरिक्तस्य ब्रह्मत्वनिरासार्थम्। अभिन्ननिमित्तोपादानवादिनो यावन्तस्तैः सर्वैरपि जन्मादिसूत्रविषयवाक्यविचारेणैव सर्वविधकारणतायाः समर्थनाच्च तद्विशेषनिर्धारार्थमपीति भवन्मते शास्त्रारम्भवैयर्थ्यम्। नैवमन्यमते। तत्तदन्यस्मिन् वेदान्ततात्पर्याभावसमर्थकतया सार्थक्यादिति शङ्कायामाहुः शास्त्रेत्यादि। प्रथमसूत्र इति। तत्र शेषषष्ठीसमर्थनस्थले, नच गौणतापक्षिरजिज्ञास्यत्वं चेत्यादिना। तन्मया विवृतं, केन प्रकारेणेत्यारभ्य दर्शनादितीत्यन्तेनेति ततो बोध्यम्। सिद्धमाहुः तस्मादित्यादि। शास्त्रारम्भस्य प्रथमसूत्र एव समर्थितत्वाद् द्वितीयसूत्रविषयवाक्ये, यतो

रश्मिः।

माण एव ऋग्यजुःसामाथर्वाङ्गिरसो ब्रह्मब्राह्मणेभ्यः प्रणामयति नामयति च तस्मादुच्यते प्रणव' इति। 'अथ कस्मादुच्यते सूक्ष्मं यस्मादुच्चार्यमाण एव स सूक्ष्मो भूत्वा शरीराण्यधितिष्ठति सर्वाणि चाङ्गान्यभिमृशति तस्मादुच्यते सूक्ष्मम्। अथ कस्मादुच्यते तारं यस्मादुच्चार्यमाण एव गर्भजन्मव्याधिजरामरणसंसारमहाभयात्तारयति त्रायते तस्मादुच्यते तारमिति'। तथा महानारायणोपनिषदि 'तन्नो रुद्रः प्रचोदयात्' इत्युक्त्वा 'ईशानः सर्वविद्यानाम्'इति श्रूयते, जाबालेच 'रुद्रस्तारकं ब्रह्म व्याचष्टे'येनासावमृतीभूत्वा मोक्षीभवतीति गुरुत्वोपाधिना मोक्षदातृत्वं विस्पष्टं श्रूयते। पुराणे श्रीभागवते चतुर्थस्कन्धे ब्रह्मकृतशिवस्तुतौ 'यत्तद्ब्रह्म निरन्तरम्' इति अष्टमे मोहिनीस्वरूपदर्शनानन्तरं भवानीं प्रति भववाक्यं 'अहं कलानामृषभो विमुह्ये' इति पुनश्चतुर्थस्कन्धे रुद्रगीते 'शक्तित्रयसमेताय मीढुषेऽहंकृतात्मने' इति कर्तृकरणकर्मशक्तित्रयसमेताहंकाररूपेण सर्वदेहीश्वरत्वं अन्यत्रापि द्रष्टव्यम्। तत्रैव प्रचेतसां मोक्षदातृत्वं

'इदं विविक्तं जप्तव्यं पवित्रं मङ्गलं परम्।
निःश्रेयसकरं चापि श्रूयतां तद्वदामि वः'॥

इति शिववाक्यमिति। तदर्थमिति गौणत्वेन सिद्धधर्मज्ञानार्थमित्यर्थः। ब्रह्मण इत्यादि अस्य तत्पदेनाप्यन्वयाद्रूपेभ्यो भेदः। तेष्विति सच्चिदानन्देष्वित्यर्थः। ततु जन्माद्यधिकरणसमन्वयाधिकरणाभ्यां सद्रूपे लक्षणं योजितम्। ईक्षत्यधिकरणे च चिद्रूपे लक्षणं योजयिष्यन्ति। आनन्दमयाधिकरणे चानन्द इति कथं तेषु तेषु कारणतेति चेन्न 'सत्त्वं रजस्तम' इत्यस्य सुबोधिन्यां 'सद्रूपेण रजः आनन्देन तमः' इति निरुक्तेः। ननु किमतो यद्येवं मैवं

'सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते।
स्थित्यादये हरिविरिञ्चिहरेति संज्ञां श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः'इति तत्तद्गुणसंबन्धे तत्तद्रूपतोपपत्तेः सामञ्जस्यात्। तथा च सद्रूपनिर्गतसत्त्वतनुर्विष्णुरिति सद्रूपे कारणतायोजनं विष्णावेव योजनमेवमन्यत्रापीति न दोषः। तद्विशेषेति कारणताविशेषसमवायित्व इत्यर्थः। शास्त्रारम्भ इति शास्त्रं सूत्रं तदारम्भवैयर्थ्यम्। तत्तदित्यादि तेभ्यस्तेभ्यो निर्गुणगुणत्रयविशिष्टविष्णुशिवपुरुषोत्तमेभ्योऽन्यस्मिन्नित्यर्थः। संज्ञोपसर्जनीभूतत्वाभावात्स्वायादि। ननु सूतो घट इतिवत् यत इति पञ्चम्या समवायित्वनिर्णयो भविष्यतीति चेत्तत्राहुः द्वितीयेत्यादि। ननु कथमस्य

सूत्रेण सिद्धम् । ननु कारणत्वमेवास्तु ब्रह्मणः । किं समवायिकारणत्वेन । विकृतत्वं च स्यात् । अनर्थरूपत्वेन कार्यस्यायुक्तता च । तस्मादनारम्भणीयमेवैतत् सूत्रमिति

भाष्यप्रकाशः ।

चेत्यादेः कारणतामात्रबोधनेऽपि चारितार्थ्येन, 'यत् प्रयन्त्यभिसंविशन्ति' इत्यस्याधारतामात्रबोधनेऽपि चारितार्थ्येन, 'सदेव सौम्येदमग्र आसीत्' इत्यत्रापि, तत्तेजोऽसृजतेत्यादिना कर्तृत्वस्यैवासंदिग्धतया उपादानत्वं केवलस्य वा शरीरद्वारा वेति संदेहानपायात् । सौत्रस्य योनिशब्दस्यापि कारणमात्रवाचकत्वेन प्रमाणाबोधकत्वादुपादानत्वनिर्द्धारणासमर्थत्वाच्चेतः पूर्वसूत्रयोरुपादानत्वस्यासिद्धत्वादनेनैव सूत्रेण युक्तिनिर्देशात् तत्सिद्धमित्यर्थः । नन्वत्रोपादानपदं परित्यज्य समवायिपदेन कुतो व्यवहार इति चेदुच्यते । लोके उपादानपदेन कर्तृक्रियया व्याप्तस्य परिच्छिन्नस्यैवाभिधानदर्शनात् । 'प्रकृतिर्यस्योपादानम्' इति, 'पुलवस्तदुपादानमात्मानं लीलयाऽसृजत्' इति श्रीभागवतेऽपि भगवता मैत्रेयेण च तादृश एवोपादानपदस्य प्रयुक्तत्वाच्चेति जानीहि ।

अत्र ब्रह्मस्वरूपस्य समवायित्वममन्वानाः प्रत्यवतिष्ठन्ते नन्वित्यादि । अयमर्थः । समन्वयसूत्रे ब्रह्मस्वरूपस्य समवायित्वायाग्रहो यः क्रियते, स न पूर्वसूत्रोक्तकारणत्वासमर्थनार्थः । शास्त्रयोनित्वेनैव समर्थितत्वात् । नापि शास्त्रयोनित्वसमर्थनार्थः । त्वया तथाऽनङ्गीकारात् । किं तु कारणत्वे विशेषान्तरस्यापि बोधनार्थः । स न युक्तो विकृतत्वादि-

रश्मिः ।

ध्वंसरूपत्वेन कपाले घटो ध्वस्त इतिवत् ब्रह्मणि जगल्लीनमिति प्रतीत्या ब्रह्मणः समवायित्वमस्त्विति चेत्तत्राहुः यत्प्रयन्तीत्यादि । पूर्वं मृदेव घट इति प्रतीतिवत् सदेवेदमिति श्रुत्या तद्ब्रविष्यतीति किमनेनेति चेन्नेत्याहुः सदेवेत्यादि । योनिशब्दादपि न निर्णय इत्याहुः सौत्रस्येत्यादि । प्रमाणेत्यादि । समवायित्व इत्यादि । समवायस्य द्वितीये दूषणात्तदस्तित्वप्रयुक्तं समवायित्वमपि न वक्तुं शक्यमित्युपादानपदमत्र भाष्ये वक्तव्यमिति पृच्छति नन्वत्रेत्यादि । कुतो व्यवहार इति अस्य मीमांसाशास्त्रस्य पृथक्त्वान्मित्रवत् कुतो व्यवहार इति । ननु प्रश्नश्चेत् यदीत्यर्थः । उच्यत इति न घटत इत्युच्यत इत्यर्थः । लोक इति स्मृतौ । परिच्छिन्नस्यैवेति सूत्रमृत्पिण्डादिरूपतूलांशमृदंशादेरेवेत्यर्थः । अन्यथा सूत्रमृत्पिण्डादिभावमनापन्नैरपि तूलादिभिः पटघटाद्युत्पद्येत इति भावः । ननु नैयायिकैः परिच्छिन्नेऽपि समवायित्वव्यवहारः क्रियते व्यासचरणैरपि समन्वयादित्युक्तत्वाच्च कैतादृशाक्रोशः प्रसिद्ध इत्यत आहुः प्रकृतिरित्यादि । स्वव्यतिरेकेणासृज्यत्वादात्मानमिति । तादृश इति परिच्छिन्नप्रधाने परिच्छिन्नपुरुषावतारे चेत्यर्थः । जानीहीति तथा च ब्रह्मणोपरिच्छिन्नत्वमपीति नोपादानपदप्रयोग इति भावः । यः परिच्छिन्नांशः स उक्तः । समवायश्च तादात्म्यमित्युक्तम् । उपलक्षणमेतत् दूषितेपि प्रसिद्धिप्राचुर्यात्तत्पर्याये प्रयोगानर्हत्वं नेति भाष्येण ज्ञाप्यते इत्यस्य । अमन्वाना इति नैयायिकाः । यथाहुः 'संसारमहीरुहस्य बीजाय' निमित्तकारणाय इत्यर्थ इति मुक्तावल्यां विश्वनाथाः । शास्त्रेत्यादि । सूत्रांशेनेत्यर्थः । त्वयेति सिद्धान्तिनेत्यर्थः । विकृतत्वमित्यादि अयुक्तता चेत्यन्तं भाष्यं विवृण्वन्ति स नेत्यादि । अत इति कार्यस्यानर्थरूपत्वेन तत्समवायित्वस्य ब्रह्मण्युपयुक्ततायाः

चेन्नैवम् । सर्वोपनिषत्समाधानार्थं प्रवृत्तः सूत्रकारः । तद्यदि ब्रह्मणः समवायित्वं न ब्रूयाद् भूयानुपनिषद्भागो व्यर्थः स्यात् । 'इदं सर्वं यदयमात्मा,' 'आत्मैवेदᳪ सर्वम्' । 'स सर्वं भवति,' 'ब्रह्म तं परादात्' इत्यादि, 'स आत्मानᳪ स्वयमकुरुत,' 'एकमेवाद्वितीयम्,' 'वाचारम्भणं विकारः' इत्यादि । एवमादीनि वाक्यानि स्वार्थे बाधितानि भवेयुः ।

भाष्यप्रकाशः ।

दोषापादकत्वात् । अतः शरीरस्य वोपाधेर्वा भिन्नाया एव प्रकृतेर्वा तथात्वं वक्तव्यम् । तथा सति स्वरूपसमन्वयस्याभावादनारम्भणीयमेवैतत् सूत्रं तव मते स्यादिति । अत्र समादधते नैवमित्यादि । व्यर्थः स्यादित्यत्र हेतुः बाधितानि भवेयुरिति । अयमर्थः । समवायित्वं यन्निषिध्यते, तत् किं पूर्वसूत्रस्य निराकाङ्क्षत्वादुत दोषोत्पादकत्वात् । नाद्यः । व्यासस्य सर्वोपनिषदां यथावस्थितार्थबोधनार्थं प्रवृत्तत्वेन भूयस उपनिषद्भागस्य वैयर्थ्ये जन्मादिसूत्रस्यविशेषाकाङ्क्षाया अनिवृत्तेः । नेतरः । तदभावस्याप्यनुपदं व्युत्पाद्यत्वात् । स भागस्त्विदं सर्वमित्यादिरूपः । अत्राद्यं वाक्यं मैत्रेयीब्राह्मणस्थम् । तत्र हि 'आत्मनि वा अरे दृष्टे श्रुते मते विज्ञाते सर्वमिदं विदितम्' इत्यनेनात्मज्ञानादिभिः सर्वज्ञानरूपं फलं दर्शयित्वा, तज्ज्ञानं किं प्रकारकमित्याकाङ्क्षायां, 'ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद' इत्यादिना 'योऽन्यत्रात्मनः सर्वं वेद' इत्यन्तेन ब्रह्मादिसर्वान्तेष्वात्मभिन्नत्ववेत्तुः कैवल्याभावरूपममृतत्वाभावरूपं वा पराभवं प्रदर्श्य 'इदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमे यज्ञा इमानि भूतानीदं सर्वं यदयमात्मा' इत्युपसंहारे ज्ञानप्रकारदर्शनेन सर्वस्यात्माभेदं दर्शयति । तस्मिंश्चाभेदे सर्वस्यात्मोपादेयत्वमन्तरेणाघटमाने वाक्यमेव बाधितार्थं भवेत् । एवं द्वितीयवाक्यमपि, छान्दोग्ये सनत्कुमारसंवादे । तत्राप्यग्रे, 'आत्मनः प्राण आत्मन आशा' इत्यादि श्राव्यते । तदप्यात्मनः समवायित्वं विना नोपपद्यते । तदतिरिक्तस्योपादानस्याश्रावणात् । तृतीयं तु पुरुषविधब्राह्मणस्थम् । तत्रापि 'आत्मैवेदमग्र आसीत्' इति सृष्टिपूर्वकाले केवलात्मसत्तामुक्त्वा, ततः 'सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत्' इत्यनेन सृष्ट्यनन्तरमन्यदर्शनमुपक्रम एव निषेधति । मध्ये च, किमु तद् ब्रह्मावेद् यस्मात् तत्सर्वमभवदिति प्रश्ने, 'तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात् तत्सर्वमभवत्' इत्युत्तरमुक्त्वा तदिदमप्येतर्हि 'य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति' इति सर्वा-

रश्मिः ।

इत्यर्थः । शारीरस्येत्यादि । नैयायिकशंकराचार्यसांख्यानां मते यथाक्रमम् । तथात्वमित्यादि । समवायित्वं तत्तन्मतीयमङ्गीकार्यमित्यर्थः । तस्मादित्यादि भाष्यं विवृण्वन्ति तथा सतीत्यादि । तथा चास्थूलेत्यादिभाष्यसंग्रहाय कोटचन्तरं निवेशमाना विकल्पमाहुः अयमर्थ इति । भाष्ये यत्फलितं तदाहुः जन्मादीत्यादि । शास्त्रयोनित्वांशे जन्मादिसूत्रस्य समवायित्वप्रतिपादकशास्त्रप्रतिपाद्यसमवायित्वरूपविशेषाकाङ्क्षाया अनिवृत्तेरित्यर्थः । अनुपदमिति तथाचास्थूलेत्यादि भाष्येणेत्यर्थः । इदमित्यादि भाष्यं विवृण्वन्ति स भाग इत्यादि । तज्ज्ञानमिति सर्वज्ञानमित्यर्थः । ज्ञानप्रकारेति सर्वविशेष्यके ज्ञान आत्माभिन्नत्वरूपप्रकारेत्यर्थः । द्रव्यादीनां विद्यमानसमवायिकत्वनियमादाहुः तदतीत्यादि । सृष्टस्येदमा निर्दर्शनादग्र इतिपदेन सृष्टिपूर्वकालस्य बोधनाय बीक्षणं नात्मविषयकमनोऽश्व न प्रत्यानन्तरमेवंस्तदाहुः सृष्ट्यनन्तरमन्येत्यादि । अथेदिति ।

भाष्यप्रकाशः ।

स्वभावरूपं फलमाह । समवायित्वानङ्गीकारे तदपि सर्वं बाधितं भवेत् । तुरीयं तु तन्निरू-त्ववेतु उकरूपं पराभवं वक्तीत्युक्तम् । मध्ये वाक्यद्वयं तु सर्वत्रैकवाक्यतार्थम् । पञ्चमं तु तैत्तिरीये ब्रह्मविद्प्रपाठके । तत्रापि करोतिकर्मत्वेनात्मनः श्रावणात् तस्यैवोपादानोपादेयभावः स्फुटति । सोऽपि तथा भवेत् । एकमेवेत्यादिकं तु छान्दोग्यस्थम् । तत्राप्येकमेवेति विशे-ष्यान्वितेनैवकारेणान्यसत्त्वे व्यवच्छिन्नेऽपि 'एके मुख्यान्यकेवलाः' इति कोशादेकशब्दस्य नानार्थ-त्वेनात्र मुख्येतरव्यवच्छेद एवाभिसंहित इति । श्रुत्यन्तरे, 'नान्यत् किंचन मिषत्' इति कथनात् व्यापारं कुर्वतो वान्यस्य निषेधोऽभिसंहित इति वा शङ्का स्यादिति तन्निवारणायाद्वितीय-पदेन द्वित्वसंख्यापूरकस्य निषेधः सृष्ट्यादौ क्रियते । सोऽपि सदितरस्य समवायिनः सत्त्वे बाध्येत । वाचारम्भणवाक्ये तु मृण्मयादिभिर्दृष्टान्तैः स्फुटमेव समवायित्वमवगम्यते । तथा द्वितीये गार्गीब्राह्मणे कस्मिन् वा आकाश ओतश्च प्रोतश्चेति प्रश्ने, एतद्वै तदक्षरं गार्गीत्यादिना अक्षरे ओतप्रोततामाकाशस्य वदति । सा च समवायित्वस्यैव लिङ्गम् ।

'नैतच्चित्रं भगवति ह्यनन्ते जगदीश्वरे ।
ओतप्रोतमिदं यस्मिंस्तन्तुष्वङ्ग ! यथा पटः' ॥

इत्यादिपुराणवाक्यैस्तन्निश्चयात् । नच, 'मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव' इति गीतावाक्यान्नैवमिति शङ्क्यम् । तत्र केवलप्रोतत्वस्यैवोक्तत्वेऽप्यग्रे, 'रसोऽहमप्सु कौन्तेय प्रभाऽस्मि शशिसूर्ययोः' इत्यादिभिः स्वस्य भूतसूक्ष्मत्वादिबोधनेनौतत्वस्यापि सूचिततया तत्रा-प्यैवमर्थ्येनोक्ततौल्यात् । तथा

'त्वय्यग्र आसीत् त्वयि मध्य आसीत् त्वय्यन्त आसीदिदमात्मतन्त्रे ।
त्वमादिरन्तो जगतोऽस्य मध्यं घटस्य मृत्स्नेव परः परस्मात्' ॥

इत्यष्टमस्कन्धीयब्रह्मवाक्येऽपि समवायित्वस्योपबृंहणात् । आथर्वणानां गोपथब्राह्मणा-रम्भे च, 'ब्रह्म वा इदमग्र आसीत् स्वयंभ्वेकमेव तदैक्षत महद्वै यक्षं तदेकमेवाऽस्मि हन्ताहं मन्मात्रं द्वितीयम्' इत्यादि श्राव्यते । तृतीयस्कन्धे च 'विश्वं वै ब्रह्म तन्मात्रम्' इति । एवंजातीयकानि

रश्मिः ।

ल्व । तदपीति सृष्ट्यनन्तरमात्मान्यादर्शनादपीत्यर्थः । वेत्तु उक्तेति वेतुरुक्तेति पाठः प्रति-भाति । तादृशस्य कैवल्याभावरूपमसृतत्वाभावरूपं वा पराभवमित्यर्थः । ननु प्रथमतुरीयाभ्यामेव समवायित्वसिद्धेः किं मध्यस्थेन वाक्यद्वयेनेत्यत आहुः मध्य इत्यादि । मैत्रेयीब्राह्मणेन साकं छान्दोग्यपुरुषविधब्राह्मणयोरेकवाक्यताप्रतिपत्तिः प्रयोजनम् । एवमन्यत्रापीति सर्वत्रेत्युक्तम् । तत्रापीति तदात्मानमिति श्रुतौ स आत्मानमित्यपि क्वचित्पाठः । उपादानेत्यादि यथा कुलालो मृदं घटमकुरुतेति प्रयोगो न तु दण्डं घटमकुरुतेति । मृदो दण्डस्येति वा मृदं घटात्मना करोति न तु दण्डं घटात्मना करोतीति वा, एवं प्रकृतेपि प्रयोगादुपादानोपादेयभाव इत्यर्थः । व्यव-च्छिन्न इति यथा पार्थ एव धनुर्धर इत्यत्र । निषेध इति श्रुत्यन्तरैकवाक्यतयात्र निषेध इत्यर्थः । सत्त्व इति दोषापादकत्वेन ब्रह्मणोसमवायित्वे जगतः पूर्वं समवाय्यपेक्षया सत्त्व इत्यर्थः । अन्यान्यपि श्रुतिपुराणवाक्यान्यादिपदार्थस्तेनाहुः तथेत्यादि । नैवमिति सूत्रमणिगणयोरुपा-दानोपादेयभावाभावान्नैवमित्यर्थः । ऐवमर्थ्येनेति 'सह सुपा' इति समासः । ब्राह्मणादित्यत् ब्यम् ।

नन्वेवं निःसंदिग्धत्वात् कथं सूत्रप्रवृत्तिः । उच्यते । अस्थूलादिवाक्यान्यपि सन्ति सर्वत्र प्रपञ्चतद्धर्मवैलक्षण्यप्रतिपादकानि । ततोऽन्योऽन्यविरोधेनैकस्य मुख्यार्थबाधो वक्तव्यः । तत्र स्वरूपापेक्षया कार्यस्य गौणत्वात् प्रपञ्चरूपप्रतिपादकानामेव कश्चित् कल्पयेत् । तन्माभूदिति जन्मादिसूत्रवत् समन्वयसूत्रमपि सूत्रितवान् । तथाचाऽस्थूलादिगुणयुक्त एवाविक्रियमाण एवात्मानं करोतीति वेदान्तार्थः संगतो भवति । विरुद्धसर्वधर्माश्रयत्वं तु ब्रह्मणो भूषणाय ।

---

भाष्यप्रकाशः ।

वाक्यान्यादिपदेन संगृह्यन्ते । अतः पूर्वसूत्राकाङ्क्षापूरणायेदं सूत्रमावश्यकमित्यर्थः ।

पुनश्चोदयति नन्वेवमित्यादि । एवमिति पुरःस्फूर्तिकयथाश्रुतार्थग्रहणे । तथाच सूत्रकारो हि वेदान्तार्थे दुर्बोधमाकलयँस्तत्रान्येषामृषीणामपि शुक्रादिकृतं बुद्धिमोहमवधार्य लोकाननुजिघृक्षुँस्तदर्थं व्यक्तीकर्तुं प्रवृत्तो यद्येवं समवायित्वमसंदिग्धमेव जानीयात् समन्वयसूत्रं न प्रणयेत् । अतः सूत्रप्रवृत्तिरेव समवायित्वाभावं बोधयतीत्यर्थः । अत्रप्रवृत्तिमुपपादयन्तः समादधते उच्यत इत्यादि । अर्थस्तु निगदेनैव व्याख्यातः । जन्मादिसूत्रवदिति यथा जन्मादिसूत्रं कर्तृत्वादिधर्मनिर्धारणेन निर्विशेषमात्रतानिराकरणार्थं तथेदमपि समवायित्वनिर्धारणेन तदर्थं, न तु सांख्यं निराकर्तुम् । तस्याग्रे वक्ष्यमाणत्वादिति भावः । एतेन पूर्वचोदितस्य द्वितीयदूषणस्यापि निवृत्तिं बोधयन्ति तथाचेत्यादि । संगतो भवतीति । उक्तदूषणस्योद्धृतत्वादसंदिग्धो भवति । तथा चैतत्सूत्राभावे उक्तसंदेहानपायात् तदर्थं सूत्रप्रवृत्त्या समवायित्वमावश्यकमित्यर्थः । नन्वविक्रियमाणस्य समवायित्वं काल्पनिकम् । कल्पना तु लोकाविरुद्धैव प्रामाणिकसमाजे शोभते । तत इदमसंगतमित्याशङ्कायामाहुः विरुद्धेत्यादि । भूषणायेति 'तदेजति तन्नैजति' । 'आसीनो दूरं व्रजति शयानो याति सर्वतः' । 'अपाणिपादो जवनो ग्रहीता' इत्याद्यनेकश्रुतिसिद्धत्वाद् भूषणाय । ब्रह्मणः श्रुत्येकसमधिगम्यत्वस्य सर्वेषामेव संमतत्वादित्यर्थः ।

नतु फलार्थं सर्वः प्रवर्तते । तस्यैव पुरुषशेषत्वात् । तदैहिकं मोक्षरूपं वा यद् यस्या-

रश्मिः ।

अन्तर्यामिपरत्वे पूर्वतौल्यात् । निगदेनेति अभिधानेनैवेत्यर्थः । तदर्थमिति निर्विशेषमात्रतानिराकरणार्थमित्यर्थः । किंचिन्निराचक्षते न त्वित्यादि । प्रकृतिः समवायिनीति सांख्यमित्यर्थः । तस्याग्र इति सांख्यनिराकरणस्य चतुर्थपाद इत्यर्थः । पूर्वचोदितस्येति समवायित्वं यद्विविक्षते इत्यादिनोक्तविकल्पोक्तस्येत्यर्थः । धातूनामनेकार्थत्वात् । तज्ज्ञापयत्याचार्य इत्यत्र ज्ञा नियोग इत्यस्य ज्ञानार्थत्वं यथा, न तु ज्ञा अवबोधने इत्यस्य, नापि ज्ञाने ज्ञापने च वर्तमानस्य ज्ञपेः प्रयोगः । पूर्वस्य मारणतोषणनिशामनेषु ज्ञा इत्यनेन मित्त्वाद् ह्रस्वे ज्ञपेस्तु 'ज्ञपमिच' इत्यनेन मित्त्वात् 'मितां ह्रस्वः' इत्यनेन ह्रस्वे ज्ञपयतीति प्रयोगात् । निशामनं ज्ञानम् । उद्धृतत्वादिति नैवं सर्वत्वादिभाष्यणोद्धृतत्वादित्यर्थः । उक्तेत्यादि उपादानत्वे कर्तृत्वे च संदेह इत्यादिभाष्योक्तसंदेहानपायादित्यर्थः । नैयायिकः शङ्कते नन्वित्यादि । तस्यैवेत्यादि 'फलं च पुरुषार्थत्वात्' इति सूत्रादित्यर्थः । इदं तृतीयस्य तृतीयाधिकरणे चिन्तितम् 'द्रव्यगुणसंस्कारेषु बादरिः' इत्यत्र । तत्र

किंच । अन्यपदार्थसृष्टौ वैषम्यनैर्घृण्ये स्याताम् । कर्माधीनत्वे त्वनीशता । ततः कर्तृत्वमपि भज्येत । ततः सर्वमाहात्म्यनाश एव स्यात् ।

नन्वेवमेवास्तु, अपवादार्थत्वात् । रज्जुसर्पवदयुक्तार्थकथनेऽपि न दोषः ।

भाष्यप्रकाशः ।

भीदं तत् सर्वं, ब्रह्मोपासनया वा तज्ज्ञानेन वा सर्वस्य यथाधिकारं ब्रह्मणि सर्वकर्तृत्वं सर्वेश्वरत्वादिकं चानुसंदधानस्य सेत्स्यत्येव । नच समवायित्वानुसंधानस्यावश्यकत्वम् । शरीरद्वारापि तदङ्गीकारे पूर्वोक्तमाहात्म्यानपायेन तथानुसंधानस्यानावश्यकत्वात् । अतोऽपार्थप्रयासात् तव मते एतत्सूत्रवैयर्थ्यमेवापद्येतेत्यत आहुः किंचेत्यादि । तत इति अनीशत्वे । तत इति कर्तृत्वभङ्गे । तथाच वैषम्यादिवारणेन कर्तृत्वादिसमर्थनार्थमप्यावश्यकत्वाच्च वैयर्थ्यमतस्तवापि निर्दोषनिखिलगुणगणालंकृतब्रह्माङ्गीकर्तुरावश्यकमित्यर्थः ।

अत्र विरुद्धधर्माश्रयत्वमसहमानो निर्विशेषमात्रवादी पुनः शङ्कते नन्वित्यादि । अयमर्थः । अस्तु कर्तृत्वादिभङ्गः । अस्थूलादिवाक्यैः स्वरूपस्य निर्विशेषत्वे निश्चिते तेषां कर्तृत्वादीनामविद्याकल्पितत्वेनापवादार्थत्वात् । न चैवं मिथ्यार्थकथने वाक्यप्रामाण्यभङ्गः । यथा ह्यतिचपले बाले तस्य भीत्युत्पादनाय रज्जुः सर्प इति प्रदर्श्यते, ततो विनीते तस्मिन् रज्जुरियमिति स्वरूपं कथ्यते । तथा संसारासक्तेषु भीत्यर्थं माहात्म्यं कर्तृत्वफलदातृत्वनियामकत्वादिरूपमुच्यते । ततो वैराग्याद्युत्पत्तौ स्वरूपं बोध्यत इति रज्जुसर्पवदयुक्तार्थकथनेऽपि न दोषः । तत्र तात्पर्याभावात् । अथेदं सर्वं यदयमात्मेत्यादीनां स्वार्थत्यागादस्यासंगतत्वं विभाव्यते । तदबोधात् । गीतायां विश्वरूपं पश्यता पार्थेनैव सर्वव्याप्त्या सर्वत्वकथनेन तदर्थनिश्चयादसंगतत्वभावादिति ।

रश्मिः ।

स्वयकपालादिद्रव्यं, अवणिमादिर्गुणः, अवघातप्रोक्षणादिः संस्कारः । एतेषु त्रिष्वेवोपकारित्वरूपं शेषत्वम् । फलपुरुषकर्मसु न शेषत्वमुपकारित्वाभावात्, इति बादरिर्मन्यते, जैमिनिस्तु पारार्थ्यं शेषलक्षणमुररीचकार उपकारित्वस्य प्रधाने स्वामिन्यपि दर्शनेनातिव्याप्तत्वादिति । तथा च 'कर्माण्यपि जैमिनिः फलार्थत्वात्', 'फलं च पुरुषार्थत्वात्', 'पुरुषश्च कर्मार्थत्वात्', इति सूत्रत्रयादेतेष्वपि पारार्थ्याच्छेषत्वं ज्ञेयम् । एवकारेण प्रमाणप्रमेयसाधनव्यवच्छेदः । शारीरद्वारापीति नव्यमते विश्वमेवेश्वरशरीरमित्यनादरेऽपिशब्दः । एवं द्वितीयोऽपिशब्दः । अनावश्यकत्वादिति प्राचां नैयायिकानामिव प्राचस्तवाप्यनावश्यकत्वादित्यर्थः । नैयायिकयुक्तिपराहतत्वादनावश्यकत्वादिति वा । अनीशत्व इति सार्वविभक्तिकस्तसिरिति भावः । कर्तृत्वं 'स्वतन्त्रः कर्ता' इत्यनुशासनात्तदपि तदभावे भज्येत । तवापीति । नैयायिकस्यापीत्यर्थः । तेन रामानुजा अप्याक्षिप्ता ज्ञेयाः । अत्रेत्यादि मध्ये नैयायिकाशङ्काया उक्तत्वात् पुनरिति । रज्जुः सर्पवदिति भाष्यं विवृण्वन्ति ह्य न चैवमिति । तत्रेति कर्तृत्वाद्ययुक्तार्थकथन इत्यर्थः । सर्वमित्यादि वाक्यं विपरीतुमाहुः अथेदमित्यादि । अस्येति आरोपापवादस्येत्यर्थः । सर्वव्याप्त्येति पूर्व

'सर्वं समाप्नोषि ततोऽसि सर्वः' इति स्मृतेश्चेति चेत् मैवम्। तथा सति पाषण्डित्वं स्यात्। एतादृशशास्त्रार्थाङ्गीकर्तुरासुरेषु भगवता गणितत्वात्।

'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्।
अपरस्परसंभूतं किमन्यत् कामहेतुकम्' इति।

भाष्यप्रकाशः।

अत्र समादधते मैवमित्यादि। तथा सतीति सर्वधर्मापवादे कृते सति। पाषण्डित्वमिति पापलिङ्गवत्त्वम्। 'तानि पापस्य षण्डानि लिङ्गं षण्डमिहोच्यते' इति श्रीभागवतवाक्यात्। गीतावाक्यार्थस्तु, ते आसुराः, असत्यं नास्ति सत्यं वेदपुराणादिप्रमाणं यस्मिंस्तदसत्यम्। वेदादिस्वरूपसत्त्वेऽपि तत्प्रामाण्यानभ्युपगमाद् विशिष्टाभावः। अत एव नास्ति धर्माधर्मरूपा प्रतिष्ठा हेतुव्यवस्था यस्येत्यप्रतिष्ठम्। तथा नास्ति शुभाशुभफलदातेश्वरो नियन्ता यस्येत्यनीश्वरं जगदाहुरिति। यद्वा। सत्यं सत्यशब्दनिर्दिष्टं ब्रह्म, तदुपादेयत्वेन तदात्मकत्वे जगदपि सत्यं भवति, तद्विरुद्धमसत्यम्। न विद्यते ब्रह्मणि प्रतिष्ठा यस्येत्यप्रतिष्ठम्। न विद्यते नियामकः सत्यसंकल्प ईश्वरो यस्येत्यनीश्वरमिति। किंच, सर्वं पशुमनुष्यादिकं योषित्पुरुषयोः परस्परसंबन्धेन जातमुपलभ्यते। अनेवंभूतमपरस्परसंभूतं तादृशमन्यत् किं, न किमपि। अत इदं सर्वं कामहेतुकमिति। यद्वा। यतः सर्वमेवमतोऽदृष्टं कारणं किमपि नास्ति। अदृष्टाङ्गीकारेऽपि क्वचिद्गत्वाऽन्ततः स्वभाव एव पर्यवसानात् स्वाभाविकमेव जगद्वैचित्र्यमस्तु। दृष्टे संभवत्यदृष्टकल्पनानवकाशात्। अतः काम एव प्राणिनां कारणं, नान्यददृष्टेश्वरादीत्याहुरिति। इयं च लौकायतिकदृष्टिरिति। ततश्चायमर्थः। धर्माणामपवादमातिष्ठतस्तद्विशिष्टस्येश्वरस्य काल्पनिकत्वेन वस्तुतस्तदभावात् प्रच्छन्नानीश्वरवादितया स्वभाववाद एव विश्रान्त्या लौकायतिककल्पत्वाद् पाषण्डित्वस्य गीतोक्तलक्षणकत्वादासुरत्वस्य चापत्तिर्वेदस्यापि कल्पितत्वापत्त्या तस्यानर्थक्यम्। कथंचित्प्रामाण्याङ्गीकारेऽपि संसारभ्रमस्यौत्पत्तिकत्वात् तद्भ्रमनिवारणाय स्वरूपमात्रस्यैव वक्तव्यत्वेन शेषशास्त्रस्य प्रक्षालनपङ्कन्याया-

रश्मिः।

समाप्नोषीत्यनेनेत्यर्थः। योऽन्यथेति श्रुत्यनुकूलमर्थमाहुः पापेत्यादि। तत्प्रामाण्यादिति अविद्याविषयत्वादिति भावः। इदं चाध्यासभाष्ये स्फुटम्। विशिष्टेत्यादि जगति वेदसत्त्वेऽपि प्रामाण्यरूपविशेषणाभावात् प्रमाणं वेदादिर्जगति न विद्यते इति विशेषणाभावप्रयुक्तो विशिष्टाभाव इत्यर्थः। नास्तीति। औपाधिकत्वादिति भावः। जगति सर्वेषां कामहेतुकत्वाभावात्किमन्यदित्यादंशं प्रकारान्तरेण योजयन्ति यद्वेत्यादि। प्राणिनामिति गोमयोत्पन्नवृश्चिकघटादिनिष्ठजलजन्यजन्त्वादिव्यतिरिक्तानामिति वाच्यम्। शांकरैर्यथाकथंचिदीश्वराङ्गीकारान्नास्तिकैस्तु तदनङ्गीकाराद्दाहुः इयं चेत्यादि। कथं तर्ह्यस्य निर्विशेषमात्रवादिशङ्कानिराकरणाय भाष्ये उपक्षेप इत्याकाङ्क्षायां निर्विशेषमात्रवादिनो नास्तिकतौल्यादुपक्षेप इति वक्तुं तत्तौल्यं स्फुटयन्ति ततश्चेत्यादि। आपत्तिरिति एतदन्तं तथासतीत्यारभ्य कामहेतुकमित्यन्तस्य भाष्यस्य फलितोर्थः। शास्त्रानर्थक्यं चेति भाष्यं विवृण्वन्ति वेदस्यापीत्यादि। तद्भ्रमेति संसारात्मकभ्रमेत्यर्थः। स्वरूपस्यैवेति विशेषज्ञानरूपस्य। एवकारेण कार्यलक्षणप्रतिपादकभागव्यवच्छेदः। शेषशास्त्रं माहात्म्यप्रतिपादकं तस्येत्यर्थः। आरोपापवादे प्रक्षालनेत्यादि। ननु कर्तृत्वादिप्रतिपादकस्य

शास्त्रानर्थक्यं च । सर्वं समाप्नोषीत्यप्यसंगतं स्यात् । वस्तुपरिच्छेदात् । नहि वेदो निष्प्रपञ्चरूपकथनमुक्त्वा स्वोक्तं जगत्कर्तृत्वं निषेधति । तस्मादध्यारोपा-

भाष्यप्रकाशः ।

दानर्थक्यम् । स्वस्वमतकल्पितरूपस्य चेतनविशेषस्येश्वरस्य सर्वैरेवाङ्गीकारेण तत्सत्तासाधनायाप्यनुपयोगात् । अपवादार्थमेवारोपितमेव सर्वमुच्यत इत्यङ्गीकारे, सर्वं समाप्नोषीत्यस्याप्यसंगतिः । पदार्थान्तरस्य व्याप्यस्याभावेनावस्तुनश्चाव्याप्यत्वेनास्य वस्तुपरिच्छेदबोधकस्यार्थबाधापत्तेः । असंगतत्वं विभजन्त एव तदुपपादकमाहुः न हीत्यादि । यदि हि निष्प्रपञ्चकथनं मुक्त्वा जगत्कर्तृत्वं ब्रह्मणि निषेधेत्, तदा कर्त्रन्तरादिसत्तया जगदपि सत्त्वं स्यात् । तदा व्याप्यसिद्धौ सर्वं समाप्नोषीति वाक्यं संगतं स्यात् । यथा तात्त्विकभेदवादिनां मते । तव मते तु निष्प्रपञ्चत्वकथनपूर्वक एव कर्तृत्वादिनिषेध इति त्वन्मत इदं वाक्यमसंगतमेवेत्यर्थः । एवं तन्मतमपास्य तमुपहसन्ति तस्मादित्यादि । तस्मादिति युक्तिप्रमाणविरुद्धत्वात् । तथाचैवंविधव्याख्यानरोगेण स्वयंनिवृत्तदैवभावैरासुरत्वरूपमरणप्राप्त्या अस्पृश्यैर्वेदान्ता अपि शवतिलापो यथा अमङ्गला अस्पृश्यास्तथा कृता इत्यर्थः । अत एव प्रबोधचन्द्रोदयनाटकेऽपि बौद्धोक्तिः ।

'प्रत्यक्षादिप्रमासिद्धविरुद्धार्थाभिधायिनः । वेदान्ता यदि शास्त्राणि बौद्धैः किमपराध्यते' ॥

इति । 'असद्वा इदमग्र आसीत्, ततो वै सदजायत' इति श्रुतिच्छायायास्तादृशैरप्यालम्बनात् । अत एव पाद्मोत्तरखण्डेऽप्युक्तम्—

'मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते । मयैव कथितं देवि कलौ ब्राह्मणरूपिणा' ॥

रश्मिः ।

शेषशास्त्रस्य नानर्थक्यं कर्तृत्वस्यापि नैयायिकादिभिरङ्गीकारेण तत्प्रतिपादनस्यावश्यकत्वादित्याशङ्कां निराचिकीर्षवो हेतुमप्याहुः स्वस्वमत इत्यादि । सर्वं समाप्नोषीत्यादि भाष्यं व्याकुर्वन्ति अपवादेत्यादि । असंगतौ हेतुभूतं भाष्यं विवृण्वन्ति पदार्थेत्यादि । तथा च वस्तुपरिच्छेदं समाश्रित्य यच्छास्त्रं सर्वं समाप्नोषीति तदप्यसंगतं स्यादिति भाष्यार्थः । उपपादकमिति तर्कमित्यर्थः । निःप्रपञ्चेत्यादि निर्गुणरूपप्रतिपादकं वाक्यप्रबन्धं मुक्त्वेत्यर्थः । क्त्वस्तु भावोर्थः अव्ययकृतो भाव इति वार्तिकात् । 'समानकर्तृकयोः पूर्वकाले' इत्यादिसूत्रैः योत्यं समानकर्तृकत्वादिकमित्युच्यत इति भूषणे स्थितम् । पूर्वोत्तरभावः सामानाधिकरण्यं च संसर्गः । तथा च तादृशवाक्यप्रबन्धवचनसमानाधिकरणमुत्तरकालिकं कर्तृत्वनिषेधं कुर्यादित्यर्थः । कर्त्रन्तरादिसत्तयेति सगुणादिरूपकर्त्रन्तरेत्यर्थः । यथेत्यादि नैयायिकानां यथा घटादि कर्त्रन्तरसत्तया प्रलक्षसिद्ध्या जगद्रूपव्याप्यसिद्धौ सर्वं समाप्नोषीति संगतं भवति तथा स्यादित्यर्थः । त्वं तु निष्कलं निष्क्रियं शान्तमित्यादिभिः निःप्रपञ्चत्वं प्रपञ्चविरहवैशिष्ट्यं कथयन्नेव कर्तृत्वं निषेधतीति मन्यसे इति कर्त्रन्तरसत्ताऽसिद्ध्या व्याप्यासिद्धेरिदमसंगतमेव स्यादित्याहुः तव मत इत्यादि । आसुरत्वेत्यादि 'मृत्युरत्यन्तविस्मृतिः' इति वाक्यात् स्वरूपविस्मारकत्वेनासुरत्वं मृत्युः । तथाकृता इति । भगवन्माहात्म्यनाशकत्वादिति भावः । अत एवेति अनुभूय युक्तिप्रमाणातिक्रमादेवेत्यर्थः । किमपराध्यत इति तादृशवाक्यानां सर्वेषामप्रामाण्यात्कोऽपराध इत्यर्थः । सर्वोऽपि वेदो नाङ्गीक्रियत इत्यपराध इत्यत आहुः असद्वेत्यादि । यथा अस्थूलादिश्रुतिर्निर्वि-

पवादपरत्वेन व्याख्यातृभिर्वेदान्तास्तिलापः कृता इति मन्यामहे। सर्ववाक्यार्थबाधात्। यथा निर्दोषपूर्णगुणविग्रहता भवति तथोपरिष्टाद् वक्ष्यामः।

ननु पुरुषार्थार्थानि शास्त्राणि। इदं च शास्त्रं मोक्षरूपपुरुषार्थसाधकम्। मोक्षश्चाविद्यानिवृत्तिरूप इति युक्तम्। अविद्या चाज्ञानं ज्ञानेनैव नश्यति। ततो ज्ञानोपयोगित्वेन व्याख्यातव्ये वेदान्तेऽध्यारोपापवादव्यतिरेकेण व्याख्यानमयुक्तम्। अतो यथाकथंचिद् व्याख्यानेऽपि पुरुषार्थसिद्धेर्न कोऽपि दोष

भाष्यप्रकाशः।

इत्यादि। ननु ब्रह्मणः प्रपञ्चसमवायित्वमयुक्तम्। कार्यस्य कारणसाजात्यनियमेन प्रपञ्चगतदोषाणां ब्रह्मण्यापातादित्याकाङ्क्षायामाहुः यथा निर्दोषेत्यादि। उपरिष्टादिति अन्तस्तद्धर्माधिकरणे।

अपवादार्थत्वे उक्तान् दोषानसहमानो निर्विशेषवादी पुनः प्रत्यवतिष्ठते नन्वित्यादि। युक्तमिति 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्गः' इति गौतमसूत्रे मिथ्याज्ञानापायस्य मोक्षसाधकत्वेन कथनाद्युक्तम्। अविद्या चाज्ञानमिति। 'अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या' इति पतञ्जलिसूत्र उक्तं भावरूपमज्ञानं, न तु ज्ञानाभावः। योगभाष्ये, अमित्रो न मित्रं, न वा मित्राभावः, किंतु मित्रविरुद्धसम्पदिति दृष्टान्तेन व्यासपादैरेव भावरूपताया उक्तत्वादिति। ततश्चायमर्थः। शास्त्रस्य स्वार्थाबाधने य आग्रहः क्रियते स शास्त्रस्वरूपं विचार्य कार्यः। न हि शास्त्रत्वेन शास्त्राणामुपादेयता येन स युक्तः स्यात्। किंतु पुरुषार्थार्थत्वेन। पुरुषाश्च नानास्वभावाः स्वस्वोपयोगिशास्त्रमाद्रियन्ते। तत्रेदं शास्त्रं मोक्षसाधकं मुमुक्षूपयोगि। मोक्षस्त्वभियुक्तैरविद्यानिवृत्तिसाध्यतयोक्तत्वादविद्यानिवृत्तिरूप एवात्र वक्तव्यो न तु स्वरूपात्मकः। तस्याजन्यत्वात्। तत्र च साधनानामनुपयोगेन तदुपदेशवैयर्थ्यप्रसङ्गाच्च। नचाविद्यानिवृत्तेर्जन्यत्वे कदाचित् तन्नाशः शङ्क्यः। ध्वंसरूपत्वात्। अत एव जन्यभावत्वेन नश्वरत्वेन व्याप्तिराद्रियते, न तु केवलं जन्यत्वेन। ततश्च साधनसाध्यो मोक्षोऽविद्यानिवृत्तिरूप एवेत्यविवादम्। तत्र साधनविचारे यद्यपि दर्शनान्तराभिमानिभिः साधनान्तराणि कर्मसमुच्चिततत्तद्विधज्ञानरूपाण्युक्तानि तथापि श्रौतेऽस्मिन् वेदान्तदर्शने केवलं ज्ञानमेव साधनम्। अविद्याया अज्ञानरूपत्वस्य साधितत्वात्। विवक्षितज्ञानमात्रेणैव तन्निवृत्तिसिद्धौ साधनान्तराणां समुच्चयस्य चापार्थत्वात्। ततो ज्ञानोपयोगित्वेनैव वेदान्तव्याख्याने कर्तव्येऽध्यारोपापवादपक्षमपहाय स्वार्थपरत्वेन व्याख्यानं नाभियुक्तजनरुचिरम्। अतो यथाकथंचिद्व्याख्यानेऽपि ज्ञानोत्पत्त्या अज्ञाननिवृत्तौ, 'ब्रह्म वेद ब्रह्मैव भवति' इतिरूपस्वरूपावस्थात्मकपुरुषार्थसिद्धेरप्रत्यूहत्वात् पाषण्डित्वासुरत्वशास्त्रानर्थक्यादिरूपाणां दोषाणां लेशस्याप्यभावादनुचितोऽयमुपहास इति। एवं तेन स्वोपहासे विनिवारिते तस्यापत्रपत्वं बोधयन्तः स्वोक्तं स्थिरीकर्तुं तदुक्तं

रश्मिः।

क्षेपवादिनावलम्ब्यते तथेयं तैरवलम्ब्यते इति लोकायतिकतौल्यमिति भावः। दुःखजन्मेत्यादि। इदं सूत्रं शंकराचार्यैरुपन्यस्तं भाष्ये। साधनपादस्थं सूत्रमाहुः अनित्येत्यादि। स्वरूपात्मक इति ब्रह्मस्वरूपात्मक इत्यर्थः। अत एवेति ध्वंसस्य जन्यत्वे सत्यनश्वरत्वादेवेत्यर्थः। जन्यभावत्वेनेति

इति चेत् । न । पुरुषार्थस्य शास्त्रार्थस्य वा स्वरूपं शास्त्रैकसमधिगम्यं, न स्वबुद्धिपरिकल्पितम् । अतः स्वबुद्ध्या शास्त्रार्थं परिकल्प्य तत्र वेदं योजयन्तो महासाहसिकाः सद्भिरुपेक्ष्याः ।

पुरुषार्थः पुनर्यथा वेदान्तेष्ववगतः । 'ब्रह्म वेद ब्रह्मैव भवति', 'ब्रह्म-

भाष्यप्रकाशः ।

निषेधन्तः प्रामाणिकप्राचीनरीतिमाहुः नेत्यादि । अयमर्थः । यदुक्तं, पुरुषार्थार्थानि शास्त्राणी-त्यादिना, तदङ्गीकुर्मः । परंतु पुरुषार्थः शास्त्रार्थश्च कीदृशो विवक्षित इति विचारणीयम् । किं स्मार्त उत श्रौतः ? । तत्र नाद्यः । विरुद्धानां शास्त्राणां व्यासेनैव निराकरणात् । वाक्या-भासयुक्त्याभासावष्टम्भाः पूर्वपक्षवादिन इहोत्तिष्ठन्ति । तत्र पदवाक्यप्रमाणज्ञेनाचार्येण वेदान्त-वाक्यानां ब्रह्मावगतिपरत्वप्रदर्शनाय वाक्याभासयुक्त्याभासप्रतिपत्तयः पूर्वपक्षीकृत्य निराक्रियन्त इति भवद्भाष्यकृतापि तन्निराकरणाङ्गीकारात् । अतो द्वितीय एवादरणीयः । तथा सति पुरुषार्थस्य शास्त्रार्थस्य च स्वरूपं श्रुत्येकसमधिगम्यं, न तु दर्शनान्तरवाक्यादरणेन स्वबुद्धि-कल्पितमिति सिद्धम् । एवं सति पदवाक्यप्रमाणनिष्णातेनाचार्येण कार्यलक्षणसूत्रे पूर्वं विचारित-त्वादग्रे तत्तद्धर्मादिविचाराच्च धर्मविशिष्टब्रह्मज्ञानमेव शास्त्रार्थो, न त्वध्यारोपापवादेन यावद्धर्म-शून्यब्रह्मावगतिः । अतः स्वबुद्ध्या तथा शास्त्रार्थं कल्पयित्वा तत्र वेदस्यैकवाक्यत्वं बोधयन्तो लोकान्तरीयभयराहित्येन महासाहसकर्तृत्वात् सद्भिर्वेदानुसारिभिरसंभाष्या इति । मोक्षस्याविद्या-निवृत्तिरूपत्वव्युदासायाहुः पुरुषार्थ इत्यादि । तथाचाविद्यानिवृत्तिरूपो मोक्षः कुत्रापि नोक्त इति त्वन्मतीयः पुरुषार्थोऽपि काल्पनिक इत्यर्थः । एतदेव बोधयितुं वाक्यान्युदाहरन्ति ब्रह्म वेदेत्यादि । अत्र प्रथमे ब्रह्मभावो, द्वितीये परब्रह्मप्राप्तिरेव च फलत्वेनोच्यते । तृतीये च संसाराबृत्त्यभावः । चतुर्थे गीतावाक्ये आप्तिस्वरूपं निष्कृष्यते । पञ्चमे च वैयासे सूत्रे तृतीयवाक्यार्थनिर्धारणेन जन्यभावत्वनश्वरत्वयोर्व्याप्तिर्निराक्रियते । अत्रायमाशयः । भवद्भाष्ये न्यायसूत्रोपन्यासेनाविद्यानिवृत्तेरूर्ध्वं सरूपत्वादनश्वरत्वं यदसूचि, तद् आश्रमवासिके भारतीये पर्वणि महता प्रबन्धेन, त्यक्तदेहानां कुरुपाण्डवसैन्यानां व्यासेन पुनर्दर्शितानां स्वस्वपत्नीभिः

रश्मिः ।

न तु जन्यत्वेनेति भावः । ध्वंसस्य जन्यत्वेऽपि नश्वरत्वाभावात् । निराकरणादिति । द्वितीयाध्याये तथेत्यर्थः । 'ईक्षतेर्नाशब्दम्' इति सूत्रस्थं शांकरभाष्यं संमतये आहुः वाक्याभासेत्यादि । एवं पीठिकामुक्त्वा व्याकुर्वन्ति स्म तथा सतीत्यादिना । स्वबुद्ध्येति भाष्यं विवृण्वन्ति स्म न त्विति । अत इत्यादिभाष्यं विवरीतुमाहुः एवं सतीत्यादि । आप्तिस्वरूपमिति परमाप्नोतीत्युक्तभाष्यं कर्म ब्रह्म तन्निष्ठाप्तिस्वरूपमित्यर्थः । भक्त्या हृदि प्रकटे प्रवेश आप्तिरिति निष्कर्षः । निराक्रियत इति यदीयं व्याप्तिः प्रामाणिकी स्याच्छ्रुतिष्वादृता स्यात् इति तर्केण तथेत्यर्थः । एवं सामान्यतः सिद्धान्तग्रन्थं व्याख्याय प्रेक्षावत्प्रवृत्तये शंकर-भाष्यं पूर्वपक्षकोटौ निवेशयितुमाशयं वर्णयन्ति अत्रायमित्यादि । असूचीति नित्यश्च मोक्षः सर्वैर्मोक्षवादिभिरभ्युपगम्यत इत्युक्त्वा 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिश्रुतिजालमुपन्यस्यैव-मापाः श्रुतयो मोक्षप्रतिबन्धनिवृत्तिमात्रमेवात्मज्ञानफलं दर्शयन्तीति निरुच्यास्योपन्यासेन तत्स्वी-कृतं तथात्वमसूचीत्यर्थः । स्मार्तं स्मार्तेनैव दूष्यमित्याशयेनाहुः तदाश्रमेत्यादि । वाक्यानि तु

विद्याप्नोति परम्', 'न स पुनरावर्तते', 'ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्', 'अनावृत्तिः शब्दादनावृत्तिः शब्दात्' इत्येवमादिभिः श्रुतिस्मृति-

भाष्यप्रकाशः ।

सहैकरात्रिकृतविहारामन्त्रणादिकथनाद् ध्वंसस्याप्यनश्वरत्वं प्रायिकमेव, न तु नियतमतस्तद्वद्विद्या-कृताविद्यानिवृत्तेरपि स्वप्नप्रबोधन्यायेन च निवृत्तिसंभवान्नानश्वरत्वं, गुणानामन्योन्याभिभव-जननमिथुनवृत्तितया सत्त्वेन रजस्तमसोरिव ताभ्यां सत्त्वस्याप्यभिभवे पुनरप्यविद्योत्पत्ति-संभवादसंगतम् । अतस्तद्विहाय श्रौत एव ब्रह्मप्राप्तिरूपः पुरुषार्थ आदर्तव्यः । नच तस्य नश्वरत्वं शङ्क्यम् । 'न स पुनरावर्तते' इति ब्रह्मप्राप्तस्यानावृत्तिबोधनेन तस्यानश्वरत्वनिश्चयात् । जन्यभावत्वेन नश्वरत्वेन व्याप्तेर्लौकिकत्वबोधनार्थैव सूत्रे शब्दादित्यस्य हेतोरुपन्यासात् । नच ब्रह्मणः सर्वगतत्वेन नित्याप्तस्वरूपत्वादनाप्यत्वं शङ्क्यम् । आप्तस्वरूपत्वेऽप्युक्तगीतावाक्ये आप्तिस्वरूपविवरणेनेदानीं तस्याभावादाप्यत्वस्यापि सत्त्वात् । एतदर्थापत्त्यैवान्तस्त्वबहिष्ट्वयोरपि तत्र मन्तव्यत्वात् । नच श्वेताश्वतरोपनिषदि, 'भूयश्चान्ते विश्वमायानिवृत्तिः' इतिमायानिवृत्ते-र्मोक्षरूपत्वश्रावणादविद्यानिवृत्तेरप्यनश्वरत्वं श्रौतत्वं च शङ्क्यम् । मायाऽविद्ययोर्भेदात् ।

'विद्याऽविद्ये मम तनू विद्ध्युद्धव शरीरिणाम् । मोक्षबन्धकरी आद्ये मायया मे विनिर्मिते' ॥

इति भगवता तयोः कार्यकारणभावबोधनात् । माया चाविद्या च स्वयमेव भवतीति ताप-नीयश्रावितद्वैरूप्यपक्षेऽपि तयोर्भेदेन तन्नाशयोरपि भिन्नत्वान्मायानिवृत्तेरेव मोक्षत्वं, नाविद्यानि-

रश्मिः ।

विद्वन्मण्डने सन्ति । अनुभवमप्याहुः स्वप्नप्रबोधेत्यादि । अविद्यया विद्यानिवृत्तिं व्युत्पादयन्ति स्म गुणानामिति । असंगतमिति यदसूचि तदसंगतमित्यर्थः । अतस्तदिति स्मृत्यनुभव-सूत्रविरुद्धत्वात्स्मार्तमित्यर्थः । अत्र यस्य तूत्पाद्यो मोक्षस्तस्य मानसं वाचिकं कायिकं वा कार्य-मपेक्षते इति युक्तं, तथा विकार्यत्वे च तयोः पक्षयोर्मोक्षस्य ध्रुवमनित्यत्वम् । नहि दध्यादिविकार्य-मुत्पाद्यं वा घटादि नित्यं दृष्टं लोके इति शंकरभाष्योक्तमाशङ्क्य निराकुर्वन्ति न चेत्यादि । स्वरूपव्यतिरिक्तत्वेऽपि ब्रह्मणो नाप्यत्वं, सर्वगतत्वेन नित्याप्तस्वरूपत्वात्सर्वेण ब्रह्मण आकाशस्ये-वेति शंकरभाष्योक्तमाशङ्क्य निषेधन्ति न च ब्रह्मण इत्यादि । तस्येति प्रवेशस्येत्यर्थः । तथा च लोकन्यायेनोपष्टब्धत्वाच्चायमेवार्थस्तात्त्विक इति भावः । एतदित्यादि अभिहितानुपपत्तिरूपयेत्यर्थः । इदमिह तत्त्वं गीतावाक्यावगतोऽर्थः प्रवेशरूपो ब्रह्मणो व्यापकत्वेन नित्याप्तस्वरूपत्वादनुपपन्नत्वेन ज्ञातः सन्नर्थान्तरं सान्तस्त्वबहिष्ट्वरूपं कल्पयतीति, यथा ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र यागस्य क्षणिकत्वेन स्वर्गसाधनतानुपपत्त्या मध्यवर्त्यपूर्वं कल्प्यते तद्वत् । श्रुतीनामेकवाक्यत्वायाहुः माया-निवृत्तिरित्यादि 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इति स्मृतिरप्येतेन संगृहीता । तदुक्तम् ।

'ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति । समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥
भक्त्याहमेकया ग्राह्यो यावान् यश्चास्मि तत्त्वतः । ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्' । इति ।
मायातरणोत्तरं ब्रह्मभाव इति वस्तुस्थितिः ।

'अपश्यत्पुरुषं पूर्णं मायां च तदुपाश्रयाम् । यया संमोहितो जीव आत्मानं त्रिगुणात्मकम् ॥
परोऽपि मनुतेऽनर्थं तत्कृतं चाभिपद्यते । अनर्थोपशमं साक्षाद्भक्तियोगमधोक्षजे' । इति समाधिभाषायाः ।

ब्रह्मणो व्यतिरिक्तत्वमाश्रित्यानाप्यत्वं यदुक्तं तद्दूषितमिदानीं तु स्वात्मरूपत्वे सत्यनाप्यत्वादिवि

न्यायैर्ब्रह्मप्राप्तेरेव पुरुषार्थत्वम् । ब्रह्म च पुनर्न जीवस्यात्ममात्रम् । अज्ञानवद्वा । 'एकस्यैव ममांशस्य जीवस्यैव महामते । बन्धोऽस्याविद्ययाऽनादिर्विद्यया च तथेतरः'

इति भगवता जीवस्यैवाविद्यावत्त्वप्रतिपादनात् । तस्मान्न्यायोपबृंहितसर्ववेदान्तप्रतिपादितसर्वधर्मवद् ब्रह्म । तस्य श्रवणमनननिदिध्यासनैरन्तरङ्गैः शमदमादिभिश्च बहिरङ्गैरतिशुद्धे चित्ते स्वयमेवाविर्भूतस्य स्वप्रकाशस्य सायुज्यं परमपुरुषार्थः । तस्मात् सर्वे वेदान्ताः स्वार्थ एव युक्तार्था इति न्यायैर्वक्तव्यत्वाद् ब्रह्मणः समवायित्वाय समन्वयसूत्रं वक्तव्यम् ॥ ३ ॥

इति प्रथमाध्याये प्रथमपादे तृतीयं समन्वयाधिकरणम् ॥ ३ ॥

इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते श्रीब्रह्मसूत्राणुभाष्ये प्रथमाध्याये प्रथमपादस्यादिमत्रिसूत्रीभाष्यं समाप्तम् ॥

---

भाष्यप्रकाशः ।

वृत्तेः । मायानिवृत्तिश्च मोक्षस्य पूर्वा कक्षेति परममोक्षत्वं ब्रह्मप्राप्तेरेव निश्रेयसम् । तदेतदुक्तं ब्रह्मप्राप्तेरेव पुरुषार्थत्वमिति । यदपि मोक्षस्य स्वात्मस्वरूपत्वेनानाप्यत्वमुक्तं यच्च ब्रह्मणोऽविद्याशाबल्यादज्ञानवत्त्वं तदप्यसंगतमिति ज्ञापनायाहुः ब्रह्म चेत्यादि । आत्ममात्रमिति 'मात्रं कार्त्स्न्येऽवधारणे' कृत्स्नमात्मस्वरूपम् । तथाचाऽस्मिन् वाक्ये जीवस्यांशत्वकथनेन स्वस्यांशित्वं बोधयता भगवता ब्रह्मणो जीवात्ममात्रत्वे निवारिते मोक्षस्यात्मरूपत्वेनानाप्यत्वं निवारितम् । जीवस्याविद्यया बन्धकथनेन ब्रह्मणोऽविद्यावत्त्वमपि निवारितमतस्तदप्यसंगतमित्यर्थः । सिद्धमाहुः तस्मादित्यादि । तस्मादिति एकदेशिमतस्योपबृंहणविरुद्धत्वात् । तस्येति सर्ववेदान्तप्रतिपादितधर्मविशिष्टस्य ब्रह्मणः । स्वयमाविर्भूतस्येति नायमात्मेतिश्रुत्या साधनाधीनत्वे ब्रह्माविर्भावस्य वारिते आविर्भावः स्वोक्तकरणेन प्रसादादेव भवतीति तेन स्वयमाविर्भूतस्य । तथाच श्रौतानां स्मार्तानां च ब्रह्मविषयाणां साधनानां चित्तकषायशोषण एव पर्यवसानात् तैरतिशुद्धे चित्ते परमव्योमात्मके सति तत्राविर्भूतस्य ब्रह्मणः, 'सोऽश्नुते' इतिश्रुत्युक्तं सायुज्यमेव सर्वोत्कृष्टः पुरुषार्थो ध्वंसाप्रतियोगित्वात् । न तु ब्रह्मात्मावगतिमात्रम् । अतस्तादर्थ्येन यथाकथंचिद् वेदान्तव्याख्यानमयुक्त-

रश्मिः ।

भाष्ये ब्रह्मैक्यादनाप्यत्वं यदुक्तं तदनुवदन्ति यदपीत्यादि । स्वयंपदात्पुष्टिमार्गं व्याचक्षते स्म नायमात्मेतीति । ननु पुष्टिमार्गबोधकं किं पदं श्रुताविति चेन्न 'वृणुते' इति पदसत्त्वात् । साधननिषेधपूर्वकं, वृङ् संभक्तौ इति धातुपाठात् स्वीयत्वेन स्वीकारस्तु संभक्तिरूपपुष्टिसंबन्धित्वेन तत्त्वात् । तेनेति प्रसादेन दर्शनसाधनेन 'तमक्रतुं पश्यति वीतशोको धातुः प्रसादात्' इति श्रुत्युक्तेनेत्यर्थः । आविर्भूतस्येति लोकरीत्याविर्भूतस्येत्यर्थः । तत्राविरिति व्योमात्मके शरीरे आविर्भूतस्यानन्दस्य । 'आकाशशरीरं ब्रह्म' इतिश्रुतेः । अदृश्यत्वाधिकरणात् । यद्यपि सेवाफलविवृतिविवृतौ सायुज्यं 'भक्त्यामामभिजानाति' इति स्मृत्युक्तः प्रवेश इत्युक्तं, तथाप्यत्र परमपुरुषार्थपदसमभिव्याहारादलौकिकसामर्थ्यरूपं मुख्यं फलं सह युनक्तीति सयुक् सयुजो भावः सायुज्यमिति व्युत्पत्त्या संयोगानुभवरूपं सायुज्यं विवक्षितमित्याशयेनाहुः सोऽश्नुते इतीति । तादर्थ्येनेति स्वसैद्धान्तिकपुरुषार्थार्थत्वेनेत्यर्थः । इदमत्र बोध्यम् । निमित्तत्वस्य श्रुतिसिद्धत्वादित्युक्तम् । अत्र च समवायित्वाय समन्वयसूत्रं वक्तव्यमित्युक्तम् । अतो निमित्तत्वे सति समवायि ब्रह्म इत्युक्तं भवति ।

भाष्यप्रकाशः ।

मित्यर्थः । एवमेकदेशिमतानि व्युदस्य पूर्वोक्तं सूत्रप्रयोजनं निगमयन्ति तस्मादित्यादि ।

इति तृतीयं समन्वयाधिकरणम् ॥ ३ ॥

इति श्रीवल्लभाचार्यचरणनखचन्द्रनिरस्तहृदयध्वान्तस्य श्रीपीताम्बरात्मजस्य पुरुषोत्तमस्य कृतौ भाष्यप्रकाशे प्रथमाध्याये प्रथमपादस्यादिम-त्रिसूत्रीप्रकाशः समाप्तिमगमत् ॥

रश्मिः ।

अतएव द्वितीयस्कन्धे 'अन्वयव्यतिरेकाभ्याम्' इत्यस्य सुबोधिन्यां अभिन्ननिमित्तोपादानं जगत् ब्रह्मकार्यमेकं इत्युक्तं भवतीत्युक्तम् । तदिदं लोकाप्रसिद्धमिति चिन्त्यते समवायश्च तादात्म्यं न तु वैशेषिकमतप्रतिपन्नमिति द्वितीयाध्याये समवायदूषणावसरे व्युत्पाद्यं, तच्च कृत्स्नस्यांशस्य वा, अंशस्येति सिद्धान्तः । तत्र च 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' इतिश्रुतिव्याकोपः । मैवं 'कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा' इत्याशङ्क्य 'श्रुतेस्तु शब्दमूलत्वात्' इति भगवता व्यासेनैव तन्निराकरणात् । अत एव । अथवा बहुनैतेन किं ज्ञातेन तवार्जुन । विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥ इति स्मृतिः । तस्य निमित्तत्वं दुरुपपादम् । समवाय्यसमवायिभिन्नत्वे सति कारणत्वस्य तल्लक्षणत्वात् । नैतत् निमित्तकारणलक्षणस्यैकांशेन समवायिन्यविरुद्धत्वात् । अवयवभेदस्यावयविनि सत्त्वात् । तथा चैषा प्रक्रिया । ब्रह्माविकृतमेवैकांशेन समवायि, दृष्टान्ताभावो भूषणाय 'न तत्समः' इति श्रुतेः धेनुविशेषवद्वा, तदेव प्रकृतिरूपं, कश्चित्कालरूपं स्वांशमुपादानं करोति । प्रमाणं तु पूर्वमुक्तम् । उपादानं च द्विविधम् । परिणाम्युपादानं विवर्तोपादानं च । तत्राद्यं स्वसमानसत्ताकं कार्याकारेणाविर्भवति । उपादानसमसत्ताकोऽन्यथाभावः परिणामः । स च विकृताविकृतभेदेन । द्विविधः । तत्राद्यो यथा मृदो घटशरावादिः । द्वितीयस्तु यथा सुवर्णस्य कटककुण्डलादिः । विवर्तस्तूपादानविषमसत्ताकोन्यथाभावः । यथा रजतादिरूपेण शुक्तेः स्थानं । यद्यपि समवायिकारणभिन्नं यत्कारणं तन्निमित्तकारणम् । असमवायि कारणस्यातिरिक्तकारणताकल्पने प्रयोजनाभावात् । कारणसामग्र्यामन्तर्भाव इत्युक्तं तत्रैव एतदुक्तमाचार्यचरणैः 'प्रपञ्चो भगवत्कार्यस्तद्रूपो माययाभवत्' इति शास्त्रार्थप्रकरणे । तथाच शरीरि, प्रसिद्धकर्तृत्वात् कुलालवदिति साकारत्वसिद्धिः । पृथ्वी जलं शोषयति तेजः पिबतीत्यादि कर्तृत्वाराभाय प्रसिद्धेति हेतुविशेषणम् । अन्यद्विद्वन्मण्डने स्फुटम् ।

इति तृतीयं समन्वयाधिकरणम् ॥ ३ ॥

इति श्रीविठ्ठलेश्वरैश्वर्यनिरस्तसमस्तान्तरायेण श्रीगोविन्दरायजित्पौत्रेण संपूर्णवेत्रा विठ्ठलरायजित्क्राश्रीयगोकुलोत्सवात्मजगोपेश्वरजिता कृते भाष्यप्रकाशस्य रश्मौ प्रथमाध्याये प्रथमपादस्यादिम त्रिसूत्री रश्मिः संपूर्णतामगमत् ॥

श्रीकृष्णाय नमः ।

# श्रीमद्ब्रह्मसूत्राणुभाष्यम् ।

शुद्धाद्वैतब्रह्मवादनिर्गुणभक्तिमार्गप्रवर्तकाचार्यचक्रचूडामणि-
श्रीमद्वल्लभाचार्यचरणप्रणीतम् ।

दशदिगन्तविजयिश्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणप्रणीत-
भाष्यप्रकाशसंपूर्णवेणुश्रीमद्गोस्वामिश्रीगोपेश्वर-
जिचरणप्रणीतभाष्यप्रकाशरश्मिपरिबृंहितम् ।

प्रथमाध्यायप्रथमपादस्येक्षत्यधिकरणमारभ्य पादसमाप्त्यन्तो
द्वितीयो भागः

'भगवद्धर्मपरायणसद्गतश्रेष्ठिगोवर्धनदास सुन्दरदास' इत्यस्य पुष्टिमार्गीय-
संस्कृतसाहित्यसमुद्धारार्थं निर्दिष्टद्रव्यसंग्रहतः 'प्राप्तभगवत्पद-
मूलचन्द्र तुलसीदास तेलीवाला, बी. ए., एल्एल्. बी.,
वकील, हाइकोर्ट' इत्येतेषां सुहृद्भिः
संशोध्य 'निर्णयसागर' मुद्रणालये
मुद्रयित्वा प्रकटीकृतम् ।

श्रीवल्लभाब्दाः ४५८. संवत् १९९२.
श्रीकृष्णप्रादुर्भावोत्सवः

मूल्यं रूप्यकत्रयम् ।

श्रीकृष्णाय नमः ।
श्रीगोपीजनवल्लभाय नमः ।
श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# श्रीमद्ब्रह्मसूत्राणुभाष्यम् ।

## भाष्यप्रकाश-रश्मि-परिबृंहितम् ।

## अथ प्रथमोऽध्यायः ।

एवं ब्रह्मजिज्ञासां प्रतिज्ञाय किं लक्षणकं ब्रह्मेत्याकाङ्क्षायां जन्मादिसूत्रद्वयेन वेदप्रमाणकं जगत्कर्तृ समवायि चेत्युक्तम् । एवं त्रिसूत्र्या जिज्ञासालक्षणविचारकर्तव्यता सिद्धा ।

---

भाष्यप्रकाशः ।

अतः परं प्रस्तोष्यमाणग्रन्थावतरणाय पूर्वोक्तस्य शास्त्रार्थसंग्रहरूपत्वं बोधयन्तः तदर्थमनुवदन्ति एवं ब्रह्मेत्यादि । तेन सिद्धमाहुः एवं त्रिसूत्र्येत्यादि । कर्तव्यतापदस्य जिज्ञासादिपदैः प्रत्येकं संबन्धः । सिद्धेति सूचिता । तथाच पूर्वसूत्रे जिज्ञासापदमहिम्ना ज्ञाने-

रश्मिः ।

अतः परं चिद्रूपेऽव्याप्तिवारकं प्रकृतिपरमाण्वादावतिव्याप्तिवारकं च सप्तसूत्रमीक्षत्यधिकरणभाष्यमाक्षेपसंगत्या पूर्वमवतारयन्ति अतः परमित्यादि । संगतिस्तु पूर्वपक्षभाष्ये स्फुटिष्यति 'क्रियाशक्तिज्ञानशक्ती संदिह्येते परस्थिते' इति भाष्यकारिकाया ज्ञानशक्तिसंदेहोऽत्र । त्रिसूत्र्येति । करणत्वबोधकतृतीयानुरोधादत्र द्वन्द्व इति सूचयन्त आहुः कर्तव्यतेत्यादि । प्रत्येकमित्यादि । द्वन्द्वान्ते श्रूयमाणत्वादिति भावः । जिज्ञासासूत्रे कर्तव्यपदानध्याहाराज्जन्मादिसूत्रे च लक्षणपदानुक्तेः समन्वयसूत्रेपि कारणविशेषविचारानुक्तेराहुः सूचितेति । सूचकपदेन सिद्धेत्यर्थः । साचेयं नार्थव्यञ्जना किंतु शब्दव्यञ्जनेत्याहुस्तथाचेत्यादि । जिज्ञासापदमहिम्नेति । अयमर्थः । यथा—

'भद्रात्मनो दुरधिरोहतनोर्विशाल-
वंशोन्नतेः कृतशिलीमुखसंग्रहस्य ।
यस्यानुपप्लुतगतेः परवारणस्य
दानाम्बुसेकसुभगः सततं करोऽभूत्' । इत्यत्र

भद्रात्मनोऽनाक्रमणीयमूर्तेः, विस्तीर्णे वंशे कुले उन्नतिरभ्युदयो यस्य, कृतः शरसंग्रहो येन, अनुपप्लुता मण्डूकवद्गतिर्यस्य, वैरिनिवारकस्य, एतादृशस्य यस्य राज्ञो हस्तः सततं दानोदकसेकसुन्दरोऽभूदिति मुख्यो वाच्योर्थः । इदानीं व्यङ्ग्योर्थः । अत्युन्नतयाऽनाक्रमणीयस्य, विशाला पृष्ठवंशस्योन्नतिर्यस्मिन्, कृतभ्रमरसंग्रहस्य, अनुपप्लुतगतेः, एवंविधस्य परवारणस्य, पर उत्कृष्टो वारणस्तस्य, हस्तः शुण्डादण्डः, मदोदकसेकसुभगोभूदिति । अत्र व्यञ्जनया गजप्रतीतिः । राज्ञो वाच्यत्वस्य प्रकरणनियतत्वात् उक्तव्यञ्जनाद्वारा व्यञ्जकशब्दं लक्षयति । शब्दस्यार्थविशेषयुक्तस्य व्यञ्जकत्वादर्थोपि सहकारित्वेन व्यञ्जको बोध्यः । तद्वदत्रापि । तथाहि ।

तत्र ब्रह्मणि चतुर्धा विचारः। स्वरूपसाधनफलप्रतिपादकानि वेदान्तवाक्यानि त्रिविधानि मतान्तरनिराकरणं च। तत्र स्वरूपे विचारिते मतान्तरनिरासव्यतिरेकेण साधनफलयोरनुपयोगात्। अतः प्रथमं स्वरूपनिर्णयः। तदनु मतान्तरनिरासः। तदनु साधनानि फलं चेति। तत्र प्रथमेऽध्याये स्वरूपवाक्यानि विचार्यन्ते। तानि द्विविधानि। संदिग्धानि, निःसंदिग्धानि च। तत्र निःसंदिग्धानां निर्णयो न वक्तव्यः। संदिग्धानि पुनश्चतुर्विधानि। कार्यप्रतिपादकान्यन्तर्यामिप्रतिपादकान्युपास्यरूपप्रतिपादकानि प्रकीर्णकानि चेति। तत्र प्रथमपादे कार्यवाक्यानां निर्णय उच्यते। सच्चिदानन्द-

---

भाष्यप्रकाशः।

च्छासारपेन, 'अविज्ञातं विजानतां विज्ञातमविजानताम्' इति ब्रह्मस्वरूपमर्यादाबोधनाद् ब्रह्मज्ञानोत्तरमपि तस्याः करणावश्यकता सूचिता। द्वितीये स्वरूपलक्षणमनुक्त्वैव कार्यलक्षणकथनेन तस्य गौणत्वनिवारणात् तत्करणावश्यकता सूचिता। तृतीये समवायित्वनिर्णायकहेतुकथनेन विरुद्धधर्माश्रयत्वबोधनाद् विचारकरणावश्यकता च सूचितेति त्रिसूत्र्युक्त एवार्थोऽग्रे विशेषाकारेण बोधनीय इत्यर्थः। तमेव वैशेषिकं बोधयितुं प्रकारमाहुः तत्र ब्रह्मणीत्यादि। अत्राध्यायार्थक्रमनियमे तत्तदुपजीव्योपजीवकभावं हेतुत्वेनाहुः तत्र स्वरूप इत्यादि। तथाचैवं चतुर्धा विचारः शास्त्रार्थः। तत्तद्विधाविचारस्तत्तदध्यायार्थ इत्यर्थः। प्रथमाध्यायस्य विशेषाकारेणार्थमाहुः तत्र प्रथम इत्यादि। निःसंदिग्धानीति 'सत्यं ज्ञानमनन्तं ब्रह्म' 'विज्ञानमानन्दं ब्रह्म' इत्यादीनि। न वक्तव्य इति निर्णयस्य संदेहनिरासार्थत्वात् तेषु च तस्याभावान्न वक्तव्यः। तथाच स्वरूपनिरूपकत्वेऽपि संदेहाजनकत्वादेव तद्विचारो व्यासेन न क्रियत इत्यर्थः। पादसंख्यायां हेतुभूतां विधामाहुः संदिग्धानीत्यादि। प्रथमपादार्थमाहुः तत्रेत्यादि। निर्णेतव्यानां वाक्यानां विधां वदन्ति सच्चिदित्यादि। सच्चिदानन्दरूपेण कारणं निर्दिश्य कार्यप्रतिपादकानि, आकाशवायुतेजोवाचक-

रश्मिः।

'संयोगो विप्रयोगश्च साहचर्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः'॥ इति।

संयोगादयो विशेषस्मृतिहेतव उक्तास्तत्र जिज्ञासासूत्रे ब्रह्मपदसांनिध्येन विचारस्य वाच्यत्वे नियमिते ज्ञानेच्छाकरणावश्यकताव्यञ्जकः शब्दो लाक्षणिकस्तस्य व्यङ्ग्योऽर्थस्तत्करणावश्यकतारूप इत्यर्थः। 'ज्ञानी चेद्भजते कृष्णम्' इति वाक्यात्। नैयायिकास्तु लक्षणयैव निर्वाहयन्ति। विजानतामिति इदमित्थतयाऽस्माभिर्ब्रह्म ज्ञातमित्यभिमानवतामित्यर्थः। अविजानतामिति तादृशाभिमानशून्यानामित्यर्थः। करणेत्यादि। जन्मादिसूत्रेषु ज्ञानेच्छाधिकारादर्शनात् व्यङ्ग्येऽर्थे विवक्षिते कर्तव्यपदस्यार्थस्य वाध्याहार इति भावः। कर्तव्यपदप्रत्ययार्थत्वेन तदैवावश्यकत्वप्रतीतेः। भाष्ये कर्तव्यतापदाद्व्यङ्ग्येऽर्थेऽधिकारक्रियानन्वयो दोषाय। तस्येति जन्मादिकर्तृत्वस्य निर्वाहकसंगत्या निरूपणेनेत्यर्थः। वैशेषिकमिति विशेषेण संसृष्टमित्यर्थः। 'संसृष्टे' इति सूत्रेण ठक्। तस्येति

भाष्यप्रकाशः ।

शब्देन कारणं निर्दिश्य कार्यप्रतिपादकानीत्येवं बहुविधान्याद्ये पादे निर्णीयन्त इत्यर्थः । नन्वन्यवाचकैः शब्दैः कुतो निर्देश इति शङ्कानिरासायाहुः अन्यत्रेत्यादि । तथाच तेषां नैसर्गिकशक्तिबोधनेन भूताकाशादिषु ब्रह्मलक्षणस्यातिव्याप्तिपरिहारायैवं निर्देश इति बोधयितुमयं निर्णय इत्यर्थः । एवमुपोद्घातेनार्थकथनादिदं बोधितम् । विचारस्य शास्त्रार्थस्याजिज्ञासासूत्रस्य सर्वत्र विषयिविषयभावः संगतिः । शास्त्रस्याध्यायेषु तेषां स्वपादादिषु पादानां स्वावयवेषु सामान्यविशेषभावः । अधिकरणानां परस्परमन्यान्या एव संगतय उन्नेया इति । संगतिस्त्वनन्तराभिधानप्रयोजकाकाङ्क्षाजनकज्ञानविषयोऽर्थः । इदं वाक्यमेतद्वाक्यानन्तरं कस्मादुक्तमीदृशी या जिज्ञासा सा अनन्तराभिधानप्रयोजकाकाङ्क्षा । तज्जनकं तत्स्वरूपयोगि यज्ज्ञानं तत्र विषयत्वेन योऽर्थः प्रकाशते सोऽर्थः संगतिशब्दवाच्यः । तद्भेदाश्च षट् ।

'सप्रसङ्ग उपोद्घातो हेतुताऽवसरस्तथा ।
निर्वाहकैककार्यत्वे षोढा संगतिरिष्यते' ॥

रश्मिः ।

संदेहस्येत्यर्थः । तेषामित्यादि आकाशादिपदानां नैसर्गिकशक्तेर्ब्रह्मणि बोधनेनेत्यर्थः । स्वावयवेष्विति अधिकरणेष्वित्यर्थः । अन्यान्या इति तत्तदधिकरणे वक्तव्याः । आनन्तर्यपदघटितत्वं दीधितिकृतोपगतं संगतिलक्षणस्य तथापि गदाधर्या चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञमभिधायोत्तरार्थत्वमात्रं व्याख्यातमिति तदाहुः अनन्तरेत्यादि । विश्लिष्यावयवानर्थमाहुः इदमित्यादि । यथा प्रत्यक्षनिरूपकवाक्यनिरूपणानन्तरमनुमाननिरूपकवाक्योक्तिस्तत्रानुमाननिरूपकमिदं वाक्यं प्रत्यक्षनिरूपकवाक्यानन्तरं कस्मादुक्तमीदृश्या अनन्तराभिधानहेतुविषयकं यज्ज्ञानं तद्विषयिणी या इच्छा तद्रूपाया जिज्ञासायाः स्वरूपं ज्ञानेच्छारूपं तत्रोपयोगिज्ञानपूर्वकत्वेन कार्यत्वमनुमानमिति तन्निरूपकवाक्ययुक्तमित्येवमुपयोगि यज्ज्ञानं कार्यत्वत्वेनोपस्थितं कार्यत्वं तद्विषयज्ञानं तत्र विषयत्वेन ज्ञाननिरूपितविषयतावच्छेदकविशेषात्मकेन कार्यत्वत्वेन प्रकाशमानस्य धर्मस्योपजीव्योपजीवकत्वस्य संगतित्वमिति । एवं कारणत्वस्यापि न तु कारणत्वस्यैव । अत्र प्रत्यक्षोपजीवकज्ञानमुपजीवकत्वत्वेनोपस्थितोपजीवकत्वसामान्यप्रकारेण ततः कार्यविशेषान्वेषणनिवृत्तिस्त्वनन्तरमनुमानपददर्शनात् । एवं हि स्वरूपोपयोगः स्यात् । अनुमाननिरूपकमिदं वाक्यं प्रत्यक्षनिरूपकवाक्यानन्तरं कस्मादुक्तमिति पूर्वोक्तजिज्ञासायां अतश्चानुमानं प्रत्यक्षस्य कार्यत्वात्तदनन्तरमुक्तम् । इति विशेषावधृतिरिति । इयं च जिज्ञासा व्याख्यातुरेव न तु निरूपयितुः । निरूपयितुरपि वा ग्रन्थकरणानन्तरं मया कस्मादुक्तमिति जिज्ञासासंभवात् न च निरूपितप्रत्यक्षानुमानयोः संभवतीयम् । उक्तमिति क्तान्तप्रदघटितत्वादिह त्वनुमानस्य निरूपयिष्यमाणत्वादिति वाच्यम् । तत्कालीनप्रत्यक्षानुमानयोर्निरूपयितुरपि वा ग्रन्थकरणानन्तरं मया कस्मादुक्तमिदं स्यादिति जिज्ञासासंभवात् । वस्तुतस्तु 'धातुसंबन्धे प्रत्ययाः' इति सूत्रेण भविष्यत्काले लुङ् स्यादित्यध्याहारः । मनोरमायां विशेषानुल्लेखात् तथाप्युदाहरणानुरोधेन श्रूयमाणतिङन्तस्थले एव सूत्रप्रवृत्तिस्तदा तु उक्तमित्यत्र वचनीयं स्यादिति वक्तव्यम् ।

१. ज्ञानेच्छा जिज्ञासा, ज्ञानं यद्यपि हेतुरूपविषयेण पूरितं तथापि विशेषहेतुना न पूरितमिति इच्छाविषयज्ञानविषयत्वेनेत्यर्थः । २. हेतुविशेषावधं विषयविषया हेतुः ।

रश्मिः ।

बुद्धिस्थं यद्विचारितं तत्पर्यायोक्तमिति । वस्तुतस्तु अस्य वाक्यस्यैतद्वाक्यानन्तरं निरूपणे को हेतुः स्यादित्येव जिज्ञासा । एवं चानुमानस्येत्यस्य स्पष्टप्रतिपत्तिप्रयोजनकतया तत्रोपयोगिज्ञाना-गोचरत्वम् । तथा ज्ञानविपर्येत्यत्र हेतुभिन्नेति वक्तव्यत्वेन नेत्यर्थस्य हेतोर्गोचरत्वमिति कार्यत्वस्य संगतित्वमित्यपि न । कार्यत्वमनुमानस्येत्यत्र कार्यत्वमित्येतावतैव जिज्ञासापूर्तेरिति ध्येयम् । सामान्यहेतोर्विशेषकार्यत्वरूपहेतुत्वादित्यपि ध्येयम् । तथा तज्जनकमित्यस्य कार्यज्ञान-मिष्टसाधनमिति ज्ञानमिति विवरणं गदाधरभट्टकृतम् । कारणस्य कार्यमावश्यकमिति कार्य-त्वरूपेण कार्यसामान्यज्ञानमिति विवरणं भवानन्दरामनाथकृतम् । तत्र गदाधरकृत-व्याख्यानेभिधातुः पूर्वोक्तं ज्ञानं संभावितं न तु निश्चितं दीधितिकृतानुलेखात् । अस्मदुक्त-ज्ञानजिज्ञासयोरपि संभवाच्च विषयताविशेषस्य विवक्षा चेति दूषणद्वयम् । इतरयोस्तु शिष्यस्य प्रतिभाविरहेण तद्विरहेण च शिष्यज्ञानयोर्वक्तुमशक्यतया ज्ञाने व्याख्यातुरभिधातुर्वा प्राप्ते संभाविते न अपि तु निश्चिते दीधितिकृतोल्लेखात् । अतस्तज्जनकं तत्रोपयोगीति व्याख्यातम् । तथा तत्रोपयोगिज्ञाननिरूपितविषयतावच्छेदकं कार्यत्वत्वोपस्थितकार्यत्वावच्छिन्नकार्यानुमाननि-रूपकवाक्यत्वयद्यपि वक्तुं शक्यते तथापि कार्यत्वं कण्ठरवेणोक्तं झटिति बुद्धावारोहति । एवं च उपयोगिज्ञाननिरूपितविषयतावच्छेदकं कार्यत्वत्वमिति ज्ञेयम् । गदाधरभट्टास्तु प्रत्यक्षान-न्तरमस्य किमुपजीवकमित्यादिजिज्ञासां प्रति उपजीवकत्वादिज्ञानं हेतुरित्यनुमानस्य प्रत्यक्षा-नन्तरमभिधाने प्रयोजिका किमस्योपजीवकमिति जिज्ञासा तज्जनकं कार्यज्ञानमिष्टसाधनमिति उप-जीवकत्वविषयकज्ञानं तद्विषयत्वमुपजीवकत्व इति लक्षणसंगतिः । एवमुपजीव्येपि बोध्यम् । तथा च कारणत्वस्य कार्यत्वस्य च संगतित्वं न तु कार्यत्वस्यैव जनकज्ञानविषयेत्यनेन जनकीभूते-ष्टसाधनताज्ञानीयज्ञाननिष्ठविशेष्यतायां विषयतासंबन्धेन यदवच्छेदकत्वं तन्निरूपितावच्छेदकतात्म-कविषयताविशेषस्य विवक्षितत्वात् । न ज्ञाननिष्ठेष्टसाधनत्वेतिव्याप्तिर्भवति चोपजीवकज्ञान-मिष्टसाधनमित्यत्रेष्टसाधनताज्ञानैकदेशज्ञाने या विशेष्यता उपजीवकत्वप्रकारकज्ञाननिष्ठेष्टसाधन-ताविषयकं ज्ञानमिति बोधात् । तादृश्यां विशेष्यतायां विषयितासंबन्धेन यदवच्छेदकत्वं इष्टसाधनतावच्छेदकत्वं इष्टसाधनतानिष्ठविषयता निरूपिता तद्द्वारा विषयितासंबन्धेन विशेष्य-तायाः इष्टसाधने सत्त्वात् तादृशेष्टसाधनतानिरूपितमवच्छेदकत्वमुपजीवकत्वे इष्टसाधनताधिकरणे ज्ञाने विषयतासंबन्धेनोपजीवकत्वस्य सत्त्वात्तदात्मकस्य विषयताविशेषस्योपजीवकत्व एव सत्त्वा-दतिव्याप्तिवारणम् । भवानन्दभट्टास्तु प्रत्यक्षस्य कारणत्वज्ञाने कारणस्य कार्यमावश्यक-मिति क्रमेण कार्यस्वरूपेण कार्यसामान्यज्ञानं ततः सामान्यधर्मप्रकारकज्ञानस्य विशेषधर्मप्रका-रकजिज्ञासाजनकत्वात् किमस्य कार्यमित्याकारिका शिष्यजिज्ञासा, ततः शिष्यस्य किमस्य कार्यमिति शब्दप्रयोगः, ततः शिष्यजिज्ञासाज्ञानं गुरोः, तत इष्टसाधनताज्ञानेनानन्तराभिधानमिति क्रमेण जिज्ञासायामनन्तराभिधानप्रयोजकत्वमिति वदन्ति । रामनाथस्तु आनन्तर्याभिधानप्रयोजक-शिष्यज्ञानगोचरतदिच्छाजनकीभूतशिष्यज्ञानविषयत्वमेव संगतिरित्याह । प्रत्यक्षनिरूपणानन्तरं कार-णस्य कार्यमावश्यकमिति शिष्यस्य कार्यत्वसामान्यज्ञानं ततश्च किमस्य कार्यमिति शिष्यजिज्ञा-सायां गुरुणानुमानाभिधानं क्रियते इति शिष्यज्ञानजिज्ञासे अनुमानाभिधानावसरे शिष्यजिज्ञा-

१. अन्तयद्वाक्यात् ।

रूपेणाकाशवायुतेजोवाचकवाक्यानि तद्विधान्यपि निर्णीयन्ते । अन्यत्रान्यवाचकान्यपि वेदान्तेषु भगवद्वाचकानीति ।

रश्मिः ।

सायाः प्रतिभाविरहेण तद्विरहेण च वक्तुमशक्यतया जिज्ञासा चानन्तराभिधातुरेवेति गदाधराः । घटत्वादिप्रत्यक्षेण को घट इति जिज्ञासोदयात् घटत्वादौ प्रत्यक्षसंगतित्ववारणाय प्रयोजकान्तम् । नन्वेवमपि न निस्तारः । प्रत्यक्षादौ निरूपिते स्वसामग्रीवशात् को घट इति कस्यचिज्जिज्ञासया केनचिद् घटो निरूपितः तादृशनिरूपणप्रयोजकतथाविधजिज्ञासामादाय, घटत्वादावपि प्रत्यक्षादिसंगतित्वप्रसक्तेः प्रयोजकान्तमुपादायाप्यशक्यवारणत्वात् । अथ तत्र घटत्वादेः संगतित्वमिष्टमेव प्रसङ्गमध्ये तस्यान्तर्भावनीयत्वाच्च । अन्यथा तादृशनिरूपणं संगत्यभावेनाबद्धप्रलापः स्यात् । आकाङ्क्षिताभिधाने तु स न स्यादिति । एवं च घटत्वादीनां लक्ष्यत्वेन प्रयोजकान्तमनर्थकमित्युच्यते तदा तु यन्निरूपणानन्तरं कदाचिदपि कस्यचिद्धर्मस्यावान्तरधर्मप्रकारकज्ञानेच्छा न जायते अपि तु कालान्तरे जायते, तदा तस्य तत्संगतित्ववारणाय प्रयोजकान्तोपादानात् । न च तादृशधर्म एव दुर्लभः । तादृशधर्मसंभावनयातिव्याप्तिसंदेहेनातिव्याप्तिवारकविशेषणदानौचित्यात् । यद्वा यन्निरूपणानन्तरं यद्धर्मावच्छिन्नस्य यस्य पुंसो विशेषजिज्ञासा न जाता अपि त्वन्याभिधानानन्तरमेव, तद्धर्मस्य तं प्रति तत्संगतित्ववारणाय प्रयोजकान्तमुपादेयम् । अस्तु तर्ह्यनन्तराभिधानप्रयोजकज्ञानविषयत्वं सा प्रयोजकजिज्ञासाजनकेत्यधिकं मैवं पटादिकं निरूप्य प्रतिपाद्यस्य जिज्ञासामन्तरेणैव यत्रासंबद्धघटाद्यभिधानं कृतं केनचित् तत्रास्य घटज्ञानं भवत्वित्याकारकेच्छाजनकीभूतं वक्तृघटादिज्ञानं तद्विषयघटत्वादावतिप्रसङ्गः । घटविषयकज्ञानस्यापि घटादिबुबोधयिषाद्वारा पटाद्यभिधानानन्तरं घटाद्यभिधानप्रयोजकत्वादतो जनकान्तरमप्युपादेयम् ।

न चैवमपि पटघटादिनिरूपणोत्तरं घटसंबन्धेन दण्डादिस्मरणे को दण्ड इत्यादिजिज्ञासया दण्डादिनिरूपणं तत्र तादृशजिज्ञासाजनकज्ञानविषयस्य पटनिरूपितसंगतित्वापत्तिरिति वाच्यम् । यदभिधानानन्तराभिधानप्रयोजकजिज्ञासायां तदभिधानप्रयोज्यत्वस्य निवेशनीयत्वादिति पदकृत्यं गदाधर्याम् । निवेशप्रकारस्तु यदभिधानानन्तराभिधानप्रयोजनकतदभिधानाप्रयोज्यजिज्ञासाजनकज्ञानविषयोर्थः संगतिरिति बोध्यः । पटाभिधानानन्तरं दण्डादिनिरूपणाभावान्न पटनिरूपितसंगतित्वं दण्डादिनिरूपणे अस्य लाघवाय जिज्ञासा निरूपिता ज्ञानमिष्टविषयतावच्छेदकत्वविशेषः संगतिर्लाघवात् । भवति च जिज्ञासा तत्स्वरूपैकदेशभूतेच्छा तन्निरूपिता या तद्द्वितीयदलज्ञाननिष्ठायोग्यता तदवच्छेदकमनुमानं विषयविधया तत्ता चानुमाने तदवच्छेदकमनुमानत्वमपि परंत्ववच्छेदकत्वविशेषः कार्यत्वमिति लक्षणसमन्वयः । जिज्ञासा चात्र किमनुमानं कार्यभूतमित्येव विचारः । तादृशजिज्ञासयैवानुमाननिरूपणादिति स्थितं गदाधर्याम् । गदाधरव्याख्यानमनुवदन्ति तत्रेत्यादि । स्मृतस्य पूर्वमिहितवस्तुसंबन्धेन स्मृतस्योपेक्षानर्हत्वम् । विरोधो नञर्थः । द्वेष्यज्ञानविषयता चोपेक्षार्हत्वम् । एवं च द्वेष्यज्ञानविषयताविरोधि यद्रूपं तत्, जिज्ञासाविषयतावच्छेदकरूपमिति यावत् । स्मृतस्येत्यभिधानं जिज्ञासाया आनन्तर्याभिधानप्रयोजकत्वलाभाय । उपोद्घातादिपञ्चकभिन्नत्वे सतीति पूरणीयम् । तथाचोपोद्घातादिपञ्चकभिन्नसंगतिः प्रसङ्ग इति पर्यवसितार्थः । तेनाधेयत्वाधिकरणत्वघटत्वादीनामत्रैवान्तर्भावः । उपेक्षान-

१, चक्षुःसन्निकर्षादिसामग्रीवशात् । २. जिज्ञासाया अजनकीभूतो वच्छब्दार्थः तत्संगतिरित्यर्थः । ३. वक्ष्यमाणा ।

भाष्यप्रकाशः ।

इत्यभियुक्तोक्तेः । तत्र स्मृतस्योपेक्षानर्हत्वं प्रसङ्गः । प्रकृतार्थसाधकत्वमुपोद्घातः । उपजीव्योपजीवकभावो हेतुता । सा सापेक्षत्वादुभयसंग्राहिका । प्रतिबन्धकीभूतजिज्ञासा-निवृत्त्यावश्यवक्तव्यत्वमवसरः । निर्वाहप्रयोजकता निर्वाहकत्वम् । एकजातीयकार्यजनकत्वमेक-

रश्मिः ।

हेत्वं च विभाजकमात्रमतस्तादृशधर्माणां मुमुक्षानर्हत्वादिरूपाणां निरूपणप्रयोजकजिज्ञासाविषय-तावच्छेदकत्वविरहेपि न क्षतिः । उदाहरणं त्वाधारनिरूपणेन स्मृतस्याधेयस्योपेक्षानर्हत्वज्ञानेन किमाधेयमिति जिज्ञासयाधेयनिरूपणमिति । प्रकृतार्थेत्यादि । तदुक्तं 'चिन्तां प्रकृतसिद्ध्यर्थामु-पोद्घातं विदुर्बुधाः' इति । प्रकृतसिद्ध्यर्थां प्रकृतोपपादकत्वविषयिणीं किमस्योपपादकमिति चि-न्तामुपोद्घातसंगतित्वनिर्वाहिकां विदुरित्यर्थः । तादृशजिज्ञासामादायैवोपोद्घातत्वे लक्षणसमन्वयात् । अर्थसाधकत्वं च उपपादकत्वं तच्च निर्वाहकत्वं तच्च कचित् तद्घटकतया कचित्तदघटकतयेति । तत्राद्यं विशिष्टपरामर्शत्वस्यानुमितिजनकतावच्छेदकत्वं परामृश्यमानलिङ्गलिङ्गपरामर्शान्यतरव्यापार-कज्ञानकरणकं ज्ञानमनुमितिरित्यनुमितिलक्षणघटकतयानुमितिलक्षणोपपादकम् । परामर्शज्ञानेन विना परामर्शघटितलक्षणानिर्वाहादिति परामर्शव्यवस्थापने उपोद्घातः संगतिः । द्वितीयं तु सामान्यप्रत्यासत्तेरनुमितिपूर्वं नियमतो विशिष्टपरामर्शनिर्वाहकतया विशिष्टपरामर्शत्वावच्छिन्ना यानु-मितिकारणता तन्निर्वाहकत्वादेव परामर्शघटितानुमितिलक्षणोपपादकत्वं न त्वनुमितिलक्षणघटकत-येति द्विविधमुपपादकत्वम् । उपजीव्येत्यादि इयं विवेचिता । ननु कार्यत्वं पोढात्वं व्याहनिष्यतीत्याकाङ्क्षायां हेतुतापदमजहत्स्वार्थवृत्त्या कार्यत्वकारणत्वोभयसाधारणेन केनचिद्रूपेण तदु-भयपरमिति नाधिक्यमित्यनुवदन्ति सा सापेक्षेत्यादि । प्रतिबन्धकीत्यादि । अत्र किमि-दानीं वक्तव्यमिति जिज्ञासाजनकज्ञानविषयत्वमादाय लक्षणसमन्वयः । यद्यपि तादृशजिज्ञासा-विषयतायां जिज्ञासानिवृत्तिघटितं नावच्छेदकमिति तेन रूपेण संगतित्वं नास्ति अपि तु निवृत्त्युपलक्षिततत्कालवक्तव्यत्वरूपेणैव तथापि न क्षतिः । यादृशस्य संगतित्वं तादृशस्यैव विभाजकत्वमित्यनियमात् । जिज्ञासानिवृत्तेर्विभाजकधर्माघटकत्वे बाधकाभावादिति । इयं च प्रत्यक्षोत्तरोपमाने संगतिः । अत्र प्रतिबन्धकीभूतानुमान जिज्ञासा किमनुमानमिति तस्या अनुमाने उपमानापेक्षया प्राथमिकजिज्ञासाविषयत्वप्रयोजकबहुवादिसंमतत्वकथनेन नानुमाननिरूपणाद्विषय-सिद्धानिवृत्तौ सत्यामुपमानमवश्यं वक्तव्यमिति जिज्ञासया किमिदानीं वक्तव्यमिति जिज्ञासया वो-पमाननिरूपणात् । निर्वाहेत्यादि । उदाहरणं तु व्याप्तिपक्षधर्मतयोर्ज्ञानस्यानुमितिजनकत्वेन तादृशव्याप्तिनिरूपणानन्तरं किमनुमितिनिर्वाहप्रयोजकमिति जिज्ञासया पक्षधर्मतानिरूपणमिति । पक्षधर्मताज्ञानं कारणमिति पक्षधर्मता निर्वाहप्रयोजिका । एकजातीयेत्यादि । उदाहरणं तु अनुमानस्येश्वरसिद्ध्यपवर्गयोः संगतिरत्रैकजातीयं येन केनापि धर्मेणेश्वरसिद्ध्यपवर्गाख्यं कार्यं तज्जनकत्वमनुमान इति । सामान्यत एकजातीयानेककार्यजनकत्वज्ञाने ईश्वरसिद्ध्यनन्तरं किम-न्यकार्यजनकत्वमिति जिज्ञासयापवर्गरूपकार्यनिरूपणात् सामान्यलक्षणसमन्वयः । अथा-मन्द भट्टस्तु नैयायिकेनेश्वरसिद्ध्यनन्तरं शक्तिं निरस्य परमप्रयोजनं त्वनुमानस्यापवर्ग इत्यनेने-श्वरसिद्ध्यपवर्गयोरनुमानजन्यत्वलक्षणैककार्यत्वसंगतिः सूचिता । एकस्य कारणकार्यतायाः तदर्थ-

१. विशिष्टे बाधितो विधिर्विशेषणमुपसंक्रामति शिखी न इतिवत् । एवं चोपमाननिरूपणकर्तव्यत्वे संगतित्वम् ।

भाष्यप्रकाशः ।

कार्यत्वम् । इदं च संगत्यभिधानमात्रोपयोगित्वात् स्वरूपकथनमात्रम् । लक्षणं तु प्रसङ्गाद्य-न्यतमत्वमेव । तेन पूर्वस्येष्टसाधनत्वाधाराधेयभावादावव्याप्तावपि न दोष इति नैयायिका

रश्मिः ।

स्त्वादित्युक्तम् । इदानीं भवानन्दोक्तमनुवदन्ति इदं चेत्यादि । विभावकं चेत्यर्थः । सामान्यलक्षणं चेति वार्थः । लक्षणफलमनुवदन्ति तेन पूर्वस्येत्यादि । इष्टसाधनत्वेति इदं त्विह वक्तव्यं इष्टसाधनत्वस्य कार्यकारणभावात्मकत्वं कैश्चित्स्वीकृतं तन्मतं भवानन्दादावनू-दितं तत्राव्याप्तिः । नैयायिकैस्तत्र संगतित्वानङ्गीकारात् । नैयायिका इति अस्य 'क्रतू-क्थादिसूत्रान्ताट् ठक्' इति ठकि नैयायिका इत्येव । अतः परं पूर्वोक्तं संगतिसामान्यलक्ष-णमुपजीवकत्वे न संभवति किं प्रत्यक्षोपजीवकमिति जिज्ञासयानुमाननिरूपणाभावात् । अपि तु किमनुमानमिति जिज्ञासयैव निरूपणं तस्य । इयं च जिज्ञासानिरूपयितुः अनुमाननिरू-पणात्पूर्वं संभवात् । या तु प्रत्यक्षग्रन्थानन्तरं मया कस्मादुक्तमिदमिति पूर्वोक्ता जिज्ञासा सा-नुमाननिरूपणानन्तरं निरूपयितुर्विचारसामयिकी । नचात्र किं मानमिति वाच्यम् । अनुमान-स्वरूपलक्ष्यतावच्छेदकविशिष्टे लक्षणप्रतिपादकस्य तत्करणमनुमानमित्युत्तरस्य संगतेरेव मानत्वात् । अन्यथा पूर्वोक्तजिज्ञासास्वीकारे तु यद्धर्मप्रकारकयद्विषयिणी जिज्ञासा तद्धर्मावच्छिन्नतदुद्देश्यकं लक्षणादिनिरूपणमिति नियमस्य को घटः कम्बुग्रीवादिमान् घटः इत्यादिषु दर्शनात् उप-जीवकमनुमानमित्युत्तरस्य प्रसङ्गात् । ननु पूर्वोक्तां जिज्ञासां स्वीकृत्योपजीवकपदमध्याहृत्योत्तरस्यो-पजीवकमनुमानं तच्च तत्करणमित्यर्थात् संगतिरिति चेन्न । किं प्रत्यक्षोपजीवकमिति जिज्ञासायाः प्रत्यक्षोपजीवकत्वविशिष्टेऽनुमितिकरणत्वरूपविशेषधर्मबोधकोत्तत्करणमित्यादिवाक्यादेव निवृत्तेः । तथा चानन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयत्वरूपसंगतित्वं प्रकृते नोपजीवकत्वे संभवति । किंतु निरूप्यतावच्छेदकेऽनुमानत्वे इत्यनन्तराभिधानप्रयोजकजिज्ञासाजनकनिरूप्यतावच्छेदकधर्मप्रका-रकस्मरणप्रयोजकनिरूप्यनिष्ठसंबन्धः संगतिरित्येव लक्षणं युक्तम् । प्रत्यक्षानुमानपदार्थयोरुपजी-व्योपजीवकभावसंबन्धज्ञानादनुमानपदार्थस्वरूपप्रकृतलक्षणलक्ष्यतावच्छेदकप्रकारेणानुमानस्मरणादनु-मानपदार्थः क इति विशेषजिज्ञासयानुमितिकरणमनुमानपदार्थ इति निरूपणादुपजीवकत्वे संगतित्वनिर्वाहात् । एवं च पूर्वापरनिरूपणविषययोः संबन्ध एव संगतिः । न तु निरूप्यतावच्छे-दक इति । इदं यद्यपि साधीयः संगतमित्यत्र संबद्धमिति व्यवहारात् तथाप्यवश्यवक्तव्य-त्वस्य संबन्धत्वविरहादवसरे व्याप्ततावच्छेदके हेतुतासंबन्धाश्रयणात् । किंच यत्र गां पश्यन् सादृश्यादिमतीयं गौरिति प्रयुङ्क्ते तत्र संगतेप्यानन्तर्याभिधानाभावादव्याप्तिः । किंच शरीरगौरवं लक्ष्यतावच्छेदकगौरवं च । अपिचे जिज्ञासाधिकरणसंगतौ लक्षणस्याप्रवेशः । आनन्तर्याभि-धानघटितत्वात् । अधिकरणस्य प्रायश्येनानन्तराभिहितत्वात् । अन्यच्च प्रतिपत्तिगौरवं चेति मत्वा

१. विशेषणज्ञानस्य कारणत्वादिति भावः । २. पश्चात्तु संगतेरपि सत्त्वाजन्मादिसूत्रस्याजातत्वेनानन्तर्याभिधानप्रयो-जकजिज्ञासाभावात्तत्सत्त्वादेवव्याप्तिरपि चेति ।

भाष्यप्रकाशः ।

आहुः । वयं तु, सावधानपुरुषप्रयुज्यमानवाक्यप्रयोजकत्वेन स्मृतस्योपेक्षानर्हत्वमेव संगतिः ।

रश्मिः ।

संगतमित्यत्रोपेक्षानर्हमिति व्यवहारारम्भं वा लक्षणान्तरमाहुः वयं त्वित्यादि । इति रोचयामह इति संबन्धः । प्रयुज्यत इति प्रयुज्यमानमुच्चार्यमाणमित्यर्थः । एतादृशवाक्यस्य प्रयोजकं परंपरया कारणं यद्धेतुतादिस्तदवच्छेदकत्वेनानुमानवाक्यत्वादिना स्मृतिविषयोनुमानवाक्यादिः । अवच्छेदकत्वं तृतीयार्थः । उपेक्षानर्हता च क्वचिद्धेतुतया क्वचिदुपोद्घातेनेत्येवं ज्ञेया । तथा च सावधानाभिन्नपुरुषकर्तृकप्रयोगकर्मीभूतवाक्यनिरूपितप्रयोजकतावच्छेदकरूपेण कर्तृनिष्ठस्मृतिनिष्ठविषयितानिरूपितविषयताशालिवाक्यपदान्यतरनिष्ठोपेक्षानर्हत्वं संगतिः । अत्रेदं हृदयम् । सावधानपुरुषप्रयुज्यमानं वाक्यमथातो ब्रह्मजिज्ञासेति तत्प्रयोजकं प्रकृतोपपादकत्वमस्य जातित्वविरहाद्धर्मत्वेन प्रकृतोपपादकरूपत्वात्तत्तावच्छेदकेन ब्रह्मभक्त्यादिविचारप्रतिज्ञावाक्यत्वेन स्मृतस्य ब्रह्मभक्त्यादिविचारप्रतिज्ञावाक्यस्योपेक्षानर्हत्वं संगतिः ।[1] बुद्धिस्थमेव सर्वोपि प्रयुङ्क्त इति दृष्टानुयायिनः । तादृशावच्छेदकस्य संगतित्वविरहात् तत्रातिव्याप्तिवारणाय विशेष्यम् । अनुभवविषयीभूतघटादिसंबन्धेन स्मृतस्य दण्डादेरुपेक्षानर्हत्वं द्वेष्यज्ञानविषयताविरोधिरूपात्मकमिति तत्रातिव्याप्तिः तद्वारणाय विशेषणद्वलम् । दण्डः संगत इत्यव्यवहाराद्वाक्यधर्म एव संगतिः । प्रयुक्तवाक्यनाशोत्तरं कालान्तरे तदुपपादकत्वेन स्मृतस्योपेक्षानर्हत्वं संगतिः स्यात् तत्रातिव्याप्तिवारणाय प्रयुज्यमाने इति । यदि च तादृशस्थले संगतित्वव्यवहारः प्रामाणिक एव तदा तु स्पष्टप्रतिपत्तिः प्रयोजनं वाक्येत्यादितृतीयानां तूपेक्षानर्हताप्रयोजकस्फूर्त्यै । प्रकृतोपपादकत्वावच्छेदकब्रह्मभक्त्यादिविचारप्रतिज्ञावाक्यत्वादिना वाक्यादिस्फुरणे सत्युपेक्षानर्हता वाक्यादेर्यतः । पुरुष इति तु वक्तव्यमेव योग्यत्वात् । तत्त्वं च जीवेशत्वं तच्च स्त्रीपुरुषसाधारणं तेन स्त्रीप्रयुज्यमानवाक्यप्रयोजकत्वेन स्मृतस्योपेक्षानर्हत्वे नाव्याप्तिः । केनचित्प्रतिष्ठायै पुरुषेण प्रयुज्यमानं वाक्यमानन्तर्यावच्छेदकावच्छेदेन प्रतिपत्स्यमानावच्छेदकमित्याद्यनर्थकं तादृशवाक्यप्रयोजकत्वेनासंबद्धोच्चारणे पदप्रतारणाय यदुपेक्षानर्हत्वं तत्रातिव्याप्तिवारणाय सावधानेति । स चानवधानपुरुष इति नासंबद्धेऽतिव्याप्तिः । किं च सावधानेत्यनुक्तौ भ्रान्तपुरुषोपि संगृह्येतेति सावधानेत्यवश्यं वक्तव्यमेव । तर्हि स्मृतस्येत्यवक्तव्यं, वक्तव्यं तत् । सावधानपुरुषप्रयुज्यमानवाक्यप्रयोजकत्वेनाधारत्वेनोपेक्षानर्हत्वस्य कालेपि सत्त्वात् । स्मृतस्येत्युक्ते तु स्मरणविषयत्वविरहात् काले नातिव्याप्तिः तादृशप्रयोजकत्वेन स्मृतत्वमेव संगतिरिति तु न । स्मरणविषयतायां संगतित्वव्यवहाराभावादतिव्याप्तिप्रसङ्गात् । अथवात्र भगवान् व्यासः सर्वमपि ब्रह्मभक्तिविचारं स्मृत्वेदं सूत्रं प्रणिनिनायेति । सावधानपुरुषप्रयुज्यमानवाक्यं 'जन्माद्यस्य यतः' इत्यारम्भ'अनावृत्तिः शब्दात्'इत्यन्तं तत्प्रयोजकत्वेन तदुपपादकत्वेन स्मृतस्य ब्रह्मभक्तिविचारवाक्यस्योपेक्षानर्हत्वं संगतिः । पूर्वत्र तु स्मर्यमाणप्रयुज्यमानयोः वाक्ययोः संगतिरत्र तु प्रयुज्यमानयोरेव । एवं स्मर्यमाणयोरपि ज्ञेया । झटिति बुद्ध्यारोहणेन प्रतिपत्तिगौरवमपि नास्ति ।

१. जन्मादिसूत्रस्याजातत्वेपि बुद्धिस्थत्वात्तदादायानन्तर्याभिधानप्रयोजकजिज्ञासादिसंभवस्य तु 'सिद्धान्तकौमुदीयं विरच्यते' इत्यादौ दृष्टत्वात्तदनुयायिनः ।

भाष्यप्रकाशः ।

हेतुताद्यः सर्वे उपेक्षानर्हत्वस्यैव प्रयोजका धर्मास्ते तद्बोधकतया संगतित्वेनोच्यन्ते ।

रश्मिः ।

शक्यतावच्छेदकलाघवं स्फुटम् । शरीरलाघवं च । स्मृतस्योपेक्षानर्हत्वं संगतिरित्यन्यस्य परिष्कारत्वात् । ईश्वरलिखापितं पद्यमन्यन्तम् । यत्र गां पश्यन्नित्याद्युक्तस्थलेपि सावधानपुरुषप्रयुज्यमानं सास्नादिमती गौरियमिति वाक्यं तत्प्रयोजकत्वेन हेतुत्वेन स्मृतस्य वाक्यस्योपेक्षानर्हत्वं संगतिरिति नाव्याप्तिः । अत्र गां पश्यन्नित्यनुभवस्थले गां पश्यामीत्येवं वाक्यं स्मृत्वा स्मर्यमाणोच्चार्यमाणयोर्वाक्ययोः संगतिर्ज्ञेया । अत्र यद्यप्युच्चार्यमाणवाक्यं संगतमिति प्रतीतेः संगतिरत्रापेक्ष्यते तथापि स्मर्यमाणत्वोच्चार्यमाणत्वमात्राहितभेदावच्छिन्नत्वान्न दोषः । अथवा भारतकरणोत्तरं ब्रह्मसूत्रप्रणयनेन सावधानपुरुषप्रयुज्यमानं वाक्यं भारतरूपं वर्तमानत्वाविवक्षणात् । तत्प्रयोजकत्वेन भारतार्थवेदार्थनिर्वाहकत्वेन स्मृतस्य ब्रह्मभक्तिविचारस्योपेक्षानर्हत्वं संगतिः । एवमन्येन सावधानपुरुषेण प्रयुक्तं यद्वाक्यं घटोयमिति तदुपपादकत्वेनेतरेण स्मृतस्य प्रयुक्तस्य च नीलोयं घटोतः प्रत्यक्ष इति वाक्यस्योपेक्षानर्हत्वं संगतिः । प्रथमवाक्ये तु तद्घटकपदानां वाक्यत्वमाश्रित्य पदधर्मः संगतिवाक्ये चकास्तीति । यद्यपि गदाधरभट्टैः यद्यप्युपोद्घातादिपञ्चकभेदमनिवेश्य सर्वा संगतिः प्रसङ्ग एवान्तर्भावयितुं शक्यते तथापि विभाजकस्य स्वतन्त्रेच्छाकृततया न पर्यनुयोगावसर इति सामान्यलक्षणं प्रसङ्गलक्षणमित्युक्तं तथापि तद्विशेषणरहितमिति ततोपि वैलक्षण्यं ज्ञेयम् । न च जिज्ञासानिरूपिताज्ञाननिष्ठविषयतावच्छेदकतावच्छेदकत्वविशेषः संगतिरस्तु किमनेनेति वाच्यम् । निरूप्यतावच्छेदकस्य संगतित्वविरहात् । अवच्छेदकत्वविशेषपदेन यत्रावच्छेदकत्वे संगतित्वव्यवहारस्तन्मात्रविवक्षणेपि जिज्ञासाविरहेण गोदर्शनानन्तरं सास्नादिमती गौरिति संगतवाक्येऽव्याप्तिः । नापि प्रसङ्गाद्यन्यतमत्वं, निरुक्तलक्षणमनुसरतामुपेक्षानर्हतापदेनोपेक्षानर्हतावच्छेदकोपस्थितेरावश्यकत्वात् । अन्यथा निरुक्तसामान्यलक्षणेनैकवाक्यतानापत्त्यास्याव्याप्तिरापद्येत । तथा सति निरूप्यतावच्छेदकस्य संगतित्वविरहेणासंभव एव दूषणम् । अवच्छेदकत्वविशेषग्रहणेपि पूर्वोक्तस्थलेऽव्याप्तिः । आनन्तर्यघटितनिरुक्तसामान्यलक्षणमनुसरतां तु प्रसङ्गादिलक्षणान्यानन्तर्याभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयत्वघटितान्यावश्यकानि । अन्यथा यत्रानन्तर्याभिधानं जातं न भवति तत्रत्यस्यापि स्मृतनिष्ठोपेक्षानर्हत्वादेः प्रसङ्गादिसंगतित्वापत्तेः । संगतिसामान्यलक्षणानाक्रान्ततया संगतत्वेन प्रतीतेष्वपि संगतत्वशून्यत्वाभ्युपगमात् । नन्वेवमपि सर्वत्र हेतुतादिषु संगतित्वव्यवहाराय विशेषलक्षणान्यपि वक्तव्यानीत्याशङ्कायां तत्र लाक्षणिको व्यवहार इति तानि न वक्तव्यानीत्याहुः हेतुताद्य इति । एतेन तत्र तत्र तद्व्यवहारे नियामकमप्युक्तम् । एवं हि प्रयोजकास्तथाहि सावधानपुरुषप्रयुज्यमानवाक्यमाधारनिरूपकं तत्प्रयोजकत्वेनाधेयत्वेन स्मृतस्याधेयनिरूपकवाक्यस्योपेक्षानर्हत्वं भवतीति आधेयत्वस्य प्रसङ्गान्तर्गतस्योपेक्षानर्हत्वप्रयोजकत्वम् । तथा सावधानपुरुषप्रयुज्यमानवाक्यमनुमितिनिरूपकं तत्प्रयोजकत्वेनानुमितिलक्षणोपपादकत्वेन स्मृतस्य परामर्शस्योपेक्षानर्हत्वं भवतीति उपोद्घातस्य प्रयोजकता । एवं सावधानपुरुषप्रयुज्यमानवाक्यं प्रत्यक्ष-

१. विशेषणनिष्ठो धर्मः । २. भूतले घटवद्भूतलमित्यत्र च ।

तत्र लक्षणविचार एव सद्रूपाणां वाचकता निर्णीता। चिद्रूपस्य ज्ञानप्रधानस्य निर्णयार्थमीक्षत्यधिकरणमारभ्यते सप्तभिः सूत्रैः। ससङ्ग्हारत्वाज्ज्ञानस्य।

भाष्यप्रकाशः।

तत्रेयत्तानियामकस्याऽदर्शनेऽनुक्तत्वादन्येषामपि संग्रहो न दुष्ट इति रोचयामहे। तत्र जन्माद्यधिकरणे जगदुत्पत्त्यादिरूपसदात्मककार्यनिरूपणेन सामान्यतः कारणतया विशेषतः कर्तृतया च स्वरूपं निरूपितम्। समन्वयाधिकरणे च सर्वत्र ब्रह्मणः समनुगतत्वादुपादानतया विशेषतस्तन्निरूपितम्। तत्र यत् सामान्यतः सिद्धं तदनुवदन्ति तत्रेत्यादि। उक्तविषेषु वाक्येषु पूर्वसूत्राभ्यां कृते लक्षणविचार एव। सद् रूप्यते येस्तेषां 'सदेव सोम्येदमग्र आसीत्' इत्यादिवाक्यगतानां पदानां ब्रह्मवाचकता निर्णीता। कार्यस्य सदात्मकत्वेन तत्कारणभूतं ब्रह्मैव सच्छब्दैर्वाक्येषूच्यत इति निर्णयः कृत इत्यर्थः। अतः परमग्रिमाधिकरणप्रयोजनमाहुः चिद्रूपस्येत्यादि। निर्णयप्रयोजनमग्रिमसूत्रे स्फुटीभविष्यति। ससङ्ग्हारत्वादिति पञ्च चक्षुरश्मिः।

रश्मिः।

निरूपकं तत्प्रयोजकत्वेन कार्यत्वेन स्मृतस्यानुमानवाक्यस्योपेक्षानर्हत्वं भवतीति हेतुताकार्यतयोः प्रयोजकता। एवं सावधानपुरुषप्रयुज्यमानवाक्यं प्रत्यक्षनिरूपकं तत्प्रयोजकत्वेनावसररूपनिरूपणीयतावच्छेदकेनावश्यवक्तव्यत्वेन स्मृतस्योपमानवाक्यस्योपेक्षानर्हत्वं भवतीति अवसरस्य प्रयोजकता। एवं तादृशवाक्यं व्याप्तिनिरूपकं तत्प्रयोजकत्वेन तत्कार्यनिर्वाहकत्वेन स्मृतस्य पक्षधर्मतानिरूपकवाक्यस्योपेक्षानर्हत्वं भवतीति निर्वाहकस्य प्रयोजकता। एवं तादृशवाक्यमीश्वरनिरूपकं तत्प्रयोजकत्वेन तत्सजातीयत्वेन स्मृतस्यापवर्गनिरूपकस्योपेक्षानर्हत्वं भवतीति एककार्यत्वस्य प्रयोजकता। अथवा तादृशवाक्यमपवर्गनिरूपकं तत्प्रयोजकत्वेनेश्वरसिद्धिसजातीयकार्यजनकत्वेन स्मृतस्यानुमानवाक्यस्योपेक्षानर्हत्वं भवतीति एकजातीयकार्यजनकत्वस्य प्रयोजकता। नन्वेवं घटत्वादावपि उपेक्षानर्हताप्रयोजकत्वदर्शनेन कथमिमे षडेव प्रयोजका इत्याकाङ्क्षायां तत्त्वे इदमभ्युपगच्छन्ति तत्रेत्यादि। उपेक्षानर्हत्वप्रयोजकेष्वित्यर्थः। अन्येषामिति उपेक्षानर्हत्वप्रयोजकानां घटत्वादीनामित्यर्थः। तस्मादव्याप्त्यतिव्याप्त्यसंभवविरहाच्छोभनमिदं लक्षणमिति सुधीभिराकलनीयम्। संगतिव्यवहारस्तु तत्रतत्र स्पष्टत्वाय हेतुतादिभिः प्रयोजकधर्मैरेव वक्तव्य इत्यपि ज्ञेयमित्यलं विस्तरेण। एवं संगतिं निरूप्य भाष्यमवतारयन्ति जन्माद्यीत्यादि। जगदित्यादि जगदुत्पत्त्यादिना रूप्यते व्यवह्रियते यत्सदात्मकं कार्यं तस्य निरूपणेनेत्यर्थः। यद्यपि मृदो घट इति समवायित्वेपि पञ्चमी दृष्टा तथापि विकृतत्वापादकत्वेन न तथा वक्तुं शक्येति मत्वाहुः विशेषतः कर्तृतयेति। उपादानतयेति समन्वयपदसामर्थ्यात्तयेत्यर्थः। निर्णयप्रयोजनमिति ब्रह्मणः सच्चिदानन्दरूपत्वेन पूर्वाधिकरणाभ्यां सद्रूपे लक्षणसमन्वय उक्तः। चिद्रूपे लक्षणसमन्वयनिरूपणेनाव्याप्तिपरिहाररूपं तदित्यर्थः। उपलक्षणमेतत्। संगतिरपि निर्वाहकत्वरूपा स्फोटयिष्यति। ससङ्ग्हारत्वादिति मनसोधिकरणत्वेन द्वारत्वमिव ब्रह्मणश्चिद्रूपोंशो जीव इति द्वारत्वम्। चक्षुरादिद्वारा मनसा जीवस्य ग्रहणत्वमिव जीवद्वारा ब्रह्मणो ग्रहणत्वात्। 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' इति श्रुतेः। न च द्रष्टव्यत्वम्। स्वस्मे चिद्रूपतानुभवात्।

१. इदं हेतुतया वाक्यम्। २. हेतुता। ३. ग्रहणम्।

तत्रैवं संदेहः। ब्रह्मणः स्वप्रकाशत्वेन सर्वप्रमाणाविषयत्वात् 'यतो वाचो निवर्तन्ते' इति श्रुतेश्च विचारः कर्तुं न शक्यते । स्वप्रकाशत्वविरोधाच्छ्रुतिविरोधाच्च ।

भाष्यप्रकाशः ।

रादीनि मनो जीवमेत्येवं सप्तद्वारत्वात् । तथाचान्यत्र गुणवाचका अपि ज्ञानादिशब्दा वेदान्तवाक्यविशेषेषु ब्रह्मवाचका इति बोधनाय सप्तसूत्राणीत्यर्थः । संशयस्याकारमाहुः तत्रैवमित्यादि । स्वप्रकाशत्वेनेति । 'तमेव भान्तमनुभाति विश्वम्' इतिश्रुत्या स्वप्रकाशत्वेन । स्वप्रकाशत्वविरोधादिति प्रमाणविषयत्वे तज्ज्ञानस्य प्रमाणतन्त्रत्वेन स्वप्रकाशत्वाभावेन तद्विरोधात् । श्रुतिविरोधादिति विचारस्य मनोवाग्विषयत्व एव संभवेनोक्तश्रुतिविरोधात् ।

रश्मिः ।

ब्रह्मवाचका इति । 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः' इति बृहदारण्यकात्सप्तस्वरूपाणि वक्ष्यमाणानि, प्रज्ञां स्मरणात्मकानि कुर्वीत कार्यकारणवस्त्वैक्यमर्षणेन पटतन्तुवत् । ततो ज्ञानैकब्रह्मवाचका इत्यर्थः । ज्ञानस्येतिभाष्यात् । सप्तसूत्राणीति सूत्रसंख्यातात्पर्योक्तिरियं पुत्रेष्टिन्यायेन । तथाहि । पुत्रेष्टौ श्रूयते 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इत्युपक्रम्य 'यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति यन्नव कपालं त्रिवृतैवास्मिन् तेजो दधाति यद्दशकपालो विराजैवास्मिन्नन्नाद्यं दधाति यदेकादशकपालस्त्रिष्टुभैवास्मिन्निन्द्रियं दधाति यस्मिन् जाते एतामिष्टिं निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति' इति । अत्रोत्पन्नशिशोर्गायत्र्यादिजनितपूततासिद्ध्यर्थमष्टादिसंख्याककपालसंस्कृतपुरोडाशा न न्यूनाधिकसंख्याककपालसंस्कृतपुरोडाशाः । एवं त्रिवृदादिवाक्येष्वपि तत्तत्संख्याबोधने किं गमकमिति चेत् मैवं गायत्रीपादस्याष्टाक्षरत्वेनाष्टाकपालसंस्कृतपुरोडाशप्रचारे उत्पन्नशिशोर्गायत्र्यैव पावित्र्यं नन्दयितुमर्हति नान्यथापि । तथा च श्रुतिः 'गायत्री चतुर्विंशत्यक्षरा त्रिपदा' इति एतदभिप्रायेणैवाचार्यैः पुरुषोत्तमसहस्रनामस्तोत्रे 'गायत्री च तथा छन्दो देवता पुरुषोत्तमः' इति द्वात्रिंशदक्षरेषु गायत्रीत्वमुक्तं श्लोकस्य चतुष्पात्त्वात् । किंच गायत्र्याश्चतुर्थोपि पादोस्ति बृहदारण्यके गायत्र्युपासने 'अष्टावक्षराण्यष्ट वा एकं गायत्र्यै पदम्' इत्यादिना पादत्रयमुक्त्वा 'अथास्या एतदेव तुरीयं दर्शितं पदम्' इतिश्रुतेः । एतदित्यस्य पादत्रयात्मकमित्यर्थः । तथा च गायत्र्यास्त्रिपादीत्वेनैकैकस्य पादस्याष्टाक्षराणि भवन्तीति गायत्रीजन्यपावित्र्यापेक्षायामष्टाकपालसंस्कृतपुरोडाशप्रचारो युक्त इति । एवमन्यत्रापि । एतच्च स्फुटं 'त्वमेव पूर्वसर्गेऽभूः' इत्यस्य सुबोधिनीटिप्पण्याम् । अन्यत्र यथा 'आत्मना प्रथमा लीला मनसा तु ततः परा' इत्याद्युक्ते सप्तके । आत्मा जीवः यज्ञः मनः चक्षुः लीलाः क्रियाः, ज्ञानं पञ्चरात्रात् ऐश्वर्यं वाक् भागवतरसनं 'स्वादु स्वादु पदे पदे' इति भागवतात् धर्मी, प्राणः त्वक् वैराग्यं, प्राणवैराग्ययोर्भगवत्त्वात्, इन्द्रियं प्राणः श्रीः । अत्र चक्षुर्मनो वा वक्तव्यमिन्द्रियमुख्यत्वात्तथापीन्द्रियश्रीः शृङ्गारं विना न भवतीति पृथ्वीः श्रीतन्मात्रा, गन्धस्तु ग्राहकघ्राणः शरीरं श्रोत्रं वीर्यं नभस्त्वात्, रूपं समष्टिः । बहुरूपाणि कृतकृतीकुर्वन्तीति । अत्राष्टाकपालत्वादयो गुणाः कर्मान्तरविधायकाः, उत वैश्वानरवाचका वेति संशये कर्मान्तरविधायका इति पूर्वपक्षे प्राप्ते पञ्चाशदिति न्यायेन द्वादशकपालेष्वष्टानां संभवात्तद्वाचका एवेति प्रथमस्य तृतीयपादे 'पूर्ववन्तोऽविधानार्थास्तत्सामर्थ्यं समाम्नाये'

आहोस्विद् विरोधपरिहारेण शक्यत इति। किं तावत् प्राप्तम्। न शक्यत इति। कुतः।

ज्ञापनार्थं प्रमाणानि सन्निकर्षादिमार्गतः।
सर्वथाऽविषयेऽवाच्येऽव्यवहार्ये कुतः प्रमा॥

ऐहिकामुष्मिकव्यवहारयोग्ये हि पुरुषप्रवृत्तिः। प्रवृत्त्यर्थं हि प्रमाणानि। ब्रह्म पुनः सर्वव्यवहारातीतमिति। नन्वेतदपि वेदादेवावगम्यत इति चेत् तर्हि

भाष्यप्रकाशः।

विधिकोटिस्तु स्फुटैव। पूर्वपक्षयुक्तिं गृह्णन्ति ज्ञापनार्थमित्यादि। सन्निकर्षादिमार्गत इति। आदिपदेन सहकारीणि। मार्ग उपायः। सर्वथाऽविषय इति स्वप्रकाशत्वेन मनोनिवृत्तिश्रुत्या च सर्वप्रमाणाविषये। अवाच्य इति वाङ्निवृत्तिश्रुत्या सत्यज्ञानादिपदैरपि लक्ष्यत्वादवाच्ये। अव्यवहार्यत्वं विभजन्ते ऐहिकेत्यादि। व्यवहारो नाम मनोमात्रेन्द्रियप्राणजन्यपुरुषप्रवृत्तिरूपो व्यापारः। सर्वव्यवहारातीतमिति लौकिकवैदिकव्यापारानर्हम्। एतदिति अविषयत्वादिकम्। वेदादिति। 'न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनो न विद्मो न विजानीमो यथैतदनुशिष्यात्'। 'अन्यदेव तद्विदितादथो अविदितादधि' इत्यादिरूपात्। अयमर्थः। प्रमाणैर्हि द्रव्यगुणक्रियादिरूपाः पदार्था लौकिकालौकिकसन्निकर्षेण यथार्हं प्रमीयन्ते। ब्रह्म त्वस्थूलादिवाक्यैरतद्रूपत्वादसंगत्वेनासन्निकृष्टत्वाच्च सर्व-

रश्मिः।

इत्यधिकरणे पूर्वतन्त्रसिद्धान्तः। न च संख्यायाः पुरोडाशविशेषणतया श्रावणेन पुरोडाशेष्टाकपालत्वादिरूपतद्धर्मे वा पर्यवसानान्नेदं संगच्छत इति वाच्यम्। अप वै सोमेनेजानाद्देवताश्च यज्ञश्च क्रामन्त्याग्नेयं पञ्चकपालमुदवसनीयं निर्वपेत्, अग्निः सर्वा देवताः, पाङ्क्तो यज्ञो देवताश्चैव यज्ञं चावरुन्धे गायत्रो वाग्निर्गायत्रच्छन्दस्तं छन्दसा व्यवर्धयति यत्पञ्चकपालं करोति। अष्टकपालः कार्योष्टाक्षरा गायत्री गायत्रो वा अग्निः गायत्रच्छन्दः स्वेनैवैनं छन्दसा समर्धयति पङ्क्तौ याज्यानुवाक्ये भवतः पङ्क्तो यज्ञः तेनैव यज्ञान्नैतीत्युदवसानीयविधायकश्रुतेस्तथानिश्चयात्। तत्र हि अष्टाकपालपुरोडाशविधाने तस्मिन् पञ्चकपालत्वस्य सत्त्वेपि तदनादृत्य याज्यानुवाक्ययोः पञ्चसंख्याकत्वविधानेन पञ्चसंख्याकयज्ञादनपगमविधानतस्तथानिश्चयो ज्ञेयः। अतः संख्यायाः सतात्पर्यकत्वमपेक्षितस्थले निश्चेयम्। अनपेक्षितायाः निस्तात्पर्यकत्वमितिदिक्। ब्रह्मवाचका इति उक्तरीत्या व्यग्रा समग्रा च। तमेवेति क्वाचित्कोयं पाठः। पुस्तकान्तरे मुण्डके श्वेताश्वतरे च 'तमेव भान्तमनुभाति सर्वम्' इति पाठात्। उक्तश्रुतीति भाष्योक्तश्रुतिविरोधात्। विधिकोटिरिति विरोधपरिहारेण शक्यते इति विचारः कर्तव्य इति विधिकोटिः। लोके लेटोऽदर्शनात्। लटो विध्यर्थत्वाभावात्। यद्वा छन्दोवत्सूत्राणि व्याख्यानं चेति शक्यते इति लेट्। अलक्ष्यत्वादिति सत्यज्ञानानन्तजगज्जन्मादिकर्तृपदानां वाङ्निवृत्तिश्रुत्या शक्यार्थे बाधे सत्यपदं सत्यत्वमनभिदधच्छक्यार्थमभेदेनासत्त्वाभावरूपलक्ष्यार्थं वक्तीत्यभेदसंबन्धो लक्षणा। एवं लक्षणद्वये ज्ञानादिपदानामभेदसंबन्धो लक्षणेति ज्ञेयम्। मन इत्यादि 'व्यवहारः संनिपातो मनोमात्रेन्द्रियासुभिः' इत्येकादशस्कन्धात्। द्रव्य-

बाधितार्थप्रतिपादकत्वान्न वेदान्ता विचारयितव्या इति प्राप्ते उच्यते ।

ईक्षतेर्नाशब्दम् ॥ ४ ॥ (१।१।४)

न विद्यते शब्दो यत्रेत्यशब्दं सर्ववेदान्ताद्यप्रतिपाद्यं ब्रह्म न भवति । कुतः । ईक्षतेः । 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इत्युपक्रम्य 'तदैक्षत बहु स्यां प्रजायेय' इति । 'तत्तेजोऽसृजत' । तथाऽन्यत्र । 'आत्मा वा इदमेक एवाग्र आसीत् । नान्यत् किंचन मिषत्' । 'स ऐक्षत लोकान्नु सृजा' इति ।

---

भाष्यप्रकाशः ।

प्रमाणाविषयम् । अतद्रूपत्वादेव च नामाख्यातनिपातोपसर्गरूपचतुर्विधपदजाताप्रतिपाद्यतया अवाच्यम् । अवाच्यत्वादेव वैदिकव्यवहारादप्यतीतम् । तदेतत्सर्वमभिप्रेत्य, 'यतो वाचः' इत्यादयस्ततो वागादीनां निवृत्तिं तस्य विदिताविदितान्यत्वं च श्रावयन्तीत्यतस्तदविचार्यम् । तस्याविचार्यत्वादेव तत्प्रमितिफला वेदान्ता अप्यविचार्याः । अथ ब्रह्मण एवंरूपतापि वेदादेवावगम्यत इति तस्याप्रमेयत्वज्ञानायैव विचार्या वेदान्ता इति विभाव्यते, तदा तु स्वव्यापारेण तत्समर्पयन्तस्तस्य तथात्वं बोधयन्तीति, मम माता वन्ध्येतिवाक्यवद् बाधितार्थप्रतिपादकत्वादेवाविचार्या इति । एवं पूर्वपक्षमुक्त्वा सिद्धान्तं वक्तुं सूत्रं पठन्ति ।

ईक्षतेर्नाशब्दम् ॥ ४ ॥ व्याकुर्वन्ति नेत्यादि । ननु ब्रह्मणो वेदान्ताद्यात्मकशब्दप्रतिपाद्यत्वे ईक्षतिधातुनिर्देशस्य कथं हेतुत्वमित्याकाङ्क्षायां विषयवाक्यान्युदाहरन्ति सदेवेत्यादि । अत्र प्रथमं वाक्यं छान्दोग्यस्थम् । द्वितीयमाश्वलायनानामैतरेयोपनिषत्स्थम् । तृतीयं प्रश्नोपनिषदः षष्ठप्रश्नस्थम् । मिषदिति व्यापारं कुर्वत् । आदिपदेनादिसृष्टिविषयकेक्षणघटितानां, 'ब्रह्म वा इदमग्र आसीत् स्वयंभ्वेकमेव तदैक्षत महद्वै यक्षं तदेकमेवास्मि हन्ताहं मदेव मन्मात्रं द्वितीयं तदेव निर्मम' इत्यादीनां संग्रहः । तथाच, न केवल ईक्षतिर्ब्रह्मणो वेदान्तशब्दप्रतिपाद्यत्वे हेतुभूतः, किं तु वाक्यगतः । तेन च स्वार्थप्रत्यायने वाक्येषु ब्रह्मकर्तृका ईक्षा प्रतीयते । ईक्षा च पर्यालोचनम्, एवं करिष्यामीत्यध्यवसायः । सोऽत्रैतादृश

रश्मिः ।

गुणेति आदिशब्देन विशेषसमवायाभावाः पूर्वपक्षग्रन्थत्वात् । अतद्रूपत्वादिति अद्रव्यादिरूपत्वादित्यर्थः । तर्हीत्यादि भाष्यं विवरीतुमाहुः अथ ब्रह्मण इति । विवृण्वन्ति स्म तदा त्विति । स्वव्यापारेणेत्यादि 'यतो वाचो निवर्तन्ते' 'न तत्र चक्षुर्गच्छति' इत्यादिवेदान्तः स्वीयवागप्राप्यचक्षुरप्राप्यमनोऽप्राप्यरूपार्थिकपदानामभिधारूपव्यापारेण प्रमेयत्वं समर्पयन्नेव ब्रह्मणोऽप्रमेयत्वं बोधयतीति तथेत्यर्थः । अथवा यथा अशेषनिषेधशेषपदाभ्यामभिधावृत्त्या ब्रह्मप्रमापकाभ्यामेवाप्रमेयत्वं बोध्यते । इत्यभ्युपगमवादवदस्थूलादिपदानामभिधारूपव्यापारेण प्रमेयत्वं समर्थयन् वेदान्तो ब्रह्मणस्तैरेव पदैरप्रमेयत्वं तात्पर्येण बोधयतीति तथेत्यर्थः ।

ईक्षतेर्नाशब्दम् ॥ ४ ॥ ब्रह्म वेदः अशब्दं न विद्यते शब्दः बोधकव्यापारवान् पदसमूहो यत्रेत्यशब्दं सर्ववेदान्ताद्यप्रतिपाद्यं न भवति ब्रह्मकर्तृकेक्षाप्रत्ययादिति सूत्रार्थः । यथा 'तदैक्षत' इत्यादिवाक्यं शब्दार्थयोर्नित्यसंबन्धाद्यौपि ब्रह्मपक्षः । सोऽत्रेति ईक्षाकर्तापो-

भाष्यप्रकाशः ।

इति कार्यबलादुन्नीयते । अत एतादृशेक्षाबोधकेनेक्षतिना यत्र यत्रैवं पूर्वमव्यवहार्यत्वेऽपि पश्चाद् व्यवहार्यत्वेन प्रतिपाद्यत्वाभावस्तत्र तत्रैवमीक्षणकर्तृत्वेन प्रतिपाद्यत्वाभाव इति

रश्मिः ।

क्षजस्तच्छब्दार्थः । न चाधोक्षजोपि शब्द इति तस्याप्यविषय इति वाच्यं ईक्षतेः । तथा चेदमित्थतयाधोक्षजशब्दविषयो भवत्येव । अथवा विरुद्धधर्माश्रयत्वात् विषयोविषयो वान्यथा 'न कोपि भग' इति छान्दोग्यीयसच्छब्दाविषयत्वे ब्रह्माज्ञानमेव भवेदिति महानेवान्यायः स्यात् । न च 'मनसैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवम्' इति श्रुत्या शब्देतरमनसा ब्रह्मज्ञानं भवतीति शब्दाविषयत्वेप्यक्षतिरिति वाच्यम् । भक्तिरूपमनोनुद्रष्टव्यत्वेन प्रमाणप्रस्तावे तद्विचाराप्रसक्तेः । भक्तिरस्य भजनमितिश्रुतिः भक्तिरूपमनसा द्रष्टव्यत्वं वक्ति ततश्च प्रकृतेः प्रमाणबलेनाविषयः स्वेच्छया विषयश्च । एतादृश इति लोकदृष्टिद्वारा व्यवहार्यो भविष्यामीति भाष्योक्ताकारक इति विचक्षणस्य ब्रह्मणोस्तिभातिप्रियत्वेनात्र व्यवहाररूपकार्यबलादुन्नीयते तर्क्यत इत्यर्थः । तथा च श्रुतौ ऐक्षतेत्यस्य बहुत्वज्ञानेक्षो जात इत्यर्थः । बहु स्यां प्रजायेयेतीच्छाकारावेदकश्रुतिप्रामाण्यात् । ईक्ष दर्शन इति धातुः, अत्र त्वीक्षापर्यालोचनमित्युक्तं तद्दर्शनार्थमादायेत्यविरोधः । यत्र यत्रैवमिति ब्रह्मरूपार्थः पक्षस्तत्र । एवमिति । वेदान्तशब्दैः प्रतिपाद्यत्वाभाव इति प्रतिपाद्यत्वसंबन्धेनाशब्दत्वाभावः । एवमिति भाष्योक्तरीत्या वाक्यगतेक्षणकर्तृत्वेनेत्यर्थः । प्रतिपाद्यत्वाभाव इति प्रतिपाद्यत्वसंबन्धेन ब्रह्मव्याप्यीभावः । व्याप्तिरिति यदि च यथा तेजः इति दृष्टान्तेनान्वयव्याप्तिरपीति विभाव्यते तदा तद्वाक्यगतेक्षणकर्तृत्वेन प्रतिपाद्यत्वसंबन्धेन ब्रह्मव्याप्यं हेतुर्बोध्यः । ब्रह्मपक्षः ज्ञानप्रधानः । 'तत्तेज ऐक्षत' इति छान्दोग्यमन्त्रानुसंधेयम् । प्रकृते पूर्वमव्यवहार्यत्वेपि पश्चात्प्रतिपाद्यत्वसंबन्धेन व्यवहार्यत्वमशब्दत्वरूपं व्यापकं साध्यम् । एवमीक्षणकर्तृत्वेन रूपेण प्रतिपाद्यत्वसंबन्धेन ब्रह्मव्याप्यं हेतुः । अतः साध्यत्वेपि व्याप्यत्वात् पूर्वं वचनं व्यतिरेकव्याप्तित्वाद्वा । सा च 'नियतधर्मसाहित्ये उभयोरेकतरस्य वा व्याप्तिः' इति सांख्यप्रवचनसूत्रादव्यभिचारविशिष्टा हेतुनिष्ठा साध्याधिकरणवृत्तिता । सूत्रार्थस्तूभयोः समव्याप्तिकयोः कृतकत्वानित्यत्वादिरूपयोः एकतरस्य विषयव्याप्तिकस्य धूमादेः नियतधर्मसाहित्येऽव्यभिचरितधर्मरूपे सामानाधिकरण्ये व्याप्तिः व्याप्तिशब्दः शिष्टैः प्रयुज्यत इति । अव्यभिचारस्तु यत्र यत्र हेतुस्तत्र तत्र साध्यं यत्र साध्याभावस्तत्र हेत्वभाव इति नियमः । सिषाधयिषायां सत्यां साधकत्वेनोपादीयमानत्वं हेतुत्वं, सिषाधयिषाविषयत्वं साध्यत्वं, घनगर्जितेन मेघानुमाने सिषाधयिषास्त्येव विनापि तं तथानुमानमानुभाविकमिति चेदस्तु तर्हि सिषाधयिषाविषयत्वयोग्यत्वात्साध्यत्वम् । एवं च वह्निमान् धूमादित्यादौ धूमनिष्ठं तादृशाव्यभिचारविशिष्टं वह्निसामानाधिकरण्यमस्तीति लक्षणसमन्वयः । धूमवान् वह्नेरित्यादावतिव्याप्तिवारणाय विशेषणदलम् । अयःपिण्डादौ वह्नेः साध्यव्यभिचारान्नातिव्याप्तिः । हेतुसाध्यपदे तु व्याप्त्यस्वरूपभूते यद्यपि तथापि सामानाधिकरण्यस्य ससंबन्धिकतया संबन्धिबोधनायोपात्ते विशेषाकाङ्क्षानिवृत्त्या

रश्मिः ।

विशेषणस्वरूपपरिनिष्ठायै विशेष्यम् । अव्यभिचरितं हेतोः साध्यमित्यलक्षणम् । व्याप्तेर्हेतुधर्मत्वात् । कथंचिद्गुणभूतत्वेन व्यवह्रियमाण आधेयोऽर्थो हेतुः । न चैवमव्याप्तिः । पर्वतीयधूमे महानसीयवह्निसामानाधिकरण्याभावादिति वाच्यम् । हेतुसाध्ययोर्हेतुतावच्छिन्नसाध्यतावच्छिन्नत्वाभ्यां विशेषणीयत्वात् । न च धूमावयवेषु धूमसत्त्वाद्वह्नेश्चासत्त्वादन्वयव्यभिचारः । समवायसंबन्धेन वह्न्यभाववति महानसादौ धूमसत्त्वाद्व्यतिरेकव्यभिचारश्च शङ्क्यः । हेतुतावच्छेदकसाध्यतावच्छेदकसंबन्धावच्छिन्नत्वाभ्यामपि तयोर्विशेषणीयत्वात् । नाप्येतत्क्षणीये धूमे पूर्वक्षणवृत्तित्वविशिष्टवह्निसामानाधिकरण्याभावादव्याप्तिरिति वाच्यम् । तत्र वैशिष्ट्यानवच्छिन्नत्वस्यापि विशेषणीयत्वात् । वस्तुतस्तु सिषाधयिषोदयानन्तरं हेतुसाध्यभावेन ततः पूर्वं तदभावात्तस्य वह्नेरसाध्यत्वेन तदसामानाधिकरण्येऽप्यदोषात् । सिषाधयिषोत्तरक्षणात्मकक्षणात्पूर्वक्षणत्वविवक्षयाऽव्याप्त्युद्भावनं तु काकदन्तविचारमनुहरति । आप्राकृतमापण्डितं च पूर्वोक्तरीतिकव्याप्तिज्ञानमात्रेणानुमितिदर्शनस्य सार्वजनीनत्वात् । एतादृशदर्शनेनैव वह्निघटोभयावच्छिन्नप्रतियोगिताकवह्न्यभाववति केवलवह्निदेशे धूमदर्शनेन व्यतिरेकव्यभिचारग्रासात्प्रसिद्धानुमाने व्याप्तिशङ्कापि निरस्ता वेदितव्या । व्यासज्यवृत्तिधर्मावच्छिन्नाभावस्थले साध्यदर्शनेन सविशेषणे हीति न्यायादभावस्योभयत्व एव विश्रान्तेश्च । ज्ञेयं वाच्यत्वादित्यादौ केवलान्वयि साध्यके हेतुनिष्ठा साध्यसमानाधिकरणताऽव्यभिचरितेति ध्येयम् । एवं सत्तावान् जातेरित्यत्रापि ज्ञेयम् । एवं च साध्यवदन्यावृत्तित्वं साध्यात्यन्ताभाववदवृत्तित्वं च नातिदुष्टम् । ब्रह्मणि ज्ञेयत्वाद्यभावेन सर्वत्रापि केनचिद्रूपेण ज्ञेयत्वाद्यभावेन प्रमेयत्वे प्रमेयत्वस्य वाच्यत्वे वाच्यत्वस्यानवस्थात्माश्रययोः यथासंभवं मियाऽभावेन च केवलान्वयिसाध्यकानुमानस्यैवाभावात् । मीमांसकानामपीदमिष्टम् । न चाव्याप्यवृत्तिसाध्यके कपिसंयोगी एतद्वृक्षत्वादित्यादौ साध्यात्यन्ताभाववदवृत्तित्वस्याव्याप्तत्वं शङ्क्यम् । दृष्टे कपिसंयोगे सिद्धसाधनत्वेनादृष्टे चाहेतुत्वेन तस्य दुरनुमानत्वात् । न च दृष्टेपि कपिसंयोगे सिषाधयिषयानुमितिसंभवात्तादृशस्थले सिद्धसाधनस्य दोषत्वात् । सदनुमानमेवेदं यथाहुः प्रत्यक्षेण परिकल्पितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिका इतीति शङ्क्यम् । एतद्वृक्षत्वस्यैकव्यक्तिमात्रवृत्तित्वेनान्यत्र सहचारग्रहस्य व्याप्त्यनुग्राहकस्याभावेन मूलावच्छेदेन व्यभिचारज्ञानाद्व्याप्तिप्रतिबन्धात् । न चैवं संयोगे द्रव्यत्वादित्यादावपि सहचारग्रहाभावाद्व्याप्तिप्रतिबन्धो भवेदिति शङ्क्यं पक्षैकदेशे सहचारग्रहसत्त्वेनादोषात् । अस्तु व्यतिरेकव्याप्तिग्रहः परं तु सिषाधयिषा तु न भवत्येव । इच्छाया ज्ञानानुरूपकार्यत्वात् । अत एव ज्ञाते इच्छानुदयात् । तथाचानुमितप्रकारकमपि संयोगज्ञानात्पूर्वमभावात्कथमनुमित्सा । न च कपिसंयोगज्ञानमात्रमिच्छोदये प्रयोजकं न तु विचारणावच्छिन्नं तस्य च पूर्वं सत्त्वादनुमित्सोदय इति वाच्यम् । अयं घट इति ज्ञानादनुमित्सोदयप्रसङ्गात् । अतो यत्र पूर्वमनुमितिविषयत्वस्य यद्धेतुकत्वस्य च ज्ञानं तत्र सिद्धौ सत्यां सिषाधयिषा तया चानुमानं नात्र तथेति । महानसादिवह्न्यनुमितौ तथादर्शनादिति ध्येयम् । परं तु सत्तावान् जातेरित्यत्र साध्यवदन्यस्मिन् सामान्यादौ जात्यभावाद्व्याप्त्यभावेपि हेतुतावच्छेदकसंबन्धेन समवायेन वृत्तेरप्रसिद्धत्वादव्याप्तिरिति नातिदुष्टं लक्षणद्वयम् । एवं च कपिसंयोगी एतद्वृक्षत्वादित्यत्राव्याप्तिपरिहाराय यच्चिन्तामणौ प्रति-

**'स इमाँल्लोकानसृजत' इति । 'स ईक्षाञ्चक्रे' । 'स प्राणमसृजत' इत्येवमादिषु सृष्टिवाक्येषु ब्रह्मण ईक्षा प्रतीयते ।**

**किमतो यद्येवम् । एवमेतत् स्यात् । सर्वव्यवहारप्रमाणातीतोऽपि ईक्षाञ्चक्रे लोकसृष्टिद्वारा व्यवहार्यो भविष्यामीति । अतो यथा यथा कृतवाँस्तथा तथा**

भाष्यप्रकाशः ।

व्याप्तिर्बोध्यत इतीक्षतेर्हेतुत्वमित्यर्थः । एवं सर्वत्र हेतुशोधनप्रकारो बोध्यः । ननु प्रतीयतामीक्षा, तावता पूर्वोक्तविरोधस्य कथं परिहार इति पृच्छति **किमतो यद्येवमिति** । समादधते **एवमित्यादि** । तथाच ब्रह्मणः पूर्वोक्तरूपत्वस्येक्षायाश्च श्रुतिसिद्धत्वाच्छ्रौतत्वेनैकतरबाधस्याप्यनुचितत्वाद् विरुद्धधर्माधारत्वस्य ब्रह्मणि भूषणत्वात् तस्यापि 'अन्यदेव तद्विदितादथो अविदितात्', 'तदेजति तन्नैजति' इत्यादिश्रुतिसिद्धत्वादभिन्ननिमित्तोपादानवादमुपगच्छता तस्याप्यङ्गीकाराच्चैवमीक्षाकारसिद्धौ सुखेन सिद्ध्यति विरोधपरिहारे ब्रह्मणो विचार्यत्वस्यापि सिद्धि-

रश्मिः ।

योगिव्यधिकरणस्वसमानाधिकरणात्यन्ताभावाप्रतियोगिना सामानाधिकरण्यं व्याप्तिरिति प्रतियोगिव्यधिकरणो यः साध्यसमानाधिकरणात्यन्ताभाव इति प्रतियोगिव्यधिकरणत्वेनाभावो विशेषितस्तदपि मुधैव । तस्य दुरनुमानत्वात् । यदपि मञ्जरीकारः हेतुसमानाधिकरणा यावन्तस्ते साध्यसमानाधिकरणास्तत्त्वं व्याप्तिरिति । तदपि न रुचिरम् । यावत्त्वस्यानेकपदार्थघटितत्वेनापेक्षाबुद्धिविशेषविषयत्वरूपयावत्त्वाङ्गीकारेपि अपेक्षाबुद्धेरयमयमयमेते सर्वे इत्याकारकत्वेन तत्पदार्थविषयकतयानेकपदार्थघटितत्वानपायेन प्रतिपत्तिगौरवग्रासात् । यावत्त्वस्य व्यापकत्वरूपत्वेपि व्यापकत्वस्य तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वरूपतया भावद्वयनिवेशेनोक्ततुल्यकक्षत्वादित्यलं पल्लवितेन । यद्यप्यत्र न विशेषस्तथापि सिद्धान्तादतलक्षणबोधायेदम् । आत्मशब्दादित्यादिहेतुष्वतिदिशन्ति **एवं सर्वत्रेत्यादि** । अनुमानं तु ब्रह्म पूर्वं सर्वव्यवहारप्रमाणाद्यतीतमपि पश्चात्तद्विषयः । एवमीक्षितृत्वात् यन्नैवं तन्नैवं जीववदिति व्यतिरेकी हेतुः । न च केवलान्वयित्वमस्य । जीवस्यैवंप्रकारेण श्रुत्याद्यनुक्तत्वेन दृष्टान्ताभावाद् व्यतिरेकी हेतुरित्यत उक्तं शोधनप्रकार इति । **पूर्वोक्तविरोधस्येति** पश्चाद्व्यवहार्यत्वे स्वीकृते पूर्वपक्षोक्ताव्यवहार्यत्वविरोधस्येत्यर्थः । **विरुद्धधर्मेति** सर्वव्यवहारप्रमाणातीतोपि ईक्षांचक्रे लोकसृष्टिद्वारा व्यवहार्यो भविष्यामीति भाष्योक्तस्य तस्य । भाष्यार्थस्तु व्यवहाराश्च प्रमाणानि च व्यवहारप्रमाणानि सर्वाणि च तानि व्यवहारप्रमाणानि सर्वव्यवहारप्रमाणानि तेभ्योतीतः अतिक्रम्य गतः 'यद्वाचानभ्युदितं येन वागभ्युद्यते तदेव ब्रह्म त्वं विद्धि' इत्यादि केनोपनिषदा वागादीन्द्रियाविषयः स सर्वप्रमाणातीतः । व्यवहार इन्द्रियादिकार्यं तदतीतः । तत्रैकत्रेक्षतिर्हेतुः । गौणश्चेत्यादिसूत्रैः साधितः । स्वतन्त्रहेतूनां स्वाप्ययादीनां सर्वव्यवहारातीतत्वं साध्यं बोध्यम् । **उपगच्छतेति** सिद्धान्तिनेत्यर्थः । सिद्ध्यतीति सप्तम्यन्तमिदम् । **अतो यथेत्यादिभाष्यं** विवृ-

१. पर्वतत्वादयः ।

स्वयमेवोक्तवान् । पूर्वरूपं फलरूपं च सृष्टत्वांशपुरुषार्थत्वाय । ततश्च प्रमाणबले-नाविषयः, स्वेच्छया विषयश्चेत्युक्तम् ।

ननु सर्वप्रमाणविषयत्वे दूषिते केवलवेदविषयत्वं कथं सिद्धान्तीक्रियते । उच्यते । चक्षुरादीनां प्रामाण्यमन्यमुखनिरीक्षकत्वेन, न स्वतः । भ्रमानुत्पत्ति-

भाष्यप्रकाशः ।

स्तादृग्ब्रह्मप्रकृतिबोधकत्वेन वेदान्तानामप्यबाधितार्थत्वात् तेषामपि विचार्यत्वसिद्धिरित्यर्थः । एवं करणकथनयोः प्रयोजनमाहुः पूर्वमित्यादि । स्वांशा जीवास्तदुपयोगिपुरुषार्थत्वं तेजःप्रभृतीनां भवत्वितीच्छया पूर्वं प्रथमतो रूपं प्रजादिशब्दवाच्यं शरीरं फलरूपं लोकादिकं च सृष्टम् । तथाचैतेषां पुरुषार्थत्वेन जीवांशास्तत्त्वायैवं कृत्वा तत्कर्तृतया फलदातृतया च स्वस्य व्यवहार्यत्वं च कृतवानिति तत्संपादनं प्रयोजनमित्यर्थः । तेन सिद्धमाहुः तत इत्यादि ।

अत्र प्रत्यवतिष्ठते नन्वित्यादि । केवलवेदविषयत्वं कथमिति सर्वप्रमाणानां तुल्य-त्वेनाविशेषात् केवलवेदवेद्यत्वं ब्रह्मणः कथोपपद्येतेत्यर्थः । अत्र समाधातुमुपपत्तिमाहुः उच्यत इत्यादि । न हि प्रमाणानां प्रामाण्यं तुल्यम् । तथा सति शुक्तिरजतादिविषयकचाक्षुषादिभ्रमो न स्यात् । हेतुषु चाभासता न स्यात् । शब्देषु च वाक्यप्रामाण्याप्रामाण्यविभागो न स्यात् । अतश्चक्षुरादिमनोऽन्तानां तदुपजीविनां च प्रामाण्यं न स्वतः, किंतु परमुखनिरीक्षकत्वेना-

रश्मिः ।

ण्वन्ति स्म एवं करणेत्यादि । एवं सृष्टिकरणं वेदान्तेषु व्यासाद् भागवताच्चत्कथनं च तयोरित्यर्थः । तेजःप्रभृतीनामिति बृहदारण्यके दृप्तबालाकिब्राह्मणे 'स होवाच गार्ग्यः य एवासावादित्ये पुरुष एतमेवाहं ब्रह्मोपासे' इत्यादि । यद्वा । छान्दोग्ये 'तत्तेज ऐक्षत' 'तदाप ऐक्षन्त' इति च पुरुषार्थत्वम् । तत्संपादनेति करणकथनसंपादनप्रयोजनमित्यर्थः । वेदान्तेषु ब्रह्मकृत्यबोधने पूर्वोक्तरूपेण व्यवहार्यत्वं कृतं न स्यात् । लोकानां शास्त्रादेव ब्रह्मज्ञानं भवतीति भावः । तत इत्यादीति यथा गोवर्धननाथजित् । आभासता न स्यादिति व्याप्तिज्ञानरूपप्रमाणकजन्य-हेत्वाभासता धूमवान् वह्नेरित्यत्र न स्यात् । उपमानस्यामानान्तरत्वादनुक्तिः । सादृश्यातिदेशवा-क्यार्थस्मरणसहकारेण चक्षुरादिनैव संज्ञासंज्ञिपरिच्छेदोपपत्तौ सादृश्यज्ञानादेर्मानान्तरत्वकल्पनस्यायु-क्तत्वात् । अन्यथा घटाभाववति घटोपलब्धावपि इन्द्रियसंबद्धविशेषणतायाः सत्त्वेन घटाभावप्रतीतिः स्यादवधारणायाभावग्रहे हेतुतया स्वीक्रियमाणाया योग्यसहकारिसंपन्नानुपलब्धेरुपयोग्यानुपलब्धेरपि मानान्तरत्वप्रसक्तेः । न चैवं सति परोक्षत्वं व्याहन्येतोपमितेरिति वाच्यम् । इष्टापत्तेः । न च चक्षुर्व्यापारापगमेपि जायमानत्वान्नैवमिति वाच्यम् । पूर्वं जातस्य ज्ञानस्य करणव्यापारोपरमेप्यनुपरम-स्यानुभवसाक्षिकस्य सत्त्वात्पुनर्जननकल्पनस्यायुक्तत्वात् । उपेक्षान्यज्ञानस्य त्रिक्षणावस्थायित्वकल्पन-स्याभ्युपगमैकशरणत्वात् । मानसं वा तदस्तु । अतिदेशवाक्यालक्षणत्वेन पूर्वं ज्ञातस्य ततः पदार्थ-स्फुरणेन स्फुरितस्य सादृश्यस्य संस्कारेण शब्दाभिव्यक्तौ दृष्टसंवादनिश्चितप्रामाण्यस्य च वाक्यस्य च सहकारेण मनसाप्ययं गवयपदवाच्य इति संज्ञासंज्ञिपरिच्छेदस्य प्रसिद्धपदसमभिव्याहृतवाक्य-स्मरणसहकृतमनसा मधुकरादिशक्तिग्रहस्येवोपपत्तेः । तदुत्तरमेतत्पदवाच्यत्वेनैनं जानामी-त्यनुव्यवसायेन मानसत्वनिश्चयाच्चेति । तत्रापि सादृश्यभ्रमो ज्ञेयः । चक्षुरादीना-मिति भाष्यं विवृण्वन्ति स्म अतश्चेति । तदुपजीविनामिति अनुमानादीनामित्यर्थः ।

प्रसङ्गात्। सत्त्वसहितानामेव चक्षुरादीनां प्रामाण्यात्। अतो निरपेक्षा एव भगवन्निःश्वासरूपवेदा एव प्रमाणम्। संकेतग्रहस्तु वैदिक एव वेदविद्भिः कृतः।

भाष्यप्रकाशः।

न्याधीनम्। यदधीनं स तु सत्त्वगुण एव प्रकाशकत्वात्। तत्सहितानामेव तेषां प्रामाण्यात्। तस्य यदा गुणान्तरेणोपमर्दस्तदानुग्राहकाभावेन तेषां नैर्बल्यादप्रामाण्यमेव। सत्त्वशुद्धिस्तु वेदोदितयथावस्थितसाधनैरेवेति तेषां सर्वेषां सुदूरवर्तिनोऽपि वेदस्यैव स्वसार्थकत्वार्थमपेक्षा। वेदस्य तु न कथमपि तदपेक्षा। जैमिनीयादिनये तस्यापौरुषेयत्वात्। काणादादिनये चेश्वरजन्यत्वात्। अतोऽन्यनिरपेक्षा वेदान्तनये भगवन्निःश्वासरूपत्वेनैव सिद्धा आस्तिकमात्रमते अविप्रतिपन्ना वेदा एव प्रमाणम्। अतः सर्वप्रमाणाविषयत्वेऽपि सर्वनिरपेक्षत्वाद्भगवन्निःश्वासरूपत्वात् सर्वास्तिकोपजीव्यत्वाच्च वेदैकविषयत्वं सिद्धान्तीक्रियते। तथा चैषा युक्तिरित्यर्थः। नन्वेवंरूपत्वेऽपि वेदस्य न सर्वनिरपेक्षत्वं शब्दत्वात्। शब्दस्य बोधकतायाः पदपदार्थसंबन्धग्रहाधीनत्वात् तद्ग्रहस्य च प्रयोजकप्रयोज्यव्यवहाराधीनत्वात्, वस्तुतस्तु ब्रह्मणोऽव्यवहार्यत्वेन तत्र संबन्धग्रहस्य दौर्घट्याद् बोधकताया अभावेन वेदविषयत्वसाधनमप्यनर्थकमेवेत्याशङ्कायामाहुः संकेतेत्यादि। नैवमबोधकत्वं सापेक्षत्वं वा शङ्कनीयम्।

रश्मिः।

एवेति अनुभवसाक्षिकत्वादेवकारः। सत्त्वेत्यादिभाष्यं विवृण्वन्ति यदधीनमिति। तेषामिति चक्षुरादीनामित्यर्थः। वेदोदितेत्यादि। 'वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः' इत्यभिप्रेतश्रुत्येकदेशप्रामाण्यात्तथेत्यर्थः। अतो निरपेक्षा इति भाष्यं विवृण्वन्ति अतोन्येति। अत्र विशेषणसंगतैवकारद्वयमयोगव्यवच्छेदकं शङ्खः पाण्डुर एवेति। तथा च भगवन्निःश्वासरूपवेदाः निरपेक्षत्वायोगव्यवच्छेदवन्तः प्रमाणं भगवन्निःश्वासरूपवेदत्वायोगव्यवच्छेदवदिति बोधो भाष्ये। पदपदार्थेति वाक्ये तु ह्याकाङ्क्षादिग्रहाधीनापि। प्रयोजकेत्यादि पूर्वतन्त्रे प्रथमे 'चोदनालक्षणोऽर्थो धर्मः' इत्यधिकरणे प्रयोजकस्य तत्प्रयोज्यस्य च पुरुषस्य यो व्यवहारो गामानयेति वाक्ये गवानयनरूपमध्यमप्रवृत्तिरूपस्तमवलोक्य सर्वैर्गोशब्दस्य सास्नादिमति पिण्डे संगतिर्गृह्यते इति तदधीनत्वमिति स्थितम्। तत्रेयं प्रनाडी गामानयेति प्रयोजकवृद्धेनोक्तः प्रयोज्यवृद्धस्तदर्थमवगत्य गामानयति तत्पश्यन् बालस्तया क्रियया तस्य प्रयत्नमनुमिनोति प्रयत्नवान् क्रियायाः यथाहमिति तेनेच्छामिच्छावान् प्रयत्नाद्यथाहमित्यनुमिनोति तदनन्तरं गोविषयकज्ञानवान् तद्विषयकेच्छाया यथाहमितीच्छया तद्विषयकं ज्ञानमनुमिनोति ततस्तत्र हेत्वाकाङ्क्षायामुपस्थितत्वाच्छब्दमेव कारणत्वेन कल्पयति ततो गवादिपदानां प्रत्येकमावापोद्वापाभ्यां गोपदं गोधीजनकमित्यादि कल्पयति क्लृप्ते च तस्मिन्नतिप्रसङ्गभङ्गभिया तज्जननानुकूलं शक्तिरूपं संबन्धं कल्पयति तदुत्तरं च कचिद्व्यवहारात् कचिदुपमानात् कचिच्छब्दाद्व्याकरणादिरूपाद्भवतीति। संबन्धग्रहस्येति प्रतिपाद्यप्रतिपादकभावस्य। आशङ्कायामिति शांकराशङ्कायामित्यर्थः। इदानीं ब्रह्मलोको व्यापकः सर्वोपरि वरीवर्ति 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वा विजिज्ञासितव्यम्' इतिश्रुतेः। अग्रे च तस्य पुरत्वसंपादनार्थं किं तत्र वर्तते यदन्वेष्टव्यं यद्वा विजिज्ञासितव्यमिति प्रश्ने 'यावान् वायमाकाशः तावानेषोन्तर्हृदय आकाशः उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते' इत्या-

भाष्यप्रकाशः ।

यतः सदेवेत्यादिसंदर्भ एव तेजःप्रभृतिसृष्ट्युत्तरमेव श्राव्यते । 'तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्याण्डजं जीवजमुद्भिज्जम्' इति । 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इति । नहि तदानीं वैदिक्या इतरा कापि सृष्टिर्न वा वेदविज्ञ इतरे पुरुषाः, न वा भगवतोऽन्यः कश्चिच्छिक्षक इति प्रथमतः संकेतग्रहो वैदिक एव

रश्मिः ।

दिनाग्निर्वायुः सूर्यचन्द्रविद्युन्नक्षत्राण्युक्त्वा 'यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम्' इति श्राव्यते । अनित्यतानिवृत्त्यै च ब्रह्मपुरे जीर्णे ध्वस्ते वा तदाश्रितं किमवशिष्यते इति प्रश्ने 'नास्य जरयैतज्जीर्यति न वधेनास्य हन्यते एतत्सत्यं ब्रह्मपुरमस्मिन् कामाः समाहिताः एष आत्मा अपहतपाप्मा' इत्यादि श्राव्यते । तेन ब्रह्मपुरशब्देन शरीरं परामृशन्तः परास्ताः । ब्रह्म तु विरुद्धसर्वधर्माधिकरणमित्युपपन्नतरमेतत् । उपबृंहितं च द्वितीये—

'तस्मै स्वलोकं भगवान् सभाजितः संदर्शयामास परं न यत्परम् ।
व्यपेतसंक्लेशविमोहसाध्वसं स्वदृष्टवद्भिर्विबुधैरभिष्टुतम् ॥
प्रवर्तते यत्र रजस्तमस्तयोः सत्त्वं च मिश्रं न च कालविक्रमः ।
न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः' ॥ इति ॥

किंच परिदृश्यमान आदित्यलोके नित्यत्वमस्मदाद्यपेक्षया दृष्टम् । शरीराणां तैजसत्वेन उत्कर्षश्चेति नैयायिका अप्यनुमन्यन्ते । ततोऽप्युत्कृष्ट आनन्दात्मा ब्रह्मलोकोनुमास्यतेऽतो ब्रह्मपुरं निःसंदिग्धं गर्जति सा वैदिकी सृष्टिरस्याः प्रपञ्चात्मिकायाः व्यतिरिच्यत एवैतत्सर्वं हृदि कृत्वाहुः यतः सदेवेत्यादि । तेजःप्रभृतीत्यादि 'तत्तेज ऐक्षत बहु स्यां प्रजायेय' इति । 'ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहि' इति ईक्षाश्रावणात् तेजोपां व्यस्तानां ब्रह्मार्चनताबोधनेनोपलक्षणस्य सदेवेत्यत्र वारणार्थं तेजःप्रभृतिसृष्ट्युत्तरमेव श्राव्यत इत्यर्थः । एतद्ग्रन्थप्रयोजनं सदेवेत्यत्रोपलक्षणवारणमुक्तं बीजभेदात्सृष्ट्योर्भेद उक्तः । तदानीमिति ब्रह्मांशसविज्ञ्यां जायमानत्वेनोपलभ्यमानेदानींतनसृष्टेः सदात्मकतापत्तिकाले वैदिक्या ब्रह्मलोकरूपायाः इतरा कापि सृष्टिर्न वक्तुं शक्येत्यर्थः । संकेतग्रह इति साधुत्वापरपर्याया अनादिवाचकत्वरूपाया अर्थबोधाविर्भावकशक्तेर्ग्रह इत्यर्थः । अन्यत्र ब्रह्मणः संकोचस्य शक्तित्वम् । सा च शक्तिरतिरिक्तेति मीमांसकाः । तदेव सिद्धान्तेप्यविरुद्धत्वात् । न त्वतिरिक्तशक्तिकल्पने गौरवादर्थसापेक्षं शब्दस्वरूपमेव वाचकत्वापरनामकं शक्तिः कारणत्वादिवदिति वैयाकरणोक्तमादरणीयमिति चेन्न । आविर्भावकशक्तिसत्त्वेन तस्या एवार्थबोधार्थं शब्देपि स्वीकारेणातिरेकस्यादोषत्वात् । तदाधारत्वस्य च बोधरूपकार्यादेव सिद्धत्वात् । ननु केयमाविर्भाविका शक्तिरिति चेन्न । उपादानस्य कार्यस्य व्यवहारगोचरत्वसंपादिका शक्तिः सेति । आविर्भावस्य व्यवहारयोग्यतात्मकत्वात् । न च किमनयेति शङ्क्यम् । तदाधारत्वस्य कारणलक्षणत्वात् । यत्तु अनन्यथासिद्धनियतपूर्ववर्तित्वं कारणत्वं तन्न । पूर्ववर्तित्वस्य कार्यसापेक्षत्वात् कार्यस्य च नियतपश्चाद्भावित्वात् अन्योन्याश्रयप्रसात् । अनन्यथासिद्धत्वस्यान्यथासिद्धभिन्नत्वेनान्यथासिद्धेश्चान्यत्र गृहीतकारणताकत्वरूपत्वेन तत्राप्यस्यैव कारणलक्षणस्य वक्तव्यत्वादात्माश्रयापत्तेश्च । गौर-

भाष्यप्रकाशः

प्रपञ्चो वेदविद्भिर्भगवच्छिक्षया वा भगवद्दत्तमनीषया वा भगवदिच्छामात्रेणैव वा कृत इति तथा गृहीतसंबन्धस्य वेदस्य नाबोधकत्वम्, न वा लौकिकसापेक्षत्वमित्यर्थः। एवमेव पुरुषसूक्तेऽपि सहस्रशीर्ष्णो महापुरुषाद्विराजस्तन्मध्यगानां च सृष्ट्यादिकं श्रावयित्वा,

'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसस्तु पारे।
सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन् यदास्ते'॥

इत्यादि मन्त्रत्रयं पठ्यते। तत्रास्मिन् मन्त्रे हेतुः पूर्वपक्षनिरासे। अस्मिन् प्रपञ्चेनादित्वं परमाणुजन्यत्वगुणजन्यत्वादिशङ्का महति पुरुषे च शबलत्वादिशङ्का न कार्या। तत्र हेतुः, 'तमसः पारे' इति। अस्य पदद्वयस्य महापुरुषे सर्वेषु रूपेषु च देहलीदीपन्यायेन संबन्धः। यदास्त इति यत्पदं हेतुबोधकम्। तेनास्मिन् मन्त्रे छान्दोग्यवदेव सर्वं सृष्टिस्वरूपमभिवदितृत्वेन भगवत एव शिक्षकत्वं च बोधितम्। ततो द्वितीये,

'धाता पुरस्ताद् यमुदाजहार शक्रः प्रविद्वान् प्रदिशश्चतस्रः।
तमेवंविद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते'॥

इति मन्त्रे धातुः प्रथमं तदुद्बोद्धृतया तद्वक्तृत्वं शक्रस्य दिशां देवतानां श्रोतृत्वं चोक्त्वा उत्तरार्धे केवलस्यैव सर्वकर्तृत्वेन सर्वात्मकत्वेन यद्वेदनं तस्य फलमाह। ततस्तृतीये,

रश्मिः।

वाच्य। नापि कारणं कारणमित्यनुगताकारप्रतीतिसंज्ञिकजातिविशेषस्तत्। अभावेपि तस्याङ्गीकारेण जातेरेवाशक्यवचनत्वात्। अखण्डोपाधित्वं त्वगतिकगतिः। नापि कार्यानुकूलतान्वयव्यतिरेकित्वं तत्। मूलकारण आकाशादौ च व्यभिचारात्। तत्तन्मते तस्य तस्य नित्यविभुत्वेन कालतो देशतश्चाव्यतिरेकात्। नन्वीश्वरेच्छासंकेतः। मैवम्। शब्दवृत्तित्वाभावात्। संबन्धान्तरस्याप्रयोजकत्वात्। अतस्तद्देशकालविभेदेनास्माभिरुच्चार्यमाणोयं शब्द इममेवार्थं बोधयतु न त्वन्यमितीश्वरेच्छाकृतनियमशक्तिसंकोच एव संकेतः। तत्रत्यानामपि न सर्वदा ब्रह्म प्रत्यक्षमिति ध्वनयन्तः पक्षान्तरमाहुः भगवद्दत्तेत्यादि। पूर्वं भगवद्दीक्षयेत्यत्राप्तवाक्याच्छक्तिग्रह उक्तः। इदानीं विवृतेर्वदन्तीत्युच्यते यत्तदुच्यते भगवद्दत्तमनीषां विना विवृत्यसंभवात्। वक्ष्यमाणभगवदिच्छामात्रेणेत्यत्र व्याकरणाच्छक्तिग्रहः। 'अनागतमतीतं च' इतिवाक्याद्वेदविदां व्याकरणदर्शनेच्छाविषयत्वात्। न च विपरीतं कुतो न स्यादिति वाच्यम्। मात्रप्रत्ययेन भगवद्दत्तमनीषाव्यवच्छेदात्। दत्तमनीषाया इच्छाविषयमनीषातिरिक्तत्वात्। महाराजाधिराजत्वेनोपपत्तेः। ब्रह्मलोकेप्युत्तममध्यमनिकृष्टव्यवहारोस्तीत्यपि सूचितमनेन। अन्यथा लीलानुपपत्तेः। तदुक्तम्— 'तेने ब्रह्म हृदा य आदिकवये' इति। पूर्वपक्षेति 'सहस्रशीर्षा' इति ग्रन्थस्यारितपूर्वपक्षनिरासे। अस्मिन्निति परिदृश्यमानेपीत्यर्थः। न कार्येति विधेरपि सृष्टस्रष्टृत्वादस्य प्रपञ्चस्य तत्सृष्टस्रष्टृत्वाच्च मीमांसकनैयायिकसांख्यैर्न कार्येत्यर्थः। संबन्ध इति यतस्तमसोऽविद्यायाः पारे धीरः सर्वाणि रूपाणि विचित्य नामानि कृत्वाभिवदन्नास्तेऽतस्तमसः पारे महान्तं पुरुषमादित्यवर्णमेतमहं वेदेत्यर्थापत्त्येत्यर्थः। प्रकर्षश्चाधिदैविकत्वेत्याहुः देवतानामिति। प्रविद्वानित्यस्यार्थमाहुः श्रोतृत्वमिति। एवमित्यस्यार्थमाहुः सर्वकर्तृत्वेनेत्यादि। फलमिति अमृत इह भव-

आकृतिमात्रार्थं लोकापेक्षा । अनधिगतार्थगन्तृ च प्रमाणं, लोकानधिगत इत्यर्थः । यज्ञब्रह्मणोरलौकिकत्वं सिद्धमेव । लौकिको व्यवहारः सन्निपात-

भाष्यप्रकाशः ।

'यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्ते यत्र पूर्वे साध्याः सन्ति देवाः' ॥

इतिमन्त्रे तादृशे यज्ञे सिद्धानामेव धर्माणां प्राथम्यं तत्फलं चाह । तेनापि पूर्वोक्त एवार्थः सिद्धः । एतदेव श्रीभागवतद्वितीयस्कन्ध उपबृंहितम् ।

'यदास्य नाभ्यान्नलिनादहमासं महात्मनः ।
नाविदं यज्ञसंभारान् पुरुषावयवादृते ॥
तेषु यज्ञस्य पशवः सवनस्पतयः कुशा' । इत्यारभ्य,
'तमेव यज्ञपुरुषं तेनैवायजमीश्वरम्' ॥

इत्यन्तेन । अतो वेदैकसमधिगम्यत्वसाधनं नानर्थकमिति । ननु भवत्वेवं तदानीन्तनानां, तावतेदानीन्तनानां कथं संकेतग्रह उपायाभावात् । तथा सतीदानीं तु स दोषस्तदवस्थ इत्यत आहुः आकृतीत्यादि । आकृतिमात्रार्थमिति आकृत्यवधारणार्थम् । सिद्धमेवेति तव मतेऽपि सिद्धमेव । तथाच यथा दारवमार्तिकाद्युपकरणे गृहीतसंकेताः सौवर्णेऽपि तस्मिंस्तया आकृत्या संकेतमवधारयन्ति, तथात्राप्तवाक्याद् यादृशो लौकिकस्तादृशे वैदिकेऽपि प्रपञ्चे संकेतमवधारयिष्यन्तीतिबोधनार्थम्, 'यथा सौम्यैकेन मृत्पिण्डेन' इत्यादीनां लौकिकदृष्टान्तानां श्रुतावप्यादरणादिति लौकिकानां पुरुषाणामेव परापेक्षत्वं, न वेदस्य । यदि चैवमपि सापेक्षत्वमेवेति विभाव्यते तदा तु धर्मब्रह्मणोरपि बोधने लोकप्रसिद्धपदादिसमभिव्याहारसापेक्षत्वादनपेक्षतायै तिलाञ्जलिरेव प्रदीयताम् । तथानधिगतार्थगन्तृत्वस्यापि । प्रसिद्धपदसमभिव्याहारशून्यतायामबोधकताया एवापत्तेर्धर्मोऽपि न बुद्ध्येतैव । तथा निषेधावधिभूतब्रह्मस्वरूपमपि लोकप्रसिद्धमर्थमेव निषिध्य बोध्यत

रश्मिः ।

तीत्यमृतरूपं फलमित्यर्थः । तानीत्यस्य यज्ञेन पुरुषावयवेन यजनं यत्तत्परामर्शकत्वात्तदर्थमाहुः सिद्धानामेवेति । तत्फलमिति महिमानो भगवद्विभूतिरूपाः नाकं स्वर्गं सचन्ते 'षच समवाये' संबध्नन्तीति धर्मफलमित्यर्थः । पूर्वोक्त इति वैदिक्येव सृष्टिर्वेदविद् एव पुरुषा भगवानेव शिक्षक इति वैदिकसृष्टौ वेदशब्दानां संकेतग्रह इत्युक्त इत्यर्थः । 'यज्ञेन यज्ञमयजन्त' इत्यंशमुपबृंहयन्ति एतदेवेत्यादि । स दोष इति संकेताग्रहरूपदोष इत्यर्थः । आकृतीति 'मात्रं कार्त्स्न्येऽवधारणे' इति कोशात् । तव मत इति पूर्वोक्तलक्षणाङ्गीकर्तुर्मीमांसकशांकरादेर्मतेपि । आप्तवाक्यादिति तेन पूर्वोक्ता प्रनाडी संगृहीतेति बोधितम् । प्रस्थानरत्नाकरे तु प्रगल्भातिबालानुपादाय प्रत्यक्षविरोधो दत्त इत्यदोषः । आदरणादिति एतेनैवकारो बहुश्रुत्युपष्टम्भत्वालौकिकसिद्धत्वव्यवच्छेदकः । परापेक्षत्वमिति लौकिकपदेष्वाकाङ्क्षादिरूपपरापेक्षत्वमित्यर्थः । वेदे पुरुषाभावादाहुः वेदस्येति । एवमपीति आकृतिमात्रार्थे लोकापेक्षायामपीत्यर्थः । निषेधावधीति निषेधश्चासाववधिरिति कर्मधारयः तद्भूतेत्यर्थः । निषेधशेषभूतब्रह्मस्वरूपमि-

१. वैदिक्येव सृष्टिः वेदविदेव पुरुषः भगवानेव शिक्षकः इति वैदिकसृष्टौ वेदशब्दानां संकेतग्रह इति.

रूपत्वात् पुरुषार्थासाधक एव। तर्हि शब्दमात्रस्य कथं ग्रहणम्। वेदव्याख्यातृवागविषयत्वादिति ब्रूमः।

भाष्यप्रकाशः।

इत्यस्ति तद्बोधनेऽपि लोकापेक्षेति। तदभावे तदपि न बुध्येत। अथ तत्र प्रसिद्धान्यपि पदादीनि वैदिकान्येवेति न दोष इति चेत् तर्हि तत्रापि व्यवहारं वैदिकमेवानुसंधत्स्व। इदानीं विधूयमानेऽपि तस्मिन् भगवता,

'मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्यते ह्यहम्।
एतावान् सर्ववेदार्थः शब्द आस्थाय मां भिदाम्।
मायामात्रमनूद्यान्ते प्रतिषिध्य प्रसीदति' ॥

इति श्रीभागवते कथनात्। अतो धर्मब्रह्मबोधन इव वैदिकप्रपञ्चबोधने आकृतिमात्रार्थं लोकापेक्षायामपि न दोष इत्यर्थः। तदेतदुक्तं, सिद्धमेवेत्यन्तेन। नन्वेवं सति लौकिकव्यवहारस्याप्यादरे को दोष इत्यत आहुः लौकिक इत्यादि। एकादशस्कन्धे,

'सन्निपातस्त्वहमिति ममेत्युद्धव या मतिः।
व्यवहारः सन्निपातो मनोमात्रेन्द्रियासुभिः' ॥

इति भगवता प्राकृतगुणान् प्रकृत्य मनआदिव्यवहारस्य सन्निपातत्वकथनाल्लौकिकव्यवहारस्य सन्निपातकार्यत्वेनाऽप्रामाणिकत्वात् पुरुषार्थासाधक इत्यतो नाद्रियत इत्यर्थः। एवं ब्रह्मणो वैदिकव्यवहारविषयत्वमसहमानश्चोदयति तर्हीत्यादि। यदि सूत्रकृत एवं ब्रह्मणो वैदिकव्यवहारविषयत्वमभिप्रेतं स्यात् तर्हि शब्दमात्रस्य नाशब्दमित्यनेन कथं ग्रहणं कुर्यात्। नावेदं, नावेदान्तमित्येव वदेत्। अतो नायं सूत्रार्थ इत्यर्थः। अत्र समादधते वेदेत्यादि। "अस्य महतो भूतस्य निःश्वसितमेतद् यदृग्वेदो यजुर्वेदः सामवेदोथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि सर्वाणि निःश्वसितानि' इति मैत्रेयीब्राह्मणे श्रावणाद् वेदव्याख्यातृवाचामपि तथात्वेन ब्रह्मणस्तद्विषयत्वमपि सूत्रकृतोऽभिप्रेतमित्यतः शब्दशब्दग्रहणमिति ब्रूमः। तथा चैवमभिप्रेतत्वादयमेव सूत्रार्थो, नान्यः। सांख्यनिरा-

रश्मिः।

त्यर्थः। तदभाव इति लोकाभावे। तदपि निषेधावधिब्रह्मस्वरूपमपीत्यर्थः। दोष इति सापेक्षत्वलक्षणः। तत्रेति वेद इत्यर्थः। सिद्धमेवेत्यन्तेनेति। भाष्ये। अनधिगतेति अनधिगतो योर्थो यागब्रह्मात्मकः तस्य गन्तृत्वप्रतिपादकत्वेन प्रापकत्वं प्रमाकरणत्वं तु नोक्तमनधिगतार्थप्रमाकरणत्वेन संशयविपर्यासकरणत्वाभावापत्त्या संशयविपर्यासप्रतिपादकवेदेऽप्रामाण्यप्रसङ्गात्। अधिगतार्थगन्तृत्वं वेदभागेपि पुनर्दर्शने भवति तद्वारणायाहुः लोकानधिगत इति। यागब्रह्मणोः पुनः पुनर्ज्ञानेपि वेदाधिगतत्वेपि लोकानधिगतत्वान्नाव्याप्तिरित्यर्थः। इदं लक्षणं दूष्यत्वेन जयराम्यामपि शिरोमणिटीकायामादृतम्। दूषणं तु लोकानधीतिभाष्याभासोक्तम्। परिहारस्तु भाष्यम्। प्रकृते। अप्रामाणिकत्वादिति द्वैतापादकत्वेन दुर्व्याहृतप्रमाऽजनकत्वात्तथा। तथात्वेनेति ब्रह्मप्रतिपादकत्वेनेत्यर्थः। नान्य इति अशब्दशब्दोत्र प्रकृतिवचन इति शंकराचार्यप्रभृतयः। सोन्यः सूत्रार्थः। स नेत्यर्थः। एवकारव्यवच्छेद्योप्यमर्थः। अन्यैः सांख्यमत निरस्तमित्युक्तम्। तस्यानतिप्रयोजकत्वे हेतुमाहुः सांख्येत्यादि।

एतेन 'मनसैवानुद्रष्टव्यम्' इत्यपि समर्थितम् । तस्मात् सृष्ट्यादिप्रतिपादका अपि वेदान्ताः साक्षाद् ब्रह्मप्रतिपादका इति सिद्धम् ॥ ४ ॥

भाष्यप्रकाशः ।

करणस्याग्रे आनुमानिकाधिकरणे करिष्यमाणत्वेनात्र तत्प्रयोजनाभावात् । अतो गृहप्रविष्टचौरतुल्यस्य मिथ्यावादिन एव निराकरणायेदं सूत्रमित्यर्थः । नन्वेवं सति सूत्रत्वव्याख्यानत्वादीनां सूत्रान्तरादिष्वपि सत्त्वाद् तद्व्याख्यानादिकमपि कुतो न संगृह्यत इति चेद्, उच्यते ।

'किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेत् ।
इत्यस्या हृदयं लोके नान्यो मद्वेद कश्चन' ॥

इत्येकादशस्कन्धे 'वेदान्तकृद्वेदविदेव चाहम्' इति गीतायां च भगवद्वाक्याद् यथावस्थितवेदार्थवेत्ता भगवानेव । स तु, मां विधत्त इत्यादि, 'वेदैश्च सर्वैरहमेव वेद्यः' इति च वक्ति । तथा,

'वदन्ति कृष्ण श्रेयांसि बहूनि ब्रह्मवादिनः ।
तेषां विकल्पप्राधान्यमुताहो एकमुख्यता' ॥ इत्युद्धवप्रश्ने,
'कालेन नष्टा प्रलये वाणीयं वेदसंज्ञिता ।
मयादौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः ॥
तेन प्रोक्ता च पुत्राय मनवे पूर्वजाय सा ।
ततो भृग्वादयोऽगृह्णन् सप्त ब्रह्ममहर्षयः ॥
तेभ्यः पितृभ्यस्तत्पुत्रा देवदानवगुह्यकाः ।
मनुष्याः सिद्धगन्धर्वाः सविद्याधरचारणाः ॥
किंदेवाः किन्नरा नागा रक्षःकिंपुरुषादयः ।
बह्व्यस्तेषां प्रकृतयो रजःसत्त्वतमोभुवः ॥
याभिर्भूतानि भिद्यन्ते भूतानां मतयस्तथा ।
यथाप्रकृति सर्वेषां चित्रा वाचः स्रवन्ति हि ॥
एवं प्रकृतिवैचित्र्याद्भिद्यन्ते मतयो नृणाम् ।
पारंपर्येण केषांचित् पाषण्डमतयोऽपरे ॥
मन्मायामोहितधियः पुरुषाः पुरुषर्षभ ।
श्रेयो वदन्त्यनैकान्त्याद् यथाकर्म यथारुचि' ॥ इत्याद्याह,

अत्रागृह्णन्नित्यस्य किंपुरुषादय इत्यन्तं पृथक्संबन्धः । बह्वीनां प्रकृतीनां चित्रवाङ्निर्गमहेतुत्वम् । शेषं तु स्फुटमेव । तेन भगवदुक्तिविरुद्धस्य वेदव्याख्यानत्वप्रतीतावपि तस्य व्याख्यानत्वाभाव एव सिद्ध इति तन्न संगृह्यत इत्यवधेहि । एवं शब्दब्रह्मोक्तिं साधयित्वा तेन सिद्धमाहुः एतेनेत्यादि । एवं वैदिकशब्दप्रतिपाद्यत्वसमर्थनेन मनसैवानुद्रष्टव्यमिति श्रुतिसिद्धं कामवि-

रश्मिः ।

अग्र इति चतुर्थपाद इत्यर्थः । चित्रवागिति वाचश्च वेदव्याख्यानरूपा ज्ञेयाः । एतेनेति वर्गे छन्दः । कामपदं क्रोधोपलक्षकम् । वेदव्याख्यातृवाग्विषयत्वेन तत्साध्यत्वारसेन ।

स्यादेतत्। कर्तृत्वमकर्तृत्वं च वेदे प्रतीयते ब्रह्मणः। 'यतो वा इमानि भूतानि जायन्ते', 'स आत्मान१ स्वयमकुरुत,' 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्,' 'असङ्गो ह्ययं पुरुषः' इत्येवमादिवाक्येषु। तत्र द्वेधा निर्णयः संभवति। सर्वभवनसमर्थत्वाद्विरुद्धसर्वधर्माश्रयत्वेन, अन्यतरबाधाद्वा। अलौकिकापेक्षया लौकिकस्य जघन्यत्वात् कर्तृत्वादेर्लोकसिद्धत्वात् कर्तृत्वबाध एव युक्तः। ईक्षत्यादिकं तु प्रकृतिगुणसंबन्धादपि ब्रह्मणो युज्यते। तस्मादलौकिकसर्वभवनसमर्थत्वादिकल्पनापेक्षया लौकिक एवान्यतरबाधो युक्तः। ततश्च सत्यस्वरूपादन्यदेवैतदिति स्वयमेवाशङ्क्य परिहरति सूत्रकारः।

भाष्यप्रकाशः।

वर्जितातिशुद्धमनसानुद्रष्टव्यमिति समर्थितम्। अपिशब्दात्, 'कश्चिद्धीरः प्रत्यगात्मानमैक्षत्' इत्यादीनामपि संग्रहः। एवं व्यवस्थया विरोधपरिहारेण ब्रह्मणः सर्वप्रमाणाविषयत्वतद्विषयत्वयोः समर्थनेन यत् सिद्धं तन्निगमयन्ति तस्मादित्यादि। एवं ब्रह्मणोऽलौकिकप्रमाणगम्यत्वाद्वेदान्तानां ब्रह्मप्रतिपादकत्वेन विचारणीयत्वं सिद्धमित्यर्थः॥ ४॥

अतः परं, गौणश्चेन्नात्मशब्दादिति द्वितीयं सूत्रमवतारयन्ति स्यादेतदित्यादि। कर्तृत्वमकर्तृत्वं चेति चकारादुपादानत्वमनुपादानत्वं च। अत्र पूर्वश्रुतौ हेतुत्वमात्रं प्रतीयते। तत्प्रकारान्तरेणापि संभवतीत्यतो द्वितीयश्रुत्युपन्यासः। तत्र कर्तृत्वं स्फुटमिति तद्विरुद्धं निष्क्रियत्वं शान्तत्वं च। तृतीयश्रुतौ तथैवोपादनत्वविरुद्धं निष्कलत्वं निरवद्यत्वं च। चतुर्थ्यामसङ्ग इत्यनेनासक्तेः संसर्गस्य च निषेधः क्रियां विकारित्वं च विरुणद्धि। युक्त इति उत्पत्तिशिष्टोत्पन्नशिष्टन्यायेनोपजीव्योपजीवकभावेन च बुद्धावारोहाद्युक्तः। एतदिति शबलं स्वरूपम्।

रश्मिः।

समर्थितमिति न यत्र मनो निविशत इतिवाक्येन मनोऽविषये मनसैवेति बृहदारण्यकविरुद्धमतो विमतं ब्रह्म वेदो व्याख्यातृमनोविषयं वेदव्याख्यातृवाग्विषयत्वात्। अस्मदादिवाग्विषयवत्। तथा च श्रुतिः 'यन्मनसा ध्यायति तद्वाचा वदति' इति। एवं समर्थितमित्यर्थः। भक्तेर्दुर्लभत्वादप्रकरणत्वाच्च। 'भक्तिरस्य भजनं तदिहामुत्र फलभोगनैराश्येनामुष्मिन्मनःकल्पनमेतदेव च नैष्कर्म्यम्' इतिश्रुतेर्विषयः। अत एवाहुः अपीति। अत्र धीरत्वेन प्रत्यगात्मदर्शनत्वे कार्यकारणभावः सोपि भक्तिमार्गविषयः। विवेकधैर्याश्रयग्रन्थस्य भक्तिमार्गीयत्वात्। आदिशब्देन 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यः' इतिश्रुतिः मैत्रेयीब्राह्मणस्थत्वाद्भक्तिमार्गीयत्वम्। एवं 'तरति शोकमात्मवित्' इत्यत्र सर्वात्मभावप्रकरणीयत्वात्। तस्मादुक्तश्रुतिरत्रेति ज्ञेयम्। व्यवस्थेति प्रमाणबलेनाविषयः स्वेच्छया विषयः। ब्रह्मप्रतीति स्वरूपलक्षणवन्निर्वाहकसंगत्या साक्षाद्ब्रह्मप्रतिपादकत्वेनेत्यर्थः। तेन चिद्रूपे लक्षणाव्याप्तिः परिहृता। तेनैव प्रकृतिपरमाण्वादावतिव्याप्तिरपि निवारिता॥ ४॥

अवतारयन्तीति प्रसङ्गसंगत्यावतारयन्तीत्यर्थः। प्रकारान्तरेणेति निमित्तत्वमात्रेणेत्यर्थः। उत्पत्तिशिष्टेत्यादि द्वितीयस्य द्वितीयपादे 'गुणश्चापूर्वसंयोगे वाक्ययोः समत्वात्' इतिसूत्रे वैश्वदेव्यामिक्षेति यागं विधायाम्नायते वाजिभ्यो वाजिनमिति। तत्रोत्पत्तावामिक्षारूपद्रव्ययुक्तं कर्मावधारितमिति न तत्र वाजिनरूपद्रव्यान्तरसंबन्धापेक्षेति वाजिनं तत्र प्रवेशमलभमानं सत् कर्म भिनत्ति इति स्थितम्। तेन न्यायेनेत्यर्थः। उपजीव्येत्यादि एतच्च—

'उपजीव्यत्वतः श्रौतवाक्यैश्चान्यपरत्वतः। अन्तरङ्गत्वतश्चापि निर्विशेषं निरूप्यते'॥

इत्यादिपूर्वपक्षग्रन्थे विद्वन्मण्डने स्फुटम्। एतदितीति स्यादेतदिति भाष्यान्वय इत्यर्थः।

## गौणश्चेन्नात्मशब्दात् ॥ ५ ॥

ईक्षत्यादियुक्तः परमात्मा गौणः प्रकृतिगुणसत्त्वसंबन्धवानिति चेन्न तथा वक्तुं न शक्यते । कुतः । आत्मशब्दात् । 'आत्मा वा इदमेक एवाग्र आसीत्' इत्युपक्रम्य, 'स ऐक्षत' इत्युक्तम् । आत्मशब्दः पुनः सर्वेषु वेदान्तेषु निर्गुणपरब्रह्मवाचकत्वेनैव सिद्धः । तस्यैव जगत्कर्तृत्वं श्रुतिराह । ननु चोक्तमन्यतरबाधो युक्त इति । न युक्तः । स्वातन्त्र्याभावेन सगुणस्य कर्तृत्वायोगात् । वेदाश्च प्रमाणभूताः । ततः सर्वभवनसामर्थ्यमेव श्रुतिबललभ्यमङ्गीकर्तव्यम् ।

---

भाष्यप्रकाशः ।

गौणश्चेन्नात्मशब्दात् ॥ ५ ॥ अयुक्तत्वे हेतुमाहुः स्वातन्त्र्याभावेनेत्यादि । कारकमात्रस्य स्वव्यापारं प्रति स्वातन्त्र्ये सत्यपि यत् कर्तृलक्षणतया स्वातन्त्र्यस्य कीर्तनं तत् कारकान्तरनियामकतयैवातो गुणानामुपादानत्वे वा करणत्वे वाऽवश्यं कर्तृनियम्यतैव युक्ता, न तु प्रयोजकता । तथा सति तेषामेव सृष्ट्यादिकार्ये स्वातन्त्र्येण ब्रह्मनियामकतया सगुणस्य स्वातन्त्र्याभावेन कर्तृत्वायोगादित्यर्थः । ननु गुणानां जडत्वेन चेतनाधीनत्वान्न सगुणस्य स्वातन्त्र्यहानिरतो गुणसंबन्धिन्येव कर्तृत्वं युक्तमित्यत आहुः वेदाश्चेत्यादि । अनपेक्षत्वाद्भगवन्निःश्वासरूपत्वाच्च वेदाः स्वतः प्रमाणभूताः । ते च, 'सदेव सौम्येदमग्र आसीत्', 'आत्मा वा इदमेक एवाग्र आसीत्' इत्यादिषु विशेष्यान्वितेनैवकारेणेतरयोगं व्यवच्छिन्दन्तस्तदानीं केवलस्य शुद्धस्यैवात्मनः कर्तृत्वमावेदयन्ति । नच कालवाचकाग्रपदेन तत्सत्ताया अपि बोधनादेवकारो नान्ययोगव्यवच्छेदक इति शङ्क्यम् । बोधनार्थमेव तथोक्तेः । कथमेतदितिचेदित्थम् । इयं हि श्रुतिः सर्वापेक्षया प्राथमिकं वृत्तान्तं वक्ति । तत्रैवकारेण सदितरयावद्व्यवच्छेदे भिन्नविधप्रमाणान्तरस्यापि व्यवच्छिन्नत्वात् तस्याप्यभावेनाग्रपदे प्रमाणान्तरसिद्धकालानुवादकतया वक्तुमशक्यत्वेन, एतस्यैव वाक्यस्य कालसत्ताबोधकत्वे चात्मासीत् कालोऽप्यासीदित्येवं वाक्यभेदप्रसङ्गेन कालसत्ताया अशक्यवचनत्वे केवलस्यात्मनोऽपि निरूपणमशक्यमिति वाक्यस्याबोधकत्वे प्रसक्ते सृष्ट्युत्तरव्यवहारानुसारेण सर्वाधारतया प्रतीयमानो यः कालस्तदुपरञ्जनेन पूर्ववृत्तान्तं वक्तीत्येवं बोधनार्थत्वं जानीहि । अत एव सृष्ट्युत्तरमपि केवलं ब्रह्मैवेति बोधनाय सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यदित्येवं श्रुत्यन्तरेऽप्युच्यते । एवं तदानीमितराभावे गुणानां सत्ता तदानीं वक्तुं न शक्यत इति न सगुणः कर्ता । नचोत्पत्तिशिष्टन्यायस्योपजीव्यन्यायस्य वा

रश्मिः ।

गौणश्चेन्नात्मशब्दात् ॥ ५ ॥ कीर्तनमिति 'स्वतन्त्रः कर्ता' इति सूत्रे कीर्तनमित्यर्थः । गुणानामिति प्राकृतानामित्यर्थः । निःश्वासेत्यादि व्यासादिभिरुच्चार्यमाणा वेदाः परंपरया निःश्वासा इति वक्तव्यम् । एवकारेणेत्यादि सदन्ययोगव्यवच्छेदवदिदमिति । एकान्ययोगव्यवच्छेदवानात्मेति च यथायथं बोधात्तथेत्यर्थः । नान्ययोगेत्यादि किंत्वयोगव्यवच्छेदक इति भावः । तथा च सत्त्वावच्छिन्न इदंत्वावच्छिन्नायोगव्यवच्छेदवान् तथैकत्वावच्छिन्न आत्मायोगव्यवच्छेदवानिति च बोधात्कालसत्तायामपि न क्षतिरिति भावः । वाक्यभेदेत्यादि वाक्यभेदस्य दोषत्वं गौरवप्रसञ्जकतया पौरुषेयत्वं वा दूषकताबीजं पुरुषाणां दोषत्वस्य संभावितत्वात् ।

किंच। अस्तिभातिप्रियत्वादिधर्मवद्ब्रह्मगतकर्तृत्वं लोके प्रतीयते। कार्यत्वात्। तस्मादात्मशब्दप्रयोगाद् गुणातीतमेव कर्तृ ॥ ५॥

---

भाष्यप्रकाशः।

प्रवृत्तिरत्र शङ्कनीया। विरुद्धधर्माधारत्वेन बाध्यबाधकभावाभावात्। ततः श्रुतिबललभ्यं, श्रुति-लिङ्गवाक्यप्रकरणस्थानसमाख्यारूपेषु षट्सु प्रमाणेषु श्रुतिबलसिद्धं ब्रह्मणः सर्वभवनसामर्थ्यमेवाङ्गीकर्तव्यमित्यर्थः।

ननु मास्त्वेवं कर्तृत्वादिबाधस्तथापि कर्तृत्वस्य लौकिकत्वं नापैतीति तत एव तद्बोधोऽस्त्वित्यत आहुः किंचेत्यादि। प्रियत्वादीत्यादिपदेनापहतपाप्मत्वसंग्रहः। तथाच ब्रह्मधर्मस्य

रश्मिः।

विरुद्धेत्यादि। साधनाध्यायद्वितीयपादे 'अम्बुवदग्रहणात्' इत्यधिकरणे वक्ष्यमाणेन विरुद्ध-धर्माधारत्वेन बाध्यबाधकभावाभावेन निर्गुणे धर्मप्रवेशस्य संभवेनोपजीव्यत्वादीनां सगुणप्रति-पादकास्वपि सत्त्वेन न न्यायप्रसर इत्यर्थः। ततः सर्वेत्यादि भाष्यं विवृण्वन्ति ततः श्रुतीत्यादि। तत्र 'निरपेक्षो रवः श्रुतिः' 'सामर्थ्यं सर्वभावानां लिङ्गमित्यभिधीयते' इति पदार्थे लिङ्गं 'समभिव्याहारो वाक्यम्' 'उभयाकाङ्क्षा प्रकरणम्' 'देशसामान्यं स्थानम्' समाख्या यौगिकः शब्दः तत्र यजेत इत्याद्या विधात्री श्रुतिः। व्रीह्यादिरूपा अभिधात्री विनियोक्त्री च। स यस्य शब्दस्य श्रवणमात्रेण संबन्धप्रत्ययः। सा च त्रिधा विभक्तिरूपा, एकाभिधानरूपा, एक-पदरूपा चेति। 'व्रीहिभिर्यजेत' इत्यत्र विभक्तिरूपया तृतीयया श्रुत्या व्रीहीणां यागाङ्गत्वम्। पशुना यजेत इत्यत्रैकत्वपुंस्त्वयोः समानाभिधानरूपया श्रुत्याङ्गत्वम्। यजेत इत्याख्याताभि-हितसंख्याया भावनाङ्गत्वम्। समानाभिधानश्रुतेरेव पदश्रुत्या च यागाङ्गत्वं 'बर्हिर्देवसदनं दामि' इत्यस्य लवनाङ्गत्वलिङ्गेनायं मन्त्रो लवनं प्रकाशयितुं समर्थः। वाक्येन यस्य पर्णमयी जुहूर्भ-वतीत्यत्र पर्णताया जुह्वङ्गत्वम्। साध्यत्वादिवाचकद्वितीयाद्यभावे वस्तुतः शेषशेषिणोः सहोच्चरण-रूपवाक्यसत्त्वात्। प्रकरणेन प्रयाजादिषु समिधो यजतीति। अत्रेष्टविशेषस्यादर्शनात्समिधा योगेन किमित्यस्त्युपकार्याकाङ्क्षा। दर्शपूर्णमासवाक्येपि दर्शपूर्णमासाभ्यां स्वर्गं भावयेत् कथ-मित्यस्त्युपकारकाकाङ्क्षा तया प्रयाजादीनां दर्शपूर्णमासाङ्गत्वम्। स्थानेन यथासंख्यपाठरूपेण 'ऐन्द्राग्नमेकादशकपालं निर्वपेत् वैश्वानरं द्वादशकपालं निर्वपेत्' इत्येवं विहितेष्टिषु इन्द्राग्नी रोच-नादिव इत्यादीनां याज्यानुवाक्यामन्त्राणां यथासंख्यं प्रथमस्य प्रथमं द्वितीयस्य द्वितीयमित्येवं विनियोगाः संनिधिपाठरूपेण स्थानेन वैकृतानामङ्गानां प्राकृताङ्गाननुवादेन विहितानां विकृ-त्यर्थत्वम्। तेषां कैमर्थ्याकाङ्क्षायाः फलवद्विकृत्यपूर्वस्य भाव्यत्वेन संबन्धादेव पूरणात्। अनुष्ठानसादेश्यरूपेण स्थानेन पशुधर्माणामग्नीषोमीयार्थत्वं समाख्यया वैदिक्या होतृचमस इति होतुश्चमसभक्षणाङ्गत्वं लौकिक्याध्वर्यवसमाख्ययाध्वर्योस्तत्तत्पदार्थाङ्गत्वम्। एवेति लिङ्गा-दिषु प्रत्यक्षस्य विनियोजकस्य शब्दस्याभावात्ते श्रुतितो निर्बला इत्येवकारः। अत एव गार्हपत्य-मुपतिष्ठत इत्यत्र लिङ्गादैन्द्र्या इन्द्रोपस्थानार्थत्वं कल्प्यते। तावत्प्रत्यक्षया श्रुत्या गार्हपत्योपस्था-नार्थत्वं प्राप्यत इति दृश्यते मीमांसायाम्। अपैतीति अप आ एतीति पदच्छेदः तेन नात्र वृद्धिदोषः न पररूपं, वृद्ध्यनन्तरं तथात्वु। तथाचेति अस्तिभातिप्रियत्वाश्रयत्वेन-

नन्वात्मशब्दोऽपि लोकवद् गौणोऽस्तु । लोके हि केनचित् पृष्टो विष्णुमित्र आह, यज्ञदत्तो ममात्मेति । अत्र गौणत्वमुपचार इत्येवं प्राप्तेऽभिधीयते ।

तन्निष्ठस्य मोक्षोपदेशात् ॥ ६ ॥

एवं हि श्रूयते । 'असद्वा इदमग्र आसीत्, ततो वै सदजायत,' 'तदात्मानꣳ स्वयमकुरुत' इत्युपक्रम्य, 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते, अथ सोऽभयं गतो भवति' इति । प्रापञ्चिकधर्मैरहिते ब्रह्मणि एतस्मिन् पूर्वोक्तजगत्कर्तरि परिनिष्ठितो मुक्तो भवतीत्यर्थः । तत्र यदि जगत्कर्ता गौणः स्यात् तन्निष्ठस्य संसार एव स्यान्न मोक्षः ॥ ६ ॥

---

भाष्यप्रकाशः ।

कर्तृत्वस्य लोके प्रत्ययेन तस्य कार्यासाधारण्याभावान्न लौकिकत्वमिति न तत्प्रयुक्तोऽपि बाध इत्यर्थः । सिद्धमाहुः तस्मादित्यादि । केनापि प्रकारेण बाधस्य वक्तुमशक्यत्वादात्मशब्दश्रुतिरूपमुख्यप्रमाणप्रमितत्वाच्च तथेत्यर्थः ॥ ५ ॥

तन्निष्ठस्य मोक्षोपदेशात् ॥ ६ ॥ एवं द्वितीयसूत्रं व्याख्याय, 'तन्निष्ठस्य मोक्षोपदेशात्' इति तृतीयसूत्रमवतारयन्ति नन्वात्मेत्यादि । लोकवत्पदं विभजन्ते लोके हीत्यादि । तथाच मास्तु गुणसंबन्धाद् गौणत्वमात्मनस्तथाप्यात्मपदश्रुतेर्मुख्यौपचारिकसाधारण्येन संदिग्धत्वान्नानया निर्णय इति पूर्वपक्षाशयः । अत्र सूत्रं पठित्वा समादधते एवं हीत्यादि । असदिति लौकिकविलक्षणमव्याकृतम् । यदा ह्येवेत्यस्यार्थस्तु, यदा यस्मिन् काले, ह्येव निश्चयेनैव, एष साधक, एतस्मिन् पूर्वोक्ते ब्रह्मणि, अदृश्ये नामरूपशून्ये, अनात्म्ये आत्मन इदमात्म्यं शरीरं तद्रहिते, अनिरुक्ते विकारो हि विशेषवशान्निरुच्यते नत्वविकार इति विकारशून्यत्वाद् विदिताविदितात् परत्वेन निर्वक्तुमशक्यत्वाद्वा अनिरुक्ते, एवं भूते ब्रह्मणि अभयं यथा स्यात् तथा प्रतिष्ठां स्थितिं विन्दते 'यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद् विजानाति' इत्येवंरूपां प्राप्नोति, अथ तदनन्तरमेव स साधकः, अभयं गतो मुक्तिं प्राप्तो भवतीति । तदाहुः प्रापञ्चिकेत्यादि । सूत्रसिद्धं निर्णयमाहु-

रश्मिः ।

कुलालादिषु ब्रह्मकार्यत्वेन ब्रह्मत्वे सतीत्यर्थः । अथवा ब्रह्मास्तीत्यादिप्रत्ययात् सत्तादिकर्तृत्वे विवादे ब्रह्मगते लोके प्रतीयमाने सतीत्यर्थः । एतद्बोधनायैव भाष्येऽस्तिभातीत्यादिकं ब्रह्मविशेषणम् । कार्यासाधारण्येत्यादि कार्यमात्रवृत्तित्वाभावादित्यर्थः । आत्मशब्देति आत्मशब्दरूपा श्रुतिः । निरपेक्षस्वरूपा तद्रूपेत्यादिः । अवतारयन्तीति हेतूपपादकत्वेनोपोद्घातसंगत्यावतारयन्तीत्यर्थः । गुणसंबन्धादिति प्राकृतगुणसंबन्धादित्यर्थः । भाष्ये । लोके यादृशं गौणत्वं तदाहुः अत्रेत्यादि ॥५॥

तन्निष्ठस्य मोक्षोपदेशात् ॥ ६ ॥ प्रकृते । पञ्चमस्कन्धे 'योऽसौ भगवति सर्वभूतात्मन्यनात्म्येऽनिरुक्तेऽनिलयने परमात्मनि वासुदेवे तन्निमित्तभक्तियोगलक्षणो नानागतिनिमित्ताविद्याग्रन्थिरन्धनद्वारेण यदा हि महापुरुषपुरुषप्रसङ्गः' इतिगद्यात् । स्थितिश्च सर्वात्मभावस्तस्यैव फलजनकत्वादित्याशयेनाहुः यत्र नान्यदित्यादि । तदुक्तम् ।

'ता नाविदन्मय्यनुषङ्गबद्धधियः स्वमात्मानमदस्तथेदम् ।
यथा समाधौ मुनयोऽब्धितोये नद्यः प्रविष्टा इव नामरूपे' ॥ इति ।

किंच।

हेयत्वावचनाच्च ॥ ७ ॥

इतोऽपि निर्गुण एव जगत्कर्ता। वेदान्तेषु सर्वत्र साधनोपदेशो पुत्रादिवज्जगत्कर्ता हेयत्वेन नोपदिश्यते। यदि सगुणः स्यात् प्राकृतगुणपरिहारार्थं मुमुक्षुभिर्जगत्कर्ता नोपास्यः स्यात् पुत्रादिवत्। अत ईक्षत्यादयो न सगुणधर्माः। सूत्रत्रयस्य ईक्षतिहेतुसाधकत्वाच्चकारः। एवं सूत्रचतुष्टयेन ईक्षतिहेतुना जगत्कर्तृत्वोपपत्त्या सृष्टिवाक्यानां ब्रह्मपरत्वमुपपादितम् ॥ ७ ॥

भाष्यप्रकाशः।

स्तत्रेत्यादि। तथाचास्यां श्रुतावुपक्रमगतं कर्तृभूतं ब्रह्मैवेति तस्मिन्नित्यनेन परामृश्य तस्यैव प्रापञ्चिकधर्मराहित्यबोधनेन विरुद्धधर्माधारत्वं निगमयित्वा तादृशे तस्मिन् परिनिष्ठितस्य मुक्तिं वदन्ति। तथान्यत्रापि, सदेव सौम्येदमित्यादिना कर्तृत्वादिविशिष्टं ब्रह्मोक्त्वा, 'आचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' इति। अतस्तादृशब्रह्मनिष्ठस्य मोक्ष उपदिश्यत इति सृष्टिप्रकरणोक्तं फलमेव तत्रत्यात्मशब्दस्यौपचारिकत्वनिवर्तकं तात्पर्यलिङ्गत्वादिति सूत्राशय इत्यर्थः ॥ ६ ॥

हेयत्वावचनाच्च ॥ ७ ॥ आत्मशब्दस्यात्र गुणातीत एव कर्तरि तात्पर्यमिति बोधयन्तश्चतुर्थसूत्रमाहुः किंच। हेयत्वावचनाच्चेत्यादि। अर्थस्तु निगदव्याख्यातः। तथा चात्रोपपत्ति-

रश्मिः।

तथान्यत्रेति छान्दोग्येऽष्टम इत्यर्थः। पुरुषो वेदेति पुरुषः स्त्री वेहेत्यर्थः। संपत्स्य इति भक्तिफलबोधकपदसमभिव्याहारात्। चिरमिति सत्संपत्तौ विलम्ब इत्यर्थः। तदाहुः अत इत्यादि। तत्रत्येति आत्मा वा इदमिति श्रुतिभवेत्यर्थः। न 'चात्मा वा इदम्' इत्यादिश्रुतिरन्यत्र वर्तते। 'असद्वा इदम्' इत्यादिश्रुतिः तैत्तिरीय आनन्दवल्यामित्यन्यत्रोक्तं फलमुपचारनिवर्तकं कथं कथं चास्य तन्निवर्तने हेतुतेति शङ्के पराकुर्वन्ति तात्पर्येत्यादि। तथा च तदात्मानमित्यत्रात्मशब्दस्यानुपचरित एवात्मनि तात्पर्यमिति फलेन स्वसमभिव्याहारद्वारा बोधनात्तादृशतात्पर्ये लिङ्गत्वादुपचारनिवर्तने हेतुत्वं तैत्तिरीयस्यात्मनोनुपचरितत्वसमर्थनेनान्यत्रात्मा वा इदमिति श्रुतावपि तदुपचारनिवर्तनादित्यर्थः। भाष्ये। किं चेति हेत्वन्तरनिरूपणमारभ्यत इत्यर्थः॥६॥

हेयत्वावचनाच्च ॥ ७ ॥ भाष्ये। निर्गुण इति प्रकृतिगुणसंबन्धरहित इत्यर्थः।

'आत्ममायामृते राजन् परस्यानुभवात्मनः।
न घटेतार्थसंबन्धः स्वप्नद्रष्टुरिवाञ्जसा' ॥

इति वाक्येवस्थितमतस्येष्यात्ममाया सा शुद्धसत्त्वरूपास्त्येव 'प्रवर्तते यत्र रजस्तमस्तयोः सत्त्वं च मिश्रं न च कालविक्रमः' इति वाक्यात्। सर्वत्रेति बृहदारण्यकादिषु 'किं प्रजया करिष्यामः अमृतत्वस्य तु नाशास्ति' इत्यादिनेत्यर्थः। सगुण इति प्राकृतगुणसत्त्वसहित इत्यर्थः। नोपास्यः स्यादिति 'तज्जलान् शान्त उपासीत' इत्यादिषु तथा न स्यादित्यर्थः। न च शुद्धसत्त्वप्रधाना माया तत्र प्रतिबिम्बितं चैतन्यमीश्वरपदवाच्यं मलिनसत्त्वप्रधानाऽविद्या तत्र प्रतिबिम्बितं चैतन्यं जीव इत्युपाधिभेदकृतविशेषेण हेयत्वोपादेयत्वोपपत्तिरिति शङ्क्यम्। प्रतिबिम्बपक्षस्य

**अतः परं स्वतन्त्रहेतूनाह, 'स्वाप्ययात्', 'गतिसामान्यात्', 'श्रुतत्वाच्च' इति सूत्रत्रयेण ।**

**ननु किमर्थं हेत्वन्तराणि । साधकत्वे एकेनापि नतिसिद्धेः । असाधकत्वे शतेनाप्यसिद्धेरितिचेत् । मैवम् । रूपभेदार्थं हेत्वन्तराणि । नानाविधान्नभोजनतृप्तिवत् । तद्यथा आत्मशब्दात्, तन्निष्ठस्य मोक्षोपदेशाद्, हेयत्वावचनाच्चेति निर्गुणस्य स्वरूपपरतया कार्यपरतया च । कार्यस्य पुनर्विधिनिषेधभेदाद् द्विरूपतेति । एवमुत्तरत्रापि प्रपञ्चयिष्यते ।**

**तत्र सृष्टिवाक्यानामीक्षतिहेतुना भगवत्परत्वमुक्तम् । इदानीं प्रलयवाक्यानामाह ।**

---

भाष्यप्रकाशः ।

रूपात् तात्पर्यलिङ्गादप्यात्मशब्दस्य गुणातीतवाचकत्वेन निर्णयादीक्षत्यादयो न सगुणधर्मा इत्यर्थः । शेषं स्फुटम् ॥ ७ ॥

अग्रिमसूत्राण्यवतारयन्ति अतः परमित्यादि । स्वतन्त्रहेतूनिति वेदान्तवाक्यानां ब्रह्मपरत्वप्रतिपादने प्रत्येकं समर्थान् हेतून् । एतेषां हेतूनां वैयर्थ्यमाशङ्कते नन्वित्यादि । समादधते मैवमित्यादि । रूपभेदार्थमिति ब्रह्मणो व्यवहार्यत्वे केवलं सृष्टिरेव न द्वारं, किंतु द्वारान्तराण्यपि सन्ति तानि तत्तद्रूपनियतानीति तेषां रूपाणां विशेषस्य ज्ञापनार्थम् । एवं तात्पर्योक्तौ गमकमाहुः तद्यथेत्यादि । तथाच चतुःसूत्र्यामाद्येनेक्षतिं सामान्यत उक्त्वा द्वितीयो हेतुः स्वरूपपरतया ततोऽग्रिमौ द्वौ कार्यपरतया चेति हेतुत्रयमुक्तम् । तथाग्रे त्रिसूत्र्यामपि कार्यान्तरपरतयेत्यर्थः । कथं कार्यान्तरपरतेत्यत आहुः कार्यस्येत्यादि । द्विरूपतेतीति । इति अस्माद्धेतोर्हेत्वन्तराण्युच्यन्त इत्यर्थः । एवमेवात्र तात्पर्यमित्यत्र गमकमाहुः एवमित्यादि ।

रश्मिः ।

द्वितीयाध्याये दूष्यत्वात् । इदं च भाष्यं साक्षाद्धक्तिर्नास्त्येव दृष्ट एव स्नेह इत्युपपत्तेरिति पक्षमनुग्रहीतुम् । अदृष्टेपि मनोव्यापाररूपोपासासंभवात् । सौत्रश्चकारः समुच्चयं द्योतयतीत्याहुः सूत्रेत्यादि । एवं सूत्राद्यर्थो निगदेन व्याख्यात इत्यर्थः । प्रकृते । सिद्धमाहुस्तथाचेत्यादि । तात्पर्यलिङ्गादिति । षष्ठीतत्पुरुषः उपपत्त्या तात्पर्यं वक्तुरिच्छा लिङ्ग्यते प्राप्यत इति । शेषमिति सूत्रत्रयेत्यादिभाष्यमित्यर्थः । घञजपाः पुंसीत्यस्य प्रायोवादत्वान्नपुंसकत्वमपि । हेतूनिति । साध्यं तु नाशब्दमित्येव । एतदेवाहुर्वेदान्तवाक्यानामित्यादि । द्वारान्तराणीति लयमोक्षसाम्यसर्वकार्यरूपाणीत्यर्थः । तेषामिति स्वाप्ययत्वगतिसामान्यश्रुतत्वानामित्यर्थः । द्विरूपतेतीति विधिनिषेधरूपविषयिभेदान्मोक्षहेयत्वरूपविषयस्य भेदः । एवमित्यादीति । उत्तरत्रेति अत्रैवाग्रे तेनात्र त्रिसूत्र्याम् । यथा गौणश्चेदिति सूत्रे ब्रह्मशब्दं विहाय आत्मशब्दो निर्गुणस्य स्वरूपपरतयोक्तः । द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्तीति गृह्यसूत्रात् प्रयोगेधोक्षजब्रह्मस्थल आत्मशब्दप्रयोगोधोक्षजत्वेपि हिरण्यगर्भप्रयोगे तथादर्शनात् ।

---

१. द्वितीयस्तुवोधिन्याम् ।

स्वाप्ययात् ॥ ८ ॥

ब्रह्मणो न सर्वव्यवहारातीतत्वम् । कुतः स्वाप्ययात् । स्वस्मिन्नप्ययात् । तत्र चित्प्रकरणत्वाज्जीवस्योच्यते । एवं हि श्रूयते । 'यत्रैतत् पुरुषः स्वपिति नाम सता सोम्य तदा संपन्नो भवति तस्मादेनं स्वपिति' इत्याचक्षते । स्वं ह्यपीतो भवतीति ।

स्वपितीति न क्रियापदं, किंतु जीवस्य नाम । तदेव स्वपितिनामत्वं यदा सता संपद्यते । सति स्वशब्दवाच्ये अपीतिं लयं प्राप्नोतीत्यर्थः । अहरहर्जीवो ब्रह्म संपद्य ततो बलाद्यधिष्ठानं प्राप्य पुनर्नव इव समायाति । वासनाशेषात् । स्वशब्देन चाभेदः । अर्थतः सच्छब्दसामानाधिकरण्यान्निर्गुणत्वम् ।

भाष्यप्रकाशः ।

स्वाप्ययात् ॥ ८ ॥ एवं सूत्रत्रयप्रयोजनमुक्त्वा पूर्वसंगतिज्ञापनाय तत्रोक्तमनुवदन्तः स्वाप्ययसूत्रमवतारयन्ति तत्रेत्यादि । व्याकुर्वन्ति तत्र चिदित्यादि । उच्यत इति लय उच्यते । श्रूयत इति छान्दोग्ये श्वेतकेतूपाख्याने श्रूयते । श्रुतिं व्याकुर्वन्ति स्वपितीति । नेत्यादि तथाच सत्संपत्तिरहितस्वापदशायां तु स्वपितीति यत्र प्रयोगस्तत्रास्य क्रियापदत्वमेव । सत्संपत्ति-दशायां तु स्वशब्दस्यात्मवाचकत्वेन सति स्वशब्दवाच्य आत्मनि अपीतिं लयं प्राप्नोति । तदा तस्मिन् पितिर्लयो यस्यासौ स्वपितिः । पृषोदरादित्वादकारनाशे ईकारस्य विकृतौ च सत्यां स्वपितिनाम्नः सिद्धिः । वस्तुतस्तु केवलयौगिकत्वे नामत्वाभावाद् योगरूढोऽयं शब्द इत्यर्थः । एवंप्रकारेण हेतुकथनस्य प्रयोजनमाहुः अहरहरित्यादि । अयमर्थः । सुषुप्ति-स्तावद् द्विधेति तदभावो नाडीष्वित्यत्र वक्तव्यम् । तथा छादोग्य एव श्राव्यते 'तद्य-थापि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तोऽपि न विन्देयुरेवमेवेमाः सर्वाः प्रजा

रश्मिः ।

'ब्रह्मन् पुंसि च' इति व्याकरणसूत्रात् । कार्यं मोक्षो हेयत्वं च ते सूत्रद्वये तथात्र स्वाप्ययादित्यत्र निर्गुणस्य स्वरूपपरतया सूत्रद्वये मोक्षः सर्वकार्यत्वं चेत्येवं कार्यपरतया तत्राप्यस्य प्रपञ्चः करिष्यत इति । पूर्वसंगतीति निर्वाहकत्वसंगतिज्ञापनायेत्यर्थः । ननु भाष्ये प्रसङ्गसंगतेः सूचनान्नायं प्रकाशार्थं इति चेन्न । सामान्यलक्षणस्य गौरवग्रस्तत्वेनासार्थस्यानतिरेकात् । भाष्ये तु सूत्रयोः संगतिरुक्ता प्रसङ्गरूपा । सा सामान्यलक्षणम् । किमन्यं नाशब्दत्वनिर्वाहक-मिति जिज्ञासया त्रिसूत्र्यवतारात् । एवं च सामान्यसंगतेः सूचितत्वेनाभिहितमुक्तम् । तत्रे-त्यादीति । प्रलय इति ब्रह्मविद्योपनिषदि 'यत्रोत्पत्तिं लयं चैव ब्रह्मविष्णुमहेश्वरात्' इत्य-त्रोत्पत्त्यनन्तरं लयोक्तेरत्रापि लय उक्तः । स्थितिस्तु चशब्दार्थ इत्यकथनेप्यदोषः ॥ ७ ॥

स्वाप्ययात् ॥ ८ ॥ भाष्ये । ब्रह्मण इत्यादि, अग्रे व्युत्पाद्यम् । तत्र चिदित्यादीति चित्प्रकरणं चिद्रूपस्य ज्ञानप्रधानस्येत्यादिभाष्येणोक्तमेव । प्रकृते । अपितेः पितिरूपतां संपादयन्ति पृषोदरेत्यादि । विकृताविति इत्येकाररूपायामित्यर्थः । नामत्वाभावादिति पाचकपाठकादि-वत्तथात्वादित्यर्थः । योगरूढ इति पङ्कजादिपदवदित्यर्थः । स्वं ह्यपीतो भवतीत्यस्य यः प्रकृतः सच्छब्दवाच्यस्तमपीतो भवत्यपिगतो भवतीत्यर्थः । वक्तव्यमिति तृतीयस्य द्वितीयपादे

**ननु प्रलये वक्तव्ये कथं सुषुप्तिः । मोक्षातिरिक्तदशायां तथाकर्मसंबन्धाभावादिति ब्रूमः ॥ ८ ॥**

भाष्यप्रकाशः ।

अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दत्यनृतेन हि प्रत्यूढाः' इति । तत्र नाड्यां दुःखाभावमात्रम्, ब्रह्मणि सुषुप्तौ तु तद्वा अस्यैतदतिच्छन्दोऽपहतपाप्माऽभयं रूपमशोकान्तरमिति बृहदारण्यके श्रावणाद् ब्रह्मसंपत्त्या बलादिरूपं यदधिष्ठानं, करणे ल्युट्, देहनियमनसाधनं तत् प्राप्य तथा समायातीति बोधनमेकम् । च पुनः स्वशब्द आत्मवाचकोऽत्र प्रयुक्तस्तेन पूर्वोपक्रान्तस्य सत आत्माऽभेदबोधनमपरम् । किंचात्र विभक्त्यन्तरप्रयोगेण शब्दतः सामानाधिकरण्याभावेऽप्युपक्रमे सत एव निर्दिष्टत्वेनार्थतः सच्छब्दसामानाधिकरण्यात् सतो निर्गुणत्वबोधनं चेति तृतीयं प्रयोजनमिति । तथाचैवंप्रकारेण गुणातीतस्य प्रलयकारणतां बोधयितुमेवं हेतुनिर्देश इति हृदयम् । अत्र सूत्रस्य विषयवाक्यस्य च विरोधमाशङ्कते नन्वित्यादि । समादधते मोक्षेत्यादि । मोक्षातिरिक्तदशायां कर्मसंबन्धे सत्यपि यथा जाग्रत्स्वप्नयोः कर्मसंबन्धस्तथा सुषुप्तौ प्रलये च नास्ति, किंतु वासनामात्र इति प्रलयसाम्यात् तत्कथनमिति ब्रूम इत्यर्थः । एवं चात्र ब्रह्म न सर्वव्यवहारातीतं, सुषुप्तिप्रलययो-

रश्मिः ।

वक्तव्यमित्यर्थः । **भाष्ये** । **वासनेति** कर्मवासनावशात् । कर्मजसंस्कारो वासना । **प्रकृते** । **स्वशब्देन चाभेद** इति भाष्यं विवृण्वन्ति **च पुनरित्यादि** । **अत्रेति** चतुर्ष्वर्थेषु मध्येत्र सूत्रे प्रयुक्त इत्यर्थः । **पूर्वेत्यादि** श्रुतौ 'सता सोम्य' इत्यनेनेत्यर्थः । **आत्माभेदेत्यादि** । एतादृशबोधनफलं तु सच्छब्दस्य जडपरत्वनिवृत्तिः । **अर्थत** इत्यादि भाष्यं विवृण्वन्ति **किंचात्रेत्यादि** । ननु भिन्नप्रवृत्तिनिमित्तत्वे सत्येकार्थबोधकत्वरूपं सामानाधिकरण्यं सच्छब्दस्यात्मवाचकत्वाच्छब्दतोपीत्यर्थत इति भाष्यांशोऽसंगत इत्याकाङ्क्षायामाहुः **विभक्त्यन्तरेत्यादि** । अयमर्थः । सतेति तृतीया विभक्तिः सहार्था तथा चात्मसाहित्यवानिति तस्यार्थः । स्वमित्यत्र कर्म द्वितीयार्थः । आत्मा संयोगाश्रय इत्यर्थः । सूत्रेपि व्यपेक्षालक्षणसामर्थ्यपक्षे स्वस्मिन्नित्यस्य आश्रय आत्मेत्यर्थः । एवं सति निरुक्तं सामानाधिकरण्यमत्र विशेष्याभावान्नास्तीत्यर्थः । ननु तथापि कथमर्थतः सामानाधिकरण्यं यावता प्रवृत्तिः शब्दत इति चेन्न । एकार्थविशेष्यकप्रतीतिजनकत्वमात्रस्य तल्लक्षणत्वात् । अत एव युगपदधिकरणवचनतापेक्षपटीमृद्ध्यावित्यत्र पुंवत्त्वमाशङ्क्य वृत्तौ वृत्तेः प्राक् यत्र सामानाधिकरण्यं तत्रैव तत्प्रवृत्तिः । प्रकृते च न ततः प्राक्सामानाधिकरण्यमित्युत्तरितं द्वन्द्वसूत्रभाष्ये 'नामन्त्रिते समानाधिकरणे' इतिसूत्रभाष्ये च सामान्यवचनमित्यस्याग्र्ये देवि सरस्वति इति पर्यायेषु प्रत्युदाहरणं दत्तमिति स्थितं 'स्त्रियाः पुंवद्भाषितपुंस्कात्' इति सूत्रस्य शब्देन्दुशेखरे । एवं चोक्तरूपस्यैकार्थबोधकत्वस्य सामानाधिकरण्यस्य शब्दप्रयुक्ताभावप्रतीतावप्यर्थस्य विषयविधया कारणत्वेन ततः सामानाधिकरण्यादित्यर्थः । **निर्गुणत्वेत्यादि** । **तेनैतत्सिद्धम्** । गुणातीतोयमात्मा यत्र लीयते तत्सत्पदवाच्यं ब्रह्म गुणातीतमेव । नह्येतादृशस्य स्वसंबन्धेन कर्मसंबन्धविनिर्मुक्तपरमसुखानुभवसंपादकं सगुणं भवितुमर्हतीति । अतः स्वाप्ययसंपादकत्वात् न सर्वव्यवहारातीतं नापि सगुणमित्यतस्तथेत्यर्थः । **वासनामात्र** इति । कर्मसंबन्ध इति शेषः । **प्रलयसाम्यादिति**

मुक्तिवाक्यानामाह।

गतिसामान्यात् ॥ ९ ॥

गतौ सामान्यात्। गतिर्मोक्षः। समानस्य भावः सामान्यम्। मोक्षे सर्वस्यापि भगवतापि तुल्यत्वात्। एवं हि श्रूयते। 'स यथा सर्वासामपा५ समुद्र एकायनम्' इत्युपक्रम्य वागेकायनमिति दृष्टान्तार्थं निरूप्य, 'स यथा सैन्धवखिल्य

---

भाष्यप्रकाशः।

जीवाधारत्वेन श्रुतत्वात्, यद् यदा यदाधारत्वेन श्रुतं तत् तदा तत्प्रयुक्तव्यवहारविषयमित्येवमनुमानं बोध्यम्। ततश्च यस्मिंल्लयं याति पुरत्रयं चेत्यादौ जडलयाधारत्वेन श्रावणात् तत्प्रयुक्तव्यवहारविषयत्वादपि सर्वव्यवहारातीतत्वाभावः सेत्स्यति। तेनायं हेतुर्लक्षणवाक्यस्थस्य यत्प्रयन्तीति भागस्य समर्थनार्थ इति बोधितम्। प्रलयवाक्यानां ब्रह्मणि समन्वये वक्तव्ये सुषुप्तिवाक्योदाहरणं सूत्रे स्वाप्ययपदसूचितव्यासाशयज्ञापनार्थम्। अग्रिमसूत्रे मुक्तिवाक्यविचारात् पूर्वस्मिन् प्रलयोऽपि सूच्यत इति ज्ञायते। अन्यथा न्यूनता स्यादिति ॥ ८ ॥

गतिसामान्यात् ॥ ९ ॥ गतिसामान्यादिति षष्ठं सूत्रमवतारयन्ति मुक्तीत्यादि। तेषां ब्रह्मपरत्वमाहेत्यर्थः। गतिर्मोक्षः। गतिशब्दः फले रूढः। 'अन्ते या मतिः सा गतिः', 'सा काष्ठा सा परा गतिः' इत्यादौ तथा दृष्टत्वात्। अत्र चाप्ययोत्तरमभिसंवेशस्यैव समर्थनीयत्वात् तथेत्यर्थः। श्रूयत इति बृहदारण्यके मैत्रेयीब्राह्मणे श्रूयते। दृष्टान्तार्थमिति लयाधिकरणदृष्टान्तार्थम्।

रश्मिः।

तथा च सूत्रेणैव विषयवाक्यं स्मार्यत इति भावः। एकसंबन्धिज्ञानमपरसंबन्धिस्मारकमिति न्यायात्। यथा मोक्षे कर्मसंबन्धाभावस्तथा मोक्षातिरिक्तदशायां सुषुप्त्यवकाभगवद्रूपायां तथा कर्मसंबन्धाभावः प्राप्तः स नेति प्रलयसाम्यम्। एवं चेति स्वाप्ययहेतुसमर्थनेन सर्वव्यवहारातीतसाध्यस्य न्यूनतारूपदोषनिवारणाय ग्रहणे च। तत्प्रयुक्तेत्यादि तत्प्रयुक्तव्यवहारविषयं यथा भवति तथा ज्ञेयमिति क्रियाविशेषणत्वेन द्वितीयान्तमिदम्, आर्द्रं पचतीतिवत्। तेन 'चाजन्तश्च' इति सूत्रेण विषयशब्दस्य नियतपुंस्त्वेपि न दोषः। यथा वियति विहंगम इत्यत्र विहंगमाधारत्वेन वियति विहंगमप्रयुक्तो यस्तदाधारत्वव्यवहारः तद्विषयत्वमिति दृष्टान्तः। अनुमानमिति पूर्वं तु ब्रह्म नाशब्दं वाक्यगतेक्षतेः। यन्नैवं तन्नैवं, जीववत्। वेदान्तशब्दप्रतिपाद्यं नाशब्दम्। अन्वयव्याप्तिरपि तेजोदृष्टान्तेन। स्वाप्ययपदसूचितव्यासाशयमाहुः अग्रिमेत्यादि। सूच्यत इत्यादि स्वाप्ययपदेन सूच्यत इति। 'यत्प्रयन्त्यभिसंविशन्ति' इतिश्रुतेः कर्मसंबन्धार्हदशायामपि तदभिभूय तादृशसुखसंपादकत्वसामर्थ्यरूपव्यासाशयो ज्ञायत इत्यर्थः। 'बुद्धिप्रेरककृष्णस्य पादपद्मं प्रसीदतु' इति 'अतः सेवापरं चित्तं विधाय स्थीयतां सुखम्' इति च। अत्र मुक्तिमाहुरन्यथेत्यादि। प्रलयवाक्यानां ब्रह्मणि समन्वयाप्रतिपादनेऽस्य समन्वयाध्यायत्वं न्यूनं स्यादित्यर्थः ॥ ८ ॥

गतिसामान्यात् ॥ ९ ॥ उक्तभाष्यं समर्थयन्ति स्म गतिशब्द इति। अभिसंवेशस्य इति लक्षणवाक्यस्थस्याभिसंविशन्तीतिभागाभिहितस्येत्यर्थः। बृहदिति स्पष्टा सूत्र-

उदके प्रास्त' इत्यादिना लयदृष्टान्तं निरूप्य, 'न प्रेत्य संज्ञास्ति' इति प्रतिपाद्य तन्निरूपणार्थं 'यत्र हि द्वैतमिव भवति तदितर इतरम्' इत्यादिना सर्वस्य शुद्ध-ब्रह्मत्वं प्रदर्शितम् ।

भाष्यप्रकाशः ।

इत्यादिनेति प्रास्त उदकमेवानुविलीयेत नाहास्योद्ग्रहणायेव स्याद् यतो यतस्त्वाददीतेति ग्रन्थेन, न प्रेत्य संज्ञास्तीति प्रतिपाद्येति, विमुक्त्यनन्तरं भोक्तृभावादिनिवृत्त्या जीवादिसंज्ञा-राहित्यं प्रतिपाद्य । तन्निरूपणार्थमिति संज्ञाभावनिरूपणार्थम् । सर्वस्येति जडस्य जीवस्य च । अत्रायमर्थः । यथाऽबादीनामंशानां कार्याणामबात्मकाः समुद्रादयो लयाधिकरणभूता-स्तथा सदात्मकस्य सर्वस्य सदात्मकं कारणभूतं ब्रह्मैव लयाधिकरणभूतम् । नच स्पर्शादीनां त्वगाद्यंशत्वस्य प्रत्यक्षबाधितत्वात् केवलं लयस्थानत्वमेव विवक्षितं न तु तस्य कारणत्ववै-शिष्ट्यमपीति शङ्क्यम् । त्वगस्य स्पर्शवायोश्चेति ।

'मुखतस्तालुनिर्भिन्नं जिह्वा तत्रोपजायत ।
ततो नानारसो जज्ञे जिह्वया योऽधिगम्यते' ॥

इत्यादिश्रीभागवतद्वितीयस्कन्धवाक्येषु तथादर्शनेनात्र वैराजानामेव तेषां दृष्टान्तत्वेन विवक्षितत्वात् । यथा सदंशानां कार्याणां लयस्थानं ब्रह्म तथा चिदंशानां जीवानामपि लयस्थानं ब्रह्मैवेति वक्तुं स यथा सैन्धवेत्यादिना यथा सामुद्रलवणशकल उदके प्रक्षिप्त उदकमेव लघूकृत्य विलीयते, न तु खिल्यत्वेन ग्रहणाय कोऽपि समर्थः संभाव्यते, किंतु यस्माद्यस्माद्देशाददीयते तत्र तत्र लवणरस एवास्वाद्यत इति तत्र तत्सत्ता निश्चीयत इत्येवं लयदृष्टान्तं निरूप्य, एवं वा अरे इदं महद्भूतमनन्तपारम्, अरे मैत्रेयि, इदं जीवात्मत्वेनानुभूयमानं महत् पूर्वोक्तेभ्योऽबादिभ्य उत्कृष्टम्, अनन्तम्—अविनाशि, अपारम्—अनादितत्त्वं विज्ञानघने चिदेकस्वरूपे ब्रह्मण्येवैतेभ्यः स्थूलसूक्ष्मशरीरात्मकेभ्योऽनुपलक्षितेभ्यो भूतेभ्यः समुत्थाय पृथग्भूय तान्येव भूतान्यनु तल्लयोत्तरं विनश्यति विशेषेणादर्शनं प्राप्नोति ब्रह्मणः पृथक् न ज्ञायते । तत्र हेतुः । न प्रेत्य संज्ञाऽस्तीति । लयोत्तरं जीवसंज्ञैव निवर्तते, ब्रह्मैव भवतीति । ततो लवणरसस्य सर्वत्रो-

रश्मि ।

संगतिरत्र । प्रास्त उदकमिति तेन नवसु पदेषु मोक्षे लवणमुदके निधायेत्याद्युपदेश इति ज्ञापितम् । तेन जीवेऽणुत्वं वास्तविकमित्युपदेशः । तेन मोक्षे नान्यविधत्वमत्र प्रयोजनम् । तेन मैत्रेयीब्राह्मणे भक्तिप्रतिपादनात्तत्रत्या मुक्तिरप्युपदेशः । अबादीनामिति अप्स्पर्शगन्धा-दीनाम् । तत्रत्यश्रुत्युक्तानामंशानां सदंशानां कार्याणां न तु चिदानन्दांशानामबादीनां तिरो-हितत्वेन प्रकटसदंशत्वेन तथेति । अत्र कार्यार्थकानामंशानामिति त्याज्यमिति वक्तुमबादीनामि-त्यादिपदार्थे किंचिदाशङ्क्य निषेधन्ति न च स्पर्शेत्यादि । 'स यथा सर्वासामपा१समुद्र एका-यनमेव१सर्वेषा१स्पर्शानां त्वगेकायनमेव१सर्वेषां गन्धानां नासिके एकायनम्' इत्यादिश्रुतिभ्ये-तद्बोध्यम् । तस्येति लयस्थानस्य । तथेति 'तस्माद्वा एतस्मादात्मनः' इति श्रुतिकार-णत्ववैशिष्ट्यदर्शनं तेन । अत्रेति छान्दोग्ये मैत्रेयीब्राह्मणे च । उपष्टम्भकत्वात्पुराणानामेवकारः । तथाच 'तस्माद्वा एतस्मादात्मनः' इत्यत्रोपष्टम्भकमिदं पुराणमिति विकल्पः । इति वक्तु-मिति सैन्धवखिल्यस्य जलीयसदंशत्वमिव जीवस्यानुप्रभावसंबन्धेन बुद्धः पुनः पुनः पेपीय-

आदिमध्यावसानेषु शुद्धब्रह्मण एवोपपादनात्। सर्वेषां वेदान्तानां ब्रह्मसमन्वय उचित इति ॥ ९ ॥

किंच।

श्रुतत्वाच्च ॥ १० ॥

'पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते। पूर्णस्य पूर्णमादाय पूर्णमेवावशि-

भाष्यप्रकाशः।

दकेऽनुभवाल्लवणत्वेन वर्तत एवोद्ग्रहणमिति कुतो निषिध्यते संज्ञेत्येवं मैत्रेय्या मोहे पुनः संज्ञाभावनिरूपणार्थं, यत्र हि द्वैतमित्यादिना भेदकधर्मसत्तायां द्वैतदर्शनकथनपूर्वकं, 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येज्जिघ्रेदभिवदेच्छृणुयान्मन्वीत विजानीयाद् येनेदं सर्वं विजानाति तं केन विजानीयाद् विज्ञातारमरे केन विजानीयात्' इत्यन्तेन, यत्र तु यस्मिन्नधिकरणे अस्य संबन्धि सर्वं स्थूलं सूक्ष्मं चात्मैवाभूद् आत्मरूपमेवाभूत् तत् तदा करणस्य विषयस्य च लयादैकरूप्ये करणविषयभावापगमात् केन कं पश्येदित्यादि। ननु यद्यप्यन्यल्लीनं, तथापि विज्ञाता तु तिष्ठति स यथा स्वप्ने स्वयंज्योतिः पश्यत्येवं स्वयं कुतो न विजानातीत्याकाङ्क्षायां विज्ञातुः स्वरूपस्यापि समुद्रे लवणस्येवात्मत्वं स्मारयति, विज्ञातारमित्यादिना। तथाच तदा विज्ञातापि न विज्ञातृरूपेणास्ति, किंतु गुणातीतेनात्मरूपेणातो न विजानातीत्युत्तरमुखेन सर्वस्य ब्रह्मतौल्यं च निरूपितम्। एवं च ब्रह्म न सर्वदा सर्वव्यवहारातीतं मोक्षे तथात्वेन श्रावितत्वाद् यदेवं तदेवं मैत्रेयीब्राह्मणश्रावितसर्ववदित्येवमत्रानुमानसिद्धेरस्य हेतुत्वं बोधितम्। तेनात्र यतो वेतिश्रुतिस्थोऽभिसंविशन्तीति भागः समर्थितः। किं चैतेनैव सर्वस्य शुद्धब्रह्मत्वमपि दर्शितमिति। तेन फलितमाहुः आदीत्यादि। आदावमृतत्वलिङ्गेन, मध्ये आत्मदर्शनादिना सर्ववेदनप्रतिज्ञामारभ्य, वागेकायनमित्यन्तेनावसाने सर्वस्यात्मभावकथनेन च तेषु शुद्धब्रह्मण एव सर्वरूपत्वेन सर्वकर्तृत्वेन चोपपादनाद् ये केऽपि वेदान्तास्ते सर्वे येनकेनचिद्रूपेण ब्रह्मैव वदन्तीति सर्वेषां वेदान्तानां ब्रह्मणि तात्पर्येणान्वय उचित इत्यर्थः ॥ ९ ॥

श्रुतत्वाच्च ॥ १० ॥ सप्तमं सूत्रं पठित्वा तद्विषयवाक्योपन्यासेनैव व्याकुर्वन्ति पूर्णमि-

रश्मिः।

मान इति परंपरितजीवसंबद्धत्वमपीति छान्दोग्यीयेन 'अस्य सोम्य महतो वृक्षस्य' इत्याद्युपदेशेन सिध्यति। तत्केन कमिति जिघ्रेदित्यादिष्वेतत्पठनीयम्। अथोक्षजे सर्वव्यवहारातीतत्वेनेति वक्तुं सर्वदेति। तथात्वेनेति सामान्येनेत्यर्थः। मैत्रेयीति 'यत्र त्वस्य सर्वमात्मैवाभूत्' इति पूर्वोक्तमैत्रेयीत्यादिः। अस्येति गतिसामान्यस्येत्यर्थः। आदाविति 'येनाहं नामृता स्यां किमहं तेन कुर्याम्' इति श्रुतावित्यर्थः। ननु तर्हि घटादिभ्योपि ब्रह्मबोधो भवेदिति चेत्तत्राहुः येनकेनेति। तेन घटत्वादिभिर्बोधे न ब्रह्मबोधः। ब्रह्मत्वेन बोधे तु ब्रह्मबोधो भवत्येव। तात्पर्येणेति पत्यादिकेषु अभिधयान्वयः इति भावः ॥ ९ ॥

श्रुतत्वाच्च ॥ १० ॥ अभिसंवेशविचारमनुपूर्तौ सप्तसूत्रमिति भाष्यविरोधोतः सप्तममिति। पठित्वेति सर्वभाष्यरीत्या। तद्विषयेति तत्प्रसिद्धमुपबृंहितं विषयवाक्यं तस्योपन्यासेन। उपबृंहणं समाधिभाषा तेनाभिसंवेशनकथनेपि यत इत्यस्यार्थाकथनात् नाभिसंवेशान्ताधिकरणपूर्तिः। व्याकुर्व-

भाष्यप्रकाशः ।

त्यादि । अयं बृहदारण्यके द्वितीयवंशब्राह्मणानन्तरं परिशिष्टलक्षणखिलकाण्डारम्भे वर्तते । अस्मिन् मन्त्रे तु सर्वस्य ब्रह्मात्मैकत्वनिर्णयार्थम् 'आत्मैवेदमग्र आसीत् पुरुषविधः सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत्'इत्यादिश्रुत्यर्थ एवोपसंह्रियते । व्याख्या तु, पूर्णमदः, अदः परोक्षं ब्रह्म पूर्णम्, आकाशवद् व्यापि निरन्तरं निरुपाधिकम् । पूर्णमिदम्, इदं नामरूपाभ्यां व्यवह्रियमाणमवतारादिरूपमपि पूर्णं पूर्वोक्तरूपमेव । एवं व्यवहार्याव्यवहार्यस्वरूपयोर्निरुपाधिकत्वमुक्त्वा कार्यरूपेऽपि तथात्वमाह पूर्णात् पूर्णमुदच्यते । पूर्णात् कारणात्मनः सकाशात् पूर्णमुत् पूर्णानन्दं सद् अच्यते, पूर्णं सद् उदच्यते वा । अञ्चु गतिपूजनयोः, अच इत्येक इति पाणिनिः । पूज्यते उद्गच्छति वा । एवं स्थितिदशायां कार्यस्य ब्रह्मरूपतामुक्त्वा प्रलयदशायां तथात्वमाह । पूर्णस्य ब्रह्मणः पूर्णं निरुपाधिकमेकरसत्वलक्षणं स्वभावं प्रलयदशायामादाय पूर्णं ब्रह्मैव सदवशिष्यते अव्यवहार्यत्वेन रूपेण तिष्ठतीति । तथाचानया श्रुत्याऽसंदिग्धं यथा स्यात् तथा सर्वकार्यरूपत्वं ब्रह्मणः प्रतिपादितम् । तेन पूर्णज्ञानिनां व्यवहारदशायामपि कार्यं गुणातीतं ब्रह्माभिन्नमेव । व्यवहारस्तु भगवतः सत्यसङ्कल्पत्वाद् 'बहु स्यां प्रजायेय' इत्यादिरूपया इच्छयैव । नचात्र सर्वत्र पूर्णपदादुद्गतस्य कार्यस्यांशस्य च पूर्णैश्वर्यादिमत्त्वं शङ्क्यम् । ऐश्वर्यप्रकरणाभावात् । पूर्णैश्वर्यादिबोधकस्य भगवच्छब्दस्य भगवत्येवानुपचारिकत्वमिति विष्णुपुराणे सिद्धत्वात् । नच परममोक्षदशायां ब्रह्मैक्ये तत्र तथात्वं शङ्क्यम् । दशमस्कन्धे श्रीवसुदेवं प्रत्यखण्डाद्वैतोपदेशे, खं वायुरितिश्लोके भगवता सच्चिदानन्दधर्मतारतम्यादिकृतनानात्वाविरुद्धैकत्वस्यैव प्रतिपादनेन पूर्णैश्वर्यादीनां स्वस्मिन्नेव नियरश्मिः ।

न्तीत्यस्य विवृण्वन्ति स्येत्यर्थः । अयमिति मन्त्रः । एवेति उत्तराधिकरणादेवेति । यत इत्यस्य पूर्णार्थकत्वानुक्तेः विषयवाक्यमिव विषयवाक्यमित्युपचारस्तत्प्रयोजनं तु 'सदेव सोम्य' इत्यत्र सच्छब्दार्थनिर्णयद्वारा 'यतो वा' इत्यत्र यच्छब्दार्थनिर्णयः । विषयवाक्यं तु समाधिभाषा उपष्टम्भिका न वेति संदेहेनेति प्राप्तं सापेक्षत्वापत्तेर्वेदस्येति । उपष्टम्भिकेति सिद्धान्तः । 'इतिहासपुराणैस्तु वेदं समुपबृंहयेत्' इतिवाक्यात् । प्रामाणिकी सापेक्षतापि न दोषायेति । तथा चैवकारेण मुख्यविषयवाक्योपन्यासव्यवच्छेदः । अत्र सूत्रं विवृण्वन्तीति वक्तव्ये सप्तममित्यादेरयमर्थः । 'विशुद्धं केवलं ज्ञानं प्रत्यक् सम्यग्व्यवस्थितम् । सत्यं पूर्णम्' इति द्वितीयस्कन्धादाहुः सप्तममिति । अन्यथास्या एव श्रुतेर्ग्रहणे मानाभावापत्तिः । एवं तु सच्छब्दार्थपूर्णग्रहणार्थं सूत्रम् । तमेवोपसंहारं दर्शयन्ति व्याख्या त्वित्यादि । परोक्षमिति ।

'इदमः प्रत्यक्षगं रूपं समीपतरवर्तिनि चैतदो रूपम् ।
अदसस्तु विप्रकृष्टे तदिति परोक्षे विजानीयात्' ॥ इति

विष्णुपुराण इति ।

'ऐश्वर्यस्य समस्तस्य धर्मस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा' ॥

इतिवाक्य इत्यर्थः । पूर्णैश्वर्यादीति पूर्णत्वं बृहदारण्यकोक्तं ज्ञेयम् । स्वजायाधनपुत्रकर्मात्मकमलौकिकं प्राणाग्निहोत्रोपनिषदि । प्रमाणबलेनाविषयः स्वेच्छया विषयश्चेति भाष्यादाहुः

च्यते' इति श्रुत्यैवासंदिग्धं सर्वकार्यत्वं प्रतिपादितम्। 'सर्वे वेदा यत्पदमामनन्ति' इति च। चकारोऽधिकरणसंपूर्णत्वद्योतनाय।

---

भाष्यप्रकाशः।

मितत्वाच्च। अतः सर्वव्यवहारातीतत्वमनपहायैव सर्वव्यवहारविषयं ब्रह्मेत्यर्थः संपद्यते। एतेन फलितमाहुः सर्वे वेदा इत्यादि। तथाचाभिधया वृत्त्यापि सर्वे शब्दा ब्रह्मवाचका इति सर्वेषां वेदान्तानामभिधया तात्पर्येण च ब्रह्मण्येव समन्वय इत्यर्थः। अत्रेदं बोध्यम्। इयं श्रुतिः काठके द्वितीयवल्लीस्था, 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात्। अन्यत्र भूताच्च भव्याच्च यत् पश्यसि तद्वद' इति प्रश्ने मृत्युनोक्ता। 'सर्वे वेदा यत् पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्' इति पदं पदनीयं प्राप्तव्यमिति यावत्। आमनन्ति प्रतिपादयन्ति। यद्वदन्ति यत्प्राप्त्यर्थानि। संग्रहेण संक्षेपतः। तदेव संक्षेपत आह, ओमित्येतदिति। तथाचोङ्कारेण यत् संक्षेपत उच्यते तदेव सर्वैर्वेदैर्विस्तरेणोच्यत इत्यर्थः। एतदेव द्वादशस्कन्ध उपबृंहितं, 'समाहितात्मनो ब्रह्मन् ब्रह्मणः परमेष्ठिनः' इत्यारभ्य,

'ततोऽभूत् त्रिवृदोङ्कारो योऽव्यक्तप्रभवः स्वराट्।
स्वधाम्नो ब्रह्मणः साक्षाद् वाचकः परमात्मनः।
स सर्वमन्त्रोपनिषद्वेदबीजं सनातनम्' ॥

इत्यादिभिः। तथाच बीजशक्तिरेव सर्ववृक्षे प्रसरतीत्योङ्कारस्य या परमात्मवाचकता सैव सर्वस्मिन् वेदतरौ प्रसृतेति सर्वे वेदा अभिधया प्रतिपादयन्तीति युक्तम्। किं च। जैमिनीये नये सर्वे शब्दाः प्रायेण धर्मवाचका एव। धर्मश्च घटत्वादिरूपः। त्वप्रत्ययश्च भावे। भाव इति भूधातोर्घञि रूपम्। भूधातुश्च सत्तायां व्याप्तौ वा। उभयथापि सतो व्यापकस्य वा धर्मो घटत्वादिरिति सिद्ध्यति। तादृशश्च धर्मी भगवानेवेति धर्मद्वारा भगवद्वाचका एव सर्वे शब्दाः। वैयाकरणमतेऽप्येवम्।

'संबन्धिभेदात् सत्तैव भिद्यमाना गवादिषु।
जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः॥
तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते।
सा नित्या सा महानात्मा तामाहुस्त्वतलादयः' ॥ इति वाक्यपदीयात्।

रश्मिः।

अत इति। अधोक्षजत्वेन निषेधेन च प्राप्तं सर्वव्यवहारातीतत्वम्। भाष्योक्तस्वेच्छया विषयदशायामाहुः अभिधयेत्यादि। प्रमाणबलपर्यालोचने त्वाहुस्तात्पर्येणेति। तपांसि पुराणानि। वदव्रज गताविति गत्यर्थकाद्वदतेः शतरि रूपमिदं न तु क्रियापदमित्याशयेनाहुः यत्प्राप्त्यर्थानीति। नय इति मते। यद्यपि 'प्रयोगचोदनाभावादर्थैकत्वमविभागात्स्यात्' इत्यादिसूत्रेषु प्रथमाध्यायस्थेषु आकृतावेव शक्तिरिति स्थितं शास्त्रदीपिकायाम्। तथापि सर्वेषां न संभवति यथा 'यः सिकतेतः स्यात् स प्रथमामुपदध्यात्' इत्यादिश्रुतौ। सिकतेतस्त्वादेराकृतित्वाभावेन व्यक्तौ कुर्वन्त ईश्वरकालेनासत्त्वं तैरभ्युपगन्तव्यः। वैदिकपदार्थानां नित्यत्वेन न व्यक्त्यनित्यत्वप्रयुक्तं

भाष्यप्रकाशः ।

नैयायिकादिमतेन विशिष्टवाचकत्वपक्षेऽप्येषैव व्यवस्था । घञ् चात्र स्वार्थे । अन्यथाऽनवस्था स्यादिति । एवं पदवद्वर्णा अपि स्वभावतो भगवद्वाचका एव ।

'वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः ।
तावन्ति हरिनामानि कीर्तितानि न संशयः' ॥

इति शिष्टवैदिकप्रसिद्धवाक्यात् । वाक्यानि तात्पर्येण बोधयन्तीति सर्वस्य वेदस्य भगवद्वाचकत्वमप्रत्यूहमिति । सौत्रस्य चस्य प्रयोजनमाहुः चकार इत्यादि । एवमत्र त्रिसूत्र्यां सुषुप्तिविचारेण दैनन्दिनप्रलयकर्तृत्वं, द्वितीये मोक्षविचारेणात्यन्तिकतत्कर्तृत्वं, तृतीये सर्वकार्यकर्तृत्वप्रतिपादनेन नैमित्तिकादितत्कर्तृत्वं बोधितमिति प्रतिभाति ।

रश्मिः ।

संबन्धानित्यत्वम् । अत एव व्यक्तावेव संबन्ध इति सिद्धान्त इति प्रस्थानरत्नाकरे । एतदभिप्रेत्याहुः प्रायेणेति । व्याप्तौ वेति भू प्राप्ताविति धातुपाठात् । एषैवेति जातिधर्मान्यतरविशिष्टवाचकत्वरूपेत्यर्थः । अत्रेति । 'तस्य भावस्त्वतलौ' इति सूत्रे सिद्धावस्थापन्ने धात्वर्थे घञ् न तु प्रकृतिजन्यबोधे प्रकारतयाभिमत इत्यर्थः । यद्यपि वृत्तौ सिद्धावस्थापन्ने धात्वर्थे वाच्य इति विस्पष्टमुपलभ्यते तथापि प्रकृतिजन्यबोधे प्रकारो भाव इत्यस्यापि संभाव्यतयोक्तिरियम् । अनवस्थेति स्वस्यार्थो भावः भावश्च घञा निष्पन्नो भावान्तर इत्यनवस्थेत्यर्थः । भगवद्वाचका इति न च न तथाप्रतीतिरिति वाच्यम् । संकेताग्रहेणाबाधकत्वात् । तदाहुः वेदाक्षराणीत्यादि । ननु 'यतो वा इमानि' इत्यादि वाक्यानां यद्धेतुका प्रत्यक्षभूतनिष्ठोत्पत्तिरित्याद्यर्थात् कथं ब्रह्मबोधकत्वमित्यत आहुः वाक्यानीत्यादि । तात्पर्यनिर्णयलिङ्गभूतैरुपक्रमोपसंहाराभ्यासापूर्वताफलार्थवादोपपत्तिभिः 'वेदैश्च सर्वैरहमेव वेद्यः' इत्यादिस्मृतेश्च भगवदिच्छया ब्रह्म बोधयन्तीत्यर्थः । ननु पूर्वं सृष्टेरुक्तत्वात् ब्रह्मणो व्यवहार्यत्वमपि लयाधारत्वेनैव वाच्यम् । इति सुषुप्तिमोक्षसर्वकार्यत्वविचारोऽप्रासङ्गिक इति चेत् तत्राहुः एवमत्रेत्यादि । दैनंदिनेत्यादि तत्स्वरूपं द्वादशस्कन्धे चतुर्थेऽस्ति ।

'नित्यदा सर्वभूतानां ब्रह्मादीनां परंतप । उत्पत्तिप्रलयावेके सूक्ष्मज्ञाः संप्रचक्षते ॥
कालस्रोतोजवेनाशु ह्रियमाणस्य नित्यदा । परिणामिनामवस्थास्ता जन्मप्रलयहेतवः ॥
अनाद्यन्तवतानेन कालेनेश्वरमूर्तिना । अवस्था नैव दृश्यन्ते वियति ज्योतिषामिव' ॥ इति ।

तथा च देहादेर्दिने दिने ध्वंसो दैनंदिनप्रलयः । सुषुप्तिरपि दैनंदिनेति तादृशप्रलयकर्तृत्वं बोधितमित्यर्थः । तथा च सुषुप्तौ दिने दिने च ब्रह्मण्यप्यय इति सूत्रार्थः । आत्यन्तिकेत्यादि । अयं च मोक्षात्मा तदुक्तम्—

'यदैवमेतेन विवेकहेतिना मायामयाहंकरणात्मबन्धनम् ।
छित्त्वाच्युतात्मानुभवोऽवतिष्ठते तमाहुरात्यन्तिकमङ्ग संप्लवम्' ॥ इति ।

गतेः प्रलयरूपताकथनेनाप्रासङ्गिको मोक्षविचार इति परास्तम् । नैमित्तिकादिति । ब्रह्मणो निद्रां निमित्तीकृत्य प्रवर्तमानो लोकत्रयप्रलय इत्यर्थः । तदुक्तम्—

'चतुर्युगसहस्रं च ब्रह्मणो दिनमुच्यते । स कल्पो यत्र मनवश्चतुर्दश विशांपते ॥
तदन्ते प्रलयस्तावान् ब्राह्मी रात्रिरुदाहृता । त्रयो लोका इमे यत्र कल्पन्ते प्रलयाय हि ॥
एष नैमित्तिकः प्रोक्तः प्रलयो यत्र विश्वसृक् । शेतेऽनन्तासनो विश्वमात्मसात्कृत्य चात्मभूः' ॥

भाष्यप्रकाशः ।

अत्रैकदेशिन इमानि सूत्राणि सांख्यनिरासकतया व्याकुर्वते । तथाहि । सांख्यपरिकल्पितं प्रधानं जगत्कारणत्वेन नाश्रयितुं शक्यम् । अशब्दं हि तत् । कथमशब्दम् । ईक्षतेः । 'सदेव सोम्येदमग्र आसीत्'इत्युपक्रम्य 'तदैक्षत बहु स्यां प्रजायेय'इति 'तत्तेजोऽसृजत'इति जगत्कारणस्येक्षणकर्तृत्वश्रावणात् । तथाऽन्यत्रापि । 'आत्मा वा इदमेक एवाग्र आसीदित्युपक्रम्य, स ईक्षत लोकान्नुसृजा' इति । क्वचिच्च षोडशकलं प्रस्तुत्य, स ईक्षाञ्चक्रे स प्राणमसृजतेति । ईक्षतेरिति धात्वर्थनिर्देशो लक्षणया । विषयिणा विषयलक्षणात् । यथा यजतेः । तेन 'यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः, तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते' इत्यादीनां सर्वज्ञेश्वरकारणपराणामपि वाक्यानां संग्रहः । नच सत्त्वधर्मेण ज्ञानेन प्रधानस्यापि सर्वज्ञताया ईक्षितृत्वस्य च शक्यवचनत्वान्नानेन प्रधानवारणमिति वाच्यम् । तस्य प्रधानावस्थायां गुणसाम्यात् सत्त्वधर्मस्य ज्ञानस्य तदानीमशक्यवचनत्वात् । तदा तदादरे रजस्तमोधर्मस्याप्यवर्जनीयत्वेन ज्ञानप्रतिबन्धस्यापि संभवेन किंचिज्ज्ञत्वस्याप्यापत्तेश्च । किंचासाक्षिकाऽसत्त्ववृत्तिर्न क्वापि जानाति, नाभिधीयत इत्यचेतनस्य प्रधानस्य सार्वज्ञ्यमनुपपन्नम् । नच योगिवदिति वाच्यम् ।

रश्मिः ।

इति । आदिना प्राकृतिकः प्रलयः । महदहंकारपञ्चतन्मात्राणां सप्तप्रकृतीनां तत्कार्यस्य ब्रह्माण्डस्य लयात्प्राकृतिकः । तदुक्तम् ।

'द्विपरार्धे त्वतिक्रान्ते ब्रह्मणः परमेष्ठिनः । तदा प्रकृतयः सप्त कल्पन्ते प्रलयाय वै ॥

एष प्राकृतिको राजन् प्रलयो यत्र लीयते । आण्डकोशस्तु संघातो विघात उपसादिते' ॥

इति द्विपरार्धं ब्रह्मायुस्तेनास्मिन् सूत्रेप्यप्रासङ्गिको विचार इति परिहृतम् । **एकदेशिन** इति । तथाहि ब्रह्मैकदेशस्य पुच्छरूपस्य ब्रह्मताङ्गीकारात् प्रमाणैकदेशस्य 'यतो वाचो निवर्तन्ते' इत्यस्य प्रमाणत्वेन स्वीकारात् । 'एवं कदाचिद्भगवान् साक्षात्सर्वं करोत्यजः' इत्यादिना षड्भेदभिन्ना सृष्टिरुक्ता निबन्धे । तत्रैकदेशस्यान्तरालिकसृष्टिरूपस्य स्वीकारादेकदेशित्वम् । **स ईक्षत** इति स ऐक्षितेति पाठः । ( बृहदारण्यके तु स ऐक्षत इत्येव ) । **षोडशकलमिति** । पुरुषमिति शेषः । स प्राणमसृजत प्राणात्खं वायुर्ज्योतिरापःपृथिवीन्द्रियं मनोन्नमन्नाद्वीर्यं तपोमन्त्राः कर्मलोकनाम चेति रत्नप्रभाकारेणोक्ताः षोडशकलाः । नन्वीक्षतेरिति धातुनिर्देशो भवति इक्श्तिपौ धातुनिर्देश इति कात्यायनस्मरणान्न तु धात्वर्थनिर्देश इत्यत आहुः **ईक्षतेरितीति** विषयी धातुः विषयो धात्वर्थः प्रतिपाद्यतासंबन्धेनेति यावत् । **यथा यजतेरिति** । यजतेरर्थपरत्वम् । 'इतिकर्तव्यताविधेर्यजतेः पूर्ववत्त्वम्' इति जैमिनिसूत्रे यजतिपदेन लक्षणया धात्वर्थस्य यागस्य कथनाद् बोध्यम् । **ज्ञानमयमिति** ज्ञानमीक्षणं तद्विकार इव विकार एव तप इत्यर्थः । **सत्त्वधर्मेणेति** प्रधानस्य त्रिगुणात्मकत्वेन ज्ञानस्य च 'सत्त्वात्संजायते ज्ञानम्' इतिस्मृतेः । सत्त्वधर्मत्वेन तथेत्यर्थः । **सत्त्वधर्मस्येति** सत्त्ववृत्तेरित्यर्थः । केवलसत्त्ववृत्तेर्ज्ञानत्वं स्वीकृत्य प्रधानस्य सर्वज्ञत्वं निरस्तम् । इदानीं जडवृत्तिर्ज्ञानशब्दार्थो न भवति किं तु साक्षिबोधविशिष्टा वृत्तिः वृत्तिव्यक्तबोधो वा ज्ञानं तज्जडस्य प्रधानस्य न संभवतीत्याहुः **किं चासाक्षिकेति** । **क्वापीति** देवदत्तो जानातीत्येव न तु घटो जानातीति । **योगिवदिति** सत्त्वोत्कर्षनिमित्तं सर्वज्ञत्वमिति शेषः । सेश्वरसांख्यमतमाहुः

भाष्यप्रकाशः ।

तेषां चेतनत्वेनादृष्टान्तत्वात् । यदि च तप्तायःपिण्डस्य दग्धृत्ववत् साक्ष्यधिष्ठितस्य प्रधानस्येक्षितृत्वं कल्प्यते, तदा तु यन्निमित्तं प्रधानस्येक्षितृत्वं तस्यैव सर्वज्ञत्वाज्जगत्कारणत्वं वक्तव्यम् । तद्धेतोरेवेति न्यायात् । नच ब्रह्मणो नित्यज्ञानत्वेन विवक्षितत्वादीक्षणात्मकज्ञानक्रियां प्रति स्वातन्त्र्यासंभवात् कथं सर्वज्ञत्वमिति वाच्यम् । प्रततोष्णप्रकाशेऽपि सूर्ये सविता दहति प्रकाशत इति प्रयोगदर्शनादिहापि तद्वत् सत्यमति च ज्ञानकर्मभूते विषये नित्यज्ञानतया तादृशप्रयोगोपपत्तेः । नच प्राक् सृष्टेः पदार्थान्तराभावादीक्षणात्मकस्येश्वरज्ञानस्य निर्विषयत्वं शङ्क्यम् । तत्त्वान्यत्वाभ्यामनिर्वाच्ययोर्नामरूपयोर्व्याचिकीर्षितत्वेन तयोरेव विषयत्वात् । नच तयोरनागतत्वेनाविषयत्वं शङ्क्यम् । अतीतानागतविषयकज्ञानस्य योगिषु दर्शनात् तद्धेये ईश्वरे तादृशाशङ्काया एवासंगतत्वात् । नच प्राक् सृष्टेर्ब्रह्मणोऽशरीरित्वादीक्षितृत्वमनुपपन्नमिति शङ्क्यम् । सवितृप्रकाशवद् ब्रह्मणो नित्यज्ञानस्वरूपत्वेन ज्ञानसाधनानपेक्षत्वात् । 'न तस्य कार्यं करणं च विद्यते' इति, 'अपाणिपादो जवनो ग्रहीता' इतिमन्त्राभ्यामपि तथा निश्चयात् । नच चैतन्यैक्यवादिनो जीवेश्वरभेदाभावात् संसारिणो जीवस्यापि तथाज्ञानापत्तिरिति शङ्क्यम् । घटगिरिगुहाद्युपाधिभेदेन व्योम्न इव ब्रह्मचैतन्यस्याप्युपाधिभेदेन भेदस्याप्यङ्गीकारेणोक्तदूषणाभावादित्यादि । तज्जयतीर्थेन माध्वेनैवं दूष्यते । सांख्यप्रतिपन्नं प्रधानं न श्रौतं जगत्कारणं, तदैक्षतेतीक्षतिश्रवणादशब्दं तदिति यद् व्याख्यातं तदयुक्तम् । तथाहि । अत्राशब्दमित्यनेनोक्तमश्रौतत्वं न सांख्यस्य प्रतिवादिनः सिद्धम् । तेन वैदिकत्वाभ्युप-

रश्मिः ।

**यदि चे**त्यादि । तद्धे**तोरेवे**ति हेतुहेतुमतोर्हेतुत्वे तद्धेतोरेव हेतुता इति न्यायादित्यर्थः । सर्वज्ञत्वं नाम ज्ञानकर्तृत्वमिति मत्वाशङ्क्य निषेधन्ति **न च ब्रह्मण** इत्यादि । **ज्ञानक्रियामिति** ईक्ष दर्शनाङ्कनयोरिति धातुपाठाज् ज्ञानस्य धात्वर्थत्वेन क्रियात्वम् । भूवादयो धातवः क्रियावाचिन इति । नित्यस्यापि ज्ञानस्य तत्पदार्थोपहितत्वेन ब्रह्मस्वरूपाद् भेदं कल्पयित्वा कार्यत्वोपचाराद् ब्रह्मणस्तत्कर्तृत्वव्यपदेशः साधुरिति सदृष्टान्तमाहुः **प्रतते**त्यादि । **तद्व**दिति दाहप्रकाशयोः कर्मभूते विषये सत्यसति च प्रयोगवत् । **ज्ञानकर्मे**ति । **सर्वं जानाती**त्यत्र **नित्ये**ति । नित्यत्वं ज्ञाने विषयाविनाभूतत्ववत् विषयविनाभूतत्वमपीति । **तादृशे**ति सर्वं जानातीति प्रयोगोपपत्तेरित्यर्थः । **तत्त्वान्यत्वाभ्यामि**ति सतोऽबाधात् सत्त्वेनानिर्वाच्ययोरसतोप्रत्ययादसत्त्वेनानिर्वाच्ययोरित्यर्थः । ईश्वरत्वेश्वरान्यत्वाभ्यामिति वार्थः । सत्तामात्रत्वान्नामरूपयोः प्राक् सृष्टेरिति भावः । गङ्गानिष्ठशुक्लत्वनीलत्वाभ्यां गङ्गात्वगङ्गातीरत्वाभ्यां सर्वात्मत्वदशायामनिर्वाच्ययोर्वा नामरूपयोः । **घटगिरी**ति मलिनसत्त्वप्रधानाऽविद्या जीवोपाधिः शुद्धसत्त्वप्रधाना मायेश्वरोपाधिः । यत्र मते त्वणुत्वं वास्तविकं यत्तदेव भेदकम् । **इत्यादी**ति आदिना यदप्युक्तं प्रधानस्यानेकात्मकत्वात् मृदादिवत्कारणत्वोपपत्तिर्नासंहतस्य ब्रह्मण इति तत्प्रधानस्याशब्दत्वेनैव प्रत्युक्तम् । यथा तु तर्केणापि ब्रह्मण एव कारणत्वं निर्वोढुं शक्यते न प्रधानादीनां तथा प्रपञ्चयिष्यति 'न विलक्षणत्वादस्य' इत्येवमादिनेति भाष्यसंग्रहः । अशब्दपदेन प्रधानं न ग्रहीतुं शक्यमित्याह **अत्राशब्दमित्यादि** । **इतीति** तथाच सगुणस्य कारणता न स्यात् किं तु

भाष्यप्रकाशः ।

गतेः । नापि स्वन्यायेन तदुक्तिः । अजामेकामित्यादौ प्रधानस्य श्रुतत्वात् । नच तत्रान्यत् कल्प्यम् । नाममात्रे विवादादर्थान्तरस्य चाभावात् । किं च ब्रह्मणोऽपि श्रौतत्वं न युक्तम् । अवाच्यत्वात् । अवाच्ये वृत्त्यन्तरायोगात् । नापि तस्येक्षितृत्वम् । तस्येक्षतिस्वरूपत्वात् । नच मायावच्छिन्नस्य जगत्कारणस्येक्षितृत्वं संभवतीति वाच्यम् । जिज्ञास्यस्यैव जगत्कारणताया उक्तत्वात् । नहि जिज्ञास्यं मायावच्छिन्नम् । तज्जिज्ञासाया अप्रयोजकत्वात् । किंच माययेक्षितृत्वं भवत्युपचर्यते वा । आद्ये दृश्यत्वाद्यपि किं न स्यात् । द्वितीये प्रधानेऽपि तत्संभवादिति ।

मम त्वन्यदपि स्फुरति । सूत्रव्याख्याने यदुक्तम्, ईक्षतेरिति धात्वर्थनिर्देशो लक्षणया विषयिणा विषयलक्षणाद् यथा यजतेरिति तदपि फल्गिवति । सूत्राणां वेदान्तवाक्यकुसुमग्रथनार्थत्वस्य पूर्वं स्वयमेव कथनादत्रापि पूर्वं विषयवाक्योपन्यासाद्वाक्यविशेषगतत्वेन स्वार्थप्रत्यायकस्यैव धातोर्निर्देशस्य सूत्रकाराशयगोचरतया लक्षणाया अत्राविवक्षितत्वात् । किंच पञ्चशिखवृत्तौ ब्रह्मपदस्य प्रधानवाचकताङ्गीकारात् तेन चेत् तत् स्मरेत् तदा प्रसङ्गे जात आनुमानिकादिसूत्राण्यप्यत्रैव वदेत् । जन्मादिसूत्रविषयश्रुत्या तु न वक्तुं शक्यम् । तत्र तत्प्रसङ्गाभावात् । श्रुत्यन्तराणां त्वानुमानिकपाद एव विचारादिति । सूत्रान्तरव्याख्यानं तु नातिविरुद्धमित्युपरम्यते । हेयत्वावचनसूत्रे चकारं प्रतिज्ञाविरोधाभ्युच्चयार्थमाहुः श्रुतत्वाच्चेति । चकारप्रयोजनं न किमप्याहुः ।

रश्मिः ।

शुद्धसत्त्वप्रधानमायामात्रस्य । पूर्वमिति जन्मादिसूत्र इत्यर्थः । अविवक्षितत्वादिति तेन 'यः सर्वज्ञः सर्ववित्' इत्यादीनां संग्रहो य उक्तः सोप्यसंगत इति भावः । अधुनास्मिन् प्रधाननिरूपणरूपपूर्वपक्षोत्थानमसंगतमित्याहुः किंचेत्यादि । अत्र प्रधानस्मारकपदाद्यभावेन प्रसङ्गसंगतेर्वक्तुमशक्यत्वात् । उपोद्घातादीनां चासंभवादसंगतमिदं स्यात् । यदि च ब्रह्मपदस्य प्रकृतिवाचकत्वं सांख्यसंमतमिति जिज्ञासासूत्रेण प्रधानं स्मरेदिति नासंगतं प्रधाननिरूपणरूपपूर्वपक्षोत्थानमिति विभाव्यते तदा दूषणान्तरमाहुः पञ्चशिखेत्यादि । सूत्राणीति चतुर्थपादे वक्ष्यमाणानि । जन्मादीत्यादि 'यतो वा इमानि भूतानि' इतिश्रुत्या जन्मादिसूत्रेण चेत्यर्थः । तथा च जगत्कर्तृत्वेनार्थेन प्रधानस्मरणं वक्तुं शक्यं प्रधाने जगत्कर्तृत्वस्य सांख्याभिमतत्वादित्यपि नेत्यर्थः । तत्प्रसङ्गेति किं तु 'अधीहि भगवो ब्रह्म' इति ब्रह्मण एवोपक्रान्तत्वात्तत्संगतिरिति भावः । जन्मादिसूत्रविषयश्रुतिपदस्योपलक्षकत्वात् । श्रुत्यन्तराणामिति 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः' इत्यादीनामित्यर्थः । विचारादिति जीवप्रकरणेन जीवपरत्वोपपादनरूपाद्विचारात् । तथा चात्र सूत्रे प्रधानस्मरणाभावात्पूर्वपक्षोऽसंगत एवेति भावः । ईक्षतिसूत्रे प्रधानस्मरणस्यासंगतत्वेनाग्रेपि तत्स्मरणस्यासंगतत्वमित्याशयेनाहुः नातिविरुद्धमिति । प्रतिज्ञेत्यादि यथारुन्धतीं दिदर्शयिषुस्तत्समीपस्थां स्थूलां तारामसुख्यां प्रथममरुन्धतीं ग्राहयित्वा तां प्रत्याख्याय पश्चादरुन्धतीमेव ग्राहयति तद्वन्मुख्यमात्मानमुपदिदिक्षुः प्रधानस्य हेयत्वं वदेत् स आत्मा तत्त्वमसीत्यत्र न चैवमवोचदिति सूत्रं व्याख्याय 'उत तमादेशमप्राक्ष्यो येनाश्रुतम्' इत्याद्युपक्रमे श्रावणात् कारणविज्ञानेन

भाष्यप्रकाशः ।

भास्कराचार्या अप्येतदधिकरणं प्रधानकारणतानिरासायैवेति व्याचक्रुः ।

रामानुजाचार्यास्तु, मुख्यतया प्रधानकारणवादनिरासं व्याख्याय निर्विशेषचिन्मात्रब्रह्मवादोऽप्येताभिर्युक्तिभिः सूत्रकारेण निरस्यते । पारमार्थिकमुख्येक्षणादिगुणयोगिजिज्ञास्यं ब्रह्मेति स्थापनात् । निर्विशेषवादे हि साक्षित्वमप्यपारमार्थिकम् । वेदान्तवेद्यं ब्रह्म च जिज्ञास्यतया प्रतिज्ञाय तचेक्षतेर्नाऽशब्दमित्यादिसूत्रैश्चेतनमिति प्रतिपाद्यते । चेतनत्वं नाम चैतन्यगुणयोगः । अत ईक्षणगुणविरहिणः प्रधानतौल्यमेव । किंच निर्विशेषप्रकाशमात्रब्रह्मवादे तस्य प्रकाशत्वमपि दुरुपपादम् । प्रकाशोऽपि नाम स्वस्य परस्य च व्यवहारयोग्यतामापादयन् वस्तुविशेषः । निर्विशेषवस्तुनस्तदुभयरूपत्वाभावाद् घटादिवदचित्त्वमेवेति । अथ तदुभयरूपत्वाभावेऽपि तत्क्षमत्वमस्तीति चेन्न । तत्क्षमत्वं हि तत्सामर्थ्यवत्त्वम् । तत्सत्त्वे निर्विशेषत्वहानेः । अथ श्रुतिप्रामाण्यादयमेको विशेषोऽभ्युपगम्यते, हन्त तर्हि सर्वशक्तित्वादयोऽन्येऽपि तथेति निर्विशेषवाद एव त्यक्तः स्यादित्याद्याहुः ।

शैवस्तु रामानुजमतस्यैव चौरो मध्वमतस्य च क्वचित् क्वचित् तद्विरुद्धां शैवश्रुतिमुदाहरन् भिन्नं प्रस्थानमभिमन्यते । तन्मते ईक्षत्यधिकरणं जन्माद्यधिकरणोक्तलक्षणस्य प्रधानेऽतिव्याप्तिवारणाय । आनन्दमयाधिकरणं च जीवेऽतिव्याप्तिवारणायेति ।

मध्वाचार्यास्तु, 'यतो वाचः', 'अशब्दमस्पर्शमरूपमव्ययम्', 'अवचनेनैव प्रोवाच' 'यद्वाचानभ्युदितम्' इत्यादिषु श्रुतिषु वाच्यत्वनिषेधाद् ब्रह्मणः शास्त्रयोनित्वसूत्रोक्तं शास्त्रप्रमाणकत्वं न युज्यत इति पूर्वपक्षनिवृत्त्यर्थमीक्षत्यधिकरणम् । तत्र विषयवाक्यं तु, 'स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते', 'आत्मन्येवात्मानं पश्येत्', 'विज्ञाय प्रज्ञां कुर्वीत' इत्यादि । एतेष्वीक्षणीयत्वश्रावणाद् वाच्यमेव ब्रह्म । न चेक्षणस्य दर्शनात्मकत्वात् कथं तेन वाच्यत्वसिद्धिरिति शङ्क्यम् । 'तं त्वौपनिषदं पुरुषं पृच्छामि' इति वाक्यान्तरे उपनिषदेकगम्यत्वश्रावणेन प्रत्यक्षाद्यवेद्यत्वे सिद्धे वचनेनैवेक्षणस्य विवक्षितत्वात् । नचाऽवचनेनोवाचेत्यादिश्रुतिविरोधः । तत्र साकल्येनावचनस्य विवक्षितत्वात् ।

'अप्रसिद्धेरवाच्यं तद् वाच्यं सर्वागमोक्तितः ।
अतर्क्यं तर्क्यमज्ञेयं ज्ञेयमेवं परं स्मृतम्' ॥

इति गारुडेन तथानिश्चयादिति व्याख्यायाग्रे प्रधानस्याश्रौतत्वं न सांख्यमतसिद्धमतस्तस्याशब्दत्वव्यवस्थापनमसंगतमिति सूचयन्ति । ततो गौणश्चेत्यादिसूत्रेषु जीवात्मनीक्षणीयत्ववाच्यत्वादिश्रौतगुणयोगं नानाश्रुतिस्मृत्युपन्यासेन निराकुर्वन्ति । समाप्तौ च पुनरपि

रश्मिः ।

सर्वविज्ञानमिति प्रतिज्ञानस्य विरोधः । नहि सच्छब्दवाच्ये प्रधाने भोग्यवर्गकारणे हेयत्वेनाहेयत्वेन वा ज्ञाते भोक्तृवर्गो विज्ञातो भवतीति । चकारं प्रतिज्ञाविरोधसमुच्चयार्थमाहुरित्यर्थः । **चौर** इति भगवाञ्चौर इत्यर्थः । **अतिव्याप्तीति** तेनैतन्मते मध्वरामानुजमतोक्तं ज्ञेयम् । **तथेतीति** प्रमाणभूतश्रुतिबोधिता इति निश्चयादित्यर्थः । **नानाश्रुतिस्मृतीति** ।

'यो गुणैः सर्वतो हीनो यश्च दोषविवर्जितः ।
हेयोपादेयरहितः स आत्मेत्यभिधीयते' ॥

भाष्यप्रकाशः।

सिंहावलोकनन्यायेन ब्रह्मणोऽवाच्यत्वमेव युक्त्यन्तरैर्दूषयन्ति।

तत्रेदमवधेयम्। तथाहि। द्विविधं कपिलसूत्रप्रसिद्धं सांख्यम्। समासरूपमष्टाविंशतिसूत्रम्। तदुपरि पञ्चशिखर्षेर्वृत्तिः। प्रवचनसूत्रात्मकं च षडध्याययुक्तम्। तत्राद्ये तु शास्त्रप्रतिपाद्यानामर्थानामुद्देशमात्रं नान्यत्। द्वितीये तु, 'सत्त्वरजस्तमःसाम्यावस्था प्रकृतिः, प्रकृतेर्महान्, महतोऽहंकारोऽहंकारात् पञ्चतन्मात्राण्युभयमिन्द्रियं स्थूलभूतानि पुरुष इति। पञ्चविंशतिर्गणः' इत्येकस्मिन् सूत्रे सर्वानुद्दिश्य ततोऽग्रे 'स्थूलात् पञ्चतन्मात्रस्य', 'बाह्याभ्यान्तराभ्यां तैरहंकारस्य', 'तेनान्तःकरणस्य', 'ततः प्रकृतेः', 'संघातपरार्थत्वात् पुरुषस्य' इति पञ्चसूत्र्या स्थूलभूतानि प्रत्यक्षसिद्धान्यादाय तेभ्यः कार्येभ्य उपरितनानामानुमानिकत्वमेव कपिलाचार्यैरादृतम्। ततोऽग्रे यद्यपि 'प्रधानाज्जगज्जायते' इति श्रुतिं सूत्राकारेण पठन्ति त्रिविधं प्रमाणं चाङ्गीकुर्वन्ति, तदप्युक्तोपष्टम्भायैव, न तु शब्दस्य प्राधान्याय। अत एव व्यासचरणैरप्यानुमानिकसूत्रे तथैव तन्मतं सूचयित्वा दूष्यते। तेन सांख्यमते प्रकृतेर्मुख्यतया शब्दगम्यत्वाभावेनाशब्दत्वमेव सिद्ध्यति। शब्दगम्यत्वस्यानुमानिकपादे निराकरणेन तस्याभिमानिकत्व एव पर्यवसानादिति। अत एतद्व्यतिरिक्तं सर्वं

रश्मिः।

'एतदन्यस्वभावो यः स नात्मेति सतां मतम्।
अनात्मन्यात्मशब्दस्तु सोपचारः प्रयुज्यते'॥

इति वामन इति स्मृतिः 'द्वे वा व ब्रह्मणो रूपे आत्मा चैवानात्मा च तत्र यः स आत्मा स नित्यः शुद्धः केवलो निर्गुणश्च अथ ह योऽनीदृशः सोऽनात्मा' इति तलवकारश्रुतिः। युक्त्यन्तरैरिति न ब्रह्मशब्दः श्रूयते न चाप्रसिद्धं कल्प्यं सर्वशब्दावाच्यस्य लक्षणायुक्तेरित्येवं युक्त्यन्तरैरित्यर्थः। प्रधानस्याश्रौतत्वं न सांख्यमतसिद्धमिति भागोऽसंगतः। तन्मते प्रधानादीनामानुमानिकत्वेनाश्रौतत्वात्। अन्यत्सर्वं संगतमित्याहुः तत्रेदमित्यादि। नान्यदिति। तथा च तस्य प्राथम्येपि विस्पष्टप्रतीत्यजनकत्वान्नोच्यत इति भावः। द्वितीये त्वित्यादि प्रवचनसूत्रात्मके। सत्त्वरजस्तमसामिति व्यस्तोपि पाठः। आनुमानिकत्वमिति 'कार्यात्कारणानुमानं तत्साहित्यात्'। 'अव्यक्तं त्रिगुणाल्लिङ्गात्'। 'तत्कार्यतस्तत्सिद्धेर्नापलापः'। 'सामान्येन विवादाभावात्' 'धर्मवदनुमानम्' इति सांख्यप्रवचनसूत्रेषु सत्त्वादिधर्मवदव्यक्तस्यानुमानेन तथेत्यर्थः। अथवा 'अचाक्षुषाणामनुमानेन बोधो धूमादिभिरिव वह्नेः' इति सूत्रे तथेत्यर्थः। तथा च स्थूलभूतातिरिक्तानां प्रकृत्यादीनामानुमानिकत्वमेवेति भावः। ननु 'प्रधानाज्जगज्जायत इति' इतिसूत्रे प्रधानं श्रौतमित्यप्यादृतं तत्राहुस्ततोग्र इति। स्थूलादित्याद्यारम्य त्रयोदशसूत्रीपठनानन्तरमित्यर्थः। श्रुतिमिति इतिशब्दान्तां श्रुतिम्। त्रिविधमिति 'त्रिविधं प्रमाणं तत्सिद्धौ सर्वसिद्धेर्नाधिक्यसिद्धिः' इति सूत्रेणेत्यर्थः। तच्च प्रत्यक्षानुमानशब्दात्मकम्। उक्तोपष्टम्भायेति प्रकृत्यादीनां यदुक्तमानुमानिकत्वं तदुपष्टम्भायेत्यर्थः। 'प्रधानाज्जगज्जायते' इति जगता प्रधानमनुमातव्यमिति श्रुतिमात्रप्रामाण्ये पूर्वोक्तं न सिद्ध्येदिति प्रमाणत्रयमङ्गीकृतमिति हृदयम्। प्राधान्यायेति तथा च प्रधानादित्यादिसूत्रं प्रधानस्य जगत्कर्तृत्वबोधने परिसमाप्तं न तस्य श्रौतत्वबोधनायालमिति भावः। तथैवेत्यादि। आनुमानिकमिति प्रकृत्यादि-

भाष्यप्रकाशः ।

सम्यगेव । अत एव भाष्यान्तरेऽपि प्रकृतेस्तथात्वस्यैवादरणमिति दिक् ।

विज्ञानेन्द्रभिक्षुस्तु, ननु यदि प्रलये प्रधानादिसमन्वयो ब्रह्मण्युपगतस्तर्हि तस्यैव श्रुत्युक्तं जगत्कारणत्वमस्तु । भवदभिमतब्रह्मकल्पने तस्य जगदधिष्ठानकारणत्वकल्पने च गौरवात् । सांख्यसूत्रेष्वीश्वरस्य निराकृतत्वात् । ब्रह्मशब्दश्च व्यापकत्वात् प्रधानजीवयोरुपपद्यत एव । अधिष्ठानकारणत्वं च जीवानामेवास्तु । समस्तकार्याणामदृष्टद्वारा जीवकार्यत्वस्य अदृष्टवदात्मसंयोगजन्यतया जीवाधेयत्वस्य च सर्वास्तिकसंमतत्वात् । 'सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद' इति, 'सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि,' 'येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि' इति जीवप्रकरणस्थश्रुतिस्मृतिभ्यामपि तथावसायाच्च । अतः शास्त्रस्य नित्येश्वरपरत्वे शास्त्रयोनित्वादितिहेतुराश्रयासिद्धः । कार्येश्वरपरत्वे च पृथक् शास्त्रारम्भवैफल्यम् । सांख्यादिभिरेव तथाविधब्रह्मनिरूपणादिति शङ्कायामिदं सूत्रं प्रवृत्ते । ईक्षतेर्नाशब्दमिति । विवादास्पदप्रधानादिभ्योऽतिरिक्तं ब्रह्म न अशब्दं, न अशास्त्रयोनि, न जगत्कारणश्रुत्यप्रतिपाद्यमिति यावत् । कुतः । ईक्षतेः । इतरावृत्तिश्रुत्युक्तेक्षतिधर्मकत्वात् । तथाच कारणश्रुतिः पराभिमतप्रधानाद्यन्यविषया, तदवृत्तिधर्मप्रकारेण बोधकत्वात् । आकाशाद् वायुरित्यादिश्रुतिवदिति । अथवा तज्जगज्जन्मादिकारणं ब्रह्म चेतनमचेतनं वा । चेतनत्वेऽपि स्वयंभूस्तदतिरिक्तो वेति विशेषाकाङ्क्षायां प्रवृत्ते ईक्षतेर्नाशब्दमिति । जगत्कारणं ब्रह्म ना पुरुष एव । कुतः ईक्षतेः । ईक्षणश्रुतिगोचरत्वाद् । अत एवेक्षणात् तद् ब्रह्म अशब्दं शब्दब्रह्मणो हिरण्यगर्भादतिरिक्तं च भवति, सुतरां पुरुषान्तरेभ्य इत्यर्थः । हिरण्यगर्भस्य वेदमयत्वेन वेदगर्भत्ववच्छब्दब्रह्मत्वमपि स्मर्यते

'पूर्वस्यादौ परार्द्धस्य ब्राह्मो नाम महानभूत् ।
कल्पो यत्राऽभवद् ब्रह्मा शब्दब्रह्मेति यं विदुः' ॥

इति भागवतादिष्विति । एवं द्विधा सूत्रं व्याख्याय, तदैक्षत बहु स्यामितिविषयवाक्यं दर्शयित्वा ।

रश्मिः ।

विशेषणदानेनानुमानिकं प्रकृत्यादीति तन्मतं सूचयित्वेत्यर्थः । भाष्यान्तर इति अनुव्याख्यानसंज्ञके मध्वभाष्य इत्यर्थः । तथात्वस्यैवेति मुख्यतयात्राऽशब्दत्वस्यैवेत्यर्थः । यथाहुः ।

'न च सांख्यनिराकृत्यै सूत्राण्येतान्यचिक्लृपत् '
भगवान् न ह्यशब्दत्वं प्रधानेऽङ्गीकरोत्यसौ' ॥

इति । तस्यैवेति अविभक्ततया स्थितस्य ब्रह्मणः 'अविभक्तं च भूतेषु' इति वाक्यात् । भवदभीति प्रायोपाधिक इत्यर्थः । पदार्थद्वयकल्पने गौरवात् । प्रकृत्यविभक्तं तु कृतमेवेति गौरवम् । जगदधिष्ठानेति एतदुपपादितम् । सांख्यसूत्रेष्विति 'ईश्वरासिद्धेः' इत्यादिष्वित्यर्थः । 'मुक्तबद्धयोरन्यतराभावान्न तत्सिद्धिः' । 'उभयथाप्यसत्कारत्वम्' । 'मुक्तात्मनः प्रशंसा उपासासिद्धस्य वा' इति सूत्रेष्वित्यर्थः । अधिष्ठानेत्यादि उक्तसूत्राग्रे 'तत्संनिधानादधिष्ठातृत्वं मणिवत्' इतिसूत्रात्तथेत्यर्थः । 'विशेषकार्येपि जीवानाम्' 'सिद्धरूपबोद्धृत्वात् वाक्यार्थोपदेशः' 'अन्तःकरणस्य तदुज्ज्वलितत्वाल्लोहवदधिष्ठातृत्वम्' इतिसूत्राण्यालोच्याह समस्तेत्यादि । शास्त्रयोनित्वहेतोरीश्वरेऽभावाज्जीवेनादावाहुः आश्रयेति । शास्त्रारम्भेति । शास्त्रं वेदान्तः । नेति चेतन

१. अनुव्याख्याने । २. तत्तमःपिण्डवद् ।

भाष्यप्रकाशः।

'सर्गकाले तु संप्राप्ते ज्ञात्वा तं कालरूपकम्।
अन्तर्लीनविकारं च तत् स्रष्टुमुपचक्रमे।
तस्मादव्यक्तमुत्पन्नं ततश्चापि महानभूत्' ॥

इति स्मृतिं च दर्शयित्वाह। नहीदमीक्षणं प्रधानादीनामचेतनानां संभवति। ईक्षणध्यानचिन्तनादिशब्देषु चैतन्यस्य विशेष्यत्वात्। ईक्षणादिशब्दस्योपाधिवृत्तिवाचकत्वेऽपि प्रकृतिस्वातन्त्र्यवादिभिरपि प्रधाने तत्पूर्विकाया वृत्तेरनङ्गीकाराच्च। नापि जीवानां, महदादिसृष्टेः पूर्वं करणाभावेन तेषां चैतन्यफलोपधानाभावात्। नचेयमीक्षणपूर्विका सृष्टिर्महत्तत्त्वसृष्टेः पश्चादिति वक्तुं शक्यम्, तथा सतीक्षणात् पूर्वमपि द्वैतापत्त्या, 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इतीक्षणाव्यवहितपूर्वश्रुत्यनुपपत्तेः। ततश्चापि महानभूदिति स्मृतिविरोधाच्च। नच तत् पूर्वसर्गीयमिति वक्तुं शक्यम्। सर्गकाले तु संप्राप्ते ज्ञात्वेति सर्गसमकालीनज्ञानावगमादित्यादि। ततः शांकरमतीयं सूत्रव्याख्यानं, मायां तु प्रकृतिं विद्यादिति श्रुतिव्याख्यानं च दूषयित्वा ततः सांख्ययोगयोर्वेदाविरुद्धत्वं च साधयित्वा रजस्तमःसंमिश्रतया मलिनं कार्यसत्त्वं परमेश्वरस्य नोपाधिः, किंतु केवलं नित्यज्ञानेच्छानन्दादिमत् सदैकरूपं कारणसत्त्वमेव तस्योपाधिः। 'न स्थानतोऽपि परस्योभयलिङ्गम्' इत्यागामिसूत्रात्। ब्रह्मविष्णुमहेश्वरास्तु सृष्टिस्थितिसंहाराधिकारिणः कार्यसत्त्वाद्युपाधिका महदाख्या अवान्तरेश्वरा एव। तेषां च कार्योपाधित्वम्।

'गुणेभ्यः क्षोभ्यमाणेभ्यस्त्रयो देवा विजज्ञिरे।
एका मूर्तिस्त्रयो देवा ब्रह्मविष्णुमहेश्वराः।
सात्त्विको राजसश्चैव तामसश्च त्रिधा महान्' ॥

इति मात्स्यादिभ्यः। बुद्ध्याख्यसमष्टिमहत्तत्त्वं हि त्रिगुणात्मकरज्जुवत् त्रिगुणात्मकमेकमेव। सत्त्वाद्यंशभेदेन त्रयाणां देवानां च शरीरं भवतीत्येका मूर्तिरित्युच्यते हरिहरात्मकदेहवत्। अत एव चैतत्सूक्ष्मशरीराधारभूतं विराडाख्यं स्थूलशरीरमेकमेवेति त्रयाणामेव विश्वरूपत्वमुपपद्यते। त्रयश्च देवाश्चेतनरूपा भिन्ना एव। अत एव त्रयाणामेकपिण्डतया वातपित्तकफवत् परस्परसापेक्षत्वात्।

रश्मिः।

इत्यर्थः। विशेष्यत्वादिति आश्रयतयाऽपेक्षणीयत्वेन तथात्वादित्यर्थः। ईक्षणादिमच्चैतन्यमिति प्रयोगोऽत्र। नन्वीक्षणादेर्द्वित्वादिवद्व्यासज्यवृत्तित्वेन शबलवृत्तित्वात् प्रधानज्ञानवाचकत्वमपि निर्दुष्टमिति शङ्कायामाहुः ईक्षणेत्यादि। तत्पूर्विकाया इति चैतन्यवृत्तिपूर्विकायाः प्रधानवृत्तेरित्यर्थः। उपाधिपूर्विकाया वा, वृत्तिर्ज्ञानविशेषः। नापीत्यादि ईक्षणं संभवतीति योजना। करणेत्यादि शरीरेन्द्रियादिरूपस्य करणस्याभावेनेत्यर्थः। चैतन्येत्यादि जीवानां चैतन्यस्य फलं कार्यं तस्य यदुपधानं जननयोग्यत्वं तदभावादित्यर्थः। 'मनोमात्रमिदं ज्ञात्वा' इत्यादिवाक्यान्महत्तत्त्वाख्यं मनो ब्रह्मण्यन्तर्भाव्यमीक्षते न चेयमिति। द्वैतापत्त्येति महदादिसर्जनार्थं शरीराद्यपेक्षणादिति भावः। महत्त्वेन द्वैतापत्तिर्वा। इतिस्मृतीत्यादि महत्सृष्टेः पूर्वमीक्षणबोधकस्मृतिविरोधाच्चेत्यर्थः। ततश्चेत्यादि तत इत्यनेनाव्यक्तपरामर्शादिति भावः। तत्पूर्वेति। तदिति स्रष्टुमुक्तं महत्सर्जनम्। सर्गसमेति 'समानकर्तृकयोः पूर्वकाले' इति क्त्वो विधायकसूत्रात्तथेत्यर्थः। संमिश्रतयेति

भाष्यप्रकाशः ।

'अन्योन्यमनुरक्तास्ते ह्यन्योन्यमनुजीविनः ।
अन्योन्यं प्रणताश्चैव लीलया परमेश्वराः' ॥

इति मत्स्यादिवाक्यमप्युपपन्नम् । एतेन त्रयाणां भेदाभेदावपि व्याख्यातौ वेदितव्यौ । ननु तेषां कार्योपाधिकत्वेऽपि, 'त्रिधा कृत्वाऽऽत्मनो देहं सोऽन्तर्यामीश्वरः स्थितः' इति स्मृतेर्योगिकायव्यूहवल्लीलावतारत्वमेवाऽस्तु, किमर्थं विष्ण्वादीनां चेतनान्तरत्वं कल्प्यत इति चेन्न । कौर्मे—

'प्रधानं पुरुषं चैव प्रविश्याशु महेश्वरः ।
क्षोभयामास योगेन परेण परमेश्वरः ॥
प्रधानात् क्षोभ्यमाणाच्च तथा पुंसः पुरातनात् ।
प्रादुरासीन्महद्बीजं प्रधानपुरुषात्मकम्' ॥

इत्यनेन, तथा विष्णुपुराणादिषु च पुरुषान्तरेण सह प्रकृतिं संयोज्यैव परमेश्वरस्तदुभयात्मकं देवतात्रयरूपं महान्तं सृजतीत्यवगमात् ।

'ब्रह्मादीनां त्रयाणां तु स्वहेतौ प्रकृतौ लयः ।
प्रोच्यते कालयोगेन पुनरेव समुद्भवः' ॥

इति मात्स्यादिभ्यस्तेषामुत्पत्तिलयसिद्धेश्च । अस्मिन् कूर्मवाक्ये ईश्वरप्रवेशो जीवस्य ज्ञानेच्छाप्रयत्नव्यापनरूपः । क्षोभश्च गुणद्वारा । योगश्चैकाम्यम् । अयं च क्षोभः संयोगविशेषद्वारा महतो हेतुः । एवं पुराणान्तरेभ्योऽपि न तेषां साक्षादवतारत्वम् । किंच । मनुना

'यत् तत्कारणमव्यक्तं नित्यं सदसदात्मकम् ।
तद्विसृष्टः स पुरुषो लोके ब्रह्मेति गीयते' ॥

इत्यनेनाव्यक्तब्रह्मकार्यस्यापि लौकिकब्रह्मत्वमुक्त्वा, 'आपो नारा इति प्रोक्ताः' इत्यादिना योगेन तस्यैव नारायणत्वमुक्तमतो नारायणादप्यतिरिक्त एव परमेश्वर इति । नच नारायणादिशब्दानामुपाधिमात्रपरत्वमिति वाच्यम् । तथा सति लक्षणापत्तेरिति । अत एव विष्ण्वादिदेवतायाः कृष्णाद्यवतारेषु न पुरुषान्तरप्रवेशः श्रूयते, फलवान् वा भवतीत्यतोंऽशावतारत्वमेव । अत एव भागवते ऋष्यादीन् प्रकृत्य स्मर्यते,

रश्मिः ।

मिश्रतया । ननु 'प्रधानं पुरुषं चैव प्रविश्य' इत्युक्तौ जीवद्वयमेकत्र देहे स्यादित्यत आहुः अस्मिन् कूर्मवाक्य इति । प्रधानपुरुषयोः संचालनसंभवेन कर्मत्वानुपपत्तिमाशङ्क्याह क्षोभश्चेति । तथा च गुणान् संचालयामासेत्यर्थः । धात्वर्थमाह अयं चेति तथा च गुणानां मुख्यगौणभावेन संयोगं कृतवानित्यर्थः । उपाधिमात्रेति मात्रपदा शुद्धस्वरूपव्यवच्छेदः । तथा चाविभागाद्वैतहानिरिति भावः । लक्षणापत्तेरिति जहदजहल्लक्षणापत्तेरित्यर्थः । नारायण इत्यत्र नारा आपस्तासां त्यागोऽयमात्रमात्मा नारायणान्तर्गतीयोऽस्यसंबन्धस्य त्यागः । अस्यात्मनोरैक्यम् । एवं तत्त्वमसीत्यत्र मायाविषयोस्त्यागः ब्रह्मविष्ण्वोरप्येवम्, एतन्मते त्वविभक्तत्वेनैवाद्वैतम् । गीतोक्तसात्त्विकविषयस् । अत आपत्तिसम्बन्धः । अत एवाविभागाद्वैतं सिद्ध्यत् । पुरुषेति विष्णुपुरुषादन्यः पुरुषः पुरुषान्तरं तस्मिन् प्रवेशः । किंतु स्वस्मिन् विष्ण्वंश एव कृष्णे । फलं कार्यं तद्वान् पुरुषान्तरप्रवेशः । अंशेति विष्ण्वंशावतारत्वमित्यर्थः । 'सर्वं तं परादात्' इत्युक्तश्रुत्येवकारः । अत्र प्रमाणमाहुः अत इति ।

भाष्यप्रकाशः ।

'एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम् ।
इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युगे' ॥ इति ।

अत्र कृष्णो विष्णुः स्वयं परमेश्वरः, तस्य पुत्रवत् साक्षादंश इत्यर्थः । ऋष्यादीनामंशांशिवचनादिति । न चैवं सति, 'मत्तः परतरं नान्यत् किंचिदस्ति धनञ्जय' इति गीतावाक्यविरोध इति वाच्यम् । तथाविधवाक्यानां व्यक्तपरत्वात् । ईश्वरस्य चाव्यक्ततया व्यवहार्यत्वाभावात् । एतेनापि विष्ण्वादीनां परमेश्वरत्वादिकं व्यक्तापेक्षया बोध्यम् । नित्यत्वं च 'आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते' इति स्मृतेर्बोध्यम् । अथवा, 'यो यो देवानां प्रत्यबुद्ध्यत स एव तदभवत्' इतिश्रुतेर्विष्णुदेवताया औत्पत्तिकब्रह्मात्मभावान्मत्तः परतरं नातीत्यादिवचनोपपत्तिः । वक्ष्यति चाऽऽचार्यः, 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' इति । अत एवानुगीतायां, 'परं हि ब्रह्म कथितं योगयुक्तेन तन्मया' इति श्रीकृष्णवचनाद् भगवद्गीतायां परब्रह्मैव कार्यब्रह्मणा श्रीकृष्णेनाहमित्युपदिष्टमिति निर्णीतम् । किंच । अन्येषामपि ज्ञानिनां ब्रह्मभावेऽपि विष्णावेव मुख्यतो ब्रह्मभावान्मत्तः परतरं नास्तीति वचनमुक्तं, नान्यस्य । तस्य सर्वज्ञानिमुख्यत्वमुक्तं मोक्षधर्मे,

'अनाद्यन्तं परं ब्रह्म न देवा नर्षयो विदुः ।
एकस्तद्वेद भगवान् धाता नारायणो विभुः ॥
नारायणादृषिगणः' इत्यादिना ।

तथा शिवस्यापि मत्तः परतरं नास्तीति वचनं बोद्धव्यम् । किंच । योगयुक्ता ये जीवाः पूर्वपूर्वेषु सर्गेषु करणवर्गेण सह च सायुज्यमुक्त्या परमेश्वरतां गतास्ते वासुदेवव्यूहेऽन्तर्भवन्ति । तत्र च व्यूह एक एव वासुदेवो नित्येश्वर इतरे तदंशा वासुदेवाः । तथा संकर्षणप्रद्युम्नोऽनिरुद्धाख्यव्यूहरूपिणो विभूतिगणाः पूर्वसिद्धाः । त एते यथायोग्यं महदादिविराडन्तरूपेण ब्रह्मविष्णुरुद्ररूपेण चांशावताराः परमेश्वरस्य भवन्ति । 'आगच्छन्ति यथाकालं गुरोः संदेशकारिणः' इति मोक्षधर्मात् । तथाच ये हरिहरादयः परमेश्वरकोटयस्तेषां, मत्तः परतरं नास्तीति वचनमुपपद्यत एव । यद्यपि तेषां जगद्व्यापारवर्जमेवैश्वर्यं तथापि परमेश्वरात्मकतया सर्वस्रष्टृत्वसर्वाधारत्वा-

रश्मिः ।

मृडयन्तीति सुखयन्तीत्यर्थः । अत्रार्थे प्रमाणमाहुः ऋष्यादीनामिति । वाक्येंऽशस्य कला इति समासं मत्वाहुः अंशांशीति । तथा चांशस्यापेक्षणात्कृष्णोंऽश इत्यर्थः साधुः । ऋष्यादीनामंशाः पुत्रादयस्ते सन्त्येषां तेंऽशिन इत्यर्थः । व्यक्तपरत्वादिति तथा च व्यक्तं 'मत्तः परतरं नान्यत्' इत्यर्थः । परमेश्वरत्वबोधकानां संगतिमाह एतेनेति । विष्ण्वादिनित्यत्वबोधकानां संगतिमाह नित्यत्वं चेत्यादि । एकस्यांशांशिभावः उक्तः स विरुद्ध इति पक्षान्तरमाहुः अथवेति । 'प्रत्यबुद्ध्यत' यथावदात्मानं प्रतिबोधितवान् । औत्पत्तिकेति नित्यब्रह्मात्मभावस्तत्कृतः स कृष्णस्तदभिन्नान्मत्तः इत्यर्थः । तर्ह्यन्येषामपि ब्रह्मभाव एतादृशः स्यात्तद्वचने आत्मनोप्यविभाग इति । ब्रह्मात्मभावादित्यत्रात्मशब्दोऽधिक इत्यत आह किं चेत्यादि । ब्रह्मभावादिति कृष्णरूपात् । वचनमिति तस्य वचनमुक्तं नान्यस्यैः । योगयुक्ता इति । स्वमार्गेपि मानसीसेवाया योगत्वेन व्याख्यानात् । अन्ये तु 'पतन्त्यधो नाऽऽदृतयुष्मदङ्घ्रयः' इतिवाक्यविषयाः । करणेति सूक्ष्मदेहेन । द्वितीयस्कन्धेस्ति । इतर इति कृष्णाद्याः । परमेति परमेश्वर आत्मा येषां अंशानां

भाष्यप्रकाशः ।

शुपदेशोऽपि तेषु युज्यत एव । ननु यद्येवं तदा गीतादिषु विष्ण्वादिदेवतैश्वर्यमेव कुत उक्तं, न परमेश्वरस्तदैश्वर्यं वेति चेन्न ।

'एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः' ॥

इति प्रश्नप्रतिवचनाभ्यां विष्णुदेवाद् भेदेन परमेश्वरकथनात् । 'अनादिमत् परं ब्रह्म न सत्तन्नासदुच्यते' इत्यादिना च परमेश्वरस्यैश्वर्यादिकथनादिति । ये त्वीश्वरस्यान्तर्याम्यतिरिक्तविषयापि योगिनामिव लीलाशरीरमिच्छन्ति, तेषां मते, 'न तस्य कार्यं करणं च विद्यते', 'अप्राणो ह्यमनाः शुभ्रः', 'अक्षरात् परतः परः' इत्यादिश्रुतीनां, 'अरूपवदेव हि तत्प्रधानत्वात्' इत्यागामिसूत्रस्य च विरोधः । कार्यं शरीरम् । करणं बुद्ध्यादि । बुद्ध्यादिना हि शरीरं प्रेर्यत इति । 'सर्वदेहविवर्जितः' 'अशरीरः शरीरेषु सर्वेषु निवसत्यसौ' इति, 'देहद्वयस्थितो नित्यः सर्वं देहविवर्जितः' । इति भारतादिष्वीश्वरस्य देहद्वयप्रतिषेधात् । अतो विष्ण्वादिदेवानामेव स्थित्यादिलक्षणस्वाधिकारपालनाय मत्स्यादयो लीलावताराः । ते च परब्रह्मणः प्रकृष्टशक्तितया आवेशावतारतया वा परमेश्वरत्वेनोपास्या इति । तथाच श्रुतिः—

'यन्मनसा न मनुते येनाहुर्मनो मतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' ॥
'यस्यामतं तस्य मतं मतं यस्य न वेद सः ।
अविज्ञातं विजानतां विज्ञातमविजानताम्' ॥

इति । नन्वेवं परब्रह्मणः सकाशाद् विष्ण्वादिदेवानां भिन्नत्वे विष्णुशिवप्रकरणस्थानि मुख्यादिवाक्यानि ब्रह्मनिरूपणे साध(क)नतया विचारकैः किमित्युपन्यस्यन्त इति चेत्तयोरीश्वरकोटितया परमेश्वरेण सह व्यवहारसाम्यादिति गृहाण । अत एव, 'त्रयाणामेकभावानां यो न पश्यति वै भिदाम्' इत्यादिभिस्त्रयाणामेव देवानां स्वाभाविकब्रह्मात्मभावसाम्यात् सर्वोपनिषत्सु त एवोपासनार्थं ब्रह्मतयोपदिश्यन्त इति । परब्रह्मणश्च स्वतो नामरूपाद्यभावः ।

'न सन्ति यत्र सर्वेशे नामजात्यादिकल्पनाः ।
सत्तामात्रात्मके ज्ञेये ज्ञानात्मन्यात्मनः परे ॥
नामरूपे न यस्यैको योऽस्तित्वेनोपलभ्यते' ।

इत्यादिरूपविष्णुपुराणादिवाक्यात् । आत्मनः पर इति जीवादतिरिक्ते । अतः परब्रह्मणो नामरूपाद्यभावान्मुख्यविकारयोर्हरिहरयोर्नामरूपाभ्यामेव शास्त्रेषु प्रायशो व्यपदेशः । अत एव वैष्णवाः शैवाश्च विष्ण्वाद्यतिरिक्तं परमेश्वरमविद्वांसो ब्रह्ममीमांसाशास्त्रं विष्ण्वादिपरतया व्याचक्षाणा अविवेकिन एवेति मन्तव्यम् । एवं पञ्चसूत्र्यां संक्षेपतः प्रदर्शितः शास्त्रार्थ इतः परं प्रपञ्च्यत इत्याह ।

रश्मिः ।

तत्फलं वा । अविभागाद्वैतादेवेति । ऐश्वर्यादीति अहं परं यस्येति बहुव्रीहिणेत्यर्थः । अन्तर्यामीति अन्तर्यामिब्राह्मणे स्फुटमिदम् । देहद्वयेति स्थूलसूक्ष्मदेहद्वय इत्यर्थः । व्यष्टिसमष्ट्यात्मकदेहद्वयेति वा । व्यवहारेति अविभागाद्वैतेन तथा । पञ्चसूत्र्यामिति एतत्सूत्रपर्यन्तायां जन्माद्यस्येति

भाष्यप्रकाशः।

तदप्यविचाररमणीयमेव। सदेव सोम्येदमग्र आसीदित्यनेन निरूपिताया आदिसृष्टेः पूर्वं केवलं ब्रह्मैव, नान्यदित्यस्यार्थस्य साधने तदभिमताविभागलक्षणाद्वैतस्याऽवान्तरसृष्टिप्राकालविषयत्वव्युत्पादनेन तदानीं तदभिमतप्रकारेण प्रधानादिसमन्वयस्याशक्यवचनतया जीवादृष्टस्याप्यभावेन प्रथमव्याख्यानगतपूर्वपक्षस्यैवासंगतत्वेन तदपाकरणाय सूत्रप्रवृत्तेर्वक्तुमशक्यत्वात्। द्वितीयव्याख्यानं तु न दुष्टम्। सांख्ययोगयोः सर्वांशेन श्रुत्यविरुद्धत्वोपपादनं त्वसंगतमेव।

'अक्षपादप्रणीते च काणादे सांख्ययोगयोः।
त्याज्यः श्रुतिविरुद्धोंऽशः श्रुत्येकशरणैर्नृभिः॥
जैमिनीये च वैयासे न विरोधोऽस्ति कश्चन'।

इति पराशरोपपुराणीयवाक्यविरोधात्। नच योऽभ्युपगमवादत्वेनोक्तो नित्येश्वरदूषणादिः स एव त्याज्योऽस्त्विति वाच्यम्। तदुक्तषड्ध्याय्यां तस्याभ्युपगमवादत्वगमकानुपलम्भात्। नित्यानित्यवस्तुविवेकव्यतिरिक्तांशान्तरेऽपि तथात्वात्। 'कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम्' इति श्रुत्या तथा निश्चयात्। एवं योगेऽपि द्रष्टव्यम्। जीवात्मज्ञानमात्रेण मोक्षाङ्गीकारस्यापि तथात्वात्।

'येऽन्येऽरविन्दाक्ष! विमुक्तमानिनस्त्वय्यस्तभावादविशुद्धबुद्धयः।
आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः'॥

इति श्रीभागवते विविक्तजीवात्मज्ञानाद्विमुक्तमानिनां पातकथनेन तथा निश्चयादिति। तथा परमेश्वरस्य ब्रह्मविष्णुमहेश्वरातिरिक्तस्य कारणसत्त्वोपाधिकत्वस्थापनमप्यसंगततमम्। शिवतत्त्वविवेकस्थापितस्योङ्कारवाच्यस्य गुणसाम्योपाधिकस्य सर्वेश्वरस्येव कारणसत्त्वोपाधिकस्यापि

रश्मिः।

सूत्रद्वयमिति। एतदपि विशिष्टाद्वैततुल्यमिति दूषयन्ति तदपीत्यादि। तदभिमतेत्यादि त्रिगुणात्मकरज्जुवत्त्रिगुणात्मकब्रह्मविष्णुशिवात्मकमेकमेव नित्यज्ञानेच्छानन्दादिमत्सदैकरूपकारणसत्त्वोपाधिकं ब्रह्मकार्यं तत्कारणं ब्रह्म इत्येवं तदभिमतेत्यादि। तदानीमिति प्रथमसृष्टिकाल इत्यर्थः। अतीतार्थमात्रपरत्वकल्पनेपि साकारप्रतिपादकत्वेनादोषादाहुः द्वितीयेति। अभ्युपगमवादत्वेनेति आग्रहवादो युक्तिरहितोऽभ्युपगमवादः। ननु किं तेनेत्यत आहुः नित्यानित्येत्यादि। तथात्वादिति श्रुतियुक्तिविरुद्धत्वेनाभ्युपगमवादत्वादित्यर्थः। तदर्थं श्रुतिविरोधमाहुः काल इत्यादि। अत्र योनिवादनिरासात्प्रधानवादोप्यभ्युपगमवाद इति निश्चयादित्यर्थः। 'एतेन योगः प्रत्युक्तः' इतिसूत्रादष्टाङ्गयोगे किंचिदाहुः एवं योग इति। षडङ्गयोगस्यौपनिषदत्वात्। शिवतत्त्वेत्यादि 'अथास्य पुरुषस्य चत्वारि स्थानानि भवन्ति नाभिर्हृदयं कण्ठं मूर्धा तत्र चतुष्पादं ब्रह्म विभाति जागरिते ब्रह्मा सुप्ते विष्णुः सुषुप्तौ रुद्रस्तुरीयमक्षरं स आदित्यो विष्णुश्च' इति ब्रह्मादिभ्यः परमक्षरशब्दं सर्वदेवतात्मकं तत्त्वान्तरं दर्शितम्। स एव 'न तत्र देवा ऋषयः पितर ईशते' इति श्रुत्यानन्येश्वरः। 'एको देवः सर्वभूतेषु गूढः' इति श्रुत्यान्तर्यामी चेति ब्रह्मोपनिषदि। अपि च जगत्कारणं ब्रह्म मायोपाधिकचैतन्यमित्यविवादं ब्रह्मविष्णुरुद्रास्तु तदीयगुणविशेषोपाधिचैतन्यरूपाः' सैषा चित्रा शुक्ला बहुहरा स्वयं गुणभिन्नाङ्गेष्वपि गुणभिन्ना सर्वत्र ब्रह्मविष्णुशिवरूपिणी' इति श्रुतेः। ततश्चोपा-

भाष्यप्रकाशः ।

निरुपाधिकपरमेश्वरप्रतिनिधित्वेनैव ब्रह्मोपनिषन्नृसिंहतापनीयमैत्रायणीयाथर्वशिखासु सिद्धत्वात् । इदं यथा तथा ब्रह्मवादाख्ये वादे निपुणतरमुपपादितमिति नेह प्रपञ्च्यते । नच निरुपाधिकस्य निराकारत्वं शङ्क्यम् । 'आनन्दरूपममृतं यद्विभाति' इति मुण्डके, 'अकारं ब्रह्माणं नाभौ उकारं विष्णुं हृदये मकारं रुद्रं भ्रूमध्ये ॐकारं सर्वेश्वरं द्वादशान्ते आनन्दाऽमृतरूपं प्रणवं षोडशान्ते' इति तापनीये, 'आनन्दमात्रकरपादमुखोदरादिः' इति पञ्चरात्रस्मृतौ, 'अथवा परमात्मानं परमानन्द-

रश्मिः ।

धिभेदे उपहितभेदस्यौचित्यात्, गुणमूर्तिभ्यः परं मायोपाधिकं जगत्कारणं ब्रह्मेति सिद्धम् । तद्योमासद्यं परमेश्वरं प्रभुम्, 'ऋतं सत्यं परं ब्रह्म'इति कैवल्योपनिषच्छ्रुतेरेतद्बहुरित्यप्पयदीक्षितास्तत्र वदन्ति तादृशेश्वरस्यैवेत्यर्थः । प्रतिनिधित्वेनेति अत्रैवं ज्ञेयम् । यन्मूर्तित्रयातीतं तुरीयं तत्त्वं परं ब्रह्मेति प्रत्यपादि तन्मन्दम् । ब्रह्मोपनिषद्येव पूर्वोक्तानन्तरं पठ्यते तेषां मध्ये यत्परं ब्रह्म विभाति स्वयममनस्कमश्रोत्रमपाणिपादं ज्योतिर्वर्जितं नेत्यक्षरस्वरूपं निरुच्य तस्य ब्रह्मलोकत्वप्रसिद्ध्यै 'तत्र लोका न लोका देवा न देवा वेदा न वेदा यज्ञा न यज्ञा माता न माता पिता न पिता स्नुषा न स्नुषा चाण्डालो न चाण्डालः पौल्कसो न पौल्कसः श्रमणो न श्रमणः पशवो न पशवस्तापसो न तापसः इत्येकमेव परं ब्रह्म विभाति' इत्यनेन तत्र लोकादीनां ब्रह्मत्वमुच्यते न तु लोकादयो निषिध्यन्ते । एकेनैव लोकादिपदेन चारितार्थ्यात् । ततो हृद्याकाशे तद्विज्ञानमाकाशं तत्सुषिरमाकाशमित्यनेन तस्य भक्तहृदयाकाशत्वलोकादीनां ब्रह्मत्वोक्तेर्निरुच्य प्रायपाठानुरोधप्राप्तप्रथमार्थसप्तम्या ततस्तादृशहृदि वेधं पूर्णं ब्रह्म ज्ञपयितुं तद्देयं हृद्याकाशे 'यस्मिन्निदं सं च विचरति' 'यस्मिन्निदं सर्वमोतप्रोतमिति तल्लक्षणमुक्तम् । तथा च ब्रह्म प्रतिनिधीयतेऽस्मिन् इति प्रतिनिधिरक्षरं तत्त्वेनेत्यर्थः । नृसिंहतापनीयेत्यादि यदप्यप्पयदीक्षितेन 'अकारं ब्रह्माणं नाभौ उकारं विष्णुं हृदये मकारं रुद्रं भ्रूमध्ये' इति नाभिहृदयभ्रूमध्येष्वकारादिमात्रात्रयवाच्यानां ब्रह्मादीनामुपास्तिविधानानन्तरं ॐकारं सर्वेश्वरं द्वादशान्त इति द्वादशान्तोपास्यं तेभ्यः परं तत्त्वान्तरं तापिनीये दर्शितमित्युक्तम् । तत्रापि तदनन्तरं सप्तात्मानं चतुरात्मानं चतुःसप्तात्मानं चतुरात्मानमानन्दामृतरूपं प्रणवषोडशान्तर इति भक्तसाहित्यलिङ्गेन प्रतिनिधेरेवोक्तेर्युक्तत्वात् । यदपि तेन मैत्रेयोपनिषदि 'तमो वा इदमेकमास' इत्यारभ्य 'तत्परेणेरितं विषमत्वं प्रयात्येतद्वै रजसो रूपम्' इत्यादिना तपोधिष्ठातुः परस्य संकल्पेनाविष्टस्यस्य तमसो गुणविभागं निरूप्य तस्य प्रागुक्ता अग्र्यास्तनवो ब्रह्मा रुद्रो विष्णुरिति 'अथ यो ह खलु वा वास्य राजसोंऽशो योयं ब्रह्माथ यो ह खलु वा वास्य तामसोंऽशोऽसौ योयं रुद्रोथ यो ह खलु वा वास्य सात्त्विकोंऽशोऽसौ योयं विष्णुः' इति तेभ्यः परं तत्त्वान्तरं दर्शितमित्युक्तम् । तत्रापि ततः पूर्वं ब्रह्मणो वा एता अग्र्यास्तनवः परस्यामृतस्याशरीरस्येत्युक्तत्वात् तस्यैव तमोभवनादिरुच्यते इति प्रतिनिधिरेव तत्त्वान्तरम् । यत्त्वथर्वशिखायां शिव उच्यत इति तदप्योंकारप्रणवनाम्नो निर्वचनाद् ब्रह्मविष्णुरुद्रेन्द्राः संप्रसूयन्ते इति वचनात् प्रतिनिधित्वेन सिद्धम् । नात्र प्रसवविरोधः संपद्याविर्भावात् । तदुक्तं मैत्रायणीये 'ब्रह्मणो वा एता अग्र्यास्तनवः परस्यामृतस्याशरीरस्य तस्यैव लोके प्रतिमोदन्ति' इति । एतदेवाहुः निपुणतरमुपपादितमिति । यत्तत्पदाध्याहारे गौरवं मत्वाहुः किंचेति । अग्रिमाधिकरणे

१. आविता भासा वा । २. ॐकारो भक्तः, साहित्यं प्रतिपाद्यप्रतिपादकभावसंबन्धेन ।

भाष्यप्रकाशः

विग्रहम्' इति योगियाज्ञवल्क्यस्मृतौ चानन्दाकारस्यैव सिद्धत्वात् । नच, 'न तस्य कार्यं करणं च विद्यते' इत्यस्य विरोधः । तस्य तत्संबन्धि यत् तत् कार्यं जन्यं न, किं त्वजन्यमेव । किंच, तस्येति षष्ठ्या भेदो निरूप्यते । तथाच जीववत् स्वरूपातिरिक्तं ज्ञानक्रियादिषु करणमिन्द्रियादिकं च तस्य नास्ति । अथवा नित्यत्वादाकारस्य तद्धेतुभूतं करणं क्रिया, सापि नास्ति । अत एव, न तत्सम इत्यादीति तदर्थात् । एतेनैव 'अप्राणो ह्यमनाः शुभ्रः' इत्यस्याप्यविरोधः सिद्धः । नाप्यरूपवत्सूत्रस्य विरोधः । तत्रापि रूप्यते निरूप्यते व्यवह्रियत इति रूपं सर्वव्यवहारविषयत्वं तद्युक्तं रूपवद्विश्वम् । ब्रह्म तु तद्विलक्षणम् । यद्वा रूप्यते व्यवह्रियतेऽनेनेति रूपं करचरणादि तद्वत् तद्युक्तं ब्रह्म न, किंतु तद्विलक्षणम् । करादेरपि ब्रह्माभेदाद्रूपरूपं ब्रह्मैव, नतु रूपवदिति । ननु कुत एतदवगम्यत इत्याकाङ्क्षायां तद्विनिगमकं सूत्रशेषेणाह 'तत्प्रधानत्वात्' इति । सर्वेषां वेदान्तानां प्राधान्येन ब्रह्मप्रतिपादकत्वात् । तथाच ब्रह्मप्रकरणे निरूपित आकारो ब्रह्माभिन्न एवेति । नचाऽऽकारनिरूपकाणां ब्रह्मपरिचायनार्थत्वात् तेषां ब्रह्मभिन्नकराद्याकारनिरूपकत्वेऽपि न प्राधान्येन ब्रह्मप्रतिपादकत्वप्रतिरोध इति शङ्क्यम् । 'स यथा सैंधवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवं वा अरे अयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञान(घन) एव' इतिश्रुतौ बाह्याभ्यन्तर-भेदराहित्यबोधने ज्ञानाकारत्वस्यैव सिद्धत्वात् । आकारभूतकरादिराहित्येन केवलज्ञानात्मकतायां बाह्याभ्यन्तरत्वप्रतीतिराहित्येन तन्निषेधानुपपत्तेः । अकृत्स्नादिप्रतीतिराहित्येन कृत्स्नघनपदयो-र्वैयर्थ्यापत्तेश्च । अतः केवलसच्चिदानन्दात्मकब्रह्माभिन्नकरचरणाद्याकाराङ्गीकारे न कस्यापि विरोधः । यत् पुनस्तलवकारादिश्रुत्या परमेश्वरस्य साक्षादुपास्यत्वाभाव उक्तः स तु तामेव श्रुतिं विरुणद्धि । पूर्वार्धे मनःप्रवृत्तिरहितं तत्प्रेरकं यदुक्तं, तदेव ब्रह्म त्वं विद्धि, नेदं प्रेर्यत्वेनानुभू-यमानं जीवात्मरूपं न विद्धि । यत् प्रेरकं तत् किमित्यत आह । यदिदं सच्चिदानन्दाकारमुपासते वैदिकोपासका इति तत्रार्थात् । अनुपास्यत्वेऽभिप्रेते तु द्वितीयेदंकारं न वदेदेव । नेदं यदुपासत इत्येतावतैव चारितार्थ्यात् । 'यस्यामतं तस्य मतम्' इत्यत्रापि, 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्' इति वरणहेतुकतनुविवरणस्य श्रुत्यन्तरे श्रावणाद् वरणाभावे यस्यामत-मविदितं तस्य मतं, यस्य पुनस्तदभावेऽपि मतं स न वेदेति । यद्वा, अनिरुक्तश्रुतौ ब्रह्मणो वाक्यपरिच्छेद्यत्ववारणाद् यस्यामतमनिरुक्तत्वात् सम्यक्तया अज्ञातं तस्य मतम् । यस्य पुनस्त-द्विपरीतं स न वेदेति । अविज्ञातं करचरणादिविशिष्टतया जानतां, विज्ञातं तदभिन्नतया

रश्मिः ।

वक्ष्यन्ति च ब्रह्मणि त्विन्द्रियाद्यभावादानन्देनैव कार्यं क्रियते इति । अविरोध इति आकारहेतुभूतः प्राणादिर्नास्तीत्यविरोध इत्यर्थः । एवेतीति करादीनां प्रत्येकं सच्चिदानन्दात्मकत्वादेवकारः । सर्वेषामिति समासस्तु तस्य प्रधानत्वं तत्प्रधानत्वं तस्य ब्रह्मणः प्रधानत्वात् मुख्यत्वादिति भाष्यात् । अविभागाद्वैतवादी शङ्कते न चाकारेति । बाह्याभ्यन्तरेत्यादि । कृत्स्नेति शेषः । यद्वा सप्तम्यन्तं पदं तृतीयान्तं वा । उक्त इति तथा च श्रुतिरित्यादिनोक्तः । अस्मिन् व्याख्याने वरणाभावेपि ब्रह्मावबोध आयाति स सिद्धान्तविरुद्ध इति भिन्नां व्याख्यामाहुः यद्वेत्यादि । अनिरुक्तेत्यादि तन्निष्ठस्येत्यादिसूत्रविषयभूतायामित्यर्थः । सम्यक्तयेति इदमित्यतयेत्यर्थः ।

भाष्यप्रकाशः ।

जानतामित्यर्थादिति । अतो न परब्रह्मणोऽनुपास्यत्वाज्ञेयत्वादिकं युक्तम् । यदपि परब्रह्मणः स्वतो नामाद्यभावसाधनाय विष्णुपुराणादिवाक्यमुपन्यस्तं तत्रापि कल्पनापदात् काल्पनिकनामादिनिवृत्तिरेवाभिप्रेता, न यावन्नामादिनिवृत्तिः । 'ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' । ॐकारं प्रकृत्य 'स्वधाम्नो ब्रह्मणः साक्षाद्वाचकः परमात्मनः' । 'तस्य वाचकः प्रणवः' इति गीताश्रीभागवतपातञ्जलसूत्राणां विरोधात् । वाचकस्यैव नामत्वात् । एवं सिद्धे सदादिनामकत्वे,

'नारायणः शिवो विष्णुः शंकरः परमेश्वरः ।
एतैस्तु नामभिर्ब्रह्म परं प्रोक्तं सनातनम्' ॥ इतिवाराहपुराणवाक्यात्,
'कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते' ॥

इत्यादिश्रुतिभ्यश्च नामान्तरस्वीकारेऽप्यदोषात् । 'अनादिमत्परं ब्रह्म' इति स्वलिखितगीतावाक्याग्रिमगीतावाक्य एव सर्वतःपाणिपादान्तमित्यादिना परमेश्वररूपस्याप्युक्तत्वेन तस्याप्यङ्गीकार्यत्वात् । ज्ञेयं प्रस्तुत्यैव तस्य कथनेनोपासनागन्धस्याप्यभावात् । अतो नामरूपे न यस्येति द्वितीयवाक्येऽपि काल्पनिकनामाद्यभाव एवास्येय इति परमेश्वरस्य लीलाविग्रहाङ्गीकारे दोषाभावान्मत्स्यादीनां परमेश्वरलीलावतारत्वेऽपि न दोषः । द्वितीयस्कन्धे, 'लीलावतारान् पुरुषस्य भूम्नः' इति प्रतिज्ञाय ब्रह्मणा मत्स्यादीनां कथनात् । न च 'एते चांशकलाः पुंसः' इति प्रथमस्कन्धविरोधः । तेषामेतद्भिन्नत्वात् । त्वदुपगतनित्यकार्यवासुदेववन्नामरूपादिसाम्येऽपि भेदस्योपक्रमोपसंहाराभ्यां यथायथमवगन्तुं शक्यत्वात् । गीतायां श्रीभागवते च विभूतिमध्ये

रश्मिः ।

तद्विपरीतमिति इदमित्थतया ज्ञातम् । युक्तमिति न च मन्त्रोपासनेति भक्तिहंसविरोध इति वाच्यं मन्त्रोपासनेत्येकपदात् । वस्तुतस्तु भक्त्येकसमधिगम्यं 'नेदं यदिदमुपासते' किं तु यदिदं भजन्त इति भावः । तस्य वाचक इत्यादि । अस्य सूत्रस्य समाधिपादे 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः' इतिसूत्रमुपक्रम्य पाठात्तत्पदेनेश्वरपरामर्शादिति भावः । तस्यापीति तथा चैतत्सारस्येनाहं परो यस्येति बहुव्रीहिर्ज्ञेयः । ननूपासनास्पृश्यत्वलिङ्गेन नायं समासः साधीयानित्यत आहुः ज्ञेयमित्यादि । उपासनागन्धस्येति । त्रयोदशे 'ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते' इति पूर्वार्धात् 'एवं सतत' इत्यादेर्द्वादशस्थत्वात्तथेत्यर्थः । लीलावतारत्वेपीति लीलावतारपदं योगरूढं साक्षात्सच्चिदानन्दरूपाणामैश्वर्यादिगुणसहितानां मुख्यानां भगवदवताररूपाणां वाराहयज्ञकपिलदत्तसनकादिनरनारायणध्रुवादीनां नाम । अवतारशब्दार्थस्तु ।

'सत्त्वरूपशरीरेषु ब्रह्मणः संक्रमः स्मृतः ।
अशुद्धशुद्धभावेन शरीराणामतो द्विधा ।
कार्यकाले संक्रमणमावेशः सर्वदा परम्' ॥ इति ।

एतच्च 'स एव प्रथमं देवः'इत्यस्य सुबोधिन्यां प्रथमस्कन्धे स्फुटम् । न दोष इति यथाविभवादिकार्यकर्तृत्वेन विष्ण्वाद्यवतारत्वं भगवतो मिश्रोर्मते तथा भक्तैः सह निगूढभावकरणाऽभावेपि लीलाक्षरं तत्कार्यकर्तृत्वेन लीलावतारत्वेपि निगूढभावाकरणं दोषो नेत्यर्थः । नन्वक्षराद् विविधा भावाः प्रजायन्ते तत्रैव चापियन्ति नैवमन्यत्रेति चेन्न । तत्पुराणादिषु तेभ्योपि जननप्रलयाद्युक्तेः । अंशकला इति धर्मावेशिन इत्यर्थः । तेषामिति मत्स्यादीनामित्यर्थः । भेदकमाहुः त्वदुपगतेत्यादि । उपक्रमेत्यादि द्वितीयस्कन्धे

भाष्यप्रकाशः ।

वासुदेवस्य गणनाच्च । यत्पुनः, 'कृष्णस्तु भगवान् स्वयम्' इत्येतत्स्वयंपदस्य पुत्रवत् साक्षात् परमेश्वरांशः । ऋष्यादीनामंशांशिवचनादित्युक्तम् । तदप्यसंगतम् । भूभारहारकं कृष्णमंशेषूक्त्वा तदंशित्वेन पुमांसं चोक्त्वा ब्रह्माण्डात्मकपुंरूपताभ्रमवारणाय तुशब्दोक्तिपूर्वकं स्वयं भगवत्त्व-विधानस्यावोधात् । 'कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम्' इति, 'वसुदेवगृहे साक्षाद् भगवान् पुरुषः परः' इत्यादिवाक्यानामप्यविचाराच्च । गीतायां तु

'परं ब्रह्म परं धाम पवित्रं परमं भवान् ।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥
आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ।
असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे' ॥

इति वाक्यमपि प्रायो नावलोकितं, येन 'मत्तः परतरम्' इतिवाक्यस्य वामदेवव-च्छास्त्रदृष्ट्या ज्ञानिमुख्यवाक्यत्वेन गतिश्चिन्तिता । नहि परब्रह्मत्ववक्तार ऋषयः सर्वे भ्रान्ता येनैवं भगवदुक्ते गौणीं वृत्तिं ब्रह्मदृष्टिं च नावगच्छन्ति । तथा व्यक्तपरत्वेन गतिरप्यसंगतैव । अव्यक्त-स्याक्षरत्वेन भगवद्धामतयैव सिद्ध्या भगवतस्ततोऽपि परत्वात् । नच व्यवहार्यत्वान्नेश्वरत्वमिति युक्तम् । तस्य सूत्रव्याख्यान एवोपपादितत्वात् । यदपि मोक्षधर्मवाक्येन नारायणाद्भिन्नत्वं

रश्मिः ।

'प्राधान्यतो यानृष आमनन्ति लीलावतारान् पुरुषस्य भूम्नः ।
आपीयतां कर्णकषायशोषाननुक्रमिष्ये त इमान् सुपेशान्' ॥ इत्युपक्रमः ।

'सोयं तेभिहितस्तात भगवान् विश्वभावनः ।
समासेन हरेर्नान्यदन्यस्मात्सदसच्च यत् ॥
इदं भागवतं नाम यन्मे भगवतोदितम् ।
संग्रहोयं विभूतीनां त्वमेतद्विपुलीकुरु' ॥ इत्युपसंहारः ।

अत्र पुरुषस्य भूम्न इत्यनेन भगवदवतारत्वमुपक्रमे । उपसंहारेपि भगवान् विश्वभावनः इत्यनेनै-तेषां भगवत्त्वं सिद्ध्यति । प्रथमस्कन्धे तु 'एतन्नानावताराणां निधानं बीजमव्ययम्' इत्यनेन वक्ष्यमाणानामवताराणां मत्स्यादिरूपाणां पुरुषावतारे स्थानत्वमुद्गमहेतुत्वं चोक्तमिति पुरुषावतारत्व-मुपक्रमे उपसंहारे च 'एते चांशकलाः पुंसः' इत्यनेन पुंसो विराजोवतारत्वं सिद्ध्यतीत्युभयेषां भेदः । तथा च लीलावतारा भूमपुरुषस्यान्ये पुरुषस्य । गणनाच्चेति तथा चैक एव वासुदेवो नित्येश्वर इतरे तदंशा वासुदेवा इति भागः संमत इति भावः । अंशेष्विति ।

'एकोनविंशे विंशतिमे वृष्णिषु प्राप्य जन्मनी ।
रामकृष्णाविति भुवो भगवानहरद्भरम्' ॥

इत्यनेन तेषूक्ता इत्यर्थः । पुमांसमिति 'एते चांशकला पुंसः कृष्णस्तु भगवान् स्वयम्' इत्यनेनेत्यर्थः । गौणीमिति आत्मीयवाचकत्वे स्वयमित्यत्र गौणीं, पुत्रपितृगुणयोगाद्गौणी । सिद्ध्येति

'अव्यक्तोक्षर इत्युक्तस्तमाहुः परमां गतिम् ।
यं प्राप्य न निवर्तन्ते तद्धाम परमं मम' ॥

भाष्यप्रकाशः ।

परमेश्वरस्योक्तं, तत्र तु नारायणपदं यौगिकमेव । धातृपदविशेषितत्वात् । न तु रूढम् । अतो यत्र नारायणपदेन परमेश्वर उच्यते तत्र रूढ्यैवोच्यते यथा महोपनिषदि । तत्र हि 'एको ह वै नारायण आसीन्न ब्रह्मा न ईशानो नापो नाग्नीषोमौ' इत्यादिना ब्रह्मादिसर्वनिषेधेऽपामपि निषेधात् । स एकाकी नर एवेत्यनेन पुरुषाकारस्योक्ततया निराकारत्वस्यापि वारणात् । तस्य ध्यानान्तस्थस्य यज्ञस्तोममुच्यते, तस्मिन् पुरुषाश्चतुर्दशाऽजायन्तैका कन्येति प्रस्तुत्य, दशेन्द्रियाणि मन एकादशं तेजो द्वादशमहंकारस्त्रयोदशः प्राणाश्चतुर्दश आत्मा पञ्चदशी बुद्धिरिति तेषां स्वरूपकथने तेजःपदेन महत्तत्त्वस्य गणितत्वात् ।

'विश्वमात्मगतं व्यञ्जन् कूटस्थो जगदङ्कुरः ।
स्वतेजसाऽपिबत्तीव्रमात्मप्रस्वापनं तमः' ॥

इति पुराणे तस्य तेजोरूपत्वावगमात् । अतो यत्किञ्चिदेकदेशमालम्ब्य सकलशास्त्रविप्लावनं

रश्मिः ।

इत्यत्र सिद्धमित्यर्थः । तस्येति ब्रह्मणो व्यवहार्यत्वस्येत्यर्थः । यौगिकमेवेति पूर्वमीमांसा-कारिकास्वाचार्यैर्वेदान्ते योगमात्राङ्गीकारादेवेति । धातृपदेत्यादि 'धाता नारायणो विभुः' इति । न तु रूढमिति । ननु रूढेः स्वमतेऽभावादप्राप्ताया निषेधः कुत इति चेन्न । स्वमते शक्तिसंकोचलक्षणायाः रूढेः प्रस्थानरत्नाकरेऽङ्गीकारात् । तथा च न परमेश्वरभिन्ने नारायणपदं शक्तिसंकोचयुक्तमिति । रूढ्यैवेति अपां सत्यज्ञानानन्तेऽक्षरे संकोचः । अक्षरं नारं जीवसमूहः अयनं यस्येति न तत्राधोक्षजेऽघटितयोगः संभवतीत्येवकारः । नारमयनं यस्येति योगाबाधं वदन्तो हेतुमाहुः यथेति । तेनाघटितविग्रहे रूढिरित्युक्तम् । ननु सर्वेषां शब्दानां परमेश्वरे योगोऽङ्गीकृतः प्रस्थानरत्नाकरे इति चेन्न भैक्षवबोधनपरत्वाद् ग्रन्थस्य । अपामपीति तथा च नारा अयनं यस्येति योगस्य तदानीम-भावान्नारायणपदं रूढमेवेत्यर्थः । तेन सर्वशक्तिमत्यधोक्षजे रूढिरपि युक्ता कदाचिदिति ध्वनितम् । एकाकीति 'एकाकी त्वेक एककः' 'एकादाकिनिच्' । इदानीं तेन यन्महतो देवतात्रयात्मकत्वमुक्तं तन्निराकुर्वन्तः साकारत्वे प्रमाणान्तरमाहुः तस्य ध्यानेत्यादि । तेषामिति ते पुरुषाश्च सा कन्या चात्र विवक्षितास्तथा च ते च सा च ते तेषामित्यर्थः । नस्तोममिति नासिकासमूहः वायुस्थानम् । अत्रे वायवीसृष्टिमिति भावः । तेजोरूपत्वेति येन तमसा पूर्वं महत्तत्त्वं प्रस्वापितं लयं प्रापितमासी-त्तन्मूलमूर्तं तमो महत्तत्त्वेन पीयते इति तृतीयस्कन्धसुबोधिन्या इति शेषः । इमं न्यायं यदप्यप्पय-दीक्षितेन 'उमासहायं परमेश्वरं प्रभुं ऋतं सत्यं परं ब्रह्म' इति श्रुत्या ।

य एकः शाश्वतो देवो ब्रह्मवन्द्यः सदाशिवः ।
त्रिलोचनो गुणाधारो गुणातीतोऽक्षरोऽव्ययः ॥
जाता सिसृक्षा तस्यापि वीक्ष्यात्मस्थं गुणत्रयम् ।
वेदत्रयमिदं ज्ञेयं गुणत्रयमिदं हि यत् ॥
पृथक्कृत्यात्मनस्तद्धि तत्र सारं विभज्य च ।
दक्षिणेनासृजत्पुत्रं ब्रह्माणं वामतो हरिम् ॥
पृष्ठदेशे महेशानं श्रीमद् प्रुवान्तकजत्प्रभुः ।

एवं चिद्रूपस्य कारणतानिरूपणेन वेदान्तानां ब्रह्मपरत्वं निरूपितम्॥ १०॥
इति प्रथमाध्याये प्रथमपादे चतुर्थमीक्षत्यधिकरणम्॥ ४॥

अतः परमानन्दरूपस्य कारणत्वोपपादनेन तद्वाक्यानां ब्रह्मपरत्वमुपपाद्यते, आनन्दमयाद्यष्टभिः सूत्रैः। तत्र तैत्तिरीयशाखायां ब्रह्मभृगुप्रपाठकद्वयेन।

भाष्यप्रकाशः।

न सतां मार्ग इति बोध्यम्। एवं शिवरूपेऽपि ज्ञेयम्।

'यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात्।
तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम्'॥

इति श्रुतेरनन्तरूपः परमेश्वरः कदाचिच्छिवाकारेणैव सर्वं जगत् करोतीति। अतो विचारकाणां विष्णुशिवप्रकरणीयवाक्यलिखनमस्मदुक्ताभिप्रायेण, न तु त्वदुक्तेनेति गृहाण। एतावान् परं विशेषो यन्नृसिंहतापनीये, 'अनुपनीतशतमेकमेकेनोपनीतेन तत्समम्' इत्यादिना गृहस्थवानप्रस्थयतिरुद्रजापकाथर्वशिरःशिखाध्यायिपर्यन्तमुक्त्वा अथर्वशिरःशिखाध्यायिशतमेकमेकेन मन्त्रराजजापकेन तत्सममिति नृसिंहमन्त्रराजजापके उत्कर्षविश्रान्तिबोधनात् तद्विद्यावेद्यरूप एवोत्कर्षविश्रान्तिः। एतदपि प्रहस्ताख्यवादादेवावगन्तव्यमिति दिक्। अतः परं प्रकृतमनुसरामः।

ईक्षत्यधिकरणप्रयोजनमाहुः एवमित्यादि। वेदान्तवाक्येष्वव्यवहार्यत्वादिना बोधितस्य चिद्रूपस्य कारणतासमर्थनेन सर्वेषां वेदान्तानां कार्यद्वारा ब्रह्मस्वरूपनिरूपकत्वात् ब्रह्मपरत्वं ब्रह्मणि तात्पर्येण समन्वितत्वं निरूपितम्। तथा चेदमधिकरणप्रयोजनमित्यर्थः॥ १०॥

इति चतुर्थमीक्षत्यधिकरणम्॥ ४॥

नन्वीक्षत्यधिकरणे सर्वेषां वेदान्तानां ब्रह्मपरत्वं सिद्धमेवेत्यग्रिमाधिकरणस्य किं प्रयोजनमित्याकाङ्क्षायां तद्वदन्तस्तदवतारयन्ति अतः परमित्यादि। तद्वाक्यानामिति आनन्दप्रतिपादकवाक्यानाम्। तथाच लक्षणगताव्याप्त्यादिदोषपरिहारायेदमधिकरणम्। अत्रापि सामान्यविशेषभावगर्भोऽवसर एवाधिकरणसंगतिरित्यर्थः। तानि कानीत्याकाङ्क्षायां विषयवाक्यानां बाहुल्यादाकरमेव प्रदर्शयन्ति तत्रेत्यादि। आनन्दकार्यं प्रतिपाद्यत इति शेषः। तानि विषय-

रश्मिः।

इति शिवराघवसंवादस्थस्मृतिमिश्र यस्तु क्वचित्क्वचिच्छ्रुतिपुराणादौ विष्णोरुत्कर्षः प्रतिपादितः स तु प्रतर्दनाख्यायिकायामिन्द्रस्येव तदन्तर्यामिण्येव परशिवे पर्यवस्यतीति शिव एव परं ब्रह्मेत्युक्तं तत्रापि प्रसङ्गादतिदिशन्ति एवं शिवेत्यादि। अस्मदुक्तेति अव्यवहितपूर्वोक्ताभिप्रायेण। अवगन्तव्यमिति एतच्च 'समान एवं चाभेदात्' इति सूत्रे वक्तव्यं साधनाध्याये। तथा चेदमिति चेतनेऽव्याप्तिवारणम्॥ १०॥ इति चतुर्थमीक्षत्यधिकरणम्॥ ४॥

तद्वदन्त इति प्रयोजनं वदन्तोधिकरणमवतारयन्तीत्यर्थः। लक्षणेति आदिशब्देनानन्दप्रतिपादकवेदान्तासमन्वयादध्यायार्थे न्यूनताख्यनिग्रहस्थानं गृह्यते। सामान्येत्यादि सामान्यतश्चिन्निरूपकाणां पूर्वाधिकरणे निरूपणादानन्दप्रसङ्गेन विशेषतश्चिन्निरूपणस्य वक्ष्यमाणत्वात्सामान्यविशेषभावगर्भोवसरः। आनन्दनिरूपणे प्रतिबन्धकीभूता जिज्ञासा किमत्र चिन्निरूप्येति जिज्ञासा तस्याश्च लक्षणवाक्ये प्रथमनिर्देशेनानन्दापेक्षया प्राथमिकजिज्ञासाविषयत्वात् चिद्रूपतानिरूपणाद्विषयसिद्धा निवृत्तौ सत्यामानन्दतावश्यं वक्तव्येति जिज्ञासया किमिदानीं वक्तव्यमिति जिज्ञासया वानन्दरूपतानिरूपणादित्यर्थः। तानि कानीति श्लोकं व्याकुर्वन्ति स्म तानीति।

तत्रानन्दमय इति मयट्प्रत्ययान्तस्याब्रह्मत्वेनाजगत्कर्तृत्वे ब्रह्मप्रपाठकस्याब्रह्मपरत्वं स्यादिति तन्निराकरणार्थमानन्दमयाधिकरणम् । षडिन्द्रियस्वरूपद्वयानन्दभेदेनानन्दस्याष्टविधत्वादष्टसूत्राणि ।

ननु कथं संदेहः, कथं वास्याब्रह्मत्वे प्रपाठकासंगतिरिरिति । उच्यते । ब्रह्मविदः परप्राप्तिं प्रतिज्ञाय ज्ञेयांशे कारणत्वायानन्दांशमप्रवेश्य जडत्वपरिहाराय सर्वज्ञानन्दरूपं फलमुपपाद्य तन्निरूपणार्थं सर्वोऽपि प्रपाठक आरब्धः। तत्र साधनशेषब्रह्मणो वाक्यादेव निःसंदिग्धप्रतीतेः फलस्य ब्रह्मत्वं प्रतिपादनीयम् ।

भाष्यप्रकाशः ।

वाक्यानीत्यर्थः । नन्वेतद्वये ब्रह्मणः कार्यमुच्यते । सत्यज्ञानानन्तलक्षणकं ब्रह्म प्रस्तुत्य 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्यादिना कार्यकथनात् । तथाग्रिमेऽपि, 'यतो वा इमानि' इति ब्रह्म लक्षयित्वा, 'आनन्दाद्ध्येव खल्विमानि भूतानि'इत्यादिना ब्रह्मण एव निष्कर्षाचानन्दकार्ये संदेह एव न भविष्यतीति व्यर्थोऽधिकरणारम्भ इत्यत आहुः तत्रानन्दमय इत्यादि । तत्रेति ब्रह्मप्रपाठके । मयट्प्रत्ययान्तस्येति मयट्प्रत्ययान्तप्रतिपाद्यस्य । तथाचानन्दरूपेणात्र जगत्कर्तृत्वस्य प्रतिपिपादयिषितत्वान्मध्ये च संदिग्धशब्दनिवेशात् तन्निवृत्त्यर्थमयमारम्भ इत्यर्थः । नन्वानन्दरूपेणैवात्र कारणताप्रतिपिपादयिषितेत्यत्र किं गमकमित्याकाङ्क्षायामधिकरणसूत्रसंख्यैव गमिकेत्याशयेनाहुः षडित्यादि । षडिन्द्रियात्मपरमात्मभिर्हि लोके कार्यं क्रियते । ब्रह्मणि त्विन्द्रियाद्यभावादानन्देनैव कार्यं क्रियत इति तत्तदात्मक आनन्द एवेत्यानन्दस्यैवाष्टविधत्वात् तावन्ति सूत्राणीति सैव तथेत्यर्थः । एवमधिकरणारम्भे साधिते आनन्दमयस्याब्रह्मत्वेनापि प्रपाठकस्य ब्रह्मपरत्वं मन्वान एकदेशी चोदयति ननु कथमित्यादि । एवं प्रश्ने संदेहादिकं व्युत्पादयति । उच्यते । ब्रह्मविद इत्यादि । 'ब्रह्मविदाप्नोति परम्' इति वाक्ये ब्रह्मविदः परप्राप्तिं प्रतिज्ञायैतद्वाक्यविवरणभूतायामृचि आनन्दांशस्य कारणत्वबोधनाय 'सत्यं ज्ञानमनन्तं ब्रह्म यो वेद' इति लक्षणवाक्योक्तज्ञेयांशस्य साधनशेषत्वेन तदपेक्षया फलस्योत्कृष्टत्वात् फलभूतमानन्दांशं तत्राप्रवेश्य कारणस्य प्रकृत्यादेर्लोके जडत्वदर्शनात् तद्विलक्षणत्वमानन्दांशे

रश्मिः ।

आकरमिति वाक्यनिकुरम्बोत्पत्तिस्थानमित्यर्थः । अग्रिम इति भृगुप्रपाठक इत्यर्थः । मयट्प्रत्ययान्तत्वं शब्दस्य संभवति । तत्राब्रह्मत्वेनेत्यादिरापत्तिर्न संभवतीति लक्षणयार्थपरत्वेन व्याकुर्वन्ति मयडित्यादि । भाष्ये तु शब्दार्थात्यन्ताप्रविवेकपक्षः । तथाप्रतिज्ञानादिति भावः । तदपि जैमिनिसूत्रप्रामाण्यात् । संदिग्धशब्देति मयडादिशब्दानां निवेशात् । आत्मोपनिषदाहुः षडिन्द्रियेति । षडिन्द्रियाण्यन्तरात्मा, आत्मा बाह्यात्मा, परमात्मा चेति त्रयं तैरित्यर्थः । इन्द्रियाद्यभावादिति 'न तस्य कार्यं करणं च विद्यते' इति श्रुतेरित्यर्थः । सैवेति अष्टसंख्यैव । ननु कथमित्यादीति मयडादौ संदेहः । ऋचीति 'सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति ऋचीत्यर्थः । अनन्तपदप्रवेशस्य तात्पर्यमाहुः आनन्दांशस्येत्यादि । कारणत्वं जगतः । भाष्ये । अकारणत्वायेति छेदे तु अकारणत्वायेत्यस्य फलसाधनत्वाभावाय किं तु फलत्वायेत्यर्थः । साधनेत्यादि वेदेत्युक्तवेद-

तत्राऽन्नप्राणमयादितुल्यवचनात् सुखवाचकशब्दानामेव वचनाच्च संदेहः। आनन्दांशस्यैव कारणत्वेन ब्रह्मत्वप्रतिपादनार्थत्वात् तदभावे प्रपाठकवैयर्थ्यं च। फलस्य नैकट्यप्रतिपादनायात्मपदप्रयोगेण फलरूपेण जगत्कारणतामुक्त्वा

---

भाष्यप्रकाशः।

बोधयितुं तस्य जडत्वपरिहाराय विपश्चिद्ब्रह्मपदाभ्यां सर्वज्ञानन्दरूपं फलमृगुत्तरार्धे, सोऽश्नुते सर्वान् कामान् सहेत्यनेनोपपाद्य तस्य सर्वज्ञानन्दरूपस्य फलस्य निरूपणार्थं सर्वोऽपि प्रपाठक आरब्धः। तत्रर्चि साधनशेषस्य ज्ञेयब्रह्मणो लक्षणवाक्यादेव निःसंदिग्धं स्वरूपावगमात् फलस्य ब्रह्मत्वं प्रतिपादनीयम्। प्रतिज्ञावाक्ये परपदात् तस्य च ऋगुत्तरार्धेन विवरणे भिन्नविभक्तेर्भिन्नपद-वचनयोश्च कथनेन परपदार्थानिश्चयात् ऋग्व्याख्यानरूपे प्रपाठकेऽवश्यं कारणत्वादिना ब्रह्मत्व-मुपपादनीयमित्यर्थः। एवं प्रपाठकार्थमुक्त्वा संदेहबीजमाहुः तत्राऽन्नेत्यादि। अन्नप्राणम-यादीति अन्नरूपं यदन्नमयादीत्यर्थः। एवं संदेहमुपपाद्य प्रपाठकासंगतिमुपपादयन्ति आनन्दांशस्यैवेत्यादि। सदेव सोम्येति, 'स ऐक्षत लोकान्नु सृजै' इत्यादिश्रुत्यन्तरे सच्चिदंशयोः कारणत्वस्य प्रतिपादितत्वेन तत्सहचरितस्यानन्दांशस्यापि तथात्वेन तस्यान्यत्र कारणत्वाकथनात् तदभावे कार्यानुसारिलक्षणस्याव्यापकत्वप्रसक्तेरत्र तस्यैव कारणत्वेन ब्रह्मत्वप्रतिपादनार्थत्वात् तदभावे तद्वैयर्थ्यमित्येवमसंगतिरित्यर्थः।

ननु कारणतावाक्ये 'तस्माद्वा एतस्मादात्मनः' इत्यात्मपदादात्मा वा इदमेक एवेत्यादावि-वात्रापि चिदंशकारणताप्रतिपादनस्य संभवदुक्तिकत्वात् कथमत्रानन्दांशकारणताप्रतिपादनविनि-गमनेत्याकाङ्क्षायामात्मपदोक्तितात्पर्यं वदन्तस्तद्विनिगमकयुक्तिमाहुः फलस्येत्यादि। यथा मलय-

रश्मिः।

व्यापारकज्ञानरूपसाधनविषयत्वेनेत्यर्थः। फलस्येति परस्येत्यर्थः। भिन्नेत्यादि 'सत्यं ज्ञान-मनन्तं ब्रह्म यो वेद निहितं गुहायाम्' स इत्यनेन प्रतिज्ञावाक्यगतं ब्रह्मविदितिपदं विवृतम्। आप्नोति परमित्यस्य अश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति व्याख्यानं, तत्र परमित्यत्र द्वितीया विभक्तिः। परपदमेकवचनं च। विवरणे तु सर्वान् कामान् इति सर्वपदं कामपदं च बहुवचनं च। ब्रह्मणा विपश्चितेत्यत्र तृतीयाविभक्तिर्ब्रह्मपदं विपश्चित्पदं चेति विभक्तेः पदवचनयोश्च भिन्नत्वम्। भाष्ये। तुल्यवचनादिति अवयवित्वेन तथात्वादित्यर्थः। तर्ह्यब्रह्मत्वम-संदिग्धं स्यात् तन्निवृत्तय आहुः सुखेत्यादि। 'तस्य प्रियमेव शिरः' इत्यादिना तथात्वादित्यर्थः। प्रकृते। संदेहबीजमिति अन्नमयादितुल्यवचनं विभूतित्वगमकं सुखवाचकशब्दवचनं ब्रह्म-त्वगमकमन्यतरबीजत्वेन बीजग्रहणाद् बीजद्वयमित्यर्थः। अन्यत्रेति भृगुप्रपाठकादन्यत्र। तदभाव इति कारणत्वाभाव इत्यर्थः। कार्यानुसारीति निरङ्कुशजगत्कर्तृत्वेन शास्त्रप्रतिपाद्यत्वरूपलक्षण-स्येत्यर्थः। कार्यं जगत् तदनुसारि यत्स्वरूपं तस्य लक्षणमिति। सगुणनिर्गुणाभेदं वक्तुं कार्य-लक्षणमित्यनुक्त्वा कार्यानुसारिलक्षणस्येत्युक्तम्। यथान्येषां सास्नादिमत्त्वं गोलक्षणमस्मन्मते सास्नावत्त्वम्। अव्यापकस्येत्यादि हेतौ पञ्चमी तथा चास्माद्धेतोः अत्राधिकरणे तस्यैवानन्दस्ये-त्यर्थः। ब्रह्मत्वेत्यादि प्रपाठकस्येति शेषः। तद्वैयर्थ्यमिति प्रपाठकवैयर्थ्यमित्यर्थः। असंगति-

तस्यैव मध्ये सर्वान्तरत्वं प्रतिपादितं 'तस्माद् वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमयः' इति । अन्ते च, 'एतमानन्दमयमात्मानमुपसंक्रामति' इति आदिमध्यरूपे अनूद्य फलत्वेनोपपादितम् । तन्निरूपकस्यापि तत्तुल्यफलत्वं वक्तुमन्नमयादीनामपि ब्रह्मत्वेनोपासनमुक्तम् ।

तत्र पूर्वपक्षेऽन्नमयादेरिवानन्दमयस्यापि न ब्रह्मत्वम् । अन्नमयादितुल्यवचनात् तथैव फलसिद्धेरिति । एवं प्राप्तेऽभिधीयते ।

आनन्दमयोभ्यासात् ॥ ११ ॥ (१।१।५)

आनन्दमयः परमात्मा, नान्नमयादिवत् पदार्थान्तरम् । कुतः । अभ्यासात् ।

भाष्यप्रकाशः

जस्यामीष्टत्वेऽपि दूरत्वात् तदर्थं न पुरुषप्रवृत्तिस्तथात्र मा भूदिति तदर्थं फलस्य नैकट्यप्रतिपादनायात्मपदप्रयोगेण तदेतत्पदाभ्यां सन्निहितपरामर्शात् फलरूपेण जगत्कारणतामुक्त्वा तस्यैवानन्दस्य मध्ये सर्वान्तरत्वमन्ते फलत्वं चानन्दमयपदाभ्यामुक्तम् । तेनादिमध्यावसानेषु कारणत्वसर्वान्तरत्वफलत्वानि तत्रैव साधितानि । तथान्नमयादीनां ब्रह्मत्वेनोपासनकथनात् तदान्तरत्वनिरूपकाणां यदा तत्तुल्यं फलत्वं, तदाऽऽनन्दमयस्य सर्वान्तरस्य फलत्वं किं वाच्यमित्याशयेन फलत्वमेव दृढीकृतम् । तथाच यदि केवलमात्मपदमेव कारणताप्रतिपादकवाक्ये स्यात् तदा त्वदुक्तं स्यादपि । न त्विह तथा किंतु तदेतत्पदसमभिव्याहृतम् । तथा सत्यात्मपदं नैकट्यमेव बोधयति, नतु तेन रूपेण कारणताम् । सा च प्रतिपिपादयिषिते पर्यवस्यतीति संपूर्णवाक्यविचारादवसीयते । अतः पूर्वोक्ताः फलत्वादय एतद्विनिगमकयुक्तिरूपा इत्यर्थः । एवं विनिगमकबोधनेन परोक्तं प्रतिक्षिप्य प्रकृते पूर्वपक्षमाहुस्तत्रेत्यादि । तथैवेति ब्रह्मत्वेनोपासनेनैव । सूत्रं व्याकुर्वते अभिधीयत इत्यादि ।

आनन्दमयोभ्यासात् ॥ ११ ॥ ननु हेतुना साध्यसिद्धिर्व्याप्तिनिश्चये सति भवति । प्रकृते

रश्मिः ।

रिति स्वरूपलक्षणप्रतिपादकानन्दकर्तृत्वप्रतिपादकप्रपाठकयोरसंगतिरित्यर्थः । तदर्थमिति प्रवृत्त्यर्थमित्यर्थः । तदेतदिति 'तस्माद्वा एतस्मादात्मनः' इतिश्रुतौ । फलरूपेणेति ब्रह्मविदाप्नोति परमिति सन्निहितश्रुत्युक्तेनेत्यर्थः । तस्येति विपश्चिद्ब्रह्मणः । इदं फलमत आहुरानन्दस्येति । आनन्दमयपदाभ्यामिति 'तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मानन्दमयः' 'एतमानन्दमयमात्मानमुपसंक्रामति' इति श्रुतिद्वयघटकाभ्यामित्यर्थः । तन्निरूपकस्यापीत्यादिभाष्यं कैमुतिकन्यायेन व्याकुर्वन्ति तथान्नमयेत्यादि । एतद्विनिगमकेत्यादि । 'तस्माद्वा एतस्मादात्मनः' इति श्रुतावात्मपदेनानन्दांशकारणताप्रतिपादनविनिगमकेत्यर्थः । नन्वानन्दस्य कारणत्वेप्यक्षरानन्दस्य वक्तव्यम् । धर्मिणो भक्तैः सह निगूढभावकरणस्य दशमसुबोधिन्यामुक्तेस्तद्रूपानन्दस्य जगत्कारणताभावादिति चेन्न । अदृश्यत्वाधिकरणोक्ताक्षराभेदमादायोपपत्तिसंभवात् । पुरुषविधब्राह्मणस्यात्र वक्तव्यत्वात्तत्र पर्यंशसत्ताया अभावात् । अत एवापि सदानन्दस्य जगज्जन्मादिकर्त्री शक्तिरित्युक्तं द्वितीयस्कन्धनवमाध्याये । उपासनेति प्रायपाठादेवकारः ।

आनन्दमयोभ्यासात् ॥ ११ ॥ भाष्ये । अभ्यस्यत इत्यादि । एतेन विधेरविशेषेण पुनः श्रवणमभ्यासः इति शास्त्रदीपिकोक्तलक्षणं विधिपदरहितं युक्तं 'एकस्यैवं पुनः श्रुतिरविशेषादनर्थकं

**अभ्यस्यते पुनः पुनः कीर्त्यत इत्यभ्यासस्तस्मात्। अभ्यासस्य भेदकत्वं पूर्वतन्त्र-सिद्धम्।**

**यथा पूर्वतन्त्रे शब्दान्तराभ्याससंख्यागुणप्रक्रियानामधेयानां षण्णां**

---

भाष्यप्रकाशः।

चाभ्यासत्वेन परमात्मबोधकत्वेन व्याप्यभावादसिद्धोऽयं हेतुरित्यत आहुः **अभ्यासस्येत्यादि**। पूर्वतन्त्रे हि,'समिधो यजति,' 'तनूनपातं यजति,' 'इडो यजति,' 'बर्हिर्यजति,' 'स्वाहाकारं यजति' इति पञ्चकृत्वो यजत्यावृत्तौ मीमांसितं, किमत्र तनूनपादादिषु चतुर्षु पूर्वयागानुवाद उत यागान्तर-विधानमिति। तत्र पूर्वपक्षिणा धात्वर्थप्रत्यभिज्ञानादिडादिगुणविधानार्थं समिद्यागानुवादेऽङ्गीकृते सिद्धान्तितम्। भेदाभेदसाधारण्या यजिश्रुत्या यागमात्रप्रत्यभिज्ञानेन श्रुतेर्यागान्तरपक्षे तुल्यत्वाद् गुणविधानपक्षेऽपि चतुर्थीतद्धितयोरभावेन देवतायास्तृतीयाया अभावेन द्रव्यस्य च वक्तुमशक्यत्वाद् द्वितीयया चाग्निहोत्रं जुहोतीत्यादिवत् तेषां कर्मनामत्वनिश्चयात् पदान्तरसमभिव्याहृतेन यजतिना यागान्तरमेव बोध्यत इति। तथाच यत्र यत्र वाक्ये पदान्तरसमभिव्याहृतस्य यस्य पदस्याभ्यास-स्तत्र तत्र तस्य पदस्य पूर्वस्मादर्थान्तरगमकत्वमिति व्याप्तेः पूर्वस्मादर्थान्तरत्वेन परमात्मसाधनान्ना-सिद्धो हेतुरित्यर्थः। नन्वभ्यासस्य भेदकत्वमात्रं सिद्धम्। तस्य फलमितरभेदः सोऽत्र शब्दान्तरा-देव सिद्धो वाक्यान्तरसिद्धमसन्निहितमभ्यासं स्वलाभाय नापेक्षते। तथा सति कथं तेन परमात्मावगतिरित्यत आहुः **यथेत्यादि**। तथाच शब्दान्तरेण सिद्धेऽपि भेदे वैलक्षण्यमभ्यासः साधयति। सिद्धाच्च वैलक्षण्यादन्नमयादिभ्य आनन्दमयस्यातुल्यत्वं सिद्ध्यति। तेन ब्रह्मात्माव-

रश्मिः।

हि स्यात्' इति सूत्रे विधिपदाश्रवणात्। अत एव विधिभिन्नस्याप्यविशेषेण पुनः श्रवणेऽभ्यासत्व-व्यवहार इति बोधितम्। **प्रकृते**। **परमात्मेत्यादि**। इदं चाधिकारसूत्राद् ब्रह्मेत्यनुवृत्तौ लभ्यते। तेन पक्षहेतुनिर्देशोपि सूत्रे न दोषाय। **पूर्वतन्त्र** इति द्वितीयस्य द्वितीयपादे 'एकस्यैवं पुनः श्रुतिरविशेषादनर्थकं हि स्यात्' इत्यधिकरण इत्यर्थः। **पूर्वयागेति** समिद्यागानुवाद इत्यर्थः। **धात्वर्थेत्यादि**। करणीभूतधात्वर्थभेदेपि शब्दैकत्वेनार्थैकत्वस्य दृढतरप्रत्यभिज्ञानादित्यर्थः। प्रत्य-भिज्ञानं च तत्तेदन्ताप्रकारकं ज्ञानं स एवायं यजतिरित्याकारकम्। **इडादीत्यादि**। अत्र तनून-पादादीत्यनूदितव्ये इडादीत्यनुवादः शास्त्रदीपिकादौ तनूनपादादीति पदमसंगतमिति ध्वनयति। **तथाहि**। तनूनपादादीत्यत्रातद्गुणसंविज्ञानो बहुव्रीहिः संभवति। अन्यपदार्थस्य संयोगसमवायाति-रिक्तसंबन्धेन संबन्धित्वात्। पञ्चानामपि यागानां भिन्नत्वात्। लक्ष्यतावच्छेदकस्य विशेष्यान्वय्य-न्वयित्वाभावात्। नैयायिकलक्षणस्याप्यसमन्वयात्। तथा च चतुर्णां यागानां संग्रहायेडादीत्येव वक्तव्यम्। आदि चेड् चेडादी 'अल्पाच्तरं पूर्वम्' इतीडः पूर्वनिपातः। इड् आदिर्ययोरित्यतद्गुण-संविज्ञानो बहुव्रीहिः। इडादी च इडादी चेडादय इत्येकशेषः। तथा चेडादीनां तनूनपादिड्बर्हिः-स्वाहाकाराणां देवतारूपाणां द्रव्यरूपाणां वा गुणानां विधानार्थमित्यर्थः। **चतुर्थीत्यादि** अग्नये जुष्टं निर्वपामि, आग्नेयोष्टाकपालः, इतिवत्। **तृतीयाया** इति दध्ना जुहोतीतिवत्। **इतरभेद** इति यथा पृथिव्या भेदकस्य गन्धवत्त्वस्य जलादिभेदसाधकत्वाज्जलादिभेदः फलं तद्वदित्यर्थः। **शब्दान्तरादिति** द्वितीयस्य द्वितीयपादे 'शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात्' इत्यधिकरणे सोमेन यजेत हिरण्यमात्रेयाय ददाति दाक्षिणानि जुहोति इत्यत्र यजत्यादीनां शब्दान्तरत्वात् कर्मभेदकत्वमिति चिन्तितम्। **तद्वदत्राप्यन्नमयादिशब्दान्तरादेवेतरभेदः सिद्धः किमभ्यासेनेत्यर्थः**। तथा चानन्दमयः शब्दान्तरादिति

**कर्मभेदकत्वमेवमेवानन्दमयस्याप्यभ्यासात् पूर्ववैलक्षण्यम् । अतोऽतुल्यत्वाद् ब्रह्मत्वम् । एवमभ्यासः श्रूयते 'को ह्येवान्यात् कः प्राण्यात्, यदेष आकाश आनन्दो न स्यात्' । 'एष ह्येवानन्दयाति' इत्यर्थतोऽभ्यासः ।**

---

भाष्यप्रकाशः ।

गतिरित्यर्थः । नन्वभ्यासस्यान्नमयादिवाक्येष्वपि दर्शनादत्रैव कथं वैलक्षण्यसाधकत्वमित्यत आहुः **एवमभ्यास** इत्यादि । अयमर्थः । पूर्वानुवाकेष्वन्नादीनां प्रशंसामुक्त्वापि, को ह्येवान्यादिति वाक्ये किंशब्दद्वयेन पूर्वोक्तं सर्वं परामृश्यते । तेन तदननादिकं प्रति व्यतिरेकमुखेनानन्दस्यैव हेतुता श्राव्यते । तेनान्नादीनामपि यत्स्वकार्ये सामर्थ्यं तस्यानन्दसापेक्षता बोध्यत इति सर्वोपजीव्यत्वेन स्तुत्या सर्वत्राऽऽनन्दोऽर्थतोऽभ्यस्यत इति स्तावकत्वेन वैलक्षण्यसाधकत्वमित्यर्थः । ननु स्तावकाभ्यासस्य पूर्वेष्वपि सत्त्वाद् वैलक्षण्यस्य तेष्वपि सिद्धेर्वैलक्षण्यं नानन्दमयस्य परमात्मत्वनिर्णायकम् । लिङ्गेन सिद्ध्यतस्तस्य मयट्श्रुत्यपेक्षया दुर्बलत्वात् । अर्थान्तरत्वेऽपि प्रायपाठेन तुल्यत्वनिश्चयात् । किं चायं विकारे मयट् । 'द्वयचश्छन्दसि' इति नियमस्य, मृण्मयं गृहं राजन्नहं गममित्यादिमन्त्रेषु व्यभिचारात् । तेन विकारार्थे द्वयचो भवत्येव । अन्यस्मात्तु विकारार्थे भवति, न भवति चेति व्यवस्थितविकल्पाश्रयणेन त्र्यचोऽप्यानन्दशब्दात् तस्य विकारार्थे

रश्मिः ।

सुवचमिति शङ्कितुराशयः । **इत्यर्थ** इति तथा च प्रकृतोपयोगिहेतुत्वस्याभ्यास एव सत्त्वान्न तत्सुवचमिति भावः । तथा चेदं प्रथमस्य शब्दान्तरस्य त्यागे मानमिति भावः । नन्वेवमप्यभ्यासस्य पूर्वतन्त्रे भेदकत्वमात्रं सिद्धमिति कथमत्र वैलक्षण्यसाधकत्वमस्येत्याशङ्कते **नन्वभ्यासस्येति** । **एवमभ्यास इत्यादीति** । एवं पूर्वोक्तेभ्यो विलक्षण इत्यर्थः । नन्वभ्यासस्वरूपं पूर्वतन्त्रसिद्धमेवेत्येवमभ्यासः श्रूयते इति भाष्यस्य किं प्रयोजनमित्याशङ्कायां प्रयोजनं वदन्तः पूर्वतन्त्राद्विलक्षणोयमभ्यास इत्याहुः **अयमर्थ** इति । अस्य भाष्यस्येदं प्रयोजनमित्यर्थः । **परामृश्यत** इति सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शकत्वादिति भावः । प्रसिद्धवाचका इति सुबोधिन्यां तत्र तत्र तच्छब्दस्य यच्छब्दस्य व्याख्यानात् । अभ्यासे चाप्राधान्यबोधकतृतीयाभावात् सर्वमित्युक्तम् । **श्राव्यत** इति आनन्दत्वाभावात्कः पूर्वोक्तोन्नमयादिरन्यात्प्राण्याच्च यत एष आकाश आनन्दोतोयमेव अनिति प्राणिति चेत्येवं श्राव्यत इत्यर्थः । **बोध्यत** इति सूच्यते व्यञ्जनतया बोध्यत इत्यर्थात् । अत्र सुपन्तस्यानन्दपदस्यैकवारं कीर्तनादानन्दमयपदाभावाच्चाहुः **अर्थतोभ्यस्यत** इति । **स्तावकत्वेनेति** पूर्वतन्त्रोक्तस्य तस्यास्तावकत्वेनास्य स्तावकत्वेनेत्यर्थः । एतेन पूर्वतन्त्रेभ्यासस्य भेदकत्वमात्रं सिद्धं कथमत्र वैलक्षण्यसाधकत्वमस्येति शङ्कापि परास्ता । **पूर्वेष्विति** अन्नमयादिष्वित्यर्थः । अन्नं न निन्द्यात्तद्व्रतं प्राणो वा अन्नमित्यादिभिरिति शेषः । **लिङ्गेनेत्यादि** स्तावकाभ्याससामर्थ्येन । **सिद्ध्यतः** परमात्मत्वनिर्णायकवैलक्षण्यस्य अपरमात्मत्वनिर्णायकविकारमयट्श्रुत्यपेक्षयेत्यर्थः । यथैन्द्र्या गार्हपत्यमुपतिष्ठते इति श्रुतौ यावल्लिङ्गादैन्द्र्या इन्द्रोपस्थानार्थत्वं कल्प्यते तावत्प्रत्यक्षया गार्हपत्यमिति श्रुत्या गार्हपत्योपस्थानार्थत्वं क्रियते इत्यैन्द्री गार्हपत्योपस्थानाङ्गं तद्वत् । नन्वानन्दशब्दकृतं वैलक्षण्यं परमात्मत्वं साधयिष्यतीत्याकाङ्क्षायामाहुः **अर्थान्तरत्व** इति । प्राचुर्यविकारान्यतरत्वे विकारप्रायपाठेनान्नमयादितुल्यत्वनिश्चयात् । अभ्यासात्पूर्वहेतोर्भेदसाधकस्य शब्दान्तरस्यार्थान्तरत्वोक्तिरत्र । **तेनेति** व्यभिचारदर्शनेनेत्यर्थः । **व्यवस्थितेत्यादि** । सर्वे विधयश्छन्दसि विकल्पन्ते इति न्यायादिति भावः ।

**स्तुत्या मयडर्थत्वप्रकृतिस्तु तुल्या । पुनर्वचनेनाभ्यासेन प्रवाहाद् भेदे साधिते**

भाष्यप्रकाशः ।

सुवचत्वात् । तथा सति न तेन वैलक्षण्यसिद्धिर्वैलक्षण्यसिद्धावपि न तेन परमात्मत्वसिद्धिरित्यत आहुः **मयडर्थेत्यादि** । मयट् प्रत्ययः । अर्थत्वमर्थान्तरत्वम् । ताभ्यां सहिता प्रकृतिर्मयडर्थत्व-प्रकृतिः शब्दान्तररूपा । सा तुल्या व्यवस्थितविकल्पाश्रयणेऽपि पदार्थान्तरपक्षे परमात्मपक्षे च साधारणा । यद्वा स्तुत्या तुल्या यादृशी स्तुतिस्तादृशमर्थान्तरं बोधयति । अतो न तयाऽवान्तरप्रायपाठेन वा विकारार्थग्रहो युज्यते । तदपेक्षयाऽसाधारणस्य लैङ्गिकाभ्यासस्यैव ज्यायस्त्वादित्यर्थः । तेन सिद्धमाहुः **पुनरित्यादि** । किमः पुनर्वचनेन बोधितो य आर्थिकोऽभ्या-सस्तेन मयडर्थान्तरयोः प्रवाहाद् भेदे आनन्दमयस्य साधिते तस्य ब्रह्मत्वं सिद्धमित्यर्थः ।

रश्मिः ।

ननूक्तं पूर्वस्माद्विलक्षणोत्राभ्यास इति तत्राहुः **वैलक्षण्यसिद्धावपीति** । **तेनेति** सिद्धेन वैलक्ष-ण्येन दुर्बलेन लिङ्गेन वेत्यर्थः । **अर्थान्तरत्वमिति** प्राचुर्यविकारान्यतरत्वम् । **शब्दान्तररूपेति** उभयोरेकतरानन्दमयशब्दान्तररूपा । **साधारणेति** स्तुत्येत्यत्रान्वेति । तथा च प्रायपाठेपि स्तुत्या तेन साधारणेत्यर्थः । तथा चानन्दमयशब्दमहिम्नैव परमात्मत्वसिद्धिरित्याशयः । मुख्ये प्राचुर्यार्थे संभवति गौणविकारार्थानौचित्यात् । इदानीं प्रायपाठविरोधं परिहरन्तः **स्तुत्येति** पदमत्र योजयन्तो-र्हार्थकप्रत्ययान्त तुल् उन्मान इति धातुनिष्पन्नस्य तुल्येत्यस्योन्मातुं योग्येति यौगिकार्थं हृदिकृत्य पक्षान्तरमाहुः **यद्वेति** । **अत** इत्यादि सर्वोत्कृष्टस्तुत्यानन्दमयस्यान्नमयादिभ्य उत्कर्षात् न तया स्तुत्येत्यर्थः । **लैङ्गिकेति** आर्थिकाभ्यासस्येत्यर्थः । केचित्तु मयटोर्थो वाच्यं प्राचुर्यं पूर्वापेक्ष-याप्याधिक्यं यत्र प्राचुर्यविशिष्टानन्दे स मयडर्थः तस्य भावो मयडर्थत्वं, प्राचुर्यं विशेषणीभूतं तस्य या प्रकृतिरानन्दशब्दात्मिका सा त्वानन्दमयशब्दनिष्ठा स्तुत्या कृत्वा प्रदर्श्यमानवाक्यनिष्ठानन्द-शब्देनैकार्थवाचकत्वेन तुल्या । प्रदर्श्यमानवाक्ये स्तुतिर्वाक्यार्थः । आनन्दमयशब्दे तु प्रत्ययार्थ इति तुल्यत्वमिति व्याचक्षते । (अस्मिन् पक्षे स्तुत्या इति षष्ठ्यन्तम् । निरूपितत्वं षष्ठ्यर्थः ।) अन्ये तु को ह्येवान्यादिति श्रुतौ आनन्दस्याभ्यासः न त्वानन्दमयस्येत्यभ्यासाभावादानन्दमयो न ब्रह्मेत्याशङ्कायामाहुः **अर्थतोभ्यास** इति । शब्दत आनन्दस्याभ्यासेप्यर्थतः आनन्दमयस्यैवाभ्यास इत्यर्थः । अर्थतः कथमभ्यास इत्याशङ्कायामाहुः **स्तुत्या मयडर्थत्वमिति** । एवं सानुस्वारपाठोङ्गीकृतः । स्तुत्या 'को ह्येवान्यात्' इत्यादिरूपया । मयडर्थत्वं मयटोर्थः प्राचुर्यं यस्मिन् स मयडर्थ इति व्यधिकरणपदबहुव्रीहिणा मयडर्थ इत्यस्यानन्दमय इत्यर्थः । तथा च को ह्येवान्यात् इत्यादि-स्तुत्यानन्दस्य मयडर्थत्वमानन्दमयत्वमित्यर्थः । स्तुतौ प्राचुर्यस्य प्रयोजकत्वात् । प्रभवो धनादिमन्त एव स्तूयमाना दृश्यन्ते इति । अतोत्र स्तुत्या प्राचुर्यं ज्ञाप्यते । एवं सति 'को ह्येवान्यात्' इत्यत्र स्तूयमान आनन्द एवेत्यानन्दप्र[?]रस्यानन्दमयस्यैवाभ्यास इति भावः । **प्रकृतिस्तु तुल्येति** आनन्दशब्दरूपेत्यर्थः । आनन्दमयपदे मयटा प्राचुर्यं बोध्यते को ह्येवान्यादित्यादौ आनन्दस्तुत्या प्राचुर्यं बोध्यते । आनन्दशब्दस्त्वानन्दशब्दे आनन्दमयशब्दे च तुल्य इति भाव इत्याहुः तदेतद्भाष्ये प्राचुर्येण प्रस्तुतेर्थेनुशासिते मयट्येकदेशं प्राचुर्यमादाय वक्ष्यमाणसूत्रानुसारेण व्याख्यातव्यम् । मयड-र्थत्वेत्यादेर्भाष्यस्यानुमानपक्षेर्थः । नन्वानन्दमयः परमात्मा अभ्यासात् इडादियागान्तरवत् । एवं सूत्रे पक्षहेतुनिर्देशापत्त्या वह्निमान् धूमादितिवत् साध्यहेतुनिर्देशस्य प्रसिद्धस्य त्यागोतः परमात्मानन्द-

**ब्रह्मत्वम् । न तु द्वयापत्तिः । उत्तरस्य मागकत्वात् । तस्मात् आनन्दमयं ब्रह्मैव ।**

भाष्यप्रकाशः ।

नन्वानन्दमयस्य ब्रह्मत्वे द्वैतापत्तिः । 'तस्य प्रियमेव शिरः' इत्यादिमंबन्धषष्ठ्या तस्य भेदबोधनात् । तथा सति ब्रह्मत्वस्याप्यसिद्धिः । नेह नानास्तीत्यादौ ब्रह्मणि भेदनिषेधादित्याशङ्कायामाहुः न त्वित्यादि । उत्तरस्यैतदभ्यासवाक्यादग्रिमस्य 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति' इत्यन्तरशब्दवाच्यभेदकृतिनिन्दावाक्यस्य राहोः शिर इत्यादिवद्भेदषष्ठीसाधकत्वान्न द्वयापत्तिरित्यर्थः । सिद्धमाहुः तस्मादित्यादि । चोद्याभावात् तथेत्यर्थः । उपचयापचयशङ्किता-ब्रह्मत्वपरिहारस्तु गुणोपसंहारपादे प्रियशिरस्त्वादिसूत्रे आचार्येण विधेय एवेति न चोद्यावसर इति बोधयितुमेवकारः । एवमस्मिन् वर्णकेऽन्नमयादीनां ब्रह्मकार्यत्वेन पदार्थान्तरत्वमङ्गीकृत्य आनन्दे फलत्वस्य वक्तव्यत्वात् साधनशेषभूते ज्ञेये ब्रह्मण्यानन्दं चानिवेश्यार्थिकाभ्यासादानन्दमयस्य तेभ्यो भेदः साधितः ।

रश्मिः ।

मयः अभ्यासादित्युक्तेपि हेतुः स्वरूपासिद्धः पक्षे व्याप्यत्वाभिमतस्य हेतोरभावादित्याशङ्क्य स्वरूपासिद्धत्वं वारयन्ति स्म **स्तुल्या मयडिति** । स्तुल्या मयडर्थः प्राचुर्येण प्रस्तुतः प्रकृष्टप्रकृत्यर्थः । प्राचुर्यं यत्राभ्यासवाक्ये तन्मयडर्थे प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोस्तु प्रत्ययः प्राधान्येनेति । तस्य भावस्तत्त्वं प्रकृतिरानन्दरूपा तु तुल्या अन्नादिभिस्तुल्या ब्रह्मत्वेनेत्यर्थः । तेन पक्षे हेत्वभावाभावात् न स्वरूपासिद्धत्वं हेतोरिति भावः । **प्रवाहादिति** विकारप्रवाहात् । **न त्विति** भाष्यं विवृण्वन्ति **न त्विति** । **उत्तरस्येति** भाष्यं विवृण्वन्ति स्म **उत्तरस्येति** । **उदरमिति** स्वल्पमित्यर्थः । **गुणोपेति** । साधनाध्यायतृतीयपाद इत्यर्थः । गुणानामुपसंहारो यत्रेति समासात् । तेनानन्दाधिष्ठातरि विधातर्यव्याप्तिः परिहृता । यत ईक्षतिसूत्रे सद्रूपं सत्यं 'सत्यं परं धीमहि' इति मङ्गलाचरणात् । मूर्धा तस्य परं पदं विष्णुर्ज्ञानं तत्त्वेन सत्यं अनन्तत्वेन च तत्प्रतिपादकवेदात्यन्तामिलनात् । अत एवानन्दत्वेनापि सत्यं तत्राव्याप्तिरत्र परिहृता । ब्रह्मादिषु लक्षणसमन्वयस्यावश्यकत्वात् । यतो मुण्डके कर्मादित्रयं मुण्डकत्रयेणोक्त्वा प्रश्ने परब्रह्मान्वेषणे प्राणविद्योक्ता तदनु विद्योपनिषदि ।

'ब्रह्मविद्यां प्रवक्ष्यामि सर्वज्ञानमनुत्तमाम् ।
यत्रोत्पत्तिं लयं चैव ब्रह्मविष्णुमहेश्वरात्' ॥

इत्युक्तं ततः । **अत्रैवं बोध्यम्** । 'मायेत्यसुराः' इति श्रुतेः 'असत्यमप्रतिष्ठं ते' इति स्मृतेश्चासुरसिद्धान्तस्य जाघन्यात् साकारं व्यापकं ब्रह्म तदेव विरुद्धानामणुत्वादिधर्माणामाश्रयः पुरुषोत्तमश्चाद्यमूर्तिः । श्रौतं स्मार्तं च प्रमेयं भिन्नं 'योगिनः प्रति स्मर्यते स्मार्ते चैते' इति चतुर्थाध्यायस्थसूत्रे तथैव सूचनात् । श्रौतं ज्ञानं भक्तिर्वा साधनं, स्मार्ते तु भक्तिरेवेति श्रीमदाचार्याणां सिद्धान्तः । एष चात्र निबन्धे च स्फुटः । श्रीमद्विठ्ठलेश्वरदीक्षितानां तु पुरुषोत्तमो यशोदोत्सङ्गलालित एव ब्रह्म, विरुद्धानां व्यापकत्वादिधर्माणामाश्रयः । 'समान एवं चाभेदात्' इति तृतीयाध्यायस्थसूत्रे तथैव व्यासपादानामभिप्रायव्यवस्थापनेन सूत्रसमाप्तौ—

'एवं विचारचातुर्यवद्भिः सद्भिर्व्रजाधिपे ।
आनन्दमयतानन्दसंदोहायावधार्यते' ॥

अथवा 'स नैव रेमे, तस्मादेकाकी न रमते स द्वितीयमैच्छत्, स हैतावानास' इत्यादिश्रुतिभिरेव उ एवेतिश्रुतेश्च तानि तानि साधनानि कारयित्वा तानि तानि फलानि ददद् भगवान् स्वक्रीडार्थमेव जगद्रूपेणाविर्भूय क्रीडतीति वैदिकैर्निर्णीयते। एतदेव काण्डद्वयेऽपि प्रतिपाद्यते।

---

भाष्यप्रकाशः।

सांप्रतं तु प्रभुचरणैरखण्डब्रह्मवादेन पूर्वं सिद्धं कार्यस्यापि ब्रह्मत्वमनूद्यानन्दस्य साधनशेषत्वेऽपि रूपभेदेन फलत्वानपायाज्ज्ञेयकोटावानन्दं निवेश्यापि तेभ्य आनन्दमयभेदः 'तस्यैष एव शारीर आत्मा' इत्यादिवाक्याभ्यासात् वर्णकान्तरेणाधिदैविकवादमाश्रित्य साध्यते अथवेत्यादि। तदर्थं पूर्वं सर्वश्रुतीनां ब्रह्मपरत्वेनैकवाक्यत्वाय प्रतीयमानस्य द्वैतस्य बाध्यताप्रकारबोधनाय च सृष्टिप्रक्रियासारणपूर्वकमखण्डब्रह्मवादस्वरूपं सप्रमाणं निरूप्यते स वै नैवेत्यादि। वैदिकैरिति प्राचीनौपनिषदैः। एतेन संमतिरपि शिष्टानामुक्ता। एतेन सृष्टीच्छायां प्रयोजिका क्रीडेच्छेति बोधितम्। एतदेव काण्डद्वयेऽपि प्रतिपाद्यत इति 'शाब्दस्य हि ब्रह्मण एष पन्थाः' इत्यनेन रश्मिः।

इति श्लोकेन भाष्यसमाप्तौ च—

'जानीत परमं तत्त्वं यशोदोत्सङ्गलालितम्।
तदन्यदिति ये प्राहुरासुरांस्तानहो बुधाः' ॥

इति श्लोकेन च तथैवोक्तत्वात्। भक्तिरेव साधनं श्रौतस्मार्तं च प्रमेयमेकमेव 'स्मृतेश्च' इति सूत्रेण श्रौतस्याप्यर्थस्य व्यासपादैः स्मृत्योपबृंहणादित्येतावान् मतभेदः। अन्यत्समानमित्याशयेन भाष्यं भिन्दन्ति सांप्रतमित्यादि। प्रभुचरणैरिति श्रीमद्विठ्ठलेश्वरदीक्षितैरित्यर्थः। तेन पूर्ववर्णकस्यापि मुख्यत्वं न तु तत्र किमप्यस्वारस्यमिति ध्वनितम्। एवं तत्र तत्र मतभेदो द्रष्टव्यः। प्राकरणिकग्रन्थनिबन्धाद्येकवाक्यतायां विचार्यमाणायां तु एकमेव मतमिति वस्तुस्थितिस्तत्त्वं त्वेति विभावनीयं महद्भिः। 'पितृप्रवर्तितपथप्रचारसुविचारकः' इति नामरत्नग्रन्थनाम्नः प्रभूणाम्। अत एव मिलितयोरेवाचार्यत्वम्। अखण्डब्रह्मवादेनेति नात्राखण्डब्रह्मवादो 'अखण्डं कृष्णवत्सर्वं' इति निबन्धोक्तः, तस्य ज्ञानमार्गीयत्वात् 'भजनं सर्वरूपेषु' इत्यस्य तत्त्वदीपे तथाकथनात्। किं तु लीलासामग्रीसहितमेकमखण्डं ब्रह्मेति परमभागवतेन वादेनेत्यर्थः। एतत्स्वरूपं द्युभ्वाद्यायतनाधिकरणे 'प्रकरणात्' इति सूत्रे वक्ष्यति। रूपभेदेनेति गणितत्वागणितत्वकृतेनेत्यर्थः। द्वैतस्येति संशयरूपस्य संख्यारूपस्य वा बाध्यताप्रकारसूचनाय सर्वस्य ब्रह्मत्वबोधनेनेत्यर्थः। निरूप्यत इति। यत्तु शंकरपादा अतः परस्य ग्रन्थस्य किमुत्थानमुच्यते द्विरूपं हि ब्रह्मावगम्यते इत्यादिना सोपधिकनिरुपाधिकभेदेन श्रुतिव्यवस्थामाहुः तत्तात्त्विकत्वातात्त्विकत्वाभ्यां द्वेधा भेदस्य विद्वन्मण्डने निपुणतरं खण्डनात्। ग्रन्थोत्थाने प्रकारान्तरमुपदिशद्भिरिति शेषः। स वै नैवेत्यादीति इदं प्रजापतिपरमिति शांकरा व्याचक्षते तदशोभनं 'सर्वान् पाप्मन औषत् तस्मात्पुरुषः' इति पुरुषनिर्वचनश्रुतेः अपहतपाप्मत्वस्य ब्रह्मलिङ्गस्य तत्र सत्त्वेन विराडात्मकप्रजापतेर्ग्रहीतुमशक्यत्वात्। किं च सोऽबिभेदित्यपि भयं न बाधकं बाललीलायां तत्स्वीकारात् भक्तानुरोधेन। माहात्म्यं चैतद्ब्रह्मणो यद्भक्तवश्यत्वम्। अत एकोप्यसाधारणो धर्मो विद्यमानः शिष्टान् संदिग्धानपि ब्रह्मधर्मानेव गमयति इति 'अन्तस्तद्धर्मोपदेशात्' इत्यधिकरणभाष्याच्च। न च 'ततः पतिः पत्नी चाभवताम्' इत्यनन्तरं ततो मनुष्या-

अन्यथा जीवस्य साधनफले निरूपयन्त्याः श्रुतेर्जीवपरत्वमेव स्यान्न ब्रह्मपरत्वम् । कर्मब्रह्मणोरपि जीवशेषत्वं नापेयात् ।

एवं सति पूर्वकाण्डेऽवान्तरफलान्युक्त्वा 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इतिश्रुतेर्निरवध्यानन्दात्मकमेव परमं फलमिति तद्विवक्षमाणा पूर्वं सामान्यत आह, ससाधनं तैत्तिरीये 'ब्रह्मविदाप्नोति परम्' इति । अक्षरब्रह्मवित् परं ब्रह्माप्नोतीत्यर्थः । अत्र परशब्दस्य पूर्वपरत्वे तदित्येव वदेत् ।

भाष्यप्रकाशः ।

द्वितीयस्कन्धे उक्तार्थस्यैवोपबृंहणात् क्रीडनमेव प्रतिपाद्यत इत्यर्थः । तेन सृष्टीच्छा क्रीडेच्छारूपैवेति निर्णीयोक्तोपबृंहणेऽन्यस्याप्यर्थस्य संभवदुक्तिकत्वात् तदनुक्त्वा विपक्षे बाधकं तर्कमेवाहुः अन्यथेत्यादि । अन्यथेति भगवतः सर्वरूपत्वाभावे । नापेयादिति पारार्थ्यस्य शेषलक्षणस्य फलद्वारा तत्र सत्त्वान्नापेयादित्यर्थः । नच जीवशेषत्वमेव काण्डद्वयस्यास्तु बाधकाभावादिति वाच्यम् । 'सर्वे वेदा यत् पदम्', 'ॐमित्येतदक्षरम्', 'इदं सर्वम्', 'यस्यात्मा शरीरम्' इत्यादिषु वेदादेर्भगवत्परत्वस्य भगवतो जीवशेषित्वस्य च श्रावणेन तद्विरोधस्यैव बाधकत्वात् । तस्मान्नात्र शङ्कालेशः । एवमखण्डब्रह्मवादस्यैव श्रौतत्वादुक्तरीतिक एवार्थ इति हृदिकृत्याधिदैविकवादेन भेदं साधयितुं विषयवाक्यं व्याकरिष्यन्तः सिद्धमनूद्य तदवतारयन्ति एवं सतीत्यादि । एवं सतीति उक्तदोषपरिहारायोक्तरीत्या श्रुतीनां ब्रह्मपरत्वे सति । इति श्रुतेरिति । आनन्दान्तरस्यैतदंशत्वादिति शेषः । सामान्यत इति संक्षेपेण । विषयवाक्यप्रतीकं धृत्वा व्याकुर्वन्ति ब्रह्मेत्यादि । साधनशेषाद् ब्रह्मणः परस्यातिरिक्तत्वे गमकमाहुः अत्रेत्यादि । तथाच शब्दान्तरेण निर्देश एव भेदगमक इत्यर्थः । एतेन निरवधिसत्यज्ञानात्मकत्वे

रश्मिः ।

अजायन्त' इति श्रुत्या पतिर्मनुः पत्नी शतरूपेति व्याख्यायत इति वाच्यम् । मनुशब्दस्य मुख्यवृत्तिर्ब्रह्मण्येवेति मनुष्यपदोपपत्तेः । किं चोपसंहारेऽत्र ह्येते सर्वमेकं भवन्ति तदेतत्पदनीयमस्य सर्वस्य यदयमात्मा अनन्त इत्येतत्सर्वं वेद इति सर्वपरायणत्वं सर्वपदनीयत्वं तज्ज्ञानेन सर्वज्ञत्वं तैर्ब्रह्मलिङ्गैरुपक्रमस्य निःसंदिग्धं ब्रह्मपरत्वं, अतोऽन्तस्तद्धर्माधिकरणन्यायेनाकाशस्तल्लिङ्गाधिकरणन्यायेनातिदेशाधिकरणन्यायेनास्य ब्रह्मपरत्वात् । चतुर्थचरणे समाकर्षाधिकरणेऽप्युपपादयिष्यते । क्रीडनमिति एतच्चैतस्य सुबोधिन्यामस्ति । इच्छान्तरादर्शनादाहुः तेन सृष्टीच्छेति । अन्यस्येति अज्ञबुद्ध्याच्छादनाय कल्पितप्रकारस्य शांकरमतसिद्धस्येत्यर्थः । परमार्थ एव पूर्वोक्तः । आहुरिति उपबृंहणस्यापामरप्रसिद्धत्वाद्वैदिकमन्यस्य वैदिकेनैव प्रकारेण बोध्यत्वाद्वा श्रौतेनैव विचारेण तमर्थं समर्थयन्तो गतेरर्थवत्त्वसूत्रे तर्ककथनात् तन्न्यायेनाहुरित्यर्थः । पारार्थ्यस्येति पूर्वतन्त्रोक्तस्येत्यर्थः । फलद्वारेति तत्र कर्मब्रह्मणोः फलाभ्युपायः द्वारं श्रीत्वविवक्षायां द्वारा 'द्वारं पुनर्निगमनेऽभ्युपायः' इति विश्वात् । फले शेषत्वमन्येषां नास्ति । अतः फले शेषत्वं मतस्यास्य मतावलम्बनमभ्युपायः तयेति शेषः । इदानीं पूर्वमीमांसकाशङ्कां पराकुर्वन्ति न च जीवेत्यादि । भेदमिति प्रकाशाश्रयन्यायसिद्धमित्यर्थः । भाष्ये । ससाधनमिति तेनास्य प्रकारस्य मर्यादामार्गीयत्वं सूचितम् । वस्तुतस्त्वित्यादि मुख्यपक्षे तूभयमार्गपरत्वं ज्ञेयम् । प्रकृते । विषयेत्यादि । सिद्धमिति काण्डद्वयसिद्धम् । संक्षेपेणेति संक्षेपेणोत्तरकाण्डार्थमाहेति भाष्येणान्वयः । विषयवाक्यप्रतीकमिति 'तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर

पूर्वं ब्रह्मोक्त्वाग्रे यत् परमित्याह तेन सान्निध्यात् तत एव परं पुरुषोत्तमरूपमेवाऽत्राभिप्रेतमिति ज्ञायते ।

किंच प्रतिवादिना तदात्मिज्ञानात्मिकैव वाच्या । तथा सति ब्रह्मप्राप्तो ब्रह्म प्राप्नोतीत्यर्थः स्यात् । स चासंगतः । साधनसाध्यभावव्याहतिश्च ।

---

भाष्यप्रकाशः ।

सत्यत्वरादुत्कृष्टत्वमिति परस्य लक्षणमप्युक्तप्रायम् । तथोत्कृष्टत्वमानन्दमीमांसोत्तरं, 'यतो वाचः' इति श्लोके गणनापरिच्छेदरहितावाङ्मनसगोचरानन्दरूपत्वेन सिद्धं भविष्यति । ननु 'सर्वं ब्रह्म' इतिवित् परं ब्रह्माप्नोतीत्यर्थोक्तौ न कोऽपि दोष इत्यत आहुः किंचेत्यादि । असंगत इति पुनरुक्तिदोषादसंगतः । नन्वत्र व्याख्यानव्याख्येयभाव एव संगतिरिति चेत् तत्राहुः साधनेत्यादि । नच शाब्दज्ञानवान् परं साक्षात्काररूपं ज्ञानमाप्नोतीत्युक्तौ न दोष इति वाच्यं प्रत्यक्षविरोधात् । नच साधनान्तरासमवधानाददोष इति वाच्यम् । तस्यात्रानभिप्रेतत्वात् । अनुपदेशेन तथावश्यम्भि: ।

रश्मिः ।

आत्मानन्दमयः' इति विषयवाक्यस्य पूर्वाङ्गमित्यर्थः । प्रतीकमित्यस्यावयवमित्यर्थः । भविष्यतीति अनन्तपदार्थनिरूपणे भविष्यतीत्यर्थः । यद्वा एकप्रक्रमपठितत्वेन भविष्यतीत्यर्थः । वस्तुतस्तु निरवध्यानन्दत्वमेव लक्षणम् । सत्यज्ञानानन्तविपश्चित्त्वं वा लक्षणमेकश्रुत्युपपादितत्वात् । प्रकटचिदंशत्वेन न सूर्येऽतिव्याप्तिः सत्यानन्तयोराच्छन्नत्वात् । परे तु त्रयं प्रकटमिति । प्रकटमिति लक्षणे विशेषणम् । निरवधिसत्यज्ञानत्वे सतीति विशेषणाभावे शृङ्गाररसेतिव्याप्तिः स्वमतहानिश्च 'सत्यं परं धीमहि' इति 'सत्यव्रतं सत्यपरम्' इति च ।

'आत्ममायामृते राजन् परस्यानुभवात्मनः ।
न घटेतार्थसंबन्धः स्वप्नद्रष्टुरिवाञ्जसा' ॥ इति च ।

अर्थसंबन्धो देहसंबन्धः । विशेष्याभावे ब्रह्माज्ञानमेव भवेत् । अधोक्षजत्वेन निरवध्यानन्दद्वारा तज्ज्ञानात् । 'आनन्दं ब्रह्मणो विद्वान्' इति श्रुतेः । अक्षरेतिव्याप्तिवारणाय निरवधीति । शंकरोपनिषद्भाष्योक्तार्थं वदन्त आशङ्कामाहुः नन्वित्यादि । सर्वं ब्रह्मेत्युपासकः परं ब्रह्माप्नोति इत्यर्थोक्तावित्यर्थः । न कोपीति यद्यपि प्राप्यस्य ब्रह्मणः उपासकाद्भिन्नत्वेन भवनमुक्तं तथापि माध्यवर्णिकं ब्रह्म जीवाद्व्यतिरिक्तं नापि तु तस्यैवोपासकस्याविद्यालेशशून्यं निर्विशेषचिन्मात्रैकरसस्वरूपं तदेव 'सत्यं ज्ञानमनन्तं ब्रह्म' इति मन्त्रेणोच्यते । अग्रे 'यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह' इत्यनेन वाङ्मनसयोरगोचरत्वस्योक्तेरिति दोषोपि नेति न कोपि दोष इत्यर्थः । व्याख्यानव्याख्येयेति । तथा चोपनिषद्भाष्यं ब्रह्मविदिति ब्रह्म वेद ब्रह्मैवेति वक्ष्यमाणलक्षणं बृहत्तमत्वात् ब्रह्म तद्वेत्तीति ब्रह्मविदाप्नोति परं निरतिशयं तदेव ब्रह्म परं नह्यन्यस्य विज्ञानादन्यस्य प्राप्तिरिति । साधनेत्यादीति 'धर्मादिष्वनियमः' इत्यनेन 'अल्पाच्तरं पूर्वम्' इत्यस्य बाधादेवं प्रयोगः । धर्मादिश्चाकृतिगणः । ब्रह्मज्ञानं साधनं परप्राप्तिः साध्या सापि ज्ञानात्मिकेत्येकस्य साधनसाध्यभावव्याहतिश्चेत्यर्थः । व्याख्यानव्याख्येयभावेपि तन्मतेन साधनसाध्यभावमाश्रित्य निषेधन्ति न च शाब्देत्यादि । प्रत्यक्षेति शाब्दपरोक्षापत्त्या तथा । साधनान्तरेति संन्यासयोगरूपसाधनान्तरासमवधानात् । अत्रेति श्रुतावित्यर्थः । अन भीत्यादि छान्दोग्ये आत्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्येति गार्हस्थ्यलिङ्गाद्वेदान्तविज्ञानसुनिश्चितार्थानां पुंसां तदनिषेधे गृहस्थानां ब्रह्मलोके

अतः परं विशेषतस्तद्विवक्षमाणानुभवैकगम्यं तत्स्वरूपं नान्यमानगम्यमिति ज्ञापयितुमन्यमुखेनाह 'तदेषाभ्युक्ता' इति। अन्यथा सर्वार्थतत्त्वप्रतिपादिका श्रुतिरेवं कथं वदेत्। तदित्यव्ययम्। तथाच तत् पूर्वोक्तं ब्रह्मविदः परप्राप्तिलक्षणमर्थं विशदतया प्रतिपाद्यत्वेनाभिमुखीकृत्योपगृह्य ऋगेषा विदितपरब्रह्मकैरुक्ता । पूर्ववाक्योक्तार्थस्य वैशद्यमनया क्रियत इत्यर्थः संपद्यते।

भाष्यप्रकाशः ।

स्यात्। 'यमेवैषः' इति श्रुत्या साक्षात्कारस्य वरणेतरसाधनानधीनत्वाच। साधनान्तरकल्पनायामपि पूर्वोक्तरीत्या परशब्दवैयर्थ्याच । अत उक्तविधस्यैवार्थस्यात्र संक्षेपत उक्तिरेवेति निश्चयः। एवं सामान्यत उक्तिं तथैव व्याख्याय विशेषतो व्याख्यातुं सामान्यविशेषभावे गमकाकाङ्क्षायां व्याख्यानव्याख्येयभाव एव गमक इत्याशयेनाहुः अतः परमित्यादि। अन्यथेति व्याख्यानत्वाभावे, परस्य तत्प्राप्तेश्चानुभवैकवेद्यत्वाभावे च । एवमिति अन्यमुखेन । अव्ययमिति हेतुपञ्चम्यन्तमव्ययम्। श्रुतिव्याख्यानगतं तत्पदं त्वर्थाध्याहृतमर्थविशेषणत्वाय वाऽव्ययमित्यु-

रश्मिः ।

परामृताद्धिरण्यगर्भमोक्षात् मोक्षानापत्तेः। तथा सति 'न स पुनरावर्तते' इति छान्दोग्यविरोध इति तथा। भाष्ये। काण्डद्वयेपीत्यादिना गृहस्थाधिकारस्य पूर्वकाण्डसिद्धस्यापि संग्रहात्। परमहंसयतीनां तु गार्हस्थ्यमपि प्राप्तं चेत् पारिभाषिकसंन्यासो गृहस्थानां यथा। 'काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः' इत्यादि गीतायाः। अत्र हेतुमाहुः अनुपदेशेनेति 'वेदान्तविज्ञानसुनिश्चितार्थाः' इत्यत्रोक्तगार्हस्थ्यस्य तैत्तिरीयेनुपदेशेन तथा साधनान्तरत्वाभावनिश्चयात् । अनुपदेशेप्यपेक्षितोपसंहार एकवाक्यतयोचित एवेत्यत आहुः यमेवेति। वरणेतरेत्यादि प्रमेयबलमेवैतत्। वरणं वैदिकमनुग्रहो वेदान्तः। नन्वस्तु तत्र तथापरमत्र तु ब्रह्मविदिति साधनोपदेशेन भक्तिरूपसाधनत्वव्यापारत्वेन निवेशस्यावश्यकत्वाद्वक्ष्यतेर्वेदान्तविज्ञानसुनिश्चितार्थानां संन्यासयोगाच्छुद्धसत्त्वानां प्राकट्यात् तद्वत्काण्डद्वयेपीत्यादिभाष्यादस्माभिरपि साधनान्तरं कल्प्यत इत्यत आहुः साधनान्तरेत्यादि। पूर्वेति अत्रैव पूर्वोक्तरीत्या चेति । अत्र व्यवहारे मार्ग्गत्वाभावेन निहितं गुहायामित्यस्याग्रे ब्रह्मणाश्नुते एकीभवतीत्युक्तं स्यात् न तु परमे व्योमन्नित्यादिरुपनिबद्धः स्यात्। अतः स्वमते पुष्टिमर्यादाभक्तफलं वक्तीति युक्तम्। 'ब्रह्मविद्ब्रह्मैव भवति' इत्यत्र ज्ञानफलमिति चकारार्थः। अत उक्तेति मार्गवदर्थवादत्वाभावादक्षरब्रह्मविदः पूर्णानन्दप्राप्त्युपदेशरूपस्यैवेत्यर्थः । ब्रह्मविद्ब्रह्मैव भवतीति श्रुतेर्ज्ञानमार्गस्य सावकाशत्वाद्भक्तिमार्गस्य निरवकाशत्वादेवकारः। अत्रेति ब्रह्मविदाप्नोति परमितिमात्रे। उक्तिरेवेत्येवकारेण व्याख्यानत्वव्यवच्छेदः। निश्चय इति । शब्दादपरोक्षस्य सर्वनिर्णये मर्यादाभङ्ग एव स्यादित्यादिना दूषितत्वादितोधिकाकाङ्क्षिणा स द्रष्टव्यः। सामान्यविशेषेत्यादि तदेषाभ्युक्तेति श्रुतेरित्यर्थः। एवेति एवकारोप्यर्थकस्तेन तदेषाभ्युक्तेति श्रुतेरपि सामान्यविशेषभावे गमकत्वं द्रष्टव्यम्। अन्येत्यादि विदितपरब्रह्ममुखेनेत्यर्थः। यद्यपि श्रुतं नारदमुखादित्यन्यमतत्वं संभाव्यते तथापि पुरुषविधब्राह्मणवत्तद्वा एतद्विदितं मीमांसितमिति श्रुत्यायमर्थः साधुः। श्रुत्यर्थस्तु एतदित्यस्य यथोक्तकर्मणामवश्यकर्तव्यत्वं, विदितमित्यस्य भूतयज्ञो मनुष्ययज्ञः पितृयज्ञो देवयज्ञ ऋषियज्ञश्चेति पञ्चमहायज्ञप्रकरणे विदितं विज्ञातमित्यर्थः। भाष्ये। तत्पदं द्वितीयान्तत्वेन व्याख्यातं तत्तात्पर्यमाहुः श्रुतिव्याख्यानेत्यादि । अध्याहारदोषादाहुः अर्थेत्यादि । अर्थशब्दस्य नियतपुंलिङ्गत्वादिति

तामेवाह । 'सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' । सोपपत्तिकमानन्दात्मकत्वमग्रे निरूपणीयमित्यधुना तदनिरूप्य सच्चिदंशौ देशकालापरिच्छिन्नत्वं चोक्तवती ।

अथवा, अक्षरब्रह्मण्यानन्दात्मकत्वे सत्यपि तस्य परिच्छिन्नत्वान्न परमफलत्वमत आनन्देऽपरिच्छिन्नत्वमेव परमफलतावच्छेदकमिति तद्धर्मपुरःसरं

भाष्यप्रकाशः ।

क्तम् । तथाच संपूर्णा ऋक् फलांशविवरणार्थैवेति संपद्यत इत्यर्थः । तामित्यादिना ऋचं पठित्वा व्याकुर्वन्ति सोपपत्तिकमित्यादि । एवमग्रे फलनिरूपणावसरे निरूपणीयमित्यधुना साधननिरूपणावसरे सोपपत्तिकमनिरूप्य सत्यज्ञानपदाभ्यां सच्चिदंशावनन्तपदेन देशकालापरिच्छिन्नत्वं च ज्ञेयस्य ब्रह्मणः साधनशेषत्वायोक्तवतीत्यर्थः । एवं पूर्ववर्णकस्यास्य ज्ञेयांशे कारणत्वायानन्दांशमप्रवेश्येत्यस्य संग्रहाय तदाशयो विशदीकृतः । तेन ब्रह्मत्वे तुल्येऽपि क्षरस्य देशकालापरिच्छिन्नत्वाभावान्न विवक्षितफलसाधनशेषत्वम् । अक्षरस्य तु तदपरिच्छिन्नत्वात् तादृशसाधनशेषत्वमिति बीजं प्रकाशितम् ।

अतः परं प्रस्तूयमानवर्णकरीत्या विवक्षितफलविवरणार्थमत्रानन्दांशप्रवेशं वक्तुमनन्तशब्दस्यार्थान्तरमाहुः अथवेत्यादि । परिच्छिन्नत्वादिति गणनया परिच्छिन्नत्वात् । एवमत्र

रश्मिः ।

भावः । तथा च तदिति तं द्वितीयान्तं न पञ्चम्यन्तमस्मिन् पक्षे । भाष्ये । विदितपरब्रह्मकैरिति 'तासां मे पौरुषी प्रिया' इति पुराणद्वारा पुरुषविधब्राह्मणाङ्गीकर्तृभिः स्वस्या अक्षरं ब्रह्म परमं स्थानमिति स्वोत्कृष्टैरित्यर्थः । तेन यदध्येतृभिरिति परैरुक्तं तदसंभवि । अध्येतृणामसामर्थ्यादिति बोधितम् । प्रकृते । फलांशेत्यादि फलं चांशश्च फलांशौ तयोर्विवरणार्थेत्यर्थः । यद्यप्याह ससाधनमित्यस्य पूर्ववाक्योक्तार्थस्य वैशद्यमनया क्रियते इत्यस्य च भाष्यस्य विरोधः स्यात् तथाप्यनुभवैकगम्यं तत्स्वरूपमित्याद्याभासभाष्यानुसारेणाह ससाधनमिति । पूर्वोक्तस्य भाष्यस्य अथवेत्यादिवक्ष्यमाणद्वितीयपक्षानुमानाभासत्वं पूर्ववाक्योक्तार्थस्येति भाष्यस्य फलांशप्रतिपादकत्वस्येत्यर्थः । इत्यविरोधः । साधिष्ठानमेव तत्स्वरूपमिति 'आदित्यादिमतयश्चाङ्ग उपपत्तेः' इति सूत्रभाष्ये तु द्वितीयपक्षानुसारी नेति । तामित्यादि अत्र कर्ता भगवान् 'वेदान्तकृत् वेदविदेव चाहम्' इति स्मृतेः । साधनेत्यादि फलांशे निरूपणीये साधनत्वेनाधिष्ठानरूपसाधनत्वेन स्वरूपे प्रतीतं साधनं तस्य निरूपणावसर इत्यर्थः । फलांशनिरूपणे साधननिरूपणमन्यथासंगतं स्यात् । एवमेव ज्ञेयस्येत्यादिकं स्वरूपे प्रतीतं ग्राह्यम् । एवं पूर्वेत्यादि फक्किकातात्पर्यं तु ज्ञेयम् । पूर्ववर्णके ब्रह्मविदाप्नोतीत्यस्य विषयवाक्यत्वाभावात् । तथाहि । ननु फलांशे वर्णनीयानन्दाप्रवेशो नैव युज्यते यतः आनन्दत्वेन फलत्वमिति चेत्तत्राहुः एवं पूर्वेति । पूर्वोक्तप्रकारेण पूर्वं वर्णकं यस्य भाष्ये वक्ष्यमाणवर्णकस्य द्वितीयस्य तस्यास्येत्यादिरतः फलांशेप्यदुष्टो निरानन्दपक्ष इति । तदाशय इति शंकरमतमपाकर्तुं निरानन्दपक्षो ज्ञानमार्गे इति तथेत्यर्थः । तुल्येपीति क्षरस्य सत्त्वेन ब्रह्मत्वमक्षरस्य तु चित्त्वेनेति तयोरंशत्वात्तुल्येपीत्यर्थः । तदपरिच्छिन्नत्वादिति अक्षरात्मकेऽपरिच्छिन्ने सत्येव हृदि परस्यापरिच्छिन्नस्य प्रादुर्भावात्तथेत्यर्थः । फलविवरणार्थमिति आप्नोति परमित्येतावत्फलस्य सत्यमित्यादिनैव विवरणार्थमित्यर्थः । गणनयेति 'ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्दः' इति श्रुतेः । परिच्छिन्नत्वादिति ।

परमानन्द एवानन्तशब्देनोच्यतेऽत्र । 'सत्यं विज्ञानमानन्दं ब्रह्म', 'सच्चिदानन्द-विग्रहम्' इत्यादिश्रुतिषु त्रयाणामप्येकप्रक्रमपठितत्वात् द्वितयोक्तौ तन्नियत-सहचरितत्वेनाऽनुक्तोऽप्यानन्दः प्राप्स्यत एवेत्याशयेन वानन्दः स्फुटतया नोक्तः। अथ वेदनपदार्थमाह । यो वेदेत्यादिना । अत्रेवमाकूतम् । 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वाम्' इति श्रुत्या वरणेतरसाधनाप्राप्यत्वमुच्यते ।

एवं सति श्रुतिद्वयविरोधपरिहारायाक्षरब्रह्मज्ञानेनाविद्यानिवृत्त्या प्राकृत-धर्मराहित्येन शुद्धत्वसंपादनेन पुरुषोत्तमप्राप्तौ स्वरूपयोग्यता संपाद्यते । तादृशो जीवे स्वीयत्वेन वरणे भक्तिभावात् सहकारियोग्यतासंपत्त्या पुरुषोत्तमप्राप्ति-

---

भाष्यप्रकाशः ।

वेद्यपदार्थो गणितागणितानन्दभेदेन द्वेधा विवृतः । अनन्तरूपमिति श्रुत्यन्तरादत्राप्यनन्तपदं रूपानन्त्यवाचकमेवास्तु । तथा सति नानन्तपदेन परमानन्दलाभ इत्याशङ्क्य पक्षान्तरमाहुः सत्यं विज्ञानमित्यादि । अथेति वेद्यनिरूपणोत्तरम् । नन्वेवं द्वेधा वेद्यव्याख्याने किं बीजमित्याकाङ्क्षायामाहुः अत्रेत्यादि । इदमाकूतमिति । वरणेतरसाधनाप्राप्यत्वमिति अत्र प्रवचनपदं वेदे रूढम् । तदत्र वाच्यतासंबन्धेन तदुक्तसाधनान्युपलक्षयति । मेधा धारणावती बुद्धिः सा च पुरुषनिष्ठस्वाभाविकसाधनानि श्रुतं चागन्तुकानि साधनानीति । तथा च वेदन-व्याख्यानांश इदं वक्ष्यमाणं तात्पर्यम् । एवं सतीति व्याख्येये यजुषि वेदनप्राप्यत्व उक्ते सति । सहकारियोग्यतासंपत्त्येति सहकारियोग्यतयोः संपत्त्या । तथाच वरणाभावे ज्ञानमार्गरीत्या

रश्मि ।

अतोऽत्राक्षरं नोच्यत इति भावः । द्वेधेत्यादि प्रकाशाश्रयन्यायेनाभेदमाश्रित्य द्वेधा विवृत इत्यर्थः । यद्यप्यक्षरनिरूपणमप्रयोजनं तथापि श्रुत्यन्तर आनन्दमात्रपदान्निरूपितम् । एवेति अयमानन्दव्यव-च्छेदकः । सत्यं विज्ञानमित्यादीति यद्यपि सर्वोपनिषदि 'सत्यं ज्ञानमनन्तमानन्दं ब्रह्म' इति श्रुतिरस्ति तथापि स्पष्टेति नानावादानुरोधिरूपोपयोगिनी न भवतीति पद्मपुराणीयवाक्येन यमुना-जित्परामप्यर्थाक्षिप्तत्वेन तस्यास्तामङ्गीचक्रुरिति बोध्यम् । किं बीजमिति पूर्वं प्रकाशाश्रयन्यायसूचनेन बीजस्योक्तत्वेपि विशेषजिज्ञासायां प्रश्नः । रूढमिति 'प्रवचनं स्मृतं वेदे' इति विश्वात् । योगरूढमिति वक्तव्ये नामैकदेशग्रहणम् । अत्र वाच्यतासंबन्धो लक्षणा । अग्रे तु स्थलद्वये सामानाधिकरण्यसंबन्धो लक्षणेति ज्ञेयम् । श्रुतं चेत्यादि 'श्रुतं शास्त्रावधृतयोः' इति विश्वात् । शास्त्रान्तरवाच्यान्या-गन्तुकानि साधनानि इति तथा वरणेतरसाधनाप्राप्यत्वम् । उच्यत इति शेषः । वेदनेत्यादि अत्रेति पदस्यार्थः । तात्पर्यमिति आकूतपदस्यार्थः । व्याख्येय इति साधनांशव्याख्यानेत्र व्याख्येये । वेदनप्राप्यत्व इति अक्षरब्रह्मवेदनस्य सत्यं ज्ञानमित्यारभ्य यो वेद निहितं गुहायामित्यन्तस्य न परमे व्योमन्नित्युक्तसाधनशून्यस्य परप्राप्तिसाधकत्वमदृष्टत्वादिति साधनान्तरोपलक्षकता श्रुत्यन्तरस्वारस्यात् । वरणजभक्तिस्तु न साधनान्तरमपेक्षतेऽश्रुतत्वादित्येवं पूर्वोक्तसाधनांशव्याख्येयवेदनप्राप्यत्वप्रकारे सतीत्यर्थः । सहकारीति सहकारिणी भक्तिः । योग्यताऽविद्यानिवृत्त्या शुद्धत्वम् । भावाः कारणानि परप्राप्तौ । सिद्धमाहुः तथाचेति निर्णीयत इत्यन्तभाष्येण 'यो वेद निहितं गुहायाम्' इत्यन्तर्गर्भः उक्तः । तन्नोपासनया शुद्धत्वं निरूप्यते न कर्मणा । एवं चाक्षरब्रह्मज्ञानेनेतस्य भाष्यस्य न श्रब्दापरो-

भवतीति निर्णीयते । तदैव गुहायां परमव्योमाविर्भावः । परो मीयते दृश्यतेऽनेनेति तथा । ज्ञानमार्गीयजीवज्ञेयप्रकारकाद्वैशिष्ट्येनापि तथा । परमव्योम्नोऽत्यलौकिकत्वज्ञापनायालौकिकः प्रयोगः कृतः ।

भाष्यप्रकाशः ।

ज्ञानप्रधानतया ब्रह्मज्ञानं, वरणे तु भक्तिमार्गरीत्याऽऽनन्दप्रधानतया ब्रह्मज्ञानं, येन परप्राप्तिरिति वेद्यस्य द्विधाविर्भाव एव द्विधा व्याख्याने बीजमित्यर्थः । अस्या ऋच एवं निर्णायकत्वे गमकमाहुः तदैवेत्यादि । कृत इत्यन्तम् । तथाच श्रुत्यन्तरे वेद्यनिरूपणे हार्दाकाशविशेषण-

रश्मिः ।

श्लोकेनेत्यर्थः पूर्वदूषणान्नापि सर्वं खल्विदं ब्रह्मेति श्रुत्युक्तेनेत्यर्थः भक्तिकारणत्वात् । किं तु यथा यथा परिमृज्यत इति श्लोकोक्तेनेत्यर्थः । न च तत्र न ज्ञाननिरूपणं किं तु ज्ञानाङ्गभक्तिनिरूपणमिति वाच्यम् । 'अच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम्' इति वाक्ये केवलज्ञाननिषेधात् । ज्ञानं फलं न तु साधनमिति च । ततः कार्यकारणभावादविद्यानिवृत्त्या तज्जन्यधर्मराहित्येन । शुद्धत्वेनेत्यादि आध्यात्मिकशुद्धान्तःकरणे सत्यलौकिकत्वेन 'दिव्यमन्त्रेण बहुशः कुर्यादात्ममलच्युतिम्' इत्यमृतबिन्दूपनिषच्छ्रुतेः । स्वरूपेति भुक्तोपसृप्यव्यपदेशादिति सूत्रात् । एवं ज्ञानमार्गरीत्येत्यर्थः । ब्रह्मज्ञानमिति अक्षरज्ञानम् । तदा तु

'ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्' ॥

इति गीतायाः भक्तिद्वारा परप्राप्तिः । साधनांशविवरणे श्रुतिविरोधपरिहारायाहुः वरणे त्वित्यादि । भक्तिमार्गेत्यादि भक्तिमार्गः श्रवणादिसरणिरूपस्तत्र तत्र ग्रन्थेषु प्रसिद्ध एव । प्रकारभेदेन 'भक्तिमार्गो बहुविधः' इति वाक्यात् । स भाष्ये पुष्टिमर्यादाभेदेन वरणे भक्तिभावः पुष्टिः । साधनैः सहकारिणो भक्तिरूपस्य योग्यताया आधिदैविकशुद्धत्वरूपायाः संपत्त्या, 'यथा यथात्मा परिमृज्यतेसौ' इति वाक्याद्भक्तिशुद्धत्वयोः पूर्वापरीभावः, तदनु शुद्धत्वे पूर्वोक्तो भक्तिभावपदैकदेशभावस्याभिव्यक्त्या पुरुषोत्तमेत्यादिः । 'तथा तथा पश्यति वस्तु सूक्ष्मम्' इति वाक्यात् । भावः सर्वात्मभावान्तर्गतो दानसाध्य इति पुनर्भाष्ये नोक्तः । अनया भक्तिमार्गरीत्येत्यर्थः । नन्वेकादशस्कन्धीयान्याध्यायोक्तभक्तिमनादृत्य कुत आज्ञाशेषभक्तिमार्गादर इति चेन्न । निबन्धे त्रयोदशे हंसकृतनिर्णयः सर्वसंमतः 'एवं विमृश्य' इत्युक्तः । तद्भक्तिस्वरूपं स्वरूपलाभः । सोपि चतुर्दशे ज्ञानशेषभक्तिनिरूपणनिरूपितो भविष्यत्यतस्त्रयोदशाध्यायनिर्णयार्थं प्रवृत्तत्वात् ।

'अन्यच्चेच्छ्रेय एतादृक् उपायो वा भवेत्तदा ।
न कृष्णत्वं फलं पूर्णं नापि त्यागस्तथोभयोः' ॥

उभयोरिति गुणचेतसोः । ब्रह्मज्ञानमिति साधनशेषाक्षरब्रह्मज्ञानमित्यर्थः । ( सर्वात्मभावचरमवृत्तिरूपम्, तृतीयाध्याये लिङ्गभूयस्त्वाधिकरणे स्पष्टम् )

'भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्' ॥

इति गीतोक्ता परप्राप्तिः । वेद्यस्येति ब्रह्मविदित्युक्तस्य सत्यज्ञानमित्यादिना विवृतस्य वेद्यस्य ज्ञानप्राधान्येन आनन्दप्राधान्येन च द्विधाविर्भाव इत्यर्थः । एवमिति साधनान्तरीयपररूपाक्षरचिदानन्दः परमाप्नोति न तु अक्षरविदित्येवमित्यर्थः । तदैवेत्यादीति ब्रह्मभावकाल इत्यर्थः । ब्रह्मभूतस्य भक्तिकथनात् । श्रुत्यन्तर इति । 'अथ यदिदमस्मिन्' इत्यस्यां दहराधिकरणीयायां वेद्यनिरूपणे

भाष्यप्रकाशः ।

त्वेन परमादिपदाभावोऽत्र तु तत्सद्भाव इत्येव गमकमित्यर्थः । यत आकारायुधादिलिङ्गानां व्यूहेष्ववतारेषु च सत्त्वात् पुरुषोत्तमत्वं तैर्निश्चेतुमशक्यम् । अक्षरस्थितत्वज्ञाने तु निश्चेतुं शक्यमतोऽक्षरात्मकस्य व्योम्नः परमत्वम्,

'अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।
यं प्राप्य न निवर्तन्ते तद्धाम परमं मम' ॥

इति गीतावाक्यस्वारस्यात् । तस्य परमव्योमत्वं तु, 'ऋचो अक्षरे परमे व्योमन्', 'यदक्षरे परमे व्योमन्' इत्यादिश्रुतिभ्योऽवगन्तव्यम् । नचाव्यक्तपदादक्षरपदं प्रकृतिवाचकमिति शङ्क्यम् । 'यं प्राप्य न निवर्तन्ते' इति मुक्तिस्थानत्वरूपलिङ्गविरोधात् । प्रकृतिं प्राप्तानां तु पुराणे प्रकृतिचिन्तकानधिकृत्य, 'पूर्णं शतसहस्रं तु तिष्ठन्ति विगतज्वराः' इति वाक्येन तदुत्तरं पुनरावृत्तिबोधनात् । 'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च' इति पुरुषत्वोक्तिविरोधाच्च । अव्यक्तत्वं त्वक्षरीयमेव प्राथमिककार्यत्वात् प्रकृतिगामि भवति । आकाशजन्ये वायौ नीरूपत्ववत् । न तु तत्प्रकृत्यसाधारणम् । अतोऽक्षराधिष्ठातृत्वं पुरुषोत्तमाऽसाधारणमित्यक्षरस्यैव

रश्मिः ।

पुरुषोत्तमनिरूपणे दहरः परमात्मा न जीव इति भाष्यादित्यर्थः । अत्र त्विति श्रुतौ तु तत्र हार्दाकाशे परमादिपदसद्भाव इत्यर्थः । व्यूहेष्वित्यादि प्रद्युम्नानिरुद्धसंकर्षणवासुदेवेष्वित्यर्थः । सोवतारो भवति यः सत्त्वरूपे स्वधाम्नि प्रविष्टः कार्यं करोति तेष्वित्यर्थः । अक्षरात्मेति तेनाक्षरं व्योम प्रकृतिः पुराणोक्ता इन्द्रः स्वराडिति पर्यायाः । इदं व्योम भूतानां छिद्रदातृ 'आकाशवत्सर्वगतश्च नित्यः' इति गीतोक्तम् । 'छिद्रा व्योम्नीव चेतनाः' । जीवा भिन्नाः । ततः परमत्वं भक्तिसाधनजन्यं परमत्वस्य भक्त्यन्तःपातित्वात् । अवगन्तव्यमिति । तथा चैतत्परमत्वस्यात्र संनिवेश इति भावः । प्रकृतीति सशङ्खचक्रो हरिरित्यत्र हरिशब्दस्य विष्णुवाचकत्ववत् । चेति तेन प्रधानमित्यपि नपुंसकं न पुरुषः । मुख्यकारणगता धर्माः कार्ये समायान्तीत्याशयेनाहुः अक्षरीयमेवेति । एवकारेण पुरुषोत्तमव्यावृत्तिः । न च 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्यत्राकाशोक्षर एव इति कथमात्मशब्दार्थपुरुषोत्तमव्यावृत्तिरिति शङ्क्यम् । आत्मन इत्यत्रोक्तरीत्यांशद्वयात् तत्र पुरुषोत्तमव्यावृत्तिः । 'अक्षरात्सोम्य विविधा भावाः प्रजायन्ते' इत्युक्तेनाक्षरव्यावृत्तिः । भक्तैः सह निगूढभावकरणातिरिक्तकार्याभावात् । नीरूपत्ववदिति आकाशे नीरूपत्वं तु आधेयतया रूपाभावात् । अन्यथा प्रस्थानरत्नाकरे वायौ नीरूपत्वं स्फुटं परं त्वाकाशे नीलो नास्ति नीलमाकाशं तु वरीवर्ति इति भणितं विरुद्धं स्यात् । एवं चारूपित्वे सति चालनव्यूहनद्रव्यशब्दगन्धनयनसर्वेन्द्रियबलदानाख्यकार्यत्वं लक्षणं सिद्धम् । अत्राकाशजन्यो नीलरूपो वायुर्न भाति चालनादिकार्याभावात् ।

'चालनं व्यूहनं प्राप्तिर्नेतृत्वं द्रव्यशब्दयोः ।
सर्वेन्द्रियाणामात्मत्वं वायोः कर्माभिलक्षणम्' ॥

इति स्पर्शतन्मात्रा । नीरूपे सति स्पर्शवत्त्वं स्वरूपलक्षणम् । न तु त्वदिति तदक्षरपदम् । प्रकृतीति त्वन्मते प्रकृतिसाधारणं परं तु प्रकृतिर्मायेन्द्रियरूपा पुराणमते त्रिगुणात्मिकेत्यक्षरपदं स्वयंप्रकाशासाधारणं न प्रकृतिसाधारणम् । अत इति प्रकाशासाधारणात् । अक्षरेत्यादि अक्षर-

रश्मिः ।

तदधिष्ठातृपुरुषोत्तमसाधारणमित्यर्थः । तृतीयाध्यायद्वितीयपादे तदव्यक्ताधिकरणे तथोक्तेः । पुरुषोत्तमेत्यत्र समासस्तु पञ्चमीतत्पुरुष इति केचित् । तन्न । तद्विधायकसूत्राभावात् योगविभागस्यागतिकगतित्वाच्च । पुरुषेषूत्तम इति सप्तमीसमास इत्यन्ये । तन्न । तथा सति सप्तमीसमासेन नरक्षत्रियशूरतम इति प्रयोगापत्तेः । न चेष्टापत्तिः 'न निर्धारणे' इति निषेधवैयर्थ्यापत्तेः । निर्धारणे तादृशप्रयोगस्यासाधुत्वज्ञापनेनैव तत्सार्थक्यात् । एके तु सप्तमीसमास एवायम् । निषेधस्य स्वरभेदनियामकषष्ठीसमासनिषेधफलकत्वात् । कैयटस्तु यतश्च निर्धार्यते यश्च निर्धार्यते यश्च निर्धारणे हेतुः तत्त्रितयसन्निधान एव निर्धारणषष्ठी, तत्रैव चायं निषेधः । पुरुषोत्तम इत्यत्र तु त्रितयसन्निधानाभावात् न निर्धारणविभक्तिः किं तु संबन्धसामान्ये षष्ठीति तया समासः । अत एव हलादिःशेष इतिसूत्रे किमयं हलामादिरिति षष्ठीसमास इति भाष्ये उक्तेः । गुणवचनेन निषेधस्त्वनित्य इति तरप् सूत्रे आह । अत्र जयरामः । उक्तत्रितयसंनिधौ तदङ्गीकारे नरशूरक्षत्रिय इति प्रयोगस्याप्युपपत्तेः । तत्त्रितयसंनिधानात् । अत एतादृशप्रयोगात् नराणां क्षत्रियः शूरतमः इत्यर्थे नरक्षत्रियशूरतम इत्यप्रयोगाच्च समासवाक्यादन्यतो निर्धारणनिर्धारणप्रयोजकरूपोपस्थितावेव समासनिषेधः । अतोऽत्र निर्धारणाभावात् न षष्ठीसमासनिषेधः । यत्र तु पुरुषाणामुत्तमः कृष्णस्तत्र तु कृष्णस्य विधेयत्वेन निर्धारणोपगमान्न समासः । विधेयस्यैव तन्निर्धारणप्रयोजकत्वस्वीकारात् ।

'नाथः सृजत्यवति यो जगदेकपुत्र-
प्रीत्या ततः परमनिर्वृतिमादधाति ।
तस्मै नमः सहजदीर्घकृपानुबन्धं
लब्धत्रितत्त्वतनवे पुरुषोत्तमाय' ॥

इति लीलावत्यां यः सृजति तस्मै पुरुषोत्तमाय नम इति तत्प्रयोजकरूपोपस्थितावपि न क्षतिरित्याह । नागोजिभट्टास्तु 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इति स्मृतिस्वारस्यात् कर्मधारय एव राजदन्तादित्वादुत्तमशब्दस्य परनिपात इत्याहुः । एतदेव च युक्तम् । 'एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' इतिश्रुतिस्वारस्याच्च । अत्र वदन्ति । कर्मधारयसमासे उत्तमपुरुष इति प्रयोगापत्तिः । जातिविशिष्टवाचकस्य गुणक्रियाविशिष्टवाचकयोगे जातिविशिष्टप्राधान्यनियमात् नीलोत्पलमित्यादौ तथादर्शनात् । अन्यत्र त्वनियमः । यथा खञ्जकुब्जः कुब्जखञ्जः इत्यादौ तदपि पूर्वोक्तस्मृतिस्वारस्यात् तादृशनियमस्यैतदतिरिक्तस्थले एव स्वीकारात् परास्तम् । उत्तमपुरुष इति प्रयोगानापत्तिस्तु राजदन्तादित्वादुत्तमशब्दस्येत्युक्तम् । यद्यपि कैयटजयरामोक्तषष्ठीसमासपक्षे पुरुषतादात्म्यवानुत्तम इति बोधः । षष्ठ्यास्तादात्म्यार्थकत्वात्तथापि तादात्म्यस्य भेदसहिष्णुरभेदोऽर्थ इत्यभेदबोधकस्यत्युपपत्त्यर्थं कर्मधारय एव युक्त इति बोध्यम् । 'स आत्मानं स्वयमकुरुत' इत्यत्र तादात्म्यं भेदघटितं चेद्विभक्तसदृशो भेदपदार्थः । 'विभक्तमिव च स्थितम्' इति गीतावाक्यात् । भाष्ये । तथेति परमते नास्ति । ज्ञानमार्गीय इत्यादि । अत्रायं परमार्थः । 'आनन्दांशप्रकाशाद्धि ब्रह्मभावो भविष्यति' इत्यस्य तत्त्वदीपे तिरोहितस्याविर्भावे ब्रह्मभाव इति प्रतिपादनाज्ज्ञानमार्गे पराभिध्यानसूत्रोक्तरीत्या जीवे तिरोहितो य आनन्दस्तस्याविर्भावेऽक्षरात्मकतया जीव एव ज्ञेयः । अत्र तु तत्र पुरुषोत्तमाविर्भावकथनेन न ततो वैलक्षण्यमिति । एतदेवं सतीत्यारभ्य निर्णीयत इत्यन्तेनोक्तम् । तत्र तिरोहितानन्दाविर्भावे

'भक्त्याऽहमेकया ग्राह्यः' 'नाहं वेदैः' इत्युपक्रम्य, 'भक्त्या त्वनन्यया शक्यः' इत्यादिस्मृतिरप्येवमेव संगच्छते । अन्यथा ज्ञानमार्गिणामपि ब्रह्मविदां परप्राप्तिः स्यान्न त्वेवम् ।

'मुक्तानामपि सिद्धानां नारायणपरायणः ।
सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने ॥
तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ।
न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह' ॥

भाष्यप्रकाशः ।

तद्धर्मकत्वमिति हृदयम् । ननु वरणपदार्थो लक्षणया ज्ञापनात्मको ग्राह्यो न तु रूढोऽङ्गीकारात्मक इति नात्र भक्तिनिवेशे किंचिद् बीजं पश्याम इत्याशङ्कायां स्मृत्या स्वोक्तमुपष्टभ्नन्ति भक्त्येत्यादि । एवमेवेति वरणपदस्याङ्गीकारपरत्व एव । विपक्षे बाधकं तर्कमाहुः अन्यथेत्यादि । न त्वेवमिति न ज्ञानमार्गिणां विवक्षितलक्षणा परप्राप्तिः । एवमृचो निर्णायकत्वमुपपाद्यैवंप्रकारकज्ञानस्य

रश्मिः ।

निवेशनीयः । अलौकिक इति परमे व्योमन्निति रूप इत्यर्थः । प्रकृते । लक्षणयेति ज्ञानाङ्गीकारयोर्जन्यजनकभावसंबन्धो लक्षणा । रूढ इति तेन न वृत् संभक्तौ इत्यस्य भक्तिनिवेशबीजस्य प्राप्तिरिति नात्र भक्तिरित्यादिः । उपष्टभ्नन्तीति व्यासचरणैः स्मृतेश्चेति सूत्रेण स्वोक्तोपष्टम्भनात् ।

'कृष्णवाक्यानुसारेण शास्त्रार्थं ये वदन्ति हि ।
ते हि भागवताः प्रोक्ताः शुद्धास्ते ब्रह्मवादिनः' ॥

इति शास्त्रार्थबोधोपष्टभ्नन्तीत्यर्थः । भक्त्येत्यादीति । 'न ज्ञानं न च वैराग्य'मिति । न च 'ज्ञानी त्वात्मैव मे मतः' । 'जनयत्याशु वैराग्यम्' इति वाक्ये भगवदाविर्भावकारणं वैराग्यकारणं भक्तिरिति भक्तिप्राप्यवैराग्यं च कुतो न प्रायः श्रेयः इति वाच्यम् । काठकोक्तब्रह्मविषयिण्यां मत्यां तर्कपरित्यागापत्तेः 'नैषा तर्केण मतिरापनेया' इति काठकश्रुतिः । न हि तर्केणाश्चर्यरहितेन तिरोहितसदानन्दसद्रूपेण घटादिज्ञानं पारमार्थिकं भवति । आश्चर्यवतो भक्तस्य तु भवति । एवं वैराग्येऽक्षरात्मकप्रतिकृतिवैतृष्ण्ये तदाविर्भूतपुरुषोत्तमावज्ञापत्तेः । अङ्गीकारेति अङ्गीकारपरत्वे सति भक्तिमार्गीयत्व एवेत्यर्थः । परप्राप्तिरिति तेन 'नायमात्मा' इति श्रुतौ भक्तिनिवेशे उपपत्तिरुक्ता भवति । अत एव वाराहे सप्तविंशे ।

'ज्ञानादेव तु कैवल्यं प्राप्यते नान्यथा तु यत् ।
इति वेदवचः स्फीतं गीयते विदुषां गणैः ॥
श्रवणानन्तरं कार्यं मननं भक्तिपूर्वकम् ।
ततो ध्यानं प्रकुर्वीत ततः साक्षाद्भवेद्धरिः' ॥

इति ज्ञानात्केवलभक्त्या कैवल्यमिति 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुतौ च भक्तिनिवेशः स्फुटमुक्तः । श्रुतिरप्येवमाह 'स्वप्रभं सच्चिदानन्दं भक्त्या जानाति चाव्ययम्' इति वासुदेवोपनिषदि । एवमृच इति वरणद्वारा ऋचः । एवंप्रकारेत्यादि अक्षरत्वप्रकारकज्ञानस्य । फलयोगौणत्वादित्यर्थः । भाष्ये । गुहायामित्यारभ्य यो वेदेत्यन्तःसंदर्भो

1. अन्तरा प्रतिबन्धः नद्यन्तो निषेधार्थकः कृप्रसवोभयार्थः । अप्रतिबन्धे भवत्तं तस्मात् सार्थे कः (इति नान्तरीयकव्याख्यातिः) ।

इत्यादिवाक्यैः। एतदेवाह। गुहायां हृदयाकाशे यदाविर्भूतं परमं व्योमाक्षरात्मकं व्यापिवैकुण्ठं, तस्य पुरुषोत्तमगृहरूपत्वात् तत्र निहितं स्थापितमिव वर्तमानं यो वेद स भक्तो ब्रह्मणा नित्याविकृतरूपेण विपश्चिता, विविधं पश्यचित्त्वं हि विपश्चित्त्वम्। पृषोदरादित्वात् पश्यच्छब्दावयवस्य यच्छब्दस्य लोपं कृत्वा व्युत्पादितो विपश्चिच्छब्दः। तेन विविधभोगचतुरेण सह सर्वान् कामानश्नुत इत्यर्थः। एतेन परप्राप्तिपदार्थ उक्तो भवति। शुद्धपुष्टिमार्गीयत्वादस्य भक्तस्य स्वातन्त्र्यं भोग उच्यते। सहभावोक्त्या ब्रह्मणो गौणत्वम्। अत एव भक्ताधीनत्वं भगवतः स्मृतिष्वप्युच्यते। 'अहं भक्तपराधीनः', 'वशे कुर्वन्ति मां भक्त्या' इत्यादिवाक्यैः।

यद्यप्यश भोजन इति धातोरश्नातीत्येव रूपं भवति, अशूङ् व्याप्ताविति धातोर्भवत्यश्नुत इति रूपं, विकरणभेदात् पदभेदाच्च। तथाप्यत्राश भोजन इति धातोरेव प्रयोग इति ज्ञायते। तथाहि। अत्राशनक्रियायां ब्रह्मणा सहभाव उच्यते। तथाच व्याप्त्यर्थकत्वे ब्रह्मणा सहभूतान् कामान् व्याप्नोतीत्यर्थो भवत्यथवा ब्रह्मणा सह भूतः स जीवः कामान् व्याप्नोतीति। एतौ त्वनुपपन्नौ। न हि कामवज्जीवकर्तृकव्यापनक्रियाकर्मत्वं ब्रह्मणि संभवत्यतिमहत्त्वात्।

---

भाष्यप्रकाशः।

फलनान्तरीयकत्वादुत्तरार्धं सर्वमेव व्याकुर्वन्ति एतदेवाहेत्यादिना। एतेनेति ऋगुत्तरार्धेन। एतमर्थं स्मृत्योपष्टम्भन्ति अत एवेत्यादि। नचास्य नवमस्कन्धीयवचनस्य सात्त्विकांशभूतविष्णुवाक्यत्वेन पुरुषोत्तमवाक्यत्वाभावान्नोक्तार्थोपष्टम्भकत्वमिति शङ्क्यम्। तस्य भिन्नत्वेऽपि मूलपुरुषरूपनामलीलासाम्येनादोषात्। पराशरपुराणे—

'वैष्णवानि पुराणानि समस्तानि महामुने।
त्रिमूर्तीनां हरेर्नाम्ना मूर्त्या तस्य परं पदं प्रवदन्ति'॥

इति साम्यस्मरणादिति। उक्तेऽर्थेऽनुपपत्तिमुद्भाव्य परिहरन्ति यद्यपीत्यादि। व्युत्पादयन्ति तथाहीत्यादि। विपक्षोद्भावितयोरर्थयोराद्यं दूषयन्ति न हीत्यादि। कामवदिति सप्तम्यर्थे वतिः। अतिमहत्त्वादिति,

रश्मिः।

दहराधिकरणे स्फुटमुपपादितः। स्थापितमिवेति इवपदेनाक्षराधिकरणभाष्यविरोधः परिहृतः। दर्शनमात्रे परं विशेषात्। परप्राप्तिपदार्थ इति। अयं फलाध्याये स्फुटतर इति ततोवधेयः। शुद्धपुष्टीति एतन्मार्गद्वयं सहकार्यन्तराधिकरणे स्पष्टम्। शुद्धत्वं निवेदितात्मत्वं 'निवेदितात्मा विचिकीर्षितो मे' इतिवाक्यात्। ब्रह्मणो गौणत्वमिति 'सहयुक्तेऽप्रधाने' इति पाणिनिसूत्रात्। प्रकृते। त्रिमूर्तीनामित्यादि त्रिमूर्तीनां मध्ये हरेर्नाम्ना मूर्त्या च तस्य गुणावतारस्य परं पदं मुख्यं रूपं प्रवदन्तीत्यर्थः। अनुपपत्तिमिति श्नुरूपविकरणस्यात्मनेपदस्य च नानुपपत्तिमित्यर्थः। भाष्ये। कामानिति काम्यन्त इति कामा आनन्दादयस्तानित्यर्थः। भाष्ये। ब्रह्मणि संभवतीति ब्रह्मसाहित्यवदभिन्नान्कामानिति शाब्दबोधेन व्यापनरूपफलाश्रयत्वस्य विशेषणभूते ब्रह्मण्यपि

व्यापनं चात्र स्वाधीनीकरणमेव वाच्यम्। न हि कामानां तथात्वं स्वतः पुरुषार्थरूपम्। भोगशेषत्वात्तेषाम्। पूर्वोक्तपरप्राप्तिव्याकृतिरूपत्वाच्चास्य तथार्थोऽनुपपन्नः।

तेन अश भोजन इति धातोरेवायं प्रयोगोऽर्थस्यालौकिकत्वज्ञापनायालौकिकः प्रयोगः कृतः। 'व्यत्ययो बहुलम्' इति सूत्रेण छन्दसि तद्विधानात्, श्नाप्रत्ययपरस्मैपदयोर्व्यत्ययेन श्नुप्रत्ययात्मनेपदे जाते इति भोगार्थक एवायं धातुः एवमेव, 'न तदश्नोति कंचन, न तदश्नोति कश्चन' इत्यत्र प्रत्ययमात्रव्यत्ययेन प्रयोगोऽशधातोरेवेति ज्ञेयम्। अन्यथा सर्वव्यापकस्य ब्रह्मणस्तन्निषेधोऽनुपपन्नः स्यात्।

भाष्यप्रकाशः।

'एकः शुद्धोऽक्षरो नित्यः सर्वव्यापी तथा पुमान्।
सोऽप्यंशः सर्वभूतस्य मैत्रेय परमात्मनः' ॥

इतिवाक्यादित्यर्थः। द्वितीयं दूषयन्ति व्यापनं चेत्यादि। संयोगरूपव्यापनस्यापुरुषार्थत्वाद् व्यापकात्मवादिमते तस्य स्वतःसिद्धत्वाच्च तद्विधानासंगत्यापत्तेरत्र कामस्वाधीनीकरणरूपं तद् वाच्यम्। तेन कामप्राप्तिरेव व्याकृता भवति, न परप्राप्तिरिति सोऽर्थोऽनुपपन्न इत्यर्थः। एतेनैव, ब्रह्मणा करणभूतेन सर्वान् कामान् सहाश्नुते युगपद् भुङ्क्त इति योजनासिद्धोऽर्थोपि निरस्तो बोध्यः। भोगस्य सुखसाक्षात्कारातिरिक्तोदासीनज्ञानात्मकोऽर्थस्तु पूर्वमेव निरस्तः स चासंगत इत्यादिना। तेनोक्तैव योजना। अयमेव चार्थ इति निश्चयः। सिद्धमाहुः तेनेत्यादि। जाते इति प्रथमाद्विवचनम्। श्रुत्यन्तरेप्ययमेवार्थ इत्याहुः एवमित्यादि। तथाच तत्राप्यस्थूलादिलक्षणं ब्रह्म कमपि न भुङ्क्ते, कोपि ब्रह्म न भुङ्क्ते इत्येवार्थो वक्तव्यः। सकलप्रापञ्चिकधर्मनिषेधे प्रापञ्चिकभोगनिषेधकथनस्यापि युक्तत्वादित्यर्थः। एवं परप्राप्तिपदार्थे भोगरूपे व्याख्याते भोगलिङ्गात् परस्य सोपाधिकत्वे ब्रह्मवित्पदस्य सकामोपासकपरत्वं चापाद्य

रश्मिः।

सत्त्वेन कर्मत्वं ज्ञेयम्। प्रकृते। इत्यर्थे इति श्रुतिरपि 'यतो वाचो निवर्तन्ते' इति बृहत्त्वाद्बृंहणत्वाच्च ब्रह्मेति च। तथा च कामप्रदेशानां कर्मत्वप्राप्त्या कामानां कर्मत्वानुपपत्त्या लक्षणापत्तिरिति भावः। संयोगरूपेत्यादि। सिद्धान्त इति शेषः। सर्वदा सत्त्वेनापुरुषार्थत्वादित्यर्थः। अन्यसंमतिमाहुः व्यापकेति। भास्कराचार्यमते। स्वत इति द्रव्ययोः संयोगः प्रसिद्धः। अत्रेत्यादि द्वितीयव्याख्याने ब्रह्मणः कामविशेषणत्वाभावेन केवलकामस्वाधीनीकरणरूपमित्यर्थः। 'वशे कुर्वन्ति मां भक्त्या' इति वाक्यात्। अत एव भाष्य एवकारः। अनुपपन्न इति 'अकाम आत्मकाम आप्तकामः' इति श्रुतेः अनुपपन्नः। अकामत्वेन कामकामाभावात् कामप्राप्तेरभावात्। एतेनैवेति ब्रह्मावृत्तिकामस्वाधीनीकरणस्य परप्राप्तित्वाभावेनैवेत्यर्थः। तेनोक्तेति एवकारद्वयं वचनानामुक्तानामनुसंधानात्। प्रथमेत्यादि तेन धर्मधर्मिभेदेनोभयविधमप्यानन्दं भक्तोनुभवतीति निष्कर्षः। भाष्य एवकारस्तु 'परोक्षवादो वेदोयम्' 'परोक्षं च मम प्रियम्' 'परोक्षप्रिया इव हि देवाः' इतिवाक्यैः फलांशे परोक्षवादौचित्यात्। इत्येवेति एवकारेण व्यापनरूपार्थव्यवच्छेदः क्रियते। व्यापननिषेधेऽपसिद्धान्तात्। भोगस्य साधितस्य निषेधायोगादन्यभोगं निषेधन्ति सकलेत्यादि। आपाद्येति उपनिषद्व्याख्या ता आपाद्येत्यर्थः

१. ब्रह्मरहित।

ननु सकामोऽत्रोऽपासकस्तदुपास्यं च सगुणं ब्रह्म। द्वयोरपि कामोपभोगश्रवणात्। 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' इत्युपक्रम्य, 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्' इत्यादिनाऽन्यदर्शनादिनिषेधाद् ब्रह्मविदः कामोपभोगासंभवश्चेति चेन्मैवम्। तदेषाभ्युक्तेति वाक्येन पूर्ववाक्योक्तार्थनिरूपिकेयमृगित्युक्तत्वेन प्राकृतगुणसंबन्धस्य तत्र वक्तुमशक्यत्वात्। तथा सति ब्रह्मवित्प्राप्यत्वपरत्वयोरसंभवापत्तेः। नच वेद्यस्यागुणत्वमुत्तरस्य सगुणत्वमिति वाच्यम्। परत्वानुपपत्तेः। साधनशेषभूतस्यागुणत्वं तत्फलस्य सगुणत्वमित्यसंगततरं च। 'यद्धि पश्यन्ति मुनयो गुणापाये समाहिताः' इति श्रीभागवतवाक्येन गुणातीतपुंसां वैकुण्ठदर्शनाधिकार उच्यते यत्र तत्र किन्तु वाच्यं तत्परदर्शने।

यच्चोक्तं ब्रह्मविदो द्वैतदर्शनानुपपत्त्या कामभोगासंभव इति। तत्राप्युच्यते। यत्र त्वस्य सर्वमात्मैवाभूदिति श्रुतिरखण्डब्रह्माद्वैतभाने ब्रह्मविदः प्रापञ्चिकभेदादर्शनं वदति, न तु प्रपञ्चातीतार्थदर्शनं बोधयति निषेधति वा। पुरुषोत्तमस्वरूपं तु यावत्स्वधर्मविशिष्टं प्रपञ्चातीतमेवेति तद्दर्शनादौ किमायातम्। 'पुरुष एवेद५ सर्वं यद् भूतं यच्च भाव्यम्' इत्यनेन ब्रह्मात्मकत्वं प्रपञ्चस्योक्त्वैतदपि तस्य विभूतिरूपं पुरुषस्त्वितो महानित्याह, 'एतावानस्य महिमा

भाष्यप्रकाशः।

चोदयति ननु सकाम इत्यादि। तथाच वृथा पूर्वोक्ता चिन्तेति चोद्याशयः। तत्र समादधते मैवमित्यादि। तत्र हेतुमाहुः तदेषेत्यादि दर्शन इत्यन्तम्। एवं पूर्वदूषणं परिहृत्य द्वितीयं परिहर्तुमनुवदन्ति यच्चेत्यादि। समादधते तत्रापीत्यादि। किमायातमिति श्रुत्यविरोधात् किं दूषणमायातं, न किमपीत्यर्थः। ननु धर्मविशिष्टस्य पुरुषोत्तमस्य प्रपञ्चातीतत्वे किं मानमित्याकाङ्क्षायां तदुपपादयन्ति पुरुष एवेत्यादि। तथाचोक्तश्रुत्या प्रपञ्चाज्ज्यायस्त्वकथनेन तदतीतत्वमेव बोध्यतेतत्तथेत्यर्थः। एवं चोद्यनिराकरणेन पूर्वोक्तचिन्तायाः सार्थकत्वाय

रश्मिः।

दर्शन इत्यन्तमिति। आत्मबोधोपनिषद्यप्ययमर्थोऽनुभूयते 'ॐ नमो नारायणाय' इति मन्त्रोपासको 'वैकुण्ठं भगवल्लोकं गमिष्यति'इत्युक्त्वा 'अथ यदिदम्' इत्यादिनोपासनमुक्त्वा 'अस्माल्लोकादुत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वायामृतः समभवत्समभवत् यत्र ज्योतिरजस्रं यस्मिंल्लोके स्वर्हितं तस्मिन्मां धेहि पवमानामृजे लोकेऽक्षिते अमृते लोकेऽक्षिते अमृतत्वं गच्छत्यमृतत्वं गच्छत्यमृतत्वं गच्छत्यों नमः' इति। अत इति प्रपञ्चातीतत्वान्निर्गुणस्य वस्तुनोऽभावाच्च 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति श्रुतेरनन्ताः पराः सर्वोत्कृष्टाः आनन्दरूपास्ताश्च स्वाभाविक्यो

अतो ज्यायांश्च पूरुषः' इति श्रुतिरतो न किंचिदनुपपन्नम् । एवं सति ब्रह्मविदः परप्राप्तेः पूर्वदशा तत् केनेत्यादिनोच्यते, उत्तरदशा तु सोऽश्नुत इत्यनेनोच्यत इति सर्वं सुस्थम् । छान्दोग्येऽपि, 'यत्र नान्यत् पश्यति' इत्यादिना भूमस्वरूपमुक्त्वा, 'आत्मैवेद९ सर्वम्' इत्यन्तेन तद्विभावमुक्त्वोच्यते । 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति' इति । एतच्च, 'लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि' इत्यधिकरणे प्रपञ्चयिष्यते ।

---

भाष्यप्रकाशः ।

सिद्धमाहुः एवं सतीत्यादि । ननु शाखाभेदेन पूर्वोत्तरदशावैपरीत्यस्यापि शक्यवचनत्वान्नेदं सुस्थमिति शङ्कायामाहुः छान्दोग्येपीत्यादि । तद्विभावमिति उत्तरदशारूपसर्वात्मभावस्योद्दीपकमखण्डब्रह्मभानरूपं विभावम् । तथाचात्राऽखण्डब्रह्मभानात्मरतिक्रीडादीनां पूर्वोत्तरभावस्य स्पष्टत्वान्न पूर्वोक्तस्य सुस्थत्वाभावः शङ्कितुं शक्य इत्यर्थः । नन्वेवं चेच्छान्दोग्यवाक्यमपि सम्यग् व्युत्पाद्यमित्यत आहुः एतच्चेत्यादि । एतदिति छान्दोग्यवाक्यम् ।

एवमनेन ग्रन्थेन श्रुतौ मुख्यतया फलमेव निरूप्यत इत्युपगम्य श्रुतिर्व्याख्याता । व्याख्येयवाक्ये ज्ञानस्य ज्ञातृविशेषणतया प्रवेशेनाऽमुख्यत्वात् । तथापि तद्व्याख्यानभूतायामृचि साधनस्य पृथङ्निरूपणाद् व्याख्यानस्य विशेषप्रतिपत्तिहेतुत्वात् तामनुसृत्य पूर्वोक्तमर्थं द्रढ

रश्मिः ।

न त्वागन्तुकत्वः ज्ञानं बलं भक्तिर्ब्रह्मवशीकारत्वात् क्रियाश्च विविधा इत्यत इत्यर्थः । शाखाभेदेनेति उत्सन्नप्रच्छन्नशाखाभेदेनेत्यर्थः । आहुरिति सकलश्रुतिसंमतोयमर्थ इत्याहुरित्यर्थः । तद्विभावमिति तद्विभावमिति द्वितीयः पाठः । भक्तेः रसत्वादाहुः उत्तरेत्यादि । उत्तरदशया रूप्यते सम्यगभिव्यक्तो निरूप्यते इत्युत्तरदशारूपः उत्तरदशारूपश्चासौ सर्वात्मभावः तस्येत्यर्थः । यद्यपि पूर्वदशायामपि सर्वात्मभावस्तथापि न सम्यज् ज्ञात इति विशेषणमुत्तरदशारूपेति । अयं भूमेति भूमालम्बनविभावः उद्दीपकं भूमचेष्टा सा चाखण्डब्रह्मज्ञानरूपं 'सा सा सा सा जगति सकले कोयमद्वैतवादः' इति कामुकवद्ब्रह्माद्वैतवादः इति द्वितीयं विभावं कामुकदृष्टान्तः सदानन्दस्य जगज्जन्मादिकर्त्री शक्तिस्तत्संबन्धि जगत् स्त्रीप्रायमिति । ब्राह्मणस्यापि तथात्वात् भूम्नोरभेदेन निरूपणम् । 'स्वयमेवात्मनात्मानञ्च' इतिवाक्यात् । परप्राप्तिविवरणात् तादृशसाधनफले एकीकृत्याहुः तथाचेति 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति' इति श्रुतौ एवंशब्देन 'स एवाधस्तात् स उपरिष्टात् स पश्चात् स पुरस्तात् स दक्षिणत स उत्तरतः स एवेद९ सर्वम्' इत्यादिश्रुत्युक्तं परामृष्टत्वादखण्डब्रह्मभानमात्मरत्यादिकं स्पष्टम् । पूर्वोत्तरेति अखण्डब्रह्मभानस्यात्मरत्यादीनां च पूर्वोत्तरभावस्येत्यर्थः । फलमेवेति गुहायां निहितं वेदेति पुरुषोत्तमविषयकज्ञानवदुक्त्या वेदनस्य फलान्तरगतत्वात्साधनफले एकीकृत्य फलमेव निरूप्यत इत्यर्थः । एतेन परप्राप्तिपदार्थ उक्तो भवति इति भाष्यादेवकारः । व्याख्येयेति 'ब्रह्मविदाप्नोति परम्' इत्यस्मिन् । ज्ञातुरित्यादि विदितस्य ज्ञानकर्ताश्रय इत्यर्थात्तथेत्यर्थः । पृथगिति एकतिङ् वाक्यमिति तथा । ल्यब्लोपे पञ्चमी । पृथङ्निरूपणमुपलभ्येत्यर्थः । तामित्यादि व्याख्यानचं प्रतिज्ञाहानिभागत्यागलक्षणे परिहर्तुमनुसृत्य । पूर्वोक्तमव्यवहितपूर्वोक्तमर्थम् । द्रढयितुमिति अव्यवहितपूर्वव्याख्याने पर-

अथवा तदेषाऽभ्युक्तेति वाक्येन पूर्ववाक्योक्तब्रह्मनिरूपिकेयमृगित्युच्यते। तत्र साधनफले निरूपिते इति ऋच्यपि ते एव निरूप्येते। तथाहि। आनन्दस्य फलात्मकत्वेन साधनशेषभूते ब्रह्मणि तमनुक्त्वा, यो वेदेत्यन्तयर्चा, 'ब्रह्मवित्' इत्येतावतो वाक्यस्य विवरणं क्रियते। एतेन फलाप्तौ स्वरूपयोग्यतासंपत्तिरुक्ता। तत उक्तरीत्या भगवद्वरणेन भक्तिलाभे गुहायामाविर्भूतं यत् परमं व्योम, तस्मिन्निहितः पुरुषोत्तम एवेति। तं निहितमिति तृतीयार्थे द्वितीया। तथा च तत्र निहितेन ब्रह्मणेत्यग्रे पूर्ववत्।

अथ परमफलत्वाभिरवच्छ्यानन्दात्मकत्वमन्तरङ्गेभ्योऽप्यन्तरङ्गत्वं स्वस्मिन् ज्ञापयितुं सर्वस्य सर्वरूपत्वेन सर्वाधिदैविकरूपत्वमपि ज्ञापयितुमाधिभौतिका-

भाष्यप्रकाशः।

पूर्ववर्णकोक्तव्याख्यानमेवानुसरन्तः पक्षान्तरमाहुः अथवेत्यादि। पूर्ववदित्यन्तम्। एवं चोक्त-रीत्येत्यस्य ब्रह्मणेत्यादिनाऽन्वयः। तथा च ब्रह्मणा सह तदात्मकानेव कामानभुङ्क्त इत्यर्थः। यत्तु, न ह्यन्यज्ञानेनान्यप्राप्तिर्भवतीति परैर्दूषणमुक्तम्। तदसंगतम्। 'य एवं वेद प्रतितिष्ठति' इत्यादि-श्रुतिविरोधात्। यच्च परिच्छिन्नत्वेऽन्यत्वे च प्राप्तिर्नापरिच्छिन्नत्वेऽनन्यत्व इति। तदपि तथा। इच्छयाविर्भावतिरोभावाभ्यामेवोपपत्तेः। अनन्यत्वं तु सुवर्णशकलन्यायेन ब्रह्मणः सकाशाज्जीवस्य, न तु जीवस्य सकाशाद् ब्रह्मण इति तस्यापि प्राप्तिप्रतिबन्धकत्वाभावादिति। तेन ज्ञानमपी-च्छयैवेति न कोऽपि दोषः। एवमुक्ततात्पर्यमुक्त्वाधिदैविकवादमाश्रित्य सृष्ट्यादिनिरूपक-ग्रन्थस्य तात्पर्यमुपयोगं चाहुः अथेत्यादिना। सर्वस्य सर्वरूपत्वेनेत्यादि 'प्राणस्य प्राण-

रश्मिः।

मन्योन्याविर्भावे भक्तिरूपं साधनं नोक्तम्। पुरुषोत्तमस्य साधनकोटिनिवेशभेलदृढं पूर्वोक्तं प्रसि-द्धया पुराणस्य द्रढयितुमित्यर्थः। एवेति गुणविधिवद्वर्तमानत्वाद्वाक्यान्तरव्यवच्छेदक एवकारः। एवं चेति अस्यार्थस्य पुराणोपबृंहणस्य पक्षान्तरत्वे पूर्वार्थसहत्वे चेत्यर्थः। इत्यादिनेति इत्या-दिनान्वय इत्यर्थः। यथाश्रुतान्वये बाधकाभावात्। तथा चेति ब्रह्मणा पुरुषोत्तमाभेदे सति। तदात्मकान् पुरुषोत्तमात्मकान्। एवकारेणाक्षरमात्रकामव्यवच्छेदः। अत्राक्षरस्यापि पक्षित्वमङ्गी-कृतम्। अस्थूलादिवाक्येषु पर्युदासार्थकनञाश्रयणात्। परैरिति व्याख्यातृभिः। य एव-मिति 'सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिता' इति पूर्वमुक्तत्वात् विद्याज्ञानेन प्रतिष्ठा-प्राप्तिश्रावणेन तद्विरोधादित्यर्थः। किंचाक्षरस्य पुरुषोत्तमाभेदपक्षेऽन्यत्वाभावादेव नेयमाशङ्केति ज्ञेयम्। अपरिच्छिन्नप्राप्तिप्रकारमाहुः इच्छयेति। भक्तेच्छयेत्यर्थः। कदाचित्स्वेच्छयापीति सामा-न्योक्तिः। 'यमस्त्विया' इति वाक्याद् 'यमेवैष वृणुते तेन लभ्यः' इति श्रुतेश्च। अनन्यस्य प्राप्तिप्रकारमाहुः अनन्यत्वमित्यादि। तस्यापीति भेदाभेदस्यापि किं त्वनन्यत्वमात्रस्य प्रतिबन्धकत्वात्। अविद्यासम्बन्धेनानन्यत्वस्यापि। 'अन्तरा भूतग्रामवत्स्वात्मनः' इति सूत्रात्। इच्छयैवेति 'दिव्यं ददामि ते चक्षुः पश्य मे रूपमैश्वरम्' इति वाक्यात् दानशक्तेरपीच्छाशक्त्यधीनत्वात्। आधिदैविकेति आनन्दमयवोर्वादम्। पक्षान्तरभाष्ये निरूप्येते इति पुराणोपबृंहिते अपि भक्तिमार्गीयत्वा-पादरण्यावृत्त्या निरूप्येते। स्वरूपेति अक्षरब्रह्मणेऽक्षरज्ञानाभावे दुःखफलाभावोक्ते दुःखफले

१. प्रतिसाम्प्रतम्।

विरूपेणाविर्भवितुं भगवानाकाशादेरूपेणाविर्भूतोऽत एव भवन आकाशस्यैव कर्तृत्वमुच्यते । अन्नेऽन्नमयादीनि चत्वारि रूपाणि पूर्वं निरूपितान्युत्तरोत्तरमन्तरङ्गभूतानि । अन्नरसमयशरीरभूतात् प्राणमयस्तस्मान्मनोमयस्तस्माद् विज्ञानमयः । कश्चित्त्वेतानि रूपाणि विकारात्मकत्वात् प्राकृतान्येवैतेभ्योऽप्यन्तरङ्गो विमुक्ताविद्यो जीव एवानन्दमय उच्यत इत्याह । स प्रतिवक्तव्यः ।

भाष्यप्रकाशः ।

श्रुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रम्' इति श्रुत्यनुसारेणात्राप्यन्नमयस्यान्नमयः प्राणमयस्य प्राणमय इत्येवमानन्दमयमात्मा मे शुद्ध्यन्तामिति तैत्तिरीयश्रुत्यन्तरे श्रोष्यत्वज्ञापनेन, 'आनन्दमानन्दमयोऽवसाने' इति स्मृतौ च क्रममुक्तिप्रकरणेन कारणशरीरनिविष्टविमुक्ताविद्यजीवयोरानन्दमयत्वकथनात् तयोरपि य आधिदैविकस्तमानन्दामयमत्र ज्ञापयितुमित्यर्थः । कर्तृत्वमुच्यत इति तेनात्र नाकाशादीनां प्राकृतत्वं, किंतु विभूतिरूपत्वमेवेत्यर्थः ।

अत्यन्तरङ्गत्वं विशदयन्ति अन्ने इत्यादि । अन्योऽन्तर आत्मेति सर्वत्र कथनात् तथेत्यर्थः । अत्र मायावादी मयटो विकारार्थकत्वमङ्गीकृत्य चत्राण्यन्यथा नीत्वा आनन्दमयमपि जीवं मन्यते । तन्मतमनूद्य परिहरन्ति कश्चिदित्यादि । स प्रतिवक्तव्य इत्यादि । तत्र मयटः संदिग्धार्थ-

रश्मिः ।

स्वरूपयोग्यताऽक्षरज्ञानरूपा तस्याः संपत्तिरुक्तेत्यर्थः । ततोऽविद्यानिवृत्त्या प्राकृतधर्मराहित्येन शुद्धसत्त्वसंपादनेन पुरुषोत्तमप्राप्तौ स्वरूपयोग्यता संपाद्यते । यत आधिदैविकशुद्धसत्त्वे चित्ते भक्तिर्भवति पुरुषोत्तमप्राप्तिसाधनम् । अत्र भक्तिः पुष्टिरूपेत्याहुः भगवद्वरणेनेत्यादि । आविर्भूतमिति काय आकाशशरीरस्य ब्रह्मणो यत्प्रसिद्धं परमं शरीरं व्योम तस्मिन्निहित इत्यर्थः । सूच्यार्थोपि नितरां हितः स्निग्धः स्नेहभक्तिविषय इति । पुरुषोत्तम एवेति 'आकाशशरीरं ब्रह्म' इति श्रुतेर्ब्रह्म पुरुषोत्तमस्तल्लिङ्गात् । न त्वक्षरमतोऽक्षरयोगव्यवच्छेदक एवकारः । द्वितीयेति उक्तलिङ्गाद्ब्रह्मणेत्यनेनान्वयाय 'छन्दसि बहुलम्' इति सूत्रेण बाहुलकाद्वितीया । ब्रह्मणेति पुरुषोत्तमेन न तु सूर्येणाधिकारिणा विपश्चिन्मात्रेण 'सूर्यो विपश्चिन्मनसा पुनातु' इति श्रुतेः विपश्चित्पदं न सूर्यव्यावर्तकं विशेषणमिति पक्षान्तरं वा । तथाच विपश्चित्पदं प्रस्थानरत्नोक्तरीत्या पुरुषोत्तमे यौगिकं सूर्ये रूढमिति ज्ञेयम् । प्रकृते । सृष्ट्यादीति प्रपाठकद्वय इत्यर्थः । चेति आनन्दमयाधिकरणाभासोक्तसर्वोपि प्रपाठक आरब्ध इति भाष्यीयं स्फुटमित्यनुक्तसमुच्चये चकारः । भाष्ये । स्वस्मिन्निति । आत्मनि आनन्दमये । प्रकृते । स्मृताविति इयं द्वितीयस्कन्धे द्वितीयाध्यायेस्ति । कारणेत्यादि धर्मादिरयं शब्दः 'लघ्वक्षरं पूर्वम्' इति सूत्रेण शरीरस्य लघ्वक्षरस्य पूर्वप्रयोगप्राप्तेः । तेन कारणं च शरीरं च कारणशरीरे इति द्वन्द्वः । तत्र निविष्टयोर्मुक्ताऽविद्ययोः जीवयोः मुक्तेः पूर्वमाविद्यत्वं जीवस्यानन्दप्रवेशे विमुक्तत्वमिति द्विवचनम् । आनन्दमयकोशात्मकं कारणशरीरं प्राणमयाद्यात्मकं लिङ्गम् । अन्नमयं स्थूलमिति । एवं चानन्दमयमात्मेत्यादिश्रुतौ कारणशरीरनिविष्टः आनन्दमानन्दमय इत्यत्र विमुक्ताविद्य इत्यर्थः । ज्ञापयितुमिति अपिशब्देनानन्दं ज्ञापयितुं प्रस्तुतम् । तेनेत्यादि 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्यत्र कृतस्य कर्त्रैकत्वाद्विभूतिरूपत्वात् भगवद्भवन आकाशस्यैव कर्तृत्वेनेत्यर्थः । आत्मन इति पञ्चम्युक्तं समवायित्वं स्वात्मनोऽक्षुण्णमेव अभिन्ननिमित्तोपादानत्वबहुरूपाकाशाविभावपक्षेणाप्यस्याविकारत्वात् । जीवं मन्यत इति मुख्यमेवात्मानमुप-

अग्रिमप्रपाठके भृगुणा अधीहि भगवो ब्रह्मेति पृष्टो वरुणस्तदोत्तमाधिकाराभावात् स्वयं ब्रह्मस्वरूपमनुक्त्वा, तपसाऽधिकारातिशयक्रमेण स्वयमेव ज्ञास्यतीति तदेव साधनं सर्वत्रोपदिष्टवान्। 'तपसा ब्रह्म विजिज्ञासस्व' इति। ब्रह्मातिरिक्तेन साधनेन न तज्ज्ञातुं शक्यमिति ज्ञापनाय, तपो ब्रह्मेति सर्वत्रोक्तवान्। तथाच तपसा साधनेन ब्रह्मत्वेन ज्ञातानि रूपाणि प्राकृतानीति विचारकेण न वक्तुं शक्यमिति। तर्हि पुनर्ब्रह्मविषयकप्रश्नसाधनोपदेशतत्करणपूर्वातिरिक्तब्रह्मज्ञानानां परंपरा नोपपद्यते इति चेत्। मैवम्। भगवतो हि विभूतिरूपाण्यनन्तानि। तत्र येन रूपेण यत्कार्यं करोति तेन रूपेण समर्थोऽपि तदतिरिक्तं न करोति। तथैव तल्लीला यतः।

तथाचान्नमयादिरूपैः क्षुद्राण्येव फलानि ददाति। हीनाधिकारिणां तावतैवाकाङ्क्षानिवृत्तिर्भवति। एवं सति यादृशेनाधिकारेणान्नमयस्वरूपज्ञानं भवति तादृशे तस्मिन् संपन्ने तज्ज्ञानमपि तथा। एवमेवोत्तरत्रापि। तथाचाकाशादिरूपमाधिभौतिकस्वरूपमुक्त्वाऽऽध्यात्मिकं तत् पुरुषरूपं वदन्ती पक्षि-

---

भाष्यप्रकाशः।

त्वादनिर्णायकत्वेन श्रुत्यन्तरादेव निर्णय उचित इत्याशयेनाहुः अग्रिमेत्यादि। तर्हीति तेषां ब्रह्मरूपत्वे। यत इति 'सोऽकामयत, बहु स्यां प्रजायेय', 'तस्मादेकाकी न रमते', 'स हैतावानास' इत्यादिभ्येकस्यैव बहुत्वोच्चनीचभावलीलानाम्नुक्तत्वादित्यर्थः।

तज्ज्ञानमपि तथेति तज्ज्ञानमपि तदुक्तफलदमित्यर्थः। एवं विभूतिरूपज्ञानफलमुक्त्वानन्दमयस्याधिदैविकत्वं बोधयितुं पूर्वोक्तं स्मारयन्ति तथाचेत्यादि। आकाशादिरूपमाधिभौतिकं स्वरूपं तस्माद्वेत्यारभ्याकात् पुरुष इत्यन्तेनोक्त्वा आध्यात्मिकमन्नमयादिपुरुषरूपं वदन्ती श्रुतिस्तस्येदमेव शिर इत्यादिना पक्षिरूपमाहेत्यर्थः। ननु तस्येदमेवेतीदमा प्रत्यक्षविषयस्यैव शिरआदेः परामर्शात् प्रत्यक्षविषयस्यैव पक्षित्वं कल्पनयोपदिश्यत

रश्मिः।

इति विदुषु शाखं लोकबुद्धिमनुसरदन्नमयशरीरमनात्मानमत्यन्तमूढानामात्मत्वेन प्रसिद्धमनूद्य मूषानिषिक्तद्रुतताम्रादिप्रतिमावत्ततोऽन्तरं ततोऽन्तरमित्येवं पूर्वेण समानमुत्तरमनात्मानमात्मेति ग्राहयत् प्रतिपत्तिसौकर्यापेक्षया सर्वान्तरमुख्यमानन्दमयमात्मानमुपदिदेशेति श्लिष्टतरमिति भाष्येण मन्यत इत्यर्थः। ब्रह्मरूपस्य इति ब्रह्मरूपत्वाधिकरणे काले। भाष्ये। पुनर्ब्रह्मविषयकेत्यादि पुनर्ब्रह्मविषयकः प्रश्नस्तद्वाक्यं पूर्वोक्तमेव। साधनोपदेशस्तद्वाक्यमपि। अत एव भाष्ये सर्वत्रोक्तवानित्युक्तम्। तत्करणं तपःकरणम्। तद्वाक्यं 'स तपोतप्यत' इति। इदमपि सर्वत्रैकमेव। पूर्वातिरिक्तब्रह्मज्ञानं च तत्प्रतिपादकानि 'अन्नं ब्रह्मेति व्यजानात्, प्राणो ब्रह्मेति व्यजानात्, मनो ब्रह्मेति व्यजानाद्विज्ञानं ब्रह्मेति व्यजानात्' इत्येवमनेकानि वाक्यानि तेषां परंपरेत्यर्थः। प्रकृते। पूर्वोक्तमिति जन्माद्यधिकरणादावुक्तमित्यर्थः। वदन्तीति 'स वा एष पुरुषोऽन्नरस-

रूपमाह । यतस्तेनैव रूपेणाधिभौतिके रूपे आध्यात्मिकस्य पुरुषस्य प्रवेशः । तदुक्तं वाजसनेयिशाखायाम् । 'पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः, पुरः स पक्षी भूत्वा पुरः पुरुष आविशत्' इति । वस्तुतस्तु पुरुष एव । परं तु पुरःसंबन्धी सन् पक्षी भूत्वा पुरः शरीराण्याविशदित्यर्थः । प्राकृतीषु विविधासु पूर्वप्राकृतस्यैक-विधस्य प्रवेशोऽनुचितो यद्यपि तथापि स्वप्रवेशं विना न किंचिद् भावीति गतिप्रतिबन्धकमुल्लङ्घ्यालौकिकया गत्या प्रविशामीति ज्ञापनाय पक्षिभवनम् । स हि तादृशः । अत एव द्विपदश्चतुष्पद इत्युक्तम् ।

आधिदैविक एक एवेति यः पूर्वस्येति सर्वत्रोक्तम् ।

भाष्यप्रकाशः ।

इति नात्राध्यात्मिकपुरुषोपदेश इत्याशङ्कायां तद्बोधनाय स्वोक्ते हेतुमाहुः यत इत्यादि । तथा च पक्षिरूपस्यातिरिक्तत्वाङ्गीकारे पक्षादिपदेषु लक्षणाभावादयमेव पक्षो ज्यायानित्यतस्तथे-त्यर्थः । ननु तथापीदंपदे लक्षणागौरवं चाधिकमतो नेदं साधीय इत्यतः स्वोक्तमुप-ष्टम्भन्ति तदुक्तमित्यादि । तथाचातिरेकस्य श्रुत्युक्तत्वात् तेनेदंपदलक्षणाया अप्यदुष्टत्वादय-मेव पक्षो ज्यायानित्यर्थः । एकविधस्येति अन्नमयेऽन्नमयरूपस्येत्येवमित्यर्थः । स हि तादृश इति पक्षी यतो गतिप्रतिबन्धकोल्लङ्घनेनेष्टदेशप्रवेशसमर्थ इत्यर्थः । प्रतिबन्धकज्ञापक-माहुः अत एवेत्यादि । तथाच पुरां विशेषणबलात् तथावसीयत इति नात्र कल्पना-लेशोऽपीत्यर्थः । नन्वेवं पक्षिरूपस्यान्नमयादिषु पञ्चस्वपि सत्त्वादानन्दमये को विशेष इत्याकाङ्क्षायामाहुः आधिदैविक इत्यादि । एवमत्र श्रुत्यर्थे निर्णीते यः पूर्वपक्षोऽधि-

रश्मिः ।

मयः' इत्यनेन रसमये 'स वा एष पुरुषविध एव' इत्यनेनावशिष्टेष्वित्यर्थः । नात्राध्यात्मिकेति इदमा निर्दिष्टशिरस्कादिकपक्ष्यभेदान्नेत्यर्थः । आध्यात्मिकत्वं त्वाधिभौतिकसंबन्धात् पुरुषस्या-धिदैविकस्य । पुरा आस पुरमुपति पुरि शेते इति त्रेधा व्युत्पन्नः पुरुषशब्दः । लक्षणाभावादिति लक्षणायाः पुरुषावयवेष्वभावादित्यर्थः । अतस्तथेति पक्षस्य ज्यायस्त्वात्पक्षिरूपस्याधिभौतिक-स्याध्यात्मिकपुरुषातिरिक्तत्वम् । लक्षणागौरवं चेति परिदृश्यमानस्य पक्षिशिरआदेरपरिदृश्य-मानेन पुरुषशिरआदिनाध्यात्मिकेन प्रतियोगितासंबन्धो लक्षणा । पुरुषमतिरिक्तं मत्वा ऐले-वत् पक्षिभवनकल्पने गौरवं चेत्यर्थः । आधिदैविकेत्यादि 'तस्यैष एव शारीर आत्मा यः पूर्वस्य' इत्यन्नमयादि प्रकृत्य प्रत्येकं कथनात् पूर्वं फलत्वेनोक्तमाधिदैविकानन्दमयत्वमेव विशेष इत्यर्थः । भाष्ये । एवमुक्तेरिति 'तस्यैष एव शारीर आत्मा यः पूर्वस्य' इत्युक्तेरित्यर्थः । न त्वेवमिति न तु वदतीत्यर्थः । आध्यात्मिकरूपाणामिति आध्यात्मिकाः 'देहप्राणमनोबुद्धिजीवा अन्नमयादयः पञ्च कोशाः' इति श्रुतिरत्रानुसंधेया । प्रकृते । पक्षिरूपस्येति आधिदैविकस्य । यद्वादमा-श्रित्य ग्रन्थप्रवृत्तिः । तेनान्नमयादीनां पक्षित्वेपि न क्षतिः । आधिदैविक इत्यादीति । तथा चैकरूपत्वमेव विशेष इत्यर्थः । तथा चेति । यत्तु शंकराचार्याः न चात्रानन्दमयाभ्यासः श्रूयते 'यदेष आकाश आनन्दो न स्यात्' 'सैषानन्दस्य मीमांसा भवति' 'आनन्दं ब्रह्मणो विद्वान्' इत्यादिषु प्रातिपदिकार्थमात्रमेवाभ्यस्यते इति वदन्ति तन्न । 'तस्यैष एव शारीर आत्मा यः पूर्वस्य'

१. परिदृश्यमानवत् ।

नन्वानन्दमयेऽप्येवमुक्तेर्नायमपि परमकाष्ठापन्नरूपः, किं तु पूर्वोक्तेभ्योऽतिशयितधर्मवान् विभूतिरूप एव । न च शिरआदीनामानन्दरूपत्वेनैवोक्तेरयं परमात्मैवेति वाच्यम् । अन्नमये यथावयवानां तद्रूपत्वं तथाऽऽनन्दमयेऽपि तेषां तद्रूपत्वादन्यथा तस्यैष एव शारीर आत्मेति न वदेत् । शारीरं हि पूर्वोक्तं तत्संबन्धी हि शारीरस्तद्भिन्नः प्रतीयते । तथाच परब्रह्मत्वं स्वान्यात्मवत्त्वं च सर्वश्रुतिविरुद्धम् । नन्वेतदतिरिक्तं चेद् ब्रह्म स्यात् तदानन्दमयादन्योऽन्तर आत्मा ब्रह्मेत्यपि वदेत् । नत्वेवमतोऽयं पर एवेति चेन्न । आध्यात्मिकरूपाणामेवात्र निरूपणात् तेषां च पञ्चरूपत्वात् तावतामेव निरूपणमतोऽस्मादन्य एव पर इति प्राप्ते प्रतिवदति । आनन्दमयोभ्यासात् । आनन्दमयशब्दवाच्यः पर एव । कुतः । अभ्यासात् । तस्यैष एव शारीर आत्मा यः पूर्वस्येत्यन्नमयादिषु सर्वत्रैवात्मत्वेनानन्दमयस्यैव कथनात् । ननु न किंचिन्मानमत्र पश्यामः । किं च । आनन्दमयस्यैव सर्वत्रात्मत्वेन कथने आनन्दमयेऽपि, तस्यैष एवेत्यादि न वदेदयमेव पूर्वस्यात्मेति वदेदतो नानन्दमयः पर इति चेत् । उच्यते । न हीश्वरादन्यः सर्वेषामेक आत्मा भवितुमर्हति । तस्यानन्दरूपत्वं तु 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति । रसो वै सः रसꣳ ह्येवायं लब्ध्वाऽऽनन्दी भवति । को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात् ।

भाष्यप्रकाशः ।

करणावतारणायोत्तिष्ठति तमाहुः नन्वित्यादि । तथाच योग्यत्वात् प्रायपाठाच्चानन्दरूपत्वमवयवानामुच्यते, न तु परमात्मत्वादित्यर्थः । परमात्मत्वाभावे गमकमाह अन्यथेत्यादि । पूर्वोक्तमिति आनन्दमयम् । शेषं निगदव्याख्यातम् । एवं च मयटो विकारार्थत्वानङ्गीकारेऽप्यन्नमयादीनामिवानन्दमयस्याऽप्याध्यात्मिकविभूतिरूपेणापरब्रह्मत्वं प्रायपाठबलादङ्गीकर्तव्यं, न तु परब्रह्मत्वमिति पूर्वपक्षाशयः । अत्र सूत्रमुपन्यस्य समादधते आनन्दमयोऽभ्यासादिति । तस्येत्यादि तथाच वाक्याभ्यासात् तथेत्यर्थः । अयं प्रकारो गुणोपसंहारपादे, आत्मगृहीतिकार्याख्यानाधिकरणाभ्यां पुनः स्फुटीकर्तव्यः । अत्र चोदयति । नन्वित्यादि । अत्रेति उक्तवाक्येष्वानन्दमयग्रहणे । साधकतर्काभावमुक्त्वा बाधकतर्कमाह किंचेत्यादि । अनयोर्दूषणयोः पूर्वं निरस्यन्ति न हीत्यादि, मन्तव्यमित्यन्तम् । तथाच सर्वेभ्योऽन्तरात्मत्वमानन्दमयस्य निरूपयिष्यन्त्या यत् तस्यैष एव शारीर आत्मा यः पूर्वस्येति प्राणमयाद्यानन्दमयान्तस्य, एष एव शारीर आत्मा यः पूर्वस्यान्नमयस्येत्यन्नमयसंबन्धिन आत्मनः सर्वसंबन्ध्यात्मत्वमभ्यस्तम् । अन्नमयाभिमानी तु पूर्वं नोपक्रान्तः

रश्मिः ।

इत्यनेन वाक्येनान्नमयादिषु सर्वत्रानन्दमयस्यैवात्मत्वेनाभ्यासादित्यर्थः । भाष्ये । आनन्दमयस्यैवेत्येवकारेण 'असन्नेव सः' इत्यादिशंकरपादोक्तपुच्छाभ्यासो निराकृतः । व्याख्येयविरोधस्य तत्रातिस्फुटत्वात् । प्रकृते । तथेति आनन्दमयत्वमित्यर्थः । स्फुटीति तेन साहस्रसाधीप्याय एतस्य शेष इति शेषशेषिभावः संगतिः सूचिता । चोदयतीति वाक्याभ्यासं स्फुटयितुमुत्थापयतीत्यर्थः ।

भाष्यप्रकाशः ।

किंतु जगत्कर्तैवोपक्रान्तस्तत्रापि सृष्टिकथनेन तदेतच्छब्दाभ्यां सन्निहितं विपश्चित् ब्रह्मैव परामृश्यत इति तदेव पञ्चानामात्मेति बोध्यते । अत आत्मपदघटितवाक्याभ्यासस्तस्य सर्वात्मत्वं सर्वान्तराऽऽत्मत्वं वा बोधयंस्तत्र निरङ्कुशमीश्वरत्वं निगमयति । एतस्यैवानन्दस्येति श्रुत्यन्तरं चानन्दप्राचुर्यम् । तच्च निरवधिसच्चिदंशापेक्षयेति प्रकृतत्वात् सिद्ध्यति । तथा रसो वै स इत्यादिश्रुत्यन्तरं चानन्दरूपताम् । एवं सर्वश्रुत्येकवाक्यत्वेऽभ्यस्यमानवाक्यगतस्तस्यैष इत्ययमेतच्छब्दः पूर्वोक्तमात्मानं परामृशन्नेतादृशं तं सर्वत्र ग्राहयतीति पूर्वोक्तश्रुत्यैकवाक्यतापन्नस्यास्यैव मानत्वान्न मानाभाव इत्यर्थः । एतेनैव बाधकतर्कोऽपि निरस्त एव । शारीरपदं तु शरीरसंबन्धित्वमात्रबोधकं, न त्वभिमानित्वबोधकम् । किंचाभिमानित्वपक्षेपि नाभिमानित्वं दोषः । सर्वात्मकत्वात् । अन्यस्यान्यस्मिन्नभिमानस्यैवाध्यासरूपत्वेन दोषत्वात् । अत एव पुरुषविधब्राह्मणे, ब्रह्म वा इदमग्र आसीदित्युपक्रान्तस्यात्मनो ब्रह्मत्वं निगमयित्वा तदात्मानमेवावेदहं ब्रह्मास्मीत्युच्यते । नच तस्यैष इति षष्ठ्या भेदनिर्देशान्नात्र तथेति वाच्यम् । राहोः शिर इतिवदभेदेऽपि

रश्मिः ।

जगत्कर्त्रेति 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इति श्रुत्या स एवोपक्रान्त इत्यर्थः । ननु नेयमुपक्रमश्रुतिः किंतु 'ब्रह्मविदाप्नोति परम्' इत्यतः कथं जगत्कर्तैवोपक्रान्तः इति चेत्तत्राहुः तत्रापीत्यादि । जगत्कर्तृबोधकश्रुतावपीत्यर्थः । बोध्यत इति । तथा च तदेतच्छब्दाभ्यां परामर्शाद्ब्रह्मोऽस्योपक्रमस्तत्रेति नोक्तदोष इत्यर्थः । नन्वस्तु विपश्चिद् ब्रह्म पञ्चानामात्मा तथाप्यानन्दमात्राभ्यास इति कथमानन्दमयाभ्यास इत्याकाङ्क्षायां प्रत्ययार्थविशिष्टप्रातिपदिकार्थरूपत्वं तस्य मन्तव्यमित्यन्तभाष्यं विवृण्वन्तो व्युत्पादयन्ति एतस्यैवेत्यादि । निगमयतीति पूर्वेणान्वयः । सिद्ध्यतीति तेनानन्दमयस्य ब्रह्मत्वेंशतो दुःखसत्तां प्रापयतीति शांकरोक्तं प्रत्युक्तम् । भाष्ये तु विशिष्टं शुद्धान्नातिरिच्यत इति न्यायादानन्दानन्दमयावेकौ इति न दुःखसत्तावारणायान्यापेक्षा तथापि प्रकृतत्वादस्तु । आनन्दरूपतामिति निगमयतीति पूर्वेणान्वयः । एतादृशं तमिति प्रत्ययार्थविशिष्टप्रातिपदिकार्थं तमानन्दमयमित्यर्थः । अस्यैवेति आनन्दमयपरामर्शकतदेतच्छब्दघटितश्रुतिवाक्यस्यैवेत्यर्थः । न मानाभाव इति । ननु न किंचिन्मानमत्र पश्यामः इत्युक्तो मानाभावो नेत्यर्थः । तेन 'यदेष आकाश आनन्दो न स्यात्' 'सैषानन्दस्य मीमांसा भवति' 'आनन्दं ब्रह्मणो विद्वान्' इत्यादिषु प्रातिपदिकार्थमात्राभ्यासान्नानन्दमयाभ्यासः श्रूयत इति शंकरभाष्योक्तं प्रत्युक्तम् । एतेनैवेति 'तस्यैष एव शारीर आत्मा यः पूर्वस्य' इत्यत्र पूर्वोक्तात्मपरामर्शोपपादनेनैव पूर्वपक्षग्रन्थोक्तोन्यथा तस्यैष एवेत्यादिरूपो बाधकस्तर्क इत्यर्थः । नन्वस्त्वेवं तथापि शारीरपदं कथं संगच्छते इति चेत्तत्राहुः शारीरपदमिति । न त्वभिमानित्वेति व्याकरणे तदर्थकतद्धिताभावादिति भावः । ननु संबन्धस्त्वभिमानरूप एवेति कथमेवमिति चेत्तत्राहुः किंचाभीत्यादि । सर्वात्मकत्वादिति आनन्दमात्रकरपादमुखोदरादित्वेन देहेन्द्रियाद्यात्मकत्वादित्यर्थः । ब्रह्मण्यध्यासं वारयन्ति अन्यस्येत्यादि । अन्यस्य चैतन्यस्यान्यस्मिन् जडे देहादावित्यर्थः । उच्यत इति अभिमान उच्यत इत्यर्थः । पूर्वतत्रीत्या तु इन्द्रप्रयोगः । 'आत्मैवेदमग्र आसीत्' 'ब्रह्मैवेदमग्र आसीत्' इति । तथेति सर्वावयवरूपत्व-

एष ह्येवानन्दयाति' इत्यादिश्रुतिभिर्निर्णायते। एवं सति तदेकवाक्यतायै प्रकृतोऽप्यानन्दमयशब्दस्तद्वाच्यैवेति मन्तव्यम् । अन्यथानन्दमयादन्योऽन्तर आत्मेत्यपि वदेत् ।

ननूक्तमाध्यात्मिकानामेवात्र निरूपणादित्यादीति चेन्न । उक्तरीत्याधिदैविकस्यैवान्ते निरूपणात् । अत एव भार्गव्यां विद्यायामपि भृगोरन्नमयादिज्ञानानन्तरमपि पुनर्ब्रह्मजिज्ञासोक्ता, न त्वानन्दमयज्ञाने । न हि भृगोराध्यात्मिकज्ञानार्थं प्रवृत्तिः, किं तु ब्रह्मज्ञानार्थमेव । अधीहि भगवो ब्रह्मेति प्रश्नवचनात् ।

किंच, ब्रह्मविदाप्नोति परमित्युपक्रमादन्ते ज्ञेयानन्दगणनामुक्त्वा, 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः' इति वाक्यैर्ब्रह्मविदि पुरुष आदित्ये च तदेवाक्षरं ब्रह्म प्रतिष्ठितमिति तदानन्दोऽपि तथैवेति तयोरानन्दयोरैक्यम् । एवंरूपं ब्रह्मेति यो वेद तस्य क्रमेणान्नमयादिप्राप्तिमुक्त्वा अन्ते वदत्येतमानन्दमयमात्मानमुपसंक्रामतीति । एवं सत्युपक्रमे परप्राप्तेः फलत्वेनोक्तेरुपसंहारेऽपि तथैव भवितव्यत्वादानन्दमयप्राप्तेरेवान्ते फलत्वेनोक्तेस्तदुत्तरमन्यस्यानुक्तेरानन्दमय एव परः ।

---

भाष्यप्रकाशः ।

षष्ठीदर्शनात् । नन्वस्त्वेवं, तथाप्यानन्दमय एतत्कथनस्य किं प्रयोजनमित्याशङ्का तु, शरीरप्रवेशप्रयोजनेत्यादिनाऽनुपदमेव निवारणीया । तस्मान्न कोऽपि दोषः । उक्तसाधनाय विपक्षबाधनाय च तर्कमाहुः अन्यथेत्यादि । अत्र चोदयति नन्वित्यादि । तत्र समादधते नेत्यादि । उक्तरीत्येति सर्वात्मत्वादेरन्यत्रासंभवेन । एतमेवार्थं श्रुत्यन्तरेणोपष्टम्भन्ति अत एवेत्यादि । ननु भृगोर्ब्रह्मज्ञानार्थं प्रवृत्तिरिति सत्यं, परंतु तत्रानन्दत्वेन ब्रह्मज्ञानाज्जिज्ञासोपरतिर्न त्वानन्दमयत्वेन ज्ञानात् । अतो नानया श्रुत्या तदुपष्टम्भ इत्याकाङ्क्षायां प्रस्तुतप्रपाठकोपक्रमादिविचारेणापि तमर्थं साधयन्ति किंचेत्यादि पर इत्यन्तम् । तथाचास्य प्रपाठकस्य, ब्रह्मविदाप्नोति परमिति सूत्रितार्थविवरणरूपत्वात् फलविवरणमेवानन्दमये प्रपाठकस्य तात्पर्यं नियमयत् तस्य ब्रह्मत्वं गमयति । एवं भृगुप्रपाठके

रश्मिः ।

मित्यर्थः । तथा चाध्यासापत्तिरिति भावः । षष्ठीदर्शनादिति तथा शरीरस्यायं शारीर इत्यत्रापि षष्ठ्याऽभेदार्थकत्वेन 'आनन्दरूपममृतं यद्विभाति' इति श्रुतेः आनन्दात्मकशरीरभिन्न आत्मेत्यर्थादभेद एव संसर्गो न त्वध्यास इति बाधकस्तर्को निरस्त इत्यर्थः । एतत्कथनस्येति शारीर आत्मत्वकथनस्येत्यर्थः । उक्तेति आनन्दानन्दमयाभेदसाधनाय । विपक्षेति भाष्ये आध्यात्मिकरूपाणामेवेत्यादिनोक्तो विपक्षस्तस्य बाधनायेत्यर्थः । अन्यत्रेति आध्यात्मिकाधिभौतिकयोरित्यर्थः । अत्र भाष्य आधिदैविकस्यैवेति सर्वेषां पदार्थानां तत्तदाधिदैविकं तत्तदाकारमव्यापकतया भातीति विश्रुतम् । आनन्दत्वेनेति 'आनन्दो ब्रह्मेति व्यजानात्' इति श्रुतेरित्यर्थः । सूचितार्थेत्यादि । अयमर्थः । उपसंहारे 'आनन्दमयमात्मानमुपसंक्रामति' इति वचनादुपक्रमेप्याप्नोति परमित्यत्र परपदेनानन्दप्राचुर्यं सूच्यते । उत्कृष्टार्थत्वात् । अन्यथा तु नैकवाक्यतेति । सूत्रितार्थेति पाठः । अयमपि क्वाचित्क इति विवृतः । सूत्रलक्षणाक्रान्तत्वाद्वा सूत्रितार्थेति पाठः ।

ननूपसंक्रमणं ह्यतिक्रमणमतो न तथेति चेत्। हन्तैवमनिक्रान्तशब्दार्थो त्वन्मतिर्भाति । यतः संक्रमणशब्दः प्राप्त्यर्थकः सर्वत्र श्रूयते । अत एव रवेर्मकरादिराशिप्राप्तौ तत्तत्संक्रमणमित्युच्यते। नचेयं न परममुक्तिः। अस्माल्लोकात् प्रेत्येति पूर्वमुक्तेः। अत एव पुरुषोत्तमानन्दानुभवे सत्यनुभवैकगम्योऽय-

भाष्यप्रकाशः ।

यद्यपि जिज्ञासोपरतिस्थले आनन्दमयपदाभावस्तथापि समाप्तौ 'एतमानन्दमयमात्मानमुपसंक्रम्य एतत् साम गायन्नास्ते' इति फलकथनेन द्वयोरपि प्रपाठकयोरैकार्थ्यावगमात् तस्याप्युपष्टम्भकत्वमव्याहतमित्यर्थः । अत्र वादी परमफलत्वाभावमाशङ्कते नन्वित्यादि । संक्रमः प्रतिसंक्रम इति पुराणप्रयोगात् तथेत्यर्थः । समादधते हन्तेत्यादि । उच्यत इति 'कार्मुकं तु परित्यज्य झषं संक्रमते रविः' इत्यादिवाक्येषूच्यते । ननु संक्रम एव प्राप्तिर्नतूपसंक्रमोऽपीति चेत् तथाप्युपोपसर्गेणातिक्रमोऽर्थः कथं लब्धव्यः । तर्हि किमर्थोऽयमुपसंक्रम इति चेत् भेदेन स्थित्वा भोगार्थ इत्यवधेहि । ऋचि तथैव सिद्धत्वेन तदुपपादकग्रन्थेऽपि तथैव सिद्धेरावश्यकत्वादिति । नन्वेवं भेदे सति नेयं परममुक्तिः, किं तु जीवन्मुक्तिरेवेयमिति चेत्तत्राहुः नचेत्यादि । तथाचैतच्छरीरत्यागकथनेनात्र जीवन्मुक्तेरशक्यवचनत्वात् परममुक्तिरेवात्रोच्यत इत्यर्थः । तर्हि देहान्तरे सिद्धिरेवास्तु । परममुक्तौ बाधकस्य भेदस्योक्तत्वादिति चेन्न । तथा सति करणग्रामसद्भावात् प्राणमयादिसत्त्वेन पुनस्तत्संक्रमोक्तिविरोधापत्तेः । तस्मादत्र परममुक्तिरेव विम्रियत इति हृदिकृत्यैतस्याः परममुक्तित्वसाधकं हेत्वन्तरमाहुः अत एवेत्यादि । अस्य परममुक्तित्वादेव पुरुषोत्तमानन्दानुभवे सति

रश्मिः ।

तस्यापीति भृगुप्रपाठकस्यापि । वादीति व्याख्याता । आशङ्कत इति पुच्छत्वेनोक्तं ब्रह्म प्रधानमित्यङ्गीकृत्य न त्वानन्दमयस्योपसंक्रमयितव्यस्यान्नमयादिवद्ब्रह्मत्वे सति नैवं विदुषो ब्रह्मप्राप्तिः फलं निर्दिष्टं भवेन्नैष दोषः । आनन्दमयोपसंक्रमणनिर्देशेनैवं पुच्छप्रतिष्ठाभूतब्रह्मप्राप्तिफलस्य निर्दिष्टत्वादितिभाष्येणाशङ्कत इत्यर्थः । कार्मुकं धनुः । झषं मीनम् । उच्यत इति । तथा च पुराणेपि प्रतिसंक्रम उक्तो न त्वतिसंक्रम इति न तस्य विरोधः । प्रतिसंक्रमस्तु लयः । समीपार्थकोत्रोपेत्याशयेनाहुः भेदेनेत्यादि । अत्रार्थ एकवाक्यतां प्रमाणयन्ति ऋचीत्यादि । 'ब्रह्मविदाप्नोति परम्' इत्यादृचि। जीवन्मुक्तिरिति 'असक्तबुद्धिः सर्वत्र' इत्यादिवाक्योक्तोऽध्यासाभावो जीवन्मुक्तिः ।

'विद्ययाऽविद्यानाशे तु जीवो मुक्तो भविष्यति ।
देहेन्द्रियासवः सर्वे निरध्यस्ता भवन्ति हि ॥
तथापि न प्रलीयन्ते जीवन्मुक्तगताः स्फुटम् ।
आसन्यस्य हरेर्वापि सेवया देवभावतः ॥
इन्द्रियाणां तथा स्वस्य ब्रह्मभावाल्लयो भवेत् ।
आनन्दांशप्रकाशाद्धि ब्रह्मभावो भविष्यति' ॥

इति शास्त्रार्थात् । तर्हीति जीवन्मुक्त्यसंभवकाल इत्यर्थः । तत्संक्रमोक्तीति प्राणमयमुपसंक्रामतीति प्राणमयादिसंक्रमोक्तिविरोधापत्तिः । भेदस्तु सर्वात्मना लीनो भावनालीनो वर्तत एव । तस्मादिति ज्ञानाग्निना सर्वकर्मनाशात्तदनुजभक्त्या वेति कर्मजन्यशरीरस्य शङ्कितुमप्यशक्यत्वादेवेत्यर्थः । पुरुषोत्तमेति पुरा आस पुरि शेते इति व्युत्पत्तिद्वयं पुरमुषतीत्यधिष्ठान-

भाष्यप्रकाशः।

वरणैकहेतुकानुभवमात्रगम्योऽयमानन्दो, न मनोवाग्विषय इति ब्रह्मण आनन्दं ज्ञात्वा विद्वान् सन् कुतश्चन लोकवेदादिभ्योऽपि न बिभेतीति सर्वतो भयाभावमनेन श्लोकेनोक्तवतीति

रश्मिः।

व्युत्पत्तिः। पुरुषोत्तमो धर्मी स 'यद्यत्रिय' इति वाक्यानुगुणो भजनविषयः। तस्यानन्दो भजनानन्दः तस्यानुभवो हि सर्वात्मभावरूपसाधनेन 'पुरुषार्थोतः शब्दादिति बादरायणः' इति सूत्रात्। पुरुषोत्तमस्तु अग्निशिखेव त्रिष्वग्निषु हृदि वर्तते।

'विष्णुर्नाम महायोगी महामायो महत्तपाः।
तत्त्वमार्गे यथा दीपो दृश्यते पुरुषोत्तमः'॥

इति योगतत्त्वोपनिषच्छ्रुतेः। स पुरुषोत्तमो 'यद्यद्धिया' इति वाक्यानुगुण इत्युक्तः। स्वात्मकसाधनलभ्यः।

'शुद्धस्फटिकसंकाशं किंचित् सूर्यमरीचिवत्।
लभते योगयुक्तात्मा पुरुषोत्तमतत्परः'॥

इति श्रुत्युक्तं तत्साधनम्। व्यानवायुः पूर्वार्धार्थः। अमृतबिन्दूपनिषदि तथोक्तः। तदन्वमृतबिन्दूक्तं साधनम्। तदा शून्याभावे सिद्धे ब्रह्मोपनिषदोऽशून्यभावनिश्चयः। तेन धर्मी पुरुषोत्तमः। तत्र भक्त्या लक्ष्मीर्वर्तते पुरुषविधब्राह्मणात्। तया भक्त्या 'अचलत्वं चापेक्ष्य' इति सूत्रभाष्योक्तरीत्यात्मबोधोपनिषदुक्तस्वरूपलाभे शाब्देऽन्यस्मिन् वा। लभत इति। अमृतबिन्दूपनिषदुक्तप्रत्याहारप्रभृतिकयोगयुक्तात्मा निरोधानन्तरं मानसीसेवावान्। पुरुषोत्तमतत्पर इति। अत्र साधने पुरुषोत्तमयोगाध्यायोक्ते ऊर्ध्वमूलमधःशाखोश्वत्थः कालात्माश्वो बृहदारण्यकोक्तोप्सुयोनिर्नारायण इव वर्तमानः। शाखास्तु देवलोकमूलोकभुवर्लोकरूपाः। कर्मानुबन्धीनि मूलानि मनुष्यलोके तच्छेदनेन भगवद्धामाक्षरप्राप्तिः। ज्ञानकर्माभेदपक्षे पञ्चरात्रोक्ते। जीवांशोधिकारी। तेजोरूपं तेजोबिन्दूपनिषदि प्रोक्तम्। पश्चाच्चत्वारोर्थाः सर्वत्र प्रतिपाद्यन्ते इति ओजः। सोमो रसात्मकः। वैश्वानरोन्नपाचकः। सर्वहृत्स्थश्च तुर्यः। वेदान्तकृच्च क्षराक्षरपुरुषोत्तमाः सर्वभावश्च समष्टिः। सर्वात्मभावश्च। कृतकृत्यता फलम्। गुह्यतमत्वात्पुरुषोत्तमात्मकं साधनं गीतात्रयोदशाध्याये सर्वम्। अत्र तत्पर इत्यर्थः। तथा च गोपीचन्दनोपनिषदि श्रुतिः। ब्रह्म चिद्घनानन्दैकरूपपुरुषोत्तमरूपेण वसुदेवसद्मन्याविर्भविष्यतीति। अयं मध्यमः पक्षः। उत्तमस्तु स्वरुच्या निश्चित्य तत्परः। यथात्रैव भाष्ये अग्निशिखा पुरुषविधः 'यद्यद्धिया' इति वाक्यात् 'नाहं वेदैः' इति वाक्याच्च। 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्' इति काठकाच्च 'त्रिषत्या ह वै देवाः' इति श्रुतेः ब्रह्मामृतात्मबोधोपनिषदः उदाहृतास्तदङ्गमन्याः। रामोत्तरतापिनीयेपि 'सोमृतत्वं च गच्छति सोमृतत्वं च गच्छति सोमृतत्वं च गच्छति' इति वारत्रयमुक्तं त्रिषत्यम्। भिन्नाभिन्नयोरानन्दयोरभिन्नमानन्दमुक्त्वा भिन्नानन्दमाहुः वरणैकेत्यादि। वरणैकहेतुको भक्त्याख्यः प्रियत्वानुभव इत्यर्थः। अयमानन्द इति उक्तपुरुषोत्तमानन्दभिन्नो भेदघटितत्वेन भक्तिमार्गीयानन्दः। लोक इति आदिना कालः। न कुतश्चनेत्युक्त्या लोकाद्भयाभावो यथा चोराद् बिभेतीत्यादिभयहेतवः। तेभ्यो विद्वानित्युक्त्या द्वितीयाभावाच्च भयम्। इष्टनिवृत्त्यनिष्टप्राप्तिज्ञानजतापहेतुकं भयं भवति तदपि विद्वानित्युक्त्वा 'एतꣳह वा व न तपति' इति तापाभावाच्च

मानन्दो, न मनोवाग्विषय इति ज्ञात्वा लोकवेदकालादिभ्योऽपि न बिभेतीति, 'यतो वाचः' इति श्लोकेनोक्तवती। अन्यथा आनन्दे मनसोऽप्यगम्यत्वमुक्त्वा, विद्वानिति कथं वदेत्।

एवं सति सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेत्यृचि यत् फलमुक्तं तदेवान्ते विवृतमिति ज्ञायते। अन्यथा अस्माल्लोकात् प्रेत्येत्युक्तत्वाद्देहाभावेन भयानुपस्थित्या तन्निषेधासंभवः कामभोगासंभवश्च। अत एव

---

भाष्यप्रकाशः।

सर्वभयाभावः परममुक्तेर्लिङ्गमिति स एव तथात्वसाधक इत्यर्थः। विपक्षबाधकतर्कोक्तिमुखेन पुनर्हेत्वन्तरमाहुः अन्यथेत्यादि। अन्यथेति परममुक्तित्वाभावे। तथाच मनोवागविषयानन्दवेदनमपि परममुक्तेरेव लिङ्गमित्यर्थः। एवं हेतुत्रयेणास्याः परप्राप्तेः परममुक्तित्वसाधनेनेदं सिद्धम्। या ज्ञानमार्गिणां ब्रह्माभेदरूपा परममुक्तिः सा भक्तानां फलानुभवे स्वरूपयोग्यतासंपादकतयोपयुज्यते। तस्यां सत्यां भक्त्या तादात्म्येन फलानुभवात्। अतः सा पूर्वकक्षारूपेति। तदेतद् हृदिकृत्य सिद्धमाहुः एवं सतीत्यादि। एवं सतीति आनन्दमयप्राप्तेरेवं परममुक्तित्वे सति। विवृतमिति यतो वाच इति श्लोकेन विवृतम्। अस्य श्लोकस्यर्गुक्तफलांशविवरकत्वमृगंशस्य च यजुर्विवक्षितफलबोधकत्वमिति द्वयं निगमयितुं तद्विपरीतवादबाधकं तर्कमाहुः अन्यथा अस्मादित्यादि। तथाच यद्यस्यर्गंशविवरकत्वं न स्यात् तदोक्तरीत्या भयाभावेन भयनिषेधनमसंगतं स्यात्। यदि ऋगंशस्य विवक्षितफलबोधकत्वं न स्यात् तदा कामभोगोक्तिरप्यसंगता स्यादित्युभयमत्रवर्णादेवोभयं निगम्यत इत्यर्थः। अथैतत्साधकं हेत्वन्तरमाहुः अत एवेत्यादि। तथाच विवक्षितफलविवरकत्वादेव तथोक्तमित्यर्थः। एवमेतस्याः श्रुतेः फलांश-

रश्मिः।

तद्धेतुकं भयम्। 'न यत्र कालः' इतिवाक्यात् कालाभावान्न तद्धेतुकमपि भयम्। स एवेत्यादि सर्वभयाभावोपि परममुक्तित्वसाधकः। विपक्ष इत्यादि परममुक्तित्वाभावेन तावद्रूपव्यापनाभावपक्ष इत्यर्थः। न वदेदित्यन्यथाज्ञानरूपबाधकतर्कोक्त्युपायेनेत्यर्थः। हेत्वन्तरं परममुक्तित्वे। हेतुत्रयेणेति एतच्छरीरत्यागसर्वभयाभावमनोवागविषयानन्दवेदनरूपेणेत्यर्थः। ब्रह्माभेदेति कर्मादिजन्यचित्तशुद्ध्यनन्तरमक्षराभेदरूपेत्यर्थः 'आनन्दांशाभिव्यक्तौ तु तत्र ब्रह्माण्डकोटयः' इति शास्त्रार्थात्। न तु शाब्दापरोक्षरूपं ब्रह्म। तस्यामित्यादि योग्यतायां सत्याम्। सिद्धान्तमुक्तावलीटीकोक्तज्ञानिभक्तौ चेद्विशेषतोनुगृह्णाति तदा पुष्टिभक्तिं प्राप्नुतः। आद्याविति ग्रन्थोक्तपुष्टिमर्यादाभक्तयेत्यर्थः। तादात्म्येति भेदसहिष्णुनाभेदेनेत्यर्थः। भक्तानां पुरुषोत्तमाभेदस्त्वन्तरायरूपस्तदानन्दानुभवे इति तं तत्र न संपादयति इति 'अन्तरा भूतग्रामवत्स्वात्मनः' इति सूत्रे वक्ष्यते। अक्षरेण तद्रूपजीवेन च पुरुषोत्तमाभेदरूपादाधेयभेदः स इवार्थ इति न परमतप्रवेशः अदृश्यत्वाधिकरणे स्पष्टः। चरणरूपाक्षरेण पुरुषोत्तमाभेदः पूर्वोक्तेनाक्षरेण 'अविभक्तं च भूतेषु विभक्तमिव च स्थितम्' इति गीतोक्तः पुरुषोत्तमेनाभेदः। जीवस्य तु भक्तत्वाद् दत्तो भेदोऽभेदतिरोहितः। पूर्वकक्षेति 'ब्रह्मभूतः प्रसन्नात्मा' इति गीतावाक्यात्। यजुर्विवक्षितेत्यादि ब्रह्मविदित्यादियजुषा विवक्षितधर्मधर्मिभेदेन द्विविधानन्दरूपफलेत्यर्थः। तथोक्तमिति आनन्द-

सामानाधिकरण्यमनुक्त्वा 'आनन्दं ब्रह्मणः' इत्युक्तम्। एतेन लौकिकं पूर्वदेहं त्यक्त्वा साक्षाद्भगवद्भजनोपयोगिनं भगवद्विभूत्यात्मकं संघातं प्राप्नोत्यादौ। तथाहि। देहेन्द्रियप्राणान्तःकरणजीवात्मको हि संघातः। तत्र स्थूलं शरीरमाद्यविभूतिरूपम्। द्वितीयं स्पष्टम्। तृतीयं सर्वेन्द्रियसंबन्धित्वेनेन्द्रियरूपत्वेन चान्तःकरणात्मकत्वेन चेन्द्रियान्तःकरणरूपम्। तुरीयं जीवतत्त्वात्मकम्। यत्र गुहायां

भाष्यप्रकाशः।

विवरकत्वमुपपाद्य तेन सिद्धं निगमयितुमाहुः एतेनेत्यारभ्य, अवगम्यत इत्यन्तम्। आद्यविभूतिरूपमिति अन्नमयविभूतिरूपम्। मनोमयविभूतिरूपस्येन्द्रियान्तःकरणरूपत्वे हेतूनाहुः तृतीयमित्यादि। अत्र मनसः सर्वेन्द्रियनियामकत्वान्मनोमयस्य सर्वेन्द्रियसंबन्धित्वम्। शेषं स्फुटम्। तथाच कार्यद्वारा मनसैव सर्वेन्द्रियाण्याक्षिप्यन्त इति तथेत्यर्थः। जीवस्य विद्यमानत्वाद्विज्ञानमयविभूतिर्बुद्धिरूपा मनसः पृथग् भविष्यतीत्याशङ्कावारणाय तत्स्वरूपमाहुः तुरीयमित्यादि। जीवतत्त्वात्मकमिति जीवस्य यत् तत्त्वं स्वरूपसहकारियोग्यतासंपत्तिस्तदात्मकमित्यर्थः। अत्र गमकं यत्रेत्यादिना प्रोक्तं ज्ञेयम्। एवं

रश्मिः।

ब्रह्मणोः सामानाधिकरण्येनोक्तमित्यर्थः। एतेनेत्यारभ्येत्यादि। अत्र भाष्ये। संघातमिति यद्बृहदारण्यके शारीरब्राह्मणे ब्राह्ममित्युक्तं तत्। साक्षाद्भगवद्भजनेति विशेषणेन तस्य फलत्वात्। विवृण्वन्ति स्म अत्रेत्यादि। अत्र प्रकृते संघाते मनस उत ये मनो विदुरिति श्रुतेराधिदैविकरूपमनस इत्यर्थः। 'मनसो वशे सर्वमिदं बभूव' इति वाक्यात् सर्वेन्द्रियाणि प्राणाः इन्द्रियाणि प्राणाः अन्तःकरणं स्थानं तेर्थाः सर्वेन्द्रियपदवाच्याः। तेषां नियामकत्वादित्यर्थः। मनोमयस्येति मनःप्राचुर्यस्य विभूतित्वात्। सर्वेन्द्रियाणि पूर्वोक्तानि तत्संबन्धित्वम्। आधिदैविकत्वेन प्रेर्यप्रेरकभावः संयोगरूपः सोस्यास्तीति सर्वेन्द्रियसंबन्धि तस्य भावः सर्वेन्द्रियसंबन्धित्वम्। शेषमिति। इन्द्रियेत्यादि भाष्यं स्पष्टम्। तथा हि आधिदैविकादिरूपेण त्रैविध्यम्। सर्वेन्द्रियसंबन्धो नेयनायकभावः। इन्द्रियरूपत्वम्। 'मनोमात्रमिदं ज्ञात्वा' इतिवाक्यात्। अन्तःकरणात्मकत्वं मनःप्राचुर्येप्येकदेशविकृतन्यायेन, एवं स्पष्टम्। कार्यद्वारेति ज्ञानरूपकार्यद्वारा। आक्षिप्यन्त इति आक्षेपोर्थापत्तिः। 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' इति श्रुतेः। तथेति सर्वेन्द्रियसंबन्धित्वादिः। मनसेति अपृथगिति पदच्छेदः। मनोबुद्धिचित्ताहंकारा इति मनोभेदा इति। बुद्धिरूपेति इन्द्रियानुग्राहिकेत्यर्थः। बुद्धितारतम्येनेन्द्रियज्ञानक्रिययोस्तारतम्यदर्शनाद्बुद्ध्यैवानुगृहीतानीन्द्रियाणि पश्यन्ति कुर्वन्ति च। इदं च कार्यलक्षणम्। स्वरूपलक्षणं तु द्रव्यस्य घटादेः स्फुरणे शब्देनालोकेन संस्कारेण वा यद्विशिष्टं ज्ञानमिति। तृतीयस्कन्धे षड्विंशे 'तैजसात्तु विकुर्वाणाद्बुद्धितत्त्वमभूत्' इत्यस्य सुबोधिन्याम्। तल्लेखे प्रस्थानरत्नाकरे च स्फुटम्। तत्त्वपदस्याभिप्रायमाहुः मनसेति। तस्येन्द्रियप्रेरकत्वं कार्यलक्षणम्। संकल्पविकल्पात्मकत्वं स्वरूपलक्षणमिति तेन पृथक्। बुद्धेर्मनोभेदत्वात्। स्वरूपेत्यादि ज्ञानेन्द्रियेषु विज्ञानमयप्रवेशात्तथेति वक्ष्यमाणभाष्योक्ता। यत्रेत्यादिनेति अग्रिमग्रन्थेन भाष्ये यत्र स्वरूपयोग्यतायां सत्यां बुद्धिरूपायां यतो जीवरूपं ज्ञानं बुद्धिरूपस्वतत्त्वं विना न ब्रह्मवित्। बुद्धिमानयं पदार्थान् जानाति इति प्रत्ययात्। 'मनसि सर्वतो निवृत्तव्यापारे स्वयमुपलब्धनिजसुखानुभवो भवान्' इदमेव ब्रह्मज्ञानमिति द्वितीयपादे वक्ष्यन्ति। गुहायामित्यादेरर्थ-

**भगवद्वरणेन परमव्योमाविर्भावस्ततः पूर्णानन्दात्मकं पुरुषोत्तमस्वरूपं फलरूपं प्राप्य उक्तक्रमगर्थरीत्या तेन सह सर्वकामाशनमेव मनोवागविषयानन्दवेदनं तद्वान् भवतीति वाक्यैकवाक्यतयावगम्यते ।**

भाष्यप्रकाशः ।

विभूतिरूपाणि व्याख्याय तच्छेषिणं व्याकुर्वन्ति तत इत्यादि । अत्र कामाशनस्य वेदनरूपत्वम् । भोगस्य सुखसाक्षात्काररूपत्वात् । वाक्यैकवाक्यतयेति उपसंक्रमेण वेदनभयाभावाभ्यां तापाभावादिभिश्चास्य फलांशविवरकत्वेन वाक्यानामैकवाक्यतया ।

एवमानन्दमयप्राप्तेर्यथा परममुक्तित्वं, तथा प्रकारो विषयवाक्यभूतप्रपाठकविवरणेन प्रकाशितः । तत्र पूर्वोक्तानां विभूतीनां पक्षिरूपत्वं यदत्रोक्तं तल्लीलोपयोगिषु तेषु

रश्मिः ।

माहुः गुहायामित्यादि । हृदि मनसि अयं हृदयं सप्तम्या लुक् तत्संबन्ध्याकाशे छिद्ररूपे 'छिद्रा व्योम्नीव चेतनाः' इति वाक्यात् । सुपर्णद्वययुक्तं वस्तु 'द्वौ सुपर्णौ भवतः' इति गोपालतापिनीयात् । मर्यादाभक्तस्यान्यत्र चरणयोर्लयात् पुष्टिभक्तस्य फलम् । सिद्धान्तमुक्तावलीटीकायां ज्ञानिभक्तौ चेद्विशेषतोनुगृह्णाति तदा पुष्टिभक्तिं प्राप्नुतः आदाविति ग्रन्थात् । पुष्टिमार्गत्वान्न भगवद्वरणातिरिक्तं साधनमुक्तम् । भक्तिहेतौ त्वनुग्रह उक्तः स पुराणोक्तः ।

'यदा यस्यानुगृह्णाति भगवानात्मभावितः ।
स जहाति मतिं लोके वेदे च परिनिष्ठिताम्' ॥

इतिवाक्यात् । न बिभेति कुतश्चनेति परिनिष्ठितमतित्यागः । गुहायां हृदये 'स मानसीन आत्मा जनानाम्' इति श्रुतेः । परमव्योमाविर्भावोऽयोगोलके वह्निरिव वरणातिरिक्तं साधनं नेत्युक्तम् । हृदि अयमात्मा सामानाधिकरण्येन तत्संबन्धिन्याकाशे जीवदेहे मनसि परमव्योमाविर्भावः स्पर्शमणिसंबन्धेनायसि चामीकरत्वाविर्भाववत् । परो मीयते ज्ञायते येन व्यापकेन व्योम्नेति परमं व्योम । ननु जीवस्य देह आकाशात्मकोपि मांसरूपः । संहितायामाकाशस्य मांसत्वोक्तेः भगवदंशत्वात् 'तस्माद्वा एतस्मादात्मनः' इत्यादिकं भवति । आत्मनो जीवादाकाशो देहः । आकाशाद्वायुः प्राणादिः त्वक् च । वायोरग्निः दर्शनाग्निः जाठराग्निर्ज्ञानाग्निश्च । अग्नेरापः प्रस्वेदादिरूपाः । अद्भ्यः पृथिवी कठिनांशा अस्थ्यादि । पृथिव्या ओषधयः लोमानि केशाः । ओषधीभ्योन्नं लिक्षा अन्नाद्यूकाः । पुरि शेरते इति पुरुषाः यथाकथंचिन्नेयाः । तत्र पुरुषोत्तमस्य दीपशिखावद्वर्तमाने पूर्णानन्दे अदृश्यत्वाधिकरणोक्ते संपन्ने 'तस्यैष आत्मा विवृणुते तनुं स्वाम्' इति श्रुत्युक्तं भवति, स्वां स्वीयां तनुं विवृणुते प्रकाशयति । प्रकृते । तच्छेषिणमिति । आनन्दमयमित्यर्थः । तापाभावेत्यादि 'एतꣳह वा व न तपति' इति श्रुतेः । अस्येति प्रपाठकस्य । तथा च व्याख्येयव्याख्यानभावेनैकवाक्यता तया । अधुना प्रथमस्कन्धस्य 'अथो विहायेममुं च लोकम्' इत्यादिश्लोकद्वयसुबोधिन्युक्तदिशान्नमयादिविभूतीनां साधनसंपत्तये लौकिकान्नमयादिकोशेषु तत्तदर्थं तत्प्रवेशं बोधयन्तीत्याशयेन भाष्यमवतारयन्ति एवमानन्दमयेत्यादि । प्रकाशित इति सर्वरीत्या व्याख्याय पूर्वं पश्चात्प्रथमत्यागे मानाभावमाश्रित्यायवेत्यादिना प्रकाशितः । तल्लीलेत्यादि लीलापूर्वकालिकेषु

अथेदं विचार्यते । 'पुरश्चक्रे द्विपदः' इति श्रुतौ वस्तुतस्तु पुरुष एव । परंतु पुरःसंबन्धी सन् पक्षी भूत्वा पुर आविशदिति निरूपितम् । प्रकृते चान्नमया- दयस्तथैवोक्ताः । एवं सत्येकस्यां पुरि बहूनां तेषां प्रवेशो न वक्तुमुचितः । प्रयोजनाभावादित एकैकस्यां पुरि तथा वाच्यः । तत्र कीदृश्यां तस्यां कस्य प्रवेश इति विचार्यमाणे प्राकृतत्वब्रह्मत्वयोरविशेषाद् विनिगमकाभावात् सर्वेषां सर्वत्र प्रवेशोऽप्रवेशो वा भवेदिति चेन् ।

अत्रेदं प्रतिभाति । अस्माल्लोकात् प्रेत्येति वाक्ये इदंशब्दप्रयोगात् प्राकृत-

भाष्यप्रकाशः ।

कोशेषु पक्षिरूपेण यः प्रवेशस्तद्धेतुकमिति तद्बोधिकायाः श्रुतेरविचारे तन्न दृढं भवतीति तद्दृढीकरणाय पक्षिरूपप्रवेशबोधकश्रुतिविचारं प्रतिज्ञाय तद्विचारबीजं वक्तुं प्रथमतो विषयमाहुः अथेत्यारभ्य, उक्ता इत्यन्तम् । तथैवेति पक्षिरूपेण । अत्र विचारबीजं वदन्तः पूर्वपक्षमाहुः एवं सतीत्यादि, चेदित्यन्तम् । अविशेषादिति सर्वेषु पक्षित्वविशेषात् । अप्रवेश इति उक्तश्रुतावेकस्य प्रवेशोक्तावप्यन्नमयादिषु पक्षिलिङ्गेन पुरि प्रवेशे प्राप्तेऽपि प्राणमयादिष्वन्तर आत्मेति श्रावणात् तेषां चतुर्णां तत्तदन्तःप्रवेशोऽस्तु । अन्नमये तु तदश्रावणात् तत्प्रवेशो न शक्यवचनः । किंच, द्विपत्त्वादिलिङ्गस्य स्थूलास्वेव सत्त्वात् तास्वेव प्रवेशोऽत्र भासत इति प्राणमयादिषु लिङ्गाभावेन विवक्षितपुष्टाभावात् तेष्वपि तदन्तराणां सोऽशक्यवचन इत्यप्रवेश इत्यर्थः । सिद्धान्तमाहुः अत्रेत्यादि । अयमर्थः । अस्माल्लोकात् प्रेत्येत्यत्र स्थूलशरीरत्यागाङ्गीकारे सूक्ष्मशरीरकारणशरीरयोः सत्त्वेन प्राणमयादिकोशानां सत्त्वेन, एतं प्राणमयमात्मानमुपसंक्रामतीत्याद्यग्रिम-

रश्मिः ।

लौकिककोशेष्वित्यर्थः । भाष्ये । निरूपितमिति आधिभौतिकेष्वाध्यात्मिकानां प्रवेश इति निरूपितमित्यर्थः । प्रकृते । तन्नेति प्रवेशहेतुकं नेत्यर्थः । तद्विचारबीजमिति पक्षिणामप्राकृतत्वब्रह्मत्वाविशेषो विनिगमकाभावश्च हेतू । तद्धेतुकः सर्वेषां सर्वत्र प्रवेशोऽप्रवेशो वा बीजम् । तस्य पक्षिरूपप्रवेशबोधकश्रुतिविचारस्य भवति । विषयमाहुरिति परोक्षवादरूपसिद्धान्तोपयोगिनं तमाहुरित्यर्थः । अथेत्यारभ्येति । ननु उपष्टम्भकश्रुतेर्विचारे किं मूलमिति चेन्न । अत्राधिकरणे पूर्वाधिकरणवन्नपुंसकलिङ्गानुक्तेरानन्दमय इति पुलिङ्गोक्तेः 'ब्रह्मन् पुंसि च' इति सूत्राद् ब्रह्मेति पुलिङ्गानुवर्तनाद्वेदगर्भकारणतानिरूपणेन । भाष्यत्वात् तादृशस्वपदवर्णने येन केनापि यागेन पूर्वकाण्डोक्तब्रह्मणोपि विचारमालोच्यास्याविचारात्पूर्वकाण्डानुगुण्यं पाषण्डनिवर्तकमेव मूलमिति । नपुंसके 'ततो ह जानातो भुवनस्य गोपा हिरण्मयः शकुनिर्ब्रह्मनामेति श्रुतिः। पूर्वपक्षमिति संशय उन्नेयः। सर्वेषामेकैकस्मिन् प्रवेशोऽप्रवेशो वा सर्वत्र प्रवेशोऽप्रवेशो वेति । श्रुतिः पूर्वपक्षयुक्तिश्च संशयबीजम् । उक्तश्रुताविति 'पुरश्चक्रे द्विपदः' इति श्रुतावित्यर्थः । एकस्य प्रवेशोक्ताविति 'स पक्षी भूत्वा' इत्यत्रैकत्वविवक्षणादिति भावः । अस्त्विति अत आत्मनश्चेतनत्वादिति भावः । न शक्येति । चेतनाभावादिति भावः । लिङ्गाभावेनेति द्विपत्त्वादिलिङ्गाभावेन । तदन्तराणामिति पक्षिणामित्यर्थः । सूक्ष्मेति । कारणशरीरं तु—

'अविप्रणाशः सर्वेषां कर्मणामिति निश्चयः ।
कर्मजानि शरीराणि तथैवाकृतयो नृप' ॥

गुणमयं प्रपञ्चमतिक्रम्य गुणातीतं प्रपञ्चं साक्षाल्लीलोपयोगिनं प्राप्नोतीत्यव-गम्यते । तत्प्राप्त्यैव भगवद्भावे संपन्ने पूर्वं भगवद्विरहभावेनातितीव्रत्वेन सर्वोप-मर्दिना शरीरेन्द्रियप्राणान्तःकरणानि नष्टान्येव स्युर्यदि तत्तद्रूपं ब्रह्म तेषु तेषु न प्रविष्टं स्यात् । जीवस्य च ब्रह्मण्येव लयेन लीलारसाननुभवेन नाश एव सः । तथाच तत्तद्रूपं ब्रह्म तेषु तेषु स्थितमिति न तेषां नाशः । जीवे त्वानन्दमयः पुरुषोत्तमः प्रविशतीति रसात्मकत्वादानन्दात्मकमेव विरहभावरसाब्धिमनुभूय

---

भाष्यप्रकाशः ।

वाक्यविरोधादस्माल्लोकादित्यस्येदम् इदं सर्वं यदयमात्मा, अस्मिँल्लोकेऽर्धुक९ स्यादित्यादावि-दमः परिदृश्यमानयावत्संग्राहकत्वदर्शनादत्रापि ब्रह्मविदः फलप्रकरणे प्रापञ्चिकसर्वसंग्राहक-ताया एवाभिप्रेतत्वौचित्यात् तथावगम्यते । ततो गुणातीतप्रपञ्चप्राप्त्यैव भगवत्युत्कटरत्यां जातायां पूर्वं विरहभाव एवोद्रिच्यत इति तेन शरीरादीनि मूले सति लीनानि स्युरतस्तद्-भावाय प्रवेशः सर्वत्रावश्यकः । किंच, लये ज्ञानिसाधारण्येन वरणवैयर्थ्याल्लीलाननुभवे स जीवस्याप्यनिष्टरूप एवेत्यतोऽप्यावश्यक इत्यर्थः । ननु भवत्वन्यत्रान्येषां प्रवेशस्तथापि जीवस्य नित्यत्वात् तत्रानन्दमयप्रवेशो निष्प्रयोजनत्वादयुक्त इत्यत आहुः जीवे त्वित्यादि उच्यत इत्यन्तम् । प्रविशतीति रसानुभावनाय प्रविशति । इतिर्हेतौ तथाच सोपि सप्रयोजनः । तस्य पुरुषोत्तमत्वं श्लोकाद्युक्तभयाभावरूपाल्लिङ्गादेव ज्ञायते । एतदग्रिमा-

रश्मिः ।

इतिभारतोक्तम् । तथावगम्यत इति प्राकृतगुणमयं प्रपञ्चमित्याद्यवगम्यत इत्यर्थः । अत्र प्राकृतगुणातीतयोः प्रपञ्चयोर्मध्ये प्राप्तिसाधनं नोक्तं तथापि वरणमत्यन्तानुग्रहश्च ज्ञेयम् । पुष्टिमार्गीयत्वान्न साधनान्तरमपेक्षते । साधारणप्रवाहव्यवस्था तु शारीरब्राह्मणेस्ति । तत्प्राप्त्येत्यादि भाष्यं विवृण्वन्ति तत इत्यादि । गुणातीतेत्यादि एवकारेण वरणस्य विद्यमानत्वात्तदन्तर्गता-त्यन्तानुग्रहस्यापि सत्त्वाद् गीतोक्तगुणातीतलक्षणोक्तधीरतुल्यप्रियाप्रियत्वातिरिक्तधर्मः व्यवच्छिद्यते । अव्यभिचारी भक्तिमांश्च 'स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते' स गुणातीतः तथा चैतादृश-प्रपञ्चान्तर्गतानां धीरतुल्यप्रियाप्रियत्वाव्यभिचारिभक्तिपदार्थानां प्राप्तिर्विशेषतः करणं भगवदुत्कट-रत्याम् । सर्वात्मभावस्य दानसाध्यस्यानुक्तिः । रतिस्तु सर्वात्मभावकस्य निरोधलक्षणग्रन्थोक्तस्याधि-भौतिकप्रेमसंबन्धादाध्यात्मिक्यत उक्ता । पूर्वविरहेति । ननु संयोगौ भवतः पूर्वविरहः कुत इति चेन्न भगवदास्यार्तेरधिकारत्वात् । अक्षरब्रह्मत्वं तु गुणातीतप्रपञ्चप्राप्त्यैव प्राप्तमतः प्रथमाधिकारो नायुक्तः । एवकारस्तु भक्तरुक्मिण्याहरणे पूर्वं तस्या विरहभावोक्तेः । 'जह्यामसून् व्रतकृशान् शतजन्मभिः स्यात्' इति प्रसादः स्यात् । तेन विरहभावेन सर्वोपमर्दिना शरीरादीनि तथा । मूले सतीति हृदि प्रकटे ब्रह्मणीत्यर्थः । पृथिव्यादाविति वा । ननु स एवास्तु फलत्वादित्यतो जीवस्य चेत्यादि भाष्यं विवृण्वन्ति किं च लयेत्यादि । भाष्ये । ब्रह्मण्येव लयेनेत्यत्र एवकारेणाक्ष-रात्मकचरणव्यवच्छेदः । तदानीं भक्त्यभावाल्लयप्रतिबन्धकाभावात् । प्रकृते । अनिष्टेत्यादि 'तदापीतेः संसारव्यपदेशात्' इति सूत्रे स्फुटिष्यति एवकारार्थोऽपि । रसानुभावनायेति प्रदीपाधिकरणे स्पष्टमिदम् । सोपीति आनन्दमयप्रवेशोपि । प्रयोजनं रसानुभावनम् । भाष्ये । रसात्मकत्वादिति 'रसो वै सः' इति श्रुतेः । रस शब्दे, रस आस्वादने चर्वणैकस्वभाव आनन्दमये रसशब्दप्रसिद्धेः । शब्दा-

पश्चात् प्रादुर्भूतं प्रभुस्वरूपं प्राप्य, 'न बिभेति कुतश्चन' इति वाक्येन लोकात् तदभावमुक्त्वा, 'एतꣳह वा व न तपति किमहं साधु नाकरवं किमहं पापमकरवम्' इतिवाक्यैर्वेदाद्भयाभाव उच्यते ।

शरीरप्राणमनोऽन्तःकरणजीवात्मनां शरीरत्वं वाजसनेयिशाखायामन्तर्यामिब्राह्मणे पठ्यते । 'यस्य सर्वाणि भूतानि शरीरं यस्य प्राणः शरीरं यस्य वाक् शरीरं यस्य चक्षुः शरीरं यस्य श्रोत्रं शरीरं यस्य मनः शरीरं यस्य त्वक्शरीरम् ।

भाष्यप्रकाशः ।

र्थस्तु य एवमतापकरत्वेन एते साध्वसाधुनी विद्वान् स आत्मानं स्पृणुते ब्रह्म प्रीणाति । तत्र हेतुरुभे ह्येवैष इत्यादि । अत्र स्पृणोतिर्ज्ञानार्थक इति न पुनरुक्तिः । तेन सोऽपि युक्त इत्यर्थः । अत्र या स्वरूपप्राप्तिरुक्ता सा फलाध्यायतुरीयपादे निपुणतरं भाष्य उक्तेति मया तत्रैव व्युत्पादनीयेति बोध्यम् । किं च । द्विपत्त्वादीत्यादिनोक्तद्वितीयबाधकनिरासाय पुच्छं स्फुटीकुर्वन्ति शरीरेत्यादि । प्राणमनोऽन्तःकरणेतिपाठे मनोऽन्तरिति भिन्नं पदम् । एतद्गणनामध्ये इत्यर्थः । प्राणेन्द्रियान्तःकरणेति वा पाठः । अत्रायमर्थः । पुच्छं हि शरीरत्वम् । तच्च भूताद्यात्मान्तेषु तुल्यम् । तथा ब्रह्मण आन्तरत्वं च सर्वत्रात्रोक्तमिति प्रवेशोऽपि तस्य सिद्धः । एवं सत्येतदनुरोधाद् बहुपदां पुरां दर्श-

रश्मिः ।

र्थरसरूपधृक्त्वात् । एवेति विरहभावरसाब्धेर्हृदयात्मकत्वव्यवच्छेदकः । आनन्दसृष्टौ सुखात्मकत्वेपि सर्वस्य सुखे ईर्ष्यासूयादिमिश्रीभावे सुखमेव दुःखाय इति वाराहपुराणे चातुर्मास्यमाहात्म्येस्ति । विरहमनुभूयेत्युक्तौ तस्य प्रियमेव शिर इति श्रुत्युक्तभावात्मकत्वविरोधः भावात्मकस्य प्राङ्गत्वात् । तर्हि विरहभावमनुभूय इति वक्तव्यम् । न विरहभावस्तूष्णीकं नानुभूय इत्यस्य कर्म अतितीव्रत्वात् किं तु शब्दजास्वादरूपोऽतो रस इति । सोपि शाब्दविषयो लौकिकानामतोत्र शास्त्रदृष्ट्याब्धिशब्दः । लवणमेतदुदकमिति श्रुतिविषयः । जातानां लीलास्थानामभेदानुभवेन विलक्षणरसानुभवार्थम् । मानसीसेवा वा तत्रत्या । जातानां रसान्तस्थानां शरीराणां रेणुजत्वेन पार्थिवत्वात् तत्कारणायां दृष्टिरुचिता । नन्वात्मनः कारणत्वं 'आत्मन आविर्भावतिरोभावौ' इति श्रुतेरिति चेन्न तत्रत्यानां सर्वेषामात्मत्वेन यथादृष्टं कारणमिति । प्रादुर्भूतमिति राजवत्प्रादुर्भूतम् । न बिभेतीत्यादि पूर्वं व्याख्यातम् । एतदिति । पापमकरवमिति श्रुत्यग्रिमार्थस्तु अग्रिमा श्रुतिस्तु 'स एवं विद्वानेते आत्मानꣳस्पृणुते । 'उभे ह्येवैष एते आत्मानꣳ स्पृणुते य एवं वेद' इति । उभे ह्येवैष इत्यादि उभे ह्येवैष एते आत्मानꣳ स्पृणुते इति श्रुतिः । 'भक्त्या माममिजानाति' इति न्यायेनाहुः अत्र स्पृणोतिरिति । ज्ञानार्थक इत्यादि । पृण प्रीणन इति धातोर्ज्ञाने लक्षणेति 'किमहं साधु नाकरवम् किमहं पापमकरवम्' इति 'स एवं विद्वानेते आत्मानꣳ स्पृणुते । उभे ह्येवैष एते आत्मानꣳ स्पृणुते' इत्यत्र स्पृणोतेर्न पुनरुक्तिरित्यर्थः । सोपीति जीवे आनन्दमयप्रवेश इत्यर्थः । द्विपत्त्वादिति अप्रवेश इति भाष्यव्याख्याने किं च द्विपत्त्वादित्यादिनोक्तपुच्छाभावरूपबाधकनिरासायेत्यर्थः । पदमिति करणं वागादि जीवो रेतःस्थः 'यो रेतसि तिष्ठन्' इति श्रुतेः । एतस्य क्लिष्टत्वादाहुः प्राणेन्द्रियेत्यादि । तथा च भाष्यत्वाद्बाहुलकमिति भावः । सर्वत्रात्रेति अन्तर्यामिब्राह्मण इत्यर्थः । तस्येति ब्रह्मण इत्यर्थः । एवं सतीति प्राणमयादिषु शरीरत्वे

इत्यादेरन्ते यस्यात्मा शरीरमिति । अत्र पूर्वोक्तनिर्गुणदेहानां भगवच्चरणरेणुजत्वेन भूतरूपत्वाद् ब्रह्मशरीरत्वम् । तत्रान्नमयतत्प्रवेशेन तत्स्थितिः प्राणेष्वपि तथा । ज्ञानेन्द्रियेषु विज्ञानमयप्रवेशात् तथा । मनसि मनोमयप्रवेशात् तथात्वम् । जीवे त्वानन्दमयः प्रविशतीति तथात्वम् । अतो युक्तं पक्षित्वकथनम् ।

आनन्दमयस्य स्वरूपं विशेषतो वक्तुमशक्यमिति यः पूर्वस्येति सर्वत्रोक्तम् । शरीरप्रवेशप्रयोजनकपक्षिरूपत्वं पञ्चस्वपि साधारणमिति तेषु तथा वद-

भाष्यप्रकाशः ।

नादत्र प्रतिष्ठापदेन पादयोर्बोधनाच्च पुरश्चक्र इति श्रुतौ द्विपदादिपदं कृतपूर्मात्रोपलक्षकमिति तत्र तासां करणं, तासु प्रवेश इति चाभिप्रेतं, न तु तासां द्वैविध्यं स्थूलत्वं वेति निर्णये सर्वास्वेव कार्यार्थं पक्षिरूपेण प्रवेशः सिद्ध्यतीति पक्षिलिङ्गादन्नमयादीनामपि प्रवेशः शक्यवचन इत्यर्थः । एवं सर्वेषां प्रवेशं समर्थयित्वा लीलौपयिकप्रवेशार्थमप्राकृतविभूतिरूपाणां स्वरूपमाहुः अत्रेत्यादि । इदं च प्रथमस्कन्धसुबोधिन्यां, 'या वै लसच्छ्रीतुलसीविमिश्रपादाब्जरेण्वभ्यधिकाम्बुनेत्री'इत्यत्र सिद्ध्यति । प्रवेशं विभजन्ते तत्रेत्यादि । जीवस्य वरणेनैव शुद्धत्वाद् विज्ञानमयस्य प्रवेशोऽनर्थक इति शङ्कावारणाय तदधिकरणमाहुः ज्ञानेन्द्रियेत्यादि । जीवे तथात्वं लीलारसानुभवयोग्यत्वरूपं बोध्यम् । एवं सर्वत्र पक्षित्वोक्तिं समर्थयित्वानन्दमये शारीरत्वोक्तेस्तात्पर्यं वक्तुं यः पूर्वस्येति गूढोक्तेराशयमाहुः आनन्दमयस्येत्यादि । शरीरेत्यादि च । विशेषतो वक्तुमशक्यत्वं मनोवागगम्यत्वाद् बोध्यम् । तथाच तस्यैष इत्यत्र शब्द एव पूर्वसमो न त्वर्थोऽपि ।

रश्मिः ।

सिद्धे सतीत्यर्थः । अत्रेति तैत्तिरीये प्राणमयादिषु पृथ्वी पुच्छं प्रतिष्ठा, अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा, महत्पुच्छं प्रतिष्ठा, ब्रह्म पुच्छं प्रतिष्ठा, इति यथायथं प्रतिष्ठापदेनेत्यर्थः । तासामिति पुरामित्यर्थः । द्वैविध्यमिति द्विपत्वं चतुष्पत्त्वमिति द्वैविध्यम् । सर्वेषां प्रवेशमिति एतेन पूर्वपक्षे अप्रवेशो दूषितः सिद्धान्ते । सिद्ध्यतीति । युक्तिस्तु अणुभाष्ये टीपिता सारोऽयमर्थः । सा च पार्थिवं शरीरमिति योगादिशास्त्रादत्रापि पार्थिवशरीराभावे सूत्रं निर्विषयं स्यात् । नन्वस्ति सर्वेषां पार्थिवशरीरमिति चेन्न आकाशत्वाच्छरीराणाम् । 'आकाशशरीरं ब्रह्म'इति श्रुतेः । तदंशानां व्योम्नीव छिद्राणां जीवानामाकाशशरीरत्वौचित्यात् । आकाशान्मांसरूपादस्य वायवः । वायोरयोमयः दर्शनाग्निजाठराग्निज्ञानाग्निरूपाः । अग्ने रुधिरादिरूपा आपः । अद्भ्यः पृथिवी 'यत्कठिनं सा पृथिवी' इति श्रुतेः कठिनांशोस्थ्यादिः पृथ्वीति । पार्थिवत्वाभावात् । भगवदिच्छाधीनं सर्वं तथापि युक्तयर्थं भाष्येऽन्नमयप्रवेश उक्तः । ब्रह्मशरीरत्वमिति भाष्ये ब्राह्मं वेति शारीरब्राह्मणं द्रष्टव्यम् । भाष्ये प्राणिष्वपि तथेत्यन्नमयप्रवेश इत्यर्थः । प्राणानामम्मयत्वेनान्नमयस्याप्रचुरस्य प्रवेश उचितः । 'आपो वा अन्नम्'इति श्रुतेः । तथात्वमिति भाष्यं विवृण्वन्ति जीवे तथात्वमिति । गूढोक्तेरिति 'तस्माद्वा एतस्मादात्मनः' इत्यत्र तदेतच्छब्दाभ्यां विपश्चिद्ब्रह्मपरामर्शाद् यः पूर्वस्येत्यत्र यच्छब्देन गूढानन्दमयोक्तेरित्यर्थः । तस्यैष इति 'तस्यैष एव शारीर आत्मा यः पूर्वस्य' इति श्रुतावित्यर्थः । अत्रेदं सारम् । 'रसो वै सः' 'आनन्दो ब्रह्मेति व्यजानात्' 'सत्यं विज्ञानमानन्दं ब्रह्म' इति श्रुतिसहस्रैरानन्दो ब्रह्मरस इत्यविवादम् । रसश्च मुख्यो भक्तिरूपः शृङ्गारश्च । इमौ द्विविधौ, संयोगविप्रयोगभेदात् । एवं चोभावेकः वस्तुस्वभावात् ।

न्त्वानन्दमयेऽपि तथैवोक्तवती श्रुतिरिति ज्ञेयम् । एवं सति स्पर्शमणिसंबन्धित्वेन रजतादेर्हेमत्वमिवोक्तप्रकारकप्रवेशादाश्रयाणामपि तत्तदात्मकत्वमित्युच्यते ।

भाष्यप्रकाशः

तेनात्रायमर्थः । तस्येत्यभेदे षष्ठी । तथाच पूर्वस्य यः शारीर आत्मा उपक्रमे जगत्कर्तृत्वेनोक्तस्तदभिन्न एव इति । एवमर्थोक्तौ गमकं तु, अग्रेऽन्यस्यान्तरात्मन उत्तयभाव एवेति प्रागेवोक्तम् । प्रवेशस्य योग्यतासंपादकत्वप्रकारं दृष्टान्तेनाहुः एवं सतीत्यादि । एवमत्र श्रुत्यन्तरानुसारेण वास्तवं पक्षिरूपमादृत्य प्रकृतश्रुत्यर्थो निर्णीतः । अतः परं 'परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः' इति श्रुतेः ।

रश्मिः ।

पूर्वोक्तो यद्यपि वाक्यान्वयाधिकरणे प्रियत्वस्य ब्रह्मधर्मत्वमुक्तमिति धर्मस्तथापि पूर्वोक्तश्रुत्या धर्म्यपि । आनन्दवत् । भक्तिश्च भावो 'रतिर्देवादिविषया भाव इत्यभिधीयते' 'केवलेन हि भावेन गोप्यः' इत्यादिवाक्यात् । एवं च पूर्णब्रह्म भावात्मकमिति निष्कर्षः । तच्च न निराकारं 'आनन्दरूपममृतं यद्विभाति' 'आनन्दमात्रकरपादमुखोदरादिः' इति श्रुतिस्मृतिभ्यम् । प्रकृतश्रुतेश्च तत्राकारविचारे कृष्णाकारो मुख्यः । एतच्च 'समान एवं चाभेदात्' इति सूत्रे उपपादनीयम् । श्रीभागवते च स्फुटम् । न चैवं परिच्छिन्नस्याब्रह्मत्वं शङ्कनीयम् । वैश्वानराधिकरणे प्रादेशमात्रस्यैवाभिविमानत्वमिति सिद्धान्तात् । ज्योतिश्चरणाधिकरणे ज्योतीरूपत्वोक्तेर्यथा परिच्छिन्नोपि वह्निस्तूलादियोगान्महान् भवति तद्वदिति दृष्टान्तः । तदेव स्वधर्मेण सच्चिदानन्दरूपेण व्याप्तमिति समन्वयाधिकरण उपपादितम् । तदर्थं 'तदव्यक्तमाह हि' इत्यधिकरणे विरुद्धधर्माश्रयत्वं तस्य व्यवस्थापितम् । एवं च कल्पतर्वादिवत्तद्वस्त्वेव तादृशमिति वस्तुस्थितिः । अन्यथास्मदादितुल्यता स्यात् । सा चासंगततरा । 'हेयत्वावचनाच्च'इत्यादिसूत्रविरोधात् । तथा च तेजोमयो व्यापकः आनन्दमयो भावात्मकः कमनीयः साकारोऽनेकशक्तिवृतः पुरुषः परं ब्रह्मेति शास्त्रार्थः । तत्राक्षरं तस्य धाम भवतीति ततो भिन्नाभिन्नम् । एतच्च 'सूक्ष्मं तु तदर्हत्वात्' 'तदधीनत्वादर्थवत्' इतिसूत्रयोर्भाष्ये स्फुटम् । तत्प्राप्तिश्च सर्वात्मभावरूपभक्तेः । एतच्च पुरुषार्थाधिकरणे तृतीयस्य चतुर्थचरण उपपादितम् । तत्प्राप्तिश्च साकारानन्दनिचयानुभव इत्यत्रैवोक्तम् । स च भक्तहृदये बहिश्च । तच्च ।

'गोप्यश्च कृष्णमुपलभ्य चिरादभीष्टं
यत्प्रेक्षणे दृशिषु पक्ष्मकृतं शपन्ति ।
दृग्भिर्हृदिकृतमलं परिरभ्य सर्वा-
स्तद्भावमापुरपि नित्ययुजां दुरापम्' ॥

इत्युत्तरार्धे त्रयस्त्रिंशाध्यायवाक्ये स्फुटं सुबोधिन्याम् । तदंशांशानन्दस्य हृदीदानीमप्यनुभवाद्वासंभावना । एतादृशोपि स्वयं गौणः सन् भक्तमनोरथं पूरयतीति तस्य निसर्गः । 'सह ब्रह्मणा विपश्चिता' इति श्रुतेः । 'अहं भक्तपराधीनः' इति स्मृतेश्चात एव स्वस्वावकान् भक्तान् स्वात्मलीलायां प्रवेशयति 'ध्रुवासो अस्य कीरयो जनासः' इति ऋग्वेदात् । कीरयः स्तोतारः । अन्यथा जीवानां स्वरूपतो नित्यत्वाद् ध्रुवास इति न वदेत् । एवं स्वधामनि ब्रह्मणि रंरममाणो यदा जगद्रूपेण क्रीडितुमिच्छति तदा नामरूपविभेदेन जगन्निर्माय तत्र क्रीडतीति वैदिकपरमभागवतसिद्धान्तः । तमिमं हृदिकृत्याहुः अतः परमित्यादि । परोक्षत्वं च कलांशस्याच्छेपमिति

वस्तुतस्तु परोक्षवादोयमिति ज्ञायते । तथाहि । 'ब्रह्मविदाप्नोति परम्' इति वाक्येन ब्रह्मविदः परप्राप्तिं सामान्यत उक्त्वा तत्तात्पर्यं सत्यं ज्ञानमित्यृचोक्तम् । तत्र सर्वात्मभाववान् भक्तो भगवता सह तत्स्वरूपात्मकान् कामान् भुङ्क्त इत्युक्तव्याख्यानेन तदर्थोऽवधार्यते । उक्तभक्तस्य सदैव, विरहभावे तु विशेषतः प्रियस्वरूपातिरिक्तास्फूर्त्या अन्नप्राणादिरूपः स एवेति ज्ञापनाय तत्तद्रूपत्वमुच्यते ।

तेन परमप्रेमवत्त्वं सिद्ध्यति । ततो भगवदाविर्भावे सत्यपि पूर्वभावस्यातितीव्रत्वेन ज्ञानादिसर्वतिरोधानेनाग्रिमरसानुभवो न भविष्यतीति स्वयमेव तदनुभवात्मको भवतीति ज्ञापनाय विज्ञानरूपत्वमुच्यते । तदानुभवविषयः प्रकट आनन्दमय इति तत्स्वरूपमुच्यते । तत्र निरुपधिप्रीतिरेव मुख्या, नान्यदिति ज्ञापनाय प्रियस्य प्रधानाङ्गत्वमुच्यते । तदा प्रियेक्षणादिभिरान-

भाष्यप्रकाशः ।

'वेदास्त्रिकाण्डविषया ब्रह्मात्मविषया इमे ।
परोक्षवादा ऋषयः परोक्षं च मम प्रियम्' ॥

इत्येकादशस्कन्धीयभगवद्वाक्याच्च परोक्षवादस्यैव ज्यायस्त्वेनात्र परोक्षवाद एवास्तीत्याहुः वस्तुत इत्यादि । उपपादयन्ति तथाहीत्यादि प्रतिष्ठारूपत्वमित्यन्तम् । तत्रेति तात्पर्यकथने । तदर्थ इति ऋगर्थः । तत्तद्रूपत्वमिति अन्नप्राणमनोरूपम् । स्वयमेवेति भगवानेव ।

रश्मिः ।

फलांशे पारोक्ष्यमिति । अत्र पारोक्ष्यं च यत्रान्यथास्थितोर्थः संगोपयितुमन्यथाकृत्वोच्यते स परोक्षवादः । तथा च श्रुतिः 'तं वा एतं चतुर्हुतं सन्तं चतुर्होतेत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः' इति । वैयाकरणानां श्रोत्रात्परो वादः, वद व्यक्तायां वाचि भावे घञ्, अक्ष्णः श्रोत्रात् परमिति परोक्षम् । 'परोक्षवादो वेदोयम्' इत्यत्रैकादशस्कन्धे स्पष्टम् । तथा च पुरुषविधब्राह्मणे भक्तिधर्मानुपदिशतीति परोक्षाय पक्षिरूपत्वमाहेति ज्ञेयम् । अन्नप्राणेति । एतच्च तृतीयस्य तृतीयपादे 'व्यतिहारो विशिंषन्ति हीतरवत्' इति सूत्रे सिद्ध्यति स्फुटीकरिष्यते च तत्रैव । उदाहरणं तु 'लीला भगवतस्तास्ता ह्यनुचक्रुस्तदात्मिकाः' इति । भाष्ये । उक्तेति सर्वात्मभाववद्भक्तस्य । सदैवेति व्रजभक्तवत् संयोगे विप्रयोगभावनम् । प्रेम वर्तते यद्यपि तथापि तन्न प्रधानमिति सदैवेत्युक्तम् । 'आन्तरं तु परं फलम्' इति वाक्यात् । संयोगरसोपि वर्तते 'भवतीनां वियोगो मे न हि सर्वात्मना क्वचित्' इतिवाक्यात् । प्रियस्येति लिङ्गभूयस्त्वाधिकरणे स्फुटम् । अत्र भाष्ये स एवेत्येवकारेण पूर्वोक्तस्य भक्तप्रविष्टनामयस्थामीकरणपक्षस्य व्यवच्छेदः क्रियते । फलाध्याये वाङ्मनसीति सूत्रे तस्य पक्षस्य पूर्वपक्षीयत्वात् । तेनेति पूर्वोक्तभावस्य सर्वात्मकभावरूपमुख्यभक्तिरूपत्वेनेत्यर्थः । परो मीयते ज्ञायते येन सर्वात्मभावेन स परमः परमश्चासौ प्रेमा च परमप्रेमा तद्वत्त्वम् । तदुक्तं 'सच्चिदानन्दता स्वतः' इति निरोधलक्षणग्रन्थे । तत इति सर्वात्मभावादित्यर्थः । विज्ञानरूपत्वमिति तथा चाङ्गुलिषु यथा सूर्यरश्मिप्रवेशस्तथा प्रविष्ट इत्यर्थः । तदेति विरहस्वरूपानुभवोत्तरकाल इत्यर्थः । प्रकट इति हृदि बहिश्च तयेत्यर्थः । ततश्च रसः पूर्णोस्तीति वक्तुं स्थायिनो विभावादिसंयोगं वदन्ति विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरिति भरतोक्तिः ।

न्दात्मक एव विविधरसभावसंदोह उत्पद्यते यः स दक्षिणः पक्ष उच्यते। ततः स्पर्शादिभिः पूर्वविलक्षणः प्रकृष्टानन्दसंदोहो यः स उत्तरः पक्ष उच्यते। नानाविधपक्षसमूहात्मकत्वात्तयोः पक्षयोर्युक्तं तथात्वम्। स्थायिभावस्यैक-रूपत्वादात्मत्वमुच्यते। यतस्तत एव विभावादिभिर्विविधभावोत्पत्तिः।

---

भाष्यप्रकाशः।

तत्रेति आनन्दमयस्वरूपकथने। प्रियस्येति प्रियस्वरूपस्य। तेन श्रुतौ प्रियमिति नपुंसकलिङ्गस्य नानुपपत्तिः। प्रधानाङ्गत्वमुच्यत इति कल्पनयोपदिश्यते इत आरभ्य कल्पनो-पदेशो बोध्यः। तत्रायं प्रकारः। आनन्दमयानुभवे निरुपधिप्रीतिरेव मुख्या। 'भक्त्याऽ-हमेकया ग्राह्यः' इति वाक्ये तस्या एवानुभवजनकत्वकथनात्। नान्यत् साधनान्तर-मिति ज्ञापनाय प्रियस्य प्रीतिविषयस्यानन्दस्वरूपस्य प्रधानाङ्गत्वं शिरस्त्वमुच्यते। शिरसा हि पुमानभिज्ञायते, सोऽयमिति। तथा निरुपधिप्रीत्या भगवानिति शिरःशब्दे तत्सिद्धि-निबन्धना गौणी। एवमग्रे, तदेत्यादिना वक्ष्यमाणयोर्भावयोर्दक्षिणोत्तरपक्षत्वेऽपि तथा। ताभ्यामुड्डीयाऽभीष्टदेशं प्राप्नोति। एवं दर्शनस्पर्शजनिताभ्यां भावाभ्यां शीघ्रं

रश्मिः।

तत्रेत्यादि विविधभावोत्पत्तिरित्यन्तम्। प्रियेक्षणादिभिरिति आदिशब्देन पुलकबाष्पादयः। स्पर्शादिभिरिति। आदिनालिङ्गनादयः। एवंविधानन्दे पक्षशब्दप्रयोगपारोक्ष्यतात्पर्यमाहुः नानाविधेति। तयोर्दक्षिणोत्तरपक्षयोर्नानाविधा नीलरक्तपीतहरितादिभेदेनानेकविधाः पक्षास्तेषां समूहात्मकत्वात्। प्रकृते चेक्षणादिभिर्मोदप्रमोदादयः। तथात्वं नानाविधत्वमित्यर्थः। ननु स्थायिभाव एव पूर्णः सन्रसत्वमापद्यते इति सिद्धान्तात्भक्तिरस आनन्दस्य स्थायित्वं न संभवति किं तु प्रेम्णस्तथा च विभावस्थायिभावयोर्वैपरीत्यं युक्तमित्याकाङ्क्षायामथवा तस्य प्रियमेव शिरः इत्यत्र स्थायिनि वक्तव्ये आलम्बनवैशिष्ट्यस्य किं प्रयोजनमित्याकाङ्क्षायां स्थायिन आनन्दवैशिष्ट्येति प्रयोजनमित्याशयेनाहुर्यत इत्यादि। एतच्च मान्त्रवर्णिकसूत्रभाष्ये स्फुटिष्यति। तेन शंकराचार्यैर्यदुक्तं यद्यपि अन्नमयादिभ्य इवानन्दमयादन्यो अन्तर आत्मेति श्रूयते तथापि नानन्दमयस्य ब्रह्मत्वं यत आनन्दमयं प्रकृत्य श्रूयते 'तस्य प्रियमेव शिरः मोदो दक्षिणः पक्षः प्रमोद उत्तरः पक्षः आनन्द आत्मा ब्रह्म पुच्छं प्रतिष्ठा' इति तत्र यद्ब्रह्म मन्त्रवर्णे प्रकृतं सत्यं ज्ञानमनन्तं ब्रह्मेति तदिह ब्रह्म पुच्छं प्रतिष्ठेति पठ्यते। तद्विजिज्ञापयिषयैवान्नमयादय आनन्दमयान्ताः पञ्च कोशाः कल्प्यन्ते इति तन्निरस्तम्। मन्त्रवर्णेपि तस्य ब्रह्मणः साधनशेषत्वात्। प्रकृते। अत्र तस्य प्रिय एव शिर इति वक्तुमुचितं प्रियपदेन प्रीतिविषयानन्दस्याभिधानात् तस्य च पुंस्त्वात्। यथा न गन्धवत्सुवर्णमिति प्रयोगोपि तु गन्धवती सुवर्णं पृथ्वीविशेषणत्वात् तद्वदिति शङ्कां वारयितुमाहुः प्रियस्वरूपस्येति। तथा च स्वरूपस्य नपुंसकत्वान्नानुपपत्तिरित्याहुः तेनेति। प्रीतिविषयस्येति तेनात्र तस्य प्रियत्वमेव शिरः आनन्द एव शिर इत्यनुक्त्वा प्रीत्याश्रयस्य यच्छिरस्त्वमुक्तं तेन सर्वात्मभावरूपा प्रीतिः स्वाश्रय-संमिश्रितैव स्थायितां भजतीति सूचितम्। तत्सिद्धीत्यादि। अभिज्ञापकत्वगुणसिद्धिनिबन्धनेत्यर्थः। एतेन भक्तेः स्थायिभावः प्रदर्शितः। सालम्बनविभावः। इदानीमनुभावान्निरूपयन्ति तदा प्रियेत्यारभ्य तथात्वमित्यन्तेन भाष्येणेत्याहुः एवमग्र इत्यादि। तथेति प्रापकत्वनिबन्धना गौणीत्यर्थः। उपपादयन्ति ताभ्यामित्यादि। यथेति शेषः। प्राप्नोतीति हृदि तथेत्यर्थः। यत्तु शंकरभाष्ये

परप्राप्तिसाधनीभूतब्रह्मज्ञानदशायां तदानन्दोऽपि यः पूर्वमनुभूतः स गणिमानन्द इत्येतदानन्दानुभवानन्तरं तुच्छत्वेन भातीष्टगतावसाधनत्वेन स्वरूपतोऽपि तस्माद्धीनत्वं चेति पृष्ठभागादपि दूरस्थितपुच्छरूपत्वं ब्रह्मण उच्यते । पुरुषोत्तमाधिष्ठानत्वात् प्रतिष्ठारूपत्वं च । एवं सत्यक्षरादप्युत्तमत्वेऽप्यप्रधानीभूय

भाष्यप्रकाशः ।

भगवन्तं प्राप्नोतीति । स्थायिभावस्येत्यादिनाऽऽत्मशब्देऽपि तत्सिद्धिनिबन्धना सा । परप्राप्तीत्यादिना च पुच्छशब्दे पूर्वेषामानन्दानां प्रशंसानिबन्धना सा बोध्यते । प्रतिष्ठाशब्देऽपि तथा । एवमवयवेषु परोक्षवादो बोध्यः । तथाच स्वर्णघर्मानुवाके आनन्दरूपं परप्रकाशकं कमनीयं परमेश्वरस्य यत्स्वरूपं ब्रह्मा ज्ञातवान् । स सर्वान्तर्यामी सर्वनियामको बहुधा विचरति यत्र सर्वमेकं भवति स आत्मा जनानां मानसीनश्च मानससंबन्धी । मानसाश्चैते भावा आनन्दरूपा इति तज्जनकस्य यत् स्वरूपं भावरूपं कल्प-

रश्मिः ।

ब्रह्मणः प्रकृतत्वेन प्रधानत्वेऽङ्गीकृते आनन्दमयावयवत्वेनापि ब्रह्मणि विज्ञायमाने प्रकृतत्वं न हीयते आनन्दमयस्य ब्रह्मत्वात् इति प्राप्ते समाहितं तथासति तदेव ब्रह्म आनन्दमय आत्मावयवी, तदेव ब्रह्म पुच्छं प्रतिष्ठावयवः, इत्यसामञ्जस्यं स्यादन्यतरपरिग्रहे तु युक्तं ब्रह्म पुच्छं प्रतिष्ठेत्यत्रैव ब्रह्मनिर्देशः आश्रयितुं ब्रह्मशब्दसंयोगान्नानन्दमयवाक्ये ब्रह्मशब्दसंयोगाभावादिति तदिदं दूषयितुमक्षरपुरुषोत्तमयोर्गौणप्रधानभावं दर्शयन्तः आनन्दस्य मुख्यतामुपपादयन्ति स्थायिभावस्येत्यादि । आनन्दरूपस्येत्यर्थः । 'आनन्द आत्मा' इति श्रुतेः । तत्सिद्धीति एकत्वनिबन्धना गौणीत्यर्थः । पूर्वेषामित्यादि मानुषानन्दमारभ्य प्रजापतिपर्यन्तानां पूर्वेषामानन्दानां 'ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्दः' इति आनन्दसंबन्धिनी ब्रह्मप्रशंसा तन्निबन्धनेत्यर्थः । पुच्छमपि मयूरादेः सर्वाङ्ग आनन्दोऽस्यैकपुच्छानन्द इति प्रशंसन्ति पुच्छे ब्रह्मानन्द इति किमु वक्तव्यं मोदादिरूपा आनन्दाः कीदृशा आनन्दाः मनोवागविषया इति प्रशंसा च तदा पूर्वेषामवयवानन्दानामित्यर्थः । प्रतिष्ठाशब्द इति पादयोस्तिष्ठतीत्यधिष्ठानत्वनिबन्धना सेत्यर्थः । तथा चानन्दमयवाक्ये ब्रह्मशब्दसंयोगाभावेपि मुख्यस्यानन्दशब्दस्य संयोगाद्यत्तैः समाहितं तत्समाहितमिति भावः । यदपि शंकरभाष्ये मुख्यत्वेन स्वीकृते ब्रह्मणि पुच्छत्वप्रतिष्ठात्वोक्तिसमर्थनाय पुच्छवत्पुच्छं प्रतिष्ठापरायणमेकनीडं लौकिकस्यानन्दजातस्य ब्रह्मानन्द इत्येतदनेन विवक्ष्यते नावयवत्वमित्युक्तं तदपि परास्तमनेन । स्वर्णघर्मेत्यादि 'सुवर्णं घर्मं परिवेदवेनं इन्द्रस्यात्मानं दशधा चरन्तम् । अन्तः समुद्रे मनसा चरन्तं ब्रह्मान्वविन्दद्दशहोतारमर्णे । अन्तःप्रविष्टः शास्ता जनानां एकः सन् बहुधा विचारः शतं शुक्राणि यत्रैकं भवन्ति सर्वे वेदा यत्रैकं भवन्ति सर्वे होतारो यत्रैकं भवन्ति स मानसीन आत्मा जनानाम्' इत्यनुवाक इत्यर्थः । आत्मपदार्थमाहुः आनन्दरूपमिति । चरन्तमित्यस्यार्थमाहुः पदमिति । घर्मपदार्थमाहुः प्रकाशकमिति । सुवर्णपदार्थमाहुः कमनीयमिति । इन्द्रस्येत्यस्यार्थमाहुः परमेति । अन्वविन्ददित्यस्यार्थमाहुः ज्ञातवानिति । अन्तःप्रविष्ट इत्यस्यार्थमाहुः स सर्वेति । शास्तेत्यस्यार्थमाहुः सर्वेत्यादि । बहुधा विचार इत्यस्यार्थमाहुः बहुधा विचरतीति । शतमित्यादेरर्थमाहुः यत्र सर्वमित्यादि । आनन्दरूपा इति मनसा देवदत्त आनन्दं यातीति प्रयोगात् 'मन आनन्दम्' इति श्रुतेः । भावरूपमिति एतच्च प्रथमस्कन्धे नारदोपाख्याने व्याससमाधिप्रसङ्गे

भक्तकामपूरणकर्तृत्वेऽसंभावना विपरीतभावना च संभवति। तदभावायासन्नेव स भवतीत्याद्युक्तम्। स्वानुभवाभावेऽपि गुरूपदेशादिनापि तदस्तित्वमात्रमपि यो जानाति तं ब्रह्मविदः सन्तं सत्त्वधर्मविशिष्टं वर्तमानं च विदुरित्यग्रेऽवददस्ति ब्रह्मेति चेदित्यादिना। ब्रह्मासत्त्वज्ञानेऽसन् भवतीत्युक्त्वा तदस्तित्वज्ञाने सन् भवतीत्यनुक्त्वा, सन्तमेनं विदुरिति तत्त्वेनान्यज्ञानं यदुक्तं, तेनोक्तपुरुषोत्तमानन्दानुभववन्तं ज्ञानक्रियाविशिष्टं जीवं वर्तमानं विदुः। अननुभवे केवलं गुरूपदेशादिना तादृग्ब्रह्मास्तित्वज्ञाने स्वरूपतः सन्तं तं विदुर्न तु ज्ञानादिमन्तम्। तदसत्त्वज्ञाने त्वलीकतुल्यमिति श्रुतितात्पर्यमिति ज्ञायते।

एवं विचारचातुर्यवद्भिः सद्भिर्व्रजाधिपे।
आनन्दमयतानन्दसंदोहायावधार्यते ॥ ११ ॥

---

भाष्यप्रकाशः।

नया परोक्षवादार्थमुच्यत इति बोध्यः। एतमर्थं दृढीकर्तुम्, 'असन्नेव स भवति' इति श्लोकं व्याकुर्वन्ति एवं सतीत्यादि ज्ञायत इत्यन्तम्। शेषाणां श्रुतीनामर्थस्तु पूर्वोक्तपक्षेष्वपि तुल्य इत्यतोऽग्रे न व्याख्यातम्। एवं परोक्षवादव्याख्यानस्य फलं कारिकयाऽऽहुः एवं विचारेत्यादि। एवमस्मिन् वर्णके आनन्दस्य ज्ञेयकोटिनिवेशे तदनिवेशे चानन्दमयस्य परब्रह्मत्वं निर्बाधमिति प्रभुचरणैर्व्यवस्थापितम् ॥ ११ ॥

रश्मिः।

'गोप्यश्च कृष्णमुपलभ्य' इत्यत्रान्यत्र स्फुटतरं भूमाधिकरणे च। व्याकुर्वन्तीति अपि चेत्यादिना शंकरभाष्ये असन्नेवेति श्लोक आनन्दमयमननुकृष्य ब्रह्मण एव भावाभाववेदनयोर्गुणदोषाभिधानाद् ब्रह्म पुच्छं प्रतिष्ठेत्यत्र ब्रह्मण एव स्वप्रधानत्वमिति गम्यते। न ह्यानन्दमयस्यात्मनो भावाभावशङ्का युक्ता प्रियमोदादिविशेषस्यानन्दमयस्य सर्वलोकप्रसिद्धत्वादिति यदुक्तं तद् दूषयितुमानन्दमयेऽसंभावनाविपरीतभावने संभावयन्त एव व्याकुर्वन्तीत्यर्थः एवं सतीति। एवंविधाक्षरपुरुषोत्तमपरे व्याख्याने सतीत्यर्थः। भाष्ये। सन्तमेनमित्यत्रैतच्छब्दस्यान्वादेश एनादेशात्तदर्थमाहुः ब्रह्मासत्त्वेत्यादिना। सन्तमेनमित्यादि अन्वादेशबोधकैनादेशयुक्तसन्निहिततरपूर्ववाचकैतच्छब्दार्थविषयत्वेनान्यज्ञानं यदुक्तमित्यर्थः। अन्वादेशं वक्तुमाहुः तेनेत्यादि। एतच्छब्दार्थमाहुः पुरुषोत्तमेत्यादि। तथा चैतस्य सन्निहितत्वादेतदेनमित्यस्यार्थ इत्यर्थः। ज्ञानक्रियेत्यादि। अयमर्थः। जीवस्य स्वतो नित्यत्वेन सत्त्वकथनमनुपपन्नं सन्नित्यलीलाप्रविष्टत्वरूपं सत्त्वं वक्तीति। एवं कार्यार्थमुपादानमुक्त्वान्यत्कार्यविधानमाहुः अननुभवेति। तथा च पुरुषोत्तमानुभवार्थमुपात्तस्य तदभावे केवलसत्त्वविधानार्थमुपादानेनान्वादेशादेनमिति प्रयोग इति भावः। असन्नेवेत्यत्र तत्पदादेकमेवार्थमाहुः तदसत्त्वेति। अलीकतुल्यमिति 'आभास एव च' इति सूत्रभाष्योक्तमेतत्। सद्भिरिति प्रच्छन्नबौद्धनिरासार्थम्। व्रजाधिप इति तेन भजनीयत्वं सूचितम्। यतः

'यो बीजावापमारभ्य फलपाकावधि स्वयम्।
पोषितस्तं व्रजतरुं नाथो नापि जिहासति' ॥

इति अत एव चानन्याधिपतिरिति फलाध्याये वक्ष्यन्ति। अग्र आचार्याणां ग्रन्थ इति सूचयन्ति प्रभुचरणैरिति ॥ ११ ॥

नन्वानन्दमयस्य न ब्रह्मता वक्तुं शक्या । मयटो लोके विकाराधिकार-विहितत्वादित्याशङ्क्य स्वयमेव परिहरति ।

विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १२ ॥

अनेनैव पूर्वसूत्रार्थः सिद्धो भविष्यति । विकारवाची शब्दो मयट्प्रत्ययो यस्मिंस्तद्विकारशब्दं तस्मात्तच्छब्दवाच्यं ब्रह्म न भवति । ब्रह्मणोऽविकारित्वादिति चेत् । नात्र विकारे मयट्, किं तु प्राचुर्यात् । प्राचुर्यमतति प्राप्नोतीति प्राचुर्यात् । तथाच पाणिनिः । 'तत्प्रकृतवचने मयट्' । प्राचुर्येण प्रस्तुतं वचनं

---

भाष्यप्रकाशः ।

अतः परमग्रिमसूत्रमवतारयन्ति नन्वित्यादि । मयड्वैतयोर्भाषायामित्यनेन लोके मयटो विकाराधिकारे विहितत्वाद्वैदिकनिर्णयस्यापि वादिबोधनाय लोकन्यायेनैव कर्तव्यत्वादित्याशङ्क्य परिहरतीत्यर्थः । सूत्रं पठित्वा व्याकुर्वते ।

विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १२ ॥ अनेनेत्यादि । विकारार्थनिराकरणेनैव पूर्वसूत्रगत आनन्दमयशब्दो यौगिक इति बोधनाभिरवच्यानन्दरूपः परमात्मेति सिद्धो भविष्यतीत्यर्थः । विकारशब्दमिति पदमिति शेषः । अनेन सूत्रांशेन माया वादिवद् भ्रान्ताः प्रागपि ऋषयः सन्तीति, तथा प्राचुर्यादित्यनेन व्याकरणान्तरे प्राचुर्येऽपि मयडस्तीत्यपि बोधितम् । तथापीदानीं पाणिनीयस्यैवात्यादृतत्वात् प्रसिद्धत्वाच्च प्राचुर्यार्थे तत्संमतिमाहुः तथा चेत्यादि । ननु पाणिनीये सूत्रे तत्प्रकृतवचने मयडुक्तो, न प्राचुर्ये इति कथं तस्य संमतित्वेनोपन्यास इत्याकाङ्क्षायां व्याकुर्वन्ति प्राचुर्येणेत्यादि । सूत्रं तु काशिकायामेवं व्याख्यातम् । तदिति प्रथमा समर्थविभक्तिः । प्राचुर्येण प्रस्तुतं प्रकृतम् । तथाच, प्रथमान्तात् समर्थात् प्रकृतोपाधिकेर्थे वर्तमानात् स्वार्थे मयट् भवतीति । उदाहरणं तु प्रकृतमन्नमन्नमयमिति । अपरे तु प्रकृतमुच्यतेऽस्मिन्निति प्रकृतवचनम् । उदाहरणं तु प्रकृतमन्नमुच्यतेऽस्मिन्नित्यन्नमयो यज्ञ इति । उभयथा च सूत्रप्रणयनाद् द्वयमपि प्रमाणमिति । अयमेवार्थः प्रसादेऽनूदितः । सिद्धान्तकौमुद्यां तु तथानूद्य प्राचुर्येण प्रस्तुतं प्रकृतं तस्य वचनं प्रतिपादनमिति व्याख्यानेन सूत्रे षष्ठीतत्पुरुषो बोधितः । मनोरमादिषु तट्टीकासु तु यद्यपि प्रकृतशब्दः प्रस्तुतमात्रे रूढस्तथापि वचनग्रहणसामर्थ्याद् यादृशस्य प्रकृतस्य लोके प्रत्यायनमभिप्रेतं तत्रायं मयट् स्यादिति विशेषो लभ्यत

रश्मिः ।

विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १२ ॥ सन्तीतीति बोधितमित्यनेनान्वयः । एवं प्रकारान्तरेण सूत्रव्याख्याने बीजं वक्तुमन्येषु व्याख्यानेषु अस्वरसं प्रदर्शयन्तोनुवदन्ति सूत्रं त्वित्यादि । उभयथेत्यादि ल्युटो भावार्थत्वेधिकरणार्थत्वे च सूत्रप्रणयनं संभाव्येत्यर्थः । तथानूद्येति भावेधिकरणे च ल्युटं तथोदाहरणं चानूद्येत्यर्थः । अत्र क्त्वाप्रत्ययः पूर्वकाल इत्यस्याविवक्षायां कौमुद्यां व्याख्यानोत्तरकाले तदननुवादात् मनोरमाशब्दरत्नौ योजयित्वाहुः यद्यपीति । प्रत्यायनमभिप्रेतं तत्रेत्यादि मयटाभिप्रेतम् । प्रकृतमुच्यतेस्मिन्निति ल्युडधिकरण

तत्प्रकृतवचनं, तस्मिन् मयट्प्रत्ययो भवतीत्यर्थः।

भाष्यप्रकाशः।

इत्युक्त्वा स्वार्थिकप्रकरणवशात् प्रचुरार्थबोधविषयवृत्तिमतः प्रातिपदिकात् स्वार्थे मयड्विधाने प्रातिपदिकार्थोपस्थापिका प्रथमा विभक्तिः प्रकृतावर्थादेव सिद्ध्यतीति वचनपदस्य भावव्युत्पत्तौ तच्छब्दग्रहणं व्यर्थम्। अधिकरणव्युत्पत्तौ तु प्रथमाप्रापकत्वात् सार्थकम्। उच्यमानता प्रकृतता च प्रकृत्यर्थविशेषणम्। ल्युटोक्तमधिकरणत्वं तु मयडर्थ इत्युक्तम्। शब्देन्दुशेखरे तु स्वार्थिकप्रकरणविरोधादधिकरणत्वं मयडर्थ इत्यसंगतम्। न चान्नमयो यज्ञ इत्याद्युदाहरणासिद्धिः। प्राचुर्यवदधिकरणलक्षकाच्छब्दात् स्वार्थे मयट्करणेऽपि तत्सिद्धेः। वृत्तेरप्यत एव संगतेश्च। सूत्रे तु तद्ग्रहणं चिन्त्यप्रयोजनमित्युक्तम्। तदेतत् सर्वं

रश्मिः।

उक्तः। प्रचुरेति प्रचुरार्थविधविषया वृत्तिः तद्वतः वृत्तिः कृद्रूपा। प्रकृतावितिति सामीप्ये सप्तमी। अर्थात् स्वार्थिकप्रकरणवशादेव। तच्छब्देति प्रथमासमर्पकस्य ग्रहणम्। उच्यमानतेत्यादि। इदं च प्रथमपक्ष एव। उच्यते इति वचनं उच्यमानं भावप्रधानो निर्देशः उच्यमानता। अत्रेदं ध्येयम्। प्रकृत इति लुप्तसप्तम्यन्तं भिन्नं वचन इति च प्रकृत्यर्थः। कस्य वचनाधिकरणत्वमित्यपेक्षायां सन्निधानात् भवन्मयोवनिपतिः तन्निष्ठोच्यमानता न गौणनिष्ठोच्यमानता प्रकृत्यर्थस्यैव लाभात् तस्यैवोच्यमानतेति। अन्यथा वचनशब्दीयप्रकृतिप्रत्ययार्थयोः प्रकृत्यर्थस्य मयट्प्रकृत्यर्थविशेषणता ल्युडर्थस्य प्रकृतमन्नमन्नमयमन्नमयो यज्ञ इत्यादावन्नादिरूपः। द्वितीयपक्षे विधेयप्रत्ययविशेषणतेत्यसंगतं स्यात्। उच्यमानता प्रकृत्यर्थस्य प्रायिकी। अत एव भवतीप्रचुर इत्यर्थे भवन्मय इति दृश्यते। ल्युटोक्तमिति ल्युडुक्तं वचनाधिकरणत्वं त्वित्यर्थः। मयडर्थ इति न चैवं स्वार्थिकप्रकरणविरोधः। आद्ये तत्प्रकरणपाठस्य चरितार्थत्वादिति शब्दरत्नकारः। शब्देन्दुशेखरे त्विति एतदग्रे एतावती त्रुटिरत्र भाति। वचनपदस्य भावार्थकल्युडन्तत्वपक्षे प्रचुरस्य वचने बोधने सति प्रातिपदिकात्प्रत्यय इत्यर्थः। प्रचुरार्थबोधकात्तदिति प्रथमासमर्थात् स्वार्थे मयडिति यावत्। अधिकरणार्थकल्युडन्तत्वपक्षे तु प्राचुर्येण प्रस्तुतान्तादिति वचनात् प्रथमासमर्थादधिकरणेऽर्थे बोध्ये मयट्प्रत्यय इत्यर्थः। प्रकृतेति लुप्तसप्तम्यन्तं तत्र वर्तमानादिति तस्यार्थः। अस्मिन् पक्षे वचन इत्यत्र प्रकृत्यर्थोऽविवक्षितः। तेन 'निजामयोध्यामपि पावनीमयं भवन्मयो ध्यायति नावनीपतिः' इति प्रकृत्यर्थाधिकरणमात्रे मयडुपपन्नतरः। तत्रेणार्थद्वये सूत्रतात्पर्यं व्याख्यानात्। स्वार्थिकप्रकरणपाठस्तु आद्यपक्षे चरितार्थ इत्युक्त्वा वस्तुतस्त्वथ स्वार्थिका इत्यस्य प्रायेणेत्यादिर्बोध्यः। 'जात्यन्ताच्छ बन्धुनि' 'देवतान्तात्तादर्थ्ये यत्' इत्यादौ वाचकताया एव प्रतीतेः। बन्धुनीत्यस्य शोभनजातिव्यञ्जकद्रव्य इत्यर्थः। तत्पदग्रहणं वाक्यभेदेन प्राचुर्याभावेऽप्यत्यन्तस्वार्थिकमयडर्थं तेन चिन्मयं ब्रह्मेत्यादि सिद्धमिति स्थितम्। ग्रन्थान्तरे त्विति। ननु कथं तर्हि विकारशब्दसूत्रे तन्मयट्परतयेति वृत्तिरतआह वृत्तेरिति। अतएवेति प्राचुर्यवत अन्नादादेरधिकरणयज्ञलक्षकाच्छब्दात् स्वार्थे मयडङ्गीकारादेवेत्यर्थः। अन्नमाधेयं यज्ञोऽधिकरणमित्याधाराधेयभावसंबन्धो लक्षणा अन्नादिशब्दा लक्षकाः। एवमनूद्य तत्रास्वरसप्रदर्शनपुरःसरं प्राचुर्येणेत्यादि भाष्यं विवृण्वन्ति तदेतदित्यादि।

१. भवती इत्यत्राधिकर्णे।

प्राचुर्येण पूर्वापेक्षयाऽन्याधिक्येन, 'को ह्येवान्यात् कः प्राण्यात्' इति वाक्ये प्रकर्षेण स्तुतम् । अतो मयट् पूर्वापेक्षया प्राचुर्यमयते । एकदेशनिर्देशेन तदर्थलक्षणया प्राचुर्यः । प्राचुर्येण प्रस्तुतार्थवाचकत्वादित्यर्थ इति वा ।

---

भाष्यप्रकाशः ।

वृत्तिविचारादेवानुसंधाय तद्बृहत्वं वैयर्थ्यनिवृत्त्यर्थम् । तेन प्रकृतं तत्प्रकृतम्, उच्यत इति वचनमवश्यप्रतिपादनम् । प्राचुर्येण प्रस्तुतस्य वचनं तत्प्रकृतवचनम् । तत्र तथेति सूत्रार्थः । तथाच तच्छब्दस्य विवक्षितप्रकारबोधनार्थत्वाद्वचनपदस्यावश्यकार्थत्वादेवं सूत्रार्थोक्तौ संमतित्वं निर्बाधमिति तथेत्यर्थः । स्वोक्तं विभजन्ते प्राचुर्येणेत्यादि । पूर्वापेक्षयेति अन्नमयादिचतुष्टयापेक्षया । ननु प्राचुर्येण प्रस्तुतेऽर्थेऽनुशिष्टो मयट् कथं प्राचुर्यबोधक इत्यत आहुः एकदेशेत्यादि । यथा हि भीमसत्यादिपदानि, विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वाच्य इति वार्तिकेनैकदेशभूतान्यपि विशिष्टार्थनामानि, तथात्र नामत्वाभावेन वक्तुमशक्यत्वाल्लक्षणया प्राचुर्येण प्रस्तुतं बोधयतीत्यर्थः । पूर्वस्मिन् पक्षे कल्पनाक्लेशात् प्रकारान्तरेण व्याख्यातम् । तथाच पञ्चम्यन्तमिदं पदम् । तेन न कल्पनाक्लेश इत्यर्थः । ननु, मयड्वैतयोर्भाषायामिति सूत्रे विकल्पस्य भाषायां सिद्धेर्वेदे नित्यं विकारे मयट् । किं च, 'नित्यं वृद्धशरादिभ्यः' इत्यग्रिमसूत्रे भाषायामित्यस्यानुवृत्त्या भाषायां नित्यो, वेदे वृद्धादिभ्यो वैकल्पिक इति सिद्ध्यति । एवं सत्यानन्दशब्दस्य वृद्धत्वात्

रश्मिः ।

वृत्तिविचारादेवेति वृत्तिविचारस्तु तत्प्रकृतवचने मयट् प्राचुर्येण प्रस्तुतं प्रकृतं तस्य वचनं भावेधिकरणे वा ल्युडिति वृत्त्यर्थमाहुः तेन प्रकृतमित्यारभ्य तथेत्यन्तम् । सूत्रार्थ इति । अत्रेदं बोध्यम् । प्राचुर्यं तत्पदार्थः । प्रस्तुतः प्रकृतपदार्थः । प्रतिपादनं च वचनपदार्थः । प्रत्ययार्थविशेषणमिदं स्वार्थिकत्वस्य प्रायिकत्वात् । एवं च न तत्पदवैयर्थ्यं न वा प्रकृतपदस्य लक्षणया प्राचुर्येण प्रस्तुतस्य बोधकत्वं न वा प्रकृतपदे लुप्तविभक्त्यन्तत्वकल्पनं न वा वचनपदप्रकृत्यर्थत्यागः । अन्नमयो यज्ञ इति तु प्रतिपादनमित्यत्राधिकरणल्युटमाश्रित्य चिदेव चिन्मयमिति च प्रकृतवचने मयडिति योगविभागेन सिद्ध्यतीति । विवक्षितेति प्राचुर्यरूपप्रकारबोधनार्थत्वादित्यर्थः । आवश्यकेति भावव्युत्पत्त्यावश्यकत्वं द्योत्यते, प्रतिपादनविषयत्वात् । प्राचुर्येणेत्यादीति । भाष्ये । तत्प्रकृतेति तेन प्रकृतं तत्प्रकृतं तस्य वचन इत्यर्थः । ननु स्वार्थिकाधिकारात् तदित्यस्य प्रथमान्तात्समर्थादित्यर्थो न तु तेन प्राचुर्येणेत्यर्थः इति चेन्न । तस्यार्थस्य 'समर्थानां प्रथमाद्वा' इत्यधिकारसूत्रलभ्यत्वात् वचनशब्दो भावल्युडन्तः । लक्षणयेति पदस्यारस्यमाहुः यथेत्यादि । वार्तिकेनेति तद्धिते स्वार्थिकाधिकारस्थेनेत्यर्थः । लक्षणयेति अवयवावयविभावसंबन्धो लक्षणा । प्राचुर्येण प्रस्तुतमवयवि, प्रस्तुतमवयव इति तेन भाष्ये तदर्थलक्षणयेत्यस्य प्राचुर्येण प्रस्तुतेऽर्थे लक्षणयेत्यर्थः । तथा च प्राचुर्यान्मयडित्यत्र हेतुगर्भं विशेषणमिति प्रथमान्तस्य हेतुत्वलाभः । प्राचुर्येणेति भाष्याभिप्रायमाहुः अस्मिन्नित्यादि । कल्पनेति हेतुत्वकल्पनाक्लेशात् । प्रतीतिविरोधोपि द्रष्टव्यः । इदं दूषणं 'तुष्यतु दुर्जनः' न्यायेनेति बोध्यम् । व्याख्यातमिति प्राचुर्येणेत्यादिना व्याख्यातमित्यर्थः । इदमिति प्राचुर्यादिति पदमित्यर्थः । आनन्दशब्दाद्विकारार्थे मयट् चतुर्भिः प्रकारैर्मनोरमायां प्रसाध्य साधितस्तत्र तृतीयं प्रकारमाश्रुत्यानुसृत्येनाहुः किंचेत्यादि । वृद्धत्वादिति 'वृद्धिर्यस्याचामादिस्तद्वृद्धम्' इतिसूत्रेण

छन्दसि अज्व्यतिरिक्तस्थले मयटो विकारे विधानाभावात् व्याकरणमप्यर्थनिर्णायकम्। विज्ञानमयानन्दमयशब्दौ पश्यन्नपि पाणिनिः 'मयड् वैतयोर्भाषायाम्', 'अचश्छन्दसि' इति कथमवोचत्।

भाष्यप्रकाशः।

ततो वैकल्पिको, विज्ञानशब्दाच्च नित्यो विकारे मयडदण्डवारितः। अन्नादिपदेभ्यश्च स्वारसिक एवेति प्रायपाठानुग्रहाद् विकारार्थ एव युक्त इति तं विहाय प्राचुर्ये तदङ्गीकारो न युक्त इत्यत आहुः छन्दसीत्यादि। अज्व्यतिरिक्तस्थल इति बह्वच्स्थले। तथाच यदि सूत्रकारः पाणिनिस्तथाभिप्रेयात् तदा छन्दसि बह्वज्व्युदासाय अच एवेति न नियमयेत्। अतो नित्यो वैकल्पिको वा मयट् छन्दसि बह्वचो विकारे न भवत्येवेति पाणिनीयविचारेणापि प्राचुर्यार्थग्रहणं युक्तमेवेत्यर्थः।

अत्र शङ्कराचार्याः। अन्नमयादिविज्ञानमयान्तं विकारप्रायपाठमनादृत्यानन्दमयपदस्य प्राचुर्यार्थत्वब्रह्मविषयत्वयोरङ्गीकारे प्रायपाठविरोध आकस्मिकत्वं च। मान्त्रवर्णिकब्रह्माधिकाराद् ब्रह्मविषयत्वादरणेऽन्नमयादीनामपि ब्रह्मत्वप्रसङ्गः। अन्नमयाद्यान्तरस्यान्यस्य कथनात्तेषां न ब्रह्मत्वम्। आनन्दमयादन्तरस्यान्यस्याकथनात् तस्य ब्रह्मत्वमित्यङ्गीकारेऽप्येकस्यैवानन्दमयस्य ब्रह्मण आत्मत्वेनावयवित्वं, तस्यैव पुच्छत्वेनावयवत्वमित्यसामञ्जस्यम्। किं च। प्रियमोदादिविशेषयुतस्यानन्दमयस्य सर्वलोकप्रसिद्धत्वेन भावाभावशङ्कास्पदत्वाभावात् 'असन्नेव स भवति' इतिश्लोकस्यापि विरोधः। अपि चानन्दमयस्य ब्रह्मत्वेऽपि प्रियाद्यवयवयोगेन सविशेषब्रह्मत्वमङ्गीकर्तव्यम्। तथा सति वाङ्मनसाऽगोचरत्वबोधकस्य, 'यतो वाचो निवर्तन्ते' इति वाक्यशेषस्य विरोधः। किं चानन्दप्रचुर इत्युक्ते तत्र दुःखास्तित्वस्यापि प्रत्ययापत्तिः। लोके प्राचुर्यस्य प्रतियोग्यल्पतासापेक्षत्वात्। तथाच सति यत्र नान्यत् पश्यति शृणोति विजानातीति सुखैकरसे भूम्नि ब्रह्मणि तद्व्यतिरिक्ताभावबोधकश्रुत्यन्तरस्यापि विरोधः। किं च। प्रियादेः प्रतिशरीरं भिन्नत्वेनानन्दमयस्यापि तथात्वात् तस्य न ब्रह्मत्वं शक्यवचनम्। 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतौ, 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' इति श्रुत्यन्तरे च ब्रह्मण आनन्त्यैकत्वयोः श्रवणात्। किं च। आनन्दपदस्यैवाभ्यासो, न त्वानन्दमयपदस्येत्यतोऽपि न ब्रह्मत्वम्। एतमानन्दमयमात्मानमुपसंक्रामतीत्यभ्यासस्त्वन्नमयादिप्रवाहपतितत्वान्न ब्रह्मत्वसाधनसमर्थः। अत आनन्दमयशब्दस्य ब्रह्मविषयताया अनिश्चितत्वेन तत उत्तरेष्वानन्दमात्रप्रयोगेष्वा-

रश्मिः।

तथात्वादित्यर्थः। 'ह्यचश्छन्दसि' इतिसूत्रादाहुः एवेति। एतेन विज्ञानमयानन्दमयशब्दावित्यादि भाष्यमपि व्याख्यातप्रायम्। व्याकरणमित्यादि भाष्यं तु ननु पाणिनिनानुक्तेपि शंकरभगवत्पादभाष्योक्त्या विकारे ह्यचोपि मयड् भविष्यतीति चेत्तत्राहुः व्याकरणमिति व्याकरणमप्यर्थनिर्णायकं न तु तदुक्तेरेवेत्यर्थः। तदुक्तिस्तु क्रीडान्तरे चरितार्था नात्र निविशत इति च योज्यम्। यद्वा श्रुत्या निर्णीतं व्याकरणं नापेक्षत इत्यत आहुः व्याकरणमिति अङ्गत्वादर्थनिर्णायकमित्यर्थः। सूत्रेण ज्ञाप्यते अन्यानि पञ्चाङ्गानि वेदे एवेति। प्रतियोगीति आनन्दप्रचुर इत्युक्ते प्रतियोगिनो दुःखस्याल्पता तत्सापेक्षत्वात्। आनन्दो दुःखं च द्वन्द्वत्वात् संबन्धि ? । तथा सतीति अल्पप्रतियोगि-

**अत्र केचित् सर्वविप्लववादिनो विकारार्थत्वं वदन्ति । श्रुतिसूत्रादीनामर्थाज्ञानात् । तद् वेदाद्यर्थविद्भिर्भगवतो नवमावतारकार्यं ज्ञात्वोपेक्ष्यम् ।**

भाष्यप्रकाशः ।

नन्दमयाभ्यासस्य कल्पयितुमशक्यत्वादानन्दमयो ब्रह्मेत्याहुः ।

तन्मतस्याधिकरणसमाप्तौ दूषणीयत्वादत्रैतत्सूत्रे पूर्वपक्षतयोदितमानन्दमयपदस्य विकारार्थत्वं यत् सिद्धान्तितं, तस्यासंगतत्वायाहुः अत्र केचिदित्यादि । अत्रानन्दमयशब्देऽन्नमयादिषु पञ्चस्वपि वा केचिन्निर्विशेषवादग्रहिला विवर्तवादाद्यङ्गीकारेण भगवन्माहात्म्यादिनाशकत्वात् सर्वविप्लववादिनो विषयवाक्याकरश्रुतेस्तद्विचारकाणां व्याससूत्राणां व्याकरणसूत्राणां च तात्पर्याज्ञानाद् विकारार्थत्वं वदन्ति । तत उक्तश्रुत्याद्यर्थविद्भिर्भगवतो नवमावतारस्य बुद्धस्य कार्यं वेददूषणरूपं ज्ञात्वोपेक्ष्यम् । पाद्मोत्तरखण्डे उमामहेश्वरसंवादे तामसशास्त्रकथनं प्रतिज्ञाय कानिचिदसच्छास्त्राण्युक्त्वा,

'मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते ।
मयैव कथितं देवि कलौ ब्राह्मणरूपिणा ॥
अपार्थं श्रुतिवाक्यानां दर्शयँल्लोकगर्हितम् ।
कर्मस्वरूपत्याज्यत्वमत्रैव प्रतिपाद्यते ॥
सर्वकर्मपरिभ्रष्टं वैकर्मत्वं तदुच्यते ।
परेशजीवयोरैक्यं मयात्र प्रतिपाद्यते ॥
ब्रह्मणश्च परं रूपं निर्गुणं वक्ष्यते मया ।
सर्वस्य जगतोऽप्यत्र मोहनार्थं कलौ युगे ॥
वेदार्थवन्महाशास्त्रं मायावादमवैदिकम् ।
मयैव वक्ष्यते देवि जगतां नाशकारणात्' ॥ इति ।

शिववाक्याद् वेदाद्यर्थविद्भिर्नादरणीयमित्यर्थः । नच प्रायपाठविरोधः । विकारार्थस्य प्राणमयपद एवाभावात् । प्राणादीनां त्रयाणां वृत्तित्वेनाकाशपृथिव्योश्च भूतान्तरत्वेन तदवयवकल्पनाग्रन्थतस्तत्र मयटः स्वार्थिकत्वस्यैव भट्टभास्करोक्तरीत्या निश्चयात् ।

रश्मिः ।

स्वीकार इत्यर्थः । भगवदिति आदिशब्देनैक्यज्ञानं नहि खपुष्पशब्दार्थो नापि विवर्ते ऐक्यमुत्पाद्यं प्रतियोग्यभावात् । अतो भक्तिकारणनाशकत्वात्सर्वेषां भक्तिमुख्यत्वेन तदभावे नाशः । भगवद्भावाच्च्युतिः साधनाभावान्न च्युतिमात्रं किं तु विप्लवः संसारसागरे मज्जनम् ।

'नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम् ।
कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म यदप्यकारणम्' ॥

इतिवाक्यात् । अच्युतभावेपि निर्गुणा भक्तिरेव । सगुणा तु निन्द्यते तृतीयस्कन्धकपिलवाक्येष्विति । अतः सर्वेभ्यो विगतः प्लवो भक्तिर्यस्माद्वादात्तादृशवादो येषां ते सर्वे विप्लववादिनः । तात्पर्येति अत्रैव स्पष्टमिदं प्रमेयम् । कुतोऽभाव इत्यतोऽसंभवादित्याहुः प्राणादीनामिति तस्य 'प्राण एव शिरः व्यानो दक्षिणः पक्षः अपान उत्तरः पक्षः' इत्येषां त्रयाणां वायुवृत्तिविशेषत्वेनेत्यर्थः । आकाशेत्यादि 'आकाश आत्मा पृथ्वी पुच्छं प्रतिष्ठा' इति श्रुत्युक्तयोरित्यर्थः । स्वार्थिक इत्यस्यैवेति स्वार्थः प्रातिपदिकार्थः स इमे प्राणादयः पञ्चेत्येवकारः । निश्चयादिति

भाष्यप्रकाशः ।

नच घटाकाशस्य घटविकारत्ववत् प्राणाद्युपाध्यवच्छिन्नस्य प्राणविकारत्वं भामत्युक्तरीत्या सिद्ध्यतीति प्रायपाठसिद्धिरिति वाच्यम् । एतस्या रीतेर्भ्रमत्वेनालम्बनकल्पत्वात् । अवच्छिन्ने तद्विकारत्वस्याप्रत्ययात् । शास्त्रेषु क्वापि तथाप्रयोगादर्शनाच्च । तुष्यतु दुर्जनन्यायेन तदङ्गीकारेऽपि तस्य सत्यामुभयत्र प्राप्तावेकतरनिर्णायकत्वं, न तु तत्प्रापकत्वमिति द्व्यचश्छन्दसीति व्याकरणसूत्रेण, न बह्वच इति नियमिते विज्ञानानन्दशब्दाभ्यां वैकारिकमयट्प्राप्तेरेवाभावेनाऽकिंचित्करत्वाच्च । नच मनोरमादिषु, 'मयड् वा' इति सूत्रेण, हेतुमनुष्येभ्य इत्यनुवर्तमाने हेतुवाचकानन्दशब्दादागतार्थे मयटं साधयित्वा विकारस्यार्थिकत्वमुक्तमित्यस्त्येव प्राप्तिरिति वाच्यम् । पञ्चस्वप्यन्नमयादिषु स्वार्थे मयट्प्राप्तौ बाधकाभावेन वृथा तदतिहायैवं क्लिष्टकल्पनस्यायुक्तत्वात् । हेतुत्वस्य निमित्तोपादानसाधारणत्वेन विकारस्यार्थिकताया निर्णेतुमशक्यत्वाच्च । नचानन्दप्राचुर्यस्योक्तरीत्या दुःखशाबल्यस्फोरकत्वेनानन्दमये ब्रह्मत्वसिद्ध्यभावादागतार्थमादाय विकाराद‍रणेऽपि को दोष इति वाच्यम् । लोकेऽपि प्रचुरप्रकाशः सविता, प्रभूतसन्तापो निदाघदिवसोऽन्धकारमयी वर्षाविभावरी, बहुधनो वैश्रवण इत्यादिवाक्यश्रवणे प्रतियोगिनां तमःशैत्यप्रकाशदारिद्र्याणां प्रत्यक्षतो बाधेन तत्र तदल्पत्वशङ्काया अनुदयात् । वेदे तु सर्वभूतोपजीव्यांशानन्दप्राचुर्यबोधके दूरापेतैव प्रतियोग्यल्पत्वशङ्का । यदि हि तत्र वेदो दुःखसंभेदमभिप्रेयादवयवकल्पनायां तदपि क्वचिन्निवेशयेत् । सजातीयैरेवार्थैरवयवकल्पनाया अनुपक्रान्तत्वात् । आकाश आत्मा पृथिवी पुच्छं महः पुच्छमित्यादिना तथा निश्चयात् । यच्च शारीर आत्मेति शरीरसंबन्धबोधनं दुःखसंभेदसमर्थकमित्युक्तं, तदप्यन्तर्यामिब्राह्मणाननुसंधानहेतुकम् । अत एवं सत्यपि यत् तदविचारेणानन्दमये दुःखास्तित्वकथनं, तद् ग्रन्थकृतो महादुःखसंस्कारस्य प्राबल्यमेव गमयतीति दिक् ।

भास्कराचार्यास्तु स्वरूपैक्ये प्राचुर्यवचनं प्रचुरप्रकाशो रविरितिवदेतराल्पत्वमपेक्षत इत्याहुः ।

रामानुजाचार्यास्तु, तत्प्रचुरत्वमितरसत्तां नावगमयति । अपि तु तस्याल्पत्वं निवर्तयति ।

रश्मिः ।

तथा च प्राणाकाशपृथिवीप्रचुरे प्राणमये प्राणविकारत्वासंभवान्न 'द्व्यचश्छन्दसि' इति विकारे मयडित्यर्थः । भ्रमत्वेत्यादि भ्रमतो यत्वेनावलम्बनं तत्तुल्यत्वादित्यर्थः । तथाप्रयोगेति घटाकाशो घटविकार इति प्रयोगाभावादित्यर्थः । तस्येति प्रायपाठस्येत्यर्थः । तत्प्रापकत्वमिति विकारे मयट्प्रापकत्वमित्यर्थः । मनोरमोक्तं चतुर्थं प्रकारमाशङ्क्य पराकुर्वन्ति न च मनोरमेत्यादि । आर्थिकत्वमिति यो यतो निर्गतः स तस्य विकार इति लोक प्रसिद्धेः । अशक्यत्वादिति उपादानस्यैव विकारदर्शनादिति भावः । मनोरमायां प्राचुर्ये मयट्यपि प्रकृत्यर्थविरोधिनो लेशतोनुवृत्तिलाभात् प्रकृते विकारार्थः पर्यवस्यतीत्युक्तम् । तत्र तत्पर्यवसानं कथमिति चिन्त्यमिति शब्दरत्नकारः । तत्र चिन्तितप्रकारमुखेन हेतुग्रन्थेन शब्दरत्नमुत्क्षिपन्तो द्वितीयप्रकारमाशङ्क्य निषेधन्ति न चानन्देत्यादि । एवं शब्दरत्नमाक्षिप्य मनोरमोक्तमाशङ्क्य तन्निषिद्ध्य तत्र हेतुमाहुः लोकेपीति । तदपीति दुःखमपीत्यर्थः । आकाशेत्यादि आकाशपृथिव्योः प्राणमयावयवयोर्विजातीयत्वं विज्ञानमयावयवस्य महसो विजातीयत्वमिति तथेत्यर्थः । आदिना योग आत्मेति ज्ञानमयावयवस्य योगस्य विजातीयत्वम् । अन्तर्यामीत्यादि । तत्र सर्वेषां ब्रह्मशरीरत्वकथनादिति भावः । इतराल्पमिति दुःखस्य लेशमित्यर्थः । इतरसत्तामिति दुःखसत्तामित्यर्थः । तस्येति आनन्दस्येत्यर्थः ।

योऽर्थऽस्तमवोचाम ॥ १२ ॥

भाष्यप्रकाशः ।

र्तयति । इतरसद्भावासद्भावौ तु प्रमाणान्तरावसेयौ । इह त्वपहतपाप्मेत्यादिना प्रमाणान्तरेण तदभाव एवावसीयते । तथा आनन्दमीमांसायां ब्रह्मणि निरतिशयदशाशिरस्कानन्दबोधिकया श्रुत्या पूर्वोक्तजीवानन्दापेक्षया प्राचुर्यबोधनेन सापेक्षत्वमप्येवं पूर्यत इति दुःखसद्भावावगमकथनमसदित्याहुः । तदपि युक्तमेव । उपपन्नत्वात् ।

यत्तु, 'श्रीग्रामण्योश्छन्दसि'इत्यत्र श्रियश्छन्दसीत्यंशो भाष्यकृतां छन्दसि विभाषाया व्यवस्थितत्वमुपेत्य प्रत्याख्यातस्तद्रीत्या प्रकृतेऽपि भाषाग्रहणं, 'द्व्यचश्छन्दसि,' 'नोत्वद्वर्ध्रबिल्वात्' इति सूत्रद्वयं च त्याज्यम् । तथाचानन्दमय इत्यादावपि विकारे मयट् सुकर एवेति शंकराचार्योक्तं सम्यगेवेति मनोरमायां समर्थितम् । तत्तु विकारत्वप्रकारकबोधविवक्षायां बह्वृचः परस्य मयट्प्रत्ययस्यासाधुत्वज्ञापनाय, 'द्व्यचश्छन्दसि' इत्यादेरावश्यकत्वेन दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यादिति दूषणं प्रदर्श्य रामकृष्णशास्त्रिभिरेव सिद्धान्तरत्नाकरे दूषितमिति न कथमपि विकारे मयट्सिद्धिः । यदपि प्राचीनवृत्तिकारैर्विज्ञानमयस्थले विकारार्थकत्वं यदाश्रितं तत्रैवैव गतिरिति मनोरमायामुक्तम् । तदपि कल्पितमिवाभाति । रामानुजाचार्यैर्वृत्तिकारानुसरणस्य कृतत्वेन तैरननूदितत्वात् । अथास्ति तत्र तर्हि तत्रैव दोषो नान्यत्रेति, न किंचिदेतत् । किं च पूर्वसूत्रे, अभ्यासादित्युक्त्वाऽस्मिन् सूत्रे प्राचुर्यादिति यदुक्तं तेनान्नमयादिषु पञ्चस्वपि प्राचुर्यमेव बाधकाभावात् सिद्ध्यतीति प्रायपाठोऽप्येतस्यैवानुग्राहको, न तु विकारार्थस्येति बोधनायाहुः योऽर्थस्तमवोचामेति । यः सर्वत्रानुस्यूतः पञ्चानामर्थस्तं व्याकरणसूत्रोपन्यासेनावोचामेत्यर्थः ॥ १२ ॥

रश्मिः ।

अपाप्मेति पापमपि दुःखं पापजनकत्वादिति भावः । तदभावं इति दुःखाभावः । प्रथमं प्रकारमाहुः यत्त्वित्यादि । श्रीति आमो नुडिति वृत्तिः । श्रीणामुदारो धरुणो रयीणां सूतग्रामणीनामित्युदाहरणम् । त्याज्यमिति सति हि भाषाग्रहणे शरमयं बर्हिरित्यादिसिद्ध्यर्थं द्व्यचश्छन्दसीति वक्तव्यम् । मौञ्जं शिक्यम् । वार्ध्रं चर्म बैल्वो यूप इत्यादौ द्व्यच इति प्राप्तं प्रतिषेद्धुं नोत्वदिति सूत्रमारब्धव्यं भाषाग्रहणे त्यक्ते तु सूत्रद्वयं व्यर्थमिति त्याज्यमित्यर्थः। उत्वान् उकारवान् तथात्रोकारवद् वर्ध्रबिल्वेभ्यो विकारे मयण् न भवतीति सूत्रार्थः । तत्रैवेति वृत्तावेवेत्यर्थः । अभ्यासादिति भाष्य एवमभ्यासः श्रूयते इत्यनेन अन्येनान्नमयादिव्यावृत्तोभ्यास इत्युक्त्वान्नमयादिव्यावृत्तो हेतुरेवमत्रापि तद्व्यावृत्तो हेतुरित्यर्थो भाति क्त्वाप्रत्ययात् तथापि यदुक्तमित्यस्यान्नमयादिव्यावर्तकभाष्याभावात् तेनान्नेनेत्यादिः । बाधकेति पूर्वसूत्रे एवमितिवत् । अत्र सूत्रे अन्नमयादिपरत्वे सूत्रस्य बाधकभाष्याभावात् । एतस्यैवेति प्राचुर्यार्थस्यैवेत्यर्थः ॥ १२ ॥

१. तदभावे पापाभावः.

शब्दबलविचारेण मयटो विकारार्थत्वं निवारितम् । अर्थबलविचारेणापि निराकरोति ।

## तद्धेतुव्यपदेशाच्च ॥ १३ ॥

हेतुत्वेन व्यपदेशो हेतुव्यपदेशः । तस्य हेतुव्यपदेशस्तद्धेतुव्यपदेशस्तस्मात् । 'एष ह्येवानन्दयाति' इति । आनन्दयतीत्यर्थः । सर्वस्यापि विकारभूतस्यानन्दस्यायमेवानन्दमयः कारणम् । यथा विकृतस्य जगतः कारणं ब्रह्म अविकृतं सच्चिद्रूपमेवमेवानन्दमयोऽपि कारणत्वादविकृतोऽन्यथा तद्वाक्यं व्यर्थमेव स्यात् । तस्मान्नानन्दमयो विकारार्थः । चकारः समुच्चयं वदन् सूत्रद्वयेनैकोर्थो मध्ये प्रतिपादित इत्याह ॥ १३ ॥

---

भाष्यप्रकाशः ।

उक्तसूत्रेण विकारार्थे निरस्तेऽग्रिमसूत्रस्य किं प्रयोजनमित्यत आहुः शब्देत्यादि । 'तामिन्द्रो मध्यतोऽपरोच्य व्याकरोत्' इति श्रुतेः 'मुखं व्याकरणं स्मृतम्' इति परिशिष्टाच्च व्याकरणरूपः शब्दोऽर्थनिर्णायक इति तद्बलविचारेण तथाकृतम् । तदपेक्षया अर्थस्तु बलिष्ठः । प्रतिपाद्यत्वेन शेषित्वात् । उक्तरीत्या निराकरणे स चेद् विरुध्येत तदा प्रयासो व्यर्थः स्यादतस्तद्वारणाय सूत्रान्तरमित्यर्थः ।

तद्धेतुव्यपदेशाच्च ॥ १३ ॥ उक्तरीतिकं विकारार्थनिराकरणं व्युत्पादयन्ति सर्वस्येत्यादि । व्यर्थमेव स्यादिति 'रसᳲ ह्येवायं लब्ध्वाऽऽनन्दी भवति' इति पूर्ववाक्ये पूर्वप्रकृतस्यानन्दमयस्यैव रसत्वेन सिद्धत्वात् तल्लाभेनानन्दवत्ताश्रावणेनैव रसरूपस्यानन्दमयस्यानन्दकारणताया अर्थतः सिद्धौ पुनस्तत्कथनमप्रयोजनकं सत् तथा स्यादतः कारणत्वेनाविकृतत्वबोधनायैवेदं वाक्यम् । तेनाविकारत्वमेव सिध्यतीत्यर्थविचारेणापि न तथेत्यर्थः ॥ १३ ॥

रश्मिः ।

तद्धेतुव्यपदेशाच्च ॥ १३ ॥ भाष्ये । हेतुत्वेनेति भावप्रधानो हेतुरुक्तः । सहकारिकारणतारूपहेतुवारणाय । तस्येति प्रचुरानन्दस्य जीवादिनिष्ठस्य । आनन्दयातीति लडन्तं पदम् । प्रकृते तामिति तां वाचम् । मध्यतो मुखमध्यतः । अपरोच्य ल्यबन्तं पदम् । वैखरीकृत्येत्यर्थः । व्याकरोदिति तामेव व्याकरणमकरोदित्यर्थः । परिशिष्टं वेदोपाङ्गम् । तल्लाभेनेति । आनन्दमयलाभेनानन्दीभवतीत्यानन्दवत्ताश्रावणेनेत्यर्थः । तत्कथनमिति 'एष ह्येवानन्दयाति' इत्यनेन तथेत्यर्थः । अविकृतत्वेति व्यर्थं सत्किंचिज्ज्ञापयतीति वैयाकरणानां प्रसिद्धेः । फलमन्यत्र यतो वा इमानि इति श्रुतौ यच्छब्दार्थकारणाविकृतत्वम् । भाष्ये । एकोर्थ इति विकारार्थनिरासरूप इत्यर्थः ॥ १३ ॥

ननु किमिति निर्बन्धेन सूत्रत्रयेणैवं वर्ण्यते । अन्नमयादिवदुपासनापरत्वेऽपि श्रुत्युपपत्तेः । पक्षपुच्छादित्वेन मोदप्रमोदादीनामुक्तत्वाच्च । तस्माद् ब्रह्मत्वेन साधितमप्यावश्यकोपपत्त्यभावान्न ब्रह्मपरत्वमिति प्राप्तेऽभिधीयते ।

**मान्त्रवर्णिकमेव च गम्यते ॥ १४ ॥**

'सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति मन्त्रः । मन्त्रेणाभिधया वृत्त्या प्रतिपाद्यं मान्त्रवर्णिकम् । तदुपपादनग्रन्थे तदेव मुख्यतया ज्ञायते । यत्र यदुद्दिष्टं तदेव मुख्यतया ज्ञातव्यम् । उपपादनीयं च संदिग्धम् । तत्र, ब्रह्मणा विपश्चितेति संदिग्धं सर्वज्ञं ब्रह्म ।

---

भाष्यप्रकाशः ।

मान्त्रवर्णिकमेव च गम्यते ॥ १४ ॥ मान्त्रवर्णिकसूत्रमवतारयन्ति नन्वित्यादि । एवमिति परमात्मपरत्वेन । नचोपास्तेरश्रवणादप्रामाणिकं कथं कल्पनीयमिति शङ्क्यम् । तदभावेऽपि विद्युद् ब्रह्मेत्यादिषु विद्युदाद्युपासनासु प्रकरणबलेन तत्स्वीकारात् । प्रकृते तु पक्षपुच्छादित्वेन मोदप्रमोदादीनां कल्पनयोक्तत्वाच्च लिङ्गस्यापि सद्भावात् । तस्मादुक्तहेतुद्वयाद् ब्रह्मत्वेन साधितमप्यानन्दमयपदमावश्यकोपपत्त्यभावान्न ब्रह्मपरमिति प्राप्ते इत्यर्थः । ब्रह्मपरत्वमिति पाठे त्वर्हतीति शेषत्रुटितो बोध्यः । को मन्त्रः, किं मान्त्रवर्णिकमित्याकाङ्क्षायामाहुः सत्यमित्यादि । तथाच यं कंचिदर्थमभिसंधाय शक्यसंबन्धानां नानात्वात् तेषु यं कंचिदादाय लक्षणया यत्किंचिदुच्यते, तन्न मान्त्रवर्णिकम् । किंतु मन्त्रेणाभिधया पदशक्त्या मुख्यवृत्त्या यत् प्रतिपाद्यं तत् तथेत्यर्थः । एतस्य मान्त्रवर्णिकस्य कथमुपपत्तित्वमित्यत आहुः तदित्यादि । तदुपपादनग्रन्थ इति सर्वस्मिन् प्रपाठके । तथा च तस्य मुख्यत्वादावश्यकोपपत्तित्वमित्यर्थः । मुख्यत्वमेवास्य कथमित्यत आहुः यत्रेत्यादि । ननु तदेषाऽभ्युक्तेति प्रतिज्ञानान्मन्त्रस्य ब्राह्मणव्याख्यानत्वं स्फुटम् । शिष्टस्य प्रपाठकस्य मन्त्रव्याख्यानत्वे किं गमकमित्यत आहुः उपपादनीयमित्यादि । संदिग्धमिति विभक्तिभेदात् पदभेदाच्च संदिग्धम् । तथाच संदिग्धोपपादकत्वमेव व्याख्यानत्वगमकमित्यर्थः । ननु

रश्मिः ।

मान्त्रवर्णिकमेव च गम्यते ॥ १४ ॥ प्रकरणेति । ननु प्रकरणं कुत इति चेन्न ब्रह्मविदित्यत्र विदित्युपासनास्वीकारात् । अक्षरविषयत्वेन तथावसायात् । विभूतिविषयकं ज्ञानमुपासनेति । प्रीतिविषयः शिर इत्यानन्दमयो भक्तिविषयः । तत्स्वीकारादिति प्रामाणिकत्वस्वीकारात् । पूर्वपक्षत्वात्तूष्णीकमुपासापरत्वं वा । पक्षेति भाष्यं विवृण्वन्ति स्म प्रकृते इति । लिङ्गस्येति उपास्तिलिङ्गस्य । तस्मादिति भाष्यं विवृण्वन्ति स्म तस्मादिति । बोध्य इति अबोध्य इति न हेतुः किं तु साधितमित्यस्य विशेष्यं ब्रह्मपरत्वं बोध्यमिति भावः । तथा चेति मान्त्रवर्णिकमित्यत्र शैषिकठगङ्गीकारेणेत्यर्थः । यं कंचिदिति यथा काकेभ्यो दधि रक्ष्यतामित्यत्र यं कंचित्काकरूपं यं कंचिद् दध्युपघातकत्वरूपं संबन्धमादाय यत्किंचित्काकपदेन दध्युपघातक उच्यते । यत्रेत्यादीति ब्रह्मविदाप्नोति परमिति यदुद्दिष्टं भाष्ये । प्रकृते परपदं च । व्याख्याने तु तृतीयाविभक्तिः ब्रह्मपदं चेति तयोर्भेदः । विभ-

तस्य हि फलत्वं वाक्ये नोपपाद्यते। फलं तु सर्वैः स्तुत आनन्दः। अभ्यासात् स्तुतत्वमित्यवोचाम। शिरःपाण्यादिकं तु स्तुत्यर्थमेव पुरुषविधत्वाय। लोके ह्यन्तर्भूतं बहिर्वेष्टितं च तदाकारं भवति।

---

भाष्यप्रकाशः ।

सर्वज्ञे ब्रह्मणि कस्मिन्नंशे कुतश्च संदेह इत्यत आहुः तस्य हीत्यादि । वाक्य इति मन्त्रे । तथाच ब्राह्मणवाक्ये द्वितीयया परस्य फलत्वबोधनात्, तद्व्याख्यानमन्त्रे तु द्वितीयया कामानां फलत्वबोधनाद् ब्रह्मणश्च गौणत्वबोधनात् तस्य फलत्वांशे संदेह इत्यर्थः। तर्हि कथं तस्य फलत्वमुपपाद्यत इत्याकाङ्क्षायां सर्वतः प्रचुरानन्दरूपत्वेनोपपाद्यत इत्याहुः फलं त्वित्यादि । सर्वैरिति प्रकारैः । प्रकारास्त्वभ्याससर्वान्तरत्वसर्वाधिकत्वादयो बोध्याः। ननु यदि प्रचुरानन्दरूपेणैव फलत्वमभिप्रेतं स्यादमूर्तस्य तथोक्तं स्यान्न तु शिरःपाण्यादिकं कल्प्येत । प्रयोजनाभावात् । कल्पनया चोपासनार्थता प्रतीयते, न तु परमफलतेत्यत आहुः शिर इत्यादि । शिरःपाण्यादिकमिति इदमा बोधितं शिरःपाण्यादिकम् । पुरुषविधत्वायेति सर्वेषां पुरुषविधत्वाय । यदि हि स्वयं पुरुषविधो न स्यात्तदा तदुपरितनोऽन्नमयान्तः कोऽपि पुरुषाकारो न स्यादिति तदर्थं तथोक्तिरिति तस्य पुरुषविधतामन्वयं पुरुषविध इति वाक्यादेव प्रतीयते । अतः सा कल्पना नोपासनार्थाऽपि तु स्तुत्यर्थेति कल्पनाया लिङ्गत्वाभावात् प्रकरणापेक्षया वाक्यस्य बलिष्ठत्वाच्चानन्दमयपदस्य ब्रह्मपरत्वं न पारिप्लवमित्यर्थः । नन्वानन्दमयस्य पुरुषविधत्वेन कथं सर्वेषां तथात्वमित्यत आहुः लोके हीत्यादि । अयमर्थः । लोके ह्यन्तर्भूतस्य तदाकारता मूषानिषिक्तप्रतिमादौ दृष्टा।

रश्मिः ।

स्येति व्याख्येये द्वितीया विभक्तिः । वाक्य इतीति । वाक्येनेति पाठे करणत्वे नान्वयः किं तु सप्तम्यन्तम् । निषेधार्थं नञ् चेति । ब्राह्मणेति अस्यतत्क्तान्तमध्यमपुरुषान्तत्वाभावात्तथा । धृष्टिरसि ब्रह्म यच्छ इषेत्वोर्जेत्वा वायवस्थेत्युदाहरणानि । 'शेषे ब्राह्मणशब्दः' इति ब्राह्मणवाक्ये इत्यर्थः । फलत्वांश इति फलत्वांशेपि संदेह इत्यर्थः । अभ्यासादित्यादिभाष्यमुपलक्षकतया विवृण्वन्ति अभ्यासेत्यादि । आदिशब्देनोपसंक्रमः । सर्वेषामिति अन्नमयादीनाम् । द्वा सुपर्णेति श्रुतेः पुरुषविधत्वाय । तदुपरीति आनन्दमयोपरितन इत्यर्थः । वाक्यस्येति तस्य पुरुषेत्यादिवाक्यस्येत्यर्थः । बलिष्ठत्वादिति यथा 'इन्द्राग्नी इदं हविरजुषेताम् अवीवृधेतामहोज्यायोऽक्राताम्' इत्यत्रेन्द्राग्नीपदस्य लिङ्गाद् दर्शाङ्गत्वे सिद्धे इदं हविरित्यादेरपि दर्शाङ्गत्वं तदेकवाक्यत्वान्न तु प्रकरणाद्दर्शपूर्णमासाङ्गत्वम् । प्रकरणाद्वाक्यस्य बलिष्ठत्वात् । आकाङ्क्षारूपं प्रकरणं वाक्यस्य वाक्यान्तरैकवाक्यत्वे प्रमाणम् । एवं च यावत्प्रकरणं वाक्यं कल्पयित्वा विनियोजकं भवति तावद्वाक्यं लिङ्गश्रुती कल्पयित्वा विनियोजकमिति बलीय इत्युक्तम् । तद्वद्बलिष्ठत्वादित्यर्थः । न पारिप्लवमिति पारिप्लवाख्यं कर्मेति पारिप्लवार्था इतिसूत्रे तृतीयस्य चतुर्थपादे वक्ष्यन्ति । तत्कर्म न पारिप्लवमाचक्षीत इत्येकवचनस्य विवक्षितत्वात् । एतस्य फलमुपाख्यानस्य न पारिप्लवशेषत्वम् । उपाख्यानं प्रपाठकद्वयस्थं किं तु यदुद्दिष्टं तन्मुख्यत्वज्ञानशेषत्वम् । अतो न कर्मशेषेयं विद्येति तृतीयस्य चतुर्थपादे भृगुप्रपाठकमुक्त्वा पारिप्लवशेषतानिराकरणात् । ब्रह्मपरत्वस्योपाख्यानं शंसनसाहित्यात्पारिप्लवत्वं प्राप्तं सर्वाण्याख्यानानि पारिप्लवे शंसतीति वाक्यात् ।

**जीवोऽत्र मुख्यः । कर्तृत्वेन व्यपदेशात् । स च वस्तुतो हंसरूपः । पुरुषाधिकारकं हि शास्त्रम् । तेन पुरुषशरीरे तदाकारः सर्वं फलं प्राप्नोति । अतः पुरुषं हंसरूपेणानुवर्णयति ।**

---

भाष्यप्रकाशः ।

बहिर्वेष्टितस्य तदाकारता तूपदेहे सीवितवसनादौ च । तथाच यथा भाण्डकर्तारः प्रथमत आकृतिं मधूत्थादेः कृत्वा तदुपरि मृदं वेष्टयित्वा तन्मूषायां धातून् पूरयन्ति । अन्यथा पूरितभाण्डनिर्माणं न भवति । तथात्र तादृशोऽयं देहः । अतोऽत्र देहे कश्चिदान्तर एवंविधो वर्तते यदुपरि समागता अन्नरसादयः पुरुषाकारा भवन्ति । नो चेद् घटादिवत् कृतिसाध्यत्वाभावाद् भस्मोत्करवद् राशीभूता एव भवेयुः । अत्र तु श्रुतौ, 'तस्माद्वा एतस्मादन्नरसमयादन्योऽन्तर आत्मा प्राणमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव तस्य पुरुषविधतामन्वयं पुरुषविधः' इत्यादौ पूर्वं प्राणमयादिकमुक्त्वा तेन प्राणमयादिना आन्तरेण एषोऽन्नमयादिरुपरितनः पूर्ण इति पूर्वोक्तन्यायेन पूर्णतां प्रतिज्ञाय ततस्तां निगमयितुं, 'स वा एष प्राणमयादिः पुरुषविध एव' इत्यनेन तदाकारमुक्त्वा तस्य प्राणमयादेः पुरुषविधतामनुलक्ष्यीकृत्य, अयमन्नमयादिः पुरुषविध इति वदति । तेन सर्वान्तरस्यानन्दमयस्यैव सर्वत्र पुरुषाकारसमर्पकता पर्यवस्यति । तेन तथा सिद्ध्यतीति । नन्वस्त्वेवं, तावता स्तुतिः का वा सिद्ध्यतीत्यत आहुः जीव इत्यादि । वर्णयतीत्यन्तम् । तेनेति हेतुना । तदाकार इति हंसाकारः । अयमर्थः । उक्तमन्त्रे सोऽश्नुत इत्यनेन जीवः फलाशने कर्तृतया व्यपदिष्टः फलभोगे मुख्यः । तस्य च, द्वा सुपर्णाविति श्रुत्या, 'एवं स मानसो हंसो हंसेनैव प्रबोधितः' इति स्मृत्या च हंसरूपेणैव सिद्धत्वात् पुरुषाधिकारेण प्रवृत्तस्य शास्त्रस्य तं प्रत्यप्रवृत्तौ तस्य ब्रह्मवित्त्वाद्यभावेन वेदनादिफलस्याप्यभावाच्छास्त्रादिवैयर्थ्यं स्यादिति फलेऽर्थं शास्त्रसार्थक्यार्थं च जीवस्य पुरुषरूपमावश्यकम् । तथा समतां विना फलानुभवदौर्घट्याद् ब्रह्मसमतायाश्च, 'न तत्समः' इत्यादिश्रुत्या निषेधात् फलानुभावनार्थं समतायै ब्रह्मणोऽपि हंसरूपमावश्यकम् । अतः पुरुष एव यदा हंसरूपेण जीवान्तराविश्य तं पुरुषरूपेणान्तरितवाँस्तदा तद्वेष्टनेन पुरुषरूपो जीवः

रश्मिः ।

मूषेति सांचा इति लोक उच्यते । उपदेह इति नागकञ्चुक्यामित्यर्थः । मधूत्थादेरिति । मेन इति लोके ।

फलानुभवेति फलं कर्मफलभोगस्तदर्थमत्रापि समता नायात्यतो गौणमुख्यन्यायेन सार्ष्टि प्रलम्ब(फलं) सख्यरूपं फलं च तदनुभावनार्थं समता वक्तव्या अन्यथा तद्वाक्यवैयर्थ्यप्रसङ्गात् । तस्यै समताया इत्यर्थः । विरुद्धधर्माश्रयत्वात् समतासमते उपपन्ने । अत इति हंसद्वयस्य पुरुषस्य आवश्यकत्वात् । पुरुष इति पुरा आस इति व्युत्पन्नः । न तु पुरि शेते इति न वा पुरमुषतीति व्युत्पन्नः । एवकार इममर्थं व्यवच्छिनत्ति । पुरा सृष्टिपूर्वं व्युत्पत्तिद्वयासंभवात् । तस्य रूपद्वयं हंसः पूर्वशाखे 'ततो ह जातः' इति श्रुतेः । पुरुषो वेदान्तशाखे 'आत्मैवेदमग्र आसीत्' इति श्रुतेः । तयो रूपयोः समावेशः द्वा सुपर्णेति श्रुतेराहुः यदेति । हंसेति गतिप्रतिबन्धकमुलक्षय प्रवेशार्थम् । जीवान्तरेति जीवो जीवमजीवयदिति वाक्यात् । 'यस्यात्मा शरीर'मिति श्रुतेश्च । तमिति जीवम् । 'आकाशशरीरं ब्रह्मे'ति श्रुतेः । 'आकाशो ह वै नामरूपयोर्निर्वहिता' इति श्रुतेश्च पुरुषरूपेण 'तासां मे पौरुषी

पञ्चस्वपि शारीर आत्मा जीव एक एव । तत्रान्नमये निःसंदिग्धत्वात्, तस्यैष एव आत्मेति नोच्यते । द्वितीयादिषु प्रथमोक्तमेवातिदिश्यते । तत्रान्नमये हस्तेन प्रदर्शयन्निव निःसंदिग्धं व्याख्यातम् । तदन्तरो हि प्राण आन्तरव्यवहार-

भाष्यप्रकाशः ।

सर्वं लौकिकालौकिकफलमनुभवति । परमात्मा च हंसेऽन्तर्भूतो हंसाकारश्च सँस्तत्फलमनुभावयतीति श्रुतिरपि परमात्मानं हंसरूपेण पुर्यावेशोत्तरं वर्णयति । तथाच स्वयमतिमहानपि जीवस्य फलभोजनार्थमेवं करोतीत्येषा स्तुतिरित्यर्थः । एवं पक्षिरूपकल्पनस्य शिरःपाण्यादिकथनस्य च स्तुत्यर्थतासमर्थनेन निरालम्बना प्रत्यगात्मविषया बुद्धिः कर्तुमशक्येति दृष्टशारीरात्मसामान्येन प्रत्यगात्मनि बुद्धिसिद्ध्यर्थं शाखाचन्द्रन्यायेनेदं कल्पनमित्यपास्तम् । तथा सति पुरुषरूपकल्पनयापि कार्यसिद्धेः पक्षिरूपकल्पनावैयर्थ्यप्रसङ्गादिति । ननु यद्येवमभिप्रेतं स्यात् तर्ह्यानन्दमयस्यैव पक्षिरूपत्वं वर्णितं स्यादन्नमयादीनामतो नैवमित्याशङ्कायां स्वोक्तं विभजन्ते पञ्चस्वित्यादि । तथाच प्राणमयादीनां चतुर्णां व्याख्याने, तस्यैष एव शारीर आत्मेति कथनात् पञ्चस्वपि फलेष्वेकस्यैव जीवस्य भोक्तुः पञ्चानां शरीरतया भोग्यत्वस्य च ज्ञाप्यत्वेन हंसरूपजीवानुरोधादन्नमयादिष्वपि तथाकल्पनं युक्तमित्यर्थः । ननु यद्येवं तदान्नमय इदं वाक्यं कुतो नोच्यत इत्यत आहुः तत्रेत्यादि । कोशेऽन्नमये शरीरत्वस्यैकात्मभोग्यत्वस्य च प्रत्यक्षसिद्धत्वेन तत्तुल्येऽन्नमयेऽपि तथात्वस्यासंदिग्धत्वान्नोच्यत इत्यर्थः । नन्वेवं सत्यन्येष्वपि तत्तत्कोशतौल्यात् तत्रापि नोच्येतेत्यत आहुः द्वितीयेत्यादि । प्रथमोक्तमिति अन्नमय उक्तं पञ्चावयवकत्वम् । तत्रचातिदेशदार्ढ्यार्थं तदुक्तिरित्यर्थः । एतदेव प्रपञ्चयन्ति तत्रेत्यादि । प्रदर्शयन्निवेति । वदतीत्यत इति शेषः । तथाच यत एवं वदत्यतः प्राप्यरूपेऽन्नमयेऽप्यत्र व्याख्यातं तदवयवसाम्यं निःसंदिग्धमित्यर्थः । प्रदर्शयतीवेति वा पाठः । प्राणमये आहुः

रश्मिः ।

प्रिया' इतिवाक्यात् । एवमिति आनन्दमयस्यैव साकारफलत्वमिति पूर्वोक्तप्रकारेण । नैवमिति न साकारब्रह्मत्वमित्यर्थः । फलेष्विति एतमन्नमयमात्मानमुपसंक्रम्येत्यादिश्रुतिभ्यः । फलत्वमानन्दमयान्नमयादिविभूतिसाधारणम् । हंसरूपेति मुक्तहंसरूपजीवस्य ब्रह्मसामर्थ्यानुरोधात् । तथेति पक्षिरूपत्वकल्पनमित्यर्थः । एवमिति हंसरूपजीवानुपजीवानुरोधेन पक्षित्वे । इदमिति तस्यैष एव शारीर आत्मा यः पूर्वस्येति वाक्यम् । तथात्वस्येति एकात्मभोग्यत्वस्य । उक्तमिति एकात्मभोग्यत्वम् । तत्तत्कोशतौल्यादुक्तप्रायम् । शारीर आत्मेत्युक्त्या शरीरमप्यतिदिष्टमिवेत्याहुः पञ्चावयवेति । चकारः पूरणीयः । तथा चेति अन्येष्वपि तत्तत्कोशतौल्याद्वचनाभावे प्राप्तत्वेपि यत्र शारीरपदान्तर्गतशरीरस्याप्यतिदेशस्तत्रैकात्मभोग्यत्वातिदेशे किमु वक्तव्यमित्येकात्मभोग्यत्वातिदेशदार्ढ्यार्थं तस्य 'तस्यैष एव शारीर आत्मा' इत्यतिदेशवाक्यपञ्चावयवरूपस्य शरीरस्योक्तिरित्यर्थः । एवकारस्तु दार्ढ्योक्तपञ्चावयवस्यापि व्यवच्छेदकः । प्रदर्शयन्निवेति वेदस्य कर्तृत्वमुक्तं तदा वेदरूपशिवभक्तसंवलितत्वे सिद्धे क्रीडार्थं भक्तत्वाच । श्रुतेः कर्तृत्वायाहुः प्रदर्शयन्निवेति । तदन्तर इत्यादीति बहिर्व्यवहारकारणमुक्तमन्नमयशब्देन तस्यान्तरत्वाद्दीत्यनुभवाश्रियेनान्तरो यो व्यवहारः 'व्यवहारः संनिपातो मनोमात्रेन्द्रियासुभिः' इति वाक्येन भगवतोक्तस्तस्य कारणम् । 'संनिपातस्त्वहमिति ममेत्युद्धव या मतिः' इति भगवद्वाक्यात् । अहंममेतिमत्याः कारणम् ।

कारणम् । बलभोजनविसर्गादिषूपयोगात् । तस्य संचार आकाशो परिनिष्ठितः पृथिव्याम् । एवं लौकिकव्यवहारार्थं बाह्याभ्यन्तरभेदेन द्वयम् ।

तदनु वैदिकव्यवहारः । स च मनोमयः पुरुषः । आदेशः कर्मचोदना । ब्राह्मणानि सशेषाणि । अथर्वाङ्गिरसे ब्रह्मकर्मत्वात् प्रतिष्ठा ।

भाष्यप्रकाशः ।

तदनन्तर इत्यादि । अत्र, बलेत्यादिना प्राणादित्रयस्य कार्यमुक्तम् । कोशाङ्गभेदश्च दर्शितः । स पञ्चवृत्तिको दशवृत्तिको वा । अयं तु त्रिवृत्तिकः । तस्य संचारो नियते देशे हृदादौ । अस्य तु सर्वत्राकाश इति स तस्य स्वरूपलाभहेतुत्वादात्मा । स तु देहे स्थितोऽयं तु सर्वस्यां पृथिव्यामिति । अतो द्विविधभोगसाधनत्वेन स्वामिमानाय द्वयोः कथनमित्यर्थः । अग्रिमप्रयोजनादिकमाहुः तदन्वित्यादि । लौकिके व्यवहारे वयःप्रभृतिभिः स्वातन्त्र्यसंपत्तौ सत्यां वैदिके प्रवर्तत इति वेदप्रयुक्तो मनोमात्रेन्द्रियप्राणव्यापारस्तस्यानन्तरभावी । तस्य च लौकिकाद् भेदः, 'शब्द इति चेन्नातः प्रभवात्' इत्यत्र सोपपत्तिकं वक्तव्यः । तद्भोगसाधनाय च स वेदात्मको मनोमयः पुरुषः । वेदस्य च मनोमयत्वमेकादशस्कन्धे, 'स एष जीवो विवरप्रसूतिः' इति श्लोकेन भगवतोक्तम् । सशेषाणीति सार्थवादानि । ब्रह्मकर्मत्वादिति । चातुर्होत्रविधाने ब्रह्मणः कृताऽकृतावेक्षकत्वेन तत्कर्मणोऽथर्वसिद्धस्य कर्म-

रश्मिः ।

प्रकृते । कार्यमुक्तमिति अत्र प्रथमे प्रश्नोपनिषदि 'अहमेतत्पञ्चधात्मानं प्रविभज्य एतद्बाणमवष्टभ्य विधारयामि' इति श्रुतिः । द्वितीये व्यानस्य श्रुत्यन्तरात् आनन्दभुगित्यनेन विकल्प्यते श्रुत्यन्तरम् । विसर्गेऽपानस्य प्रसिद्धोपयोगः । भेदकमाहुः स पञ्चेत्यादि । 'प्राणोऽपानः समानश्चोदानव्यानौ च वायवः' इत्यमरादित्यर्थः । दशेति 'दशेमे पुरुषे प्राणाः' इति शाकल्यब्राह्मणश्रुतेः । पञ्च प्राणादयः पञ्च नागादयश्च । तस्येत्यादिभाष्ये तच्छब्देन प्राणः परामृष्ट इत्यत्रापि तस्येत्यस्य 'तुना' सह संबन्धः । अत्र आकाश आत्मेत्यत्रात्मपदं स्वरूपलाभहेतुत्वेन रूपेण प्राणदेहं वक्तीत्याशयः । प्राणेन्द्रियात्मधिष्ण्यत्वमित्याकाशलक्षणवाक्यादित्याशयेनोक्तं स तस्येत्यादि । पृथिव्यामिति अधोलम्बनसाम्यात्पृथिव्याः पुच्छत्वमपि । द्वयोरिति पुच्छप्रतिष्ठयोरित्यर्थः । अत्र तस्य यजुरेव शिर इत्यत्र मनुष्यकर्मप्रतिपादकस्य यजुषः शिरस्त्वं व्यवहारे मनुष्यकर्मैव मुख्यं 'पुरुषत्वे च मां धीराः' इतिवाक्येनैतत्सजातीयश्रीषर्युक्तश्रुत्या च पुरुषकर्माग्निहोत्रादिभिः 'आविस्तरां प्रपश्यन्ति' 'पुरुषत्वे च मां भगवन्तं धीरा' इति । ततः ऋग्वेदो देवदैवत्यो देवताप्रतिपादकः । कर्मविषयप्रतिपादको दक्षिणः पक्षः । ततः सामवेदः पित्र्यः पितृप्रतिपादकः उत्तरः पक्षः । देवानां पितॄणां चानेकप्रकारत्वात् । आदेशः कर्मनोदना कर्मनोदनाप्रतिपादकानि ब्राह्मणानि सशेषाणि ह्यात्मा । प्रतिपाद्यप्रतिपादकयोर्नित्यसंबन्धात्सामानाधिकरण्यम् । धर्मप्रमितिकाले ब्राह्मणानि धर्मप्रमितिं जनयन्तीत्यनुष्ठानकालेऽनुष्ठीयमानान्धर्मान् विषयीकुर्वन्त्या ब्रह्मणः कर्मनोदनाया आत्मत्वम् । अग्रे नोदनाविषयस्य धर्मस्य पक्षत्वमिति नार्थान्तरम् । आदेश इत्यादि । वय इति प्रभृतिशब्देन 'लोकसिद्धं पुरस्कृत्य वैदिकं बोध्यते यथा' इत्युक्तलोकसिद्धपुरस्कारः । शब्द इतीति तृतीयपाद इत्यर्थः । भाष्ये । आदेश आत्मेति श्रुतिं विवृण्वन्ति । ऋग्दक्षिणः पक्षः सामोत्तरः पक्षः इत्येतां विवृण्वन्ति ब्राह्मणानीति । अथर्वाङ्गिरसः पुच्छं प्रतिष्ठेति श्रुतिं व्याकुर्वन्ति अथर्वेति । अथर्वाङ्गिरसां द्रष्टा मन्त्रो ब्राह्मणश्च अथर्वाङ्गिरसस्तस्मिन् । प्रकृते । चातुर्होत्रेत्यादि चत्वारो होतारो यत्र कर्मणीति योगः । योगरूढः शब्दः । कृतावेक्षकं तेन च साङ्गं कर्म भवति तदभावे तु व्यङ्गं कर्मेति । साङ्गं कर्म फलाय

तदनु नानाविधयागादिसाधनवतः फलं विज्ञानमयः । तत्र श्रद्धा आपः । तृतीयाध्याये त्वयमर्थो विस्तरेण वक्ष्यते । यथोक्तकर्तृत्वात् क्रममुक्तिः ।

ऋतसत्यौ प्रमीयमाणानुष्ठीयमानौ धर्मौ योगश्च मुख्यत्वादात्मा । अधो-

भाष्यप्रकाशः ।

स्थैर्यसंपादकत्वादथर्वाङ्गिरसः प्रतिष्ठारूप इत्यर्थः । शान्त्यादिकर्मबोधकत्वात् पुच्छत्वमपि तस्य बोध्यम् । एतेन नानावृत्तिकान्मनोमयकोशाद् भेदोऽपि दर्शितः । एवं द्विविधैहिकभोगौपयिकं द्वयं वैदिकव्यवहारौपयिकं तृतीयं चोक्त्वा पारलौकिकभोगौपयिकं चतुर्थमाहुः तदनु नानेत्यादि । विज्ञानमय इति विज्ञानप्रचुरः । तस्यावयवानां स्वरूपमाहुः तत्र श्रद्धेत्यादि । पञ्चाग्निविद्यायां, यतिथ्यामाहुत्या५ हुतायामापः पुरुषवचसो भूत्वा समुत्थाय वदन्तीति प्रश्नाभिरूपणभागे प्रथमाहुतौ, देवाः श्रद्धां जुह्वतीति कथनाच्च श्रद्धारूपा आपो मुख्या इति सा शिर इत्यर्थः । अस्यार्थस्य काल्पनिकत्वपरिहाराय विचारितत्वं बोधयन्ति तृतीयेत्यादि । रंहत्यधिकरण इत्यर्थः । ननु प्रथमाहुतौ श्रद्धाहोमस्ततः सोमवृष्ट्यन्नरेतःक्रमेण पञ्चम्यामाहुतौ हुतायां रेतसः पुरुषभाव इत्यवयवपूर्त्यभावात् कथमस्य जीवभोग्यत्वं भोगसाधनत्वं चेत्याकाङ्क्षायामाहुः यथोक्तेत्यादि । अन्नमयाद्युक्तोपासनाकर्तृत्वात् क्रममुक्तिः । एतेनोपासनाकथनप्रयोजनमपि बोधितम् । तथाच श्रद्धादीनामर्थानां पूर्वसिद्धत्वेन सत्त्वादेतदवयवास्तु पूर्णा एव । तेन जीवस्य तत्र क्रमिको भोग इति न दौर्घट्यमित्यर्थः । एतेन संशयविपर्यासादिनानावृत्तिकाद् विज्ञानमयकोशाद् भेदो दर्शितः । अत्रैतत् सिद्धम् । अन्नब्रह्मोपासनायां सर्वान्नप्राप्त्या लौकिको बाह्यो भोगस्ततोऽग्रिमोपासने सर्वायुःप्राप्तिरूप आन्तरः । तदग्रे ब्रह्मानन्दज्ञानात् सर्वदा भयाभावाद् वैदिकः । तदग्रे प्रमादाभावे सति पापनाशपूर्वकसर्वकामाप्तिरूप इति । अवयवान्तरस्वरूपमाहुः ऋतेत्यादि ।

रश्मिः ।

स्थिरम् । व्यङ्गं तु नेति । प्रतिष्ठेति स्वरूपलाभहेतुत्वात् । शान्त्यादीति शान्तिकर्मणः सर्वकर्मान्तिमत्वेन पुच्छत्वमित्यर्थः । आदिना पौष्टिकादिप्रतिष्ठाहेतोः शांकरभाष्योक्तस्य संग्रहः । तथा च शान्तिपौष्टिकादिप्रतिष्ठाहेतुकर्मबोधकत्वादित्यर्थः । तदन्वित्यादि । तदनु वैदिकव्यवहारलक्षितः । नानाविधयागादिसाधनवत इत्यादि इत्थंभूताख्यानेऽनुः । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इत्यत्र चित्तशुद्धिद्वारा यागादीनां विज्ञानमयफलकत्वात् । फलं स्वकारणानि विस्तारयति प्रवृत्तिद्वारा । तदुक्तं 'विज्ञानं यज्ञं तनुते' इत्यादिनात्रैव । यतिथ्यामिति यत्संख्यायामित्यर्थः । ननु कस्मादन्नवाक्ये श्रद्धालाभः इत्यत आहुः निरूपणेति । तथा चैकवाक्यतया श्रद्धालाभः इति भावः । मुख्या इति पुरुषरूपफलरूपत्वेन मुख्यत्वम् । सेति तस्य श्रद्धैव शिरः इति श्रुतौ श्रद्धेत्यर्थः । इत्यवयवेति श्रद्धामात्रकथनेन सोमवृष्ट्यन्नरेतसामकथनाद्धेतोरवयवपूर्त्यभावादित्यर्थः । सर्वान्नेति 'सर्वं वै तेनान्नमाप्नुवन्ति येऽन्नं ब्रह्मोपासते' इतिश्रुतेरित्यर्थः । सर्वायुरिति सर्वमेव त आयुर्यन्ति ये प्राणं ब्रह्मोपासते इति श्रुतेरित्यर्थः । भयाभावादिति 'यतो वाचो निवर्तन्ते' इतिश्रुतेस्तथेत्यर्थः । प्रमादाभाव इति ।

'विज्ञानं ब्रह्म चेद्वेद तस्माच्चेन्न प्रमाद्यति ।
शरीरे पाप्मनो हित्वा सर्वान्कामान् समश्नुते' ॥

इति श्रुतेरित्यर्थः । ऋतेत्यादि ऋतं प्रमीयमाणो धर्मो ब्राह्मणैः सत्यमनुष्ठीयमानो धर्मो

भागो महर्लोकः । तादृशस्य ततोऽर्वाक् संसृत्यभावात् । ततोऽपि ब्रह्मविद

भाष्यप्रकाशः ।

तादृशस्येति श्रद्धाहोमात् पूर्वजन्मनि निष्कामयज्ञकर्तुर्ज्ञानरहितस्य ततः श्रद्धादिक्रमेण

रश्मिः ।

मन्त्रैरित्यर्थः । भावार्थपादभाष्य इदं स्फुटमस्तु ।

ननु विपरीतं किं न स्यात् इति चेन्न संहितायां 'ब्रह्मवादिनो वदन्ति' इतिश्रुत्या ब्रह्मसत्यमतोनुष्ठीयमानधर्मः सत्यं 'ऋतं सत्यं परं ब्रह्म' इति महानारायणात् । परब्रह्मकार्ये ऋतं प्रमीयमाणो धर्मः ब्राह्मणस्य वेदान्तत्वात् । प्रमीयमाणानुष्ठीयमानधर्मः परं ब्रह्म 'धर्मो यस्यां मदात्मकः' इतिवाक्यात् । योगश्चेति विज्ञानमयस्योपक्रान्तत्वाद् योग उक्तः । विज्ञानप्रचुरज्ञानयोग इत्यर्थः । ज्ञानमय इत्युक्ते ज्ञानधर्मत्वेन ज्ञानरूपत्वमपि स्यादतो मार्गत्वावयवीति 'विजातीयसंमेलने मार्गत्वं केवलस्य धर्मत्वम्' इत्येकादशसुबोधिन्यां अतो नामैकदेशग्रहणं योग आत्मा इति 'परो हि योगो मनसः समाधिः' इति चित्तवृत्तिनिरोधो योग इति स च समाधिः सायुज्यविशेषः । आश्रयव्यापकतयात्मायतनादित्यर्थः । अधोभाग इति 'षड्भिः संपद्यते धर्मः' इति तदन्तर्गतदेशो महर्लोकः । अधस्त्वाच्च प्रतिष्ठा ऋतसत्यरूपपरब्रह्मात्मकधर्मसाधनत्वाद्युक्ता । मह पूजायां कर्तर्यसुन् । विज्ञानमयस्यापि शिरस्त्वादिकं कथमिति चेच्छृणु । आपः पुरुषवचसो भवन्तीति निर्विवादम् । तत्र श्रद्धा आपः धर्मावपि शास्त्रदृष्ट्या स्वोपादानरूपावित्यब्रूपौ । ननु पक्षपदादब्रूपशिरःकथनं पृथक् कुतः इति चेन्न । शिरोधोदेश एव पक्षपदप्रवृत्तेः । अतो विभूतेः पुरुषशरीरस्य द्वौ भागौ धर्माब्रूपौ ताभिरर्चनं ज्ञानाङ्गमित्यप्शिरस्त्वादिकमुपपन्नम् । नाप्यर्चनलाभो दुर्लभः साधने महःपदात् । न चार्चनं द्रव्यमन्यदिति वाच्यम् । सोर्चन्नचरत्तस्यार्चत आपोऽजायन्तेति बृहदारण्यकात् । विज्ञानमयेनाप्यम्मयो यज्ञस्तन्यते तद्विभूतित्वात् । ततोपि ब्रह्मविद इत्यग्रे भाष्यं तज्ज्ञाप्यमर्थमाहुः श्रद्धेति तच्छब्दात्पूर्वोक्तश्रद्धापदस्मारितश्रद्धाहोमपदमन्वयार्थं पञ्चम्यन्तं श्रद्धाहोमावधिके पूर्वजन्मनीति पूर्वजन्मलाभः । अग्रेन्वयार्थं सप्तम्यन्तं पदं ब्रह्मविद इतिवक्ष्यमाणत्वात् तत्साधननिष्कामयज्ञकर्तृलाभः । ननु यज्ञकर्तृपदेन यज्ञलाभे निष्कामशब्दस्य किं प्रयोजनमिति चेन्न श्रीमदाचार्यमार्गीययज्ञबोधनार्थत्वात् ।

'काम्यानां कर्मणां त्यागं संन्यासं कवयो विदुः ।
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः' ॥

इति गीता । श्रद्धाहोमानन्तरं तादृशशरीरज्ञानस्य भावित्वात् ज्ञानरहितस्येत्यस्य लाभः । अग्रे । भाष्ये । ततोर्वागिति महर्लोकादर्वाक् भूर्भुवःसुवर्लोकेषु संसृतिः संसरणं तदभावात् । तथा च संसरणमपेक्ष्य महर्लोक एवाध इति भावः । महर्लोकवासिनो भृग्वादयो ज्ञानिनः 'नमस्कृतं ब्रह्मविदामुपैति कल्पायुषो यद्विबुधा रमन्ते' इति द्वितीयस्कन्धात् । अत्रेदं बोध्यम् । श्रद्धायाः पुरुषवचस्त्वानन्तरं यथोक्तोपासनया क्रममुक्तिः शरीरे पाप्मन इत्यग्रेतनश्लोकात् । उपासा तु धर्मप्रमित्यनन्तरं तदनुष्ठाने शुद्धे चित्ते वृत्तिनिरोधः इत्यतः ऋतसत्यावित्यादिभाष्यमवयवत्रयनिरूपकम् । भाष्ये महःपुच्छमित्यादेस्तात्पर्यमाहुरध इत्यादि । अधोभाग इति पुच्छपदार्थः । लोक इति प्रतिष्ठापदार्थः । कुत इत्यत आहुः तादृशस्येति ( ततोर्वागिति महर्लोकादर्वाक् भूर्भुवःसुवर्लोकेषु संसृतिः संसरणं तदभावात् । तथा च संसरणमपेक्ष्य महर्लोक एवाध इति भावः । महर्लोकवासिनो भृग्वादयो ज्ञानिनः 'नमस्कृतं ब्रह्मविदामुपैति कल्पायुषो यद्विबुधा रमन्ते' इति द्वितीयस्कन्धात्) अत्र सुबोधिन्यां कल्पायुष इति विबुध-

आनन्दमयः फलम्। तस्य स्वरूपस्यैकत्वाद् धर्मभेदेन शिरःपाण्यादि निरूप्यते। तस्य मुख्यतया प्रीतिविषयत्वं धर्मस्तांच्छरः। मोदप्रमोदावपरिनिष्ठितपरिनिष्ठितावानन्दातिशयौ। आनन्दस्तु स्वरूपम्। साधनरूपत्वाद् ब्रह्म पुच्छमिति। श्लोकौ तु सच्चिदंशबोधकौ केवलानन्दत्वपरिहाराय।

---

भाष्यप्रकाशः।

प्राप्तयोग्यदेहस्य। एतादृशस्य ज्ञानप्राप्त्या मुख्यं फलं भवतीति विवेक्तुमाहुः ततोऽपीत्यादि। साधनरूपत्वादिति ज्ञेयत्वेन साधनशेषतया तथात्वात्। एवं, लोके हीत्यादिना वर्णयतीत्यन्तेनोक्तमर्थं विभज्य पुरुषविधत्वं पक्षिरूपत्वं च समर्थितम्। तेन च मन्त्रे द्वितीयान्तकामपदेनोक्ता एत एव धर्माः। आनन्दमयस्तु विपश्चिद् ब्रह्म। धर्मधर्मिणोः प्रकाशाश्रयवद्भेदेऽप्यभेदादेतादृशमेव व्याख्येयवाक्योक्तं परमिति बोधितम्। तावतापि तस्य विविधज्ञानवत्त्वं लक्षणोक्तसच्चिद्वैशिष्ट्यं च सम्यङ्नावगम्यत इति तदर्थमग्रिमो ग्रन्थो, न तु साधनशेषब्रह्मज्ञानायेत्याहुः श्लोकौ त्वित्यादि। श्लोकात् पूर्वं, तदपीत्यनेनानन्दमयं लक्ष्यीकृत्य, असन्नेवेति श्लोक उक्तः। तेनानन्दमयमेवास्ति ब्रह्मेति वेत्तव्यमित्यायाति। एवमसद्वेतिश्लोके कर्तृत्वसमवायित्वयोर्बोधनाच्चिदंशलाभः। तेन द्वावेतौ विपश्चित्त्वसमर्थनायेति फलति। तथा सति तत्तच्छ्लोकोत्तरं यो ग्रन्थः सोऽपि श्लोकोक्तार्थपोषणायेति

रश्मिः।

विशेषणात् सत्त्वात्मकशरीरेण क्रममुक्तो जीवोपि तत्र कल्पपर्यन्तं तिष्ठतीति महर्लोके एतादृशी संसृतिः तस्य रमन्त इतिपदाच्च संसृतिः। महर्लोकादर्वाक् लोकेषु तु न संसृतिः एतावत्कालमवस्थानाभावात्।

'यदा प्रयास्यन्नृप पारमेष्ठ्यं वैहायसानामुत यद्विहारम्।
अष्टाधिपत्यं गुणसंनिवाये सहैव गच्छेन्मनसेन्द्रियैश्च ॥
योगेश्वराणां गतिमाहुरन्तर्बहिस्त्रिलोक्याः पवनान्तरात्मनाम्।
न कर्मभिस्तां गतिमाप्नुवन्ति विद्यातपोयोगसमाधिभाजाम्॥
वैश्वानरं याति विहायसा गतः सुषुम्णया ब्रह्मपथेन शोचिषा।
विधूतकल्कोथ हरेरुदस्तात् प्रयाति चक्रं नृप शैशुमारम्' ॥

इत्येतेषु तथोपलम्भात्। 'तद्विश्वनाभिं त्वतिवर्त्य विष्णोरणीयसा विरजेनात्मनैकः' इति पूर्वार्धे नमस्कृतमित्यस्यार्थस्तु स्फुट आकरे। श्रद्धेत्यादि एतच्च तृतीयाध्यायेत्रैव स्फुटिष्यति। ततोपीत्यादीति। एकत्वादेकरसत्वेन तथा मोदप्रमोदरूपधर्मभेदेन तस्य प्रियमित्यत्र भावप्रधानो निर्देशस्तदाहुः प्रीतिविषयत्वमिति। प्रीतिविषयस्यात्मत्वम्। शिर इति शिरसा सर्वात्मभावेन ज्ञायते पुरुषोत्तम इति। अपरीति अल्पाक्षरत्वाभावेपि अभ्यर्हितत्वात्पूर्वनिपातः। चराचरेति सूत्रेप्यल्पाच्तरोभ्यर्हित इति पूर्वनिपातः। अतो न विरोधः। आनन्देति अनन्तानन्द इति स्वरूपलक्षणप्रविष्टत्वादिति भावः। अतिशयो भक्तमनोरथोत्तरो ज्ञेयः। वृद्धिह्रासमात्त्वात् आत्मानन्दस्तु सदैकरसः। ज्ञेयत्वेनेति 'ब्रह्मविदाप्नोति परम्' इत्यत्र तथा। पुरुषेति विज्ञानब्रह्मरूपे। भेदेपीति ब्रह्मस्वरूपान्तर्गतेवशब्दार्थः। गीतायामिव प्रसिद्धं विविधेति पक्षयोरिव धर्माणां विविधत्वात्। तदप्येष श्लोको भवतीति श्रुतौ तदित्यव्ययम्, अपि अन्वर्थं इत्याशयेनाहुः श्लोकात्पूर्वमिति। असद्वेति 'असद्वा इदमग्र

अपरौ तु श्लोकौ माहात्म्यज्ञापनाय वाग्गोचरागोचरभेदेन। अवान्तरानन्दास्तु सर्वे तस्मान्न्यूनतया तदुत्कर्षत्वबोधनाय । तस्मात् सर्वत्र प्रपाठके मान्त्रवर्णिकमेव प्रतीयते। अतो मुख्योपपत्तेर्विद्यमानत्वेनानन्दमयः परमात्मैव। चकारो मध्ये प्रयुक्तो विधिमुखविचारेणाधिकरणसंपूर्णत्वबोधकः ॥ १४ ॥

भाष्यप्रकाशः ।

बोधितम् । तेनाथातोऽनुप्रश्ना इत्यादिना ग्रन्थेन साधनस्य विद्वत्त्वस्य फलोपधायकस्वरूपप्रश्नः । सोऽकामयतेत्यारभ्य तत्त्वेव भयं विदुषोऽमन्वानस्येत्यन्तेनोक्तरूपतया सर्वदा विचारयत एव पूर्णं विद्वत्त्वं तदेव फलं नान्यथेति सिद्ध्यति । भीषास्मादित्यादिग्रन्थस्य तात्पर्यमाहुः अपरावित्यादि । भीषास्मादिति श्लोको वाग्गोचरमाहात्म्यबोधनाय । 'यतो वाचः' इति तु वागाद्यगोचरत्वबोधनाय। तथाच सव्याख्यानावेतौ परत्वस्य निगमनायेति सिद्ध्यति । गणितागणितानन्दत्वरूपविशेषावगमं विना ज्ञेयब्रह्मणः सकाशात् परस्य निष्कृष्टुमशक्यत्वादिति । शेषं स्फुटम् । श्रीभागवते दशमस्कन्धे वेदस्तुतौ, 'पुरुषविधोन्वयोऽत्र चरमोऽन्नमयादिषु यः' इत्यनेनायमर्थ उपबृंहितः । अन्नमयादिषु चरम आनन्दमयो भगवानिति । तथा सति तेन पुरुषाकारे समर्पिते सर्वस्य पुरुषाकारता सिद्ध्यति।

रश्मिः ।

आसीत्ततो वै सदजायत' 'तदात्मानꣳस्वयमकुरुत' 'तस्मात्तत्सुकृतमुच्यत' इति श्लोकपूर्वार्धेन कर्तृत्वस्योत्तरार्धेन समवायित्वस्येत्यर्थः । श्लोकद्वयोत्तरग्रन्थतात्पर्यमाहुः तेनाथेत्यादि । भीषेति

भीषास्माद्वातः पवते भीषोदेति सूर्यः ।
भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः ॥

इतिश्लोक इत्यर्थः । अत्रापि तदुत्तरग्रन्थस्तत्पोषायेत्याहुः तथा चेति । सव्याख्यानाविति 'सैषानन्दस्य मीमांसा भवति' 'एतं ह वाव न तपति' इतिव्याख्या तत्सहितावित्यर्थः । आनन्दमीमांसायाः कथं व्याख्यानत्वं तत्राहुः गणितेति । इतीति । तथा च मृत्युनियामकत्वेन लिङ्गेन व्याख्येये परं निष्कृष्टं तदत्रापि तथेति तथेत्यर्थः । द्वितीयश्लोकस्य विद्वानित्यन्तोंशः स य एवं विद्वानित्यन्तेन व्याख्यातः । अपरांशस्तु 'एते आत्मानꣳस्पृणुते उभे ह्येवैष एते आत्मानꣳस्पृणुते य एवं वेद' इत्यनेनेत्यपि बोध्यम् । यद्वा 'एतꣳह वाव न तपति' इत्यादिकं ब्रह्मविन्माहात्म्यबोधनद्वारा विद्यादिमाहात्म्यबोधकमिति तथा । शेषमित्यादि मान्त्रवर्णिकमेवेत्येवकारेण मन्त्रवर्णातिरिक्तोपनिषद्व्यवच्छेदेनुक्तत्वेनातिरिक्तोपनिषत् संग्रहान्नेतर इत्यादिवक्ष्यमाणसूत्रैर्विधिरूपोपायविचारेणाधिकरणसंपूर्णत्वस्यानुक्तत्वेन संग्रहादनुक्तसमुच्चायकश्चो विधिमुखविचारेणाधिकरणसंपूर्णत्वबोधक इत्यर्थः । यतो मध्ये सूत्रमध्ये प्रयुक्तो यद्यन्ते प्रयुक्तः स्यादानन्दमयो मान्त्रवर्णिकमेव गम्यते चेति क्रियान्तरसमुच्चायकः स्यादित्येवं स्फुटमित्यर्थः । परं च अनुक्तस्याधिकरणसंपूर्णत्वस्य चकारो बोधकः एतादृशस्थलेनुक्तोर्थोध्याहर्तव्यः । इत्येवंबोधकश्चकारप्रयोगः । समुच्चयस्य तु वाचकः समासस्थले समासः समुच्चयस्य वाचकः वर्तिपदानि वा स्वार्थैः साकं समुच्चयस्य वाचकानि समासो नेति वा काकेभ्यो दधि रक्ष्यतामितिवत् । नन्वन्नादिरसा राशिभूता भवेयुः भस्मराशिवत् । पक्षिणो हंसस्यावरकास्तदा तु पुरुषाकारता न स्यात् । तथालिङ्गावृतजीवावरकास्तदाप्यङ्गुष्ठाधिकपुरुषाकारता न स्यादित्यत आहुः श्रीभागवत इत्यादि । तदन्तरेत्यादि

१. नूतनतया ।
४१ भ० सू० १०

भाष्यप्रकाशः ।

ये तु प्रसिद्धमन्नमयस्य पुरुषविधत्वं स्वीकृत्य तस्य पुरुषविधत्वमनु प्राणमयाद्यानन्दमयान्तानां पुरुषविधत्वं मूषानिषिक्तप्रतिमान्यायेनाहुस्तैः स्वोक्तदृष्टान्तप्रकार एव न बुध्यते । मूषानिषिक्तप्रतिमायास्तदन्तराकारानुविधायित्वात् । तस्य च मधूत्थनिर्मितप्रतिमया समर्पणादत्रापि तेन न्यायेन बाह्याकारानुरोधस्याशक्यवचनत्वात् । तेनैष पूर्ण इत्यत्र तच्छब्देन प्रकृतम्, एतच्छब्देन पूर्वोक्तं च परामृश्य मध्ये, स वा एष इति तदेतच्छब्दाभ्यां च प्रकृतं परामृश्य तस्य पुरुषविधतामित्यत्र पूर्वपरामर्शनम् । ततस्तस्य प्राण एव शिर इत्याद्यवयवकल्पनावाक्ये पुनः प्रकृतपरामर्श इत्येवं व्याख्याने प्रक्रान्तत्यागप्रसङ्गाच्च । तस्मान्नैते कोशाः, किंतु पञ्चापि फलरूपा व्यापका भिन्ना एव । एतल्लोकत्यागोक्तिपूर्वकं तत्तत्प्राप्तिश्रावणात् । तथा श्रुत्यन्तरे 'अन्नात् प्राणा भवन्ति भूतानां प्राणैर्मनो मनसश्च विज्ञानं विज्ञानादानन्दो ब्रह्मयोनिः स वा एष पुरुषः पञ्चधा पञ्चात्मा येन सर्वमिदं प्रोतं पृथिवी चान्तरिक्षं च द्यौश्च दिशश्चावान्तरदिशश्च स वै सर्वमिदं जगत् स स भूतꣳ स भव्यम्' इत्यादिना अनादिपञ्चविधस्योक्तरीत्या पञ्चात्मकस्य पुरुषस्य सर्वव्याप्तिसर्वात्मकत्वबोधनपूर्वकं, 'ज्ञात्वा तमेवं मनसा हृदा च भूयो न मृत्युमुपयाति विद्वान्' इत्यनेन तद्विदो मुक्तिश्रावणाच्च । कोशास्तु 'अन्नमयप्राणमयमनोमयविज्ञानमयमानन्दमयमात्मा मे शुध्यन्ताम्' इति श्रुत्यन्तरे शोध्यत्वलिङ्गाः प्रतिशरीरं भिन्ना एव । म इति स्वस्वजीवीयत्वरूपभेदलिङ्गात् । अतस्तत्क्रमेणात्र तदङ्गीकरणमपि प्रकृतविरुद्धमेवेति । ननु शोध्यत्वलिङ्गिकायां श्रुतौ सिद्धवन्निर्देशादत्र चाकारसमर्पणलिङ्गात् कोशत्वं चतुर्णां सिद्ध्यति । मतान्तरे तु तत् सृष्ट्वा तदेवानुप्राविशदित्यनुप्रवेशस्याग्रे श्रावणादनुप्रवेशस्य च श्रुत्यन्तरे, अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति जीवकरणकत्वबोधनादत्र शारीरपदाच्च पञ्चानां कोशत्वम् । द्वितीयवर्णकरीत्या विचारे त्वग्रे अस्माल्लोकात् प्रेत्येत्यादिना इत उत्क्रमणपूर्वकमन्नमयाद्युपसंक्रमणश्रावणादेतेषामेव प्राप्यतया फलरूपत्वं सिद्ध्यति । तत्र सिद्धान्ते चतुर्णां विभूतित्वं, पञ्चमस्य परपुरुषरूपत्वात् परमफलत्वम् । पूर्वपक्षे तु पञ्चानामपि विभूतिरूपत्वमिति विशेषः ।

तथापि श्रुतिसमर्थनं तु सर्वत्र तुल्यमतः कुत उत्क्रमणं कस्य प्राप्तिरित्येतत् सर्वमतेऽपि विचारणीयमेवेति चेत् । अत्रेदं प्रतिभाति । तथाहि । ब्रह्मविदाप्नोति परमिति

रश्मिः ।

मूषान्तराकारानुविधायित्वादित्यर्थः । मधूत्थेत्यादि मूषान्तर्गतयेत्यर्थः । तेनैषेत्यादि तेन प्राणमयेनैषोऽन्नमयः पूर्ण इत्यर्थः । मधूत्थत्वेन मूषा पूर्णा यथा । प्रकृतमिति प्राणमयम् । पूर्वोक्तमिति अन्नमयम् । पूर्वपरेत्यादि अन्नमयेत्यर्थः । प्रकृतपरेति प्राणमयपरामर्शः । प्रक्रान्तेत्यादि अन्नमयः प्रक्रान्तस्तत्त्यागप्रसङ्गादित्यर्थः । हृदेति सर्वव्याप्तीत्यादिविषयकबोधनस्योक्तत्वात् मनो बुद्धिः हृन्मनः अज्विकृतिः । यद्वा हृदेर्डेराच् । तत्क्रमेणेति कोशत्वक्रमेण । अत्र विभूतिष्वन्नमयादिषु । तदङ्गीकरणं कोशत्वाङ्गीकरणमपि प्रकृते नैतल्लोकत्यागेन विरुद्धम् । मतान्तर इति उक्तमतान्यमते । पूर्वपक्ष इति द्वितीयपूर्वपक्षे शब्दो योगरूढस्तथायं सिद्धान्तस्य पूर्वस्मिन् पक्ष इत्यर्थः ।

भाष्यप्रकाशः ।

प्रतिज्ञानात् तत आन्तं तद्विवरणे फलत्वस्यैवोपपादनादिदं फलप्रकरणमेवेति निश्चीयते । एवं सत्यनुप्रवेशश्रुतिः प्रकरणेन संदष्टा परस्य फलरूपस्यैव सर्वत्रानुप्रवेशं समर्पयति । न त्वप्रकरणिनो जीवस्य । नच लिङ्गाद् बाधः । तदनुप्रविश्य सच्च त्यच्चाभवदित्यादिना सत्यमित्याचक्षते इत्यन्तेन वाक्येनानुप्रविष्टसर्वात्मकतायाः सर्वस्य सत्यतायाश्च श्रावणादनुप्रवेशस्य नामरूपव्याकरणार्थताया अश्रावणाच्चास्यानुप्रवेशस्य तस्मादनुप्रवेशाद् भिन्नत्वेनास्य जीवलिङ्गत्वाभावात् । अन्यथा वाक्यपीडापत्तेः । अग्रे च, यदेष आकाश आनन्दो न स्यादित्यनेनानन्दस्यैवान्तराकाशवर्तित्वश्रावणेन प्रकरणस्यैव पोषाच्च । अत आकारसमर्पणस्याप्युक्तरीत्या ब्रह्मकोशत्वसाधकतया मैत्रायणीयश्रुतौ, विश्वभृद्वै नामैषा तनूर्भगवतो विष्णोर्यदिदमन्नं प्राणो वा अन्नस्य रसो मनः प्राणस्य विज्ञानं मनस आनन्दं विज्ञानस्येति भगवत्तनुत्वश्रावणेन, अन्नात् प्राणा भवन्ति भूतानामिति पूर्वोक्ततैत्तिरीयश्रुतौ व्यापकत्वादिब्रह्मलिङ्गश्रावणेन चैतेषां जीवकोशरूपत्वे दूरनिरस्ते, एते विभूतिरूपाः प्राप्या एवेति सिद्धम् । जीवकोशास्त्वेतद्व्यष्टिरूपा इति तावत् प्रेत्यपदोक्तोत्क्रमणलिङ्गादत्र बोधिताः कल्प्यन्ते । तेन श्रुत्यन्तरीयः सिद्धवन्निर्देशोऽप्युपपन्न एव । एवमेतेषां विभूतित्वे जीवकोशाद् भेदे च निश्चिते पूर्वोक्ताभ्यासादिभिरानन्दमयस्य ततोऽपि निष्कर्षात् परमफलत्वं सुसिद्धमिति ब्रह्मवज्जीवः पूर्वोक्तविभूतिव्यष्टिरूपेभ्यः स्वकोशेभ्य उत्क्रम्य माध्वर्णिकसूत्रभाष्योक्तरीत्या क्रमेण समष्टिभूतान्नमयाद्यानन्दमयान्तानि विभूतिरूपाणि प्राप्यानन्दमयो भूत्वा, एतमानन्दमयं परं ब्रह्म प्राप्नोति । 'आनन्दमानन्दमयोऽवसाने' इति द्वितीयस्कन्धवाक्यात् । यद्यप्यत्रानन्दमयो मध्ये नोक्तस्तथापि, 'तडितोऽधिवरुणः संबन्धात्' इतिन्यायेन श्रुत्यन्तरसिद्धत्वान्निवेशनीय इति नात्र विवादलेशः । एवमत्र त्याज्येभ्योऽन्नमयादिकोशेभ्य उत्क्रमणं तत उक्तरीत्या विभूतिरूपाणां तेषामानन्दमयस्य परस्य च क्रमेण प्राप्तिरिति वर्णकद्वयोक्तमुपपन्नतरमित्यवधेहि ।

ननु भवत्वेवं ज्ञानमार्गीयाणां प्राप्तिः, परंतु भक्तिमार्गीयाणां प्राप्तिः कथं व्युत्पाद्या । प्राप्तिर्हि पूर्वमसंबद्धस्य पाश्चात्यसंबन्धरूपा । अत्र चाकारसमर्पकत्वेनानन्दमयस्य लौकिकेऽपि

रश्मिः ।

बाध इति प्रकरणस्य बाधः । अन्यथेति एतद्भाष्यानुरोधेनोपाधित्यागेन च वाक्ये जीवेनात्मनेत्यत्र पीडा भागत्यागलक्षणापत्तेः । अन्तरिति आनन्दोस्यास्तीत्यानन्दः आकाश इति व्युत्पत्तेस्तथा । व्यापकत्वादिति विष्णोर्व्यापकस्य तनुरपि तथा । आदिना प्राणादिकर्तृत्वम् । प्राप्या एवेति एवकारः पूर्वोक्तमतान्तरपूर्वपक्षयोगव्यवच्छेदकः । तेनेति व्यष्टिसमष्टिभेदात् कोशत्वं तेन विभूतीनामप्यविरुद्धत्वम् । श्रुत्यन्तरीय इति शोध्यत्वलिङ्गेन जीवीयकोशबोधकश्रुत्यन्तरमन्नमयं प्राणमयं मनोमयं विज्ञानमयमानन्दमयमात्मा मे शुद्ध्यन्तामिति तत्संबन्धी श्रुत्यन्तरीयः । उपपन्न इति कारणसत्त्वादुपपन्नः । अनुपपन्नत्वं त्वीश्वरे जीवतुल्यतापत्त्या कोशाकल्पनात् । अन्यथा कोशा न स्युरित्येवकारः । ततोपीति विभूतिभ्योपि फलत्वेन निष्कर्षादित्यर्थः । प्राप्येति तेन सेवाफलीयमलौकिकसामर्थ्यफलं स्फुटीकृतम् । आनन्दमयो भूत्वेत्यर्थे प्रमाणमाहुः यद्यपीत्यादि । तडित इत्यादि अयं न्यायः फलाध्यायस्य तृतीयेस्ति पादे । ज्ञानमार्गीयाणामिति ब्रह्मविदिति व्याख्येयश्रुतेरित्यर्थः । व्युत्पा-

निषेधमुखेन चतुःसूत्र्येदमेवाधिकरणं पुनर्विचार्यते सुदृढत्वाय । इदमत्राकूतम् । जीव एवानन्दमयो भवतु । फलस्य पुरुषार्थत्वात् । स ब्रह्मविदानन्दमयो भवतीति स्वर्गादिसुखवदलौकिकमेव रूपमानन्दमयं जीवस्य फलभूतमिति प्राप्तेऽभिधीयते ।

भाष्यप्रकाशः ।

शरीरे· स्थितेः पूर्वं सिद्धत्वेन विभूतिरूपाणां चाकाशवद् व्यापकतया स्थितेरर्थात् सिद्धत्वेन भक्तशरीरेष्वपि सत्तया पक्षिरूपेण तेषु भक्तशरीरेषु प्रवेशनिर्वचनाशक्तौ फलप्राप्तेर्व्युत्पादयितुमशक्यत्वादिति चेत् । अत्रोच्यते । अनुप्रवेशश्रुत्या, आविशदिति श्रुत्या च पुरेषु भगवत्प्रवेशो निर्विवादः । पक्षिलिङ्गेनान्येषामपि गतिप्रतिबन्धकीभूतव्यापकत्वोल्लङ्घनात् स निर्विवादः । या पुनः सार्वदिकी स्थितिः सा तु तावन्मात्रकार्यार्थत्वादेतत्फलानुभावने प्रयोजिका न भवत्येव । यथा काष्ठादिषु वह्निस्थितिर्दाहादौ । एवं सति बहिष्ठो भक्त्या यदान्तः प्रविशति, हृद्येव वा मायामपसार्य प्रादुर्भवति तदा अक्षरात्मकानि विभूतिरूपाण्यपि भगवता सह विशन्त्याविर्भवन्ति वा । अक्षरस्य चरणाद्यात्मकत्वेन तेषामपि तत्त्वात् । इयं तु लौकिकशरीरव्यवस्था । यदा त्वेतत्त्यागेनालौकिकशरीरे प्राप्तिस्तदा तु तत्र वर्तमानत्वात् तेषां कार्यकारित्वमेवेति विशेषः । एवं चाधिभौतिकरूपेण व्याप्तानि तिष्ठन्त्याध्यात्मिकेन प्रविशन्त्याधिदैविकेन कार्यं कुर्वन्ति । आधिभौतिकत्वं च लौकिके नियतम् । आधिदैविकत्वं भगवति नियतं पर्यवसन्नम् । अवान्तरेषु सर्वेषु त्वाधिदैविकादित्रयमपि यथासंभवं सव्यपेक्षमिति, न क्वापि प्राप्तिव्युत्पत्तिप्रतिबन्ध इति जानीहीति दिक् ॥ १४ ॥

प्रकृतमनुसरामः । अग्रिमसूत्रमवतारयितुं तत्र प्रयोजनमाहुः निषेधेत्यादि । ननु को वा संदेहो येन निषेधमुखविचारावश्यकतेत्यत आहुः इदमित्यादि । यद्यप्यानन्दमयस्य फलत्वं, सर्वापेक्षयोत्कर्षश्च प्रतिपादितस्तथापि फलस्य पुरुषार्थत्वेन पुरुषशेषत्वात्, तस्यैव एव शारीर आत्मेत्यानन्दमयेऽपि श्रावणाज्जीव एवानन्दमयो भवतु । नच मन्त्रवर्णविरोधः । स ब्रह्मवित् सर्वान् कामान् अश्नुते, विपश्चिता ब्रह्मणा सह भूत आनन्दमयो भवतीत्यर्थोक्तौ तदभावात् । तेन यथा स्वर्गसुखमस्य फलभूतं तथा अखण्डैकरसं मुक्तावस्थालौकिकरूपमपीत्यर्थः । सूत्रं पठित्वा व्याचक्षते ।

रश्मिः ।

चेति अत्र विशेषः फलाध्यायद्वितीयचरणे द्रष्टव्यः । फलप्राप्तेरिति विरहानुभवरूपफलप्राप्तेरित्यर्थः । आधिभौतिकादिभेदेन समादधते अत्रोच्यत इत्यादि । गतीति गतिप्रतिबन्धकीभूतं व्यापकत्वं तस्योल्लङ्घनादित्यर्थः । तावन्मात्रेति द्वा सुपर्णेति श्रुत्युक्तमात्रकार्यार्थत्वादित्यर्थः । एतत्फलेत्यादि विरहफलानुभावने । तदनुप्रविश्य सच्च त्यच्चाभवत् इति फलानुभावनेन । वह्निस्थितिरिति अन्तर्वह्निस्थितिरित्यर्थः । दाहादाविति प्रयोजिका न भवतीति पूर्वेणान्वयः । आधीति नन्वाध्यात्मिकत्वं कुतो नोक्तमिति चेन्न प्रवेशे आधिदैविकजन्ये आधिभौतिकाधिदैविकसंबन्धादाध्यात्मिकत्वमुभयनिष्ठमिति ॥ १४ ॥

१. रूपमिति ।

## नेतरोऽनुपपत्तेः ॥ १५ ॥

इतरो जीवो न । आनन्दमयो न भवति । कुतः । अनुपपत्तेः । जीवस्य फलरूपत्वमात्रेणानन्दमयत्वं नोपपद्यते । तथा सति तस्य स्वातन्त्र्येण जगत्कर्तृत्वेऽप्यलौकिकमाहात्म्यवत्त्वेन निरूपणं नोपपद्यते । अतो न जीव आनन्दमयः ॥ १५ ॥

## भेदव्यपदेशाच्च ॥ १६ ॥

इतोऽपि न जीव आनन्दमयः । यतो भेदेन व्यपदिश्यते । 'रसꣳ ह्येवायं लब्ध्वानन्दी भवति' इति । आनन्दोऽस्यास्तीत्यानन्दी । एष ह्येवानन्दयातीति ।

भाष्यप्रकाशः ।

नेतरोऽनुपपत्तेः ॥ १५ ॥ इत्यादि । तथा सतीति जीवस्यानन्दमयत्वे सति । निरूपणमिति ब्रह्मणो निरूपणम् । तथाच, 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्यादिनोक्तं माहात्म्यं जीवेऽपि गच्छेदेतां श्रुतिं विरुन्ध्यादिति माहात्म्यश्रुत्यनुपपत्तेस्तथेत्यर्थः । नचात्रैव जीवस्य निरङ्कुशजगत्कर्तृत्ववारणे कृते फलाध्यायस्थस्य वक्ष्यमाणस्य जगद्व्यापारवर्जसूत्रस्य वैयर्थ्यापत्तिरिति शङ्क्यम् । तत्रैतादृशजगद्व्यापाररहित्यस्याविवक्षितत्वेनावैयर्थ्यात् ॥१५॥

भेदव्यपदेशाच्च ॥ १६ ॥ 'रसꣳ ह्येवायं लब्ध्वानन्दी भवति' इत्यत्रानन्दीति लब्धृलब्धव्यभेदव्यपदेशो न जीवभेदगमकः । 'आत्मलाभान्न परं विद्यते' इत्यत्र स्वरूपैक्येऽपि लब्धृलब्धव्यभेदव्यपदेशदर्शनेन तस्यानियामकत्वादिति परे मन्यन्ते । तन्निवारणायाहुः एष ह्येवेत्यादि । तथाचानया श्रुत्याऽऽनन्दनीयानन्दकत्वेन भेदनिर्देशाज्जीवब्रह्मभेदे सिद्धे

रश्मिः ।

नेतरोऽनुपपत्तेः ॥ १५ ॥ प्रयोजनमिति सुदृढत्वं भाष्योक्तं प्रयोजनम् । निषेधेत्यादि जीवजडनिषेधोपायविचारावश्यकतेत्यर्थः । तस्येत्यादि । सिद्धान्ते तु तस्येत्यभेदे षष्ठी भवति । भवत्विति आनन्दमयत्वरूपफलस्योक्तश्रुत्या पुरुषार्थत्वावसायात् । अभीष्टे लोट् । स ब्रह्मेत्यादि भाष्यमवतारयन्ति न चेति । अत्रैवं जीवस्येति अत्र भक्तदेहे एव जीवस्य ॥ १५ ॥

भेदव्यपदेशाच्च ॥ १६ ॥ तस्येति जीवस्यानन्दप्रचुरत्वनियामकत्वादित्यर्थः । पर इति शंकराचार्याः औपाधिकभेदं जीवानन्दमययोर्मन्यन्ते अतो जीवो नानन्दमय इति । जीवब्रह्मभेद इत्यादि ब्रह्मचिक्रीडिषया भेदे सिद्धे 'आसीज्ज्ञानमथो ह्यर्थः' इतिवाक्यात् भिदां 'मायामात्रमनूद्यान्ते प्रतिषिद्ध्य प्रसीदति' इति भगवद्वाक्याच्च । चिक्रीडिषया भेदे सिद्धे इन्द्रियैर्मायापदवाच्याभिः स गृह्यत इत्येकवाक्यता भेदोक्त्यद्वैतयोः । यद्वा ।

'आत्ममायामृते राजन् परस्यानुभवात्मनः ।
न घटेतार्थसंबन्धः स्वप्नद्रष्टुरिवाञ्जसा' ॥

इति वाक्यान्मायासत्त्वकृतो भेदो वर्तते इत्यदोषः । विकल्प एव वा 'एकोहं बहु स्याम् प्रजायेय' इतिश्रुत्या साकं भगवद्वाक्यस्य । श्रुत्योर्विरोधे विकल्प इत्येवं मनुस्मरणात् । इदानीं कथं तर्हि 'आत्मान्वेष्टव्यः' 'आत्मलाभान्न परं विद्यते' 'आत्मन्येवात्मना तुष्टः' इति श्रुतिस्मृतयो भवन्ति । यावता न लब्धैव लब्धव्यो भवतीत्युक्तमित्याशङ्क्य तथाप्यात्मनोऽप्रच्युतात्मभावस्यैव सतस्तत्त्वानवबोधनिमित्तो देहादिष्वनात्मस्वात्मत्वनिश्चयो लौकिको दृष्टः तेन देहादिभूतस्यात्मनोप्यात्मानन्विष्टो अन्वेष्टव्योऽलब्धो लब्धव्योऽश्रुतः श्रोतव्योऽमतो मन्तव्यो विज्ञातव्यः इत्यादिभेदव्यपदेश उपपद्यत

आनन्दयतीत्यर्थः । चकारात् सूत्रद्वयेन जीवो नानन्दमय इति निरूपितम् ॥ १६ ॥

तर्हि जडो भवत्वानन्दमयः । न । आन्तरत्वान्न कार्यरूपो भवति । किं तु कारणरूपः । स स्वमते नास्त्येव । मतान्तरे तु प्रकृतिर्भवेत् । तन्निवारयति ।

## कामाच्च नानुमानापेक्षा ॥ १७ ॥

जडा प्रकृतिर्नास्तीति कारणत्वेन निराकृतैव । अथैतद्वाक्यान्यथानुपपत्त्या सत्त्वपरिणामरूपा कल्प्यते । सा कल्पना नोपपद्यते । कुतः । कामात् । आनन्दमयनिरूपणानन्तरं, 'सोऽकामयत' इति श्रूयते । स कामश्चेतनधर्मः । अतश्चेतन एवानन्दमय इति । चकारात्, 'स तपोऽतप्यत' इत्यादि । अतोऽनुमानपर्यन्तमर्थमबोधयद् वाक्यं न तिष्ठतीत्यर्थः ॥ १७ ॥

---

भाष्यप्रकाशः ।

आनन्दीति निर्देशस्यापि भेदोपोद्बलकत्वे बाधकाभावात् । आत्मलाभश्रुतावपि न जीवलाभस्तात्पर्यविषयः, किंतु परमात्मलाभ एव । तत्र भूम्न एवात्मतया सनत्कुमारेण नारदं प्रति छान्दोग्ये व्याख्यातत्वात् । अतो जीवब्रह्मैक्यस्य तद्रीत्या अभ्युपगमैकशरणत्वमिति दृष्टान्तोऽप्यसंगत एवेत्यर्थः । नानन्दमय इति कस्यामप्यवस्थायां तथा ॥ १६ ॥

कामाच्च नानुमानापेक्षा ॥ १७ ॥ कामाच्चेति सूत्रद्वयमवतारयन्ति तर्हि जड इत्यादि । नेति । एतदेव विभजन्ते आन्तरत्वादित्यादि । मतान्तर इति सांख्यमते । जडेत्यादि 'प्रधानक्षेत्रज्ञपतिर्गुणेशः' इत्यादौ प्रधानादिशब्दैः श्रुतावुक्तापि यादृशी सांख्यैर्जडा मूलकारणभूताङ्गीक्रियते तादृशी श्रुतौ नास्तीतीक्षतिसूत्रे कारणत्वेन निराकृतैव । अथ तस्य प्रियमेवेत्यवयवकल्पना वाक्यान्यथानुपपत्त्या आत्मपदार्थं गौणमङ्गीकृत्य आनन्दस्य सुखात्मकत्वेन सत्त्वधर्मत्वाद् सत्त्वपरिणामरूपा कार्यभूता कल्प्येत, सा तथेत्यर्थः । अनुमानपर्य-

रश्मिः ।

इत्यादि भाष्यं निरसन्ति आत्मलाभेत्यादिना । दृष्टान्तासंगतिमाहुः अत इत्यादि । दृष्टान्त इति यथा मायाविनश्चर्मखड्गधरा उत्सूत्रेणाकाशमधिरोहन्तः स एव मायावी परमार्थरूपो भूमिष्ठोन्यः । यथा वा घटाकाशादुपाधिपरिच्छिन्नादनुपाधिपरिच्छिन्न आकाशोन्यः इतिभाष्योक्तदृष्टान्त इत्यर्थः । तथेति चकाराद्धेतुसमुच्चयार्थादनुपपत्तेर्भेदव्यपदेशाच्च नेतर आनन्दमयः इत्यन्वयात्सूत्रद्वयेन जीवो नानन्दमय इत्यर्थः ॥ १६ ॥

कामाच्च नानुमानापेक्षा ॥ १७ ॥ प्रधानेत्यादिश्रुतिस्तु श्वेताश्वतरेस्ति । अत्र प्रधानादिशब्दैरिति बहुवचनेन ज्ञायते प्रधानपदेभ्यः सुपां सुलुक् इत्यनेन सूत्रेण लुगिति । ईक्षतिसूत्र इति ईक्षत्यधिकरणस्य 'गौणश्चेन्नात्मशब्दात्' इति सूत्र इत्यर्थः । ईक्षत्यधिकरणस्य नामैकदेशग्रहणमीक्षत्यधिकरणस्य सूत्रे । अथवा स्यादेतदित्यारभ्य युक्त इत्यन्तः संदर्भः ईक्षतिसूत्रस्यैव । ततश्चेत्यारभ्य गौणश्चेत्यादिसूत्राभास इतीक्षतिसूत्र एव निराकृता । उपलक्षणमेतत् । व्यासचरणैर्द्वितीयाध्याये रचनाधिकरणे निराकृतैवेति

**अस्मिन्नस्य च तद्योगं शास्ति ॥ १८ ॥**

**इतश्च न जड आनन्दमयः । अस्मिन्नानन्दमये अस्य जीवस्य च 'आनन्दमयमात्मानमुपसंक्रामति' इति तेन रूपेण योगं शास्ति । फलत्वेन कथयतीति । न हि जीवस्य जडापत्तिर्युक्ता । 'ब्रह्मैव सन् ब्रह्माप्येति' इतिवदस्याप्यर्थः । तस्मान्नायं जीवो, नापि जडः । पारिशेष्याद् ब्रह्मैवेति सिद्धम् ।**

---

भाष्यप्रकाशः ।

न्तमित्यादि । वाक्यश्रवणोत्तरम्, आनन्दमयपदोक्तोऽर्थः सत्त्वपरिणाम आनन्दविकारत्वाल्लौकिकसुखवदित्येवं यावदनुमीयते तावत् ततः पूर्वमेव कामवाक्यश्रवणात् तत्प्रतिहन्यतेऽतस्तथेत्यर्थः ॥ १७ ॥

**अस्मिन्नस्य च तद्योगं शास्ति ॥ १८ ॥** इतिवदस्याप्यर्थ इति 'आनन्दमानन्दमयोऽवसाने' इति श्रीभागवतीयवाक्यादानन्दमय एव सन्नानन्दमयमात्मानमुपसंक्रामतीत्यर्थो ज्ञेय इत्यर्थः ।

एवमधिकरणव्याख्यानं समाप्य विकारशब्दसूत्रे विशेषेणाऽदूषणादधुना परमतं दूष-

रश्मिः ।

व्याख्यानस्य । वाक्येति एतद्वाक्यं 'को ह्येवान्यात्कः' इत्यादि तच्छ्रवणोत्तरमित्यर्थः । प्रतिहन्यत इति प्रतिपक्षेण हन्यते नाश्यते । प्रतिपक्षस्तु आनन्दमयपदोक्तार्थः न सत्त्वपरिणामः कामात् यन्नैवं तन्नैवं यथा प्रकृतिः । अतस्तथेत्यर्थ इति अतः कारणादनुमानमनुमिती रचनानुपपत्त्यधिकरणे तथा व्याख्यानात्तत्पर्यन्तमपेक्षेति मध्यमपदलोपी समासः । अपेत्यनर्थकम् । ईक्षा दर्शनम् । ईक्ष दर्शन इति धातुपाठात् । एतादृशीमीक्षामवबोधं कारयत्तिष्ठतीत्यर्थे शैषिकोण् । शेष इति सूत्रेण प्रत्ययः । नेति सूत्रे वर्तत एव । वाक्यं प्रयोजककर्तृ ण्यर्थाध्याहारात् । अत उक्तमतः कामात्तथेत्यर्थ इति । तथाचायं सूत्रार्थः । अनुमानापेक्षा न कामात् कामवाक्यादिति अत्रापेक्षाशब्दाधिक्यमनुमानं न कामादित्येतावता चारितार्थ्यात् । एवं सत्यानन्दमयपक्षे हेतोः साध्यासामानाधिकरण्यादसाधारणत्वम् । दत्तेत्यपेक्षाशब्दे आनन्दमयपक्षे जडत्वापेक्षारूपप्रतियोग्यभावात् तत्प्रतियोगिकाभावरूपसाधनाभावात् न पक्षे हेतोः साध्यासामानाधिकरण्यं पक्षे हेतोः साध्यासामानाधिकरण्यं त्वेवं ज्ञेयम् । स्वाद्यनुमानपर्यन्तमर्थमवबोधयद्वाक्यं तिष्ठेत्तदा हेतोः साध्यसामानाधिकरण्यम् । वाक्यावस्थानं तु तद्घटकपदानां त्रिक्षणावस्थायित्वेन प्रथमक्षणे सकारोत्पत्तिः द्वितीयक्षणे स्थितिस्तृतीयक्षणे नाशः ओकारप्रागभावश्च चतुर्थक्षणे ओकारोत्पत्तिः पञ्चमक्षणे स्थितिः षष्ठक्षणे ओकारनाशः । ककारप्रागभावश्च इत्येवम् । ततः कामवाक्यनष्टत्वेनानवस्थानात्पक्षेनुमानपर्यन्तमवबोधनमेवं सोकामयदित्यत्र 'ॐ तत्सदिति निर्देशो ब्रह्मणः' इति गीतावाक्यात्तच्छब्दस्य शुद्धब्रह्मवाचकत्वेपि कामयतेतिपदसमभिव्याहारात् सृष्टिविषयिणीच्छारजउपाधिविशिष्ट इति विशिष्टे लक्षणेति रजोनुमानमत्र । साध्यतावच्छेदकसंबन्धो विशेष्यविशेषणभावः हेतुतावच्छेदकसंबन्धः स्वनिष्ठप्रतिपादकतानिरूपितप्रतिपाद्यताख्यः शब्दार्थसंबन्धस्य नित्यत्वेन संबन्धस्य द्विनिष्ठत्वम् । भाष्ये । तिष्ठतीति 'पदद्वयं सुप्तिङन्तं ताभ्यां चलति वाक्पतिः' इति वाक्यात्तिष्ठतीत्यर्थः ॥ १७ ॥

**अस्मिन्नस्य च तद्योगं शास्ति ॥ १८ ॥** भाष्ये । जीवस्य चेति इदमा प्रत्यक्षी-

ये पुनरधिकरणभङ्गं कुर्वन्ति, तेषामज्ञानमेव । यतस्तैरप्यानन्दमयः कः पदार्थ इति वक्तव्यम् ।

भाष्यप्रकाशः ।

यन्ति श्लोकसमर्थनाय ये पुनरित्यादि । ये शांकरा एकवारं सर्वसंमतप्राचीनरीत्या व्याख्याय, पुनरिदं त्विह वक्तव्यमित्यादिना प्रायपाठविरोधमाकस्मिकत्वमेकस्यैवावयवित्वावयवत्वाभ्यामसामञ्जस्यम्, असन्नेवेत्यादिश्लोकद्वयविरोधमानन्दप्राचुर्येऽपि दुःखसाहचर्यमब्रह्मत्वापत्तिमानन्त्यैकत्वविरोधमानन्दमयपदानभ्यासं च प्रदर्श्यानन्दमयपदस्य ब्रह्मपरत्वानादरेण व्यासोक्तस्याधिकरणस्य भङ्गं कुर्वन्ति तेषां श्रुत्यर्थाज्ञानमेव । यतस्तैरप्यानन्दमयपदार्थः क इति प्रश्ने तस्योत्तरं वक्तव्यम् । तस्यानुक्तत्वात् तथेत्यर्थः । न चानन्दमयपदस्य ब्रह्मपरतायां दूषितायां जीवो वा जडो वा पारिशेष्यादानन्दमयः सेत्स्यतीति कथमनुक्तत्वमिति वाच्यम् । दूषणानामसंगतत्वात् । तथाहि । अस्यामुपनिषद्यारम्भे एव 'ब्रह्मविदाप्नोति परम्' इति ब्राह्मणोक्तोऽर्थः सत्यं ज्ञानेत्यस्यामृचि संक्षेपेणोक्तः । स एव संपूर्णे प्रपाठके विस्ता-

रश्मिः ।

कृतस्यानन्दमयस्य चकारेण जीवस्य चेत्यर्थः । प्रकृते । व्याख्यायेति आनन्दमयः परमात्मेति स्थितमिति व्याख्यायेत्यर्थः । प्रायपाठेत्यादि 'स वा एष पुरुषोऽन्नरसमयः तस्माद्वा एतस्मादन्नरसमयादन्योऽन्तर आत्मा प्राणमयस्तस्मादन्योन्तर आत्मा मनोमयस्तस्मादन्योन्तर आत्मा विज्ञानमयः' इति च विकारार्थे प्रवाहे सत्यानन्दमय एवाकस्मादर्धजरतीयन्यायेन कथमिव मयटः प्राचुर्यार्थत्वं ब्रह्मविषयत्वं वाश्रीयते इति भाष्येण प्रायपाठविरोधमाकस्मिकत्वं च आनन्दमयस्य ब्रह्मत्वे दूषणम् । एकस्येत्यादि । तथा सति तदेव ब्रह्मानन्दमय आत्मावयवी तदेव च ब्रह्म पुच्छं प्रतिष्ठावयव इत्यसामञ्जस्यं स्यादिति भाष्योक्तं तत् । असन्नेवेत्यादीति । अस्मिंश्च श्लोकेऽननुकृष्यानन्दमयं ब्रह्मण एवाभावाभाववेदनयोर्गुणदोषाभिधानात् गम्यते ब्रह्म पुच्छं प्रतिष्ठेत्यत्र ब्रह्मण एव स्वप्रधानत्वमिति । न चानन्दमयस्यात्मनो भावाभावशङ्का युक्ता । प्रियमोदादिविशेषस्यानन्दमयस्य सर्वलोकप्रसिद्धत्वात् इत्यनेन भाष्येण श्लोकविरोधमित्यर्थः । द्वयपदमसदेवेति श्लोकस्याप्येतत्समानयोगक्षेमत्वादुपात्तम् । आनन्देत्यादि आनन्दप्रचुर इत्युक्ते दुःखास्तित्वमपि गम्यते इत्यनेन दुःखास्तित्वम् । अब्रह्मत्वेत्यादि । तथा च सति 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' इति भूम्नि ब्रह्मणि प्रतिशरीरं तद्व्यतिरिक्ताभावश्रुतिरुपरुध्यत इत्यनेनाब्रह्मत्वापत्तिं प्रियादिभेदादानन्दमयस्य भिन्नत्वं ब्रह्म तु न प्रतिशरीरं भिद्यते 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यानन्त्यश्रुतेरित्यनेनानन्त्यविरोधम् 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' इति श्रुत्यन्तरादेकत्वविरोधम् । न चानन्दमयाभ्यासः श्रूयते प्रातिपदिकार्थमात्रमेव हि सर्वत्राभ्यस्यते यदेष आकाश आनन्दो न स्यादित्यादिषु । यस्त्वानन्दशब्दस्य मयडन्तस्यैवाभ्यासोयं एतमानन्दमयमुपसंक्रामतीति । न तस्य ब्रह्मविषयत्वमस्तीति विकारात्मनामन्नमयादीनामुपसंक्रमितव्यानां प्रवाहे पठितत्वादित्यनेन भाष्येण आनन्दमयपदानभ्यासम् । तथेति अज्ञानमित्यर्थः । इदं त्विह वक्तव्यमित्यादिनाधिकरणं भञ्जन्ति आनन्दमयस्य प्रकृतत्वात् । ब्रह्मत्वं यत्तदभावुर्येन भाष्येण तद्ब्रमयुः तथाहीत्यादिना । भाष्यं तु तत्र यत्तद्ब्रह्म मन्त्रवर्णे प्रकृतं 'सत्यं ज्ञानमनन्तं ब्रह्म' इति तदिह ब्रह्म पुच्छं प्रतिष्ठेत्युच्यते तद्विजिज्ञापयिषया एवान्नमयानन्द-

१. दुःखास्तित्वे सति ।

भाष्यप्रकाशः ।

रेण व्याख्यायते । तत्र ज्ञानशेषस्य ब्रह्मण ऋचि स्वरूपलक्षणवाक्यादेवासंदिग्धं प्रतीतेस्तत्र संदेहानुदयेन तदर्थमुपपादनविस्तारस्याप्रयोजनकत्वात् फलवाक्ये विभक्तिवचनयोर्भेदेन संदेहात् तदर्थ एव संपूर्णप्रपाठक उपपादनीयः । अत उपपादनबीजत्वेन ज्ञानशेषस्य ब्रह्मणो मन्त्रवर्णे प्रकृतत्वकथनमेवासंगतम् । तत एव तद्विजिज्ञापयिषया पञ्चानां कोशत्वकथनमपि तथा । ज्ञेयपरयोरैक्याङ्गीकारोऽपि शब्दान्तरप्रयोजनाननुसंधानात् तथा । विकारप्रत्ययासंभवस्य प्रागुपपादितत्वाच्च प्रायपाठविरोधोक्तिराकस्मिकत्वोक्तिश्चापि तथा । प्रियाद्यवयवयोगस्य बाधकत्वकथनमपि तथा । द्वितीयवर्णकसमाप्तिस्थपरोक्षवादव्याख्यातरीतिकभक्तहृदयाधिकरणप्रादुर्भावाज्ञानात् । केवलनिर्विशेषब्रह्मवादस्येक्षत्यधिकरण एव निरस्तत्वाच्च । एकस्यावयवावयविभावविरोधकथनमपि, प्राणस्य प्राणमिति श्रुतिस्थस्य, नेह नानास्तीति भागस्यार्थाज्ञानादेव । आकारदर्शनं विना नानात्वस्फुरणायोगेन तस्य निषेधानर्हतया तेनैवाकारप्राप्तौ सत्यां नानात्वनिषेधस्यावयवावयविभावविरोधाभाव एव पर्यवसानादिति । एवं, 'कृत्स्नः प्रज्ञानघन एव' इति कृत्स्नपदादपि ज्ञातव्यम् । अकृत्स्नत्वापादकभेदबुद्ध्युदयं विना भेदनिवारणफलककृत्स्नपदवैयर्थ्यस्य दुष्परिहरत्वादिति । एवमसन्नेवेति श्लोकस्य ब्रह्म पुच्छेत्युक्तब्रह्मपरत्वोत्प्रेक्षणमपि निर्हेतुकम् । अन्नमयादिश्लोकानामिवास्याप्यवयवविपरतायाः प्राञ्जलायास्त्यागे बीजाभावात् । नच प्रियमोदादिरूपस्यानन्दमयस्य सर्वप्रतीतिगोचरत्वात् तद्विषयकभावाभावशङ्काभावादेतस्य श्लोकस्यासंगतिरेव बीजमिति युक्तम् । उक्तप्रियादिपक्षावयवविशिष्टावयविरूपेणानन्दमयपुरुषज्ञानस्य स्वतः काण्वदर्शनेनोक्तश्रुतित एव ज्ञानसंभवे तत्र

रश्मिः ।

मयान्ताः पञ्चकोशाः कल्प्यन्ते तत्र कुतः प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्ग इति । ज्ञानशेषस्येति ब्रह्मविदिति श्रुत्यंशे ज्ञानविषयस्येत्यर्थः । तदर्थं ज्ञानशेषब्रह्मार्थम् । विभक्तीत्यादि परमिति ब्रह्मणा विपश्चितेति च विभक्तिभेदः । परमिति सर्वान् कामानिति च वचनभेदः । तदर्थ इति ज्ञानशेषब्रह्मार्थे । तत एवेति ज्ञानशेषस्य ब्रह्मणोऽप्रकृतत्वादेवेत्यर्थः । एतेन नन्वानन्दमयावयवत्वेन ब्रह्म पुच्छं प्रतिष्ठेत्युच्यते । अन्नमयादीनामिवेदं पुच्छं प्रतिष्ठेत्यादि तत्र कथं ब्रह्मणः स्वप्रधानत्वं शक्यं विज्ञातुम् । प्रकृतत्वादिति ब्रूम इति भाष्यमपि निरस्तम् । तथेति असंगतम् । संनियोगशिष्टन्यायात् । विभूतित्वस्यान्नमयादीनामुपपादितत्वाद्वा । ऐक्येति ब्रह्मविदाप्नोति परमित्यत्रेत्यर्थः । शब्दान्तरेत्यादि उत्क्रमणादिशब्दान्तराणामित्यर्थः । एतच्च द्वितीयाध्यायतृतीयपादे स्फुटम् । ब्रह्मशब्दात्परशब्दः शब्दान्तरं वा । इतः परं क्रमेणोक्तानि दूषणान्युद्धरन्ति स्म विकारेत्यादि । बाधकत्वेत्यादि असामञ्जस्यरूपबाधकत्वेत्यर्थः । द्वितीयवर्णक इत्यादि द्वितीयस्मिन् वर्णके आनन्दमयोऽभ्यासात् इत्येवं पुनः सूत्रप्रक्षेपेण वर्णके समाप्तिस्थो यो वस्तुतस्त्वित्यादिना भणितः परोक्षवादस्तेनेत्यादि । 'ततो ह जातो भुवनस्य गोपा हिरण्मयः शकुनिर्ब्रह्मनाम' इति श्रुतेः । कदाचित्प्रादुर्भावस्थले शकुनिद्वयदानमपि यथा मध्यमन्तरिक्षदेवेनादेहेन शकुनिद्वयं दत्तं माखीपरिमाणकम् । बीजाभावादिति

१. लोके बहुत बडी माखी माखा कहियत है ।

भाष्यप्रकाशः ।

विश्वासरहितस्य निन्दाया विश्वस्तस्य प्रशंसायाश्च बोधनेनास्यासंगत्यभावात् । एवं, 'यतो वाचः' इति वाक्यशेषस्य निर्विशेषसमर्पकत्वकथनमपि तथा । नायमात्मेति मन्त्रे स्वकृततनुविवरणश्रावणेनैतदुत्तरार्धे श्रावितस्यानन्दवित्त्वस्यापि तत एव सिद्ध्या तदननुगृहीतवाङ्मनसयोरगोचरत्वस्यापि तत एव सिद्धेस्तस्य निर्विशेषसमर्पकतायाः कल्पयितुमशक्यत्वात् । किंचोक्तप्रणाड्या वेदनविषयाणामलौकिकानामेव प्रियादीनामत्र पूर्वोक्तरीत्या परामर्शात् तेषां प्रतिशरीरं भेदाभावादेवानन्दमयस्यानेकत्वमपि न शक्यकल्पनम् । अत आनन्दमयेऽनेकत्वप्रसञ्जनाय लौकिकानां प्रियादीनामादरोऽप्यसंगत एव । यत्पुनर्न चानन्दमयपदाभ्यासः श्रूयत इत्यादिना आनन्दमयपदाभ्यासे आनन्दमयपदाभ्यासस्याशक्यकल्पनत्वमुक्तं तदपि तथैव । यतोऽभ्यासोऽभ्यस्यमानं भिन्दन्नाभ्यस्तपदवाच्येन सामान्यरूपेण तं भिनत्ति, किंतु पदान्तरोक्तेन विवक्षितरूपेण । समिधो यजतीत्यादिरूपे तदुदाहरणे पञ्चसु यागत्वे समानेऽपि पदान्तरोक्तसमिदादिरूपेणैव भेददर्शनात् । एवं सति तत्र यथाभ्यस्तो यजतिः समिदादि-

रश्मिः ।

नहि देवदत्तावयवे संपूर्णदेवदत्तत्वमुपपादयितुं शक्यम् । विश्वासेत्यादि श्रुत्या प्रतिपादनादेतादृशमेव ब्रह्मेति ज्ञानरहितस्य । शुद्धमनोवशस्येति यावत् । विश्वस्तस्येति श्रुत्या प्रतिपादनादेतादृशमेव ब्रह्मेति सत्यं दधतः । असंगतीत्यादि तथा च युक्तिनिषेधे पर्यवस्यत्ययं श्लोकः इति भावः । तथा च नेदमपि ब्रह्म पुच्छं प्रतिष्ठेत्यत्र ब्रह्मण एव स्वप्रधानत्वमित्यस्य गमकमित्यानन्दमयावयवत्वेनापि ब्रह्मणि विज्ञायमाने न प्रकृतत्वं हीयते । आनन्दमयस्य ब्रह्मत्वादित्येवेति भावश्च । नायमात्मेत्यादि मुण्डकेस्त्ययं मन्त्रः । यत्र ब्राह्मणानां मन्त्र इति समाख्या स मन्त्र इति मन्त्रलक्षणात् । स्वकृतेति स्वां तनुं विवृणुते संभजते प्रकाशनार्थम् । रामोत्तरतापनीयात् । तस्य तनुं स्वां स्वकीयां कृत्वेति वा गुरुतन्वामयोगोलके वह्निरिव ब्रह्मावेशात् । एतदुत्तरार्धे इति । यत इत्यस्याः श्रुतेरुत्तरार्धे । तत एवेति वृततन्वा एवेत्यर्थः । यतस्तन्वा मनआदिभिरानन्दज्ञानं मनसि जायते इति । तदित्यादि तनुविवरणकर्तुरात्मनोननुग्रहीतेत्यर्थः । तत एवेति अवृततन्वा एवेत्यर्थः । तस्येति वाक्यशेषस्येत्यर्थः । निर्विशेषेत्यादि आनन्दं ब्रह्म इत्यत्रानन्दो मायिको विवर्त इति मायावादः 'इन्द्रो मायाभिः पुरुरूप ईयते' इति श्रुतौ मायिकत्वमैन्द्रियकत्वं भिदां 'मायामात्रमनूद्यान्ते प्रतिषिध्य प्रसीदति' इति भगवद्वाक्यादिति । सिद्धान्तान्तरे ब्रह्मवादः । उभयव्यपदेशाधिकरणरीत्या विद्वन्मण्डनोक्तरीत्या च सकलविरुद्धधर्माश्रयो ब्रह्मेति राद्धान्तीयो ब्रह्मवादः । अत इति साकारस्यैव ब्रह्मणो व्यापकत्वमिति सिद्धान्तात् । अभ्यस्यमानमिति यथात्र प्रस्तुतानन्दम् । सामान्येति यथात्र प्रस्तुतानन्देऽभ्यस्तत्वं प्रस्तुतत्वं च तयोरभ्यस्तत्वसामान्यं रूपं प्रस्तुतं विशेषरूपं तथा यागत्वं सामान्यरूपं समिद्यागः तनूनपाद्याग इत्यादौ समिदादिविशेषरूपं विशेषणत्वात्तदुक्तमत्र किं तु पदान्तरोक्तेनेत्यादिना । पदान्तरोक्तेत्यादि यद्यपि शास्त्रदीपिकादौ अभ्यस्तविधिश्रुत्या कर्मभेद इत्येवोक्तं तथापि केन रूपेणेति विचार्यमाणे सामान्यरूपेण संभवादेतेनैव रूपेणेति भावः । नैयायिकरीत्या शक्तं पदं स्वीकृत्य स्तुत्या प्राचुर्यार्थकानन्दाभ्यासादन्नमयादिभेदसाधकस्तादृशानन्दाभ्यास इत्याशयेनाहुः

१. समाधान । २. ब्राह्मणं वेदान्तेषु ब्राह्मणत्वात् ।

**न तावज्जीवः। तस्य ब्रह्मज्ञानफलत्वेन, ब्रह्मणा विपश्चितेत्यानन्दमयस्योक्तत्वात्।**

भाष्यप्रकाशः।

पदाभ्यासकल्पनानपेक्ष एव समिदादिरूपयागभेदसाधकस्तथात्रानन्दपदमप्यानन्दमयपदाभ्यासकल्पनानपेक्षमेवानन्दमयरूपानन्दभेदसाधकमिति स्फूर्त्या तादृशशङ्काया एवानुदयादिति बोध्यम्। अथानन्दवल्लीभाष्ये यदुक्तमानन्द इति विद्याकर्मणोः फलं, तद्विकार आनन्दमय इति। प्रियादिवासनानिर्वृत्तो ह्यात्मानन्दमयो विज्ञानमयाश्रितः स्वप्न उपलभ्यत इति च। तदप्यसंगतमिति। तत्रान्त्यं दूषयन्ति नेत्यादि। अयमर्थः। ब्राह्मणे परशब्देनोदितं फलं तद्व्याख्यारूपायामृचि न केवलेन कामपदेन शक्यवचनम्। तेषां ज्ञेयब्रह्मापेक्षया अपरत्वेन श्रुत्युपजीव्यब्राह्मणस्थपरशब्दविरोधापातात्। किंतु विपश्चिद्ब्रह्मपदाभ्यां सहितेन। अतः, सर्वान् कामान् सह ब्रह्मणा विपश्चितेत्येतावन्तं ग्रन्थं व्याख्यातुं सर्वप्रपाठक इत्युपपादितम्। तथा सत्यन्नमयादीन्निरूप्य सर्वान्तरः प्रियाद्यवयववानानन्दमयो यो व्याख्यायते स जीवस्य ब्रह्मज्ञानफलत्वेनैव व्याख्यायते। तत्रावयवा एव कामपदार्थोऽवयव्येव विपश्चिद्ब्रह्मेति सिद्ध्यति। उत्तरत्रैतमानन्दमयमात्मानमुपसंक्रामतीत्यनेन तादृशस्य तस्यैव पर्यवसि-

रश्मिः।

**अत्रानन्दपदमित्यादि। अत्रेति** ब्रह्मवित्प्रपाठके। **आनन्दमयरूपेति** अत्रानन्दशब्दप्राचुर्येण प्रस्तुतानन्दविवक्षा ज्ञेया। **तादृशेति** आनन्दमयपदाभ्यासश्रवणरूपशङ्कायाः। आनन्दमयपदाभ्यासश्रावणकल्पनानपेक्षत्वेनानुदयात्। अत्राभावस्य प्रतियोगिज्ञानसापेक्षत्वाङ्गीकारादेवकारः। न चैवमपि वर्णके दृष्टान्तविरोध इति वाच्यम्। वर्णक आनन्दपदेनोपसंक्रामतेर्विवक्षितत्वात् स्थानसाम्यात्। तथा चैतमन्नमयमात्मानमुपसंक्रामति, एतं प्राणमयमात्मानमुपसंक्रामति, एतं मनोमयमात्मानमुपसंक्रामति, एतं विज्ञानमयमात्मानमुपसंक्रामति, एतमानन्दमयमात्मानमुपसंक्रामतीति पञ्चकृत्वोभ्यस्त उपसंक्रामतिरन्नमयादिभेदसाधक इति दृष्टान्तसाम्यं बोध्यम्। अभ्यासादित्यत्र सामान्यरूपेणाभ्यासत्वेनाभ्यासकथनात्। एतेन यस्त्वयं मयडन्तस्यैवानन्दशब्दस्याभ्यासः एतमानन्दमयमात्मानमुपसंक्रामतीति न तस्य ब्रह्मविषयत्वमस्ति विकारात्मनामेवान्नमयादीनामनात्मनामुपसंक्रमितव्यानां प्रवाहे पठितत्वादिति भाष्यमपि प्रत्युक्तम्। विकारे मयटः प्रास्यमावात्। किं चैतेनानन्दमयस्य ब्रह्मत्वे निर्णीते ह्यानन्दपदस्य लक्षणयानन्दमयपरत्वज्ञानादभ्याससिद्धिः। तत्सिद्धौ तन्निर्णय इत्यन्योन्याश्रयफलकं यत्, यदि चानन्दशब्दस्य ब्रह्मविषयत्वं निश्चितं भवेत् तत उत्तरेष्वप्यानन्दमात्रप्रयोगेषु आनन्दमयाभ्यासः कल्प्यते न त्वानन्दमयस्य ब्रह्मत्वमस्ति प्रियशिरस्त्वादिभिर्हेतुभिरित्यवोचामेति भाष्यं प्रत्युक्तम् [**आनन्दमयेत्यादि** अत्रानन्दपदं प्राचुर्येण प्रस्तुतानन्दवाचकमेवमेव सामानाधिकरण्यात्] **विद्याकर्मणोरिति** पुण्यकर्मार्थकं कर्मपदं समासघटकं बोध्यम्। आनन्दसाधनत्वात्। विकारार्थमयडन्तत्वे स्वानुभवं प्रमाणयति स्म **प्रियादीत्यादि**। प्रियादिकर्मजन्यसंस्कारविशेषरूपवासनया निर्वृत्त आनन्दित इत्यर्थः। **आनन्दमय इति** विषयानन्दमयः फलत्वाद्विज्ञानमयाश्रित इत्यर्थः। **इतीति** इतिर्हेतुवाचकः। तत्र तयोः पक्षयोः। **शक्यवचनमित्यत्र** व्याख्यातुमिति शेषः। **सहितेनेति** कामपदेनेति विशेष्यम्। **उपपादितमिति** उपपादनीयं च संदिग्धमिति भाष्य उपपादितम्। **जीवस्येति** भाष्यीयस्य तस्येत्यस्य व्याख्यानम्। तेनैतद्भाष्यपूर्वभाष्यस्य न तावज्जीव इत्यस्य जीवः प्रियादिवासनानिवृत्तो ह्यानन्दमयो विज्ञानमयाश्रित इत्यर्थः। **कामपदार्थ इति** काम्यन्त इति कामाः प्रियादयः। **तादृशस्य तस्येति** अवयवविशिष्टस्यावयविन इत्यर्थः। **तर्कमप्याहुः**

भाष्यप्रकाशः ।

तत्फलत्वेनोपसंहारात् स यदि जीवत्वेन विवक्षितः स्यात् प्रथमान्तत्वेनात्र निर्दिष्टः स्यात् । सोऽश्नुत इति श्रुतौ फलशेषिणो जीवस्य प्रथमान्तत्वेनैव निर्दिष्टत्वात् । मोक्षफलयोरैक्यापत्तिश्च स्यात् । किंचान्नमयादीनां व्यवहारे सतामत्र प्रायपाठेनाकस्मात् तद्विहाय स्वमोपलभ्यमानग्रहणे तद्विरोधोऽपि । किंच ब्रह्मांशस्याविद्ययात्यन्तभिन्नत्वमानिनो जीवस्य 'ब्रह्म वेद ब्रह्मैव भवति' इत्युक्तो ब्रह्मभावः सर्वात्मभावरूपं ज्ञानं तदधिकाररूपा अविद्यानिवृत्तिश्च न ब्रह्मज्ञानफलत्वेन वक्तुं शक्यानि । ब्रह्मभावस्यावरणभङ्गमात्रेण स्वतो भवनस्य भवतिना बोधनात् । प्रकृते तदङ्गीकारे द्वितीयाविभक्तिपीडा लक्षणादोषश्च स्याताम् । ज्ञानस्य तथा-

रश्मिः ।

स यदीत्यादिना स आनन्दमयः । अथ जड इत्यादिभाष्यं विवृण्वन्ति स किं चाद्येत्यादि । अन्नमयादीनां पुरुषविधानां जडत्वेपि फलत्वम् । अन्वयस्यानन्दमयत्वात् । आत्मसुखरूपस्वर्गः लोकरूपे स्वर्गेन्वित इति जडोपि लोकः फलं तद्वत् । तदिति स्वर्ग आत्मसुखं तर्हि आत्माश्रितः स्वर्गो लोकस्तर्हि जडः स्वर्गोद्भवदेहादिस्तदाश्रित आसमन्तात् सेवितः इत्युभयोः किमाश्रित इति प्रश्ने-आद्ये आनन्दमयस्य ज्ञानफलत्वे जितं ब्रह्मवादिभिः । द्वितीये दूषणमाहुः जडाश्रितस्य इति । एवकारो विद्यायोगं व्यवच्छिनत्ति । व्यवहारे सतामिति स्वप्नवैलक्षण्यार्थमुक्तम् । तद्विहाय इति जडं धर्मफलं विहाय । तद्विरोध इति स्वाप्निकस्यासत आनन्दमयस्य ग्रहणे उक्तप्रायपाठविरोध इत्यर्थः । अपिना स्वर्गफलविरोधः । ज्ञानस्यापीत्यादिभाष्यं विवृण्वन्ति स किं च ब्रह्मांशस्येत्यादि । ब्रह्म वेदेति वेदनरूपज्ञानेनाविद्यानिवृत्त्या ब्रह्मैव भवति आवरणभङ्गात् ब्रह्मभावः अयमितः प्रेत्य । सर्वात्मभावस्तृतीयाध्याये स नात्र ब्रह्मज्ञानफलत्वेनेति वक्ष्यमाणप्रकारानुपपत्तेस्तस्य प्रदानसाध्यत्वात् । अतोऽहं मनुरभवं सूर्यश्चेत्युक्तः । अयं सशरीरस्य । ब्रह्मज्ञानेति ब्रह्मविदाप्नोति इत्यनेनोक्तं ब्रह्मज्ञानं तत्फलत्वेनेत्यर्थः । अतो ज्ञानस्याप्यवान्तरफलं ब्रह्मभावादि । शक्यानीति 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' इतिसूत्रेण शक्यो ब्रह्मभावः शक्या विद्यानिवृत्तिः शक्यं ज्ञानं तानीमानि शक्यानीत्येवमेकशेषः । कथमत्र तल्लक्षण एव विशेष इति चेन्न अविद्यानिवृत्तिसाध्यः सर्वात्मभावो विद्या विद्याविरुद्धसम्यङ्निवृत्तिश्च ज्ञानात्मिकेति त्रयाणां ज्ञानरूपत्वेन लिङ्गलक्षण एव विशेषादिति। निवृत्तिरभावोधिकरणात्मेति ज्ञानरूपत्वं सिद्धान्तेप्यभावो ज्ञानात्मेति सर्वं सुस्थम् । भवतिनेति 'इक्श्तिपौ धातुनिर्देशे' इतिसूत्रेण तिप्, ततः सुबुत्पत्त्या टा तेन तृतीयान्तमिदं पदं बोध्यम् । प्रकृत इति एतमानन्दमयमात्मानमुपसंक्रामतीत्यर्थः । द्वितीयाविभक्तीत्यादि । कर्मणि द्वितीया इतीति वक्तव्यम् । तच्च कर्म उत्पाद्यं विकार्यं संस्कार्यमाप्यं चेति चतुर्विधम् । तत्र नित्यत्वान्नोत्पाद्यं कर्म आनन्दमयो घटवत् । अपरिणामत्वान्न विकार्यं दधिवत् । नित्यैकरसत्वान्न संस्कार्यं व्रीहिवत् । स्वात्ममात्रत्वान्नाप्यं ग्रामवदिति विभक्तिपीडा विज्ञानमय आपादरूपविभक्तेः शक्तिरूपव्यापारेन्यथाकृते पीडा भवत्येव न च विकारे मयडिति कर्मत्वोपपत्तिरिति वाच्यम् । विकारशब्दसूत्रविरोधात् । ब्रह्मवित्फलत्वाच्च न विकारे मयडिति । आनन्दमय इत्यत्र विज्ञानपदस्याभेदान्वयानुपपत्त्या स्वाश्रिते लक्षणादोषश्चेत्यर्थः । तथात्वेति ब्रह्मज्ञानफलत्वाङ्गीकार इत्यर्थः । अयमर्थः । यथा ब्रह्मणा विपश्चितेति पदाभ्यां यथानन्दमयो गृहीतस्तथा सूर्यो विपश्चिन्मनसा पुनातु इति श्रुत्या विपश्चित्सूर्योपि इति सदानन्दग्रहणवद्ग्रहणमपि तस्यैष एव शारीर आत्मा यः पूर्वस्येत्यत्र यः पूर्वस्यालोकः सविद्विपश्चि-

अथ जडः स्वर्गवत् तदा किमाश्रित इति वक्तव्यम्। जडाश्रितत्वे कर्मफलमेव स्यात्। ज्ञानस्याप्यवान्तरफलमिति चेन्न तर्हि किमानन्दात् तस्यातिरिक्तं फलं भविष्यति। जडचिद्रूपतायाः पूर्वमेव विद्यमानत्वात्।

---

भाष्यप्रकाशः।

स्वाङ्गीकारे तु तस्य, स यश्चायं पुरुषे यश्चासावादित्ये स एकः स य एवंवित् इति साधनशेषभूतपुरुषविशेषणत्वेन तत्कोटिनिविष्टत्वात्। साधनरूपस्य फलरूपस्य च ज्ञानस्यावैजात्यात् साधनफलभावव्याहतिश्च। तेन, एतᳪ ह वा व न तपतीत्यादिकं ब्रह्मविन्माहात्म्यबोधनद्वारा विद्यादिमाहात्म्यायैव सिद्ध्यति। अतः श्रुतिव्याख्यानस्यासंगतत्वादानन्दमयो जीव इत्यसंगतम्। एवं द्वितीयं दूषयित्वा आद्यं दूषयन्ति अथ जड इत्यादि। जीवाश्रितत्वे भोक्तृशरीरान्तःपातात् तद्व्यतिरिक्तं जडं वा ब्रह्म वा आश्रित इत्यनयोर्मध्ये

रश्मिः।

ज्ञानरूपः किं न स्यादत उक्तं ज्ञानस्य तथात्वाङ्गीकारे त्विति पूर्वं श्लोकचतुष्टयान्तः प्रपाठकः समर्थितः। अग्रिमपदमीमांसाभिप्रायश्चोक्तः अग्रिमार्थमस्मिन् पक्षे आहुः तस्य स य इति तस्येत्यस्य साधनरूपस्येत्यनेनान्वयः। श्रुत्यर्थस्तु आनन्दमीमांसोक्तः आनन्दस्तच्छब्दार्थः अयमिति परिदृश्यमानः। असाविति विप्रकृष्टः स एकः सूर्य आत्मा जगतस्तस्थुषश्चेति श्रुतेः। कथनप्रयोजनं तु सूर्यस्य देवपत्नीनामसु निरुक्ते पाठात् पुरुषस्य पत्नीत्वद्योतनाय तदुक्तं टिपण्यां 'स्त्रीप्रायमितरत्सर्वम्' इति टिप्पन्याम्। कश्चिदेव हि भक्तो हि इतिवाक्यादेकवचनम्। साधनेति अस्माल्लोकात्प्रेत्य एतमन्नमयमात्मानमुपसंक्रामतीत्याद्युक्तफलसाधनं स य एवंविदित्युक्तं ज्ञानं तस्य शेषमतस्तदर्थः पुरुषः। तस्य विशेषणत्वेन। विशेषणत्वं तु एवंविदित्यस्य पूर्वोक्तप्रकारेण वित्पुरुष इति। फलरूपस्येति विपश्चित्सूर्यरूपस्य। साधनफलेति धर्मादिः। ब्रह्मविदिति साधनं ब्रह्मणा विपश्चितेति फलम्। तेनेति अग्रिमग्रन्थस्यानुक्तस्याभिप्रायाद्यतो वाच इत्यस्यानुक्त्वा तदग्रिमस्याभिप्रायमाहुः एतमिति। श्रुत्यन्तर्गतं ब्रह्मविदमित्यर्थः। अग्रे स एवंविद्वानिति श्रुतयस्तिस्रः। एवंविद्वान् पुण्यपापे अतापकरत्वेन विद्वान्, आत्मानं स्पृणुते प्रीणातीत्यर्थः। समत्वेन द्विकर्मकत्वं छान्दसम्। आत्मानुग इति पाठे कर्ता, एते इति कर्म, नगो गिरिराजः। पुण्यपापे प्रीणातीति। तद्यथाऽऽरणे 'नात्र भुवनं न पुरुषा न पशवोः नादित्यः संवत्सर एव प्रत्यक्षेण प्रियतमं विद्यात्'। एतद्वै संवत्सरस्य प्रियतमᳪ रूपं योस्य महानर्थ उत्पत्स्यमानो भवति इदं पुण्यं कुरुष्व' इति श्रूयते। तत्र निरोधलक्षणग्रन्थोक्तदिशा पुण्यकरणम्। पुण शुभे, पुणे साधु पुण्यं 'तत्र साधुः' इति यत्। पुण्यकरणं 'देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे' इतिश्रुतेः संहितास्थायाः। 'यज्ञो वै श्रेष्ठतमं कर्म' इतिश्रुतिः। श्रेष्ठतमं मर्यादाभक्तिरूपं कर्म, तन्निरोधलक्षणग्रन्थ इति। ननु पापस्योपयोगाभावादेते इति द्विवचनमन्यथा बाहुलकादेर्मेयमिति चेत्तत्राह उभे इत्यादि। अत्राप्यात्मानमात्मानग इतिपाठद्वयम्। य एवमिति एवं पूर्वोक्तं माहात्म्यं वेदस्यैक्यमाहात्म्ययोः प्रतिपादकत्वादित्यर्थोच। श्रुतीत्यादि आनन्दवल्लीभाष्यस्येत्यर्थः। आनन्दमयस्य जीवत्वं व्युदस्तम्। जीवाद्याश्रितत्वं तु स्यात्तच भाष्यविवरणाय पीठिकामाहुः जीवाश्रितत्व इत्यादि। भोक्तृशरीरं जीवशरीरम्। तदेतिभाष्यं विवृण्वन्ति स्म तद्व्यतिरिक्तमिति। कर्तृत्वात्फलत्वासंभवेन तद्व्यतिरिक्तं स्वर्गयोग्यं जडं शरीरमित्यादि बोध्यम्। ब्रह्मेति ब्रह्म गणितानन्दं आत्मा वाश्रितः। आत्मत्वस्वरूपानन्दविषयः। तथा च स्वर्गवदितिभाष्ये स्वर्गः आत्मसुखं लोको

**'अस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इतिश्रुतिविरोधश्च। पुच्छत्वेन ब्रह्मवचनात् प्रद्वेष इति चेत्, तर्हि 'स एको ब्रह्मण आनन्दः' इत्यत्रापि षष्ठ्या भेदनिर्देशाद् ब्रह्मणः परमपुरुषार्थत्वं नाङ्गीकुर्यात्।**

भाष्यप्रकाशः।

एकं किंचिद् वक्तव्यम्। तत्राद्ये ज्ञानफलत्वाभावादुक्तश्रुतिविरोध एव दूषणम्। यदि तद्विरोधाय ज्ञानावान्तरफलत्वमङ्गीक्रियते, तदा मुख्यं फलमानन्दादतिरिक्तं किं भविष्यतीति वक्तव्यम्। ब्रह्मभावादीनां फलत्वाङ्गीकारे दूषणानामुक्तत्वात् संसारदशायां जडरूपताया ब्रह्मविच्वदशायां चिद्रूपतायाश्च सत्त्वात्। अत आनन्दमयस्य विकारत्वाङ्गीकारे फलबोधकश्रुतिविरोधः सर्वथा दुर्वार इत्यर्थः। दूषणान्तरमाहुः अस्येत्यादि। स एको ब्रह्मण आनन्द इत्यस्य व्याख्याने ब्रह्मानन्दस्य परमत्वायैतस्यैवानन्दस्येति श्रुतिस्तैरुपन्यस्ता। आनन्दमयस्य विकारत्वे ब्रह्मानन्दैकदेशत्वाभावात् स्फुट एव तद्विरोध इत्यानन्दमयस्य विकारत्वाङ्गीकारः सर्वथा श्रुतिविरुद्ध इत्यधिकरणभङ्गो न युक्त इत्यर्थः। अधिकरणभङ्गस्याशयान्तरमुद्भावयन्ति पुच्छत्वेनेत्यादि। जिज्ञास्यत्वेन मुख्यतया शास्त्रारम्भे बोधितस्य ब्रह्मणोऽनयाधिकरणरचनया न्यूनता समायातीत्यतः प्रद्वेषादधिकरणभङ्ग इत्यर्थः। तद् दूषयन्ति तर्हीत्यादि। स्वप्रधानस्याप्रधानत्वापत्त्या यदि प्रद्वेषस्तदा ब्रह्मण आनन्द इत्यत्राभिन्नस्य षष्ठ्या भेदनिर्देशात्क्रियाभावरूपस्य फलस्यानन्दकर्मकज्ञानेनैवोक्तत्वात् तस्य परमपुरुषार्थत्वमपि नाङ्गीकुर्यात्। पुच्छत्ववचनवद्

रश्मिः।

वा ग्राह्य इतिभावः। भाष्यं विवृण्वन्ति स्म तत्राद्य इति। तत्रोभयोः पक्षयोस्तद्व्यतिरिक्तं जडं स्वर्गलोकयोग्यं शरीरं तत्सेवित आनन्दमयः स्वर्गसुखरूपः इतिपक्षे इत्यर्थः। उक्तश्रुतिविरोधः 'ब्रह्मविदाप्नोति परम्' इतिश्रुतिविरोधः। तर्हि आत्मसुखं स्वर्गः आत्माश्रितो जडस्तर्हि तस्य ब्रह्मज्ञानफलत्वे जितं ब्रह्मवादिभिरित्यर्थः। ज्ञानस्येतिभाष्यं विवृण्वन्ति स्म यदीत्यादि। तर्हीत्यादिभाष्यं विवृण्वन्ति स्म तदेत्यादिना। भाष्यार्थस्तु जडाश्रितत्व इति यथाधिभौतिकसर्गोऽन्तरिक्षजडाश्रित एवमानन्दमय आत्मसुखं जडाश्रितं प्रजातिरमृतमानन्द इत्युपस्थ इतिश्रुतेस्तत्त्वे कर्मफलं स्पष्टम् यन्न दुःखेन संभिन्नमिति वाक्येन स्वर्गान्तर्गतत्वात्। एवकारेण ज्ञानफलयोगव्यवच्छेदः क्रियते। अवान्तरेति मुख्यमानन्दमयः फलम्। भाष्ये। तस्येति ब्रह्मज्ञानस्य। प्रकृते। जडचिद्रूपताया इत्यादिभाष्यं विवृण्वन्ति संसारदशेत्यादि। फलबोधकेति। नहि ब्रह्मज्ञानफलमानन्दविकारः संभवतीति विरोध इत्यर्थः। सर्वथेति विकारशब्दसूत्रविचारे ब्रह्मकर्मविचारे मोक्षस्य निर्विकारत्वविचारे च हिरण्यगर्भः कर्मणा मुक्तः इति। दूषणान्तरमित्यादि पूर्वं विद्यमानो जडो नानंन्दमय इति जड आनन्दमयफलमित्याशङ्किनं प्रति ब्रह्मानन्दविकारत्वापत्तिः पूर्वं विद्यमानस्य स्तुतस्येति दूषणान्तरमाहुरित्यर्थः। परमत्वायेति अस्यैवानन्दस्येत्यत्र सावधारणत्वदर्शनादितिभावः। अत्र 'अक्षरं ब्रह्म परमं वेदानां स्थानमुत्तमम्' इतिवाक्याद्ब्रह्मभिमतानन्दस्य विकृतत्वापत्तिरुक्ता। ब्रह्मानन्देत्यादि अस्य निर्विकारत्वादितिभावः। शास्त्रारम्भ इति जिज्ञासाधिकरण इत्यर्थः। अभिन्नस्येति। ब्रह्माभिन्नस्यानन्दस्येत्यर्थः। भयाभावेत्यादि 'आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन' इत्युत्तरश्रुत्येत्यर्थः। आनन्देत्यादि ब्रह्मसंबन्ध्यानन्द-

उपक्रमादिसर्वविरोधश्च पूर्वमेव प्रतिपादितः । यदप्यधिकरणमन्यथा दूषितं ब्रह्म पुच्छमिति । तत्र न पुच्छस्य ब्रह्मत्वं प्रतिपाद्यते, येनान्यथा समाधानं भवेत् । किं तु ब्रह्मणः पुच्छत्वमिति पूर्वन्यायेनेदं पुच्छं प्रतिष्ठेतिवत् । तत्र श्रुतिबाधो ब्रह्मणाप्यशक्यः ।

भाष्यप्रकाशः ।

मेदवचनस्यापि प्रद्वेषबीजस्य सत्त्वात् । अथ यदि राहोः शिर इतिवद् ब्रह्मण इत्यभेदषष्ठी तर्हि तस्य प्रियमेवेत्यादावप्यभेदषष्ठीमादृत्य पुच्छत्वं भाक्तमङ्गीकार्यं न त्वधिकरणं भङ्क्तव्यमित्यर्थः । भङ्गे पूर्वोक्तानि दूषणानि स्मारयन्ति उपक्रमेत्यादि । ननु न वयमधिकरणं भङ्ग्मः किंतु प्रकारान्तरेण तत् समर्थयाम इत्यकाङ्क्षायां तद् दूषयितुमनुवदन्ति यदपीत्यादि । ब्रह्म पुच्छमिति । ब्रह्म पुच्छं प्रतिष्ठेत्यत्र किमानन्दमयस्यावयवत्वेन ब्रह्म विवक्ष्यते, उत स्वप्रधानत्वेनेति संदेहे पुच्छशब्दादवयवत्वेनेति प्राप्तम् । तत्रोच्यते 'आनन्दमयोऽभ्यासात्' आनन्दमयात्मेत्यत्र ब्रह्म पुच्छं प्रतिष्ठेति स्वप्रधानमेव ब्रह्मोपदिश्यते । असन्नेव स भवतीति निगमनश्लोके केवलस्य ब्रह्मण एवाभ्यसमानत्वादित्येवं रचितमित्यर्थः । तद् दूषयन्ति तत्र नेत्यादि । ब्रह्म पुच्छं प्रतिष्ठेति वाक्ये पुच्छस्य यदि ब्रह्मत्वं प्रतिपाद्येत तदा शङ्का स्यात् । पूर्वं वेदनविषयतया लक्षितं स्वप्रधानब्रह्मरूपत्वं पुच्छस्य कथमिति । तदा समाधानमपि संभवेदभ्यासात् स्वप्रधानत्वमिति । दृश्यते तु विपरीतम् । तत्र ब्रह्मपदाभ्यासेन कथं समाधानं भवेत् । अभ्यासो हीतरशब्दश्रुतमर्थं स्थापयन्नभ्यस्यमानं परिच्छिनत्ति, न तु तदर्थं बाधते । समिधो यजतीत्यादौ तदुदाहरणे तथादर्शनात् । एवमत्रापि ब्रह्मपदाभ्यासस्तत्समभिव्याहृतपदश्रुतं पुच्छमितरेभ्यः परिच्छेत्स्यति, न तु बाधिष्यते । अतो ब्रह्मणोऽवयवश्रुतिबाधोऽनया रीत्या ब्रह्मणा सर्ववेदपाठिनापि कर्तुमशक्यः, किं पुनरितरेणेति व्यर्थमिदमन्यथारचनमित्यर्थः । दूषणान्तरमाहुः

रश्मिः ।

कर्मकाण्डेनेत्यर्थः । एवकारेण संबन्धिब्रह्मणो योगव्यवच्छेदः । तस्येति ब्रह्मणः । भाक्तमिति प्रियमोदप्रमोदानन्दानामगणितानन्दानाममेदे षष्ठी उपपन्ना गणितानन्दे ब्रह्मणि तु पुच्छत्वं भाक्तत्वमित्यर्थः । आनन्दमय इत्यादि 'आनन्दमय आत्मा मे शुद्ध्यन्ताम् ज्योतिरहं विरजा विपाप्मा भूयास५ स्वाहा' इत्यत्र विरजाहोमेऽस्ति । किंत्वितिभाष्यं विवृण्वन्ति स्म दृश्यते त्विति । कथं समाधानमित्यादि यत्र ब्रह्मपदाभ्यासस्तत्र परमात्मत्वं न तु यत्र स तत्र पुच्छत्वमिति व्याप्तिकमिति तथा । तदुपपादयन्ति अभ्यासो हीत्यादिना अग्रे स्पष्टम् । तथा दर्शनादिति यजतेरभ्यासो हि समिदादिशब्दश्रुतमर्थं समिदादिरूपं परिच्छेदकत्वेन स्थापयन्नभ्यस्यमानं यजत्यर्थरूपं यागं समिदादिरूपेण परिच्छिनत्ति न तु समिदादिरूपमितरपदार्थं बाधत इति दर्शनादित्यर्थः । परिच्छेत्स्यतीति ब्रह्मपुच्छत्वेन रूपेण परिच्छेत्स्यति । तत्रेतिभाष्यं विवृण्वन्ति स्म अतो ब्रह्मण इति । इतःपूर्वभाष्यार्थस्तु पूर्वन्यायेनेत्यस्य व्याख्यानं इदं पुच्छं प्रतिष्ठेतिवत् इतिपूर्वन्यायोऽक्षयन्न्यायः तेन । तेन तृतीयान्ताद्वतिः । इदं पुच्छं प्रतिष्ठा इत्यनेनेव इदं पुच्छं प्रतिष्ठा इतिवदिति न तु ब्रह्मार्थं बाधिष्यत इत्यर्थः । ब्रह्मार्थमिति शेषः । सर्ववेदेत्यादि ब्रह्मणेत्युक्तेस्तात्पर्यमिदम् ।

१. पुच्छार्थम् । २. पुच्छार्थम् ।

मौर्ख्यं चैतत् । आनन्दमयस्यैव ब्रह्मत्वे न कोपि दोषः स्यात्। आनन्दमयस्याब्रह्मत्वं परिकल्प्य तत्पुच्छत्वेन ब्रह्म वेदबोधितमिति ज्ञात्वा तत्समाधानार्थं यतमानो महामूढ इति विषयफलयोः किं मुख्यमित्यप्यनुसंधेयम्। पुच्छत्वोक्तिस्तु पूर्वभावित्वाय। अत एव ज्ञानविषयत्वं प्रतिष्ठा च। आनन्दमयो ब्रह्मण्येव प्रतिष्ठित इति । अत्रावयवावयविभावो भाक्त इति तु युक्तम्।

भाष्यप्रकाशः ।

मौर्ख्यमित्यादि । एतत् अन्यथारचनम् । चकारादधिकरणभङ्ग उभयमपि मौर्ख्यम् । तत्र हेतुरानन्दमयस्येत्यादि । त्वदुद्भावितानां दोषाणां प्रागेव परिहृतत्वादन्येषां चाभावात् तथेत्यर्थः । ननु प्रकारान्तरेण योजनं कौशलाय भवतीति कथं मौर्ख्यमित्यत आहुः आनन्दमयस्याब्रह्मत्वमित्यादि । तथाच भवेत् कौशलाय यद्यानन्दमयस्याब्रह्मत्वं न कल्पयेत्, पुच्छश्रुतिं च न बाधेत् । तत्तु करोतीत्यतस्तथेत्यर्थः । ननु शास्त्रे प्रकृतं ब्रह्मैव मुख्यमतस्तस्य तथात्वं साधयितुमयं यत्नः कथं मौढ्यायेत्यत आहुः विषयेत्यादि । प्रकृतत्वस्योभयत्र तौल्यान्न तेन रूपेण मुख्यत्वं निर्णेयं किंतु रूपान्तरेण । तथा सति तु त्वदभिमतस्य न मुख्यत्वं किंतु फलस्येति विषयमुख्यत्वार्थमपार्थो यत्न इत्यर्थः । ननु भवत्त्वेवं तथापि विषयत्वेनावश्यकस्य पुच्छत्वोक्तिकृतोऽपकर्षः कथं सोढव्य इत्यत आहुः पुच्छेत्यादि । सा तु पूर्वं तत्प्राप्तिबोधनाय । न हि द्वारं गृहं वा अप्राप्य तत्र स्थितं पुरुषं कश्चित् प्राप्नोति । तेन तथेत्यर्थः । अत्र गमकमाहुः अत इत्यादि । आनन्दमयस्य तत्र स्थितौ गमकमाहुः प्रतिष्ठेत्यादि। नन्वेवं सति द्वैतमापद्यते, तच्च नेह नानाऽस्तीत्यादिभिर्निषिद्धमतो नोक्तं साधीय इत्यत आहुः अत्रेत्यादि । भाक्तत्वस्य प्रामाणिकत्वान्न द्वैतापत्तिदोष इत्यर्थः । ननु भाक्तत्वे भवता हंसाकारः कथं समर्थनीय इति

रश्मिः ।

मौर्ख्यमिति आनन्दमयस्यैव ब्रह्मत्वे कल्पनालाघवं तदकरणात् पाण्डित्यविरुद्धं मौर्ख्यम् । पण्डा-लाघवबुद्धिः सा न जातेति। तत्तु करोतीति पुच्छवत्पुच्छं प्रतिष्ठापरायणमेकनीडं लौकिकस्यानन्दजातस्य ब्रह्मानन्द इत्येतदनेन विवक्ष्यते नावयवत्वम् । 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुत्यन्तरादिति भाष्येण पुच्छश्रुतिबाधकरणं बोध्यम् । अतस्तथेत्यर्थः अतः कारणान्महामूढ इत्यर्थः । गुरुव्यासोक्तानन्दमयस्य ब्रह्मत्वकल्पनं मोहादिति मूढः तमःकार्ययुक्तः शंकरत्वात् तत्पुच्छत्वेन ब्रह्मवेदबोधितमिति ज्ञात्वा तत्समाधानार्थं यत्नो महामोहादिति महामूढो महेश्वर इत्यर्थः । ब्रह्मविदित्यत्र ब्रह्मज्ञानविषयत्वेन प्रकृतं सर्वान् कामान् सह ब्रह्मणा विपश्चिता इत्यनेन सावयवब्रह्मरूपानन्दमयं फलत्वेन प्रकृतम् । एवं च प्रकृततावच्छेदकफलत्वावच्छिन्नं आनन्दमयमेव मुख्यं न तु प्रकृततावच्छेदकविषयत्वावच्छिन्नं ब्रह्मेत्युपक्रमोपि फलरूपस्यानन्दमयस्यैवेत्याहुः प्रकृतत्वस्येत्यादिना 'योपध' इत्यस्य लिङ्गानुशासनसूत्रस्यैतदतिरिक्तो विषयः । नन्वेवमिति पुच्छरूपाक्षराभिन्नत्वे सति तत्प्रतिष्ठितत्वे सति । भाक्तत्वस्येत्यादि 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स

१. मौर्ख्यातिरिक्तः ।

प्राणमयादीनामपि तथात्वात् । अन्तःस्थितस्य बाह्यानुरोधेन तथात्वमिति सर्वं सुस्थम् ॥ १८ ॥

इति प्रथमाध्याये प्रथमपादे पञ्चममानन्दमयाधिकरणम् ॥ ५ ॥

---

भाष्यप्रकाशः ।

शङ्कायामाहुः अन्तरित्यादि । बाह्यो जीवस्तदनुरोधेन तथाकार इति न कोऽपि शङ्कावकाशः । तत्प्रकारस्य पूर्वमेवोपपादितत्वात् सर्वं प्राचां वचनं समीचीनमेवेत्यर्थः । एवं च यच्छामतीनिबन्धे पक्षद्वयं व्याख्यायोक्तम् ।

'प्रायपाठपरित्यागो मुख्यत्रितयलङ्घनम् ।
पूर्वस्मिन्नुत्तरे पक्षे प्रायपाठस्य बाधनम्' इति ।

अर्थस्तु, आनन्दमयपदस्य ब्रह्मार्थकत्वपक्षे मयडर्थस्य विकारस्य त्यागेन प्राचुर्यार्थाङ्गीकारेण प्रायपाठपरित्यागः । आनन्दमयपदस्य ब्रह्मण्यप्रसिद्धस्य लक्षणया योगेन वा ब्रह्मणि व्याख्याने मुख्यार्थोल्लङ्घनम् । आनन्दपदाभ्यासेन च ज्योतिरधिकरणपूर्वपक्षे ज्योतिःपदेन ज्योतिष्टोमवदानन्दमयो लक्ष्यत इत्यानन्दपदस्यापि मुख्यार्थोल्लङ्घनम् । पुच्छपदं च बालधौ शक्तमानन्दमयावयवे गौणमिति तत्समानाधिकरणब्रह्मपदमपि स्वार्थत्यागेन तत्परमतस्तस्यापि मुख्यार्थोल्लङ्घनमिति चत्वारो दोषाः । विकारार्थकत्वपक्षे तु ब्रह्मपदस्य न स्वार्थत्यागो, नाप्यानन्दमयपदस्य, न चानन्दपदस्य । पुच्छपदमुख्यार्थबाधस्त्ववयवपरतायामधिकरणपरतायां च तुल्यः । अवयवप्रायपाठबाधश्च विकारप्रायपाठबाधेन तुल्य इति विकारार्थग्रहणपक्ष एव साधीयानिति । तदपि व्याख्येयपूजनमात्रमेव, न तु तात्त्विकम् । विकारार्थस्य प्राणमये बाधितस्य घटाकाशदृष्टान्तेनोज्जीवयितुमशक्यत्वात् । आप्राकृत-

रश्मिः ।

शृणोत्यकर्णः' इत्यादिश्रुतिषु पर्युदासार्थकनञ्श्रावणादिति भावः । तदनुरोधेन तथेति जीवे प्रवेशानुरोधेन तथा हंसाकार इत्यर्थः । नन्वानन्दमयस्यैव साकारत्वमिति सिद्धान्तात् कथं विज्ञानमयानुरोधेन हंसाकार इत्याकाङ्क्षायां समाधानमाहुः तत्प्रकारस्येत्यादि । पूर्वमेव मान्त्रवर्णिकसूत्र एव जीवोऽत्र मुख्य इत्यादिना वर्णयतीत्यन्तेन । तथा च स सिद्धान्तः पौरुषाकारपरो न तु हंसाकारमात्रपर इति भावः । एवं चेति प्राचां सर्ववचनस्य समीचीनत्वे प्रकारे चेत्यर्थः । पक्षद्वयमित्यादि । प्राचुर्यविकाररूपपक्षद्वयं व्याख्याय वाचस्पतिकेनोक्तं पूर्वस्मिन्नित्यादि । पूर्वस्मिन् प्राचुर्ये उत्तरे विकारे अप्रायपाठस्येत्यादिरित्यर्थः । मुख्यत्रितयलङ्घनं व्याचष्टे आनन्दमयपदस्येत्यादिना । अप्रसिद्धस्येति । ननु क्व प्रसिद्धिरिति चेत्कोशे इति गृहाण । लक्षणयेति ब्रह्मकोशयोर्जन्यजनकभावो लक्षणा तया । लक्ष्यत इति विकारविकार्यभावसंबन्धेन लक्ष्यते । विकारविकार्यभावसंबन्धो लक्षणा । तत्समेति तदेकार्थकेत्यर्थः । भिन्नप्रवृत्तिनिमित्तत्वे सत्येकार्थबोधकेत्यर्थः । भिन्नप्रवृत्तिनिमित्तैकार्थबोधकत्वसंबन्धो लक्षणात्र । दोषा इति पूर्वस्मिन् पक्ष इत्यर्थः । उत्तरे पक्षे इत्यादि । व्याकृतेत्यप्रायपाठस्य बाधनमित्युपलक्षणमित्याशयेन विकारेत्यादि । अवयवेत्यादि विकारपक्षेऽवयवपरतायां प्राचुर्यपक्षे पुच्छस्य ब्रह्मत्वमिति तन्मते पुच्छस्य ब्रह्मत्वाधिकरणपरतायां तुल्य इत्यर्थः । विकारपक्षे अवयवप्रायपाठबाधश्च आनन्दविकारेति ब्रह्मपुच्छावयवेनौचित्यादिति । प्राचुर्यपक्षे विकारप्रायपाठबाधेन तुल्यम् । व्याख्येयपूजनमात्रमिति भाष्यस्य यथा कथंचन समर्थनमेव पूजनं तदेव पूजनमात्रम् । विकारार्थस्येत्यादि । उपपादितं चैतद्विकारशब्दसूत्रे । आप्राकृतमित्यादि

भाष्यप्रकाशः ।

माच पण्डितं कस्यापि घटाकाशे घटविकारत्वप्रत्ययस्याभावात् । घटभृते दुग्धादावपि तथाप्रत्ययाभावेन दृष्टान्ताभावादनुमातुमप्यशक्यत्वात् । लोके शास्त्रे तथाप्रयोगस्य क्वाप्यनुपलम्भादिति । एवं बाधिते विकारपाठे तस्य प्रायतायाः अपि वन्ध्यासुतसौन्दर्यदेशीयत्वात् । किंच । शब्दमात्रमोङ्कारस्य विकृतिः । ॐकारस्तु ब्रह्मवाचक एवेति तद्विकृतयः सर्वेऽपि शब्दा उत्सर्गतो ब्रह्मवाचका एव । 'ॐमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानम्' इति,

'स्वधाम्नो ब्रह्मणः साक्षाद्वाचकः परमात्मनः, ।
स सर्वमन्त्रोपनिषद्वेदबीजं सनातनम्' ॥

इति, 'तस्य वाचकः प्रणवः' इति श्रुतिपुराणपातञ्जलस्मृतिभिस्तथानिश्चयात् । अतः शक्तिसंकोचेनैव व्यवहारसिद्ध्यर्थं तत्तद्वदन्तीति तन्निवर्तनायैवाचार्यः श्रौतान् हेतून् ब्रूत इति प्रागेव निर्णीतमिति नानन्दमयानन्दब्रह्मपदानामपि मुख्यार्थोल्लङ्घनम् । अतः पूर्वस्मिन् दोषाभावाद् द्वितीयस्मिन्नेव व्याकरणविरोधादिरूपदोषबाहुल्यादुत्तर एवासाधुरिति । यदपि वेदसूत्रयोर्विरोधे, गुणे त्वन्यायकल्पनेति सूत्राण्यन्यथा नेतव्यानीत्युक्तम् । तदप्यसंगतम् । तथाहि । इदं हि, 'विप्रतिपत्तौ विकल्पः स्यात् समत्वाद् गुणे त्वन्यायकल्पनैकदेशत्वात्' इति नावमिकतृतीयपादस्थसूत्रस्यैकदेशभूतम् । सूत्रस्य त्वेवं विषयः । ज्योतिष्टोमेऽग्नीषोमीयपशावेकवचनान्तबहुवचनान्तौ पाशोन्मोकमन्त्रौ भिन्नयोः शाखयोराम्नातौ । अदितिः पाशं प्रमुमोक्त्वेतमिति तैत्तिरीये ।

रश्मिः ।

'आङ् मर्यादाभिविध्योः' इति सूत्रेण समासे आप्राकृतं चापण्डितमित्येव चकारो मध्ये रभसात् अश्लिष्टाकारो वा । अनुमातुमिति प्राणाद्यवच्छिन्नाकाशः प्राणादिविकारः विकारत्वात् यो यदवच्छिन्नः स तस्य विकारः घटाकाशवत् प्राणादिविकार आकाशः प्राणाद्यवच्छिन्नः विकारत्वात् यो यस्य विकारः स तदवच्छिन्नः घटाकाशवदिति । घटभृतदुग्धादिवद्वेत्येवमनुमातुमित्यर्थः । अशक्यत्वादिति स्वरूपासिद्ध्यवतारणात्तथा । वन्ध्येत्यादि । इदं पदं सदृशे लाक्षणिकम् । तथा चेषद्वन्ध्यासुतसौन्दर्यसदृशत्वादित्यर्थः । ईषदर्थे देशीयर्प्रत्ययः । पूर्वस्मिन्पक्षे मुख्यत्रितयोल्लङ्घनं नास्तीत्याहुः किं चेत्यादिना । एवकारः कुत इत्यत आहुः ॐमित्येतदिति । तथा च श्रुतेरेवकार इति भावः । अत इति उपव्याख्यानमित्यत्रोपशब्दात् । शक्तीत्यादि शक्तिस्तु ब्रह्मणि उक्तवाक्यात् । घट इत्युक्तेपि वेदान्ते भासचेष्टयोरपि कर्तृत्वसंबन्धेन ब्रह्मण्यन्वयात् । परमात्मन इत्युक्त्या स्वोपपदार्थेषु तु उक्तसंबन्धेनान्वयाभावाच्छक्तिसंकोचलक्षणया योगकाविरोधकरूढ्येत्यर्थः । घटपटादौ योगासंभवादेवकारः । ननु व्यवहारे ब्रह्मवद्घटादिष्वपि व्यवह्रियतामित्यत आहुः व्यवहारेति । अस्ति ब्रह्मत्वेन घटादिविषयके महात्मनां नास्त्याधुनिकानां तेषां व्यवहारसिद्ध्यर्थमित्यर्थः । यथादृष्टं व्यवहारः ज्ञानवताम् । तत्तदिति तदित्यव्ययं घटादिपदानीत्यर्थः । तद्घटादिकर्मीभूतम् । आचार्य इति महात्मा व्यासः ब्रह्मत्वेन घटादिज्ञानवत्त्वाद् ब्रूत इति । श्रौतानित्यादि । श्रुतिनिष्ठान् हेतून् तद्धर्मोपदेशादीनित्यर्थः । प्रागेवेति ईक्षतिसूत्र एव । यदपीत्यादि । उक्तं वाचस्पतिकेनोक्तम् । गुणत्वादिति विभक्तिप्रातिपदिकयोः प्रातिपदिकानां प्राधान्यं संख्याया गुणत्वं विभक्तिप्रातिपदिकयोः

१. पक्षे हेत्वभावः स्वरूपासिद्धिः ।

## अन्तस्तद्धर्मोपदेशात् ॥ १९ ॥ ( १।१।६ )

'अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदितः । उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेदेत्यधिदैवतमथाध्यात्ममप्यथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते' इत्यादि । तत्र

---

भाष्यप्रकाशः ।

अदितिः पाशान् प्रमुमोक्त्वेतानिति शाखान्तरे । तत्र संदेहः । बहुवचनान्तो मन्त्रः प्रकृतौ निविशते न वेति । तत्र प्रकरणवशेन प्राप्तावपि विकल्पापादकत्वाद् बहुवचनस्यैकस्मिन् पशुपाशे असमर्थत्वाच्च न निवेशो युक्त इति बहुपाशकपशुगणयुक्तासु विकृतीषूत्कृष्यत्व इति पूर्वः पक्षः । सिद्धान्तस्तु पाशरूपप्रातिपदिकार्थान्वितं विभक्त्यभिहितं कर्मकारकं प्रकृतावप्यस्तीति पाशकर्मकोन्मोचनाभिधानेन संभवन्मन्त्रो नोत्कर्षं सहते । संख्यामात्रं त्वसंभवदपि गुणत्वाच्च प्रातिपदिककारकयोः प्रधानभूतयोरुत्कर्षणसमर्थम् । इह संख्याप्यविवक्षिता । पाशकर्मणोरभिधानमात्रेण व्यवहारस्य सिद्धेः । किं चैकस्मिन्नप्यवयवबहुत्वाभिप्रायेण छान्दसो बहुवचनप्रयोगोऽवकल्पते । अतो गुणेऽन्यायकल्पनाया अदुष्टत्वात् प्रकरणानुरुद्धो विकल्प एव युक्त इति । एवं चात्र सूत्राणां वेदार्थनिश्चायनाय प्रवृत्तत्वेन संख्यावदेकदेशत्वाभावात् तदन्यथानयने मीमांसाद्वयस्य वेदस्य च विप्लवापत्तेरिति । वस्तुतस्तु ।

'युक्तिभिरतिशिथिलाभिः समादधानो दृढान् दोषान् ।
वाचस्पतिरपि भाष्ये व्याख्याव्याजेन दूषणं ब्रूते' ॥

इति बोध्यम् ॥ १८ ॥

### इति पञ्चममानन्दमयाधिकरणम् ॥ ५ ॥

अन्तस्तद्धर्मोपदेशात् ॥ १९ ॥ अथ य एष इत्यादि । इदं छान्दोग्ये प्रथमप्रपाठके श्रूयते । विषयवाक्यमुपन्यस्य संशयाकारमाहुः किमित्यादि । तथाचात्र त्रिकोटिकः

रश्मिः ।

प्रातिपदिकं मुख्यम् । धर्मिवाचकत्वात् । विभक्तिस्तु गुणभूता कर्मकरणादिसंबन्धरूपधर्मवाचकत्वात् । संख्यायास्तु विभक्त्यपेक्षयापि गुणत्वं विभक्तिवाच्यकर्मकारकगतसंख्याभिधायित्वादिति बोध्यम् । यद्वा, प्रातिपदिकार्थान्वितविभक्त्यभिहितकर्मकारकातिरिक्तमसंभवद्वस्तुत्वं गुणत्वं तस्माद्गुणत्वात् । संख्याविवक्षितापीत्याहुः किं चैकस्मिन्नित्यादि । गुण इत्यादि संख्यायां पाशावयवगतबहुत्वसंख्यालक्षकत्वकल्पनाया इत्यर्थः । एवं संख्यामुक्त्वा तस्य दृष्टान्तस्य वैषम्यमाहुः एवं चेत्यादिना । व्याख्याव्याजेनेति यथावयवप्रायपाठबाधश्च विकारप्रायपाठबाधेन तुल्यः इति । स्वपक्षे दोषमनुद्धार्य परपक्षे दोषदानरूपवितण्डासत्त्वात् ॥ १८ ॥

### इति पञ्चमाधिकरणम् ॥ ५ ॥

अन्तस्तद्धर्मोपदेशात् ॥ १९ ॥ श्रूयत इति । श्रुत्यर्थस्तु हिरण्मयो ज्योतिर्मयः । पुरुषः पुरि शयनात् । दृश्यते समाहितचेतोभिः । आप्रणखादानखाग्रम् । तेन सर्वोपि सुवर्णप्रचुरः । अक्ष्णोर्विशेषमाह कपेरासनमिव तेजस्वि पुण्डरीकमेवंभूते तस्याक्षिणी तस्योदितिरिति नाम ।

संशयः। किमधिष्ठातृदेवताशरीरमाहोस्वित् परब्रह्मेति, ब्रह्मणो वा शरीरमिति। तदर्थमिदं विचार्यते। हिरण्मयशब्दः सुवर्णविकारवाची, आहोस्वित् प्रकाश-साम्येनानन्दवाचीति। ब्रह्मविदाप्नोति परमित्युपक्रम्य आनन्दमयस्य फलत्व-

भाष्यप्रकाशः।

संशय इत्यर्थः। तदर्थमिदं विचार्यत इति तादृशसंशयोत्पत्त्यर्थं तस्य बीजं विचार्यत इत्यर्थः। तदाहुः हिरण्मयेत्यादि। ननु जन्माद्यधिकरणसमन्वयाधिकरणाभ्यां लक्षणकथनादिना सप्रकारां कारणतां विचार्येक्षत्यानन्दमयाधिकरणाभ्यामसंभवादिदोषनिरासेन सा

रश्मिः।

एतज्ज्ञानफलमाह उदेतीति। एतदग्रे तस्यर्क् साम च गेष्णौ तस्मादुद्गीथस्तस्मात्त्वेवोद्गातैतस्य हि गाता स एष ये चामुष्मात्परात्पराञ्चो लोकास्तेषां चैव देवकामानां चेति पठितं तदग्रे इत्यधिदैवत-मिति। तदग्रेऽथाध्यात्ममिति। तदग्रे वागेवर्क् प्राण इत्यादि। तदग्रे अथ यदेतदक्ष्णः शुक्लं भा इत्यादि। तदग्रे य एषोन्तरक्षिणि पुरुषो दृश्यत इति एतासामर्थोऽग्रे वक्तव्यः। किमित्यादीति। अत्र भाष्ये। अधिष्ठात्रित्यादि। हिरण्मयवपुरिति वक्ष्यमाणवाक्यादित्यर्थः। इदमेव वाक्यं ब्रह्मण इत्यादावपि ज्ञेयम्। विचार्यत इति यथा दृश्यमानशाखान्नातिवर्तेत द्विकोटिकश्च भवेदित्यर्थः। हिरण्मये-त्यादीति। अत्र भाष्ये। आनन्दवाचीति 'आनन्दरूपममृतं यद्विभाति' इति श्रुतेः प्रकाशस्यानन्दे-न्यत्र च साम्येनानन्दवाचीत्यर्थः। गौणी लोके हिरण्मयस्यानन्दजनकत्वात् जन्यजनकभावसंबन्धो लक्षणा। ज्ञानं जातिस्तस्यात्र भातीत्यनेनामृतनिष्ठभावानुकूलव्यापारकथनेन कथनात्। व्यापारस्यानात्म-त्वात्। जातौ शक्तिराकृत्यधिकरणानुरोधात्। विशिष्टे शक्तिरिति द्वितीयसुबोधिन्याम्। व्यक्तौ शक्तिरिति प्रस्थानरत्नाकरे उभयशास्त्रफलितमुक्तम्। 'सत्यं ज्ञानमनन्तमानन्दं ब्रह्म' इति भाष्यश्रुतेः आनन्दविशिष्टे ज्ञाने ब्रह्मपदशक्तिर्वा। अन्यस्माद्वाङ्निवृत्तिश्रुतेः। तत एव तद्धर्मशक्तेरपि। न च ज्ञानत्वविशिष्टे ज्ञानस्यानन्दत्वविशिष्टे आनन्दस्य शक्तिः जातौ विशिष्टे व्यक्तौ वा। सत्ताया विद्यमानत्वेप्यात्मान-तिरेकात्। ज्ञानानन्दवद्वर्तमानत्वेपि सत्तामात्रमित्यत्र देवकीस्तुतौ धर्मताप्रतिषेधात्। नन्वेवं सति ज्ञानवत्त्वेनात्मानं व्यमाह्वीस्त्वं तथा सति वेदस्यात्मपदादेर्ज्ञानादिमति लक्षणान्नाजूगुपदिति चेन्न। सत्यं ज्ञानमनन्तमानन्दं ब्रह्मेत्यत्र ज्ञानवत्त्वेनात्मानं व्यमाहुः। पूर्वे इति। वेदमीमांसायां सास्ति न तु वेदान्त-मीमांसायां, आनन्दत्वानन्दतत्संबन्धानामेकत्वात्। एकमेवाद्वितीयं ब्रह्मेति श्रुतेः। अतो लघुभूषणे।

'सत्यासत्यौ तु यौ भागौ प्रतिभावं व्यवस्थितौ।
सत्यं यत्तत्र सा जातिरसत्या व्यक्तयो मताः' ॥ ७२ ॥

प्रकृतेऽसत्यांशाभावाज्जातिरात्मा वाक्यपदीयात् आत्मा ब्रह्म कोशात् ब्रह्मज्ञानमिति स्पष्टम्। अत आनन्दे ज्ञानं जातिस्तद्वदन्यत्रापि। दूरत्वादुपाध्यधीनश्चाक्षुषः संशयोऽयं तु शाब्दो विरुद्धशब्दोपजन्यः। विरोधश्च सहानवस्थानलक्षणो हिरण्मये आनन्दत्वाभाव आनन्दे हिरण्मयत्वाभावो ह्यविदुषाम्। यद्यज्जनकं तत्तद्गुणकं यद्यद्गुणकं तत्तदात्मकमिति व्याप्तिभ्यां हिरण्मयस्यानन्दजनकत्वादानन्दत्वमिति चेद्विभाव्येत तदा तु हिरण्मयत्वरूपदृष्टोपाधिर्बलीयान्। सहावस्थानलक्षणविरोधं प्रापयिष्यति। तथा च शरीरत्वेनैकविधो दृष्टः परब्रह्मत्वेन चापर उद्भावितोतितेजस्विपदार्थदर्शनात्। न च संदेहो नोपपद्यते श्रुत्या 'ध्येयः सदा सवितृमण्डलमध्यवर्ती' इत्यग्निपुराणबाधादिति वाच्यम्। पुराणस्यापि पञ्चमवेदत्वादु-पबृंहणत्वाच्चेति। लक्षणेत्यादि आदिना प्रकारः स च निमित्तत्वादिः। असंभवेत्यादि। अव्याप्त्यति-

१. आनन्दम्।

श्रुत्वा द्वितीयोपाख्याने, स यश्चायं पुरुषे यश्चासावादित्ये स एकः स य एवंविदिति साधनस्यानन्दमयमात्मानमुपसंक्रम्येति फलं श्रुतम् ।

---

भाष्यप्रकाशः ।

परीक्षिता । तथा सति लक्षणप्रमाणाभ्यां ब्रह्मज्ञानस्य सौकर्यात् तावतैव च ततः फलसिद्धेः किमनेनाधिकरणेनेत्याकाङ्क्षायां पूर्वाधिकरणेनास्य संगतिं वक्तुमाहुः ब्रह्मविदित्यारभ्य, विचारारम्भ इत्यन्तम् । द्वितीयोपाख्यान इति यद्यपि प्रथमप्रपाठक एतादृशं वाक्यमस्ति । तथापि तत्र, स एको ब्रह्मण आनन्द इति गणितानन्दं प्रस्तुत्य तत्पठितं, न तु वाङ्मनसागोचरं प्रस्तुत्येति पूर्णब्रह्मविदस्तदनुपयुक्तमिति शङ्का स्यादतस्तदभावायैतदुक्तम् । अत्र हि सर्वान्ते एतदुक्त्वाग्रे, हावु हावु इत्यहोअर्थकेन शब्देन वीप्सया आश्चर्यमुक्त्वा, अहमन्नमित्यादिना सर्वात्मभावं ब्रह्मभावं चाह । तेनैतज्ज्ञानमक्षरसायुज्ये परब्रह्मसायुज्ये च फलोपधानायावश्यकमित्येतस्य कथनम् । नच भवत्वेवं, तथाप्यस्य विचारे किं बीजमिति वाच्यम् ।

रश्मिः ।

व्याप्त्यसंभवरहितोऽसाधारणधर्मो हि लक्षणमिति तथा । अशब्दत्वे लक्षणशब्दस्याप्रवृत्तेरसंभवः । आनन्दे ब्रह्मत्ववासनावतां जगज्जन्मादिकर्तृत्वस्याव्याप्तिर्लक्ष्यत्वात् । येषां त्वक्षरधियां तादृशवासनाभावस्तेषामतिव्याप्तिरानन्दे लक्षणस्येति ज्ञेयम् । परीक्षितेति यथा पूर्वतन्त्रे 'तस्य निमित्तपरीष्टिः' इतिसूत्रयता श्रीजैमिनिना परीक्षिता, तथोत्तरतन्त्रेपीति भावः । फलसिद्धेरिति ब्रह्मात्मविषयकशाब्दज्ञानरूपं फलमत्र । एतादृशमिति स यश्चायं पुरुषे यश्चासावादित्ये स एकः स य एवंविदिति । [सर्वात्मभावमित्यादि पृथिवी वान्नमित्यत्रात्मभावः सर्वात्मभावः व्याहृतिर्ब्रह्मभावात् पृथिव्यामाकाशः प्रतिष्ठित इत्यग्रेतनश्रुतेरन्तरिक्षमपि ज्ञेयम् । सर्वेषामात्मत्वं सर्वात्मभावः । अस्मत्पदार्थस्यात्मत्वमन्नस्य देहत्वमादिशब्देनाहमन्नाद इत्यादिनाकाशरूपान्नादरूपस्य ब्रह्मणो भावो ब्रह्मत्वं ब्रह्मभावः । आकाशोन्नाद इति श्रुतावाकाशशरीरं ब्रह्मेति श्रुतेर्ब्रह्मशरीरमाकाशः अहं श्लोककृदित्यादिना संघातकृत् ब्रह्मवदाकाशद्वारा । श्लोकृ संघाते ।] एतदिति आनन्दवल्ल्यां हि यतो वाचो निवर्तन्त इतिश्रुतिवाक्यानन्तरं 'एतं ह वाव न तपति किमहं साधु नाकरवम्, किमहं पापमकरवमिति' इति निरूप्य स एवं विद्वानित्यनेन वाङ्मनसागोचरं प्रस्तुत्यात्मप्रीणनमुक्तम् । एतमित्यस्यैवंविदमिति भाष्यम् । ज्ञानं च शाब्दमत्र सर्वेषु । अग्रे भृगुप्रपाठकेपि पूर्णब्रह्मवित्त्वं न हीयत इति एतत् द्वितीयप्रपाठकस्थं 'स यश्चायं पुरुषे' इति वाक्यमुक्तमिति भावः । यद्वा वारुण्यां विद्यायामानन्दमात्रपर्यवसितिदर्शनेनानन्दः पूर्णं ब्रह्म तत्प्रस्तावनाग्रे इत्येतदुक्तम् । ननु तर्हि अक्षरब्रह्मविदः एतदनुपयुक्तमत आहुः अत्र हीत्यादि । अहमन्नमित्यादिनेति 'अहमन्नमहमन्नमहमन्नम् । अहमन्नादोहमन्नादोहमन्नादः । अहं श्लोककृदहं श्लोककृदहं श्लोककृत् । अहमस्मि प्रथमजा ऋतास्य पूर्वं देवेभ्योऽमृतस्य नाभायि यो मा ददाति स इदेव मावाः अहमन्नमन्नमदन्तमाद्मि । अहं विश्वं भुवनमभ्यभवां सुवर्णज्योतिः य एवं वेद इत्युपनिषत्' इत्यनेनेत्यर्थः । अन्नान्तिकतया सर्वात्मभावं सर्वस्मिन्नात्मभावः सर्वात्मभावः । अन्नादान्तिकतया ब्रह्मभावं ब्रह्मणोन्नादस्य भावोन्नादत्वं, अत्र हि अन्नपदेन भोग्यमन्नादपदेन भोक्ता अग्रे कार्यकारणसंघातकर्तृत्वमेवं भवति 'श्लोकृ संघाते' इतिधातुपाठात् संघातकृत्त्व तद्भावत् । तेनेत्यादि । ज्ञानं शाब्दम् ।

तत्र सवितरि विद्यमानस्याब्रह्मत्वे फलं नोपपद्यत इति विचारारम्भः। तत्र हिरण्मयशब्दो विकारवाची। केशनखादयश्चोच्यन्ते शरीरधर्माः। 'मृता वा एषा त्वगमेध्या यत् केशश्मश्रू' इति शरीरमन्तरा नोपपद्यते। परिच्छेदश्चाधिदैविकादिवचनं च बाधकम्।

---

भाष्यप्रकाशः।

तस्यैवं भयं विदुषोऽमन्वानस्येत्यनेन मननाभावे भयस्योक्ततया तदापत्तेरेव बीजत्वादित्याशयेनाहुः तत्र सवितरीत्यादि। तथाचास्य हेतुतागर्भः प्रसङ्गोऽत्र संगतिरित्यर्थः। किं चायं जन्मादिसूत्रस्थविचारः सर्वस्याग्रिमविचारस्य मूलम्। तत्राग्रे, फलमत उपपत्तेरित्यनेन सर्वफलदाता भगवानेवेति वक्तव्यम्। ततोऽग्रे चतुर्थेऽध्याये निषेधमुखेन प्रतीकोपासना, विधिमुखेनाङ्गोपासनाश्चादित्यादिमतिसूत्रे वक्तव्यास्तत्र मतान्तरोक्तरीत्या प्रतीकोपासनानामब्रह्मपरत्वेऽपि तद्वाक्योक्तफलसिद्धिस्तदन्तःस्थाद् ब्रह्मण एवेति ज्ञापनायाङ्गोपासनानां ब्रह्मपरत्वे तदुक्तमवान्तरफलं तत्क्रतुत्वरूपं मुख्यं फलं च भगवत एवेति ज्ञापनाय चाप्येतद् बोध्यम्। तेनान्तःपदघटितेषु वाक्यान्तरेषु सत्स्वप्येतस्यैव विषयवाक्यत्वेनोदाहरणेऽप्येतदेव बीजमिति बोध्यम्। पूर्वपक्षमाहुः तत्रेत्यादि। विकारवाचीति मयट्त्वाद् विकारार्थकप्रत्ययवान्। नोपपद्यते इति मृतत्वक्संबन्धो नोपपद्यते। परिच्छेदश्चेत्यादि अन्तराऽऽदित्य इत्यनेनोक्तस्तदन्तर्वर्तित्वकृतः परिच्छेदः। इत्यधिदैवतमित्यनेनोक्तमाधिदैविकवचनम्। 'आध्या-

रश्मिः।

अक्षरेति वैधोऽविधानाश्नो नाक्षरसायुज्यं पृथिव्यास्तद्विकाराणामभावेहमन्नमित्यादौ ब्रह्माभानापत्तेः किं तु अक्षरकार्याविष्टाक्षरसायुज्यमतस्तेन सर्वात्मभावब्रह्मभावयोः सातत्येन फलोपधानापेक्षणेन स यश्चायं पुरुष इतिश्रुत्युक्तादित्यैक्यशाब्दज्ञानं फलोपधानायावश्यकमेवं परब्रह्मसायुज्यं न संयोगजन्यं कारणे व्यङ्ग्यत्वात् किं तु संयोगविप्रयोगसंचारिभावजन्यं वैराग्यरूपसंचारिणो मुख्यत्वमतो ब्रह्मभावः साधनं ब्रह्मविदिति श्रुतेः। उक्तश्रुत्युक्तं शाब्दं ज्ञानं फलोपधानायावश्यकं सहकारिकारणम्। एतस्येति श्रुत्युक्तशाब्दज्ञानस्य फले सायुज्ये सहकारिकारणोपधानाय सहकारिकारणभावाय। तदापत्तेरिति एवकारोप्यर्थे। फलोपधानायावश्यकत्वरूपबीजसमुच्चयाय। तथा चेत्यादि। भाष्ये। स यश्चायमिति श्रुतौ। सवितरीत्यादि फलमेतमानन्दमयमुपसंक्रम्येति श्रुत्युक्तमानन्दमानन्दमयोवसान इति श्रीभागवतोक्तं च श्रुतावेक इत्यानन्दमयैक्यम्। विचारेति अस्पष्टत्वेन विचारारम्भ इत्यर्थः। प्रकृते। अस्य हेतुतेति अस्याधिकरणस्यात्राधिकरणे। हिरण्मय आनन्दमय इत्यत्रानन्दमयत्वविशिष्टहिरण्मयज्ञानरूपविशिष्टज्ञाने विशेषणज्ञानस्य कारणत्वाद्धेतुता। एकसंबन्धिज्ञानमपरसंबन्धिस्मारकमिति नियमादधीतवेदान्तानां आनन्दमयरूपसंबन्धिज्ञानं संबन्धिन एकार्थप्रतिपादकत्वरूपसंबन्धेन हिरण्मयप्रतिपादकस्य वाक्यस्य स्मारकमिति स्मृतस्य हिरण्मयप्रतिपादनस्योपेक्षानर्हत्वमिति प्रसङ्गसंगतिः। वाक्यान्तरेष्विति। एतान्यन्यत्रैवान्यमतानुवादे लिखितानि। एतस्यैवेति उक्तमननमपि। एवकारोऽप्यर्थ इति फलोपधानावश्यकत्वमपि बीजम्। छान्दसं हिरण्शब्दं मत्वाहुः मयडित्यादि तथा च हिरण्यविकारवाचीति भाष्यार्थः। इत्यधीत्यादि। श्रुतिस्तु प्रथमविषयवाक्येऽन-

अतः सर्वथा तच्छरीरमिति मन्तव्यम् । चाक्षुषत्वाच्च । इन्द्रियवत्त्वं च श्रूयते । यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्येति । कपेरास आसनम् । आरक्तं तस्यासनं भवतीति । असभ्यतुल्यता च । अतो देहेन्द्रिययोर्विद्यमानत्वाज्जीवः

भाष्यप्रकाशः ।

त्मिकस्तु यः प्रोक्तः सोऽसावेवाधिदैविकः' इति स्मृतौ तस्याध्यात्मिकाभेदकथनादाध्यात्मिकस्य च जीवत्वात् तद्वचनमपि ब्रह्मत्वबाधकमित्यर्थः । आदिपदं, य एषोऽन्तरक्षिणीति, अथाध्यात्ममित्यादिनोक्तानामक्षिपुरुषधर्माणां संग्रहाय । अक्षिपुरुषविचारोऽपि, स यश्चायं पुरुष इति श्रुत्यर्थनिर्णयायेति बोध्यम् । मन्तव्यमिति उक्तहेतुभिर्निश्चेयम् । एवं देहत्वसाधनेन देहित्वं साधयित्वेन्द्रियवत्त्वं साधयति इन्द्रियेत्यादि । कप्यासमिति उपवेश-

रश्मिः ।

न्तरं तस्यर्क् च साम च गेष्णौ तस्मादुद्गीथस्तस्मात्त्वेवोद्गीतैतस्य हि गाता स एष ये चामुष्मात् पराञ्चो लोकाः तेषां चेष्टे देवकामानां चेत्यग्रे इत्यधिदैवतमिति पूर्वमुक्तम् । श्रुत्यर्थस्तु तस्योदितिनाम्नो गेष्णौ पृथ्व्याद्युक्तलक्षणे पर्वणी तस्मात्परमात्मोद्गीथः । यत एतस्योदिन्नाम्नो गाता तस्मादेवोद्गायति इत्युद्गातेत्युद्गातॄनामप्रसिद्धिः स एष उन्नामामुष्मादादित्यात् । किं च लोकाधिष्ठातारो देवास्तेषां कामानां फलानां चेष्टे ईशिता । इत्यधिदैवतमुद्गीथस्वरूपं देवस्येत्यर्थः । य एष इत्यादि । श्रुत्यर्थस्तु अथ भिन्नप्रक्रमे । अस्यां परिदृश्यमानायां । श्रुतिस्तु अथाध्यात्मं वागेवर्क् प्राणः साम तदेतदस्यामृच्यध्यूढ९साम तस्मादृच्यध्यूढ९साम गीयते इति । अग्रे वागेव सा प्राणोऽमस्तत्सामेति श्रुत्या सामनिर्वचनम् । इतराणि निर्वचनानि प्रोच्यन्ते चक्षुरेवर्गात्मा साम तदेतदस्यामृच्यध्यूढ९साम तस्मादृच्यध्यूढ९साम गीयते। चक्षुरेव सा आत्मामस्तत्साम श्रोत्रमेवर्ङ्मनः साम तदेतदस्यामृच्यध्यूढ९साम तस्मादृच्यध्यूढ९साम गीयते श्रोत्रमेव सा, मनोमः, तत्सामाथ यदेतदक्ष्णः शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत्साम तदेतदस्यामृच्यध्यूढ९साम तस्मादृच्यध्यूढ९ साम गीयते अथ यदेवैतदक्ष्णः शुक्लं भाः सैव साथ यं नीलं परः कृष्णं तदमः तत्सामेति अग्रेऽथ य एषोन्तरक्षिणि पुरुषो दृश्यते सैवर्क् तत्साम तदुक्थं तद्यजुः तद्ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्यरूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नामेति अस्या अर्थः । दृश्यते योगिभिरपि सार्वात्म्यमुद्दिष्टैरतिदिष्टैर्धर्मैः पूर्णात्मत्वं चक्षुष्ठपुरुषस्य । अतीति 'अन्यथैव प्रतीतायाः' इति कारिकोक्तातिदेशः । अतिदेशवाक्यगतं कार्यं स यश्चायमितिश्रुतावैक्यम् । नामेति नामनिर्वचनस्य तस्योदिति नाम 'स एष सर्वेभ्यः पाप्मभ्य उदितः' इतिश्रुतौ । सैव पुरुष ऋक् उत्तथ्यादन्यच्छन्दजातं लिङ्गव्यत्ययस्तु विधेयलिङ्गापेक्षया बोध्यः । तस्यैतस्य चक्षुष्ठपुरुषस्य तदेव रूपं परममुष्यादित्यरूपस्य हिरण्मय इति यौ ऋक्सामरूपौ अमुष्यादित्यपुरुषस्य गेष्णौ पर्वणी तावस्यापि गेष्णौ यदमुष्यादित्यरूपस्य पुरुषस्य नामोदिति उद्गीथ इति च तदेवास्य नामेति । अक्षिपुरुषेति मिथुनत्वशुक्लत्वादीनामित्यर्थः । नन्वेकयैव निर्वाहे द्वितीयस्याः किं प्रयोजनमित्याकाङ्क्षायां तदाहुः अक्षीत्यादि । तथा च स यश्चायं पुरुष इत्यत्र यच्छब्दार्थपुरःसरं श्रुत्यर्थनिर्णयायेत्यर्थः । तदग्रे स्पष्टीकरिष्यतेऽस्माभिः । फलं स्वस्याधिकारीत्यस्य व्याख्याने देहित्वमिति आदित्यान्तःस्वदेहित्वम् । भाष्ये । अत इत्यादि उक्तवाक्येभ्यः । कश्चिदिति विज्ञानमय इति सर्वोपनिषदि सूर्यविशेषणात् । अधिकारीति आनन्दमय इत्यर्थः ।

१. मिथुनम् । २. ब्रवीत्वमिति भेदः । ३. सुरमः । ४. तत्-अः-मः ।

कश्चिदधिकारी सूर्यमण्डलस्य इति गम्यते। फलं तत्सायुज्यद्वारेति। अथोच्येत, एष सर्वेभ्यः पाप्मभ्य उदित इति। अपहतपाप्मत्वादिधर्मश्रवणात्। पूर्वदोषस्यापि विद्यमानत्वाद् ब्रह्मण एव केनचिन्निमित्तेन शरीरपरिग्रह इति। तस्य च शरीरस्य कर्मजन्यत्वाभावादपहतपाप्मत्वादि संगच्छते। सुवर्णशरीरत्वमप्यलौकिकत्वाद् ब्रह्मण एव संगच्छते। शरीरवदिन्द्रियस्यापि परिग्रहः। वर्णमात्रपरिग्रहान्नासभ्यता। स्थावरापेक्षया जङ्गमस्योत्कृष्टत्वात् स्थावरावयवोपमानवज्जङ्गमावयवोपमानं स्थावरस्यापीति सर्वब्रह्मभावाय श्रुत्युक्तत्वाच। तस्माद्

---

भाष्यप्रकाशः।

नार्थकस्यासतेः करणे घञ्। कपेर्मर्कटस्यासनमधोभाग इव कप्यासम्। उपमावाचकपदलोपाल्लुप्तोपमा। तेन रूपकातिशयोक्तिः। ननु यदि स जीवः स्यात् तदा तैत्तिरीये परिकरान्तानामुपासनानामनन्तरं, स यश्चायमिति वाक्यं नोच्येत। तथा बृहदारण्यकीये, आदित्यो वा एष एतन्मण्डलं तपतीत्यनुवाके त्रयीविद्यात्मकत्वमुक्त्वा, आदित्यो वै तेज ओजो बलमिति तदग्रिमानुवाके ब्रह्मणः सायुज्यꣳ सलोकतामाप्नोतीति फलं नोच्येतेति शङ्कायामाह फलमित्यादि आनन्दमयोपसंक्रमणरूपं फलं स्वस्याधिकारिसायुज्यद्वारा भवतीत्येतदर्थं तदनन्तरमुच्यते। 'आदित्यो वै तेज' इत्यत्रापि ब्रह्मणः सायुज्यमित्याद्युक्त्वा, 'एतासामेव देवतानाꣳ सायुज्यꣳ सार्ष्टिताꣳ समानलोकतामाप्नोति य एवं वेद' इत्युच्यते। एवमधिष्ठातृदेवताशरीरकोटिः साधिता। ब्रह्मशरीरकोटिं साधयति अथोच्येतेत्यादि। अनया श्रुत्या असाधारणब्रह्मधर्मभावणादयं ब्रह्मैवेत्युच्येतेत्यर्थः। तद् दूषयति अपहतेत्यादि। स्थावरस्येति पुण्डरीकस्य। एवमुपमाप्रयोजनं तु ब्रह्मप्रवेशेन सर्वस्य ब्रह्मभावबोधनम्। ब्रह्मदाशा इतिवत्।

रश्मिः।

आनन्दमयो विज्ञानमयो 'विज्ञान आदित्यः' इति श्रुतेरानन्दमयफलाधिकारीत्यर्थः। प्रकृते। अनन्तरमिति उपासनायाश्चित्तशुद्धिः। नोच्येतेति। स्वस्याधिकारीति। अत्रायं, स यश्चायं पुरुष इतिश्रुत्यर्थनिर्णयः। यश्चायं पुरुषः अन्तरक्षिणि पुरुषः कुतोयं निर्णयः प्रसिद्धपुरुषार्थत्यागेन। एवं तु स्यात्, अत्रैकपदेनाभेद उच्यते, स नाविद्यावच्छिन्नमायावच्छिन्नयोः संभवतीति प्रसिद्धं परित्यज्याक्षिस्थितो मायावच्छिन्नपुरुषो गृह्यते। तस्य ब्रह्मत्वमग्रेऽधिकरणे वक्ष्यते इति एवमभेद उपपन्नः। सार्ष्टितामिति समाना ऋष्टिः ऋद्धिः। जीवस्योपासाफलत्वायोगात्। इति फलमिति। आदित्यो वै तेज ओजो बलमिति ज्ञानस्य फलम्। ब्रह्मण इति षष्ठ्या विभाजितं जीवात् ब्रह्मेति। सैषा त्रय्येव विद्या तपति य एषोन्तरादित्ये हिरण्मयः पुरुष इत्युक्तहिरण्मयः। अयं ब्रह्मैवेति पदत्रयमध्याहृत्य भाष्यं योजयन्ति अनयेत्यादिना। उच्येत इति विधावधीष्टे वा लोट्। अपहतेत्यादीति। भाष्ये। पूर्वदोषस्येति विकारमयडन्तपदप्रतिपाद्यत्वस्य। प्रकृते। सर्वब्रह्मेति भाष्यं विवृण्वन्ति स एवमुपमेति। ब्रह्मप्रमेत्यादि तत्सृष्ट्वा तदेवानुप्राविशदितिश्रुत्युक्तेन। सर्वस्येत्यादि जङ्गमस्थावररूपस्य, ब्रह्मभावो ब्रह्मत्वं समत्वं 'निर्गुणं हि समं ब्रह्म' इतिश्रुतेस्तस्य बोधनम्। ब्रह्मदाशेति 'सर्वं खल्विदं ब्रह्म' इति श्रुत्या सर्वस्य ब्रह्मत्वेपि सेव्यं ब्रह्मपदवत् सेवकेन्तःकरणारूढं न भवतीति ब्रह्मत्वविधानं तद्वदसंभ्येप्युपमानत्वं न भविष्यति तत्परिहारायैवमसम्योपमेत्यर्थः। इतिवदिति यथा वृषावस्तु क्षेपण इत्यस्यास इतिरूप-

ब्रह्मण एवेदं शरीरमित्येवं प्राप्ते, उच्यते ।

अन्तस्तद्धर्मोपदेशात् ॥

अन्तर्दृश्यमानः परमात्मैव । कुतः । तद्धर्मोपदेशात् । तस्य ब्रह्मणो धर्मा उदित्यादिधर्मा उपदिश्यन्ते । 'स एष सर्वेभ्यः पाप्मभ्य उदितः' इति । अयमाशयः । ब्रह्म कारणं, जगत्कार्यमिति स्थितम् । तत्र कार्यधर्मा यथा कारणे न गच्छन्ति । तथा कारणासाधारणधर्मा अपि कार्ये । तत्रापहतपाप्मत्वादयः कारणधर्मास्ते यत्र भवन्ति तद् ब्रह्मेत्येवावगन्तव्यम् । बलिष्ठत्वात् कारणधर्मस्य । नामतुल्यतामात्रमुभयेषामपि धर्माणाम् । ते श्रुत्येकसमधिगम्या ब्रह्मणि । लोके प्रमाणा-

भाष्यप्रकाशः ।

स्फुटमन्यत् ।

सूत्रं पठित्वा समादधते अन्तरित्यादि । ननु बाधकानां बहूनामुक्तत्वाद्धर्मोपदेशमात्रेण कथं ब्रह्मत्वनिश्चय इत्यतस्तद् व्युत्पादयन्ति अयमाशय इत्यादि । स्थितमिति पूर्वाधिकरणैर्निर्णीतम् । कार्यधर्मा इति कार्यासाधारधणर्माः । दृष्टं चैतत् । न हि घटीया जलाहरणयोग्यत्वादयो मृत्पिण्डकपालादौ गच्छन्ति । न वा मृत्पिण्डादिसंस्थानविशेषा घटादौ । अथ यदि गच्छेयुस्तदा कार्यकारणयोर्वैलक्षण्यं न भवेत् । कार्यकारणव्यवहारश्च भज्येत । अतो ये असाधारणा धर्मास्तेऽन्यत्र न गच्छन्तीति नियतम् । तत्र प्रकृतवाक्ये, 'तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदितः' इत्यनेनोक्तमपहतपाप्मत्वम् । तथा आदिपदेनाक्षिपुरुषवाक्ये 'सर्क् तत्साम तदुक्थं तद्यजुस्तद् ब्रह्म तस्यैतस्यैतदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम'इत्यनेनोक्तमृक्सामादिसार्वात्म्यं यन्नाम तन्नामेत्यतिदिष्टं नामनिर्वचनहेतुभूतमपहतपाप्मत्वं च, 'य आत्मा अपहतपाप्मा' इतिश्रुत्यन्तरे ब्रह्मासाधारणधर्मत्वेन सिद्धम् । तथा, इदं सर्वं यदयमात्मेति श्रुत्यन्तरसिद्धं सार्वात्म्यं च कारणभूतब्रह्मासाधारणधर्मरूपं नान्यगामि तदत्रोपदिश्यते । एवमन्येऽपि श्रुत्यन्तरोक्ता असाधारणा ब्रह्मधर्मा यत्र भवन्ति तद् ब्रह्मेत्येवावगन्तव्यम् । तेन सूत्रे अन्तःपदं स्थानान्तरस्याप्युपलक्षकं, न तु तावन्मात्रपर्यवसन्नमिति बोधितम् । नच केशनखादीनां कार्यधर्माणामपि बोधनात् कथं विनिगमनेति शङ्क्यम् । उपजीव्यत्वेन नित्यत्वेन च कारणधर्मस्य बलिष्ठत्वात् । न चापहतपाप्मत्वं स्वाध्याये मुख्यप्राणे चोच्यते, सार्वात्म्यं च चतुर्मुखादावतः कथमसाधारणत्वमिति शङ्क्यम् । यतो नामतुल्यतामात्रमुभयेषां धर्माणाम् । स्वाध्यायादौ ह्यपहतपाप्मत्वं पापराहि-

रश्मिः ।

मसत आसोसिग्नित्यधिकरणार्थकघञा सिद्ध्यतीत्युक्तं तद्भाष्यासंमतम् । स्फुटमिति । अत्र भाष्ये वर्णमात्रेत्यादिमात्रपदेन कपेरासनरूपस्य द्रव्यस्य व्यवच्छेदः । प्रकृते । उक्तत्वादिति पूर्वपक्षे तथा । सर्क् तत्सामेति व्याख्यातैषा । अव्याख्यातमाहुः सार्वात्म्यमित्यारभ्य य इत्यन्तम् । ऋक् सामेति हेतुभूतम् । इदं सर्वमिति इदं परिदृश्यमानं सर्वं यत् तदयमात्मेत्यर्थः । सार्वात्म्यमिति अयमात्मेत्यतिदिष्टं जगन्निष्ठमिदम् । अन्य इति अस्तिभात्यादयः । तेनेति । अथवा 'य एषोन्तरक्षिणि पुरुषो दृश्यते' इत्यादावक्षिपुरुषेपि तद्धर्मोपदेशेन । तावन्मात्र इति । आदित्यमण्डलान्तःस्थमात्रेत्यर्थः । बलिष्ठत्वादित्यादिभाष्यं विवृण्वन्ति न च केशेत्यादि । नामतुल्यतामात्रमित्यादिभाष्यं विवृण्वन्ति न चापेत्यादिना । कथमित्यत उपपादयन्ति स्वाध्यायेत्यादि ।

न्तरमपि प्रवर्तते। अतः सर्वरसादयो ब्रह्मनिष्ठा एव धर्माः। स्थूलत्वादयस्तु ये ब्रह्मणि निषिध्यन्ते, अस्थूलादिवाक्येषु ते कार्यधर्माः। अणोरणीयानित्यादिषु कारणधर्मा एव। अत एकोऽप्यसाधारणो धर्मो विद्यमानः शिष्टान् संदिग्धानपि ब्रह्मधर्मानेव गमयति। इममेव श्रुत्यभिप्रायमङ्गीकृत्य सर्वत्र ब्रह्मवाक्यनिर्णयमाह

भाष्यप्रकाशः।

त्वरूपं, स्वाध्यायो देवपवित्रमिति य एवंविदि पापं कामयत इति तत्र तत्र लिङ्गात्। अत्र तु सर्वकर्माञ्जनराहित्यरूपम्। 'अनन्वितं ते भगवन् विचेष्टितं यदात्मना चरसि च कर्म नाज्यसे' इति श्रीभागवतवाक्यात्। एवं चतुर्मुखादिसार्वात्म्यमपि साङ्कुशम्। 'अविज्ञाय परं मत्तः एतावत्त्वं यतो हि मे' इति द्वितीयस्कन्धे नारदं प्रति ब्रह्मवाक्यात्। अत उदित्यादीनामेवं कारणभूतब्रह्मासाधारणधर्मत्वे सिद्धे तत्सहपठितानां दृश्यत्वहिरण्यश्मश्रुत्वादीनामपि ब्रह्मधर्मत्वमेव बोध्यम्। यतस्ते श्रुत्येकसमधिगम्या ब्रह्मणि। लोके तु तेषां गमकं प्रमाणान्तरमपि वर्तते। अत एतद्वत् 'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः' इत्यादिश्रुत्यन्तरोक्ताः सर्वरसादयोऽपि ब्रह्मनिष्ठा एव धर्मा बोध्याः। श्रुत्येकसमधिगम्यत्वस्य तेष्वपि तौल्यात्। नचैवं सति स्थूलत्वादिप्राप्तिः शङ्क्या। तेषां श्रुत्या निषिध्यमानत्वेन कार्यधर्मत्वात्। नच ब्रह्मणि विरुद्धधर्माश्रयत्वस्याग्रे व्युत्पादनीयत्वात्, 'आसीनो दूरं व्रजति', 'अणोरणीयान् महतो महीयान्' इत्यादिषु सहावस्थानविरुद्धक्रियाधर्मयोरिव भावाभावविरुद्धस्थूलत्वतदभावयोरपि शक्यवचनत्वादेतेषां कारणधर्मत्वमेवास्त्विति शङ्क्यम्। इतः पूर्वं गार्ग्या उपादानकारणबोधार्थं कार्याणां प्रकृततया याज्ञवल्क्येन कार्यविलक्षणकारणबोधनार्थं कार्यधर्माणामेव निषेधात्। अन्यथा प्रकृतिविरोधापत्तेः। न चैवमनण्वित्यनेन निषिद्धस्याणुत्वस्य, स य एषोऽणिमेत्यादिषु श्रूयमाणस्य का गतिरिति शङ्क्यम्। तत्राणोरणीयानित्यादिषु तु, सप्त प्राणाः प्रभवन्तीत्यादिभिः कार्यस्याग्रे वक्ष्यमाणतया ततः पूर्वं श्रूयमाणानां कारणधर्मत्वेन तद्भिन्नत्वात्। 'ऐतदात्म्यमिदं सर्वम्', महतो महीयानित्यादि तद्विरुद्धधर्मसामानाधिकरण्यश्रावणेन तथानिश्चयात्। एवमन्यत्रापि बोध्यम्। अत एकोऽप्यसाधारणधर्मो विद्यमानः शिष्टान् संदिग्धानपि धर्मान् ब्रह्मधर्मत्वेनैव गमयति। अन्यथाऽन्यगामित्वेन तस्यासाधारण्यभङ्ग-

रश्मिः।

पवित्रमिति। पावित्र्यं पापाभाव इति भावः। श्रुती तु एकतरा सह वै पन्नायामारणे 'अपहतपाप्मा स्वाध्यायो देवपवित्रम्' इति। द्वितीया छान्दोग्ये मुख्यप्राणकृतपापविध्वंसनानन्तरं 'य एवंविदि पापं कामयते यश्चैनमभिदासति स एषोऽश्माखणो नैवैतेन सुरभिर्न दुर्गन्धि विजानात्यपहतपाप्मा ह्येष इति'। पापं कर्तुं इ कामयते। अभिदासति हिनस्ति, स प्राणवित्, अश्मा आखणः तद्वदप्रधर्षणीय इत्यर्थः। एतेन मुख्यप्राणेन न विजानाति स्थानदोषाद् घ्राणदेवता पाप्मना विद्धा मुख्यस्थानबलीयस्त्वात् मुख्यप्राणदेवता न विद्धेत्यपहतपाप्मत्वम्। लिङ्गादिति पाप्मभावलिङ्गात्। ते श्रुत्येकसमधिगम्या इत्यादि भाष्यं विवृण्वन्ति स्म अत उदित्यादि। प्रमाणान्तरमिति प्रत्यक्षमित्यर्थः। स्थूलत्वेत्यादिभाष्यं विवृण्वन्ति स्म न चैवमित्यादिना। अग्रे इति उभयव्यपदेशाधिकरणादौ। उपादानेत्यादि 'सा होवाच यदूर्ध्वं याज्ञवल्क्य दिवो यदर्वाक् पृथिव्याः यदन्तरा द्यावापृथिवी इमे यद्भूतं यच्च भवच्च भविष्यच्चेत्याचक्षते। कस्मिन्नेव तदोतं च प्रोतं च' इति गार्गिब्राह्मणे प्रश्नश्रुतेरित्यर्थः। याज्ञवल्क्यो यज्ञवक्ता वल्क परिभाषणे इति धातुपाठात्। अणोरणीयानित्यादिभाष्यं विवृण्वन् न चैव-

सूत्रकारः । तथाच श्रुतिव्यतिरिक्तस्थले तथैवावगन्तव्यम् । अनन्तमित्यनन्तमूर्तिता च ब्रह्मणः प्रतिज्ञाता । अन्यथा गुहायां निहितमिति विरुद्ध्येत । तस्मात् साकारं तादृशमेव ब्रह्म ।

भाष्यप्रकाशः ।

प्रसङ्गात् । तथाच यत्र निषिद्ध्यन्ते तत्र तदनुरोधात् ते लौकिकाः कार्यधर्मा एव । यत्र च न निषेधस्तत्रालौकिका ब्रह्मात्मकास्ते धर्माः, नेह नानास्तीतिश्रुत्यनुसारेणावगन्तव्याः । इममेव श्रुत्यभिप्रायमङ्गीकृत्य सर्वेष्वधिकरणसूत्रेषु ब्रह्मवाक्यनिर्णयमाह सूत्रकारः । अन्यथा, आदित्यान्तरस्थ्यन्तइत्येवमधिकरणं विशिंष्यात् । तथाचेदं सिद्धम् । यत्र निश्चिते कार्यत्वे तस्य कारणाभेदेन स्तुतिः क्रियते, यथेन्द्रप्रतर्दनसंवादादौ तत्र नेयं रीतिः । तद्व्यतिरिक्तस्थले त्वेवमेवावगन्तव्यमिति । न चैवं परिच्छिन्नेषु नानास्थानेषु नानापरिमाणेन स्थितौ ब्रह्मणोऽनेकत्वापत्त्या, एकमेवाद्वितीयमित्यादिश्रुतिविरोध इति शङ्क्यम् । यतः सत्यं ज्ञानमनन्तं ब्रह्मेति लक्षणवाक्य एवानन्तमित्यनेन ब्रह्मण आनन्त्यकथनेऽनन्तमूर्तिता च प्रतिज्ञाता । नचात्र मानाभावः । निहितं गुहायामिति हृदयाकाशनिधानकथनस्यैव मानत्वात् । अन्यथा गुहायां निहितमिति विरुद्ध्येत । अनन्तमूर्तित्वाभावे व्यापकतया सर्वस्य तदन्तःस्थत्वात् । इदं च श्रुत्यन्तरेऽप्युक्तम् । 'यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात्' इति । तस्माद् ब्रह्मण एकत्वेन व्यापकत्वेऽप्यनन्तमूर्तित्वात् । साकारं वेदैकवेद्यत्वात् । यादृशं

रश्मिः ।

मित्यादि । तथा च यत्रेति अस्थूलादिश्रुतिषु न निषेध इति । तदनुरोधादिति नित्यस्य निषेधायोगेन निषेधानुरोधादित्यर्थः । न निषेध इति यथात्र । नेह नानेति श्रुतिर्बृहदारण्यके । इममेवेत्यादिभाष्यं व्याकार्षुः इममित्यादिना । एकोप्यसाधारणो धर्मो मयि विद्यमान संदिग्धानपि ब्रह्मधर्मानेव गमयत्विति संकेतान्तस्याभितो गमनं प्रायोभूम्यन्तगमनमित्यर्थादित्यर्थः । अधिकरणेत्यादि सूत्रपदं यत्र सूत्रमवतारणमाभासते तत्संग्रहाय । यथा शब्दाधिकरणे सूत्रप्रयोजनं बोधयितुं संशयादिकमाहुरिति । अन्यथेत्यादि अधोक्षजत्वेन यत्र च न निषेध इत्याद्यङ्गीकारे इत्यर्थः । विशिंष्यादिति न तु तद्धर्माधिकरणमिति तद्धर्मेण विशिंष्यादिति भावः । अन्तस्त्वस्य सर्वप्रसिद्धस्याधोक्षजत्वेपि नटवत्त्यागायोगात् तथा । तथाचेत्यादिभाष्यं विवृण्वन् तथाचेत्यादि । इन्द्रेत्यादि इयमाख्यायिकानुगमगाधिकरणे व्याचरीकरिष्यते मामेव जानीहीतीन्द्रेण लोकपालादिकं मामेव जानीहीति स्वात्मा स्तुतः । आदिपदेन पुरुषविधब्राह्मणे 'तद्धै तत्पश्यन्नृषिर्वामदेवः प्रतिपेदेहं मनुरभवमहं सूर्यश्चेति तदिदं मप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति' इति । अत्र स इदमित्यादिस्तुतिः । अविद्यमानस्य सर्वभवनरूपस्योत्कर्षाधायकगुणस्य जीवीयस्य वर्णनाच्छुत्या । नेयं रीतिरिति इन्द्रिया अपि धर्मा अधोक्षजत्वेनादृष्टा ब्रह्मधर्मा इति गमयतीति रीतिर्नास्थूलत्वादिनिषेधादित्यर्थः । तद्व्यतीति श्रुतावपि तावन्निषेधव्यतिरिक्तस्थले इत्यर्थः । यथात्रादित्यादिपुरुषयोः । भाष्यादाहुः एवेत्येवकारम् । तद्व्यतिरिक्तस्थलानि तु भ्रुदाहृतान्युदाहरिष्यन्ति च । अनन्तमित्यादिभाष्यं विवृण्वन्त आहुः न चैवमित्यादि । मानाभाव इति ।

१. शब्दादेवाधिकरणे ।

ब्रह्मणः शरीरमिति तु सर्वथा असंगतम्। सर्वकर्तुर्ब्रह्मणः का वा अनुपपत्तिः स्याद् येन स्वस्यापि शरीरं कल्पयेत्। किं तु लीलया व्यामोहनार्थमन्यथा भासयेन्नटवत्।

भाष्यप्रकाशः।

यत्र स्थाने यद्वाक्य उच्यते तादृशं तत्र ब्रह्मेति मन्तव्यमिति सिद्धमित्यर्थः। एवमधिष्ठातृदेवतापक्षं निराकृत्यात्र ब्रह्मैवोच्यत इति स्थापितम्। अतः परं साधकानुग्रहार्थं ब्रह्मण एव शरीरमिति पक्षं निराचक्षते ब्रह्मणः शरीरमित्यादि। असंगतत्वे हेतुमाहुः सर्वकर्तुरित्यादि। अयमर्थः। यदत्र शरीरमङ्गीकृतं तत् किं नित्यमुतानित्यम्। नाद्यः। अद्वितीयश्रुतिव्याकोपात्। सच्चिदानन्दादतिरिक्तवस्त्वभावस्य प्रागेवोपपादितत्वेन ब्रह्मात्मकताया एवापाते शरीरत्वस्याशक्यवचनत्वाच्च। अन्यथा पुरुषविधब्राह्मणोदितायाः, सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यदित्यनुवीक्षाया विरोधापत्तेश्च। द्वितीयपक्षेऽपि तच्छुद्धसत्त्वात्मकं वा प्राकृतं वा मायिकं वाङ्गीकार्यम्। तत्र कर्त्रपेक्षायां ब्रह्मण एव कर्तृत्वं च वाच्यम्। तत्रान्यानपेक्षतया सर्वकर्तुर्ब्रह्मणः का वा अनुपपत्तिः स्याद् येन स्वस्यापि शरीरं कल्पयेत्। अतो मूलरूपे नास्त्येव शरीरम्। किंतु स्वरूपमेव तदाकारम्। 'प्राणन्नेव प्राणो भवति वदन् वाक्' इतिवच्छरीरकार्यं कुर्वन् लीलया व्यामोहनार्थं शरीरवद्भासयेन्नटवत्।

रश्मिः।

भाष्येऽनन्तमित्यनन्तानन्द इत्यानन्दविशेषणादिति भावः। यत्र स्थान इति परिमाणनिरूपणस्थले वैश्वानराधिकरणे। यद्वाक्ये 'प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' इतिवाक्ये। तादृशमिति। न च सुषुप्तौ ब्रह्मज्ञानेऽभावतया विषयत्वात् नेदमिति वाच्यम्। अभावापेक्षयाऽसतोतिरेकात्। न चेदानींतनानां ब्रह्मविदामप्रतीतिविषयत्वात् नेदमिति वाच्यम्। नित्यलीलाधिकृतकानां कृतपुण्यपुञ्जानां प्रतीतिविषयत्वात्। एतेन शंकरभाष्यीयं यत्तूक्तं हिरण्यश्मश्रुत्वादिरूपश्रवणं परमेश्वरे नोपपद्यते इत्यत्र भ्रमः। स्यात्परमेश्वरस्यापीच्छावशात् मायामयरूपं साधकानुग्रहार्थं 'माया ह्येषा' इति स्मरणात्। इति तत्र विशेषोऽदर्शि। तत् 'ज्ञानमात्रं परं ब्रह्म' इति पक्षे

'आत्ममायामृते राजन् परस्यानुभवात्मनः।
न घटेतार्थसंबन्धः स्वप्नद्रष्टुरिवाञ्जसा'॥

इति नवमाध्यायसिद्धान्तात् द्वितीयस्कन्धे। स्वरूपं तु सत्यं ज्ञानमनन्तानन्दमिति भेदः। प्रागेवेति ईक्षत्यधिकरणाभासे। तथा च भाष्यम् 'सच्चिदानन्दरूपेणाकाशवायुतेजोवाचकवाक्यानि षड्विधान्यपि निर्णीयन्ते' इत्यादि। शुद्धेत्यादि 'विशुद्धसत्त्वं तव धाम शान्तम्' इति श्रीभागवते 'सैषा विद्या जगत्सर्वम्' इति नृसिंहतापिनीये 'मायाभिः पुरुरूप ईयते' इति च शंकराचार्यमते। सिद्धान्ते प्रकृतेर्मायावज्ज्ञानमात्रदेहसाधकत्वात् मायाप्रकृत्योर्भेदः। ब्रह्मणः शरीरमितिभाष्यं व्याचक्रुः द्वितीयेति। तदसंगतमिति भाष्यविवरणम्। तत्रेति शरीरे। तथा चानवस्थादोषादिति तु सर्वथाऽसंगतमित्यर्थः। सर्वकर्तुरिति भाष्यविवरणम्। तत्रेत्यादि शरीरे, कर्तव्ये शरीरानपेक्षतया। सर्वकर्तुरिति एवं च सर्वकरणेपि तदनपेक्षमेवाविशेषादिति भावः। किं त्विति भाष्यं विवृण्वन्ति स्म आत इति। स्वरूपमिति स्वरूपमगमत् 'किल यस्य गोपवध्वः' इति वाक्यात् प्राकृतं स्वरूपम्। प्राणन्नित्यादिश्रुतिर्बृहदारण्यके 'समान एवं चावेदात्' इत्यत्र तार्तीये कृष्णावतारभेदस्य वेदस्तुतौ च प्रतिपादना-

तस्माद् वेदातिरिक्तेऽप्युपपत्तिपूर्वकं यत्र ब्रह्मधर्मस्तद् ब्रह्मेति मन्तव्यम् । ब्रह्म तु वेदैकसमधिगम्यं यादृशं वेदे प्रतिपाद्यते तादृशमेवेत्यसकृदवोचाम । प्रकृतेऽपि हिरण्मय इत्यत्र यकारलोपश्छान्दसः । अतो न मयट् । हिरण्यशब्द

भाष्यप्रकाशः ।

'यथा मत्स्यादिरूपाणि धत्ते जह्याद्यथा नटः ।
भूभारः क्षपितो येन जहौ तच्च कलेवरम्' ॥

इति प्रथमस्कन्धवाक्यात् । अतो यादृशं प्रतीयते तादृशं तद् ब्रह्मैव । येषां पुनर्न मोक्षाधिकारस्तेषां तच्छरीरवद्भासत इति निश्चयः । एतमेव निर्णयमन्यत्रातिदिशन्ति तस्मादित्यादि । ननु किमित्येवं निर्बन्धेन सर्वाकारं निरूप्यते । निर्विशेषमेवोपासकानुग्रहाय मायया शरीरं कल्पयतीत्येव कुतो न कल्प्यते इत्याकाङ्क्षायामाहुः ब्रह्म त्वित्यादि । ननु भवत्वेवं, तथापि प्रकृते हिरण्मय इत्यत्र विकारवाचिनो मयटः प्रयोगः । हिरण्मयशब्दस्य, दाण्डिनायनसूत्रे निपातनाद्विकारत्वसिद्धौ कथं ब्रह्मत्वनिर्णय इत्यत आहुः प्रकृतेऽपीत्यादि । तथाच श्यच्त्वेन विकारप्रत्ययाभावान्नायं निपातः किंत्वत्र छान्दस एव यकारलोप इत्यर्थः । ननु पूर्वं स्वरूपलक्षणविचारे ब्रह्मणः सत्यज्ञानानन्दरूपत्वमेव सिद्धं न हिरण्यरूपत्वमिति हिरण्मयस्याविकारत्वेऽपि ब्रह्मत्वं वक्तुमशक्यमतः शरीरत्वमेवाङ्गीकार्यमित्यत आहुः हिरण्यशब्द इत्यादि । यद् यज्जनकं तत् तद्गुणकं, यद् यद्गुणकं तत् तदात्मकमिति व्याप्त्योः पूर्वं साधितत्वादत्रानन्दसाधकत्वेनानन्दात्मकत्वे विकारभूतस्य लौकिकस्यापि हिरण्यस्य सिद्धे कारणभूतस्याविकारस्यानन्दात्मकत्वे बाधकाभावाद्धिरण्यशब्द आनन्दवाची । अतः केशश्मश्रुनखाग्राक्षीणि, तत्सहभूता अनुक्ता अन्येऽपि पुरुषावयवाः कप्यासशब्देन वर्णान्तरस्यापि सूचितत्वात् तत्तद्वर्णविशिष्टा अपि सर्वे आनन्दमया एवेति पुरुषाकारं ब्रह्मस्वरूपमेवेति मननीयम् । अन्यथा, तस्त्वेव भयं विदुषोऽमन्वानस्येत्युक्तस्य भयस्यापत्तेरित्यर्थः । ननु सूर्यान्तर्वर्ति न ब्रह्मशरीरमित्यसंगतम् । उपबृंहणविरोधात् । अग्निपुराणे, ध्येयः सदेति श्लोके, हिरण्मयवपुरिति शरीरवा-

रश्मिः ।

चद्वाक्यमाहुः यथेत्यादि । निश्चय इति भाष्यविद्वन्मण्डनप्रहस्तादौ निपुणतरं प्रतिपादनादिति भावः । ब्रह्म त्वित्यादीति । न च रामतापिनीये 'उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना' इति कथमिति वाच्यम् । पूर्वार्धे 'चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः' इत्यत्र चिन्मयपदेनौडुलोमिमते तदिति न बादरायणमते इति 'चिति तन्मात्रेण तदात्मत्वादित्यौडुलोमिः' इतिसूत्रात् । यादृशं वेदे प्रतिपाद्यते तादृशमेव श्रुतौ ब्रह्मणो रूपं कल्पनाशब्देनोक्तमिति वा । दाण्डिनायनेति 'दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवाशिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि' इतिसूत्रे । नायमिति दाण्डिनायनसूत्रस्य लौकिकप्रक्रियाविषयत्वात् । अत एवैवकारो वक्ष्यते । यकारलोप इति तथा च भाष्ये इयकार इत्यादिपदच्छेदः । इत्यदार्थः सुबोधिन्यां 'स त्वं न चेत्' इत्यत्र । न च इत् इति पदच्छेदपक्षेपि यदर्थं इदिति । अत्र तु हीत्यर्थको य इ तद्विदुरित्यत्र तथादर्शनात् । पूर्वमिति समन्वयाधिकरणे । हेतुभाष्यविवरणपूर्वकं विवृण्वन्ति यद्यज्जनकमित्यादि । पूर्वमिति समन्वयाधिकरणे । अतः केशेत्यादिभाष्यं विवृण्वन्ति स्म अतः केशेति । कमनीयमिति स्वर्णपर्यानुवाकस्यादाहुः वर्णान्तरस्येति । अत्र स्वरूपमेवेति पुरुषविधब्राह्मणादेवकारो विधान्तरयोग-

आनन्दवाची। लोकेऽपि तस्यानन्दसाधकत्वात्। अतः केशादयोऽपि सर्वे आनन्दमया एव। तादृशमेव ब्रह्मस्वरूपमिति मन्तव्यम्। अत एव,।

'ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसंनिविष्टः।
केयूरवान् मकरकुण्डलवान् किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः' ॥

इत्यत्रापि वपुः स्वरूपम्।

'माया ह्येषा मया सृष्टा' इत्यादि भगवद्वाक्यं, भगवन्मायया भगवन्तमन्यथा पश्यन्तीत्याह। न तु भगवानेव मायिक इति। शरीरे सति जीवत्वमेवेति निश्चयः। अतो ब्रह्मधर्मोपदेशात् सूर्यमण्डलस्थः परमात्मैव॥ १९॥

---

भाष्यप्रकाशः।

चक्षुपदस्योक्तत्वादित्याशङ्कायामाहुः अत एवेत्यादि। तथाचात्रापि वं सुखं पुष्णातीति योगेन ब्रह्मैवोच्यते। अत एव स्मृत्यन्तरे।

'आदित्यमण्डलासीनं रुक्माभं पुरुषं परम्।
ध्यात्वा जपेत्तदित्येतन्निष्कामो मुच्यते द्विजः॥
आदित्यमण्डलान्तःस्थं परं ब्रह्माधिदैवतम्।
छन्दोनिवृत्त्याद्गायत्री मया दृष्टा सनातनी' ॥

इति गायत्र्या ध्येये सूर्यमण्डलान्तःस्थे वपुःपदं नोच्यत इति न तेन शरीराङ्गीकारः कर्तुं शक्य इत्यर्थः। नन्वत्र केवलस्वरूपाङ्गीकारेऽन्यत्रापि स्वरूपमेव न्यायबलेन साधितुं शक्यम्। तथा सति।

'माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद।
सर्वभूतगुणैर्युक्तं न मां पश्यन्ति सूरयः' ॥

इति विश्वरूपाकृतेर्नारायणस्य यद्भारते वाक्यं तस्य विरोधो दुर्वार इत्यत आहुः मायेत्यादि। तथाचास्मिन् वाक्येऽपि, यन्मां सर्वभूतगुणैर्युक्तं पश्यसि एषा माया मया सृष्टेति पदसंबन्धान्न विरोध इत्यर्थः। ननु किमित्येवं निर्बन्धे शरीरवत्ता निराक्रियते। कर्माजन्यस्वैच्छिकशरीरस्याङ्गीकारेऽपि ब्रह्मत्वाक्षतेरित्याशङ्कायामाहुः शरीर इत्यादि। मास्तु कर्मजन्यत्वं शरीरस्य,

रश्मिः।

व्यवच्छेदकः। मन्तव्यमित्यस्यार्थः मननीयमिति। अत एवेत्यादीति सति संभवे तन्त्रत्वाभावादेव। अन्यथाश्रुतिविरुद्धपुराणं तन्त्रं स्यात्। श्रुतिविरुद्धोंशः तन्त्रं पुराणे उपष्टम्नन्ति स्म अत इत्यादि। छन्द इत्यादि। छन्दोभिर्ध्यायतीत्यर्थः। निवृत्त्स्सती ध्यायती चासौ गायत्री च एतेन पुराणमुपबृंहणमतिक्रम्यार्थान्तरोपन्यासो न सांप्रतमिति निरस्तम्। माया ह्येषेति इदं वाक्यं शंकरभाष्य उपन्यस्तम्। पदसंबन्धादिति माया त्रिगुणा तन्मते ततो वावच्छेतुं माया ह्येषेत्यत्र मायेन्द्रियाणि ततश्च 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्यत्र मायायाः करणतयोल्लेखाद्यन्मां पश्यतीत्यत्र मायिकं मां पश्यतीत्यर्थाभावात् किं तु इन्द्रियविशिष्टं मां पश्यति इत्यर्थात्। 'दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम्' इत्यत्र विशिष्टकरणदानस्य मायिकं मां पश्यतीत्यर्थे विरोधात् भिदां 'मायामात्रमनूद्यान्ते प्रतिषिध्य प्रसीदति' इति भिदाया एव मायामात्रत्वात्। 'भगवानपि ता रात्रीः' इत्यत्र 'योगमायामुपाश्रितः' इत्यत्र योगमायाश्रयणादिन्द्रियरूपमायायाः करणत्वम्। विषयविषयात इन्द्र इन्द्रियरूप-

## भेदव्यपदेशाच्चान्यः ॥ २० ॥

इतोऽपि सूर्यमण्डलस्थः परमात्मा । भेदव्यपदेशात् । 'य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः' इति श्रुत्यन्तरे आधिदैविकं सूर्यमण्डलाभिमानिभ्यां भेदेन निर्दिष्टम् । यद्यपि तत्राकारो न श्रूयते, तथापि हिरण्मयवाक्यैनैकवाक्यत्वात् सर्वत्र साकारमेव ब्रह्मेति मन्तव्यम् ।

---

भाष्यप्रकाशः ।

तथापि शुद्धसत्त्वात्मकत्वं त्रिगुणात्मकत्वं वा तु सर्वथाङ्गीकार्यम् । तेन सह संबन्धश्चाभिमान एव वाच्यः । तथा सत्यभिमन्ता जीव इति तापनीये श्रावितस्य जीवलक्षणस्य तत्र सत्त्वाज्जीवत्वमेव । यदि च नियन्तृत्वं तदाऽन्यस्याभिमानिनस्तत्र सत्त्वाद् ब्रह्मशरीरत्वाभावः । यदि च संबन्धान्तरं, तदापि ।

'स एव वासुदेवोऽयं पुरुषः प्रोच्यते बुधैः ।
प्रकृतिस्पर्शराहित्यात् स्वातन्त्र्याद् वैभवादपि' ॥

इति नारसिंहवाक्यविरोध इति शरीराङ्गीकारे जीवत्वापत्तिरनिवार्येति तदभावाय निर्बन्ध इत्यर्थः ॥ १९ ॥

भेदव्यपदेशाच्चान्यः ॥ २० ॥ ननु पूर्वसूत्रोक्तेनैव हेतुना सिद्धे ब्रह्मत्वे किमिति

रश्मिः ।

मायाभिः पुरुरूपः चाक्षुषः शाब्दोनुमित उपमित इत्येव मीयते प्राप्यते इति पदसंबन्धः । भगवतो मायेति संबन्धविशेषनिवेशश्चायं पदसंबन्धस्तस्मादित्यर्थः । एतेन शंकरभाष्यादिशेषे दर्शिते स्मरणं सभाजितम् । त्रिगुणेत्यादि त्रिगुणमुपक्रम्य 'अभ्यपद्यत लीलया' इतिवाक्यात् । अत्र सूत्रे उत्तरसूत्रादन्य इति साध्यानुकर्षादधिकारसूत्राद्ब्रह्म इत्यनुवर्तनाद्वा न पक्षहेतुनिर्देशो दोषायेति ज्ञेयम् । अत एव रामानुजभाष्यं 'अन्तरादित्ये अन्तरक्षिणि च यः पुरुषः प्रतीयते स जीवादन्यः परमात्मैव कुतः तद्धर्मोपदेशादिति' । अस्मन्मतेपि परमात्मान्यपदार्थ इति विशेषो न । नियन्तृत्वमिति जीवशरीरयोः संबन्धः अथान्तर्यामिब्राह्मणे । ब्रह्मेति किं तु नियन्तुर्ब्रह्मणोन्यस्याभिमानिनः शरीरत्वं स्यादिति भावः । तस्मिन् सत्यन्तर्यामिब्राह्मणविरोधः । एवं चाभिमाननियन्तृत्वान्यतरसंबन्धे विवक्षिते त्वाहुः यदि चेति । संबन्धान्तरत्वमभिमाननियन्तृत्वान्यतरत्वं तदापि संयोगसंबन्धासंग्रहाद्वाक्यविरोध इत्याहुः तदापीति । वसुदेवे संक्रान्तः संयोगसंबन्धेन वर्तमानो वासुदेवः अयं पुरुषो जीवः । तथा च पुरो जीवस्य च संयोगसंबन्धः । विद्याविद्यावच्छिन्नजीवस्य वासुदेवाभेदसंभवमालोच्याह प्रकृतीति । अभिमानो मिथ्येति प्रकृतिः । स्पर्शोभिमानाख्यस्तस्य राहित्यात् । नियन्तुरंशत्वात् स्वातन्त्र्यं तस्मात् । वैभवं वैभव्यं तत्त्वमस्मीतिवद्वासुदेवोयं पुरुष इति तस्मादपि ॥ १९ ॥

भेदव्यपदेशाच्चान्यः ॥ २० ॥ भाष्ये । आधिदैविकमिति आदित्ये तिष्ठन् इत्याद्युक्तादित्ये स्थित्यादिमन्तं निर्दिष्टं जानीयादिति शेषः । सूर्येत्यादि सूर्यमण्डलं जडम् । तदभिमानी चेतनः वेदेत्यनेन ज्ञानानुकूलव्यापारवत्त्वबोधनपुरस्कारेण नेति नञा निषेधात् । ज्ञानवत्त्वस्याधारे जडे बाधाबाभ्यामित्यर्थः । प्रकृते । समानेति समानप्रकरणं ब्रह्मप्रकरणेनोद्गीथप्रकरणं समानं तदुक्तधर्मान्तरं परमात्मत्वं तस्य । परमात्मत्वमग्रोद्गीथत्वं तद्विधोक्तधर्मवत्त्वम् भाष्ये । एक-

अन्तर्यामिब्राह्मणे चत्वारोऽर्था उच्यन्ते। सर्वत्र तिष्ठँस्तद्धर्मैर्न संबध्यते। सर्वमुक्तिपरिहाराय स्वधर्मैस्तत्र बध्यते। स्वलीलासिद्ध्यर्थं तच्छरीरमिति। तस्य नियमनं तदर्थमिति। चकाराद्धर्मा उच्यन्ते।

---

भाष्यप्रकाशः।

हेत्वन्तरोपन्यास इत्याकाङ्क्षायामाहुः यद्यपीत्यादि। तथाच समानप्रकरणोक्तधर्मान्तरस्यापि प्राप्त्यर्थं हेत्वन्तरमित्यर्थः। नन्वत्र भेदव्यपदेशमात्रेण कथं परमात्मलाभ इत्यत आहुः अन्तर्यामीत्यादि। तदिति सामान्ये नपुंसकम्। अभिमानीत्यर्थः। अत्र हि जडाज्जीवाच्च भिन्नत्वेनान्तर्यामी प्रतिपाद्यते। तत्र, य आदित्ये तिष्ठन्नादित्यादन्तर इति जडं मण्डलमाधारत्वेन निर्दिश्य ततोऽन्तरत्वकथनात् ततो भेदो बोधितः। तेन तद्धर्मैर्न संबध्यत इति बोधितम्। तत आदित्यादन्तरत्वं तदभिमानिनो जीवस्याप्यस्तीति ततोऽपि भेदबोधनाय, यमादित्यो न वेदेति तदभिमान्यज्ञेयत्वकथनेनाभिमानिधर्मैर्न संबध्यत इत्याह। तथा यद्यभिमानी तं जानीयान्मुक्तः स्यात्। अतस्तदभावाय स्वासाधारणैर्ज्ञानापहतपाप्मत्वादिभिर्धर्मैः कर्तृभिस्तद् आधारभूतम् अभिमानि वस्तु न बध्यते, न व्याप्यते। 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम्'। 'सैषा त्रय्येव विद्या तपति' इति स्मृतिश्रुत्युक्तधर्मैर्मण्डल एव

रश्मिः।

वाक्यत्वादिति स्वार्थबोधे समासयोर्हिरण्मयपदघटितान्तर्यामिपदघटितवाक्ययोर्द्वन्द्वप्रयोगात्परस्परसाकाङ्क्षयोरेकवाक्यतया द्वन्द्वप्रयोगिमीमांसको ज्ञानाङ्गमित्येवमेकवाक्यत्वात्। द्वन्द्वं ब्रह्मात्मरूपम्। 'स्वरूपं द्विविधं चैव सगुणं निर्गुणं तथा' इतिश्रुतेः। ननु साकारं ब्रह्मेति वक्तव्ये सर्वत्रेत्येवमिति च कुतः। इति चेच्छृणु सर्वत्रेत्यवश्यं वक्तव्यम्। एकत्र सिद्धः शास्त्रार्थोपरत्रापि तथेति न्यायात् अन्यथैकत्रान्यथापरत्रान्यथेति शास्त्रार्थो भिद्येत। एवेत्यपि वक्तव्यमुक्तश्रुतेः। पुरुषविधब्राह्मणाच्च। 'अहं सर्वस्य प्रभवः' 'अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्। परं भावमजानन्तः' इति गीता। 'समान एवं चाभेदात्' इति वैयाससूत्रम्। 'अपश्यत् पुरुषं पूर्णम्' इति समाधिभाषा तदेकवाक्यतया। द्वितीयस्कन्धे नवमाध्याये ज्ञानस्य कथनात् ब्रह्मणे चतुर्भुजरूपप्रदर्शनाच्च। तच्च निर्गुणपूर्वकमिति सुष्ठूक्तं सर्वत्रेति एवेति च ध्येयम्। प्रकृते। भेदव्येति हेतुना। परमात्मलाभः भावप्रधानपरमात्मशब्दः तेनान्यद् ब्रह्मसूत्रान्तरादनुवृत्तं परमात्मेत्युच्यतेन्यपक्षग्रन्थत्वात् तस्य लाभ इत्यर्थः। तेनात्र वक्ष्यमाणसाध्यपक्षयोर्न विरोधोत्र। अभिमानिधर्मैरिति तद्धर्मैरधोक्षजत्वादिभिः। सर्वमुक्तीत्यादिभाष्यं विवरिष्यन्त आहुः तथा यदीत्यादि। मुक्त इति। ज्ञानत्वेन मुक्तित्वेन कार्यकारणभावादिति भावः। बध्यत इति बध बन्धने इति धातोः कर्मणि प्रत्यये रूपम्। बन्धनं चाप्रीत्यनुकूलो व्यापारः सा च प्रकृते व्यापनरूपस्वरूपलक्षिका। धातूनामनेकार्थत्वमित्याशयेनाहुः व्याप्यत इति। यदेत्यादि उत्तरार्धं तु 'यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्' इति। सैषेति तैत्तिरीये 'आदित्यो वा एष एतन्मण्डलं तपति तत्र ताः ऋचस्तदृचां मण्डलं स ऋचां लोको अथ य एष एतस्मिन् मण्डलेर्चिर्दीप्यते तानि सामानि स साम्नां लोको अथ य एष एतस्मिन् मण्डलेर्चिषि पुरुषस्तानि यजूंषि स यजुषां मण्डलं स यजुषां लोकः। सैषा त्रय्येव विद्या तपति य एषोन्तरादित्ये हिरण्मयः पुरुषः' इति श्रूयते। स्मृतिश्रुतीत्यादि धर्मादिष्वनियमात् साधुः प्रयोगः। अन्यथा 'अभ्यर्हितं

भाष्यप्रकाशः ।

व्याप्यते, नाभिमानीति स न मुच्यते । यद्वा दिवादिर्भ्वादिवदाकृतिगणः । तेन क्षीयते मृग्यतीत्यादिवत् बध्यत इत्यपि कर्तरि प्रयोगः । तथा सति स्वधर्मैस्तमभिमानिनं न व्याप्नोतीत्यर्थः । तात्पर्यं तूभयथापि समानम् । तेन ततोऽपि भेदः । एवमुभयाद्भेदे सिद्धेऽपि तत्र स्थितेः किं प्रयोजनमित्याकाङ्क्षायां, यस्यादित्यः शरीरं य आदित्यमन्तरो यमयतीत्याह । तत्र जगद्भासनं दिग्विभागो धर्मप्रवृत्तिरित्यादिरूपा स्वस्यैव लीला तत्सिद्ध्यर्थं तन्मण्डलं शरीरं, न त्वधिष्ठानार्थम् । तेन जीवतुल्यता वारिता । एवं, 'गामाविश्य च भूतानि धारयाम्यहमोजसा' इत्यादिष्वपि भगवल्लीलात्वं बोध्यम् । तेन पृथिव्यादिकार्यस्यापि लीलात्वं तेषां लीलाशरीरत्वं च ज्ञातं भवति । शरीरस्य तादृशत्वे गमकमाह य आदित्यमन्तरो यमयतीती । अत्रादित्यपदं मण्डलाभिमानिनोः संग्राहकम् । तथाच नस्यादित्यादेर्नियमनं तदर्थं तादृश-

रश्मिः ।

पूर्वम्' इति सूत्रप्रवृत्तिर्न स्यादेव । तदुक्ता धर्मा जगद्भासनादयः । आकृतिगण इति आकृत्या गण्यते इति व्युत्पत्तिः । क्षीयत इत्यादि । यद्यपि क्षि क्षये भ्वादिः । क्षि निवासगत्योस्तुदादिः । क्षि हिंसायां क्र्यादिस्तथाप्याकृतिगणः संभवति । मृग्यतीति मार्गं अन्वेषणे चुरादिः, मृग गतौ भ्वादिः, परस्मैपदी उभयस्य मृग्यतीति रूपं मृग्यमिति तथा । दिग्विभाग इति सूर्योदयानन्तरं प्राच्यादिव्यवहारात् । लीलेति स्थानलक्षणलीला । एवं गामिति आदिपदार्थोग्रे वक्ष्यते । भगवदित्यादि पृथ्वीधारणमपि स्थानम् । सृष्टायाः पृथ्व्याः मर्यादया पालनरूपत्वात् । ओषधीनां सोमरसमर्यादया पालनम् । जाठराग्नेश्चतुर्विधान्नपाचनस्य मर्यादारूपत्वेन स्थानत्वम् । अग्निर्ज्ञानं क्रियात्मा । सर्वस्य स्मृतिर्ज्ञानमपोहनं च मर्यादया पालनम् । अत्र ब्रह्माग्निविचारः 'ईश्वरः सर्वभूतानां हृद्देशेर्जुन तिष्ठति' इति दशविधलीलासंपृक्त इति 'लीला भगवतस्तास्ता ह्यनुचकुस्तदात्मिकाः' इत्यपि बोध्यम् । इति 'गतिस्मित' इति श्लोकोक्तभगवत्परिग्रह उक्तः । तथा च सुबोधिनी एकैकस्मिन् पदार्थे दशविधलीलाविशिष्टो भगवान् तिष्ठतीति । आदिपदार्थवाक्यानि तु यदादित्यगतमिति वाक्यानन्तरम् ।

'गामाविश्य च भूतानि धारयाम्यहमोजसा ।
पुष्णामि चोषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥
अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥
सर्वस्य चाहं हृदि संनिविष्टोः मत्तः स्मृतिर्ज्ञानमपोहनं च' । इति

लीलात्वमिति विसर्गलीलात्वम् । 'विसर्गः पौरुषः स्मृतः' इति तल्लक्षणात् । 'द्यावाभूमी जनयन् देव एकः' इति श्रुतिः सर्गे । शरीरत्वमिति यौगिकं शरीरपदं वेदान्ते योगमात्रादरान्न तु रूढमित्यन्तर्यामिणः शरीरं योगरूढं वा । संग्राहकमिति अभिधयैव संग्राहकं विशिष्टे शक्तेः । अन्तर्यामी तु साकारव्यापकेन्तर्भवति तद्रूपस्थितसाकारव्यापकेषु त्रिषु रूपेषु व्यक्तौ शक्तिरिति पक्षे चिन्त्यम् । नन्वस्त्वेवं तथाप्यभिमानिस्मरणस्य किं प्रयोजनमत आहुः तथेति । तथा चाभिमानिस्मारणस्य प्रसिद्धशरीरत्वज्ञानं प्रयोजनमन्तर्यामिणो लीलाज्ञानं प्रयोजनं द्वा सुपर्णेतिश्रुतेरित्यर्थः ।

**तस्मात् सर्वविलक्षणत्वादन्य एव, नाभिमानी । उपचारव्यावृत्त्यर्थमन्यपदेनोपसंहारः ।**

भाष्यप्रकाशः ।

लीलार्थम् । तं यदि भीषास्मादित्याद्युक्तरीत्या न नियमयेत्तदा सा सा लीला न सिद्ध्येदिति । अत्र पुनरप्यन्तर इति पदम्, अन्तरं करोतीत्यन्तरयति, अन्तरयतीत्यन्तर इति सर्वान्तःस्थापकत्वबोधनार्थम् । एवमेते चत्वारोऽर्था उच्यन्ते । सूत्रे तु चकारात् पूर्वसूत्रोक्ता धर्माः समुच्चीयन्ते । तेन हेतुभेदेऽपि साध्यैक्यान्नाधिकरणभेदः । एवं श्रुतिं सूत्रं च व्याख्याय सिद्धमाहुः तस्मादित्यादि । तथाच भेदव्यपदेशात् सर्वविलक्षणत्वेन व्यपदेशादादित्यान्तर्वर्ती परमात्मा अन्य एव, नाभिमानीत्यर्थः । नन्वत्रान्य इत्यस्य साध्यत्वेन निर्देशादिदमधिकरणान्तरमेवास्त्विति चेत्तत्राहुः उपचारेत्यादि । तथाच, नेतरोऽनुपपत्तेरित्यादिना पूर्वाधिकरणं निषेधमुखेन विचारितं यथोपचारनिवृत्त्यर्थं तथेदमन्यपदेनोपसंहृतमिति तत्रेवात्रापि नाधिकरणभेद इत्यर्थः । ननु, उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेदेत्यनेनोपासनाकथनात् तस्याश्च वाचो धेनुत्ववदारोपिताकारेणापि सिद्धेः किमर्थमयमाग्रह इत्यत

रश्मिः ।

**तस्येत्यादिभाष्यं** विवृण्वन्ति स्म **तस्येत्यादिना** । **भीषेत्यादि** ।

'भीषास्माद् वातः पवते भीषोदेति सूर्यः ।
भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः' ॥

इति तैत्तिरीये । **उक्तरीत्येति** उक्तरीत्या नामस्थानलीलार्थं न नियमयेदित्यर्थः । **सा सेति** प्रजायेयेति न्यायेनोच्चनीचभावेन सा सा लीला न सिद्ध्येत् सर्वस्य भगवत्त्वेन समत्वात् 'स्थितिर्वैकुण्ठविजयः' इति स्थानलक्षणोक्तविजये तु सा सा लीला स्यादेव । **अनेति** य आदित्यमन्तर इत्यत्र पुनरनन्तरपदस्यार्थः । **सर्वान्तरिति** सर्वानन्तरं करोतीत्यर्थेनानुवादकत्वमिति भावः । **चकारादित्यादि** भाष्यार्थमाहुः **सूत्रे त्वित्यादि** । **तेनेत्यादि** चकारकृतपूर्वोक्तहेतुसमुच्चयेन । अन्यत्वरूपसाध्यैक्यात् । साध्यभेदस्त्वधिकरणं भिन्द्यात् । यथोत्तरत्र । **तस्मादित्यादीति** । पूर्वं साध्यं परमात्मत्वं न त्वादित्यान्तःस्थत्वं तस्य संदिग्धसाध्यत्वेन पक्षत्वात् । अत्र तु परमात्मनः पक्षत्वं संदिग्धसाध्यवत्त्वात् । अन्यत्वं साध्यं भेदव्यपदेशो हेतुः । अत्र साध्यतावच्छेदकहेतुतावच्छेदकयोरैक्यात्साध्यसाधनत्वव्याहतिर्दोषः । अन्यथा प्रसिद्धानुमाने वह्नेर्हेतोरपि वह्निसिद्धिः स्यात् । अतो हेतुपरिष्कारपूर्वकं सिद्धं सूत्रार्थमाहुः **तस्मात् सर्वविलक्षणत्वादिति** । तथा च सर्वविलक्षणत्वत्वं हेतुतावच्छेदकमिति तयोर्भेदान्नोक्तदोष इति भावः । परमात्मनि तल्लक्षणेन सर्वविलक्षणत्वं सिद्धं, पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वात् इत्यत्र यथा, सर्वविलक्षणत्वेन हेतुनान्यत्वसिद्धिः । यथा लक्षणेन सर्वविलक्षणत्वसिद्धिस्तथा भेदव्यपदेशोपीति समानव्याप्तिज्ञानविषयत्वेन हेत्वोरैक्यं सारम् । **उपेत्यादि** 'आनन्दमानन्दमयोवसाने' इति द्वितीयस्कन्धात् जीवस्याप्यानन्दमयत्वेनानन्दमयस्य तद्वाचकत्वे उपचरितत्वं स्यात्तन्निवृत्तये इत्यर्थः । **उपसंहृतमिति** तथा चादित्यान्तःस्थाभिमानिव्यावर्तकत्वेनोपचारनिवृत्त्यर्थमेवमुपसंहृतमित्यर्थः । **अनेनेति** इतिश्रुत्यन्तर्गतवेदेतिपदेन । **उपासनेति** वेदेत्यनेनोक्तोपासनेत्यर्थः । **वाच**

**ब्रह्मत्वे सिद्धे ज्ञानं वा, उपासना वेति, नास्मत्सिद्धान्ते कश्चन विशेषः । कारणे कार्यधर्मारोपस्त्वयुक्त एव । कार्ये पुनः कारणधर्माधिकरणत्वेनोपासना अभेदात् फलायेति सर्वत्र व्यवस्थितिः ॥ २० ॥**

**इति प्रथमाध्याये प्रथमपादे षष्ठमन्तस्तद्धर्माधिकरणम् ॥ ६ ॥**

भाष्यप्रकाशः ।

आहुः ब्रह्मत्व इत्यादि । तथाच भवतूपासना, तथापि पूर्वसूत्रोक्तधर्मैस्तस्य ब्रह्मत्वे सिद्धे तदाकारस्याकल्पितत्वमप्यनुपपत्त्यभावात् सिद्धमेवेति वेदनस्य ज्ञानत्वमुपासनात्वं वास्तु, मनोव्यापारत्वस्योभयत्र तौल्यादतस्तत्र नास्मत्सिद्धान्ते कश्चिदाग्रह इत्यर्थः । नन्वतस्मिंस्तद्धर्मानारोप्य तत्त्वेन चिन्तनमुपासना, तस्य तत्त्वेन निश्चयो ज्ञानमिति स्वरूपभेदात् कुतो न विशेष इत्यत आहुः कारण इत्यादि । अस्त्वयं विशेषस्तथापि हीने उत्कृष्टधर्मारोपस्य लोके कार्यसाधकत्वस्य विपरीते वैपरीत्यस्य च दर्शनात् कारणे यः कार्यधर्मारोपः स तु हीनत्वापादकत्वेन कार्यासाधकत्वादयुक्त एव । वेदे हि सर्वत्रान्नं ब्रह्मेत्यादौ कार्ये कारणधर्माणामुत्पत्तिस्थितिप्रलयकर्तृत्वादीनामारोपेणोपासनात् फलप्राप्तिः श्रूयते । तत्र हेतुः कार्यस्य कारणाभेद एव । सर्वत्र तथा दर्शनात् । कारणस्य कार्याभेदस्तु प्रत्यक्षाच्छास्त्राच्च विरुद्धः । यत्र पुनः सर्वथा भेदो यथा वाग्धेन्वोस्तत्रापि शब्दापेक्षयार्थस्योत्कृष्टत्वम् । शब्दशेषित्वादर्थस्य । अतो ज्ञानोपासनयोर्विशेषसत्त्वेऽपि यथैकदेशिभिः स्वीक्रियते तथा नास्तीति फलजनकत्वांशे विशेषाभावकथनं तच्चोपपन्नमेवेत्यर्थः ।

माध्वास्तु, पूर्वाधिकरणविषयवाक्येषु, अदृश्येऽनात्म्येऽनिरुक्त इत्युक्तम् । तच्चादृश्यत्वम्, अन्तःप्रविष्टं कर्तारमेतमन्तश्चन्द्रमसि मनसा चरन्तं सहैव सन्तं न विजानन्ति देवा इत्यत्रान्तःस्थस्य कस्यचिदुच्यते । तदग्रे च, इन्द्रो राजा जगतो य ईशे इति । सप्त युञ्जन्ति रथमेकचक्रं त्वष्टारः रूपाणि विकुर्वन्तमित्यादिभिरन्ये प्रतीयन्ते । अतः को वाऽनन्दमय इति संदेहे, इन्द्रो राजेत्यादितत्तद्देवतावाचकश्रुत्या, सप्त युञ्जन्तीत्यादित्यलिङ्गाच्च

रश्मिः ।

इति 'वाचो धेनुमुपासीत' इति श्रुतिः । उपासनेति यथा वाचो धेनुमित्यत्र । तस्येति । तत्त्वतस्तत्त्वेन । कार्ये पुनरित्यादिभाष्यं विवृण्वन्ति स्म वेदे हीत्यादिना । सर्वत्र जगति घटपटादौ । इदं सर्वत्रेत्यादिभाष्यविवरणम् । प्रत्यक्षादिति सुवर्णं न कटकादि ब्रह्माहमस्मि न त्वहं ब्रह्मेत्यादिप्रतीतेरित्यर्थः । अत्राब्रह्माहं नास्मि अहं ब्रह्मास्मीति योजना । अत्राभेद उपपादनीये कारणतावच्छेदकं नोद्देश्यतावच्छेदकं कार्यतावच्छेदकं नो विधेयतावच्छेदकं कारणतावच्छेदकं विधेयतावच्छेदकं कार्यतावच्छेदकमुद्देश्यतावच्छेदकं तु भवति । कुतः मायावच्छिन्नमविद्यावच्छिन्नमस्मत्पदार्थः इत्यभेदो भवति विशिष्टं शुद्धान्नातिरिच्यते इति यत्र पुनः साधनेन भेदे विगलिते ब्रह्म शुद्धं न तत्रास्मत्पदार्थभेदः तस्यैवाभावादिति हेतोः । 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' 'कार्यकारणवस्त्वैक्यमर्शनं पटतन्तुवत्' इति सर्वत्र प्रसिद्धोपदेशादित्यधिकरणे शास्त्रमुक्तमेव । भाष्यसूचितार्थमाहुः यत्र पुनरिति । तथा नेति एकादशसुबोधिन्यामुप समीपे स्थित्वा यथायोग्यकरणमुपासनमुक्तं तदत्रापीति भावः । अत्र शांकरमते भास्करमते रामानुजमते चाधिकविशेषाभावान्माध्वमतमादावाहुः माध्वा इति । आदित्येत्यादि सप्तमुखाश्वरथत्वात् तस्य विपश्चितमिति सूर्यनामेति शब्दसामर्थ्या-

१. ब्रह्माहमस्मीत्यादौ ।

भाष्यप्रकाशः।

कश्चिद्देवताजीवविशेष एव तत्र युक्तः। श्रुतेः सर्वापेक्षया प्रबलत्वाज्जगतो य ईश इत्यादियोगस्यापि तदुपोद्बलकस्य तत्र दर्शनाच्चेति प्राप्त इदं सूत्रद्वयं प्रवर्तते। 'अन्तस्तद्धर्मोपदेशात्' 'भेदव्यपदेशाच्चान्यः' इति। अन्तः श्रूयमाणो विष्णुरेव। कुतः। 'अन्तःसमुद्रे मनसा चरन्तं ब्रह्मान्वविन्दद्दशहोतारमर्णे। समुद्रे अन्तः कवयो विचक्षते। मरीचीनां पदमिच्छन्ति वेधसः। यस्याण्डकोशꣳशुष्ममाहुः प्राणमुल्बम्' इत्यादि तद्धर्मोपदेशात्। श्रुत्यर्थस्तु समुद्रे अन्तरर्णे अन्तर्जले मनसा चरन्तं यथेष्टं विहरन्तं दशहोतारं, हु दानादनयोः, दशेन्द्रियविषयदातारं ब्रह्मा अन्वविन्दद् व्यजानादिति तथा। मरीचीनां जीवानां पदमाश्रयभूतं वेधसः भूतभाविनो ब्रह्माण इच्छन्तीति। अण्डकोशं ब्रह्माण्डं यस्य शुष्मं वीर्यमाहुरिति। अत्र समुद्रशायित्वब्रह्माण्डवीर्यत्वादीनामन्तःप्रविष्टनिष्ठतयोपदिष्टानां लिङ्गानां विष्ण्वेकनिष्ठत्वादन्तःप्रविष्टः कर्ता विष्णुरेवेति। प्रलयार्णवशायित्वब्रह्माण्डवीर्यत्वयोः कथं विष्णुलिङ्गत्वमित्याकाङ्क्षायाम्, आपो नारा इति व्यासस्मृतिवाक्यं, चतुर्वेदशिखाश्रुतिश्चोपन्यस्ता। ननु तस्येन्द्राद्यभिन्नत्वं तर्ह्यस्त्विति शङ्कायां द्वितीयसूत्रे, 'इन्द्रस्यात्मा निहितः पञ्चहोता। वायोरात्मानं कवयो निचिक्युः। अन्तरादित्ये मनसा चरन्तम्। देवानाꣳ हृदयं ब्रह्मान्वविन्दत्' इत्यादिष्वेकस्यैव सर्वदेवान्तर्वर्तित्वकथनेन यथेष्टचारितयान्तर्यामित्वबोधनेनेन्द्रादिभ्यस्तस्य भेदव्यपदेशात् सोऽन्य एव तेभ्य इति वदन्ति।

शैवास्तु छान्दोग्यश्रुतिमेव विषयवाक्यत्वेनोपन्यस्य साधकानुग्रहार्थं तत्र हिरण्मयं किमपि रूपं समास्थाय सवितृमण्डलेऽधिवसति। तच्च त्रिलोचननीलकण्ठादिविशिष्टम्। न चाक्षिणी इति द्विवचनविरोधः। तस्य पुण्डरीकोपमाबोधनार्थत्वात्। तृतीयस्य नेत्रस्य मुकुलितत्वेन तत्र पुण्डरीकोपमाया अभावात् नचैतावता तृतीयाभावः शङ्क्यः। यथाहि कंचित् त्रिपुत्रं ब्राह्मणमुद्दिश्योच्यते, द्वावस्य पुत्रावग्निकल्पौ। न तावता तृतीयाभाव, आयाति। किन्तूपमाभाव एव। तथात्रापि शक्यवचनत्वात्। ध्येयः सदेति वाक्यं तु लौकिकानां भाक्तमेव। नापि पुण्डरीकाक्षत्वलिङ्गेन विष्णुः शङ्क्यः। कमलनेत्रत्वस्य लौकिकसाधारणत्वेन लिङ्गत्वाभावात्। नचास्मिन् हिरण्मयपुरुषवाक्ये शिवासाधारणलिङ्गादर्शनात् कथं शिवाकारत्वनिश्चय इति शङ्क्यम्। अस्य वाक्यस्य संदिग्धत्वेनासंदिग्धेन वाक्यान्तरेणैतदर्थस्य निर्णेयत्वात्। तैत्तिरीयाणां महोपनिषदि, आदित्यो वा एष एतन्मण्डलं तपतीत्यनुवाके, य एषोन्तरादित्ये हिरण्मयः पुरुष इत्यादित्यान्तर्यामिणमभिधाय तदग्रिमानुवाके, आदित्यो वै तेज इत्यादि-

रश्मिः।

दित्यर्थः। श्रुतेरित्यादि निरपेक्षस्वरूपायाः श्रुतेः सर्वेषां लिङ्गादीनामपेक्ष्यत्वेत्यर्थः। चतुर्वेदेत्यादि अहं न तेजोरश्मीन् नारायणं पुरुषं जातमग्रतः पुरुषात् प्रकृतिर्जगदण्डमिति श्रुतिः। अहं तेजआदिकं न किं तु पुरुषान्महत्स्रष्टुर्विष्णोर्द्वितीयरूपाद्विष्णोः प्रकृतिः प्रकृतिश्च मः सुरछान्दसः जगत् जीवानूषमपीति नारायणत्वमुभयथा विष्णुलिङ्गम्। अण्डमिति ब्रह्माण्डवीर्यत्वं लिङ्गम्। पञ्चहोतेति पञ्चज्ञानेन्द्रियादिदाता पञ्चहोता पञ्चहोता वायुरिति चितिश्रुतेः। उपमाभाव इति अग्निकल्पपदोक्तोपमाभावः। तृतीयोऽग्निकल्पो नेति। भाक्तमिति स्वाधिष्ठाने लाक्षणिकम्। आश्रयतासंबन्धो लक्षणा। लिङ्गत्वेति असाधारणधर्मत्वाभावेन लौकिकेतिव्याप्तेस्तथा। असंदिग्धपदसार्थकं शिवे साधयति भगवान्

भाष्यप्रकाशः ।

नाऽऽदित्यरूपस्य विभूतिमभिधाय एष पुरुष एष भूतानामधिपतिरिति भूतपतित्वेन तं निर्दिश्य तदग्रिमानुवाकेषु, सर्वो वै रुद्र इत्यादिषु, हिरण्यबाहवे अम्बिकापतय उमापतय इत्युपसंहारेण तत्र शिवाकारनिर्णयात् । अन्तर्यामिब्राह्मणे, एष त आत्माऽन्तर्याम्यमृत इति कथनाच्च । जाबालोपनिषदि, एतानि ह वा अमृतस्य नामधेयानीति शतरुद्रियप्रशंसावाक्येन अमृतपदस्य शिवपरतानिर्णयादत आदित्यान्तर्वर्ती त्रिलोचननीलकण्ठादिशरीरवानित्याहुः । तन्मन्दम् । शरीरपक्षस्य प्रागेव दूषितत्वात् । आकारेऽप्यक्षिद्वित्वस्य पुण्डरीकोपमाबोधनार्थत्वं तदा स्याद्यदि नीलग्रीवादिकं त्रिलोचनत्वसाधकमस्मिन् वाक्ये एतन्निर्णायकवाक्यान्तरे वा स्यात् । भूतानामधिपतिरित्यस्य तु न निर्णायकत्वम् । भूतपदस्य, क्षरः सर्वाणि भूतानि, पादोऽस्य विश्वा भूतानीतिवत् प्राणिमात्रवाचकत्वेन प्रेतवाचकत्वाभावाच्च नीलग्रीवादिरूपवल्लिङ्गत्वम् । तस्य प्रेतमात्रवाचकत्वे च परिच्छिन्नैश्वर्यबोधकत्वेन परमैश्वर्यविघटकतया तस्यालिङ्गत्वमेवेत्युभयथापि तदगमकत्वात् । सर्वो वै रुद्र इत्यादीनां तु नैतद्वाक्यशेषत्वम् । आदित्यो वै तेज इत्यनुवाकान्ते, इत्युपनिषदित्यनेन विद्यासमाप्तिबोधनात् । एवममृतपदस्यापि न निर्णायकत्वम् । शतरुद्रियस्याऽमृतनामत्वेऽप्यमृतपदस्य शिवनामत्वाभावात् । इदं यथा तथा प्रहस्ताख्ये वादे निपुणतरमुपपादितमिति नेह प्रपञ्च्यते । यत्पुनर्ध्येयः सदेत्यस्य लौकिकवाक्यत्वमुक्तं, तत्त्वग्निपुराणा-

रश्मिः ।

शैवः । जाबालेत्यादि । तत्र माध्वाचार्यमते विष्णुगुणावतारपरत्वं यच्छ्रुतीनामुक्तं तन्नारायणशिवो-विष्णुरितिवाक्यान्नारायणादीनां ब्रह्मनामत्वात् तत्परमेवेत्येतावान् विशेष इति तन्मतमपहाय शैवं निराकुर्वन्ति स्म तन्मन्दमित्यादिना । निर्णायकत्वं कोशादिभ्यां तदा स्याद्यदान्येषां पदानां शिववाचकत्वं स्यादस्य च प्रायपाठेन यथाकथंचिदप्यन्यपरत्वं तस्यां [1] त्वेवमित्याहुः भूतपदस्येत्यादि । अलिङ्गत्वमिति तव मते लिङ्गत्वमिति बोध्यम् । उभयथापीति उभे प्राणिमात्रवाचकत्वप्रेतमात्रवाचकत्वे अवयवौ यस्य प्राणिमात्रवाचकत्वप्रेतमात्रवाचकत्वसमुदायस्य स उभयस्तस्मिन् प्रकार इत्यर्थः । एतदुपपादितं प्रहस्ते द्वितीयवादे शिवेशानादिपदानां शिवे रूढिखण्डनप्रस्तावे । वस्तुतः सर्वेषां शब्दानां सर्वार्थत्वस्य महाभाष्याद्यभिमतत्वेन ब्रह्मवाचकत्वस्यैवाभिप्रेतत्वात् । प्रतिनियततावन्मात्रकार्यकरणेन ब्रह्मानुकारितया व्यवहारार्थमेव च शक्तिसंकोचे कोशेषु शिववाचकत्वदर्शनेपि ब्रह्मवाचकत्वस्यापि पर्यवसेयत्वादित्यादिना ग्रन्थेन । एतद्वाक्येति 'य एषोन्तरादित्ये हिरण्मयः पुरुषः' इति महोपनिषद्वाक्यशेषत्वम् । विद्यासमाप्तीति तदुत्तरविद्यास्थानां सर्वो वै रुद्र इत्यादीनामुत्तरविद्याशेषत्वमिति भावः । समाप्तपुनरात्तत्वदोषात् । न चानेकार्थसंकटे वाक्यशेषप्रवृत्तौ प्रतिबन्धे समाप्तेरप्रयोजकत्वमिति वाच्यम् । स्यादेवं यद्यनेकार्थत्वं स्यात् । तदेव तु न प्रायपाठात् । एवं च समाप्तेरस्यानन्तरप्रायपाठविघटकत्वाभावेन रुद्रादिपदानां समाप्तिवैयर्थ्यपरिजिहीर्षयानेकार्थसंकटाभावे किंचिज्ज्ञापकत्वेन समाप्तेरप्रयोजकत्वाभावात् । इदमिति शरीरपक्षस्येत्यारभ्य निरुक्तम् । उपपादितमिति शरीर इत्यारभ्य हेत्वर्थकविभक्त्यन्तं प्रहस्ते प्रथमवादे उपपादितम् । आकारप्रतीतिश्चैव एव सर्वाकारत्वादेवोपपन्नेत्यादिग्रन्थेन । आकार इत्यारभ्य स्यादित्यन्तमन्तर्यामिविचारे पुण्डरीकाक्षत्वाक्षिद्वित्वाभ्यामादित्योभूयदा हरिरिति वैष्णवाः । ध्येयः सदा सवितृमण्डलेत्याद्यग्निपुराणश्रीमद्भागवतवाक्ययोर्मकरकुण्डलत्वादिलिङ्गकथनाच्चेत्यादिना संदर्भेणोपपादितम् । लौकिकेत्यादि

1. शिवतात्पर्यकत्वमावपाठाद् ।

भाष्यप्रकाशः ।

दर्शनादेवेति । गायत्र्यां तु भर्ग इति पदं सान्तम् । द्वितीयपादे चाखान्वयो मैत्रायणीयो-

रश्मिः ।

लौकिकानां वाक्यत्वं यदि च लौकिकानामित्यस्य स्मार्तानामित्युच्यतेर्थः एतर्ह्यपि वाक्यसामानाधिकरण्यं सुष्ठु लौकिकं वाक्यं तत्त्वमिति न तु वाक्यसंबन्धिकत्वम् । ननु दृढतरमेतदुपोद्बलकं यद्गायत्र्यां सवितुर्वरेण्यं भर्ग इति तत्राहुः गायत्र्यां तु इत्यादि । त्रिपदा गायत्री । त्रिपदेति संध्याश्रुतेः । द्वितीय इत्यादि तिस्रो व्याहृतयः अस्य प्रथमपादस्थस्य वरेण्यपदस्य द्वितीयपादे अच्युतप्रवाचकभर्गःपदेनान्वये मैत्रायणीये उपनिषदि ।

'रविमध्ये स्थितः सोमः सोममध्ये हुताशनः ।
तेजोमध्ये स्थितं सत्त्वं सत्त्वमध्ये स्थितोच्युतः' ॥

इति श्रुतौ सिद्धः । अयमर्थः । सवितुर्देवस्य वरेण्यं तद्भर्गो धीमहि यः सविता नो धियः प्रचोदयात् । शश्वत्सूयमानात्सूर्यः सवनात्सवितेति श्रुतेः । सविता ब्रह्मेति यत्तदोः सामानाधिकरण्यम् । तस्य सवितुर्देवस्य वरेण्यं भर्गो धीमहीति तत्पदं लुप्तषष्ठीकम् । तत्सवितुरिति समस्तं पदं धामत्वाश्रौतान्वयः । इमं च भर्गःशब्दस्य सान्तत्वेऽचकथम् । केचित्तु सवितुर्देवस्य वरेण्यं तं भर्गं चिन्तयामि यः पूर्वोक्तोऽस्माकं बुद्ध्युपलक्षितानि सर्वेन्द्रियाणि प्रेरयतीति योऽस्माकं भर्गो धियः प्रेरयति सवितुर्देवस्य तद्वरेण्यं धीमहीति चान्वयमाहुः तन्न । अदन्तत्वपक्षे तदित्यत्र लिङ्गव्यत्ययः सुप्लोपकल्पनाऽव्ययत्वकल्पना वा भर्गपदे व्यवहितान्वयो वा विभक्तिव्यत्ययो वा । न च तदित्यस्याव्ययत्वस्य व्यवहितान्वयस्य च सार्वत्रिकत्वेनादोषादन्वयोऽदुष्ट एवेति शङ्क्यं अव्ययत्वकल्पनाया अन्वयासंभवफलकत्वाद्व्यवहितान्वयस्य पूर्वतन्त्रे तृतीयस्याष्टमे पादे मासं तु सवनीयानां नोदनाविशेषात् इति मांसाधिकरणे शाक्यानामयनं नाम षट्त्रिंशदाब्दिकं सत्रम् । तत्र संस्थितेहनि गृहपतिर्मृगयां याति स प्रतिपद्यते स यान् मृगान् हन्ति तेषां सरसाः सवनीयाः पुरोडाशा भवन्तीति श्रूयते तत्रेदं तरसं सर्वेषां पुरोडाशानामुत सवनीयानामिति विचिकित्सा । उद्देश्यः पुरोडाशः सवनीयेत्र विशेष्टुं न शक्यते इति सर्वपुरोडाशार्थं तरसं नवनीतवत् । सवनीयपदं तु सर्वपुरोडाशेषु लाक्षणिकमिति पूर्वपक्षे प्राप्ते तरसं संनिहितं सवनीयपदमतिहाय पुरोडाशेनान्वेति व्यवहितान्वयदोषप्रसङ्गात् । अतः सवनीयपुरोडाशेष्वेव तरसत्वमिति सिद्धान्तयता दोषत्वकथनादिति । स्यादेतत् । भर्गमिमं तं चिन्तयामि इति मैत्रश्रुतेः तद्भर्गाख्यं किमपीति स्मृतेश्च भर्गाःशब्दस्यादन्तत्वज्ञापनेन भ्रस्ज पाके इत्यस्माण्णिचि 'भ्रस्जो रोपधयोः' इति रमागमे तदीयाकारमकारयोरित्त्वाल्लोपे भ्रज्ञत्यतो 'अकर्तरि च कारके संज्ञायाम्' इत्यनेनाकर्तर्यं घञि प्राप्ते 'बहुलं छन्दसि' इत्यनेन कर्तरि घञि 'ञ्नित्यादिर्नित्यम्' इत्यनेनाद्युदात्तत्वे च भर्ग इति व्युत्पत्तिमचकथत् । अत एव तलवकाराणां कः सविता का सावित्री इत्युपक्रम्य द्वितीयः पादो भर्गमयः इति ब्राह्मणं संगच्छते इति । अत्र वदन्ति स्म भर्गाख्य इत्यस्य 'शकन्ध्वादिषु पररूपं वाच्यम्' इत्यनेन पररूपे भर्गमय इत्यस्य 'पृषोदरादीनि यथोपदिष्टम्' इति सलोपे च कृते सिद्धिरिति तरसन्यायेन संनिहितान्वयबोधनादसुनन्तमेतदिति । अत एव विष्णुसंज्ञमिति श्रुतिः । काचित् वरेण्यं सवितुर्भर्गो विष्णवमिधं जगौ ।

याज्ञवल्क्योपि पुरुषं व्योम्नि तद्विष्णुसंज्ञितं ।
भ इति भासते लोकान् र इति रक्षते प्रजाः ॥
ग इत्यागच्छते तेजस्तं भरगाद्भर्ग उच्यते ।
इत्याह गायत्र्यर्थस्य व्याकृतौ योगसाधके ॥

भाष्यप्रकाशः ।

पनिषदि सिद्धः । तथा,

'रविमध्ये स्थितः सोमः सोममध्ये हुताशनः ।
वह्निमध्ये स्थितं सत्यं सत्यस्यान्तः स्थितोऽच्युतः' ॥

इति तत्रैव मन्त्रः । योगियाज्ञवल्क्येऽप्येतादृशमेव वाक्यम् । ताभ्यामपि सर्वान्तरच्युत एवोक्तो ध्येयत्वेन च भगवानेवाहृत इत्यतोऽपि शैवमतमसंगतमेवेति दिक् ।

विज्ञानेन्द्रभिक्षुस्तु काण्वषष्ठाध्यायस्थं, 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु । य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते । सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति । स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान्' इति वाक्यं विषयत्वेनोपन्यस्य, तत्र किं जीवविशेष उच्यते, उत परमेश्वर इति संदेहे विज्ञानमयशब्दस्य योगरूढिभ्यामात्मसामान्यवाचित्वात्सम्प्रदायवशाभिर्जीवस्यैव प्रक्रान्तत्वाज्जीव एवेति प्राप्ते । अन्तः परब्रह्मैव भवितुमर्हति । कुतः । तद्धर्मोपदेशात् । सर्ववशित्वशुभाशुभकर्मफलाभागित्वसर्वाधिपतित्वादीनां परमेश्वरधर्माणामुपदेशात् । न चैते धर्माः सिद्धेः पूर्वं जीवेषु संभवन्ति । सत्कर्मणैव पदप्राप्तेश्चेत्यादियुक्तिभिर्हेतुं साधयित्वा, न केवलं धर्मव्यपदेशादेवान्तःस्थो विज्ञानमयो जीवादन्यः परमेश्वरः । किं तु, भेदव्यपदेशाच्चान्यः । भेदव्यपदेशश्च यथात्रैव वाक्यशेषे । येषां नोऽयमात्मा, आत्मन्येवात्मानं पश्यतीति । आधाराधेयभावस्य भेदतन्त्रत्वादित्याद्युक्त्वाह । 'आधुनिकास्तु, य एषोऽन्तरादित्ये हिरण्मय इति छान्दोग्यवाक्यं विषयतया वर्णयन्ति । तन्न । पाप्मभ्य उदित इत्यनेनोक्तस्य पाप्मभ्य उदयस्य पापनाशरूपतया ब्रह्मधर्मत्वाभावात् । धर्मान्तरस्य चात्रानुक्तत्वात् । प्रत्युत तेनैव लिङ्गेन चन्द्रनक्षत्रादिदेवताप्रकरणपठिततया च देवताविशेषावधारणाच्च । न चादित्यस्यान्तरिति भेदनिर्देशानुपपत्तिरिति वाच्यम् । आदित्यस्यान्तरपि आदित्यभिन्नस्य हिरण्यगर्भादेः स्मरणात् ।

'ब्रह्मादीनां परं धाम त्रयाणामपि संस्तुतम् ।
वेदमूर्तिधरः पूषा पूजनीयः प्रयत्नतः' ॥

रश्मिः ।

इति च संगच्छते । यत्तु अथ भर्ग इति यो ह वा अस्मिन्नादित्येऽभिहितस्तारकोऽक्षिणीवेष भर्गाख्यो भाभिर्गतिरस्य हीति भर्गो भर्जयतीति वैष भर्ग इति रुद्रो ब्रह्मवादिनो 'अथ भ इति भासयतीमांल्लोकान् र इति रञ्जयन्तीमानि भूतानि ग इति गच्छन्त्यस्मिन्ना गच्छन्तीमाः प्रजास्तस्मात् भरगत्वाद्भर्गः । 'शश्वत्सूयमानात्सूर्यः । सवनात् सविता' इत्यादिश्रुत्या रुद्रपदादकारान्तस्य भर्गशब्दस्यैव तद्वाचकत्वात् तत्त्वमेव युक्तमिति तन्मन्दम् । रुद्रपदस्य प्राणवाचकत्वात् । कतमो रुद्र इति 'दशेमे पुरुषे प्राणाः आत्मैकादश' इतिश्रुतेः प्राणस्य च ब्रह्मवाचकत्वमतिदेशाधिकरणे लक्षयिष्यामः । विशेषस्तु प्रहस्ते लक्षित एवेत्युपरमामः । भिक्षुमतनिरूपणे ब्रह्मधर्मेत्यादि पापं विना तत्प्राप्त्यासम्भवधनत्वेन तथात्वादित्यर्थः । पूषेति सूर्यः तथासति पूष्णि त्रयाणामुपासनाः सन्तु तत्राहुः

१. अपि प्रकाशने ।

भाष्यप्रकाशः ।

इति मात्स्यादिषु हिरण्मयशब्दाद्धिरण्यगर्भ एवात्रोपास्यत्वेन गम्यते । किंच, ध्येयः सदेति-रूपयोः श्रुतिस्मृत्योर्नारायणाख्यहिरण्मयस्य सूर्यमण्डल उपासनासिद्धेस्तदेकवाक्यतया हिरण्य-श्मश्रुत्वादिश्रुतेरपि नारायणपरत्वमेव, न परमेश्वरपरत्वम् । अपिच । यस्मिन् वाक्ये रूपसंस्थाना-दिकं श्रूयते, तत्र तत्तद्देवतापरिग्रह एवौत्सर्गिकः । असाधारण्यात् । ब्रह्मणश्च स्वतो नीरूपताया, 'अरूपवदेव हि तत्प्रधानत्वात्' इत्यत्र वक्ष्यमाणत्वात् । क्वचित्तु प्रकरणादिबलाद्देवादीन् विहाय देवादिरूपैरेवारूप ईश्वर उपास्य इष्यते । न चेह तथा बलवत् प्रकरणादिकमस्ति । अन्यथा देव-तोपासनमात्रोच्छेदापत्तेः । सर्वत्रैव ब्रह्मोपासनसंभवात् । लीलाविग्रहोऽपि विष्ण्वादिदेवतानामेव स्वस्वाधिकारसंपादनार्थः । न त्वीश्वरस्य । 'अप्राणो ह्यमनाः शुभ्रः, अक्षरात् परतः परः', 'न तस्य कार्यं करणं च विद्यते' इत्यादिश्रुतीनां संकोचे प्रमाणाभावात् । तदुक्तं विष्णुपुराणे ।

'स देवोऽन्यशरीराणि समाविश्य जगत्स्थितिम् ।
करोति सर्वभूतानां नाशं चान्ते जगत्पतिः' ॥ इति ।

तत्र विषयवाक्यव्याख्यानादिकं तु न दुष्टम् । तथाप्येतस्य विषयवाक्यत्वेऽधिकरणस्य पूर्वाधिकरणेन सह न स्फुटा संगतिरिति बोध्यम् । यत्पुनश्छान्दोग्यवाक्यस्यसालिङ्गत्वा-दिकमुक्तं, तत्तथैवैव । अत्र पाप्मभ्य उदयस्य सर्वकर्माञ्जनराहित्यरूपस्य विवक्षितत्वादिति प्रागेवोक्तम् । नच पाप्मशब्दस्य पापे शक्तत्वात् तत उदयस्य पापनाशरूपत्वमेव युक्तं, न यावत्कर्माञ्जनराहित्यरूपत्वमिति वाच्यम् ।

'स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः ।
कर्मणां जात्यशुद्धानामनेन नियमः कृतः' ॥

रश्मिः ।

**हिरण्मयेत्यादि** । क्वचिदिति रामतापिनीयादौ ।

'रमन्ते योगिनोनन्ते नित्यानन्दे चिदात्मनि ।
इति रामपदेनासौ परब्रह्माभिधीयते' ॥
'चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः ।
उपासकानां कार्यार्थे ब्रह्मणो रूपकल्पना' ॥ इति ।

बलवदित्यादि छान्दोग्ये ॐ इत्येतदक्षरमुद्गीथमुपासीत इत्युद्गीथप्रकरणं तत्र रूपोपासने बलवत् । मायादिप्रकाराणां संभवात् । हिरण्मयपदकृतं बलवत्त्वं वारयन्ति स्म अन्यथेत्यादिना । मन्विति यथा श्रीभागवते 'सत्त्वं रजस्तम इति प्रकृतेर्गुणा' इत्यादि तथा न । नाशं चेति चकारेणोत्पत्तिर्ग्राह्या । एतद् दूषयन्ति स्म तत्र विषयेत्यादिना । यावदित्यादि कर्मत्वावच्छिन्न-विहितनिषिद्धकर्मजन्यपुण्यपापाञ्जनराहित्यरूपमित्यर्थः । अशुद्धिश्चाबल्यस्योभयत्र तौल्यादुभयोः पाप्मत्वमेवेत्याहुः स्वे स्व इत्यादि । स एव गुणो नेतरः तदुपपादयति स्म भगवान् कर्मणामिति । यस्माद्विधिप्रतिषेधाभ्यां अनेन गुणदोषविधानेन कर्मणां नियमः संकोचः कृतः । कुत इत्यत आह जात्योत्पत्त्यैवाशुद्धानां तत्त्वप्राप्तानां संगानां त्याजनेच्छया । अयं भावः । पुरुषस्याशुद्धिर्नाम न प्रवृत्तेरन्याऽस्ति स्वाभाविकप्रवृत्त्यैव तस्य मलिनत्वात् । नापि सहसा सर्वतो निवृत्तिः संभवति अत इदं कर्तव्यमिदं नेत्येवं स्वाभाविकप्रवृत्तिसंकोचद्वारेण निवृत्तिरेव क्रियते 'उत्पत्त्यैव हि कामेषु प्राणेषु

भाष्यप्रकाशः ।

इति विधिप्रतिषेधयोर्व्यवहारनियमार्थत्वबोधके वाक्ये कर्ममात्रस्य जात्यशुद्धत्वबोधनेन तदज्ञाने पुण्यरूपेऽप्यशुद्धिज्ञाबल्यस्य दुरपोहत्वेन सर्वस्यैव पाप्मरूपत्वात् । अन्यथा पुण्यफलस्यापि मुमुक्षूपादेयताद्यापत्तेः । अतो धर्मान्तराद्युक्तावपि न वाक्यस्य जीवपरत्वं शक्यशङ्कम् । आदित्यान्तस्तु न हिरण्यगर्भादिः । मात्स्ये परं धामोद्दिश्य तस्य पूषत्वकथनेन तत्र परब्रह्मण एवाभिप्रेतत्वनिश्चयात् । ध्येयः सदेति वाक्येऽपि परमेश्वर एवोच्यते ।

'नारायणः शिवो विष्णुः शंकरः परमेश्वरः ।
एतैस्तु नामभिर्ब्रह्म परं प्रोक्तं सनातनम्' ॥

इति वाराहपुराणवाक्येन तस्य ब्रह्मनामत्वात् । नीरूपेश्वरवादस्येक्षत्यधिकरणव्याख्यान एव निरस्तत्वात् । नन्वेवं, 'यो देवानां नामधा एक एव', 'एकं सद्विप्रा बहुधा वदन्ति' इत्यादिश्रुत्या, 'हव्यकव्यभुगेकस्त्वं पितृदेवस्वरूपधृक्' इत्यादिस्मृत्या च सर्वत्र ब्रह्मोपासनायाः शक्यवचनत्वेन देवतामात्रोपासनोच्छेद इति शङ्क्यम् । ज्ञानपूर्वकोपासकान् प्रति तस्येष्टत्वात् । अज्ञान् प्रति तु तदभावात् । 'येऽप्यन्यदेवताभक्ता' इत्यादिभगवद्गीतावाक्यसंदर्भेण तथा निश्चयात् । स्वरूपे विग्रहस्तु नास्त्येव । आकारस्तु स्वरूपात्मक एवेत्यसकृदुक्तमुपपादितं च । तेन 'अप्राणो ह्यमनाः शुभ्रः' इत्यादिश्रुतीनां न विरोधः । अरूपवदेवेति सूत्रे तु रूपवद्भिन्नमेवोच्यते, न तु रूपरहितम् । नञः पर्युदासार्थत्वात् । अन्यथा त्वरूपमित्येतावतापि रूपाभावबोधनसिद्धेर्मतुब्वैयर्थ्यस्य दुर्वारत्वात् । अतो, 'न तस्य कार्यं करणं च' इत्यत्र संकोच एतदेव सूत्रं प्रमाणमित्यसंकोच एव प्रमाणाभावः । श्रुतयस्तूक्ता वक्ष्यन्ते च । उक्तं विष्णुपुराणवाक्यं

रश्मिः ।

स्वजनेषु च' इत्यादिना एकविंशे वेदस्य प्रवृत्तिपरत्वनिषेधात् इति श्रीधरानुसारेण 'गुणदोषविधानेन सङ्गानां त्याजनेच्छया' इत्यर्धेन सह श्लोकान्वयः । मुमुक्ष्विवति आदिशब्देन पुण्यफलार्थं प्रवृत्तिः । धर्मान्तरस्येत्युक्तं दूषयन्ति अतो धर्म इति । धाम्नः परमिति विशेषणान्तरलब्धमर्थमाहुः परं धामेत्यादि । तत्रेति परधामपूषणि । एवकारो हिरण्यगर्भादिव्यवच्छेदकः । पूषत्वस्य ब्रह्मलिङ्गत्वात् । देवतामात्रेति देवतैव देवतामात्रं तस्योपासनाया उच्छेद इत्यर्थः । तस्येति उच्छेदस्य । अज्ञानिति पूर्ववाक्याज्ञानित्यर्थः । तथेत्यादि 'तेपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम्' इति तत्र कथनादिति भावः । पर्युदासेति 'पर्युदासः सदृग्ग्राही' इति रूपवद्भिन्नत्वे सति रूपवत्सदृशत्वेत्यर्थः । अन्यथेति नञः प्रसज्यप्रतिषेधकत्वप्रकारकत्वे तु । रूपवदभावापेक्षया रूपात्यन्ताभावस्य लघुत्वात् । अत इति पर्युदासाश्रयणादेव संकोचे लौकिककार्यादौ । एतदिति पर्युदासार्थकनञ्घटितमरूपवत्सूत्रस्यासंकोचः पर्युदासं विना यथाश्रुतव्याख्यानं संकोचे । तथा च कार्यत्वावच्छिन्नप्रतियोगिताकाभावः करणत्वावच्छिन्नप्रतियोगिताकाभावश्च विद्यते इति न श्रुत्यर्थः । किं तु लौकिककार्यत्वेत्यादिरूपया लौकिककरणत्वेत्यादिरर्थः । सूत्रानुसारेण निरुच्य श्रुत्याकाङ्क्षामौनेवत् । श्रुतय इत्यादि 'सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम्' इत्याद्याः ।

१. वाक्यमित्यः । २. अनपदिष्टाने श्रुतिः ।

## आकाशस्तल्लिङ्गात् ॥ २१ ॥

अस्य लोकस्य का गतिरित्याकाश इति होवाच। सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते । आकाशं प्रत्यस्तं यन्ति । आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणमिति । तत्र संशयः । भूताकाशो ब्रह्म वेति। ननु कथमत्र संदेहः । आकाशव्योमशब्दा ब्रह्मण्येव प्रयुज्यन्ते ब्रह्मप्रकरणे । कार्यनिरूपणे तु महाभूतवचनः । यथा, आकाश आनन्दो न स्यात्, परमे व्योमन् प्रतिष्ठिते-

---

भाष्यप्रकाशः ।

त्यवान्तरस्थितिनाशविषयकं, न तु महाकार्यविषयकम् । शरीराणीति बहुवचनेन तथानिश्चयात् । अत इदं भिक्षावैयर्थ्यदन्यायामेवावादीति दिक् । अतो यत्रासाधारणधर्मोपदेशोऽभिमान्यादिभेदव्यपदेशो वा तत्र रूपोक्तावनुक्तौ वा परं ब्रह्मैवाभिधीयत इति निश्चयः ॥ २० ॥

इति षष्ठमन्तस्तद्धर्माधिकरणम् ॥ ६ ॥

आकाशस्तल्लिङ्गात् ॥ २१ ॥ छान्दोग्यप्रथमप्रपाठकस्थं विषयवाक्यमुपन्यस्याधिकरणप्रयोजनं विचारयन्ति नन्वित्यादि, विचार इत्यन्तम् । तत्र कथंपदे गृहीतं प्रकारं विभजन्ते आकाशेत्यादि । यद्यपि लोकप्रसिद्धेः प्रयोगप्राचुर्याच्च संदेहः संभवति, तथाप्यस्य वाक्यस्य प्रकरणावरुद्धत्वेन प्रकरणे चाकाशपदेन कारणमुक्त्वा कार्यनिरूपणस्योपक्रान्ततया

रश्मिः ।

'कांस्यघण्टानिनादस्तु यथा लीयति शान्तये ।<br>ॐकारस्तु तथा योज्यः शान्तये सर्वमिच्छता ॥<br>यस्मिन् संलीयते शब्दः तत्परं ब्रह्म गीयते ।

इति ब्रह्मविद्योपनिषदि लयस्य महेश्वरात्प्रवचने स्वाप्ययादिति सूत्रे च ब्रह्मणो न सर्वव्यवहारातीतत्वम् । कुतः स्वस्मिन्नप्ययालयात् । स्वस्वरूपं तु द्वादशे 'एष नैमित्तिकः' इत्यत्र विश्वसृक्पदेन ज्ञानं तल्लक्षणं सर्वोपनिषदि अवस्थात्रयभावाद्भावसाक्षि स्वयं भावरहितं नैरन्तर्यं चैतन्यमित्युच्यत इति । 'अनन्तात्मपदेन पूर्वव्यापकं चैतन्यं तत्रैवानन्तं नाम मृद्विकारेषु इव सुवर्णतन्तुकार्येषु अव्यक्तादिसृष्टिप्रपञ्चेषु पूर्वं व्यापकं चैतन्यमनन्तमित्युच्यते इति आत्मसूत्रदेवानन्दोनाम सुखचैतन्यस्वरूपमपरिमितानन्दसमुद्रः अविशिष्टसुखस्वरूपश्च आनन्द इत्युच्यते' इति । निश्चयादिति महाप्रलयेऽशरीरिणः कर्तृत्वम् । भिक्षेत्यादि विज्ञानभिक्षुत्वादिन्द्रभिक्षुत्वं विज्ञानक्षरणादियं भिक्षावैयर्थ्यदन्येत्याशयः । असाधारणेति पूर्वसूत्रोक्ता अपहतपाप्मत्वादयः । अभीत्यादि अयं द्वितीयसूत्रे य आदित्ये तिष्ठन् इत्यत्र ॥ २० ॥

इति षष्ठमधिकरणम् ॥ ६ ॥

आकाशस्तल्लिङ्गात् ॥ २१ ॥ गृहीतमित्यादि 'किमथ' इत्यनेन प्रकारे थमुप्रत्ययात् प्रत्ययांशेन गृहीतं प्रकारमित्यर्थः । विभजन्त इति प्रकरणाभ्यां विभजन्ते । तथा च प्रकरणभेदात् न द्वितीयकोटिरितः संशये द्वितीयकोटिः किंप्रकारेति प्रश्नः । लोकप्रसिद्धिं श्रीमागवतादौ भूताकाशे प्रयोगप्राचुर्यं च समाकलय्य लौकिकस्फूर्तिं पुरस्कृत्याप्यस्यवेदान्तानां पूर्वपक्षविभागं समादधानाः किंचिदाहुः यद्यपीत्यादिना । प्रकरण इत्यादि तत्तल्लोकस्थलोककारकयोः कार्यकारणयोरा-

त्यादि। आत्मन आकाशः संभूत इति कार्यनिरूपणम् । अतः प्रकरणादेव संदिग्धनिर्णये किमिति सूत्रारम्भः। जन्मादिलक्षणसूत्रेण चायमर्थो निर्णीतः। अन्यथा ब्रह्मशब्देऽपि संदेहः स्यात् । महाभूतवेदादिवाचकत्वात्। तस्मात् प्रकरणादेव परिज्ञानं भविष्यतीति चेत्। उच्यते । असंदिग्धे प्रकरणे तथैव निर्णयः। इह पुनः प्रकरणमपि संदिग्धम्। अतो विचारः।

अवान्तरविद्यायां पर्यवसितप्रकरणवदस्यापि प्रकरणस्य भूताकाश एव पर्यवसानमिति लोकभाष्यन्यायेनाकाशो भौतिक एवेति पूर्वपक्षस्तत्राह।

---

भाष्यप्रकाशः ।

प्रकरणादेवाकाशशब्दार्थस्य निर्णयसिद्धेराकाशः प्रकरणादिति सूत्रयितव्यम्। अथ प्रकरणापेक्षया लिङ्गस्य बलिष्ठत्वात् तेन निर्णिनीषा तदा तु जन्मादिसूत्रे लिङ्गस्य निर्धारितत्वात् तेनैवैतद्वाक्यनिर्णयसिद्धेः सूत्रमेव न प्रणेतव्यम्। अथ जन्मादिसूत्रे लक्षणस्यापरीक्षितत्वान्न लिङ्गता, तदा त्विदानीं तस्याः सिद्धत्वादाकाशो ब्रह्मलिङ्गादित्येवं प्रणेतव्यम्। न तु तल्लिङ्गादिति पूर्वपक्षाशयः। प्रतिवचनाशयस्तु स्फुट एव । प्रकरणस्य संदिग्धत्वं तु उपक्रमे उद्गीथोपासनस्योक्तत्वादत्र परोवरीयोरूपस्योत्कृष्टस्य फलस्य कथनाच्च ज्ञेयम् । तेन विचारस्यावश्यकत्वमिति। अधिकरणसंगतिस्तु प्रसङ्गरूपा। पूर्वाधिकरणयोः प्रत्ययकृते संदेहे वारितेऽत्र प्रकृतिकृतसंदेहस्य वारणीयत्वादिति । प्रयोजनमुक्त्वा पूर्वपक्षमाहुः अवान्तरेत्यादि । तथा च यथा जानश्रुत्युपाख्यानं संवर्गविद्यायां पर्यवसितं तथास्यापि प्रकरणस्य भूताकाश एव पर्य-

रश्मिः ।

काङ्क्षारूपे ब्रह्मप्रकरणेऽत्र तृतीयब्रह्मप्रकरणे चकारेण विषयवाक्ये। अत्र लोकस्य भूतस्य गतिः कारणम्। निर्णयेत्यादि। आकाशपदस्य ब्रह्मवाचकत्वनिश्चयो ज्ञानं तस्य सिद्धेरित्यर्थः। भाष्ये। कार्यनिरूपणं किमित्याकाङ्क्षायामाहुः आत्मन इति। प्रकृते । जन्मादिलक्षणेत्यादिभाष्यं विवृण्वन्ति स्म अथेत्यादि। लिङ्गस्येति जगज्जन्मादिकर्तृत्वरूपस्य श्रुतिसामर्थ्यस्य। ब्रह्मलिङ्गादिति। नन्वसिद्धस्य लिङ्गस्य कुत उपन्यासः व्यासोक्तत्वात् सेत्स्यतीति। न तु तदिति तस्माल्लिङ्गात्तल्लिङ्गादित्यर्थेऽसिद्धत्वात्। प्रतीत्यादि उच्यत इत्यादिनोक्तस्य प्रतिवचनस्येत्यर्थः। प्रतिवचने किंचिद्विवृण्वन्ति स्म प्रकरणस्येति। उक्तत्वादिति 'ओमित्येतदक्षरमुद्गीथमुपासीत' इतिश्रुतेरित्यर्थः। परोवरीय इति आकाशः परायणमित्यस्याग्रे पठ्यते 'स एष परोवरीयानुद्गीथः' इति। एवं च महाप्रकरणवदवान्तरप्रकरणमपि ह्यात्मपरमाकाशपरं वेति संदिग्धं वरीयसः का साम्नो गतिरिति स्वर इति होवाचेत्यादिश्रुत्युक्तस्वरप्राणादेः सकाशादतिशयेन वरः वरीयान् इति व्युत्पत्तिः। परोवरीयान् परमात्मेति तदर्थः। विरुद्धा द्वितीया कोटिः पूर्वपक्षभाष्ये च। अतो विचार इत्यत्र भाष्येऽत इत्यत्र सार्वविभक्तिकस्तसिरित्याशयेन तस्य भाष्यस्य विवरणम्। तेन विचारस्येति। स्वतस्तस्योपेक्षानर्हत्वरूपं प्रसङ्गं स्मारयन्ति स्म पूर्वेत्यादि । प्रत्ययेत्यादि यद्यपि मयट्प्रत्ययमात्रकृतसंदेहो वारितस्तथापि ह्यधिकरणानां न्यायरूपत्वेनैवमुक्तम्। किं च पूर्वाधिकरणे यद्यपि हिरण्मयशब्द आनन्दवाचीति भाष्येण प्रकृतिकृतसंदेहोपि वारितस्तथापि प्रकृतिमात्रकृतसंदेहो न वारितः इति प्रत्ययकृत इत्युक्तम्। अत्र तु विविक्तप्रकृतिकृतसंदेहो वारितः। इतिशब्दोधिकरणारम्भप्रयोजनसमाप्तौ। जानश्रुत्यादि छान्दोग्ये चतुर्थे प्रपाठके द्रष्टव्यम्। जानश्रुतस्यापत्यं जानश्रुति-

आकाशस्तल्लिङ्गात् ॥ आकाशः परमात्मैव । कुतः । तल्लिङ्गात् । श्रुतिलिङ्गादयो नियामकत्वेन पूर्वतन्त्रवदिहापि गृह्यन्ते । लिङ्गं श्रुतिसामर्थ्यम्; एकवाक्यता च सर्वासां ब्रह्मश्रुतीनाम् । तत्र ब्रह्मैव जगत्कारणमिति निःसंदिग्धेषु

भाष्यप्रकाशः ।

वसानम् । लोकेऽवगतसामर्थ्यः शब्दो वेदेऽपि बोधक इति लोकभाष्यन्यायेनात्र भूताकाशग्रहणस्यैव युक्तत्वात् । लिङ्गापेक्षया श्रुतेः प्राबल्यस्य पूर्वतन्त्रे सिद्धत्वात् । 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' इति जैमिनिसूत्रात् । ब्रह्मग्रहणे तु लक्षणापत्तेः । बाधकं विना तदादरस्यानुचितत्वात् । नचाकाशते, आकाशयतीति वा योगेन प्रकाशकं ब्रह्मोच्यतेऽतो न दोष इति वाच्यम् । रूढ्यपेक्षया योगस्यापि दुर्बलत्वात् । नच लिङ्गबोधकवाक्यासंगतिः । सर्वाणि ह वा इमानि भूतानीति सर्वपदस्य भूतपदस्य च वाय्वादिषु संकोचात् सुखेन संगतेः । किंचेह, इमानीति कथनादवान्तरभूतसंबन्ध्यवकाशरूप एव स ग्राह्यः । फलं तु तादृशोपासनाबलादेव भविष्यतीति पूर्वः पक्ष इत्यर्थः । सूत्रं पठित्वा समादधाना व्याचक्षते आकाश इत्यादि । नियामकत्वेनेति अर्थविशेषनिर्णायकत्वेन । श्रुतिसामर्थ्यमिति अन्यानपेक्षस्य शब्दस्य स्वरसेनार्थबोधकत्वम् । एकवाक्यतेति ।

रश्मिः ।

स्यादुपास्यानं 'वायुर्वाव संवर्गः' इत्याद्युक्तायां संवर्गविद्यायाम् । संवर्गपदस्य योगस्तु संवृक्ते स्थितिकाले सर्वमात्मनि स्थापयतीति संवर्ग इति यदा वाऽग्निरुद्वायति वायुमेवाप्येति इति श्रुतेः उद्वायतीत्यस्य शाम्यतीत्यर्थः । लोके येष्वर्थेषु प्रसिद्धानि पदानि सति संभवे तदर्थान्येव सूत्रेष्वित्यवगन्तव्यम् । नाध्याहारादिभिरेषां कल्पयितव्योऽर्थः परिभावितव्यो वेति. जिज्ञासाधिकरणस्थं शाबरभाष्यं तदेव लोकभाष्यपदेनोच्यते तेन न्यायेनेत्याहुः लोक इत्यादि । लक्षणेति । आकाशपदस्येत्यर्थः । शरीरशरीरिणोरध्यासकः संबन्धो लक्षणा । बीजस्य तात्पर्यानुपपत्त्यन्वयानुपपत्त्यन्यतरस्याभावाल्लक्षणापि न संभवतीत्याहुः बाधकमित्यादिना । वाय्वादिष्विति 'आकाशाद्वायुर्वायोरग्निरग्नेरापः' इति श्रुत्युक्ताकाशकार्येषु । इति कथन इति इदमो रूपस्य प्रत्यक्षगत्वेनावान्तरभूताकाशस्यैव प्रत्यक्षत्वात्तथेत्यर्थः । तादृशेति तादृशाकाशोपासनाबलात् । अर्थेत्यादि एतेन तल्लिङ्गादित्यस्य श्रुतेर्लिङ्गादित्यर्थोऽबोधि । इदानीं तस्य तात्पर्यनिर्णयस्य लिङ्गं तल्लिङ्गं तस्मादित्यर्थं हृदिकृत्याहुः विभाग इत्यादि । अयमाशयोऽत्र बोध्यः । ब्रह्मवाक्यानामेकवाक्यतोक्ता सा च दुर्लभा बहुत्वविशिष्टेषु ब्रह्मवाक्येषु एकत्वावच्छिन्नाया वाक्यताया अशक्यवचनत्वात्, एकत्वस्य बहुत्वविरुद्धत्वात् । तस्मादर्थैकवाक्यता पूर्वतन्त्रकृता गृह्यते लाघवात् सेयमेकवाक्यता भावार्थपादभाष्येऽतन्वन् श्रीमदाचार्याः । एकस्मिन् वाक्ये न तु बहुषु वाक्येषु तामेव गृह्णीमः । अस्य लोकस्येत्यस्याकाशपरत्वमपास्य ब्रह्मवाक्यत्वमत्र सूत्रे व्यासपादैर्निरणायि । एवं चास्य यतो वा इमानि इत्यस्य चाधिकरणसंगत्या विभागेपि साकाङ्क्षत्वेन ब्रह्मणो जगज्जन्मादिकर्तृत्वरूपेणैकत्वादेकं वाक्यमपरनये वेदलोकशब्दयोरेकत्ववत् । अर्थैकत्वमाकाशपदस्य भौतिकाकाशपरत्वापवदनेन भवति तदपोहितमाकाश इत्यनेनाधिकरणांशेन तत्र रूढ्या योगस्यापहरणात् कथमाकाशपदवाच्यत्वं ब्रह्मणः इत्यत उत्तरमपाठीत् तल्लिङ्गादिति तस्य तात्पर्यस्य योनिर्निर्णयः तस्य लिङ्गादिति । अयमर्थः । आकाशपदस्यास्तु रूढिः परं त्विह नास्ति । तात्पर्यश्रुतिनिर्णायकानां पदानामासीत्सुखानन्दानामिह सत्त्वात् इति । नहि

सिद्धम् । सर्वशब्दवाच्यत्वं ब्रह्मण्येव । तत्र वाक्यार्थापेक्षया पदार्थस्य दुर्बलत्वात्

भाष्यप्रकाशः ।

विभागे साकाङ्क्षत्वे सत्येकार्थप्रतिपादकता । सा च समन्वयरूपा । उपपत्त्यात्मकं तात्पर्य-निर्णयलिङ्गम् । तेन तल्लिङ्गादित्यस्य श्रुतिसामर्थ्यात्तात्पर्यनिर्णयलिङ्गाच्चेत्यर्थः सिद्ध्यति । मुख्यत्वादिति मुख्यार्थत्वात् । तथाच, 'यतो वा इमानि भूतानि जायन्ते' इत्यादिषु निखिल-जडजीवकारणत्वं ब्रह्मणि सिद्धम् । अत्रापि तदेव सर्वपदेन निखिलान्युद्दिश्य, भूतपदेन च देहविशिष्टजीवतया महाभूततया च तानि जीवजडरूपेण निष्कृष्य तत्कारणत्वमाकाशे बोध्यते । तथा, एभ्य इत्यनेन पूर्वोक्तान्येव भूतानि परामृश्य ततो ज्यायस्त्वं च बोध्यते । तथा परम-स्थानत्वरूपं परायणत्वं च । तद्यदि भूताकाशो गृह्येत, तदा सर्वपदार्थसंकोचेन सर्वपदसामर्थ्य-स्वार्थबाधाद् भूतादीनां पदानामपि तद् बाध्येत । तच्चासंगतम् । एकपदानुरोधेनानेकपदार्थ-संकोचात्मकस्य सामर्थ्यबाधस्यानुचितत्वादिति । किंच । 'सर्वे वेदा यत्पदमामनन्ति' इति 'तं त्वौपनिषदम्' इति च श्रुत्या सर्वस्य वेदस्य ब्रह्मण्येव तात्पर्यमिति सिद्धम् । तद्यदि निरङ्कुश-सर्वकारणत्वमस्मिन् वाक्ये भूताकाशस्योच्येत, तदार्थभेदाद् विभागे साकाङ्क्षत्वाभावाच्च सर्वासां श्रुतीनामेकवाक्यता व्याहन्येत । यद्यपि सर्वे वेदा इत्यत्रासंकुचितवृत्तिना सर्वशब्देन ब्रह्मणि सर्वशब्दवाच्यत्वं तत्तत्पदार्थरूपतया सिद्धं, तथापि तत्र वेदे वाक्यार्थापेक्षया तदेकदेशभूतस्य पदार्थस्य दुर्बलत्वाद् वाक्यार्थ एवादरणीयः । वाक्यार्थस्तु सर्वगतित्वादिः । गतिराश्रयः । प्रश्ने, शालावत्येनैतल्लोकगतेः पृष्टत्वेऽपि जैवलिना तदुपपादनार्थं सर्वभूतोत्पत्तिप्रलयाधारत्वं

रश्मिः ।

जगज्जन्मादिकर्तृवाचकपदानि प्रयुञ्जतो भगवतो व्यासस्य भौतिकाकाशे तात्पर्यास्तित्वं वक्तुं शक्यम् । नचार्थासंगतौ रूढिमाद्रणीमो वयं लिङ्गाभावात् । अत उक्तमेकार्थस्य ब्रह्मरूपस्य प्रतिपादकता । सा च समन्वयरूपेति । ननु तर्हि तात्पर्यलिङ्गादित्येव सिद्धे निर्णयपदमधिकं निग्रहस्थानमिति चेन्न तात्पर्यलिङ्गेन चेत्येव तल्लिङ्गादित्यनेन तदपर्युक्तत् । तथाप्यत्र यदुददानं तत्फलं तु ओमित्येकाक्षरं ब्रह्म सर्वं तस्योपव्याख्यानं इति निर्णयस्तत्संग्रहणार्थम् । अन्यथाकाशशरीरं ब्रह्मेति श्रुतिरूपाप्रतिहताङ्गेन वेदेन ब्रह्मशरीरे समन्वयः स्यात् एतदग्र उपपादयिष्यामो वयम् । निष्कृष्टमर्थमाहुः रूपेत्यादि । अत्रेदं विशेषणमुत्पत्त्यात्मकस्यास्य लोकस्य का गतिरित्यादिश्रुतिस्थत्वेन सूत्रे व्यावृत्त्यर्थं किं त्वेकवाक्यतया श्रौतं यदेष आकाश आनन्दो न स्यादित्युक्ता उपपत्तिरेव लिङ्गं प्रथमज्ञप्तेः पूर्वतन्त्रे उत्पत्तिपदार्थत्वात् । तात्पर्येत्यादि । आकाशशब्देनात्र ब्रह्मबोधो भवतु इत्याकारिकेच्छा वक्तुस्तात्पर्यम् । सिद्ध्यतीति । न च ब्रह्मलिङ्गादित्यर्थः साधुः तस्याधिकारसूत्रलभ्यत्वेपि साध्यत्वात् । अर्थस्य ब्रह्मणो मुख्यत्वेन रूपेणोपस्थितिरित्याहुः मुख्यार्थेत्यादि । पूर्वभाष्यार्थस्तु सिद्धमिति शास्त्रयोनित्वादिति सूत्रांशेन सिद्धम् । सर्वशब्देति कार्यकारणैक्यमर्षणात् । ओमित्येकाक्षरं ब्रह्म सर्वं तस्योपव्याख्यानमिति श्रुते-रेवकारः । एवं पदवाच्यत्वमुक्त्वा वाक्यवाच्यत्वमपि ब्रह्मणीत्याहुः तत्र वाक्यार्थेति । दुर्ब-लत्वादिति यथा घटः भवत्येतयोरेकतरानुक्तौ सत्यां न शक्यार्थो दुर्बलो भवति परस्परं सापेक्षत्वात् सापेक्षमसमर्थं भवति इत्युक्तेः एकतिङ् वाक्यमिति सापेक्षत्वाभावो वाक्यार्थः प्रबलः । सापेक्षत्वा-भावात् अन्यत्सर्वमग्रे स्फुटम् । तत्र ब्रह्मैवेत्यारभ्य यावत्समाप्ति सर्वोपि ग्रन्थस्तावदुपपत्तिरूप-

१. पदस्य अनेकपदबोधकत्वादिः ।

रश्मिः ।

तात्पर्यलिङ्गरूपद्वितीयार्थोपपादनायेत्याहुः तथा चेत्यादिना । अत्रेति ब्रह्मवाक्ये । सर्वपदेति सर्वाणीति विषयवाक्यस्थसर्वपदार्थस्य संकोचेन आकाशमात्रकार्येषु संकोचस्तेन । अर्थबाधादिति । केवलोत्पन्नकार्यरूपत्वस्य ब्रह्मत्वात् बाधेन तथेत्यर्थः । भूतादीनां वाय्वादीनां पदानां वाय्वादिवाचकानां सर्वपदसामर्थ्यं तत्तद्वाचकत्वेन बाध्येत ततश्च सर्वाणि ह वा इमानि भूतानीत्यत्र भूतानीत्यस्य सर्वाणीति विशेषणासंगतिरिति भावः । एकपदेत्यादि आकाशपदेत्यर्थः । सर्वशब्देत्यादि भाष्यं विवृण्वन्ति स्म किं चेत्यादिना । योगजधर्मेण प्रत्यासत्त्यात्मकेन अयं महान् पुरुष इत्यत्र ब्रह्मणः सर्वशब्द आम्नातृणशब्दस्तच्छब्दपर्यायो महापुरुषशब्दः तद्वाच्यत्वम् । यद्वा सर्वाणीतिशब्दस्तद्वाच्यत्वम् । अकारो वै सर्वा वागिति श्रुतेरशब्दवाच्यत्वं ब्रह्मणः एवं च सर्ववाचकः शब्दः सर्वशब्दोकारशब्दश्च तद्वाच्यत्वम् । अत्र कठवल्लीबृहदारण्यकश्रुती प्रमाणयन्ति सर्वे वेदा इत्यादि । पदमक्षरमामनन्ति अभ्यसन्ति व्यष्टिसमष्टिभेदेन समष्टेरुक्तत्वाद्व्यष्टेर्वक्ष्यमाणत्वात् उपरमामः । ब्रह्मपदं वेदार्थे वेदात्परात्परे च वर्तते तत्र वेदार्थे 'मां विधत्तेऽभिधत्ते मां' इति भगवद्वाक्याद्वेदार्थे ब्रह्मण्यभिधा वेदात्परात्परे तात्पर्यं वक्तुरिच्छात्मकम् । यद्यपि अस्मत्पदेन मामित्यत्र परात्परमुच्यते तथाप्यदृश्यत्वाधिकरणेऽक्षरामिश्रमक्षरे स्थितमित्युक्त्योपपन्नम् ।

'नारायणादिरूपाणि ज्ञातान्यस्माभिरच्युत ।
सगुणं ब्रह्म सर्वेदं वस्तुबुद्धिर्न तेषु नः ॥
ब्रह्मेति पठ्यतेऽस्माभिर्यद्रूपं निर्गुणं परम् ।
वाङ्मनोगोचरातीतं ततो न ज्ञायते तु तत्' ॥ इति

ज्ञानं तु अभिधया प्रतिपादनानन्तरमतो ज्ञानानीत्यत्राभिधावृत्तिः श्रीनारायणादौ लभ्यते । न ज्ञायते इत्यत्र वाङ्मनोगोचरातीते त्वपोषतेतस्तत्र तात्पर्यम् । यदा पदं पदनीयमिति कठवल्ल्यनुसार्यर्थः तदा तु तात्पर्यवृत्त्या प्रतिपादयन्ति । न चानेकार्थसंकटे तात्पर्यज्ञानं कारणं न तु वृत्त्यन्तरम् । वृत्तिस्तु शक्तिलक्षणान्यतरसंबन्ध इति शङ्क्यम् । आकान्तरत्वात् । व्यञ्जनाया आलंकारिकसंमतत्वाच्च । प्रस्थानरत्नाकरे तु व्यञ्जना तात्पर्येणैव गतार्थेत्युपपादितम् ।

'गच्छ गच्छसि चेत् कान्त पन्थानः सन्तु ते शिवाः ।
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान्' ॥

इत्यत्र मा त्वं गम इत्यभावे न व्यञ्जनापि तु तात्पर्यवृत्त्यैव निर्वाहः । लक्षणावृत्त्येति नैयायिकाः । तत्र पुष्पवच्छब्दव्यतिरिक्तस्थले युगपद्वृत्तिद्वयविरोधः । तच्च वाक्यार्थेत्यादिभाष्यं विवृण्वन्ति स्म यद्यपीत्यादिना । तत्तत्पदानि घटपटादिपदानि तदर्थतया व्युत्पन्नेति यावत् । तदुक्तम् 'सर्वाणि रूपाणि विचित्य धीरः नामानि कृत्वाभिवदन् यदास्ते' इति । एवं चास्मिन् पक्षे ब्रह्मपदं न ब्रह्मपरमपि तु गौण्येति । तथापि तत्रेति व्याख्येयम् । वेद इति व्याख्या एतद्ब्रह्मवाक्येदकं पदं लोकवैदिकपदपदार्थानां भिन्नत्वाद्वैदिकेषु वाक्येषु लौकिकपदार्थस्य शेषत्वस्यापन्नाच्च भाष्योक्तत्वाच्च । सर्वभूतानित्यादिरित्यत्रादिपदेन उपसंहारं घटयांबभूवुरुपक्रमोपसंहारयोरर्थनिर्णायकत्वात् । अस्य लोकस्य का गतिरित्यत्र गतिराश्रयः कारणमिति यावत् । मध्ये सर्वभूतोत्पत्तिः सर्वभूतास्तगमनं ज्यायस्त्वे विषयवाक्यनिरुक्तानि ज्ञेयानि वाक्यार्थसमुदायस्य महावाक्यार्थत्वात् । यथादिपदेन

१. (पिपीलिका) ब्राह्मणभाष्ये । २. सर्वमिदतः प्रसवस्तथा । ३. विधिनिषेधार्थः ।

वाक्यार्थः सर्वगतित्वादिः । तद् वाक्यार्थान्यथाऽनुपपत्त्या आकाशपदार्थो ब्रह्मेति सर्वशब्दवाच्यत्वाच्च न लक्षणा। मुख्यत्वाच्च । यावन्मुख्यपरत्वं संभवति तावन्न कस्यापि वेदान्तस्यापरब्रह्मपरत्वमिति मर्यादा । तस्माद्, यदेष आकाश आनन्दो न स्यादितिवदत्राप्याकाशो ब्रह्मैवेति सिद्धम् ॥ २१ ॥

इति प्रथमाध्याये प्रथमपादे सप्तमं तल्लिङ्गाधिकरणम् ॥ ७ ॥

भाष्यप्रकाशः ।

वदता परायणपदेन सर्वगतित्वं प्रतिपाद्यत इति । तथा आदिपदेन सर्वज्यायस्त्वं परोवरीयस्त्वमनन्तत्वं च । तत् तस्मात् कारणात् वाक्यार्थान्यथानुपपत्तिरूपबोधकत्वापि, आकाशपदस्य ब्रह्मण्येव तात्पर्यमित्यर्थः। सर्वशब्दवाच्यत्वादित्यादिर्ग्रन्थस्तूक्तानार्थः । एवमत्र श्रुतिसामर्थ्यरूपेण लिङ्गेन उपपत्तिरूपेण तात्पर्यलिङ्गेन चेति द्विधा व्याख्यातम् ।

रश्मिः ।

भाष्ये आकाशः परायणमित्यग्रहीदुराचार्यास्तथादिपदेन विषयवाक्यप्रेतनानां स एष परोवरीयानुद्गीथः स एषोनन्त इति श्रुत्युक्ताः प्रतिपाद्यन्ते इति । एकतिङ् वाक्यं तेन परायणमित्यस्य क्रियापदमन्तरा विभक्त्यनुत्पत्तेर्वाक्यत्वमेवमग्रेपि । तद्वाक्यार्थेत्यादिभाष्यं विवृण्वन्ति स्म तत्तस्मादित्यादि । वाक्यार्थेति वाक्यार्थस्य सर्वगतित्वादेः अन्यथाभूतिमाकाशपरत्वेनुपपत्तिस्तद्रूपयेत्यर्थः तात्पर्यमिति आकाशपदस्य तात्पर्यवृत्तिर्न तु गौणीत्यर्थः । उक्तानार्थ इति मुख्यार्थत्वात्तद्बाधाभावाच्च लक्षणेति प्रयोजनमेकमपरमाहुः यावदिति । इतिवदिति य एष आकाशः परमात्मा न स्यात् जगज्जन्मादिकर्ता कः स्यात् अतः परिशेषात् आकाशपदवाच्यं ब्रह्मैवेति सिद्धमित्यर्थः । अतोस्माभिः प्रासङ्गिकविवरणमात्रं कृतं न तूपपादनादीति भावः । उपपत्तीत्यादि । ननु तात्पर्येण श्रुतिसामर्थ्यलिङ्गमित्येवास्तु किंचाकाशपदार्थो ब्रह्मेति तदिति भाष्ये आकाशपदवाच्यं तत् लिङ्गादित्येव सूत्रान्वयध्वननं विना तल्लिङ्गादित्यत्र समासं ब्रह्मपदानुवर्तनात् । तत्कथं द्विधा तल्लिङ्गादिति लिङ्गव्याख्यानं चारुम् । एतदपेक्षया कुतः तल्लिङ्गादिति भाष्यस्यैव विस्पष्टत्वात् । सामर्थ्यपदेनैव चारितार्थ्यात्तत्पदवैयर्थ्यापत्तेः । श्रुतिपदवैयर्थ्याद् द्वितीयो हेतुरावश्यकः श्रुतिपदात्तात्पर्योपलब्धेः इति कुतो द्विधा व्याख्याने दोषः । एवं चाकाशपदवाच्यं तल्लिङ्गादित्येव सूत्रान्वयः । व्यङ्ग्यार्थापेक्षया वाक्यार्थस्य बलीयस्त्वादिति । द्वितीयं लिङ्गम् । तथा च पूर्वपक्षाशयवर्णने तल्लिङ्गादिहेतुः आकाशः प्रकरणादिति शङ्के आकाशस्य लिङ्गात् प्रकरणापेक्षया लिङ्गस्य बलिष्ठत्वादुक्तं एवमपि जन्मादिसूत्रेण सिद्धसाधनत्वात् पुनरुक्तिः जन्मादिसूत्रीयलिङ्गस्यापरीक्षितत्वात् काञ्चनमयधूमहेतुवदलिङ्गता अलिङ्गतायां तस्माल्लिङ्गादिति कर्मधारयसमासमर्मिततलिङ्गादित्यस्याप्यलिङ्गता । तन्निवृत्त्यर्थं तस्य लिङ्गं तल्लिङ्गमिति षष्ठीतत्पुरुषे तच्छब्दवैयर्थ्यं तदा ब्रह्मेति जिज्ञासासूत्रादनुवर्त्य ब्रह्मलिङ्गादिति हेतुः । आकाशः तत् जगत्कर्ता ब्रह्मलिङ्गादिति हेतुः सिद्धः । तत्र ब्रह्म वेद इतिश्रुतिसामर्थ्यरूपेण लिङ्गेन लिङ्गं श्रुतिसामर्थ्यमभिधालक्षणं तेनाकाशते आकाशयतीति वाकाशः इत्याकाशे योगरूढ्यभिधारूपेण लिङ्गेनाकाशस्य जगत्कर्तृत्वेनानुमितिविषयत्वं यदा तु यदेष आकाश आनन्दो न स्यादित्युपपत्तिरूपेण तात्पर्यलिङ्गेनानन्दत्वे नानुमितिविषयत्वम् । जगत्कर्ता आकाशत्ववानित्यनुमितिः । इदमनुमानं ब्रह्मविदि साधारणं ब्रह्मविदि ब्रह्मलिङ्गरूपहेतुसत्त्वेपि जगत्कर्तृत्वरूपसाध्याभावेन साध्याभावरूपवद्वृत्तित्वाद्धेतोः । श्रुतिसामर्थ्य-

१. इदं व्याख्येयम् । २. इदं व्याख्या ।

भाष्यप्रकाशः ।

अन्ये तु, तल्लिङ्गादित्यस्य, ब्रह्मासाधारणधर्मादित्यर्थं वदन्ति । केचिन्नैवं सूत्रयन्ति । तन्मतेऽधिकरणत्रयमनर्थकम् । तद्धर्मोपदेशाधिकरणेनैव गतार्थत्वादिति ।

विज्ञानभिक्षुस्तु, काण्वचतुर्थाध्याये सुषुप्तं जीवमुपक्रम्य पठ्यते, 'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते' इत्यादि । तत्र किं भूताकाशस्तद्देवता वा ब्रह्म वोच्यत इति संशयः । तद्बीजं तु उपक्रमोपसंहारयोर्ब्रह्मवाचकब्रह्मात्मादिपदवन्मुख्यवाक्ये भूताकाशादिवाचकस्याकाशपदस्य श्रवणम् । अन्यतरस्य गौणत्वे नियामकाभावस्त्रयाणामपि स्वापाधारत्वादविशेषश्च । निर्णयस्तु, आकाशो ब्रह्मैवेति । हेतुस्तु तल्लिङ्गात् । लिङ्गानि तु, स यथोर्णनाभिस्तन्तुनोच्चरेत्' इति 'यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति' तस्योपनिषत् सत्यस्य सत्यमित्यादीनि । सर्वश्रुतिषु ब्रह्मणि तथा दृष्टान्तदर्शनात् । अचेतनस्य भूताकाशस्याग्निविस्फुलिङ्गदृष्टान्तानर्हत्वात् । तद्देवतायाश्च सर्वदेवान्तर्गतत्वेनाकारणत्वात् । य एवायमाकाशे पुरुष इति पूर्ववाक्येनाकाशदेवताया ब्रह्मत्वप्रतिषेधाच्च । सत्यस्य सत्यमिति च नामपूर्ववाक्येन ब्रह्मण्येव व्याख्यातम् । तत्र सत्यशब्देन पञ्चभूतानि व्याख्याय तदपेक्षयापि निषेधशेषं ब्रह्म सत्यमिति श्रुत्यैव स्पष्टमुक्तत्वात् । स्कान्देऽपि,

रश्मिः ।

श्रुपपत्तिरूपं लिङ्गद्वयं साध्याभाववद्वृत्तित्वगृहीतमतो व्याख्यातमित्यर्थः । अन्य इति भास्कराचार्याः । वदन्तीति तथा च तद्भाष्यम् । तल्लिङ्गमव्यभिचारी धर्म इति । केचिदिति शंकराचार्यादयः । तथा च तद्भाष्यं परस्य हि ब्रह्मण इदं लिङ्गम् । 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' इतिरामानुजभाष्यम् । निखिलजगदेककारणत्वं सर्वस्माज्ज्यायस्त्वं परायणमित्यादीनि परमात्मलिङ्गान्युपलभ्यन्ते इतिमाध्वभाष्यम् । स एष परोवरीयानुद्गीथः स एषोनन्त इत्यादि तल्लिङ्गादिति । एवमसाधारणधर्मे स्वतात्पर्यवृत्तिं कुर्वन्तीत्यर्थः । शैवभाष्येप्येवं ज्ञातव्यम् । इत्तीति बोध्यमिति शेषः । तदेषामिति । स जीवः प्राणानामिन्द्रियाणां स्वविज्ञानेन चैतन्येन विज्ञानं प्रकाशनसामर्थ्यमादाय गृहीत्वा उत्तानार्थेयमग्रे । स्वापेत्यादि इदं तद्भाष्यप्रामाण्यात् सुष्ठु श्रुत्यन्तराच्च मनसोप्याधारत्वं सुष्ठु 'कामः संकल्पः' इत्यादिश्रुतेः । यथोर्णनाभिरिति श्रुतिर्बृहदारण्यके तस्य ब्रह्मणः उपनिषदिति नाम । अकारणेति द्रक्ष्याम्यहमिति चक्षुर्दध्रे इत्येवं नियतकार्यकारणत्वेनान्यत्राकारणत्वादित्यर्थकः व्यापकत्वेन वा तथात्वात् । पूर्वेत्यादि 'य एवायमाकाशे पुरुष एतमहं वा ब्रह्मोपासे' इतिगार्ग्यवाक्यं ब्रह्मत्वप्रतिषेधकं तु सहोवाचाजातशत्रुर्मामैतस्मिन् संवदिष्ठा इत्यजातशत्रोर्ब्राह्मणस्य वाक्यं तेनेत्यर्थः । श्रुत्यन्तरेणाप्याकाशदेवतातिरिक्तत्वमाह भगवान् भिक्षुः सत्यस्येत्यादिना । निषेधशेषमिति ।

स वै न देवासुरमर्त्यतिर्यङ्
न स्त्री न षण्ढो न पुमान् न जन्तुः ।
नायं गुणः कर्म न सन्न चासन्
निषेधशेषो जयतादशेषः ॥

भाष्यप्रकाशः ।

'चैतन्यापेक्षया प्रोक्तं व्योमादि सकलं जगत् ।
असत्यरूपं सत्यं तु कुम्भकुण्डाद्यपेक्षया' ॥

इत्युक्तत्वाच्च । अतः शब्दसाम्येऽपि ब्रह्मलिङ्गाद् ब्रह्मैवाकाशशब्दार्थः । आकाशशब्दश्च ब्रह्मणि रूपकविधया विभुत्वनिर्लेपत्वादिगुणलाभाय, मुखे चन्द्रवच्छ्रुत्या प्रयुक्तः । अत एव, 'परमे व्योमन् प्रतिष्ठिता' इत्यादिषु श्रुतिष्वाकाशरूपेण ब्रह्म निर्दिश्यते । नानार्थताया, गङ्गायां घोष इतिवल्लक्षणायाश्चायुक्तत्वादिति । एवं प्राणज्योतिरादयः शब्दा अपि जीवनत्वप्रकाशनत्वादिप्रतिपादनाय रूपकत्वेनैव व्याख्येयाः । वस्तुतस्त्वाकाशप्राणज्योतिरादयः शब्दा आकाशादिभावापन्नब्रह्मपरा एवैतेषु ब्रह्मवाक्येषु भवन्ति । केवलब्रह्मपरत्वे सत्याकाशादिलिङ्गानुपपत्तेः । यत्तु छान्दोग्यवाक्यमाधुनिका इहोदाहरन्ति, 'अस्य लोकस्य का गतिः' इत्यादि । तन्न । प्रकरणादिशून्यात् केवललिङ्गाच्छ्रुतेर्बलवत्त्वस्य पूर्वमीमांसासूत्रादेवावधारणात् । तत्र च श्रुतिप्रकरणयोरभावात् । किञ्च । प्रश्ने, अस्य लोकस्येत्यनेन भूर्लोकजना एवोक्ता इति प्रत्युत्तरे भूतानीत्युक्तत्वात् सर्वाणि भूतानीति ब्रह्मलिङ्गं न भवति । आकाशसाधारण्यात् । आकाशाद् वृष्टिद्वारैपां भूर्लोकस्थानां सृष्टिस्थितिसंहारादित्याह । तदसंगततमम् । सूत्रविरोधात् । सूत्रे केवलस्य लिङ्गस्यैव हेतुत्वेनोक्तत्वात् । एवद्रीत्या

रश्मिः ।

इति गजेन्द्रस्तुतौ तु स्पष्टम् । उक्तत्वाच्चेति । तथा च कुम्भकुण्डादि सत्यस्य सत्यमिति श्रुत्यर्थः फलितः । श्रुतावाकाशपदोक्तेस्तात्पर्यमाहाचार्यो विज्ञानः आकाशशब्देत्यादि । रूपकेति अनुभयोक्तिरूपताद्रूप्यरूपकं यथा 'अस्या मुखेन्दुना लब्धे नेत्रानन्दे किमिन्दुना' इत्यत्रानुभयोक्तिताद्रूप्यन्यूनताद्रूप्याधिकताद्रूप्यभेदेन ताद्रूप्यरूपकस्य त्रैविध्यम् ।

'विषय्यभेदताद्रूप्यरञ्जनं विषयस्य यत् ।
रूपकं तत्त्रिधाधिक्यन्यूनत्वानुभयोक्तिभिः' ॥

इति तल्लक्षणात् । विषयिणः उपमानस्य पद्मादेरभेदेन ताद्रूप्येण च विषयस्योपमेयस्य रञ्जनं रूपकमित्यर्थः । यद्वा । अभेदरूपकं वा तत् । 'अयं हि धूर्जटिः साक्षाद्येन दग्धाः पुरः क्षणात्' इत्यत्र यथा । विभुत्वेत्यादि तथा च गौणीवृत्तिरिति भावः । प्रतिष्ठितेति 'सैषा भार्गवी वारुणी विद्या परमे व्योम्नि प्रतिष्ठिता' इत्यर्थः । ननु वृत्तेर्द्वैविध्याल्लक्षणयैव निर्वाहे किं गौण्येति चेत् तर्कपादीयगौण्युपपादकयुक्तिहृदय आह लक्षणाया इत्यादि । एवं प्राणेति 'प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रम्' इत्यादिबृहदारण्यकादप्रेतनाधिकरणेषु प्राणादयो व्याख्येया इत्यर्थः । एवं विभागाद्वैतप्रायाऽविभागाद्वैताय पक्षान्तरमाह भगवान् वस्तुतस्त्वित्यादि । आकाशादीत्यादिपदेन प्राणज्योतिरादयः तेनायं भगवानाचार्यः तावच्छ्रवणमाकाशभावापन्नब्रह्मकर्तृकं तादृशब्रह्मणः सकाशाद्धेति मन्यते । तेन तल्लिङ्गादित्यस्याकाशभावापन्नब्रह्मलिङ्गादित्यर्थः पर्यवसितः । प्रकरणेत्यादि 'उभयाकाङ्क्षा प्रकरणम्' 'निरपेक्षो रवः श्रुतिः' इति पूर्वमीमांसासूत्रं पूर्वं निरुक्तम् । तत्रेत्यस्य छान्दोग्यीयवाक्ये इत्यर्थः । वृष्टिद्वारेति अयमाचार्यो मन्यते । ननु सत्यं व्याससूत्रेण जैमिनिसूत्रदौर्बल्यं तथापि श्रुतिलिङ्गादय इत्यादिभाष्यप्रामाण्यात् त इह तथैवोपादेया इतिलिङ्गा-

भाष्यप्रकाशः ।

तु, श्रुतिलिङ्गप्रकरणैरिति पाठापाताच्छ्रुतिविरोधाच्च । श्रुतौ सामाद्यदोलोकान्तगतिज्ञानवतः शालावत्यस्यैतल्लोकगतिप्रश्नेन सामाद्येतल्लोकान्तस्य परमाश्रये परमोपजीव्ये वा प्रश्नपर्यवसानात्, तादृशत्वस्य चाकाशेऽसंभवात् । अतश्छान्दोग्यवाक्यस्याविषयत्वकथनम-संगतम् । अन्येषामाधुनिकत्वकथनमपि तथा । स्वस्य सर्वार्वाचीनत्वात् । प्राचीनवृत्त्यादीनामनाश्रयणाच्च । आकाशशब्दस्य भूताकाशतद्देवताब्रह्मसु साधारण्यकथनमपि तथा । ब्रह्मणि रूपकविधया प्रयोगाङ्गीकारेण गौण्या वा निरूढलक्षणाया वाऽऽदराद् ब्रह्मवाचकत्वस्याभावेन

रश्मिः ।

पेक्षया सिद्धान्तेपि ह्याकाशश्रुतिर्बलवत्तरेति चेत्तत्राहुः श्रुतीत्यादि । सामादीति का साम्नो गतिरिति स्वर इति होवाचेत्यारभ्य अमुष्य लोकस्य का गतिरित्ययं लोक इति होवाचेत्यन्तया श्रुत्येत्यर्थः । असंभवादिति आश्रयमात्रे उपजीव्यमात्रे तथा संभवः । आकाशे तु 'आकाशाद्वायुः' इति श्रुतेः वायूपजीव्यत्वं तथाचाकाशादिभावापन्नब्रह्मणः परमाश्रयत्वपरमोपजीव्यत्वाभ्यामस्पर्शात्प्रश्नविषयत्वमसंभवीति भावः । ब्रह्माधिकारात् । एवं चेतत्सिद्धं भाष्यविरोधस्तदा स्याद्यदीदं लिङ्गतात्पर्यवृत्तिवेलामतिक्रामच्छ्रुतिमतिक्रामेन्नत्वेवमतो लिङ्गं बलीयः श्रुत्यपेक्षयात्रेति श्रुतिलिङ्गेति सूत्रं तु तात्पर्यवृत्त्यवेलायां प्रतिबन्धकाभावात् परैरभिधादिवृत्त्या प्रवर्तितमिति ज्ञेयम् । तथा च लिङ्गस्य बलीयस्त्वे सूत्रं प्रतिबन्धकं तात्पर्ये तु सूत्रप्रतिबन्धकमुत्तेजकं व्याससूत्रम् । संबन्धात् । अतोऽसंगततममित्यत्र तमबपि योज्यः । अत इति व्याससूत्रविरोधादिदूषणेभ्य इत्यर्थः । ननु प्राचीनवृत्तिकल्पगीतास्कन्धाद्यनुसरतामस्माकं सर्वेभ्यः पूर्वत्वं व्याख्यानप्रयुक्तमपि चाधुनिकत्वं लोकरञ्जकत्वं लाक्षणिकमत्रेति नायं हेतुरिति शङ्कायामाहुः प्राचीनेत्यादि । किं च लोकरञ्जकत्वं तदा स्यात् यदि तदुत्तरमस्मद्भाष्ये विषयत्वं तस्य वाक्यस्य नादृतं भवेदिति । न चास्याप्रसिद्धत्वात्तदज्ञानादादृततत्वमिति शङ्क्यम् 'अनागतमतीतं च' इत्यादिवाक्यात् । गौण्येत्यादि द्वितीयाध्याये गौण्यसंभवादिति सूत्रे आचार्येण भगवता गौणीत्वेन गौण्या पदार्थ उक्तः तत्काव्यप्रकाशे लक्षणात्वेन वर्णितस्य भेदास्त्रयोदशोपवर्णिताः । उपादानलक्षणा कुन्ताः प्रविशन्तीत्यत्र । लक्षणलक्षणा गङ्गायां घोष इत्यादौ । शुद्धा सारोपालक्षणा आयुर्घृतमित्यादौ । गौणी सारोपालक्षणा गौर्वाहीक इत्यादौ । शुद्धसाध्यवसानीलक्षणा आयुरेवेदम् । गौणी साध्यवसानालक्षणा गौरयमित्यादौ । एवं षड्विधा प्रयोजनवती । आसां व्यङ्ग्योत्थापनफलकतया नियमेन तासां सव्यङ्ग्यत्वमेव । तच्च व्यङ्ग्यं द्विविधम् । गूढमगूढं चेति । काव्यार्थभावनापरिपक्वबुद्धिविभवमात्रवेद्यं गूढम् । अनत्यन्तसहृदयैरपि झटिति ग्राह्यमगूढम् । यथा 'मुखं विकसितस्मितम्' इति 'श्रीपरिचयात्' इति चोदाहरणे । एवं द्वादशधा प्रयोजनवतीलक्षणा । निरूढलक्षणा कर्मणि कुशला इत्यादौ । सैकविधैव । एवं च गौर्वाहीक इतिवत् आकाशो ब्रह्मेति गौण्या सारोपयेत्यर्थः । ननु सारोपत्वं केन प्रकारेणेति चेद्ग्रन्थगौरवभीतिकानुज्ञया तत एवं विदांकुर्वन्तु विद्वांसः । तथा च गोसदृशो वाहीकः गोनिष्ठाज्ञत्वादिगुणविशिष्ट इतिवदाकाशसदृशं ब्रह्माकाशनिष्ठस्वापाधारत्वादिगुणविशिष्टमिति तन्मतेऽर्थः । अत्र सादृश्यातिरिक्तकार्यकारणभावादिसंबन्धानामविवक्षातो नो शुद्धा सारोपा संबन्धान्तरेण सारोपा शुद्धा भवतीति । तथा च भास्कराचार्यभाष्यम् । सर्वमभिव्याप्य प्रकाशते इत्याकाशः तत्सादृश्याद्वेति द्वितीयवेलस्य प्रयोजनं पूर्वतन्त्रे क्वचित्प्रसिद्धम् । यथा 'सेवायां वा कथायां वा' इत्यत्र श्रीमदाचार्योक्तौ । पूर्वोक्तेर्थे तज्जन्मादिसूत्रभाष्यविरोधमाकलय्याहुः । किं च । यथा गौरित्यादावज्ञत्वाद्यतिशय एव प्रयोजनमेवं प्रकृते स्वापाधारत्वातिशय एव प्रयोजनं वाच्यं तस्याभावादाहुः निरूढेत्यादि । कर्मणि

## अत एव प्राणः ॥ २२ ॥ (१।१।८)

प्रस्तोतर्या देवता प्रस्तावमन्वायत्तेत्युपक्रम्य श्रूयते । कतमा सा देवतेति प्राण इति होवाच । सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते । सैषा देवता प्रस्तावमन्वायत्तेति । तत्र संशयः । आसन्यः प्राणो ब्रह्म वेति । पूर्वपक्षसिद्धान्तौ पूर्ववदेवेत्यतिदिशति ।

---

भाष्यप्रकाशः ।

साधारण्यस्याभावादिति ॥ २१ ॥

इति सप्तमं तल्लिङ्गाधिकरणम् ॥ ७ ॥

अत एव प्राणः ॥ २२ ॥ अत्रापि छान्दोग्यप्रथमप्रपाठकस्थं वाक्यं विषयवाक्यत्वेनोदाहरन्ति प्रस्तोतरित्यादि । अत्रापि देवतापदेनोपक्रमादन्नादित्यसहपाठाच्च प्रकरणं न ब्रह्मणः । प्राणस्य प्राणमित्यादिर्ब्रह्मप्रकरणस्था श्रुतिः पुराणप्रसिद्धिश्च संदेहबीजम् । श्रुतौ तु प्रस्तावः सामोपासनाविशेषः । अन्वायत्ता अनुगता प्रस्तावाख्योपासनाविषया । प्राणश्च वायुवत् प्रतीयमानोऽपि न वायुविकारः । 'बुद्धिः प्राणस्तु तैजसः' इति पुराणेषु भिन्नकारणकत्वेन सिद्धत्वात् । श्रुतौ च प्राणाद्वायुरजायतेति वायुजनकत्वेन, 'यो वायुः स प्राणः' इति श्रुतौ वायुत्वेन च कथनात् । यद्यपि लोके वायुविकारत्वेनोक्तस्तथापि तदपेक्षया वेदहृदयरूपस्यैतदुपबृंहणस्य बलिष्ठत्वात् । अतः स आसन्यो ब्रह्म वेति संशयः । पूर्वपक्षस्तु पुराणप्रसिद्धेरासन्यो ग्राह्य इति । सिद्धान्तस्तु असंकुचितवृत्तेः सर्वशब्दस्य सामर्थ्यादेवात्र प्राणशब्देन ब्रह्म ग्राह्यम् ।

रश्मिः ।

कुशल इत्यादौ यथा कुशान् लात्यादत्ते इति विग्रहे 'आतोनुपसर्गे कः' इति कप्रत्यये च निष्पन्नः कुशलशब्दः । तस्य कुशग्राहिरूपमुख्यार्थस्य क्रियासामान्यवाचके कर्मणीति पदे सति सबाधत्वात् मुख्येन शक्यार्थेन विवेचकत्वसाधर्म्यरूपस्य संबन्धेन निरूपणरूपोऽमुख्योर्थो लक्ष्यते इति कुशग्राहिणि पुरुषेऽसतां कुशानां परित्यागः सतां च ग्रहणं विवेचकत्वम् । एवं निपुणेपि सतोर्थस्य ग्रहणमसतः परित्याग इति विवेचनीयम् । तद्वत्प्रकृतेप्याकाशते दीप्यते सूर्योदयोत्रेत्याकाशः 'हलश्च' इति घञ् तस्य दीपनरूपमुख्यार्थस्य य एषोन्तर्हृदय इति पदेषु सत्सु सबाधत्वान्मुख्येन दीपनब्रह्मणा शक्यार्थेनाधारत्वसाधर्म्यरूपस्संबन्धेनाकाशभावापन्नब्रह्मरूपोऽमुख्योर्थो लक्ष्यते इति निरूढलक्षणा तयेत्यर्थः । साधारणेत्यादि ब्रह्मणि लक्षणा आकाशे रूढिरिति तथा । इतिः समाप्तौ । यदपि तत्तद्भावापन्नस्य ब्रह्मणः तत्तच्छब्दवाच्यत्वमित्युक्तं तदपि न । ॐकारस्य ब्रह्मवाचकत्वात् सर्वेषां शब्दानां चौंकारविकृतित्वादिति ॥ २१ ॥

इति सप्तमाधिकरणम् ॥ ७ ॥

अत एव प्राणः ॥ २२ ॥ पुराणेत्यादि बुद्धिः प्राण इत्यादिवक्ष्यमाणा । अस्या अपि पर्यायमाहुः प्रस्तावेत्यादि । तैजस इति राजसाहंकारकार्यमित्यर्थः । श्रुतौ चेति 'प्राणाद्वायुरजायत' इति श्रुतौ चेत्यन्वयः । तेनाग्रे पुनः श्रुतावित्युक्तेपि न पुनरुक्तिः 'पुराणं हृदयं स्मृतम्' इति वेदहृदयत्वम् । संशय इति त्रिकोटिक इत्यर्थः । श्रुतौ त्विति अत्र प्रस्तोतरि संबोधनम् । अभ्युज्जिहते उत्पद्यन्त इत्यर्थः । भास्कराचार्यभाष्येऽयमर्थः । ननूक्तं प्रकरणं न ब्रह्मण इत्यत

नन्वधिकरणानां न्यायरूपत्वात् सर्वत्र गमिष्यति, किमित्यतिदिश्यत इति। उच्यते। प्राणस्य मुख्यस्यापि सर्वभूतसंवेशनं स्वापादौ श्रुतावेवोपपाद्यते यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येतीत्यादिना। तत्र यथा प्राणविद्याया न ब्रह्मपरत्वमेवमेवास्यापि न ब्रह्मपरत्वमिति, न न्यायेन प्राप्नोति। अतोऽति-

भाष्यप्रकाशः।

प्रकरणापेक्षया लिङ्गस्य बलिष्ठत्वात्। पुराणस्य चान्यत्र सावकाशत्वेनात्रानुपबृंहणतायामपि विपरीतबलाबलभावस्याशक्यकल्पनत्वादिति। अत्राधिकरणवैयर्थ्यमाशङ्कते नन्वित्यादि। समादधते उच्यत इत्यादि। उपपाद्यत इति धर्मत्वेनोपपाद्यते। तत्रेत्यादि तत्र प्राणविद्यावाक्ये पुरुषस्वापप्रयुक्तं भूतसंवेशनं, तत्प्रबोधप्रयुक्तं च भूताधिजननमुच्यते, न तु स्वतन्त्रमतो यथा न प्राणविद्याया ब्रह्मपरत्वमेवमस्यापि वाक्यस्य न ब्रह्मपरत्वं स्याद्यदि श्रुतिसामर्थ्यरूपे हेतौ स्वातन्त्र्यपारतन्त्र्यविवेको न क्रियेत। इतिर्हेतौ। प्राणविद्यासाधारण्यस्य बाधकस्य सत्त्वात् तेन न्यायेनास्य ब्रह्मपरत्वं न प्राप्नोति। अतोऽप्राप्तत्वादतिदिशति। एवकारेण बाधकयोगं व्यवच्छिन्दन्नत्र तं हेतुं प्रापयतीत्यर्थः। एतस्यातिदेशस्य फलमाहुः

रश्मिः।

आहुः प्रकरणेत्यादि। लिङ्गं सर्वशब्दसामर्थ्यम्। अन्यत्रेति प्राणविद्याविशेषे। विपरीतेत्यादि 'आनर्थक्ये प्रमाणानां विपरीतं बलाबलम्' इत्यप्यत्र न प्रवर्तते इत्यर्थः। तथा च छन्दोवत्सूत्राणि भवन्तीति सूत्रोक्तमेव ज्यायः। पुराणापेक्षयेति अतिदेशोग्रे सिद्धान्तनिरूपणे निरूप्यः। भाष्ये। गमिष्यतीति न्यायो गमिष्यति। प्रकृते। धर्मत्वेनेति प्राणधर्मत्वेन।

'अन्यत्रैव प्रतीतायाः कृत्स्नाया धर्मसन्ततेः।
अन्यत्र कार्यतः प्राप्तिरतिदेशोभिधीयते' ॥

इति पूर्वतन्त्रसिद्धमतिदेशपदार्थमाहुः एवकारेणेत्यादि। सूत्र एवकारेण बाधकयोगमत्यन्तायोगमत्रपक्षे प्राणशब्दवाच्ये ब्रह्मत्वे साध्ये तं हेतुं तल्लिङ्गादिति हेतुं प्रापयतीत्यर्थः। भगवान् सूत्रकारः। तथा चेयं सूत्रयोजना। प्राणशब्दवाच्यं ब्रह्म तल्लिङ्गाद्भवत्येवेति। ब्रह्म तल्लिङ्गहेतुकप्राणशब्दवाच्यत्वात्यन्तायोगव्यवच्छेदवदिति बोधः। न चैवं भवतेरध्याहारादोषः इत्ययोगव्यवच्छेदकोन्ययोगव्यवच्छेदको भवत्येवकार इति शङ्क्यम्। तथा सति ब्रह्म प्राणशब्दवाच्यत्वायोगव्यवच्छेदवत् ब्रह्मान्यः प्राणशब्दवाच्यत्वयोगव्यवच्छेदवान् इति ब्रह्मापेतप्राणपदवाच्यत्वं स्यात्तदसंगतम्। आनन्दमयादिपदवाच्यत्वं निरुच्य ज्योतिरादिपदवाच्यत्वस्य निरुच्यमानत्वात्। तद्वदत्रेति। यद्वा अत इत्यस्य तल्लिङ्गं हेतुरर्थः एवकारस्यायोगव्यवच्छेदोर्थः। तथा च तल्लिङ्गहेत्वयोगव्यवच्छेदवत् प्राणपदवाच्यं ब्रह्मेति सूत्रार्थः। बाधकशून्यात्पूर्वोक्तालिङ्गात् इति तु फलितोर्थः। भाष्ये। न्याय आपादित इति यद्ययं न्यायो न स्यात् तदा प्राणविद्यासाधारण्यं स्यात् तस्माद्विषयवाक्यमतिरिक्तन्यायवदित्येवमापादित इत्यर्थः। विषयवाक्यं अतिरिक्तन्यायवत् प्राणविद्याऽसाधारण्यात् यदेवं तदेवं ब्रह्मविदाप्नोतीत्यादिविद्यावत् यन्नैवं तन्नैवं भार्गवीवारुणीविद्यान्तर्गतान्नादिविद्यावदित्यनुमाने।

दिशति । अनेन चायमतिरिक्तो न्याय आपादितः । यत्रैव प्रकरणे ब्रह्मपरत्वे कल्प्यमाने न किंचिद् बाधकं तत्रैव ब्रह्मपरत्वं कल्पनीयमिति, न त्वन्यस्मिन् संभवे तत्परत्वमिति । अत एव तल्लिङ्गात् प्राणशब्दवाच्यं ब्रह्मेति ॥ २२ ॥

इति प्रथमाध्याये प्रथमपादेऽष्टममतिदेशाधिकरणम् ॥ ८ ॥

भाष्यप्रकाशः ।

अनेनेत्यादि । न त्वन्यस्मिन् संभव इति संभवान्तरे सति तु नेत्यर्थः । सिद्धमाहुः अत एवेत्यादि । बाधकशून्यात् पूर्वोक्ताल्लिङ्गात्तथेत्यर्थः । नच, 'प्राणं तर्हि वागप्येति प्राणश्चक्षुः प्राणं श्रोत्रं प्राणं मनो यदा प्रबुद्ध्यते प्राणादेवाधि पुनर्जायन्ते' इत्यत्रेन्द्रियसंवेशनमुच्यते, न भूतसंवेशनमिति विषयभेदात् कथमस्य साधारणत्वशङ्केति वाच्यम् । 'दीपश्चक्षुस्तथा रूपं ज्योतिषो न पृथग्भवेत्' इत्यादिषु पुराणवाक्येष्विन्द्रियाणां भूतापृथग्भावस्योक्तत्वेन भूतविशेषत्वस्य सिद्धतयेमानीत्यस्य श्रुत्यन्तरे वागादिरूपत्वेनोक्तानीत्यर्थस्य शक्यवचनत्वेन शङ्कोदयस्य संभवात् । अतः सर्वथेदं समाधेयमिति । एतेन माहात्म्यज्ञानोपयोगिनीनां देवान्तरोपासनानामनुच्छेदायेदमधिकरणम् । अन्यथा तु लोके पित्रपेक्षया क्वचित् पुत्रमाहात्म्यदर्शनात्, केचिद् ब्रह्मकार्यत्वेऽपि ब्रह्मापेक्षयाऽधिका भविष्यन्तीति शङ्का स्यादिति तेनोपोद्घातः संगतिरिति बोधितम् । एवं चात्रातिदेशाङ्गीकारे, 'आपो वा इद१ सर्वम्' इत्यादिवाक्येष्वपि सर्वात्मकत्वादिब्रह्मलिङ्गदर्शनादवादिशब्दानामपि ब्रह्मप्रकरणे ब्रह्मवाचकत्वमित्यपि साधितं ज्ञेयम् । अधिकरणानां न्यायरूपत्वादिति ।

रश्मिः ।

प्रकृते । बाधकेति बाधकं प्राणविद्यासाधारण्यं तच्छून्यादित्यर्थः । तथेति प्राणशब्दवाच्यं ब्रह्मेत्यर्थः । अनुमानावर्णनाद्विपरीतसूत्रपाठक्रमः । यद्वा जिज्ञासासूत्राद् ब्रह्मेत्यनुवृत्तेर्न सूत्रे ब्रह्मपदमुक्तम् । विषयेति इन्द्रियपञ्चमहाभूतरूपविषयभेदात् । साधारणेत्यादि ब्रह्मपरत्वबाधकसाधारणत्वशङ्केत्यर्थः । पुराणेत्यादि एकादशस्कन्धादिषु इन्द्रियाणां चक्षुरादीनां भूतेभ्यो दीपादिभ्योऽपृथग्भावस्येत्यर्थः । श्रुत्यन्तरे 'अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते' इत्यत्र 'प्राणादेव खल्विमानि भूतानि जायन्ते' इत्यत्र वा शक्यवचनत्वेन भूतानां चेन्द्रियसारत्वात् । इति भास्कराचार्यभाष्यात्तथेत्यर्थः । अत इत्यादि शङ्कोदयसंभवात् । इदं शङ्काविषयभूतम् । एतेनेति ब्रह्मविद्यातिरिक्तप्राणविद्याच्छेदेनेत्यर्थः । क्वचिदिति वेनात्पृथुनाममाहात्म्यं वसुदेवाच्च श्रीकृष्णस्य । स्यादितीति तथा चैवं विधनिरङ्कुशजगत्कारणत्ववादिनीनां ब्रह्ममात्रपरत्वादेव न शङ्केति भावः । भिक्षुमते त्वियं शङ्का स्यादेव । पश्चाद्धिकरणे न्यूनं पूरयन्ति स्म तेनेत्यादिना । अत्र सावधानपुरुषप्रयुज्यमानवाक्यं ब्रह्मजिज्ञासाधिकारवाक्यं तत्प्रयोजकत्वेन ब्रह्मजिज्ञासोपपादकत्वेन स्मृतस्य साकारब्रह्मणो रूपजातस्योपेक्षानर्हत्वं भवतीत्युपोद्घातः । ननु विशेषलक्षणं गौणं कुतः आदृतोत्रेति चेन्न । संगतिव्यवहारस्तु तत्र तत्र स्पष्टत्वाय हेतुतादिभिः प्रयोजकधर्मैरेव वक्तव्य इति तत्रैवेक्षत्यधिकरणे निरुक्तत्वात् । एवं चात्रातिदेशाङ्गीकारेण 'आपो वा इदं सर्वम्' इत्यादिवाक्येष्वपि सर्वात्मकत्वादिब्रह्मलिङ्गदर्शनादबादिशब्दानामपि ब्रह्मवाचकत्वमित्यपि साधितं ज्ञेयम् । अधिकरणानां न्यायरूपत्वादिति

१. ज्योतिरादिभ्यः ।

भाष्यप्रकाशः ।

अत्र सर्वेऽपि ब्रह्मासाधारणधर्ममेव हेतूकृत्याधिकरणं योजयन्तीति तद्दूषणमपि पूर्ववदेव बोध्यम् ।

भाष्यास्तु, 'तद्वै त्वं प्राणो अभवः महान् भोगः प्रजापतेः । भुजः करिष्यमाणः यद्देवान् प्राणयो न वा' इति तैत्तिरीयोपनिषच्छ्रुतिं विषयवाक्यत्वेनोपन्यस्याधिकरणं रचयन्ति तत्र लोकप्रसिद्धिः, ईशानः प्राणदः प्राण इति विद्वद्रूढिः संदेहबीजम् । श्रीश्च ते लक्ष्मीश्च पत्न्यावित्यादि तल्लिङ्गं हेतुत्वेनाहुः । अतिदेशप्रयोजनं तु किमपि नाहुः । अत्रापि पूर्ववदेव दूषणम् । किंचात्र हेतुः पुरुषसूक्तस्थो, विषयवाक्यं भर्तृसूक्तस्थमतो हेतुसाध्यवैयधिकरण्यपरिहारप्रयासश्चाधिक इत्यवधेयम् ।

विज्ञानभिक्षुस्तु कौषीतकिब्राह्मणादिस्थां ब्रह्मप्रकरणीयां श्रुतिं विषयत्वेन वक्तीति तद्दूषणमपि पूर्ववदेव ॥ २२ ॥

इत्यष्टममतिदेशाधिकरणम् ॥ ८ ॥

रश्मिः ।

क्वचित्पुस्तके ह्येवं चेत्यारभ्य इतीत्यन्तः रश्मावुक्तः मूले प्रकाश एव पठ्यते । सर्वे इति शंकररामानुजशैवभास्कराचार्याः । तद् दूषणमिति अधिकरणवैयर्थ्यरूपम् । महान् भोगः परमानन्दः श्रुतौ । 'तद्वै त्वं यो यदा भारं तन्द्रयते स भर्तुं परास्य भारं पुनरस्तमेति' । श्रुत्यर्थस्तु यदा भारं भर्तुं तन्द्रां कुरुते तदा संकर्षणव्यूहेन भारं परा अस्य असु क्षेपणे क्षिप्त्वेति तथा च यस्त्वमस्तमेता तद्वै त्वं प्राणोऽभवः । किं च प्रजापतेर्महान् भोगः । अपरं च भुजः भोगात् करिष्यमाणः यद्यस्माद् देवान् प्राणय उ न प्राणय वा किं तु सर्वानित्यर्थः । विद्वद्रूढिरिति क्वचित्प्रसिद्धा विष्णौ । दूषणमधिकरणवैयर्थ्यरूपम् । महाभोगरूपस्य परमानन्दस्यापि कृष्णलिङ्गत्वादिति । श्रुतिमिति । भाष्ये । श्रुतिं दृष्ट्वा दूषणं पूर्ववदुन्नेयम् । भाष्ये । अत एवेत्यादि अत्रापि प्राणत्वेन ब्रह्मोपस्थितिरशक्योपपादना । नहि पटत्वेन तन्तूपस्थापनं शक्नोति कर्तुं कश्चित्-प्राणपदवाच्यत्वेन तूपस्थापयितुं शक्नोति यः कश्चिद् ब्रह्म । यथा सशङ्खचक्रो हरिरित्यत्र हरित्वेन विष्णुनुपस्थापयितुं शक्नोति न तु हरिर्वर्षायां इत्यत्रापि किं तु वर्षापदसमभिव्याहारान्मण्डूकवाचकं हरिपदमित्यवधारितेत्र हरिपदवाच्यो मण्डूक इत्येवं हरिपदवाच्यत्वेन मण्डूकोपस्थितिर्न तु हरित्वेन स्ववाचकपदोपस्थितस्यैव विशिष्टबोधे विशेषणमर्यादया भानस्य घटः पृथ्वीत्यादिस्थले दर्शनात् ॥ २२ ॥

इत्यष्टममधिकरणम् ॥ ८ ॥

## ज्योतिश्चरणाभिधानात् ॥ २३ ॥

इदमामनन्ति । अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु इदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिरिति ।

तत्र ज्योतिःशब्देन प्राकृतं ज्योतिराहोस्विद् ब्रह्मैवेति संशयः ।

---

भाष्यप्रकाशः ।

ज्योतिश्चरणाभिधानात् ॥ २३ ॥ आमनन्तीति छान्दोग्ये पञ्चमप्रपाठके वदन्ति । श्रुतौ तु, विश्वतः पृष्ठेष्विति सर्वेषामुपरि अयं च विश्वशब्दो न संकोचसह इति ज्ञापनाय तदर्थकं शब्दान्तरं सर्वतः पृष्ठेष्विति । शेषं स्फुटम् । संशयमाहुः तत्र ज्योतिरित्यादि । अत्र लोकप्रसिद्ध्या, 'अनादिमत् परं ब्रह्म' इति प्रकृत्य पठितेन, 'ज्योतिषामपि तज्ज्योतिः' इति गीतावाक्येन च कोटिद्वयोपस्थितिः संशयबीजम् । पूर्वपक्षमाहुः अत्रेत्यादि । अयमर्थः । लोके तमोविरोधी पदार्थ आदित्यादिर्ज्योतिःपदेनाभिधीयते । अत्र च दीप्यत इत्युक्तं, प्रकाशकत्वमपि तस्यैव लिङ्गम् । तथाग्रे, तस्यैषा दृष्टिर्यत्रैतदस्मिन् शरीरे संस्पर्शेनोष्णिमानं विजानाति, तस्यैषा श्रुतिर्यत्रैतत्कर्णावपिगृह्य निनदमिव नदथुरिवाग्नेर्ज्वलत उपशृणोतीति जाठरस्याग्नेर्लिङ्गम् । नच सूर्यादिप्रकाशस्य दिवोऽर्वागपि दर्शनाज्जाठरप्रकाशस्य च क्वाप्यदर्शनादुभयोर्बाधे गीतावाक्यादिभिर्ब्रह्मैव ज्योतिःपदवाच्यतयादरणीयमिति वाच्यम् । ब्रह्मासाधारणधर्मस्य तत्प्रकरणस्य चात्रानुपलम्भात् । अतस्तेजोधर्मस्यात्र दर्शनात्, बर्हिराज्याधि-

रश्मिः ।

ज्योतिश्चरणाभिधानात् ॥ २३ ॥ वदन्तीति यद्यपि म्ना अभ्यासे तथाप्युपसर्गबलेनायमर्थः । 'उपसर्गेण धात्वर्थो बलादन्यः प्रतीयते' इतिवाक्यात् । मनिन च ज्ञाने दिवादिः । मणिनण् स्तम्भे चुरादिः । मनू विबोधने तनादिरेषामात्मनेपदित्वात् 'ये धातुशब्दा यत्रार्थे' इति पत्रावलम्बनवाक्यस्य वेदराशिपरत्वात् । ननु वेदपदेनैव चरितार्थत्वे राशिग्रहणं ज्ञापयति भाष्यादीनामपि तथैव भाष्योऽर्थः इति चेन्न । षडङ्गपरत्वेनैव चरितार्थत्वादिति । स्फुटमिति । अत इत्यस्य स्वर्गाल्लोकादित्यर्थः । अनुत्तमेष्वित्यत्र न विद्यते उत्तमं येभ्य इति बहुव्रीहिः । न च तत्पुरुषः शङ्क्यः । तमपाकर्तुमेवाग्रे उत्तमेष्विति बहुव्रीहिफलितार्थकथनात् । इदं पूर्ववदनुत्तमेषूत्तमेष्वित्येतयोर्व्याख्याने । लोकेष्वित्यस्य जनलोकादिष्वित्यर्थः । अत्रासाधारणब्रह्मधर्माभावात्पूर्वपक्ष इति भाष्ये हेत्वपेक्षितं पूरयन्तः पूर्वपक्षस्वरूपमाहुः अयमर्थ इत्यादिना । तस्यैषेति तस्य ज्योतिषो दृष्टिर्दर्शनमेषा का यत्र यस्मिन्काले श्रुतिः श्रवणं श्रवणोपायः को यत्र यस्मिन् काले कर्णावपिगृह्याङ्गुलीभ्यां पिधाय निनदमिव रथघोषमिव नदथुरिवर्षभकूजितमिवाग्नेरिव ज्वलत उप स्वान्तर्गतमेव शब्दमेतच्छ्रवणं यथा स्यात्तथा शृणोतीति श्रुत्यर्थः । दिवोऽर्वागपीति तादृशश्रुत्युक्तज्योतिषस्तु 'यदतः परो दिवो ज्योतिर्दीप्यते' इति दिवः परं दीपनमुच्यते इति भावः । गीतेत्यादि आदिपदेन ज्योतिर्ब्राह्मणं 'ज्योतिर्दर्शनात्' इति सूत्रं च संगृह्यते । एवमपेक्षितं पूरयित्वाऽसाधारणब्रह्मपदं ब्रह्मप्रकरणस्याप्युपलक्षकमिति सूचयन्तो हेतुभाष्यार्थमाहुः ब्रह्मेत्यादि । बर्हिराज्येत्यादि । अयं न्यायः पूर्वतन्त्रे प्रथमस्य चतुर्थपादेऽस्ति तत्र 'बर्हिर्लुनाति' 'आज्यं विलापयति' 'पुरोडाशं पर्यग्नि-

अत्रासाधारणब्रह्मधर्माभावात् पूर्वपक्षः । सिद्धान्ते तु चरणस्य ब्रह्मधर्मत्व-मिति 'एतावानस्य महिमा, अतो ज्यायांश्च पूरुषः, पादोऽस्य सर्वा भूतानि

भाष्यप्रकाशः ।

करणन्यायेनात्र शास्त्रप्रसिद्ध्यपेक्षया लोकप्रसिद्धेरेवात्र फलवत्त्वाच्च त्रिवृत्कृतं वा प्राकृतमेव तेज इह ग्राह्यम् । अघटमानो धर्मो द्युमर्यादत्वादिर्यः स तूपासनार्थः । किंच । यदि ब्रह्मैवात्रोपास्यत्वेनाभिसंहितं स्यात्तदाऽस्या उपासनायाश्चक्षुष्यः श्रुतो भवतीत्यल्पं फलं नोच्येत । अतः फलमपि वाक्यस्य तेजस्तात्पर्यकत्वगमकमतः प्राकृतं तेज एवात्रादरणीयमिति पूर्वपक्षः । सिद्धान्ते युक्तिमाहुः सिद्धान्ते त्वित्यादि । नन्विह कुत्र चरण उक्तो यस्य ब्रह्मधर्मत्व-मुच्यत इत्यत आहुः एतावानित्यादि । तथाच यद्यप्यत्र नोक्तस्तथापि वाक्यान्तर उक्तस्तस्य चैतस्य चैकवाक्यत्वमतश्चरणलाभ इत्यर्थः । कथमेकवाक्यतेत्याकाङ्क्षायां तामुपपादयन्ति

रश्मिः ।

करोति' इत्यत्र द्रव्यनामानो बर्हिराज्यपुरोडाशशब्दाः श्रुताः ते शास्त्रज्ञैः संस्कृतेषु प्रयुज्यन्ते । असंस्कृतेपि जातिमात्रे कैश्चिदशास्त्रज्ञैस्तत्र तेषां किं संस्कारनिमित्ततोत जातिवाचकतेति संशयः पील्वादिवदश्ववालवच्च शास्त्रस्य याज्ञिकप्रसिद्धिः सार्वत्रिकी । अशास्त्रस्य म्लेच्छकतिपयसिद्धेर्बलीयसीति संस्कारनिमित्ततेति पूर्वः पक्षः । तेषां जातिवाचितेति सिद्धान्तः । नहि शास्त्रस्थाः सर्वलोकस्थाश्च जातिमपहाय प्रयुञ्जते । संस्कारं विहाय जातिमात्रे तु केचन प्रयुञ्जते । यथा बर्हिषा यूपावटमवस्तृणातीत्यत्र संस्कारमन्तराप्यास्तरणमिति तेन जातिमेते न व्यभिचरन्ति । व्यभिचरन्ति तु संस्कारमतोन्वयव्यतिरेकाभ्यामिति । अत्र दृष्टान्तप्रपञ्चः कस्यचित् । पीलुशब्दं म्लेच्छा हस्तिनि ह्यार्या वृक्षविशेषे प्रयुञ्जते । आदिशब्देन यवशब्दस्तं च दीर्घशूकेष्वार्याः प्रियङ्ग्वादिषु म्लेच्छाः । आश्ववालः प्रस्तर इत्यश्ववालाः वाक्यविशेषात्तु तृणविशेषः । आदिपदेन त्रिवृद्बहिष्पवमानमित्यत्र त्रिवृच्छन्दस्य त्रैगुण्यं लोकसिद्धोर्थः । वाक्यशेषादृक्तृचयात्मकेषु त्रिषु सूक्तेष्ववस्थितानां बहिष्पवमानात्मकस्तोत्रनिष्पादनक्षमाणां 'उपास्मै गायतां नरः' इत्यादीनामृचां नवकमर्थस्तद्वदिति । ननु न न्यायोक्तिर्नूनं साधीयसी जैमिनीयन्यायमालाविस्तरेऽयं न्यायोन्यत्रापीत्युक्तेस्तस्यैवान्यत्र संचार इत्यस्यान्यत्रासंचारादितिचेन्न तस्यास्वमतत्वात् । फलेत्यादि फलपदं प्रयोजनवचनं तेनोपासनारूपप्रयोजनवत्त्वादित्यर्थः । त्रिवृदित्यादि तासां तेजोबन्नानां देवतानामेकैकान् द्विधा विभज्य पुनश्चैकैकं भागं द्विधा कृत्वा तत्स्वभागादितरभागयोर्निक्षिप्य तन्त्रिगुणरज्जुवत्त्रिवृतं करवाणीति त्रिवृत्करणश्रुत्यनुसार्यर्थः परत्र । सिद्धान्ते तु रोहितशुक्लकृष्णरूपैस्त्रिधा भवनं पुरुषं प्राप्य त्रेधाभवनं च त्रिवृत्करणश्रुत्यर्थः । त्रिवृत्करणश्रुतिस्तु 'तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' इति वाय्वाकाशयो रूपाभावात्पुरुषं प्राप्य त्रेधाभावाभावालोचनाच्च तेजोबन्नानि तावदिच्छापुरस्सरं परस्मादात्मनो जातानीति चोत्पत्तिमद्व्यवहर्तृप्राणिनिकायव्यवहारनिर्वाहकतदीयधर्माधर्मात्मककर्मापेक्षया तानि त्रिवृत्कृतानि न तु पञ्चीकृतानि । अत्रिवृत्कृतानि तु त्रिवृत्करणात्पूर्वाणि छान्दोग्ये श्वेतकेतूपाख्याने 'सदेव सोम्येदमग्र आसीत्' इत्युपक्रम्य 'तत्तेजोसृजत' 'तदपोसृजत' 'ता अन्नमसृजन्त' इति श्रुतिप्रोक्तानि । ननु यदतः परो ज्योतिर्दीप्यते इत्यवधिवाचकपञ्चम्या श्रुतस्य द्युमर्यादत्वस्य का गतिस्तत्राह अघटेत्यादि । एवं भाष्यं व्याख्याय शांकरभाष्यीयामपि युक्तिमाहुः किं चेत्यादिना । चक्षुष्य इत्यादि । चक्षुषे हित इत्यर्थः । तस्मै हितमित्यधिकारे शरीरावयवाद्यत् इति यत् । न तु चक्षुषा दर्शनीयः । सूत्राभावात् । श्रुतः विख्यातः । ब्रह्मधर्मत्वमिति हृदयभाषणादूर्ध्वं ब्रह्म तस्य त्रिधा धर्मः ज्योतीरूपस्तत्त्वम् ।

त्रिपादस्याऽमृतं दिवि'इति पूर्ववाक्यम् 'गायत्री वा इदं सर्वं भूतं यदिदं किंच'इति गायत्र्याख्यब्रह्मविद्यां वक्तुं तस्याः पादचतुष्टयं प्रतिपाद्य ब्रह्मणश्चतुष्पात्त्वमुक्तम्। पुरुषसूक्तेऽप्याश्रमचतुष्टयस्था जीवाः पादत्वेनोक्ताः। तथा प्रणवब्रह्मविद्यायामप्यकारोकारमकारनादवाच्याश्चत्वारः पादा विश्वतैजसप्राज्ञतुरीया उक्ताः। तद्विष्णोः परमं पदमिति च। ब्रह्म पुच्छमिति च। सत्यकामब्राह्मणे तु स्पष्टा एव

भाष्यप्रकाशः।

गायत्रीत्यादि, सिद्धमित्यन्तम् । उक्तरीत्या तां ब्रह्मप्रतिपादकविद्यां वक्तुं यस्मात् तस्या भूतादिपादचतुष्टयं प्रतिपाद्य तदेतदृचाऽभ्यनूक्तमिति तत्पदेन तदेव चतुष्पात्त्वं परामृश्य ब्रह्मणश्चतुष्पात्त्वमृचोक्तम् । यदि हि सा ब्रह्मविद्यात्वेन न विवक्षिता स्यादेवं कथनं निष्प्रयोजनकं स्यात् । अत एवं गायत्र्या ब्रह्मविद्यात्वेन प्रकरणस्य ब्राह्मत्वे सिद्धे, एकप्रकरणगतत्वेनैकवाक्यतेत्यर्थः । नन्वग्रिमसूत्रैकदेशे प्रकरणस्य ब्राह्मताया आक्षेप्स्यमाणत्वेन संदिग्धत्वान्न तावन्मात्रेणात्र ब्रह्मणश्चतुष्पात्त्वसिद्धिरिति हेतोः साध्यसमत्वमत आहुः पुरुषसूक्त इत्यादि । तत्र पुरुषं प्रकृत्य पठिते एतावानितिमन्त्रे श्राविताना पादानां द्वितीयस्कन्धीये पुरुषसूक्तविवरणाध्याये,

'पादास्त्रयो बहिश्चासन्नप्रजानां य आश्रमाः ।
अन्तस्त्रिलोक्यास्त्वपरो गृहमेधोऽबृहद्व्रतः' ॥

इत्येनेन विवरणादाश्रमवद्देहविशिष्टा जीवाः पादत्वेन सिद्धा इति तत्प्रत्यभिज्ञानादत्र ब्रह्मपादसिद्धिः । किंच । यद्येकत्रैव क्वचिद् ब्रह्मणः पादनिरूपणं स्यात् तदा कथंचित् संदि-

रश्मिः।

भूतादीति भूतपृथिवीशरीरहृदयरूपं पादचतुष्टयमित्यर्थः । गायत्री वा इदं सर्वं भूतमिति या वै सा गायत्रीयं वा व सा येयं पृथ्वीति या वै सा पृथ्वीयं वा व सा यदिदमस्मिन् पुरुषे शरीरमिति । यद्वैतत्पुरुषे शरीरमिदं वा व तद्यदिदमस्मिन्नन्तःपुरुषे हृदयमिति श्रुतिभिः । ऋचोक्तमिति 'तावानस्य महिमा ततो ज्यायाꣳश्च पूरुषः । पादोस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' इति ऋचोक्तमित्यर्थः । एवमिति पूर्वपरामृष्टार्थकथनाय इयं वक्ष्यमाणा ऋक् इत्यभेदकथनमित्यर्थः । एकवाक्यतेति एकार्थप्रतिपादकता । अग्रिमेत्यादि 'छन्दोभिधानान्नेति चेत्' इत्येकदेश इत्यर्थः । हेतोरित्यादि ब्रह्म चतुष्पाद् ब्रह्मप्रकरणादित्यत्र हेतोः साध्यतुल्यत्वं न सिद्धत्वमतो यत्र प्रकरणे ब्राह्मत्वमसंदिग्धं तत्स्थलमाहुरित्यर्थः । प्रकृत्येति 'सहस्रशीर्षा पुरुषः' इत्यनेन । एतेनेति श्लोकार्थस्तूपदेशभेदान्नेति चेदिति सूत्रे स्वयमेव वक्तव्यः । आश्रमेति आश्रमवन्तो देहविशिष्टा जीवा इत्यर्थः । तत्प्रत्यभीति तावानित्यृचि सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वेन यावत्सर्वनामशब्दैः पुरुषसूक्तोक्तार्थस्य प्रत्यभिज्ञानात्त इमे पादाः इत्येवं तत ईक्षाप्रकारकज्ञानविषयत्वाद्ब्रह्मपादसिद्धिः । न तु गायत्रीपादसिद्धिः । तस्याः शब्दात्मकत्वेनार्थपादत्वासंभवात् । एवं तावानित्यस्याः सिद्धे ब्रह्मपादनिरूपकत्वे 'अथ यदतः परो दिवो ज्योतिर्दीप्यते' इत्यत्रापि पूर्ववाक्ये द्युसंबन्धित्वेन प्रसिद्धं ब्रह्मैव प्रत्यभिज्ञायते प्रत्यभिज्ञाविषयीक्रियते इति चतुर्थपादसिद्धिरित्यर्थः । ग्रन्थोरत्थाधिक्यरूपं निग्रहस्थानं निराकुर्वन्ति स्म किं चेत्यादिना । कथंचिदिति ब्रह्मणो निरंशत्वात् कथमंशरूपाः पादाः इति प्रकारेणेत्यर्थः ।

ब्रह्मणश्चत्वारः पादा निरूपिताः। अतः सच्चिदानन्दरूपस्य प्रत्येकसमुदायाभ्यां चतूरूपत्वम्। तत्र केवलानां कार्यत्वमेव। चतुर्थपादस्य तु ब्रह्मत्वम्।

---

भाष्यप्रकाशः।

हेतापि। अस्ति तु तद् बहुषु स्थलेष्विति बोधयितुमाहुः तथेत्यादि। तथाच माण्डूक्यादौ काठके तैत्तिरीये छान्दोग्यस्थसत्यकामब्राह्मणे च नानाप्रकारेण पादश्रावणाच्च ब्रह्मणश्चतुष्पात्त्वे संदेह इति न हेतोः साध्यसमत्वमित्यर्थः। ननु भवतु ब्रह्मणश्चतुष्पात्त्वं, तथापि ते चत्वारो न पशोरिवावयवाः किंत्वंशा एव वाच्याः। तच्च न युज्यते, ब्रह्मणोऽनंशत्वादित्यत आहुः अत इत्यादि। यतो जन्माद्यधिकरणेषु ब्रह्मणस्त्रिरूपता, कार्यकारणभावो, विरुद्धधर्माधारत्वं

रश्मिः।

बहुषु स्थलेष्विति। एतेन विरुद्धधर्माश्रयत्वं फलिष्यति ब्रह्मणः। माण्डूक्यादावित्यादि आदिपदेन ब्रह्मोपनिषच्च। तत्र मण्डूके 'ॐमित्येतदक्षरं सोयमात्मा चतुष्पात्' इति चोपक्रम्य।

'बहिःप्रज्ञो विभुर्विश्वो ह्यन्तःप्रज्ञस्तु तैजसः।
घनप्रज्ञस्तथा प्राज्ञ एक एव त्रिधा स्थितः'॥

इति पादत्रयं संगृह्य तुरीयं परममृतमजं ब्रह्म यत्तन्नतोस्मीति तुरीय उक्तः। अथर्वशिखायां चतुष्पादे 'तदक्षरं परं ब्रह्म पूर्वास्य मात्रा पृथिव्यकारः द्वितीयान्तरिक्षमुकारः तृतीया द्यौर्मकारः चतुर्थ्यर्धमात्रा सा लुप्तमकार इत्यकारोकारमकारनादवाच्याश्चत्वारः पादा उक्ताः। नादसंज्ञो लुप्तमकार इति नारायणकृतटीकोक्तोर्थः। एतेन चतुर्थ्यर्धमात्रा सा सोमलोक इति शैवाचार्यकल्पितोऽपपाठः परास्तः। अप्रसिद्धेः काव्यप्रकाशदूषणोल्लासोक्तदोषात्। काठके चतुर्थवल्ल्याम्।

'स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति'॥

इत्यत्र यथाकथंचित्साधनीयाः उभौ स्वप्नान्तजागरितान्तौ येनेति च्छेदः। अत्र स्वप्नान्तमित्यस्य स्वप्नमध्ये स्वप्नज्ञेयमित्यर्थात् स्वप्नसाक्षी तैजसो लभ्यते। एतद्भेदरूपसुषुप्तिसाक्षी प्राज्ञश्च लभ्यते जागरितमध्ये जागरितज्ञेयमिति विश्व उपलभ्यते। आत्मानमिति तुरीयक उपलभ्यते 'इन्द्रियैरर्थोपलब्धिर्जागरितम्'। 'करणेषूपसंहृतेषु जागरितसंस्कारजः प्रत्ययः सविषयः स्वप्नः'। 'सर्वप्रकारकज्ञानोपसंहारो बुद्धेः कारणात्मनावस्थानं सुषुप्तिः'। 'ब्रह्मप्रकरणानूद्यो निरङ्कुशजगज्जन्मादिकर्तृत्वावच्छिन्नो वा तुरीयः' इति तैत्तिरीये शिक्षायां 'यश्छन्दसामृषभः' इति चतुष्पाद्गौः तात्पर्यवृत्त्या तु कामवर्षक इत्यन्यदेतत्। भाष्ये। तद्विष्णोरिति संहिताप्रथमाष्टके तृतीयप्रश्ने 'गमध्यै गावो यत्र भूरिशृङ्गा अयासः। अत्रा ह तदुरुगायस्य विष्णोः परमं पदमवभाति भूरेः' इति। 'विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे इन्द्रस्य युज्यः सखा' 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः दिवीव चक्षुराततम्' इति। श्रुत्यर्थस्तु नित्यलीलावादे स्फुटः। प्रकृते। सत्येत्यादि। षष्ठप्रपाठक इदम्। तत्र नानाप्रकारेण 'ब्रह्मणश्च ते पादं ब्रवाणीत्युपक्रम्य प्राची दिक्कला प्रतीची दिक्कला दक्षिणा दिक्कलोदीची दिक्कलैव वै सोम्य चतुष्कलः पादो ब्रह्मणः' इति। एवमेवाग्रे अग्निः कला सूर्यः कला चन्द्रः कला विद्युत्कलैव वै सोम्य चतुष्कलः पादो ब्रह्मण इति एवमग्रे प्राणः कला चक्षुः कला श्रोत्रं कला मनः कला इत्येवं नानाप्रकारेणेत्यर्थः। नेत्यादि तथा च चतुष्पाद् ब्रह्म प्रकरणात् ज्योतिर्भेद परमाभिधानादिति ब्रह्मसिद्धमिति हृदयम्। अनंशत्वादि निष्कलमिति श्रुतेस्तथा। त्रिरूपतेत्यादि इदं

तत्रापि षड्विधत्वप्रतिज्ञानाद् भूतपृथिवीशरीराणां परिचायकत्वेन षड्-विधत्वमनिरूप्य हृदयस्य षड्विधत्वं निरूपयँस्तस्य ह वा एतस्येत्यादिना पञ्च देवपुरुषान्निरूप्य तेषां द्वारपालत्वज्ञानानन्तरम्, 'अथ यदतः परो ज्योतिर्दीप्यते'

---

भाष्यप्रकाशः ।

च साधितमत एवं चतूरूपत्वादेवमंशाः सुखेन युज्यन्त इत्यर्थः । ननु भवतु ब्रह्मणश्चतुष्पात्त्वं तथाप्यत्र प्रकरणे सत्यकामब्राह्मणवत् कार्यरूपा एव भूतादयः पादा निरूप्यन्ते । तेषां च न ज्योतिर्वाक्याकाङ्क्षा । गायत्रीं प्रकृत्योक्तत्वात् । नापि ज्योतिर्वाक्यस्य तदाकाङ्क्षा । अथेति प्रकृतच्छेदात् । उभयत्राप्याकाङ्क्षोत्थापकपदाभावाच्च । यदि च तेषामृचा विवरणादृचि च पुरुषपदाद्गायत्राणामपि तेषां ब्राह्मत्वं विभाव्यते, तदापि ऋचि ज्योतिर्वाक्ये च परस्पराकाङ्क्षो-त्थापकपदाभावाच्च तयोरेकवाक्यता । तदभावे च प्रकरणैक्येन साधितमप्येकवाक्यत्वम-प्रयोजकमित्याकाङ्क्षायां तयोः परस्पराकाङ्क्षां साधयितुमाहुः तत्रापीत्यादि । यत्र गायत्र्या-श्चतुष्पदात्वमुक्तं तत्रापि तस्याः षड्विधत्वप्रतिज्ञानादस्ति षण्णां विधानामाकाङ्क्षा । तत्र भूत-पृथिवीशरीराणां पादत्वेन प्रतीयमानानामपि पार्ष्णिप्रपदाङ्गुल्यादिवत् पादपरिचायकत्वमेव

रश्मिः ।

भिन्नं पदम् । अयमाशयः । जन्माद्यधिकरणे प्रपञ्चत्वेन ब्रह्मत्वेन कार्यकारणभावः सिद्धः । समन्वया-धिकरणेऽभिन्ननिमित्तोपादानत्वेन परीक्षितः । तेन विरुद्धधर्माधारता बोधिता । ईक्षत्यधिकरणे चिद्रूपेऽव्याप्तिः परिहृता प्रकृतिपरमाण्वादौ चातिव्याप्तिश्च । तेन चिदंशो ब्रह्मणि बोधितः सदंशस्य च कारणता बोधिता सदेव सोम्येत्युपक्रमात् । आनन्दमयाधिकरणे आनन्दे लक्षणयोजनेन तत्राव्याप्तिः परिहृता तेनानन्दांशो ब्रह्मणि बोधितः तेन त्रिरूपता बोधिता । एवं त्रिरूपताकार्यकारणभावः समवायित्वनिर्णायकधर्मकथनेन तृतीयेधिकरणे विरुद्धधर्माधारत्वं च साधितमिति । अतो विरुद्धधर्मा-धारत्वात् प्रकरणैक्यप्रयुक्त एकवाक्यत्वेऽप्रयोजकत्वं शङ्कते नन्वित्यादि । तेषामिति कार्याणाम् । न ब्रह्मप्रतिपादकज्योतिर्ब्राह्मणाकाङ्क्षा ब्रह्मणो कार्यत्वादित्यर्थः । हेत्वन्तरमाह गायत्रीमित्यादि । तथा च कस्यैते पादा इति संबन्धित्वेनापि न ब्रह्माकाङ्क्षेति भावः । अथेति भिन्नप्रक्रमवाचकेनाथेत्येवं पदेनेत्यर्थः । नन्वस्त्वनाकाङ्क्षा तथापि ।

'स्वार्थबोधे समाप्तानामङ्गाङ्गित्वाद्यपेक्षया ।
वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते' ॥

इत्यङ्गाङ्गित्वापेक्षयैकवाक्यतास्तु इत्यपेक्षायामाहुः उभयत्रेत्यादि । नन्वस्ति तावदाकाङ्क्षो-त्थापकपदसत्त्वं तदेतदृचाभ्यनूक्तमिति श्रुत्या तदेतत्पदाभ्यामुक्तस्य पूर्वं निरूपितस्वर्गाकाङ्क्षोच्यते । ऋचि च पुरुषपदं पादसापेक्षमिति चेत्तर्हि अस्तु तत्रैकवाक्यत्वं विवक्षितस्थले तु नास्त्यैक्यमित्याहुः यदि चेत्यादिना । ऋचेत्यादि । सैषा चतुष्पदा षड्विधा गायत्रीति पूर्वमुक्तं तत्कथं षड्विधत्वमित्या-काङ्क्षायां वाच्यवाचकयोरभेदमाश्रित्याकाङ्क्षा पूरणीयेत्याशयेन तेषां पादानामृचा तावानित्यादिकया विवरणादित्यर्थः । तर्ह्यस्तु तत्रैकवाक्यता विवक्षितस्थले तु नास्त्येवेत्यत्राहुस्तत्रापीति । तदभाव इति परस्पराकाङ्क्षोत्थापकपदाभाव इत्यर्थः । पादपरीति वक्ष्यमाणप्रकारेण गायत्र्याः सर्वभूतात्मकत्व-परिचायनाय भूतानां पृथिवीत्वेन संकोचः पृथिव्याः शरीरत्वेन शरीरस्य हृदयत्वेनैवं हृदयात्मक-

भाष्यप्रकाशः ।

न तु पादत्वं, न वा तद्विधापूरकत्वमित्याशयेन तेषां षड्विधत्वमनिरूप्य हृदयस्यास्ति तथात्वमित्याशयेन हृदयस्य षड्विधत्वं निरूपयन् वक्ता तस्य ह वेत्याद्युक्तरीत्या पञ्चविधाज्ञानानन्तरमथेति प्रकृतविच्छेदेन पूर्वोक्तविधाभ्यो ज्योतिषो वैलक्षण्यं बोधयंश्चतुर्थपादस्य षड्विधत्वप्रतिपादनाह्ल्यब्लोपे पञ्चमीप्रतिपादनं कृत्वा, अतस्तृतीयातस्तसिः, अनेन प्रकारेण चतुर्थपादेत्युक्तरीत्या तदेव ज्योतिरन्तःपुरुष उपसंहरति। तस्मात् पूर्वं मन्त्रेति पादस्येति कथनात् पादत्रयमुपरि यतोऽतोऽत्र, तस्य ह वेत्यारभ्यान्तं विधानिरूपके वाक्ये चतुर्थः पादो निरूप्यत इति सिद्धम्। तथाच षड्विधत्वप्रतिज्ञाया विधानिरूपणसाकाङ्क्षत्वाद्विधोपपादनस्य चाकस्मिकत्वाभावाय प्रतिज्ञासाकाङ्क्षत्वादुभयोरेकवाक्यत्वम्। अतः परं ऋगवशिष्यते। सापि चतुष्पदात्वषड्विधत्वप्रतिज्ञयोरनन्तरं तद्विवरणतयोक्तेति तच्छेषस्तस्मादुपपादनवाक्यात् पूर्वं च पठिता। तस्यां च त्रिपादस्याऽमृतमिति रीत्या पादत्रयं कण्ठत उपरितनलोकेष्वित्युक्तत्वादस्ति चतुर्थपादाकाङ्क्षा। चतुर्थश्च पादः सर्वभूतात्मको हृदयाधिष्ठानक इति तदधिष्ठानस्य हृदयस्य ज्योतिर्वाक्यपर्यन्तेन विवरणादाकाङ्क्षा पूर्यते। विव्रियमाणपादविधानां च स्वाधारभूतपादस्वरूपविवरणाकाङ्क्षा। सा च पादोऽस्य सर्वा भूतानीति भूतविवरणेन ऋचा पूर्यते। तथा

रश्मिः ।

पादपरिचायकत्वम्। निरूपयन्निति वेदान्तकृदिति भावः। ल्यब्लोप इति। अनुनासिकात्परोनुस्वारः इत्यत्र यथा तथेत्यर्थः। कृत्वेति अत्र प्रतिपादनं विधायेति पाठः। अस्मिन् पाठे यद्यपि क्त्वः प्रयोगेर्वैक्यं तथापि ल्यब्लोपो नाम ल्यबन्तशब्दाज्ञाने प्रत्यासत्त्या ल्यबन्तधात्वर्थकर्मण्यधिकरणे च पञ्चमीति शब्देन्दुशेखरे व्याख्यानात्। अत इति व्याख्येयमिदम्। अन्तःपुरुष इति अस्मिन्नन्तःपुरुषे ज्योतिरिति श्रुतेः। तस्मादित्यादिभाष्यं विवृण्वन्ति स्म तस्मादित्यादि। विषयवाक्यात्पूर्वमन्त्रे। पादत्रयमिति अनुकरणशब्दोयं त्रिपादिति श्रौतस्य तेन सुपां सुलुक् इत्यनेन त्रिपादित्यत्र ङसो लुग्व्याख्यातः। त्रिभिः पद्यत इति च तथा च त्रिपादोस्येत्यन्वयः। अभेदषष्ठ्या त्रिपादभिन्नममृतं क्षेममभयमित्युक्तं पादत्रयमित्यर्थः। गूढार्थोग्रे वाच्यः। अत इति चतुर्थपादाकाङ्क्षायाः सत्त्वादित्यर्थः। आन्तमिति अन्तमन्तःपुरुषे ज्योतिरिति वाक्यं तदभिव्याप्येत्यर्थः। हृदयषष्ठविधायां ज्योतिषि चतुर्थः पादः इति भाष्यीयचतुर्थत्वं समर्थयितुं किंचिदाहुः तथा चेत्यादि। प्रतिज्ञेति षड्विधात्वप्रतिज्ञेत्यर्थः। भाष्ये। उपरितनेति।

'पादेषु सर्वभूतानि पुंसः स्थितिपदो विदुः।
अमृतं क्षेममभयं त्रिमूर्ध्नोऽधायि मूर्धसु' ॥

इत्यनेनैकवाक्यतायै बहुवचनम्। पादत्रयमुपरितनलोकेषु, चतुर्थः सर्वत्रेति। प्रकृते। तच्छेष इति व्याख्यानस्य व्याख्येयार्थत्वेन पारार्थ्यादिति भावः। पारार्थ्यं शेषलक्षणम्। उपेत्यादि तस्य ह वा एतस्य हृदयस्येत्यादिषड्विधोपपादनवाक्यं तस्मादित्यर्थः। त्रिपादस्यामितीति भाष्ये त्रिपाद्, अस्य, अम्, ऋतमिति पदच्छेदं मत्वोक्तम्। अत्र पक्षे संबन्धोऽभेदो बोध्यः। आकाङ्क्षेति चतुर्थपादाकाङ्क्षा पूर्यत इत्यर्थः। सर्वभूतात्मक इति सर्वाणि भूतानीति पादस्य भूतरूपस्य विवरणात् स च पृथ्वीरूपः पृथ्वी च शरीररूपा शरीरं च हृदयरूपमिति संकोच इति हृदयविधारूपचतुर्थपादो ज्योतीरूपः सर्वभूतात्मकः। हृदयं व्यवच्छेत्तुं विशिंषन्ति स्म चेत्यादि। स्वाधारभूतेति एतादृशः पादो हृदयात्मा। भूतेत्यादि करणे तृतीया। ऋचेति कर्तरि तृतीया।

भाष्यप्रकाशः ।

ऋचि, दिवीति पदादत्र च परो दिव इति कथनादृचि पुरुषपदेनोक्तः पादत्रयाधारो ज्योतिर्वाक्ये प्रत्यभिज्ञायते । अतश्चतुर्थः पादोऽस्मिन् वाक्ये निरूप्यत इत्यृचा सहाप्यस्यैकवाक्यत्वं सिद्धमित्यर्थः ।

अत्रेदं बोध्यम् । अत्र गायत्रीमुपक्रम्य तस्याः सर्वभूतात्मकत्वं प्रतिज्ञाय तत्स्वरूपजिज्ञासायां, वाग्वै गायत्रीति तत्स्वरूपमुक्त्वा वाचः कथं गायत्रीत्वमित्यपेक्षायां सर्वभूतगातृत्वात्तत्त्रातृत्वाच्च गायत्रीत्वमुक्तम् । तर्हि तस्याः कथं सर्वभूतात्मकत्वमित्यपेक्षायां या वै गायत्रीयं वा व सेत्यादिना तस्याः पृथिवीत्वं प्रतिपाद्य तेन रूपेण सर्वभूतधारकत्वात् सर्वभूतत्वे समर्थिते, किं तत् सर्वं भूतं का च तद्धारिका पृथिवीत्यपेक्षायां तां शरीरत्वेन संकोच्य शरीरं हृदयत्वेन संकोचयति । तत्र प्राणाँश्च प्रतिष्ठापयति । तेन प्राणरूपाणि भूतानि शरीरैकदेशहृदयात्मकपृथिवीरूपेण वाग्रूपा गायत्री धारयतीति प्रतिपाद्य तस्याः स्वरूपमाह । सैषा चतुष्पदा षड्विधा गायत्रीति । तत्र वाग्रूपायाः कथं पृथिव्यादिरूपत्वं भूतधारकत्वं च । तथा पदशब्दोऽपि किं स्थानवाची, उत चत्वारि वाक्परिमिता पदानीति श्रुत्युक्तपरा पश्यन्तीमध्यमावैखरीति वागवस्थाचतुष्टयवाची वा पादवाची वेति संदेहवारणाय तदेतदृचाभ्य-

रश्मिः ।

**पादत्रयेत्यादि** पुरुषस्यावयवित्वेनावयवभूतपादत्रयाधारत्वमिति ज्ञेयम् । ज्योतिःपदेन प्रत्यभिज्ञायते षष्ठविधात्वेनान्तिमत्वात्तुरीयपादेप्यत्र पर्यवसित्या प्रधानं हृदयं तदिदं ज्योतिरिति तथा । ननु 'यदतः परः' इतिविशेषणेन प्रथमपादभूतभूतादिनिविष्टपुरुषव्यतिरेकात् तत्कथं पुरुषो ज्योतिरिति प्रत्यभिज्ञा तदिदं जलं सेयं दीपमालिका यथा । किं च । परस्य पुरुषरूपज्योतिषः प्राज्ञतैजसतुरीयरूपत्वेपि शरीरपृथिवीहृदयरूपत्वं च कथमित्यतो गायत्री वा इदं सर्वमित्यारभ्य य एवं वेद इत्यन्तस्य योर्थः सिद्धस्तं सिद्धान्ते आहुः **अत्रेदमित्यादिना** । **अत्रेत्यादि** 'गायत्री वा इद९सर्वं भूतं यदिदं किं च' इति द्यन्तपदद्वयमग्रे संबध्यते । **सर्वभूतेत्यादि** सर्वं भूतं गायति च त्रायते च या सा गायत्रीति श्रुतेरित्यर्थः । **तर्हीति** वाग्रूपत्ववेलायाम् । इत्यादिनात्रादिना 'येयं पृथिव्यस्या९हीद९सर्वं भूतं प्रतिष्ठितमेतामेव नातिशीयते' इति नातिशीयते नातिवर्तते यद्वा शिग् तनुकरणे शिनोति शिनुते इत्यर्थे वा शीयते इति छान्दसः । **तामित्यादि** 'यद्वै तत्पुरुषे शरीरमिदं वा व तद्यदिदमस्मिन् तत्पुरुषे हृदयम्' इति संकोचयतीत्यर्थः । तस्मिन् हीमे प्राणाः प्रतिष्ठिता इति श्रुतेराहुः **तत्रेत्यादि** । एतेनातिदेशाधिकरणसंगतिरपि सूचिता, प्रसङ्गरूपा । प्राणनिरूपणेन तदाधारहृदयं तन्निष्ठपुरुषो ज्योतिस्ताभ्यामाधाराधेयभावसंबन्धः सामानाधिकरण्यसंबन्धश्चेति संबन्धित्वात् । एकसंबन्धिज्ञानमपरसंबन्धिस्मारकमिति स्मृतस्योपेक्षानर्हत्वं प्रसङ्गसंगतिः । **चत्वारीत्यादि** 'चत्वारि वाक्परिमितानि पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः गुहायां त्रीणि निहितानि नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति' इतिश्रुतिः । एतदर्थस्तु वाचः परिमितानि वाक्परिमितानीति षष्ठीतत्पुरुषः । वागित्यत्र ङसः स्वादेशो वा । परिमितानीत्यस्य शास्त्रनिर्णीतानीत्यर्थः । पदान्यवस्थाविशेषरूपाणि । ताश्चावस्थाः परापश्यन्तीमध्यमावैखरीरूपाः । मनीषिणोध्यात्मकुशलाः । तेषां मध्ये त्रीणि गुहायां शरीरे आधारनाभिहृदयेषु निहितानि । नेङ्गयन्ति न जानन्ति । तुरीयं वैखर्याख्यं मनुष्या वदन्ति मनुष्याणां वदने वर्तमानोर्थबोधकः

इति चतुर्थपादस्य षष्ठविधत्वप्रतिपादनात् । अतश्चतुर्थपादे पञ्चपुरुषास्ततः परो दिवोज्योतिः षष्ठस्तस्यैव सर्वत्र दीप्यमानत्वं निरूप्य तदेवान्तःपुरुषे उपसंहरति । तस्मात् पूर्वं 'त्रिपादस्याऽमृतं दिवि' इत्युक्तत्वादस्य त्रिपात्संबन्धि अमृतमुपरितनलोकेष्विति । अतोऽत्र चतुर्थः पादो निरूप्यत इति सिद्धम् ।

अतः पादानां ब्रह्मधर्मत्वाज्ज्योतिषो ब्रह्मत्वमिति ।

---

भाष्यप्रकाशः ।

नूक्तमिति प्रतिज्ञाय ऋचा विवृतम् । यावान् सर्वभूतात्मकत्वादिरूपोऽर्थः पूर्वमुक्तस्तावान् अस्य गायत्रीनाम्नः पुरुषस्य महिमा माहात्म्यं विभूतिः । तत उक्तरूपान्महिम्नः पुरुषो ज्यायान् अधिकः । पूर्वोक्तं कथमस्य महिमेत्यत आह पादस्येत्यादि । तथा चोक्तरूपस्य सर्वस्यैतत्पादरूपत्वान्महिमत्वम् । तत एव च पुरुषस्य ज्यायस्त्वम् । एतेन पदशब्दार्थोऽपि निर्णीतः । पादा एव पदशब्दवाच्या इति । एवं चार्थरूपपादबोधनेन गायत्र्या वाग्रूपत्वं निवारितम् । तेन पुरुषस्य गायत्रीवाच्यत्वाद् गायत्रीत्वम् । तेन वाग्रूपाया गायत्र्यास्तद्विधात्वमित्यपि साधितम् । ततः पुरुषः को वेत्यपेक्षायां तं पूर्वोक्तपार्थिवशरीरवतः पुरुषाद् व्यावर्तयितुं यद्वैतद् ब्रह्मेत्यारभ्य, योऽयमन्तर्हृदय आकाश इत्यन्तेन तत्स्वरूपमाह । तेन मन्त्रे पुरुषत्वेन यदुक्तं तद् ब्रह्म आकाशो, न तु शरीरी पुरुष इत्युक्तम् । तत आधेयस्य कथं महिमाधारत्वमित्यतस्तथात्वं साधयितुं तस्य व्यापकत्वं तदुपासनं तत्फलं चाह । तदेतत्पूर्ण-

रश्मिः ।

शब्दो भवतीत्यर्थः । ऋचेति तावानित्यादिकया । निवारितमिति अन्यथा परापश्यन्तीमध्यमावैखर्याख्यपादचतुष्टयं वदेदिति भावः । किंरूपत्वं तस्या इत्यपेक्षायां पुरुषो ज्योतिरिति प्रत्यभिज्ञानुसारेण वाच्यवाचकयोरभेदोक्त्याराद्ब्रह्मरूपत्वमित्याहुः तेनेत्यादिना ग्रन्थेन । यद्वेत्यादि ऋक् समनन्तरमेव यद्वैतद्ब्रह्मेतीदं वा व तद्योयं बहिर्धा पुरुषादाकाशो यो वै स बहिर्धा पुरुषादाकाशोयं वा व स योयं अन्तःपुरुष आकाशो यो वै सोन्तःपुरुष आकाशो यं वा व स योयमन्तर्हृदय आकाश इत्यन्तेन वाक्येन । बहिर्धेत्यस्य बहिरित्यर्थः । आकाशस्याधिभौतिकादिभेदेन त्रिधा निरूपणं ज्ञेयम् । तेनाकाशस्तल्लिङ्गादित्यधिकरणेनावसररूपा संगतिरुक्ता । तदेतदित्यादि तदेतत्पूर्णमप्रवृत्तिपूर्णामप्रवर्तिनीं श्रियं लभते य एवं वेद इत्यनेनेत्यर्थः । अप्रवर्तीत्यस्य न कुतश्चित्प्रवर्तितुमुत्पत्तिं प्राप्तुं शीलमस्येत्यर्थः । अप्रवर्तिनीमित्यस्याविनाशिनीं कल्पस्थायिनीमित्यर्थः । इत्यादिनेत्यत्र आदिना पञ्च देवसुषयः स योस्य प्राङ् सुषिः स प्राणस्तच्चक्षुः स आदित्यस्तदेतत्तेजोऽन्नाद्यमित्युपासीत तत्तेजस्व्यन्नादो भवति य एवं वेदाथ योस्य दक्षिणः सुषिः स व्यानस्तच्छ्रोत्रं स चन्द्रमास्तदेतच्छ्रीश्च यशश्चेत्युपासीत श्रीमान् यशस्वी भवति य एवं वेदाथ योस्य प्रत्यक् सुषिः सोऽपानः सा वाक् सोग्निस्तदेतद्ब्रह्मवर्चसमन्नाद्यमित्युपासीत तद्ब्रह्मवर्चस्व्यन्नादो भवति य एवं वेद । अथ योस्योदक् सुषिः स समानस्तन्मनः स पर्जन्यस्तदेतत्कीर्तिश्च व्युष्टिश्चेत्युपासीत कीर्तिमान् व्युष्टिमान् भवति य एवं वेदाथ योस्योर्ध्वसुषिः स उदानः स वायुः स आकाशस्तदेतदोजश्च महश्चेत्युपासीतौजस्वी महस्वान् भवति य एवं वेद ते वा एते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपाः स य एतानेवं पञ्च ब्रह्मपुरुषान् स्वर्गस्य द्वारपान् वेदास्य कुले वीरो जायते प्रतिपद्यते स्वर्गं लोकं य एतानेवं पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान् वेदेति श्रुत्वा निवेशयतीत्यर्थः । अत्र प्राङ् सुषिश्च ।

भाष्यप्रकाशः ।

मित्यादिना । ततः कास्तद्विधा इत्यपेक्षायां तस्य ह वा एतस्य हृदयस्येत्यादिना पञ्चप्राणानिन्द्रियाणि तद्देवांश्च द्वारपालकोटौ निवेशयति । षष्ठेन ज्योतिषा च षट्संख्यां पूरयति । तेनैते षडपि विधाः । एतद्व्यतिरिक्तः प्राणविधायां, प्राणो हि पिता प्राणो मातेति प्रसिद्धो जीवात्मकः प्राणः पाद इति सिद्ध्यति । सोऽपि न विविक्तः किंतु शरीरविशिष्ट इति तद्विशिष्टानां जीवानां पादत्वं, तस्य च मुख्यं स्थानं हृदयं, विधाश्च तत्रैव भूयस्य इति हृदयमपि पाद एव निविशते । ज्योतिश्चात्र हार्दमेव यदाकाशशब्देनोक्तं, हृद्यन्तर्ज्योतिरिरिति श्रुत्यन्तराच्च । अतः पूर्वोक्तरीत्या एकवाक्यत्वं निष्प्रत्यूहमित्यर्थः ।

यत्तु केचित् पुरःस्फूर्तिकमालम्ब्य गायत्र्या भूतपृथिवीशरीरहृदयभेदेन चतुष्पात्त्वं, तस्या वाग्रूपत्वकथनाद् हृदये प्राणानां चोक्तत्वात् तदुभयसहितानि तानि भूतानि संख्यायां निवेश्य तैः षड्भिर्गायत्र्याः षड्विधत्वं व्याख्याय, इदं यावदुक्तं तावानस्य महिमा विकारस्ततो ज्यायान् पुरुषो महान् विकारोऽस्य पुरुषस्य सर्वाणि भूतानि पूर्वं गायत्र्यात्मनोक्तान्येकः पादोऽस्य गायत्रीब्रह्मणस्त्रिपाद् अमृतं दिवि द्योतनवति स्वात्मन्यवस्थितमित्येवं मन्त्रं व्याख्याय तस्य गायत्र्यवच्छिन्नस्य ब्रह्मणो हृदयाकाश उपास्यत्वं च व्याख्याय तत उपास्त्यङ्गभूतं पञ्चद्वारपालोपसानं च व्याख्याय गायत्र्युपाधिकस्य हृद्युपास्यत्वेनोक्तस्यैव कौक्षेयज्योतिःप्रतीकत्वेनोपासनम् 'अथ यदतः परो दिवः' इत्यादिना विधीयते । अत्र चाथशब्दो विद्यान्तरोपक्रमार्थ इत्याहुः ।

रश्मिः ।

सुषिश्छिद्रम् । अस्येति हृदयस्य । कीर्तिः परोक्षख्यातिः । व्युष्टिरपरोक्षख्यातिः । एते इति पञ्च द्वारपाला ज्योतिश्चेत्येत इत्यर्थः । तेन प्राणरूपाणि भूतानि इत्यादिस्वोक्तसंदिग्धत्वात् प्रपञ्चयन्ति एतद्व्यतीत्यादिना । प्रसिद्ध इति पितृत्वमातृत्वे जीवानां प्रसिद्धे ईश्वरस्य तु पिताहमस्य जगतो मातेति न प्रसिद्धे । किंत्वित्यादि । पितृत्वमातृत्वयोः शरीरिधर्मत्वादिति भावः । धातृपितामह समभिव्याहारात् । भूयस्य इति षड्धर्मा इतिसंख्यातात्पर्यात् । हृदयमिति 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' इतिसूत्रादौ । निविशत इति तथा चाश्रमवद्देहविशिष्टा जीवाः पाद इति तथेति भावः । ज्योतिरित्यादि 'योयमन्तर्हृदय आकाशः' इत्यत्राकाशशब्देनोक्तं यद्धार्दमाकाशं ज्योतिर्ब्रह्मैवेति योजना । ज्योतिश्च चकारेण पंचसुषयो जीवाः हृदयं हृदि अयमिति च्छान्दोग्यव्युत्पत्तेस्ततो ज्योतिः षष्ठीविधा । अत्र योयमितिश्रुतौ जीववद्धार्दं 'द्वौ सुपर्णौ भवतः' इति श्रुतेः परं तु ज्योतिर्न सुषिः हृदये आकाश इति हृदि अयं जीवस्तत्समीपे आकाश इति आत्मासन् काशः । वर्णलोपः । काशृ दीप्तौ आसमन्तात् काशत इति वा । सुषयस्तु न काशन्ते । आकाशशब्दस्य ज्योतिःसामानाधिकरण्ये श्रुतिं प्रमाणयन्ति स्म हृद्यन्तरिति । अत इत्यादि उपपादनात् । भाष्योक्त 'तावानस्य महिमा' इत्यादिरीत्या ऋग्विषयवाक्ययोरेकवाक्यत्वं निष्प्रत्यूहमिति । 'निःप्रत्यूहो महान् भोगः' इत्याचार्यप्रयोगात् । इत्यर्थं इति इदमेव वाक्यत्वं निःप्रत्यूहं निरुपसर्ग इति निष्कृष्टोर्थो बोध्यः । इति लिङ्गव्यत्ययेनान्वयः । अर्थपदाभावे तु मुख्यान्वय इति ज्ञेयम् । स्वोक्तं व्याख्यानं दृढीकर्तुं शांकरव्याख्यानमुपक्षिपन्ति यत्त्वित्यादि 'अङ्गं प्रती कोऽवयवः' इति कोशात् प्रतीकोवयवः ।

भाष्यप्रकाशः ।

तन्मन्दम् । पुराणोपबृंहितश्रुत्युपष्टम्भेन व्याख्यातप्रकारेण पादानां विधानां च विवेकसिद्धावेवं सांकर्येण पादविधयोर्व्याख्यानस्यासंगतत्वात् । उक्तपुराणश्रुत्योरेवंविरोधेनैव मन्त्रव्याख्यानस्याप्यसंगतत्वात् । अथ योऽस्य दक्षिणः सुषिरित्यादावप्यथशब्दस्य सत्वेऽपि तत्र न विद्याभेदकत्वम्, 'अथ यदतः परः' इत्यत्र विद्याभेदकत्वमित्यत्र बीजानुपलम्भात् अङ्गोपास्तिभेदप्रायपाठविरोधाच्चेति । एवमेकवाक्यतामुपपाद्य सिद्धमाहुः अत इत्यादि । अत एव ।

रश्मिः ।

दूषयन्ति स्म तन्मन्दमित्यादिना पुराणेन 'पादेषु सर्वा भूतानि पुंसः' इति श्लोकद्वयात्मकेनोपबृंहिता या श्रुतिः ।

'तावानस्य महिमा अतो ज्यायांश्च पूरुषः ।
पादोस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' ॥

त्रिपादूर्ध्वउदेत्पुरुषः पादोस्येहाभवत्पुनः' इतिपुरुषसूक्तस्था तदुपष्टम्भेन प्रकृतश्रुतिव्याख्यानप्रकारेणेत्यर्थः । प्रकारपदं ज्ञापयति ह्यपरस्यापि मायावादप्रकारस्य पुराणान्तरः उपष्टम्भोस्तीति कृष्णवाक्यानुसारित्वं सिद्धान्ते उत्कर्षः । अयमर्थः । पुराणेन वेद उपष्टम्भ्यो न युक्त्या । केवलयुक्तीनां तर्काप्रतिष्ठानसूत्रे प्रत्याख्यानात् तदपेक्षया पुराणस्य महत्त्वात् । तत्र च पादेषु च भूर्भुवः सुवो महर्लोकस्था व्यष्टिजीवाः प्रथमः पादः । जनलोकस्था ब्रह्मचारिणो व्यष्टिजीवा द्वितीयः पादः । तपोलोकस्था वानप्रस्थाः व्यष्टिजीवास्तृतीयः पादः सत्यलोकस्थाः संन्यासिनो व्यष्टिजीवाश्चतुर्थः पादः । एतदनुरोधेन पुरुषसूक्ते पाद इत्यत्र सुपां सुः पादा इत्यर्थः । तथा च पुराणे साधिष्ठानानां जीवानां पादत्वं पुरुषसूक्तेपि विश्वा भूतानीति साधिष्ठानानामेव तेषां तत्त्वमित्यत्रापि भूतपृथिवीशरीरपरिचायितहृदयस्थानं तस्य ह वेत्यादिनोक्तानां जीवानां पादत्वं तेषामेव च पञ्चपुरुषाणां ज्योतिषश्च षड्विधात्वमिति सिद्ध्यति । इति पादानां विधानां च विवेकसिद्धावित्यर्थः । पादयोरिति वाक्प्राणौ निवेश्य पादयोश्चतुष्पदाषड्विधयोर्व्याख्यानस्येत्यर्थः । तथा च सैषा चतुष्पदा षड्विधा गायत्रीति वाक्यं न पादानुवादकं तत् षड्विधात्वानुवादकं च किं तु प्रतिज्ञावाक्यम् । पादतद्विधानां प्रतिपादकं तु तस्य ह वा इति वाक्यमिति हृदयम् । एवं तदुक्तपादान् दूषयित्वा तावानिति मन्त्रव्याख्यानं दूषयन्ति स्म उक्तपुराणेत्यादिना । न च पुरुषपदं पुरुषावतारवाचकं तथा वाक्येपि पुंसः इति पदं पुरुषावतारपरमिति शङ्क्यम् । 'तस्माद् विराडजायत विराजो अधिपुरुषः' इति तस्य तत्कार्यश्रावणात् । अतः 'पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः' इतिश्रुतेरत्र परमकाष्ठापन्नवस्तु पुरुषपदाभिधेयम् । न तु विकृतः पुरुषः । एवं पुराणवाक्ययोरपि पुरुषसूक्तविवरणात् स एवार्थः । किं च पुराणे व्यष्टिजीवाः पादेषु व्याख्याताः । अत्र तु सर्वाणि भूतानि तेजोबन्नादीनि सस्थावराणि जङ्गमानि गायत्र्यात्मनोक्तान्येकः पादोतो विरोधेनेत्यर्थः । गायत्र्युपाधिकस्येत्यादिनोक्तं दूषयन्ति स्म अथ य इत्यादि । नन्वङ्गोपासनातः कौक्षेयज्योतिरुपासनस्य भेदसाधनाय तथाव्याख्यायत इति चेत्तत्राहुः अङ्गोपास्तीत्यादि । अङ्गोपास्तिभेदे प्रायपाठविरोधोङ्गोपास्तिभेदप्रायपाठविरोधः सुप् सुपेतिसमासः । तथा सतीति सामानाधिकरण्ये सप्तमी । असमस्तपाठोत्र भाति । द्वारपालोपासनेङ्गोपास्तित्वं त्वविरुद्धम् ।

भाष्यप्रकाशः ।

मृग्वाक्ययोरपि परस्पराकाङ्क्षासत्त्वेन पादानां ब्रह्मधर्मत्वाज्ज्योतिषो ब्रह्मत्वं सिद्धमित्यर्थः । अत्रैतद्बोध्यम् । मन्त्रे, 'पादोऽस्य सर्वा भूतानि' इत्यत्र, 'क्षरः सर्वाणि भूतानि' इति गीतोक्तः क्षरः पुरुषो जीवसमष्ट्यात्मको यद्यपि वक्तुं शक्यते । किंच 'हृद्यन्तर्ज्योतिःपुरुषः' इति श्रुत्या जीवस्य हृदयं स्थानं, तद्विराड्जीवस्य स्वर्लोकः 'हृदा स्वर्लोकः' इति द्वितीयस्कन्धात् । अत्र च स्वर्लोकस्य द्वारपान् वेदेति तत्प्रत्यभिज्ञानात् । तथापि मन्त्रे, त्रिपादस्याऽमृतं दिवीति विशेषकथनात् पुरुषसूक्तविवरणाध्याये च तेषामाश्रमत्रयस्थत्वेन व्यष्टितया निगमनात्, पादोऽस्येत्यत्रापि व्यष्टिजीवा एव ग्राह्याः । अन्यथा त्रिपादित्यादेर्विरोधापत्तेः । एवं सिद्धेऽत्रत्यानां सर्वभूतानामुपरितनानां च व्यष्टिजीवत्वे तेषां सर्वेषां हृद्यन्तरिति श्रुत्या हृदयमेव स्थानमिति तस्यैकत्र षड्विधत्वेऽन्यत्रापि तथात्वमिति ब्रह्मपादानां गायत्रीपादतुल्यत्वं तद्विधानां च गायत्रीविधातुल्यत्वं भवति । एवं सति यथा प्रणवविद्यायां ब्रह्मणः पादसंख्यापूरकत्वं तथास्यां गायत्रीविद्यायां विधासंख्यापूरकत्वम् । एवमत्र चरणानां ब्रह्मधर्मत्वात् प्रकरणस्य ब्राह्मत्वे सिद्धे शब्दमात्रस्य ब्रह्मण्येव मुख्यवृत्तत्वात् । 'तमेव भान्तम्', 'यदादित्यगतं तेजः' इत्यादिश्रुतिस्मृतिभिर्दीपनात्मकस्य तेजोलिङ्गस्यापि ब्रह्मण्येव समन्वयात् 'अहं वैश्वानरो भूत्वा' इतिगीतावाक्येन जाठरधर्मस्योष्णिमादेरपि तत्र समन्वयात् । द्युमर्यादत्वस्यापि ब्राह्मणश्रमणन्यायेनाधिक्यबोधनार्थत्वात् । चक्षुष्यः श्रुतो भवतीति फलस्यापि भगवदीयत्वेन दृश्यो विरुध्यतस्य

रश्मिः ।

इति न दूषितम् । ऋग्वाक्ययोरिति तावानित्यस्य विषयवाक्यस्य च । न हि खल्ववयववाचकपदस्यावयविवाचकत्वं प्रसिद्धम् । अतश्चरण इत्युक्ते पुरुषस्याग्रहणात्कथमत्र ब्रह्मज्योतिरित्याशङ्क्य प्रकरणस्य ब्राह्मत्वं साधयन्तोऽपनयन्ति स्म अत्रैतदित्यादिना । वक्तुमिति पादत्वेन वक्तुम् । शुल्यापि जीवसमष्ट्यात्मकत्वं पादस्य संभवतीत्याहुः किं चेत्यादिना । तत् स्थानमित्यर्थः । हृदेत्यादि ।

'भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोस्य नाभितः ।
हृदा स्वर्लोक उरसा महर्लोको महात्मनः' ॥

इत्युक्तकल्पितपदेनान्वयः । ननु प्रकृतश्रुतौ स्वर्लोकः कुत्र प्रत्यभिज्ञातः इत्यत आहुः अत्र चेत्यादि । तथा च श्रुतावपि पुरुषो जीवसमष्ट्यात्मको वक्तुं शक्यत इति भावः । अन्यथेति ग्रहणे जीवसमष्ट्यात्मकपुरुषप्रकारे सति । एवमिति त्रिपादित्यादेरविरोधचिन्तनप्रकारेण । ननु सैषा चतुष्पदा षड्विधा गायत्रीति गायत्र्याः पादानां षड्विधत्वं न तु ब्रह्मणः पादानां तथात्वमित्याशङ्कायां तत्र तस्यातिदेश इत्याहुः तस्यैकत्रेत्यादिना । अन्यत्रेति प्रणवादिविद्यायामपि पादस्य षड्विधत्वमित्यर्थः । पादसंख्येत्यादि । 'तुरीयं परममृतमजं ब्रह्म' इति श्रुतेः । विधेत्यादि ज्योतीरूपस्य ब्रह्मण इत्यर्थः । एतावता प्रकरणस्य ब्राह्मत्वं साधितमतः परं ज्योतिषो ब्रह्मवाचकत्वं साधयितुं पूर्वपक्षोदितदोषान् दूरीकुर्वन्तो हेतूनाहुः शब्दमात्रस्येत्यादिना । अन्तिमपादत्वाद्यभिधावृत्तिर्ज्योतिःपदस्य ब्रह्मणीति सिद्धम् । ब्राह्मणश्रमणेत्यादि ब्राह्मणश्चेच्छ्रमणः श्रमशीलश्चेदत्युत्कृष्टः इति न्यायेन । एवं ब्रह्मणोपि व्यापकरूपस्य तेजसो द्युमर्याददीपनाश्रयत्वाद्धि-कव्यर्माश्रयत्वादत्युत्कृष्टमित्यर्थः । भगवदीयत्वेनेति उपक्रमे 'ॐमित्येतदक्षरमुद्गीथमुपासीत' इति ह्युपसंहारे च 'आत्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्य' इति निरोधलक्षणप्रन्थोक्तरीतिदर्शनाद्दृश्यत्वस्य-

ब्रह्मधर्मनिर्णयार्थमिदमधिकरणं चरणानामौपचारिकत्वव्यावृत्त्यर्थम् । एत-न्निर्णयेन प्रणवादिविद्या निर्णीता वेदितव्याः ॥ २३ ॥

भाष्यप्रकाशः ।

भवतीत्याकारकत्वात् । 'अपवर्गमात्यन्तिकं परमपुरुषार्थमपि स्वयमासादितं नो एवाद्रियन्ते भगवदीयत्वेनैव परिसमाप्तसर्वार्थाः' इति पञ्चमस्कन्धोक्तरीत्या तस्य महाफलत्वात् । 'वसन्ते ज्योतिषा यजेत', वाचैव ज्योतिषेत्यादिश्रावणेन ज्योतिःपदस्य तेजोमात्रवाचकत्वाभावाच्च ज्योतिषो ब्रह्मत्वमिति हृदयम् । एवं सिद्धान्तमुक्त्वा, तद्धर्मोपदेशाधिकरणेनास्य गतार्थताशङ्कां परिहरन्ति ब्रह्मेत्यादि । तथाच तत्र हेतोः सिद्धत्वेनात्र तु साध्यत्वेन फलभेदान्न गतार्थतेत्यर्थः । ननु ब्रह्मप्रतिपत्तिरूपस्य फलस्याऽन्यथापि सिद्धेः का हेतुसाधनावश्यकतेत्यत आहुः एतदित्यादि । पादनिर्णयेन पादवत्योऽन्या अपि विद्या निर्णीताः स्युरित्येतदर्थं तदावश्यकतेत्यर्थः ॥ २३ ॥

रश्मिः ।

संहाराभ्यामर्थनिर्णयादुक्तमेतत् । तस्य महेत्यादि संपद्याविर्भावाधिकरणन्यायेन प्राप्तं शरीरं यस्य तस्य दर्शनीयत्वं व्याख्यातत्वं च भगवदीयत्वेनेति महाफलत्वमित्यर्थः । इत्यादीति ब्रत्रादिपदेन मनोज्योतिर्जुषतामित्यस्य संग्रहः । हेतोरिति धर्मरूपस्य । साध्यत्वेनेति हेतुत्वेनोक्तश्चरणाभिधा गायत्रं ब्राह्मं वेति संदेहात्साध्यत्वेनेत्यर्थः । ननु ब्रह्मेति औपचारिकत्वव्यावृत्त्या चरणानां ब्रह्मप्रतिपत्तिरूपस्य फलस्य । अन्यथेति तुरीयचरणचरमत्वादिति हेतुप्रकारेणापि सिद्धेः । हेतुसाधनेति हेतौ ब्राह्मत्वसाधनावश्यकतेत्यर्थः । नन्वन्तस्तद्धर्माधिकरणेनैकान्तरितश्रुतिविचारोपि कृतः ।

'स्मृतिः प्रत्यक्षमैतिह्यमनुमानश्चतुष्टयम् ।
एतैरादित्यमण्डलं सर्वैरेव विधास्यते' ॥

इत्यारणात् । अत्र तु चरणानां ब्रह्मधर्मत्वोक्त्या प्रकाशाश्रयवद्वेति सूत्रोक्तब्रह्मब्रह्मधर्माभेदाय प्रतिबन्धकं चरणौपचारिकत्वं तद्व्यावृत्त्यर्थं विचारः कृतः इति फलभेदः कुतो नादृत इति चेन्न । अस्यार्थस्यैव ननु ब्रह्म इत्यादिभाष्यविभागेनोक्तत्वात् । विद्या इति । ताश्च 'सर्वासामविरोधः सामान्यतदभावाभ्यामौपसदवत्तदुक्तम्' इति तार्तीये सूत्रे शंकरभाष्ये प्रसिद्धा भाष्यविभागे प्रपञ्चिताश्च । इत्यर्थ इति तथा चैष सूत्रार्थः । ब्रह्म ज्योतिःशब्दवाच्यं चरणाभिधानात् । चरणप्रत्यभिज्ञानादिति । चरणप्रत्यभिज्ञानं त्वेवम् । अथ यदतः परो दिवो ज्योतिर्दीप्यत इत्यत्र सर्वनामत्वेन प्रसिद्धार्थवाचकेन यच्छब्देन तावानिति पूर्ववाक्ये द्युसंबन्धित्वेन प्रसिद्धं ब्रह्मात्रापि द्युसंबन्धात्प्रत्यभिज्ञायत इति । अत्रेदं विज्ञेयम् । ज्योतिषो ब्रह्मत्वमित्यनेन ब्रह्मधर्मनिर्णयार्थमिदमधिकरणमिति भाष्यं विरुध्यते । ज्योतिःपदस्याभिधावृत्तौ ब्रह्मणि सत्त्वात्, ज्योतिःपदस्य चरणे वृत्त्यभावात् । तत्कथं ब्रह्मधर्मनिर्णय इति । उच्यते । चरमस्य धर्मिवाचकत्वेपि धर्मवाचकत्वस्य तुरीयं परमसृतमजं ब्रह्मेत्यादौ दृष्टत्वात् चरमचरणवाचकत्वमपि ज्योतिःपदस्येति । न च युगपद्वृत्तिद्वयविरोध इति वाच्यं, मनुष्य वस्तुन एव तथात्वादिति ॥ २३ ॥

## छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात् तथा हि दर्शनम् ॥ २४ ॥

ननु नात्र ब्रह्म चतुष्पान्निरूपितं किंतु गायत्रीछन्दः । 'गायत्री वा इदं सर्वं यदिदं किंच' इत्युपक्रम्य तामेव भूतपृथिवीशरीरहृदयभेदैर्व्याख्याय, 'सैषा चतुष्पदा षड्विधा गायत्री । तदेतदृचाभ्युक्तं, एतावानस्य महिमा' इति । तस्यामेव व्याख्यानरूपायां गायत्र्यामुदाहृतो मन्त्रः कथमकस्मात् ब्रह्म चतुष्पादभिदध्यात् । यद्वै तद् ब्रह्मेति ब्रह्मपदमपि छन्दसः प्रकृतत्वात् तत्परमेवावगन्तव्यम् । शब्दस्यापि ब्रह्मवाचकत्वसिद्धेर्ब्रह्मोपनिषदितिवच्छन्दब्रह्मेति च । तस्माच्छन्दस एव पादाभिधानान्न ब्रह्मधर्माः पादा इति चेन्नैष दोषः । तथा चेतोऽर्पणनिगदात् । तथा तेन द्वारेण चेतसोऽर्पणं निगद्यते । 'गायत्री वा इदं सर्वं यदिदं किंच' इति । न हि वर्णसमाम्नायरूपस्य सर्वत्वमनुपचारेण संभवति । यथा सूचीद्वारा सूत्रप्रवेशस्तथा गायत्रीद्वारा बुद्धिस्तत्प्रतिपाद्ये ब्रह्मणि प्रविशेदिति । कुत एतदेवं प्रतिपाद्यत इति, तत्राह । तथा हि दर्शनम् । तथा तेनैव प्रकारेण दर्शनं ज्ञानं भवति । स्थूला बुद्धिर्नाहत्यैव ब्रह्मणि प्रविशेदिति । एतेन

---

भाष्यप्रकाशः ।

छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथा हि दर्शनम् ॥ २४ ॥ आक्षेपांशं व्याकुर्वन्ति नन्वित्यादि । अकस्मादिति तात्पर्यलिङ्गोपष्टम्भं विना । तथाचोपक्रमस्य तात्पर्यलिङ्गत्वादसंजातविरोधत्वेन प्रबलत्वाच् तदनुरोधेनैव मन्त्रव्याख्यानमुचितमिति मन्त्रेण ब्रह्मपादासिद्धेर्हेतुः स्वरूपासिद्ध इत्यर्थः । परिहारांशं व्याकुर्वन्ति तथा तेनेत्यादि । अत्र हि तथा चेतोऽर्पणनिगदे सर्वरूपत्वोक्तिर्लिङ्गम् । वाग्रूपायां गायत्र्यां तस्यासंभावितत्वात् । तदेव च विरुध्यमानमुपक्रमस्य प्राबल्यमपहन्ति । निवृत्ते च तस्मिन् प्रकरणस्य ब्राह्मत्वं मन्त्रवर्णादेव निश्चीयते अतस्तथेति । अग्रिमं व्याकुर्वन्ति कुत इत्यादि । वेदेनेति शेषः । एवं निरूपणप्रयोजनमाहुः एतेनेत्यादि । तथाच सर्वासां मन्त्रोपासनानां निर्णयार्थ-

रश्मिः ।

छन्दोभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात् तथा हि दर्शनम् ॥ २४ ॥ भाष्ये । अभ्युक्तमिति क्वचिदप्यनूक्तमित्यपि पाठः । प्रकृते । तात्पर्येत्यादि तात्पर्यस्य लिङ्गं तस्योपष्टम्भस्तं विना । तात्पर्येत्यादि तात्पर्यस्य तत्प्रतीतीच्छयोच्चरितत्वस्य लिङ्गं ज्ञापकं तत्त्वादिरर्थः । किं च । असंजातेति न संजातो गायत्रीप्रतिपादनविरोधो यस्य तत्त्वेन । स्वरूपासिद्ध इति पक्षेऽभावात्तथा । तस्येति सर्वरूपत्वस्य । तदेवेत्यादि सर्वरूपत्वमेवेत्यर्थः । तस्मिन्निति उपक्रमप्राबल्ये । मन्त्रवर्णादिति तावानिति मन्त्रवर्णादेव निश्चीयत इत्यर्थः । भाष्ये । प्रतिपाद्ये ब्रह्मणीति न च भर्गःपदाच्छिवः, तमउपाधिकं ब्रह्म तत्प्रतिपाद्यं न शुद्धमिति शङ्क्यम् । सर्वेषां पदानां शुद्धब्रह्मणि शक्तेः । अन्यत्प्रहस्ते स्फुटम् । प्रकृते । मन्त्रेत्यादि

सर्वा मन्त्रोपासना व्याख्याताः। हि युक्तश्चायमर्थो लोके स्वतो यत्र प्रविशति तदुपायेन विशतीति। न त्वदृष्टद्वारा। दृष्टे संभवत्यदृष्टकल्पनाया अन्याय्यत्वात्। तस्मात् पादा ब्रह्मधर्माः॥ २४॥

भूतादिपादव्यपदेशोपपत्तेश्चैवम्॥ २५॥

किंच। भूतादयोऽत्र पादा व्यपदिश्यन्ते। भूतपृथिवीशरीरहृदयानि चत्वारि। न ह्येतानि गायत्र्याः पादा भवितुमर्हन्ति। ब्रह्मपरिग्रहे तूपपद्यन्ते। यावन्मुख्यमुपपद्यते तावन्न गौणं कल्पनीयम्। अयमर्थः। पूर्वहेतौ छन्दसोऽपि पादा व्यपदेशाद् भवन्ति। तथापि ब्रह्मण एव युक्ता इति। पुरुषसूक्ते एतावानस्येत्यस्य ब्रह्मपरत्वात्। अस्मिन् वाक्ये तु गायत्र्याः पादा एव नोपदिष्टाः किंतु ते ब्रह्मण एव पादा इति।

---

भाष्यप्रकाशः।

मेतदित्यर्थः॥ २४॥

भूतादिपादव्यपदेशोपपत्तेश्चैवम्॥ २५॥ युक्त्यन्तरं वदतीत्याहुः किंचेत्यादि। अयमर्थः। त्वया हि गायत्र्याः प्रकरणित्वमुपगम्य सन्निहितत्वाद् भूतादय एव पादत्वेन वाच्याः। ते च स्वरसेनासंभवन्तो गौण्या योज्याः। गौणीत्वेकत्र वास्तवत्वेऽन्यत्र भवत्यतस्तथेति स एव मुख्यो विवक्षित इति श्रुतौ वक्ष्यमाणपरामर्शं बोधयितुं सैषेत्येतत्पदमुक्तम्। अन्यथा तु पूर्ववदियं वा व सेत्येवं वदेदित्यर्थः। नन्वयमर्थस्तु पूर्वसूत्रेणैव सिद्ध इत्यस्य सूत्रस्य किं प्रयोजनमत आहुः अयमर्थ इत्यादि। पूर्वहेतौ चेतोऽर्पणनिगदरूपे छन्दसोऽपि पादा गौण्या कथनाद् भवन्ति। तथापि ब्रह्मणः पादा युक्ता इति ज्ञायते। नच तर्हि भूतादय एव मुख्यतया ब्रह्मणः पादा भवन्त्विति शङ्क्यम्। पुरुषसूक्ते, एतावानस्येत्यस्य ब्रह्मपरत्वात्। तदर्थस्य चात्र विवरणर्चि प्रत्यभिज्ञानात्। नच तत्रापि सर्वभूतपदेनैतान्येवोच्यन्त

रश्मिः।

'प्रयोगकरणभूतः शब्दो मन्त्रः' तदुक्तोपासनानाम्॥ २४॥

भूतादिपादव्यपदेशोपपत्तेश्चैवम्॥॥ २५॥ पूर्वसूत्रे भूतपृथ्वीशरीराणां परिचायकत्वेनेति भाष्येण तेषां पादत्वं नोक्तम्। अत्र तु भूतादीनां पादत्वमुक्तं तत्कथमित्यपेक्षायां तत्प्रकारमाहुः अयमित्यादि। वास्तवत्व इति यथा गौर्वाहीक इत्यादिस्थले जाड्यादेर्गवि वास्तवत्वे। अतस्तथेति यतो ब्रह्मपरिग्रहाभावे गौण्यापि पादा न योजयितुं शक्याः। अतो ब्रह्मपरिग्रह इतीति। स एवेति भूतादिपादव्यपदेशो मुख्य एवेति 'सैषा चतुष्पदा षड्विधा' इत्यत्र श्रुतौ वक्ष्यमाणानां 'तस्य ह वा एतस्य' इत्यादिना पादानां विधानां च समीपतरवाचिनैतत्पदेन परामर्शं बोधयितुं सैषेत्येतत्पदमुक्तमित्यर्थः। यद्वा। श्रुतौ सैषा चतुष्पदेत्यत्र गायत्रीपदेन लक्षणया वक्ष्यमाणस्य तद्वैतद्ब्रह्मेति ब्रह्मणः परामर्शं बोधयितुं सैषेत्यत्र समीपतरवाच्ये तत्पदमुक्तमित्यर्थः। अत्र युक्तिमाहुः अन्यथेति। ब्रह्मपरामर्शाभावे प्रकारे सति तु समीपतरवर्तिवाचकस्यैतत्पदस्य निष्प्रयोजनत्वे सति पूर्ववद्या वै सा पृथिवीयं वा व सा इति श्रुताविव प्रत्यक्षवाचकस्येदम एव प्रयोगः कृतः स्यादित्यर्थः। सर्वभूतेत्यादि सर्वा( विश्वा )भूतानीत्यस्यार्थकथनमिदम्। तस्य च सर्वभूतवाचकत्वेन विश्वभूतपदेनेत्यर्थः। विश्वभूतपदेनेति वार्थः। एतान्येवेति भूतपृथिवीशरीरहृदयानीत्यर्थः।

तद्वाचकत्वेन गायत्र्यामुपचारेणोपसंहारः । चकारादर्था न शब्दस्य पादा भवन्ति, किंत्वर्थस्यैवेति । तस्माद्ब्रह्मवाक्यत्वे भूतादीनां पादत्वमुपपद्यते नान्यथेति । तस्मात् पादानां ब्रह्मधर्मत्वम् ॥ २५ ॥

उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ २६ ॥

'पादोऽस्य विश्वा भूतानि' सर्वाणि भूमान्येकः पादः । पादत्रयममृतं दिवीत्येकोऽर्थः ।

'पादेषु सर्वभूतानि पुंसः स्थितिपदो विदुः ।
अमृतं क्षेममभयं त्रिमूर्ध्नोऽधायि मूर्द्धसु' ॥ इत्यपरः ।

---

भाष्यप्रकाशः ।

इति शङ्कय् । पुरुषसूक्तविवरणाध्याये चैतदृग्व्याख्यान आश्रमचतुष्टयस्थानां भौतिकशरीरविशिष्टजीवानामेव व्याख्यातत्वाच्छरीरवैशिष्ट्ये च भूतपृथिव्यादेरपि परिचायकत्वेनैव संग्रहान्मुख्यतया ग्रहणे तद्विरोधापत्तेस्तन्मुख्यताया वक्तुमशक्यत्वात् । नच गायत्री वेति वाक्यविरोधः । अस्मिन् वाक्य इत्याद्युक्तरीत्या तेषां गायत्र्यामुपचारेणोपसंहार इति तद्विरोधाभावादित्यर्थः । तद्वाचकत्वेनेति ब्रह्मवाचकत्वेन । उपसंहार इति सैषा चतुष्पदेत्यादिनोक्तः सः । तथाच पादानां ब्रह्मधर्मत्वाभावे गायत्र्यां तद्व्यपदेशस्यापि वक्तुमशक्यत्वात् त्वया लक्षणोपपादनायाप्यसदुक्तमवश्यमङ्गीकरणीयमिति, गले पादुकान्यायेन तदङ्गीकारणं प्रयोजनमित्यर्थः । एतेन सूत्रस्थमेवंपदं व्याख्यातम् । स्फुटमन्यत् ॥ २५ ॥

उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ २६ ॥ सूत्रं व्याख्यातुं तदर्थं

रश्मिः ।

तन्मुख्येत्यादि तेषां भूतपृथिवीशरीरहृदयानां मुख्यपादताया इत्यर्थः । स इति चतुष्पाद् ब्रह्मत्वेन दृष्टा गायत्र्येतदुपासनोक्तफलाय भवतीत्येतदर्थं पादानां विधानं चोपसंहार इत्यर्थः । वृत्त्यनुसारेणेदं प्रतिज्ञावाक्यमुक्तम् । गले पादुकान्यायेनेति अयं क्वचित्प्रसिद्धः कैकेय्या रामराज्यार्थं यतन्त्या रामपादुकां गले स्वे कृते इति न्यायो वा । भरतेन रामपादुके सेविते इति तयापि तथा । एवमनिच्छतोपि ग्राहिते पादुके यथा तथेदमपि वृत्तमित्यर्थः । ब्रह्मण एव पादा युक्ता इति सूत्रस्यैवंपदस्यार्थ इत्याहुः एतेनेत्यादिना । वृत्तौ त्वेवमित्यस्य तव मतोपपत्तिरित्यर्थ उक्तः । अन्यदिति तस्मादित्यादिना सिद्धकथनं स्फुटार्थमित्यर्थः ॥ २५ ॥

उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ २६ ॥ अत्रैवं भाति । बहुधा हि पादनिरूपणं भवति तत्र 'पादेषु सर्वभूतानि' इत्यत्र भूरादयः पादाः 'पादास्त्रयो बहिश्च' इत्यत्राश्रमस्था जीवाः पादाः । पादोस्येत्यत्र सर्वभूतान्येकः पादोऽमृतादयस्त्रयः पादा इति सिद्ध्यति । किं चाकारउकारमकारार्धमात्राकाराः पादाः ब्रह्मविष्णुकपर्दितुरीयपादाः भूतपृथिवीशरीरहृदयानि पदानि । प्राची दिक्कला प्रतीची दिक्कला दक्षिणा दिक्कलोदीची दिक्कलाः पादाः । पृथ्वी कलाऽन्तरिक्षं कला द्यौः कला समुद्रं कलाः पादाः । अग्निः कला सूर्यः कला चन्द्रः कला विद्युत्कलाः पादाः । प्राणः कला चक्षुः कला श्रोत्रं कला मनः कलाः पादाः । एकशब्दश्च संख्यावाची । मुख्यत्वं च पुरःस्फूर्तिकत्वे

पुरुषसूक्तानुरोधे द्वितीय एवार्थः। प्रथमे तावत्। ननु दिवीति मन्त्रे सप्तम्या आधारत्वं प्रतिपाद्यते। अतः परमित्यत्र पञ्चम्या अनाधारत्वमत उपदेशभेदात् पूर्वोक्तपरामर्शाभावान्न ज्योतिषो ब्रह्मत्वमिति चेन्नैष दोषः। उभयस्मिन्नप्यविरोधात्। मन्त्रे दिव्येवोक्तम्। अस्मिन् वाक्ये सर्वत्रोच्यते। सर्वत्र

भाष्यप्रकाशः।

प्रथमतो मन्त्रं व्याकुर्वन्ति पादोऽस्येत्यादि। एकोऽर्थ इति पुरःस्फूर्तिकः सर्वादृतस्तृतीयोऽर्थः। अस्मिन् पक्षे श्रौतं दिवीति पदं द्योतनात्मस्वरूपपरम्। अतः पादसंख्यापूर्तिस्त्वमृतात्मकेन स्वरूपेणैव। न तु जीवैर्न वा लोकैरिति। द्वितीयस्कन्धानुसारेणेतरमाहुः पादेष्वित्यादि। श्लोकार्थस्तु तिष्ठन्ति येष्विति स्था भूरादिलोकाः स्थितिपदवाच्यास्ते पादा यस्येति स्थितिपात्। तस्य स्थितिपदो भगवतो भूरादिषु पादेषु सर्वाणि भूतानि विदुः। त्रिमूर्ध्नो भूरादित्रयोपरिवर्तमानस्य महर्लोकस्य मूर्धसूपरितनेषु जनस्तपःसत्येषु, 'अमृतं क्षेममभयम्' इति सुखत्रयमधायि। अतो भूरादिचतुष्के अनित्यं सुखमित्यर्थादायाति। अस्मिन् पक्षे श्रौते पादशब्दे, सुपां सुलुगिति सुपः स्वादेशः। अस्येत्यस्य स्थितिपदः पुंस इत्यर्थः। दिवीति अनित्यं सुखमित्यर्थादायाति। अस्मिन् पक्षे श्रौते पादशब्दे, सुपां सुलुगिति सुपः स्वादेशः। अस्येत्यस्य स्थितिपदः पुंस इत्यर्थः। दिवीति जनआदित्रयोपलक्षकम्। अमृतपदममृतत्वस्यानुव्यवसीयमानत्वात् सुखत्रयोपलक्षकम्। एवं सति द्वितीयस्योपपादनसापेक्षत्वात् प्राञ्जलः पूर्वं

रश्मिः।

सति सर्वादृतत्वं तदेतदभिसंधायाहुः पुरःस्फूर्तिक इत्यादि। अस्यार्थस्य तृतीयत्वमुपपादयन्ति स्म अस्मिन्नित्यादिना। इतीति तथा चास्यार्थस्योपबृंहितत्वेन श्रौतमात्रत्वात्तृतीयत्वमित्यर्थः। यदि चास्याप्यर्थस्य 'पादाश्रयः' इत्यनेनोपबृंहितत्वं तदा द्विधा पादनिरूपणम्। एतच्चैवकारोप्यर्थः इत्यादिनाग्रे सूचयिष्यन्ति। तथा चोभयस्मिन्निति सौत्रं पदं सिद्धम्। तिष्ठन्तीत्यादि। अत्र चत्वारो लोकात्मका ब्रह्मपादाः सेत्स्यन्ति। स्थितिपदेत्यादि स्था इत्यत्राधिकरणे घञ्। स्थितिशब्दश्च लोकेषु रूढ इति भावः। जनस्तप इत्यादि अत्र सान्तः। अमृतमित्यादि अमृतं तु जनलोके सुखम्। तस्य स्वरूपतः स्थानतश्च नाशाभावात्। तथा च न विद्यते मृतं नाशो यस्येत्यमृतम्। तपोलोके तु क्षेममक्षेमदर्शनाभावात्। जनलोके तु महर्लोकात् पलाय्यागतानां दुःखितानां दर्शनरूपमक्षेमदर्शनमस्ति तपोलोके तु नैवमिति तत्सुखस्य क्षेमत्वम्। सत्यलोके तु सुखमभयरूपं मोक्षप्रत्यासन्नत्वादित्येवममृतादिभेदो ज्ञेयः। आयातीति 'यान्त्यूष्मणा महर्लोकाज्जनं भृग्वादयोर्दिताः' इतिवाक्यात् महर्लोकेपि स्थानत्यागलक्षणस्य दुःखस्य विद्यमानत्वेनानित्यप्रायमेव सुखमिति भावः। श्रुत्येकवाक्यत्वायाहुः अस्मिन्नित्यादि। सुप इति सप्तमीबहुवचनस्येत्यर्थः। तथा च पादोस्य विश्वा भूतानीत्यस्य पादेषु स्थितिपदः पुंसो विश्वा भूतानि इत्यर्थः। जन आदीति जनपदं सकारान्तमत्र क्वचिच्च ग्रीवायां जनलोकोस्य इत्यादावकारान्तं पदमिति बोध्यम्। अमृतपदेन तात्पर्यानुपपत्त्यनुसंधानात्तदीयोपरितनत्वादिधर्मैः सादृश्याद्गौणी सारोपा। अत्र द्योतनाद्यतिशय एव प्रयोजनम्। गौर्वाहीक इतिवत्। द्यौर्जनःतपःसत्यानि द्वीति। सुखत्रयेत्यादि त्रिपादित्यस्य त्रिभिः पद्यते प्राप्यते इति त्रिपादिति विग्रहः। अत्रापि गौणी सारोपा। मृतममृतामयक्षेममिति।

विद्यमानस्य दिवि विद्यमानत्वं न विरुध्यते । अतःशब्देन न तत्राविद्यमानत्वं किं तु ततोऽप्यन्यत्र सत्त्वं बोध्यते । तस्मात् सप्तमीपञ्चमीनिर्देशो न विरुद्धः । द्वितीये तु । ननु मन्त्रे अमृतपदमत्र ज्योतिःपदमत उपदेशभेदाच्चतुर्थश्च पादो

---

भाष्यप्रकाशः ।

एव ग्राह्य इति शङ्कायामाहुः पुरुषेत्यादि । एवकारोऽप्यर्थे । पूर्वस्यापि पादत्रय इत्युक्तरीत्या पुरुषसूक्तानुसारित्वात् । एवमभिप्रेत्य सूत्रं द्वेधा व्याकरिष्यन्त आहुः प्रथमे तावदित्यादि । प्रथम इति पुरःस्फूर्तिके तृतीये । पूर्वोक्तपरामर्शाभावादिति विभक्तिभेदेन मन्त्रोक्तस्य दिवृशब्दस्यास्मिन् प्रत्यभिज्ञाभावात् । सिद्धान्तग्रन्थे पञ्चम्याः कथं सर्वत्र विद्यमानताबोधकत्वमत आहुः अत इत्यादि । अतो दिव इत्युक्त्वा, सर्वतः पृष्ठेष्वित्यादिश्रावणेन पञ्चम्या ल्यब्लोपीयत्वे, इमं द्युलोकमारभ्येत्यर्थात् तथेत्यर्थः । अत्र सर्वे, वृक्षाग्रे श्येनो वृक्षाग्रात् परतः श्येन इति विभक्तिभेदेऽपि यथैकार्थ्यप्रत्यभिज्ञा तथात्रेति दृष्टान्तमात्रमाहुः । अत्र तु विभक्तिभेदस्य प्रयोजनमप्युक्तमिति विशेषः । द्वितीयपक्षेण व्याकर्तुं पूर्वपक्षमाहुः ननु मन्त्र इत्यादि । अन्यमप्युपदेशभेदमाहुः चतुर्थश्च पादो हृदयमिति । मन्त्रे लोकात्मकः पादः । ब्राह्मणस्य तु हृदयमुपक्रम्य पठितत्वाद् हृदयं पादत्वेन तत्र सिध्यतीत्युपदेशभेद इत्यर्थः ।

रश्मिः ।

पादात्त्रय इत्यादि । श्लोकस्तु ।

'पादात्त्रयो बहिश्चासन्नप्रजानां य आश्रमाः ।
अन्तस्त्रिलोक्यास्त्वपरो गृहमेधोऽबृहद्व्रतः' ॥ इति ।

श्लोकार्थस्तु चत्वारश्चाश्रमाः भगवतश्चत्वारः पादाः यतो भगवान् तानधितिष्ठति तत्र त्रयः पादाः ब्रह्मचारी वानप्रस्थः संन्यासी च ते त्रयोपि त्रिलोक्या बहिश्चासन् चकारेण स्वेच्छयान्तरेपि । न जायन्ते प्रजादिरूपेणेत्यप्रजाः गृहस्थव्यतिरिक्ताः । अपरो हीनः गृह एव मेधा बुद्धिर्यस्येति गृहमेधः । बृहत् स्थूलमूर्ध्वरेतोरूपं व्रतं यस्य नास्ति सोऽबृहद्व्रत इति । अस्मिन् पक्षे त्रिपादाश्रमत्रयात्मकः पुरुषः ऊर्ध्वे उपरितनामृतसुखार्थमुदैत् । उपरितनेषु जनस्तपःसत्येषु लोकेषु गतवान् । अस्य पादो गृहस्थाश्रमीह त्रिलोकीसुखार्थं पुनरभवात् पुनः पुनरुत्पन्न इति त्रिपादूर्ध्व उदैत् पुरुषः इति श्रुत्यर्थः । एवमिति उपबृंहणेनैवं द्वेधा मन्त्रार्थमभिप्रेत्येत्यर्थः । प्रत्यभिज्ञेत्यादि अयं चोपदेशभेदादित्यस्यार्थः । उभयस्मिन् विभक्तिभेदादिना भिन्नविधेप्युपदेशे ब्रह्मवाक्यत्वस्याविरोधादिति सूत्रशेषार्थः । ल्यबित्यादि । ज्ञापित इति शेषः । सर्वे इति शंकराचार्यादयः । प्रयोजनमिति सप्तम्या तत्रैव विद्यमानत्वमुच्यते पञ्चम्या तु सर्वत्र तदिति ह्यन्यत्र सत्त्वं प्रयोजनमित्यर्थः । लोकात्मक इति तावानिति मन्त्र उपष्टम्भकेन पुराणेन लोकात्मको लोकस्थिताश्रमस्थजीवात्मको वा पाद इत्यर्थः । लोकात्मकपदस्योपलक्षकत्वात् । ब्राह्मणस्येति तस्य ह वा एतस्य हृदयस्येति । हृदयमुपक्रम्याथ यदतः पर इति ब्राह्मणस्य पादस्य पठितत्वादित्यर्थः ।

हृदयम् । अतःशब्दाच्च सर्वस्माद्भेदः प्रतिपाद्यते । अत उपदेशभेदान्नैकवाक्यता अस्मिंश्च वाक्ये चरणाभावात् । स्वरूपासिद्धो हेतुरिति चेन्नैष दोषः उभयस्मिन् ज्योतिःपदे अमृतपदे च प्रयुज्यमाने एकार्थत्वान्न विरोधः । पाद-

भाष्यप्रकाशः ।

अन्यमपि भेदकमाहुः अतःशब्दादित्यादि । अत इत्यस्य पूर्वपरामर्शित्वात् पूर्वस्माद् भेदे प्रत्यायिते पूर्वोक्ताद् ब्रह्मणोऽपि सकाशाज्ज्योतिषो भिन्नत्वसिद्धिरित्यर्थः । अत इत्यादि एवं प्रकारत्रयेणैकदेशभेदान्मन्त्रब्राह्मणयोर्भिन्नार्थत्वेनोपदेशभेदादित्यर्थः । तेन सिद्धमाहुः अस्मिन्नि-त्यादि । ब्राह्मणवाक्ये तदभावादेकवाक्यत्वाभावेन मन्त्रतः प्राप्त्यभावात्तथेत्यर्थः । सिद्धान्तं व्याचक्षते नैष इत्यादि । एकार्थत्वादिति उभयोर्ब्रह्मवाचकत्वेनैकार्थत्वान्नैकवाक्यताविरोधः । ननु तथापि पादभेदेन विभागे साकाङ्क्षत्वाभावात् कथमेकवाक्यतेत्यत आहुः पादेत्यादि । आश्रमचतुष्टयस्थजीवानां पादत्वपक्षे लोकानां च पादत्वपक्षे यथायथं हृदयरूपं चरणस्थानं, पादान्तर्वर्ति ब्रह्म च ज्योतीरूपं सर्वत्रेति पादभेदेऽपि तदुपलक्षकस्य तदन्तःस्थितस्य च सार्वत्रिकत्वेनोभयत्रापेक्षणाद्विभागे साकाङ्क्षतायाः सत्त्वान्नैकवाक्यत्वभङ्ग इत्यर्थः । ननु

रश्मिः ।

पूर्वोक्तादिति गायत्री वा इदं सर्वमिति गायत्रीरूपादित्यर्थः । तेनेति एकवाक्यताभावसाधनेन । तथेति स्वरूपासिद्धत्वप्रकारेण हेतुरित्यर्थः । पादभेदेनेति मन्त्रब्राह्मणयोरिति शेषः । पादेत्यादीति अत्र मन्त्रब्राह्मणयोः पादत्रयमुपरितनलोकेषु जनस्तपःसत्येषु समानमेकवाक्यत्वादुभयोः पादान्त-ज्योतिः सर्वत्र ब्रह्मत्वात् न तु हृदयं न वा पञ्च स्वर्लोकपा न वा जीवाः नापि लोकाः अतश्चतुर्थत्वेन ज्योतिषो ह्युपादानं व्यर्थं सञ्ज्ञापयति चतुर्थं सर्वत्रेति तत्कथमुपपद्यते । उच्यते । उभयस्मिन्नपि पक्षे चरणयोः बहुत्वविशिष्टजीवलोकयोः स्थानं हृदयं वाच्यं पदं यथायोग्यम् । जीवानां स्थानं हृदयं स्पष्टम् । लोकानां लोकृ दर्शने इति धातुपाठात् ज्ञानात्मकत्वे हृदयं योग्यं स्थानं च हृदयं स्वाभिन्नपञ्चसुष्यात्मकं ते च तेजोमनआकाशात्मानः इति चतुर्थं सर्वत्रेति सुष्ठूपपन्नम् । तेजआदीनां व्यापकत्वात् । पादानां विश्वामृतक्षेमाभयानां ब्राह्मणोदितानां मन्त्रोदितानां सर्वभूतपृथिवीशरीरहृदयानां च भेदेपि तदुपलक्षकस्य सुखत्रयोपलक्षकस्यामृतस्यामृतान्तःस्थित-स्यामृतत्वस्य सार्वत्रिकत्वात्त्रिपादस्यामृतं दिवीत्युभयत्र श्रवणात् । सार्वत्रिकपदं ज्ञापयति ह्यन्येष्व पादेष्वप्येवम् । तथाहि पूर्वोक्तानि चतुश्चतुरंशकानि चत्वारि पादानि छान्दोग्यषाष्ठानि । तत्र प्राचीदिक्कलादिष्वमृतत्वं परेण मृत्यतिक्रान्ता इति बृहदारण्यकश्रुतेः । पृथिवीकलादिषु अबृहद्गतः[1] 'भारतभूजयो वरम्' इति वाक्यात् । अग्निकलादिषु क्षेमं तुरीयचन्द्रप्रवेशात् । निरुक्ते वाय्वग्नि-सूर्येन्दूनां चन्द्रस्य तुरीयत्वात् । प्राणकलादिष्वभयम् । मनःप्रवेशात् । मनोमयो वेदः 'मनोमयं रूपमुपेत्य' इति वाक्यात् । वेदार्थस्तु 'यश्छन्दसामृषभो विश्वरूप' इति विश्वरूपपदसाहचर्या-च्छ्रेष्ठार्थ ऋषभः पूर्वं गौरुक्तो धर्मात्मा स्मृतस्तत्रापि छन्दोभ्योऽध्यमृतात्संबभूव समेन्द्रो मेधया स्पृणोतु अमृतस्य देवधारणो भूयासं इत्यमृतपदमुपलक्षकमिति तथा । वाक्सुषिर्नोक्तः पञ्चमः । तस्य व्यापकत्वं प्रसिद्धमिति तुरीयप्रतिपादिका वाक्सर्वत्र । तथा च मुण्डके चतुर्थं पादं ब्रह्मेति सर्वत्र । अथर्वशिखायां नादश्चतुर्थः पादः । सर्वत्रैवमिति । ननुमयस्मिन्मन्त्रब्राह्मणयोरविरोधेऽपि

१. अबृहद्गता ।

मयमुपरितनलोकेषु चतुर्थं सर्वत्रेति । अन्यथा वैजात्यं पादानामापद्येत । परिच्छेद-विरोधश्च । अतोऽमृतज्योतिःशब्दयोरेकार्थत्वेन विरोधाभावादेकवाक्यत्वम् । अतोऽत्र चरणसद्भावात्तस्य च ब्रह्मधर्मत्वाज्ज्योतिर्ब्रह्मैव ॥ २६ ॥

इति प्रथमाध्याये प्रथमपादे नवमं ज्योतिश्चरणाधिकरणम् ॥ ९ ॥

---

भाष्यप्रकाशः ।

स्पष्टस्य ब्रह्मधर्मस्यात्राभावेऽपि निर्बन्धेनैवं व्याख्याने का वोपपत्तिरित्यत आहुः अन्यथेत्यादि । गायत्रीपरतया व्याख्याने गायत्र्याः शब्दत्वेन पादानां चार्थत्वेनांशांशिभावाङ्गीकारे वैजात्यं पादानामापद्येत । किंच । गायत्री परिच्छिन्ना । अत्र तु, सर्वतःपृष्ठेष्वित्यादिना परिच्छेदराहित्यं प्रतिपाद्यतेऽतः परिच्छेदविरोधश्च । तथाच गायत्रीपक्षे दोषद्वयसत्त्वं ब्रह्मपक्षे तदभावश्च व्याख्यानिर्बन्ध उपपत्तिरित्यर्थः । एवं सर्वमुपपाद्य सिद्धमाहुः अत इत्यादि । अत इति पक्षान्तरस्याघटमानत्वात् । अत इति एकवाक्यत्वस्य सिद्धत्वात् । तथाच प्रकरणस्य ब्राह्मत्वे सिद्धे ब्रह्मधर्मस्य तत्र सिद्धत्वादुपसंहारगतमपि ज्योतिःपदं ब्रह्मवाचकत्वेनैव सिद्धमतस्तथेत्यर्थः । अत्र पादवतीनां विद्यानां ब्रह्मस्वरूपपरत्वप्रतिपादनादध्यायसंगतिः । आश्रमचतुष्टयस्य जीवस्थितितद्भोग्यसुखरूपकार्यद्वारा तत्प्रतिपादनात् पादसंगतिः । ज्योतिषः स्थितिकार्यकत्वेन ब्रह्मलक्षणेऽतिव्याप्तौ प्राप्तायां तन्निवृत्त्यर्थं ज्योतिःपदे संदेहवारणादवसरोऽधि-

रश्मिः ।

अत्र तु न्यायप्राप्ता विपुलीकृता तेन सार्वत्रिकत्वेनोभयत्र मन्त्रब्राह्मणयोश्चतुर्थपादस्य ब्रह्मत्वेनैकरसत्वादपेक्षणादित्यर्थः । वा इति वै निश्चयेनेत्यर्थे । शब्दात्मकं जगदिति पक्षे दोषाभावादाहुः किं चेति । गायत्रीत्यादि । परिच्छिन्नत्वमस्याः पर्यविद्वद्दशायाम् । सर्वत इत्यादिस्थले यद्यपि प्रथमत्यागे मानाभावाद्विश्वतःपृष्ठेष्वित्यादिनेति पाठ्यं तथापि विश्वशब्दस्य संकोचसहिष्णुत्वमत्र नास्तीति सर्वतःपृष्ठेष्विति व्याख्यातमतोऽसंदिग्धत्वादिदमेवोक्तम् । भाष्ये । एकवचनत्वमिति एकवाक्यत्वमित्यत्र पाठः एकब्रह्मवाचकत्वम् । प्रकृते । अत्राध्यायपादाधिकरणानां संगतयो न स्फुटा इति ता उपपादयन्ति स्म अत्र पादेत्यादिना अध्यायसंगतिः । पादवतीनां प्रणवादिविद्यानां मध्ये चतुर्थस्य पादस्य ब्रह्मत्वेन तत्प्रतिपादकवाक्यस्य ब्रह्मणि समन्वयात् समन्वयाध्यायस्याधिकरणेन संगतिर्निर्वाहकलक्षणा संगतिः समन्वयायास्याधिकरणस्य वचनं संगतमित्यर्थः । तत्प्रतिपादनात् कार्यप्रतिपादनात् । पादसमिति तथा चात्रापि कार्यप्रतिपादकस्य ब्रह्मणि समन्वयात् स कार्यसमन्वयरूपपादार्था संगतिरित्यर्थः । ज्योतिष इत्यादि । अयमाशयः । जन्माद्यधिकरणे यद्यप्याकाशजन्मकर्तृत्वं ब्रह्मलक्षणत्वेन निष्कृष्टम् । तस्यापि ब्रह्मासाधारणधर्मत्वात् । तथाप्युपलक्षणविधया तत्स्थितिकर्तृत्वं तल्लयकर्तृत्वं च सिद्ध्यति तथा चैतन्मिलितं सदेव लक्षणमिति न । किं तु पृथक् पृथक् । किं चाधिकरणानां न्यायरूपत्वेन यतो वा इमानि भूतानीत्यत्राप्ययं न्यायः प्रवर्तत इति स्थितिकर्तृत्वस्य ब्रह्मलक्षणस्य ज्योतिष्यतिव्याप्तौ प्राप्तायामिति । संदेहेत्यादि ब्रह्मपरत्वव्यवस्थामनेनान्यपरत्वसंदेहवारणात् । अथेत्यादि धर्मिनिरूपकाधिकरणैः प्रतिबन्धकीभूतजिज्ञासानिवृत्तौ धर्मेतिव्याप्तिवारणावसरः । वृत्तौ त्वत्र ज्योतिषोन्तःपुरुष उपसंहृतत्वेन स यश्चायं पुरुष इत्यानन्दमयाधिकरणे विषयवाक्ये श्रावितस्य पुरुषान्तःस्थस्यात्र निर्णयाद्धुपोद्घात

## प्राणस्तथाऽनुगमात् ॥ २७ ॥ ( १-१-१० )

अस्ति कौषीतकिब्राह्मणोपनिषदि इन्द्रप्रतर्दनसंवादः। प्रतर्दनो ह वै दैवोदासिरित्यादिना, एष लोकपाल एष लोकाधिपतिरेष लोकेशः स म आत्मेति विद्यात् स म आत्मेति विद्यादित्येतदन्तम्। तत्र वरदाने मामेव विजानीह्येतदेवाहं मनुष्याय हिततमं मन्य इत्युपक्रम्य त्वाष्ट्रवधादिनात्मानं प्रशस्य स्वोपासनायाः पापाभावं फलत्वेन प्रतिपाद्य कस्त्वमिति विवक्षायां, प्राणो वा अहमस्मि प्रज्ञात्मानं मामायुरमृतमित्युपास्स्वेत्युक्त्वा आयुषः प्राणत्वमुपपाद्यामृतत्वं च प्राणस्योपपाद्य, प्राणेन ह्येवामुष्मिंल्लोके अमृतत्वमाप्नोतीति, अमृतत्वं योगेन प्रतिपादयति। तत्र संदेहः। प्राणः किमासन्यो ब्रह्म वेति।

भाष्यप्रकाशः।

करणसंगतिः। तेनापो वा इद१ँ सर्वमित्यादावप्ययं न्यायो बोध्यत इति न न्यूनता।

माध्वास्त्वत्राधिकरणद्वयमङ्गीकुर्वन्ति। तत्र प्रथमसूत्रस्याभिमतं विषयवाक्यम्। 'वि मे कर्णा पतयतो वि चक्षुर्वीदं ज्योतिर्हृदय आहितं यत्। वि मे मनश्चरति आ धीः किंस्विद् वक्ष्यामि किमनूमनिष्ये' इति। अत्र विशब्दो विरुद्धार्थकः। पतयत इति पततो विरुद्धं चरत इत्यर्थः। इदं चरणं हेतुः। शेषं समानम्। वस्तुतस्त्वत्र विचरणमुक्तं न तु चरणमतश्चिन्त्यम्। छन्दोऽभिधानादिति त्रिसूत्रमधिकरणान्तरम्। तत्र छान्दोग्यस्थमुक्तमेव विषयवाक्यम्। समानमितरत्। अत्रापि सूत्रे साध्यानुल्लेखात् सूत्रकृदाशयगोचरत्वं संदिग्धम्॥ २६॥ ९॥

इति नवमं ज्योतिश्चरणाधिकरणम्॥ ९॥

प्राणस्तथाऽनुगमात्॥ २७॥ विषयवाक्यमुदाहरन्ति अस्तीत्यादि। तथाच संपूर्णः पञ्चमाध्यायोऽत्र विषयवाक्यमित्यर्थः। कथमस्य विषयत्वमित्याकाङ्क्षायामेतदर्थं वदन्तो मतान्तरीयाः सर्वेऽपि, मुख्यः प्राणो वा देवतात्मा वा, जीवो वा, ब्रह्म वेति चतुष्कोटिकं संशयं वदन्तीति ततो वैलक्षण्यबोधनाय व्युत्पाद्याहुः तत्र वरेत्यादि। योगेनेति प्राणसंबन्धेन।

रश्मिः।

एव संगतिरित्युक्तम्। न न्यूनतेति न्यूनतारूपनिग्रहस्थानं नेत्यर्थः। अतिदेशाधिकरणोपान्त्ये इदं रश्मौ प्रोक्तम्। अत्र त्वत्रेति। श्रुताविदं परिदृश्यमानं जगत्। अत एव सुबोधिन्यां अथात्मा नारायण इति निरुक्तम्। वि म इत्यादि मे मम कर्णा। आवोडा कर्णावित्यर्थः। चक्षुर्विचरति इदं ज्योतिर्विचरति मे मम मनश्च विचरति। आ तन्मर्यादीकृत्य धीश्चरति तदप्राप्य किं स्विद्वक्ष्यामि ब्रह्म 'नु' इति वितर्के किमनुमनिष्ये अवबोधं करिष्ये इति श्रुत्यर्थः। माध्वाचार्यमते इदं ज्योतिर्हृदये व्याहितं यत्तदङ्गीकृत्येति विशेषः। विष्णुरेव ज्योतिः कर्णादीनां विचरणाभिधानादिति भाष्यात्। उक्तमिति सर्वादृतम्। साध्यानुल्लेखादिति छन्दोभिधानादित्यस्य हेतुत्वादिति भावः। संदिग्धमिति। सर्वत्राधिकरणारम्भे साध्यशून्यस्य सूत्रस्यादर्शनादधिकरणत्वांशे संदिग्धमित्यर्थः॥ २६॥

इति नवमं ज्योतिश्चरणाधिकरणम्॥ ९॥

प्राणस्तथानुगमात्॥ २७॥ प्राणपदस्य बहुवचनान्तता प्रायशः। प्राणा इति भाष्यपुस्तकान्तरे बहुवचनान्तप्राणपदप्रयोगात्। पञ्चमेत्यादि पञ्चमाध्यायो द्रष्टव्यः। तत्र वरेत्यादीति श्रुत्यर्थसंक्षेपेण समस्य। श्रुत्यर्थस्तु दिवोदासस्यापत्यं दैवोदासिः स इन्द्रस्य प्रियं धामोपजगाम

१. अत्र प्रकाशे, अत्राधिकरणोपान्त्ये।

'अत एव प्राण' इत्यत्र प्राणशब्दमात्रे संदेहः । अत्रार्थेऽपि संदेहः । बाधकं च वर्तत इति पृथगधिकरणारम्भः । तत्र साधकासाधारणधर्मस्याभावाद् बाधकानां विद्यमानत्वान्न ब्रह्मत्वमिति पूर्वः पक्षः । सिद्धान्तस्तु चतुर्भिः सूत्रैः प्रतिपाद्यते । तत्र प्रथमं साधकधर्ममाहैकेन । त्रिभिर्बाधकनिराकरणम् । प्राणः परमात्मा भवितुमर्हति । कुतः । तथाऽनुगमात् । तथाहि । पौर्वापर्येण पर्यालोच्यमाने वाक्ये पदार्थानां समन्वयो ब्रह्मप्रतिपादनपर उपलभ्यते ।

---

भाष्यप्रकाशः ।

संयोगेन । तथाचेन्द्रेण स्वस्मिन् प्राणत्वस्यैवोपपादितत्वेन प्रज्ञापदस्य बुद्धिवाचकतया चेतनधर्माणां तत्रोपचरितत्वाद् द्विकोटिक एव युक्त इत्यर्थः । ननु चतुष्कोटिक एव युक्तोऽन्यथा पूर्वाधिकरणेनास्य गतार्थत्वं स्यादित्यत आहुः अत एवेत्यादि । उक्ताधिकरणे विषयवाक्ये ब्रह्मलिङ्गस्य विद्यमानत्वात् प्राणशब्दः कथं प्रयुक्त इति प्राणशब्दमात्रे संदेहः । अत्र तु प्राणे प्रज्ञात्मत्वकथनादायुष्ट्वोपपादनाच्चासन्यो वा, जीवो वेति प्राणशब्दार्थे संदेहः । किंच जीवमुख्यप्राणलिङ्गादिकं बाधकं वर्तत इत्यतस्तथेत्यर्थः । युक्तिपूर्वकं पूर्वपक्षमाहुः तत्र साधकेत्यादि । कथमेवमित्यत आहुः तत्र प्रथममित्यादि । सूत्रं व्याकुर्वन्ति प्राण इत्यादि ।

रश्मिः ।

युद्धेन च पौरुषेण युद्धकारणपुरुषार्थप्रदर्शनेनेत्यर्थः । तमवलोक्येन्द्रो वक्ति प्रतर्दन ते वरं दास्यामीति तदा सहोवाच प्रतर्दनः हे इन्द्र त्वमेव वरं वृणीष्व यत्त्वं मनुष्याय हिततमं मन्यसे इति । एवमुक्त इन्द्रो वरदाने 'मामेव विजानीहि एतदेवाहं मनुष्याय हिततमं मन्ये' इति स्वोपासनमुक्तवान् । ततश्च त्वाष्ट्रवधादिनात्मानं प्रशस्य स्वोपासनाफलं पापाभावं भणितवान् । एवमैन्द्रगुणविशिष्टोपासनोक्ता । ततः कस्त्वमित्यपेक्षायां प्राणो वेत्यादिना प्राणगुणकां द्वितीयोपासनामुक्तवान् । प्राणस्यायुष्ट्वं तु प्राणो हि भूतानामायुरिति तैत्तिरीयश्रुतेः । स्फुटमग्रिमम् । संयोगेनेति यद्यपि प्राणितीति प्राणः न मृतं येन तदमृतमिति योगेनेत्यर्थः । तथापि सम्यग् योगेन ब्रह्मत्वादित्यर्थः । त्रयाणामेककोटिपातित्वेन द्विकोटिकत्वमित्याहुः तथा चेति । एवकारेण प्राणव्यवच्छेदः । उपपादितत्वेनेति अयं प्रज्ञेत्यादौ हेतुः तथा च धर्मोपपादनं प्रसङ्गः सिद्ध इति भावः । प्रज्ञा ब्रह्मरूपा धर्मिरूपापि कोशात्तस्याः प्रसङ्गो वारितः । प्रज्ञा देवतात्मन्यस्येत्येवं सति संभवति न प्रज्ञात्मेति भावः । किंत्वात्मधर्मः प्रज्ञा वेदार्थ इन्द्रे वेदान्तार्थः । तत्रेति इन्द्रजीवे प्राणरूपे । उपचरितत्वादिति तथा च मनोधर्मरूपायाः प्रज्ञाया एकार्थप्रत्यासत्त्या जीवेन्द्रधर्मरूपत्वम् । प्रज्ञापदेन जीवो गृहीत इति भावः । जीवो वेति अत्र त्रिकोटिकः संशयः फलति । एवं च भाष्ये प्राणपदं जीवस्याप्युपलक्षकमिति भावः । यद्वा । प्राणे प्रज्ञात्मत्वोक्तेर्जीवप्राणयोरैक्याद् द्विकोटिकः संशयः इति भावः । एवं च भाष्य इन्द्रः प्राण इति लक्षणया प्रतीत्या प्रज्ञापदं च जीवधर्मवाचकमित्युक्तरीत्या द्विकोटिक एवेति भाष्याशयः । प्राणपदस्य जीवे देवतायां च शक्त्यभावादाहुः एवेति । तत्र साधकेत्यादि । अत्र भाष्ये अमृतत्वपापाभावरूपसाधारणधर्मदर्शनादसाधारणेति धर्मविशेषणम् । बाधकानि प्राणप्रशंसारूपाणि

उपक्रमे तावद् वरं वृणीष्वेति इन्द्रः प्रतर्दनोक्तः परमपुरुषार्थं वरमुपचिक्षेप । त्वमेव मे वृणीष्व यं त्वं मनुष्याय हिततमं मन्यस इति । तस्मै हिततमत्वेनोपदिश्यमानः प्राणः कथं परमात्मा न स्यात् । न हि परमात्मनोऽन्यद्धिततममस्ति । परमानन्दस्वरूपत्वात् । पापाभावश्च ब्रह्मविज्ञान एव । 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इति श्रुतेः । प्रज्ञात्मत्वं च तस्यैव संभवति । उपसंहारेऽप्यानन्दोऽजरोऽमृत इति, एष लोकाधिपतिरित्यादि च । तस्मात् सर्वत्रानुगमात् प्राणो ब्रह्म ॥ २७ ॥

**न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन् ॥ २८ ॥**

बाधकमाह । यदुच्यते प्राणो ब्रह्मेति, तन्न । कुतः । वक्तुरात्मोपदेशात् । वक्ता हीन्द्र आत्मानमुपदिशति । मामेव विजानीहीत्युपक्रम्य प्राणो वा अहमस्मि प्रज्ञात्मानं मामायुरमृतमित्युपास्स्वेति । स एव प्राणो वक्तुरात्मत्वेनोपदिश्यमानः कथं ब्रह्म स्यात् । तथाच वाचो धेनुत्वोपासनवद्देवतायाः प्राणत्वोपासना बोध्यते ।

अन्ये च ब्रह्मधर्माः प्राणस्तावका इति कथमस्य ब्रह्मोपाख्यानत्वमिति

---

भाष्यप्रकाशः

तथा ब्रह्मपरत्वेऽनुगमात् पदार्थानां समन्वयादिति सूत्रार्थ इति तदुपपादयन्ति उपक्रम इत्यादि । संभवतीति चिद्रूपत्वात् संभवति । सर्वत्रानुगमादिति आद्यन्तं पदार्थानां ब्रह्मधर्मत्वेनैव समन्वयात् । एवं साधकधर्मो व्याख्यातः ॥ २७ ॥

न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन् ॥ २८ ॥ बाधकमाहेति सूत्रांशेनाहेत्यर्थः । उपदिशतीति मामित्यहंकारवादेनोपदिशति । ब्रह्मधर्मा इति

रश्मिः ।

ज्ञेयानि । उपक्रम इत्यादि । अत्र भाष्ये नहीत्यादि वाक्यान्वयाधिकरणे स्फुटमिदम् । कर्मक्षयः पापक्षयः कारणनाशे कार्यनाशात् ॥ २७ ॥

न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन् ॥ २८ ॥ अयमाभासो न सूत्रस्येत्याहुः सूत्रांशेनेति वस्तुतस्तु बाधस्य पूर्वपक्षान्तर्गतार्थमात्रवृत्तित्वेन सूत्रे च बाधांशश्च तयोः समाहारः सूत्रांशं तेनेत्यर्थः । अहमित्यादि । [असत्प्रत्ययगोचरोऽथवा सुवर्णघनवत् विज्ञानचिन्मात्रस्वभाव आत्मा यदावभासते तदा त्वंपदार्थप्रत्यगात्मा] अयं वादो न भवति अनात्मनो देहादीनभिमन्यते सोभिमानः । आत्मनो बन्ध इति बन्धे पर्यवसानात् वादस्य मोक्षे पर्यवसानात् इति चेन्नैवम् । अहंनामाभवदिति पुरुषविधब्राह्मणात् । अहमिति ब्रह्मणि सति यौगिकं सत्तार्थस्यास्तेर्मद्विङ् । रूढमिति माध्वाः तथा च स्मृतिः 'अहं सर्वस्य प्रभवः' 'अहमेवासमेवाग्रे' इति च । तं करोतीत्यहंकारः । पुरुषविधः तस्य वादो मोक्षपर्यवसायीति अहंकारवादः । स यत्पूर्वोऽस्मात्सर्वस्मात् सर्वान् पाप्मनः औषत् तस्मात् पुरुष इति श्रुतिः । आत्मवादः । ब्रह्मवादः पूर्वमुक्तः । द्वन्द्वप्रयोगात्त्रयं युक्तम् । शीतोष्णसुखदुःखादिवत् । तथा च श्रुती 'ब्रह्म वा इदमग्र आसीत्' 'आत्मैवेदमग्र आसीत्' इति च । पुरुषविधब्राह्मणे ।

येन । अध्यात्मसंबन्धभूमा ह्यस्मिन् । अस्मिन् प्रकरणे अध्यात्मसंबन्धः । आत्मानमधिकृत्य यः संबन्धः । आत्मशब्दो ब्रह्मवाची । वस्तुतो जीवस्य ब्रह्मत्वाय तथा वचः । तस्य संबन्धः । तद्धर्माः । तेषां बाहुल्यं प्रतीयते । एष लोकपाल इत्यादि । यावत् यथाकथंचिदपि ब्रह्मप्रकरणत्वं सिद्ध्यति, तावदन्यप्रकरणत्वमयुक्तमिति हिशब्दार्थः । प्राणस्य प्रज्ञानात्मत्वम् । स्वातन्त्र्येणायु-

भाष्यप्रकाशः ।

पूर्वसूत्रव्याख्यान उक्ताः । निराकरणांशं व्याकुर्वन्ति अस्मिन्नित्यादि । अधिकृत्येति अधिराधिक्ये । अधिकं कृत्वा । आत्मपदार्थस्य संदिग्धत्वादाहुः आत्मेत्यादि । ननु तर्हि ब्रह्मपदमेवास्मिन् सूत्रे कुतो नोक्तमत आहुः वस्तुत इत्यादि । ऐकात्म्यवादेन जीवस्य ब्रह्मत्वं बोधयितुमात्मपदम् । अत एव सूत्रे परिहारांशप्रयोगो नकारस्य न कृतः । संबन्ध इति सम्यग् बन्धोऽस्यासौ संबन्धः । तथाच जीवात्मनः सकाशात् परमात्मानमधिकं कृत्वा तद्धर्मबाहुल्यमस्मिन् प्रकरणे प्रतीयते । अतोऽत्र बहूनामनुग्रहस्य न्याय्यत्वात् प्राणः परमात्मेत्यर्थः । ननु किमित्येवं निर्बन्ध इत्यत आहुः यावदित्यादि । तथाच पूर्वसूत्रे साधकहेतुमुक्त्वाऽत्र हिशब्दकथनात्, सर्वे वेदा यत् पदमिति श्रुत्यनुरोधेन निर्बन्ध इत्यर्थः । तदुपपादयन्ति प्राणस्येरश्मिः ।

'निर्धर्मको वा मित्रो वा निरोधं कुरुते यदि ।
तदा निरोधो व्यर्थः स्यादित्येवं बहुगुणाभिधा' ॥

इति गुणप्रकरणकारिका । अहंकारस्तु

'ततो विकुर्वतो जातो योऽहंकारो विमोहनः ।
वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिवृत् ॥
तन्मात्रेन्द्रियमनसां कारणं चिदचिन्मयः' । इति ।

ततो महतो विकुर्वतः कालेन क्षुब्धगुणात्रिवृत् त्रिव्यूहः चिदचिन्मयः चिदाभासत्वाचिदचिद्रूप इति भेदः । ऐकात्म्येत्यादि वस्तुत इत्यस्यार्थः । यतो वस्त्वैकात्म्यं श्रुत्युक्तत्वात् विभक्तिस्तु तृतीया प्रत्ययस्य सार्वविभक्तिकत्वात् । यागाय याति इत्यस्य यष्टुं यातीति विवरणवत् । अथाहुः ब्रह्मत्वमित्यादि । वादशब्देन मत्वर्थमैकात्म्यं यत्तन्निवर्त्यते द्वितीयाध्याये भोक्त्रापत्तिसूत्रे ब्रह्मणो निर्विशेषस्य कारणत्वादिति भाष्येण सिद्धं गृह्यते । स च शारीरब्राह्मणे अणुः पन्थाः विततः पुराणो मांस्पृष्टो वित्तो मयैव तेन धीरा अपियन्ति ब्रह्मविदः उत्क्रम्य स्वर्गं लोकमितो विमुक्ताः । अग्रे यस्यानुवित्तः प्रतिबुद्ध आत्मा अस्मिन् संदेहे गहने प्रविष्टः स विश्वकृत् स हि सर्वस्य कर्ता तस्य लोकः स उ लोक एवेति प्रोक्तः । दहराधिकरणे जीवब्रह्मवादः स तु तत्रैव दूषितः । अत एवेति ब्रह्मजीवयोरंशांशिभावेनैक्यात् तद्धर्माणां ब्रह्मधर्मत्वादेव वक्तुरात्मोपदेशादिति येनाध्यात्मसंबन्धभूमा ह्यस्मिन्निति न सूत्रितमित्यर्थः । तथा सति ह्यात्मजीवैक्यं सर्वथा व्यासचरणैर्निषिद्धं स्यादिति भावः । संबन्धशब्दस्यासाधारणधर्मवाचकत्वं वक्तुं योगमाहुः सम्यगित्यादि । बन्ध इति बन्ध संयमन इति धातोर्घञि निष्पन्नः । तथा च सम्यक् बन्धो नियम आधेयत्वेन यस्य स धर्मः संबन्धपदवाच्य इत्यर्थः । एतेन सिद्धमाहुः तथाचेत्यादि । प्रतीयन्त इति ते च धर्माः सत्यादिरूपभूमत्वादिरूपमहापापनिवर्तकत्वलोकपालत्वादिरूपा बोध्याः । हिशब्देत्यादि

दातृत्वम् । न वाचं विजिज्ञासीत वक्तारं विद्यादिति चोपक्रम्य, तद्यथा रथस्यारेषु नेमिरर्पिता, नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः, प्रज्ञामात्राः प्राणे अर्पिताः । स एष ( प्राण एव ) प्रज्ञात्माऽऽनन्दोऽजरोऽमृतो न साधुना कर्मणेत्यादिविषयेन्द्रियव्यवहारे अरनाभिभूतं प्रत्यगात्मानमेवोपसंहरति । स म आत्मेति विद्यादिति चोपसंहारः । तस्मादध्यात्मसंबन्धबाहुल्याद् ब्रह्मोपदेश एवायम् ॥ २८ ॥

तर्हि बाधकस्य का गतिरित्यत आह ।

शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ २९ ॥

पूर्वसूत्रेणापरिहृतमत्र परिहरति तुशब्दः । अयं दोषो व्यवहारदृष्ट्योपदेशे । अहं ब्रह्मेत्यार्षेण दर्शनेन तूपदेशः । ननु, तत्त्वमसि, अयमात्मा ब्रह्मेति वाक्येषु जीवस्य ब्रह्मत्वं बोध्यते । तत्र प्रत्यधिकारं शास्त्रप्रवृत्तिरिति न्यायेन स्वात्मन एव ब्रह्मत्वावगतिर्मुख्या । न प्रतर्दनस्येन्द्रजीवब्रह्मत्वावगतिरुपासनं वा पुरुषार्थाय । अतः शास्त्रदृष्टिरपि नैवंविधा । केवलस्य चैतन्यमात्रस्य

---

भाष्यप्रकाशः ।

स्यादि । भूतमात्राः शब्दादयः । प्रज्ञामात्रा ज्ञानेन्द्रियांशाः । तस्मादिति प्रज्ञात्मत्वाद्युपदेशात् ॥ २८ ॥

तर्हीत्यादि प्रकरणस्य ब्रह्मपरत्वाङ्गीकारे । वक्त्रा इन्द्रेण यः स्वात्मोपदेशः कृतस्तस्य बाधकस्य क उद्धरणप्रकार इत्यर्थः ।

शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ २९ ॥ व्याकुर्वन्ति पूर्वेत्यादि । अयं दोष इति स्वात्मोपदेशरूपो दोषः । तथाचार्षज्ञानेन स्वात्मानं ब्रह्मात्मकमवगत्येन्द्रेणैवमुपदिष्टमतोऽत्रैवं प्रकारभेदे भासमानेऽपि ब्रह्मण एवोपदेशाभानेनान्यथा संभावयितुं शक्यमित्यर्थः । कथमेवमवगम्यत इत्यपेक्षायां दृष्टान्तमवतारयन्ति नन्वित्यादि । प्रत्यधिकारमिति अधिकारं लक्षीकृत्य । नैवंविधेति । नेन्द्रजीवस्य ब्रह्मत्वबोधनपरा । तर्हि, न वाचं विजिज्ञासीत वक्तारं विद्यादित्यग्रे श्रावणाज्जीवसामान्य एव शास्त्रदृष्टिरस्त्वित्यात आह केवलस्येत्यादि । सर्वज्ञत्वाज्ञत्वादीनां धर्माणां परस्परविरोधाद्भागत्यागलक्षणया निर्विशेषस्य

---

रश्मिः ।

अस्यार्थस्य युक्तत्वं हिशब्दस्य वाच्योर्थः । आसन्यपक्षे सर्वत्र गौणाद्यापत्तिरिति सूचितोर्थः भाष्ये ज्ञेयः । विशिष्यार्थस्याधिकरणसमाप्तौ वक्तव्यत्वात् । अर्थसंक्षेपमाहुः भूतमात्रेति । यथा रथस्यारेष्विति 'आरं शीघ्रे च चक्राङ्गे शीघ्रगे पुनरन्यवत्' इति विश्वाचक्राङ्गेषु । नेमिरिति 'नेमिस्त्रिकायां कूपस्य चक्रान्ते तिनिशद्रुमे' इति विश्वाचक्रान्तम् । नाभाविति 'नाभिः प्रभावे कस्तूरीमदे च क्वचिदीरितः' इति विश्वाचक्रप्रधानेङ्गे । विषयेन्द्रियेति विषया भूतमात्राः । इन्द्रियाणि प्रज्ञामात्राः ॥ २८ ॥

शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ २९ ॥ पूर्वेत्यादीति पूर्वसूत्रेणापरिहृतमिति द्वितीयः पाठः प्रथमे भाष्ये न परिहृतमित्यत्र नैकधेत्यादिवत् नञ्शब्देन सह सुप्सुपेतिसमासात् 'न लोपो नञः' इत्यनेन न नलोपः । एवमिति मामेव जानीहीत्येवम् । अन्यथेत्यादि यथा ब्रह्मण्येवाभिप्रायः स्यात् नाहंकारवादेनोपदिशेदतोत्र ब्रह्मातिरिक्तं किंचिदुपदिष्टमित्येवमन्यथा संभावयितुमित्यर्थः । लक्षीकृत्येति यथाधिकारमिति यावत् । वक्तारमिति जीवम् । विरोधादिति

तादृशे ब्रह्मण्यैक्यावगतिर्विरोधात्तत्त्वमस्यादिवाक्यार्थोऽध्यवसीयते । न तु ब्रह्मधर्मा जीवे वक्तुं शक्यन्त इत्याशङ्क्य परिहरति। वामदेववत् । तद्धैतत् पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चेति । य एवं प्रत्यबुध्यत स सर्वं भवति । तत्र सर्वेषां सर्वभावे सर्वानन्त्यप्रसङ्गात् सर्वमेकमेवेति वक्तव्यम् ।

ततः कारणलय एव सर्वभाव इति मनुरभवं सूर्यश्चेत्यवयुत्यानुवादोऽ-

भाष्यप्रकाशः ।

चैतन्यमात्रस्य जीवस्य निर्विशेषे चैतन्यमात्रे ब्रह्मण्यैक्यावगतिस्तत्त्वमस्यादिवाक्यार्थं इति निश्चीयते । न त्वानन्दाऽजराऽमरत्वादयो ब्रह्मधर्मा ऐक्यावगतिविरोधिनस्तत्र जीवे वक्तुं शक्यन्ते । अतोऽत्र वक्तृत्वादिवैशिष्ट्यस्योक्त्या केवलस्यात्राविवक्षितत्वाद् ब्रह्मणोऽपि तादृशत्वेनात्राविवक्षितत्वाज्जीवसामान्ये शास्त्रदृष्टिरपि न वक्तुं शक्येति नायं समाधिरुपपन्न इत्यर्थः । परिहारं व्याकर्तुं दृष्टान्तं व्याकुर्वन्ति तद्धैतदित्यादि । इदं बृहदारण्यके पुरुषविधब्राह्मणस्थं वाक्यम् । तत्रेति अस्मिन् वाक्ये । एकमेवेति ब्रह्मात्मकतयैकमेव । कारणलय इति कारणे ब्रह्मणि लये । अवयुत्यानुवादोऽनुपपन्न इति । स्वसर्वत्वविध्यंशं पृथक्कृत्य मन्वाद्यनुवादः स्वस्य

रश्मिः ।

भाष्यानुवादः । भागत्याग इत्यारभ्य निश्चीयत इत्यन्तम् । सर्वोपनिषदि 'सर्वोपाधिविनिर्मुक्तः सुवर्णघनवद्विज्ञानचिन्मात्रस्वभाव आत्मा यदावभासते तदा त्वंपदार्थः प्रत्यगात्मेत्युच्यते' । 'त्वंपदार्थादौपाधिकाद्विलक्षण आकाशवत्सूक्ष्मः केवलः सत्तामात्रस्वभावः तत्पदार्थश्चात्मेत्युच्यते' इति श्रुत्योर्निर्विशेषस्येत्यादिरर्थः । 'कर्मानुसारी भूत्वा प्राप्तशरीरसंबन्धवियोगमप्राप्तशरीरसंबन्धमिव कुर्वाणो यदा दृश्यते तदोपहितत्वाज्जीव इत्युच्यते' । अत्र भागत्यागस्तथा 'ब्रह्मादिपिपीलिकापर्यन्तसर्वप्राणिबुद्धिष्वविशिष्टतयोपलभ्यमानः सर्वप्राणिबुद्धिस्थो यदा तदा कूटस्थ इत्युच्यते' । 'कूटस्थाद्युपहिताभेदानां स्वरूपलाभहेतुर्भूत्वा मणिगणे सूत्रमिव सर्वक्षेत्रेष्वनुस्यूतत्वेन यदा प्रकाशते आत्मा तदान्तर्यामीत्युच्यते' अत्र भागत्यागश्च यथा गङ्गायां घोष इत्यत्र यथावद्भागत्यागेन लक्षणा भागत्यागलक्षणा भागस्य त्यागो यस्यां सा चासौ लक्षणा चेत्यत्र गौरवम् । वरानेकपदलक्षणातो ह्येकपदलक्षणेति । आत्मा द्वितीयैकवचनान्तयुष्मत्पदार्थोऽणुः 'एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश' इति श्रुतेः । भाष्यं व्याख्याय फलितमाहुः अतोऽत्रेत्यादिना । तादृशत्वेनेति केवलत्वेन । न वक्तुमित्यादि तथा च यत्र भागत्यागलक्षणया केवलस्य चैतन्यमात्रस्य ज्ञापनादिकं विवक्षितं स्याद् ब्रह्मधर्मा अत्र नोक्ताः स्युरिति भावः । भाष्ये वामदेववदिति इतिकरणमन्तरापि सूत्रप्रतीकत्वं 'सर्वं विष्णुमयम्' इत्यस्य प्रश्निसाध्यायसुबोधिन्या विष्णुपुराणवाक्यप्रतीकत्ववत् । प्रकृते । कारण इत्यादि साकारब्रह्मत्वात् कृतकानुरोधेन तादृशतादृशब्रह्मणि लयो बोध्यः । स्वसर्वत्वेत्यादि स्वसर्वत्वप्रयोजकविध्यंशं कथं नु मात्मन एव जनयित्वा संभवाति हन्त तिरोसानीतीति पूर्वोक्तप्रकारस्याप्यनुकर्षात्तत्र संभवातीति लेटोक्तं विध्यंशं यद्वा स सर्वं भवतीत्यत्र लेडाश्रयणात् भवातीति पाठाद् वा विध्यंशं पृथक्कृत्य यद्यपि सारस्वतीयधातुपाठे यु मिश्रण इत्येव तथापि धातुतरङ्गिण्यां तट्टीकायाममिश्रणे च सिद्धान्तकौमुद्याममिश्रण इत्यन्य इति निरुक्तेः साधुः । संभवातीत्यस्य

१. अज्ञतयोध्ये यद्वा रेषृ अव्यक्तशब्दे भ्वादिरात्मनेपदी सेट् । यद्वा रिषृ हिंसायां भ्वादिः परस्मैपदी सेट् । यद्वा रुष रोषे दिवादिस्तुदादिश्च परस्मैपदिनौ सेटौ । वर्णविकारः सर्वत्र बोध्यः ।

नुपपन्नः। तत्र यथा ज्ञानावेशात् सर्वधर्मस्फूर्तिरेवमत्रापि ब्रह्मावेशादुपदेश इति।

भाष्यप्रकाशः।

ब्रह्मणि लीनत्वादनुपपन्नः। न प्रेत्य संज्ञास्तीति श्रुत्यन्तरे ब्रह्मभूतानां भिन्नतया स्वानुसंधाना-भावबोधनात्। तर्हि कथमेवमुक्तं तत्राहुः तत्र यथेत्यादि। ब्रह्मावेशादिति शास्त्राभ्यास-

रश्मिः।

संभोगं कुरुतादिति पूर्वत्रार्थः। प्रकृते तु मा मामात्मन एव जनयित्वा कथं नु संभवाति सम्यक् प्रकारे-णैक्यप्रकारेणाभक्तिमार्गीयेण भवाति भवतात् सत्तां कुरुतादित्यर्थः। हन्तेति खेदे। तिरोसानि रूपान्तरेण तिरोभूतो भविष्यामीति अथवा स्वसर्वेत्यत्रेयं प्रक्रिया। भू सत्तायां लेट् 'लिङर्थे लेट्' इति सूत्रात् लेटस्तिप् भूति इति स्थिते 'सिब्बहुलं लेटी'त्यतः सिप इल्लोपे कृते भूसुति इति स्थिते 'इतश्च लोपः परस्मैपदेषु' इत्यने-नेतो लोपे भूसुत् इति स्थिते 'लेटोडाटौ' इति सूत्रेणाट् टित्वादाद्यः भूसु अत् 'आर्धधातुकस्येड्वलादेः' इत्यनेन सिप्बहुलं णिद्वक्तव्यः इति वार्तिकेन सिपि णिति वृद्धौ चेट्। भाव इस् अत्। अज्झीनं परेण संयोज्यमिति भाविसत्। पत्वे भाविषत्। प्रण आयूंषि तारिषत् इतिवत्। सिप् इलोपस्य चाभावे पताति विद्युत् प्रियः सूर्ये प्रियो अग्ना भवातीतिवत्। सिप इल्लोपस्याटश्चाभावे सर्वं भवतीति। ननु यत्र सिबिल्लोपौ तत्रैव ह्याट्। तारिषत् ज्योपिपदासाविषत् इत्यत्र यथा यत्र तु सिबिल्लोपौ न स्तस्तत्र ह्याट् यथा पताति भवातीति ह्यत्र तु सिबिल्लोपाभावेन कथमट् किंत्वाटा भाव्यमिति चेत्सत्यम् उदाहरणापेक्षया सूत्रमतस्य प्राबल्यं चुरादिगणे मनोरमायां मैानन्दिलत्रोक्तत्वात्। 'लेटोडाटौ' इति सूत्रे वृत्तौ वास्य विशेषस्यानुपलम्भात्। वृत्तिस्तु लेटः अट् आट् एतावागमौ स्तस्तौ च पिताविति। भक्तिमार्गीयां-शस्य पृथक्कृतत्वात्, ज्ञानिवेलायां द्वितीयपक्षे ज्ञानमार्गीयांशस्य पृथक्कृतत्वात्, मुक्तोपसृप्यव्यप-देशादिति सूत्रेणाधिकारवेलायां सत्तामाहुः स्वस्थेत्यादिना। तत्र हेतुमाहुः न प्रेत्येत्यादिना। शास्त्रेत्यादि शास्त्राणामभ्यासः पौनःपुन्यं कीर्तनं स्मरणं वा स्वनिर्वाहकस्मरणोपलक्षकं तेषां यद् दार्ढ्यं शतधापि व्यसनसंपातेनुच्छेदो बाहुल्यं च तयोः समाहारो दार्ढ्यबाहुल्यं तेन। तथा चास्य योऽहंकारवादः स ब्रह्मात्मभावेनैव न स्वात्मभावेनेत्यतस्तत्र यथा स न मायिकत्वेपि ब्रह्मवाक्य-बाधकः तथात्रायमपीति भावः। नन्वत्र ज्ञानावेशादिति भाष्यं पूर्वत्र तु स्वसर्वत्वेत्यादिना भक्तिरपि कैश्चिद्ज्ञास्यातेति चेत् सत्यम् तदाहुः यद्ब्रह्मविषया सर्वं भविष्यन्त इत्यादिना ब्रह्मविषया सिद्ध-देवर्षिमनुष्याणामुक्त्वा वामदेवर्षिप्रतिपत्तावहं मनुरभवं सूर्यश्चेति साकारब्रह्मवादो निष्कृष्टः तद्व्यमाणं नित्यनिरतिशयं श्रेयःप्रतिवित्सव आहुरिति तदाहुरित्यस्यार्थः। अथ योन्यां देवतामुपास्तेन्योसाव-न्योहमस्मीति न स वेद यथा पशुरेवं स देवानामिति ह्यभेदोपासनाया ज्ञानमार्गीयायाः समर्थनार्थं भेददृक् पशुरिति निन्दितः। 'अन्तरा भूतग्रामवत्स्वात्मनः' इत्यत्रान्तरायभूताभेदज्ञानं भक्ताय न ददाति इति तृतीये साधनाध्याये निर्णीतम्। तत्राभेदवान् निन्दितस्ततोत्र ज्ञानमार्गे भेदज्ञानवतो निन्दायां पशुशब्दस्य रूढिः पश बन्धे चुरादिपरस्मैपदी सेट् योगो वा योगरूढिर्वा निरुक्ता तस्य भेददर्शि पुरुषे गौणी उपासकत्वादिगुणयोगात्। तस्य तात्पर्यवृत्त्या देवादिप्रियोर्थो हि कार्का कृतायां विरुध्यतेतो भक्तिमार्गानुसारेणाहुः श्रुतयस्तात्पर्यवृत्तिं पशोः। यथा ह वै बहवः पशवो मनुष्यं भुञ्ज्युरेवमेकैकः पुरुषो देवान् भुनक्त्येकस्मिन्नेव पशावादीयमानेऽप्रियं भवति किं तु बहुषु तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विदुरिति। भुञ्ज्युर्दोहनादिना पालयेयुः भुनक्ति पालयति

१. कम परिहाणे। २. अवयुलेवावन अवोपसर्गेषु।

त्वाष्ट्रवधादयो ब्रह्मधर्मा एव । तदावेशेन क्रियमाणत्वात् । 'नन्वेष वज्रस्तव शक्र तेजसा हरेर्दधीचेस्तपसा च तेजितः । तेनैव शत्रुं जहि विष्णुयन्त्रितः' इति-वृत्रवचनं श्रीभागवते । तस्मादुक्तं ब्रह्मधर्मवचनम् । ननु 'स्वाप्ययसंपत्त्योरन्य-तरापेक्षमाविष्कृतं हि' इति सूत्रे सुषुप्तौ ब्रह्मसंपत्तौ च ब्रह्मधर्माविर्भावो न त्वन्यदेति कथमेवमिति चेन्मैवम् । उपदेशभावनादिष्वपि कदाचिदुत्तमाधिका-रिविषये ब्रह्मभाकत्वमित्यङ्गीकर्तव्यम् । 'मय्येव सकलं जातम्' इत्यादि-वाक्यानुरोधात् ।

भाष्यप्रकाशः ।

दार्ढ्यबाहुल्येन तदावेशात् । ननु यदि शास्त्रदृष्ट्योपदेशः स्यात् तदा जगल्लयादय उक्ताः स्युर्न तु त्वाष्ट्रवधादय इन्द्रकर्तृका इत्यत आहुः त्वाष्ट्रेत्यादि धर्मवचनमित्यन्तम् । अत्रा-गामिसूत्रविरोधमाशङ्कते नन्वित्यादि । परिहरन्ति मैवमित्यादि । नान्यदेति नियमरूपः सूत्रार्थो नाङ्गीकर्तव्यः । किन्तूभयत्र नियतोऽन्यत्र त्वनियत इत्यङ्गीकर्तव्यः । तत्र हेतुः उपदेशेत्यादि । तथा चैवंविधवाक्यानि पश्यन् व्यासः कथमेवं नियमयेदतो नैवं सूत्रार्थः । आदिपदेन 'एतत्साम गायन्नास्ते' इत्यादिश्रुतीनां, 'कस्याश्चित् पूतनायन्त्याः' इत्यादिवाक्यानां

रश्मिः ।

अप्रियमिति छेदः । किंत्वित्यस्य किंपुनरित्यर्थः । पशुभावाद् व्युत्थानसाधनं तत्त्वज्ञानं कुर्युरिति विदु-रित्यस्यार्थः । अत्रैतट्टीकाकृत् पशुभावाद्व्युत्थानं देवा विद्विषन्तीत्याहेत्येकस्मिन् एव पक्षावादीयमाने इत्याथा आभासयांचकार पशुभावाद् व्युत्थानसाधनं तत्त्वज्ञानमपि देवा द्विषन्ति इत्याहेति तस्मादेषा-मित्याथा आभासयांबभूव देवाश्च नामूत्या ईशते इत्यत्रोक्तान् देवान्देवपदार्थत्वेन आहयामास तदन्यथा यथाकथंचिज्ज्ञेयम् । अथाह वै बहव इत्यत्र सोपपत्तिकविद्याकथनानन्तरमित्यथशब्दार्थात् ते देवा नात्र ग्रहीतुं शक्याः किं तु त्यदादीनामुत्सर्गतः प्रधानपरामर्शित्वाच्चैवं स देवानामित्यत्रोक्तान् देवान् आहयाम इति को भेद उभयेषाम् । तेषामभेदद्विषामेषामित्यस्यार्थः । अस्माकं तु भेदद्विषा-मेषामित्यस्यार्थः । यमर्थमिच्छामः । काका तु संभवति । अन्यथा प्रकृतापरामर्शे तु पूर्वविद्याकथन-विच्छेदकाथश्रौतपदविरोधापत्तेः । काकस्तु ह्यप्रियं भवति किमपि तु न किं तु बहुषु ह्यपि तु न, न प्रियमपि तु प्रियमिति । एवमपि वेदोऽक्षरमात्रमपि नान्यथा वदतीति भाष्यविरोधः । तदा काका विनापि भेदद्विषां भेदस्य उपादाने सिंहादिकर्तृकेऽप्रियत्वं विरोधाभासेनालंकृतमिति भेदकदंशो भक्तत्वं गमयति । भक्तास्तु ह्यभेदद्विषोपि वेदान्तकृदादेः सकाशात्प्राप्तभेदकवन्त इव चकासतीति तदुपादा-नान्व प्रियाण्येव 'अहं भक्तपराधीन' इति स्मृतेः । 'अन्तरा भूतग्रामवत्स्वात्मनः' इत्यत्र स्फुटम् । जगल्लयेत्यादि स्थितेर्विद्यमानत्वाल्लय उक्तः । तथा च ब्रह्मावेशोऽत्रेति न लयादय उक्तास्ते तु ब्रह्मत्वे सतीति भावः । इत्यादीत्यादि हाबु हाबु हाबु अहमन्नमहमन्नमहमन्नं अहं विश्वं भुवनम-भ्यभवां सुवर्णज्योतिरित्यादयो ब्रह्मावेशबोधकाः आदिपदार्थाः । हाब्वित्यादीनि त्रीणि पदानि आश्चर्ये अन्यत्र निरुक्तिराश्चर्ये यथा आत्मबोधोपनिषदि अमृते लोकेऽक्षितेऽमृते लोके अक्षिते अमृते लोके अक्षिते अमृतत्वं गच्छत्यमृतत्वं च गच्छत्यमृतत्वं च गच्छत्यों नम इति अमृतबिन्दूपनिषदि । न स भूयोऽभिजायते

१. [illegible]
५१ म० ५० ८०

इहैव समवनीयन्ते प्राणाः। ब्रह्मैव सन् ब्रह्माप्येतीत्यप्याविर्भावापेक्षम्। तस्य

भाष्यप्रकाशः।

च संग्रहः । तथाच वाक्यानां सूत्रोपजीव्यत्वेनोक्तसूत्रस्थे संपत्तिपदे उपलक्षणविधयोत्तमाधिकारोऽपि संग्रहीतुं शक्यत इति न तद्विरोध इत्यर्थः । ननु तद्वैतदिति, मय्येवेति श्रौतं वाक्यद्वयं पूर्णज्ञानिन इति तस्याहंकारवादेन तथा कथनं युज्यते, न त्वावेशिनः । इन्द्रस्त्वावेशीति दृष्टान्तदार्ष्टान्तिकवैषम्यम् । न चेन्द्रस्यापि पूर्णज्ञानित्वं शक्यवचनम् । तथा सति वामदेवादेरिवेन्द्रस्यापि मुक्तत्वात् तद्वदेवमुपदेशस्यापि फलत्वमुक्तं स्यादित्यत आहुः इहैवेत्यादि । अस्तु तस्य पूर्णज्ञानिवाक्यत्वं तेषां मुक्तत्वं च । तथापि ज्ञानमुक्त्योराविर्भावापेक्षत्वं तु निर्विवादम् । इहैवेति श्रुतौ ब्रह्मैव सन्निति ब्रह्मभावे सत्येव मोक्षकथनात्, 'ब्रह्म वेद ब्रह्मैव भवति' इति श्रुत्यन्तरे ज्ञानेन ब्रह्मभावश्रावणाच्च । ब्रह्मभावश्च स्वस्मिन् ब्रह्मधर्माविर्भावपूर्वकब्रह्मस्फूर्तिरूप एव । न तु तद्व्याप्तिरूपो, न वा तादात्म्यरूपः । तस्य सार्वदिकत्वेन सर्वावस्थासाधारणतया ज्ञानित्वाद्यप्रयोजकत्वात् । नापि निष्प्रपञ्चतत्स्फूर्तिरूपः । सर्वभावस्फूर्त्यादि-

रश्मिः।

न स भूयोभिजायते न स भूयोभिजायत इति । वाक्यानामिति ब्रह्मावेशबोधकानाम् । उपजीव्यत्वं कारणत्वं तेन । उत्तमेत्यादि उत्तमाधिकारो ज्ञानम् ।

'चतुर्विधा भजन्ते मां जनाः सुकृतिनोर्जुन ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ' ॥
'ज्ञानी त्वात्मैव मे मतः' इति गीतायाः ।

अत एव ज्ञानी चेद्भजते कृष्णमिति निबन्धे प्रोक्तं श्रीमदाचार्यैः । उत्तमाधिकारो ब्रह्मवरणसहितप्रेमापि 'नायमात्मा प्रवचनेन लभ्यः', 'नायमात्मा बलहीनेन लभ्यः' इति श्रुतिभ्याम् । भावनादीनां साधनत्वं तृतीयाध्यायचतुर्थपादे सहकार्यन्तराधिकरणे वक्ष्यते । श्रीभागवते त्रिभिरध्यायैर्हीनाधिकारस्त्रिभिर्मध्यमस्त्रयोदशभिरुत्तम इति प्रथमस्कन्धोधिकारस्कन्धः । एतादृशाधिकारस्योपलक्षणविधया सूत्र उपादाने हेतुमाहुः तस्येत्यादिना । अहंकारवादेनेति प्रारब्धशेषरूपाविद्यारूपेणेत्यर्थः । सिद्धान्ते तु चिक्रीडिषया रुद्ररूपाहंकारेण नित्यक्रीडाप्रविष्टांशेन । गुणिरुद्रभिन्नगुणिरुद्रसदृशेन । आवेशीति प्रथमस्य तृतीयाध्यायसुबोधिन्यामस्ति । कार्यकाले संक्रमणमावेशः । तद्वदेवमिति तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवतीति सर्वभावरूपफलत्ववदित्यर्थः । एवमुपदेशस्येत्यस्य स्वात्मनः परमात्मत्वेनोपदेशस्येत्यर्थः । इदानीं ब्रह्मभावस्वरूपं निश्चिन्वन्ति ब्रह्मभाव इत्यादिना । एवेति पञ्चाध्याय्यां तथोपपादनात् । साकारब्रह्मवादार्थैवेति व्याप्तिरूप इति स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं व्याप्तिरत्र तिलेषु तैलस्य दधनि सर्पिष इव तादात्म्यं तदात्मनोभावस्वरूपत्वमिति यावद् आत्मसृष्टौ । तस्येति ब्रह्मव्यापनरूपस्य तदितरस्य च । ज्ञानित्वादीत्यत्रादिनाधिकारः । नन्वस्तु ब्रह्मधर्मः सत्यत्वाद्यभावाभावलक्षणस्तत्पूर्वकनिष्प्र-

च प्रायिकत्वान्न सूत्रे फलत्वमाह । जीवन्मुक्तानामपि परममुक्तेर्वक्तव्यत्वाच्च ।
असंप्रज्ञातसमाधाविवाविर्भावदशायामेव शरीरवियोगे वियोजकाभावात्

भाष्यप्रकाशः ।

विरुद्धत्वात् । अतः प्रकृते उपदेशरूपकार्यदर्शनेन तत्कारणरूपे ज्ञाने ब्रह्मधर्माविर्भावपूर्वक-ब्रह्मभावे चेन्द्रस्य सिद्धे तथा वाक्यकथनस्य युक्तत्वान्न दृष्टान्तदार्ष्टान्तिकवैषम्यम् । एतावान् परं विशेषो यन्मुक्तस्योक्तविधब्रह्मभावः सार्वदिक आवेशिनस्तु कादाचित्कः । अतस्तस्य प्रायिकत्वाद् वामदेवादिसर्वत्ववन्न सूत्रे तस्य फलत्वमाह । किंच । सर्वभावस्यापि साधनत्वे-नावान्तरफलत्वमेव, न परमफलत्वम् । परममुक्तिश्च जीवन्मुक्तानामप्यग्रे वक्तव्या, सुतरा-मावेशिन इत्यतोऽपि नाहातो न तदनुक्तिर्दोष इत्यर्थः । ननूक्तस्थले ब्रह्माविर्भावाङ्गीकारो न युक्तः । तस्मिन् सति वागादिविलयस्यैहैवेति श्रुतौ कथनाद् वक्तुस्तदापत्त्योपदेशना-संभवापत्तेः । तस्य मुक्तिपूर्वावस्थारूपत्वेनार्चिरादिगतिकथनापत्तेश्चेत्यत आहुः असंप्रज्ञाते-त्यादि । सत्यमस्ति तत्र तथात्वं पुराणे दधीच्यादिषु प्रसिद्धं च । तथाप्युक्तश्रुतौ, अथाका-मयमान इति प्रतिज्ञाय लयकथनात् कामाभावे सत्येव प्राणानां लयो न तु तदभावे । प्रकृते तु दधीचिवदसंप्रज्ञातसमाधेरभावादधिकारित्वेन तदानीमिन्द्रियवियोजकस्य कामा-भावस्य चाभावान्न वागादिलय इति नोपदेशानुपपत्तिः । ब्रह्मभावस्य प्राप्तत्वान्नार्चिरादिग-त्युक्तिश्चेत्यर्थः ।

यद्वा । ननूपदेशभावनादिषु ब्रह्माविर्भावो न युक्तः । यदि तत्र स स्यात्तदोपदेष्टुः सद्यो मुक्तिः स्यात् 'इहैव समवनीयन्ते प्राणाः' इत्यादिश्रुतौ तथैव सिद्धेः । तथा सति तस्या-विर्भावस्य फलत्वमपि व्यासैरुच्येतेत्यत आहुः इहैवेत्यादि । सत्यं सद्योमुक्तिराविर्भावापेक्षा । परंतु अत्रैव सम्रिति श्रुतावबधारणकथनाद् यत्र सर्वथा ब्रह्मभावस्तत्रैव सद्योमुक्तिः । उपदेश-भावनादौ तु न तथा । बहिःस्फूर्तेरपि सत्त्वेन केषुचिदेव तद्भवनेन तस्याविर्भावस्य प्रायिकत्वा-

रश्मिः ।

पत्रस्य दृशिमात्रस्य ब्रह्मणः स्फूर्तिरूपः । अत इति कार्येण कारणानुमानात् । प्रायिकत्वादिति उत्तमाधिकारजन्यत्वेन प्रायिकत्वात् 'कस्याश्चित्पूतनायन्त्याः' इत्यादौ तादृशभक्तिसाध्यत्वेन दुर्लभत्वप्रयुक्तात्तथात्वादित्यर्थः । सूत्र इति स्वाप्ययसूत्रे । दधीच्यादिष्विति ।

'एवं व्यवसितो दध्यङ्ङाथर्वणमुनिस्तनुम् ।
परे भगवति ब्रह्मण्यात्मानं संनयन् जहौ' ॥

इतिवाक्यात्प्रसिद्धम् । असंप्रज्ञातसमाधिः निर्बीजसमाधिः यत्रेति नेतीति वाक्यसंवादी । यत्र भगवतो रूपस्य न भानम् । 'एतेन योगः प्रत्युक्तः' इत्यत्र प्रपञ्चोस्य । असंप्रज्ञातसमाधिः शमीकस्याग्रे वक्ष्यते । अधिकारित्वेनेति स्वर्लोकपालत्वात् । ब्रह्मेत्यादि ब्रह्म चासौ भावश्चेत्यपि समासः । ब्रह्मावेशानन्तरं ब्रह्मभाव इति पक्षे षष्ठीतत्पुरुष एव । भाष्ये तु वागादिमात्रं लीयते इति तल्लयकथनात् भाष्यविरोध इत्याशङ्क्य पक्षान्तरमाहुः यद्वेत्यादि । उपदेष्टेत्यादि उपदेशोपलक्षः । भावनास्मरणादिकर्तृका तस्याम् । आदिपदेन संयोगे वियोगवृत्तिरूपे प्रेम्णि । न तथेति न सर्वथा ब्रह्मभाव इत्यर्थः । तत्र हेतुर्बहिःस्फूर्तेरित्यादि । तथा चोत्कटविरहे ब्रह्मभावस्तत्र बहिःस्फूर्तेरभावादिति भावः । व्रजान्तर्गृहगतानाम् । ननु तदतिरिक्तानां सर्वथा ब्रह्मभावस्मरणात् सद्योमुक्तिप्रसङ्ग इति चेन्न ।

वागादिमात्रं लीयते । तस्य च प्राप्तत्वादेव नार्चिरादिगतिः । तथापि प्रायिकत्वान्न सूत्रगीतादिषु तद्वचनम् । सगुणनिर्गुणभेदेन नियमवचनं त्वप्रामाणिकमेव ।

भाष्यप्रकाशः ।

भगवान् व्यासस्तस्य फलत्वं नाह । न तु तावता सर्वत्र नाविर्भाव इति वक्तुं शक्यमित्यर्थः । यदि तादृशाविर्भावस्य न फलत्वं तदा तस्य वैयर्थ्यमेव स्यादित्यत आहुः जीवन्नित्यादि । तथाच पारम्याभावात् फलत्वानुक्तावपि नाफलत्वमित्यदोष इत्यर्थः । ननु यदि तादृशस्याविर्भावस्य जीवन्मुक्तिसंपादकत्वं तदा तस्यार्चिरादिगतिरुच्येत । सा च नोच्यतेऽतो नैवमित्यत आहुः असंप्रज्ञातेत्यादि । शरीरवियोग इति । अर्चिरादिगतिरिति शेषः । वियोजकाभावादिति तादृशादृष्टाभावात् । भावनादौ वागादिमात्रं लीयते । तस्य ब्रह्मणश्च प्राप्तत्वात् तत्प्राप्त्यर्थार्चिरादिगतिरत्र नोक्ताऽतो न दोष इत्यर्थः । ननु मुख्याधिकारस्यैवंविधत्वे सूत्रादिषु कुतस्तदनुक्तिरित्यत आहुः तथापीत्यादि । प्रायिकत्वं संभावितत्वमनियतत्वमिति यावत् । तथाचातोऽनुक्तिरित्यर्थः । ननु सगुणोपासकस्यार्चिरादिगतिर्निर्गुणपरस्य तु 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' इति श्रुत्या केचिदेकदेशिनः सगुणनिर्गुणोपासनाभेदेनाधिकारिभेदमङ्गीकुर्वन्ति तत् कुतो नाद्रियत इत्यत आहुः सगुणेत्यादि ।

रश्मिः ।

'मुक्तोपसृप्यव्यपदेशात्' 'न स्त्रियो व्रजसुन्दर्यः पुत्र ताः श्रुतयः किल' इति सूत्रस्मृतिभ्यां मुक्तत्वेपि मध्ये वरप्राप्तानन्दभुजो भूत्वोक्तकालं समासाद्य गोप्यो हरिं गता इति । न चेहैवेति श्रुत्यानन्दभोगप्रतिपादकस्मृतिबाधः इति वाच्यम् । अत्र स्मृतीनामुपबृंहणत्वस्वीकारात् । 'इतिहासपुराणैस्तु वेदं समुपबृंहयेत्' इति वाक्यात् । यथा 'भस्मान्तो देहः' इति श्रुतेः । 'कृमिविड्भस्मसंज्ञितः' इति पुराणमुपबृंहणम् । न तु बाध्यं प्रत्यक्षविरोधात् । अर्चिरादीत्यादि दृष्टान्तानुरोधोत्र द्रष्टव्यः ।

'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' ॥

इति परब्रह्माविर्भावे तद्दर्शनेन हृदयग्रन्थ्यादिभेदादौ वागादिमात्रं लीयते इत्यसंगतं मुक्तौ प्रतिबन्धकाभावादित्याशङ्कायामिच्छाविषयादृष्टाभावान्न मुक्तिः किं तु वागादिमात्रस्य लय इति नासंगतमित्याशयेन व्याकुर्वन्ति तादृशादृष्टेत्यादिना । अस्य देहवियोगो अनेन भवत्वित्याकारिकेच्छाविषयधर्माधर्माभावादित्यर्थः । इच्छायाः फलबलकल्प्यत्वादिति भावः । वागादिमात्रं लीयते परमाविर्भावदशायामेव पश्चात्तु ह्युपदेशनसंभवोस्त्येवेति । एवं चात्र वियोगान्तं संपूर्णमनुवर्तते । असंप्रज्ञातसमाधिः शमीकस्य भगवतः । प्रकृते । प्रथमस्कन्धे परीक्षित्प्रसङ्गे 'उन्मील्य शनकैर्नेत्रे दृष्ट्वा स्वांसे मृतोरगम् । विसृज्य पुत्रं पप्रच्छ' इति वाक्यात् । तस्येति भाष्यानुवादः । प्राप्त्यर्था ब्रह्मप्राप्त्यर्था । नोक्ता, निष्प्रयोजनत्वादिति भावः । दोषः अर्चिरादिगत्यनुक्तिरूपः । निर्गुणेत्यादि निर्गुणोपासकस्य । श्रुत्यर्थस्तु तस्याचार्यवतः पण्डितस्य मेधाविनो मुक्ताविद्याबन्धस्य आचार्यवान् पुरुषो वेदेति पण्डितो मेधावीति च पूर्वं श्रुतत्वात् तावदेव तावान् काल एव चिरं विलम्बः सत्संपत्ताविति शेषः । यावत्कालपर्यन्तं न विमोक्ष्ये न विमोक्ष्यते । प्रारब्धकर्मणां भोगाद्विनाशेन यावद्देहपातो न भवतीत्यर्थः । अथ तदा प्रारब्धक्षयाद्देहपातसमकालमेव संपत्स्ये संपत्स्यते मुक्तो भवतीति । एकदेशिनः शांकराः । सगुणेत्यादि विद्वन्मण्डने स्फुटमुपपादितमेतत् ।

ब्रह्मवादे गुणानङ्गीकाराच । तस्मायुक्तमुक्तं शास्त्रदृष्ट्यातूपदेश इति ॥ २९ ॥

भाष्यप्रकाशः ।

ब्रह्मवादे ब्रह्मणः सगुणनिर्गुणभावाभावेनाधिकारिभेदाभावात् तथागत्यादिनियमकथनमप्रामाणिकमेव । सांख्यप्रतिपन्नानां गुणानां व्यासेनानङ्गीकारादपि तथेत्यसंगतत्वाच्चाद्रियत्व इत्यर्थः । सिद्धमाहुः तस्मादित्यादि । तस्मादिति अभ्यासबाहुल्येन ब्रह्मावेशात् ॥ २९ ॥

रश्मिः ।

'अभेदादनुपाधित्वाज्जगदप्रत्ययासितः ।
सर्वाधारत्वतस्तावच्छक्तित्वान्नास्य बाधनम्' ॥ इति ।

न चाथ मायाशबलितं ब्रह्मासीदिति श्रुतिविरोध इति शङ्क्यं मायाशब्दस्येन्द्रियपरत्वस्य निबन्धे व्यवस्थापनात् । अनङ्गीकारादिति ब्रह्मजिज्ञासां प्रतिज्ञाय केवलादेव जन्माद्यस्य यतः इति वदता रचनानुपपत्तेश्च नानुमानमिति गुणसाम्यावस्थां खण्डयता व्यासेन भगवता गौणश्चेन्नात्मशब्दादिति सूत्रे तथेत्यर्थः । अभ्यासेत्यादि व्याकृतम् । इदानीं पूर्वोक्तोर्थः पुनरुच्यते । यत्र वामदेवस्याहंकारवाद उक्तस्तत्रैव तदाहुर्यद् ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते किमु तद्ब्रह्मावेद्यस्मात्तत्सर्वमभवत्', 'ब्रह्म वा इदमग्र आसीत्', 'तदात्मानमेवावेदहं ब्रह्मास्मीति', 'तस्मात्तत्सर्वमभवत्', 'तद्यो यो देवानां प्रत्यबुद्ध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्' इति सर्वभावो युक्तः । मध्यमपदलोपी समासः तेन सर्वात्मभावोप्यर्थः । य एव प्रत्यबुद्ध्यतेति सामान्यनिर्देशात् । तदतिश्रयं श्रेयोजिज्ञासवः आहुरिति तदाहुरित्यस्यार्थः । भविष्यन्त इत्यस्य भविष्याम इत्यर्थः । मन्यन्त इत्यस्य संभावयन्तीत्यर्थः । इति पुनरुक्तं संबन्धार्थं पृच्छति किमुतेति । यस्माद्विज्ञानात्तद्ब्रह्म सर्वमभवत् तद् ब्रह्म किमु किमात्मस्वरूपमतिरिक्तं वाऽवेत् स्वरूपं तदतिरिक्तं वा यस्मात् तत्सर्वमभवत् तदपि किमिति ब्रह्मविद्याधिकारिप्रमेयप्रमाणप्रश्न इत्यर्थः । क्रमेणोत्तराणि । ब्रह्मेति । अग्रेवबोधात्प्राक् । इदं जीवरूपं चैतन्यं शरीरस्थमंशत्वेन ब्रह्मैवासीत् । तज्जीवरूपं चैतन्यमात्मानमेवमहं ब्रह्माक्षरात्मकं पुरुषोत्तमाधिष्ठानमस्मीत्यवेत् । सेवनादिरूपसाधनसंपत्त्या इति शेषः । तस्मादेव विज्ञानात्तज्जीवरूपं चैतन्यं परब्रह्माविर्भावे इहैव समवनीयन्ते इति श्रुत्यन्तरेण तत्र प्राणादिलयेन तद्रूपत्वे जाते सर्वं सर्वरूपमभवदिति । तदाहुराचार्याः 'ततः संसारदुःखस्य निवृत्तिर्ब्रह्मबोधनम्' इति । तत इति सेवातः इति तदर्थः । अधिकारिणमाह यो यो देवानामिति । देवानामिति निर्धारणे षष्ठी तेषां यो यो देवः प्रत्यबुध्यतात्मानमक्षरब्रह्मत्वेन यथावद्बोधितवान् स एव देवस्तत्परब्रह्माभवत् व्यापकत्वादिप्रादुर्भावेन विरुद्धधर्माधारोऽभवदित्यर्थः । 'आनन्द आत्मा ब्रह्म पुच्छं प्रतिष्ठा' इति श्रुत्योः परब्रह्माक्षरब्रह्मणोराश्रयाश्रयिभावः सिद्धः । ब्रह्मैव सन् ब्रह्माप्येतीत्यत्र कर्तृकर्मभावोप्युपपन्नतरः । अक्षरस्यापि परब्रह्मत्वेनाथ योऽन्यां देवतामुपास्तेन्योसौ अन्योहमस्मीति न स वेदेत्यग्रेतनश्रुतेरपि न विरोधः । भक्तस्याक्षरात्मकत्वेन स्वज्ञानं भवतीति तृतीयाध्याये तृतीयपादे व्युत्पादितम् । इदानीं प्रकृतमुच्यते ॥ २९ ॥

## जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ ३० ॥

अन्यद् बाधकद्वयमाशङ्कते। ननु यद्यपि ब्रह्मधर्मा भूयांसः प्रकरणे श्रूयन्ते। तद्वज्जीवधर्मा मुख्यप्राणधर्माश्च बाधकाः सन्ति। न वाचं विजिज्ञासीत वक्तारं विद्यादित्यादि। अत्र हि वागादिकरणाध्यक्षस्य जीवस्य विज्ञेयत्वमभिधीयते। अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयतीति शरीरधारणं मुख्यप्राणधर्मः। मा मोहमापद्यथा, अहमेवैतत् पञ्चधात्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामीति श्रवणात्।

यो वै प्राणः सा प्रज्ञा या प्रज्ञा स प्राण इति जीवमुख्यप्राणवाच्यत्वे प्रज्ञाप्राणयोः सहवृत्तित्वादुपचारो युज्यते। उत्क्रान्तिश्च। ननु सर्वथा विलक्षणस्य ब्रह्मणः। तस्माज्जीवमुख्यप्राणलिङ्गयोर्विद्यमानत्वान्न ब्रह्मप्रकरणमिति चेन्न।

भाष्यप्रकाशः।

जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ ३० ॥ व्याचक्षते अन्यदित्यादि। एतद्बाणमिति एतच्छरीरम्। तथाच वागादिकरणाध्यक्षत्वस्य जीवलिङ्गस्य शरीरधारणस्य मुख्यप्राणलिङ्गस्य च ब्रह्मवाक्यत्वबाधकस्य विद्यमानत्वान्नेदं ब्रह्मवाक्यमित्यर्थः। ननु यथैते लिङ्गे ब्रह्मवाक्यत्वबाधके तथा अमृतत्वादिकं ब्रह्मलिङ्गमेतद्बाधकमिति नात्र कस्यापि निर्णय इत्यतः स्वपक्षे गुणमाह यो वा इत्यादि। इति जीवमुख्यप्राणवाच्यत्व इति अस्मिन् प्रकरणेऽङ्गीकार्यत्वे। उत्क्रान्तिरिति। सहैवैतैः सर्वैरुत्क्रामतीत्यनेनोक्तोत्क्रान्तिः। सर्वथा विलक्षणस्येति। उत्क्रान्तिविरोधिन्या व्यापकतया जीवात्, तथा चेतनतया च मुख्यप्राणाद् विरुद्धधर्मणः। तस्मादिति। उक्तरूपस्य महाबाधकस्य सत्त्वात्। तथाचैतेन बाधकेन ब्रह्मलिङ्गानामुपासनार्थत्वस्य शक्यवचनत्वान्नेदं

रश्मिः।

जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्॥३०॥ भाष्ये। 'मा मोहमापद्यथाः' इत्यादि वागादीन् प्रति प्राणवाक्यम्। पञ्चधेति प्राणापानादिभेदेन। प्रकृते। अङ्गीत्यादि अत्र त्वप्रत्ययरहितः[1] पाठः प्रतिभाति। इदं प्रकरणाधिकरणकाङ्गीकार्यत्व इत्यर्थो वा। भाष्ये। उपचारो अमृतत्वादिब्रह्मलिङ्गानाम्। प्रकृते। एतैरित्यादि समीपतरवर्तिभिः प्राणैः। उत्क्रान्तिरित्यस्य युज्येत इति पूर्वेण समं संबन्धः। तथेति उत्क्रान्तिविरोधिन्या व्यापकतयेत्यर्थः। महेति पूर्वपक्षांशे विपरीतलक्षणया स्वरेण वापाततो बाधकं तत्र तु परमार्थत इत्यर्थो बोध्यः। वीत्यादि 'मामेव विजानीहि' इति श्रुतावित्यर्थः। अर्थत्रयं ब्रह्मजीवमुख्यप्राणरूपं घटादीनां प्रसक्त्यभावात्। प्रसक्तानां त्रयाणां च व्यवच्छेदायोगात् व्यवच्छेद्याभावेन तयेत्यर्थः। ननु शिवस्य व्यवच्छेद्यत्वं ब्रह्मणो ब्राह्मणत्वात् विष्णोर्ब्रह्मगुणगणगर्णगुणितां गणितानन्दगुणकस्यातिरेकादिति चेन्न। भेदकस्य तमसो मायिकत्वेनर्तेर्थं प्रतीतेः। पूर्वत्राप्येवम्। 'एकमिद्ं वाक्यम्' 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्' इति प्रोक्तलक्षणकं वाक्यं तस्य भेदः। आश्रितत्वादिति भाष्याग्रे अत एव 'त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी। त्वं जीर्णो दण्डेन वञ्चसि त्वं

१. क्व संबन्धे।

उपसात्रैविध्यात् । अयमर्थः । किमत्र चोद्यते । जीवमुख्यप्राणलिङ्गाद् ब्रह्मधर्माणां जीवपरत्वं, त्रयाणामपि स्वतन्त्रत्वं वा, लिङ्गद्वयस्यापि ब्रह्मधर्मत्वमुच्यतामिति वा । आद्यः पूर्वमेव परिहृतः । न हि ब्रह्मधर्मा अन्यपरत्वेन परिणेतुं शक्या इति । द्वितीये दूषणमाह । उपासात्रैविध्यात् । तथा सत्युपासनं त्रिविधं स्यात् । तद्वाक्यभेदप्रसङ्गान्न युक्तम् । तृतीये तूपपत्तिरुच्यते । जीवधर्मा ब्रह्मणि न विरुध्यन्ते । आश्रितत्वात् । जीवस्यापि ब्रह्माधारत्वात् तद्धर्मा अपि भगवदाश्रिता एव । इहेत्युभयत्र संबन्धो ब्रह्मवादे । मुख्यप्राणे तु तद्योगात् ।

भाष्यप्रकाशः ।

ब्रह्मप्रकरणमिति पूर्वपक्षाशय इत्यर्थः । समाधानांशं व्याकुर्वन्ति अयमर्थ इत्यादि । उच्यतामिति । उपपाद्यताम् । पूर्वमेव परिहृत इति । न वक्तुरिति सूत्रे ब्रह्मधर्मबाहुल्यप्रतिपादनेन बहूनामनुग्रहस्य न्याय्यत्वालम्बनात् परिहृतः । परिहारस्याकारमाहुः न हीत्यादि । अत्राशक्यत्वं बहुषु लक्षणाया आपत्त्या ज्ञेयम् । द्वितीय इति लक्षणादोषराहित्यात् त्रयाणां स्वातन्त्र्येण प्रतिपाद्यत्वाङ्गीकार इत्यर्थः । वाक्यभेदप्रसङ्गादिति । विजानीहीत्यस्यावर्तनेन, मामिति पदस्यार्थत्रयकल्पनेनैवकारार्थविरोधेन च वाक्यभेदप्रसङ्गात् । तृतीय इति ब्रह्मधर्मत्वोपपादनचोदनापक्षे । ब्रह्माधारत्वादिति । 'अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्' इति श्रुत्या जीवस्यावयवत्वबोधनेन तस्य ब्रह्माधारत्वात् । नच वैपरीत्यं शङ्क्यम् । संयोगादुत्पत्तिरिति पक्षे तथात्वे, विभागादुत्पत्तिरिति पक्षे तदभावादिति । इहेत्युभयत्र संबन्ध इति । इहाऽऽश्रितत्वादिह तद्योगादित्येवं संबन्धः । ब्रह्मवादपदं माया-

रश्मिः ।

जातो भवसि विश्वतोमुखः' इत्यादिश्रुतिरित्याकाशवाणीपाठः । वञ्चसि गच्छसि । तस्येत्यादि शरीरे करादय इति प्रतीत्या करादीनां शरीराधारत्ववत् तस्य जीवस्य ब्रह्माधारत्वात् । वैपरीत्यं तन्त्वधिकरणकपटनिरूपितेत्यादिविद्वन्मण्डने कपालेषु घट इति प्रतीत्यावयविभूतब्रह्मणोवयवभूतजीवस्याधारत्वं शङ्क्यमित्यर्थः । संयोगादुत्पत्तिरित्यादि ईश्वरचिकीर्षावशात्परमाणुषु जायमानया क्रियया परमाणुद्वयसंयोगादुत्पत्तिः । तथात्वे अवयविनोवयवस्याधारत्वे । विभागेत्यादि अयमर्थः । सिद्धान्ते प्रथमस्यान्तिमस्य च कार्यस्य विभागादुत्पत्तिः अवान्तरस्य तु यथासंभवं संयोगविभागाभ्यां सा 'यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति एवमेवास्मादात्मनः' इति पञ्चमीश्रवणात् । परमाणुकारणवादस्य तर्कपादे दूषणीयत्वात् । इदं यथा तथा सृष्टिभेदवादे व्युत्पादितम् । तदभावात् अवयवानामवयव्याधारत्वाभावात् । संबन्ध इति देहलीदीपकन्यायेनेति भावः । इहेत्यस्य सर्वात्मभाववति जीवे इह ब्रह्मणि आश्रितत्वात् तद्योगादित्येवमर्थसमर्थनार्थम् । न चैवं स्वे महिम्नि ह्याश्रितत्वव्याख्याने ।

'मन्त्रोपासनवैदिकताम्त्रिकदीक्षार्चनादिविधिभिर्यः ।
अस्पृष्टो रमते निजभक्तेषु स मेस्तु सर्वस्वम्' ॥

इति ह्युपासाऽविषयत्वं विरुद्धमिति वाच्यं मन्त्राणामुपासनेति व्याख्यानात् । अत एव मुक्तिस्कन्धे उपासना उप समीपे स्थित्वा यथायोग्यकरणमिति सुबोधिनी । भाष्यप्रकाशसमाप्तौ चोपासनाघटितसाधनपरंपरा । मायावादव्यवच्छेदसूचकब्रह्मवादपदकथनतात्पर्यमाहुः ब्रह्मवादेत्यादिना ।

तेन योगस्तद्योगस्तस्मात् । प्राणधर्मा भगवति न विरुध्यन्ते । प्राणस्य भगवत्संबन्धात् तद्धर्माणामपि भगवत्संबन्धात् । अथवा वक्तृत्वादयो न जीवधर्माः किं तु ब्रह्मधर्मा एव । जीवे आश्रितत्वाद्भासन्ते । परात्तु तच्छ्रुतेरिति न्यायात् । प्राणेऽपि तथा । स्वाप्ययसंपत्त्योर्जीवस्य ब्रह्माश्रितत्वम् । आध्यात्मिकाधिदैविकरूपत्वान्न संयोगः । प्राणस्य तु संयोग एव । तस्मात् सर्वे धर्मा ब्रह्मणि युज्यन्ते ।

---

भाष्यप्रकाशः ।

वादिमते जीवब्रह्मणोरभेदादाश्रयाश्रयिभावानङ्गीकारेण तस्य विरुद्धत्वबोधनार्थम् । भगवत्संबन्धादिति । भगवतो नियामकतया तन्नियम्यत्वरूपात् संबन्धात् । तथाच,

'न प्राणेन, नापानेन मर्त्यो जीवति कश्चन ।
इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ' ॥ इति ।

तत्सामर्थ्यस्य भगवदधीनत्वात् तद्धर्माणामपि परंपरया भगवद्धर्मत्वमित्यर्थः । अस्मिन् पक्षे जीवप्राणधर्माणां न साक्षाद् भगवद्धर्मत्वमिति लक्षणेवाऽऽपद्येतेत्यरुच्या पक्षान्तरमाहुः अथवेत्यादि । ब्रह्मधर्मा इति साक्षाद्ब्रह्मधर्माः । ननु यद्येवं प्राणे स्यात् तदाऽऽश्रितत्वमेव हेतुत्वेनोक्तं स्यान्न तु तद्योगोऽपीत्यत उपपादयन्ति स्वाप्ययेत्यादि । तथाच स्वाप्ययादौ जीवस्य ब्रह्माश्रितत्वम् । अवस्थाभेदकृतात् तादात्म्यान्न संयोगः । उभयप्रवेशपक्षे तु स्वाप्यये संपरिष्वङ्गश्रुतेः संयोगः कादाचित्कः । प्राणे तु संयोग एव सार्वदिक इति हेतुद्वयकथनं युक्तमित्यर्थः । सिद्धमाहुः तस्मादित्यादि । तस्मादिति अनया रीत्या ब्रह्मणः प्रयोजकत्वेन लक्षणादोषासंसर्गात् । नन्वस्त्वेवमन्येषां भगवद्धर्मत्वं तथापि सहोत्क्रमस्यैकत्वव्यापकत्व-

रश्मिः ।

तस्येति प्रत्यक्षाधिकरणवाचकस्येहेतिपदस्येत्यर्थः । न प्राणेनेत्यादिश्रुतिः पञ्चमवल्लीस्था । तत्सामर्थ्यस्य प्राणसामर्थ्यस्य । परंपरयेति हस्तपुस्तकसंयोगस्य कायधर्मत्ववदित्यर्थः । लक्षणेवेति शक्यसंबन्धो लक्षणा । संबद्धसंबन्धः परंपरेति सादृश्यार्थकस्येवेत्यस्य प्रयोगः । जीवप्राणधर्मवाचकपदवाक्यानां जीवप्राणयोर्धर्मत्वावच्छिन्नेषु शक्तिस्तदाधारयोर्लक्षणा ब्रह्मणो योगात्संबद्धसंबन्धः जीव आश्रयाश्रयिभावः । प्राणे योगमात्रमित्युभयमुपात्तम् । भाष्ये । परादित्यादि द्वितीयस्य तृतीयचरणे पराद्ब्रह्मणः सकाशात् जीवानां कर्तृत्वं तच्छ्रुतेः 'यमधो निनीषति तमसाधु कारयति' इत्यादिश्रुतेरित्यर्थको न्यायोस्ति तस्मादित्यर्थः । प्रकृते । अत्र पक्षे तद्योगादित्यंशवैयर्थ्यमाशङ्क्य समादधति स्म ननु यद्यीत्यादिना । स्वाप्ययः सुषुप्तिः संपत्तिर्ब्रह्मैव सन् ब्रह्माप्येतीति श्रुत्युक्तो लयः । कुतः संबन्धादित्यत आहुः अवस्थेत्यादि । तादात्म्यं च भेदसहिष्णुरभेदो न संयोग इति तयोरिति शेषः । उभयेत्यादि सह ह्येवास्मिन् शरीरे वसतः इति धर्मधर्मिणोः पृथक्त्वपक्षे देहे प्राणब्रह्मयोरुभयोः प्रवेशस्तस्मिन् पक्ष इत्यर्थः । एतच्चाग्रेवाग्रे स्फुटम् । कादाचित्क इति परिष्वङ्गस्य संयोगवाचकत्वादित्यर्थः । हेत्वित्यादि संबन्धद्वयबोधकहेतुद्वयकथनमित्यर्थः । भाष्ये । न संयोग इति किं त्वभेदः 'यस्तु आध्यात्मिकः प्रोक्तः सोऽसावेवाधिदैविकः' इति वचनात् । प्रकृते । प्रयोजकत्वेनेति परात्तु तच्छ्रुतेरिति न्याये कारयतीत्यत्र 'तत्प्रयोजको हेतुश्च' कर्तुःप्रयोजको हेतुसंज्ञः स्यात् कर्तृसंज्ञश्चेति सूत्रद्वयाभ्यां णिजर्थः प्रयोजकत्वस्य भानेनेत्यर्थः ।

सहोत्क्रमस्तु क्रियाज्ञानशक्त्योर्भगवदीययोर्देहे सहैव स्थानं सहोत्क्रमणमिति भगवदधीनत्वं सर्वस्यापि बोध्यते। ननु प्राणस्तथानुगमादिति प्राणशब्देन ब्रह्मैव प्रतिपादितं तत्कथं धर्मयोरुत्क्रमणमिति चेत्। अत्र धर्मधर्मिणोरेकत्वपृथक्त्वनिर्देशयोर्विद्यमानत्वात्। प्राणो वा अहमस्मि प्रज्ञात्मेति। अत्र

भाष्यप्रकाशः ।

विरुद्धतया तस्य तु तथात्वं न युज्यत इति तस्य का गतिरित्यत आहुः सहोत्क्रमस्त्विति । तथाच व्यापकत्वादसंभवन्नपि शक्तिशक्तिमतोरभेदाद्धस्तोत्क्षेपणवत् सोऽपि भगवद्धर्म एवेत्यर्थः। एवं बोधनस्य फलमाहुः देह इत्यादि । अत्र पूर्वविरोधमाशङ्कते नन्वित्यादि । तत् कथमिति पूर्वोक्तविरोधेन धर्मधर्मिभावस्य वक्तुमशक्यत्वात् कथम् । एतत्समाधानाय हेतुं गृह्णन्ति अत्र धर्मेत्यादि । तथाच यदि पृथक्त्वनिर्देशो न स्यादुत्क्रमणं विरुध्येत । अत्र तूभयोः सत्त्वान्न पूर्वापरविरोध इत्यर्थः। उक्तं व्याख्यातुमुपपादयन्ति प्राण इत्यादि । अत्र विषयवाक्ये पाठभेदो देशभेदाद् बोध्यः। यथा बृहदारायणोपनिषदि तैलङ्गद्राविडपाठभेदात्। यथा चैतद्बाणमवष्टभ्येति प्रश्नोपनिषद्वाक्ये ये त्विमं शरीरं परिगृह्येति पठन्तीति पाठान्तरं शंकराचार्यैरुपन्यस्तम् । तथाऽत्रैवोद्गृह्णमित्यत्राद्दुहदिति पठितम् । तद्वत् शंकरानन्दकृतटीकायामप्येवमेव पाठ इति । अत्र क्रियाशक्त्यनुग्राहकः प्राण इति ज्ञानशक्त्यनुग्राहकश्च चेतन इति तदुभयवाचकयोः प्राणप्रज्ञात्मशब्दयोरिदमा सामानाधिकरण्यात् तदुभयवानेको निर्दिष्टः । ततस्तं मामायुरमृतमित्युपास्स्वेत्यनेन तस्योपासनं विधाय तस्य फलं चोक्त्वा तदनु तद्वैक आहुरित्यारभ्यास्तित्वेव प्राणानां निःश्रेयसमित्यन्तेन क्रियाशक्तिप्रशंसा । जीवति वागपेत इत्यारभ्य प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयतीत्यन्तेन ज्ञानशक्तिप्रशंसा। ततस्तस्योत्थोपासनां विधाय प्राणे सर्वाप्तिमुक्त्वा यो वै प्राणः

रश्मिः ।

तथात्वमिति ब्रह्मधर्मत्वम्। हस्तेत्यादि हस्तोत्क्षेपणस्य पुरुषधर्मत्ववदित्यर्थः। तथा च 'अविभक्तं च भूतेषु विभक्तमिव च स्थितम्' इति गीतायां भगवदीययोरित्यर्थः। ननु प्राण इत्यादिसूत्रे प्रज्ञात्मेति पठ्यतेत्र तु प्रज्ञानात्मेति पाठभेदेऽपि किंचिदाहुः अत्र विषयेत्यादिना पाठभेदस्तु स्वयमग्रे वक्तव्यः। तैलङ्गेत्यादि भयं द्रष्टव्यः क्वचित्स्थले। इति पठितमिति शंकराचार्यैरित्यर्थः। तथा च तद्भाष्यम्। ये त्विमं शरीरं परिगृह्येति पठन्ति तेषामिमं जीवमिन्द्रियग्रामं वा परिगृह्य शरीरमुत्थापयन्तीति व्याख्येयमिति। तथा अथ यथास्यै प्रज्ञायै सर्वाणि भूतान्येकं भवन्ति तद्व्याख्यास्याम इत्युपक्रम्य वागेवास्या एकमङ्गमदूदुहत् तस्यै नाम परस्तात् प्रतिविहिता भूतमात्रा प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोति इत्यादि प्रज्ञाधर्म इति। इत आरभ्य प्राणगुणविशिष्टोपासना प्राणोहमस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्वेति श्रुत्यर्थमाहुः अत्र क्रियेत्यादिना। उपासनाद्वयप्रतिपादकश्रुत्यर्थस्तु प्रथिकरणारम्भ उक्तः। तदन्वित्यादिभाष्यं विवृण्वन्ति स्म तदन्वित्यादिना। प्राणा एवेति अथ खलु प्राण एवेत्यादितृतीयोपासनाप्रज्ञागुणविशिष्टस्य । तस्योपेति तस्माद्देतदेवोक्थमुपासीतेति श्रुत्योक्थमित्यस्य देहोत्थापकमित्यर्थः। पुनर्ज्ञानशक्तेरुत्कर्षं वक्तुमिति

क्रियाज्ञानशक्तिमान् निर्दिष्टः। तदन्वेकैकस्य धर्मस्य प्रशंसा, यो वै प्राणः सा प्रज्ञा, या प्रज्ञा स प्राण इत्युपसंहारान्तम्। पुनस्तयोरेवोत्क्रमणप्रवेशाभ्यां सह ह्येवास्मिन् शरीरे वसतः सहोत्क्रामत इत्युपक्रम्य सुषुप्तिमूर्च्छामरणेषु प्राणाधीनत्वं सर्वेषामिन्द्रियाणामुक्त्वा आसन्यव्यावृत्त्यर्थं प्रज्ञयैक्यं प्रतिपाद्योपसंहरति। पुनर्ज्ञानशक्तेरुत्कर्षं वक्तुम्, अथ खलु यथा प्रज्ञायामित्यारभ्य, न हि प्रज्ञापेतोऽर्थः कश्चन सिद्ध्येतेत्यन्तेन ज्ञानशक्त्युत्कर्षं प्रतिपाद्य धर्ममात्रत्वनिराकरणाय ज्ञानशक्तिमन्तं भगवन्तं निर्दिशति, न हि प्रज्ञातव्यमित्यारभ्य, मन्तारं विद्यादित्यन्तेन। तदनु ज्ञानक्रियाशक्त्योर्विषयभूतभूतमात्रारूपजगतो भगव-

भाष्यप्रकाशः।

सा प्रज्ञा, या वा प्रज्ञा स प्राण इत्युपसंहृतेत्येतदन्ता उभयप्रशंसा। तदग्रिमसंदर्भे तूत्क्रमणप्रवेशाभ्यां पुनस्तयोरेव प्रशंसा। सा च तस्मिन् पाठे, सह ह्येवास्मिन्नित्युपक्रम्य सुषुप्त्यादिषु सर्वेन्द्रियाणां प्राणाधीनत्वमुक्त्वा ततः प्राणस्य प्रज्ञयैक्यं प्रतिपाद्योपसंहृता। प्रसिद्धपाठे तु, तस्यैषैव दृष्टिरेतद्विज्ञानमित्युपक्रमः। सह ह्येवास्मिन्नित्युपसंहारः। वाक्यार्थस्तूभयत्राप्येक एव। तस्य प्रयोजनं तु क्रियाशक्त्यपेक्षया ज्ञानशक्तेरुत्कर्षप्रतिपादनमतस्तमुत्कर्षं वक्तुमेतावान् संदर्भः। ततोऽथ खलु प्रज्ञायामित्यादिनोत्कर्षप्रतिपादनम्। तत्रापि पाठभेदः। प्रसिद्धपाठे, अथ यथास्यै प्रज्ञायै, इत्युपक्रमान्न हि प्रज्ञापेता धीः काचन सिद्ध्येदित्युपसंहारात्। अर्थस्त्वेक एव। तदग्रे तु पाठोऽपि समानः। तदर्थस्तु, धर्ममात्रत्वनिराकरणायेत्यादिना प्रतिपाद्यते। तत्र ज्ञानशक्तिमन्निर्देशो जीवसाधारण इति जीवं वारयितुं, ता वा एता दशैव भूतमात्रा इत्यारभ्य, न ह्यन्यतरतो रूपं किंचन सिद्ध्येदित्यन्तेन क्रियाज्ञानशक्त्योः परस्परसापेक्षतया स्वविषयभूतरूपात्मकजगत्साधकत्वं प्रतिपाद्य, ततो, नो एत-

रश्मिः।

भाष्यं विवृण्वन्ति स तस्य प्रयोजनमित्यादि। एक एवेत्यादि। अथ बुद्धिप्राणयोः सहस्थित्योत्क्रान्तिकथनानन्तरं प्रज्ञायै प्रज्ञायाः संबन्धीनि सर्वाणि भूतानि एकीभवन्ति भगवता तथा व्याख्यास्यामः। तदेकीभावमेवाह वागेवास्या इति। अस्या भगवद्रूपायाः प्रज्ञायाः एकमङ्गमंशं वाक् पूरयामास। तस्यै नाम तस्याः भगवद्रूपायाः प्रज्ञाया नाम इत्यव्ययं प्रकाश्यार्थकं परस्तात् द्वितीयमंशं चक्षुरादिना प्रतिविहिता विषयीकृता रूपादिरूपा भूतमात्राः पूरयांबभूवुरित्यर्थः। नामरूपात्मकजगदुक्तम्। तत्र क्रीडामाह प्रज्ञयेत्यादि। तया वाचं समारुह्यानुप्रविश्य तया करणभूतया सर्वाणि नामानि वक्तव्यत्वेनाप्नोति चक्षुषा सर्वाणि रूपाणि पश्यतीत्येवंरूपोऽर्थ इत्यर्थः। श्रुतयस्तु शंकरानन्दभाष्योपन्यास उक्ताः। प्रकृतमनुसरामः। ता वा एता इति ता वा एता दशैव भूतमात्राः अधिप्रज्ञं दश प्रज्ञामात्राः अधिभूतं यदि भूतमात्रा न स्युः न प्रज्ञामात्राः स्युः। यद्वा प्रज्ञामात्रा न स्युर्न भूतमात्राः स्युर्न ह्यन्यतरतो रूपं किंचन सिद्ध्येदिति। प्रतिपाद्येति। एतावता शेषोपासनमुक्तमधीमांसायाम्। श्रुत्यर्थस्तु अधिप्रज्ञं प्रज्ञामात्रास्थितयर्थः। एवं भूतमात्रासु दश प्रज्ञामात्रा इत्यर्थः। एवमुक्तयुक्त्योः

वभेदं प्रतिपादयन्, 'स एष प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः' इत्युपसंहरति ब्रह्मधर्मैः। अतः क्रियाज्ञानविषयरूपो भगवानेवेति प्रतिपाद्य, न तावन्मात्रं ततोऽप्यधिक इत्येकोपासनैव विहिता। तस्माज्जडजीवरूपत्वात् सर्वात्मकं ब्रह्मैवेति महावाक्यार्थः सिद्धः ॥ ३० ॥ १० ॥

इति प्रथमाध्याये प्रथमपादे दशममनुगमाधिकरणम् ॥ १० ॥

इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये प्रथमस्याध्यायस्य प्रथमः पादः ॥ १ ॥ १ ॥

भाष्यप्रकाशः ।

ज्ञानेति तासां प्रज्ञायाः सकाशादमेदं प्रतिज्ञायोपपादयति । 'तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः स एष इति । तथाच, यद् यज्जनकं तत् तद्धर्मकं, यद् यद्धर्मकं तत् तदविनाभूतमिति व्याप्त्या भूतमात्राप्रज्ञामात्रात्मकस्य सर्वस्य जगतः प्रज्ञाऽविनाभावेन तदात्मकत्वे सिद्धे तस्या अपि स्वरूपं निर्णेतुम्, आनन्दोऽजरोऽमृत इति ब्रह्मधर्मैरुपसंहरति । अतोऽत्र प्रज्ञात्मकजीवस्वरूपादधिकस्य ब्रह्मणः सर्वात्मकत्वसर्वाधिकत्वज्ञानार्थमेकैवोपासना विहिता । तस्मात् साध्वसाधुकारकतया प्राप्तस्य वैषम्यादिदोषस्यापि परिहाराद् ब्रह्म जडजीवात्मकतया सर्वोपादानत्वेन सर्वात्मकमित्येष महावाक्यार्थः सिद्ध इत्यर्थः । तेनेदमधिकरणं पूर्वोक्तस्य सर्वस्य निगमनार्थमिति बोधितम् । तथाहि । पूर्वं शास्त्रारम्भे जिज्ञासोक्ता । सा सर्वदा कर्तव्या । अन्यथा अरुन्मुखयत्यादिवद्विनाशः स्यादिति विषयवाक्यारम्भे बोधितम् । ततो जन्मादिसूत्रसिद्धं सर्वकर्तृत्वं समन्वयसूत्रसिद्धं सर्वोपादानत्वं चोपपादितम् । तत उपसंहारे, ईक्षत्यानन्दमयाधिकरणसिद्धोऽर्थः प्रज्ञात्मानन्दपदाभ्यां संगृह्य बोधितः । ब्रह्मधर्मोपदेशेन, लोकपालत्वादिबोधनेन, प्राणशब्दोक्त्या, स म आत्मेत्युपसंहारेण च यथायथं तद्धर्मोपदेशाद्यधिकरणार्थः

रश्मिः ।

सापेक्षत्वं प्रपञ्चयन्ति यदीत्यादि । ग्राह्यव्यतिरेकेण ग्राहकं न सिद्ध्यति ग्राहकव्यतिरेकेण ग्राह्यं न सिद्ध्यतीत्यर्थः । ग्राह्यग्राहकयोरभेदमाह नो इति । प्रज्ञामात्राभूतमात्रारूपमित्यर्थः । तासां भूतमात्राणाम् । तद्यथेत्यादि रथस्य स्यन्दनस्यारेषु मध्यवर्तिशलाकासु चक्रोपान्ते नेमिरर्पिता नाभौ चक्रपिण्डिकायामरा अर्पिताः यथा तथा भूतमात्राः शब्दादयः प्रज्ञामात्रास्विन्द्रियेष्वर्पिताः प्रज्ञामात्राश्च प्राणे ब्रह्मण्यर्पिताः । प्राणस्य ब्रह्मत्वमाह स एष इति । तथा चानेन दृष्टान्तेन नानात्वं नेत्यर्थः । अतः क्रियेत्यादिभाष्यं व्याकुर्वन्ति स्म अतोऽत्रेत्यादिना । महावाक्येत्यादि अवान्तरवाक्यार्थसमूहो महावाक्यार्थः । तथा च जडविशिष्टजीवेतिव्याप्तिवारणायेदमनुगमाधिकरणमिति भावः । जीव प्राणधारणे इति धातुपाठात् । प्राणरूपजडाधारो जीवः । औपाधिकब्रह्मणोऽभिन्नः इति । अन्यदपि प्रयोजनमाहुः तेनेत्यादि । विषयेत्यादि अरुन्मुखान् यतीन् शालावृकेभ्यः प्रायच्छमित्यनेन । श्रुत्यर्थस्तु न रुत् रुक् मुखे येषां तान् । शालावृका अरण्यश्वानः । तथा चावेदान्तमुखानां निन्दाश्रावणेन सर्वदा वेदान्तमुखत्वे प्राप्ते ब्रह्मजिज्ञासापि सर्वदा प्राप्तेति भावः । उपपादितमिति ता वा एता दशेत्यादिना निरूपितम् । तद्धर्मेत्यादि तद्धर्मोपदेशाद्यधि-

भाष्यप्रकाशः ।

संगृहीतः । तेन तथेति । अत्रोपासात्रैविध्यादिति पदं शंकरभास्कराचार्यभिक्षुभिः स्वस्वमतेनैव-मेवापत्तिमादाय व्याख्यातम् ।

रामानुजाचार्यैस्तु प्राचीनवृत्तिकारानुसारेणोपासात्रैविध्यपदमेकवाक्यत्वे हेतुत्वेन व्याख्यातम् ।

रश्मिः ।

करणचतुष्टयार्थः । ब्रह्मधर्मोपदेशस्तद्धर्मोपदेशः तस्मादन्तः परमात्मा लोकपालत्वादिरूपहृदयरूप-चरणाभिधानाज्ज्योतिर्ब्रह्म प्राणशब्दोक्त्या ब्रह्म ग्राह्यं लिङ्गात् । तल्लिङ्गाधिकरणे योर्थस्त्व आत्मेति लिङ्गात् ब्रह्मैव भवितुमर्हति प्रकृते इति तल्लिङ्गाधिकरणे अतिदेशाधिकरणे च तल्लिङ्गानां हेतुत्वात् । तथेति अनुगमत्वमुपलक्षणं चैतत् । प्रतिज्ञा प्रथमाधिकरणे अप्रतिज्ञातार्थस्य निग्रहस्थानत्वात् । प्रतिज्ञातार्थस्य लक्षणप्रमाणाभ्यां वस्तुज्ञानमिति द्वितीयाधिकरणे प्रतिज्ञातार्थविशेषलक्षणं विशिष्ट-ज्ञानस्य विशेषणरूपब्रह्मज्ञानाधीनत्वाद् दण्डीति ज्ञानवत् । ततस्तृतीयाधिकरणे सामान्यप्रकारक-जिज्ञासाया ब्रह्म कारणमित्यस्याविशेषप्रकारकजिज्ञासाजनकत्वात् ब्रह्माभिन्ननिमित्तोपादानकारणमिति जिज्ञासितम् । ततश्चतुर्थाधिकरणे ब्रह्मलक्षणस्य चित्यतिव्याप्तिः परिहृता । ईक्षत्याश्रयस्य चित्त्वात् । शब्दप्रवृत्तिसाधनेन लक्षणस्याभिधादिव्यापारश्च विचारितः । ततः पञ्चमाधिकरणे आनन्देतिव्याप्तिः परिहृता । आनन्दस्य ब्रह्मत्वप्रसाधनेन । तेन स्वरूपलक्षणस्य असंभवः परिहृतः । कार्यलक्षणलक्षिते । षष्ठे तद्धर्मोपदेशाधिकरणे बृहदारण्यके चक्षुर्हि वै सत्यं तस्माद्यदिदानीं द्वौ विवदमानावेयाता-महमद्राक्षमहमश्रौषमिति य एव ब्रूयादहमद्राक्षमिति तस्मा एव श्रद्दध्यामेत्यत्र प्रत्यक्षस्य शब्दापेक्षया श्रद्धेयत्वोक्त्या स्मृत्यादिसिद्धप्रमेयस्य ब्रह्मत्वमुक्तम् । भाष्ये परमात्मपदात् स्मृतौ परमवस्तुनि परमात्मपदात् तदुक्तमारणे ।

'स्मृतिः प्रत्यक्षमैतिह्यमनुमानश्चतुष्टयम् ।
एतैरादित्यमण्डलं सर्वैरेव विधास्यते' ॥ इति ।

ततः सप्तमे तल्लिङ्गाधिकरणे आकाशेतिव्याप्तिः परिहृता । आकाशपदस्य ब्रह्मार्थत्वात् । अष्टमेतिदेशाधिकरणे न्यायो नियमार्थस्य । यथान्यत्र ब्रह्मनिरूपणं न स्यात् भ्रमेण । नवमे ज्योतिश्चरणा-धिकरणे ब्रह्मधर्माणां मुख्यत्वसाधनेन प्रकाशाश्रयसूत्रादौ न द्वैतवारणं कृतमिति धर्मविषयत्वम् । दशमेनुगमाधिकरणे जडजीवरूपत्वाद् ब्रह्मणो जडे कार्येतिव्याप्तिः परिहृता । जीवे तु द्वितीयाध्याय-भोक्त्रापत्तिसूत्रीयाणुवादेन कार्येतिव्याप्तिः परिहृता । मय्येव सकलं जातमित्यादि निरूपितं कार्यमिति तेनाणुभाष्यमिति समाख्या 'ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः' इति गीताया इति । आपत्ति-मित्यादि उपासात्रैविध्यमापाद्य यदि जीवमुख्यप्राणलिङ्गानि स्युः तर्ह्युपासात्रैविध्यं स्यात् इत्येवमि-हाश्रितत्वात् इह तद्योगादेकैव ब्रह्मोपासनेति समाधानसूत्रं व्याख्यातम् । मायावादिभिर्मायापुरस्कारेण बुद्धिप्राणौ ह्युपाधी स्वीकृत्य प्रत्यगात्मनः स्वरूपेणाभेद इत्यतः प्राण एव ब्रह्मात्मेत्येकीकरणमविरुद्धम् । तत्त्वमस्यादिवाक्येभ्यो जीवस्यात्यन्तभिन्नत्वाभावाद् ब्रह्मणः । इहेति विषयवाक्ये । अतो न ब्रह्मवादे प्राणब्रह्मात्मनो भेददर्शनविरोधः । एवं स्वमतेन । भास्कराचार्यैः भेदाभेदेन । विज्ञानेन्द्रभिक्षुभिः अविभागाद्वैतेनेति । विशिष्टाद्वैते चिदचिद्विशिष्टं ब्रह्मेत्यापत्तिर्न संभवतीति पृथक् रामानुजमतेनोपन्यासः ।

भाष्यप्रकाशः ।

न ह्यत्र जीवमुख्यप्राणब्रह्मणां त्रयाणामुपासनमुच्यते, येन वाक्यं भिद्येत । किंतु भोक्तुर्जीवस्य धर्मैर्भोग्यस्य मुख्यप्राणस्य धर्मैः स्वधर्मैश्चेत्येवं त्रैविध्यादेकोपासनैव विधीयत इति, संभवत्येकवाक्यत्वे वाक्यभेदश्च नेष्यते इत्यभियुक्तोक्तेः पूर्वपक्षो न युक्त इति । तेषां धीरः शैवोऽप्येवमाह ।

तच्च वाचस्पतिमिश्रैरेवं दूषितम् । एतदालोचनीयम् । कथं न वाक्यभेद इति । युक्तं सोमेन यजेतेत्यादौ सोमादिगुणविशिष्टयागविधानम् । तत्र गुणविशिष्टस्यापूर्वस्य कर्मणोऽप्राप्तस्य विधिविषयत्वात् । इह तु सिद्धरूपं ब्रह्म न विधिविषयो भवितुमर्हति । अभावार्थत्वात् । भावार्थस्य विधिविषयत्वनियमात् । वाक्यान्तरेभ्यश्च ब्रह्मावगतेः प्राप्तत्वात्तदनुवादप्राप्तोपासाभावार्थो विधेयस्तस्य च भेदाद्विध्यावृत्तिलक्षणो वाक्यभेदोऽतिस्फुट इति भाष्यकृता नोद्घाटित इति ।

अत्रेदं बोध्यम् । तथाहि । अत्र हि मामेव विजानीहीत्यारभ्य, नीलं वेतीत्यन्ताऽऽऐन्द्रगुणविशिष्टैकोपासना । तदनु सहोवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्वेत्यारभ्यैवं हि पश्याम इत्यन्ता द्वितीया प्राणगुणविशिष्टस्य । तदन्वथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति तस्मादेतदेवोक्थमुपासीतेत्यारभ्य सिध्येदित्यन्ता प्रज्ञागुणविशिष्टस्य । तत्र पृथगुपासनाङ्गीकारे, मामेव विजानीहि स म आत्मेति विद्यादित्युपक्रमोपसंहारगतस्य वक्त्रात्मोपदेशस्य विरोध इति तदभावायैकवाक्यत्वस्यावश्यकत्वादुपासनात्रयपक्षस्त्वसंगतः । अथोपक्रमाद्यनुरोधेनावान्तरोपासनावाक्यानां तदनुवादेन प्रकारविधायकत्वमङ्गीकृत्यैन्द्रवाक्यत्वं चेदङ्गीक्रियते, तदा तत्रोक्तानां प्राणधर्माणां ब्रह्मधर्माणां च काल्पनिकत्वापत्तिः पूर्वोक्तरीत्या प्रतर्दनस्य पुरुषार्थासिद्धिश्चेति तदुभयं विहायात्र ब्रह्मवाक्यत्वं

रश्मिः ।

कथमेकवाक्यत्वे हेतुत्वमित्यपेक्षायामाहुः न ह्यत्रेत्यादिना । विवक्षितमेतार्थमाहुः किं तु भोक्तुरित्यादि । धीर इति उपासात्रैविध्यापत्त्यादिना भावस्य यद्यप्ययुक्तं तथापि दूष्यत्वेनेष्टविषयत्वाद्युक्तमपि विशेषणमिदं भगवतः शैवाचार्यस्य लाघवात् । सोमादीत्यादि सोमपदस्य मतुबन्ते लक्षणयेत्यर्थः । अप्राप्तस्येतिपदेनापूर्वविधित्वं सूच्यते उपासनाया विधिविषयत्वेन तद्विशेषणस्यापि विधिविषयत्वं मत्वा निषेधम् । यद्वा 'प्रज्ञां कुर्वीत ब्राह्मणः' इति बृहदारण्यके प्रज्ञारूपब्रह्मणस्तथात्वं मत्वा निषेधमाह इहेत्यादिना । निषेधक्षेपत्वेनाभावार्थत्वात् । विधिश्रवणस्य गतिं नियमविधिरूपामाह वाक्यान्तरेत्यादि । तस्येत्यादि प्राणादिधर्मैरुपासारूपस्य भावार्थस्य वेदाजानीहीति विध्यावृत्तिलक्षणनियमविधिरित्यर्थः । अत्रेदमित्यादि । दूषणे वाक्यभेदरूपे वक्ष्यमाणव्याख्यानातिसामञ्जस्यरूपं इदं दूषणं बोध्यम् । विरोध इति प्राणस्य जडत्वादिति भावः । तदनुवादेनेति प्राणप्रज्ञागुणानुवादेन । प्राणप्रज्ञागुणैः प्रकारौ तद्विधायकत्वं प्राणप्रज्ञागुणरूपप्रकारवदैन्द्रगुणविशिष्टोपासनाविधायकत्वमङ्गीकृत्येत्यर्थः । पूर्वोक्तेत्यादि प्राण इति सूत्रभाष्ये न हि परमात्मनोऽन्यद्धिततममस्ति परमानन्दरूपत्वात् । पापाभावश्च ब्रह्मविज्ञान एवेत्यादिना प्रोक्तरीत्या प्रतर्दनस्येन्द्रात्मैक्ये ब्रह्मैक्यरूपपुरुषार्थासिद्धेस्तथा । तदुभयमिति इन्द्रवाक्यत्वं प्रतर्दनवाक्यत्वं चेत्युभयम् । यद्वा

१. इन्द्र आत्मा ।

भाष्यप्रकाशः ।

सिद्धान्तितम् । तथा सति त्रितयपक्षस्य प्रागेव निरस्तत्वाद् विध्यावृत्त्यङ्गीकारे विधेरुद्देश्य-
व्यर्थप्रसंगाच्च प्रकारत्रयविशिष्टैकोपासनाविधिरेव सिद्ध्यतीति वाक्यभेदस्फुटत्वं कथमित्ये-
वालोचनीयं, न तु तद्भावसमर्थनमालोचनीयम् । किंच । भाष्यकृतापि ब्रह्मण एवैतदुपा-
धिद्वयधर्मेण स्वधर्मेण चैकमुपासनं त्रिविधं विवक्षितमिति तन्मतसिद्धमुक्तमतो व्याख्येय-
विरोधोऽपीति ।

नन्वेवमस्य प्राचीनपक्षस्य निर्दुष्टत्वे सिद्धान्तिना कुतोऽयं नादृत आपस्या च कुतो
व्याख्यातमिति चेन्न । त्रैविध्यादित्यस्य स्वरूपलोपपत्तमीत्वेनापत्तेरार्थिकतयाऽध्याहार्यत्वाभावेन
व्याख्याने दोषाभावात् । सिद्धान्ते तेषां धर्माणां जीवीयत्वादिना मानसैव भ्रान्तित्वबोध-
नेन ब्रह्मधर्मत्वस्यैव निर्णीततया प्राचीनप्रतिपन्नत्रैविध्यस्याप्यभावादिति बुध्यस्व ।

माध्वास्तु, ऐतरयोक्तं विश्वामित्रेन्द्रसंवादं विषयवाक्यत्वेनोदाहरन्ति ॥ ३० ॥ १० ॥

इति दशममनुगमाधिकरणम् ॥ १० ॥

इति श्रीवल्लभाचार्यचरणनखचन्द्रकिरणनिवारितहृदयध्वान्तेन
पुरुषोत्तमेन कृते भाष्यप्रकाशे प्रथमाध्यायस्य प्रथमः पादः ॥ १ ॥ १ ॥

रश्मिः ।

जीवं प्राणं चेत्युभयम् । यदुक्तम् ।

'युक्तिभिरतिशिथिलाभिः समादधानो दृढान् दोषान् ।
वाचस्पतिरपि भाष्ये व्याख्याव्याजेन दूषणं ब्रूते' ॥ इति ।

तत्स्फुटं दर्शयन्ति किं चेत्यादि । तन्मतेत्यादि अणुभाष्ये द्वितीयव्याख्यानेऽथ चेत्यादिना
वृत्तिकृन्मतानुसारेण व्याख्यातमिति रामानुजमतसिद्धमुक्तम् । अर्थात्तैर्वृत्तिकृन्मतानुसारेण व्याख्या-
नादिदमपि तदेवेति भावः । विरोध इति । यद्यपि वृत्तिकृन्मतानुसारेणाऽत्रवा नोपासात्रैविध्या-
दाश्रितत्वादिह तद्योगादित्यस्यायमन्योर्थ इत्यादिना वृत्तिकृन्मतेन व्याख्यानानन्तरमचीक्लृपन् शंकराचा-
र्यास्तट्टीकाकारा इदमेकदेशिमतमप्रामाणिकमित्युक्त्वा नात्रोपासात्रयविशिष्टब्रह्मविधिः । आरुण्याद्यनेक-
गुणविशिष्टब्राह्मणक्रयणवत् सिद्धस्य ब्रह्मणो विध्ययोगात् वाक्यभेदप्रसङ्गाच्च । न च नानाधर्मविशिष्ट-
मेकमुपासनं विधीयते । एवंविधवाक्यस्यात्राश्रवणात् । नापि मामायुरमृतमित्युपास्वेत्यत्र मामिति
जीवः, आयुरिति प्राणः, अमृतमिति ब्रह्म, इति स्वस्वधर्मविशिष्टमुपासनं विधीयते इति शक्यम् ।
ब्रह्माश्रुतेः । प्राणो वामृतमिति प्राणस्यैवामृतत्वकथनाच्चेति प्रथमव्याख्यानमेवमश्रुतमिति दूषितम् ।
तथापि द्वितीयस्य पूर्वापेक्षयाऽस्वरसराहित्याद्भाष्ये चास्य पक्षस्य नैर्बल्यासूचनाच्च टीकाकारोक्तमेवा-
संगतमित्याशयः । स्वरूपलोपेत्यादि तथा चोपासात्रैविध्यादित्यस्योपासात्रैविध्यमापद्येतेत्यर्थः ।
यथा प्रासादात्प्रेक्षते इत्यत्र प्रासादमारुह्येत्यर्थः । एवं च यदि ब्रह्मजीवमुख्यप्राणानां त्रयाणामपि
स्वतन्त्रत्वं त्वयोच्येत तदोपासात्रैविध्यमापाद्य वाक्यभेदो दूषणत्वेनोच्येत इत्यर्थः । ननु तथापि
वाक्यभेदप्रसङ्गस्य त्वध्याहार्यत्वमेवेति दोषतादवस्थ्यं तत्राहुः सिद्धान्त इत्यादिना । प्राचीन-
प्रतिपन्नेति तथाव्याख्याने समन्वयस्य अध्यायार्थस्य जीवप्राणयोः सत्त्वेनातिव्याप्तिरतोयमर्थ इति
भावः । उदाहरन्तीति ते देवाः प्राणयन्तः स एषोसुः स एष प्राणः प्राणकृत्त इत्येव विद्यात्तदवं

१. यत्र प्राणकृतः 'यस्मिन् प्राणः पवथा संविवेश' इति श्रुत्यन्तरात् ।

रश्मिः ।

प्राणोधितिष्ठतीत्याद्यनुगमादत्रापि प्राणो विष्णुरेव ।

'विष्णुमेवानयन् देवा विष्णुमूर्तिमुपासते ।
स एव सर्वे वेदोक्तसारद्यो देह उच्यते' ॥ इति स्कान्दे ।

इतिश्रीति । अणुभाष्येति अणुभ्यो द्वा सुपर्णेति श्रुत्युक्तेभ्यो भाष्यमिति चतुर्थीसमासः तस्य प्रकाश इत्यर्थः ।

'इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञमिति तद्विदः ॥
क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥
तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत् ।
स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥
ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितम्' ॥

इतिगीतात्रयोदशाध्यायवाक्येभ्यः ॥ ३० ॥ १० ॥

इति दशमाधिकरणम् ॥ १० ॥

इति श्रीविट्ठलेश्वरैश्वर्यनिरस्तसमस्तान्तरायेण श्रीगोविन्दरायपौत्रेण संपूर्णवेत्रा विट्ठलरायभ्रात्रीयगोकुलोत्सवात्मजगोपेश्वरेण कृते भाष्यप्रकाशरश्मौ प्रथमाध्यायस्य प्रथमः पादः संपूर्णतामगमत् ।

---

१. स एव प्राण इत्युक्तः । २. आद्यम् ।

श्रीकृष्णाय नमः ।

# श्रीमद्ब्रह्मसूत्राणुभाष्यम् ।

शुद्धाद्वैतब्रह्मवादनिर्गुणभक्तिमार्गप्रवर्तकाचार्यचक्रचूडामणि-
श्रीमद्वल्लभाचार्यचरणप्रणीतम् ।

दशदिगन्तविजयिश्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणप्रणीत-
भाष्यप्रकाशसंपूर्णवेत्तृश्रीमद्गोस्वामिश्रीगोपेश्वर-
जिच्चरणप्रणीतभाष्यप्रकाशरश्मिपरिबृंहितम् ।

## प्रथमाध्यायस्य द्वितीयपादः

'भगवद्धर्मपरायणसद्गतश्रेष्ठिगोवर्धनदास सुन्दरदास' इत्यस्य पुष्टिमार्गीय-
संस्कृतसाहित्यसमुद्धारार्थं निर्दिष्टद्रव्यसंग्रहतः 'प्राप्तभगवत्पद-
मूलचन्द्र तुलसीदास तेलीवाला, बी. ए., एल्एल्. बी.,
वकील, हाइकोर्ट' इत्येतेषां सुहृद्भिः
संशोध्य 'निर्णयसागर' मुद्रणालये
मुद्रयित्वा प्रकटीकृतम् ।

श्रीवल्लभाब्दाः ४६०. संवत् १९९५.
श्रीमदाचार्यचरणप्रादुर्भावोत्सवः

मूल्यं रूपकत्रयम् ।

श्रीकृष्णाय नमः।
श्रीगोपीजनवल्लभाय नमः।
श्रीमदाचार्यचरणकमलेभ्यो नमः।

# श्रीमद्ब्रह्मसूत्राणुभाष्यम्।

## भाष्यप्रकाश-रश्मि-परिबृंहितम्।

## अथ प्रथमोऽध्यायः।

### द्वितीयः पादः।

### सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥ (१।२।१)

समन्वये प्रथमेऽध्याये सर्वेषां वेदान्तानां ब्रह्मणि समन्वयो वक्तव्यः। तत्रो-

---

भाष्यप्रकाशः।

**सर्वत्र प्रसिद्धोपदेशात्** ॥ १ ॥ अथ द्वितीयपादं व्याचिख्यासवः पादानामेककार्यत्वरूपां परस्परसंगतिं क्रमनियामिकामवसररूपां च संगतिं प्रतिपादयितुं व्याख्येयाध्यायार्थकथनपूर्वकं पूर्वपादसिद्धः सर्व एवार्थः संक्षेपेण वक्तव्योऽन्यथा मन्दमतीनां पूर्वोक्तानवधारणेन वक्ष्यमाणार्थे संदेहः स्यादित्यतस्तमाहुः समन्वयेत्यारभ्य, संदेहो निवारित इत्यन्तेन। समन्वये सर्ववेदान्तसमन्वयप्रतिपादकत्वेन समन्वयाख्यया प्रसिद्धे प्रथमेऽध्याये उक्तविधः

रश्मिः।

**सर्वत्र प्रसिद्धोपदेशात्** ॥ १ ॥ इदानीं द्वितीयपादभाष्यं व्याचिख्यासवः सूत्रं मङ्गलत्वेन स्फुटं व्याख्यातुमाहुः सर्वत्रेत्यादि। अथ इति अयमानन्तर्यार्थे। एककार्येत्यादि अत्रैकस्य कारणस्य प्रथमचरणरूपस्य कार्यत्वमन्तर्यामिप्रतिपादकेस्मिन् पादेऽन्यत्र चेति प्रथमस्य द्वितीयादिभिरेककार्यत्वमेवं चतुर्णामपि पादानां परस्परमेककार्यत्वमुन्नेयम्। तथा हि। शब्दसंदेहनिवारणस्य प्रथमपादकृतस्य द्वितीयपादादिकरिष्यमाणार्थसंदेहनिवारणानां कार्यत्वमिति। अवसरेत्यादि प्रतिबन्धकीभूतजिज्ञासानिवृत्तौ सत्यामवश्यवक्तव्यत्वमवसरः। स च कार्यप्रतिपादकानां 'यतो वा इमानि' इत्यादीनां लक्षणार्थं भगवतो व्यासादेरन्तर्यामिप्रतिपादकापेक्षया प्राथमिकजिज्ञासाविषयत्वकथनेन तेषां ब्रह्मसमन्वयप्रतिपादनानन्तरं प्रतिबन्धकीभूतजिज्ञासानिवृत्तौ सत्यां जीवपुरस्कारेण कः समन्वय आधेयप्रतिपादकानामवश्यं वक्तव्य इति जिज्ञासया जीवपुरस्कारेण प्रतिपादकानां निरूपणादवसररूपामित्यर्थः। संक्षेपेण पूर्वपादार्थकथने प्रयोजनमाहुः अन्यथेत्यादिना। वक्ष्यमाणार्थे इति। अयमर्थः। पूर्वपादे इदमित्थतया प्रतिपाद्यत्वाभाव ईक्षत्यधिकरण उक्तः। अग्रे इदमित्थतया प्रतिपाद्यत्वाभाववदन्वये बुद्धिनिवेशसौकर्याभावात् सर्वत्र प्रसिद्धस्योपदेश उक्तः, वेदान्तानां शब्दत्वात्। प्रकर्षपदार्थं इदमित्थतया प्रतिपाद्यत्वं तेन सिद्धस्य न तु केनाप्यंशेन साध्यस्य। उपदेशो मननं उपदिश्यतेनेन मननेनेत्युपदेशः। करणे घञ्। 'उपदेश आचोच्चारणम्'

---

१. आधेय, कार्य,। २. आधेय।

भाष्यप्रकाशः ।

समन्वय एकार्थप्रतिपादकत्वरूपो वक्तव्यः । परप्राप्तिरूपफलसाधनाय तत्साधनीभूतब्रह्मज्ञानोपकाराय चावश्यं वाच्यः । न चानन्तेष्वनन्तशाखेषु वेदेषूपनिषद्भागरूपाणां वेदान्तानामप्यनन्तत्वादुक्तरीतिकसमन्वयोक्तेरशक्यत्वमसंगतत्वं वा शङ्क्यम् । प्रकारविशेषेण सर्वोपपत्तेरित्याशयेनाहुः तत्रेत्यादि । वक्तव्ये सर्वसमन्वये, अन्तस्तद्धर्माधिकरणादिविषयवाक्यभूतानामुद्गीथाद्युपासना-

रश्मिः ।

इत्यत्र मनोरमायाम् । एवं च धर्मित्वेन ज्ञानविचारः पूर्वपादे वृत्तः । अधुना तु धर्मत्वेन । 'वेदस्य विद्यमानत्वान् मर्यादापि व्यवस्थिता' इतिवाक्यात्, अथातो धर्मजिज्ञासेत्युक्तत्वात् । तत्र धर्मः महतः स्रष्टृव्यतिरिक्ते विराजादिः ।

'प्रथमो महतः स्रष्टा द्वितीयस्त्वण्डसंस्थितः ।
तृतीयः सर्वभूतस्थः यज्ज्ञात्वा मुच्यते बुधः' ॥

इति वाक्यम् । किंच मुण्डकत्रये अक्षराद्युक्तं तदनु प्रश्ने परब्रह्मान्वेषकरणं द्वितीयस्याम् । तृतीयस्यां ब्रह्मविद्योपनिषदि ।

'ब्रह्मविद्यां प्रवक्ष्यामि सर्वज्ञानमनुत्तमाम् ।
यत्रोत्पत्तिं लयं चैव ब्रह्मविष्णुमहेश्वरात्' ॥ इति श्रुत्याम्
'सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तै-
र्युक्तः परः पुरुष एक इहास्य धत्ते ।
स्थित्यादये हरिविरिञ्चिहरेतिसंज्ञाः
श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः' ॥

इति वाक्योपबृंहितायां व्याहृति ब्रह्म प्रसिद्धं तस्य मननाद्धर्मज्ञानविचार इति वक्ष्यमाणेर्थे संदेहो धर्मिनिरूपणं धर्मनिरूपणं वेति । धर्मिनिरूपणोपक्रमात् । तर्हि अस्तु धर्मिनिरूपणम् । मैवं । ब्रह्मविद्यात्वेनाक्षरस्य गुणत्रयविशिष्टस्यापि निरूपणे बाधकाभावात् पदशक्तेः प्राधान्यात् । वेदोपाङ्गत्वेन मीमांसायाः । वेदद्वारा मर्यादायां धर्मनिरूपणरूपायां पर्यवसानाच्च । न चैवं पूर्वपादमीमांसातिरिक्तमीमांसाया हेयत्वापत्तिः, प्रकाशाश्रमन्यायाद्धर्माणां धर्म्यभेदात् । अधिकारिणां मर्यादायां स्थितेरावश्यकत्वाच्च । विद्वन्मण्डने तथैवोक्तेः । अतो ज्ञानधर्मविचारः । एवं च प्रथमपादाग्रेतनपादेषु धर्मविचारो वा धर्मिविचारो वा सर्वत्र प्रसिद्धपदादुपक्रमाच्च । परप्राप्तीति पर एकार्थः अत एव जीवप्राणमुख्यसूत्रमापत्त्या व्याख्यातमन्यथा त्रयोर्थाः स्युरिति । तत्साधनीत्यादि परप्राप्तिरूपफलसाधनीभूतं यद्ब्रह्मज्ञानं तदुपकारः फलजननयोग्यता स च व्यापारेण स्यात् । तादृशभक्त्यर्थं तदङ्गद्वयं माहात्म्यज्ञानं ब्रह्मात्मैक्यज्ञानं च तत्र समन्वये पूर्वाङ्गं सर्वत्र वाक्यान्वयाधिकरणादौ ब्रह्मात्मैक्यं च प्रतिपाद्यते तस्मा इत्यर्थः । 'ब्रह्मविदाप्नोति परम्' 'भक्त्या जानाति चाव्ययम्' इति श्रुतिभ्याम् । 'नाहं वेदैः' 'भक्त्यात्वनन्यया शक्य' इति ।

'भगवान् ब्रह्म कार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया ।
तदध्यवसत् कूटस्थो रतिरात्मन्यतो भवेत्' ॥

इति 'अनन्ता वै वेदाः' इति श्रुतेराह अनन्तेष्विति । प्रकारेत्यादि यत्रैषां न्यायानां

१. ब्रह्म । २. ज्ञानव्यापारीभूतभक्त्यर्थम् ।

**ष्टीथाद्युपासनावाक्यानां मुख्यवाक्येषु फलोपकार्यङ्गत्वम् । ब्रह्मवाक्यानां पुनर्निःसंदिग्धानां समन्वयः स्वतः सिद्धः । संदिग्धानि द्विविधानि शब्दतोऽर्थतश्च ।**

भाष्यप्रकाशः ।

वाक्यानां मुख्यवाक्येषु फलसंबन्धबोधकेषु सर्वविधकारणताप्रतिपादकवाक्येषु फलोपकार्यङ्गत्वम् । तत्तदुपासनया तेन तेन रूपेण तत्तत्फलप्राप्तौ महामाहात्म्यज्ञानस्यात्मत्वस्फूर्त्या निरुपधिप्रेम्णश्च सिद्ध्या तस्य साधनस्य भक्तिरूपत्वसिद्धौ विवक्षितपरप्राप्तिरूपं फलं भवतीति तेषां तदङ्गत्वम् । तथा चानया रीत्याऽन्येषामनुक्तानामप्युपासनावाक्यानां प्रयोजनैक्यात् समन्वयः सिद्ध्यतीति न पूर्वोक्तो दोष इत्यर्थः । एवमन्येष्वपि बोध्य इत्याशयेनाहुः ब्रह्मवाक्यानामित्यादि । पूर्वं प्रतिपाद्यविषयभेदेन संदिग्धानि चतुर्विधान्युक्तान्यत्र तु तेष्वेव शब्दार्थभेदेन

रश्मिः ।

एकषष्टितमाधिकशतनामप्रसक्तिस्तत्र स्थले प्रकारविशेष (एवमारोपापवादसंगतिस्थले लक्ष्यलक्षणभावएककार्यत्वं वा संगतिप्रकारविशेषः) इत्यर्थः । स चाग्रे वाच्यः । मुख्यवाक्येषु लक्ष्यत्वं यत्तन्निरूपितलक्षणत्वावच्छिन्नं विशेषणमाहुः फलेत्यादि । मुख्यत्वं फलसंबन्धित्वं पूर्वतन्त्रे । 'ब्रह्मविदाप्नोति परम्' इत्यादिषु वेदान्तत्वेन वेदेभ्यः पश्चादुपयुक्तेष्वर्थतः संदेहभ्रमं वारयन्ति स्म सर्वेत्यादिना । सर्वा विधाः समवायित्वादयः । तेन कारणैः फलसंबंधो न त्वधिकारिभिः 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादाविति बोधितम् । ब्रह्मविदित्यत्र विशब्दे संदेहो ज्ञानप्रतिपादको वा भक्तिद्वारकज्ञानप्रतिपादको वेति । आकाशस्तल्लिङ्गादित्यधिकरणे आकाशशब्दो ब्रह्मणि प्रयुक्तो भौतिकाकाशे वेति । अत्र फलं माहात्म्यप्रतिपादनस्याधिदैविकचित्तशुद्धिद्वारा प्रेमा तस्य संबन्धान्मुख्यवाक्यत्वमवान्तरं फलं ब्रह्मविदेत्युक्तम् । एतत्स्फुटीकुर्वन्ति स्म तत्तदित्यादि । तेनतेनेत्यादि तं परमात्मानं यथा यथोपासते तद्भूतान् भूत्वावर्तीतिश्रुतेः । 'भगवानेव हि फलं स यथाविर्भवेद् भुवि' इति तत्तत्फलप्राप्तौ ।

'देवान् भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ' ॥

इति महामाहात्म्यज्ञानस्य निरुपध्यंशे कारणत्वसिद्ध्यात्मत्वस्फूर्तिस्तत्त्वमस्यादिवाक्येन तत्करणको निरुपधिश्चित्तशुद्ध्यानन्यार्थ एकात्मविषयः प्रेमा तस्य सिद्ध्या च तस्य परायणस्य फलस्य भक्तिरूपस्य साधनस्य तात्पर्यवृत्त्या ज्ञानविषयस्य सिद्धौ व्यापारस्योल्लेखोयम् । न पूर्वोक्त इति समन्वयोक्तेरशक्यत्वरूपोऽसंगतत्वरूपश्च दोषो न । प्रेमरूपस्य फलोपकार्यङ्गत्वं महामाहात्म्यज्ञानस्येत्यनया रीत्येत्यर्थः । फलोपकार्यङ्गत्वात् अनुक्तानामप्युपासनावाक्यानां प्रयोजनैक्याच्च । तेषामुपासनावाक्योक्तानां क्रमप्राप्तसाधनानां ब्रह्मविदेत्युक्तफलोपकार्यङ्गत्वमित्यर्थः । आत्मनैक्यज्ञानस्य भक्तिसाधनत्वाविशेषेपि हि 'आवृत्तिरसकृदुपदेशात्', इति न्यायेनावृत्त्यर्थं माहात्म्यज्ञानं स्मरणात्मकं तस्य सिद्धिमात्रमुक्तम् । पूर्वोक्त इत्यादि आभासोक्तदोषः । भाष्ये । निःसंदिग्धानां 'सत्यं ज्ञानमनन्तं ब्रह्म' 'सत्यं विज्ञानमानन्दं ब्रह्म' इत्यादीनाम् । प्रकृते । पूर्वमित्यादि ईश्वरत्व-

१. तथैव भवतीति ।

तदर्थं चैतद्विचारितम् । ब्रह्मणि व्यवहारोऽस्ति कश्चिन्न वेति । तत्र प्रथमसूत्र एव व्यवहारः स्थापितः । 'यतो वाचो निवर्तन्ते' इत्यादीनां विशेषेणेदमित्थतया निरूपणनिषेधनपरत्वम् । एवमेव कार्यसिद्धेः । अधीतानां ब्रह्मवाक्यानां चतुर्लक्षण्या ब्रह्मपरत्वे सिद्धे श्रवणं सिद्ध्यति । श्रुतस्य कालान्तरेऽप्यसंभावनाविपरीतभावनानिवृत्त्यर्थं पूर्वस्थितानामङ्गानामनपेक्षितानामुद्वापेनान्येषामपेक्षितानामावापेन तस्यैवार्थस्य निर्द्धारणे मननं भवति ।

---

भाष्यप्रकाशः ।

संदिग्धत्वमाहुः संदिग्धानीत्यादि । तथाचैवं वाक्यविचारेणानुक्तानामपि समन्वयसिद्धिरित्यर्थः । एवमध्यायार्थस्य सर्वोपयोगित्वमुक्त्वा पादार्थस्य वक्तुं तत्रत्याधिकरणानां प्रयोजनमर्थं च वदन्तः पूर्वं प्रथमस्याहुः तदर्थमित्यादि, तृप्तिवदित्यन्तेन । तदर्थमिति समन्वयार्थम् । विचारितमिति ईक्षत्यधिकरणे विचारितम् । ईक्षत्यधिकरणं चतुर्थं तत्र विचारितस्य कथं प्रथमार्थत्वमित्यत आहुः तत्र प्रथमेत्यादि । स्थापित इति प्रमाणलक्षणप्रभृतिभिः स्वरूपादिचिन्तनस्यैव विचारपदार्थत्वात् तत्प्रतिज्ञयैव स्थापितः । तथाच विचारस्य चतुर्थे सत्त्वेऽपि स्थापनस्य प्रथमे कृतत्वात् प्रथमार्थत्वमित्यर्थः । ननु सत्यं स्थापितस्तथापि श्रुत्यन्तरविरोधानादरणीय इति शङ्कायां तत्परिहारप्रकारमाहुः यतो वाच इत्यादि । अस्याः श्रुतेरेवंतात्पर्यकत्वे गमकमाहुः एवमेव कार्यसिद्धेरिति । कार्यं श्रवणादिकं तत्सिद्धेरित्यर्थः । नन्वेवं वाङ्निवृत्तिश्रुतिसंकोचने किं मानमित्याकाङ्क्षायामेतदेव विभजन्ते अधीतानामित्यादि । 'आत्मा वा अरे द्रष्टव्यः' इत्यादिश्रुतावात्मदर्शनसाधनत्वेन श्रवणादित्रयमुक्तम् । तत्रात्मा परब्रह्मेति तस्य वागाद्यविषयत्वे प्रमाणलक्षणादिसंसर्गाभावेन श्रौतानां पदवाक्यादीनां ब्रह्मावाचकतया तद्वाचकपदादिशक्तितात्पर्यावधारणरूपस्य श्रवणस्यासंभवात् । तदभावे च, तदुपजीवकस्य, 'तत्त्वेव भयं विदुषोऽमन्वानस्य' इत्यनेनावश्यकतया श्रावितस्य मननस्य, तदुपजीवकस्य निदिध्यासनस्य चासंभवान्न ज्ञानस्यापि सिद्धिर्मोक्षसिद्धिश्चातो मोक्षसाधनबोधकश्रुतिवैयर्थ्यपरिहारा-

रश्मिः ।

धिकरणे कार्यान्तर्याम्युपास्यरूपप्रतिपादकत्वेन विप्रकीर्णकत्वेन च चतुर्विधानीत्यर्थः । सर्वेत्यादि सर्ववेदान्तीयाविरोधसाधनफलोपयोगित्वम् । प्रमाणेति शास्त्रं प्रमाणं जगज्जन्मादिकर्तृत्वं लक्षणं द्वितीयसूत्रे प्रभृतिशब्देन तुरीयसूत्रेऽशब्दत्वनिषेधस्तदादिभिः । स्वरूपेति स्वरूपं सत्यज्ञानानन्तानन्दादि तत्समस्तं कार्यलक्षणकथनमुखेन द्वितीयसूत्रे समर्थितम् । असंदिग्धं न विचारार्हमिति । व्यस्तं तु सत्यं जन्माद्यधिकरणे द्वितीयस्कन्धनवमाध्यायानुरोधेनानन्दस्यापि वक्तव्यत्वेऽप्यानन्दमयाधिकरणे वक्तव्यत्वादत्र न गृहीतम् । ज्ञानमीक्षत्यधिकरणे । शब्दरूपानन्तं च प्रतिपादकमिति । आनन्दः आनन्दमयाधिकरणे इत्येवं ज्ञेयम् । स्थापित इति स्थापनं च परपक्षनिराकरणपूर्वकस्वपक्षस्थापनम् । परपक्षनिराकरणं 'अत' इति पदेन । स्वपक्षः ब्रह्मजिज्ञासाधिक्रियत इति, तस्य स्थापनम् । अव्यवहार्ये कुतः प्रमा । यदभावे यन्नाभाव इति व्यवहारस्तथा । भाष्ये व्यवहारः शब्दव्यापारोभिधा गौणी तात्पर्यनामा 'यतो वाचः' इति श्रुतेः 'व्यवहारः सन्निपातो मनोमात्रेन्द्रियासुभिः' इतिवाक्ये वाचा इन्द्रियेण व्यवहारः सन्निपातः । प्रकृतेऽमन्वानस्ये-

भाष्यप्रकाशः ।

यानिरुक्तश्रुतिविरोधपरिहाराय च ब्रह्मणः श्रुत्यात्मकवागादिविषयत्वाङ्गीकार आवश्यकः । न चैवमभ्युपगमे उक्तश्रुतौ संकोचापत्तिः । विशेषेणेदमित्थतया निरूपयितुमशक्यस्यानुभवैकवेद्यतया वागादिनिवृत्तिभवनेन संकोचाभावात् । न चैवमनुभवैकवेद्यत्वे मनोविषयत्वस्य संभवान्मनसा सहेत्यस्य विरोधः । लोके मनसा ज्ञायमानानामपि फलतण्डुलादिपाकनानाविधान्नभोजनतज्जन्यतृप्तीनामिदमित्थताया अविषयत्वस्य सर्वजनीनत्वेनात्रापि तथात्वस्य युक्ततया मनसो निवृत्तेर्विरोधलेशस्याप्यभावादित्यतस्तथोच्यत इत्यर्थः । भाष्ये तु वास्तवेन यत्किंचिद्रूपेण येनकेनचित् प्रकारेण निरूपणेऽपीदमित्थतया निरूपणस्य संभवात् तद्वारणाय विशेषेणेति पदं बोध्यम् । तथा पूर्वस्थितान्यङ्गानि ब्रह्मवाक्यस्थानि बोध्यानि । उद्वापस्तु

रश्मिः ।

त्यस्यामननकर्तुरित्यर्थः । अनिरुक्तेत्यादि 'यदा ह्येवैष एतस्मिन्नदृश्येनात्म्येनिरुक्तेऽनिलयने अभयं प्रतिष्ठां विन्दते अथ सोऽभयंगतो भवति' इति श्रुतावदृश्यत्वादिगुणक स्थितिं प्राप्तस्य मुक्तिरुक्तेति विरोधपरिहारायेत्यर्थः । इदमित्थताया इति 'आश्चर्यवत् पश्यति कश्चिदेनमाश्चर्यवद् वदति तथैव चान्यः' इति स्मृतेर्जीवविषयत्वम् । एतेन पाकभोजनतृप्तीनां मनोमात्रवेद्यानां सर्वथा वागवेद्यत्वमित्युक्तं तत्प्रसङ्गेन स्मृतस्य यतो वाच इतिश्रुतिघटितस्य भाष्यस्य विशेषेणेतिपदस्य कृत्यं कुर्वन्तः स्वोक्तं समर्थयन्ते भाष्ये त्वित्यादिना । यत् किंचिद्रूपं सत्यविज्ञानानन्दरूपं सत्यज्ञानानन्तरूपम् केनचित्प्रकारेण सत्यत्वादिना विशेषेणेति । 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति केनेषितोपनिषदि 'यस्यामतं तस्य मतं मतं यस्य न वेद सः' इति च श्रुतिभ्यामिदमित्थतया विशेषेण प्रकारेणेत्यर्थः । पूर्वस्थितानामित्यादिभाष्यार्थमाहुः तथेत्यादिना । प्रतिपिपादयिषितानन्दमयहिरण्मयादिरूपाणि द्वादशाङ्गानि कमनीयानि तथा बृहद्वामनपुराणे निर्गुणं पठितम् । तत्र जिज्ञासाधिकरणाद् ब्रह्मेत्यनुवर्तते न ब्रह्मत्वं तच्च जन्माद्यधिकरणे शास्त्रयोनिसमानाधिकरणं तदपि समन्वयाधिकरणेऽभिन्ननिमित्तोपादानरूपमीक्षत्यधिकरणे वाग्व्यापारविषयत्वं यद्यपि तथापि ब्रह्मोभयव्यपदेशाद्यधिकरणेषु विरुद्धसर्वधर्माश्रयत्वेन प्रतिपिपादयिषितमिति सर्वतः पाणिपादान्तत्वादयः प्राप्नुवन्ति । ते तृतीयाध्यायतृतीयपादे सर्ववेदान्तप्रत्ययाधिकरणेषु व्यवस्थितानि विरुद्धोपसंहारनिषेधादावापोद्वापाभ्यामङ्गानि तदेतदाहुः उद्वाप इत्यादिना । यथानन्दमात्रकरपादमुखोदरादिरूपं 'ध्येयः सदा सवितृमण्डलमध्यवर्ती' इत्यत्र रूपं तत्तदुपासकोपास्यं तत्र प्रकृतपरत्वेन प्रतीयमानस्य व्यापकत्वादेस्तदन्योक्षरस्तत्परत्वेन कल्पनम् । यद्वा यद्येवं यथाश्रुतमभिमतं स्यात् तदेवं परिच्छिन्नत्वेन दृश्यमानं न श्रुतं स्याद् यतः श्रुतमत एवमित्यापत्तिः । अन्यो व्यापकत्वस्फुटसत्यत्वादिविशेषस्फुटस्तत्परत्वेन प्रतीयमानस्य पूर्वोक्ताङ्गस्य प्रकृतानन्दमयादिपरत्वापादनम् । यद्येवं यथाश्रुतमभिमतं स्यात् तदेवं 'ब्रह्मविदाप्नोति परम्' इत्याद्युक्तपरप्राप्तिरूपं फलं न श्रुतं स्यात् न वा'आनन्दमानन्दमयोवसाने' इति फलं स्मृतं स्याद्, यतः श्रुतमत एवास्फुटव्यापकत्वस्फुटसत्यत्वादिविशिष्टमित्यापत्तिः । 'यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात्' इति श्रुतेः । न चैवं सर्वतः पाणिपादान्तत्वविशिष्टब्रह्म किमिति वाच्यम् । साकारब्रह्मवादे मुनिरूपाणि यथा तथा तदप्यक्षराधिकरणादौ ब्रह्मत्वेन प्रत्यपादि । विद्वन्मण्डने निर्गुणसगुणयो-

ततोऽप्येवं ध्यानादिसमाध्यन्तरूपनिदिध्यासनरूपं मनसि सर्वतो निवृत्तं-

भाष्यप्रकाशः ।

प्रकृतपरत्वेन प्रतीयमानस्यान्यपरत्वापादनम् । आवापस्त्वन्यपरत्वेन प्रतीयमानस्य प्रकृतपरत्वापादनम् । ततोऽप्येवमिति । मननानन्तरमभ्यासेन निर्धारणे तदार्ढ्ये वा । निदिध्यासनरूपमिति । अत्र ज्ञानमिति शेषः । रूपपदरहितः पाठो वा । मनसीत्यादिना तु

रश्मिः ।

रमेदः सिद्धान्तित एव । तथा च भाष्यार्थ इत्थम् । श्रवणं मैत्रेयीब्राह्मणे 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुत्याऽरे मैत्रेयीति संबोध्य विहितं श्रवणमन्येषां सिध्यति तच्च स्वनिर्वाहके कीर्तनस्मरणे आदायैव तदुक्तं द्वितीयस्कन्धसुबोधिन्याम् ।

'तस्माद् भारत सर्वात्मा भगवान् हरिरीश्वरः ।
श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताऽभयम्' ॥

इत्यस्य । श्रुतस्य तद्विस्मरणकालेपि गृहव्यापाराद्यासक्तौ व्यापकत्वनिष्कलनिष्क्रियत्वादेरसंभावना तद्विपरीता नानन्दमयसाकारत्वकमनीयत्वादिमात्रभावना तन्निवृत्त्यर्थं पूर्वस्थितानामित्यादिः । ततस्तस्यैवाचार्यग्रन्थादिद्वारा श्रुतस्य मननं शाब्दज्ञानम् । न शाब्दापरोक्षम् । अभावालम्बनं हि तत् । न च छान्दोग्ये श्वेतकेतूपाख्याने 'न्यग्रोधफलमत आहर' इत्युपक्रम्य 'किमत्र पश्यसीति न किंचन भगव इति' इत्यभावस्यैव मूलत्वमिति शङ्क्यम् । 'तꣳहोवाच यं वै सोम्यैतमणिमानं न निभालयस एतस्यैव सोम्यैषोणिम्न एवं महान्यग्रोधस्तिष्ठति श्रद्धत्स्व सोम्येति' 'स य एषोणिमैतदात्म्यमिदं सर्वं तत् सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इत्यत्राभावस्याणिमत्वेनादृश्यभावत्वात् । अणोर्भावोणिमा । न केनापि भावयितुं शक्यमतोऽभावं वदन्त्येनमिति व्युत्पत्तिर्विद्वन्मण्डनान्ते वाक्येस्ति । निभालयसे पश्यसि । श्वेतकेतुं पुत्रं प्रति उद्दालकवचांसि । साधनवैय्यर्थ्यं च स्यात् । न च प्रकृतेप्यणिम्नैवाभावस्यालम्बनत्वमिति वाच्यम् । अभावत्वेनैव योगसूत्रे उपादानात् । 'एतेन योगः प्रत्युक्तः' इत्यत्र 'योगोप्येकः सदादृतः' इति निबन्धात् निरीश्वरयोगः प्रत्युक्तः । अन्यथा 'स्मृतेश्च' इत्यादिसूत्रे योगशास्त्रीयगीतास्मृतेरुल्लेखो न स्यात् । न च सूत्राणामेषामविशेषितत्वम् । स्कन्दपुराणीयनिर्विशेषितसूत्रत्वं ब्रह्मसूत्रस्य चाप्यत इति वाक्यार्थसिद्धस्य तस्य पुराणमतत्वात् । मननं युक्तिभिरनुचिन्तनं स्मरणम् । अवबोधो वा । मनु अवबोधे । सति सप्तमी वा । प्रकृते । मननेत्यादि । अविहितभक्त्यां श्रवणादित्रयम् । श्रवणादित्रयमन्वन्यासां भक्तीनां स्वयमेव भवनात् । विहितभक्तौ तु अवोपसर्गार्था धातुपाठे, अव रक्षणप्रवेशतृप्तिकान्तिगतिक्रियादीप्तिप्रीत्यवगमस्वाम्यर्थयाचनश्रवणहिंसेच्छावृद्ध्यालिङ्गनावासिदहनभावेषु । भ्वा. प. से. अत्र क्रमेणार्थ एवं भाति । रक्षणप्रवेशतृप्तीनां बोधे ज्ञानमार्गबोधः । विषयरक्षणमक्षरे प्रवेशः तृप्तिस्तु सायुज्ये जले निमग्नस्य जलपानवदिति दृष्टान्तेन । भक्तिमार्गबोधस्तु कान्त्यादिज्ञाने । 'ज्ञानी चेद् भजते कृष्णम्' इति निबन्धे भजनकारणेच्छा कान्तिः । जानातीच्छति यतत इति नैयायिकप्रवादात् । कान्त्या गतिः फलं मर्यादामार्गे 'सायुज्यं कृष्णदेवेन शीघ्रमेव ध्रुवं फलम्' इतिवाक्योक्तम् । पुष्टिमार्गे गतिरलौकिकसामर्थ्यम् । भगवता सह गानादि व्रजभक्तानामिव । सर्वात्मभावे भजनानन्दो गतिः । तत्र त्रिषु मार्गेषु क्रिया भगवल्लीला अपि । दीप्तिर्ज्ञानम् । प्रीतिः स्नेहः । अवगमः स्वरूपाधिगमः । अवोप-

रश्मिः।

सर्गोपादानेनावगमेपि पुनः पूर्वोक्ताः साधनवैजात्येन फलरूपा ज्ञेयाः। स्वाम्यर्थो भक्तिमार्गे। याचनं निर्गुणे गुणमिश्रणम्। ततः श्रवणम्। अन्यथा 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्' इत्यादि स्यात्। अन्यमार्गे मार्गत्वहिंसा। इच्छा स्वोत्कृष्टत्वेच्छा। वृद्धिराकारस्येव दत्तानामलौकिकदेहानाम्। 'अलौकिकस्य दाने हि चाद्यः सिद्ध्येन् मनोरथः' इति सेवाफलोक्तवाक्यात्। आलिङ्गनं सर्वमार्गेषु। अवाप्तिः संयोगे ब्रह्माप्राधान्येनापि प्राप्तिः। विरहे दहभावः। 'अस्यैव चोपपत्तेरूष्मा' इतिसूत्रात्। तथा च श्रुतिः। 'तं भजेत्' इति गोपालतापनीये। 'भजनं श्रवणादिसरणिः' इति भक्तिहंस इति वैधत्वम्। तेन निर्धारण इति निमित्ते सप्तमी व्याख्याता। निमित्तमिह फलम्। निर्धारणं दार्ढ्यस्याप्युपलक्षकं 'दुर्बुद्धेस्तु ततो द्वयम्' इति भाष्यात्। प्राज्ञस्य दार्ढ्यमात्रं तदाहुः तद्दार्ढ्यं वेति। एवमावापोद्वापाभ्यां ध्यानादीत्यर्थः। 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' इति न्यायात्। यदेकमव्यक्तमितिश्रुतेश्च ततोप्येवं ध्यानादीत्यन्वयः। 'आवृत्तिरसकृदुपदेशात्' इति सूत्रात्। समाध्यन्तरूपेत्यत्र समाध्यन्तरूपमिति पारस्करः पाठ इति ज्ञापितम्। अत्रादिपदेन भाष्ये धारणा। संप्रज्ञातासंप्रज्ञातसमाध्योस्त्वत्र संप्रज्ञातः सिद्धिहेतुत्वान् न मोक्षफलक इति न स संगृह्यते। अतोत्र द्वितीयो ग्राह्यः। अभ्यासवैराग्ये अपि ग्राह्ये। हेतुत्वात्। ननु यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाधिरूपाष्टाङ्गो हि योगः स कथं पञ्चाङ्गरहितो भवेदिति चेन्न। अत्र भक्तियोगस्य विवक्षितत्वाद् भाष्यस्य भक्तिमार्गीयत्वाद् स च गीतायां भक्तियोगाख्ये द्वादशेध्याये।

'ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः।
अनन्येनैव योगेन मां ध्यायन्त उपासते'॥

इत्यनन्ययोग उक्तस्तत्र।

'मय्येव मन आधत्स्व मयि बुद्धिं निवेशय।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः'॥

इति 'परो हि योगो मनसः समाधिः' इतिवाक्योक्त उक्तः, ध्यानं एकैकाङ्गे मनआधानं, धारणायां सर्वाङ्गे मनआधानं बुद्धिनिवेशनानन्तरं ध्यानादिविषयज्ञाने सति। ततो ब्रह्मणि निवासस्तत्र मनएकीभावे सायुज्य इव समाधिरिति। न च पञ्चाङ्गानन्तरमेतद् भावि। 'एतेन योगः प्रत्युक्तः' इत्यत्र योगस्य प्रत्याख्यानात्। गीतामूर्धन्यविश्वरूपदर्शनाध्याये।

'नाहं वेदैर्न तपसा न दानेन न चेज्यया।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा॥
भक्त्या त्वनन्यया शक्य अहमेवंविधोर्जुन।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप'॥

इति भक्तिमात्रग्राह्यत्वात् तस्य। 'भक्त्या प्रसन्ने तु हरौ तं योगेनैव योजयेत्' इति निबन्धाद् भक्त्यनन्तरं योगः, स मनसः समाधिः। ननु श्रीभागवत एकादशे चतुर्दशे भक्तिससाधनध्यानयोगनिरूपणाध्याये 'मुमुक्षुरेतन् मे ध्यानं त्वं वक्तुमर्हसि' इत्युद्धवप्रश्ने श्रीभगवानुवाच 'स म आसन आसीनः' इत्यादि। तत्रासनप्राणायामध्यानादिप्रत्याहाराणां निरुक्तत्वेन योगशिखायाम्।

'आसनं पद्मकं बध्वा यच्चान्यद्दापि रोचते।

रश्मिः ।

कुर्यान् नासाग्रदृष्टिश्च हस्तौ पादौ च संयुतौ ।
मनः सर्वत्र संयम्य ॐकारं तत्र चिन्तयेत् ।
ध्यायेत सततं प्राज्ञो हृत्कृत्वा परमेष्ठिनम्' ॥

इति चासनप्राणायामचिन्तनादिपदार्थानामुक्तत्वेन च कथं ध्यानादित्रिकोपादानमिति चेन् न । त्रयोदशाध्यायोक्तज्ञानाङ्गभक्तेश्चतुर्दशेध्याये उक्तत्वात् । योगशिखायामपि ज्ञानोक्तेर्ज्ञानयोगपरत्वात् । श्रुतीनां यमनियमप्रत्याहारशून्यत्वेन योगमार्गीयत्वाभावेपि योगतत्त्वोपनिषदि ।

'शुद्धस्फटिकसंकाशं किंचित् सूर्यमरीचिवत् ।
लभते योगयुक्तात्मा पुरुषोत्तमतत्परः' ॥

इति पुरुषोत्तमपराणामस्माकं तत्रोक्तं प्राणायामरूपं साधनं ग्रहीष्यते श्रुत्योर्विरोधे व्यवस्थित-विकल्पात् । नन्वेवं ध्यानाङ्गबोधकतत्सिद्धौ तनुवित्तजे इत्यस्य विरोध इति चेन् न । अत्रेदं प्रतिभाति । स्कन्दपुराणोक्तगीतामाहात्म्ये विश्वरूपदर्शनाध्यायमचर्चिका नास्ति । तत्राध्याये तत्राप्युपसंहारेर्थनिर्णायके ।

'मत्कर्मकृन् मत्परमो मद्भक्तः सङ्गवर्जितः ।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव' ॥

इत्यत्र भगवत्कर्मकृत्त्वकक्षायां प्रथमाधिकारकाद् धर्मरूपत्वेन 'धर्मेण पापमपनुदति' इतिश्रुतेः पापाभावः फलम् । तत्र श्रौतमङ्गम् । आवृत्तिरसकृत्साधनानामिति ह्यावृत्तौ मत्परमत्वकक्षायां भागवतधर्माचरणेन मध्यमाधिकारात् पापापनोदनद्वारा पञ्चपर्वविद्यायोगयोगे प्रेमा फलम् । तपो वैराग्ययोगे तु ज्ञानं फलम् । ततः प्रेम्णा मद्भक्तत्वरूपोत्तमाधिकारात् पापापनोदनद्वारा सायुज्य-भगवत्सेवोपयोगिदेहालौकिकसामर्थ्यानि फलानि । तत्र तनुवित्तजे सेवे अङ्गे इति मानसीसेवाद्वारा त्वेते विशिष्टफले । नन्वश्रौते ते हीनाधिकारे प्रविशेतामिति चेन्न । रामोपनिषदि सेवाविधानात् संप्रदायप्रदीपेपि तथा सर्वज्ञाचार्यवचोभिश्च तथेत्यलम् । ननु तथापि योगयोग उक्त इति चेन् न । योगस्य सूत्रे प्रतिवचनेप्यात्मसंयमयोगादिमादायादोषात् । तत्रापि 'शुचौ देशे प्रतिष्ठाप्य स्थिर-मासनमात्मनः' इत्यादिश्रवणात् । सर्वत्र योग ईदृशो ग्राह्यः । अत्र युज योगे रु. उ. अनि., पूर्वत्र तु युज समाधौ दिवा. आत्म. अनि., सायुज्येत्यत्र युज संपर्के चु. प. से., अतो यथासंभवं ग्राह्यः । भक्तियोग इत्यत्र भक्त्या योगः भक्तियोगः तृतीयासमासः । 'भक्तियोगः पुरैवोक्त' इत्यत्र भक्तियोगौ भक्तियोगः । आवासुर्वा । भक्तिरेव भक्तियोगः । बाहुलकाद् योगशब्दः प्रयुक्तो निरर्थकः । योगः कर्मसु कौशलमिति वाक्यात् भक्त्या कर्मकौशलं वा भक्तियोगः । तदुक्तं शास्त्रार्थे ।

'एवं सर्वं ततः सर्वं स इति ज्ञानयोगतः ।
यः सेवते हरिं प्रेम्णा श्रवणादिभिरुत्तमः ॥
प्रेमाभावे मध्यमः स्याज् ज्ञानाभावे तथाधमः ।
उभयोरप्यभावे तु पापनाशस्ततो भवेत् ॥
तपोवैराग्ययोगे तु ज्ञानं तस्य फलिष्यति ।
योगयोगे तथा प्रेम स्तुतिमार्गं ततोन्यथा' ॥

व्यापारे स्वयमुपलब्धनिजसुखानुभवरूपं ब्रह्म। इदमेव ब्रह्मज्ञानमिति । अतस्ता-दृशस्यानुभवैकवेद्यत्वाद्युक्तमविषयत्वम् । पाकभोजनतृप्तिवत् ।

भाष्यप्रकाशः ।

दृष्टव्यपदोक्तस्य ज्ञानस्य स्वरूपकथनम् । इदमिति ब्रह्मस्वभावजन्यम् । युक्तमिति अनुभवस्य प्रादुर्भावापेक्षत्वात् प्रादुर्भावस्य च वरणाधीनत्वात् प्रमाणबलस्य कौण्ठ्येन तस्याकिंचित्करत्वा-द्युक्तम् । तथा चैतत्सर्वमनुसंधाय जिज्ञासासूत्रप्रणयनाद् व्यवहारस्थापनं प्रथमाधिकरणार्थ इत्यर्थः ।

रश्मिः ।

इति ध्यानादिसमाध्यन्तरूपनिदिध्यासनरूपं ब्रह्मेत्यग्रेतनब्रह्मपदेनान्वयः । तदुक्तं अत्र ज्ञानमिति शेष इति । अग्रे पाठो वेत्यत्र वाकारोऽनादर इति । यद्वा, निदिध्यासितव्य इत्यत्र निदिध्यासनार्ह इत्यर्थाद् रूपपदेन निदिध्यासनेन रूप्यते व्यवह्रियते यज् ज्ञानं ब्रह्मेति भाष्यप्रकाशे प्रकाशितम् । नितरां दिध्यासत इति निदिध्यासनं सनन्ताद् ध्यै चिन्तायामित्यस्माद् भावे ल्युट् । युवोरनाकौ सनर्थोऽविवक्षितः रामानुजाचार्याणां विविदिषन्तीत्यत्र यथाऽविवक्षितः । ननु वेदोक्षर-मात्रमपि नान्यथा वदतीति भाष्यात् सनर्थो वाच्य इति चेच्छृणु तात्पर्यं, ध्यानादीच्छापि पुरुषार्थसाधिकेति । यथा जिज्ञासा विचारः सन् प्रत्यये न तु ब्रह्मज्ञानेच्छा पुरुषार्थसाधिका तद्वत् । तथा च गोरक्षसंहिता ।

'यत् समाधौ परं ज्योतिरन्तरं विश्वतोमुखम् ।
तस्मिन् दृष्टे महायोगिगतायातं न विद्यते' ॥

इति । 'ता नाविदन् मय्यनुषङ्ग' इत्यादि श्रीभागवते । अथवा तपो वैराग्ययोगे ज्ञानमित्यु-क्तेर्ज्ञानयोगतः यः सेवते हरिमित्यत्र तथात्वे मध्यमाधिकारकथेयमित्याहुः अत्र ज्ञानमिति । तथा च तपोवैराग्यफलं ज्ञानं निदिध्यासनेपीति भावः । लाघवायाहुः रूपेत्यादि । तथापि निदिध्यासितव्य इत्यस्य प्रत्ययार्थानुक्तिप्रसङ्गः । ज्ञानस्येति सपरिकरस्य । स्वरूपेत्यादि गीतायामात्मसंयमयोगा-ध्याये 'शुचौ देशे' इत्यादिनासनप्राणायामकाभ्यां मनसि सर्वतो निवृत्तव्यापारे 'यदा विनियतं चित्तमात्मन्येवावतिष्ठते' इत्युक्तेः विनियते स्वयम् ।

'प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम्' ॥

इति स्वयमुपलब्धं निजसुखं तस्यानुभवरूपम् ।

'युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते' ॥

इति प्रोक्तं ब्रह्मेत्येवं स्वरूपकथनमित्यर्थः । ब्रह्मस्वभावेत्यादि एष ब्रह्मणः स्वभावः पूर्वोक्तमनसि स्वयमुपलब्धं यन् निजमनन्तं सुखमानन्दस्तस्य स्वेन विषयीकरणं तद्धेतुः । तेन स्वभावेन जन्यं ज्ञानं तदेव विषयात्मकं स्वेनेतिपदोक्तम् । न च नित्यज्ञाने जन्यपदप्रयोगानुपपत्तिरिति वाच्यम् । जनी प्रादुर्भाव इति प्रादुर्भावार्थकधातुप्रयोगात् । विषयजन्यज्ञानप्रादुर्भाववत् प्रतीय-मानप्राडुर्भाव इत्युपचारात् । ननु चेदं युक्तिस्थमिति व्याख्यानं त्यक्त्वा कुतो ब्रह्मस्वभावजन्यमिति व्याख्यानं गौरवग्रस्तमिति चेन्न, 'अथातो ब्रह्मजिज्ञासा' इति प्रतिज्ञाय 'जन्माद्यस्य यतः' इतिसूत्रे

१. दर्शनार्थं ।
५४ ब्र० सू० १०

रश्मिः ।

कार्यलक्षणप्रतिपादनेन सांकर्यात् कार्यलक्षणोक्तपरिणतजगज्ज्ञानं ब्रह्मस्वभावजन्यं जगद्वेति प्रत्यक्षम् । न च श्वेताश्वतरे 'कालः स्वभावो नियतिर्यदृच्छा' । इत्यस्याग्रे इति चिन्त्यमिति दूषितत्वान् नैवमिति ग्राह्यम् । स्वभावबोधकश्रुतिविरोधेन श्वेताश्वतरस्य विकल्पात् । तामसत्वाच्च । षष्ठस्कन्धनवमेऽध्यायेपि । ॐ नमस्तेस्तु भगवन् नारायण वासुदेवादिपुरुष महापुरुष महानुभाव परममङ्गल परमकल्याण परमकारुणिक केवलजगदाधार लोकैकनाथ सर्वेश्वर लक्ष्मीनाथ परमहंसपरिव्राजकैः परमेणात्मयोगसमाधिना परिभावितपरिस्फुटपारमहंस्यधर्मेणोद्घाटिततमःकपाटद्वारे चित्तेऽपावृत आत्मलोके स्वयमुपलब्धनिजसुखानुभवो भवान्' इति । निजसुखं जीवीयमपि । आनन्दांशस्तु पूर्वमेव तिरोहितो येन जीवभाव इति परामिध्यानसूत्रभाष्यात् । ननु भक्तियोगाध्याये कुत्रोक्तमिदं ध्यानादि । शृणु । 'अनन्येनैव योगेन मां ध्यायन्त उपासते' इत्यत्रानन्यो योगो व्याकृत इति । अत्र योगो युज समाधाविति धातुनिष्पन्नः । इदमेव ब्रह्मणो भूमाधिकरणोक्तसुखरूपस्य सर्वात्मभावस्यापि मुख्याधिकारे ज्ञानम् । ऐच्छिकसृष्टौ ब्रह्मज्ञानमुक्तम् । मायिकसृष्टिपक्षेऽविरोधाध्यायोपान्ते ज्ञानप्रक्रियानिरूपणावसरे स्फुटीकार्यम् । एवकारस्तु भाष्ये क्षेत्रक्षेत्रज्ञनिर्देशयोगाध्याये त्रयोदशे ।

'ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः' ॥

इतिवाक्ये ब्रह्मसूत्रपदैर्बहुधा गीतमित्यत्रार्थे विचिकित्साभावात् । एतदनुरोधेनैतदध्यायोक्तं 'ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना' इतिवाक्योक्तध्यानादि । मनसीत्यादिभाष्योक्तं सर्वं च ग्राह्यम् । स्वभावजन्यैतादृशानुभवे वरणत्वेनाविर्भावत्वेन कार्यकारणभावात्तद्बोधिकां श्रुतिं प्रमाणयन्त इव व्याचक्षते स्म अनु भवेत्यादिना । अत्रायं समुदितो भाष्यस्यार्थः अत इत्यारभ्य अविषयत्वमित्यन्तस्य । ब्रह्मज्ञानपदार्थज्ञाने सर्वं सुगममिति ब्रह्मज्ञानपदार्थः प्रोच्यते । तत्र ब्रह्म 'सत्यं ज्ञानमनन्तमानन्दं ब्रह्म' इत्युपनिषच्छ्रुतेः सत्यादिचतुष्टयं ब्रह्म तत्र सत्यत्वमविनाशित्वे सत्यमविनाशीति श्रुतेः । सत्यमित्यत्र 'तत्र साधुः' इति यत् सति साधु सत्यम् । 'अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः' इतिश्रुत्या ब्रह्मनिष्ठा सत्ता इति यदि वेद तमेनं सत्यं विदुरित्यर्थाद् ब्रह्मसत्तावेत्तरि साधु सत्यं तत्र ब्रह्मणि साधोः सत्यत्वमित्यत्र किमु वक्तव्यम् । साध्नोति परकार्यमिति साधुः 'अस्यैव चोपपत्तेरूष्मा' इति सूत्रात् विरहतापोपशमं साध्नोतीति साधुर्भक्तः आध्यात्मिकादित्रितयवित् 'तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते' इति गीतायाः 'ज्ञानी चेद्भजते कृष्णं तस्मान्नास्त्यधिकः परः' इतिनिबन्धाच्च । नन्वविनाशित्वं सत्यत्वं सति साधुत्वं वा सत्यत्वं आद्ये रूढ्यापत्त्या वेदान्तेषु योगेन विचार इत्यस्या उक्तेस्त्यागापत्तिरन्त्ये श्रुत्या व्याकरणस्मृतिबाध इति चेन्न सति साधुत्वे सत्यविनाशित्वस्य सत्यलक्षणत्वात् । अत्राचार्योक्तेर्वेदतौल्याद्विकल्पो वेति । तस्य सत्यपदस्य 'सत्यं ज्ञानं' इति श्रुत्या ज्ञानपदसामानाधिकरण्यं भिन्नप्रवृत्तिनिमित्तत्वे सत्येकार्थबोधकत्वरूपमुपपादनसापेक्षम् । तत्र ज्ञानत्वं नाशरहितत्वे सति चैतन्यत्वम् । नाशरहितं चैतन्यं ज्ञानमित्यभिधीयते इति श्रुतेः । सत्येऽतिव्याप्तिवारणाय विशेष्यं चैतन्यमिति । जन्यज्ञानेऽतिव्याप्तिवारणाय नाशरहितमिति विशेषणम् । ज्ञा अवबोधने भावे ल्युट् । तथा च भक्तावबोध इत्यभेदान्वयानुपपत्तिस्तत्परिहारो ब्रह्मणो निर्विकल्पकज्ञानस्य लक्षणे संबन्धस्यानवगाहरूपः विशेष्यविशेषणसंबन्धानवगाहिज्ञानस्य निर्विकल्पकत्वात् भक्तस्य सेव्यसेवकभावसंबन्धो भक्तसंवलित एव भगवाँस्तद्द्वारा फलतीति बुद्धिमार्यमिमोष-

रश्मिः ।

निरूपणग्रन्थोक्तदिशा तस्यापि अनवगाहः संपद्याविर्भावाद्यधिकरणोक्तौडुलोमिमतेन चिन्मात्रभक्तस्याव-बोधाभेदः । सैद्धान्तिकपक्षे तु ज्ञानादिरूपगणना सत्यस्य भक्तस्य भेदः । भक्तो रमारूपः श्रीभागो धाक्षरं वा अदृश्यत्वाधिकरणे वक्ष्यमाणम् । 'मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्' इतिवाक्यात् । भाष्यास्तु स्वन्मते पदद्वयलक्षणातो वरं भक्तीत्वा तत्पदे लक्षणा । तथाहि धान्यमसि धिनुहीत्यत्र तण्डुले धान्यसम्बन्धस्तदधीनत्वात्तदिति व्यपदेशः । प्राणबन्धनं हि सौम्य मनः इतिवाक्यशेषे जीवस्येशा-धीनत्वोक्तेः ।

'यदधीना यस्य सत्ता तत्तदित्येव भण्यते ।
विद्यमाने विभेदेऽपि मिथो नित्यं स्वरूपतः' ॥

इति भारतोक्तेरित्याहुः । तथा च 'तस्मान् न भिन्ना एतास्ता आभिर्भिन्नो न वै विभुः' इति कृष्णोपनिषच्छ्रुतेर्भक्तस्याप्यभेदान्वयः । युक्तिरपि । आत्मनो भक्तकृतमानोरथिकपदार्थानां भागरूपाणां त्यागेन भक्तेष्वत्यन्तानुग्रहाविर्भावितानां त्यागेन कृष्णोपनिषच्छ्रुत्युक्तोऽभेदः । यदि भागत्यागलक्षणा न स्याच्छ्रुतिरभेदं न वदेत् । इत्यभेदान्वयोपपत्तिः । नन्वभेदान्वयः पूर्वोक्तोऽनुपपन्नो भक्तस्याभेदा-दानात् 'अन्तरा भूतग्रामवत्'इति सूत्रे तथा प्रतिपादनादिति चेत् न भक्तस्य चतुर्विधपुरुषार्थेषु प्रधुम्नरूप-कामत्वेऽपि ज्ञानेन वासुदेवरूपमोक्षरूपेण संचारिभावे व्यतिहारसूत्रोक्तोऽभेद उपपन्न इति । अद्भुता ब्रह्मसत्तावेतरि सति साधु सत्यं तस्य ज्ञानपदसामानाधिकरण्यं सर्वसंमतम् । नीलमुत्पलमितिवत् । न च सार्वदिकसेव्यसेवकभावसंबन्धं त्यक्त्वा कादाचित्काभेदमादाय सार्वदिकाभेदप्रतीतिसमर्थनं दुर्घटमिवेति वाच्यम् । ज्ञानकाण्डमिति समाख्यया व्यतिहारसूत्रोक्ताभेदज्ञानस्य मुख्यत्वात् । सेव्यसेवकभावस्तु कोटिष्वपि सुदुर्लभस्य नारायणपदस्य प्रशान्तात्मनः ।

'मुक्तानामपि सिद्धानां नारायणपरायणः ।
सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने' ॥

इतिवाक्याद् भवत्यत एव भक्तेः काचित्कं निरूपणं भक्तैकसमधिगम्यं च । अत एव साक्षाद्भक्तिर्नास्त्येवेति द्वितीयस्कन्धषष्ठाध्यायसुबोधिनी परंतु नवमाध्यायस्य न भवतीत्य-सिद्धान्तरूपा भक्तिपोषिका । ननु नित्यलीलाप्रवेशकामनया कृतं भगवद्भजनं येन तस्य पुंसः तिष्ठतु वार्ताऽभेदसंसर्गोपोद्बलिका प्रवर्ततां तावद्रमारमणवार्ता । तादृशां सत्यपदवाच्यानां रमादीनां रमणस्य ज्ञानादिपदवाच्यस्य च सार्वदिकः सेव्यसेवकभावः संसर्गो न त्वभेद इति चेन्न, श्रुतावप्रतीतत्वेनास्य संसर्गस्यानाविष्करणस्य विवक्षितत्वात् । 'अनाविष्कुर्वन्नन्वयात्' इतिसूत्रात् । अत्राश्रमधर्मैरेव लोके स्वं भगवद्भावमनाविष्कुर्वन् भजेतेतिभाष्यात् । न चायमभेदः परमहंसधर्मः परमहंसोपनिषदि तयोक्तेर्न गृहस्थधर्मस्तथा चाश्रमधर्मोऽपि भाष्ये गृहस्थस्य विवक्षितः 'ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात्' इतिसूत्रे 'आचार्यकुलात्'इत्युपक्रम्याग्रे पठ्यते 'धार्मिकान् विद-धत्' इति, अतो धार्मिकपुत्रविधानमैहिकं कर्म श्रुतौ दृश्यत इति भाष्यादिति वाच्यम् । तत्र गृहस्थधर्मैरनाविष्कारेऽप्यन्यत्र परमहंसादिधर्मैरनाविष्कारे बाधकाभावात् । आश्रमधर्मैरिति भाष्ये आश्रमधर्मस्य गृहस्थमात्रधर्मत्वविवक्षितत्वे आश्रमसंकोचापत्तेराचार्येत्याद्युक्तभाष्यस्य तत्स्थल-विषयत्वात् । यद्वा, गोपालतापिनीये 'स होवाचाब्जयोनिश्चतुर्भिर्देवैः कथमेको देवः स्याद् ।

१. अत्र इच्छा इच्छा अधिः ।

रश्मिः ।

एकमक्षरं यदि श्रुतं अनेकाक्षरं कथं भूतम् । स होवाच तं हि पूर्वं ह्येकमेवाद्वितीयं ब्रह्मासीत्' इति श्रुतेः । एकं सजातीयभेदशून्यमेव स्वगतभेदशून्यं अद्वितीयं विजातीयभेदशून्यं ब्रह्मासीदिति क्रमेण विशेषणत्रयार्थः । न चात्र सत्यज्ञानपदयोर्न सामानाधिकरण्यापेक्षापि तु सत्यं ब्रह्म ज्ञानं ब्रह्मानन्तं ब्रह्मानन्दं ब्रह्मेत्येवं सत्यादिपदब्रह्मपदयोः सामानाधिकरण्यमिति योजनादरणमिति वाच्यं वाक्यभेदापादकत्वात् । ननु सत्यत्वं ज्ञानत्वं सत्यादिस्थितं रूपं तत्र सत्यादिपदानां शक्तिराकृत्यधिकरणादिति चेन्न । शब्द इति चेन्नातः प्रभवादिति सूत्रभाष्ये विशिष्टे शक्त्यङ्गीकारात् स्थितरूपविशिष्टे शक्तेः । सत्यज्ञानयोः सत्यत्वं ज्ञानत्वं च महानात्मा 'सा महानात्मा तामाहुस्त्वतलादयः' इति वाक्यपदीयात् तयोः सविकल्पकज्ञानात्मकात्मत्वात् । सति सत्तारूपश्चात्मा । त्वंपदार्थादौपाधिकाद् विलक्षणं आकाशवत् सूक्ष्मः केवलः सत्तामात्रतत्पदार्थश्चात्मेत्युच्यत इतिश्रुतेः । विलक्षणत्वमाह श्रुतिः । आकाशेति । त्वंपदार्थस्तु स्थूलः, आत्मा तु सूक्ष्म इति विलक्षणः । एवं सत्यादेः सत्यत्वादेश्च संबन्धावगाहिज्ञानमप्यात्मा । सत्यज्ञानशब्दौ जातिशब्दौ सत्यत्वत्वं ज्ञानत्वत्वं च न ब्रह्म । 'परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः' इति सूत्रेण सत्यत्वविशिष्टसत्यात् परमाशङ्क्य सामान्यात्त्विति सूत्रेण निषेधकरणात् । अन्यत्र तु घटत्वत्वादिकं धर्ममात्रं भूषणोक्तत्वादस्त्वेव सत्यत्वं ज्ञानत्वं चात्मानौ सत्यत्वत्वं ज्ञानत्वत्वं च सत्यसत्यत्वयोः ज्ञानज्ञानत्वयोश्च संबन्धरूपे आत्मत्वे वास्ताम् । सत्यज्ञाने साधनप्रमेयरूपेपि । सति साधुत्वस्य साधनत्वात् । ज्ञानस्य मोक्षस्य प्रमेयत्वात् धर्मार्थकामानां प्रमेयत्वेपि मुख्ये कार्यसंप्रत्ययात् तत्रानन्तत्वं पूर्वत्वे व्यापकत्वे च सति चैतन्यमनन्तं नाम मृद्विकारेषु मृदिव सुवर्णविकारेषु सुवर्णमिव तन्तुकार्येषु तन्तुरिव अव्यक्तादिसृष्टिप्रपञ्चेषु पूर्वं व्यापकं चैतन्यं अनन्तमित्युच्यत इतिश्रुतेः । न अन्तोस्य भेदरूपचैतन्यस्य निरवधिचैतन्यमित्यर्थः । निरवधिचैतन्यत्वमेव पूर्वत्वे व्यापकत्वे च सति चैतन्यत्वम् । चैतन्यत्वं ज्ञानेतिव्याप्तमतो व्यापकमिति विशेषणम् । नन्वानन्दादयः प्रधानस्य इति सूत्रे पूर्णानन्दैश्वर्यादयः प्रधानस्य ब्रह्मणो धर्माः इति ब्रह्मैकदेशे ज्ञाने कुतो विशेषणं व्यापकमितीति चेन्न । अव्यक्तादिसृष्टिप्रपञ्चमात्रव्यापकत्वविवक्षणात् । अव्यक्तादिसृष्टिप्रपञ्चेषु पूर्वं व्यापकमितिश्रुतेः । अव्यक्तं भगवत्कृपा तदादिसृष्टेः प्रपञ्चः पुरुषादिसृष्टेः प्रपञ्चः मायादिसृष्टेः प्रपञ्चः । अन्ये सृष्टिप्रपञ्चा निबन्धे प्रपञ्चिताः अव्यक्तादिसृष्टिप्रपञ्चस्तु आनुमानिकाधिकरणे ।

'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' ॥

इतिकाठकश्रुतिभिः कृतः । अव्यक्तादिसृष्टिप्रपञ्चोपादानचैतन्ये मुक्तजीवेऽतिव्याप्तिवारणाय पूर्वमिति विशेषणम् । पूर्वत्वं च सृष्टिपूर्वत्वं तेन नाव्यक्तादिसृष्टिप्रपञ्चपूर्वत्वमादाय पूर्वोक्तप्रपञ्चोपादानेतिव्याप्तिः । ज्ञानानन्तपदयोः सामानाधिकरण्यं वेदान्तप्रामाण्यात् । न तु व्यापकत्वरूप-[illegible]-चैतन्यपूर्वचैतन्ययोरभेदान्वयः । पूर्वत्र तु भागत्यागलक्षणां विना सति प्रवाहि [illegible] भेदसंबन्धं विनाऽखण्डात्मनस्त्यागापत्तेर्वेदान्तप्रामाण्याद्भागत्यागलक्षणा-

१. [illegible] इत्यं भवत्तत्वापत्तेर्न इति [illegible] स्थितम् ।

रश्मिः ।

लक्षणोररीकृता । वासुदेवरूपमोक्षरूपज्ञानेन संकर्षणरूपार्थरूपस्यानन्तस्याभेदान्वयो हि श्रीगोपालतापिनीयश्रुतेः । वेदान्तानां वेदत्वेन वेदस्य धनत्वेनार्थत्वम् । धन धान्ये इति धातुः वेदो धनमिति निरुक्ते ग्रन्थे । तस्य संकर्षणरूपत्वं संकर्षणो हि सहस्रवदनो वेदात्मेति 'वासुदेवकलाऽनन्तः' इत्यस्य सुबोधिन्यां वेदसंकर्षणयोः सामानाधिकरण्यात् । इत्थं च 'अनन्ता वै वेदाः' इतिश्रुतेर्न अन्तो नाशोऽस्य चैतन्यस्य वेदस्येति बहुव्रीहिणानन्तं वेदरूपं प्रामाण्यं संकर्षणरूपमर्थरूपं च । अनन्तं जातिशब्दः अनन्तत्वविशिष्टे शक्तः । अनन्तत्वमात्मा उक्तवाक्यपदीयात् । अनन्तानन्तत्वयोः संबन्धावगाहिज्ञानमप्यात्मा । अनन्तत्वत्वं न शक्यं सामान्यात्त्विति सूत्रात् । अनन्तत्वमात्मा अनन्तत्वत्वं अनन्तानन्तत्वयोस्तावत्संबन्धरूपमात्मत्वं वा । 'सत्यं ज्ञानमनन्त'मिति श्रीभागवते वैकुण्ठवर्णनाद्वैकुण्ठवाचकमपीति विशेष्यमाह श्रुतिः । आनन्दमिति आनन्दत्वं च सुखचैतन्यस्वरूपत्वे सत्य परिमितानन्दसमुद्रत्वं अविशिष्टसुखसमुद्रत्वं च । आनन्दो नाम सुखचैतन्यस्वरूपमपरिमितानन्दसमुद्रः । अविशिष्टसुखस्वरूपश्चानन्द इत्युच्यत इतिश्रुतेः । आसमन्तान्नन्द्यते समृध्यते इत्यानन्दः स्वनन्तः । न परिमितः 'ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्दः' इति श्रुत्युक्तोऽक्षरानन्दः परिमितः तद्वत् परिच्छिन्नो न किंतु 'यतो वाचो निवर्तन्ते' इतिश्रुत्युक्तोऽपरिमितः । स आनन्दोऽपरिमितानन्दः स समुद्रोऽपरिमितानन्दः समुद्रः समुनत्ति उन्दी क्लेदने स्फायीति रक् ।

'निजमुरलिकानादाह्वानागतव्रजसुन्दरी-
निरुपमनवस्नेहाम्भोधेर्विचित्रतरोर्मिभिः ।
किमपि परितश्चार्द्राद्रोऽस्तु प्रभुः प्रकटीभवन्
प्रतियुवतिसंभेदेनास्मद्दशां विषयः सदा' ॥

अपरिमितानन्दः समुद्रः स्वयं व्रजसुन्दरीः समुनत्ति इत्यर्थः 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' इतिवाक्यात् । अत्र क्लिद आर्द्रभावे दि-प-वेट् वेदान्तेषु योगमात्रादरणात् ब्रह्मलक्षणत्वात् न लीलाविशेषपरिज्ञानं न चानन्दस्य समुद्रः आनन्दसमुद्रः षष्ठीतत्पुरुषः अपरिमितश्चासौ आनन्दसमुद्र इति कर्मधारय इति वाच्यम् । समुद्रपदे लक्षणापत्तेस्तस्याश्च प्रथमलक्षणे संभवात् । न हि गङ्गातीरघोषस्य गङ्गाघोषावयवविशेषवत्त्वं लक्षणं संभवति किंतु गङ्गातीरघोषस्यावयवविशेषत्वं लक्षणमिति । समुद्रेऽतिव्याप्तिवारणायानन्देति विशेषणम् । आनन्दस्य समुद्र इत्युक्तौ षष्ठ्याभेदप्रत्ययनात् स्वगतभेदापत्तिरत आनन्दः समुद्रः । न च षष्ठ्या भेदप्रतिपादकत्वेप्येकमेवाद्वितीयं ब्रह्मेति श्रुत्या सत्यज्ञानयोः सेव्यसेवकभावसंबन्धेप्यभेदप्रतीतिस्तथानन्दस्य समुद्र इत्यत्र षष्ठ्या भेदप्रतिपादकत्वेप्यभेदप्रतीतिस्तयैव श्रुत्येति न स्वगतद्वैतमिति शङ्क्यम् । श्रीगोपालतापिनीये चतुर्व्यूहैक्यप्रतिपादकश्रुतेरस्याविषयत्वेन स्वगतद्वैतापत्तेः । एवं च समुद्रेतिव्याप्तिवारणायानन्देति विशेषणम् । न च यौगिकसमुद्रशब्दस्य लक्षणघटकस्य योगरूढसमुद्रशब्दप्रतिपाद्ये समुद्रे नातिव्याप्तिप्रापकत्वमिति वाच्यम् । श्रुते पञ्चाङ्गवदिति न्यायाद्योगरूढे शब्दे योगस्यापि सत्त्वात्तमादाय समुद्रे सुखेन यौगिकसमुद्रशब्दस्यातिव्याप्तिप्रापकत्वात् । आनन्दसमुद्रत्वरूपलक्षणस्य गणितानन्देऽक्षरेऽतिव्याप्तिवारणायापरिमितेति विशेषणम् । 'यतो वाचो निवर्तन्ते' इति श्रुत्युक्तापरिमितानन्दसमुद्रः । इदमप्यपरिमितानन्दसमुद्रत्वम् ।

रश्मिः ।

'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।
आनन्दमेतज्जीवस्य यज्ज्ञात्वा मुच्यते बुधः' ॥

इतिब्रह्मोपनिषच्छ्रुत्युक्ते जीवापरिमितानन्दसमुद्रेतिव्याप्तं आ अप्राप्येति छेदादतो विशेषणम् । सुखेत्यादि सुखं भूमा भूमाधिकरणात् । भगवान्न जीवः शोभनानि खानि अनेन सुखदुःखेत्यादिना करणे प्रत्ययः भावे वा । यतो अवाचो निवर्तन्ते आ समन्तात् प्राप्येति श्रुतिपदार्थयोः सतोर्नातिव्याप्तं पूर्वं लक्षणमिति चेत्तर्हि सत्यपदवाच्ये भक्तेऽपरिमितानन्दसमुद्रत्वमतिव्याप्तम् । न च भक्तस्यापरिमितानन्दसमुद्रवत्त्वं न तु अपरिमितानन्दसमुद्रत्वमिति वाच्यम् । 'तस्मान्न भिन्ना एतास्ता आभिर्भिन्नो न वै विभुः' इति कृष्णोपनिषदोऽभेदाद्भक्तब्रह्मणोः अतः सुखेत्यादिविशेषणम् । सुखस्य भूमत्वाद्भूम्नः सर्वात्मभावरूपत्वस्य लिङ्गभूयस्त्वाधिकरणे वक्ष्यमाणत्वात्तदाधारो भक्तो न तु सुखरूपभूमरूपः । भगवत्त्वात्सर्वात्मभावस्येतिभाष्यात् । भक्तत्वात् सर्वात्मभावस्येत्यनुक्तत्वात् । न चोक्तश्रुतेर्भक्तस्य ब्रह्माभेदात् सर्वात्मभावरूपत्वमिति शङ्क्यम् । स भूमा कस्मिन् प्रतिष्ठित इति प्रश्ने कृते भक्ते यो महिमरूपः सर्वात्मभावस्तस्मिन्नित्यनुबन्धादिसूत्रभाष्यात् । सुखत्वे सत्यपरिमितानन्दसमुद्रत्वं सर्वात्मभावेतिव्याप्तमतः सुखचैतन्येति । सर्वात्मभावस्यानन्दविशेषत्वान् न चैतन्यत्वम् । सुखचैतन्यत्वे सत्यपरिमितानन्दसमुद्रत्वं कदाचित्प्रकटचैतन्ये सर्वात्मभावेतिव्याप्तमतः स्वरूपमिति । एवं च सर्वात्मभावस्य सुखचैतन्यत्वं वर्तते न तु तत्स्वरूपं कादाचित्कत्वात् । स्वपदानुपादानेपि सर्वात्मभावेतिव्याप्तिः । अत एकं लक्षणं सुखचैतन्यत्वे सति अपरिमितानन्दसमुद्रत्वं सुनिष्पन्नम् ।

'सर्वानेव गुणान् विष्णोर्वर्णयन्ति विचक्षणाः ।
तेऽमृतोदाः समाख्यातास्तद्वाक्पानं सुदुर्लभम्' ॥

इतिजलभेदग्रन्थोक्तामिषु नाव्याप्तिः । 'सत्यं ज्ञानमनन्तमानन्दं ब्रह्म' इति श्रुतौ आनन्दमिति छान्दसं नपुंसकत्वं न त्वानन्दोस्यास्तीत्यानन्दमर्श आद्यजित्यच् । आनन्दो नामेतिश्रुतौ धर्म्यानन्दोक्तेः । अर्शस् उरस् तुन्द चतुर पतिता जटा धारा अभ्र अम्ल लवण स्वाङ्गाद्धीनात् वर्णात् अभ्रार्श आदिष्वनन्दपाठाच्च । इदानीम् 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इत्यत्र चित्सतोर्ब्रह्मैक्यमुक्तमानन्दस्य प्रतिपादितं अविशिष्टानन्दस्य प्रतिपादनीयं तदर्थमविशिष्टसुखस्वरूपत्वमानन्दत्वमविशिष्टसुखं विषयसुखं 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इतिश्रुतेः । योगमात्रादरणाद्वेदान्ते विशिष्टम् । शिष्लृ विशेषणे रुधादि न तु शिष हिंसायां भ्वादिः परस्मैपदी तस्य सेट्त्वात् । तथा च विशेषणं व्यावर्तकं व्यावर्तयति यत्तद्व्यावर्तकं विशेषणव्यावर्तकं यत्तस्य विशिष्टमित्यत्र क्तप्रत्ययार्थः कर्मविशेष्यं यत्सुखं तद्भिन्नं तत्सदृशं सुखमविशिष्टं सुखं नञः पर्युदासार्थकत्वात् । तत्र ब्रह्मानन्दपर्यन्तानन्दस्य विशेषव्यावर्तको विषय इति । अविशिष्टं सुखं स्वरूपं तत्त्वं लक्षणं द्वितीयम् । सुखपदं सर्वात्मभावरूपसुखरूपस्यापि वाचकम् । भूमैव सुखमिति श्रुत्वा भूम्नः सर्वात्मभावरूपस्य सुखपदवाच्यत्वात् । अन्यथा भगवत्त्वात् सर्वात्मभावस्येतिभाष्यविरोधापत्तेः । तथा च जीववदानन्दस्यापि मुक्तौ ब्रह्मैक्यं न तु वागादीनामिव स्वरूपनाशनम् । 'वाङ्मनसि दर्शनाच्छब्दाच्च' इति फलाध्याये वक्ष्यन्ति स्वाचार्याः । तथा च भाष्यम् । ब्रह्मांशत्वेन जीवस्यानन्दात्मकत्वादिति । अस्य भाष्यस्य भाष्यप्रकाशे आभासः सिद्धान्तमाहुरिति मर्यादामार्गे इति शेषः । भाष्यप्रकाशे तु वागादीनां स्वरूपनाशनमुत अग्निसंसर्गादयसश्चामीकरत्वमित्र तेजस्त्वेना-

रश्मिः ।

लौकिकत्वसंपादनं भगवदनुग्रहादिति संशये भक्तसूक्ष्मदेहस्य चामीकरत्ववदयसोऽलौकिकत्वसंपादनं सिद्धान्तितम् । तत्पुष्टिमार्गे इत्यपि तत्रैव । ननु 'सत्यं ज्ञानमनन्तं ब्रह्म' इति तैत्तिरीयश्रुत्युक्तं ब्रह्मलक्षणमप्रसिद्धं विरुद्धमनुपादेयमितिचेन्न । अत्र विशिष्टे शक्तेः । परब्रह्मत्वमित्यत्र परमात्मनः प्रत्ययेन परब्रह्मणः प्रकृत्याभिधानादेतच्चतुष्टयस्य तल्लक्षणत्वात् । प्रसिद्धस्य लक्षणस्य ब्रह्मलक्षणत्वात् । तथा च श्रुतिरेतद्वस्तुचतुष्टयं यस्य लक्षणं देशकालनिमित्तेष्वव्यभिचारि स तत्पदार्थः परमात्मा परं ब्रह्मेत्युच्यते इति लक्षणमव्याप्त्यतिव्याप्त्यसंभवरहितं वस्तुतः पुनर्देशकालनिमित्तेष्वव्यभिचारिदेशकालयोर्द्रव्यत्वेन प्रकटसदंशत्वात्तत्रास्य लक्षणस्य व्यभिचारो नास्ति प्रकटसत्यज्ञानानन्तानन्दे संगतत्वात् । अस्य लक्षणस्यातिव्याप्तिर्नास्तीत्यर्थः । निमित्तानां कारणानां प्रकटचित्सदंशत्वात् न तत्र व्यभिचारोतिव्याप्तिरस्यास्ति । यद्वा देशकालनिमित्तेषु यस्यैतद्वस्तुचतुष्टयं लक्षणमव्यभिचारि अव्याप्त्यादिरहितं स [ देशः कालो निमित्तं स्वर्गसुखदुःखाभावात्मसुखरूप ] तत्पदार्थ इति श्रुतिकठिनपदव्याख्या । अत्र श्वेताश्वतरोपनिषच्छ्रुतिः ॐ ब्रह्मवादिनो वदन्ति किं कारणं ब्रह्म कुतः स्म जाता जीवाम केन क्व च प्रतिष्ठिताः अधिष्ठिताः केन सुखेन्तरेषु वर्तामहे ब्रह्मविदो व्यवस्थाम् 'कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष' इति चिन्त्यम् । संयोग एषां न त्वात्मभावादात्माप्यनीशः सुखदुःखहेतोः । ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम् । यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येक' इति । श्रुत्यर्थश्चमसवदित्यधिकरणे प्रहस्ते चास्ति । अत्र कालस्य भूतपदवाच्यदेशस्य च चिन्त्यत्वं चिन्त्यप्रयोजनत्वं तथा च 'आत्मनि चैवं विचित्राश्च हि' इति सूत्रस्य देशकालसृष्टावप्यात्मन्येव साधिकरणस्य सृष्टत्वाच्चेतिभाष्यम् । अत्र निमित्तमतिरिच्यते निमित्तमिह फलमिति 'निमित्तात्कर्मयोगे' इतिसूत्रे सिद्धान्तकौमुदीकारोक्तेः तथापि यः कारणानीत्युक्तं कारणं निमित्तम् । यदि च प्रहस्ते श्वेताश्वतरश्रुतयः कौर्मवाक्यैरुपबृंहिता इति तामस इत्युच्येत तदोक्तार्थाधिकारे संपन्ने राजसश्रुतिभिः राजसत्वनिवृत्तौ सत्यां राजसत्वाधिकारे संपन्नेथ ज्ञाते सात्त्विकीभिस्तथासंपन्नेऽथ ज्ञाते निर्गुणाभिः निर्गुणत्वाधिकारसंपत्तिर्ज्ञातव्या । मध्वाचार्यादिभिः तामसत्वादिविभागस्याकृतत्वात् पुराणेष्वात्मगुणसत्त्वादिभिः सगुणत्वे श्रुतिष्वप्यात्मगुणसत्त्वादिभिः सगुणत्वम् । 'गौणश्चेन्नात्मशब्दात्' इतिसूत्रात् न प्राकृतगुणसंबन्धात्सगुणत्वं वा । अनन्तानन्दपदयोः सामानाधिकरण्यं भाष्ये कृतम् । संकर्षणरूपार्थरूपप्रमाणरूपानन्तेन सममनिरुद्धरूपधर्मरूपफलरूपानन्दस्य अभेदान्वयो हि श्रीगोपालतापिनीयश्रुतेः । धर्मस्य भूमत्वं 'प्रणम्य देवं भूमानं' इतिश्रीभागवतसुबोधिन्यामस्ति । भूमैव सुखमितिश्रुतौ मोक्षापेक्षया भूम्नोऽनिरुद्धस्य सुखमवधारितं मोक्षस्तु मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिरितिवाक्यात् स्वरूपावस्थानम् । तन्निवृत्तिर्मोक्ष इतिश्रुतेः । तस्यानात्मनो देहादीनात्मत्वेन योभिमन्यते सोभिमान आत्मनो बन्ध इति श्रुत्युक्तस्य बन्धरूपाभिमानस्य निवृत्तिरित्यर्थः । अतो मोक्षस्य प्रमेयत्वं तत्पूर्वमुक्तम् । आनन्दस्तु फलं आनन्दो गुणशब्दः सुखपर्यायत्वात् । सुखस्य नैयायिकमते गुणत्वात् । स आनन्दत्वविशिष्टे शक्तः आनन्दस्वमात्मा उक्तवाक्यपदीयात् । आनन्दानन्दत्वयोः संबन्धावगाहिज्ञानमप्यात्मा । आनन्दत्वत्वं न शक्यत्व आनन्दत्वमात्मा । आनन्दत्वत्वं आनन्दानन्दत्वयोः संबन्धरूपमात्मत्वं वा । अत्र सत्यं ज्ञानमनन्तं ब्रह्म सत्यत्वं ज्ञानत्वं अनन्तत्वं ब्रह्मत्वं संबद्धं तु आत्मस्वरूपम् । सत्यं ज्ञानमनन्तमानन्दं परब्रह्म । सत्यत्वं ज्ञानत्वमनन्तत्वमानन्दत्वं परमात्मेत्युच्यते । परब्रह्मपरमात्मनोः संबन्धः सत्यत्वं

रश्मिः ।

ज्ञानत्वत्वमनन्तत्वत्वमानन्दत्वत्वमित्येवं रूपचतुष्टयात्मकः । न च समवायः संबन्ध इति शङ्क्यम् । समवायाभ्युपगमसूत्रे तर्कपादे तादात्म्यस्य भाष्यप्रकाशे एभिरङ्गीकारात् । एवं चोक्तब्रह्मणो ज्ञानं जीवस्य सत्यपदवाच्यभक्तस्यानन्तानन्दस्य ब्रह्मणो ज्ञानमनुभवः । न च ब्रह्मण इति भेदषष्ठ्या विषयत्वमात्मायुक्तमविषयत्वमितिभाष्यविरोध इति शङ्क्यम् । तादृशज्ञानस्याविषयत्वेनांशतो विषयत्वाभावेन सर्वस्य युक्तमविषयत्वमिति । न च स्वगतद्वैतापत्त्या ब्रह्मज्ञानं, ब्रह्मज्ञानमिति कर्मधारयः इतिवाच्यम् । श्रीगोपालतापिनीयश्रुत्या षष्ठीतत्पुरुषेपि स्वगतभेदाभावात् । कर्मधारयस्तु संभवत्यपि न चतुष्टयरूपब्रह्मण एकज्ञानत्वायोगात् अभेदान्वयाभावात् । ब्रह्म न ज्ञानमात्रमिति भेदावगाहिप्रत्ययात् । घटपटकुड्यकुसूलानि न घट इति प्रत्ययवत् । सत्यं ज्ञानमनन्तं ब्रह्मेत्यभेदोपि 'स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम' इतिवाक्यात् । ब्रह्मज्ञानैकवाक्यतायै ततोप्येवमिति आरभ्य ब्रह्मेत्यन्तफक्किकार्थः क्रियते । इदमेव ब्रह्मज्ञानमिति फक्किकैकवाक्यताबोधकभाष्यात् । पदचतुष्टयस्य सत्यमनन्तमानन्दं ज्ञानमिति क्रमेण । तत्र सत्यपदार्थमाहुर्भाष्ये तत इति । तत इति क्रमवाचकं पदं मननानन्तरमित्यर्थः । एवमभ्यासेनावृत्त्येति यावत् । आवृत्तिरसकृदुपदेशादिति सूत्रात् । पूर्वोक्तार्थस्य निर्धारणे श्रवणमनने स्ताम् । ननु निर्धारणार्थं मननमनावृतं भाष्ये प्रोक्तम् । निर्धारणे मननं भवतीतिभाष्यात् इतिचेत्तर्हि तद्दार्ढ्ये पूर्वोक्तार्थस्य निर्धारणदार्ढ्ये वा श्रवणमनने स्ताम् । 'निमित्तात् कर्मयोगे' इत्यस्य प्राप्तिरपि न यया निर्धारणार्थमित्यर्थो भवेत् । तथा च ततोप्येवं भवतीति भाष्ययोजना । एवं वाक्यभेदो विभाव्येत, तर्हि ततोप्येवं पूर्वोक्तश्रवणमननयोरावृत्त्या ध्यानादिसमाध्यन्तरूपनिदिध्यासनरूपं ब्रह्मेति योजना । निदिध्यासनत्वं ध्यानादिसमाध्यन्तत्वं प्रेम्णो ध्यानादितः पूर्वस्य सत्त्वं ज्ञेयम् । 'भक्त्या प्रसन्ने तु हरौ तं योगेनैव योजयेत्' इति निबन्धात् । द्वितीयस्कन्धे ध्यानादितोन्यस्याभावात् । तत्र ध्यानं ध्यै चिन्तायामित्यस्य रूपम् । अत्र ध्यानविषयः सत्पदार्थस्तत्र साधुस्तत्त्वमपि ध्यानरूपं यत्प्रत्ययार्थः । एवं धारणायां सत्पदार्थे ध्यानविषयत्ववज्ज्ञानानन्तपदार्थयोरपि ज्ञेयम् । अत्र ध्यानं ध्यानबिन्दूपनिषदुक्तं तथाहि ।

'स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
ध्याननिर्मथनाभ्यासादेवं पश्येन्निगूढवत्' ॥

इत्यत्र निर्मथनदण्डत्वेन ध्यानमुक्तम् । ध्यानं निर्मथनं तस्याभ्यासः पुनः पुनः कीर्तनमावर्तनं वा तस्मादित्यर्थः । एवं पूर्वोक्तपरामर्शेन । पूर्वोक्तं तु ।

'प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत्' ॥ इति श्रुत्युक्तम् ।

व्यध ताडने तड आघाते आघातः गत्यर्थस्य हन्तेः । निगूढवदिति गुह संवरणे संवरणाग्निवत् । द्वितीयान्ताद्वतिः प्रथमान्ताद्वा वतिः स्वीयत्वेन सम्यग्वृतवत् स्वीयत्वेन सम्यग्वृतं वा स्वीयत्वेन सम्यग् वृतो वा गायत्र्यर्थकारिकासु प्रणवार्थोक्तेः । सर्वात्मभावकारणं वरणं साधनाध्याये लिङ्गभूयस्त्वाधिकरणीयवरणजसर्वात्मभावेति भाष्यात् । प्रणवचतुरात्मा आत्मा सत्त्वं ब्रह्म त्रितयात्मेति न लक्षणश्रुतौ ह्यधिकपदार्थनिवेशः शङ्कनीयः । नवीनभावजनक इत्यादिगायत्र्यर्थनिरूपणकारिकासु प्रणवार्थः साधुत्वप्रयोजकः । यद्यपि ध्यानबिन्दुःसमाख्यातस्तेजोबिन्दुः परं ध्यानमिति परपदसामर्थ्यं बलीयस्तथापि तद् ध्यानम् ।

१. सम्यक् कथितः ख्यापितः ।

रश्मिः ।

'दुःसाध्यं च दुराराध्यं दुःप्रेक्ष्यं च दुराश्रयम् ।
दुर्लभं दुस्तरं ध्यानं मुनीनां च मनीषिणाम्' ॥

इतिश्रुतेः दुःसाध्यत्वादिविशिष्टमिति तत उपरम्यते । उदाकाङ्क्षायामुपनिषद् द्रष्टव्या । अथ धारणा ।

'मनः संकल्पकं ध्यात्वा संक्षिप्यात्मनि बुद्धिमान् ।
धारयित्वा तथात्मानं धारणा परिकीर्तिता' ॥ इत्यमृतबिन्दूपनिषदि ।

प्रथममात्मपदं ब्रह्मपरं द्वितीयं जीवपरं. यद्यपि तथापि धारणाया द्वादशाङ्गेषु युगपन्मनोधारणरूपात्वेन जीवस्य धारणाकर्तृत्वेन तत्कर्मत्वायोगात् द्वितीयमपि ब्रह्मपरम् । तिष्ठेदित्यस्य क्रियापदस्याध्याहार्यमाणस्य श्रुतावप्रयोगो धारणानन्तःपातित्वात् । अथ सत्यार्थे मन आदिपदार्थानां क क संनिवेश इति चेदुच्यते यत्प्रत्ययार्थे साधौ कुतः साप्नोतीत्युक्ते किमित्याकाङ्क्षायां मनसि आत्मनि संक्षेप्स्यामीति संकल्पात्मकस्य ध्यानं द्वादशाङ्गेषु एकैकाङ्गस्य चिन्तनं कृत्वात्मनि बुद्ध्या संक्षेपं प्रेरणं युगपद् द्वादशाङ्गेषु कृत्वा ब्रह्मधारणा ध्यानं च पूर्वोक्तं समाधिं च साप्नोतीत्यर्थात् । द्वितीयात्मपदार्थस्य प्रकृतिप्रत्ययार्थे सति । सत्पदार्थस्तु यत्र सुप्तशक्तिरसुप्तदृक् 'मेनेऽसन्तमिवात्मानं सुप्तशक्तिरसुप्तदृक्' इतिवाक्यात् । 'अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः' इतिश्रुतेर्ब्रह्मसत्तावेत्ता सञ्जीवः । अस्ति शक्तिवेत्तृ सद्ब्रह्म । यद्यप्यात्मपदार्थः सत्यत्वं सति साधु सत्यमित्यत्र विशेष्यविशेषणसंबन्धावगाहिज्ञानत्वात् तथापि सदप्यात्मा ब्रह्मत्वात् विशेष्यविशेषणसंबन्धावगाहित्वेन स प्रकारकत्वमात्रकृतभेदात् ब्रह्मात्मैवैकदेशविकृतमनन्यवदिति वैयाकरणोद्घोषात् । अथ समाधिः 'यं लब्ध्वाप्यवमन्येत समाधिः परिकीर्तितः' इत्यमृतबिन्दुश्रुतिः । अत्र सर्वात्मभावं लब्ध्वान्यदवमन्येत हीनावबोधविषयं कुर्यात् इत्याज्ञा सर्वात्मभावस्यान्यहीनावबोधविषयकरणं लिङ्गभूयस्त्वाधिकरणे साधितम् । भूमैव सुखं नाल्पे सुखमस्तीति भूमलक्षणमेव सर्वात्मभावलक्षणम् । यद्वा यमात्मानं लब्ध्वावबोधं कुर्यात् तदवबोधकरणं समाधिः । अन्वमन्येत इतिपाठे वर्णविकारः अवमन्येत इति । यद्वा ओ विष्णुः सुपां सुलुगिति सोर्लुक् मन्येत इत्यत्र कर्मप्रत्ययात् अमो लुग्वा ई यं अं लब्ध्वेत्यर्थः । एवं सति साधुः सत्यो भक्तादिर्व्याकृतः । इदानीं सति अस्ति ब्रह्मेति वेतरि साधुं व्याचक्षुः मनसीति सर्वत इत्यादिविशेषणम् । मनसो योग्यत्वाय 'सर्वत्र निवृत्तव्यापारो भगवत्परो भवति' इति सुबोधिन्याः 'अतो निर्विषयस्यास्य मनसो मुक्तिरिष्यते' इति बिन्दुस्तोकोपनिषच्छ्रुतेः । चित्त इत्यनुक्त्वा मन इत्युक्तं तत् स मानसीन आत्मा जनानाम्[१]सर्वात्मेतिश्रुतेः । चित्ते भगवन्मते उद्घाटिततमःकपाटद्वारे चित्ते इति षष्ठस्कन्धवाक्यात् । भक्तादेस्तादृशे मनसि स्वयमात्मना साधननिरपेक्षेण उपलब्धं निजमनन्तं सुखं आनन्दस्तस्यानुभवो ज्ञानं स्वयं प्रकाशरूपमपि तद्रूपम् । तथा च 'अस्ति ब्रह्मेति वेतरि स्वयमुपलब्धं निजं सुखं तस्यानुभवं साप्नोतीत्यर्थः । तथा च षष्ठस्कन्धवाक्यं सिद्धस्य । 'ॐ नमस्तेऽस्तु भगवन्नारायण वासुदेव आदिपुरुष महापुरुष महानुभाव परममङ्गल परमकल्याण परमकारुणिक केवलजगदाधार लोकैकनाथ सर्वेश्वर लक्ष्मीनाथ परमहंसपरिव्राजकैः परमेणात्मयोगसमाधिना परिभावितपरिस्फुटपारमहंस्यधर्मेणोद्घाटिततमःकपाटद्वारे चित्तेऽपावृत आत्म-

१. अद ।
५५ म० सू० ८०

रश्मिः ।

लोके स्वयमुपलब्धनिजसुखानुभवो भवानिति' । निजसुखं जीवीयमपि आनन्दांशस्तु पूर्वमेव तिरोहितो येन जीवभाव इत्युक्तम् । नन्वेतस्यैव मुख्यश्रुत्युपष्टम्भकत्वे किं मानमिति चेन्न सिद्धवाक्यत्वात् । तथा च निबन्धः षष्ठस्कन्धस्य ।

'भक्तिर्मूर्तिमती तत्र देवरूपा सुसंस्थिता ।
तद्व्यतिरेकेण न सा निर्गन्तुमर्हति ॥
अतो हरिः सर्वदेवैः स्तूयते सिद्धभावितैः' । इति ।

ध्यानादिसमाध्यन्तरूपमनसीत्यादिविसर्गरहितभाष्यपाठे तु ध्यानादीनां मनसो वृत्तीनां मनस्त्वात्तद्रूपमनसीत्यादिः । तथा च श्रुतिः 'कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव' इति बृहदारण्यके । तस्य प्रमाणबलस्य । 'यमेवैष वृणुते तेन लभ्यः' इतिश्रुतावेवकारेण कौण्ठ्येन नाहं वेदैरिति पक्षे वरणेपि प्रमाणबलानुपयोगः । एतत्सर्वं गीतात्रयोदशाध्यायोक्तं व्यवहारस्थापनं ज्ञेयामृतमुपक्रम्य 'अनादिमत्परं ब्रह्म' इत्यादिशब्दव्यवहारोभिधादिलक्षणो 'भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च' इति चेत्यनुमानं 'ऋषिभिर्बहुधा गीतं' इत्यैतिह्यं 'सूक्ष्मत्वात् तदविज्ञेयम्' इत्यप्रत्यक्षत्वेपि दिव्यचक्षुषा दृश्यत्वात्प्रत्यक्षं ब्रह्म जगज्जन्मादिकर्तृ शास्त्रयोनित्वात् इत्यत्र जगज्जन्मादिकर्तृत्वव्याप्यशास्त्रयोनित्ववद् ब्रह्मेति परामर्शो व्यापारः समवहारः ऐतिह्यं शब्दात्मकं तत्र पूर्वोक्त एव व्यवहारः । प्रत्यक्षे योगजधर्मो व्यापारो व्यवहारः । प्रथमाधिकरणार्थः प्रथमेऽधिकरणे सर्वमधिकृतं तत् किं इति प्रश्ने ।

'तत्क्षेत्रं यच्च यादृक् च यद्विकारि यतश्च यत् ।
स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥
ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः' ॥

इति त्रयोदशाध्याय उत्तरम् । अत्र ज्ञेयं प्रथमाध्याये 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति भक्तिप्राकरणिकश्रुतेः । क्षेत्रमविरोधाध्याये चतुर्थपादे शरीरान्तःस्थानां प्राणादीनां विचारात् । ज्ञानं साधनाध्याये 'इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः' इतिवाक्यात् । तदनु 'ब्रह्म संपद्यते तदा' इत्यन्तेन आवृत्तिरसकृदुपदेशाधिकरणादिवाङ्मनसीत्यधिकरणाद्यर्चिराद्यधिकरणाद्यर्थसंग्रहः । क्षेत्रक्षेत्रज्ञान्तर्ज्ञानभूतप्रकृतिमोक्षज्ञानवतः फलं 'ये विदुर्यान्ति ते परम्' इति माहात्म्यादिज्ञानेन भक्तिद्वारा परस्य पुरुषोत्तमस्य प्राप्तिः । कुतोयमर्थः ब्रह्मपदं विहाय परपदोपसंदानात् । व्याख्यातं चैवमेवानन्दमयाधिकरणे 'ब्रह्मविदाप्नोति परम्' इतिश्रुतिस्थं परपदम् । नन्वस्त्वेवं बाधकाभावात् परं संपद्याविर्भावाद्यधिकरणाद्यर्थः कथं प्राप्तः । उच्यते । परपदपरमार्थः । आत्मैवेदमग्र आसीत्पुरुषविध इति पुरुषविधब्राह्मणे पुराणमतेपि । श्रुतितात्पर्यविषयः कोटिकन्दर्पलावण्यो निर्गुण आनन्दमात्रः पुरुषविधः तत्प्राप्तिरपि विद्वन्मण्डने नित्यलीलावादे उदिता तथापि संपद्य प्रादुर्भावो न प्राप्त इति चेत् स उपपादित एव संपद्याऽविर्भावाधिकरणादौ तत्रैवेत्यलमनधिकारवार्तया । यदि तु ब्रह्मसूत्रपदैरित्यस्योपनिषद्भिरित्यर्थस्तथापि वेदान्तानां वेदत्वस्य भाष्यसंमततया छन्दःपदेनैव ग्रहणानुविद्धत्वोरेकवाक्यत्वादुक्तमपि युक्तम् । तदुक्तं फलाध्याये तुरीये पुष्टिमर्यादाभेदेन फलमुच्यते

१. ले ।

रश्मिः ।

ब्रह्मणोरेव फलत्वं तन्निर्दोषत्वं च वर्ण्यते लीलानित्यत्वतः पूर्णगुणत्वं च ततोखिलमिति । ननु तथापि धर्मार्थमोक्षकामा इत्यन्तं सत्यं कामार्थधर्ममोक्षा इति क्रमस्य प्रथमसुबोधिन्यां धर्मस्य स्वापवर्गसेत्यत्रोक्तत्वात् । अतो भगवद्व्यापारवर्जान्यदेतत् । अतो ब्रह्मणि स्वरूपतः कार्यतश्च व्यवहारस्थापनं प्रथमाधिकरणार्थः । ननु कर्मादिभ्यो ज्ञानमेव पुरुषार्थसाधनमतः कारणात् ब्रह्मजिज्ञासाकर्मकोधिकारः प्रथमाधिकरणार्थः कुतो नेति चेन्न ब्रह्मसंबन्धिनां जिज्ञासेति शेषषष्ठ्या प्रयोदशोक्तयावदर्थसंग्रहात्कर्मशरीरप्रविष्टतदर्थे विशेषणीभूतानुवृत्तिरिति विचारो मुख्यो न तु अधिकारार्थोऽनुवृत्तिविशेषणतयाभिप्रेतत्वात् । यद्वा भाष्ये 'यतो वाचो निवर्तन्ते' इति वाङ्मात्रनिवृत्तिकस्य ब्रह्मण अथातो ब्रह्मजिज्ञासेति पदैर्व्यवहारः स्थापित इति निरुक्तम् । अत्र तु तन्न्यूनतादोषं निग्रहस्थानमभ्युपगच्छद्भिर्ग्रन्थकारैः संपूर्णाधिकरणार्थ उक्तः स समर्थनीयो व्यवहारस्थापनमधिकारहेतुरूपपदार्थयोरुपलक्षकमिति । तथा च अधिकारहेतुब्रह्मजिज्ञासापदार्थसमूहो वाक्यार्थः । भाष्यार्थस्तु स्थापितपदव्याख्याने समर्थित एव । न च जिज्ञासामुखेन कार्यलक्षणं प्रथमतो वक्तुं शक्यम् । सगुणब्रह्मजिज्ञासेत्यापत्तेः । न च लक्षणबलात् सगुणस्यैव जिज्ञासेति वक्तुं शक्यम् । निर्गुणे तात्पर्यवृत्तिमात्रप्रतिपाद्ये प्रतिज्ञाया अनुपयोगादिति वाच्यम् । तुरीये चतुर्थचरणे नित्यलीलानिरूपणावसरे निर्गुणस्योपपादनादस्त्युपयोगः । किं च ।

'निर्गुणो वा मिश्रो वा श्रवणे क्रियते यदा ।
तच्छ्रवणं तु व्यर्थं स्यादित्येवं लक्षणं परे' ॥

इति । ब्रह्मणीत्यादि एतेन श्रवणाङ्गत्वं मीमांसायां समर्थितम् । तेन पूर्वं वेदान्तान् श्रुत्वा पश्चान्मननरूपमीमांसेति श्रवणमङ्गमस्याः सा श्रवणाङ्गमीमांसेति प्रोक्तम् । शब्दव्यापाररूपव्यवहारास्थापने सत्यस्य श्रवणं न स्यात् 'यतो वाच' इत्यादिश्रुतेर्ब्रह्मणोऽव्यवहार्यत्वात् । अत्र पक्षीतत्पुरुषपक्षे 'श्रोतव्यो मन्तव्यः' इत्यस्या इदमित्यतयाऽविषयो ब्रह्मविचारः । भाष्ये । माहात्म्येत्यादि ।

'भगवान् ब्रह्म कार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया ।
तदध्यवस्यत्कूटस्थो रतिरात्मन्यतो भवेत्' ॥

इतिवाक्यात् यत इत्यस्य माहात्म्यज्ञानादैक्यज्ञानाचेत्यर्थात् ।
'यस्यां वै श्रूयमाणायां कृष्णे परमपूरुषे ।
भक्तिरुत्पद्यते पुंसः शोकमोहभयापहा' ॥

इति वेदभव्या मीमांसासहितायाः पुष्टिफलं भक्त्वारतिर्भक्तिरनुक्रमिष्यति इतिभक्तिर्माहात्म्यज्ञानफलम् । ननु श्रवणं च फलमित्युभयं च फलं कथमपरं च तृतीयाध्यायोक्तवर्णाश्रमाचारसेवोभयसर्वोत्तमाया न कुतः फलमिति चेन्न । पूर्वमीमांसानिर्णयफलमुक्तं संदेहवारणं दार्ढ्यं च । अत्र तु श्रवणाङ्गमीमांसोच्यते न तु मीमांसानिर्णयः तस्यां तु तत्संबन्धिज्ञानं फलं मीमांसा जन्माद्यधिकरणे निरुक्तजगज्जन्मादिकर्तृत्वेन शास्त्रप्रतिपाद्यत्वेन कृता ब्रह्मणस्तत्संबन्धित्वं ब्रह्मणोऽसंदिग्धत्वात् तन्माहात्म्ये निरुक्त इत्यादि उक्तदेवस्वरूपे संदिग्धेऽपि तज्ज्ञानं माहात्म्यज्ञानमिति तस्य फलत्व मुक्तत्वात् यथा धर्ममीमांसायां मीमांसासंबन्धी धर्मस्तस्य ज्ञानं फलम् । तथा मुक्तत्वात् ।

रश्मिः ।

[ 'त्वमात्मनात्मानमवेह्यमोघदृक्
परस्य पुंसः परमात्मनः कलाम् ।
अजं प्रजातं जगतः शिवाय तन्-
महानुभावाभ्युदयोधिगण्यताम्' ॥ इति
'इदं हि पुंसस्तपसः श्रुतस्य वा
स्विष्टस्य सूक्तस्य च बुद्धिदत्तयोः ।
अविच्युतोर्थः कविभिर्निरूपितो
यदुत्तमश्लोकगुणानुवर्णनम्' ॥ इति
'त्वमप्यदभ्रश्रुतविश्रुतं विभो
समाप्यते येन विदां बुभुत्सितम् ।
प्रख्याहि दुःखैर्मुहुरर्दितात्मनां
संक्लेशनिर्वाणमुशन्ति नान्यथा' ॥

इति भगवतो नारदस्य गुरुचरण श्रीद्वैपायनव्यासान् प्रति वचनात् । ]

'महात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोधिकः ।
स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथा' ॥

इतिपञ्चरात्रे माहात्म्यज्ञानस्य भक्तेः पूर्वत्वात् दैवीसंपत्संपन्नानुशासनानुभवाच्च माहात्म्यज्ञानं फलं श्रुतायाः । नित्यलीलाप्रतिपादनाद्देवो भगवानिति प्रतीतिः । तत्त्वमस्याद्युक्ताभेदो नात्र भक्तिफलक उपात्तः माहात्म्यज्ञानं तत्त्वमस्यादिमहावाक्योक्ताभेदस्योपलक्षकं तेन तस्य किंचिन्न्यूनसाधनत्वं व्यज्यते श्रद्धादीनां तस्य साध्यत्वात् माहात्म्यज्ञानानन्तरं स्वयं भवनादनुक्तिः ग्रन्थगौरवभयात् । मीमांसाविचारे श्रीभागवतफलविचारस्तूभयोः श्रवणघटितत्वेन तत्र श्रवणे दशविधलीलानां श्रवण-विषयत्वावच्छेदकत्वात् । उभयफलकत्वं मीमांसायां संयोगपृथक्त्वन्यायेन । अपरं च वर्णाश्रमाचार-जन्या भक्तिर्निबन्धटीकायामेतादृशभक्तादर्शनान्नास्तीत्युक्तेर्नात्र निरुल्लिखिता । सेवोभयं तु यदा फलदित्सा भगवतस्तदा श्रीमदाचार्यमार्गश्रद्धया शरणागतौ भवति इति न सकलाधिकारकम् । सर्वात्मभावस्तु 'प्रदानवदेव तदुक्तम्' इत्यधिकरणे दानसाध्यः इत्यन्यदेतत् । एवं च मीमांसयार-म्भोक्तासंभावनाविपरीतभावनानिवृत्त्या श्रवणं तेन माहात्म्यं देवत्वज्ञानं फलमिति निष्पन्नम् । एवं च ब्रह्मत्वं ब्रह्मेति निर्विकल्पकं ज्ञानम् । अत्राध्यारोपापवादलक्षणसंगत्या जगज्जन्मादिकर्तृत्वादि तत्रारोप्याग्रे ब्रह्मनिरूपणे 'अरूपवदेव हि तत्प्रधानत्वात्' इत्येनेनापवादादिति कश्चित् ब्रूयात् तं प्रतिब्रूयात् परमतभाषैषा समाधिभाषापोषिका न प्रमाणम् । प्रमाणं तु समाधिभाषा तत्र 'अनर्थोपशमं साक्षाद् भक्तियोगमधोक्षजे' इति भक्तियोगे दृष्टे भक्तिमार्गविरुद्धः कथमारोपापवादः । भगवन्माहा-त्म्यनाशकत्वात् । अत एवोक्तम् अरूपवत्सूत्रे एकदेशिमतेन समाधानमाहेतिभाष्ये । अतो भक्तिमार्गे विद्वन्मण्डनोक्तदिशा सगुणनिर्गुणयोरभेदः । अतो निर्वाहकलक्षणसंगत्या ब्रह्मनिरूपणम् । एकस्य ब्रह्मज्ञानस्य निर्गुणस्य गुणश्रुतिनिरूपणयोराविर्भावकत्वेन श्रुतितात्पर्यविषयस्य च सगुणनिर्गुणश्रुति-निरूपणयोराविर्भावकत्वेन च निर्गुणब्रह्मनिरूपणानन्तरं किं ब्रह्मज्ञाननिर्वाहप्रयोजकमिति जिज्ञासया सगुणब्रह्मनिरूपणमिति । तथा 'आत्मैवेदमग्र आसीत्' 'ब्रह्मविदाप्नोति परम्' 'संचक्षाविर्भाव-

अतः श्रवणाङ्गमीमांसायां माहात्म्यज्ञानफलायां भगवद्वाक्यानामन्यपरत्वेऽन्यवाक्यानां च भगवत्परत्वे दिव्यधर्मादिव्यधर्मव्यत्यासेन वैपरीत्यं फलमापद्येत । तदर्थं दिव्यधर्मनिर्धारो द्वितीयाधिकरणे विचारितः । वेदा एव वाचकाः, अलौकिकमेव कर्मेति । ततः पूर्णालौकिकत्वाय विधिनिषेधमुखेनाधिकरणद्वयम् ।

भाष्यप्रकाशः ।

अतः परं द्वितीयाधिकरणार्थमाहुः अत इत्यादि, कर्मेतीत्यन्तम् । अत इति । ब्रह्मणि व्यवहारस्थापनेन श्रवणविषयत्वसिद्धौ तत्स्वरूपादिविचारस्यावश्यकत्वात् । वैपरीत्यमिति । विपरीतभावरूपम् । अपरप्राप्तिरूपमिति यावत् । विचारित इति हेतोः साध्यस्य च कथनमुखेन निर्णीतः । तस्यैवाकारो वेदा एवेत्यादिनोच्यते । अग्रिमार्थमाहुः तत इत्यादि, पूर्णालौकिकत्वायेति अभिन्ननिमित्तोपादानरूपताबोधनेन तथात्वाय । विधिनिषेधमुखेनेति । समन्वयेन हेतुना पूर्णालौकिकत्वस्य विधिमुखेन स्थापनम् । अव्यवहार्यत्वस्य प्रधानस्य

र.श्मिः ।

स्वेन शब्दात्' इत्यादिभिः सधर्मकब्रह्मनिरूपणानन्तरं किं ब्रह्मज्ञाननिर्वाहप्रयोजकमिति जिज्ञासयास्मन्मते बृहद्वामनपुराणे उत्तरस्थाने खिले च ।

'नारायणादिरूपाणि ज्ञातान्यस्माभिरच्युत ।
सगुणं ब्रह्म सर्वेदं वस्तुबुद्धिर्न तेषु नः ॥
ब्रह्मेति पठ्यतेऽस्माभिर्यद्रूपं निर्गुणं परम् ।

इत्याद्युक्त्वा ।

'तद्रूपं दर्शयास्माकं यदि देयो वरो हि नः ॥ इत्युक्तेः
श्रुत्वैतद्दर्शयामास स्वं लोकं तमसः परम्' ।

इत्यादिभगवद्दर्शितनिर्गुणब्रह्मनिरूपणं कृतमिति । 'नहि विरोधो भगवति' इति 'यस्मिन् विरुद्धगतयो ह्यनिशं पतन्ति' इतिवाक्याभ्यां तादृशमेव ब्रह्मस्वरूपं यादृशं श्रुतयो वदन्ति न तु कुतर्ककल्कनकल्पनवशान्निर्णीतम् । भगवद्वाक्यानां 'को ह्येवान्यात् कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्' इत्यादीनामानन्दमयाधिकरणविषयवाक्यानां भगवत्पदं ज्ञापयति श्रीभागवतीयसमाधिभाषानुसारिकृष्णवाक्यानुसारिभाष्यमिति 'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते' इति शास्त्रार्थात् । अन्यपरत्वे 'आनन्दमानन्दमयोवसाने' इतिद्वितीयस्कन्धवाक्याज्जीवपरत्वेन्यवाक्यानां जीवमुख्यप्राणवाक्यानां गतपादान्तउक्तानां सर्वधर्मोपपत्तेर्भगवत्परत्वे दिव्यधर्मा 'दिव्यं ददामि ते चक्षुः' इतिवाक्यात् दिव्यचक्षुर्ग्राह्या अदिव्यधर्माः साधारणचक्षुरादिग्राह्यास्तेषां व्यत्यासेन वैपरीत्यविपरीतस्यैव भावस्तद्रूपं स्वार्थे ष्यञ् वा अपरप्राप्तिरूपम् ।

'यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तत्तदेवैति कौन्तेय सदा तद्भावभावितः' ॥ इति स्मृतेरित्यर्थः ।

वैपरीत्यमित्यत्र भावप्रत्ययपक्षे भावपदेनाभावव्यावृत्त्या ज्ञायतेऽभावत्वेन प्रतीता अपि नाभावरूपाः किंत्वभावा इवेति । प्रकृते । साध्यस्येति जगज्जन्मादिकर्तृत्वस्य । भाष्ये । अलौकिकमित्यादि लोके भवं लौकिकं तद्भिन्नमलौकिकं निष्क्रियमितिश्रुत्युक्तनिष्क्रियत्वसमानाधिकरणं कर्म जगज्जन्मादिकर्तृत्वं कृतिरेव तद्रूपम् । प्रकृते । अग्रिमार्थमिति अग्रिमाधिकरणद्वयार्थमित्यर्थः । प्रधानस्येत्यादि

१. श्रीभागवतात् ।

समन्वयेक्षतिरूपम् । तदनु प्रथमे पादे शाब्दसंदेहो निवारितो निश्चितार्थे । तत्रापि प्रथमं प्रत्ययसंदेहो निवारितो द्वयेन । प्रकृतिसंबन्धोऽप्यधिकरणत्रयेण पुनरन्तिममधिकरणं संश्लेषनिराकरणाय । एवं प्रथमे पादे शाब्दसंदेहो निवारितः ॥

---

भाष्यप्रकाशः ।

सगुणस्य च निरासेन तत्स्थापनाभिप्रेतमुख्यत्वं बोध्यम् । न च पूर्वं जिज्ञासालक्षणविचाराणां कर्तव्यतायाश्चिन्त्या उक्तत्वादग्रेऽस्याधिकरणस्य कुतो निवेश इति शङ्क्यम् । त्रिसूत्र्युक्तप्रमेयप्रपञ्चनार्थमेव सर्वस्य शास्त्रस्योपदेशेन तत्तत्प्रयोजनाय तस्य तस्याधिकरणस्य संग्रहेऽप्यदोषादिति । आनन्दमयाधिकरणप्रयोजनमाहुः तदन्वित्यादि । प्रकृतिसंबन्ध इत्यत्र प्रकृतौ संबन्धो यस्य संदेहस्य स तथेति व्यधिकरणपदो बहुव्रीहिः । संदेह इति पाठो वा । एवं नवाधिकरणीप्रयोजनमुक्त्वा दशमस्याहुः पुनरित्यादि । संश्लेषवारणायेति परब्रह्मणि यदपि-

रश्मिः ।

गौणश्चेत्यादिसूत्रत्रये निरासद्वयम् । पूर्वमिति समन्वयाधिकरणसमाप्तिं लक्षीकृत्य 'लक्षणेत्थंभूताख्याने' इत्यनेन द्वितीया । समासिश्वरमवर्णतिरोभावः । क्रियाविशेषणं वा सामान्ये नपुंसकं वा । अदोषादिति आधिक्यलक्षणनिग्रहस्थानरूपदोषाभावादित्यर्थः । यथाऽशब्दत्वे त्रिसूत्र्युक्तमेयं शाब्दप्रमेयमप्रयोजनमविषयं स्यात् । अक्षरविषयं स्यात् । अतोऽक्षरपुरुषोत्तमोभयपरत्वप्रयोजनायेऽस्याधिकरणस्य संग्रहः त्रिसूत्र्युक्तप्रमेयप्रपञ्चः तदर्थम् । तदन्वित्यादीति तदनु अधिकरणचतुष्टयनिरूपणानन्तरं निश्चितोर्थः शास्त्रार्थो यत्र तादृशे प्रथमपादे ब्रह्मणि वा जाते पञ्चमाद्यधिकरणैः शब्दसंदेहो निवारित इतिभाष्यार्थः । तथा तत्रापि शाब्दसंदेहनिवारणेऽपि । द्वयेनानन्दमयान्तस्थधर्माधिकरणद्वयेनेत्यग्रिमभाष्यार्थः । प्रत्ययो मयट्प्रत्ययस्तस्य संशयः प्राचुर्ये वा विकारे वेति । अपिपदद्योतितार्थसंग्रहाय षष्ठीसमासादन्यं समासमाहुः प्रकृतावित्यादिना प्रकृतिसंबन्धः प्रतिपाद्यताख्यः संदेहे उपक्रमोपसंहाराभ्यामेवमुदितोर्थः । पाठो वेति संदेहवाचकपदस्थले संदेहवाचकपदपाठो वेत्यर्थः । प्रकृतिसंबन्धसंदेहवारणं त्वेवम् । तल्लिङ्गाधिकरणे आकाशरूपप्रकृतौ आकाशपदवाच्यत्वादध्याससंबन्धो वारितः 'आकाशशरीरं ब्रह्म' इतिश्रुत्याऽऽकाशस्य शरीरत्वात् । तेन 'यदेष आकाश आनन्दो न स्यात्' इतिश्रुतेरानन्दरूपप्रकृतौ अध्यासाख्यसंबन्धो वारितः । हिरण्मयवपुष्यपि यं सुखं पुष्णातीति वपुरिति वपुःपदव्युत्पत्त्याध्यासाख्यसंबन्धो वारितः आश्चर्यरसत्वात् । बृहदारण्यके आसन्यस्य महाप्राणस्य पापवेधध्वंसकत्वमुक्तम् । भगवति तत्पदप्रयोगाज्जनार्दनत्वमुक्तमतिदेशाधिकरणे । मायया जगत्कर्तेति पौराणमतम् । तेन प्राणस्यान्तर्यामिब्राह्मणोक्तशरीरस्याध्यासाख्यसंबन्धो वारितः । ज्योतिरायधिकरणे ज्योतिःपदसंबन्धो ज्योतीरूपे स्पष्ट एव शरीरस्य ज्योतिषोऽध्यासाख्यः संबन्धो वारितः । अनुगमाधिकरणे प्राणपदवाच्यत्वे सति सिद्धेऽन्ते क्रियाज्ञानविषयरूपो भगवानेवेतिप्रतिपाद्य न तावन्मात्रं ततोऽप्यधिक इत्येकोपासनैव विहितेति भाष्येण अधिका 'अत्यतिष्ठद्दशाङ्गुलम्' इतिश्रुतेः प्रकृतिसंबन्धो हि स्पष्ट एवेति संदेह इतिपाठे निवारित इत्यनेनान्वयः । यथाश्रुतपाठे तु उक्त इत्यनेनेति बोध्यम् । अपिशब्देन प्रत्ययसंबन्धः । संबन्धस्त्वभेदः संबन्धस्य संदेहार्थत्वे प्रकृताकाशे भाकाशः भूताकाशः परमात्मा वेति संदेहो वारितः । आकाशः परमात्मेति । एवं प्राणः भौतिकः परमात्मा वेति संदेहः प्राणः परमात्मेति वारितः । एवं ज्योतिश्चरणं भौतिकं वेति संदेहो वारितः ज्योतिश्चरणमिति । आहुरिति मुख्यप्रयोजनमाहुरित्यर्थः । सच्चिदानन्दरूपमेव ब्रह्म न चिदचितोरानन्दे संबन्ध इत्याशयेन व्याकुर्वन्ति परेत्यादिना विवीचोऽपिमुख्यप्राणः । ननु तयोरन्तर्यामिब्राह्मणे शरीरत्व-

ये पुनः कश्चित् सगुणनिर्गुणभेदं प्रतिपादयन्ति, ते स्वमतेन स्वस्य प्रका-

भाष्यप्रकाशः ।

शसंक्लेशमाख्याय । ब्रह्मवादे केवलस्यैव तादृक्त्वेन चिदचिच्छरीरापेक्षाराहित्यादिति । सिद्धवासुः इत्याक्षिप्याद् चतुष्किरण्या निवारितः । तथाचैतावतैव शाब्दसंदेहनिवृत्तेः कार्यसिद्धेश्च संभवा-न्न्यूनाधिकाधिकरणाङ्गीकारो न युक्त इत्यर्थः । ननु केचिदेकदेशिनो, यतो वाच इत्यस्य वाच-स्वाध्यायनसामोपरत्वनिषेधनपरत्वमास्थाय श्रोतव्यादिवाक्यवैयर्थ्यपरिहाराय ब्रह्मणि सगुण-निर्गुणभेदं प्रतिपादयन्ति । ततश्च निर्गुणं ब्रह्मोक्तश्रुतिरर्थाद् बोधयति । श्रोतव्यादिश्रुतयस्तु मूल्यात् सगुणं बोधयन्तीत्येवमपि ब्रह्मणि व्यवहारसिद्धेः पूर्वोक्तरीत्या जिज्ञासाद्यत्रसोक्तश्रुते-र्वार्थकथनं न युक्तमित्याशङ्कायां तन्मतमनूद्य दूषयन्ति ये पुनरित्यादि । कथं बोधयन्तीत्यत

रश्मिः ।

आवणादस्तु तत्संक्लेष इत्यत आहुः ब्रह्मवाद इत्यादि । आत्मैवेदमग्र आसीद्ब्रह्मैव सदेवा-सदेवेत्यादिषु ह्यन्ययोगव्यवच्छेदकादेवकारादाहुः केवलस्यैवेति अन्तर्यामिब्राह्मणं तु साधारणात्मपरं मुख्यप्राणे तु तत्त्वाश्रावणाद्वाऽदोषः । इतीति रूपं भाष्योक्तमिदमाधिदैविकम् । तेनेदमधिकरणं पूर्वोक्तस्य सर्वस्य निगमनार्थमिति बोधितमित्यस्य पूर्वपादान्तरस्यस्य भाष्यप्रकाशस्याध्यात्मिकरूप-परत्वम् । सर्वपदस्य संकुचितवृत्तित्वेनाक्षिप्तावान्तरभेदपरत्वात् । रश्म्युक्तस्याधिदैविके प्राणविशिष्टेऽन्तर्यामिब्राह्मणोक्ते जगज्जन्मादिकर्तृत्वलक्षणस्यातिव्याप्तिवारणरूपप्रयोजनस्याधिभौतिकत्व-मधिदैविकमाधिभौतिकं रूपमित्यदोषः, सर्वनिर्णये त्रैविध्यदर्शनाच्च भाष्यविरोधः ।

'सूर्यो मण्डलमानी च चक्षुःप्रेरक एव नः' ।

एवं सर्वत्र तद्भेदाः स्वयमूह्या 'अन्येऽप्यवान्तरा भेदाः शतशः सन्ति सर्वशः' ॥

वागिन्द्रियस्य त्रयो भेदाः प्रसिद्धा यदा गृह्यन्ते तदोपलक्षणीयावितरौ पक्षौ रश्मिभाष्य-प्रकाशोक्तौ । कार्यसिद्धेरिति आत्मा वा अरे द्रष्टव्य इतिश्रुत्युक्तश्रवणादिरूपकार्यसिद्धेः । न्यूनेत्यादि एकादशाधिकरणानि शंकराचार्या रामानुजाचार्याश्च स्वीकुर्वन्ति मध्वाचार्या अपि न्यूनाधिकानि वा ततश्च नाधिक्यरूपनिग्रहस्थानमिति ब्रूमः । तत्र तत्राधिकरणे दूषणभूषणानामुक्तत्वात् । केचिदित्यादि शांकरा विवक्षितगुणोपपत्तेश्चेति सूत्रे अथवा जन्माधिकरणे यद्वा ईक्षत्यधिकरणे गौण इत्याशङ्किनो विष्णुधर्मोक्तः । ननु तर्हि श्रोतव्य इत्यादिवाक्यनिवृत्त्या तद्वैयर्थ्यमित्याशङ्क्याहुः श्रोतव्यादीति । सगुणेति तथा च गुणाः श्रोतव्यादिविधिविषयाः इति न श्रोतव्यादिवाक्यवैयर्थ्यमिति भावः । उक्तश्रुतिः यतो वा इतिश्रुतिः भाष्योक्तार्थं स्फुटोपपादनार्थमियमुपात्ता सूत्रे तु 'अप्राणो ह्यमनाः शुभ्रः' इतिश्रुतिः शुद्धब्रह्मविषया । इयं तु मनोमयप्राणशरीर इति सगुणविषयेति विशेष इति । उक्तश्रुतिर्यतो वाच इतिश्रुतिर्वा । अर्थादिति अभिहितार्थात् । भावप्रधानो निर्देशः अभिहितार्थत्वादित्यर्थः । शाब्दा-दिति गुणविशिष्टवाचकशब्दात् । पूर्वोक्तेति जीवोक्तरीत्या अर्थकथनमिति । जिज्ञासासूत्रस्य ब्रह्मसंबन्धिनां जिज्ञासेति शेषषष्ठीकथनम् । ईक्षत्यधिकरणे 'यतो वाच' इतिश्रुतेरिदमित्यत्रत्य [illegible] न च । ये पुनरित्यादीति प्रतिज्ञाविषयस्य ब्रह्मणः शुद्धत्वेन तद्विचाराकरणाद् बोधयन्तीत्यर्थः । गौणमेवात्मशब्दादित्यत्र ये प्रकृतिसंबन्धात्कर्तृत्वं मन्यन्ते तान् प्रत्यपाकु

१. कार्यकथना [illegible]

जिज्ञासानधिकारं बोधयन्ति। ब्रह्मवादे सांख्यानामिव गुणानामनङ्गीकारात्।

भाष्यप्रकाशः।

आहुः ब्रह्मवाद इत्यादि । गुणानामिति नित्यभिन्नानाम् । ननु, 'प्रधानक्षेत्रज्ञपतिर्गुणेशः' इत्यादिश्रुतिषु गुणाङ्गीकारात् कथमनङ्गीकारावगम इत्यत आहुः भौतिकेत्यादि । भौतिका भूतोत्पादकत्वेन तत्संबन्धिनः । तथाच, प्रधानेत्यादिश्वेताश्वतरश्रुतौ गुणानां सिद्धवन्निर्देशेऽप्युपनिषदारम्भे, भूतानि योनिः पुरुष इति चिन्त्यमित्यत्र योनिपदोक्तनित्यभिन्नगुणानङ्गीकारबोधनादुक्तश्रुतौ ब्रह्मवादसिद्धा भगवदुत्पन्ना एव ते बोध्याः । अतस्तदभिप्रेतानां मायावादसिद्धानां गुणानामसंबन्धार्थमेवाध्यायारम्भात् सा श्रुतिव्यवस्था असंगतेत्यतस्तथेत्यर्थः । ननु कथमेवमवगम्यत एतदर्थमेवाध्यायारम्भ इति, तत्राहुः अन्यथेत्यादि । तत्कारणत्वेनेति

रश्मिः।

ब्रह्मवाद इत्यादि सांख्यस्य रचनानुपपत्त्यधिकरणे कारणत्वांशे निरासाच्च । अतो विष्णुशर्माणं गौणः कर्तेति ब्रुवाणं प्रति शांकरांश्च प्रत्युक्तं सांख्यानामिवेति । ननु मायावादिनः प्रति निरुक्तिरेषा कथमन्यान्प्रति व्याख्यायते । सत्यम् । यद्येवं त्वमङ्गीकुर्यास्तदापि त्वयानङ्गीकार्येत्याशयात् गुणेश इति श्वेताश्वतरे गुणाङ्गीकारमाशङ्क्य विशिंषन्ति स्म नित्येत्यादिना । अयमर्थः—विद्वन्मण्डने नित्यभिन्ना गुणा हि उपाधिभूताया मायाया ब्रह्मणश्चानादित्वेनोपहितस्याप्यनादितयाऽविरतः सर्गः प्राप्तस्तद्वारणाय स्वीकृताः तत्क्रमनियामकत्वं चेच्छायास्तदेतत्कपोलकल्पितम् । यतः शुद्धब्रह्मजिज्ञासां प्रतिज्ञाय जन्मादिकर्तृत्वमुक्तवन्तो व्यासचरणाः । अन्यथा जन्माद्यस्य यतः शास्त्रयोनित्वात् तत्सगुणं ब्रह्मेति सूत्रितं स्यात् । अतो गुणानामनङ्गीकारादित्यर्थः । प्रधान इत्यादि प्रधानं गुणसाम्यावस्था क्षेत्रज्ञो देहज्ञो हि गीताक्षेत्रक्षेत्रज्ञनिर्देशयोगाध्याये हंसोपनिषदि तत्र यत्प्रकाशते चैतन्यं स क्षेत्रज्ञ इत्युच्यते । तत्र इत्यस्य लिङ्गशरीर इत्यर्थः । तयोःपतिरित्यर्थः । न च क्षेत्रज्ञं चापि मां विद्धि इत्यस्य गीतास्मरणस्य विरोधः । 'सर्वं खल्विदं ब्रह्मे'त्यदोषात् । तत्संबन्धिन इति ब्रह्मसंबन्धिनः ( भूतसंबन्धिनः ) । तथा च गुणानामीशो न तु गुणाधीनकर्ता अस्वातन्त्र्यापत्त्या कर्तृत्वभङ्गप्रसङ्गात् कर्ता स्वतन्त्र एव स्यात् इति निबन्धे । ननु तर्हि गुणेश इति प्रतिपादितगुणानां कः संबन्ध इत्यपेक्षायां कार्यकारणभावरूपं तं बोधयितुमाहुः तथा च इत्यादि उपनिषदारम्भ इति श्वेताश्वतरोपनिषदारम्भे । योनिपदस्य समवायिकारणवाचकत्वात् मतान्तरे गुणवाचकत्वमित्याशयेनाहुः योनिपदेत्यादि । अनङ्गीकारबोधनं तु चिन्त्यमितिपदेन लोके सम्यक् प्रकारेण ज्ञातव्यं स्मर्तव्यं वा । चिती संज्ञाने चिती स्मृत्यामितिधातुपाठात् । अत्र पक्षे द्वारं गुणाः बोध्या इति ।

'सत्त्वं रजस्तम इति निर्गुणस्य गुणास्त्रयः ।
स्थितिसर्गनिरोधेषु गृहीता मायया विभोः' ॥

इतिद्वितीयस्कन्धवाक्यात् । मायावादपदं विष्णुशर्मपक्षस्योपलक्षकम् । अध्यायारम्भादिति आनुमानिकाधिकरणेन तथावसायात् । गौणश्चेन्नात्मशब्दादित्युक्तत्वात् । श्रवणाय तु अध्यायचतुष्टयम् । अधीतानामित्याद्युक्तभाष्यात् । प्रथमपादे शब्दसंदेहनिवारणात् द्वितीयादिष्वर्थसंदेहवारणात् भाष्ये एव हि इति शब्दद्वयम् । सा इति सगुणनिर्गुणपरा । तथेति भाष्योक्ता व्यवस्था अत्र न तत्पुरुषः किं तु बहुव्रीहिरित्याहुः तत्कारणकत्व इत्यादिना ।

१. गुणानामनङ्गीकारादित्यन्येनान्येति ।

भौतिकगुणानामसंबन्धार्थमेव अध्यायारम्भः । अन्यथा सर्वस्यापि तत्कारणत्वेन तत्संबन्धस्य विद्यमानत्वादन्यनिराकरणेन तत्प्रतिपादकत्वनिर्धारकाधिकरणानां वैयर्थ्यमेव ।

अर्थसंदेहनिराकरणार्थं द्वितीयारम्भः । तत्रार्थो द्विविधो जीवजडात्मकः प्रत्येकसमुदायाभ्यां त्रिविधः । तत्र प्रथमं जीवपुरःसरेण संदेहा निवार्यन्ते ।

भाष्यप्रकाशः ।

तत्कारणकत्वेन । तथाचातोऽवगम्यत इत्यर्थः । एवं प्रासङ्गिकं निराकृत्य प्रस्तुतमाहुः अर्थेत्यादि । कोऽर्थः संदेहजनकः, कथं च तन्निराकरणमित्यपेक्षायामाहुः तत्रार्थ इत्यादि । द्वितीयपादार्थमाहुः । तत्र प्रथममित्यादि । जीवपुरःसरेणेति प्रथमाधिकरणे, अनुपपत्तेस्तु न शारीर इति पूर्वं जीवस्यैव निराकरणाज्जीवपुरःसरेण विचारेणेत्यर्थः । एवमग्रिमपादेऽपि, नानुमानमतच्छब्दादिति सूत्रप्रणयनाज्जडपुरःसरत्वम् । एवं चतुर्थेऽप्युभयपुरःसरत्वमानुमानिकसूत्रविवरणादवगन्तव्यम् । तथाच त्रिभिः पादैस्त्रिविधार्थसंदेहो निवार्यत इत्यर्थः । एवं च पादानामेककार्यकत्वेऽपि क्रमनियामिकाऽत्रावसररूपा संगतिरिति बोधितम् ।

अन्ये तु प्रथमपादे स्पष्टब्रह्मलिङ्गान्याकाशादिवाक्यानि निर्णीतानि । द्वितीयतृतीययोस्त्वस्पष्टब्रह्मलिङ्गानि निर्णीयन्त इत्याहुः । तन्मते क्रमनियामकं न स्पष्टम् ।

रश्मिः ।

अतोवगम्यते इति कार्यस्य जगतः सगुणनिर्गुणत्वाद् गुणास्तु 'आत्ममायामृते' इति स्वमते अवस्थानादप्यवगम्यते । भाष्ये । तस्य प्रतिज्ञातस्य निर्गुणस्य कारणत्वेन तत्संबन्धः कार्यकारणभावः । सृष्टिः षोढेति न भाष्ये विशिष्य संबन्धग्रहणम् । 'कार्यकारणवस्त्वैक्यमर्षणं पटतन्तुवत्' इत्यन्यामावेनान्यस्य आनन्दमयविभूत्यादेरभावेन तन्निराकरणेन ब्रह्मत्वप्रतिपादकत्वनिर्धारकाणामानन्दमयाद्यधिकरणानां विशेषणाभावप्रयुक्तनिर्धारकत्वाभावेन वैयर्थ्यम् । एवकारस्तु गुणानां तद्भिन्नत्वेन तदात्मकत्वेऽवस्थितमते सदानन्दस्य जगत्कर्त्री शक्तिः चितो व्यामोहिकेति ग्रन्थासंगतिः । सांख्यवत्प्रतिज्ञा निर्गुणस्य जगत्कर्त्री शक्तिरन्या चेत्युपपत्तेः । अतः सार्थकत्वे यथा कथंचिन्मतासंगतिं व्यवच्छिनत्ति । तेनावस्थितमते सांख्याद् भेदः मायावादिमतं सगुणं विद्वन्मण्डने विचारितम् । प्रकृते । इति पूर्वमिति जीवनिराकरणाल्लिङ्गाद्धेतोः पूर्वकालं पूर्वपादार्थनिरूपणकालम् 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । प्रसङ्गादन्ययोः पादयोरप्याहुः एवमग्रिमेति । जड इति प्रकृतिरित्यर्थः । एकेत्यादि एकस्य कारणस्य कार्यप्रतिपादकानां ब्रह्मसमन्वयस्य प्रथमपादार्थस्य हि जीवजडतदुभयसमन्वयनिराकरणानि कार्याणि तत्कत्वेपीत्यर्थः । स्वार्थे कः । चेतनत्वेन प्रतिबन्धकीभूतजीवनिराकरणजिज्ञासानिवृत्तौ सत्यामवश्यवक्तव्यत्वं जडनिराकरणस्येत्यवसररूपा । तन्निरूपणानन्तरं तदुभयनिरूपणमित्यवसरः । अन्य इत्यादि शंकराचार्यादयः । तन्मत इत्यादि द्वितीयार्थस्यैव प्रथमनिरूपणं तृतीयस्य पश्चादित्यत्र क्रमनियामकाभावः । प्रतिबन्धकीभूतजिज्ञासानिवृत्तौ सत्यामवश्यवक्तव्यत्वस्योभयत्र तौल्यात् । प्रकृते तु जडापेक्षया जीवस्य चेतनत्वेन वैशिष्ट्यात् प्रथमं तत्पुरःसरेण संदेहवारणं पश्चात् जडपुरःसरेणेत्यर्थः । यद्यप्युपास्यज्ञेयब्रह्मणोर्भेदमाश्रित्य पादयोरवान्तरभेद इति तद्व्याख्यान उक्तं तथाप्युपासनायाश्चित्तशुद्ध्यर्थत्वेन उपास्यापेक्षया ज्ञेयस्योत्कृष्टत्वात् पूर्वनिरूपणं प्राप्तं तदभावात्तथेति ज्ञेयम् । अन्ये त्विति । रामानुजाचार्यास्तु ब्रह्मजीवलिङ्गकानि वाक्यानि द्वितीये विचार्यन्ते । स्पष्टलिङ्ग-

इदमाम्नायते। 'सर्वं खल्विदं ब्रह्म तज्जलानिति, शान्त उपासीत' 'अथ खलु क्रतुमयः पुरुषो यथा क्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति। स क्रतुं कुर्वीत मनोमयः प्राणशरीर' इत्यादि। तत्र वाक्योपक्रमे सर्वं खल्विदं ब्रह्मेति सर्वस्य ब्रह्मत्वं प्रतिज्ञाय, तज्जलानिति सर्वविशेषणं हेतुत्वेनोक्त्वा तत्त्वेनोपासनमुक्तम्।

नचायं शमविधिः। वाक्यार्थे लक्षणाप्रसङ्गात्। कारणत्वेन सामान्यत एव

भाष्यप्रकाशः।

एवं पादसंगतिं निरूप्य प्रथमाधिकरणं व्याख्यातुं विषयवाक्योपन्यासमुखेनावतारयन्ति इदमाम्नायत इत्यादि। छान्दोग्ये पञ्चमप्रपाठके उच्यते। अत्रादिपदेन, भारूपः सत्यसंकल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वेत्यादिनाऽणीयस्त्वगुणविशिष्टस्य, तत एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्या इत्यादिना स एव ज्यायस्त्वगुणविशिष्ट इत्युक्त्वा पुनः सर्वकर्मत्वादिविशिष्टस्य, तत एतद् ब्रह्मैतमितः प्रेत्याभिसंभवितास्मीति, यस्य स्यादद्धा न विचिकित्सास्तीत्येतावतश्च बोधकः शाण्डिल्यविद्याख्यो ग्रन्थः परामृश्यते। अत्र संशयादिकं बोधयितुमेतद् व्याकरिष्यन्तोऽत्र वाक्यद्वयस्य प्रतीयमानत्वादादौ पूर्वं व्याकुर्वन्ति तत्र वाक्येत्यादि। तज्जलानिति तस्माद् ब्रह्मणो जायत इति जं लीयत इति लम्, अनितीत्यन्। ब्रह्मसंबन्धेनोत्पत्तिलयस्थितिकमित्यर्थकं तज्जलानिति सर्वविशेषणमुपासनाहेतुत्वेनोक्त्वा सर्वस्य ब्रह्मत्वेनोपासनमुक्तमित्यर्थः। ननु यथाऽत्र तज्जलानिति सर्वविशेषणं तथा शान्त इत्युपासकविशेषणम्, इतिश्च हेतौ। तथा सत्यत्र जगत उक्तरूपत्वात् सर्वत्र रागद्वेषरहितो भूत्वा वक्ष्यमाणोपासनं कुर्यादिति शमविधिमङ्गीकृत्याग्रे मनोमयत्वादिधर्मवैशिष्ट्यकथनात् तत्र जीवोपासनमेव विधीयत इति पूर्वपक्षमुत्थापयन्ति। तत् कुतो नाद्रियत इत्याशङ्क्याहुः नचायमित्यादि। शमविधिमुपगच्छता, शान्त उपासीतेत्यस्य शमपूर्वकोपासनाविधानरूपे वाक्यार्थेऽ-

रश्मिः।

कानि तृतीये तत्प्रतिपादनछायानुसारीणि चतुर्थ इत्याहुः। माध्वास्तु पादद्वयेनान्यत्र शक्तत्वेन प्रतीतानां शक्तितात्पर्याभ्यां भगवत्परत्वमुच्यते तृतीये तु पादे उभयत्र तथात्वेन प्रतीतानां तथेत्याहुः। अत्रापि क्रमनियामकं न स्पष्टम्। भास्कराचार्यास्तु श्रुतिलिङ्गवाक्यप्रकरणसंदिह्यमानवचनव्यक्तिषु वाक्येषु निर्णयार्थं द्वितीयतृतीयपादावारभ्येते इत्याहुः। एतावत इति एतावतः फलपर्यन्तार्थस्येत्यर्थः। वाक्यद्वयस्येति उपासीतेत्यन्तमेकं वाक्यमर्थैकत्वे सति विभागे साकाङ्क्षत्वात्। अथ खल्वित्यादि ब्रह्मवाक्यमेवेति भाष्यात्। तथापि पौरुषलक्षणापेक्षया प्रामाणिकसौत्रलक्षणस्यैव ज्यायस्त्वात् पूर्वोक्तरूपवाक्यत्वस्यैव भाष्येऽत्रादरात्। वाक्यद्वयस्येति साधु। 'एकतिङ् वाक्यम्' इति पौरुषलक्षणाङ्गीकारे वाक्यचतुष्टयात्। भाष्योक्तेति द्वितीयम्। पूर्वमिति उपासीतेत्यन्तम्। छान्दोग्यीयाग्रेतनसंदर्भस्याग्रे व्याकरणात्। जमिति जायत इति जम्। पञ्चम्या जनेर्डः। लमिति लीयत इति लम्। अनिति कर्तरि क्विप्। विश्वेश्वरस्तु अनितीत्यनम्। अकारमकारलोपौ च्छान्दसौ इत्याह। एवं सर्वस्मिन् ब्रह्मत्वं तज्जलान्त्वं च केन धर्मेणोपासनमित्यत आह सर्वस्येत्यादि। उक्तमिति।

१. एतन्मिताक्षरायां तु तृतीयं इति कथ्यते। २. व्याख्यानात्।

सिद्धत्वाच्च । अतः सर्वजगतो ब्रह्मत्वेनोपासनमुक्तम् । इदमेव पुराणादिषु विराडूत्वेनोपासनम् । अतः परमग्रिमवाक्यार्थे संदेहः । क्रतुं कुर्वीतेति । क्रतुर्धर्मो

भाष्यप्रकाशः ।

ङ्गीकृते, उक्तोपासनार्थं शमं संपादयेदिति वचनव्यक्तेः पदद्वयेऽपि लक्षणापत्त्या वाक्यार्थे लक्षणाप्रसङ्गात् । वक्ष्यमाणोपासनाया जीवात्मविषयत्वाङ्गीकारे च, शान्तो दान्त इत्यात्मदर्शनवाक्यादस्यामप्यात्मदर्शनसामान्येन शमस्यावापसिद्धत्वाच्च विधिवैयर्थ्यापातः । क्रतुकरणस्याग्रे वक्ष्यमाणत्वेन तदनुवादाङ्गीकारोऽप्यसंगत इति चकारार्थः । तथाच नैवं पूर्वपक्ष उचित इत्यर्थः । तस्मादयमुपासनान्तरविधिरेवेत्याहुः अत इत्यादि । एतदुपष्टम्भायोपबृंहणमाहुः इदमित्यादि । तच्चोपासनं प्रकारभेदेन, 'पातालमेतस्य हि पादमूलम्' इत्यादिनोक्तमत उपासनान्तरोपगम एव युक्त इत्यर्थः । एतद्विचारप्रयोजनमग्रे स्फुटिष्यति । प्रस्तुतमाहुः अतः परमित्यादि । कथं संदेह इत्याकाङ्क्षायां तं बोधयितुं व्याकुर्वन्ति क्रतुरित्यादि । ननु

रश्मिः ।

अन्यस्य हेतुगर्भविशेषणत्वादिति भावः । शमविधिमिति शमरूपगुणविधिमित्यर्थः । मनोमयत्वेत्यादि कोशधर्मवैशिष्ट्यकथनात्तथा । उत्थापयन्तीति शंकराचार्यादयः । पदद्वयमिति शान्त इत्यस्य शमोपलक्षकत्वमाधेयतासंबन्धेनोपासनायाः संपादनलक्षकत्वं कार्यतासंबन्धेनेत्येवं पदद्वयेनेत्येवं पदद्वयेपि लक्षणापत्त्येत्यर्थः । वाक्यार्थे पदार्थसमुदायात्मके कारणत्वेनेत्यादिहेतुभाष्यं विवृण्वन्ति स्म वक्ष्यमाणेत्यादि । वक्ष्यमाणेति अत्रैव वक्ष्यमाणेत्यर्थः । अस्यामिति जीवविषयोपासनायाम् । आत्मदर्शनसामान्येनेति शान्तो दान्त इत्यत्र आत्मन्येवात्मानं पश्येत् । अथ यथा क्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवतीत्यात्मदर्शनं सामान्यं तेन । आवापेति शमस्यावापसिद्धत्वं च कारणत्वेन बोध्यम् । आवाप आक्षेपात् । यत्तु स क्रतुं कुर्वीतेति विहितमुपासनं सर्वं खल्वित्यत्रानूद्य शमगुणो विधीयते इति रामकिंकरो वृत्तिकृदाह तदसंगतमिति बोधयितुं चकार इत्याहुः क्रतुकरणस्येति । असंगत इति अनु पश्चाद्वादोनुवादः । अस्य तु पूर्वत्वादनुपदार्थाभावादसंगतः । न च लक्षणेत्थंभूतसूत्रोक्तोन्वर्थः । स क्रतुमिति वाक्यं लक्ष्यीकृत्य वादः सिद्धस्य कथनमनुवाद इत्युद्योषादिति शङ्क्यम् । सिद्धत्वाभावेन तल्लक्ष्यीकरणासंभवात् स क्रतुमित्यस्य पाश्चात्यत्वात् । नैवमिति । एतेन छान्दोग्यभाष्ये यच्छंकराचार्यैरत्र शमविधिरङ्गीकृतः सोपि व्याख्यातः । उपासनेति स क्रतुमित्युपासना 'शान्त उपासीत' इत्युपासनान्तरम् । तस्य विधिरित्यर्थः । उक्तमिति द्वितीयस्कन्धे । भाष्ये तु सर्वं खल्विदं ब्रह्मत्वेनोपासनं विधीयते सर्वात्मकं ब्रह्म शान्तः सन्नुपासीत । स क्रतुं कुर्वीत·······सर्वात्मकं ब्रह्म मनोमयेत्यादिगुणकमुपासीतेत्यर्थ इत्युक्तप्रायम् । तत्रेत्यनुवादपदार्थो नासंगतो यद्यपि तथापि क्रतुपदस्य शक्यो यज्ञो मुने विद्वान् विश्वकोशात् । तत्रान्ये त्वेवंकारोपासनान्तरविधिरेवेति । अत इति एवं विधेरसंभवात् । अग्र इत्यत्रैवाग्रे स्फुटिष्यति । गुणाभावस्तु दोषादित्वात् । प्रथमाध्याये वस्तुनिर्धारवाचकम् । तथाहि भाष्ये तज्जलान् सर्वमिदं योगिप्रत्यक्षं साकारं ब्रह्मेत्युपासीतेत्युक्तम् । एतदेव मुण्डके रूपं प्रतिपाद्यते, अक्षरात्परतः पर इत्यनया श्रुत्याऽत्र खल्विदमनुभवसिद्धमित्युक्तम् । परे तु इदि परमैश्वर्यं इत्यस्येति परमैश्वर्यवचनादि ब्रह्मेति श्रुत्यर्थोऽ

१. अनुभवसिद्धम् ।

यज्ञ इति यावत्। तस्य स्वरूपं मनोमयः प्राणशरीर इति।

उपासनाप्रकरणत्वादुपासनैवैषा। तत्र मनोमय इति प्रमाणभूतो वेद

भाष्यप्रकाशः।

द्रव्यदेवते यज्ञस्य स्वरूपभूते। ते चात्रानुक्ते इति कथं यज्ञत्वावगतिरित्यत आहुः तस्येत्यादि। तथाच द्रव्यादिरहितोऽयं ज्ञानयज्ञ इत्यर्थः। ननु यस्य भूयांसो यज्ञक्रतव इत्याहुरित्यादावङ्गोपाङ्गसहितहविस्त्यागरूपक्रियायाः क्रतुत्वेन प्रसिद्धत्वान्मानसस्यास्य कथं क्रतुत्वमित्यत आहुः उपासनेत्यादि। तथाच प्रकरणबलाद्रूढिमनादृत्य क्रियतेऽसौ क्रतुरिति योगं चादायोपासनाद्रियत इत्यस्यास्तथात्वमित्यर्थः। तर्हि कोऽत्र विषय इत्यतस्तं प्रकटयन्ति तत्र मनोमय इत्यादि वेदस्य मनोमयत्वं तु

रश्मिः।

सर्वं ब्रह्मस्वरूपमिति भावार्थपादे भाष्यादावस्ति। ज्ञानयज्ञ इति 'द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे। स्वाध्यायज्ञानयज्ञाश्च, मुनयः संशितव्रताः' इत्यत्र शंकरभाष्ये ज्ञानं शास्त्रार्थपरिज्ञानमिति व्याख्यानेन न्यायसंभूतो वेदान्तार्थनिश्चयो ज्ञानं तद्रूपो यज्ञः। भारूप इति श्रुतिविशेषितत्वादित्यर्थः। भाष्यार्थस्तु तस्य क्रतोः स्वरूपं मनोमय अमः सुः। मनोमय इति द्वितीयान्तम् एवं प्राणशरीर इत्यपि द्वितीयान्तं प्रथमान्ते वा पदे आत्मा मनोमय इत्यादिमननम्। एतेन क्रतुर्ध्यानं तस्य विषयमाह मनोमय इत्यादीति प्रत्युक्तम्। अन्वित विभक्त्यपेक्षया तस्य विषय इति शेषपूरणस्य गुरुत्वादिति।

एषा..........गीताधिकरणेऽस्ति। गीतायामप्येतद्विशेषणद्वयमिति संशयेपि..............

भारूपः सत्यसंकल्प इत्यादिकविशेषणानां त्यागः।

यस्य भूयांसो इति श्रुतिः प्रथमाध्याये तृतीयाष्टके संहितायां श्रूयते। अस्या अर्थो भाष्ये द्रष्टव्यः। मानसस्येति कामः संकल्प इति श्रुतौ धीर्मन इत्युक्तेर्मानसत्वं ज्ञानस्य क्रियात्वं केन प्रकारेणेति प्रश्नः। प्रकरणस्य श्रुतिलिङ्गवाक्यानां प्रबलानामभावात्। निर्णायकत्वं भाष्ये आहुः उपासनेत्यादि। प्रथमोक्तोपासीत इत्युपासना स्मरणात्मिका मनोव्यापारविशेषरूपा वा.......
ऽवर्जनीयप्राबल्यात्कताः क्रियारूपत्वस्य श्रुतिलिङ्गवाक्यप्राप्तत्वेपि उपक्रमविरोधादर्थानिर्णायकत्वात्। अतोऽत्र क्रियायां क्रतुपदस्य रूढिमनादृत्य क्रियते उपास्यते इत्यसौ विप्रकृष्टः क्रतुः। क्रतुशब्दार्थस्तु मननमित्यग्रे वक्ष्यते। मनोमययज्ञेनेति मननं करणाधिकरणयोश्चेति करणे ल्युट्। मनुते इत्युक्तम्। मन अवबोधे। ज्ञानं विषयमिति प्रकृतांशेन दिशवचि....विप्रकृष्टं ज्ञानमुच्यते। यद्यपि तज्जलान् इत्युक्त्वा तज्जत्वेन तल्लत्वेन तदनत्वेन सर्वज्ञानविषयत्वात्तज्जत्वादिप्रकारकसर्वविशेष्यकज्ञानत्वात् तज्जत्वेन सर्वं खल्विदं ब्रह्मेत्यभेद उपपन्नः। यथा काकाज्जातः काकः तथापि लक्षणासंभवेदतो भेदे प्रकारान्तरम्। ब्रह्म तावच्चतुष्पात्। चतुष्पात् ब्रह्म विभातीति श्रुतेः। अतः तज्जत्वेपि चतुर्व्यूहेकत्ववत् चतुर्णां पादानामेकत्वमेकमेवाद्वितीयं ब्रह्मेति श्रुतिसिद्धम्। अपेक्षाबुद्धिजन्यत्वेपि द्वैतस्य द्वैतमिथ्याद्वैतसच्चरूपस्य सत्त्वात्। ब्रह्मप्रकरणे 'अविभक्तं च भूतेषु विभक्तमिव च स्थितम्' इति गीतावाक्यात्। तत्र तैजसस्य स्वप्नसाक्षिकस्य प्राज्ञस्य सुषुप्तिसाक्षिकस्य च नानात्मकत्वेन ब्रह्मत्वं युक्तम्। 'विश्वो वैश्वानरः प्रथमः पादः' इति विश्वस्य दुःखित्वेन नाशोत्पत्तिमत्त्वेन सशरीरत्वेनाब्रह्मत्वमज्ञानेन प्रतीयते। तत्र प्रतिविधास्यामः। आविर्भावतिरोभाववादे विद्वन्मण्डने नाशोत्पत्तिप्रतीती भ्रान्ते इति स्फुटमुपपादिते। दुःखित्वं स्वज्ञानकृतमात्सर्यादिभिः सुखपरिणाम एव मनःसुखं मात्सर्यादिभिरुपहतं तद्दुःखमित्युच्यते तद्द्वारादे चातुर्मास्यमाहात्म्ये स्पष्टम्। शरीरं तु आकाशशरीरं ब्रह्मेत्याकाशपदवाच्यम्। मांसशरीरत्वं तस्मात् वा एतस्मादात्मन आकाश संभूतः

उक्तः। प्राणशरीर इति कार्यकारणयोरभेदोपचारः। अग्रे सत्यसंकल्पादिधर्मवच-नात् किमयं विज्ञानमयो जीवो ब्रह्मत्वेनोपास्य उत ब्रह्मैवान्तर्यामी, यः पुराणेषु सूक्ष्म उक्तः ।

---

भाष्यप्रकाशः ।

'स एष जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः ।
मनोमयं सूक्ष्ममुपेत्य रूपं मात्रा स्वरो वर्ण इति स्थविष्ठः' ॥

इत्येकादशस्कन्धीयभगवद्वाक्यसंदर्भे स्पष्टम् । कार्यकारणयोरिति वेदप्राणयोः । नन्वेवमत्र वेदरूपस्य विषयस्य स्फुटत्वेन कथं वाक्यार्थे संदेह उच्यत इत्यत आहुः अग्र इत्यादि। आदिपदेन, एष म आत्मेत्यादेर्वेदव्यावर्तकस्य जीवसंग्राहकस्य धर्मस्य संग्रहः । अयं विज्ञानमयो जीव इति वेदबोधितत्वान्मनोमयः प्राणशरीरो, भारूपत्वेन विज्ञानमयो जीवः प्राणधारणप्रयत्नवान् ब्रह्मत्वेनोपास्यः, स म आत्मेति कथनाच्च । उत सत्यसंकल्पादिपदो-

रश्मिः ।

इति तैत्तिरीयोक्ताकाशस्य सुबोधिन्युक्ते भगवानेवैवमवस्थो जात इति प्रकारे मांसस्य तज्जातत्व-स्वीकारात् । अंशद्वारेति ज्ञेयम् । तथापि संहितासमासौ नभो मांसानीति । न च छान्दोग्येऽन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मा१ऽसं योऽणिष्ठस्तन्मनः इति मध्यमांसोऽन्नमन्तरा नेति कथं नभो मांसानीति वाच्यं अशितान्नस्य मात्रादेर्मांसत्वेन पुत्रादेः शरीरत्वाभावात् अतः संहितोक्तं शरीरम् । एवं चतुर्णां ब्रह्मत्वादेकरूपत्वसंभवात् । वेदान्तेषु तिसृषु वृत्तिषु योगादरणात् । ये धातुशब्दा इति पत्रावलम्बनात् । अस्या उपासनायाः तथात्वं क्रतुत्वम् । न चैवं त्यागरूपक्रियात्यागे संहिताया यस्य भूया१ऽस इत्यादिश्रुतेर्विरोध इति शङ्क्यम् । वेदे योगरूढ्या क्रतुपदस्योक्तत्यागवाचकत्वेपि वेदान्ते योगमात्रादरणात्त्यागरूपार्थस्य लक्षणान्तरस्य वैदिकत्वेन वेदान्तेऽप्राप्तेः ।

स एष इति अर्थस्तु स एष अपरोक्षः जीवयति इति जीवः ईश्वरो विवरेष्वाधारचक्रेषु प्रसूतिरभिव्यक्तिर्यस्य सः । अभिव्यक्तिः केत्याकाङ्क्षायामाह प्राणेन इति । घोषेण पराख्येन नादवता प्राणेन सह गुहामाधारचक्रं प्रविष्टः सन् मनोमयं सूक्ष्मं रूपं पश्यन्त्याख्यं मध्यमाख्यं च मणिपूरकचक्रे विशुद्धिचक्रे चोपेत्य प्राप्य वक्त्रे मात्रा ह्रस्वादिः स्वर उदात्तादिर्वर्णः अकारादिः इत्येवं वैखर्याख्यः स्थविष्ठः अतिस्थूलो नानावेदशाखात्मको भवतीति श्रीधरीय उक्तः । तथा श्रुतिरपि। 'चत्वारि वाक्परिमितानि पदानि तानि विदुर्ब्राह्मणा ये मनी-षिणः। गुहायां त्रीणि निहितानि नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति' इति श्रुत्यर्थस्तु प्रागुक्तः । प्रमाणभूतो वैखर्याख्यः परा पश्यन्ती मध्यमेत्यनेनं विशेषणेन व्यावर्तितः । वेदे इति निश्वसि-तमस्य वेदा इतिश्रुतेर्निश्वासात्मकवायोः कारणत्वं वायुः शब्दतामापद्यते इति प्राचां प्रवादात् वेदः कार्यम् । मनोविकारः मनसः प्राचुर्यं वा प्राणशरीरं यस्य..........शरीरं..............। अग्रे इति । भारूपः सत्यसंकल्प इत्यादौ । धर्मस्येति आत्मत्वादिरूपस्य । वेदेति वेदस्य मनोमयत्वं प्राणशरीरत्वं चोक्तम् । तद्बोधितत्वेन लक्षणातो मनोमयः प्राणशरीरश्च इत्युक्तम् । सिद्धान्ते योर्थः स त्वग्रे वक्तव्यः । जीव प्राणधारण इति धातुपाठात् जीवपदार्थमाह पूर्वपक्षी प्राणधारणे इति । एष मे आत्मान्तर्हृदय इति पठ्यते, स तु इत्यन्तर्यामिब्राह्मणे । य इति ननु ब्रह्मणो व्यापकत्वाज्जीवस्य परिच्छिन्नत्वात् कथमनयोः सामानाधिकरण्यं येन एवं संभव

तत्र पूर्ववाक्ये जडस्य जगतो ब्रह्मत्वेनोपासनस्योक्तत्वाज्जीवस्यापि ब्रह्मत्वेनोपासनमेव युक्तं, न त्वाहत्यैव ब्रह्मवाक्यं भवितुमर्हति। विज्ञानं ब्रह्म चेद्वेदेति शाखान्तरे स्पष्टत्वाच्च। तस्मात् कार्यकारणयोरभेदाज्जीव एव ब्रह्मत्वेनोपास्य इत्येवं प्राप्ते, उच्यते।

---

भाष्यप्रकाशः।

क्षधर्मवैशिष्ट्याद् ब्रह्म वा, यः पुराणेषु 'केचित् स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तम्' इत्यादौ सूक्ष्मो हृदयान्तर्वर्तित्वेनोक्त इति संदेह इत्यर्थः। इह, तत्र मनोमय इत्यादिनोपासनविषयबोधनेनाधिकरणसंगतिरपि बोध्यते। पूर्वपादे जन्मादिसूत्रे ब्रह्मणः कर्तृत्वमुक्त्वा तज्जिज्ञासाद्यधिकरणचतुष्टयेनातिव्याप्तिपरिहारे क्रियमाणेऽन्तिमेनानुगमाधिकरणेन जडविशिष्टे जीवेऽतिव्याप्तिनिवारणं कृतम्। तदस्मिन्नधिकरणे कर्तृत्वनिर्वाहकाणां मनोमयत्वादिसर्वकर्मान्तानां धर्माणां जीवे बोधनेन ब्रह्मणि तदभावात् कर्तृत्वासंभवं बोधयित्वा पूर्वपक्षे आक्षिप्यते। तेनाक्षेपः संगतिः। पूर्वपक्षमाहुः तत्र पूर्वेत्यादि। आहत्येति। अकस्मात् प्रबलहेतुं विनेति यावत्। तथाच द्वयोर्लिङ्गस्य सत्त्वेन तस्यानिर्णायकत्वादुपक्रमस्यासंजातविरोधत्वेन बलिष्ठत्वात् तत्र च जीवस्यैवोक्तत्वात् पूर्ववाक्यविचारणेऽपि प्रकरणस्यैव नियामकतया औचित्याच्च नास्य ब्रह्मवाक्यत्वम्। किंतु शाखान्तरोक्तविज्ञानमयस्यात्र भारूपत्वेन प्रत्यभिज्ञानात् कार्ये सशरीरे जीवे कारणभूतस्य ब्रह्मण उपचारं विधाय सत्यसंकल्पादिधर्मवत्तया वेदाभिमानिदेवता जीवो वा, स्वजीव एव वोपास्य इत्यर्थः। सिद्धान्तं वक्तुं सूत्रं पठन्ति।

रश्मिः।

इत्याकाङ्क्षायां य इति भाष्यं विवरामासुः यः पुराणेषु इति। तथा च शाब्दसंदेहो न तु चाक्षुष इति पूर्वोक्तत्वात्। पूर्वोक्तशब्दद्वयस्य दूरत्वोपाधिगृहीतस्य शाब्दसंदेहे प्रयोजकत्वात्। य अन्तर्यामी पूर्वपादत्रिसूत्र्याः संगृहीतस्य शास्त्रार्थस्यैवाग्रे प्रपञ्च इत्युक्तम्। तदस्य पादस्य कथमित्याकाङ्क्षायां संगतिमप्याहुः इहेति। उपास्येनेति इह तत्रेत्यादेः पूर्वपक्षग्रन्थत्वात्तदनुसारी ग्रन्थः सिद्धान्ते तु मननात्मक—क्रतुविशेषणानि मनोमय इत्यादीनि तेन पूर्वपक्ष एवाक्षेपसंगतिः। सिद्धान्ते तु तन्निवारणमिति। कर्तृत्वेति जगज्जन्मादिकर्तृत्वं पूर्वपादोक्तं निरङ्कुशजगत्कर्तृत्वेन शास्त्रप्रतिपाद्यत्वं तस्यासंभवमित्यर्थः। आक्षिप्यत इति जीवे मनोमयत्वादिसंनिवेशे निरङ्कुशजगज्जन्मादिकर्तृत्वेन शास्त्रप्रतिपाद्यत्वस्य कुलालवत् संभवात् न ब्रह्म पूर्वपादोक्तकर्तृत्वेन शास्त्रं प्रतिपाद्यमित्याक्षिप्यत इत्यर्थः। आक्षेपो भर्त्सनम्। पूर्वाधिकरणे सर्वात्मकब्रह्मण उपासनानिरूपणेन स्मृतस्यैतदधिकरणस्य पूर्वपक्षभर्त्सनोपेक्षानर्हत्वात् पूर्वपक्षेणाक्षेपः संगतिरित्यर्थः। नन्वधिकरणस्य संगतिघटितत्वेनांशतः संगतौ कुतः संगतिनिरूपणमितिचेन्न घटितसंगतेरेवाक्षेपरूपाया निरूपणात्। द्वयोरिति ब्रह्मजीवयोः। तस्य लिङ्गस्य। उपक्रमस्य सर्वं खल्विदमित्यस्य। जीवस्येति तज्जलानिति हेतौ सर्वे जीवा इति मुण्डके जीवव्युच्चारणश्रावणात् जीवस्य ब्रह्माव्युच्चारणादेवकारः। पूर्वेति सर्वं खल्विदमिति पूर्ववाक्यविचारणे। प्रकरणस्येति ब्रह्मत्वेन जीवोपासनाप्रकरणस्य। विज्ञानमिति भाष्यं विवृण्वन्त एव तस्मादित्यादि भाष्यं विवृण्वन्ति किं स्विति शाखान्तरं तैत्तिरीयम्। तदुक्तविज्ञानमयस्य अन्यो अन्तरआत्मा विज्ञानमय इतिश्रुत्युक्तस्यात्र छान्दोग्ये भारूपत्वेनेत्यर्थः। ननु प्रत्यभिज्ञानस्य किं प्रयोजनमिति चेन्न भारूपपदेन जीवप्राप्तावपि शरीरात्मा सत्यसंकल्पादिसमभेज्ञाभावेन

**सर्वत्र प्रसिद्धोपदेशात् ॥** अथ खल्वित्यादि ब्रह्मवाक्यमेव । कुतः । सर्वत्र प्रसिद्धोपदेशात् । कुर्वीतेत्युपदेशो, न तूपासना । तत्र परमशान्तस्य सर्वस्य जगतो ब्रह्मत्वेनोपासनया शुद्धान्तःकरणस्य सर्ववेदान्तप्रसिद्धब्रह्मोपदेश एव युक्तो मननरूपो न तु क्वचित् सिद्धस्य जीवस्योपासना ।

भाष्यप्रकाशः ।

**सर्वत्र प्रसिद्धोपदेशात् ॥** कथमयमुपदेश इत्याकाङ्क्षायामाहुः तत्रेत्यादि । तथाच सर्वं खल्विति पूर्ववाक्ये यज्जगतो ब्रह्मत्वेनोपासनं तद्भगवत एव विराट्त्वेनोपासनम् । तस्य काल्पनिकत्वाभावबोधनायैवात्र तज्जलानिति हेतूक्तिः । तत्फलं चान्तःकरणशुद्धिः ।

'स सर्वधीवृत्त्यनुभूतसर्व आत्मा यथा स्वप्नजनेक्षितैकः ।
तं सत्यमानन्दनिधिं भजेत नान्यत्र सज्जेद्यत आत्मपातः' ॥

इति तद्विधायकवाक्ये तथा सिद्धत्वात् । एवं सति पूर्वोक्तोपासनाफलभाजा पुनः किं कार्यमित्यपेक्षायां, अथ खल्वित्यादिना पुरुषस्योपासनानुरूपफलभाक्त्वकथनेन विराट्त्वेनोपासनायामन्यत्र सङ्गाभावेऽप्यन्ते या मतिः सा गतिरिति न्यायेन, यं यं वापीति गीतावा-

रश्मिः ।

आपदार्थमन्यथयेत्तन्मा भूदिति पदार्थान्यथाभावाभावरूपप्रयोजनत्वात् । न च सत्यसंकल्पपदेनैव शरीरपरामर्शाच्छाखान्तरीयप्रत्यभिज्ञानस्य किं प्रयोजनमिति वाच्यम् । भारूपस्य शाखान्तरीयविज्ञानमयप्रत्यभिज्ञाभावे सत्यसंकल्पादिकं निराश्रयं न श्रुतिर्वदेत् । एतेन विज्ञानमयो जीव इत्युक्ते भाष्ये ननु भारूपो जीव इति कुतो नोक्तमिति कुचोद्यं निरस्तम् । वेदाभीति मनोमय इति श्रुतेः । भारूप इति श्रुतेर्जीवः स्वजीवौ वा । तस्येत्यादि उपासनस्य वाचो धेनुमुपासीतेत्यत्र वाचो धेनुत्वस्य काल्पनिकत्वं यथा तथात्र काल्पनिकत्वं नास्तीति बोधनायैवात्र जगत् ब्रह्मसमवायिकारणकत्वाद् ब्रह्मेति तज्जलानिति सर्वं तज्जलानतस्तज्जलान्त्वादिति हेतोरुक्तिरित्यर्थः । एतावता शुद्धान्तःकरणस्येत्यन्तं भाष्यं विवृतम् । इदानीं सर्ववेदान्तेति भाष्यमुपबृंहणेन योजयन्तो विवरामासुः स सर्वधीत्यादिना । तद्विधायकेति अयं हेतुरुपायान्तरमिलनेनान्वेति तथा चैतस्मिन् वाक्ये तथासिद्धत्वात् विराडुपासनानन्तरं चित्तशुद्धौ सत्यां फलान्तरस्य सद्भावेपि चित्तस्य भगवद्भजन एव कर्तव्यत्वेन सिद्धत्वान्मननात्मकमुपायान्तरं कर्तव्यमित्याशयेन मननात्मकं क्रतुमाहेत्यर्थः । मनुतेऽनेनोपदेशेनेति मननात्मकम् । वाक्यं तु द्वितीयस्कन्धे प्रथमाध्यायसमाप्तौ विराडुपासनमुक्त्वोक्तम् । एतदर्थस्तु ननु फलान्तरविषये चित्तसद्भावे किं विधेयम् । 'उद्यतस्य हि कामस्य प्रतिवादो न शक्यते' इति न्यायात्तत्राह स सर्वधीवृत्तिभिः सर्वेषां ज्ञानजनकेन्द्रियवृत्तिभिरनुभूतं सर्वं येन यत्किंचित्फलं येन केनचिदुपभोग्यं तत्तदिन्द्रियद्वारानेनैकेनोपभोग्यम् । ननु कथमस्य प्रेरितुर्भोक्तृत्वं तत्तदधिष्ठातॄणां विद्यमानत्वात्तत्राह आत्मेति तत्तदिन्द्रियाधिष्ठातॄणां दिगादीनां विद्यमानत्वेपि यथात्मा सर्वेन्द्रियानुभूतसर्व एवं भगवानपि तमप्येकदेशाभिमानिनमवगणय्य तेनाधिष्ठितैरेवेन्द्रियैः सर्वमनुभवतीत्यर्थः । नन्वात्मनः इन्द्रियाधिष्ठातॄणामप्रीतत्वात् आत्मीयत्वेनैवेन्द्रियाणां ग्रहणात् तस्य स्वगृहीतमात्रानुभवो भवतु नाम भगवतस्तु समष्टिरूपस्य व्यष्टिषु देहस्थितकीटेष्विव प्रतीत्यभावात् आत्मीयत्वाभावाच्च तदिन्द्रियाणां कथं सर्वधीवृत्तिभिः भगवाननुभवति तत्राह स्वप्नजनेति । स्वप्नजनानामीक्षिता द्रष्टा

शाखान्तरे त्वग्रे आनन्दमयस्य वक्तव्यत्वात्तथा ह्युक्तम्। न त्विह तथा। तस्मादानन्दरूपप्राणशरीररूपो वाक्यार्थः ॥ १ ॥

भाष्यप्रकाशः।

क्येन चान्ते सर्वात्मकत्वमेव, न तु परप्राप्तिरिति तादृशा तदर्थमुपायान्तरं कर्तव्यमित्याशयेन समाह स क्रतुं कुर्वीतेति। स उक्तोपासनया शुद्धान्तःकरणोऽपि, यथा क्रतुरित्युक्तरीत्यो-पासनानुरूपमेव फलं प्राप्नोतीत्यतो मनोमयेत्युक्तप्रकारेण मननात्मकं क्रतुं कुर्वीतेति सर्वत्र वेदान्ते सर्वान्तरत्वेन प्रसिद्धस्य ब्रह्मण एव मननोपदेशस्तस्त्वेव भयमिति श्रुत्यन्तरे तस्यावश्यक-त्वश्रावणायुक्त इति शाखान्तरसिद्धा जीवोपासना नाङ्गीकर्तुं शक्येत्यर्थः। ननु यदि मयटो विकारार्थमनादृत्यात्र ब्रह्मवाक्यत्वमङ्गीक्रियते तर्हि शाखान्तरेऽपि तथा वक्तुं शक्यत्वाज्जीवो-पासनाया उच्छेद एव स्यादित्यत आहुः शाखान्तर इत्यादि। तथा चैवं वैलक्षण्यस्य स्फुटत्वान्न तदुच्छेद इत्यर्थः। एवं वाक्यं व्याख्याय सिद्धमाहुः तस्मादित्यादि। यस्मादे-तादृशस्य मननमेव ह्युक्तम्। तस्मानपेक्षिताङ्गोद्वापेनापेक्षिताङ्गावापेन वाक्यार्थनिर्धारणे भवतीत्ये-

रश्मिः।

यथैकः स्वप्नस्य मायिकत्वेपि ज्ञानं न मायिकं तस्यात्मरूपत्वात्। तत्र स्वप्नदृष्टाः पुरुषाः सर्वे पश्यन्तीति प्रतीतिरस्ति तत्र पुरुषदेहानां मायिकत्वं 'मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्' इत्यत्र सिद्धं तथापि तन्निष्ठा या प्रतीतिः सा न मायिकी तत्र चैतन्यान्तराभावात् भगवतो जीवस्य चैतन्यं भवतीति विशेषस्तु सुबोधिन्यां द्रष्टव्यः। यद्वाक्षेपादन्तःकरणशुद्धिहेतुरयम्। एवमिति अन्तःकरणे शुद्धे सति। तदर्थमिति परप्राप्त्यर्थम्। मनोमयेत्यादि मनोमयादिपदवाच्य आत्मा सप्रकारकज्ञानत्वात् ब्रह्म तु निष्प्रकारकज्ञानत्वात्। मनोमयो न भवतीति पुंलिङ्गनिर्देशादवगम्यते। इति प्रकारेण। मननात्मकत्वं क्रतोः मननरूप इतिभाष्यात्। तत्त्वेन भयं विदुषोऽमन्वानस्येति-श्रुतेश्च मनुते इति मन्वानो न मन्वानोऽमन्वानः तस्य विदुषः। उचितत्वमपि सर्वस्य ब्रह्मत्व-ज्ञानानन्तरं मननस्य। अन्यथा पापमन्यथाप्रतिपादने स्यात् योन्यथा सन्तमिति श्रुतेः। विश्वकोशे क्रतुर्यज्ञे मुनेर्भिदीति मुनिविशेषे क्रतुपदं बाधितं सत् यज्ञं वक्ति मनुतेऽनेनेति मननं ल्युट् अवबोधानुकूलं यज्ञं मननं वक्ति मननशीला मुनय इति क्रतुपदं संकल्पे ध्याने च शंकरभाष्ये यागे तु प्रसिद्धमेवैवं बह्वर्थेषु भगवदिच्छया सत्सु मननरूपोप्यर्थः क्रियते ब्रह्मप्राप्तीच्छुभिरिति योगेन क्रतुर्मननं 'ये धातुशब्दा यत्रार्थे' इत्यस्याः पत्रावलम्बनकारिकाया वेदराशिमात्रविषयत्वेन मनने समुदायश-क्तिरपि। अमन्वानस्येत्यत्रामननं कुर्वाणस्येत्यत्र वेदराशित्वायोगमात्रम्। अत्रावबोधाविशेषेपि बोधन-स्मरणात्मकं युक्तिभिरनुचिन्तनस्यापि मननत्वात्। आत्मा वा अरे इत्यत्र श्रुतौ वेदराशित्वेपि अव-बोधाविशेषेर्येपि मननस्यानुचिन्तनात्मकबोधाङ्गीकारात्। ननु मननपदं विहाय क्रतुपदोपसंदाने को हेतुरिति चेच्छृणु जगतो नित्यत्वप्रतिपादनमात्मसेवार्थम्। अनित्यत्वे प्रतिमानामनित्यत्वेन सेवा न स्यात्तदर्थं क्रतुपदं साग्निको निरग्निकोपि पञ्चरात्रोक्तो मननेन प्राप्यते इति ध्वन्यते इति ज्ञायते सा सेवा सिद्धान्तमुक्तावल्यामुक्ता। तस्येति मननस्य। शाखेति तैत्तिरीयशाखासिद्धेत्यर्थः। मयट इति मनोमय इत्यत्र। शाखेति तस्माद्वा एतस्माद्विज्ञानमयादन्यो अन्तर आत्मा आनन्दमय इति श्रुत्या वक्तव्यत्वादितिभाष्यार्थः। तदुच्छेद इति विज्ञानमयजीवोपासनोच्छेद इत्यर्थः। अङ्गेति उद्वापो नाम प्रकृतपरत्वेन प्रतीयमानस्यान्यपरत्वापादनम्। आवापो नाम न प्रतीयमानस्य प्रकृतपरत्वा-

भाष्यप्रकाशः ।

तत्पूर्ववाक्यविचारे, एत इति वै प्रजापतिर्देवानसृजतासृग्रमिति मनुष्यानित्यादिश्रुतिभिर्जगज्जनकत्वस्य वेदे सत्त्वेऽप्यस्य महतो भूतस्य निःश्वसितं यदृग्वेदो यजुर्वेद इत्यादिश्रुत्या वेदस्य ब्रह्मजन्यत्वावधारणे निरङ्कुशस्य जगज्जनकत्वस्य वेदे अभावात्, 'यो ब्रह्माणं विदधाति पूर्वं, हिरण्यगर्भं पश्यति जायमानम्' इत्यादिभिर्हिरण्यगर्भेऽप्यभावादताद्दृशजनकत्वस्योद्धापेन, निरङ्कुशस्य, यतो वेत्यादिश्रुत्युक्तस्य तस्यावापेन च ब्रह्मपदस्य परवाचकत्वे निर्धारिते तस्य वाक्यस्य परब्रह्मरूपो वाक्यार्थो मतो भवति । तथैतद्वाक्यमननेऽपि सत्यसंकल्पेत्यारभ्य यावन्ति विशेषणानि तेषां मनोविकारभूते वेदे हिरण्यगर्भे जीवान्तरे चासंभवात् तद्विशिष्टे मनोमये मन्तव्ये, मनसैवानुद्रष्टव्यः, स मानसीन आत्मा जनानां, मनसा तु विशुद्धेनेत्यादिश्रुतिभिस्तादृशप्रतिपादनम् ।

रश्मिः ।

पादनम् । लक्षणान्वयोग्रे वाच्यः । एतदिति एतस्य 'स क्रतुं कुर्वीत मनोमयः प्राणशरीरः' इत्यादेः पूर्ववाक्यं सर्वं खल्वित्यादिवाक्यं तस्य मीमांसात्र जगत्सामानाधिकरण्यात् 'सर्वं खल्विदं ब्रह्म'इत्यत्र ब्रह्मपदं वेदवाचकं हिरण्यगर्भवाचकं वा सुपां सुलुगिति सूत्रेण सोर्लुकि ब्रह्मन्नित्यत्र वर्णलोपात् ब्रह्मन् पुंसि चेति लिङ्गानुशासनसूत्राद्वा यथा ब्रह्मा इति ब्रह्मवाचकं तथा ब्रह्मेति हिरण्यगर्भवाचकमित्युत प्रसिद्ध्या ब्रह्मवाचकमिति तस्यां सत्याम् । वेद इति । एत इति असृग्रमिति वेदे । अस्येति श्रुतिर्मैत्रेयीब्राह्मणेस्ति । निरङ्कुशस्येति निरङ्कुशजगज्जन्मादिकर्तृत्वेन शास्त्रप्रतिपाद्यत्वं ब्रह्मत्वं तस्य जिज्ञासाप्रस्तावात् तल्लक्षणांशस्येत्यर्थः । तर्हि हिरण्यगर्भे इदं लक्षणं भविष्यति नेत्याहुः यो ब्रह्माणमिति । विदधाति विशेषेण धारयति आश्रयत्वात् । जायत इति जायमानस्तम् । जनी प्रादुर्भावे शानच् । तद्विति सत्यसंकल्पादिविशिष्ट इत्यर्थः । आनन्दरूप इत्यादिभाष्यं उपपादयामासुः मनसेत्यादिना । मनसा त्विति । तादृशेति विशुद्धमनोग्राह्यत्वं 'दुःखाभावः सुखं चैव पुरुषार्थद्वयं मतम्' 'तमेकमानन्दनिधिं भजेत्' इतिवाक्याभ्यां सर्वं खल्वित्यत्र जगति प्रतिमानन्दादौ विषयानन्दस्य 'तस्यैवान्यानि भूतानि' इतिश्रुतेर्माब्रीयत्वेपि बन्धकत्वात् एनमुद्धरिष्यामीति मृदादावाविर्भूते विशेषो जगतो यतोऽत आनन्दनिधिं भजेतैव । गताधिकरणे तेनेदमधिकरणं पूर्वोक्तस्य सर्वस्य निगमनायेत्युक्तम् । तेनास्याधिकरणस्य प्रसङ्गसंगत्या जिज्ञासितं जन्माद्यधिकरणोक्तकर्तृ । समन्वयाधिकरणोक्तसमवायि । ईक्षत्यधिकरणोक्तप्रज्ञात्मा । आनन्दमयाधिकरणोक्तानन्दः । अन्तस्तद्धर्माधिकरणोक्तलोकपालः । तल्लिङ्गाधिकरणोक्ताकाशः । अतिदेशाधिकरणोक्तप्राणः । ज्योतिश्चरणाधिकरणोक्तं ज्योतिः । अनुगमाधिकरणोक्तप्राणः । अत्र मननोपक्रमस्यासंजातविरोधित्वेन मनोमय आनन्दः मयटो लक्षणया प्राचुर्याधारबोधकत्वात् । प्राचुर्यस्य प्रचुरधर्मत्वेन प्रचुरसमानाधिकरणानन्दधर्मत्वात् । प्राणशरीरः प्राणः शरीरं यस्य शरीरस्य साकारत्वमानन्दावरणत्वात् । आनन्दस्य साकारत्वं 'अन्नमयादिषु यश्चरमः' इतिवेदस्तुतौ सिद्धम् । भारूपः ज्योतिः सत्यसंकल्पः द्वितीयः प्राणः जिज्ञासितश्च जिज्ञासाधिकरणोक्तः । आकाशात्माकाशः । सर्वकर्मा लोकपालः । सर्वकामः प्रज्ञात्मा काम इच्छा । सर्वगन्धः पृथ्वीसमवायि । सर्वरसः पृथ्वीजलसमवायि । सर्वमिदमभ्यात्तं समवायि । इह कपाले घटो भविष्यतीति प्रागभावविषयिण्यां प्रतीतौ समवायिनोऽधिकरणत्वात् । अवाकी कर्ता । वक्ता । उपलक्षणमेतत् । करणशून्यः कार्यकर्ता जगत्कर्ता । अनादरः लीलेतरानपेक्षः । तत्रोक्तवाक्याभ्यां आनन्दरूपप्राणशरीरस्य प्राधान्यात्तद्वाक्यार्थत्वमन्येषां विशेषणत्वम् । अत आनन्दमयस्य तेन मनोग्राह्यत्वेन विकारो-

भाष्यप्रकाशः।

मनोग्राह्यत्वेन मनःप्राचुर्याद्विकारोद्वापेन प्राचुर्यावापेन चानन्दमयरूपो मनोमयः, को ह्येवान्यात् कः प्राण्यादिति प्राणितृत्वश्रावणात् प्राणस्वरूपविग्रह इति मननादानन्दमयरूपो यः प्राणशरीररूपोऽन्तर्यामी सोऽत्र वाक्यार्थ इत्यर्थः। अत्र विषयवाक्ये, भारूप इति प्रकाशरूपो ज्ञानात्मा। सत्यसंकल्प इति, सत्या अवितथा विषयाऽव्यभिचारिणः संकल्पा विचारा यस्य तादृशः। आकाशात्मेति, व्यापको दुर्ज्ञेयो नीरूपो नीलः सर्वाधारो नामरूपनिर्वाहकः। सर्वे

रश्मिः।

द्वापेनेत्यर्थः। अत्र हेतुः मनःप्राचुर्यादिति। तथा च प्रकृतमनःपरत्वेन प्रतीयमानस्य विकारे मयटो मनः संकल्पविकल्पात्मकमनोविकारत्वापादनेनान्योन्यपरत्वेन आनन्दमयवाचकमनोमयप्रतीयमानस्य प्राचुर्ये मयटः प्रकृतं मनः तत्परत्वापादनेनेत्यर्थः। संयोगदलमुक्त्वा वियोगदलं वदन्तः प्राणशरीरपदार्थमाहुः को ह्येवेति। प्राणेति साकारानन्दावरणत्वाद्विग्रह इत्यर्थः। आनन्देति मनोमयपदवाच्यानन्दमयरूपः। ननु तत्र मनोमय इति प्रमाणभूतो वेद उक्त इति भाष्यविरुद्धोर्थ इति चेन्न। अनुपपत्तिसूत्रे प्राणस्यानन्दरूपता त्वित्यादिग्रन्थेनालौकिकानन्दरूपप्राणग्रहणात् तादृशप्राणप्रतिपादकमनोमयोपस्थित्या मनोमयपदवाच्यानन्दमयरूप इति व्याख्यानस्यादुष्टत्वात्। क इत्याकाङ्क्षायामन्तर्यामीति षष्ठाधिकरणेऽमृतत्वात्सर्वहृदयदेशवर्ती भोगविशेषवान् भक्तिमार्गोपयोगी। अत्र पादेर्थबलविचारेण निःसंदिग्धोर्थो भोगविशेषवान् विशेष्यं मतम्। वाक्यार्थ इति सत्यसंकल्पत्वादिधर्मविशिष्टमनोमयरूपप्राणशरीररूपोन्तर्यामी वाक्यार्थः। ननु भाष्येऽन्तर्यामिपदं नास्ति मनोमयप्राणशरीरपदयोरर्थौ प्रतीयेते वाक्यं च मननस्य मनोमय इत्यारभ्यानादर इत्यन्तमिति पूर्वोक्तं कथमिति चेन्न। भाष्यप्रकाशोक्तदिशा मनोमयप्राणशरीरेण रूप्यत व्यवह्रियते यथा घटपदेन रूप्यते शब्दरूपरसगन्धस्पर्शादिः पदार्थः। यस्मिन्नुच्चारिते यस्यार्थस्य नियमेनोपस्थितिः स प्रातिपदिकार्थ इति सिद्धान्तकौमुद्यां तथोक्तेस्तथाभारूपादिरमृतोन्तर्यामिरूपोर्थश्चतुर्थपुरुषार्थरूपत्वाद्वाक्यार्थ इति। मयोमयः प्राणशरीर इति विशेषणोक्तस्य सर्वत्र प्रसिद्धस्य मननोपदेशाज्ज्ञायते शब्दवान् रूपवान् रसवान् गन्धवान् स्पर्शवान् घट इत्यनुक्तावयं घटोस्तीत्यादिस्थले घटनिष्ठा सत्ता वाक्यार्थोन्यथा तु शब्दादिमद्घटनिष्ठा सत्ता वाक्यार्थ इति चेदानन्दरूपप्राणशरीरो भारूपसत्यसंकल्पादिरूपो वाक्यार्थो नापि तु उभयरूपवाक्यार्थान्तर्गतो भारूपादिरिति न तु पृथगिति अन्तर्यामिभारूपादिरूपो वा अन्यत्र तु मनोमयः प्राणशरीर इति पदद्वयं जीवसाधारणं भाष्येप्युपात्तम्। ननु भारूपत्वं जीवस्य ज्ञानतिरोभावान्नास्तीतिभाष्ये भारूप इति तृतीयं पदं न लिखितम्। अत्र तु सत्यसंकल्पेत्यारभ्य यावन्ति विशेषणानीत्युक्तम्। तद्भाष्ये तृतीयं पदं न्यूनमिति सूचयतीतिचेन्न। भाष्ये हिरण्यगर्भजीवस्याविवक्षणेनात्र च विवक्षणेन पदत्रयं मनोमयप्राणशरीरभारूपमित्यदोषात्। प्रकाशे हिरण्यगर्भस्य जीवत्वं तेन अविवक्षितत्वं च जीवपुरःसरेण संदेहविषयत्वाय। भाष्ये तु हिरण्यगर्भस्येश्वरत्वरूपपुरःसरेण संदेहे अविवक्षितत्वमिति बोध्यम्। अन्तर्यामिणोऽप्रकृतत्वात्समन्वयाध्याये वाक्यार्थत्वम्। नीरूपो नील इति। नन्विदं विरुद्धं नीरूपस्य नीलत्वासंभवात् द्रव्यस्याकाशस्य च द्रव्यत्वादिति चेदत्रैवं ज्ञेयम्। वहवस्तु आकाशस्य रूपवत्त्वे किं मानं न तावत्प्रत्यक्षं आकाशं तद्रूपं वा पश्यामीत्यप्रत्ययात्। नीलं नभ इतिप्रतीतेर्भ्रान्तत्वात्। न च रूपवतः प्रत्यक्षविषयता न नियता परमाणौ व्यभिचारादिति वाच्यम्। परमाणौ महत्त्वरूपवत्त्वयोः-

भाष्यप्रकाशः ।

कामा निर्दोषा यस्येति सर्वकामः । एवमग्रेऽपि सर्वमिदं जगत् अभ्यात्तः, अभि अन्तर्बहिरु-भयत्र गृहीतो ज्ञातः । अवाकी । उच्यतेऽनयेति वाक् । वागेव वाकः । करणे घञ् । स यस्य वर्ततेऽसौ वाकी । तद्भिन्नोऽवाकी । उपलक्षणमिदम् । कार्यं कुर्वन्नपि करणशून्यः । अपाणि-पादो जवनो ग्रहीतेति श्रुत्यन्तरात् । अनादरः । न विद्यत आदरः संभ्रमो यस्य । आप्तकाम-त्वात् । सर्वानपेक्षः । अभिसंभवितास्मीति प्राप्तास्मि । अद्धेति निश्चयः । एतादृशस्तं प्राप्नोतीति शेषः । स्फुटमन्यत् । ननु भवत्वयं विषयवाक्यार्थस्तथापि सूत्रे पक्षानुल्लेखात् कथं व्याख्या-

रश्मिः ।

भावात् । न चाकाशो रूपवान् वायुभिन्नत्वे सति महत्त्वात् पृथ्वीवत् इत्यनुमानं मानमितीति शङ्क्यम् । द्रव्यत्वस्य तत्रोपाधित्वात् । नापि क्रियारहितत्वे सति भूतत्वात् यन्नैवं तन्नैवं कालवदिति द्रव्यारम्भकत्वस्योपाधित्वात् आद्यक्षणीयघटादौ व्यभिचाराच्च । बहिरिन्द्रियग्राह्यविशेषगुणवद्वृत्ति-द्रव्यत्वसाक्षाद्व्याप्यधर्मवत्त्वस्य कालादीतरद्रव्यत्वस्य वा भूतत्वस्य वा तत्रापि सत्त्वात् । किं च यदि आकाशो रूपवान् स्यात् परममहान्न स्यात् बहिरिन्द्रियग्राह्यो वा स्यात् स्पर्शवान् वा स्यात् पृथिव्यादित्रयं वा स्यादिति बाधकतर्कपराहतं रूपवत्त्वमाकाशस्येत्याहुः तदिदं साहित्यसर्वस्वकारो नानुमन्यते तथाहि नेदमुचितं नीलं नभः पश्यामीति निःशङ्कं सार्वजनीनप्रत्ययात् न चासौ भ्रमः किमसौ विषयदोषः सादृश्यनिबन्धनस्तत्कारणीभूत इदं रजतमितिवदुत करणदोषः पित्तादिनिबन्धनः शङ्खः पीत इतिवत् नाद्यः असंभवात् । विषयगतदोषजन्यभ्रमत्वावच्छिन्नं प्रति धर्मप्रमोषसहकृता-रोपस्य तन्त्रत्वात् प्रकृते तदभावात् । नभस्त्वस्यावच्छेदकताया व्यवस्थापयिष्यमाणत्वात् । न द्वितीयः अस्य प्रत्यक्षस्य सार्वजनीनत्वात् युगपत्सर्वजनकरणदोषस्य वक्तुमशक्यत्वात् । न चेन्द्रजालिकमायायां यथा वस्तुग्रहणप्रतिबन्धरूपः करणगतो विषयगतो वा दोषः सार्वजनीनः । अत्र शोधपत्रं मत्कृतटिप्पण-भाष्यप्रकाशेस्ति । नामरूपेति 'आकाशो ह वै नामरूपयोर्निर्वहिता' इतिश्रुतेरित्यर्थः । आकाश इवाकाशोऽव्याकृताख्यः नामरूपयोर्जगद्बीजभूतयोर्निर्वहिता निर्वोढा व्याकर्तेति यावदिति श्रुत्यर्थः । अग्र इति सर्वकर्मा सर्वगन्धः सर्वरस इत्यत्र सर्वे गन्धाः सर्वे रसाः सर्वकर्मा पूर्वं पठितः सर्वकामात् सर्वाणि कर्माणि यस्य । ज्ञात इति ग्रह उपादाने चक्षुषा रूपं गृह्णाति बुद्ध्या पदार्थो गृहीत इत्यादौ रूपादिर्गृहीतो ज्ञातो वेति पर्यायात् । वागिति वाक् वागेवेत्येतत् संपातायातम् । एवं चोच्यतेऽनयेति वाकः करणाधिकरणयोश्चेति घञ् । एतेनोच्यतेऽनया सा वाक् वागेव वाक इति प्रत्युक्तम् । प्राप्तास्मि तत 'एष मे आत्मान्तर्हृदयमेतद् ब्रह्मैतमितः प्रेत्याभिसंभवितास्मि यस्य स्यादद्धा न विचिकित्सास्तीत्याह शाण्डिल्यः शाण्डिल्यः' इत्यत्र श्रुतौ । प्रेत्य मृत्वा प्राप्तास्तीत्यर्थः । अभिगुप्त इति केचित् । स्फुटमिति विचिकित्सापदस्य संशयार्थकत्वम् । इत्याह शाण्डिल्यः शाण्डिल्य इत्यस्योपासनायाः सदाचाररूपत्वं च । आगतेर्थे रूप्यम्, स्फुटमित्यर्थः । आदरे वीप्सा । अस्या एवात्र विषयवाक्यत्वा-वधृतौ बीजं वक्तुमाशङ्कते कश्चित् ननु भवत्विति । पक्षेति । ननु सूत्रेषु साध्योल्लेखोपि संभवति उक्तं च भाष्ये केचिदत्र जन्मादिसूत्रं लक्षणत्वादनुमानमिति वर्णयन्तीतिचेन्न तदुक्तज्ञानं नोपनिषत्फलं समर्पयेत् प्रकृते 'तं त्वौपनिषदं पुरुषं पृच्छामि' इति श्रुतेरुपनिषज्ज्ञानस्य विवक्षितत्वात् । ननु तथापि पक्षपदोपादानात्समन्वयेक्षत्यधिकरणयोरपि पक्षोपादानसूचनात् पर्वतो धूमादितिवदप-प्रयोग इतिचेन्न । अनुमानसाध्यत्वापनस्य 'रचनानुपपत्तेश्च नानुमानम्' इतिसूत्रे सूचनेन पक्ष इव

भाष्यप्रकाशः ।

तोऽर्थः सौत्रत्वेन निश्चेतुं शक्यः । तदनिश्चये वाक्यार्थोऽपि संदिग्धप्राय एवेति पेन्मैवम् । द्वितीयादिपादानां पूर्वपादोक्तार्थविमर्शरूपत्वात् कारणत्वस्य तत्र विमृष्टत्वेऽप्यन्येषामविमृष्टत्वादत्रान्तस्तद्धर्मोपदेशाधिकरणसाधितस्यानन्दमयान्तरत्वस्य विमर्श इत्यविवादम् । आन्तं पादेऽन्तर्वर्तिन एव विचारदर्शनात् । सूत्रेऽप्युपदेशपदेन तदर्थविचारस्य प्रत्यभिज्ञानात् । विषयवाक्येऽप्येष म आत्माऽन्तर्हृदय इति पदात् । अतः सूत्रे पक्षानुक्तावपि प्रकरणबलेन तन्निर्णयस्य सुसाध्यत्वादिति । यः पुनरत्ता चराचरग्रहणादित्यादौ पक्षोल्लेखः, स तु तस्यैवामृत्वादिधर्मविचारार्थ इत्यदोषः ।

रामानुजाचार्यास्तु सूत्रारम्भगतेन सर्वत्रेतिपदेनारम्भगतसर्वपदघटिते वाक्ये विषयवाक्यत्वेन बोधिते तस्य शमविध्यपर्यवसितस्य फलाकाङ्क्षापूरणायाग्रिमसंदर्भस्योपस्थित्या सूत्रगतपक्षाकाङ्क्षापूरणेनोक्तार्थस्य सौत्रत्वे सिद्धे वाक्यार्थनिश्चयस्य सुखेन संभवादिति वदन्ति ।

एवं च सूत्रगतन्यायचर्चात्रैवं बोध्या । अथ खल्वित्यादिवाक्यस्थुपदेशः । परमक्षान्ताधिकारत्वात् । यदेवं तदेवम् । कं ब्रह्मेत्यादिवाक्यवत् । यन्नैवं तन्नैवम् । प्राणं तर्हि वागग्ने-

रश्मिः ।

पक्ष इत्युपचारात् । स्मृतिः प्रत्यक्षमैतिह्यमनुमानश्चतुष्टयमित्यारण्यकश्रुतौ अनुमानोक्तेरनुकूलतर्ककर्कशविचारस्तु रश्मावस्त्येव समन्वयाधिकरणेषु । ननु तर्हि पक्षानुलेख इत्यसिद्धम्, साध्यानुलेख इति प्राप्नोति मैवं तत्तु समान्वयादित्यत्र पक्षोल्लेखात् । तद् ब्रह्मैव समवायीतिभाष्यात् । साध्योल्लेखस्तु रश्मौ तत्र कर्कशविचाराय । न चैतद्भाष्यविरुद्धमिति वाच्यम् । ईक्षत्यधिकरणे हेतुल्लेखात् तदैक्षत बहिति विषयवाक्योक्तेक्षार्थेकेक्षतिहेतुल्लेखात् भाष्यस्य पक्षमात्रग्रहणे तात्पर्याभावात् । 'तदैक्षत बहु स्यां प्रजायेय' इति भाष्योक्तश्रुतेः । संदिग्धप्राय इति मीमांसानिर्णयस्य दुर्बुद्धेः संदेहवारकत्वात् । पूर्वपादोक्तेति । विमर्शो विचारः । तत्रेति पूर्वपादेतिव्यासिवारणेन विमृष्टत्वेपि अन्येषां कारणत्वनिर्वाहकाणामन्तरत्वादीनामन्तरत्वाद्यन्तरा समवायित्वासंभवात् । अन्तस्तद्धर्मेति ब्रह्मजिज्ञासां प्रतिज्ञाय जन्मादिसूत्रेण ब्रह्म लक्षयित्वानन्दमयान्तैरधिकरणैस्तस्य परमतनिराकरणपूर्वकस्वमतस्थापनात् प्राप्तं बाह्यत्वं निरसितुमप्यन्तस्तद्धर्माधिकरणे साधितं यदानन्दमयस्यान्तरत्वं तस्य परीक्षेत्यविवादम् । आन्तमित्येतत्पादीयान्तमभिव्याप्येत्यर्थः । नन्वस्त्वेवं तथाप्यसौत्रत्वशङ्का तु नापगतेत्याकाङ्क्षायामाहुः सूत्र इति । तदर्थेति हिततमानुशासनस्यैवोपदेशत्वेन सर्वान्तरस्य हिततमत्वेनान्तरपदार्थस्योपदेशपदेन सोयमिति प्रत्यभिज्ञानात् स सर्वान्तरः । प्रकरणेति उपासीत इत्युपासनाप्रकरणम् । सामान्यप्रकारकज्ञानस्य विशेषप्रकारकज्ञानजनकत्वेनाथ खल्वित्यादिवाक्यमुपासनं न विदधाति तेन प्रकरणबलरूपपक्षस्य निर्णयस्त्वित्यर्थः । पक्षोल्लेख इति पक्षपदं पूर्ववत् । तस्यैवेति तस्यात्तुरेव एतच्च तत्रैव स्फुटीभविष्यति । फलाकाङ्क्षेति शमफलामात्रेन फलान्तराकाङ्क्षेत्यर्थः । एवं चेति पूर्वोक्तरीत्या विषयवाक्यत्वे सुक्ते सति सूत्रेण गता प्राप्ता या न्यायचर्चानुमानचिन्ता सात्र प्रकृते एवं वक्ष्यमाणेन हेतुशोधनप्रकारेण बोध्येत्यर्थः । कं ब्रह्मेति 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इत्यत्र प्राणस्य कारणरूपाकाशात्मत्वाद्यदेव कं तदेव खमिति कं ब्रह्मेत्येवोपास्यम् । कं सुखं ब्रह्मेति श्रुत्यर्थः । इयं छान्दोग्ये षष्ठे प्रपाठकेस्ति आदिपदेन तत्त्वमसीत्युपदेशः । भवतीनां वियोगो मे वहीत्याद्युपदेशश्च तदिदं परमक्षान्त्यायोपकोसलनाम्ने ब्रह्मचारिणेऽग्नयस्तुष्टा उपदिदिशुः । प्राण-

भाष्यप्रकाशः ।

तीत्यादिवाक्यवत् । उपदेशश्च परमहितानुशासनम् । तत इदं वाक्यं ब्रह्मवाक्यम् । सर्ववाक्य-समर्थितसर्ववेदान्तप्रसिद्धोपदेशात् । यदेवं तदेवं, यन्नैवं तन्नैवमिति सिद्धान्तरीत्या तु प्रकरण-समर्थितत्वेन हेतुर्विशेषणीय इति भेदः ।

रश्मिः ।

शान्तत्वं तु अन्यानेवान्तेवासिनः समावर्तयन् त९ ह स्मैव न समावर्तयति । तं जायोवाच तप्तो ब्रह्मचा-रीतिश्रुतेः । अन्यशिष्यसमावर्तनेप्याचार्यस्तं न समावर्तितवान् आचार्यभार्याप्याचार्यमुवाच तप्तो ब्रह्मचारीति । तप्त इत्यस्य कायक्लेशं प्राप्त इत्यर्थः । एतच्चोपकोसलस्य परमशान्तत्व एव घटते इति । प्राणमिति । इयमपि तत्रैवास्ति । इमां चर एष सौम्य ते अस्मद्विद्येतिश्रुतेश्च । ब्राह्मणो जानश्रुतिः राज्ञे संवर्गविद्यां बहुधनमादाय दत्तवान् तद्विद्यान्तर्गता (तथा च बहुधनदानेन विद्याग्रहणान्न राजा परमशान्तः) अयं नोपदेशः किंतु प्राणे संवर्गशब्दस्य योगं दर्शयितुं 'स यदा स्वपिति प्राणमेव वागप्येति प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मनः प्राणो ह्येवैतान् सर्वान् संवृङ्क्ते' । स इति पुरुषः । संवृङ्क्ते ग्रसतीत्यर्थः । अपरमशान्तत्वं तु हारे शूद्रेति राजसंबोधनाद्बोध्यम् । शुचा द्रवतीति शूद्रः श्रुत्यर्थास्तु स्पष्टाः । तत इति उक्तवाक्य उपदेशत्वसिद्ध्यनन्तरम् । सर्वेति अस्य विवरणमग्रे वदिष्यामः । यदेवमिति पूर्णमदः पूर्णमिदमिति शुद्धब्रह्मस्वरूपनिगमकमन्त्रपाठानन्तरं ॐ खं ब्रह्मेति पठितं बृहदा-रण्यके तद्वदिति शेषः । यन्नैवमिति अयं घट इतिवाक्यवत् । पूर्वोक्ते वा श्रुती ग्राह्ये । नन्वनुमानत्वेन वर्णनेन नैतज्ज्ञानमौपनिषदं भवेत् अत आहुः सिद्धान्तेति । रामानुजाचार्योक्तरीत्या सर्वत्रेतिपदेन सर्वपदघटितविषयवाक्योपस्थितावपि पूर्वपक्षे सर्वपदघटितवाक्यानुपस्थितौ हेत्वभावात् । भारूप इति जीवप्रत्यभिज्ञानात् सर्वपदघटितवाक्योपस्थितौ हेतुसत्त्वात् प्रकरणसमर्थितत्वेन विशेषणीय इति भावः । हेतोः साधारणत्वनिवृत्तिः फलम् । पूर्वपक्षे हेतोः साधारणत्वम् । भेद इति सूत्रार्थस्तु अत्र खल्वित्यादि ब्रह्मवाक्यमेव सर्वत्र प्रसिद्धोपदेशात् प्रकरणसमर्थितसर्ववाक्यसमर्थितसर्ववेदान्त-प्रसिद्धस्य ब्रह्मणो मननात्मकपरमहितानुशासनादिति । इदं चैकपदं सूत्रम् । तेनैकदेशेन प्रसिद्ध-पदेनान्वयः । सुप्सुपेति समासः । 'हलदन्तात् सप्तम्याः' इतिसूत्रेण सप्तम्या अलुक् पूर्वपक्षे साधारण्यवारणाय समर्थितान्तम् । सर्ववाक्यानि जीववाक्यानि ब्रह्मवाक्यान्यपि ब्रह्मजीवयोः परेषामैक्यात् । इन्द्रप्रतर्दनसंवादे वा गताधिकरणोक्तानि जीववाक्यानि । प्रकरणसमर्थितत्वं दर्शपूर्णमासयागाङ्गत्वे समिद्यागनिष्ठेस्ति तत्र ब्रह्मवाक्यरूपसाध्याभावात् साधारण्यं तद्वारणाय सर्ववाक्येत्यादि । प्रकरणसमर्थितत्वे सति सर्ववाक्यसमर्थितत्वमपि लिङ्गं तत्रैव साधारणमतः सर्ववेदान्तेत्यादि तत्र सर्ववेदान्तेत्यभावात् न साधारण्यम् । तर्हि प्रकरणसमर्थितत्वे सति सर्ववेदान्तेत्यादिर्हेतुरस्तु अस्य हेतोर्न जीवेनापि समिद्यागनिष्ठे दर्शपूर्णमासयागाङ्गत्वे साधारण्यमितिचेत् महावाक्ये साधारण्यमस्तु । ननु न साधारण्यं प्रकरणस्योपासनसंबन्धित्वात् जीवे सर्ववेदान्त-प्रसिद्धोपदेशत्वेपि हेत्वभावादिति चेन्न । सर्ववेदान्तप्रसिद्धब्रह्मोपदेशस्य यागे सहदेववाक्येषु साधारण्यात् सर्ववाक्यान्यनुगतानीति ओमितिचेन्न औपनिषदत्वाभावात् । तं त्वौपनिषदं पुरुषं पृच्छामीति तु वैदिकपुरुषनिषेधात् । सूत्रभाष्ये वेदान्तेषु वेदत्वविधानाच्च वेदानां वेदान्तत्वम् । अतस्त्र्यंबकं यजामह इत्यादिसर्ववाक्यसमर्थितत्वेन वैदिकत्वं न त्वौपनिषदत्वं पुरुषस्य । सर्ववाक्यानि

१. साध्याभावव्याप्तिर्न साधारण्यम् ।

ननु क्रतुमयः पुरुष इति यथासंकल्पमग्रिमदेहकथनाल्लोकान्तरभाविफलार्थमन्योपासनैव युक्ता, न तु ब्रह्मज्ञानस्य तादृशं फलं युक्तमित्याशङ्क्य परिहरति ।

**विवक्षितगुणोपपत्तेश्च ॥ २ ॥**

विवक्षिता लोकान्तरे तादृशरूपप्राप्तिः, सा प्रकृतेऽप्युपपद्यते । भगवत्स्व-

---

भाष्यप्रकाशः ।

किं च, सूत्रे प्रसिद्धपदेन, तदेजति तन्नैजतीत्यादिवाक्यप्रसिद्धत्वस्यापि स्मारणादेतद्वाक्यगताणीयस्त्वज्यायस्त्वाधारत्वेन प्रसिद्धत्वमपि संगृह्यते । अतो वाक्यस्य स्पष्टलिङ्गत्वमपि बोध्यते । तेनात्र पादे अस्पष्टलिङ्गवाक्यचिन्ताङ्गीकारं प्रतिज्ञायैतस्यात्र विषयत्वेनोपन्यासोऽप्ययुक्त इत्यपि सूचितम् ॥ १ ॥

**विवक्षितगुणोपपत्तेश्च ॥ २ ॥** इतिसूत्रमवतारयन्ति नन्वित्यादि । अयमर्थः—अत्र हि पूर्ववाक्ये ब्रह्मोपासनकथनेऽप्यथेतिप्रकृतच्छेदेनाग्रे उपासनान्तरमुच्यते । तथा क्रतुमय इत्यारभ्य,

रश्मिः ।

तु सन्मूलाः सोम्येमाः सर्वाः प्रजाः ब्राह्मणो मुखमित्येव मुखाज्जातत्वहेतुतः यथा वेदश्रुतिस्तद्वज्जीवो ब्रह्मेति वा भवेत् इत्यादीनि । रामानुजाचार्यास्तु मनोमयत्वादिगुणकं ब्रह्मैव कुतः सर्ववेदान्तवाक्येषु परस्मिन्नेव ब्रह्मणि प्रसिद्धस्य मनोमयत्वादेरुपदेशादिति व्याख्याय सर्वं खल्विदं ब्रह्मेति निर्दिष्टे सर्वस्मिन् जातिब्रह्मशब्देन तदात्मतयाभिधीयमानं परं ब्रह्मैव न प्रत्यगात्मा कुतः प्रसिद्धोपदेशात् तज्जलानिति हेतुतः । सर्वं खल्विदं ब्रह्मेति प्रसिद्धवन्निर्देशात् । ब्रह्मणो जातत्वात् ब्रह्मणि लीनत्वात् ब्रह्माधीनजीवनत्वाच्च ब्रह्मात्मकं सर्वं खल्विदं जगदित्युक्ते यस्माज्जन्मस्थितिलया वेदान्तेषु प्रसिद्धाः तदेवात्र ब्रह्मेति प्रतीयते तच्च परमेव ब्रह्म इममेव सूत्रार्थमभियुक्ता मन्यन्ते यदाह वृत्तिकारः सर्वं खल्विति सर्वात्मा ब्रह्मेश इति व्याचक्रुरतो भेद इत्यर्थः । भाष्ये नानुमानत्वेन वर्णनीयं तत्तु तं त्वौपनिषदं पुरुषं पृच्छामीति केवलोपनिषद्वेद्यत्वादुपेक्ष्यमिति भाष्यविरोधादिति तु न । वादिबुद्धिप्रवेशार्थत्वेन तर्ककर्कशविचारस्य भगवदिच्छयान्यमतेष्विवात्राप्येकत्वात् ।

दूषणान्तरमाहुः किं चेति तज्जलानिति हेतुतः सर्वं खल्विदं ब्रह्मेति प्रसिद्धवन्निर्देशादित्यत्र जगज्जन्मादिकर्तृत्वेन प्रसिद्धस्य ब्रह्मणः स्मारणमिव सूत्रे प्रसिद्धपदेनेत्यादिः । एतद्वाक्येति सर्वं खल्विदमित्येतस्य वाक्ययोरणीयान व्रीहेर्वा यवाद्वेति वाक्ये ज्यायान् पृथिव्या ज्यायानन्तरिक्षाद्वेत्यनयोर्गतयोरणीयस्त्वज्यायस्त्वयोराधारत्वेन । तेन स्पष्टलिङ्गबोधनेन । तस्य स्पष्टलिङ्गबोधकस्य वाक्यस्य । सूचितमिति । किं च पूर्ववाक्यस्य पूर्वोक्तरीत्या विषयवाक्यत्वस्फोरणं प्रयोजनम् । तत्त्वन्यथापि संभवति द्वितीयवाक्यरूपोपदेशात् । अत्ताचराचराधिकरणे सूत्रीयशब्दघटितत्वेपि विषयवाक्यत्वदर्शनात् । पूर्वं क्रतुपदस्य मननपदं विहायोक्तेस्तात्पर्यमुक्तम् । सेवा कार्येति सिद्धान्तमुक्तावल्यां प्रसिद्धा सा । प्रयोजनं जगन्नित्यत्वमपरमपि प्रयोजनं सगुणभक्तिमार्गनिरासरूपं ततश्च सर्वपदघटितत्वेन विषयवाक्यत्वबोधनमपि तत् । यदि च क्वाचित्की विषयवाक्यरीतिरियं न सार्वत्रिकीति विभाव्येत तदुक्तप्रयोजन इदमपि प्रयोजनमस्तु मुख्यं तु भाष्योक्तमन्तःकरणशुद्धिरूपमस्त्येव ॥ १ ॥

**विवक्षितगुणोपपत्तेश्च ॥ २ ॥** क्रतुमय इति अथ इति हेत्वर्थे यस्मात्पुरुषो मननमयो यथा क्रतुरस्मिँल्लोके पुरुषः स देहजीवो भवति तथा तादृगेव क्रतुफलात्मक एव इतोस्माद्देहात्प्रेत्य मृत्वा भवति तस्मात् क्रतुं मननं कुर्वीत इतिश्रुतिः तथेतः प्रेत्येत्यत्र तेन पुरुषत्वेन प्रकारेण भवतीत्यर्थादाहुः

**रूपलाभात् सारूप्यलाभाद्वा । न च व्याप्तिरुक्तेत्यधमप्राप्त्युपायो युक्तः । सत्यसंकल्पादिवचनं च ब्रह्मवाक्यत्वपोषकमिति चकारार्थः ॥ २ ॥**

---

भाष्यप्रकाशः ।

तथेतः प्रेत्य भवतीत्यन्तेन लोकान्तरे संकल्पानुरूपदेहप्राप्तिरूपं फलमुच्यते । फलं च तात्पर्यनिर्णये लिङ्गम् । अतस्तद्विचारेऽत्रोक्तोपासनाया ब्रह्मविषयत्वं न घटते । फलस्य प्राकृततया जाघन्यात् । अतोऽत्र यथासंकल्पमग्रिमदेहकथनाल्लोकान्तरभावितादृशदेहप्राप्त्यर्थं वेदाभिमानिदेवताया वा, क्रतुमय इत्यादिना साधकस्योपक्रान्तत्वात् स्वजीवस्यैव वोपासना युक्ता । इहापि भावनया पेशस्कृतो रूपान्तरस्य प्रत्यक्षसिद्धत्वेन श्रुत्युक्तपारलौकिकरूपान्तरस्य भावनाप्रचयजन्यतायां बाधानवतारात् । न चैवं सति ब्रह्मोपासनायामपि तथा वक्तुं शक्यत्वात् कुतस्तत्त्याग इति शङ्क्यम् । देहत्वस्य प्राकृतत्वव्याप्तत्वेन ब्रह्मज्ञानस्य च, 'तमेव विदित्वा अतिमृत्युमेति', 'ब्रह्मविदाप्नोति परम्' इत्यादिषु ब्रह्मप्राप्तिरूपस्यैव फलस्य श्रावणेन ब्रह्मज्ञाने तादृशफलकथनस्यायुक्तत्वादिति । तस्मादत्र मननोपदेशाङ्गीकारो न युक्त इत्याशङ्क्य परिहरतीति । सूत्रं पठित्वा तत् समाधातुं व्याकुर्वन्ति ।

**विवक्षितेत्यादि** । विवक्षिता वक्तुमिष्टा उपादेयत्वेनाभिप्रेता वा या गुणरूपा लोकान्तरे तादृशी संकल्पानुरूपदेहप्राप्तिः सा ब्रह्मज्ञानपक्षेऽप्युपपद्यते । ज्ञानफलबोधिकासु श्रुतिषु मृत्युमतिक्रान्तस्य भगवत्स्वरूपस्य ब्राह्मदेहस्य परप्राप्तिरूपस्य वा, ब्रह्म वेद ब्रह्मैव भवतीति श्रुत्या ब्रह्मस्वरूपस्य वा लाभोऽभिप्रेत इति तस्य संकल्पानुरूपताया युक्तत्वादिति । न च यथा क्रतुरित्यादिना लोकान्तरप्राप्यत्वेन संकल्पानुरूपत्वेन व्याप्तिरुक्तेत्यतः, कुर्वीतेत्युपदेशबोधितः क्रतुरधमस्य प्राकृतदेहस्य प्राप्त्युपायो युक्तः । परमशान्तस्य पूर्वोपासनया शुद्धान्तःकरणस्याशुद्धसंकल्पायोगात् तदभावे प्राकृतदेहस्याप्ययोगादित्यर्थः । हेत्वन्तरमाहुः सत्त्वेत्यादि । तथाचैवं हेतुद्वयबाधितत्वादस्य जीववाक्यत्वं न शङ्कितुं शक्यमित्यर्थः ।

रश्मिः ।

**संकल्पेत्यादि** । फलमिति तथेतः प्रेत्येत्युक्तदेहफलम् । उपासनाविषयकतात्पर्येणोपासानिर्णये लिङ्गं हेतुः । कार्येण कारणानुमानादित्यतःशब्दार्थः । **तद्विचारे** फलविचारे । ननु स्वोपासनायां कथं तादृशं फलमित्याकाङ्क्षायामाह **इहापीति** । **भावनाप्रचयेति** तेन पूर्वदृष्टान्तेपि भावनाप्रचय इति बोधितम् । अप्रचितभावनाया लोके रूपान्तरासंपादकत्वात् । न त्वित्याद्याभासभाष्यमत्रावतारयामासुः **न चैवं सतीति** । **तथावक्तुमिति** सारूप्यादि तेन प्रकारेण वक्तुम् । **गुणरूपेति** यथा प्राकृतदेहो गुणमयो 'जहुर्गुणमयं देहम्' इत्यादौ तथायमपि ब्राह्मदेहो ह्यात्मगुणमय इति देहप्राप्तिर्गुणपदेनोपचर्यते । **सेत्यादिभाष्यं** विवरामासुः **सा ब्रह्मेत्यादि** । भगवदित्यादिभाष्यं विवृण्वन्ति स्म **ज्ञानफलेति** । **श्रुतिष्विति** 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेयनाय' 'ब्रह्मविदाप्नोति परम्' 'ऋते ज्ञानान्न मुक्तिः' 'तरति शोकमात्मवित्' इत्येवंरूपासु । **मृत्युमिति** मृत्युमतिक्रान्तोतिमृत्युरित्यतिमृत्युपदविग्रहात् । नन्वतिमृत्यव इत वायुदिगमयो बृहदारण्यके सन्ति ते कुतो न व्याकृता इति चेत्तत्राहुः **ब्राह्मेति** । जगद्व्यापारवर्जे ब्राह्मदेहस्यौचित्यात् । अन्या वा श्रुतिर्भगवत्स्वरूपस्य ब्राह्मदेहस्य बोधिका तामर्थद्वारेणाहुः **परप्राप्तीति** । ब्रह्मविदाप्नोतीत्यत्र कर्तृकर्मव्यपदेशादितिभावः । **न चेतिभाष्यं** विवरांचक्रुः **न च यथेत्यादि** । **उक्तेति** यथा क्रतुरस्मिन् लोक इतिश्रुतौ तात्पर्यवृत्त्योक्ता सत्यसंकल्पानुरूपलोकान्तरप्राप्यत्वादित्यत्र । **सत्त्व चेति** पराभिध्यानात्सत्यसंकल्पादीनां जीवेषु तिरोहितत्वेन ब्रह्मवाक्य-

भाष्यप्रकाशः।

यत्तु केचिदपौरुषेयवेदे वक्तुरभावादिच्छार्थः संभवतीत्यत उपादेयत्वेन फलेन तत्र विवक्षितत्वमुपचर्यते। लोके तथादर्शनात्। वेदेऽपि वाक्यतात्पर्यातात्पर्याभ्यामुपादेयत्वानुपादेयत्वयोरवगन्तुं शक्यत्वात् सूत्रे विवक्षितपदमौपचारिकमङ्गीकुर्वन्ति तन्न रोचिष्णु। निःश्वसितश्रुत्यनुरोधेन वेदे जीवाजन्यत्वरूपस्यापौरुषेयत्वस्यास्थेयत्वेन सर्वथा वक्त्रभावस्यासंगतत्वात्। शास्त्रयोनित्वसूत्रे स्वयमेव वेदकर्तृत्वाङ्गीकारेण वदतो व्याघाताच्च। नच निःश्वसितस्य सार्वदिकत्वादबुद्धिपूर्वकत्वेन वक्तुरुपगमेऽपीच्छार्थासंभवाददोष इति वाच्यम्। 'आनीदवातꣳ स्वधया तदेकं तस्माद्धान्यन्न परः किंचनास' इति श्रुतिविरोधेन तत्सार्वदिकत्वाङ्गी-

रश्मिः।

त्वपोषकत्वे प्रकारे च। वक्तुमिष्टा विवक्षितेत्युक्तमाक्षिपन्ति यत्त्वित्यादि। केचिदिति शंकराचार्याः रामानुजाचार्याश्च। इच्छार्थ इति। विवक्षितपदे सन्प्रत्ययस्येत्यर्थः। उपादेयत्वेनेति। नन्वुपादानेन फलेनोपचर्यते इतिभाष्यं न तूपादेयत्वेनेति चेन्न। उपादेयत्वमुपादानं पुरुषनिष्ठत्वेपि संबन्धान्तरेणोपादेयनिष्ठत्वात् न त्वतिरिक्तं गौरवात्। उपादेयत्वत्वेनोपादानग्रहणमुपादेयगुणेषु फलतायै उपादेयत्वं फलं तत्कार्यमुपादानमुरुनिष्ठमिति फलं कार्यम्। तत्रेति उपादेयेषु गुणेष्वित्यर्थः। तथा च विवक्षितपदं कार्यताख्यसंबन्धेनोपादेयेषु गौणं सत् गुणेषु विशेषणमित्यर्थः। तथेति उपादेये घटे विवक्षितो घट इति प्रयोगदर्शनात्। य एव लौकिकाः शब्दास्त एव वैदिकाः इतिविवक्षाधीनां ग्राह्यत्याज्यबुद्धिं वेदेपि साधयितुमाहुः वेदेपीति। वाक्यानां 'ज्योतिष्टोमेन स्वर्गकामो यजेत' ब्राह्मणो न हन्तव्य इत्यादीनामारोपितानारोपिताभ्यां तात्पर्यातात्पर्याभ्याम्। तात्पर्यं च फलवदर्थप्रतीत्यनुकूलत्वं शब्दधर्मः तत्प्रतीतीच्छयोच्चरितत्वस्य तात्पर्यलक्षणस्य वक्तुरिच्छा तु तात्पर्यमित्यस्य चेच्छाघटितत्वात्। औपेति गुणेषु गौणमित्यर्थः। निःश्वसितेति 'अस्य महतो भूतस्य निःश्वसितमेतदृग्वेदो यजुर्वेदः सामवेदोथर्वाङ्गिरसः' इति श्रुत्यनुरोधेनेत्यर्थः। महतो परिच्छिन्नस्य भूतस्य परमार्थवस्तुनः निःश्वसितमिव निःश्वसितं प्रयत्नोत्पादितमिति तट्टीकोक्तोर्थः। वेदकर्तृत्वेति यद्यपि महतः ऋग्वेदादेः शास्त्रस्यानेकविद्यास्थानोपबृंहितस्य प्रदीपवत्सर्वार्थावद्योतिनः सर्वज्ञकल्पस्य योनिः कारणं ब्रह्म न हीदृशस्य शास्त्रस्य ऋग्वेदादिलक्षणस्य सर्वज्ञगुणान्वितस्य सर्वज्ञादन्यतः संभवोस्तीत्यादिना वेदकर्तृत्वमङ्गीकृतं सगुणगतमारोपितं तदित्यवास्तवमिति न वदद्व्याघातस्तथाप्यस्मन्मते सगुणनिर्गुणभेदाद्वदतो व्याघातः। चकारेण वेदान्तकृद्वेदविदेव चाहम्। इतीतिहाससमुच्चयः। वक्तुरुपगमेप्यौपचारिकत्वमाशङ्कते वादी न च निःश्वसितस्येति। अबुद्धेर्बुद्धिसमानाधिकरणत्वेन जानातीच्छति यतत इतिक्रमे इच्छाया ज्ञानविषयिण्या विषयाभावेनेच्छार्थासंभवादित्यर्थः। अधिकरणं जीवः। जीवेश्वरवत्तस्योपाधिर्बुद्धिरिति। अदोष इति न गौणीरूपो दोषः। आनीदिति इयं नासदासीन्नो सदासीत्तदानीमित्युपक्रम्य ब्राह्मणे पठिता। आनीदिति अन प्राणने लुङ्। स्वधया पित्रन्नेन। स्वधयानितीति। धान्यमिति। व्युत्पत्तिः। स्ववर्णलोपः पचाद्यच्। अनितीत्यनम् स्वधयानम् धानं धानस्य भावो धान्यम् ष्यञ्। एवं च निःश्वसितश्रुतौ श्वस प्राणने श्वसितीति श्वसितं गत्यर्थाऽकर्मकेभ्यः इत्यकर्मकात् क्तः अवातमित्यत्र वातीति वातं हसिमृग्रिणिति तम् तदानीं कालेनासदासीत् नो सदासी-

भाष्यप्रकाशः ।

कारस्यैवासंगतत्वात् । एवं सिद्धे निःश्वसितस्यासार्वदिकत्वे तदुद्गमे इच्छापूर्वकत्वस्याप्यपर्यवस्येयत्वात् । प्रपञ्चमात्रं प्रति, बहु स्यामितीच्छाया एव कारणत्वेन वेदात्मकनामप्रपञ्चं प्रत्यपि तस्या अदण्डवारितत्वात् । नच शब्दस्वरूपमात्रोद्गम एवेच्छासंबन्धो, न तु तस्यार्थसाहित्येऽपीत्यदोष इति वाच्यम् । ईदृशविभागे मानाभावात् । नचैवं पौरुषेयत्वाङ्गीकारे काणादादितौल्यापातः । ईश्वरवाक्यत्वेनैव तन्निरासात् । नचैवं शब्दार्थसंबन्धानित्यत्वप्रसङ्गः । शब्द इति चेदित्यस्मिन् सूत्रे तन्निरासप्रकारस्यापि वक्ष्यमाणत्वात् । अतो वेदे वक्तुरिच्छासंबन्धस्य सत्त्वेन विवक्षितत्वादेः सत्त्वादुपचाराङ्गीकारो न युक्त इति दिक् ।

यत् पुनर्मनोमयः प्राणशरीर इत्यस्य सगुणविषयत्वम्, 'अप्राणो ह्यमनाः शुभ्र' इत्यस्य निर्गुणब्रह्मविषयत्वमित्युक्तं तत्तु पूर्वपादार्थानुवादभाष्य एव दूषितमित्युपरम्यते ॥ २ ॥

रश्मिः ।

तदेकं कर्तृ अवातमनिःश्वसितम् जगत् स्वधया आनीत् प्राणयुक्तमकार्षीत् । यतोकार्षीत्तस्माद्धान्यं धनं वेदः धाकारस्य छान्दसो ह्रस्वः निरुक्तौ तथा पाठात्तस्य धान्यं वेदत्वं विरुद्धाऽवातपदविरोधाच्छ्रुतिविरोधस्तेनेत्यर्थः । असंगतेति तथा च निःश्वसितस्यासार्वदिकत्वेन वेदोद्गमस्य बुद्धिपूर्वकत्वात्तयेच्छाजननादिच्छार्थसंभव इतिभावः । तदेवाहुरेवमिति । अपरीति पर्यवस्था इच्छां परिलक्षीकृत्य अवहीना स्थितिरिच्छाप्रत्याख्याने स्थितिः । न पर्यवस्थातुं शक्यमपर्यवस्येयम् 'अचो यत्' तत्त्वात् । निःश्वसितस्येच्छापूर्वकत्वे हेत्वन्तरमाहुः प्रपञ्चेति । बहु स्यामिति 'एकोहं बहु स्याम् प्रजायेय' इतिश्रुतौ बहु स्याम् । अदोष इति मनोमयप्राणशरीरत्वादिगुणानामर्थत्वेन तत्रेच्छासंबन्धाभावात् विवक्षितपदमौपचारिकमिति नोपचारो दोष इति वाच्यमित्यर्थः । मानाभावादिति मम तु 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः' इत्यादिजैमिनिसूत्रमेव मानम् । काणादादीति शब्दार्थयोरनित्यत्वापातः । ईश्वरेति येनेश्वरे वाक्यत्वेन हेतुना शब्दार्थयोरनित्यत्वापत्त्या तौल्यं तेनैवेश्वरवाक्यत्वेन हेतुना तत्तौल्यनिरासादित्यर्थः 'वाचा विरूप नित्यया' इतिश्रुतेरिति. वाचः कथमित्याकाङ्क्षायामाशङ्कामुखेन तन्निरासं व्युत्पादयांबभूवुः न चैवमिति वेदस्येश्वरवाक्यत्वेन जन्यत्वात् जन्यत्वेन नश्वरत्वेन व्याप्त्या बबरशाण्डिल्यादीनां शब्दार्थरूपाणामनित्यत्वे तेषां शब्दानामर्थानां च प्रतिपाद्यप्रतिपादकभावसंबन्धानित्यत्वेत्यर्थः । सूत्र इति तृतीयपादस्थे । निरासप्रकारस्तु वैदिकपदार्थानां शब्दप्रभवत्वेन वैदिकप्रपञ्चो भिन्न एव नित्यश्चेति अत एव 'वाचा विरूप नित्यया' इतिश्रुतिः 'वेदो नारायणः साक्षात् स्वयंभुरिति शुश्रुमः' 'शब्द ब्रह्म सुदुर्बोधम्'

'स्वयंभुरेष भगवान् वेदो गीतस्त्वया पुरा ।
शिवाद्या ऋषिपर्यन्ता स्मर्तारोस्य न कारकाः' ॥ इत्यादिस्मृतयश्च ।

सिद्धमाहुः अत इति । दिगिति तृतीयपादे तदुपर्यपीत्यधिकरणे वेदे वक्तुरिच्छासंबन्धः स्फुट इति तयेति भावः । यत्पुनरिति शंकराचार्यैरिति शेषः । दूषितमिति । ये पुनः कचित् सगुणनिर्गुणभेदं प्रतिपादयन्ति ते स्वयमेव स्वस्य ब्रह्मजिज्ञासानधिकारं बोधयन्तीत्यादिना दूषितम् । भाष्ये । नैकान्तत इति एका संभावना एकान्ततः पञ्चम्या लुक् 'संभावनावयवयोरन्ततः पदमिष्यते' इतिविश्वात् । प्रकृते । जीवहिरण्यगर्भयोः सूत्रार्थानुपपत्तितौल्याय योजयामासुः

नन्वेतावतापि नैकान्ततो ब्रह्मवाक्यत्वमुपपत्तेरुभयत्रापि तुल्यत्वादित्याशङ्क्य परिहरति।

अनुपपत्तेस्तु न शारीरः॥ ३॥

नच प्राणशरीररूपो जीवो भवति। निरोहितानन्दत्वेन निराकारत्वात्।

भाष्यप्रकाशः।

अग्रिमसूत्रमवतारयन्ति। नन्वेतावतेत्यादि। एतावतेति सूत्रद्वयोक्तयोपपत्त्या। तुल्यत्वादित्यादि।

'आत्मानं चेद्विजानीयादयमस्मीति पूरुषः।
किमिच्छन् कस्य वा हेतोः शरीरमनुसंज्वरेत्'॥

इत्यादौ ज्ञेयतया प्रसिद्धत्वेन जीवस्य मन्तव्यत्वोपदेशो, लोकान्तरे विवक्षितदेहप्राप्तिः। 'न वै कश्चिन्मे मनसो मृषा गतिः' इतिवाक्यात् सत्यसंकल्पत्वं, व्यापकत्वादाकाशात्मत्वं, पर्यायेण सर्वाहंमानितया वा सर्वकर्मत्वादिकं हिरण्यगर्भे जीवे च संगच्छत इति तस्य बाधाभावेन तुल्यत्वादित्याशङ्क्य परिहरतीत्यर्थः।

अनुपपत्तेस्तु न शारीरः॥ ३॥ सूत्रं व्याकुर्वन्ति नचेत्यादि। सत्यमस्त्वेवमुपपत्तितौल्यं, तथापि शरीरसंबन्धी जीवो वाक्यार्थो न संभवति। कुतः। अनुपपत्तेः। प्राणशरीरत्वस्यानुपपद्यमानत्वात्। तत्र हेतुः निरोहितेत्यादि। प्राणशरीर इत्यत्र शरीरपदमाकारपरम्। तथाचात्र हि, मनोमय इत्यत्र यथा विकारार्थोद्वापेन प्राचुर्यान्मनोमयत्वमुपदेशगोचरस्तथा प्राणशरीर इत्यत्रानन्दरूपप्राणशरीररूपत्वम्। लौकिकप्राणस्योद्वापात्। प्राणस्यानन्दरूपता त्वनुगमाधिकरण एव सिद्धा। प्राणमुपक्रम्य, 'एष प्रज्ञात्मानन्दोऽजरोऽमृतः' इति तद्विषयवाक्ये श्रावणात्। नच लौकिकप्राणस्योद्वापे किं मानमिति शङ्क्यम्। लौकिकस्य

रश्मिः।

आत्मानमिति। आत्मानं जीवम्। अयमहं ब्रह्मास्मि पूर्णकामः आप्तकाम इदंपदार्थः। आप्तकामत्वात् किमिच्छन् पूर्णकामत्वात् कस्य हेतोः। षष्ठ्यन्तं पदम्। अन्विति आत्मज्ञानानन्तरम्। ज्ञेयतयेति ज्ञानकर्मतया सर्वत्र प्रसिद्धत्वेन मननोपदेशः। एतेन सर्वत्र प्रसिद्धोपदेशादिति सूत्रार्थो जीवपरो व्याकृतस्तौल्याय। द्वितीयसूत्रार्थमाहुः लोकेति। विवक्षितगुणरूपदेहस्योपपत्तिः प्राप्तिः। सूत्रं व्याख्याय 'मनोमयः प्राणशरीरो भारूप' इत्येषां स्पष्टतया सत्यसंकल्प इत्यादीनामर्थानाहुः न वा इति। इदं वाक्यं द्वितीयस्कन्धे षष्ठाध्याये ब्रह्मणः। पर्यायेणेति क्रमेण 'पर्यायस्तु प्रकारे स्यान्निर्माणेवसरे क्रमे' इतिविश्वात्। 'कस्त्वमित्यहमिति होवाचैवमेवेदं सर्वं तस्मादहमिति सर्वाभिधानम्' इति नृसिंहोत्तरतापिनीयश्रुतेः सर्वाहंमानिता। अत्र कस्त्वमिति देवकर्तृकः प्रश्नः। अहमित्यारभ्याहमित्यन्तं प्रजापतिवाक्यम्। शेषं विधायकमिति ज्ञेयम्। एवं पूर्वोक्तपरामर्शे तथा चैवमेवाहमेवेत्यर्थः। अभिधानं नाम। सर्वकर्मत्वेति आदिपदेन सर्वगन्धत्वम्। जीवन्मुक्तजीवस्य सर्वगन्धत्वात्। न च पूर्वपक्षकर्तुर्मते जीवश्रुतिर्नास्तीति वाच्यम्। तन्मते जीवस्यैव ब्रह्मत्वात्। तस्य जीवस्य पदार्थान्वये बाधाभावेन॥ २॥

अनुपपत्तेस्तु न शारीरः॥ ३॥ शरीरं कस्मात्साक्षादस्मयो ह्यत्र श्रियन्त इतिगर्भोपनिषच्छ्रुतौ निर्वचनाच्छरीरपदमाकारपरम्। आनन्दरूपः प्राणशरीर इतिभाष्यं पूर्वं व्याकृतं सूत्रसमाप्तिस्थम्। अधुना आनन्दरूपः प्राणः शरीरं यस्येतिभाष्यं विगृह्य प्राणस्य साकारत्वाय तस्यानन्दरूपतामाहुः प्राणस्येति। अध्यासेनेत्यारभ्यानर्थक्यप्रसङ्गात् इत्यन्तं भाष्यं विवरामासुः नचेति। आध्या-

**अध्यासेन तथात्वे त्वनुपास्यत्वमेव । इदानीमेवोपासकस्यापि तथात्वात् । नच प्राणादेर्लौकिकत्वम् । उपदेशानर्थक्यप्रसङ्गात् । अत आनन्दरूपप्राणशरीररूपत्वाभावान्न वाक्यार्थो जीवः । पूर्वपक्षस्यात्रैव निवृत्तत्वात् तुशब्दः । विज्ञानमये तु प्राप्ताप्राप्तविवेकेन धर्मस्यैवोपासना ॥ ३ ॥**

---

भाष्यप्रकाशः ।

तस्य शरीरताया आध्यासिकत्वेनेदानीमुपासकस्यापि प्राणशरीरत्वात् तथोपासनोपदेश आनर्थक्यप्रसङ्गस्यैव मानत्वादिति । अतस्तदभावान्न वाक्यार्थो जीव इत्यर्थः । तुशब्दं व्याकुर्वन्ति **पूर्वेत्यादि** । ननु कथं पूर्वपक्षस्यात्र निवृत्तिः । 'विज्ञानमानन्दं ब्रह्म'इति श्रुत्युक्तस्य विज्ञानस्य, 'विज्ञानं यज्ञं तनुत' इति विज्ञानमयनिगमनश्लोकेऽपि प्रत्यभिज्ञायमानत्वेनात्र पूर्ववाक्ये विराट्त्वेन ब्रह्मोपासनवद्विज्ञानमयेऽपि विज्ञानत्वेन ब्रह्मोपासनस्य शक्यवचनतया आनन्दपूर्वभावमात्रस्य जीवोपासनागमकताया अप्रयोजकत्वेन तत्रापि तदुपासनानवकाशात् तत्र तदङ्गीकारस्यासंगततया पूर्वपक्षस्यानुपशमादित्यत आहुः **विज्ञानमय इत्यादि** । तत्र गौणान्तर्येण

रश्मिः ।

**सिकत्वेनेति** शरीरगतवायुरूपप्राणस्य स्पर्शरूपस्य सूक्ष्मदेहस्थस्य च । **तथोपदेश इति** आध्यासिकोपासनोपदेशे । **तदभावात्** लौकिकप्राणोपदेशाभावात् । प्राणशब्दस्यौपचारिकत्वापत्त्या नायमर्थः साधीयानिति चेत्तर्हि ब्रह्माहमस्मीतिवत् मनोमयत्वादिविशिष्टोहमित्यध्यासेन गृह्यत इत्याध्यासिकत्वेन । **तथात्वे** मनोमयत्वादिवैशिष्ट्ये । **अपीति** अनिदानींतनोपासकस्य वामदेवादेरपिपदेन ग्रहः इत्यध्यासेनेत्यादिभाष्यार्थः । **व्याकुर्वन्तीति** शंकराचार्यैरवधारणार्थकत्वेन व्याकृतं रामानुजाचार्यैरव्याकृतं तुशब्दमतीतार्थत्वेन व्याकुर्वन्तीत्यर्थः । अतः पूर्वपक्षोतीतोतिक्रमं प्राप्त इत्यर्थः । तुः प्रश्न इत्युपक्रम्यातीतपुनरर्थयोरिति विश्वात् । ननु किमनेन प्राणोद्वापेन प्राणशरीरत्वस्य जीवे स्फुटत्वेन तस्यैवोपासनास्तु शाखान्तर इत्यादिभाष्यात् न जीवोपासनमात्राभाव इत्याशङ्क्य शाखान्तर इत्यादिभाष्ये किंचिद्वदन्तो विज्ञानमय इत्यादिभाष्यं विवरीतुमाशङ्कामाहुः **नन्वित्यादि** । श्रुतौ विज्ञानं कर्तृ तनु विस्तारे धातुः । **अत्रेति** विषयवाक्ये । पूर्वं सर्वं खल्विदमिति वाक्यं तस्मिन् । **विराट्त्वेनेति** । नन्वयं ब्रह्मत्वेनोपासनमुक्तमिति भाष्यं विरुणद्धीतिचेन्न इदमेवेत्यादिभाष्यानुगुणत्वात् । ननु सर्वं खल्विदमिति विराट् तस्य ब्रह्मेतिपदात् ब्रह्मत्वेनोपासनवत् स्वराट्त्वेनेत्युपन्यासः कुतो न इति चेन्न । पुराणादौ 'पुरुषो धारणाश्रयः' इतिवाक्यात् विराट्त्वेनेति युक्तत्वात् । ब्रह्मोपासनवदिति षष्ठयन्ताद्वतिः । ब्रह्मणा ब्रह्मत्वेन जगदुपासनस्येवेत्यर्थः । **शक्येति** प्रत्यभिज्ञानेन शक्यवचनतया श्रुत्यपेक्षया भाष्यस्य निर्बलत्वेनानन्दपूर्वभावावधारणस्य । **अप्रयोजकत्वेनेति** आनन्दात्फलादुपासनस्य पूर्वत्वावधारणस्य ब्रह्मोपासनसाधारण्यात् । किं च यद्यप्रयोजकत्वं न भवेत् तदा पूर्ववाक्ये अंशतोपि जीवत्वेन जीवोपासना नश्येत् यदि नश्येत् सर्वं खल्विदं ब्रह्मेति श्रुतिं विरुन्ध्यात् । तत्रापि विज्ञानमयेपि जीवोपासनानन्दपूर्वभावित्वेनानवकाशात् । तत्र छान्दोग्ये जीवोपासोच्छेदभिया तदङ्गीकारस्य ब्रह्ममननाङ्गीकारस्य सिद्धान्तेऽसंगततया विज्ञानत्वेनोपासनं विज्ञानजीवस्योक्तम् । तन्न । प्रत्यभिज्ञानप्राप्तविज्ञानत्वे बाधकसद्भावात् । किं तद् बाधकं तत्राहुः **तत्रेति** विज्ञानमये । तस्माद्वा एतस्माद्विज्ञानमयादन्यो अन्तर आत्मानन्दमय इतिश्रुतेर्गौणान्तर्यम् । तस्माद्वा एतस्मान्मनोमयादन्योन्तर आत्मा विज्ञानमयः

ननु प्राप्तव्यतादृशरूपफलाभिप्रायं भविष्यतीति परिहरति ।

भाष्यप्रकाशः ।

श्रद्धादिधर्मत्वेन च जीवत्वस्य प्राप्तत्वेन मुख्यान्तर्यस्यानन्दरूपत्वस्य चाप्राप्तत्वेन किं ग्राह्यमिति विचारे प्राप्ताप्राप्तविवेकेनाप्राप्तापेक्षया प्राप्तस्यैव बलिष्ठत्वाद्धर्मस्य भगवति वृत्तिमतो जीवस्यैवोपासना युक्तेति सुखेन पूर्वपक्षोपशमात् तन्निवृत्तिरित्यर्थः ॥ ३ ॥

अग्रिमसूत्रमवतारयन्ति नन्वित्यादि । यदि तत्र प्राप्ताप्राप्तविवेकेन जीवोपासना, तर्ह्यत्राप्यथ खलु क्रतुमयः पुरुष इत्यादिना जीवत्वस्यैव प्राप्तत्वाद् ब्रह्मत्वस्य चाप्राप्तत्वात्तद्विवेकेन जीवोपासनैव युक्ता । युक्तेस्तुल्यत्वात् । नचानन्दरूपप्राणशरीरतोक्तिविरोधः । तद्वचनं जीवप्राप्तव्यतादृशरूपफलाभिप्रायं भविष्यतीत्यविरोधादित्याशङ्क्य परिहरतीत्यर्थः ।

रश्मिः ।

इतिश्रुत्युक्तम् । तेन प्रत्यभिज्ञाप्राप्तानन्दपूर्वभावमात्रस्य ब्रह्मोपासनस्य बाधकेन । किं च तस्य श्रद्धैव शिरः इत्यादिश्रुत्युक्तं श्रद्धादिधर्मवत्त्वं प्रत्यभिज्ञाप्राप्तानन्दपूर्वभावमात्रस्य ब्रह्मोपासनस्य बाधकं तेन च । मुख्यान्तर्यं अन्योऽन्तरात्मानन्दमय इति श्रुत्युक्तं प्रत्यभिज्ञाने सति प्राप्तव्यं तस्य । तस्य प्रियमेव शिर इत्यादिश्रुत्युक्तमानन्दरूपत्वं च प्रत्यभिज्ञाने प्राप्तव्यं तस्य च प्रत्यभिज्ञानमन्तराऽप्राप्तत्वेनेत्यर्थः । वृत्तीति पूर्वाधिकरण आश्रितत्वेनोक्तेर्विशेषणम् । उपेति श्रद्धादिधर्मवत्त्वेन विभूतित्वेनानन्दमयाधिकरणोक्तेनोपासना युक्ता न तु प्रत्यभिज्ञातविज्ञानमयत्वेन बाधकसद्भावात् । ननु सुबोधिन्यां जीवोपासनानिषेधात् कथमुच्यत उपबृंहितजीवोपासनमिति चेन्न निषेधस्य जीवपरत्वेन विभूतिपरत्वाभावात् । एतेनैव प्राणशरीरत्वस्य प्रत्याख्यानम् । तथाहि प्राणशरीरत्वस्य जीवे स्फुटत्वेप्युपासनानिषेधात् अग्रे निरासाच्चायुक्तत्वं विज्ञानमयविभूतेस्तु श्रद्धादिधर्मवत्त्वेनोपासना न प्राणशरीरत्वेनेति । ननु शाखान्तर इत्यादिभाष्यादुपासनाया जीवे निषेधो मास्त्विति चेन्न विज्ञानमयविभूतेरुपासनाविधानात् अत एव न सिद्धान्तविरोधः । तथा चोपासनादिसहकृतान्येषां गौणानन्तर्यश्रद्धादिधर्मवत्त्वप्रत्यभिज्ञानानामपि गमकत्वमानन्दपूर्वभाववदितिशाखान्तर इत्यादिभाष्ये ज्ञातव्यम् । 'ब्रह्म ज्येष्ठमुपासत' इतितैत्तिरीयेप्युपासनादिसहकृतानन्दपूर्वभावोस्त्येव 'विज्ञानं यज्ञं तनुते कर्माणि तनुतेपि च विज्ञानं देवाः सर्वे ब्रह्म ज्येष्ठमुपासत' इतिश्रुतिः । पूर्वपक्षेति तथा च प्रकृतउपासनादिसहकृतानन्दपूर्वभाववद्गौणानन्तर्यस्यापि जीवोपासनागमकत्वेनात्राथ खल्वित्यादौ गौणानन्तर्यादिष्वेकस्याप्यभावान्न जीववाक्यत्वमिति पूर्वपक्षोपशमात् । मनोमयत्वादीनां श्रद्धादिधर्मवत्त्ववज्जीवोपासनागमकत्वं यद्यपि तथापि निरूपितव्याख्यानसूत्रैः सर्वत्र प्रसिद्धोपदेशादित्यादिभिस्तदपहृतमिति न पूर्वपक्षानुपशमः । प्राणशरीरत्वस्यानन्दरूपप्राणशरीरत्वरूपत्वं पूर्वमुपपादितं तदपि प्राप्तव्यं तादृशं रूपं फलं तदभिप्रायं प्राणशरीरपदं भविष्यतीति नन्वित्यादिभाष्यार्थः । तत्रेति विज्ञानमये । अत्रेति विषयवाक्ये । पुरुषः पुरि शेत इति पुरुषः । पुरा आस पुरुष इति वा । जीवासाधारणलिङ्गं तु इतः प्रेत्येति मरणकथनं ज्ञेयम् । तद्विवेकेन प्राप्ताप्राप्तविवेकेन । युक्तेरिति एष म आत्मा अन्तर्हृदय इत्यस्या ब्रह्मपरत्ववद् द्वा सुपर्णेति श्रुत्या जीवपरत्वस्यापि संभवात् । न च पूर्वपक्षस्योपशान्तत्वात् जीवविचारः कृत इति शङ्क्यम् । पूर्वपक्षे निराकरणीयजीवरूपार्थस्य विवक्षणेनानिराकरणीयजीवरूपार्थस्य विचारे बाधाभावात् ॥ ३ ॥

## कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥

'एतमितः प्रेत्याभिसंभवितास्मि' इति, 'यस्य स्यादद्धा न विचिकित्साऽस्तीति ह स्माह शाण्डिल्यः' इत्यग्रे फलवाक्यम् । एतं प्राणशरीररूपं कर्मत्वेन ध्येयत्वेन

भाष्यप्रकाशः ।

कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥ इदं सूत्रं व्याकुर्वन्ति एतमित्यादि । सत्यं प्राप्तं जीवत्वम् । परंतु ध्यानकर्तृत्वेन, न तु तत्कर्मत्वेन । विषयस्तु ध्येयत्वेनैवाभिप्रेतः । अत्र चास्य क्रतोः को विषय इत्यस्मिन्नंश एव संदेहात् तद्विचारे त्वेतमित्युपसंहारे गते फलवाक्ये एतमितिपदेन पूर्वं प्राणशरीररूपतयोक्तं ध्येयमेव परामृश्य, अभिसंभवितास्मीति वचनेन तमेव प्राप्यत्वेन व्यपदिशति, ध्यानादिकर्तृत्वेन च शारीरम् । अतः प्राप्ताप्राप्तविवेकन्यायस्यात्राप्रवृत्तिः । किंच, फलविचारेऽपि चेतनस्य फलस्य न पुरुषशेषत्वम् । चेतनस्य महत आशासस्य शेषिताया वरणीयस्थले दर्शनात्, 'फलं पुरुषार्थत्वा'दिति पौर्वतन्त्रन्यायस्य स्वर्गादौ चरितार्थत्वादत्र च

रश्मिः ।

कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥ विषय इति मननविषयो मनोमयः प्राणशरीर इत्यादि-निरूप्यः । ध्येयत्वेनेति स क्रतुं संकल्पं ध्यानमिति यावत् । इति शंकरभाष्याद्यथाध्यानकर्तृत्वेनेत्युक्तं वादिबोधाय तन्मतेन तथा तादृशध्यानविषयत्वेनेति वादिबोधाय मननविषयत्वेनेति फलितम् । अत्रेति प्रकृते । तद्विचार इति मनोमय इत्यारभ्य मननविषयविचारे । फलेति फलप्रतिपादके वाक्ये । ध्येयमिति वादिबोधाय मन्तव्यमित्यर्थः । अभीति प्राप्तास्मीत्यर्थः । भूङ् प्राप्तावात्मनेपदी भ्वादिस्तृ-जन्तः सेट् अभि आभिमुख्ये । सर्वत इति ज्ञानमार्गे । सम्यक् सेवादिपूर्वकं प्राप्तास्मीति । प्राप्यत्वेनेति ब्रह्म न विकार्यं कटकादिवन्न संस्कार्यं व्रीह्यादिवत् । नाप्युत्पाद्यं घटादिवत् किं तु स्वर्गादिवत्प्राप्यं कर्मतत्त्वेनेत्यर्थः । एतमिति द्वितीययोक्तं कर्मत्वं तद्ब्राप्यधर्मेण प्राप्यत्वेनेत्यर्थः । कर्मण आप्यविकार्यसंस्कार्योत्पाद्यभेदेन चातुर्विध्यात् । एवं व्यपदिशतीत्यन्तं भाष्यं व्याकृत्य कर्तृत्वेनेति भाष्यं व्याचक्रुः ध्यानादीति मननादिकर्तृत्वेन । शारीरमुपासकम् । अत इति व्यपदेशभेदात् । अप्रवृत्तिरिति जीवत्वस्य प्राप्तत्वं कर्तृत्वे व्यपदेशे ब्रह्मत्वस्याप्राप्तत्वं कर्मव्यपदेशे ब्रह्मत्वस्येतिएक-विषयत्वाभावादप्रवृत्तिः । ननु मा प्रवर्तिष्ट प्राप्ताप्राप्तविवेकन्यायः एकविषयत्वाभावात् फलं च पुरुषार्थत्वादिति पौर्वतन्त्रन्यायस्तु प्रवर्तिष्यते तथा च ब्रह्मणो जीवशेषत्वं फलत्वादित्याकाङ्क्षायामाहुः किं चेति । पश्वादिफलस्य चेतनस्य पुरुषार्थत्वमस्त्येवात उक्तं महत इति । 'यतो वाच' इतिश्रुतेरु-क्रमाहात्म्यस्येति । वरणीयेति मुण्डकोपनिषदि 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वाम्' इतिस्थले पारार्थ्यं शेषलक्षणं तस्य जीवे ब्रह्मवरणार्थत्वाज्जीवस्य सत्त्वात् । आत्मनश्च जीवसाधनालभ्यत्वेन पारार्थ्याभावाज्जीवस्य शेषत्वं वरणीयस्य फलस्य शेषित्वमितिदर्शनात् । फले पारार्थ्यं जैमिनिमतमनपनोद्यमितिचेत्तत्राहुः फलमिति । चकारोपि फलमित्यस्याग्रे पठ्यते पौर्वेति । तृतीयाध्यायप्रथमपादस्थोयं न्यायः । सर्गादौ जडपरिच्छिन्न-चेतनादौ तथा च 'सा च प्रशासनात्' इति व्यासचरणसूत्रविरुद्धमपनोद्यमेतज्जैमिनिमतमितिभावः । तथा च भाष्यम् । अप्रतिहताज्ञाशक्तेर्भगवद्धर्मत्वादिति । अत्राज्ञापूर्णशक्तिर्मुण्डकम् ।

'श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लङ्घ्य वर्तते ।
आज्ञाच्छेदी मम द्वेषी न मद्भक्तो न मे प्रियः ॥'

प्राप्यत्वेन च व्यपदिशति। कर्तृत्वेन च शारीरं व्यपदिशति। नच भजनीय-

भाष्यप्रकाशः।

तद्वैषम्येनाप्रवृत्तेः। अत इदं ब्रह्मवाक्यमेवेत्यर्थः। सौत्रस्य चकारस्यार्थमाहुः नचेत्यादि। यथा क्रतुरित्यादिना भजनीयप्राप्तव्ययोरैकरूप्यस्योक्तत्वात् तादृशरूपस्याप्राप्तत्वे फलवाक्यस्याबोध-

रश्मिः।

इतिवाक्यात् तद्वैषम्यं न्यायवैषम्यमुक्तमेव। अत इति ध्यात्रपेक्षया प्राधान्येन ब्रह्मण एव प्रकरणित्वादित्यर्थः। अर्थमिति समुच्चयम्। भजनीयेति क्रतुर्यज्ञो मननात्मेत्युक्तम्, यज्ञश्च यजेर्नङि रूपं यजिश्च द्वितीयस्कन्धे 'ब्रह्मवर्चस' इत्यत्र भजत्यर्थः भजसेवायां भज्यत इज्यते यज्ञः क्रतुरिति फलितम्। 'यज्ञो वै विष्णुः' इतिश्रुतौ कर्मणि नङ् रूढो वा सेवावाची यज्ञशब्दः यथा क्रतुरितिपदद्वयम् सेवात्वमनुवृत्तित्वम्। यद्वा येन प्रकारेण क्रतुरस्य स यथा क्रतुर्भक्तविशेषणम्। क्रतुमय इत्यत्र 'द्वयचश्छन्दसि' इतिविकारे मयटोऽबाधादप्यत्र प्रकरणे प्राचुर्ये मयट् पुरुषस्य क्रतुविकारत्वाभावात् यज्ञप्रचुरः पुरुषः पुरि शेते इति व्युत्पत्तेः। तत्र प्रचुरेषु क्रतुषु प्रकारभेदेन यत्प्रकारकः क्रतुस्तद्वांस्तेन प्रकारेण तं प्रेत्य भवतीति योजना। ननु........न ज्ञानत्वेन क्रतुस्तद्वान् प्रेत्य ज्ञानत्वेन प्रकारेण ज्ञानं तदात्मको भवतु नामसेवा द्वितीयप्रकारेण क्रतुस्तद्वान् कथं सेवात्वेन प्रकारेण भवत्विति चेन्न भगवत्सेवोपयोगिदेहो वैकुण्ठादिष्विति सेवाफलग्रन्थोक्तेः भृशं सेवावानपि सेवारूप इति तत्प्रकारोपपत्तेः। कर्ममार्गे त्वावृत्तिः। ननु द्वितीयपुरुषो भक्त इत्येवं व्याकृतमन्यैः उपासक इत्येवमुभयोः किं प्रमाणपदवीमधिरोढुमर्हतीति चेन्न।

'मार्गास्त्रयो मया प्रोक्ता नृणां श्रेयो विधित्सया।
ज्ञानं कर्म च भक्तिश्च नान्योपायोस्ति कर्हिचित्'॥

इति त्रिषु मार्गेषूक्तेषु पूर्ववाक्येनोपासनाप्राप्त्या चित्तशोधकत्वेनोपयोगो भाष्ये कृतः कर्ममार्गस्य कथमथपदव्यवच्छिन्नद्वितीयवाक्ये उपासनानुवृत्तिः। ननु 'ब्रह्मविदाप्नोति परम्' 'आत्मेत्येवोपासीत' इत्येवंविधेषु वाक्येषु वेदनोपासनपदानां सामानाधिकरण्यं शंकराचार्यमते, रामानुजाचार्यमते च वेदनं स्मृत्यात्मकभक्तिरूपं भवन्नये माहात्म्यज्ञानमात्मजीवैक्यज्ञानं च भक्तिव्यापारकम्। हीति कथ-मत्रोपासनाव्यवच्छेदः। इत्थम् षडङ्गेषु व्याकरणस्याप्यभिनिवेशादुपासनोपसमीपे स्थित्वा यथायोग्य-करणं करणे ल्युट्। मनोव्यापारविशेषो वा मनसो ब्रह्मसमीपे स्थाप्यत्वात्। तत्रोपासना मनस उपदेशो यदा तदा मानसी माहात्म्यज्ञानाद्यनु तनुवित्तजसेवे अनुभवति च। भाष्यप्रकाशे तु यथायोग्यकरणार्थं उप समीपे स्थितिरुपासनेति भावे ल्युटमङ्गीकृत्य प्रपञ्चिता भक्तिः फलाध्याय-समाप्तौ। भाष्ये त्वत्रान्तःकरणशोधकत्वेनोररीकृतोपासना ते इमे उपासने भिन्ने श्रौतवाक्येषु ह्युन्नेये। तासु प्रथमलक्षणलक्ष्या भाष्येन्तःकरणशोधकत्वोक्त्यादृता। 'भक्तियोगं स लभते एवं यः पूजयेत माम्' इत्येकादशस्कन्धात्। अत्र कर्मकाण्डसंक्षेपादन्तःकरणशोधकत्वं पूजायाः। पूजनोपासाकर्मपदानां पर्यायत्वात्। सुबोधिन्यामुपासनाकाण्डं मन्त्रशास्त्रं पञ्चरात्रं चेतिकथनात् कर्मकाण्डज्ञाने पञ्चरात्रोप-योगस्य शास्त्रप्रसिद्धत्वात्। एवं चोपासनाया एतादृश्या व्यवच्छेदोथशब्देन सुकरः। अत एव

'मन्त्रोपासनवैदिकतान्त्रिकदीक्षार्चनादिविधिभिर्यः।
अस्पृष्टो रमते निजभक्तेषु स मेस्तु सर्वस्वम्'॥

रश्मिः ।

इत्यत्र मन्त्रोपासनमेकपदव्याकृतम् । ननु गीताभक्तियोगाध्याये द्वादशे उपासनोक्तैवेति चेदित्थम् । श्रीभगवानुवाच ।

'मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः' ॥

इत्यत्र मनःपूर्विका उपासना उपसमीपे स्थित्वा यथायोग्यकरणरूपा मानसी तृतीयस्कन्ध-सुबोधिन्युक्तराद्धान्तरोक्ता सिद्ध्यति । उपासत इत्यस्य मनो व्यापारं कुरुते इत्यर्थे पुनरुक्तिः । यद्वा मन्मन आवेशं कृत्वा साधनानामसिद्धवदावृत्तिः कर्तव्येति सुबोधिन्या मन्मन आवेशसाधनतनु-वित्तजसेवे उपासनपदेनोच्येते । चित्तशोधकोपासना तु पूजापदेनोच्यते अत एव मन्त्रोपासनेत्यत्र उपासनं पुरश्चरणपूर्वकसाधनरूपं गृह्यते । यद्वा उपासनया शुद्धचित्ता नित्ययुक्ता भगवदर्थं यतयो तनुवित्तजसेवाकर्तार इतियावत् ब्रह्माविष्टमनसः सिद्धा बुद्धावनूदिताः पूर्वार्धेन सिद्धसाधने फलावश्यंभावनियमात् । अतो युक्तपदेन ब्रह्मार्थं यतयो व्याख्याताः । यदि च चित्तशुद्ध्यनन्तरं ज्ञानिनो व्याक्रियेरन् तदापि 'तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते' इति भक्ता व्याकरणीया एव ।

ननु 'पूजया श्रवणादिभिः' इतिभक्तिवर्द्धिन्यां पूजा स्वीकृतैव कथमस्वीकृता भवेत् । सत्यम् । पूजा हि भक्त्यङ्गमिति प्रतिपदं स्फुटमेव । उत्तमपुरुषे तु नास्ति भक्त्यतिरिक्तं साधनम् । ननु यत्किंचिद्भक्त्यनन्तरं पुरुषोत्तमप्रतिष्ठायां श्रीमद्गोस्वामिन एव श्रीभागवतभक्तिवर्द्धिनीनवरत्नाद्युक्तदिशा भगवत्सेवनं भाषयांबभूवुः, तत्र कथं पूजापदप्रवृत्तिः उच्यते । तत्र श्रीमद्गोकुलनाथैः पूजायां हरिण्यकृत सोररीकृता । ननु

'सेवे पूजे यजेश्चैव तत्रतत्रार्थके कथम् ।
प्रवृत्तिस्तत्रतत्रार्थे नियतस्य भवेत् खलु' ॥

धातूनामनेकार्थत्वात्तु भवेत् यथा 'पूजां दधुर्विरचितां प्रणयावलोकैः' इत्यत्र प्रणयावलोकाभिन्नां पूजामिति वचनव्यक्तेः प्रणयावलोके पूजापदम् । पञ्चभिरुपचारैः पूजयेदित्यत्र पञ्चोपचारेषु मीमांसकमते पञ्चोपचाराभिन्नेन पूजनेनेष्टं भावयेदिति बोधात् । एवं द्वादशषोडशचतुःषष्ट्यष्टोत्तरशतोपचारेषु द्रष्टव्यम् । 'प्रकृत्यादिभ्य उपसंख्यानम्' इति तृतीया अभेदार्थिका । एवं यजेरपि द्रव्यादियज्ञेषु प्रवृत्तिः । सेवेस्तु स्त्रीसेवा औषधसेवा राजसेवा इत्यादौ भोगतत्तत्काले भक्षणापेक्षितसमर्पणादौ चार्थे प्रवृत्तिः प्रयोगदर्शनादनुभवाच्च । तदुक्तं सुबोधिन्यां प्रथमद्वितीयाध्याये यजतिस्तुत्यर्थः द्वितीयस्कन्धे यजतिर्भजत्यर्थः । नन्वेवमपि न निस्तारो यतो भज्यादीनां सेवार्थकानां गत्यर्थकत्वम् । षिवू गतावित्यस्य दैवादिकस्य स्त्रियं सीव्यतीत्यत्र सीव्यतीति सेवा कर्मण्यण् स्त्रियां सेवा स्त्रीसेवेति स्त्रीगमनमित्यर्थः । एवं सर्वत्र यदपि पारिभाषिकं सेवनं तदपि वेदाङ्गव्याकरणेन व्याहतमिति चेदत्रोच्यते । भ्वादौ षिवु सेवन इत्यत्र षिवु गतावित्यापत्तिर्विलक्षणार्थं विना विलम्बोपस्थितार्थानामग्रहणात् । अतो रूढ्या देववत्संभावनं सेवापदार्थः प्रथमकक्षायाम् । तिसृष्वपि वा । ननु रूढ्येति भवन्नये कथं संगच्छताम् । वेदान्ते योगमात्रादरणादिति चेत्सत्यम् । भ्वादेराकृतिगणत्वात् । संभावनार्थकं धातुं प्रकल्प्य भज सेवायां षिवु सेवने सेवृ सेवने इत्यादौ तदङ्गीकारौचित्यात् । प्रथमस्कन्धे द्वितीयाध्याये 'नष्टप्रायेष्वभद्रेषु' इत्यत्र पूर्वं कथायाः श्रवणमेव इदानीं देववत्संभावनमिति सेवार्थः इति । किं च भजतीत्यादौ गत्यनुकूलो व्यापारोऽर्थः ब्रह्मसंबन्धानुकूलो व्यापारस्तु भक्तिरेव । ज्ञानमक्षरसंबन्धानुकूलो

रश्मिः।

व्यापारः कर्म तु चित्तशुद्ध्यनुकूलो व्यापार इति भक्तित्वेन ब्रह्मसंबन्धत्वेन कार्यकारणभावात् 'भक्त्याहमेकया ग्राह्यः' इतिवाक्यात् । ननु ज्ञानमपि पूर्वोक्तलक्षणद्वयकमेवातो न ज्ञानोपासनयोर्भेद इति चेत्सत्यम् । क्षेत्रक्षेत्रज्ञनिर्देशयोगे त्रयोदशेऽध्याये ।

'अमानित्वमदम्भित्वमहिंसाक्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥
इन्द्रियार्थेषु वैराग्यमनहंकार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥
असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥
अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा' ॥

इत्यत्राचार्योपासनत्वात् । कामः संकल्प इत्यत्र धियो मनोवृत्तित्वात् लक्षणद्वयकत्वम् । एवं च मार्गत्रय इत्यत्र त्रित्वसंख्याविरोधः । अतो ज्ञानत्वरूपसामान्येनैक्येपि ह्युपासात्वेन माहात्म्यज्ञानत्वेनात्मजीवैक्यज्ञानत्वेनानैक्यमेव । ननु गीतोक्तार्थो हि तज्ज्ञो साधनाध्याये वक्तव्यः 'ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः' इत्यनेन ब्रह्मसूत्रपदैः गीतं प्रकाण्डं भवतीति तत्रोक्तं ज्ञानं न प्राप्नोतीति चेन्न 'तत् समासेन मे शृणु' इति समासाङ्गीकारात् । यद्वा अध्यात्मज्ञानं माहात्म्यज्ञानं तत्त्वज्ञानमात्मजीवैक्यज्ञानम् । तत्त्वमनारोपितरूपमिति माहात्म्यज्ञानमपि तज्ज्ञाने भवत्येव । अध्यात्मज्ञानं प्राणो व्यानोऽपान उदानः समानः चक्षुः श्रोत्रं मनो वाक् त्वक् चर्म मांसं स्नावास्थि मज्जा एतदधिविधाय ऋषिरवोचदिति शिक्षाश्रुतेरेतज्ज्ञानम् । अतो भक्तः पुरुषो नोपासक इति सिद्धम् । 'द्वयोः सारूप्यात्तद् भ्रमहतिकृते' भक्तिहंसे स्फुटमन्यत् । एवं च भक्तो यत्प्रकारकक्रतुमान् तेन प्रकारेण सायुज्यालौकिकसामर्थ्यभगवत्सेवोपयोगिदेहपशुपुत्रसालोक्यादिमानितः प्रेत्य भवति । ननु क्रतुरग्रे ब्रह्ममननात्मा वक्ष्यते कथं सेवायां मननमिति चेदत्रोच्यते सिद्धान्तमुक्तावल्यां ब्रह्मबोधनमिति निष्प्रकारकज्ञानरूपब्रह्मबोधात् बोधनपदं विहाय मननपदं सिद्धान्तमुक्तावल्याम् ।

'तस्माच्छ्रीकृष्णमार्गस्थो विमुक्तः सर्वलोकतः ।
आत्मानन्दसमुद्रस्थं कृष्णमेव विचिन्तयेत्' ॥

इतिभावनाविधानात् भावितं च भावनायां भावुकैः श्रीहरिधनचरणैः । ननु स्मरणं भवतु मीमांसया परब्रह्मणो विषयत्वादानन्दरूपप्राणशरीरभजनस्य किं प्रयोजनम् । मैवम् ।

'यमादिभिर्योगपथैरान्वीक्षिक्या च विद्यया ।
मदर्चोपासनाभिर्वा नान्यैर्योग्यं स्मरेन्मनः' ॥

इत्येकादशस्कन्धे विंशेऽध्याये मीमांसयाप्येवमेव स्मरणमन्यनिषेधात् । यद्यपि 'अथातो ब्रह्मजिज्ञासा' इत्यधिकरणे 'यदेव विद्यया करोति श्रद्धयोपनिषदा' इति छान्दोग्येन कर्मरूपोपासनाशेषत्वमुपनिषज्ज्ञानस्य तदपि सुबोधिन्यां व्यवस्थापितम् । भगवत्सेवां कुर्वाणस्य कामनायां जातायां

रश्मिः ।

कर्मकरणे फलं भवत्येवेत्येवम् । स फलोपकारी शेषशेषिभावः । मदर्चोपासनापि मनस उपासनं मानसी-सेवारूपम् । व्याख्यानात् । तथा च श्रुतिरीशावास्योपनिषदि ।

'अन्धंतमः प्रविशन्ति येऽविद्यामुपासते ।
ततो भूय इव ते तमो य उ विद्यायाᳪरताः' ॥

इति ह्युपासाभक्तिभेदमाह 'श्रद्धा रतिर्भक्तिरनुक्रमिष्यति' इति द्वितीया कक्षा रतिः । सेवाप्रकारस्तु संप्रदायप्रदीपे पञ्चमे प्रकरणे पूर्णस्याराधने श्रीकृष्णोक्त एव भक्तिमार्ग इत्यादिना भक्तिमार्गमुक्त्वा भजनप्रकार उक्तः । भजनप्रकारमाह ।

'मच्चित्ता मद्गतप्राणा बोधयन्त परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च' ॥

मच्चित्ता इति पञ्चज्ञानेन्द्रियव्यापारो भगवत्युक्तः । मद्गतप्राणा इति कर्मेन्द्रियव्यापारो भगवत्येव युक्तः । मद्गतत्वेन निर्दोषत्वम् । पायोर्मलांशत्यागेनेति प्राणस्य हि क्रियाशक्तिरिति वाक्यात् । एवं च निरोधलक्षणोक्तो निरोधो मर्यादामार्गीयसर्वात्मभावरूपः प्रकारः । 'बोधयन्तः परस्परम्' इति समानशीलैरेव सङ्गोप्युक्तः 'कथयन्तश्च मां नित्यम्' इति श्रीभागवतश्रवणं कीर्तनमप्युक्तम् । एवं सेवाकथालक्षणा भक्तिः सिद्धा । सैव फलरूपा जातेति 'तुष्यन्ति च रमन्ति च' इत्युक्तमिति । सेवाप्रकरणे तु 'यद्यदिष्टतमं लोके यच्चातिप्रियमात्मनः तत्तन्निवेदयेन्मह्यम्' इति दास्यमुक्तम् । टिप्पण्यां दास्यमुक्तम् । पुरुषोत्तमप्रतिष्ठायां तु श्रीभागवतभक्तिवर्द्धिनीनवरत्नाद्युक्तप्रकारेणेत्युक्तम् । पुरुषोत्तमसहस्रनामस्तोत्रे तु 'लघुस्वमार्गवक्ता च' इत्येकादशस्कन्धनामसु पठितम् । भक्तिरत्ने तदेवोक्तं टीकायाम् । सिद्धान्तमुक्तावल्याम् ।

'तस्माच्छ्रीकृष्णमार्गस्थो विमुक्तः सर्वलोकतः ।
आत्मानन्दसमुद्रस्थं कृष्णमेव विचिन्तयेत्' ॥

इति भावनोक्ता श्रीहरिधनैः सैव प्रपञ्चिता । शृङ्खला तु संप्रदायप्रदीपे श्रीकृष्णोक्त एवेत्यादिनोक्ता । प्रथमस्कन्धे द्वितीयेध्याये शृङ्खलोक्ता । सेवाप्रकरणे उक्ता एकादशे योगेश्वर-वाक्यैरुक्ता अप्रतीकालम्बनसूत्रे वक्ष्यामः सप्रपञ्चप्रकारम् । एवं प्रकारेण ब्रह्म सेवमानस्य यथाक्रतोर्ब्रह्म भजनीयं यदा तदा श्रीमदाचार्योक्तपूर्वोक्तरीत्या सद्गुरुवाक्यात् आत्मसमर्पणं कृत्वा सेवाकथाभ्यामेव भजनं कुर्वतः । एतमितिपदेनोक्तोयं प्राणशरीरो हि प्राप्तव्यः तस्य भजनीयस्य चैक्यरूप्यमस्त्येव । अत्र मनोमय इति वेद आत्मोक्तस्तस्याभिसन्निवेशः स च सत्यं ज्ञानमनन्तं ब्रह्म इत्यत्रानन्तपदार्थः अनन्ता वै वेदा इति श्रुतेः । अतो वेदं शब्दात्मकं विहाय प्राणशरीररूपार्थस्य प्राप्तव्यत्वम् । न च शब्दार्थयोरौत्पत्तिकसंबन्धान्मनोमयस्यापि प्राप्तव्यत्वमस्त्विति शङ्क्यम् । प्राण-शरीररूपवेदस्यास्तु प्राप्तव्यत्वं सर्वस्य वेदस्य नेति मनोमयस्य प्राप्तव्यत्वाभावात् । अक्षरे त्वेवम् । गणितानन्दापेक्षयाधिकानन्दाविर्भावन उत्तमः पुरुषः । विशिष्यादृश्यत्वाधिकरणे वाच्यम् ॥ ३ ॥ फलवाक्यस्येति एतमितः प्रेत्याभिसंभवितास्मि इतिवाक्यस्येत्यर्थः । खपुष्पमितिवद् बोधकता ।

१० कृष्णा ।
५६ म० सू० ६०

रूपाकथने तादृशं फलं सिद्ध्यतीति चकारार्थः अधिकरणसंपूर्णत्वद्योतकश्च ॥ ४ ॥

इति प्रथमाध्याये द्वितीयपादे प्रथमं सर्वत्र प्रसिद्धोपदेशाधिकरणम् ॥ १ ॥

शब्दविशेषात् ॥ ५ ॥ ( १।२।२ )

इदमाम्नायते। 'यथा व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वैव-

---

भाष्यप्रकाशः।

कतैव प्रसज्येतातस्तदपि प्राप्तत्वेनैवावगन्तव्यमित्येष चकारार्थ इत्यर्थः। एवं चात्र जगदुत्पत्तिकर्तृत्वनिर्वाहकाणां सत्यसंकल्पत्वादिधर्माणां ब्रह्मणि साधनेन तदसंभवः परिहृतः। प्रयोजनान्तरमाहुः अधिकरणेत्यादि। एतेनैव पूर्वपक्षस्योपशान्तत्वात् तथेत्यर्थः। अन्ये त्वेतदधिकरणमष्टसूत्रमाहुः। तदप्येतेनैव दूषितम् ॥ ४ ॥

इति प्रथमं सर्वत्र प्रसिद्धोपदेशाधिकरणम् ॥ १ ॥

शब्दविशेषात् ॥ ५ ॥ विषयवाक्योपन्यासमुखेनाधिकरणमवतारयन्ति इदमाम्नायत इत्यादि। इदं वाक्यम्। केचन समानप्रकरणे वाजिनामित्याहुः। अन्ये तु समानप्रकरणे इत्येवाहुः।

रश्मिः।

चकारेति अभिधयार्थोनुक्तोपि। शास्त्रार्थस्याधिकरणत्रय्युक्तस्यैवाग्रे प्रपञ्चः इत्युक्तत्वात्तया सह संगतिं सूत्रयन्तोधिकरणप्रयोजनमाहुः एवं चेति। तदसंभव इति कर्तृत्वासंभवः। तेन प्रसङ्गः संगतिरिति सूचितम्। प्रयोजनेति। चकारस्येति शेषः। अपीति व्यञ्जनयाधिकरणपूर्णत्वद्योतक इत्यर्थः। वृत्तिद्वयविरोधरूपं दूषणं व्यञ्जनातिरिक्तस्थले बोध्यम्। एतेनेति अधिकरणपूर्वपक्षस्य पूर्वसूत्र एवोपशान्तत्वेपि निराकरणीयजीवपूर्वपक्षस्योपशान्तत्वं नानिराकरणीयजीवपूर्वपक्षस्येत्यत्रानिराकरणीयजीवशङ्कारूपपूर्वपक्षस्योपशान्त्या जीवसाधारणपूर्वपक्षस्यैतेनैवोपशान्तत्वादित्यर्थः। तथेति द्योतकत्वेन प्रकारेण चकारः। अन्य इति शंकराचार्यप्रभृतयः। तदपीत्यादि। एतेनेति अत्रैव पूर्वपक्षोपशान्तिव्युत्पादनेन। दूषितमिति वक्ष्यमाणसूत्राणामनपेक्षाबोधनात् दूषितप्रायमित्यर्थः। उभयोः सूत्रयोः शारीरपरमात्मनोर्भेदः स कर्मकर्तृसूत्रादेव सिद्धः। तृतीयसूत्रेऽर्भकौकःस्थितिरुपपादिता सा वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवमित्यत्र सिद्धा। एवं तत्तदनुप्रवेशाद् ब्रह्माप्येवमितिभाष्यात्। चतुर्थे विशेषोऽसाधि सोपि कर्मकर्तृसूत्रोक्तभेदपर्यवसायीति। भगवांश्चैवस्तु सर्वत्र प्रसिद्धोपदेशादित्यधिकरणं द्विसूत्रमाह एतदग्रेधिकरणसमाप्तौ प्रपञ्चयिष्यते ॥ ४ ॥ १ ॥

इति प्रथमं सर्वत्र प्रसिद्धोपदेशाधिकरणम् ॥ १ ॥

शब्दविशेषात् ॥ ५ ॥ अवतारयन्ति प्रसङ्गसंगत्यावतारयन्ति अस्याधिकरणस्यैकान्तर्यामिरूपनिश्चायनार्थत्वात्। अतोधिकरणाशेषत्वान्नावतरणापेक्षा। विषयवाक्यार्थस्तु स्पष्टः। श्यामाकश्यामाकतण्डुलशब्दार्थावुक्तौ। अन्तरात्मन्निति सप्तम्याश्छान्दसो लुक्। केचन इति रामानुजाचार्यभास्कराचार्यौ। अन्य इति शंकराचार्याः। भगवन्तो माध्वशैवाचार्यास्तु श्रुत्यन्तरमुदाजह्रुः तत्र शैवोदाहृतश्रुत्यन्तरस्य वक्ष्यमाणत्वात् माध्वोदाहृतश्रुतिरुच्यते एतमेव ब्रह्मेत्याचक्षत इति न हि जीवमेव ब्रह्मेत्याचक्षत इतिभाष्यम्। एवं भिक्षुभाष्येपि द्रष्टव्यम्। प्रकरणेति श्रीमन्यब्राह्मणे ब्रह्मजीवप्रकरणसामान्ये इत्यर्थः। एवं पाठेति बृहदारण्यके व्रीहिर्वेत्यादिकस्याणा अङ्गुष्ठमात्रो गोधूमश्च मसूराश्च

भाष्यप्रकाशः ।

इदं च वाक्यं न बृहदारण्यकस्थम् । तत्र प्रकरणसामान्येऽप्येवं पाठादर्शनादिति । किंतु वाजिशाखायामेवान्यत्रिकं बोध्यम् । भास्कराचार्यादिभिस्तथा कथनात् । तेनात्र प्रसङ्गोऽधिकरणसंगतिः । नन्वत्र पक्षानुपन्यासात् कथमधिकरणान्तरत्वावगतिः । नच समानप्रकरण-

रश्मिः ।

खल्वाश्च खलकुलाश्चेतिपाठः छान्दोग्येपि पञ्चमप्रपाठके अणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वैष म आत्मान्तर्हृदयेति पाठः । अणवो विन्ध्याचलप्रदेशे प्रसिद्धाः प्रियङ्गवः कङ्गुशब्दवाच्याः गुर्जरदेशे प्रसिद्धाः खल्वाश्च वलशब्दवाच्याः । खलकुलाः कुलत्थाः । श्याममकति कुटिलगतिं करोतीति श्यामकः कर्मण्यण् । अक कुटिलायां गतौ भ्वादिः सेट् श्यामस्य कुटिलं संयोगं संबन्धं करोतीत्यर्थः । मकई इतिप्रसिद्धम् । माषा वा । कथनादिति । एवं समानप्रकरणे वाजिनां च श्रुतौ शब्दविशेषः श्रूयते इतिरामानुजभाष्यम् । भास्करभाष्यं समानप्रकरणे वाजिनां श्रुतिरिति । नन्वधिकरणरचनस्य को हेतुः अन्तर्गतत्वे तु पूर्वाधिकरणस्य विविधान्नतृप्तिवत् ब्रह्मजीवयोर्भेदो विविधरूपेण भविष्यतीतिचेन्न । अस्याधिकरणस्य हिरण्मयपदवाच्यं ब्रह्मेति सर्वत्र निश्चयार्थत्वात् । विविधरूपेण भेदसत्ताया निरुपयोगत्वात् । एककर्मकर्तृसूत्रप्रामाण्येन भेदसिद्धेः । तेनेति आनन्दरूपप्राणशरीररूपान्तर्यामिरूपवाक्यार्थे पूर्वाधिकरणोक्तमनुहिरण्मयरूपकथनेन । प्रसङ्ग इति अर्थतो हिरण्मयपदविचारात् संदेहवारणेन प्रसङ्गः । किं च । पूर्वाधिकरणे 'स क्रतुं कुर्वीत' इत्युक्त्वा 'मनोमयः प्राणशरीर' इत्युक्तस्य भारूप इत्यनेन प्रतिमाक्रतुत्वेन क्रतुमतः प्रतिमागतभारूपादेरेष म आत्मान्तर्हृदय इत्यत्रैतत्पदेन परामर्शाल्लौकिकत्वशङ्का स्यात्तद्वारणाय पुनरन्तर्हृदये हिरण्मयरूपनिरूपणात्प्रसङ्गः । उपोद्घातस्य भानेपि सर्वासां संगतीनां प्रसङ्ग एवान्तर्भावोपपादनेन स्वमतसिद्धसंगतिलक्षणाक्रान्तत्वात् प्रसङ्ग एव । तथा च सुबोधिन्यां 'स्वहृदये भगवन्तं यावन्न वेद तावन्न कोपि प्रतिमादौ भगवन्तं प्रपूजयेत्' इति । अत्र 'तत्तु समन्वयात्' इत्यादिन्यायमविस्पष्टत्वायाङ्गीचक्रुः नन्विति । अन्यथा........................................................

पक्षेति अत्र पक्षो हिरण्मयः, ब्रह्मत्वं साध्यम् । शब्दविशेषो हेतुः । परं तु हिरण्मयघटादौ साधारण्यमतोनुमानत्वेन भाष्ये वर्णनीयेऽथातो ब्रह्मजिज्ञासेत्यधिकरणतोनुवृत्तं ब्रह्म पक्षो हिरण्मयत्वं साध्यमिति न साधारण्यमिति निपुणबुद्धयः । समाधिकुशलास्तु अनुमानस्य श्रीमदाचार्यानभिप्रेतत्वेन तत्प्रकाशे कुतोनुमानवर्णनां निपुणबुद्धयः प्रवदन्ति इति च कुतूहलयांबभूवुः । पक्ष इव पक्षस्तस्योपन्यासादित्यर्थः । तदुक्तम् ।

यदि स्फुरति दूषणं निपुणबुद्धयः सर्वथा
मदीयवचसि ध्रुवं तदपि युक्तिभिर्दीयताम् ।
विचारभरचातुरीफलमिदं हि लाके यतः
समाधिकुशलस्य तद्भवतु चापि कौतूहलम् ॥ इति ।

ननु ब्रह्म पक्षस्तस्योपन्यासः प्रश्नविषयः कुतः अतो ब्रह्मजिज्ञासेत्यधिकरणाद्ब्रह्मेत्यनुवृत्तावुपन्यासबोधात् । हिरण्मयस्य पक्षत्वे साधारण्यादितिचेन्न । सूत्रेष्वदृष्टस्य पदस्य सूत्रान्तरादनुवर्तनीयत्वात् । तत्तु समन्वयादित्यादिसूत्रे प्रश्नहेतूल्लेखादत्रापि प्रश्नः । ननु ब्रह्मेत्यनुवर्तनीये वेदान्तानुवृत्तिः स्यात्प्रथमसूत्रे ब्रह्मपदस्य वेदान्तवाचकत्वात् न तु सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुत्युक्तार्थब्रह्मण इति चेन्न शब्दार्थयोरत्यन्ताप्रविवेकाद्ब्रह्मवाचकवेदान्तानुवृत्तौ बाधकाभावात् । समानेति समानं प्रकरणं

मयमन्तरात्मन् पुरुषो हिरण्मयः' इति । तत्र संशयः । हिरण्मयः पुरुषः किं जीव उत ब्रह्मेति । उपक्रमबलीयस्त्वे जीव, उपसंहारबलीयस्त्वे ब्रह्मेति ।

यत्रैकस्यान्यपरत्वेनैकार्थता संभवति तद्बलीयस्त्वमिति सिद्धं पूर्वतन्त्रे ।

---

भाष्यप्रकाशः ।

त्वेनैतदुक्तपक्षस्य स्मारणादिति वाच्यम् । तथा सति पूर्वशेषत्वावगत्याऽधिकरणभेदस्यासंगतत्वमित्याशङ्कायां संशयाकारमाहुः तत्र संशय इत्यादि । तथाच तत्र मनोमयत्वादिविशिष्टः पक्षोऽत्र तु हिरण्मयत्वविशिष्ट इति पक्षभेदाद् भेद इत्यर्थः । नन्वेवं सति पूर्वपादोक्तान्तस्तद्धर्माधिकरणेनैव गतार्थत्वेनैतत्प्रणयनवैयर्थ्यापात इत्यत आहुः उपक्रमेत्यादि । तथाच तत्रोपक्रमस्य बलिष्ठत्वसाधनात् संशयनिरासः । प्रकृते तु तदभावादेतत्प्रणयनमतो न वैयर्थ्यमित्यर्थः । ननु प्रथमावगततयोपक्रमस्यासंजातविरोधत्वेन बलीयस्त्वस्यात्रापि तौल्याद् वैयर्थ्यं कथं नेत्यत आहुः यत्रेत्यादि । न हि प्रथमावगततामात्रं बलीयस्त्वे तन्त्रम् । किंतु यत्रोपक्रमादावेकस्यान्यपरत्वेन वाक्यस्यैकार्थता संभवति, विप्रतिपत्तिनिरासेन वाक्यभेदो न भवति तस्य बलीयस्त्वमिति पूर्वतन्त्रे सिद्धम् । तदैकशास्त्र्यादत्राप्युपादेयमतोऽत्र यस्य बलीयस्त्वं

रश्मिः ।

विग्रहे कर्मधारयः समानप्रकरणत्वमेकार्थत्वम् । उभयाकाङ्क्षा प्रकरणम् । समानप्रकरणं यथाक्रतुरिति पूर्वाधिकरणोक्तत्वेन एतदुक्तो विषयवाक्योक्तः पक्षो हिरण्मयत्वविशिष्टः तस्याप्यवान्तरात्मन्पुरुषः इतिपक्षः अर्थयोर्भेदो तद्वान् शब्दयोर्विशेषो विभक्तिभेदस्तस्मादिति हेतुः । तथासतीति । समानप्रकरणोक्तपक्षस्यात्रापि सत्त्वाङ्गीकारे सति शंकराचार्योक्तव्याख्यानरीत्या पूर्वाधिकरणशेषत्वावगत्या । तथा चेति तथा चात्रत्यं तद्भाष्यम् । इतश्च शारीरादन्यो मनोमयत्वादिगुणः यस्माच्छब्दविशेषो भवतीति । हिरण्मयत्वेति तन्मतसिद्धसूत्रार्थकथनात् पक्ष उक्तः । तथा च भाष्यम् हिरण्मयः पुरुष इति । परेषां भाष्ये रत्नप्रभा शब्दयोर्विशेषो विभक्तिभेदः तस्मात्तदर्थयोर्भेद इतिसूत्रार्थ इति । अत्र विचार्यमाणे पक्षो हिरण्मयत्वविशिष्टोन्तरात्मन् पुरुषो वा । भेद इति अधिकरणभेदः । एवं सतीति हिरण्मयस्य पक्षत्वे सति । गत्वेति । अथ य एषोन्तरादित्ये हिरण्मयः पुरुष इति छान्दोग्यश्रुतिर्विषयवाक्यम् । तत्र च हिरण्मयस्यैव पक्षत्वात् इति भावः । उपक्रमस्येति ओमित्येतदक्षरमुद्गीथमुपासीत इत्युपक्रमश्छान्दोग्ये । ब्रह्मविदाप्नोति परमित्युपक्रम्यानन्दमयस्य फलत्वमुक्त्वा स यश्चायं पुरुषे यश्चासावादित्ये स एक स य एवं विदिति साधनस्यानन्दमयमात्मानमुपसंक्रम्येति फलं श्रुतम् । तच्च सवितरि विद्यमानस्याब्रह्मत्वे फलं नोपपद्यते इत्यन्तस्तद्धर्मोपदेशादित्यधिकरणारम्भः । एवं चोपक्रमो ब्रह्मणं इत्येवमुपक्रमस्य बलिष्ठत्वसाधनादित्यर्थः । पूर्वतन्त्र इति षष्ठस्य प्रथमपादेऽआर्षेयस्य हानं स्यादित्यधिकरणे दर्शपूर्णमासयोरार्षेयं वृणीत इति विधाय एकं वृणीते द्वौ वृणीते त्रीन् वृणीते न चतुरो वृणीते न पञ्चातिवृणीत इतिपठ्यते श्रुत्यर्थस्तु ऋषिर्गोत्रप्रवर्तकः कश्यपभरद्वाजादिः तस्य संबन्ध आर्षेयः तं वृणीते कश्यपगोत्रोहं भरद्वाजगोत्रोहमिति तिष्ठन्नुच्चारयन्ति तदुक्तं द्वौ वृणीते द्वावार्षेयावुच्चारयति उपमन्युवशिष्ठगोत्रोहमिति एवमाङ्गीरसबार्हस्पत्यभारद्वाजसगोत्रोहमिति त्रीनार्षेयान् वृणीते उच्चारयतीत्यर्थः । न चतुरो वृणीत चतुर आर्षेयान्नोच्चारयति न पञ्चातिवृणीते पञ्चार्षेयानतिक्रम्य षडादीनार्षेयान् नैवोच्चारयेदिति तत्रैकं वृणीत इत्यादि त्रयोपि विषयः एतेषामेक एवेति संशयः । त्रयोपि विषयोऽविशेषादिति पूर्वपक्षः । सिद्धान्तस्तु विधित्रयाङ्गीकारे वाक्यभेदापत्तिरिति त्रीन् वृणीत

तत्र चतुर्विधभूतनिरूपणार्थं जीवस्यैवाराग्रमात्रस्यान्तर्हृदये प्रतिपादकमिदं वचनं, फलतो हिरण्मयत्वमिति, न त्वेतादृशाभाससमानत्वं ब्रह्मणो युक्तमतो जीव-

भाष्यप्रकाशः ।

तदुपपादनाय प्रणयनमतो न वैयर्थ्यम् । तथाच तत्समानप्रकरणाभावेन तत्रास्मरणाच्च तत्रास्य प्रणयनम् । प्रकृते तु स्मरणेऽपि पक्षभेदोपस्थित्या पूर्वत्र निवेशासंभवेनाधिकरणान्तरत्वाङ्गीकार इत्यर्थः । एवमधिकरणान्तरत्वं प्रसाध्य पूर्वपक्षमाहुः तत्रेत्यादि । जरायुजस्वेदजाण्डजो-द्भिज्जभेदेन चतुर्विधानि यानि भूतानि जीवदेहाः । न हिंस्यात् सर्वा भूतानीत्यादौ तथा सिद्धत्वात् । तेषां निरूपणार्थम् । छान्दोग्ये, त्रीण्येव तेषां बीजानीति श्रावणादत्र चतुर्थस्या-धिकस्य कथनार्थमाराग्रमात्रस्य जीवस्यान्तर्हृदये व्रीह्यादिभिश्चतुर्भिर्दृष्टान्तैरौपाधिकस्य परिमाणस्य प्रतिपादकमिदं वचनमिति दृष्टान्तबलादवसीयते । आराग्रश्रुतावङ्गुष्ठमात्रपरिमाणस्य बुद्धि-गुणेनोक्तत्वात् । नच हिरण्मयत्वविरोधः । पूर्वाधिकरणसिद्धेन तत्क्रतुन्यायेनोपासनायां फलतो हिरण्मयत्वमिति वक्तुं शक्यत्वात् । नच तथा ब्रह्मोपासनाङ्गीकारेऽपि बाधकाभावेनोपप-त्तितौल्यात् संशय एव पर्यवसानं शङ्क्यम् । तुः शङ्कानिरासे । तादृशो व्रीहियवादिरूपो य आभासो जीवेन स्वात्मतयाऽध्यस्यमानं शरीरं तत्समानत्वं ब्रह्मणो न युक्तम् । निरवद्यत्वात् । अतः साधकबाधकयुक्तिसत्तया संशयनिरासाज्जीवप्रतिपादकमेवेदं वाक्यमिति पूर्वः पक्ष इत्यर्थः । अत्र समादधते हिरण्मय इत्यादि । हिरण्मयस्यानन्दमयत्वं तद्धर्माधिकरणे सिद्धम् । आनन्द-

रश्मिः ।

इत्येक एवविधिः । एकं वृणीत इत्यादिवाक्यद्वयमवयुत्यानुवादेन स्तावकं एकवरणद्विवरणे अप्रशस्ते अपि यदा कर्तव्ये तदा त्रिवरणस्य प्रशस्तस्य कर्तव्यत्वं किमु वक्तव्यमिति चतुर्निषेधपञ्चातिक्रम-निषेधावपि त्रित्वस्तावकावेव । न तु चतुःपञ्चातिक्रमयोर्निषेधो विधेयः । प्रसक्त्यभावादेव तदप्रवृत्तेः । चतुरादयोऽत्यन्तविलम्बकारितयाप्रशस्ता त्रित्वं तु न तथेति प्रशस्तम् । तस्मात्कर्मण्यधिकुर्वन् यजमानस्त्रीनेवार्षेयानुच्चारयेदिति तत्र यथा एकं वृणीत इति प्रथमावगतमपि वाक्यभेदापादकत्वेन न विधिवाक्यम् । किं तु वाक्यभेदनिरासकं त्रीन् वृणीत इत्येव तथा प्रकृतेप्युपपादन इत्यर्थः । ऐकेति । ननु शास्त्रद्वयं वेदवेदान्तरूपं कथमैकशास्त्र्यमितिचेन्न अङ्गाङ्गिभावमाश्रित्यैकशास्त्र्यात् । नन्वन्तस्तद्धर्मोपदेशादित्यधिकरणे यस्य बलीयस्त्वं तत्कुतो नोपपादितं तत्राहुः तथा चेति । तस्योप-संहारस्य समानमुपक्रमेणैकार्थं प्रकरणमुभयाकाङ्क्षारूपं तदभावेन तत्रान्तस्तद्धर्मोपदेशादित्यधिकरणे यस्य बलीयस्त्वं तस्योपादानस्य । पूर्वत्रेत्यधिकरणे । अधिकरणेति तेन यच्चैतत्सूत्रीयमितश्च शारीरादन्यो मनोमयत्वादिगुणः यस्माच्छब्दविशेषो भवतीत्यादि शंकरभाष्यं रामानुजभाष्यं च प्रत्युक्तमित्युक्तमेव पूर्वाधिकरणसमाप्तौ । अस्यार्थस्यानुपपत्तेरित्यादिसूत्रद्वयेनैव प्राप्तत्वात् । भूतपदस्य देहवाचकत्वे संमतिमाहुः नेति । औपाधिकस्येति बुद्ध्याद्यौपाधिकस्य । दृष्टान्तेति व्रीह्यादिदृष्टान्तबलात् । आराग्रेति इयं श्रुतिः श्वेताश्वतरे पञ्चमाध्यायेस्ति ।

'अङ्गुष्ठमात्रो रवितुल्यरूपः संकल्पाहंकारसमन्वितो यः ।
बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यपरोपि दृष्टः' ॥ इति ।

फलत इत्यादिभाष्यं निषेधमुखेन विवरीषवः । न चेति । नत्वेतादृशेति भाष्यं निषेधमुखेन विवरीषवः न चेति । शरीरमिति । नः चाभासो, हिरण्मय इतिभाष्यं

प्रतिपादकमेवेदं वाक्यमिति प्राप्ते, उच्यते ।

शब्दविशेषात् । स हिरण्मयः पुरुषो न जीवस्य फलमपि, तत्प्राप्तेरेव फलत्वात् । नाप्ययं नियमस्तस्यामेव मूर्तौ लय इति । अतः शब्देनैव विशेषस्योक्तत्वान्न हिरण्मयः पुरुषो जीवः ॥ ५ ॥

भाष्यप्रकाशः ।

मयाधिकरणे च तत्प्राप्तेरेव फलत्वमतो जीवस्य फलमपि हिरण्मयो न भवतीति तद्विरोधाज्जीववाक्यत्वं न शङ्कितुं शक्यमित्यर्थः । ननु पूर्वाधिकरणे तत्क्रतुन्यायस्य सिद्धत्वात् तथोपासने स्वरूपसारूप्यान्यतरलाभेन भाष्येऽप्यङ्गीकाराच्च कथं न तस्य फलत्वमित्यत आहुः नापीत्यादि । तैत्तिरीये, आदित्यो वा एष एतन्मण्डलं तपतीत्याद्यनुवाकद्वयमध्ये पूर्वस्मिन् हिरण्मयं पुरुषं प्रस्तुत्य, द्वितीये चादित्यो वै तेज ओजो बलमित्यादिना तद्विभूतिभूता देवताश्चोक्त्वाऽन्ते वदति । 'ब्रह्मणः सायुज्यꣳ सलोकतामाप्नोत्येतासामेव देवतानाꣳ सायुज्यꣳ सार्ष्टिताꣳ समानलोकतामाप्नोति य एवं वेदेत्युपनिषत्' इति । तथाच यदि तत्क्रतुन्यायो नियतः स्याद्धिरण्मयस्य फलत्वं युज्येतापि । न तु तथा । नचैतद्विरोधः शङ्क्यः । यथा क्रतुरित्यत्र पुरुषविशेषणस्याधिकारस्यापि प्रकारांशे निवेशे तदभावात् ।

रश्मिः ।

व्याकर्तव्यं समानपदव्याकोपात् । साधकेति जीवसाधकमन्नबाधकयुक्तिसत्तया । तत्प्राप्तेरिति आनन्दमयमात्मानमुपसंक्रामतीति श्रुतेः । फलत्वस्य श्रौतत्वादेवकारः । तद्विरोधात् हिरण्मयपदविरोधात् । चेति चकारेण 'भगवानेव हि फलं स यथाविर्भवेद्भुवि' इति निरोधलक्षणग्रन्थोक्तस्य वाक्यस्य संग्रहः । तैत्तिरीय इति महानारायणोपनिषदि 'आदित्यो वा एष एतन्मण्डलं तपति तत्र ता ऋचस्तदृचां मण्डलं स ऋचां लोकः, अथ य एष एतस्मिन् मण्डलेऽर्चिर्दीप्यते तानि सामानि स साम्नां लोकः, अथ य एष एतस्मिन् मण्डलेऽर्चिषि पुरुषस्तानि यजूꣳषि स यजुषां मण्डलꣳ स यजुषां लोकः सैषा त्रय्येव विद्या तपति य एषोन्तरादित्ये हिरण्मयः पुरुषः आदित्यो वै तेज ओजो बलं यशश्चक्षुः श्रोत्रमात्मा मनो मनुर्मृत्युः सत्यो मित्रो वायुराकाशः प्राणो लोकपालकः किं कं तत्सत्यमन्नममृतो जीवो विश्वः कतमः स्वयंभूः प्रजापतिः संवत्सरः इति संवत्सरोऽसावादित्यो य एष पुरुष एष भूतानामधिपतिर्ब्रह्मैतदमृतमेष पुरुष एष भूतानामधिपतिर्ब्रह्मणः सायुज्यं सलोकतामाप्नोत्येतासामेव देवतानां सायुज्यं सार्ष्टिताꣳसमानलोकतामाप्नोति य एवं वेदेत्युपनिषत्' । इत्यनुवाकद्वये । तद्विभूतीति आदित्यविभूतिरूपाः । नन्वादित्यो वै तेज ओजो इत्यादिनाऽभेदसंसर्गस्य भासनात् कथं विभूतिरूपत्वमिति चेन्न आदित्य इत्यत्र ङसः सुः सुपां सुलुगिति सूत्रात् आदित्यस्येत्यर्थात् । अन्त इति द्वितीयानुवाकान्ते । युनक्तीति युक् सह युक् सयुक् सयुजो भावः सायुज्यं युजिर् योगे ऋष गतौ इति हैमधातुपाठः । ऋष्टिः समाना ऋष्टिर्यस्य स सार्ष्टिः तत्ताम् । समानस्य सादेशः । समानलोकतामित्यत्र समानपदात् समानैश्वर्यादिगतिस्तामित्यर्थः । नन्त्विति सार्ष्टितासमानलोकतयोरपि प्राप्तिकथनान्न तु तत्क्रतुन्यायो नियतत्वेन प्रकारेणेत्यर्थः । एतदिति तत्क्रतुन्यायविरोधोऽत्रेत्यर्थः । प्रकारांश इति थाल् प्रत्ययार्थीभूतो यः प्रकारस्तदंशे । तथाहि यथाक्रतुरिति पुरुषविशेषणम् । यथा येन प्रकारेण क्रतुरस्येत्यत्राधिकारप्राप्तत्वात् प्रकारस्य

१. पुष्टिप्रवाहमर्यादा । २. ऋचः । ३. लोकपालः कः ।

ननु हृदये विद्यमानत्वादभिमान्येव जीवो युक्त इति चेत्, तत्राह ।

स्मृतेश्च ॥ ६ ॥

भाष्यप्रकाशः ।

अन्यथोक्तश्रुतिविरोधस्य दुःपरिहरत्वात् । एवं सिद्धे तन्मूर्तौ लयानियमे हिरण्मयस्य फलताया अपि प्रायिकत्वेन तद्विरोधो दुर्वार इत्युपक्रमस्य पदवैयर्थ्यापादकतयैकार्थताविघटकत्वेन निर्बलत्वाच्च तदनुरोधादस्य जीववाक्यत्वमित्यर्थः। एवं सिद्धान्तमभिधाय तस्य सौत्रत्वं प्रकटयन्ति अत इत्यादि । शब्दोक्तो विशेषः शब्दविशेषस्तस्मात् । उक्तरीत्या हिरण्मयशब्देनैवाधिकारविशेषमादाय तत्र लयानियमस्य सूचितत्वात् तथेत्यर्थः । एवं चात्राणुत्वबोधकैर्व्रीह्यादिदृष्टान्तैरन्तरात्मनि वर्तमानस्य जीवत्वं प्रतीयत इति युक्त्या पूर्वाधिकरणसंगतिमाक्षिप्योपसंहारबलीयस्त्वेन तन्निवार्य पूर्वोक्तं दृढीक्रियत इतीदं पूर्वाधिकरणस्यैव शेषः ॥ ५ ॥

स्मृतेश्च ॥ ६ ॥ इदं सूत्रमवतारयन्ति ननु हृदय इत्यादि । तथाच श्रुतेः संदिग्धत्वेऽपि लिङ्गाज्जीववाक्यत्वं युक्तमित्यर्थः । अभिमान्येव जीव इति अभिमानी जीव एवेति योजना ।

रश्मिः ।

यादृशाधिकारप्राप्तप्रकारेणेत्यर्थात् परंपरया पुरुषविशेषणस्याधिकारस्येत्यर्थः । शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वादिति तृतीयाध्याये सूत्राच्छमादिमतः पुरुषस्य क्रतुरपि शमादिकृतप्रकारेण भवति यथा मनोमयः प्राणशरीर इति मननप्रकारो मनोमयत्वं प्राणशरीरत्वं च गार्ग्यस्य स होवाच गार्ग्यः य एवासावादित्ये पुरुष एतमेवाहं ब्रह्मोपासे इति तच्छमादिकृतादित्यत्वेन प्रकारेण ब्रह्ममननमित्यादित्यत्वं प्रकारो दृप्तबालाकिब्राह्मणे । यथाधिकारं सायुज्यादिप्राप्तेस्तथेतः प्रेत्य भवतीति श्रुत्योक्तेस्तत्क्रतुश्रुतिविरोधाभावात् । श्रुतिविरोधस्य ब्रह्मणः सायुज्यमित्यादिश्रुतिविरोधस्य । तद्विरोध इति हिरण्मयस्य कथमपि जीवपरत्वासंभवेन हिरण्मयपदविरोध इत्यर्थः । पदेति हिरण्मयपदवैयर्थ्यापादकतयेत्यर्थः । तदनुरोधात् उपक्रमानुरोधात् । यद्यपि पक्षे संभवति जीवस्य फलतो हिरण्मयत्वं तथापि यावद्यथाकथंचिदपि ब्रह्मप्रकरणं सिद्ध्यति तावदन्यप्रकरणत्वमयुक्तमिति हिशब्दार्थ इत्यनुगमाधिकरणभाष्याद्ब्रह्मप्रकरणत्वमेव युक्तम् । अत इति मूर्तौ लयानियमात् । शब्दोक्त इति मध्यमपदलोपी समासः । उक्तमिति भाष्ये हिरण्मय इत्याद्युक्तरीत्या हिरण्मयशब्देन हिरण्मयत्वरूपो जीवाद्विशेषोभिधीयते । हिरण्मयत्वविशिष्टहिरण्मये हिरण्मयपदशक्तेः । तेनैव शब्देनैव तात्पर्यवृत्त्याधिकारे विशेषो हिरण्मयप्राप्त्यनुकूलयज्ञवत्त्वं तमादाय तत्र मूर्तौ । तथेति । न हिरण्मयपुरुषो जीवत्वेन प्रकारेण विशिष्टो जीवः । न च तात्पर्यवृत्तौ किं गमकमिति वाच्यम् । यथा क्रतुरितिश्रुतौ यत्प्रकारकः क्रतुरिति क्रतौ प्रकारसामान्यस्यैव गमकत्वात् । हिरण्मयत्वप्रकारकमननस्य हिरण्मयप्राप्तीच्छोरधिकारकृतत्वात् । अधिकरणयोः शेषशेषिभावमाहुः एवं चेति । पूर्वेति पूर्वाधिकरणसंगतिराक्षेपरूपा तामाक्षिप्य पूर्वाधिकरणे जीवाक्षेपस्य पूर्वपक्षीकृतस्य वारणेप्यत्रोपक्रमबलीयस्त्वमादाय जीववाक्यत्ववदुपक्रमगतसर्वपदेन जडस्योक्तावपि मनोमयत्वादीनां जीवेष्वसंभवादुपक्रमबलीयस्त्वमादाय जीववाक्यत्वमित्याक्षिप्येत्यर्थः । तं निवार्य आक्षेपं निवार्य । पूर्वोक्तं ब्रह्मवाक्यत्वं दृढीक्रियते । एवं पूर्वाधिकरणेप्युपसंहारोक्तावाक्यनादरयोर्जीवेष्वसंभवात् ब्रह्मवाक्यत्वं दृढीकृतम् । शेष इति तेन प्रसङ्गसंगतिरत्रेति भावः ॥ ५ ॥

स्मृतेश्च ॥ ६ ॥ श्रुतेरिति शब्दविशेषेणासंदिग्धेपि निरपेक्षस्वरूपश्रुतेर्दृष्टान्तपुरुषपदै-

'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' इति । ननु सर्ववेदानां यन्निःश्वासत्वं तस्य भगवतो वाक्यं कथं स्मृतिरिति । उच्यते । 'तं त्वौपनिषदं पुरुषं पृच्छामि' इति श्रुतेः केवलोपनिषद्वेद्यं ब्रह्म, न प्रमाणान्तरवेद्यम् । ततश्चार्जुनस्य शिष्यरूपेण प्रपन्नस्य पुष्टिभक्तत्वाभावाद् भगवद्वाक्ये निर्विचिकित्सविश्वासाभावाद् रथित्वेनैव स्थाप्यत्वाच्च तादृशाय तादृशदेशकालयोरुपनिषदामवक्तव्यत्वाद् गुरुरूपतादृशरूपं निःश्वसितवेदोद्गमजनकं स्मृत्वा तदर्थमपि स्मृत्वा भगवान् पुरुषोत्तमो वाक्यान्युक्तवान् स्मृतिरूपाणि ।

---

भाष्यप्रकाशः ।

रामानुजादयो भगवन्तं श्रीकृष्णं पुरुषोत्तमत्वेन परब्रह्मत्वेन वदन्तो गीतावाक्यान्येवात्र स्मृतित्वेनोदाहरन्तोऽप्येतत्स्वरूपं न विचारितवन्त इति तत्स्वरूपं तदुपन्यासादिप्रयोजनं च निर्णेतुं विषयवाक्यस्य स्मृतित्वं व्युत्पादयन्ति ननु सर्वेत्यादि । शिष्यरूपेणेति शिक्षणीयरूपेण । 'शिष्यस्तेऽहं शाधि मां त्वं प्रपन्नम्' इति वाक्यात् । निर्विचिकित्सविश्वासाभावादिति अपरं भवतो जन्मेत्यादिरूपात् संशयबोधकवाक्यात् तथेत्यर्थः । रथित्वेनेत्यादि । अग्रिमकार्यकारणार्थं साहंकारताया आवश्यकत्वाद्रथित्वेनैव स्थाप्यत्वाच्च तादृशाय साहंकाराय । तादृशदेशकालयोरिति दारुणे देशे काले चेत्यर्थः । गुरुरूपतादृशरूपमिति यो वै वेदांश्च

रश्मिः ।

बहुभिरेकस्य हिरण्मयश्रुतेरकिंचित्करत्वात् संदिग्धत्वेपि लिङ्गादयमात्मन् पुरुष इति पुरुषपदसामर्थ्यात् । अभीति अभिमानोऽविद्या सोस्यास्तीत्यभिमानी । पुरुष इति श्रुतौ पुरि देहे शेत इति व्युत्पत्तेर्जीवप्रत्यायनादेवकारः । नन्वयोगव्यवच्छेदमनादृत्यान्ययोगव्यवच्छेदेनैवकारव्याकरणे किं बीजमिति चेन्न अयोगव्यवच्छेदाङ्गीकारे जीवन्मुक्तो व्यावर्तेतातो योजना भाष्यसूचितैव । जीवान्यसामान्ये अभिमानित्वयोगव्यवच्छेदो जीवे चाभिमानित्वं प्रतीयते इति । रामानुजेति । आदिपदेन माध्वाचार्यो भगवान्निम्बार्कश्च । एतदिति गीतारूपम् । तदुपेति आदिपदेन चिन्तनम् । व्युदिति सौत्रत्वाय व्युत्पादयन्ति । स्मेति शेषः । व्युत्पादनस्य भूतानद्यतनपरोक्षार्थवृत्तित्वात् । लटो वर्तमानकाले विधानात् । भाष्ये । ननु स्मृतिपदेन मन्वादिस्मृत्युपस्थितेः सूत्रे गीतास्मृतीनां कुत उपादानमिति प्रश्न उत्तरमाहुः तं त्विति । तथा च मन्वादिस्मृत्यवेद्यत्वात् तद्वाचकस्मृतिपदप्रयोगस्य श्रीव्यासानभिप्रेतत्वेनोपनिषत्तुल्ये स्मृतिपदं प्रयुक्तमिति भावः । स्मरणात्स्मृतिरुच्यते इति स्मृतिपदप्रयोगप्रयोजकस्मरणं व्युत्पादयन्ति स्म ततश्चेति । प्रपन्नस्येति प्रपत्तिमार्गं प्राप्तस्य । स च

'जगन्नाथे विठ्ठलेशे श्रीरङ्गे वैङ्कटे तथा ।

यत्र पूजाप्रवाहः स्यात्तत्र तिष्ठेत तत्परः' ॥ इति निबन्धोक्तः

तिष्ठेदिति प्राप्ते 'प्रकाशनस्थेयाख्ययोश्च' इति सूत्रेणात्मनेपदम् । अर्जुनाश्रयप्रकाशस्य स्फुटत्वादीदृशपूजाप्रवाहे स्थितत्वाच्च प्रपत्तिमार्गनिष्ठत्वमत एव गुरूपसत्त्यादिसाधनपरत्वात् मर्यादाभक्तिनिष्ठत्वाच्च पुष्टिभक्तत्वाभावः । प्रकृते । अपरमिति इदं वाक्यं प्रपत्त्या प्रवृत्तस्यार्जुनस्य । अग्रिमेति युद्धरूपाग्रिमकार्यकारणार्थम् । रथित्वेनेति 'ये यथा मां प्रपद्यन्त' इति वाक्यात् । तादृशायेति प्रपत्त्या प्रपन्नायापीत्यर्थः । श्रुतौ प्रहिणोति हि गतिवृद्ध्योः स्वादिः परस्मैपदी प्रकर्षेण

भाष्यप्रकाशः ।

प्रहिणोति तस्मा इत्यादिश्रुत्युक्तं गुरुरूपं यन्मर्यादाप्रतिपादकं रूपम् । अत्राऽयमर्थः । ब्रह्मण औपनिषदस्यैवात्र विचारप्रस्तावादुपनिषदामेव चिन्तनीयत्वेनास्मिन् विचारे निश्चायनाय स्मृतेर्हेतुत्वेनोपन्यासस्यायुक्तत्वेऽपि वेदस्य परोक्षवादत्वेन सूरिमोहजनकत्वात्तादृशस्यापि योऽर्थबोधः सोऽधिकारविशेषदेशकालविशेषसापेक्ष एवेति तदभावान्मन्दमध्यमाद्यर्थं तदुपबृंहणभूतेतिहासपुराणोपन्यास आवश्यकः । तत्रापि, 'वेदान्तकृद् वेदविदेव चाहम्', 'इत्यस्या हृदयं लोके नान्यो मद्वेद कश्चन' इति वाक्यादन्यन्तरवाक्यापेक्षया भगवद्वाक्योपन्यास एवावश्यकः । तेषु चोक्तरीत्याऽधिकारिदेशकालानां जाघन्यदर्शनेन भवति वैयधिकरण्यशङ्केति तत्परिहारेणोभयसामञ्जस्याय वाक्यानां स्वरूपमवश्यं विचारणीयम् । तत्र वक्तुरभेदे स्मृतित्वस्यासंगतत्वाद् वक्तर्येव कश्चिदवस्थाभेदो वा रूपभेदो वा तदर्थं वक्तव्यः । तत्रानन्तरूपमिति श्रुत्या

रश्मिः ।

प्रापयति । तस्मै ब्रह्मणे । अयुक्तत्व इति औपनिषदपुरुषज्ञानविघटकत्वेनायुक्तत्वे । परोक्षेति 'दशहूतं सन्तं दशहोतेत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः' इति श्रुतेः । 'परोक्षवादो वेदोयं परोक्षं च मम प्रियम्' इति श्रीभागवताच्च । सूरीति

'अलौकिको हि वेदार्थो न युक्त्या प्रतिपद्यते ।
तपसा वेदयुक्त्या तु प्रसादात्परमात्मनः' ॥ इति वाक्यात् ।

'मुह्यन्ति यत्सूरय' इति वाक्याच्च । अधिकारेति 'ब्राह्मणेन निष्कारणः षडङ्गो वेदो ध्येयो ज्ञेयश्च'इति श्रुतौ ब्राह्मणोधिकारी स्वाध्यायोध्येतव्य इति देशकालादिविशेषो हि त्रिषु वर्णेषु ब्राह्मणवृत्तित्वमधिकारे । देशकालयोर्विशेषः सोरर्थस्तयोर्नियतत्वम् । मन्देति आदिपदेनोत्तमः । तस्य वेदार्थे संदेहाभावात् दार्ढ्यम् । तथा चोत्तमं प्रति वेदार्थदार्ढ्यार्थं मन्दमध्यमयोर्दार्ढ्यसंदेहाभावार्थम् । इतिहासेति । इतिह इत्यव्ययं पारंपर्योपदेशे तदास्तेऽस्मिन् । आस उपवेशने हलश्चेति घञ् । एवेति उपनिषत्तुल्यत्वादेवकारः तथाचोक्तं इति श्रीमद्गीतासूपनिषत्स्विति । तेष्विति वेदेषु वैयधिकरण्यं व्यधिकरणत्वं तादृशदेशकालातिरिक्तदेशकालाधिकरणत्वं तस्य शङ्का तर्कः तत्परिहारेण उभयमुपनिषत्त्वं उपनिषद्देशाद्यतिरिक्तदेशाद्यधिकरणत्वं तस्य सामञ्जस्याय । वक्तुरिति वेदस्मृत्योर्वक्तुः । तदर्थमिति वेदत्वस्मृतित्वोपपत्त्यर्थम् । अनन्तेति न चानन्तानि व्यापकानि रूपाणि यस्येति विग्रहीतव्यमिति वाच्यम् । प्रत्यक्षविरोधात् । आकाशवृत्तित्वाच्च व्यापकानां रूपाणाम् । न च नीलो नीरूप आकाश इति नीलस्य व्यापकत्वेप्यन्येषामव्यापकत्वमिति शङ्क्यम् । अत एवानन्तान्यनेकानि रूपाणि यस्येति विग्रहात् । न चानन्तं नीलं रूपमस्येति विग्रह इति वाच्यम् । आकाशनिरूपणाभावात् । निःश्वसितमिति भाष्यं विवृण्वन्ति स्म वेदेति । अक्षरात्मकं रूपप्रपञ्चजनकमपीति वेदवक्रिति नामरूपप्रपञ्चजनकं रूपमुक्तम् । अस्य स्मृत्वेत्यनेनान्वये स्मरणेनैव रूपप्राप्तिः इच्छाशक्त्यधीनत्वे तादृशरूपकारणशक्तेः कृत्वेत्यध्याहृत्य वेदवक्त्रक्षरात्मकं रूपं कृत्वेत्यन्वयः । परंतु रूपान्तरकरणस्यास्मृतत्वात् स्मृत्वेति भाष्याच्च स्मरणमात्रं रूपस्य । तदर्थमभिधेयार्थं तात्पर्यार्थं चेति तस्तात्पर्यं तात्पर्यार्थार्थं च स्मृत्वेत्येवं भाष्यं व्याचक्रुः ।

ततो ब्रह्मविचारे तान्यप्युदाहृत्य चिन्त्यन्ते । पुनश्च भगवाँस्तदधिकारेण ब्रह्मविद्यां निरूप्य स्वकृपालुतया, सर्वगुह्यतममित्यादिना भक्तिप्रपत्ती एवोक्तवान् । अतोऽङ्गत्वेन पूर्वं सर्वनिर्णया उक्ता इत्यध्यवसेयम् । तथैवार्जुनविज्ञानात्,

भाष्यप्रकाशः ।

रूपभेदस्य शीघ्रं बुद्धावारोहान्मर्यादाप्रतिपादकं वेदवक्रक्षरात्मकं रूपं वेदार्थं तत्तात्पर्यं च स्मृत्वा तत उत्तमोऽपि भगवाँस्तादृशवाक्यान्युक्तवानतः स्मृतिरूपत्वं तेषामुपपन्नमिति । एवं स्वरूपं विचार्योपन्यासप्रयोजनमाहुः तत इत्यादि । वेदान्तार्थनिश्चायकत्वात् तद्विचारोऽपि युक्त एवेति तान्यपि चिन्त्यन्त इत्यर्थः । नन्वेकार्थत्वं सामानाधिकरण्यप्रयोजकम् । तच्चिह न दृश्यते । वेदे मुख्यतया ज्ञानविज्ञानयोरत्र च तथा भक्तिप्रपत्त्योः प्रतिपादनेनार्थभेदादित्यत आहुः पुनरित्यादि । तदधिकारेणेति भक्तिघटितेनाधिकारेण । तथाचाधिकारभेदस्य वेदेऽपि

रश्मिः ।

वेदार्थमिति सरस्वतीमाविवासेमधीतिभिरिति श्रुत्युक्ताधीतिभिर्विविधोपचारैः सरस्वतीं परिचरेमेति दुर्गाचार्या निरुक्तटीकायां वेदार्थमाहुः वेदार्थः सुपर्णारूढः । सुपर्णः काल इति तृतीयसुबोधिन्यामस्ति तर्हि वेदे गूढे भक्तिप्रपत्ती अत्र स्मृतिषु स्फुटे कुत उच्येते अत आहुस्तात्पर्यं चेति । ततः ऋषिभ्य उत्तमः । तादृशानि स्मृतिरूपाणि 'स्मरणात्स्मृतिरुच्यते' इति वाक्यात् स्मृतिरूपत्वम् । वेदान्तेति । ननु किं प्रकारकः क्रतुरत्र निश्चितेषु क्रतुषु हिरण्मयविषयको हृदि कार्य इत्यत आहुः वेदान्तेति । तदुक्तं वेदेषु संदेहे गीता निर्णायिका इति । वेदाः श्रीकृष्णवाक्यानीत्यस्य निबन्धस्य टीकायाम् । तानीति प्रसङ्गात्सर्वापि गीता चिन्त्यते इति बहुवचनान्तानीति । सर्वे क्रतवो निश्चिताः परं स्वमते यः स वक्ष्यतेऽत्रैवाग्रे । एकार्थत्वं वेदान्तगीतयोः । सामानाधिकरण्यं भिन्नप्रवृत्तिनिमित्तत्वे सति एकार्थबोधकत्वं तस्य प्रयोजकं पर्यायत्वं कारणम् । इहेति वेदान्तगीतयोः । वेद इति क्रियाप्रतिपादनेपि वेदे 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इति श्रुत्या ज्ञानेच्छोत्पादनाच्च मुख्यतया प्रतिपादनं किं तु ज्ञानस्य सत्यं ज्ञानमिति श्रुतेस्तदपि तद्विषयकं तरति शोकमात्मविदिति सर्वात्मभावप्रकरणे छान्दोग्यश्रुतेः अभेदज्ञानं च 'तत्त्वमसि' इति श्रुतेः माहात्म्यज्ञानं च 'यतो वा इमानि भूतानि जायन्ते' इति श्रुतेर्भक्तनिष्ठं च । विज्ञानस्य 'सत्यं विज्ञानमानन्दं ब्रह्म' इति श्रुतेर्मुख्यतया प्रतिपादनं विज्ञानं जीवोपि 'विज्ञानं यज्ञं तनुते' इति श्रुतेः । अत्र गीतायां सप्तमेऽध्याये ज्ञानविज्ञानाख्ये

'भूमिरापोनलो वायुः खं मनो बुद्धिरेव च ।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत्' ॥

इत्यत्र प्रकृतिद्वयज्ञानं विज्ञानपदवाच्यम् । ज्ञानं तु 'अहं कृत्स्नस्य जगतः' इत्याद्युक्तं ज्ञानिभक्तनिष्ठम् । 'तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते' इति वाक्यात् भगवद्विषयकम् । अत्रैवाग्रे 'चतुर्विधा भजन्ते माम्' इत्यादिना भक्तिः ।

'बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः' ॥

भाष्यप्रकाशः ।

सिद्धत्वात् वेदोऽपीदमेव द्वयं तादृशाधिकार्यर्थं निरूपयति । अत एव ब्रह्मवाक्येषु सृष्ट्यादि-

रश्मिः ।

इत्यत्र 'वासुदेवः सर्वमिति' 'ज्ञानवान् मां प्रपद्यते' इति प्रपत्तिः । एतेन प्रपत्तावप्यभेदज्ञानं सगुणप्रपत्तिनिवृत्तये व्याख्यातम् । तेन वासुदेवः सर्वमिति प्रपद्यते इति नान्वयः । ननु तथेत्यनेन मुख्यतयेत्यर्थकेन भक्तिप्रपत्त्योर्मुख्यतया प्रतिपादनोक्तेर्ज्ञानविज्ञानयोगाध्याये ज्ञानविज्ञानयोर्मुख्यतया प्रतिपादनं न भक्तिज्ञानयोरिति चेत्सत्यम् । मुख्यतया शेषितया प्रतिपादनसत्त्वात् । एकभक्तिर्विशिष्यते इति वाक्याज्ज्ञानवान् मां प्रपद्यत इति वाक्याच्च । अन्यच्च । उपक्रमोपसंहाराभ्यामर्थो निर्णीतो भाष्ये पूर्वतन्त्रोक्तोपक्रमोपसंहारयोः पूर्वसूत्र उक्तत्वात् । अत्रोपक्रमे त्वां प्रपन्नमिति प्रपत्तियुक्तत्व-कथनेनाधिकारिणं प्रति उपसंहारे

'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोसि मे ।
सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः' ॥

इति श्लोकद्वयेन भक्तिप्रपत्ती उक्ते । अत्र मन्मना भवेति मानसी सेवा मद्भक्त इत्यनेन तनुज-वित्तजसेवे 'यथा भक्त्येश्वरे मनः' इति वाक्यात् । एतच्च भक्तियोगाख्याध्यायस्थ 'मय्यावेश्य मनः' इत्यत्रापि मद्याजी कामनायां सत्यां ज्ञेयः । मुख्याद्यार्हणकर्ता वा वेदोपयोग उक्तः । वेदे ह्येव सुमतीत्यादिषु सेवाप्रकारसत्त्वात् महीधर्या स्पष्टमिदम् । मां नमस्कुर्विति वन्दनं न पूजायामन्तर्भवति । एकाद-शसुबोधिन्याः । अतोत्र पृथगुक्तम् । सेवायाः प्रकाराय सिद्धान्तमुक्तावल्याम् 'तस्माच्छ्रीकृष्ण' इत्य-नेन स्मरणमुक्तम् । प्रकाराणां बाहुल्यादधिकारिणां च । तथापि फलाव्यभिचारिसाधनं कर्तव्यमिति सुबोधिन्यामुक्तत्वादाचारसंप्राप्तं कर्तव्यम् । इत्येवं मुख्यतया प्रतिपादनमेव हि भक्तिप्रपत्त्योः । पुनरित्यादीति पन स्तुतौ बाहुलकादरः । अस्य उकारः 'पुनरप्रथमे' इत्यमरः । तृतीयाया लुक् अप्रथमेन भक्तिघटितेनाधिकारेणेत्यर्थः । प्रथमाधिकारेण तु शोकापनोदनवान् स चकारेण समु-च्चितः अतोपि तृतीयाया लुक् प्रथमाधिकारेणेत्यर्थः । तथाहि । भाष्ये प्रपत्तिरधिकारिशरीरेस्ति प्रपन्नस्येत्यत्राधिकारो योग्यता स प्रपत्तिघटितो जातोऽतो मुमुक्षुर्वै शरणमनुव्रजेदिति श्रुत्या प्रपन्नस्य मुमुक्षुत्वसत्त्वात् अर्जुनाधिकारो मोक्षयोग्यता तेन ब्रह्मविद्या गीताशास्त्रं इति श्रीमद्भगवद्गीतासूप-निषत्सु ब्रह्मविद्यायामिति कथनात् । निरूप्येत्यन्वयः । ननु प्रथममर्जुनाधिकारेण ब्रह्मविद्या निरूपिता भक्तिप्रपत्त्योर्निरूपणे को हेतुरित्याकाङ्क्षायामाहुः स्वेति । अप्रथमेन भक्तिघटितेनाधिकारेण स्वेत्यादिः । ब्रह्मविद्यायां साधनचतुष्टयं वैराग्यादिमतोऽधिकाराद्भक्तिघटितोधिकारो नान्वेति । स्वस्य कृपालुतयेति हेतौ तृतीया भक्तिरूपव्यापारमन्तरेण स्वकृपालुतयाप्यजामिलवन्मोचनसंभवात् न करणे तृतीया व्यापारनियतत्वात्तस्याः । कृपालुत्वं तु 'कृष्णायाऽक्लिष्टकारिणे' इति गोपालतापनीयश्रुतेः । 'सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति' इति पञ्चमाध्याये । सिद्धत्वादिति पूर्वतन्त्रे षष्ठाध्याये वेदोक्तकर्माधिकारिणां 'शान्तो दान्त उपरतस्तितिक्षुः' इति श्रुतौ वेदान्तोक्ताधिकारिणां च सिद्धत्वात् । द्वयमिति भक्तिप्रपत्तिरूपार्थद्वयम् । तादृशेति भक्तिघटिताधिकार्यर्थम् । अत एवेति द्वयनिरू-

'करिष्ये वचनं तव' इति । चकारात् तन्मूलभूतनिःश्वासोऽप्युच्यते । व्यासस्यापि भगवज्ज्ञानांशत्वाददोषः ॥ ६ ॥

भाष्यप्रकाशः ।

कर्तृत्वमात्मत्वं चैकस्मिन्नेव प्रकरणे वदति । शरणमहं प्रपद्य इत्यादौ प्रपत्तिं च श्रावयतीति तस्याप्यत्रैव तात्पर्यात्सामानाधिकरण्यमिति पूर्वोक्तदोषाभावात् तच्चिन्तनमप्यावश्यकमेवेत्यर्थः । एतस्यार्थस्य सौत्रत्वायाहुः चकारादित्यादि । ननु भवत्वत्रैवं, तथापि क्वचित् क्वचिद् व्यासचरणैः पुराणवाक्यान्यप्युदाहृत्य चिन्त्यन्ते, तत्र को हेतुरित्याकाङ्क्षायामाहुः व्यासस्यापीत्यादि । बुद्धादिवारणाय, ज्ञानांशत्वादिति । तथाचोक्तस्मृत्या हृदयस्य भगवदाधारत्वेन निर्णीतत्वात्र तद्बलेन ब्रह्मवाक्यत्वपर्यवस्थानं युज्यत इत्यर्थः ॥ ६ ॥

रश्मिः ।

पणादेव । ब्रह्म वेदः । एकस्मिन् छान्दोग्ये श्वेतकेतूपाख्याने ज्ञानप्रकरणे 'लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि'इत्यधिकरणे तथोक्तेः । 'तदैक्षत बहु स्यां प्रजायेयेति', 'तत्तेजोसृजत' इति सृष्टिकर्तृत्वम् । आदिपदेन 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य' इति श्रुत्युक्तं त्रिवृत्कर्तृत्वं सा अव्याकृताख्या देवता इमास्तेजोबन्नरूपाः । हन्तेति हर्षे विषादे तु न क्रीडार्थं कर्तुरात्मनो विषादाभावात् । आत्मत्वं तत्त्वमसीति श्रुतेर्जीवात्मत्वं शरणमिति बृहन्नारायणोपनिषदि वर्तते । तस्येति वेदस्येत्यर्थः । तात्पर्यादिति अभिधा तु कर्मकाण्डत्वात् कर्मणि । ज्ञानकाण्डत्वाज्ज्ञाने । तात्पर्यं त्वत्र भक्तिप्रपत्त्योरेव । माहात्म्यज्ञानस्यात्मत्वज्ञानस्य च भक्तिप्रपत्ती प्रति कारणत्वात् तथैवानुभवात् ।

'भगवान् ब्रह्म कार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया ।
तदध्यवस्यत्कूटस्थो रतिरात्मन्यथो भवेत्' ॥ इति वाक्याच्च ।

सामानेति तात्पर्यार्थस्य मुख्यतया वेदेपि भक्तिप्रपत्ती एव मुख्यतया प्रतिपाद्येते इति गीतासामानाधिकरण्यम् । वेदे ज्ञानविज्ञाने तु जीवात्मविषयकज्ञानरूपे भक्तिप्रपत्त्यङ्गभूते न तयोर्मुख्यताविघटके । अभिधया प्रतिपाद्यत्वेन मुख्यत्वव्यवहारो ज्ञानकाण्डमिति समाख्या च । पूर्वेति अर्थभेदरूपदोषाभावाद्गीताचिन्तनम् । भाष्ये । अतोऽङ्गत्वेनेति भक्तिमार्तण्डे प्रमाणप्रकरणे इदमुक्तं भवति । तथैवेति भक्तिप्रपत्तिमुख्यत्वप्रकारेणैव विज्ञानात् । प्रकृते । एतस्येति गीतोपनिषदुभयोक्तस्याहुः समुच्चयं चकारार्थमाहुः चकारादित्यादीति निःश्वसितमस्य वेदा इत्यत्र भावे क्तोऽतो मूलभूतनिःश्वासो वेद इत्यर्थः । प्रसङ्गसंगत्याहुः नन्विति । क्वचिदिति द्वितीयाध्यायस्य तृतीयपादे स्मरन्ति चेति सूत्रे ।

'तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः ।
न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा' ॥ इति ।

तथा तृतीयाध्याये तृतीयपादे 'अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत्' इति सूत्रे च 'त्वं तु सर्वं परित्यज्य स्नेहं स्वजनबन्धुषु' इत्यादि श्रीभागवतवाक्यानि । तथा तत्रैव चतुर्थपादे 'अपि स्मर्यते', 'विशेषानुग्रहश्च' इत्येतयोः सूत्रयोः 'तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः' इति, 'अहं भक्तपराधीनः' इति च वाक्यद्वयमुदाहृतम् । बुद्धादीति तस्य वेददूषकत्वात् । आदिपदेन मत्स्यादयः । तेषां तामसत्वात् तथा च तत्सूत्राण्यपि भगवद्वाक्यान्येव । तद्बलेनेति हृदयविद्यमानत्वकथनबलेन । ब्रह्मवाक्यत्वेति परिरिश्र वर्जने ब्रह्मवाक्यत्ववर्जनानुकूलावस्थानं न युज्यत इत्यर्थः ॥ ६ ॥

१. महानारायणोपनिषदि.

उपक्रमबलीयस्त्वमाशङ्क्य परिहरति ।

अर्भकौकस्त्वात् तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥

ननु व्यापकस्येश्वरस्य हृदयदेशस्थितिरयुक्ता, व्रीह्यादिरूपत्वं च । अतोऽर्भकमल्पकमोको हृदयस्थानं यस्य तत्त्वात् व्रीह्यादितुल्यत्वाच्च न परमात्मा वाक्यार्थ इति चेन्न । निचाय्यत्वात् । पूर्वं प्रथमदूषणं परिहरति । हृदये ज्ञातुं शक्यत इति तदायतनत्वेन प्रतिपाद्यते ।

निदिध्यासनानन्तरं हि साक्षात्कारस्तदन्तःकरण एवेति निचाय्यत्वम् ।

---

भाष्यप्रकाशः ।

अर्भकौकस्त्वात् तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥ इदं सूत्रमवतारयन्ति उपक्रमेत्यादि । असंजातविरोधत्वेन तथाऽऽशङ्क्येत्यर्थः । सूत्रं व्याकुर्वन्त आशङ्कांशं व्युत्पादयन्ति नन्वित्यादि । तथाचेश्वरधर्मविरुद्धस्य जीवधर्मस्य बोधनात् स्मृतिरयोग्यतादोषदुष्टेति न सा निर्णायिकेत्यर्थः । समाधानांशं व्याकुर्वन्ति पूर्वमित्यादि । तदिति हृदयम् । तथाच वृत्तिलाभस्थानत्वादायतनत्वव्यपदेशः । अत्रान्ये दृष्टान्तमपि वदन्ति । यथा, सर्वलोकपतिरप्ययोध्यापतिरिरिति । कथं वृत्तिलाभस्थानत्वमित्यत आहुः निदिध्यासनेत्यादि । हिर्हेतौ । तदन्तःकरण इति जीवान्तःकरणे । तथाच 'मनसैवानुद्रष्टव्यः' इति-

रश्मिः ।

अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥ तथेति प्रथमाया 'अव्ययादाप्सुपः' इति सूत्रेण लुक्, उपक्रमबलीयस्त्वम् । स्मृतिरिति 'ईश्वरः सर्वभूतानाम्' इत्यादिः । योग्यतेति अर्थाबाधो योग्यता सा दोषस्तेन दुष्टा । भाष्ये । व्रीह्यादीति व्रीह्यादिभिर्विशेषेणापहीनं तौल्यमीश्वराय दिश्यते दीयते इति तद्व्यपदेशस्तत्तौल्यं तस्मात् व्रीह्यादिजडतौल्यं चेतनतौल्याद्धीनम् । दिश अतिसर्जनेऽतिसर्जनं दानं छन्दोवत्सूत्राणि भवन्तीत्यतिदेशादेवं व्याख्यानम् । अन्यत्र व्यपदेशः कथनं 'उपसर्गेण धात्वर्थः' इति सिद्धान्तकौमुद्या तिङन्तस्य । प्रकृते । तदिति तदित्यस्य हृदयमित्यर्थ इत्यर्थः । तथा चेति ईश्वरस्य वृत्तिर्वर्तनम् तस्या लाभस्य स्थानं तत्त्वात् । अन्य इति शंकराचार्या एव । निदिध्यासनेति 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यत्र श्रुतौ पाठक्रममनादृत्य निदिध्यासनानन्तरमित्यादिः । हिरिति शब्दानुकरणत्वान्न विभक्तेर्लुक् । प्रतिपाद्यत इति पूर्वोक्तप्रतिपादने हेतुः । जीवेति । निदिध्यासनं तैलधारावदनवच्छिन्नं ध्यानं परेषामस्माकं तु असंप्रज्ञातसमाधिरिति पादोपारम्भे उक्तम् । अतस्तन्निदिध्यासनं जीवान्तःकरण इत्यर्थः । न तच्छब्दार्थो जीवः । तत्रैव मनस्येवेत्यर्थः । निचाय्यत्वम् । अत्र 'पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु' इति पाणिनीयसूत्रात् ण्यत् छन्दोवत्सूत्राणि भवन्तीति महाभाष्यात् आयादेशः धात्वादेः कुत्वाभावो वैयासकसूत्रेण क्रियते निचाय्यो जगन्निवासो भगवान् निचीयतेऽस्मिन्जगदिति व्युत्पत्तेस्तस्य भावः तत्त्वमावश्यके ण्यः इति ण्ये त्वायादेशो दुर्लभः सौत्रो वा इति पाणिनीयम् । अतो द्रष्टव्यत्वम् । व्यापकरूपं नितरां चाय्यमवयवैः संयोज्यं मनसैव 'स मानसीन आत्मा जनानाम्' इति श्रुतेः । वृक्षेभ्यो विचिनोति फलानीत्यत्र

भक्तौ तु बहिरपीति विशेषः। द्वितीयं परिहरति। एवं व्योमवत्। एवं व्रीह्या-दितुल्यतया यत्प्रतिपादनं चतुर्विधभूतान्तरत्वख्यापनाय। यथा चत्वार उपरवाः प्रादेशमात्रा इति तथा तद्धृदयाकाशे प्रकटस्य सच्चिदानन्दस्वरूपसर्वतःपाणिपा-दान्तस्य तत्स्वरूपमिति।

---

भाष्यप्रकाशः।

श्रुतेस्तत्रैव निचाय्यत्वमिति तस्य प्रशंसया स्थानत्वव्यपदेशोऽतो न स्मृतेरयोग्यतादोषघटितत्व-मित्यर्थः। ननु यदि हृदयमेव ब्रह्मोपलम्भस्थानं, नेतरत् तदा तस्य व्यापकतापि दुर्घटा। प्रत्य-क्षापेक्षया शब्दस्य दुर्बलत्वादित्यत आहुः भक्तौ त्वित्यादि। तथाच साधनविशेषेण बहिरपि निचायनात्र शब्दस्य नैर्बल्यमित्यर्थः। द्वितीयं परिहरतीति। ननु मास्तु स्थानविरोधस्तथापि परिमाणविरोधस्तु स्यादेवेत्यतो द्वितीयं परिमाणविरोधरूपं दूषणं परिहरतीत्यर्थः। व्योमव-दिति दृष्टान्तं विवृण्वन्ति यथेत्यादि। उपरवा नाम हविर्धाने खाता बिलविशेषाश्चत्वारः। 'दक्षिणस्य हविर्धानस्याधस्तात् पुरोऽक्षं चतुर उपरवानवान्तरदेशेषु प्रादेशान्तरालान् करोति' इति कल्पे विहिताः। तैर्बिलैर्यथाकाशस्य प्रादेशमात्रं स्वरूपमभिव्यक्तीक्रियते, किमत्र भद्रमित्या-दिमन्त्रैरध्वर्युयजमानयोः परस्परहस्तग्रहणाय। तथात्र व्रीह्यादितुल्यतया प्रतिपादनं चतुर्विध-भूतहृदयाकाशे प्रकटस्योक्तविधस्य ब्रह्मण एव तत्स्वरूपमिति बोधनाय। तैत्तिरीये, 'अतः परं नान्यदणीयस५ हि परात् परं यन्महतो महान्तम्' इत्येकस्यैव नानापरिमाणश्रावणात्। तथाच

रश्मिः।

विभागानुकूलो व्यापारश्चिनोतेरर्थः। अस्मिन् पक्षे व्यापकं रूपं हृदा विभज्य द्रष्टव्यम्। घटेना-काशं विभज्येव। तस्य प्रशंसयेति तस्य हृदयस्य प्रशंसया ईदृग् हृदयं यत्रात्मा भातीति किं चात्मलाभस्थानमिति प्रशंसा तस्य ब्रह्मण इति नार्थः। हृदयस्य स्थानत्वव्यपदेश इत्यत्रान्वये हृदयाध्याहारापत्तेः। शब्दस्येति 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यत्र ब्रह्मशब्दस्य। भक्तौ त्विति तदुक्तम् 'अपि संराधने' सूत्रे तृतीयस्य द्वितीयपादे। निचायनादिति निचायनं विभजनं तस्मात् अर्थाद्विभजनं कृत्वा दर्शनात् निचायनाद्धृदेशस्थस्य बहिरपि संयोजनात् निचीयतेऽस्मिन् धान्या-दिरिति निकाय्यपदव्युत्पत्तेः। नैर्बल्यमिति प्रत्यक्षेणापि संराधनसूत्रोक्तेनाप्युपष्टम्भादिति भावः। व्योमवदिति एवं व्योमवदिति भाष्यम्। तत्रैवं पूर्वपरामर्शे व्योमवदिति षष्ठ्यन्ताद्वतिः। पूर्वं तु व्रीहिर्वा यवो वेति व्रीह्यादितुल्यतया परिमाणप्रतिपादनं तच्चतुर्विधभूतान्तरत्वस्य वृद्धि-ह्राससूत्रोक्तस्य ख्यापनाय चतुर्विधभूतानि जरायुजस्वेदजाण्डजोद्भिज्जानि। एवमेवं पदं भाष्ये व्याकृतं तत्र दृष्टान्तं व्योमवदिति दृष्टान्तमित्यर्थः स्मेति शेषः। विवरणस्य भूतत्वात्। हविरिति हविर्धानमण्डपे। हविरिति हविर्धीयतेस्मिन्निति हविर्धानं शकटं तच्च हविर्धानमण्डपे दक्षिण-मुत्तरं चेति तत्र दक्षिणस्य शकटस्याधस्तादित्यर्थः। तदुक्तं पूर्वतन्त्रे द्वादशेध्याये सप्तमाधिकरणे 'हवि-र्धाने मण्डपे हविर्धानाख्ये शकटे स्थापित इति। अक्षं शकटं लक्षीकृत्य पुरोग्रे अवान्तरदेशेष्ववका-शदेशेषु प्रादेशान्तरालान् प्रादेशो वितस्तिभेदः। कल्पे कल्पसूत्रे। उक्तेति भाष्योक्तविधस्य व्यापकस्य। नानेति 'समो मशकेन समो नागेन' इत्यादिश्रुत्यैकार्थतया नानापरिमाणश्रावणात्

पूर्वपक्षसिद्धान्तयोश्चकारद्वयमेतादृशवाक्यान्तरे पूर्वपक्षसिद्धान्तयोराधिक्योपपत्तिसमुच्चयार्थम् । तेन, अत एव प्राण इतिवदधिकरणान्तरमपि सूचितमिति ॥ ७ ॥

---

भाष्यप्रकाशः ।

न परिमाणविरोधोऽपीत्यर्थः । एवं समाधानांशं व्याकृत्य चकारप्रयोजनमाहुः पूर्वपक्षेत्यादि । तथाचाधिक्यं पूर्वाधिकरणापेक्षया वैलक्षण्यं तत्र या उपपत्तिस्तयोरनुक्तयोः स्फोरणार्थमित्यर्थः । तत्सूचितमर्थमाहुः तेनेत्यादि । तत्रेदमुदाह्रियते । तैत्तिरीये महानारायणोपनिषद्याम्नायते । 'आदित्यो वा एष एतन्मण्डलं तपति । तत्र ता ऋचस्तदृचां मण्डलꣳ स ऋचां लोकोऽथ य एष एतस्मिन्मण्डलेऽर्चिर्दीप्यते तानि सामानि स साम्नां लोकोऽथ य एष एतस्मिन् मण्डलेऽर्चिषि पुरुषस्तानि यजूꣳषि स यजुषां लोकः सैषा त्रय्येव विद्या तपति य एषोऽन्तरादित्ये हिरण्मयः पुरुषः' इति । अत्र संशयः—हिरण्मयः पुरुषः किं जीवो ब्रह्म वेति । तद्बीजं तु विधेयत्वानिर्देशः । तत्रादित्यो वेत्युपक्रम आदित्यस्य मण्डलतापकत्वमुक्त्वोपसंहारे तत्तापकत्वं त्रय्यामुपसंहृतम् । तेनादित्यस्त्रयीशरीरः सिद्धः । शरीरस्य चान्तस्तदभिमान्येव युक्तः । मण्डलस्य हृदयाद्यपेक्षया महत्त्वेऽपि परममहत्परिमाणापेक्षयाल्पत्वेन तत्र जीव-

---

रश्मिः ।

चकारेति चकारयोः प्रयोजनम् । पूर्वपक्षेत्यादीति चकारद्वयं पुनरर्थे प्राथम्यार्थकं तत् स्वल्पाक्षरमिति सूत्रलक्षणविरुद्धमतश्चकारद्वयं व्यर्थं सत्किंचिज्ज्ञापयति एतादृशवाक्यान्तरे पूर्वपक्षसिद्धान्तयोराधिक्ये वैलक्षण्ये या उपपत्तिस्तस्याः समुच्चयं ज्ञापकसिद्धं फलम् ।·······भाष्यार्थः । पूर्वाधिकरणेति अन्तस्तद्धर्मोपदेशाधिकरणापेक्षया न तु प्रकृताधिकरणापेक्षया एतदधिकरणापेक्षयेति संस्कृतापत्तेः । तत्रेति वैलक्षण्य इत्यर्थः । न तु पूर्वाधिकरण इत्यर्थः । त्यदादीनामव्यवहितपूर्वपरामर्शित्वात् । तयोरुपपत्तिवैलक्षण्ययोः । अत्र भाष्ये पूर्वपक्षसिद्धान्तयोरिति प्रयोगस्तत्र यद्यपि पूर्वं सिद्धान्तपदमपेक्षितं 'अल्पाच्तरं पूर्वम्' इति पाणिनिसूत्रात् तथापि राजदन्तादेराकृतिगणत्वात् 'राजदन्तादिषु परम्' इति सूत्रेण पूर्वप्रयोगार्हस्य परनिपातः । तत्सूचितमिति पूर्वाधिकरणापेक्षया उपपत्तिवैलक्षण्ययोः स्फोरणात् सूचितम् । तेनेत्यादीति उपपत्तिवैलक्षण्ययोः स्फोरणेन । यथा 'अत एव प्राणः' इत्यधिकरणे सत्यपि 'प्राणस्तथानुगमात्' इत्यधिकरणान्तरम् । पूर्वोक्तस्य सर्वस्याप्यर्थस्य निगमनायात्र व्याख्यातम् । तद्वत् सप्तम्यन्तावृत्तिः । 'अन्तस्तद्धर्मोपदेशात्' इत्यधिकरणे सत्यपि शब्दविशेषात् इत्यधिकरणान्तरमपीति सूचितमित्यर्थः । तत्रेदमिति तत्र किमेतादृशवाक्यान्तरं कौ पूर्वपक्षसिद्धान्तौ किमाधिक्यं कोपपत्तिरित्याकाङ्क्षायामिदं वक्ष्यमाणमुदाह्रियते इत्यर्थः । विधेयत्वेति ब्रह्मजीवयोर्विशेषत्वानिर्देशः । 'हिरण्मयः पुरुष' इत्यत्र पदद्वयमपि ब्रह्मजीवसाधारणमिति भावः । त्रय्यामिति 'त्रय्येव विद्या तपति' इत्येवकारेणादित्यव्यवच्छेदात् । तेनेति उपक्रमोपसंहाराभ्यामेकार्थप्रतिपादननियमेन त्रय्यादित्ययोश्च सामानाधिकरण्यनियमेन च सिद्ध इति । यद्यपि त्रयी वेदः स चात्मा प्रातिशाख्ये उक्तस्तथाप्यत्र विद्वतां प्रतिपाद्यप्रतिपादकभावसत्त्वात्सामानाधिकरण्यासंभवः तथापैवमुपक्रमोपसंहारयोरेकार्थपरत्वमिति भावः । स्मृतेश्चेति सूत्रम् । ननु चादित्ये विद्यमानत्वादादित्याभिमानी युक्त इत्यत आहुः स्मृतेश्चेत्यवतार्य 'ज्योतिषां रविरंशुमान्' इति स्मृतेरित्यर्थयित्वा रवावादित्ये ब्रह्मत्वस्य विभूत्यन्तर्गतत्वेनेश्वरस्यादित्ये स्थितिरित्यादित्ये विद्यमानत्वं नाभिमानिप्रयोजकमित्येवं स्वाभ्यर्थ-[illegible] शरीरस्येति । हृदयेति आदिपदेन मनः । अनुमानादिति मनु

भाष्यप्रकाशः।

स्यैव मानात्। पुरुषपदेन पूर्वोक्तार्चिर्गतयजुःपुरुषस्यैव व्यपदेशाच्च। नच हिरण्मयत्वविरोधः। तस्योपासनाफलत्वायानुवादात्। नचात्रोपासनाबोधकपदाभावान्नैवमिति शङ्क्यम्। अत्रापेक्षितगुणान्तरबोधके, 'आदित्यो वै तेज ओजः' इत्यव्यवहितोत्तरानुवाके, य एवं वेदेत्युपसंहारेण तस्या उक्तत्वात्। अतो नेदं ब्रह्मवाक्यमिति सूत्रांशेनाशङ्क्यांशान्तरेण सिद्धान्तमाह न, निचाय्येत्यादि। यथा हृदये निचाय्य एवमादित्येऽपि। स यश्चायं पुरुषे यश्चासावादित्ये स एक इति श्रुत्यन्तरात्। नच तत्र जीवो वक्तुं युक्तः। तदग्रे, स य एवंविदित्यादिना विदो जीवस्य वेद्याद् भेदेन निर्देशात्।

'अनाद्यन्तं परं ब्रह्म न देवा नर्षयो विदुः।
एकस्तद्वेद भगवानादित्यो ज्योतिषां पतिः'॥

इति स्मृतेश्च। एवं त्रय्यामपि, 'सर्वे वेदा यत् पदमामनन्ति' इति श्रुत्या तदर्थत्वादिति। ननु पुरुषत्वेन व्यपदेशाज्जीवत्वं तस्येति चेत्तत्राह व्योमवदिति। यथोपरवबिलेषु प्रादेशमात्रत्वं व्योम्नोऽभिव्यज्यते, तथात्र पुरुषरूपं तस्येति न दोषः। ततश्चान्तरादित्ये यः पुरुषो यजुःपुरुषेणाभिव्यज्यते स हिरण्मय इत्येवं विधेयनिर्देशस्याप्युपपन्नत्वात् स ब्रह्मैवेत्यर्थ इति॥ ७॥

रश्मिः।

परममहत्परिमाणवतो ब्रह्मणः। जीवस्यैवेत्येवकारव्यावर्त्योर्थोऽप्ययम्। नन्वेष म आत्मान्तर्हृदय इति श्रुत्या हृदयस्यान्तस्तद्धर्माधिकरणेन चादित्यस्य ब्रह्मायतनत्वात्कथं तत्र ब्रह्मणोऽमानमित्याकाङ्क्षायामाहुः पुरुषपदेनेति। पुरुषस्यैवेति। योग्यत्वादिति भावः। एवकारेण पुरा आसेति व्युत्पत्तिसिद्धब्रह्मवाचकपुरुषपदवाच्यव्यवच्छेदः 'वेदा यथा मूर्तिधरास्त्रिपृष्ठे' इति वाक्योक्तपुरुषाकारवाचकपुरुषपदम्। पुरि शेते इति व्युत्पत्तिः। पूत्र साम्नां लोकोर्चीरूपः। हिरण्मय इति जीवे। अन्विति। फलतो हिरण्मयत्वस्यान्यत्रिकस्य नानुवादः। तस्या इति वेदमरूपायाः उपासनायाः। सूत्रेति अर्भकौकस्त्वादिति चेदिति सूत्रांशेनाशङ्क्य तर्कयित्वा पूर्वपक्षयित्वेति यावत्। निचाय्यो हृदा विभाज्यः द्रष्टव्य इति फलितमिति यावत्। आदित्येपीति निचाय्य इत्यर्थः। आदित्येन विभाज्यः शाब्देन श्रोत्रेण द्रष्टव्य इत्याहुः स यश्चायमिति। स परोक्षः अयं श्रुतिप्रत्यक्षगः। असौ विप्रकृष्टः शाब्देन श्रौत्रेणैकत्वेन द्रष्टव्यो यतः स परोक्ष एक इति श्रुतिविषमपदव्याख्या। न च तत्रेत्यादित्ये सौत्रमेवं पदं व्याचख्युः एवमिति। एवं पूर्वोक्तप्रकारेण त्रय्यामपीति सौत्रैवमिति पदस्यार्थः। तदर्थत्वादिति वेदानामभ्यस्समानवेद्यकर्मार्थत्वात्। एवं पदार्थसमासाविति-शब्दः। पुरुषत्वेनेति पुरि शयनस्य बोधकपुरुषपदप्रवृत्तिनिमित्तेन पुरुषत्वेन। तस्येति आदित्यादिषु परिच्छिन्नत्वं तद्वदिति शेषोस्त्यभिव्यज्यत इति योजना। सिद्धमाहुः ततश्चेति। इतीति। अत्रोपपत्तिर्वैलक्षण्येस्ति, तथाहि अन्तस्तद्धर्मोपदेशादित्यधिकरणादत्राधिकरण उपपत्तिकसंहारबलीयस्त्वेनान्तःस्थस्य ब्रह्मत्वव्यवस्थापने करणकारकरूपम्। एतादृशवाक्यान्तरे महानारायणोपनिषत्स्थे तूपक्रमोपसंहारैकवाक्यतया ब्रह्मत्वव्यवस्थापनमित्युपपत्तिः। तथा चान्तस्तद्धर्मोपदेशादित्यधिकरणभाष्यं तस्माद्देहातिरिक्तेप्युपपत्तिपूर्वकं यत्र ब्रह्मधर्मस्तद्ब्रह्मेति मन्तव्यमिति। अत्र हिरण्मयत्वं ब्रह्मधर्मः स उपपत्तिपूर्वकः। वैलक्षण्यं च सिद्धान्ते आदित्यतदभिमानिभ्यां पूर्वाधिकरणेऽपि भाष्यं तस्मात् सर्वविलक्षणत्वादन्य एव नाभिमानीति। अत्राधिकरणे वैलक्षण्यमुप-

## संभोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥

बाधकमाशङ्क्य परिहरति । यदि सर्वेषां हृदये भगवाञ्जीववत् तिष्ठेत् तदा जीवस्येव तस्यापि सुखदुःखसाक्षात्कारस्तत्साधनादिपरिग्रहश्च प्राप्नोतीति चेन्न । वैशेष्यात् । विशेषस्य भावो वैशेष्यं तस्मात् । सर्वरूपत्वमानन्दरूपत्वं स्वकर्तृत्वं विशेषः । तद्भावो ब्रह्मणि वर्तते, न जीवे इति जीवस्यैव भोगो, न ब्रह्मण इति । वैशेष्यपदादयमर्थः सूचितः । अपेक्षित एव भोगो, नानपेक्षित इति । न तु तस्य

---

भाष्यप्रकाशः ।

**संभोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥** बाधकमिति जीवतुल्यतापत्तिरूपं बाधकम् । सम्यग् अभिनिवेशेन भोगः संभोगः, सम्यग्भोगो यस्मादिति वा संभोगः । तयोः प्राप्तिर्जीवतौल्यमापादयतीति तदाशङ्क्य परिहरतीत्यर्थः । अग्रिमाधिकरणविरोधादिति । अग्रिमाधिकरणत्रयविषयवाक्येषु भोगप्रतिपादनात् तदनङ्गीकारे तद्विरोधादित्यर्थः । बहुव्रीहिविग्रह मङ्गीकृत्याहुः तत्साधनादिपरिग्रहश्चेति । अपेक्षित एवेत्यादिनियमे दृष्टान्तमुखेन मानमाहुः

रश्मिः ।

पत्तिप्रयुक्तत्वेन ब्रह्मधर्मस्य वैलक्षण्यं सिद्धान्ते । एतादृशवाक्यान्तरे तूपपत्तावुपक्रमस्यापि सत्त्वाद्ब्रह्मधर्मस्य वैलक्षण्यम् । पूर्वपक्षे 'अथ य एषोन्तरादित्ये हिरण्मयः पुरुषः' ब्रह्मशरीरं पूर्वाधिकरणे । अत्राधिकरण उपक्रमेण जीवस्यैवाराग्रमात्रस्यान्तर्हृदये प्रतिपादकमिदं वचनमित्युपपत्तिः । अतो जीवप्रतिपादकमेवेदं वाक्यमिति वैलक्षण्यम् । एतादृशवाक्यान्तरे तु पूर्वपक्षे त्रयीशरीरादित्यस्योभिमानी जीवो हिरण्मयः पुरुष इत्युपपत्तिः । अभिमानिप्रतिपादकमिति वैलक्षण्यम् । न च शरीरस्य चान्तस्तदभिमान्येव युक्त इति अर्भकौकस्त्वसूत्राशङ्काग्रन्थो न शब्दविशेषादिति सूत्रे पूर्वपक्षग्रन्थ इति चेन्न शब्दविशेषसूत्रपूर्वपक्षग्रन्थस्यार्भकौकस्त्वसूत्रेशङ्काग्रन्थेनुवादाङ्गीकारातिरिक्तपूर्वपक्षाङ्गीकारे गौरवात् । तथाच भाष्यं पूर्वपक्षसिद्धान्तयोरित्यर्भकौकस्त्वसूत्रस्य । न चाधिकरणयोर्विषयवाक्यावधारणे विनिगमनाविरह इति वाच्यम् । पूर्वाधिकरणेन्तःपदात् तद्घटितश्रुतेर्द्रागुपस्थितेरथ य एषोन्तरादित्य इत्यस्याः श्रुतेर्विषयवाक्यत्वावधारणं शब्दविशेषादित्यधिकरणे तु अन्तःपदाभावादपहतपाप्मपदघटितश्रुतेः पूर्वाधिकरण एव गतत्वात् हिरण्मयशब्दविशेषघटितश्रुतेरवधारणम् ॥ ७ ॥

**संभोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥** तत्साधनेत्यादि । वक्ष्यमाणभाष्यादाहुः सम्यग्भोग इति । चेति विकल्पे । सुखदुःखसाक्षात्कारस्तत्साधनादिपरिग्रहश्चेति भाष्यात् । भाष्ये चकारः पुनरर्थे न तु समुच्चये । तत्साधनेति सुखदुःखसाधनानि चक्षुरादीनि आदिपदेन तद्विषयाश्च तेषां तत्साधनत्वेन परिग्रहः । व्यापकस्येन्द्रियसंबन्धसत्त्वात् । तथा चानभिज्ञत्वर्थवादः । भाष्ये । विशेष इति सर्वरूपत्वं सर्वानुकारित्वेन सर्वेषु रूपाण्यस्येति स्वमात्मा तस्य कर्तृत्वं 'स आत्मानं स्वयमकुरुत' इति श्रुतेः तस्य भावः सत्ता स ब्रह्मणि वर्तते अन्यथा सर्वेषु रूपाणि न स्युः आनन्दाश्च सर्वेषु न भवेयुः सर्वाणि रूपाणि न स्युः 'योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते' इति श्रुतेः । 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतेः जीवानन्दव्यक्तित्वात् । न च विशेषादित्येव सूत्रे हेतुरस्तु सत्ताभावे 'नासतो विद्यते भावः' इति स्मृतेः । कार्यरूपाणि कार्यानन्दाः कार्यं च न स्यात् । अत एव स्वार्थे ष्यञ् न व्याख्यातः न च

रश्मिः ।

प्रकृतिजन्यबोधे प्रकारो भावः इति वृत्तिस्थानापन्नग्रन्थातिक्रमः शक्यः । सत्ताया एव प्रकृतिजन्यबोधे प्रकारत्वात् । न च विशेषत्वघटत्वादीनां प्रकृतिजन्यबोधे प्रकारत्वं न सत्ताया इति वाच्यम् । भावे त्वतलोर्विधानाद्विशेषत्वघटत्वादीनां विशेषघटादिसत्तानतिरेकात् । अनवच्छिन्नत्वं विशेष इति न व्याकृतम् । मायिनं तु महेश्वरमिति श्रुतेः, 'विद्याविद्ये मम तनू विद्ध्युद्धव शरीरिणाम्' इति वाक्याच्च मायानवच्छिन्नत्वाभावात् । 'इन्द्रो मायाभिः पुरुरूप ईयते' इति श्रुतौ मायेन्द्रियाणि इति निबन्धेस्ति । न चेन्द्रियानवच्छिन्नत्वं विशेषः प्रकृतेस्त्विति शङ्क्यम् । चक्षुषश्चक्षुरित्यादिश्रुतेः । अत्र चक्षुराद्यभिन्नं ब्रह्मेति प्रथमया प्रतिपादनादनवच्छिन्नत्वं सुस्थिरमिति शङ्क्यम् । कर्णशष्कुल्यवच्छिन्ननभोदेशावच्छिन्नत्वेनांशतस्तदभावेप्यंशितस्तत्सत्त्वात् । न चापहतपाप्मत्वहिरण्मयत्वसत्यज्ञानान्तत्वस्वातन्त्र्यसार्वज्ञ्यधर्मादिरहितत्वानि विशेष इति शङ्क्यम् । विस्फुलिङ्गौष्ण्यवज्जीवेष्वपि ब्रह्मत्वे सत्युक्तधर्मसत्त्वात् । न चोक्तत्रिकमपि जीवेष्वस्त्विति शङ्क्यम् । तस्य जीवेष्वनुपयोगात् । स आत्मानं करोति यदा तदात्मान्तर्गतमुक्तजीवानां वास्तविकानामुद्गमेन संसारित्वप्रसङ्गात् । तथाच न स पुनरावर्तत इति श्रुतिविरोधः । मुक्तानां मनोवागगोचरानन्दत्वेपराधप्रसक्तिः । सर्वरूपत्वे मुक्तानां संसारप्रसङ्गः । सर्वेषामन्तःस्थितिप्रयोजकानां संसारित्वात् । अतस्त्रिकं ब्रह्मत्वे सत्यपि जीवानां तेषु नाङ्गीकरिष्यामः । नापि निष्कर्मत्वमध्यासशून्यत्वं च विशेषः, मुक्तानां सत्त्वात् । एवमथातो ब्रह्मजिज्ञासेत्यधिकरणाद्ब्रह्मपदमनुवर्त्य सप्तम्यन्तं विभक्तिविपरिणामेन कृत्वा सूत्रं व्याख्याय संभोगप्राप्तिरिति चेन्न तदभावादित्यसूत्रयित्वा वैशेष्यादिति यदुक्तं तेन ब्रह्मणि भोगे वैशेष्यं सूचितं तत्सहेतुकं विवरामासुः वैशेष्येति । अपेक्षित इति अनुकूलसंवेद्यं सुखमपेक्षितं तथा च भोगः सुखसाक्षात्कारमात्रम् । अनपेक्षितो दुःखरूपो भोगः । प्रकृतेति । अग्रिमेति तेन भाष्यस्याग्रिमाण्यधिकरणानि तेषां विरोधादित्यर्थः । अत एव 'नाहं भक्षितवान्' इत्यस्य सुबोधिन्यामनश्नन्न्योभिचाकशीतीति श्रुत्या भोगाभावप्रतिपादनं भागवतमतपरं 'असमर्पितवस्तूनां तस्माद्वर्जनमाचरेत्' । इति भोगः सिद्धान्तरहस्ये प्रसाधितः । ननु ब्रह्मणः पूर्णानन्दस्य आत्मन्येव रुद्धसमस्तभगस्य का स्पृहा तथा च श्रुतिर्माण्डूकोपनिषत्स्था ।

'भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे ।
देवस्यैष स्वभावोयमाप्तकामस्य का स्पृहा' ॥ इति ।

अत्र प्रतिप्रसव उच्यते 'भक्तिरस्य भजनं तदिहामुत्र फलभोगनैराश्येनामुष्मिन् मनःकल्पनम्' । 'भक्त्या जानाति चाव्ययम्' इत्यादिश्रुतिभिर्भक्तिमार्गः स प्रपञ्चवत्स्वप्राप्तये निर्मितः स उपबृंह्यते ।

'अहं भक्तपराधीनः ह्यस्वतन्त्र इव द्विज' ।
'वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथा' ।

इत्यनेन दुर्वाससं प्रति भगवद्वाक्येनातो भक्त्या निवेदितमश्ना (त्याशा च) त्येव तदुक्तं 'तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः' इति । परमपेक्षितसमर्पणं विवक्षितं 'अपेक्षित एव भोग' इति भाष्यात् । अपेक्षितसमर्पणस्य दास्यलक्षणत्वेन भाष्ये दास्यभक्तिराद्दताऽत एवान्यत्रापि तद्ग्रहणं ज्ञेयम् । न चाधुनिकानां प्रयतात्मत्वाभावात् नाश्नाति किं त्वाशेवेति शङ्क्यम् ।

'अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग् व्यवसितो हि सः' ॥

**भोगाभाव एव । अग्निमाधिकरणविरोधात् । यथेन्द्रियाधिष्ठातृदेवानाम् । तत्त्वमस्यादिवाक्येन जीवस्यापि तथात्वे तस्यापि तद्वदेव भविष्यति ॥ ८ ॥**

**इति प्रथमाध्याये द्वितीयपादे द्वितीयं शब्दविशेषाधिकरणम् ॥ २ ॥**

---

भाष्यप्रकाशः ।

यथेत्यादि । तथाचानुमानमेव मानमिति भोगप्राप्तावपि न जीवतौल्यापत्तिरित्यर्थः । नन्वेवं सति जीवस्य कुत उभयभोग इत्यत आहुः तत्त्वमसीत्यादि । तथाच ब्रह्मभावाभावेन कामकर्मादिवशगत्वाद् बन्धदशायां तथेत्यर्थः । तथाच तदभावायैव साधनानां विधानमिति भावः । तदेतत्प्रासङ्गिकमुक्तम् ।

अन्यच्च पूर्वाधिकरणेऽन्तर्हृदयवर्तमानस्यान्तर्यामित्वे निश्चायितेऽपि पुनरस्मिन्नधिकरणे यत्तथात्वप्रतिपादनं तत्तदाकारनिश्चायनार्थम् । यथा कौण्डपायिनां सत्रे, मासमग्निहोत्रं जुहोतीत्यत्राग्निहोत्रशब्देन नित्याग्निहोत्रधर्मा अतिदिश्यन्ते । तथा, हिरण्मयः पुरुष इति शब्दाभ्यामन्तरस्त-

रश्मिः ।

इति वाक्यात्तथा च नृसिंहोत्तरतापिनीयश्रुतिः आनन्दभुग् इति । बृहदारण्यकेपि 'यद्यदेवासृजत तत्तदत्तुमध्रियत सर्वं वा अत्तीतीति नैवेह किंचनाग्र आसीत् मृत्युनैवेदमावृतमासीत्' इत्युपक्रमेऽग्रपदेन 'कालोस्मि लोकक्षयकृत्प्रवृद्धः' इति गीतोक्तकालेऽभावसत्तां नासीदित्यनेनोक्त्वेहपदवाच्याश्रयश्चोक्तः । तन्मनोकुरुतेति श्रुतौ त्यदादीनामुत्सर्गतः प्रधानपरामर्षकत्वात् 'ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इति श्रीगीतातोग्रपदवाच्यकालात्मकं ब्रह्म तत्पदेनोच्यते इह पदवाच्याश्रयो वोच्यते न मृत्युरूपष्ठ्यर्थग्रहणाच्च । **अपेक्षित एवेत्यादीति** । इदं न प्रतीकम् । **नियम इति** । अपेक्षित एवेत्यवधारणे । यथेत्यादीति 'अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्' इति वक्ष्यमाणाधिकरणे इन्द्रियाधिष्ठातृदेवानां भोगो वक्ष्यते । **तथा चेति** वैशेष्यादिति हेतुप्रकारेण यथेत्यादिभाष्योक्तदृष्टान्तप्रकारेण चेत्यर्थः । प्रकारवचने थाल् तच्छन्दात् । अनुमानं तु ब्रह्म अपेक्षितभोगवत् सर्वरूपादिमत्त्वात् इन्द्रियाधिष्ठातृदेववदित्यत्र पक्षे साक्षाद्धेतुसाध्ये दृष्टान्ते तु इन्द्रियाधिष्ठातृदेवेषु परंपरयेति विवेकः । **एवं सतीति** हृदयदेशे वर्तमानत्वे ब्रह्मांशत्वे च सति उभयस्यापेक्षितानपेक्षितस्य । व्यतिरेकमुखेन भाष्यं व्याचख्युः **तथा चेति** । तथेति उभयभोगवत्त्वप्रकारेण । जीवस्यापि तथात्वे ब्रह्मभावे ब्रह्मवदेव भोगो भविष्यतीति भाष्यार्थः । **तदभावायेति** बन्धदशाभावाय । अधिकरणार्थमुपसंहरन्ति स्म **तदेतदिति** । अधिकरणम् । वाक्यान्तरेपीदं सूत्रं योज्यम् । यत्पूर्वसूत्रसमाप्तावेवं चाणुत्वबोधकैरित्यादिना सूत्रस्य पूर्वशेषत्वमुक्तं तदन्येषां सूत्राणामुभयाधिकरणशेषत्वमाह नाधिकरणप्रयोजनमाहातस्तदाहुः **अन्यच्चेति** । पूर्वाधिकरण इत्यन्तस्तद्धर्मोपदेशादित्यधिकरणे । **तत्तदेति** तस्यान्तर्यामिण आकारनिश्चायनार्थम् । **कौण्डपायिनामिति** अन्तस्तद्धर्माधिकरणविषयवाक्योक्तस्य हिरण्मयपुरुषस्य य आकारस्तस्यातिदेशार्थम् । एतच्च सप्तमस्य तृतीयपादे पूर्वतन्त्र उक्तम् । 'क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यात्' इत्यधिकरणे चिन्तितम् । अग्निहोत्रशब्दो न नामधेयं किं तु प्राथमिकाग्निहोत्रधर्माणामतिदेशक इति अग्नये होत्रं यस्मिन् कर्मणि तत्कर्माग्निहोत्रम् । अत्राकारसमर्पकं तु पूर्वाधिकरणभाष्यमेव तस्मादानन्दरूपप्राणशरीररूपो वाक्यार्थ इति । अन्तस्तद्धर्मोपदेशादित्यधिकरणभाष्यं च । अनन्त-

भाष्यप्रकाशः।

द्वर्माधिकरणविषयवाक्योक्तहिरण्मयपुरुषाकारातिदेशार्थमिदमधिकरणमिति मम प्रतिभाति।

यदत्र शैवः, प्रसिद्धोपदेशाधिकरणं द्विसूत्रमङ्गीकृत्य अविनाभावरूपाद्वैतोपगमेन विशिष्टाद्वैतवादं चानुसृत्य, सर्वं खल्विदं ब्रह्मेति वाक्योक्तोपासनायां ब्रह्मणः सर्वात्मकत्वोपपादनायाऽथर्वशिरोवाक्यानि 'अहमेकः प्रथममासं वर्तामि च भविष्यामि च, नान्यः कश्चिन्मत्तो व्यतिरिक्तः' इत्यादीन्युदाहृत्य ब्रह्माहमित्यादिना विश्वरूपत्वमात्मन प्रपञ्चयित्वा विश्वरूपत्वे सोऽन्तरादन्तरं प्राविशदित्यनुप्रवेशमेव हेतुत्वेनाह। तदसंगतम्। एको ह वै नारायण आसीन्न ब्रह्मा न ईशान इति

रश्मिः।

मित्यनन्तमूर्तिता च प्रतिज्ञातेति। शैव इति भगवानिति शेषः। अविनेति 'अहमेकः प्रथममासे' इत्यादिश्रुतिविचारेण सिद्धमविनाभावरूपाद्वैतं तस्योपगमेन। 'अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः' 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्'। इत्यादिश्रुतिषु अचिद्वस्तुचिद्वस्त्वीश्वराणां यथायथं भोग्यत्वभोक्तृत्वनियन्तृत्वैः स्वरूपविवेकात्त्रयोपि भिन्नाः, माया च तमोरूपा। तमः परे देव एकीभवतीत्यविभागापत्तिदशायां विभागव्यपदेशानर्हरूपेण ब्रह्मण एवावस्थानाद् विशिष्टाद्वैतवादं चानुसृत्येत्यर्थः। तृतीयाधिकरणे प्रथमपादे रामानुजमतनिरूपण उक्तम्। तथापि शैवस्तु रामानुजमतस्यैव चौरो माध्वमतस्य कचित्तद्विरुद्धांशामेव श्रुतिमुदाहरन् भिन्नं प्रस्थानमभिमन्यते इति चतुर्थाधिकरणप्रकाशादेतन्मतेप्यविरुद्धम्। विरुद्धा वा श्रुतिस्तद्भाष्ये द्रष्टव्या आसमासीदिति कचित्पाठः वर्तामीति पदव्यत्ययश्छान्दसः अत्र धातुत्रयमुत्पत्त्यर्थकमिति प्रहस्ते मध्यमवादे इत्यादीनीति। आदिपदेन इति सोन्तरादन्तरं प्राविशत् दिशोन्तरं प्राविशदिति श्रुतिसंग्रहः। ब्रह्माहमित्यादिनेति। नन्वयं प्रकाशोशोभनः। अथर्वशिरसि सोहं नित्यानित्यो व्यक्ताव्यक्तो ब्रह्माब्रह्मेतिश्रुतौ अब्रह्मेतिपदच्छेदादिति चेन्मैवम्। अत्राब्रह्माहमित्यकाराभावो लेखकप्रमादात् अब्रह्माहमित्यस्यादि सोहं नित्यानित्यो व्यक्ताव्यक्तो ब्रह्मेति तदब्रह्माहमित्यादि। अब्रह्माहमित्यादि यस्य तदब्रह्माहमित्यादि तदब्रह्माहमित्यादि च तदब्रह्माहमित्यादि च तयोः समाहारः तदब्रह्माहमित्यादि तेन तदब्रह्माहमित्यादिना सरूपैक्यशेषः तस्मात्। यद्वा सोहं नित्यानित्यो व्यक्ताव्यक्तो ब्रह्मा अत्र ब्रह्म आ इति च्छेदः अब्रह्मपदार्थस्याभावात्। न च प्रायपाठविरोधः। सावित्र्यहमित्यादौ मिथुनाभावात् न च आ ब्रह्मेति पदच्छेदः 'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन' इतिवाक्ये तादृशपददर्शनादिति वाच्यम्। तथा सति ब्रह्मव्याप्याहमित्यर्थो भवति तदर्थस्याङोऽभावेपि प्रत्ययाद्गौरवात्। ब्रह्माहमित्यादिनेति भाष्यप्रकाशाच्च। तथा च सोहं यः प्रवेशकर्ता सोहं नित्या सोर्हा अनित्यश्च तथा सोर्हा व्यक्तः ब्रह्म आ। नित्यः स्वरूपतः अनित्य आविर्भावतिरोभाववान् 'आविर्भावतिरोभावौ शक्ती वै मुखैरिणः' इति वाक्यात् व्यक्तो भक्तेच्छया प्रकटागणितानन्दः 'अव्यक्तोक्षर इत्युक्तः' इतिगीतावाक्यात् अक्षरवाचकाव्यक्तपदसमभिव्याहारात् 'अक्षरादपि चोत्तम' इतिवाक्याच्च अव्यक्तोक्षर उक्तवाक्यात् ब्रह्म आ इति श्रुतिस्मरणे आ तदुक्तं श्रीभागवते 'सत्यं ज्ञानमनन्तं यद्ब्रह्म ज्योतिः सनातनम्' 'इति रसो वै सः' इति श्रुतिश्च। एतद्विश्वरूपात्पृथक्।

'यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः संभवन्ति।
यथा सतः पुरुषात्केशलोमानि तथाक्षरात् संभवतीह विश्वम्' ॥ इति।

मुण्डकेऽक्षरस्योर्णनाभिदृष्टान्तैरुकरूपत्वात् वक्ष्यते चाहश्यत्वादिगुणको धर्मोक्तेरित्यधिकरणे। ननु सोहमित्यभेदस्यान्तरा भूतग्रामवदिति सूत्रविरुद्धस्योपपादनात् ज्ञानमार्गीयाक्षरपरतया नित्यानित्य-

भाष्यप्रकाशः ।

महोपनिषदि सृष्टिप्राकाले ईशानसत्तानिषेधेनाऽत्र्यास्तिवर्ततिभवतीनां सत्तार्थकत्वस्य वक्तुमशक्यतया, 'यस्माहं हृदयादासं स ईशो विदधातु मे', 'ततो युद्धमवर्तत', 'नन्दपत्न्यां भविष्यसि' इत्यादिवज्जननार्थस्यैव प्राप्तत्वेन प्रतिकल्पं प्रथमोत्पत्तिबोधकतया, नान्यः कश्चिन्मत्तो व्यतिरिक्त इत्यस्यापि, नासीद्वर्तते भविष्यति चेति पुरुषविपरिणामेन तास्वेव क्रियास्वन्वयस्य युक्तत्वेन रुद्राविनाभावरूपाद्वैतबोधकताया वक्तुमशक्यत्वात् । नच, सोऽहं नित्यानित्यो व्यक्ताव्यक्तो ब्रह्माब्रह्मेत्यग्रिमसंदर्भे विश्वरूपत्वस्य स्वस्मिन् प्रपञ्चनात् तत्सिद्धिरिति वाच्यम् । महोपनिषदुक्तनिषेधेन सिद्धे तस्याब्रह्मत्वे वामदेववच्छास्त्रदृष्ट्या ब्रह्मदृष्ट्या वाहंपदप्रयोगाद्रुद्ररूपेणाविनाभावस्यासिद्धेः । नापि, सोऽन्तरादन्तरं प्राविशदिति प्रवेशोक्त्या तत्सिद्धिः शङ्क्या । स प्रसिद्धः

रश्मिः ।

इतिश्रुतिव्याख्यानमस्तु इति चेन्न ज्ञानेन भक्त्येति श्रुत्योक्तसूत्रभेदेप्यभेदस्य सत्त्वात् । 'व्यतिहारो विशिंषन्ति हि' इतिसूत्रात् । ननु तथापि भक्त्याविरहेण कुतः संयोगं विहायेति चेन्न । विरहे भान्तरस्य परमफलत्वात् तथा चेश्वरो भक्त्येति भक्तिर्मुख्या युक्ता सर्वात्मभावरूपा तस्यां योहंकारादेशो 'लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि' इत्यधिकरणे सोपि युक्तः । एवं च ब्रह्माहमित्यादिना विश्वरूपत्वमात्मनः प्रपञ्चयित्वेति भाष्यप्रकाशः शोभनोस्त्येवेति । भावाद्वैतविरुद्धमिव मन्यमानाः 'सदेव सोम्येदमग्र आसीत्' इति श्रुतिविरोधं भक्त्या ज्ञानेन भजत्यनुगृह्णाति चेति श्रुतिविरुद्धं च जानन्ते ईश्वरत्वधिकरण इदमित्थतया निरूपणाविषयत्वेनोक्तादन्यं रुद्राधिकधर्मवन्तं श्रीविष्णुं नारायणं निरूपयामासुः एको हेत्यादिना । अत्रत्येति अत्रत्यानां अस्तिवर्तति भवतीनामत्रोत्तरपदे इक्श्तिपौ धातुनिर्देशे इति सूत्राद्धातुनिर्देशे इक्श्तिपौ कृत्तद्धितसमासाश्चेति सूत्रेण प्रातिपदिकसंज्ञायां द्वन्द्वः । जन्मेति जन्मप्रकरणेस्ति । इत्यस्या इतिश्रुत्याः । युक्तत्वेनेति अध्याहारदोषाभावायेति भावः । अशक्यत्वादिति अविभक्तं च भूतेषु विभक्तमिव च स्थितमिति त्रयोदशाध्यायगीतातः ।

'कार्यकारणवस्त्वैक्यमर्षणं पटतन्तुवत् ।
अवस्तुत्वाद्विकल्पस्य भावाद्वैतं तदुच्यते' ॥

इति सप्तमस्कन्धाच्च तथा । विश्वरूपत्वमिति । 'भूस्त आदिर्मध्यं भुवस्ते स्वस्ते शीर्षं विश्वरूपोसि ब्रह्म' इतिश्रुत्या स्वस्मिन् प्रपञ्चनात् तस्याविनाभावस्य सिद्धिः । तस्येति श्रीरुद्रस्याब्रह्मत्वं सर्वप्रथमसत्ताकत्वं ब्रह्मत्वं तदभावोऽब्रह्मत्वं तस्मिन् । वामदेवेति शास्त्रदृष्ट्या तूपदेशो वामदेववत् इतिसूत्रे प्राणस्तथानुगमादित्यधिकरणे स्पष्टम् । शास्त्रदृष्टिर्ज्ञानावेशात् सर्वधर्मस्फूर्तिः वामदेवस्य । ब्रह्मदृष्टिस्तु अहं ब्रह्मेत्यार्षेयं ज्ञानम् । तदत्र सोहमिति । असिद्धेरिति ननु तदेतद्रुद्रचरितमिति श्रुतेः रुद्ररूपेणाविनाभावोस्त्वन्यथा श्रुतिविरोध इति चेन्न । श्रुतावेतत्पदात्समीपतरवर्तिनोर्थस्य रुद्रचरितत्वात् । तथा च श्रुतिः अथ कस्मादुच्यते भगवान् महेश्वरो यस्माद्भक्त्या ज्ञानेन भजन्त्यनुगृह्णाति च वाचं संसृजति विसृजति च यः सर्वान् भावान् परित्यज्यात्मज्ञानेन योगैश्वर्येण महति महीयते तस्मादुच्यते भगवान् महेश्वरः तदेतद्रुद्रचरितमिति । अथायशब्दो भिन्नप्रक्रमे इत्येतच्छब्दो रुद्रचरितत्वं भक्तचरिते नियमयति । ननु 'समीपतरवर्तिनि चैतदो रूपम्' इति कोशे तरप्प्रत्ययान्तं समीपपदं न तमप्प्रत्ययान्तमिति रुद्रचरितत्वं भक्तचरिते ततोन्यत्रापि भवतु इति चेन्न एवमप्यहमेकमासमित्यादिश्रुत्युक्तस्य रुद्रचरितत्वाभावात् दूरत्वेन चरितस्य प्राप्तत्वात् । स इति यद्यपि देवैः पृष्टो रुद्रस्तत्पदेन पराम्रष्टुं योग्य-

भाष्यप्रकाशः ।

परमात्मा अन्तरादन्तरं दहरपुण्डरीकं प्राविशदतत्तद्भेददृष्टित्वात् तथेत्यर्थात् । अन्यथा प्रथमपुरुषादिप्रयोगविरोधापत्तेरिति । किंचाविनाभावरूपाद्वैतोपगमस्य चिदचिदीश्वरभेदसिद्धिसापेक्षत्वेन, 'सदेव सौम्येदमग्र आसीत्' इत्यादि श्रुतिविरुद्धत्वस्य प्रागेवोपपादितत्वेन तदादरस्याप्यसंगतत्वमेवेति दिक् ।

यदप्यनुपपत्तेस्तु न शारीर इत्यादिकं पट्सूत्रमधिकरणान्तरमङ्गीकृत्य बृहन्नारायणोपनिषदो महोपनिषदिति नामान्तरं चाभिधाय, तत्रत्ये 'पतिं विश्वस्यात्मेश्वर ५ शाश्वत ५ शिवमच्युतं नारायणं महाज्ञेयम्' इत्यादिवाक्ये, किं परमेश्वरमूर्त्यात्मा तद्विभूतिर्नारायणो विश्वपतित्वादिलक्षणकतया प्रतिपाद्यते ? किं वा परमेश्वरः शिवः ? इति संदिह्य सहस्रशीर्षं देवमित्यारम्य सहस्रशीर्षादिविशिष्टत्वेन नारायणस्यैवोद्दिष्टतया अभ्यासात्, समुद्रेऽन्तमिति समुद्रशायित्वरूपतल्लिङ्गात् तद्वाचकाच्युतहर्यादिशब्दप्रयोगाच्च नारायण एव विश्वपतित्वादिलक्षणकत्वेन प्रतिपाद्यत इति पूर्वपक्षमभिधाय सिद्धान्तमाह । अत्र नारायणान्तर्यामी परमेश्वर एव प्रतिपाद्यते । कुतः । विश्वपतित्वादीनां परमेश्वरधर्माणां पदार्थान्तरे नारायणेऽनुपपत्तेः । पशूनां पतये वृक्षाणां पतये जगतां पतये नम इत्यादिना शिव एव परमेश्वरे निखिलभुवनाधिपत्यमभ्यस्यते । एको रुद्रो न द्वितीयाय तस्थुर्य इमाँल्लोकानीशत ईशिनीभिरिति रुद्रव्यतिरिक्तस्य जगदीश्वरत्वं निषिद्धयते । विश्वाधिको रुद्रो महर्षिरिति विश्वाधिकत्वं तस्यैव श्रूयते । अतो विश्वपतित्वादिलक्षणो नारायणात्मा परमेश्वर एवेत्याह । अग्रिमसूत्रे च पद्मकोशप्रतीकाशमित्यादिना नारायणहृदय-

रश्मिः ।

स्तथापि भागत्यागलक्षणापत्त्या ब्रह्माभेददृष्टिरेव परामृष्टः । अन्तरा ब्रह्मपुरात् गुह्याद्गुह्यतरं प्राविशत् प्रविष्ट इति प्रहस्ते । तदभेददृष्टित्वात् ब्रह्माभेददृष्टित्वात् । प्रथमेत्यादि प्रथमपुरुषः प्राविशदिति तस्य प्रयोगस्य विरोधापत्तिः । न च स शिवः प्राविशदिति श्रुतिवाक्यमस्त्विति शङ्क्यम् । सोहं नित्यानित्य इत्यस्य शिववाक्यत्वात् तन्मध्यपातिन एतस्य शिववाक्यत्वार्थं सोहं प्राविशदित्यर्थात् । अत्र च प्रथमपुरुषश्रुतिविरोधापत्तेः स शिवरूपः प्रसिद्धः परमात्मेत्यर्थस्य शोभनत्वात् । आदिपदेन ब्रह्माहमित्यत्र सुवर्णे कुण्डलतावद्ब्रह्मण्यहंताविरोध इत्यस्मत्पदप्रयोगविरोधः संगृह्यते । चिदिति चिच्चाचिच्च ईश्वरश्चैषां समाहारः चिदचिदीश्वरं तस्मिन् । समाहारे द्विगुर्द्वन्द्वश्च नपुंसकं स्यादिति नपुंसकता । प्रागिति । तृतीयाधिकरणे एवं शैवमतस्याप्यसंगतिर्बोध्येत्यादिना । नामान्तरमिति तथा च श्रुतिः एतद्वै महोपनिषदं देवानां गुह्यमिति । समुद्र इति महानारायणोपनिषदीयम् । अन्तं स्वरूपं 'अन्तः स्वरूपे मनोहरे' इति विश्वात् । समुद्रे तमिति पाठे तु तं श्रीनारायणं प्रसिद्धम् । अत्रेति नारायणस्य अन्तर्यामी परमेश्वर इत्यर्थः । पूर्वं षष्ठीतत्पुरुषं विधाय पश्चात्कर्मधारयः । नारायणान्तर्यामिणः परमेश्वरत्वस्य विधेयत्वात् । एवं च सूत्रस्य शारीरो नारायणो विश्वपतित्वादिगुणको न अनुपपत्तेरित्यर्थः । एक इति । द्वितीया इति सोर्डा द्वितीयः । येति वर्णागमः । इ अ इत्यव्यये । इको यणचि । य इत्यस्मात् सोर्लोपो न य इमामीत्यत्र य इत्यस्य श्रवणात् । तस्थुरिति स्थाणुः । सूर्य आत्मा जगतस्तस्थुषश्च इति श्रुतेः । तस्थौ ईशनीम्य इति च पाठे स्पष्टोर्थः । इत्नीति इत्यथर्वशिरःश्रुत्या । नारायणेति षष्ठीतत्पुरुषः । कर्मकर्तृव्यपदेशाच्चेति सूत्रार्थमाहुः अग्रिम इति । पद्मेति पद्मकोशप्रतिकाशं हृदयं चाप्यधोमुखमित्यादिना ध्येयं कर्म ध्याता नारायणः कर्ता तयोर्व्यपदेशाच्च पद्मकोशेत्यादिश्रुताविति सूत्रार्थः ।

भाष्यप्रकाशः ।

मेवोच्यत इत्यङ्गीकृत्य शिवनारायणयोर्ध्येयध्यातृभावमाह । शब्दविशेषसूत्रे च, नारायणपरं ब्रह्मेति मन्त्रे नारायणात् परमिति समासमङ्गीचकार । स्मृतेश्चेति सूत्रे,

'एवमुक्त्वा ततो राजन् महायोगेश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम्' ॥

इति गीतावाक्यम्,

'अहं यथावदाराध्यः कृष्णेनाक्लिष्टकर्मणा ।
तस्मादिष्टतमः कृष्णादन्यो मम न विद्यते' ॥

इति भारतीयमश्वत्थामानं प्रति शिववचनं च स्मृतित्वेनोदाजहार । तत्सर्वमसंगतमेव । द्वापरादिस्थलोकव्यामोहनाय पाद्मवाराहादिप्रसिद्धस्य, त्वामाराध्य तथा शंभो ग्रहीष्यामि वरं सदेत्यादिवरदानस्य यथावत्पदेनात्र बोधनात् कृष्णाराध्यत्वेऽपि शिवस्य परब्रह्मत्वासिद्ध्या, गीतोक्तरूपस्याप्यनुगीतोत्तरमुत्तङ्कोपाख्याने ।

'ततः स तस्मै प्रीतात्मा दर्शयामास तद्वपुः ।
शाश्वतं वैष्णवं धीमान् ददृशे यद्धनञ्जय' ॥

इत्यारभ्य,

'तद् दृष्ट्वा परमं रूपं विष्णोर्वैष्णवमद्भुतम् ।
विस्मयं च ययौ विप्रस्तद् दृष्ट्वा रूपमैश्वरम्' ॥

इति पूर्वं अर्जुनेनेदानीमुत्तङ्केन च दृष्टस्य रूपस्य वैशम्पायनेन कण्ठत एव वैष्णवत्वप्रतिपादनादुत्तङ्केनापि, विश्वकर्मन्नमस्तेऽस्तु यस्य ते रूपमीदृशमिति निगमनाच्चोपपादनमन्तरेणैव वैष्णवत्वसिद्ध्याऽनुगीतायामपि विष्णोरेवेश्वरत्वसिद्ध्या शैवमतानुपष्टम्भकत्वात् ।

रश्मिः ।

अङ्गीचकारेति तथा च शब्दविशेषो नारायणपरं तस्मादिति सूत्रार्थः । अहमिति शिवः । अकृष्टेत्यत्र कृष विलेखनेनिट्क । प्रातिलोम्येन दूषणान्याहुः द्वापरेति । 'द्वापरादौ युगे भूत्वा कलया मानुषादिषु' इति शिवं प्रति केशववाक्यात् । अतथ्यानि वितथ्यानि मोहशास्त्राणि कारय इतिवाक्यात् तत्स्थलोकानां व्यामोहाय । एवं पाद्मप्रसिद्धिरुक्ता । वाराहादिप्रसिद्धिरपि द्रष्टव्या । यथावदिति यथेत्यव्ययाद् द्वितीयाया लुक् यं प्रकारमर्हामि यथावत् तदर्हमिति सूत्रेण वतिः प्रकारश्च पूर्वोक्तवरदानं वरदातृत्वरूपं लघूपात्तं तसिलादयः प्राक्पाशपः इत्यव्ययत्वे सोर्लुक् अव्ययादाप् सुप इति सूत्रात् । तत्पदेनेत्यर्थः । अतिदेशकं पदमुक्तम् । मासमग्निहोत्रं जुहोतीत्यत्राग्निहोत्रपदवत् । अत्रेति भारतीये । ननु त्वामाराध्य तथेति पदैः अहं यथावदाराध्य इत्याराधनस्य कुतो न बोधनं पुराणे इति चेन्न 'अष्टादशपुराणानां कर्ता सत्यवतीसुतः' 'चक्रे भारतमाख्यानं वेदार्थैरुपबृंहितम्' इतिवाक्यात्पुराणोत्तरं भारताख्यानेन पुराणे भारतीयाराधनस्याप्राप्तेः । तत इति वैशंपायनवाक्यम् । स भगवान् तस्मा उत्तङ्काय । विष्णोरिदं वैष्णवं विराड्रूपम् । ऐश्वरं ईश्वर उपसंहारकः प्रधानत्वेन गृह्यते यत्र तदैश्वरम् । शैषिकप्रत्ययः । विश्वकर्मन्निति निरुक्तौ देवपत्नीनामसु पठितम् । वैष्णवत्वेति ईश्वरप्रधानविराड्रूपत्वसिद्ध्या । विष्णोरेवेति यद्यपि मूलरूपे सर्वे शब्दा वाचकतां भजन्ते तथापि ग्रहस्ते व्यवहारमनुरुध्य प्रापितमत्रानूदितम् । तथा चामरः 'ईश्वरः शर्व ईशानः शंकरश्चन्द्रशेखरः' इति । न चेश्वरस्य विष्णुत्वम-

भाष्यप्रकाशः ।

नारायणपरं ब्रह्मेत्यस्यापि प्रथमाप्रायपाठपतितत्वेन तत्र पञ्चमीसमासनिवेशस्याशक्यवचनतया पदभेदपक्षेऽपि, सुपां सुलुगिति सूत्रेण सोर्लोपे सुखेन तथा पाठसिद्ध्या पुरुषसूक्त एव सहस्रशीर्षत्वादिविशिष्टरूपेण जगदुपादानतायाः श्रूयमाणतया च, नारायणपरं ब्रह्मेत्यनेनापि शब्दविशेषेण तदनुपष्टम्भात् । सहस्रशीर्षं देवमित्यनुवाके कर्मत्वबोधकद्वितीयाया नारायण एवाभ्यासान्नारायणपरं ब्रह्मेत्यादिप्रथमान्तप्रायपाठपतितस्य, नारायणपरो ध्यातेत्यस्य, ध्यानं नारायणः पर इत्येतत्समभिव्याहृतस्य वस्तुपरिच्छेदनिवर्तकतायाः स्फुटत्वाच्च तस्य कर्तृत्वे पर्यवसानं वक्तुमशक्यमिति तेनापि तन्मतानुपष्टम्भात् । इतः पूर्वस्मिन्ननुवाके, अणोरणीयानिति मन्त्रे ईशाख्यस्य शिवस्य प्रस्तुतात्ममहिमरूपत्वेनैव सिद्धत्वान्मध्येऽपि, यो देवानां प्रथममिति मन्त्रे महर्षित्वादिभिर्मुख्यविभूतितया सिद्धत्वाच्च, दहरं विपापमित्युपान्त्यमन्त्रेऽपि तद्धृदयाकाशस्यैव ग्राह्यत्वात् ।

रश्मिः ।

न्वये क्लिष्टत्वादित्येवकारः । अर्थ आद्यजन्तं वेश्वरपदम् । स्मृतेश्चेति सूत्रार्थसंगतिं व्युत्पाद्य शब्दविशेषसूत्रार्थसंगतिमाहुः नारायणेति । प्रथमेति अस्य चतुर्थचरणं 'तत्त्वं नारायणः परः' अग्रे च नारायणः परो ज्योतिरात्मा नारायणः परः' इति । न च द्वितीयाप्रायपाठः शङ्क्यो नारायणं महाज्ञेयं विश्वात्मानं परायणम् । इतिपूर्वार्धात् नारायणं परं ब्रह्मेति पाठानङ्गीकारात् । उत्तरार्धे तत्त्वं नारायणः परः इति प्रथमाप्रायपाठात् प्रथमाप्रायपाठः । अशक्येति । ननु तत्त्वं नारायणः परः नारायणपरो ज्योतिरिति समासप्रायपाठविरोध इतिचेन्न । कर्मधारयैरप्युभयसामञ्जस्यात्कचित्पुस्तकादौ नारायणः परं ब्रह्मेत्याद्विभेदनिर्देशाच्च । अपदभेदेति नारायणपरं ब्रह्म तत्त्वं नारायणः परः, नारायणपरो ज्योतिरित्यत्रापदभेदप्रकृते इत्यर्थः । सोर्लोप इति तत्त्वनारायणपदोत्तरीभूतस्य सोर्लोपे । तथेति अपदभेदत्वेन पाठसिद्ध्या । श्रूयमाणेति 'ततो विराडजायत' इतिश्रुत्या इत्यर्थः । कर्मकर्तृसूत्रार्थसंगतिमाहुः सहस्रेति । एवेति एतेनान्यस्य शिवस्य व्यवच्छेदात् कर्मत्वनिबन्धनं यद्ध्येयत्वं तन्निरस्तम् । ननु नारायणपरो ध्यातेति श्रुतिप्रामाण्यात् कर्मधारयमाश्रित्य कर्तृत्वमप्यस्तु ततश्च पञ्चमीसमासोस्तु नारायणपरमित्यत्र ध्यातृत्वमप्यस्तु ततश्च शंभुवमिति सहस्रशीर्षानुवाकस्थपदेन शिवे ध्येयत्वमप्यस्तु इति चेत्तत्राहुः नारायणेति । प्रथमान्तेति तथा च नारायणपरमित्यत्र सोर्लुगिति भावः । इत्येतदिति इत्येतत् संनिहितस्य एतस्य सांनिध्यतः उक्तस्य एतद्विशेषणप्रयोजनमाहुः वस्त्विति । वस्तूनां ध्येयध्यातृध्यानादीनां परिच्छेदः एतेषामेकतमत्वं तन्निवर्तकतायाः सर्वरूपत्वसमर्पकताया इति फलितम् । तस्येति नारायणपरो ध्यातेत्यस्य श्रुतिवाक्यस्य कर्तृत्वे ध्यानकर्तृत्वमात्रेऽशक्यं किं तु सर्वरूपत्वे । अग्रे

'यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेपि वा ।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' ॥

इतिश्रुतेः । 'अनुपपत्तेस्तु न शारीरः' इतिसूत्रार्थसंगतिमाहुः इत इति । प्रस्तुतेति प्रस्तुतस्य अम्भस्यपारे इतिश्रुत्या नारायणस्यात्मनो महिमा मुख्यविभूतिस्तद्रूपत्वेन । महत्त्वे उपपादनादेवकारः । महर्षित्वेति । आदिपदेन

'यो देवानां प्रथमं पुरस्तात् विश्वाधिको रुद्रो महर्षिः ।
हिरण्यगर्भं पश्यत जायमानं स नो देवो शुभया स्मृत्या संयुनक्तु' ॥

भाष्यप्रकाशः ।

'सत्त्वं विशुद्धं वसुदेवशब्दितं यदीयते तत्र पुमानपावृतः ।

सत्त्वे च तस्मिन् भगवान् वासुदेवो ह्यधोक्षजो मे मनसा विधीयते' ।

इति चतुर्थस्कन्धे सतीं प्रति शिववाक्येन, अहं ध्यायामि तं विष्णुं परमात्मानमीश्वरमित्यादिना, विष्णोराराधनार्थं मे व्रतचर्या पितामहेत्यन्तेन गारुडद्वितीयाध्याये ब्रह्माणं प्रति शिववाक्येन च तदुपबृंहणादपि रुद्रस्य ध्यातृत्वेनैव सिद्धत्वाच्च । इदं यथा तथा मया प्रहस्ते निपुणतयोपपादितमित्युपरम्यते प्रकृतमनुसरामः ॥ ८ ॥

इति द्वितीयं शब्दविशेषाधिकरणम् ॥ २ ॥

रश्मिः ।

इत्यत्रोक्तानि हिरण्यगर्भत्वजायमानत्वदेवत्वानि । विश्वाधिक इत्यत्र विश्वाधिप इतिपाठान्तरम् । तदपेक्षयार्थः । शास्त्रदृष्टया ब्रह्मदृष्टया वार्थः पूर्वत्र अधिकं तु भेदनिर्देशादिति सूत्रे आधिक्यस्य ब्रह्मधर्मत्वात् । उपक्रमस्यासंजातविरोधित्वेन दहमित्यादौ शिवादियतिहृदयाकाशस्यैव ग्राह्यत्वात् । उपक्रमादर्यकरणादेवकारः । ननु यतीनां भक्तानां हृदयाकाशः तत्र न शिवस्य

'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' ।

'परेण नाकं निहितं गुहायां विभ्राजदेतद्यतयो विशन्ति' ।

इत्यादिश्रुतिभ्यामिति चेत्तत्राहुः तत्त्वमिति । मनसेति नमसेति पाठान्तरम् । मे मम शिवस्य । अहं शिव इत्यर्थः । इदमिति इदं पूर्वोक्तमुपपादितम् । ननु भवत्वेवं तथापि शिवस्य भगवन्महिमरूपत्वं यदत्रोद्धोष्यते तत्कुत्रोक्तमिति चेदुच्यते तैत्तिरीयाणां नारायणोपनिषदीत्यादिनोपपादितम् । ननु यमन्तःसमुद्रे इति तत्तरणेशपदस्याणोरणीयान् इतिश्रुतिस्थस्याक्रतुपदवाच्यनारायणमहिमवाच्यसामानाधिकरण्यं पूर्वानुवाके तथास्तूत्तरस्मिन् समुद्रे तमित्यनुवाके विश्वशंभुवमितिपदात्

'अणोरणीयान् महतो महीयानात्मा गुहायां निहितोस्य जन्तोः ।

तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्' ॥

इति शिवस्य भगवन्महिमरूपत्वोद्धोषकश्रुतेः । तथा विश्वपतित्वादीनां परमेश्वरधर्माणां पदार्थान्तरे नारायणेनुपपत्तिरूपं दूषणमिति चेदुच्यते । यदन्तः समुद्रे कवयो वदन्ति यदक्षरे परमे प्रजा इत्यादिश्रुतिषु शंभुवाचकपदाभावात् पूर्वानुवाके नारायणोस्ति उत्तरानुवाके च समुद्रे तं विश्वशंभुवमिति समुद्रशायित्वलिङ्गेनोक्तं वस्तु विष्णुरूपं ब्रह्मरूपं

'रुद्रोऽरुद्रश्च दन्तिश्च नन्दिः षण्मुख एव च ।

गरुडो ब्रह्म विष्णुश्च नारसिंहस्तथैव च

आदित्योग्निश्च दुर्गिश्च क्रमेण द्वादशाम्भसि' ॥

इतिश्रुत्या द्वादशानां समुद्रशायित्वात् ततश्च विश्वं च शं च भुव च विश्वशंभुवम् । अमोर्लुक् । पदत्रयमुक्तनुरोधात् । प्रहस्ते पदत्रयस्य व्याप्य नारायणः स्थित इत्यनेनान्वयमनादृत्य अनन्तमव्ययं कविं समुद्रे तं विश्वशंभुवं विश्वपुरुषमुपजीवतीति योजना प्रहस्तटीकायां स्वीकृता । अन्यथा 'व्याप्य नारायणः स्थित' इतिवाक्यादनन्तमव्ययमित्यादिवाक्यस्य भेदापत्तिः । न च नारा आपस्ता अयनं यस्येति नारायणयोगोयं रूढपरोपीति ह्रस्वत्वम् । विष्णुर्नारायणः कृष्णो वैकुण्ठे विष्टरश्रवाः

अत्ता चराचरग्रहणात् ॥ ९ ॥ (१-२-३)

कठवल्लीषु पठ्यते। 'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः। मृत्युर्यस्यो-

---

भाष्यप्रकाशः।

अत्ता चराचरग्रहणात् ॥ ९ ॥ पूर्वाधिकरणे परमात्मनः सुखदुःखवेद्यत्वविचारणे जीववत् सुखदुःखभोगप्राप्तिमाशङ्क्य समाप्तौ परिहृता। स परिहारस्तदा युज्येत, यदि तस्य भोगः सिद्धः स्यात्। अतस्तत्साधनायोपोद्घातेनेदमधिकरणमारभ्यत इत्याशयेन विषयवाक्यमाहुः कठवल्लीषु पठ्यते इति द्वितीयवल्लीसमाप्तौ पठ्यते। अत्र शंकराचार्यादयोऽस्यामुपनिषदि अग्निजीवपरमात्मनां प्रकृतत्वात् त्रिकोटिकं संशयमुपगच्छन्ति। तदयुक्तम्। अग्नेः कोटिपातस्या-

रश्मिः।

इति क्रोशेन पातरि योगनिश्चयात्। पतिं विश्वस्यात्मेश्वरं शिवमच्युतमिति श्रुत्युक्तेषु शिवेश्वरत्वयोर्नारायणेनुपपत्तिः तां चैवं परिजहुः अथर्वशिरसि यत्सर्वान् परित्यज्यात्मज्ञानेन योगैश्वर्येण महति महीयते तस्मादुच्यते भगवान् महेश्वर इति श्रुतिः सर्वान् विषयान् त्याजयित्वा देवमुपदिश्य तदर्थसाधनद्वारा विषयवैरस्यमुत्पाद्याधिकारिणं कृत्वा दत्तेनात्मज्ञानेन मनःस्थिरतायै चाष्टाङ्गयोगजन्यैश्वर्येण च भक्तान् महति भूयादिति न्यायो नेदं निर्वचनमिति व्याख्यानं च। अत्राष्टाङ्गयोगजन्यैश्वर्यवानीश्वरो भक्तान् महति भूयाच्चेन्महेश्वरः। ईश ऐश्वर्ये, ईशितुं शीलमस्य स्वेशमासेति वरच्। एवं (निघास) निष्ठान्तस्येश्वरशब्दस्येश्वरे प्रवृत्तिनिमित्तमैश्वर्यं परं तु योगजन्यमिति तेन व्यवच्छिद्यते तस्य नारायणे प्रवृत्तिनिमित्तं तु स्वाभाविकैश्वर्यम्। श्रुतेरमरस्य निर्बलत्वात्। एवं नारायणविश्वपत्यादिपदानां बहूनामनुग्रहे न्याय्ये शिवपदमपि 'वेदः शिवः शिवो वेदः' इतिवाक्याद्वाचकानां वेदानां नारायणे वाच्यवाचकाभेदोपचाराद्युक्तमिति। एवं 'अनुपपत्तेस्तु न शारीरः' इतिसूत्रार्थस्पृक् प्रहस्ते किंचिदुक्तम्। कर्मकर्तृसूत्रार्थस्पृक् प्रहस्ते किंचिदुच्यते। निरुपाध्यधिष्ठेयां गुहां पद्मकोशेत्यादिभिर्महानारायणोपनिषदि विभूत्याधिष्ठातारमाह तस्याः शिखाया मध्ये इत्यनेनेति न शिवनारायणयोर्ध्येयध्यातृभावरूपं दूषणमिति। यद्वा। किंचायं मन्त्रः पूर्वतापिनीयप्रथमोपनिषदीत्यादिना परब्रह्मणि शिवशंभुरुद्रादिशब्दानां शक्तिरुक्ता। तथा च प्रहस्तः। एवं च शिवशंभुरुद्रेशानमहेश्वरादिशब्दा अपि मुख्यवृत्त्या तत्रैव प्रवर्तन्ते।

'नारायणः शिवो विष्णुः शंकरः परमेश्वरः।
एतैस्तु नामभिर्ब्रह्म परं प्रोक्तं सनातनम्' ॥

इतिवाराहेणोपबृंहणाच्चेति। न च नारायणे शिवादिशब्दानां शक्तिर्नोक्ता किं तु परब्रह्मणीति शङ्क्यम्। परब्रह्मण इदमित्थतया ज्ञानागोचरत्वेन नारायणे इदमित्थतया पर्यवसानात्। ईश्वरशब्दस्य शक्तेः पृथगपि विचारः कृतः यत्तु ज्ञानघनापरनामा सुदर्शनाचार्य इत्यादिना ॥ ८ ॥

इति द्वितीयाधिकरणम् ॥ २ ॥

अत्ता चराचरग्रहणात् ॥ ९ ॥ संगतिं वक्तुं वृत्तमनुवदन्ति स्म पूर्वाधीति। परिहृतेति संभोगप्राप्तिसूत्रे परिहृता। सिद्ध इति पूर्वतन्त्रे निषेधस्य प्राप्तिपूर्वकत्वादिति भावः। उपोद्घातेनेति 'चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः' इति लक्षणकेन। चिन्तां प्रकृ-

पसेचनम् । क इत्था वेद यत्र सः' इति । अत्र वाक्ये ब्रह्मक्षत्रयोरोदनत्वं वदन् यच्छब्दार्थस्य भोक्तृत्वमाह । तत्र संशयः । किं जीवो, ब्रह्म वेति । सच्चिदानन्दरूपत्वं सर्वोपास्यत्वं पूर्वाधिकरणद्वयेन सिद्धम् । सर्वभोक्तृत्वं साधयति ।

---

भाष्यप्रकाशः ।

संगतत्वादित्याशयेनाहुः अत्रेत्यादि । ओदनस्य चेतनभोग्यत्वेन तत्समभिव्याहृतयच्छब्दार्थभूतस्य भोक्तुश्चेतनतायास्तत्समभिव्याहारेणैव निवृत्तेरग्नेस्तथात्वाज्जीवब्रह्मकोटिक एव संशयो युक्त इत्यर्थः । नन्वेतस्मिन् विचारे का वा संगतिरित्याकाङ्क्षायां तामाहुः सच्चिदित्यादि । तथाच ब्रह्मजिज्ञासाप्रतिज्ञावाक्ये ब्रह्मण इति संबन्धषष्ठ्या ब्रह्मधर्माणामावश्यकानां संगृहीतत्वादुपासने ज्ञाने चापेक्षितेषु धर्मेषु द्वयोः सिद्धौ तृतीयस्यापृत्वस्यापि स्मरणात् प्रसङ्ग एव संगतिरित्यर्थः । नच जन्माद्यधिकरणचतुष्टयेन सच्चिदानन्दरूपत्वस्य, तद्धर्माधिकरणे सर्वोपास्यत्वस्य च प्रथमपाद एव सिद्धत्वात् पुनर्विचारस्य किं प्रयोजनमिति शङ्क्यम् । तद्विषयवाक्येषु, ब्रह्मविदिति, हिरण्मयः पुरुषो दृश्यत इति पदात् तत्र तेषां ज्ञानशेषतया विचारादुपासनायां तेषामनुपयोग इति शङ्कानिरासायावश्यकत्वात् । नच पूर्वाधिकरणे कथं सच्चिदानन्दरूपविनिगमनेति शङ्क्यम् ।

रश्मिः ।

चिन्ताम् । प्रकृतो भोगपरिहारः । तथात्वादिति अचेतनत्वात् । न च ब्रह्म तर्हि अग्निरिति श्रुतिविरोधः शङ्क्यः । परमात्मपदेनैव तद्ग्रहणात् । अत एवकारः । का वेति । उपोद्घातस्योक्तत्वेपि भोगचिन्तापि संभोगसूत्रे कृतैवेति तयैव चिन्तयोपोद्घातसंगतिसिद्धानया भोगचिन्तया नोपोद्घातसंगतिरिति हृदयवतः प्रश्नः । तथैवोत्तरयांचक्रुः तथा चेति । आवश्यकानामिति 'परास्य शक्तिर्विविधैव' इति श्रुतेरनावश्यकब्रह्मधर्मप्राप्तौ विशेषणमिदम् । आवश्यकत्वं च संदिग्धत्वम् । उपासन इति आत्मेत्येवोपासीतेत्यादिषूपासनम् । 'य एवंविद्' इत्यादि श्रुतिषु ज्ञानं माहात्म्यज्ञानं तैत्तिरीयोपनिषदि प्रकृतश्रुतिपूर्वा श्रुतिः 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः' इति । अस्यां श्रुतावादित्यपुरुषयोः स्थितयोर्वस्तुनोरेकत्वं ब्रह्ममाहात्म्यम् । तच एवमिति श्रुतौ वैवंपदेन परामृश्य विदित्यनेन तद्विषयकज्ञाननिर्वचनात् तत्त्वमसीत्यादौ जीवाभेदज्ञानम् । तयोरपेक्षिता धर्मा जगज्जन्मादिकर्तृत्वादयस्तेषु द्वयोर्जनकत्वपालकत्वयोः पूर्वाधिकरणद्वयेन सिद्धिः । सर्वत्र प्रसिद्धोपदेशादित्यधिकरणे सच्चिदानन्दरूपत्वस्य प्रतिपादनात् । आनन्दरूपप्राणशरीररूपो वाक्यार्थ इति भाष्यात् । शब्दविशेषादित्यधिकरणे सर्वोपास्यत्वस्य प्रतिपादनात् यथा चत्वार उपरवा इत्यादिभाष्यात् । तस्यां सत्याम् । प्रसङ्ग एवेति एवकारेणोपोद्घातव्युदासः । विषयवाक्येष्विति सत्यं ज्ञानमनन्तं नित्यशुद्धबुद्धमुक्तस्वभावमिति यतो वा इमानि भूतानि जायन्त इति तेषु ब्रह्मविदाप्नोति परमित्यस्यापि समन्वयकाले पदजन्यपदार्थोपस्थितेरावश्यकत्वेन व्याख्यानस्य व्याख्येयब्रह्मवित्पदसापेक्षत्वेन चापेक्षितत्वाद्धेतोः पदादित्यर्थः । अपरत्र श्रुतौ दृश्यत इति पदात् । तेषां सच्चिदानन्दरूपत्वसर्वोपास्यत्वादृत्वानां वित्यश्यत्यर्थतया पारार्थ्यं शेषलक्षणम् । उपासनायामुप समीपे स्थित्वा यथायोग्यकरणरूपायाम् । 'सर्वं खल्विदं ब्रह्म तज्जलान् इति शान्त उपासीत' इति श्रुत्युक्तायां प्रथमाधिकरणोक्तायां च प्रथमपादे सच्चिदानन्दरूपत्वादेः सिद्धावपि शब्दसंदेहवारणाच्छब्दस्य मुख्यवृत्तिर्लक्षणा वा तात्पर्यं चेति संदेहवारणादर्थसंदेहवारकेऽ-

ब्रह्मक्षत्रयोरशक्यवधयोः सर्वमारकस्य च मृत्योर्भक्षयिता जीवो न भवत्येवेति कथं संदेह इति चेदुच्यते। ओदनोपसेचनरूपकत्वाज्जीवधर्मत्वम्। स्थानाज्ञानाच न हि सर्वगतस्य स्वहृदयेऽपि प्रतिभासमानस्य, क इत्था वेद यत्र स इत्यज्ञान-

भाष्यप्रकाशः।

सर्वं खल्वित्यत्र सद्रूपतायाः,सत्यसङ्कल्पादिपदैश्चिद्रूपतायाः, अनादरत्वेनानन्दरूपतायाश्च बोधनेन तत्सिद्धेरिति । एवं द्वितीयाधिकरणे विषयवाक्येऽप्यन्तरात्मन्नित्यधिकरणनिर्देशात् तस्य च स्थानस्य सर्वसाधारण्यात् सर्वोपास्यत्वसिद्धिः स्फुटैवेति न कोऽपि शङ्कालेशः। तस्यैवान्तिमे सूत्रे भोगस्य स्मारणात् तस्यालौकिकत्वनिश्चायनायैतदधिकरणमित्युपोद्घातोऽपि संगतिरित्यपि बोधितम् । अधिकरणवैयर्थ्यमाशङ्क्य समादधते ब्रह्मक्षत्रेत्यादि । स्थानाज्ञानादिति विवृण्वन्ति नहीत्यादि। तथाच पूर्वाधिकरणद्वये सर्वगतत्वादिरूपेण सिद्धौ स्थानाज्ञानस्य वक्तुमशक्यत्वादज्ञातस्थानकत्वं जीवधर्म एवेत्यर्थः। नन्वेवं ब्रह्मवाक्यत्वसाधकपदार्थानां रूपकाज्ञानाभ्यामन्य-

रश्मिः।

स्मिन् पादे मुख्यवृत्तिस्फोरणेनार्थसंदेहवारणस्यावश्यकत्वादित्यपि लिङ्गं बोध्यम् । सद्रूपेति। नन्विदं परिदृश्यमाणं सद्ब्रह्मेति वचनव्यक्तेः कथं ब्रह्मणः सद्रूपताया बोधनेन तत्सिद्धिरिति चेन्न। ब्रह्म सदित्यपप्रयोगः मृद्घट इत्यपप्रयोगवत् । तस्मात्सदिदं ब्रह्मेत्युक्तावपि ब्रह्मणः सद्रूपता मन्तव्येत्याशयात्। सत्येति आदिपदेन भारूपादि । स्पष्टम् । अनादरेति न विद्यते आदरः संभ्रमो यस्येत्यनादरस्तत्त्वेनेत्यर्थः । आप्तकामत्वात् सर्वानपेक्षत्वेनेति यावत्। सर्वस्यानन्दापेक्षित्वेनानन्दस्य सर्वानपेक्षित्वम्। अन्यापेक्षानन्देपि अन्यस्यानन्दानतिरेकात् सर्वानपेक्षित्वम्। सच्चिदपेक्षितत्वेपि जीवानामन्यापेक्षित्वं नानन्दस्य द्वैताभावात्। तत्सिद्धेरिति सच्चिदानन्दरूपत्वसिद्धेः। एवं द्वितीयेति शब्दविशेषादित्यधिकरणे। सर्वेति हृदये ब्रह्मोपासकानां सर्वेषामुपास्यत्वसिद्धिः। स्वोक्ताया उपोद्घातसंगतेः भाष्यसूचितत्वमाहुः तस्यैवेति । द्वितीयाधिकरणस्यैव । एवकारेण प्रथमाधिकरणव्युदासः । भोगस्य भोगेऽपेक्षितत्वस्य भाष्ये स्मरणात् । अपेक्षितभोगस्यालौकिकत्व इत्यर्थः। न चापेक्षितपादार्थो रश्मौ तत्रैव विवृत इति स एतद्विरोधीति शङ्क्यम्। प्रपञ्चवद्भक्तिमार्गस्यापि स्वप्राप्तये सृष्टत्वेन भक्तिमार्गापेक्षितालौकिकभोगस्य रश्मौ विवृतत्वात् प्रपञ्चरूपापेक्षितालौकिकत्वाविवरणात्। उपोद्घातस्तु उक्तलक्षणकः। अधीति विषये संशयस्याधिकरणसार्थक्ये प्रयोजकत्वात्तदभावेनाधिकरणवैयर्थ्यमाशङ्क्य। भाष्ये। ओदनेति। रूपकमभेदरूपकम्। ब्रह्मक्षत्रं च ओदन इति ब्रह्मक्षत्रयोरोदनाभेदोक्तेः अयं हि धूर्जटिः साक्षादित्यत्राभेदरूपकम्। अयमपरः शंभुरित्यादौ ताद्रूप्यरूपकम् । रूपकस्याभेदरूपकताद्रूप्यरूपकभेदेन द्वैविध्यात् । जीवधर्मत्वम् निषिद्धकर्तृजीवधर्मत्वम्। 'काव्यादीनामसत्यत्वान्नोपयोगः कथंचन' इति निबन्धे एषामनुपयोगकथनात्। तथा चौदनं चोपसेचनं चौदनोपसेचने तयो रूपकमभेदः स एषां ब्रह्मक्षत्रमृत्यूनां ते ओदनोपचनरूपकास्तेषां भावः ओदनोपसेचनरूपकत्वं तत्त्वात्। तेषाम् ब्रह्मक्षत्रमृत्यूनामत्तृत्वस्य निषिधादत्तृत्वस्य ब्रह्मण्यभावात् जीवधर्मत्वं जीवधर्मवृत्तान्तं श्रुतिर्वक्तीति भाष्यार्थः। स्थानाज्ञानादित्तीति स्वोक्तमित्यर्थः। सर्वगतस्येति। सर्वं खल्विदं ब्रह्मेति सर्वगतत्वमाकाशस्येव घटादौ। आदिपदेनान्तरात्मन्निति श्रुत्युक्तं स्वहृदयेन्यहृदये च प्रतिभासमानत्वम् । ब्रह्मवाक्येति अचरब्रह्मक्षत्ररूपं

१. इदमिति ।

नुपपद्येत । अलौकिकसामर्थ्याच्च संदेहः ।

तत्र निषिद्धत्वाल्लौकिकभोजनवन्निरूप्यमाणत्वात् स्थानाज्ञानाच्च कश्चिदु-पासनोपचितालौकिकसामर्थ्यो महादेवादिरत्ता भविष्यति । न तु तद्विरुद्धधर्मा भगवान् भवितुमर्हति, अक्लिष्टकर्मत्वादिधर्मवान् । तस्माज्जीव एवोपासनो-पचितमहाप्रभावो वाक्यार्थ इत्येवं प्राप्तेऽभिधीयते ।

---

भाष्यप्रकाशः ।

शात्वस्य वक्तुमशक्यत्वात् कथं संदेह इत्यत आहुः अलौकिकेत्यादि । ननु जीवे कथम-लौकिकसामर्थ्यसंभव इत्याकाङ्क्षायां तत्साधयन्त एव पूर्वपक्षमाहुः तत्रेत्यादि । 'न हिंस्यात् सर्वा भूतानि' इतिश्रुत्या स्वपरप्राणवियोजनरूपाया हिंसाया निषिद्धत्वादत्र च ओदनरूपकेण तस्याः लौकिकतौल्यस्य च सूचनात् तथा । महादेवादिरित्यादिपदेन रुद्रवतोऽग्नेः संग्रहः । महादेवस्य निषिद्धभोक्तृत्वं त्वगस्त्यसंहितायां प्रथमाध्याये महादेवेनैव पार्वतीं प्रत्युक्तम् ।

'भक्त्यार्पयन्ति ये मह्यं तवापि पिशितादिकम् ।
उत्पादयन्ति चानन्दं गणेभ्यो वा सुरेश्वरि ॥
तवापि मे मदीयानामस्माकं पिशितादिकम् ।
तृप्तिमुत्पादयत्येव विधिनाऽविधिनार्पितम्' ॥

इति । तद्विरुद्धधर्मेति अनिषिद्धालौकिकभोजनकृत् । विरुद्धधर्मवत्त्व उपपत्तिः अक्लिष्टे-त्यादि । सिद्धान्तं व्याकुर्वन्तो विषयवाक्ये हेतुपक्षबोधकपदादर्शनात् कथमस्य सूत्रस्य तद्विषयत्व-

रश्मिः ।

सर्वमारकमृत्युरूपं साधकम् । रूपकमभेदोऽज्ञानं स्थानाज्ञानं ताभ्यामन्यथात्वं जीवपरत्वं तस्य । ओदनेति ओदनाभेदेन तस्या हिंसायाश्चकाराच्छ्रुतौ निषिद्धकर्तृजीववृत्तान्तस्य । महादेवेति पूर्वपक्षे महादेवस्य जीवकोटौ निवेशेन भाष्ये सिद्धान्ते मुख्यविभूतित्वं ध्वन्यते । प्रहस्ते तथोपपादनात् । रुद्रवत इति यो रुद्रो अग्नाविति अथर्वशिरःश्रुतेः । उपसंहारस्य रुद्रे प्रसिद्धिमनुरुध्याग्निविशेषणम् । रुद्रवतोग्निमतो ह्योंकारस्य ब्रह्मविद्योपनिषदि ।

'सामवेदस्तथा द्यौश्चाहवनीयस्तथैव च ।
ईश्वरः परमो देवो मकारः परिकीर्तितः' ॥

इति श्रुतेः सामवेदद्योलोकदेवेश्वरपरमाहवनीयरूपमकाररूपस्येति तु न समगृहीषुर्भोग-शरीरस्यैवाधिकृतत्वं न शरीरिणः इति । अग्नेः तत्त्वस्य सार्वजनीनत्वात् महादेवस्याहुः महादेव-स्येति पूर्वपक्षत्वाचप्रकृत्रत्वं वाक्यमाहुः अगस्त्येति । तथापीति तथा मे मह्यं मदीयानामपि अस्माकमपि पिशितादिकमामिषादिकं विधिनाऽविधिना वा । अक्लिष्टेत्यादीति ।

'ॐ सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकारिणे ।
नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे' ॥

इति गोपालतापिनीयादादिपदेन वेदान्तवेद्यत्वम् । तदविरुद्धेति भाष्यव्याख्यानभाष्यं चैतत् । स्वपदानि च पूर्यन्ते इति भाष्यलक्षणसंगमनाय । अस्येति प्रत्यक्षस्य हेतुपक्षबोधकस्य

अत्ता चराचरग्रहणात् ॥ अत्ता भगवानेव । कुतः । चराचरग्रहणात् । चरं सर्वप्राणिवधार्थं परिभ्रमन्मृत्युः । अचरं ब्रह्मक्षत्ररूपं कस्याप्यचाल्यम् । तयोरत्ता न जीवो भवितुमर्हति ।

'यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात्' इति न्यायात् । अन्नवादि-प्रतिपत्त्यर्थं तु लौकिकवद्वचनं भोक्तृत्वाय । प्रलयकर्तृत्वाजायुक्तत्वम् । सर्वत्र

भाष्यप्रकाशः ।

मितिशङ्कापरिहाराय ब्रह्मक्षत्रपदं चराचरोपलक्षकमिति लाक्षणिकव्याख्यानस्यासंगतत्वबोधनाय आहुः चरमित्यादि । अचाल्यमिति प्रवाहनित्यत्वादचाल्यम् । श्रुतौ चकारद्वयेन वर्णान्तरस्यापि संग्रहः । तेषामपि भक्तावधिकारेण मुक्तियोग्यत्वात् । देवोऽसुरो मनुष्यो वेति वाक्यात् एवं सति पूर्वोक्तस्यात्ता जीवो भवितुं नार्हति । अत्तुर्जीवभावे तदात्तानां मोक्षासंभवात् । ननु मृत्युञ्जयत्वेन संहारकत्वेन ज्ञानदातृत्वेन च तस्य प्रसिद्धत्वान्मुख्यविभूतिरूप एव सोऽस्तु, न जीवो, न वा परः । बाधकानामुक्तत्वादित्याकाङ्क्षायामाहुः यत्रेत्यादि । यथा ह्यमात्यो युवराजो वा राजकार्यं कुर्वन्नप्यन्येभ्योऽतिशयवानपि, न राजभोग्यं भुङ्क्ते तदसाधारणं कार्यं वा करोति । अत उपासनोपचयादिना जातेऽपि सामर्थ्ये न तस्य तादृशमत्तृत्वं शक्यवचनमित्यर्थः । ननु तादृश-भोक्तुर्ब्रह्मत्वे बाधकानामुक्तानां का गतिरित्यत आहुः अन्नवादीत्यादि । तुः शङ्कानिरासे । तथाच यथा सदेव सोम्येदमग्र आसीदित्यत्र ब्रह्मणः केवलत्वेऽभिसंहितेऽप्यग्रपदेन कालोपरञ्जन-प्रमादादिप्रतिपत्त्यर्थं, तथात्र भोजने लौकिकवद्वचनमपि । नचात्र निषिद्धत्वं बाधकम् । निषेधस्य जीवेऽपि देहसंबन्धानन्तरमेव प्रवृत्तेरनुज्ञापरिहारसूत्रे वक्ष्यमाणत्वादशरीरे ब्रह्मणि तदप्रवृत्तेस्तं प्रति निषिद्धत्वाभावात् । अन्यथा प्रलयेऽपि हिंसायास्तौल्यात् तत्कर्तृत्वमप्ययुक्तं स्यात् । तथा सति प्रलय एव न भवेदतस्तत्रैव भोक्तृत्वेऽपि नायुक्तत्वम् । नापि स्यानाज्ञानं बाधकमित्याहुः । सर्वत्रे-त्यादि सर्वत्र विद्यमानत्वेऽपि, हन्त तिरोसानीति श्रुतेः सृष्ट्यनन्तरं तिरोधानेनाऽज्ञायमानत्वात्

रश्मिः ।

तत उक्तं वाक्यं विषयं यस्य तत्त्वं तद्विषयत्वम् । इति लाक्षणिकेति शंकराचार्यरामानुजाचा-र्याभ्यां कृतस्य । अचाल्यमविकम्प्यम् । वर्णान्तरेति च पुनः क्षत्रं च वर्णद्वयं वैश्यशूद्ररूपं बोधन इत्यर्थः । एवं सतीति शंकराचार्यभाष्यानुरोधेन वर्णद्वये संगृहीते सति । तदेति तदा प्रलय-कालेत्तानां भक्षितानामभिसंविशन्तीत्युक्तमोक्षासंभवात् । प्रसिद्धेति अमरे श्रीभागवतेऽथर्वशि-रसि चेत्यर्थः । स महादेवः । राजभोग्यमिति वधादीत्यर्थः । तदसाधारणमिति पत्रेषु निश्च-याक्षरादिरूपम् । यत्र महादेवादावतिशयो दृष्टः एतादृशात्तृत्वरूपः सः स्वं शिवादिपदं तदर्थः शिवा-दिरूपस्तस्यानतिलङ्घनात् । अतिलङ्घनमत्रातिशये दृष्टे भवति शिवाचर्याभावापरब्रह्मायोंस्त्यतिशयादिति भाष्यार्थः । उक्तानामिति पूर्वपक्षग्रन्थ उक्तानाम् । पूर्वपक्षोक्तनिषिद्धत्वरूपं दूषणं परिहरन्तः प्रलयेत्यादिभाष्यमवतारयन्ति स्म न चात्रेति । अनुज्ञेति । इदं सूत्रं द्वितीयाध्यायतृतीयपादे 'अनुज्ञा-परिहारौ देहसंबन्धाज्ज्योतिरादिवत्' इति । न भवेदिति न च मा भूत्प्रलय इति वाच्यम् । स्याप्य-यादिति पूर्वोक्तसूत्रविरोधात् । नापि रूपकं बाधकं 'आनुमानिकमप्येकेषां शरीररूपकविन्यस्तगृ-हीतेर्दर्शयति च' इति सूत्रे रूपकस्यानिषिद्धकर्तृजीवविषये स्वीकारात् । सर्वत्रेति भाष्यं विवरी-तुमाहुः नापीति । भवतीति क्रियापदस्य । सर्वत्रेति यतः सर्वत्रेति पदाध्याहारः कर्तव्यः प्रमेऽत इति

विद्यमानस्याप्यज्ञायमानत्वात् फलतः स्थानाज्ञानमुक्तम् । ब्रह्मक्षत्रयोरपि मोक्षापेक्षित्वान्मृत्युसंबन्धमात्रेण भगवति भोक्तरि प्रवेशार्थं योग्यरूपत्वमेवौदनत्वम् । प्राणानां तत्रैव समवलयान्मृत्युरपि तत्रैव लीनोऽग्रे जन्ममरणाद्यभावाय भगवत्येव प्रविशति । तस्मादस्मिन् वाक्ये ब्रह्मक्षत्रमृत्यूनां भोग्यत्वेन ग्रहणादत्ता भगवानेवेति सिद्धम् ॥ ९ ॥

भाष्यप्रकाशः ।

प्रत्यक्षरूपस्य फलस्याभावेन तदभिसंधाय स्थानाज्ञानमत्रोक्तं, न तु स्थानविषयकं परोक्षज्ञानमप्यभिसंधायातो न दोषः । ननु भवत्वेवं, तथापि क्लिष्टकर्मत्वं कथं निवर्ततामित्यत आहुः ब्रह्मक्षत्रेत्यादि । मोक्षापेक्षिणो ह्यत्रादनीयत्वेनाभिप्रेयन्ते । ते च देहसंबन्धे निवृत्ते मुच्यन्ते, न तु सदेहाः । अतो यथा तण्डुलानां वह्न्यादिसंबन्धेनावयवशैथिल्येन विकृता वोदनत्वं; तथात्र मोक्षापेक्षिणां भोक्तरि भगवति प्रवेशार्थं कथंचिन्मृत्युसंबन्धमात्रेण योग्यरूपत्वमेवौदनत्वम् । यथा कंसादीनां, कुरुपाण्डवसैन्यानां च । अत एव, तदेव रूपं दुरवापमाप, 'यासन्त्यदर्शनमलं बलमीमपार्थव्याजाह्वयेन हरिणा निलयं तदीय'मित्यादीनि वाक्यानि । न चैवं मृत्योरुपसेचनत्वासंभवः । अत्रात्र वै मृत्युर्जायत इत्यनेकमृत्युपक्षे, अशनया मृत्युरेवेत्येकमृत्युपक्षेऽपि मुच्यमानब्रह्मक्षत्रप्राणानामत्रैव समवनीयन्ते प्राणा इति श्रुतेस्तस्मिन्नेव लयेन तद्धर्मात्मकोशनायादर्शनात् ।

रश्मिः ।

फलस्येति चक्षुरादिफलस्य प्रत्यक्षरूपफलस्याभावमभिसंधाय । परोक्षेति शाब्दज्ञानमित्यर्थः । न च शाब्दापरोक्षमस्त्येवेति शांकराशङ्का प्रभवत्यनेति शङ्क्यम् । सिद्धान्तानुसारेण शाब्दप्रत्यक्षानङ्गीकारात् । दोषो ब्रह्मपरत्वे स्थानाज्ञानरूपः । क्लिष्टेति कृष्णायाक्लिष्टकारिणे इति श्रुतिप्रसिद्धमिदं प्रतियोगिक्लिष्टकारिरूपक्लिष्टकर्म रूपं तस्य भावः क्लिष्टकर्मत्वम् । अधीतवेदान्तानां ब्रह्मजिज्ञासार्हत्वात् ब्रह्मपदेनैव तद्धर्मस्फूर्तिः । कथंचिन्मृत्यिवति मृत्युरत्यन्तविस्मृतिरिति वाक्यात् कथंचित्प्रलयकालाद्यनुसंधानप्रकारेण देहविस्मरणमात्रेण । कंसेति अत्रादिपदेन प्रलम्बजरासंधौ तयोः कालानुसंधानं बलमीमरूपैः प्रकारैः मृत्युसंबन्धमात्रेण योग्यरूपत्वं कुरुसैन्यानां युयुधानो विराटश्चेत्यादिगीतोक्तानां पाण्डवसैन्यानां भवान् भीष्मश्च द्रोणश्चेत्याद्युक्तानां पार्थान्योन्यप्रकारैस्तथा । अत एवेति मोक्षार्थं मृत्युसंबन्धादेवेत्यर्थः । हरिणेति आविष्टेन प्रथमस्कन्धे तृतीयाध्याये द्वयोरावेशित्वं भीमस्य तु नरः फाल्गुनः इत्याद्या विशेषावेशिनो हरेरिति वैष्णवतन्त्राद्बोध्यम् । अन्येषां

'यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम्' ॥

इति वाक्यात्तेजोंशसंक्रमो बोध्यः । इत्यादीनीति । 'पश्यतां सर्वलोकानामलोकं समपद्यत' इत्यादीनि । मृत्योर्विस्मरणात्मकस्य ब्रह्मणि सर्वज्ञतया प्रवेशासंभवात् उपसेचनत्वासंभवमाशङ्कमानस्य शङ्कामपनुदन्तः न चैवमिति । स्वयमत्स्यमानं सदन्यस्यादनहेतुरुपसेचनं सिच्यतेऽनेन करणाधिकरणयोश्चेति ल्युट् । अत्रात्रेति स्थाने स्थाने । अनेकेति शतमृत्युपक्षे अनिलो मृत्युरग्निपक्षे जायत इति श्रुतेः । अशनयेति वर्णविकारः अशनाया अशनायावानित्यर्थः । छान्दसः प्रत्ययः । एकमृत्यिवति नित्यमृत्युपक्षेऽपि 'प्रत्यर्प्य मृत्यवे पुत्रान्' इत्यस्य सुबोधिन्यां दशमे प्रथमाध्याये स्पष्टमिदम् । मुच्यमानयोर्ब्रह्मक्षत्रयोः प्राणानामित्यर्थः । मृत्युरपीति भाष्यं विवृण्वन्ति स्म तद्धर्मेति । अशनायेति वैदिकं पदं पूर्वमुपपादितम् । अशनाया इति वर्णविकारपरित्यागः अशनाया हि

ननु किमित्येवं प्रतिपाद्यते । पूर्वपक्षन्यायेन यमोऽन्यो वा मृत्युं साधनीकृत्य स्ववशो सर्वं करोतीति जीववाक्यमेव किं न स्यादित्यत आह ।

---

भाष्यप्रकाशः ।

विरूपो मृत्युरपि तेषां जन्ममरणाद्यभावाय भगवत्येव प्रविशतीति तस्योपसेचनत्वमपि युक्तमेव । एवं सिद्धे तेषामोदनोपसेचनभावे तदत्तृत्वेनाक्लिष्टकर्मत्वमपि भगवतोऽनायासेनैव सिद्धम् । बुभिक्षित्सव्रणादिव्यापभिवारकागदङ्कारकृतिवत्सर्वोपमफलत्वात् । एवं प्रलयेऽपि सुषुप्तिवत्सुखजनकत्वमेव । नानासंसृतिक्लेशनिवृत्तिफलकत्वात् । तस्मादत्र बाधकानामभावात् साधकयुक्तीनां सत्त्वादस्मिन् वाक्येऽत्ता भगवानेवेति सिद्धमित्यर्थः । किञ्च । मोक्षापेक्षिब्रह्मक्षत्रप्राणानामुत्क्रमणाभावेनान्तःप्रकटे भगवत्येव लयादन्तर्यामित्वमपि सिद्धं ज्ञेयम् ॥ ९ ॥

सूत्रान्तरमवतारयितुं चोदयति नन्वित्यादि । अयमर्थः । विषयवाक्ये पश्वादिबोधक-

रश्मिः ।

मृत्युरिति बृहदारण्यकश्रुतिस्थप्रसिद्धं पदं वा । आदिपदेनात्यन्तविस्मृतिरूपो मृत्युः । प्रविशतीति विस्मरणरूपो मृत्युः स्वविस्मरणरूपः सन् सार्वज्ञ्यविघटकतया स्मरणात्मकज्ञानरूपत्वेन प्रविशति न तु विस्मरणत्वेन रूपेणेत्यर्थः । अत्यन्तविस्मरणस्यात्यन्तविस्मरणत्वात् । अशनया मृत्युः स्वाभावरूपतृप्तिरूपेण प्रविशति । इतीति । युक्तत्वे हेतुः । अनायासेनेति । सुप्रसिद्धत्वादिति भावः । न ह्यदन् क्लिष्टकर्मा भवति । ननु दृष्टान्तमात्रेण कथं क्लिष्टकर्मत्वं निवर्ततामिति चेत्तत्राहुः बुभिक्षित्स्येति । अगदं करोतीत्यगदङ्कारः । कर्मण्यण् भिषगित्यर्थः । तथाच फलतोऽक्लिष्टकर्मत्वं विवक्षितमिति भावः । कृतप्रयत्नापेक्षत्वाचाक्लिष्टकर्मत्वं कृतप्रयत्नापेक्षसूत्रभाष्ये स्फुटम् । तस्येति क्लिष्टकर्मणः उत्तमं फलं व्रणादिनिवृत्तिर्दृष्टान्ते मोक्षो दार्ष्टान्तिके यथाकथंचिद् दुःखोत्तरं सुखदृष्टान्तमुक्त्वा नानाक्लेशानन्तरं दुःखाभावोत्तरं सुखदृष्टान्तमाहुः एवमिति । सुषुप्तिवदिति सप्तम्यन्ताद्वतिः सुखं दुःखाभावरूपं एवकारेण दुःखव्यवच्छेदः । नानेति प्रलयसुषुप्त्योर्नानेत्यादिः । भाष्ये । तत्रैवेति जीवेष्वेव । एवकारेण मनो व्यावर्त्यते स्मरणाभावरूपमृत्योर्मनोधर्मत्वं कामः संकल्प इति श्रुतौ धीनां मनोधर्मत्वेनोक्तेः । प्रतियोग्यभावयोः सामानाधिकरण्यनियमात् । अतस्तत्रैव लीनः लीङ् श्लेषणे श्लेषं प्राप्तोऽत्र मोक्षप्रलयोत्तरकाले जन्ममरणे आदिपदेन तज्जन्यभयं तेषामभावाय स्वस्य जीवानां च मृत्युरपि भगवत्येव प्रविशति मृत्युर्यस्योपसेचनमिति श्रुतेरुपसेचनस्य भगवति प्रवेशस्यौचित्यात् । प्रकृते । इत्यर्थ इति तथा च श्रुतिः अग्नि तर्हि अग्निरिति न चैवं रुद्रोऽत्ता इति सिद्धम् । यो रुद्रोऽग्नाविति श्रुतेरिति वाच्यम् । अग्नि तर्हि अग्निरिति श्रुतेरग्नेरत्तृत्वे सिद्धे अग्निनिष्ठस्य रुद्रस्य द्रुतमनुपलभ्य शिवरूपत्वात् । तथा च श्रुतिः 'अथ कस्मादुच्यते रुद्रो यस्मादृषिभिर्नान्यैर्भक्तैर्द्रुतमस्य रूपमुपलभ्यते तस्मादुच्यते रुद्र' इति । भाष्ये एवकारेण महादेवादिव्यावृत्तिः सूत्रार्थस्तु अत्ता भगवान् चराचरग्रहणात् । चराचराणामन्तःप्रवेशनादिति । भाष्ये न्यायचर्चा नोरीकृतापि कस्यैचित्प्रयोजनाय भाष्यप्रकाशे स्वीकृतामाप्युच्यते । तथा च अत्तृत्वस्य साध्यत्वे हेतुसाध्यतावच्छेदकैक्यप्रसङ्गेन हेतोः साध्यसमत्वापत्तिः । अतोऽनुवृत्तं ब्रह्म भगवत्पदेन गृहीत्वा भगवत्त्वं प्रसाध्यते । न चैवं सूत्रे पर्वतो धूमादितिवदप्रयोगापत्तिरिति वाच्यम् । ईदृशस्थले स्वल्पाक्षरमिति सूत्राददोषात् । चोदयन्तीति शेषेति शेषः । चोदनस्य भूतकालिकत्वात् । पश्वादीति प्रसेलप्र संदिग्धसाध्यवत्तदाभावात् पक्ष-

प्रकरणाच्च ॥ १० ॥

प्रकरणं हीदं ब्रह्मणः । न जायत इत्यारभ्याऽऽसीनो दूरं व्रजतीत्यादिना माहात्म्यं वदन्नन्ते, यस्य ब्रह्म च क्षत्रं चेत्याह । अतः प्रकरणानुरोधात् पूर्वोक्तप्रकारेण ब्रह्मवाक्यत्वमिति । अन्यथा प्रकृतहानाप्रकृतकल्पने स्यातामिति चकारार्थः ॥ १० ॥

इति प्रथमाध्याये द्वितीयपादे तृतीयं अत्ता चराचरेत्यधिकरणम् ॥ ३ ॥

---

भाष्यप्रकाशः ।

पदाभावेऽपि चराचरादिपदैर्मृत्य्वरादिगतं धर्ममादृत्य योगवृत्त्या तानि बोधयित्वा तेषां ग्रहणस्य लिङ्गत्वं च कल्पयित्वा निर्बन्धेन ब्रह्मवाक्यत्वकल्पनापेक्षया पूर्वपक्षोक्तानां निषिद्धत्वादीनां शीघ्रं बुद्ध्यारोहात् तेन न्यायेन जीव एवात्र ग्रहीतुमुचितः । स चेत् साधारणो न समर्थस्तदा संहारेऽधिकृतो यमो देवतारूपं मृत्युं, देवतारूपो मृत्युर्वा रोगादिरूपं मृत्युं साधनीकृत्य ब्रह्मक्षत्रोपलक्षितं सर्वं प्राणिजातं स्ववशे करोतीति युक्तम् । अतोऽस्य जीववाक्यत्वमेवादरणीयमिति । अत्र सूत्रं पठित्वा व्याचक्षते ।

प्रकरणाच्चेति ॥ १० ॥ जीवप्रश्नोत्तरश्रवणानन्तरम्, अन्यत्र धर्मादन्यत्राधर्मादिति प्रश्नान्तरे कृते सर्वे वेदा यत् पदमामनन्तीत्यादिना प्रकरणान्तरं प्रवृत्तमत इदं ततोऽतिरिक्तस्य ब्रह्मणः प्रकरणम् । तत्र सर्वे वेदा इति मन्त्रे संक्षेपेण कथनं प्रतिज्ञाय, ॐकारस्य संक्षेपरूप-

रश्मिः ।

बोधकपदाभावः । आदिपदेन साध्यहेतुबोधकपदाभावौ । मृत्य्वादीति ब्रह्मक्षत्रे आदिपदेन ग्राह्ये । धर्मं चरत्वरूपमचरत्वरूपं च । वेदान्ते वृत्त्यन्तराभावादाहुः योगवृत्त्येति तदुक्तम्—

‘ये धातुशब्दा यत्रार्थे उपदेशे प्रकीर्तिताः ।
तथैवार्थो वेदराशेः कर्तव्यो नान्यथा क्वचित्’ ॥

इति पक्षावलम्बने । तानि ब्रह्मक्षत्रमृत्युरूपाणि । लिङ्गत्वं ब्रह्मवाक्यत्वे लिङ्गत्वम् । तेनेति पूर्वपक्षन्यायेन । अत्रेति हेतुभूताशङ्कायाम् । भाष्ये । इत्यत इति शङ्कारूपहेतोः सूत्रमाहेत्यर्थः ॥ ९ ॥

प्रकरणाच्च ॥१०॥ प्रकरणं प्रकृष्टं साधकतमम् । ‘साधकतमं करणम्’ इति सूत्रात् । प्रकरणस्य दूषणराहित्यं यथा अन्नमयादिषु विकारमयडंशेषु प्रायपाठे च पतितानन्दमये साधकतमं विकारे मयटः प्रायपाठः तत्प्रकरणपरं द्व्यचश्छन्दसीति सूत्रेण दूषणरहितं नास्तीति प्रकरणाभावान्न मयट् । उपक्रमो वा प्रकरणं देशकालौ प्रकरणमिति निबन्धटीका तदपेक्षया प्रकरणाधिकार एव ग्राह्य इति ग्रन्थश्च ताभ्यां देशकालाधिकारः प्रकरणम् । प्रकृतमिति परे इत्याशयेनाहुः जीवेति । येयं प्रेते विचिकित्सा मनुष्येऽस्तीति जीवप्रश्नः हन्त तदिदं प्रवक्ष्यामीत्युत्तरं तयोः श्रवणानन्तरमित्यर्थः । कृत इति प्रचेतसा कृते । प्रकरणेति प्रकरणं प्रकृष्टं साधकतमं देशकालौ जीवप्रसाधनादेशकालादन्यब्रह्मसाधनं देशकालरूपं प्रकरणान्तरं ब्रह्मप्रसाधनं देशकालात्मकं प्रकृतमित्यर्थः । ब्रह्मण इति ब्रह्मणः प्रसाधनं देशकालरूपम् । ब्रह्मणः प्रकृतमिति त्वनन्वितम् । तथा च संकर्षणार्थीविसाध्यं यत्कारणं प्रकरणं परमात्मनो ‘न जायते म्रियते वा विपश्चित्’ इत्यादिप्रकृतमस्य च न्याय्यमिति न च प्रकरणाच्चेति चकारार्थो यो न जायत इत्यादुक्त इति भाष्यस्य । किञ्च

भाष्यप्रकाशः ।

तामुक्त्वा एतद्ध्येवाक्षरं ब्रह्मेति मन्त्रद्वये सर्वफलदायकत्वादिना तत्प्रशंसामुक्त्वा तत्प्रतिपाद्यस्य ब्रह्मणो माहात्म्यं, न जायत इत्यादिभिरष्टभिर्मन्त्रैर्वदन्ते तस्यैवावृत्तं मृत्युरेवाह । तद्यदि यमो देवतारूपो मृत्युर्वावृत्वेनाभिप्रेतः स्यात् तदा, न जायत इति मन्त्रे तस्य जननमरणाभावं न वदेत् । पुराणादिषूभयोरपि जन्यत्वस्मरणात् । यमो यमी श्राद्धदेव इति, तत्राऽपानस्ततो मृत्यु-रिति । वेदेऽपि न मृत्युरासीदमृतं न तर्हीति । जन्यत्वं च नश्वरत्वव्याप्यम् । तथा आसीनमन्त्रे,

रश्मिः ।

चकारार्थत्वात् । तथा च भाष्यम् । 'क इत्था वेद यत्र सः' इति च दुर्विज्ञानत्वं परमात्मलिङ्गमिति । रामानुजभाष्यं प्रकरणं चेदं परस्यैव ब्रह्मणः 'महान्तं विभुमात्मानं मत्वा धीरो न शोचति' इत्यादि प्रकृतं 'क इत्था वेद यत्र सः' इत्यपि हि तत्प्रसादादृते तस्य दुरवबोधत्वमेव पूर्वप्रस्तुतं प्रत्यभिज्ञायत इति प्रकरणलिङ्गाभ्यां पर एव स्थितमिति भास्कराचार्यभाष्यम् । सर्वे इति ।

'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्' ॥

इति मन्त्रे तपांसि तपःप्रतिपादकपुराणानि । उक्त्वेति तस्मिन्नेव मन्त्रे ओमित्येतत् इति पदत्रयेण । ए इति भिन्नं वा पदम् । इति मन्त्रेति ।

'एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम् ।
एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ।
एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् ।
एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते' ॥

इति मन्त्रद्वये । आङ्पूर्वो लबि शब्दावस्रंसयोर्धातुः भ्वादिरात्मनेपदी । मह पूजायां पूज्यते । सर्व-फलेति यो यदिच्छति इति श्रुत्युक्तसर्वफलदायकत्वम् । आदिपदेन ब्रह्मलोके पूज्यत्वम् । जननेति जनन-मरणयोरभावम् । जन्यत्वेति । क जन्यत्वस्मरणमित्यत्राहुः यम इति । अष्टमस्कन्धत्रयोदशाध्यायेऽस्ति द्वितीयं द्वितीयस्कन्धदशमाध्याये मरणं क्व स्मर्यत इति चेच्छृणु मृत्युर्वा न म्रियेत चेदिति श्रीभागवते 'मृत्युर्जन्मवतां वीर देहेन सह जायते' एवं यमस्यापि शापाज्जननमरणाभ्यां शूद्रत्वम् । ननु न मृत्युरासी-दिति नश्वरत्वं मृत्योः श्रूयते न जन्यत्वमिति चेत्तत्राहुः जन्यत्वं चेति । नश्वरत्वस्य या व्याप्तिस्तज्ज्ञाप्ति-विशिष्टं लिङ्गमित्यर्थः । नश्वरं जन्यत्वादित्यत्र ध्वंसे साध्याभाववति हेतोर्वृत्तेरसाधारण्यमतो जन्यत्वं चेत्यादौ जन्यत्वं च जन्यभावत्वमिति ज्ञातव्यम् । ध्वंसप्रागभावयोः सिद्धान्ते कारणावस्थाविशेषत्वात् । कार्यस्थितिप्रतिकूलां कारणावस्थां पश्यत इह घटो ध्वस्त इत्यादिप्रत्ययात् । न चाभावत्वमुख-प्रतीतिर्बाधिकेति वाच्यम् । तमसि भावमुखप्रतीतेरिवात्राप्यभावमुखप्रतीतेरबाधकत्वात् । न च ध्वंसानङ्गीकारे नष्टस्य पुनरुन्मज्जनापत्तिरिति वाच्यम् । तादृगवस्थातिरोभावेन निमित्तविघटनेन च तथापादयितुमशक्यत्वात् । यत्र चावस्थातिरोभावो निमित्तान्तरसमवधानं वा तत्रोन्मज्जनेऽपि बाधका-भावात् । ताम्रादिघटेषु भङ्गोत्तरमपि निमित्तान्तरेण पुनः संधानदर्शनात् । न च तद्घटान्तरमेवेति वाच्यम् । प्रत्यभिज्ञाबाधापत्तेः । आश्रमवासिकपर्वस्थकुरुपाण्डवसैन्यस्य अपहृततत्तच्छरीरस्य पुनरु-ज्जीवनस्य भारतादौ दर्शनात् । तादृशस्थले पदार्थान्तरत्वाङ्गीकारे ।

रश्मिः ।

'एकां रात्रिं विहृत्यैवं ते वीरास्ताश्च योषितः ।
आमन्त्र्यान्योन्यमाश्लिष्य ततो जग्मुर्यथागतम्' ॥

इत्यादिवाक्योक्तविहारादीनां विरोधापत्तेः । तक्षकुकृतकश्यपनिवर्तनस्यापि वैयर्थ्यापत्तेश्च । न च ध्वंसादिशब्दाभिलापबाधः । कार्यकारणादिशब्दवदेतेषामपि सापेक्षवृत्तिकत्वेनावस्थामपेक्ष्याभिलापोपपत्तेः । तस्माद् ध्वंसो नावस्थातिरिक्तः । एवं कार्योत्पत्त्यनुकूलां कारणावस्थां पश्यत एवेह कपाले घटो नास्तीति प्रत्ययात् न प्रागभावोप्यतिरिक्तः । इत्यत्र प्राञ्चः । उत्पन्नस्य घटादेः पुनरुत्पत्त्यापत्त्या प्रागभावोतिरिक्तः । तन्न । कालोपाधीनां क्रमिकत्वेन निमित्तसामग्रीप्रविष्टस्य कालोपाधेस्तदानीमभावात् । जन्यद्रव्यत्वावच्छिन्नं प्रति जनकतया क्लृप्तस्य समवायसंबन्धावच्छिन्नप्रतियोगिताकद्रव्याभावस्याभावाच्च तदापत्तिः । यदि जन्यद्रव्याभावस्य जन्यद्रव्योत्पत्तिकालिकौत्पत्तिकध्वंसाभावस्य वा हेतुत्वमित्यत्र विनिगमनाविरहात्तादृशद्रव्याभावस्य तादृशाभावानां च कारणताकल्पनापेक्षया लाघवादेक एव प्रागभावो हेतुः कल्प्यते इति विभाव्यते तदापि तत्कालोत्पत्तिकानन्तपदार्थप्रतियोगिकानामनन्तानां प्रागभावानां विनिगमनाविरहेण हेतुत्वकल्पनस्यावश्यकत्वात् प्रागभावरूपधर्मिकल्पनाधिकेति न प्रागभावो युक्तिसह इत्यपि वदन्ति । केचित्तु स्वानधिकरणतन्तुषु पटोत्पत्तिवारणाय सर्वेषां तन्तूनां तत्संयोगादीनां च तत्तद्व्यक्तित्वेन हेतुत्वकल्पनं सहस्रतन्तुकपटस्थले आवश्यकमिति तदपेक्षया प्रागभावस्यैव लघुत्वेन हेतुत्वौचित्यात् । न चैवं द्वित्रिचतुर्षु तन्तुषु सहस्रतन्तुकपटोत्पत्तिः स्यादिति वाच्यम् । चरमसंयोगयुक्तेस्तद्व्यक्तित्वेन हेतुत्वोपगमात् । न चैवं स्वानधिकरणतन्तुष्वपि पटोत्पत्तिर्न भविष्यति चरमसंयोगाभावात् तथाच प्रागभावकल्पनमनुचितमिति शङ्क्यम् । चरमसंयोगस्य यद्धेतुत्वं तन्न समवायघटितसामानाधिकरण्यप्रत्यासत्त्या तथा सति इतरेष्वपि तन्तुषु समवायेन पटोत्पत्तिदर्शनात् तत्र च समवायेन चरमसंयोगाभावेन व्यभिचारादतः कालिकसंबन्धेन तत्पटत्वावच्छिन्नं प्रति कालिकसंबन्धेन चरमोत्पन्नसंयोगव्यक्तेर्हेतुत्वमावश्यकम् । एवं च कालिकसंबन्धेन स्वानधिकरणतन्तुष्वपि चरमसंयोगस्य सत्त्वेन पटोत्पत्तिनिवृत्त्यर्थं प्रागभावस्य हेतुतोचितेत्याहुः । कश्चित्तु पूर्वोक्तयुक्त्या भवतु प्रागभावोतिरिक्तस्तथापि न तस्य सप्रतियोगित्वं मानाभावादित्याह तदपि न । पूर्वोक्तरीत्या निमित्तसामग्रीप्रविष्टकालोपाधेः स्वानधिकरणतन्तुषु चरमसंयोगस्य कालिकसंबन्धेन सत्त्वेप्यभावात् । ननु पक्के घटे स्पर्शरूपरसगन्धानां पाकजानामुत्पत्तिः तत्रोपादानस्य निमित्तसामग्र्याश्च सत्त्वेन विलक्षणस्पर्शरूपादिप्रागभावं विना न निर्वाह इति चेत्तादृशपरिणामिस्पर्शादिस्वभावादेव सिद्धेः । ननु यत्र पक्के स्वभावस्य धर्मत्वेन तत्कल्पनेपि प्रागभावापेक्षया लाघवात् । एवमव्याप्यवृत्तिसंयोगात्तत्तदवच्छेदेनोत्पत्तौ स्वभावस्यैव नियामकत्वं ज्ञेयम् । न चेह कपाले घटो नास्तीति प्रतीतेर्निर्विषयत्वापात इति वाच्यम् । तस्या घटत्वावच्छिन्नप्रतियोगिताकाभावविषयतयात्यन्ताभावविषयत्वात् । नापीह कपाले घटप्रागभाव इति प्रतीतिस्तत्र मानं तस्या एवाभावात् । तदाग्रहेपि प्रतिवादनादरणीया असार्वजनीनत्वात् । किंचोक्तप्रतीत्या आपाद्यमानः प्रागभावः किं घटत्वावच्छिन्नप्रतियोगिताक एक उत तत्तद्घटप्रतियोगिकोनेकः । नाद्यः, सर्वेषु घटोपादानेषु तत्सत्त्वात् सर्वेभ्यः कपालेभ्यः सर्वघटोत्पत्त्यापत्त्या नियमभङ्गापत्तेः । न द्वितीयः ।

१. अवधारणे नञ् ।

भाष्यप्रकाशः ।

कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हतीति स्वस्य तस्य च भेदेन ज्ञातृज्ञेयभावं च न वदेत् । अत इदं मृत्य्वादिदेवताव्यतिरिक्तस्य ब्रह्मण एव प्रकरणम् । तथा सत्यासीनादिमन्त्रेषु यथा विरुद्ध-धर्माधारत्वादिरूपं तन्माहात्म्यमवदत्तथात्रोक्तविधातृत्वस्वरूपमपीति तथेत्यर्थः । शेषं स्पष्टम् ।

रश्मिः ।

अभावज्ञानस्य धर्मिप्रतियोगिज्ञानाधीनतया तदानीं प्रतियोगिज्ञानाभावेन तत्प्रतीत्यनुदयापत्तेः । न च प्रतियोगिज्ञानस्य घटत्वेन रूपेण सत्त्वात् प्रत्ययो निर्बाध इति वाच्यम् । तथा सतीह घटत्वाव-च्छिन्नप्रागभावः इति तस्या आकारात् प्रागभावस्यापि सामान्यापत्त्या पूर्वकल्पीयदोषापत्तेः । ननु प्रागभावानङ्गीकारे कारणशरीरप्रविष्टस्य पूर्ववर्तित्वस्य कथं ग्रहणम् । तस्य प्रागभावावच्छिन्न-समवर्तित्वरूपतया प्रागभावग्रहाधीनत्वादिति चेन्न । कार्यविषयकाग्रिमजननज्ञानेनैव तद्ग्रहणसंभ-वात् । तादृशज्ञानस्य लोकप्रवाहादेव संभवात् । प्रागभावग्रहाधीनत्वाङ्गीकारे तु प्रागभावस्यापि कारणत्वेन तन्निष्ठपूर्ववर्तित्वस्यापि प्रागभावघटिततया प्रागभावज्ञानाधीनज्ञानकत्वेनात्माश्रयापत्तेः । तस्मान्न कारणावस्थातिरिक्तः प्रागभावः । ननु कारणावस्थयापि न नियमसिद्धिः । तथाहि । कारणा-वस्थायाः कारणफलोपधानदशारूपत्वेन येभ्यः कारणेभ्यो यत्कार्यमुत्पद्यते तत् कार्यं प्रति तेषां यदि कारणत्वेन फलोपधानं तदा वटबीजादपीक्षूत्पत्तिप्रसङ्गः । यदि च कारणविशेषरूपेण कपाल-त्वादिना तथात्वं तदाप्येतेभ्यः कपालेभ्यः एतद्घटोत्पत्तिनियमासंभवः । तज्जातीयं प्रति तस्यापि सामान्यत्वात् । अथैतत्कपालत्वादीनां तथात्वं तदा विनिगमनाविरहो बहुकपालजन्यं घटं प्रति तावत्सु तथात्वं कल्पनीयमिति गौरवग्रासश्चेति न तथापि नियमसिद्धिरिति चेन्नैवम् । सत्कार्यवादे कार्यस्य कारणे सत एव ततोभिव्यक्तेः । यत्र यत्कार्यसत्ता तत एव तदुत्पत्तिरिति सुखेन नियम-संभवात् । न च बहुकपालजन्ये घटादौ गौरवग्रासः समुदायस्यैव तत्र कारणत्वात्, एकस्यैकमेव कारणमिति सिद्धान्तात् इति दिक् । अतः सुष्टूक्तं जन्यत्वं च नश्वरत्वव्याप्तमिति ।

तथासीनेति 'आसीनो दूरं व्रजति शयानो याति सर्वतः, कस्तं मदा'इत्यादिमन्त्रे । स्वस्येति स्वस्य मृत्योः, तस्यात्तृत्वेनाभिप्रेतस्य भेदेन । उक्तेति उक्तविधं विरुद्धं यदत्तृत्वं तस्य स्वरूपम् । तथेति ब्रह्मप्रकरणत्वेन प्रकारेण यद्यप्ययं भाष्यार्थः । वाक्यैकवाक्यता प्रकरणं उभयं किमित्या-काङ्क्षायामाहुः न जायत इति । न जायत इत्यादिभिरात्मनो माहात्म्यवतो वचनं यस्य ब्रह्म च क्षत्रं चेत्यत्र यच्छब्दार्थबाहुल्येप्येकार्थनियमनार्थं त्यदादीनामुत्सर्गतः प्रधानपरामर्शित्वात् । एवं च न जायत इत्यादीनां ब्रह्म च क्षत्रं चेत्यस्यैकवाक्यता माहात्म्यवतो यस्य ब्रह्म च क्षत्रं चौदन इत्येवम् । अतः प्रकरणानुरोधात् पूर्वोक्तसिद्धान्तोक्तप्रकारेण ब्रह्मवाक्यत्वमिति जैमिनीयन्यायमा-लाविस्तरोक्तप्रकरणलक्षणानुरोधी तथापि भाट्टभास्करैः क्रियाया एव चेदं विनियोजकं न सिद्धवस्तु-न इत्युक्तेर्ब्रह्मणः सिद्धवस्तुनो न विनियोजकम् । रामानुजाचार्यभाष्येप्येवं व्याख्यान इदं दूषणं ज्ञेयम् । अतः प्रकरणं साधकतमं करणमिति सूत्रोक्तं प्रकृष्टं करणं प्रसाधकतमं रूपं विवक्षितम् । चोक्त-मिति सिद्धार्थकथनपरं चकारार्थपरं च भाष्यं स्पष्टम् । अधिकरणत्रय्याः संगतिमुक्त्वा प्रलयकर्तृत्वा-द्यायुक्तत्वमिति भाष्याद्यन्माद्यधिकरणेन संगतिं वदन्तस्तत्र प्रलयकर्तृत्वमर्थो यस्य ब्रह्म च क्षत्रं चेत्तनया वा स्फुरितः प्रलयकर्तृत्वमर्थः कृष्णायाक्लिष्टकारिणे इति श्रुतिविरुद्ध इव ज्ञातः स विचारितः

भाष्यप्रकाशः ।

अत्र चामृतत्वस्य ब्रह्मणि निधायनात् प्रलयकर्तृत्वनिर्वाहकसामर्थ्यमवसरसंगत्योक्त्वा तदसंभवो निवारितः । सर्वे वेदा, एतद्ध्येवाक्षरमित्युपक्रमात् सर्वरूपत्वात्मकं वैशेष्यमपि जीवतुल्यभोगाभावार्थं सूचितं ज्ञेयम् ।

माध्वास्तु, स यद्यदेवाऽसृजत तत्तदत्तुमध्रियत सर्वं वा अत्तीति सर्वमदितेरदितित्वमिति बृहदारण्यकीयाभिब्राह्मणस्थश्रुतिं विषयवाक्यत्वेनोदाहरन्ति ।

विज्ञानभिक्षुस्तु,

'य इमं मध्वदं वेद आत्मानं जीवमन्तिकात् ।
ईशानं भूतभव्यस्य ततो न विजुगुप्सते' ॥

इति कठवल्लीस्थाम् ।

अमृतत्वरूपस्य विषयस्य तत्र स्फुटत्वात् । अमृतं च प्रलयकर्तृत्वमेव सर्वे व्याकुर्वन्ति ।

रश्मिः ।

इत्याहुः अत्र चेति । अवसरेति जन्मादिसूत्रे जगज्जन्मादिकर्तृत्ववचनसमये स्फुरितोपि प्रलयकर्तृत्वरूपोऽसंभावितोर्थोऽविचारित एव स्थितः । जगज्जन्मादिकर्तृत्वं निमित्तमुत समवायित्वं ब्रह्मणि शब्दरूपप्रमाणसंचारः कथं सदसतः परस्मिन्निति जिज्ञासायाः प्रतिबन्धकीभूतायाः सत्वात् । तन्निवृत्तौ प्रथमपादेन सत्तां द्वितीयपादेन 'जन्माद्यस्य यतः शास्त्रयोनित्वात्' इत्यधिकरणविषयवाक्ये यच्छब्दार्थो मुख्यवृत्त्यानन्दप्राणशरीररूपो वाक्यार्थ इति भाष्यान्मनोमयप्राणशरीरभारूपादिविशेषणप्रतिपाद्यं ब्रह्मेति भवत्यवधृतिः । शब्दविशेषादित्यधिकरणेन पञ्चाधिकरणानन्तरमन्तस्तद्धर्मोपदेशादित्यधिकरणोक्तस्य 'स्मृतिः प्रत्यक्षमैतिह्यमनुमानश्चतुष्टयम् । एतैः सर्वैरादित्यमण्डलं विधास्यते' इत्यारणश्रुतेः प्रसङ्गाद्धिरण्यपदस्य स्मृत्यादिसिद्धान्तसिद्धे हिरण्मयेर्थे यथा व्रीहिर्वा यवो वेतिश्रुत्युक्ते मुख्यवृत्तिरित्युच्यते । एवमन्याधिकरणेषु आकाशादिमुख्यवृत्तिः सिद्धैवेति प्रलयकर्तृपदस्य मुख्यवृत्तिः कथमित्याकाङ्क्षायामवश्यवक्तव्यप्रलयकर्तृत्वनिर्वाहकसामर्थ्यमवसरसंगत्योक्त्वा तदसंभवः प्रलयकर्तृत्वासंभवो निवारित इत्यर्थः । अमृतं मोक्षदातृत्वम् । इदमेव गलाधःसंयोगानुकूलव्यापारवत्त्वं तदन्यमतानुक्तमुपपादयितुं माध्वादिमतान्याहुः माध्वास्त्विति । सर्वमदितेरिति तददितेरदितित्वमिति पाठः । कठेति चतुर्थवल्लीस्थाम् । श्रुत्यर्थस्तु मध्वदं कर्मफलभुजानं यद्यपि तथापि प्रलयानुपयोगान्मधुब्राह्मणस्थाः पृथ्व्यादयः पदार्थाः मधूनि तान्यत्तीति मध्वदः कर्मण्यण् । तं वेद, जीवम् । 'जीवो जीवमजीवयत्' इतिवाक्यात् । विजुगुप्सत इति रक्षितुमिच्छति अभयस्य प्राप्तत्वादात्मानं देहं न रक्षितुमिच्छतीति । सर्वे इति शंकराचार्यप्रभृतयः । स्वसिद्धान्तोपयोगित्वेन पूर्वं ब्रह्मक्षत्रमोक्षदातृत्वरूपममृतं संयन्ति स्म अत्र तदिति । कठवल्ल्यां प्रलयकर्तृत्वप्रसङ्गादर्शनात् । तदित्थम् । प्रथमवल्ल्यां तावत् त्रयाणामग्निजीवब्रह्मणां प्रश्ना उत्तराणि च तत्र द्वयोः प्रश्नोत्तराणि ब्रह्मप्रश्नोत्तरे तु द्वितीयवल्ल्यां तत्र समाप्तौ यस्य ब्रह्म च क्षत्रं चेति श्रुतिः । अत्र मोक्षोद्देश उचितो न प्रलयस्य । तृतीयवल्ल्याम् ऋतं पिबन्ताविति प्रक्रम्यात्मानं रथिनं विद्धीति मोक्षोपायनिरूपणात् । यत्तु रामानुजाचार्याः न चेदं कर्मनिमित्तं भोक्तृत्वमपि तु जगज्जन्मस्थितिलयहेतुभूतस्य ब्रह्मणो विष्णोः संहर्तृत्वं 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इत्यत्रैव दर्शनादिति तन्न तृतीयवल्ल्यां हीदं तत्र पूर्वसंबद्धार्थं

भाष्यप्रकाशः ।

तत्तु व्याख्यानं न युक्तम् । अत्र तत्प्रसङ्गादर्शनात् । पूर्वाधिकरणविषयवाक्ये तज्जलानिति विशेषणेन जन्मादित्रयस्य ब्रह्मकर्तृकताया उक्तत्वात् प्रथमपादे चोपपादितत्वात् तेषु केवलस्य संहर्तृत्वस्यैवेह पुनर्विचारे कारणस्यानुपलम्भाच्च । अतोऽत्र तद्भिन्नस्य प्रलयातिरिक्तकालिकमोक्षफलकस्य धर्मान्तरस्यैव विचार इत्येव युक्तम् । जिज्ञासासूत्रे संबन्धषष्ठ्या उपपादितत्वेन ज्ञानोपासनयोस्तद्धर्मविचारस्योपयोगितया आवश्यकत्वादिति । भिक्षूदाहृतस्य तु भूतमध्येशानत्वरूपे स्पष्टे ब्रह्मलिङ्गे विद्यमाने उपपादनसापेक्षलिङ्गग्रहणस्यानवसरपराहतत्वमेव । माध्वोदाहृते तु, नैवेह किंचनाग्र आसीन्मृत्युनैवेदमावृतमासीदशना ययाऽशनाया हि मृत्युरित्युपक्रमे जिघत्सा-

रश्मिः ।

एवोचितः । पूर्वं त्वात्मानं रथिनं विद्धीति जीवप्रकरणम् । जीवस्यात्र विष्णुपदप्राप्तिरुच्यते न विष्णोः संहर्तृत्वमिति ।

'जीवप्रकरणं ह्येतन् मुक्त्युपायोऽस्य रूप्यते ।
योग्यं शरीरमारुह्य गच्छेदिति हरेः पदम्' ॥

इत्यानुमानिकसूत्रभाष्यकारिका । एतच्चतुर्थपादे आनुमानिकाधिकरणे स्फुटीभविष्यति । अधिकरणेषु तत्प्रसङ्गादर्शनमाहुः पूर्वाधिकरणेति । प्रथमेति 'जन्माद्यस्य यतः शास्त्रयोनित्वात्' इत्यधिकरणे स्वाप्ययादिति सूत्रे च । कालिकेति 'कालाद्यन्' इति शेषाधिकारस्थसूत्राद्यञ् । धर्मेति अत्तृत्वरूपस्य धर्मान्तरस्य । तद्धर्मेति मोक्षफलकात्तृत्वरूपधर्मविचारस्य ज्ञानोपासनयोः 'एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते' इत्यत्र ज्ञात्वा महीयत इति पदोक्तयोः । ज्ञा अवबोधने मह पूजायाम् पूजोपासनेति पर्यायः । ननु क इत्था वेद यत्र सः इत्यत्र तच्छब्दार्थो न जायत इति आरभ्य अस्या श्रुतेरुक्तत्वात् न जायत इत्यादिश्रुत्युक्तः स कथमेतदालम्बनमिति तत्पूर्वश्रुतिप्रोक्तज्ञानोपासनयोः सेत्स्यतीति चेन्न । द्वितीयवल्लीस्थत्वेन न जायते इति श्रुतिपूर्वश्रुतिग्रहणेप्यक्षतेः । वल्ल्यन्तरस्थयोर्विश्वेदेवा उपासते अस्तीत्येवोपलब्धव्य इति ज्ञानोपासनयोर्वा ग्रहणम् । अनवेति तथा चान्तस्तद्धर्मोपदेशात् इत्यधिकरणे भाष्यम् । एकोप्यसाधारणो धर्मो विद्यमानः शिष्टान् संदिग्धानपि ब्रह्मधर्मानेव गमयतीति तथा च मध्वदरूपतत्सूत्रविषयवाक्यत्वलिङ्गस्य सत्त्वादिदं विषयवाक्यमिति न भ्रमितव्यमिति भावः । नैवेहेति । श्रुत्यर्थस्तु इह परिदृश्यमान आश्रये इहेत्यस्याधिकरणार्थकप्रत्ययान्तत्वात् । आश्रयस्य प्रत्यक्षत्वं 'अथ वा शून्यवद्वाढम्' इत्यस्य निबन्धस्य टीकायामुक्तम् । अत इह संसारमण्डल इति व्याख्याने प्रलयार्थः क्रियान्वयी संसारस्यानाश्रयत्वात् । अग्र इतिपदं पूर्ववृत्तान्तं वक्ति न कालसत्ताम् । इह अग्रे इति वा । मृत्युनेति मृत्युरसत् तम इति यावत् । मृत्युर्वै तम इति बृहदारण्यकश्रुतेः । मृत्युर्मरणदेवयोरिति विश्वात् । दैवेनेत्येके । शवलेनेत्यपरे । अत्यन्तविस्मरणेनेति भागवतमते । मृत्युना तमसेदं जगत् आवृतं वृङ् संभक्तौ क्र्यादिरात्मनेपदी । आसमन्तात् वृतं सम्यग् भक्तं सेवितमासीत् । भक्तिमार्गप्रवेशानन्तरं भगवान् मृत्युसकाशात्प्राणिनो बहिः कृतवान् सोऽकामयत भूयसा यज्ञेन भूयो यजेय इति श्रुतेः । अनुभूयते च तमसावरणम् । भगवत्सेवया तमआवरणभङ्गः पुनर्बहिष्कृतं मृत्युस्तेषां प्राणिनामन्तःपातितवान् । स मृत्युरशनयारूपः । अशनया मृत्युरेवेति श्रुत्यन्तरात् । अशनयेति वर्णविकारः । अशनाया अशनावानित्यर्थः । अयं मृत्युरनुमेय इत्याह अशनेति अशनमयेति केचित् । अशितुमिच्छा अशनाया प्रसिद्धा

रश्मिः ।

यथा मृत्युः कीदृशो मृत्युः अशनायेति अशनावान् छान्दसः प्रत्ययः । अशनयानुमेय इत्यर्थ इति । न त्वशना इच्छारूपा मनोधर्मः 'कामः संकल्पः' इति श्रुतेः । कुतस्तरां तमोरूपमृत्युधर्मोऽशनायेतिपदेनोच्यते इति चेत्सत्यम् । प्राणिनामन्तःपातितस्य मृत्योः सामानाधिकरण्यसंबन्धेनाशनावत्त्वात् । अशनायया प्राणिषु अशनावान् मृत्युः सामानाधिकरण्यसंबन्धेनानुमीयत इति । अशना इच्छारूपा इहपदोक्ताश्रयधर्मः । 'स ईक्षांचक्रे' इति श्रुत्यन्तरात् । नन्वाश्रयस्याशितुमिच्छा न संभवति । अनश्नन् इति श्रुतेरिति चेन्न कर्मफलस्याशितुमिच्छाया निषेधात् । प्रलये सर्वमशितुमिच्छाया आश्रये सत्त्वात् । तदुक्तं प्रश्नोपनिषदि । संवत्सरो वै प्रजापतिः प्रजाकामो वै प्रजापतिः तस्याशितुमिच्छा श्रीप्रत्ययेन ब्रह्मानन्दकं तादृशानन्देन जग्धमन्नं स्वदोषेण मृत्युजनकं भवति तदुक्तं यया मृत्युः ययाशितुमिच्छया प्राणिनामन्तरशनाया हि मृत्युः पातितः । एतदुक्तं प्रश्ने अकबन्धी कात्यायन उपेत्य पप्रच्छ भगवन् कुतो ह वा इमाः प्रजाः प्रजायन्ते इति तस्मै स होवाच प्रजाकामो वै प्रजापतिः स तपोतप्यत स मिथुनमुत्पादयते रयिं च प्राणं चेत्येतौ मे बहुधा प्रजा करिष्यत इत्यादित्यो ह वै प्राणो रयिरेव चन्द्रमाः रयिर्वा एतत्सर्वं यन्मूर्तं चामूर्तं च तस्मान्मूर्तिरेव रयिरिति । अत्र प्रजापतिः संवत्सर इति श्रुतेः प्रजापतिः संवत्सरः प्रजापतिपदं योगेनाश्रयरूपसंवत्सरपरम् । ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्द इत्यत्र योगो यद्यपि तथापि समुदायशक्तिरपि शक्तिसंकोचलक्षणा रूढिरूपा । प्रजापतिपदस्य लक्षणा वा । ननु नैवेह किंचनाग्र आसीत् इति किंचनपदेन नकारेण च यावद् वस्तुनिषेधात् अग्रपदेन पूर्ववृत्तान्तकथनाच्छून्यवादः प्रतीयत इति चेन्न मेनेऽसन्तमिवात्मानमिति वाक्ये आत्मनोऽसत्त्वेन मननस्मरणात् । अथवा शून्यवद्भावमितिं निबन्धाच्च न च यदि चेदंपदेनेहपदोक्त आश्रयो गृह्येत तदा तस्य मृत्युसंबन्धापत्तिरिति शङ्क्यम् । तमस्त्वज्ञानजं विद्धीति वाक्यात् अज्ञानाभावेन तमःसंबन्धाभावात् । तस्य प्राकृतत्वात् । यत्र तमःसंबन्धः प्रतिपाद्यते यथा संहितायां जातौ विश्वस्य भुवनस्य गोपौ देवा अकृण्वन्नमृतस्य नाभिम् । इमौ देवौ जायमानौ जुषन्तेमौ तमांसि गूहतामजुष्टे इत्यत्र तेत्र तमो न प्राकृतमपि तु तामसी दैत्यपक्षेषु मायेति कृष्णोपनिषच्छ्रुतेः वैकुण्ठस्थं तमो बोध्यम् । सत्त्वरजस्तमसामात्मगुणत्वस्य श्रीभागवते स्मरणात् । गोपाविन्द्राग्नी इति चेन्न वेदार्थो रामकृष्णयोरिति श्रुतेः । ऐन्द्राग्नमेकादशकपालमित्यस्य तृतीयानुवाकश्रुतिवाक्यस्यानुपक्रमत्वेनोक्तार्थानिर्णायकत्वात् । अकृण्वन् । कृ हिंसायां स्वादिः । अमृतस्य मोक्षस्य नाभिं नभतुम हिंसायां दिवादी क्र्यादी च । णभ भ्वादिरपि जुषन्त इति जुषप्रीतिसेवनयोस्तुदादिरात्मनेपदी जुष परितर्कण इति नास्ति चुरादित्वेन णिच्प्रसङ्गात् परस्मैपदित्वेन परस्मैपदप्रसङ्गात् ततः परो लेट् अडभावश्छान्दसः । गूहतां गूहन्ताम् गुह संवरणे भ्वादिरुभयपदी जुषेः कर्मत्वेन गुहेः कर्मत्वात् गूहेतामिति द्विवचने तु इमावित्युक्तस्य कर्तृत्वं स्यात् । अजुष्टेत्याव आ । अजुष्टौ पूर्वापरविरोधे तु यस्य कस्यार्थस्य तमःसंबन्धोऽवार्य एव । न त्वयमर्थो नास्त्येव यावानिति वाक्यात् । उक्तश्रुतेश्च । महाभाष्यादौ ह्यग्निपरा श्रुतिर्व्याकरणपरत्वेन व्याख्यातेति च । विद्वन्मण्डनेपि श्रुतयो व्याकृता एव कृष्णलीलापरतया । यदि चेदंपदेन विवर्तात्मकं जगदुच्यते तदा मृत्युरासीदित्येतावतैव चारितार्थ्यं स्यात् । न चेदंपदेन विवर्तत्वेप्यर्थवृत्तान्तावेदने तात्पर्यं पञ्चाक्षर्या इदमावृतमित्यस्येति वाच्यम् । नैवासीदिदमासीदिति विरोधापत्तेः । न च नैवासीदिदमासीदित्यनेनैव विवर्तत्वमिति वाच्यम् । विवर्तत्वे जगतस्तद्दर्शित्वेनेदमिति प्रयोगानापत्तेः । अत इदमिहपदोक्तमधिकरण-

रश्मिः ।

मित्यर्थः । मृत्युना तमसा ज्ञानावरकेण विस्मरणजनकत्वेन मृत्युरत्यन्तविस्मृतिरिति वाक्योक्तेनावृतमिति श्रीभागवतं मतं पूर्वोक्तान्नातिरिच्यते । कोशोक्तपक्षयोर्देवपक्षे इदं दैवेन सेवितम् । वृङ् संभक्तावित्यस्याङ्पूर्वस्य रूपमावृतमिति भज सेवायां संपूर्वः संभक्ताविति । इदं मायाशबलितेनावृतमित्यपरे । केचित्तु मृत्युनैवेदमिति श्रुतिप्रामाण्यादेव प्रागुत्पत्तेः कार्यकारणसत्तामाहुः तत्तथैव परं जगदाश्रये कार्यकारणांश इति युक्तम् । विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदिति गीतातः । नैवेहेति सावधारणश्रुतौ कृष्णाश्रयोक्तेः । किं च मृत्युस्तमः तमश्च तमु काङ्क्षायां दिवादिरस्य रूपमिति स्वरवर्णानुक्रमहैमधातुपाठे तमु काङ्क्षायां दिवादिरिति धातुपाठे ताम्यति काङ्क्षतीति तमः । असुन् पचाद्यचि तमशब्दोकारान्तोपि अमरटीकायां भट्टोजीदीक्षितपुत्रकृतायां तमस्तु राहुः स्वर्भानुरित्यस्य व्याख्यासुधायाम् । तमु ग्लानौ इत्यस्य रूपे तमस्तमौ राहुगुणतिमिरेषु वाच्येषु सत्सु । तमांसि गुणतिमिरसिंहिकेया इति त्रिकाण्डशेषादित्युक्तं मृत्यौ वाच्ये तमु काङ्क्षायामित्यस्य रूपम् । यद्यपि मृत्युरत्यन्तं हर्षक्षयं जनयति तमु ग्लनावित्यस्य रूपे कृते मृत्युर्वाच्यो भवति तथापि त्रिषु तमु ग्लानावित्यस्य रूपेषु चरितार्थेषु मृत्यौ तमु काङ्क्षायामित्यस्य रूपमप्यङ्गीकृत्योच्यते । एवं च मृत्युनाकाङ्क्ष्यत इति काङ्क्षा कर्मणि प्रत्ययः । काम्यन्त इति कामा इत्यानन्दमयाधिकरणभाष्यवत् । इच्छाविषयेणेदमधिकरणमासमन्ताच्छब्दार्थमर्यादारहितेन सम्यग्भक्तिमार्गनियमैर्युतं वृतं सेवितमित्यर्थः संपन्नः । अत्रेच्छा कस्य आशा ब्रह्मणो भक्तस्य वा तत्र सर्वाभावनिरूपणाद्भक्तस्याप्यभावे ब्रह्मणः सा । सापि आप्तकामत्वेन विषयविशिष्टा आशा । विषयास्तु स्थित्युत्पत्त्यन्तरूपाः तेषु संहारविषयिणी या सात्राप्तकामरूपा तस्य संहारस्य कामरूपस्याप्राप्तत्वात् परं तु अत्रेच्छा यथास्थित्युत्पत्त्यन्तविषयिणी तथा भक्तिमार्गविषयिण्यपीच्छा यथा जगन्निरमासीत्तथा भक्तिमार्गमपीति । भक्तिमार्गविषयिणी तु वाचलत्वं चापेक्ष्येति सूत्रेण भक्तेच्छा सा भक्ताभावात् इहपदोक्ताश्रयपञ्चके आध्यात्मादित्रितयविद्याश्रयस्यापि सत्त्वात्तन्निष्ठा । सोश्नुते सर्वान् कामानित्यत्र तच्छब्दार्थभक्तस्य स्वातन्त्र्यात् । स्वतन्त्रः कर्तेति सूत्रात् । ब्रह्मणस्तु स्वातन्त्र्यं नास्ति सोश्नुते सर्वान् कामान् सह ब्रह्मणेति तृतीययाऽप्राधान्यं ब्रह्मणो यतः 'सहयुक्ते अप्रधाने' इति सूत्रात् । आश्रयलक्षणेपि 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुत्युक्ते सति ब्रह्मण्यश्नुते साधुरिति व्युत्पत्तिपक्षे भक्तसत्त्वात्तस्येच्छा । ईश्वरस्याप्तकामत्वेन भक्तिमार्गविषयिण्या इच्छाया अभावात् । 'रसो वै स' इतिश्रुतौ दशरसरूपत्वेन ब्रह्मणो न लक्षणश्रुतौ ब्रह्मातिरिक्तनिवेशः । रसस्याविर्भावस्तु भक्तेच्छयात्मतः 'आत्मत आविर्भावतिरोभावौ' इति छान्दोग्यश्रुतेः । स भक्तस्तु रमादिरूपः । वाराहे चातुर्मास्यमाहात्म्ये चतुर्दशाध्याये ।

श्रीवराह उवाच—'पूर्वब्रह्मलये जाते न किंचिदवशिष्यते ।

तत्त्वानि प्रकृतिं यान्ति जीवाः सुप्ता भवन्ति हि ॥

न जानन्ति सुखं दुःखं तदाहं रमया सह ।

अप्राकृते जले देवि क्रीडन् तिष्ठामि मीलया' ॥

इति मील निमेषे भ्वादिः परस्मैपदी सेट् । श्रीभागवतेपि ।

'गोपानां दर्शयामास स्वं लोकं तमसः परम् ।

सत्यं ज्ञानमनन्तं यद्ब्रह्म ज्योतिः सनातनम्' ॥

भाष्यप्रकाशः ।

श्रावणात् तस्याश्च श्रुत्यन्तरे विजिघत्सोऽपिपास इति ब्रह्मणि निषेधेनोपपादनसापेक्षत्वात् प्रकरणस्यापि संदिग्धत्वमेव । तस्मादुक्तमेव विषयवाक्यं युक्तमिति दिक् ।

रश्मिः ।

इति श्रुतिश्च रसो वै स इति । रसे रमाऽऽलम्बनविभावः । निरुक्ते मूले तु सत्यमुदकनामसु पठितं मृत्यू रोदसीः उदकं ज्ञानं शेषश्च सत्यं ज्ञानमिति श्रुतेरर्थाः । मृत्युनेदमित्यस्या रोदसीरूपलोकमात्रा आसमन्तादृत्तं संसेवितमित्यर्थः । मूले निरुक्ते श्येनः सोमः चन्द्रमाः मृत्युः इत्यादिना प्रसिद्धान्यनामानुरोधेनान्यार्थो भवति तथापि पृथ्वी गौः धेनुः इला रोदसीरिति पञ्च प्रसिद्धनामानि ततो बहूनामनुग्रहस्य न्याय्यत्वाद्रोदसीर्गृहीता चन्द्रमसा वा तुरीयतत्त्वत्वात् चन्द्रमसोस्या पञ्चाध्याय्याष्टीकायां निरुक्ते । नित्यलीलावादेनापि स्फुटमुपपादनीयम् । मायाशबलितं ब्रह्म कारणमिति पौराणिकमतम् । प्रकृतमनुसर्यते । जिघत्सेति अत्तुमिच्छाया अशनापदेन श्रावणात् । श्रुत्यन्तर इति । छान्दोग्यस्थे सिद्धान्ते तु ह्यविजिघत्सत्वेपि संभोगप्राप्तिसूत्रे विशेषभोगोपपादनाद्युक्तम् । प्रकरणेति अपिपदेन वाक्ये विषयवाक्यत्वस्य संग्रहः । दिगिति विस्पष्टत्वेन विषयवाक्यत्वस्य संदिग्धत्वम् । ननु विषयवाक्यस्य न विस्पष्टत्वं सर्वात्तृत्वेन ब्रह्म अदितिपदसामर्थ्येन देवमाता वेति संदेहात् तत एव विषयवाक्यत्वमपीति चेन्न स इति परामर्शकोभ्यास्यप्राणस्य तस्य च सर्वात्तृत्वसंभवात् । तस्यादितिपदवाच्यत्वस्यापि संभवात् । न च 'स ऐक्षत' इत्यत्राभ्यास्यप्राणस्य स इत्यनेन परामर्श उक्तः सोग्निर्ब्रह्म भवतु ब्रह्म तर्हि अग्निरिति श्रुतेः । श्रान्तस्य तप्तस्य तेजोरसो निरवर्ततामिरिति श्रुत्या नैवेह किंचनाग्र आसीदिति श्रुतिमुपक्रम्य पाठाद्ब्रह्म तर्हि अग्निरिति श्रुतेरग्निर्ब्रह्म तस्य प्राणास्यस्यात्तृत्वसंभवोक्त्या अत्ताऽचराचरसूत्रे अत्ताग्निः स भवतु न च निर्वर्तनं बाधकं आविर्भावतिरोभावयोर्गुरवैरिधर्मत्वेन बाधकाभावादिति वाच्यम् । 'सत्यं ज्ञानमनन्तं ब्रह्म' 'ॐमित्येकाक्षरं ब्रह्म' 'ब्रह्म तर्हि अग्निः' 'ततो ह जातो भुवनस्य गोपा हिरण्मयः शकुनिर्ब्रह्म नाम' 'अन्नं ब्रह्मेति व्यजानात्' 'प्राणो ब्रह्मेति व्यजानात्' 'मनो ब्रह्मेति व्यजानात्' 'विज्ञानं ब्रह्मेति व्यजानात्' 'आनन्दो ब्रह्मेति व्यजानात्' इत्यादिश्रुतिषु ब्रह्माणि प्रोक्तानि तेषां वाराहेऽत्र च व्यवस्था कृता । तथाहि जन्माद्यस्य यतः शास्त्रयोनित्वात् इत्यधिकरणे सत्यं ज्ञानमिति श्रुत्युक्तं ब्रह्म निर्णीतम् । ॐमित्यस्याः श्रुतेः वाराहे लक्ष्म्यादिरूपपरत्वमक्षरब्रह्मपरत्वमस्यामेव श्रुतौ । ब्रह्म तर्हीत्यस्याः श्र्याचार्यपरत्वं पुराणे आचार्येषु ब्रह्मभेदबुद्धेरपराधेषु गणनात् । शकुनिब्रह्मणः आनन्दमयोभ्यासादित्यधिकरणे स्वरूपनिरूपणात् । अन्नमयादीनामपि तत्रैवाधिकरणे स्वरूपनिरूपणात् । आचार्यपरत्वेप्यस्याधिकरणस्य ब्रह्मजिज्ञासानतिक्रम इति चेदोम् । ननूक्तमेव विषयवाक्यं युक्तमिति प्रकाशस्य विरोध एवकारादिति चेन्न अस्य प्रकाशस्याप्रतीताग्निब्रह्मपरत्वाभावात् । सत्यं ज्ञानमनन्तमिति श्रुत्युक्तब्रह्मणो द्वितीयाधिकरण उपक्रमात् । उपक्रान्तब्रह्माभेदेनाचार्याणां प्रसङ्गात् स्मरणं कृत्वाधिकरणरचना प्रतिज्ञातब्रह्मजिज्ञासाऽविरुद्धैव परम् । ननूक्तविषयवाक्ये सूत्रीयशब्दासंसर्गाविदमेव विषयवाक्यं युक्तमिति चेन्न अस्मादेव भाष्यात् सूत्रीयशब्दघटितमेव विषयवाक्यमिति नियमाभावसूचनात् । अत एव संपद्याविर्भावः स्वेन शब्दादित्यधिकरणे सोश्नुते सर्वानिति विषयवाक्यं सूत्रपदैरघटितमेव फलाध्याये वक्ष्यते । अत उक्तं दिगिति । नन्वत्ता भगवानित्यत्राधिकरणे सिद्धं स भगवान् परमशिवः । मैत्रायणीयोपनिषदि तमो वा इदमेकमास तत्परेणेरितं विषमत्वं प्रयात्येतद्वै रजसो रूपमित्यादिना तमोधिष्ठातुः परस्य

भाष्यप्रकाशः ।

शैवस्तु प्रहस्तादेव पराहत इति न तदर्थं पुनः प्रयतनम् । अतः पूर्वोक्तमक्षुण्णम् ॥ १० ॥

इति तृतीयं अत्ता चराचरेत्यधिकरणम् ॥ ३ ॥

रश्मिः ।

संकल्पेनाविद्याख्यस्य तमसो गुणविभागं निरूप्य तस्य तनवो ब्रह्मा रुद्रो विष्णुरिति गुणिभ्य एभ्यस्तत्त्वान्तरं दर्शितमिति । सोत्ता भवतु न त्वदृश्यत्वादिगुणको धर्मोक्तेरित्यधिकरणोदित इति भगवच्छैवमतशङ्कायामाहुः शैवस्त्विवति । भगवानिति शेषः । अत्र प्रहस्तः । तन्न परं ब्रह्म किंतु ब्रह्मणो नान्तरीयकः पाद इति न तत्र निर्व्याजमहिम्नः सिद्धिः । तथाहि ब्रह्मोपनिषत्तापिनीययोर्नान्तरीयकपादत्वनिरूपणमुक्तवैवमेव मैत्रायणीयोपनिषद्यपि मैत्रिशिष्यः शाकायन्यो वालखिल्यप्रजापतिसंवादमुपक्षिप्य तन्मुखेन ध्येयस्य प्राणाख्यस्यात्मनः स्वरूपं यो ह वोपरिस्थः श्रूयते गुणेषु स वा एष शुद्धः पूतः शून्यः शान्तो प्राणो निरात्मानन्तोऽक्षयः स्थिरः शाश्वतोऽजः स्वे महिम्नि तिष्ठति तेनेदं शरीरं चेतनवत्प्रतिष्ठापितं प्रणोदयिता चैषोस्येत्युक्त्वा स पुरुषसंज्ञोंशेन शरीरे प्रविश्यावर्तत इति चोक्त्वा अथ यो ह वै खलु तस्य सोंशोयं यश्चेतामात्रः प्रतिपुरुषः क्षेत्रज्ञः संकल्पाध्यवसायाभिमानलिङ्गः प्रजापतिर्विश्वाख्यस्तेनेदं शरीरं तथेत्युक्त्वा प्रजापतिर्वा एकोग्रेऽतिष्ठत् स नारमतेत्यादिना बह्वीनां प्रजानां तत्कृतानां सृष्टिं चोक्त्वा ततः पूर्वोक्तरूपस्यात्मनोऽज्ञानात् क्षेत्रज्ञस्यास्मदादिशरीरस्य बन्ध इत्युक्त्वा तन्निवृत्तिप्रकारं चोक्त्वा चतुर्थप्रपाठके पुनर्वालखिल्यानां अग्निर्वायुरादित्यः कालोऽपः प्राणोन्नं ब्रह्म रुद्रो विष्णुरेकेन्यमभिध्यायन्त्येकेन्यं कतमः श्रेयः सोऽस्माकं ब्रूहीति प्रश्ने ब्रह्मणो वा एता अग्र्यास्तनवः परस्यामृतस्याशरीरस्येत्युक्त्वा तस्यैव लोके प्रतिमोदतीह यो यस्यानुषक्तः इत्येवं ह्याह 'ब्रह्म खल्विदं वा व सर्वं' इत्यादि तत्तनूपासकस्य तत्तत्सालोक्यं कृत्स्नक्षये पूर्वोक्तपरमपुरुषैक्यं च फलमुक्त्वा ततः पञ्चमे परब्रह्मणः सर्वात्मत्वादिरूपमहामाहात्म्यप्रतिपादने कौत्सायनीस्तुतिमुखेन कृत्वा ततस्तमो वा इदमग्र आसीदित्यादिना तमोभवनं ततः परप्रेरणेन वैषम्याद्रजस्ततस्तथैव सत्त्वं तस्यापि रसश्रवणं तस्य योंशः स प्रतिपुरुषः क्षेत्रज्ञः संकल्पाध्यवसायाभिमानलिङ्गः प्रजापतिर्विश्वाख्यः अस्य प्रागुक्ता एतास्तनव इत्युक्त्वा ततो भिन्नप्रक्रमेण अथ यो ह खलु वा वास्य तामसोंशोऽसौ स ब्रह्मचारिणो योयं रुद्र एवमेवास्य राजसोंशो ब्रह्मा तथैव सात्त्विकोंशो विष्णुरित्युक्त्वा स एष एकस्त्रिधाभूतोष्टधैकादशधा द्वादशधाऽपरिमितधा चोद्भूत इत्यादिमाहात्म्यमस्योवाच एवं सति याश्चतुर्थे प्रपाठके दश तनव उक्तास्ता गुणातीता एषेच्छामात्रेणैव प्रकटा इति ज्ञायते । तत्रैव तेषां ब्रह्मत्वविधानात् । याः पुनः पञ्चमे उक्तास्तास्तु सगुणस्य । प्रजापतिं तादृशमुपक्रम्य राजसादिपदोक्तिपूर्वकं पाठात् । न चास्य प्रागुक्ता एतास्तनवः इति कथनात् तासामेतदभिन्नत्वं शङ्क्यम् । प्रागुक्तास्तनवोस्यैता इत्यन्वयात् । प्रतिपुरुषस्य मूलपुरुषभिन्नत्वेन तन्मूर्तीनामपि तथात्वस्यैवौचित्यात् । प्रकृतच्छेदे एतच्छन्दस्य वक्ष्यमाणपरामर्शिताया ज्योतिरधिकरणे सिद्धत्वेन चोद्यानवकाशाच्च । एवं सत्येते तामसरुद्रादयो यस्यांशास्तत्तत्त्वान्तरं संकल्पाध्यवसायाभिमानलिङ्गं प्रजापतिविश्वक्षेत्रज्ञादिनामकं प्रतिपुरुषरूपमेव सिद्ध्यति । यस्याग्र्यास्तनवोऽग्न्याद्या दशोक्ताः कृत्स्नप्रलये तत्तनूपासकानां यदैक्यं कौत्सायनस्तुतौ यन्माहात्म्यं यो गुणेषूपरिष्ठोस्ति यस्यायं प्रजापतिः प्रतिपुरुषः स तु महापुरुषः अशरीरोऽमृतः सर्वात्मको ब्रह्मेति सिद्ध्यति । अत एव षष्ठे प्रपाठके दशमकण्डिकायां भोक्तृभोज्यविचारे यथाग्निर्वै देवानामन्नादः

रश्मिः ।

सोमोन्नमग्निनैवान्नमिति दृष्टान्तमुक्त्वा एवंवित्सोमसंज्ञोयं भूतात्माग्निसंज्ञो ह्यव्यक्तमुखा इतिवचनात्पुरुषो ह्यव्यक्तमुखेन त्रिगुणं भुङ्क्ते इत्यनेन चिदाभासत्वेनाग्निसंज्ञस्यापि संकल्पाभिमानलिङ्गत्वात् त्रिगुणस्य सोमसंज्ञत्वेन भूतात्मनो भोज्यकोटौ निवेश उक्तः तेन तद्दर्शिनः प्रजापतेरपि तथात्वं स्फोरितम् । ततस्त्रयोविंश्यां ओमित्येतदक्षरस्य यदग्रं तच्छान्तमशब्दमभयमशोकमानन्दं तृप्तं स्थिरमचलममृतमच्युतं ध्रुवं विष्णुसंज्ञितं सर्वापरत्वाय तदेतदुपासीतेत्युक्त्वास्यैव मूर्ध्नि स्थाने अभ्यास उक्तो न शिवस्य एवमेवान्त्यकण्डिकायां निष्कामाग्निहोत्रफलकथनेपि परमाकाशे सौरसौम्याग्नेयसात्त्विकमण्डलानि भित्त्वा शुद्धः सत्त्वान्तरस्थमचलममृतमच्युतं ध्रुवं विष्णुसंज्ञितं सर्वापरं धाम सत्यकामसर्वज्ञत्वसंयुक्तं स्वतन्त्रं चैतन्यं स्वे महिम्नि तिष्ठमानं पश्यत्यत्रोदाहरन्ति ।

'रविमध्ये स्थितः सोमः सोममध्ये हुताशनः ।
तेजोमध्ये स्थितं सत्त्वं सत्त्वमध्ये स्थितोच्युतः' ॥

इत्याद्युक्तम् । अत एव सप्तमप्रपाठकप्रान्तस्थे ।

'चाक्षुषः स्वप्नचारी च सुप्तः सुप्तात्परश्च यः ।
भेदाश्चैतेस्य चत्वारः तेभ्यस्तुर्यं महत्तरम्' ॥

त्रिभ्यस्तुरीयस्य महत्तरत्वमेवोक्तं न तु महत्तमत्वम् । द्वितीयेन च त्रिपाद्ब्रह्मभोज्यत्वमेवोक्तम् । अतो द्वैतिभावेपि शिवतत्त्वविवेकाभिमतस्य भोग्यकोटित्वात् तत्परस्य तद्भोक्तुर्ब्रह्मण एव पुरुषस्य तुरीयः परममहिमेत्येव सिद्ध्यतीत्युपनिषदर्थनिश्चयः इति । अस्माद् द्वितीयवादस्थप्रहस्तादपि पराभवं प्राप्त इत्यर्थः । प्रहस्तार्थस्तु **नान्तरीयक** इति अन्तरशब्दोत्रात्मवाचकः अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये । छिद्रात्मीयविनावहिरवसरमध्येन्तरात्मनि च' इत्यमरात् । अन्तरीयकः गहादिभ्यश्चेति छः शेषेर्थे स्वार्थे कः आत्मीयः न अन्तरीयको नान्तरीयकः न शब्देन सुप्सुपेति समासः । नात्मीयश्चतुर्षु पादेष्वनुस्यूतो नेत्यर्थः । ननु चतुर्णां पादानां प्रसिद्धत्वेन पञ्चमः पादः कुत इति चेन्न । तेषां मध्ये यत्परं ब्रह्म विभातीति श्रुतेस्तुरीयस्य रूपं स आदित्यः स विष्णुरिति श्रुत्या स्वयममनस्कमश्रोत्रमिति श्रुत्या च द्वेधा निरूपणात् । सगुणनिर्गुणयोर्विद्वन्मण्डनेऽभेदात् व्यष्टिसमष्टिभेदे च ग्राह्यपञ्चमपादरूपं रत्नं परिग्राह्यमिति भावः । गुणेपूपरिस्थो निर्गुण इत्यर्थः । **ब्रह्मचारिण** इति वालखिल्यसंबोधनम् । **ब्रह्मत्वेति** तनूरुक्त्वा ब्रह्म खल्विदं वा व सर्वमित्यनेन तासां ब्रह्मत्वविधानात् । अस्यैता इति सगुणा इत्यर्थः । **ज्योतिरिति** । इदमधिकरणं पूर्वतन्त्रे द्वितीयपादे 'संज्ञा चोत्पत्तिसंयोगात्' इत्यत्र चिन्तितम् । ज्योतिष्टोमं प्रकृत्याथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेत इति श्रुतं तत्र किं प्रकृते ज्योतिष्टोमे सहस्रदक्षिणालक्षणो गुणो विधीयत उत कर्मान्तरं विधीयते इति संशयः । तत्र प्रकरणप्रमाणाज्ज्योतिष्टोमानुवादेन गुणविधिरयमिति प्राप्ते उच्यते । नायं गुणविधिः । अथेत्यनेन प्रकरणविच्छेदात् । न चैष इत्येतच्छब्दानुपपत्तिः । तस्य संनिहितज्योतिःशब्देनान्वयात् । ज्योतिःशब्दोपि प्रकृतविच्छेदादुक्तमपरामृशन् अपूर्वं संज्ञारूपत्वान्नूतनं कर्माभिधत्ते । अतो नूतनसंज्ञया कर्मभेदः । तथैव विश्वज्योतिःसर्वज्योतिःशब्दयोरपि ज्ञेये इति सिद्धान्तितम् । तथात्रापीत्यर्थः । **यथाग्निर्वा** इति यथाग्निर्वै देवानामन्नादः सोमोन्नमग्निनैवान्नमित्येवंवित्सोमसंज्ञोयं भूतात्माग्निसंज्ञोप्यव्यक्तमुखा इति वचनात् पुरुषो ह्यव्यक्तमुखेन

गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥ ( १-२-४ )

तस्यैवाग्रे पठ्यते । 'ऋतं पिबन्तौ सुकृतस्य लोके
गुहां प्रविष्टौ परमे परार्धे ।
छायातपौ ब्रह्मविदो वदन्ति
पञ्चाग्नयो ये च त्रिणाचिकेताः' ॥ इति ।

---

भाष्यप्रकाशः ।

गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥११॥ अयं भोगो व्यापिवैकुण्ठे अन्यत्र वास्तु,

रश्मिः ।

त्रिगुणं भुङ्क्ते इति यो हैवं वेद संन्यासी च योगी चात्मयाजी चेति । अर्थस्तु यथा देवानां मध्येऽग्निरन्नादोऽन्नस्य प्रसिद्धः सोमोऽन्नमदनीयमग्निनैवान्नमन्नादेन सहभूतमदनीयमिति सिद्धं श्रुत्यन्तरे । अथ यत्किंचेदमार्द्रं तद्रेतसोऽसृजत तद्रसः सोमः एतावद्वा इदमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नाद इति एवं वेदेषु प्रतिपाद्य मनुष्येष्वतिदिशति एवंवित् वित् ज्ञानी । एवं देववदन्नसहभूतस्तथा च भोक्ताग्नीषोमात्मकस्य जगतः इत्यर्थः । तदुपपादयति सोमसंज्ञोयं भूतात्मा अग्निसंज्ञोप्यव्यक्तमुखा इति । अयं भूतात्मा केवलः प्राकृतः सोमसंज्ञः अन्नभूतः ईदृशोपि अव्यक्तं प्रधानं मुखं भोक्तृत्वादिप्रवृत्तिद्वारं यस्य सोऽर्थादेशः । इति तादृशत्वादग्निसंज्ञोपि भवति । तथा चात्राप्यन्नान्नादयोः सहचारेणैकस्यैव भोग्यभोक्तृभाव इत्यर्थः । अत्र ज्ञापकमाह वचनात् पुरुषो हि इत्यादि हि निश्चयेन पुरुष इति अव्यक्तमुखेन त्रिगुणं भुङ्क्ते इति वचनात् । भोग्यत्वेन भोक्तृत्वेन च व्यपदेशादित्यर्थः । एवं ज्ञाने फलमाह यो हैवं वेदेत्यादि । तदेतदुक्तं भोज्यकोटौ निवेश उक्त इत्यन्तेन । एतेन सिद्धमाह तेनेत्यादि । सर्वापरत्वायेति सर्वमपरं यस्मादिति सर्वापरं तस्य भावः सर्वापरत्वं तस्मै मोक्षायेत्यर्थः । चाक्षुष इत्यादि चाक्षुषः जाग्रद्भोक्ता दक्षिणाक्षिस्थितो विश्वः । स्वप्नचारी स्वप्नभोक्ता तैजसः । सुप्तं सुषुप्तिसाक्षी प्राज्ञः । सुप्तात्परोऽवस्थात्रयरहितस्तुरीयः । एते च चत्वारो अस्य परब्रह्मणो भेदास्तेभ्यः पूर्वोक्तेभ्यस्त्रिभ्यस्तुर्यं महत्तरमुत्कृष्टतरं तत्र हेतुमाह त्रिषु जाग्रदादिषु एकपादेकांशं ब्रह्म चरेत् । चरति अनुगतं तिष्ठति । उत्तरे त्रिपादंशत्रयवच्चरत्यनुवर्तते तस्माद् ब्रह्मांशाधिक्यात्तुरीयमुत्कृष्टमित्यर्थः । नन्वेवं विभागः कुत इत्याकाङ्क्षायां तत्प्रयोजकमाह सत्येति । सत्यं प्राणादिरूपं चिदात्मा च । अनृतं पराङ्रूपं पृथिव्यादि तयोः अन्तर्यामिब्राह्मणे यस्य पृथिवी शरीरमित्यारभ्य यस्यात्मा शरीरमित्यन्तेनोक्तयोश्चिदचिच्छरीरयोरुपभोगार्थं महात्मनः परब्रह्मणः द्वैतिभावः । द्वैतं नानात्वमस्यास्तीति द्वैती तद्भावः तथा च तदर्थमयं विभागः इतिसर्वोपनिषदर्थ इत्यर्थः । एवं तदुपन्यस्तश्रुतीनामाभासत्वमुपपत्तिपूर्वकं प्रदर्शितमिति तट्टीकायाम् । अत इति पूर्वोक्तं भाष्यमक्षुण्णम् । क्षुदृ शब्दे अदादि परस्मैपदी सेट् दूषितं भाष्यमित्यखण्डितमित्यर्थः ॥ १० ॥

इति तृतीयाधिकरणम् ॥ ३ ॥

गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥ ननु
'मुक्ता एव तु तिष्ठन्ति सत्यज्ञानमनन्तके ।
अमुक्तानां च प्रलयोऽयोग्ये जायते कथम्' ॥

सत्यज्ञानमित्यत्रामव्ययमित्याकाङ्क्षायामाहुः अन्यत्रेति । फलमः ज्ञानाज्ञानायमक्रमविद्रमा-

किमिदं ब्रह्मवाक्यमाहोस्विदन्यवाक्यमिति । अस्य वाक्यस्योत्तरशेषत्वे जीवप्रकरणपठितत्वार्थं ब्रह्मवाक्यत्वं पूर्वशेषत्वे तु ब्रह्मवाक्यमिति प्रकरणनिर्णयः । मध्ये पाठादेवं संदेहः अर्थविचारे तु द्विवचननिर्देशात् पूर्वशेषत्वे

भाष्यप्रकाशः

न त्वन्तर्हृदयेऽपीत्याशङ्कावारणाय । किंच, ये पूर्वाधिकरणेषु धर्मा उक्तास्तेऽन्तर्वर्तिन उक्ताः । अन्तर्वर्ती च हृद्यन्तर्ज्योतिः पुरुष इत्यादिश्रुत्या, अहमित्यादिप्रत्यग्विषया चान्तर्वर्ती जीव एव सिद्धः । ब्रह्म तु व्यापकत्वात् सार्वत्रिकमुदासीनं, न त्वन्तरेव विशेषतः सिद्धम् । तथा सति पूर्वाधिकरणेषु यन्माहात्म्यमुक्तं तज्जीव एव भविष्यति, न ब्रह्मणीति जीवनिवारणेन तत्र तत्साधनाय चेदमधिकरणमुपोद्घातसंगत्या आरभ्यत इत्याशयेन विषयवाक्यस्थलकथनपूर्वकं तद्वाक्यमुदाहरन्ति तस्यैवाग्र इत्यादि । पुरःस्फूर्तिको वाक्यार्थस्तु, ऋतं सत्यं सुकृतस्य सम्यक्त्वमवगत्य कृतस्य कर्मणः फलं पिबन्तौ भुञ्जानौ । यद्यप्येको भुङ्क्ते, नेतरस्तथापि, छत्रिणो यान्तीतिवत् समुदाये गौण्या पिबन्ताविति प्रयोगः । लोके अस्मिञ्छरीरे, गुहां हृदयाकाशं प्रविष्टौ । गुहामिति सप्तम्यर्थे द्वितीया । गुहाया विशेषणं, परमे परार्द्धे इति । बाह्यपुरुषस्थानापेक्षया परम उत्कृष्टे । तत्र हेतुः परार्द्धत्वम् । परार्द्धं ब्रह्मणः स्थानम् । तत्र हि भक्तैर्ज्ञानिभिरुपासकैश्च ब्रह्मोपलभ्यत इति । तौ छायातपौ संसारित्वासंसारित्वाभ्यां धर्माभ्यां परस्परविलक्षणौ ब्रह्मविदो वदन्ति कथयन्ति । न केवलं त एव कथयन्ति, किंतु पञ्चाग्नयस्त्रिणाचिकेताः श्रौतस्मार्ताग्निमन्तस्त्रिकृत्वो नाचिकेतोऽग्निर्यैश्चितस्तादृशा गृहस्था अपि वदन्तीति । मुख्योऽर्थस्त्वग्रे भाष्य एव वक्तव्यः । तत्रोक्तेऽर्थे संशयं तद्बीजं चाहुः किमिदमित्यादि । प्रकरणनिर्णय इति प्रकरणेन कुतो निर्णयः । ननु वल्लीसमाप्त्या पूर्वप्रकरणसमाप्तेस्तदुत्तरप्रकरणगतत्वस्य स्फुटत्वात् कथं संदेह इत्यत आहुः मध्य इत्यादि । तथाच,

रश्मिः ।

वैकुण्ठश्वेतद्वीपव्यापिवैकुण्ठ..............................................................

तत्र वा । उपोद्घातेति प्रकृतः प्रलयस्तत्सिद्ध्यर्थां चिन्तां तदुदयेपि भोगसाधनरूपां तामुपोद्घातं विदुर्बुधाः । तया संगत्या । तद्वाक्यम् विषयवाक्यम् । एक इति एको जीव इतरोन्तर्यामी 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो अभिचाकशीति' इति श्रुतेः । समुदायेति एकसार्थवाहित्वविशिष्टे गौणी यथा छत्रिणो यान्तीत्यत्र राजदण्डच्छत्रित्वात् तथा पानापानकर्तृसमुदाये । पा पाने इति धातोः कर्तृप्रत्ययान्तस्य गौण्येत्यर्थः । परार्धमिति परार्ध्यमिति पाठे परार्धं ब्रह्मणः स्थानमर्हतीति परार्ध्यं हृदयम् । त्रिरिति नचिकेतवाक्यानामध्ययनं तदर्थज्ञानमनुष्ठानं चेति त्रित्वं बोध्यम् । इत्यर्थः शंकरभाष्यटीकायाम् । श्रौतस्मार्तेति पञ्चाग्नयः स्मार्ताः सभ्यावसथ्ययोः स्मार्तत्वात् । त्रयोग्नयः श्रौताः गार्हपत्याहवनीयान्वाहार्यपचनरूपाः त्रयोऽग्नय इति योगतत्त्वोपनिषदः श्रुतेः । मुख्य इति अस्यार्थस्य शांकरकृतत्वेन मायावादिमतसंमतत्वादस्मादन्यो मुख्य इत्यर्थः । उक्त इति पुरःस्फूर्तिकेर्थे । बीजमिति पूर्वशेषत्वमुत्तरशेषत्वं च । प्रकरणेति 'क इत्था वेद यत्र सः' इत्यत्र प्रकरणशब्दार्थ उक्तः । नन्विति यस्य ब्रह्म चेति श्रुतिर्द्वितीयवल्लीसमाप्तावेतद्वल्ले तृतीयवल्लीप्रारम्भे ऋतं पिबन्ताविति श्रुतिः द्वितीयवल्लीसमाप्त्या न बाध्यते इत्याशुरुत्पन्न-

बद्धमुक्तजीवौ भविष्यतः । उत्तरशेषत्वे त्विन्द्रियमनसी । उभयथापि न ब्रह्मवाक्यम् । द्वयोर्मुख्यत्वेन प्रतिपादनात् । ब्रह्मवाक्येऽपि न प्रयोजनसिद्धिः ।

भाष्यप्रकाशः ।

'स्वार्थबोधे समाप्तानामङ्गाङ्गित्वाद्यपेक्षया ।
वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते' ॥

इति पूर्वतन्त्रे सिद्धत्वात् कयाचित् संगत्या पूर्वशेषत्वस्यापि शक्यवचनत्वाद्, आत्मानं रथिनं विद्धीत्यादेः प्रागेव पाठाच्च संदेह इत्यर्थः । ननु तर्ह्यर्थेन निर्णयोऽस्त्वित्यत आहुः अर्थेत्यादि । बद्धमुक्तजीवाविति हन्ता चेन्मन्यते हन्तुमित्यनेन बद्धस्य, मत्वा धीरो न शोचतीत्यनेन मुक्तस्य च पूर्वत्रोक्तत्वात् तदनन्तरपठितस्य द्वित्वस्य तद्विषयत्वप्रत्यभिज्ञानात्तावेव युक्तौ, न तु जीवपरमात्मानौ । अनश्नन्निति श्रुत्या परमात्मनो भोगाभावादिति । इन्द्रियमनसी इति यस्त्वविज्ञानवान् भवतीत्यादौ तयोरेवाग्रे निरूपणात् । पिबन्ताविति पानकर्तृत्वव्यपदेशस्त्वेधांसि पचन्तीतिवत् करणे कर्तृत्वोपचाराद् बुद्धिजीवपक्षे बुद्धौ केवलायामिवोभयत्राप्युपपत्स्यते ।

रश्मिः ।

प्रकरणस्य समाप्तेः । तदुत्तरं प्रकरणं ऋतं पिबन्ताविति श्रुत्यन्तरम् । आत्मानं रथिनं विद्धीति जीवप्रकरणं तद्गतस्यस्येत्यर्थः । आत्मानमिति जीवप्रकरणबोधकादित्यर्थः । ब्रह्मप्रकरणबोधकान्न जायते म्रियते वा विपश्चित् इत्यारभ्य यस्य ब्रह्म चेत्यन्तात् पश्चादिति मध्ये पाठः । ततश्च संदेह इत्यर्थः । पूर्वत्रेति ऋतमित्यस्य पूर्वत्र द्वितीयवल्यामित्यर्थः । तद्विषयेति मुक्तबद्धजीवविषयत्वस्याधीतेन मीमांसकेन छायातपयोर्द्वित्वमिदं तन्मुक्तबद्धजीवनिष्ठमिति मनसि संनिधानात् प्रत्यभिज्ञानं तत्तेदंताप्रकारकं ज्ञानं प्रत्यभिज्ञानं तस्मात् । न च ताविमौ छायातपाविति प्रत्यभिज्ञानमस्त्विति शङ्क्यम् । गौरवात् । यस्त्विति ।

'यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सदा ।
तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः' ॥ इति ।
'यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा ।
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः' ॥

इति अयुक्तमनइन्द्रियाणि । छाया विषयसुखानुकूल्येन सुखस्य श्यामत्वेन मन आदीनामप्यस्वच्छत्वात् युक्तमनइन्द्रियाणि । आतपः भजनानन्दानुकूल्येन ज्ञानानुकूल्येन वानन्दस्य श्यामत्वेपि स्वेषां मन आदीनां स्वच्छत्वात् कर्तृत्वोपचारादिति । इदं नैयायिकमते । आख्यातस्य पाकं करोतीति पचति इत्यत्र करोतिना विवरणात् । यत्नार्थकत्वेनेधःसु तदभावात् । वैयाकरणास्तु पच्यर्थो व्यापारो नैकविधः फूत्कारत्वाधःसंतापनत्वयत्नत्वादिभिस्तत्तद्रूपेण वाच्यः । देवदत्तोग्निरेधांसि पचति पचन्तीत्यत्र तत्तत्प्रकारकबोधस्यानुभवसिद्धत्वात् । न च नानार्थत्वापत्तिरिति वाच्यम् । तदान्यायेन बुद्धिविशेषादेव शक्यतावच्छेदकानामनुगमकस्य सत्त्वात् । आख्याते क्रियैकत्वव्यवस्थाप्यावच्छेदकबुद्धिविशेषमादायैव । उक्तं च वाक्यपदीये ।

'गुणभूतैरवयवैः समूहः क्रमजन्मनाम् ।
बुद्ध्या प्रकल्पिता भेदाः क्रियेति व्यपदिश्यते' ॥ इति

'फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः' इत्याख्यातार्थ आश्रय इत्याहुः । तथाच देवदत्तः

अथ मन्यते, उपनिषत्पाठादन्यत्रानिर्द्धाराज्जीव ब्रह्म परत्वेऽपि तयोरभेदाद् ब्रह्मपरतैव वाक्यस्य युक्तेति । तथापि कस्य निर्णायकत्वं, प्रकरणस्यार्थस्य वेति । उभयोरपि संदिग्धत्वादयुक्तो विचार इति चेदुच्यते ।

---

भाष्यप्रकाशः ।

उभयथेति उत्तरशेषत्वे च । ननु, येयं प्रेते विचिकित्सेत्यनेन जीवस्य, अन्यत्र धर्मादन्यत्राधर्मादित्यनेन परमात्मनश्च पूर्वं पृष्टत्वात् पूर्वशेषत्वाङ्गीकारे जीवपरमात्मानौ सुखेन संभविष्यत इति तावेवात्र ग्राह्याविस्येकदेशिकृतं समाधानं दूषयन्ति द्वयोरित्यादि । ब्रह्मवाक्यत्वाय हि परमात्मनिरूपणमत्राङ्गीकार्यम् । तत्प्रयोजनं च मुख्यतया परमात्मनो भोक्तृत्वप्रतिपत्तिः । सा तु द्वयोस्तुल्यतया मुख्यत्वेन प्रतिपादनाद् दुर्घटेत्यपार्थं तस्य ब्रह्मवाक्यत्वमित्यर्थः । ननूपनिषदो रहस्यविद्यास्तासु यदुच्यते, तन्निर्द्धारितमेवोच्यते । अत उभयोर्ऋतपातृत्वमन्यत्रानिर्णीतमत्र निर्धारयितुं प्रवृत्तं वाक्यमिन्द्रियमनसोर्ग्रहण उपचारदोषेण दुष्यतीति तदभावायास्य जीवब्रह्मपरत्वाङ्गीकारेऽपि तयोरवस्थाभेदेनैव भिन्नतया वस्तुत ऐक्याद् वाक्यस्योभयपरत्वेऽपि ब्रह्मवाक्यत्वमक्षतमित्येकदेशिकृतं समर्थनं दूषणार्थमनुवदन्ति अथेत्यादि । तद् दूषयन्ति तथापीत्यादि । संदिग्धत्वादिति । अर्थस्य संदिग्धत्वं जीवद्वयनिरूपणकोट्यनिरासाद् बोध्यम् । तथाच तदङ्गीकारे विचारवैयर्थ्यमित्यर्थः । एवमेकदेशिमतदूषणेन विचारमाक्षिप्य तत् समर्थयन्ति उच्यत इत्यादि । शास्त्रं व्यासप्रणीतं श्रौतवाक्यस्यसंदेहवारकम् । अतस्तत्र पूर्वं संदेहाकारस्य निर्णयः

रश्मिः ।

एधोभिः पचतीत्यत्र फूत्काररूपव्यापारवदेधांसि पचतीत्यत्राधःसंतापनरूपव्यापारमाश्रित्यैधःसु मुख्यमेव कर्तृत्वमिति ध्येयम् । तदादिन्यायस्तु तदादिपदस्य क्वचिद्घटादित्वं शक्यतावच्छेदकं क्वचित्पदादित्वं क्वचित्कुम्भत्वं क्वचित्कुसूलत्वमिति । बुद्धीति बुद्ध्या पदार्थान् जानातीत्यत्र करणत्वेन बुद्धेस्तस्यां केवलायां कर्तृत्वोपचारः । एकदेशीति शंकराचार्यकृतम् । एकदेशित्वं तु ब्रह्मवादैकदेशालम्बनात् तथाहि पुच्छस्याक्षरब्रह्मणो हि पराकाष्ठापन्नवस्तुत्वं भूयसां श्रुतिभागानां सगुणपरत्वोपगमेनालम्बन्ते तथा निबन्धोक्तषड्विधवैदिकसृष्टिषु मायिकसृष्टेर्ग्रहणमिति अन्यदेवमुन्नेयम् । यद्वा जैमिनिबादरिकाशकृत्स्नौडुलोमिप्रभृतय एकदेशिनः सूत्रोक्तत्वात् । ब्रह्मवाक्यत्वमिति एतेन ब्रह्मवाक्य इति भाष्ये ब्रह्मवाक्यपदं भावप्रधानं ब्रह्मवाक्यत्व इति भाष्यार्थः । तदङ्गीकार इति एकदेश्युक्ताङ्गीकारे । आक्षिप्य निर्भर्त्स्य । तदित्यव्ययम् विचारमित्यर्थः । श्रौतेति श्रुतिसूत्रे एका कोटिरिति निबन्धटीका ।

'वेदाः श्रीकृष्णवाक्यानि व्याससूत्राणि चैव हि ।
समाधिभाषा व्यासस्य प्रमाणं तच्चतुष्टयम् ॥
उत्तरोत्तरसंदेहवारकं परिकीर्तितम्' ।

यद्यपि तथापि सूत्रेषु अप्यविरुद्धम् । शिक्षाछन्दसोर्वेदस्वरूपे उपकुर्वतोरप्यनुष्ठान उपकाराङ्गीकारात् । ननु कारिकायां शास्त्रं वा श्रीकृष्णवाक्यमस्त्विति चेन्न । अधिकरणघटकसंशयस्य उत्तरोत्तरसंदेहवारकं परिकीर्तितमिति निबन्धेऽभिधानात् । तत्रेति श्रौतवाक्ये । समेति कारिकोक्तनिर्णयपदवाच्यसिद्धान्तनिर्णयविपरीतसिद्धान्तः । अनर्थकम् न अर्थो निवृत्तिर्यस्मात् तादृ

संदेहवारकं शास्त्रं पदशक्त्या तु निर्णयः।
जीवादुत्कर्षशब्देन द्वयोर्वाक्येऽपि न क्षतिः॥

गुहात्मपशब्दाभ्यामित्यर्थः। ऋतं पिबन्तावित्यत्रैवं संशयः। किं जीवद्वयं निरूपयति, आहोस्विज्जीवब्रह्मणी वेति। तत्र ब्रह्मप्रकरणस्य सामान्यत्वात्,

भाष्यप्रकाशः।

कार्यः। अन्यथा तु समाधानमनर्थकमेव स्यात्। नचोक्तयोरुभयोरपि संदिग्धत्वात् केन स निर्णय इति शङ्क्यम्। पदशक्त्या तु निर्णयः। संदेहाकारस्य। कस्य पदस्य शक्त्येति चेत्। जीवादुत्कर्षशब्देन। जीवं प्राप्य उत्कर्षबोधको यः शब्दस्तेन। वाक्ये द्वयोः पक्षयोर्न क्षतिः। तथाच तादृशपदस्य शक्त्या जीवद्वयपक्षो जीवपरमात्मपक्षश्चेति द्वावपि संग्रहीतुं शक्येते इत्यर्थः। जीवादुत्कर्षशब्दः को वेत्यपेक्षायां व्याकुर्वन्ति गुहेत्यादि। इदं पूर्वोत्तरपक्षयोर्विवरण एव स्फुटीभविष्यति। ननु, यः सेतुरीजानानामिति मन्त्रस्यापि प्रकरणद्वयमध्ये पाठोऽस्तीति स कुतो न विचार्यत इत्यत आहुः ऋतमित्यादि। तथाच तत्राक्षरं ब्रह्म स्फुटमेव श्रूयते इति संदेहाभावात् स न विचार्यते, किंत्वत्रैवैवं संशयादयमेव विचार्यत इत्यर्थः। एवं संशयं साधयित्वा पूर्वपक्षमाहुः तत्रेत्यादि। अयमर्थः। यद्यस्मिन् मन्त्रे ब्रह्मैव प्रतिपाद्यं भवेत् तदा पूर्ववह्वयामि-

रश्मिः।

स्यात्। पूर्वपक्षोत्थानद्वारा संदेहान्तरस्य समाधानान्तरप्रवृत्तिजनकत्वात्। उक्तयोरिति अर्थप्रकरणयोः। स इति निर्णयविषयीभूतसिद्धान्तः। पदेति पदानां गुहात्मपदानाम्। शक्त्या अभिधावृत्त्या तात्पर्यवृत्त्या च सिद्धान्तस्य निर्णय इति। कारिकार्थोपि कस्य निर्णय इत्याकाङ्क्षायामाहुः संदेहाकारस्येति। संदेहस्याकारो यस्मै सिद्धान्ताय स तथोक्तः सिद्धान्तस्तस्येत्यर्थः। कस्येति जीवनिरूपणं सूत्रे कुतः ब्रह्मविचारस्य प्रतिज्ञानात् यदि स्वस्माद्ब्रह्मोत्कर्षार्थं तर्हि कस्य पदस्य शक्त्या जीवनिरूपणमिति प्रश्नः। जीवं प्राप्येति जीवादित्यत्र ल्यब्लोपे पञ्चमी व्याकृता। तथाच जीवाद् ब्रह्मोत्कर्षशब्देनातपशब्देन कृत्वा छायापदशक्त्या वाक्ये श्रुतिवाक्ये जीवनिरूपणं सूत्रे त्वात्मा चात्मा चात्मानावित्येकस्यात्मपदस्य शक्त्या जीवनिरूपणम्। अतः पक्षयोः जीवद्वयजीवपरमात्मद्वयरूपयोरेकतरयोर्द्वयोर्जीवपरमात्मनोर्न क्षतिः ब्रह्मनिरूपणीयेपि जीवनिरूपणस्य नासंगतिरित्यर्थः। तथाचेति। तादृशपदमात्मच्छायापदम्। तस्य शक्त्या जीवद्वयपक्षपरमात्मपक्षश्चेत्येतयोः एकतरौ द्वौ जीवपरमात्मानौ अप्येवकारार्थः। तावेव संग्रहीतुं शक्येते इत्यर्थः। जीवादिति छायात्मपदे जीवशब्दो जीवादुत्कर्षशब्दः को वेत्यपेक्षायामित्यर्थः। गुहेत्यादीति गुहाशब्द उत्कर्षबोधक एव। जीवाच्छिद्राणि च ब्रह्म तु गुहां प्रविष्ट इत्युत्कर्षः। स्पष्टमातपशब्दस्योत्कर्षबोधकत्वम्। गुहाशब्देनातपशब्देन चेति भाष्यार्थः। कारिकायामुत्कर्षशब्देनेत्येकवचनात्। संशयनिरूपणं तु इदानीं भविष्यति। अतः संदेहपरत्वेन न प्रकाशो व्याख्यातः सिद्धान्तपरत्वेन तु व्याख्यातः। संदेहाकारस्येत्यत्र संदेहस्येत्येव वदेयुः। सिद्धान्तपक्षे तु अत्राकारपदं सार्थकम्। न च सिद्धान्तस्येति संदेहाकारस्येत्यत्र वदेयुर्यदि सिद्धान्तपक्षोभिप्रेयात्तिति शङ्क्यम्। कारिकायां संदेहवारकमित्यनेन संदेहपुरस्कारेण सिद्धान्तोक्तेः। एतेन सिद्धान्तपदाश्रवणात्कारिकायां संदेहपदश्रवणात् संदेहपरत्वेन व्याख्यानं युक्तमिति प्रत्युक्तम्। एव स्फुटीति। अस्योपपादनसापेक्षत्वात् एवकारः। अन्यत्र नेत्यन्ययोगव्यवच्छेदकः। तथा चैव कारिकार्थः। ननु जीवपरमात्मनिरूपणेऽर्थप्रकरणयोः संदिग्धत्वेन विचारकरणाभाव इति चेत्तत्राहुः संदेहवारकं शास्त्रमिति। सूत्रजातं संदेहस्य श्रुतिष्वधिकरणान्तर्गतस्य वारकं पूर्वपक्षोप-

यस्तु विज्ञानवान् भवतीत्यग्रे विद्वदविदुषोर्वक्तव्यत्वात् तदर्थमुभयोः प्रथमं निर्देश उचितः । मन्त्रेऽपि, ऋतं स्वर्गापवर्गलक्षणं सुखम् । मार्गद्वयस्यापि विहितत्वात् सुकृतलोकत्वम् । गुहा तत्त्वविचारो हृदयं वा । जात्यपेक्षया त्वेकवचनम् । परमपरार्ध्यं सत्यलोकः । तत्रोभयोर्भोगात् । अविद्यया पिहितप्रकाशत्वादविदुषः छायात्वम् । ब्रह्मज्ञानेनातिप्रकाशत्वादातपत्वं विदुषः । अत एव विदुषः स्वरूपं ब्रह्मविदो वदन्ति । पञ्चाग्नयस्त्रिणाचिकेताश्चेतरम् । इन्द्रियमनसोस्त्वचेतनत्वान्न वाक्यार्थसंगतिः । वाक्यार्थयोगे हि विशेषनिर्णयः । तस्माद् बद्धमुक्तजीवपरतयोपपन्नत्वात् तत्प्रकरणपाठान्न ब्रह्मवाक्यमिति । एवं प्राप्ते, उच्यते ।

---

भाष्यप्रकाशः

वाग्राप्युपास्यत्वेन प्राप्यत्वेन च ब्रह्मोच्यत इति प्रकरणस्य तौल्यादेकवचनमेवात्र वदेत् । वदति द्विवचनमतोऽत्र, न ब्रह्माभिप्रेतं, किंतु बद्धमुक्तजीवावेवाभिप्रेतौ । अतः प्रथममुभयोर्निर्देशः । नचैवं मन्त्रवर्णासंगतिः । मन्त्रेऽपि ऋतपदेनोक्तरीतिकं द्विविधं सुखमुच्यते । प्रवृत्तिनिवृत्तिरूपस्य मार्गद्वयस्यापि विहितत्वात् सुकृतत्वेन तज्जन्यस्य शरीरस्य लोकत्वम् । तत्र गुहा तदुपयोगी तत्त्वविचारो गुहेव गुहा । यदि गौणी नाद्रियते, तदा हृदयाकाशः । नच विचारादेर्भिन्नत्वाद् द्विवचनं

रश्मिः ।

भ्रमद्वारा निरासकम् । न सूत्रजाते सिद्धान्तोपपादके शास्त्रे संदेहवारके पदानां गुहाप्रविष्टात्मपदानां शक्त्याभिधया वृत्त्या तात्पर्यवृत्त्या च तु सिद्धान्तस्य निर्णयो भवतीत्यर्थः । ननु भवतु निर्णयः परंतु ब्रह्मजिज्ञासा प्रतिज्ञातेति जीवनिरूपणार्थमात्मानाविति द्विवचनस्य किं प्रयोजनमिति चेत्तत्राहुः जीवादिति । जीवाद्ब्रह्मण उत्कर्षस्य बोधकः शब्दस्तेन प्रयोजनेन हेतुना वाक्ये सूत्रात्मके विषयवाक्ये वा द्वयोर्जीवब्रह्मणोरपि न क्षतिर्नासंगतिरूपो दोष इत्यर्थः । जीवनिरूपणमपि संगतमिति भावः । यः सेतुरिति अयं मन्त्रः ऋतं पिबन्तावित्यस्याग्रे पठितः । मन्त्रस्तु 'यः सेतुरीजानानामक्षरं ब्रह्म यत्परम् । अभयं तितीर्षतां पारं नाचिकेतं शकेमहि' इति । श्रुत्यर्थस्तु सेतुः सेतुरिव सेतुः ईजानानां नाचिकेतं वयं शकेमहि यजमानानां कर्मिणां नाचिकेतोऽग्निस्तं वयं शकेमहि शक्नुवन्तः ज्ञातुं चेतुं च । तौल्यादिति तेन भाष्ये समासत्वादित्यत्र सामान्यात्तौल्याद्वेति पाठः । एकवचनमिति पूर्वपक्षत्वान्मायाप्रतिबिम्बितं चैतन्यमीश्वरोऽविद्यायां प्रतिबिम्बितं चैतन्यं जीव इत्यादिप्रकारेण जीवब्रह्मवादादेकवचनम् । मन्त्रेपीति भाष्यमवतारयन्ति स्म न चैवमिति । विद्वदविदुषोर्भिन्नफलकत्वादेककर्तृपानकर्तृत्वासंगतिः । सुखमिति शक्यतावच्छेदकं सुखत्वमत्र गृह्यते न तु विषयसुखत्वं नापि मोक्षसुखत्वमिति नर्तमित्येकवचनविरोधः इत्यर्थः । मार्गेतिभाष्यं विवरामासुः प्रवृत्तीति । 'ज्योतिष्टोमेन स्वर्गकामो यजेत' 'ऋते ज्ञानान्न मुक्तिः' इति तमेवैकं जानीथात्मानमिति वा । सुकृतेति भाष्यं विवृण्वन्ति स्म सुकृतेति । सुष्ठु कृतस्य कर्मणो देहजनकत्वात् सुकृतत्वेन रूपेण वर्तमानकर्मणा जन्यस्य शरीरस्य लोकत्वं प्रकाशकत्वं लोकृ दर्शने भ्वादिरात्मनेपदी सेट् । ननु ज्ञानमार्गफलं नोक्तमिति चेन्न ज्ञानानन्तरमावरणभङ्गादातपाने शरीराभावादृतं पिबन्तौ इत्यनेनैव ज्ञानव्यापारोक्तत्वात् । गुहेति भाष्यं विवरामासुः तत्त्व गुहेति । तत्र जीवन्मुक्तेपि ।

गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्। गुहा हृदयाकाशस्तत्र सत्कृते-कस्मिन् प्रविष्टौ जीवपरमात्मानावेव। अनेन जीवेनात्मनानुप्रविश्येत्युभयोः

भाष्यप्रकाशः।

श्रवणम्। जात्यपेक्षयैकवचनस्यापि युक्तत्वात्। परमः परश्चतुर्मुखो यत्र मीयते तादृशं परार्धमुत्तमं सत्यलोक एव। तत्रोभयोः। शतजन्मीनस्वकर्मशुद्धस्य कर्मिणो वेदान्तविज्ञानसुनिश्चितार्थस्य सन्न्यासिनश्च भोगादिति। विद्वदविद्वतोरिति विच्छब्दान्मतुप्। योग इति संबन्धे। शेषं स्फुटम्। एवं पूर्वपक्षमुक्त्वा समाधानं व्याकुर्वते गुहामित्यादि। एकस्मिन्निति एकदेत्यर्थः। अत्र हेतुर्हि-शब्देन सूच्यते। तं विवृण्वन्ति अनेनेत्यादि। अनेन जीवेन सहात्मनेत्यर्थः। नच सहार्थे

रश्मिः।

'आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे।
कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः' ॥

इत्यत्र भक्तिपदेन स्मरणस्याप्युक्तेः। 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यत्र मननोक्तेश्च युक्तिभिरनुचिन्तनस्य मननपदार्थत्वात्। हृदयाकाशौ वेति पाठः। जीवन्मुक्तस्य लोकस्य च। जातीति भाष्यं विवरांचक्रुः न चेति। गुहे इति द्विवचनम्। एकेति गुहामित्येक-वचनम्। परममिति भाष्यं विवृण्वन्ति स्म परम इति। तत्रोभयोरिति भाष्यं विवरांबभूवुः तत्रोभयोरिति 'शतजन्मभिः पुमान्' इत्यादिवाक्यानि।

'वेदान्तविज्ञानसुनिश्चितार्थाः
सन्न्यासयोगाद्यतयः शुद्धसत्त्वाः।
ते ब्रह्मलोके तु परान्तकाले
परामृतात्परिमुच्यन्ति सर्वे' ॥

इति श्रुतिश्च। एवं पूर्वार्धं व्याख्याय तत्र किंचिदाहुः विद्वदिति मतुबिति। वसुप्रत्यये तु विद्वदविदुषोर्विद्वोऽविदुषोरिति प्रयोगौ स्याताम्। विच्छब्दान्मतुपि तु विद्वांश्च विद्वांश्च विद्वांसौ तयो-र्विद्वतोः ग्रय इति सूत्रेण मतुपो मस्य वः संप्रसारणं तु वसोर्न मतुपो वस्य। 'वसोः संप्रसारणम्' इति सूत्रात्। भाष्ये। न वाक्यार्थेति। अन्तःप्रवेशनानुकूलो व्यापारो वाक्यार्थो न मुख्यक्रियात्वा-भावात्। वदन्तीति वद व्यक्तायां वाचि व्यक्तवागनुकूलो व्यापारो वाक्यार्थः। कर्तृकर्मान्वयविशिष्टः। तथाचेन्द्रियमनसोर्गौणक्रियाऽयोगे तद्द्वारा मुख्यक्रियाऽयोगः सेयमसंगतिः। यथा सैन्धवमानयेत्यत्र भोजनकाले आननक्रियायामश्वायोग इति विशेषेण लवणस्य निर्णयः। प्रकरणेति द्वितीयवल्ल्याः समाख्या ब्रह्मप्रकरणेतरजीवप्रकरणपाठादित्यर्थः। प्रकृते। एकस्मिन्निति न गुहाविशेषणम्। गुहायाः स्त्रीत्वात्। किं तु कालविशेषणमित्याशयेन व्याचक्रुः एकदेति। हृदयाकाशविशेषणत्वे तु न दोषः। तथाच भाष्यं न ह्येकस्मिन् हृदयाकाशे इति। आत्मनेति 'प्रकृत्यादिभ्य उपसंख्यानम्' इति वार्तिकेन तृतीया। आत्माभिन्नास्मत्पदार्थोऽनुप्रविश्येमास्तिस्रो देवता इत्यर्थः। सेयं देवतैक्षत हन्ताह-मिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति छान्दोग्ये सैवात्र संदिग्धेति यथाह तट्टीकायां देवता अमलत्वभूताः सूर्यबिम्बवदनुप्रविश्यात्मना संसज्य तद्देहाभिमानीभूत्वा

प्रवेशाश्रवणात्। न ह्येकस्मिन् हृदयाकाशे जीवद्वयं प्रवेष्टुमर्हति । अर्थस्त्वेवं संभवति पूर्वाधिकरणे यथाभिलषितभोगो भगवति साधितः। प्रकारान्तरेणापि,

भाष्यप्रकाशः।

तृतीया चेत् स्यात् तदोक्तं संभवेत्। सैवात्र संदिग्धेति वाच्यम्। 'गुहाहितं गह्वरेष्ठं पुराणम्' 'यो वेद निहितं गुहायां परमे व्योमन्' इत्यादौ श्रावितस्य निहितत्वादेः स्वरूपेण प्रवेशं विनानुपपत्त्यात्र तथा निश्चयात्। यद्यपि तत्र परमात्मनः सिद्धवन्निर्देशस्तथापि, तत् सृष्ट्वा तदेवानुप्राविशत्, तदनु प्रविश्य सच्च त्यच्चाभवदिति श्रुत्यन्तरात् प्रवेशहेतुक एवेत्यर्थः। नन्वत्र जीवपदात् तयोरेव सोऽस्त्वित्यत आहुः न हीत्यादि। हृदयाकाशे हि जीवस्य प्रवेशो नामादिव्याकरणार्थः। व्याकरणं चैकेनैव संभवति। अत एवैकवचनम्। अन्यथा जीवाभ्यामित्यादि वदेत्। पुराणेष्वपि,

'चित्तेन हृदयं चैत्यः क्षेत्रज्ञः प्राविशद्यदा।
विराट् तदैव पुरुषः सलिलादुदतिष्ठत' ॥

इत्यादौ देहोत्थापनायाप्येक एवोक्तः। अतो व्यष्टिदेहेऽप्येक एव मन्तव्यः। अन्यथा करणाधिपौ द्वौ स्याताम्। ततश्च सुकृतदुष्कृतभोगोऽपि श्रुत्यादौ द्वयोरुच्येत। व्यवस्था च भज्येत। अतो जीवद्वयमेकत्र प्रवेष्टुं नार्हतीति कार्यबलात् सहार्थेऽपि सती तृतीया जीवस्य ब्रह्मसाम्यमेव गमयतीत्यर्थः। ननु भवत्वेवं तत्र तथापि प्रकृतमन्त्रार्थः कथं संगच्छत इत्यत आहुः अर्थ इत्यादि। यथेति भिन्नं पदं नित्यसंबन्धात् तथापदमध्याहरति। तेनास्मिन्नधिकरणे जीवेन

रश्मिः।

नामरूपे नाम्ना रूपेण च सूक्ष्मं पिण्डं व्याकरवाणीति। अत्रास्मत्पदार्थः सूर्यो बिम्बं यथातपरूपेणानुप्रविश्य तापयति एवं जीवेनात्मना देवताः प्रविश्य नामरूपे व्याकरोत्यतः स्वयं सूर्यबिम्बवदप्रविष्ट इति प्रविश्येत्यत्रानन्वितो जीवेनेत्यत्र स्वस्य जीवसाहित्यं प्रवेशे विघटयन् सहार्थे तृतीयां विघटयति। ननु तर्हि न संदिग्धेति चेन्न गुहां प्रविष्टाविति श्रुतावेव सहप्रवेशज्ञापनादिति। श्रुत्योर्विरोधे विकल्पः प्राप्तस्तमसहमाना विकल्पापादकश्रुत्यां सहार्थे तृतीयां साधयामासुः गुहाहितमिति।

'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्।
अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति' ॥

इति मन्त्रः। अस्यार्थः गुहायां हृदयाकाशे आहितं स्थितम्। गह्वरे अनेकानर्थसंकुले देहे स्थितं पुराणमनादिपुरुषम्। अध्यात्मयोगः ब्रह्मणि चित्तसमाधानं तेन प्राप्तं यदधिगमो ज्ञानं ज्ञानाभिन्नभक्तिर्वा तेन तया वा विदित्वेत्यर्थः। व्योमन्निति सप्तम्या लुक्। निहितेति आदिना मत्वेत्युक्तम्। मननं हर्षशोकत्यागश्च। अत्रेति। अनेन जीवेनात्मनानुप्रविश्येत्यत्र। तथेति सहार्थे तृतीयात्वेन तृतीयानिश्चयात्। तत्रेति गुहां प्रविष्टावित्यत्र गत्यर्थाकर्मकेभ्यः कर्तरि क्तो भूते लुका विगृह्य प्राविविक्षतामिति प्रविष्टाविति सिद्धवन्निर्देशः कर्तव्यः। तत्सृष्ट्वेति इदं सर्वं सृष्ट्वा सच्च त्यच्चेति यद्वास्माकं त्वत्तत्सृष्टं नास्ति तत्सृष्ट्वेत्यादिश्रुतेरर्थः शंकरभाष्ये। तयोरिति प्रतिबिम्बभूतजीवयोः। नामादीति आदिपदेन रूपमनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति श्रुतेरित्यर्थः। पुराणेष्विति एकपुराणोदाहरणेन गतार्थत्वान्न पुराणान्तराण्युच्यन्ते। इत्यादावित्यादिपदेन पुराणान्तरवाक्यानि। करणेति करणानि इन्द्रियाणि यथोक्तं श्रीभागवते तृतीयस्कन्धे।

ऋतं सत्यं परं ब्रह्मेति ऋतसत्ययोर्ब्रह्मत्वप्रतिपादनात् स्वरूपाऽमृतपातारौ। सुकृतमपि ब्रह्मैव। 'तस्मात् तत्सुकृतमुच्यते' इति श्रुतेः। स एव लोकः। उपचारात् षष्ठी।

अक्षरं वा परमपरार्ध्योपरि तत्रस्थानां परिदृश्यमानत्वाच्छाया प्रतिसारूप्यं सायुज्यं गतस्य जीवस्यापि तथात्वात् ततोऽपि विशिष्टं ब्रह्म प्रकटा-

भाष्यप्रकाशः

सहापि विवक्षितरीतिकं भोगं साधयतीत्यर्थः। तमेव प्रकारं स्फुटीकुर्वन्ति ऋतमित्यादि। उपचारादिति राहोः शिर इतिवदभेदेऽपि भेदोपचारात्। उपचारमरोचयन्तो लोकपदस्यार्थान्तरमाहुः अक्षरमित्यादि। तथाच, परमे परार्धे इति या सप्तमी सा वृक्षाग्रे श्येन इतिवदौपरिष्टिकसामीप्ये। तेनोपचाराभावादक्षरमेव लोक इत्यर्थः। छायातपौ विदुर्वन्ति तत्रस्थेत्यादि। तत्रस्थानामक्षरात्मकभगवल्लोकस्थानां जीवब्रह्मणोः परिदृश्यमानत्वादन्येषां चापरिदृश्यमानत्वात्

रश्मिः।

'निर्भिन्ने त्वक्षिणी त्वष्टा लोकपालोऽविशद्विभोः।
चक्षुषांशेन रूपाणां प्रतिपत्तिर्यतो भवेत्' ॥

अत्र त्वष्टा सूर्यः। चक्षुषोरधिप एकः। न च 'निर्भिन्ने अश्विनौ नासे विष्णोराविशतां पदम्' इत्यत्र अश्विनाविति द्विवचनेन करणभूतनासाधिपौ द्वावुक्तौ इति चेन्न साहित्यात् यथा पुनर्वसू 'स्वर्वैद्यावश्विनीसुतौ नासत्यावश्विनौ दस्रावाश्विनेयौ च तावुभौ' इति स्वर्गवर्गे तावुभाविति द्वित्वविशिष्टत्वादेकवचनाभाव इति स्वामी। अयं प्रायोवादः 'देव्यां तस्यामजायेतां नासत्यो दस्र एव च' इति मार्कण्डेयात् नासत्याविति दस्राविति चैकवाचकयोरुभयोः प्रयोगो गौण इति व्याख्यासुधायाम्। श्रुत्यादाविति 'अन्यः पिप्पलं स्वाद्वत्ति' इतिश्रुतौ। आदिना

'यया संमोहितो जीव आत्मानं त्रिगुणात्मकम्।
परोपि मनुतेऽनर्थं तत्कृतं चाभिपद्यते' ॥

इति समाधिभाषायाम्। द्वयोरिति प्रतिबिम्बितजीवयोः। व्यवस्थेति द्वा सुपर्णा सयुजा सखायेति श्रुत्या द्वयोः प्रवेशे द्वयोर्भोगापत्त्या तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीतीति भोगाभोगव्यवस्था च भज्येतेत्यर्थः। कार्येति सुकृतदुष्कृतभोगबलात् जीवस्येति निरूपितं षष्ठ्यर्थः। ब्रह्मेति ब्रह्मणि साम्यम्। सुप्सुपेति समासः। उपचारमसहमानानां युष्माकं न कर्मणा वर्धते नो कनीयात् इति श्रुतेर्ब्रह्मणि कथं सुकृतजन्यो भोगः इत्याशङ्कते ननु भवत्विति। नित्येति यत्तदोर्नित्यसंबन्धात्। ऋतमित्यादीति श्रुत्यर्थस्तु स्पष्टः। श्रुतिकथनेन ऋतं जलनामसु पठितमपि अत्र न विवक्षितमिति सूचितम्। राहोरिति। राहुभिन्नं शिरः इति बोधः। अरोचयन्त इति वैकुण्ठश्रीगोकुलेतरत्र जीवभोगो जीवरूपेण अवताररूपेण चेन्द्ररूपेण वा सुकृतलोके न तु मुक्तैर्जीवैरतोऽरोचयन्त इत्यर्थः। तत्रस्थानामिति 'कर्तृकर्मणोः कृति'इति सूत्रेण कर्तरि षष्ठी। जीवेति कर्मणि षष्ठी। परीति मुक्तोपसृप्यव्यपदेशादिति वैयाससूत्रात्। एवमिति भाष्ये छाया तेजोऽभावः कोशे परं तु छायापुरुषस्य ज्योतिःशास्त्रप्रसिद्धत्वात् प्रतिनिधिसारूप्यं यस्य छाया तस्य प्रतिनिधिंसारूप्यम्। युनक्तीति युज् सहयुज् सयुज् सयुजो भावः सायुज्यं तत्प्रासस्य गोप्यादेः

'केवलेन हि भावेन गोप्यो गावो नगा मृगाः।
येन्ये मूढधियो नागाः सिद्धामामीयुरञ्जसा' ॥

मन्दत्वाद्वातपः परोक्षवादः । काण्डत्रयेऽपि तद्वाद इति त्रयाणां ग्रहणम् । अतो युक्त एवायमिति हिशब्दार्थः ।

---

भाष्यप्रकाशः ।

तान् प्रत्येवं कथनं परोक्षवादः । प्रतिसारूप्यमिति प्रतिकूलं सारूप्यम् । विरुद्धं प्रतिबिंबवत् सारूप्यमित्यर्थः । त्रयाणामिति ज्ञान्युपासककर्मिणाम् । तथाचायं मन्त्रार्थः । परो मीयते यत्र, परस्य वा मा लक्ष्मीर्यत्र तादृशे परार्धाऽभिधलोकोपरितने अक्षरात्मके लोके, गुहां सत्यब्रह्मपुरस्थं दहरपुण्डरीकं वेश्म प्रविष्टौ सुकृतस्य ब्रह्मणः ऋतं सरूपाऽमृतं पिबन्तावनुभवन्तौ जीवपरमात्मानौ ब्रह्मविदो ज्ञानिनः पञ्चाग्नय उपासकास्त्रिणाचिकेताः कर्मिणश्च छायातपौ पूर्वोक्तरीत्यातिसरूपत्वेऽपि विलक्षणौ । भगवतः परोक्षप्रियत्वात् तत्तोषार्थं परोक्षवादेन वदन्तीति । तेन जीवब्रह्मपक्षाङ्गीकारेऽपि, न मन्त्रार्थासंगतिरित्यर्थः । तेन सिद्धमाहुः अत इत्यादि । यत एवं मन्त्राऽर्थोऽतोऽयं गुहाप्रविष्टात्मत्वरूपो हेतुर्ऋतपात्रोर्जीवपरमात्मत्वसाधने युक्त इति हिशब्दार्थः ।

रश्मिः ।

इत्येकादशद्वादशाध्यायोक्तस्य जीवस्य मुक्तस्य जीवन्मुक्तस्येतरस्य चापि पुष्टभक्तस्य सायुज्यं गतस्यापि तथात्वात् छायारूपत्वात् । ननु सायुज्ये कस्य छायेति चेन्न जीवत्वस्यौपाधिकत्वाभावात् सायुज्येपि जीवत्वात् महत्वप्राकट्येनाणोरणीयसो महतो महीयस ऐक्यात् । ननु सायुज्ये तिरोहितानामप्यानन्दैश्वर्यादीनामाविर्भावात् तेजोरूपत्वं न तु छायारूपत्वमिति चेन्न जीवत्वस्यौपाधिकत्वाभावात् किं च 'छिद्रा व्योम्नीव चेतनाः' इति सिद्धान्तमुक्तावल्याश्छिद्रभूतेष्वानन्दस्य श्यामस्याविर्भूतत्वेन तेजोभावरूपेषु छायात्वमपि । आतपत्वं समर्थयामासुः तत्तोपीति । विशिष्टं शिष्ट्र विशेषणे रुधादिः परस्मैपदी अनिट् विशेषणं सोश्नुते सर्वान् कामान् सह ब्रह्मणेति सहार्थेऽप्रधाने तृतीयाऽतः उत्कृष्टं वा । शिष हिंसायां भ्वादिः परस्मैपदी धातुस्तु सेट्त्वान्न गृहीतः । ननु प्रकटानन्दत्वाच्छ्यामस्तु तद् भास्वरशुक्लातपरूपमिति चेन्न श्यामभास्वरशुक्लयोर्भास्वरशुक्लस्य मुख्यत्वाच्छ्यामस्यातपत्वमपीति । सूर्यनारायणे प्रसिद्धम् । अत एवं कथनं परोक्षवाद इत्यर्थः । अन्येषामक्ष्णः परत्वात्परोक्षं तस्य वादः परोक्षवादः इत्यर्थः । ज्ञानीति ब्रह्मविदो वदन्ति इति ज्ञानिनो ज्ञानकाण्डे पञ्चाग्नय इति स्मार्ता उपासका उपासनाकाण्डे पञ्चरात्रे त्रिणाचिकेता इति कर्मिणः कर्मकाण्डे । भक्तास्तु 'अपि संराधने प्रत्यक्षानुमानाभ्याम्' इति सूत्रात् परिपश्यन्ति इति तेषामपरोक्षवाद इति ते न संगृहीताः । ज्ञानिनो वा माहात्म्यजीवब्रह्मैक्यज्ञानिनो अपेक्ष्यन्ते येषां भक्तिकारणवन्तः । सत्येति ब्रह्मपुराणमन्यत्रासत्यत्वाद्विशेषणम् । सत्येति । दहरेति अत्यन्तानुग्रहभाजामिदं 'आन्तरं तु परं फलम्' इति सुबोधिन्याः । पूर्वोक्तरीत्या भाष्योक्तरीत्या । अतिसरूपत्वमत्यन्तसरूपत्वम् । परोक्षेति 'परोक्षप्रिया इव हि देवा' इति श्रुतेः । अतोयमिति अयं सिद्धान्त इत्यर्थस्य स्पष्टत्वेनाविवरणार्हत्वं ज्ञात्वानुमानपक्षं 'जन्माद्यस्य यतः शास्त्रयोनित्वात्' इत्यधिकरणभाष्यासंमतमप्यन्येषां रोचनार्थमाहुः गुहां प्रविष्टेति । तथा च त्रयोदशाध्याये गीता ब्रह्मसूत्रपदैश्चैव हेतुमद्भिरिति अयं परोक्षवाद इति नार्थोऽसौत्रत्वात् । हेतुः ऋतेति हेतुरित्यत्र विरतिरतः संहिताभावान्न हेतुर्ऋतपात्रोरिति प्रयोगो नापि हेतू ऋतपात्रोरिति । ऋतशब्दस्याजादित्वहलादित्वयोरन्यत्र दर्शनात् । ऋतपातारौ जीवपरमात्मानौ गुहाप्रविष्टत्वात् । मुखैवं तत्रैवं पठवत् । हि शब्दोवधारणे भाष्य उक्तत्वं सिद्धान्तरूपं गुहा-

नन्वप्रकृतत्वात् कथमेवमिति तत्राह तद्दर्शनात् । तयोर्दर्शनं तद्दर्शनं तस्मात् जीवब्रह्मणोः प्रतिपादनीयत्वात् । येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके, नायमस्तीति चैके, एतद्विद्यामनुशिष्टस्त्वयाहमिति जीवः पृष्टः । 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात्, अन्यत्र भूताच्च भव्याच्च यत्तत् पश्यति तद्वद' इति ब्रह्मापि पृष्टम् । तत्र ब्रह्म निरूप्य जीवं निरूपयन्नुभयोस्तुल्यत्वेन महाभोगं निरूपयन् फलार्थं मध्ये स्वरूपं कीर्तयति । अतो ब्रह्मवाक्यमेवैतदिति सिद्धम् ॥ ११ ॥

भाष्यप्रकाशः ।

तथाच गुहाप्रविष्टात्मरूपस्य हेतोरस्पष्टत्वेऽपि ब्रह्मलिङ्गत्वं युक्तमित्यर्थः । प्रकरणस्य हेतुलिङ्गतासाधकत्वात् तन्निश्चायनाय सूत्रशेषमवतारयन्ति नन्वित्यादि । व्याकुर्वते तयोरित्यादि । पूर्वप्रकरणे ब्रह्म निरूप्यात्र प्रकरणे जीवं निरूपयन्नुभयोस्तौल्यं विना महाभोगासंभवात् तेन तं निरूपयन् महाभोगरूपफलार्थं मध्येऽनेन मन्त्रेण तुल्यत्वबोधकं स्वरूपं कीर्तयतीत्यतो ब्रह्मणः प्रकृतत्वाभावाप्रकृतत्वदोष इत्यर्थः ॥ ११ ॥

रश्मिः ।

प्रविष्टात्मत्वरूपं हेतुमवधारयतीत्याहुः तथा चेति । अस्पष्टत्व इति श्रुतिसूत्रयोस्तितयस्येति तृतीयापञ्चमीरूपस्याभावादस्पष्टत्वेपि ऋतपात्रोर्ब्रह्मत्वसाधकत्वमप्युक्तम् । प्रकरणस्येति हेतोर्लिङ्गता हेतुलिङ्गता तस्याः साधकत्वात् । हेतुर्गुहाप्रविष्टात्मत्वरूपो ब्रह्मलिङ्गं ब्रह्मप्रकरणात् । यत्र यत्प्रकरणं तत्र तल्लिङ्गमिति व्याप्तिः । अनुमाननिरूपणे वह्निप्रकरणे धूमवदिति दृष्टान्तः । तन्निश्चायेति प्रकरणनिश्चायनाय । नन्वित्यादीति जीवब्रह्मणोरप्रकृतत्वादिति भाष्येर्थः । व्याकुर्वत इति आत्मनेपदं स्वेषामाचार्याणां तत्सारभूतरासस्त्रीभावपूरितविग्रहत्वेन जीवब्रह्मणोरप्रकृतत्वे तयोर्महाभोगसाधनमप्रकृतं शिथिलं स्यादिति तयोः प्रकृतत्वोपपादनफलमात्मगामीति प्रकृतत्वं तयोर्व्याकुर्वत इत्यर्थः । तयोरित्यादीति । प्रतिपादनीयत्वादिति । ननु दर्शनप्रतिपादनीयत्वयोः कथं पर्यायतेति चेन्न प्रतिपादनीयत्वं ब्रह्मजीवनिष्ठं जातित्वाभावात्कुत्रान्तर्भवतु ब्रह्मजीवयोरिति चेन्न धर्मान्तर आविर्भाव्य ब्रह्मजीवयोरन्तर्भवतु न तं विना धर्मत्वेन प्रतीतिबाधात् । न च धर्मान्तरमेव तयोरन्तर्भवत्विति शङ्क्यम् । गौरवात् । अतः प्रतिपादनमभिधा । घटोस्तीत्यत्र घटपदे घटार्थाभिधावत् । तादृशाभिधार्हं प्रतिपादनीयम् । 'अर्हे कृत्यतृचश्च' इति तयाभिधया दृष्टं प्रतिपादनीयम् । मीमांसकानां शक्तिग्रहणप्रनाड्यां प्रयोजकवृद्धेनोक्तः प्रयोज्यवृद्धो घटमानयेति तदा मध्यस्थोवधारयति । घटपदाभिधया दृष्टो घटो घटपदप्रतिपादनीय इति तद्वत् । अभिधया दृष्टत्वं जातित्वाभावात् दर्शनमेवं प्रतिपादनीयत्वं दर्शनमित्येवं पर्यायत्वेन दर्शनात् । प्रतिपादनीयत्वादिति पर्याय इति निष्पन्नम् । श्रुत्यर्थस्तु या इयं प्रेते मृते मनुष्ये विचिकित्सा संशयः का सा इत्यत आहुः अस्तीति । अस्ति शरीरेन्द्रियबुद्धिमनोव्यतिरिक्तो देहान्तरसंबन्ध्यात्मेत्येके नायमेवंविधोस्तीत्येक इति । एतज्जीवसंबन्धिनीं विद्यां एतज्जीवसंबन्धिविद्यां जानीयां वाहं कीदृशस्त्वया मृत्युनाऽनुशिष्टः शिक्षितो विशेषणकृतो वा शिक्ष् विशेषणे हिंसितस्तु न सेट्त्वात् । वराणामेष वरस्तृतीयः । अत एवं संदेहे कोसौ जीव इति प्रश्न इति जीवः पृष्टः इति । अन्यत्र धर्मादिति कृतं जगदकृतं खपुष्पादिकं अकृतं नित्यं वा तयोः समाहारः कृताकृतं तस्मात् । भव्यात् भाविन इति प्रतीकसंगृहीतभाष्यार्थः । पश्यतीत्यत्र क्वचित्पुस्तके उपनिषदि पश्यसीति पाठः । तत्र ब्रह्मेति भाष्यं विवरीषवः पूर्वप्रकरण इति । महेति 'एकोऽहं बहु स्यां प्रजायेय' इत्यत्र

## विशेषणाच्च ॥ १२ ॥

विशेषणानि पूर्वोक्तानि जीवब्रह्मणोरेव संगतानि । अग्रिमं वा,आत्मानं रथिनं विद्धि, सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदमिति जीवप्राप्यं ब्रह्माह । अत उभयोरेव सर्वव्याप्तृत्त्या कथनादग्रिमग्रन्थपर्यालोचनयापीदं ब्रह्मवाक्यमेव । द्वा

भाष्यप्रकाशः ।

विशेषणाच्च ॥ १२ ॥ अनेनापि हेतुना ब्रह्मणः प्रकृतत्वमेव दृढीक्रियते । विशेषणं किमित्यपेक्षायामाहुः विशेषणानीत्यादि । पूर्वोक्तानीति पूर्वस्यां वल्ल्याम्, अणोरणीयानित्यादिषु द्रष्टृद्रष्टव्यत्वप्रसन्नप्रसादार्हत्ववरणैकलभ्यत्ववरणीयत्वादीनि । ननूक्तमेतस्योत्तरशेषत्वमतः पूर्वप्रकरणस्थान्यनुपयुक्तानीत्यत आहुः अग्रिमं वेत्यादि । उभयोरिति जीवब्रह्मणोः । सर्वव्याप्तृत्त्येति शरीराद्यात्मकसर्वजडव्याप्तृत्त्या । अन्ये तु मुण्डके, श्वेताश्वतराणां मन्त्रोपनिषदि च,

रश्मिः ।

प्रोपसर्गोक्तः प्रकर्षो मुख्यनीचभावेन तं तत्र भोगः । अत्र तु महाभोगो मोक्षापेक्षिहृदयस्येति तौल्यं विनासंभवः । तथा च ।

'अणोरणीयान् महतो महीयान् आत्मास्य जन्तोर्निहितो गुहायाम् ।
तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः' ॥

इति श्रुत्युक्ताणुत्वमहत्वाभ्यामन्यैराविर्भूतैश्वर्यादिभिश्च तौल्यमिति भावः ॥ ११ ॥

विशेषणाच्च ॥ १२ ॥ पूर्वस्यामिति ऋतं पिबन्ताविलस्याः पूर्वस्यां द्वितीयवल्ल्याम् । इत्यादिषु विशेषणेषु । द्रष्टा उक्तायां श्रुतौ तमक्रतुः पश्यति द्रष्टा जीव उक्तः द्रष्टव्यत्वं तमणोरणीयांसं महतो महीयांसं गुहायां निहितमुक्तवतीत्यतो द्रष्टव्यं भवतीति ब्रह्मणो द्रष्टव्यत्वमुक्तम् । वीतशोक इति प्रसन्नो जीव उक्तः । धातुः प्रसादादिति प्रसादपदसामर्थ्येन धाता प्रसादेन पोषकः प्रसादायार्हस्तत्वं प्रसादार्हत्वम् । अग्रेतनश्रुत्योर्विशेषणानि एतैर्विशेषणैश्चरितार्थानि । तथाहि । आसीनो दूरं व्रजतीति मन्त्रे मदामदं हर्षाहर्षं विरुद्धधर्माधारं मदन्यो ज्ञातुमर्हतीति मृत्व्यन्यो ज्ञातुं नार्हतीति जीवनिरूपणाभावान्नोभयविशेषणनिरूपणे तस्य प्रयोजनम् । मृत्युर्यद्यपि जीवस्थानापन्नीयो वक्तुं शक्यते तथापि बृहदारण्यके मृत्युस्तम इति जीवत्वाभावात् । ज्ञातृज्ञेयत्वं वा मृत्योर्जीवत्वे तु । अशरीरं शरीरेष्विति मन्त्रे धीरो न शोचति इति प्रसन्नो जीव उक्तः । महान्तं विभुमात्मानमिति महद् ब्रह्मोक्तम् । ते विशेषणे पूर्वमुक्त इति नायमात्मेत्यस्यां श्रुतौ विशेषणे ये ते आहुः वरणैकेति । 'यमेवैष वृणुते तेन लभ्यः' इति श्रुत्यंशोक्तं वरणैकलभ्यत्वं 'तस्यैष आत्मा वृणुते तनुं स्वाम्' इति वरणीयत्वमेतादृशो वरणीयो भवत्यात्मप्रदः । आदिना ।

'नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।
नाशान्तमनसो वापि प्रज्ञानेनैनमाप्नुयात्' ॥

इत्यत्र विरतो जीव उक्तः शान्तः समाहितश्च शान्तमनसश्च प्रज्ञानेनैवमाप्नुयादिति प्रज्ञानासव्यत्वं ब्रह्मण इति ब्रह्मोक्तम् । अग्रे यस्य ब्रह्म च क्षत्रं चेति श्रुतिस्तस्यामवेतृत्वेन जीव उक्तः अवेद्यत्वेन ब्रह्मोक्तम् । अवेत्ता जीवोऽवेद्यं ब्रह्म इति तयोर्विशेषणे स्तः । ननूक्तमिति मध्ये पाठादित्यादिभाष्यविभाग उक्तम् । ऋतस्येति ऋतमिति श्रुतिवाक्यस्य । पूर्वेति विशेषणानि । अग्रिमं वेतीति अन्यमार्गं

सुपर्णेति निःसंदिग्धम्। चकारः प्रकरणोक्तसर्वोपपत्तिसमुच्चयार्थः॥ १२॥

इति प्रथमाध्याये द्वितीयपादे चतुर्थं गुहां प्रविष्टावित्यधिकरणम्॥ ४॥

भाष्यप्रकाशः।

द्वा सुपर्णेति मन्त्रे चाप्ययमेव न्याय इति वदन्ति। तद् दूषयितुमाहुः द्वेत्यादि। अनूत्थानभयवाभ्यां

रश्मिः।

जीवब्रह्मप्रतिपादकं तत्तु 'आत्मानं रथिनम्' इत्यादि। अस्यार्थः। आत्मानं ब्रह्मरूपं जीवं रथस्वामिनं जानीहि इत्याहुः श्रुतयः। आत्मानमिति रथोऽस्यास्तीति रथी तं रथिनं रथिरूपकं जीवात्मनः। 'शरीरं रथमेव तु' शरीरे रथरूपकम्। 'बुद्धिं तु सारथिं विद्धि' बुद्धौ सारथिरूपकम्। 'मनः प्रग्रहमेव च' मनसि रश्मिरूपकम्। 'इन्द्रियाणि हयानाहुः' एकादशेन्द्रियेषु अश्वरूपकम्। 'विषयांस्तेषु गोचरान्' शब्दरूपरसगन्धस्पर्शेषु मार्गरूपकम्। 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' आत्मानो मनोभिः संयुज्यन्ते मनांसि इन्द्रियैरिन्द्रियाणि भोग्यैः शब्दरूपरसगन्धस्पर्शैस्तदा भोक्तेत्याहुः। बुद्धिसारथे-र्विनियोगमाह यस्त्वविज्ञानेति विज्ञानं बुद्धिरत्र 'बुद्धिं तु सारथिं विद्धि' इति विज्ञानसारथिर्यस्तु' इति बुद्धिविज्ञानयोः पर्यायताश्रावणात्।

'यस्त्वविज्ञानवान् भवति अयुक्तेन मनसा सदा।
तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः॥
यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा।
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः॥
यस्त्वविज्ञानवान् भवत्यमनस्कः सदाऽशुचिः।
न स तत्पदमाप्नोति संसारं चाधिगच्छति॥
यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः।
स तु तत्पदमाप्नोति यस्माद्भूयो न जायते॥
विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः'। सोऽध्वन इत्यादि।

अर्थस्तु स्पष्टः। बुद्ध्या पदार्थान् जानातीति ज्ञाने करणत्वेन बुद्धिसारथेर्विनियोग उक्तः। 'दृश्यते त्वग्र्या बुद्ध्या' इति श्रुतेः। जीवप्राप्यमिति तथा च प्राप्यप्राप्यहौ जीवब्रह्मविशेषणे। नन्वत्र ऋतपातृत्व-मुभयोः कथमिति चेन्न सायुज्यमत्र वाच्यम्। 'सायुज्यं कृष्णदेवेन शीघ्रमेव ध्रुवं फलम्' इति निबन्धात् सायुज्ये तु मुण्डकोपनिषदि।

'यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः।
तथाक्षराद्विविधाः सौम्य भावाः प्रजायन्ते तत्रैवापियन्ति'॥
'दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः।
अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः॥
एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी'॥ इति।
'मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्'। इति गीता।

जीवानामक्षरब्रह्मात्मकत्वेनाक्षरात्परस्य प्राप्यत्वेनोभयोः ऋतपातृत्वम्। एवं जीवप्राप्य ब्रह्महेत्वर्थः। अन्य इति शंकरानन्दा भास्कराचार्याश्च वदन्तीति तथा च शंकरभाष्यम्। एष एव न्यायो द्वा सुपर्णा सयुजा सखायेत्येवमादिष्वपीति। भास्करभाष्यं च द्वा सुपर्णेत्यप्याप्ययमेव न्याय इति। भास्कराचार्यमतेऽन्ये त्विति भाष्यविभागे द्वा सुपर्णेति मन्त्रे चेत्यत्र चोऽप्यर्थे। द्वा सुपर्णेतिमन्त्रेऽपीत्यर्थः।

भाष्यप्रकाशः ।

द्वयोर्विशेष्यमाणत्वेन, 'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्य-मीशमस्य महिमानमिति वीतशोकः' इति समनन्तरमन्त्रे च जीवपरमात्मनोरुक्तत्वेनासंदिग्धतया जीवान्तरस्य जडस्य च तत्र द्वितीयकोट्यप्रवेशाज्जीवपरमात्मानौ स्फुटौ प्रतीयेते । अतो न्यायप्रयो-जनाभावादयुक्तमित्यर्थः । नच तत्र परमात्मनोऽनशनस्योक्तत्वात्, ऋतं पिबन्तावित्यत्र जीवद्वय-मेव युक्तमिति शङ्क्यम् । पूर्वोक्तयुक्तिभिर्द्वितीयस्य ब्रह्मत्वसिद्धौ जीवान्तरस्य तत्राशक्यवचनत्वेन ब्रह्मणो भोगसिद्धेर्द्वा सुपर्णेति मन्त्रे जीववदशनाभावस्यैवानश्नन्नित्यत्र व्याख्येयतया जीवद्वयस्यात्रा-शक्यवचनत्वादिति । एवमत्र हृदयस्थस्य भोगसाधनेन पूर्वाधिकरणसिद्धोऽपि भोगः प्रकरणैक्या-न्मोक्षापेक्षिहृदयस्थस्यैवेति साधितम् । तथा मन्त्रव्याख्यानेनानन्दमयत्वरूपं वैशेष्यं च बोधितम् ।

शंकराचार्यास्तु, द्वा सुपर्णेति मन्त्रमुपन्यस्य पैङ्गिरहस्यब्राह्मणे, तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वम् । अनश्नन्नन्यो अभिचाकशीतीत्यनश्नन्नन्योऽभिपश्यति ज्ञः तावेतौ सत्त्वक्षेत्रज्ञाविति व्याख्याय, तदेतत् सत्त्वं येन स्वप्नं पश्यत्यथ योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञस्तावेतौ सत्त्वक्षेत्र-

रश्मिः ।

गुहां प्रविष्टावात्मानौ हि तद्दर्शनादिति सूत्रार्थं शंकरभाष्योक्तमाहुः अमूत्स्वेति । दर्शनादिलंशस्य विवृतप्रायत्वाद्विशेषणाच्चेति सूत्रार्थमनुवदन्ति स्म समाने वृक्षे इति । निमग्नः मगि गतौ भ्वादिः परस्मैपदी सेट् क्तः । अविद्याकामकर्मरागादिभाराक्रान्तो निश्चयेन देहात्मभावं प्राप्तोऽयमेवाहमस्य पुत्रो नप्ता इत्यादिना । न कस्यचित्समर्थोऽहं किं मे जीवितेनेत्यादिदीनभावोनीशा तया शोचति संतप्यते मुह्यमानः । यदा कदाचिच्छुद्धकर्मसु संचितनिमित्तः अनेकैर्योगमार्गैः कर्मभिश्च जुष्टं सेवितं विभूतिं महिमानं च जगद्रूपमस्यैव परमेश्वरस्येति पश्यति तदा वीतशोको भवतीत्यर्थः । जीवान्तरेति अपर आहेत्यादिशंकरभाष्योक्तस्य तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वस्य जीवस्य अनश्नन् इति ज्ञः परमात्मेत्युक्तस्य परमात्मनो क्षेत्रज्ञत्वेन रूपेण जीवान्तरस्य । जडस्येति अन्तःकरणस्य सत्त्वक्षेत्रज्ञ-शब्दयोरन्तःकरणशरीरपरतया प्रसिद्धत्वादिति शंकरभाष्यात् । तथा च जीवपरमात्मानावित्येव न तु जीवक्षेत्रज्ञौ नाप्यन्तःकरणशारीरौ श्रुत्यनर्थत्वात् । तत्रेति द्वा सुपर्णेत्यत्र । एवेति वेदः परमाणोक्षर-मात्रमपि अन्यथा न वदतीति जन्माद्यस्य यत इत्यधिकरणभाष्यात् । पिबन्ताविति श्रुतेर्निरपेक्षरवरूपायाः प्रामाण्यादेवकारः । भोगसिद्धेरिति अतो न पिबन्ताविति निरपेक्षरवस्य नापि भाष्यस्य प्रामाण्य-हानिरिति भावः । प्रकरणेति ननु द्वितीयवल्लीसमाप्त्या पूर्वाधिकरणविषयवाक्यस्य ब्रह्मप्रकरणस्थत्वं तृतीयवल्ल्यारम्भेऽस्याधिकरणस्य विषयवाक्यं जीवप्रकरणे इति कथं प्रकरणैक्यमिति चेन्न । जीवब्रह्मणो-र्भोगसाधनप्रकरणैक्यस्य प्रसङ्गसंगत्यात्र विवक्षितत्वात् । ननु ब्रह्मणो भोगसिद्धिरुक्ता सा पैङ्गिरहस्यसंम-त्यास्य न्यायस्य शंकराचार्यैः द्वा सुपर्णा इत्यत्र संचारणात् । पिबन्तावित्यत्र छत्रिणो यान्तीतिवल्लक्षणा न तु जीवब्रह्मणोर्महाभोग इत्याकाङ्क्षायामाहुः शंकरेति । ऋतं पिबन्तौ इति पूर्वोपन्यासेनाधिकरण-रचनायां भोगं दृष्ट्वा भ्रान्ता एव एव न्यायो द्वा सुपर्णा सयुजा सखायेत्येवमादिषु अतिदेशभाष्ये द्वा सुपर्णेत्यादिः । ताविति सत्त्वपदवाच्यः ज्ञपदवाच्यश्चेत्येतौ । व्याकयायेति द्वा सुपर्णेति मन्त्रमन्तःकरण-परमात्मपरत्वेन व्याख्याय कुत इत्याकाङ्क्षायां श्रुतिं पेठुः तदेतदिति । येनेति अन्तःकरणेन । उपद्रष्टा उप समीपस्थशरीरस्य द्रष्टा । तावेतातिति अन्तःकरणशारीरौ । ननु नेदमतिदेशभाष्यमपि तु

भाष्यप्रकाशः ।

द्वाविति नत्र निष्कर्षादत्रत्यः सिद्धान्तस्तत्र न युज्यत तर्ह्येतदधिकरणपूर्वपक्ष एव तदर्थोऽस्त्विति चेत् सोऽपि न । न ह वा एवंविदि किंचन रज आध्वंसत इत्यादिफलकथनात् । सर्वसंसारधर्मातीतो ब्रह्मस्वभावश्चैतन्यमात्ररूपोऽभिप्रेयते । अनश्नन्नन्योऽभिपश्यति ज्ञ इति व्याख्यानात् । यत् पुनः सत्त्वस्य भोक्तृत्वकथनं तत्तु सुखादिविक्रियावति सत्त्वेऽध्यारोपेण । अस्याः श्रुतेः क्षेत्रज्ञभोक्तृत्वबोधन एव तात्पर्यात् । न ह वेत्युक्ते फलवाक्ये अविद्यासंश्लेषाभावरूपफलकथनेन तथा निश्चयात् । इदं हि कर्तृत्वभोक्तृत्वं सत्त्वक्षेत्रज्ञयोरितरेतरस्वभावाविवेककृतं कल्प्यते । वस्तुतस्तु सत्त्वस्याचेतनत्वात् क्षेत्रज्ञस्य चाविक्रियत्वाच्चान्यतरस्यापि । किंच । सत्त्वस्याविद्याप्रत्युपस्थापितसद्भावत्वेन तत्त्वतोऽसत्त्वात् सुतरां न संभवतीत्याहुः ।

रश्मिः ।

द्वासुपर्णेति निःसंदिग्धमिति भाष्यस्य प्रकाशेऽत्तृत्वेत्याद्युक्तमत आहुः तत्र निष्कर्षादिति । पैङ्गिरहस्ये निष्कर्षात् भाष्ये निष्कर्षादित्यर्थः । निष्कृष्टोयमर्थ इति भावः । अत्रत्य इति अधिकरणस्य सिद्धान्तो विज्ञातपरमात्मरूपः । तत्रेति द्वा सुपर्णेत्यत्र । पूर्वेति पूर्वपक्षे बुद्धिक्षेत्रज्ञरूपोर्थ एव द्वा सुपर्णेति ऋगर्थोस्त्वित्यर्थः । न ह वा इति । स्यादेवं यदि बुद्धिभिन्नः संसार्यस्यां प्रतिपाद्येत न त्वत्र संसार्यभिप्रेयते किं तु शोधितस्त्वमर्थो ब्रह्मेत्याशयेनाहुः न ह वा इति रज इत्युपलक्षणः रजःसत्त्वतमोरूपा अविद्या माया वा ।

'विद्याविद्ये मम तनू विद्ध्युद्धव शरीरिणाम् ।
बन्धमोक्षकरी त्वाद्ये मायया मे विनिर्मिते' ॥

इति वाक्ये मायाऽविद्ययोर्भेदात् । रजो रागो वा एवंविदि विदुषि किमपि स्वकार्यं न आध्वंसते न संपादयति ज्ञानेन स्वस्या एव दग्धत्वादित्यर्थः । उपसर्गेण ध्वंसेर्बलादन्यार्थप्रतीतेः ।

'ये धातुशब्दा यत्रार्थे उपदेशे प्रकीर्तिताः ।
तथैवार्थो वेदराशेः कर्तव्यो नान्यथा क्वचित्' ॥

इति पत्रावलम्बनान्नाध्वंसत इत्यस्य न आगच्छति इत्यर्थो वा नेषद्ध्वंसतेऽपि तु सर्वा ध्वंसतेऽधःपततीत्यर्थो वा न प्रमाद्यतीति वा न हर्षक्षयं करोतीति वा । ध्वसुङ् अवस्रंसनगत्योः स्रंसुच् प्रमादे इत्यस्यावस्रंसनं तस्मिन् । प्रमादो मदेच हर्षे दिवादिः मदे ग्लपनहर्षयोर्वेति स्रंसुध्वंसधःपतने स्वरवर्णानुक्रमहैमधातुपाठे आद्याः । स्रस्विति धातुपाठे । इयं श्रुतिर्मुण्डकश्वेताश्वतरयोर्नास्ति । श्वेताश्वतराणां मन्त्रोपनिषदि भविष्यति । अत इत्यादीत्यत्रादिपदार्थो मन्त्रोपनिषदि द्रष्टव्यः । अभिप्रेयत इति अर्थोभिप्रेयते । व्याख्यानादिति द्वा सुपर्णेत्यत्रान्यपदमनूद्य ज्ञ इति व्याख्यानात् । इममर्थं श्रुतिस्मृती अप्याहतुः 'तत्त्वमसि' 'क्षेत्रज्ञं चापि मां विद्धि' इति । यत्पुनरिति । सत्त्वस्येति अन्तःकरणस्य । द्वा सुपर्णेत्यत्र भोक्तृत्वकथनम् । सुखादिविक्रियाभाववति सुखदुःखसाक्षात्काररूपो भोगो न संभवत्यतः सत्त्व इत्यस्य विशेषणं सुखादीति संसारिभोक्तृत्वस्याध्यारोपेण । निश्चयादिति तथा च भोग आविद्यक एवेति भावः । इतरेतेति सत्त्वस्य स्वभावोधिष्ठाय मनश्चेन्द्रियाणि विषयानुपसेवते इति । क्षेत्रज्ञस्य स्वभावस्त्वनश्नन्नभिपश्यति ज्ञ इति पैङ्गिरहस्योक्तः । कल्प्यत इति तथा चात्रास्याः पूर्वपक्षसिद्धान्तयोरेकतरस्याप्यबोधकत्वादत्तं पिबन्ताविति 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' इत्यधिकरणविषयवाक्यं न पक्षान्तरमादृतमिति भावः । अन्यतरेति कर्तृत्वभोक्तृत्वादयः । इत्याहुरिति यत्र वा अन्यदिव स्यात्

भाष्यप्रकाशः ।

तत्र । प्रपञ्चस्य ब्रह्मात्मकतायाः समन्वयसूत्र एव व्युत्पादितत्वेन, आविद्यकत्वस्य च, तदनन्यत्वादिसूत्रेषु दूष्यत्वेन सत्त्वात् सद्भावस्याभ्युपगमैकशरणत्वात् सिद्धे तत्सद्भावे तस्य जडत्वेनाभोक्तृत्वेऽपि तेन जीवीयश्रुत्युक्तभोगानादरस्यायुक्तत्वात् । नचानश्नदादिपदव्याख्यानव्याकोपः शङ्क्यः । येन स्वप्नं पश्यतीत्यस्य येन हेतुना स्वप्नं पश्यति तत् तस्माद्धेतोरेतत् स्वप्नद्रष्टृ

रश्मिः ।

तत्रान्योन्यत्पश्येतेत्यादिना स्वप्नदृष्टहस्त्यादिव्यवहारवदविद्याविषय एव कर्तृत्वादिव्यवहारं दर्शयन्ती श्रुतिर्यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येदित्यादिना विवेकिनः कर्तृत्वादिव्यवहाराभावं दर्शयन्तीममेवार्थमाहेति भावः । श्रुतौ न्यायसंचारणमश्रौतमित्याहुः तत्रेति । तदनन्यत्वेति । द्वितीयाध्याय इत्यर्थः । तथा च 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं' इति कारणानन्यत्वं कार्यस्येति क्व पारमार्थिकदशायामपि कर्तृत्वाद्यभावो येन छत्रिणो यान्तीतिवत्पिबन्तावित्यत्र लक्षणेति न्यायावतारणमश्रौतमित्यर्थः । स्वरूपलक्षणोपपादने पूर्वमुपपादितः पारमार्थिकदशायां महाभोगः वाराहे च ।

श्रीवाराह उवाच—'पूर्वं ब्रह्मलये जाते न किंचिदपि शिष्यते ।
तत्त्वानि प्रकृतिं यान्ति जीवाः सुप्ता भवन्ति हि ॥
न जानन्ति सुखं दुःखं तदाहं रमया सह ।
अप्राकृतजले देवि क्रीडंस्तिष्ठामि मीलया' ॥ इति

श्रुतिश्च 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति । अपीति अपिपदेन न्यायसंचारणमयुक्तम् । तदीयपदाघटिते सूत्रे तस्याः श्रुतेर्विषयत्वं प्रायिकमिति समुन्नीयते । ननु शंकरभाष्ये विज्ञानपरमात्मानौ हि ऋतं पिबन्ताविति विषयवाक्यमुपन्यस्य सिद्धान्तितम् । द्वा सुपर्णेति श्रुतिमुपन्यस्यान्तःकरणक्षेत्रज्ञाविति सिद्धान्तितम् । तावतैव मन्त्रवर्णैकवाक्यताविघटनात् विघटितायां च तस्यां मतान्तरे तन्न्यायसंचारणमसंगतमग्रिमग्रन्थस्य किं प्रयोजनमिति चेन्न 'अधिकं तत्रानुप्रविष्टं न तु तद्धानिः'इत्याशयेनाहुः न चानश्नदिति । पैङ्गिरहस्ये क्षेत्रज्ञोऽनश्नन्नन्यश्चाभिचाकशीति पश्यति । यङ्लुग्वा पुनःपुनरतिशयेन काशति शब्दं करोति काश्र शब्दे काशते दीप्यते वा काश्र दीप्तौ अभिपूर्वः । आकाशोपि शब्दं करोति दीप्तेरननुभवाच्च नेमावर्थौ । एतान्यनश्नदादिपदानि तेषां व्याख्यानं 'अनश्नन् अभिपश्यति ज्ञः' इति 'अनश्नन्नन्योभिचाकशीति' 'अनश्नन्नभिपश्यति ज्ञः' इति पैङ्गिरहस्यश्रुतेः तस्य व्याकोपः । अयमर्थः । जीवब्रह्मभोग ऋतं पिबन्तावित्यत्राङ्गीकृते द्वा सुपर्णेत्यस्या व्याख्याने ज्ञस्य क्षेत्रज्ञस्यानश्नन्नित्यादिना भोगाभावे सिद्धे तदेकवाक्यतया जीवब्रह्माभोगे वाच्ये पिबन्तावित्यत्र पिबदपि बदर्थयोर्लक्षणा ततश्च जीवभोगासंभवोपि च यत्र वा अन्यदिवेति श्रुत्या विवेकिनः कर्तृत्वादिव्यवहाराभावोक्तेः भोगकर्तृत्वं सांसारिकदशायां पारमार्थतस्तु भोगाभाव एव इति ऋतमित्यत्र भोगाङ्गीकारे व्याख्यानस्य व्याकोप इति । स्यादेवं यदि ज्ञपदेन क्षेत्रज्ञः संसार्यपेक्ष्येत किं तु मुक्तो ज्ञस्तस्य तु ज्ञानमार्गे भोगाभाव एव तावता किं दूषणमित्याशयेनाहुः येन स्वप्नमिति । येन कफवातपित्तरूपेण हेतुना स्वप्नमिति वैद्यकाः दृष्टानुध्यानेनापीति ज्योतिर्विदः पुरुषोत्तमेनेति कठवल्ल्यां वेदान्तिनः पुरुषेति प्रस्थानरत्नाकरे पुरुषोत्तमाः । 'मायामात्रं तु कार्त्स्न्येनाभिव्यक्तस्वरूपत्वात्' इत्यत्र मायोपादानकं

१. मील निमेषे ।

भाष्यप्रकाशः ।

सत्त्वं सत्त्वोपाधिकं चैतन्यमित्येवमयुक्तं व्याख्यायाथ योऽयमित्यादिना मुक्तं व्याकरोतीत्यमुक्त-जीवीयभोगस्य मुक्ताभोगस्य च सिद्धेस्तदभावादिति । न चैकस्मिञ्छरीरे जीवद्वयनिवेशस्यासंगतत्वान्नायं श्रुत्यर्थ इति शङ्क्यम् । अत्र, समानं वृक्षमिति समानपदस्य तुल्यवाचकतया शरीर-भेदस्यैवाभिप्रेतत्वेनोक्तदोषाभावात् । नचैवं जीवानां बहुत्वेन, द्वा इत्यादिद्वित्वसंख्याविरोधः । प्रकारपरत्वेनाविरोधात् । सयुक्तस्य त्वेककालावच्छिन्नप्रवेशत्वेनाप्युपपत्तेः । सखित्वस्य चाक्षण्वन्तः कर्णवन्तः सखाय इतिवत् सारूप्येणेति । अतो, नैव किंचित् करोमीतिन्यायेन स्वातन्त्र्यमित्यु-पदेशायेदं पैङ्गिरहस्यव्याख्यानम् । न ह वा एवंविदीति फलवाक्येन तथा निर्णयात् । नचैवं श्रौतव्याख्यानुरोधेन मुण्डकाद्युक्तेतन्मन्त्रेऽप्ययमेवार्थोऽस्तु, न तु जीवब्रह्मपर इति शङ्क्यम् । तत्र प्रकरणस्य ब्राह्मत्वेन ब्रह्मणः प्रतिक्षेपानर्हत्वात् । 'अतो ब्राह्मान्तेपूभौ ब्राह्मानस्यार्थवत्त्वात्' इति

रश्मिः ।

स्वप्नम् । मायया मायोपादानं सत्त्वं मायिकमिति मायोपाधिकं चैतन्यं सत्त्वमित्येवमुपाधिविशिष्टत्वेन देहाद्यध्यासेन चायुक्तं व्याख्यायेत्यर्थः । मुक्तमिति न च शारीरपदादमुक्तत्वं शङ्क्यम् । उपद्रष्टेत्युप-पदात् क्षेत्रज्ञपदाच्चाध्यासातिरिक्तशरीरसंबन्धस्य स्फोरणात् । उपपदेन शरीरस्य उप समीपे द्रष्टा ज्ञाता अध्यासरहित इत्यर्थात् 'क्षेत्रज्ञं चापि मां विद्धि' इति गीतातोऽप्यध्यासाभावो ज्ञेयः । शरीरपदं जीवन्मुक्त-ताया ज्ञापकम् । अयमिति मुक्तामुक्तरूपः । शरीरेति दात्रेण तुल्यं छिनत्तीति दात्रवत्क्षुरश्छिनत्तीत्यत्र दात्रक्षुरयोर्भेदो यथा तथा शरीरान्तरेण समानं तुल्यं वृक्षं शरीरम् । प्रकारेति द्वा इत्यत्र द्वित्वसंख्या तस्याः प्रकारौ मुक्तामुक्तत्वे तत्परत्वं द्वित्वावच्छिन्ने ये मुक्तामुक्तत्वे तदवच्छिन्नौ सुपर्णासुपर्णावित्यर्थः । सयुजेत्यत्रोपपत्तिमाहुः सयुक्तस्येति । युनक्तीति युक् सहयुक् सयुक् तस्य भावस्तत्त्वं तस्य त्वेकेन कालेनावच्छिन्नः प्रवेशो ययोः तावेककालावच्छिन्नप्रवेशौ मुक्तामुक्तजीवौ तयोर्भावस्तत्त्वं तेनाप्युप-पत्तेः । मुक्तस्य ब्रह्माण्डकोट्याश्रयत्वेनामुक्तस्याणोः संपर्कस्योपपत्तेः । सखाया इत्यत्र तामाहुः सखित्वस्येति समानशीलव्यसनवत्त्वं सखित्वं अक्षण्वन्त इत्यत्राक्षिकर्णवत्त्वेन सारूप्यं सखित्वं तदत्र संभवति तयोः शरीरवत्त्वेन सारूप्यात् समानशीलव्यसनवत्त्वं तु नास्ति मुक्तामुक्तत्वाभ्यां महावैलक्षण्यात् । अतो नैवेति गीतावाक्यमिदं मुक्तवदमुक्तेन स्वातन्त्र्यमित्युपदेशाय मुक्तामुक्तयो-रेकत्र निरूपणम् । कर्ता कारयिता हरिरिति । न ह वा इति मुक्तमात्रविषयोयं हेतुः व्याख्यातैषा । 'ब्रह्मविदाप्नोति परं तदेषाभ्युक्ता सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिना स्वोक्तव्याख्यातं तद्वत्पैङ्गिरहस्यं व्याख्यायाशङ्क्ते न चेत्यादि । मुण्डकेति आदिपदेन श्वेताश्वतरोपनिषत् । अयमेवेति । बद्ध-मुक्तरूपः । अत्ता चराचराधिकरणे प्रकरणादप्यत्तृत्वं परमात्मनः साधितं तत्प्रकरणमत्राधिकरणे चकारेण समुच्चितं तद्भाष्य उक्तमतो द्वा सुपर्णेत्यस्यामपि प्रकरणं ध्वन्यते । द्वा सुपर्णेति चकारः प्रकरणोक्तेति-भाष्यवाक्ययोः सान्निध्यादित्याहुः तत्र प्रकरणस्येति । 'दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः' 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' अग्रे 'ब्रह्मैवेदममृतम्' इति तदग्रे द्वितीयमुण्डकसमाप्तिस्तृतीयमुण्डके द्वा सुपर्णेति समाने वृक्षे पुरुष इति तदग्रे यदा पश्यः पश्यते रुक्मवर्णमिति अत्र तृतीयमुण्डके सर्वत्र जीवब्रह्मनिरूपणं कर्मकर्तृभावेनेति जीवब्रह्मणोः साधकतमं प्रकृष्टं तद्रूपं प्रकरणं देशकालरूपं वा प्रकरणं तस्य ब्राह्मत्वेन श्वेताश्वतरे च चतुर्थाध्याये तद्ब्रह्मेत्युपक्रम्य 'अजामेकां लोहितशुक्लकृष्णाम्'

भाष्यप्रकाशः ।

पूर्वतन्त्रीयन्यायाद् द्वावप्यर्थौ प्रकरणानुरोधात् तत्र तत्र व्यवस्थितावङ्गीकार्यौ तत्र पाठविशिष्टमन्त्रस्यैवात्रार्थविशिष्टस्यैव तस्य प्रकरणिना ग्रहणात् । अर्थभेदं विना व्याख्यानवैयर्थ्यादिप्रसङ्गादिति । अतो मन्त्रवर्णैक्येऽप्यर्थभेदान्नैकवाक्यत्वम् । ऋतमित्यस्य तूभयभेद इति सुतरां तथेत्यस्मिन् मन्त्रे तन्न्यायसंचारणमसंगतमेवेति दिक् ।

एवं चात्र परमात्मनोऽलौकिकभोगयोगे दोषराहित्यस्य प्रसङ्गेन विचारात् प्रलयकर्तृत्वे दोषरहितत्वं समर्थितमितीदं पूर्वस्यैव शेषः ॥ १२ ॥

इति चतुर्थं गुहां प्रविष्टावित्यधिकरणम् ॥ ४ ॥

रश्मिः ।

इत्यस्याग्रे द्वा सुपर्णेति । समाने वृक्ष इति अत्र प्रकरणं प्रायपाठसहितम् । उपलक्षणमेतत् । मुक्तजीवनिरूपणेपि ब्रह्मनिरूपणस्याक्षतेरिति हेतोः । 'एकदेशविकृतमनन्यवत्' । अतो भाष्ये द्वा सुपर्णेति निःसंदिग्धमिति कथनात् निःसंदिग्धस्याविषयवाक्यत्वेन तत्र चकारः । प्रकरणोक्तेति भाष्यवाक्यसांनिध्येन द्वा सुपर्णेत्यस्यामपि प्रकरणं ध्वन्यत इत्यप्रयोजकमिति निरस्तम् । पूर्वं हेतुमङ्गीकृत्य व्यवस्थामाहुः अतो ह्याम्नातेष्विति । तृतीयस्याष्टमे पादेयं न्यायोस्ति तत्र दर्शपूर्णमासयोरध्वर्युकाण्डे याजमानकाण्डे च वाजस्य मा प्रसवेनेत्ययं मन्त्रः आम्नातः तत्र यजमानेनैव प्रयोक्तव्यः अध्वर्युणा वा उभाभ्यामपीति वेति संशयोर्थस्य स्रुक्व्यूहनादेराध्वर्यवत्वात् मन्त्रोपि तेनैव प्रयोक्तव्यः इति पूर्वः पक्षः । प्रकरणद्वयपाठवैयर्थ्यपरिहारायोभाभ्यां प्रयोक्तव्य इति सिद्धान्तः । मन्त्रप्रकाशितार्थमनुष्ठास्यामीति अत्र न प्रमदितव्यमिति च तयोराशयः । उभौ मन्त्रप्रयोक्तारौ ह्याम्नातेषु मन्त्रेषु । द्वाविति मुक्तबद्धजीवरूपौ जीवब्रह्मरूपौ वा । तत्र तत्रेति पैङ्गिरहस्ये मुण्डकश्वेताश्वतरयोश्च । व्यवस्थित्यङ्गीकारे सदृष्टान्तं हेतुमाहुः तत्र पाठेति । न च मन्त्रस्वरूपमेव प्रकरणिना गृह्यते न तु पाठोपीति वाच्यम् । पाठविशिष्टमन्त्रस्यैव प्रकरणे विपरिवृत्तेः पाठातिक्रमे कारणाभावात् । अत एव प्रयोगकाले मन्त्राणां पाठसिद्धिः । अन्यथा स्मृतिस्थेनापि मन्त्रेणार्थप्रकाशनसंभवात् नैकान्तेनोच्चारणं सिद्ध्येत् । अतः पाठविशिष्टमन्त्रस्यैव प्रकरणिना ग्रहणम् । तस्यैवात्र मुण्डकादौ पैङ्गिरहस्ये चोक्तार्थविशिष्टस्यैव तस्य मन्त्रस्य प्रकरणिना ब्रह्मणा क्षेत्रज्ञेन च ग्रहणादित्यर्थः । व्याख्यानेति पैङ्गिरहस्योक्तव्याख्यान इत्यर्थः । आदिपदेन प्रकरणम् । मन्त्रवर्णेति पैङ्गिरहस्यमुण्डकश्वेताश्वतरमन्त्राणामैक्येपि । उभयेति द्वा सुपर्णेति मन्त्रशब्दार्थोभयभेद इत्यर्थः । तथेति नैकवाक्यता । पञ्चमाङ्गमधिकरणस्याहुः एवं चेति । शेष इति तथा चोपोद्घातः संगतिरित्यर्थः । माध्वास्तु ऋतं शुभं हरिः पिबेत् शुभाशुभे जीवः पिबेत् ।

'शुभं पिबत्यसौ नित्यं नाशुभं तु हरिः पिबेत् ।
पूर्णानन्दमयस्यास्य चेष्टा न ज्ञायते क्वचित्' ॥

इति पाद्मात् । यो वेद निहितं गुहायामित्यादिना प्रसिद्धं हिशब्देन दर्शयतीत्याहुः । तत्पौराणमिश्रश्रौतं मतम् । अस्माकं तु शुद्धो ब्रह्मवादः ।

'वेदाः श्रीकृष्णवाक्यानि व्याससूत्राणि चैव हि ।
समाधिभाषा व्यासस्य प्रमाणं तच्चतुष्टयम्' ॥ इति निबन्धात् ।
'कृष्णवाक्यानुसारेण शास्त्रार्थं ये वदन्ति हि ।
ते हि भागवता प्रोक्ताः शुद्धास्ते ब्रह्मवादिनः' ॥ इति निबन्धाच्च

## अन्तर उपपत्तेः ॥ १३ ॥ ( १-२-५ )

य एषोऽक्षिणि पुरुषो दृश्यते । एष आत्मेति होवाचैतदमृतमभयमेतद्

भाष्यप्रकाशः ।

अन्तर उपपत्तेः ॥ १३ ॥ अतीतेषु त्रिष्वधिकरणेषु प्रथमे वैशेष्येण लौकिकभोगबाधकं रूपं परिहृत्याग्रिमाभ्यां चराचरग्रहणाद्युगपदुभयप्रवेशाच्च संपद्यमानदशास्थो मोक्षदशास्थश्चेत्युभयविधोऽपेक्षितो भोगः साधितः । इदानीं संसारदशायां किं वैशेष्यमित्याकाङ्क्षायां तन्निर्णेतुमिदमारभ्यत इत्युपोद्घातरूपां संगतिं बोधयितुं विषयवाक्यमुदाहरन्ति य एष इत्यादि । श्रूयते इति छान्दोग्ये षष्ठे प्रपाठके उपकोसलविद्यायां श्रूयते । वाक्यार्थस्तु, ब्रह्मेतीत्यन्तं पुरःस्फूर्तिकः । अत्रे तु पूर्ववाक्ये यदाचार्येणोक्तम्, अहं तु ते तद्वक्ष्यामि यथा पुष्करपलाश आपो न श्लिष्यन्त

रश्मिः ।

न चोक्तपाद्यात्सिद्धान्तेऽपि जीवब्रह्मरूपार्थौ विहाय शुभशुभाशुभपातारौ स्तामिति चेन्न पुराणमतस्य सिद्धान्ते पृथक्त्वात् । न च भेदं विना ऋतं ब्रह्मात्मकं परस्परं पातुं शक्यं नेति शङ्क्यम् । सत्य आत्मा सत्यो जीवः सत्यं भिदा इमैवारुण्यो इति पैङ्गिश्रुतेः अस्या अभिप्रायो 'अन्तरा भूतग्रामवत् स्वात्मनः' इति सूत्रे वक्ष्यते । विशेषणाच्चेति सूत्रे 'यः सेतुरीजानानामक्षरं ब्रह्म यत्परम्' इति ।

'पृथग्वक्तुं गुणास्तेन न शक्यन्तेऽमितत्वतः ।
यतोतो ब्रह्मशब्देन सर्वेषां ग्रहणं भवेत् ॥
एतस्माद्ब्रह्मशब्दोयं विष्णोरेव विशेषणम् ।
अमिता हि गुणा यस्मात् नान्येषां तमृते विभुम्' ॥ इति भाष्ये ।

विष्णुस्तु ब्रह्मविद्योपनिषदि ।

'यजुर्वेदान्तरिक्षं च दक्षिणाग्निस्तथैव च ।
विष्णुश्च भगवान् देवः उकारः परिकीर्तितः' ॥ इति ।

ओमित्येकाक्षरं ब्रह्म यदुक्तं तदन्तर्गतोंकारान्तर्गतः । ब्राह्मस्य हिरण्यगर्भमाहात्म्यप्रतिपादकत्वेन राजसत्वेन ब्राह्मणोपेक्षितत्वाच्च ॥ १२ ॥

### इति चतुर्थाधिकरणम् ॥ ४ ॥

अन्तर उपपत्तेः ॥ १३ ॥ वैशेष्येणेति 'संभोगप्राप्तिरिति चेन्न वैशेष्यात्' इति सूत्रे वैशेष्येण सर्वरूपत्वमानन्दरूपत्वं स्वकर्तृत्वं विशेषस्तद्भावो ब्रह्मणि वर्तते इति भाष्योक्तेन वैशेष्यपदसूचितापेक्षितभोगभोक्तृत्वेन च भोगेऽङ्गीकृते यद्बाधकं दुःखसाक्षात्कारतत्साधनादिपरिग्रहरूपं तत्परिहृत्येत्यर्थः । अपेक्षित इति यत्प्रयन्तीति श्रुत्या 'पुरश्चक्रे द्विपदः पुरः पुरुष आविशत्' इति श्रुत्या चानेन जीवेनात्मनानुप्रविश्येति श्रुत्या चापेक्षितः । इच्छां विना चराचरग्रहणयुगपदुभयप्रवेशयोरनाविर्भावात् । अत उभावित्यवपेक्षितौ । किं वैशेष्यमिति भाष्ये विवृतमपि संभोगप्राप्तिसूत्रे कर्मफलप्राप्तिरूपदूषणदूषितमित्याकाङ्क्षायां निर्लेपत्वमपहतपाप्मत्वं च वैशेष्यं निर्णेतुमित्यर्थः । उपोद्घातेति प्रकृतं वैशेष्यं तद्भोगसाधकं तदा सिद्ध्येद्यपहतपाप्मत्वं निर्लेपत्वं च वैशेष्यं स्यात् । तत्प्रकृतसिद्ध्यर्था चिन्ता निर्लेपत्वापहतपाप्मत्वचिन्ता तामुपोद्घातं विदुर्बुधास्तद्रूपामित्यर्थः । स इति जाबाल आचार्यः । वोक्ष्य इति वाक्यार्थो बोध्यः । अन्यैरिति

ब्रह्मेति । तद् यद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छतीत्यादि श्रूयते । तत्र संशयः । प्रतिबिम्बपुरुषस्य ब्रह्मत्वेनोपासनापरमिदं वाक्यं ब्रह्मवाक्यमेवेति वा । विरुद्धार्थवाचकत्वात् संदेहः ।

तत्र दृश्यत इति वचनात् प्रतिबिम्ब एवायम् । ब्रह्मप्रकरणस्य च समाप्त्वादेषा सौम्य तेऽस्मद्विद्या आत्मविद्या चेत्युपसंहारदर्शनात् तत्सिद्ध्यर्थमुपासनापरतैव वाक्यस्य युक्ता ।

भाष्यप्रकाशः

एवमेवंविदि पापं कर्म न श्लिष्यते इति फलम् । तत्र निदर्शनं स आह तद् यद्यपीत्यादि । तत् तत्र इदं निदर्शनम् । यद्यप्यस्मिन् अक्षिपुरुषस्थानभूते अक्षिणि, सर्पिर्वा उदकं वा सिञ्चति धारया मुक्तः पातयति, वर्त्मनी अक्ष्यावरणादिभूते पक्ष्मणी एव गच्छति प्राप्नोति । ते एवार्द्रे स्निग्धे च भवतो, न त्वक्षि । तथाच यत्स्थानस्येदृशं माहात्म्यं तस्य ज्ञाने सति पापसंश्लेषो न भवतीत्यत्र किं वक्तव्यमिति बोध्यः ।

अत्रान्यैश्चतुष्कोटिकः संशय उपन्यस्तः । किमत्र प्रतिबिम्बात्मा निर्दिश्यते, विज्ञानात्मा वा, इन्द्रियाधिष्ठातृदेवता वा, परमेश्वरो वेति । स न युक्तो, दृश्यत इति पदेन विज्ञानात्मदेवतयोरदृश्यमानयोर्निरासादिति बोधयितुं संशयाकारमाहुः तत्रेत्यादि । ननु दर्शनविषयत्वं ब्रह्मणोऽपि नास्तीति संशय एवात्र न घटत इति शङ्कायां तद्बीजमाहुः विरुद्धेत्यादि । दृश्यते इत्युक्तं दर्शनम्, अमृतत्वादिकं च परस्परविरुद्धावर्थौ, तद्वाचकत्वात् तथेत्यर्थः । पूर्वपक्षमाहुः तत्र दृश्यते इत्यादि । प्रकरणसमाप्तौ हेतुरुपसंहारदर्शनादिति । तत्सिद्ध्यर्थमित्युपसंहारसिद्ध्यर्थम् । ननु मास्तु तत्रोपसंहारस्तथा सति प्रकरणैक्याद् ब्रह्मवाक्यत्वमेवास्त्वेत्यत आह

रश्मिः ।

शंकराचार्यप्रभृतिभिः । चतुष्कोटिक इति भास्कराचार्याणां किं छायात्माक्षिस्थाने निर्दिश्यते किं वाधिष्ठात्री देवतादित्योथ वेश्वर इति त्रिकोटिकः । विज्ञानात्मदेवतयोरिति छायात्माप्युपलक्षणविधया द्रष्टव्यः । तथेति अमृतत्वादिना ब्रह्म दृश्यते इति दृश्यत्वेन च प्रतिबिम्बमित्यर्थः । ननु विरुद्धार्थवाचकत्वं वाक्ययोः प्रतीयते तत्कुत्रास्तीति चेन्न । प्रस्थानरत्नाकरे नन्वस्त्वेवं पदवाक्ययोरतिरेकस्तथापि न त्रयाणां वर्णपदवाक्यानां वाचकत्वम् । पदैः पदार्थोपस्थापने वाक्यार्थत्वेनाभिमतस्यान्वयस्य संसर्गमर्यादया पदैरेव भानसंभवेन वाक्यानां वाचकत्वकल्पने वाक्य एव शक्तेः पर्यवसानस्य वैयाकरणैरेवोपपादितत्वात् । नापि पदोपस्थापितपदार्थानामेव करणत्वं साधीयः । संपूर्णवाक्यश्रवणोत्तरं जायमानस्य बोधस्य पूर्वपदानां नष्टत्वेन नित्यपक्षे व्यञ्जकनाशात्तिरोहितत्वेन चोपस्थापकाभावात्पदार्थानुपस्थितावनुत्पत्तिप्रसङ्गात् । अविद्यमानानां प्रकारान्तरेण बोधकत्वस्याशक्यवचनत्वात् । न च पूर्वपदानां निवृत्तत्वेपि संस्कारेण तेषामुपस्थितौ तदुपस्थापितानां करणत्वमिति युक्तम्, गौरवात् । वाक्यार्थबोधस्याशाब्दत्वापत्तेश्चाक्षुषादिपदवच्छाब्दपदस्यापि करणार्थकपदप्रकृतिकत्वेन तत्समास्याविरोधापत्तेश्च । नापि वृत्तिमत्पदज्ञानमेव करणमिति युक्तम् । एवमप्यशाब्दत्वस्यापत्तेः । न च वाक्यज्ञानकरणत्वपक्षेप्ययं दोष इति वाच्यम् । ज्ञायमानवाक्यस्यैव करणत्वाङ्गीकारादित्यादिग्रन्थात् । उपसंहारसिद्ध्यर्थमिति उपसंहारः कदा सिध्येद्यदा ब्रह्मधर्माणाममृतामयादीनां प्रतिबिम्बोपासनार्थत्वं स्यात् । अत उपासनापरतैव ब्रह्मधर्मप्रतिपादकवाक्यस्य युक्तेति भाष्यार्थः । 'एषा सौम्य तेऽस्मद्विद्यात्मविद्या च' इति श्रुतावेषा अव्यवहितपूर्वोक्तत्वादेवकारः । ननु मास्त्विति ।

अविरोधे हि ब्रह्मपरता। उपास्यत्वेन ब्रह्मधर्माणामन्वयो भविष्यतीत्येवं प्राप्त उच्यते। अन्तरः, अक्षिमध्ये दृश्यत इत्युक्तः परमात्मैव। कुतः। उपपत्तेः। उपपद्यते हि तस्य दर्शनमार्षम्। सर्वत्र ब्रह्म पश्यन् बहिः सन्निधाने तस्य स्थानस्योत्कृष्टत्वात् तत्र भगवन्तमुपदिशन्ति। लोकं वा व तेऽवोचन्

भाष्यप्रकाशः।

अविरोधे हीत्यादि। यदि हि दृश्यत इत्युक्तं दर्शनं न विरुध्यते तदा तथात्वं शक्यवचनं, न तु तदभावेऽपीत्यर्थः। ननु त्वन्मतेऽप्यभयादिपदविरोध इत्यत आह उपास्यत्वेनेत्यादि। सिद्धान्तं व्याचक्षते उपपद्यत इत्यादि। आर्षमिति साधनविशेषजन्यम्। तद्व्युत्पादयन्ति सर्वत्रेत्यादि। उत्कृष्टत्वादिति जलाद्यसंश्लेषेण तन्माहात्म्यबोधकत्वात्। तेन स्वल्पस्थानोपदेशोऽपि न तस्य ब्रह्मत्वबाधक इत्यर्थः। नन्वात्मविद्योपसंहारस्य पूर्वं दर्शितत्वात् प्रकरणाननुग्रहे हेतोः साध्यसमत्वे कथं ब्रह्मतासाधकत्वमित्यत आहुः लोकमित्यादि। उपकोसलेन ब्रह्मोप-

रश्मिः।

अयमर्थः। एषा त इत्यग्निवाक्यम्। एषाऽव्यवहितपूर्वोक्तास्मद्विद्याऽस्माकमग्नीनां विद्या प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेत्युक्तात्मविद्येत्युक्त्वाहुरग्नयः आचार्यस्तु ते गतिं वक्तेति। गतिमात्मनः स्थानं तथाग्निना स्वोक्तात्मविद्याचार्योपदेशं विना न फलतीत्यनेन सूचितम्। एवं चाप्युक्तविद्याया एवाचार्येण य एषोक्षिणि पुरुष इत्यादिनोक्तत्वात् तत्रोपसंहारः प्रतीयमानोपि निष्प्रयोजनकः। यद्वा। एषा वक्ष्यमाणा यथा तदेषाभ्युक्तेत्यत्रानन्दमयाधिकरण एषेत्यस्यार्थः। तथा चोपक्रमवाक्यं तत् न तूपसंहारवाक्यमिति प्रतीतिरप्युपक्रमविषयिणी न तूपसंहारविषयिणीत्यात्मनिरूपणस्यासमाप्तत्वान्मास्त्वित्यर्थः। तदभाव इति अविरोधाभावे विरोध इति यावत्। ननु विरोध इति वक्तव्ये नञ्द्वयं किमर्थमिति चेन्न पूर्वत्राविरोध इत्यत्र नञि वक्तव्ये तदभावनिरूपणे द्वितीयनञावश्यकत्वात्। त्वन्मते पूर्वपक्षिमते। उपास्यत्वेनेति ब्रह्मधर्माणाममृताभयादीनां प्रतिबिम्बस्योपास्यत्वेन तत्रान्वयो भविष्यतीत्यर्थः। साधनेति। 'भक्त्या जानाति चाव्ययम्' इति श्रुतेः 'भक्त्याहमेकया ग्राह्यः' इति स्मृतेश्च भगवद्दर्शने साधनं इदं विशेषोपि भवति। कर्मकाण्डज्ञानकाण्डयोर्ज्ञानकर्मप्रतिपादकत्वेन तयोः सामान्यात्। साधनविशेषो ब्रह्मविद्या वा बृहदारण्यके तदाहुः यद्ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते किमु तद् ब्रह्मावेद्यस्मात्तत्सर्वमभवदिति 'ब्रह्म वा इदमग्र आसीत्' सर्वत्र ब्रह्मदर्शने साधनविशेषः 'प्रदानवदेव तदुक्तम्' इति सूत्रोक्तस्तज्जन्यं सर्वत्र ब्रह्मदर्शनं सर्वात्मभावरूपम्। तन्माहात्म्यमिति स्थानमाहात्म्यम्। तेनेति स्थानमाहात्म्येन। तत्र व्योमवन्निचाय्यत्वेन ब्रह्मणः। हेतौ स्वरूपासिद्धिमुपपत्तिरूप आह नैयायिकस्तामनूद्य पराचक्रुराचार्या इत्याहुः नन्वात्मेति वस्तुतस्तु स्थानस्योत्कृष्टत्वादिति हेतुमुक्त्वा हेत्वन्तरमाहुः लोकमित्यादीत्येव ग्रन्थो युक्तः। अनुमानस्य वेदान्ते सर्वत्रानुपयोगात्। 'जन्माद्यस्य यतः' इत्यधिकरणे केचिदत्र जन्मादिसूत्रमित्यादिभाष्यात्। अत्रान्तरः परमात्मा अमृतादिधर्मोपपत्तेः। यदेवं तदेवं आदित्यान्तरवत्। यन्नैवं तन्नैवं संसारवदित्यत्र ब्रह्मप्रकरणाननुग्रहेण हेतोः साध्यत्वेन साध्यसमत्वम्। एतत्फलं तु पक्षे व्याप्यत्वाभिमतस्य हेतोरभावे ज्ञाते पक्षे व्याप्यहेतुमत्ताज्ञानरूपस्य परामर्शस्य प्रतिबन्धः ह्रदो द्रव्यं धूमादित्यत्रेव। परामर्शस्तु व्याप्तिविशिष्टपक्षधर्मताज्ञानं तथा च स्वरूपासिद्धो हेतुरिति भावः। उपकोसलेनेति। उपकोसल-

**'अहं तु ते तद्वक्ष्यामि' इति महदुपक्रमाच्च । प्रतिबिम्बमात्रस्य च न पुरुषत्व-नियमः । तस्माद् विरोधाभावाद् ब्रह्मवाक्यमेव ॥ १३ ॥**

---

भाष्यप्रकाशः ।

देशेऽपह्नुतेऽपीमे नूनमीदृशा अन्यादृशा इति वदता आचार्येणाग्निकृते उपदेशे ज्ञाते, उपकोस-लेनाचार्याज्ञयाऽभ्युक्तेऽनूदिते, आचार्यो लोकं वा च किल तेऽवोचन्नित्यनेन कं ब्रह्म खं ब्रह्मेति यदवोचन्नग्नयस्तल्लोकं प्राप्यमवोचन् । श्रुतौ लोकानिति पाठे त्वग्निविद्याप्राप्याः पृथिव्यादयः आत्मविद्याप्राप्यं ब्रह्म चैकशेषवृत्त्या संगृह्यते । तत्राग्निविद्योक्तलोकप्राप्त्युपायस्यादित्यपुरुषोपासना-दिरूपस्य तैरुक्तत्वादात्मविद्योक्तलोकप्राप्त्युपायभूताम्, 'आचार्यस्तु ते गतिं वक्ता' इति तैराचार्य-वक्तव्या गतिर्या बोधिता साऽवशिष्यते । सा तु ज्ञानापि तदा भवति यदा प्रतिबन्धकापगम इत्यभिसंधायाचार्य आह । अहं तु ते तद्वक्ष्यामीत्यादि । तत एवं फले श्रुते, उपकोसलः श्रद्धापूर्वकं, ब्रवीतु भगवानिति विज्ञापितवाँस्तदा, य एषोऽक्षिणीत्याद्युक्तम् । तेन तद्वक्ष्यामीति या प्रतिज्ञा सा महत आत्मविद्यागतिकथनस्यैवोपक्रमस्तस्मात् । तथा चाग्निभिस्तदुपसंहारे कृतेऽपि पुनस्तस्या एवोपक्रान्तत्वेन प्रकरणस्य सन्दर्भ हेतोः साध्यसमत्वमित्यर्थः । ननु तथापि प्रकरणे श्रुत्यपेक्षया दुर्बलत्वाद्दर्शनश्रुतिसंकोचोऽनुचित इति प्रतिबिम्बपुरुष एवात्राङ्गीकार्य इत्यत आहुः प्रतिबिम्बेत्यादि । सत्यं संकोचोऽनुचितः स्याद् यदि दर्शनविषयस्य प्रतिबिम्बस्य पुरुषत्वं

रश्मिः ।

नामा कश्चित् ब्रह्मचारी स जाबालाचार्येण प्रवासं चिकीर्षताग्निनोदितेनाग्नीसोऽग्नीन् द्वादशवर्षाणि परि-चचार तस्मै परिचर्यया तुष्टा गार्हपत्याद्यग्नयः प्राणो ब्रह्मेत्यात्मविद्यामुपदिदिशुः तस्मिन्नुपदेशे ब्रह्मविद इव ते सोम्य मुखं भातीति को नु त्वानुशशासेति प्रवासादागतेनाचार्येण जाबालेन पृष्टेनोपकोसलेन को नु मानुशिष्याद्भो इत्यपह्नुतेपीत्यर्थः । इम इति इमेऽग्नयः पूर्वमन्यादृशमीदृशा उपदेशोन्मुखा इति नूनं निश्चयं वदताचार्येण । ज्ञात इति अपूर्वभक्त्या । आचार्येति किं नु सोम्य किल तेऽवोचन् इत्याचार्यप्रश्नेनेत्यर्थः । हे सोम्य तेऽग्नयः इतीदमिति ह प्रतिजज्ञ इत्यनेनानूदिते । अग्निविद्येति अग्नीनां गार्हपत्याद्यग्नीनां विद्याभिः प्राप्यः 'अथ हैनं गार्हपत्योनुशशास पृथिव्य-ग्निरन्नमादित्यः' इति पृथिव्यादयः आत्मनः प्राणादेर्विद्या तया प्राप्यम् । लोकृ दर्शने इति भ्वादे रूपमिदं लोकमिति । तथा च यज्ज्ञानं तत्प्राप्यमेवेत्याशयेन पर्यायो ब्रह्म चेति । एकशेषवृत्त्या लोकश्च लोकश्च लोकश्च लोकाः 'सरूपाणामेकशेष एकविभक्तौ' इत्येकशेषः अनया वृत्त्येत्यर्थः । तैरिति अग्निभिः । य एष आदित्ये पुरुषो दृश्यते सोहमस्मि स एवाहमस्मीति स य एतमेवं विद्वान् उपास्ते इत्यादिनोक्तत्वात् । प्रतीति प्रतिबन्धकमाचार्यसंबन्धाभावः तदपगम इत्यर्थः । अहमिति कर्तृताख्यसंबन्धेन तद्ब्रह्मविद्यां वक्ष्यामीति । आदिपदेन 'यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते' इति श्रुतिसंग्रहः । श्रद्धेति भगवन्निति महापूज्य-संबोधनादिति भावः । ब्रवीतु मे भगवन्निति तस्मै होवाचेति श्रुतिः । हेतोरिति हेतोः प्रकरणे-नोपक्रमरूपेण देशकालरूपेण वा सिद्धत्वं न तु साध्यत्वेन साध्यसमत्वमित्यर्थः । हेतुरमृताद्युप-पत्तिरूपः स्वरूपासिद्धो नेत्यर्थः । दर्शन इति । दृश्यत इति श्रुतिर्निरपेक्षो रवः तस्य संकोचः साधनवतां दर्शनरूपः । पुरुषत्वमिति द्वादशाङ्गत्वम् । 'द्वादशाङ्गो हि पुरुषः' इति । द्वादशाङ्गत्वमादाय

## स्थानादिव्यपदेशाच्च ॥ १४ ॥

एतं संयद्वाम इत्याचक्षते । एतꣳ हि सर्वाणि वामान्यभिसंयन्ति । एष उ एव वामनीरेष हि सर्वाणि वामानि नयति । एष उ एव भामनीरेष हि सर्वेषु लोकेषु भातीति । वामानि कर्मफलानि । तेषामेव मनोहरत्वेन तदर्थं कर्मकरणात् । कर्मफललयः कर्मफलदानं च यत इति स्वर्गापवर्गफलदातृत्वमुक्तम् । सर्वलोकेषु

भाष्यप्रकाशः ।

नियतं स्यात् । तदेव तु न । अन्येषामपि प्रतिबिम्बात् । अतो विषयवशेन दर्शनश्रुतिसंकोचस्तव मतेऽपि तुल्यः । प्रकरणविरोधश्चाधिक इति न प्रतिपुरुषस्योपासनाविधायकमिदं, किंतु ब्रह्म-वाक्यमेवेत्यर्थः ॥ १३ ॥

स्थानादिव्यपदेशाच्च ॥ १४ ॥ पूर्वसूत्रोक्तस्य हेतोर्वादकवलितत्वात् सूत्रान्तरं पठतीत्याशयेन सूत्रं पठित्वा व्याचक्षते एतमित्यादि । तथाचान्तरपदेन पूर्वसूत्रादेव स्थानप्राप्तेरस्मिन् सूत्रे स्थानादीत्यत्रातद्गुणसंविज्ञान इत्यर्थः । एतेषां संयद्वामत्वादीनां कथं ब्रह्मत्वगमकतेत्याकाङ्क्षायामेतद् व्याकुर्वन्ति वामानीत्यादि । कर्मफललय इति एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुतेः, सर्वं पदं हस्तिपदे निमग्नमितिवत् सर्वेषां सुखानां तत्रैव श्लिष्टत्वेन

रश्मिः ।

प्रतिबिम्बे पुरुषपदप्रयोगः । अन्येषामिति पुरुषभिन्नानाम् । अतो विषयेति विषयवाक्यवशेन प्रतिबिम्बवशेन दृश्यत इति दर्शनश्रुतिः । पुरुषप्रतिबिम्बमात्रे संकोचः ॥ १३ ॥

स्थानादिव्यपदेशाच्च ॥ १४ ॥ वादेति व्याप्तिशोधकतर्कैर्वादकवलितत्वम् । सर्वं सर्वमयमिति तापिनीयश्रुतेरुपास्ये प्रतिबिम्बेऽपि ह्यमृतत्वादिधर्मोपपत्तिरूपस्य हेतोरभावाद्वादकवलितत्वं तु न । अखण्डब्रह्मवादत्वेन सखण्डब्रह्मवादेनुपयोगात् । अनुमानपक्षस्य भाष्यासंमतत्वे तु स्थाननिर्देशानन्तरं तद्वृत्तित्वस्मरणेन प्रसङ्गासंगत्या धर्माणां वक्तव्यत्वात् सूत्रान्तरं पठितेत्याशयेन सूत्रं पठित्वा व्याचक्षत इति ग्रन्थः । एतमिति एतं यथोक्तम् । आचक्षते ब्रह्मविदः । अत्र हेतुमाह एतं हीति हि यस्मादेतं पुरुषमाश्रित्य वा । सर्वाणि वामानि टुवम उद्गीर्णे भ्वादिः परस्मैपदी उद्गीर्णानि, वननीयानीत्यन्ये शोभनकर्मणः फलानि । सर्वेऽभिसंयन्ति सम्यगभिमुखं यन्ति इण् गतौ प्राप्नुवन्ति, उत्पद्यन्त इत्यन्ये तथाच संयन्ति शतृप्रत्ययान्तं वामानि यस्मिन् स संयद्वाम इति व्युत्पत्तिः । वामनीपदव्युत्पत्तिः एष हीति । वामान्युद्गीर्णानि कर्मफलानि प्राणिभ्यः प्रापयति । भाम क्रोधे इत्यस्य रूपं नास्तीत्याह एष हीति । तथाच भातीति भा कर्तरि क्विप् अमतीत्यमः अम गतिशब्दभक्तिषु भ्वादिः पचाद्यच् भा च अमश्च भामौ भावप्रधानः तौ नयति प्राप्नोतीति भामनी भात्वं भानमेव अत एव भाष्यं सर्वलोकेषु भानं चेति । अन्तरपदेनेति अधिसापेक्षेणात्यन्तरत्वाचकेन । अतद्गुणेति न तस्य वर्तिपदार्थस्य गुणा विशेषणानि तेषां संविज्ञानं यत्र क्रियान्वयित्वेन सोऽतद्गुणसंविज्ञानो बहुव्रीहिः । तथा च स्थानादिव्यपदेशादित्यत्र स्थानमादिर्येषां ते स्थानादयः संयद्वामादयः तेषां व्यपदेशादिति सूत्रार्थः । संयद्वामपदेन स्वस्मिन् कर्मफललय उक्तः । कर्मफलानि सुखात्मकानि तेषां लयः श्लेषः लीङ् श्लेषणे । आनन्दरूप इत्याहुः एतस्यैवेति । तत्रेति अधिपुरुषे । ननु पृथिव्यादीनामभिविद्याप्राप्यानामात्मविद्याप्राप्यब्रह्मणश्च का व्यवस्थेत्यत आहुः

भानं च । एष इति तमेवाऽक्षिपुरुषं निर्दिश्य स्थानादि व्यपदिश्यते । न हि प्रतिबिम्बात्मनः स्थानादिव्यपदेशः संभवति । चकारादेतत्तुल्यवाक्यस्याप्ययमे-

---

भाष्यप्रकाशः ।

लोकादीनां तदवयवत्वेन च तत्रैव लय इत्यर्थः । एतेन स्थानपदस्योक्तरीत्या लयार्थकत्वमित्यपि व्याख्यातम् । तदा तु तद्गुणसंविज्ञान एव । तथा चैतैः संयद्वामत्वादिभिरसाधारणधर्मैरत्र ब्रह्मैव निश्चीयते । अतः पूर्वसूत्रोक्तो हेतुरपि तस्यैव साधक इत्यर्थः । एतं न्यायं वाक्यान्तरेऽप्यतिदेष्टुं सूत्रे चकार इत्याहुः चकारादित्यादि । तत्स्मारयन्ति इन्द्रेत्यादि । तत्रापि प्रथमे पर्याये, य एषोऽक्षिणीत्यारभ्यैतद् ब्रह्मेत्यन्त एवमेवोपदिष्टत्वात् तदित्यर्थः । ननु तत्र, अथ योऽयमित्यादिना प्रश्ने प्रजापतिना, एष एवैषु सर्वेष्वन्तेषु परिख्यायत इति प्रतिबिम्बस्यैव निगमनात् कथं तस्यैतदेकवाक्यत्वमिति शङ्कायामाहुः अथेत्यादि । एतदग्रे, उदशराव इत्यादिना इन्द्रविरोचन-

रश्मिः ।

लोकादीनामिति ब्रह्मपृथिव्यादीनामित्यर्थः । तदवयवत्वेनेति अक्षिपुरुषतदवयत्वेनाक्षिपुरुष एव संश्लेष इत्यर्थः । एतेनेति कर्मफललय इति भाष्येण उक्तरीत्या ब्रह्मत्वगमकताप्रश्ने कृते उक्ताया ब्रह्मतागमकतारीतिरक्षिपुरुषे लयप्रणाडी तया कृत्वा । ब्रह्मणि क्षीयतेऽनेनेति स्थानं लयः करणे प्रत्ययस्तस्माल्लयार्थकत्वमपीत्यपि व्याख्यातप्रायमित्यर्थः । तद्गुणेति तस्य वर्तिपदार्थस्य गुणा विशेषणानि तेषां संविज्ञानं क्रियान्वयित्वेन यत्र स तद्गुणसंविज्ञानः । एवकारस्तु स्थानस्य क्रियान्वयित्वेन संविज्ञानादतद्गुणसंविज्ञानव्यवच्छेदकः । संयद्वामेति आदिपदेन वामनीभामन्योर्भावौ । ब्रह्मैवेत्यनेकेषां धर्माणामुपासनागमकत्वे 'जन्माद्यस्य यतः' इत्यधिकरणोक्तधर्माणामप्यारोपसंभवेन स्वारसिकब्रह्मसिद्धेर्महानेवानयः स्यादित्यनेकेषामुपासनागमकत्वाभाव इत्येवकारः । असाधारणेति संयद्वामत्वं कर्मफललय इति भाष्येण व्याकृतं वामनीत्वं कर्मफलदानं चेति भाष्येण विवृतं क्षितिरूपं कर्मफलं स्वर्गापवर्गलक्षणं ब्रह्माणं प्रति परान् प्रति च यतो भवति कर्मणा ब्रह्मणो विमोकस्योक्तेः कर्महिरण्यगर्भयोर्मुख्यत्वात् तदुभयमुक्तम् । भामत्वं सर्वलोकेष्विति भाष्येणोक्तमुत्पत्तिरूपम् । लोकसृष्टिद्वारा व्यवहार्यो भविष्यामीति ईक्षतेरित्यधिकरणभाष्योक्तेः । अत इति अनेकेषामुपासनागमकत्वाभावात् । साधक इति अस्तु वादकवलितत्वं परं तु ह्यविद्वद्दशायां एकस्या अपि श्रुत्यन्तराननुगृहीतायाः अनुरोधोऽपार्थ इति भावः । विषयवाक्यान्तरसमुच्चये चकार इत्याहुः एतमिति । तदिति वाक्यम् । तत्रेति इन्द्रविरोचनयोः प्रजापतेश्च संवादे । अयमेव भाष्यार्थश्छान्दोग्ये दशमप्रपाठकेस्ति । पर्याय इति तौ प्रति प्रथमे वाक्यनिर्माणे प्रकारे वा । तदित्यर्थ इति वाक्यमित्यर्थः । अथ योयमिति । अथ योयं य एषोप्सु परिख्यायते यश्चायमादर्शे कतम इत्येष उ एवैषु एतेषु परिख्यायत इति होवाच' इति श्रुत्वा एष उ एवैषु सर्वेषु अन्तेषु परिख्यायते इति पाठान्तरम् । अस्या अर्थः । एष हृदयस्थः उ एव आत्मा सर्वेषु यथोक्तेषु एष्विति पाठेप्ययमर्थः । अबादिषु वर्तमानेषु । अन्तेषु मध्येषु । एतेष्विति पाठेप्ययमर्थः । परिख्यायते इति ह प्रजापतिरुवाचेति । तस्यैतदिति । य एषोक्षिणि पुरुषो दृश्यत इत्यस्य संदिग्धस्य एतस्य अप्सु प रिख्यायते यश्चायमादर्शे इत्यसंदिग्धस्यैकवाक्यत्वमित्यर्थः ।

वार्थः । इन्द्रविरोचनप्रजापतिसंवादे । अथ योऽयं भगवोऽप्सु परिख्यायत इत्यासुरम् । न तु य एषोऽक्षिणि पुरुषो दृश्यत इत्यादि । तस्मादक्षिपुरुषो ब्रह्मैव ॥ १४ ॥

सुखविशिष्टाभिधानादेव च ॥ १५ ॥

ननु किमिति निर्बन्धेन ब्रह्मवाक्यत्वं संपाद्यते । उपासनापरत्वे को दोष इत्याशङ्क्याह सुखविशिष्टाभिधानात् । एतदमृतमभयमेतद् ब्रह्मेति । यत्रोपा-

भाष्यप्रकाशः ।

योर्बोधं परीक्ष्य ताभ्यां शरीर एवात्मत्वेन ज्ञाते प्रजापतिना, अनुपलभ्यात्मानमित्यादिना तद्दोषकथनात् तस्यैवासुरत्वं बोधितम् । श्रुत्या चोपपादितम् । अतस्तदेवासुरं, न तु ततः पूर्वतनमपीत्यर्थः । नच प्रजापतिनैवं श्लिष्टं किमित्युक्तमिति शङ्क्यम् । अधिकारपरीक्षार्थत्वात् । नच मिथ्याभाषित्वं प्रतारकत्वं वा । अन्तर्यामिब्राह्मणे तस्य सर्वान्तरत्वश्रावणात् प्रतिबिम्बअवादो चात्मनः सत्त्वेन, यतर एतदुपनिषदो भविष्यन्ति देवा वाऽसुरा वा ते पराभविष्यन्तीति कथनेन तदुभयाभावादिति ॥ १४ ॥

सुखविशिष्टाभिधानादेव च ॥ १५ ॥ अभिधानं विवृण्वन्ति एतदमृतमित्यादि ।

रश्मिः ।

परीक्ष्येति उदशराव आत्मानमवेक्ष्य यदात्मनो न विजानीथ तन्मे प्रब्रूतमित्यादिना परीक्ष्य एतदमृतमभयमेतद्ब्रह्मेति तौ ह शान्तहृदयौ प्रवव्रजतुरिति श्रुत्या । ताभ्यां शरीरे बिम्बभूते द्विवचनान्तं पदम् । ज्ञाते सतीत्यादिनेत्यनुपलभ्यात्मानमननुविद्य व्रजतो यतर एतदुपनिषदो भविष्यन्ति देवा वासुरा ते पराभविष्यन्तीति स ह शान्तहृदय एव विरोचनोऽसुरान् जगाम तेभ्यो हैतामुपनिषदं प्रोवाचेत्यनया तस्या उपनिषदोऽविचार्य देहपरिचरणकथनात् आसुरत्वरूपदोषकथनात् तस्यैवाथ योयं भगवोप्सु परिख्यायते इति वाक्यस्यैवासुरत्वं बोधितं श्रुत्या चासुराणां ह्येषोपनिषदिति श्रुत्या चोपपादितमतः पूर्वोक्तं वाक्यमेवासुरम् । षष्ठप्रपाठकश्रुतिभ्रमं भाष्ये वारयामासुः न त्विति । पूर्वतनं दशमप्रपाठकस्थं न तु षष्ठप्रपाठकस्थम् । श्रुत्यर्थस्तु उदशरावे उदकपूर्णे शरावे आत्मन इति कर्म युवामिन्द्रविरोचनौ न विजानीथः शेषं स्पष्टम् । अनुपलभ्य यथोक्तमात्मानं शास्त्राचार्याभ्यामज्ञात्वाऽननुविद्य स्वप्रत्यक्षतां चाकृत्वा विपरीतनिश्चयौ भूत्वा एताविन्द्रविरोचनौ व्रजतः गच्छेयाताम् । अतः यतरे ये केचन देवा वा असुरा वा एतदुपनिषदः एताभ्यां मिथ्या गृहीता प्रतिबिम्बात्मविद्या सैवोपनिषदेषां त एतदुपनिषदः एवंविज्ञाना एतन्निश्चया भविष्यन्ति ते पराभूता भविष्यन्तीत्युक्तं प्रजापतिवाक्यं श्रुत्वा स्वगृहं गच्छन् योसुरराजो विरोचनः स ह शान्तहृदयः एव सन् असुरान् जगाम तेभ्योसुरेभ्यः एतां शारीरात्मबुद्धिरूपामुपनिषदं प्रोवाचेति । श्लिष्टमिति देहात्मवाचकं पदमुपदेशान्तराद्विद्वारान्तरात्मव्यञ्जकम् । श्लेषाभिव्यञ्जकपदाभिज्ञमित्यर्थः । अधीति निवृत्तिप्रवृत्तिमार्गाधिकारपरीक्षार्थम् । देहस्याप्यात्मत्वात् । उभयोः कुत्रात्मन्यधिकार इति न चेति । अक्षिपुरुष ब्रह्मविद्दर्शयितोः प्रजापतेर्मिथ्याभाषितं प्रतारकत्वं चेत्यर्थः । न च भाषितमित्यनेनानन्वयः शङ्क्यः । कर्मादीनामपि संबन्धसामान्ये षष्ठ्यभिधानात् । प्रजापतेरिति कर्तरि षष्ठ्यङ्गीकारात् । अवादाविति आदिपदेन देहः । कथनेनेति पराभवरूपफलकथनेन तदुभयस्य मिथ्याभाषितप्रतारकत्वरूपस्याभावादिति । इति सूत्रार्थसमाप्तौ । तथा चात्मोपनिषदुक्तेषु त्रिष्वात्मसु विरोचनस्य बाह्यात्माधिकारात् न तदुभयमित्यर्थः ॥ १४ ॥

सुखविशिष्टाभिधानादेव च ॥ १५ ॥ अभिधानमिति अक्षिपुरुषं निर्दिश्य

सता विधीयेत, एष आत्मेति । तदा अमृतादिवचनं व्यर्थं स्यात् । तद्धर्माणां पूर्वमेव प्राप्तत्वात् । तस्मादमृतमानन्दः, अभयं चित्, ब्रह्म सत्, सच्चिदानन्दरूप आत्मेत्युक्तं भवति । अत, एष इत्यक्षिपुरुषं निर्दिश्य सुखविशिष्टमभिधीयते । सच्चितोर्न ब्रह्मव्यापकत्वमिति सुखमेव निर्दिष्टम् । अतः सुख-

भाष्यप्रकाशः ।

अयमर्थः । अत्र ह्येतद्विशेषणत्रयं पूर्वमभिधायाग्रे संयद्वामत्वादय उच्यन्ते । तेनैतत्त्रयस्य स्वरूपबोधकत्वमिति ज्ञायते । तत्र सच्चिदानन्दात्मकमतोऽत्राऽमृतपदमानन्दवाचकमिति सनत्कुमारेण सुखरूपं भूमानं प्रस्तुत्य, यो वै भूमा तदमृतमिति छान्दोग्ये श्रावणाज्ज्ञेयम् । अभयपदं चिद्वाचकमिति त्वभयं ह वै जनक प्राप्तोऽसीति ज्ञानोपदेशोत्तरमभयपदेनोपसंहारात् । ब्रह्मपदं सद्वाचकमिति च सत्यं ज्ञानमनन्तं ब्रह्मेत्यत्र प्रथमनिर्देशादिति । एवं सति पूर्वं यदग्निभिः कंपदेन सुखविशिष्टमुक्तं तदत्राऽमृतपदेनाभिधीयते । नच सच्चितोरपि स्वरूपभूतत्वाद् ब्रह्मविश्वव्यापकत्वं शङ्क्यम् । तयोर्यथायथं जडे जीवे च प्रव्यक्तत्वेनैकान्तिकतथात्वाभावात् । अतः

रश्मिः ।

सुखविशिष्टमभिधीयते एष आत्मेति होवाचेत्यनेन एतदमृतमित्यनेन वा तदभिधानं शब्दविशेषम् । एतदिति अमृताभयब्रह्मात्मकमक्षिपुरुषस्य विशेषणत्रयम् । श्रावणादिति नवमप्रपाठके श्रावणात् । अभयं हेति बृहदारण्यके श्रुतिरियम् । ज्ञानोपेति ज्ञानं चित्पदार्थः । प्रथमेति तथा च पाठक्रमे सत्यत्वेन ब्रह्मोपस्थितेः सद्ब्रह्मेति भावः । न च सति साधुः सत्यमिति सत्यपदं पूर्वाधिकरणे व्युत्पादितमत्र प्रत्ययरहितं कुतो व्याकृतमिति शङ्क्यम् । व्युत्पत्तिर्व्याकरणरूपाङ्गसिद्धा प्रत्ययरहितं सत्पदं ब्रह्मवाचकं 'अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः' इति श्रुत्या सत्पदमत्र व्युत्पत्तिसिद्धार्थवाचकम् । 'ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृत' इति गीतातः । प्रसङ्गादुच्यते । सत्तामात्रमित्यत्र वर्णागमः सन्मात्रमित्यर्थ इति । पूर्वमिति आत्मविद्यानिरूपणे छान्दोग्ये । एतावत्पर्यन्तमेतदमृतमित्यारभ्याभिधीयते इत्यन्तभाष्यतात्पर्यमुक्तम् । तस्य भाष्यस्यार्थः सुखविशिष्टस्याभिधानमेतदमृतमिति श्रुत्युक्तसुखविशिष्टाक्षिपुरुषमभिधीयते अनेन एतदमृतमिति वाक्येनेत्यत एतदमृतमितीत्यन्तं वाक्यं सुखविशिष्टाभिधानादिति सूत्रांशस्य पर्यायः । उपासनार्थं धर्मापेक्षणात् कुतोऽमृतादिवचनं व्यर्थमित्यत आहुः. तद्धर्माणामिति । उपासनाधर्माणाम् । पूर्वं संयद्वामत्वादीनाम् । तस्मादिति उपासनार्थत्वाभावात् संयद्वामत्वादिविशेषणैर्लैयादिरूपब्रह्मासाधारणधर्माणामुक्तत्वाच्च । अमृतादिपदानामानन्दादौ शक्तिः भाष्यप्रकाश उक्तैव । ननु पदत्रयप्रतिपाद्यब्रह्मण्येकसत्पदशक्तिः कथमित्याकाङ्क्षायामस्त्वेवमेव यदि तल्लक्षणलक्षितं ब्रह्ममात्रं प्रतिपाद्यं स्यात्त्वेवं सर्वोपनिषदुक्तलक्षकस्यात्मनो निरूपणीयत्वादित्याहुः सच्चिदिति । तथा च सर्वोपनिषदात्मलक्षणं त्वंपदार्थादौपाधिकाद्विलक्षण आकाशवत्सूक्ष्मः केवलः सत्तामात्रतत्पदार्थआत्मेत्युच्यत इति । त्वंपदार्थादौपाधिकाद्विलक्षणः अमृतमभयं चैतत् समीपतरवर्ति आकाशवत्सूक्ष्मः केवलश्च सत्तामात्रतत्पदार्थः ब्रह्म सदिति भाष्येणोक्तं तदेतदाहुः आत्मेत्युक्तं भवतीति । सुखविशिष्टाभिधानादित्यत्र सूत्रांशे करणव्युत्पत्तिमाहुः अत इति । एष आत्मेति होवाचेत्यनेन निर्दिश्य सुखविशिष्टमाचार्येणाभिधीयते एतदमृतमित्यनेनेति करणे ल्युट् । सच्चितोरिति भाष्यं विवरीषवः न च सच्चितोरिति । ऐकान्तिकेति एकोऽद्वितीयो अन्तः स्वरूपं स्वार्थे ठक् ।

विशिष्टाभिधानादेव ब्रह्मवाक्यमिति। एषा मुख्योपपत्तिरित्येवकारः। चकारात् सदादिभिरपि। तस्माद् ब्रह्मैवाक्षिपुरुषः॥ १५॥

श्रुतोपनिषत्कगत्यभिधानाच्च॥ १६॥

स्वरूपतो निर्णीय फलतो निर्णयमाह। श्रुतोपनिषत्कस्य, श्रुता उपनिषद् विद्या येन तस्य ब्रह्मविदो या गतिर्देवयानाख्या साऽक्षिपुरुषविदोऽप्युच्यते। अथ यदु चैवास्मिन् शव्यं कर्म कुर्वन्ति, यदि च नार्चिषमेवाभियन्तीत्युपक्रम्य

भाष्यप्रकाशः।

सुखमेव विशेषणत्वेन निर्दिष्टम्। सदादिभिरिति आनन्दसहभूतैः सचित्संयद्वामत्वादिभिः।

रामानुजाचार्यास्त्वेतदग्रे, अत एव च स ब्रह्मेति सूत्रान्तरं पठन्ति। अर्थस्तु, अत एव सुखविशिष्टाभिधानादेव, स स्वपदोपदिष्ट आकाशो ब्रह्मेति। तत् पूर्वसूत्रेण गतार्थत्वादन्यैर्नाद्रियते॥ १५॥

श्रुतोपनिषत्कगत्यभिधानाच्च॥ १६॥ एतत्सूत्रप्रयोजनमाहुः स्वरूपत इत्यादि। फलत इति। फलस्य तात्पर्यलिङ्गत्वात् तथेत्यर्थः। ब्रह्मविदो या गतिरिति एतस्या ब्रह्मविदो गतित्वं छान्दोग्य एव पञ्चाग्निविद्यायां तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्तीत्यादिना श्रावितम्। सैवात्र प्रत्यभिज्ञायते। गीतायामपि।

'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः'॥

इत्यनेन च। अथेत्यादि वाक्यार्थस्तु, अथेति प्रतिज्ञायाम्। यदु चैव यदि, अस्मिन् अक्षिपुरुषवेत्तरि मृते, शव्यं शवसंस्काररूपमौर्ध्वदैहिकं कुर्वन्ति ज्ञातयो, यदि च न कुर्वन्ति, उभय-

रश्मिः।

तस्य तथात्वं स्यापकत्वं तस्याभावात्। आनन्देति इदं विशेषणं सूत्रीयसुखसंबन्धिपदार्थसमुच्चयसूचनायान्यथा घटादीनामपि समुच्चायकश्चकारः स्यादिति। विशिष्टं निर्दिष्टं वेदितव्यमिति शेषः। पूर्वसूत्रेणेति अन्तरसूत्रे पूर्वपक्षे आत्मविद्या चेत्युपसंहारदर्शनात् इति भाष्येण यदेव कं तदेव खं यदेव खं तदेव कं प्राणं चाहास्मै तदाकाशं चोचुरिति श्रुतिस्मरणात्तस्याश्च निःसंदिग्धत्वाद्गतार्थत्वादित्यर्थः। नाद्रियत इति अनादरान्न लिख्यते रामानुजाचार्यान् प्रत्येव सूत्रपाठकत्वादिति भावः॥ १५॥

श्रुतोपनिषत्कगत्यभिधानाच्च॥ १६॥ स्वरूपत इति अक्षिपुरुषं स्वरूपतो निर्णीयेति भाष्यार्थः। ननु फलस्य निर्णयः केन प्रकारेण अक्षिपुरुषं ब्रह्मेत्यक्षिपुरुषस्य ब्रह्मत्वनिर्णयः इत्याकाङ्क्षायामाहुः फलस्येति। अक्षिपुरुषब्रह्मत्वे तात्पर्यस्य वक्तुरिच्छात्मकस्य तत्प्रतीतीच्छयोच्चरितत्वात्मकस्य प्रस्थानरत्नाकरोक्तस्य वा लिङ्गत्वं हेतुत्वं तस्मात् तात्पर्यविषयत्वेन प्रकारेणाक्षिपुरुषस्य तथाब्रह्मत्वमित्यर्थः। प्रतीके ब्रह्मविद इति ब्रविदो या गतिरित्यपि भाष्यपाठः। अर्थस्त्वयमेव ब्रह्मण एव प्रकृष्टत्वेन तद्विद् एव प्रवित्त्वादिति। छान्दोग्यार्थस्तु साधनाध्यायेऽस्ति प्रयोजनाभावान्नोच्यते। प्रत्यभीति तेऽर्चिषमेवाभिसंभवन्तीति वाक्येन सेयं प्रविदो गतिरिति तत्तेदन्ताप्रकारकं ज्ञानं क्रियत इत्यर्थः।

'चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयति । एष देवपथो ब्रह्मपथ इत्येतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' इति ब्रह्मविदोऽप्येष एव मार्गः पुनरावृत्तिरहितः । चकारस्तूक्तसमुच्चयेनाधिकरणपूर्णत्वबोधकः ॥१६॥

भाष्यप्रकाशः ।

चापि तेषामविपुलविदां न परलोके फलवैषम्यमित्युक्त्वा विद्यावतां गमनप्रकारं वदति अर्चिषमित्यादिना अमानव इति । मनुकृतसृष्टावनुत्पन्नः । मनवश्च शिवपर्यन्ता बोध्याः । 'सलोकपाला मुनयो मनूनामाद्यं मनुं प्राञ्जलयः प्रणेमुः' इति चतुर्थस्कन्धे मैत्रेयेण महादेवेऽपि मनुपदप्रयोगात् । तेन भगवतो दूत इत्यर्थः । देवपथ इति देवैर्गमयितृभिरुपलक्षितो मार्गः । ब्रह्मपथ इति । ब्रह्मणः प्राप्यस्य परस्य संबन्धी मार्गः । आवर्तमिति । आवृत्तिसाधनभूतमार्गम् ।

मायावादिनस्तु, ब्रह्मैव सन् ब्रह्माप्येतीति श्रुतेः सद्योमुक्तिमेवाङ्गीकुर्वाणा इमां गतिं नाद्रियन्ते । तत्तु व्याख्येयश्रुतिविरोधादेवोपेक्ष्यम् । अतिकृपातदभावसहकारेण सद्योमुक्तिक्रममुक्त्योरुपपत्त्योक्तश्रुतिविरोधाभावेनैतद्वक्तुर्भ्रान्तत्वापत्त्या चैतत्त्यागायोगादिति ॥ १६ ॥

रश्मिः ।

अग्निरिति अग्न्यभिमानिनी देवता । एवमग्रेपीति टीकायाम् । अर्चिषमिति अर्चिरभिमानिनीं देवतामेवाभिसंभवन्ति प्रतिपद्यन्त इत्यादिनेत्यादिपदेन 'अर्चिषोहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान्मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषः' इत्यादि । अर्थस्तु अर्चिषः सकाशादहर्देवतां अह्न आपूर्यमाणपक्षं शुक्लपक्षं देवतां आपूर्यमाणपक्षाद्यान् षण्मासान् सविता उदङ् उत्तरं देशमेति तान् षण्मासान् देवताः मासेभ्यः संवत्सरदेवतां संवत्सरादादित्यं सूर्यं आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतमभिसंभवन्तीति प्रत्येकमभिसंबध्यते । तत्पुरुष इति तत्र स्थाने स्थितानेतान् उपासकान् स अमानवं व्याचख्युः अमानव इतीति । दूत इति दूतो ब्रह्म गमयतीत्यर्थः । देवैरिति मध्यमपदलोपी समास इति भावः । अङ्गीकुर्वाणा इति स्वेभ्यो मुक्तिरित्यात्मनेपदविग्रहकं पदमुक्तम् । कुर्वत इति कुर्वाणा इति । नाद्रियन्त इति श्रुता अनुष्ठिता उपनिषद्रहस्यं सगुणब्रह्मोपासनं येन स श्रुतोपनिषत्कः तस्य या गतिस्तस्या अभिधानादिति सूत्रार्थं वदन्तो नाद्रियन्ते । शंकरभाष्ये तु श्रुतरहस्यविज्ञानस्य या गतिर्देवयानाख्यासाऽक्षिपुरुषविदोभिधीयमाना दृश्यत इति सूत्रार्थः । व्याख्येयेति क्रममुक्तिबोधकव्याख्येया अर्चिषमेवाभिसंभवतीत्यादिश्रुतिस्तद्विरोधादित्यर्थः । ननु कारणवैजात्याभावेन फलवैजात्यस्य वक्तुमशक्यत्वात्सद्योमुक्तिरेवैका मुख्या क्रममुक्तिस्तु सगुणब्रह्मपरेत्याकाङ्क्षायां कारणवैजात्यमाहुः अतिकृपेति । एतच्चतुर्थचरणे आनुमानिकमप्येकेषामित्यधिकरणे स्फोटयिष्यति । उक्तेति सद्योमुक्तिबोधकश्रुतीत्यर्थः । एतद्वक्तुः क्रममुक्तिवक्तुः प्रजापतेः । एतदिति । क्रममुक्तिप्रतिपादकश्रुतिजातस्य निर्गुणमुक्तिप्रतिपादकत्वत्यागायोगात् । न च सगुणपरत्वेनास्या उपपत्तिरिति साम्प्रतम् । सगुणनिर्गुणकल्पनाया असंमतत्वस्य जन्माद्यस्य यत इत्यधिकरणे उक्तत्वात् साधनाध्याये वक्ष्यमाणत्वाच्च । भाष्ये । पुनरावृत्तीत्यादि तथा च श्रुतिः 'अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययात्मानमन्विष्यादित्यमभिजयन्ते' इति श्रुतेः । श्रुत्यर्थस्तु उत्तरेण उत्तरायणेन तपसा पुराणोक्तसाधनालोचनेन तपसा सर्वात्मभावेन वा श्रत् सत्यं दधातीति श्रद्धा तया विद्यया 'विद्यैव तु निर्धारणात्' इति सूत्रात्सर्वात्मभावेनान्यया च विद्यया कर्मरूपया ज्ञानमन्विष्य इष्ट्वा इत्का-

## अनवस्थितेरसंभवाच्च नेतरः ॥ १७ ॥

इदमेवाधिकरणं पुनर्निषेधमुखेन विचारयति। ननूपासनापरत्वेऽपि सर्वमुपपद्यते। तद्धर्मव्यपदेशेनैवोपासनोपपत्तेः। अतः सर्वा उपपत्तयो व्यपदेशिवद्भावेन संगच्छन्त इत्येवं प्राप्त उच्यते। इतरो नात्र वाक्यार्थः। अनवस्थिते-

---

भाष्यप्रकाशः।

अनवस्थितेरसंभवाच्च नेतरः ॥ १७॥ सूत्रप्रयोजनमाहुः इदमित्यादि। तथाचोक्ताधिकरणद्वयविषयवाक्ये उपासनाप्रसङ्गाभावेन संदेहानुदयादत्र तु तदुदयात् पुनर्विचार इत्यर्थः। पूर्वपक्षं ग्राहयन्ति नन्वित्यादि। विभजन्ते तद्धर्मेत्यादि। प्रतिबिम्बपुरुषस्य ह्युपासना ब्रह्मत्वेन कर्तव्यात्रोच्यते। ब्रह्मत्वं तु तदैव बुद्धावारोहति, यदा ब्रह्मधर्मास्तत्र व्यपदिश्यन्ते। अतो व्यपदेशिवद्भावेन व्यपदेशवता ब्रह्मणा तुल्यं वर्तमानतया प्रतिबिम्बपुरुषेऽवगते उपासना सिध्यतीति तत्परत्वे सर्वा उपपत्तयो गत्यभिधानान्ताः संगता भवन्तीति दर्शनश्रुतिसंकोचो न युक्तस्तस्याः प्रथमावगतत्वेनासंजातविरोधतया मुख्यत्वादित्यर्थः। सिद्धान्तं व्याचक्षते इतरो नेत्यादि। भवेदिति दृश्यत इति पदेन दृश्यतया प्रतिपाद्यं भवेत्। अयमर्थः। त्वया ह्यक्षिस्थाने दृश्यत्वकथनात् प्रतिबिम्बपुरुषो वाक्यार्थत्वेनापाद्यते। तत् तदा स्याद् यदि दृश्यत्वं तस्य नियतं स्यात्। तदेव तु न। कुतः। अस्थिरत्वात्। तथाहि। किमत्राचार्येण स्वचक्षुर्गत

रश्मिः।

विषयं कृत्वा अभिजयः स्वाधीनीकरणं यत्नः सर्वात्मभावे न त्वादित्यमण्डलमध्यवर्तिनः स्वाधीनीकरणं योग्यत्वात्। अन्ये तु ब्रह्मामृतवर्षिण्यां अथ देहपातानन्तरं ब्रह्मचर्यादितपसा हेतुनात्मानमनुसंधाय तद्विद्यया ध्यानाख्ययोत्तरमार्गमर्चिराद्युपलक्षितं प्राप्य तेनादित्यादिद्वारा कार्यं ब्रह्म प्राप्नुवन्तीत्यर्थमाहुः। चकारस्त्वित्यादि उक्तसूत्रार्थसमुच्चयरूपार्थेन साकमधिकरणचरमवर्णतिरोभावस्य व्यञ्जनया बोधक इत्यर्थः। एतेन निपातस्य समुच्चयाभिधायकत्वमधिकरणचरमवर्णध्वंसस्य द्योतकत्वमित्युक्तम् ॥ १६ ॥

अनवस्थितेरसंभवाच्च नेतरः ॥ १७॥ पूर्वत्रानन्दमयाधिकरणे नेतरोनुपपत्तेः इति सूत्रोपन्यासः सर्वत्र प्रसिद्धोपदेशात् इत्यधिकरणे अनुपपत्तेस्तु न शारीरः इति सूत्रोपन्यासोऽत्र तु अधिकरणोपन्यासस्तद्बीजं संदेहोदयमाहुः तथाचेति। उक्ताधिकरणद्वयं आनन्दमयसर्वत्र प्रसिद्धोपदेशादित्यधिकरणद्वयम्। तद्विषयवाक्ये को ह्येवान्यात् कः प्राण्याद्यदेष आकाश आनन्दो न स्यादित्यत्र स क्रतुं कुर्वीतेत्यत्र च पूर्वाधिकरणयोर्निषेधनिरूपणं नाधिकरणेन कृतं तत्र हेतुमाहुः उपासनेति। विचार इति अधिकरणात्मकविचारः अधिकरणेन विचारो वा। विषयसंदेहोपव्यक्तेः पूर्वपक्षमाहुरित्याहुः पूर्वेति। अत इति भाष्यमवतारयामासुः अत इति। व्यपेति विशिष्टो ह्यपदेशो व्यपदेशः सोऽस्यास्तीति व्यपदेशी मुख्यस्तत्तुल्यत्वेनेत्यर्थः। तदेवाहुर्व्यपेति। तुल्यमिति 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिः। इतिवदित्यस्यार्थ उक्तो अग्रे भावः सत्ता तदर्थमाहुः वर्तेति। सदत्र वर्तमानं तस्य भावो वर्तमानता सत्ता तया। दर्शनेति य एषोऽक्षिणि पुरुषो दृश्यते इति श्रुत्युक्ता दर्शनश्रुतिर्दर्शननिरूपको निरपेक्षो रवस्तस्याः संकोच इत्यर्थः। इतरो नेत्यारभ्य सुतरामनवस्थितिरित्यन्तं भाष्यं विवृण्वन्ति अयमर्थ

रस्थिरत्वात् । उपदेशकवाक्यत्वादुपदेष्टुरेव चक्षुर्गतं भवेत् । तथाच वक्तुर्दर्शनाभावादनाप्तत्वम् । द्रष्टुरपगमे चापगच्छति सद्वितीये तु सद्वितीयः । उपासनाकाले च सुतरामनवस्थितिः । सद्वितीयोपासनायामपि श्रवणमननयो-

भाष्यप्रकाशः ।

उपदिश्यते, परचक्षुर्गतो वा । आद्ये वक्तुरनाप्तत्वादस्थिरत्वम् । द्वितीये तु द्रष्टरि पश्यत्येव प्रतिबिम्बात् तदपगमे प्रतिबिम्बस्याप्यपगमादस्थिरत्वम् । द्रष्टरि सद्वितीये तस्य सद्वितीयत्वादेकत्वोपदेशस्य विरोधादस्थिरत्वम् । उपासनाकाले च चित्तस्य स्थैर्याय नेत्रनिमीलने प्रतिबिम्बमात्राभावादुपास्यस्याभावादुपासनायाः सुतरामस्थिरत्वम् । यदि च द्वितीयं विना तदसंभवात् पत्नीद्वितीयस्य यागादिवत् सद्वितीयस्यैवोपासनाऽत्रोपगम्यते, तदा तु वाक्यश्रवणकाले श्रोतुरेकत्वादुपासनाकाले चान्यसापेक्षत्वाच्छ्रवणमननयोः प्रकारभेदेन भिन्नविषयत्वात् प्रमीयमाणा-

रश्मिः ।

इति । वाक्येति विषयवाक्यार्थत्वेन । वक्तुरिति स्वचक्षुर्गतस्य स्वेनादर्शनात् यथादृष्टार्थवादित्वाभावेनानाप्तत्वादित्यर्थः । यदि च दर्पणादिना स्वचक्षुर्गतं पश्यन्नुपदिशतीति कल्प्यते तदा तु दर्पणाद्यप्रयोज्यदर्शने मनोभावे मन्तुर्दर्शनाभावादनाप्तत्वादस्थिरत्वमित्यपि द्रष्टव्यम् । अन्यत्रमना अभूवं नापश्यमन्यत्रमना अभूवं नाश्रौषमिति । भाष्यार्थस्तु अवस्थितिः स्थिरस्य धर्मोऽनवस्थितिरस्थिरधर्मस्तदाहुः अस्थिरत्वादिति । अनाप्तत्वमिति ततो व्यवहितहेतोरस्थिरत्वमिति शेषः । अस्थिरत्वादितरो नात्र वाक्यार्थः इति । तथा च वस्तुनो य एषोऽक्षिणि पुरुष इति वाक्येन प्रतिपन्नस्य प्रतिबिम्बत्वेनोपादानेऽनाप्तोक्तत्वात् य एष इति वाक्यस्याप्रामाण्यापत्तिरिति भावः । अप्रमाणवाक्यप्रतिपन्नस्य सदा विचारकोपासकहृद्यस्थिरत्वम् । विचारकहृदि अप्रामाणिकोक्तं न तिष्ठत्यनधिकारादिति । द्रष्टुरिति भाष्यं विवरामासुः द्वितीये त्विति । अस्थिरत्वमिति सदोपासनाऽविषयत्वमित्यर्थः । अस्थिरस्योपासना सदा न भवतीति भावः । तस्येति प्रतिबिम्बस्य । एकत्वेति पुरुषो दृश्यत इत्यत्रैकत्वस्य विवक्षितत्वादिति भावः । एतद्विरोधादस्थिरत्वं पूर्ववत् । उपासनेतिभाष्यं विवरांचक्रुः उपासनेति । अस्थिरत्वमिति सदोपास्याविषयत्वम् । सद्वितीयेति भाष्यं विवरांचक्रुः यदि चेति । अन्येति श्रोतुर्गुर्वादिसापेक्षत्वात् प्रकारावेकत्वं द्वित्वं च तयोर्भेदेन भिन्नविषयत्वाद्येकविषयत्वात् । यथा प्रमीयमाणानुष्ठीयमानौ धर्मौ भावार्थपादभाष्ये निरूपितौ तद्वदुपासनायामाहुः प्रमीयमाणेति । वेदान्तेष्वपि मन्त्रब्राह्मणयोः सत्त्वम् । 'आनन्दमयमात्मा मे शुद्ध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास९ स्वाहा' इति महानारायणोपनिषच्छ्रुतौ विरजाहोमरूपप्रयोगकरणत्वेन 'प्रयोगकरणभूतः शब्दो मन्त्रः' इति लक्षणकत्वात् मन्त्रत्वम् । एतदतिरिक्तस्य ब्रह्मविदाप्नोति परमित्यस्य प्रयोगकरणशब्दत्वाभावेन 'शेषे ब्राह्मणशब्दः' इति लक्षणकत्वाद् ब्राह्मणत्वम् । अतः प्रमीयमाणानुष्ठीयमाना चोपासना तयोरवस्थयोः सप्तमीद्विवचनान्तम् । एकविषये द्विविषया नास्ति द्विविषये एकविषयोपासना नास्ति इति वैरूप्यं ततोनवस्थितिश्चलत्वम् । न च 'य एषोऽक्षिणि पुरुषो दृश्यते' इति श्रुतिवाक्यस्य मन्त्रत्वं ब्राह्मणत्वं चेति संकर इति वक्तव्यम् । 'यत्र ब्राह्मणानां मन्त्र इति समाख्या स मन्त्रः' इति लक्षणादरेण मन्त्र इति व्यवहाराधीनाखण्डोपाधिरूपमन्त्रत्वाश्रयत्वेन संकराभावात् । ब्राह्मणानां व्यवहारमनतिक्रम्य श्रुतिवाक्ये

र्भिन्नविषयत्वादनवस्थितिः। वक्तुरेव नियमे गुरोर्निर्बन्धेन सुतरामनवस्थितिः।

किंच। मनसा ह्युपासनं कर्तव्यम्। तत्र चासंभव एव। तादृशधर्मवत्त्वं च न संभवति। आसुरत्वं च भवेदिति चकारार्थः। तस्मादक्षिस्थाने सहज एव यो भगवानस्ति तत्परमेवैतद्वाक्यमिति सिद्धम्। व्यापकसर्वगतस्य सर्वतः पाणि-

---

भाष्यप्रकाशः।

नुष्ठीयमानावस्थयोरुपासनायाः प्रकारैक्याभावेन वैरूप्यादनवस्थितिः। यदि च श्रवणदशायां वक्तुः सत्त्वाद् वैरूप्यं परिह्रियते, तदा तु वक्तुरेव सद्वितीयत्वनियमे गुरोर्निर्बन्धापत्त्या निर्बन्धस्य कर्तुमशक्यत्वेन च सुतरां दुष्टत्वादनवस्थितिरिति। एवमनवस्थितिं व्युत्पाद्यासंभवं व्युत्पादयन्ति किंचेत्यादि। तत्रेति मनसि। तथाच प्रतिबिम्बस्य संनिधापयितुमशक्यत्वादुपासनाया असंभव इत्यर्थः। उपासनार्थं धर्माणां कल्पितत्वाङ्गीकारे सर्वैर्व्याख्यातस्य वक्ष्यमाणप्रकारकस्यासंभवस्येष्टत्वापादने पूर्वपक्षनिरासस्य कर्तुमशक्यत्वादेवं व्याख्यातम्। अथेतरव्याख्यातमपि संग्रहीतुं चकारसूचितं दूषणद्वयमन्यदाहुः तादृशेत्यादि। आत्मत्वाऽमृतत्वादिधर्मवत्त्वं प्रतिबिम्बस्य न संभवति। तस्या उपासनायाः प्रतिबिम्बपरत्वे तस्या आसुरत्वं विरोचनप्रतिपन्नत्वेन श्रावितं भवेत्। ततश्च गतिविरोधो भवेदिति चकारार्थ इत्यर्थः। सिद्धमाहुः तस्मादित्यादि। सहज इति स्वाभाविकः। ननु तथापि व्यापकस्य ब्रह्मणः स्वल्पे स्थाने स्थितिः कथमुपपद्यत इत्याकाङ्क्षायां तामुपपादयन्ति व्यापकेत्यादि। तथाच सर्वतः

रश्मिः।

मन्त्रत्वब्राह्मणत्वयोरेकतरदङ्गीकुर्मः। वक्तुरेवेति भाष्यं विवृण्वन्ति स्म यदि चेति। वैरूप्यमिति श्रवणकालेपि श्रोतुः सद्वितीयत्वेनोपासनाया प्रकारैक्याद्वैरूप्यं परिह्रियत इत्यर्थः। सद्वीति। श्रोतृसद्वितीयत्वे नियमः 'सप्तमी शौण्डैः' इत्यत्र सप्तमीति योगविभागात् सुप्सुपेति सूत्राद् वा समासः। गुरोर्निर्बन्धो निराधित्वम्। संबन्ध इति यावत्। स गुरुमेवाभिगच्छेदिति श्रुत्याभिगम्यस्याज्ञसव्यत्वाभावात् द्रव्यादिसंकोचादिनापि गुरुसंबन्धाभावाच्च। कर्तुमशक्यत्वेनेत्यर्थः। अहरह उपास्यस्य गुरुनिर्बन्धकरणाशक्यत्वप्रयुक्तो न कदापि उपास्यत्वापत्तिदोषस्तत्कर्मत्वं दुष्टत्वादित्यत्र कर्मणि क्तप्रत्ययात्। इतीत्येकहेतुसमाप्तौ। असंभवमिति द्वितीयं सौत्रं हेतुम्। संनिधेति। ननु चक्षुष्ठस्य सर्वस्यब्रह्मवन्मनसि संनिधापनसंभवात् कुतोऽसन्निधापनमिति चेन्न उपासायाश्चित्तशोधकत्वात्तदनुष्ठानात्पूर्वं चित्तस्याशुद्धा तथात्वात्। शुद्धे एव दर्पणादौ प्रतिबिम्बनियमात् तथा चान्योन्याश्रयादसंभव इत्यर्थः। अमृतत्वादीनां निरुपाधिकानां प्रतिबिम्बेष्वसंभवादिति शंकराचार्यादयो व्याचख्युस्तदनादरे बीजमाहुः उपासनेति। वक्ष्यमाणेति तादृशेत्यादिभाष्यविभागे वक्ष्यमाणेत्यर्थः। आपादने सति। पूर्वपक्षेति उपासनापरत्वेपि सर्वा उपपत्तयो व्यपदेशिवद्भावेन संगच्छन्त इति पूर्वपक्षनिरासस्य। इतरेति शंकराचार्यादिभिर्व्याख्यातमसंभवमपि। चकारेति नच वाचकत्वमुपसर्गस्य स्वमतेप्यस्ति तत्कुतो न व्याकृतमिति वाच्यम्'। एतेषां प्रस्थानरत्नाकरे वैयाकरणमतादरात्। अनुक्तसमुच्चयेभिधा नैयायिकानां मम त्वनुक्तसमुच्चये व्यञ्जनेति भावः। चकारेति व्यञ्जनया चकारार्थ इत्यर्थः। तामिति स्थितिम्। पूर्वाधिकरणेऽस्य प्रश्नस्योत्तरं व्यञ्जनया कृतमत्र त्वभिधया स्थितिमुपपादयन्ति स्मेत्यर्थः। सर्वत इति सर्वतः सार्वविभक्तिकस्तसिः पाणयः पादा अन्ताश्च यस्य सः सर्वतः पाणिपादान्तः तस्य भावः सर्वतः पाणि-

पादान्तत्वादानन्दमूर्तिर्भगवानेव । ब्रह्मवादे त्वेषैव मर्यादा । सगुणवादो ब्रह्मवादाज्ञानादिति ॥ १७ ॥

इति प्रथमाध्याये द्वितीपादे पञ्चममन्तर उपपत्तेरित्यधिकरणम् ॥ ५ ॥

भाष्यप्रकाशः ।

पाणिपादान्तत्वेन पुरुषत्वस्य प्राकट्यात् स्वल्पमपि स्थानं पर्याप्तं भवतीत्यत उपपद्यत इत्यर्थः । ननु सगुणस्योपाधिविशेषपरिच्छिन्नतया तावति स्वल्पे स्थाने स्थितिरुपपद्यत एवेति तद्विहाय सर्वतः पाणिपादान्तत्वं किमर्थमाद्रियत इत्यत आहुः ब्रह्मवाद इत्यादि । ब्रह्मैव सर्वमिति वादो ब्रह्मवादः । स च 'बहु स्याम्' इत्यादिश्रुतिसिद्धः । तत्र च सर्वतः पाणिपादान्तत्वं श्रुतौ गीतायां च सिद्धमतस्तथाङ्गीक्रियते । यः पुनः सगुणवादः स तु ब्रह्मवादाज्ञानादेकदेशमादाय जघन्याधिकारिणः प्रति प्रवृत्तोतो नाद्रियत इत्यर्थः । भोगस्त्वक्षिपुरुषस्य मण्डलब्राह्मणे, स एष एवेन्द्रो योऽयं दक्षिणेऽक्षन् पुरुषोऽथेयमिन्द्राणीत्यादिना हृदयदेशे जीवसंसारदशायां श्रावितः । इन्द्राणीं च भगवान् स्वात्मानमेव कृतवान् । 'स आत्मानमेव द्वेधाऽपातयत् ततः पतिश्च पत्नी चाभवताम्' इति पुरुषविधब्राह्मणश्रुतेः । एवं चैतेनाधिकरणत्रयेण संभोगप्राप्तिसूत्रभाष्ये सूचितं

रश्मिः ।

पादान्तत्वं तेन । प्राकट्यादिति तावत्या मायाया अपसरणेन प्राकट्यात् । उपाधीति उपाधिर्माया अक्षिपुरुषोपाधिस्तूपाधिविशेष इत्यर्थः । ब्रह्मैवेति मध्यमपदलोपी समासः । बहु स्यामिति एकोऽहं बहु स्यामित्यर्थः । श्रुताविति ।

'सर्वतः पाणिपादान्तं सर्वतोक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति' ॥ इति ।

श्रुतौ श्वेताश्वतरे तु 'सर्वतः पाणिपादं तत्' इति पाठभेदेन गीतायां त्रयोदशे च । सगुणवाद इति आरोपापवादसंगत्या 'स्वरूपं द्विविधं चैव सगुणं निर्गुणं तथा' इति गोपालतापिनीयश्रौत-गुणगणवानेकः गुणानपोह्य शुद्धोऽपर इति । एकदेशमिति अरूपवत्सूत्रोक्तम् । जघन्येति अरूपवत्सूत्रे एकदेशिमतेन समाधानमाहेति भाष्यात् । उत्तमाधिकारिणः प्रति तूभयव्यपदेशाधिकरणोक्तसिद्धान्तसिद्धः वृद्धिह्रासभाक्त्वसूत्रसिद्धान्तसिद्धो अथ वा आत्मकृतेः परिणामादिति सूत्रसिद्धो वा ब्रह्मवादः प्रवृत्तः । यस्त्वत्रैवादृश्यत्वादिगुणकसूत्रे ब्रह्मवादो वक्ष्यते यश्च 'अतः प्रबोधोस्मात्' इत्यधिकरणे मुग्धेर्धसंपत्ति-सूत्रे वक्ष्यते स ब्रह्मवादो ब्रह्मस्वरूपविषयो द्वितीयो जीवविषय इति ब्रह्मैव सर्वमिति वाद इति विग्रहं न भजतः । ननु गोपापालतापिनीयश्रुत्या सगुणनिर्गुणविभागः कृत एवारोपापवादसंगत्या इति चेन्न तापिनीयानां ब्रह्मत्वात् । ननु ब्रह्म न भिद्यते इति चेन्न साकारं ब्रह्म न भिद्यते सकलयुक्त्या सिद्धत्वात् इतरस्त्वन्योन्यं भिद्यत एव सकलप्रमाणासिद्धत्वात् । श्रुत्यर्थस्तु नारायणकृतटीकायां कथितं सगुणं निर्गुणं च सकाम्या मेरोः शृङ्ग इत्यादिना । सगुणं पूर्वं ह्येकमेवाद्वितीयं ब्रह्मासीदित्यादिना निर्गुण-मुपासने, न वस्तुतत्त्वमपेक्षितमिति न्यायेनान्तर्ब्रह्मादिबुद्धिरेतस्मिंस्तत्त्वदृष्टिः क्रियत इत्याशङ्कानि-वृत्त्यर्थं स्वरूपपदोपादानं तेन श्रीवत्सादिकं वस्तुतश्चित्स्वरूपादिकमेव न त्वारोप इति भाव इति । नन्वथ मायाशबलितं ब्रह्मासीदिति श्रुत्या सिद्ध्यतु सगुणनिर्गुणविभाग इति चेन्न सा श्रुतिरिन्द्रियच्छा-बल्यमाह न तमःशाबल्यं तापिनीयोक्तं नापि सर्वोपनिषदि सदसती मायोक्ता तच्छाबल्यमाहेति । अत्सूचितमिति । तथा च भाष्यं सर्वरूपत्वमानन्दरूपत्वं स्वकर्तृत्वं विशेषः तद्भावो ब्रह्मणि वर्तत इति ।

भाष्यप्रकाशः ।

सर्वरूपत्वानन्दरूपत्वस्वकर्तृत्वभेदेन त्रिविधमपि वैशेष्यं साधितं ज्ञेयम् । एवं चात्र निर्दोषत्वरूपे वैशेष्य एव प्रकटसच्चिदानन्दरूपत्वात्मकं तज्ज्ञातुरपि दोषनिवारकत्वरूपं च हेतुद्वयमुपोद्घातत्वेनोक्तमितीदमपि तस्यैव शेषः ।

अत्र विज्ञानेन्द्रेण काण्वपञ्चमाध्यायस्थं, यत् साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेति प्रश्ने प्रवृत्तम्, एष त आत्मा सर्वान्तरो योऽशनायापिपासे शोकं मोहं जरां

रश्मिः ।

कथं साधितमित्यपेक्षायामाहुः एवं चेति । निर्दोषत्वेति सर्वरूपत्वे स्वस्वरूपलयकर्तृत्वं 'कूर्मोऽङ्गानीव सर्वतः' इतिवाक्यात् कूर्मवत् । अतो भगवान्निर्दोषस्तत्त्व इत्यर्थः । नन्वन्यद्वारापि प्रलयकर्तृत्वं संभवति स्वस्यैव प्रलयकर्तृत्वे वैषम्यनैर्घृण्यं च स्यादिति चेन्न आनन्दरूपत्वे आनन्दभुक् इति श्रुतेः स्वाप्ययाच्चेति सूत्राच्च नान्यापेक्षत्वात् । ननु सगुणस्य लयकर्तृत्वमिति चेन्न स्वकर्तृत्वे स्वस्य निर्गुणात्मनः कर्तृत्वमिति त्रिभिः शब्दैर्निर्दोषत्वम् । तद्रूपे वैशेष्य इत्यर्थः । स्वारसिकार्थाहितनिर्दोषत्वमित्येवकारः । त्रिविधं वैशेष्यं निर्दोषत्वरूपं तस्यातिरिक्तत्वे गौरवमित्येवकारः । निमित्तं सप्तम्यर्थः । तादृशवैशेष्यार्थं विषयवाक्ये अमृताभयैतद्ब्रह्मपदैः प्रकटा ये सच्चिदानन्दास्तद्रूपत्वात्मकं हेतुं द्वितीयं 'यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते' इति स्वरूपतो निर्णय उक्तः । प्रथमो विषयवाक्यात् पूर्वं द्वितीयो हेतुरुक्तः । अक्षिपुरुषज्ञातुर्दोषः पापं तन्निवारकत्वम् । एतद्धेतुद्वयमुपोद्घातत्वेन प्रकृतं यद्वैशेष्यं तत्सिद्ध्यर्थां चिन्तां हेतुद्वयविषयिणीमुपोद्घातं विदुर्बुधाः । तत्त्वेनोपोद्घातविषयत्वेन । उपोद्घातपदं स्वविषये लाक्षणिकम् । इदमप्यधिकरणं तस्यैव शब्दविशेषादित्यधिकरणस्यैव शेषः । संभोगप्राप्तिसूत्रस्यैव वा शेषः । शब्दविशेषादित्यधिकरणस्य संभोगसूत्रात्पूर्वं समाप्तत्वात् वैशेष्ये हेतुद्वयमनुमानसंग्रहे त्वेवं ब्रह्म वैशेष्यं सर्वरूपत्वादिसत्ता उक्तभाष्यात् तद्वत् प्रकटसच्चिदानन्दत्वात् आत्मवत् । अत्र प्रत्येकं साध्यं अन्यथा हेतुसाध्ययोः सत्तासत्त्वयोरैक्ये साधारण्यप्रसङ्गात् । सत्त्वं हेतुः कथमिति चेन्न प्रकटसच्चिदानन्दत्वादित्यत्र प्रकटाश्च ते सच्च चिच्चानन्दश्च सच्चिदानन्दाः प्रकटसच्चिदानन्दास्तेषां भावः प्रकटसच्चिदानन्दत्वम् । अत्र त्वप्रत्ययस्य द्वन्द्वान्ते श्रूयमाणत्वात् 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसंबध्यते' इत्युद्घोषो वैयाकरणानामिति । जीवे साध्याभाववति हेतुवृत्तित्वाद्धेतोः साधारण्यं तद्वारणाय प्रकटेति हेतुविशेषणम् यथा वह्निमान् वह्निमत्त्वादित्यत्र । अत्र साध्यवत्पर्वतादि तदन्यो हसन्त्यादिस्तद्वृत्तित्वात् साधारणो हेतुः हेतौ साधारण्योत्थापकत्वं फलम् । अतो ब्रह्म सर्वरूपत्वसत्तावत् प्रकटसच्चिदानन्दत्वात् पूर्ववत् आनन्दरूपत्वसत्तावत् प्रकटसच्चिदानन्दत्वात् तद्वदेव । स्वकर्तृत्वसत्तावत् प्रकटसच्चिदानन्दत्वात्तद्वदेवेति । न च दृष्टान्तासंभवः पक्षभिन्नत्वे सति निश्चितसाध्यवत्त्वस्य दृष्टान्तलक्षणत्वादिति वाच्यम् । एकदेशविकृतस्य ब्रह्मब्रह्मत्वसंबन्धावगाहिज्ञानसात्मत्वेन तस्य पक्षभिन्नत्वात् । नच शतशः सहचारादर्शनाद्व्याप्तिग्रहासंभव इति शङ्क्यम् । स्वमतप्रतिपन्नपक्षैकदेशे सहचारग्रहेपि क्षतेरभावात् । ब्रह्मवैशेष्यवत् । तज्ज्ञातृदोषनिवारकत्वात् यदेवं तदेवमात्मवत् । एवं वैशेष्ये सिद्धे तेनाक्षिपुरुषो ब्रह्म विलक्षणभोगं वैशेष्यात् यदेवं तदेवमात्मवत् यन्नैवं तन्नैवं जीववदित्यनुमानं फलितम् । विज्ञानेन्द्रेणेति भगवता इति शेषम् । काण्वेति काण्वानां बृहदारण्यकपञ्चमाध्यायस्थं अपरोक्षात् अपरोक्षं ब्रह्म सोदात् न ताद्राब्रह्मणमित्यत्र न तमिति प्राप्ते आत् यथा । अशनायेति अशनेति प्राप्ते सोर्या उरुणा धृष्णुनेति प्राप्ते उरुया धृष्णुयेति या यथा । तथा

अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥ ( १-२-६ )

'य इमं च लोकं परं च लोकं सर्वाणि च भूतान्यन्तरो यमयति'इत्युपक्रम्य श्रूयते । 'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी

भाष्यप्रकाशः ।

मृत्युमत्येतीति वाक्यमुपन्यस्य तदर्थस्य ब्रह्मत्वं चिन्तितम् । तदविरुद्धमित्युपरम्यते ।

शैवस्तु, अनवस्थितिसूत्रे भिन्नमधिकरणं स्वीकृत्य,

'अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः ।
ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक्' ॥

इति तैत्तिरीयमहोपनिषद्वाक्यं विषयत्वेनोदाहृतवान् । तत्र प्राणो वा ब्रह्म वेति संशय्य, ब्रह्मैवेति निर्णीय, तं शिवत्वेन निगमितवान् । तत्र शिवत्वांशे दूषणं प्रहस्ते प्रपञ्चितमित्युपरम्यते ॥ १७ ॥

इति पञ्चममन्तर उपपत्तेरित्यधिकरणम् ॥ ५ ॥

अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥ पूर्वाधिकरणे भोगवैलक्षण्यसाधकं वैशेष्यमन्तर्गुहास्थितेऽक्षिपुरुषे चोपपादितम् । वाजसनेयिनां मण्डलब्राह्मणे, स एष एवेन्द्रो योऽयं दक्षिणेऽक्षन् पुरुषोऽथेयमिन्द्राणीत्यादिना हृदयदेशे तयोर्भोगस्य श्रावणात् । अतः परं तदेव वैशेष्यं सृष्टिदशायाममृतत्वादन्तर्यामिणि सर्वहृदयदेशवर्तिन्यस्तीति बोधनार्थमिदमधिकरणमारभ्यत इत्याशयेन विषयवाक्यमुदाहरन्ति य इमं चेत्यादि । श्रूयत इति

रश्मिः ।

चाशनाया च पिपासा चाशनायापिपासे अशितुमिच्छा अशनायेति तट्टीकायाम् । अत्येत्यतिक्रामति । तदवीति । ननु तस्यैव विषयवाक्यत्वापत्त्या कथमविरुद्धमिति चेन्न अधिकरणानां न्यायरूपत्वेनास्यामपि तत्संचारादविरुद्धमित्याशयात् । अथ नन्विदं स्रिषयवाक्यमस्तूक्तविषयवाक्ये न्यायसंचारोस्तु इति चेन्न । विनिगमनाविरहेणाचार्यसंगृहीतविषयवाक्यग्रहणात् । अतो नान्तस्तद्धर्माधिकरणेन विरुद्धमिति न दूषयामो न प्रकृतव्याख्याने दोषमुद्भावयामोऽनेनेति वा । तत्र शिवत्वेति तत्राधिकरणत्वांशे विषयवाक्यस्य विस्पष्टत्वेन विषयवाक्यराहित्याद्यङ्गत्वमेव दूषणम् । प्रहस्ते इति अत्रेशविश्वभुक्पदाभ्यां शिवत्वनिगमने कृते प्रहस्तः पुरुषपदविचारे 'स्वरूपाख्यानमात्रातः' इत्यस्याः कारिकायाः अन्ते यत्तु पुरुषो ह वा इत्यादिना बहूक्त्वोक्तं अङ्गुष्ठमात्रपुरुष इति तु ब्रह्मवाचकमेव अङ्गुष्ठं च········ नमस्तकेप्याश्रितत्वसंग्रहात् । ब्रह्माण्डपुरुषापादतलमस्तकं व्याप्तित्वबोधनेनैकदेशपातालवासिकालाग्निरुद्रव्युदासात् विरुद्धधर्माधारत्वस्फोरणादितीति । ईशविश्वभुगादिपदानां प्रवृत्तिस्तु एवंसतीशईशानईश्वरसर्वेश्वरपरमेश्वरमहेश्वरशंभुशिवशंकरादयः पत्यपत्यादयश्च शब्दाः मुख्यवृत्त्या योगेन च परब्रह्मण्येव प्रवर्तमानास्तत्रैव योगरूढाः इत्यनेन प्रहस्तेनोक्तेति ॥ १७ ॥

इति पञ्चमाधिकरणम् ॥ ५ ॥

अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥ भोगेति अक्षिपुरुषो ब्रह्म, विलक्षणभोगं वैशेष्यात् । आत्मवत् । यन्नैवं जीववदित्येवं भोगवैलक्षण्यसाधकम् । वाजेति । श्रुत्यर्थस्तु स्पष्टः । अमृतत्वादिति । अन्तर्यामी वैशेष्यवान् अमृतत्वादात्मवदित्यनुमानम् । अस्तीति तथा च पूर्वाधिकरणेन सहास्य प्रसङ्गसंगतिरिति बोधितम् । श्रूयत इति अन्तर्यामि-

भाष्यप्रकाशः ।

वाजिशाखिनां बृहदारण्यके श्रूयते इत्यादीत्यादिपदेनाबग्न्याकाशवाय्वादित्यचन्द्रतारकदिग्विद्युत्स्तनयित्नुसर्वलोकसर्ववेदसर्वयज्ञसर्वभूतप्राणवाक्चक्षुःश्रोत्रमनस्त्वक्तेजस्तमोरेतआत्मान्तान्येवंविधानि वाक्यानि संगृह्यन्ते । एतेषु स्तनयित्न्वन्तानि दशाधिदैववाक्यानि । ततो यथायथमेकैकमधिलोकाधिवेदाधियज्ञाधिभूतवाक्यम् । ततः प्राणादीनि दशाध्यात्मवाक्यानीत्येवं चतुर्विंशतिः । स त आत्मेति माध्यन्दिनपाठे । काण्वपाठे त्वन्तरिक्षमधिकम् । आत्मस्थाने विज्ञानमुच्यत इति भेदः । ततः, 'अदृष्टो द्रष्टा अश्रुतः श्रोता अमतो मन्ता अविज्ञातो विज्ञाता नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञातैष त आत्मान्तर्याम्यमृतोऽतोऽन्यदार्तम्' इत्युपसंहारः । वाक्यार्थस्तु य इमं च लोकमेतज्जन्मीनं देहं, परं च लोकं जन्मान्तरीयं देहं सर्वाणि भूतानि ब्रह्मादितृणस्तम्बान्तानि, अन्तरोऽभ्यन्तरवर्ती सन् यमयति दारुयन्त्रवद् भ्रामयति स्वस्वमुचितव्यापारं कारयतीत्येवं कार्यद्वारा तं ज्ञापयित्वा, तत्स्वरूपप्रश्न उद्दालकेन कृत इत्युपक्रमे उक्त्वा याज्ञवल्क्योक्तमुत्तरं, यः पृथिव्यामित्यादिना कथयति । तत्र तादृशान्तर्यामिसत्तायां, 'भीषाऽस्माद् वातः पवते', 'एतस्यैवाक्षरस्य प्रशासने गार्गि द्यावापृथिवी विधृते तिष्ठतः' इत्यादिश्रुतीः प्रमाणत्वेनाभिप्रेत्याह यः पृथिव्यामित्यादि । तत्र यः पृथिव्यां तिष्ठन् सोऽन्तर्यामीत्युक्ते जडाद् भेदसिद्धावपि पृथिव्यवस्थितेषु सर्वप्राणिष्वतिप्रसङ्ग इति तद्वारणाय विशिनष्टि यः पृथिव्या अन्तर इति । अभ्यन्तर इत्यर्थः । एवं बहिष्ठप्राणिवारणेऽपि तदन्तःस्वस्याभिमानिनो वारणं न संभवतीति तद्वारणार्थं विशिनष्टि यं पृथिवी न वेदेति । पृथिव्यभिमानिनी देवतात्मा यं न वेद न जानातीति । तेन तद्भिन्न इत्यर्थः । एवं जडाज्जीवाच्च भेदे सिद्धेऽपि तस्य तत्र स्थितेः किं प्रयोजनमित्याकाङ्क्षायामाह यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयतीति । 'गामाविश्य च भूतानि धारयाम्यहमोजसा' इति भूतधारणकार्यसिद्ध्यर्थं, सा शरीरम् । तन्नियमनं च तत्कार्यसिद्ध्यर्थम् । अन्यथा तद्विसंमतौ कार्यं न सिद्ध्येदिति । अत्र द्वितीयमन्तरपदं नामधातुनिष्पन्नम्,

रश्मिः ।

ब्राह्मणे श्रूयते । काण्वमाध्यंदिनपाठभेदेन अबग्नीति आपश्चाग्निश्चाकाशश्च वायुश्चादित्यश्च चन्द्रश्चेत्येवं समाहारद्वन्द्वः अधिदैवप्रतिपादकत्वात् ततः प्राणश्च स्तनयित्नुश्चेत्येवं द्वन्द्वः अध्यात्मप्रतिपादकत्वात् आत्मा अन्त आत्मान्ता तान्युक्तानि किं चैवंविधानि एतत्प्रतिपाद्यप्रतिपादकानि वाक्यानि । अधीति श्रुतिषु सर्वलोकादिपदानि अथाधिलोकमित्युपक्रम्य पठितान्यतोऽधिलोकपराणि आध्यात्म्यस्याग्रे वक्ष्यमाणत्वादित्याशयेन सर्वलोकादिस्थलेऽधिलोकादिपदप्रयोगः । तदन्तःस्वस्येति पृथिव्यन्तःस्वस्य । ज्ञानाश्रयत्वं वेद इत्यनेनोक्तं पृथिव्यां न संभवतीति मन्यमाना आहुः पृथिव्यभिमानिनीति । तन्नियमेति पृथ्वीकार्यं पृथिव्याः ओषधयः इति श्रुत्युक्तमोषधिरूपं तत्सिद्ध्यर्थं नियम्य सूत्रात्माभिमानिदेवतानियमनं पूर्वोक्तगीतावाक्याद्भूतधारणरूपकार्यसिद्ध्यर्थं 'मूर्तं मज्जति यद्भयात्' इति तृतीयस्कन्धात् निमज्जनाभावरूपकार्यसिद्ध्यर्थं च । तद्विसंमिति अभिमानिविसंमतौ । अत्रेति । 'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति' इत्येवंविधासु श्रुतिषु प्रथमस्याभ्यन्तरवाचकत्वं

शरीरं य पृथिवीमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः' इत्यादि ।

तत्राधिदैवमधिलोकमधिवेदमधियज्ञमधिभूतमध्यात्मं च कश्चिदन्तरव-स्थितो यमयिताऽन्तर्यामीति श्रूयते । तत्र संशयः । किमन्तर्याम्यधिदैवादिषु

भाष्यप्रकाशः ।

अन्तरं करोत्यन्तरयति, अन्तरयतीत्यन्तर इति सर्वान्तःस्थापकत्वबोधनार्थम् । अन्यथा पौनरुक्त्यापत्तेरिति । एवं सर्वत्र बोध्यम् । अत्र प्रश्नवाक्यानुक्तधर्माणां बोधनं तज्ज्ञानज्ञापकं ज्ञेयम् ।

अस्मिन् वाक्यसमूहे कुत्र संशय इत्यपेक्षायामाहुः तत्राधीत्यादि । संशयाकारं तद्बीजं चाहुः किमित्यादि । तथाच सर्वत्रान्तर्यामिणोपसंहारात् सर्वत्रैकः । अधिदैवादिपदानामव्ययीभावेन तत्र तत्राधिकरणे यौगिकत्वेऽपि, 'पुरुषश्चाधिदैवतम्' 'स्वभावोऽध्यात्ममुच्यते', 'अधिभूतं क्षरो भावः', 'अधियज्ञोऽहमेवात्र' इति गीतायां, तं योगमनादृत्य रूढेर्वा, तत्तदधिकृत्य यो वर्तत इति योगान्तरपुरस्कारेण योगरूढेर्वा बोधनादेतेषां नामत्वमवधार्यते । समानन्यायादधिवेदाधिलोकयोरपि तथात्वम् । नपुंसकलिङ्गं तु लोकाश्रयत्वादशिष्यम् । एवं सिद्धे तेषां नामत्वे तैरप्युपसंहाराद्

रश्मिः ।

द्वितीयनिष्पत्तिमाहुः अन्तरमिति । पौनरिति अन्तर्पदे पौनरुक्त्यम् । तथा च पूर्वेणान्तरपदेन सर्वेषामन्तः स्वयं तिष्ठतीत्युच्यते । अनेन तु स्वयं सर्वानन्तःस्थापयतीति न पौनरुक्त्यमित्यर्थः । सर्वत्रेति योऽप्सु तिष्ठन्नित्यादिश्रुतिष्वन्तरपदेष्वित्यर्थः । अत्र प्रश्नेति प्रश्नो भाष्ये य इमं चेत्युक्तः तत्रायं लोकः परलोकः सर्वभूतानि च विषयः तदुत्तरत्वेन यः सर्वेषु लोकेषु तिष्ठन् सर्वेभ्यो लोकेभ्योन्तरः यः सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योन्तर इति वाक्यद्वयमेव वक्तव्यं पृथिव्यादिनियन्तृत्वाद्यनुक्तधर्माणां यः पृथिव्यामित्यादिभिर्बोधनं वक्तुर्याज्ञवल्क्यस्य प्रच्छकोद्दालकापेक्षया यदधिकं ज्ञानं तस्य ज्ञापकं ज्ञेयमित्यर्थः । ननु हीदं लोकपरलोकसर्वभूतविषयकमुत्तरमिति कथं प्रश्नानुक्तधर्माणां बोधकमिति चेन्न वाक्यद्वयस्योत्तरत्वेनाङ्गीकारे लाघवात् । अथेति भाष्यं विवरामासुः अधिदैवादीनामिति । अव्ययीति अव्ययं विभक्तीति सूत्रेण दैवेष्वित्यधिदैवमिति विभक्त्यर्थेऽधीत्यव्ययेन दैवपदस्याव्ययीभावः । तत्तदधीति एतदधिविधाय ऋषिरवोचदिति शिक्षोपनिषच्छ्रुतेः । बोधनादिति अध्यात्माधिभूतमात्रे बोधनात् । नामत्वमिति योगस्य पाचकादौ रूढेर्घटादौ योगरूढेः पङ्कजादौ नामत्वप्रयोजकत्वदर्शनादवधार्यते । तथात्वमिति नामत्वम् । नन्वधिदैवादिपदानां कथं न विशेष्यनिघ्नत्वमित्याशङ्कां परिजह्रुः नपुंसकेति । नपुंसकलिङ्गमशिष्यं शास्त्रव्यापाररहितं अत्र हेतुः लोकाश्रयत्वादिति लोकत एव तथासिद्धेरिति तदर्थः । एतच्च 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य'इति महाभाष्यमर्थत उपनिबद्धं ज्ञेयम् । अत एव भारविः 'समुल्लसत्पङ्कजपत्रकोमलैरुपाहितश्रीण्युपनीविनाभिभिः'इति । अन्यथा स्त्र्यधिकारपठितेन 'नाभिरक्षत्रिये' इति सूत्रेण नाभेः स्त्रीत्वे समुल्लसदित्यादिविशेषणानुपपत्तिः । तैरपीति अधिदैवादिपदैरपिपदेनामृतपदं एष त आत्मा अन्तर्याम्यमृत इति श्रवणात् । भिद्यत इति द्वितीयाध्यायद्वितीयपादस्थसंज्ञा चोत्पत्तिसंयोगादित्यधिकरणे 'अथैष ज्योतिरथैष विश्वज्योतिरेष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेतेत्यत्र संज्ञाया भेदकत्वं सिद्धं तन्न्यायेन भिद्यते

सर्वत्रैक एव, अथाधिदैवादिनामभेदात् भिद्यत इति । सामान्यतस्त्वन्तस्तद्धर्मोपदेशादिति न्यायेनाऽत्रापि ब्रह्मत्वं सिद्धमेव । तथा शब्दभेदात् संदिह्यते । अधिदैवादिषड्भेदा आधारधर्मा भगवत्युपचर्यन्ते, अथवा संज्ञाविशिष्टा अन्य एवेति । तत्र तत्तदधिकृत्य यो वर्ततेऽभिमानेन तस्य तादृशशब्दप्रयोगः ।

भाष्यप्रकाशः ।

भिद्यते वेति तद्बीजमित्यर्थः । नन्वन्तर्यामिणः पृथिव्याद्यन्तर्वर्तित्वस्यात्र कथनादन्तर्वर्तिनश्च ब्रह्मत्वस्यान्तस्तद्धर्मोपदेशादित्यत्र साधितत्वादत्र संदेह एव न घटत इति किमर्थमधिकरणारम्भ इत्याकाङ्क्षायां तदुपगम्य संदेहं समर्थयन्ति सामान्यत इत्यादि । तथा शब्दभेदादिति अधिदैवादिशब्दभेदात् । कथं ततः संदेह इत्यत आहुः अधिदैवेत्यादि देवानां समूहो दैवम् । दैवे इत्यधिदैवमित्येवमधिकरणार्थकाव्ययीभावनिष्पन्ना एते शब्दा योगेन ताँस्तानाधारानभिदधाना अत्र पृथिव्यादिवाक्यसमुदायान्ते सर्वलोकाद्येकैकवाक्यचतुष्टयान्ते प्राणादिवाक्यसमुदायान्ते च यथायथमुपनिबद्धा अधिलोकादिषु पुनरुक्ततामापद्यमाना व्यर्थाः सन्तः स्वप्रयोगसामर्थ्येनाधिदैवत्वादिरूपान् धर्मांस्तत्तदाधारेषु बोधयन्तीति ते षड्भेदा आधारधर्माः

रश्मिः ।

वेति । तद्बीजमिति संशयबीजं नाम भेदभिन्नाधिकरणानामधिदैवानां भेदैरन्तर्यामिभेदः । दैवमिति 'तस्य समूहः' इति सूत्रेण तद्धितप्रत्ययः । यथायथमिति पृथिव्यादिवाक्यसमुदायान्ते इत्यधिदैवतमिति कथनात् अधिदैवमुपनिबद्धम् । सर्वलोकवाक्यान्तेऽधिलोकमिति कथनादधिलोकम् । सर्ववेदवाक्यानन्तरमधिवेदमित्येवमधिवेदकथनादधिवेदम् । सर्वयज्ञवाक्यानन्तरमधियज्ञमित्येवं कथनादधियज्ञमुपनिबद्धम् । यः सर्वेषु भूतेषु तिष्ठन्निति वाक्यानन्तरमधिभूतमित्येवमधिभूतकथनादधिभूतमुपन्यस्तम् । यः प्राणेषु तिष्ठन्नित्यादिवाक्यसमुदायान्ते तु न किमप्युपनिबद्धं यद्यपि तथापि यथाध्यात्ममित्युपक्रम्य प्राणादिवाक्यकथनात् उपनिबद्धप्रायम् । काण्वमाध्यंदिनपाठभेदात् पाठान्तरमुपनिबद्धं वेत्याशयः । अत उक्तमुपनिबद्धा इति । अधिलोकादिष्विति । अथाधिलोकमित्येवं सर्वलोकादिवाक्यानामादौ पठितेष्वधिलोकाधिवेदाधियज्ञाधिभूताध्यात्मेषु । पुनरुक्ततामिति । व्यर्थाः सन्तः किंचिज्ज्ञापयन्ति व्याकरणव्युत्पत्तिं विनापि अधिदैवत्वादिरूपान् धर्मान् तत्तदाधारेषु बोधयन्ति ज्ञापयन्ति ज्ञापकसिद्धं फलमन्यत्र । यथा इत्यधिभूतमथाध्यात्ममिति शिक्षोपनिषदि । एतदधिविधाय ऋषिरवोचदिति श्रुत्वा तत्तदधिकृत्य येभिमानेन तत्र तत्र वर्तन्ते तेभिमानिनस्तत्राध्यात्माधिभूतपदप्रयोगः । अधिदैवत्वादीति अतद्गुणसंविज्ञानो बहुव्रीहिः अधिदैवत्वमादिर्येषामधिलोकत्वादीनां तेधिदैवत्वादयस्तद्रूपानिति । अथाधिदैवतमित्युपक्रमाभावेन पुनरुक्ततामावात् । तत्तदाधारेषु अन्तर्यामिणोधिलोकाद्याधारेषु व्याकरणव्युत्पत्त्या बोधयन्तीति हेतोरेते षड् भेदाः आधारधर्माः सन्तीत्यर्थः । नन्वधिदैवत्वस्य सन्तीत्यत्रानन्वयो ऽतद्गुणसंविज्ञानबहुव्रीह्यङ्गीकारात् अतः पञ्चभेदाः आधारधर्माः न तु षड्भेदा इति चेन्न षण्णां भेदानामाधारधर्मत्वात् अतद्गुणसंविज्ञानबहुव्रीहेः पुनरुक्ततानिबन्धनत्वेन पुनरुक्ततायाः व्याकरणस्य वा 'अव्ययं विभक्तिसमीप' इति स्मृत्वा बाधात् । ननु पुनरुक्ततामित्यादिभाष्यविभागः सामर्थ्येनेत्यन्तः किमर्थो व्याकरणस्मृत्वा अव्ययं विभक्तिसमीपेत्यादिकयाधिदैवत्वादिरूपानित्यादिप्रन्थविरोधात्-

अधिलोकादयश्च शाखान्तरेऽन्यत्रैव प्रसिद्धा योगव्यापकाः पञ्चस्वधिकरणेषु । अधिलोकमधिज्यौतिषमित्यादि । अतोऽधिदैविकादिशब्दा यौगिकाः सन्तो न भगवति वर्तितुमुत्सहन्ते । नाप्यन्ये कल्पनीया यद्धर्मा उपचाराद् भगवति

भाष्यप्रकाशः ।

शब्दतः सन्निहितेऽन्तर्यामिणि भगवत्युपचर्यन्ते । अथवा तत्तदधिकृत्य येऽभिमानेन तत्र तत्र वर्तन्ते तेऽभिमानिनोऽधिदैवादिसंज्ञाविशिष्टाः पडन्ये कल्पनीयाः यद्धर्मा भगवत्युपचाराद् भवेयुरित्येवं संदेहो घटत एवेत्यर्थः । एवं संदेहं समर्थयित्वा पूर्वपक्षमाहुः तत्रेत्यादि । तत्तदधिकृत्येति तत्तत् पृथिव्यादिकमधिकरणीकृत्य अभिमत्याऽहमिति स्वीकुर्वन् यो वर्तते तत्र तिष्ठति तत्संबन्धी अधिदैवादिप्रयोगः । सांख्यपञ्चशिखवृत्तौ तत्तदभिमानिषु प्रसिद्धत्वादिति । ननु योगद्वयस्य तौल्येऽप्यत्राभिमानिग्रहणे को हेतुरित्याकाङ्क्षायां तमुपपादयन्नधिकरणपक्षं दूषयति अधिलोकेत्यादि । शाखान्तरे इति तैत्तिरीयाणां शिक्षोपनिषदि । अन्यत्रैवेति लोकादिष्वधिकरणेषु । अत इत्यादि वैदिकप्रसिद्धेर्बलिष्ठत्वात् ते तत्र यौगिकाः सन्तो यौगिकानामौपचारिकप्रयोगादर्शनात् ते तत्र तथा भवितुं न शक्ता इत्येष हेतुरित्यर्थः । तर्हि मास्तु भगवति वृत्तिरन्येष्वभिमानिष्वेव साऽस्त्वित्यतस्तामपि दूषयति नापीत्यादि । कल्पनीया इति

रश्मिः ।

दिति चेत्सत्यम् । चतुर्ष्वधिलोकादिषु पुनरुक्तिवारणस्यावश्यकत्वेन पुनरुक्ततामित्यादिग्रन्थस्यावश्यकत्वात् । व्याकरणस्मृत्या तदवारणात् । ननु तत्तदाधारधर्मबोधने व्याकरणस्मृतेर्हेतुता न तु पुनरुक्ततामित्यादिग्रन्थार्थस्येति चेन्न । शिक्षोपनिषदि एतदधिविधाय ऋषिरवोचदिति श्रुतेरित्यधिभूतमथाध्यात्ममित्यस्याः अग्रे पाठादेतदधिकृत्य येभिमानेन तत्र तत्र वर्तन्ते तेऽभिमानिनोधिदैवादिपदवाच्या इति श्रौतीव्युत्पत्त्या व्याकरणव्युत्पत्तिबाधात् । नच व्याकरणस्मृतेरप्रामाण्यापत्तिरिति शङ्क्यम् । अध्यात्माधिभूतपदातिरिक्तपदव्युत्पत्तौ प्रामाण्यात् । न चाङ्गस्वहानिरिति वाच्यं अध्यात्माधिभूतपदाङ्गत्वाभावेप्येतदधिविधायेत्यत्र श्रुतावङ्गत्वात् अध्यादिपदाङ्गत्वाच्च । तथाच श्रुत्या व्याकरणस्मृतेर्बाधात् न तत्तदाधारधर्मबोधने व्याकरणस्मृतेर्हेतुता किंतु पुनरुक्ततामित्यादिग्रन्थार्थस्येति फलितम् । शब्दत इति एष त आत्मान्तर्याम्यमृत इति श्रुत्यात्मकशब्दतः । संनिहित एकश्रुतिपठितत्वेन संनिहिते । अन्तर्यामिणि भगवत्युपचर्यन्ते सामानाधिकरण्यसंबन्धेनोपचर्यन्त इत्यर्थः । संशये द्वितीयां कोटिं वदन्तः एवोपचरितैर्वदन्तीत्याशयेनाथवेति भाष्यं विवरामासुः अथवेति । सांख्यसिद्धान्तव्युत्पत्तिमाहुः तत्तदधीति । पूर्वं श्रौती व्युत्पत्तिरुक्ता सैवेयं तु सांख्यमतसिद्धेति । तत्संबन्धीति अभिमानिनां प्रतिपाद्यप्रतिपादकभावसंबन्धेन संबन्धी । तौल्य इति अभिमान्यधिदैवत्वयोराधेयत्वेन तौल्ये । दूषयति पूर्वपक्षी दूषयति । लोकादिष्विति । अव्ययं विभक्तिसमीपेत्यादिसूत्रेणाव्ययीभावात् लोकादिषु पञ्चसु । अधिलोकादयः इति भाष्येधिपदार्थमाहुः अधिकरणेष्विति । तथाच श्रुतिः पञ्चस्वधिकरणेष्विति । पञ्चाधिकरणविषय उच्यत इत्यर्थः । प्रसङ्गाद्भाष्यार्थः कथ्यते । शाखान्तरे चान्यत्रैव पञ्चस्वधिकरणेषु योगव्यापक अधिलोकमधिज्योतिषमित्यादिश्रुत्युक्तार्थं यथा भवति तथाधिलोकादयः प्रसिद्धाः । योगोवयवशक्तिस्तस्याः व्यापकाः । इत्यादिपदेनाधिविद्यमधिप्रजमध्यात्मम् । वैदिकेति वैदिकप्रसिद्धिस्तु पञ्चस्वधिकरणेषु 'पञ्चस्वधिकरणेषु' इति श्रुतेः । तस्याः दृढेबलिष्ठत्वात् । यौगिकानामिति पाचकपाठकादीनाम् । औपचारिकेति । तस्यार्थ-

भवेयुः। कल्प्यमानस्य सर्वानुस्यूतस्य तादृशस्य भगवद्व्यतिरिक्तस्यासंभवात्। तस्मादन्तर्यामिब्राह्मणं कुत्राप्ययुक्तं सत् तत्तदभिमानिदेवतास्तुतिपरमेव तत्तदुपासनार्थं भविष्यति।

---

भाष्यप्रकाशः।

संज्ञित्वेन कल्पनीयाः। कुतो नेत्यत आह कल्प्यमानस्येत्यादि। एते हि शब्दाः क्वचिद्वाक्य-संघाते, क्वचिच्च बहुवचनान्तसर्वलोकादिशब्दघटितवाक्यान्ते प्रयुक्ता इति तेषु तत्तत्संघानुस्यूत-स्याभिप्रेतत्वेन तादृशस्यापि क्वचित् प्रतिनियतत्वदर्शनेनात्र च तदनुक्त्या भगवदतिरिक्तस्या-भिमन्तुः संज्ञितयाऽत्र कल्पयितुमशक्यत्वेनासंभवादित्यर्थः। सिद्धमाह तस्मादित्यादि। तस्मादिति एतेषां शब्दानामधिकरणे वर्तने वैयर्थ्यस्य बाधकतया, भगवति वर्तनेऽभिमानस्य बाधकतया, संघाभिमानिनि जीवे वर्तने च तदनुक्तेर्बाधकतयाऽधिकरणस्य भगवतोऽतिरि-क्तस्याभिमन्तुश्च तत्संज्ञित्वेन वक्तुमशक्यत्वे संज्ञोपजीविन उपचारस्यापि वक्तुमशक्यत्वादन्त-र्यामिब्राह्मणं पूर्वोक्तेष्वन्वेतुमयुक्तं सत् तथेत्यर्थः। नन्वेवमपि वक्तुमशक्यम्। तेषु वाक्येषु यं पृथिवी न वेदेत्यादिभिरुक्तस्यान्तर्याम्यज्ञानस्य श्रावणात् तस्य चाभिमानिधर्मत्वादित्यत आह

रश्मिः।

एव प्रवृत्तेरिति भावः। एते इति अधिलोकादयः। क्वचिदिति शिक्षोपनिषदि। अथाधिलोकमि-त्युपक्रम्य पृथ्वी पूर्वरूपं, द्यौरुत्तररूपं, आकाशः संधिः, वायुः संधानं इत्यधिलोकम्। इत्येवं वाक्यसंघाते। एवमधिज्योतिषादयो वाक्यानां संघातेषु प्रयुक्ता ज्ञेयाः। क्वचिदिति अन्तर्यामि-ब्राह्मणे। क्वचित्प्रतीति। शिक्षायां पृथिव्यादिषु प्रतिनियतत्वमधिलोकस्य। अग्निः पूर्वरूपमित्याद्यु-क्ताम्यादिषु ह्यधिलोकत्वाभावात्। अधिज्योतिषत्वस्य सत्त्वात्। इत्यधिज्योतिषमिति श्रुतेः। अत्रेति अन्तर्यामिब्राह्मणे। कुत्रापीत्यादि भाष्यीयं पदं व्याचख्युः अधिकरण इति। वर्तमान इति भावप्र-धानो निर्देशः। श्रौतीव्युत्पत्तिव्याकरणव्युत्पत्ती हृदिकृत्याहुः अधिकरणस्येति। भगवत इति षष्ठ्यन्तम्। अव्ययं विभक्तीति सूत्रेण समासेऽधिकरणत्वम्। दैवाधिपदवाच्यत्वे भगवत्त्वम्। अति-रिक्तस्य सांनिध्याद्भगवत अतिरिक्तस्य एकादशाध्याये।

'भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप'॥ इत्यत्र।

गीताप्रयोगस्य भगवद्वाक्यत्वेन छान्दसत्वात्। 'अतो रोरप्लुतादप्लुते' 'अति'इत्यस्य विकल्पाद् 'भोभगोअघो अपूर्वस्य योऽशि' इत्यनेन रोर्यादेशः 'लोपः शाकल्यस्य' इति सूत्रेण यलोपः। तत्सं-ज्ञित्वेनेति अधिदैवादिसंज्ञाः सन्ति ययोस्तौ तत्संज्ञिनौ तद्भावेन संज्ञोपजीविनः संज्ञाशब्दकारिणः उपचारविशेषणम्। तथेत्यर्थ इति तथेति प्रकारवचने थाल्। तत्तदभिमानिदेवतास्तुतिपरमेव तत्तदुपासनापरत्वेन प्रकारेण भविष्यतीत्यर्थः। नन्वेवमिति पूर्वोक्तरीत्या भगवदादिषु सर्वेषु बाधकं विमर्षेणापि। अभिमानीति। अज्ञानस्य ज्ञानाभावरूपत्वेनाभावस्य प्रतियोग्यधिकरणवृत्तित्व-नियमेन ज्ञानस्य धर्मत्वस्फोरणद्वाराऽसतोप्यभिमानिधर्मत्वं यद्वा विष्णुपुराणे यदस्ति यन्नास्ति तत्सर्वं विष्णुरिति स्मरणात् यथाश्रुत एवार्थः। तथाच तदनुक्तेरिति हेतुरसिद्ध इति संघाभिमानिजीवे

अज्ञानं चासंदेहे संदेहवदुपपद्यते । 'देहोऽसवोऽक्षाः' इति न्यायाद्वा । न तु निषिद्धसंज्ञा भगवति कल्पयितुं शक्येति । एवं प्राप्ते, उच्यते ।

अन्तर्याम्यधिदैवादिषु । अन्तर्याम्यधिदैवादिषु भगवानेव । नान्यस्तादृशो भवितुमर्हति । ननु चोक्तं भगवति कथं निषिद्धकल्पनमिति । तत्राह । तद्धर्मव्यपदेशात् । तेषां धर्मास्तद्धर्माः । तत्प्रयुक्तिबोधकाः । ते विशेषेण भग-

भाष्यप्रकाशः ।

अज्ञानं चेत्यादि । उक्तविधमज्ञानमपि, 'सो अङ्ग वेद यदि वा न वेद' इत्यत्र यथा संदेहः कल्पनयोच्यते तथाऽत्राऽज्ञानमप्युच्यत इत्युपपद्यत इत्यर्थः । ननु तथापि ज्ञाने अज्ञानं क्वाप्यदृष्टं कथं कल्पनीयमित्यतो हेत्वन्तरमाह देह इत्यादि । इदं षष्ठस्कन्धे दक्षस्तुतावस्ति ।

'देहोऽसवोऽक्षा मनवो भूतमात्रा नात्मानमन्यं च विदुः परं यत् ।
सर्वं पुमान् वेद गुणांश्च तज्ज्ञो न वेद सर्वज्ञमनन्तमीडे' ॥

इति । अत्र मनवोऽन्तःकरणानि । अर्थस्तु देहादयो मात्रान्ता आत्मानं दृश्यं स्वस्वरूपम्, अन्यमिन्द्रियवर्गदेवतारूपं न विदुः । यदुक्तं सर्वं तत्तन्मूलभूतान् गुणान् सत्त्वादींश्च पुमाञ्जीवो वेद । तज्ज्ञः पूर्वोक्तसर्वज्ञोऽपि सन् यमितोऽप्यधिकं सर्वज्ञं न वेद, तमनन्तं भगवन्तमहमीडे स्तौमीति । तथाच यथात्र देहादीनां जडतया योग्यताभावेनासंभवनिषेधो नित्यानुवादस्तथा, यं पृथिवी न वेदेत्यादावपि पृथिव्यादिपदैर्जडपरामर्शाज्ज्ञाननिषेधो नित्यानुवाद इति तन्न्यायादुपपद्यत इत्यर्थः । ननु कुतोऽयमाग्रहः क्रियते, भगवत्संज्ञात्वमेव कुतो नाद्रियत इत्यत आह न त्वित्यादि । निषिद्धसंज्ञेति निषिद्धेनाभिमानेन कृता संज्ञा सा निकृष्टा । अनुत्कृष्टस्य उत्कृष्टत्वेनोपासनं दृश्यते, मनो ब्रह्मेत्यादौ, न तूत्कृष्टस्य निकृष्टत्वेन । अतः कल्पयितुमशक्येत्यर्थः । एवं पूर्वपक्षमुक्त्वा सिद्धान्तं व्याचक्षते उच्यत इत्यादि । अत्र तेष्वधिदैवादिपदेष्वन्तर्यामी भगवानेवोच्यते । न ह्यन्य एकः सर्वानुस्यूतो भवितुमर्हति । नन्वभिमानिष्वेताः संज्ञाः प्रसिद्धाः । भगवति तु नाभिमान इति निषिद्धस्याभिमानस्य कल्पनं कथं कर्तव्यमित्याशङ्कायां तद्वारणायैतत्प्रवृत्तिनिमित्तं सूत्रे आचार्य आह तद्धर्मव्यपदेशादिति । तेषां

रश्मिः ।

वर्तनमिति भावः । सोऽङ्गेति सोऽध्यक्षः प्रकृतिभावः सोऽङ्ग इति । कल्पनयेति यथा तद्विदि 'भवान्न वेत्ति' इति प्रयोगः । काकुर्विपरीतलक्षणा वा द्वितीयनञभावात् । तथाच कल्प्यते द्वितीयनञर्थो तया काका विपरीतलक्षणया वा सा काकुर्विपरीतलक्षणा वा कल्पना तया । योग्यतेति ज्ञानयोग्यताभावेन ज्ञानकर्तृत्वासंभवात् । नित्येति पूर्वतन्त्रे निषेधस्य प्राप्तिपूर्वकत्वं प्रसिद्धमयं तु अप्राप्तिपूर्वकोतो न निषेधोऽपि तु नित्यानुवादः स च नित्यप्रत्यक्षसिद्धस्यार्थस्यानुवादः । आग्रह इति अज्ञानोपपादनेनाभिमान्याग्रहः । मनो ब्रह्मेति 'मनो ब्रह्मेति व्यजानात्' इति तैत्तिरीयोपनिषदि । न त्विति । उदाहरणाभावादिति भावः । ननु अथाध्यात्मं अधरा हनुः पूर्वरूपमित्यत्र पूर्वरूप उत्कृष्टे अधराहनुदृष्टिः कर्तव्येत्युदाहरणमस्ति । न । अथाधिज्यौतिषमग्निः पूर्वरूपमित्यत्र स्पष्टम् । विधेयोद्देश्ययोः साम्यात् । हीनत्वेऽभेदानुपपत्तेः । ननु चेति ~~भाष्यं विवरामासुः नन्वभीति~~ । एतदिति पृथिव्यादितदभिमानिवाचकपदप्रवृत्तिनिमित्तं तद्धर्मान् । आचार्या भगवान् व्यासः । तेषामिति भाष्यं विवरामासुः तेषामिति पृथिव्यादितत्तदभिमानिवाचकपदप्रवृत्तिनिमित्तं तद्धर्मस्य

वत्युपदिश्यन्ते। सर्वेषां तत्तत्कार्यं सामर्थ्यं च भगवतो न तु स्वतस्तेषामिति। एवं च सत्यन्यत् सर्वं संगतं भवति। तस्माद् ब्रह्मवाक्यमेव।

---

भाष्यप्रकाशः।

पृथिव्यादीनां तदभिमानिनां च ये धर्मास्ते तद्धर्मास्तत्प्रयुक्तेस्तत्कार्यव्यापारावेशबोधका भूतधारकत्वादयस्तदधिष्ठातृत्वादयश्च ते नियमयितृत्वरूपेण विशेषेण भगवत्यपदिश्यन्ते। पृथिव्यादिवाक्येष्वभिमान्यज्ञेयत्वस्य पृथिव्यादेः शरीरत्वस्य पृथिव्यादिपदैस्तदुभयं गृहीत्वा तद्यमनस्य च बोधनेन कथ्यन्ते तस्मात्। एतस्यैव व्याख्यानं सर्वेषामित्यादि। चोऽप्यर्थे। एवं चेत्यत्र चोऽवधारणे

रश्मिः।

त्प्रयुक्तेः अभिमानिरूपशेषप्रयुक्तेरन्तर्याम्यभेदान्वयार्थं प्रयोगात्तत्कार्येषु अधिदैवादिकार्येषु ये व्यापारास्तेषु भगवदावेशबोधकाः। सर्वेषामिति भाष्यार्थसंग्रहेणार्थः। एष त आत्माऽन्तर्याम्यमृत इति ह्यभ्यन्तरस्यान्तर्याम्यभेदार्थं सामानाधिकरण्यश्रुतेः। शेषप्रयुक्तिस्त्वित्थम्। तत्प्रयुक्तिपदं जैमिनीयन्यायमालास्थं प्रयुक्तिपदं शास्त्रदीपिकायां चतुर्थाध्यायारम्भे।

'प्रसिद्धे शेषशेषित्वे प्रयुक्तिरधुनोच्यते।
शेषिणैव च शेषस्य प्रयुक्तिरिति हेतुता'॥

इति स्मृतम्। अतः पूर्वतन्त्रचतुर्थाध्याये गोदोहनस्य पुरुषार्थत्वप्रयुक्त्याऽनुष्ठानं न तु क्रत्वर्थप्रयुक्त्या इत्येवमादयो निरूपिताः। एवं प्रकृते पृथिव्यादिपृथक्पृथगधिकरणरूपपरिच्छेदकत्वेन निरूपितमतोऽभिमानिगमकम्। पृथिवीमन्तर इत्यत्राभ्यन्तर इत्यर्थाद्यान्तरपदेनाभिमानिवाक्यम्। अन्तरो यमयतीत्यत्रान्तरपदं ब्रह्मवाचकं पुनरुक्तेः आत्मादिपदाच्च। एवं च दर्शपूर्णमासयोः श्रूयते। चमसेनापः प्रणयेत् गोदोहनेन पशुकामस्येति तत्र गोदोहनस्य क्रत्वर्थत्वं पुरुषार्थत्वं चेत्युभयार्थत्वं प्रतीयते पशुफलजननेन पुरुषप्रीतिभानात्। अपां प्रणयनेन क्रतुपौष्कल्यभानाच्च। मैवं। गोदोहनमन्तरेण फलासिद्धेः गोदोहनार्थत्वात्। क्रतुस्तु तदभावेपि चमसेन सिद्ध्यतीति क्रत्वर्थत्वाभावात् तद्वत्। अभिमान्यर्थत्वब्रह्मार्थत्वयोः अन्तर्यामिब्राह्मणस्य सत्त्वेपि ब्रह्मार्थत्वं अभिमान्यर्थत्वं तु यावत्पर्यन्तं ब्रह्मपरत्वं(संभवति)सिद्ध्यति तावत्पर्यन्तमन्यपरत्वमन्याय्यमिति भाष्यविरोधात् न सिद्ध्यतीति नाभिमान्यर्थत्वमिति। ननु भूतधारकत्वादितत्कार्यं सामर्थ्यं च 'पृथ्वी विश्वस्य धारिणी' इति श्रुतेः पृथ्व्यादावस्ति कुतो ब्रह्मवाक्यत्वं प्रतिपाद्यते आत्मामृतत्वे अभिमानिधर्मौ श्रुतत्वाद्भाष्यमपि न बाधकमिति चेन्न ब्रह्मजिज्ञासाप्रक्रमादन्तर्यामिब्राह्मणे ब्रह्मणः शेषित्वेन वेदान्ते पृथ्वीतिश्रुत्युक्तपृथिव्याधारकत्वस्यैतादृशत्वात्। उपक्रमस्य ब्रह्मजिज्ञासोपक्रमादभिमानिपरत्वेऽसंजातविरोधित्वेनानिर्णायकत्वेनोपसंहार आत्मामृतत्वे नाभिमानिधर्मौ श्रुतत्वेप्युपसंहारस्यार्थनिर्णायकत्वात्। एवं श्रुत्यविरोधे भाष्यं बाधकमस्त्येवेत्यलं क्लिष्टविचाराय। भूतधारकत्वेति भूतधारकत्वादय उक्तश्रुत्या पृथिव्यादिधर्मा अन्तर्यामिब्राह्मणे ब्रह्मधर्मा अपि। त इति ते अभेदेन विशेषेण भगवत्यपदिश्यन्तेऽन्तर्यामिब्राह्मण इति वक्तव्ये ते नियमयितृत्वरूपेण विशेषेणेत्याद्युक्तिरन्तर्याम्यधिदैवादीनां भेदेपि कस्यैचित्प्रयोजनायाभेदेनान्तर्यामिब्राह्मणे व्यपदेश इति ज्ञापनाय, भेदे तु नियमयितृत्वरूपो विशेषोन्तर्यामिण्यस्त्येव। नन्वेतादृक्क्लिष्टार्थकं ब्राह्मणं कुत इति चेच्छृणु। संदिग्धस्य

भाष्यप्रकाशः ।

तथाचायमर्थः। सांख्ये हि तत्तदभिमान्येव नियामकतयाऽधिदैवपदेनोच्यते। करणमेत्र शरीरे वर्तमानतयाऽध्यात्मपदेन। विषयश्च भूतेषु वर्तमानतयाऽधिभूतपदेन। गीतादौ तु पुरुषादय उच्यन्ते। अत्र तु ततोऽप्यधिकाः शब्दा इति सांख्योक्ता गीतोक्ताश्चार्था नात्राभिप्रेताः। अथ प्रश्नानुरोधान्न्यूनतादोषं परिहृत्य गीतोक्ताः स्वभावादयो ग्राह्यास्तदापि तेषां ये धर्मास्तत्तदधिष्ठातृत्वादयस्तेऽपि भगवन्नियमितास्त्ववश्यं वाच्याः । एकस्य सर्वानुस्यूतस्य नियन्तुर्बोधनार्थमेवान्तर्यामिब्राह्मणस्य प्रवृत्तत्वात्। एवं सति यदि तेऽतिरिक्ता अत्राभिप्रेताः स्युस्तदा पृथिव्यादिवत् तानपि नियम्यतया वदेत्। अतस्तेऽत्राधिदैवादिपदेषु नाभिप्रेताः। किंतु, इत्यधिदैवतमित्यादाविविशब्दः प्रकारे हेतौ वा भवंस्तथा वा तेन हेतुना वाऽधिदैवतादिशब्दानां भगवद्वाचकत्वमेव बोधयतीति। तेनेदं सिद्ध्यति। विषयवाक्य उद्दालकेनैतल्लोकपरलोकयोः सर्वभूतानां चान्तर्वर्तित्वे सति तन्नियामकोऽन्तर्यामिशब्दवाच्यः पृष्टः। तत्र चेद् याज्ञवल्क्यस्तावदेव वदेत् तदाऽन्तर्यामिज्ञातृत्वं न स्फुटीभवेदत उद्दालकश्रुताँस्तद्धर्मान् विशेषतः पृथिव्यादिवाक्यैः प्रकाशयति। तत्र पृथिव्यग्निकार्यं भगवत्प्रयुक्तमिति गीताद्वादशाध्याये, 'गामाविश्य च भूतानि' इति सार्धेनोक्तम्। ततः 'सर्वस्य चाहं हृदि संनिविष्टः' इत्यादिनाऽन्तर्यामित्वं पुरुषोत्तमत्वं च निगमितम्। आकाशकार्यस्य तथात्वं तृतीय-

रश्मिः ।

विषयवाक्यत्वेन तदर्थत्वात् । पृथिव्यादीति अभिमान्यज्ञेयत्वस्य पृथिव्यादेः शरीरत्वस्य चोक्तिरस्तीत्यर्थः। पृथिव्यादिपदैरिति पृथिवीमन्तरो यमयतीत्येवंविधेषु वाक्येषु द्वितीयान्तपृथिव्यादिपदैः। व्याख्यानमिति भाष्यत्वात् स्वपदानि वर्ण्यन्ते इति भावः। एवं चेति भाष्यं विवरामासुरेवं चेतीति। चोवधारण इति विश्वकोशे। चोवधारणे कथं सर्वं संगतं भवतीत्यतो विवरणमाहुः तथा चेति। सांख्ये हीति सेश्वरसांख्ये। निरीश्वरसांख्यस्यानुमानिकमप्येकेषामित्यधिकरणे निराकरिष्यमाणत्वात्। गीतादाविति आदिपदेन श्रीभागवतम् । पुरुषादयः पुरुषोधियज्ञः अन्येन्यत्रेति बहुवचनम्। अन्यथा तु पुरुषादिनी उच्येते इति पठेयुरिति। परिहृत्येति श्रुतिवाक्यकल्पनेन परिहृत्य। तदुपष्टम्भाय गीतोक्ता गीताष्टमाध्यायोक्ता 'स्वभावोध्यात्ममुच्यते'।

'अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम्।
अधियज्ञोहमेवात्र देहे देहभृतां वर' ॥ इत्येवं स्वभावादयः।

एवेति अस्मिन् सूत्रे अन्तर्यामिब्राह्मणस्य विषयतया व्यासाभिप्रेतत्वेनार्थस्य प्रामाणिकत्वादेवकारः। एवेत्येवकारोप्यर्थको द्वितीयः। बोधयतीति एवमन्यत्सर्वं संगतं भवतीत्यर्थः। इदमुपलक्षणम्। अन्तरपदद्वयमात्मामृतपदद्वयं च संगतं भवतीत्यस्य। अन्तर्यामिज्ञातृत्वमिति अभिनिवेशेन तथेत्यर्थः। प्रकाशयतीत्यत्रातीतेर्थे स्म बोध्यम्। प्रकाशयति स्म। उक्तार्थमभिमानिपरमाशङ्क्योपष्टम्नन्ति स्म तत्र पृथिवीति। 'भीषास्माद्वातः पवते' इति श्रुतौ वाय्वादीनां कार्यं भगवत्प्रयुक्तमस्त्येवेति सर्वेषां तत्प्रामाण्यात् गीतादिभिरप्युपष्टम्नन्ति स्म। गीताद्वादशेति। बभ्रमुः। गीतापञ्चदशाध्याय इति पठनीयमत्र। द्वादशाग्रेतनोध्यायो द्वादशाध्यायस्तस्मिन्निति वा मध्यमपदलोपी समासः। चतुर्थाध्यायाद्द्वादशाध्याये वा। अन्तर्यामित्वमिति सर्वभूतानामन्तर्वर्तित्वप्रश्नेन्तर्यामिकथनाद्धृदि संनिविष्टस्यान्तर्यामित्वम्। पुरुषोत्तमयोगाध्यायस्थत्वाद्वाक्यस्य पुरुषोत्तमत्वम्।

भाष्यप्रकाशः।

स्कन्धे, 'अदो ददाति श्वसनां पदं यन्नियमान्नभः' इति स्फुटम्। वाय्वादित्यकार्यस्य तथात्वं भीषाऽस्मादिति श्रुतौ। तत्राग्नीन्द्रयोः कार्यं न स्फुटं, तदपि तृतीयस्कन्धे, वर्षतीन्द्रो दहत्यग्निरित्यनेन बोधितम्। अत्र त्विन्द्रस्थाने विद्युत्स्तनयित्नू। एवमन्येषां कार्यस्यापि भगवत्प्रयुक्तत्वं ततस्ततो बोध्यम्। विषयश्रुतावधिदैवतपदं, सूत्रे त्वधिदैवपदं, तथापि न तयोरर्थभेदः। गीतायाम्, अधिदैवं किमुच्यत इति प्रश्ने, पुरुषश्चाधिदैवतमित्युत्तरात्। एवं देवधर्माणां भगवत्प्रयुक्तत्वबोधनात् परलोकात्मकजन्मान्तरीयदेहयमयितृत्वज्ञानं स्वस्य याज्ञवल्क्येन प्रकाशितम्। ततो लोकपदस्य भूरादिष्वाधारेष्वपि प्रयोगाद्, अथाधिलोकमिति प्रतिज्ञाय तत्संबन्धि सर्वं पूर्ववद् बोधितम्। ततो लोकान् कथं यमयतीत्यपेक्षायां, वेदयज्ञाभ्यां यमयतीति बोधनाया-

रश्मिः।

'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः'॥ इति वाक्याच्च।

तथात्वमिति प्रकारवचने थाल्। तथा भगवत्प्रयुक्तत्वम्। त्वमिति तु भेदेन अम् अल्पेन यत्किंचिद्भेदेनेत्यर्थः। एवमग्रेपि। अद इति अदो नभः स्वसतां पदं ददाति परं यस्य भगवतो नियमनादित्यर्थः। तत्रेति।

'भीषास्माद्वातः पवते भीषोदेति सूर्यः।
भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः'॥

इति श्रुतौ पञ्चमो मृत्युरित्यधिकपदार्थाभावाय श्रुतौ। अत्र इति अन्तर्यामिब्राह्मणे। अन्येषामिति चन्द्रतारकदिक्सर्वलोकसर्ववेदसर्वयज्ञसर्वभूतप्राणवाक्चक्षुःश्रोत्रमनस्त्वक्तेजस्तमोरेतआत्मनाम्। चन्द्रतारककार्यं भगवतत्प्रयुक्तं 'यश्चन्द्रमसि' इत्यनेनोक्तम्। दिक्कार्यस्य तथा आकाशशरीरं ब्रह्मेत्यावरण उक्तं दिशामाकाशेन्तर्भावात्। दिशो व्यन्तरं प्राविशदित्यथर्वशिर उपनिषत्। भगवत्प्रयुक्तत्वमुन्नेयं कार्यस्य। सर्वलोकादिकार्याणां विभूतियोगाध्याये।

'यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा।
तत्तदेवावगच्छ त्वं मम तेजोंशसंभवम्'॥

इति वाक्ये विभूतिमत्पदाद्भगवत्प्रयुक्तत्वं बोध्यम्। तदेतदुक्तं ततस्ततो बोध्यमिति। देवेति क्रीडाधर्माणां परलोकात्मको जन्मान्तरीयो देहस्तस्य यमयितृत्वं तस्य ज्ञानम्। प्रयोगादिति 'भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोस्य नाभितः'। इत्यादौ प्रयोगाद्भूरादिलोके इत्यर्थकमधिलोकमिति प्रतिज्ञाय। तत्संबन्धि भूरादिलोकसंबन्धि सर्वं तिष्ठन्नित्याद्युक्तं स्थित्यादिकं पूर्ववत् अधिदैवतवत्। वेदयज्ञाभ्यामिति लोका हि भूरादयः तत्र पृथिव्या यमयितृत्वमुक्तम्। भुवर्लोकस्य यमयितृत्वं विष्टम्भे। एवं स्वर्लोकस्याप्युपष्टम्भो वक्तव्यः स च 'वेदः शिवः शिवो वेदः' 'एषा त्रयी विद्या तपति' इति 'यज्ञो वै विष्णुः' इत्यादिवाक्यैरात्मभ्यां नियमनम्।

'उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम्।
संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः'॥ इति वाक्यात्।

ननु कर्मभोगानन्तरं स्वर्गाच्युतिस्तत्रानेकेषां जीवानामनेकानि कर्माणि तज्जन्यः स्वर्गोपि तैरेव नियमित इति वेदयज्ञयोः शब्दार्थयोर्नियमनार्थं व्याख्यानं कुतः पूर्ववद्व्याख्यानस्य परि-

भाष्यप्रकाशः ।

धिवेदाधियज्ञवाक्यद्वयमुक्तम् । ततः सर्वभूतनियमनं पूर्ववदेवेति बोधनायाधिभूतवाक्यम् । तत एतल्लोकनियमनबोधनाय दशाध्यात्मवाक्यानीत्येवं कार्यज्ञानमुक्त्वा, तत्स्वरूपमिदमित्थतया वक्तुमशक्यमिति बोधनायादृष्टो द्रष्टेत्याद्याह । तत उपसंहारे, अतोऽन्यदार्तमित्यनेन तस्य सुखरूपत्वं यदाह तदन्तर्यामिज्ञातृत्वं वक्तुरवगत्योद्दालकस्तूष्णींभूत इत्युक्तम् । तेन सर्वेषां स्वल्पेषु महत्स्वन्यसापेक्षेषु तन्निरपेक्षेष्वपि कार्येषु यत् सामर्थ्यं तदन्तर्यामिणः सकाशादेव, न तु स्वत इति साधितम् । तदेव, 'यत्किंचित् पौरुषं पुंसां मेने कृष्णानुकम्पितम्' इति श्रीभागवते ।

रश्मिः ।

त्यागश्च कुतः इति चेन्न । सुवर्गाय वा एतानि लोकाय हूयन्ते इति श्रुतेः स्वर्गस्य कर्मजन्यत्वेपि न कर्ममात्रजन्यत्वम् । देवेभ्यः स्वर्गस्य तिरोधानश्रुतेः देवेभ्यो वै स्वर्गो लोकस्तिरोभवदिति श्रुतिः । एतादृशस्वर्गतिरोभावनाशाय वेदयज्ञयोर्नियमयितृत्वेन व्याख्यानं न तु पूर्ववत्कर्मत्वेन व्याख्यानम् । लोकानां तु कर्मत्वेन व्याख्यानमिति । ननु वेदानन्तरो यमयति यज्ञानन्तरो यमयतीति श्रुतिभ्यां वेदयज्ञयोः कर्मत्वेनान्वयो न तु वेदयज्ञाभ्यां लोकान् यमयतीति कारणत्वेनान्वय इति चेन्न । 'एतस्यैव प्रशासने गार्गि द्यावापृथिवी विधृते तिष्ठतः' इति श्रुतेः । प्रशास्त्यनेनेति प्रशासनं वेदस्तस्मिन् विधृते विष्टब्धे । अत्र वेदयज्ञयोरौत्पत्तिकसंबन्धात् करणत्वमुभयोः प्रतीयते प्रशासनपदेन । द्यावापृथिवीत्यत्रावो लुक् औस्तु विधृते इति कर्मणि क्तप्रत्ययेन कर्मण उक्तत्वात् औटः स्थाने तिष्ठत इति कर्तरि प्रत्ययेन च कर्तुरुक्तत्वेन प्रथमाद्विवचनमिति वा । इति श्रुतिपर्यालोचनया वेदयज्ञकरणाभ्यां विधृते तयोः स्थितस्यान्तरस्यैतस्यैव संबन्धिन्यौ द्यावापृथिव्यौ तिष्ठतः । एष एव वेदयज्ञाभ्यां द्यावापृथिव्यौ विष्टभ्नाति यमयति पतनप्रतिबन्धकव्यापारयुक्ते करोति यदा तदा द्यावापृथिव्यौ विधृते उच्येते । ते तिष्ठत इति युक्त्या श्रुत्यन्तरैकवाक्यतया वेदयज्ञयोः व्याख्यानात् । एवं च सर्वेषु वेदेष्वित्यत्र सर्वेषु यज्ञेष्वित्यत्र च सर्वपदाभ्यां करणत्वविशिष्टौ वेदयज्ञावपि प्राप्तावेव । तथा च प्रशासनं नियमनम् तत्करणत्वविशिष्टयोः यज्ञवेदयोरपि तिष्ठन् नियमनकरणत्वविशिष्टवेदयज्ञाभ्यामन्तरो यं नियमनकरणवेदयज्ञौ न वेदतुः यस्य करणभूतवेदयज्ञौ शरीरं यं नियमनकरणे वेदयज्ञावन्तरो यमयति स ते आत्मान्तर्याम्यमृतो भवतीति श्रुत्यर्थः । पूर्ववदेवेति श्रुत्यन्तरेण करणत्वाद्यबोधनात् सर्वपदघटितत्वेप्यधिलोकवदेव, युक्त्यापि सर्वान्तर्गततादृशलोकयमनकरणत्वासंभवात् एवकारः । एतल्लोकेति प्राणाद्यात्मान्त एतल्लोकः समीपतरवर्ती लोकः । कार्येति पृथिव्यग्न्यादिकार्यज्ञानं याज्ञवल्क्य उक्त्वा । अदृष्ट इति इदमित्थतयाऽदृष्टोऽन्यैः स्वयं द्रष्टा आदिपदेनाश्रुतोन्यैरिदमित्थतया स्वयं श्रोतान्यैरिदमित्थतयाऽमत स्वयं मन्ता । एवमविज्ञातो ज्ञाता नान्योतोस्ति द्रष्टा नान्योस्ति श्रोता नान्योस्ति विज्ञाता एष त आत्मान्तर्याम्यमृत इति श्रुतिः संगृह्यते । ननु महाभागाः पृथिव्यादिदेवताः मनुष्यादिवदात्मनो नियन्तारमन्तर्यामिणं कुतो न विदुरित्यत आहादृष्ट इत्यन्य आहुः तस्येति । अन्तर्यामिणोतोन्तर्यामिणः सकाशादन्यदार्तमित्येवं व्यतिरेकमुखेन सुखरूपत्वं वक्तुर्याज्ञवल्क्यस्य । उद्दालक इति ततो होद्दालक आरुणिरुपरराामेति श्रुत्योक्तम् । सर्वेषामिति पृथ्व्यादीनां सर्वेषाम् । यथा पृथ्व्याः स्वल्पं कार्यमोषधिरूपं महद्भूतधारकत्वरूपं धृतिश्च स्वल्पसापेक्षं वृष्टिमात्रसापेक्षं तृणादि स्वल्पवृष्टिनिरपेक्षं तृणादिच्छेदे सति छिन्नतृणादि मध्यस्थतृणादि । तदेवेति तत्सामर्थ्यमेव अथोपक्रम्य ततोहंनामाभवदिति बृहदारण्यके पुरुषविधब्राह्मणे

**अन्यथा त्वधिकरणरचना, अन्तस्तद्धर्माधिकरणेन गतार्थत्वादयुक्तैव ॥ १८॥**

भाष्यप्रकाशः ।

तेनाधिदैवादिपदप्रवृत्तिनिमित्तभूतो योऽभिमानः सोऽपि भगवत्प्रयुक्त इति तेषां पदानामभिमानिष्वौपचारिकत्वबोधनायैव तत्कथनं, नो चेत् तद्वैयर्थ्यमेव । तदनुक्तावपि विवक्षितज्ञापनस्याप्रत्यूहत्वादिति सिद्ध्यति । तेन सूत्रस्थमधिदैवादिष्विति पदं देहलीदीपवदुभयत्रापि संबद्ध्यते । तथाचानेनास्पष्टलिङ्गेनान्तर्यामिण एकत्वसाधनान्नाधिकरणवैयर्थ्यमिति । मतान्तरं दूषयन्ति अन्यथेत्यादि । सा रचना त्वेवम् । अस्मिन् वाक्येऽन्तर्यामीत्यपूर्वसंज्ञादर्शनात् किमधिदैवाद्यभिमानी देवतात्मा, किं वा परमात्मेत्यादिः संशयः । तत्र पृथिव्येवास्यायतनमग्निर्लोको मनो ज्योतिरिति श्रुतौ कार्यकरणवत्त्वात् पृथिव्यादीनन्तस्तिष्ठन् यमयतीति देवतात्मनः स्थितेरुक्तत्वात् तस्य यमयितृत्वसंभवादित्येवं प्राप्ते, तद्धर्माणां परमात्मधर्माणामात्मत्वाऽमृतत्वपृथिव्याद्यज्ञातत्वादीनां निर्देशात् परमात्मैवोच्यत इत्यादिरूपा । सा त्वन्तस्तद्धर्माधिकरणे स्पष्टलिङ्गैरेव सिद्धा । अत्राऽप्यमृतत्वादिभिः स्पष्टैरेव लिङ्गैरुपपाद्यत इति तथेत्यर्थः ॥ १८ ॥

रश्मिः ।

साक्षात्कार्यत्वेनोक्तेराहुः सोपीति । औपचारिकत्वेति यथैतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुतेः मात्रासंबन्धेनानन्दी पुरुष इति प्रयोगस्तथाधिदैवादिपदानामुक्ताभिमानमात्रासंबन्धेनाधिदैवतमित्यादिप्रयोगा गौणाः मात्रागुणसंबन्धात् भगवत्येव मुख्या आनन्दिपदवत् । तत्कथनमिति अन्तर्यामिब्राह्मणे ब्रह्मप्रतिपादनीये अधिदैवतादिकथनमित्यर्थः । विवक्षितेति अन्तर्यामिपदेन विवक्षितस्य ब्रह्मणो ज्ञापनस्येत्यर्थः । अधिदैवादय आत्मानो अमृताश्चेति प्रयोगोन्तर्यामिब्राह्मणे । ते तद्धर्मा विशेषेण भगवत्यपदिश्यन्तेऽभेदान्वयात् । दण्डी पुरुष इत्यादौ यथा दण्डो धर्मः पुरुषेऽपदिश्यते तद्वदिति भाष्येस्ति । अत्र भाष्यप्रकाशे सूत्रयोजनायात्रत्येष्वधिदैवादिपदेषु वाच्यतयान्तर्यामिभगवानेकः अन्तर्यामीति सौत्रे पदे एकत्वविवक्षणादित्युक्तम् । एवं चेति भाष्यस्य प्रकाशे तु तेषां पदानामभिमानिष्वौपचारिकत्वबोधनायैव तत्कथनमित्युक्तम् । अत्र तु भगवद्धर्मोऽहंकारस्तेष्वधिदैवादिषु व्यपदिश्यते । अत्रार्थे प्रामाण्याय सूत्रं योजयामासुः तेनेत्यादि । उभयत्रेति अन्तर्यामिपदे तद्धर्मव्यपदेशपदे च तथा चाधिदैवादिपदेष्वन्तर्यामी भगवान् इति सूत्रं योजितमधुना तु अधिदैवादिपदेषु अन्तर्यामी भगवानेकः अधिदैवादिष्वर्थेषु तस्य भगवतो धर्मस्याहंकाररूपस्य व्यपदेशादिति योजना । तथा च भाष्यं किमन्तर्याम्यधिदैवादिषु सर्वत्रैक एवेति अस्याः संशयकोटेः सिद्धान्तेऽविरोधात् । योजनान्तरसिद्धमाहुः तथा चेति । अनेनोक्तेन स्पष्टेन सूत्रेऽस्पष्टेनेत्यर्थः । अन्तर्यामिणो भगवत्त्वं तु पूर्वं भाष्ये प्रसाधितमेव । अत्रान्तर्यामी पक्षः, एकत्वं साध्यम् । अधिदैवादिषु तद्धर्मव्यपदेशादिति हेतुः यन्नैवं तन्नैवं यथा घट इति प्रयोगः । मतान्तरमिति शंकररामानुजाचार्यादिमतम् । अपूर्वेति । ननु ब्रह्मवादेन्तर्यामी न प्रसिद्धः इति वक्ष्यमाणभाष्यात् शरीरस्य नियन्तृत्वसंभवासंभवाभ्यां संशयमाह किमधिदैवेति । पूर्वपक्षमाह तत्रेति । अस्य देवस्य पृथिव्येवायतनं शरीरं लोक्यतेऽनेनेति लोकश्चक्षुरग्निर्ज्योतिः सर्वार्थप्रकाशकं मन इत्यर्थः । श्रुतावस्येत्यत्र यस्येति पठति रत्नप्रभाकारो ब्रह्मामृतवर्षिणीकारश्च । इयं श्रुतिर्बृहदारण्यकेस्ति तत्र यस्येति पाठः । अतः पुस्तकान्तरस्थः पाठोऽस्येति । इत्यादीति न चाशरीरस्य कथं नियन्तृतेति वाच्यम् । नियम्यशरीरेणैव तस्य नियन्तृत्वोपपत्तेरिति ब्रह्मामृतवर्षिण्याम् । तथेत्यर्थ इति अयुक्तत्वेन प्रकारेणाधिकरणरचनेत्यर्थः ॥ १८ ॥

## न च स्मार्तमतद्धर्माभिलापात् ॥ १९ ॥

ननु ब्रह्मवादे अन्तर्यामी न प्रसिद्धः । जीवब्रह्मजडानामेव प्रसिद्धत्वात् । अतोऽन्तर्यामिणः सांख्यपरिकल्पितस्य गुणयोगात् तादृशस्य ब्रह्मत्वे वा कः पुरुषार्थो भवेत् ।

न हीश्वरं प्रकृतिधर्मारूढमन्तर्यामिणं मन्यन्ते । तादृशस्योपनिषत्स्वभावात् । पूर्वपक्षन्यायेन स्तुतिपरता तन्मतस्य वा श्रौतत्वमित्याशङ्क्य परिहरति ।

भाष्यप्रकाशः ।

न च स्मार्तमतद्धर्माभिलापात् ॥ १९ ॥ सूत्रमवतारयितुं किंचिदाशङ्क्याहुः नन्वित्यादि । अयमर्थः । सर्वं खल्विदं ब्रह्म, सन्मूलाः सोम्येमाः प्रजा इत्यादिश्रुतिसिद्धो वादो ब्रह्मवादः । तत्र तु कार्यत्वेन जडजीवौ, कारणत्वेन ब्रह्मेति त्रय एव पदार्थाः प्रसिद्धाः । अन्तर्यामी तूभयथापि न प्रसिद्धः । अतो नियमनरूपेण चेतनधर्मेणाऽऽत्मत्वेन च प्रधानं जडं व्युदस्य, ब्रह्म वा जीवो वा कश्चित् कल्प्यः । तत्र ब्रह्मणोऽशरीरत्वात् साधारणजीवस्य च सर्वनियामकत्वादर्शनात् कार्येश्वरभूत एव कल्पनीयः । तादृशश्च महत्तत्त्वं प्रकृतिं वा योऽभिमन्यते, स भवति । तत्रापि महत्तत्त्वावस्थान्तररूपसूत्रान्तर्गतत्वं नास्य विवक्षितमिति प्रकृत्यभिमान्येव भवतीति तादृशस्यान्तर्यामिणः सांख्यपरिकल्पितस्य तद्गुणानां सत्त्वादीनां तमस एव वा योगात् सर्वनियामकस्य ब्रह्मत्वे साधिते कः पुरुषार्थः सिद्ध्येत् । असिद्धो हेतुः नहीत्यादि ।

रश्मिः ।

न च स्मार्तमतद्धर्माभिलापात् ॥ १९ ॥ इत्यादीति सन्मूलाः सोम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठाः इत्यादिपदार्थः । मध्यमपदलोपी समास इत्युक्तम् । ब्रह्मवाद इति ब्रह्मणः सत्यं ज्ञानमिति श्रुतिसिद्धस्य । ननु वाद इति षष्ठीतत्पुरुषः कुतो न इति चेन्न एकादशस्कन्धैकोनत्रिंशाध्याये श्रीभगवानुवाच कुर्यात् सर्वाणि कर्माणीत्युक्त्वा 'ब्रह्मवादस्य संग्रहः' इतिकथनात् कर्मादिसेवादिरहितब्रह्ममात्रवादस्यानुपष्टम्भत्वात् । ननु सत्यपदेन सति साधुरित्यर्थे तत्र साधुरिति सूत्रेण कृतेन यतो रमादिभक्तानां स्वरूपान्तर्गतानां सत्त्वादेकादशस्कन्धवाक्योपपत्तिरस्तीति चेन्न कार्यप्रपञ्चासंग्रहात् । आत्मकृतेः परिणामादित्यत्रात्मकृतेरुक्तेः । किं च सत्यब्राह्मणे सत्पदार्थो यः सोग्रेतनाधिकरणे प्रपञ्च्यः । उभयथेति कार्यविचारविषयत्वेन कारणविचारविषयत्वेन च । अत इति भाष्यं विवृण्वन्ति स्म अत इति । प्रधानमिति जगतो जडस्य ब्रह्मत्वेन व्युदासानर्हत्वात् प्रधानमिति विशेषणम् । प्रकृतिरित्यर्थः । महत्तत्त्वेति ज्ञानक्रियावस्थान्तरम् । नास्येति वायुना हि गौतमसूत्रेण संदृब्धानि भवन्त्येवमेवैतद्याज्ञवल्क्येति सूत्रनिरूपणं समाप्यान्तर्यामिणं ब्रूहीति श्रुतेर्नास्याभिमानिनो विवक्षितमपि तु वायुरूपसूत्रान्तर्गतत्वं सूत्रविदुज्ञेयत्वं विवक्षितम् । तच्चेत्त्वं याज्ञवल्क्य सूत्रमविद्वान् तं चान्तर्यामिणं ब्रह्मगवीरुदजसे मूर्धा ते विपतिष्यतीत्यरिष्टश्रावणात् । ब्रह्मगवीर्ब्रह्मविदां स्वभूता गाः । उदजसे अन्यायेनोन्नयसि । सांख्येति भाष्यं विवरामासुः सांख्येति । तद्गुणानां प्रकृतिगुणानां 'सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः' इति कापिलसांख्यप्रवचनसूत्रवृत्तौ 'सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः' इति गीतायाः । योगशास्त्रीयं प्रकृतिरूपमाहुः तमस इति तमसोऽविद्याया एव वा योगादध्यासाख्यसंबन्धात् तथा च पातञ्जला-

न च स्मार्तं, स्मृतिप्रसिद्धं स्मार्तं सांख्यमतसिद्धमिति यावत् । तादृशमन्तर्यामिरूपमत्र भवितुं नार्हति । कुतः । अतद्धर्माभिलापात् । तद्धर्माणामनभिलापात् । तद्विरुद्धधर्माणां चाभिलापात् । न ह्यत्र सत्त्वरजस्तमोगुणास्तत्कार्यं वा अभिलप्यते । तद्विरुद्धाश्चैते धर्मा, यस्य पृथिवी शरीरमित्यादि । तस्मात् सांख्यपरिकल्पितं नान्तर्यामिरूपमत्र भवितुमर्हतीति सिद्धम् । एवं सति ब्रह्मधर्मा एवैते भवन्तीति ब्रह्मवादः फलिष्यति ॥ १९ ॥

---

भाष्यप्रकाशः ।

तथाचोपनिषत्सु तादृशेश्वरस्याभावेन श्रुतिविरोधभवनाच्च कोऽपि पुरुषार्थः सिद्ध्येत् । अतः पूर्वपक्षन्यायेनान्तर्यामिब्राह्मणस्य प्रकृत्यभिमानिस्तावकत्वं वा, सांख्यमतस्य श्रौतत्वं वाङ्गीकार्यमित्याशङ्कां परिहरतीति । एवं सूत्रमवतार्य तदर्थं वदिष्यन्तो, देवतास्तुतिपरत्वस्याग्रिमसूत्रे निरसनीयत्वाद् द्वितीयमेव परिहरतीत्याहुः न चेत्यादि । नपुंसकप्रयोगं समर्थयन्ति अन्तर्यामिरूपमिति । हेत्वंशं द्विधा व्याकुर्वन्ति तद्धर्मेत्यादि । के विरुद्धा धर्मा इत्यत आहुः तद्विरुद्धा इत्यादि । नहि महदादौ विद्यमाने तदभिमन्तुर्व्यष्टिभूताः पृथिव्यादयः शरीराणि युगपद् भवितुमर्हन्ति । नच योगिवदिति वाच्यम् । गुणप्रधानभावगमकानुपलम्भात् । नापि गमकं कल्पयितुं शक्यम् । तद्धर्मानभिलापस्य बाधकस्योक्तत्वादिति स्फुटमग्रिमम् ।

रश्मिः ।

ख्यप्रवचने योगसूत्रं 'अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या' इति द्वितीयपादे । ख्यातिर्भ्रमः पृथिव्यादिसर्वनियामकस्येत्यर्थयितव्यम् । सर्वनियामकस्य ब्रह्मत्वे साधिते पुरुषार्थसिद्धेः सकलवादिप्रतिवादिमतसिद्धत्वात् । द्वितीयमिति सांख्यमतस्य श्रौतस्य श्रौतत्वं, स्मार्तमन्तर्यामीति विरुद्धलिङ्गत्वमाशङ्क्य स्मार्तमन्तर्यामिरूपमित्याहुः । नपुंसकेति । द्विधेति ।

'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः' ॥

इति षडर्थेषु भावविरोधाभ्यां द्विधा व्याकुर्वन्ति स्येत्यर्थः । नव्यास्तु संसर्गाभावोन्योन्याभावश्चेति द्वयं नञर्थः इत्याहुः तद्बहूनामसंमतं नव्यानां संमतमित्युपेक्ष्यम् । तर्काप्रतिष्ठत्वात् ।

'तर्कोऽप्रतिष्ठः श्रुतयो विभिन्नाः नैको मुनिर्यस्य वचः प्रमाणम् ।
धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः' ॥ इति भारतात् ।

भाष्ये । सत्त्वं च रजश्च तमश्चेत्येतेषां समाहार इति समाहारद्वन्द्वः । तत्कार्यं सत्त्वरजस्तमसः कार्यं 'सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः प्रकृतेर्महान् महतोहंकारात्पञ्चतन्मात्राण्युभयमिन्द्रियं स्थूलभूतानि पुरुष इति पञ्चविंशतिगुणाः' इत्यादिसूत्रोक्तम् । प्रकृते । अभीति स्वराजः । समष्टिवर्तिनः अभिमानिन्युपचारार्थ तत्राहंकाराङ्गीकारात् । पृथिव्यादयः पृथिव्यप्स्वग्न्यादयोन्तर्यामिब्राह्मणोक्ताः । युगपत् एककालावच्छेदेन । न च योगिवदिति स्वशरीरस्यान्यशरीरस्यत्वं योगशास्त्रीयम् । गुणप्रधानेति पृथिव्यादिषु स्वीयपरकीयभावेत्यर्थः स्वकीयदेहः प्रधानः । कल्पयितुमिति सांख्यधर्मैः कल्पयितुं शक्यम् । स्फुटमग्रिममिति । भाष्ये । एत इति आत्मामृतत्वान्तर्यामित्वरूपाः । मात्रासंसर्गादानन्दिनोन्ये एवमहंकारसंसर्गादन्येहंकारिणोपिदेवतादय इत्यहंकारोपि ब्रह्मधर्म

शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ २० ॥

ननूक्तन्यायेन शारीर एव भवतु । को दोषः, किमिति ब्रह्मपरत्वं कल्प्यमिति । तत्राह । शारीरश्च । नेत्यनुवर्तते । शारीरश्च जीवो नान्तर्यामिब्राह्मणे तत्तदभिमानिरूपो, यस्य पृथिवी शरीरमिति वाक्यानुरोधेन भवितुमर्हति । ततोऽपि भिन्नतयाऽन्तर्यामिणो वचनात् । उभयेऽपि काण्वमाध्यन्दिनब्राह्मणद्वयेऽपि एनं जीवं भेदेनैवाधीयते ब्राह्मणाः । निःसंदेहार्थमुभयग्रहणम् । यो विज्ञाने तिष्ठन्निति काण्वाः । य आत्मनि तिष्ठन्निति माध्यन्दिनाः । नचाऽऽत्मशब्देनान्यः संभवति । अन्येषां पूर्वमेव पठितत्वात् । अन्ते हि जीवमाह । तस्मादन्तर्यामिब्राह्मणे ब्रह्मैव वाक्यार्थ इति सिद्धम् ॥ २० ॥

इति प्रथमाध्याये द्वितीयपादे षष्ठमन्तर्याम्यधिकरणम् ॥ ६ ॥

---

भाष्यप्रकाशः ।

रामानुजाचार्यास्तु, शारीरश्चेत्यन्तमिदं सूत्रमङ्गीकुर्वन्ति ॥ १९ ॥

शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ २० ॥ सूत्रमवतारयन्ति नन्वित्यादि । तथा च यथा संवर्गादिविद्या अङ्गविद्यास्तथाऽन्तर्यामिब्राह्मणमपीति देवतात्मस्तावकत्वेऽपि ब्रह्मवादाविरोधात् को दोष इत्यर्थः । परिहारं व्याकुर्वते नेत्यादि । ततोऽपीति अभिमानिदेवतातोऽपि । उभय इति ब्राह्मणा इत्यस्य विशेषणम् । निःसंदेहार्थमिति । विज्ञानपदेन बुद्धिरुच्यत इति संदेहनिरासार्थम् । नन्वतति व्याप्नोतीत्यात्मेति योगमादाय दिगाकाशप्राणेष्वन्यतमः कश्चिद् ग्रहीतुं शक्य एवेति कुतो न संभवतीत्यत आहुः अन्येषामित्यादि । हिर्हेतौ । स्फुटमन्यत् । एवं चात्र स्थितिकर्तृत्वनिर्वाहकतयोपोद्घातेन सर्वनियमनं विचारितमिति तदसंभवः परिहृतः ॥ २० ॥

इति षष्ठमन्तर्याम्यधिकरणम् ॥

रश्मिः ।

इति पृथ्वीत्वसंबन्धादन्येपि घटादयः पृथ्वीरूपाः एवं ब्रह्मधर्मसंबन्धादधिदैवतादयो ब्रह्मरूपा इत्युपक्रमोक्तब्रह्मवादः फलिष्यति इत्येवमग्रिमं स्फुटमित्यर्थः । शारीरश्चेति 'न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च' इत्यन्तं सूत्रम् ॥ १९ ॥

शारीरश्चोभयेपि हि भेदेनैनमधीयते ॥ २० ॥ नन्वित्यादीति । भाष्ये । उक्तन्यायेन पूर्वपक्षोक्तन्यायेन । प्रकृते । उक्तब्रह्मवादासिद्धिरूपदोषात् को दोष इति भाष्यास्वरसमालोच्यैतत्समर्थयांबभूवुः तथा चेति । संवर्गेति संवर्गः प्राणो वायुश्च छान्दोग्यषष्ठप्रपाठके स आदिर्यासामक्षिविद्याऽप्रकृतविद्यास्युक्तमेव स्थानवैशिष्ट्येनोक्तं य एषोक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचेति श्रुत्युक्ता प्राणविद्यानां ताः संवर्गादयः ता आदयो यासामङ्गविद्यानां ज्ञानाङ्गपञ्चाग्निविद्यादीनां ताः संवर्गादिविद्याश्चाङ्गविद्याः । विज्ञानेति । बुद्धिर्विज्ञानरूपिणीति वाक्यात् । न च विज्ञानं जीवः आत्मा तु परमात्मनोऽनियम्यत्वान्मनः आकाशादि भवन्त्विति चेन्न अन्येषां पूर्वमेव पठितत्वादन्ते हि जीवमाहेति भाष्यात् । तदसंभव इति स्थितिकर्तृत्वं विष्णुना चरितार्थं न पर उपसंक्रामतीति निष्क्रियत्वादित्यसंभवः ॥ २० ॥

इति षष्ठाधिकरणम् ॥ ६ ॥

## अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१ ॥ ( १-२-७ )

**मुण्डके हि श्रूयते । कस्मिन्नु भगवो विज्ञात इति पृष्टे, द्वे विद्ये वेदितव्ये इत्युत्तरमाह । तत्र नामरूपात्मकजगतो विज्ञानार्थं नामांशो वेदादिः । रूपांशो**

भाष्यप्रकाशः ।

अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१ ॥ पूर्वाधिकरणविषयवाक्ये, अमृत इति, अतोऽन्यदार्तमिति च कथनादन्तर्यामिणि सर्वहृदयदेशवर्तिनि भोगवैलक्षण्यसाधकं वैशेष्यं दर्शितम् । सृष्टिदशायां नियामकत्वं चोक्तम् । तत्र पुनरदृष्टो द्रष्टेत्याद्युक्तम् । तत् कुत इत्याकाङ्क्षायां तत्र हेतुबोधनाय सृष्टिपूर्वदशायां सर्वाभावान्नियामकत्वं न भविष्यतीत्याशङ्कायां च तदाप्यक्षरं नियमयतीति बोधनाय चोपोद्घातेनेदमधिकरणमारभ्यत इति प्रसङ्गरूपां संगतिं बोधयितुं विषयवाक्यमुदाहरन्ति मुण्डके हीत्यादि । अत्र सर्वा उपनिषद् विषयवाक्यतया ज्ञेया । इति पृष्ट इति अनेन वाक्येनैकविज्ञानेन सर्वविज्ञाने पृष्टे । इत्युत्तरमाहेति इत्यादिनोत्तरमाह । किमुत्तरमाहेत्यपेक्षायामाहुः तत्रेत्यादि । तत्रेति उत्तरमध्ये तथाचैतद्विद्याद्वयं सर्वविज्ञानार्थ-

रश्मिः ।

अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१ ॥ भोगेति सुखसाक्षात्कारो भोगः । वैशेष्यमिति सर्वरूपत्वमानन्दरूपत्वस्वकर्तृत्वरूपं वैशेष्यम् । अन्तर्यामी विलक्षणभोगवान् वैशेष्यादात्मवत् । इतीदं भोगवैलक्षण्यसाधकम् । तत्रेति विषयवाक्योपसंहारे । तत्कुत इति अन्तर्यामिणो भगवत्त्वेन सृष्टिपूर्वदशायां सत्त्वात् कैरदृष्ट इत्याकाङ्क्षायां तत्रादृष्टत्वे हेतुरक्षरे स्थितत्वेनाक्षरेण दृष्टः जीवभूताक्षरैरहरहर्गमनेप्यदृष्टो मायासंबन्धानन्तरं चादृष्ट इत्यदर्शनं दर्शनसमानाधिकरणमुपपन्नमभावस्य प्रतियोगिसामानाधिकरण्यनियमादिति ह्यक्षरकर्तृकं दर्शनं सृष्टिपूर्वकालेऽदर्शने हेतुः प्रतियोगित्वात्तदुक्तं गीतायां 'स्वयमेवात्मनाऽऽत्मानं वेत्थ त्वं पुरुषोत्तम' इति । पुरुषोत्तमाभेदस्याक्षरे वक्ष्यमाणत्वात् । तस्य बोधनायेत्यर्थः । उपोद्घातेनेति चिन्ता तावत्प्रकृतं भोगवैलक्षण्यसाधकं वैशेष्यं दर्शितं तत्र पुनरदृष्टो द्रष्टेत्याद्युक्तम् । तत्सिद्ध्यर्था तद्धेतुविषयिणी तामुपोद्घातं विदुर्बुधास्तेन । इति प्रसङ्गेति उपोद्घातत्वेन प्रसङ्गरूपां संगतिसामान्यलक्षणं स्वमते प्रसङ्गरूपं तल्लक्षणलक्षिते विशेषलक्षणकोपोद्घातत्वमस्त्येव । सावधानपुरुषः श्रुतिवक्ता तेन प्रयुज्यमानं वाक्यमदृष्टो द्रष्टेति तत्प्रयोजकतादर्शनरूपे हेतौ तदवच्छेदकत्वं दर्शनत्वं तेन दर्शनत्वेन स्मृतस्याक्षरकर्तृकदर्शनस्योपेक्षानर्हत्वमिति प्रसङ्गसंगतिरूपसामान्यलक्षणसंगमनम् । अत्र सर्वेति अत्र भाष्ये ब्रह्मविद्यायाः संशयकोटित्वेन ब्रह्मविद्याया सर्वोपनिषत्प्रतिपाद्यत्वमुपक्रमे स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राहेति श्रुतेरुपसंहारे च तेषामेवैतां ब्रह्मविद्यां वदेत इति श्रुतेश्च । अनेनेति कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति वाक्येन इदं वाक्यं शौनकस्य । अत्र नु वितर्के कस्मिन्नित्यस्य किमः प्रश्ने प्रयोगात् प्रश्नविषय आश्रय इत्यर्थः । प्रश्नः किमर्थः । आश्रयो केरर्थः विषयविषयिभावः संसर्गः । पृच्छ ज्ञीप्सायां ज्ञानेच्छायाः सविषयत्वात् । भगवो भगवन् । उत्तरमिति द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमितीतिहासपुराणं न्यायो मीमांसा धर्मशास्त्राणीति । अथ परा यया तदक्षरमधिगम्यते इत्यादिनाक्षिरा उत्तरमाहेत्यर्थः । अत्र वेदेत्यादीति परायां संदिह्यते न तु स्वतन्त्रोक्तिः प्रधानं स्यादुत शारीरः आहोस्वित्परमेश्वरः इत्यथ परेत्यारभ्य धीरा इत्यन्ते संदिह्यते इत्यादि-

परा च । तत्र वेदादिविद्यायां न संदेहः । परायां संदिह्यते किमेषा सांख्यमतविद्या ब्रह्मविद्या वेति । सांख्यधर्माभिलापात् संदेहः । 'अथ परा यया तदक्षरमधिगम्यते, यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुरश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं, यद्भूतयोनिं परिपश्यन्ति धीराः' इत्यादि । अग्रे च, 'दिव्यो ह्यमूर्तः पुरुषः स बाह्याऽभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात् परतः परः' इत्युक्त्वा, 'एतस्माज्जायते' इति निरूप्य, अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यावित्यादिना रूपमुक्त्वा पुनः पुरुषात् सृष्टिमाह ।

तत्रैकप्रकरणत्वादेकवाक्यता वक्तव्या पुनः तत्राक्षरपुरुषयोर्भेदः प्रतीयते । तयोरुभयोरपि सृष्टिः । तद् ब्रह्मवादे न संगच्छते । तस्मात् सांख्यमतमेवैतत् । प्रकृतिपुरुषयोः श्लिष्टत्वादन्यतरप्राधान्येनोभयोः स्रष्टृत्वम् । उभयात्मकत्वाज्जगतः । रूपमपि समष्टिव्यष्टीनामग्रे व्युत्पत्तिरिति । तिरोहितरूपत्वान्न ब्रह्मविद्या ।

भाष्यप्रकाशः ।

माहेत्यर्थः । अत्र कस्मिन्नंशे संदेह इत्यपेक्षायामाहुः तत्र वेदेत्यादि । कुतः संदेह इत्यपेक्षायां तद्बीजमाहुः सांख्यधर्मेत्यादि । तथाचोपक्रमे, स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राहेति प्रतिज्ञानादग्रे सांख्यधर्माभिलापाच्च संदेह इत्यर्थः । तदभिलापमुपपादयन्ति अथेत्यारभ्य । सृष्टिमाहेत्यन्तम् । अग्र इति द्वितीयमुण्डके । तथाच पूर्वमुण्डके, अद्रेश्यत्वादिगुणकस्य भूतयोनित्वकथनात् तादृशत्वस्य प्रधाने सांख्यैरङ्गीकारात् । द्वितीयमुण्डके च पुंस्त्वं तद्रूपं ततोऽग्रे 'पुमान् रेतः सिञ्चति योषितायां बह्वीः प्रजाः पुरुषात् संप्रसूता' इति कथनात् प्रकृतिसंयोगेन पुरुषरूपस्य सृष्टेश्च तैरङ्गीकारात् तदभिलाप इत्यर्थः । एवं संदेहबीजमुक्त्वा पूर्वपक्षमाहुः तत्रेत्यादि । मुण्डकत्रये एकस्यैव मतस्य प्रतिपादितत्वेन वाक्यानामितरेतरसाकाङ्क्षत्वैकप्रकरणत्वादेकवाक्यता सर्वस्य वक्तव्येत्यर्थः । तर्ह्युपक्रमस्याऽसंजातविरोधत्वेनावान्तरवाक्यापेक्षया प्रबलत्वाद् ब्रह्मवाक्यत्वेनैव सा भवत्वित्यत आह तत्राक्षरेत्यादि । प्रतीयत इति 'अक्षरात् परतः परः' इत्यत्र प्रतीयते । सृष्टिरिति 'एतस्माज्जायते प्राणः' इत्यादिनोक्ता सृष्टिः । न संगच्छत इति बाधकोपपत्तेरुपक्रमापेक्षया प्राबल्याच्च संगच्छते । ननु सांख्ये प्रकृतेरेव सृष्टिरङ्गीक्रियते, न पुरुषादतः कथं तन्मतसिद्धिरित्यत आह प्रकृतिपुरुषयोरित्यादि । उभयात्मकत्वादिति जीवजडात्मकत्वात् । रूपमपि समष्टेरिति अग्निर्मूर्धेत्याद्युक्तं रूपमपि श्लिष्टस्यैवेत्यर्थः । अत्र युक्तिमाहुः व्यष्टीनामित्यादि । नन्वेतत्सर्वं ब्रह्मवादेऽपि तुल्यमित्यत आह तिरोहितेत्यादि । सच्चिदानन्दरूपस्य विषयवाक्येऽनुक्तत्वेन तिरोहितरूपत्वात् तथेत्यर्थः । ननु तथापि ब्रह्मविद्यापदविरोधो दुर्वार इत्यत आह ब्रह्मविद्येत्यादि । ब्रह्मपदस्य वेदेऽपि शक्तेस्तथा । नन्वत्र विषयो

रश्मिः ।

ईश्वरानन्दतिर इति भाष्यप्रकाशे वक्ष्यामः । सर्वविद्येति सर्वविद्याख्यानमित्यर्थः । व्यस्तपाठे तु सर्वविद्या यस्यामिति सर्वविद्या तां सर्वविद्यां प्रतिष्ठाजनकत्वात् प्रतिष्ठामिति । प्राहेति ब्रह्मा प्राह । भाष्ये । तयोरिति 'कर्तृकर्मणोः कृति' इति सूत्रेण सृष्टिरिति कृद्योगे षष्ठी । प्रकृते । इत्यादिनेति अन्नादिना पुरुष एवेदं विश्वमिति यदर्चिमयदणुभ्योणु चेत्युपक्रम्य तदेतदक्षरं ब्रह्मेति इतिप्रकरणोक्तश्रुतिसंग्रहः । उपक्रमेति स ब्रह्मविद्यामित्युपक्रमापेक्षया । श्लिष्टस्येति

किंतु स्मृतिरेवेति । ब्रह्मविद्या वेदविद्या, उपचाराद्वेति । एवं प्राप्त उच्यते । अदृश्यत्वादिगुणकः परमात्मैव । ब्रह्मविज्ञानेनैव सर्वविज्ञानात् । तत एव विद्याया

भाष्यप्रकाशः ।

परापरविभागमुक्त्वा तत उपनिषत्समाप्तावक्षरविद्यासमापने, तेषामेवैतां ब्रह्मविद्यां वदेतेति प्रकृतपरामर्शपूर्वकं ब्रह्मविद्यापदकथनाद् वेदविद्यापक्षो न साधीयानित्यत आह उपचाराद्वेति । एवं पूर्वपक्षमुक्त्वा सिद्धान्तं वक्तुं सूत्रं व्याचक्षते उच्यत इत्यादि । ब्रह्मविज्ञानेत्यादि एकविज्ञानेन सर्वज्ञानस्य ब्रह्मविद्यालिङ्गत्वम्, 'अपि वा तमादेशमप्राक्ष्य' इत्यादिश्रुत्यन्तरे सिद्धम् । प्रकृतेऽपि, कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति प्रश्नस्योत्तरत्वेनादृश्यत्वादिगुणकस्य ततः सृष्टेश्च कथनेन तद्विज्ञानादेव सर्वविज्ञानबोधनादक्षराधिगमकत्वादेव विद्यायाः परत्व-बोधनाच्च तल्लिङ्गमत्रापि दृश्यत इति स परमात्मैव, न तु प्रकृतिः । तद्विज्ञानेन पुरुषाविज्ञानात्

रश्मिः ।

प्रकृतिसंश्लिष्टपुरुषस्य । व्यष्टीनामित्यादीति तस्मादग्निः समिधो यस्य सूर्यः इत्याद्युक्त्याग्न्यादि-व्यष्टीनाम् । तथेति सांख्यस्मृतित्वेन प्रकारेण सांख्योक्तपदार्थानां स्मृतिस्तत्पूर्वकं वेदान्तकरणात् स्मृतिरिव स्मृतिः । उपचाराद्वेतीति । उच्यत इत्यादीति ब्रह्मविद्यायामाधेयनिरूपकश्रुतिमी-मांसयोच्यते इत्यर्थः । यस्मिन् द्यौः पृथिवीत्याद्याधारनिरूपकश्रुतिमीमांसाया अग्रिमे पादे कर्त-व्यत्वात् एतावत्या मीमांसया द्वितीयं मुण्डकं समाप्तं तृतीये मुण्डके यदा पश्य इति श्रुतिमीमांसा साधनाध्यायतृतीयपादपञ्चमाधिकरणद्वितीयसूत्रेस्ति । नायमात्मा प्रवचनेन लभ्य इति श्रुति-मीमांसा साधनाध्याये लिङ्गभूयस्त्वाधिकरणेपि विद्यैवेति सूत्रेस्ति । ब्रह्मपदशक्यस्य प्रतिपाद्-कतासंबन्धेन वेदे उपचारो लक्षणा तस्माद्वेति भाष्यार्थः । भाष्ये ब्रह्मविज्ञानेनैवेत्येवकारेणे-तरस्याः प्रकृतेर्व्यवच्छेदाद्विशेष्यसंगतैवकारोक्तेर्भवति जिज्ञासा । अदृश्यत्वादिगुणकः परमात्मे-त्यनुमितिः यथा पर्वतो वह्निमानित्यनुमितिः सा ब्रह्मविद्या तस्या एव लिङ्गं एकविज्ञानेन सर्ववि-ज्ञानम् न तु प्रकृतिविद्याया इत्यत्र किं प्रमाणमिति तत्पूर्वं श्रुत्यन्तरसिद्धब्रह्मविद्यालिङ्गिनी एकविज्ञानेन सर्वविज्ञानं लिङ्गमित्याहुः एकविज्ञानेति । अपि वेति विद्वन्मण्डनानुवादः तत्स्मर-णार्थः किं प्रयोजनमिति चेत्तन्नित्यम् । उत तमादेशमित्यत्र 'अपि वा तमादेशम्' इति पुस्तकान्तर-पाठो वा । श्रुतिः श्वेतकेतूपाख्यानस्था श्रुतिस्तु उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमित्यत्रैकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातमित्यादिविद्वन्मण्डने स्फुटम् । हे श्वेत-केतो अप्राक्षः गुरुं प्रति पृष्टवानसीति श्रुतिस्थाप्राक्षः इत्यस्यार्थः । नचात्रापि प्रकृतिविद्यास्त्विति शङ्क्यम् । तद्विज्ञानेन पुरुषविज्ञानादेकविज्ञानेन सर्वविज्ञानप्रतिज्ञासंन्यासरूपनिग्रहस्थानापत्तेः । अतः प्रकृतेपि श्रुत्यन्तरैकवाक्यतयैतद्ब्रह्मविद्याया एव लिङ्गमिति समर्थयांबभूवुः प्रकृतेपीति । भगव इति भगवान् । तत एवेति भाष्यं विवरामासुः अक्षराधिगमकत्वादिति । अथ परा यया तदक्षरमधिगम्यते इति श्रुतावक्षराधिगमकत्वस्य परविद्यालक्षणत्वात् । तल्लिङ्गमिति विद्यालिङ्गम् । अत्रादृश्यत्वादिगुणकः परमात्मा वेत्यत्र सोऽदृश्यत्वादिगुणकः । पुरुषाविज्ञा-नादिति 'असङ्गोऽयं पुरुषः' इति कापिलसांख्यप्रवचनसूत्रेण 'न नित्यशुद्धबुद्धमुक्तस्वभावस्य तद्यो-गस्तद्योगादृते' इत्यनेन च । योगसूत्रेष्वपि 'क्लेशकर्मविपाकाशयैरपरामृष्टपुरुषविशेष ईश्वरः' 'तत्र निरतिशयं सार्वज्ञ्यबीजम्' 'पूर्वेषामपि गुरुः कालेनानवच्छेदात्' 'तस्य वाचकः प्रणवः' 'तज्जपस्तदर्थ-

अपि परत्वम् । अक्षरस्यापि ब्रह्मत्वं पुरुषस्यापि । तयोः परापरभावः । अभेदश्च । एतादृश एव हि ब्रह्मवादः । तत्र प्रथममक्षरस्य ब्रह्मत्वमाह ।

भाष्यप्रकाशः ।

तद्विषयया मोक्षाभावेन परत्वानङ्गीकाराच्च तथेत्यर्थः । अत्रापि धर्मोक्तेरेव हेतुत्वम् । नन्वत्राक्षर-पुरुषावुक्तावत उभयोर्विज्ञानेन तथात्वमुच्यते, न त्वेकविज्ञानेनेति नायं हेतुरित्यत आहुः अक्षरस्येत्यादि । एतादृश एव हीति अन्यथा पुरुषस्वरूपकथनस्य पादत्रयेणैव सिद्धेरक्षरात्

रश्मिः ।

भावनम्' द्वितीयपादे 'अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः' 'अनित्याशुचिदुःखानात्मसु नित्यशुचि-सुखात्मख्यातिरविद्या' 'दृग्दर्शनशक्त्योरेकात्मतेवास्मिता' 'सुखानुशयी रागः' 'दुःखानुशयी द्वेषः' 'स्वरसवाही विदुषोपि तथारूढोभिनिवेशः' एवं चाविद्यायाः ख्यातित्वेन तद्विज्ञाने आत्मख्यातिवि-ज्ञानात् तन्निवृत्तौ विशेषदर्शनसाध्यायां सत्यां पुरुषज्ञानेपि प्रकृतिविषयाऽज्ञानादित्यर्थः । परत्वेति प्रकृतिविद्यायां परत्वेत्यादिः । तथेति ब्रह्मविद्यायाः परत्वम् । विषयवाक्यप्रसङ्गा-त्स्मृते विद्यापरत्वेप्येष एव हेतुरित्याहुः अत्रापीति । अत्र ब्रह्मविद्यायाम् । धर्मोपदेशस्तावददृश्यादि-गुणकः परमात्मेत्यनुमितौ ब्रह्मविद्यात्वात् तद्विषयगतः सामानाधिकरण्यसंबन्धेनारोपितः यया तद-क्षरमधिगम्यत इति श्रुत्युक्तोऽक्षरविद्यात्वरूपो धर्मस्तदुक्तेरित्यर्थो वा । तथात्वमिति सर्वज्ञानमित्यत्र सर्वनिष्ठज्ञानरूपः प्रकार उच्यते । अयमिति सर्वविज्ञाने एकविज्ञानरूपो हेतुः । अक्षरस्येत्यादीति भक्तिमार्गत्वाद्गीताद्वादशाध्याये योगाख्ये ।

'एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः' ॥

इत्यर्जुनप्रश्ने । श्रीभगवानुवाच—

'मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेता ते मे युक्ततमा मताः ॥
ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते' ।

इत्याद्युक्त्वा 'ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः' इति वाक्येभ्यः । तयोः परापरभावः ब्रह्मविदाप्नोति परमिति श्रुतिः अक्षरादपि चोत्तम इति गीतातः अभेदश्च ते प्राप्नुवन्ति मामेव इति गीतातः । येनाक्षरं पुरुषं वेद सत्यमिति श्रुतिः येन तत्त्वेन प्रोवाच तां तत्त्वतो ब्रह्मविद्यामिति उत्तरपादे तत्त्वमनतिक्रम्य ब्रह्मविद्यां प्रोवाचेत्यर्थाद्ब्रह्मविद्यायास्तत्त्वरूपत्वमिति न यत्तदोर्नित्य-संबन्धविरोधः । पादत्रयेणेति द्वितीयमुण्डके दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः अप्राणो ह्यमनाः शुभ्रः इति पादत्रयेण । अक्षरात्परतोक्षरात्परः इति श्रुत्यर्थः । अत्रामूर्तप्राणात्मनः पदैरन्नमयादिविभूतिभेदः प्रतीयते स बाह्याभ्यन्तर इति पदात् विज्ञानमयभेदः तादृशो दिव्योजः पुरुषः शुभ्रः आनन्दरूपममृतं यद्विभातीति श्रुतेरत्रत्याया दिव्य आनन्दः । अत्र किंचिदुच्यते ब्रह्मनिरूपकत्वाच्छ्रुतेः हि विशेषे विशेषणैकदेशिमतेनामूर्तः मूर्तत्वं परिच्छिन्नपरिमाणवत्त्वं ततो नञोर्थो भेदो नात्यन्ताभावः तदङ्गीकारे तु मूर्तत्वावच्छिन्नप्रतियोगिताकाभाव इत्यर्थः । स च अन्योन्ये ह्यन्य इवेमा धाना भगव इत्यासामङ्केकां भिन्धीति भिन्ना भगव इति किमत्र पश्यसीति न

भाष्यप्रकाशः।

परतः पर इति तुरीयं पादं न वदेत्। प्रयोजनाभावात् तथाच ब्रह्मवादस्य परापरभावपूर्वकाभेदघटितत्वेनात्राप्येकविज्ञानादेव सर्वविज्ञानस्याभिप्रेतत्वेन हेतुरस्त्येवेत्यर्थः। ननूभयोः कथमभेद इत्याकाङ्क्षायामाहुः तत्रेत्यादि। तत्रेति अभेद उभयोर्वक्तव्ये। विश्वोत्पत्तेः कथं ब्रह्मधर्मत्वमत

रश्मिः।

किंचन भगव इति त१होवाच यं वै सौम्यैतमणिमानं न निभालयसे एतस्य वै सोम्यैषोणिम्नः एवं महान्यग्रोधस्तिष्ठति श्रद्धत्स्व सोम्येति स य एषोणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति श्रुतौ दर्शनाविषयोणिमा तद्रूपः। वक्ष्यते चारूप एव हि तत्प्रधानत्वादिति सूत्रे। ध्वंसप्रागभावौ कारणावस्थाविशेषौ नाभावौ। ननु भेदस्तु तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकोऽभावः। मूर्तस्य तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकोऽभावः दिव्योमूर्तो नेति तन्न आनन्दस्य साकारत्वेन परिच्छिन्नपरिमाणात्। अतो मूर्तभिन्नमूर्तसदृश इत्यर्थः। पर्युदासः सदृग्ग्राहीति पर्युदासो नञर्थः। तथाच श्वेताश्वतरोपनिषत् 'सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम्' इति सर्वेन्द्रियात्यन्ताभावतद्गुणैराभास्यत इति सर्वेन्द्रियगुणाभासं नपुंसकत्वं छान्दसम्। सर्वेन्द्रियभिन्नत्वे सति तद्गुणैः सादृश्यात् पर्युदासः। एवमेतत्पूर्वश्रुतिषु अदृश्यमग्राह्यमगोत्रमवर्णमित्यादिपदेषु पर्युदासो ज्ञेयः। प्रहस्ते विशेषोस्ति प्रसज्यप्रतिषेधो नञर्थो विद्वन्मण्डनेस्ति सर्वेन्द्रियविवर्जितमिति श्रुतेः स पर्युदासोपयोगी पूर्वोक्तरीत्येत्यविरोधः। यद्वा सर्वेन्द्रियविवर्जितमिति सर्वेन्द्रियगुणाभासमिति एवमिन्द्रियपर्युदासो नास्थूलमित्यादौ स्थूलादेरतः प्रकारान्तरम्। कारणगुणाः कार्ये समायान्तीति स्थूलादिभिन्नस्थूलादिसदृश इत्यर्थः। अनुकृत्यधिकरणे सर्वस्य भगवदनुकारित्वादस्थूलमित्यादिषु पर्युदाससिद्धिः। पुरुष इति आदिजिज्ञासाया पुरा आसेति व्युत्पत्तिः न तु पुरि शेते इति न वा पुरमुषतीति उष दाहे इमा व्युत्पत्तयः सुबोधिन्यां सन्ति। बाह्याभ्यन्तराभ्यां समानः हि निश्चयेनाजः अप्राणो हि पादपूरणे 'हिः पादपूरणे' इत्यादिविश्वात्। अमनाश्च पूर्ववत्। शुभ्र इति शुभि दीप्तौ भ्वादिरात्मनेपदी सेट्। शुभ शोभायाम्। अदादिः परस्मैपदी सेट् रक् दीप्तियुक्तः। ब्रह्म तर्हिं अग्निरिति श्रुतेः। गोपरूपोभ्राभस्तरुणः शुभ्रः शोभायुक्तः गोपवेष इत्यादिगोपालतापिनीयश्रुतेः। अक्षरात् ब्रह्मणः परतः क्षरात्परतः परस्मात् परः पुरुषोत्तमः। नन्वक्षराच्चन्द्रशेखरादित्यर्थोऽस्तु क्षरं प्रधानममृताक्षरो हर इति श्वेताश्वतरादिति चेत्सत्यम्। भक्तादक्षरात्पर इत्यर्थात् ज्ञानेन भजतीत्यथर्वशिरःश्रुतेः। व्यक्तादक्षराद्वा परतोऽव्यक्ताद्भगवत्कृपारूपात् परः व्यक्तमेवाक्षरमिति गोपालतापिनीयश्रुतेः। एतद्व्यक्तमक्षरं महतः कारणम्। यत्त्वक्षरात् प्रकृतेः परतः परः अक्षरो भूतयोनिरिति व्याख्यानं तन्न अक्षरपदस्याविचार्यात्वाभावात्। अक्षरं ब्रह्मवर्णयोरिति विश्वात्। प्रयोजनेति। न च कथं न प्रयोजनं पादत्रयेण पुरुषमक्षरमित्यनिरूपणादिति वाच्यम्। अत्र येनाक्षरं पुरुषं वेदेति श्रुतेरेव पुरुषमक्षरमिति निरूपणसंभवात्। ब्रह्मवाद इति ब्रह्मणः सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुत्युक्तस्य वादो भवत्वित्याकाङ्क्षायामाहुः परापरेति। परः पुरुषो भक्तमनोरथपूरककालंकृतपरत्वविशिष्टत्वात् परस्मादपरत्ववैशिष्ट्यादपरमक्षरं तत्पूर्वकोऽभेदः 'एकमेवाद्वितीयं ब्रह्म' इति श्रुतेः 'परास्य शक्तिर्विविधैव श्रूयते' इति श्रुतेर्भक्तमनोरथपूरककालावच्छेदेन परापरभावः सत्यं ज्ञानमिति श्रुतौ साधकः सत्यमित्यपि व्याख्यातं व्याख्यास्यतं च सप्तमाध्यायटीकायामिति तादृशो ब्रह्मणो वादो विवादो हि श्रुतिनिर्णयेनं

अदृश्यत्वादिगुणकः परमात्मैव । कुतः । धर्मोक्तेः । तथाऽक्षरात् संभवतीह विश्वमिति । इयं चोपनिषत् । न ह्यत्र ब्रह्मव्यतिरिक्ताज्जगदुत्पत्तिरस्ति । पुरुषस्य ब्रह्मत्वं निःसंदिग्धमेव । ईषदानन्दतिरोभावेन ब्रह्माऽक्षरमुच्यते ।

भाष्यप्रकाशः ।

आहुः इयमित्यादि । नन्वेवं ब्रह्मत्वेनोभयोरभेदे, 'अक्षरात् परतः परः' इति कथं परापरभावव्यपदेश इत्यत आहुः ईषदित्यादि । तथाच नैसर्गिकावस्थाभेदमादायायं परापरभावव्यपदेशो न तु वस्तुभेदादतो न ब्रह्मवादव्याघात इत्यर्थः । नच सृष्टिकथनोत्तरमस्य कथनात् सृष्ट्यारम्भ एव तथाभावो न तु नैसर्गिक इति शङ्क्यम् । तथासति तदानीं पूर्वभावस्य वीतत्वेन तदव्यय-

रश्मिः ।

सर्वं खल्विदं ब्रह्मेति श्रुत्युक्तः सर्वं ब्रह्मेति वादः तद्घटितो भवतीति ब्रह्मवादः परापरभावपूर्वकाभेदघटितोक्ति । हेतुरिति एकविज्ञानेनेति हेतुः । आहुरिति ब्रह्मत्वेनाभेदमाहुः । इयमित्यादीति । भाष्ये । पुरुषस्येति पुरुषान्न परं किंचिदिति श्वेताश्वतरे 'असङ्गोयं पुरुषः' इति सांख्यप्रवचने 'उत्तमः पुरुषस्त्वन्यः' इति गीतायां च पुरुषस्य ब्रह्मत्वं निःसंदिग्धमित्यर्थः । नैसर्गिकेति स्वाभाविका या अवस्था भावे क्विप् । अवस्थितिरेकस्यैव घटस्यामस्य श्यामावस्था पकस्य रक्तावस्थेव सैषानन्दस्य मीमांसा भवतीत्युपक्रम्य ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्द इति 'गणितानन्दकं बृहत्' ।

'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।
आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन' ॥

इति श्रुत्यन्तरे पूर्णानन्दो हरिरिति गणितागणितरूपा नैसर्गिकावस्था भक्तमनोरथपूरणाय तज्ज्ञापितं भेदमादाय । तदुक्तं ज्ञेयनिरूपणे गीतायां त्रयोदशाध्याये 'अविभक्तं च भूतेषु विभक्तमिव च स्थितम्' इति । पुरुषोत्तमयोगाध्याये च 'अक्षरादपि चोत्तमः' इत्युक्त्वा ।

'यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत' ॥

ब्रह्मवादेति सर्वः क्षरः ब्रह्म पुरुषोक्षररूप इति वाद इत्यर्थः । ननु नैवं वक्तुं युक्तम् । अद्वैतश्रुतिविरोधात् । तथाच निर्गुणस्योपाधिवशात् इच्छास्वीकारः ब्रह्मणो रजउपाधिकात् सृष्टिरिति तथायमपीच्छादिसत्त्वाद्येकतरोपाधिकः परापरभावो न तु नैसर्गिक इति शङ्कते स्म न च सृष्टीति । यथा 'सुदीप्तात्पावकात् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः । तथाक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति' इति सृष्टिकथनोत्तरं 'दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः' इतिकथनात् । तथा भावः परापरभावः । पूर्वभावस्येति निर्गुणभावस्य विगतत्वेन 'अथ परा यया तदक्षरमधिगम्यते' इत्येवं विद्याविषयत्वेन धर्मेण गुणेन निरूपणाद्गृहीतत्वेन सगुणस्याव्ययत्वाभावाङ्गीकारेण 'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मम् । तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः' इति । अत्र भूतयोनिपदादपि तस्याव्ययत्वाभावात् । यद्वा तदानीमदृश्यत्वादिधर्मनिरूपणात् तस्य वीतत्वेन । ननु न विद्याविषयत्वादिधर्माः सगुणत्वापादकाः स्वाभावाभावरूपत्वेन धर्माणामधिकरणात्मकत्वादिति चेन्न सत्यं ज्ञानमिति निश्वस सर्वज्ञ इति श्रुतिं न निश्वसेत् ज्ञानरूपधर्माभावेपि सर्वज्ञत्वविरोधः अतो नैयायिकोक्तयुक्तिमत्ताऽभावस्याधिकरणात्मकता । किंच कश्चिदयः क्षरात्परतरः पर

भाष्यप्रकाशः ।

मित्यक्षरविशेषणविरोधापत्तेः । न चाक्षरभावानन्तरं तद्विशेषणमिति वाच्यम् । तथासति पूर्वमक्षरस्य तथाभावे जन्यत्वापत्तेः । न चेष्टापत्तिः । अश्रौतत्वात् । अतस्तथात्वस्य नैसर्गिकत्वं मन्तव्यम् ।

रश्मिः ।

इति पाठः तत्राधः क्षरः सर्वभूतात्मको भवति ततः परतरः पर इत्यक्षर उक्तः परतमः पुरुषोत्तमो भक्तमनोरथपूरकोस्त्येव तमब्विधायकव्याकरणप्रामाण्यात् । तथा चाक्षरसृष्टिनिरूपणानन्तरं पुरुषनिरूपणेपि चतुर्थपादे पुरुषस्याक्षरपरत्वोक्तेः सृष्टिकथनोत्तरमित्यादि न शङ्क्यम् । पूर्वमिति सर्वकारणेभ्यः पूर्वम् । अश्रौतेति सत्यं ज्ञानमनन्तमिति श्रुतौ सत्यत्वप्रतिपादनात् सत्यमबाधितमिति गोपालतापिनीये त्रैकालिकाबाधितम् । 'तदाहुरक्षरं ब्रह्म सर्वकारणकारणम्' इति कार्यलक्षणवाक्यं तु पौराणं मतमिति ध्वनितम् । किंचैवं पुरुषनिरूपकश्रुत्यनन्तरं एतस्माज्जायते प्राण इत्यादिभिः सृष्टिः पुनरुक्ततां भजतेऽक्षरात्सृष्टेः प्रथममुण्डके श्रावणात् तस्याश्च 'यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते' इत्यादिना द्वितीयमुण्डकेनुवादाद्दिव्य इत्यादिश्रुत्यनन्तरमेतस्माज्जायते प्राण इति श्रुतावेतच्छब्देन समीपतरवर्तिनः पुरुषस्य परामर्शात् । न च पुरुषावतारः स इति न पुनरुक्तिरिति शङ्क्यम् । 'अक्षरात्परतः परः' इत्यनयाक्षरात्परस्य पुरुषत्वोक्तेरक्षरजन्यपुरुषावतारस्य ग्रहीतुमशक्यत्वात् । मम मते तु पुरुषाक्षराभ्यां सृष्टिरिष्टैव 'ता वां वास्तून्युष्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः । अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि' इति श्रुतेः । अत्र वेदलोकातीतरसात्मकब्रह्मस्वरूपभूता सृष्टिः सा अक्षरात्परतः परस्मात्पुरुषात्संभवतीति न पुनरुक्तिः । तथाहि सांख्यधर्माभिलापार्थं ब्रह्मविद्यान्तर्गतं यावद्विषयवाक्यं तावद्भाष्येऽथ परा यया तदक्षरमित्यादिसृष्टिमाहेत्यन्तमुक्तम् । यस्मिन् द्यौः पृथिवी चान्तरिक्षमित्यादिश्रुतिम् । तत्राद्रश्यमित्यादौ प्रसज्यप्रतिषेधः । पर्युदासश्चैकदेशिमते न सिद्धान्ते । नच व्याख्यातः भूतयोनिपदं च पुरुषाक्षरयोर्व्याकरणीयमुभयोरग्रे भूतयोनित्वेन निरूपणात् तत्रत्यभाष्यीयेणादिपदेन यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः संभवन्ति । यथा सतः पुरुषात्केशलोमानि तथाक्षरात् संभवतीह विश्वमित्यादिश्रुतिसंग्रहः । एतासामर्थाः एतद्भाष्ये स्फुटाः । अग्र इति द्वितीयमुण्डकारम्भे 'यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः । तथाक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति' इति पूर्वोक्ताक्षरसृष्टिमनूद्य अथवा कर्ममार्गस्य प्रथममुण्डके उद्देशतः कथनात् कर्मोपयोगि ब्रह्म ब्रह्मिष्ठो ब्रह्मेत्यादौ विवक्षितं तदेवानूद्य 'दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः' इत्याद्युक्त्वा 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथ्वी विश्वस्य धारिणी' इत्यनया भक्तेच्छया सृष्टिं निरूप्य तस्माद्विराडजायत' इतिश्रुतेर्विराडुत्पत्तिवारणाय तद्रूपविलक्षणरूपपूर्विकां स्वेच्छया सृष्टिं प्रसिद्धां वक्तुम् ।

'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः ।
वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथ्वी ह्येष सर्वभूतान्तरात्मा' ॥

इत्यनया पुरुषरूपमुक्त्वा पुनः 'तस्मादग्निः समिधो यस्य सूर्यः सोमात्पर्जन्यौषधयः पुमान् रेतः सिञ्चति योषितायां बह्वीः प्रजाः पुरुषात् संप्रसूताः' इत्यादिभिः सृष्टिमाहेति भाष्यार्थः । श्रुत्यर्थस्तु पञ्चाग्निविद्यासाधनाध्याये वक्ष्यते तत्र पञ्चाग्निद्वारेण संसरन्ति याः प्रजास्ता अपि तस्मादेव प्रजायन्ते इत्युच्यते तस्मादग्निरिति तस्मात् पुरुषात् प्रजावस्थानविशेषरूपोग्निः स निःसृष्यते । समिधो यस्य सूर्यः समिध इव समिधः सूर्येण हि विद्युल्लोकः समिध्यते । ततो विद्युल्लोक-

भाष्यप्रकाशः ।

न चैवं रूपभेदस्य नैसर्गिकत्वेनाद्वितीयश्रुतिविरोधापत्तिरिति वाच्यम् । एवं भेदभावेऽपि द्वितीयत्वानङ्गीकारात् ब्रह्मत्वेनाभेदात् । ब्रह्मणश्च विरुद्धधर्माश्रयत्वेनैवंभावेप्यभेदानपायात् । इदं च अहिकुण्डलसूत्रे सेत्स्यति । नच पूर्ववद्वेति सूत्रोक्तन्यायेन सृष्टीच्छोत्पत्तिसमकालमेवेपदानन्दतिरोभावाचदानीमक्षरत्वं परापरभावश्चेति वाच्यम् । तथासतीच्छाया इवाक्षरस्यापि भवनं श्राव्येत, प्राणमेव प्राणो भवतीतिवत् सस्रक्षमक्षरं भवतीति चोच्येत । किंच पूर्ववद्वेत्येकदेशिमतेप्यरूपवदादिपश्चसूत्रीसिद्धमेव प्राथमिकं रूपम् । तच्चादृश्यत्वादिगुणकमेवेति न तदानीं तस्य तादृशभावापत्तिसिद्धिरित्यक्षरभावस्य नैसर्गिकत्वं विना न श्रुतीनां सामञ्जस्यम् । अत एव निबन्धेपि ।

रश्मिः ।

निष्पन्नात्सोमात् पर्जन्यो भगवानिन्द्रो द्वितीयोग्निः ओषधयः पृथिव्यां प्रसूताः तत्रौषधिभ्यः संभूते पुरुषाग्नौ तृतीये रेतःसहिते पुमान् रेतो योषितायामित्यादि स्पष्टम् । इति शंकरभाष्ये । नन्वेतावत्याधेयधर्मनिरूपिकाविषयवाक्यमत्र इयं ब्रह्मविद्या सांख्यविद्या वेति संदेह उक्तः न त्वथ परा यया तदक्षरमधिगम्यते यत्तदद्रश्यमग्राह्यमित्यादि धीरा इत्यन्ते विषयवाक्ये शंकराचार्यवत् किमयं अदृश्यत्वादिगुणको भूतयोनिः प्रधानं स्यादुत शारीर आहोस्वित् परमेश्वर इति संदेह उक्तस्तत्कुत इति चेन्न शंकराचार्यमते संशयो न घटते उपक्रमोपसंहाराभ्यां ब्रह्मविद्यात्वनिश्चयेन तद्विषयस्य परमेश्वरत्वं न प्रधानत्वं नापि शारीरत्वम् । अस्माकं तूपक्रमोपसंहाराभ्यां ब्रह्मविद्यात्वनिश्चयेपि मन्दमध्यमयोः संदेहो भवेत् ब्रह्मविद्यैषा सांख्यविद्या वेति सांख्यधर्माभिलापात् । अतः संदेहोपपत्त्यर्थमारूपोपन्यासं सूत्रमथ परेत्यारभ्य स्वेच्छासृष्टिनिरूपकश्रुतिपर्यन्तं विषयवाक्यं यस्मिन् द्यौरिति श्रुतेराधारधर्मनिरूपिकायाः पूर्वं युक्तमाधेयधर्मनिरूपकत्वात् । ननु नायं संदेहो घटते सांख्यधर्मापलापप्रसङ्गापत्तेः । इष्ट इति चेन्न सर्वविद्याप्रतिष्ठामिति ब्रह्मविद्याविशेषणात् सांख्यविद्यायाश्च सर्वविद्यान्तर्गतत्वात् । मैवं, सांख्यविद्याया सर्वविद्यान्तर्गतत्वाभावात् । 'मार्गास्त्रयो मया प्रोक्ताः' इति भगवद्वाक्यात् । तासु कर्मविद्या प्रथममुण्डके उक्ता 'मन्त्रेषु कर्माणि कवयो यान्यपश्यंस्तानि त्रेतायां बहुधा सन्ततानि तान्याचरथ नियतं सत्यकामा एष वः पन्थाः सुकृतस्य लोके' इतिश्रुतेरत्र कर्मविद्या बहुधा सन्तताः तपःश्रद्धे ये ह्युपवसन्त्यरण्ये इत्यनया यतिवानप्रस्थविद्याश्चोक्ताः । द्वितीयमुण्डके कर्मविद्यां हित्वा ताः प्रथयांचक्रिरे यथा सुदीप्तात्पावकादित्यादिभिः । अत्र सांख्यविद्याभ्रमविषयसांख्यं सिद्धान्तेनोत्तरकालीनबाधदर्शनात् । अत्त इति । तथा षष्ठ्या लुक् ईषदानन्दतिरोभावप्रकटानन्दत्वं प्रकारस्तस्य तु अवधारणेनास्यादृश्यत्वादिगुणकस्य भूतयोनेर्नैसर्गिकत्वं मन्तव्यम् । तथा तु अस्येति पदच्छेदः । अस्य भूतयोनेस्तथाप्रकारस्य तु निश्चयेन नैसर्गिकत्वं मन्तव्यमिति योजना । एवं भेदेति । पूर्वोक्तप्रकारकाभेदेपि नन्वक्षरत्वेन पुरुषत्वेन च भेदात् कथमभेद इत्यत आहुः ब्रह्मत्वेनेति । नन्वेतादृशमद्वैतं न युक्तम् । घटपटादीनामपि द्रव्यत्वेनाभेदात् तत्राहुः ब्रह्मण इति । इदं चेति तृतीयाध्याये सेत्स्यति द्वितीयपादे । व्यासपादोक्तमतान्तरेप्याहुः नच पूर्वेति । सृष्टीच्छोत्पत्तीति पूर्ववद्वेति सूत्रे धर्मसृष्टीच्छास्थाने । श्राव्येत इति स ईक्षां चक्रे इतिवत्सोक्षरं चक्रे इति श्राव्येत । तस्येति सिसृक्षोः । न श्रुतीनामिति वरेण्यं परं विज्ञानादिस्युक्तात्तदेतदक्षरमिति श्रुतिः येनाक्षरं पुरुषं वेदेति श्रुतिः । सत्यं ज्ञानमनन्तं ब्रह्मेति ब्रह्मलक्षणलक्षितस्य यो वेद निहितं गुहायामिति ज्ञानं

भाष्यप्रकाशः ।

इच्छामात्रातिरोभावस्तस्यायमुपपद्यते ।
ब्रह्मकूटस्थाव्यक्तादिशब्दैर्वाच्यो निरन्तरः ॥
सर्वावरणयुक्तानि तस्मिन्नण्डानि कोटिशः ।
मूलाविच्छेदरूपेण तदाधारतया स्थितः ॥
प्रभुत्वेन हरेः स्फूर्तौ लोकत्वेन तदुद्भवः ।
अन्तर्याम्यवतारादिरूपे पादत्वमस्य हि ।
हंसाकृतित्वकथने पुच्छत्वं परमात्मनः ॥
तदुपासनया ज्ञानात्परमात्मत्वमस्य हि ।
ज्ञानमार्गे त्वेतदेव सेव्यं कृष्णस्ततोधिकः ॥

रश्मिः ।

विधाय सोश्नुते इत्यनया विपश्चिद्रूपकिंचिद्धर्मेण विशेषणेन प्रकटानन्दत्वं द्योतितमिति ब्रह्मविदाप्नोति परमिति श्रुतिरेतासां श्रुतीनां न सामञ्जस्यम् । एवमत्रार्थः । पूर्वकारिकायाम् ।

'आनन्दांशतिरोभावः सत्त्वमात्रेण तत्र हि ।
मुख्यजीवस्ततः प्रोक्तः सृष्टीच्छावशगो हरिः' ॥

इत्येतस्याम् । अग्रे अहमेवं भविष्यामीतीच्छामात्रेणान्तःसमुत्थितसत्त्वेनानन्दांशस्तिरोहित इव भवत्यतो मुख्यजीवशब्दवाच्यो भवतीत्युक्तम् । तथा सति जीवत्वमेव स्यादानन्दांशस्य तिरोहितत्वाद्यथा महदादीनामित्याशङ्क्याहुः इच्छामात्रातिरोभाव इति । इच्छायां प्रविष्टायां कार्यव्यापृत्या तिरोभाव इवोच्यते वस्तुतस्त्वानन्दमय एव । वाचकैरपि तस्य न जीवत्वमित्याहुः ब्रह्मेति । आदिशब्देनासत्सत्तमशब्दादयो गृह्यन्ते तथा सति पुरुषोत्तमाद्भिन्नो भविष्यतीत्याशङ्क्याहुः निरन्तर इति । अन्तररहित इत्यर्थः । तस्यैव कारणत्वमाहुः सर्वावरणेत्यादि । तदाहुरक्षरं ब्रह्म सर्वकारणकारणमिति वाक्यात् । अक्षरस्य पुरुषोत्तमे भेदेन प्रवेशे प्रकारमाहुः मूलाविच्छेदेति । मूलेन श्रीपुरुषोत्तमेन सहाविच्छिन्नतया तिष्ठति न तु कार्यत्वेनेत्याहुस्तदाधारतयेति एषा स्थितिः सर्वदा । कदाचित्पुरुषोत्तमभेदाविर्भवति तदाक्षरमपि बहुधा भवतीत्याहुः प्रभुत्वेनेति । प्रभुर्वैकुण्ठवासी लोको वैकुण्ठः जीवजडाकारेण प्रादुर्भवतीत्यर्थः । अत एव वैकुण्ठवासिनो मुक्ताः । एतच्च द्वितीयस्कन्धनवमाध्याये स्फुटम् । अक्षरमम्बरान्तधृतेरित्यधिकरणेऽक्षरस्य ब्रह्मवाचकत्वनिर्धारात् न द्वैतम् । अन्तरुपासनायामन्तर्यामिरूपेण प्रकटो भवति तदा सद्योमुक्ता ज्ञानिनस्तच्चरणारविन्दं विशन्ति इत्यक्षरस्य पादत्वम् । तथावतारेपि 'चैचे च सात्वतपतेश्चरणं प्रविष्टे' इति वाक्यात् । आदिपदेनाधिरूपेष्वपि आनन्दमयनिरूपणे हंसाकृतित्वकथनं तत्र ब्रह्म पुच्छं प्रतिष्ठेति ब्रह्माक्षरमानन्दमयस्य पुच्छमिति निःसंदेहाय परमात्मपदम् । एवमनेकभावापन्नमपि ज्ञानमार्गेऽक्षरत्वेनैव सेव्यमित्याहुः तदुपासनयेति । प्रथमतस्तस्यैव निदिध्यासनेन यज्ज्ञानमुत्पद्यते तेनाक्षराधिकारिणः परमात्मत्वमेव न त्वक्षरमात्रतेति भगवद्वचनादवगम्यते ते प्राप्नुवन्ति मामेवेति हिशब्दार्थः । भक्तिमार्गे त्वारम्भत एव परमानन्दः ज्ञानमार्गे त्वन्तत इति विशेषः । तथापि ज्ञानमार्गेऽक्षरमेव सेव्यम् । एवमभेदेपि वैलक्षण्यं निरूप्य यदर्थमेतन्निरूपितं तदाह कृष्णस्ततोधिक इति । अक्षरादपि चोत्तम इतिवाक्यं समर्थितं भवतीति निष्कर्षोऽस्याः स्थितिः । ज्ञानक्रियाय ज्ञानाद्विरति पाठः ।

प्रकटानन्दः पुरुष इति । ब्रह्मविदाप्नोति परमित्यत्रैव तथा निर्णयात् । तस्मादक्षरस्यत्वाविगुणकः परमात्मैव ॥ २१ ॥

भाष्यप्रकाशः ।

इत्युक्तमतोऽनुक्तमेवादरणीयमिति दिक् । एवं भेदप्रत्ययस्य श्लिष्टस्पष्टत्वस्य तिरोहित-रूपत्वस्य च सांख्यधर्मत्वं निराकृतम् । अतः परं पूर्वमवस्याभेदस्यानुक्तत्वादत्र तदङ्गीकारे प्रतिज्ञान्तरस्य निग्रहस्थानस्यापत्तिरित्येतन्निराकुर्वन्ति ब्रह्मविदित्यादि । परमिति शब्दान्त-रेणाग्रे गणितागणितानन्दत्वकथनेन च तथा निर्णयादित्यर्थः । तथानन्दमयसूत्रस्य द्वितीयवर्णक उपपादितम् । अतो न दोषापत्तिरित्यर्थः । सिद्धमाहुः तस्मादित्यादि ॥ २१ ॥

रश्मिः ।

नन्वीक्षदित्यादिभाष्यप्रामाण्यसिद्धमप्यक्षरधियामिति सूत्रेऽक्षरपुरुषोत्तमयोः लोकतदधिष्ठातृत्वेनोक्तेः 'सत्यं ज्ञानमनन्तं ब्रह्म' 'सह ब्रह्मणा विपश्चिता' इति श्रुतिभ्यां विपश्चित्त्वं वैशिष्ट्येन पुरुषत्वं तदपि विशिष्टं शुद्धाद्व्यातिरिच्यते इति नैयायिकोद्घोषात् अक्षरमेवेति दूरनिरस्तेषदानन्दतिरोभावेनेत्यादि-भाष्यवार्तेति चेन्न । सत्यं ज्ञानमनन्तमानन्दं ब्रह्मेति सर्वोपनिषच्छ्रुतेरानन्दविशेषणमनन्तमितीति भाष्य उक्तत्वाच्चाक्षरधियामिति सूत्रे निरानन्दार्थस्याग्रहणात् । नैयायिकोद्घोषस्य पुरुषाक्षरयोरभेद आनु-गुण्यात् । मुण्डकेप्यक्षरपुरुषयोर्निरूपके आधारं यस्मिन् द्यौरित्यादिना निरूपयन्ती आनन्दरूपम-मृतं यद्विभाति इति न्यरूपयत् । ननु सत्यपदार्थस्तु सत्यब्राह्मणे बृहदारण्यकेस्ति । तद्वै तदेतदेव तदा-स सत्यमेव स इति, तत् हृदयं ब्रह्म हृदयब्राह्मणस्योक्तत्वात् । तदुक्तविधं एतदेवं वक्ष्यमाणं प्रकारं तदेव हृदयं ब्रह्माऽस सत्यमेव ससाधक इति अत्र सच्च त्यच्च सत्यं पञ्चभूतात्मकमाधिदैविकं तत्त्वं हिरण्यगर्भात्मकमिति साध्वर्थे यद्विधायकव्याकरणस्मृतिबाधः पूर्वतन्त्रे सिद्ध इति चेन्न तद्धृदयं वै निश्चयेन ब्रह्मैतदेव जगदेव तदा सृष्टिकाल आस सप्रपञ्च इत्यर्थे तत्र साधुरिति व्याकरणस्मृतेर्विरोधा-भावात् । एवमग्रे ता आपः सत्यमसृजन्तेत्यत्रापि सत्यपदार्थः । एवं चेषदानन्दतिरोभावेनानन्दमीमां-सोक्तगणितानन्दसद्ब्रह्माक्षरमुच्यते मुण्डकश्रुतेः प्रकटानन्दः पुरुष इतीति भाष्यार्थः । एवं भेदेति 'अक्षरात् परतः परः' इत्यक्षरपुरुषयोर्भेदः । सच सांख्ये 'प्रकृतिपुरुषयोरन्यत्सर्वमनित्यम्' इति कापि-लसांख्यप्रवचनसूत्रेण सांख्यमते प्रकृतिपुरुषधर्मत्वं तदक्षरपदस्य प्रकृतौ शक्त्यभावान्निराकृतं अक्षरं पुरुषं वेदेति श्रुतेः अक्षरसृष्टिविषये पुरुषः श्लिष्यते पुरुषसृष्टिविषयेऽक्षरं श्लिष्यते तत्र प्रकृते पुरुष-धर्मसंसर्गः । 'नैरपेक्ष्येपि प्रकृत्युपकारेऽविवेको निमित्तम्' इति सूत्रेण सांख्यमतेऽतः प्रकृतिसृष्टिविषये स चाप्यक्षरपदस्य प्रकृतौ शक्त्यभावान्निराकृतम् । अग्निर्मूर्धेति रूपं तत्तिरोहितं तद्रूपं ययोस्तत्त्वं प्रकृतिपुरुषयोरन्यतरस्येति सांख्यमते तथयाश्रुतसंभवेन निराकृतम् । विश्वकायस्यैतद्रूपमिति वक्ष्य-माणभाष्यात् । पूर्वमिति येनाक्षरं पुरुषं वेदेति प्रथममुण्डके । दोषेति दोषस्य प्रतिज्ञान्तरस्यापत्तिः । तस्मादित्यादीति इदं शाब्दज्ञानं न त्वनुमितिः तं त्वौपनिषदं पुरुषं पृच्छामीति श्रुतेः । अनुमितिस्तु सौगतेऽनुसारस्याय पूर्वमुक्ता । एतच्च ज्ञानं यदा विश्वकायविषयमपि विषयवाक्ये सृष्टिवाक्याना-मभिनिवेशात् । प्रस्थानरत्नाकरे सात्त्विकमित्युक्तम् । ननु पुरुषाक्षरयोरभेदज्ञानं भेदकघटितमिदं न विश्वविषयकमिति चेन्न एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानात् पुरुषाक्षरयोरेकत्वात् येनाक्षरं पुरुषं वेदेति श्रुतेः । तदेकमेव चेत्सर्वं भवेत्तदोपपद्यते यथा सुवर्णकार्यं सुवर्णं च सुवर्णं सुवर्णज्ञानेन तत्कार्यं ज्ञातं भवत्येवं चाक्षरपुरुषौ तत्कार्यं च सर्वमक्षरपुरुषाविति तच्छाब्दज्ञानेन तत्कार्यं ज्ञातं

रश्मिः ।

भवत्येव । पटे ज्ञाते तन्तव इव 'तन्तुष्वङ्ग यथा पटः' इति श्रुतेः । न च विरुद्धो दृष्टान्तः कार्यज्ञानेन कारणज्ञानात् । कारणज्ञानेनैकविज्ञानरूपेण कार्यज्ञानस्य विवक्षितत्वादिति वाच्यम् । कार्यकारणवस्त्वैक्यमर्शनोत्तरकालिककार्यज्ञाने कारणज्ञानत्वेप्यक्षतेः । न च कार्यं ब्रह्मेति ज्ञानवत् पटस्तन्तव इति प्रत्ययापत्तिरिति वाच्यम् । इष्टापत्तेः । आतानवितानत्वातिरिक्तस्य तन्तुभ्यः पटे विशेषस्याभावात् । अत एव श्रुतय एकविज्ञानेन सर्वविज्ञाने प्रकारप्रबोधिकाः । पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम् । एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य । आविः संनिहितं गुहाचरं नाम महत्पदम् । अत्रैतत्सर्वमर्पितमेजत्प्राणन्निमिषच्च यत् । एतज्जानीथ सदसद्वरेण्यं परं विज्ञानाद्यद्वरिष्ठं प्रजानां यदर्चिमद्यदणुभ्योणु च यस्मिँल्लोका निहिता लोकिनश्च तदेतदक्षरं ब्रह्म स प्राणस्तदु वाङ्मनः तदेतत्सत्यं तदमृतं तद्वेद्धव्यं सोम्य विद्धीति । अर्थस्तु एकविज्ञानेन सर्वविज्ञाने प्रकारमाह पुरुष एवेति पुरुषोक्षरात् परः गुहायां हृदयाकाशे अविद्याग्रन्थिं ग्रन्थिवद्दृढीमातामविद्यावासनां विकिरति विनाशयति इह जीवन्नेव न मृतः अरूपमक्षरं केन प्रकारेण विज्ञेयमित्याह आविरिति बहिराविःसत् हृदयाद्बहिराविर्भूतं सत् पुनर्गुहायां निहितम् ।

'यथा दारुस्थितो वह्निः प्रकटो वा विशेन्न हि ।
तावदन्तः स्थितो वह्निर्न दारुदहनक्षमः' ॥

इति सुबोधिनीकारिकात्रानुसंधेया । तदा गुहाचरं नाम ब्रह्म शब्दितं वा भवति । महत्पदत्वमाह अत्रेति । अत्र महति पदे एजल्लोकत्रयात्मकं विराट्पुरुषात्मकं सर्वमेजत् एजृ कम्पने भूलोकिभयात्सर्वं कम्पते प्राणन्नक्ष आदिभिः भुवर्लोकि सर्वं सर्वान् प्राणिति निमिषत् स्वर्गलोकि सर्वं सर्वान् मिषति स्पर्धते मेषति सिञ्चति पृथ्व्यादिभिः मिष स्पर्धे तुदादिः, मिष सेचने भ्वादिः सेटौ । एतदिति महत्पदे पुरुषे विश्वकायं सर्वमर्पितं यूयं जानीथ हे शौनक । भेदप्रत्ययानुपपत्तिमाशङ्क्याह सदसदिति सर्वोपनिषदि सदसती मायेति तत्संवलितं सदसत् । अत एव वरेण्यं स्वीयत्वेनाङ्गीकर्तुं योग्यं मायान्तःपातिभिः एतत्कार्यकारणवस्त्वैक्यमर्शनानन्तरं जातं ज्ञानं विज्ञानं क्षरविषयकं तस्मात्परं यत्पुरुषोत्तमविषयकं भक्तिद्वारा ज्ञानं तत्प्रजानां वरिष्ठं कृतकृत्यतासंपादकम् ।

'यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥
इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ ।
एतद्बुध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भारत' ॥

इति पञ्चदशाध्याये पुरुषोत्तमयोगाख्ये गीता ।

'सर्वदा सर्वभावेन भजनीयो व्रजाधिपः ।
स्वस्यायमेव धर्मो हि नान्यः क्वापि कदाचन' ॥

इति चतुःश्लोकी । क्षरपुरुषोत्तमावुक्त्वाऽक्षरमाह यदर्चीति । वेद्धव्यमिति आघाताख्यसंयोगं कर्तुं योग्यं व्यध ताडने ताडनमाघाताख्यसंयोगः अग्रे वेधनमुक्तम् । धनुर्गृहीत्वेत्यारभ्य नित्यश इत्यन्तम् । अग्रे यस्मिन् द्यौरिति द्युभ्वाद्यायतनं स्वशब्दादित्यधिकरणे चिन्तितम् । प्रकृतमधुनानुसर्यते तच्छाब्दज्ञानं चेतसापि जन्यते एषोणुरात्मा चेतसा वेदितव्य इति मुण्डकश्रुतेः । सुषुप्तेर्ग्राहकस्य चेतसः करणत्वमक्षरस्यापि तत्तुल्यत्वात् सुखापि । कठवल्ल्याम् ।

## विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २२ ॥

ननु पूर्वपक्षन्यायेन ब्रह्मविद्याख्यायामपि स्मृतिर्ब्रह्मविद्यैवाऽस्तु । है

भाष्यप्रकाशः ।

**विशेषणभेदव्यपदेशाभ्यां च नेतरौ** ॥ २२ ॥ सूत्रमवतारयन्ति नन्वित्यादि । स्मृतिर्ब्रह्मविद्यैवेति । स्मृतिरेव ब्रह्मविद्येति योजना । अयमर्थः । पञ्चशिखवृत्तावव्यक्तपर्यायेषु

रश्मिः ।

'एष सर्वेषु भूतेषु गूढात्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' ॥

इति श्रुतौ बुद्धेः करणत्वोल्लेखात् । हेतौ तृतीयापक्षेपि हेतोः सव्यापारत्वे करणत्वमस्त्येव करणत्वस्य सव्यापारनियतत्वात् । आत्मा मनसा संयुज्यते मन इन्द्रियेऽधितिष्ठति इन्द्रियमर्थेन संयुज्यते ततः शब्दातिग्रहेण श्रावणं प्रत्यक्षं शृण्वन् श्रोत्रं भवतीति तथा च श्रुत्यन्तरं कठवल्ल्याम् । 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' इति मनसइन्द्रिये अधिष्ठानं 'अधिष्ठाय मनश्चायं विषयानुपसेवते' इति गीतायाः । किंच प्रजापत्यात्मककालेनापि तच्छ्रावणं ज्ञानं जन्यते । शाकल्यब्राह्मणे आदित्यः कस्मिन् प्रतिष्ठित इति चक्षुषीति कस्मिन्नु चक्षुः प्रतिष्ठितं भवतीति रूपेष्विति चक्षुषा हि रूपाणि पश्यति कस्मिन् रूपाणि प्रतिष्ठितानि भवन्तीति हृदय इति हृदयेन हि रूपाणि जानातीति श्रुतेः । एष प्रजापतिर्यद्धृदयमिति हृदयब्राह्मणश्रुतेः । 'संवत्सरो वै प्रजापतिः' 'द्वादशमासाः संवत्सरः' इति श्रुतिभ्याम् । श्रावणं ज्ञानमपि रूपविषयकं नीलमुत्पलं भवत्येवेत्यादौ । ज्ञानाकारस्तु पुरुष एवेदं विश्वमिति द्वितीयमुण्डकश्रुत्युक्तः । अक्षरं नास्तीति चेन्न येनाक्षरं पुरुषं वेदेति श्रुतेः विशिष्टं शुद्धान्नातिरिच्यत इति नैयायिकोद्घोषात् । पुरुषाक्षरयोरभेदाश्रयणात् । एकविधमेव च तज्ज्ञानं अव्ययैकभावावगाहित्वात् तदुक्तं गीतायामेकादशस्कन्धे च ।

'सर्वभूतेषु येनैकं भावमव्ययमीक्ष्यते । अविभक्तं विभक्तेषु तज्ज्ञानं सात्त्विकं स्मृतम्' ॥

कैवल्यं सात्त्विकं ज्ञानमिति भगवद्वाक्येषु । गीतायां सर्वभूतेष्विति सति सप्तमी तस्याः समानाधिकरणमर्थः । सर्वभूताधिकरणं कालः तद्वृत्तिरेकभावाव्ययस्तत्कर्मकमीक्षणम् । तेन सूत्रे मणिगणा इव सर्वभूतान्येकभावाव्ययेति ज्ञानं निवारितम् । यद्वा । सूत्रे मणिगणा इव एकभावाव्यये सर्वभूतानां ज्ञानम् । गीतायामन्तर्यामिज्ञानत्वेप्यन्तर्यामी भगवानेवेत्यन्तर्याम्यधिदैवादिष्वधिकरणे स्थितत्वात् । इदमेव च भावाद्वैतम् ।

'कार्यकारणवस्त्वैक्यमर्शनं पटतन्तुवत् । अवस्तुत्वाद्विकल्पस्य भावाद्वैतं तदुच्यते' ॥

इति सप्तमस्कन्धात् । कार्यकारणवस्त्वैक्यमीमांसायां कृतायां पुरुष एवेदं विश्वमिति अनुमितिशाब्दादिरूपविकल्पान्न्यकृत्य सिद्ध्यति मनसैवानुद्रष्टव्यो नेह नानास्ति किंचन इति बृहदारण्यकात् । ततश्चानुमितिश्रावणज्ञानादि भवतु भावाद्वैतं श्रुतावपि । तत्त्वमसीत्यादौ सदेव सौम्येत्युपक्रमेणैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मेत्युपसंहारेण च सर्वस्यात्मत्वस्य श्रावणात् । भाष्ये ब्रह्मविद्यात्वमीमांसनादेवकारेण स्मार्तमतविद्या व्युदस्यते । सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतिः पूर्वं सर्वत्र प्रसिद्धोपदेशादित्यधिकरणे विचारितैवेति न पुनर्वितताक्रियते ॥ २१ ॥

**विशेषणभेदव्यपदेशाभ्यां च नेतरः** ॥ २२ ॥ स्मृतिविशेषणं ब्रह्मविद्येति तत्संगतैवकारेण स्मार्तविद्यात्वं व्यवच्छिनत्ति सोऽसंभवीत्यत एवकारं विशेष्ये स्मृतौ योजयामासुः स्मृतिरेवेति । वस्तुतस्तु यथाश्रुतमेव भाष्यम् । न च ब्रह्मविद्यायां स्मृतिमतविद्यात्वविरोध इति

ब्रह्मणी वेदितव्ये मूर्तं चाऽमूर्तं चेत्यत्र विकारस्यैव ब्रह्मपदवाच्यत्वम्। अतः प्रकृतिपुरुषावेव वाक्यार्थ इति परिहरति। इतरौ न भवतो वाक्यार्थरूपौ। कुतः। विशेषणभेदव्यपदेशाभ्याम्। विशेषणभेदो व्यपदेशश्च ताभ्याम्। अदृश्यत्वादयो गुणा न प्रकृतेर्भवन्ति। सर्वस्यापि तद्विकारत्वात्। न हि घटदर्शनेन मृत्त दृश्यत इति वदितुं युक्तम्। ब्रह्मवादे पुनः सर्वभवनसमर्थत्वाद् ब्रह्मणि

भाष्यप्रकाशः।

नपुंसकलिङ्गस्याऽक्षरपदस्य पाठाद् योनिपदस्योपादानवाचकत्वाद् भूतयोनित्वमव्यक्तलिङ्गम्। अक्षरात् परत्वं च पुरुषलिङ्गम्। अतस्तत्सर्वं यन्कृत्य ब्रह्मविद्यात्वं न स्थापयितुं शक्यम्। कस्मिन् विज्ञात इति प्रश्नवाक्ये कस्मिन् मते विज्ञाते इत्यर्थस्य शक्यवचनत्वादेतस्य सर्वविज्ञानस्य ब्रह्मविद्यालिङ्गत्वाभावात्। नापि ब्रह्मविद्येति समाख्यया। द्वे ब्रह्मणी इति श्रुत्या ब्रह्मपदस्य विकारेऽपि शक्तौ ग्राहितायां तस्या अप्यन्यथासिद्धत्वात्। लिङ्गापेक्षया पञ्चमत्वेनातिदौर्बल्याच्च। अतो लिङ्गबलात् प्रकृतिपुरुषावेव वाक्यार्थ इति परिहरतीत्यर्थः। सूत्रं व्याकुर्वन्ति इतरावित्यादि। व्यपदेश इति व्यपदेशभेदः। आद्यं व्युत्पादयन्ति अदृश्येत्यादि। ननु ब्रह्मवादेऽप्ययं दोषस्तुल्य इति सोऽपि न वदितुं युक्त इत्यत आहुः ब्रह्मवाद इत्यादि। ननु प्रकृतावपि तथा सामर्थ्यमङ्गीक्रियते। अतः परिहारतौल्यान्नैतदपि

रश्मिः।

शक्यम्। तेषां स्मृतीनां ब्रह्मविद्यास्मरणपूर्वकत्वाद्ब्रह्मविद्यात्वात् न चैवं षट्सु शास्त्रेषु वेदान्तसांख्ययोरेकत्वापत्तिरिति वाच्यम्। स्मार्तमतविद्यायाः श्रौतत्वे तात्पर्येण तयोरेकत्वानापादकत्वात्। लिङ्गेन निर्णिनीषन्त आहुः अयमर्थ इति। पाठादिति वेदान्ते कूटस्थोक्षर इति उक्त इति पुंलिङ्गाक्षरशब्द इति भावः। भूतेति 'यद्भूतयोनिं परिपश्यन्ति धीराः' इत्यत्र भूतयोनिपदम्। अव्यक्तेति 'प्रधानाज्जगज्जायते' इति कापिलसांख्यप्रवचनसूत्रात्। अक्षरादिति। अव्यक्तात्परत्वम्। 'असङ्गोयं पुरुषः' इति सूत्रात्। ब्रह्मविद्यात्वमिति स्मार्तमतनिरपेक्षब्रह्मविद्यात्वम्। तेन श्रुतियद्यपि ब्रह्मविद्येति तथापि श्रुतिर्लिङ्गरूपेति नेयं लिङ्गबाधिका। द्वे ब्रह्मणी इति भाष्यं विवरामासुः नापीति। द्वे ब्रह्मणी इति श्रुत्या ब्रह्मविद्येति स्मार्तमतविद्यायां समाख्या यौगिकः शब्दः ब्रह्मण इति विद्येति च विद्यापदं प्रकृतिपदसमभिव्याहारात् स्मार्तमतविद्यावाचकं तथा हेतौ तृतीया हेतुभूतया विकारे मूर्तामूर्तरूपे तस्याः समाख्यायाः अन्यथालिङ्गत्वेन प्रकारेण बृहदारण्यके मूर्तामूर्तब्राह्मणे मूर्तं परिच्छिन्नपरिमाणकम्। अमूर्तं वायुश्चान्तरिक्षं च। ननु लिङ्गत्वं समाख्यात्वं च व्यधिकरणं कुतः समानाधिकरणकमत आहुः लिङ्गेति। पञ्चेति। श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां प्रमाणानां पञ्चत्वेन। लिङ्गापेक्षया वाक्यप्रमाणयोर्दौर्बल्यम्। स्थानसमाख्ययोरतिदौर्बल्यं संनिहितत्वासंनिहितत्वाभ्यां तदुक्तमेतेषां समवाये पारदौर्बल्यमिति। सोपीति ब्रह्मवादोपि ब्रह्मणोऽभिन्ननिमित्तोपादानत्वेन सर्वस्यापि तद्विकारत्वमिव सर्वस्य ब्रह्मपरिमाणत्वाद्घटदर्शनेन मृद्दर्शनवत्सर्वपरिमाणदर्शनेन ब्रह्मदर्शनापत्त्या न वदितुं युक्तः परिणामिनित्यतयेति 'प्रधानाज्जगज्जायते' 'प्रकृतिपुरुषयोरन्यत्सर्वमनित्यम्' इति कापिलसांख्यप्रवचनसूत्राभ्याम्। प्रकृते-

विरोधाभावः । न हि नित्यं सदैकरूपमविक्रियमाणं च भवितुमर्हति । सर्वज्ञत्व-धर्मतुल्यत्वे तदेव ब्रह्मेति जितं ब्रह्मवादिभिः ।

यः सर्वज्ञः सर्वविदित्यादयस्तु सुतरामेव न प्रकृतिधर्माः । व्यवधानाच्च न पुरुषसंबन्धः । अक्षरनिरूपण एव पुरुषविशेषणाच्च । येनाक्षरं पुरुषं वेद सत्यमिति । तस्मादक्षरविशेषणानि, न प्रकृतिविशेषणानि नापि पुरुषविशेषणानि सांख्य-

---

भाष्यप्रकाशः ।

ब्रह्मवादलिङ्गमित्यत आहुः न हीत्यादि । भवितुमर्हतीति । प्रधानस्य परिणामिनित्यतयैवाङ्गीकारात् तदेतादृशं भवितुं नार्हति । तथा चोक्तरीत्यैकदेशदर्शने तददृश्यत्वस्याशक्यवचनत्वादेतेनैव प्रकृतिवादव्युदास इत्यर्थः । नन्वेतादृशत्वमेव तस्याः कल्प्यमित्यत आहुः सर्वेत्यादि । जितमिति । सांख्यवादिनः प्रतिज्ञासंन्यासप्रतिज्ञान्तरयोरापाताज्जितमित्यर्थः । अन्यमपि विशेषणभेदमाहुः य इत्यादि । नन्वेतानि पुरुषविशेषणानीति न दोष इत्यत आहुः व्यवधानादित्यादि । अदृश्यत्वसर्वज्ञत्वादयः प्रथममुण्डके, पुरुषनिरूपणं च द्वितीयमुण्डक इति व्यवधानात् तथेत्यर्थः । पुनर्विशेषणान्तरमाहुः अक्षरेत्यादि । तथा चाक्षरनिरूपणे आद्यन्तयोः पुरुषविशेषणदर्शनात् पुरुषात्मकमक्षरमत्राभिप्रेतं, न प्रकृत्यात्मकमतस्तथेत्यर्थः । येनेति वाक्यं

रश्मिः ।

राधोपादानतामन्येषां कार्यत्वश्रुतेः' इति सूत्राच्च तत्प्रधानम् । जितमितीति । न च ब्रह्मलक्षणस्य प्रकृतावतिव्याप्तिरिति वाच्यम् । वेदान्तशास्त्रस्य शब्दत्वात् लोकेनधिगतार्थगन्तृत्वाच्च व्यासस्य शब्दबलविचारकत्वात् । न चैवं बृहदारण्यके चक्षुर्हि वै सत्यं तस्माद्यदिदानीं द्वौ विवदमानावेयातामहमद्राक्षमहमश्रौषमिति य एव ब्रूयादहमद्राक्षमिति तस्मा एव श्रद्दध्यामेति गायत्रीब्राह्मणश्रुतौ चक्षुषः सत्यत्वोक्तेः न शब्दबलविचारः प्रामाणिक इति वाच्यम् । शाकल्यब्राह्मणे अगृह्यो नहि गृह्यते इति सकलेन्द्रियाग्राह्यत्वमुक्त्वा तं त्वौपनिषदं पुरुषं पृच्छामीति श्रुतेः शब्देतिग्रहे प्रामाण्यात् चक्षुषोपि प्रामाण्यम् । श्रुत्योर्विरोधे विकल्पो मनुस्मृतिषु प्रसिद्धः । विवदमानौ विरुद्धं भाषमाणौ एको ब्रूते अहं गजादिवस्त्वदर्शं दृष्टवान् । अथ परो ब्रूते तद्वस्तु तथा न भवतीत्यहमश्रौषमित्येवं एयातामागच्छेताम् । तं त्वौपनिषदं पुरुषमित्यस्याः श्रुतेरर्थस्तु जन्माद्यस्य यतः इत्यधिकरणे कृत एव । प्रतिज्ञेति प्रकृतिपुरुषौ न स्तस्तर्हि पुरुषाक्षरौ स्तामिति प्रतिज्ञासंन्यासः स्वोक्तसाध्यादेरपरेण दूषणे कृते तत्साध्यादेरपलापरूपस्य प्रतिज्ञासंन्यासस्य स्वरूपस्य सत्त्वात् । प्रकृतिपुरुषौ यद्यपि सांख्यसिद्धौ तथापि सांख्यस्य श्रौतत्वाय वेदान्त्युक्तदोषोद्दिधीर्षया पूर्वानुक्तानि यान्यदृश्यत्वादिविशेषणानि तद्विशिष्टतया प्रतिज्ञातार्थस्य प्रकृतिपुरुषरूपस्य कथनात्प्रतिज्ञान्तरं परोक्तदोषोद्दिधीर्षया पूर्वानुक्तविशेषणविशिष्टतया प्रतिज्ञातार्थकथनरूपस्य प्रतिज्ञान्तरस्य स्वरूपस्य सत्त्वात् । पुरुषेति सांख्यमतीयपुरुषविशेषणानीति न विशेषणभेदरूपो दोषः । संनिध्यभावेन वाक्यस्याप्रामाण्यापत्तेर्दूरान्वयदोषाच्च व्यवधानाच्चेति हेतोः पुष्टत्वात्तत्राक्षरस्यमनुद्भाव्य भाष्यमवतारयामासुः पुनरिति । अक्षरस्य विशेषणान्तरम् । तेन भाष्ये पुरुषो विशेषणं पुरुषविशेषणं तस्मात् इति कर्मधारयः । तथा चेति अक्षरनिरूपणे प्रथममुण्डके आदौ ब्रह्मविद्यां सर्वविद्यामित्यत्र ब्रह्मपदं पुरुषोत्तमाक्षरोभयवाचकं येनाक्षरं पुरुषं वेदेत्युपसंहारात् । अन्ते तु येनाक्षरं पुरुषं वेदेति स्पष्टमेव । एवमाद्यन्तयोः पुरुषो विशेषणं तस्य दर्शनात् । अत इति

पुरुषस्य । न हि दिव्यत्वादयो गुणाः पुरुषस्य भवन्ति । न हि तन्मते पुरुषभेदो ध्यङ्गीक्रियते जीवब्रह्मवत् । नच तस्य बाह्याभ्यन्तरत्वम् । सर्वत्वाभावात् । न हि तस्माज्जायते प्राणादिः । तस्मात् पुरुषविशेषणान्यपि न सांख्यपुरुषविशेषणानि । अतो विशेषणभेदः ।

व्यपदेशभेदश्च । ब्रह्मविद्यैवैषेति । स ब्रह्मविद्यां सर्वविद्यामित्युपक्रमे,

---

भाष्यप्रकाशः ।

तु प्रथममुण्डकसमाप्तिस्थम् । ननु पञ्चशिखवृत्तौ पुंलिङ्गस्याक्षरपदस्य पुरुषपर्यायेषु पाठान्नपुंसकत्वमनादृत्य पूर्वत्रापि पुरुष एव ग्राह्यः । तथा सति पुरुषविशेषणानि कुतो न सांख्यपुरुषविशेषणानीत्यत आहुः न हि दिव्येत्यादि । साक्षित्वकैवल्यमाध्यस्थ्यद्रष्टृत्वाकर्तृत्वातिरिक्तधर्मानङ्गीकारात् तथेत्यर्थः । ननु बहुषु कश्चित् तादृशोऽप्यस्तु, को दोष इत्यत आहुः न हि तन्मत इत्यादि । तथा च नानापुरुषाङ्गीकारेऽपि सर्वेषां तुल्यत्वमेव तन्मते, न तु नियम्यनियामकभावादिनोत्कर्षापकर्षावतस्तथाङ्गीकारस्तन्मतभञ्जक इत्यर्थः । ननु दिव्यत्वं दिवि भवत्वमलौकिकत्वं वा । तदुभयमपि व्यापकत्वप्राकृतगुणवैलक्षण्याभ्यामुपपद्यते । एकत्वं च जात्यपेक्षया । शेषास्त्वमूर्तत्वादयः सिद्धान्ते न तुल्या इति कथं ते तत्र नेत्यत आहुः नचेत्यादि । किंचैकत्वस्य जातिप्रयुक्तत्वे सर्वेषां तौल्याद्, दिव्यो ह्यमूर्त इति मन्त्रानन्तरमत्रोक्ता सृष्टिरपि सर्वेभ्यः स्यादिति सापि सांख्ये तथानङ्गीकाराद् विभिद्यते । तथा महदादिक्रमेण तत्र सृष्टिर्न तु प्राणादि-

रश्मिः ।

तस्मादक्षरस्य पुरुषात्मकत्वात् अक्षरविशेषणानि न गुणत्रयसाम्यावस्थारूपायाः प्रकृतेः विशेषणत्वेन प्रकारेण विशेषणानीत्यर्थः । पूर्वत्रेति अक्षरमधिगम्यत इत्यत्राक्षरपदेन पुंलिङ्गेनापीत्यर्थः । तथा सति पुरुषत्वेनाक्षरे गृहीते सति । प्रथममुण्डके पुरुषविशेषणानीत्यादिः । साक्षित्वेति तथाच सूत्राणि कापिलसांख्यप्रवचनसूत्रेषु तु 'असङ्गोयं पुरुषः' इति 'न नित्यशुद्धबुद्धमुक्तस्वभावस्य तद्योगस्तद्योगादृते' 'निर्गुणादिश्रुतिविरोधश्चेतीति' इति । तथेति नहि दिव्यत्वादयो धर्माः पुरुषस्य भवन्तीति भाष्योक्तः प्रकारः । तथेति एकत्वेन पुरुषाङ्गीकारः सांख्यमतभञ्जकः । एकत्वमिति पुरुष इत्यत्रैकत्वम् । ते तत्रेति पुरुषधर्माः सांख्यपुरुषेषु । आहुरिति तेषु सत्स्वपि बाह्यमध्याभ्यन्तररूपपुरुषधर्मस्य विरहमाहुः । भाष्ये । तस्य सांख्यपुरुषस्य स बाह्याभ्यन्तरो ह्यजः इत्यस्यां 'पुरुष एवेदं विश्वम्' इति श्रुत्युक्तं मध्यस्थत्वं ग्राह्यमपि सर्वत्वेति हेत्वनुरोधात् । मध्यस्थत्वमन्तरा सर्वत्वानुपपत्तेः । प्रकृतेः सर्वत्वं न पुरुषस्य 'प्रकृतेराद्योपादानतामन्येषां कार्यत्वश्रुतेः' इति सांख्यसूत्रात् । सृष्टिरिति । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इति श्रुत्युक्तप्राणादिसृष्टिः । तथानङ्गीति 'अनुपभोगेपि पुमर्थं सृष्टिः प्रधानस्योष्ट्रकुंकुमवहनवत्' इति सांख्यसूत्रे पुंसामर्थमित्यपि वक्तुं शक्यत्वेपि सर्वेभ्यः पुरुषेभ्यः सृष्टिर्न 'प्रधानाज्जगज्जायत' इति सूत्रात् । अतस्तथासर्वपुरुषत्वप्रकारेणानङ्गीकारात् सांख्यमताद्विभिद्यते पुरुषादक्षराच्च सृष्टिर्ब्रह्मवादे भिद्यते विशेषेण तु ह्यत्र प्राणादिसृष्टिरिति विभिद्यते कारणभेदे भेदः, कार्यकारणयोर्भेदे विभेदः । नहीति भाष्यं विवरामासुः तथा महदिति । तत्रेति सांख्ये । सृष्टिरिति 'प्रकृतेर्महान् महतोहंकारात् पञ्चतन्मात्राण्युभयमिन्द्रियं स्थूलभूतानि पुरुष इति पञ्चविंशतिगुणाः' इति सूत्रोक्ता सा । नचेति भाष्य-

प्रोवाच तां तत्त्वतो ब्रह्मविद्यामिति मध्ये, तेषामेवैतां ब्रह्मविद्यां वदेतेत्यन्ते । तस्मान्न सांख्यपरिकल्पितौ प्रकृतिपुरुषौ वाक्यार्थः । न हि ब्रह्मा ज्येष्ठपुत्राय स्मृतिरूपां विद्यां वदतीति चकारार्थः ॥ २२ ॥

रूपोपन्यासाच्च ॥ २३ ॥

अग्निर्मूर्धा चक्षुषी इत्यादिरूपं न हि प्रकृतिपुरुषयोरन्यतरस्य संभवति ।

---

भाष्यप्रकाशः ।

क्रमेण, न वा सह, न वा ततः साक्षात् अतोऽपि तथेत्यर्थः । एवं विशेषणभेदरूपं दूषणं व्युत्पादितम् । द्वितीयं व्युत्पादयन्ति व्यपदेशेत्यादि । तथा च यदि सांख्यमतविद्याऽत्राभिप्रेता स्यात् तदा त्रिषु क्वचित् सांख्यविद्यामिति तत्त्वविद्यामिति वा वदेत् । अतो विद्याव्यपदेश-भेदादपि तथेत्यर्थः । ब्रह्मेति हिरण्यगर्भो वेदाचार्यः ॥ २२ ॥

रूपमपि समष्टिव्यष्टिजनकस्य यदुक्तं तदपि सांख्यमताद् भेदज्ञापकमित्याशयेन सूत्रं पठित्वा व्याकुर्वन्ति ।

रूपोपन्यासाच्च ॥ २३ ॥ न चेदं रूपं श्लिष्टस्येति शक्यवचनम् । यथा सुदीप्तात् पावकादिति मन्त्रेण केवलादक्षरात् सृष्टिमुक्त्वा, ततो दिव्यो ह्यमूर्त इति मन्त्रेण केवलस्य पुरुषस्याक्षरात् परत्वमुक्त्वा, तत, एतस्माज्जायत इति मन्त्रे एतत्पदेन केवलं पुरुषं परामृश्य ततः

रश्मिः ।

द्विभिः सह वा न सृष्टिः प्राणादयस्तु प्राणो मनस्तस्मादग्निरित्युक्ताग्न्यादयः । तत इति पुरुषात् । तथेति तस्मात्पुरुषविशेषणान्यपि न सांख्यपुरुषविशेषणत्वेन प्रकारेण सांख्यपुरुषविशेषणानि यतः तच्छब्दात्प्रकारे थाल् । त्रिष्विति मुण्डकेषु । तथेति प्रकृतित्वेन पुरुषत्वेन प्रकारेणाक्षरपुरुषौ न वाक्यार्थ इत्यर्थः । भाष्ये । ननु तत्त्वतो ब्रह्मविद्यामित्यस्यास्तत्त्वरूपां प्रकृतिविद्यामित्यर्थोपि स्याद्यतः सार्वविभक्तिकस्तसिल् । अतस्तत्त्वविद्यामित्युक्तप्रायमित्याशङ्कानुक्तसमुच्चयं चकारार्थमाशङ्कावारणायाहुः नहीति । प्रकृते । वेदेति वेदमार्गेण ब्रह्मणो गुरुत्वात् नूतनमार्गप्रवर्तकलक्षणमाचार्यत्वं भवत्येव । तथाच सर्वोत्कृष्टत्वात् सर्वोत्कृष्टविद्यावक्तृत्वमेव युक्तमिति भावः । समष्टीति समष्टिरेतस्माज्जायते प्राणः इति श्रुत्युक्ता । व्यष्टिस्तु तस्मादग्निः समिधो यस्य सूर्यः इति श्रुत्युक्ता सृष्टिः ॥ २२ ॥

रूपोपन्यासाच्च ॥ २३ ॥ ननु संश्लिष्टस्यैतद्रूपं न संभवतीति भाष्यं युक्तम् । नित्य-शुद्धबुद्धमुक्तस्वभावस्य तद्योगो न प्रकृतियोगादृते इति श्लिष्टस्य रूपं प्राप्तं तन्निषेधस्य युक्तत्वात् । यतः प्राप्तिपूर्वको निषेध इति चेन्न । प्रकृतिपुरुषौ न वाक्यार्थः रूपोपन्यासादिति हेतुर्विरुद्धः यथा शब्दो नित्यः कृतकत्वात् । साध्यव्यापकीभूताभावप्रतियोगित्वं विरुद्धत्वं 'यः साध्यवति नैवास्ति स विरुद्धः उदाहृतः' इति भावापरिच्छेदकारः पुरुषप्रकृती वाक्यार्थः प्रकृतिसंश्लिष्टपुरुषरूपोपन्यासादिति विरुद्धो हेतुः साध्याभावसाधकत्वात् । साध्याभावसाधको हेतुर्विरुद्धः इति सौत्रहेतोर्विरुद्धत्वापत्तेः । एवमुपन्यासे तु रूपस्य परमतप्रतिपन्नस्यास्मरणान्न विरुद्धो हेतुरिति व्याचक्रुः । न चेदमिति । नन्वस्मरणेपि कदाचिद्युक्त्या स्मरणाङ्गीकारे सौत्रहेतोः विरुद्धत्वापत्तिस्तदवस्थैवेति चेन्न मुण्डकीय-केवलपुरुषप्रकृतितत्संश्लिष्टातिरिक्तरूपोपन्यासस्य हेतुत्वेन विरुद्धत्वाभावात् सांख्यमतीयरूपोपन्या-साभावात् । न चात्र मानाभाव इति वाच्यम् । ब्रह्मसूत्रत्वेन सांख्यमतीयरूपोपन्यासस्याभावादनुप-लभ्येरेव मानत्वात् । तदेतदभिसंधाय भाष्यार्थमाहुः न चेदमिति । श्लिष्टस्येति प्रकृतिश्लिष्ट-

ब्रह्मवादे पुनर्विश्वकायस्यैतद्रूपम् । सूत्रविभागात् पुनर्मुख्योपपत्तिरेवेति सूचितम् । चकारेण श्रुत्यन्तरविरोध एकवाक्यता च सर्वेषां वेदान्तानामिति । तस्मादक्षरशब्देन पुरुषशब्देन च ब्रह्मैव प्रोक्तमिति ब्रह्मविषयैवेषेति सिद्धम् ॥ २३ ॥

इति प्रथमाध्याये द्वितीयपादे सप्तममदृश्यत्वाधिकरणम् ॥ ७ ॥

---

भाष्यप्रकाशः ।

प्राणादिसमष्टिसृष्टिमुक्त्वा तस्यैव रूपमग्निर्मूर्धेति मन्त्रे वदन्ती श्रुतिर्मन्त्रान्ते, एष सर्वभूतान्तरात्मेति केवलं परामृशति । ततोऽग्रे, तस्मादग्निः समिध इत्यादिभिर्व्यष्टिसृष्टिं वदतीति । इदं च न केवलस्य तन्मतीयस्य । तथा तैरनङ्गीकारात् । नापि केवलायाः । अन्तरात्मत्वोक्तिविरोधात् । अतः प्रकृतिपुरुषयोरन्यतरस्य न संभवतीति ब्रह्मवादे तु विश्वरूपत्वेन विश्वकायत्वस्यैवोक्तत्वादुपपन्नतरम् । अतो नात्र सांख्यगन्धोऽपीत्यर्थः । विशेषणभेदव्यपदेशरूपोपन्यासेभ्य इत्यनुक्त्वा यदत्र भिन्नं सूत्रमुक्तं तत्तात्पर्यमाहुः सूत्रेत्यादि । चकारेणेत्यादि । तथा चैतद्द्वयमपि तन्मतबाधकतया चकारेण संगृहीतमित्यर्थः । तेन सांख्यमतसिद्धे कार्येश्वरेऽतिव्याप्तिर्निवारिता ।

रामानुजाचार्यास्तु, यया तदक्षरमधिगम्यत इत्युपक्रान्तस्य भूतयोनेरक्षरस्यैव, यः सर्वज्ञः सर्वविदित्यग्रिमवाक्ये परामर्शादक्षरपदेन परमात्मैवोच्यते । 'अक्षरात् परतः परः' इत्यत्र तु पञ्चम्यन्तेनाऽक्षरपदेन भूतसूक्ष्ममचेतनमुच्यते । तथा चाक्षरादव्याकृतात् परः पुरुषस्तस्मादपि परः परमात्मैव अत्र गमकं तु भूतयोनित्वं परात्परत्वं रूपं च लिङ्गत्वात् । भूतसूक्ष्मस्याक्षरत्वं तु, अश्नुत इति वा, न क्षरतीति वा स्वविकारव्याप्त्या महदादिवन्नामान्तराभिलापयोग्यक्षरणाभावाद्वा

रश्मिः ।

स्यासङ्गस्य पुरुषस्य । मुण्डके केवलस्य पुरुषस्य केवलायाः प्रकृते रूपस्य निरूपयितुमशक्यत्वमाहुः यथेति । मन्त्रान्त इति अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्येति पादत्रयकथनानन्तरं एष सर्वभूतान्तरात्मेति तुरीयपादरूपे मन्त्रस्यान्ते । व्यष्टिमिति द्विकर्मकोऽयं वदतिः । अनङ्गीति 'असङ्गोयं पुरुषः' इति सांख्यसूत्रात् । न संभवतीति । न च 'सत्त्वरजस्तमःसाम्यावस्था प्रकृतिः प्रकृतेर्महान् महतोहंकारः अहंकारात् पञ्चतन्मात्राणि उभयमिन्द्रियं स्थूलभूतानि पुरुष इति पञ्चविंशति गुणाः' इति सूत्रेण, 'संघातपरार्थत्वात् पुरुषस्य' इति सूत्रेण 'भावे तद्योगे तत्सिद्धिः' इति सूत्रेण च प्रकृतियोगे पुरुषस्य केवलस्य संभवतीति शङ्क्यम् । क्रमेण सृष्टौ महतो रूपसिद्धेः । प्रकृतिसंबन्धद्वारा महतो रूपसंबन्धस्य परंपरासंबन्धत्वेनानङ्गीकारात् । साक्षात्संबन्धेन रूपसंबन्धस्य विवक्षणात् । एतदिति श्रुत्यन्तरं तावत् 'येनाक्षरं पुरुषं वेद' 'तदेतदक्षरं ब्रह्म स प्राणस्तदु वाङ्मनः' इति । न हि तन्मते पुरुषः प्रकृतिर्न वा तन्मतेऽक्षरपदवाच्या प्रकृतिर्मनः किंतु महत्तत्त्वम् । 'आद्यं महदाख्यं तन्मनः' इति सांख्यसूत्रात् स्वमते सर्वेषां वेदान्तानां पुरुषप्रकृतिव्युदासेन शाखान्तरापरतया ब्रह्मणि एकवाक्यता । ब्रह्मणि वक्तव्ये वाक्यानां एकं वाक्यं तस्य भाव एकवाक्यता महावाक्यमेकं भवतीति । कार्येश्वर इति विश्वकायत्वं पुरुषलक्षणं दिव्यो ह्यमूर्त इति श्रुतेः । तत्कार्येश्वरेऽतिव्याप्तं सातिव्याप्तिस्तेन तन्मतबाधकेन श्रुत्यंतरविरोधेन मुण्डके कार्येश्वरप्रतिपादनाभावान्निवारिता । इदं रूपमेकज्ञानेन सर्वविज्ञानार्थं पुरुषस्य मध्ये उक्तम् । अन्यथा पुरुषविद्या न स्यादेकविज्ञानेनेति । महदिति । महतो नामान्तराभिलाप्यबोध्यक्षरणं मन इति नामान्तरेण तच्छाखान्तरीयम् । अतो न नामान्तराभिलाप्यबोध्यक्षरणेभ्यः ।

भाष्यप्रकाशः।

योगेन कथंचिदुपपद्यत इत्याहुः। तत्रेदमवधेयम्। गीतायां द्वादशे।

'एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः'॥

इति प्रश्नेन तदुत्तरेण चाक्षरपुरुषोत्तमयोरैक्यमवस्थाभेदेन भिन्नत्वं च बोधितम्। ततः पञ्चदशे, 'द्वाविमौ पुरुषौ लोके' इति संदर्भे अक्षरपुरुषादुत्तमत्वं स्वस्योक्तम्। श्वेताश्वतरश्रुतावपि, क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एक इत्यक्षरस्यात्मत्वं देवस्य क्षराक्षरेशितृत्वं चोक्तम्। अत्राप्यक्षरस्य पुरुषत्वं पूर्वमुक्त्वा अक्षरात् परत्वं पुरुषस्य यदुच्यते तेन गीतायुक्तरीतिकमेवाक्षरपुरुषयोः स्वरूपं ज्ञाप्यते। न तु तदक्षरमतिहाय भूतसूक्ष्मरूपम्। प्रकृतहानाप्रकृतकल्पनयोः प्रसङ्गात्। नच परत इति पञ्चम्यन्तवैयर्थ्यम्। एतस्याक्षरविशेषणत्वेनोपपत्तेः। सांख्ये प्रधानस्याप्यक्षरपदवाच्यत्वेन तद्वारणस्यात्रावश्यकत्वादिति।

भास्कराचार्यास्तु, परत इति पदमक्षरविशेषणत्वेनाङ्गीकुर्वन्ति। अक्षरपदं चात्र प्रधानबोधकमङ्गीकुर्वन्ति। रूपं च कारणात्मनः कार्यात्मनावस्थितस्येति चाहुः।

शङ्कराचार्यास्त्वग्निर्मूर्धेत्यादिनोक्तं रूपं परमेश्वरस्येति व्याख्याय, नेदं रूपं परमेश्वरस्य। जायमानमध्ये एतदुपन्यासात्। 'एतस्माज्जायते प्राणः' इति पूर्वं प्राणादीनां, 'तस्मादग्निः समिधो यस्य सूर्यः' इत्यनन्तरं च दर्शनात्। न च सर्वात्मत्वबोधनाय मध्ये पाठ इति युक्तम्। पुरुष एवेदं विश्वं कर्मेत्यस्य सृष्टिकथनोत्तरं वक्ष्यमाणत्वात्। अतो 'हिरण्यगर्भः समवर्तताग्रे' इति, 'स वै शरीरी प्रथमः' इति श्रुतिस्मृतिभ्यां तस्यैव जायमानत्वशरीरित्वयोर्निश्चायनात् तस्यैवेदं रूपम्। न च सूत्रवैयर्थ्यम्। परमेश्वरप्रतिपत्तिहेतुतया तस्योक्तत्वादित्यन्ये मन्यन्त इत्याहुः।

वाचस्पतिस्तु प्रकरणापेक्षया सन्निधेर्निर्बलत्वात् प्रकरणिन एवेदं रूपमिति यद्यपि सिद्ध्यति, तथापि प्रकरणिनः शरीरेन्द्रियादिरहितस्य विग्रहवत्ताविरोधात् सिद्धे प्रकरणिनोऽसंबन्धे मूर्धादिश्रुतीनामत्यन्तविप्रकृष्टप्रकरणापेक्षयाऽतिबलिष्ठत्वाज्जायमानमध्यपातित्वं जायमानग्रहणे

रश्मिः।

तत्रेदमिति क्षरात् परतोऽक्षरात्परः पुरुष इत्यर्थमनादृत्य अक्षरादव्याकृतात्परतः पुरुषात् परः परमात्मेति व्याख्याने इदं दूषणम्। उत्तरेणेति श्रीभगवानुवाच—मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते' इत्यादिना उत्तरेण ते प्राप्नुवन्ति मामेव इत्यक्षरोपासका मां प्राप्नुवन्तीत्यक्षराभेदः स्वस्मिन्नुक्तः प्रश्ने च ये चाप्यक्षरमव्यक्तमिति भक्तेच्छयापि अव्यक्तत्वावस्थाधामत्वात् भक्तेच्छया भक्तमनोरथपूरणरूपेण धामस्था रसरूपावस्था पुरुषोत्तमत्वात् इत्यवस्थाभेदेन भिन्नत्वम्। पुरुषौ इति क्षराक्षरौ। अत्रापीति मुण्डकेपि। पूर्वमिति प्रथममुण्डकसमाप्तौ येनाक्षरं पुरुषं वेदेति श्रुतौ प्रथममुण्डके द्वितीयमुण्डकात्पूर्वं यथा भवति तथोक्त्वा। व्यावर्तकं हि विशेषणं तद्व्यावर्त्यमाहुः सांख्य इति। इति रामानुजमततत्समाधानसमाप्तौ। अङ्गीति। परत इति प्रधानविशेषणं कार्यात्परतः। रूपोपन्यासस्यार्थमाहुः रूपं चेति। मध्ये उपन्यासमनुवादयामासुरेतस्मादिति। दर्शनादिति अग्निर्मूर्धा चक्षुषी इत्यस्य रूपप्रतिपादकस्य दर्शनात्। हिरण्यगर्भवाचकमत्र सर्वभूतान्तरात्मपदमित्याशयेनानुवादमाहुः अत इति। समवर्तत अजायत। प्रतिज्ञाविरोधमाहुः न चेति। प्रतिज्ञातप्रवाजिज्ञासासंन्यासात् सूत्रवैयर्थ्यम्। परमेति परमेश्वरस्य प्रथमः प्रतिपत्तिः कार्यद्वारा ज्ञानं तद्धेतुतया।

## वैश्वानरः साधारणशब्दविशेषात् ॥ २४ ॥ (१-२-८)

अधिकरणत्रयेण भोगमुपपाद्य पूर्वाधिकरणे अदृश्यत्वादिगुणानुक्त्वा

भाष्यप्रकाशः ।

कारणमुपन्यस्तं भाष्यकृतेत्याह । तन्मन्दम् । भाष्यकृता एतस्यान्यमतत्वेनैवोपन्यासात् । तदुपन्यासारम्भे, अन्ये पुनर्मन्यन्त इति पुनः शब्देनास्य पक्षस्येष्टत्वस्य स्वयमेवापादनात् । भाष्यकारस्यैवमभिप्राये तेन मूर्धादिश्रुतिरेव प्रमाणतयोपन्यस्येत । अतः सूत्रं भाष्यं च स्वाग्रहमात्रेण विरुन्धन्नतिपाण्डित्यं द्योतयतीति बोध्यम् । एतेनैव भैक्षवमपि दत्तोत्तरम् ।

शैवस्तु पूर्वानुसार्येव ।

माध्वास्तु, 'अपरं त्वक्षरं या सा प्रकृतिर्जडरूपिका ।

श्रीः परा प्रकृतिः प्रोक्ता चेतना विष्णुसंश्रया ।

तामक्षरं परं प्राहुः परतः परमक्षरम् ।

हरिमेवाखिलगुणमक्षरत्रयमीरितम् ।'

इति स्कान्दादक्षरपदं त्रिष्वपि रूढमङ्गीकृत्य, अक्षरात् परतः पर इत्यत्र प्रकृतितः परं यल्लक्ष्मीरूपमक्षरं तस्मादपि परोऽदृश्यत्वादिगुणकोऽक्षरशब्दवाच्यः । पुरुषस्तदुभयभिन्न उक्तविशेषणादेव । यः सर्वज्ञ इत्यादिविशेषणात् प्रकृतितोऽपि भिन्नः । तस्मादेतद् ब्रह्म नामरूपमन्नं च जायत इति नामरूपाद् ब्रह्मणः शब्दब्रह्मरूपाच्चतुर्मुखाद्भेदेन व्यपदेशाच्च विरञ्चयः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक इतीशान्यत्वव्यपदेशाच्च रुद्रः । यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिमिति रूपोपन्यासाच्च न ब्रह्मरुद्रावित्याहुः ॥ २३ ॥

इति सप्तममदृश्यत्वाधिकरणम् ॥ ७ ॥

वैश्वानरः साधारणशब्दविशेषात् ॥ २४ ॥ एवमदृश्यत्वाद्यधिकरणेनाऽन्तर्यामिणोऽदृष्टत्वेऽदृश्यत्वरूपो हेतुः प्रसङ्गाद्दर्शितः । अतः परं प्रस्तूयमानाधिकरणस्य पूर्वोक्तसर्वोपपादकत्वबोधनाय तत्प्रयोजनमाहुः अधिकरणत्रयेणेत्यादि । 'अत्ता चराचरग्रहणाद्' 'गुहां प्रविष्टावा-

रश्मिः ।

विरुन्धन्निति अध्याहृतेन वाचस्पतिना सामानाधिकरण्याच्छतृप्रत्ययः । अतिक्रान्तं पाण्डित्यमतिपाण्डित्यं 'प्रादयो गताद्यर्थे प्रथमया' इति सूत्रेण समासः । यद्वाऽतिक्रान्तं पाण्डित्यं यस्मात्तादृशं स्वं वाचस्पतिम् । पूर्वेति रामानुजमतानुसार्येव । तदुत्तरेणेव दत्तोत्तरः । भगवान्श्चैवः । वीतशोक इति विगतः शोको यस्मादिति वीतशोको जीवः । न ब्रह्मेति ब्रह्मरुद्रयो रक्तकृष्णरूपत्वात् । इत्याहुरिति आहुरित्यनेन स्वरसस्तु पुराणमतमेतत् । स्कान्दं तामसमिति सूत्रस्य पौराणार्थतामसार्थप्रतिपादकतापत्तिः । रूपोपन्याससूत्रे चेशस्य पुरुषं ब्रह्मणो द्रुहिणस्य योनिमिति षष्ठीसमासे ईशं पुरुषमिति पाठस्य विरोधः ॥ २३ ॥

इति सप्तममधिकरणम् ॥ ७ ॥

वैश्वानरः साधारणशब्दविशेषात् ॥ २४ ॥ पूर्वोक्तेति इदं समासौ स्फुटम् । पूर्वोक्तस्य जगज्जन्मादिकर्तृत्वस्य निष्कलं निष्क्रियं शान्तमित्युक्तेऽसंभवात् समवायित्वस्य स्वांशंतिप्रत्यसंभवात् विरुद्धानां सकलत्वादीनां स्वस्मिन् सतां साकाराणामर्थानां च विरुद्धधर्माश्रयत्वसाकारब्रह्मत्वाभ्याममत्रोपपादनात्पूर्वोक्तं सर्वमभिन्ननिमित्तोपादानत्वं तस्य साकारब्रह्मत्व-

**प्रसङ्गाद् रूपमुपन्यस्तम् । अधुना साकारब्रह्मतामुपपादयितुमिदमधिकरण-मारभते । को न आत्मा किं ब्रह्मेति, आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तमेव नो ब्रूहीति चोपक्रम्य द्युसूर्यवाय्वाकाशकवारिपृथिवीनां सुतेजस्त्वादिगुणयोग-मेकैकोपासननिन्दया च मूर्धादिभावमुपदिश्याऽऽम्नायते ।**

---

भाष्यप्रकाशः ।

**स्थानौ हि तद्दर्शनाद्' 'अन्तर उपपत्तेः'इत्यधिकरणत्रयेण वैशेष्यबोधनात् त्रिविधं भोगमुपपाद्या-न्तर्याम्यधिकरणे तद्वैशेष्यमन्तर्यामिणि निगमयित्वा, अदृश्यत्वाद्यधिकरणे तस्यादृष्टत्वोपपाद-कान् अदृश्यत्वादिगुणानुक्त्वा रूपाभावादेवादृश्यत्वादीति शङ्कानिरासायान्तरात्मनस्तत्प्रसङ्गाद्रूपमु-पन्यस्तम् । परमात्माक्षरयोरभेदः परापरभावश्चोक्तः । तत् तदा संगच्छते, यदि ब्रह्मणः साकारता वास्तवी स्यात् । परमात्मनो विरुद्धधर्माश्रयत्वं च स्यात् । अतस्तदुपोद्घातत्वेनाऽधुनेदमधिकरण-मारभत इत्यर्थः । एवं संगतिमुक्त्वा विषयवाक्यमुदाहरन्ति को न आत्मेत्यादि । इदं च छान्दोग्ये सप्तमप्रपाठके वर्तते । तत्रोपक्रमे, प्राचीनशालसत्ययज्ञेन्द्रद्युम्नजनबुडिलनामानः पञ्चापि श्रुताध्य-यनवृत्तसंपन्नाः क्वचन समेत्य मीमांसां चक्रुः । को न आत्मा, किं ब्रह्मेति । अत्र स्वात्मब्रह्मणी**

रश्मिः ।

विरुद्धधर्माश्रयत्वाभ्यामुपपादकत्वबोधनायेत्यर्थः । यद्वात्रैवाग्रे अत्ता चराचरेत्यादिग्रन्थे पूर्वोक्त-सर्वोपपादकत्वं वक्ष्यमाणं तस्य बोधनाय । वैशेष्येति शब्दविशेषादित्यधिकरणे संभोगप्राप्तिसूत्रे ब्रह्मणो जीवविलक्षणं भोगवैशेष्यं तस्य बोधनाद्धेतोरधिकरणत्रयेण त्रिविधं भोगमुपपाद्येति योजना । त्रैविध्यं तु अत्ता चराचराधिकरणे आनन्दरूपाद्वैशेष्यात् संपन्नजीवसाहित्येन भोग उपपादितः । गुहां प्रविष्टावित्यधिकरणे ऋतं पिबन्ताविति श्रुत्युक्तः स्वरूपात्मकः सः । अन्तराधिकरणे-ऽक्षिपुरुषस्य सः इति । तद्वैशेष्यमिति भोगवैशेष्यम् । अदृष्टत्वेति अन्तर्यामिब्राह्मणे अदृष्टो द्रष्टा अश्रुतः श्रोतेति श्रुत्युक्तादृष्टत्वं तदोपपद्येत यद्यात्मनोऽदृश्यत्वादिगुणा भवेयुरतो हेतुता-संगतिरदृश्यत्वादिगुणकाधिकरणघटिकेति ध्वन्यते । रूपमिति तथा च रूपिद्रव्यत्वेन चाक्षु-षत्वेन कार्यकारणभावेपि दिव्यचक्षुषा स्वेच्छया या चाक्षुषत्वेन रूपिद्रव्यत्वेन चाक्षुषत्वेन कार्यकारणभावस्यानङ्गीकारात् । उक्तकार्यकारणभावस्य दिवा कौशिकानां दृष्टौ रूपं न प्रतिपद्यते इति व्यभिचारात् । अतोग्निर्मूर्धेतिश्रुत्युक्तसर्वभूतान्तरात्मनो रूपमुपन्यस्तम् । न च हिरण्यगर्भः समवर्तताग्रे इति श्रुतेर्द्रुहिणस्य स्वराजो वा रूपमिति प्रसङ्गाद्रूपमुपन्यस्तमिति भाष्यं कुत इति चेन्न । सर्वभूतान्तरात्मेति श्रुतौ सर्वपदस्यासंकुचितवृत्तित्वेन पञ्चसंख्याविशिष्टवाचकत्वात् । प्राचीनेति प्राचीनशालश्च सत्ययज्ञश्चेन्द्रद्युम्नश्च जनश्च बुडिलश्च प्राचीनशालसत्ययज्ञेन्द्र-द्युम्नजनबुडिलाः एतानि नामानि येषां ते तथोक्ताः 'श्रुतं शास्त्रावधृतयोः' इति विश्वः । अध्ययनं गुरुमुखादक्षरग्रहणम् । वृत्तो वर्तनं स्यातो वा दृढो वा भावप्रधानो निर्देशः 'वृत्तोतीते दृढे स्याते' इति 'वाच्यवद्वर्तने' इति च विश्वः । तैः संपन्नाः । मीमांसामिति विचारणाम् । को न इति इमां व्याचकुः को नोऽस्माकमात्मा किं ब्रह्म ब्रह्माभिन्नप्रत्यगात्मा क इति विचारयन्तस्ते स्वयं निश्चयम-नाप्नुवन्तः ह आत्मन उपदेष्टारं संपादयांचक्रुरिति । तत्र किमो विचारे प्रयोगाभावादिति प्रश्ने विचारयन्त इत्यर्थः । अयं प्रश्न इतीच्छाविषयाकारः स तु संशयाकारः । प्रच्छ ज्ञीप्सायामिति धातु-पाठात् विषयस्य प्रत्ययार्थत्वात् ज्ञीप्साविषयस्य ज्ञप्तज्ञानस्य संशयत्वेन प्रकारेण ग्रहणात् । प्रश्नरूप-

भाष्यप्रकाशः

अभिन्नो भिन्नो वेति संशयो न तेषां विचारबीजं, किंत्वसदुपास्य आत्मा कः, किं ब्रह्म, तदेक-देशो वेति संशयो विचारबीजमित्यनुपदमेव व्युत्पादयिष्यामः ।

यदत्र कैश्चिद् व्याख्यातम् । आत्मब्रह्मशब्दयोरितरेतरविशेषणविशेष्यत्वाद् ब्रह्मेत्यध्या-त्मपरिच्छिन्नमात्मानं निवर्तयत्यात्मेति चात्मव्यतिरिक्तस्यादित्यादिब्रह्मण उपास्यत्वं निवर्तयति । अतो, ब्रह्म आत्मैव, आत्मा ब्रह्मैवेत्यभेदेन सर्वात्मा वैश्वानरो ब्रह्म स्वआत्मेति फलिष्यतीति । तन्न । किमः आवृत्त्या वाक्यभेदस्य स्फुटत्वेन विशेषणविशेष्यभावप्रतीत्यनुदयादेतदुपपादनभूता-ग्रिमग्रन्थानुरोधेन तथाङ्गीकारेऽपि तत्रात्मन उपास्यत्वेनैव सिद्धतया तत्र प्रत्यगात्माभेदापाद-नस्यासंगतत्वादिति । अतः पूर्वोक्तसंशय एव विचारबीजम् । मीमांसाफलं त्वग्रे वक्तव्यम् । ततः स्वविचारणया तन्निश्चयमलभमाना उद्दालकनामानमन्यं वैश्वानरोपासकं संशयवारकत्वेन संभावितवन्तः । सर्वेऽपि तन्निकटे यदा गतास्तदा तेन विचारितम् । एते प्रश्नार्थमागता

रश्मिः ।

संशयस्योपक्रमे मीमांसाया उक्तायास्तदघटकत्वेनावक्तव्यत्वात् मीमांसायाः 'विषयो विशयश्चैव पूर्व-पक्षस्तथोत्तरं संगतिश्चेति' पञ्चाङ्ग्याः संशयघटितत्वेन को न आत्मेति विषयवाक्यानन्तरं किं ब्रह्मेति संशयस्यैका कोटिरितो न वेति द्वितीयकोटिं प्रक्षिप्य संशयमाहुः अत्र स्वेति । न वेति कोटिमाहुः भिन्नो वेति । न च विचारणं विहाय संशयग्रहणे किं मानमिति वाच्यम् । मीमांसां चकुरिति मीमांसापदस्य मानत्वात् । उपक्रमस्यार्थनिर्णायकत्वात् । अत्र स्वेत्यत्र अत्र को न आत्मा इति श्रुतौ नोऽस्माकं प्राचीनशालादीनां आत्मा क इति प्रश्ने विषयवाक्येन कृते किं ब्रह्मेति श्रुत्या विशयस्यौचित्यान्न वेति द्वितीया कोटिः । तथाच किं स्वात्मा ब्रह्मेति वचनव्यक्तेरभेदसंसर्गघटितत्वेन ब्रह्माभिन्न आत्मा ब्रह्मभिन्न आत्मा वा किमिति संशयविषयकेच्छात्मकः प्रश्नः । तेषामिति प्राचीन-शालादीनां विचारौ सिद्धान्तिपूर्वपक्षिकृतौ तयोर्बीजं कारणं न किंतु भेदषष्ठ्यास्माकमत्रास्मदुपास्य इत्यविषयसंशयार्थं इत्याहुः किं त्विति । कुतो नेत्याकाङ्क्षायामाहुः इत्यनुपदमिति । ननु ह्यधिकरणे विषयवाक्यादीनां पृथक्कृत्वेनात्र मीमांसायां सिद्धान्तपूर्वपक्षौ काविति चेच्छृणु संपादनकरणेतर-ग्रन्थार्थस्य सिद्धान्तत्वात् तदनुरोधेन पूर्वपक्षस्योन्नेयत्वात् संगतिस्तु सामान्यत्वेनास्याधिकरणस्यात्र प्रतिपिपादयिषितस्याधिकरणस्य विशेषत्वेन पूर्वाधिकरणेन विशेषस्य या सैव सामान्याधिकरणस्य । कैश्चिदिति शांकरैः । इतरेतरेति यथाहुरात्मैव ब्रह्मेति ब्रह्मज्ञानार्थं पदद्वयमिति रत्नप्रभाकारः । अध्यात्मेति आत्मनीत्यध्यात्मम् । अव्ययं विभक्तीत्यादिसूत्रेण समासः । आत्मानमधिकरणीकृत्य वर्तमानं यच्छरीरं तत्परिच्छिन्नमात्मानं निवर्तयति । ब्रह्मपदस्य व्यापके शक्तत्वादित्यर्थः । आदित्य आदिर्येषां तदादित्यादि तद्ब्रह्म तस्योपास्यत्वं निवर्तयति तदुक्तं ब्रह्मामृतवर्षिण्याम् । आत्मनोऽ-संसारित्वार्थं ब्रह्मपदम् । ब्रह्मणोऽपरोक्षत्वार्थमात्मपदमिति । आवृत्त्येति किम आवृत्त्या वारद्वयं कथनेन । एकतिङ् वाक्यमिति वाक्यभेदः । एतदुपपादनेति विशेषणविशेष्यभावोपपादन-भूतो कोऽग्रिम आत्मानमेवैमं वैश्वानरं संप्रत्यध्येषि तमेव नो ब्रूहीति ग्रन्थस्तस्यानुरोधेन तथेति विशेष्यविशेषणभावस्याङ्गीकारेपि तत्र विशेष्यविशेषणभावे आत्मनः स्वात्मनो वैश्वानरत्वेनोपास्य-त्वेनाध्येषि स्मरसि उपास्य इत्यर्थात् सिद्धतया श्रुतिदर्शनादेवकारः । असंगतेति अनावश्य-कत्वादसंगतत्वं उपास्योपासकयोरभेदापत्तेर्वा सुबोधिन्यां जीवउपासनानिषेधात् । तन्न इति ।

यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति । तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा संदेहो बहुलो बस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचनमास्यमाहवनीय इत्यादि ।

भाष्यप्रकाशः ।

महाश्रोत्रिया अहमिव वैश्वानरोपासका नाहमेभ्योऽधिकोऽतोऽन्यमभ्यनुशासानीति । तत एवं निश्चित्य तद्वेचारं कैकेयमुपदिष्टवान् । ततस्ते षडपि कैकेयराजनिकटे गताः । तदा स राजा तेषां पृथक् पृथक् पूजां पुरोहितादिद्वारा कारयित्वा धनं दातुमारब्धवान् । यदा न जगृहुस्तदा, 'न मे स्तेनो जनपदे' इत्यादिना स्वस्य सद्वृत्ततामुक्तवान् । तथापि ते धनं न जगृहुस्तदा तेषामधिकलिप्सां संभाव्याहं यक्ष्यमाणोऽस्मि, ऋत्विक्समानं धनं प्रत्येकं दास्यामि, तावत् स्थातव्यमित्युक्ते, ते स्वाभिप्रायमुक्तवन्तः । आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तमेव नो ब्रूहीति । तदा राजा तदधिकारपरीक्षार्थं, प्रातर्वः प्रतिवक्तास्मीत्युक्त्वा अन्तःपुरं प्रविष्टः । ततो द्वितीयेऽह्नि ते समित्पाणयो राजसमीपं गताः । ततो राज्ञा, एते धनविद्याप्रतिष्ठावन्तोऽपि स्वाभिमानं परित्यज्यैतज्जिज्ञासयैवं समागता अतोऽधिकारिण इत्यवगत्य तत्प्रतिभापरीक्षणाय प्रत्येकं पप्रच्छ, कं त्वमात्मानमुपास्स इति । तदा तैः क्रमेण द्युसूर्यादिषु स्वस्वोपास्यात्मत्वेनोक्तेषु, एष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्स इत्यादिना द्युसूर्यवाय्वाकाशवारिपृथिवीनां क्रमेण सुतेजस्त्वविश्वरूपत्वपृथग्वर्त्मात्मत्वबहुलत्वरयित्वप्रतिष्ठात्वगुणयोगं मूर्धविपातान्धत्वप्राणोत्क्रमणदेहविशरणबस्तिभेदपादविम्लानिकथनरूपया एकैकोपासननिन्दया च मूर्धचक्षुःप्राणदेहमध्यभागबस्तिपादभावमुपदिश्याग्रे आम्नायत इत्यर्थः ।

यस्त्वेतमित्यादि एतदर्थस्तु, यस्त्वेतं भवत्पृष्टम्, एवं मदुक्तप्रकारेण तत्तदवयवविशिष्टमेकं, प्रादेशमात्रं, 'मात्रं कार्त्स्न्येऽवधारणे' इति कोशाच्छ्रुत्यन्तरे मूर्धचिबुकान्तराले प्रतिष्ठितत्वकथनात् प्रादेशपरिमाणकत्वेनावधारितम्, अभिविमानं तादृशपरिमाणकत्वेऽप्यभितः सर्वतो विगतं मानं परिमाणं यस्मात् तादृशम्, आत्मानं नियामकं, वैश्वानरं विश्वान् नरान्नयतीति यास्केन पृषोदरादितया निरुक्तं स्वप्रापकमुपास्ते चिन्तयति । स सर्वेषु लोकेषु द्युप्रभृतिषु, सर्वेषु भूतेषु चराचरेषु शरीरेषु सर्वेष्वात्मसु जीवेष्वन्नमत्ति सर्वात्मभूतः संस्तांस्तानेकदेशाभिमानिनो न्यकृत्य तत्तद्बीवृत्तिभिस्तत्तदिन्द्रियैश्च तद्भोग्यं स्वयं भुङ्क्ते ।

रश्मिः ।

नाहमिति नाहमेभ्य अधिक इति पदच्छेदः । कैकेयमिति केकयस्यापत्यमश्वपतिनामानं राजानमुपदिष्टवान् सोऽस्मानुपदेक्ष्यतीत्युक्तवान् । न म इति मे मम जनपदे देशे स्तेनः परस्वहर्ता नेत्यर्थः । संप्रतीति संप्रति राजन् स्मरसि । नैरुक्तीं व्युत्पत्तिमाहुः वैश्वानिति । मूर्धचक्षुरिति अत्र देहस्य मध्यभागो देहमध्यभाग इति षष्ठीतत्पुरुषः मूर्धा च चक्षुश्च प्राणश्च देहश्च मध्यभागबस्तिश्च पादौ च मूर्धचक्षुःप्राणदेहमध्यभागबस्तिपादास्तेषां भावं प्रकृतिजन्यबोधे प्रकारत्वम् । यास्केनेति ऋषिणा । पृषोदरादित्वयेति पृषदुदरं पृषोदरं पृषु सेचने भ्वादिः वैश्वशब्दस्य दीर्घः निशो लोपः वैश्वानरः । न्यकृत्येति तिरस्कृत्य, उक्तेषु प्राचीनशालाद्युपास्यैकैकांशेषु गुणेषु

भाष्यप्रकाशः ।

तस्य ह वा एतस्य सर्वावयवविशिष्टस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः, त्वदुपास्यद्युरूपः सुतेजस्त्वगुणविशिष्टः । एवमग्रेऽपि । विश्वरूपो नानारूपवानादित्यः । पृथग्वर्त्मात्मा आवहोद्वहादिभेदेन वान् वायुः । संदेहो देहमध्यभागः बहुलः सर्वगतत्वादाकाशः । बस्तिर्नाभ्यधोभागः । रयिः, अन्नोत्पादनद्वारा धनजनकत्वाद्धनरूपा आपः । प्रतिष्ठा पादौ पृथिवी । वेदिराकारसाम्यात् । बर्हिरास्तीर्णत्वसाम्यात् । हृदयं गार्हपत्यः, हृदयाद्धि मनः प्रणीतमिवानन्तरं भवतीति साम्यात् । अन्वाहार्यपचनो दक्षिणाग्निः । आहवनीयो हवनस्थानत्वसाम्यात् । एवं

रश्मिः ।

एकैकोपासननिन्दासु अवयविनि संनिवेशेषु च निन्दा अपहाय श्रीनर्थानाहुः मूर्धैवेति मूर्धा त्वेष आत्मन इति होवाचेति श्रुतेरवयविनि प्राचीनशालेन द्युरूपस्योपासितस्य राज्ञा मूर्ध्नि निवेशः कृतः । गुणमाहुः सुतेजा इति एष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्स इति श्रुतेः सुतेजस्त्वेन गुणेन विशिष्टः अनेन गुणेनोपास्य इति गुणयुक्तः दध्ना जुहोतीतिवत् अग्निहोत्रे दधिरूपगुणो विधीयते अतो गुणविधिरयम् । प्राचीनशालोपासितैकाङ्गमाहुः त्वदिति । तव प्राचीनशालस्योपास्यो द्युरूपः । औपमन्यव कं त्वमात्मानमुपास्स इति दिवमेव भगवो राजन्निति होवाचेति श्रुतेः । त्वदुपास्यद्युरूपो मूर्धैव सुतेजाः सुतेजस्त्वगुणविशिष्ट इति योजना । श्रुतिस्तु औपमन्यव कं त्वमात्मानमुपास्स इति दिवमेव भगवो राजन्निति होवाचैष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्तव सुतं प्रसुतमासुतं कुलं दृश्यते अत्स्यन्नं पश्यसि प्रियं अत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवात्मानं वैश्वानरमुपास्ते मूर्धा त्वेष आत्मन इति होवाच मूर्धा ते व्यपतिष्यद्यन्मां नागमिष्य इतीति । औपमन्यव हे प्राचीनशाल मा मां प्रति नागमिष्यः प्रश्नं चक्षुर्विश्वरूप इति भाष्ये विवरणमतिदिदिशुः एवमग्र इति । तस्य ह वा एतस्य सर्वावयवविशिष्टात्मनो वैश्वानरस्य चक्षुरेव विश्वरूपः त्वदुपास्यआदित्यरूपं विश्वरूपत्वगुणविशिष्टं तस्य ह वा एतस्य सर्वावयवविशिष्टात्मनो वैश्वानरस्य प्राण एव पृथग्वर्त्मात्मा त्वदुपास्यवायुरूपः पृथग्वर्त्मात्मत्वगुणविशिष्टः तस्य ह वा एतस्य सर्वावयवविशिष्टात्मनो वैश्वानरस्य देहमध्यभाग एव बहुलः त्वदुपास्याकाशरूपः बहुलत्वगुणविशिष्टः तस्य ह वा एतस्य सर्वावयवविशिष्टस्यात्मनो वैश्वानरस्य बस्तिरेव रयिः त्वदुपास्यवारिरूपः रयित्वगुणविशिष्टः तस्य ह वा एतस्य सर्वावयवविशिष्टात्मनो वैश्वानरस्य पादावेव प्रतिष्ठा त्वदुपास्यपृथ्वीरूपः प्रतिष्ठात्वगुणविशिष्टः श्रुत्यर्थो पूर्ववत्सर्वत्र गुणेषु सुतेजस्त्वस्य स्पष्टत्वात् । विश्वरूपत्वादीन् स्पष्टयामासुः विश्वरूप इति । उदित आदित्ये रुक्मारुणश्यामश्वेतधूम्रवर्णाः प्रतीयन्ते इति नाकाशरूपाणि किं तु ह्यादित्यस्य । वानिति वातीति वान् । गच्छन् । वा गतिगन्धनयो शतृप्रत्ययः प्राण इत्यर्थः । प्राणस्त्वेष आत्मनः इति होवाचेति श्रुतेः । एष वायुः प्राण आत्मनो वैश्वानरस्येतीन्द्रद्युम्नं प्रति कैकयराज्ञ उक्तिः । प्रतिष्ठेति तथाच प्रतिष्ठात्वसाम्यात् पृथ्वी पादावित्यर्थः । वेदिरिति चतुष्कोणः स्थण्डिलः इति । साम्यादिति मनोग्निप्रणयनहेतुत्वसाम्यात् । दक्षिणाग्निरिति पचनहेतुत्वसाम्यान्मनो भवति । हवनेति प्राणाय स्वाहेत्यादिनास्मिन्नन्नं हूयत इति भावः । यद्वा । वेदोक्षरमात्रमपि नान्यथा वदतीति भाष्य उक्तत्वाद्यथाश्रुतमेव साधु । न तु साम्याद्धनजनकत्वादिना तन्निबन्धना गौणी । भाष्येत्यादिपदेन यद्भक्तं प्रथममागच्छेत्तद्धोमीयमित्यादिसंग्रहः । तत्रत्रोक्तन्यायेनाग्निहोत्रे संपादिते सति भोजनकाले यद्भक्तमोदनादिभोज्यमागच्छेत् तद्धो-

तत्र संशयः । किं वैश्वानरशब्देन ब्रह्म प्रतिपादयितुं शक्यते, न वेति । अर्थस्यातिसंदिग्धत्वात् संदेहः । तत्रोपक्रमे ब्रह्मात्मपदप्रयोगोऽस्ति नान्यत् किंचित् । उपपादने त्वतद्धर्मा एव । साकारस्य तु लोकन्यायेनाब्रह्मत्वम् ।

---

भाष्यप्रकाशः ।

विषयमुक्त्वा संशयाकारं तद्बीजं चाहुः किमित्यादि । अर्थस्येत्यादि च । कथमतिसंदिग्धत्वमित्यत आहुः तत्रेत्यादि । तद्बीजे विचार्ये । उपक्रमे विचाराकारकथने ब्रह्मात्मपदयोः प्रयोगोऽस्ति, को न आत्मा, किं ब्रह्मेति । तत्र किम आवृत्त्या वाक्यभेदावगमाद्विशेषणविशेष्यभावाप्रतीत्या द्वयोः प्रकरणित्वमापाततः प्रतीयते । नान्यत् किंचिदन्यतरस्य प्रकरणित्वोपपादकम् । अत उपक्रमस्य संदिग्धत्वादर्थस्यातिसंदिग्धत्वम् । अथाग्रिमग्रन्थे, कं त्वमात्मानमुपास्स इति प्रश्नस्य दिवमेव भगवो राजन्नित्यादिप्रत्युत्तरादुपास्यस्यैवात्मनो विचारविषयत्वं, न प्रतीचोऽस्य । ततश्च समेत्येत्यस्य स्वस्वोपास्यरूपप्रकाशनेन संविदं कृत्वेत्यर्थात्, को न आत्मेत्यत्रोपास्यतया परामृष्टस्यैव विशेषजिज्ञासाबोधकं किं ब्रह्मेति वाक्यम् । तथा सत्युपपादनग्रन्थाद् ब्रह्मण एव प्रकरणित्वं निश्चीयत इत्युच्यते, तदापि तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजा इत्यादिरूपस्य तन्निष्कर्षग्रन्थस्य विचारे त्वब्रह्मधर्मा एव सिद्ध्यन्ति । सुतेजःप्रभृतीनां अन्यानामेवार्थानां मूर्धादिरूपत्वनिष्कर्षात् । नच ।

'यच्छब्दयोगः प्राथम्यं सिद्धत्वं चाप्यनूद्यता ।
तच्छब्दयोग औत्तर्यं साध्यत्वं च विधेयता' ॥

इत्यनूद्य विधेयलक्षणयोर्विचारे मूर्धादीनां सिद्धानामर्थानामनूद्यत्वस्य सुतेजआदीनां अन्यानां विधेयत्वस्य चावगमात् साकारस्य ब्रह्मणोऽवयवानां नित्यानामेव तद्रूपत्वं कल्पनयोपदिश्यत इति न ब्रह्मत्वहानिरिति शङ्क्यम् । यतः साकारस्य तु लोकन्यायेनाब्रह्मत्वम् । विमतो वैश्वानरो न ब्रह्म । साकारत्वात् । द्युप्रभृतिलोकवदिति प्रयोगात् । अत एवमप्यर्थस्यातिसंदिग्धत्व-

रश्मिः ।

मीयं होमद्रव्यमिति चिन्तयेत् इति श्रुत्यर्थः । तद्बीजमिति संशयबीजमुपक्रम आत्मब्रह्मपदं दिवमेव भगवो राजन् इत्याद्युपपादनग्रन्थश्च । विचाराकारेति मीमांसारूपे विचारे विषयसंशयाकारकथने । नान्यदिति भाष्यं विवरामासुः नान्यदिति । उपपादन इति भाष्यमवतारयामासुः अथेति । प्रतीच इति प्रत्यगात्मनः । उपपादनेति स ग्रन्थस्तु दिवमेव भगवो राजन्नित्यादिः । साकारेति भाष्यमवतारयांबभूवुः न चेति । कारिकामाहुः यच्छब्दयोग इति । मूर्धादीनामिति ये मूर्धादयस्ते सुतेज आदय इत्यत्र मूर्धादीनां आत्मैवेदमग्र आसीत् पुरुषविधः इत्यादौ नित्यत्वेन सिद्धानां विधेयसुतेजआदिभ्यः प्रथमानां यच्छब्दयुक्तानां कारिकापूर्वार्धोक्तलक्षणविशिष्टानामनूद्यत्वस्य अन्यानां साध्यानामनूद्यमपेक्ष्योत्तराणां तच्छब्दयुक्तानां विधेयत्वस्य । कल्पनयेति गौण्या । लोकन्यायमाहुः विमत इति गौरश्वत्वादितिवद्बाधवारणाय विमत इति विशेषणम् । वैश्वानरो वेदान्तिमताद्विरुद्धमतो यदा भवति तदा पक्षः । पक्षे साध्याभावो बाधः । साध्यवदन्यत्वादि साध्यवन्तो गावस्तदन्यत्वमश्वेषु । वह्निरनुष्णो द्रव्यत्वादित्यत्र साध्यवन्तोबादयः तदन्यत्वमग्न्यादौ प्रकृते साध्यवन्तो द्युलोकादयः तदन्यत्वं वैश्वानरे इति बाधः । वैश्वानरस्य विमत इति विशेषणे

वैश्वानरो यद्यप्यग्नावेव प्रसिद्धस्तथापि पूर्वकाण्डसिद्धत्वाद्देवतात्मपरिग्रहो युक्तः। ततश्च, 'संवत्सरो वा अग्निर्वैश्वानरः' इति श्रुतेः संवत्सरस्य प्रजापतित्वाच्च हिरण्यगर्भोपासनापरमिदमिति गम्यते। ब्रह्मात्मशब्दावपि हि तत्रैव युक्ततरौ। तदुपासकस्यैवान्नभोजनत्वमपि सर्वत्र युक्तम्। प्रादेशमात्रत्वमपि मुख्यजीवत्वादस्मदाद्यपेक्षया स्थूलत्वाभिप्रायम्। विराडभिमानित्वाच्च लोकावयवत्वम्। वेदगर्भत्वादग्नित्रयात्मकत्वमिति। तस्माद्धिरण्यगर्भोपासनापरमेवैतद्वाक्यं न भगवदुपासनापरमित्येवं प्राप्ते उच्यते।

भाष्यप्रकाशः।

मित्यर्थः। एवं संदेहबीजमुपपाद्य पूर्वपक्षमाहुः वैश्वानर इत्यादि। अग्निर्वैश्वानरो वह्निरिति कोशस्मृतेर्वैश्वानरशब्दो भूताग्नावेव प्रसिद्धः। तथापि पूर्वकाण्डे, विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन्नित्यादावह्नः केतुत्वकथनेनोत्कर्षवत्तया सिद्धत्वाद् देवतात्मपरिग्रहो युक्तः। पूर्वकाण्ड एव, वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीरिति देवतात्मन्यपि सिद्धत्वात्। तत एवं देवतात्मपरिग्रहप्राप्तावप्युत्तरकाण्डे वाजिनां बृहदारण्यके सप्तान्नब्राह्मणे, 'संवत्सरो वा अग्निर्वैश्वानरः' इति श्रावणात् तैत्तिरीयाणां बृहन्नारायणोपनिषदि 'प्रजापतिः संवत्सरः' इति श्रुतेः संवत्सरस्य प्रजापतित्वाच्च हिरण्यगर्भोपासनापरमिदं वाक्यमिति गम्यते। यद्यपि माण्डूक्यादौ, 'विश्वो वैश्वानरः प्रथमः पादः' इति श्राव्यते, तथापि तैजसो हिरण्यगर्भो द्वितीयः पाद इति श्रावणात् तत्परत्वमेव युक्तम्। तस्य च ब्रह्मनामकत्वाज्जीवसमष्टिरूपत्वाद् ब्रह्मात्मशब्दावपि तत्रैव युक्ततरौ। तं योऽहंग्रहेणोपास्ते तस्य यथा क्रतुरितिन्यायेन तद्भावात् तदुपासकस्यैव सर्वत्रान्नभोजनं युक्तम्। भोजनत्वमिति पाठे, भोजनत्वं भोक्तृत्वम्। नन्वादिरवाह्युः। शेषमुत्तानार्थम्। एवं पूर्वपक्षमुक्त्वा सिद्धान्तं विशदीकुर्वन्ति उच्यत इत्यादि। हेतुं व्याकुर्वन्ति

रश्मिः।

तु वह्निरूपवैश्वानरस्य द्युलोकसमत्वेन साध्यवत्त्वान्न बाधः। एवमिति उपपादनग्रन्थस्थले तन्निष्कर्षग्रन्थोक्तावपि। एवमिति उपक्रमगतात्मब्रह्मपदाभ्यां दिवमेव भगवो राजन्नित्याद्युपपादनग्रन्थमूर्धैव सुतेजा इत्याद्युपपादननिष्कर्षग्रन्थाभ्याम्। कोशेति बहुग्रन्थानुभवजन्यसंस्कारजन्यत्वादमरकोशः स्मृतिः। पूर्वेति आदित्यादिदेवाः विश्वस्मै भुवनाय वैश्वानरमग्निमादित्यं दिनव्यवहारार्थमह्नां केतुं चिह्नमकृण्वन् कृतवन्त इत्यर्थः। देवतेति वैश्वानरान्नयतीति यास्कोक्तयोगसिद्धदेवतास्वरूपपरिग्रहः। वैश्वानरेति हि यतो वैश्वानरो भुवनानां राजा कं सुखात्माभिश्रीरीश्वरः अभिमुखा श्रीर्यस्मात्तो वैश्वानरस्य वयं सुमतौ स्याम तत्सुमतिविषयाः स्याम अस्मद्विषया शुभमतिस्तस्य भवत्वित्यर्थः। सिद्धत्वादिति वैश्वानरपदयोगस्य सिद्धत्वात्। युक्तमिति बह्वीनां श्रुतीनामनुग्रहस्य न्याय्यत्वात्। माण्डूक्ये तैजसपदस्यापि व्युत्पत्त्यन्तरसिद्धवैश्वानरे यथा कथंचित्प्राप्यत्वात्। आदिपदोक्तनृसिंहोत्तरतापिनीयेप्येवं श्रुतिद्वयं तत्रापि पूर्ववत्। ब्रह्मात्मेतिभाष्यं विवरामासुः तस्य चेति। अत्र पक्षे विषयवाक्यसंगतिमाह तं योऽहमिति। अहं ब्रह्मास्मीत्यहंग्रहेण। तद्भावात् हिरण्यगर्भभावात्। ल्युरिति कर्तरि ल्युः। भुनक्तीति भोजनस्तस्य भावो भोजनत्वं भोक्तृत्वमित्यर्थः। शेषमिति तथाहि अक्षपादीति बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यपरोपि दृष्टः। अङ्गुष्ठमात्रो रवितुल्यरूपः कामाहंकारसमन्वितो यः इत्यत्रोक्तं स्थूलत्वम्। मूर्धैव सुतेजा इति श्रुतिसंगतिमाह विराडिति। हृदयमित्यादिश्रुते-

वैश्वानरःपरमात्मैव । कुतः । साधारणशब्दविशेषात् । साधारणशब्दाद्विशेषः । ये पूर्वपक्षे साधारणशब्दा हिरण्यगर्भपरतया ततोऽपि विशेषोऽस्ति । येन भगवानेव वैश्वानरो भवति । प्रादेशमात्रस्यैव द्युमूर्धत्वादिधर्मः । न हि द्विरुद्धधर्माश्रयत्वं भगवद्व्यतिरिक्ते संभवति । सर्वभवनसामर्थ्याभावात् । साधारणाद्धर्माच्छब्द एव विशेष इति वा । विशेषादित्येव वक्तव्ये साधारणशब्दशब्दौ प्रादेशमात्रस्यैव वैश्वानरशब्दवाच्यत्वं द्युमूर्धत्वादिकं तस्यैवेति समासेन द्योतयतः । अन्यथा विरोधाभावात् ।

---

भाष्यप्रकाशः ।

साधारणेत्यादि । अत्र साधारणशब्दशब्दस्य, ये इत्यादिना विभजनात् साधारणशब्देभ्यो विशेष इत्येवं बहुवचनविग्रहस्य विवक्षितत्वेऽपि ग्रहणके य एकवचननिर्देशः स ब्रह्मादिपदाश्मभोजनवाक्यगतैकजात्यभिप्रायात् । विशेष आधिक्यं, तत्किमित्यपेक्षायां स्फुटीकुर्वन्ति प्रादेशेत्यादि । अस्मिन् पक्षे शब्दशब्दस्य पदवाक्यसाधारण्यात् संदेहः स्यादिति समासान्तरेण तमर्थमाहुः साधारणादित्यादि । तथा च शब्दे विशेषः शब्दविशेषः । वाक्योक्तात् साधारणाद् द्युमूर्धत्वादेर्धर्माद् वाक्यरूपे शब्द एव यो विशेषो विरुद्धधर्माधारत्वलक्षणस्तस्मादित्यर्थः । ननु विशेषस्यैव हेतुत्वे साधारणशब्दशब्दयोः कथनस्य किं प्रयोजनमत आहुः विशेषादित्यादि । समासेन द्योतयत इति समासघटकायाः पञ्चम्या ल्यब्लोपप्रयुक्तत्वेन श्रौतयोस्तत्प्रकृतिभूतयोः प्रादेशमात्रवाक्यद्युमूर्धादिवाक्यरूपयोः शब्दयोः समभिव्याहारेण परस्परसामाना-

रश्मिः ।

स्तात्पर्यमाह वेदेति वेदस्यार्थौत्पत्तिकसंबन्धाहेदप्रतिपाद्यमभिप्रयं गर्भे यस्य तत्वात् । एवमुत्तानार्थम् । भाष्यविरोधं परिजह्रुः अत्रेति । ग्रहणक इति साधारणशब्दाद्विशेष इति । भाष्ये । ब्रह्मादीति एकजातिः शब्दत्वम् । एकत्वावच्छिन्नं शब्दत्वं तदवच्छिन्नानि बहुत्वावच्छिन्नानि ब्रह्मादिपदानीत्यर्थः । संदेह इति वैश्वानरः पदार्थो वा वाक्यार्थो वेति संदेहः । वैश्वानरं संप्रत्यध्यैषीत्यत्र वैश्वानरः पदार्थः । वैश्वानरस्य मूर्धैव सुतेजा इत्यत्र वाक्यार्थोपि वैश्वानरः । ततश्च पदार्थाद्विशेषः । प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमिति वाक्यरूपे शब्दे विशेषो विरुद्धधर्माधारत्वलक्षणो वाक्यार्थाद्वा विशेषो विरुद्धधर्माधारत्वलक्षण इति संदेहः । तमिति पूर्वोक्तम् । साधारणाद्धिरण्यगर्भसाधारणात् । वाक्यरूप इति प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमिति वाक्यरूपे । विरुद्धेति प्रादेशो मूर्धचिबुकान्तरालदेशः तन्मात्रस्यामितो विगतमानत्वं विरुद्धम् । केचित्तु क्षेतरोक्तमिया प्रादेशमात्रमित्यस्य द्युमूर्धादिविशिष्टं प्रदेशमात्रं प्रदेशे द्युमूर्धादिभिः कृत्वा प्रत्यगात्मतया मीयते ज्ञायते इति प्रदेशमात्रः । शाखान्तरे तु मूर्धादिचिबुकप्रतिष्ठ इति प्रादेशमात्रत्वं कल्पयन्ति । इह तु न तथाभिप्रेतमस्य ह वा एतस्येत्याद्युपसंहारविरोधात् । अभिविमानमिति प्रत्यगात्मतया अभि सर्वैः प्राणिभिर्विमीयते इत्यभिविमानमित्याहुः तत्र विरुद्धधर्माश्रयत्वेनोपसंहाराविरोधात् । अभि इत्यस्य सर्वैः प्राणिभिरित्यर्थस्य क्लिष्टत्वात् । समासेति समासः साधारणाच्छब्दः साधारणशब्दस्तस्मिन् विशेष इति पञ्चमीतत्पुरुषघटितसप्तमीतत्पुरुषः । हिरण्यगर्भसाधारणं द्युमूर्धत्वादिकमालोच्य शब्दः प्रादेशमात्रमभिविमानं वैश्वानरमिति विरुद्धधर्मबोधकस्तस्मिन् विशेषो विरुद्धधर्माधारत्वलक्षणस्तस्मात् । तत्प्रकृतीति पञ्चमी प्रकृतीत्यर्थः । तदित्थम् साधारणात् प्रादेशमात्रवाक्यात् द्युमूर्धादिवाक्याच्चेति । समभिवीति एकार्थीभावलक्षणसामर्थ्याच्च परस्परस्य सामानाधि-

यदपि लोकात्मकं स्थूलं रूपं तदपि भगवत एव, न हिरण्यगर्भस्येति। पुरुषत्वात्तस्य।

---

भाष्यप्रकाशः।

धिकरण्यसूचनाद् द्योतयतः। अन्यथेति वैयधिकरण्ये। एतेन ल्यब्लोपार्थग्रहणे युक्तिरुक्ता। ननु सूत्रसिद्धं विरुद्धधर्माश्रयत्वं तु प्रादेशमात्राभिविमानपदयोः पौर्वापर्यसमभिव्याहाराभ्यां लभ्यते। तावता द्युमूर्धत्वादेर्हिरण्यगर्भसाधारण्यं कथं निवर्ततामित्यत आहुः यदपीत्यादि। तत्र हेतुः पुरुषत्वात् तस्येति। अयमर्थः। श्रुतौ पुरुषशब्दश्चतुर्धा प्रयुज्यते। पुरा आसेति, पुरमुषतीति, पुरि शेत इति त्रिधा योगेन। एकधा आकारविशेषे रूढ्या। प्रकृते च मूर्धाद्यङ्ग-श्रावणाद् रूढ एवाभिप्रेयते। सा च कुत्र मुख्येति विचारे सामान्यतः शब्दमात्रस्योङ्कारवि-कृतित्वेन तद्वाच्ये ब्रह्मण्येव मुख्या। आनन्दमयाधिकरणेऽन्तःस्थस्यानन्दमयस्य परस्यैव विज्ञान-मयादिषु पुरुषाकारसमर्पकत्वेन विमृष्टत्वाच्च। 'सहस्रशीर्षा पुरुषः', 'वेदाहमेतं पुरुषं महान्तम्'

रश्मिः।

करण्यं भिन्नप्रवृत्तिनिमित्तत्वे सति एकार्थबोधकत्वलक्षणं विषयवाक्येनावगतं सूच्यते व्यञ्जनयोच्यते इत्येवं परस्परसामानाधिकरण्यसूचनात् द्योतयतः। वैयधीति प्रकारे थालिति प्रकारभूतेस्मिन्। प्रादेशमात्रत्वद्युमूर्धत्वादिकयोर्विरोधत्वाभावादित्यर्थः। एतेनेति वैयधिकरण्यसामानाधिकरण्ययोरा-लोचनेन। युक्तिरिति। तर्कोन्यथाज्ञानमिति यावत्। यदि हिरण्यगर्भसाधारणद्युमूर्धत्वाद्या-लोचनं न स्यात्तदा हिरण्यगर्भवारणाय शब्दे विरुद्धधर्माधारत्वलक्षणो विशेषो न स्यादिति। कार्य-कारणभावग्राहकस्तर्कः। न तु व्याप्तिशोधकः। सूत्रसिद्धमिति सौत्रहेतुसिद्धम्। साधारणद्युमूर्ध-त्वादेर्धर्माच्छन्दे प्रादेशमात्रमभिविमानमिति वाक्ये मूर्धैव सुतेजा इति वाक्ये च विशेषो विरुद्ध-धर्माधारत्वमिति सौत्रहेतोरर्थात्। पुरेति पुरुषविधब्राह्मणे आत्मैवेदमग्र आसीत्पुरुषविध इत्युपक्रम्य स यत्पूर्वोस्मात् सर्वस्मात् सर्वान् पाप्मन औषत्तस्मादुच्यते पुरुष इति। तृतीयापि मधुब्राह्मणे पुरः पुरुष आविरासीदिति स वा अयं पुरुषः सर्वासु पूर्षु पुरिशय इति औषददहत्। उषू दाहे भ्वादिः परस्मैपदी सेट् ऊदित्। पुरः शरीराणि उष दाह इति सुबोधिनीप्रथमस्कन्धतृतीयाध्याये जगृहे पौरुषं रूपमित्यस्य सा धातुपाठान्तरे उच्छृङ्खलापि विवृत्तिर्मम चिन्तनीयेति स्कन्धसमाप्तौ कथनात्। उष् दाह इति तु स्वरवर्णानुक्रमहैमधातुपाठेस्ति। रूढ्येति समुदायशक्त्या। रूढ इति। ननु कुतो न योगेन यौगिकोवयवशक्तेः पुरा आस इत्यस्याः सत्त्वादिति चेन्न। आत्मनः सविकल्पज्ञानत्वपक्षेऽरूपवत्सूत्रोक्तसिद्धान्ते योगाभावात्। ननु श्रौतेन योगेन ब्रह्मादिषु सकल-देवेषु ब्रह्मा इत्यादिपुरुषलिङ्गेन पुरुषाभेदः प्रतीयते रूढ्या स बाधिष्यते अश्रौतत्वादिति चेन्न। वैश्वानरस्य ब्रह्मत्वे सूत्रेणोद्दिष्टे इदमित्थतया वेदेनाप्यनिरूप्ये रूढेर्बाधाभावात्। न चेदमित्थतयाऽ-निरूप्येपि योग उचितः श्रौतत्वात् न रूढिर्लौकिकत्वादिति वाच्यम्। पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिरिति श्वेताश्वतरे रूढ्यङ्गीकारात् सा श्रौती तस्या अङ्गीकारात्। न च श्वेताश्वतरेपि रूढ्यां प्रमाणाभाव इति वाच्यम्। इदमित्थतया ज्ञानाविषये रूढ्यभावस्य निश्चेतुमशक्यत्वात्। स्या चेति रूढिः। एतदेव ध्वनयन्ति स्म आनन्देति। परस्येति 'यतो वाचो निवर्तन्ते' इति श्रुतिविषयस्य। पुरुषत्वात्तस्येत्यत्रान्यमपि हेतुमाहुः सहस्रेति। ननु सहस्रशीर्षा पुरुष इत्यत्र सहस्रशीर्ष्णि पुरुषपदस्य पुरा आस पुरमुषतीति योगद्वयं तृतीयस्तु न अत्यतिष्ठद्दशाङ्गुलमिति श्रुतेः

भाष्यप्रकाशः ।

इत्यादावपि तथैव सिद्धत्वाच्च । एवं सति, पुरुषौ चात्ममानवावित्यभिधानकोशेनान्यत्र शक्तिग्राहणेऽपि ।

'तथा पुरुषशब्दोऽयं वासुदेवेऽवतिष्ठते ।
विना तं पुण्डरीकाक्षं कोऽन्यः पुरुषशब्दभाक् ॥
भगवानिति शब्दोऽयं तथा पुरुष इत्यपि ।
निरुपाधी च वर्तेते वासुदेवे सनातने ॥
ब्रह्माद्याः सकला देवा यक्षगन्धर्वकिन्नराः ।
ते सर्वे पुरुषांशत्वादुच्यन्ते पुरुषा इति' ॥

इति शिवतत्त्वविवेकलिखितात्पुराणात् ।

'स एव वासुदेवोऽयं साक्षात् पुरुष उच्यते ।
स्त्रीप्रायमितरत् सर्वं जगद् ब्रह्मपुरःसरम् ॥
स एव वासुदेवोऽयं पुरुषः प्रोच्यते बुधैः ।
प्रकृतिस्पर्शराहित्यात् स्वातन्त्र्याद् वैभवादपि' ॥

इति नृसिंहपुराणाच्च परस्मिन् ब्रह्मणि वासुदेवे एव मुख्यः । अतस्तस्यैव पुरुषत्वादित-रवारणाच्च । न चेतरवारणेऽपि न शिवस्य वारणमिति शङ्क्यम् । प्रकृतिस्पर्शराहित्यस्वातन्त्र्याभ्यां तस्यापि वारणात् । 'शिवः शक्तियुतः शश्वत्' इति श्रीभागवतवाक्येन ।

रश्मिः ।

पुरोतिक्रमबोधने । न पुरि शयनाभावात् । अत एव न पुरि वसतीति सुबोधिन्युक्तयोगः । संकर्षणः पुरुष इत्युक्तम् । 'सहस्रवदनः स्वराट्' इति दशमस्कन्धात् 'एतावानस्य महिमा अतो ज्याया१ँश्च पुरुषः' इति श्रुत्युक्ते विराजः कारणेऽत्रापि योगद्वयं नास्ति पुरा आसेति योगस्तु स्यात् ज्यायान् गुणैः वासुदेवः पुरुष इत्युक्तम् । मोक्षदातृत्वेन गुणैर्ज्यायस्त्वात् । तस्माद्विराडजायतेति प्रद्युम्नः पुरुष इत्युक्तम् । गर्भसंबन्धात्तस्य । 'विराजो अधिपूरुषः स जातोत्यरिच्यत' इत्यत्र पुरि शेते पुरि वसतीति योगद्वयं विराजमधिकं कृत्य पुरिशयनाद्वसनाच्च । अनिरुद्धः पुरुष इत्युक्तम् । अधि-पुरुषो ब्रह्मा यज्ञश्रद्धत्वात् धर्मात्मानिरुद्धरूपश्च । 'ब्रह्मन् पुंसि च' इति पाणिनिसूत्रात् । अग्रे यत्पुरुषेण हविषेत्यत्र पुरुषं जातमग्रतः इत्यत्र यत्पुरुषं व्युदधुरित्यत्र प्रद्युम्नसंकर्षणानिरुद्धव्यूहेषु पुरु-षपदानि वासुदेवव्यूहेपि न पुरुषपदमतः पुरुषत्वात्तस्येति भाष्यार्थे कथमयं हेतुरिति चेन्न गोपाल-तापिनीये वासुदेवादिव्यूहेषूक्तेषु कथं चतुर्भिर्देवैरेको देवो भवेत् इति प्रश्ने एकमेवाद्वितीयं ब्रह्मेति कथनात् । अतो वेदाहमेतमित्यत्रैतच्छब्दस्य सन्निहितयत्पुरुषं व्यदधुरिति श्रुतिविहित्य यज्ञपुरुष-परत्वेपि सहस्रशीर्षा पुरुष इत्यस्य संकर्षणपरत्वेपि यथा विश्वं पादौ ब्रह्महस्तौ देह इति प्रत्ययौ तथानिरुद्धसंकर्षणौ वैश्वानर इति प्रत्ययाच्च क्षतिः । एतमित्येतच्छब्दस्य वेदे संनिहितपरामर्शक-त्वानियमे तु गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः इति न्यायादेतं वैश्वानरं व्यूहचतुष्टयं कृष्णं वेदेत्य-र्थान्न दोषः । आत्मैवेदमग्र आसीत्पुरुषविधः इति पुरुषविधब्राह्मणश्रुतेः । आदिपदेन 'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्' इत्यस्याः आत्मैवेदमित्यस्याश्च संग्रहः । अन्यत्रेति । मानवे मनुस्तत्पत्ने जीवे तथाच विराड्जीवो मुमूर्षत्वादिविशिष्टो भवत्विति भावः । गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय इत्यभिप्रेत्याहुः तथा पुरुषेति । शिवतत्त्वविवेकोप्पयदीक्षितग्रन्थः । वैभवादिति

भाष्यप्रकाशः ।

'जगतत्कारणतापन्नः शिवया मुनिपुङ्गवाः ।
सा तस्यापि भवेच्छक्तिस्तया हीनो निरर्थकः' ॥

इत्यादिपञ्चत्रिंशद्भिः सूतसंहितावाक्यैश्च सर्वदा सर्वावस्थासु शिवस्य प्रकृतियुक्तत्वतदधीनत्वयोरुक्तत्वात् । 'शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि' इति सौन्दर्यलहर्यां शंकराचार्यैरपि तथाङ्गीकारादिति । नच कारणस्य सर्वाभिः कार्यावस्थाभिरवस्थावत्त्वात् तादृशं रूपं ध्यानार्थमेवोच्यते, न तु तद्वास्तवं कारणरूपमिति वाच्यम् । अत्र मूर्धैव सुतेजा इत्यादिना सिद्धान्येवाङ्गानि निर्दिश्य तेषां द्युप्रभृतिरूपताविधानादङ्गानामवास्तवत्वस्याशक्यवचनत्वात् । न च पृथिव्येव पादावित्यत्र विपरीतोद्देश्यविधेयभावोऽस्त्वेवमिति शङ्क्यम् । पूर्ववाक्य उद्दालकं प्रति, पादौ त्वेतावात्मन इत्युक्तत्वात् । न च वैद्यके, मूत्राशयपुटो बस्तिरिति कथनादत्र तदुल्लेखेन कार्यरूपत्वमाकारस्य शङ्क्यम् । बस्तिर्नाभेरधो द्वयोरिति कोशोक्ताया नाभ्यधोभागमात्रताया अत्र विवक्षितत्वात् । अन्यथा जलस्य मूत्रीभावेनाऽप्रयोजकत्वे तस्मिन् रयित्वकथनस्य विरुद्धत्वप्रसङ्गात् । तस्य जलनामत्वाभावात् । एतद्वा अपां नामधेयं गुह्यं यदाधावा इतिवद् गुह्यनामत्वेनाप्यश्रावणाच्च । न च साकारस्य पूर्वपक्षोक्तेन लोकन्यायेनाऽब्रह्मत्वं शङ्क्यम् । विरुद्धधर्माश्रयत्वेन सिद्धे वैश्वानरस्य ब्रह्मत्वे तस्याप्रयोजकत्वात् । अलौकिकाऽऽकारत्वेन सत्प्रतिपक्षत्वाच्च । न चात्र मानाभावः शङ्क्यः । 'सहस्रशीर्षा पुरुषः', 'सर्वतः पाणिपादं तत्' इत्यादिश्रुतीनामेव मानत्वात् । सर्वत्रैकस्यैव ब्रह्मणः प्रतिपाद्यत्वात् । अतः साकारस्यैव ब्रह्मताप्रतिपादनार्थमेवं कथनमिति, नात्र हिरण्यगर्भादिरूपता प्रतिपादयितुं शक्येति ।

रश्मिः ।

वैभवः विभुरेव प्रज्ञाघण् । सर्वभवनसमर्थः । भावप्रधानः वैभवत्वात् । इतरेति विराड्जीववारणात् । शक्त इति तदा शक्तः । न चेदेवं एवं शक्त्या युक्तो न यदि । कार्येति दिवसूर्यादिव्यवस्थाभिः । विपरीतेति न च पादावेव पृथ्वीत्यन्वये न विपरीतेत्यादिरिति वाच्यम् । पाठक्रमापेक्षायामुक्तान्वयाभावात् । नच प्रधानक्रमेण योगानां क्रमः आश्रियते स मुख्यः क्रमः प्रधानमुत्तमाङ्गं मूर्धेति मुख्यक्रमेणान्वयोस्तु इति शङ्क्यम् । तस्य पादौ त्वेताविति श्रुतेर्विवक्षाधीनत्वादित्यत एकवाक्यतामाहुः पूर्ववाक्य इति । कं त्वमात्मानमुपास्स इति पृथिवीमेव भगवो राजन्निति होवाचेति वाक्ये त्वमुद्दालकः पादाविति एतौ पृथिवीरूपौ तथा चोद्देश्यत्वं पादयोः तत्रेत्यत्रापि तदेकवाक्यतया तयोरेवोद्देश्यत्वमित्यर्थः । तथा चोद्देश्यविधेयभावविकल्पापेक्षयैकवाक्यतयैकार्थो ज्यायानिति भावः । लाघवात् । बस्तिरिति । अधः अधोभागः । द्वयोः स्त्रीपुंसयोः । तस्येति सूत्रस्य । पूर्वपक्षेति साकारस्य तु लोकन्यायेनाब्रह्मत्वमिति भाष्योक्तलोकन्यायेन । सत्प्रतिपक्षेति । विमतो वैश्वानरो ब्रह्म अलौकिकाकारत्वादानन्दवदिति साध्याभावसाधकोऽस्य साकारत्वस्य हेतोरिति सत्प्रतिपक्षलक्षणसत्त्वात् । अत्रेति वैश्वानरस्य ब्रह्मत्वे । तथाच गौरश्वत्वाच्छब्दो नित्यः कृतकत्वादित्यत्रेव हेतोर्बाधितत्वान्न सत्प्रतिपक्षत्वमिति भावः । न बाध इत्याहुः सहस्रेति संकर्षणाभेदविवक्षया संकर्षणरूपमुपन्यस्तम् । ब्रह्मरूपमुपन्यस्तम् । सर्वत इति । तथाच वैश्वानरे ब्रह्मत्वसत्त्वात् नालौकिकाकारस्य हेतोर्बाधितत्वमिति भावः । ननु सर्वतः पाणिपादान्तत्वं ब्रह्मरूपं द्युमूर्धादिरूपं कुत इत्यत आहुः सर्वत्रेति । ब्रह्मभेदाभावादिति भावः । एवं कथनमिति न चैवं निबन्धे कटकाद्युपचाराः साक्षात्कृता भवन्तीति कथं मुखोपचाराणां दिवि साक्षात्कृतत्वात् इति चेन्न ब्रह्मणो भक्तमनोरथपूरकत्वस्य अचलत्वं चापेक्ष्येति

विश्वस्य जडस्य नरस्य जीवस्य च भगवदंशत्वेन देवतात्वाद् 'देवताद्वन्द्वे च' इति विश्वानरौ । तौ निवासो यस्येति, 'तस्य निवासः' इत्यण्, तेन परमेश्वर

भाष्यप्रकाशः ।

तेन शंकरभास्कराचार्याभ्यां यद् व्याख्यातं, साधारणयोर्वैश्वानरात्मशब्दयोर्यो विशेषो द्युमूर्धत्वादिस्तस्मादिति । तद्धिरण्यगर्भसाधारण्यादसंगतमिति बोधितम् ।

ननु भवत्वेवं, तथापि वैश्वानरशब्दस्य कथं ब्रह्मणि समन्वय इत्याकाङ्क्षायां योगरूढ्येति बोधयितुं योगं बोधयन्ति विश्वस्येत्यादि । 'विश्वो वैश्वानरः प्रथमः पादः' इतिश्रावणाद् ब्रह्माण्डदेहस्य विश्वस्य जडस्य तैजसो हिरण्यगर्भो द्वितीयः पाद इति श्रावणान्नरस्य तदन्तर्गतस्य मुख्यजीवस्य च पादत्वे भगवदंशत्वेन देवतात्वाद्देवताद्वन्द्वे कृते 'देवताद्वन्द्वे च' इति सूत्रेणानङि जाते, विश्वानरौ । ततो निवासार्थेऽणि कृते तथेति तथेत्यर्थः । 'तस्य निवासः' इत्यण् इति पाठे तु, विश्वानरयोर्निवास इति विग्रहान्तरमपि बोध्यते । तथा सत्येकोऽर्थो विग्रहोपन्यासेनेतरश्च सूत्रोपन्यासेने-

रश्मिः ।

तुरीयाध्यायसूत्रे वक्ष्यमाणत्वाद्भक्तमनोरथेन स्वसेव्यस्वरूपत्वे सामर्थ्याभावाभावात् । तदुक्तं तद्रूपं गोपालतापिनीये तरुणं गोपवेशमभ्राममिति । अत्र तु प्रादेशमात्रमभिविमानमिति 'उत्क्षिप्तहस्तः पुरुषो भक्तमाकारयत्युत' इति निबन्धे तरुणोपि व्रजे बालको भूत्वा क्रीडते पुरुषोत्तम इति कृष्णोपनिषदि प्रादेशमात्रोपि । साधारणयोरिति वह्निजीवसाधारणयोः । बोधितमिति तथाच द्युमूर्धत्वादिधर्मेषु सौत्रस्य साधारणधर्मेषु विशेषादिति विशेषपदस्य शक्तिर्वक्तुमशक्येति भावः । वेदान्तशब्दानां ब्रह्मपरत्वं प्रथमपादे उक्तम् । तेन वैश्वानरपदस्य विरुद्धधर्माश्रयत्वलिङ्गेन ब्रह्मत्वसिद्धावपि वृत्तिनिर्धारायाहुः ननु भवत्विति । योगरूढ्येति पङ्कजपदवत् । श्रावणादिति माण्डूक्ये नृसिंहतापिनीये च । देवतेति उपलक्षणमेतत् 'वैश्वानरं द्वादशकपालं निर्वपेत्' इत्येकहविर्भागित्वेन श्रुतत्वात् देवतात्वस्य । कृत इति विश्वं च नरश्च विश्वनराविति कृते । अनङीति । ननु विश्वनरयोः द्वन्द्वो दुर्लभ इतरेतरयोगाभावादिति चेन्न । जीवजडयोर्लोके प्रसिद्धसाहचर्याद् योगोस्तीति साहचर्यं च भिन्नयोरेवेति भेदो द्वन्द्वकारणं सोस्त्येवेति भेदस्य द्वन्द्वकारणत्वं नैयायिकसिद्धान्तमुक्तावल्याम् । तौ निवास इति भाष्यं व्याचकुः तत इति । विरुद्धधर्माश्रयप्रसङ्गाद्यस्य तौ निवासस्तयोर्निवास इति विग्रहे तस्य षष्ठ्यन्तात् समर्थात् निवास इत्यर्थेऽण् इत्यण् इति भाष्यार्थः । अन्यथा चेष्टात्मककाले विमते काले वा वैश्वानरपदप्रयोगः स्यात् । न च पङ्कजादिपदवत् ब्रह्मणि रूढिरप्यस्तीति शङ्क्यम् ।

'ये धातुशब्दा यत्रार्थ उपदेशे प्रकीर्तिताः ।
तथैवार्थो वेदराशेः कर्तव्यो नान्यथा क्वचित्' ॥

इति रूढिनिषेधात् । अतस्तौ निवासो यस्य तादृशयोर्निवासयोर्निवास इत्यर्थेन काले प्रयोगः । जन्यमात्रं कालोपाधिरिति विश्वनरयोः कालनिवासत्वाभावात् पुरः पुरुष आविशदिति श्रुत्युक्तप्रविष्टनिवासत्वस्य विवक्षितत्वात् । तेनेति एवमर्थेन । नान्य इति कालादिर्नेत्यर्थः । अन्यत्रेति वह्न्यादौ । एवं भाष्यं व्याकृतम् । प्रकृते । सोस्य निवास इत्यणिति भाष्यपाठं मत्वाहुः निवासार्थे इति निवासः अर्थः संबन्धिवस्तु यस्य सौत्रषष्ठ्यन्तस्येति निवासार्थस्तस्मिन्नर्थेऽणि कृत इत्यर्थः । तथेतीति विश्वानरो वैश्वानरत्वेन प्रकारेणेति तथेति वैश्वानर ईश्वरत्वेन प्रकारेणेत्यर्थः । तथा सतीति पाठद्वये

एव वैश्वानरो भवति, नान्यः । भगवदंशत्वादन्यत्रोपचारात् प्रयोगः । तस्मात् वैश्वानरः परमात्मा ॥ २४ ॥

---

भाष्यप्रकाशः ।

त्येवमपि विरुद्धधर्माश्रयत्वाय संगृहीतं भवतीति बोधितं ज्ञेयम् । यद्यपि निरुक्ते, वैश्वानरस्य सुमतौ स्यामेत्यत्र, विश्वान्नरान्नयति, विश्व एनं नरा नयन्तीति वा, अथवा विश्वानर एवेति निरुक्तौ-नाम्नुक्तिः । सायणीये च विश्वेषां नराणां हित इति । अन्यत्रापि 'नरे च संज्ञायाम्' इति विश्व-पदस्य दीर्घं विधाय ऋष्यणा व्युत्पादनम् । तथाप्यत्र जीवजडव्यावृत्त्यर्थमेवाचार्यस्य प्रवृत्तत्वादेवं व्युत्पादितम् । ननु भवत्वेवं, योगरूढ्योः सर्वसाधारणत्वाद् व्युत्पादनमनतिप्रयोजनमिति शङ्कायामाहुः भगवदंशेत्यादि । तथा च पुरुषपदवदत्रापि रूढ्यादिश्छायामात्रम् । वस्तुतस्तु

रश्मिः ।

सति । सूत्रोपेति 'तस्य निवासः इति पाणिनिसूत्रोपन्यासेनेति । एवमपीति अयं पक्षो भाष्ये व्याकृते व्याकृतः । नैरुक्त इति द्वादशस्य षष्ठे पादे । विश्वानिति तट्टीकायां दुर्गाचार्यैरेवं व्याकृतम् । विश्वान्नरानितो लोकादमुं लोकं नयति सर्वासु प्रवृत्तिषु तान् प्रवर्तयतीति वैश्वानरः तस्मिन् सत्येव सर्वाः प्रवृत्तयो नराणां सफला भवन्तीति हेतुकर्तृत्वं द्वितीयव्युत्पत्तौ तु स नीयमानस्तासु क्रियासु अङ्गभावं नरैस्तच्छब्दवाच्यं कर्म संपद्यत इति तृतीयव्युत्पत्तौ तु सर्वभूतप्रवेशाद्विश्वानरः स एव वैश्वानर इति तस्मिन्नग्निकर्तृकनयने सति हेतुकर्तृत्वं प्रयोजककर्तृत्वं नरा सर्वे यागादिकर्मभिः फलं नयन्ति तान् वैश्वानरोऽग्निः नाययति हेतुमण्णिचो लुक् छान्दसः । अङ्गभावं कर्तृभावम् । प्रवेशात् नये भ्वादिः परस्मैपदी प्रापणात् । अन्यत्रेति व्याकरणे विश्वे नरा अस्येति विश्वेनरस्तस्यापत्यं वैश्वानरः । आचार्यस्येति भगवतो व्यासस्य । एवमिति वेदत्वेपि वेदान्तसमाख्यया शाखान्त-रत्वेन च निरुक्तव्युत्पत्तीनामनावश्यकत्वेन निरुक्तोक्तपक्षद्वये प्रत्ययस्यानतिप्रसिद्धत्वेन च तृती-यपक्षे जीवजडव्यावृत्त्यभावेन सायणीयव्याकरणपक्षयोरसंभवेनैवं व्युत्पादनम् । अत्र तर्हि अग्नि-रिति श्रुतेर्निरुक्ताद्युक्तव्युत्पत्तीनां संभवेपि शाखान्तरे फलान्तरप्रयुक्तधर्मान्तरैः सत्यज्ञानादिभिः प्रति-पित्सून्प्रति तदसंभव एव अतो वेदशाखे एव ता व्युत्पत्तयः । भवत्वेवमिति । अत्र तथापीति शेषः । सर्वसाधारणेति यथाह ।

'काचं मणिं काञ्चनमेकसूत्रे ग्रथ्नन्ति मूढाः किमु तत्र चित्रम् ।
विवेकवित्पाणिनिरेकसूत्रे श्वानं युवानं मघवानमाह' ॥ इति ।

'श्वयुवमघोनामतद्धिते' इति पाणिनिसूत्रम् । अनतीति न अति अत्यन्तं प्रयोजनं प्रशस्ततयं प्रशंसालक्षणं फलं यस्य व्युत्पादनस्येति । आहुरिति 'ये धातुशब्दाः' इति पत्रावलम्बनकारिकाया रूढिमनादृत्य योगमाहुः तथा चेति । पुरुषपदे व्युत्पत्तिचतुष्टयस्योक्तत्वेनादित्ये पुरुषपतीति व्युत्पत्तिः उत्तमे पुरुषे पुरा आस इति, मानवे पुरि वसति इति, अन्यत्र पुरि शेत इति, एवां समुदायशक्ति-मन्तरापि ।

'अनेकार्थस्य शब्दस्य वाचकत्वे नियमितम् ।
संयोगाद्यैरवाच्यत्वधीकृत्त्वाप्रतिरञ्जनम्' ॥ इति ।

भाष्यप्रकाशः ।

जातिनिबन्धना प्रशंसानिबन्धना वा गौणीत्यर्थः । सिद्धमाहुः तस्मादित्यादि । तस्मादिति । उक्तरीतिकाद् विशेषात् सर्वेषां पदवाक्यानां तदनुगुणत्वाच्चेत्यर्थः ।

रामानुजाचार्यास्तु; विशेष्यत इति विशेषो विशेष्यमाणत्वम् । जाठरभूतदेवतात्मपरमात्मसाधारणस्य वैश्वानरशब्दस्य परमात्माऽसाधारणधर्मैर्विशेष्यमाणत्वादित्येवं सौत्रं हेतुं व्याख्याय

रश्मिः ।

व्यञ्जनावृत्तिरञ्जनम् ।

'संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः' ॥

इति काव्यप्रकाशोक्तदिशा प्रकरणादिनार्थविशेषस्मरणाद्रूढिमन्तराप्यादित्यादीनां तत्र तत्र प्रतिपाद्यता । यथा सशङ्खचक्रो हरिरित्यत्र हरतीति योगमात्रेपि शङ्खचक्रसंयोगाद्धरिपदवाच्यः कृष्णः न सिंहो नापीन्द्रो नापि कपिः । सैन्धवमानयेत्यादौ सैन्धवपदस्य योगरूढत्वे भोजनप्रकरणे लवणबोधो गमनप्रकरणेऽश्वबोधश्च न स्यात् । अतो योगमात्रं प्रकरणादिनाऽश्वलवणबोधवत् पुरुषपदेन यौगिकेन प्रकरणादिनादित्यादिबोधवदत्रापि वैश्वानरेपि वेदवेदान्तशास्त्रभेदेनाग्निपरमात्मनोर्योगमात्रेण बोध इति रूढिः आदिपदेनाव्युत्पत्तिपक्षे योगस्य च छायामात्रमाभासमात्रम् । वेदान्ते घटपटपदादौ घट भाषणे घट चेष्टायां पट गतौ इत्यादिधातुभ्यो यौगिकार्था ये प्रतीयन्ते तेऽर्था घटपटादीनां सच्चिदानन्दात्मकत्वात् । लोके तु ।

'लोके शब्दार्थसंबन्धो रूपं तेषां च यादृशम् ।
न विवादस्तत्र कार्यो लोकोच्छित्तिस्तथा भवेत्' ॥

इति पत्रावलम्बनात् घटपटपदादौ रूढिः सच्चिदानन्दात्मकत्वस्यानधीतिनामप्रत्ययाद्घटादिषु । घटादिषु चिदानन्दावाच्छन्नौ सदंशः प्रकट इति । ननु यत्र पुरुषपदप्रयोगः पुरा आसेति व्युत्पन्ने चक्षुः सूर्ये पुरुषपदं कथं पुरमुषतीति व्युत्पत्तेः पुरा आसेति व्युत्पन्ने सत्त्वात् सूर्यस्तपति मद्भयात् इत्यादिवाक्यादिति चेत्तत्राहुः वस्तुतस्त्विति । पुरुषत्वं वैश्वानरत्वं च जातिः प्रशंसा तु अवयवितुल्योवयव इति सूर्यः पुरुषपदेन प्रशस्यते इति वेदान्तिब्रह्मतुल्यो वेदिब्राह्मणग्निरित्यग्निः प्रशस्यते इति प्रशंसागुणस्यावयविवाचकपदार्थेनाधेयतासंबन्धात् लक्ष्यमाणस्यावयवे सूर्ये योगात् । प्रशंसागुणस्य वेदान्तिब्रह्मवाचकपदार्थेनाधेयतासंबन्धाल्लक्ष्यमाणस्य वेदिब्राह्मणाग्नौ योगादुभयत्र प्रशंसानिबन्धना गौणीत्यर्थः । तदुक्तं काव्यप्रकाशे । लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणतेति । उक्तेति सौत्रहेतूक्ताद्विशेषात् विरुद्धधर्माधारत्वलक्षणात् । तदन्विति । विरुद्धधर्माधारत्वानुगुणत्वात् । अधुना साधारणशब्दाद्विशेषः साधारणधर्माच्छब्द एव विशेषो नो वा । तस्मादित्यत्र द्वितीयपक्षेऽप्रतीतार्थापेक्षयान्याचार्यव्याख्यानं श्रेष्ठं मन्यमानं प्रत्याहुः रामानुजेति । साधारणशब्दयोर्विशेषः साधारणशब्दविशेषः तस्मादिति शंकराचार्यव्याख्यानमप्रतीतार्थमिति रामानुजाचार्यमतोपन्यासः कृतः । जाठरेति अयमग्निर्वैश्वानरो योयमन्तःपुरुषे येनेदमन्नं पच्यते इति श्रुतेर्जाठरसाधारणस्य तस्यैव घोषो भवति यमेतत्कर्णावपिधाय शृणोति स यदोत्क्रमिष्यन् भवति नैनं घोषं शृणोतीति श्रुतेः । घोषरूपे शब्दे

भाष्यप्रकाशः ।

औपमन्यवादीनां षण्णां, को न आत्मा, किं ब्रह्मेति विचार्य भेदस्य निर्देशाज्जीवात्मत्वे निवारिते, तेषां जीवात्मनामात्मभूतं ब्रह्म जिज्ञास्यमिति निश्चये तज्जिज्ञासुभिर्वैश्वानरात्मज्ञं कैकेयं राजानमागम्य पृच्छ्यमानो वैश्वानर आत्मा परमात्मैवेति विज्ञायते । किंचात्मब्रह्मशब्दाभ्यामुपक्रम्य पश्चात् सर्वेषु वाक्येष्वात्मब्रह्मशब्दाभ्यां व्यवहारे कर्तव्ये ब्रह्मशब्दस्थाने निर्दिश्यमानो वैश्वानरशब्दो दृश्यतेऽतः स शब्दो ब्रह्मैवाभिधत्त इति विज्ञायते । किंच । सर्वलोकसर्वभूतसर्वात्मस्वप्नादनमग्निप्रोतेषीकातूलदाहवत् सर्वपाप्मदाहश्चाग्रे वैश्वानरात्मविज्ञानफलत्वेन श्राव्यमाणौ ज्ञानविषयं वैश्वानरं परब्रह्मत्वेन विज्ञापयत इत्याहुः । अत्र ब्रह्मधर्मैर्विशेष्यमाणत्वं त्वायाति, परं त्वतिक्लेशेनेति बोध्यम् ।

भिक्षुशैवौ तु, सर्ववेदान्तसाधारणो यः शब्दविशेष आत्मब्रह्मरूप इति व्याचख्यतुः । तत्त्वात्मब्रह्मशब्दयोर्ब्रह्मपरताया उपपादनसापेक्षतया तयोः साध्यसमत्वेन सिद्धवद्धेतुतानर्हत्वादुपेक्ष्यमेव ।

माध्वास्तु, 'आत्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यते' इति स्मरणाद् विष्ण्वसाधारणेनात्मशब्देन विशेषणादिति व्याकुर्वन्ति । तदप्यात्मशब्दस्योपक्रमस्थे संशयवाक्याग्रिमप्रश्नादिवाक्यतदग्रिमनिष्कर्षवाक्येषु प्रयोगेण जीवसाधारण्यदर्शनेन चोपपादनसापेक्षतया शिथिलमिव ।

रश्मिः ।

आकाशसूक्ष्ममहाभूते भूतसाधारणस्य विश्वस्मादग्निरित्यादिश्रुतेः देवतात्मसाधारणस्य वैश्वानरस्य सुमतौ स्यामेति श्रुतेः परमात्मसाधारणस्य । परमेति प्रादेशमात्रत्वाभिविमानत्वात्मत्वरूपैः । विशेष्यते वैश्वानरः इति विशेष्यमाणः विशेषविशिष्टः विशेष्यमाणत्वं विशेषः विशेषादिति विशेष्यमाणत्वादित्यस्यार्थः । निवारित इति ब्रह्मजिज्ञासा प्रस्तावो न जीवजिज्ञासा प्रस्तावः इति निवारिते । पृच्छ्यमान इति औपमन्यवादिभिः पृच्छ्यमानः । परमेति एवकारेण जीवव्युदासः । अतीति तेषु ब्रह्मधर्मत्वस्योपपादनसापेक्षत्वादिति क्लेशेनायाति उपपादनेति । यथाहुः ।

'आत्मदेहमनोब्रह्मस्वभावधृतिबुद्धिषु ।
प्रयत्ने चाप्यग्नावा प्रस्तरे जलदे गिरौ ॥
ब्रह्म प्रोक्तं तपोध्यात्मदेवजातिषु सूरिभिः' ॥ इति विश्वकोशे ।

विष्ण्वित्यसाधारणशब्दविशेषादिति हेतुः अकारलोपश्छान्दसः । उपक्रमेति को न आत्मा किं ब्रह्मेति उपक्रमस्थवाक्यस्य संशयवाक्यत्वं किं ब्रह्म न वेति शेषपूरणेन पूर्वं तत्रैव प्रसाधितम् । अग्रिमेति औपमन्यव कं त्वमात्मानमुपास्से इत्यग्रिमप्रश्नवाक्यानि तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजा इत्यादिप्रश्नवाक्याग्रिमप्रश्नवाक्यनिष्कर्षवाक्यानि । जीवेति विराड्जीवसाधारण्यदर्शनेन । प्रबल इति तथा च विरुद्धधर्माधारत्वस्य तदेजति तन्नैजतीत्यादिश्रुतिभिर्गीतात्रयोदशाध्याये ब्रह्मनिरूपणे सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् । असक्तं सर्वभृच्चैवेत्यादिस्मृतिभिश्चोक्तेर्ब्रह्मनिरूपणे विरुद्धधर्माधारत्वस्य सौत्रविशेषपदार्थत्वेन भगवज्ज्ञासाश्रयगोचरत्वस्य तदीयान् प्रति प्रतीतत्वात् । अत एव पूर्वं व्याख्यातो हेतुरपि प्रतीत एव । भास्कराचार्यास्तु शंकराचार्यवत् साधारणशब्दयोर्विशेषो बुभूर्षत्वादित्याहुः तत्रायं समासो दुर्लभः 'अल्पाक्षरं पूर्वम्' इति पाणिनिसूत्रात् ।

१. विग्रहः ।

भाष्यप्रकाशः ।

तस्मात् सिद्धान्तोक्तहेतुरेव प्रबलः । यत्तु छान्दोग्यभाष्ये प्रादेशमात्राभिविमानपदयोर्व्याख्यानम् । प्रादेशा द्युमूर्धादिपृथिवीपादान्तास्तैरध्यात्मं मीयते ज्ञायत इति प्रादेशमात्रो, मुखादिषु करणेष्वत्तृत्वेन मीयत इति वा, द्युलोकादिपृथिव्यन्तप्रदेशपरिमाणो वा, प्रकर्षेण शास्त्रेणादिश्यन्त इति प्रादेशा द्युलोकादय एव, तावत्परिमाणो वा । शाखान्तरे तु मूर्धादिचिबुकप्रतिष्ठ इति प्रादेशमात्रं कल्पयन्ति । इह न तथाभिप्रेतः । तस्य ह वा एतस्यात्मन इत्युपसंहारात् । प्रत्यगात्मतया अभिविमीयते ज्ञायत इत्यभिविमान इति । तत्तु न युज्यते । मूर्धचिबुकप्रतिष्ठतया प्रादेशमात्रत्वस्य काल्पनिकत्वे मानाभावात् । नच, तस्य ह वा एतस्यात्मन इत्यादिना द्युमूर्धत्वादिकथनमेव मानमिति वाच्यम् । तदेजति, तन्नैजति, अणोरणीयान् महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः, अणीयान् व्रीहेर्ज्यायानाकाशादित्यादिश्रुतिभिः सिद्धे विरुद्धधर्माधारत्वे, अभिन्ननिमित्तोपादानतोपगमेन स्वयमभ्युपगते, मायायां युक्तिविरोधस्य भूषणत्वे च स्वीकृते द्युमूर्धत्वमात्रत्वयोः स्वमतपरमताभ्यामविरोधसिद्धेस्तथाकथनस्य काल्पनिकत्वानुपष्टम्भकत्वात् ।

रश्मिः ।

अधुनोच्यते सिद्धान्ते हेतुस्तदा संभवेद्यदा प्रादेशमात्रादिपदार्थौ परोक्त्यप्रतिहतौ स्यातां न त्वेवम् । छान्दोग्यभाष्ये परोक्तिप्रतिहतत्वादित्याहुः । यत्तु छान्दोग्येति । मीयते इति प्रादेशमात्रेऽग्रे प्रत्ययः । त्रायते इति त्रा त्रैङ् पालने प्रादेशमात्र इत्यत्र पुंस्त्वं छान्दसम् । माङ् माने शब्दे च इत्यत्र धातुः । इदानीमध्यात्ममुक्तं तत्र प्रकारं वक्तुमाह मुखादीति आदिना चक्षुःप्राणादि । परिमाणे मात्रजित्याशयेनाह द्युलोकादीति । एवं स्वार्थिकाणा प्रादेशशब्दसाधने प्रयोजनाभावात्प्रकारान्तरेणाह प्रकर्षेणेति । शाखान्तर इति समानप्रकरणे वाजसनेयिब्राह्मणे इति ब्रह्मामृतवर्षिण्याम् । उपसमिति उपसंहारस्यार्थनिर्णायकत्वेन तत्रात्मपदेन व्यापकस्यैव कथनात् तदनुरोधादिह न तथाभिप्रेतः इत्यर्थः । मूर्धेति य एषोऽनन्तो अव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठितः सोऽविमुक्तः कस्मिन् प्रतिष्ठित इति वरणायां नास्यां मध्ये प्रतिष्ठित इति का वै वरणा का वै नासेति सर्वाणीन्द्रियकृतानि पापानि वारयति नाशयतीति वरणा । नासीति कतमच्चास्य स्थानं भवतीति भ्रुवोर्घ्राणस्य च यः संधिः स एष द्यौर्लोकस्य च परस्य संधिर्भवतीति । अस्या अर्थः । य एष प्रसिद्धः परमात्मानन्तः अव्यक्तः स्वरूपेण अनभिव्यक्तः दुर्ज्ञेय इति यावत् । तं कथंचिज्जानीयादिति अत्रिप्रश्ने याज्ञवल्क्योत्तरं स इति याज्ञवल्क्योऽब्रवीत् । वरणायामिति वरणार्थे पदार्थे वदेत् पदे निर्वक्ति । सर्वाणीति सर्वान् इन्द्रियवृत्तिकृतान् दोषान् वारयति तेन वरणा भ्रुवावित्यर्थः । तान् दोषान् नाशयतीति नासीति तथाच नियम्यजीवद्वारा नियन्तुरीश्वरस्याधिष्ठानत्वात् नासाभ्रुवोः पाप्मनाशकत्वं तत्रापि स्थानविशेषजिज्ञासया पृच्छति कतमच्चेति । पूर्वोक्तमध्यशब्दार्थं स्पष्टयामासुर्भ्रुवोरिति तदेव स्थानमित्यर्थः । संधिर्द्युलोकस्य स्वर्गस्य परस्य च ब्रह्मलोकस्य संधित्वेन ध्येय इत्याह स इति । कथनमिति आत्मनो व्यापकस्य निष्कलस्यामूर्तस्य द्युमूर्धत्वादिमूर्तत्वापादकं तत्कथनम् । न च कालभेदेन तदुपपत्तिरिति वक्तव्यम् । तन्निवारणायैव पुनस्तन्नैजतीत्यत्र तच्छब्दोपादानादन्यथा पूर्वेण तच्छब्देन गतार्थत्वात् तद्वैयर्थ्यापत्तेः । अणोरिति यदपेक्षया सूक्ष्मं नास्ति तादृशः । महत इति परममहत इत्यर्थः । तथा चाणुत्वमहत्त्वयोरौपाधिकत्वमपि न वक्तुं शक्यमिति भावः । आदिपदेन 'आसीनो दूरं व्रजति शयानो याति सर्वतः' इति श्रुतिसंग्रहः । अभिन्नेति 'तत्तु समन्वयात्' इत्यधिकरण

## स्मर्यमाणमनुमानं स्यादिति ॥ २५ ॥

व्याख्यानेन भगवत्परत्वाद् वाक्यस्य प्रमाणान्तरमाह ।

'केचित् स्वदेहे हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तम् ।
चतुर्भुजं कञ्जरथाङ्गशङ्खगदाधरं धारणया स्मरन्ति' ॥ इति ।

स्मर्यमाणं रूपमनुमानं स्यात् । प्रादेशमात्रवैश्वानरस्य ब्रह्मत्वे स्मरणं हि मननं श्रुतस्य भवति । श्रुतिवाक्येभ्य एव हि श्रवणम् । यदि प्रादेशमात्रवैश्वानरप्रतिपादकजातीयानां न ब्रह्मवाक्यत्वं स्यात् तदा स्मरणं नोपपद्येत । अत इति हेतोः प्रादेशमात्रवैश्वानरो भगवानेवेति सिद्धम् ॥ २५ ॥

---

भाष्यप्रकाशः

प्रत्यगात्मत्वेन विमीयमानस्य विषयत्वेनाब्रह्मत्वस्य भामत्यां स्वीकारात् । व्याख्येयग्रन्थेऽपि को न आत्मा, किं ब्रह्मेत्येतयोर्भिन्नवाक्यत्वपक्षे एकवाक्यत्वपक्षे च प्रत्यगात्मब्रह्माभेदमानाभावस्योपपादितत्वाच्च । तस्माद् विरुद्धधर्माधारत्वादिकमत्राविवादम् ॥ २४ ॥

स्मर्यमाणमनुमानं स्यादिति ॥ २५ ॥ ननु पूर्वसूत्रोक्तहेतुना सिद्धे वैश्वानरस्य परमात्मत्वे किमिति सूत्रान्तरारम्भ इत्याकाङ्क्षायामाहुः व्याख्यानेनेत्यादि । तथाच स्वारस्येन तथाप्रतीत्यभावादाग्रहवादित्वमाशङ्क्येतेति तन्निवारणायारम्भ इत्यर्थः । स्मर्यमाणं स्फुटीकुर्वन्ति केचिदित्यादि । स्मर्यमाणस्य कथमनुमानत्वमित्यत आहुः स्मरणं हीत्यादि । स्मरणं नोपपद्येतेति ये हि ब्रह्म स्मरन्ति ते श्रुतितः श्रुत्वैव स्मरन्त्यतस्तत्राभावे तन्नोपपद्येत । तथाच प्रादेशमात्रत्वस्मरणं प्रादेशमात्रत्वस्य श्रुत्यर्थत्वानुमापकमित्यर्थः । तेन ।

'अनन्तशाखासापेक्षे वैदिकार्थस्य निर्णये ।
स्वबुद्धिकल्पितादर्थाद् बलीयानुपबृंहितः' ॥ इति बोधितम् ।

अन्ये तु,

रश्मिः ।

एतदुपगमः । स्वयमिति शांकरैः । अभिन्ननिमित्तोपादानतोपगमे । प्रत्यगिति प्रत्यगात्मब्रह्मणोर्भेदमानस्याभावस्तस्य । अविवादमिति । विशेषतस्तु विद्वन्मण्डने भक्तिमार्तण्डे च प्रत्यपादीति ततोवधेयम् ॥ २४ ॥

स्मर्यमाणमनुमानं स्यात् ॥ २५ ॥ स्वारस्येनेति इदमुक्तं सिद्धान्तहेतोः प्राबल्यविचारे तथा वैश्वानरस्य परमात्मत्वेन । प्रतीत्यभावस्तु वैश्वानरः परमात्मा साधारणशब्दविशेषात् विरुद्धधर्माधारत्वात् । अभिन्ननिमित्तोपादानभूतजगदाश्रयब्रह्मवत् स एव न परमात्मा तत एव हेतोः पृथ्वीवदिति हेतोः विरुद्धत्वात् । यथा शब्दो नित्यः कृतकत्वात् । साध्याभावव्याप्तो हेतुर्विरुद्ध इति । श्रुत्यर्थेति श्रुत्यर्थत्वस्यानुमापयतीति कर्तरि ण्वुल् । अनुमापकं अनुमितिविषयत्वकर्तृ प्रादेशमात्रत्वं श्रुत्यर्थः । प्रादेशमात्रत्वस्मरणात् केचित्स्वदेहे हृदयावकाशे इति स्मृताविव । अनन्तेति तेन शाखान्तरीयजाबालसमाम्नायेन प्रादेशमात्रत्वं विवक्षितमिति सूचितम् । वैदिकार्थस्येति विषयवाक्यार्थस्य । उपबृंहित इति उक्तस्मृत्युपबृंहितः । अन्य इति शंकराचार्य-

शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न, तथादृष्ट्युपदेशादसंभवात् पुरुषमपि चैनमधीयते ॥ २६ ॥

किंचिदाशङ्क्य परिहरति। ननु यदि स्मर्यमाणमनुमानं स्यादिति वाक्यार्थो निर्णीयते, तदा स्मृत्यन्तरेणान्यथापि व्याख्येयम् ।

'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्' ॥

इति जाठर एवाग्निर्वैश्वानरो भवति। तस्यैव भगवद्विभूतित्वात् । वाक्यार्थो यथाकथंचिद् योजयिष्यते। न तु विरुद्धधर्माणां विद्यमानत्वाद् भगवत्परत्वं वाक्यस्य । विरुद्धधर्माः शब्दादयः अन्तःप्रतिष्ठानं च। अग्निर्वैश्वानर इति शब्दः

भाष्यप्रकाशः ।

'द्यां मूर्धानं यस्य विप्रा वदन्ति खं वै नाभिं चन्द्रसूर्यौ च नेत्रे ।
दिशः श्रोत्रे विद्धि पादौ क्षितिं च सोऽचिन्त्यात्मा सर्वभूतप्रणेता' इति ।
'यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः ।
सूर्यश्चक्षुर्दिशः श्रोत्रे तस्मै लोकात्मने नमः' ॥

इत्युदाहृत्य स्मर्यमाणं श्रुत्यनुमापकं स्यादिति व्याकुर्वन्ति ॥ २५ ॥

शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथादृष्ट्युपदेशादसंभवात् पुरुषमपि चैनमधीयते ॥ २६ ॥ शङ्कांशं व्याकुर्वन्ति नन्वित्यादि। इति वाक्यार्थो निर्णीयत इति एवंप्रकारकेण स्मरणेन निर्णीयते। ननु भगवद्विभूतौ चेद् योज्यते, तदा भगवति योजनं कुतो निषिध्यत इत्यत आह न त्वित्यादि। कः शब्द इत्यतस्तं दर्शयति अग्निरित्यादि। अयमर्थः। वाजिनां वैश्वानरविद्याप्रकरणे, य एषोऽग्निर्वैश्वानर इति वैश्वानरसमानाधिकरणतया अग्निरिति श्रूयते। तथाच यदि समानप्रकरणे केवलो वैश्वानरशब्दः स्यात् तदा तस्मिन् पूर्वोक्तेन योगेन भवेद् भगवत्परत्वम्। प्रयुक्ते तु शब्दान्तरे तत् तस्मादग्निसाहचर्यादग्निरेव वैश्वानरो भवेत्। यास्कोक्तस्य योगान्तरस्य तत्रापि शक्यवचनत्वात्। नच योगतौल्येऽग्नौ कुतः पक्षपात इति

रश्मिः ।

प्रभृतयः । श्रुत्यन्विति अस्याः स्मृतेः शरीरात्मकरूपप्रतिपादनपरतायाः उदाहृतश्रुतिरेव मूलं मूलान्तरकल्पने मानाभावात्। तथाच स्मृतौ परमेश्वरस्यैवोक्तत्वात्तन्मूलश्रुतावभिविमानवैश्वानरशब्दो परमात्मपरावेवेति श्रुत्यनुमापकं स्यादिति। ननु दूषणं कुतो नोक्तमिति चेन्न प्रादेशमात्रमभिविमान-मित्यत्राभिविमानपदस्योपसर्गबलात् अन्यपरत्वाभावे स्मृतिर्नोदाहृतेत्यस्य भाष्यस्य स्वभाष्यकार्त्स्न्यमिति भाष्य इति हेतोरिति। अग्रेतिशब्दः प्रकारवचन इति रामानुजाचार्यभाष्ये तन्न तदेजति तन्नैजति इति श्रुतिभिरपि प्रादेशमात्रवैश्वानरस्य भगवत्त्वाच्छ्रौतोपि प्रकारो न तु स्मार्त एवेति तस्याप्रयोजक-त्वेनेति पदवाच्यहेतोरावश्यकत्वात् ॥ २५ ॥

शब्दादिभ्योन्तःप्रतिष्ठानान्नेति चेन्न तथादृष्ट्युपदेशादसंभवात् पुरुषमपि चैनमधीयते ॥ २६ ॥ एवमिति उपलक्षणमेतत् इति हेतोरित्यस्य अत इति हेतोरिति भाष्यस्य न विरोधः। अन्यथेति जाठरत्वेन प्रकारेण। विरुद्धधर्मा इत्यादिभाष्यं स्वयमेव विवरामासुरित्याहुः क इति। वाजिनामिति बृहदारण्यके। तदित्यादिभाष्यं विवरणम्। तदिति। भवेदिति रामो दाशरथिः रामो जामदग्निरितिवत्। निरुक्तविरोधं परिजहार यास्केति। तत्रेत्यग्नौ।

केवलवैश्वानरपदे भवेत् । भगवत्परत्वं योगेन । तदग्निसाहचर्यादग्निरेव भवेत् । तस्यैव च त्रेताग्निकल्पनमुपासनार्थम् । प्राणो हि देवता तद् यद्भक्तं प्रथममागच्छेत्तद् होमीयमित्यादिना । तदेतेभ्यो हेतुभ्योऽन्तःप्रतिष्ठितत्वमपि न भगवद्धर्मः । पुरुषेऽन्तःप्रतिष्ठितं वेदेति भिन्नहेतुर्हेतुहेतुश्च भवतीति न चकारः । तस्माद् विरुद्धधर्माणां विद्यमानत्वान्न भगवान् वैश्वानर इति चेत् । न । तथादृष्ट्युपदेशात् । सर्वभोक्तृत्वं भगवतो वक्तुं तथादृष्टिरुपदिश्यते । विरुद्धधर्माणां तत्तद्भावापत्तिरित्यैश्वर्यमेव भगवतो वर्णितम् ।

भाष्यप्रकाशः ।

शङ्कयम् । अत्राप्यग्रे हृदयं गार्हपत्य इत्यादिना तस्यैव वैश्वानरस्य त्रेताग्निकल्पनमुपासनार्थं दृश्यते । न चेदमप्युभयत्र तुल्यमिति शङ्कयम् । प्राणो हि देवतात्राग्रे पठ्यते । तद्यद्भक्तं प्रथममागच्छेत् तद्धोमीयम् । स यां प्रथमामाहुतिं जुहुयात् तां जुहुयात् प्राणाय स्वाहेत्यादिना स्वाहायोगाच्चतुर्थ्या चावगतेः । तस्य मुखं च जाठर एव । आहुतिप्रापकत्वात् । अयमग्निर्वैश्वानरो योऽयमन्तःपुरुषे येनेदमन्नं पच्यते यदिदमद्यत इति वाजसनेयिब्राह्मणोक्तात्लिङ्गात् । यदिदं सूत्रस्थेनादिपदेन सूचितम् । तदेतेभ्यो हेतुभ्यो जाठर एव ग्राह्यो न परमात्मा । न वाऽन्तःप्रतिष्ठानात् परमात्मा ग्रहीतुं शक्यः । यतोऽन्तःप्रतिष्ठितत्वमपि न भगवद्धर्मः । वाजसनेयिभिः, स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेदेति समामननात् । यद्यप्यन्तःप्रतिष्ठानं वाक्यस्य जाठरपरतासाधने भिन्नो हेतुरिति सूत्रे चकारोऽपेक्षितः । तथापि भक्तस्य

रश्मिः ।

अत्रैवाग्रे स्पष्टम् । तस्यैवेतिभाष्यं विवरीतुमाहुः न चेति । कुत इति । पदस्यान्यस्य संनिधिरूपस्य हेतोः । प्रादेशमात्रमभिविमानमिति प्रादेशमात्रपदसंनिधितौल्याद्विशेषात् कुतो हेतोरिति प्रश्नः । त्रेतेति गार्हपत्यदक्षिणाग्न्याहवनीयरूपत्रेताग्निकल्पनम् । प्राण इति भाष्यं विवरीतुमाहुः न चेदमिति । तच्चदिति । श्रुत्यर्थस्तु तत्तेन न्यायेनैवमग्निहोत्रे संपन्ने यद्भक्तं भोज्यमोदनादिरूपं भोजनकाले प्रथममागच्छेत्तद्धोमीयं होमद्रव्यमिति चिन्तयेत् । होमियमिति क्वचिच्छान्दोग्ये पाठः । आहुतिसाधनत्वसाम्यात् । स भोक्ता प्राणाय स्वाहेति मन्त्रेण जुहुयादिति । विश्वेश्वरव्याख्या । अतो देवतोद्देशेन हविःप्रक्षेपस्य स्वाहापदार्थत्वेन प्राणो देवता न तु ब्रह्मेति । तस्य भक्तिहंसे उद्देश्यतासंबन्धनिवेशादित्याहुः स्वाहेति । चतुर्थ्येति तथाच देवता चतुर्थ्यर्थः । प्राणायेत्यत्र । अवगतेः देवतात्वावगतेः । पूर्वतन्त्रे एवं व्युत्पत्तिवादे तु भिन्नोर्थः । मुखमिति मुखं निःसरणोपाये वक्त्रे चेति विश्वादुपायः । आहुतिप्रेति सर्वात्मस्वाहुतिप्रापकत्वात् । य एवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवतीति श्रुतेः । वाजसनेयीति उपायत्वे हेतुमाहुः अयमग्निरिति । पच्यत इति प्राणाद्युद्दिश्य हुतमन्नं पच्यते प्राणादिप्रापणाय । अन्तरिति भाष्यं विवरीतुमाहुः न चेति । पुरुष इति भाष्यं विवरामासुः वाजेति । भिन्नेति भाष्यं विवरामासुः यद्यपीति । एतदिति अन्तःप्रतिष्ठानम् । ते स्विति हेतुरादिपदसंगृहीतस्यास्य हेतुरपि । तथास्येति तथा द्विवचनान्तं तु न इति च्छेदः । हेतुत्वहेतुहेतुत्वयोस्तु बोधनाय । स्फुटमिति संप्रदायप्रदीपे भगवन्मतस्य पूर्वपक्षीकरणमन्येषामुक्तं तदप्यत्र स्फुटम् । पूर्वोक्तहेतुनेत्येकत्वमविवक्षितं पूर्वोक्तहेतुभ्यः । वाक्यस्येति वाक्यार्थस्य । वाक्ये शक्त्यार्थस्य सम्बन्धत्वात् । तथापदस्यार्थमाहुः जाठरेति ।

१. अन्वयार्थपदम ।

तर्हि कार्यवाक्यमेवास्तु स्मृत्यनुरोधादिति चेत् तत्राह । असंभवात् । न हि तस्य पुमूर्धत्वादयो धर्माः संभवन्ति । उपचारादुपासनार्थं परिकल्पनं भविष्यतीति चेन्न । पुरुषमपि चैनमधीयते, वाजसनेयिनः । स एषोऽग्निर्वैश्वानरो यत्पुरुषः । स यो हैतमेवाग्निं वैश्वानरं पुरुषविधं पुरुषेन्तःप्रतिष्ठितं वेदेति । तस्मात् पुरुषत्वं, पाठान्तरे पुरुषविधत्वं वा जाठरस्य न संभवतीति भगवानेव वैश्वानरः । भगवत्परत्वे संभवत्यन्यकल्पना न युक्तेति ॥ २६ ॥

अत एव न देवता भूतं च ॥ २७ ॥

वैश्वानरो न इत्येत्यादिमन्त्रैर्देवताया महाभूताग्नेर्वा वाक्यार्थतेति कस्यचिद् बुद्धिः स्यात् । तदप्यतिदेशेनैव परिहरति । मुख्योपपत्तिर्भगवत्परत्वे संभवति नान्यकल्पना युक्तेति ॥ २७ ॥

---

भाष्यप्रकाशः ।

होमीयत्वमाहुतेर्देवताप्राप्तिश्च या आदिपदेन संगृहीता, तत्राप्येतदेव प्रयोजकमिति हेतुरपि भवतीति तथात्वबोधनाय न चकारः स्फुटमन्यत् । परिहारांशं व्याकुर्वते न तथेत्यादि । पूर्वोक्तहेतुना वाक्यस्य जाठरविभूतिपरत्वं न वक्तुं शक्यते । कुतः । तथादृष्ट्युपदेशात् । भगवतः सर्वभोक्तृत्वं वक्तुं जाठरदृष्टिरत्रोपदिश्यते तस्मात् । नचोत्कृष्टे हीनदृष्टेर्दोषावहत्वस्य पूर्वं साधितत्वादत्र तादृशदृष्ट्युपदेशस्यायुक्तत्वं शङ्क्यम् । भगवतः सर्वकारणत्वेन भगवन्निष्ठानां तेषां तेषां विरुद्धधर्माणां तत्तद्भावापत्तिः । यथा कारणत्वस्याष्टाविंशतितत्त्वादिरूपता, तथा पाचकत्वस्य जाठराग्निरूपतेति स्वयं त्वविक्रिय एकरस एवेति भगवत ऐश्वर्यमेव वर्णितमतो न दोष इत्यर्थः । तर्हीत्यादि । ननु धर्माणां तत्तद्भावापत्तिः कार्यार्थेति कार्यं मुख्यम् । तर्हीदं कार्यवाक्यमेवास्तु । गीतास्मृत्यनुरोधात् । न तु ब्रह्मवाक्यमिति चेत् तत्राहेत्यर्थः । शेषमुत्तानम् । पाठान्तर इति सौत्रे पुरुषविधमिति पाठान्तरे । ननु पुरुषत्वादिकमपि काल्पनिकं पूर्ववदस्त्विति चेत् तत्राहुः भगवदित्यादि । सर्वे वेदा इत्यादिश्रुतिभिर्मुख्यसंभवे गौणस्यान्याय्यत्वाच्च तथेत्यर्थः ॥ २६ ॥

रश्मिः ।

जाठरत्वेन जाठरज्ञानं जाठरत्वेन वैश्वानरस्य ज्ञानं चोक्तवाक्य उपदिश्यते । वह्नेः सर्वभुजो यथेति वाक्यात् उक्तवाक्याच्च जक्षन्नग्निर्भवतीति । तेजःपातृ अष्टौ मासाः । आनन्दभुगिति श्रुतेरानन्दभुग् यद्यपि तथापि क्षुच्च तृषा च वह्नेस्तनू ह्यानन्देन भोजनकारणेऽन्वयव्यतिरेकाभ्यां तस्मादग्निः सर्वभोक्ता । एतज्ज्ञानफलं भगवतः सर्वभोक्तृत्वस्य ज्ञानम् । पूर्वमिति । कारणत्वस्येति भगवन्निष्ठस्य । पाचकत्वस्येति तन्निष्ठस्यैव । एतेन ब्रह्मवादे कृष्णायाक्लिष्टकारिण इति गोपालतापिनीयं समर्थितम् । कार्यार्थेति यथा दुग्धस्य दधिभावापत्तिर्दधिरूपकार्यनिमित्तम् । इति हेतोः कार्यं दधि मुख्यं मुख्यतया प्रतीतिविषयं तर्हि । शेषमिति । तस्येति भाष्ये जाठरस्येत्यर्थः । सर्वे इति 'सर्वे वेदा यत्पदमामनन्ति' 'वेदार्थो रामकृष्णयोः' 'एतावान् सर्ववेदार्थः' इति भगवद्वाक्यं चादिपदेन । तथेति भगवान् वैश्वानरत्वेन प्रकारेण । वेदेति अत्रासंभवादित्यन्वेति अत इत्युत्तरसूत्रमनुकृष्यते तस्य पुरुषत्वस्यातोऽसंभवादित्यर्थः ॥ २६ ॥

## साक्षादप्यविरोधं जैमिनिः ॥ २८ ॥

अधुना परिमाणविशेषो विचार्यते । प्रादेशमात्रत्वं भगवतः स्वाभाविकं

भाष्यप्रकाशः ।

अत एव न देवता भूतं च ॥ २७ ॥ इत्यादीति आदिपदेन, वैश्वानरं केतुमह्नामि-त्यादीनां संग्रहः ॥ २७ ॥

साक्षादप्यविरोधं जैमिनिः ॥ २८ ॥ एतदादिषु पञ्चसूत्रेषु, मन्यत इत्यस्याध्याहारो

रश्मिः ।

अत एव न देवता भूतं च ॥ २७ ॥ भाष्ये । वैश्वानर इति इयं श्रुतिः संहिताप्रथमाष्टकपञ्चमप्रश्नस्था । 'वैश्वानरो न ऊत्या प्रयातु परावतः अग्निरुक्थेन वाहसा वैश्वानरमृतस्य ज्योतिषस्पतिम् । अजस्रं धर्ममीमहे' इति मन्त्रैरत्र देवताव्यतिरिक्ताग्नेर्न ऊत्या दुर्वासनया 'ऊतयः कर्मवासनाः' इति वाक्यात् । ऊत्या सेवनेन वा स्यूतिः सेवनसंपत्त्योः । 'ऊतिः स्यूतौ च रक्षणे' इति विश्वात् । प्रयातु प्रापयतु नोस्मान् परावतः पराभववतः धर्षणवत दुर्वासनया । परा प्रातिलोम्यं मोक्ष ऐक्यं वा तद्वतो नोस्मान् सेवनेन प्रापयतु एवं प्रकारः संभवति किंच महाभूताग्निव्यतिरिक्तस्य धर्ममातपमीमहे इमः इण् गतौ । एवं प्रकारः संभवति । अतस्तयोर्वाक्यार्थेतेति । अतीति ।

'अन्यत्रैव प्रतीतायाः कृत्स्नाया धर्मसन्ततेः ।
अन्यत्र कार्यतः प्राप्तावतिदेशः स कथ्यते' ॥

इति पूर्वमीमांसाकारिकयातिदेशउक्तस्तेन तथा चोक्तशब्दः । आदिपदेन प्रापयत्वित्युक्तम् । प्रापणं धर्ममीमहे इत्युक्ता धर्मप्राप्तिः । अन्तः प्रतिष्ठानं, पृथिव्यां पृष्ठो विश्वा ओषधीराविवेश वैश्वानरः सहसा इत्योषध्यन्तः प्रतिष्ठानं च । 'शब्दादिभ्योन्तः प्रतिष्ठानान्नेति चेन्न' देवताभूतम् । कुतः । अत एव तथा दृष्ट्युपदेशात् देवतात्वेन वैश्वानरस्य दृष्ट्युपदेशात् । अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशादिति । असंभवात् भेदं दत्त्वा सेवनेनैक्यात्स्वभजनानन्दप्रापणस्यासंभवात् । पुरुषमपि चैनमधीयते । वैश्वानरब्राह्मणे इति श्रुत्युक्तं ब्रह्मत्वमप्यधीयत इत्यर्थो यद्यपि न वक्तुं शक्यः परं स्वतः पूर्वसूत्रोक्तहेतुभ्यः एव न तु संहितोक्तेभ्यः इत्येवमेवकारव्यावर्त्य इति सूत्रार्थः । एवं जाठरे प्रतीतायाः धर्मस्य ब्रह्मज्ञानविशेषस्य 'अयं हि परमो धर्मो यद्योगेनात्मदर्शनम्' योगेनैव 'एकं सांख्यं च योगं च यः पश्यति स पश्यति' इति गीतातः । अन्यत्र देवताभूते कार्यतो वैश्वानरस्य ब्रह्मत्वप्रतिपादनरूपकार्यतः प्राप्तिरस्तीत्यतिदेशलक्षणसमन्वयः । ननु शाखान्तरीया देवता भूतं चेत्यापत्तिः शाखान्तरे कुतः इत्याकाङ्क्षायामाहुः सुक्त्येति । यथाहुः

'इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या ।
दृढत्वमेतद्विषयप्रबोधः प्रयाति वेदान्तनिषेवणेन' ॥

इति । तथा च शाखान्तरेपि ब्रह्मविषये वेदान्तभूतप्रकृतसूत्रनिषेवणं युक्तम् । तदुक्तं बौधायनेन । संहतमेतत् षोडशलक्षणमिति लक्षणान्यध्यायाः द्वादशपूर्वतश्चीयाश्चत्वार उत्तरतश्चस्वाः इत्येवं षोडश । संहतं मिलितम् । अत उक्तं नान्यकल्पना युक्तेति तथा च श्रुतिः संहिताप्रथमाष्टके वैश्वानरब्राह्मण इति । प्रकृतेऽन्यानपि मन्त्रानाहुः इत्यादीति । श्रुत्यर्थः पूर्वमुक्तः । आदिपदेन तन्त्रोक्तश्रुतिसंग्रहः । तस्या अप्यर्थ उक्त एव ॥ २७ ॥

साक्षादप्यविरोधं जैमिनिः ॥ २८ ॥ शब्दस्येति उच्चारणेन शब्दबलेन व्याक

कृत्रिमं वेति । अस्मिन् सिद्ध एव पूर्वोक्तं सिद्धं भवेदिति विचार्यते तत्रास्मिन्नर्थे चत्वार ऋषयो वेदार्थचिन्तकाः प्रकारभेदेन । तत्र केवलं शब्दबलविचारका आचार्याः । शब्दार्थयोर्जैमिनिः । आश्मरथ्यस्तु शब्दोपसर्जनेनार्थविचारकः । केवलार्थविचारको बादरिरिति । आचार्यः पुनर्विचाराविचारयोर्दोषं पश्यन् विचारमपि वदँस्तेषामल्पबुद्धित्वख्यापनाय नामान्याह ।

तत्र जैमिनिरुभयबलविचारकः प्रथमं निर्दिश्यते । व्यापकस्य प्रादेशमात्रत्वे साक्षादपि कल्पनाव्यतिरेकेणापि स्वरूपविचारेणैवाविरोधं मन्यते जैमिनिः । आकाशवद् व्यापकं सर्वतःपाणिपादान्तं ब्रह्म । अत एव साकारत्वमनन्त-

---

भाष्यप्रकाशः ।

ज्ञेयः । ननु चतुर्भिः सूत्रैः सर्वस्मिन्नधिकरणार्थे सिद्धे एतेषां सूत्राणां किं प्रयोजनमित्याकाङ्क्षायामाहुः अधुनेत्यादि । पूर्वोक्तमिति असाधारणभगवद्धर्मरूपं विरुद्धधर्माश्रयत्वम् । शब्दबलेत्यादि शब्दस्य बलमुच्चारणक्रमादितात्पर्यम् । तद्विचारेणार्थविचारका व्यासपादा इत्यर्थः । ननु तथापि ऋषिनामकथनस्य किं प्रयोजनमत आहुः आचार्यः पुनरित्यादि । बृहदारण्यके प्रथमे गार्गीब्राह्मणे, मा ते मूर्धा व्यपतदनतिप्रश्न्या वै देवता अतिपृच्छसि गार्गि मातिप्राक्षीरित्यतिप्रश्ने दोषश्रावणेन, कठवल्ल्यां, नैषा तर्केण मतिरापनेयेति निषेधेन च काल्पनिकातिविचारे दोषः पर्यवसितः । तैत्तिरीये च, तत्त्वेव भयं विदुषोऽमन्वानस्येत्यविचारेऽपि दोषः भावितः । अत आचार्यस्तमिमं विचाराविचारयोर्दोषं पश्यन्, तदन्वेष्टव्यं, तद्विजिज्ञासितव्यं, सोऽन्वेष्टव्यः, स विजिज्ञासितव्य इत्यादिश्रुत्युक्तत्वाच्छब्दबलेनैव कर्तव्यं विचारमपि स्वशास्त्रे वदँस्तथा आह । तथाच शब्दबलविचारस्य मुख्यत्वज्ञापनमेव प्रयोजनमित्यर्थः । जैमिनेः प्राथम्ये हेतुः उभयबलविचारक इति । सूत्रं व्याकुर्वन्ति व्यापकस्येत्यादि । कल्पनाव्यतिरेकेण व्यापकत्वप्रादेशमात्रत्वयोः कथमविरोध इत्याकाङ्क्षायां तं प्रकारमुपपादयन्ति आकाशेत्यादि । यद्यपि श्रुतौ प्रादेशमात्रमभिविमानमिति क्रमेणोक्तं, तथापि शाब्दक्रमादार्थक्रमो बलीयानिति पञ्चमस्य, 'श्रुतिलक्षणमानुपूर्व्यं तत्प्रमाणत्वात्' 'अर्थाच्च' इति प्रथमसूत्रे विचारितमग्निहोत्रं जुहोति यवागूं पचतीत्यत्र सिद्धम् । अर्थक्रमस्य बलिष्ठत्वानादरे अदृष्टकल्पनाप्रसङ्गात् ।

रश्मिः ।

पादमते अग्निहोत्रं जुहोति यवागूं पचतीत्यत्र अग्निहोत्रानन्तरं यवागूपाक इति प्राप्ते आहुः क्रमादीति । अर्थक्रमादीत्यर्थः । उच्चारणक्रमादीनां तात्पर्यं तत्प्रतीतीच्छया उच्चरितत्वं 'तं त्वौपनिषदं पुरुषं पृच्छामि' इतिश्रुतेः । भाष्ये । शब्दार्थयोरिति औत्पत्तिकस्तु शब्देनार्थस्य संबन्ध इति सूत्रयन् जैमिनिः वेदतदर्थयोर्बलं समानं मन्वानः । आश्मेति अत्र शब्दस्य वेदत्वेनोपसर्जनमात्रं 'अर्थं वागनुधावति' अर्थमनुसंधाय वाक्प्रवृत्तेः यन्मनसा ध्यायति तद्वाचा वदतीति श्रुतेः । केवलेति तथाच बृहदारण्यके भूमिरन्तरिक्षमिति ब्राह्मणे तस्माद्यदिदानीं द्वौ विवदमानावेयातामहमप्राक्षमहमश्रौषमिति य एव ब्रूयादहमप्राक्षमिति तस्मा एव श्रद्ध्याम इति श्रुतेः । प्रकृते । तथेति नामपूर्वकप्रकारेण । जैमिनिः ऋषिः आश्मरथ्यः ऋषिर्बादरिः ऋषिरिति । सिद्धमिति वेदलक्षणमानुपूर्व्यं द्वादशाहीये अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति तत उद्गातारं ततो होतारमित्यत्र गृहपत्यादिदीक्षाणामनुक्रमः

मूर्तित्वं ब्रह्मणः स्वेच्छया परेच्छया स्वभावतश्च विभक्तमिव। त्रयोऽपि नियतपरिमाणाः। अनियतपरिमाणास्तु आकाशवत् परिच्छेदनिरूप्याः। तद्वृद्धिह्रासाभ्यां तथा भवन्ति। स्मृतावप्युक्तम्।

भाष्यप्रकाशः।

तदत्राप्यादरणीयम्। अन्यथाऽत्र विरुद्धधर्माधारत्वकल्पना प्रसज्येत। संभवति चार्थक्रमादरेण परिमाणाविरोधे तं प्रकारमतिहाय विरुद्धधर्माश्रयत्वकल्पनमयुक्तम्। तस्मिन् प्रकारे कथं संभव इति चेदित्थम्। 'आकाशवत् सर्वगतश्च नित्यः' इति, 'सर्वतःपाणिपादं तत्' इति श्रुतिभ्यामेवंविधं ब्रह्मस्वरूपं सिद्धमतः स्वरूपबलादेव ब्रह्मणः साकारत्वमनन्तमूर्तित्वं च। 'यदेकमव्यक्तमनन्तरूपम्' इति, 'पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः' इति श्रुतिस्मृतिभ्यां सिद्धम्। तच्च क्वचिद्, बहु स्यामिति श्रुतेः स्वेच्छया, क्वचिच्च, 'यद्यद्धिया त उरुगाय विभावयन्ति तत्तद्वपुः प्रणयसे सदनुग्रहाय' इति वाक्यात् परेच्छया, क्वचिच्च पूर्वोक्तरीत्या स्वभावतश्च तं तं प्रति तत्तत्प्रकारकोपासनेन प्रकटीभवति। प्रणयस इत्यस्य तत्तद्गोचरत्वं प्रापयस इत्यर्थात्। नच रूपभेदे ब्रह्मभेदः शङ्क्यः। यदेकमिति श्रुतेः 'अविभक्तं च भूतेषु विभक्तमिव च स्थितम्' इति च गीतावाक्यात्। अतः पुरुषं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितमिति त्रयोऽपि प्रकारा नियतपरिमाणाः। यदि चाकाशवदिति श्रुत्या विचार्यास्तदा ते अनियतपरिमाणा आकाशवत् परिच्छेदनिरूप्याः परिच्छेदकवृद्धिह्रासाभ्यां नानापरिमाणा भवन्ति। ननु श्रुतौ पुरुषं पुरुषविधमित्यादिकं वैश्वानरविशेषणं, न तु प्रकाराणाम्। परिमाणं च द्रव्यधर्मो, न तु धर्मधर्मोऽतो नेदं युक्तमत आहुः स्मृतावित्यादि। उक्तमिति पुरुषत्वमुक्तम्। तथाच वैश्वानरस्यैव त्रिधा वर्तमानत्वाचोक्तानुपपत्तिरिति सर्वमुपपन्नमित्यर्थः। तृतीयस्यानन्तरूपत्वं नियतपरिमाणत्वं च व्याकुर्वन्ति भूतेष्वित्यादि। पञ्चधेति ध्यानार्थं प्रादेशमात्र आश्रयार्थमङ्गुष्ठमात्रः स्वामित्वार्थमक्षिस्थितः फलार्थं सर्वदेहस्थित आनन्दमयो वैश्वानरः शिरसि प्रतिष्ठितः सर्वार्थ इति निबन्धोक्तपञ्चप्रकारार्थे

रश्मिः।

पाठादवगम्यते कुतस्तत्प्रमाणत्वात् श्रुतेर्वेदस्य प्रमाणत्वादित्येवं प्रथमाधिकरणतृतीयवर्णक उक्त्वा द्वितीयाधिकरणे 'अर्थाच्च' इति सूत्रांशेनार्थक्रमात् सिद्धम्। अदृष्टेति यवागूपाक इत्यर्थः। तदिति पूर्वतन्त्रसिद्धम्। पूर्वोक्तेति बहु स्यामिति श्रुत्युक्तप्रकारेण स्वभावः परिणामहेतुस्तत एव। प्रकटीति यथा 'अनिच्छतोपि गतिमण्वीं प्रयुङ्क्ते' इति वाक्यान्मोक्षरूपेण प्रकटीभवति। त्रयोपीत्यग्रे वक्ष्यमाणाः। महतः स्रष्टृ अण्डसंस्थितं सर्वव्यापि। अनियतेति भाष्यं विवरीतुमाहुः यदि चेति। परिच्छेदो हि परिच्छेदकधर्मः तेन निरूप्याः। परिच्छेदको हि घटादिः तद्वृद्धिह्रासाभ्यां प्रकाराः। प्रकाराणामिति वैश्वानरप्रकाराणाम्। द्रव्यं वैश्वानरः धर्मः प्रकारः। नोक्तेति। प्रकाराणां द्रव्यत्वादिति भावः। पुरुषस्य परममहत्परिमाणं नियतं पुरुषविधस्याण्डसंस्थितत्वेन जीवत्वादणुपरिमाणं नियतम्। जीवचैतन्यस्य विसर्पिगुणत्वात् पुरुषविधम्। एकरूपत्वं चोभयोस्तृतीयस्य तदुभयमाहुरित्याहुः तृतीयस्येति। व्येति। स्येति शेषः भूतेर्ये। निबन्धेति। पञ्चात्मकः स भगवान् द्विषडात्मकोमुदितस्य टीकोक्तपञ्चकार्यार्थमित्यर्थः। अक्षिस्थितादीनां स्थानमक्ष्यादिरूपं स्वयमुक्तम्।

'विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदुः ।
प्रथमं महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितम् ॥
तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते' ।

इति । भूतेषु पञ्चधा । उदरेऽङ्गुष्ठमात्रः । हृदये प्रादेशो मूर्धनि च मनसीन्द्रियेषु चाणुः । चित्ते व्यापकः । एकस्याप्युपक्रमे सर्वेषु तथात्ववादो विभूतिरभेदाय । तस्माद् वैश्वानरस्य पुरुषत्वात् सच्चिदानन्दरूपेणैव प्रादेशमात्रत्वं न विरुध्यते । अतः साकारब्रह्मवाद एव जैमिनेः सिद्धान्तः ॥ २८ ॥

---

भाष्यप्रकाशः ।

पञ्चभिः प्रकारैः । उदरेऽङ्गुष्ठमात्र इति 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति' इति श्रुतेस्तथा । स च, 'अधो निष्ट्या वितस्त्यान्ते नाभ्यामुपरि तिष्ठति' इति तैत्तिरीयश्रुतेरुदरे शरीरस्थित्यर्थम् । प्रादेश इति प्रादेशमात्रः । स हृदये व्याख्यातः । मूर्धन्यग्रे वक्ष्यते । तत्र हृदि ध्यानार्थम् । शिरसि सर्वार्थम् । चक्षुषश्चक्षुरित्यादिश्रुतेस्तत्तन्नियमनार्थं तेषु तिष्ठन् मनःप्रभृतीनामणुत्वस्य वक्ष्यमाणत्वात् तदनुरोधेनाणुः । 'तत् सर्वव्यापकं चित्तमाकृष्य व्योम्नि धारयेत्' इति वाक्ये चित्तस्य व्यापकत्वोक्तेस्तत्र तिष्ठँस्तदनुरूपार्थं व्यापकः । ननु प्रादेशमात्रस्यात्र प्रकृतत्वात् तद्विचार एव कार्योऽन्यविचारस्य किं प्रयोजनमित्यत आहुः एकस्येत्यादि । एकस्य प्रादेशमात्रस्याप्युपक्रमे सर्वभूतस्थेषु नानारूपेषु भगवत्त्ववादो विभूतिरूपस्य भगवदभेदं बोधयितुम् । तथाच वैश्वानरस्वरूपे विचारितया दिशा सर्वेषु विरुद्धधर्माधारत्वं बोध्यमिति व्यासाशयप्रकटनायायं विचार इत्यर्थः । तेन सिद्धमाहुः तस्मादित्यादि । पुरुषत्वादिति आत्मत्वात् । 'पुरुषो चात्ममानवौ' इति कोशात् । तथाचाकाशवदित्यादिश्रुतिद्वयोक्तरीत्या स्वरूपविचारेणैव परिमाणद्वयाविरोधो जैमिनिमत इत्यर्थः । ननु जैमिनिमते साकारवाद इत्यत्र किं मानमित्या-

रश्मिः ।

द्वयोः स्थाने विशेषांश्चाहुः उदरेति । निष्ट्या इति निष्टिग्रीवाबन्ध इति सायणीये । तस्या अधोवितस्तिपरिमाणान्ते नाभिसमीपे तदुपरि तिष्ठतीति । नाभ्यामिति सामीप्ये सप्तमी । उदर इति इदं पदं हृदङ्गुष्ठयोरुपलक्षकम् 'अङ्गुष्ठमात्रः पुरुषः सदा जनानां हृदये संनिविष्टः' इति काठकश्रुतेः 'अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक्' इति तैत्तिरीयश्रुतेश्च । आश्रयार्थमङ्गुष्ठमात्रो व्याख्यातः । शारीरेति अयं फलार्थमित्यस्यार्थः । शरीरस्थित्यर्थं सर्वदेहस्थितः आनन्दमय इत्यर्थः । व्याख्यात इति स्मर्यमाणमिति सूत्रे व्याख्यातः । अग्र इति 'आमनन्ति चैनमस्मिन्' इति सूत्रे भाष्यव्याख्यायाम् । तत्रेति हृन्मूर्ध्नोः । हृदीति केचित्स्वदेहान्तरिति स्मृतेः । सर्वार्थमिति 'स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु अन्नमत्ति' इति विषयवाक्यश्रुतेः सर्वार्थम् । मनसीत्यादि भाष्यं विवरामासुः चक्षुष इत्यादि । वक्ष्यमाणेति द्वितीयाध्यायेऽणवश्चेति सूत्रे । इति वाक्य इति एकादशस्कन्धचतुर्दशाध्यायस्थे किं च छान्दोग्य उपकोसलविद्यायां 'य एषोऽक्षिणि पुरुषो दृश्यते' इत्युपक्रम्य वामनी भामनीत्युक्तं तत्र कर्मफलनियामकत्वात् स्वामित्वम् । सर्वेष्विति विभूतिरूपेषु । श्रुतिद्वयेति आदिना 'अणोरणीयान् महतो महीयान्' 'प्रादेशमात्रमभिविमानम्' इति श्रुतिद्वयम् । पदवाक्यानां शक्यार्था निर्णीतास्तत्र जैमिनिमते

## अभिव्यक्तेरित्याश्मरथ्यः ॥ २९ ॥

**निराकारमेव ब्रह्म मायाजवनिकाच्छन्नं तदपगमेन पुरुषाकारेणाधिदैविकदेवताधिष्ठितेनाभिव्यक्तः पुरुषोऽन्तर्यामी । अत एव पुरुषविध इति । अभिव्यक्तेर्हेतोः साकारत्वमपि मायापगमनकृतत्वान्न स्वाभाविकत्वम् । तथापि निर्दिश्यमानं सच्चिदानन्दरूपमेवाश्मरथ्यो मन्यते ॥ २९ ॥**

---

भाष्यप्रकाशः ।

काङ्क्षायां, जैमिनीयचतुर्लक्षणीसमाप्तौ, 'स विष्णुराह हि', 'तद् ब्रह्मेत्याचक्षते तद् ब्रह्मेत्याचक्षते' इति सूत्रद्वयात् तदनुसारेणाहुः अत इत्यादि । अत इति एवमुभयबलविचारकत्वात् । इदं च सूत्रद्वयं शतदूषणीकृता व्यंकटाचार्याभिधेन स्वग्रन्थ उपन्यस्तम् ॥ २८ ॥

**अभिव्यक्तेरित्याश्मरथ्यः ॥ २९ ॥** एतदादिषु त्रिषु सूत्रेष्वविरोधमित्यस्यानुषङ्गोऽधिको ज्ञेयः । आधिदैविकदेवताधिष्ठितेनेति आधिदैविकी देवेषु प्रणवमात्रावाच्येषु वर्तमाना या देवता ब्रह्मविष्ण्वादिरूपा तत्तद्गुणगुणसमष्ट्यभिमानिनी तयाधिष्ठितेनेति शरीरतयाङ्गीकृतेन । अत एवेति अधिष्ठानादेव । सूत्रोक्तस्य हेतोः साकारपक्षेऽप्युपपत्तेस्तमपि पक्षमाहुः अभिव्यक्तेरित्यादि । न स्वाभाविकत्वमिति किंत्वर्भकौकःसूत्रोक्तव्योमदृष्टान्तेनोपरववदागन्तुकत्वम् ॥ २९ ॥

रश्मिः ।

साकारब्रह्मवादः सिद्धः तमुपष्टम्भन्ति स्म जैमिनीयेति । जैमिनिप्रणीतमध्यायचतुष्टयं चतुर्लक्षणी सैव संकर्षणकाण्डत्वेन प्रसिद्धा देवताकाण्डत्वेन च तत्रोपासनाप्रतिपादनात् कर्ममीमांसान्तर्गतमेव । उपासनाया अपि मानसकर्मत्वात् । स इति प्रसिद्धः तत्पूर्वप्रतिपादितं साकारमिति प्रतिभाति ॥ २८ ॥

**अभिव्यक्तेरित्याश्मरथ्यः ॥ २९ ॥** अधिक इति । मन्यत इत्यध्याहारादधिकः । अभिव्यक्तेः प्रादेशमात्रत्वस्याविरोधं मन्यते आश्मरथ्यः इति मतेऽभिव्यक्तिनिर्वाहकनिराकारत्वं मायाङ्गीकारेण यदेकमव्यक्तमिति श्रुत्युक्तानन्तरूपाणां निर्वाहात्तदपगमेन यः पुरुषाकारस्तत्रेच्छारूपकारणानङ्गीकारात्तत्र कारणत्वार्थं विशेषणमित्याशयेन व्याचख्युः आधीति । ब्रह्मविद्योपनिषदि देवेषु अकारशरीरभूतेषु ऋग्वेदगार्हपत्यपृथिवीब्रह्मसु ब्रह्म आधिदैविकी देवता तदुक्तम् ।

'ऋग्वेदो गार्हपत्यं च पृथिवी ब्रह्म एव च ।
अकारस्य शरीरं तु व्याख्यातं ब्रह्मवादिभिः' ॥ इति ।

उकारशरीरभूतेषु यजुर्वेदान्तरिक्षदक्षिणाग्निविष्णुष्वाधिदैविकी देवता विष्णुः तदुक्तं तत्रैव ।

'यजुर्वेदोन्तरिक्षं च दक्षिणाग्निस्तथैव च ।
विष्णुश्च भगवान् देव उकारः परिकीर्तितः' ॥

सामवेददिवाआहवनीयेश्वरेषु मकारशरीरेषु ईश्वर आधिदैविकी देवता ।

'सामवेदस्तथा द्यौश्चाहवनीयस्तथैव च ।
ईश्वरः परमो देवो मकारः परिकीर्तितः' ॥ इति तत्रैव ।

अर्धमात्रा सूर्यसंकाशा वरदः । अत्र वरद आधिदैविकी देवता । एता देवता प्रणवमात्रा

अनुस्मृतेर्बादरिः ॥ ३० ॥

**बादरिः केवलयौक्तिकश्चिन्तनवशात् प्रादुर्भूतरूपानुवादिका श्रुतिरिति । 'यद्यद्धिया त उरुगाय विभावयन्ति तत्तद्वपुः प्रणयसे सदनुग्रहाय' इति वाक्यानुरोधात् । अन्यथा बहुकल्पनायां बुद्धिसौकर्याभावात् तार्किकादिमतेष्वपि तथात्वाद् युक्त्यनुरोधेन ब्रह्मवादोऽप्यन्यथा नेय इति हि मन्यते । अस्मिन् पक्षे त्वतात्त्विकत्वम् । अथवा मायास्थाने अनुस्मृतिः अभिव्यक्तिस्तु तुल्या । एवं सति बादरिमतेऽपि तात्त्विकमेव रूपम् ॥ ३० ॥**

भाष्यप्रकाशः ।

**अनुस्मृतेर्बादरिः ॥ ३० ॥ अत्रापि भाष्यमुत्तानार्थम् ॥ ३० ॥**

रश्मिः ।

अकारोकारमकारवरदरूपास्तद्वाच्याः । ब्रह्मविष्णवन्ति ईश्वरवरदावादिपदार्थौ तत्तद्गुणाः सत्त्वरजस्तमोरूपास्तेषां समष्टयस्तदभिमानिन्यः तासु तया प्रसिद्धया एकया । न चैवमाश्मरथ्यस्य शैवत्वं तिस्रो मात्रार्धमात्रा च अक्षरस्य शिवस्य चेति श्रुतेरिति वाच्यम् । शेतेऽनेन तैजसेनेति शिवः शीङ् स्वप्ने सर्वनिघृष्वेतिवत् ह्रस्वश्च निपातितः । ये धातुशब्दा इति पत्रावलम्बनात् । वैयाकरणास्तु पूर्ववच्छिवमिति साधयित्वा शिवं भद्रमस्यास्तीति शिवः अर्शआद्यच् शिवयतीति वा तत्करोतीति ण्यन्तात्पचाद्यच् । तल्लोके न तु वेदान्ते इति ।

'लोके शब्दार्थसंबन्धो रूपं तेषां च यादृशम् ।
न विवादस्तत्र कार्यो लोकोच्छित्तिस्तथा भवेत्' ॥

इति पत्रावलम्बनात् । लोके वेदे च गोरवङ् वा स्यादित्यत्र वेदलोकयोः साधनिकानां वाक्यध्वननाद्गौरवाच्च । भाष्ये । अन्तर्यामीति 'य आत्मनि तिष्ठन् आत्मानमन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति' इति श्रुतेरन्तर्यामी । अपीति प्रादेशमात्रसमुच्चायकोपि प्रादेशमात्रत्वाविरोधमपि मन्यत इत्यर्थः प्रकृते । उपरववदिति चत्वार उपरवा हविर्धानमण्डपे खाता बिलविशेषाः ॥ २९ ॥

**अनुस्मृतेर्बादरिः ॥ ३० ॥** उत्तानेति । बादरिस्तु मायापगमेन न प्रादेशमात्रत्वाविरोधं मन्यते किं तु प्रादेशमात्रत्वाविरोधमनुचिन्तनेन मन्यते इत्याहुः बादरिरिति । यौक्तिकत्वेपि केवलत्वं स्मरणे क्रियात्वस्य वैयाकरणैः क्रियावाचिनो भ्वादयो धातुसंज्ञा स्युरिति वदद्भिरङ्गीकृतस्यानङ्गीकारात् । यौक्तिकत्वं तावत् । संस्कारजन्यं ज्ञानं स्मृतिः । संस्कारस्तु ।

'भावनाख्यश्च संस्कारो जीववृत्तिरतीन्द्रियः ।
उपेक्षानात्मकस्तस्य निश्चयः कारणं भवेत् ।
स्मरणे प्रत्यभिज्ञायामप्यसौ हेतुरुच्यते' ॥

इति भाषापरिच्छेदः । अत्र तस्य संस्कारस्योपेक्षाज्ञानादनुत्पत्तेरुपेक्षाज्ञानात्मक इत्युक्तं लक्षणया । उपेक्षा न विद्यत आत्मनि यस्येति वा तस्याः स्मृतेरुरीकारात् भाष्यप्रामाण्याद्वा । चिन्तनेति ध्यानवशात् । इति वाक्येति एवंविधवाक्यानुरोधात् । तथा च साकारस्य व्यापकत्वं स्यादित्याकाङ्क्षायामाहुः अन्यथेति । बह्विति साकारस्य व्यापकत्वे बहूनां रूपाणां वास्तविकत्वकल्पने किं

## संपत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ ३१ ॥

**जैमिनिमते साकारवादे नियतसाकारं मन्यमानस्तदेकदेशी नियतमेव प्रादेशमात्रं भगवद्रूपं मन्यते। तन्निराकरणाय सर्वत्र प्रादेशत्वं संपत्तिकृतमित्याह।**

---

भाष्यप्रकाशः।

**संपत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ ३१ ॥** ननु पूर्वं जैमिनेर्मतं प्रदर्शितमधुना प्रकारान्तरेण किमिति प्रदर्श्यत इत्याकाङ्क्षायामाहुः जैमिनिमत इत्यादि। परममहत्परिमाणप्रादेशमात्रयोः साक्षादविरोधबोधके जैमिनिमते यः साकारवादस्तस्मिन् य एकदेशी ईदृशं भगवत्स्वरूपं मन्यते। प्रादेशमात्रत्वस्य प्रदेशविशेषकृतत्वे तावन्मात्रस्य पुरुषाकारत्वाभावेन

रश्मिः।

ब्रह्मेति संशयापत्त्या बुद्धिसौकर्याभावादित्यर्थः। ननु तादृशं बहुरूपमेकरूपमेव ब्रह्मेति कथं बुद्धिसौकर्याभाव इति चेत्तत्राहुः तार्किकेति। तथात्वादिति यथाहुः रामकृष्णादिनामकं स्वाविर्भावतिरोभावशालीति। ज्ञानेच्छाप्रयत्नाश्रयत्वेन यथाकथंचिदभिनवमते विश्वकायत्वेन साकारत्वेपि सकलसंमतत्वाभावात्। द्युमूर्धत्वादिविशिष्टस्य ब्रह्मत्वाङ्गीकारेऽभिनवमतप्रवेश इति भावः। युक्तीति 'युक्तिर्न्याये च योजने' इति विश्वान्न्यायशास्त्रानुरोधेन योजनमारोपापवादेन श्रुतीनामिति तदनुरोधेन वा ब्रह्मवाद इति। साकारं व्यापकं ब्रह्मेति वादो ब्रह्मवादः सोपि निराकारस्य चिन्तनवशाद्रूपमाविर्भूतं ननु तात्त्विकं रूपमित्येवमन्यथानेय इति हि युक्त्यार्थं मन्यत इत्यर्थः। तथा च श्रुतिवाक्ये स्तः 'यस्तर्केणानुसंधत्ते सधर्मं वेद नेतरः' इति श्वेतकेतूपाख्याने च न्यग्रोधफलमाहरेत्यारभ्य एतमणिमानं न निभालयसे एतस्यैव सोम्य एषोणिम्न एवं महान्यग्रोधस्तिष्ठति श्रद्धत्स्व सौम्येति स य एषोणिमा ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मेत्यादि। अतात्त्विकत्वमिति। प्रादेशमात्ररूपस्य। ननु बुद्धिसौकर्यप्रकारस्योक्तत्वात् तार्किकैरभिनवातिरिक्तैः वास्तवनित्यानन्दात्मकशरीरानङ्गीकारेणान्यमतप्रवेशाभावात् सूत्रे च ब्रह्मवादान्यथोपनायकपदाभावाच्च कथं ब्रह्मवादान्यथाकरणे बादरेराशय इति चेत्तत्राहुः अथ वेति। अथ वा ननु तात्त्विकरूपबाधपि प्रायपाठपठितो बादरिः कथमतात्त्विकरूपवादीत्यत आहुरथ वेति। मायेति निराकारं ब्रह्मानुस्मृतिजवनिकाच्छन्नम्। तथाहि ज्ञानकाश्यपेत्येवं वाक्यादनेकरूपाणां चिन्तनवशादाविर्भूतानामाधिदैविकदेवताधिष्ठितत्वेन तात्त्विकानां संबन्धिनी सदृशी चान्तरालिकसृष्टिपदवाच्यानुस्मृतिः प्रादेशमात्रमनु लक्ष्यीकृत्य ततः पश्चाद्यऽत एव प्रादेशमात्ररूपा तद्विषयिणी वा स्मृतिर्मायेति निराकारं रूपाणि च तयाच्छादितानि। तत्तद्रूपाणामभिव्यक्तिस्तु मायातत्कार्यापगमेनेति पूर्वमततुल्या। सिद्धमाहुः एवमिति पूर्वोक्तेन द्वितीयवर्णकेन बादरिमतपदसामानाधिकरण्यं यदा तदेत्यर्थः। भिन्नप्रवृत्तिनिमित्तत्वे सत्येकार्थबोधकत्वं सामानाधिकरण्यम् ॥ ३० ॥

**संपत्तेरिति जैमिनिस्तथाहि दर्शयति ॥ ३१ ॥** ब्रह्म तु ब्रह्मा जैमिनिमते। न चानेकेश्वरापत्तिरिति शङ्क्यम्। आत्माधिकः कालादिभिर्नभोग इति ज्योतिषजैमिनिसूत्रात्। आत्मा भवति क इत्याह अधिक इति कलादिभिः सकलगुणैरधिक आत्मा नभोगो ब्रह्मो यः सः इत्यर्थो नीलकण्ठसुबोधिन्यामस्ति। पुरुषाकारेति न च प्रदेशविशेषः पुरुषाकार प्रदेश इति तावन्मात्रस्य पुरुषाकारत्वमिति शङ्क्यम्। सर्वतःपाणिपादान्तत्वेन सर्वेषु प्रदेशेषु पाणयः पादा अन्ताश्च सन्तीति

तत्र का संपत्तिः कथमिति स्वयमेव श्रुत्या प्रदर्शयति । वाजसनेयिब्राह्मणे द्युप्रभृतीन् पृथिवीपर्यन्तान् वैश्वानरस्यावयवान्, अध्यात्म्ये च मूर्धप्रभृतिषु चिबुकपर्यन्तेषु संपादयन् प्रादेशमात्रमिह वै देवाः सुविदिता अभिसंपन्नास्तथा तु व एतान् वक्ष्यामि यथा प्रादेशमात्रमेवाभिसंपादयिष्यामीति । स होवाच मूर्धानमुपदिशन्नेष वा अतिष्ठा वैश्वानर इत्यादिना संपत्तिनिमित्तमेव प्रादेशमात्रत्वं वैश्वानरस्याह । न तु प्रादेशमात्र एव वैश्वानर इति । तदेकदेशिपरिहारं जैमिनिर्मन्यते ॥ ३१ ॥

---

भाष्यप्रकाशः ।

मुख्यश्रुतिविरोधादिति तदाशयः । अभिविमानत्वं जगन्निर्मातृत्वात्, द्युमूर्धत्वादिकं तूपासनार्थमित्यविरुद्धम् । तन्निराकरणाय सर्वत्र सर्वेषु वैश्वानरस्य प्रदेशेषु प्रादेशमात्रत्वं तथाह । तत्र संपत्तिकृतत्वे वाच्ये सा केत्याद्याकाङ्क्षायां संपत्तिं तत्कृतं प्रादेशमात्रत्वं च स्वयं जैमिनिः श्रुत्या प्रदर्शयतीत्यर्थः । संपादयन्निति केकय इति शेषः । श्रुतिं पठन्ति प्रादेशमात्रमित्यादि । इत्यादिनेति चक्षुषी उपदिशन्नुवाच, एष वै सुतेजा वैश्वानर इति । नासिके उपदिशन्नुवाच, एष वै पृथग्वर्त्मात्मा वैश्वानर इति । मुख्यमाकाशमुपदिशन्नुवाच, एष वै बहुलो वैश्वानर इति । मुख्या अप उपदिशन्नुवाच, एष वै रयिर्वैश्वानर इति । चिबुकमुपदिशन्नुवाच, एष वै प्रतिष्ठा वैश्वानर इतीत्येतावता संदर्भेण । अर्थस्तु, देवा द्युप्रभृतयः, सुविदिताः वैश्वानरमूर्धादिरूपेण भवद्भिर्मत्तः सुज्ञाताः । प्रादेशमात्रमिव ह वै अभिसंपन्नाः प्रादेशपरिमाणकमिव वैश्वानरं, ह वै प्रसिद्ध्या प्राप्तवन्तः । कथं प्राप्तवन्त इत्याकाङ्क्षायां प्रकारं प्रतिजानीते, तथा तु व इत्यारभ्य संपादयिष्यामीत्यन्तम् । प्रतिज्ञातं विवृणोति स होवाच मूर्धानमित्यादिना । एष द्युलोकात्मा देवः, अतिष्ठा वैश्वानरः । अतिष्ठागुणको वैश्वानरावयवः । वैश्वानरशब्दात् तस्येदमिति शैषिकोऽण् । एवमग्रेऽपि । तथाच मूर्धानमित्यादिनाऽध्यात्मं जीवावयवेषु तान् देवान् संपादयन् संपत्ति-

रश्मिः ।

प्रदेशविशेषस्य पुरुषाकारप्रदेशस्याभावात् । माङ् माने इत्यत्र मान निर्माणमित्याशयेनाहुः अभिवीति यद्वाकाशस्य सर्वगतत्वेन तन्निर्मातुरप्यमितो विगतमानत्वं तथा शंकरभाष्यं अभिविमिमीते वा सर्वं जगत् कारणत्वादित्यभिविमान इति । तन्निरेति एतादृशैकदेशिमतनिराकरणाय प्रादेशत्वमित्यस्य विवरणं प्रादेशमात्रत्वमिति । तथाहेति संपत्तिकृतत्वेनाह । तत्रेति भाष्यं विवृण्वन्ति स्म तत्रेति । आदिपदेन प्रकारप्रश्नः कथमिति भाष्योक्तः । भाष्ये । अध्यात्म्य इति आत्मानमधिकृत्य वर्तते-ऽवयवसमूहस्तस्मिन् छान्दसः प्रयोगः उपासकावयवेषु । केकय इति राजा । प्रकृते । भवत इति केकयराज्ञः । व इति प्राचीनशालादीन् । एतान् देवान् वक्ष्यामीति वचेर्द्विकर्मकत्वम् । यूयं प्राचीनशालादयः एतान् देवान् वक्ष्यथ मां प्रति तान् प्राचीनशालादीन् अहं राजा वक्ष्याम्येतान् देवान् इति । स होवाचेति राजा प्राचीनशालादीनुवाच मूर्धानमिति राजा स्वमूर्धानम् । अतिष्ठेति भूतादिलोकानतीत्य तदुपरि तिष्ठतीत्यतिष्ठा । भावप्रधानस्तद्गुणकः । वैश्वानरपदस्यावयववाचकत्वमाहुः वैश्वानरेति वैश्वानरस्यायमवयवो वैश्वानरः । एवमग्र इति एवमेव स्वस्य चक्षुषी दर्शयन् सुतेजाः सूर्यो वैश्वानरस्य चक्षुरिति प्रसिद्धचक्षुषोर्वैश्वानरस्यापि दैवं यदादित्याख्यं चक्षुस्तद्दृष्टिः कर्तव्येति प्रोवाच । एवमग्रेऽपि स्वावयवेषु वैश्वानरावयवदृष्टिरिति द्रष्टव्या । पृथग्वर्त्मात्मा वायुः वैश्वानरस्य प्राणः ।

## आमनन्ति चैनमस्मिन् ॥ ३२ ॥

मुख्यं स्वसिद्धान्तमाह । व्यापक एव प्रादेश इति । न हि विरुद्धमुभयं भगवत्यनवगाह्यमाहात्म्ये । तस्मात् प्रमाणमेवानुसर्तव्यं, न युक्तिः । शब्दबलविचार एव मुख्यः । न तु प्रातीतिकविरोधादन्यथात्वकल्पनम् । वैश्वानरस्य पुरुषत्वं, पुरुषविधत्वं पुरुषेऽन्तःप्रतिष्ठितत्वं च वाजसनेयिनः समामनन्ति । न हि तस्य तद्विधत्वं, तस्मिन् प्रतिष्ठितत्वं च संभवति युक्त्या । अतोऽन्ये ऋषयो भ्रान्ता एव येऽन्यथा कल्पयन्तीत्यभिप्रेत्य स्वमतमाह ।

---

भाष्यप्रकाशः ।

निमित्तं तदाह । अतः स्थानानुरोधेन तदनुगुणा स्थितिः संपत्तिस्तदनुरोधनिमित्तं प्रादेशमात्रत्वं, न तु स्वाभाविकमित्यर्थः । एवं द्युप्रभृतीनामाध्यात्मिकं रूपमादायानियतपरिमाणपक्षव्याख्यानस्य श्रौतत्वसमर्थनेन नियतपरिमाणमङ्गीकुर्वाण एकदेशी निराकृतः ॥ ३१ ॥

**आमनन्ति चैनमस्मिन्** ॥ ३२ ॥ अतः परमेतस्यापि पक्षत्वसमर्थनाय सूत्रार्थं व्याकर्तुमवतारयन्ति मुख्यमित्यादि । मुख्यमिति शब्दबलविचारेण सिद्धम् । तत्स्वरूपं तु व्यापक एव प्रादेश इति । व्यापकरूपेणैव प्रादेशमात्रो न तु प्रदेशभेदरूपभेदाभिव्यक्त्यनुस्मृतिसंपत्तिवशात् । तत्र प्रमाणं न हीत्यादि । अयं श्रीभागवतषष्ठस्कन्धीयगद्यस्यार्थोपन्यासः । तेन सिद्धमाहुः तस्मादित्यादि । 'नैषा तर्केण मतिरापनेया' इति श्रुतेस्तर्कस्य निषेधेन श्रौतानुपपत्तिं विना युक्तेरनादरणीयत्वादुपबृंहणेन विरोधे निरस्ते श्रौतक्रमानादरस्याप्रयोजकत्वात् तथेत्यर्थः । एवं सूत्रतात्पर्यमुद्घाट्य तत्र श्रुत्यन्तरसंमतिं प्रदर्शयन्तो व्याकुर्वन्ति वैश्वानरस्येत्यादि ।

रश्मिः ।

मुख्यं स्वमुखावच्छिन्नं यन्नभस्तस्मिन् अध्यात्मनमसि योधिदैवं बहुल आकाशो वैश्वानरस्य देहमध्यात्मावयव इति दृष्टिरित्युवाच । एवं स्वचिबुके अधरमुखफलके प्रतिष्ठापदवाच्या वैश्वानरपादभूतपृथ्वी द्रष्टव्येति तथा च शंकरभाष्यं चिबुकमित्यधरं मुखफलकमुच्यत इति । तथाहेति जैमिनिः प्रादेशमात्रत्वमाह । उत्तानमन्यत् ॥ ३१ ॥

**आमनन्ति चैनमस्मिन्** ॥ ३२ ॥ सिद्धमिति मुखं निःसरणोपायवक्ष्वेति कोशान्तुखेषूपायेषु भवं सिद्धत्वेन सिद्धम् । मुख्यमित्यत्र तत्र भव इति यत् । प्रदेशेति जैमिन्येकदेशी प्राह प्रदेशभेदं जैमिनी रूपभेदमाश्मरथ्योभिव्यक्तिं बादरिरनुस्मृतिं स्वैकदेशिदूषको जैमिनिः संपत्तिमिति ज्ञेयम् । श्रीति गद्यं तु 'नहि विरोध उभयं भगवत्यपरिगणितगुणगण ईश्वरेऽनवगाह्यमाहात्म्येऽर्वाचीनविकल्पवितर्कविचारप्रमाणाभासकुतर्कशास्त्रकलिलान्तःकरणाश्रयदुरवग्रहवादिनां विवादानवसरे उपरतसमस्तमायामये केवल एवात्ममायामन्तर्धाय कोन्वर्थो दुर्घट इव भवति स्वरूपद्वयाभावात्' इति नवमेऽध्याये । उपेति नहि विरोध इत्यादिरूपेणेत्यर्थः । श्रौतेति साक्षादपीति सूत्रे आध्योक्तरीत्या श्रौतक्रमानादरस्य । तथेति प्रमाणमनुसर्तव्यत्वेन प्रकारेण न युक्तिरनुसर्तव्यत्वेन प्रकारेण । सूत्रेति सूत्रार्थविषयिणी व्यासेच्छा बकुरिच्छा तु तात्पर्यमिति । यद्वा शब्दबलप्रतीतीच्छयोचरितत्वं सूत्रसंबन्धितात्पर्यम् । भाष्ये । अन्यथात्वेति कृत्वं कस्माद्भवतीतिवदन्यथात्वं ग्रस्य कल्पनम् । अन्यथा तु न इति वा पदच्छेदः । भ्रान्ता इति रूपभेदप्रदेशभेदसंपत्तीनां

एवं वैश्वानरमस्मिन् मूर्धचिबुकान्तराले जाबालाः समामनन्ति । एषोऽनन्तोऽव्यक्त आत्मा योऽविमुक्ते प्रतिष्ठित इति । सोऽविमुक्तः कस्मिन् प्रतिष्ठित इत्यादिना भ्रुवोः घ्राणस्य च यः संधिः स एष द्यौर्लोकस्य परस्य च संधिर्भवतीति । न ह्यनन्तः संकुचितस्थाने भवति । विशेषणवैयर्थ्यापत्तेः । युक्तिगम्या

भाष्यप्रकाशः ।

समामनन्तीति स एषोऽग्निर्वैश्वानरो यत् पुरुषः स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेदेत्यग्निरहस्ये वदन्ति । संभवति युक्त्येति भेदादिरूपया युक्त्या । तथाच ब्रह्मणः श्रुत्येकसमधिगम्यत्वात् तद्बलेन विचारे तत्र भेदानुक्त्या तदभावेऽपि तन्नियतं मन्तव्यमित्यर्थः । एवमेकमामननं प्रदर्शितम् । यद्यपि संपत्तिरूपा युक्तिः श्रौती, तथापि कैकेयस्तथा तु व एतान् वक्ष्यामीत्यादिना मध्वादिवत् कल्पनयोपदिष्टवान् । न तु वास्तवरूपम् । स्वकृततथासंपादनवचनात् । तथा सति द्युमूर्धत्वादीनामध्यात्मं कल्पनोपदेशो, न तु स्वारसिकं तत्र मानम् । तच्च ब्रह्मबलविचारे अप्रयोजकम् । दहरविद्यायां, यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश इत्यादिना कल्पनां विनैव तन्मानकथनवदत्रापि श्रुत्यन्तरे कथनात् । तथा सति संपत्तिकृतं प्रादेशमात्रपरत्वं जघन्याधिकारिणामुपासनार्थत्वेन पर्यवसति । तच्चोत्तमाधिकारिणामनादरणीयमित्याशयेनाहुः अत इत्यादि । सूत्रे चकारादपरमामननं प्रदर्शयन्तो व्याकुर्वन्ति एनमित्यादि । इत्यादिनेति कस्मिन् प्रतिष्ठित इति प्रश्ने, वरणायां नास्यां च मध्ये प्रतिष्ठित इति । का वै वरणा का च नासीति । सर्वानिन्द्रियकृतान् दोषान् वारयति तेन वरणा भवतीति । सर्वानिन्द्रियकृतान् पापान्नाशयति तेन नासी भवतीति । कतमच्चास्य स्थानं भवतीति । भ्रुवोः घ्राणस्य च यः संधिः स एष द्यौर्लोकस्य परस्य च संधिर्भवतीत्यन्तम् । नन्वत्रापि प्रदेशादिभेदपक्षा एव भवन्तु, को दोष इत्यत आहुः न हीत्यादि । नचानन्त इत्यत्र कालापरिच्छेद एवोच्यते, न देशापरिच्छेद इति शङ्क्यम् । आत्मत्वेनैव सिद्धे कालापरिच्छेदेऽनन्त इति विशेषणवैयर्थ्यापत्तेः । अतस्तद्बलाद्विरुद्धधर्माश्रयत्वमेवाभिप्रेतमित्यर्थः । ननु युक्त्या साधने को दोष इत्यत आहुः युक्तीत्यादि । नैषा तर्केणेति श्रुतेस्तथेत्यर्थः । ननु सूत्रकृता स्फुटतयाऽनुक्त-

रश्मिः ।

नैषा तर्केणेत्याद्युक्तिनिरसनीयत्वेन श्रुत्यर्थे युक्तिप्रदर्शनमर्थान्तरारोप इवेति भ्रमसाधनसंपादनानुकूलव्यापारवन्तः । आश्मरथ्यस्तु यन्मनसा ध्यायतीति श्रुतिविषयत्वं वेदेषु वदन् भ्रान्तः 'निःश्वसितमस्य वेदाः' इति श्रुतेः वेदानां निश्वसितत्वेन बुद्धिपूर्वकत्वाभावात् । बुद्ध्वा पदार्थान् जानातीति । बादरिस्तु तस्मै श्रद्ध्यामेत्यत्र तत्फलकश्रद्धामज्ञात्वा तस्य वचः श्रत् सत्यं दध्याम इति श्रुत्यर्थे भ्रान्तः । प्रकृते । इत्यन्तमिति । श्रुत्यर्थोऽग्रे स्वयं वाच्यः । नहीत्यादीति उपाधिस्तु परमात्मन्यसंगत इति भावः । विशेषणेति भाष्यं विवरीतुं शङ्कामाहुः न चानन्त इति । अस्मदादिः कालपरिच्छिन्नः शतायुर्वै पुरुष इति तत्र तु न अन्तो नाशो यस्येति कालपरिच्छेदः । एवकारव्यावर्त्यमाह नेति । न देशकृतोन्तो यस्येत्यन्तपदस्यान्तवाचकत्वमित्यर्थः । 'अन्तः प्रान्तेऽन्तिके नाशे' इति विश्वः । नैषेति । तथेति अग्रविद्यात्वस्य संबन्धिनी तयेत्यस्माद् 'अव्ययादाप्सुप इति सूत्रेण षष्ठ्या लुक् यद्यपीयं श्रुतिः काठकेस्ति तत्रैषेत्येतच्छब्देन समीपतरवर्तिवाचकेन श्रेय आददानस्य प्रशंसाविषयिणीमतिरेतच्छब्दवाच्या । किंचान्यत्र धर्मादिति प्रश्ने सर्वे वेदा यत्पदमामनन्तीत्याद्युक्तमक्षरं ब्रह्म वा

त्वब्रह्मविषयैव। अविरोधेऽपि वक्ष्यति। श्रुतेस्तु शब्दमूलत्वादिति। ननु तथापि काचिद् वेदानुसारिणी युक्तिर्वक्तव्या, शास्त्रसाफल्यायेति चेत्। उच्यते। विरोध एव नाशङ्कनीयो वस्तुस्वभावात्। अयस्कान्तसन्निधौ लोहपरिभ्रमणे या युक्तिर्गर्भस्यौदर्योदाहे, रेतसो मयूरत्वादिभावे। न हि सर्वत्र स्वभावदर्शनाभ्यामन्योपपत्तिः कैश्चिदपि शक्यते वक्तुम्। तस्यान्ते सुषिरमित्यादिना श्रुतिरेवमेवाह।

यशोदास्तनन्धयस्य च भगवतो मुखारविन्दे विश्वमेव दृष्ट्वा स्वभ्रमायाऽविद्यानिराकरणाय सिद्धान्तमाह। 'अथो अमुष्यैव ममार्भकस्य यः कश्चनौत्पत्तिक आत्मयोगः' इति। उलूखलबन्धने चायमर्थो निर्णीतः। तस्मादानन्दांशस्यैवायं

भाष्यप्रकाशः।

त्वेऽयमेव सूत्राशय इत्यत्र किं गमकमत आहुः अविरोधेऽपीत्यादि। यद्यपि जाबालश्रुतौ वैश्वानरः स्फुटतया नोक्तस्तथापि मूर्धचिबुकान्तरेऽनन्तस्य प्रतिष्ठितत्वकथनात् प्रादेशमात्रस्याभिविमानत्वं प्रत्यभिज्ञायते। अतस्तत्परत्वं तद्वाक्यस्य बोध्यम्। नन्वित्यादिनोक्ता युक्तिस्तु स्फुटतरैव तस्याः कथं श्रुत्यनुसारित्वमित्यत आहुः तस्यान्ते इत्यादि। तस्यान्ते सुषिरं॰ सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितमिति तैत्तिरीये बृहन्नारायणोपनिषदि सहस्रशीर्षानुवाके सुषिरस्य सूक्ष्मता तत्र सर्वप्रतिष्ठा च श्राव्यते। सा वस्तुस्वभावादेवोपपद्यतेऽतस्तथात्वमित्यर्थः। दर्शनमुपन्यसन्ति यशोदेत्यादि। अत्र स्तनन्धयपदेन अदन्तस्य षड्दिनस्य पूतनाऽसुपयःपानकर्तृतयाऽवस्थासाधनविरोधोऽपि स्मार्यते। निर्णीत इति बन्धनानां द्व्यङ्गुलन्यूनतायाः। पुनः स्वेच्छया बन्धनस्य च कथनान्निर्णीतः। शेषमतिरोहितार्थम्। एवं चात्र निराकारत्वादिनां

रश्मिः।

वाच्यम्। न जाबालसमामननेन सिद्धं ब्रह्म तथापि प्रादेशाभिविमानश्रुतिः श्रेयोऽविषयिणी न वाक्षरब्रह्मविषयिणीत्यदोषः। 'समीपतरवर्तिनि चैतदो रूपम्' इति वाक्यात्। यदि चेदमत्र न गृह्यते तदा तु 'श्रवणायापि बहुभिर्यो न लभ्यः' इत्यादिश्रुत्युक्तं समीपतमवृत्तिर्बहुधाचिन्त्यमान एवोपि परमात्मेत्यदोषः। अग्रे च ततो मया नाचिकेतश्चितोऽग्निरनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यमिति चयनं समीपतमं तदग्रेपेत्यत्रैतच्छब्देनाविवक्षितम्। अविरोधेपीति निमित्तं सप्तम्यर्थः युक्त्यविरोधरूपं फलमविरोधाध्याये वक्ष्यति। श्रुतेः शब्दैकप्रमाणत्वात् वस्तुन एव तथात्वात्। स्फुटतरेति शास्त्रं वेदान्तविचाररूपम्। तद्युक्तिरूपं योजनं शास्ति निर्युक्तिरूपं शास्तीति वेति फले तयोः केन फलेन सहेत्याकाङ्क्षायां शास्त्रस्य सफलत्वायेत्येवं स्फुटतरेत्यर्थः। तत्र प्राज्ञे निर्युक्तिरूपमपि योजनं दार्ढ्याय वेदान्तविचारः शास्ति मन्दमध्यमयोस्तु वक्ष्यमाणयुक्तिरूपमपि दार्ढ्यसंदेहाभावाभ्यां स शास्तीति फलम्। स्वभावेति परिणामहेतुत्वं स्वभावत्वम्। तथात्वमिति स्वभावदर्शनाभ्यां वक्तुं शक्यत्वम्। तथा तु अम्। तु पुनः अम् शैघ्र्यं अम् शैघ्र्येल्पे चेति मनोरमा। तादृशं रूपं किं भविष्यतीत्याकाङ्क्षायां दर्शनमित्यादिः। बन्धनस्येति भक्तवश्यत्वज्ञापनाय बन्धनस्य। शेषमिति। इति वेति इत्येवमनुक्तसमुच्चयप्रकारार्थं इत्यर्थः। सिद्धमाहुः एवमिति। अभिनवनैयायिकमतेप्येवम्। स्वमते प्रादेशमात्रत्वं विशेषः। पूर्वश्रुत्यर्थमाहुः श्रुताविति प्रसङ्गाद्भाष्यश्रुत्यर्थोप्युच्यते। एष इति य एष प्रसिद्धः परमात्मानन्तोऽव्यक्तोक्षरः 'अव्यक्तोक्षर इत्युक्तः' इति गीतातः। तं वः कोपि

धर्मो यत्र स्वाभिव्यक्तिस्तत्र विरुद्धसर्वधर्माश्रयत्वमिति चकारार्थः । तस्मात् प्रादेशमात्रो व्यापक इति वैश्वानरो भगवानेवेति सिद्धम् ॥ ३२ ॥

इति प्रथमाध्याये द्वितीयपादे अष्टमं वैश्वानराधिकरणम् ॥ ८ ॥

## इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये प्रथमस्याध्यायस्य द्वितीयः पादः ॥ १ ॥ २ ॥

---

भाष्यप्रकाशः ।

कर्तृत्वासंभवमाशङ्क्य तन्निरासाय साकारब्रह्मता विचारिता । श्रुतौ तु वरणा भ्रूः । अस्य स्थानमित्यस्येति पदेनानन्तः परामृश्यते । प्राणपदेन च नासिका । नासिके उपदिश्यमित्यत्र पृथग्वर्त्मात्मनः कथनात् । द्यौरित्याकाशः । तत्र हेतुः । लोकस्य परस्य च संधिरिति । जीवलोकस्य परब्रह्मणश्च संधानजनकत्वादिति ।

अथात्र मतान्तराणि विचार्यन्ते । तत्र जाठराग्निप्रतीकस्य जाठराग्न्युपाधिकस्य वा परमेश्वरस्योपास्यत्वं व्यासमते । जैमिनिमते तु तदुभयकल्पनं विनैव साक्षात् परमेश्वरोपासनं विधीयत इति साक्षादपीति सूत्रे व्याख्यायामभिव्यक्त्यादिसूत्रेषु प्रादेशमात्रत्वस्याविरोधो विचार्यत इति शंकराचार्याः प्राहुः ।

तत्रेदमवधेयम् । आचार्यस्तद्गुरुः सर्ववेदव्यासकर्ता स्वयं समन्वयं प्रतिज्ञाय सरलां सुन्दरीं जैमिनिविचारितां युक्तिं श्रुत्यादिसंमतां जानानः किमिति नोपगतवान् । अथ दुष्टां तर्हि कुतो न दूषितवानिति ।

रश्मिः ।

कथंविजानीयादित्यत्रिप्रश्ने याज्ञवल्क्योत्तरं स इति याज्ञवल्क्यो ब्रूते स्म । वरणायामिति । वरणार्थमाहुः वरणा भ्रूरिति पदे निर्वक्ति सर्वाणीति । तथा च नियम्यजीवद्वारा नियन्तुरीश्वरस्याधिष्ठानत्वात् नासाभ्रुवोः पाप्मनाशकत्वमित्युक्तम् । तत्रापि स्थानविशेषजिज्ञासया पृच्छति कतमदिति । अत्र प्रमाणमाहुः नासिके इति । पृथगिति प्राणः पृथग्वर्त्मात्मेति श्रुतेः प्राणः पृथग्वर्त्मात्मा शंकरभाष्ये तु प्राणस्थाने घ्राणः । पूर्वोक्तमध्यशब्दार्थं स्पष्टयति स्म भ्रुवोरिति तदेव स्थानमित्यर्थः । संधिर्द्युलोकस्य यद्वा द्यौराकाशः संधानेति । ब्रह्मामृतवर्षिण्यां तु द्यौर्लोकस्य स्वर्गस्य परस्य ब्रह्मलोकस्य च संधित्वेन ध्येय इत्युक्तम् । अथ ननु कोशे अग्निर्वैश्वानरो वह्निरिति तट्टीकायां च विश्वे नरा अस्य 'नरे संज्ञायाम्' इति विश्वशब्दस्य दीर्घः । विश्वानरस्यापत्यं ऋष्यण् । गीतायां च अहं वैश्वानरो भूत्वेति श्रुतिश्चाग्निः वैश्वानर इति एतत्पर्यालोचनाविरोधेन शंकराचार्यादिमतानि प्रवृत्तानि । अतस्तत्तन्मतसिद्धार्थकानि सूत्राणीत्याशङ्क्याहुः अथात्रेति । जाठराग्नीति । जाठराग्निरीश्वरप्रतीकोवयव इवावयवस्तस्य । परमेश्वरदृष्टिर्हि जाठरे वैश्वानरे इहोपदिश्यते इति भाष्यात् । अभीति ईश्वरोपलब्धिस्थानेषु हृदयादिषु विशेषेणाभिव्यज्यत इत्येवमविरोधः । बादरिमते प्रादेशमात्रत्वेन योयं प्रादेशमात्रोप्यनुस्मरणीयः प्रादेशमात्रश्रुत्यर्थवत्ताया इत्येवमविरोधः संपत्तिकृतां जैमिनिर्मन्यत इत्यविरोधः । तद्गुरुरिति शंकराचार्यगुरुः । दुष्टामिति जानानो नोपगतवानिति पूर्वेणान्वयः । दूषितवानिति यतो न दूषितवानतः साक्षात्सूत्रार्थो व्यासाभिमत एव । अन्यसूत्रोक्तोपाधिस्तु सर्वथा न संभवति । विद्वन्मण्डने निपुणतरदूषणात् । तथा चेश्वरस्य जाठरस्य वा वक्तव्यः सः । सर्वे वेदा-

भाष्यप्रकाशः ।

भास्कराचार्यास्तु, नायं वैश्वानरशब्दो जाठराग्न्यभिप्रायेण प्रयुक्तो येनात्र तद्गुणकोपासनं कल्प्येत । किंतु यौगिकोऽयं शब्दो, विश्वान्नरान् नयतीति । तद्धितस्तु राक्षसवायसादिवत् स्वार्थे । अभिविमानशब्दश्चाभिमुख्येन विचित्रं जगन्निर्मिमीत इति वा, अभिगतश्चासौ विगतमानश्चेति वा योगेन । वैश्वानरशब्दस्य यौगिकार्थग्रहणे जाठरानलविशिष्टोपासनमनभिप्रेतं बादरायणस्येति साक्षात्सूत्रे व्याचक्रुः । तत्र बीजं तु सौत्रोऽपिशब्दः साक्षादविरोधं जैमिनिरपीत्यन्वयादिति तदाशयः ।

रामानुजाचार्यास्तु मतद्वयेऽपि जाठरविशिष्टपरमात्मोपासनमङ्गीकृत्य, वैश्वानरशब्दोऽग्निसाधारणोऽपि परमात्मधर्मविशेषितो यथा विश्वेषां नराणां नेतृत्वादिना गुणेन परमात्मानमेवाचष्ट इति निश्चीयते । तथा स एषोऽग्निर्वैश्वानरो यत्पुरुष इति वाजसनेयिपठितोऽग्निशब्दोऽपि येनैवाग्रनयनादिना गुणेन योगाज्ज्वलने वर्तते तस्यैव गुणस्य निरुपधिकस्य काष्ठां गतस्य परमात्मनि संभवादस्मिन् प्रकरणे परमात्मासाधारणधर्मविशेषितः साक्षादव्यवधानेन परमात्मानमेवाभिधत्त इति साक्षात्सूत्रार्थमाहुः ।

संपत्तिसूत्रे चोपासकैः क्रियमाणायाः प्राणाहुतेरग्निहोत्रत्वसंपादनार्थमुरःप्रभृतीनां वेदित्वाद्युपदेश इति । आमननसूत्रे च, एनं द्युमूर्धत्वादिविशिष्टं वैश्वानरमस्मिन्नुपासकशरीरे प्राणाहुत्याधारत्वायामनन्ति च । तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजा इत्याहुः ।

तत्रापीदमवधेयम् । अत्र प्रौपमन्यवादिसंवादवाक्येषु, मूर्धा त्वेष आत्मनश्चक्षुष्टे तदात्मन इत्यादिना यदुक्तं तस्य निगमनमत्र प्रतीयते । तस्य ह वा एतस्यात्मनो वैश्वानरस्येति सर्वैः

रश्मिः ।

यत्पदमामनन्ति समन्वयप्रतिज्ञानाच्च प्रतीकस्य जाठरस्य स नोचित इति ज्ञेयम् । तद्गुणक इति जाठरगुणकः । स्वार्थ इति रक्ष एव राक्षसः वय एव वायसः प्रज्ञादिभ्योण् इत्यण् । अपिशब्द इति व्यासस्समुच्चयबोधकोऽपिशब्दः । तदाशय इति भास्कराचार्याशयः । निर्दुष्टोयं सिद्धान्तो न विरुद्धः । मतद्वय इति व्यासजैमिन्योर्मतद्वये अतस्तद्विशिष्टस्योपासनमत्रातिदिश्यते इति शब्दादिभ्योन्तःप्रतिष्ठानादिति चेदिति सूत्रे भाष्यात् । तथापि जैमिनिमते कथं तद्विशिष्टोपासनोक्तेत्याकाङ्क्षायां साक्षादप्यविरोधं जैमिनिरिति सूत्रार्थमूचुः वैश्वानरेति । अग्रनयनेति । अङ्गति अगि गतौ अङ्गेर्नलोपश्चेति निर्नलोपश्च । आदिपदेन वैश्वानरपदव्युत्पत्तिः पुरमुषतीति च उष दाहे । आहुरिति तथा च मतभेदगमकाभावात् पूर्वोक्तोर्थ एव परिशेषात्सिद्ध्यति । प्राणेति स यां प्रथमामाहुतिं जुहुयात् तां जुहुयात् प्राणाय स्वाहेति श्रुत्युक्ताया द्युप्रभृतिपृथिव्यन्तशरीरस्य वैश्वानरस्य समाराधनरूपायाः । वैश्वानरस्येति इयं छान्दोग्यस्था उपासकस्य मूर्धेव परमात्ममूर्धभूतद्यौरित्यर्थः । एवमेतद्भाष्योक्तरीतिकैवंविधप्राणाग्निहोत्रेण वैश्वानरमाराधयेदिति तत्रैव स्फुटम् । इदमिति वक्ष्यमाणं सर्वेषां तस्येत्यादिपदानां वैश्वानरपरत्वं न तूपासकपरत्वम् । यदुक्तमिति कैकेयेनोपमन्यवाद्युक्तद्युप्रभृतीनां वैश्वानरस्य मूर्धत्वादिकथनेन तत्प्रतीकत्वं यदुक्तं तस्य । अत्रेति वाजसनेयि-

भाष्यप्रकाशः।

पदैस्तमेव परामृश्य मूर्धप्रभृतीनां सममिव्याहरणात्। तत्कथं सन्निहितपरित्यागेन व्यवहित-स्योपासकस्य परामर्शः कर्तुं शक्यते। नचाग्रे सुतेजःप्रभृतिभ्योऽतिरिक्तानामुरःप्रभृतीनां वेद्यादित्वकथनात् तथेति वाच्यम्। भगवतो विश्वकायत्वाय तन्मूर्धादीनां सुतेजस्त्वादिदृष्ट्युप-देशवचस्य यज्ञत्वाय तदुरआदीनां वेदित्वादिदृष्ट्युपदेशस्य शक्यवचनतया तस्योपासकावयवगम-कताया निश्चेतुमशक्यत्वात्। नचैवं सति तद् यद्भक्तं प्रथममागच्छेदित्यादौ यः प्राणाग्निहोत्रा-धारत्वेनोपासकास्यादिपरिग्रहः स कथं संगच्छेतेति शङ्क्यम्। संपत्तिप्रश्नविषयवाक्ये वैश्वानरा-वयवानामुपासकमूर्धादिषु संपत्तिकथनेन तेषां तत्र मानवदनुक्तानां तदुरःप्रभृतीनामप्युपासकोरः-प्रभृतिषु संपत्त्या मानस्याभिप्रेततया सुखेनैव तदास्यादिपरिग्रहसंगतेः अत एव सर्वत्र वैश्वानर-स्थितिबोधनायोपसंहारे, तस्मादु हैवंविद् यद्यपि चण्डालायोच्छिष्टं प्रयच्छेदात्मनि हैवास्य वैश्वानरे हुत५स्यादिति श्रावितम्। तस्मादत्र न जाठरप्रतीकोपासना, न वा तदुपाधिकोपासना, नापि तद्विशिष्टोपासना। किंतु केवलपरमात्मोपासनेति निश्चयः।

शैवभिक्षू अप्येतेनैव दत्तोत्तरौ, माध्वाश्च।

प्रकृतमनुसरामः। एवमस्मिन् पादे जीवपुरःसरेणार्थसंदेहो निवारितः। मनोमयत्वादि-

रश्मिः।

ब्राह्मणे विषयवाक्ये वा। तमेवेति विषयवाक्ये प्रादेशमात्रमभिविमानमित्यादिषु य आत्मपदार्थो वैश्वानररूपस्तमेव। यद्वा। मूर्धा त्वेष आत्मनः इत्यादिषु य आत्मपदार्थ इत्यादिः। व्यवहितस्येति वाजसनेयिब्राह्मणोक्तस्योपासकस्य। कर्तुमिति सर्वैः पदैः कर्तुं शक्यते। ननु प्राप्तिपूर्वको हि निषेधः। स कथमुच्यते सर्वैः पदैः कथं कर्तुं शक्यत इति। मैवम्। उरःप्रभृतीनामुपासकोचितानामुक्तेर्व्यव-हितस्याप्येकवाक्यतार्थमेतस्येतिपदेन प्राप्तत्वात्। न च तस्येतिपदेन कुतो व्यवहितस्य प्राप्तिरिति शङ्क्यम्। विषयवाक्येन त्रैलोक्यशरीरस्य परमात्मनो वैश्वानरस्योपासनं विधाय सर्वेषु लोकेष्वि-त्यादिना ब्रह्मप्राप्तिं च फलमुपदिश्यास्यैवोपासनस्याङ्गभूतप्राणाग्निहोत्रं तस्य ह वा एतस्येत्या-दिनोपदिशति यः पूर्वमुपास्यतयोपदिष्टो वैश्वानरस्तस्यैवावयवभूतान् द्युआदित्यादीन् सुतेजोविश्वरूपा-दिनामधेयानुपासकशरीरे मूर्धादिपादान्तेषु संपादयतीति मूर्धैव सुतेजा उपासकस्य मूर्धैव परमात्ममूर्धभूतद्यौरित्यर्थ इति तद्भाष्यात्। तथेति तादृशवेद्यादिनिरूपणीये तादृशोपासकस्योचि-ततरत्वात् अध्यात्ममूर्धादिबोधयितुमेतस्येतिपदेनोपासकत्वम्। यज्ञेति यज्ञो वै विष्णुरिति श्रुते-स्तथा। इत्यादाविति। तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात् तां जुहुयात् प्राणाय स्वाहेति। भक्तं भक्तद्रव्यम्। एवं व्यानाय स्वाहेति अपानाय स्वाहेति समानाय स्वाहेति उदानाय स्वाहेति अथ य एतदेवं विद्वान् अग्निहोत्रं जुहोतीति श्रुतौ। एतेनेति पूर्वोक्तेन संनिहिततरेण। माध्वास्तु एवं विष्णुमस्मिन् अग्न्यादावामनन्ति योऽग्नौ तिष्ठन् य एष एतस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुष इत्यादिनेति प्रोचुः। तत्स्पष्टम्। विचारमन्तरेणैव यद्वै तेनैव दत्तोत्तरा इत्यन्वयात् प्रत्युक्तप्रायाम्। यदप्यथ ननु को वेत्यादिनोक्तं तदपि स्पष्टम्। आचार्यं मां विजानीयात् आचार्यवान् पुरुषो वेद इति श्रुति-स्मृतिभ्यां ब्रह्म तर्हि अग्निरिति श्रुतेश्चेति न विचारमर्हति तदुक्तम् 'अग्निश्चकार तत्त्वार्थदीपं भागवते महत्' इति निबन्धे। कथं जीवपुरःसरेणेत्यत आहुः मनोमयस्त्वादीति प्रथमस्याधिकरणस्यार्थरूपता

भाष्यप्रकाशः ।

धर्मवान् हिरण्यश्मश्रुत्वादिधर्मवानताऽलौकिकभोगयोगेऽपि दोषरहितः प्रकटसच्चिदानन्दस्वरूपोऽधिदेवादित्रयनियामकोऽक्षरादुत्कृष्टः स्वत एव साकारो विरुद्धधर्माश्रयो भगवानेव, न जीव इति । तेन सर्वान्तर्याम्येको भगवानिति सिद्धम् । आधेयरूपो विचारित इति च ॥ ३२ ॥ ८ ॥

इत्यष्टमं वैश्वानराधिकरणम् ॥ ८ ॥

इति श्रीवल्लभाचार्यचरणनखचन्द्रनिवारितहृदयान्धकारेण
पीताम्बरतनुजपुरुषोत्तमेन कृते भाष्यप्रकाशे
प्रथमाध्यायस्य द्वितीयः पादः ॥ १ ॥ २ ॥

समाप्तो द्वितीयः पादः ॥ २ ॥

रश्मिः ।

प्रोक्ता । द्वितीयाधिकरणार्थरूपतामाहुः हिरण्येति । तृतीयाधिकरणार्थतामाहुः अत्तेति । चतुर्थाधिकरणार्थतामाहुः अलौकिकेति । पञ्चमाधिकरणार्थतामाहुः प्रकटेति षष्ठाधिकरणार्थतामाहुः अधीति । सप्तमाधिकरणार्थरूपतामाहुः अक्षरादिति । अष्टमाधिकरणार्थतामाहुः स्वत इति । आधेय इति आधेयानि मनोमयत्वादीनि तै रूप्यते व्यवह्रियते इत्याधेयरूपः तदुक्तं तेन सर्वान्तर्यामी एको भगवानिति सिद्धमिति अग्रिमपादे स्फोटिष्यतितमाम् ॥ ३२ ॥ ८ ॥

इति अष्टमाधिकरणम् ॥ ८ ॥

इति श्रीविद्वन्मण्डनश्रीगिरिधरार्यात्मज श्रीदामोदरशास्त्रीयेण पूर्णवेशा
श्रीगोविन्दरायपौत्रेण श्रीविट्ठलरायशास्त्रीयश्रीगोकुलोत्सवात्मज-
गोपेश्वरेण कृते भाष्यप्रकाशरश्मौ प्रथमाध्यायस्य
द्वितीयः पादः संपूर्णतामगमत् ॥ १ ॥ २ ॥

समाप्तो द्वितीयः पादः ॥ २ ॥



श्रीकृष्णाय नमः ।

# श्रीमद्ब्रह्मसूत्राणुभाष्यम् ।

शुद्धाद्वैतब्रह्मवादनिर्गुणभक्तिमार्गप्रवर्तकाचार्यचक्रचूडामणि-
श्रीमद्वल्लभाचार्यचरणप्रणीतम् ।

दशदिगन्तविजयिश्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणप्रणीत-
भाष्यप्रकाशसंपूर्णवेत्तृश्रीमद्गोस्वामिश्रीगोपेश्वर-
जिच्चरणप्रणीतभाष्यप्रकाशरश्मिपरिबृंहितम् ।

## प्रथमाध्यायस्य तृतीयः पादः

'भगवद्धर्मपरायणसद्गतश्रेष्ठिगोवर्धनदास सुन्दरदास' इत्यस्य पुष्टिमार्गीय-
संस्कृतसाहित्यसमुद्धारार्थं निर्दिष्टद्रव्यसंग्रहतः 'प्राप्तभगवत्पद-
मूलचन्द्र तुलसीदास तेलीवाला, बी. ए., एल्एल्. बी.,
वकील, हाइकोर्ट' इत्येतेषां सुहृद्भिः
संशोध्य 'निर्णयसागर' मुद्रणालये
मुद्रयित्वा प्रकटीकृतम् ।

श्रीवल्लभाब्दाः ४६२. संवत् १९९७. आरम्भः

मूल्यं रूप्यकत्रयम् ।

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# श्रीमद्ब्रह्मसूत्राणुभाष्यम् ।



## भाष्यप्रकाश-रश्मि-परिबृंहितम् ।

## अथ प्रथमोऽध्यायः ।

### तृतीयः पादः ।

### द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥ ( १।३।१ ).

द्वितीयपादे आधेयरूपो भगवान् प्रतिपादितः ।

---

भाष्यप्रकाशः ।

द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥ अथ तृतीयपादं विवरिषवोऽध्यायसंगतिस्फोरणाय पूर्वपादार्थं वदन्तः प्रस्तुतस्यार्थमाहुः द्वितीयेत्यादि । अयमर्थः । पूर्वपादस्यान्तस्तद्धर्माधिकरणप्रपञ्चरूपतयाऽष्टाधिकरण्याम्,

'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः' ॥

इति लक्षणं विचारितम् । तत्र प्रथमेऽन्तःस्थस्य मनोमयत्वादीनां धर्माणां, द्वितीये हिरण्यश्मश्रुत्वादीनां च बोधनेन तादृशधर्मविशिष्टं स्वरूपमन्तर्बोधितम् । ततस्त्रिभिः कार्यबोधनेन बिभर्तिपदार्थस्य धारणपोषणात्मकं स्वरूपं बोधितम् । ततोऽन्तर्याम्यधिकरणेऽन्यत्वं परमात्म-

रश्मिः ।

द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥ संगतीति एकस्य समन्वयत्वेनैकस्य पादद्वयस्य कार्यत्वं समन्वय इत्येककार्यत्वसंगतिस्फोरणाय । समन्वयः कारणं समन्वयः फलम् । अत्र समासभेदः । कारणेध्याये ब्रह्मणि वेदान्तानां सम्यगनु अयः एरच् यत्रेति बहुव्रीहिः । कार्ये तु समन्वयः सम्यगन्वयः । अन्तस्तद्धर्मेति इयं तत्रैव विचारिता । ननु 'जन्माद्यस्य यतः' इति सूत्रोक्तं लक्षणं पुरुषोत्तमेऽदृश्यत्वाधिकरणोक्ते न स्फुटमित्यसंभव आपततीति चेत् कुतोऽसंभवसंभावना यतः पादेनैव श्रीपुरुषोत्तमे लक्षणं प्रत्यपादीत्याशयेनाहुः अष्टाधीति । तत्रेत्यष्टस्वधिकरणेषु । अन्तःस्थस्येति । साकारस्यादित्यान्तःस्थस्य । आनन्दमयस्य साकारब्रह्मत्वेन तत्प्रपञ्चता कुतो न विचारितेति चेद्भाष्यादावनुक्तेरुपजीव्यत्वाच्चास्याधिकरणस्यानन्दमयाधिकरणे साकारब्रह्मप्रतिपादनं प्रति । ततो भक्तेच्छया 'रसो वै सः' इत्युक्तानन्दमयाविर्भावोपि सूपपादनः । धारणेति[1] । श्नुविकरणेन सह धातूपादानात् डुभृञ् धारणपोषणयोरित्यस्य ग्रहणम् । न भृञ् भरणे इत्यस्य भ्वादित्वात् । उभयपदी धातुः । अन्तःस्थबालकानां पूतनापयःपानव्याजेन स्थापितानां धारणं पोषणं च । अत्र ल्युट् भावे करणेऽधिकरणे च यथासंभवं व्याख्येयः सुखेन । अन्यत्वमिति भेदेनैनमधीयत इति सूत्रभागोक्तमभिमानिभिन्नत्वं तस्मादन्तर्यामिब्राह्मणे ब्रह्मैव वाक्यार्थ इति भाष्यात् परमात्मत्वं चावेद्यः

---

1. धारणेति पाठः ।

आधाररूपोऽत्र प्रतिपाद्यते। तेन सर्वं ब्रह्मेति फलिष्यति।

भाष्यप्रकाशः।

स्वमावेशः सपरिकरं लोकत्रयं च बोधितम्। ततोऽदृश्यत्वाद्यधिकरणद्वये अव्यक्तत्वमीश्वरत्वं चाक्षरादुत्तमत्वेन विरुद्धधर्माधारत्वेन च विचारितम्। तदेतदुक्तम्। आधेयरूपो भगवान् प्रतिपादितः इति। तथा अदृश्यत्वाद्यधिकरणे 'यस्मात् क्षरमतीतोऽहम्' इत्यपि विचारितमेव। अतः परं तल्लिङ्गाद्यधिकरणेषु य आधाररूपो निरूपितः सोऽत्र विचार्यते। तेन

'पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया।
यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम्'॥

इति वाक्योत्तरार्धोक्तं विमृष्टं भविष्यति। तदेतदुक्तम्। आधाररूपोऽत्र प्रतिपाद्यत इति। द्वितीयपादोक्तमनन्यभक्तिलभ्यत्वं तु गुणोपसंहारपादे फलिष्यतीत्यतो नोक्तम्। एवं पादद्वयोक्तस्य फलं समन्वयस्तत्स्वरूपं वदन्ति तेनेत्यादि। ननु पूर्वपाद आधेयनिरूपणेऽप्याकाशात्मत्वाकाशज्यायस्त्वब्रह्मक्षत्रौदनकत्वलोकशरीरकत्वादिभिर्व्यापकत्वावधारण आधाररूपताऽप्यवरुद्धिमः।

'यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति' इति 'गामाविश्य च भूतानि धारयाम्यहमोजसा' इति चावेशः। सपरीति अन्तर्यामिणः सपरीत्यादि। एवं सर्वत्र बोध्येति भाष्यप्रकाशेन यस्य सर्वे लोकाः शरीरं यः सर्वाल्लोकानन्तरो यमयतीति लोकत्रयम्। पृथिव्यप्काशवाय्वादित्यचन्द्रतारकदिग्विद्युत्स्तनयित्नवः परिकरः अग्रे यः सर्वेषु लोकेषु तिष्ठन्निति लोकत्रयम्। पुनः परिकरः वेदयज्ञसर्वभूतप्राणवाक्चक्षुःश्रोत्रमनस्त्वक्तेजस्तमोरेतआत्मरूपः तेन परिकरेण सह सपरिकरम्। श्रुतयो विस्तरभिया न लिखिताः। अव्यक्तत्वम् अक्षरत्वम्। ईश्वरत्वं वैश्वानरत्वम्। अक्षरादिति अक्षरे पुरुषोत्तमं निवेश्य। उत्तमत्वेन अक्षरापेक्षया उत्तमत्वेन। वैश्वानर इत्यधिकरणे विरुद्धधर्माधारत्वेन। इत्यपीति अक्षरादपि चोत्तम इत्यनेन द्वितीयपादेनाक्षरोत्तमत्वमपि। तल्लिङ्गेति तल्लिङ्गादित्यधिकरणे 'अत एव प्राणः' इत्यधिकरणे ज्योतिश्चरणाभिधानादित्यधिकरणागमाधिकरणेषु चतुर्षु यः सर्वपरायणत्वेनाकाशः अभिसंवेशस्थानत्वेन प्राणः ब्रह्मत्वेन ज्योतिः सर्वात्मकब्रह्मत्वेन प्राण आधाररूप आकाशादिशब्दाभिधेयः शब्दसंदेहवारणेन निरूपितः। तेनेति आधाररूपप्रतिपादनेन। इतिवाक्येति आधाररूपम्। प्रतिपाद्यत इतीति। तेन प्रथमपादेनास्य पादस्य सामान्यविशेषभावः संगतिर्द्वितीयेन तु पादेन प्रसङ्गोऽवसरो वा संगतिरिति फलितम्। केचित्तु त्रैलोक्यात्मा वैश्वानरः पूर्वत्र निरूपितस्तेन त्रैलोक्यायतनं तत्पृथगिति प्राप्ते तदायतनमपि तदेवेति वक्तुमस्यारम्भ इत्याहुस्तद्धुपोद्घातसंगतिरधिकरणसंगतिः। अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेतीति सूत्रे भाष्ये 'भक्तौ तु बहिरपि' इति विशेष इत्युक्तम्। अनन्यभक्तिलभ्यत्वं प्रसङ्गात्कुतो न निरूपितमित्याशङ्क्याहुः द्वितीयेति। गुणेति साधनाध्यायतृतीयपादे। तेनेति सर्वस्याधाराधेयनिरूपकत्वेन। आकाशात्मेति अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति सूत्रे महतो महीयानिति श्रुतौ आकाशात्मत्वादिः महत आकाशात् स्वशरीरान्महान्तं यद्वा आकाश इत्यधिकरणे आकाशो ह्येवैभ्यो ज्यायान् आकाशः परायणमिति श्रुत्युक्तमाकाशात्मत्वमाकाशस्य ज्यायस्त्वं चोक्तं तदत्रापि। तल्लिङ्गाधिकरणे आधाररूपो निरूपितः सोत्र विचार्यते इतिभाष्यप्रकाशात्। ब्रह्मक्षत्रेति यथा चराचराधिकरणे ब्रह्मक्षत्रेत्यादिः।

१. अव्यक्तत्वमिति पाठः।

बाधकानां बलिष्ठत्वात् साधकानामभावतः ।
आधारधर्मा बाध्येरन्निति पादोऽभिधीयते ॥

इदं श्रूयते । 'यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः । तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथाऽमृतस्यैष सेतुः' इति ।

यस्मिन्नित्यादिवाक्ये च वाक्यार्थः सर्वबाधितः ।
अर्थात् प्रकरणाल्लिङ्गादिति पूर्वं विचार्यते ॥

भाष्यप्रकाशः ।

धारिता भवतीति व्यर्थः पादारम्भ इत्यत आहुः बाधकानामित्यादि । तेषु प्रेत्याभिसंभवाध्वपाराप्त्यन्तरात्मत्वादीनां साधितत्वेन बाधकानां बलिष्ठत्वात् साधकानामसाधितत्वेन नैर्बल्यात्तदभावत आधारधर्मा ज्यायस्त्वादयो बाध्येरन्नतस्तथेत्यतो न व्यर्थ इत्यर्थः । क्रमनियामिका त्ववसरसंगतिः । सा च जडार्थवारणरूपा द्वितीयपादारम्भ एवोक्तेति न पुनरुच्यते । एवं संगतिं प्रयोजनं चोक्त्वाऽधिकरणं विवरीतुं विषयवाक्यमुपक्षिपन्ति इदं श्रूयत इत्यादि । श्रूयत इति आथर्वणोपनिषद्द्वितीयमुण्डके श्रूयते । एतस्यैव वाक्यस्य प्रथमतः कुतो विचार इत्याकाङ्क्षायामाहुः यस्मिन्नित्यादि । वाक्येत्यादि । सर्वबाधित इति सर्वैः प्रकारैर्बाधितः । इतिहेतौ । अत्र द्युभ्वाद्यायतनात्मिकाधिकरणसंगतिरपि बोध्यते । तल्लक्षणं तु, 'बुद्धिस्थं चिन्त्यते यत्र बुद्धिस्थानात्मिका तु सा' इति । तथा च तल्लिङ्गाद्यधिकरणे आकाशपदस्य ब्रह्मवाचकत्व-

रश्मिः ।

वैश्वानराधिकरणे लोकशरीरकत्वमादिपदेन विरुद्धसर्वधर्माधारत्वम् । पादेति आधारनिरूपकपादारम्भः । प्रेत्येत्यादि 'आकाशस्तल्लिङ्गात्' इत्यधिकरणे विषयवाक्यमुपन्यस्तम् । तदग्रे छान्दोग्ये प्रथमप्रपाठके पठ्यते परोवरीयो हैभ्यस्तावदस्मिँल्लोके जीवनं भविष्यति तथामुष्मिन् लोक इति । प्रेत्याभिसंभवः श्रुत्यर्थस्तु एभ्यः प्रसिद्धेभ्यो लौकिकजीवनेभ्यः परोवरीय उत्तरोत्तरं विशिष्टतरं जीवनं ह भविष्यति तथामुष्मिन् दृष्टे लोके । प्रेत्य मृत्वा । आदिपदेनाग्रिमश्रुतौ प्राणविषयायाः कर्माङ्गत्वं श्रुतिस्तु मठचीहतेष्विति । श्रुत्यर्थौ तत्रैव द्रष्टव्यौ । मठमद निवासस्थौल्ये भ्वादिः परस्मैपदी सेट् । मनु गतिपूजनयोः भच इत्येके मठ्यत इति मठ् मदः भावे क्विप् अच्यत इत्यच् मदगतिभ्यां हतेषु कुरुषु । अध्वपाराप्तिस्तु काठके तृतीयवल्ल्याम् 'सोऽध्वनः पारमाप्नोति' इति श्रुतौ । आदिपदेन ब्रह्मक्षत्रौदनकत्वं द्वितीयवल्लीसमाप्तौ । अध्वपाराप्तिस्तु तृतीयवल्ल्यां जीवप्रकरणे ऋतं पिबन्ताविति श्रुत्युक्तब्रह्मसंबन्धिनी । अथवा 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्युपक्रम्य 'अव्यक्तात् पुरुषः परः' इति । व्यापकत्वबाधकमन्तरेति 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरम्' इति छान्दोग्ये सप्तमप्रपाठके वैश्वानरोस्म्यहमिति टीकायामन्तरात्मत्वं भाष्ये तु जाठरोपाधिकमन्तरात्मत्वम् । आदिपदेन सर्वात्मत्वबाधकं संसारिलिङ्गम् । साधितेति इयं श्रुत्या साधितमन्तरात्मत्वं शांकरैः साधितम् । साधकानां नैर्बल्ये पादाभिधानं न स्यात् साधकार्थत्वादित्याकाङ्क्षायामाहुः असाधितेति । तथेति पादोऽभिधीयते इत्यभिधेयत्वेन प्रकारेण । अत्रैवेति प्रथमपादे शब्दसंदेहे वारिते आधारनिरूपणे प्रतिबन्धकीभूताधेयनिरूपणं मनोमयत्वादिधर्मैराधेयैराधारनिरूपणस्य विवक्षितत्वात् । अत आधेयनिरूपणेन प्रतिबन्धकीभूतजिज्ञासानिवृत्ताववश्यवक्तव्यत्वमाधारनिरूपण इत्यवसरसंगतिः पादारम्भस्य क्रमनियामिका । द्वितीयेति भाष्य उक्ता तमार्थो द्विविधो जीवजडात्मकः तत्र प्रथमं

अत्र संशयः। द्युभ्वाद्यायतनं ब्रह्म, आहोस्वित् पदार्थान्तरमिति । अर्थान्तरमेव च भवितुमर्हति। द्युभ्वादीनां सूत्रे 'मणिगणा इव' प्रोतानां भारकाहकत्वान्न तद्ग्राहकः परमात्मा । अन्यवाग्विमोकश्चासंगतः। एकविज्ञानेन सर्वविज्ञानस्य पृष्टत्वात् कथमन्यविमोकः। सेतुश्च गतिसाधनः। तस्मादफलत्वमपि। आत्मलाभान्न परं विद्यत इति विरोधश्च । अतो न ब्रह्मविद्यापरमेतद्वाक्यम्। किंतु स्मृतिमूलं भविष्यतीत्येवं प्राप्ते । उच्यते ।

---

भाष्यप्रकाशः ।

भङ्गीकृत्य ब्रह्मलक्षणस्य भूताकाशेऽतिव्याप्तिवारणेऽपि सांख्यमतसिद्धे प्रधानेऽतिव्याप्तिमाशङ्क्य वारणात् । बाधादिकं विवरीतुं संशयपूर्वपक्षावाहुः अत्र संशय इत्यादि । अर्थान्तरमेवेत्यादि च । ब्रह्मवाक्यत्वबाधकान् हेतून् विवृण्वन्तः पूर्वमर्थाद् बाधं विवृण्वन्ति द्युभ्वित्यादि । एवं पूर्वार्धोक्तादर्थाद् ब्रह्मवाक्यत्वबाधो व्याख्यातः । प्रकरणकृतं तं व्याकुर्वन्ति अन्येत्यादि । लिङ्गकृतं तं व्याकुर्वन्ति सेतुरित्यादि । स्मृतिमूलमिति सांख्यस्मृतेर्मूलभूतम् । तथा चात्र प्रधानमेव प्रतिपाद्यम् । न चात्मपदविरोधः । योगेन तस्यापि व्याप्तिमात्रबोधकतया संगतेः । अथ रूढ्यपेक्षया योगस्य नैर्बल्यं विभाव्यते तदा पुरुषपरमस्तु । अन्या इत्यत्रामो डादेशः । अन्यमित्यर्थः । वाच इति । षष्ठी पञ्चमी वा । वादान्तररूपायाः । एष इति सांख्यवादः । एवं सर्ववाक्यसंगतेरित्यर्थः । सिद्धान्तं व्याकुर्वन्ति उच्यत इत्यादि । कुत इत्याकाङ्क्षायां

रश्मिः ।

-जीवपुरःसरेण संदेहा निवार्यन्त इति भाष्येण तथा चोक्तप्रायेत्यर्थः । यस्मिन्नित्यादीति प्रतीके शरीरगौरवं कारिकाकाठिन्येनाम्नातम् । नैयायिकमते दूषणं नान्यत्र । बाधादिकमिति आदिपदेनार्थादित्यादि । तमिति ब्रह्मवाक्यत्वबाधम् । भाष्ये । एकेति 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' इति श्रुत्यैकविज्ञानेन सर्वविज्ञानस्य शौनकेनाङ्गिरसः पृष्टत्वाच्छाब्दबोधे पदजन्यपदार्थोपस्थितेः कारणत्वादन्यवाग्विमोके तदर्थस्य ब्रह्मान्यस्य पदजन्योपस्थितिविषयत्वमन्यवाचां विमोकादतः कथमन्यवाग्विमोक इत्यर्थः । सेतुरित्यादीति । भाष्ये । साधन इत्यत्र 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इति सूत्रेण ल्युः । आङ् अभिविधौ अभिव्याप्यार्थमासमन्तात् । भाष्ये स्मृतिपदं शास्त्रत्वात् सांख्यस्मृतिपरमित्याहुः सांख्येति । का सा स्मृतिरित्यत आहुः तथा चेति । समवायिन्योतं कार्यं भवतीति 'प्रधानाज्जगज्जायते' इति स्मृतिप्रोक्तम् । योगेनेति आप्नोतीत्यात्मेति रामानुजाचार्यभाष्योक्तेः । अतति व्याप्नोतीत्यात्मेति योगेन वा । व्याप्तिमात्रमित्यत्र मात्रपदे पुंलिङ्गव्युदासः । पुरुषेति प्रधानसंसृष्टपुरुषपरम् । विषयवाक्यविषमपदार्थानाह अन्या इति । सुपां सुलुगिति सूत्रेण डादेशः । अन्यमिति आत्मविशेषणम् । द्युभ्वाद्यायतनं प्रधानं स्वशब्दादिति सूत्रार्थः । द्यौश्च भूश्च द्युभुवौ द्युभुवावादी यस्य तदिदं द्युभ्वादि यदेतस्मिन् वाक्ये द्यौः पृथिव्यन्तरिक्षं मनःप्राणा इत्येवमात्मकं जगदोतत्वेन निर्दिष्टं तस्यायतनमिति शंकराचार्यभाष्येऽवयविसमास उक्तस्तमपाकर्तुमवयवसमासं बोधयामासुः द्यौः भूश्चेति द्युभुवावादी यस्येत्यवयविसमासे यस्येत्यस्यान्तरिक्षादिसमाहारस्येत्यर्थो भवति तस्य विषयश्रुतावप्रत्ययादवयवसमासो विषयश्रुतिप्रतीत उररीकृतस्तदाहुः । भाष्ये । द्यौरिति । प्रकृते । एवमिति आत्मात्मीयज्ञातिधनवाचकं स्वपदमुक्तम् ।

द्युभ्वाद्यायतनं ब्रह्मैव। द्यौर्भूश्चादिर्येषां ते द्युभ्वादयः। तेषामायतनम्। यस्मिन् द्यौरिति वाक्योक्तानां साधकं वदन् प्रथमपरिहारमाह स्वशब्दात्। आत्मशब्दो व्याख्यातः स्वशब्देन। अत्र न जीवस्यात्मत्वेनोपासनार्थमात्मपदं किंतु पूर्वोक्तानामात्मभूतम्। तेन न भारकृतो दोषः। कारणे हि कार्यमोतं भवति सेतुत्वं च युज्यते। तज्ज्ञानेनाऽमृतत्वप्राप्तेः। अभेदेऽपि ब्रह्मविदाप्नोति परमितिवदर्थः। तस्मादबाधितार्थत्वाल्लक्ष्यस्य सर्वगतत्वव्युत्पादकत्वात् द्युभ्वाद्यायतनं ब्रह्मैव॥ १॥

---

भाष्यप्रकाशः।

हेतुं विवृण्वन्तत्सोमयार्थत्वमाहुः साधकमित्यादि। साधकमिति ब्रह्मत्वसाधकं हेतुम्। व्याख्यानेनाऽऽत्मशब्दस्फोरणस्य प्रयोजनमाहुः अत्र नेत्यादि। आत्मपदस्य जीवे रूढत्वादात्मत्वेन तन्निर्दिश्य जीवस्य सर्वाधारभूतब्रह्मरूपतयोपासनार्थं नात्मपदम्। किंतु, पूर्वोक्तानां द्युभ्वादीनामात्मभूतमनारोपितानागन्तुकं यत्स्वरूपं तद्वाचकम्। एतद्बोधनार्थमेवैवं कथनम्। नो चेदात्मशब्दादित्येव वदेत्। अत इदं साधकं बाधकस्यापि परिहारकमित्यर्थः। ननु सर्वस्यात्मभूतत्वे कथं भारवाहकत्वपरिहार इत्यत आहुः कारणे हीत्यादि। लिङ्गदोषपरिहारमाहुः सेतुत्वमित्यादि। ननु सेतुत्वेनाऽमृतसाधनत्वमस्योच्यते, न त्वेतज्ज्ञानस्येति कथमेवमित्यत आहुः अभेदेऽपीत्यादि तथा च भेदेऽप्यवस्थाभेदेन भेदादुभयसामञ्जस्यमिति नानुपपत्तिरित्यर्थः। सिद्धमाहुः तस्मादित्यादि। तस्मादिति भारादिदोषद्वयस्य वारणात्। लक्ष्यस्येति 'लक्ष्यं सर्वगतं चैव शिरो मे सर्वतोमुखः' इति पूर्वमन्त्रोक्तस्य ब्रह्मणो लक्ष्यस्य॥१॥

रश्मिः।

न चात्मीयादिवाचकं स्वपदमुक्तं स्यादिति चेत्। 'अमृतस्यैष सेतुः' इत्यमृतफलोपदेशात्। कारणे हीति ओतम् उञ् शब्दे व्वादिरात्मनेपदमनिट् आङ् अभिविधावभिव्याप्त्यार्थे आसमन्तात् शब्दितं यथा तन्तुषु पट इत्यत्र कारणे तन्तुषु पटः शब्दितो भवति। प्रोतं तु तन्तवः पट इति कारणाभेदावगमे। लिङ्गेति लिङ्गं शब्दस्य सामर्थ्यम्। ज्ञेयत्वमिति ब्रह्मविदिति ज्ञेयत्वमाप्नोति परमिति प्राप्यत्वं तस्य ब्रह्मणः। अवस्थेति गणितानन्दः साधनं पूर्णानन्दः फलमिति पूर्णगणितत्वकृतोवस्थाभेदः। यत्तु शंकराचार्यैरत्र विवरणत्वं मामेव सेतुश्रुत्या विवक्ष्यत इत्युक्तं तदप्यमृतस्येत्यनेनानन्वितमिति त्याज्यमिति ज्ञेयम्। पूर्वपक्षोक्तश्रुतिव्याख्याने प्राञ्जलार्थत्यागं मन्वाना आहुः अस्मिन्निति। लक्ष्यमिति। श्रुत्यर्थस्तु पूर्वं पुरुषाक्षरं निरूप्य तद्देद्धव्यमित्युक्तम्। तदर्थं मन्त्रद्वयं धनुरिति लक्ष्यमिति च 'पतिः पत्नी चाम्बवताम्' 'आत्मनो यदर्धं पत्नीति' प्रणवत्वेन प्रकृतित्वं वदन्ति ब्रह्मवादिन इति गोपालतापिनीयश्रुतेर्लक्ष्म्या मन्त्रस्तृतीयः प्रणव इति। अपरविद्याविषयं चतुर्थमृगिति तत्र तृतीयो लक्ष्यमिति मन्त्रलक्ष्यमक्षरं न पुरुषस्तस्य 'धनुर्गृहीत्वौपनिषदं महान्तं शरं ह्युपासानिशितं संधयीत' (संदधीत) आयाम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सोम्य विद्धि' इति भावपदेन भक्तिपदनीयपुरुषविषयत्वात्। औपनिषदमुपनिषदा गृह्यते ब्रह्मज्ञानमुपासैव निशितं शरं 'श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते' इतिवाक्यादुपासा दासभक्तिर्वा। उप समीपे स्थित्वा यथायोग्यकरणस्य दासपदार्थत्वात् तद्भावे तद्भक्तौ गतेन चेतसाऽक्षरं पुरुषाभिन्नं विवक्षितं भावपदात्। आयाम्येति

## मुक्तोपसृप्यव्यपदेशात् ॥ २ ॥

ननु चोक्तं सर्वविज्ञानस्योपक्रान्तत्वादन्यवाग्विमोको विरुद्ध इति । नैष दोषः। मुक्तोपसृप्यव्यपदेशात्। मुक्तानां जीवन्मुक्तानां शरीराद्यध्यासरहिता-नामवान्तरप्रकरणशरधनुर्न्यायेन ब्रह्मत्वेन ज्ञातं पृथक्त्वेन वा जीवं लक्ष्ये योजयितुं तदुपसृप्यता व्यपदिश्यते। तेन शरीराद्यध्यासविशिष्टं न ब्रह्मणि

---

भाष्यप्रकाशः।

मुक्तोपसृप्यव्यपदेशात् ॥ २ ॥ एवं दोषद्वये परिहृतेऽपि तृतीयस्यापरिहृतत्वा-दाक्षिपति ननु चेत्यादि । मुक्तोपसृप्यव्यपदेशादिति मुक्तोपसृप्य इति भावप्रधानः । मुक्ते निष्ठा या उपसृप्यता भगवन्निकटगमनयोग्यता तया कृत्वा भगवतस्तस्या उपदेशो मुक्तोपसृप्यव्यपदेशस्तस्मात् । एतद्व्यपदेशेन कथं दोषपरिहार इत्यतस्तदेव व्याकुर्वते मुक्तानामित्यादि। मुक्तपदेनात्र जीवन्मुक्ता एवोच्यन्ते। तदुपसृप्यतेति मुक्तनिष्ठा उपसर्तुं योग्यता। तत्र प्रमाणमवान्तरप्रकरणम्। तत्र प्रोक्तो यः शरधनुर्न्यायस्तेन तथा ज्ञातं तथेति। अयमर्थः। अवान्तरप्रकरणे हि, तद्वेद्धव्यं सोम्य विद्धीत्यैकाग्र्येण तदेकतानतां प्रतिज्ञाय

रश्मिः।

यम उपरमे भ्वादिः परस्मैपदी सेट् आसमन्तादुपरम्य उपरमं कारयित्वा वा। अग्रे प्रणवो धनुरिति मन्त्रः प्रणवो मूलप्रकृतिः रुक्मिणी सा गुरुतः शिरो ह्यात्मा गुरूपसत्त्या योजनीयः। ब्रह्म तल्लक्ष्यमुच्यते पुरुषाख्यं ब्रह्म लक्ष्यम्। अत्रानधिकारमाशङ्क्याह अप्रमत्तेन वेद्धव्यमिति। अप्रमादेनाधिकारः संपादनीयः प्रमादोऽनवधानता। शरवत्तन्मयो भवेत्। अधुनाऽक्षरवेधमाह लक्ष्यमिति लक्ष्यमक्षरम्। सर्वगतं द्युभ्वादिगतम्। सदायतनं शरो मे सर्वतोमुखः सर्वैः प्रकारैर्यन्मुख-मुपायः स शरो वेद्धा आत्मा जीवः। सर्वगतो मुक्तो जीवन्मुक्तो विद्धं लक्ष्यं न संशयः। व्यध ताडने। अग्रे ऋग् धनुर्यजुर्बाणेन साम ज्याघोषणादिना ब्रह्म वेदमयं नित्यं परिविध्यन्ति नित्यश इत्यपरविद्याविषयम्। तथा च लक्ष्यस्याक्षरब्रह्मणो हि सर्वगतत्वं विषयवाक्येन प्रतिपादनात् लक्ष्यस्य सर्वगतत्वव्युत्पादकत्वादिति भाष्यार्थः। न च पुरुषोत्तमस्य सर्वगतत्वव्युत्पादकत्वमुचितं प्रतिज्ञातत्वादिति शङ्क्यम्। भक्तमनोरथपूरकत्वेन पुरुषोत्तमस्य भक्ताभावेन तस्य सामान्यरूपं यदक्षरं तन्निर्देशौचित्यात्। अचलत्वं चापेक्ष्येत्यधिकरण उक्तम्। भक्तमनोरथपूरकत्वं चतुर्थाध्याये प्रामाणिकं श्रुत्वाभिमतं लिखितमित्यग्रे प्रकारभेदो न दोषाय ॥ १ ॥

मुक्तोपसृप्यव्यपदेशात् ॥ २ ॥ भाष्ये। विरुद्ध इति। शाब्दबोधे पदजन्यपदार्थोप-स्थितेः कारणत्वादिति । प्रकृते । एवेति एवकारेण शंकराचार्यगृहीता मुक्ता व्यवच्छिन्नाः। मुक्तैरुपसृप्यं गम्यमेतदिति शंकराचार्योक्तमपि न साधीय इति बोधयितुं द्वितीयं विरुद्धमंशं व्याचक्रुः तदुपेति। भावप्रधानः मुक्तोपसृप्यपदे जीवन्मुक्तभावप्रधाननिर्देशयोः प्रमाणं बोधयितुं ग्रन्थभाष्यं अन्यद्भाष्यं विवरामासुः तत्रेति। तत्र जीवन्मुक्तोपादानभावप्रधाननिर्देशाङ्गीकारयोः। तथेति ब्रह्मत्वेन ज्ञानं जीवं तथा लक्ष्ये योजयितुं व्यपदिश्यत इति व्यपदिष्टत्वेन प्रकारेण। अवान्तरेति

भाष्यप्रकाशः ।

स कथं स्यादित्याकाङ्क्षायाम्

'धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासानिशितं संधीयीत ।
आयाम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सोम्य विद्धि' ॥ इति ।

शरधनुर्न्यायेन तां बोधयित्वा, किमस्त्रं कः शर इत्याद्याकाङ्क्षायाम्—

'प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत्' ॥

इत्यनेन शरस्य यथा प्रवेशेन लक्ष्यनिखाततया लक्ष्यप्रचुरता तथा आत्मनोऽपि तन्नि-खाततया तत्प्रचुरतेति तया पृथक्त्वेन ज्ञातम् । अथवा,

'लक्ष्यं सर्वगतं चैव शरो मे सर्वतोमुखः ।
वेद्धा सर्वगतश्चैतद्विद्धं लक्ष्यं न संशयः' ॥

इति ब्रह्मणः सकाशात् पृथक्त्वेन ज्ञातं जीवं लक्ष्ये ब्रह्मणि योजयितुमुपासानिशितत्वा-यायकतद्भावगतचेतःसिद्ध्यर्थमन्यवाग्विमोकोऽत्रोच्यते । स च शरीराध्यासराहित्य एव सिद्ध्य-तीति तन्मुखेन भगवतो मुक्तोपसृप्यता व्यपदिश्यते । उक्तरीत्या जीवयोग्यताकथनद्वारोच्यते । तेन शरीराद्यध्यासविशिष्टं लिङ्गशरीरं न ब्रह्मणि योजनीयमिति बोधनाय वाग्विमोकोऽत्रो-च्यते । न तु सर्वविज्ञानविघाताय । लक्ष्यादीनां त्रयाणां सर्वगतत्वश्रावणादतो नैतत्कथन-

रश्मिः ।

यथा समिधो यजतीत्यारभ्याम्नातमवान्तरप्रयाजप्रकरणमिति तृतीयस्यदशमेधिकरणे तादृशप्रकरणमाहुः तद्वेद्धव्यमिति । तामिति तदेकतानताम् । लक्ष्येति खलु अवदारणे भ्वादिः उभयपदी सेट् । तद्भावेति ब्रह्मात्मभावगतं चेतःसिद्ध्यर्थम् । उच्यत इति तथा च पृथक्त्वेन ज्ञातसंबन्धिन्यपि वाक् ब्रह्मवागेव नान्यवागिति भावः । उक्तरीत्येति अवान्तरप्रकरणश्रुत्युक्तरीत्या 'अन्या वाचो विमुञ्चथ' इत्यनेन जीवयोग्यतेत्यर्थः । शरीरादीति स्थूलोहमिति शरीराध्यासोऽन्यस्य बुद्धेर्मनोधर्म-स्यात्मद्धर्मे ख्यातिः स्थूलत्वं नास्मन्मतेन्यख्यातेः अतस्मिंस्तत्त्वारोपोऽध्यासोऽन्यख्यातिरूपः । जाना-म्यहमित्यन्तःकरणाध्यासः ज्ञानस्यान्तःकरणवृत्तित्वात् । श्वसिम्यहमिति प्राणाध्यासः श्वासस्य प्राण-वृत्तित्वात् । पश्यामि शृणोम्यहमितीन्द्रियाध्यासः दर्शनादेरिन्द्रियधर्मत्वात् । स्वरूपविस्मरणं बद्धोहमिति । पञ्चपर्वाऽविद्या । लिङ्गेति सर्वोपनिषदि मन आदिश्च सत्त्वादिश्च इच्छादिश्च पुण्यविशेषैश्चैते पञ्चवर्गाणां धर्माः भूतात्मजानादतेन विनश्यति आत्मसन्निधौ नित्यत्वेन प्रतीयमान आत्मोपाधिर्यस्तल्लिङ्गशरीरं हृदयग्रन्थिरित्युच्यत इत्युक्तम् । नेति तथा चोक्तं भाष्ये ।

'नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित् ।
पश्यन् शृण्वन् स्पृशन् जिघ्रन्नश्नन् गच्छन् स्वपन् श्वसन् ॥
प्रलपन् विसृजन् गृह्णन्नुन्मिषन्निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥
ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा' ॥ इति ।

तेन सर्वात्मभावेन स्थातव्यमिति भावः । लक्ष्यादीनामिति लक्ष्यशरवेद्धॄणाम् । एतत्कथनं

योजनीयमिति । किंच । वाग्विमोक एव, न वस्तुविमोकः । वस्तुनो ब्रह्मत्वात् । वाचारम्भणमात्रत्वाद्विकारस्य । अतो न सर्वविज्ञानबाधः । अतो बाधकाभावादिदं ब्रह्मवाक्यमेव । ये तु श्रुतेरन्यथार्थत्वं कल्पितमतानुसारेण नयन्ति, ते पूर्वोत्तरस्पष्टश्रुतिविरुद्धार्थवादिन उपेक्ष्याः ॥ २ ॥

भाष्यप्रकाशः ।

मुपक्रमविरोधायेत्यर्थः । एवमन्यवाग्विमोकस्य दोषत्वं प्रकरणेन निवारितम् । अतः परमर्थेनाऽपि निवारयन्ति किंचेत्यादि । अर्थस्तु स्फुट एव । एवं सूत्रार्थं व्याख्यायैकदेशिमतमनूद्य दूषयन्ति ये त्वित्यादि । ये मायावादिनः परब्रह्मणः साकारतामनन्वानाः श्रुतेर्व्याख्येयाया यस्मिन् द्यौरित्यस्या अन्यथार्थत्वं, सन्मूलाः सौम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठा इत्यायतनानायतनवत्त्वावश्य, सर्वं ब्रह्मेति सामानाधिकरण्यस्य च श्रावणाद् यथा शाखा स्कन्धो मूलं चेत्यनेकात्मको वृक्ष एवं नानारसो विचित्र आत्मेति शङ्कासंभवे तद्वारणायात्र, तमेवैकं जानथात्मानमिति सावधारणमाह यथा, यस्मिन्नास्ते देवदत्तस्तदानयेत्युक्ते आसनमेवानयति, न देवदत्तम् । तद्वदायतनभूतस्यैकरसस्यैवात्मनो विज्ञेयत्वमुपदिश्यते । अन्या वाच इत्यनेन विकारानृतामिसंधस्य चापवादः । 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इति दोषश्रावणात् । सर्वं ब्रह्मेति सामानाधिकरण्यं तु प्रपञ्चप्रविलापनार्थं नानेकरसताप्रतिपादनार्थम् । 'स यथा

रश्मिः ।

सर्ववाग्विमोककथनम् । इममर्थमुपष्टभ्नन्त इव कंचन संदेहं पराचक्रिरे अत्रेति । इयं 'हानौ तूपायनशब्दशेषत्वात्' इति सूत्रे विषयवाक्यं साम्यं तूपचारात् परमं ब्रह्मोपैतीत्यन्वयः तदनन्तरं साम्यमुपैतीति । परादक्षरात् । उप आ एतीति 'एङि पररूपम्' नास्ति आङा व्यवधानात् । अतो वारद्वयवृद्धिः । मुक्तिफलेति इदं सूत्रं तृतीयाध्यायसमाप्तौ । तथेति परममुक्तस्योपसृप्यताप्रकारः । सन्निहितेति एकमात्रद्वितीयमुण्डकपठितत्वेन सन्निहितत्वात् । प्रकरणेनेति प्रकरणादिति सूत्रे वक्ष्यते वक्ष्यते च 'आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च' इत्यधिकरणे ।

जीवप्रकरणं ह्येतन्मुक्त्युपायोस्य रूप्यते ।
योग्यं शरीरमारुह्य गच्छेदिति हरेः पदम्' ॥ इति ।

तद्धजीवन्मुक्तप्रकरणमवान्तरप्रकरणम् । जीवकर्तृकब्रह्मकर्मको वेधः तद्वेद्धव्यं सोम्य विद्धीत्यत्र त्वं त्वया वेद्धव्यं तद् ब्रह्म विद्धीति । अर्थेनेति लक्ष्यादीनां त्रयाणां सर्वगतत्वेन तत्तत्संबन्धिन्यो वाचो नान्या वाच इति न दोषत्वमित्युक्तेर्थे नान्यवाक्त्वमेकविज्ञानेन सर्वविज्ञानबाधकमतो द्युभ्वाद्यायतनं पदार्थान्तरमित्यन्यवाग्विमोकस्य दोषत्वं प्रकरणेन निवारयन्ति स्मेत्यर्थः । स्फुट इति तथा हि 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति श्रुतौ नामधेयं विकारः जीवन्मुक्तः सर्वोपाया इति नामैव विकारो विकृतिः कुण्डलादिवत् सुवर्णस्य । वस्त्वाकारस्य तु न विकृतित्वं साकारब्रह्मवादे 'यदेकमव्यक्तमनन्तरूपम्' इतिश्रुतेर्ब्रह्मत्वात् । आविर्भावतिरोभावावेव न तु नाशोत्पत्ती । एवं च विकारो वाचारम्भणं मृत्तिकेत्येव घटशरावादौ सत्येत्येवं ब्रह्मेत्येव सत्यं साकारत्वादित्यर्थः । तदेतदुक्तं भाष्ये वाग्विमोक इत्यारभ्य विकारस्येत्यन्तेन ग्रन्थेन । दोषेति बृहदारण्यके । प्रपञ्चेति स्वस्वकारणरूपतया भावनं प्रपञ्चविलापनमिति तत्त्वानुसंधानं ग्रन्थः एतावन्त एव तेषामपवादपदार्थः । विरुद्धार्थवादित्वं स्फोरयामासुः यथेति । मुण्डकश्रुतयः अत्रे

नानुमानमतच्छब्दात् ॥ ३ ॥

ननु जडधर्मा जडदृष्टान्ताः प्रकरणे बहवः सन्ति । 'अरा इव ब्रह्मपुरे मनो-

भाष्यप्रकाशः ।

सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवं वा अरे अयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' इति श्रावणादित्येवमर्थत्वं प्रपञ्चो मायिक इति कल्पितमतानुसारेण प्रापयन्ति । ते पूर्वोत्तरस्पष्टश्रुतिविरुद्धार्थवादिनो 'यथा सुदीप्तात् पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः । तथाऽक्षराद् विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति' इति । 'एतस्माज्जायते प्राणः' इति । 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ' इत्यादि । 'आविःसन्निहितं गुहाचरं नाम महत्पदम् । अत्रैतत्सर्वमर्पितमेजत्प्राणन्निमिषच्च यत्' इत्यादयः पूर्वाः । 'अरा इव रथनाभौ' इत्याद्या आसमाप्ति वर्तमाना उत्तराः, स्पष्टास्तत्तद्दृष्टान्तपूर्वकब्रह्मकार्यब्रह्मरूपविरुद्धधर्माधारत्वादिब्रह्मधर्मप्रतिपादकतया स्फुटार्था या श्रुतयस्तद्विरुद्धो यः प्रपञ्चमायिकत्वादिरूपोऽर्थस्तद्वादिनो वैयात्यादैकदेशिकमादाय तं निर्णीतत्वेन वदन्त उपेक्ष्या आग्रहवादित्वाद् भूताविष्टा इवानादरणीया इत्यर्थः ॥ २ ॥

नानुमानमतच्छब्दात् ॥ ३ ॥ इदमेवाधिकरणं पुनर्निषेधमुखेन विचारयन् पूर्वं जडं निरस्यतीत्याशयेनात्र पूर्वपक्षं दर्शयन्ति नन्वित्यादि । कुत्र सन्तीत्यपेक्षायां तन्मन्त्रप्रतीकं दर्शयन्ति 'अरा इव रथनाभौ संहता यत्र नाड्यः' 'स एषोऽन्तश्चरते बहुधा जायमानः' इत्यत्र नाडीसंघाताधिकरणत्वं शरीरधर्मत्वाज्जडधर्मः । रथनाभिदृष्टान्तो जडदृष्टान्तः । तथा,

रश्मिः ।

इत्यादि साकारत्वं ब्रह्मणः प्रतिपादयति । अरूपमक्षरं केन प्रकारेण ज्ञेयमित्याह आविरिति बहिःप्रकटं सद्गुहाचरं यथा भवति तथा निहितं महत् बृहन्नाम पदं धाम एजत् एजृ कम्पने भयाद्भूलोके सर्वमेजत् । प्राणत् रक्षआदिभिः प्राणत्सर्वं भुवर्लोके । निमेषादिक्रियारहितं मिषत्स्पर्धमानं सिचद्वा स्वर्गलोके । इत्यादय इति एतज्जानीथ सदसद्वरेण्यमित्यादिरादिपदार्थः । जीवन्मुक्तप्रकरणीयाश्च श्रुतयश्च । आसमिति समाप्तिमभिव्याप्याऽऽसमाप्ति । ब्रह्मकार्यमिति यथा सुदीप्तात्पावकादित्यत्र दृष्टान्तपूर्वकं ब्रह्मकार्यम् । अग्निर्मूर्धेत्यत्र साकारब्रह्मरूपता । आविःसन्नित्यत्र विरुद्धधर्माधारता आदिनाऽरा इवेत्यत्र सदंशता दृष्टान्तस्य जडत्वात् । आद्यपदेन आनन्दरूपममृतं यद्विभाति साकारता निरूपिका । आनन्दस्य साकारत्वं वेदस्तुतौ 'अन्नमयादिषु यश्चरमः' इत्यस्य सुबोधिन्याम् । 'तस्य पुरुषविधतामन्वयं पुरुषविधः' इत्यानन्दवल्लीश्रुत्या । वैयात्यादिति अगत्या छान्दोग्योक्तमैकदेशिकं एकदेशो भक्तदमयकारणयोर्माहात्म्यामेदज्ञानयोर्मध्येऽभेदः । श्वेतकेतूपाख्यानोक्तस्तत्संबन्धिसन्मूलेत्यादिवाक्यमादाय । भूतेति समानाधिकरणस्य सर्वथाऽसंभवाद्भूताविष्टः मूलवस्त्वज्ञानेन वेदार्थविप्लावकत्वादनादरणीया इत्यर्थः ॥ २ ॥

नानुमानमतच्छब्दात् ॥ ३ ॥ निषेधे द्युभ्वाद्यायतनं प्रधानमिति पूर्वपक्षयित्वा स्वशब्दादिति हेतुना निषेधः कृतः अधुना अनुमानं प्रधानं तच्छब्दाभावादित्येव नञो निषेधार्थकत्वेन निषेधोपायेन । अरा इति रथस्य नाभौ चक्रान्तेऽर्पिता अरा यथा संहता नाड्यः 'नाडी स्थाने कुल्ये च' इति विश्वात् । स्थानानि । शारीरेति चक्षुःश्रोत्रादीनां सूर्यदिगादिदेवतास्थानत्वसत्त्वात् ।

७८ ब्र० सू० १०

मये' इत्यादि । तस्मात् प्रकृतिपुरुषनिरूपकसांख्यानुमापकमेवैतत्प्रकरणमस्तु । निर्णीतमप्यक्षराधिकरणे जडधर्मात् पुनरुज्जीवनम् । तस्मात् द्युभ्वाद्यायतनं प्रकृतिरेव भवितुमर्हतीति चेन्न । अनुमानं तन्मतानुमापकं न भवति । कोऽपि शब्दो निःसंदिग्धस्तन्मतज्ञापको नास्ति । ब्रह्मवादज्ञापकास्तु बहवः सन्त्यात्मसर्व-

---

भाष्यप्रकाशः ।

'यः सर्वज्ञः सर्वविद् यस्यैष महिमा भुवि ।
दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा संप्रतिष्ठितः' ॥

इत्यत्र पुरमिव पुरमिति पुरपदबोधितो दृष्टान्तो भूमिष्ठमहिमवत्त्वं शरीरधर्मः । तथा, 'मनोमयः प्राणशरीरनेता' इत्यत्र मनोमयत्वं विकारधर्मः । इत्यादीत्यादिपदेन, 'हिरण्मये परे कोशे' इत्यादिमन्त्रोक्तानां शुभ्रत्वप्रकाशाभावादीनां संग्रहः । आत्मसर्वज्ञादिशब्दाश्चेतनधर्मबोधकाः पुरुषनिरूपकाः । तस्मादिति प्रकृतिपुरुषबोधकपदसत्त्वात् । नन्वस्य प्रकरणस्याक्षरत्वाधिकरणे ब्रह्मपरताया व्युत्पादितत्वात् सिद्धे तथात्वे पुनः किमर्थोऽयं प्रयास इत्यत आहुः निर्णीतमित्यादि । यद्यपि तत्र तथा निर्णीतं तथापि तत्रान्तरात्मत्वेनाधेयतया ब्रह्म सिद्धं न त्वाधारतयेति । रथनाभ्यादिदृष्टान्तसहकृताज्ञाडीसंघाताधारत्वादिरूपाज्जडधर्मादाधारभूतेऽक्षरे प्रकृतिरूपतायाः पुनरुज्जीवनं संभवतीति विशिष्टाद्वैतमेव भवेन्न तु शुद्धब्रह्मवाद इति तदभावाय प्रयास इत्यर्थः । सिद्धान्तं व्याचक्षते अनुमानमित्यादि । इदं प्रकरणं सांख्यमतमूलभूतं, तदसाधारणधर्मबोधकशब्दवत्त्वादित्यनुमानं तन्मतानुमापकं न भवति । तत्र हेतुः कोऽपीत्यादि । अयमर्थः । एतेषु मन्त्रेषु यत्तच्छब्दात् तयोश्च नित्यसंबन्धान्नाडीसंघाताधिकरणत्वमन्तःप्रविष्टस्य

रश्मिः ।

दृष्टान्त इति ब्रह्मणः पुरमिव पुरं हृदयाकाशः इति हृदयाकाशदृष्टान्तः । शंकरभाष्ये शरीरं तत्र व्योम्नि हृदयाकाश इति स्वमतेरर्थः । 'ब्रह्मपुरे दहरं पुण्डरीकं वेश्म' इति श्रुतेः महिमा विभूतिस्तद्वत्त्वं शरीरधर्मः । व्याख्याने तात्पर्याच्च पूर्वोत्तरभावत्यागेन व्याख्यानं दोषाय । विकारेति विकारे मयटः । शुभ्रत्वेति 'तच्छुभ्रं ज्योतिषां ज्योतिः' 'नक्षत्रचन्द्रार्कवपुः प्रकाशते' इतिश्रुतिभ्यां शुभ्रत्वान्यप्रकाशाभावादीनां आदिपदेन 'न वान्ति वाताः' इति श्रुतौ वायवः, वा गतिगन्धनयोः गत्यनुकूलव्यापाराश्रया नेति बोधात् तत्र वाताभावस्य संग्रहः । पुरुषांशनिरूपकसांख्यानिरूपणमाशङ्क्य एकविधित्वेऽधरत्वेन भाष्येनुक्तमित्याशयेनाहुः आत्मेति । एते शब्दाः पूर्वमुदाहृतश्रुतिषु वर्तन्ते । तथात्व इति ब्रह्मपरतारूपः प्रकारस्तस्य भावे । विशिष्टेति 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इतिश्रुत्युक्तम् । व्याचक्षत इति यत्तु शंकराचार्यैरनुमानशब्द आनुमानिकसांख्यस्मृतिपरिकल्पितप्रधानपरत्वेन व्याख्यातस्तदपाकर्तुं तथेत्यर्थः । अनुमानपदे लक्षणां वारयितुं अनुमानस्वरूपमाहुः इदमिति । दृष्टान्तस्तु सांख्यसूत्रवत् । एवं हेतुप्रतिज्ञे दृष्टान्तरूपोदाहरणं चोक्तम् । परार्थानुमाने चतुर्थोऽवयवः तथायमित्युपनयः पञ्चमोऽवयवस्तस्मात्तथेति निगमनमिदं पञ्चावयववाक्यमनुमानम् । अयं हेतुः सत्प्रतिपक्षः साध्याभावसाधकहेत्वन्तरसत्त्वात् तन्मतानुमापकं न भवतीत्याहुः तत्र हेतुरिति । मन्त्रेष्विति 'अरा इव रथनाभौ संहता यत्र नाड्यः, स एषोन्तश्चरते बहुधा जायमानः' 'ॐमित्येवं ध्यायथ आत्मानं स्वस्ति वः पाराय तमसः परस्तात्, यः सर्वज्ञः सर्वविद्यस्यैष महिमा भुवि, दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा संप्रतिष्ठितः, मनोमयः प्राणशरीरनेता प्रतिष्ठितोन्ने हृदयं संनिधाय,

ज्ञानन्दरूपादिशब्दाः । अतः संदिग्धा जडधर्मत्वेन प्रतीयमाना अपि ब्रह्मधर्मा एवेति युक्तम् । न हि ब्रह्मवादः श्रुतिव्यतिरिक्ते सिद्धोऽस्ति । येन ब्रह्मधर्माभावो निश्चेतुं शक्येत । तस्मात् सर्वाधारत्वेन निरूप्यमाणः परमात्मैव, न प्रधानमिति ॥ ३ ॥

प्राणभृच्च ॥ ४ ॥

नन्वस्ति निर्णायकं प्राणानामोतत्ववचनम् । 'मनोमयः प्राणशरीरनेता' इति च । अतो जीवधर्माः केचन, जडधर्माश्चापरे सर्वज्ञत्वादयोऽपि योगप्रभावाज्जीवधर्मा इति । तस्माज्जडजीवविशिष्टः सांख्यवाद एव युक्त इति चेन्न । प्राणभृज्जीवो न संभवति । अतच्छब्दादेव । न ह्यानन्दोऽमृतरूपः स भवितुमर्हति तन्मते । पृथग्योगकरणमुत्तरार्थम् ॥ ४ ॥

भाष्यप्रकाशः ।

संघरतो मोक्षः प्रतीयते । दृष्टान्तस्तु विष्टम्भकत्वमात्रे । अन्यथा दृष्टान्तीयाशेषधर्मापत्तिः पक्षे संभवन्ती अनुमानमेवोच्छेदयेत् । एवं सर्वज्ञ इत्यत्राप्यात्मन एव महिमा । एवं सर्वेषां शब्दानां संदिग्धत्वे न तैः सांख्यमतसिद्धिरित्यर्थः । ननु मास्तु सांख्यमतसिद्धिस्तैर्मतान्तरमेव सिद्ध्यत्वित्यत आहुः न हीत्यादि । किं तन्मतान्तरम् । ब्रह्मबोधकमन्यद्वा । यद्याद्यः पक्षस्तदा तु श्रुत्येकसिद्धत्वात् ब्रह्मवादस्यैव सिद्धिः । यद्यन्यस्तदा त्वात्मत्वसर्वज्ञत्वानन्दरूपत्वादीनां ब्रह्मधर्मत्वाभावसाधकं हेत्वन्तरं मृग्यम् । तच्चात्र न दृश्यत इति न तस्यापि सिद्धिरित्यर्थः । सिद्धमाहुः तस्मादित्यादि ॥ ३ ॥

प्राणभृच्च ॥ ४ ॥ निषेधसूत्रविचारे जीवनिरसनायात्र पूर्वपक्षं दर्शयन्ति नन्वित्यादि । निर्णायकमिति सांख्यमतनिर्णायकम् । सिद्धान्तमाहुः नेत्यादि । पृथग्योगकरणमिति ।

रश्मिः ।

तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति' इत्यादिमन्त्रेषु । 'मोक्षुरिति श्रवणः । विष्टम्भेति मात्रपदेन जडव्युदासः विष्टम्भः पतनप्रतिबन्धकव्यापारः ष्टभि स्तम्भे श्वादिरात्मनेपदी सेट् । विष्टम्भते इति विष्टम्भकः । उच्छेदयेदिति यथात्रैव सांख्यसूत्रं दृष्टान्तः तदीयाः सांख्यसूत्रत्वस्वल्पत्वर्षिप्रणीतत्वरूपा धर्माः पक्षेऽस्मिन् प्रकरणरूपे स्युरित्यनुमानं पञ्चावयववाक्यमुच्छेदयेद्विवक्षितानुमित्यभावात् । महिमेति ज्ञानम् । एवकारः सांख्यपुरुषं व्यवच्छिनत्ति । संदिग्धत्वेनेति । सांख्यमतप्रतिपादने इति शेषः । एवं चेदं प्रकरणं न सांख्यमतमूलभूतं तदसाधारणधर्मबोधकशब्दवत्त्वाभावात् व्याससूत्रवदिति प्रतिपक्षरूपानुमानम् । अत्राप्युपनयनिगमने बोध्ये । मतं शब्देपि । भाष्यं दर्शयन्त्याचार्यमतमित्याहात आहुः ब्रह्मबोधकमिति । मृग्यमिति सांख्यैर्मृग्यम् ॥ ३ ॥

प्राणभृच्च ॥ ४ ॥ प्राणान् बिभर्तीति प्राणभृत् डुभृञ् धारणपोषणयोः ह्वादिः परस्मैपदी कर्तरि क्विप् तुक् जीव इत्यर्थः । जीव प्राणधारण इति धातुपाठात् क्लौ ह्रित्वाभावश्छान्दसः स्वरवर्णानुक्रमहैमधातुपाठे तु डुभृञ् भृगृङ् पोषणे धारणे अदादिः ह्वादिकमयपदी अनिट् इत्यादिरपि तस्य ह्रित्वं न पूर्वसूत्राज्जातच्छब्दादिति पदद्वयानुवृत्त्या लब्धनिषेधमादायाहुः निषेधेति । सांख्येति 'यस्मिन् द्यौः पृथिवी' इति श्रुतौ प्राणानामोतत्ववचनं पुरुषस्तु पुष्करपलाशवन्निर्लेप इति न प्राणसंबन्धः । प्रकृतिस्तु सत्त्वरजस्तमोरूपा अनेकजीवपक्षः स तृतीयस्कन्धसुबोधिनीश्रीकपिल-

भेदव्यपदेशात् ॥ ५ ॥

विशेषहेतुमाह 'तमेवैकं जानथ' इति कर्मकर्तृभावः प्रतीयते। अतो भेदव्यपदेशान्न प्राणभृज्जीवः ॥ ५ ॥

भाष्यप्रकाशः।

सत्रपृथक्करणं, न ब्रह्मयोगकरणं चोत्तरसूत्रेष्वन्वयार्थमित्यर्थः । नचानन्दाऽमृतरूपत्वमुपासनार्थमुच्यत इति वाच्यम् । विभातीत्यस्य विरोधात् । उपासनायां विभानाभावात् । नच तत् फलबोधकमिति वाच्यम् । तन्मत आनन्दस्य प्रकृतिधर्मत्वेन फलताया वक्तुमशक्यत्वात् । 'मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ने हृदयं सन्निधाय । तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति' इति मन्त्रे आनन्दरूपस्याऽमृतस्य विभातो विज्ञानेन दर्शनविषयत्वभावधेनानन्दरूपत्वस्यात्मधर्मतायाः स्फुटत्वाच्चेति ॥ ४ ॥

भेदव्यपदेशात् ॥ ५ ॥ विशेषहेतुमाहेति उक्तस्य हेतोर्मन्त्रान्तरगतत्वेन प्राकरणिकत्वात् प्रकरणस्य ब्रह्मपरतासाधकत्वं, न तु विषयवाक्यस्य तथात्वसाधकत्वमित्यतस्तन्मन्त्रगतं हेतुमाहेत्यर्थः ॥ ५ ॥

रश्मिः ।

मतीयसिद्धान्तान्तरेस्ति अतः प्राणैतो जीवः । भाष्ये । अतदिति । ननु तच्छब्दार्थेऽननुगमो दोषः पूर्वं तच्छब्देन प्रकृतिरुच्यत इति चेन्न, प्रकृतिवाचकशब्दाभावादित्येवार्थो न त्वत्र जीववाचकशब्दाभावादित्यर्थः । परं तु हेतूपन्यासे यावानर्थः प्रसक्तप्राप्तः ब्रह्मवादस्थापकास्तु बहवः सन्तीत्यादिभाष्यसिद्धः स गृह्यते अतोऽननुगमाभावात् । नह्यीति तथा च 'ज्ञानान्मुक्तिः' इति सांख्यप्रवचनसूत्रं आनन्दामृतरूपत्वे तस्य साधनं न निर्दिशेत् । प्रकृते । पृथक् च योगश्च पृथग्योगौ तयोः करणमित्याशयेन व्याचख्युः । सूत्रेति । न ह्यानन्देत्यादिभाष्ये जीवस्यानन्दामृतत्वं नास्तीत्युक्ते शङ्कते किंचित् न च्यानन्देति । विरोधादिति 'आनन्दरूपममृतं यद्विभाति' इति श्रुतौ भा दीप्तावदादिः परस्मैपदी अनिट् आनन्दामृतत्वस्य नोपासनाकाले दीप्तिः पराभिध्यानेन परस्य भगवतो अभितो रमणेच्छारूपेण पौराणेन सदानन्दयोस्तिरोभावात् । तन्मतेपि 'मुक्तिरन्तरायध्वस्तेर्न परः' इति सूत्रादन्तरायेण न दीप्तिः । तत्फलेति उपासनाफलबोधकम् । प्रकृतीति 'प्रीत्यप्रीतिविषादाद्यैर्गुणानामन्योन्यवैधर्म्यम्' इति सूत्रात् सत्त्वरजस्तमःसाम्यावस्था प्रकृतिरतो गुणानां सत्त्वरजस्तमसाम् । तर्हि त्वमत आनन्दः कस्य धर्म इत्याकाङ्क्षायामाहुः मन इति । मनोमयो वेदः प्राणा इन्द्रियाण्यपि ते शरीरं सूक्ष्मं तस्य नेता नायकः गोविन्द इत्यर्थः । 'भुङ्क्ते गुणान् षोडश षोडशात्मकः' । जीवपरमात्मपक्षे शंकरभाष्योक्तः प्राणं च तच्छरीरं च तस्यायं नेता स्थूलशरीराच्छरीरान्तरं प्रति । अन्नेऽन्नपरिणामेति दिनमुपचीयमानेऽपचीयमाने च पिण्डरूपेऽन्ने हृदयं संनिधाय प्रतिष्ठितः 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' इति गीतावाक्यात् । मन्त्र इति 'प्रयोगकरणीभूतशब्दत्वाभावेपि यज्ञाभियुक्तानां मन्त्र इति समाख्या स मन्त्रः' इतिलक्षणपुरस्कारेण मन्त्रपदप्रयोगः । विभात इति भातीति भान् शता षष्ठ्या ङस् विपूर्वः ॥ ४ ॥

भेदव्यपदेशात् ॥ ५ ॥ मन्त्रान्तरेति यस्मिन् द्यौरिति मन्त्रादन्ये मन्त्रा नानुमानसूत्रे उदाहृता मन्त्रान्तराणि तद्गतत्वेन । तन्मन्त्रेति विषयवाक्यगतं मन्त्रपदं पूर्ववत् । तथा च प्रकरणं प्राणमतच्छब्दात् प्रकृतिवाचकशब्दाभावात् । आत्मसर्वज्ञानन्दरूपादिशब्दानां ब्रह्मवादस्थापकानां

प्रकरणात् ॥ ६ ॥

जीवजडसाधारणनिराकरणाय विशेषहेतुमाह । प्रकरणं हीदं ब्रह्मणः । ब्रह्मा देवानामित्यारम्भे, स ब्रह्मविद्यामिति, तेषामेवैतां ब्रह्मविद्यामित्यन्ते च ब्रह्मविद्याया एव प्रकरणित्वमवगम्यते । 'ब्रह्मैवेदममृतं पुरस्तात्'इत्यादिभिर्विस्पष्टं ब्रह्मवादः प्रतीयते ॥ ६ ॥

---

भाष्यप्रकाशः ।

प्रकरणात् ॥ ६॥ जीवेत्यादि । ननु यद्यपि मन्त्रगतो हेतुर्जीवव्यावर्तकस्तथाप्येकशब्दस्य मुख्यार्थत्वाङ्गीकारे द्वितीयसिद्धावेवकारस्यासंकुचितान्ययोगव्यवच्छेदकताया उपगन्तुमशक्यत्वात्, तमपि जानथ, ततोऽपि मुख्यमात्मानं जानथेत्येवं वचनव्यक्तावस्य मंत्रस्य जडजीवसाधारणता स्यादततदभावाय तथाहेत्यर्थः । शेषं स्फुटम् ॥ ६ ॥

रश्मिः ।

सत्वात् श्रीभागवतवत् । तथा चायमित्युपनयः तस्मात्तथेति निगमनम् । एवं यस्मिन्निति वाक्यं आत्मसर्वज्ञादिपदनिरपेक्षमन्वयानुभावकमत आकाङ्क्षाविरहादतच्छब्दादिति हेतुर्यस्मिन् द्यौरिति विषयवाक्ये ब्रह्मत्वसाधनेऽप्रमाणं त्वंपदस्य पदान्तरप्रयुक्तान्वयाननुभावकत्वरूपाकाङ्क्षाभावात् । अतो विषयवाक्ये ब्रह्मत्वसाधने तन्मन्त्रगतभेदव्यपदेशरूपं हेतुमाहेत्यर्थः । भाष्ये । तमिति कर्म, यूयं जानीथेति कर्तारः, न प्राणभृज्जीवः संभवति भेदव्यपदेशात् ॥ ५ ॥

प्रकरणात् ॥ ६ ॥ जीवेति तमेवेत्येवकारेण कर्तृभूतजीवव्यावर्तकः कर्मकर्तृव्यपदेशरूपो हेतुः । एकेति श्रुतिघटकैकशब्दस्य 'एके मुख्यान्यकेवलाः' इति कोशात् । द्वितीयेति तन्मते मुख्यं तमित्यन्वयो नास्ति द्युभ्वाद्यायतनस्य भारवाहकत्वात् यस्मिन् द्यौरिति पूर्वार्धात् । पुरुषस्यासन्नत्वात् । अतस्तं प्रकृतितत्त्वपदार्थं ततो मुख्यं जीवं चेतनत्वात् अतो जीवस्यापि जानीथेत्यनेनान्वयाज्जीवयोगव्यवच्छेदकताया वक्तुमशक्यत्वात् तत्रापि संकुचिता अज्ञेया जीवाः तद्भिन्न्येषां योगस्य व्यवच्छेदो जानीथेत्यनेनान्वयाभावात् वक्तुं शक्योऽतोऽसंकुचितेत्यन्यविशेषणम् । जडेति जडा प्रकृतिः । एतेन भाष्ये जडजीवसाधारणेति भावप्रधानः । तथेति विशेषहेतुत्वेन हेतुम् । शेषमिति । भाष्ये । तेषामेवैतामित्यादि अत्र 'प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' इति प्रथममुण्डकपरिसमाप्तिपठितापि श्रुतिरस्ति सापि मध्ये ब्रह्मविद्याबोधकत्वेन योज्या । विद्या ययामृतमश्नुते सा विद्या 'विद्ययामृतमश्नुते' इति श्रुतेः । प्रकरणित्वमिति सामान्ये नपुंसकं दृढभक्तिरितिवत् । ब्रह्मविद्याप्रकरणि किमत्र प्रकरणीत्याकाङ्क्षायां लिङ्गविशेषानालिङ्गितायां ब्रह्मविद्येति योजनात् । इत्यादिभिरिति बहुवचनमेकतिङ् वाक्यमिति वाक्यानां बहुत्वं तथा हि ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म भवति पश्चाद्ब्रह्म भवति दक्षिणतो ब्रह्म भवति इति अत्र ब्रह्मैव विश्वमित्यनुक्त्वा वाक्यरचनार्थं सर्वात्मभावस्य सूचकानां पुरस्तादित्यादिपदानां युक्तिर्ज्ञापयति ब्रह्मवादे वक्ष्यमाणे पुरुषस्यापि निरूपणात् कदाचिदनुग्रहेण सर्वात्मभावं दद्यात् तदा पुरुषं ब्रह्मस्थले संनिवेश्य सर्वात्मभावोपि विद्येति वक्ष्यते च 'विद्यैव तु निर्धारणात्' इति सूत्रे सर्वात्मभावो विद्येति । ब्रह्मवाद इति । अयमर्थः । ब्रह्माथर्वनाम्ने स्वज्येष्ठपुत्राय ब्रह्मविद्यामुक्तवान् ब्रह्मा देवानामित्यादिश्रुत्या । तदर्थं ऋग्वेदादिरूपापरविद्यामुक्त्वा 'अथ परा यया तदक्षरमधिगम्यते' इति परां प्रतिज्ञाय 'यत्तदद्रेश्यमग्राह्य'मित्युपक्रम्य 'परिपश्यन्ति धीराः' इत्यनेन

रश्मिः ।

तद्दर्शनमुक्त्वाऽत्र साधनानि वक्ष्यन्तेऽदृश्यत्वादिगुणकाधिकरणोक्तब्रह्मरूपमुक्तं ततश्च 'यथोर्णनाभिः सृजते गृह्णते च'इत्यनया सृष्टिमुक्त्वा तज्ज्ञानार्थं 'तपसा चीयते ब्रह्म'इत्यादिना तप उक्त्वा तस्य 'यस्य ज्ञानमयं तपः' इत्यनया स्वरूपमुक्त्वात्र तपोरूपब्रह्मणा ब्रह्म चीयते उच्छूनं क्रियते ततः परिपश्यन्ति धीरा इत्यत्र साधनं भक्तिज्ञानकर्मसु 'मन्त्रेषु कर्माणि कवयो यान्यपश्यंस्तानि त्रेतायां बहुधा सन्ततानि, तान्याचरथ नियतं सत्यकामा एष वः पन्थाः सुकृतस्य लोके' इत्यनया कर्माण्युक्त्वा यस्याग्निहोत्रमित्यादिना दर्शपूर्णमासचातुर्मास्याग्रायणादिरहितमग्निहोत्रं लोकान् हिनस्तीत्यतस्तत्सहितं कर्तव्यमित्युक्त्वा तदनन्तरमेतच्छ्रेय इत्यादिना पूर्वोक्तकर्ममात्रश्रेयो वदतां पण्डितंमन्यत्वमूढत्वजंघन्यमानत्वैर्विनिन्द्य कर्मादिभिर्लोकालभ्यत्वमुक्त्वा तपःश्रद्धे इत्यादिना शान्तानां विदुषां भैक्षचर्यां चरतामृतपुरुषप्राप्तिमुक्त्वा तदर्थं वैराग्येण तज्ज्ञानार्थं गुरुसमीपगमनमुक्त्वा श्रोत्रियं ब्रह्मनिष्ठमित्यनेन गुरुचिह्नमुक्त्वा 'प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' इत्युक्तम् । द्वितीयमुण्डके पुरुषाक्षरयोर्निरूपणार्थं 'यथा सुदीप्तात्पावकात् विस्फुलिङ्गाः सहस्रशः' इत्यादिना पुनः सृष्टिमुक्त्वा—

'दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः ।
अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः' ॥

इति पुरुषोत्तममक्षरपरत्वेन निरूप्य 'एतस्माज्जायते प्राणः' इत्यादिना ततः सृष्टिमुक्त्वा'अग्निर्मूर्धा'इत्यादिना तस्य विश्वकायत्वं तस्य साकारब्रह्मत्वं वेदादिसर्वमूलत्वं चोक्त्वा तत 'एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य'इत्यनया तस्य गुहानिहितस्य ज्ञानेनाविद्यालिङ्गदेहभेदमुक्त्वाऽऽविःसंनिहितमित्यादिना विरुद्धधर्माश्रयत्वमुक्त्वा शरधनुर्न्यायं चोक्त्वाऽऽदिना मनोमयस्य हृदये आविर्भूतेऽक्षरात्मके ब्रह्मपुरे प्रतिष्ठामुक्त्वा आनन्दरूपममृतमित्यनया कमनीयत्वमुक्तवोच्यते 'ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण, अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम्'इति प्रपञ्चब्रह्मात्मकत्वमित्येष ब्रह्मवाद इति । प्रतीयत इति तथा च शंकराचार्यस्य भाष्यं द्युभ्वाद्यायतनसूत्रस्य तदसंगतमिति सूचितम् । मायावादप्रतिपादकम् । तथा हि सूत्रं व्याख्यायोच्यते तदुक्तं भवति न कार्यप्रपञ्चविशिष्टो विचित्र आत्मा विज्ञेयः किं तर्ह्यविद्यया कृतं विद्यया प्रविलापयन्तस्तमेवैकमायतनभूतमात्मानं जानथैकरसमिति यथा यस्मिन्नास्ते देवदत्तः तदानय इत्युक्त आसनमेवानयति न देवदत्तं तद्वदायतनभूतस्यैकरसस्यात्मनो विज्ञेयत्वमुपदिश्यते । विकारानृताभिसंधस्य चापवादः श्रूयते 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इति नैतत् तथा हि यस्मिन् द्यौरित्यस्यामोतवचनात् 'ओतप्रोतमिदं विश्वं तन्तुष्वङ्ग यथा पटः' इत्यत्रोक्तस्य समवायित्वस्य स्फोरणात् भक्तिमार्गे सांख्योक्तसत्कार्यवादस्य सत्त्वात् यस्मिन् पटस्तदानय इत्युक्ते तन्तूनां पटरूपाणामेवानयनं न तु तन्तुमात्रस्य पार्थक्याभावात् सोयं दृष्टान्तः । एकरसत्वं तु 'सर्वरसः' इति श्रुतेः सर्वरसस्यैकदेशिसिद्धं शान्तरसमनुरुणद्धि इति अत एव पुरुषविधब्राह्मणे पुरुषविध आत्मोच्यते 'आत्मैवेदमग्र आसीत् पुरुषविध' इति श्रुतेः रसत्वेनैकरसं साकारं ब्रह्म प्रतिपादितमेव नानेव पश्यतीत्यत्र नानापदं नानेकवाचकं किं तूभयवाचकं तदुभयं तु शारीरब्राह्मणे अप्रमेयादिकं सर्ववशित्वादिकं च सगुणनिर्गुणरूपमुभयं तदिव पश्यति किं तु विद्वन्मण्डनोक्तदिशैकमेवेति श्रुतिपदार्थः । इतः पूर्वं 'मनसैवानुद्रष्टव्यं नेह नानास्ति किंचन' इत्यस्यां नानापदं करणवाचकं 'प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुः' 'ते निचिक्युर्ब्रह्म पुराणमग्र्यम्' इति श्रुतौ चक्षुरादिकरणाधिदैविकोक्तेः तथा च विश्व-।

रश्मिः ।

'नाना विनार्थे विभवे नानानेकोभयार्थयोः ।
स्थाने तु करणार्थे स्यादुक्तसादृश्ययोरपि' ॥ इति ।

अविपाकृतप्रविलापनं तु ज्ञानपक्षेऽस्त्येव । योऽर्थः स भाष्येऽग्रे स्पष्टीभविष्यतीति 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः' इत्यत्र प्रज्ञा भावना न प्रज्ञा निश्चयज्ञानमिति भाष्ये वक्ष्यन्ति । रामानुजमाध्वनिम्बार्कभास्कराचार्यादिभिः प्रपञ्चो नित्योऽभ्युपगम्यते इति न विरोधः । देशकालौ प्रकरणं ताविह ब्रह्मप्रतिपादनस्य भवत इति ब्रह्मणो विद्यायाः प्रकरणं तस्मात् । किं च उभयाकाङ्क्षा प्रकरणं तदिह संघटते 'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद् यैस्तु चीर्णम्' इति श्रुतेः यस्मिन्नित्यादिश्रुतेश्च लिङ्गादिकल्पनामन्तरेणाङ्गत्वबोधकः शब्दः श्रुतिर्नास्ति तेषामिति श्रुतौ वाक्यद्वयं परस्तां पूर्वार्धे वाक्यमुत्तरार्धे वाक्यत्रयमतस्तेषामिति श्रुतिवाक्यस्य पूर्वोत्तरार्धयोश्च दध्ना जुहोतीतिवत् एकवाक्यत्वाभावात् । अत्र दध्नेति तृतीयाश्रुत्या दध्नो होमाङ्गत्वबोधः । तदत्र वाक्यद्वये वाक्यचतुष्टये च वर्तते तेन वाक्यद्वयेन वा पूर्वोत्तरार्धयोः । तस्मिंस्तयोर्लिङ्गमपि न । लिङ्गं द्विविधमर्थगतं शब्दगतं च तत्रार्थगतं सामर्थ्यं स्रुवेणावद्यति स्वधितिनावद्यति हस्तेनावद्यतीतिश्रुतिवत् तृतीयाभावान्नास्ति । शब्दगतं सामर्थ्यं बर्हिर्देवसदनं दामीत्यत्र अत्रास्य मन्त्रस्य बर्हिर्लवनसामर्थ्यं दामीति शब्दादालोच्यानेन मन्त्रेण लवनं विदध्यादिति श्रुतिं कल्पयित्वा लवनाङ्गस्य बोधनात् तदपि वाक्यद्वये वाक्यचतुष्टये च । वाक्यं नाम पदानां वाक्यानां वैकवाक्यता तत्र त्रयो वेदा अजायन्त इत्येतामर्थवादवाक्यरूपामुपक्रम्य उच्चैः ऋचा क्रियते इत्यादिविधिवाक्यरूपाभिरुच्चैस्त्वादिधर्माणां ऋगादिमन्त्राणामङ्गत्वं बोध्यते तद्वत्प्रकृते यथासंख्याभावात् नास्ति । वाक्यानामेकवाक्यता स्वार्थबोधे समाप्तानां वाक्यानां पुनराकाङ्क्षावशेनैकवाक्यता यथा आहवनीये जुहोति, गार्हपत्ये हवींषि श्रपयति, दक्षिणाग्नावन्वाहार्यं पचति, अत्रानारभ्याधीतानामेषां वाक्यानां 'स्वर्गकामो यजेत' इत्यादिक्रतुविधिवाक्यानां च वाक्यैकवाक्यतया आहिताग्नेरेव कर्तुः क्रत्वङ्गत्वं लिङ्गश्रुतिकल्पनेन बोध्यते । एकवाक्यतया सामर्थ्यमालोच्याहिताग्निं कर्तारं क्रत्वङ्गं कुर्यादित्येव तद्वत्प्रकृतेऽपि वाक्यद्वयस्य वाक्यचतुष्टयस्य च पुरुषाक्षरौ निरूप्य एतयो वेद निहितं गुहायामिति वेदनवाक्यस्य चैकवाक्यतया पञ्चाग्निविद्यासाधितदेहस्य कर्तुर्ज्ञानाङ्गत्वं लिङ्गश्रुतिकल्पनेन बोध्यते । एकवाक्यतया सामर्थ्यमालोच्य पञ्चाग्निविद्यासाधितदेहं कर्तारं ज्ञानाङ्गं कुर्यादिति । परं तु वाक्यद्वयस्य विषये पूर्वोत्तरार्धविषये च न किमप्यागतम् । अत उभयोरुपकार्योपकारकयोराकाङ्क्षा साकाङ्क्षा धर्मसंनिधौ भावनायाः कथमित्याकाङ्क्षा । प्रकरणं भाट्टभास्करोक्तम् । तद् द्विविधं महाप्रकरणमवान्तरप्रकरणं च, तत्राद्यं यथा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत'इति वाक्ये स्वर्गकर्मिकाया दर्शपूर्णमासयागकरणिकाया भावनायाः कथमित्याकाङ्क्षास्ति । संनिहितेष्वनिर्दिष्टफलेषु 'समिधो यजति'इत्यादिवाक्येषु समिद्यागेनेष्टं भावयेत् किमित्यस्ति फलविशेषाकाङ्क्षा फलविशेषाकाङ्क्षोपकार्याकाङ्क्षा कथमित्याकाङ्क्षोपकार्याकाङ्क्षा । एवं चाकाङ्क्षया समिदादिवाक्येन दर्शपूर्णमासवाक्यैकवाक्यतां कल्पयित्वा समिदाद्यङ्गानां प्रधानोपकारकत्वसामर्थ्यं कल्पयित्वा एतैः प्रधानोपकारं कुर्यादिति श्रुतिं कल्पयित्वा समिदादीनां दर्शपूर्णमासयागाङ्गत्वं ज्ञायते इत्थं च दर्शपूर्णमासाभ्यां स्वर्गं भावयेत् कथमित्याकाङ्क्षायां प्रयाजादिभिरदृष्टोपकारं कृत्वाऽवघातादिभिः द्रव्यदेवताभ्यां च यागं संपाद्येत्यन्वयः प्रयाजाद्यारादुपकारकं यागजादृष्टं धर्मैः अवघातादि संनिपत्योपकारकं द्रव्यदेवते संनिपत्योपकारिकाया 'व्रीहीनवहन्ती'त्यादेस्तदर्थत्वेनोपाये

रश्मिः ।

तदङ्गत्वकृते 'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्'इति मुण्डकसमाप्तिवाक्ये तेषामन्तेवासिनां संबन्धः प्रवचनम्। 'प्रवचन९संधान'मिति श्रुतेः तेन संबन्धेनाचीर्णशिरोव्रतत्वाव-च्छिन्नान्तेवासिसंबद्धाभिन्नब्रह्मविद्याकर्मिका व्यक्तवागनुकूला भावनाज्ञानविषयास्तस्याः कथमित्या-काङ्क्षास्ति संनिहितेषु यस्मिन् द्यौरित्यादिषु निर्दिष्टफलेषु जानथ आत्मानमित्यत्र आत्मविषयकं ज्ञानं कुर्यात् किमित्यस्ति फलविशेषस्योपकार्यस्याकाङ्क्षा। एवं चाकाङ्क्षया यस्मिन् द्यौरित्यादि-वाक्येन तेषामेवैतामिति वाक्यैकवाक्यतां कल्पयित्वा यस्मिन् द्यौरित्याद्युक्ताज्ञानां ज्ञानरूपाणां प्रधानोपकारकत्वसामर्थ्यं च कल्पयित्वा एतैः प्रधानोपकारं कुर्यादिति श्रुतिं प्रकल्प्य यस्मिन् द्यौरित्याद्युक्तज्ञानानां ब्रह्मविद्याङ्गत्वं ज्ञायते। इत्थं च ब्रह्मविद्याकर्मकं वदनं कुर्यात् कथमित्या-काङ्क्षायां यस्मिन्नित्याद्युक्तज्ञानैर्ब्रह्मविद्योपकारं कृत्वा भक्त्येच्छादिभिः संनिपत्योपकारैः द्रव्यदेवताभ्यां च ब्रह्मविद्यां संपादयेत्यन्वयः। तथा च प्रकरणाद्भावनाऽऽरादुपकारिका गृहीतेति राणकमतम्। मिश्रमते तु सर्वापि क्रिया प्रकरणेन गृह्यते संनिपत्योपकारिकायाः श्रुतिलिङ्गवाक्यैः द्रव्याद्यर्थत्वेनाव-गताया अपि द्रव्यादिस्वरूपे वैयर्थ्यात् प्रकरणेन क्रत्वङ्गता ज्ञायते इति। तत्प्रकारो दर्शित एव इत्थं चेत्यादिना। एवं च प्रकृतिनिरूपणं न प्रकरणगृहीतं जीवनिरूपणमपि न प्रकरणगृहीतम्। [अतः परं तृतीयमुण्डकमपि ब्रह्मविद्यान्तर्गतत्वात् कल्प्यते] पूर्वार्धोत्तरार्धयोरङ्गाङ्गिभावग्राहकमवा-न्तरप्रकरणं तल्लक्षणमङ्गभावनायाः कथमित्याकाङ्क्षा तद्वाचनिकानां प्रयाजादीनां प्रकृते ज्ञानरूपा-ङ्गानां च ग्राहकम्। किं च तत्संदंशपठितानां च ग्राहकम्। संदंशलक्षणं मीमांसार्थप्रदीपे 'संदंशो नाम एकाङ्गानुवादेन विधीयमानयोरङ्गयोरन्तराले विहितत्वम्'। यथा तद्धि समानयते उपभृत इत्यादि, यो वैश्यजानां मिथुनं वेदेत्यादि च। अत्र तद्धीत्यादिना प्रयाजानुवादेन किंचिदङ्गं विधाय पश्चादपि प्रयाजानुवादेन किंचिदङ्गं विधीयते अतः प्रयाजाङ्गमध्ये पठितमभिक्रमणं प्रयाजाङ्गं भवतीति सिद्धम्। एवं प्रकृतेपि। एवं चोत्तरार्धे जानथ आत्मानमित्यस्य कथमित्याकाङ्क्षायां पूर्वार्धे यस्मिन् द्यौः अन्तरिक्षं सह प्राणैः मन ओतं भवति तमात्मानं जानथेत्यन्वयः प्रकरणेन। अतः परं तृतीयमुण्डकमपि ब्रह्मविद्यांतर्गतत्वात्कल्प्यते विजयते च। तत्र प्रथममुण्डके कर्ममार्गमुक्त्वा विनिन्द्य च ज्ञानमार्ग उक्तः। द्वितीयमुण्डके क्षराक्षरपुरुषोत्तमनिरूपणं कृतम्। तृतीयमुण्डके जीवशोक-निराकरणाय भक्तिमार्ग उच्यते द्वा सुपर्णेति। गुहां प्रविष्टावात्मानावित्यधिकरण उरिष्टा 'ज्ञानी चेद्भ-जते कृष्णम्' 'तस्माज्ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते' इति गीतातो ज्ञानमार्ग उच्यते 'यदा पश्यः पश्यते' इति। इयं 'हानौ तूपायनशब्दशेषत्वात्'इति सूत्रे विवृता। अतिवादी अतीत्य सर्वानन्यान् वदितुं शीलमस्य यतः यस्सर्वं तदात्मैवेति दृष्टम्। अधुना सत्यादीनि ज्ञानसहकारीणि साधनानि विधीयन्ते सत्येनेति। ओतमासमन्ताच्छन्दितं उरु शब्दे ण्वादिरात्मनेपदी अनित्। क्रममुक्तिमाह यं यमिति। मुक्तावतिवर्तिन आह कामानिति भोगान्। सद्योमुक्तिमाह पर्याप्तेति। इहेति हृदि बहिर्वा प्रकटे ब्रह्मणि। भक्तिमार्गमाह नायमिति। श्रुत्यर्थो 'विधैव तु निर्धारणात्' इति सूत्रेस्ति बलं भक्तिः भगवद्वशीकरणसामर्थ्यरूपत्वात्। प्रमादादि स्वरूपमपि 'सोध्यक्षे तदुपगमादिभ्यः' इति सूत्रभाष्ये। भक्तिमार्गस्त्वेकादशस्कन्धैकादशाध्यायोक्तः 'यद्यदिष्टतमं लोके यच्चातिप्रियमात्मनः' इत्येकादशाध्या-योक्तवाक्यार्थस्य सेवाप्रकरणे लिखनात्। एकोनत्रिंशाध्यायोक्तश्च 'लसुखमार्गवक्ता च' इति पुरुषोत्तमसहस्रनाम्नो ग्रन्थात्।

## स्थित्यदनाभ्यां च ॥ ७ ॥

सर्वस्याप्यन्यथाभावशङ्कया विशेषहेतुमाह । द्वा सुपर्णेति वाक्ये, अनश्नन्नन्यो अभिचाकशीतीति केवलस्थितिः परमात्मनः, कर्मफलभोगो जीवस्य । अतः स्थित्यदनाभ्यां जीवपरमात्मानावेव मेध्ये परामृष्टौ । न हि सांख्यमतमेतादृशं भवति । अतोऽस्य वैशेषिकोपपत्तेर्विद्यमानत्वात् प्रातिलोम्येन सर्वा उपपत्तयो दृष्टा इति द्युभ्वाद्यायतनं भगवानेवेति सिद्धम् । यद्यपि पैङ्ग्युपनिषदि, द्वा सुपर्णेत्यस्यान्यथा व्याख्यानं प्रतिभाति, तद्वा प्रदेशविशेषेऽन्यथा व्याख्यानं न दोषाय । तस्मात् सत्त्वक्षेत्रज्ञौ जीवब्रह्माणौ व्याख्येयौ॥ ७ ॥

इति प्रथमाध्याये तृतीयपादे प्रथमं द्युभ्वाद्यधिकरणम् ॥ १ ॥

---

भाष्यप्रकाशः ।

स्थित्यदनाभ्यां च ॥ ७ ॥ सर्वस्येत्यादि ब्रह्मपदस्य जीवसाधारण्यात् सर्वस्य प्रकरणस्य जीवपरत्वशङ्कया तद्गतं तमाहेत्यर्थः । प्रातिलोम्येनेति स्थित्यदनयोः प्रकरणबलाधायकत्वं तस्य तत्पूर्वहेतुबलाधायकत्वमित्येवं वैपरीत्येन । ननु न दृष्टाः । द्वासुपर्णेति मंत्रस्य पैङ्गिरहस्यब्राह्मणे सत्त्वक्षेत्रज्ञपरत्वेन व्याख्यानादित्यत आहुः यद्यपीत्यादि । जीवब्रह्माणाविति व्यष्टिसमष्टिजीवौ । अमुक्तमुक्तजीवौ वा । इदं यथा तथा मया गुहां प्रविष्टावित्यधिकरणस्थे, विशेषणाच्चेति सूत्रे सम्यगुपपादितमिति नात्रोच्यते । एवमत्राधिकरणे, 'यस्यान्तःस्थानि भूतानि' इति विचारितम् ॥ ७ ॥ इति प्रथमं द्युभ्वाद्यधिकरणम् ॥ १ ॥

रश्मिः ।

'कृष्णवाक्यानुसारेण शास्त्रार्थं ये वदन्ति हि ।
ते हि भागवताः प्रोक्ताः शुद्धास्ते ब्रह्मवादिनः' ॥

इति निबन्धाच्च । ज्ञानिनां फलमाह संप्राप्येति । शाब्दज्ञानवतां फलमाह वेदान्तेति । मानसीसेवाफलमाह यथा नद्य इति । परात्परमिति फलम् ॥ ६ ॥

स्थित्यदनाभ्यां च ॥ ७ ॥ जीवेति अयमात्मा ब्रह्मेति श्रुतेः । तद्गतमिति मुण्डके तृतीयमुण्डकप्रारम्भगतम् । भाष्ये । कर्मेति 'तयोरन्यः पिप्पलं स्वाद्वत्ति' इति श्रुतेः । नहीति 'मुक्तिरन्तरायध्वस्तेर्न परः' इत्यादिवदतां सांख्यानां जीवव्यापकत्वात् समानवृक्षपरिष्वङ्गरूपस्य । उपाधेस्त्वप्रयोजनकत्वं तददर्शिनित्वेन श्रुतीनामुपाधिपुरस्कारेणानिरूपणात् । अस्येति सिद्धान्तस्य । प्रकृते । तस्येति प्रकरणस्य भेदव्यपदेशरूपहेतुबलाधायकत्वम् । न च स्थित्यदनाभ्यामिति हेतुर्भेदव्यपदेशहेतौ जीवनिराससामर्थ्यमादधाति भेदव्यपदेशश्च प्रकरणाख्ये हेतौ सामर्थ्यमादधातीति वाच्यम् । एकेनैव भेदे व्यपदिष्टे उभयोः सूत्रयोरेकतरस्य वैयर्थ्यापातात् । आनुलोम्ये तु ब्रह्मजीवविभागाभावाद्भेदव्यपदेशहेतुर्न दृढः सत्प्रतिपक्ष इत्यर्थः । प्राणभृद्भेदस्यावास्तविकत्वेन भेदव्यपदेशाभावात् । द्वा सुपर्णेति स्थित्यदनरूपहेतुबोधकस्य मन्त्रस्य । सत्त्वेति तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वमनश्नन्नन्योऽभिचाकशीतीति ज्ञस्तावेतौ सत्त्वक्षेत्रज्ञाविति व्याख्यानात् । सत्त्वं स्वप्नद्रष्टा ज्ञः शारीरः । तथा च द्विवचनासंगतिरित्याशयवन्त आहुः जीवेति । व्यष्टीति । समष्टिर्वैराजः 'स च पुरुषो यस्तेषु स स्वप्नद्रष्टा 'कामं कामं पुरुषो निर्मिमाणः' इति श्रुतेः । एवं मुक्तजीवोपि पुरुषः स सत्त्वं 'अल्पाच्तरं पूर्वम्' इति सूत्रेण व्यष्टिपदस्य पूर्वनिपातः 'अभ्यर्हितम्' इति सूत्रेणामुक्तपदस्य पूर्वनिपातः । विचारितमिति । आधाररूपप्रतिपादकत्वेन पादस्य ॥ ७ ॥ इति प्रथमाधिकरणम् ॥ १ ॥

## भूमा संप्रसादादध्युपदेशात् ॥ ८ ॥ (१।३।२)

इदं श्रूयते। 'यो वै भूमा तत् सुखम्' इति। सुखलक्षणमुक्त्वा भूम्नो लक्षणमाह। 'यत्र नान्यत् पश्यति नान्यच्छृणोति। नान्यद्विजानाति स भूमा' इति। तत्र संशयः। भूमा बाहुल्यमाहोस्विद् ब्रह्मेति। तत्र प्रपाठकारम्भे, ततस्त ऊर्ध्वं वक्ष्यामीति प्रतिज्ञातत्वाद् वेदादीनां नामत्वमुक्त्वा ततो भूयस्त्वं वागादीनां प्राणपर्यन्तानामुक्त्वा मुख्यप्राणविद्याया अवरब्रह्मविद्यात्वख्यापनायार्धप्रपाठकं समाप्य ततोऽपि विज्ञानादीनामन्तरङ्गाणां सुखान्तानां भूयस्त्वमुक्त्वा सुखस्य फलत्वात् तस्यैव भूयस्त्वं वदति। यद्यपि, तरति शोकमा-

भाष्यप्रकाशः।

भूमा संप्रसादादध्युपदेशात्॥८॥ विषयवाक्यमुपन्यस्यन्ति इदं श्रूयत इत्यादि। श्रूयत इति छान्दोग्यनवमप्रपाठके सनत्कुमारनारदसंवादे श्रूयते। अत्र कः संशयः, कुतश्चेत्यत आहुः तत्रेत्यादि, वदतीत्यन्तम्। समाप्येति अपह्नवनिवारणभावनेन समाप्य। तथा च भूयस्त्वमुपक्रम्यान्ते, यत्र नान्यदित्यादिना नित्यसुखभूयस्त्वमेवोपसंहरति। तस्माद् बाहुल्यं वाक्यार्थत्वेन वक्तुं शक्यते। मध्ये च मुख्यप्राणविद्याया अवरत्वबोधनं ब्रह्मलिङ्गम्। बृहदारण्यके व्रतमीमांसायां ब्रह्मोपासकस्य जीवस्यापि मुख्यप्राणव्रतधारणस्यैवाभिप्रेततया जीवापेक्षया प्राणस्योत्कर्षे बोधितेऽप्येष तु वा अतिवदति यः सत्येनातिवदतीत्यनेन सत्यापेक्षया निकर्षबोधनात्। अतो ब्रह्मापि तथा वाक्यार्थत्वेन वक्तुं शक्यते। अत एवं संशय इत्यर्थः। पूर्वपक्षमाहुः

रश्मिः।

भूमा संप्रसादादध्युपदेशात्॥८॥ कुतश्चेति कस्माद्धेतोः किं प्राणो भूमा स्यादाहोस्वित् परमात्मेति शंकरभाष्योक्तसंशयानङ्गीकार इत्यतस्तत्राक्षरसमाहुरित्यर्थः। तत्रेत्यादि। भाष्ये। श्रुत्यर्थस्तु 'ततो यदधीतं तेनोपसर' नानन्तरमिति नारदं प्रति सनत्कुमारोक्तिः वक्ष्याम्यहं सनत्कुमारः। तत वेदादितः। प्रकृते। अपह्नवेति 'तं चेद्ब्रूयुरतिवाद्यसीत्यतिवाद्यसीति ब्रूयान्नापह्नुवीत' इति श्रुत्या हेतुना। अतिवादी नामाद्याशान्तं जगदतीत्य वदनशीलः प्राण आशादिभ्यो भूयानिति वदनशीलः विद्यात्वान्नापह्नवः खलत्वापादकत्वात् 'सरस्वती ज्ञानखले यथा सती' इति दशमस्कन्धात्। विद्यासमाप्त्यार्थप्रपाठकसमाप्तिः। यथैकं भगवतो रूपं निरूप्य शाखा समाप्नोति। तस्मादिति उपसंहारस्य निर्णायकत्वात्। अवरत्वेति विद्यासमाप्तेरवरत्ववाचकत्वं व्यञ्जनया। अत्र हेतुः बृहदिति। सप्तान्नब्राह्मणे सत्येन सर्वातिक्रान्तभूमाख्यपरमार्थसत्यविज्ञानवत्तयाऽतिवदति प्राणवेत्ता तु नामाद्यपेक्षयैवातिवादी न तु निरङ्कुशं सर्वापेक्षयाऽतिवादी। अत इति ब्रह्मलिङ्गसत्त्वात्। अतोऽर्धप्रपाठकसमाप्तविद्याविषयप्राणस्य विद्यान्तरे विज्ञानादिविषयेऽसंचारोऽतो बाहुल्यं प्रथमा कोटिर्न प्राणः। अस्मिन् पक्षे प्राणविद्यां समाप्य 'यदा वै विजानाति' इत्युक्तश्रुतेर्विज्ञानं वा व ध्यानाद्भूय इति श्रुत्युक्तभूयस्त्वविशिष्टं विज्ञानं करोतीत्यर्थः। प्राणो वा आशाया भूयानित्युक्तप्राणविद्याया अवरप्राणविद्यात्वापत्तिः। न चास्त्वेवमिति वाच्यम्। प्राणस्यैतस्य यथा वा अरा नाभौ समर्पिता एवमस्मिन् प्राणे सर्वं समर्पितमिति ब्रह्मलिङ्गकत्वात्। 'प्राणो हि पिता प्राणो माता प्राण आचार्यः' इति ब्राह्मणात् 'पिताहमस्य जगतो माता' इति 'आचार्यं मां विजानीयात्' इति च स्मरणात्। अत

स्मविदिति नारदप्रश्नाद् भूम्नो ब्रह्मत्वं प्रकरणाद् वक्तुं शक्यते, तथापि तस्यै-वाथात आत्मादेश इत्यहंकारादेशवदात्मादेशोऽप्यस्ति । तेनाब्रह्मत्वेऽपि प्रश्न-सिद्धिः । तस्य सुखबाहुल्यस्य स्वे महिम्नि प्रतिष्ठितत्वं सर्वतः पूर्णविषयलाभेऽपि भवति, सुषुप्तावपीति तयोरन्यतरद् ग्राह्यम् । तत्राप्यन्तरङ्गत्वात् सुषुप्तिरेवात्र

---

भाष्यप्रकाशः ।

यद्यपीत्यादि । तस्यैवेति भूम्न एव । अयमर्थः । यद्यप्यत्र भूयस्त्वं प्रकृतं तथाप्यस्य वाक्यस्या-त्मज्ञानार्थकनारदप्रश्नेन प्रवृत्तत्वादात्मैव प्रकरणी । स एवोपसंहारेऽपि भूमत्वेन निश्चायितोऽमृत-त्वेन विशेषितश्चात उपक्रमोपसंहाररूपात् प्रकरणाद् भूम्नो ब्रह्मत्वं वक्तुं शक्यते । तथाप्युपान्ते अथातोऽहंकारादेश इतिवदथात आत्मादेश इत्यादिनोक्त आत्मादेशोऽप्यस्तीत्यहंकारादेशे सर्वत्र विद्यमानत्वेन सर्वत्वेन च भूयस्तयोक्तस्याप्यहंकारस्य तदुपहितस्यात्मनो वा यथा न ब्रह्मत्वं तथा आत्मादेशे तथोक्तस्य केवलस्यात्मनोऽपि न ब्रह्मत्वम् । आत्मा चात्र सुखस्य स्वरूपमेव । पूर्वाधि-करणेऽनारोपितानागन्तुकस्य वस्तुस्वरूपस्यैवात्मपदवाच्यताया उपगमात् । न च शोकतरणरूप-फलाभावात् प्रश्नापूर्तिः शङ्क्या । विविक्तजीवात्मज्ञानस्येव तादृशसुखस्वरूपज्ञानस्याप्यात्मज्ञानत्वे-नात्मविद्यायामुक्तफलोपपत्त्या पूर्तिसिद्धेः । ब्रह्मण एवात्मत्वादिना ज्ञानस्य विवक्षितत्वे गमका-नुपलम्भात् । नच भूम्नः स्वमहिमप्रतिष्ठितत्वश्रावणात् तस्य च ब्रह्मासाधारणत्वाद् ब्रह्मत्वं शङ्क्यम् । तस्यार्थस्यात्राभावात् । आत्मैवाधस्तादित्यादिना तस्य सर्वत्र व्याप्तेरुक्तत्वात् सर्वतः पूर्ण-विषयलाभे सुखपूर्णतयाऽनाकाङ्क्षायां तस्य पूर्णत्वानुसंधाने स्वप्रतिष्ठतायाः संभवदुक्तिकत्वात् ।

रश्मिः ।

एतदग्रेऽपह्नवनिवारणेन न प्राणविद्यासमाप्तिरपि तु ब्रह्मरूपप्राणविद्यातः पूर्वं संकल्पविद्या 'संकल्पो वाव मनसो भूयान्' इत्याद्युक्त्वा 'तत्रान्नस्य संक्लृप्त्यै प्राणं संकल्पते प्राणानां संक्लृप्त्यै मन्त्राः संकल्पन्ते' इति श्रुत्या संकल्पात्मकप्राणा सन्त्यतोवरप्राणविद्यासमाप्तिः । अत्र टीकायां यदिदं फलावसानं जगत् स एष प्रत्यक्षः संकल्प एवेति जगदन्तर्गताः प्राणा इति । अतोत्र समाप्येत्यादिभाष्यप्रकाशे अपह्नव-निवारणश्रावणेनासमाप्येति पाठः किं तु संकल्पो वाव मनसो भूयानित्याद्युक्त्वावरप्राणविद्यातो यः संकल्पं ब्रह्मेत्युपास्ते इत्यनेन समाप्य मध्ये चेतस्य मध्ये संकल्पो वाव मनसो भूयान् इत्याद्युक्त-श्रुत्या मुख्यप्राणेत्यादिः । अन्यत् समानम् । श्रुत्यर्थस्तु अन्नस्य संक्लृप्त्या संकल्पात् सामर्थ्यात् प्राणः संकल्प्यते सामर्थ्यं करोति समर्थो भवतीति यावत् । एवं प्राणाः संकल्प्यन्ते समर्था भवन्तीति । भूमविद्यावान्तरप्राणविद्याऽर्थविद्या ब्रह्मविद्या । एवं चान्तरङ्गत्वमर्थत्वं बहिरङ्गत्वं सोपस्करशब्दत्वमुप-स्करत्वं मन आदीनाम् । 'मनः पूर्वरूपं वागुत्तररूपम्' इत्यादिश्रुतिभ्यः पूर्वरूपत्वादिमत्त्वं तट्टीकायां स्पष्टम् । अमृतत्वेनेति 'यो वै भूमा तदमृतम्' इति श्रुतेः । उपक्रमेति उपक्रमोपसंहारावालोक्य देशकालरूपात्प्रकरणात् । उपान्त इति अन्तस्य समीपमुपान्तम्, तत्र । 'तृतीयासप्तम्योर्बहुलम्' इति सूत्रेण सप्तम्या बहुलमम्भावः । केवलस्येति अनुपहितस्याहंकारेण कदाचिदुपहितस्य । यद्वा आत्मैवात्मोपाधिरहंकारवत् । आत्मादेश इत्यत्रात्मनः कर्मत्वमुपाधिर्वा । उपगमेति ज्ञानथ व्याख्यानमित्यर्थ । तेनाब्रह्मत्वेति भाष्यं विवरीतुमाहुः न च शोकेत्यादि । उक्तेति शोकतरणरूप-

भूमत्वेनोच्यते । तेन सुखबाहुल्यम्। सुषुप्तिरूपमेव भूमेत्येवं प्राप्ते उच्यते। भूमा भगवानेव। कुतः। संप्रसादादध्युपदेशात्। संप्रसादः सुषुप्तिः। तस्मादधि आधिक्येनोपदेशात्। यद्यपि नान्यत् पश्यतीत्यादि समानं तथापि स एवाधस्तादित्यादिना तु ततोऽप्यधिकधर्मा उच्यन्ते । न हि सुषुप्तेः सर्वत्वादिधर्माः संभवन्ति। आत्मशब्दश्च मुख्यतया परिगृहीतो भवति। भावशब्दस्यापि सर्वत्वात् भगवति वृत्तिरदोषः। तस्मात् भूमा भगवानेव ॥ ८ ॥

---

भाष्यप्रकाशः ।

यदि च तस्य लाभस्य प्रयाससाध्यत्वेन सुखबाहुल्यं नाङ्गीक्रियते तदा सुषुप्तिरस्तु। तत्रापि 'न कंचन कामं कामयते' इति 'तद्यथा प्रियया स्त्रिया संपरिष्वक्तः' इत्यादिश्रावणात्। अत उभयोर्मध्ये यदुचितं तदङ्गीकार्यमिति तथेत्यर्थः। सिद्धान्तं व्याकुर्वते उच्यत इत्यादि। संप्रसादः सुषुप्तिरिति बृहदारण्यकेऽस्ति। 'स वा एष एतस्मिन् संप्रसादे रत्वा चरित्वा' इति। सम्यक् प्रसादोऽस्मिन्निति व्युत्पत्त्या संप्रसादः सुषुप्तिः। तत्र यद्वै तन्न पश्यतीत्यादिनाऽन्यदर्शनाद्यभाव उच्यत इति, नान्यत् पश्यतीत्यादि सुषुप्त्या समानम्। तथापि, स एवाधस्तादित्यादिनोक्ता सर्वत्र व्याप्तिः सर्वत्वं च ततोऽधिकमुच्यते। तत्र संगतं भवत्यात्मशब्दस्य मुख्यवृत्तता च विमुच्यते। नच भावार्थप्रत्ययं प्रक्रम्य, 'बहोर्लोपो भू च बहोः' इति पाणिनीयसूत्रे व्युत्पादितो भूमशब्दो नानात्वं बाहुल्यं वा वक्ष्यति। तत्रापि प्रकृते, यदल्पं तन्मर्त्यमिति श्रावणात् संख्यां परित्यज्य बाहुल्यमेव वदिष्यति। स च धर्म एव, न तु धर्मीति शङ्कनीयम्। भगवतः सर्वत्वस्यात्र श्रावणेन सर्वत्वात् भावशब्दस्यापि भगवति वृत्तिरदोषः सर्वशब्दबीजभूतप्रणवार्थत्वेन तत्रैव सर्वेषां मुख्यरश्मिः।

फलोपपत्त्या। तस्येति भाष्यं विवरामासुः न चेति। सुषुप्ताविति भाष्यं विवरामासुः यदि चेति। तथेति। सुषुप्तित्वेन सुषुप्तिप्रतिपादकः पूर्वपक्षः। भाष्ये। पूर्णविषयलाभस्य पूर्णविषयसापेक्षत्वेन बहिरङ्गत्वादाहुरन्तरङ्गेति अन्यानपेक्षत्वेनान्तरङ्गत्वादित्यर्थः। समानमिति भाष्यं विवृतम्। सुषुप्त्या समानमिति। भावेति भाष्यं विवरामासुः। न च भावेति। प्रकृते। छान्दोग्ये नानात्वमिति भूमा नानात्वसमानार्थः। तदित्थम्। भूमेत्यत्र बहुशब्दाद्भावे इमनच् 'बहोर्लोपो भू च बहोः' इति सूत्रेण नानात्वमित्यत्र नञो नाञ् पृथग्भावे वर्तमानात् 'विनञ्भ्यां नानाञौ न सह' इति सूत्रात् 'असहार्थे पृथग्भावे वर्तमानाभ्यां स्वार्थे प्रत्ययौ विना नाना'। एवं च बहुत्वं नानात्वपदस्यार्थो लक्षणया पृथग्भावस्य नानात्वसापेक्षबुद्धिजननद्वारा बहुत्वकारणत्वात् पृथक्त्वे सति अयमेकोऽयमेको ह्ययमेक इत्यपेक्षाबुद्धिः तदन्विमे बहव इति बहुत्वमुपपद्यत इति। बाहुल्यमिति बाकाश्वलं 'बहुलं प्राच्यनमसोः' इति विग्रहः। भूमा पंहि वृद्धौ कर्तरि उ प्रत्ययः। 'लङ्घिबंह्योर्न लोपश्च' इत्यनेन सूत्रेण बंहते बहु बहून् लातीति 'आतोऽनुपसर्गे कः' बहुलं वह प्रापणे कर्तर्युलच् उभयोर्भावे ष्यञ् भूमा बाहुल्यसमानार्थः ततो भावे इमनिच् 'बहोर्लोपो भू च बहोः' इति सूत्रेण प्रकृतिप्रत्यययोर्विकारः। सूत्रार्थो वृत्तिः 'बहोः परयोरिमेयसोर्लोपो बहोश्च भूरादेशः' इति भूमशब्दस्य पृथ्व्यादित्वात् 'पृथ्व्यादिभ्य इमनज्वा' इति सूत्रेण भावे इमनच्। सर्वेति अत्र छान्दोग्ये 'स एवेदꣳसर्वम्' इति श्रुत्वा स आत्मेति सर्वत्वस्य श्रावणेन। भावशब्दस्य भावप्रत्ययान्तभूमशब्दस्य। ननु आकाशत्वे आनन्दत्वरूपेऽभिधावृत्तिर्मुख्यपदस्यातो नानन्दे भगवति वृत्तिरिति चेत्तत्राहुः सर्वेति सर्वेषां शब्दानां बीजं तादात्म्य-

भाष्यप्रकाशः ।

द्रवत्यायेति । तस्माद्भूमा भगवानेवेति सिद्धमित्यर्थः ।

अत्र संशयोपन्यासे प्रथमकोटौ शंकरभास्करभट्टाचार्याः शैवश्च प्राणमादृत्य सुषुप्तौ तस्य जागरणात् संप्रसादत्वं तस्याहुः ।

तद्विज्ञानेन्द्रभिक्षुणैवं दूष्यते । प्राणस्य सुखरूपतया एवासंभवेन संशयासंभवात् । अस्मिन् प्रकरणे प्राणादाधिक्योपदेशाभावात् संप्रसादशब्दस्य प्राणावाचकत्वाच्च । श्रुतौ संप्रसाद-शब्दो जीवे सुषुप्ताख्यतदवस्थायां च दृश्यते । स एष संप्रसादोऽस्माच्छरीरात् समुत्थायेति, स वा एष एतस्मिन् संप्रसादे रत्वा चरित्वेति । तत्र जीवे संप्रसादस्यौपाधिकतया धर्मधर्म्यभेदे-नौपचारिकः । सुषुप्तावस्थायां तु प्रधातिर्णं सत्त्ववृत्त्या संप्रसीदति चित्तमस्यामिति व्युत्पत्त्या यौगिकः । प्रसादप्रीत्योः पर्यायत्वात् सुख एव संप्रसादशब्दो मुख्यः । सत्त्वे तु प्रसादरू-पिणि सकलस्मृतिषु प्रसिद्ध एव संप्रसादशब्द इति । प्राणे च संप्रसादशब्दो न क्वापि दृश्यत इति संप्रसादशब्दस्य प्राणार्थत्वोपवर्णनमनुचितमिति ।

अत्रापि कश्चिद् विशेषः । क्रमसंक्रमशब्दयोरिव प्रसादसंप्रसादशब्दयोरपि नैकार्थत्वम् । अतः संप्रसादशब्दः सुखविशेषे यौगिक एव । सत्त्वे तु स्मृतावपि न प्रसिद्ध इति तदनुपन्यासा-देव ज्ञायते । सुषुप्तौ च न प्रतिक्षणं सत्त्ववृद्धिः । तस्यास्तामसावस्थात्वात् । 'तमोऽभिभूतः

रश्मिः ।

कारणं तद्भूतः प्रणवः ॐकारो अर्थोऽभिधेयं यस्य भूमशब्दस्य तेन हेतुना तत्र भगवति एव मुख्य-वृत्तित्वम् । ॐमित्येकाक्षरं सर्वे शब्दास्तस्योपव्याख्यानभूताः यथा घटस्य कलश इत्युपव्याख्यानमतो भूमशब्देभ्यः ॐकारार्धमात्रात्मककृष्णवाचकेपि सच्चिदानन्दत्वे शक्तिसंकोचलक्षणया रूढ्या वर्तत इति प्रस्थानरत्नाकरे स्फुटम् । तथा चात्र यदि भूमशब्दस्य शक्तिसंकोचलक्षणया रूढ्या प्रयोगः स्यात्तदा धर्मवाचकत्वं स्यात्त्वेवमभिधया योगरूपया भगवति प्रयोग इति धर्मिवाचकत्वम् । ननूपव्याख्यान-मुपसमीपवर्तिनामीश्वरस्य पदार्थानां घटादीनां सर्वे शब्दा व्याख्यानं यथालोकमन्वयोपसर्गवैयर्थ्य-मिति चेन्न 'प्रकाशाश्रयवद्वा तेजस्त्वात्' इति सूत्रेण धर्माभेदो धर्मिण इति धर्मवाचकस्यापि भूमशब्दस्य धर्मिवाचकत्वात् । तृतीयाध्याये लिङ्गभूयस्त्वाधिकरणे स्फुटम् । एतेन यच्छंकराचार्यैः अत्र प्राणस्य संप्रसादत्वं स्वीकृत्य यदत्र प्राणादधि सत्यं वक्तव्यं प्रतिज्ञातं तदेव भूमेहोच्यत इति गम्यते इत्युक्तं तदप्यपास्तम् । सुषुप्तेः संप्रसादत्वमुक्तं तद्घटयितुमाहुः अत्रेति । आहुरिति तथा च शंकरभाष्यम् । तस्यां च संप्रसादावस्थायां प्राणो जागर्तीति प्राणोऽत्र संप्रसादोऽभिप्रेयत इति । अत्रापीति प्राणस्येत्यत्र मनः संकल्पात्मको गृह्यते यः संकल्पो वा व मनसो भूयान् इति श्रुत्युक्तो ननु प्राणो वा आशाया भूया-निस्युक्तस्य भवत्वात् सुखस्य तु तदाधिक्यं मनोवागगोचरत्वेनानन्दमयाधिकरणे प्रतिपादनात् । प्राणाधिक्योपदेश आर्थिकोऽस्त्यतो हेत्वन्तरमाह संप्रसादेति । तदनुपेति । भिक्षाचार्यैः स्वयमुप-न्यस्तत्वादेव तस्य इति सुषुप्तेः तामसस्य जीवस्यावस्थात्वात् । गुणत्रयविभागयोगाध्यायस्थतत्त्वः प्रकृति-गुणपराः 'तमस्त्वज्ञानजं विद्धि' इति तत्र वाक्यात् 'न यत्र माया' इतिवाक्यात् तत्र सत्त्वरजस्तमः-साम्यावस्थारूपप्रकृतेरभावात् । श्रुत्या सत्त्ववृत्त्यसिद्धिमाहुः तम इति तमः ताम्यतीति तमु ग्लानौ दिवादिः । ग्लै ग्लै हर्षक्षये हर्षक्षयं करोतीति तमः हर्षक्षयकर्ता भवितः भूतो व्याप्तः इत्यर्थः सुषुप्तस्य

भाष्यप्रकाशः ।

सुखरूपमेति' इति श्रुतिः सत्त्वसंपत्तिमेव वदतीति न तथापि तथात्वसिद्धिः । जागरणं तु ज्ञानप्रधानेन सत्त्वेनेति मम प्रतिभाति ।

रामानुजाचार्यास्तु संशये भूमगुणविशिष्टं प्रत्यक्षं प्रथमकोटौ निक्षिप्य प्राणसहचारित्वादत्रत्योपक्रोशानुपक्रोशाभ्यां तस्य चेतनत्वं निश्चित्य प्राणशब्दवाच्यत्वं चाङ्गीकृत्य सूत्रव्याख्याने

रश्मिः ।

सुखरूपस्य रूपं मोहनमेति इक्ष् गतौ सुखमोहनगमनं सत्त्वसंपत्तिः पुरितन्नाडीहृदयानां वा व्यवच्छेदः एवकारेण कुयुक्तिव्यवच्छेदः सद् ब्रह्म 'अस्ति ब्रह्मेति चेद्वेद' इति श्रुतेः अस्तीति सत् शता । तथात्वेति तथा सत्त्वेन प्रकारेण सत् तस्य भावः सत्त्वं तस्य सिद्धिः । ज्ञानेति ज्ञानं प्रधानं कर्मनिद्रे अभिभूय यस्य । एतद्गुणत्रयविभागयोगाध्याये स्पष्टम् । एतादृशपुराणमप्युपबृंहकं ज्ञेयम् । एवं पुराणोपबृंहितायाः 'तमोभिभूतः सुखरूपमेति' इत्यस्याः । ममेत्याहुः ममेति । तेन सुषुप्तिस्त्वकामरूपो भगवान् इत्यस्य एवं जाग्रत्स्वापावित्यादेश्च सुषुप्त्युत्क्रान्त्योर्भेदेन इति सूत्रभाष्यस्य न विरोधः । इन्द्रियैर्विषयोपलब्धिर्जागरितं बुद्धेः कारणात्मनावस्थानं सुषुप्तिरिति पञ्चीकरणस्य च न विरोधः । तेषां श्रुतिमतस्य भिन्नत्वात् परस्परम् । श्रुतिविरोधे श्रुत्यन्तरमतं भाष्योक्तमविरोधे त्वोम् । अयमर्थोऽग्रे सुषुप्त्युत्क्रान्त्योर्भेदेनेत्यधिकरणे प्रपञ्चनीयः । संशयविषये शंकराचार्यमतस्योपन्यासात् स्मृतं तद्विषये रामानुजमतमुपन्यस्य किंचिदाहुः रामेति । तद्वाचकशब्दः क इत्याकाङ्क्षायामाहुः प्राणेति । प्राणसहचारो जीवस्य जीव प्राणधारण इतिधातुपाठात् । ततः प्राणशब्दवाच्यत्वमिति योजनया प्राणशब्दो जीववाचक इति भावः । प्राणशब्दः क इति चेन्न प्राणो वा आशाया भूयानिति श्रुतौ तस्य सत्त्वात् । सहचारात्प्राणशब्दवाच्यत्वं 'वसन्तादिभ्यष्ठक्' इत्यत्र साहचर्यात्ताच्छब्द्यम् । वसन्तसहचरितमध्ययनं वसन्ताध्ययनमिति महाभाष्योक्तेस्तद्वत् । ननु तथापि यथा वा 'अरा नाभौ समर्पिता एवमस्मिन् प्राणे सर्वं समर्पितम्' इतिश्रुत्या जडदृष्टान्तात्सहचारमनादृत्य जडप्राणे प्राणपदशक्तिरस्तु न प्रतीचि चेतनेऽस्त्विति चेत्तत्राहुः अत्रत्येति अत्र छान्दोग्ये प्राणो वा आशाया भूयान् यथा वा अरा नाभौ समर्पिता एवमस्मिन् प्राणे सर्वं समर्पितम् । प्राणः प्राणेन याति प्राणः प्राणं ददाति प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्यः प्राणो ब्राह्मणः स यदि पितरं वा मातरं वा स्वसारं वा आचार्यं वा ब्राह्मणं वा किंचिद्भृशमिव प्रत्याह धिक् त्वास्त्वित्येवैनमाहुः पितृहा वै त्वमसि मातृहा वै त्वमसि भ्रातृहा वै त्वमसि स्वसृहा वै त्वमसि आचार्यहा वै त्वमसि ब्राह्मणहा वै त्वमसीत्यथ यद्यप्येतानुत्क्रान्तप्राणाञ्छूलेन समासं व्यतिषं दहेत् नैवं तं ब्रूयुः पितृहासि न मातृहासीति न भ्रातृहासीति न स्वसृहासीति नाचार्यहासीति न ब्राह्मणहासीति श्रुतिमवाभ्यां 'अन्वयात्स्यत्' इति सूत्रेण तस्य् भवार्थे । प्राणः प्राणेन स्वशक्त्यैव स्वेन वा याति स्वतन्त्रत्वात् । प्राणः प्राणं स्वात्मानमेव प्राणाय स्वात्मने एव ददाति अप्राणस्य दातृप्रतिग्राहित्वासंभवात् शूलेन प्रसिद्धेन कृत्वा सं आसं सं अस्य पुंजीकृत्य व्यतिषं व्यत्यस्तावयवान् विमथ्य दहेत् भस्मीकुर्यात् इति श्रुतिविषयपदार्थः । उपक्रोशः पितृहामातृहेत्यादिना सप्राणेषु पितृप्रभृतिषु उपमर्दकारिणि हिंसकत्वनिमित्तोपक्रोशः तेष्वेव विगतप्राणेष्वत्यन्तोपमर्दकारिण्युपक्रोशाभावः ताभ्यां प्राणो ह पिता प्राणो माता इत्यादवस्थस्य प्राणस्य चेतनत्वमवगमयन्ति अतश्चेतनत्वं निश्चित्य । तस्येति प्राणस्य उक्तेति एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते इति श्रुत्युक्तार्थः । संशयपूर्वपक्षमन्यत्रानुक्तमेव-

## धर्मोपपत्तेश्च ॥ ९ ॥

नान्यत् पश्यतीत्यादयोऽपि धर्मा ब्रह्मणि न विरुध्यन्ते । 'स्वाप्ययसंप-

भाष्यप्रकाशः ।

तस्यैव संप्रसादत्वमुक्तश्रुत्याऽऽहुः । तद्युक्तमेव । सप्तमीतत्पुरुषेण सुषुप्ताविव षष्ठीतत्पुरुषेण जीवेऽपि योगस्य सत्त्वात् । सिद्धान्ते तु जीवापेक्षया प्राणोत्कर्षस्य बोधनाज्जीवस्यापि निवृत्तेस्तत्संप्रसाद-तागमकस्यात्राभावाच्च तदनुल्लेखः ।

विषयवाक्ये तु रामानुजमध्वभास्कराचार्या भिक्षुशैवौ च, यत्र नान्यत् पश्यतीत्यादे-र्भूमातिरिक्तयावद्दर्शननिषेधो नार्थः । किं तु निरवधिसुखरूपे ब्रह्मण्यनुभूयमाने ब्रह्मस्वरूपत-द्विभूत्यन्तर्गतत्वात् कृत्स्नस्य वस्तुजातस्यैश्वर्यविशिष्टब्रह्माभिन्नत्वेन न पश्यतीति । एतदेवोपपा-दयति वाक्यशेषः, स वा एष एवं पश्यन्नेवं मन्वान इत्यादिः । अग्रे—

'न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् ।
सर्वं हि पश्यः पश्यति सर्वमाप्नोति सर्वशः' ॥

इति मन्त्रश्च । इदं चास्माकमप्यभीष्टम् ॥ ८ ॥

धर्मोपपत्तेश्च ॥ ९ ॥ ननु भवतु संप्रसादाद् भूम्न आधिक्योपदेशस्तथापि भूमजि-ज्ञासया प्रश्ने भूमलक्षणत्वेन, यत्र नान्यत् पश्यतीत्यादिवाक्यमुच्यते । तत्र योऽन्यदर्शनादि-निषेधः स तु सुषुप्तेरसाधारणः । तदितरलक्षणं तु नेहोच्यते । भूम्न इति भूमपर्यन्ता अन्यवि-द्याऽस्तु । ततो भूमाधारमारभ्यात्मविद्येति शङ्कायामिदमुच्यते धर्मोपपत्तेरिति । तदेतद् व्याकर्तुं गृह्णन्ति नान्यदित्यादि । कुतो न विरुध्यन्त इत्याकाङ्क्षायां विभजन्ते स्वाप्यये-त्यादि । यथाऽस्मिन् सूत्रे ब्रह्मधर्माविर्भावः स्वाप्ययसंपत्त्योर्नियतः । मय्येव सकलं जातमित्या-दिवाक्यानुरोधात् । अन्यत्रानियत इति वामदेवसूत्रे व्युत्पादितम् । तेन न्यायेनान्यदर्शनाद्यभा-वोऽपि मैत्रेयीब्राह्मणे, स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयेत नाहास्योद्ग्रहणायेव स्याद् यतो यतस्त्वाददीत लवणमेवैतदित्येकीभावदशायां, यद्वै तन्न पश्यति पश्यन् वै तद् द्रष्टव्यं

रश्मिः ।

दित्याहुः तदिति वस्तुतस्तु संशये भूमपदोपस्थापिते भूयस्त्वरूपगुणनिक्षेपो युक्तः भूमपदस्य भावशब्दत्वेन धर्मिप्रत्यगवाचकत्वात् । भूयस्त्वधर्मवाचकत्वात् । षष्ठीति संप्रसीदति चित्तमस्येति विग्रहः 'एहीडादयोन्यपदार्थे' इति सूत्रेण समासः । बोधनादिति बृहदारण्यके प्रतमीमांसायां बोधनात् । तत्संप्रेति जीवसंप्रसादतागमकस्यात्र छान्दोग्येऽभावात् । एष संप्रसाद इत्यस्या बृह-दारण्यकस्थत्वेन 'यजुर्वेदस्तु मानुषः' इति मनुस्मृतेश्छान्दोग्ये पित्र्ये प्रवृत्त्यभावात् । भिक्षुशैवौ चेति भगवन्ताविति शेषम् । स वा इति स वै एष विद्वान् एवं यथावद्भूमानं पश्यन् साक्षादनुभवन् । पश्यतीति पश्यः ज्ञानी । दुःखतां दुःखसत्ताम् । सर्वमात्मानं सर्वशः सर्वं ददाति यतः सर्व-माप्नोति मनोरथैः पूर्णो भवति । अभीष्टमिति लिङ्गभूयस्त्वाधिकरणे स्वीकारात् । यत्तु भूम्नि दृष्टे तदन्यं न सुखत्वेन नापि तु सुखसाधनत्वेन पश्यतीति तत्र ग्रन्थः स तु भूमाभिन्नसर्वदर्शनानन्तररस-रूपात्मदर्शने भवति शंकराचार्यकृतं व्याख्यानमुत्तरसूत्रे दूष्यम् ॥ ८ ॥

धर्मोपपत्तेश्च ॥ ९ ॥ भूमाधारमिति स भगवः कस्मिन् प्रतिष्ठितः इत्यादिश्रुत्युक्तम् ।

भाष्यप्रकाशः ।

न पश्यति, न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् पश्येदित्यविभागदशायां चेत्युभयत्राम्नानाद्दशाद्वये नियतः । यत्र नान्यत् पश्यतीति वाक्यो-

रश्मिः ।

तथा च भूमलक्षणस्य सुषुप्तावतिव्याप्तिरिति भावः । उभयत्रेति स्वाप्ययसंपत्त्योः स्वाप्ययः सुषुप्तिः संपत्तिर्मोक्षः । सिन्धुरुदकं तत्र भवः सैन्धवः खिल्यः शकलः स चासौ खिल्यश्च सैन्धवखिल्यः । प्रास्तः प्रक्षिप्तः उदकं सदेवानु उदकभावस्य पश्चाद्विशेषेण लीयेत इत्यभ्यनुज्ञायां लिङ् । अस्य विलीनखिल्यस्य नाहास्योद्ग्रहणाय नैव कश्चित् सुनिपुणोपि शक्तः स्यात् लवणमेवाददीतेति योजना । एतदिति आविष्कृतम् । स्वाप्यसंपत्त्योरेकीभावदशायां दृष्टान्तः कैवल्यावस्थायां दृष्टान्त इति टीकायां तद्भाष्यविरुद्धम् । 'यत्र हि द्वैतमिव भवति' इत्यादि उभयत्राम्नानात् इतिभाष्यविरुद्धम् । अथ न विरुद्धं प्रकारभेदेन मैत्रेयीब्राह्मणे ज्योतिर्ब्राह्मणे चाम्नानमुभयत्र स्वाप्ययसंपत्त्योरिति भाष्यार्थात् । ज्योतिर्ब्राह्मणमाहुः यत्र हि द्वैतमिवेति भाष्योक्तादिपदार्थत्वेन । यद्वेति स्त्रीपुंपरिष्वङ्गदृष्टान्तेनैकत्वापत्तिवशात् विशेषज्ञानाभावो न स्वयं ज्योतिष्ट्वाभावात् इत्युक्तमेव नोपपूर्वकं स्पष्टीक्रियतेत्र । तत्तत्र सुषुप्तौ यदात्मानं वै नैव पश्यतीति यज्जानीष इति शेषः । तत्तेति पदद्वयमावृत्त्य पुनर्योजनीयम् । तस्य पदद्वयस्य तथा मा मंस्था इत्यर्थः । यतस्तत्र स्वरूपचैतन्येन सर्वसाक्षित्वात् पश्यन् वैतत् वर्णलोपस्तत्र सुषुप्तौ दृष्टव्यत्वेन न पश्यतीत्यर्थः । तत्र प्रथमप्रतिज्ञायां हेतुमाह न हीति द्रष्टुर्या सर्वसाक्षिणी दृष्टिः यद्वा द्रष्टुः कूटस्थस्य चिन्मात्ररूपस्य स्वरूपभूता या दृष्टिः तस्याः हि यस्माद्विपरिलोपो विनाशो न विद्यते अम्युष्णत्ववत् । अत्रापि हेतुः अविनाशित्वात् । विनाशहेतुपरिणामहीनत्वादित्यर्थः । विशेषप्रतिज्ञानाभावरूपं द्वितीयप्रतिज्ञाहेतुमाहुः नत्विति नास्त्विलपपाठः आन्वयिको वा अत एव 'न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्' इति पाठः काण्वमाध्यन्दिनभेदेन विस्तरेणार्थः । तत्तत्र सुषुप्तौ आत्मरूपाद्द्वितीयं प्रमातृस्वरूपमन्यच्चक्षुरादिलक्षणं करणं विभक्तं स्वरूपाद्विलक्षणं प्रमेयं न त्वस्ति यत्प्रमेयं प्रमाता प्रमाणेन पश्येदित्यर्थः । एतेन ज्योतिर्ब्राह्मणेन स यथेत्युक्तदृष्टान्तवचनमनु एवं वा अरे इदं महद्भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः सा होवाच मैत्रेयी अत्रैव मा भगवानमूमुहन् न प्रेत्य संज्ञास्तीति सहोवाच याज्ञवल्क्यः न वा अरे अहं मोहं ब्रवीमि अलं वा अर इदं विज्ञानाय यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति तदितर इतरं जिघ्रति तदितर इतरमभिवदति तदितर इतरं शृणोति तदितर इतरं मनुते तदितर इतरं विजानाति यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् तत्केन कं जिघ्रेदित्यादिश्रुतयोऽनुसंधेया इति ज्ञायते । अर्थास्तु यथोक्तः दृष्टान्त एवमेवारे मैत्रेयि विलीनखिल्यभावमिदं ब्रह्मात्मतत्त्वं महदनवच्छिन्नं भूतं न विद्यतेन्तःकरणं पूर्वावधिभूतं यस्य न विद्यते पार उत्तरावधिभूतं कार्यं यस्य विज्ञानश्चासौ घनश्च भूतेभ्यः शरीरकरणविषयाकारपरिणतेभ्यो निमित्तेभ्यो मनुष्योहं ब्राह्मणोहमित्यादि खिल्यभावेन समुत्थाय कर्मक्षयेण विनश्यन्ति तान्यनु पश्चात्स्वीकृत्य वा विनश्यत्यदर्शनं करोति । प्रेत्य मृत्वा प्रकर्षेण गत्वा वा संज्ञा मनुष्यादिरूपाः । अत्रैवेति एकस्मिन्नेव वस्तुनि ब्रह्मात्मकं पूर्वं विज्ञानघन एवेत्युक्त्वा पुनर्न प्रेत्य संज्ञास्तीति विरुद्धं वदन् भगवान् प्रज्ञावान् मा मां अमूमुहत् मोहितवानसि । मोहं मोहनं वाक्यं नैव ब्रवीमि न प्रेत्य संज्ञास्तीति तु विशेषविज्ञानाभावस्यैवोक्तत्वात् । अत उक्तो विज्ञानघनो विज्ञानवाडं विज्ञातुं युक्तः ।

रश्मिः ।

विशेषविज्ञानाभावं दृढीकुर्वन् आह याज्ञवल्क्यः यत्र हीति । प्रकृतमनुसर्यते यत्रेत्यस्य स्वाप्ययसंपत्त्योरित्यर्थं दूषयन्त आहुः तदुभयेति । उभयत्र स्वाप्ययसंपत्त्योः । तदद्वैतदर्शनम् । स याज्ञवल्क्यः । तां दशाम् । प्रकारेति मैत्रेयीब्राह्मण इतरमिति पदादितरत्वेन प्रकारेण । ज्योतिर्ब्राह्मणे द्रष्टव्यमिति पदात् द्रष्टव्यत्वेन प्रकारेण एकीभावप्रकारेणाविभागप्रकारेणेति वार्थः । तया मैत्रेय्या दशया वा । तथा द्रष्टव्यत्वेन तद् द्रष्टव्यत्वं जनकं प्रत्यवदत् । तत इति । ननु मैत्रेयीब्राह्मणं ज्योतिर्ब्राह्मणं च भाष्योक्ताया यत्र हि द्वैतमिवेति श्रुतेरनुरोधेनोक्तमुक्तानुशासनासीति श्रुतिस्तु द्वितीयमैत्रेयीब्राह्मणे तयोरग्रेतनेस्तीति तस्याः का संगतिरिति चेन्न अमृतत्वार्थिन्या हि मैत्रेय्याः प्रव्रजनकामो याज्ञवल्क्योऽमृतत्वसाधनवक्ता यावत्साधनान्युक्तवांस्तेषां च साधनानामग्रेतनमैत्रेयीब्राह्मणे समाप्तत्वात् 'उक्त्वा प्रवव्राज' इति श्रुतेस्तथावसायात् तथा च प्रतिबन्धकीभूतजिज्ञासाया मधुब्राह्मणादिनिरूपणैर्विवृत्तौ सत्यामवश्यवक्तव्यत्वेनामृतत्वसाधनानामवसरसंगतिः । प्रलय आत्यन्तिकः मोक्ष इति यावत् । अत्र ब्रह्मब्रह्मसंबन्धजीवानां विद्यमानत्वेन धर्माणामन्यादर्शनादीनां भगवत्युपपत्तिं समर्थयन्ति स्म तथा चेति । ब्रह्मसंबन्ध इति । तथा च संबन्धस्यापि ब्रह्माधीनत्वात् ब्रह्मण्येवान्यादर्शनादयो धर्मा न सुषुप्तौ नापि ब्रह्मसंबन्धे इति भावः । ननु सुषुप्तिस्त्वकामरूपो भगवानिति तत्रातिव्याप्तिः कथम् । सत्यम् । तद्रूपस्यालक्ष्यत्वात् जगज्जन्मादिकर्तृब्रह्मणो लक्ष्यत्वात् । ननु 'मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थितिः' इति जीवस्य तिरोहितानन्दैश्वर्यादेराविर्भावेन हेतुना ब्रह्मात्मतया स्थितिर्जीवधर्मः इति मुक्तिप्रयुक्तान्यादर्शनादयो जीवधर्मा इति चेन्न एकीभावात् । तथाप्यन्यादर्शनादयो ब्रह्मसंबन्धप्रयुक्ता एव । जीवन्मुक्तानामपि तिरोहितानन्दैश्वर्यादेराविर्भावेपि प्रवचनादिदर्शनान्नान्यादर्शनादय इति । नान्येतिं न सुषुप्तीत्यर्थः । भाष्ये आदिपदार्थत्वेन ज्योतिर्ब्राह्मणं व्याकृतं तत्रोभयत्रेति भाष्यं प्रमाणं भाष्येपि सूत्रांशं स्वाप्ययसंपत्त्योरित्येवमस्ति स्वाप्ययसंपत्तिपदार्थयोर्व्याकृतयोर्भाष्युक्तिरुक्ता । युक्तिमन्यामाहुरित्याहुः युक्त्यन्तरमिति । संपत्तिपदार्थस्य प्रसिद्धत्वात्स्वाप्ययपदार्थस्य छान्दोग्ये नवमप्रपाठकेऽविभागमन्तरानुपपद्यमानस्य प्रसिद्धिः । तथाहि । संपद्याविर्भावकैर्भक्तैः 'लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि' इत्यधिकरणे वक्ष्यमाणापि क्रीडा समन्वयेऽस्मिन्नध्याये ज्ञानसंपादिकां क्रीडामविभज्य वर्तते भक्तमनोरथाभावेन तत्पूरकक्रीडायाः ज्ञानिक्रीडान्तर्गतायाः अप्याविर्भावाभावात् । मर्यादाभक्तं प्रत्यपि पुष्टिभक्तक्रीडा नाविःकरणात् । उभौ ज्ञानिमर्यादाभक्तौ प्रति यथानुभवं सुषुप्तिव्याकरणसिद्धस्यैतादृशस्य भाष्ये व्याकरणं मत्वाहुः तथा चेति । तथा च व्याख्यानं ज्ञानित्वेन प्रसिद्धानां स वा एष इत्यस्याः भूमा कस्मिन् प्रतिष्ठित इति नारदप्रश्ने सनत्कुमारेण स्वे महिम्नि इत्युत्तरिते भूमा न प्रतिष्ठित एवं ब्रवीमीति सनत्कुमारेण पूर्वोक्ते हेतुमाह 'स एवाधस्तात् स उपरिष्टात् स पश्चादित्यादि । यतः स भूमैवाधस्तात् स उपरिष्टात् स पुरस्तात् स दक्षिणतः स उत्तरतः स एव भूमैव सर्वं तद्व्यतिरेकेणाभावादसौ परमार्थतः क्वचित्प्रतिष्ठित इति फलितार्थः । यत्र नान्यत्पश्यतीत्यधिकरणतया निर्देशात्स एवाधस्तादिति च परोक्षतया निर्देशात् द्रष्टुर्जीवादन्यो भूमेति शङ्का स्यात् तद्व्युदासार्थमहंकारस्य ब्रह्मपुत्रत्वात् 'आत्मा वै पुत्रनामासि' इति श्रुतेस्तदभेदार्थं वा भूमानमहमात्मतया निर्दिदेश अथातोऽहंकारादेश इति । अथेत्यनन्तरं भूम्नि जीवभेदशङ्काया ब्रह्मात्मकाहंकारभेदशङ्काया वा उदितत्वादहमित्याकारेण भूमा निर्दिश्यत इत्यर्थः । समानमन्यत् । अविवेकिभिर्देहस्याहमिति निर्दिश्यमानत्वात् तस्यात्मत्वशङ्कामात्मनामवताराणां सविकल्पकज्ञानानां वा भेदशङ्कां वारयितुमाह

क्योरन्यतरापेक्षमाविष्कृतं हि इति न्यायेन। यत्र हि द्वैतमिव भवतीत्यादिश्रुत्या उभयत्राज्ञानात्। अन्यादर्शनादयो भगवति न विरुध्यन्ते। चकारात् फलं तस्यैवोपपद्यत इत्याह। स वा एष एवं पश्यन्नित्यादिना सहस्राणि च विंशतिरित्यन्तेन। तेन भूमा ब्रह्मैवेति सिद्धम् ॥ ९ ॥

इति प्रथमाध्याये तृतीयपादे द्वितीयं भूमाधिकरणम् ॥ २ ॥

---

भाष्यप्रकाशः।

कस्तु भूमविद्यायामनियतः। 'न पश्यः' इति मन्त्रे, सर्वं हि पश्यः पश्यतीति वाक्यानुरोधात् 'यस्मिन् विदिते सर्वं विदितं भवति' इत्यादिवाक्यानुरोधाच्चेत्यर्थः। अत एतेऽन्यादर्शनादयो धर्मा भगवति न विरुध्यन्तेऽतो लक्षणेऽतिव्याप्त्यभावाद् भूमविद्या ब्रह्मविद्या, नान्यविद्येत्यर्थः। एतदेव विशदयन्ति चकारादित्यादि। तस्यैवेति अविभागद्रष्टुः। प्रलये संज्ञाभावात् स्वेन रूपेण दृष्टत्वाभावादिति इदं सर्वं तृतीयाध्याये लिङ्गभूयस्त्वाधिकरणे व्युत्पाद्यमतोऽत्र नोच्यते। फलं किमित्यत आहुः स वा इत्यादि। तथा चेदमविभागदशागमकमित्यर्थः। एवं चानेनाधिकरणेन बहिर्व्याप्तस्याप्यानन्दमयत्वं साधितम्। तथानन्दमयाधिकरणोक्तस्यानन्दमयत्वस्य बुद्धिवृत्तिरूपसुषुप्ति-

रश्मिः।

अथात्मादेश इति आत्मना स्वरूपेण दिश्यते भूमा। यद्वा। अवतारादेशः सविकल्पकज्ञानादेशो वा। समानमन्यत्। इदं सर्वमात्मैवेति पश्यतो जीवन्मुक्तस्य फलमाह स वा एष इति। स वै एष विद्वान् मननविज्ञानाभ्यां तर्कोपदेशिकरूपाभ्यामेवं यथावद्भूमानं पश्यन् साक्षादनुभवन् आत्मत एव रमणं यस्य स आत्मरतिः। क्र्यादिबाह्यसाधनवती क्रीडेति भेदः। आत्मत एव, मिथुनं द्वन्द्वजसुखं यस्य स आत्ममिथुनः आत्मत एव, आनन्दः शब्दादिविषयसुखं यस्य स आत्मानन्दः। अविदुषस्तु एतत्सर्वं देहादिबाह्यसाधननिमित्तं विदुषस्त्वात्मज्ञाननिमित्तं चेत्यर्थः। भाष्ये। फलमिति स वा एष इति श्रुत्युक्तम्। सुषुप्तौ तु 'सुखमहमस्वाप्सं न किंचिदवेदिषम्' इति यथानुभवम्। यत्तु चतुर्थाध्यायोपान्ते भाष्यं निर्गुणब्रह्माविर्भावः सुषुप्तौ संपत्तौ तु 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति श्रुतिसिद्धो यथाधिकारं स्वधर्मसहितब्रह्मसंपत्तिरिति। तत्राकामरूपो भगवान् सुषुप्तिरिति भाष्येण न॰विरोधः। अस्यैव सुखरूपस्य निर्गुणत्वात्। संपत्तौ तु कर्मविमोक्षे आत्मसुखं ब्रह्म, ज्ञानिमोक्षे निर्गुणं ब्रह्म। मर्यादाभक्तमोक्षे स्वधर्मसहितस्याविर्भावः अक्षरधियां त्ववरोधः' इति सूत्रभाष्यात्। पुष्टभक्तमोक्षे ततोधिकधर्मसहितस्य चतुर्थाध्यायोपान्तभाष्यात् सर्वात्मभाववद्भक्तमोक्षे ततोपि पूर्णानन्दस्य 'फलमत उपपत्तेः' इति सूत्रभाष्यात् पूर्वाधिकरणेनास्य संगतिरूपमधिकरणाङ्गमाहुः एवं चेति। आधाररूपस्य प्रतिपादके 'भूमा संप्रसादादध्युपदेशात्' इत्यधिकरणे आधारप्रतिपादकत्वावश्यकत्वेऽत्राधारस्य सर्वान्तरस्याधारस्य आनन्दमयाधिकरणे आनन्दमयत्वप्रतिपादनात् बहिष्ठस्याधारस्य भूमरूपस्य प्रतिपादनादाधार औपश्लेषिको वैषयिकोऽभिव्यापकश्च तेष्वभिव्यापकः प्रतिपाद्यः 'तिलेषु तैलं दधनीव सर्पिः' इति श्रुतेः। अत आधाररूपस्य प्रतिपादनेन स्मृतस्य भूम्न उपेक्षानर्हत्वात्प्रसङ्ग एव। सदंशेन जडा चिदंशेन जीवा आनन्दांशेनान्तर्यामिणो यद्यपि तथापि 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतेः सर्वेषां प्रतियोगिभेदेन 'यो यज्जनकस्तत्तद्गुणको, यो यद्गुणकः स तदात्मकः' इति व्याप्तिभ्यां आनन्दरूपत्वेन भूमा आधारः।

## अक्षरमम्बरान्तधृतेः ॥ १० ॥ (१।३।३).

गार्गीब्राह्मणे 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च' इति । 'स होवाच एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनणु' इत्यादि श्रूयते । तत्र संशयः ।

---

भाष्यप्रकाशः ।

धर्मत्ववारणं कृतमतः प्रसङ्ग एव संगतिः । तथा 'येन सर्वमिदं ततम्' इत्यपि साधितम् । सर्वस्य विस्तारस्य सुखप्रयुक्तत्वादिति । 'भक्त्या लभ्यस्त्वनन्यया' इति तु साधनाध्याये विचार्यम् ॥९॥

इति द्वितीयं भूमाधिकरणम् ॥ २ ॥

अक्षरमम्बरान्तधृतेः ॥ १० ॥ विषयादिकमुपन्यस्यन्ति गार्गीब्राह्मण इत्यादि । अत्र प्रथमे ब्राह्मणे, यदिदं सर्वमप्स्वोतं च प्रोतं च कस्मिन् वाऽऽप ओताश्च प्रोताश्चेत्यादिप्रश्नोत्तरैरब्वाय्वाकाशान्तरिक्षलोकद्युलोकादित्यलोकचन्द्रलोकनक्षत्रलोकदेवलोकगन्धर्वलोकप्रजापतिलोकब्रह्मलोकपर्यन्तं पूर्वपूर्वस्योत्तरोत्तरस्मिन्नोतप्रोतत्वं निरूप्य पुनः प्रश्नान्तराभावार्थं, 'मा ते मूर्धा व्यपप्तदनतिप्रश्न्या वै देवता अति पृच्छसि गार्गि मातिप्राक्षीः' इत्युक्तम् । तत आरुणिसंवादोत्तरं

रश्मिः ।

श्रुतिसूत्ररूपैका कोटिरुक्ता । गीताभागवतरूपकोट्येकदेशमाहुः तथेति । ततमित्येतत्तनु विस्तार इत्यस्य रूपमित्याहुः सर्वस्येति । सुखेति । तथा च श्रुतिः 'यदा वै सुखं लभतेऽथ करोति नासुखं लब्ध्वा करोति सुखमेव लब्ध्वा करोति सुखं त्वेव विजिज्ञासितव्यम्' इति । अत्र सुखेन कृतिः कृत्या संपादनं संपादनेन श्रद्धा श्रद्धया मननं मननेन विज्ञानं तेन सत्यवदनमिति क्रमः । जानाति इच्छति यतते इत्यत्रेच्छा न सर्वत्र निविशतेऽपि तु क्वचिदेवातो विज्ञानेन सत्यवदनरूपक्रियाया न विरोधः । 'लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि' इत्यधिकरणे सर्वात्मभावपरतया स्वप्रपाठकस्य वर्णने शक्तिः का शक्तेर्ज्ञानिनिरूपितार्थे उपक्षीणत्वात् इत्याशङ्क्याहुः भक्त्येति । एकादशाध्याये विश्वरूपदर्शनेस्तीदं वाक्यं तत्र विश्वरूपं साकारब्रह्मरूपं अनन्यभक्तिलभ्यत्वात् विष्णुरूपं वा विश्वरूपदर्शने इत्यध्यायसमाख्याप्रामाण्यात् न अन्या प्रेमलक्षणा नवधा गौणभक्तयश्च तद्रूपाऽनन्या सर्वात्मभावरूपा तया भक्त्या न अन्यः पुरुषोत्तमभिन्नो विषयो यस्याः सा वा । साधनेति लिङ्गभूयस्त्वाधिकरणे तथा च भक्तिमार्गीयस्याप्यर्थस्य सत्त्वात् भक्तसंबन्धेन ज्ञानमार्गीयार्थविरोधे वक्ष्यमाणार्थे शक्तिः सैव । यथा संयोगेन सशङ्खचक्रो हरिरित्यत्र हरिपदस्य विष्णौ न सिंहे नापीन्द्रे न वानरादौ तदुक्तं 'तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते' इति विशिष्टानां ज्ञानिभ्यो भक्तानां पौरुषसभाजनं पृथक् स्वाधिकारानुसारेण छान्दोग्यार्थे शक्तिभ्यः । तथाऽविदुषो घटादेर्घटत्वादिनावबोधः विदुषस्तु तिरोहितचिदानन्दप्रकटसदंशेनावबोधः । तथा च घटत्वेन कम्बुग्रीवादिमत्त्वेनावच्छिन्ने घटे शक्तिराद्यस्य द्वितीयस्य तु तिरोहितचिदानन्दत्वेन घटत्वरूपेण वस्तुविशेषनियतेनावच्छिन्ने सदंशे शक्तिस्तद्वत् ॥ ९ ॥

इति द्वितीयाधिकरणम् ॥ २ ॥

अक्षरमम्बरान्तधृतेः ॥ १० ॥ अप्स्वोतमिति अप्स्वोतं प्रोतं पटस्तन्तुष्विव समवायेन संबद्धम् । वाय्विति वायौ गार्गीति वाक्योक्तेः । आरुणीति गार्गीब्राह्मणं समाप्यान्तर्यामिब्राह्मणीयारुणिसंवादोत्तरमक्षरब्राह्मणे दिव उपरितनाण्डकपालात् अर्वागित्यधः द्यावापृथिव्योरन्तरा

किमक्षरशब्देन पदार्थान्तरं, ब्रह्म वेति । तत्राचेतनसाधारण्याद् बाणतुल्यत्वादाकाशवदस्याप्यब्रह्मत्वमेव । द्युभ्वाद्यायतनविरोधस्तु तुल्यः । अत एवागतार्थता अदृश्यत्वाद्यधिकरणेन । न हि तत्र विरुद्धधर्मा आशङ्क्य निराक्रियन्ते । अतोऽचेतनतुल्यत्वाद् ब्रह्मवादस्यासमाप्तत्वादाग्रहाविष्टत्वात् प्रष्टुः स्त्रीत्वाच, 'सरो

भाष्यप्रकाशः ।

पुनरपि गार्गी पप्रच्छ । 'यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिंस्तदोतं च प्रोतं च' इति । तत्र आकाश इत्युत्तरे, पुनराकाशविषयके ओतप्रोतत्वप्रश्ने, एतद्वै तदक्षरं गार्गीत्याद्युत्तरम् । सोऽत्र विषयः । तत्राक्षरशब्दे संशयः । किं पदार्थान्तरं ब्रह्म वेति । अत्र पदार्थान्तरपदेन जडजीवयोर्ग्रहणम् । तत्र ओतप्रोतत्वं विकारित्वापादकतया जडलिङ्गम् । 'अमृताक्षरं हरः, क्षरात्मानावीशते देव एकः' इति श्रुत्यन्तरे अक्षरपदं जीवबोधकतया प्रसिद्धं जीवलिङ्गं प्रशासनं च ब्रह्मलिङ्गमिति त्रिष्वपि बीजम् । पूर्वपक्षमाहुः तत्राचेतनेत्यादि । ओतप्रोततया विकारित्वेनाचेतनसाधारण्यात् । 'अहं त्वा याज्ञवल्क्य यथा काश्यो वा वैदेहो वोग्रपुत्र उज्ज्यं धनुरधिज्यं कृत्वा द्वौ बाणवन्तौ सपत्नातिव्याधिनौ हस्ते कृत्वोपोत्तिष्ठेदेवमेवाहं त्वां द्वाभ्यां प्रश्नाभ्यामुपोदस्थाम्' इति द्वयोः प्रश्नयोः क्लेशजनकतया प्रथमप्रश्नोत्तरभूताकाशवदस्य द्वितीयप्रश्नोत्तरभूतस्याक्षरस्याप्यब्रह्मत्वमेव । किंच । यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतमित्यत्र यथोतत्वं पदार्थभेदेन भारवाहकत्वमवगमयत्येवमत्र प्रोतत्वमपि, 'मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव' इति स्मार्तदृष्टान्ताद् भारवाहकत्वमेव गमयिष्यतीति द्युभ्वाद्यायतनत्वेन विरोधोऽपि तुल्यः, तत्रेवात्रापि समानः । किंचादृश्यत्वाद्यधिकरकरणे

रश्मिः ।

मध्ये यत् प्रसिद्धे द्यावापृथिवी द्यावापृथिवी इमे । अत्र प्रथमकोटौ वर्णो निवेश्यते शांकरैस्तदनिवेशे हेतुमाहुः अत्र पदेति । जडजीवयोरित्यत्र 'अभ्यर्हितं पूर्वम्' इति सूत्राप्राप्तिर्वेदान्त उभयोरभ्यर्हितत्वात् 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इति श्रुतावुभयोरेतदात्मनस्तस्य च भावत्वात् । ईषत इति ईष दानगतिवधेष्विति गच्छतीत्यर्थः । भ्वादिरात्मनेपदी सेट् । प्रसिद्धमिति न प्रसिद्धिरुपरोद्धुं शक्येति न्यायेन नामृताक्षरमिति हरविशेषणम् । प्रशासनमिति 'एतस्य वाक्षरस्य प्रशासने गार्गि द्यावापृथिवी विधृते तिष्ठतः' इति श्रुतेः । त्रिष्विति ब्रह्मजीवजडग्रहणेषु । बाणेत्यादिभाष्यं विवरामासुः अहमित्यादिना । श्रुत्यर्थस्तु अहं गार्गि त्वा त्वां याज्ञवल्क्य काशिषु भवः काश्यः शूरत्वेन प्रसिद्धः विदेहो विदेहानां राजा उग्रपुत्र इति षष्ठीतत्पुरुषः । उज्ज्यमवतारितेज्याकं धनुरधिज्यमारोपितेज्याकं कृत्वा द्वौ बाणवन्तौ बाणः शराग्रे संधीयमानो वंशखण्डः तद्वन्तौ शरौ यद्वा बाणवन्तौ बाणौ मनोहरौ । तौ च सपत्नातिव्याधिनौ शत्रुभेदिनौ उपोत्तिष्ठेत् शत्रुसमीपे तिष्ठेत् तद्वदहं गार्गी त्वां याज्ञवल्क्यं उपोदस्थां त्वत्समीपे स्थितवत्यस्मीति । इदमित्यतयाऽविषये आधिर्भवतीति क्लेशः । प्रथमेति यदूर्ध्वमित्यादिनोक्तप्रथमप्रश्नस्तदुत्तरमाकाशे ओतं प्रोतं चेति । द्वितीयेति कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति द्वितीयप्रश्नस्तदुत्तरति 'एतद्वै तदक्षरं गार्गि' इति । तथा चैवमेवाहं त्वां द्वाभ्यां प्रश्नाभ्यामुपोदस्थामित्युक्त्या बाणतुल्यत्वमिति भाष्यार्थः । द्युभ्वादीति भाष्यं विवरामासुः किं चेति । तत्रेवात्रेति आकाश इवाक्षरेपीत्यर्थः । अत एवेति भाष्यं

मा च आकाशाद्भूयान्' इतिवत् कयाचिदुपपत्त्या स्मरणकालभूतसूक्ष्मप्रकृतिजीवविशेषाणामन्यतरपरिग्रह इति वक्तव्यमुपासनार्थम्। अत्र हि प्रापञ्चिकसर्वधर्मराहित्यं ब्रह्मधर्मत्वं च प्रतीयते। तदुपासनार्थत्व उपपद्येत। ब्रह्मपरिग्रहे तु वैयर्थ्यमेव। उपदेष्टृत्वाभावात्। तस्मादक्षरमन्यदेव ब्रह्मधर्मत्वेनोपास्यमित्येवं प्राप्ते। उच्यते।

अक्षरं परमात्मैव। कुतः। अम्बरान्तधृतेः। श्रुतिं व्याख्याय

---

भाष्यप्रकाशः।

अक्षरस्य ब्रह्मरूपतायाः सुविचारितत्वात् किमनेनाधिकरणेन। अतः पृथग्विचारादेव विषयभेदोऽवसीयत इति न तेनास्य गतार्थता। न हि तत्र विरुद्धधर्मा आशङ्क्य निराक्रियन्ते अत्र तु ते तथाक्रियन्त इति सिद्धो विषयभेदः। अतो विषयभेदादचेतनतुल्यत्वाद् ब्रह्मवादस्यारुणिसंवादेऽन्तर्यामिनिरूपणेनैव समाप्तत्वात् प्रष्टुर्गार्गीरूपस्याग्रहाविष्टत्वेन स्त्रीत्वेन च ब्रह्मविद्याश्रवणेऽनधिकारित्वादत्र, 'स्मरो वा आकाशाद् भूयान्' इत्यत्र यथा आकाशं भोग्यत्वेन गृह्णतः स्मरणस्य तद्व्याप्त्या बृहत्त्वयोगेन भूयस्त्वं तथा, अश्नुत इति नक्षरतीति वा योगेन कयाचिदुपपत्त्या स्मरणादन्यतमस्याचेतनस्य जीवविशेषस्य वोपासनार्थं परिग्रह इति वक्तव्यम्। यत् पुनरत्राक्षरेऽस्थूलादिवाक्यैः प्रापञ्चिकधर्मराहित्यं प्रशासनरूपब्रह्मधर्मवत्त्वं च प्रतीयते, तत्तूपासनार्थम्। न चात्रैतदनुरोधेन ब्रह्मैव वाक्यार्थ इति युक्तम्। प्रष्टुर्ब्रह्मश्रवणानधिकारस्योपपादितत्वेनात्र वक्तुरुपदेष्टृत्वाभावाद् वाक्यवैयर्थ्यापत्तेरिति। सिद्धान्तं व्याकुर्वन्ति उच्यत इत्यादि। नन्वम्बरान्तधृतेर्विषयवाक्ये अदृश्यमानतया तस्याक्षरे वक्तुमशक्यत्वात् स्वरूपासिद्धोऽयं हेतुरित्याशङ्क्याहुः श्रुतिमित्यादि। तथा च तात्पर्यसिद्धत्वान्न स्वरूपासिद्ध इत्यर्थः। तात्पर्यसिद्धत्वं व्याकुर्वन्ति

रश्मिः।

विवरांबभूवुः किं चेति। तथेति आशङ्क्य निराकार्यत्वेन क्रियन्ते। नन्वदृश्यत्वादिकमदृश्यत्वाद्यधिकरणेऽनुपपन्नं स्थौल्यादीनां सत्त्वेन दृश्यत्वात् इत्याशङ्क्यात्राधिकरणे अस्थूलमनण्वित्यादौ श्रुतौ नञारोपापवादन्यायेन निराक्रियन्ते। अत इत्यादिभाष्यं विवरांचक्रुः अत इति। आग्रहेति अनतिप्रश्न्येत्यादिना प्रश्ननिषेधेपि पुनः प्रश्नद्वयकरणादाग्रहो द्योत्यते। स्मर इति स्मरो वा व आकाशाद्भूय इत्यपि पाठः। अत्र छान्दसं नपुंसकत्वम्। भोग्यत्वेनेति विषयत्वेन। अश्नुत इति अयं योगः स्मरणस्य कालस्य भूतसूक्ष्माणां शब्दरूपरसगन्धस्पर्शाणां च छान्दसः प्रत्ययः कांचित्कमात्मनेपदित्वमनुसंधाय क्षर संचलने इत्यस्य भ्वादेः परस्मैपदिनो न क्षरत इति जीवप्रकृत्योः पचाद्यच्। अत एव तस्मान्नक्षरत्यश्नुते वेत्यक्षरं परमेव ब्रह्मेति शंकरभाष्ये परस्मैपद्युक्तः। कयेति स्मरणस्य कालस्य च व्यापकव्याप्त्या भूतसूक्ष्माणां च प्रकृतेस्तु आप्राकृतिकलयात् क्षरणाभावः जीवेषु स्पष्टो योगः। स्मरणादीति। अन्यतरेति भाष्यं निश्वासत्वेन महाभाष्यवत् प्रमाणं न तु भाष्यप्रकाश इति बहूनां निर्धारणे डतमजुक्तः। ननु सूत्राण्यनु व्याख्यातानि व्याख्यातानीति मैत्रेयीब्राह्मणश्रुतेः कुत एतदिति चेन्न सूत्रानुसारित्वेन महाभाष्याननुसारित्वात्। अत्र हीति भाष्यं विवरांचक्रुः यत्पुनरिति। ब्रह्मपरीति भाष्यं विवरामासुः न चेति। एतस्य ब्रह्मधर्मवत्त्वस्यानुरोधेन। स्वरूपेति। पक्षे व्याप्यत्वाभिमतस्याभावः स्वरूपासिद्धिः। यथा ह्रदो द्रव्यं धूमादिति। तथा चेति।

सिद्धं हेतुमाह । अत्रैक एव प्रश्न उत्तरं चैकम् । आकाशस्यावान्तरत्वमेव । तेनाम्बरान्तानां पृथिव्यादीनां विधारकः परमात्मैव । द्युभ्वाद्यायतनसिद्धो धर्मोऽत्र हेतुः न तदश्नोति कश्चनेति मुख्यतया परिगृहीतो भवति । अन्यथा मूर्ध्नो विपतनं च भवेत् । न ह्यन्यः सर्वाधारो भवितुमर्हति । परोक्षेण ब्रह्मकथनाऽर्थमक्षरपदमन्यनिराकरणार्थं तद्धर्मोपदेशश्च । तस्मादक्षरं परमात्मैव ॥ १० ॥

भाष्यप्रकाशः ।

अत्रैक इत्यादि । यद्यप्यत्र 'द्वाभ्यां प्रश्नाभ्यामुपोदस्थाम्' इति द्वौ प्रश्नौ प्रतीयेते, तथापि पूर्वब्राह्मणे यथा तावत्सु प्रश्नेषु कृतेष्वपि न प्रश्नपरिसमाप्तिरेवमत्राकाशप्रश्नेऽपि, ततः कस्मिन् वा आकाश ओतश्च प्रोतश्चेति प्रश्ने आकाश एवेत्युक्त्वा तमाकाशमक्षरत्वेन निगमयत्येतद्वै तदक्षरमिति । एतत् त्वत्कृतद्वितीयप्रश्नोत्तरभूतं यदाकाशं तदक्षरमित्येवं वचनव्यक्तेः । अत आकाशस्याप्यवान्तरत्वमेवेति पूर्वब्राह्मणे सर्वपदोक्तां पृथिवीमारभ्यात्र प्रथमं य आकाश उक्तस्तदन्तानां या धृतिर्धारणं तेन हेतुना अम्बरान्तानां पृथिव्यादीनां विशेषेण परानपेक्षतया धारकः परमात्मैव ।

रश्मिः ।

भाष्ये । श्रुतिं व्याख्यायेत्यस्य कस्मिन्नु खल्वित्यादिविषयश्रुतिं व्याख्याय सर्वोतत्वप्रोतत्वाभ्यां अम्बरान्तधृतिरूपो हेतुः सिद्धस्तत्सिद्धं हेतुं आह व्यास इत्यर्थः । एवं च तात्पर्यं अम्बरान्तधृतौ इत्यम्बरान्तधृतेस्तत्प्रतीतीच्छयोच्चरितत्वरूपतात्पर्यसिद्धत्वादित्यर्थः । तावत्स्विति कस्मिन् वा आप ओताश्च प्रोताश्चेत्यादिषु प्रथमब्राह्मणस्थेषु । न प्रश्नेति द्वयोः प्रश्नयोः करिष्यमाणत्वात् । आकाशेति द्वितीयप्रश्नस्य करिष्यमाणत्वात् तथा च प्रश्नापरिसमापकत्वेनैकस्योक्तरूपेणाविवक्षितत्वं शुक्तिरजतेत्यत्र रजतवत् । रजतमादाय द्विवचनोपपत्तिवत् । द्वाभ्यां प्रश्नाभ्यामित्यत्राविवक्षाप्रयोजकं प्रश्नापरिसमापकत्वमादाय द्विवचनोपपत्तिः । आकाश एवेति प्रश्नद्वयमुत्तरद्वयं चैकविधं द्वितीयविधायामेवकारोधिकः । निगमयतीति एतद्वै तदक्षरमिति वक्ष्यमाणश्रुतावेतत्पदेनाकाशं परामृश्याक्षरमित्यक्षरत्वोक्तेर्निगमयति प्रापयति । अवान्तरत्वमिति प्रश्नापरिसमापकत्वं वाय्वादिप्रश्नवत् । त्वत्कृतेति न चैकविधं प्रश्नद्वयमिति कथं द्वितीयत्वमिति शङ्क्यम् । अनूद्यानुवादयोः कलशो घट इत्यत्र कलशोनूद्यः तस्यानुवादो घट इति उभयोरेकत्वम् । यथा वा 'ब्रह्मविदाप्नोति परम्' इत्यत्र ब्रह्मानूद्य सत्यं ज्ञानमनन्तं ब्रह्मेति ब्रह्मानुवादः अत्रोभयब्रह्मपदयोरर्थयोरेकत्वम् । तस्य सत्त्वात् । धारणमिति पतनप्रतिबन्धव्यापार इति यावत् । द्युभ्वाद्यायतनं द्युभ्वाद्यायतनत्वं पतनप्रतिबन्धकव्यापारस्तेन रूपेणेति द्युभ्वाद्यायतनं भूमाऽक्षरम् । तेनेति भाष्यं विवरांबभूवुः तेनेति । परेति । पतनप्रतिबन्धकव्यापारातिरिक्तशक्त्यनपेक्षतया धारको विधारकः । कस्मिन्नाकाश ओतश्च प्रोतश्चेति प्रश्नवचनात् यस्मिन्नोतश्च प्रोतश्च पृथिव्यादिरेतदाकाशरूपं गार्गि अक्षरमित्युत्तरादम्बरान्तधारणमोतप्रोतधारणात्मकं वक्तव्यं तत्राकाशौतप्रोतधारणं पृथिव्यादिसाधारणमिति हेतोर्नवादौ साधारणत्वेनाक्षरस्य परमात्मत्वासाधकत्वमाशङ्क्य ओतप्रोतधारणं समवायिकारणतासमानाधिकरणमित्याशयकं द्युभ्वाद्यायतनसिद्धो धर्मोत्र हेतुरिति भाष्यं तत्तात्पर्यं वदन्तः परमात्मैवेति भाष्ये एवकारेण जीवजडव्यावर्तकेन परमात्मनि

१ अनुवादार्हः ।

भाष्यप्रकाशः ।

अयमर्थः । पूर्वब्राह्मणे अव्याप्यनन्तरमाकाशस्योक्तत्वेऽप्यत्र पुनर्यदाकाशकथनं तन्न भूताकाश-परं किंतु भूतसूक्ष्मकालप्रकृत्यन्यतमं यद्वस्तु तत्परम् । तच्च मतान्तरे पदार्थान्तरम् । सिद्धान्ते तु प्रथमं कार्यं तत् । ततोऽधिको धारको न जीवविशेषोऽपि भवति । उक्ताकाशौत-प्रोतत्वस्य जीवे क्वाप्यसिद्धत्वात् । एवं जडजीवयोर्निवृत्तौ तद् ब्रह्मकार्यत्वेनैव निश्चीयते ।

रश्मिः ।

प्राप्तं भारवाहकत्वं वारयामासुः अयमर्थ इति । भूतेति भूतसूक्ष्माणि शब्दरूपरसस्पर्शगन्धाः भूतानां सूक्ष्माणि रूपाणि भूतसूक्ष्माणि । तत्परमिति अन्यथा पौनरुक्त्यापत्तेः । काश शब्दे भ्वादिः परस्मैपदी सेट् । काश दीप्तौ दिवादिः आत्मनेपदी सेट् । योगेन शब्दपरम् । परंपरया काश्यत इति योगेन रूपादिषु 'परान्वयाच्छब्दवांश्च' इति वाक्यात् । काश दीप्तावित्यस्मात्प्रत्यये आकाशः कालः प्रकृतिश्च । कालस्य लक्षणं 'अन्तः सच्चिदानन्दत्वे सति व्यवहारे ईषत्सत्त्वेन प्रकटत्वम्' प्रकृत्यास्तु 'भगवन्निर्मितत्वे सति मुख्यं भगवद्रूपत्वम्' लक्षणम् । एतच्च प्रस्थानरत्नाकरे स्पष्टम् । मतान्तर इति उपनिषद्व्याख्यातुर्मते अविद्याशबलित ईश्वरः पदार्थान्तरं प्रकृतिरूपम् । नैयायिकमते द्रव्यमात्मा कालश्चेति पदार्थान्तरम् । परमाणुरूपा वा शब्दादयः । प्रथमं कार्यमिति शब्दरूपाकाशात्मकम् । 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इति श्रुतेः अत्र मात्रात्मक आकाशो विवक्ष्यते । वाराहे चातुर्मास्यमाहात्म्ये चतुर्दशेध्याये 'एवं पूर्वमभूत्सृष्टिः सूक्ष्मरूपैः' इति वाक्यरूपपुराणप्रतीकज्ञानेन मोहाभावात् । यद्वा यथाश्रुत एवार्थः । पूर्वब्राह्मणे संपत्त्याविर्भाविते रूपे सर्वौतप्रोतत्वं विचारितमन्तिमे कस्मिन् प्रजापतिलोकाः ओताश्च प्रोताश्चेतीति गार्गीप्रश्ने ब्रह्मलोकेषु गार्गीत्युत्तरात्संपत्तिरूपोक्तेः ब्रह्मलोकस्याक्षरत्वात् सर्वकारणकारणस्य प्राप्यत्वात् । अत्र तु सुषुप्त्याविर्भाविते रूपे सर्वौतप्रोतत्वस्य न तदश्नोति कंचनेति श्रुतेरभावात् प्रथमकार्यस्यौतप्रोतसहितस्याक्षराभेदस्योपपादनात् । ननु भूतसूक्ष्म-कालप्रकृतिजीवविशेषाणामन्यतममित्यपि सुवचमिति चेत्तत्राहुः तत इति । भौतिकाकाशात् जीव-विशेष उपासापचितजीवः कुतस्तरां साधारणजीवजडौ एकस्याणुत्वाज्जडस्य परिच्छिन्नपरिमाणवत्त्वात् तेन ग्रामं गच्छन् तृणं स्पृशतीति न्यायेन सामान्यतः पूर्वपक्षोपास्तः । उक्तेति भूतसूक्ष्मादिरूपा-काशौतप्रोतत्वस्य क्वापीति मुक्तिकालेप्युक्ताकाशाभेदो न त्वोतप्रोतत्वम् । तदिति आकाशरूपं कार्यम् । एतेन एतद्वै तदक्षरं गार्गि यस्मिन्नाकाश ओतश्च प्रोतश्चेति श्रुतेः अक्षराधिकरणकाकाशनिरूपिततादात्म्यस्य सत्त्वात् कार्यकारणवस्त्वैक्यपरामर्शः ।

'कार्यकारणवस्त्वैक्यमर्शनं पटतन्तुवत् ।
अवस्तुत्वाद्विकल्पस्य भावाद्वैतं तदुच्यते' ॥

इति । सप्तमस्कन्धात् । यस्तु स होवाच एतद्वै तदक्षरमिति श्रुतिव्याख्याने स याज्ञवल्क्यो ह उवाच यत्त्वं पृष्टवत्यसि कस्मिन्नु खल्वित्यादिना व्याकृतानामाकाशाधिष्ठानं तद्वै अव्याकृताधिष्ठान-मेतदक्षरमित्यक्षराकाशयोराधाराधेयभावः स श्रौतोपि भारवाहकत्वापादको नाङ्गीक्रियते । श्रौतोपि अक्षरे आकाशः इत्याधाराधेयभावोऽभिव्यापकाधारे सप्तमीं स्वीकृत्य निर्वाह्यते 'तन्तुष्वङ्ग यथा पटः' इति दृष्टान्तात् । आरोपापवादेनादृश्यत्वाद्यधिकरणोक्तमदृश्यत्वादिकं पूर्वं पूर्वपक्षे समर्थितं तन्मायावादे, सिद्धान्ते पुनरक्षरविचारस्य समर्थनामाहुः पुनरिति । तुः पूर्वपक्षं वारयति । विरुद्धधर्माधारत्वं प्राग्वैश्वानराद्यधिकरणे ब्रह्मण उक्तमेवेति प्रागेवोक्तमित्यस्यार्थः । ननु प्राक् पूर्वपक्षे उक्तमित्यर्थः

रश्मिः ।

कुतो न इति चेन्न पूर्वपक्षत्वेन सैद्धान्तिकार्थाभावात् । न च कथं विरुद्धधर्माधारत्वसमर्थनं यावताऽस्थूलमनण्वित्यादिनाऽत्यन्ताभावप्रतिपादनादारोपापवादलक्षणसंगत्या श्रौतधर्मनिषेधात्कैर्धर्मैर-दृश्यत्वविरुद्धैर्विरुद्धधर्माधारत्वमिति वाच्यम् । अस्थूलमनण्वित्यादिना पर्युदासप्रतिपादनात् तथाहि ।

'सर्वतः पाणिपादान्तं सर्वतोक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति' ॥

इत्यत्र श्रुतौ 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इति च 'सर्वतः पाणिपादं तत्' इत्यादिश्च गीता । एतस्मात्साकारब्रह्मणः सर्वेन्द्रियाभासवत इत्यर्थः । 'नासतो विद्यते भावः' इति गीतायाः । तदुक्तम् । 'सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम्' इतिगीतायाम् । तथा चास्थूलमित्यत्र भेदवत् भेदप्रतियोगी सदृशं नञर्थ उक्तश्रुत्यादिभ्यः । एवं च स्थूलभिन्नस्थूलसदृश-मक्षरमित्यर्थः । एवमनण्वित्यादावपि । ननु अलोहितमच्छायमित्यत्र कथमिति चेन्न लोहितभिन्नलोहित-सदृशं छायास्त्यस्य तद्वस्तु च्छायं तद्भिन्नतत्सदृशमिति व्युत्पत्तिसंभवात् । ततश्चारोपापवादसंगतिं त्यक्त्वा निर्वाहकसंगत्या स्थूलभिन्नस्थूलसादृश्यैर्धर्मैरदृश्यत्वविरुद्धैः विरुद्धधर्माधारमिति । ननूक्तं श्रौतधर्म-निषेधान्नैवमिति चेन्न प्रक्षालनपङ्कन्यायापत्त्या श्रौतधर्मानिषेधात् । स्पष्टं चेदं विद्वन्मण्डने नन्वेव-मारोपापवादसंगतित्यागापत्तिरिति चेन्न ब्रह्मनिरूपणार्थं निर्धर्मसधर्मनिरूपकश्रुत्योर्निरूपणम् । सत्यं ज्ञानमनन्तं ब्रह्मेति अथात आदेशो नेति नेतीति निर्धर्मकब्रह्मनिरूपणानन्तरं किं ब्रह्मनिरूपणनिर्वाह-प्रयोजकमिति जिज्ञासया 'यतो वा इमानि भूतानि जायन्ते' इत्यादिभिः सधर्मकनिरूपणात् निर्वाहक-संगतिस्वीकारात् । ननु क्वोक्तेयं संगतिरिति चेन्न आरोपापवादवत् अथातो ब्रह्मजिज्ञासेति प्रतिज्ञाय जन्माद्यस्यैत्यत्रैवेति । किं च वेदस्तुतौ 'कथं चरन्ति श्रुतयः साक्षात्सदसतः परे' इति राजप्रश्ने 'बुद्धीन्द्रियमनःप्राणान् जनानामसृजत्प्रभुः' इतिशुकोत्तरात् । विद्वन्मण्डने च 'जगदप्रत्ययाश्रितः इति कारिकांशप्रतिपादके तथा हि जगदप्रतीतिप्रसङ्गान्नहि जगत्प्रतीतिः श्रुतिसिद्धा येन पूर्वं बोधयति पश्चान्निषेधतीत्युच्येत अनधिगतार्थगन्तृत्वलक्षणप्रामाण्यभङ्गप्रसङ्गात् । न च वेदेषु सर्वस्याधि-गतत्वेनासंभव इति वाच्यम् । लोकेऽनधिगतेत्यादेर्लक्षणत्वान्नासंभवः । नन्विमानि भूतानीति लोके प्रयोगात्कथं लोके अनधिगतार्थत्वमिति शङ्क्यम् । 'प्रधानाज्जगज्जायते' इति सांख्यानां प्रधानकारण-वादः नैयायिकानां परमाणुकारणवादः शांकराणां मायाशबलकारणवादः इति यतो वै जायन्त इत्यस्यानधिगतत्वात् तदन्तःपातिन इमानि भूतानीत्यस्यापि लोकेऽनधिगतत्वात् भक्तिमार्गान्तः-पातिनां ज्ञानपूजादीनां भक्तित्ववत् । भक्तिहंसे स्पष्टम् । ननु अग्निर्हिमस्य भेषजमित्यत्रानधिगतांशा-भावात् कथं निर्वाह इति चेन्न अर्थस्य भगवदवयवत्वेनाधिदैविकत्वेन लोकानधिगतत्वात् । शब्द इति चेदित्यादिसूत्रे वक्ष्यतेऽग्रेऽत्रैव पादे किं तु लोकसिद्धा तथा च तत्र विचित्रजगत्कृतौ कर्त्रपेक्षायां कर्तारमेवोपदिशति सधर्मनिरूपिका श्रुतिरिति न तु लोकसिद्धमेव जगदनूद्य तत्र कर्तारं बोधयित्वा पश्चान्निषेधतीत्यारोपापवादमाशङ्क्य ग्रन्थः । प्रकृतमुच्यते । ननु गीतायां 'मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव' इति पदार्थानां भेदः प्रतीयते ततश्च भारवाहकत्वापत्तिरिति चेत्तत्राहुः पदार्थेति । प्रोतेति । प्रकर्षेणोतं उद् शब्दे भ्वादिरात्मनेपद्यनिट् शब्दितमेतावन्मात्रेण भवति ओतप्रोतत्वमात्रेण

भाष्यप्रकाशः ।

पुनर्विचारस्तु विरुद्धधर्माधारत्वसमर्थनायेति प्रागेवोक्तम् । पदार्थभेदस्तु प्रोतत्वमात्रेणैव न त्वोतप्रोतत्वेन । तस्योपादानकारणतागमकत्वात् ।

'नैतच्चित्रं भगवति ह्यनन्ते जगदीश्वरे ।
ओतप्रोतमिदं यस्मिंस्तन्तुष्वङ्ग यथा पटः' ॥

इति श्रीभागवतवाक्येन तथा निश्चयात् । नातो भारवाहकत्वापत्तिः । अत्र 'न तदश्नोति' इत्यस्य विकरणव्यत्ययेन भोजनार्थग्रहणेऽन्यकर्तृकतन्निषेधः पुरुषभोग्यां प्रकृतिं व्यावर्तयति । अन्यकर्मकतन्निषेधश्च सर्वभक्षयितारं कालम् । पदव्यत्ययेन व्याप्त्यर्थग्रहणे तु द्वावपि निषेधौ व्यापकत्वं

रश्मिः ।

पदार्थभेदः कुतो नेत्यतो हेतुमाहुः तस्येति ओतप्रोतत्वस्य । तथेति इदमर्थनिष्ठौतप्रोतत्वस्य जगदीश्वरनिष्ठसमवायिताबोधकत्वनिश्चयात् । तथा चैतादृगोतप्रोतधारणं न पृथिव्यादिसाधारणमिति हेतोरपि न साधारणत्वमिति सुसाध्यमनेन हेतुनाऽक्षरस्य परमात्मत्वमिति भावः । सिद्धमाहुः नात इति तथा च तन्तुषु पटः शब्दितः पामरैरतः शास्त्रादिना शब्दित इत्युक्तम् । ओतप्रोतशब्दाभ्यां यथा तथा यदिदं सर्वमित्युक्तं पृथिव्यादिकं पूर्वब्राह्मणोक्तं उत्तरब्राह्मणोक्तम् । दिव उपरि वर्तमानं पृथिव्या अधो वर्तमानं भूतं भविष्यद्भवच्च कैश्चिदोतमीश्वरकृतमिदमिति शब्दितं शाक्षरीश्वरसमवेतमिति शब्दितं प्रकर्षेणोतं प्रोतं ब्रह्मणः साकारत्वान्न तु किंचिदन्यद्धारकारकमित्युक्तम् । किं च स्वशब्दाद्द्युभ्वाद्यायतनं तत् समवायि अम्बरान्तधृतिमदिति यावत् । एवं द्युभ्वाद्यायतने ब्रह्मणि सिद्धो यो धर्मोऽम्बरान्तधृतिरूपः सोऽत्राक्षरत्वे साध्ये हेतुरिति द्युभ्वेत्यादिभाष्यार्थः । भाष्ये । ननु पूर्वपादेधिकरणत्रयेण भोगप्रसाधनाज्जीवजडयोर्भोक्तृभोग्यत्वाभ्यां न तदश्नोतीति श्रुत्याक्षरमन्यदेव ब्रह्मधर्मत्वेनोपास्यमित्याशङ्क्याहुः न तदश्नोतीति । द्युभ्वादीनां पतनं तस्य प्रतिबन्धको यो व्यापारो धृतिस्तया कृत्वा न तदश्नोतीत्यादिः । तदुक्तं 'स्वरूपं द्विविधं चैव सगुणं निर्गुणं तथा' इति । इदं सुषुप्तिसामयिकं 'मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव' इति गीतायाः । पूर्वपादेधिकरणत्रयेण भोक्तृरूपं संपत्तिसामयिकं पूर्वब्राह्मणोक्तमिति । इदं श्रीगोस्वामिमतमुत्तरसार्धाध्यायेऽस्यार्थस्योक्तेः । भाष्यप्रकाशे त्वाचार्यमतेन पटतन्तुवद्धारवाहकत्वं वारितम् । स्वमतेन वा वारितम् । अन्यथेति सधर्मकनिर्धर्मकयोः स्वाप्ययसंपत्ती अपेक्ष्य रूपयोरङ्गीकारत्वम् । प्रकारेऽर्थादनङ्गीकारस्य प्रकारत्वे । भवेदिति संपत्तिसामयिकब्रह्मनिरूपणे तत्र श्रावितानतिप्रश्न्यत्वातिक्रमाद्भवेत् । स्वाप्ययसामयिकरूपविषयकप्रश्ने तु तस्यानतिप्रश्न्यत्वाभावात् न मूर्धविपातः । प्रकृते । स्वाचार्यमतेनार्थमाहुः अत्र नेति । अश भोजन इत्यस्य क्र्यादित्वेन स्वादिश्नौश्नाभावात् श्नाविकरणव्यत्ययः । अन्येति कश्चन इत्यत्र कोप्यन्यो नाश्नातीति सर्वनाम्नि क इति सर्वेषां नाम सर्वनाम तत्कर्तृकभोजननिषेधः । पुरुषेति प्रकृतेरेवान्यभोग्यत्वेन तत्संसृष्टस्य ब्रह्मणोत्र भोग्यत्वेन तन्निषेधः प्रकृतिसंसृष्टतां व्यावर्तयति तथा च प्रकृत्यसंसृष्टं संसारी जीवोऽन्यो वा न प्राश्नातीत्यर्थः । अन्य इति तत् ब्रह्म न कंचन सर्वनामानं अश्नातीत्यर्थे उत्तरभाष्यानुसारिणि सर्वभक्षयितारमिति विरुध्यतेऽतः कं ब्रह्माणं संवत्सरं नाश्नातीत्यर्थस्तन्मते । 'सदेव सोम्येदमग्र आसीत्' इत्यत्र कालस्य भगवत्त्वात् । स्वं स्वयं नाश्नाति । पदेति अश्नुते इति परस्मैपदस्थाने आत्मनेपदम् । अशूङ् व्याप्तौ स्वादिरात्मनेपदी वेट् । अश भोजने क्र्यादिः परस्मैपदी सेट् । अतिमहत्त्वाद् व्यापकत्वं कस्याप्यव्यापकत्वे तदभावम् । ननु न कोपि कमपि च

भाष्यप्रकाशः ।

तदभावं च बोधयन्तौ विरुद्धधर्माश्रयत्वं वस्तुपरिच्छेदराहित्यं च तस्य समर्थयतः । अतो न तदश्नोतीत्यादिना ब्रह्मापेक्षयाधिकस्य ब्रह्मापेक्षयान्यस्य च निराकरणेन, द्युभ्वाद्यायतनाधिकरणे सिद्धस्य तत्स्वरूपात्मकतया तद्धारकत्वस्य हेतोर्मुख्यतया मूर्धविपाताभावाय परिगृहीतत्वात् । नच श्रोतृदोषादवक्तव्यत्वम् । तस्यास्तथात्वेऽपि ब्रह्मवित्त्वेनाधिकारित्वात् । पूर्वमतिप्रश्ने ब्रह्मज्ञत्वाभावसंभावनया मूर्धविपातस्योक्तत्वेन गार्ग्या अब्रह्मवित्त्वे उक्तप्रश्नान्मूर्धविपतनं च भवेत् । तत्तु न जातमतस्तस्या अधिकारित्वेन तां प्रत्युपदेशो नायुक्त इति सर्वाधारत्वेनात्र ब्रह्मैवोपदिश्यते । न ह्यन्यो निरङ्कुशः सर्वाधारो भवितुमर्हतीत्युक्तत्वात् । नन्वेवं सति ब्रह्मपदस्य कुतो नोक्तिरिति शङ्क्यम् । परोक्षेण कथनार्थमक्षरपदात् । तत्रापि गमकं न तदश्नोति कथनेत्यादिना ब्रह्मधर्मोपदेशः । अत एव ब्रह्मवादस्यापि न समाप्तिः । तस्माद् बाधकानामभावात् साधकानां सत्त्वाच्चाक्षरं परमात्मैवेत्यर्थः ।

रश्मिः ।

व्याप्नोति इत्यसंगतमत आहुः विरुद्धेति । तथा च व्यापकविरुद्धो धर्म एवोऽव्यापकत्वं यः न कमपि पदार्थं व्याप्नोतीति वस्तुभ्यः परिच्छेदस्य राहित्यम् । न च वृद्धिह्रासभाक्त्वमित्यादिसूत्रविरोध इति शङ्क्यम् । 'यस्मिन् विरुद्धगतयो ह्यनिशं पतन्ति' इति षष्ठस्कन्धात् । ब्रह्मापेति विकरणव्यत्यये सर्वेषां ब्रह्मापेक्षयाऽल्पत्वेनातिमहतो भोगाभावे आधिक्यं निराकरोति पदव्यत्यये विरुद्धधर्माधारत्वान्न ततोधिकः कश्चन । द्वितीयनिषेधपक्षमाहुः ब्रह्मेति । विकरणव्यत्यये तद्ब्रह्म कंचनान्यं नाश्नाति ब्रह्मातिरिक्ताभावादित्येवमन्यन्निराकरोति पदव्यत्यये कंचनान्यं न व्याप्नोति ब्रह्मातिरिक्ताभावात् इत्येवमन्यं निराकरोति । मूर्धेति । ब्रह्मात्मकत्वेन ज्ञानेऽप्ययैकभावेक्षणाद् ब्रह्मज्ञत्वे पुष्टिरपि भवतीति मूर्धपातकस्य ब्रह्मत्वेपि वारणम् । न च भारेत्यादिपाठस्तदा तु श्रुतिं व्याख्यायेत्यारभ्य परमात्मैवेत्यन्तस्य भाष्यस्यार्थमाहुः अयमर्थ इति । तथा निश्चयेति अत्रैक एवेत्यादि भाष्यार्थस्य विधारकत्वेन निश्चयात् । श्रुतिं व्याख्याय सिद्धं हेतुमाहेति भाष्ये का श्रुतिः किं तस्या व्याख्यानं क सिद्धो हेतुस्तमाहेत्याकाङ्क्षायां द्युभ्वादीत्यारभ्यार्हतीत्यन्तं भाष्यं तद्विवरामासुः न च भारेति । अत्र न तदश्नोति तस्या व्याख्यानं चाहुः । अत्र न तदश्नोतीत्यारभ्य समर्थयत इत्यन्तेन ग्रन्थेन । क सिद्धो हेतुरित्याशङ्क्य न तदिति भाष्यस्य व्याकृतत्वेन द्युभ्वादीति भाष्यविवरणमाहुः अतो नेति श्रुतेर्व्याख्यातत्वादित्यत इत्यस्यार्थः । प्रष्टुः स्त्रीत्वादिति पूर्वपक्षग्रन्थमपाकुर्वन्ति स्म न चेति । श्रोतुः स्त्रीत्वरूपाद्दोषात् । अन्यथेति भाष्यं विवरांचक्रुः पूर्वमिति । प्रथमगार्गीब्राह्मणे ब्रह्मज्ञत्वाभावसंभावनया मूर्धविपातस्योक्तत्वेनेति 'कस्मिन्नु ब्रह्मलोका ओताश्च प्रोताश्च' इति प्रश्नेनाब्रह्मज्ञत्वसंभावनया मातिप्राक्षीः माते मूर्धा व्यपतदित्यनेनोक्तत्वेन न हि ब्रह्मज्ञा एवं पृच्छेत् ब्रह्मलोकपर्यन्तं ब्रह्म । आनन्दमीमांसायां 'ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्दः' इति ब्रह्मलोकादुत्तरं ब्रह्माभावात् । उक्तेति द्वितीयगार्गीब्राह्मणोक्तप्रश्नात् । उपदिश्यत इति । तेन भाष्यस्यान्यथापदस्यात्र ब्रह्मोपदेशाभाव इत्यर्थो ज्ञापितः ब्राह्मणाज्ञया प्रश्नः कृतो गार्ग्या अतो मूर्धविपाताभाव इति टीकायामुपनिषद्व्याख्यातारः । हेतुमुखेन ह्यन्य इति भाष्यं विवृण्वन्ति स्म न ह्यन्य इति । जीवो वा जडो वा नहि इत्याचार्यैर्भाष्य उक्तत्वात् । परोक्षेणेत्यादिभाष्यमवतारयांबभूवुः नन्वित्यादि । परोक्षेणेति अक्ष्णः परमिति विग्रहात् सर्वमप्यध्यात्ममाधिदैविकं च परोक्षं तेन रूपेण ब्रह्मकथनार्थम् । 'परोक्षवादो वेदो यम्' इत्याविर्होत्रेण 'परोक्षं च मम प्रियम्' इत्यत एवोक्तं भगवतापि । अन्येति भाष्यं

भाष्यप्रकाशः ।

अत्र शंकराचार्यास्तु, अक्षरशब्दस्य वर्णे प्रसिद्धत्वादत्रोङ्कार एव व्यावर्त्य इत्याहुः । तद्-भास्कराचार्यैरेवं दूषितम् । ॐकारोऽत्र न वक्तुं शक्यः । अलोहितमच्छायमित्येवमादिनिषेधानुपपत्तेरिति ।

भिक्षुणा तु द्रव्यधर्माणां स्थूलत्वादीनां प्रणवे प्रसक्त्यभावेन तन्निषेधानौचित्याद् वर्णसामान्यवाचिनोऽक्षरशब्दस्य प्रणवरूपवर्णविशेषवाचिताया ॐमित्यादिविशेषणानां क्वाप्यदर्शनाच्चेत्यप्युक्तम् ।

यत्तु वाचस्पतिमिश्राः । अत्र प्रधानस्य पूर्वपक्षकोटिनिक्षेपेण परमात्मनः सिद्धान्तीकरणे अम्बरान्तधृतिरूपेण हेतुना प्रधाननिराकरणासंभवः । तस्यापि सांख्यैरुपादानत्वेन सर्वाधारत्वाङ्गीकारात् । अथ नाधिकरणत्वमात्रं धृतिः, किंतु प्रशासनाधिकरणता, तदा अक्षरं प्रशासनादिति सूत्रकारो वदेत् । तावतैव प्रधानाऽपाकरणसिद्धेः । तस्माद् वर्णाक्षरनिराक्रिया सूत्रार्थः । नच स्थूलत्वादीनां वर्णेष्वप्राप्तेरस्थूलमित्यादिनिषेधानुपपत्तिरिति शङ्क्यम् । निषेधे प्राप्तिपूर्वकत्वनियमस्याभावात् । नान्तरिक्षे न दिवीत्यग्निचयननिषेधस्याप्राप्तावपि दर्शनात् । अतो न किंचनैतदित्याहुः ।

तन्मन्दम् । गत्यन्तरसद्भावे नित्यानुवादत्वाङ्गीकारस्यासंगतत्वात् । चयनस्थलेऽपि

रश्मिः ।

विवरामासुः तत्रेति अक्षरपदेन ब्रह्मकथने । सोप्यन्यनिराकरणार्थं प्रकृत्यादिनिराकरणार्थम् । अत एवेति ब्रह्मपदाभावादेव न ब्रह्मवादः किं तु सुषुप्तिसाक्षिप्राज्ञवादः न तदश्नोति कश्चनेति श्रुतेः ततश्चरमवर्णाभावाच्च चरमवर्णध्वंसरूपा समाप्तिः । तस्मादिति व्याख्येयं भाष्यीयं पदम् । बाधकानां जडजीवप्रकृतीनाम् । साधकानामम्बरान्तधृत्यादीनामेवकारः 'स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि' इति प्रमाणात् । निषेधेति वर्णे लोहितत्वाद्यभावात् प्राप्तिपूर्वकनिषेधानुपपत्तेः । भिक्षुणेति भगवता । प्रणवेति चतुर्थ्यन्तमिदं पदम् । तत्सिद्ध्यर्थमित्यर्थः । पूर्वपक्षेति वर्णः पूर्वपक्षकोटौ यद्यपि शंकरभाष्ये तथापि ।

'युक्तिभिरतिशिथिलाभिः समादधानो दृढान्दोषान् ।
वाचस्पतिरपि भाष्ये व्याख्याव्याजेन दूषणं ब्रूते' ॥

इति श्रीपुरुषोत्तमज्ञानात् साधु । मन्दमिति स्वैरं भाषणम् । गत्यन्तरेति सिद्धान्तोक्तरीतिर्गत्यन्तरम् । नित्येति 'उभयस्य युगपत्प्राप्तौ इतरव्यावृत्तिपरो यो विधिः स परिसंख्याविधिः' यथाऽत्र ह्येवावपन्ति इति । अत्र पवमानस्तोत्रस्य तदन्यस्तोत्रस्य च युगपत्प्राप्तौ सत्यामेवकारेण पवमानातिरिक्तस्तोत्रव्यावृत्तेरभिधानात् प्रयोजनाभावे परिसंख्याया नित्यानुवादत्वम् । 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते' इत्यत्र ह्यर्थवादे फलतः परिसंख्या चयने गर्दभाभिधानीनिवृत्तिः फलं तत्फलं लिङ्गतोपि भवतीति तत्र तात्पर्यं न कल्प्यते यदा तदा नित्यानुवादत्वमेवं प्रकृतेपि सूत्रे 'सहोवाच एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलम्'इत्याद्यर्थवादे यो वा एतदक्षरमविदित्वा गार्गि अस्मिन् लोके जुहोति ददाति तपस्तप्यति बहूनि वर्षसहस्राण्यन्तवानेवास्य लोको भवति इत्युक्तविधेर्यदि वर्णनिवृत्तिः प्रकृतिनिवृत्तिश्च 'ॐमित्येकाक्षरं ब्रह्म' 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः' इति जैमिनिसूत्रैकदेशेन चानित्यस्याक्षरस्य 'जन्माद्यस्य यतः' इति सूत्रे शंकरभाष्य एव निवृत्तायाः प्रकृतेश्च

## सा च प्रशासनात् ॥ ११ ॥

ननु कश्चिद्वाक्ये विधारणं ब्रह्मधर्मत्वेनाश्रितमित्यन्यत्रापि न तथाश्रयितुं शक्यते। नियामकाभावादित्यत आह। सा च विधृतिरत्रापि वाक्ये ब्रह्मधर्म एव। कुतः। प्रशासनात्। 'एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिवी

---

भाष्यप्रकाशः।

देवप्रभृतीनां कर्माधिकारस्याग्रे स्वाप्यत्वात् तेषां लोकान्तरेऽपि करणसामर्थ्यसत्त्वेन तद्धारणार्थत्वात् सिद्धान्तोक्तरीत्या सुखेन प्रधानवारणसंभवेन गत्यन्तरस्य सत्त्वादिति। अतो वृथाऽयं प्रयास इति ध्येयम्। अत्रैवं प्रयोगः सिध्यति। अस्थूलादिवाक्योक्तमक्षरं परमात्मैव। इतराभोग्यत्व इतराभोक्तृत्वे च सत्यम्बरान्तधारकत्वात्। यन्नैवं तन्नैवमिति। अश्नोतेर्व्याप्त्यर्थकत्वे तु विरुद्धधर्माधारत्वे सति तथात्वादिति ॥ १० ॥

सा चा प्रशासनात् ॥ ११ ॥ सूत्रमवतारयन्ति नन्वित्यादि। कश्चिद्वाक्ये इति यस्मिन् द्यौरिति वाक्ये। व्याकुर्वन्ति सा चेत्यादि। श्रुतिव्यतिरिक्तशास्त्रसिद्धं यन्मूलं कारणं तदत्र विषयवाक्य आकाशत्वेनोक्तम्। तद्वारणस्यान्यधर्मत्वं न संभवत्येव। तथापि, 'मूले

रश्मिः।

व्यावृत्त्योः प्रयोजनत्वाकल्पने नित्यानुवादो विषयवाक्यम्। अग्र इति तदुपर्यपीत्यधिकरणे। प्रधानेति। अभिन्ननिमित्तोपादानत्वस्य ब्रह्मधर्मत्वेन प्रधानस्य समवायित्वाभावात् तथा संभवेनाम्बरान्तधृतेरित्यत्र पतनप्रतिबन्धकव्यापारो धृतिर्धारणं तत्रैव धृतिपदस्य शक्तेः न तु समवायित्वं धारणमित्याशयेन न तदश्नोति कश्चनेति मुख्यतया परिगृहीतो भवतीति भाष्यं तत्सिद्धं हेतुमाहुः अथवा सिद्धं हेतुमाहुरितरेति। श्रुतिं व्याख्याय सिद्धं हेतुं द्युभ्वाद्यायतनाधिकरणे सिद्धो धर्मोऽत्र हेतुस्तद्रूपमाहेति भाष्ययोजने न तदश्नोतीति श्रुतिं व्याख्याय तदर्थं विशेषणीकृत्य द्युभ्वाद्यायतनाधिकरणे सिद्धो धर्मो द्युभ्वादिरूपाम्बरान्तस्य तदात्मकस्य धारकत्वं समवायित्वं तस्मादित्येवं हेतुः समर्थितः। एवं द्वितीयाभासानुरोधिहेतुः समर्थितोपि प्रथमाभासेनेदानीं समर्थ्यते। तथाहि समवायसंबन्धस्थले न तदश्नोतीति श्रुतिबलादभोजकः श्रुतिसिद्धो धर्मो योगरूपो यथा श्रीगोवर्धनप्रसङ्गे 'गोपाये स्वात्मयोगेन' इति। योगश्चाश्रयताख्यो धारणपदवाच्यो निवेश्यते। एवं चाम्बरान्तधृतेरित्येव हेतुः यन्नैवमिति यथा घटः ॥ १० ॥

सा च प्रशासनात् ॥ ११ ॥ श्रुतीति सांख्यशास्त्रम्। तथा च सूत्रं 'प्रधानाज्जगज्जायते' इति आनुमानिकमित्याद्यधिकरणेऽस्य मतस्य श्रुतिव्यतिरिक्तशास्त्रत्वं वक्ष्यते। किं च यदत्र परव्याख्यानं पूर्वं गार्गीब्राह्मणे वायोरोतत्वप्रोतत्वप्रश्ने आकाश एवेत्युत्तरं अत्राकाशः पञ्चीकृत इति। तथाक्षरब्राह्मणे कस्मिन् वा आकाश ओतश्च प्रोतश्चेति प्रश्ने आकाशपदमव्याकृताधिष्ठानवाचकं तदेवाक्षरं परं ब्रह्मेति। तदिदं श्रुतिव्यतिरिक्तशास्त्रसिद्धम्। स्वबुद्धिपरिकल्पितशास्त्रार्थरूपम्। वैश्वानराद्यधिकरणे ब्रह्मणो विरुद्धधर्माश्रयत्वस्योपपादनात्। आकाशत्वेनेति अत्रैवं बृहदारण्यकभाष्यं शांकरम्। कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति आकाशमेव तावत्कालत्रयातीतत्वाद् दुर्वाच्यं ततोपि कष्टतरमक्षरं यस्मिन्नाकाशस्यौतप्रोतत्वं वाच्यमतो दुर्वचं प्रश्नं मन्यते गार्गीति तद्दोषद्वयमपि परिजिहीर्षन्नाह सहोवाच याज्ञवल्क्यः एतद्वैतदक्षरं गार्गि पृष्टवत्यसि कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति किं तदक्षरं न क्षीयते न क्षरतीति वा अक्षरमिति। न क्षमिति। न हि मूलमन्याश्रितं भवतीति भावः।

विधृते तिष्ठतः' इति प्रशासनेन विधारणमन्यधर्मो भवितुं नार्हति । अप्रतिहताज्ञाशालेर्ब्रह्मधर्मत्वात् । तस्मादक्षरं ब्रह्मैव ॥ ११ ॥

अन्यभावव्यावृत्तेश्च ॥ १२ ॥

ननूक्तमुपासनापरं भविष्यतीति । तत्राह । अन्यभावव्यावृत्तेः । अन्यस्य

भाष्यप्रकाशः

मूलाभावादमूलं मूलम्' इति सांख्यप्रवचनसूत्रोक्तन्यायेन द्वितीयवाक्योक्ताकाशमपि पूर्ववाक्योक्ताकाशत्वेनादृत्य, तस्यैवाक्षरत्वं चादृत्य तस्य स्वाधारत्वेनाम्बरान्तधृतेरन्यधर्मत्वं प्रहिलतया यदुच्यते, सा त्वयाऽन्यधर्मत्वेनाभ्युपगम्यमानापि विधृतिर्ब्रह्मधर्म एव । न हि तत् स्वसामर्थ्येन विधरति किंत्वेतस्यैवेति श्रुत्युक्तशासनसामर्थ्येन । यथा स्वर्गात् पततस्त्रिशङ्कोर्विधृतिस्तिष्ठेति विश्वामित्राज्ञया जायमाना तद्धर्म एव, न तु त्रिशङ्कुधर्मस्तद्वत् । नच 'अक्षरं प्रशासनात्' इति सूत्रापत्तिः । प्रहिलतयाऽन्यधर्मत्वेनापाद्यमानाया एव तद्धृतेः प्रशासनहेतुकताया ग्रहिलतावारणार्थं विवक्षितत्वेनाम्बरान्तधृतिपदस्यावश्यकतया तदापत्त्यभावादित्यर्थः ॥ ११ ॥

अन्यभावव्यावृत्तेश्च ॥ १२ ॥ सूत्रमवतारयन्ति नन्वित्यादि । प्रशासनहेतुकत्वं विधरण उपासनार्थमारोपितं भविष्यतीत्यर्थः । सिद्धान्तं व्याकुर्वते अन्यस्येत्यादि । कार्यकारणभावमेदेनेत्यस्य अब्रह्मत्वे हीत्यनेनान्वयः । ततश्चायमर्थः । एतद्वै तदक्षरं गार्गि अदृष्टं द्रष्टृश्रुतं श्रोत्रमतं

रश्मिः ।

द्वितीयेति यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते आकाश एव तदोतं च प्रोतं चेति द्वितीयं वाक्यम् । पूर्वेति पूर्वं वाक्यं पूर्वोक्तमेव । आदृत्येति यदूर्ध्वं याज्ञवल्क्येत्यादिप्रश्नः प्रतिवचनं चोक्तस्यैवार्थस्यावधारणार्थं पुनरुच्यते न किंचिदपूर्वमन्यान्तरमुच्यते इति भाष्यात् । आदृत्येति बृहदारण्यकभाष्योपन्यासे उक्तमेतत् । स्वेति स्वमक्षरमाधारमात्रं यस्य तत्त्वेन । स्वस्याधारत्वेनेति वा । अम्बरान्तधृतेः स्वामिन्नायाः अन्यधर्मत्वं शबलितधर्मत्वं प्रधानधर्मत्वं वा । सूत्रभाष्ये सा चाम्बरान्तधृतिः परमेश्वरस्यैव कर्म नाचेतनस्य प्रधानस्य प्रशासनं संभवति न ह्यचेतनानां घटादिकारणानां मृदादीनां घटादिविषयं प्रशासनमस्ति इत्याकारके प्रहिलतयौतप्रोतत्वकथनेन विस्पष्टं समवायित्वप्रतीतावपि स्मृत्युपष्टम्भायां स्वकल्पितमताग्रहवादितया यदुच्यते । सा चेति भाष्यं विवरांचक्रुः सा त्वयेति । अप्रतीतिभाष्यार्थमाहुः नहीति । तत् आकाशम् । शासनसामर्थ्येन आज्ञासामर्थ्येन । एतेन योगोपि शासनाश्रयतास्योऽभोजकः संबन्धः । सूत्रेति प्रशासनस्यैव मुख्यधर्मत्वाल्लाघवाच्च । शासस्य सूत्रानुसारियुक्तिमत्त्वादाहुः प्रहिलेति । ननु गौरवम् । कथमप्रामाणिकं सोढव्यमिति चेन्न प्रथमोपस्थितहेतुलाभे मानाभावात्तत्र भोजकसंबन्धवारणाय सा चेत्यादिसूत्रावश्यकत्वात् गौरवाभावात् ॥ ११ ॥

अन्यभावव्यावृत्तेश्च ॥ १२ ॥ प्रशासनेति भावप्रत्ययरहितः पाठः । अन्यस्येत्यादीति अन्यस्य जीवस्य जडस्य च । अब्रह्मत्वेति ब्रह्मभिन्नब्रह्मसदृशस्य जीवादेः सत्यज्ञानानन्दत्वेन सदृशस्य धर्मं इत्यर्थः । तस्माद्ब्रह्मधर्मस्यास्य विचारे व्यावृत्तेः । तेन शंकराचार्योक्तोऽन्यभावाद्व्यावृत्तिरितिपञ्चमीतो निराकृतोनभिधानात् । न च सुप्सुपेति समासः अगतिकगतित्वात् । अन्वय इति पदपदार्थसंबन्धः स चेत्यस्य । कार्यकारणयोर्याभ्यां धर्माभ्यां भेदेन कार्यस्याब्रह्मत्वं भवति मायाविशिष्टत्वात् परमात्मनस्तथा मायाविशिष्टत्वाभावात् । तेन धर्मेण हेतुनाऽब्रह्मणि ब्रह्मभिन्ने ब्रह्मत्वेनोपासना भवति

भावोऽन्यभावः । अब्रह्मधर्म इति यावत् । तस्यात्र व्यावृत्तेः । अब्रह्मत्वे हि ब्रह्मत्वेनोपासना भवति । कार्यकारणभावभेदेन । न ह्यत्र तादृशो धर्मोऽस्ति ।

चकाराद् 'यो वा एतदक्षरमविदित्वा गार्गि' इत्यादिना शुद्धब्रह्मप्रतिपादनमेव, नोपासनाप्रतिपादनमिति । तस्मादक्षरं ब्रह्मैवेति सिद्धम् ॥ १२ ॥

इति प्रथमाध्याये तृतीयपादे तृतीयमक्षराधिकरणम् ॥ ३ ॥

---

भाष्यप्रकाशः ।

मन्तविज्ञातं विज्ञातृ नान्यदस्ति द्रष्टृ नान्यदस्ति श्रोतृ, नान्यदस्ति मन्तृ नान्यदस्ति विज्ञात्रेतद्वै तदक्षरं गार्गि यस्मिन्नाकाश ओतश्च प्रोतश्चेत्याकाशधर्तर्यक्षरे द्रष्टृत्वादिचेतनधर्मकथनेन धरणे जडधर्मत्वव्यावृत्तेर्धरणस्य चाकाशौतप्रोतत्वरूपस्वरूपबोधनेन जीवधर्मत्वव्यावृत्तेरक्षरस्याब्रह्मत्वनिवृत्तावब्रह्मणि ब्रह्मत्वेनोपासनाया वक्तुमशक्यत्वादिति । युक्त्यन्तरमाहुः चकरादित्यादि । यो वा एतदक्षरमविदित्वा गार्गि अस्मिँल्लोके जुहोति ददाति तपस्यत्यपि बहूनि वर्षसहस्राण्यन्तवानेवास्य स लोको भवति । यो वा एतदक्षरमविदित्वा गार्ग्यस्माल्लोकात् प्रैति स कृपणोऽथ यो वा एतदक्षरं गार्गि विदित्वाऽस्माल्लोकात् प्रैति स ब्राह्मण इति श्रावणं चकारेण संगृह्यत इत्यर्थः । अत्र च जडजीवसंबन्धिनां विरुद्धधर्माणामाशङ्क्य निराकरणादुपोद्घातसंगतिः । किंवाक्षरोपासनं ज्ञानमार्गीयाणां केषाञ्चिन्मुख्यं 'ये त्वक्षरमनिर्देश्यम्' इत्यादिगीतावाक्यात् । भक्तिमार्गीयाणां त्वक्षरज्ञानमङ्गत्वेन प्रविशतीत्यग्रे अक्षरधियामित्यन्यत्र वाच्यं तेनेदं मार्गद्वयोपयोगीति तदुभयोत्तरं प्रसङ्गत उक्तम् । तेनात्र क्रमनियामिका प्रसङ्गोपि संगतिरिति । आशङ्क्य

रश्मिः ।

प्रकृते तु तादृशोऽब्रह्मत्वसाधकः कार्यकारणयोर्भेदसाधकश्च धर्मो न हि दृश्यत इति ह्यब्रह्मत्वेनेत्यादिभाष्यार्थः । विवरामासुः तत्तश्चेति । अब्रह्मत्वनिवृत्तावित्यन्तेन ग्रन्थेन तस्यात्र व्यावृत्तेरिति भाष्यं विवृतम् । अब्रह्मत्वेनेत्यादि भाष्यं विवरांबभूवुः अब्रह्मणीति । अब्रह्मत्वेन धर्मेणाब्रह्मणि उपासना भवति ब्रह्मत्वेनोपासना भवति तस्या वक्तुमशक्यत्वं न हि तादृशो धर्मोत्रास्ति ततश्च धर्म्युपासनाविषयो नास्तीति तस्मादित्यर्थः । एवमब्रह्मणि ब्रह्मत्वेनेति शेषं पूरयित्वाऽब्रह्मत्वेनेत्यादिभाष्यं विवृतम् । अधुनाऽब्रह्मत्वेनेति भाष्यं शेषं विना व्याख्यायते व्यासोस्माकं गुरुरिति व्याससूत्रवद्भाष्यस्य सर्वतोमुखत्वात् जगतो ब्रह्मात्मकत्वेन तस्याब्रह्मत्वेनोपासना भवति उपासनाया अन्यधर्मविशिष्टविषयविषयिणीत्वात् तादृश अब्रह्मधर्मो ह्यत्र नास्ति यादृशेन धर्मेणोपासना भवतीति । प्रैतीति म्रियते । श्रावणमिति । फलनिन्दयोः श्रावणम् । अनुक्तसमुच्चये चकारः । न च श्रुतौ विदित्वेति वेदनमुपासनमिति नोपासनेति भाष्यं कथमिति शङ्क्यम् । वेदनं ज्ञानम् । उपासनोप समीपे स्थित्वा यथायोग्यकरणम् । इति तयोर्भेदात् । अत्र चेति एतदुपपादितमक्षरमित्यादिसूत्रस्थभाष्यप्रकाशे पुनर्विचारस्तु इत्यादिभाष्यप्रकाशरश्मौ । उपोद्घातसंगतिरिति पूर्वपादस्थेनादृश्यत्वाद्यधिकरणेनास्य बुद्धिस्थोपोद्घातः संगतिः । आशङ्क्येति द्वितीयसूत्रेऽदृश्यत्वादिकमदृश्यत्वाद्यधिकरणेऽनुपपन्नं स्थौल्यादीनां सत्त्वेन दृश्यत्वादित्याशङ्क्य हेतोरम्बरान्तधृतेरम्बरान्तानां प्रशासनस्य धारणस्य तृतीयसूत्रेण सह ब्रह्मधर्मत्वस्य साधनात् । विरुद्धानामन्येषामपि स्थूलभिन्नस्थूलसदृशत्वादीनां ब्रह्मधर्मत्वेप्यदृश्यत्वं

## ईक्षतिकर्मव्यपदेशात् सः ॥ १३ ॥ (१।३।४)

पञ्चमप्रश्ने, 'एतद्वै सत्यकाम परश्चापरं च ब्रह्म यदोङ्कारस्तस्माद् विद्वानेतेनैकतरमन्वेति यथेकमात्र' इत्यादिना एकद्वित्रिमात्रोपासनया ऋग्यजुःसामभिर्मनुष्यलोकसोमलोकसूर्यलोकप्राप्तिपुनरागमने निरूप्यार्धचतुर्थमात्रोपासनया परं पुरुषमभिध्यायीत । स तेजसि परे संपन्नो यथा पादोदरस्त्वचेत्यादिना, परात् परं पुरिशयं पुरुषमीक्षत इति । तत्र संशयः—परपुरुषः परमात्मा ध्यान-

भाष्यप्रकाशः ।

निराकरणं च द्वितीयसूत्रे हेतोः साधनाज्ज्ञेयम् । एतेनाधिकरणेन परत्वं साधितम् । तेन स्थितिकर्तृत्वं तदाधारत्वं च पदार्थान्तरभूते प्रधाने आशङ्क्य तत्रातिव्याप्तिर्निवारितेति सैवाधिकरणसंगतिः ॥ १२ ॥

### इति तृतीयमक्षराधिकरणम् ॥ ३ ॥

ईक्षतिकर्मव्यपदेशात् सः ॥ १३ ॥ विषयवाक्यमुपन्यस्यन्ति । पञ्चमप्रश्न इत्यादि । पञ्चमप्रश्न इति आथर्वणानां प्रश्नोपनिषदः पञ्चमे प्रश्ने । ईक्षत इति वदतीति शेषत्रुटिर्वा । संशयस्तु ध्येयविषय इत्याहुः तत्रेत्यादि । परापरयोरुभयोरपि प्रकृतत्वं संदेहबीजम् । पूर्वपक्षमाहुः तत्रामुख्येत्यादि । अत्रोङ्कारेणोपायेन ब्रह्मोपासनार्थमोङ्कारस्य द्विविधब्रह्मरूपतामुक्त्वा तेनैवायनेनैकतरमन्वेतीत्येकतरप्राप्तिं प्रतिज्ञाय साधनैक्ये

रश्मिः ।

दिव्यचक्षुराद्यभावाज्ज्ञेयम् । चकारात्तृतीयसूत्रे उपासनमाशङ्क्य निराकरणं तत्र हेतुर्द्वितीयेति । हेतोः प्रशासनधारणस्य साधनात् तृतीयसूत्रे ब्रह्मधर्मत्वसाधनात् । तथा चोपासातः प्रधानादेः धारकत्वसंभवात् प्रशासनाधारकत्वेन धर्मेणोपासनाशङ्कोदेतीति तन्निराकरणमित्यर्थः । परत्वमिति परविद्याविषयत्वमक्षरत्वं तदेव परत्वं 'अथ परा यया तदक्षरमधिगम्यते' इतिमुण्डकश्रुतेः । ज्ञानिनामुपास्यमिदम् । भक्तानां तु तत्र स्थितमपि तेनात्राधिकरणेऽदृश्यत्वाधिकरणेऽग्निर्मूर्धेत्यादिना रूपोपन्यासादत्र च प्रशासनोपदेशात् निर्गुणब्रह्मसिद्ध्य 'न हि स्वबुद्ध्या वेदार्थं परिकल्प्य तदर्थं विचारः कर्तुं शक्यः' इति तु 'अथातो ब्रह्मजिज्ञासा' इत्यधिकरणभाष्यं समर्थितम् । अत्र ब्रह्मधर्मोक्तेश्चेति वक्तव्ये पूर्वपक्षेऽन्येषामुक्तेरेवं सूत्रितमन्यपदघटितम् ॥ १२ ॥

### इति तृतीयाधिकरणम् ॥ ३ ॥

ईक्षतिकर्मव्यपदेशात् सः ॥ १३ ॥ त्रुटिर्वेति वाकारोनादरे । अन्तःकरणं प्रति उक्तिसंभवात् 'भक्तं प्रति यदाकर्ण्य भक्तो निश्चिन्ततां व्रजेत्' इति । भक्तं प्रत्यप्युक्तिसंभवाच्च । विषयवाक्यार्थोऽग्रे वक्तव्यः इति तमुपेक्ष्य संशयग्रन्थार्थमाहुः संशय इति । ध्येयो विषयो यस्य । परापरयोरिति परं चापरं च ब्रह्मेति श्रुतेः । उक्तेति विषयवाक्यं तु भाष्य उक्तं तत्पूर्वपक्षे व्याचक्रुः । हे सत्यकाम शैब्येति संबोध्य भगवान् पिप्पलाद उक्त्वा वदतीत्यन्वयः । अथ हैनं शैब्यः सत्यकामः पप्रच्छ स यो ह वै तद्भगवन्मनुष्येषु प्रायणं तमोंकारमभिध्यायीत कतमं वाव स तेन लोकं जयतीति तस्मै स होवाचैतद्वै सत्यकामेत्यादिश्रुतेः । एवं पिप्पलादम् । तेनेति ॐकारध्यान-

१. विना[म्] ।

भाष्यप्रकाशः ।

कथं फलभेद इत्याकाङ्क्षायां भावनाप्रकारभेदस्य तत्र नियामकत्वं बोधयितुमेकद्वित्रि- रश्मिः ।

रूपेणैवायतनेनोपास्तिसाधनेन परापरयोरेकतरमित्यर्थः । भावनेति उपासनाप्रकारभेदस्य । उपासना मनोव्यापारः । एकेति तद्यथा एकतरमन्वेतीत्यस्या अग्रे स यद्येकमात्रमभिध्यायीतेति श्रुत्यैका-मात्राऽकाररूपैकमात्रा एकमात्रा मनसि विद्यते यस्योपासकस्य स एकमात्रः । नपुंसकत्वं छान्दसम् । न चैकमात्रमित्येवमभिध्यानकर्मेति शङ्क्यम् । मनसि संपन्नस्य ध्यानकर्मत्वात् । द्विमात्रेण मनसि संपद्यत इति वक्ष्यमाणत्वेनोंकारस्य करणत्वेन कर्मत्वाभावात् । न च संपत्तिकरणत्वेप्यभिध्यान-कर्मत्वमिति शङ्क्यम् । परं पुरुषमभिध्यायीतेति परपुरुषस्याभिध्यानकर्मत्वात् । एकमात्र अभिध्यायीते-त्यपि पाठः वर्णविकारो वाऽकारस्य मकार इति । अयं सिद्धान्ते पूर्वपक्षे त्वेकमात्रमोंकारमित्येवार्थः । अस्य शरीरं ब्रह्मविद्योपनिषदि ।

'ऋग्वेदो गार्हपत्यः पृथिवी ब्रह्म एव च ।
अकारस्य शरीरं तु व्याख्यातं ब्रह्मवादिभिः' ॥ इति ।

शरीरमप्युपास्यम् । स यदीत्यस्या अग्रे स तेनैव संवेदितस्तूर्णमेव जगत्यामभिसंपद्यते तमृचो मनुष्यलोकमुपनयन्ते स तत्र तपसा ब्रह्मचर्येण श्रद्धया संपन्नो महिमानमनुभवतीति । तेनाकारेण तूर्णं शीघ्रं मनुष्यलोकं जगत्यन्तर्गतं स द्विजाग्र्यः महिमानं विभूतिं सिद्धान्ते महिमानं शिवं महिमानमीशमिति श्रुतेः । महिमपदात्सर्वात्मभावोपि तादृशश्चेत् तृतीयाध्याये महिमपदस्य सर्वात्मभावे शक्त्युक्तेः । एवमेकमात्रोपासनया मनुष्यलोको व्याकृतः । अथ द्विमात्रोपासनया चन्द्रलोकप्राप्तिस्ततः पुनरावृत्तिश्चोच्यते तथा हि अथ यदि द्विमात्रेण मनसि संपद्यते सोन्तरिक्षं यजुर्भिरुन्नीयते सोमलोकं स सोमलोकविभूतिमनुभूय पुनरावर्तत इति । अस्यार्थः । यदि पुनर्द्विमात्रविभागज्ञो द्विमात्रेण विशिष्टमोंकारमभिध्यायेत् सैकमात्रके मनसि यजुर्मये सोमदैवत्ये संपद्यते एकाग्रतयात्मभावं गच्छति स एवं संपन्नो मृतोऽन्तरिक्षमन्तरिक्षाधारं द्वितीयमात्रानुरूपं द्वितीयमात्रारूपैरेव यजुर्भिरुन्नीयते सोमलोकं तत्र सोमलोके विभूतिमनुभूय मनुष्यलोकं प्रति पुनरावर्तते सिद्धान्ते सोन्तरिक्षं द्विमात्रेणो-न्नीयते विभूतिं न तु परपुरुषमतः पुनरावर्तते इत्यर्थः । अत्र ब्रह्मविद्योपनिषत् ।

'यजुर्वेदोन्तरिक्षं च दक्षिणाग्निस्तथैव च ।
विष्णुश्च भगवान् देव उकारः परिकीर्तितः' ॥ इति ।

इति सोमलोकप्राप्तिस्ततः पुनरागमनम् । अथ त्रिमात्रोपासनया लोकप्राप्तिरुच्यते पुनरागतिश्च यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये सामभिरुन्नीयते सूर्यलोकं स सूर्यलोके विभूतिमनुभूय पुनरावर्तते । इत्यनया परं पुरुषं प्रतीकान्तर्गतं प्रतीकेनाभिध्यायीत स तेजसि तृतीयमात्रारूपे तेजसि संपन्नो भवति सिद्धान्तेप्ययमर्थः । एवं ब्रह्मोपनिषत् ।

'सामवेदस्तथा द्यौश्चाहवनीयस्तथैव च ।
ईश्वरः परमो देवो मकारः परिकीर्तितः' ॥ इति ।

एवं जायस्व म्रियस्वेति तृतीयमार्गं निरूप्येत्यर्थः । अर्धचतुर्थेति यः पुनरर्धचतुर्थमात्रेणोमित्ये-तेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि परे संपन्नो यथा पादोदरस्त्वचा विनिर्मुच्यत एवं हैव स पाप्मना विनिर्मुक्तः सोथर्वभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते

विषयः आहोस्वित् विराट्पुरुषो ब्रह्मा वेति। तत्रानुकल्पप्रवाहपतितत्वात् ब्रह्मलोकं गतस्य तदीक्षणमेव च फलं श्रूयते। न हि परमपुरुषस्य ब्रह्मत्वे तज्ज्ञानमेव फलं भवति। तस्मात् विराट् ब्रह्मा वा अभिध्यानविषय इत्येवं प्राप्ते।

---

भाष्यप्रकाशः।

मात्रोपासनया तत्तल्लोकप्राप्तिपुनरागमने निरूप्यार्धचतुर्थमात्रोपासनया परे तेजसि संपत्तिं पापनिर्मोकं ब्रह्मलोकप्राप्तिं चोक्त्वाऽन्ते परपुरुषेक्षणं फलत्वेन वदति। तत्र परपुरुषध्यानस्य त्रिमात्रेणाप्युक्तत्वादर्धचतुर्थमात्रेण परपुरुषध्यानस्यापि तत्तुल्यकक्षत्वेनाशुख्यप्रवाहपतितत्वात् तत्प्राप्यब्रह्मलोकस्याप्यमुख्यत्वात् तं लोकं गतस्य यत् परपुरुषेक्षणं तत् पूर्वापेक्षया परात् परस्यैवेक्षणं फलं श्रूयते। न तु सर्वतः परस्य। न हि तत्रोक्तस्य परमपुरुषस्य ब्रह्मत्वे तज्ज्ञानमेव फलं भवतीति वक्तुं शक्यते। ब्रह्मविदाप्नोति परमित्यादिश्रुत्यन्तरे तत्प्राप्तेः फलत्वेनोक्तत्वात्, सोऽश्नुत इत्यादिना विवरणाच्च। अतस्तस्मात् फलरूपात् तात्पर्यलिङ्गात् परमात्मनो वक्तुमशक्यत्वेन विराड् वा, तदभिमानी ब्रह्मा वा ध्यानविषयः। नच जीवघनादिति परविशेषणानन्वयः। अत्र ल्यब्लोपपञ्चम्या पूर्वेभ्यः परं जीवघनं प्राप्य पुरिशयमित्य-

रश्मिः।

इत्येवं वदतीत्यर्थः। यथा पादोदरः सर्पस्त्वचा विनिर्मुच्यते जीर्णः पुनर्नवो भवति। नह्मीति भाष्यं विवरामासुः नह्मीति। ब्रह्मविदिति 'ब्रह्मविदाप्नोति परं तदेषाभ्युक्ता सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति श्रुतिस्त्वानन्दमयाधिकरणे व्याख्याता। तस्मादिति भाष्यं विवरांचक्रुः अत इति। फलं ब्रह्मज्ञानं अन्यत्र तात्पर्यस्य लिङ्गात् पूर्वपक्षिमतेनोक्तम्। तदभिमानीति। तथा च शंकरभाष्यम्। जीवानां हि सर्वेषां करणपरिवृतानां सर्वकरणात्मनि हिरण्यगर्भे ब्रह्मलोकनिवासिनि संघातोपपत्तेर्भवति ब्रह्मलोको जीवघन इति घनो मूर्तिः जीवलक्षणो घनो जीवघन इति च तथा च जीवाभिमानीत्यर्थः। यद्वा विराडभिमानीत्येवार्थः तथा च रामानुजभाष्यं समष्टिपुरुषोण्डाधिपतिश्चतुर्मुख उत सर्वेश्वरः पुरुषोत्तम इति संशयग्रन्थे। न चात्रार्थे किं मानमिति शङ्क्यम्। संप्रदायप्रदीपे 'शांकरा मम मतं पूर्वपक्षयन्ति तत् त्वं प्रकाशय' इत्याचार्यान् प्रति भगवदाज्ञा यतः। जीवघनमिति ब्रह्माणमित्यन्येऽक्षरमिति स्वमतम्। पुरीति पुरिशयमीक्षत इत्यन्वयेन। अक्षरादिति यदत्र शंकराचार्याः कस्मार्हि जीवघन इत्युच्यते घनो मूर्तिः जीवलक्षणो घनो जीवघनः सैन्धवखिल्यवद्यः परमात्मनो जीवरूपः खिल्यभाव उपाधिकृतः परश्च विषयेन्द्रियेभ्यः सोऽत्र जीवघन इति तस्मात्परो यः परमात्मेक्षणकर्मभूतः स एवाभिध्यानेपि कर्मभूत इति गम्यते इति न हीदमुचितं परब्रह्मणोऽक्षरादपि परत्वात् 'अक्षरात्परतः परः' इति श्रुतेः 'अक्षरादपि चोत्तमः' इति स्मृतेश्च न च जीवघनत्वासंभव इति वाच्यम्। अस्या एव श्रुतेः। न च 'यथा सुदीप्तात् पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपास्तथाक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापि यन्ति' इति मुण्डकात् केवलजीवघनत्वासंभव इति वाच्यम्। अत्र परेक्षणफलाधिकारिणां ग्रहणात्। न च लोकत्वासंभव इति शङ्क्यम् ॐनमो नारायणायेति मन्त्रोपासको वैकुण्ठं भगवल्लोकं गमिष्यतीत्यात्मबोधोपनिषच्छ्रुतेः। रामानुजाचार्यास्तु यच्छंकरभाष्ये अपर आह स साममिरुन्नीयते ब्रह्मलोकमित्यतीतानन्तरवाक्यनिर्दिष्टो ब्रह्मलोकः परश्च लोकान्तरेभ्यः सोऽत्र जीवघन इत्युच्यते जीवानां हि सर्वेषां करणपरिवृतानां

उच्यते। सः अभिध्यानविषयः परपुरुषः परमात्मैव। कुतः। ईक्षतिकर्मव्यपदेशात्। जीवघनात् केवलजीवाधारभूतात् ब्रह्मलोकात् पररूपपुरुषदर्शनमीक्षतिः। तस्याः कर्मत्वेन व्यपदेशादुभयोः कर्मणोरेकत्वमपरं त्रिमात्रपर्यन्तं निरूप्य परं अग्रे निरूपयति। तथैव च श्लोके तिस्रो मात्रा इत्यादि।

भाष्यप्रकाशः।

न्वयेन परविशेषणत्वाभावादिति प्राप्त इत्यर्थः। सिद्धान्तं व्याकुर्वते। उच्यत इत्यादि। जीवघनादित्यादि। जीवानां केवलानां मुक्तानां घनः पिण्डीभावो यत्र तादृशात् केवलजीवाधारभूताद् ब्रह्मलोकादक्षरात्। उभयोः कर्मणोरेकत्वमिति ध्यानेक्षणकर्मणोरेकविषयत्वम्। तद्विवृण्वन्ति अपरमित्यादि तथाच पूर्वं द्वे ब्रह्मणी उक्त्वा, ॐकारेणैकतरमन्वेतीत्यादिना अपरं ब्रह्म त्रिमात्रपर्यन्तं निरूप्य, परं ब्रह्म अग्रे निरूपयति। यदि तत्र निरूपयेत् प्रतिज्ञा न पूर्येत। तथैव चाग्रिमे श्लोके तिस्रो मात्रा इत्यादिना मात्रात्रयस्य मृत्युमत्त्वादिकमुक्त्वा ऋग्भिरेतमिति द्वितीयमन्त्रे, साममिर्यत् तत् कवयो वेदयन्त इति त्रयीमयं तृतीयमात्राफलं निरूप्योपरार्धे तमोङ्कारेत्यादिना यत्तच्छान्तमजरममृतमभयं परं परायणं चेति फलान्तरं न वदेत्। नच जीवघनादित्यादौ ल्यब्लोपे पञ्चम्यपि। तथा सति प्राप्तौ जातायामीक्षणस्यार्थादेव सिद्धत्वा

रश्मिः।

सर्वकरणात्मनि हिरण्यगर्भे ब्रह्मलोकनिवासिनि संघातोपपत्तेर्भवति ब्रह्मलोको जीवघन इति तत्र वदन्ति ब्रह्मलोकपदेनात्र चतुर्मुखलोकः संगृह्यते ईक्षतिकर्मणः परमात्मत्वनिश्चयेन तदीक्षितुः स्थानतया निर्देशात् न हीदं परमात्मेक्षितुः क्षयिष्णुस्थानेवस्थातुं युक्तम्। किं च यथा पादोदरस्त्वचेति श्रुतौ सर्वपापविनिर्मुक्तस्य प्राप्यतयोच्यमानं न चतुर्मुखस्थानमिति। माध्वास्तु तदेक्षतेतीक्षतिकर्मव्यपदेशमाहुः। भास्कराचार्यास्तु परात् शरीरेन्द्रियेभ्यः परात् जीवात् हिरण्यगर्भलोकरूपात् पराद्वेत्याहुः। एवं भिक्षुशैवयोर्भगवतोर्मतयोः द्रष्टव्यम्। प्रतिज्ञेति परापरब्रह्मविषयिणी। परस्यानिरूपणात्। तथैवेति भाष्यं विवरीषुमूर्नुः तथैवेति विषयवाक्यानन्तरं तदेतौ श्लोकौ भवतः।

'तिस्रो मात्रा मृत्युमत्यः प्रयुक्ताः अन्योन्यसक्ता अनुविप्रयुक्ताः।
क्रियासु बाह्याभ्यन्तरमध्यमासु सम्यक् प्रयुक्तासु न कम्पते ज्ञः'॥

इति श्लोके। मृत्युमत्त्वेति आदिनाऽन्योन्यसक्तत्वं नाविप्रयुक्तत्वं बाह्याभ्यन्तरमध्यमासु जाग्रत्स्वप्नसुषुप्तस्थानपुरुषाभिध्यानलक्षणासु जानातीति ज्ञः न कम्पते कपि चलने भ्वादिरात्मनेपदी सेट्। चल विलसने तुदादिः परस्मैपदी सेट्। न विलसति फलवत्त्वात्। ऋग्भिरिति 'ऋग्भिरेतं यजुर्भिरन्तरिक्षं सामभिर्यत्तत्कवयो वेदयन्ते तमोङ्कारेणैवायतनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परं परायणं च' इति द्वितीयमन्त्रे एतं मनुष्यलोकं यत्सूर्यलोकं वेदयन्ते ज्ञापयन्ति ॐकारेणोपायेन 'ओमित्येकाक्षरं ब्रह्म' इति श्रुतेः। यद्वा ओंकारः कपर्दी यद्वा प्रणवः प्रकृतिः राधा गुरुः प्रसिद्धेः 'क्रिया सा राधिका देवी' इति स्मृतिः ताभ्यामुपायाभ्यां वा तद्रूपत्वात्। तैरुपायैर्वा। शरीरनिरूपिकासु ब्रह्मविद्योपनिषच्छ्रुतिषु एकमात्राभिध्याने ऋग्वेदो हि कपर्दी। 'वेदः शिवः शिवो वेदः' इति श्रुतेः। गार्हपत्यः पृथिवी च लक्ष्मीः 'क्रिया सा राधिका देवी' इति वाक्यात् त्रिविधकर्मसु गार्हपत्यस्य मुख्यत्वात् 'भूर्लक्ष्मीर्भुवर्लक्ष्मीः' इति श्रुतेः। ब्रह्मा प्रभुः 'सत्त्वं रजस्तम इति' श्रीभागवतात्। एवं सर्वत्र

अभिध्यानस्य हि साक्षात्कारः फलम्। अतः फलरूपज्ञानस्य विषयत्वात् परपुरुषः परमात्मैव। मन्दशङ्कानिवृत्त्यर्थमेवेदं सूत्रम्। अत्र सर्वसंकरवादिनाम् अन्यथा पाठो भ्रमात्। तत्रापि विचारस्तुल्यः॥ १३॥

इति प्रथमाध्याये तृतीयपादे चतुर्थमीक्षतिकर्माधिकरणम्॥ ४॥

---

भाष्यप्रकाशः।

वाक्यवैयर्थ्यमित्याशयेन युक्त्यन्तरमाहुः अभिध्यानस्येत्यादि। नन्वस्मिन् पादे आधारत्वस्वरूपस्य निरूप्यत्वादत्र च तस्या अदर्शनादेतत्सूत्रप्रणयनस्य किं प्रयोजनमत आहुः मन्देत्यादि। परं ब्रह्म न दृश्यमिति मन्दशङ्कानिवृत्त्यर्थमित्यर्थः। एतेन प्रसङ्गः संगतिरित्यपि बोधितम्। अत्र ध्यानविषयस्येक्षतिकर्मत्वप्रतिपादनेनोपासनानां फलं साक्षात्कार इति न्यायेन सा तेन बुद्धिस्थानात्मिकाऽधिकरणसंगतिरपि बोधिता। आधारत्वं तु परायणपदादेव प्राप्यत इति न दोषः। ननु शंकराचार्यैर्यः पुनरेत त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये संपन्नः स सामभिरुन्नीयते ब्रह्मलोकमिति पाठोऽङ्गीक्रियते। न तु, सामभिरुन्नीयते सूर्यलोकं स सूर्यलोके विभूतिमनुभूय पुनरावर्तते यः पुनरर्धचतुर्थमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि परे संपन्न इति सोऽथर्वभिरुन्नीयते ब्रह्मलोकमिति पाठोऽतोऽस्याधिकत्वात्र पूर्वोक्तरीतिकोऽर्थ इत्याशङ्कायामाहुः अत्र सर्वसंकरेत्यादि। इदानीन्तनपुस्तकेष्विदानीन्तनेष्वध्येतृष्वप्येतस्याधिकपाठस्य दर्शनात् तिसृणामपि मात्राणां मृत्युमत्त्वेन तौल्यात् साधनवैजात्याभावे फलवैजात्यस्यानुपपन्नत्वान्माण्डूक्यादौ तुरीयोपासनार्थमर्धमात्रोक्तिदर्शनाच्च तेषां तथा पाठो भ्रमादेव। न च विचारवैसादृश्यम्। तत्रापि पाठे विचारस्तुल्य इति न दोष इत्यर्थः। एवं भास्कराचार्याङ्गीकृतपाठेऽपि द्रष्टव्यम्।

अत्र माध्वाः, सदेव सौम्येति छान्दोग्यवाक्यं विषयत्वेनोपन्यस्य कारणतया सच्छब्देनोच्यमानं किं प्रधानमुत विष्णुरिति संदेहे, बहु स्यां प्रजायेयेति सतो बहुभावाख्यविकारश्रवणात्, विष्णोस्तु, 'अविकारः सदा शुद्धो नित्य आत्मा सदा हरिः' इतिवाक्येनाऽविकारित्वबोधनात् प्रधानमेवेति प्राप्ते, तदैक्षत बहु स्यामितीक्षणरूपं यत् कर्म चेतनकर्तृकेक्षणक्रिया तद्व्यपदे-

रश्मिः।

राधादामोदरकपर्दिनः ॐकाराः। ओंकारपदं योगिकं वेदान्ते रूढ्यभावात् तत्तच्छरीररूपशक्यतावच्छेदकभेदाद्द्वन्द्वः अव्ययत्वाल्लुप्ततृतीयाका अकारोकारमकारार्धमात्राः। मन्देति खलशङ्कानिवृत्त्यर्थं मूर्खशङ्कानिवृत्त्यर्थं वा। एतेनेति अक्षरस्य प्रशासितृनिरूपणानन्तरं स्मृतस्य तस्य दृश्यत्वस्य निरूपणेनेत्यर्थः। पूर्वपादोक्तादृश्यत्वाधिकरणेन तु विरुद्धधर्मबोधनादुपोद्घातो बुद्धिस्थसंगतिरिति ज्ञेयम्। भाष्य एवकारस्याध्याहृतेन भवतिनान्वयादत्यन्तायोगव्यवच्छेदार्थकत्वमित्याशयवन्त आहुः आधारेति। परमयनं स्थानमाश्रयः। फलेति यत्तच्छान्तमजरमित्युक्तफलवैजात्यस्य। उपनिषदन्तरसंगतिमाहुः माण्डूक्येति। आदिपदेन गोपालतापिनीयोपनिषत्। तत्रापीति भाष्यं विवरीतुमाहुः न चेति। सर्वेषां संकरवादिनामिति समासमङ्गीकृत्याहुः एवमिति। परस्परात्यन्ताभावसमानाधिकरणयोर्धर्मयोरेकत्र समावेशः संकरः। यथा भूतत्वमूर्तत्वयोः जातिबाधकः। शंकराचार्याणां माध्यमतस्य न्यायमतस्य बौद्धमतस्य संकरः। भास्कराचार्याणां शंकराचार्यमतस्य संकरः। माध्वमते स्वरसमाहुः अत्रेति. विचार्यत इति स्वभावात्। कर्मेति 'तदैक्षत' 'एकोऽहं बहु स्यां प्रजायेय' इत्यत्र 'पश्य

भाष्यप्रकाशः

ङ्गात् सत्पदवाच्यः स विष्णुरेव । नच बहुभावोक्तिविरोधः । 'अजायमानो बहुधा विजायते' इति श्रुत्यन्तरोक्तस्वरूपबहुत्वेनैव तदुपपत्तेरिति व्याचक्रुः ।

तच्चिन्त्यम् । ईक्षतिमात्रप्रयोगेऽपि क्रियात्ववैशिष्ट्यबोधस्य सुकरतया कर्मपदवैयर्थ्यप्रसङ्गात् । किंचात्रेक्षणक्रियायां कर्मत्वेनान्वीयमानस्य बहुभवनस्य स्वरूपबहुत्वादेव चारितार्थ्ये, प्रजायेयेत्याकारान्तरोल्लेखस्यापि वैयर्थ्यप्रसङ्ग इत्यपि ध्येयम् ।

विज्ञानेन्द्रभिक्षुस्तु शंकराचार्योक्तं विषयवाक्यपाठं तद्रीत्याऽधिकरणरचनां चोपन्यस्य तत्रोदाहृतवाक्यस्थां त्रिमात्रप्रणवेनोक्तामुपासनामुत्तरस्मिन् प्रश्ने, तिस्रो मात्रा मृत्युमत्यः प्रयुक्ता इत्यनेन विनिन्द्य तुरीयाख्यस्यामात्रस्य परब्रह्मण उपासनां तत्रैव प्रश्ने वक्ष्यति, नातः परमस्तीति प्रशंसापूर्वकम् । अतोऽवधार्यते, पञ्चमे प्रश्ने परब्रह्मोपासनां न विदधातीति । किंच । यदभिध्यायति तत् साक्षात्करोतीति सामान्यत एव प्राप्ततया तद्वचनं व्यर्थमिति पञ्चमप्रश्ने कार्यब्रह्मोपासनायाः परब्रह्मदर्शनं फलमुक्तमित्येवं तदबोधरूपं दूषणमुक्त्वा षष्ठप्रश्नस्थस्य सइतिशब्दस्य सूत्रे प्रत्यभिज्ञायमानत्वात् तत्रत्यम्, इहैवान्तःशरीरे स पुरुषो यस्मिन्नेताः षोडशकलाः प्रभवन्तीति वाक्यं विषयत्वेनोदाजहार । स जीवः, परमात्मा वेति संशये, सः, सशब्देनोक्तः पुरुषः परमात्मैव । कुतः । ईक्षतिकर्मव्यपदेशात् । स ईक्षाञ्चक्र इति वाक्यशेषे सशब्देन परामृष्टस्य यथोक्तपुरुषस्य ईक्षणरूपकर्मकथनाद् गौणकर्मणां प्राणादीनां वा कथनात् । नहीदं प्राणादि-

रश्मिः ।

मृगो धावति' इतिवदेकोहं बहु स्यामिति तदैक्षत इत्येवं बहुभवनस्य कर्मत्वेन एतावता वाक्येन चारितार्थ्ये । तत्र हेतुः स्वरूपेति तैर्नियतभेदस्वीकारादिति भावः । स्वमते यदेकमव्यक्तमनन्तरूपमिति श्रुतेः साकारं ब्रह्म । आकारेति इच्छाया इति शेषः । स्वमते तूक्तं ब्रह्म तदैक्षत एकोहं बहु स्यां प्रजायेय उच्चनीचभावेन क्रीडार्थं जायेयेत्याकारान्तरोल्लेखः साकारस्य ब्रह्मण एकत्वात् । उत्तरेति पञ्चमादुत्तरेस्मिन् षष्ठे । वक्ष्यतीति षोडशकलं पुरुषं निरूप्य तं वेद्यं पुरुषं वेद यथा मा वो मृत्युः परिव्यथा इति तान् होवाचैतावदेवाहमेतत्परं ब्रह्म वेद नातः परमस्तीति श्रुत्या वक्ष्यति । तान् भारद्वाजसत्यकामगार्ग्याश्वलायनवैदर्भिकात्यायनान् पिप्पलाद उवाचेति श्रुतिपदार्थः । अत इति व्यर्थत्वमालोच्य । तदबोधेति पिप्पलादाबोधरूपम् । स इतीति । वक्ष्यमाणविषयश्रुतिस्थस्य । तत्तेदंताप्रकारकं ज्ञानं प्रत्यभिज्ञा यथा सेयं दीपमालिका तदिदं जलमिति । तत्रत्यमिति षष्ठप्रश्नेभवम् । षोडशेति षोडशकलास्तत्रैव स प्राणमसृजत प्राणाच्छ्रद्धा खं वायुर्ज्योतिरापः पृथिवीन्द्रियमनो अन्नमन्नाद् वीर्यं तपो मन्त्राः कर्म लोकेषु नाम चेति श्रुतावुक्ताः । स इति विषयवाक्यस्थं प्रत्यभिज्ञातम् । शरीरे स पुरुष इत्यर्थः । सशब्देनेति स इतिशब्देन । षष्ठप्रश्नस्थां श्रुतिमाहुः स ईक्षामिति । यथोक्तेति यथावद्विषयवाक्योक्तपुरुषस्य । पुरुषेति स्वनिष्ठव्यापारजन्यफलाश्रयताख्यसंबन्धे षष्ठी पुरुषनिष्ठव्यापारश्चक्रे इति क्रियोक्तस्तज्जन्यं फलं करणमीक्षानिष्ठं तदाश्रय ईक्षा तन्निष्ठकरणानुकूलः पुरुषनिष्ठो व्यापारः । तथा चेक्षणरूपं यत्करोतेः कर्म तस्य कथनात् । हेतोर्द्वितीयां व्याख्यामाह गौणेति 'स प्राणमसृजत' इत्यादिश्रुतौ सर्जनकर्मणां प्राणादीनां ईक्षतेर्गौणकर्मत्वं स ईक्षांचक्रे इत्यत्रेक्षा इच्छा तां प्राणादिसर्जनविषयिणीं स चक्र इत्यन्वयः । तथा च स प्राणादि सृजेयमितीक्षामिच्छां चक्र इत्यर्थः । एवं च सर्जनमुख्यकर्मणां प्राणादीनां तत्सर्जनकर्मिकायां चक्र इति

भाष्यप्रकाशः ।

मोक्षकलासु अर्थमीक्षणं जीवस्य संभवति । ईक्षायाः करणादीनां तदानीमभावादित्येवं सौत्रं हेतुं द्विधा व्याचख्यौ ।

अत्रापि पूर्वव्याख्याने सूत्रस्थकर्मपदवैयर्थ्यमेव दोषः । द्वितीये तु कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति श्रावितस्य मुख्यस्येक्षतिकर्मणस्त्यागः स्वयमेव बोधित इति स एव दोषः । तिस्रो मात्रा इति निन्दावाक्यं च पञ्चमप्रश्नस्यमेव, न तु षाष्ठमित्यपि ।

शैवस्तु शंकराचार्योक्तमेव विषयवाक्यमुपन्यस्य, परमेश्वरोऽन्यो वेति संशये, ईक्षतिविषयः परमेश्वर एव । उत्तरत्र, तमोङ्कारेणायतनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परं परायणं चेति तदसाधारणशान्तत्वादिधर्मव्यपदेशादिति व्याचख्यौ ।

तदप्यसंगतम् । हेतोरसौत्रत्वात् । तद्धर्माधिकरणेनैव गतार्थतयाऽधिकरणवैयर्थ्यापाताच्च । सूत्रे हेतुशरीरे प्रविष्टस्येक्षतिकर्मण ईक्षतिविषयत्वेन पक्षतयाङ्गीकाराच्च । विशेषतस्तु प्रहस्त एव दत्तोत्तर इत्युपरम्यते ॥ १३ ॥

इति चतुर्थमीक्षतिकर्माधिकरणम् ॥ ४ ॥

रश्मिः ।

क्रियायां गौणं कर्मत्वम् । करणेति मनआदीनाम् । तदानीमिति सृष्टिप्राक् काले । द्वितीय इति प्राणादीनां सर्जनकर्मत्वेनेक्षतिकर्मत्यागः । इत्यपीति दोष इत्यनेनान्वयः । न विदधातीत्यप्यसंभवि। षड् भारद्वाजादीन् प्रति नातः परमस्तीति प्रशंसावाक्यात् । न च क्रमेण विद्योत्कर्षाद्भारद्वाजं प्रत्युक्तविद्याऽतः शब्दार्थ इति वाच्यम् । षण्णां परब्रह्मान्वेषणपराणां परब्रह्माकथने पिप्पलादस्य प्रतारकत्वापत्तेः । न च षाष्ठी परब्रह्मविद्या षड् भारद्वाजादीन् प्रत्युक्तेति शङ्क्यम् । नापृष्टो ब्रूयादिति न्यायेन षष्ठे प्रश्ने षण्णां पृच्छकत्वाभावात् । षष्ठप्रश्ने आधारत्वेनानिरूपणादाधारनिरूपकेऽस्मिन् पादे तस्याविषयत्वाच्च । व्यपदेशमात्रस्यैव हेतुत्वेन कथमसौत्रत्वमस्येत्यपेक्षायां दूषणान्तरमाहुः तद्धर्मेति । ननु तद्धर्मेऽधिकरणपदस्य कथं सामानाधिकरण्यम् । उच्यते । अन्तस्तद्धर्माधिकरणेनेति पठित्वा नामैकदेशेऽधिकरणपदसामानाधिकरण्यस्य सुवचत्वात् । पञ्चाङ्गमधिकरणं पञ्चाङ्गं नामेति । वैयर्थ्येति तेन रामानुजाचार्योक्तं ईक्षतिकर्म स व्यपदेशादिति पदत्रयोपन्यासः प्रत्युक्तः । स ईक्षतिकर्म परमात्मा तद्धर्मव्यपदेशादित्यस्यान्तस्तद्धर्माधिकरणेन गतार्थतामुक्त्वा स इति पक्षेणैव गतार्थतायामीक्षतिकर्मणः पक्षतानौचित्यमित्याशयेनाहुः सूत्र इति । न च शिवः सूर्यान्तःस्थ इत्यन्तस्तद्धर्माधिकरणे शैवमतमत्र तु ईक्षतिविषयः परमेश्वर इति वाच्यम् । पर्वतमहानसादिपक्षभेदस्य वह्निमान् धूमादित्यत्र दर्शनेना-दोषाजनकत्वात् । विशेष इति दिनकर्या निग्रहस्थानेषु न्यूनतालक्षणनिग्रहस्थानस्योक्तेर्विशेषो न्यूनतालक्षणनिग्रहस्थानरूपः परमेश्वर एवेत्यनेनाम्बिकाव्यवच्छेदेन तन्मतेऽम्बिकाया ईक्षतिविषयत्वा-भावेन न्यूनतासत्त्वात् । 'ते ध्यानयोगानुगताम्यपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्' इति मन्त्रस्याम्बिकां ध्यायतां तत्साक्षात्कारोपवर्णनपरत्वमुक्तम् । अत्र प्रहस्तः भवदुपन्यस्तेक्षतिकर्माधिकरणोक्तरीत्यापि ध्यानकर्मत्वं तस्यैव सिद्ध्यति नाम्बिकाया इति । किं च प्रतीयते तावदुमासहायमित्यादिमन्त्रवर्णेभ्य-स्तुरीयस्योमासहायित्वादिविशिष्टा मूर्तिः । सापि न ध्यानार्थमारोपितेति शक्यं वक्तुम् । छान्दोग्ये समानप्रकरणे गुणोपसंहारन्यायेन उपास्यब्रह्मणः उदाहृतमन्त्रवर्णसिद्धमूर्तिसिद्धवत्कारेण 'एव

रश्मिः ।

आत्मापहतपाप्मा' इत्यादिना शरीरत्वसामान्येन प्रसक्तानां जरामरणजिघत्सापिपासादीनां प्रतिषेधदर्शनात् । अन्यथा तेषामप्रसक्तप्रतिषेधत्वापातात् । न च मूर्तिवदजरत्वादयोपि केवलमुपासनार्थमारोपिता एवोत्पत्स्यन्ते इति वाच्यम् । तत्रैवास्मिन् कामाः समाहिता इत्यादिना तेषामनारोपितेश्वरगुणत्वस्फुटीकरणात् । सर्ववेदान्तप्रत्ययन्यायेन तत्र विग्रहविशिष्टस्यैव ब्रह्मण उपास्यत्वेन स्थितेरौचित्यात् । तस्मिन्यदन्तस्तदन्वेष्टव्यमित्यादिना विधानायानुपमानस्यातिध्यायामनुयाजादिनिषेधवत् । स्तुत्यर्थत्वायोगाच्च । तस्माद्विग्रहगुणस्याजरत्वादेः स्वरूपतो विद्यमानत्वेन निर्दिश्योपास्यतया विधानेनानारोपितत्वावसायात् तद्गुणकस्य विग्रहस्याप्यनारोपितता निश्चीयते इत्युपगन्तव्यैव तुरीयस्यापि साम्यत्वादिलक्षणा का मूर्तिरिति तदप्यसंगतमेव । उक्तहेतुभिर्विग्रहमात्रस्यैवानारोपितत्वनिश्चायनात् उमासहायेत्यादिमन्त्रवर्णसिद्धस्यैव विग्रहस्यात्रोपगमे विनिगमकाभावात् । अग्रे समानप्रकरणे इन्द्रप्रजापतिसंवादेऽपहतपाप्मत्वादिलक्षणकमेवात्मानमुपक्रम्य चतुर्थपर्याये एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुष इति पुरुषोत्तमत्वश्रावणेनोक्तत्यागायोगात् । क्षराक्षरव्याकृतापेक्षया उत्तमः कृतनिर्वचनोप्ययं गीतास्विति शंकराचार्यभाष्यात् । तेनापि तदनुसारिणा पुरुषोत्तमस्यैवोपगन्तव्यत्वात् । स्वशाखाप्रकरणगतलिङ्गविरोधेन शाखान्तरस्थमन्त्रवर्णसिद्धस्येह सिद्धवत्कारस्याशक्यत्वाच्च । किं चैतत्प्रकरणोत्तरं श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामं प्रपद्ये इति मन्त्रव्याख्याने श्यामो गम्भीरो वर्णः श्यामवच्छ्यामं हार्दं ब्रह्मात्यन्तदुःखग्राह्यत्वात् । तद्धार्दं ब्रह्म ज्ञात्वा ध्यानेन तस्माच्छ्यामाच्छबलं शबल इव शबलोऽरण्योऽनेककाममिश्रत्वात् ब्रह्मलोकशाबल्यम् । तं ब्रह्मलोकं शबलं मनसा शरीरपातादूर्ध्वं गच्छेयमित्युक्तम् । शंकरभाष्ये अरण्यशब्दश्च पूर्वप्रकरणे ब्रह्मलोकपरिखारूपार्णवद्वयवाचकत्वेन श्रुत्यैवोक्तः 'अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके' इत्यनेन । अयमेव चार्थो वाराहे चातुर्मास्यमाहात्म्ये चतुर्दशाध्याये उपबृंहितः । तत्र हि श्वेतद्वीपानन्तासनवैकुण्ठाख्यस्थानत्रयं प्रक्रम्य तन्मानं चोक्त्वा श्रीभूदुर्गाख्यांस्तद्भागांश्चोक्त्वावान्तरप्रलये तदनाशं चोक्त्वा महाप्रलये भूदुर्गाभागयोर्नाशं ब्रह्मोत्पत्तावुत्पत्तिं चोक्त्वा ।

'श्रीभागे संस्थिता ये तु न तेषां प्रलये भयम् ।
शाश्वतः स तु लोको मे न नश्येद् ब्रह्मणो लये ॥
मुक्ता एव तु मां तत्र वीक्षन्ते सर्वदैव तु' ।

इत्याद्युक्त्वा श्रीभूमिभागयोः श्रीदुर्गाभागयोश्च मध्ये 'अरनामामृताम्भोधिर्ण्यनामामृतसागरः' इति पीयूषार्णवावुक्तौ तेनापि च्छान्दोग्योक्त आत्मा ब्रह्म भगवानेवेति लोकलिङ्गादपि निश्चीयते । किं च श्यामत्वं च भगवत एव लिङ्गम् । 'अथ वा शून्यवद्धार्दं व्योमवद्ब्रह्म ताद्धृशम्' इत्यत्र निबन्धे आचार्यचरणैर्व्यवस्थापितम् । ब्रह्मदर्शने श्यामवर्णोपपादनार्थम् । चक्षुषः सामर्थ्यप्रतिघाते वस्तुस्वभावादेव श्यामत्वं प्रतीयते स्वरूपमेव तच्च तु रूपमिति । किं चात्रापि श्यामो वर्णो भगवत्येव प्रसिद्धस्तेन शाखान्तरस्थमन्त्रवर्णसिद्धग्रहणाग्रहेपि उत्तमपुरुषत्वारण्यलोकश्यामलिङ्गानुगुण्यात् 'सत्पुण्डरीकनयनं मेघाभं वैद्युताम्बरम्' इति गोपालतापिनीयमन्त्रवर्णसिद्धमेव युक्तम् । तथा सति तत्पूर्वं शांकरभाष्यमप्यत्रानुगुणं न तु शिवे । तस्मादपि पूर्वत्र शिवरूपाङ्गीकारोऽनुचित एव । ननु छान्दोग्ये दहरोस्मिन्नन्तर आकाश इति दहराधिकरणोक्तन्यायाद् ब्रह्मपरेणाकाश-

## दहर उत्तरेभ्यः ॥ १४ ॥ ( १।३।५ )

'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्' इत्यादि श्रूयते । तत्र

भाष्यप्रकाशः ।

दहर उत्तरेभ्यः ॥ १४ ॥ विषयवाक्यमाहुः अथ यदिदमित्यादि । श्रूयत इति छान्दोग्ये दशमप्रपाठकारम्भे श्रूयते । संशयमाहुः तत्रेत्यादि । अत्र हि ब्रह्मपुरे शरीरे दहरपुण्डरीकं हृदयकमलं वेश्म । तस्यान्तर्दहराख्य आकाशः । तदन्तर्यद्वर्तते तदन्वेष्टव्यत्वेनोपदिष्टम् । तत आकाशान्तः किं विद्यत इति प्रश्ने, यावान् वेत्यादिना हार्दाकाशस्य व्यापकत्वकथनपूर्वकं, तस्मिन् द्यावापृथिव्यादिसर्वसमाधानं प्रत्युत्तरयति । तेषां च स्वेन रूपेण प्रत्यक्षादिसिद्धतया नान्वेष्टव्यत्वं सिद्ध्यतीति केन रूपेणान्वेष्टव्यता, कस्यचिदन्यस्य वेति । किंच । पुरप्रध्वंसे किमितिशिष्यत इति प्रश्नान्तरे, नास्य जरयैतदित्यादिना ब्रह्मपुरस्य नित्यतामुक्त्वा तस्मिन्

रश्मिः ।

पदेनोपास्यं ब्रह्म प्रस्तुत्य तस्मिन् यदन्तस्तदन्वेष्टव्यमित्यादिना तदन्तर्वर्तित्वेनोपदिष्टानां सत्यकामादिगुणानामुपासनस्य च शिव एवान्वयः । तैत्तिरीयोपनिषत्स्थदहरविद्योपदिष्टविशोकत्वगुणान्वयस्यास्यसिद्धत्वतात्पर्येकेन गगनपदेन पूर्वापरमन्त्रसमर्पितं शिवरूपमेव ब्रह्म प्रस्तुत्य तस्य हृदयपुण्डरीकान्तर्वर्तित्वोपदेशात् । 'कामादितरत्र तत्र च' इत्यधिकरणे छान्दोग्याम्नातसत्यकामत्वादीनां बृहदारण्यकस्थवशित्वादिभिः सहोपसंहारस्य सर्वैरभ्युपगतत्वाचेत्युक्तम् । तत्तु दहरविद्योत्तरमिन्द्रप्रजापतिसंवादे कण्ठरवेण पुरुषोत्तमप्रतिपादनात् तैत्तिरीयोपनिषदणोरणीयानित्यनुवाकस्य शिवोपासनापरताया निराकरिष्यमाणत्वात् तत्रापि भवदभिमताप्रवेशादात्मप्रबोधोपनिषन्नारायणोपनिषदोः कण्ठरवेण दहरपुण्डरीके नारायणस्थितेरुक्तत्वाच्च दूरतरनिरस्तं ज्ञेयम् । यत्तु आत्मबोधोपनिषदिति समाख्याप्रामाण्यादात्मबोधोपनिषदिति नाम । 'आत्मप्रबोधोपनिषदं मुहूर्तमुपासित्वेति श्रुतौ तु आत्मबोधोपनिषदं प्रोपासित्वेत्यन्वयः इति भट्टीकायां तदपि युक्तम् ॥ १३ ॥

इति चतुर्थाधिकरणम् ॥ ४ ॥

दहर उत्तरेभ्यः ॥ १४ ॥ अत्र शंकराचार्यास्त्रिकोटिकसंशयमाहुः तत्र भूताकाशस्य निवेशासंभवात् द्विकोटिक एव संशय इत्याशयकं भाष्यमित्याशयेनाहुः अत्र हीति । श्रुतावस्मिन्नित्यस्य वेश्मनीत्यर्थस्तदाहुः तस्यान्तरिति अन्तः मध्ये न तु दहरमित्यस्यैव व्याख्यानं काठिन्यात् कुतः पुण्डरीकासामानाधिकरण्यात् । प्रतीति श्रुतिः प्रत्युत्तरयति कथा श्रुत्वा 'तं चेद् ब्रूयुः यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद्वा विजिज्ञासितव्यमिति स ब्रूयाद्यावान् वा अयमाकाशस्तावान् एषोऽन्तर्हृदय आकाशः उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते' इति श्रुत्वा । आदिपदेनोभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितमिति श्रुत्युक्तं सर्वम् । प्रत्यक्षादीति आदिना अनुमानशब्दोपमानानि । किं जीव इति भाष्यं विवरामासुः केनेति । वासनारूपसर्वसमाहितत्वेन आकाशो दहरो जीवोऽन्वेष्टव्यो ज्ञानकल्पितत्वेन वेत्युभयोः केन रूपेणान्वेष्टव्यतेति प्रश्नः । कस्यचिदेतादृशोपासनोपचितसामग्रीकस्य तदन्यजीवस्यान्वेष्टव्यता वा । प्रश्नान्तरे द्वितीयकोटौ रूपे आकारत्वं समाहितसर्ववासनाश्रयत्वे संशयविषयौ वक्तुमाह किं चेति । नास्येति 'नास्य जरयैतज्जीर्यति न वधे-

संशयः । किं जीवोऽन्वेष्टव्यो ब्रह्म वेति । जीवब्रह्मवादो निर्णीयते । श्रुत्यर्थोत्र हि निर्णेतव्यः । तद् यदस्मिन् वाक्ये परमार्थतो जीव एव ब्रह्म चेच्छास्त्रं च तत्रैव

भाष्यप्रकाशः ।

कामानां समाधानं चोक्त्वा, एष आत्मेत्यादिना अपहृतपाप्मत्वादिगुणकमात्मानं प्रत्युत्तरयति । तेन शरीररूपादनित्याद् ब्रह्मपुरादन्यः सत्यब्रह्मपुररूपः पूर्वोक्तद्यावापृथिव्यादिरूपसर्वकामाधार एष आत्मेत्यादिनोक्त आत्मा सत्यब्रह्मपुरत्वेन सिद्ध्यति । यदि च कामवदात्मनोऽप्याधेयत्वमुच्यते, तदा पुराकाङ्क्षा न पूर्यते । अत आत्मन एवातिशिष्टब्रह्मपुरत्वमिति निश्चयः । एवं सति, ब्रह्मपुरमित्यत्र यदि षष्ठीसमासस्तदास्यात्मनो जीवत्वम् । यस्यात्मा शरीरमिति श्रुत्यन्तरात् । यदि समानाधिकरणसमासस्तदा आत्मा ब्रह्मैव । अतोऽनित्यपुरनाशेऽतिशिष्टो यो नित्यो दहराकाशरूप आत्मा, स जीवो वा, ब्रह्म वेत्येव संशयाकारः पर्यवस्यति । न तु भूताकाशकोटेस्तत्र निवेशः । उक्तरूपत्वस्य तत्राभावादिति । अत्र दहरान्तर्वर्तिन उत्तरप्रकरणे चात्मनोऽन्वेष्टव्यत्वं श्राव्यते । ततश्चान्वेष्टव्यः क इत्यपि संशयः । तदेतदुक्तम्, किं जीवोऽन्वेष्टव्यो ब्रह्म वेति । ननु तल्लिङ्गाधिकरणे आकाशशब्दोदितस्य सर्वाधारत्वब्रह्मत्वयोर्विचारितत्वात् किमनेनाधिकरणेनेति शङ्कायां तत्प्रणयनप्रयोजनमाहुः जीवेत्यादि । उपाधिभेदात् स्वरूपविस्मरणाद्वा इदानीं भेदेऽपि वस्तुतश्चैतन्यमात्रत्वाज्जीवाभिन्नमेव ब्रह्मेति वादो जीवब्रह्मवादः । स संभवति, न वेति निर्णीं-

रश्मिः ।

नास्य हन्यते एतत्सत्यं ब्रह्मपुरमस्मिन् कामाः समाहिताः एष आत्मापहतपाप्मा विजरो विमृत्युः' इत्यनया । प्रतीति श्रुतिः । आत्मेत्यक्षरः । ननु नास्य जरयेति श्रुतेरस्य देहस्य जरयैतदन्तराकाशं ब्रह्म देहवन्न विकुरुते । एवमग्रेपि ब्रह्मपुरमित्यत्र समानाधिकरणसमासात् ब्रह्मैव पुरमित्यर्थात् न ब्रह्मणः पुरमक्षरं नित्यमित्याशङ्कायामाहुः यदीति । दहरस्याप्याधेयत्वं समानाधिकरणसमासादुच्यते तदा यदैतज्जरा व्याप्नोति प्रध्वंसते वा किं ततोतिशिष्यते इति प्रश्ने नास्य जरयेत्याद्युक्तम् । तत्र पुरनिरूपणाभावो यदि तर्हि पुराकाङ्क्षापूरणाभावात् व्यर्थ एवारम्भः अतो ह्यनित्यदेहादतिरिक्तस्याक्षरात्मकस्य ब्रह्मलोकस्योक्तिरत्रेति मन्तव्यमित्यर्थः । अतिशिष्टेति । एतच्च सर्वनिर्णये 'प्रभुत्वेन हरेः स्फूर्तौ लोकत्वेन तदुद्भवः' इति श्रीआचार्यैरुक्तम् । भक्तिमार्तण्डे प्रमेयप्रकरणे मयैतन्निपुणतरमुपपादितम् । आत्मन इत्यक्षरस्य । आत्मेति आत्माक्षरो ब्रह्म भवत्येव । उक्तेति दहराकाशरूपात्मत्वस्य तस्योत्पत्तेर्द्वितीयाध्याये वक्ष्यमाणत्वादिति भावः । अत्र इति छान्दोग्ये दहरान्तर्वर्तिनो जीवस्य प्रकरणं पूर्वमुत्तरे ब्रह्मप्रकरणे । अथ यदिदमित्येवं जीवप्रकरणे श्राव्यते तं चेद्ब्रूयुरस्मिंश्चेदिदं ब्रह्मपुर इत्येवं ब्रह्मप्रकरणे श्राव्यते । अन्वेष्टव्यत्वं तु 'सर्वे कामाः समाहिताः' इति श्रुत्या सर्वकामसमाहितत्वरूपमन्वेषणहेतुसत्त्वात् । तदर्थाध्याहारेण । तत इति किमः संशयार्थकत्वं क्वचित्कोशे 'किमः प्रश्ने कुत्सायां च' विश्वकोशे । ब्रह्मजीवयोः कः इति संशयः ब्रह्मसाकारत्वेन संशयविषयोपहतपाप्मत्वादिगुणकथनात् समाहितः सर्वेषां शासनाश्रयस्य निर्गुणत्वात् । जीवोपि वासनारूपः सर्वसमाहिताणुत्वेन न त्वज्ञानकल्पिततत्त्वेन तदभावात् । उपाधीति पराभिध्यानतिरोहितानन्दत्वादिरुपाधिः अतिरोहितानन्दादिश्च ब्रह्मजीवयोरुपाधी । ब्रह्मेति अग्रे इतीत्यध्याहार्य योजनीयम् । वाद इति । उदर्कवदनं न वेति भेदवादे नैयायिकैः श्रुतीनां भेदपरत्वम् । सत्यं भिदा सत्यं भिदा

१. ईषत्कालीनफल इति विश्वः ।

समासं चेत् व्यर्थमधिकरणारम्भः। इदमेव च वाक्यं, श्रुत्या वक्तव्यं च भवेत्। तस्मादस्मिन्नधिकरणे मुख्या सर्वसंकरवादादिनिराकृतिः। किं तावत् प्राप्तम्।

---

भाष्यप्रकाशः।

यते। तथाचैतन्निर्णयस्य पूर्वमकृतत्वात् तदर्थमेतत्प्रणयनमित्यर्थः। ननु किं तन्निर्णयेनेत्यत आहुः श्रुत्यर्थं इत्यादि। हि यतो हेतोः संदेहनिरासायैव प्रवृत्तत्वाच्छ्रुत्यर्थो निर्णेतव्यः। तथाच तन्निर्णयायैतन्निर्णय इत्यर्थः। एतेन बुद्धिस्थस्य विचारादुपोद्घातगर्भः प्रसङ्गः संगतिरिति बोधितम्। नन्वस्याधिकरणस्यैतदेव प्रयोजनमित्यत्र किं गमकमत आहुः तदित्यादि। समासमिति पर्यवसितम्। व्यर्थमिति सामान्ये नपुंसकम्। तथाच यदि तथा स्यात् तदोपाधिभेदस्येतरत्वाप्रयोजकत्वादाकाशतुल्यतासंभवादितरपरामर्शसूत्रव्याहत्याऽधिकरणारम्भो व्यर्थ एव स्यात्। एतस्यैव वाक्यस्य श्रुतिवाच्यत्वापातेन, नेति निषेधोऽपि न संभवेत्। तस्मादस्मिन्नधिकरणे जीवब्रह्मैक्यकृतसर्वसंकरवादस्य मायावादस्य च निराकृतिरेव मुख्या। सा च जीवस्य परममुक्तिदशायामपि ब्रह्मनियम्यत्वे पर्यवस्यति तदिदं परामर्शसूत्रे प्रदर्शयिष्यामः।

रश्मिः।

सत्यं भिदा सत्यो जीवः सत्यो जीवः सत्यो जीवः इति श्रुत्या भेदश्चोक्तः तथा श्रुत्यन्तरम्।

'यथा पक्षी च सूत्रं च नानावृक्षरसा यथा।
यथा नद्यः समुद्रश्च शुद्धोदलवणे यथा॥
यथा स्तेनापहार्यौ च यथा पुंविषयावपि।
तथा जीवेश्वरौ भिन्नौ सर्वदैवाविलक्षणौ'॥ इति।

इतिहासे च 'यदधीना यस्य सत्ता तत्तदित्येव भण्यते।
विद्यमाने विभेदेपि मिथो नित्यं स्वरूपतः'॥ इति।

स्मृतिश्च 'भिन्ना जीवाः परो भिन्नः तथापि ज्ञानरूपतः।
प्रोच्यन्ते ब्रह्मरूपेण वेदवादेषु सर्वशः'॥ इति।

अतो न वा संभवति इति हेतोर्निर्णीयत इत्यर्थः। पञ्चमाङ्गमाहुस्तल्लिङ्गाधिकरणेन। एतेनेति चिन्तां प्रकृतोधिकरणविचारस्तत्सिद्ध्यर्थो तल्लिङ्गाधिकरणविषयिणीं प्रकृत उपोद्घातं विदुर्बुधाः तादृशचिन्तायां तल्लिङ्गाधिकरणं विषयः प्रकृताधिकरणविचारसिद्धिफलक इत्येवं प्रसङ्गसंगत्यन्तर्गतस्मरणविषयस्योपेक्षानर्हत्वमित्युपोद्घातगर्भः प्रसङ्गः चतुर्थकेऽस्त्यधिकरणोक्तरीत्या वा संगतिः समर्थनीया। प्रवृत्तेति व्यासस्य प्रवृत्तत्वात्। तन्निर्णय इति जीवब्रह्मवादनिर्णयः। इतरस्त्वेति यथाहुर्नैयायिका विशिष्टं शुद्धान्नातिरिच्यत इति। तथेति जीवे पर्यवसितत्वेन प्रकारेण शास्त्रं स्यात्। व्यर्थ इति मानाधीना मेयसिद्धिः मानं व्याहत्यांशतो विगतोर्थोभिधेयं यस्यैतादृशः स्यात्। इदमेवेति भाष्यं विवरामासुः एतस्यैवेति। श्रुतिवाच्येति। श्रुतिर्निरपेक्षो रवस्तया वाच्यं प्रवचनार्हम् तत्तापातेनेतरपरामर्शसूत्रे नेतिनिषेधो न, किं च द्वा सुपर्णेति श्रुतिरवक्तव्या च भवेत्। तस्मादिति भाष्यं विवरामासुः तस्मादिति। सर्वसंकर उक्तः पूर्वाधिकरणे। मायेति मायेत्यसुरा इति श्रुतेः सर्वं मायेतिवादस्य। ननु दहरसूत्रे सर्वसंकरवादादिनिराकरणवाचकपदज्ञानं प्रमाणं

दहर आकाशो जीव इति । अत्रावान्तरप्रकरणद्वयम् । तत्र द्वितीये प्रजापतिप्रकरणे जीव एवाऽमृताऽभयरूपः प्रतिभाति । स्पष्टार्थं च द्वितीयप्रकरणम् । तस्मात् प्रथमेऽपि जीव एव तादृशधर्मवान् भवितुमर्हति । अर्थानुगुण्यमपि व्याख्येयम् ।

भाष्यप्रकाशः

अतोऽधिकरणसार्थक्यानुपपत्तिरेव प्रणयनप्रयोजनगमिकेत्यर्थः । एवं संशयाकारादिकं निश्चित्य पूर्वपक्षमाहुः किं तावदित्यादि । उपपादयति अत्रेत्यादि । अत्र दहरबोधके महावाक्येऽवान्तरप्रकरणद्वयम् । एकं दहरविद्यारूपं, द्वितीयमिन्द्रप्रजापतिसंवादरूपम् । उभयत्राप्यपहतपाप्मत्वादिगुणक आत्मैव प्रतिपाद्यः । तत्र द्वितीये प्रजापतिप्रकरणे चतुर्भिः पर्यायैर्जाग्रत्स्वप्नसुषुप्तमुक्तावस्थभेदेन जीवस्यैव प्रतिपादनाज्जीव एवाऽमृताऽभयरूपः श्रावितः प्रतिभाति । तच्च प्रकरणं स्पष्टार्थम् । य एषोऽक्षिणि पुरुषो दृश्यत इति द्रष्टारमुपक्रम्य, एतं त्वेव ते भूयोऽनुव्याख्यास्यामीति प्रतिपर्यायं प्रतिज्ञादर्शनात् । एवमसंदिग्धस्य तस्य पूर्वप्रकरणव्याख्यारूपतया औचित्यात् । अतस्तदनुरोधेन प्रथमेऽपि जीव एवाऽपहतपाप्मत्वादिधर्मवान् भवितुमर्हति । किंच । यदि कश्चिदर्थः पीड्येत, तदा प्रकरणान्तरं भिन्नं कल्प्येत । अतस्तदभावायार्थानुगुण्यमपि व्याख्येयम् । तच्चैवम् । अत्र हृदयाकाशं प्रक्रम्य, तस्य ब्रह्मपुरत्वं चोक्त्वा, तत्र, एष आत्मापहतपाप्मेत्यङ्गुल्येव निर्दिश्यते । तेनायमेव जीवो ब्रह्मेति सिध्यति । 'अयमात्मा ब्रह्म विज्ञानमयः' इति श्रुतेश्च । एवंच मैत्रेयीब्राह्मणमप्यनुगुणं भविष्यति । तत्रापि, न वा अरे

रश्मिः ।

नास्तीत्याकाङ्क्षायामाहुः अतोधीति । श्रुतार्थापत्तिरत्राभिहितानुपपत्तिरूपाऽधिकरणार्थो ह्यभिधार्यः सोत्रानुपपन्नत्वेन ज्ञातस्तल्लिङ्गाधिकरणेन गतार्थत्वात् । तथा सन्नर्थान्तरं सर्वसंकरवादादिनिराकरणरूपं कल्पयति । यथा ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र वाक्यावगतज्योतिष्टोमस्य क्षणिकतया स्वर्गसाधनतानुपपत्त्या मध्यवर्त्यपूर्वं कल्प्यत इति वेदान्तपरिभाषाकारः । वस्तुतस्तु द्वारमित्यादौ द्वितीयाभिहिता कर्मतानुपपन्ना सती स्वान्वययोग्यां क्रियां कल्पयतीत्यभिहितानुपपत्तिरेवार्थाध्याहारपक्षमादायादरणीया लाघवात् तया च सर्वसंकरवादादिनिराकरणस्य सूत्रावाच्यत्वेप्यभिहितानुपपत्तिरूपप्रमाणप्रमितत्वेन सर्वसंकरवादादिनिराकरणवाचकपदज्ञानं प्रमाणं नास्तीत्यसिद्धम् । शब्देन प्रत्यक्षेण वा प्रमितस्यार्थस्यार्थान्तरं विनानुपपद्यमानस्योपपत्तयेऽर्थान्तरकल्पना ज्ञेयं प्रमाणान्तरमिति मीमांसकाः पदरूपवाचकस्याध्याहृतस्य सत्त्वाच्च । अधिकरणार्थस्यानुपपन्नत्वाभावात् सार्थक्यपदम् । यदि च तल्लिङ्गाधिकरणेन गतार्थत्वादधिकरणार्थस्यानुपपत्तिरस्त्येवेति सार्थक्यपदमसंगतमिति तत्स्थलेऽर्थपदं प्रयोक्तव्यमिति विभाव्येत तदा त्वोम् । यद्वा अधिकरणसार्थक्येत्यस्यायमर्थः । अर्थेन सह सार्थः सार्थ एव सार्थकम् । अधिकरणस्यार्थस्य चानुपपत्त्यभावादधिकरणं सार्थकं सार्थकमेव सार्थक्यं स्वार्थे ष्यञ् तादृशस्यानुपपत्तिः । अधिकरणप्रणयनस्य प्रयोजनं सर्वसंकरवादादिनिराकरणं तस्य गमिका तत्र प्रमाणमित्यर्थ इत्यर्थः । संशयेति आदिपदेनाधिकरणप्रयोजनम् । तत्र द्वितीय इति भाष्यं विवरामाहुः तत्र द्वितीयेति । पर्यायैः प्रकारैः । तच्चेति । स्पष्टार्थमिति भाष्यविवरणम् । एतमिति एतं पूर्वोक्तमक्षिणि द्रष्टारं तु एव ते तुभ्यमिन्द्राय भूयः पुनरहं प्रजापतिरनुव्याख्यास्यामीत्यर्थः । यं पूर्वं मयाऽक्षिणि द्रष्टृत्वेन पुरुष उक्तस्तम् । तस्मादिति भाष्यं विवरीतुमाहुः एवमसंदिग्धेति । तस्येति द्वितीयप्रकरणस्य ।

१. अधिकरणा ।

अयमेव जीवो ब्रह्म । अयमात्मा ब्रह्मेति श्रुतेः । मैत्रेयीब्राह्मणं चानुगुणं भविष्यति । तस्य पुरं शरीरम् । तत्र हृदयकमलं सूक्ष्मम् । तत्राराग्रमात्रो जीव एवाकाशः । तात्स्थ्यात् तद्व्यपदेश इति । अन्वेष्टव्यस्तु तस्मिन् विद्यमानस्तन्महिमा । वासनारूपेण सर्वं तत्र वर्तत इति ।

अन्यथोभयत्र सर्वकथनं विरुद्धमापद्येत । भूतानि महाभूतानि पुत्रा-

---

भाष्यप्रकाशः ।

पुत्राणां कामायेत्याद्युक्तानां जीवलिङ्गानां बाहुल्येन तस्यापि जीवपरत्वात् । नचैतन्मात्रमेवार्थानुगुण्यं, किं त्वन्यदपि । तदेव भाष्ये तस्य पुरं शरीरमित्यादिना व्याख्यातम् । सूक्ष्ममिति हार्दाकाशरूपम् 'तस्यान्ते सुषिरᳪ सूक्ष्मम्' इति श्रुत्यन्तरात् । मैत्रेयीब्राह्मणादत्रैतावान् विशेषः । तत्र श्रोतव्यत्वादिकं जीवस्योच्यते । 'आत्मा वा अरे श्रोतव्यः' इति श्रावणात् अत्र तु तस्मिन् यदन्तस्तदन्वेष्टव्यमित्याकाशान्तर्वर्तिनोऽन्वेष्टव्यत्वमुच्यत इति । तथा सत्यत्र तन्महिम्नोऽन्वेष्टव्यत्वं तदाह अन्वेष्टव्य इत्यादि । महिम्नः स्वरूपमाह वासनेत्यादि । तथाच वासनारूपेण तत्र विद्यमानमत्रोक्तं सर्वमेव तन्महिमेत्यर्थः । इदमेव तापनीयेऽप्युक्तं, 'सर्वं सर्वमयं सर्वे जीवाः सर्वमयास्तथाप्यल्पाः' इति । नन्वत्रेदृश एव महिमोच्यत इति कथं ज्ञेयमत आह अन्यथेत्यादि । यदि जीवमहिम्नो वासनारूपत्वं नोपगम्येत, तदा, यावानित्यादिनाऽन्तर्बहिश्च सर्वनिरूपणं प्रत्यक्षविरुद्धमापद्येत । नच वासनारूपस्य सर्वस्याङ्गीकारे यथाकथंचिद् द्यावापृथिव्यादिवासनासंभवेऽपि, सर्वं समाहितं सर्वाणि च भूतानीति भूतपदविरोधः स्यात् । 'न

रश्मिः ।

तदन्विति द्वितीयप्रकरणानुरोधेन । अर्थानुगुण्यमिति भाष्यं विवरीतुमाहुः किं चेति । तदभावायेति प्रकरणान्तरत्वाभावाय । मैत्रेयीति भाष्यविवरणम् । एवं चेति । तस्येति भाष्यं विवरीतुमाहुः न चेति । तदेवेति अन्यदप्यर्थानुगुण्यम् । ब्रह्मपुर इति श्रुतिव्याख्यानेन व्याख्यातम् । श्रुत्यन्तरेति । न च शरीरस्यान्ते मध्ये सुषिरदाताकाशो न तु सुषिरम् । 'भूतानां छिद्रदातृत्वं बहिरन्तरमेव च' इति तृतीयस्कन्धादिति शङ्क्यम् । पूर्वपक्षत्वेन परमतत्वात् । तत्राकाशे 'बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यपरोपि दृष्टः' इत्यौपाधिकः आराग्रमात्रः । ननु भाष्ये तत्र जीव इत्युक्ते कथमाकाशाभेद इत्याकाङ्क्षायामाह तात्स्थ्यादिति तात्स्थ्यादित्याकाशस्थत्वात् जीवस्याकाशव्यपदेशः आकाशाभेद इत्यर्थः । 'ब्राह्मणो वै सर्वा देवता' इतिवत् । इति श्रावणादिति अयमात्मा ब्रह्मेति श्रुतेरात्मपदस्य जीवे शक्तत्वात् । आकाशान्तरिति समाहितसर्वकामरूपपदार्थस्य । वासनेति 'ऊतयः कर्मवासनाः' कर्मभिर्भिन्नाः सप्तमस्कन्धे निरूपिताः अन्यत्र

'दृढभावनया त्यक्तपूर्वापरविचारणम् ।
यदाऽऽदानं पदार्थस्य वासना सा प्रकीर्तिता' ॥

इति एतेन रूपेण । तत्र जीवे । सर्वमया इति कर्मजवासनारूपसर्वमया सर्वप्रचुरा जीवाः । अल्पा इत्यणवः । उपाधिभिरित्यन्ये । उभयत्रेति पदं व्याचकार अन्तरिति । भूतानीति भाष्यं विवरीतुमवतारयन्ति न चेति । यथाकथमिति यथा येन प्रकारेण कथं केन प्रकारेण चित् यदि । आकृतिय-

वयो वा। तं चेद् ब्रूयुरित्यादिना नित्यतामुपपाद्य एष आत्मेत्यादिना तस्यैव ब्रह्मत्वमुपदिशति। तज्ज्ञानं च प्रशंसति। स्वात्मज्ञानिनः कामसिद्धिं चाह य इहेत्यादिना। येऽपि च विरुद्धा धर्माः प्रतिभान्ति, अहरहर्गमनादय-स्तेऽपि स्वकल्पितजीवानां स्वप्नमायामनोरथादिषु तेषामेव गमनागमने प्रति।

भाष्यप्रकाशः।

हिंस्यात् सर्वा भूतानि' इत्यादौ भूतपदस्य जीवविशिष्टदेहवाचकताया निश्चितत्वात् प्रकृते च भूत-पदस्य सर्वपदेन विशेषणाल्लोके च तत्तज्जीवविशिष्टसर्वदेहविषयकानुभवस्य वक्तुमशक्यतया तद्वि-षयकवासनाया अशक्यवचनत्वादिति शङ्क्यम्। विशेषणीभूतस्य सर्वपदस्य वृत्तिसंकोचे भूता-नीत्यनेन महाभूतानि पुत्रादयो वा ग्रहीतुं शक्यन्त इति तदभावात्। नन्वेतस्य जीववाक्य-त्वाङ्गीकारे, तं चेद् ब्रूयुरस्मिंश्चेदिदं ब्रह्मपुर इत्यादिनोक्ता दहरनित्यता, तदन्तःस्थस्य ब्रह्म-त्वोपदेशादिश्च विरुध्येतेति शङ्कायामग्रिमग्रन्थं योजयन्ति तं चेदित्यादि। तस्यैव ब्रह्म-त्वमुपदिशतीति जीवस्यैव ब्रह्मत्वमुपासनार्थमुपदिशति। य इहात्मानमनुविद्य व्रजन्तीत्या-देस्तात्पर्यमाहुः तज्ज्ञानमित्यादि। तथा च न विरोध इत्यर्थः। ननु भवत्वेवमन्यवाक्यानां संगतिस्तथापि, 'इमाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति' इत्यादेर्ग्रन्थस्य संगतिस्तु न भविष्यति। जीवान्तराणां जीवान्तरे गमनाभावात्। अहरहर्गमनकथनेन ब्रह्मणो लोको ब्रह्मलोक इति षष्ठीसमासस्योपगन्तुमशक्यतया सत्यलोकादेरविवक्षितत्वाद् ब्रह्मैव लोको ब्रह्म-लोक इति मयूरव्यंसकादिवत् समानाधिकरणसमासस्यैवाश्रयणीयतया ब्रह्मण एव तत्र विव-क्षितत्वेन ब्रह्मलोकपदासंगतेश्चेति चेत्तत्राह येऽपीत्यादि। स्वकल्पितजीवानामिति स्वाज्ञा-नकल्पितजीवानाम्। तादृशा जीवाः कुत्र सिद्धा इत्याशङ्कायामाह स्वप्नेत्यादि। प्रतिर्ल-क्षणे। स्वप्नादिषु तेषां जीवानां सिद्धत्वादहरहर्वाक्यं तानेव लक्षीकृत्य प्रवृत्तम्। श्रुत्यन्तरे,

रश्मिः।

पत्वेन यथाकथंचिदिति निपात इति चेदर्थस्त्वयमेव तथा च बहुद्रष्टुर्बहुश्रुतस्य द्यावापृथिव्यादेर्यथादर्शनं शाब्दानुभवात्तज्जन्या वासनास्तासां संभवेपीत्यर्थः। कर्मजन्यत्वं भोग्यादृष्टजन्यत्वाच्छाब्दाद्यनुभव-विषयाणां भूतपदविरोधं स्पष्टयामास न हिंस्यादिति। सर्वेति सर्वाणि शसो डादेशः सुपां सुलुगिति सूत्रेण। विशेषणीति सर्वं समाहितं सर्वाणि च भूतानीत्यत्र विशेषणीभूतस्य। तदभावादिति अनुभव-विरोधाभावात्। दृढभावनया पदार्थादानं विवक्षितं तेन वाक्योक्तवासनाप्रकीर्तनं संभवति। तं चेदिति आदिपदेन सर्वऽसमाहितऽसर्वाणि च भूतानि सर्वे कामा यदा तदा जरा वाप्नोतीति श्रुतिसंग्रहः तमेवमुक्तवन्तमाचार्यमन्तेवासिनश्चेद्ब्रूयुरस्मिन् ब्रह्मपुरे देहे इदं सर्वं द्यावापृथिव्यादिकं समाहितं चेत्तदि समाहितानि सर्वाणि स्थावरजङ्गमानि भूतानि सर्वे च कामाः काम्यमानविषयाः समाहितास्तदा यदा यस्मिन् काले एतच्छरीरं जरावलीपलितादिलक्षणां वाप्नोति वाशब्दाद्वयोहानिं वाप्नोति। य इहेति य इहात्मानमननुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेष्वकामचारो भवत्यथ य इहात्मान-मनुविद्य व्रजन्त्येतांश्च सत्यान् कामाऽस्तेषां सर्वेषु लोकेषु कामचारो भवतीत्यस्याः श्रुतेः। तज्ज्ञानमिति तत्प्रसिद्धं ज्ञानं च जैवम्। न विरोध इति एकस्य कर्मकर्तृभावविरोधो न। अशक्यतयेति साधनमन्तरा ब्रह्मणो लोकेऽहरहर्गमनासंभवादशक्यतया। स्वप्नादीति तेन भाष्ये स्वप्नश्च माया च मनोरथश्च आदिपदेन प्रतिक्षणनूतनदेहः एतेषु तेषां जीवानां सिद्धत्वादेव गमनागमने लक्षीकृत्य

स्वातिरिक्तस्य ब्रह्मणोऽभावात्। एवं लोकाधारत्वमपि। ब्रह्मचर्यं च तस्य साधन-

भाष्यप्रकाशः।

सता सोम्य तदा संपन्नो भवतीति सुषुप्तावेव सत्संपत्तेर्दृष्टत्वात्। ततः पूर्वं स्वप्नावस्थायां कल्पितजीवबाहुल्यात्। अतस्तेषामेव ते तत्रोच्यतेऽतो न तद्विरोध इत्यर्थः। नन्वेवं कल्पने किं बीजमत आह स्वातिरिक्तेत्यादि। तत् त्वमसि, अयमात्मा ब्रह्म, स यो ह वै तत् परं ब्रह्म वेद ब्रह्मैव भवतीत्यादिश्रुत्यन्तरे तथैव सिद्धत्वादित्यर्थः। ननु तथापि, य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदायेति लोकाधारत्वं यदुक्तं तस्य कथं संगतिरित्यत आह एवमित्यादि। यथा गन्तारोऽज्ञानकल्पितास्तद्वल्लोका अपीति तादृशतदाधारत्वमपि नासंगतमित्यर्थः। नन्वग्रे तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्तीत्यादिना यज्ञादीनां ब्रह्मचर्यत्वेन रूपेण ब्रह्मलोकप्राप्तिसाधनत्वमुक्तम्। ततोऽथ 'या एता हृदयस्य नाड्यः' इत्यादिना, तयोर्ध्वमायन्नमृतत्वमेतीत्यन्तेन तत्र गमनस्योपायभूतो योगो गमनप्रकारश्चोक्तः। तत् सर्वं गन्तुः काल्पनिकत्वे कथं संगच्छते तत्राह ब्रह्मचर्यमित्यादि। तस्येति अज्ञानकल्पितस्याविदुषः कर्मणामविद्वद्-

रश्मिः।

प्रोक्ता इति यत्किंचिद्भाष्यप्रकाशेन सह भाष्यार्थः। उच्येते तदेत्यत्राकारः पतितः। तद्विरोध इति अहरहर्गमनादिविरोधः। तथैवेति जीवाभिन्नत्वेनैव सिद्धत्वात्। य आत्मेति श्रुत्यर्थस्तु अथपदं पूर्वं वर्तते तस्यार्थः। अथशब्दो गुणान्तरैः स्तुतिप्रारम्भार्थः य आत्मा संप्रसादस्वरूपः स सेतुरिव सेतुः सेतुसादृश्यमाह विधृतिरिति सेतुविधरणः सर्वस्य जगतो वर्णाश्रमादिभेदवतो विधारक इत्यर्थः। जगद्विधारणप्रयोजनमाह एषामिति एषां भूरादिलोकानामसंभेदाय अविनाशायेति। अनुविन्दन्तीति अनुलभन्ते तद् ब्रह्मलोकं ये एवाऽनुलभन्त इत्यर्थः। यज्ञेति अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तदिति श्रुतेः। आदिपदेन अथ यदिष्टमित्याचक्षते ब्रह्मचर्यमेव तत्। अथ यत्सत्त्रायणमित्याचक्षते ब्रह्मचर्यमेव तत्। ब्रह्मलोकेति ब्रह्मचर्येण ह्येव यो ज्ञाता तं विन्दते इति श्रुतेः तं ब्रह्मलोकम्। विन्दते लभते। ततोऽथेति ब्रह्मचर्यादिसाधनसंपन्नस्य यथोक्तब्रह्मोपासकस्य मूर्धन्यनाड्या गतिं विवक्षुराह अथाधिकारिणः सफलोपास्तिविधानानन्तरं या एता वक्ष्यमाणा हृदयस्य पुण्डरीकाकारस्य संबन्धिन्यो नाड्यस्ताः पिङ्गलस्याणिम्नः इति षष्ठ्यौ तृतीयार्थे तत्पूर्णास्तिष्ठन्ति एवमादि यस्य ग्रन्थस्य तेन। तया मूर्धानं लक्षीकृत्य निःसृतया नाड्या सुषुम्णाख्यया ऊर्ध्वमायन् गच्छन् अमृतभावमेति गच्छति एवमन्तो यस्य तेन। तत्रेति ब्रह्मलोके गमनेति। योग इति स ओमिति वा होद्वामीयते स यावत् क्षिप्येत् मनस्तावदादित्यं गच्छत्येतद्वै लोकद्वारं विदुषां प्रपदनमिति श्रुत्योक्तः। तत्र स जीवः ॐमिति वा ह उत् वा मीयते शब्दयते गच्छतीत्यन्ये व्याहरतीति वा 'ॐमित्येकाक्षरं ब्रह्म व्याहरन्' इति गीतायाः। एष आदित्यगमनस्योपायः। यावन्मनःक्षेपः प्रेरणं तावदिति योगः 'परो हि योगो मनसः समाधिः' मनो यत्र निषिक्तमस्येति आदित्यं ब्रह्मलोकम्। अन्तस्तद्धर्मोपदेशादिति सूत्रात्। गमनेति 'अथ यत्रैतदस्माच्छरीरात् उत्क्रामति अथैतैरेव रश्मिभिरूर्ध्वं आक्रमते' इति श्रुत्योक्तः। अथ तदा एतैरेवादित्यरश्मिभिः नाडीप्रसृताभिरेवोर्ध्वमाक्रमत इति। अविदुष इति ननु निरोधोऽविदुषामिति श्रुतेरव्यवहितपूर्वमेतद्वै खलु लोकद्वारं विदुषां प्रपदनमिति श्रुतेर्विदुष इति तस्येतिपदस्य व्याख्यानं न त्वविदुष इति चेत्तत्राहुः कर्मणामिति। तथा चायं विद्वानविद्वान् अविद्वच्छब्दवाच्यः तर्हि क्वे

मिति। योगश्च, तयोर्ध्वमायन्नमृतत्वमेतीति च। तस्माज्जीव एव दहर इत्येवं प्राप्ते उच्यते। दहरः परमात्मा, न जीवः। कुतः। उत्तरेभ्यः। उत्तरत्र वक्ष्यमाणेभ्यो हेतुभ्यः। तेषामपि साध्यत्वादेवमुक्तम्। जीवो नाम भगवदंशो, न भगवानेवेत्यग्रे वक्ष्यते। 'अंशो नानाव्यपदेशात्' इति। नापि ब्रह्म तावन्मात्रमिदमप्यग्रे वक्ष्यते। अधिकं तु भेदनिर्देशादिति। तस्मादिदं प्रकरणं न जीवब्रह्मविद्यापरम्। किंतु ब्रह्मवाक्यमेवेति ॥ १४ ॥

---

भाष्यप्रकाशः।

धिकारकत्वादविद्वत्त्वस्य चाज्ञानिकत्वात् तादृशस्यैव तत्साधनमुपायः प्रकारश्च। न हि विदुषो ब्रह्मभूतस्य व्यापकस्य तत् संभवतीति जीवभावस्याज्ञानकल्पितत्वाङ्गीकारे सर्वस्यापि संगतिः। सिद्धमाह तस्मादित्यादि। पूर्वमादृतादुत्तरप्रकरणस्वारस्यात् तथेत्यर्थः। एवं पूर्वपक्षमुक्त्वा सिद्धान्तं व्याचक्षते उच्यत इत्यादि। न जीव इति वस्तुतो ब्रह्माभेदेऽप्यज्ञानकल्पितभिन्न-भावो जीवो न। एतादृशस्य निवारणे अंशभूतस्य जीवस्य निवारणमनुक्तसिद्धम्। अत उभय-विधोऽपि जीवो नेत्यर्थः। उत्तरत्रेति वाक्यशेषे। उभयविधोऽपि जीवोऽत्र निराक्रियत इति बोधयितुं जीवस्वरूपमाहुः जीवो नामेत्यादि। नापीत्यादि च एतेन स्वोपपादनीयस्य प्रकार-स्याकाल्पनिकत्वं बोधितम् ॥ १४ ॥

रश्मिः।

विद्वानित्यतः आह नहीति। ननु निरोधोऽविदुषामित्यत्राविद्वच्छब्दार्थः कः इति चेत्कर्माप्य-विदुषामित्यर्थः इति गृहाण। पूर्वमिति पूर्वपक्षे। वाक्येति वक्ष्यमाणसूत्रविषयीभूते। तथा च विषयवाक्ये ब्रह्मपुरं शरीरं आत्मोपनिषदि बाह्यदेहस्यात्मत्वात्। तत्र दहरमक्षरं बालकं वा पुण्डरीकं वेश्म ब्रह्मगृहम्। नैतत्। दहरपदस्याक्षरे शक्तेः सर्वेषां शब्दानां ब्रह्मवाचकत्वात्। शक्तिसंकोच-लक्षणरूढ्या बालके दहरपदम्। यद्वा। अर्भकौकस्त्वादित्यादिसूत्रे तथाव्याख्यानाद्दहरो बालकः अस्मिन् वेश्मनि अन्तर्दहराकाशः तस्मिन् यदन्तः सर्वे कामास्तदन्वेष्टव्यम्। तत्र दहरः परमात्मा बालकग्रहणे धर्मानुपपत्तेरतो भाष्ये 'ज्ञानशक्तिक्रियाशक्ती संदिह्येते परस्थिते' इत्युक्ते शक्ती विचार्ये परं तु आधारनिरूपणं भज्येतातोत्रोक्तधर्माधारो दहरः परमात्मेति। ननु दहरपदस्य मूषिकादौ शक्तेः तत्रैव धर्माणामुपासनार्थमुपसंहारे को दोषो भक्तिस्तु भविष्यत्येवोपासनासत्त्वात् 'श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते' इति वाक्यादिति चेन्न श्रीआचार्यवाक्येष्वविश्वासस्यापराधेषु गणनादपराध-प्रसङ्गात्। 'दहरो मूषिकायां च स्वल्पभ्रातरि बालके' इति विश्वकोशे त्रिषु शक्त्युक्तावपि नाम-नारायणादिकोशेष्वन्यत्रापि शक्तेः। किं च दहरपदं परमात्मवाचकं ॐमित्येतदक्षरमिदं सर्वं तस्योप-व्याख्यानमिति मण्डूकोपनिषच्छ्रुतेः। अत्र ॐमितिपदं दहरवाचकम्। ॐमितिपदस्य ब्रह्मव्याख्यानस्य इदंपदवाच्यसमीपवर्तिनां पदार्थानां व्याख्यानत्वादुपव्याख्यानं यद्यपि तथाप्यग्रेमूतं भवद् भविष्यदिति सर्वमोंकार एवेति श्रुत्या वाच्यवाचकाभेदविवक्षया ॐकाराभेदोक्तेर्दहरपदमपि ॐकार-वाचकमिति। ननु तथापि परमात्मैकदेशमूषिकादौ श्रुतिप्राप्ता शक्तिः श्रुत्यन्तरेण परमात्मनि प्रोक्ता तत्र किं कारणमिति चेच्छृणु मूषिकादावपि दशविधलीला सहितस्य भगवतोवस्थानाच्छ्रुतीनां तदर्थकत्वेन परमात्मनि शक्तिः प्रोक्तेति। तथा च सुबोधिनी 'एकैकस्मिन् पदार्थे दशविधलीलासहितो भगवाँस्तिष्ठति' इति। एवमन्यत्र ॥ १४ ॥

## गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॥ १५ ॥

उत्तरहेतूनां मध्ये हेतुद्वयमाह गतिशब्दाभ्याम् । गतिर्ब्रह्मलोकगमनम् । 'एवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति' इति । 'एष आत्मापहतपाप्मा सत्यकामः सत्यसंकल्पः' इति केवलभगवद्वाचकाः शब्दा ब्रह्मलोकशब्दश्च । ननूक्तं जीवस्यैवैते शब्दा गतिश्च मनोरथादिकल्पितानामिति । तन्निराकरणायाह । तथाहि । तथैव गतिशब्दौ भगवत्येव युक्तौ । अनृतेनापिधानं हि तेषां विशेषणम् । अज्ञानावेष्टितत्वमित्यर्थः । न त्वज्ञान-

---

भाष्यप्रकाशः ।

गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॥ १५ ॥ सूत्रमवतारयन्ति उत्तरेत्यादि । व्याकुर्वन्ति गतिरित्यारभ्य युक्तावित्यन्तम् । गतेरज्ञानकल्पितजीवपरत्वं यदुक्तं तत् परिहरन्ति अनृतेनेत्यादि विरोधश्चेत्यन्तम् । तेषामिति प्रजाशब्दोक्तानां जीवानाम् । अयमर्थः । पूर्वपक्षी हि जीवपरमात्मनोरज्ञानकल्पितं भेदं पारमार्थिकमभेदं च वदन्नज्ञानकार्यान्तःकरणावच्छिन्नत्वाज्जीवस्वरूपमज्ञानकल्पितं मन्यते । अज्ञाननाशेऽवच्छेदकनाशात् तन्नाशं चानुजानाति ।

रश्मिः ।

गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॥ १५ ॥ गतिरिति । भाष्ये । एवमेवेति यथा हिरण्यनिधिं भूमेरधस्तान्निक्षिप्तं निधिक्षेत्रानभिज्ञा निधेरुपर्युपरि संचरन्तो निधिं न लभेरन्, एवमेव सुषुप्तिकाले प्राप्तवन्त्योपि न लभन्त इत्यर्थः । उक्तमिति पूर्वपक्ष उक्तम् । मनोरथादीति । मनोरथस्य आदौ स्वप्नमाये मनोरथ आदिर्यस्य प्रतिक्षणनूतनदेहस्य मनोरथादी च मनोरथादिश्च मनोरथादयस्तैः कल्पितानाम् । तथा हीति सौत्रं पदं व्याख्येयम् । व्याचक्रुः तथा हीति पदद्वयम् । न तु तथा हीति निदर्शने व्याख्यानात् । हीत्यस्य व्याख्यानं भगवत्येवेति युक्तार्थे हिशब्द इत्यर्थः । अत्र सूत्रे एवकारो मण्डूकप्लुत्या वर्ततेऽतस्तथैव उक्तप्रकारेणैव गतिश्च शब्दश्च तौ भगवति अथातो ब्रह्मजिज्ञासेति सूत्रानुवर्तितब्रह्मणि अत्राप्येवकारः संबध्यते । एवकारेण जीवव्यवच्छेदः । प्रकृते । अनृतेनेति श्रुत्यर्थस्तु भाष्य एवास्ति । नन्वनृतेन प्रत्यूढाः इत्यस्या रत्नप्रभाकारेणाप्यज्ञानेनावृता इत्यर्थस्वीकारात् कं प्रत्याक्षेप इति चेन्न । एवमाक्षेपसंभवात् । जीवत्वस्याज्ञानकल्पितत्वं न वस्त्वभावान्नाज्ञानावृतत्वमर्थः संभवति परेषाम् । न हि जलचन्द्राः केनाप्यावृता भवन्ति किं च यद्येन कल्पितं तत्तेनावृतं भवतीति नियमादावृतत्वं यथाकथंचिदभ्युपेयते तदापि न त्वदभिमता ज्ञानावृतत्वरूपाज्ञानकल्पितत्वं किं तु युक्तं भाष्योक्तमज्ञानावेष्टितत्वं वस्तुभूतस्य जीवस्येत्याक्षेपः अज्ञाननाशेपि स्मरणदर्शनादित्याशयेन भाष्यं प्रपञ्चयामासुः अयमिति । पूर्वपक्ष उक्तः स विद्यतेऽस्य स पूर्वपक्षी तत्राराग्रमात्रो जीव एवाकाश इत्याह स च द्वितीयाध्यायतृतीयपादे शंकररूपः । अज्ञानेति बुद्ध्यादिकल्पितम् । 'बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यपरोपि दृष्टः' इति श्रुतेः । अज्ञानकार्येति अन्तःकरणमेव तैः बुद्धिपदेनोच्यते तथा च बुद्ध्यवच्छिन्नत्वादित्यर्थः । यावदात्मभावित्वसूत्रे एतदुक्तं तैः । परमार्थतस्तु न जीवो नाम बुद्ध्युपाधिपरिकल्पितस्वरूपव्यतिरेकेणास्तीति । अज्ञानेति तथा च यावदात्मभावित्वसूत्रभाष्यं यावदयमात्मा संसारी भवति यावदस्य सम्यग्दर्शनेन संसारित्वं न निवर्तते तावदस्य बुद्ध्यादिसंयोगो न शाम्यतीति भवच्छिन्नत्वीत्यवच्छेदकं बुद्धिरूपम् ।

भाष्यप्रकाशः ।

आत्मनो व्यापकत्वाद् गमनागमने उपाधिनिष्ठे अङ्गीकुर्वन्तो जीवात्मन्यौपचारिके मन्यते । तदिदमेतद्वाक्यविचारे विरुध्यते । अत्र हि ब्रह्मलोकेऽहरहर्गच्छतामपि ब्रह्मलोकाज्ञाने हेतुभूतं विशेषणम्, अनृतेन प्रत्यूढा इति । तत्रानृतपदस्याज्ञानवाचकत्वाङ्गीकारेऽपि प्रत्यूढपदं पिहितत्वमेव ब्रूते । अनृतापिधाना इति वाक्यान्तरस्वारस्यात् । न तु तत्कल्पितत्वम् । क्वापि तथा अदर्शनात् । अतस्तस्याज्ञानावेष्टितत्वमर्थो न त्वज्ञानकल्पितत्वम् । तत्र हेतुर्दृष्टत्वम् । यतः सुषुप्तादुत्थितः सर्वोऽपि, न किंचिदवेदिषमिति सुषुप्तौ स्वस्याज्ञानावेष्टितत्वमेवाहेति दृश्यते । यदि हि गन्ता अज्ञानकल्पितः स्यात् तदा जागरणे अज्ञाननाशे तस्यापि नाशात् स्मरणं नावकल्प्येत । अतो गन्तृत्वेन स्वाम्रिकादीनां कल्पनमसंगतम् । नाप्यवच्छिन्नस्य गन्तृत्वम् । प्रदेशानामचलत्वेनोपाधावेव तत्पर्यवसानात् । नचाराग्रमात्रत्वस्य बुद्धिगुणकृतत्वेनावास्तवत्वाद् वस्तुतो ब्रह्मरूपस्य जीवस्य व्यापकत्वेनौपचारिकमेव गमनमतो गन्तुरभाव एव वास्तव इति युक्तम् । तथा सति, अननुविद्य व्रजन्तीत्यादिना अज्ञानिनः फलाभावस्य श्रुत्यैवोक्तत्वेन, ज्ञानिनश्चाज्ञाननाशाद् गमनाऽभावस्य त्वया व्युत्पादितत्वेन, अथ य इहात्मानमनुविद्य व्रजन्तीत्याद्युक्तस्य गन्तुरनङ्गीकारे द्विविधगतिबोधकशास्त्रवैफल्यापत्तेः । न चाराग्रमात्रत्वस्य चरमवृत्तावेव

रश्मिः ।

गमनेति अहरहरितिश्रुत्युक्ते । अङ्गीकुर्वन्निति अत्र संधिः प्रमादात् । औपेति सिंहो माणवक इतिवत् । क्वापीति स्वप्नादौ तथा कल्पितत्वेन प्रकारेण । अज्ञानावेष्टितत्वं क दृष्टमित्याकाङ्क्षामपनुदन्तोऽज्ञानेति भाष्यं विवृण्वन्ति स्म अत इति । दृष्टत्वादिति भाष्यं विवृण्वन्ति स्म तत्रेति । गतिशब्दाभ्यां दहरः परमात्मा इत्येकं वाक्यं गतिशब्दौ तथाहि भगवत्येव युक्तौ द्वितीयं वाक्यं दृष्टमितिसूत्रांशेन फलितोर्थो दृष्टत्वादिति । अज्ञानावेष्टितत्वेन दृष्टं यतोतो गतिशब्दौ तथाहि भगवत्येव युक्तौ इति तृतीयं वाक्यं गतिर्जीवरूपपरनिष्ठव्यापारजन्या संयोगविशेषरूपा भगवति शब्दस्तु वाच्यवाचकतारूयसंबन्धेनेति । अधुना दृष्टमित्यस्यार्थं वक्तुभाष्यं तथाहीत्यावृत्य योजितवान् । कर्मणि क्तस्य द्योतकं विवरामासुः यत इति । दृश्यत इति सर्वैरज्ञानावेष्टितत्वं दृश्यते । अज्ञानेति । विदुषस्तत्त्वमसीतिवाक्योत्थप्रमापारोक्ष्येणाज्ञाननाशे । स्मरणमिति 'न किंचिदवेदिषम्' इत्येवं न शब्दोक्ताभावप्रतियोगिस्मरणम् । यतोऽभावज्ञाने प्रतियोगिज्ञानं कारणम् । स्वाम्रिकेति जीवानाम् । आदिपदेन सुषुप्तिः । अवच्छिन्नस्य बुद्धिरूपावच्छेदकावच्छिन्नस्य । प्रदेशेति बुद्ध्यादिरूपशरीरप्रदेशयोगेन विभक्तस्यात्मनः प्रदेशरूपाणां जीवानामाकाशवदचलत्वेनोपाधिर्बुद्ध्यादिस्तस्मिन् । यथा घटे चलति नभसि चलनप्रतीतेस्ताद्दशचलनस्योपाधौ घटादौ पर्यवसानं तद्वत् । न च गन्तुरित्यादिभाष्यं विवरीतुमाहुः न चारेति । बुद्धीति एतच्च द्वितीयस्य तृतीयपादे तद्गुणसारत्वसूत्रे उक्तं शंकराचार्यैः । इत्यादिनेति एतांश्च सत्यान् कामा९स्तेषा९सर्वेषु लोकेष्वकामचारो भवतीत्यादिपदसंग्राहकम् । त्वयेति त्वया शंकराचार्येण तद्गुणसारत्वसूत्रभाष्ये तथोत्क्रान्त्यादीनामप्युपाध्यायत्ततां दर्शयतीत्येवं व्युत्पादितत्वेन । इत्यादीति 'एतांश्च सत्यान् कामा९स्तेषा९सर्वेषु लोकेष्वकामचारो भवति' इत्यादिपदसंग्राहकम् । द्विविधेति अननुविद्यव्रजनमनुविद्यव्रजनं चेति गतिद्वयम् । उपक्रान्तत्वाद्गतिद्वयबोधकं शास्त्रमेतदुक्तम् । अन्यदपि शास्त्रं विफलं स्वरूपनाशहेतुत्वात् । न चारेतिभाष्यं विवरीतुमाहुः न चारेति । चरमेति अहं ब्रह्मास्मीति शाब्दापरोक्षचरमवृत्तौ । वृत्तिर्नाम विषयचैतन्याभि-

परिकल्पितत्वम् । दृष्टत्वात् । तथैव हि दृश्यते । सर्वोऽप्याह, न किंचिदवेदिषमिति । नच गन्तुरभाव एव । शास्त्रवैफल्यापत्तेः । न ह्यात्मनाशः पुरुषार्थः । कर्मकर्तृविरोधश्च तथा । अपहतपाप्मत्वं च । तद्विरुद्धधर्माणामनुभवात् । भग-

भाष्यप्रकाशः ।

नाशात् ततः पूर्वं मूलाज्ञानमात्रत्वेनाराग्रमात्रत्वसत्तया गन्तुरपि सत्त्वाच्च शास्त्रवैफल्यमिति वाच्यम् । तथा सत्यत्र गन्तृत्वेन विवक्षितस्यात्मनश्चरमवृत्तौ नाशात् तस्या वृत्तेर्हेयत्वापत्तिः । न ह्यात्मनाशः पुरुषार्थ इति । किंच । जीवस्य वस्तुतो ब्रह्माभेदेन गन्तुरनङ्गीकारे, आत्मानमनुविद्य व्रजन्तीत्युक्तस्य ज्ञानक्रियायामात्मगन्त्रोः कर्मकर्तृभावस्यापि विरोधः । कृतकायव्यूहस्य योगिन इवोपाधिभेदेऽप्यात्मभेदस्फूर्तेरदर्शनात् । अत्रत्यकर्मकर्तृभावस्य च भेदमूलकताया एकवचनबहुवचनयोः प्रयोगादेव स्फुटत्वादिति । एवमनृतेन प्रत्यूढा इत्यस्याज्ञानावेष्टितत्वमात्रबोधकत्वात् तस्य च सुषुप्तिसाक्षिणा दृष्टत्वाज्जीवपरमात्मनोरंशांशिभावेन भेदसिद्धौ तद्गतेर्ब्रह्मविषयकत्वमेव युक्तमिति दृष्टत्वेन हेतुना साधितम् । अतः परं शब्दस्य ब्रह्मपरत्वं दृष्टत्वेन साधयन्ति तथेत्यादि । अपहतपाप्मत्वं च धर्मान्तराणामप्युपलक्षकम् । तेषां जीवपरतायामयुक्तत्वे ब्रह्मपरतायां युक्तत्वे च दृष्टं प्रमाणत्वेन दर्शयन्ति तद्विरुद्धेत्यादि । तथाचोभयत्रापि दृष्टस्यैव साधकत्वात् तेऽपि शब्दा ब्रह्मपरा एव युक्ता इत्यर्थः । ब्रह्मलोकपदस्य ब्रह्मपरत्वं पूर्वपक्षग्रन्थ एव साधितमतो नात्र शङ्कांशः । ननु ब्रह्मवादेऽपि सर्वस्य ब्रह्मात्मकत्वाज्जीवब्रह्मणोरंशांशिभावजनकस्य विभागस्याज्ञानकृतत्वमेव वाच्यम् । क्रियया विभागाङ्गीकारे ब्रह्मणोऽप्यनित्यत्वा-

रश्मिः ।

व्यञ्जकोन्तःकरणाज्ञानयोः परिणामविशेष इति तत्त्वानुसंधाननामग्रन्थे । नाशादिति एतच्च यावदात्मभावित्वसूत्रभाष्ये परैरुक्तप्रायं तर्कात् । अत्र हेतुमाहुरित्याहुः न ह्यात्मेति । कर्मकर्त्रिति भाष्यं विवरामासुः किं चेति । आत्मगन्त्रोरिति । आत्मानमित्यात्मा तच इहेत्युक्ता अथ य इहेत्युक्ताश्च व्रजनकर्तारो गन्तारः । कृतेति कृतः परकायेषु व्यूहः प्रवेशो येन । एकेति य आत्मानं व्रजन्तीत्यत्र श्रुत्यंशे । तस्याज्ञानपिहितत्वरूपाज्ञानवेष्टितत्वस्य च सुषुप्तिसाक्षी प्राज्ञः साक्षित्वात्सुषुप्तिद्रष्टृत्वम् । तद्गतेर्जीवगतेः । धर्मेति । सत्यकामसत्यसंकल्पौ धर्मान्तरौ ब्रह्मलोकशब्दप्रतिपाद्यत्वं च । तद्विरुद्धेति । अपहतपाप्मत्वादिविरुद्धपाप्मत्वासत्यकामत्वासत्यसंकल्पत्वब्रह्मलोकशब्दाप्रतिपाद्यत्वानाम् । उभयत्रेति गतौ शब्दे च । भाष्ये । ध्यानादावित्यादिपदेन धारणा 'चिन्तयन् चेतसा कृष्णं मुक्तो भवति संसृतेः' इति तं ध्यायेदिति च ध्यानमुक्तमेव । ननु समाधिः कुतो नोक्त इति चेन्न संप्रज्ञातसमाधेः सिद्धिहेतुत्वेनामोक्षफलकत्वात् । असंप्रज्ञातस्य मोक्षफलकत्वेन मोक्षे चाभेदात् । प्रकृते । विभागस्येति सर्वे जीवा व्युच्चरन्तीति विभागस्य । अज्ञानेति ज्ञानविरुद्धा संपदज्ञानम् 'अज्ञानं यदतोन्यथा' इति गीतायाः । तद्विशेषा अन्ये माया भिदा बुद्धिरन्तःकरणमविद्या देहाध्यासान्तःकरणाध्यासप्राणाध्यासेन्द्रियाध्यासस्वरूपविस्मरणानि । कर्म च मिथ्याज्ञानतृष्णापदैरज्ञानशक्तिरूपसत्त्वरजस्तमःपदैर्वाच्याः सत्त्वं ब्रह्मव्यतिरिक्तत्वेन ज्ञानजनकं रजो विक्षेपशक्तिः तम आवरणशक्तिः । मायिकसृष्टौ रजः कारणम् । विक्षेपशक्तिर्लिङ्गादि ब्रह्मान्तं जगत्सृजेदिति तत्त्वानुसंधाने तत्कृतत्वमित्यर्थः । क्रिययेति नैयायिकैर्विभागनिरूपणे प्रतिपादितविभागाङ्गीकारे । अनित्यत्वेति विका-

वति तु इदानीमेव तेषामनुभवः। ध्यानादावुपलब्धेः। पृथिवीशरावबदेव जीव-ब्रह्मविभागो न त्वज्ञानकृतः। तथाहि। अज्ञानं नाम चैतन्यान्तर्भूतं तच्छक्तिरूपमनादि। उत बहिर्भूतम्। सांख्यवत्। न। बहिर्भूतं चेत्। सांख्यनिराकरणेनैव निराकृतम्। अन्तःस्थितायाः शक्तिरूपायाः स्वरूपाविरोधिन्या न स्वरूपविभेदकत्वम्। आश्रयनाशप्रसङ्गात्। कल्पनायाश्चाप्रामाणिकत्वात्। बहिःस्थितस्यैव हि भेदकत्वम्। कुठारादिवत्। नापि वायुवत्। तच्छक्तित्वात्। किंच। कोऽयं ब्रह्मवादे

भाष्यप्रकाशः।

पत्तेः। अतो घट्टकुटीप्रभातन्यायापातात् किं तन्मतदूषणप्रयासेनेत्यत आहुः। पृथिवीत्यादि। तथाच, बहु स्यामित्यादीच्छया कृत इति विभागवत्तयैवाविभागोऽपि पृथिवीशरावदृष्टान्तादेव सिध्यतीति न दोष इत्यर्थः। ननु विभागस्याज्ञानकृतत्वेऽप्येतत्तुल्यमित्याकाङ्क्षायां तद् दूषयितुमज्ञानं विकल्पयन्ति तथाहीत्यादि। द्वितीयपक्षदूषणं स्फुटम्। प्रथमं दूषयन्ति अन्तरित्यादि। अयमर्थः। यदि सा स्वरूपाविरोधिनी तदा स्वरूपभूताञ्जीवान् न व्याप्नुयात्। अथ स्वरूपविरोधिनी तदा जीवानिव परमात्मानमपि व्याप्य जीवमिव तं कुर्यात्। तथा सति तस्या आश्रयनाशप्रसङ्गाद् ब्रह्मशक्तित्वमपि भज्येत। यदि च तस्यास्त्रिगुणात्मकत्वमुपगम्य शुद्धसत्त्वेनेश्वरोपाधित्वं, मिश्रसत्त्वेन जीवोपाधित्वमित्येवं स्वरूपाविरोधविरोधाभ्यां विभेदकत्वं कल्प्येत तदा श्रुत्याद्यनुक्तत्वेन तस्याः कल्पनाया एवाप्रामाणिकत्वादसंगतमेव विभेदकत्वम्। यतो लोके शास्त्रे च बहिःस्थितस्यैव भेदकत्वं कुठारादिवत्। ननु 'नासिके निरभिद्येतां दोधूयति नभस्वति' इत्यत्रान्तःस्थस्यापि वायोर्भेदकत्वं दृष्टमिति चेत् तत्राहुः नापीत्यादि। तथाच वायोरन्तःस्थत्वेऽपि ब्रह्माण्डशक्तित्वाभावादेतस्यास्तु ब्रह्मशक्तित्वाद् दृष्टान्तवैषम्येणायं पक्षोऽप्य-

रश्मिः।

रित्यापातेनानित्यत्वं घटादिदृष्टान्तेन तस्यापत्तेः। घट्टकुटीति अयं न्यायोऽत्रैवाग्रे द्वितीयाध्यायोपान्ते ज्ञानप्रक्रियायामस्ति। यथा स्तेयकृतो घट्टकुट्या निर्गतस्य तत्रैव प्रभातं तथा जीवब्रह्मवादनिर्णयार्थं प्रवृत्तस्याज्ञानकृतजीवब्रह्मवाद एव पर्यवसितिः। न लैङ्गिको जीवब्रह्मविभागः सर्वस्य ब्रह्मात्मकत्वेन विभागस्याज्ञानकृतत्वात्। इत्यादीति आदिपदेन 'प्रजायेय' इति पदम्। एकसंबन्धिज्ञानस्यापरसंबन्धिस्मारकत्वेनाहुस्तथैवेति। 'अविभक्तं च भूतेषु विभक्तमिव च स्थितम्' इति गीतात्रयोदशाध्याये विभक्तप्रत्ययासाधारणं कारणं विभक्तत्वमिवाविभक्तप्रत्ययासाधारणं कारणमविभक्तत्वं स्मृतम्। पृथिवीत्वेन पृथिवीशरावावविभक्ताविति प्रत्ययवत् भगवदिच्छया ब्रह्मजीवयोर्ब्रह्मत्वेनाविभागः ब्रह्मजीवौ ब्रह्मत्वेनाविभक्ताविति प्रत्ययात्। एतदिति सर्वस्य ब्रह्मात्मकत्वम्। एवं तात्त्विकान्यथाभावे इवातात्त्विकान्यथाभावे ब्रह्मात्मकत्वं तुल्यमिति विवर्तेन विकल्प इत्यर्थः। तथाहीति इदमव्ययं निदर्शने। अत्र। भाष्ये। अनादीति यावदात्मभावीत्यर्थः। निराकृतमिति तुरीयपादे निराकृतं भविष्यति। तथानुत्थानाय कल्पनाया इतिभाष्यं विवरीतुमाहुः यदि चेति। विरोधेति ईश्वरत्वस्य जीवत्वस्य च सहानवस्थानलक्षणविरोधः। संसारित्वदशायां मुक्तत्वदशायां जीवत्वाभावादविरोधः। कुठारादीत्यादिपदेन शास्त्रीयबहिर्योगादिः पञ्चरात्राद्युक्तः। हृदयग्रन्थिभेदनः। शास्त्रेपि कुठारादिरेव वा। भेदकत्वमिति विराण्नासिकयोस्तद्ब्रह्मजीवयोः। ब्रह्मशक्तीति तथा चाज्ञानं यदि ब्रह्म स्यात् तद्धर्मौ भेदकत्वं वायौ स्यात्त्वेवमतोऽज्ञानस्याभे-

प्रद्वेषो येन मिथ्यावादः परिकल्प्यते। अज्ञानादिति चेत् । पीतशङ्खप्रतिभानवदुक्तं मतकरणम् । ब्रह्मविदुपासनया तु गमिष्यति । शर्कराभक्षणेनेव पीतप्रतीतिः ।

सर्वज्ञेन हि वेदव्यासेन भाविमिथ्यावादनिराकरणेनेदमधिकरणमारब्धम् ।

---

भाष्यप्रकाशः ।

संगत इत्यर्थः । एवं जीवब्रह्मभेदस्याज्ञानिकत्वं दूषयितुमज्ञानं विकल्प्य दूषितम् । अतः परं तन्मतस्य प्रत्यक्षश्रुतिविरुद्धत्वाय दूषणान्तरमाहुः किंचेत्यादि । बहु स्यामिति प्रत्यक्षश्रुतिसिद्धे ब्रह्मवादे कोऽयं प्रद्वेषो येन प्रपञ्चमिथ्यावादः कल्प्यते । प्रत्यक्षादिना प्रपञ्चे ब्रह्मत्वाज्ञानादिति चेत् तर्हि पीतशङ्खेत्याद्युक्तरीत्या सत्सङ्गेन तादृशाज्ञाननिवृत्तौ तदादरस्यापि निवृत्तेरपार्थं मतकरणमित्यर्थः । ननु भवत्वेवं तथाप्येतस्य मतस्याधुनिकत्वादेतन्निराकरणायाधिकरणप्रणयनकथनं त्वयुक्तमेवेत्यत आहुः सर्वज्ञेनेत्यादि । निराकरणेनेति हेतौ तृतीया । 'प्रकृत्यादिभ्य उपसंख्यानम्' इति वार्तिकात् स्वरूपे वा । तथाच पुराणेषु भाविवृत्तोक्तिकथनवदत्र भाविमि-

रश्मिः ।

दकत्वेन दृष्टान्तेत्यादिः । ब्रह्मवाद इति ब्रह्म सर्वमिति वादो ब्रह्मवादस्तस्मिन् । तथा च गीता 'अहं सर्वस्य प्रभवः' इति अविद्योपादानकं सर्वं नास्ति अतो न मायावादः । उत्तराच्चेति सूत्रे स्फुटः । अज्ञानादिति भाष्यं विवरामासुः प्रत्यक्षादीति । इत्यादीति पीतः शङ्खः इति शङ्खशौक्ल्यप्रतिकूलस्य पीतस्यान्यस्य भावनं स्मरणं तद्वत् । सिद्धान्ते तु अन्यस्य बुद्धिरूपस्य भावनं व्यापनं तेन ख्यातिस्तस्येति ख्यातिवादे प्रपञ्चितान्यख्यातिः । सत्सङ्गेनेति प्रकाशसमासावुपासनायां भक्तिसाहित्यकथनादुपासनाङ्गसत्सङ्गो गृह्यते । भाष्ये उपासनापदाच्चात्र सन्तः साधवः ब्रह्मसत्ताविदो वा 'अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः' इति श्रुतेः तेषां सङ्गेन भवन्ति सुभगा लोकपावनीः कथास्तज्जोषणात् सनातने निश्चला भक्तिर्भवति तत्र यादृशी मर्यादाभक्तिर्भवति तादृशी पुनरुत्थानशून्याऽज्ञाननिवृत्तिः । अत्र पक्षे ब्रह्मवित्सहकृतोपासना ब्रह्मविदुपासना तयेति भाष्यार्थः । यद्वा सत्सङ्गेनेति ब्रह्मविदुपासनयेति भाष्यार्थः । गमिष्यतीति भाष्यस्य तादृशाज्ञानस्य शङ्खपीतत्वरूपानिर्वचनीयख्यातिरूपाज्ञानस्य निगमनं निवृत्तिं करिष्यतीत्यर्थः । तस्यां सत्यामन्येषां तदादरस्य कल्पतिरिक्तेषु युगेषु निवृत्तेरपार्थमित्यादिः 'कलौ तदादरो मुख्यः' इति निबन्धः । ब्रह्मविदुपासनाया भ्रमनिवृत्तिकारणत्वम् । शिक्षायां 'अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात् ये तत्र ब्राह्मणाः संमर्शिनः युक्ताः अयुक्ताः अलूक्षाः धर्मकामाः स्युः यथा ते तत्र वर्तेरन् तथा तत्र वर्तेथाः' इति । वृत्तविचिकित्सा संशयस्तस्य भ्रमोपलक्षक इति । ननु ब्रह्मविदुपासनया न सर्वोपसममार्गश्रवणमेकादशस्कन्धोक्तस्य न वा सांख्यस्येति कथं ब्रह्मविदुपासनयेत्यादि । मैवं । उपपादितस्य शास्त्रार्थत्वात् । न चान्योपपादितमपि शास्त्रार्थं इति वाच्यम् । अस्य परमार्थविदङ्गीकृतत्वात् । नन्वन्येपि परमार्थविद इति शङ्क्यम् । धर्मस्थाने नवमे उक्तम् । बृहस्पतेरेषां सत्त्वात् । मायावादमसच्छास्त्रमिति पुराणाच्च । स्वरूप इति गोत्रेण गार्ग्य इतिवदभेदे प्रातिपदिकार्थे वा । भावीति भाविनी सूतस्योक्तिः यथाऽग्निपुराणे 'सूत त्वं पूजितोस्माभिः सारात्सारं वदस्व नः' इति शौनकोक्तः सूतः 'गीतासारं प्रवक्ष्यामि सर्वगीतोत्तरोत्तरम् । कृष्णो यमर्जुनायाह' इति प्रतिज्ञाय 'दैवी ह्येषा

तस्माज्जीवानामेवाज्ञानदर्शनाद् ब्रह्मणः सर्वज्ञत्वदर्शनाद् गतिशब्दौ ब्रह्मविषयावेव न जीवविषयौ। किंच, लिङ्गं च वर्तते। 'यथेवेह कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयते' इति। न हि स्वाज्ञानं स्वस्य संभवति। हिताकरणप्रसक्तिश्च। नच ज्ञानेन सामर्थ्यमुद्बुद्धमिति वाच्यम्। विरोधित्वात्। न हि ज्ञाने जाते कर्तृत्वमस्तीति विप्लववादिनोऽङ्गीकुर्वन्ति।

विरुद्धा च कल्पना। अहं ब्रह्मास्मीति। अत एव सर्वभावश्रुतेः। तज्ज्ञानं

भाष्यप्रकाशः।

ध्यावादनिराकरणेन हेतुना वा तन्निराकरणरूपं वा इदमधिकरणमतस्तथा कथनं नायुक्तमित्यर्थः। सिद्धमाहुः तस्मादित्यादि। अत्र दर्शनद्वयं क्रमेण गतिशब्दयोस्तथात्वसाधकं ज्ञेयम्। एवं दृष्टं व्याकृत्य लिङ्गं व्याकुर्वन्ति किंच लिङ्गमित्यादि। गतिशब्दयोर्ब्रह्मपरत्वे लिङ्गमपि वर्तते इत्यर्थः। पूर्वं गतेर्लिङ्गं व्युत्पादयन्ति यथेत्यादि। अत्र हि वाक्यशेषे, तद्य इहात्मानमननुविद्य व्रजन्तीत्यात्माज्ञानं लोकक्षयहेतुत्वेनोच्यते। यद्यात्मा ब्रह्माभिन्नः स्यात् तदा अपहतपाप्मादिगुणकत्वात् स्वस्य स्वाज्ञानं न संभवति अत इदमज्ञानं जीवस्य ब्रह्माभिन्नत्वं बोधयद्गतेर्ब्रह्मविषयत्वे लिङ्गमित्यर्थः। किंच। यदि गन्तॄणां मनोरथादिकल्पितत्वं स्यात् तदा अज्ञानिवज्ज्ञानिनामपि तेषां मिथ्यात्वात् तेषु सर्वलोककामचाररूपहितस्याप्यकरणप्रसक्तिः। अत इदं हितकरणमपि गतेः सत्यजीवकर्तृकत्वं बोधयद्गतेर्जीवभिन्नब्रह्मविषयत्वे लिङ्गमित्यर्थः। नन्विदं हितकरणं न गतेर्जीवभिन्नब्रह्मविषयत्वे लिङ्गम्। ज्ञानेनाज्ञाननाशात् कल्पितरूपनिवृत्तौ सामर्थ्योद्बोधेन ब्रह्माभिन्नेऽपि तस्मिन् हितस्योपयोगादित्यत आहुः नचेत्यादि। विरोधित्वादिति अनुविद्य व्रजन्तीति श्रुत्युक्तव्रजनविरोधित्वात्। तदेव व्युत्पादयन्ति न हीत्यादि। तथाचैवं कल्पनस्यासंगतत्वाद्धितकरणस्य जीवभिन्नब्रह्मविषयकगतिलिङ्गत्वमक्षुण्णमित्यर्थः। एवं गतेर्लिङ्गं व्याख्याय शब्दस्य तथात्वे लिङ्गं व्युत्पादयन्ति विरुद्धेत्यादि। जीवस्य ब्रह्माभिन्नत्वकल्पनापि

रश्मिः।

गुणमयी' 'यस्यां जाग्रति भूतानि' इत्यादीनि कतिचित्पदान्येवोक्तवान्। इदं भाविसूतोक्तिकथनं तद्वत्। तथात्वेति भाविमिथ्यावादनिराकरणं प्रकारः। षष्ठ्या लुक्। तस्य तु अन्वये स्तः साधकं ज्ञेयमित्यर्थः। अपीति भाष्यस्थस्य लिङ्गं चेति चकारस्यार्थः। सौत्रचकारस्याग्रे व्याख्यानात्। लिङ्गं शब्दस्य सामर्थ्यम्। कः शब्दः किं तत्सामर्थ्यमित्याकाङ्क्षायामाहुः अत्रेति। अत्र यथैवेहेति श्रुतौ कर्मजितपदस्यात्मानुवेदनोत्तरकालिकमरणकर्तृकर्मजिते शक्तिः तस्या ग्राहकं वाक्यशेषम्।

'शक्तिग्रहं व्याकरणोपमानात् कोशाप्तवाक्याद् व्यवहारतश्च।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सांनिध्यतः सिद्धपदस्य वृद्धाः'॥

इति नैयायिकसिद्धान्तमुक्तावलीवाक्यादाहुः वाक्यशेष इति। तद्ये व्रजन्ति म्रियन्ते। अपहतेति आदिपदेन सत्यकामसत्यसंकल्पब्रह्मलोकत्वानि स्वस्य स्वाज्ञानाभावे हेतुत्वेनोक्तानि। अज्ञानमिति कर्मजितपदसामर्थ्यान्तर्गतमिति बोध्यम्। नन्वज्ञानं लिङ्गमित्यभेदानुपपत्तिरिति चेन्न। लिङ्गपदेनाज्ञानमात्रस्य ग्रहणात्। ब्रह्मवीति ब्रह्मणाश्रयताख्यसंबन्धेन विशेषेण सिनोति संबध्नातीति विषया तत्त्वे। हितेत्यादिभाष्यं विवरामासुः किं चेति। अकरणेति ज्ञानिसेवावत्। ब्रह्मविषयेति पूर्ववत्। सामर्थ्येति शारीरज्ञानेन शरीरभोगेषु सामर्थ्यस्य शक्तत्वस्य कर्मणोद्बोधोङ्गीकृतस्तेन। अक्षुण्णमिति क्षुध बुभुक्षायां क्तो नत्वम्। तथात्व इति। ब्रह्मविषयत्वे प्रकारे तु। लिङ्गमिति

च तस्य सार्वज्ञ्ये लिङ्गम् । तस्य हि स गुणो भगशब्दवाच्यानामन्यतरः । स चेज्जीवे समायाति तत्कृपया तस्यैवास्यापि माहात्म्यं भवति । तस्माल्लिङ्गादपि गतिशब्दौ ब्रह्मविषयौ । चकारात् 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति श्रुत्या ब्रह्मत्वेन ज्ञानं नात्मनो मोक्षाय । ब्रह्मण एव तु ज्ञान-

भाष्यप्रकाशः ।

श्रुतिविरुद्धा । बृहदारण्यके, 'तद्यो यो देवानां प्रत्यबुध्यत तथर्षीणां तथा मनुष्याणाम्' इत्य-नेकजीवानुपक्रम्य, तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवतीति ज्ञानान-न्तरमेव श्रुतेः । यदि हि जीवस्य ब्रह्माभेद एव स्यात् तदा ब्रह्मणः सर्वभावस्य पूर्वमुक्तत्वात् पुनस्तत्सजातीयेन ज्ञानेन पश्चाज्जीवानां सर्वभावं न वदेत् । प्रागुक्तेनैव चारितार्थ्यादिति । न च पाश्चात्याद् ब्रह्माऽहमिति ज्ञानात्तदभेदसिद्धिः । यतस्तज्ज्ञानं जीवस्य सर्वज्ञत्वे लिङ्गम् । यदि हि सर्वज्ञो न स्यात् स्वस्य ब्रह्मात्मत्वं नानुसंदध्यादिति । तच्च ज्ञानं भगवत एव गुणो भगशब्दवाच्यानामैश्वर्यादीनामन्यतम इति पाश्चात्यत्वाद् गम्यते । स च तत्कृपया जीवे समायाति । तदा भगवत इव जीवस्यापि माहात्म्यं भवति । यथा वामदेवादेः । एवं प्रकृतेऽपि सर्वलोककामचारसत्यसंकल्पादिरूपं माहात्म्यमपि भगवद्दत्तैश्वर्यरूपत्वाज्जीवभि-न्नब्रह्मज्ञाने लिङ्गम् । तस्मादप्यपहतपाप्मादिरूपः शब्दो जीवभिन्नब्रह्मपर इति । एवं साधयित्वा निगमयन्ति तस्मादित्यादि । सौत्रस्य चकारस्य प्रयोजनमाहुः चकारादित्यादि । ब्रह्मत्वेन

रश्मिः ।

वक्ष्यमाणबृहदारण्यकसामर्थ्यं तत्रापि यः प्रत्यबुध्यत स इदं सर्वं भवतीत्यस्य सामर्थ्यम् । सर्वभाव-श्रुतिं दर्शयन्त एवात एवेति भाष्यार्थमाहुः बृहदिति । प्रत्यबुध्यतेति । आत्मानं यथावद्बोधितवान् । तदिदमिति प्रकृतं ब्रह्म तदेतत्पदार्थः । एतस्मिन्नपि काले निवृत्तबाह्यौत्सुक्यो यः कश्चिदहं ब्रह्मास्मीत्येवं वदेदित्यर्थः । भवतीति सर्वभावस्य श्रुतेरित्यन्वयः । ज्ञानानन्तरमिति यः प्रत्यबुध्यतेति ज्ञानानन्तरम् । भाष्ये । त इति क्रमवाचकं पदम् । ज्ञानानन्तरमित्यत इति पदार्थः । पूर्वमिति 'ब्रह्म वा इदमग्र आसीत् तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्सर्वमभवत्' इति श्रुत्या पूर्वमुक्तत्वात् । तज्ज्ञानं चेति भाष्यमवतारयामासुः न चेति । भाष्ये । तज्ज्ञानमिति स्मार्तमप्रयुक्त्वा भगवदिच्छया मनोरमाकारकृतप्रयोगं स्वयमङ्गीचक्रुः इतीति । जीवचैतन्यमणु सर्वशरीरव्यापि गन्धवदिति भावः । तर्हि कस्य तज्ज्ञानमित्याकाङ्क्षायां तस्य हीति भाष्यं विवरामासुः अन्यतम इति । तेन भाष्ये भगशब्द-वाच्यानामन्यतम इत्यपि पाठ इति बोधितम् । न चान्यतर इत्यपप्रयोगः इति शङ्क्यम् । अस्य भाष्यीयत्वात् । अत एव महाभाष्येऽयं प्रयोगः भाष्यस्य निःश्वसितत्वेन पुराणादिवत्प्रामाण्यात् । तत्कृपेति । 'युक्तं भगैः स्वैरितरत्र चाध्रुवैः' 'तथैव तत्त्वविज्ञानमस्तु ते मदनुग्रहात्' इति वाक्या-भ्यास् । इतीति लिङ्गं कारणं वा परतन्त्रशक्तिर्मृग्या । निगमेति नैयायिकानां तस्मात्तथेति निगमनवत् । एतत्प्रयोजनमबाधितत्वादिकं दीपिकायाम् । तथा च पूर्वभाष्योपपादितमबाधितमिति भावः । अबाधितं प्रकृतोचितं बोध्यम् । चेति । अहं ब्रह्मास्मीति मोक्षार्थिनां विरुद्धमिति समुच्चय-बोधकस्य चकारस्य समुच्चय एव प्रयोजनम् । भाष्ये । श्रुतौ अतिमृत्युर्मोक्षोऽयनरूपश्च । प्रकृते ।

मात्मत्वेनापि। तस्माद्दहरः परमात्मा ॥ १५ ॥

भाष्यप्रकाशः।

ज्ञानं नात्मनो मोक्षायेति। आत्मनो ब्रह्मत्वेन ज्ञानं न मोक्षायेति योजना। अयमर्थस्तू-क्तश्रुतिस्वात्तमेवेति तत्पदसंबद्धादेवकाराद् गम्यते एवं च, य एवं वेदाहं ब्रह्मास्मीति पुरुषविधब्राह्मणोक्तं ज्ञानं सर्वभावमात्रफलकत्वात् पूर्वकक्षैवेति। वस्तुतस्तु तत्रापि पूर्वं ब्रह्मणः सर्वरूपत्वज्ञानानन्तरमेवैवं ज्ञानमिति न विरोधः। एवमहंग्रहोपासनेऽपि बोध्यम्। सिद्धमाहुः तस्मादित्यादि। एवं दृष्टलिङ्गाभ्यामुपष्टम्भाद् गतिशब्दरूपाद्धेतुद्वयात् तथेत्यर्थः।

शंकराचार्यादयस्तु, गतेर्ब्रह्मपरत्वं, 'सता सौम्य तदा संपन्नो भवति' इति श्रुत्यन्तरे दृष्टम्। एतदेवाहरहर्ब्रह्मलोकगमनं दृष्टं ब्रह्मलोकपदस्य सामानाधिकरण्यवृत्तिपरिग्रहे लिङ्गमिति व्याचक्रुः।

रामानुजाचार्यास्तु, 'एवमेव खलु सौम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः सति संपद्यामहे' इति, सत आगम्य न विदुः सत आगच्छाम इति च गतेर्ब्रह्मपरत्वे दृष्टम्। एष ब्रह्मलोकसम्राडिति होवाचेति ब्रह्मलोकशब्दस्य ब्रह्मपरत्वे दृष्टं दहराकाशं प्रकृत्य सर्वेषां क्षेत्रज्ञानां प्रलयकाल इव सुषुप्तिकाले श्रूयमाणं गमनमवस्थानं तस्य दहरस्य ब्रह्मपरत्वे पर्याप्तं लिङ्गम्। तथा ब्रह्मलोकशब्दश्च समानाधिकरणवृत्त्याऽस्मिन् दहराकाशे प्रयुज्यमानोऽस्य ब्रह्मपरत्वे पर्याप्तं लिङ्गम्। निषादस्थपतिन्यायाच्च षष्ठीसमासात् समानाधिकरणसमासो न्याय्यः। अथवा, अहरहर्गच्छन्त्य इति न सुषुप्तिविषयम्। किंत्वन्तरात्मत्वेन वर्तमानस्य दहराकाशस्य परमपुरुषार्थभूतस्योपर्युपरि गच्छन्त्यः सर्वस्मिन् काले वर्तमानास्तमजानन्त्यस्तं न विन्दन्ति न लभन्ते यथा हिरण्यनिधिं

रश्मिः।

ब्रह्मत्वेनेति महत्प्रतीकं सुखबोधाय सर्वत्र। अत्र तु बालानां ग्रहणधारणाभाववतां सुखबोधाय। आत्मन इति जीवस्य। भाष्ये। आत्मत्वेनेति। अपिना ब्रह्मत्वेन तथा च ब्रह्मात्मत्वेन ब्रह्मत्वेनाश्रितत्वात् ब्रह्मणि जीवधर्मयोगात् जीवत्वेनापि ज्ञानं मोक्षं प्रयच्छति न तु जीवो ब्रह्मत्वेन ज्ञातः प्रयच्छत्युक्तश्रुतेः 'फलमत उपपत्तेः' इति तत्त्वसूत्रात्। गोपालतापिनीये सोहमित्यवधार्य गोपालोहमिति भावयेदित्युक्तमतो ब्रह्माहमस्मीति त्यक्त्वाऽहं ब्रह्मास्मीतिविरुद्धं कल्पनम्। प्रकृते। श्रुतिविरोधं परिजह्रुः एवं चेति। सर्वेति मात्रपदेन मोक्षसर्वज्ञानयोर्व्युदासः। पूर्वकक्षेति एकविज्ञानेन सर्वविज्ञानस्य पूर्वकक्षा। एकविज्ञानं तदपि नेति भावः। ननु तथाप्यहं ब्रह्मास्मीत्यभेदान्वयस्त्वक्षुण्णः कटकं सुवर्णमिति प्रत्ययवत्तत्राहुः वस्त्वति। एवं ज्ञानमिति अहं ब्रह्मास्मीति ज्ञानं तथा चात्राभेदान्वयेपि ब्रह्मणः सर्वरूपाद् भेदेन भेदः। एतच्च तज्ज्ञानं तस्य सार्वज्ञ्ये लिङ्गमिति भाष्यप्रकाश उक्तम्। सोहमित्याद्यहंग्रहोपासनेपि भेदं भगवद्दत्तज्ञाने त्वभेदमतिदिदिशुः एवमिति। ब्रह्म जीवभिन्नं बोध्यम्। तस्मादित्यस्य सूत्रोक्तहेतोरित्यर्थमाहुः एवमिति सूत्रे यतो दृष्टं यतो लिङ्गमित्येवं यच्छन्दार्थाध्याहारं कृत्वा पञ्चम्यन्तं दृष्टलिङ्गाभ्यामिति। उपष्टम्भयोर्गतिशब्दयोः तथाहीत्यस्यार्थयोः तथैव गतिशब्दौ भगवत्येव युक्तौ इति भाष्योक्तयोः सतोः परंपरोपष्टम्भादित्यर्थः। तथेति दहरः परमात्मत्वेन ज्ञेय इत्यर्थः। चकारार्थः पृथक्। श्रुत्यन्तर इति आन्यत्रिकश्रुतौ। एतदेवेति श्रुत्यन्तरोक्तं दृष्टमेवेति योजना। ब्रह्मैव लोको ब्रह्मलोकः इति कर्मधारयः। भिन्नप्रवृत्तिनिमित्तत्वे सत्येकार्थबोधकत्वं सामानाधिकरण्यं कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयः। निषादेति पूर्वतन्त्रे षष्ठेस्ति निषादः स्थपतिः

भाष्यप्रकाशः ।

निहितं तदजानाना इति । एषा अजानतीनां प्रजानां सर्वदा गतिरस्य दहराकाशस्य ब्रह्मतां गम यति । परस्य ब्रह्मणोऽन्तरात्मतयाऽवस्थितस्य स्वस्मिन् वर्तमानाभिः प्रजाभिरवेदनमन्तर्यामिब्राह्मणे दृष्टम् । य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयतीत्येवं गतेर्ब्रह्मपरत्वे दृष्टं लिङ्गं च द्विधा व्याचक्रुः ।

मध्वाचार्यास्तु, उत्तरेभ्य इत्यस्य, 'एष आत्माऽपहतपाप्मा सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' इत्युत्तरप्रकरणस्थां श्रुतिं हेतुबोधकत्वेनोपन्यस्य, गतिशब्दसूत्रे दहरप्रकरणस्थयोर्गतिशब्दयोरग्रिमसूत्रस्थधृत्यादेश्च पृथग्घेतुत्वमाहुः । तत्र पूर्वप्रकरणस्थहेतूननादृत्य वादकवलितानां हेतूनां पूर्वं किमर्थमादरस्तैर्दहरस्य परमात्मत्वसिद्धौ च किमर्थं सूत्रान्तरप्रणयनं तेषां निर्विवादत्वे वा, इतरपरामर्शादिसूत्राणां किमर्थमारम्भ इति चिन्त्यम् ।

यदपि जयतीर्थः । 'यो वेद निहितं गुहायाम्' 'तस्यान्ते सुषिरं५ सूक्ष्मम्' 'हृद्येष आत्मा' इति श्रुतिभिर्ब्रह्माकाशजीवेषु साधारणस्य हृदयपद्मस्थत्वलिङ्गस्य भगवति समन्वयप्रतिपादनादस्ति शास्त्रादिसंगतिरित्याह । तत्रापि सूत्रकृता दहरपदोच्चारणाद्दहरत्वेन पक्षत्वं बोध्यते । न तु हृत्पद्मस्थत्वेनेति तस्य विचारविषयत्वमेव चिन्त्यम् । कथंचित् तद्विषयत्वापादनेऽपि तस्य जीवाकाशसाधारण्यस्यापरिहारादधिकरणवैयर्थ्यस्यापि प्रसक्तिरित्यवधेयम् ।

एवं रामानुजाचार्यमतमपि विषयवाक्यगतस्य दृष्टस्य लिङ्गस्य सिद्धान्तोक्तरीत्या प्राप्तस्याविचारेणान्यत्रिकस्य तस्य ग्रहणाच्चिन्त्यम् ।

एवं शांकरेऽपि बोध्यम् ।

किंच, 'परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः' इतिवद्, दहरो गतिशब्दधृतिमहिमप्रसिद्धिभ्य इत्येवं वक्तुं शक्यत्वेऽपि यदुत्तरेभ्य इत्युत्तरवाक्यगतत्वेनैवोल्लेखः सूत्रकृता कृतो न स्वेन रूपेणातो ज्ञायते एते हेतवः साध्यत्वेनैव सूत्रकारस्याभिमता इति । यदि हेतूनां सिद्धत्वं स्यात् तदा स्वेनैव शब्देन वदेत् । गत्यादिसूत्राणि च न प्रणयेत् । अतस्तेषां स्वतन्त्रतया व्याख्यानमपि चिन्त्यम् ॥ १५ ॥

रश्मिः ।

निषादस्य स्थपतिः । गमयतीति तथा चेदं गतेर्लिङ्गान्तरमित्यर्थः । उत्तरेति प्रकरणद्वयं पूर्वपक्ष उक्तं प्रजापतिप्रकरणस्था । पृथगिति । पृथगग्रे हेतुत्वम् । वाग्घरिरितिवत् । शास्त्रादीति आदिपदेन न्यायशास्त्रम् । पक्षत्वमिति दहरः परमात्मा उत्तरेभ्य इत्यत्र । पदभेदेप्यर्थैक्याददोषं मन्वानं प्रत्याहुः कथंचिदिति । बोध्यमिति । आन्यत्रिकदृष्टादरणरूपं दूषणं बोध्यम् । स्वतन्त्रेति उत्तरेभ्य इत्यस्य नैरपेक्ष्येण फलानुकूलव्यापारवत्त्वम् । प्रधानीभूतधात्वर्थं प्रति आश्रयत्वरूपस्यातन्त्र्यस्य मनोरमोक्तस्यात्राभावात् । भास्कराचार्यभाष्येपि । एवमेवेमाः प्रजा इति श्रुतिर्गतिनिरूपणे । ब्रह्मलोकशब्दश्च कर्मधारयवृत्त्या । दृष्टं सता सोम्य इत्यादि एतत्प्रयुक्तम् ॥ १५ ॥

## धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १६ ॥

अपरं हेतुमाह । धृतेः । 'अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय' इति, । न हि सर्वलोकविधारकत्वं ब्रह्मणोऽन्यस्य संभवति । चकारात् सेतुत्वमपि । तदन्वेष्टव्यं तद्विजिज्ञासितव्यमिति लोकविधारणस्य माहात्म्यरूपत्वात् तस्यैव कर्मत्वमित्याह । महिम्न इति । महिमैष पुरुषस्य, न तु वासनारूपेण तस्मिन् विद्यमानत्वम् । संसारिधर्मत्वेनामाहात्म्यरूपत्वात् । नच विरुद्धमुभयत्रैकस्य दर्शनमिति वाच्यम् । अस्याऽस्मिन्नुपलब्धेः । अस्य एतादृशविरुद्धधर्माश्रयमाहात्म्यस्यास्मिन् भगवत्येवोपलब्धेः । ज्यायानाकाशाद्, यावान् वा अयमाकाशः, अणुः स्थूल इति । यशोदादयश्च बहिःस्थितमपि जगदन्तः प्रपश्यन्ति । न त्वेतादृशो जीवो भवितुमर्हति । तस्माद् ब्रह्मैव दहरः ॥ १६ ॥

---

भाष्यप्रकाशः ।

धृतेश्च महिम्नोऽस्याऽस्मिन्नुपलब्धेः ॥ १६ ॥ सूत्रमवतारयति । अपरमिति । उत्तरेभ्य इत्यनेन हेतुबाहुल्यस्य प्रतिज्ञातत्वात् तत्पूरणार्थमन्यं हेतुमाहेत्यर्थः । विषयवाक्ये विधृतिशब्दः, क्तिच्क्तौ च संज्ञायामित्येतद्विहितकर्त्रर्थकक्तिजन्तः । तथाच विधारक इत्यर्थः । तदत्र विधारकत्वं सूत्रे धृतिपदेनोच्यत इत्याशयेन हेतुं व्याकुर्वन्ति न हीत्यादि । सेतुत्वमिति स्वयं साधनीभूय निःसाधनपारप्रापकत्वम् । श्रुतौ त्वसंभेदपदमसांकर्यबोधकम् । अग्रिमं व्याकुर्वन्ति तदित्यादि । उक्तश्रुतिनिरूपितमन्वेषणादिकर्मत्वम् । तस्य विधारणस्येत्याशयेन हेत्वन्तरमाहेत्यर्थः । महिमेत्यादि पुरुषसूक्ते, एतावानस्येति मन्त्रे महिम्नो ब्रह्मज्यायस्त्वगमकत्वं श्रुत्यैवोक्तमतोऽस्मान्महिम्नोऽपि तथेत्यर्थः । एवंच लोकधारणस्य स्वेन रूपेण महिमत्वेन रूपेण चेति द्वेधा हेतुत्वमित्याशयः । लोकविधारणस्य कथं महिमरूपतेत्यतस्तद् व्युत्पादयन्ति नचेत्यादि । एकस्य द्यावापृथिव्यादेरुभयत्र अन्तर्बहिश्च दर्शनं विरुद्धमिति न वाच्यमित्यर्थः । ज्यायानित्यत्राकाशादाधिक्यस्य, यावानित्यत्र तथात्वस्य, अणोरणीयान् महतो महीयानित्यत्राणुः स्थूल इति प्रत्यक्षश्रुतौ, श्रीयशोदादिभिश्चैकस्यैव प्रपञ्चस्य बहिश्च मुखान्तश्चोपलब्धेर्विरुद्ध-

रश्मिः ।

धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १६ ॥ स्वयमिति पुष्टिव्याकृता । सेतुः पङ्क्तिसदा साधनपङ्क्तिः पौष्टिकानाम् । भाष्ये । अन्वेष्टव्यमित्यादौ कर्मणि तव्यः । माहात्म्यं देवत्वं तस्मात् । तस्य लोकविधारणस्यैव कर्मत्वमन्वेषणकर्मत्वं लोकविधारणादिमाहात्म्यमन्वेष्टव्यमिति । प्रकृते । अन्वेषणेति अयं कर्मत्वमिति भाष्यार्थः । एतावानिति 'एतावानस्य महिमाऽतो ज्यायांश्च पुरुषः' इति श्रुतिः । ननु प्रकृतश्रुतौ महिमपदाभावात् कथं हेतुत्ववर्णनमित्याकाङ्क्षायां भाष्याशयमाहुः एवं चेति । स्वेनेति लोकधारणत्वेन । अन्तरिति 'तस्मिन् यदन्तस्तदन्वेष्टव्यम्' इत्यन्तः । 'उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते' इति बान्तः । यशोदेतिभाष्यं विवरणमाहुः श्रीयशोदेति । धृतेश्च दहरः षोऽस्य धृतिरूपस्य नियमनस्य च महिम्नोऽस्मिन् ब्रह्मण्युपलब्धेः ।

## प्रसिद्धेश्च ॥ १७ ॥

आकाशशब्दवाच्यत्वप्रसिद्धिः । अपहतपाप्मत्वादिप्रसिद्धिः । किं बहुना प्रकरणोक्तसर्वधर्मप्रसिद्धिर्भगवत्येव, न जीवे संभवत्यतोऽपि भगवानेव दहरः । चकाराद्विधिमुखेनाधिकरणसमाप्तिः सूचिता ॥ १७ ॥

---

भाष्यप्रकाशः ।

द्बधर्माधारत्वस्य स्फुटत्वान्महिमरूपत्वमित्यर्थः । नच तन्मायया प्रदर्शितमिति वाच्यम् ।

'किं स्वप्न एतदुत देवमाया किं वा मदीयो बत बुद्धिमोहः ।
अथो अमुष्यैव ममार्भकस्य यः कश्चनौत्पत्तिक आत्मयोगः ।
अथो यथावन्न वितर्कगोचरं चेतोमनःप्राणवचोभिरञ्जसा ।
यदाश्रयं येन यतः प्रतीयते सुदुर्विभाव्यं प्रणताऽस्मि तत्पदम् ।'

इति मायादिपक्षनिराकरणपूर्वकं भगवद्योगदर्शनकारणतास्थापनादिति । तदेतन्निगमयन्ति न त्वित्यादि ॥ १६ ॥

प्रसिद्धेश्च ॥ १७ ॥ प्रकरणोक्तसर्वधर्मप्रसिद्धिरिति 'अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके' इत्यादिनोक्ता । ऐरसरःसोमसवनाश्वत्थाऽपराजिताख्यब्रह्मपुरप्रभृतिसर्वधर्मप्रसिद्धिः । एतदुपबृंहणं च 'अरनामाऽमृताम्भोधिर्ण्यनामाऽमृतसागरः' इति वाराहे चातुर्मास्यमाहात्म्ये । तदुभयान्तःस्थश्रीभागाख्यनित्यभगवल्लोकप्रसिद्धिः । पुराणान्तरेऽन्येषां च धर्माणां भगवदीयत्वप्रसिद्धिश्चेति ज्ञेयम् ॥ १७ ॥

रश्मिः ।

श्रुत्यन्तर इति रत्नप्रभोक्तो नार्थ उत्तरेभ्यः इति सत्त्वांशेनोत्तरेषां हेतूनां बहुत्वोक्तेः महिम्न इति पञ्चम्यन्तमिति ज्ञापनात् ॥ १६ ॥

प्रसिद्धेश्च ॥१७॥ आकाशवाच्यत्वापहतपाप्मत्वाद्यतिरिक्तधर्माणामस्मिन् प्रकरणे आधेयतयाभावात्केषांचिदप्रसिद्धत्वात्प्राकरणिकमभिव्यापकाधारं पुराणान्तरप्रसिद्धिं चापेक्ष्य धर्मरूपमित्याहुः अरेति श्रुतिरत्र 'अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि तदैरम्मदीयꣲसरस्तदश्वत्थः सोमसवनः तदपराजिता पूर्ब्रह्मणः प्रभुविमितꣲहिरण्मयम्' इति । इतो भूलोकात्तृतीयस्यां ऐरं इरा अन्नं तन्मयमैरो मण्डस्तेन पूर्णमैरंमदीयं सरः त दधिकारिणां हर्षोत्पादकं सोममसृतं विमितं निर्मितम् । अन्येषामिति द्वितीये प्रजापतिप्रकरणे 'य आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः' इति श्रुत्युक्तानां विजरत्वादीनां श्रीभागवते 'कृष्णस्तु भगवान् स्वयम्' इतिभगवदीयत्वप्रसिद्धिः । पाद्मे ।

'क्व प्रणादि क्व चाज्ञानमचिन्त्यानन्तसद्गुणे ।
दुर्लभत्वाच्च मोक्षस्य दर्शयेत्तानजो हरिः' ॥ इत्येवम् ।

८५ ब्र० सू० १०

अन्यनिषेधमुखेन पुनर्विचारयति ॥

इतरपरामर्शात् स इति चेन्नासंभवात् ॥ १८ ॥

ननु ब्रह्मैतादृशं जीवो नैतादृश इति न क्वचित् सिद्धमस्ति। श्रुत्येकसमधिगम्यत्वादुभयस्वरूपस्य ब्रह्मवादे। अतो यथा सर्वत्र ब्रह्मणोऽसाधारणधर्मदर्शनात् तत्तत्प्रकरणं ब्रह्मण इति निश्चीयते। एवमिहापि जीवस्यासाधारणधर्मदर्शनाज्जीवप्रकरणमिति कुतो न निश्चीयते। निश्चिते तु तस्मिन्नाकाशतुल्यत्वादयो धर्मा जीवस्यैव भविष्यन्ति नान्यस्येत्यभिप्रायेणाह इतरपरामर्शात् सः। इतरो जीवस्तस्य परामर्शः। उपक्रमोपसंहारमध्यपरामर्शैः संदिग्धे निर्णयः। तत्रात्मविदः सर्वान् कामानुक्त्वा मध्ये, 'अथ य एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते एष आत्मेति होवाचैतदमृतमभयम्' इत्यादि मध्ये। अग्रे, अथ 'य आत्मा स सेतुः' इति।

भाष्यप्रकाशः

इतरपरामर्शात् स इति चेन्नासंभवात् ॥ १८ ॥ अत्र चतुःसूत्र्या भूताऽऽकाशवारणं, ततोऽग्रिमचतुःसूत्र्या जीववारणमिति रामानुजाचार्या मेनिरे। प्रकृते त्वादित एव जीवब्रह्मवादो निवारित इत्यस्याश्चतुःसूत्र्याः किं प्रयोजनमत आहुः अन्यनिषेधेत्यादि। तथाच तत्र दहरस्य जीवव्यतिरिक्तपरमात्मत्वं स्थापितम्। अत्र त्वितरस्य दहरत्वं दूषयतीति नानर्थक्यमित्यर्थः। आशङ्कांशमवतारयन्ति नन्वित्यादि। जीवासाधारणधर्माणां प्रदर्शनार्थं परामर्शमुदाहरन्ति तत्रात्मविद इत्यादि। अभयमित्यादीति उक्त्वेति शेषः। सेतुरिति। वक्तीति शेषः। उपक्रमे, स यदीत्यादिकथनेन स्फुटत्वान्मध्यस्य जीवपरत्वं व्याकुर्वन्ति

रश्मिः।

भगवदीयत्वं जरादीनां मायिकत्वेनोक्तेस्तत्र।

भाष्ये सूचितेति नात्र वाचकता संभवति प्रसिद्धिपदेन प्रकरणोक्तयावद्धर्मसिद्ध्या ब्रह्मण्यधिकरणप्रतिपादकचरमवर्णस्यर्द्धेध्वंसस्तिरोभावस्तद्रूपसमाप्तर्द्धिवर्णाधीनत्वेनर्द्धिवर्णेनैव गणनात् चरमवर्णध्वंसः समाप्तिः तथा च भारतम्।

'यदधीना यस्य सत्ता तत्तदित्येव भण्यते।
विद्यमाने विभेदेपि मिथो नित्यं स्वरूपतः'॥ इति।

तथा च द्योतितेत्यर्थः। द्योतकश्चकारः। द्योतकत्वं तात्पर्यग्राहकत्वम् ॥ १७ ॥

इतरपरामर्शात् स इति चेन्नासंभवात् ॥ १८ ॥ अत्रेति दहराधिकरणेऽष्टसूत्रे। भूताकाशेति स्पष्टम्। परामर्शमिति उपस्थापनम्। अवस्थावन्तं जीवं शक्नोति उपस्थापयितुमिति य एष संप्रसाद इति वाक्यशेषीयपरामर्शमुक्त्वा भाष्यात्। उपक्रम इति अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामाँस्तेषां सर्वेषु लोकेषु कामचारो भवतीति भाष्योक्ता आत्मविदः सर्वकामोक्तिः। एतस्याः सर्वकामोक्तेः प्रपञ्चः स यदीत्यादि तत्कथनेनैवं स्फुटत्वादित्यर्थः। 'स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति' इत्यादिश्रुतिः, समुत्तिष्ठन्ति आत्मसंबन्धित्वमापद्यन्ते। तत्रेत्यादीति संप्रसीदत्यस्यां चित्तमिति विग्रहे छान्दसं पुंस्त्वम्। अयमर्थ उदाहृतवाक्ये जीवस्याहो न वेति संशये पूर्वपक्षीयस्तथापि मुक्तजीवपरत्वे त्वविरुद्ध इति किंचिदुच्यते। ननु शंकरभाष्ये

तत्र संप्रसादः सुषुप्तिः जीवावस्था । तत्र परसंबन्धनिमित्तेन स्वेनैव रूपेणाभिनिष्पत्तिवचनाज्जीव एवैतादृश इति गम्यते । न ह्यत्र परमात्मनोऽयं धर्मः संभवति । अतः सर्वमेव प्रकरणं जीवपरं भविष्यतीति स एव जीव एव प्रकरणार्थ इति चेत् । न । जीवस्तादृशो न भवति । विरुद्धधर्मत्वेनैव सर्वत्र तन्नि-श्चयात् । उभयोरेकरूपत्वे ह्युभयत्वमेव न स्यात् । ऋतं पिबन्तावित्यादिवाक्य-विरोधश्च । अतो न जीवस्तादृश इत्यभिप्रायेणाह असंभवात् । न हि जीवे

भाष्यप्रकाशः ।

तत्रेत्यादि । अत्र मध्ये 'तद्यथापि हिरण्यनिधिम्' इत्यनात्मविदो ब्रह्मसमीपगमनेऽपि ब्रह्माप्राप्तिं प्रतिपाद्य आत्मनो हृदि स्थितिं यत् प्रतिपादयति तद् ब्रह्मविदः प्रशंसार्थम् । ततः 'अथ य एष संप्रसादः' इत्यादिना तस्यैवात्मनो मध्ये ब्रह्मत्वं प्रतिपाद्याग्रे समाप्तौ, अथ य इत्यादिना सेतुत्वमा-त्मनो वक्ति । तत्र मध्ये उक्तस्य संप्रसादस्य जीवावस्थाविशेषत्वं बृहदारण्यके, अस्मिन् संप्रसादे रत्वा चरित्वेत्यत्र सिद्धम् । अत्र च तस्यामवस्थायां परसंबन्धेनास्य स्वरूपाभिनिष्पत्तिवचनं जीवाऽसाधारणं लिङ्गम् । तेनोपक्रमगतमात्मवेत्तृत्वमपि स्ववेत्तृत्वरूपं जीवस्यैव धर्म इति गम्यते । अज्ञानस्य जीवधर्मत्वं तु स्फुटमेव । मध्यवर्तित्वं च सेतुत्वम् । तेन तथात्वं तस्यापि । तथा चात्र प्राप्यत्वादिना ब्रह्मणः प्रतिपादनेऽपि, न तस्य प्रकरणित्वमतो जीव एव प्रकरणार्थ इत्यर्थः । एवमितरपरामर्शं व्याख्याय तस्यासाधकत्वं स्फुटीकुर्वन्ति नेत्यादि । तादृश इति प्रकरणार्थः । तन्निश्चयादिति जीवत्वनिश्चयात् । तथाच स्याज्जीवः प्रकरणी यदि ब्रह्मवि-रुद्धधर्मत्वं जीवस्य सर्वत्र नोच्येत । उच्यते तु तदतो नात्र जीवः शक्यवचन इत्यर्थः । ननु पूर्वमुक्तं यज्जीवाजातिरिक्तं ब्रह्मेति, विरुद्धधर्माणां त्वध्यास इति । अतस्तदङ्गीकारे को दोष इत्यत आहुः उभयोरित्यादि । असंभवं व्याकुर्वते न हि जीव इत्यादि । हृदयान्तर्वर्तिनि

रश्मिः ।

सुषुप्त्यवस्थावान् जीवो व्याकृतः । उपनिषट्टीकायां संप्रसादो विद्वान् जीवो व्याकृत इति कुतश्छान्दसं पुंस्त्वं स्वीकृत्य सुषुप्तिर्व्याकृतेति चेन्न आद्ये लक्षणाप्रसङ्गात् द्वितीये स वा एष संप्रसादे रत्वा चरित्वेति श्रुतिविरोधात् छान्दसे प्रयोगे छान्दसपुंस्त्वस्यादोषात् । तथा च य एष जीवः संप्रसादे 'सुपां सुः' सुषुप्तावाविर्भूतस्वरूपो हि स्वेन रूपेणाभिनिष्पद्यते इत्यर्थः । श्रुतिसूत्रयोरेककोटित्वात् । आत्मन इति 'स वा एष आत्मा हृदि' इति श्रुत्याम् । ब्रह्मेति स वा एष आत्मा हृदि तस्यैतदे-व निरुक्तं हृद्ययमिति तस्मात् हृदयमहरहर्वा एवंवित् स्वर्गलोकमेतीति श्रुत्याम् । नामादाविव हृदयाकाशे ब्रह्मदृष्ट्यारोपमात्रमिति शङ्कां वारयति स वा इति । स प्रसिद्ध आत्मा आकाशशब्दवाच्यः । हृद्ययमिति वर्णलोपः । स्वर्गमात्मसुखं हार्दं ब्रह्म एति 'अथ य एष' इति श्रुतिर्व्याख्याता । रत्वा रमु क्रीडायाम् । आनन्दभुगिति श्रुतेः । चरित्वा श्रुतिप्रामाण्यात् । चर गतिभक्षणयोः । तत्र परेति भाष्यं विवरामासुः अत्र चेति । तस्यामिति तत्रेति भाष्यार्थः संप्रसादे । अज्ञानस्य ख्यातेः 'आदेहान्तात् क्वचित् ख्यातिः' इत्येकादशाष्टादशाध्यायवाक्यात् । मध्येति हृदयस्येति ज्ञेयम् । समुद्रादिमध्यवर्तित्व-साम्यात् । तथात्वमिति जीवधर्मत्वम् । तस्य ब्रह्मणः । न हीति । अयमिति संप्रसादश्रुत्युक्तः । स्वेन रूपेणाभिनिष्पन्दनरूपो धर्मः । तादृश इति जीवः केवलो विशेषणाभावात् । भाष्ये । तेन परामर्शस्यासाधकत्वं मुक्तसाधकत्वेपि । पूर्वमिति विधिमुखाधिकरणपूर्वपक्षे निषेधमुखविचारेपि दोषो-द्घाटनस्यावश्यकत्वात् । आहुरिति दोषमाहुः । गतिशब्दयोर्विधिमुखेनाधिकरणेऽभिधावृत्तेरुक्तत्वात्

जगदाधारत्वादिकं संभवति। न हि परामर्शमात्रेण सर्ववेदान्तविरुद्धं कल्पयितुं शक्यते। परामर्शस्यान्यार्थत्वमुत्तरत्र वक्ष्यति। तस्माद् दहरो जीवो न भवितुमर्हति। वाक्यार्थो यथोपपद्यते तथोत्तरत्र वक्ष्यते। ब्रह्म त्वेकमेव नोभयमिति निश्चयः॥ १८॥

उत्तराच्चेदाविर्भूतस्वरूपस्तु॥ १९॥

उत्तरात् प्रकरणात् प्राजापत्यात्। तत्र हि दिव्ये चक्षुषि मनोरूपे प्रती-

---

भाष्यप्रकाशः।

जीवे अखिलजगदाधारत्वस्यासंभवादित्यर्थः। गतिशब्दयोरुपपादनसापेक्षत्वात्तदुभयमत्र नोक्तम्। तर्हि परामर्शस्य का गतिरित्यत आहुः न हि परामर्शेत्यादि। नोभयमिति नावस्थाभेदभिन्नम्। स्फुटमन्यत्॥ १८॥

उत्तराच्चेदाविर्भूतस्वरूपस्तु॥ १९॥ तस्य प्रकरणस्य जीवपरत्वं व्युत्पादयति तत्रेत्यादि। दिव्ये चक्षुषि मनोरूपे इति मनोऽस्य दैवं चक्षुरिति प्रजापतिना वक्ष्य-

रश्मिः।

न निषेधमुखेनाधिकरणविचारे प्राप्तिस्तथापि लक्षणातात्पर्याभ्यां जीवाद्यतिरिक्तं ब्रह्मेत्यादिपक्षस्यैव गतिशब्दयोः प्राप्तिरत आहुः गतिशब्दयोरिति। तर्हीति। यद्ययमाभासस्तावदादिपदेन संगृहीतस्य परामर्शस्येत्यादिभाष्यस्य प्रतीतेस्तदा नहीत्यादिभाष्यस्य। ननु बुद्ध्याद्युपाधिपरिच्छिन्नस्य न जगदाधारत्वादिकं संभवति वस्तुगत्या तु ब्रह्मैव जीव इति कुतो जीवे जगदाधारत्वादेरसंभव इत्यत आहुः नहीत्यादि। सर्ववेदान्तविरुद्धमिति बुद्ध्यादिपरिच्छेदकल्पनम्। भाष्ये। उत्तरत्रेति 'अन्यार्थश्च परामर्शः' इति सूत्रे स्वस्यैवं ज्ञाने हि ब्रह्मसुखं फलं ब्रह्मज्ञानापेक्षायामुपयुज्येतेति। उत्तरत्रेति सूत्रे। सुषुप्तावस्थायां भगवदाविर्भावात् तथावचनमिति। प्रकृते। नावेति न उभौ अवयवौ यस्येत्युभयं नावस्थाभेदेन भिन्नमिति यावत्॥ १८॥

उत्तराच्चेदाविर्भूतस्वरूपस्तु॥ १९॥ तस्येति 'य आत्माऽपहतपाप्मा' इत्यादिकस्य। जीवेति। ननु त्रिसूत्रमिदमधिकरणं वैयासिकन्यायमालायामङ्गीकृतं तत्कुतो नाङ्गीक्रियते इति चेन्न शंकरभाष्ये दहरशेषत्वेऽप्यधिकरणत्वाविरोधो यद्यपि तथापि विषयवाक्यमात्रभेदेऽधिकरणभेदाननुसंधानात् संशयादिभेदेऽनुसंधानात् संशयपूर्वपक्षसिद्धान्ताभेदेनाधिकरणान्तरत्वसंदेहात्। न चाशीर्वादिभेदः यथाह वैयासकिन्यायमालायां भारतीतीर्थैः प्रजापतिविद्यायां य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाचेति विषयवाक्यं तत्र जीवो वा ब्रह्म वेति संशयेऽवस्थात्रयोपन्यासाज्जीव इति पूर्वपक्षे य आत्मा अपहतपाप्मा विजरो विमृत्युरिति परमात्मानमुपक्रम्य स उत्तमः पुरुष इत्यन्ते परमात्मन एवोपसंहारात्। न चैवं जागरणाद्युपन्यासवैयर्थ्यमिति वाच्यम्। शाखाचन्द्रन्यायेन परमात्मबोधोपयुक्तत्वात्तस्मादीश्वरोऽक्षिपुरुष इति वाच्यम्। 'अन्तर उपपत्तेः' इत्यधिकरणेनैव गतार्थत्वात्। तत्र छान्दोग्योपकोसलविद्यास्थं 'य एषोऽक्षिणि पुरुषो दृश्यते' इति विषयवाक्यम्। प्रतिबिम्बो वा ब्रह्म वेति संशये प्रतिबिम्बमिति पूर्वपक्षे ब्रह्मेति सिद्धान्तः 'अनवस्थितेरसंभवाच्च नेतरः' इति सूत्रे जीवो निवारितः इति वेदान्ताधिकरणमालायां श्रीपुरुषोत्तमाः। अतो जीवपरत्वं व्युत्पादयतीत्यर्थः। अस्यार्थस्य सूच्यत्वादुपपादितः ग्रन्थः। मनोऽस्येति आत्मनो मनो दैवं दिव्यं चक्षुः

यमानो जीव एवाऽमृताऽभयरूपो निरूपितः । तस्यैवोदशरावे जाग्रत्साक्षित्वं, तदनु स्वप्नसाक्षित्वं, तदनु सुषुप्तिसाक्षित्वं निरूप्य सर्वत्र तस्याऽमृतरूपत्वमेव निरूप्यावस्थानामतात्त्विकत्वमुक्त्वा समाध्यवस्थायां मनसि तमेव जीवं तादृशं

भाष्यप्रकाशः ।

भाजत्वात्, 'य एषोऽक्षिणि पुरुषो दृश्यते' इत्यत्रोपदिश्यमाने तस्मिन् । नन्वग्रे, योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एष इति प्रश्ने, एष उ एवैषु सर्वेष्वन्तरेषु परिख्यायत इति प्रत्युत्तरात् प्रतिबिम्बपुरुष एवात्र प्रतीयत इति कथमस्य मनसि प्रतीयमानजीवरूपत्वमित्यत आह तस्येत्यादि । यदि हि प्रतिबिम्बात्मैवात्रोपदेश्यः स्यात् तदा, उदशराव आत्मानमवेक्ष्य यदात्मनो न विजानीथस्तन्मे प्रब्रूतमित्यनेन यत्संबन्धिप्रतिबिम्बे अज्ञातं तस्यात्मत्वं बोधितम् । ततस्ताभ्यामुदशरावेऽवेक्षणेन शरीरस्यात्मत्वे स्वज्ञानविषये बोधिते ततोऽपि निवार्य जाग्रत्साक्षिणं मनस्यहंविध्या प्रतीयमानं बोधयितुं साध्वलंकृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षेथामित्यादिना, एष आत्मेति वाक्येन द्रष्टात्मा बोधितः । ततस्तावता तदज्ञाने देहा-

रश्मिः ।

देशान्तरव्यवहितवस्तुज्ञानहेतुत्वात् । तस्मिन्निति दिव्ये चक्षुषि । प्रतीयमान इत्यादिभाष्यस्यमन्वेति एष उ एवेति प्रतिबिम्बपुरुषः । अन्तेष्विति मध्येषु । तस्येत्यादीति जीवस्य । उदेति उदकसंबन्धिशरावे आत्मानमवेक्ष्य यत्तत्रात्मानं पश्यन्तौ युवां इन्द्रविरोचनौ आत्मा देहस्तत्संबन्धि जीवादि न विजानीयस्तन्मे प्रब्रूतमित्यर्थः । यत्स्यमिति आत्मोपनिषदि आत्मपदस्य देहादित्रिषु शक्तिः तत्र यद्देहरूपात्मसंबन्धिवस्तु देहप्रतिबिम्बेऽज्ञातम् । प्रतिबिम्ब अज्ञातमिति स्मार्तः प्रयोगः । तस्येति जीवरूपस्य तन्मे प्रब्रूतमित्यनेन बोधितम् । अग्रेतनसंदर्भे जीवनिरूपणात् । बोधितेति तौ होचतुः सर्वमेवेदमावां भगव आत्मानं पश्याव आलोमभ्यः आनखेभ्यः प्रतिरूपमित्यनया । बोधेति यथा साध्वलंकारादिपिहितात्मावेक्षणेन देहेऽज्ञातस्तथा देहप्रतिबिम्बेऽज्ञातो जीवः आत्मेत्येवं बोधयितुम् । इत्यादिनेति इति तौ साध्वलंकृतौ सुवसनौ परिष्कृतौ भूत्वा उदशरावे अवेक्षांचक्राते तौ ह प्रजापतिरुवाच किं पश्यथ इति तौ होचतुर्यथैवेदमावां भगवः साध्वलंकृतौ सुवसनौ परिष्कृतावित्येव आत्मेति होवाचेति श्रुतिसंग्रहः । स्पष्टम् । द्रष्टेति जीवप्रसङ्गान्मायिकं द्रष्टृत्वं विवक्षितम् । यद्वाविर्भूतः स्वरूपो वक्ष्यत इति 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' इति श्रुतेः । 'भुङ्क्ते गुणान् षोडश षोडशात्मकः' इति श्रीभागवताच्च द्रष्टात्मा तत्तदिन्द्रियरूपं स्वयं ताभ्यां युक्तमात्मा भोक्ता । यथा विषयेन्द्रियमनोभिर्युक्तमुन्नेयम् । आत्मा मनसा संयुज्यते मन इन्द्रियेणेन्द्रियमर्थेन ततः प्रत्यक्षमिति नैयायिकप्रक्रियास्थले वेदान्तिनामिव मतत इति । द्रष्टात्मना बोधनादनुमानादिना तस्य देहलिङ्गविलक्षणस्य शुद्धात्मनोऽज्ञाने तावतेति वाक्यालंकारे । आकृतिगणत्वात् मनोरमायामदर्शनात् यावत्तावद्वा वा भागुरिमते तदा यावत्तावदेतौ साकल्यावधिमानावधारणार्थौ इतीमावपि तदर्थकौ 'यावता च परिच्छेदे' इति विश्वः । देहात्मेति उभयदेहात्मेत्यर्थः । तौ हान्वीक्ष्य प्रजापतिरुवाचानुपलभ्यात्मानमननुविद्य व्रजतो यतर एतदुपनिषदो भविष्यन्ति देवा वाऽसुरा वा ते पराभविष्यन्तीत्यनेन पराभवं तस्मादप्यद्येहाददानमश्रद्दधानमयजमानमाहुरासुरो बतेत्यनेनासुरत्वं च । श्रुत्यर्थस्तु एकमपि देहमेवात्मानं मत्वा गच्छन्तौ ज्ञात्वा तयोरनिष्टशङ्कया श्रावयन् प्रजापतिरुवाचानुपलभ्य साक्षात्कार्याभ्यामज्ञातमननुविद्य स्वप्रत्यक्षगोचरं चाकृत्वात्मानं विपरीतज्ञानौ व्रजतो यतरे ये

भाष्यप्रकाशः ।

त्मज्ञानवतां पराभवं तेषामसुरत्वं चोक्त्वा तत इन्द्रस्य पुनः प्रत्यागमने तं प्रति जीवस्यैव स्वप्नसाक्षित्वं पुनः सुषुप्तिसाक्षित्वादिकं प्रतिपादयति । अतोऽत्र जीव एवोपदेष्टव्यो न प्रतिबिम्बो

रश्मिः ।

केचनैतदुपनिषदो देहात्मशाब्दज्ञानवन्त इति यावत् । तथा तस्मात् देहात्मज्ञानवत्त्वात् । अददानं अदानशीलं यजमानशून्यम् । दद दाने भ्वादिरात्मनेपदी सेट् । दध धारणे भ्वादिरात्मनेपदी सेट् । क्विप् इति शेषः । तत इति देहादिनाशे प्रतिबिम्बनाशरूपदोषाद्धेतोः । विरोचनस्तु अनुपलम्भ्येत्यादिवाक्यं शृण्वन्नप्यविचार्यैवासुरानेतान् देहात्मविद्यामुवाचेन्द्रस्तु देवत्वाद्देहात्मविद्यायां देहादिनाशे प्रतिबिम्बनाशादोषं पश्यन् पुनराजगाम प्रजापतिसकाशम् । तदेतदुक्तमिन्द्रस्येति । जीवस्येति य एष स्वप्ने महीयमानश्चरत्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति स्वप्नसाक्षित्वं महीयमानः स्त्र्यादिभिः पूज्यमानश्चरतीत्यस्य स्वाप्निकान् भोगान् भुङ्क्त इत्यर्थात् । ततश्च देहस्यान्ध्यादिसत्त्वेपि स्वप्नात्मनोऽनान्ध्यादि विचार्येन्द्रः पुनराजगाम ततश्च तं प्रति सुषुप्तिसाक्षिकं तद्यत्रैतत् सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्येष आत्मेति होवाचेति सुषुप्तिसाक्षित्वम् । आदिपदेन उत्तमपुरुषावस्था तां प्रतिपादयति सुषुप्तावपि बिडौजा भोग्यं नाद्राक्षीत् सहोवाच नाहं खल्वयं भगव एवं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीति श्रुतेः । स इन्द्रः । भगवन् प्रजापते । अत्र सुषुप्तौ । यदा यदा ब्रह्मचर्येण मृदितकषायाय बिडौजसे होवाच प्रजापतिरेष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमपुरुष इत्यनया जीवन्मुक्तादिदशामाह एष संप्रसादो जीवः स्वाविद्यावस्थायां शरीरसाम्यमापन्नः केनचिदाचार्येण नासि त्वं देहादिधर्मा किं तु तत्त्वमसि इति प्रतिबोधितः सन्नस्माच्छरीरात् समुत्थाय देहादिभावनां हित्वा परं परमात्मलक्षणं ज्योतिरुपसंपद्य स्वेनात्मीयेन रूपेण सदात्मनैवाभिनिष्पद्यते अभिनिष्पद्यमानस्य स्वरूपमाह स उत्तम इति परेषां व्याख्या ।

'ये धातुशब्दा यत्रार्थे उपदेशे प्रकीर्तिताः ।
तथैवार्थो वेदराशेः कर्तव्यो नान्यथा क्वचित्' ॥

इति पत्रावलम्बनात् । कठिनोऽप्यर्थो यथाबुद्धि तावदुच्यते । एष गच्छन् इण गतौ अदिप्रत्ययः 'एतेस्तुट् च' इति सूत्रात् । समिति षम वैक्लव्ये क्विप् भ्वादिः परस्मैपदी सेट् समति । वैक्लव्यं वेतीति विप्रजनादिकर्ता विप्रजनकान्त्यसनासादनेषु अदादिः परस्मैपदी अनिट् सिद्धान्तकौमुद्यां तु गतिव्याप्तिप्रजनेत्यादिपाठः सादनस्थले खादनं च बाहुलकाड्डिः वातेर्डिच्चेति सूत्रेण । वा गतिगन्धनयोरिण् क्विप् कुङ् शब्दे भ्वादिरात्मनेपद्यनिट् कवते क्वते क्वः भ्वादेराकृतिगणत्वाद्वा क्वः । 'पचाद्यच्' प्रजनादिकं प्राति पिपर्ति वा प्र 'आतोऽनुपसर्गे कः' पचाद्यज्वा । प्रा पूरणे अदादिः परस्मैपद्यनिट् पृ पालनपूरणयोः अदादिर्जुहोत्यादिः परस्मैपद्यनिट् । सादः षद्लृ विशरणगत्यवसादनेषु भ्वादिः परस्मैपद्यनिट् । सीदतीति सादः प्रश्च सादः प्रसादः कर्मधारयः भावे घञ् पचाद्यचि स्वार्थे अण्वा । विमर्श उक्तः । शृ हिंसायां क्र्यादिः परस्मैपदी सेट् शृणाति शरणं अस्ता चराचराणां छान्दसो ल्युः । अन्यथासुसश्रुश्च रुः । शीर्यैः शरीरं शर्वशृंदिति स्यात्सूत्राणि कृदन्ते सन्ति न च शरणमिति यावन्तरस्येति शब्दमनुपलम्भाद्वारवन्तरस्य शृणात्यनेन करणे ल्युट् बुद्धिप्रेरकक्रूष्णस्य सत्त्वात् । यत्तु शृ वायुवर्णनिवृत्तेषु इति सूत्रमुणादिपञ्चमपादसमाप्त्यनन्तरं तत्तु वायुवर्णनिवृत्तेषु अर्थविशेषेषु प्रवर्तते ।

प्रतिपादयति । अतो जीवोऽपि वस्तुतस्तादृश एवेति प्रकृतेऽपि परामर्शात् स एवेति चेत् । एवमाशङ्क्य परिहरति तुशब्देन । नायमर्थो दृश्यते, किंतु किंचिद-

भाष्यप्रकाशः ।

नापि शरीरमित्यर्थः । तेन सिद्धमाह अत इत्यादि । तादृश इति अमृताऽभयादिरूपत्वाद-पहतपाप्मादिरूपत्वाच्च वस्तुतो ब्रह्मात्मक एवोत्तरप्रकरणे सिद्ध इति पूर्वत्रापि स एव ग्राह्य इत्यर्थः । परिहारं व्याकुर्वते एवमित्यादि । ननु प्रकरणस्य जीवपरत्वे निराकार्ये अत्र नकारः कुतो नोक्त इत्यत आहुः नायमर्थ इत्यादि । किंचिदिति तत्र कारणम् । तर्हि कथं परिहार

रश्मिः ।

शादो वायुः करणे घञ् । न च सामान्याद्विशेषो बलवानिति घञा भाव्यमिति शङ्क्यम् । शद्ल विशरणेति ज्ञापकात् क्वचित्सामान्यमपि विशेषस्य बाधकमिति तथा च सूत्रं वाऽसरूपोऽस्त्रियामिति । अस्मिन्धात्वधिकारे असरूपोपवादप्रत्ययः उत्सर्गस्य वा बाधकः स्त्र्यधिकारोक्तं विनेति वृत्तिः । सीदति सादं कृष्णेन जीवः करोति साधनैर्जीवन्मुक्त्यन्तरे कृष्णः सादं वक्ष्यमाणवाक्यात् कारयति जीवं सादयतीति साद इति वा पचाद्यच् । 'निवेदितात्मा विचिकीर्षितो मे' इति वाक्यात् कृष्णोत्स्या-विर्भूतं स्वरूपं, जीवन्मुक्तानां त्वक्षरम् । किं च गमनं करोतीति वा 'स तत्र पर्येति' इति श्रुतेः । अवति अव रक्षणप्रवेशतृप्तिकान्तिगतिक्रियादीप्तिप्रीत्यवगमस्वाम्यर्थादिषु स्वरवर्णानुक्रमहैमधातुपाठे । धातुपाठे तु अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्ग-नहिंसादानमानवृद्धिषु परस्मैपदी भ्वादिः क्रीडन्निति श्रुतेः । पचाद्यच् । षद्ल विषादे भावे ल्युट् सादनं विषादं करोति । इति षद्ल विशरणेत्यादिष्वर्थेषु सदिर्व्याकृतः । अस्मात् परस्मैपदी सेट् भ्वादिः । इदि परमैश्वर्ये इन्दति इदं 'इन्देः कमन्न लोपश्च' इति सूत्रेण कमन् । कमिर्नलोप इत्यपि पाठः कपिः परमैश्वर्यकर्तुः शरीरात् । शृ हिंसायां शृणाति 'कृशृपृकटिपटिशौटिभ्य इरन्' इति सूत्रेणेरन् । हिंसकात् । अत्र सुषुप्तेरुत्तमावस्थायां हिंसकः क इति प्रश्ने जीवन्मुक्त्युपक्रमात् द्वादशाङ्गस्य देहस्य हिंसकस्य क्षेत्रस्वयवादीनां सप्राणत्वात् तद्धिंसकस्य 'अत्र मां मार्गयन्त्यद्धा युक्ता हेतुभिरीश्वरम्' इति वाक्यात् 'अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम्' इति गीतायाश्च परमैश्वर्यकर्तृत्वाच्च ग्रहणम् । क्षेत्रस्थानां सेवायां गुरुमन्तरा हिंसकोपि परमैश्वर्यकर्ता ल्यब्लोपे पञ्चमी तत्प्राप्य । न च योगरूढाः प्रासेर्योगत्यागापत्त्याऽपसिद्धान्त इति वाच्यम् । आत्मोपनिषदि तस्याप्यात्मत्वात् । यथोत्तरार्थे ब्राह्मणपुत्रस्य देहोपि न लब्धः अततीत्यात्मेति व्युत्पत्तेः । सर्वस्य ब्रह्मत्वाच्च । उत्थाय । उद् उन्दि क्लेदने उच्छब्दो हि 'उदि ग्रहः' इति सूत्रे दृश्यते 'अन्येभ्योपि दृश्यते' इति क्विप् क्लेदनकर्ता । सम् प्रजनादिकर्ता शब्दकर्तेति पूर्वमुक्तं वैकल्यनिरूपणे । एवं च शरीरं प्राप्य प्रजनकान्त्यसनासादनकर्ता क्लिद् आर्द्रभावे दिवादिः परस्मैपदी वेट् आर्द्रभावकर्ता आ ऋ गतौ अदादिर्जुहोत्यादिः परस्मैपद्यनिट् क्विप् । द्रा कुत्सायां गतौ अदादिः परस्मैपदी अनिट् । कुत्सा कुर्दि क्रीडायां आत्मनेपदी सेट् कुर्दितुमिच्छा इच्छायां सन् । कुत्स अवक्षेपणे चुरादिर्वा आत्मनेपदी सेट् । अततीति आ बाहुलकादुक् प्रत्ययः । आप्नोतीति आ क्विप् पृषोदरादित्वात्पलोपः सततगन्ताऽऽपको वा । अद् क्विप् । ऋ प्रापण-त्योर्वा भ्वादिः परस्मैपद्यनिट् । 'आतोऽनुपसर्गे कः' द्रः आर्द्रः । भावः सत्ता तत्कर्ता क्लिदि शोचने क्लिदि परिदेवने अनयोर्न ग्रहणं तुमा सहभावात् तत्प्राणाचार्ये स्थित्वा प्राण आचार्य इति नवमप्रपाठक-श्रुतेः । गतिनिवृत्तिं कृत्वा ष्ठा गतिनिवृत्तो भ्वादिः परस्मैपद्यनिट् विज्ञानमयं स्वानुकूलं कर्तुं तमाचार्ये

न्यवस्तीति न नकारप्रयोगः । तदाह । आविर्भूतस्वरूपः । स्वाप्ययसंपत्त्यो-र्भगवदाविर्भावो जीवे भवति । नृसिंहोपासकस्य नृसिंहाविर्भाववत्। प्रथम उपदेशसमये भगवदाविर्भावात्। सर्वत्र स्वात्मानं पश्यन्निन्द्रेऽपि तथैवोपदिष्टवान्

---

भाष्यप्रकाशः ।

इत्यत आहुः तदाहेति। तस्माद्धेतोः कारणभूतं प्रकारमाहेत्यर्थः। आविर्भूतस्वरूप इति प्रजा-पतिवाक्ये परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत इति श्रावणात्। आविर्भूतं प्रकटीभूतं ब्रह्मस्वरूपं यस्मिन् स तथेत्यर्थः। आविर्भाव एव कथमित्यत आहुः स्वाप्ययेत्यादि। अनुग-माधिकरणे, मय्येव सकलं जातमित्यादिवाक्यानुरोधादुत्तमाधिकारिणामुपदेशभावनादिभ्यपि जीवे ब्रह्मसंपत्तिर्भवतीत्युपपादितम् । अतोऽत्रापि प्रजापतिजीवे ब्रह्माविर्भावाज्जीवे अमृताऽभ-यरूपत्वाद्युपदिश्यते। न तु जीवो वस्तुतस्तथेत्यर्थः। नन्वेवमर्थोक्तावत्र किं गमकमत आहुः

रश्मिः ।

योजयितुं गतेर्निवृत्तिम् । नि निष्क परिमाणे चुरादिरात्मनेपदी सेट् ङित् 'संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे' इति कारिकायाः वर्तनं कुर्यात्। तादृशी गतिनिवृत्तिरत्र विवक्षिता। परं पृ पालनपूरणयोः क्र्यादिः परस्मैपदी सेट् पृणाति 'पचाद्यच्' न च पृभिदिव्यधिगृधिधृषिभ्यः कुः स्यादिति कुप्रत्ययः शङ्क्यः वासरूपोऽस्त्रियामिति सूत्रेण बाधस्य विकल्पात् 'भृट्प्रां ह्रस्वो वा' इति ह्रस्वः। ज्योतिः द्युत दीप्तौ द्युतेरिसिन्नादेश्च ज इति भ्वादिरात्मनेपदी सेट् द्योतते इति ज्योतिः। उपसंपद्य उप अत्र टु वप बीजतन्तुसन्ताने भ्वादिरुभयपदी-अनिट्। वेपृ कम्पने भ्वादिरात्मनेपदी सेट् उक्तकारिकायाः कर्तरि पचाद्यच् संप्रसारणं वेपते कपि चलने भ्वादिरात्मनेपदी सेट् चलति विलसति भरति वा चल विलसने तुदादिः परस्मैपदी सेट् चल भृतौ चुरादिः परस्मैपदी सेट् तथा चोप इत्यस्य विप्रजनादिकर्ता लासस्य क्षेपरूपस्य क्रीडायाश्च कर्ता भरिता च। संप्रजनादिकर्ता शब्दकर्ता च। पद्य पद गतौ दिवादिरात्मनेपद्यनिट् पदनं कृत्वा, स्वेन स्वन शब्दे भ्वादि-पर-सेट् ड प्रत्ययः स्वनति। आविराविष्कारः फलानां कर्ता तेनाऽस्यादिकर्तृत्वं 'अन्येभ्योपि दृश्यते' इति सूत्रं डस्य तेन। न च छन्दसीति निवृत्तमिति कथं 'ड' प्रत्ययः बाहुलकाद्भविष्यति।

'क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव ।
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति' ॥

स्व शब्दोपतापयोर्वा डः स्वरति स्वं भ्वादिः प-अ-धातुः स्वकः स्वट् इत्यस्यैव रूपं लौकिकम्। अत्र वीवीयरूपम्। शब्द आविष्कारे उपपूर्वत्वाभावात् श्वा आसा वाक्यत्वात्। नाट् विप्रजनादिकर्ता शुद्ध लीलाविष्कारकर्ता कारः कृतिः कालस्तस्य कर्ता। यद्वा उप इत्यस्यार्थ उक्तः। तप ऐश्वर्ये दिवा-आ-अनिट्। तप संतापे समर्थ उक्तः ताप ऐश्वर्यं भ्वा-पर-अनिट् न तप दाहे इत्यस्य सुषुप्तावपि दाहाभावे तद्गुणसद्भावां दाहाभावात्। ऐश्वर्यं व्यापकत्वं तप आलोचने इत्यस्यापि न। आलोचनस्य विद्या-न्तर्गतस्य मायिकत्वात् 'विद्याविद्ये' इति वाक्यात्। तथाच वि प्रजनादिकर्ता लासस्य क्षेपरूपस्य क्रीडायाः कर्ता भरिता च व्यापकः तेन रूपेणेति संबन्धः पुराणमतानुकूलमत्रानुसंधेयं तद्ज्ञाने सर्व-मोहात्। रूपेण रूप मोहने दिवादिः परस्मैपदी सेट्। मुह वैचित्ते दिवादिः परस्मैपदी सेट्। चित संज्ञाने भ्वादिः परस्मैपदी सेट्। चित ज्ञाने चुरादिरात्मनेपदी सेट्। रूप्यते ज्ञायते प्रजननादिकर्ता

रश्मिः ।

शब्दकर्मा च ज्ञायते भावे घञ् । रूपं ज्ञानं तेन रौति रूपं 'खष्पशिल्पशष्पबाष्परूपपर्पतल्पाः' इति सूत्रात्कप्रत्ययः । निपातनाद्दीर्घः इति तत्सौत्रम् । अभि ।

'संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ।
कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु' ॥ इति डिन् प्रत्ययः ।

भिमी भवे टिलोपः । मि अदादिर्जुहोत्यादिः परस्मैपदानिट् तस्यैव रूपं हौ । अ । न क विनाशे चुरादिः परस्मैपदी सेट् न क्यते भावे ड उभौ प्रत्ययौ । भि प्रतियोगी वि-भजनादिकर्ता अथ न मीयते भयाभाव इति यावत् । निष्पद्यते । निष्क परिमाणे निष्कयति परिमाणं करोति । पारि पृ सर्वधातुभ्यः इञिति सूत्रेणेन् प्रत्ययः पालकः पूरणकर्ता च । माङ् माने शब्दे च अदादिर्जुहोत्यादिरात्मनेपदानिट् । माते माति वा सिद्धान्तकौमुद्यां मातुरिति दर्शनात् । प्रायपाठः सकलधातुपाठे भावप्रत्ययस्येति मानमित्यत्र भावे ल्युट् । मानं शब्दं च करोति । आप्नोति वा पालनपूरणमानशब्द-कर्तोऽकः । पद्यते गच्छति । स इति तजितनियजिभ्यो डिवेति डिदति स्यात् । सः तनु विस्तारे तनादिः परस्मैपद्यात्मनेपदी च सेट् । स्तॄ आच्छादने स्वादिः उभयपदानिट् वि-भजनादिकर्ता आच्छादककर्ता स्तृणोति भवि प्रत्ययः डित् टिलोपः । आच्छादनम् । आस तत गतिकर्ता च । छद ऊर्जने भ्वादिः परस्मैपदी सेण्न गृह्यते । घटादित्वेतच्छेदने इति स्यात् । किं तु छद संवरणे चुरादिः परस्मैपदी सेट् छाद्यते छादनं भावे ल्युट् । सम् भजनादिकर्ता शब्दकर्ता वरणस्य संभक्तिरूपस्य स्वीयत्वेनाङ्गीकारस्य च कर्ता आविर्भूतस्वरूपो जीव इति वृत्स्तुभोरर्थः । दासातिरिक्तो यो वा वृत् संघकामित्यस्यार्थः । ईश्वरे दासस्याश्रयाधीनीयं वा दास्यम् । उत् उङ् शब्दे कर्तरि क्विप् तुक् । शब्दकर्ता । तमः तमु काङ्क्षायां दिवादिः परस्मैपदी सेट् ताम्यति पचाद्यच् । पुरुषः पुर अग्रगतौ तुदादिः परस्मैपदी सेट् । पुरमुषति उष दाहे भ्वादिः परस्मैपदी सेट् पृङ् व्यायामे तुदादिरात्मनेपदानिट् 'अन्येभ्योऽपि दृश्यते' इति क्विप् । पुरा आस पुरि शेते इति व्युत्पत्त्यन्तरेपि सुबोधिन्याम् । यतस्तदज्ञाने सर्वमौल्यमिति निबन्धोक्तः । पुराणमतेनापि तुरीयावस्थोच्यते । एष गच्छन् 'आकाशवत्सर्वगतश्च नित्यः' इति सर्वत्र गच्छन् । सुषुप्तेरुत्तरावस्थेति 'स्वाप्ययसंपत्त्योः' इति सूत्रात् सधर्मकाविर्भावः । सुषुप्तौ निर्गुणाविर्भावस्योक्तत्वेनोत्तमावस्थायां सधर्मकाविर्भावौचित्यात् । उभयोरभेदो विद्वन्मण्डनेस्ति । उत्तमावस्था भक्तिज्ञानकर्मपुष्टिमार्गानुरोधेनानेकधा तदेजतीति श्रुतेः । एजृ कम्पने भ्वादिरात्मनेपदी सेट् छान्दसं परस्मैपदम् । कपि चलने । चलति चल विलसने लस श्लेषक्रीडयोः क्रीड विहारे वि अर्थः बाहुलकस्यागतिकगतित्वादुक्तौ एवं प्रकृतिप्रत्ययौ । अग्रेपीमौ न तु वल गतावित्यादेः प्रयोगः भ-पूरकः सम्प्रायोक्तभावत्वात् वक्ष्यमाणत्वाच्च तात्पर्यार्थ उच्यते । मनः चकारम् प्रादुर्भावकर्ता निर्गुणभेदेन साकाररूपप्रादुर्भावकर्ता तात्पर्यार्थोऽयं 'सर्वतःपाणिपादान्तम्' इति वाक्यात् सम्पर्कौ अग्रे । क्रान्तिरिच्छा तस्याः कर्ता जीवन्मुक्तप्रकरणात् मुक्तस्य जीवस्येच्छा । असनं प्रेरणं तस्य कर्ता । भ-पूरकः ईरणं ईर क्षेपे चुरादिः परस्मैपदी सेट् । क्षिप प्रेरणे भ-पूरकः । सूचकत्वाद्दृश्यं कर्मठज्ञानिभक्तपूरकत्वं द्योतयति प्रवृत्तिविवृत्तिभेदेन मार्गस्य द्वैविध्यात् प्रेरक इत्यर्थः । आसादनम् वि-भजनादिकर्ता । आ मर्यादा सादनस्य कर्ता सादनं विशरणम् । अथ वि-भजनादीनां क्षरणं हिंसा तस्य कर्ता जीवदेर्शीयस्योऽर्थो व्याहृतः । अतः कर्ता भजनादानमथ च रक्षणकर्ता अभिकर्ता । ननु पुरुषकी एव भजने घञ गतावितिष्टि धातुपाठस्य इति भेद भजनकर्ता

रचितः ।

गमयिता गतिकर्ता गन्तेति भेदात् । इच्छा न गृह्यतेऽग्रे तस्या उक्तेः । कान्तिः कामः काम्यते इति व्युत्पत्तिः । भगवता तथा च पुष्टिमार्गो द्योत्यते । श्रीगोपीजनवल्लभाय नमः । प्रीतिकर्ता प्री तृप्तिकान्त्योः क्र्यादिः उभयपदी अनिट् । कामस्य तृप्तिरानन्दः पुनः कामः पुनस्तृप्तिः भावे क्तिन् । इयमव रक्षणे इति धातुपाठस्था । तृप प्रीतौ दिवादिः परस्मैपदी वेट् । तृप प्रीणने स्वादिः परस्मैपदी सेट् तृप्यति तृप्नोति प्रीतिस्तृप्यते सांप्रतम् । पृण प्रीणने तुदादिः परस्मैपदी सेट् पृण्यते भावे ल्युट् । प्रीणनं बाहुलकात् यद्वा प्रीङ् युच् तुद् रीङ् । अव अस्यार्थस्तृप्यते सांप्रतम् । रक्षणगति-कान्तिप्रीतितृप्त्योऽवगमपूर्वोक्तास्तासां गमः ग्रहवृदनिश्चिगमश्चेति अप्रत्ययः । गमनं प्रवेशः । विश प्रवेशे तुदादिः परस्मैपदी अनिट् प्र-प्रवेशः प्र-पूरकस्य प्रः पूरको वेशः प्रदीपवदिति व्याससूत्रात् । श्रवणं भक्तकृतकीर्तनानाम् । श्रु श्रवणे स्वादिः परस्मैपदी सेट् श्रूयते भावे ल्युट् । श्रु गतौ न गृह्यते गतीनां निविष्टत्वेनाकाङ्क्षाभावात् । स्वामी स्वन शब्दे ड प्रत्ययः । आस्वादिकर्ता गतिः शब्दः भक्तयश्च श्रम गतिशब्दभक्तिषु भ्वादिः परस्मैपदी सेट् तथा च स्वश्चासावमः षष्ठ्यर्थे कः स्वामः सोऽस्यास्तीति स्वामी स्वामी कर्तेत्यभेदान्वयोऽन्यत्र तु भेदान्वयः मायाया भगवच्छक्तित्वात् । भेदस्य मायिक-त्वात् । अर्थः अर्थ उपयाचने चुरादिः उप प्रजनादिकर्ता क्षेपस्य गतिरूपस्य कर्ता क्रीडाया विहार-रूपायाः कर्तात्र वि प्रजनादिकर्ता क्षेपकर्ता क्रीडाकर्ता टु याच याच्ञायां भ्वादिरुभयपदी सेट् अत्र 'ऋहलोर्ण्यत्' इति सूत्रेण ण्यत् न सकलधात्वर्थप्रायपाठात् भावे ल्युट् । अर्थ्यते उपार्येभ्यो याच्यते इत्यर्थः कर्मप्रत्ययः उपार्यत्वेनोक्तानां याच्ञाकर्तोक्तः सामान्ययाचनकर्ता याचने इत्यस्य व्याख्यानं वक्ष्यते । याचनं व्याख्यातप्रायं क्रिया भावे शः 'कृञः श च' इति सूत्रेण इयङ् टाप् करणकर्ता डु कृञ् करणे तनादिरुभयपदी अनिट् 'क्रिया सा राधिका देवी' इति राधास्तोत्रादावस्ति श्रुतिरत्र 'तस्माच्च भिन्ना एतास्मा आभिर्भिन्नो न वै विभुः' इति कृष्णोपनिषदि । अत्र बृहद्वामनपुराणं उत्तरखण्डं खिलं च भृग्वादीन् प्रति ब्रह्मणो वाक्यानि ।

'षष्टिवर्षसहस्राणि मया तप्तं तपः पुरा । नन्दगोपव्रजस्त्रीणां पादरेणूपलब्धये ॥
तथापि न मया प्राप्तास्तासां वै पादरेणवः । श्रुत्वैतद् ब्रह्मणो वाक्यं भृगुः प्राहाथ सादरम् ॥
वैष्णवानां पादरजो गृह्यते त्वद्विधैरपि । सन्ति ते बहवो लोके वैष्णवा नारदादयः ॥
तेषां विहाय गोपीनां पादरेणुस्त्वयापि यत् । गृह्यते संशयो मेऽत्र को हेतुस्तद्वद प्रभो ॥
ततो ब्रह्मा भृगुं प्राह चिन्तयित्वा पुरातनीम् । कथां सर्वश्रुतीनां यद्रहस्यं परमाद्भुतम् ॥

ब्रह्मोवाच—

न स्त्रियो व्रजसुन्दर्यः पुत्र ताः श्रुतयः किल । नाहं शिवश्च शेषश्च श्रीश्च ताभिः समाः क्वचित् ॥
प्राकृते प्रलये प्राप्ते व्यक्तेऽव्यक्तं गते पुरा । शिष्टे ब्रह्मणि तन्मात्रे कालमायातिगेऽक्षरे ॥
ब्रह्मानन्दमयो लोको व्यापिवैकुण्ठसंज्ञिकः । निर्गुणोऽनाद्यनन्तश्च वर्तते केवलेऽक्षरे ॥
अक्षरं ब्रह्म परमं वेदानां स्थानमुत्तमम् । तल्लोकवासी तत्रस्थैः स्तुतो वेदैः परात्परः ॥
चिरं स्तुत्वा ततस्तुष्टः परोक्षं प्राह तान् गिरा । तुष्टोऽस्मि ब्रूत भो प्राज्ञा वरं यन्मनसीप्सितम् ॥

श्रुतय ऊचुः—

नारायणादिरूपाणि ज्ञातान्यस्माभिरच्युत । सगुणं ब्रह्म सर्वेदं वस्तुबुद्धिर्न तेषु नः ॥
ब्रह्मेति पठ्यतेऽस्माभिर्यद्रूपं निर्गुणं परम् । वाङ्मनोगोचरातीतं ततो न ज्ञायते तु तत् ॥

रश्मिः ।

आनन्दमात्रमिति यद्वदन्तीह पुराविदः । तद्रूपं दर्शयास्माकं यदि देयो वरो हि नः ॥
श्रुत्वैतद्दर्शयामास स्वं लोकं प्रकृतेः परम् । केवलानुभवानन्दमात्रमक्षरमव्ययम् ॥
यत्र वृन्दावनं नाम वनं कामदुघैर्द्रुमैः । मनोरमनिकुञ्जाढ्यं सर्वर्तुसुखसंयुतम् ॥
यत्र गोवर्द्धनो नाम सुनिर्झरदरीयुतः । रत्नधातुमयः श्रीमान् सुपक्षिगणसंकुलः ॥
यत्र निर्मलपानीया कालिन्दी सरितां वरा । रत्नबद्धोभयतटी हंसपद्मादिसंकुला ॥
नानारासरसोन्मत्तं यत्र गोपीकदम्बकम् । तत्कदम्बकमध्यस्थः किशोराकृतिरच्युतः ॥
दर्शयित्वेति च प्राह ब्रूत किं करवाणि वः । दृष्टो मदीयो लोकोयं यतो नास्ति परं वरम् ॥

श्रुतय ऊचुः—

कन्दर्पकोटिलावण्ये त्वयि दृष्टे मनांसि नः । कामिनीभावमासाद्य स्मरक्षुब्धान्यसंशयम् ॥
यथा तल्लोकवासिन्यः कामतत्त्वेन गोपिकाः । भजन्ति रमणं मत्वा चिकीर्षाऽजनि नस्तथा ॥

श्रीभगवानुवाच—

दुर्लभो दुर्घटश्चैव युष्माकं सुमनोरथः । मयानुमोदितः सम्यक् सत्यो भवितुमर्हति ॥
आगामिनि विरञ्चौ तु जाते सृष्ट्यर्थमुद्यते । कल्पं सारस्वतं प्राप्य व्रजे गोप्यो भविष्यथ ॥
पृथिव्यां भारते क्षेत्रे माथुरे मम मण्डले । वृन्दावने भविष्यामि प्रेयान् वो रासमण्डले ॥
जारधर्मेण सुस्नेहं सुदृढं सर्वतोधिकम् । मयि संप्राप्य वः सर्वे कृतकृत्या भविष्यथ ॥

ब्रह्मोवाच—

'श्रुत्वैतच्चिन्तयन्त्यस्ता रूपं भगवतश्चिरम् । उक्तकालं समासाद्य गोप्यो भूत्वा हरिं गताः' ॥

इति । अत्र हि श्रुतिभिः सर्ववेदान्तप्रत्ययं गुणातीतं वाङ्मनोगोचरातीतमानन्दैकरूपं यत् तव रूपं तत्प्रदर्शयेति प्रार्थितो भगवान् गोकुलं तत्स्थितं स्वस्वरूपं लीलां तत्र क्रियमाणां च प्रदर्शितवान् इत्युच्यते । अन्यद्विद्वन्मण्डने स्फुटम् । न च राजसं पुराणमिति नो मतमुत्कृष्टमिति शङ्क्यम् । पद्मपुराणे राजसपुराणान्युक्त्वा राजसानां स्वर्गदत्वं शुभत्वं चोक्तमिति । न च स्वर्गपदेन स्वर्गलोकोक्ते-स्तृतीयमार्गीयत्वं राजसानां पुराणानामिति शङ्क्यम् । स्वर्गपदस्यात्मसुखवाचकत्वात् । स्पष्टं चेदं निबन्धे । दुःखाभावस्य सुखस्य च पुरुषार्थत्वादुभयोरेकं सुखुपावेकं जीवन्मुक्तादिदशासु । कामिनीभावमासाद्येत्यादिपूज्ञाविताशङ्का भक्तिमार्तण्डफलप्रकरणनित्यलीलोपपादने निराकृता । प्रकृतमुच्यते । सिद्धत्रयाग्रे एतन्न्यासस्पष्टिरुच्यते । इच्छा इष्यते भावे शः निपातः तस्याः कर्ता दीप्तिकर्ता । दीप दीप्तौ दिवादिः आत्मनेपदी सेट् दीप्यति तमोनुत् । आसीदिदं तमोभूतमप्रज्ञातमिति मनुस्मृतेः । निबन्धेपि सृष्टिनिरूपणे 'कदाचित्पुनरन्यथा' इति दर्शनात् । अवासिकर्ता अव स्थूलभुक्त्यक्ष-गत्यादिकर्ताऽऽसिकर्ता विश्वसिन् । आलिङ्गनकर्ता । आ-वि-प्रजनादिकर्ता जनी प्रादुर्भावे प्र-पूर्वकः अद भक्षणे । अदादिः परस्मैपदनिट् क्विप् बाहुल्कादुत् । यद्वा । आ-वि-प्रजनादिकर्ता जन गतावत्र आङ्या च रद् अनादरे आदुः उद्गुणः क्विपि । भावः सत्ता गतिकर्ता हिंसाकर्ता चराचरभक्षको दुष्टहिंसको वा दानकर्ता स्पष्टम् । ऋतुदानकर्ता वा 'अहं बीजप्रदः' इति गीतायाः । भानकर्ता समन्वयेन भवति भाति भा दीप्तौ अदादिः परस्मैपदनिट् दीप दीप्तौ वृद्धिकर्ता वर्धते वृधु वर्धने भ्वादिः आत्मनेपदी सेट् । वृद्ध आसे चुरादिः परस्मैपदी सेट् भासते दीप्यते न च पुनरुक्तिः शङ्क्या । भक्ति-ज्ञानभेदेन द्वेधा प्रदीपनात् । प्रकृतमनुसर्पते अदु विचारणपलवसादनेषु इत्यारभ्यन्तो धातुपाठे व्याकृतः ।

रश्मिः ।

सादनं व्याक्रियते षद्लृ विषादे तुदादिः परस्मैपदी अनिट् सादनं विषादः । विकारार्थः प्रजनादिरस्य कर्ता । सादः सकलसपर्यार्थकः । स्थूलभुजि सीदतेरर्थ उक्तः । पुनरुक्तिमापद्यमानोऽनवर्थकहितो हि सीदतेरर्थः । सूक्ष्मभुजि ज्ञातव्यः स्वभेश्लेषं करोति । श्लिष आलिङ्गने दिवादिः परस्मैपदी सेट् । श्लिष्यति आ आस्ता लिगि गतौ सेट् लिङ्गति भ्वादिः परस्मैपदी गतिं करोति गच्छतीत्यर्थः । एकवाक्यता जाता लसेर्द्वितीयोर्थः क्रीडा क्रीड विहारे भ्वादिः परस्मैपदी सेट् विहरति । वि-प्रजनादिकर्ता सन् हरति । हारं हरणं भक्तेच्छया प्रजनादिकर्ता भक्तमनसां हरणं करोति । व्याख्यातमेष इति । संप्रसादो व्याक्रियते । संप्रजनादिकर्ता शब्दकर्ता च । प्रशब्देन पूरकः सादः सीदत्यर्थार्थकः । प्रजनादिकर्तृत्वं स्फुटम् । तत्र जनी प्रादुर्भावे दिवादिरात्मनेपदी सेट् प्र-पूरकः आ आस्ता दुट् द विदारणे क्र्यादिः परस्मैपदी सेट् दृङ् अनादरे वा तुदादिः आत्मनेपद्यनिट् घिच् गुण 'ऋत उत सार्वधातुके' इतिसूत्रात् भावः सत्ता अस् भुवि तल् भूसत्तायां पदेवी सत्ता । अत्र समर्थे विशब्दश्च स्वार्थे ष्यञ् वा तत्र विकारार्थे प्र-पूरकः जनार्थे प्र-पूरकः आ आस्ता दुरर्थे नञ् विनाशः व्यर्थे प्रपूरकः अन गतौ तुदादिः परस्मैपदी सेट् जनो गतिः गत्यर्थे कविधानं गम्लृ गतौ कान्त्यर्थे इच्छा असनार्थे प्रेरणम् । प्रार्थे पूरकत्वं ईरणं क्षेपः आसादनार्थे आ आस्ता सादनं विस्तारः कर्तव्यः अवार्थेऽनवस्थाऽङ्गीकार्या नाशार्थे अदर्शनम् नञ् विनाशार्थः व्यर्थं उक्तः नाशार्थः अदर्शनम् । पुनर्नवार्थे अनवस्थाङ्गीकार्या आ आस्ता दर द विदारणे दरः व्यर्थः प्र पूरकः अन गतौ जनोगतिः कान्त्यर्थे इच्छा असनार्थे प्रेरणम् प्रार्थे पूरकत्वं ईरणं क्षेपः । आत्मना विदारणं भयं द भये भ्वादिः परस्मैपदी सेट् 'सोऽबिभेत्' इति श्रुतेः दृङ् अनादर इति वा एवं जनिर्दुरन्तो व्याकृतः । भावः सत्ता समर्थे शब्दः । शब्द आविष्कारे चुरादिः परस्मैपदी सेट् उपसर्गात्तु भाषणाविष्कारयोः प्रतिशब्दयति । शुको शुक्तो वामदेवो शुक्त इति तयोः शब्दः प्रथमस्कन्धे शुकप्रश्नविवरणाध्याये पार्थे पाण्डोत्सवो च । ननु कथं धात्वर्थसंगतिरिति चेदुच्यते । आ आस्ता विप्रजनादिकर्ता केचन भक्तधर्माः केचनशुक्तयोः सुट् आविष्कारार्थः न चाविष्कारपदस्य सोर्थ इति वाच्यम् । 'संपरिभ्यां करोतौ भूषणे' 'समवाये च' इति सूत्रस्य संपरिपूर्वकस्य करोतेः सुट् स्यात् भूषणे संघे चार्थे इतीति वृत्तेः लोके त्वाविष्कारपदस्यार्थः परिनिविम्यः इति षः । 'ये धातुशब्दाः' इति पत्रावलम्बनात् । कारः कृतिश्चेष्टा काल इति यावत् आ····ममवदाविष्कारकालः तस्य कर्ता । न च व्यपेक्षावादे संप्रसादत्वेन बोधो न स्यात् इति वाच्यम् । व्यपेक्षावादिभिन्नपक्षत्वेन पुनरुत्पादनानाकाङ्क्षायाः प्रकारार्थः पूरकः 'पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते' इति बृहदारण्यकात् । सादस्तु अवोपसर्गघटित इति भक्त्यर्थकः प्रेरणाभिव्यक्ति-तत्त्वतो ज्ञानकर्मभक्तिपुष्टिमार्गानुरोधेन व्याख्येयः । शुक्तावधारणविर्भावः । अवतरणिकामिति स्वतन्त्र तदानीं सादो भिन्न न हि न सीदतेर्भुत्सर्गः कर्ममार्गेण भवतो मुक्तेः स्वर्गफलेनात्मसुखं सादः पूर्वोक्त परंतु कृष्णेन प्रेरितः सादो भवा वा । भक्तिमार्गेप्येवम् । पुष्टौ तु प्रेरणा निबन्धः 'निवेदितात्मा विचिकीर्षितो मे' इति वाक्यात् । ननु संप्रसादशब्दस्य समस्तत्वेन समासवाक्या वाक्यार्थः संभवति नैवं वेदत्वात् । निपुणेन शाब्दबोधे संपादनीये शक्तेः शाब्दबोधविषये सुघटत्वात् । 'सावपिभ्यां दशनौ' इति सूत्रेण दन् उत्प्रत्ययान्तः शब्दः स सौत्रः सादो भक्ताभक्तयोर्न च संप्रसादः सुषुप्तिः इति भाष्यविरोध इति वाच्यम् । अत्र सुषुप्तेर्निषेधाभावात् ।

रश्मिः ।

'योऽन्तःसुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः ।
स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति' ॥

इति गीतासंन्यासयोगाध्याये ब्रह्मभूत आविर्भूततिरोहितानन्दः इति ब्रह्मभावमुक्तम् । इति 'मुक्तोपसृप्यव्यपदेशात्' सूत्रात् । किं च गीताष्टादशाध्याये ।

'सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे ।
समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ॥
बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च ।
शब्दादीन् विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥
विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥
अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥
ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्' ॥

'भक्त्या मामभिजानाति' इति फलात्मकं ज्ञानमुक्तम् । तेनायं ब्रह्मभावो भक्तिमार्गीयः पुष्टिमार्गीयस्तु भगवदनुग्रहेण भक्तिमात्रमिति नास्ति कर्ममार्गीयोपि । भगवदर्पणेन फलानासक्ततामात्रं ब्रह्मभावस्थानापन्नं कर्मयोगाध्याये 'असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः' इति गीतायाः । प्रकृत-मुच्यते । अस्माच्छरीरात् व्याक्रियत इदि परमैश्वर्ये परः पृ प्रीतौ स्वादिः परस्मैपदी अनिट् पृणोति पुप्रेपि तेन परः पचाद्यच् । वासरूपोऽस्त्रियामिति सूत्रप्रवर्तनाच्च परिरित्यादि प्रीञ् तृप्तिकान्त्योः तृप प्रीतौ कान्तिरिच्छा प्रीतिमनु इच्छां करोति समीयते मानविषयः क्रियते येन स परमोत्कर्षः तदुत्कर्षैश्वर्यस्य व्यापकत्वं साधनद्वारा तत्कर्तुः अश्नोतेर्वरट् 'अश्नोतेराशुकर्मणि वरट् च' इति सूत्रेण च अकारस्य इकारः संपादकः यद्वा 'स्थेशभासपिसकसो वरच्' इति सूत्रेण वरच् । ईश ऐश्वर्ये अदादि-रात्मनेपदी सेट् ईष्टे ईश्वरः तस्य भावः ऐश्वर्यम् शरीरात् हिंसकात् उपपादि मया । मुक्तौ तु संसारः हिंसकात् । भक्तमुक्तौ तु अभेदं भगवत्सेवोपयोगिसंसारातिरिक्तसंसारयोर्हिंसकात् । पुष्टौ तु उत्कर्षस्य मर्यादायाश्चापि हिंसकात् । तच्छरीरं प्राप्य । समुत्थायेति व्याक्रियते सं-प्र-पूरको जनो ब्रह्मणि यज्ञार्थे कः प्रादुर्भावो वा गतिः स्पष्टा प्र-पूरकः । आ आशा दुर् अनादरकर्ता भक्तमनोरथात् । ध्वंसकत्वं वा भावी स्थितिरिति दरति द्रियते वा दुर् अ नञोः । नञर्थो विनाशः वि-प्र-पूरकः अनेके गतिर्नञर्थे कात् । कान्तिरिच्छा । असनं क्षेपः पूरकत्वं च आसादनं आ वि-प्रजनादिकर्ता आशा आप्तत्वं षद्लृ विशरण इत्याद्यर्थकं आकः सादाभावाच्च सद् मतौ इत्यस्य चुरादिः परस्मैपदी सेडेव रूपं आकः परस्यैव सद् गतावित्यस्य प्रयोगसत्त्वात् । अत्र विकारो निविष्टः विकारार्थे आसादनं तत्र दुर्विकार एवमनवस्थाङ्गीकर्तव्या । षद्लृ विशरणगत्यवसादनेषु अत्रावार्थेऽनवस्थाङ्गीकार्या दुष्करानेकविषयत्वात् । नित्यलीलासत्त्वाच्च इत्यर्थ आ आशा वि-प्रजनादिकर्ता दुरर्थः । आविष्कार-[illegible] करणं कालः इति समर्थः । उदर्थः स्पष्टः । स्वाय यथाख्यातं प्राणायाचार्येषु गतिनिवृत्तिं [illegible] निवृत्तकर्तृत्वं मि लिप्तः परिकाये परि पृ पालनपूरणयोः पृ प्रीतौ पृ व्यायामे पृ पूरणे

रश्मिः।

सर्वधातुभ्य इन् इतीन् अव्ययादाप् सुप इति सूत्रेण अव्ययत्वात् सुपो लुक्। पत्ति पिपर्ति पृणोति परति पारयतीति वा परि।मानं माने।माङ् माने शब्दे च स्पष्टम्। शब्दः आ आप्ता वि वीप्रजन-कान्त्यादिषु सुट् आविष्कारार्थकः कारः कृतिः कालः। पर्यर्थस्य मानं आप्तिः पूर्णं एतदादिकर्ता वर्तनं कुर्यात् परं स्पष्टं ज्योतिः द्युत दीप्तौ दीप दीप्तौ सूर्यनारायणं मुख्याधिकारिणं नारायणमात्रं वा।

'ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसंनिविष्टः।

केयूरवान् मकरकुण्डलवान् किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः'॥

इति वाक्यात्। दीप्तियुक्तं वा विशेषानुपलब्धेः धातुपाठे उपसंपद्येति स्पष्टम्। स्वेन स्वन् शब्दे स्वनति यस्मः सर्वभावः 'स सर्वविद्भजति मां सर्वभावेन भारत' इति पुरुषोत्तमयोगाध्याय-वाक्यात् अत्र श्रुतौ उत्तमः पुरुष इत्युक्तेः अत्र सर्वभावः सर्वात्मभावोपि यथा 'सर्वदा सर्वभावेन भजनीयो व्रजाधिपः' इत्याचार्यचतुःश्लोक्यां तथा श्रीगोस्वामिनां 'सदा सर्वात्मभावेन भजनीयो व्रजाधिपः' इति ग्रन्थेस्ति तेन रूपेण यदि चोत्तमः पुरुष इति श्रुतौ ह्युत्तमत्वपुरुषत्वयोः जीवधर्मत्वं तदा यस्मो ज्ञानभक्त्यादिरूपः यद्वा रु शब्दोपतापयोः ड प्रत्ययः स्वं अन्यत् पूर्ववत्। रूपेणेति स्पष्टम्। अभिनिष्पद्यते भयाभावस्तस्य संबन्धी। अभयो वा। निरुपसर्गार्थः स्फुटः निस वा अर्थः कल्पनीयः स्फुटमन्यत्। जीवन्मुक्तादिविषये पुराणं प्रसिद्धमिति दिक्। यतोऽनुक्तमप्यूहते पण्डितो जनः। प्रकृतमनुसर्यते। एवं प्रतिपादयति उत्तमावस्थाम्। तस्मादिति तदाहेत्यत्र तदित्यव्ययं पञ्चम्यन्तं तस्यार्थः प्रकारमिति कर्माध्याहारः। अत्र शंकराचार्याः आविर्भूतं ब्रह्मस्वरूपं यस्येति जीवब्रह्मवादमाश्रित्याहुः तन्न ब्रह्मजीवविभागस्य ब्रह्मेच्छाकृतत्वव्युत्पादनात् जीवत्वस्य वास्तविकत्वा-दित्याहुः तथेत्याविर्भूतस्वरूपत्वेन। स्वाप्ययेत्यादीति एतच्च स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हीति सूत्रे फलाध्यायोपान्त्यस्थे वक्ष्यते। अनुगमेति प्रथमपादेऽन्तिमाधिकरणे। उपेति आदिपदेनो-पासना। यदत्र शंकराचार्याः। विवेकज्ञानाभावादनाविर्भूतस्वरूपः सन् विवेकविज्ञानादाविर्भूतस्वरूप इत्युच्यते न चान्यादृशाविर्भावानाविर्भावौ स्वरूपस्य संभवतः स्वरूपादेवेत्याहुः तन्न तथासति मध्येवेति वाक्यान्तरेऽधिकरणत्वेन जीवोत्तयसंभवापत्तिरित्याशयेन द्वितीयं स्थलमुक्तम्। एतेन नृसिंहोपासनेत्यादिभाष्यं विवृतं ज्ञेयम्। तथेति अमृतत्वाभयत्वरूपेण। भाष्ये। तथेति स्वात्मत्वेनैव। प्रकृते। अन्यथेति। उदशरावे उदकयुक्ते शरावे। तस्य जीवस्य जाग्रत्साक्षित्वं इन्द्रियैर्विषयग्रहणलक्षणजाग्रदवस्थासाक्षित्वं तच्च ज्ञानज्ञेयानामाविर्भावतिरोभावज्ञानात्स्वयमेवमा-विर्भावतिरोभावहीनः स्वयंज्योतिः स साक्षीत्युच्यते इति सर्वोपनिषच्छ्रुतेः स्वयं ज्योतिष्ट्वं तदाविर्भूतस्वरूपत्वेन जीवस्यास्त्येव। एवं स्वप्नः सुप्तस्य विज्ञाने तत्साक्षित्वम्। सुषुप्तिस्तु अकामरूपो भगवान् तत्साक्षित्वं तदन्वेतदमृतमभयमेतद् ब्रह्मेति श्रुतिभिः सर्वत्रावस्थात्रयेषु तस्य जीवस्यामृत-रूपत्वमेव निरूप्यावस्थानामतात्त्विकत्वं शरीरस्य नाशमनु एव नश्यति नाहमत्र भोग्यं पश्यामीत्ये-वमवस्थात्रये विजातीयश्रुत्योक्त्या उपसंपद्येत्यत्रोपोपसर्गे व्याख्याते क्रीड विहार इत्यस्य व्याख्याने प्रजनादिकर्ता हारो हरणं चोक्तम्। तत्पुष्टिमार्गीयमुख्यत्वाद्विवृतम्। अत्र तु पूरकस्याविर्भूतत्वात् प्र-पूरकः जनः प्रादुर्भावकर्तृत्वाद्ब्रह्मणः तस्य गतिकर्ता प्रेरणकर्ता साधनेषु मनसः कर्मज्ञानभक्ति-योगेषु कर्मणि योगः 'योगः कर्मसु कौशलम्' इति कर्मयोगाध्यायात् कर्मयोगः कर्मसु कौशलम्। ज्ञाने योगः आत्मदर्शकत्वम् 'अयं हि परमो योगो यद्योगेनात्मदर्शनम्' इति वाक्यात्। भक्तौ

प्रजापतिः । अन्यथा प्रतिबिम्बादावमृताऽभयवचनं मिथ्या स्यात् । इन्द्रे त्वाविर्भावाभावात् प्रजापत्यसन्निधाने विपरीतं पश्यति । अतस्तावन्मात्रदोषपरिहारायान्यथोपदेशः । स्वप्नादिषु तथा प्रकृतेऽपि । सुषुप्तावस्थायां भगवदाविर्भावात् तथा वचनम् । तस्मादुभयमपि भगवत्प्रकरणमेव । एवमन्यत्रापि भगवदावेशकृता भगवद्धर्माभिलापा ऊह्याः । तस्माद्दहरः परमात्मैव ॥ १९ ॥

---

भाष्यप्रकाशः ।

अन्यथेत्यादि । प्रतिबिम्बादावित्यत्रादिपदेन शरीरसंग्रहः । तथाच यदि पुरःस्फूर्तिकमाद्रियते, तदा बाधितार्थत्वप्रसङ्गः । यदि चैतं त्वेव त इत्यादिवाक्यानुरोधात् प्राकरणिकमाद्रियते, तदा तु प्रजापतिना स्वाभिसंहितस्य परमात्मन एवानुव्याख्येयत्वकथनादिन्द्रस्य तदबोधेन तत्र जीवोक्तिभ्रमेति तन्निवृत्त्यर्थं तस्य परं ज्योतिःसंबन्धेन स्वरूपाभिनिष्पत्तिवचनाच्च तस्य तथात्वं स्वाभाविकमपि तु ब्रह्मस्वरूपाविर्भावकृतमेवेति नैतदनुरोधेन पूर्वप्रकरणेऽपहतपाप्मत्वादिगुणकत्वं प्रकरणित्वं च जीवे वक्तुं शक्यम् । प्रजापतिवाक्येऽपि जीवस्य प्रकरणित्वेनासिद्धत्वादित्यर्थः । नन्वेवं सतीन्द्रस्य कुतः संदेहसंभव इत्यत आहुः इन्द्रे त्वित्यादि । प्रजापत्यसन्निधाने इति अन्यथा तदानीमेव व्युत्तिष्ठेदनात्मत्वं वा प्रजापतौ निश्चिनुयात् । तावन्मात्रदोषपरिहारायेति स्वासन्निधाने विपरीतदर्शनपरिहाराय । अन्यथोपदेश इति देहादिविलक्षणतयोपदेशः । तथा वचनमिति स्वरूपाभिनिष्पत्तिवचनम् । शेषं स्फुटम् ॥ १९ ॥

रश्मिः ।

योगो ध्यानादिसमाध्यन्तरूपः सर्वत्र प्रसिद्धोपदेशादित्यधिकरण उक्तः । एवं समाध्यवस्थायां मनसि सर्वतो निवृत्तव्यापारे इत्यादि तदधिकरणभाष्येऽधिकरणत्वेनोक्ते मनसि तं पूर्वोक्तमेवं जीवं तादृशमवबोधकर्तारं मनोस्य दैवं चक्षुरिति श्रुतौ प्रत्यभिज्ञायते जीवन्मुक्तप्रसङ्गेनोपलब्धनिजसुखानुभवस्याधिकरणोक्तस्यात्र विवक्षितत्वात् । एतेन तस्योदशराव इत्यादिभाष्यफक्किकापि विवृता । अस्मात्प्रकारादन्येन प्रकारेणेत्यर्थः । बाधितेति अमृताभयांशे बाधितः प्रतिबद्धोर्थो यस्यास्तत्त्वप्रसङ्गः । यदत्र शंकराचार्याः एतं त्वेव ते भूयोऽनुव्याख्यास्यामि नो एवान्यत्रैतस्मादिति प्रतिज्ञाय अत्र अन्यत्र इत्यन्यत् मघवन् मर्त्यं वा इदं शरीरमित्यादिना प्रपञ्चेन शरीराद्युपाधिसंबन्धप्रत्याख्यानेन संप्रसादशब्दोदितं जीवं स्वेन रूपेणाभिनिष्पद्यते इति ब्रह्म स्वरूपापन्नं दर्शयन्न परस्माद्ब्रह्मणोऽमृताभयस्वरूपादन्यं जीवं दर्शयतीत्याहुः तं निराचक्रुः यदि चेति । प्राकरणिकमिति जीवम् । स्वेति मनोरूपे दिव्ये चक्षुष्यभिसंहितस्य । ननु कुत एतदिति चेन्न मनोवबोधो मनुते इति व्युत्पत्तेः मनोस्य दैवं चक्षुरिति श्रुतौ मनसोवबोधात्मकस्य पूर्वमुपपादनात् । दैवं दिव्यं 'दिव्यं ददामि ते चक्षुः' इति गीतैकादशाध्यायवाक्यात् । चष्टे चक्षुः चक्षिङ् व्यक्तायां वाचि अदादिरात्मनेपदी सेट् । अस्य जीवन्मुक्तस्य मनोऽधिकरणात्मकमवबोधरूपमस्य जीवन्मुक्तस्य परमैश्वर्यं कर्तुं । दैवं दिव्यं दिवि भवं भवार्थे यत् । चक्षुः क्रिया चष्टे चक्षिङ् व्यक्तायां वाचि अदादिरात्मनेपदी सेट् चष्टे वि-प्रवचनादिकर्तृ सत् अक्ता अज गतिक्षेपणयोः भ्वादिः परस्मैपदी सेट् अज्यते भावे क्तः टाप् एताक्षी क्षेपणं प्रेरणं पूरक क्षेपरूपा गतिरूपा वाक् वच परिभाषणे अदादि परस्मैपदी अनिट् कश्चिद् वच भाषणे भाव व्यक्तायां वाचि वक्तीति वाक् तस्याः कर्तृ भाषणकर्तृ कर्तुं । एषेति मूलः पदादेवेति ।

पेक्षायामुपयुज्येत । भगवतश्च तदाविर्भावो भवतीति चकारार्थः । संपत्तौ भगवदावेशकथनार्थं वक्ष्यति च, 'स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि' इति चतुर्थे । तस्मात्र परामर्शेनान्यथा वल्गनम् ॥ २० ॥

---

भाष्यप्रकाशः ।

ब्रह्मज्ञानाऽपेक्षायाममृतभूतजीवज्ञानमुपयुज्येत । युक्तं चैतत् । न हि यन्तव्यज्ञानं विना तदमृतत्वं ज्ञातुं शक्यते । अतो मर्त्यस्य प्रसिद्धत्वादमृतज्ञापनार्थं जीवपरामर्शः स च जीवस्य परममुक्तिदशायामपि ब्रह्मनियम्यत्वे पर्यवस्यति परं ज्योतिरुपसंपद्यस्वेन रूपेणाभिनिष्पद्यतैव जीवस्यामृतरूपत्वसिद्धेः । अतस्तदानीमपि परापरभावघटित एवाभेद इति ज्ञानार्थं परामर्श इति फलति । इदमेव 'अजनि च यन्मयं तदविमुच्य नियन्तृ भवेत्' इति वेदस्तुतावपि सिद्धम् । अग्रिमेपि ज्योतिर्दर्शनाधिकरणेपि अतिरिक्तभगवद्धर्मत्वेन भगवन्निर्णायकतया वक्तव्यम् । किं च । इतः पूर्वमथ य एष संप्रसाद इत्यादिना स्वरूपाभिनिष्पत्तिकथनात् तदा ज्ञानदशायां भगवदाविर्भावो ज्ञापितः । सोऽयमेतत्सूत्रस्य चकारस्यार्थः । तेन सूत्रेऽन्यार्थ इत्यस्य, स्वरूपयोग्यतासिद्ध्यर्थः, संपत्तौ भगवदावेशकथनार्थमेत्यर्थः सिद्ध्यति । तथाच फलार्थं स्वरूपयोग्यतासहकारिसंपत्त्योर्बोधनाय जीवपरामर्श इत्यर्थः । ननु कैश्चित् मन्यते परमं रूपं करतलस्थबिल्ववत् प्रदर्शयितुं य एषोक्षिणीत्यादि कर्तृभोक्तृत्वादि जैवरूपपरामर्श इति । अन्यैस्तु, यदस्योपसंपत्तव्यं परं ज्योतिस्तत् अपहतपाप्मत्वादिगुणविशिष्टतयोपास्यमित्येतदर्थं जीवपरामर्श इति नानाव्याख्यानादयमेव सूत्रार्थ इति कथं निर्णेयमित्यत आहुः वक्ष्यतीत्यादि तथा चैतत्सूत्रस्वारस्यादयमेवार्थ इत्यर्थः ॥ २० ॥

रश्मिः ।

ब्रह्मेति स्वर्गपदस्य ब्रह्मसुखवाचकत्वं निबन्धे स्पष्टम् । जीवेति । परामर्श उपस्थापनम् । ननु तथापि जीवे कथममृतशब्दप्रयोगः इत्याशङ्कामपनुदन्तश्चकारार्थं भाष्ये आहुः भगवतश्चेत्यादिना । तद्विवृण्वन्ति स्म किं चेति । अर्थ इति तथा च भगवत आविर्भावेन जीवस्याक्षरात्मकत्वादमृतपदप्रयोगो न दुर्घट इति भावः । चकारार्थमाहुः संपत्ताविति । स्वरूपेति स्वरूपयोग्यताऽन्यपदस्यार्थः । चकारार्थः सहकारीत्यादिः । जीवेति न तु प्रकरणित्वाय । भास्कराचार्यमतमाहुः कैश्चिदिति । शांकराचार्यमतमाहुरन्यैरिति । नानेति ब्रह्मामृतवर्षिणीकृता तु अत्र ब्रह्मोपदेशो जीवोपसंपत्तव्यत्वेन रूपेण स च जीवपरामर्शमन्तराऽनुपपद्यमानः सञ्जीवं परामृशतीति ब्रह्मपर एवायं परामर्श इत्युच्यते । रामानुजाचार्यैस्तु प्रजापतिवाक्ये च मुक्तात्मस्वरूपयाथात्म्यविज्ञानं दहरविद्योपयोगितयोक्तम् । अतो मुक्तस्य तदुपसंपत्त्यपहतपाप्मत्वादिकल्याणगुणविशिष्टस्वाभाविकरूपप्राप्तिकथनेन तद्धेतुत्वरूपं परपुरुषसाधारणरूपमुपदेष्टुं प्रजापतिवाक्योक्तजीवस्यात्र परामर्श इति । मध्वाचार्यैस्तु यं प्राप्यत्वेन रूपेण जीवो निष्पद्यते स एष आत्मेति परमार्थश्च परामर्श इति उत्तरोत्तरेति सूत्रोक्तयत्प्रसादात् स मुक्तो भवति स भगवान् पूर्वोक्त इति चकारार्थः । इति नानाव्याख्यानादित्यर्थः । इत्यर्थ इति । भाष्ये । अन्यथेति जीवब्रह्मवादकल्पनादन्येन प्रकारेण ब्रह्मवादवचनम् । वल्ग गतौ भ्वादिः परस्मैपदी सेट् ॥ २० ॥

---

१. [illegible] ।

## अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २१ ॥

ननु न वयं जीवे उपपत्तिरस्तीति जीवप्रकरणं कल्पयामः किंतु ब्रह्मणि नायमर्थ उपपद्यते। अल्पश्रुतेः। अल्पे हि पुण्डरीके कथं भगवदवस्थानम्। व्यापकत्वश्रवणात्। यावान् वाऽयमाकाश इति। तस्माद् विरोधपरिहाराय जीव एवाराग्रमात्रस्तथा भवत्विति कल्प्यत इति चेत्तर्हि भवान् सम्यग्विचारकोऽस्मदीय एव। परं तत्समाधानं पूर्वमेवोक्तं 'निचाय्यत्वादेवं व्योमवच्च' इत्यत्र। तत्र प्रस्मर्तव्यम्। विरोधस्तु सर्वभवनसमर्थे ब्रह्मणि नाशङ्कनीयः। तथा पुरुषशरीरं च।

'पुरुषत्वे च मां धीराः सांख्ययोगविशारदाः।
आविस्तरां प्रपश्यन्ति सर्वशक्त्युपबृंहितम्' ॥

इति भगवद्वाक्यात्। तस्माद् भगवानेव दहर इति सिद्धम् ॥ २१ ॥

इति प्रथमाध्याये तृतीयपादे पञ्चमं दहराधिकरणम् ॥ ५ ॥

## अनुकृतेस्तस्य च ॥ २२ ॥ (१।३।६)

दहरविरुद्धं वाक्यमाशङ्क्य परिहरति। 'न तत्र सूर्यो भाति, न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा

---

भाष्यप्रकाशः।

अल्पश्रुतेरिति चेत् तदुक्तम् ॥ २१ ॥ तथा पुरुषशरीरं चेति। विजिघत्सोऽपिपास इत्यादिभिर्धर्मैः सूचितं पुरुषशरीरं च विरुद्धमिति नाशङ्कनीयमित्यर्थः। स्फुटमन्यत्। एवमत्र जीवब्रह्मवादनिराकरणेन जीवादधिको विरुद्धधर्माश्रयो भगवानिति साधितम्। तेन भक्तिमार्गीयोपासनायां तादृश एव साक्षाद्भवतीत्यपि सिद्ध्यति। अत्र च, यावान् वेति वाक्येन स्थितिकर्तृत्वं हार्दाकाशेऽतिव्याप्तमाशङ्क्य तन्निवारितमिति बुद्धिस्थानात्मिकैवाधिकरणसंगतिः ॥ २१ ॥

इति पञ्चमं दहराधिकरणम् ॥ ५ ॥

अनुकृतेस्तस्य च ॥ २२ ॥ उपोद्घातरूपामधिकरणसंगतिं बोधयितुमाहुः दहरेत्यादि। मुण्डककठवल्ल्योर्ब्रह्मप्रकरणत्वस्यादृश्यत्वाद्यधिकरणेषु साधितत्वात् तद्वाक्यस्य ब्रह्मपरत्वेन तद्विरुद्धं

रश्मिः।

अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २१ ॥ भाष्ये। यावानिति 'तावानेष अन्तर्हृदय आकाशः' इति। तथेति तदन्तःस्थत्वेन भवति। पूर्वमिति द्वितीयपादे। स्फुटमिति। पुरुषत्वे चेति वाक्यमेकादशस्कन्धस्थम् ॥ २१ ॥

इति पञ्चमाधिकरणम् ॥ ५ ॥

अनुकृतेस्तस्य च ॥२२॥ अदृश्येति आदिपदेनात्ता चराचराधिकरणम्। तद्विरुद्धमिति सूर्याद्यमानविरुद्धम्। तद्भानं तस्य कथकरूपम्। 'यावान्वा अयमाकाशस्तावानेषोन्तर्हृदयाकाशः उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि

सर्वमिदं विभाति' इति कठवल्ल्यामन्यत्र च श्रूयते । यत्तच्छब्दानामेकार्थत्वं प्रकरणाद् ब्रह्मपरत्वं चाऽवगतम् । अर्थाच्च संदेहः ।

यस्मिन् द्यौरित्यत्र सूर्यादीनां ब्रह्माधारत्वमुक्तम् । अस्मिंश्च वाक्ये पूर्वार्धे तत्र तेषां भानं निषिद्ध्यते ।

'यत्र यत् सर्वदा तिष्ठेत् तत्र चेत्तन्न भासते ।
क्व भासेताप्यपेक्षायां कर्मत्वे श्रुतिबाधनम्' ॥

---

भाष्यप्रकाशः ।

दहरवाक्यं न ब्रह्मपरमित्येतन्निरसितुं तथाशङ्क्येत्यर्थः । कठवल्ल्यामन्यत्र चेति तस्याः पञ्चमवल्लीसमाप्तौ, मुण्डकस्य द्वितीयमुण्डकसमाप्तौ च श्रूयते । विषयमुक्त्वा संशयं तद्बीजं चाहुः यत्तदित्यादि । कठवल्लीस्थानां, य एष सुप्तेषु जागर्ति, मन्त्रान्तरे, 'तस्मिन् लोकाश्रिताः सर्वे' इति । अस्मिन् मन्त्रे तमेव भान्तमिति । मुण्डके, 'यत्र देवः क्रतुभिर्भूतिभावनः' इति, मन्त्रान्तरे, न तत्र सूर्यो भातीति यत्तच्छब्दानामेकार्थत्वं ब्रह्मपरत्वं चावगतम् । तथाप्यर्थादेव संदेह इत्यर्थः । अर्थात् कथं संदेह इत्याकाङ्क्षायां तमुपपादयन्ति यस्मिन्नित्यादि । उक्तमुण्डकश्रुतौ द्युलोकादीनां भगवदाधारकत्वकथनात् सूर्यादीनां ब्रह्माधारत्वमुक्तम्, एतद्वाक्यपूर्वार्धे च भानं निषिद्ध्यते । अतः संदेहः । नच भाननिषेधमात्रात् कथं संदेह इति शङ्क्यम् । यत्र यदित्याद्युक्तरीत्या बाधितार्थत्वेन संदेहसंभवात् । नचोत्तरार्धे तमेवेत्यादिना तदपेक्षयाधिकमान एव निषेधपर्यवसानसिद्धेर्न बाधितार्थत्वमिति वाच्यम् । तदाप्यकर्मकस्य धातोः कर्मकथनेन कर्मत्वे

रश्मिः ।

यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम्' इति दहरवाक्यम् । बीजमिति अर्थरूपम् । जागर्तीति अग्रे 'कामं कामं पुरुषो निर्मिमाणः तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते' इति । मन्त्रान्तर इति संनिहिततरे । इतीति । अग्रे 'तदु नात्येति कश्चन एतद्वै तत्' इति । मन्त्र इति । व्यवहित इति विशेषणम् । भूतिभावन इति । अग्रे 'स्वयं विभूत्या विरजः प्रकाशते' इति । मन्त्रान्तर इति संनिहिततरे । भाष्ये चकार एवकारार्थे इत्याहुः अर्थादेवेति । उक्तेति भाष्योक्तेत्यर्थः । श्रुतिस्तु 'यस्मिन्द्यौः पृथिवी चान्तरिक्षं मनः सह प्राणैश्च सर्वैः । तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः' इति । यत्र यदिति भाष्यमवतारयन्ति स्म न चेति । यत्रेति यत्र यदित्यादिभाष्योक्तरीत्या । निषेधेति यथा सूर्यभाने चन्द्रतारकाभानं तद्वत् । अप्यपेक्षायामितिभाष्यं विवृण्वन्ति स्म न चोत्तरेति अप्यपेक्षास्वरूपं विवृतम् । अबाधितार्थत्वापेक्षेयम् । तस्यामपीति भाष्यार्थः । क्व भासेतापीत्यपेरन्वयो वा । कार्यत्वमिति भाष्यं विवरामासुः तदापीति । अकर्मकत्वं धातुना गृहीतकर्मत्वेन तथा च कस्यचित् ।

'लज्जा सत्ता स्थितिजागरणं वृद्धिक्षयभयजीवितमरणम् ।
शयनक्रीडारुचिदीप्त्यर्थं धातुगणं तमकर्मकमाहुः' ॥ इति ।

कर्मेति दहरविद्यायां यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितमित्यत्र समाधीयते सर्वमिति सर्वं कर्मरूपम् । दधातेर्हि तादौ किति । अस्ति सूर्यभाः सापि समाहितोच्यते छान्दोग्ये । मुण्डके तु न तत्र सूर्यो भातीति भा निषिद्ध्यते इति कार्यत्वे भारूपकर्मत्वे च छान्दोग्यश्रुतिबाधनम् । भाष्यं व्याख्याय शेषं पूरयामासुः तेनेति तथा च सूर्यादेः भानं तत्र वर्तते न वेति संदेहः पर्यवसितः ।

यत्रेत्यधिकरणसप्तमी । यत्र लोकान्तरस्थितानामप्यभानं, तत्राग्नेः का वार्तेति वचनात् सत्यलोकस्थितः कश्चित् तेजोविशेष एव वाक्यार्थ इत्येवं प्राप्ते ।

उच्यते । अनुकृतेस्तस्य । भगवदनुकारार्थमेवैतद्वचनम् । स्वतो भाननिषेधः पूर्वार्धे । सर्वोऽपि पदार्थस्तमेवानुकरोति, सूर्यं रश्मय इव, छाया पुरुषमिव । तस्मात् वाक्ये भगवदनुकारित्ववचनान्न नानार्थकल्पनम् । किंच तस्य भासा सर्वमिदं विभाति' इति सूर्यादीनां स्वतः प्रकाशो नास्त्येव । घटवत् । भगवत्प्रका-

भाष्यप्रकाशः ।

श्रुतिबाधनम् । तेन संदेह इत्यर्थः । अत्र पूर्वपक्षी श्रुतिं व्याकुर्वन् समाधत्ते तत्रेत्यादि । अस्याः श्रुतेर्न सूर्यादीनामभाने तात्पर्यं, किं तु, 'गजा यत्र न गण्यन्ते मशकानां तु का कथा' इतिवद् यत्र लोकेत्याद्युक्तरीत्या वचनादग्न्यभान एव तात्पर्यमतो न पूर्वार्धे दोषः । उत्तरार्धे तु, तमेव भान्तमिति कथनादग्न्यप्रकाशशालिनि सत्यलोके स्थितः कश्चित् तेजोविशेष एवोच्यते सूर्यादितेजोऽभिभावकः । इदानीमपि ।

'खद्योतो द्योतते तावद् यावन्नोदयते शशी ।
उदिते तु सहस्रांशौ न खद्योतो न चन्द्रमाः' ॥

इति तेजोविशेषस्यैव सजातीयाभिभावकत्वस्य प्रसिद्धत्वात् । नच कर्मत्वांशे श्रुतिबाधः । अनोः कर्मप्रवचनीयत्वेन तद्योगे जाताया द्वितीयाया उपपदविभक्तित्वेनार्थाभावादतः स एवाबाधितो वाक्यार्थ इत्येवं प्राप्ते इत्यर्थः । समाधिं व्याकुर्वते भगवदित्यादि । सत्यलोके अग्न्यभाने वाक्यपूर्वार्धतात्पर्यं यदुक्तं तन्न । उत्तरार्धे सर्वस्य तदनुकारित्वकथनात् सर्वस्य तद्भासा भानकथनाच्च । तथा सति सर्वस्य भगवदनुकारार्थमेवैतद्वचनम् । एतस्यैव विवरणं, स्वतो भाननिषेधः पूर्वार्ध इत्यादि । तर्हि पूर्वपक्षोक्ततेजोविशेषानुकारार्थमेव वाक्यप्रवृत्तिरस्त्विति चेत्तत्राहुः तस्मादित्यादि । उपनिषद्द्वयेऽपि वाक्यस्य प्रकरणसंदष्टत्वात् प्रकरणिभूतभगवदनुकारित्ववचनमनुसंधाय अन्यार्थभूततेजोविशेषकल्पनं न युक्तमित्यर्थः । सिद्धमाहुः

रश्मिः ।

खद्योतः पक्षिविशेषो गुदप्रत्यक्षतेजाः सूर्यादितेजोभिभवे तमेव भान्तमनुभाति सर्वं इत्यत्र सर्वं कर्तृ तं भान्तं भातीति वचनव्यक्तेः कर्मत्वांशे श्रुतिबाधनम् । अर्थाभावादिति कर्मरूपार्थाभावात् । एवमिति सूर्यादेस्तत्र न भानमिति पूर्वपक्षे प्राप्ते । तदन्विति तस्य ब्रह्मणोऽनुकृतिरनुकारोऽनुकरणमिति यावत् । सोऽस्यास्तीत्यनुकारि सर्वम् । अनुकारि सर्वं इति वा सर्वोपि पदार्थ इति भाष्यात् । इत्यादीति । भाष्ये । सर्वोपीति । तेन ताण्डवनृत्यादिकमपि तदीयनृत्यादिकमनुकरोतीत्युक्तम् । दशमे पञ्चदशे

'उपगीयमानचरितः स्रग्वी संकर्षणान्वितः ।
कचिच्च कलहंसानामनुकूजति कूजितम् ।
अभिनृत्यति नृत्यन्तं बर्हिणं हासयन् कचित्' ॥

इति तु रसान्तःपातिनः पदार्थास्तदात्मकाः लौकिकीभाषा वा । वाक्येति 'न तत्र सूर्यो भाति' इति पूर्वार्धे सूर्यादिभाननिषेधः । 'तमेव भान्तमनुभाति' इत्युत्तरार्धे भानमित्येवं विरोधे तस्य भासेत्युत्तरार्धनिर्णायकत्वाद्वाक्यशेषमित्युच्यते । भानं नास्ति ब्रह्मभासा तु भानमिति । ननु विषयवाक्ये सर्वस्य कर्तृत्वेन क्रियायां स्वातन्त्र्यात् ब्रह्मणस्तु न तत्रेत्यधिकरणत्वात्

शेनैव प्रकाशवत्त्वमिति चकारार्थः । तस्मात् स्वतोऽभाने लक्षणया कर्मत्वे वा भगवत्परत्वे सिद्धे नान्यार्थकल्पनम् ॥ २२ ॥

अपि स्मर्यते ॥ २३ ॥

व्याख्यातेऽर्थे संमत्यर्थमाह । अपीति समुच्चयः ।

भाष्यप्रकाशः ।

तस्मादित्यादि । तस्य भासेत्यादिवाक्यशेषात् स्वतोऽभाने अनुकरणवचनात् कर्तृक्रियया अनाप्यस्यापीष्टतमत्वमात्रेणाऽऽप्यसारूप्यप्रयुक्तया गौण्या कर्मत्वे वा वाक्यस्य भगवत्परत्व-सिद्धौ नान्यार्थकल्पनं युक्तमित्यर्थः ॥ २२ ॥

अपि स्मर्यते ॥ २३ ॥ अत्र भाष्यमुत्तानार्थम् । एवमत्र सूर्याद्यभासनाशङ्कितविरोधपरि-हारेण दहरवाक्यानुगुण्यमस्य साधितम् । किंच परामर्शसूत्रे जीवस्य मुक्तिपर्यन्तासु सर्वावस्थासु

रश्मिः ।

तस्य भासेत्यत्र संबन्धित्वाच्च सूर्यादिपरमिदं वाक्यमित्याकाङ्क्षायामाहुः अनुकरणेति तथा चास्मा-द्धेतोः शब्दतो गौणत्वेप्यर्थतो मुख्यत्वाद् गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययेन ब्रह्मपरं वाक्यम् । लक्षणयेति भाष्यं विवरामासुः कर्त्रिति । अयमर्थः । फलं मुख्यं न कर्ता तथाहि 'कर्तुरीप्सित-तमं कर्म' इति पाणिनिसूत्रे कर्तुः क्रियया यमिष्टतमं कारकं कर्म तच्च त्रिविधं कर्म प्राप्यं विकार्यं निर्वर्त्यं च प्राप्यं ग्रामादि ग्रामं गच्छतीत्यादौ, विकार्यं काष्ठादि काष्ठं भस्म करोति, निर्वर्त्यं घटं करोति क्रियानिष्पाद्यम् । तत्र तमेव भान्तमनुभाति सर्वमित्यत्र ब्रह्मणो विकार्यनिर्वर्त्यत्वयोरभावेनाप्यकर्मत्वं वाच्यम् । तदपि न परसमवेतधात्वर्थतावच्छेदकफलशालित्वं तच्च भानं धातुना गृहीतकर्मत्वेन भातेरकर्मकत्वान्नास्त्यतः कर्तृक्रिययाऽनाप्यस्य भगवतः सूर्याद्यपेक्षया नृप स्वात्मैव वल्लभः इति वाक्यादिष्टतमत्वमात्रं तेन आप्यस्य ग्रामादेः सारूप्यं तत्प्रयुक्तया 'लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता' इति काव्यप्रकाशात्स्वोत्कृष्टत्वसंबन्धेनेष्टतमत्वमुभयत्रापि दृश्यमानं लक्षितं तेन गुणेन योगात् गौण्या भगवतः कर्मत्वं तस्मिन् सति अनुकरणस्यानुकार्याधीनत्वेन भगवता मुख्यत्वाद्वाक्यस्य भगवत्परत्वसिद्धिस्तस्याम् । ननु अन प्राणने अनितीत्यनु उप्रत्ययः पूरकप्राणकर्तरि अनुप्रयोगस्तत्संप-र्कात् भातेरकर्मकस्यापि सकर्मकत्वाल्लक्षणया कर्मत्व इतिभाष्यं कुत इति चेन्न तथासति सर्वं कर्तृ भान्तं तं स्वगतसदस्नानां पूरकाणां कर्मनिष्ठप्राणानामकर्तृत्वे कर्तारं करोति इत्यनुभातीत्यस्यार्थः स चासंगतः सर्वाकर्तृत्वे भगवतः प्राणानां नित्यत्वेनाकृतिसाध्यत्वेन बाधितार्थत्वप्रसङ्गात् । एवमपि सूर्यादिनिष्ठमेव पूरकत्वादि ततश्चाकर्मकत्वे लक्षणया कर्मत्व इतिभाष्यं नित्यलीलानिरूपणस्य च आविर्भावतिरोभाव-वतः श्रुतावभावात् । इत्यर्थे इति तदपेक्षया सूर्यादेर्नाधिकं भानं न तु भानाभावस्तत्रेति सूर्याद्यपारो विचारितः सूर्यादिभानभानाभावधर्माभ्याम् । अथातो ब्रह्मजिज्ञासेत्यत्र शेषषष्ठ्या ब्रह्मसंबन्धिनां विचारस्य प्रतिज्ञातत्वात् ॥ २२ ॥

अपि स्मर्यते ॥ २३ ॥ भाष्ये । इति चेति सौत्रोपि चकारार्थ इति भाष्यार्थः । प्रकृते । विरोधेति । छान्दोग्यीयदहरविद्याविरोधेत्यर्थः । साधितमिति तेन मुक्तिदशायां तदनुकारित्वरूपमेव साम्यं जीवस्य तु न परममित्यप्यबोधि तेनोपोद्घात उक्तः स एवम् । प्रकृतं छान्दोग्ये दहरविद्यायां यच्चास्येहास्ति यच्च नास्ति तत्सर्वं तदस्मिन् समाहितमित्युक्त्यां सूर्यादिकं सप्रकाशं

१. अनन्ततः ।

'न तद् भासयते सूर्यो न शशाङ्को न पावकः' ।
'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्' ॥

इति च । तस्माद् भगवानेव सर्वावभासकः । तमेव सर्वमनुकरोतीति सिद्धम् ॥ २३ ॥

इति प्रथमाध्यायस्य तृतीयपादे षष्ठमनुकृत्यधिकरणम् ॥ ६ ॥

---

भाष्यप्रकाशः ।

ब्रह्मनियम्यत्वं सिद्धम् । तत्प्रसङ्गेनात्रजीवस्य मुक्त्यवस्थायामपि ब्रह्मानुकारित्वमेव कठवल्ल्यां ऋतं पिबन्तावित्यत्र परमपरार्ध्यब्रह्मलोकेपि जीवस्य ब्रह्मछायात्वेनैवासिद्धत्वात् न त्वत्यन्ताभेदः इत्येतद्बोधनायेदमत्र विचारितं तेनेदमधिकरणं पूर्वाधिकरणोपोद्घाततया तत्शेष एव ।

रामानुजाचार्यास्तु, इदं सूत्रद्वयं पूर्वाधिकरण एव योजयन्ति । अर्थं त्वेवमाहुः । तस्य दहराकाशस्य ब्रह्मणोऽनुकारादयमपहतपाप्मादिगुणको विमुक्तबन्धः प्रत्यगात्मा, न दहराकाशः । तदनुकारस्तत्साम्यम् । तच्च निरञ्जनः परमं साम्यमुपैतीत्यत्र श्रूयते । अतोऽनुकर्ता प्रजापतिवाक्यनिर्दिष्टः । अनुकार्यं ब्रह्म दहराकाश इति । स्मृतिश्च, 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः' इति । अधिकरणान्तरत्वे बाधकं त्वेवमाहुः । न तत्र सूर्यो भातीति मन्त्राकरभूतस्य वाक्यस्य ब्रह्मप्रकरणत्वम्, अदृश्यत्वाद्यधिकरणद्युभ्वाद्यायतनाधिकरणाभ्यां निर्णीतम् । ज्योतिश्चरणाद्यधिकरणेषु परस्य ब्रह्मणो भारूपत्वमप्यवगतमतो ब्रह्मत्वे भारूपत्वे च संदेहाभावेन पूर्वपक्षानुत्थानात् । श्रुतावनुभातिपदेन सूत्राक्षरवैरूप्याच्चेति । तत्र प्रकरणेन संदेहापायेऽप्यर्थस्य लिङ्गरूपत्वेन प्रबलतया पूर्वोक्तरीत्या पूर्वपक्षस्य शक्यवचनत्वात्, स्वकृतव्याख्यानेऽपि विषयवाक्ये साम्यपदेन सूत्राक्षरवैरूप्यस्य तौल्याच्च तच्चिन्त्यम् ।

भिक्षुस्तु विषयानुल्लेखान्नाधिकरणान्तरम् । किं तु पूर्वसूत्रोक्ताल्पश्रुतिदूषणपरिहारायेदं द्वयम् । तत्रानुकारित्वं च मुखतत्प्रतिबिम्बयोरिव शक्तिशक्तिमतोर्जीवब्रह्मणोः समानव्यापारकत्वम् । तथाच जीवे लिङ्गानुकरणादिव ब्रह्मणि जीवानुकरणादुपपद्यते शक्तेरल्पत्वं शक्तिमत्युपचर्यत

रश्मिः ।

समाहितमित्युक्तम् । तत्सिद्ध्यर्था चिन्ता न तत्र सूर्यो भातीत्यत्र कृतेति सा चिन्तोपोद्घातः । प्रजापतीति 'सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्' 'स तत्र पर्येति जक्षन् क्रीडन् रममाणः' इति वाक्यनिर्दिष्टः पर्येति पर्यटन् जक्षन् भक्षन् भोगान् पुरुषोत्तमेन स तदनुकर्तेति श्रुत्यर्थः । द्वितीयसूत्रार्थमाहुः स्मृतिरिति । सूत्राक्षरेति अनुकृतिरूपेत्यर्थः । प्रकरणेति उभयाकाङ्क्षा प्रकरणम् । देशकालौ वा प्रकरणम् । प्रकृष्टं साधकतमं वा करणम् । 'साधकतमं करणम्' इतिसूत्रात् । 'लिङ्गं शब्दस्य सामर्थ्यम्' 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यम्' इति तथा । तथा च भाष्यमर्थाच्च संदेह इति चकारेणानुकार्यानुकरणभावस्यादृश्यत्वाधिकरणद्युभ्वाद्यायतनाधिकरणाभ्यामनिर्णीतत्वं समुच्चीयते । भिक्षुरिति भगवान् । अल्पश्रुतीति अल्पश्रवणं तेन दूषणं विरुद्धधर्माधारत्वं तत्परिहाराय । लिङ्गेति अणुत्वस्यानुकरणात् पृथगुपदेशादिति सूत्रे द्वितीयस्य तृतीयपादे जीवात्पृथगणुत्वस्वीकारात् लिङ्गत्वं तु अणुशब्दसामर्थ्यम् । उपपद्यत इति अल्पत्वमुपपद्यते । द्वितीयसूत्रार्थमाहुः स्मृतिरिति । लिङ्गान्विति अणुशब्दसामर्थ्यानुरोधेन पृथगणुत्वोप-

शब्दादेव प्रमितः ॥ २४ ॥ ( १।३।७ )

प्रसङ्गात् पुनर्बाधकान्तरमाशङ्क्य परिहरति ।

'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।
ईशानो भूतभव्यस्य न ततो विजुगुप्सति' ॥

तथा, 'अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः' इति तत्रैव श्रूयते । 'यावान् वा अयमाकाशः' इति व्यापकत्वमन्तःस्थितस्य प्रतीतम् । अङ्गुष्ठमात्रता चात्र प्रतीयते । अतो विरोधाज्जीवस्यैव लोकान्तरगन्तृदेहवत उपासनार्थमीशानत्वादिधर्माः ।

अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलादिति तन्निवृत्त्यर्थम् । तस्मादङ्गुष्ठ-

भाष्यप्रकाशः ।

इति भावः । स्मृतिश्च, 'कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः' इति । 'शब्दादेव प्रमितः' इति सूत्रमप्यल्पत्वसाधनार्थम् । परमात्मा, अणोरणीयान् महतो महीयानित्यादिशब्दादेव अल्पत्वः प्रकर्षेण मितोऽवगत इत्यर्थात् । न त्वधिकरणान्तरमित्याह ।

तदपि मन्दम् । तदुक्तमिति सूत्रांशेनैव स्थानाल्पत्वदोषपरिहारसिद्धौ पुनस्तदर्थकप्रयासस्य वैयर्थ्यात् । जीवाल्पत्वस्य लिङ्गानुरोधेनौपचारिकत्वात् तस्य किं वानुकरणमित्यप्यसंगतम् । संकुच्य प्रदेशविशेषेण स्थितिरूपस्यैव व्यापारस्य पूर्वत्रापि सिद्धेर्विशेषाभावाच्च । अल्पत्वस्य पूर्वोक्तयुक्तिभिरवास्तवत्वाङ्गीकारे पुनस्तस्य शब्देन प्रमितत्वोक्तेरप्यसंगतत्वाच्चेति । न च विषयानुल्लेखादधिकरणान्तरत्वाभाव इत्यपि युक्तम् । उक्तरीत्यार्थेन संदेहे तन्निरासस्यावश्यकत्वादिति दिक् ॥२३॥

इति षष्ठमनुकृत्यधिकरणम् ॥ ६ ॥

शब्दादेव प्रमितः ॥ २४ ॥ बाधकान्तरमिति परिमाणविरोधरूपं तदित्यर्थः । तत्रैव श्रूयते इति । अस्य विषयः कठवल्ल्यां चतुर्थवल्लीसमाप्तौ श्रूयते । संशयमाहुः यावानित्यादि । तथाचातो विरोधात् संशय इत्यर्थः । पूर्वपक्षमाहुः अत इत्यादि । जीवस्यैवेति 'अङ्गुष्ठमात्रो रवितुल्यरूपः संकल्पाहंकारसमन्वितो यः' इति श्रुत्यन्तरात् तस्यैवेत्यर्थः । ननूपासनार्थमपीशानत्वादिधर्माणामेव ग्रहणे को हेतुरित्यत आहुः अङ्गुष्ठेत्यादि । तथाच तस्मादङ्गुष्ठमात्राद् व्यतिरिक्तत्वमस्मिन् मुक्तजीवे बोधयितुमेतेषां धर्माणां निरूपणमित्यर्थः । अङ्गुष्ठमात्र-

रश्मिः ।

देशाज्जीवेऽणुत्वमौपचारिकं मन्यन्ते भिक्षवः । इत्यपीति इति हेतोर्ब्रह्मणि जीवानुकरणमप्यसंगतम् । संकुच्येति उपाधिना संकुच्येत्यर्थः । पूर्वत्रेति अनुकारित्वलक्षणे ब्रह्मणि जीवसंबन्धिनः सिद्धेः । पृथगुपदेशादिति सूत्रार्थादविशेषात् । अनुकृतिसूत्रवैयर्थ्यमिति भावः । चेतीति चकारेण श्रुत्योर्विरोधे विकल्पप्राप्त्यौपाधिकत्वमात्रस्यासिद्धेः । दिगिति तेन साम्यं(स्य) हानौ तूपायनशब्दशेषत्वादिति सूत्रे विचारयिष्यते द्वितीयमते पृथगुपदेशादिति सूत्रे चैतन्यगुणस्य पार्थक्यसाधनभाष्यविरोधः ॥ २३ ॥

इति षष्ठाधिकरणम् ॥ ६ ॥

शब्दादेव प्रमितः ॥ २४ ॥ भाष्ये । प्रसङ्गसंगत्याशङ्कोत्थसार्थः । श्रूयत इति तत ईशनादिधर्मविशिष्टत्-वि-वीप्रजनकान्त्यसनासादनेषु प्रजनादिकर्ता जीवन्मुक्तौ जुगुप्सते संदेहि

मात्रो न भगवानेवं प्रासमत उत्तरमाह शब्दादेव प्रमितः। अत्र संदेह एव न कर्तव्यः। शब्दादेव प्रकर्षेण विमानात्। यथा दहरवाक्ये सूक्ष्मस्यैव व्यापकत्वं, तथाऽङ्गुष्ठमात्रस्यैवेशानत्वम्। यदि भगवाँस्तादृशो न स्यादन्यस्य तादृशत्वं नोपपद्येत। तस्माद् भगवतः सर्वतःपाणिपादान्तत्वाद् यत्र यावानपेक्ष्यते तत्र तावन्तं श्रुतिर्निरूपयतीति अङ्गुष्ठमात्रः परमात्मेति सिद्धम्॥ २४॥

हृद्यपेक्षया तु मनुष्याधिकारत्वात्॥ २५॥

नन्वनेकरूपत्वं विरुद्धधर्मवत्त्वं माहात्म्यार्थं स्वरूपे निरूपयति। प्रादेशमात्रत्वं च ध्यानार्थम्। अङ्गुष्ठमात्रत्वस्य कोपयोग इति चेत् तत्राह। तुशब्देन

---

भाष्यप्रकाशः।

मिति वाक्यं तु सावित्र्युपाख्याने। 'अथ सत्यवतः कायात् पाशबद्धं वशं गतम्' इति तत्पूर्वार्धम्। सत्यवाँस्तु सावित्र्याः पतिरिति। सिद्धान्तं व्याकुर्वन्ति अत्रेत्यादि। शब्दादेवेत्यादि वाक्ये पूर्वार्धेऽङ्गुष्ठमात्रत्वमुक्त्वोत्तरार्द्धे तावन्मात्रस्यैव भूतभव्येशानत्वं वक्तीति वाक्यरूपाच्छब्दादेव प्रकर्षेण विरुद्धधर्माश्रयतया मानादित्यर्थः। तदेव व्याकुर्वन्ति यथेत्यादि। किंच। पूर्वाधिकरणविषयवाक्ये सर्वस्य भगवदनुकारकत्वसिद्धेरत्र प्रत्यक्षस्यापि दृष्टान्तविधया गमकत्वं वक्तुं तर्कमाहुः यदीत्यादि अन्यस्य तादृशत्वमिति स्वल्पस्यापि राजादेरनेकजनेशनशीलत्वम्। एतेन जीवस्य ब्रह्मभावेऽप्यणुत्वादिविरुद्धधर्माविर्भावेऽप्यैवं युक्तिरित्यपि सूचितम्। सिद्धमाहुः तस्मादित्यादि॥ २४॥

हृद्यपेक्षया तु मनुष्याधिकारत्वात्॥ २५॥ अन्ये तु, अपेक्षयेत्यस्य हृदयस्थानापेक्षयेत्यर्थं वदन्ति। तन्मते परिमाणमौपाधिकम्। सिद्धान्ते तु, अणोरणीयान् महतो महीयानिति, यदेकमव्यक्तमनन्तरूपमिति श्रुतिभ्यामुभयथा तात्त्विकं परिमाणमिति भेदः। प्रमाणान्तरस्य इति परिमाणान्तरत्वे स्फुटमितरत्। इदमप्यधिकरणं दहराधिकरणस्यैव शेषः।

रश्मिः।

गोप्तुं रक्षितुमिच्छति वा यद्वा नकारवर्णागमो न किं तु न ततो न विस्तृतः गोप्तुमिच्छति। इतीति तथा च हृदयाकाशमुक्तजीवोऽङ्गुष्ठमात्र इति पूर्वपक्षः। मानादिति प्रवेशात्। राजादेरिति आदिना दीपप्रेतादि। भाष्ये। परमात्मेति तेनाङ्गुष्ठमात्रमिति पुराणमतमिति भावः॥ २४॥

हृद्यपेक्षया तु मनुष्याधिकारत्वात्॥ २५॥ अत्रान्योपि शंकराचार्यमतान्भेदस्तमाहुः अन्य इति शंकराचार्यादयः। परिमाणेति अत्र बभ्रमुः यद्वा परिमाणान्तरत्वे वास्तवे तिष्ठतु वार्ता प्रमाणं शब्दः पूर्वसूत्र उक्तम्। अन्यत्प्रत्यक्षादि प्रमाणं प्रमाणान्तरं तस्य भावे सत्तायां किमेतन्न संभवति येन शब्दादेवेत्येवकार उपात्तस्तत्राहेति भाष्यार्थः। प्रत्यक्षादीनां मनुष्यहृदयस्य प्रत्यक्षादिविषयत्वाभावादेवकारः इति भावः। हृदयं अङ्गुष्ठमात्रवत् शब्दात् इत्यत्रापि यत्र योग्यशब्दस्तत्राङ्गुष्ठमात्रवत्त्वं इति योग्यशब्दरूपश्रुतावेव प्रामाण्यपर्यवसानम्। स्फुटमिति। तदित्थम्। अनेकेति 'यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात्' इति श्रुत्या साकारं ब्रह्म अन्तस्तद्धर्माधिकरण उक्तं तद्गृहीतम्। न तु वैश्वानराधिकरणोक्तम्। अङ्गुष्ठमात्रस्यानेकरूपान्तर्गतस्यात्र प्रतिपिपादयिषितत्वात्। ननु प्रादेशमात्ररूपस्य कोपयोग इत्यत आहुः विरुद्धेति वैश्वानराधिकरणोक्तम्। इमे लक्षणे। प्रयोजनमाहुः माहात्म्येति देवत्वार्थम्। देवत्वं प्रयोजनं नैयायिकोक्तेतरभेदः प्रयोजनमवान्तरं व्यवहारोपि। स्वरूप इति लक्ष्ये यथा कम्बुग्रीवादिमान् घट इति अत्र कम्बुग्रीवादिमत्त्वं लक्षणं घटो लक्ष्यः। निरूपयति श्रुतिः। पृच्छति स्म प्रादेशेति। वैश्वानराधिकरणोक्तं ध्यानार्थे

निःप्रयोजनत्वं निराक्रियते । अस्ति प्रयोजनम् । तदाह । हृदि अङ्गुष्ठमात्रं निरूप्यते । केन हेतुना । अपेक्षया ईश्वरकार्यापेक्षया । 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' इति स्मृतेः । रक्षार्थमङ्गुष्ठमात्र इत्यर्थः । ननु प्रमाणान्तरत्वे किमेतन्न संभवति, तत्राह । मनुष्याधिकारत्वात् । मनुष्यानधिकृत्येदं मृत्यूपाख्यानं प्रवृत्तम् । अतो मनुष्याणां हृदयस्याङ्गुष्ठमात्रत्वात् । यद्यपि हृदयं स्थूलं, तथापि धर्मरूपं तावदेव । तावन्मात्रस्यैवावदानश्रवणात् । तस्मादङ्गुष्ठमात्रस्यैव सर्वधर्मरक्षकत्वादङ्गुष्ठमात्रोत्र भगवानेवेति सिद्धम् ॥ २५ ॥

इति प्रथमाध्याये तृतीयपादे सप्तमं शब्दादेवेत्यधिकरणम् ॥ ७ ॥

---

भाष्यप्रकाशः ।

अग्रिमं चाधिकरणद्वयमधिकारनिरूपकत्वात् प्रासङ्गिकम् । ईश्वरकार्यापेक्षामुपपादयन्ति ईश्वर इत्यादि । तथा चानया स्मृत्या हृदीश्वरत्वेन स्थितौ रक्षार्थं तथेति तदेवेश्वरकार्यम् । तैत्तिरीयोपनिषदि ।

'अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठे च समाश्रितः ।
ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक्' ॥

इतिमन्त्रे सर्वजगदीशादिपदसमभिव्याहृते विश्वभुक्पदे विश्वं भुनक्ति पालयतीत्यर्थ एव तात्पर्यावसायादित्यर्थः । एतत्परिमाणस्य रक्षार्थत्वे शङ्कते नन्वित्यादि । प्रमाणान्तरत्व इति परिमाणान्तरत्वे । तत्समाधानाय हेतुं व्याकुर्वन्ति मनुष्यानित्यादि । तथा च स्थित्यर्थमेतत्परिमाणमित्यर्थः । तथा सति कथं रक्षार्थत्वमित्यत आहुः यद्यपीत्यादि । स्थूलमिति 'केचित्स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तम्' इति स्मृति····न सिद्धमाहुः तस्मादित्यादि तथा च परिमाणान्तरेण रक्षासिद्धावपि श्रौतस्य हृदयस्य तावत्त्वात् सर्वधर्मरक्षार्थमङ्गुष्ठमात्रः इत्यर्थः । अन्ये त्वत्रापेक्षया इत्यस्य हृदयस्थानापेक्षयेत्यर्थं वदन्ति । तन्मते परिमाणमौपाधिकं सिद्धान्ते तु 'अणोरणीयान् महतो महीयान् यदेकमव्यक्तमनन्तरूपम्' इति श्रुतिभ्यां उभयथा तात्त्विकं परिमाणमिति भेदः एवमत्र दहराद्यधिकरणत्रयेण नानाविधविरुद्धधर्माश्रयत्वसाधनात् वैश्वानराधिकरणे आग्रहवादशङ्कापि निराकृता बोध्या ॥ २५ ॥

इति सप्तमं शब्दादेवेत्यधिकरणम् ॥ ७ ॥

रश्मिः ।

'प्रादेशमात्रं पुरुषं वसन्तम्' इति वाक्यात् । अत्र धारणा ध्यानपूर्विकेत्यदोषः अङ्गुष्ठमात्रत्वस्योपयोगः केति प्रश्नः । स्थिति निःप्रयोजननिराकरणसमुदायकेन । रक्षार्थमिति 'भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया' इत्युत्तरार्धं गीतायाम् । उच्चावचमार्गेषु भ्रामणेन कुमार्गतो रक्षार्थम् । स्थितिः रक्षार्थमुत्पन्नानां तन्मर्यादया पालनम् । तदर्थं भ्रामयन् वा । ननु प्रमाणेति व्याकृतमिदम् । मनुष्यानिति ।

'नाचिकेतमुपाख्यानं मृत्युप्रोक्तं सनातनम् ।
उक्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते' ॥ इति ।

श्रुतौ मेधाविपदान्मनुष्यानधिकृत्य । मृत्यूपेति मृत्यूक्तमुपाख्यानं मृत्यूपाख्यानं मध्यमपद-

---

१. श्रीमत्पुरुषोत्तमचरणैः स्वहस्ताक्षरेण शोधिते एकस्मिन् पुस्तके पूर्वप्रकाशस्योपरि कृष्णरेखाकरणेन तं व्यर्थीकृत्य एतावान् प्रकाशः नवीनतया प्रकटीकृतः सोऽत्र दीयते ।

## तदुपर्यपि च बादरायणः संभवात् ॥ २६ ॥

अङ्गुष्ठमात्रनिरूपणार्थं मनुष्याधिकारे निरूपिते कस्यचिद् भ्रमो भवेत्

भाष्यप्रकाशः ।

तदुपर्यपि च[1] बादरायणः संभवात् ॥ २६ ॥ अत्रानुप्रसङ्गः संगतिरिति बोधयन्तः सूत्रमवतारयन्ति अङ्गुष्ठमात्रेत्यादि । कस्यचिदिति जैमिनीयादिदर्शनाभि-

रश्मिः ।

लोपी समासः उपाख्यानं त्वग्नेस्तावदपि धर्मरूपं न मनुष्याणामेवापि तु छागादीनामपीत्याशयेन प्रमाणयन्ति स तावदिति । अवदानेति 'गाभेर्मासंविकथ' इति मन्त्रेणावदाने आग्नेयस्य पुरोडाशस्य मध्यादङ्गुष्ठपर्वमात्रं तिरश्चीनमवद्यतीत्यत्र श्रवणात् । सिद्धमाहुः तस्मादिति । भगवानेवेति तेनाङ्गुष्ठमात्रं जीवमनूद्येशानादिपदैस्तेन ब्रह्माभेदो बोध्यते इति शंकराचार्योक्तं निरस्तम् ।

'अङ्गुष्ठमात्रः पुरुषोन्तरात्मा सदा जनानां हृदये संनिविष्टः ।
तं स्वाच्छरीरात्प्रवहेन्मुञ्जादिवेषीकां धैर्येण' ॥

'तं विद्याच्छुक्रममृतम्' इति वाक्यशेषेपि अन्तरात्मनः संवेशो रक्षार्थः । तमङ्गुष्ठमात्रं भगवन्तम् । तं जीवमित्यन्ये प्रवहेत् पूरकः सन् वर्धयेत् । व्यापकं करणेनाङ्गुष्ठमात्रं विरुद्धधर्माश्रयत्वाय कुर्यात् । पृथक्कुर्यादित्यन्ये । तस्मिन् पक्षे तं विदिति कर्मतानुपपत्तिः । तमेव विदित्वेति श्रुतेः । मुञ्जादिति गवां दुःखददर्शनकौषधिविशेषादिषीकां तृणविशेषरूपां वर्धयेदिव स्वं शब्दादिकरं स्वृस्वन्धातुः शरीरं श्रयोग्रयः श्रियन्ते इति गर्भोपनिषदि श्रिञ् सेवायाम् । शृ आदेशः ईरन् शरीरं बह्वायासकरं भक्तानां सेवोपयोगिरूपं भक्तसेवानुपयोगि दुःखदं भवतीति दृष्टान्तसंगतिः । लौकिकी व्याख्या 'इषीकाटवीं निर्विविशुः' 'मुञ्जाटव्यां भ्रष्टमार्गम्' इत्यनयोः सुबोधिन्याः । धातुपाठेऽस्यादर्शनात् मुञ्जमुञ्जिवारावामप्रियतृणे श्नादिः श्नादेराकृतिगणत्वात् अन्यो वा प्रकार इति सौत्रत्वादिः मजि शब्दे सारस्वते जप्रत्ययः ।

'यावानर्थ उदपाने सर्वतः संप्लुतोदके ।
तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः' ॥ इति ।

शुक्रमिति शुच् शोके श्वादिः परस्मैपदी सेट् शोचति ऋज्रेन्द्रेति रन् पूतीभावं करोति शुच पूतीभाव इति धातुपाठात् । पूङ् पवन एवेत्यनवस्थानिवृत्तिः तस्य वेदनमुच्यते न जीवस्येति अङ्गुष्ठमात्रं पुरुषमिति तु पुराणमतं वेदाः श्रीकृष्णवाक्यानीति प्रमाणेष्वसत्त्वात् । परमतभाषा । एतदितरत् स्फुटमित्यर्थः ॥ २५ ॥

### इति सप्तमाधिकरणम् ॥ ७ ॥

तदुपर्यपि च बादरायणः संभवात् ॥ २६ ॥ अत्रान्वित । तेन पूर्वाधिकरणे प्रसङ्गसंगतिर्बोधिता । पूर्वत्र कठवल्लीविचारे तत्रत्याङ्गुष्ठमात्रनिरूपकश्रुतिस्मरणेनाङ्गुष्ठमात्रं प्रसङ्गान्निरूपितम् । अनु पश्चान्मनुष्याधिकारे निरूपिते सर्वत्र मनुष्याधिकारनिवृत्त्यर्थं स्मृतस्य देवादीनामधिकारस्योपेक्षानर्हत्वात् प्रसङ्गसंगत्या निरूपणमित्यनुप्रसङ्गः संगतिरिति बोधयन्तः सूत्रमिति । एतेन विषयाद्यभावादनधिकरणत्वं बोधितम् । एतत्कृतवेदान्ताधिकरणमालायामधिकरणमिदमित्युक्तम् । तथा

१. तदुपर्यपि च इति प्रकाशपाठे चकारोधिकः ।

सर्वत्र ब्रह्मविद्यायां मनुष्याणामेवाधिकार इति । तन्निराकरणार्थं देवादीनाम-

भाष्यप्रकाशः ।

निविष्टस्य । जैमिनीया ह्येवं मन्यन्ते । अर्थी समर्थो विद्वान् शास्त्रेणापर्युदस्तश्च वैदिके कर्मण्यधिकारी । तत्र पूर्वं सामर्थ्यमपेक्षितम् । तच्च देवादीनां नास्ति । तेषां शरीराभावात् । न च मन्त्रार्थवादाभ्यां तत्सिद्धिः । तयोः कर्मविधिशेषत्वेनान्यपरतया तत्प्रतिपादने तात्पर्याभावात् । कर्मविषयश्च सापेक्षितोद्देश्यत्वातिरिक्तं देवतागतं धर्मान्तरं किमपि नापेक्ष्यन्त इति

रश्मिः ।

च भाष्यम् । यो यो देवानां प्रत्यबुद्ध्यत स एव तदभवत् । तथर्षीणां तथा मनुष्याणामिति । अधिकरणरचनात्त्वेवं तथा हि वैयासिकन्यायमालायामपि अधिकरणमिदमित्युक्तम् । तत्र बृहदारण्यकतृतीयाध्याये श्रूयते तद्यो देवानां प्रत्यबुध्यत स एव तदभवत् तथर्षीणामिति देवतानां मध्ये यो यो ब्रह्म बुबुधे स स एव ब्रह्माभवदित्यर्थः । नाधिक्रियन्ते विद्यायां देवाः किं वाधिकारिण इति संशयः । तत्र देवर्ष्यादयो विद्यायां नाधिक्रियन्ते इति तावत्प्राप्तं कुतः 'अर्थी समर्थो विद्वान्' अधिक्रियते इत्युक्तानामधिकारहेतूनामशरीरेषु देवेष्वसंभवात् । न च मन्त्रार्थवादादिभ्यो देवतानां विग्रहवत्त्वम् । विध्येकवाक्यतापन्नानां स्वार्थे तात्पर्याभावात् इति प्राप्ते ब्रूमः । त्रिविधो ह्यर्थवादः गुणवादोऽनुवादो भूतार्थवादश्चेति तथा चाहुः—

'विरोधे गुणवादः स्यादनुवादोऽवधारिते ।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः' ॥ इति ।

आदित्यो यूपः यजमानः प्रस्तरः इत्यादिषु प्रत्यक्षविरोधे सत्यादित्यवद्यागनिर्वाहकत्वगुणः आदित्यादिशब्दैरुपलभ्यते इति गुणवादः । अग्निर्हिमस्य भेषजम् वायुर्वै क्षेपिष्ठेत्येवमादिषु मानान्तरसिद्धार्थवादित्वादनुवादित्वं तयोरुभयोः स्वार्थे तात्पर्याभावात् । इन्द्रो वृत्राय वज्रमुदयच्छत् इत्यादिष्वविरुद्धेष्वननुवादेषु भूतार्थवादेषु स्वतः प्रामाण्यादेव स्वार्थे तात्पर्यस्य निवारयितुमशक्यत्वात् पदैकवाक्यतया स्वार्थेऽवान्तरं तात्पर्यं प्रतिपद्य पश्चाद्वाक्यैकवाक्यतया विधिषु महातात्पर्यभूतार्थवादाः प्रतिपद्यन्ते मन्त्रेष्वप्ययं न्यायो योज्यः । तथा च मन्त्रार्थवादादिबलात् देवादीनां विग्रहवत्त्वे सति श्रवणादिषु सामर्थ्यं सुलभम् । अर्थित्वं चैश्वर्यस्य क्षयित्वातिशयत्वदर्शनान्मोक्षसाधनं ब्रह्मविद्या विषयमुपपद्यते । विहता चोपनयनाध्ययनरहितानामपि स्वयं भातवेदत्वात् सुलभैव तस्मादेवादीनामधिकारो न निवारयितुं शक्यः निर्गुणविद्यायाम् । अतो नवीनमतेनाधिकरणम् । अतः प्राचां मतेनोक्तं सूत्रमिति । मन्यन्त इति अवबोधं कुर्वते । अर्थीति षष्ठस्य सप्तमे पादे चिन्तितम् । अर्थो धनं दक्षिणा स्वदाने सर्वमविशेषादित्यधिकरणे । समर्थः षष्ठस्य द्वितीयाधिकरणे चिन्तितम् । 'फलार्थत्वात्कर्मणः शास्त्रं सर्वाधिकारं स्यात्' इत्यधिकरणेऽन्धादेरशक्तस्य नाधिकारः किं त्वनन्धापङ्ग्वादिरूपस्य शक्तस्याधिकारः विद्वान् सप्तमेधिकरणेऽष्टमे च पादे द्वितीयेधिकरणे एवं चतुर्थोपि ज्ञेयः । न च मन्त्रेति मन्त्रार्थवादादिभ्यो विग्रहादिपञ्चकं नवमस्य चतुर्थाधिकरणेस्ति सहस्राक्षो गोत्रभिद् वज्रबाहुरिति विग्रहः । अग्निरिदं हविरजुषतेति हविःस्वीकारः । अद्धीदिन्द्र प्रस्थिते मा हवींषीति हविर्भोजनम् । तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति इति तृप्तिप्रसादौ । कर्मविधीति प्रथमस्य द्वितीयपादे 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते' इत्यधिकरणेऽर्थवादानां कर्मविधिशेषत्वं वायव्यं

धिकारमाह तदुपर्यपि । मनुष्यापेक्षयार्वाक्तनानामधिकारो नास्ति। तत्रापि वैदिकधर्महेतोस्त्रैवर्णिकानां धर्मयुक्तानामागतम् । ततोऽपि ये साध्यादयो धर्मयुक्तास्तेषामप्यधिकारः। तत्र जैमिनिप्रभृतीनां न संमतिरिति स्वनामग्रहणम्। विशिष्टत्रैवर्णिकानारभ्य प्रजापतिपर्यन्तं शतानन्दिनामधिकारं मन्यते बादरा-

भाष्यप्रकाशः ।

तच्छेषभूतौ तौ तदतिरिक्तं विग्रहं न साधयितुं शक्तौ। शरीराभावादेव च नार्थित्वमपीति। तदेतन्निराकर्तुं देवादीनामधिकारमाहेत्यर्थः । नन्वधिकारविचारे सर्वेषामेव विचारणीयः स कुतो न विचार्यत इत्यतः सूत्रं विवृण्वन्ति तदुपरीत्यादि। मनुष्यादर्वाक्तनेषु योग्यताभावादेव नास्ति। मनुष्येष्वपि वैदिकधर्मं प्रति कारणभूतस्योपनयनादेः सकाशात् त्रैवर्णिकानां धर्मयुक्तानामेवाधिकार इति जैमिनिसूत्रेष्वेव सिद्धम्। तदुक्तानामप्यविरुद्धानामत्राभ्यासादिवदुपादेयत्वात्। तथात्रापिशब्दोक्तिमहिम्नैवावगतं सूचितमित्यर्थः। शेषं प्रकटार्थम्। संभवं विवृण्वन्ति धर्मेत्यादि। 'तं विद्याकर्मणी समन्वारभेते' इति श्रुत्या शरीरारम्भं प्रति तयोः कारणत्वात् तयोः

रश्मिः ।

श्वेतमालभेत इति कर्मविधिस्तच्छेषत्वं वायुर्वै क्षेपिष्ठा देवता इत्यर्थवादो यतः क्षिप्रगामिस्वभावतया शीघ्रफलदो वायुरस्य पशोर्देवता ततः प्रशस्तमिमं वायव्यं पशुमालभेतेति वाक्ययोरन्वयः। चतुर्थाधिकरणे तदर्थशास्त्रादित्यस्मिन् मन्त्राणां विधिशेषत्वम्। उरु प्रथस्वेति मन्त्रः कश्चित्। अस्यार्थः भो पुरोडाश उरु विपुलता यथा भवति तथा त्वं प्रथस्व प्रसरेति। दृश्यमानार्थानुस्मरणमेव यागप्रयोगे मन्त्रोच्चारणस्य प्रयोजनम्। तात्पर्येति अभिधासत्त्वेपि वक्तुरिच्छाभावादिष्टोर्थो बलीयान्। तच्छेषेति कर्माणि यागादीनि तेषां विषयः। तेषां शेषभूतौ मन्त्रार्थवादौ। योग्यतेति सुतलादिषु बिलेषु सुतले बलिः 'सुतलस्थापितबलिः स्वर्गाधिकसुखप्रदः' इति पुरुषोत्तमसहस्रनाम्नः। रसातलं नागलोकः तयोर्बलेर्नागानां च ज्ञानयोग्यता 'आत्मनिवेदने बलिः' इति कस्यचिद्वाक्यात्। 'सर्पाः सत्रमासत' इति श्रुतेः चित्तशुद्धिद्वारा नागानामिति। मैवं। पूर्वस्य पुराणमतत्वात्। श्रुतेस्त्वाधिदैविकनागपरत्वं शब्द इति चेदिति वक्ष्यमाणसूत्रे यागीयपदार्थानामलौकिकत्वस्य वक्ष्यमाणत्वात्। तत्रापीति भाष्यं विवरामासुः मनुष्येष्विति। धर्मयुक्तानामिति त्रैवर्णिकाणाम्। चतुर्थस्य धर्माभावात् अनधिकारात्। जैमिनीति सूत्राणि तु षष्ठस्य प्रथमे पादे सूत्राणि चतुर्दश। जैमिनीयन्यायमालायां सप्तमेधिकरणे 'चातुर्वर्ण्यमविशेषात्'। 'निर्देशाद्वा त्रयाणां स्यात् अग्न्याधेये ह्यसंबन्धः क्रतुषु ब्राह्मणश्रुतिरित्यात्रेयः' 'निमित्तार्थेन बादरिः तस्मात्सर्वाधिकारं स्यात्' 'अपि वान्यार्थदर्शनाद्यथाश्रुति प्रतीयेत' 'निर्देशात्पक्षे स्यात्' 'वैगुण्यान्नेति चेत्' 'न काम्यत्वात्' 'संस्कारे च तत्प्रधानत्वात्' 'अपि वा वेदनिर्देशादपशूद्राणां प्रतीयेत' 'गुणार्थत्वान्नेति चेत्' 'संस्कारस्य तदर्थत्वाद्विद्यायां पुरुषश्रुतिः'। 'विद्यानिर्देशान्नेति चेत्' 'अवैद्यत्वादभावः कर्मणि स्यात्' 'तथा चान्यादर्शनम्' इति सूत्रेषु। बादरायणशब्दोक्त्या जैमिनिमतं कुतोपन्यस्तमत आहुः तदुक्तानामिति । अभ्यासेति आनन्दमयोऽभ्यासादित्यत्राभ्यासः। आदिपदेन श्रुतिलिङ्गादि। उपेति प्रमाणभेदशेषत्वप्रयुक्तिक्रमाधिकारातिदेशऊहबाधतन्त्रप्रसङ्गानां द्वादशाध्यायार्थानामुपादेयत्वात् । अत्रापीति सूत्रे शब्देति बादरायणशब्दमहिम्ना। सूचितमिति व्यञ्जनयोक्तम्। व्यासशिष्यत्वेन बदरमयनं यस्य जैमिनेरिति योगस्य बादरायणपदस्य जैमिनौ सत्त्वात्। निष्ठा चेति लिङ्गानुशासनसूत्रादधिकारायागतमित्यपि भाष्यार्थः। अधिकारमात्र आग्रहे

यणः । कुतः । संभवात् । संभवति तेषां ज्ञानाधिकारः । धर्मज्ञानाभ्यां साति-

रश्मिः ।

अधिकार आगतमित्यपि प्रयोग उक्तसूत्रात् । भावे या निष्ठा तदन्तं क्लीबं स्यादित्युक्तसूत्रवृत्त्यनादरात् । ततोपि त्रैवर्णिकेभ्यो ये साध्यादय इत्येवं भाष्यं प्रकटार्थमित्याहुः शेषमिति । किं च । भाष्ये । विशिष्टेति धर्मयुक्तेत्यर्थः । मन्यत इति आनन्दमीमांसाया मन्यते । प्रकृते । तयोरिति पूर्वप्रज्ञा चेत्यग्रेतनश्रुत्युक्तप्रज्ञा तु नोक्ता । समन्वारभत इत्यस्य वचनविपरिणामेनानन्वयात् किं तु च इत्यस्य चन्दते आह्लादं करोति इत्यर्थात्तेनान्वयः । अन्येभ्योपीति डः इति व्याख्यासुधायां भानुदीक्षितः । चि चयने स्वादिरुभयपदी अनिट् चक तृप्तिप्रतिघातयोः भ्वादिरात्मनेपदी सेट् डः यथोपपत्ति सर्वं साधु । पूर्वप्रज्ञा पूरी आप्यायने दिवादिरात्मनेपदी सेट् पूर्यतेः 'सर्वनिघृष्व' इति सूत्रेण बाहुलकाद्वन् आ-आप्ता अपि न पियति पि गतौ तुदादिः परस्मैपद्यनिट् अगन्ता आ सततगतिकर्ता अयनं अय गतौ भ्वादिः आत्मनेपदी सेट् भावे ल्युट् प्रा पूरणे प्र-ज्ञाऽवबोधने क्र्यादिरुभयपद्यनिट् अव रक्षणादौ बुध अवगमने बुध ज्ञाने भ्वादिः दिवादिः परस्मैपद्यात्मनेपदिनौ सेडनिटौ अव रक्षणादौ गमॢ गतौ अवार्थे अवगमप्रवेशेऽनवस्था अङ्गीकार्या देहानां बहुविधत्वात् तत्सृष्ट्वा तदेवानुप्राविशदिति श्रुतेः । जानातीति ज्ञः 'इगुपधज्ञाप्रीकिरः कः' इति कः तथा चाप्ताऽगन्ता सततगतिकर्ताऽयनकर्ता पूरणकर्ता रक्षणादिकर्ता गतिकर्ता देहाह्लादं करोति न चेदं मुक्तस्य संभवति मैवं विशिष्टत्रैवर्णिकानारभ्येति भाष्यात् । विच्छिद्य साधनानामङ्गीकार्यत्वात् । जीवन्मुक्तस्य न विच्छेदप्रयोजनम् । साधनानामपि श्रुतिप्रामाण्यात् अवक्रमणानन्तरमनुवृत्तिः उपास्यधर्मानुवृत्तिश्च देहस्त्वाक्षेपलभ्यः । ताभ्यामिति तादृशेत्यस्य ब्रह्मविद्योपयोगीत्यर्थः । ननु ताभ्यां विद्याकर्मभ्यां तत्र विद्या विद् ज्ञाने अदादिः परस्मैपदी सेट् संज्ञायां समजेति क्यप् टाप् च ज्ञान इत्यत्र ज्ञा अवबोधने भावे ल्युट् । अव रक्षणादौ बुध बोधे भ्वादिरात्मनेपदी सेट् बुध ज्ञान इत्यस्य ग्रहणे आत्माश्रयः । बुध अवगमन इत्यस्य ग्रहणेऽवघटितत्वेन गौरवम् । तथा च विद्यारक्षणादेर्बोधस्य च कर्त्री कर्म सर्वधातुभ्यो मनिन् करोति क्रियते वा कर्म धातुस्तनादिरुभयपदी अनिट् तनु विस्तारे डित् अदिप्रत्ययः वि-प्रजनादिकर्ता स्तृञ् आह्वाने स्वादिरुभयपदी अनिट् आ आप्ता छद ऊर्जने भ्वादिः परस्मैपदी सेट् ऊर्ज बलप्राणनयोः चुरादिः परस्मैपदी सेट् बल प्राणने चुरादिः परस्मैपदी सेट् प्राणनम् प्र-अन प्राणने चुरादिः परस्मैपदी सेट् इट् प्र-पूरणकर्ता अनिति यश्च बलार्थ उक्तः प्र-पूरकः पुनः प्रपूरकः अननकर्ता च तं भवाय नाशायेति वाक्यादेवं देहं उक्तकर्ता करणार्थः कालश्च समारभेते सम् धम वैक्लव्ये भ्वादिः परस्मैपदी सेट् वि-प्रजनादिकर्ता कुङ् शब्दे भ्वादिः कवते शब्दकर्ता तं देहं आ आप्ता तं रभेते रभि शब्दे भ्वादिः आत्मनेपदी सेट् शब्द आविष्कारे आ सततगन्तारं वि-प्रजनादिकर्तारं सुडर्थः । आविष्कुरुतः करणे कृतौ काले इति यावत् । टीकायां तु विद्याशब्देनेह प्रमाणाप्रमाणजनितज्ञानमात्रं विहितप्रतिषिद्धादिरूपमात्मज्ञानव्यतिरिक्तमुच्यते शास्त्रलोकस्वभावोत्पन्नदृष्टादृष्टार्थरूपवाङ्मनःकायसाध्यं सर्वकर्मशब्देनोच्यते तदुत्पन्नफलभोगजनितः संस्कारो ह्याश्रितः पूर्वप्रज्ञेत्युच्यते समन्वारभेते अनुगच्छतः पूर्वप्रज्ञा चानुगच्छति इत्याहुः अपरोक्षज्ञानार्थं पञ्चाग्निविद्यानिष्पन्नदेहो वक्ष्यते तृतीयाध्यायेऽत्र तु परोक्षापरोक्ष-

शयाभ्यां हि तादृशजन्मसंभवात् । न हि तेषां पूर्वसंस्कारो लुप्यते । अक्षरपर्यन्तं शतोत्कर्षश्रवणादुपर्यपेक्षा ।

भाष्यप्रकाशः ।

सातिशयत्वे ताभ्यां तादृशदेवादिजन्मसंभवात् । जन्मनि, 'यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत् सहजं पुरस्तात्' इति मन्त्रोक्तलिङ्गेन जन्मत एव प्रजापतेरुपनीतत्वे, 'यो वै वेदांश्च प्रहिणोति तस्मै' इति वेदाध्ययनत आक्षेपादपि च सिद्धेः । ब्रह्मणे ब्राह्मणमालभते, क्षत्राय राजन्यं, मरुद्भ्यो वैश्यमिति श्रुत्या ब्राह्मण्यादीनां देवतात्वात् तासां चोपनयनादिनाऽनुग्रहतपःप्रभृतिभ्योऽपि मतङ्गविश्वामित्रप्रभृतिषु स्मरणादुपनयनाभावे ब्राह्मण्यादौ सिद्धे, देवादिष्वपि शतानन्दिश्रुतौ,

रश्मिः ।

ज्ञानार्थं विद्याकर्मणोरतिशयविचारार्थमाहुः जन्मनीति । प्रहिणोतीति । प्रा-पूरणे पूरकः सन् हिनोति गच्छति हृदि वर्धयति च वेदान् तस्मै विस्तारकाय । अध्ययनं गुरुमुखादक्षरग्रहणम् । आक्षेपादिति ब्रह्मत्वेनातिशयतर्कात् । सिद्धेः अध्ययनवेदज्ञानभक्त्यादिभिरतिशयसिद्धेः भगवान् ब्रह्म कार्त्स्न्येनेति वाक्यम्, श्रद्धारतिर्भक्तिरनुक्रमिष्यतीति । मुख्यदेवे उपनीतत्वरूपाधिकारेण विद्यावेदाध्ययनादिः तदनुकर्म च ते संस्काररूपातिशययुक्ते ताभ्यां तादृशजन्मोक्तम् । अन्येष्वाहुरतिशयान् । ब्रह्मण इति । तैत्तिरीयक इयम् । अतो योगरूढ्यार्थः । आलभतिर्न हिंसार्थ इति सुबोधिन्याम् । डुलभष् प्राप्तावित्यालम्भः स्पर्शः । इतीति मरुतो वै देवानां विशः इत्यन्तया श्रुत्या ब्राह्मणं राजन्यं वैश्यमित्यत्र ब्राह्मणत्वादिविशिष्टब्राह्मणादिषु शक्तेर्ब्राह्मणादिपदानामतो ब्राह्मणादिपदोक्तब्राह्मण्यादीनां देवतात्वमन्यथा लभत इत्युक्तालभनानुत्पत्तेः तदुक्तं ब्राह्मणत्वादिदेवतायाः देवा यच्छासनानुसारेण ब्राह्मणत्वादिदेवताः देहे तिष्ठन्ति लोकस्य तं हरिं सर्वदा श्रये इति । स्मरणादिति ।

'जन्मना जायते शूद्रः संस्काराद् द्विज उच्यते ।
वेदाभ्यासाद्भवेद्विप्रो ब्रह्मज्ञो ब्राह्मणः स्मृतः' ॥

इत्युपनयनादिना स्मरणम् । अनुग्रहेण पञ्चमस्कन्धे 'यवीयांस एकाशीतिर्जायन्ते याः पितुरादेशकरा महाशालीना महाश्रोत्रियाः यज्ञशीलाः कर्मविशुद्धा ब्राह्मणा बभूवु'रिति स्मरणम् । पितुः ऋषभस्यादेशकराः इत्यनुग्रहभाजः । तपसा ।

'गाधेरभून्महातेजाः समिद्ध इव पावकः ।
तपसा क्षात्रमुत्सृज्य यो लेभे ब्रह्मवर्चसम्' ॥

इति विश्वामित्रस्मरणम् 'तपोनुग्रहाभ्याम् । महाभारते उपनीतस्य पित्राज्ञया यवनार्थं गर्दभाश्वयुक्तेन रथेनेष्टकानयनार्थं गच्छतो मतङ्गस्य मध्ये देवगर्दभीवचनात् स्वमातरि व्यभिचारिणीत्वज्ञाने स्वस्य चण्डालत्वज्ञानं ततो मातापितरौ त्यक्त्वा तपोर्थं गमनं बहुकालं तपःकरणेन प्रसन्नादिन्द्रात् ब्राह्मणत्वं प्राप्तमित्युक्तेः स्मरणम् । प्रभृतिपदेन ।

'सत्यं दानं क्षमा शीलमानृशंस्यं तपो घृणा ।
दृश्यते यत्र नागेन्द्र स ब्राह्मण इति स्मृतः' ॥ इति ।

भारताजगरे युधिष्ठिरवचनरूपं स्मरणम् । तस्मादित्यर्थः । ब्राह्मण्येति ब्राह्मण्यादिरूपेऽतिशये सिद्धे । शतेति शतमानन्दा विद्यन्ते येषां ते शतानन्दिनो बृहदारण्यके आनन्दमीमांसायामुक्ताः

अतोऽक्षरप्राप्तेः शुद्धब्रह्मविद्याहेतुकत्वादुत्तरोत्तरमुपदेष्टॄणां विद्यमानत्वात्

भाष्यप्रकाशः ।

श्रोत्रियस्य चाकामहतस्येति लिङ्गादध्ययने सिद्धे, 'कालेन नष्टा प्रलये वाणीयं वेदसंज्ञिता । मयादौ ब्रह्मणे प्रोक्ता' इति संदर्भेण देवादीनामध्ययने पुराणेऽप्युपबृंहितेऽधिकारयुक्त-जन्मसंभवादित्यर्थः । नच सातिशयत्वेऽपि पूर्वसंस्कारस्य कालेन लोपादसंभव इति शङ्क्यम् । न हि तेषां पूर्वसंस्कारो लुप्यते । यथा नारदस्य । नच मन्त्रार्थवादयोर्देवविग्रहासाधकत्वम् । यज्ञोपवीतमन्त्रस्य क्वापि विधौ शेषभावाभावात्, यस्यै देवतायै हविर्निरुप्तं स्यात् तां मनसा ध्यायेदिति ध्यानविधेर्देवताविग्रहमन्तरेणानर्थक्यप्रसङ्गादशरीराया देवताया बुद्धावनारोहात् । अत एव, वज्रहस्तः पुरन्दर इत्यादयोऽपि विद्यमानगुणप्रकाशन एव स्मारकत्वं प्राप्नुवन्ति । अर्थवादा अपि स्तावकत्वं तदैव लभन्ते यदि देवताया विग्रहो भवति । स्तुतेरुत्कर्षा-धायकगुणवर्णनरूपत्वेन गुणाभावे असत्कथनं प्रतारकतां संपादयेदतः स्तावकत्वेऽपि विग्रहसाध-कत्वमक्षुण्णम् । एवं सामर्थ्ये विद्वत्त्वे च सिद्धे शतानन्दश्रुतावक्षरपर्यन्तं शतोत्कर्षश्रावणा-

रश्मिः ।

तेषां श्रुतौ । लिङ्गादिति श्रोत्रियस्छन्दोधीते इति काम इच्छा तस्य विनाशेन हतस्येति लिङ्गाच्छन्दयोः सामर्थ्यात् । सिद्ध इति । तथा च आगमापगमाभ्यां ब्राह्मण्यादिर्न जातिः किं तु देवतेति भावः । विशेषस्तु ब्राह्मणत्वादिदेवतावादे द्रष्टव्यः । पुराण इति एकादशस्य चतुर्दशेध्याये । अधिकारेति अतिशयेत्यर्थः । न हि तेषामित्यादिभाष्यमवतारयामासुः न च सातीति । कालेनेति । 'कालेन नष्टा प्रलये वाणी' इति वाक्यात् सृष्टिप्राकाले अतिशयासंभवः । यथेति प्रथमस्कन्धे स्पष्टः । अक्षरपर्यन्तमिति भाष्यमवतारयांबभूवुः न चेति । विधिशेषत्वे तस्यार्थेषु तात्पर्याभावात् । अभ्युपगम्य विध्यशेषं वाक्यमाहुः यज्ञोपेति । शेषेति तथा च यदि क्वचिदयं मन्त्रः शेषभावं प्राप्तः स्यात्तदा स्वप्रकाशितफलदेवतः क्रतुः स्वापूर्वं साधयतीति सिद्धान्तः सर्वाहतो भवेन्न त्वेवमतोयं देवविग्रहसाधक एव सहजमिति भावः यदपि शब्दमात्रं देवता अर्थस्तु प्रातिपदिकानुरोधात् चेतनो वा कश्चित् स्वीक्रियते न तु विग्रहादिमान् । उपासनादौ परध्यानमात्रमाहार्यं तस्येति वदन्ति भाट्टाः तत्राहुः यस्यै देवताया इति हविषो निर्वापः कृतः स्यात् । बुद्धाविति 'बुद्धिर्विज्ञानरूपिणी' इति वाक्यात् विशिष्टं ज्ञायते येन तद्विज्ञानं तद्रूपमस्यास्तीति विज्ञानरूपिणी तस्याम् । न च चेतनत्ववैशिष्ट्येन बुद्ध्यारोहोस्तीति वाच्यम् । अशुत्वेन बुद्धावनारोहात् । यथोक्तं सनादावित्यादि तत्राप्युच्यते आहार्यं बाधकालीनमिच्छाजन्यं ध्यानं चिन्तनम् । बाधो विग्रहाभावप्रयुक्तविषयाभावजन्य इति । अविद्यमानशरीरारोपेणापि शरीरमात्रस्य ध्यानकर्मत्वं न देवतायां देवतात्वेन तस्या अविषयत्वात् । शुक्तिरिदं रजतमित्यत्र शुक्तेः रजतत्वेन इव । ततश्च ध्यानविषयस्य देवतात्वप्रकाराभावेन देवतात्व-विशिष्टदेवतायाः ध्यानविषयत्वबोधकश्रुतिविरोधः एतदेवाहुः अत एवेति पदेन । इत्यादय इति आदिपदेन सहस्राक्षो गोत्रभिद् वज्रबाहुरिति इन्द्रो वृत्राय वज्रमुदयच्छदिति । मन्त्रा इति विशेष्यम् । वेदो अक्षरमात्रमपि नान्यथा वदतीति भाष्यादाहुः एवेति । उत्कर्षेति उत्कर्षाणामाधा-यका ये गुणाः तेषां वर्णनम् । अक्षुण्णमिति । ननु देवताया विग्रहे सति वेदानित्यत्वप्रसङ्ग इति चेन्न वैदिकशब्दानां नित्यत्वस्याग्र सूत्रे वक्ष्यमाणत्वात् । यदपि नवमस्य चतुर्थाधिकरणे विग्रहादि-

प्रजापतिपर्यन्तं सर्वेषामधिकारः संभवति। संभववचनाद् कुलैर्माधिकारस्तत्रेति सूचितम्। 'यो यो देवानां प्रत्यबुध्यत स एव तदभवत् तथर्षीणां तथा मनुष्याणाम्' इति। तदुपर्यप्यधिकारः सिद्धः॥ २६॥

भाष्यप्रकाशः।

दुपर्यपेक्षापि निर्बाधैव। अधिकारपर्युदासस्तु न क्वापि श्रूयते। सिद्धमाहुः अत इत्यादि। नन्वत्र सत्त्वादित्यनुक्त्वा, संभवादिति कस्मादुक्तमित्यत आहुः संभवेत्यादि॥ २६॥

रश्मिः।

पञ्चकप्रतिपादकयोः मन्त्रार्थवादयोः स्वार्थे तात्पर्याभाव इति तदप्यभिधावृत्तिमादाय विरुद्धमिति अक्षरेति भाष्यं विवृण्वन्ति स्म शतेति। तैत्तिरीयेऽतिशयस्य स्पष्टत्वात् शतमानन्दास्ते ये शतं मानुषआनन्दाः स एको मनुष्यगन्धर्वाणामानन्दः इत्यारभ्य ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्येत्यन्तश्रुतौ तथा च शतानन्दानां प्रतिपादिका श्रुतिः शतानन्दश्रुतिः तस्यामिति षष्ठीतत्पुरुषः। अत एवाहुरक्षरेति ब्रह्मलोकपर्यन्तम्। तथा च बृहदारण्यके ते ये शतं प्रजापतिलोक आनन्दाः स एको ब्रह्मलोक आनन्द इति। साधनवैजात्येन फलवैजात्यमतिशयाभावेपीत्येवं बोधकस्य श्रोत्रियोऽवृजिनोऽकामहत इत्यस्य वाक्यस्योक्तिः। आरम्भे चाथ ये शतं मनुष्याणामानन्दाः स एकः पितॄणां जितलोकानामानन्दः इति जितलोकत्वस्योक्तिः। ननु तर्ह्यतिशयो मास्त्विति चेन्न तर्हि तेषां पूर्वसंस्कारो लुप्यते इति भाष्यात्। तथा च विचार्यमाणे श्रोत्रिय इत्यत्र ङसः सुः सुपां सुलुक् इति सूत्रात्। अथेत्यानन्तर्येण भिन्नप्रक्रमे। यदत्र बृहस्पत्यानन्दस्थले गन्धर्वानन्दः स श्रुतित्वाद्वैकल्पिकः। श्रोत्रियस्येत्यत्र चकारार्थं आह्लादितः चदि आह्लादे डः। चकारसिद्धिः। अकामत्यत्र कामपदार्थः मानुष्यकैः कामैर्भोगैः संपन्नतमः इति बृहदारण्यकश्रुत्यन्तरोक्तोऽत्र एवं शतेन फलोत्कर्षस्य श्रवणमेव श्रावणं तस्मात्। उपर्यप्यपेक्षातिशयरूपाधिकारस्य निर्बाधास्ति। ननूपरि मनुष्याधिकारभिन्नतदधिकारसदृशोऽधिकारोस्ति इति चेत् तत्राहुः अधीति पर्युदासः सदृग्ग्राहीत्यतोधिकारभिन्नाधिकारसदृश इत्यधिकारपर्युदास इत्यस्यार्थः। अत इत्यादीति। भाष्ये। अक्षरेत्यादि। एतत्राक्षरधियामवरोधः सामान्यतदभावाभ्यामित्यधिकरणे स्फोरिष्यति प्रकृते तु ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्येत्येवं विदोऽन्नमयाद्युपसंक्रमो भवति स य एवंवित् अस्माल्लोकात्प्रेत्य एतमन्नमयमात्मानमुपसंक्रामतीति श्रुतेः। वित् विद् ज्ञाने क्विप् ज्ञानं च ज्ञा अवबोधने अव रक्षणादौ बुध अवगमने तथा च रक्षणादिकर्ता रक्षणादिकर्तुर्गमनं कुरुत इति विदित्यस्यार्थः। यदि च बुध बोधे बुध ज्ञाने भ्वादिदिवादी आत्मनेपदिनौ सेडनिटौ तदा रक्षणादिकर्ता बोधं ज्ञानं वा कुरुते इत्यर्थः। सर्वत्र ससाधनं गमनादित्रयम्। श्रूयते स्मर्यते चात उत्क्रमक्षरप्राप्तेरित्यादि उत्तरोत्तरमित्यादि च शुद्धब्रह्मविद्या सर्वत्र प्रसिद्धाधिकरणे ब्रह्मरूपोक्ता। ब्रह्मविद्या तु ब्रह्मविद्योपनिषदुक्ता ब्रह्मविष्णुमहेश्वरेभ्यः उत्पत्तिस्थितिप्रलयाः तेषां स्वरूपाणि च यत्र सा सत्त्वादिविशिष्टानां निरूपणं यत्रेत्यस्तुद्दत्यस्य। उपदेष्टारोपि भवेत्यस्यार्थभूता रक्षणादिकर्तारः। तत्र सैषानन्दस्य मीमांसा भवतीत्युपक्रम्य युवा स्यात् साधु युवाध्यापकः इति युवा आशिष्ठो दृढिष्ठो बलिष्ठः उक्तः स काम्यकर्मफलपूर्णः। तस्य शतमानन्दा ये मनुष्यगन्धर्वानन्द एकस्ते। युवा यु मिश्रणे अ.प.से. यौति कनिन्युवृषीति कनिन्। मिश्रोवमन्दयोः भ्वादि परस्मैपदी सेट् स्व तोषे दिवादिः परस्मैपदी सेट् क्ष्मद आविष्कारे चुरादिः

रश्मिः ।

परस्मैपदी सेट् युवा रोषशब्दयोः कर्ता अत्रोपदेष्टारौ एकादशचतुर्दशाध्याये 'धर्ममेके यशश्चान्ये' इति । सार्धे श्लोके धर्मं वशिष्ठादयोऽष्टादश जैमिनिप्रभृतयश्च । वदन्ति च केचित् 'धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते' केचिद्धर्म एव प्रवर्तन्ते वदन्ति च ।

'मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषेधयोः ।
नित्यनैमित्तिके कुर्यात् प्रत्यवायजिहासया ॥ इति ।

इत्येक उपदेष्टा मनुष्यगन्धर्वोपदेष्टारः आचार्या मनुश्च सूचयन्ति च भावार्थपादकरणेन सर्वोत्तममार्गाङ्गीकरणेन स मार्ग एकादशस्कन्धसप्तदशाष्टादशाध्यायोक्तः । तत्र च—

'इति मां यः स्वधर्मेण भजेन्नित्यमनन्यभाक् ।
सर्वभूतेषु मद्भावो मद्भक्तिं विन्दतेऽचिरात्' ॥
'भक्त्योद्धवानपायिन्या सर्वलोकमहेश्वरम् ।
सर्वोत्पत्त्यप्ययं ब्रह्म कारणं मोपयाति सः' ॥ इति वाक्याभ्याम् ।

मनुर्यथा—'राजतो धनमन्विच्छेत् संसीदन् स्नातकः क्षुधा ।
याज्यान्तेवासिनोर्वापि न त्वन्यत इति स्थितिः' ॥ इत्याह ।

गन्धर्वपदस्य वक्ष्यमाणद्वितीयविग्रहे ।

'पाषण्डिनो विकर्मस्थान् वैडालवृतिकाञ्छठान् ।
हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत्' ॥ इति ।

विकर्मस्थान् मनुष्यहिंसकान् हिंसन्ति ये तेपि वक्तुं शक्यन्ते अग्रे यौगिकार्थोक्तौ स्पष्टोयमर्थः । यद्यपि श्रुतयश्च श्रीमान् कृष्णो गीतायां चाचार्या आत्मनिवेदनपद्धतौ ह्युपदेष्टारस्तथापि विशेषत उपदेष्टृणां विद्यमानत्वमुच्यते इति द्वितीयः । मनुष्यगन्धर्वाणां शतानन्दा देवगन्धर्वाणामेक आनन्दः । उपदेष्टा शिवः विद्याकामस्तु गिरिशमिति द्वितीयस्कन्धात् अस्मात्सूत्रात् व्यासो भगवानप्युपदेष्टा । किं च । त एवैकानन्दो दिव्यगन्धर्वाणां परोक्षवादात् 'जगुः किन्नरगन्धर्वाः' इति दशमस्कन्धात् । उपदेष्टा ज्ञानेन भक्ता शिवः समानशीलत्वात् मैत्र्या । गन्धर्वपदस्य लौकिको योगरूढोर्थः प्रतीयते स वेदे, वेदान्ते तु ये धातुशब्दा यत्रार्थेति पत्रावलम्बनायौगिकोर्थः । स यथा गन्ध अर्दने चुरादिः आत्मनेपदी सेट् गन्धयते गन्धः पचाद्यच् गन्धं अर्दकं अर्वति अर्व गतौ स्वरवर्णानुक्रमहैमधातुपाठे अर्व हिंसायां भ्वादिः परस्मैपदी सेट् गच्छति हिनस्ति वा गन्धर्वः । कर्मण्यण् । शकन्ध्वादिः । मनुष्यगन्धर्वा मनुष्यार्दकगन्तारो मनुष्यार्दकहिंसितारो वा अकामा भवन्त्येव 'अकामः पुरुषं परम्' इतिवाक्यात् । परपुरुषार्चनादिषु शिवादयः श्याचार्यादयश्चोपदेष्टारो भवन्त्येव । अकामा इत्यम् । मनुष्यगन्धर्वा हि मनुष्यपदेन मन ज्ञाने दिवादिरात्मनेपद्यनिट् ज्ञानकर्तुः प्रादुर्भूतं प्र-पूरकं आ-आप्तृ वि-भ्रजनादिकर्तृ सत् दुर् अनादरे दृङ् अनकविनाशे विभ्रजनादिकर्तृ नाशोऽदर्शनम् तस्य कर्तृ आ-वि-भ्रजनादिकर्तृ आधृ च दरे दृ विदारणे क्र्यादिः परस्मैपदी सेट् । वि-भ्रजनादिकर्तृ दारणं दृ भये भ्वादिः परस्मैपदी सेट दर अप् प्रत्ययस्तस्मिन् दृङ् अनादरे दृ विदारणे एतयोर्न रूपमन्योन्याश्रय आत्माश्रयश्च स्याताम् । त्रिभी भये जुहोति. परस्मै. अनिट् मनु अवबोधे तनो. आ-से-वा मन्यते मनुते वा मनुः शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्चेति सूत्रेण उः मनोरपत्यं जातिः प्रादुर्भावो वा मनुष्यो मनोर्जातावञ्यतौ षुक् च वक्तव्यौ । एवं च ज्ञानावबोधान्यतराश्रयस्य जातिः प्र-पूरकं आ-आप्तृ इत्याद्युक्तं प. भ. इत्यन्तम् ।

८९ भ० सू० ९०

रश्मिः ।

एतावन्तः पदार्था उच्यन्ते । मन स्तम्भे चुरादिरा. सेट्. एतस्य मानुरिति रूपं भवति इत्यनिष्टो धातुः सः । गन्धर्वपदेन गन्ध अर्दने अर्द गतियाचनयोः भ्वा-प-से अर्द हिंसायाम् वा । चुरा-आ-से गतियाचनहिंसार्थका गत्यादयस्त्रयोपि । अर्थनिर्देशकाः प्रायेण भावप्रत्ययान्ताः तथा च मनुष्यान् गत्वा याचकानर्दन्ति गच्छन्ति मनुष्याणां हिंसकान् । अर्द हिंसायां हिंसन्ति अर्थं हिंसायां ते मनुष्यगन्धर्वाः एतावन्तः पदार्था उच्यन्ते तेषामानन्दपदार्थः आ-वि-प्रजनादिकर्तृ आङ् च नन्दः 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इति न ल्युः छन्दसि विकल्पात् । वर्णलोपो वा भावे घञ् । टु नदि समृद्धौ भ्वा-प-से-यम वैक्लव्ये भ्वा-प-से-क्विप् ऋद्ध वृद्धौ दिवादि-प-से-वृद्ध वृद्धौ भ्वा-आ-सेट् यदि च वध भासे चु-प-से-तदा भास दीप्तौ दीप दीप्तौ इति ज्ञेयम् । योऽकामो निष्काम आप्तकाम आत्मकामो भवतीति शारीरकब्राह्मणे आनन्दप्रस्तावे आत्मकामातिरिक्तानुपयोगात् । प्रजापतेर्धर्ममार्गेण मोक्षाधिकारिण आनन्दस्य वक्ष्यमाणत्वात् । ज्ञानावबोधान्यतराश्रयस्य पूरकाः पुत्रादीनां गत्वा याचकानां ज्ञानावबोधान्यतराश्रयस्य हिंसकानां चाकामत्वस्य शुकत्वाच श्रोत्रियस्य चाकामहतस्येति श्रुतेः । एवं देवगन्धर्वपदार्थे देव इति दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुति-मोदमदस्वप्नकान्तिगतिषु दि. प. से. तस्य न रूपं फलाध्याये प्रत्यक्षोपदेशादिति सूत्रभाष्येस्य नित्य-लीलास्वरूपपरत्वात् । नापि देवृ देवने तस्य भ्वा-आ-सेटः आत्माश्रयापत्तेः । नापि देवि देवने तस्य भ्वादेरात्मनेपदिनः सेटः इदित्वान्नुमः प्रसङ्गात् । नापि दिवि प्रीणने तस्य भ्वादेः प-सेटः नुम्प्रसङ्गात् नापि दिव पीडायां तस्य चुरादेरात्मनेपदिनः सेटः आनन्दप्रस्तावात् । दिव परिकूजने चुरादिरात्मनेपदी तस्य रूपं देवयति । परिकूजति पचादिषु पाठात् अच् नन्दिग्रहीति सूत्रेण, देवाः । परि पृ पालनपूरणयोः सर्वधातुभ्य इन् । कूज शब्दे भ्वा-प-से-भावे ल्युट् परिकूजन इत्यत्र करणाधिकरणयोश्चेति सूत्रेण 'नपुंसके भावे क्तः' इति सूत्रेण वा परिकूजनं गीतायाम् ।

'देवान् भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ' ॥ इति ।

गन्धर्वपदार्थः समानः । अत्र देवाश्च गन्धर्वाश्चेति द्वन्द्वः बृहदारण्यके देवलोकगन्धर्वलोकयोः पृथगुपादानात् । तथा च देवा अत्र पूरकस्य पर्यर्थस्य । आ आप्तारः । वि-प्रजनादिकर्तारः । अत्र प्र-पूरकाः प्रादुर्भावार्थस्य जनेरर्थः प्र-पूरकाणामपत्यादीनाम् । आ स्मरणे आधृणां कृष्णप्रियाणां प्रजनादिकर्तॄणाम् । अत्र आत्मनः पूरकाणां मातापित्रादीनां च पूरकाणामिति ग्रहणार्थः । अन यतौ वा-तु-प-से-अनवस्थामिया तदेकः प्रशब्दः आत्मनः । प्रपूरकाणां गन्तॄणां पत्नीनां सेवकानां कान्ता-प्रयाणाम् । असनस्य प्रेरणस्य प्रपूरकाय ईरणं क्षेपः पूरकस्य प्रेरणं तस्य कर्तॄणाम् । अदादेरात्मनेपदिनः सेट् इर गतिकम्पनयोरित्यस्य न रूपं गतेरुक्तत्वात् आसादनं आ व्याप्तौ वि-प्रजनादिकर्तॄणाम् आधृणां च षद्लृ विशरणगत्यवसादनेषु भ्वा-प-अं-भगवत्सेवायामप्येतेषां कर्तॄणाम् । षद्लृ विषादे तु-प-अनिट् अत्रार्थे विकारस्यार्थोधिकः । प्रकृतमुच्यते एतेषां कान्तिरिच्छा तस्याः कर्तारः असनं तस्य कर्तारः आसादनं आ-वि-प्रजनादिकर्तारः आसारश्च सादनं वि-प्रजनादिकर्तारः शरणा हिंसितारः सेवाप्रतिकूलकामक्रोधादीनामपि । गन्तारः सेवायामपि । अव रक्षणादौ रक्षणं भगवतोपि । भक्तिमार्गे रक्षितर्यपि भगवति रक्षणार्हधर्मप्राकट्यस्य टिप्पण्यां षष्ठाध्याये उक्तत्वात् । आदिपदार्थेषु गतिकान्ती स्पष्टे । प्रीतिः सेवोपयोगिषु आदिष्वपि । तृप्तिरात्मनोपि षष्ठाध्यायटिप्पण्याः अवगमः अवार्थानां

रश्मिः ।

रक्षणादीनां गमः प्रहृषुरनिभ्रिगमप्रेत्यम् भावे । स च प्रवेशो हि प्र-पूरके भगवत्यपि मनोवेशो मनः प्रवेशोपि धर्ममार्गस्य प्रजापत्यानन्दपर्यन्तं सत्वात्तन्मार्गीयं सर्वं ज्ञेयम् । तन्मध्ये केषांचिद्रक्षकत्वं सर्वं ज्ञेयम् । श्रवणमपि भगवतोपि 'कथायां सक्षणा हरेः' इति श्रीभागवताद्धर्ममार्गेपि स्वामिकर्तेति उत्तरायेति सूत्रभाष्यप्रकाशरश्माबुक्तम् । अर्थ याचने अप्युक्ते क्रिया भावे शः तया च स्वामिनः कर्तारः अर्थकर्तारः याचनकर्तारः क्रियाकर्तारः इच्छा भावे शः निपातः तस्याः कर्तारः तदनुकूलदीप्तिकर्तारः अथाप्तिः अथार्थस्य रक्षणादेः कर्तारः आप्तिकर्तारः आपु व्याप्तौ आलिङ्गनम् । आ वि-प्रजनादिकर्तारः । आसारः लिगि गतौ भ्वा-प-से-गन्तारः हिंसाकर्तारः दानकर्तारः मानकर्तारः वृद्धिकर्तारः धनादेरपि । उच्यन्ते । तेषामुपदेष्टा भगवान् व्यासः अस्मात्सूत्राज्ज्ञायते गन्धर्वा उक्तार्थाः उपदेष्टा भगवान् व्यासोऽस्मात्सूत्रादेव । देवानां गन्धर्वाणां चानन्दतारतम्यं नास्ति सकलतारतम्यादुभयोरानन्दतारतम्यं यदुच्येत यौक्तिकं तत् । अतो बृहदारण्यकश्रुत्या देवानां गन्धर्वाणां चानन्दभेदेनात्रानन्दैक्यविकल्पमात्रम् । एतेषां शतानन्दाः पितॄणां रक्षकाणां चरो मृत्युः तस्य लोकाः प्रेक्षका भासका वा कालादयः ते लोका येषां तेषामेक आनन्दः प्रकारेण पूरका उच्यन्ते । तथा च पितॄणामित्यस्य रक्षकत्वं मृत्य्वात्मकत्वेन विवक्षितम् । द्वितीयब्राह्मणे मृत्युरस्यात्मा भवतीति श्रुतेः । अस्येतीदमा बहुत्वविशिष्टा गृह्यन्ते उपलक्षणात् । न चैतावत्यां सृष्टावेक एव मृत्य्वात्मेति नियमोस्ति । काङ्क्षा ग्लानिकर्त्रोः मृत्युरूपत्वेन निरूपणं मृत्युर्वै तमः इति तृतीयब्राह्मणश्रुत्याम् । तम काङ्क्षायां ताम्यति दि-प-से-तम ग्लानौ·······ग्लै हर्षक्षये हृष हर्षे दि-प-से-हृष अलीके स्वा-प-सेडिति । अलं भूषणपर्याप्तिवारणेषु भ्वा-प-से-भूष अलंकारे भ्वादिः आपु व्याप्तौ वृच् संभक्तौ क्र्यादिरा-से । पम वैक्लव्ये भज सेवायां सेवृ सेवने भ्वा-आ-से-षिवु गतौ-दि-प-से-एतेषां शतानन्दा आजानजानां देवानामेक आनन्दः आ-वि-प्रजनादिकर्तुः गन्तुर्वा आप्तुः जानात् जनी सौत्रं तु निरूपणम् । म्रियते मृत्युः भुजिमृङ्भ्यां युक्त्युकाविति सूत्रेण त्युक् प्रादुर्भावे प्र-पूरकात् आ-विप्रजनादिकर्तुः गन्तुर्वा आप्तुः जानात् जनी प्रादुर्भावे प्रपूरकात् आ विप्रजनादिकर्तुः आप्तु टुक् हक् अनादरे नञ् नक विनाशे डञ् प्रत्ययः विकारस्यार्थः । वीप्रजनं कान्तिगत्यसनासादनेषु बाहुल्कात् डिः वातेर्डिर्वा प्र-पूरककर्तुः जन शब्देन गन्तृकर्तुः । कान्तिकारकात् गन्तुः । असनकारकात् आसादनकारकात् । भुज्युकाजानात् अन्यतेः शानच् [सूत्रं तु 'हलः श्नः शानज्झौ' । छन्दसि शायजपि अपिशब्दाच्छानचिति] एतस्माज्जायन्ते एतज्जातानां मानुषआनन्द इति पक्षान्तरे । ज्ञा अवबोधने इत्यस्य रूपमाजाना इति तेभ्यो जायन्ते इत्याजानजा तेषां देवानाम् । पञ्चम्यामजाताविति डः । जनेरेव इत्यस्मात् अन्येभ्योऽपि इति डः एतेषां शतानन्दाः कर्मदेवानां देवानामेक आनन्दः । कर्मदेवत्वं कर्मणा देवत्वं संपद्यन्ते ये तत्त्वम् । कर्मणा देवत्वमपि संपद्यन्ते इति बृहदारण्यकज्योतिर्ब्राह्मणात् । एतदेकवाक्यतया तैत्तिरीये 'ये कर्मणा देवानपियन्ति' इत्यस्याः अर्थः । देवपदार्थः पूर्वोक्तः एतेषां शतानन्दाः देवानामेक आनन्दः । देवपदार्थस्तूक्तः । एतेषां शतानन्दा इन्द्रस्यैक आनन्दः । इदि परमैश्वर्ये इन्दतीति इन्द्रः ऋज्रेन्द्रेत्यादिना रक् परः पालकः पूरकश्च ज्ञायते येन सोऽक्षरः यस्मात्परो नास्ति परमः तस्य ऐश्वर्यं ईश ऐश्वर्ये 'इन्द्रस्य युज्यः सखा' इति श्रुतेः परमैश्वर्याश्रयः । सर्वं सर्वोक्तमार्गीयः मार्गस्तु श्रीभागवतैकादशस्कन्दसप्तदशाष्टादशाध्यायोक्तः । यद्यपि प्रजापतिवैकुण्ठलोकेऽनेन मार्गेण तथाप्यधिकारिणाऽनेन न भुज्यते सर्वित्वेन सामान्यात् मार्गमात्रम् । एतस्य

## विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ २७ ॥

नन्वेवमुपरितनानां ज्ञानाधिकारे स्वीक्रियमाणे तत्पूर्वभाविष्वप्यधिकारो वक्तव्यः । कर्मणि वेदाध्ययने उपनयनादिषु च । ततश्च तेषां ब्राह्मण्याद्यभावा-देशद्रव्याद्यभावाच्च पौराणिकेन मतेन देवान्तराभावाच्च तदभावेऽपि क्रियमाणे

---

भाष्यप्रकाशः ।

विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ २७ ॥ तत्पूर्वभाविष्वित्य-स्यैव व्याख्यानं, कर्मणीत्यादि । ततश्चेत्यादि । ततश्च अङ्गीक्रियमाणादधिकारादेव तेषां ब्राह्मण्याद्यभावात् । अधिकारस्य विप्रतिपन्नतया तद्बलेन ब्राह्मण्यादेर्वर्णस्याक्षेप्तुमशक्यत्वात् । पूर्वोक्तरीत्या तदापादनेऽपि देशस्य पृथिवीरूपस्य व्रीह्यादिरूपद्रव्यस्य आदिपदेन स्वर्लोकादौ सूर्यादिगत्यभावादर्शादिकालस्याऽभावाच्च । 'पुराणं हृदयं स्मृतम्' इति तेषु, येन्द्राद्यतिरिक्ता-स्तेऽन्ये न प्रसिद्धा इति पौराणिकेन मतेन देवान्तराभावाच्च । ऐन्द्रं दध्यमावास्या-

रश्मिः ।

शतानन्दा बृहस्पतेरेक आनन्दः बृहतां पतिः तद्बृहतोरिति सुट् तलोपः बृह वृद्धौ वृद्धिकर्तॄणां पाति इति पतिः पातेर्डतिः अयमुपदेष्टा सुराचार्यत्वात् । तस्य शतानन्दाः प्रजापतेर्विष्णोरेक आनन्दः विष्णोः प्रजापालकत्वेन प्रजापतिपदशक्तिस्तत्र । 'न कुर्यां कर्म चेदहम् । संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः' इतिगीतायाः । सर्वोत्तममार्गोऽस्त्येव । उपदेष्टा कृष्णः एतावत्पर्यन्तं कर्ममार्गस्तत्प्रधानो भक्तिव्यापारी सर्वोत्तममार्गश्चोक्तः ज्ञानभक्तिमार्गौ उच्येते । एतेषां शतानन्दाः ब्रह्मण एक आनन्दः ब्रह्म अक्षरं गणितानन्दत्वात् । तदभेदेनैव पुरुषोत्तमोक्तिः 'वेदस्य विद्यमानत्वान्मर्यादाया व्यवस्थितेः' पूर्णानन्दः पुरुषोत्तमः 'यतो वाचो निवर्तन्ते' इति श्रुतेः ज्ञानिप्राप्योऽक्षरः तस्योपदेष्टा याज्ञवल्क्यो गार्गीब्राह्मणे । भक्तप्राप्यः पुरुषोत्तमः तस्योपदेष्टा याज्ञवल्क्यः 'मृत्योः स मृत्युमाप्नोति' इति ब्राह्मणे । 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः' इति श्रुतेः । प्रज्ञा भावना । न चात्राक्षर-मुच्यत इति वाच्यम् । 'स वा अयमात्मा सर्वस्य वशी सर्वस्येशानः' इति श्रुतेः 'प्राणस्य प्राणमुत चक्षुषश्चक्षुः' इति श्रुतेश्च । शाण्डिल्योपि भक्तिमीमांसाकरणात् सर्वात्मभावस्योपदेष्टा सनत्कुमार-श्छान्दोग्यनवमप्रपाठके । प्रकृतमुच्यते गतो भाष्यविचारः । संभवादितीति तेन भाष्ये संभववचनादित्यत्र नीलं सरोजं भवत्येवेति दृष्टान्तो योजनीयः । भाष्ये । जैमिनेर्वेदतत्त्वज्ञत्वेन तन्मतविरुद्धेर्थे श्रुतिमाहुः यो य इति ॥ २६ ॥

विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ २७ ॥ तदिति ज्ञानपूर्वभाविषु । भाष्ये । कर्मणीति क्रियते इति कर्मेति वेदाध्ययनं 'साङ्गो वेदोऽध्येयो ज्ञेयश्च' इति अर्थस्यात्यन्ताग्र-विवेकात्कर्मपदेनैव संगृह्यते । बहुत्वाच्च बहुत्वमाहुः उपेति तं ह्योपनिन्य इत्यादिषु संस्कारपरामर्शादिति सूत्रे वक्ष्यमाणासु उपनयनस्य विद्यादाने पूर्वत्वेनं तदादिषु षोडशसंस्कारेषु । ततश्चेति । चोक्षयन्त इत्याहुः अङ्गीति । अयं हेतुः श्रुतिविरोधे । ननु कर्माधिकाराद्ब्राह्मण्यादिरध्याहरिष्यते इत्याकाङ्क्षायामाहुः अपीति । विप्रतीति । संदिग्धतया । देशेति भाष्यं विवृण्वन्ति स्म पूर्वेति । ब्रह्मणे ब्राह्मणमालभते क्षत्राय राजन्यं मरुद्भ्यो वैश्यं 'मरुतो वै देवानां विशः' इति श्रुत्युक्तरीत्या ब्राह्मण्यादिप्रापणे । सूर्यादीति तथा च पञ्चमस्कन्धनिबन्धः 'भूमेरर्धं विभावसुः' इति । अभावाच्चेति एतेषामभावो द्वितीयस्कन्धपञ्चाध्याये 'नाविदन् यज्ञसंभारान्' इत्यादिसंदर्भे उक्तः । देवान्तरेति पञ्चम तृतीये

कर्मणि श्रुतिविरोध इति चेन्न । अनेकप्रतिपत्तेर्दर्शनात् । बहूनां प्रतिपत्तिर्दृश्यते । बहवोऽत्र कर्मणि प्रवर्तमाना दृश्यन्ते । 'साध्या वै देवाः सुवर्गकामा एतत् षड्रात्रमपश्यत् तमाहरत् तेनाऽयजन्त' । 'सोऽग्निष्टोमेन वसूनयाजयत् । स उक्थ्येन रुद्रानयाजयत् । सोऽतिरात्रेणादित्यानयाजयदित्यादि' । यथैकशतं वर्षाणि प्रजापताविन्द्रो ब्रह्मचर्यमुवासेति । भूमावागत्य ऋषीन् वृत्वा यज्ञकरणं च श्रूयते, देवा वै सत्रमासतेत्यादौ । दर्शनवचनात् स्वस्यापि ऋत्विक्त्वं कर्म-

भाष्यप्रकाशः ।

चामित्यादाविन्द्रस्येन्द्रान्तराभावात् स्वयं स्वस्य यजने अपूर्वानुत्पत्तिप्रसङ्गादप्रयोजकत्वाच्च तदभावे प्राप्ते, तथात्वेऽपि क्रियमाणे कर्मणि श्रुतिविरोध इत्यर्थः । सिद्धान्तांशं व्याकुर्वन्ति बहूनामित्यादि । एतस्यैव व्याख्यानं बहव इत्यादि । वर्णसत्तायाः पूर्वं साधितप्रायत्वादाश्रमसत्तामाहुः यथेत्यादि । देशसत्तामाहुः भूमावित्यादि । एतेन, आदित्या वा अस्माल्लोकादमुं लोकमायन्नित्यादि स्मारितम् । तेन कालद्रव्यसत्तापि सिद्ध्यति । ऋत्विजोऽपि,

रश्मिः ।

'न देवताग्निशब्दक्रियमन्यार्थसंयोगात्' इत्यधिकरणे देवताप्रतिनिधिनिषेधोपि द्रष्टव्यः । ननु दृष्टस्य फलस्याभावात् कथमपूर्वानुत्पत्तिप्रसङ्गः इति चेत्तत्राहुरप्रेति । तदभाव इति ब्राह्मण्याद्यभावे । ब्रह्मणे ब्राह्मणमित्यस्यां आलभत इत्यत्र लेडाश्रयणमन्तराप्यर्थसिद्धेरर्थवादत्वस्य सुवचत्वात् तत एव स्वार्थे तात्पर्याभावात् न ब्राह्मण्यादिसाधकत्वम् । अतथात्व इति ब्राह्मण्यादिस्तथापदार्थः स्वाभावे प्रकारत्वात् । तद्भावस्तथात्वं ब्राह्मण्यादिसत्ताऽतथात्वं ब्राह्मण्यादिसत्ताऽभावस्तस्मिन् । श्रुतिचीति ब्राह्मण्यादिप्रतिपादकानां श्रुतीनां विरोधः सहानवस्थानलक्षणः । केन सह श्रुतीनामनवस्थानमिति चेदुच्यते देवकर्मभिः सह ब्राह्मण्यादिप्रतिपादिकानां स्वप्रतिपाद्यब्राह्मण्याद्यभावात् प्रतिपादकत्वेनानवस्थानम् । श्रुतयस्तु ब्रह्मणे ब्राह्मणमित्यादिः । बृहदारण्यके पुरुषविधब्राह्मणे च 'ब्रह्म वा इदमग्र आसीत्' 'एकमेव' 'तदेक॰सन्नव्यभवत्' 'तच्छ्रेयोरूपमत्यसृजत क्षत्रं यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः' इति । स नैव व्यभवत् स विशमसृजत 'यान्येतानि देवजातानि गणशः आख्यायन्ते वसवो रुद्रा आदित्या विश्वेदेवा मरुत' इति । स 'नैव व्यभवत् स शौद्रं वर्णमसृजत पूषणमियं वै पूषेय॰हीद॰सर्वं पुष्यति यदिदं किं च' इति श्रुतिः । श्रुतौ देवत्रा देवेषु इयं पृथिवी इयं पृथ्वीपूर्वश्रुतिनिर्वचनश्रुतिस्थत्वात् । अन्यट्टीकायाम् । देशद्रव्यकालानां श्रुतयः समे देशे दर्शपूर्णमासाभ्यां यजेत । पौर्णमास्यां पौर्णमास्या यजेत । अमावास्यायाममावास्यया यजेत । दर्शपूर्णमासयोश्चत्वार ऋत्विजः इति । द्रव्यस्य श्रुत्यन्तरमपि व्रीहीनवहन्ति इन्द्रस्येन्द्रान्तरे तु शंकरभाष्यम् । योगिवदिन्द्रान्तरम् । तथा चैन्द्रं दधि इत्यत्रेन्द्रो देवतास्येत्यैन्द्रम् । सास्य देवतेति सूत्रेणाण् । तदपि इन्द्रस्य याजकस्येति प्राप्तं तदिन्द्रान्तराभावादित्यनेनाभावेन प्रतियुज्यते । सिद्धान्तेति यद्येवं स्यात्तर्हि बहूनां प्रवृत्तिर्न स्याद् दृश्यते तु बहूनां प्रवृत्तिरतो नैवमित्याशयेन तं व्याकुर्वन्ति स्येत्यर्थः । भाष्ये । साध्या इति साध्यनामका देवाः स्वर्गमात्मसुखं तत्कामाः । स इति प्रजापतिः अग्निष्टोमादिकं षड्रात्रं च यागनामानि । भूमावागत्येति 'सत्रं स्वर्गाय लोकाय सहस्रसममासत' इति वाक्यात् श्रुतावपि भूमावागमनम् । प्रकृते । भूमावित्याद्यर्थे श्रुतिमाहुः एतेनेति । अस्माल्लोकादमुं स्वर्लोकम् । एतेनेति भूमावागतिकथनेन । सूर्यादिगतिदर्शनात्कालसत्ता अत्र च द्वितीयस्कन्धे ।

करणं च द्योतयति । अथवा सर्वपदार्थानामनेका प्रतिपत्तिर्बहुधोपयोगो वेदे दृश्यते । यथा चतुर्धाकरणादि, परिधिप्रहरणादि, तुषोपवापादि, तद्विद्यमाने क्रियते, नाविद्यमाने । तथा यत्र ये पदार्था न सन्ति तत्र कर्म तदभावेऽपि भवति । तथाहि दृश्यते । पर्वते सोमवाहकाऽनोऽभाववत् । 'यज्ञेन यज्ञमयजन्त देवाः' ।

भाष्यप्रकाशः ।

अग्निर्होता आश्विनाध्वर्यू उभौ हि वै देवानां शमितारौ अग्रिगुश्चापापेत्यादिश्रुत्या ज्ञेयम् । प्रकारान्तरेण हेतुं व्याकुर्वन्ति अथवेत्यादि । नाविद्यमाने इत्यन्तमेकधा प्रतिपत्तिर्व्याख्याता । प्रकारान्तरं दर्शयन्ति तथा यत्रेत्यादि । सोमवाहकाऽनोऽभाववदिति । सोमवाहकं यदनः शकटं तदभाववत् । तथा च कृष्णलेष्ववघातो यथा वैतुष्यरूपद्वारबाधाल्लुप्यते, तथात्र मार्गरूपद्वारबाधादनोऽपि लुप्यत इति तस्मिन् क्वचिदविद्यमानेपि कर्म क्रियत इति तद्वदित्यर्थः । यज्ञेने-

रश्मिः ।

'ततस्ते भ्रातर इमे प्रजानां पतयो नव ।
अयजन् व्यक्तमव्यक्तं पुरुषं सुसमाहिताः ॥
ततश्च मनवः काले ईजिरे ऋषयोऽपरे ।
पितरो विबुधा दैत्या मनुष्याः क्रतुभिर्विभुम्' ॥ इति ।

द्योतयतीति तदुक्तं प्रथमस्कन्धे ।

'धृतव्रतेन हि मया छन्दांसि गुरवोऽग्नयः ।
मानिता निर्व्यलीकेन गृहीतं चानुशासनम्' ॥ इति ।

प्रकारेति पूर्वपक्षमत्यन्तमनुकूलयितुं शेषबाधश्रुतिप्रतिनिधिपुराणेतिहासमतैः प्रकारान्तरेणेत्यादि । अथवेत्यादीति । चतुर्धेति । तृतीयस्य पञ्चदशाधिकरणे आग्नेयं चतुर्धा करोतीति दर्शपूर्णमासयोः श्रूयते तस्माग्नेये विद्यमानत्वाच्चतुर्धाकरणं ऐन्द्राग्नाग्नीषोमीययोः पुरोडाशयोरग्निसंबन्धादाग्नेयशब्देन पुरोडाशत्रयोपलक्षणेप्यमुख्यत्वेन तयोरविद्यमानत्वात् तयोश्चतुर्धाकरणाभावः । तथा उपरि देशाद्यभावेनाविद्यमानदेशादौ समे देशे इत्यादीनां श्रुतीनां कर्मणि न विरोधः ऐन्द्राग्नाग्नीषोमीययोः पुरोडाशयोराग्नेयं चतुर्धा करोतीति श्रुतिविरोधाभाववत् । आदिपदेन बर्हिर्देवसदनं दामीत्यत्र श्रुतौ मुख्यं कुशकाशादिदशदर्भरूपं गौणतत्सदृशं तृणान्तरं बर्हिःपदवाच्यं तत्र गौणे बर्हिःश्रुतिविरोधाभाववत् कर्मणि श्रुतिविरोधाभावः । चतुर्धाकरणं दशमस्य द्वितीयपादेप्यस्ति । परीति परिधीन् प्रहरतीति तुषानुपवपति इत्यत्रापि तृतीयाष्टकब्राह्मणे तृतीयाध्याये पूर्वा, आरणे द्वितीया । तदिति यथा च अविद्यमाने चतुर्धाकरणादौ न श्रुतिविरोध इति भावः । तथा चाविद्यमानदेशादिर्नोपरि क्रतुशेष इत्युक्तम् । प्रकृते । प्रकारेति बाधरूपम् । तथा यत्रेत्यादीति भाष्यस्य तथाहि कर्मणि तदभावो दृश्यत इत्यर्थः । सोमेति सोमवल्लीवाहकम् । वैतुष्येति दशमे चिन्त्यते । कृष्णलेषु सुवर्णशकलेषु व्रीहिवत्तुषाभावात् लुप्यते इति बाधरूपप्रकारान्तरम् । श्रौतं प्रकारान्तरमाहुः यज्ञेनेत्यादीति । शंकरभाष्ये देवतान्तराणि ऐन्द्रं हविरित्यादिस्थलेषु योगिनां यथा स्वरूपान्तरम्, तद्वत् । सिद्धान्त आहुः एतेनेति । यज्ञेनेति श्रुतितदर्थकथकपुराणेन । अत्र हेतुं

'इति संभृतसंभारः पुरुषावयवैरहम् ।
तमेव पुरुषं यज्ञं तेनैवाऽयजमीश्वरम्' ॥

इत्यादिवाक्यैः सर्वसंभृत्युपपत्तिश्च । आधुनिकान् प्रति वेदविभागाज्जैमिनेस्तथा निर्णयः । तस्मात् कर्माधिकारः कर्मकरणं चोपर्यपि सिद्धम् ॥ २७ ॥

**शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् ॥ २८ ॥**

ननु मास्तु कर्मकरणे विरोधः । शब्दे तु भविष्यति । अर्थज्ञानानन्तरं हि कर्मकरणम् । वेदाद्वार्थज्ञानम् । तत्र साध्यादीनां वेद एव कर्मकरणं श्रूयते । तत्र

भाष्यप्रकाशः ।

त्यादि । एतेन देवतासद्भावोऽप्युक्तः । पुरुषावयवरूपाणां तेषां सत्त्वादिति । तथाच प्राथमिकानां यागे भगवानेव देवतात्वानापन्नः । एकं सद्विप्रा बहुधा वदन्तीति । अतो देवतान्तराभावेऽपि न तेषां कर्मकरणे विरोध इत्यर्थः । तर्हि जैमिनीयस्मृतेः का गतिरित्यत आहुः आधुनिकेत्यादि । तथा चासर्वज्ञान् प्रत्येकवेदज्ञस्य मनुष्यमात्राधिकारनिर्णय इत्यर्थः । तेन, 'जैमिनीये च वैयासे न विरोधोऽस्ति कश्चन' इति पुराणवाक्यमपि समर्थितं ज्ञेयम् ।

अन्ये तु देवानां विग्रहाङ्गीकारे एककालिकनानायागेषु तत्सन्निधानविरोध इत्येवं व्याख्याय सौभर्यादिवद्योगेनानेकशरीरग्रहणमनेकप्रतिपत्तिपदार्थत्वेन व्याख्याय समादधते ॥ २७ ॥

शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् ॥ २८ ॥ आशङ्कांशं व्याकुर्वन्ति नन्वित्यादि । पूर्वोक्तरीत्याऽधिकारव्यवस्थापनेन देवेषु कर्तृत्वापादनात् तैः कर्मकरणे मास्तु

रश्मिः ।

वदिष्यन्तः पुराणमतप्रतिपन्नप्रकारान्तरं च वदन्तः प्रतिनिधिरूपप्रकारान्तरं वदन्त एव हेतुमाहुः पुरुषेति । एतेनेति संभृतेति भाष्यमपि विवृतम् । यज्ञेनेति श्रुतौ यज्ञपदार्थद्वयमत्रोक्तम् । अन्यकर्तृमते पुराणेनोपबृंहणं श्रुतेरिति श्रुत्युपबृंहणं ज्ञेयमत एवोपबृंहकत्वेन संभृतेति भाष्यमुपन्यस्तम् । प्रतिनिधिः षष्ठस्य तृतीये पादे चतुर्थेऽधिकरणे व्रीह्यादिद्रव्याभावे तत्प्रतिनिधिनिष्पाद्यं कर्म भवति न तु श्रुतद्रव्याभावे कर्मलोप इति चिन्तितम् । एकं सद् ब्रह्म । देवेति इदं देशादेरप्युपलक्षकम् । भाष्ये । इत्यादीति आदिपदेनेतिहासोक्तं प्रकारान्तरं 'स्वाध्यायज्ञानयज्ञाश्च' इति गीतोक्तं प्रकारान्तरम् । शमदमैर्नियमैर्युतस्य आशब्दार्थयोः शङ्कारहितस्य वेदस्याध्ययनं यज्ञ इति । जैमिनीति षष्ठाध्यायोक्तस्य चातुर्वर्ण्यमविशेषादित्यधिकरणरूपायाः । प्रत्येकेति प्रथमस्कन्धे सामगो जैमिनिः कविरिति सामरूपैकवेदज्ञस्य । तेनेति सूत्रभाष्ययोः जैमिनिनाम्ना । अन्ये त्विति शंकराचार्यादयः । सौभर्यादीति नवमस्कन्धस्य षष्ठेऽध्याये इदमुपाख्यानमादिपदेन योगी इदं च रामानुजभाष्ये शंकरभाष्ये तु बृहदारण्यकशाकल्यब्राह्मणस्था श्रुतिः 'कति देवा' इत्युपक्रम्य त्रयस्त्रिंशत्त्वेन देवा इत्येकैकस्यैव देवतात्मनोऽनेकरूपतां दर्शयति प्राणैकरूपतां च दर्शयति कतम एको देव इति प्राण इतीति श्रुतेः । स्मृतिश्च ।

'आत्मनां च सहस्राणि बहूनि भरतर्षभ ।
योगी कुर्याद्बलं प्राप्य तैश्च सर्वैर्महीं चरेत्' ॥ इति स्थितम् ।

अत्र देवतांशेनेकप्रतिपत्तेरविरोधः । सिद्धान्ते स्वस्य स्वयजने किं फलं कृतमित्यपि चिन्त्यम् ॥ २७ ॥

शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् ॥ २८ ॥ भाष्ये । वेदाद्वेति पदवाक्यपदार्थोपस्थितेः सत्त्वात् । प्रकृते । उत्पत्त्यावित्यादि प्रथमज्ञप्तिस्तत्तिरश्च ।

ज्ञाने कर्मकर्तृविरोधः। अन्यकल्पनायां त्वनवस्था। व्यवस्थापकाभावात्। वेदो वस्तूनां वृत्तान्तं वदन् वस्तूनामधिकारं वदेत्। वदन् वा कथमनित्यो न भवेदिति चेन्न। अतः प्रभवात्। अतः शब्दात् प्रभवः शब्दोक्तपदार्थानाम्।

वेदोक्ताः सर्व एव पदार्था आधिदैविका एव पुरुषावयवभूताः। सर्वानुकारित्वाद् भगवतः। अतो नामप्रपञ्चो वेदात्मको भिन्न एवाङ्गीकर्तव्यः। स केवलं शब्दैकसमधिगम्यः। वेदैश्च सर्वैरहमेव वेद्य इति। अतस्तस्य प्रपञ्चस्य

भाष्यप्रकाशः।

विरोधस्तथापि शब्दे तु भविष्यति। कथमित्याकाङ्क्षायां व्युत्पादयन्ति अर्थेत्यादि। ज्ञाने कर्मकर्तृविरोध इति तत्र वेदजन्यज्ञाने विचार्ये तस्य ज्ञानस्य साध्याख्यदेवसाध्ययागात्मककर्मरूपविषयसापेक्षत्वात् तत्कर्तॄणां साध्याख्यदेवानां तद्यागार्थं प्रवृत्तत्वेन वाक्यार्थप्रमितिसमये तस्य विषयस्याभावेनोत्पत्तौ ज्ञप्तौ चात्माश्रयाज्ज्ञाने कर्मकर्तृविरोधः। श्रुतौ यागकर्तॄणां भूतत्वेन निर्देशाज्ज्ञानविषयभूतानां समनन्तरभाविज्ञाने कर्मकर्तृविरोध इति वा। न च ते साध्याख्या देवाः, सा यागव्यक्तिश्चान्यैवेति युक्तम्। अन्यकल्पनायां त्वनवस्था। व्यवस्थापकाभावात्। तस्माद् वेदो वस्तूनां वृत्तान्तं वदँस्तेषामधिकारं वदेत्। तथैवमधिकारं वदँस्तदानीमर्थाभावेन शब्देऽर्थसंबन्धस्याशक्यवचनत्वादिदानीन्तनेन तेन संबन्धं प्राप्नुवन् पदपदार्थसंबन्धद्वारा शब्दस्य पाश्चात्यत्वं संपादयन् कथमनित्यो न भवेत्। तथाच देवानां कर्माधिकाराङ्गीकार एवं शब्दे विरोध इत्यर्थः। परिहारांशं व्याकुर्वन्ति अतः शब्दादित्यादि। प्रभव इति प्रकर्षेण भवो विद्यमानता। तथाच शब्दोक्तपदार्थानां शब्दादेव नित्यतावधारणान्न पूर्वोक्तो विरोध इत्यर्थः। तदुपपादयन्ति वेदोक्ता इत्यादि। सर्वानुकारित्वादिति सर्वमनुकारि यस्य तादृशत्वात्। अतोऽनुकारिणः सकाशादनुकार्यस्य भिन्नत्वात्। अत इति वेदैकवेद्यत्वेन लौकिकप्रमाणाविषयत्वात्। वेदात्मक इति ज्ञानात्मकः। तथाच, साध्यादिभिर्देवैर्वेदादवगम्यमानस्य प्रपञ्चस्य भिन्नत्वात् तेनैव सह पदानां संबन्धान्न ज्ञाने कर्मकर्तृविरोधो, न वा

रश्मिः।

ज्ञाने कर्मकर्त्रीति भाष्यात्। ज्ञप्ताविति ज्ञप्तिमात्रे। ज्ञान इति शाब्दे कर्मकर्तॄणां देवानां साध्यादीनां भूतवर्तमानत्वाभ्यां विरोधः सहानवस्थानम्। श्रुताविति 'यज्ञेन यज्ञमयजन्त देवाः' इति श्रुतौ अयजन्त इति लङा तथा निर्देशादित्यर्थः। ज्ञानेति भूतवर्तमानत्वाभ्यां कर्मकर्तृविरोधमुक्त्वा कर्मकर्तृत्वाभ्यां विरोधमाहुः ज्ञानचीति। साध्यादीनां कर्तृत्वेन ज्ञानविषयभूतानां कर्मत्वेन समनन्तरभाविशाब्दज्ञाने। अन्येति भाष्यं विवृण्वन्ति स्म न च त इति ते भूतत्वेन प्रतीयमाना सा भूतत्वेन प्रतीयमाना। शब्दादेवेति। ननु 'वाचा विरूप नित्यया' इति श्रुत्या शब्दरूपया वेदस्य नित्यत्वेऽप्यर्थस्य नित्यतायां कः शब्दः इति चेन्न 'अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मा' इति शब्दात् विरूपया विविधरूपया। न उच्छित्तिर्येषां ते अनुच्छित्तयः अनुच्छित्तयो धर्मा यस्येत्यनुच्छित्तिधर्मा। सर्वमिति सर्वं जगत् अनुकार आत्मानुकारो यस्यास्ति तादृशं यस्य यत्संबन्धि सदेव। अत इति इदं भाष्यीयं पदं व्याख्येयम्। अनुकारि जगत् अनुकार्य आत्मा ज्ञानात्मक इति। 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः' इति जैमिनिसूत्रात्। 'नारायणपरा वेदाः' इति वाक्यात्। भिन्नत्वादिति आधिदैविकत्वेन भिन्नत्वात्। भूतभावित्वे कर्मकर्मप्रतिपादकवेदयोरनुभूयेते नित्यत्वे तयोः भूतभावित्वे

भिन्नत्वान्न विरोधः शब्दे । कथमेवमत आह । प्रत्यक्षानुमानाभ्याम् । प्रत्यक्षं ताव-दिदानीमपि यजमानो यजमानकृत्यवृत्त्विजश्च स्वकृत्यं वेदादेवावगच्छन्ति । न चाकृतिमात्रवाचकत्वेनाविरोधः । सर्वत्र लक्षणाप्रसङ्गात् । यः सिक्तरेताः स्यादित्यादिषु विरोधश्च ।

---

भाष्यप्रकाशः ।

वेदानित्यत्वम् । भूतभावित्वव्यवहारकालेऽपि तद्धर्मवत्त्वेन तस्य सत्त्वात् । अन्यथा भूतत्व-भावित्वयोर्निराश्रयत्वप्रसङ्गेन तयोर्धर्मत्वस्य व्यवहारस्य चोच्छेदप्रसङ्गात् । अतो न विरोधः शब्द इत्यर्थः । अत्र प्रत्यक्षविरोधमाशङ्कते कथमित्यादि । युक्तिं व्याकुर्वते प्रत्यक्षमि-त्यादि । वेदादेवावगच्छन्तीति । सिद्धमेव कृत्यं वेदादेव वृद्धव्यवहारादिनाऽवगच्छन्ति । तथा च यथा कर्म तद्वेदैकगम्यं तथा पदार्था अपीत्यर्थः । ननु पदार्थसंबन्धनित्यत्वार्थमतिरिक्त-प्रपञ्चाङ्गीकारोऽनर्थकः । जैमिनीयोक्तरीत्या आकृतिवाचित्वेऽपि तत्सिद्धेः । न च व्यक्त्यप्रती-त्यापत्तिः । आक्षेपादेव तत्सिद्धेरित्येकदेशिनो मन्यन्ते । तदसंगतमित्याशयेनाहुः न चाकृती-त्यादि । अयमर्थः । व्यक्तेराक्षेपलभ्यत्वं वदतामाक्षेपो नाम कः पदार्थ इति वक्तव्यम् । स किमनुमानं, लक्षणा वा । नाद्यः । शब्दस्यानुमानविषया बोधकत्वे प्रमाणान्तरत्वभङ्गप्रसङ्गात् । शब्दसहकृतानुमानस्यैव प्रमाणत्वे लाघवात् । न चानुमानस्यैव सहकारित्वमिति वाच्यम् । नियामकाभावात् । नेतरः । सर्वत्र लक्षणाप्रसङ्गात् । तथाच पक्षद्वयेऽपि दोषप्रसङ्गाज्जैमिनी-

रश्मिः ।

विरुद्धे भविष्यतः इत्यत आहुः भूतेति भूतभावित्वधर्मवत्त्वेन तस्य कर्मणो वेदस्य च सत्त्वात् । नन्वप्रतीतकर्मादिरूपधर्म्यङ्गीकारे का युक्तिरित्याकाङ्क्षायामाहुः अन्यथेति । तयोर्निराश्रययोः काला-श्रयत्वे प्रकारे सति । धर्मत्वस्येति तद्वृत्तित्वं धर्मत्वं कर्माद्यवृत्तित्वेन कर्मादिधर्मत्वस्योच्छेदः । भाविकर्मभूतं कर्मेति भावी मन्त्रो भूतो मन्त्र इति व्यवहारस्य चोच्छेदः । विशेषस्तु विद्वन्मण्डने द्रष्टव्यः । अत इति । शब्दे वेदाख्ये वर्तमानत्वभूतत्वभावित्वानां नित्यत्वप्रतीतानित्यत्वयोश्च न विरोधः । प्रत्यक्षेति । प्रत्यक्षेण गृहीतकर्मादिः शब्दशतेनापि नो वारयितुं शक्य इत्येवम् । भाष्ये । युक्तिरिति तर्के । प्रत्यक्षमिति तत्त्वनिर्धारणे निर्धारितं प्रत्यक्षमित्यर्थः । प्रकृते । सिद्धमिति वृद्धा यजमानादयः । तेषां व्यवहारा आचमनादयः आदिपदेन शक्तिग्राहकव्याकरणादयो नैयायिकानां कवीनां संयोगादयश्चैभिरवगच्छन्ति वेदार्थयजमानादीनां भिन्नत्वेपि व्याकरणादिभिः शक्तेर्गृहीत-त्वेन जानन्तीत्यर्थः । तदेवाहुः तथा चेति । तथा चाधिदैविकादिभेदस्य शास्त्रसिद्धत्वात्तत्र प्रत्यक्षं प्रयोजकम् । जीवबुद्ध्या शतशोपि विचारितं मिथ्या भवति यतः । जीवानां मायया मोहितत्वाच्च । तथेति वेदैकसमधिगम्यत्वेन पदार्था आधिदैविकाः यजमानादौ त्वाधिभौतिकत्वे तदावाहनम् । तदुक्तं भावार्थपादभाष्ये 'लौकिके च तदावाहनादतीन्द्रियत्वमेवेति । संस्कारादिभिरावाहनमतिरिक्तमित्याधि-दैविकम् । जैमिनीये त्वाकृत्यधिकरणे । एके इति शंकराचार्यादयः । सर्वत्रेति भाष्यं विवरीतुमाहुः व्यक्तेरिति । अनुमानमिति गोत्वं व्यक्त्याश्रितं जातित्वादित्येवं रूपम् । लक्षणेति घटत्वादीनां घटत्वादिविशिष्टे लक्षणा शक्यसंबन्धस्तु समवायादिः । हेतौ हेतुमाहुः शब्देति । ननु न लाघवं शब्दसहकृतत्वमनुमाने यथा तथानुमानसहकृतत्वं शब्द इति प्रामाणिकमिति चेन्न । प्रथमतः शब्देन पदत्वाद्यभिहिते पश्चादनुमानात् । एवं चानुमानसहकृतत्वे शब्देऽङ्गीक्रियमाणे नियामकाभाव

भाष्यप्रकाशः।

थानुसरणेनाविरोधसाधनमसंगतमित्यर्थः। अनुमानपक्षस्त्वतिशिथिलत्वाद् भाष्ये नोट्टङ्कित इति ज्ञेयम्। नन्वस्तु लक्षणा, जैमिनेरप्यस्मिन्नंशे आदरणीयत्वात् प्राचीनवृत्तिकारैरेकवाक्यत्वेवादरतत्वादित्यत आहुः य इत्यादि। अयमर्थः। न हि सर्वत्र वेदे रूढा एव शब्दाः प्रयुज्यन्ते। किंतु यौगिका अपि। यथा, यः सिक्तरेताः स्यात् प्रथमायां तस्य जित्वामुपदध्यादिति सिक्तरेतःपदम्। न हि तत्राकृतिः काचित् संभवति, या व्यक्तिरूपं सिक्तरेतसमाक्षिपेत्। किंतु सिक्तरेतस्त्वं तत्रोपाधिः। स च रेतःसेकानन्तरभावित्वादनित्य इति। अवयवशक्त्या बोधनेऽपि सिक्तत्वं सेकानन्तरभावित्वादनित्यमतस्तत्र पदसंबन्धाङ्गीकारे शब्दानित्यत्वस्यापरिहाराद्दोषतादवस्थ्यमित्यर्थः। ननु नास्माभिर्जातावनुपायौ वा शक्तिराद्रियते, अपि

रश्मिः।

इत्येतदेवाहुर्न चेति। अस्तीति। अयं पक्षो भट्टमते स चिन्तामणावेवं दूषितः। न हि जातित्वं व्यक्त्याश्रितत्वसाधकं पदानुपस्थितत्वात्तस्य। उपस्थितत्वे वा जातिविशिष्टवैव व्यक्तिः। किं चानुमानाद्व्यक्त्याश्रितं गोत्वमिति धीर्न तु गौरिति अतोतिशिथिलत्वात् नोट्टङ्कित इति। लक्षणापक्षस्तु भाट्टभास्करे यथैव गवादिशब्दानां जातौ शक्तिमाश्रित्याविनाभावेन व्यक्तौ लक्षणाऽऽकृत्यधिकरणन्यायसिद्धा तथाऽऽख्यातानां कृतौ शक्तिमाश्रित्य तद्वति कर्तरि लक्षणेति राणक इति प्रोक्तमतो राणकमतमपाकर्तुं मिश्रमतमपाकर्तुं चानूदित इति ज्ञेयम्। यदि चाक्षेपस्तर्क इत्युच्यते तदापि तर्कस्य मीमांसापेक्षत्वाद्गौरवम्। 'तर्को मीमांसया युतः' इति वाक्यात्। प्राचीनेति बोधायनप्रभृतिभिः षोडशलक्षणी मीमांसादृता। चत्वारोऽध्याया वेदान्तमीमांसाया द्वादश जैमिनेरध्याया इति षोडश। शक्ता इति रूढाः। अपीति। तथा च वेदे योगरूढाः शब्दा इत्यर्थः। तथा चाचार्यकारिका 'विचारो योगरूढितः' इति। नहीति। सिक्तरेताः पुरुष इति पुरुषत्वं आकृतिः सिक्तरेतस्त्वमुपाधिः व्यक्तेरभेदस्य जातिबाधकस्य सत्त्वात्।

'व्यक्तेरभेदस्तुल्यत्वं संकरोथानवस्थितिः।
रूपहानिरसंबन्धो जातिबाधकसंग्रहः'॥

इति नैयायिककारिका। भाष्ये। इत्यादिष्विति आदिपदेन 'इषे त्वोर्जे त्वा' इत्यादि अत्र मुख्यत्वे न जाती किं तु शाखात्वे जाती इषे त्वा त्वां शाखां छिनद्मीत्यर्थात्। ऊर्जे त्वा त्वां शाखामनुमार्ज्मीति। प्रकृते। इत्यर्थ इति किं च 'स्वार्थादन्येन रूपेण ज्ञाते भवति लक्षणा' यथा तीरत्वेनोपस्थितेर्गङ्गापदस्य। इह तु गोत्वादन्येन रूपेण व्यक्तेर्नोपस्थितिरपि तु गोत्वेनैव। व्यक्तित्वेन साक्षादिमत्त्वेन नोपलक्ष्यत्वे गोपदात् व्यक्तित्वादिधीः स्यात्। न च गोत्वसंबन्धिनि गोत्वविशिष्टे लक्षणेति वाच्यं गोत्वेन साक्षादानयनानन्वय इति व्यक्तेरवच्छेदकतयान्वये मुख्यत्वेन लक्षणयापि गोत्वावच्छिन्नैव व्यक्तिः क्रियार्थान्वयिनी न केवला व्यक्तिरिति गोत्वविशिष्टस्य लक्ष्यत्वे युगपद्वृत्तिद्वयविरोधप्रसङ्गात् गोत्वेपि लक्षणाप्रसङ्गाद्वा। किं च जातिमात्रे न शक्तिः न वा व्यक्तौ लक्षणा जातौ मुख्यप्रयोगाभावात् शक्तिलक्षणयोस्तन्मूलकत्वात्। प्रयोगो हि व्यवहारहेतुज्ञानार्थः, न च जातिमात्रे निर्विकल्पकाच्छक्तिमनादायैव केवलजातिव्यवहारस्तस्या विशिष्टज्ञानसाध्यत्वात् गां पश्य, घटो नश्यति इत्यादौ गोत्वादिविशिष्टस्यैव ज्ञानं व्यवहारश्चातः एकवित्तिवेद्यत्वाज्जातिविशिष्टं शक्यम्। किं च तृतीयायाः करणकत्वे इव गोमोत्वे शक्ये इति

न च प्रवृत्तिनिमित्तस्यैव वाच्यत्वम् । प्रवृत्तिवैयर्थ्यापत्तेः । संकेतग्रहविरोधाच्च । सर्वस्यापि पदार्थस्य भगवत्त्वाज्ञानुपस्थितिदोषः । संकेतग्रहेऽपि ।

भाष्यप्रकाशः ।

तु पदप्रवृत्तिनिमित्ते । स कोऽप्यस्तु । तस्य नित्यत्वान्न कोऽपि दोष इत्यत आहुः न च प्रवृत्तीत्यादि । प्रवृत्तिनिमित्तस्य धर्मस्य सर्वत्र नित्यतैवेति नियमाभावान्नित्यसंबन्धाभावे च तेन व्यक्त्यनाक्षेपात् तां विना कार्यासंभवे पदप्रवृत्तिवैयर्थ्यापत्तेरित्यर्थः । अथ तादृशस्थाप्यर्थबलादाक्षेपकत्वमाक्षेपश्चोपनय इति विभाव्यते तदा दूषणान्तरमाहुः संकेतेत्यादि । तादृशस्थले हि संकेतग्रहो व्यवहारादिना वाच्यः । तत्र व्यवहारादिस्तु व्यक्तावेव पर्यवसन्नानुपस्थिते प्रवृत्तिनिमित्ते संकेतं ग्राहयिष्यति । यदि च नागृहीतविशेषणन्यायेनोपस्थितिरङ्गीक्रियते तदापि समानसंवित्संवेद्यत्वापातेन विशिष्ट एव शक्तेः पर्यवसानमनित्यतानुद्धार इति तद्विरोधादित्यर्थः । ननु मास्त्वेकदेशिमतं तथापि वैदिकसृष्टेरतिरिक्तत्वाङ्गीकारे तस्या अगोचरत्वेनानुपस्थितत्वात् तत्र संकेतग्रहो दुर्लभ इत्यत आहुः सर्वस्येत्यादि । तथाच पूर्वेषां ब्रह्मादीनां भगवद्दर्शनेनोपस्थितेः सुकरत्वाददोषः । ततोऽर्वाचीनानामिदानीन्तनपर्यन्तानां तु

रश्मिः ।

वाच्यम् गोत्वव्यक्तिप्रसिद्धीप्रसंगात् भवति तु गौरितीत्यादिनैयायिकोक्तदूषणानि ज्ञेयानि । स क इति स पदार्थः । प्रवृत्तीति यथा घटपदप्रवृत्तिनिमित्तं घटत्वम् । इति नियमेति जातिमात्रे नित्यतानियमोस्तु न तु सित्करेतरत्वादिषु सामान्यत्वादिषु च । उपनयः इति तर्कः एकवित्तिवेद्यत्वं वा । संकेतेति अस्मात् पदादयमर्थो बोद्धव्य इतीश्वरेच्छानुरूपः संकेतः शक्तिः, अभिधा च तस्य ग्रहो व्यवहारादिभिः ।

'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सांनिध्यतः सिद्धपदस्य वृद्धाः' ॥

व्यक्ताविति घटोयमित्यादिषु अन्येषां जात्याद्यभावात् । यदि चेति दण्डीत्यादौ न गृहीतदण्डरूपं विशेषणं यया सा बुद्धिर्न विशिष्टं घटदण्डिरूपमुपसंक्रामतीति यथाह विश्वनाथः सिद्धान्तमुक्तावल्यां विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वादिति । एवं विशेषणीभूतजात्याद्यग्रहे विशिष्टाग्रहः संदर्शितः । अनित्यतेति व्यक्तीनामनित्यत्वेनानित्यतानुद्धारः तस्य संकेतग्रहस्य विरोधात् । अगविति । वृद्धव्यवहाराद्यगोचरत्वेन प्रयोज्यप्रयोजकवृद्धागोचरत्वेन वा । भगवदिति भगवद्दर्शनेन प्रतिपाद्यप्रतिपादकत्वरूपसंबन्धग्रहस्ततो भगवान् भगवत्पदवाच्योस्तीत्यत्र भगवत्पदवाच्याभिन्न भगवन्निष्ठा सत्तेति शाब्दबोधः । उपमितौ तु भगवत्पदवाच्योयमिति प्रतीतिः । भाट्टास्तु यासौ पूर्वमस्माभिर्दृष्टा गौः सा नेतरावयवेन सदृशीप्रतीतिमाहुरुपमितेः । अतो भगवान् भगवत्पदवाच्य इति शाब्दबोधः । दृष्ट एव स्नेह इत्युपपत्तिरिति भाष्यात्स्नेहे जाते तत्साभाष्याद् ।

'वेदाक्षराणि यावन्ति कथितानि द्विजातिभिः ।
तावन्ति हरिनामानि कीर्तितानि न संशयः' ॥

इति वाक्यविरुद्धयाः 'तमुस्तोतारः पूर्व्यं यथाविद ऋतस्य गर्भं जनुषापिपर्तन आस्य जानन्तो नामचिद्विवक्तन महस्ते विष्णोः सुमतिं भजामहे' इति श्रुत्या ऋषित्वेन भगवदिच्छया दर्शनात्तेन नवचनाम् शक्तिग्रहः भगवतः ।

रश्मिः ।

'आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ।
कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः' ॥ इतिवाक्यात् ।
'भगवान् ब्रह्म कार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया ।
तदध्यवस्यत्कूटस्थो रतिरात्मन्यतो भवेत्' ॥ इतिवाक्यात् ।

मनीषया पदपदार्थसंबन्धरूपायाः शक्तेर्ग्रहः । ननु भगवद्दर्शनं पदार्थो यस्मिन्निति रूपं तत्र कानि पदानीति चेन्न मनीषायाः पदपदार्थसंबन्धग्रहे कारणत्वात् । ननु पदानि तदानीं न सन्तीति चेन्न 'तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरयः' इति वाक्यात् मनीषायां वेदरूपपदसत्त्वात् तथा च श्रुतिः 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं वै देवमात्मबुद्धिप्रकाशम्' इति ब्रह्मणो भगवद्दर्शनं गोपालतापिनीयेस्ति यो विद्यास्तस्मै गोपायति कृष्णः यस्तं ह देवमात्मवृत्तिप्रकाशमिति पूर्वपादानन्तरं पादद्वयं गोपालतापिनीये । अत्रात्मवृत्तिरात्मनो मनसो वर्तनमेकादशधा 'एकादशामी मनसो हि वृत्तयः' इति वाक्याद्यद्यपि वक्तुं शक्यते तथापि वेदप्रसङ्गादात्मनां वैदिकपुरुषशरीराणां वृत्तिर्वर्तनं हरिनाम्नां ग्रहणमिति यावत् । तस्य प्रकाशरूपं 'मुमुक्षुर्वै शरणमनुव्रजेत्' इति श्रुत्यंशेनान्वयः । एवं च वेदा नामसु शक्ताः क्रियायां वेति संकटे 'यावानर्थ उदपाने' इति गीतारूपवाक्यशेषात् इतिहासशरणानां पूर्वोक्तोर्थो वैदिकानां क्रियारूपोर्थ इति । यद्वा । भगवद्दर्शनेनोपस्थितेरित्यस्यायमर्थः । भगवद्दर्शनाभिन्नोपस्थितेरिति । अभेदके । प्रकृत्यादिभ्य उपसंख्यानमिति वार्तिकेन तृतीया । तदुक्तं प्रस्थानरत्नाकरे अथ प्रसङ्गादिदं विचार्यते वैदिकपदपदार्थानां भिन्नत्वात् कथं तत्र संबन्धग्रहः कस्य वा संबन्धस्य ग्रह इति । तत्र भगवदिच्छया वृद्धव्यवहारादिनेति ब्रूमः । अत्रादिपदेन उपमानाप्तवाक्ये ग्रहीतव्ये कथमिति चेदुच्यते यो वै ब्रह्माणमिति श्रुतौ ब्रह्मणे वेदपाठनस्यात्मबुद्धिप्रकाशनस्य चोक्तेः । अत्राप्तवाक्याच्छक्तिग्रहः । पुरुषसूक्ते तु शक्रस्य वृद्धव्यवहारेण 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन् यदास्ते । धाता पुरस्ताद्यमुदाजहार शक्रः प्रविद्वान् प्रदिशश्चतस्रः तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते' इति । अत्र यज्ञः नाम कर्ता वृद्धः प्रयोजकः प्रयोज्यवृद्धो धाता उदाहारकत्वात् । शक्रो बालस्थाने शक्लृ शक्तौ स्फायितञ्चीतिरक् शक्नोति स्वा. प. अ. । उपमानाच्छक्तिग्रहो यथा पुरुषसूक्ते सहस्रशीर्षा पुरुषः अन्तस्तद्धर्माधिकरणोक्तः 'अत्यतिष्ठद्दशाङ्गुलम्' इति श्रुतेः । एतस्य वैश्वानराधिकरणोक्तविरुद्धधर्माश्रयत्वेनाभिव्यापकरूपे भक्तमनोरथाविषये साकारे ब्रह्मणि यतो वाचो निवर्तन्ते इति श्रुतिविषये परब्रह्मपदस्य संकेतग्रहः । तथाहि विराड्सदृशं परं ब्रह्मेति भाष्याद्वगत्य अपि संराधने कृते परब्रह्म पश्यति ततः इदं वस्तु परब्रह्मपदवाच्यमित्युपमितिरियं प्रत्यक्षेन्तर्भवतीति प्रस्थानरत्नाकरे । तथा च सर्वस्येति भाष्यस्यायमर्थः ।

'पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः ।
शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी' ॥ इति

भावापरिच्छेदेन शक्तानां वर्णपदानां वर्णादिज्ञानसत्त्वेपि द्वारभूतस्य पदार्थोपस्थितेर्विषयस्याधिदैविकत्वेनाभावादभावेन शाब्दबोधकारणवैकल्यरूपो दोषः प्राप्तः स न । आधिदैविकानामप्यर्थानां भगवत्त्वाद्येन रूपेणाधिदैविकानामप्युपस्थितेरिति । संकेतग्रहः सहकारी तस्यत्वेपि वैयाकरणास्तु अर्थसापेक्षशब्दस्वरूपमेव वाचकत्वापरनामकं शक्तिःकारणत्वादित्यवदिस्याहुः, सिद्धान्ते तु शाब्दत्वापरपर्यायाः अनादिवाचकत्वरूपा अर्थबोधाविर्भावकशक्तिरतिरिक्तैव नच गौरवम् । परास्य

जमदग्नीनां पञ्चावत्तमित्यनुमानम् । न हि स्वयं जामदग्न्य इति प्रत्यक्षोऽनु-

भाष्यप्रकाशः ।

संप्रदायपारंपर्यात् सर्वस्य भगवदनुकारित्वेन लौकिकसदृशतयोपमानेन संकेतग्रहसौकर्याददोषः । अन्यथावादिनां त्वज्ञानमेवातो न कोऽपि दोष इत्यर्थः । अतो जैमिनिमते वेदाद्धर्मावगतिरिव व्यासमते वैदिकपदार्थानामप्यवगतिरिति कर्मावगतिप्रत्यक्षेण साधितम् । अनुमानेन साधयितुं तदाहुः जमदग्नीत्यादि । नच मनुष्यत्ववत् तदपि प्रत्यक्षमिति वाच्यम् । भारते ब्राह्मण्यविचारे,

'जातिरत्र महासर्प मनुष्यत्वे महामते ।
संकरात् सर्ववर्णानां दुष्परीक्ष्येति मे मतिः ।
सर्वे सर्वास्वपत्यानि जनयन्ति सदा नराः' ॥

इति कथनात् । 'द्वयपराधात् कर्तुश्च पुत्रदर्शनम्' इति जैमिनीयसूत्रेऽपि पुत्रदर्शनमात्र-कथनेन तज्जात्यदर्शनसूचनात् । प्रवरानुमन्त्रणश्रुत्या, 'यन्मे माता प्रममाद यच्चचारानुव्रतम्' इति श्रुत्या च तथा निश्चयात् । नच, बीजाद्योनिर्बलीयसीति प्रसिद्धेर्मातृगोत्राद् गोत्रनिर्णय इति वाच्यम् । 'माता भस्त्रा पितुः पुत्रो येन जातः स एव सः' इति श्रुत्यपेक्षया तस्या

रश्मिः ।

शक्तिर्विविधैवेति श्रुतेः । विस्तरः प्रस्थानरत्नाकरेऽस्ति । वर्णेषु पदेषु च शक्तिः वाक्येषु तु बुद्धिपरि-कल्पिता । संप्रदायेति प्राचां व्यवहारासवाक्योपमानविवृतिपारंपर्यात् । तेषूपमानमाहुः सर्वस्येति सर्वस्यानुकारोऽनुकरणं भगवदनुकारोऽस्यास्तीति भगवदनुकारी तत्त्वात् । लौकिकभगवत्सदृशतयो-पमानेन । तथया लौकिको भगवान् विराडात्मा तद्रष्टृभिर्ब्रह्मादिभिः भृग्वादिसप्तर्षिपर्यन्तैः देवदा-नवगुह्यकादिभ्यः उक्तं वैदिकविराडवयवसदृशा लौकिकविराडाज्जातवाचकपुरुषसूक्तोक्तपदवाच्या इति पश्चात् देवदानवगुह्यकादिभिः यागादिषु ते पदार्था विराडाज्जाता दृष्टा तत्र वैदिकविराडवयव-सादृश्यज्ञानं यज्जातं तदुपमितिकरणं तदनन्तरं वैदिकविराडवयवसदृशाः लौकिकविराडाज्जातवा-चकपुरुषसूक्तोक्तपदवाच्या इत्यतिदेशवाक्यार्थस्मरणं यज्जायते तदेव व्यापारः तदनन्तरं तल्लौकिक-विराडाज्जातवाचकपुरुषसूक्तोक्तपदवाच्या इति ज्ञानं यज्जायते तदुपमितिरिति । तथा च सादृश्यज्ञानेन लौकिकं भगवत्सदृशताप्रकारकेण लौकिकभगवत्सदृशविशेष्यकेनोपमानेन संकेतग्रहसौकर्याद्दोषः संकेतग्रहाभावरूपः स न इत्यर्थः । अन्यथेति अनुमाननिवेशनकल्पकत्वं वदतां त्वज्ञानमित्युक्तम् । तत्प्रस्थानरत्नाकरे स्पष्टम् । इत्यर्थ इति इति सर्वस्येति भाष्यस्यार्थः । अवगतिरिति आधिदै-विकत्वेनावगतिरित्येवम् । कर्मेति कर्मणां याजमानादीनामवगतिरिदानीमपीति भाष्योक्तरीत्या प्रत्यक्षं तदात्मकेन प्रत्यक्षेण । साधितमिति अनुमेति । तदिति । जैमिनिमते वेदाद्धर्मावगतिरिव व्यासमते वैदिकपदार्थानामप्यवगतिरित्येवमनुमानेन साधयितुमाहुरित्यर्थः । जमदग्नीत्यादीति । भाष्ये । अवत्तं अवदानम् । प्रकृते । स्वयं जामदग्न्यमिति पाठमङ्गीकृत्याहुः न चेति । तदपीति जामदग्न्यत्वमपि । भाष्ये भावप्रधानत्वादेतच्छब्दस्य । येनेन्द्रियेण यद्गृह्यते तेनेन्द्रियेण तद्गता जातिः तदभावश्च गृह्यते इति । प्रवरेति तस्य मे अग्निरुपद्रष्टा वायुरुपश्रोताऽऽदित्योऽनुख्याता द्यौः पिता पृथिवी माता प्रजापतिर्बन्धुः य एवास्मि स सन् यजे इति श्रुत्या । तस्याः प्रसिद्धेः ।

भवोऽस्ति । परोक्षव्यवहारस्यैवानुमानत्वमिति ब्रह्मवादः । तस्मात् प्रत्यक्षानुमानाभ्यामिदानीन्तनभौतिकयज्ञपदार्थेषु भगवदवयवावेशस्तथाऽमुत्रापि । तस्मात् वैदिकः पदार्थः सर्वोऽप्याधिदैविको भिन्न इति सिद्धम् ॥ २८ ॥

भाष्यप्रकाशः ।

दुर्बलत्वादिति । नन्वत्र जामदग्न्यज्ञाने हेत्वदर्शनात् कथमस्यानुमानत्वमित्यत आहुः परोक्षेत्यादि । तथाच परोक्षेण स्वस्य यथा जामदग्न्यस्यावगतिस्तथा परोक्षेणापि तस्य प्रपञ्चस्यावगतिरित्यर्थः । सिद्धमाहुः तस्मादित्यादि ।

रश्मिः ।

नन्वत्रेति जमदग्नीनामिति श्रुतौ । परोक्षेणेति अक्ष्णः परमिति परोक्षं तेन । अपीति अनेन परोक्षेण सह प्रत्यक्षं समुच्चितम् । ननु कथमेकस्याधिदैविकस्य प्रत्यक्षाप्रत्यक्षे इति चेन्न ।

'अलौकिको हि वेदार्थो न युक्त्या प्रतिपद्यते ।
तपसा वेदयुक्त्या तु प्रसादात् परमात्मनः' ॥ इति श्रुतेः ।

तप आदियुक्तानां प्रतिपद्यते इत्यनेन पदेन प्रतिनिधिपदनं तदयुक्तानां तु परोक्षमिति विवेकात् । भाष्ये । ब्रह्मवाद इति ब्रह्मैव सर्वमिति वादः सर्वान्तर्गतस्यैकस्यापि प्रसिद्धानुमानिकत्वे तु तस्य पदार्थस्यानुमानगम्यत्वेन सर्वं खल्विदं ब्रह्मेत्यौपनिषदत्वाभावेन 'तं त्वौपनिषदं पुरुषं पृच्छामि' इति श्रुतिविरोधः । ननु इदानीमपि इत्याद्युक्तभाष्ये वेदादवगच्छन्तीत्युक्त्या यजमानादिकृत्यानां वेदरूपशब्दादवगतिकथनात्कृत्यादिविषयकं शाब्दं ज्ञानं प्रतीयते । तद्विरुद्धं प्रत्यक्षं तावदित्युपक्रमेण प्रत्यक्षज्ञानस्य विवक्षितत्वादित्याकाङ्क्षायां स्वयमाहुः तस्मादिति । प्रत्यक्षपदेन शाब्दं प्रत्यक्षं गृह्यत इति चेन्न । 'परोक्षव्यवहारस्यैवानुमानत्वेनानुमानाभ्यामिति सूत्रशेषापत्तेः अतः प्रत्यक्षानुमानाभ्यां हेतुभ्यां भगवदवयवानामावेशः । मौढ्याभावाय पुराणोक्तानां जैमिनिसूत्रोक्तप्रकारेण स्वीक्रियत इत्यर्थः । व्याससूत्रसहकारेण तथामुत्रापि देवादिलोक इत्यर्थः । तथा च भावार्थपादभाष्यम् । जैमिनिसूत्रोक्तप्रकारे 'भावार्थाः कर्मशब्दाः' इति सूत्रस्य । क्रियामात्रं यदि स धर्मो भवेत् तदा न वक्तव्यम् । किं त्वतीन्द्रियो यागादिः स्थिरो धर्मस्तत्र सामान्यं नित्यमिति नित्यता प्रतिपादिता विशेषस्त्वतीन्द्रियता । द्रव्यदेवतासंबन्धो हि यागः देवताया अतीन्द्रियत्वात् तत्संबन्धोप्यतीन्द्रियः । संबन्धश्च प्रीतिहेतुत्वेन स्वीकारः । द्रव्यं चालौकिकमित्यनित्यतायां न कोपि हेतुः । न हि चेष्टा यागो येन विनाशः कल्प्यते अदृष्टं वा । ये क्षणिकत्वं अदृष्टं वा कल्पयन्ति न ते यागपदार्थं विदुः भावार्था ये कर्मशब्दा इत्यर्थः । दानमपि परस्वत्वापादनमतीन्द्रियं लोकास्तु तद्विषयककायिकव्यापारे तत्प्रयोगमाहुः । ननु अवघातादय ऐन्द्रियकाः आशुतरविनाशिनश्चेति चेन्न मन्त्रेण चावघातो देवपत्न्यश्च कर्त्र्यः लौकिके च तदावाहनादतीन्द्रियत्वमेव । फले संपन्ने तस्य तिरोभावः । स एवार्थः । लौकिकस्तु संसारहेतुत्वादनर्थः । अत एव विधीयते पुरुषः प्रवर्तत इति । अत्र भौतिकयज्ञपदार्थेषु भगवदवयवावेश उक्तः स प्रस्थानरत्नाकरे संस्कारादिनोक्तः । तेषां विलपरिच्छिन्नत्वाद्गमागमरूपयोराविर्भावतिरोभावयोस्तत्र सत्त्वात् । व्यापकत्वपक्षे तु विहितकार्यानुकूलत्वरूपसंनिधानस्यैवावेशत्वादिति । न चातीन्द्रियस्याप्रत्यक्षात् यजमानादीनां लौकिकानां प्रत्यक्षेणातीन्द्रियांशे शाब्दमिति प्रत्यक्षं तावदिति भाष्यविरोधस्तदवस्थ इति शङ्क्यम् । अती-

भाष्यप्रकाशः ।

शंकराचार्यादयस्तु, एत इति वै प्रजापतिर्देवानसृजतासृग्रमिति मनुष्यानित्यादिप्रत्य-

रश्मिः ।

न्द्रियविशिष्टग्रहे लौकिकमात्राग्रहात् । न च विशिष्टं शुद्धान्नातिरिच्यते इति दोषतादवस्थ्यं शङ्क्यम् । संस्काराणामावाहनस्य च वैयर्थ्यापातात् अतः संस्कारादिविशिष्टं शुद्धाद् व्रीह्यादेरतिरिच्यते तथा च भावार्थपादभाष्यम् । तस्य च शेषभूतत्वादिति सूत्रस्य संस्कृतं हि द्रव्यमुत्तरत्रोपयुज्यत इति । अतः संस्कृतावाहितयोः प्रत्यक्षम् । शुद्धप्रत्यक्षादतिरिक्तम् । अतः प्रत्यक्षं तावत् इत्युपक्रमभाष्यम् । अथ न हि स्वयं जामदग्न्य इतीति भाष्यपाठस्तर्हि जमदग्नेर्गोत्रापत्यं जामदग्न्यः मधुबभ्रोर्ब्राह्मणकौशिकयोरिति सूत्रेण छान्दसो यञ्प्रत्ययः । च्छन्दसि बहुलमिति कौशिकगोत्रे जमदग्नेः सत्तायाः नवमस्कन्धे षोडशे ।

'इति कौशिकगोत्रं हि विश्वामित्रैः पृथग्विधम् ।
प्रवरान्तरमापन्नं तद्धि चैवं प्रकल्पितम्' ॥ इति वाक्यात् ।

एवमित्यनेनोक्तप्रकारे पूर्वं कुशकथायां ऋचीकार्थकथासत्त्वात् । ननु कुशस्य कुशाम्बुस्त-तो गाधिः तस्य सत्यवती कन्या ऋचीकर्षेः कलत्रं ततो जमदग्निस्तस्य परशुरामो जामदग्न्य इति कथं कौशिकगोत्रे जमदग्नेः सत्ता कथं मधुबभ्रोश्चेति सूत्रप्रवृत्तिः यञो गोत्रे यञ् इति वृत्तिरिति चेन्न वान्यस्मिन् सपिण्डे स्थविरतरे जीवति । भ्रातुरन्यस्मिन् सपिण्डे स्थविरतरे जीवति पौत्रप्रभृतेरपत्यं जीवदेव युवसंज्ञं स्थानेन वयसा चोत्कृष्टे पितृव्ये मातामहे भ्रातरि वा जीवति । इति व्याकरणात् । ननु गाधौ जीवति जामदग्न्यस्य युवसंज्ञा न तु गोत्रसंज्ञेति चेन्न । 'ऐलस्य चोर्वशीगर्भात्षडासन्नात्मजा नृप' इत्युर्वशीवंश्यसंबन्धित्वेन 'यूनश्च कुत्सायां गोत्रसंज्ञेति वाच्यम्' इति वार्तिकेन यूनो गोत्र-संज्ञासत्त्वात् । श्रुतौ तु जमदग्नीनामित्यत्र जामदग्न्यानां वसुमदादीनां परशुरामान्तानां पञ्चावत्त-मिति प्राप्ते यञञोश्चेति सूत्रेण यञो लुक् । जमदग्नीनां जमत् । जमु अदने जमतामग्नीनां तथाच वृत्तिः गोत्रे यञन्तमञन्तं च तदवयवयोरेतयोर्लुक् स्यात् तत्कृते बहुत्वे न तु स्त्रियामिति । पञ्च अवत्तं 'अच उपसर्गात्तः' अजन्तादुपसर्गात्परस्य दा इत्यस्य घोः अचस्तः स्यादिति दा इत्यात्तः क्तेप्रत्यये । अवदानम् । 'अवदानमतिवृत्तं कर्मखण्डनयोरपि' इति विश्वः । तथा च जामदग्न्य इति ज्ञानं अपत्यप्रत्ययांशे शाब्दीयं न तु जमदग्निप्रत्यक्षेण जमदग्न्यपत्यप्रत्यक्षेपि जामदग्न्यस्य प्रत्ययार्थः प्रत्यक्षः । वेदाम्नायमानं श्रौतं ज्ञानम् । परोक्षेति 'प्रतिबन्धदृशः प्रतिबद्धज्ञानमनुमानम्' इति सांख्यप्रवचनसूत्रात् । न च शाब्दज्ञानेऽतिव्याप्तिरिति वाच्यं सूत्राक्षरविचारे तु नाव्याप्तेः । ननु जातिव्यक्तिखण्डनेन जामदग्न्य इत्यत्र व्यक्तावेव शक्तिरुक्ता स्यात् इति चेत्सत्यम् । प्रस्थानरत्नाकरे तथाप्रतिपादनात् । 'जातिव्यक्तिविभागोयं यथावस्तुनि कल्पितः' इति षष्ठस्कन्धात् । तथापि स एकधा भवति त्रिधा भवति इति श्रुतेर्जातिरूपत्वेनाविर्भावे विशिष्टे शक्तिर्यतो जातिर्व्यक्तिं विनाऽनुपपद्यमाना तामाक्षिपति शास्त्रार्थप्रतिपादकद्वितीयस्कन्धस्य सुबोधिन्याम् पञ्चमश्लोके विशिष्टे शक्त्युक्तेः । सूत्रार्थस्तु आधिदैविकप्रपञ्चः 'अतः प्रभवात् प्रत्यक्षानुमानाभ्याम्' साध्यतावच्छेदक-संबन्धः आश्रयता हेतुतावच्छेदकसंबन्धः विषयता केवलव्यतिरेकि यथैवं तथैवं लौकिकप्रपञ्चवत् । आधिदैविकप्रपञ्चः शब्दात्यन्ताप्रविविक्ततया शब्दः स्वस्य वसूनां वृत्तान्तप्रतिपादकत्वेनापि नानित्यः । अतः प्रभवादिति साध्यतावच्छेदकसंबन्धः आश्रयता, हेतुतावच्छेदकसंबन्धः प्रतिपाद्यता, केव-लव्यतिरेकि । प्रकृतमनुसर्पते एत इति अर्थस्तु एत इति इति भन्नस्य पदेनासृग्रमिति मन्त्रस्य

अत एव च नित्यत्वम् ॥ २९ ॥

साधिकां विशेषोपपत्तिमाह । अत एव अस्मादेव हेतोर्वेदस्य नित्यत्वम् । सर्वप्रपञ्चवैलक्षण्येन । चकारात् ब्रह्मतुल्यत्वम् । शब्दब्रह्म वेदपुरुष इत्यादिवाच्यत्वम् । अस्यास्तु सृष्टेर्ब्रह्मोपादानस्य सर्वज्ञतया कथनं तन्माहात्म्यनिरूपणार्थम् । बन्धिका खेषा । मोचिका तु सा । अत एव ऋषीणामप्यत्र मोहः । निःश्व-

भाष्यप्रकाशः ।

सश्रुतिं 'सर्वेषां स तु नामानि रूपाणि च पृथक् पृथक्' इत्यादिस्मृतिरूपमनुमानं चोपन्यस्य शब्दनिमित्तिकां व्यक्त्युत्पत्तिमङ्गीकृत्य सूत्रं व्याचक्षते । तथा सति, समाननामरूपत्वात्संसारानादित्वाद्वा श्रुत्या न विरोधः (?) वइयकता स्यादित्यर्थ एवम् ॥ २८ ॥

अत एव च नित्यत्वम् ॥ २९ ॥ सूत्रमवतारयन्ति साधिकामित्यादि । व्याकुर्वन्ति अत एवेत्यादि । अस्मादित्यस्यैव विवरणं, सर्वप्रपञ्चवैलक्षण्येनेति । ननु यदि वैदिकसृष्टिरन्यैव तदा श्रुतौ, यतो वा इमानीत्यादिषु ब्रह्मण एतत्सृष्ट्युपादानत्वकथनं निष्प्रयोजनकं स्यादित्यत आहुः अस्या इत्यादि । ब्रह्मोपादानस्येति ब्रह्मरूपस्योपादानस्य । तन्माहात्म्यनिरूपणार्थमिति । तस्या वैदिक्याः सृष्टेः प्रकटसच्चिदानन्दरूपत्वब्रह्मधर्मसंपन्नत्वादिरूपमाहात्म्यनिरूपणार्थम् । उभयोर्वैलक्षण्यं स्फुटीकुर्वन्ति बन्धिकेत्यादि स्मृत्यन्तरविरोध-

रश्मिः ।

पदेन च देवमनुष्यौ स्मृत्वा प्रजापतिरसृजेति आदिशब्देन इन्दव इति पितॄन् तिरः पवित्रमिति ग्रहानाशव इति स्तोत्रं विश्वानीति शस्त्रं अभिसौभगेत्यन्याः प्रजाः इति श्रुतिः । इमानि बीजानि पदानि । इत्यादीति । उत्तरार्धं तु 'वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे' इति । स इति महेश्वरः । व्यक्तीति अर्थेन नित्यसंबन्धाय देवादिव्यक्त्युत्पत्तिम् । अथेति यत्तु स्फोटोऽदूषि स तु भागवतीयद्वादशस्कन्धस्य ।

'शृणोति य इमं स्फोटं सुप्तश्रोत्रे च शून्यदृक् ।
येन वाग्व्यज्यते यस्य व्यक्तिराकाश आत्मनः' ॥ इति वाक्यविरुद्धम् ॥ २८ ॥

अत एव च नित्यत्वम् ॥ २९ ॥ साधिकामिति नित्यत्वसाधिकां विशेषामधिकां उत्कृष्टां वा उपपत्तिं ब्रह्मतुल्यत्वरूपामाहेति भाष्यस्यार्थः । प्रकृते । व्याकुर्वन्तीति यत्तु शंकराचार्यादयः पूर्वसूत्रकथितं वेदनित्यत्वमेतद् द्रढयतीत्याहुः तत्र पुनरुक्त्यापातादित्याशयेन प्रकारान्तरेण व्याकुर्वन्तीत्यर्थः । विवरणमिति विभक्तिभेदेऽप्यर्थसाम्यादिति भावः । यद्वा करणमेव अस्मादतः प्रभवादेव सर्वप्रपञ्चे यथाविर्भावतिरोभावदर्शनेपि ब्रह्मत्वेन नित्यत्वं तद्वैलक्षण्यमाविर्भावाविराहित्यं तेन करणेन वेदस्य नित्यत्वं शब्दब्रह्मत्वेनात्मतया च ब्रह्मवन्नित्यत्वम् । इदमुक्तं भवति यथा जगज्जन्मादिकर्तृत्वं ब्रह्मलक्षणं तद्वत् आधिदैविकप्रपञ्चकर्तृत्वं शब्दब्रह्मलक्षणम् । इत्यादिष्विति । ऋचानि सामन्ते छन्दांसि जज्ञिरे तस्मादित्यादिषु यत इति जन्माधिकरणविषयवाक्यम् । प्रकटेति चादिना शब्दब्रह्मादिपदवाच्यत्वम् । स्मृत्यन्तरेति बन्धकत्वेति स्मृत्यविरोधो मोचकत्वमोहकत्वयोः ज्ञानाज्ञानलक्षणत्वम् । 'वेदो नारायणः साक्षात् स्वयंभूरिति शुश्रुम' इति स्मृतेः अन्यजन्मादृष्टं यत इति वाक्यं स्मृत्यन्तरं तेन विरोधम् । यद्वा—

सितवचनाच । तस्यास्यैयं प्राणभृतो नित्य इति । अर्थप्राधान्यात् ब्रह्मविद्या परा विद्या । प्रपञ्चभेदादेव लौकिकवैदिकशब्दव्यवहारभेदौ । तस्मादाधिदैविकप्रतिपादकत्वात् वेदस्य नित्यत्वम् ॥ २९ ॥

---

भाष्यप्रकाशः ।

मायाब्रह्म परिहरन्ति अत एवेत्यादि । तथाच श्रुतिविरुद्धं तदुक्तमप्रमाणमित्यर्थः । सूत्रस्थस्य चकारस्यार्थान्तरमाहुः निःश्वसितेत्यादि । ननु सर्वस्य वेदस्य भगवन्निरूपकत्वे उपनिषत्सु अथ परेत्यादिनोक्तः परापरविभागो न स्यादित्यत आहुः अर्थप्राधान्यादित्यादि । तथाच सर्वस्य वेदस्य तथात्वेऽपि ऋग्वेदादिविद्यायाः कर्मादिप्राधान्येन निरूपणाच प्राधान्यम् । ब्रह्मविद्यायास्तु तत्प्राधान्यमतो न परापरविभागभङ्ग इत्यर्थः । वैदिकप्रपञ्चस्य भिन्नत्वे गमकान्तरमाहुः प्रपञ्चेत्यादि । यद्यपि, लोकेऽवगतसामर्थ्यः शब्दो वेदेऽपि बोधक इति लोकवेदाधिकरणे लोकवेदयोः शब्दैक्यं वार्तिकेऽङ्गीकृतम् । तथापि तस्य जैमिनिनानुक्तत्वात् । तत्कल्पितमतः शब्दभेदः व्यवहारभेदस्तु प्रसिद्ध एवेति तावपि तद्गमकावित्यर्थः । सिद्धमाहुः तस्मादित्यादि ॥ २९ ॥

रश्मिः ।

'ज्ञानिनामपि चेतांसि देवी भगवती हि सा ।
बलादाकृष्य मोहाय महामाया प्रयच्छति' ॥ इति ।

मार्कण्डेयवाक्यं स्खलन्तरं तेनोक्तविरोधः । श्रीभागवतस्य वेदवेदान्तसारत्वात् तथा चेत्युत्तरग्रन्थो विरुध्येत । अत एवेत्यादीति श्रुतिविरुद्धस्याप्रामाण्यादेव प्रथमपक्षे मोचकत्वादेवेत्यर्थः । सर्वमुक्त्यभावाय मोचकत्वमोहकत्वयोः सहावस्थानमिति भावः । द्वितीयेऽर्थे सति प्रयोजनमाहुः तथा चेति । 'वाचा विरूपनित्यया' इति श्रुतिविरुद्धम् । तथा चात्र पक्षे ऋषीणामपि अत्र मोहो मार्कण्डेय उक्तः इति भाष्यार्थः । निःश्वसितेत्यादीति तथाच चकारो 'निःश्वसितमस्य वेदाः' इति श्रुतेर्वेदेषु नित्यत्वसमुच्चायक इति भाष्यार्थः । तेनात एवेति सौत्रे पदे भाष्येऽर्थान्तराय पुनरस्यावे इति ध्वनितम् । अत एव मार्कण्डेयस्याप्रामाण्यादेव च निःश्वसितवचनाच वेदानां नित्यत्वमिति सूत्रस्यार्थान्तरम् । अथ वा । भाष्ये निःश्वसितेत्यत्र चकारादत एवेत्यत्राप्यन्वेतु देहलीदीपन्यायेन तथा चात एव ऋषीणामप्यत्र मोह इति हेतोः निःश्वसितवचनाच तस्यापि तच्छब्दनिर्दिष्टब्रह्मणोऽप्ययं वेदः प्राणभृतो नित्यस्य नित्यत्वात् । प्रकृते । तथा चेति । कर्मादीति आदिना ब्रह्मधर्माः ग्राह्याः । सुबोधिन्यां वेदार्थत्वेनोक्तेः । यद्वा । अर्थेति । प्राणरूपार्थस्य वेदैः सहाभेदो हि श्रुतावस्ति सोऽर्थशब्दयोरर्थप्राधान्यं द्योतयति तस्मात् ब्रह्म चासौ विद्या ब्रह्मविद्या कर्मधारयः शब्दप्राधान्यादृग्वेदादिरपरा विद्या तथा चाक्षराधिगमकत्वं परविद्यात्वमित्यत्रार्थप्राधान्ये सति तत्त्वं बोध्यम् । 'अथ परा यया तदक्षरमधिगम्यते' इति मुण्डकम् । सूत्रस्थस्य चकारस्येति भाष्यप्रकाशस्यायमपरोऽर्थः । यत्तु शंकराचार्याः 'यज्ञेन वाचः पदवीयमायंस्तामन्वविन्दन्नृषिषु प्रविष्टाम्' इति श्रुतेः वैदिकशब्दं नित्यमाहुः तथा तदनुकूलं वेदः अवान्तरप्रलयावस्थायी जगद्धेतुत्वादीश्वरवदित्यनुमानं च अवान्तरप्रलयावस्थायित्वमेव च नित्यत्वमित्याहुस्तन्निराकर्तुं सूत्रस्येत्यादीत्यर्थः । यज्ञेन शोभनकर्मणा वाचो वेदस्य पदवीयं ग्रहणयोग्यतामायन् प्राप्तवन्तः अतस्तामृषिषु विद्यमानां वाचं चाक्षि-

११ ब्र० सू० १०

रश्मिः।

काऽन्वविन्दँल्लब्धवन्तः। तथा च पूर्वस्थितामेव वाचं सर्वे ज्ञातवन्त इति तात्पर्यार्थः। निःश्वसितेत्यादीति तथा चेश्वरात्मकत्वरूपं नित्यत्वं वेदस्य न तु तदुक्तमिति भावः। ननु-स्त्वीश्वरस्य नित्यता कथं तादृशी तन्निःश्वासस्येत्यत आहुः तस्यापीति। तस्येति ईश्वरस्य। तथा च सिद्धान्ते साकारत्वात् तादृशी नित्यता सूपपन्नेति भावः। लोकवेदेति पूर्वतन्त्रे प्रथमस्य तृतीयपादस्थे। जैमिनिनेति। 'प्रयोगचोदनाभावादर्थैकत्वमविभागात्स्यात्' इत्यादिषु सूत्रेषु शब्दैक्यस्यानुक्तत्वादित्यर्थः। तथाहि यन्माधवीयजैमिनिन्यायमालाविस्तरे अर्थैकत्वं पदैक्यमन्तरा न संभवतीति पदैक्यं तर्कयित्वा अर्थैकत्वं महता संरम्भेण साधितम्। तत्र पदैक्यमन्तराप्यर्थैकत्वं पर्यायेषु दृष्टमिति तन्मन्दमिति अतो लोकवेदाधिकरणस्य कल्पितत्वेनाप्रामाणिकत्वम्। किंचाकृत्यधिकरणस्य वर्णकत्वेनोक्तिर्लोकवेदाधिकरणस्य कल्पितत्वं स्फोरयति। अधिकरणान्तरस्य प्रसिद्धस्य वर्णकत्वायोगात्। न चैकस्यैकत्र विधिनिषेधमुखेन द्वेधा निरूपणमत्र भाष्य एव दृष्टम्। इत्येकत्र लोकवेदाधिकरणस्याकृत्यधिकरणस्य वर्णकत्वे न दोष इति शङ्क्यम्। तत्र दहराधिकरणे विषयैक्यादत्र तु लोकवेदयोः पदपदार्थैक्यं लोकवेदाधिकरणे विषय आकृत्यधिकरणे तु जातौ शक्तिनिर्धार इति विषयभेदात्तथा। यदि चैकत्राधिकरणद्वयं नास्ति किं तु सर्वेषां सूत्राणां द्वेधा व्याख्यानात् अधिकरणद्वयमिति विभाव्येत तदा युगपद्वृत्तिद्वयविरोधः अतो ह्यप्रसिद्धेः कल्पितमतः शब्दभेदः। तथाचोक्तं स्वरादिभेदाद्वैदिकशब्दा भिन्ना इति। न च छान्दसप्रक्रियायां नियतस्वरवर्णागमतल्लोपविकरणव्यत्ययादिदर्शनेपि न तैस्तयोर्भेदसिद्धिः। अर्थभेदाभावे तदेवेदं गोपदमित्यादिप्रत्यभिज्ञया भेदाभावे च सिद्धे तेषां तदसाधकत्वादिति वाच्यम्। अर्थभेदस्यानधिगतार्थगन्तृत्वेन वाक्येषु सत्त्वात्। न चार्थैकत्वमिति जैमिनिसूत्रांशस्य विरोध इति शङ्क्यम्। पदार्थैकत्वमित्यर्थात् न हि यागपदार्थौ लोकवेदयोर्भिन्नः किंतु 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यत्र यागत्वेन स्वर्गत्वेन कार्यकारणभावो लोकेऽनधिगतो वाक्यार्थोऽन्वये निविशते स लोकभिन्नोर्थः। किं च लोके रूढिर्योगमपहरति घटादिपदेषु। वेदे तु योगरूढिर्योगश्च तदुक्तं पूर्वमीमांसाकारिकासु 'अतो धर्मावबोधाय विचारो योगरूढितः' इति वेदे योगरूढिः।

'ये धातुशब्दा यज्ञार्थे उपदेशे प्रकीर्तिताः।
तथैवार्थो वेदराशेः कर्तव्यो नान्यथा क्वचित्' ॥ इति।

वेदान्ते योगः पत्रावलम्बने। वेदे तु योगरूढिर्विशेषवाक्यात् परिशेषाद्वेदान्ते योगः। तथा च श्रुतिः प्रयतं पुरुषंत्मनेति। लोकेत्वाकारादित्वेन नियत आत्मशब्दः। ब्राह्मणा इति लोके वेदे तु ब्राह्मणासः पितरः सोम्यासः इति। न च प्रयोक्तृणां भेदेप्येकैकस्य पुरुषस्य यथा बहुकृत्व उच्चारणभेदेपि त एवामी वर्णा इति प्रत्यभिज्ञानात् वर्णैक्यम्। तथा यानि लोके गवादिपदानि तान्येव वेदेऽधीयमानानि इत्यबाधितप्रत्यभिज्ञया पदैकत्वमभ्युपेयमिति शङ्क्यम्। पदभेदे सति प्रत्यभिज्ञाया भाक्तिकत्वात्। व्यथेति व्यवहारभेदस्तु पत्रावलम्बने प्रसिद्धः।

'लौकिको वैदिकश्चैव व्यवहारो द्विधा मतः।
लोकसिद्धं पुरस्कृत्य वैदिको बोध्यते यथा' ॥

इत्यादिना अन्येन।

समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥ ३० ॥

एवं शब्दबलविचारेण वेदप्रामाण्यस्य सिद्धये भिन्न एव प्रपञ्चो प्राधिदैविकः सर्वत्र सिद्धः। इदानीमर्थबलविचारेणोत्तरकाण्डे किंचिदाशङ्क्य परिह्रियते

भाष्यप्रकाशः।

समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥ ३० ॥ संदेहाभावाय पूर्वसूत्रसिद्धमनुवदन्तः सूत्रमवतारयन्ति एवमित्यादि। सर्वत्रेति सर्वस्मिन्नेव वेदे। तेन, आदित्या वा अस्माल्लोकात्, अथ यदिदमस्मिन् ब्रह्मपुरे, मन्त्रमिव प्रपा असीत्यादौ विधेयस्तुत्यर्थं परिचायनार्थं दृष्टान्ताद्यर्थं वा लौकिकसृष्टिकीर्तनं तत्रापि, सदेव सौम्येति, हन्ताहं मदेव मन्मात्रं द्वितीयमिति, विश्वं वै ब्रह्मतन्मात्रमित्यादिभिर्ब्रह्मरूपत्वेन तस्या अपि नित्यत्वावधारणात् संबन्धानित्यतेति वेदस्य नित्यत्वमक्षुण्णमेवेत्यर्थः। अर्थबलविचारेणेति। तच्चेत्थं रश्मिः।

'व्यवहारः संनिपातो मनोमात्रेन्द्रियासुभिः।
संनिपातस्त्वहमिति ममेत्युद्धव या मतिः' ॥

इत्येवं लक्षितः। सोयं मायाद्वैतसात्त्विकज्ञाने प्रतिपक्षाति

'कार्यकारणवस्त्वैक्यमर्शनं पटवन्तुवत्।
अवस्तुत्वाद्विकल्पस्य मायाद्वैतं तदुच्यते' ॥

इति सप्तमस्कन्धे

'सर्वभूतेषु येनैकं भावमव्ययमीक्षते।
अविभक्तं विभक्तेषु तज्ज्ञानं सात्त्विकं स्मृतम्' ॥

'कैवल्यं सात्त्विकं ज्ञानम्' इति गीता। श्रीमद्भागवते अयं वेदान्तव्यवहारः। वैदिकस्तु यजमानादिविषयः मोक्षादिफलकः एताभ्यां मोक्षप्रापीयाभ्यां पुरुषस्य मनोमात्रेन्द्रियासुभिः अहंममेति या बुद्धिः सा निवर्तते तदनु रजस्तमसोः क्षीयमाणतयाऽप्राबल्येन क्रमेण मिश्रणाभावे केवलसात्त्विकत्वात् बोधप्राप्यमानस्य भावस्य संनिपातनिवर्तकत्वात्। तत्र पृथग्बुद्धेर्विद्यमानत्वेपि प्रबलेन सत्त्वेन ग्रस्यमानतया तस्याः अकिंचित्करत्वात्। लौकिकव्यवहारस्तु वैदिकव्यवहारबोधाय पुरस्कृत आवरणशक्तिमायाप्रसूतत्वात्। अनृतेन प्रसूतमिति श्रुतेः प्रतिकूलं प्रापितं वितर्कितं वा तदिदं राजसज्ञानविषयम्। मायासामग्र्या राजसं ज्ञानं नानाकारं भवति।

'पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान्।
वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम्' ॥
'रजो वैकल्पिकं स्मृतम्' इति च भगवद्वाक्यात्।

इत्थमेवं व्यवहारोपयोगि। इमौ भेदौ वेदनित्यत्वगमकौ इत्यर्थः। भाष्ये। आपीति तेनाकृतिवाचकत्वाद्वेदनित्यत्वमिति वदन्तः शंकराचार्यादयः प्रत्युक्ताः ॥ २९ ॥

समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥ ३० ॥ भाष्ये। वेदेति वेदप्रमाणस्य नित्यत्वसिद्धये। तस्मादाधिदैविकप्रतिपादकत्वात् वेदस्य नित्यत्वमिति भाष्यात्। प्रमाणपदं तु संदिग्धानामर्थानां राजसतामसानधिकाराज्ज्ञानस्य प्राधान्यद्योतकम्। यदि च।

दार्ढ्यार्थम् । नन्वस्य प्रपञ्चस्याऽनुकारित्वेन वाच्यत्वेन वा स्वीक्रियमाणत्वे सृष्टि-प्रलययोर्विद्यमानत्वादनित्यसंयोगः प्राप्नोति तत्राह समाननामरूपत्वादावृत्ता-वप्यविरोधः । वस्तुतस्तु भगवद्रूपत्वादाविर्भावतिरोभावेच्छयैव तथात्वात्आ-वृत्तिशङ्कापि । तथापि लोकबुद्ध्यनुसारेणावृत्तावपि समाननामरूपत्वात् ।

---

भाष्यप्रकाशः ।

ऽनुवर्तेत्यादेः शब्दनित्यताबोधकत्वावाऽगर्थबलविचारेण । एतद्विचारेणाशङ्कामाहुः नन्वि-त्यादि । समाधिं व्याकुर्वन्ति वस्तुत इत्यादि । तथात्वादिति अनित्यत्वेन प्रतीयमानत्वात् । तथोक्तं विष्णुपुराणे प्रथमेंऽशे—

'तदेतदक्षयं नित्यं जगन्मुनिवराऽखिलम् ।
आविर्भावतिरोभावजन्मनाशविकल्पवत्' ॥ इति ।

रश्मिः ।

'सात्त्विका भगवद्भक्ता ये मुक्तावधिकारिणः ।
भवान्तसंभवा दैवात् तेषामर्थे निरूप्यते' ॥ इति निबन्धात् ।

न प्रमाणापेक्षा तर्हि वेदस्य प्रमाकरणस्य विषयसापेक्षस्य सिद्ध्य इत्यर्थः । आधिदैविकप्रपञ्च-विषयकप्रमाकरणलक्षणे बोध्या । प्रकृते । तेनेत्यादि । भाष्ये । पूर्वोक्तदार्ढ्यार्थमुत्तरकाण्डे परिह्रियते इत्युक्तत्वात् पूर्वोत्तरकाण्डविषयत्वेनेत्यर्थः । आदित्या वा अस्माल्लोकादमुं लोकमायन् इत्यत्रामुं विप्रकृष्टं लोकम् । स्तुत्यर्थमिति विधेयो यागादिस्तस्य स्तुत्यर्थमुत्कर्षाधायकगुणवर्णनार्थं लोकपदेन लौकिकसृष्टिकीर्तनम् । गुणास्तु फलसाधकत्वादयः ।

'आगमोऽपः प्रजा देशः कालः कर्म च जन्म च ।
ध्यानं मन्त्रोऽथ संस्कारो दशैते गुणहेतवः' ॥

इत्युक्तदेशादौ ईदृशो यागादिः फलसाधको यदर्थमादित्या आयन् इति यागादिस्तुतिः एकादशस्कन्धे त्रयोदशे । न च सत्त्वगुणहेतव एते इति वाच्यम् । ईदृशः सात्त्विको यागादिरित्यर्थात् 'तत्तत्सात्त्विकमेवैषां यद्यद्वृद्धाः प्रचक्षते' इति वाक्यात् । प्रचक्षते प्रशंसन्तीत्यर्थः । अथ यदिदमिति दहराधिकरणे विचारितं तत्र यावान् वाऽयमाकाशस्तावानेषोऽन्तर्हृदय आकाश इति हृदयाकाशे सृष्टिपरिचायनार्थं लौकिकाकाशकीर्तनम् । आकाशशरीरं ब्रह्मेति लौकिकसह-तापारकथनेन लौकिकसृष्टिकथनम् । धन्वन्निवेत्यत्र धन्वनि मरुदेशे प्रपा पानीयशाला स्यात् दृष्टान्तार्थं धन्वपदेन लौकिकसृष्टिकीर्तनम् । तथा चानित्यसंयोगः स्यात् तत्राहुः तत्रापीति । 'सदेव सोम्येदमग्र आसीत्' अहमेव मन्मात्रम् तदेव तन्मात्रम् । स्वार्थे मात्रच् । तस्या इति लौकिकसृष्टेः । नन्वित्यादीति भगवदनुकारोऽस्य विश्वस्यास्तीत्यनुकारि विश्वम् । आवृत्तिः प्रवाहः तथात्वपदस्य फलार्थमाहुः अनित्येति । विषयपदार्थमाहुः एतदिति । विकल्पः पक्षः तत्र पक्षद्वयमव-तारयति 'आविर्भावतिरोभावौ शक्ती वै मुरवैरिणः' इति वाक्यात् पक्षद्वयमन्येषाम् । जन्मनाशयोः तत्कारणत्वार्थमाहुः आविरिति एतौ मुरवैरिनिष्ठौ ज्ञेयौ । अपीतीति । इति प्रकारे । आवृत्तावपीति प्रकारकस्य भाष्यस्य । नित्येति नित्यप्रलयो द्वादशस्कन्धे चतुर्थे ।

समुद्रे जलप्रक्षेपवत् । पुनरुत्पादने तदेवेति निश्चयाभावेऽपि नामरूपयो-स्तुल्यत्वादन्यस्य भेदकस्याभावान्नानित्यसंयोगविरोधः । कुतः । दर्शनात् । दृश्यते हि तथा । वेदपितृमातृस्त्रीभर्तृशरीरगङ्गादिषु तदेवेदमिति व्यवहारस्य सिद्ध-

---

भाष्यप्रकाशः ।

एतद्विकल्पचतुष्टयवद्वा । आविस्तिरोभावाभ्यां तथा विकल्पवद्वेत्यर्थः । उभयथापि, न वास्तवनित्यत्वबाधः । आवृत्तावपीत्यस्यैव व्याख्यानं समुद्र इत्यादि । प्रक्षेपवदिति तत्सम्बन्धे वतिः । दर्शनं व्याकुर्वन्ति वेदेत्यादि तथा च नित्यप्रलयविचारे शरीरादेः प्रतिक्षण-मन्यान्यत्वेऽपि प्रवाहैक्येनैवैकस्मिन् एकतामभिमन्यत इति तद्वत्प्रवाह एव पदानां शक्तिः । स चानादिसृष्टिवादिनो मीमांसकस्य मतेऽप्यविच्छिन्नत्वान्नित्यः । अतो यथा, अव्यतिरेकश्चार्थे-

रश्मिः ।

'नित्यदा सर्वभूतानां ब्रह्मादीनां परंतप ।
उत्पत्तिप्रलयावेके सूक्ष्मज्ञाः संप्रचक्षते ॥
कालस्रोतोजवेनाशु ह्रियमाणस्य नित्यदा ।
परिणामिनामवस्थास्ता जन्मप्रलयहेतवः ॥
अनाद्यन्तवतानेन कालेनेश्वरमूर्तिना ।
अवस्था नैव दृश्यन्ते वियति ज्योतिषामिव' ॥ इत्युक्तः ।

प्रवाह इति । व्यक्तिशक्तिपक्षः ।

'सर्ववेदमयेनेदमात्मनात्मात्मयोनिना ।
प्रजाः सृज यथापूर्वं याश्च मय्यनुशेरते' ॥ इत्यादिस्मृतिभ्यश्च ।

अविच्छिन्नेति 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' इति श्रुतेः । एवेति प्रस्थानरत्नाकरे प्रवाहे शक्त्यनुपपादनात् विशिष्टपक्षव्यावर्तकः । सुबोधिनी तु परमतभाषा न विशिष्टशक्तिस्वीकारपरेत्याशयो बोध्यः । पत्रावलम्बने तु धर्मेषु शक्तिपक्षः स च भाष्ये नास्तीति पत्रावलम्बनमतं न भाष्यमतमिति भावः । मतद्वयस्य भाष्ये दर्शनाच्छक्तिविषयेऽपि मतद्वयम् । भाष्ययोर्दर्शनाच्च यथा भावार्थपादभाष्ये ईश्वरः प्रवर्तयतीति मतं दृष्टविरोधीति भाष्ये तु एष उ एव साधुकर्म कारयति यमुन्निनीषतीति श्रुतेः 'प्रवर्तकत्वं कृष्णस्य' इति च वाक्यात् कृष्णः प्रवर्तकः । प्रेषा हि पुरुषः प्रवर्तते पुरुषश्च प्रेषा भवति कामभयो वैदिको दुःखासहिष्णुश्चेति तत्र स्वर्गकामपदादाद्यः विधेर्द्वितीयः अर्थवादैस्तु तीयः प्रवर्ततेऽतो वैदिककामभययोः पत्रावलम्बनोक्तपक्षः दुःखासहिष्णोर्भाष्यपक्षः इति विवेकः । अव्यतिरेक इति सूत्रं तु 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्' इति । अर्थस्तु औत्पत्तिकः शब्दस्योत्पत्तिमारभ्यैवार्थेन संबन्धः श्रीमद्विठ्ठलनाथानामुक्तिः 'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते' अनुभवस्तु तथैव । घट इत्युक्ते घटरूपोर्थोपि मनसा प्रतीयेत न तु द्रव्यरूपोर्थः । तदाहुस्तस्येत्यादि । तस्य शब्दे अर्थवैशिष्ट्यस्य ज्ञानमुपदेशः उपदेशद्वारा भाक्प्रयोगस्तु तस्य ज्ञानं उपदेशत्वमुपयोगात् उप समीपे दिश्यते आदिश्यते कथ्यते इति विग्रहात् । अतीन्द्रियपदार्थवाचकः कथं भूतभाविपदार्थवाचकशब्दैरर्थसंबन्धो भवितुमर्हति अर्थाभावादित्याकाङ्क्षायामाहुः अव्यतिरेक इत्यादि । अनुपलब्धे सूत्रे भाविनि

त्वात् । 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्, दिवं च पृथिवीं चान्तरिक्षमथो सुवः' इति । स्मृतेश्च ।

'सर्ववेदमयेनेदमात्मनात्मात्मयोनिना ।
प्रजाः सृज यथापूर्वं याश्च मय्यनुशेरते ॥'

इत्यादिस्मृतेः । सर्वस्मृतेश्च 'ऋषीणां पूर्वचरितस्मरणं स्मृतिरुच्यते' इति । अतोऽर्थबलविचारेऽपि पदार्थानां नित्यत्वान्न वेदस्यानित्यसंबन्धः ॥ ३० ॥

भाष्यप्रकाशः ।

ऽनुपलब्धे इत्यत्र व्यवहाराव्यतिरेकेण प्रवाहनित्यतया धर्मे शब्दसंबन्धतद्ग्रहौ, तथा वस्त्वन्तरेऽपीति नानित्यसंयोग इत्यर्थः । अविच्छेदे प्रमाणं दर्शयन्ति सूर्येत्यादि । सर्वासां स्मृतीनां कथं प्रवाहाविच्छेदसाधकत्वमित्यत आहुः ऋषीणामित्यादि । लक्षणार्थविचारादेवाविच्छेदावगतिरित्यर्थः ॥ ३० ॥

रश्मिः ।

चार्थे अव्यतिरेकः शब्दाव्यतिरेकः शब्दमिश्रीभाव एव शब्देषु चार्थाव्यतिरेकः । तत् । तत्र बादरायणस्य तत्संबन्धि तदुक्तमिति यावत् । सूत्रं प्रमाणम्, किं तत्सूत्रं 'शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम्' इति कुतस्तदुक्तं प्रमाणं अनपेक्षत्वात् । ज्ञानावतारत्वेन तदुक्ते विचिकित्सानुदयात् । अतः शब्द एव मुख्यं प्रमाणम् । ज्ञानात्मकत्वाच्च शब्दस्य प्रामाण्यमक्षुण्णमिति सूत्रार्थः । अत्रानुपलब्धे माविनि भूते चार्थेऽव्यतिरेकः शब्दमिश्रीभाव एवेति व्यवहारो वर्तमानस्य समीपवर्तिनः अव्यवहारो भूतभाविवस्तूनां तन्मिश्रीभावेनेति व्यवहाराव्यवहाराव्यतिरेकेणेत्यस्यार्थः । सूर्येत्याद्युक्तश्रुतिस्मृतिभ्यः प्रवाहः आवृत्तिस्तस्य नित्यतया धर्मे भावार्थपादोक्ते द्रव्यदेवतासंबन्धरूपयागेतीन्द्रिये भाविनि भूतेपि यागादिशब्दसंबन्धः प्रतिपाद्यप्रतिपादकभावरूपः 'शक्तिग्रहं व्याकरणेति नैयायिककारिकया संबन्धग्रहः तदेतदुक्तं धर्मे शब्दसंबन्धतद्ग्रहाविति । लोके तु तद्विषयककायिकव्यापारे भूते भाविनि चापि यागादिशब्दसंबन्धं तद्ग्रहं चाहुः तत्र त्रिक्षणावस्थायिव्यापारप्रवाहेपि तौ । येऽदृष्टं क्षणिकत्वं वा कल्पयन्ति न ते यागपदार्थं विदुरिति भावार्थपादभाष्यात् न तत्र ताविति ज्ञेयम् । पूर्वकाण्डदृष्टान्तेनोत्तरकाण्ड आहुः तथेति । वस्त्वन्तरप्रपञ्चेऽनुकारित्वे वाच्यत्वे च श्रौतप्रपञ्चपदसंबन्धतद्ग्रहौ । 'धर्मादिष्वनियमः' इति अल्पाच्तरस्य परनिपातः पूर्वप्रयोगार्हस्य । अनित्येति । ननु वेदेषु मा भूदनित्यसंबन्धो लौकिके तु स्यादिति चेन्न भाष्य एव वस्तुतस्त्वित्यादिना दत्तोत्तरत्वात् । अतः शब्दत्वावच्छेदेन नित्यत्वमिति भावः । ननु वेदोऽनित्यपदार्थान् वदतु स्वयं तु नित्य इति कल्पने को दोष इति चेन्न । वेदस्य स्वायोग्यपदार्थसंबन्धे भ्रमतुल्यत्वाद्विहानौ स्वरूपनाशप्रसङ्गात् । सूर्येत्यादीति कृपू सामर्थ्ये भ्वादिः आत्मनेपदी वेद । सर्ववेदेति । अस्यार्थः । इदं विश्वमात्मनि यस्य एतादृशेनात्मना पुनः कीदृशेन सर्ववेदमयेनाधिदैविकत्वद्विकरणार्थं पुनः कीदृशेनात्मना हिरण्यगर्भस्य योनिनोपादानकारणेनोक्त इति शेषः एतादृशात्मा प्रजा कथमुक्त इत्यत आह प्रजा सृजेत्यादिः आदिना पौराणिकी स्मृतिः ।

'तत्र सुप्तस्य देवस्य नाभौ पद्ममजायत ।
तस्मिन् पद्मे महाभाग वेदवेदाङ्गपारगः ।
ब्रह्मोत्पन्नः स तेनोक्तः प्रजा सृज महामते' ॥ इति ।

## मध्वादिष्वसंभवादनधिकारं जैमिनिः ॥ ३१ ॥

अर्थबलविचारे एवैकदेशेन पूर्वपक्षमाह । ननु मध्वादिविद्यासु देवानामनधिकारात् सर्वत्रैवानधिकारः । तथाहि । 'असौ वा आदित्यो देवमधु' तस्य द्यौरेवेत्यादिना सूर्यस्य देवमधुत्वं प्रतिपादितम् । रश्मीनां वेदत्वं च । तत्र वसुरुद्रादित्यमरुत्साध्याः पञ्च देवगणाः स्वमुख्येन मुखेनाऽमृतं दृष्ट्वैव तृप्यन्ति । पञ्चविधा एव च देवाः । स्वतः सिद्धं च तेषां तन्मधु । अनुपासकत्वान्न देवान्तरकल्पना । कृतार्थत्वाच्च । ब्रह्मणोऽपि देवत्वम् ।

---

भाष्यप्रकाशः ।

मध्वादिष्वसंभवादनधिकारं जैमिनिः ॥ ३१ ॥ सूत्रमवतारयन्ति अर्थेत्यादि । एकदेशेनेति उपासनाविशेषरूपेण तदेकदेशेन । अनधिकारं व्युत्पादयितुं विषयवाक्यस्थं प्रमेयं पूर्वमाहुः तथाहीत्यादि तन्मध्वित्यन्तम् । नाडीत्वं मधुच्छिद्रत्वम् । स्वमुख्येन मुखेनेति अग्नीन्द्रवरुणसोमब्रह्मरूपेण मुखेन । पञ्चविधा एवेति तावतामेव तत्रोक्तत्वात्तथा । अनधिकारं स्फुटीकुर्वन्ति अनुपासकेत्यादि । अयमर्थः । ब्रह्मविद्याधिकाराभ्युपगमे विद्या-

रश्मिः ।

सूत्रस्थचकारार्थमाहुः सर्वेति । चकारः सर्वस्मृतेर्वाचक इत्यर्थः । ऋषीणामित्यादीति कर्तरि षष्ठी । लक्षणेति स्मृतिसाधारणलक्षणस्यार्थे विचारात् पूर्वकल्पीयाचारस्मरणस्य बोधनेन सृष्टियथापूर्वतायाः साधनेन प्रवाहनित्यत्वस्य सिद्धत्वात् प्रवाहाविच्छेदावगतिः ॥ ३० ॥

मध्वादिष्वसंभवादनधिकारं जैमिनिः ॥ ३१ ॥ तदेकेति उपासनैकदेशेन । विषयेति अयमर्थः । अर्थबलशब्दबलयोरत्र सूत्राष्टके वक्तव्यत्वाच्छब्दबले सूत्रपञ्चकेन विचारिते विषयो विशयश्चैवेत्यत्र विषयस्य शब्दत्वेपि यो यो देवानां प्रत्यबुध्यतेति श्रुतिप्रमाणकः कश्चिन्न तु श्रुतिरूपोऽतः श्रुतिरूपविषयवाक्यस्थमिति । विशयादीनां शब्दबलविचारेऽनुक्तेश्चात्र प्रमाणस्य भाष्यीयपूर्वपक्षपदस्य दर्शनाच्च । तथा च पञ्चसूत्र्यां 'शब्दादेव प्रमितः' इत्यधिकरणेऽङ्गुष्ठमात्रनिरूपणार्थं मनुष्याधिकारे निरूपिते कस्यचिद्भ्रमो भवेत् सर्वत्र ब्रह्मविद्यायां मनुष्याणामेवाधिकार इति तन्निराकरणार्थं देवादीनामधिकार उक्तः । अतस्तत्र न विषयादिपञ्चकरूपाधिकरणरचनापेक्षास्ति । तथाहीत्यादीति इयं श्रुतिश्छान्दोग्ये पञ्चमप्रपाठकेस्ति । नाडीत्वमिति । आदिपदसंगृहीतश्रुतौ 'तस्य प्राञ्चो रश्मयस्ता एवास्य प्राच्यो मधुनाड्यः' इति पठितं तदनेन व्याकृतम् । तदेव प्रसिद्धमधुन इव मध्वाधारच्छिद्रत्वं कथं व्याख्यानमिदमिति चेन्न भगवदिच्छया प्रसिद्धार्थकथनेऽबाधात् । रूढार्थप्रसिद्धिर्भगवदिच्छया तथैवार्थः क्रियतेस्माभिरपि न तु 'फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च' इति मनेर्धः उप्रत्ययश्च प्रसिद्धे मधुनि योगाभावात् । ननु तर्हि कोर्थ इति चेन्न सिद्धान्तसूत्रे वक्ष्यमाणत्वात् । मुखेनेति तथा च श्रुतयः । तद्यत्प्रथमममृतं तद्वसव उपजीवन्त्यग्निना मुखेन न देवा अश्नन्ति पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति । अथ यद्द्वितीयममृतं तद्रुद्रा उपजीवन्तीन्द्रेण मुखेनाग्रे पूर्ववत् । अथ तृतीयममृतं तदादित्याः उपजीवन्ति वरुणेन मुखेनेत्यग्रे पूर्ववत् । अथ यच्चतुर्थममृतं तन्मरुत उपजीवन्ति सोमेन मुखेनेत्यग्रे पूर्ववत् । अथ यत्पञ्चमममृतं तत्साध्या उपजीवन्ति ब्रह्मणा मुखेनाग्रे पूर्ववदिति । तत्रेति छान्दोग्यपञ्चमप्रपाठके । टीकायां तु तृतीयाध्याये कश्चित्तृतीयप्रपाठक इति पठन्ति । भाष्ये । स्वत इति रश्मित्वेन 'प्रकाशाश्रयपद्म

भाष्यप्रकाशः।

त्वाविशेषान्मधुविद्यायामपि देवानामधिकारो वक्तव्यः। तत्रासौ वा आदित्यो देवमध्विति मधुत्वेनोपवर्ण्यमानस्यादित्यस्य विद्याविषयत्वादादित्यः कमन्यमादित्यमुपासीत। किंचाग्रे आदित्याश्रितानि पञ्च रोहितादीन्यमृतान्यनुक्रम्य वसुरुद्रादित्यमरुत्साध्याख्यान् पञ्च देवगणाँस्तदुपजीवकाननुक्त्वा, स य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवाऽमृतं दृष्ट्वा तृप्यतीत्यादिना वस्वाद्युपजीव्यान्यमृतानि विजानतो वस्वादिरूपत्वप्राप्त्या स्वगणमुख्यमुखेन तृप्तिरुच्यते। सा चोपासनातः प्रागेव वस्वादिरूपेण वर्तमानानां पुनस्तत्प्राप्तिकथनात् प्राप्यप्राप्त्रोर्वेद्यवेत्त्रोरैक्यापत्त्याऽनुपपन्ना भवति। न च वस्वादिप्राप्त्या वेद्याश्चान्ये कल्पयितुं शक्यन्ते। प्रमाणाभावात्। अधिकारानङ्गीकारे तु तेषामनुपासकत्वात् कृतार्थत्वाच्च न देवान्तरकल्पना। न च मास्तु मधुविद्याधिकारः। तावता ब्रह्मविद्याधिकारो न वारयितुं शक्यः। तेषां मोक्षार्थित्वात् तत्र बाधकाभावाच्चेति वाच्यम्। यतो ब्रह्मणोऽपि देवत्वम्, देवत्वेन च तस्याप्युपासकमध्ये प्रवेशेनोपास्यत्वप्राप्यत्वयोर्विघटनादिति। अत्र च मध्वादीत्यादिपदेन, अग्निः पादो

रश्मिः।

तेजस्त्वात्' इति सूत्रविषयत्वेन रश्म्यभेदात् स्वतः सिद्धम्। प्रकृते। अग्र इति असौ वा आदित्यो देवमधु तस्य द्यौरेवेत्यस्याग्रे। तिरश्चीनवंशोऽन्तरिक्षमपूपो मरीचयः पुत्राः तस्य ये प्राञ्चो रश्मयस्ता एवास्य प्राच्यो मधुनाड्यः ऋच एव मधुकृत ऋग्वेद एव पुष्पम् ता अमृता आपस्ता वा एता ऋच एतमृग्वेदमभ्यतपंस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यं रसोऽजायत तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतदादित्यस्य रोहित९रूपमिति। तस्य देवतिर्यग्गतवतः मधुनः द्यौरेव तिरश्चीनवंशः तत्प्रसिद्धमधुन इव चिन्तयेत्। अन्तरिक्षमपूपः। सवितृमध्वाश्रयत्वात् मरीचयः लक्षणया रश्मिस्थाः सवित्राकृष्टाः भौमा आपः। पुत्रा इव मध्वपूपच्छिद्रभ्रमरबीजस्थानीयाः तस्य रसमध्वाश्रयस्य सवितुर्ये प्राञ्चः पूर्वदिग्गता रश्मयः ता एवास्य मधुनाड्यः प्रसिद्धमधुन इव मध्वाधारच्छिद्राणि तत्र ऋच एव ऋग्भ्रमाः एव मधुकृतो भ्रमराः कुतः ऋग्भ्रमा हि सोमाहुत्यपोऽपूर्वरूपा आदाय लोहितं रूपं सवित्राश्रयं मधु कुर्वन्तीति मधुकृतः। ऋग्वेदः ऋग्ब्राह्मणभागः। तद्विहितं कर्म एव पुष्पं पुष्पस्थानीयं ताः प्रसिद्धाः कर्मणि प्रयुक्ताः अमृता आपः सोमाज्यपयोरूपाहुतयः अपूर्वीभूताः अत्र पुष्पाश्रयाप्स्थानीया इत्यर्थः। ता वा एता भ्रमरस्थानीया ऋचः कर्मपुष्पेभ्यः आहुत्यपूर्वरूपरसमादातुकामाः ऋग्वेदं तद्विहितकर्मपुष्परूपमभ्यतपन् रसनिःश्रवार्थं व्यापारमकुर्वन् यथावत् कर्म निरवर्तयन्नित्यर्थः। ऋग्भिर्मन्त्रैः शस्त्राद्यङ्गभावमुपगतैः क्रियमाणं कर्म रसनिर्वर्तकं भवति। पुष्पाणीव भ्रमरैराकृष्यमाणानि। रसान्मधुनिष्पत्तिमाह तस्याभितप्तस्येति। तस्य ऋग्वेदविहितकर्मपुष्पस्याभितप्तस्य ऋग्भ्रमरैर्निर्वर्तितस्य यशस्तेज आदि' रसोऽजायत। यशो विश्रुतम्। तेजस्त्वग्गतं दीप्तिः। इन्द्रियं प्रसिद्धं वीर्यं सामर्थ्यम्। बलमन्नाद्यं अन्नं च तदाद्यं च। रसो मध्वाख्योऽजायत उत्पन्नः। तद्व्यक्षरदिति तच्च यशआदि अन्नान्तं मधु व्यक्षरत् विशेषेणोर्ध्वमक्षरत् अगमत्। तदादित्यमिति गत्वा च तन्मधु आदित्यमभितः पार्श्वतः आदित्यस्य पूर्वभागमश्रयत्। तद्वा एतदिति तद्वै तदेव पूर्वोक्तमेवैतत्प्रत्यक्षं मधु किं तत् यदेतद् उद्यत आदित्यस्य रोहितं रक्तरूपं दृश्यत इत्यर्थः। एवं अथ येऽस्य दक्षिणा रश्मयः ता एवास्य दक्षिणा मधुनाड्यः यजू९ष्येवेत्यादिः आदित्यस्य शुक्लं रूपमित्यन्ता श्रुतिः। एवमथ येऽस्य प्रत्यञ्चो रश्मयः ता एवास्य प्रतीच्यो मधुनाड्यः सामान्येवेत्यादिः आदित्यस्य कृष्णं

आदिशब्देन सर्वा एव देवोपासनविद्या गृहीताः । अतस्तेषामनुपास्यत्वात् कृतार्थत्वाच्च नाधिकारः । न हि प्रयोजनव्यतिरेकेण कस्यचित् प्रवृत्तिः संभवति । मोक्षस्याप्यधिकारनिवृत्तावुत्तरमार्गवर्तित्वात् स्वत एव सिद्धिः । यावदधिकारमिति न्यायात् । वसूनयाजयदित्यत्रापि भाविन्येव संज्ञा । तस्मान्मनुष्याधिकारकमेव ज्ञानं कर्म चेति न देवानामधिकार इति जैमिनिराचार्यो मन्यते । मनुष्याणामेव ज्ञानकर्मणोस्तरतमभाववतां तत्तद्रूपभोगानन्तरं मोक्षप्राप्तेरिति ॥ ३१ ॥

भाष्यप्रकाशः ।

वायुः पाद आदित्यः पादो दिशः पाद इति, वायुर्वाव संवर्ग इति, 'आदित्यो ब्रह्मेत्यादेशः' इत्याद्याः सर्वा एव देवोपासनाविद्या गृहीताः । तेन सिद्धमाहुः अत इत्यादि । ननु मोक्षेच्छायां सत्यां कुतो नाधिकारः । ब्रह्मविद्यामन्तरेण तदसिद्धेरित्यत आहुः मोक्षेत्यादि । पूर्वोक्तरीत्याऽनुपपत्तिबलादधिकारनिवृत्तौ तेषां मोक्षेच्छासत्त्वे तु देवयानस्योत्तरमार्गत्वादेतेषां च देवत्वेन तद्वर्तित्वात् स्वतो मार्गबलादेव मोक्षस्यापि सिद्धेर्न विद्यावश्यकत्वमित्यर्थः । अत्र प्रमाणं यावदित्यादि । ननु सोऽग्निष्टोमेन वसूनयाजयदित्यादिश्रुत्या यागाधिकारे सिद्धे ब्रह्मविद्यायामपि तत्कल्पने को दोष इत्यत आहुः वसूनित्यादि । तथाच मूल एव कुठार इत्यर्थः । सिद्धमाहुः तस्मादित्यादि ॥ ३१ ॥

रश्मिः ।

रूपमित्यन्ताः । अथ येऽस्योदञ्चो रश्मयः ता एवास्योदीच्यो मधुनाड्यः अथर्वाङ्गिरस एवेत्यादिः आदित्यस्य परं कृष्णं रूपमित्यन्ताः । अत्रेतिहासपुराणं पुष्पमिति श्रुतिः । अथ येऽस्योर्ध्वा रश्मयः ता एव तस्योर्ध्वा मधुनाड्यो गुह्या एवादेशा मधुकृतो ब्रह्मैव पुष्पं ता आपस्ते वा एते गुह्याः आदेशा एतद्ब्रह्माभ्यतप९ंस्तस्याभितप्तस्य यशस्तेज इन्द्रियं ःवीर्यमन्नाद्य९ंरसोऽजायत इत्यादिः आदित्यस्य क्षोभित इवेत्यन्ता एतानि पञ्च रोहितादीनि । अमृतानीति ते वा एते रसानां वेदा हि रसास्तेषामेते रसास्तानि वा एतान्यमृतानाममृतानि वेदा ह्यमृतास्तेषामेतान्यमृतानीति श्रुतेः । अर्थः स्पष्टः । उक्त्वेति तद्यन्तत्प्रथममित्याद्युक्तश्रुतिभिरुक्त्वा । इत्यादिनेति आदिपदेन स एतदेव रूपमभिसंविशन्ति एतस्माद्रूपादुदेति इति । मुखमत्रोपायः । 'मुखं निःसरणे वक्त्रे आरम्भोपाययोरपि' इति कोशात् । उपायत्वं देवहविःप्रापकत्वं तदग्निमुखा वै देवाः इत्यत्रात्रोपायत्वं सर्वात्मभाववत्त्वं साधारणदेवपदसमभिव्याहारस्योपायत्वे हविःप्रापकत्वबोधकत्ववद्विशेषवसुपदसमभिव्याहारस्योपाये सर्वात्मभाववत्त्वं बोधकत्वात् । न चान्यविधोपाय उपायत्वमन्यविधमिति वाच्यम् । आचार्यसूचकाग्निपदसमभिव्याहारात् सर्वात्मभाववत् तदादि वा सूचकवसुपदसमभिव्याहाराचान्यविधत्वयोरभावात् तद्रूपमभिप्रकार तस्यार्थदीपमिति एवमाचार्याणां प्रत्यक्षप्रमाणमुक्तं वेदस्य प्रत्यक्षमूलत्वात् । प्रसङ्गादाचार्याः नूतनमार्गप्रवृत्त्यनुमानमानं प्रमाणं हेतुतावच्छेदकसंबन्धः । प्रवर्त्यप्रवर्तकत्वम् आचार्यत्वं नूतनमार्गप्रवर्तकत्वमिति सुबोधिन्याम् । आचार्या इत्यज्ञातवक्तृकः शब्दः प्रमाणमेतिह्यनाम । अन्य इति शंकराचार्यभाष्योक्तयोगिवद्दृष्टान्तेन कल्पयितुं प्रमाणेति स्वस्य रूपाद्युपाये प्रवृत्तौ प्रमाणाभावात् । अनुपेति भाष्यं विवृण्वन्ति स्म अ पीति । ब्रह्मणोपीत्यादिभाष्यमवतारयन्ति पक्षद्वयं न चेति । देवत्वमिति 'देवस्तुर्यो विभुः स्मृतः' इति माण्डूकोपनिषच्छ्रुतेः । आवीति भाष्यं

ज्योतिषि भावाच्च ॥ ३२ ॥

किंच । तेषां सर्वेषामनधिकारः प्रत्यक्षत एव दृश्यते । सर्वे हि नक्षत्रादिरूपेण महाभोगवन्तो जगदवभासकत्वेन ज्योतिश्चक्रे दृश्यन्ते । अग्निः पुच्छस्य प्रथमं काण्डमित्यादिश्रुतेश्च । न हि तादृशां प्राप्तैश्वर्यवतां सर्वोपास्यानां मोक्षदातॄणां ज्ञानकर्मणोः कश्चनोपयोगोऽस्ति । तस्मादनधिकार एव देवानामित्येवं प्राप्ते ॥ ३२ ॥

उच्यते—

भावं तु बादरायणोऽस्ति हि ॥ ३३ ॥

तुशब्दः पक्षं व्यावर्तयति । भावं देवानामधिकारस्य सद्भावम् । बादरायण आचार्यः । गौणसिद्धान्ताभावाय स्वनामग्रहणम् । किमार्षेण ज्ञानेन । तथा सति तुल्यत्वमत आह अस्ति हि । अस्ति वेदे, 'प्रजापतिरकामयत प्रजायेय' इति

---

भाष्यप्रकाशः ।

ज्योतिषि भावाच्च ॥ ३२ ॥ अग्निः पुच्छस्येति श्रुतिस्तैत्तिरीयाणामारण्यके शिशुमारोपस्थापनेऽस्ति । शेषं निगदेन व्याख्यातम् ॥ ३२ ॥

भावं तु बादरायणोऽस्ति हि ॥ ३३ ॥ वेदे सत्त्वमुपपादयन्ति प्रजापतिरित्यादि । अयमर्थः । अयं हि भूतार्थवादो यस्यैवं विदुषोऽग्निहोत्रं जुह्वतीति विद्वद्वाक्यशेषः । स यदि स्वार्थे

रश्मिः ।

विवृण्वन्ति स्म अत्र चेति । देवोपासनविधात्वं तु आदित्यस्य पादत्वेन संवर्गत्वेन ब्रह्मत्वेन च शंकरभाष्येप्येता अपिपदेन यस्यादित्यः शरीरमिति श्रुत्युक्तोपासना सा च शरीरत्वेन । यावदित्यादीति अयं न्यायः साधनाध्याये तृतीयपादेस्ति 'यावदधिकारमवस्थितिराधिकारिकाणाम्' इति । मूल इति मूलं वसूनयाजयत् इति ब्रह्मविद्याधिकारकल्पने । तत्र मूले कुठारो मनुष्याणां याजकर्मत्वेनाङ्गीकारात् वसुसंज्ञाया भाविनीत्वं तत् फलम् । ब्रह्मविद्याधिकारं वदतस्तद्वदनहानिः यथा कश्चिद्वृक्षारूढः स्वस्थितिमूलं शाखां कुठारेण छिन्दन् पतति । किं च देवाधिकारबोधिकायाः श्रुतेस्तात्पर्यमाह जैमिनिः वसूनिति मनुष्याणां यागानन्तरभाविनी वसुसंज्ञेति । मनुष्याणामधिकारबोधिका श्रुतिरिति भावः । तस्मादित्यादीति । तत्तद्रूपेति । ब्रह्मणोपि देवत्वमिति ब्रह्मरूपवस्वादिरूपैः भोगानन्तरम् ॥ ३१ ॥

ज्योतिषि भावाच्च ॥ ३२ ॥ शिशुमारेति पञ्चमस्कन्धेस्ति । तत्र पुच्छमूले धाता विधाता चेति लाङ्गूलाग्रादधो भागे प्रजापतिरग्निरिन्द्रो धर्म इति अग्रे ध्रुव इति भेदेन । उपस्थानमादित्यस्य यथादित्येन रजसेति मन्त्रेण तथा । भाष्ये । प्राप्तेति प्राप्तानामैश्वर्यवतां भगवतः प्राप्तैश्वर्यवतामिति सिद्धान्ते । सर्वोपास्यत्वं पञ्चमस्कन्धे एतदु हैव विष्णोरित्यादिनोक्तम् । मोक्षदातृत्वं ब्रह्मदेवस्य ॥ ३२ ॥

भावं तु बादरायणोऽस्ति हि ॥ ३३ ॥ भाष्ये । किमिति न किमपीति कुत्सार्थकं किम् । तथेति समाधिभाषाया आर्षज्ञानमिवात्र ज्ञानं तस्यात्र कुत्सितत्वे सति जैमिनिमततुल्यत्वम् । अस्तीति वेदे देवानामधिकारोस्ति । प्रकृते । भूतेति 'इन्द्रो वृत्राय वज्रमुदयच्छत्' इति-

स एतदग्निहोत्रं मिथुनमपश्यत् । तदुदिते सूर्येऽजुहोदिति' । देवा वै सत्रमासतेत्यादिभिः कर्माधिकारो निश्चितः । तद् यो यो देवानां प्रत्यबुध्यत स एव तदभवदित्यादि । तथेन्द्रप्रजापतिसंवादे, ब्रह्मा देवानामिति च । एवमेवंविधैर्वाक्यैर्देवानामप्यधिकारोऽस्ति । यत्र च पुनर्देवानां फलभोग एव प्रतीयते, न

भाष्यप्रकाशः ।

प्रमाणं न स्यात्, तदा तादृशज्ञानेनान्यस्याप्यग्निहोत्रिणः प्रजारूपं फलमपि न स्यात् । अतोऽग्निहोत्रप्रवृत्तं तद्धोतृत्वं चावश्यमभ्युपेयम् । न चात्र प्रजापतिरिति भाविनी संज्ञा वक्तुं शक्या । ततः पूर्वमन्यस्याभावात् । 'यो ब्रह्माणं विदधाति पूर्वम्' इति श्रुतेः । एवं सिद्ध एकत्राधिकारे, देवा इत्यादिभिः कर्मणि, यो य इत्यादिभिर्ज्ञाने च देवानामधिकारो निश्चितः । एवमित्यादिकं

रश्मिः ।

वज्रायमादित्यो ब्रह्मेत्यादेश इतिवद् विरुध्यति नाप्यनुवदते वायुर्वाव संवर्ग इतिवत् । किं तु पूर्वं जातमर्थं प्रकाशयति भूतार्थवादः । तथा च वार्तिकम्—

'विरोधे गुणवादः स्यादनुवादोऽवधारिते ।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः' ॥ इति ।

अत्र भाष्य आदिपदेन 'साध्या वा देवाः स्वर्गकामाः एतं षड्रात्रमपश्यन् तमाहरत् तेनायजन्त' इति संग्रहीतव्या । अयमितिपदेन लङन्तपदघटितश्रुतिचतुष्टयपरामर्शात् द्वितीयायां विशेषमाहुः यस्यैवमिति द्वितीयस्य चतुर्थपादेऽस्ति । अग्निहोत्रविषये बह्वृचब्राह्मणं यावज्जीवमग्निहोत्रं जुहोतीत्यत्र यावज्जीवशब्दः कृत्स्नजीव[न]वाचकस्ततश्च तत्पुरुषधर्मं निमित्तीकृत्याग्निहोत्रप्रयोगो विधीयते इति विद्वदविद्वत्साधारणोऽग्निहोत्रप्रयोगः । अत्र चाग्निहोत्रमिथुनमपश्यदिति भूतार्थवादत्वेनास्मदीयाः एवं विदुषो यावज्जीवमग्निहोत्रं प्रतीयन्त्यत्रेति विद्वदग्निहोत्रप्रयोगः तत्र विद्वद्वाक्यशेषापेक्षास्ति । ननु विद्वदविद्वत्साधारणप्रयोगो वैधः 'विदुषः कर्मसिद्धिः स्यात्तथा नाविदुषो भवेत्' इति वाक्यसिद्धश्चेति भूतार्थवादेन कथं विकल्प्यते इति चेत्तत्राहुः स यदीति स भूतार्थवादः । न स्यादिति । न च काकतालीयन्यायेन फलमस्तु इति वाच्यम् । निर्बन्धेनाप्रवृत्त्यापत्तेः । विदुष इति वाक्यं तु विदुषः सकलकर्मसिद्धिमाह न तु विद्वदविद्वत्साधारणप्रयोगम् । अन्यस्येति मनुष्यत्ववत्संज्ञाकारणस्य वसुनिष्ठस्येव प्रजापतित्वान्यस्य । एवमिति एवं पूर्वोक्तप्रकारेणासौ वा 'आदित्यो देवमधु' इत्यादीति न्यायादित्यन्तभाष्योक्तवृत्तान्त एकत्र देवा इत्यादिभिः कर्मण्यधिकारे सिद्धे । चोऽप्यर्थे । एवं पूर्वपक्षे पूर्वसूत्रोक्तदोषद्वयं ज्ञानकर्माधिकाराभावरूपमुद्धृतम् । द्वितीयसूत्रोक्तं दोषमुद्धर्तुमाहुः एवमितीति । एवंप्रकारो यत्र एवमेवंविधैर्वाक्यैर्देवानामप्यधिकारोऽस्तीति भाष्ये तदादि यस्य यत्र चेति भाष्यस्य तद्भाष्यं स्फुटार्थम् । करणं भाष्ये कृतिः । असीति असौ वा आदित्य इत्यस्यार्थ उक्तो भगवदिच्छया ये लौकिकाः शब्दास्त एव वैदिका इति 'ये धातुशब्दाः' इति पत्रावलम्बनात्स्वर्थान्तरमुच्यते सिद्धान्ते परं तु भगवदिच्छयैव सिद्धान्ते, अन्यार्थे इच्छाभावात् । ननु पत्रावलम्बने कर्मकाण्डश्रुत्युल्लेखात् कर्मकाण्डविषयेऽस्तु न तु ज्ञानकाण्डेपीति चेन्न तत्र 'विचारो योगरूढितः' इति पूर्वमीमांसाकारिकाया योगरूढेः 'तथैवार्थो वेदरात्रः' इत्यत्रैवकारेण रूढेर्व्यवच्छेदात् । वेदान्तानामपि वेदत्वमतो योगमात्रं वेदान्त इत्येवकारपर्यालोचनलभ्यम् । अतोस्यां कुत्राधिकारः सर्वपक्ष इत्यर्थो उच्यन्ते । असाविति अद् भक्षणे असुन् अत्ता । वै वातीति । वा गति-

रश्मिः ।

गन्धनयोरनिट् अ.प.डेः । गन्ता गन्धयिता, गन्ध अर्दने चुरादिः अर्द गतियाचनयोः भ्वा.प.से.अर्द हिंसायां चुरादिः आ.से.याचिता बाललीलादौ हिंसिता वा दैत्यानाम् । आदित्य इति दितिः दाप् लवने क्तिच् द्युमास्थेतीत्वम् । न दितिरदितिः द्वैधीकरणकर्त्री विनाशकर्त्री लुञ् छेदने क्र्यादिः उ.से.छिदिर् द्वैधीकरणे रु.उ.अ.नक विनाशे चुरादिः प.से.अत्र नकतीति कर्तरि डेडन्तौ अदितेरपत्यादि-रादित्यः 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' सर्वमत्तुमध्रियत इति बृहदारण्यकात् । अत्ता गन्ता गन्धयिता च द्वैधीकरणकर्त्र्या विनाशकर्त्र्या अपत्यं पातकर्तृ विनाशकरणं पत्ल्ट पतनेण्यत् । पतृ गतौ भ्वादिः प. सेटो विसर्गलोपः । देवानां क्रीडादिकर्तृणां मधुः गमनकर्तृ विनाशकरणमिति पातकर्तृविनाशकरण-मित्यस्यार्थः । ण्यविधायकेन 'ऋहलोर्ण्यत्' इति सूत्रेण ण्यद्वृद्ध्यभावश्छान्दसः पुंनाम्नो नरकात्त्रायत इति पुत्र इति प्राचां पर्यायवादात् । पुत्रपर्यायश्चापत्यशब्दः । 'मनेर्धश्छन्दसि' इत्युसिर्धश्च अवबोधकर्ता अव-क्षरणादौ बुध अवगमने । तस्येति तनु विस्तारे विस्तारकस्य स्तृञ् आच्छादने छद ऊर्जने ऊर्ज बलप्राण-नयोः द्यौः द्योतन्तेऽस्यामिति द्यौर्गोवत् बाहुलकाद् द्युतेर्डोः लौकिकशब्दोधिकरणव्युत्पत्तेरुणादिषु पञ्चमा-ध्यायान्ते 'संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे' इति कारिकां प्रक्षिप्योक्तत्वात् । द्यु अभिगमने द्यौति डोरलौकिकः 'ये धातुशब्दा यत्रार्थे उपदेशे प्रकीर्तिताः' इतिवाक्यात् अ.प.अनिट् भीविनाशाय गन्ता तस्य एव, इण् गतौ अ.प.अ.'इणशीभ्यां वन्' भावेऽयनमित्यर्थः । तिरश्चीनवंशः तरणं तृ प्लवनतरणयोः भ्वा.प.से.असुन् क्वचिदपवादविषये श्रीतिर् प्लवनं प्लुङ् गतौ इत्यस्य रूपम् । पुराणाद् गतिः फलं तस्मै [म्रेवृ सेवने भ्वा.आ.से.अञ्चुविकारस्तस्मै] अचीनः विभाषा चेरिति खः वर्णलोपः । अञ्चु गतिपूजनयोः अच इत्येके, पूजनाय अत्र गमनाव्यक्तशब्दयोरित्यस्य न रूपं अव्यक्तशब्दस्य प्रकरणेऽनुपयोगात् भ्वा.उ.सेट् वंशः वंशशब्दनिर्वचनं टुवम उद्गीर्णे भ्वादिः प.से. 'वृशृवमिकृभ्यः शकृ' वमति वम्यते वा वंशः । उत् उङ् शब्दे क्विप् तुक्, शब्दात् गिरणं विज्ञानं तस्य कर्तृ गृ विज्ञाने चुर.आ.से.विज्ञानस्य कारणं दैवीसंपत्तस्य कर्तृ विज्ञानस्य कृत्यजन्यत्वात् । गिरणं न सेचनं तथाहि गृ.सेचने भ्वादिः प.अ.सिचिर् क्षरणे षिच क्षरणे तु.उ.अ । क्षर संचलने भ्वादिः प. । चल कंपने भ्वा.प.से.कपि चलने भ्वा.आ.सेट् इत्यन्योन्याश्रयात् नापि चल विलसन इत्यस्य तु.प.से.लस श्लेष-क्रीडयोः भ्वा.प.से.श्लिष आलिङ्गने दि.आ.अ.लिगि गतौ भ्वादिः प.सेट्.इत्यस्यैवकारार्थगमनेऽनन्व-यात् । उदर्यानन्वयाच्च गौरवाच्च । नापि लिगु चित्रीकरणे चु.प.से.प्रयोजनाभावात् । अथ श्लिष दाहे भ्वा.प.सेटः असंभवात् । नापि श्लिष संश्लेषे इत्यस्य श्लेषांशे आत्माश्रयम् । अयं चुरा.प.सेट् । क्रीडार्थे उच्यते, क्रीड विहारे भ्वा.प.से.संभवति अप्रयोजकत्वात् । नापि चल भृतविलसस्य चुरा.प.सेटः अप्रयोजकत्वात् । अतो गृ विज्ञान इत्यस्य रूपं उद्गीर्ण इत्यत्रात्र । अत्र 'उश्योर्ग्रः' इति सूत्रेण धञ् तु न धातुपाठकृताकृतत्वात् । अन्तरिक्षमपूप इति द्यावापृथिव्योरन्तरीक्ष्यते ईक्ष दर्शने कर्मणि घञ् छान्दसं ह्रस्वत्वम् । अन्तरीक्ष्यते नक्षत्रजालं जगद्वास्मिन् इत्यधिकरणव्युत्पत्तिस्तु नोचिता । लुट्य घञो बाधप्रसङ्गात् । लौकिकीत्वाच्च । ईक्षिर् प्रेक्षणे इति दर्शनं प्रेक्षणं ज्ञेयम् । पूञ् पवने क्र्यादि-रुभयपदी सेट् पुनाति पूयते पूपः न पूपोऽपूपः नञ्समासः । अन्तः अतिबन्धने भ्वा.प.से. बाहुलकादरन् प्रातः पुनररितिवत् । अत सातत्यगमने अरन् । पण स्तुतौ अर उकारश्चास्य । अन्तरव्ययं व्यवधेः कामक्रोधादिभिरीक्ष्यते यः पदार्थः सोन्तरिक्षम् । रूपप्रपञ्चः सोपूपो न पुनातीत्यर्थः । अतोऽजनमित्यर्थः । व्याख्यातुपायां प्रकारान्तरमप्यपवर्गे तन्मध्यवाचकस्ताञ्चदस्य लौकिकत्वम् ।

रश्मिः ।

किं चाखगत्यादौ भ्वा. प. सेट् हसिमृग्रिण्वामीति तन् । मरीचयः पुत्राः इति म्रियन्ते कामादय एषु सकणिम्यामीचिः पुन्नाम्नो नरकात्त्रायन्त इति पुत्राः भक्तिज्ञानादिप्रतिपादका वेदा नामप्रपञ्चरूपाः पुवो ह्रस्वश्चेति सूत्रात् पूञ् पवने क्र्यादि उ.सेट् क्त्रन् पुनात्यनेन पुंनाम्नो नरकादिति अतो देवत्वाद्या बालत्वाद्या तस्य विस्तारकस्य ये देवाः पूजादिकर्तारः । प्राञ्चः प्र.पूरका गन्तारः अञ्चे क्विन् ऋत्विगादिना रश्मयो व्यापकाः अश्नोतेरश्च चेति मिः अश्नुवत इति रश्मयोऽत्र मुक्ताः त एवेति वक्तव्ये ता एवेति विधेयलिङ्गं विस्तारका एवायनं कर्तरि ल्युः । अस्य इदि परमैश्वर्ये परमैश्वर्यवतः । प्राञ्च इति प्राञ्चति ऋत्विगादिना क्विन् । अञ्चु गतिपूजनयोः पूजादिकर्म्यः । भ्वा.प.से.प्रपूरिका गव्यः मधुनाड्यः इति ज्ञानकर्तुः नल गन्धे णल बन्धे भ्वा.प.से.नालयति पचाद्यच् डलयोरेकत्वं डलविकारः गौरादिः गौरादित्वान् ङीष् । गव्यः याच्ञाकर्म्यः गत्वा याचिका इति यावत् । गन्ध अर्दने अर्द गति-याचनयोरिति बन्धार्थकधातुस्तु टवर्गादिस्तवर्गादितो निर्बलः, नाड्य इत्यत्र तवर्गपञ्चमादित्वाच्छन्दस । ऋच एव मधुकृत इति । मधोर्ज्ञानकर्तुः भक्तिज्ञानादिभ्यः कृतः कृती छेदने द्वैधीकारिकाः ऋच्यनोरथेन क्रीडाप्राकट्यात् क्रीडाया अद्वैतविरुद्धत्वात् । गोप्यो गावो ऋच इति कृष्णोपनिषदः । 'वने वृन्दावने क्रीडन् गोपगोपीसुरैः सह' इति श्रुतेः, तथा च फलाध्यायभाष्यम् । अचलत्वं चापेक्ष्येति सूत्रस्य लीलाविष्करणमनाविष्करणं चापि तदिच्छयैवेत्याहेति डुकृञ् करणे वा क्विप् तुक् भक्तिज्ञानादीनां कर्तृ कर्म्यः । अयमर्थः—'आसीज्ज्ञानमथो ह्यर्थः' इति श्रीभागवतैकादशस्कन्धाज्ज्ञानं स्वयं प्रकाशं वैकुण्ठात्मकं द्वितीयस्कन्धनवमाध्यायसुबोधिन्युक्तं विद्वन्मण्डनोक्तं च तत्र गोप्यो गावो ऋग्रूपाः सन्त्येवात्र तु बीजरूपा अपि । ऋचस्तु ऋच स्तुतौ संस्तुतावित्यपि तुदा. प.सेट् ऋच्यन्ते स्तूयन्ते महात्मदेवादय आभिरिति ऋचः क्विप् । ऋचो अयनं उत्तरदेशसंयोगानुकूलो व्यापारः, न च गुणे गुणानङ्गीकार इति शङ्क्यमन्यमतत्वात् ऋचां 'वेदा यथा मूर्तिधरास्त्रिपृष्ठे' इति वाक्यात् मूर्तित्वाच्च । ये हि सुपां सुलुगिति सुः एवकारार्थीय अनेन हेतुना मधुकृत इत्यर्थः । ऋग्वेद एव पुष्पमिति ज्ञातको ज्ञानकर्तैव अयनेन स्ववृत्त्या विकाशकर्ता पुष्प विकाशे पचाद्यच् पुष्प्यति दि.प.सेट् काश शब्दे भ्वा.प.से.तस्य न रूपं एकदेशान्वयापत्तेः किं तु काश दीप्तावित्यस्य दिवा.आ.सेटो रूपं काश्यत इत्यर्थः । पुष धृतौ । चुरा.प.सेटः स्वप्पशिल्पति सतस्वभावाच्च रूपं, पुष विभागे दि.प.सेटोपि न रूपं पठ्यादित्वात् । पुष पुष्टौ भ्वा.क्र्या.प.से.दि.प.अ.एतेषां न रूपमात्माश्रयात् । ता अमृता आप इति ता विस्तारिकाः अमृता न मृतं मरणमस्त्यस्मिन् अपामवान्तरप्रलयाश्रयत्वात् । प्राणस्यापोमय-त्वात् 'आपोमयः प्राणः' इति श्रुतेः साधुरापोमय इति व्याख्यासुधायाम् । आपः आप्नुवन्ति आप्यन्ते वा आप्लृ व्याप्तौ स्वा.प.अ. क्विप् । ता वा इति ता विस्तारिका वै वान्ति डैः वा गतिगन्धनयोः गन्धः गन्धयिभ्यः । एता इति एतैस्तुद् चेत्यादिस्तुद् । गव्यः ऋचः इति स्तुतिकर्म्यः । एतमिति गन्तारं ऋग्वेदं पूर्वव्याख्यातम् । अभ्यतपन् भयाभावाद्यातपन् विचारितवन्त्यः विचारप्रस्तावात् निबन्धे विचारप्रपर्वसु तप आलोचन इत्यस्य ग्रहणात् । लोचृ दर्शने भ्वा.आ.से.करणे ल्युट् अस्याश्रितन्यादेव । भाव घञकर्मणीतिवत् क्रियते कर्मेति व्युत्पत्तेः भावव्युत्पत्तेः कश्चिज्ज्ञानविचार-बोधनात् । तप संतापे भ्वा.प.अ. तप ऐश्वर्ये दि.आ.अ-तप दाहे चुरा.आ.से.एतेषां न रूपं निबन्धेऽ-ग्रहणात् । तस्येति । विस्तारकस्याभितस्तस्याभयाय विचारितस्य । यश इति अश्नुते व्याप्नोति 'अशेर्देवने युट् च' इति असुन् व्यापकमेवेत्यर्थः । तेज इति तिज निशाने तेजयति तिज्यतेऽनेन वा तेजः

रश्मिः ।

असुन् शानि तेजने भ्वा.उ. । इन्द्रियमिति इदि परमैश्वर्ये इन्द्रस्यात्मनो लिङ्गमिन्द्रियमित्यादिना घच् निपातितः वीर्यमिति वीर विक्रान्तौ चु.प.से.पचाद्यच् तत्र साधुरिति यत् अचो यद्वा । अन्नाद्यमिति टीकायां वर्णलोपः अन्नमाद्यं अद भक्षणे क्त-प्रत्ययः ऋहलोर्ण्यत् भक्षितमदनीयं च । रस इति रस आस्वादने चुराद्यदन्तः कर्मणि घञ् स्वाद आस्वादने भ्वा.आ.से. । अजायत इति जनि प्रादुर्भावे दि.आ.से.एतानि रसान्तानि पूरकाणि व्यापकानि । दृ भये भयसंयुक्तानि सद्यावन्ति कृतानि परं वेदसृष्टित्वेनाधिदैविकानि कृतान्युत्पादितानि । तद्वीति तद्विस्तारक आदित्यः अव्ययत्वात्तदित्यस्य । विप्रजनादिकर्ता अक्षरत् । क्षर संचलने भ्वादि.प. चल विलसने.लस श्लेषक्रीडयोः श्लिष आलिङ्गने लिगि गतौ समगच्छत् । क्रीड विहारे विप्रजनादिकर्ता सम् अहरत् । तदादित्यमिति तदित्युक्तार्थः यश्च आदिः आदित्यमुक्तार्थमश्रयत् असेवेत षिवृ गतौ दि.प.से अगच्छत् अनुवृत्तिं कृतवान् इति यावत् । अनुवृत्तिः सेवापदार्थ इति सुबोधिन्यां प्रथमस्कन्धस्य । कुत इत्यत आह अभित इति भीविनाशाद्धेतोः । तद्वा इति तद्वै एतत् यत् एतत् आदित्यस्येति षण्णां पदानामुक्ता अर्थाः । रोहितं रूपमिति रुह जन्मनि भ्वा.प.अ.रोहति प्रादुर्भवति रुहेरश्च लोवेति तन् । रूपमिति रूप रूपकरणे इति चुरादेरूपं तथाप्यात्माश्रयात् रूप विमोहने दि.प.से.अच्.अन्येषामपीति दीर्घः यद्वा रु शब्दे अ.प.से.रूयते आविष्क्रियते रूपं खष्पशिल्पेति पप्रत्ययो दीर्घश्च निपातितः । अतो नात्माश्रयः । एवं पञ्चामृतानि निरूपितानि तत्र प्रथमामृतं ये जीवन्ति तानाह तद्यत्प्रथमामृतमिति तद् विस्तारकं यद् याजकं प्रथते प्रथ विस्तारे प्रथ प्रख्याने च भ्वादिः आ.से.प्रथेरमच् ख्या प्रकथने कथ वाक्यप्रबन्धे वाक्यानां प्रपूरकं बन्धनस्य कर्तृ बन्ध संयमने चु.प.से.यम उपरमे भ्वा.प.से.उप उक्तार्थ रम क्रीडायां क्रीड विहारे विहारो विहरणं तस्य कर्तृ यचु यम परिवेषणे चु.प.से. परि.पूरकं षिच् सेचने भ्वा.प.से.सिचिर् क्षरणे क्षर संचलने चल विलसने लस श्लेषक्रीडयोः श्लिष आलिङ्गने लिगि गतौ तदा तु बन्धनस्य कर्त्रित्यस्य गमनस्य कर्त्रित्यर्थः । यदपि विषु व्याप्तौ अ.जुहो.उ.अ.वी प्रजनकान्तिगत्यासनासादनेषु आप्ऌ व्याप्तौ व्यापनस्य कर्त्रि निबन्धनस्य कर्त्रित्यस्यार्थः । स तु आसादनांशेऽवोपसर्गस्य सत्त्वात् तदर्थसंनिवेशे । यदपि विप्र वियोगे श्र्या.प.से.वी प्रजनादिषु युजिर् योगे रु.उ.अ.तत्र योगो युज समाधौ दि.आ.अनिटः.सम् आ डुधाञ् धारणपोषणयोः पुष धृतौ चुरादिः प.से.पुषेः पुष्ट्यर्थे आत्माश्रयः । प्पुष इत्यस्य प्रसक्तिर्नास्ति पद्यादित्वात् तत्र धारणपोषणयोरित्यत्र पुनरुक्तिप्रसङ्गः । यदि च धृञ् धारण इत्यस्याग्रहणे धृङ् अवध्वंसने भ्वा.आ.अ.धृङ् स्थाने तु.आ.अ. एतयोर्ग्रहणे न पुनरुक्तिप्रसङ्गः इत्युच्येत तदा तु वाक्यानामित्यनेनानन्वयः । नापि धृञ् धरणे इत्यस्य भ्वा.प.से.नापि धृ कौटिल्ये भ्वा.प.अ. वाक्यानामित्यनेनानन्वयः यदपि योगो युज संपर्के चु.प.सेटः पृच इयं संपर्के रु.चु.प.से. वाक्यानां प्र.पूरकं संपर्कस्य कर्त्रिति वाक्यानां प्रपूरकं बन्धनस्य कर्त्रित्यस्यार्थः संभवति । अमृतमिति न म्रियतेऽनेन । तनिमृङ्भ्यां किच्चेतितन् । अत्रे श्रुतिः तद्यत्प्रथममसृतं तद्वसव उपजीवन्त्यग्निना मुखेन न देवा अश्नन्ति न पिबन्ति एतदेवामृतं दृष्ट्वा तृप्यन्ति त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्तीति । तत् विस्तारकं वातेर्डिच्चेति सूत्रेण वा गतिगन्धनयोः डिद्विन् । वि.वसवः वस निवासे भ्वा.प.से.वसन्तीति वसवः 'शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च' इत्युः । देवा उपजीवन्ति द्वेषु क्रीडाविहारैर्जीवन्ति । जीव प्राणधारणे भ्वा.प.से.प्राणं धारयन्ति । अग्निना अगि गतौ अङ्गतीत्यग्निः गं आचार्येण मुखेन वन् भवदारणे भ्वा.रु.से.अ.वली

करणं, तत्रापि तेषामधिकारोऽङ्गीकर्तव्यः । हि युक्तोऽयमर्थः । एते हि वसव आधिदैविकभगवदवयवभूताः । अनशनात् । अन्यथा वसुत्वादिविरोधः ।

भाष्यप्रकाशः ।

स्फुटार्थम् । तत्र बाधकस्य सत्त्वात् कथं युक्त इत्यत आहुः एते हीत्यादि । साधकं हेतुमुक्त्वा बाधकं तर्कमाहुः अन्यथेत्यादि । अतिरिक्तानङ्गीकारे पूर्वपक्षोक्तरीत्या वसुत्वादिविरोधः ।

रश्मिः ।

डित् खनेर्मुट् चोदात्त इति सूत्रेणाच् अल् च डित्स्यात् । धातोर्मुट् स चोदात्तः इति वृत्तिः खन्यते खनति वा तन्मुखं प्रथममसृतमाचार्यो वा अस्मदीयः वसुभिराचार्याः खन्यन्ते पूर्वं पश्चादुपजीवन्ति इति तेन हेतुना । इदमुक्तं भवति—अव रक्षणप्रवेशतृप्तिकान्तिगतिक्रियादीप्तिप्रीत्यवगमस्वाम्यर्थयाचनश्रवणहिंसेच्छावृद्ध्यालिङ्गनावाप्तिदहनभावेषु भ्वा.प.सेट् एभ्यः दारणं भयं तत्कर्त्रो द भये भ्वा.प.से.अवदारणार्थकखनतिना । नाश्नन्ति अश भोजने क्र्या.प.से. भोजनविनाशं कुर्वन्ति पानस्य गमनस्य विनाशं कुर्वन्ति पा पाने भ्वा.प.अ., पा रक्षणे अ.प.अ., रक्ष पालने भ्वा.प.से., पल रक्षाय चु.प.से. अन्योन्याश्रयभियैतं विहाय पल गतौ भ्वा.प.सेटो ग्रहणम् । एतदिति गन्तृ एव इण् गतौ इण्शीभ्यां वन्निति वन् । अयनममृतं न म्रियतेऽनेन । दृष्ट्वा दृशिर् प्रेक्षणे । तृप्यन्ति तृप प्रीतौ दि.प.वेट् प्रीञ् तृप्तिकान्त्योः क्र्य.उ.अ. कामयन्ते च । कमु कान्तौ भ्वा.आ.से. कमेर्णिङ् स्वार्थे । त इति विस्तारकाः । एतद्गन्तृ एव अयनं तेन । रूपं व्याख्यातं मी विनाशाय प्र पूरकं रूपं पूरकः सन्वा सम् विशन्ति एतस्माद्गन्तृरूपात् रूपकरणकर्तुः उच्छब्दकर्तारो यन्ति गच्छन्तीत्यर्थः । देवान्तर्गता द्योतन्ते तेषां तृप्तीच्छयोरश्रोक्तेः पूरकत्वविषयिणी अभिसंवेशविषयिणी उदयनविषयिणी चेच्छासत्त्वाद् मत्त्यांचधिकारोऽङ्गीकर्तव्य इत्यर्थः । बाधकस्येति अनुपासकत्वरूपस्य कृतार्थत्वरूपस्य च । एते हीत्यादीति वस्वादिपञ्चगणसंख्याः ।

'वसवश्चाष्ट संख्याताः षट्त्रिंशत्तुषिता मताः ।
अभास्वराश्चतुःषष्टिर्वाता पञ्चाशदूनकाः ॥
महाराजिकनामानो द्वे शते विंशतिस्तथा ।
साध्या द्वादश विख्याता रुद्राश्चैकादश स्मृताः' ॥ इति ।

पश्चातिरिक्तानां यथासंभवं पञ्चस्वन्तर्भावः पञ्चमप्रपाठके पञ्चविधदेवोक्तेः । आधिभौतिकानां स्वखनमरुद्दिन्द्र प्रखिते मा हवींषीत्यत्र । तर्कं व्याकुर्वन्ति स्म अतीति । अतिरिक्तत्वेन प्रकारेणानङ्गीकारे यद्यतिरिक्ता न स्युराधिभौतिकादिषु न वसेयुरित्यन्यथाज्ञानं तर्कः । ननु 'विरोधः कर्मणीति चेन्न' इति सूत्रशंकरभाष्येऽतिरिक्ताङ्गीकारोऽस्तीति चेत्तत्राहुः पूर्वेति । मध्वादिसूत्रोक्तपूर्वपक्षरीत्यातिरिक्तत्वेन प्रकारेणानङ्गीकारे वसुत्वेति वक्ष्यमाणरीत्या तु वेत्तुर्वसुत्वादिविरोधः । ज्ञानेनादित्यत्वप्राप्तेः प्राप्तत्वात् । अत्र तु वसूनामेवैको मूलेति श्रूयते । यद्वा । अन्यथा अनाधिदैविकत्वे प्रकारे वसतीति व्युत्पत्त्या निवासकर्तृत्वस्यादिपदेन 'वासवं सामाभिगायति' इत्यत्र 'सास्य देवता' इति सूत्रेण देवतार्थकाण्विरोधः । वसवो देवता अस्य साम्न इति वासवमित्यस्य व्युत्पत्तेः । यथा तत्रेति छान्दोग्ये चतुर्थप्रपाठके ब्रह्मवादिनो वदन्ति यद्वसूनां प्रातःसवनं रुद्राणां माध्यन्दिनं सवनमादित्यानां च विश्वेषां च देवानां तृतीयसवनं क्व तर्हि यजमानस्य लोक इति स यस्तं

१. [illegible]

यद्वसूनां प्रातःसवनमित्यादिवत् । न हि जीवविशेषा दृष्ट्वा तृप्यन्ति ।

---

भाष्यप्रकाशः ।

तत्र दृष्टान्तः यद्वसूनामित्यादि । यथा तत्र यजमानाय वस्वादयोऽधिकारिणो वासवादि-सामगानेन प्रातरादिसवनानि प्रयच्छन्ति, तथात्राऽप्यमृतदानमेवोच्येत, न तु वस्वादिभावोऽपि । अतोऽत्र वेत्तुर्वस्वादिभावार्थोपास्या उपासा अतिरिक्ता अङ्गीकार्या इत्यर्थः । अनश्चनस्यैव-

रश्मिः ।

विधात् कथं कुर्यादथ विद्वान् कुर्यात् पुरा प्रातरनुवाकस्योपाकरणाज्जघनेन गार्हपत्यस्योदङ्मुखो उप-विश्य स वासव५ सामाभिगायति लो ३ कद्वारमपा वा ३ र्णू ३३ पश्येम त्वा वय५रा ३३३३३ हु ३ आ २३२ जा ३ यो ३ आ ३१११ इत्यथ जुहोति नमोऽग्नये पृथिवीक्षिते लोकं मे यजमा-नायविन्दैषा वै यजमानस्य लोके एतास्म्यत्र यजमानः परस्तादायुषः स्वाहापजहि परिघमित्युक्त्वो तिष्ठति तस्मै वसवः प्रातः सवन५ प्रयच्छन्तीति श्रुत्या यजमानायेत्यादिः । तथा चेति छान्दोग्ये पञ्चमे प्रपाठके तद्यत्प्रथमममृतं तद्वसव उपजीवन्तीत्युपक्रम्य स य एतदेवममृतं वेद वसूनामेवैको भूत्वाग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशन्ति एतस्माद्रूपादुदेति स याव-दादित्यः पुरस्तादुदेता पश्चादस्तमेता वसूनामेव तावदाधिपत्य५ स्वाराज्यं पर्येतेति श्रुत्या । वस्वा-दीत्यत्रादिपदेन रुद्राणामेवैको भूत्वा, आदित्यानामेवैको भूत्वा मरुतामेवैको भूत्वा साध्यानामेवैको भूत्वेति श्रुतिचतुष्टयम् । श्रुत्यर्थस्तु सद्वादिनो वदन्ति सद् ब्रह्मेति भाष्यात् । वद व्यक्तायां वाचि वि-प्रजनादिकर्त्री वी प्रजनकान्तिगत्यसनाखादनेषु वातेर्डिरिति वातेर्वा रूपम् । देवानां भक्ताः भज गतिक्षेपणयोः भ्वा. प. से. अजिघृषिभ्यः क्तः इति क्तः । गन्त्री क्षेपिका च क्षिप प्रेरणे प्रा पूरणे इर् गतौ कम्पने च अ. आ. से. कपि चलने भ्वा. आ. से. चल विल-सने लस् श्लेषक्रीडयोः श्लिष आलिङ्गने लिगि गतौ क्रीड विहारे हृञ् हरणे । स्वव्यापारैर्व्या-पिका सती गन्त्री विहर्त्री च । तस्यां वाचि । वदिः वच भाषणे अ. प. अ. उच्यते वक्ति वा वाङ् क्विब्वचीत्यादिना क्विप्दीर्घौ भाष व्यक्तवाचि भ्वा आ. से. भाषणरूपायाम् । तथा च वदन्ती-त्यस्य स्वव्यापारैरर्थव्यापकं गन्तृ विहर्तृ च भाषणं कुर्वन्तीत्यर्थः । यद्वसूनामिति यत् षष्ठ्या लुङ् याजकानां वसूनां वसतां प्रातः प्राततीति प्र. पूरकः सततगतिकर्ता । सवनं षु प्रसवैश्वर्ययोः भ्वा. प. अ. प्र. पूरकमैश्वर्यांशयश्च । रुद्राणां लौकिकः शब्दस्तं द्रवति द्रु गतौ भ्वादेराकृतिगणत्वात् । रोदयति रोदेर्णिलुक् चेति रक् रुद्रस्तेषां देवानां माध्यंदिनं मां ध्यायति ध्यै चिन्तायां 'आतोऽनुप' इति कः मध्यं तदेव माध्यं यद्वा मह पूजायां भ्वा. प. से. महते अध्न्यादयश्चेति यक् प्रज्ञादण् माध्यम् । दिनमिति दीयते क्षीणं भवति करोति दीङ् क्षये दि. आ. अ. इणसिञ्जिदीङ् इति नक् क्षयकर्तृ वेषामित्युप-क्रम्य 'हरिभ्ये तद्वनं शनैः' इति वाक्यं 'तश्चिन्तयान्यं निभृतो न वेद' इति प्रयोजनं 'भूमिर्भारा तथा चान्ये दुःखभावो हरिप्रियाः' इति भूभारक्षयद्वारेण क्षयद्वारा भक्तिर्वा प्रयोजनं सवनत्रुत्कार्यम् । आदित्यानामदितेरपत्यानां चकोरेणाह्लादकानां चदि आह्लादे चन्दते अन्येभ्योऽपीति कः विशेषं विश प्रवेशने तु. प. अ. 'अशुप्रुषिलटिकणिखटिविशिभ्यः कन्' सर्वनामसंज्ञोपत्य । चकोरेणाह्लादकानां देवानां तृतीयसवनम् प्रयाणां पूरणं सवनम् । त्रेः संप्रसारणं चेति त्रेः संप्रसारणं तीयप्रत्ययश्च । कुव कुटिलायां गतौ भ्वा. प. से. । केति कै शब्दे भ्वा. प. अ. क्रायतेर्डिमिः किम् कस्मिन्निति क्व किमोऽत् सप्तम्यन्तात्किमोऽद्भ्य स्यात् पक्षे भक्ष् काति किमः केत्यादेशः स्यादिति प्रश्निकालभङ्गे वषट्कर्तरि

तस्मादिदं प्रथमप्रकरणमेव । योऽपि देवोपासनवत् प्रतीयते स भगवदंश

भाष्यप्रकाशः ।

स्त्यावकत्वे युक्तिमाहुः न हीत्यादि । नन्वेवमाग्रहे किं बीजमत आहुः तस्मादित्यादि । तथाचेदमेव

रश्मिः ।

तर्हि विस्तारके यजमानस्य पूजादिकर्तुः । लोक इति लोकृ दर्शने दृशिर् प्रेक्षणे प्रा पूरणे ईक्ष दर्शने ज्ञानभक्त्यादिलोकः शब्दकर्तरि । शब्द आविष्कारे व्यापके प्रादुर्भूते काले ज्ञानभक्त्यादीत्युक्तम् । 'कालात्मा भगवान् जातः' इति ज्ञापयितुं तथा 'कलाभिः पञ्चदशभिः स्वपक्षस्यापकैः स्तुतिः' इति सुबोधिन्याः । एति इण् क्विप् इतिः लोक इति एता प्रथमप्राप्तेः कर्ता । स इति स विस्तारकः यः पूजादिकर्ता । तद्विस्तारकं न विद्यात् जानीयात् कथं नाम शब्दकर्तृ प्रकारेण कुर्यात् । अर्थेति अर्थयते अर्थ याच्ञायां चु. उ. से. अन्येभ्योपीति डः पृषोदरादित्वाड्डलोपः याचको विद्वान् विस्तारकस्य विद्वान् कुर्यात् याचको श्रीमद्भागवतप्रसङ्गस्य 'ज्ञात्वाऽज्ञात्वा च कर्माणि' इति वाक्यमनुसंधेयम् । पुरेति पुर अग्रगमने तु. प. से. बाहुलकात्का अग कुटिलायां गतौ भ्वा. प. से. हृश्रेन्द्रेति साधुः । कुट कौटिल्ये तु मिथिलादयश्चेति ल्यू । प्राततीति प्रातः अट अत सातत्यगमने । संतन्यते तनु विस्तारे क्तः अनुदात्तोपदेशेति न लोपः । समोवाहिततयोरिति वा समो मलोपः पक्षे सन्ततम् । अनुवाकस्य अनु अनिति अन प्राणने बाहुलकादुः । वाकं वातीति क्विप् । काम्यते कम् । कमु कान्तौ णिजभावे विच् वागेव वाक् इति वा स्वार्थेऽण् । उच्यत इति वाकः घञ् 'चजोः कुघिण्यतोः' इति कुत्वं वा । तस्येत्यर्थः । व्यापकजीवन्मुक्तगुर्वाचार्यकरणात् । उप वेपृ कम्पने गतिविहारयोराकरणात् व्यापककरणात् । चतुर्थ्यर्थे बहुलं छन्दसि षष्ठी स्यादिति वैदिकप्रक्रियायाः सूत्रेण षष्ठी तेनानुवाकायेत्यर्थः । अघनेनेति हन्तेः शरीरावयवे चेति ह्रित्वमघ । अव उच् शब्दे अच् यु मिश्रणे एचोयवायावः गन्ता । गार्हपत्यस्येति गृहपतिना संयुक्तो ञ्यः । योगक्षेमः । उदक उद् अचतीत्युदक् ऋत्विगादिना क्विन् । मुखं खन् मुह । खनति अल् डित् भयार्थेभ्यो भयकर्तारं गत्वा विकृत्येत्यर्थकः । उपः वेपृ हुवप् वा । विश्य विश प्रवेशने पुरुकाद्धेतोर्विश्य । स विस्तारकः । वासव९वसुदेवताकं साम । स्यति षोन्तःकर्मणि दिवा. प. अ. मनिन् मद्भक्तपूजाप्यधिकेति वाक्यात् आधिक्यं प्राथम्यम् । अन्योन्याश्रयात् षोन्तकर्मणि धातुनिष्पन्नं साम योजनीयम् । कालकर्ता समाधिस्तत्कर्तरि साम सांत्वने चु. प. से. सान्त्वनं सामयोगः सान्त्व सामयोगे चु. प. से. साम सान्त्वप्रयोगे भीविनाशाय गायति भीरत्र प्राकृतत्वात् ।

'अर्चायामेव हरये पूजां यः श्रद्धयेहते ।
न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः' ॥ इत्येकादशस्कन्धात् ।

युज समाधौ युज संपर्के कालकर्तृसमाधिकर्तारम् । कालकर्तृसंपर्ककर्तारं चाभिगायति । षोन्तकर्मणीत्यत्रान्तःशब्दः अति बन्धने अरन् । अमेस्तुट् चेति अमेर्वा रूपं लौकिकमरनन्तम् । बन्ध बन्धने यम उपरमे यम परिवेषणे विष सेचने भ्वा. प. से. विषु व्याप्तौ ज. जु. उ. से. विष वियोगे क्र्या. प. से. शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्यादिति नैयायिककारिकायां 'सान्निध्यतः सिद्धपदस्य वृद्धाः' इति प्रोक्तेः सिद्धपदसान्निध्यात् शक्तिग्रहः । अन्तःस्वरूपं मनोहरम् । कर्म कालः क्रियते इति कर्म इति व्युत्पत्तेः । कालश्चेति भागवतम् । 'कालोऽस्मि लोकक्षयकृत् प्रवृद्धः' इति गीता । 'कालोऽस्मि मुरलीश्वरः' इति भगवद्वाक्यं श्रीगोवर्धनप्रसङ्गे । यद्वा अम गतिशब्दभक्तिषु यद्वा अम रोगे भ्वा. चु. प. सेटौ 'दृषिदमिपचाऽमिदमिद्धपूर्दिम्यस्तन्' । तिद्धतु लौकिकस्त्वयमिति पूर्वं व्युत्पत्ति सि.

११ अ० सु० १०

रश्मिः ।

तु विश्वः 'अतः प्रान्तेऽन्तिके नाशे स्वरूपे च मनोहरे' इति पोन्तकर्मणीति विसर्गरहितपाठे यदा तदा सुलोपः। 'अन्तः मध्ये तथा प्रान्ते स्वक्रियार्थे विचेतसि' इति विश्वः। पचाद्यच् विसर्गसाहित्ये। सामस्वरूपमाह लोकेति। ज्ञानभक्त्यादिर्लोकः द्वारं च द्व वरणे द्वारयति द्वार्यते वा पचाद्यच् वृञ् वरणे स्वा. उ. से. अपा वार्ष्णुः इति। अप आपु व्याप्तौ क्विप् आपः कर्माख्यायां ह्रस्वो नुद चेति नुट्। असुन् अपः। सकारवर्णलोपः। अप् आ आपु व्याप्तौ वेरर्थः प्रपञ्चनीयः व्यापक इत्यर्थः। वार्ष्णु वृषु सेचनसंघातवधेषु भ्वा. प. से. विकरणव्यत्ययः श्नुः गुणः लोण्मध्यमपुरुषैकवचनम्। प्लुतस्तु विचार्यमाणानां वाक्यानां टेः प्लुतः इति वैदिकीप्रक्रियायाः वकारस्य यद्वा प्रतिश्रवणे चेति सूत्रे वाक्यस्य टेः प्लुतोऽभ्युपगमे प्रतिज्ञाने आभिमुख्ये चेति वृत्त्याऽऽभिमुख्ये श्नु इत्यस्य टित्वात्। वकारस्य तु 'गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्' इति सूत्रेण बाहुल्कात् हेव्यापक 'अनुदात्तमभिपूजितयोः' इति सूत्रेणाभिपूजितवाक्ये प्लुतो वा। वध संयमने चु. प. से. यम उपरम इत्यादि ज्ञेयं गत्वा याचस्व। पश्येम त्वा त्वां हे व्यापक। हिंसकं विरहे। 'शुष्यसिभ्यां मदिक्' शुष हिंसायां भ्वा. प. से. अस भुवि असु क्षेपे दि. प. से. असु गत्यादानदीप्तिषु भ्वा. उ. से. वयं नित्यक्रीडायां सत्तादिकर्तारः असु क्षेप इत्यस्यापि रूपम्। भू सत्तायां क्षिप प्रेरण इत्याद्यूह्यम्। रा राजृ दीप्तौ भ्वा. आ. से. राजते कनिन्युवृषीति कनिन्प्रत्ययः। हु हूयते हु दानादनयोः बाहुलकान्मः कुममस्य लुक् अलुकि हुम्। आ व्याप्तिः क्विप् व्यापकं वा आ 'व्यवहिताश्च' इति वैदिकप्रक्रियासूत्रान्मध्ये अव्ययद्वयम्। त्वां राजानं सुपो डा। हु दानादानाभ्याम्। औत आव्यापकं यो इति यः अ इति छेदः याजकः अम् विष्णुम् आव्यापकमिति एता। अय। अर्घ्यते अर्थयित्वा साम जुहोतीत्यर्थः। नम इति णम प्रह्वत्वे भ्वा. प. से. असुन् प्रह्वत्वं ह्व कौटिल्ये भ्वा. प. अ. अस्य लौकिकत्वे त्वनन्तस्यापि प्रश्नाख्यानयोरिति वैदिकप्रक्रियासूत्रेण प्रश्ने अगमा३ पूर्वा३न् ग्रामा३ नित्यन्येष्वपीति ह्रः। अभये अगि गतौ अङ्गति पृथिवीति प्रथते प्रथ विस्तारे भ्वा. आ. से. प्रथ प्रख्यानेति रूपं तदेव प्रथेः ष्विवन् संप्रसारणम्। षित्वान्ङीष्। तस्यां क्षिते निवसते क्षि निवासगत्योः तु. प. अ. अग्निविशेषणम् लोकं भक्तिज्ञानात्मकं यजमानाय विन्द लभस्व एष गन्ता 'अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः' इति श्रुतेः तस्य लोको ज्ञानादिः वै वाति डैः यजमानविशेषणं याचकस्य यजमानस्य एतास्मि अहं सत्तादिकर्ता यजमानः। परस्तादिति परा अस्तातिः परस्यां दिशि अन्यमार्गं कालेमार्धिरिति कालभृतौ स्वार्थे अस्तातिः 'विभाषा परावराभ्याम्' इति सूत्रेण दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिरिति सूत्रमनुवर्ततेऽत्र। ननु पॄ पालनपूरणयोरिति पूरके काल इति युक्तं कुतो दिवीति उच्यते दिक्कालौ नेश्वरादतिरिच्येते इति पदार्थखण्डनमण्डने शिरोमणिरितीश्वरपूरककालशरीरत्वाद्दिवीति। आकाशशरीरं ब्रह्मेति श्रुतेः सूत्रस्य लौकिकत्वाद्वाऽलौकिके वावदेशितव्। पालनपूरणकर्तरि। अग्नेति परमैश्वर्यवति। इदि परमैश्वर्ये इत्यस्येदम्। आजुष इति। आजुषो शुष हिंसायाम्। भ्वा. प. से. शिप् शुष्यते शुषति वा शुट्—आशुः आशुषी अततीला अट् बाहुलकाच्छुट्। तद्वितः। स्वादेति स्वाद आस्वादने भ्वा. आ. से. स्वादतेनेन अप्रत्ययः पृषोदरादित्वादस्य हुः हु हु आहूयते अनेन वा डा प्रत्ययः भक्तिज्ञानादिः अपयतीति अपः आपु व्याप्तौ अहि। परिघमिति पूर्वं घात्यं च नं परौ च इति सूत्रेण परिहन्यतेऽनेनेति करणे अप् घनादेशः परौ हन्तेरप् स्यात् करणे घनश्चादेश इति वृत्तिः आत्मा प्रपञ्चादिवा। इतीति एतत् कथा उत् अन्यः कर्मा तिष्ठति। [illegible] तिमिरघ्नके वर्ति नि माप्य करोति तथा इति [illegible]। [illegible] यजमानः [illegible] [illegible]-

भाष्यप्रकाशः ।

प्रश्नवाक्यस्थे लिङ्गमित्यर्थः । देवोपासनवदिति । देवोपासने उपास्यवदिति पाठः प्रतिभाति । सप्तम्यर्थे वा वतिः । ननूभयत्र कल्पनातौल्ये पूर्वपक्षरीत्यैव निर्णयोऽस्तु । विशेषाभावादित्यत

रश्मिः ।

मीश्वरं प्रयच्छन्तीत्यर्थः दाण्धातोः यच्छादेशः । ददति । प्रकृतमुच्यतेऽधुना । प्रातरादित्यादिपदेन माध्यंदिनं सवनं तृतीयं सवनं च । तथाग्रापीत्यत्र तद्यत्प्रथमममृतमित्यादि छान्दोग्ये तद्व्याकृतम् । स य एतदिति व्याक्रियते । स विस्तारकः य इति याजकः एतदिति गन्तृ एवं गन्तुः अमृतमानन्दरूपं वेद जानाति छन्दसि लुङ्लिङ्लिटः धात्वर्थानां संबन्धे सर्वकालेष्वेते वा स्युरित्यनेन लडर्थे लिट् । वसूनामेव गन्ता तेषु । एकं इण् । 'इण्मीति' कन् गन्ता तस्यासाधारणस्य वेदस्य सर्वात्ममावयत् । भूत्वा सत्तां कृत्वाऽग्निनैवेत्यादि व्याख्यातम् । स यावदिति स विस्तारकः । यावत् या प्रापणे अ. प. अ. प्रथमान्ताद्वतिः प्रापकः आदित्यः अक्लिष्टकर्मा लवनकर्त्री विनाशकर्तृकर्म्याः । अपत्यं न पतन्त्यनेनेत्यपत्यं ण्यत् वृद्ध्यभावश्छान्दसः पुंनाम्नि नरके अनेन न पतन्तीति यत्परिमाणं यस्य तद्धिता इति बहुवचनेनान्येऽनुक्ता अपि तद्धिता ज्ञापिताः तेन डावतुः यावदिति वा । पुरस्तादिति पूर्वस्मिन् सप्तमीत्यस्तातिः अस्ताति चेति पुरादयः पूर्वपूरणे भ्वा. प. से. पूर्वेति अच् पूरक इत्यर्थः । उच्छब्दः । कर्ता एता तृच् गन्ता आदित्यः स च मधुरिति बोध्यम् । पश्चादिति अवरस्मिन् पश्चादित्यनेनावरस्य सप्तमीपञ्चमीप्रथमान्तस्य निपातः । अवरमवरीणाति रीङ् स्रवणे भ्या. प. अ. क. यद्वा रा. आदानेऽवराति अव धातोरर्थकर्दून् सन्मार्गवर्तिनः आ. व्यापकान् कृत्वा यथाधिकारं ददातीत्यवरं परं अथ तस्मिन् च्छब्दकर्तेत्यादि पूर्वोक्तमन्वेति पसि विनाशे वा. चु. प. से. पसयति पश्चात् बाहुलकाद्धातुप्रत्ययः । 'स्तोश्चुना श्चुः' नकारलोपः पूरके विरुद्धशब्दकर्दून् विनाशयति भक्तिमार्गे । अस्तमिति असते असु क्षेपे दि. प. से. क्तप्रत्ययः एता गन्ता तस्य वसूनां या च गन्ता । तावद्दिति तत्परिमाणमस्य डावतुः तद्धितः विस्तारकं परिमाणम् । आधिपत्यमिति पातीति पतिः पातेर्डतिः पतावित्यधिपति तस्य भावः आधिपत्यम् । अधिकरणरूपरक्षकत्वम् । स्वं स्वन शब्दे शब्दकर्तुः वसूनां मध्ये शब्दकर्तुरित्यप्यन्वयः । आ. व्यापकं राज्यं राज्ञो भावः । पर्येता । परिपूरकः एता एष्यति अद्यतनकालो विवक्षितः इत्यर्थः । अमृतदानं स एतदेव रूपमभिसंविशतीत्यमृतदानं यस्य...... ...या तरोक्तं गृह्यते यद्वा वसवः प्रातःसवनं प्रयच्छन्तीत्यमृतदानं ( वस्वादीति अर्थापत्तिस्त्वेवं ) भाष्यार्थमाहुः अत इत्यादि । अत्र छान्दोग्ये पञ्चमे प्रपाठके स य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनेत्यादिना वेत्तुर्वस्वादिभावेनार्थापत्तिः वेदार्थत्वेन नित्यसंयोगार्थं वसव आध्यात्मिकाः आधिदैविकानां भगवदवयवत्वात् उपास्यत्वात् । एवं च शब्देन प्रमितस्योपजीवकमुख्यरूपस्यार्थस्यार्थान्तरं विनाऽनुपपद्यमानस्योपपत्तयेऽर्थान्तरमुपास्याधिदैविकमुख्यरूपं 'यो यदंशः स तं भजेत्' इति वाक्यात् भगवन्मूर्त्यसन्निविष्टम् । लोकमवगच्छे । तस्य कल्पना तथा उपास्या अतिरिक्ताः । अर्थापत्तिरर्थ-प्रत्यक्षेण शब्देन वा प्रमितस्य अर्थान्तरं विनाऽनुपपद्यमानस्योपपत्तयेऽर्थान्तरकल्पना । ननु च कं प्रति उक्तिरेषा उपास्या अतिरिक्ताः कल्प्येरन्निति पेच पुराणवासनायुक्तान् प्रति उक्तिरेषा इत्यबोधाम । महीत्यादीति । जीवेति 'शिशुमारः सर्वमूर्तिराधिदैविकरूपश्च यः सः । इदमेव दृष्ट्वा तर्पणमेव । इति पाठ इति उपासना पदे [illegible] प्राणस्याहुः सप्तम्यर्थे इति । [illegible]

एवाधिदैविकः । न वा पूर्वकल्पेन निर्णयः । तथा सति तेषामभावादनुपास्यत्वम् । अनित्यता च वेदस्य स्यात् । तस्माद् देवानामप्यधिकार इति शब्दबलविचार एव युक्त इति सिद्धम् ॥ ३३ ॥

इति प्रथमाध्याये तृतीयपादे अष्टमं तदुपर्यप्यधिकरणम् ॥ ८ ॥

## शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि ॥ ३४ ॥

इदानीं शूद्रस्याधिकारो निराक्रियते। यथा कर्मणि एतया निषादस्थपतिं

---

भाष्यप्रकाशः ।

आहुः न वेत्यादि । अनित्यतेति एतेषामेवोपास्यत्वे अनित्यतेत्यर्थः । एवमत्र देवादीनामपि कर्माद्यधिकारस्थापनेन तेषामपि हृद्यङ्गुष्ठमात्ररूपेण स्थितिरित्यपि साधितम् ॥ ३३ ॥

इति अष्टमं तदुपर्यप्यधिकरणम् ॥ ८ ॥

शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि ॥ ३४ ॥ अनुप्रसङ्गरूपां संगतिं बोधयितुमाहुः इदानीमित्यादि । जैमिन्यनभिप्रेते देवाधिकारे स्थापिते तद्वदत्र शूद्राधिकारोऽपि संभाव्यत इत्याशङ्कायां स निराक्रियत इत्यर्थः । ननूपनयनाद्यभावेन वैदिककर्मादावनधिकारस्य तस्मिन् सिद्धत्वात् संभावनैव कुत इति चेन्न । ब्रह्मविद्याया उपनयनानपेक्षत्वात् । वैश्वानरविद्यायां तान्हानुपनीयैवैतदुवाचेति श्रावणात् । न च तत्र प्राचीनशालादीनां ब्राह्मणत्वेन तस्योत्सर्गसिद्धत्वाद् वैशेषिकस्यैव तत्रानपेक्षा, न त्वौत्सर्गिकस्येति वाच्यम् । तथा सति तस्य प्रतिनियतवर्णोचितशाखीयसंस्कारत्वे पर्यवसानात् सच्छूद्रे च तदुचितस्य तस्य सत्त्वेनैवाधिकारसिद्धेः ।

रश्मिः ।

तिरिक्तो भवतु इति भावः । देवोपासने इव योऽर्थः प्रतीयते स भगवदंशः यद्वा प्रथमान्ताद्वतिः योऽप्यर्थो देवानामुपासनं उपास्योपासकव्यतिरिक्तं तद्वत्प्रतीयते उपासकादिराध्यात्मिकः आधिदैविक इति 'यस्त्वाध्यात्मिकः प्रोक्तः सोऽसावेवाधिदैविकः' इति वाक्यात् ब्रह्मण एतादृक्त्वात् । न न वेत्यादीति पूर्वकल्पः पूर्वपक्षः । तेषामिति उपासकानामभावात् उपासकत्वनिरूपितोपास्यत्वाभाव इति भाष्यार्थः । ननु शंकरभाष्ये योगिवदेवानामुपास्योपासकत्वं रूपान्तरग्रहणेनोपपादितमेवेत्यत आहुः भाष्ये नित्यतेत्याशयेनाहुः एतेषामिति । अनित्यसंयोगापत्त्यादनित्यतेति भावः ॥ ३३ ॥

इति अष्टममधिकरणम् ॥ ८ ॥

शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि ॥ ३४ ॥ अन्विति तेन पूर्वाधिकरणे प्रसङ्गसंगतिर्बोधिता । पूर्वत्र मनुष्याधिकारविचारेण स्मृते देवाधिकारे विचारिते जैमिन्यनभिप्रेते प्रसङ्गसंगतिः देवाधिकारेण स्मृते तदेवात्र शूद्राधिकारनिराकरणे उपेक्षानर्हत्वादनुप्रसङ्गः । शूद्राधिकार इति जैमिन्यनभिप्रेतः । तस्मिन्निति अपशूद्राधिकरणे षष्ठस्य प्रथमे पादे । तान् हेति छान्दोग्यसप्तमप्रपाठकेऽस्ति । तान् प्राचीनशालादीन् । केकयराजोवाच । वैशेषिकेति छान्दोग्यटीकायामुक्तत्वात् विशेषेण संग्रहस्य नमस्काररूपोपनयनस्य । औत्सर्गिकस्येति षोडश संस्कारान्तर्गतस्योपनयनस्य । तथा सतीति उपनयनस्य नमस्काररूपत्वे प्रकारे सति 'उपनीय' इत्यस्य टीकायां पादयोः पतनमकारयित्वेत्यर्थात् । तस्येति वैशेषिकस्य । प्रतीति । ननु प्रतिवर्णोचितेति वक्तव्ये नियतपदमधिकमिति चेन्न शूद्रेषु सच्छूद्रग्रहणार्थं नियतपदस्यावश्यकत्वात् । प्रतिनियता वर्णाः ब्राह्मणक्षत्रियवैश्यशूद्रा इत्येवं तेषामुचिता ये शाखीयाः संस्कारास्तत्त्वे । सच्छूद्र

याजयेत् सा हि तस्येष्टिरिति श्रुतेरैषिण्कुवाधायेति शूद्रस्येति लिङ्गात् दोहादौ च शूद्रस्याधिकारः । एवमिहापि संवर्गविद्यायां शूद्रस्याधिकार इति तन्निरा-करणार्थमिदमधिकरणमारभ्यते ।

एवं श्रूयते । जानश्रुतिर्ह पौत्रायण इत्यत्र हंसवाक्यश्रवणानन्तरं सयुग्वनो रयिकस्य समीपं गतः जानश्रुतिः पौत्रायण रयिकेमानि षट्शतानि गवामित्या-

---

भाष्यप्रकाशः ।

नच तस्य सामर्थ्यार्थित्वयोरभावः शङ्क्यः । विद्यायां बौद्धसामर्थ्यस्यैवापेक्षणात् । तस्य च प्राक्तनपु-ण्येनैव सिद्धेः । 'श्रावयेच्चतुरो वर्णान्' इति पुराणश्रावणविधानात् तच्छ्रवणेऽर्थित्वस्यापि सिद्धेः । तर्हि विद्याभाव एव बाधकोऽस्त्विति चेत् तत्राहुः यथेत्यादि । संवर्गविद्यायां कथमधिकार इति शङ्कायां तद्बीजं बोधयितुं विषयवाक्यमुदाहरन्ति एवमित्यादि उपदिष्टवानित्यन्तम् । श्रूयत इति छान्दोग्ये षष्ठप्रपाठकारम्भे एवं श्रूयते । सयुग्वन इति । युक्तवानिति युग्वा शकटविशेषः । तेन सह वर्तमानः सयुग्वा तस्य । रयिक इति तस्य रूढं नाम । जानश्रुतिरिति । जनश्रुतेरपत्यम् । पौत्रायण इति । पुत्रस्य पौत्रः । देवतामिति । उपास्यां देवताम् । अ ह हारेत्वा शूद्र तवैव सह गोभिरस्त्विति । अः प्रतिषेधे । हेत्याश्चर्ये । हारेत्वा हारेण युक्त इत्वा रथः । शूद्रेति संबोधनम् । गोभिः सह यदानीतं तत्सर्वं तव निकट एव तिष्ठ-त्वित्यर्थः । केचित्तु, अरे शूद्र त्वा त्वाम् अहह धिक् । स आनीतो रथादिर्ह तवैवास्त्वित्यर्थं

रश्मिः ।

इति सम्बुद्धौ गोपनायितौ । अभाव इति यथाह माधवीये जैमिनीयन्यायमालाविस्तरे क्रतुविधि-वैयर्थ्यपरिहाराय शूद्रस्याविहिता विद्यापि कल्प्यते क्रतुविषयस्त्रैवर्णिकानुष्ठानेनैव चरितार्थाः । अतो न शूद्रस्य विद्यां कल्पयतीति अतो विद्यासामर्थ्यं श्रवणार्थित्वं तयोरभावः । बौद्धेति बुद्ध्या निष्पाद्यते इति बौद्धं शैषिकोण् । सामर्थ्यं तस्य । यथेत्यादीति श्रुत्यर्थस्तु वास्तुमयं रौद्रं चरुं निर्वपेत् इति प्रकृत्य श्रूयते एतयेति । एतयेष्ट्या निषादस्थपतिमित्यत्र न षष्ठीतत्पुरुषः निषादानां स्थपतिरिति ब्राह्मणत्वादित्रिकवाचिना निषादशब्देन तत्रिकसंबन्ध उपलक्ष्येत ब्राह्मणत्वाद्यन्यत-मत्वं शक्यतावच्छेदकमिति अतो निषादश्चासौ स्थपतिश्चेति कर्मधारयः अत्र निषादत्वत्वं शक्य-तावच्छेदकं षष्ठी नास्तीति नोक्तदोषः हविः पयआदि तत्कृत् । आधाव धावु गतिशुद्ध्योः भ्वा. उ. से. आगच्छ लोड्मध्यमपुरुषः इति शूद्रस्य शूद्रसंबन्धि दोहादावित्यादिपदेन धावनश्र-वणयोर्ग्रहणम् । संवर्गेति संवर्गस्य वायोः प्राणस्य विद्या 'वायुर्वा व संवर्गः' इति श्रुतेः प्राणो वा व संवर्ग इति श्रुतेश्च । तद्बीजमिति अधिकारबीजम् । शूद्रेति संबोधनम् । सयुग्वन इति प्रतीकं हंसवाक्येत्यादि लौकिकशब्दैर्भगवदाज्ञया सहर्षयं मोहकैर्भाष्यैः स्पष्टं व्याकृतमिति न व्याकृतम् । यदि च पूर्वमीमांसाकारिकासु 'लोकदृष्ट्या यदा वेदः स्पृश्यते नाखमेति हि' इति कारिकया लोकदृष्ट्या सर्वे उक्तो नाशो अलौकिकशब्दैः व्याकरणमपेक्षते इत्युच्येत तदपि अयव-च्छिन्नाधानात् कश्चिदुच्यते तदिदानीमपि बोध्यम् । श्रुतिस्तु जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस स ह सर्वतः आवसथान् मापयांचक्रे सर्वत एव मेऽत्स्यन्तीति अथ ह हंसाः निशायामतिपेतुः तद्धैवं हंसो हंसमभ्युवाद होहोऽयि भल्लाक्ष भल्लाक्ष जानश्रुतेः पौत्रायणस्य समं

विना देवतां पृष्टः प्रत्युवाच। अ ह हारे त्वा शूद्र तवैव सह गोभिरस्त्वित्यादिना जानश्रुतिं शूद्रशब्देन संबोध्य, पुनश्च, शूद्राऽनेन मुखेनेत्युक्त्वा संवर्गविद्यामुपदिष्टवान्। अतोऽत्र विद्यायां जातिशूद्रस्याप्यधिकार इत्याशङ्क्य परिहरति। नात्र शूद्रशब्दो जातिशूद्रवाची। किंतु मत्सरयुक्तस्त्वमत्र नाधिकारीति तथा संबोधनम्। तदाह। शुक् शोकः, अस्य जानश्रुतेः समजनि। तत्र हेतुः। तदनादरश्रवणात्। तस्माद्धंसावनादरस्य श्रवणात्। कंवर एनमेतत्सन्तं सयुग्वानमिव रयिकमात्थेति स्वापकर्षश्रवणात्। किमतो यद्येवमत आह तदाद्रवणात्। तत् तदनन्तरम् आद्रवणात्। शुचमनु आद्रवतीति शूद्रः। परोक्षवादार्थं दीर्घः

---

भाष्यप्रकाशः।

व्याकुर्वन्ति। मुखेनेति द्वारेण। सूत्रमवतार्य व्याकुर्वन्ति। अत इत्यादि। कं वर एनमेतदित्यादि। कं वरा. कम् उ अरे एनं राजानमेतावत्कर्मकर्तारं सन्तं सयुग्वानं रयिकमिवात्थेत्यर्थः। शुचमन्वित्यादि। अत्र दीर्घः पृषोदरादित्वाद् वर्णान्तरलोपस्याप्युपलक्षकः।

रश्मिः।

दिवाज्योतिराततं तन्मा प्रसांक्षीः। तत्त्वा मा प्रधाक्षीरिति तमु परः प्रत्युवाच कम्वर एनमेतत्सन्त॰ सयुग्वानमिव रैक्क मात्थेति योनुकथ॰ सयुग्वा रैक्क इति। यथा कृताय विजितायाधरेयाः संयन्त्येवमेन॰ सर्वं तदभिसमैति यत्किंच प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद स मयैतदुक्त इति तदु ह जानश्रुतिः पौत्रायणः उपशुश्रावेति। श्रद्धयादेयो हि श्रद्धापुरःसरमेव ब्राह्मणेभ्यो देयमस्येति णिनिः। बहु प्रचुरं दातुं शीलमस्येति बहुदायी। भोजनार्थं बहु पाक्यमस्यास्तीति बहुपाक्यः। कस्मिंश्चिद्देशे आस बभूव स ह सर्वतः सर्वासु दिक्षु आवसथान् वसतिस्थानानि मापयांचकार कारितवान् शब्दितवान्वा। सर्वत एव सर्वावसथेष्वेव मे मम अन्नमत्स्यन्तीति लोका इत्यभिप्रायवान् विशिष्टान्नदानफलं दर्शयितुमाह अथ हेति अथ एवं सति ह कस्मिंश्चिद्घर्मकाले निशायां हर्म्यतलस्थे राजनि हंसा राज्ञो दर्शनगोचरे निपेतुः गतवन्तः। तत् तस्मिन् काले पृष्ठतः पतन्नेको हंसोऽग्रतः पतन्तं हंसं होहोऽयि भल्लाक्ष भल्लाक्ष इत्यादरेण संबोध्य मा प्रसांक्षीस्तेन ज्योतिषा सह संबन्धं मा कार्षीः तत्र हेतुः तज्ज्योतिस्त्वा त्वां मा प्रधाक्षीः छान्दसत्वान्मध्यमः मा कार्षीद् दहनं। तमुपर अग्रगामी हंसः कं उ अरे इतिच्छेदः। अरे हंस एनं प्राणिमात्रं कमु सन्तं केन माहात्म्येन युक्तं सन्तं जानन् त्वं एतत्पूर्वोक्तं वचनमात्थ कमिव रैक्कमिव रैक्कतुल्यत्वेनोक्तवानसि। कीदृशं रैक्कं सयुग्वानं कथं केन प्रकारेण वा रयिको वर्तते इति एनं रैक्कं। तत्र दृष्टान्तः यथा कृतायेति ईयते प्राप्यते जयोऽनेनेत्यायः इणो धातोरकर्तरि च कारके संज्ञायामिति सूत्रेण घञन्तमिदं रूपमक्षवाचकं द्यूतसमये वराटकगणनायां यत्र चत्वारोऽवशिष्यन्ते स प्रकृतायः यत्र त्रयः स त्रेतायः यत्र द्वौ द्वापरः यत्रैकः स कलिनामा यथा लोके कृतो नामा यः अक्षः द्यूतसमये प्रसिद्धश्चतुरङ्कः तस्य विजिताय विजयार्थं इतरे अधरेया न्यूनसंख्यात्र्यङ्कद्व्यङ्कैकाङ्काः क्रमेण त्रेताद्वापरकलिनामानः संयन्ति तत्रान्तर्भवन्ति न्यूनसंख्याया अधिकसंख्यायामन्तर्भूतत्वादिति। यस्तदिति यद्वेद्यं स रैक्को वेद तद्वेद्यं योऽन्योऽपि वेद तत्कोऽपि सर्वं सर्वप्राणिजातधर्मफलमन्तर्भवतीति। स मयेति स एवं भूतो विद्वान् मया एतद्वेद्यं रैक्कवत्कृतान्ता[illegible]नीय उक्त इत्यर्थः। इति शब्दो हंसवाक्यसमाप्त्यर्थः। प्रकृतमुच्यते शुचेति [illegible]

सर्वज्ञत्वज्ञापनाय । रूढिर्योगमपहरतीति न्यायात् कथमेवमत आह सूच्यते हि । तस्य सर्वज्ञत्वं सूच्यते । हंसवाक्याच्छोके जाते, त्वमागत इति । अन्यथा प्रप-

---

भाष्यप्रकाशः ।

रूढिरित्यादि । पूर्वतन्त्रे उक्तन्यायात् रथकारपदे रूढिरेवादृता, न तु योग इति कथमत्र तद्विरुद्धमाद्रियत इत्यर्थः । ननु स्वस्य सूचनमेवात्राभिप्रेतमिति कथं ज्ञेयमत आहुः अन्य-

रश्मिः ।

नश्छान्दसोऽन्त्यस्य विशेषणं पापकर्षणार्थं लौकिकी व्युत्पत्तिस्तु युगं वहतीति युग्यो बलीवर्दः सोऽस्यातीति युग्वा शकटी मत्वर्थीयः अकारः । तया सह वर्तते इति सयुग्वा ङ्वनुप्रत्ययान्तो निपात इति । विशेषणं संपत्ति सूचनार्थमिति सा क्लिष्टा सोऽधस्ताच्छकटस्य पाप्मानं कषमाणमिति श्रुतिर्नपुंसकलिङ्ग-विरुद्धा च । रूढमिति समुदायशक्ती रूढिस्तद्युक्तं जनश्रुतेरिति छान्दस इञ् तस्यापत्यमिति सूत्रेण वा । जानश्रुतिशब्दस्य पौत्रायणस्यार्थमेवमुक्तं एतेन जनश्रुतस्यापत्यमिति विग्रहे अपत्यस्य प्रपौत्रत्वेन विवक्षापत्तिः । लोके तु जनश्रुतस्यापत्यं अत इञ् । पौत्रायण इति पुत्रस्यापत्यं पौत्रिः तस्यापत्यमत इञ् वा तस्यापत्यं पौत्रायणः यञिञोश्चेति फक् । टीकायां तु जनश्रुतपौत्रस्यापत्यं पौत्रायण इति तदभेदान्वये विरुणद्धि । न च जनश्रुतस्यापत्यमिति विग्रहे अपत्यं प्रपौत्रत्वेन विवक्षितमिति वाच्यं ॐ देवतामितीति । अत्र पूर्वं हंसवाक्यश्रवणानन्तरमिति भाष्योक्तवाक्यश्रवण-श्रुत्युपयुक्ता श्रुतिरुपन्यस्ता । अधुना रयिक्केमानीति श्रुत्युपयुक्ता श्रुतिरुच्यते हंसवाक्यश्रवणानन्तरं पठ्यते सह संजिहान एव क्षत्तारमुवाचाङ्गारे ह सयुग्वानमिव रयिक्कमात्थेति यो नु कथं स युग्वा रैक्व इति यथा कृताय विजितायाधरेया संयन्त्येवमेनं सर्वं तदभिसमैति यत्किं च प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद स मयैतदुक्त इति स ह क्षत्तान्विष्य नाविदमिति प्रत्येयाय त५होवाच यत्रारे ब्राह्मणस्यान्वेषणा तदेनमर्च्छेति सोऽधस्ताच्छकटस्य पाप्मानं कषमाणमुपोपविवेश तं होम्युवाद त्वं नु भगवः सयुग्वा रैक्व इत्यहं ह्यरा ३ इति ह प्रतिजज्ञे स ह क्षत्ताविदमिति प्रत्येयाय । तदुह जानश्रुतिर्ह पौत्रायणः षट् शतानि गवां निष्कं अश्वतरीरथं तदादाय प्रतिचक्रमे इति श्रुत्यर्थो भाष्ये सयुग्वन इत्यादिनोपनिबद्धः तं हाभ्युवाद रयिक्केमानि षट् शतानि गवामयं निष्कोऽयमश्वतरीरथो नु म एतां भगवो देवता५शाधि यां देवतामुपास्से इत्युपास्यां देवतां श्रुतौ संजिहानः खट्वां त्यजन् अपारं सूतं अत्र अरे यो रैक्वः कथं सयुग्वा ऋच्छेति गच्छ स क्षत्ता पाप्मानं हि सन्तं कष हिंसायां भ्वा.प.से.छांदसः कानच् पामानमित्यपपाठः अ इति 'अ प्रतिषेधे अ स्यादभावे स्वल्पार्थे' इति विश्वः अभावस्यार्थे । ह हन्ति ३-अनाश्चर्यं हन्ति सिद्धान्तपक्षं पदत्रयव्याख्यास्वरसेनाहुः केचिदिति विरलः ह हेति परिक्षेपे तदनुमापकः शब्दो धिगिति । भाष्ये । आदिपदेनेतिपदं गृह्यते । ननु अरे शूद्रेति संबोध्येति कर्तव्ये शूद्रपदमात्रं कुत इति चेन्न अरे इत्यस्य क्वचिददर्शनात् । एव एव हारे त्वेति व्याकृतं नन्वरे शूद्रेति व्याख्यानमत्र दृश्यते इति चेन्न अन्यार्थत्वात् । संबोधनं च वाक्यार्थबोधाश्रयत्वेन वक्तुरिच्छाविषयत्वम् । उक्तश्रुतिवाक्यबोधाश्रयत्वेन वक्तू रयिक्वस्येच्छाविषयत्वं जानश्रुतेरस्तीति । भाष्ये । पुनश्चेति एतावद्धनेऽगृहीते सहस्रं गवामित्यादिना ततोऽप्यधिके द्रव्ये दुहितृसहिते प्राहिते च शूद्रानेनैव मुखेनालापयिष्यथा इति विद्यां शाधीति वदिष्यसि एवमुक्त्वा वायुर्वा संवर्गः

तस्य पिकारवचनमनर्थकं स्यात् । शुक्रआयमर्थो ब्रह्मविदः सर्वज्ञतेति । तस्य मात्सर्यनिराकरणं वा संबोधनफलम् । तस्मान्मुख्यं प्रत्याद्रवणादेव शूद्रपदप्रयोगो न जातिशूद्रवाची ॥ ३४ ॥

---

भाष्यप्रकाशः ।

येत्यादि । ननु स्वस्य सर्वज्ञत्वख्यापनार्थं प्रपञ्चिकारवचनमपि ब्रह्मविदोऽनुचितमित्यरुच्या पक्षान्तरमाहुः तस्य मात्सर्येत्यादि । एवमुक्ते मत्सरस्यातिदोषत्वं ज्ञात्वा तं स त्यजेत् तदुपाख्यानं श्रुत्वाऽन्योऽपि त्यजेदित्येतदर्थं तथा वचनमतो नानुचितमित्यर्थः । तस्मादिति । गमकेन योगोपोद्बलने रूढेरकिंचित्करत्वात् ॥ ३४ ॥

रश्मिः ।

इत्यादिना संवर्गविद्यामुपदिष्टवानित्यर्थः । संवृङ्क्ते सर्वान् ग्रसतीति संवर्गो वायुः प्राणश्च । प्रकृते । द्वारेणेति शास्त्रीयाभ्युपायेन ।

'ब्रह्मचारी धनादायी मेधावी श्रोत्रियप्रियः ।
विद्यया विद्यां यः प्राह तानि तीर्थानि षण्मम' ॥ इति वाक्यात् ।

'तस्या मुखमुपोद्गृह्णन्' इत्यत्र मुखमुपायत्वम् । तस्याः जानश्रुतेर्दुहितुः । सयुग्वानमिति कर्ममात्रकर्तारं जानश्रुतिं ज्ञानिनं रयिकमिव भणसि तदुक्तम् । 'कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म यदप्यकारणम्' इति । अत्रेति । शुचा आद्रवति गच्छति द्रु गतौ शुच उकारस्य दीर्घः स च वर्णान्तरस्य चकारस्य लोपस्याकारलोपस्य चोपलक्षकः । न चाकारलोपस्य किं प्रयोजनमिति वाच्यम् । ईदृशद्रवणस्य शूद्रत्वप्रयोजकत्वेनाकारस्य विग्रहे सत्त्वात् । भाष्ये । तदिति पञ्चम्यन्तमव्ययं क्रमवाचि तदनन्तरमित्यर्थः । न च तदेति वेदः अन्यथा शुचः पूर्वमपि द्रवेदेव । अन्येभ्योपीति ठः आद्रवणस्य विग्रहान्तःपातित्वात् शुचमन्वित्यर्थकथनम् । अलौकिक-विग्रहो वा । ननु शुद्र इत्युक्ते लाघवं न तु दीर्घे कृते इति चेन्न । 'परोक्षवादो वेदोयं परोक्षं च मम प्रियम्' इति भगवद्वाक्यात् तदर्थे दीर्घः तथा च श्रुतिः षड्रुतᳶसन्तं षड्रोतेत्या-

आचक्षते परोक्षेण परोक्षप्रिया इव हि देवा इति । ननु ज्ञानिनि राजकन्याग्राहित्वं गोसहस्रादि-ग्राहित्वेन वैराग्यपरितोषयोरभाववत्त्वं न संभवतीति चेत्तत्राहुः सर्वेति । रयिकस्य सर्वज्ञत्वख्याप-नाय । प्रकृते । रथेति षष्ठस्य प्रथमे पूर्वतन्त्रे चिन्तितम् । रथस्य कारो रथकारः इति योगस्य त्रिषु वर्णेषु सत्त्वादाधानश्रुतेः 'वर्षासु रथकार आदधीत इति रथकाराधाने त्रैवर्णिको रथकारो-ऽधिक्रियते । रथं करोतीति रथकारः । कर्मण्यण् । नैवं । रथकारपदस्य संकीर्णजातिविशेषे रूढ-त्वात् । वैश्यायां क्षत्रियाज्जातो माहिष्यः शूद्रायां वैश्याद्धुत्पन्ना करिणी तस्यां करिण्यां माहिष्या-दुत्पन्नो रथकारः । 'माहिष्येण करिण्यां तु रथकारः प्रजायते' इति याज्ञवल्क्यादिति । सूचनमिति हंसवाक्यादित्यादिभाष्यार्थे व्यञ्जनावृत्तिरेवात्राभिप्रेता । अन्यथेत्यादीति । भाष्ये । पिका-देति तेन केचिदित्यादिनोक्तव्याख्यानं सिद्धान्तपक्ष इति बोधितम् । अकिंचिदिति तथा च व्याससूत्राविरोध एव वचनाद्रथकारस्याधानस्य सर्वेषेत्यादित्यधिकरणस्य जैमिनिप्रणीतस्य प्रामा-ण्यमिति निबन्धटीका स्मारिता ॥ ३४ ॥

कुत एवमत आह—

क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥

जानश्रुतेः पौत्रायणस्य क्षत्रियत्वमवगम्यते। गोनिष्करथकन्यादानात्। न हि क्षत्तृप्रभृतयो ह्येते क्षत्रियादन्यस्य संभवन्ति। राजधर्मत्वात्। न ह्यन्यो ब्राह्मणाय भार्यात्वेन कन्यां दातुं शक्नोति। न च प्रथमहंसवाक्यं शूद्रे संगच्छते। उपदेशाच्चेति चकारार्थः।

भाष्यप्रकाशः।

क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥ सूत्रमवतारयन्ति कुत इत्यादि। ननु मास्तु शूद्रशब्दोऽत्र जातिशूद्रवाची, तथापि जानश्रुतिजातेरनुक्तत्वात् तदपेक्षायां स एवानुपूर्वीसामान्याज्जातिमपि बोधयिष्यतीति कुतस्तदनादर इत्यत आहेत्यर्थः। क्षत्तृप्रभृतय इति। बहुपाक्यत्वावसथकरणब्राह्मणभोजनक्षत्रन्ताः। बहुपाक्यत्वादीनां धर्मिष्ठे धनवति शूद्रे कदाचित् संभवेऽपि क्षत्तृस्थापनस्य राजधर्मत्वेनान्यत्रासंभवात् तत्प्रभृतित्वमुक्तम्। तस्यापि कथंचित् संभवमाशङ्क्य हेत्वन्तरमाहुः न ह्यन्य इत्यादि। पुराणादौ तद्दानस्य क्षत्रियकर्तृत्वेन स्मरणात् तथेत्यर्थः। शूद्रादारोपसंग्रहस्य मनुप्रभृतिभिरुक्तत्वात् तस्य च कन्यादानहेतुकत्वात् तस्यापि संभवमाशङ्क्य हेत्वन्तरमाहुः न चेत्यादि। प्रथमहंसवाक्यमिति। हो होयि मल्लाक्ष जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततं तन्मा प्रसाङ्क्षीस्तत्त्वा मा प्रधाक्षीरिति वाक्यम्। हो होयीति भयसूचकं संबोधनम्। दिवेति द्युलोकेन दिनेन वा। प्रधाक्षीरिति पुरुषव्यत्ययः। मा प्रदहत्वित्यर्थः। त्वा इत्यत्र सोर्डादेशो वा। तथा चैतादृशमाहात्म्यस्य शूद्रे अश्रुतत्वादस्मृतत्वाच्च न शूद्रे संगच्छत इत्यर्थः। उपदेशादिति रयिककृतादुपदेशात्। शूद्रे विद्योपदेशस्य क्वाप्यसिद्धत्वाद्त्रापि शूद्रश्रोतृकत्वस्याशक्यवचनत्वात् तथेत्यर्थः। एतेन यथा कृतायविजितायाधरेयाः संयन्त्येवमेनं सर्वं तदभिसमेति यत्किंच प्रजाः साधु कुर्वन्तीति रयिकमाहात्म्यबोधकस्य द्वितीयहंसवाक्यस्याप्यत्र प्रामाण्यं बोधितम्।

रश्मिः।

क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥ स एवेति यो जातिशूद्रवाची स एव शूद्रशब्दः शकारोत्तरोकारोत्तरदकारोत्तररेफोत्तराकारानुरूपानुपूर्वीसाम्यात् व्याकुलधिकरणेन जातिशूद्रत्वं अपिपदेन द्रव्यं बोधयिष्यति। तदनेनेति जातिशूद्रवाचित्वानादरः। क्षत्त्रिति अनेन क्षत्रियप्रभृतय इति पाठः क्वचित्पुस्तके कुतश्चिद्धेतोरिति बोधितम्। सहेतुस्तु तस्माच्चैत्ररथो नामैकः क्षत्रपतिर्जायत इति श्रुतिः। बह्वीति श्रुतिरुक्ता सह सर्वत आवसथान् मापयांचक्रे इत्यावसथकरणं सर्वत एव मेऽत्स्यन्तीति ब्राह्मणभोजनम्। स संजिहान एव क्षत्तारमुवाचेति। क्षत्ता। पुराणेति। तद्दानस्येति दुहितृदानस्य। नवमे सौभर्यादिभ्यः। आदिपदेनेतिहासे द्रष्टव्यम्। मन्विति तृतीयाध्याये मनुस्मृतिः।

'शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः स्मृता।
ते च स्वा चैव राज्ञश्च ताश्च स्वा चाग्र्यजन्मनः'॥ इति।

पुरुषव्यत्ययमाहुः त्वेति त्वं मा प्रधाक्षीः प्रदहेत्यर्थः। तथेति न जातिशूद्रत्वं किं तु क्षत्तृत्वम्। द्वितीयेति अग्रगामी पश्चाद्गामी च हंसः। अथेति क्षत्रियत्वावगतौ। अत्र हेतुः

तथापि संवर्गविद्यायां शूद्रस्यैवाधिकारं मन्वानस्य निराकरणार्थं हेतुमाह उत्तरत्र चैत्ररथेन लिङ्गात् । अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिमित्युत्तरत्र ब्राह्मणक्षत्रियौ तौ निर्दिष्टौ । कक्षा सेना यस्येति । कक्षसेनस्यापत्यं काक्षसेनिरिति । अस्य व्याख्यानं, चैत्ररथ इति । चित्रा रथा यस्य तस्यापत्यं, तेन चैत्ररथेन । कक्षारूपा रथा इति । व्याख्यानम् । एतेन वै चित्ररथं

---

भाष्यप्रकाशः ।

हीनान्यवर्णकन्यायाः प्रथमतः संग्रहे स्ववर्णहानेर्भलन्दनोपाख्याने सिद्धत्वाद्रयिकप्रथमविवाहस्यान्यत्राप्रसिद्धेरेतत्कन्याग्रहणेन दूष्यतायां रयिके तादृशमाहात्म्यस्यासंगत्यापत्तेरिति । ननु हंसवाक्यस्य धर्मिष्ठत्वादिमात्रबोधकत्वं, न तु क्षत्रियासाधारण्यमिति शङ्कायां सूत्रशेषमवतारयन्ति तथापीत्यादि । एवं ग्रहिलवादेन तथा मन्वानं निराकर्तुं हेतुमाहेत्यर्थः । उत्तरत्रेति उपसंहारवाक्ये । कथं तत्र क्षत्रियत्वावगतिरित्यत आहुः कक्षा सेनेत्यादि । तेन चैत्ररथेनेति क्षत्रियत्वावगतिरिति शेषः । काक्षसेनिपदस्य कथं चित्ररथपदव्याख्यानत्वमित्यत आहुः कक्षारूपा इत्यादि । 'कक्षः स्यादन्तरीयस्य पश्चादञ्चलपल्लवे । स्पर्द्धापदे च दोर्मूले' इति कोशे स्पर्द्धास्थानं कक्षापदेनोच्यते । तथाच चित्रत्वात् स्पर्धास्थानरूपा रथा इति हेतोः कक्षापदं चित्रपदव्याख्यानम् । सेनापदं च रथपदव्याख्यानमित्यर्थः । एवं क्लेशेन व्याख्याने किं बीजमित्याकाङ्क्षायां लिङ्गपदं विवृण्वन्ति एतेनेत्यादि । इदं च छन्दोगानां द्विरात्रे श्रूयते । एतेन वै चैत्ररथं कापेया अयाजयँस्तमेकाकिनमन्नाद्यस्याध्यक्षमकुर्वंस्तस्माच्चैत्ररथो नामैकः क्षत्रपतिर्जायत इति । तथाच समानान्वयानां समानान्वया एव याजका भवन्तीति प्रायेण दृष्टम् । अतः कापेयसं-

रश्मिः ।

हीनान्येति हीनः क्षत्रियादन्यवर्णस्तस्य कन्यायाः । भलन्दनेति अत एव मनुः—

'हीनजातिं स्त्रियं मोहादुद्वहन्तो द्विजातयः ।
कुलान्येव नयन्त्याशु ससन्तानानि शूद्रताम्' ॥ इति तृतीयाध्याये ।

धर्मिष्ठेति आदिपदेन ज्ञानित्वम् । क्षत्रियेति क्षत्रियत्वावगतावन्यसाधारण्यरहितं प्रामाण्यम् । एवमिति एवं सत्यपीत्यर्थः । उपेति तथा चोत्तरत्रोपसंहारवाक्ये चैत्ररथेन हेतुना ब्राह्मणक्षत्रिययोर्लिङ्गात् क्षत्रियत्वावगतिरित्यर्थः । कक्षा सेनेत्यादीति कक्षसेन इत्यत्र कक्षापदस्य छांदसं पुंस्त्वम् । काक्षसेनिरित्यत्रात इञ् । क्षत्रियेति । ननु तेन चैत्ररथेन कक्षारूपा रथा इति व्याख्यानमिति कुतो नान्वय इति चेन्न चैत्ररथपदस्य सौत्रानुवादत्वेन कक्षेत्यादिकस्य सूत्रान्तःपातप्रसङ्गात् । न चास्तु सूत्रान्तःपातः क्षत्रियत्वावगतेः चकारार्थोपदेशादुत्तरत्र चैत्ररथेन कक्षारूपा रथा इति व्याख्यानं ब्राह्मणक्षत्रियौ लिङ्गादिति व्याख्यास्यते इति वाच्यं गौरवात् । क्षत्रियत्वावगतेश्चोपदेशात् उत्तरत्र चैत्ररथेन हेतुना लिङ्गाच्चेत्यर्थे लाघवात् । चित्रपदव्याख्यानमिति स्पर्धास्थानं कक्षापदार्थः । तथाश्वतरी । चित्रा अश्वतरीयुक्ता रथा यस्य 'रथस्त्वश्वतरीयुक्तश्चित्र इत्यभिधीयते' इति ब्रह्मपुराणात् । कोशेति कोषशब्दो मूर्धन्यषकारान्तोमरकोषे । एतेनेति । द्विरात्रेण । अन्येर्याः स्पष्टाः अन्यत्र । तथा चेति श्रुतिद्वयस्य भाष्यीयत्वेन कक्षा सेना यस्येति व्याकरणस्य भाष्यीयत्वेपि प्राबल्ये प्रकारे च । समानः एकयाज्ययाजकभावः अन्वयः संबन्धरूपो येषाम् । अत इति श्रुतिद्वयस्य भाष्यीयत्वेन प्राबल्यात् ।

कापेया अयाजयन्निति । शौनकश्च कापेयो याजकः । याज्यश्च चित्ररथस्य पुत्रः काक्षसेनिरिति । ब्रह्मचारी ब्रह्मवित् । इमौ तु संवर्गविद्योपासकौ । प्राणाय हि

भाष्यप्रकाशः ।

बन्धात् काक्षसेनिश्चैत्ररथ इति तथेत्यर्थः । परिविष्यमाणौ ब्रह्मचारी बिभिक्ष इत्यादेस्तात्पर्यमाह । ब्रह्मचारीत्यादि । इमौ शौनकाभिप्रतारिणौ संवर्गविद्योपासकौ । संवर्गस्त्वधिदैवतं वायुरध्यात्मं

रश्मिः ।

'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सांनिध्यतः सिद्धपदस्य वृद्धाः' ॥

इत्यत्रोक्तेषु व्याकरणादिषु सिद्धपदस्य कापेयस्य शौनकत्वेन श्रीभागवते प्रसिद्धपदस्य सांनिध्यात् । तथेति जानश्रुतेः काक्षसेनिरूपचैत्ररथस्य क्षत्रियत्वेन प्रकारेणावगतिरित्यर्थः । काक्षसेनिश्चैत्ररथः इति कोषव्याकरणाभ्यां कक्षा सेनेत्यादि भाष्ये सिद्ध्यति । विवृतेरपि सिद्ध्यति श्रुतिद्वयोक्त्याभिव्यक्तसिद्धपदसांनिध्यतः शक्तिग्रहः आदृतः । चित्ररथेन हेतुना लिङ्गं चित्रपदसामर्थ्यं तस्मात् । अत्र क्लिष्टत्वे चैत्ररथेन हेतुना क्षत्रियत्वावगतिलिङ्गादपि सा वाक्यशेषसामर्थ्यात् । न चात्रपक्षे लिङ्गपदं विवृण्वन्तीति प्रकाशविरोध इति शङ्क्यम् । तस्याभासस्य ब्रह्मचारीत्यादीत्यत्रानुकर्षात् । न चाभासद्वयापत्तिः द्वितीयाभासे तात्पर्यं चाहुरिति चकारपरामर्शात् । न चात्र किं मानमिति शङ्क्यम् । भाष्यीयस्येतिपदस्य चैत्ररथपदव्याख्यानसमाप्तिद्योतकस्य मानत्वात् । न च चित्ररथेन हेतुना लिङ्गं चित्ररथपदसामर्थ्यं तस्मादित्यर्थेऽनुकर्षवैयर्थ्यमिति वाच्यम् । अस्य क्लिष्टत्वेऽनुकर्षादरात् । अस्य क्लिष्टत्वे किं मानमिति चेन्न । बहुभिर्हेतुभिः क्षत्रियत्वावगतेः साधनस्य भाष्याभिमतत्वात् । भाष्याभिमतत्वे तु एवं क्लेशेन व्याख्याने किं बीजमित्याकाङ्क्षायां लिङ्गपदं विवृण्वन्ति परिविष्यमाणौ ब्रह्मचारी बिभिक्षे इत्यादेस्तात्पर्यं चाहुरित्याभासः ब्रह्मचारीत्यादीत्यस्य । ब्रह्मचारीत्यादीति अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे तस्मा उ ह न ददतुरिति श्रुतिः संवर्गविद्योपदेशानन्तरं वर्तते । इमाविति । एतयोः प्राणवाय्वोः । स्तुत्यर्थमाख्यायिकामाह । अथ ह शौनकमिति शौनको नामतः कपेर्गोत्रापत्यं कापेयं अभिप्रतारी नामतः कक्षसेनस्यापत्यं काक्षसेनिः इमौ द्वावित्याहुः इमाविति इमौ तु विष वियोगे क्र्यादिः प. से. विष्लृत इति विष्यमाणो परितो विशेषेण संवर्गविद्यां युज्यमानौ ब्रह्मचारी ब्रह्मवित् बिभिक्षे भिक्षितवान् । तस्मै संवर्गविद्यामन्नं वा न ददतु यतः संवर्गविद्योपासकौ ।

'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्' ॥

इति वाक्यात् प्राणाय हि भिक्षा न तु ब्रह्मविदे तस्मान्न ददतुरिति स्थूलार्थः । न ददतुरित्यस्य ग्रन्थस्य भाष्यप्रकाशस्य । भाष्यस्य ब्रह्मचारी ब्रह्मवित् इमौ ददतुर्ब्रह्मवित्त्वव्यवच्छेदकः । संवर्गविद्योपासकौ न तु ब्रह्मविदौ प्राणाय हि यतो भिक्षा उक्तवाक्यात् तस्मात् ब्रह्मवित्त्वात् प्राणाय देयत्वाच्च संवर्गविद्यामन्नं वा न ददतुरिति प्राञ्जले व्याख्यानेपि दुरूहे जिज्ञासोदयाद्ब्रह्मचारीत्यादि तस्मादित्यनेन भाष्येण शुशुभुः । इमाविति इमौ त्विति भाष्यार्थोयं कः संवर्ग इत्यत आहुः संवर्गेति । वायुर्वाव संवर्गो यदा वा अग्निरुद्वायति वायुमेवाप्येति यदा सूर्योऽस्तमेति वायुमेवाप्येति । यदा चन्द्रोऽस्तमेति वायुमेवाप्येति

भाष्यप्रकाशः ।

प्राणः । यतो हेतोः प्राणाय भिक्षा । अन्नस्य प्राणभोगार्थत्वात् । तदयं ब्रह्मचारी जानाति न वेति संदिह्य न ददतुः । ततो—

'महात्मनश्चतुरो देव एकः कः सो जगार भुवनस्य गोपाः ।
तं कापेय नाभिपश्यन्ति मर्त्या अभिप्रतारिन् बहुधा वसन्तम्' ॥

इति ब्रह्मचार्युक्तः श्लोकः ।

'आत्मा देवानां जनिता प्रजानाᳫ हिरण्यदंष्ट्रो बभसो न सूरिः ।
महान्तमस्य महिमानमाहुरनद्यमानो यदनन्नमत्ति' ॥

इति कापेयोक्तेश्चेत्युभावपि श्लोकौ भगवतः प्रजापतिरूपबोधकत्वात् परंपरया भगवत्संबन्धिनौ । श्लोकार्थस्तु, महात्मनो माहात्म्ययुक्तान्, चतुरश्चतुःसंख्याकान् अग्निसूर्यचन्द्रापरूपान् देवान् वायुरूपेण, वाक्चक्षुःश्रोत्रमनोरूपान् प्राणान् प्राणरूपेण यो देव एकः कः प्रजापतिः सो जगार ग्रसितवान् । भुवनस्य भूतोद्भवस्थानस्य भूरादिलोकस्य गोपा रक्षकः । हे कापेय तं मर्त्या मरणधर्माणो विवेकशून्या नाभिपश्यन्ति न जानन्ति । हे अभिप्रतारिन्, बहुधा अध्यात्माधिदैवताधिभूतप्रकारैर्वसन्तमिति । द्वितीयश्लोके तु, हिरण्यदंष्ट्र इति, अमृतदंष्ट्रः । बभसो भक्षणशीलः । न सूरिः, न विद्यतेऽन्यः सूरिर्यस्मात् सः । अनद्यमानोऽन्यैरभक्ष्यमाणः । यद् यस्माद् अनन्नम् अग्निवागादिरूपमत्ति भक्षयति तस्मान्महामहिम इत्येवं वयं जानीम इति । तथाचेयं परंपरिता

रश्मिः ।

यदाप उच्छुष्यति वायुमेवापियन्ति वायुर्ह्येवैतान् संवृङ्क्ते इत्यधिदैवतम्, अथाध्यात्मं प्राणो वा व संवर्गः स यदा स्वपिति प्राणमेव वागप्येति प्राणं चक्षुः प्राणᳫश्रोत्रं प्राणं मनः प्राणो ह्येवैतान् सर्वान् संवृङ्क्ते इति तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषु प्राणं प्राणेष्विति श्रुत्युक्तः । संवर्ग इत्यस्य संवृङ्क्ते इति व्युत्पत्तिः । उद्वायति उद्वासनं करोति शाम्यति । अप्येति अपि एति संवृङ्क्ते ग्रसति । देवतेषु अधिदैवतम् । अव्ययीभावः । आत्मसु अध्यात्मम् । प्राणायेति भाष्यं विवृण्वन्ति स्म यत इति । हेत्वर्थः । प्राणेति निरन्नस्य प्राणा विपद्यन्त इति । अन्नस्य प्राणार्थत्वमध्यस्तजीवार्थम् । प्राणा इति प्राणभोगो जीवस्य । ब्रह्मचारीति भाष्यं विवृण्वन्ति तदयमिति । जानातीति ब्रह्मवित्त्वाज्जानातीति हेतोः वा विकल्पं न संदिह्य तत्संवर्गविद्यामन्नं वा न ददतुः । ननु प्राञ्जलार्थपरित्याग इति चेन्न दुरूहत्वात् । यथा 'एषोऽञ्जनावेषधरः किरीटी जित्वा वयं नेष्यति चाद्य गावः' इत्यत्र श्लोके प्राञ्जलार्थो वयं जित्वा गावो नेष्यतीति तथाप्यन्वयाभावात् तमव रक्ष यं जित्वा वः युष्माकं गा नेष्यतीति दुरूहान्वयस्तद्वत् । अथ वा तत्संवर्गविद्योपासनां ब्रह्मचारी ब्रह्मवित्त्वात्तज्जानाति संवर्गविद्योपासनासमये विभिक्ष इति न जानातीति संदिह्य तथापि क्लिष्टम् । ननु संवर्गविद्यायां वायुर्मुख्य इत्यधिदैवतमित्यधिदैवतत्वात् प्राणो गौणः अध्यात्मत्वात् ततश्च वायवे हि भिक्षेति वक्तव्ये प्राणाय भिक्षेति भाष्यं कुतः इति चेन्न । वायोरग्नि वायोरग्निरग्नेरापः इति श्रुत्युक्तकार्यकारणग्रहणापेक्षयाऽध्यात्ममित्यनेनात्मसंबन्धिप्राणस्य मुख्यत्वात् । उभाविति भाष्यं व्याचक्रुः तत्त इति । एकाद्यक्षरी जातिः वायुरूपेण प्राणरूपेणेति संवर्गविद्यायां स्पष्टम् । परंपरितेति । यदि तु कः इति प्रश्ने न चतुर्मुखे । हिरण्यदंष्ट्रः बभसः इति हिरण्मयवपुषि भगवति अपेक्षितमोक्षरि भगवति

भिक्षा। तस्मात्र ददतुः। उभावपि श्लोकौ भगवतः। तेन प्रकृतेऽप्येतौ गुरुशिष्यौ ब्राह्मणक्षत्रियावेवेति गम्यते । तस्मान्न जातिशूद्रः संवर्गविद्यायामधिकारी॥ ३५॥

## संस्कारपरामर्शात् तदभावाभिलापाच्च ॥ ३६ ॥

इदानीं शूद्रस्य कथञ्चिदपि ब्रह्मविद्यायामधिकारश्चेदश्राऽपि कल्प्येत। तन्तु नास्ति। सर्वत्र संस्कारपरामर्शात्। उपनयनसंस्कारः सर्वत्र परामृश्यते। तं होपनिन्ये अधीहि भगव इति होपससाद। तान् हानुपनीयेत्यादि प्रदेशेषूपनयनपूर्वकमेव विद्यादानं प्रतीयते शूद्रस्य तु, तदभावाभिलापात्। चतुर्थ एकजातिस्तु शूद्र इति, न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हतीति शूद्रस्य संस्कारनिषेधात्। चकाराच्च शूद्राय मतिं दद्यादिति निषेधः ॥ ३६ ॥

---

भाष्यप्रकाशः ।

ब्रह्मविद्या, न तु साक्षात् । तेन सिद्धमाहुः । तेनेत्यादि । उत्तरस्मिन् वाक्यशेषे । संवर्गविद्योपासकयोर्ब्राह्मणक्षत्रिययोरेवोक्तत्वेन प्रकृते तथेत्यर्थः । फलितमाहुः तस्मादित्यादि । तथाच परंपराविद्यायामपि यत्र नाधिकारस्तत्र साक्षाद्विद्यायां किं वाच्यमिति भावः ॥ ३५ ॥

संस्कारपरामर्शात् तदभावाभिलापाच्च ॥३६॥ ननु, 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' इति जैमिनिना श्रुत्यपेक्षया लिङ्गादीनां दौर्बल्यस्य साधितत्वात् तत्रापि क्लिष्टानां तेषां सुतरां तथात्वाच्छ्रुत्यैवाधिकारः शूद्रस्यादर्तव्य इत्याशङ्कायां सूत्रं पठित्वार्थमाहुः इदानीमित्यादि। बुद्धिस्थायां शङ्कायाम्, अधीहि भगव इति होपससादेति सनत्कुमारनारदसंवादस्थं प्रतीकम्। तत्र च, यद्वेत्थ तेन मोपसीदेत्यामन्त्रणे, ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमिति वेदाध्ययनलिङ्गादेवोपनयनसंस्कारप्राप्तिः। तान् हानुपनीयैवेति वैश्वानरविद्यायामपि प्राचीनशालादीनां षण्णां महाश्रोत्रियत्वलिङ्गादेव तत्प्राप्तिः। निषेधस्तु

रश्मिः ।

च न चतुर्मुखे ।तदा न परंपरिता ।तदा महात्मनश्चतुरोंऽशानभिपश्यन्ति । स्वगतद्वैतापत्तिमाशङ्क्याह देव एक इति 'एकमेवाद्वितीयं ब्रह्म' इति श्रुतेः। अग्रे स्पष्टम्। द्वितीये यदन्नमत्तीति भगवल्लिङ्गं 'अनश्नन्नन्योऽभिचाकशीति श्रुतेः । महान्तं महत्तत्त्वम्। ननु संवर्गविद्यायामुत्कृष्टेश्वरनिरूपणस्य को हेतुरिति चेच्छृणु ब्रह्मचारिणो वाक्यत्वात्तस्य च ब्रह्मज्ञत्वात् ॥ ३५ ॥

संस्कारपरामर्शात् तदभावाभिलापाच्च ॥ ३६ ॥ तेषामिति शुगस्य तदाद्रवणात् सूच्यते हीति वाक्यम्। उत्तरो वाक्यशेषः । तत्स्थब्राह्मणक्षत्रियलिङ्गं च । एतेषामुपपादितानाम्। शूद्रेति च ह हारे त्वा शूद्रेति श्रुत्या। बुद्धीति अस्मिन् काले दानीं च। अस्मामित्यर्थस्तदर्थ उक्तः। यद्वेत्थेति नारदं प्रति सनत्कुमारवाक्यम् । उपसीदेति लोट् आमन्त्रणे तव कामचारानुज्ञा अध्येमि स्मराम्यहमिति नारदोक्तिः। उपनयनेति 'अष्टवर्षं ब्राह्मणमुपनयीत' इत्यादि श्रुतेः। वैश्वानरेति छान्दोग्ये सप्तमप्रपाठकेऽस्ति । तानिति प्राचीनशालादीन्। ननु अनुपनीयेति सनत्कुमारवदिति कथं तत्प्राप्तिरिति चेत्तमाहुः निषेध इति । विशेषेण पृच्छते ये प्राचीनशालादयस्ते वैशेषिकाः शैषिकोऽण् वैशेषिकस्येति सामान्ये नपुंसकमित्येकवचनं यद्वा टीकायामुक्तस्योप समीपेऽनीच पादयो

तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥

इतश्च न शूद्रस्य सर्वथाधिकारः। तदभावनिर्धारणे शूद्रत्वाभावनिर्धारण-एव गुरुशिष्यभावप्रवृत्तेः। सत्यकामो ह जाबाल इत्यत्र, गौतमः सत्यकाम-मुपनिन्ये। नैतदब्राह्मणो विवक्तुमर्हतीति सत्यवचनेन शूद्राभावं ज्ञात्वैव। चकार एवार्थे। चकारेण निर्धारणमुभयज्ञानार्थम्। वर्णित्वं शूद्राभावं च। तस्मान्न शूद्रस्याधिकारः ॥ ३७ ॥

---

भाष्यप्रकाशः।

वैशेषिकस्यैवेति न दोषः। शेषं स्फुटम्। तथाचात्र 'आनर्थक्ये प्रमाणानां विपरीतं बलाबलम्' इति न्यायाच्च शूद्रश्रुतिमात्रेणाधिकारसिद्धिरित्यर्थः ॥ ३६ ॥

तदभावनिर्धारणे च प्रवृत्तेः॥३७॥ किमुभयमित्यपेक्षायामाहुः। वर्णत्वमित्यादि। अयमर्थः। तद्वाक्यानिश्चितेऽपि ब्राह्मणबीजत्वे व्यभिचारजन्यत्वाच्छूद्रता स्यात्। तदभावस्तु वामदेव्यसामोपासकस्य न कांचन परिहरेदिति सर्वगामित्वाभ्यनुज्ञानात् तज्जन्यस्य व्यभिचार-दोषानाक्रान्तत्वाद् वर्णत्वशूद्रत्वाभावं ज्ञात्वेति पूर्वेण संबन्धः ॥ ३७ ॥

रश्मिः।

पतनमकारयित्वैवेति व्याकृतेर्नमस्काररूपस्य उपनयनविशेषार्थत्वेन गृह्यते इति वैशेषिकं तस्य। शैषिकोऽण्। तान् ह्रानुपनीयेत्यत्र अन्यानुपनीयेति तात्पर्यवृत्त्या द्योतनादुपनयनपूर्वकमित्यादि भाष्यमन्वेत्येव यद्वा हन्ति इति ह्रः तान् ह्रानुपनीयेति पदच्छेदः। महाश्रोत्रियत्वेनाविद्याहन्तॄन् तथा च सुखेन भाष्यान्वयः। महाश्रोत्रियत्वेपि द्रव्याद्यभावाद्युवावस्थायामप्यनुपनीता इति ज्ञायते। न च टीकोक्तं तर्ह्यस्त्विति शङ्क्यम्। अनुपनीयेत्यस्य तन्मते शक्त्यभावात्। शेषमिति एकजातिः उपनयनहीनः न शूद्रः इति स्मृती मनोर्दशमाध्यायस्थे पातकं भक्ष्याभक्ष्याविभागकृतं न शूद्रायेति चतुर्थाध्यायस्था मनुस्मृतिः मतिं विद्याम्। एवं शेषं स्फुटमित्यर्थः। सिद्धमाहुः तथा चेति। प्रमाणानां 'शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि' वाक्यशेषः ब्राह्मणक्षत्रियलिङ्गम्। एतेषा-मानर्थक्यं विरोधो नञर्थविरुद्धार्थकत्वं तस्मिन् सति अह हारे शूद्रेति निरपेक्षस्वरूपश्रुत्यपेक्षया लिङ्गवाक्यानां शुगस्य तदनादरेत्यादीनां बलीयस्त्वम्। शूद्रश्रुतीति। शूद्रस्य निरपेक्षत्वमात्रेण॥ ३६ ॥

तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥ भाष्ये। कुत्रेत्याकाङ्क्षायामित्यत्रेति छान्दोग्ये एव षष्ठप्रपाठके जबालाया अपत्यं जाबालः। एतदिति त्वदुक्तं वचनं तव जाबालपृष्टगोत्रतन्मातृउक्त-गर्भितम्। सा मा प्रत्यब्रवीत् 'बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साहमेतन्न वेद यद्गोत्र-स्त्वमसि जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसि' इति सोहं सत्यकामो जाबालोस्मि भोः इति भो गौतम स्पष्टमन्यत्। सत्येति किं नु गोत्रो नु सोम्यासि इति गौतमेनोक्तः सत्यकामो नाहं वेद भो यद्गोत्रोहमस्मि इत्यादिसत्यवचनेन। शूद्रतेति प्रकृतग्रन्थः। सामानाधिकरण्यसंबन्धेन लक्षणया संस्कारानर्हता। कांचनेति स्त्रियम्। वर्णित्वेति। भाष्ये। शूद्राभावमित्यत्र भावप्रधानो निर्देश इति भावः ॥ ३७ ॥

श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च ॥ ३८ ॥

दूरे ह्यधिकारचिन्ता । वेदस्य श्रवणमध्ययनमर्थज्ञानं त्रयमपि तस्य प्रतिषिद्धम् । तत्सन्निधावन्यस्य च । अथास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणमिति । पद्यु ह वा एतच्छ्मशानं यच्छूद्रः । तस्माच्छूद्रसामीप्ये नाध्येतव्यमिति । उदाहरणे जिह्वाच्छेदो, धारणे शरीरभेद इति । दोहादौ शूद्रसंबन्धे मन्त्राणामभाव एव ।

स्मृतिप्रयुक्त्यापि वेदार्थे न शूद्राधिकार इत्याह स्मृतेश्च ॥ 'वेदाक्षरविचारेण शूद्रः पतति तत्क्षणादिति । चकारस्त्वधिकरणसंपूर्णत्वद्योतकः । स्मार्तपौराणिकज्ञानादौ तु कारणविशेषेण शूद्रयोनिगतानां महतामधिकारः । तत्रापि न कर्मजातिशूद्राणाम् । तस्मान्नास्ति वैदिके क्वचिदपि शूद्राधिकार इति स्थितम् ॥ ३८ ॥

इति प्रथमाध्याये तृतीयपादे नवमं शुगस्येत्यधिकरणम् ॥ ९ ॥

---

भाष्यप्रकाशः ।

श्रवणाध्ययनार्थ प्रतिषेधात् स्मृतेश्च ॥३८॥ पद्यु वेति । यदि उ वेति पदच्छेदः । शेषं निगदेन व्याख्यातम् । एवं सूत्राणि व्याख्याय प्रासङ्गिकमाहुः स्मार्तपौराणिकेत्यादि । अयमर्थः । पुराणान्तरे, 'श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः' इति शूद्रस्यापि सामान्यतः श्रावणविधानात् । स्मृतिकौमुद्यां स्कान्दे ।

'अस्ति शूद्रस्य शुश्रूषा पुराणेनैव वेदनम् ।
वदन्ति केचिद् विद्वांसः स्त्रीणां शूद्रसमानताम्' ॥ इति ।
'सिद्धान्तश्रवणं प्राहुर्द्विजानां मुनिसत्तम ।
शूद्राणां च विरक्तानां तथा स्त्रीणां महामुने ।
सिद्धान्तश्रावणं प्रोक्तं पुराणश्रवणं बुधैः' ॥

इति श्रवणबोधनात् । एकादशस्कन्धेऽपि, 'साधवे शुचये ब्रूयाद् भक्तिः स्याच्छूद्रयोषिताम्' इति भगवद्वाक्यात् । प्रथमस्कन्धे,

'स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।
इति भारतमाख्यानं कृपया मुनिना कृतम्' ॥

इति वाक्याच्च भारतपुराणश्रवणमसंदिग्धम् । ततश्च बुद्धिमतां ज्ञानमपि भवत्येव । परं तु तादृशज्ञाने,

रश्मिः ।

श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च ॥ ३८ ॥ भाष्ये । अथास्येति । माध्वास्त्वत्र श्रवणे त्रपुजतुभ्यां श्रोत्रपरिपूरणमध्ययने जिह्वाच्छेदः । अर्थावधारणे हृदयविदारणमिति प्रतिषेधादिति भाष्ये आहुः । रामानुजभाष्ये तु अथास्य वेदमुपशृण्वतः त्रपुजतुभ्यां श्रोत्रप्रपूरणम् । उदाहरणे जिह्वाच्छेदो धारणे शरीरभेदः इति स्मृतेश्चेति योगं भङ्क्त्वा तदर्थत्वेन स्मृतिरियमुक्ता । त्रपुजतुभ्यामिति सीसलाक्षारसाभ्याम् । अस्य शूद्रस्य श्रोत्रप्रतिपूरणं प्रायश्चित्तम् । अध्ययनप्रतिषेधश्रुतिमाहुः पद्यु हवेति । तेन शूद्रसंनिधावन्यस्य ब्राह्मणादेश्चेत्यस्य भाष्यस्य हेतुरियम् । अत एवार्थ-

भाष्यप्रकाशः ।

'आसक्तौ भगवानेव शापं दापयति क्वचित् ।
अहंकारेऽथवा लोके तन्मार्गस्थापनाय हि' ॥

इत्युक्तरीतिकेन शापादिना कारणविशेषेण शूद्रयोनिगतानां महतां विदुरवेदवादिदासीसुतसदृशां फलमुखोऽधिकारः । तादृशामेव तत्र कृतार्थत्वस्मरणात् । तत्र शूद्रयोनिगतत्वेऽपि न कर्मजातिशूद्राणाम् ।

'अत्रापि वेदनिन्दायामधर्मकरणात् तथा ।
नरके न भवेत् पातः किंतु हीनेषु जायते' ॥

इत्युक्तरीतिकेन कर्मणा जातिशूद्राणां न फलमुखोऽधिकार इति । ज्ञानादावित्यादिपदेन,

'जपस्तपस्तीर्थयात्रा प्रव्रज्या मन्त्रसाधनम् ।
देवताराधनं चैव स्त्रीशूद्रपतनानि षट्' ॥ इत्येतेषां संग्रहः ।

विदुरादीनां तीर्थयात्रादिदर्शनात् । इतरेषां त्वेतानि निषिद्धान्येव । अत एवेदानीन्तनानां तत्कर्तृणां कामक्रोधादय एव दृश्यन्ते, न तूपशम इति । एतदधिकरणद्वयं प्रासङ्गिकम् ।

रश्मिः ।

ज्ञानानुष्ठानयोः प्रतिषेधो भवति इति शंकरभाष्यम् । तत्र अनुष्ठानमधिकम् । अधिकरणेति न चानुक्तस्याधिकरणसंपूर्णत्वस्य वाचकश्चकार इति शङ्क्यम् । स्मृतिसमुच्चयवाचकत्वेन तस्यार्थस्य व्यञ्जनया द्योत्यत्वात् । स्मार्तपौराणिकज्ञानादाविति भाष्ये स्मार्तानां पौराणिकानां ज्ञानादाविति षष्ठीतत्पुरुषमित्याहुः बुद्धिमतामपि स्मार्तानां पौराणिकानां च । आसक्ताविति । पुष्टिप्रवाहमर्यादास्था कारिका । अन्यासक्तौ सत्याम् । यथा नलकूबरमणिग्रीवादेः । क्वचिदिति यत्रासक्त्यौत्कट्यं तत्र काले देशे वा । एवमहंकारे यथा चित्रकेतुपरीक्षितोः इन्द्रद्युम्नादौ । उभयाभावे कथं शाप इत्याशङ्क्याहुः लोक इत्यादि । यद्येवं न कुर्यात्तदा लोके भक्त्याद्याविर्भावाभावात् मर्यादादिमार्गा न भवेयुः तथा सति लोकोच्छित्तिः स्यादतो लोकसंग्रहार्थं तथाकरणम् । अत्र गमकमाहुः हीति । 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः' इति वाक्येन तथा निश्चयात् तत्रेति पुराणादौ तृतीयस्कन्धे मैत्रेय उवाच 'यत्त्वयानन्यभावेन गृहीतो हरिरीश्वरः' इति विदुरम् । विवृण्वन्ति स्म अत्रापीति इयं शास्त्रार्थ प्रकरणे । प्रव्रज्येति संन्यासः । अत्र शूद्रपदं कर्मजातिशूद्रपरमित्याहुः विदुरेति । इतरेषामिति कर्मजातिशूद्राणाम् । फलेति ।

'अनर्थोपशमं साक्षाद्भक्तियोगमधोक्षजे ।
लोकस्याजानतो व्यासश्चक्रे सात्वतसंहिताम्' ॥ इति ।
'तस्माद्भारत सर्वात्मा भगवान् हरिरीश्वरः ।
श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताऽभयम्' ॥

इति वाक्योक्तफलबलात् । तेनेति शूद्रेष्वपि शापशूद्रकर्मजातिशूद्रयोर्भेदेन । अथैवमिति अत्रापि पूर्वमिदं विचार्यते अत्र मनुस्मृतय उपन्यस्ताः । तास्तु श्रौतधर्मबोधकश्रुतिबाधिताः किं च सत्ययुगे प्रचारिता त्रेतादावव्याप्ता । अपि च वसिष्ठहारितव्यासपराशरभरद्वाजकश्यपप्रणीताः सात्विक्यः । याज्ञवल्क्यात्रितित्तिरिदक्षकात्यायनविष्णुप्रणीता राजसः । गौतमबृहस्पतिसंवर्तयम-

रश्मिः ।

शङ्खोशनःप्रणीतास्तामस्यः स्मृतयः । द्वादशस्मृतयो मुक्तिस्वर्गदाः शुभाश्च षट् निरयप्रदाः सात्त्विक-पद्मपुराणोक्ता तास्वगणिता चेति शूद्राणां विद्याधिकारः स्मार्तस्तु स्यान्न स्याद्वेति । स्यात् । मनुस्मृतेः सर्वसंमतत्वेपि दोषाणामुक्तत्वात् व्यवहारमयूखेस्या अभिप्रायवर्णनाच्चेति प्राप्तेऽभिधीयते । भाष्योक्तत्वान्मनुस्मृतेर्मुख्यत्वं श्रुतिबाधितत्वं नास्ति गेहस्थानीयत्वेन निबन्ध उक्तेः । शरीरस्थानीय-श्रौतधर्मस्य गृहोपस्करस्थानीयः पौराणधर्मः । तदुक्तम्—

'श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लङ्घ्य वर्तते ।
आज्ञाच्छेदी ममद्वेषी मद्भक्तोपि न मे प्रियः' ॥ इति ।

सत्ययुगे प्रचारितत्वमपि ।

'कृते तु मानवो धर्मस्त्रेतायां गौतमः स्मृतः ।
द्वापरे शङ्खलिखितः कलौ पाराशरः स्मृतः' ॥ इति ।

पराशरस्मृतेरुक्तम् । सा तु युगह्रासानुरूपतः ।

'न कश्चिद्वेदकर्ता च वेदं स्मृत्वा चतुर्मुखः ।
तथैव धर्मं स्मरति मनुः कल्पान्तरान्तरे' ॥
'अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरेऽपरे ।
अन्ये कलियुगे नृणां युगधर्मानुसारतः' ॥
'तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते ।
द्वापरे यज्ञमेवाहुः दानमेकं कलौ युगे' ॥ अग्रे ।

'कृते तु मानवा धर्माः' इति पाराशरस्मरणात् । टीकायां तु माधवाचार्याः । तर्हि त्रेतादिषु तपो नाद्रियेत कृतज्ञानयज्ञदानानि नाद्रियेरन् इति चेन्न । इतरव्यावृत्तिरूपायाः परिसंख्याया अत्र विवक्षितत्वात् । न खल्विदानीं कश्चित् अनुष्ठानविधिर्वक्तुमुपक्रान्तः येन विधिशेषः परिसंख्या शङ्क्येत भविष्यति तु षट्कर्माभिरत इत्यादिना तदुपक्रमः । युगसामर्थ्यं केवलमत्र निरूप्यते, यथा वसन्ते पुष्पप्राचुर्यं ग्रीष्मे संतापबाहुल्यम् । इत्यादि ऋतुसामर्थ्यं तथा कृतादिसामर्थ्येन तप आदिप्राचुर्यमित्याहुः अतो न मनुस्मृतिस्त्रेतादावव्याप्ता तास्वगणितेत्यसिद्धम् । भृगुप्रोक्तत्वेन तैत्तिरत्वात्स्वद्राजसेष्वस्यास्तैत्तिरपदेन गणनात् । तैत्तिरपदं त्वेवं स्मर्यते ।

'याज्ञवल्क्यं च आत्रेयं तैत्तिरं दक्षमेव च ।
कात्यायनं वैष्णवं च राजसाः स्वर्गदाः शुभाः' ॥ इति पाद्मे ।

न च तैत्तिरपदेन भृगुप्रोक्ते मानाभावः । मानमस्ति यथाह पैठीनसिः—

'तेषां मन्वङ्गिरोव्यासः गौतमात्र्युशनोयमाः ।
वसिष्ठदक्षसंवर्तशातातपपराशराः ॥
विष्ण्वापस्तम्बहारीताः शङ्खः कात्यायनो भृगुः ।
प्रचेता नारदो योगी बोधायनपितामहौ ॥
सुमन्तुः कश्यपो बभ्रुः पैठीनो व्यास एव च ।
सत्यव्रतो भरद्वाजो गार्ग्यः कार्ष्णाजिनिस्तथा' ॥

रश्मिः ।

'जाबालिर्जमदग्निश्च लौगाक्षिर्ब्रह्मसंभवः ।
इति धर्मप्रणेतारः षड्विंशदृषयस्तथा' ॥

इत्यत्र भृगोः प्रमाविषयत्वात् । षड्विंशदृषय इति न परिसंख्या तथासति वत्समरीचिदेवल-पारस्करप्रभृतीनां धर्मशास्त्रप्रणेतृत्वं न स्यात् इति माधवाचार्याः । वयं तु परिसंख्यामः । तदज्ञाने सर्वमौर्ख्यमिति निबन्धात् । पुराणे च परिसंख्या दृश्यते । तथाहि पद्मपुराणे गुणत्रयकथने पुराणान्युक्त्वा

'तथैव स्मृतयः प्रोक्ता ऋषिभिस्त्रिगुणात्मिकाः ।
सात्त्विका राजसाश्चैव तामसाः शुभदर्शने ॥
वासिष्ठं चैव हारीतं व्यासं पाराशरं तथा ।
भारद्वाजं काश्यपं च सात्त्विका मुक्तिदाः शुभाः ॥
याज्ञवल्क्यं च आत्रेयं तैत्तिरं दाक्षमेव च ।
कात्यायनं वैष्णवं च राजसाः स्वर्गदाः शुभाः ॥
गौतमं बार्हस्पत्यं च सांवर्तं च यमस्मृतम् ।
शाङ्खं चौशनसं देवि तामसा निरयप्रदाः ॥
किमत्र बहुनोक्तेन पुराणेषु स्मृतिष्वपि ।
तामसा नरकायैव वर्जयेत्तान् विचक्षणः' ॥

इति पार्वतीं प्रति शिवः । ननु तर्हि राजसस्मृत्यपेक्षया सात्त्विकस्मृतिर्ज्यायसीति चेन्न शुभदत्वे समाने स्वर्गपदस्यात्मसुखवाचकत्वस्वीकारात् । 'यन्न दुःखेन' इति वाक्यशेषात्तत्र शक्तिः । तेन मनुस्मृतेरभिप्रायवर्णनमसंगतम् । नन्वष्टादशस्मृतिनिर्णायकत्वेनास्या उत्कर्षात् अंशतः आत्माभय इति चेन्न, मानवे नवमाध्याये—

'उदितोयं विस्तरतो मिथो विवदमानयोः ।
अष्टादशसु मार्गेषु व्यवहारस्य निर्णयः' ॥

इति स्मृतेष्टीकायां अष्टादशसु ऋणादानादिव्यवहारेषु मिथः परस्परं विवदमानयोरर्थि-प्रत्यर्थिनोः कार्यनिर्णयो विस्तरेणोक्त इत्यर्थात् । अष्टादशसु स्मृतिमार्गेष्विति अर्थाभावात् । तदज्ञाने सर्वमौर्ख्यमिति निबन्धे सर्वपदेन स्मृतीनामपि संग्रहेऽष्टादशमार्गपदेनाष्टादशस्मृतिमार्गग्रहणसंभवः श्याचार्यमार्गे तर्हि मनुस्मृतौ कुत आग्रहः सर्वार्थत्वात् भेषजत्वाच्च सर्वार्थत्वे वाराहपुराणम् । मन्वाद्याः स्मारका इति न च पुराणे वासिष्ठं चैव हारीतमिति पठितत्वात् वसिष्ठादिस्मृतिरिति शङ्क्यम् । वाराहवाक्यस्य वाक्यशेषत्वेन सर्वा संग्राह्य प्रवृत्तत्वात् मनोराद्या वसिष्ठादिस्मृतयः मनुराद्यो यासां दाक्षकात्यायनादीनामन्येषां च ताश्च मन्वाद्या मन्वाद्याश्च मन्वाद्याश्च मन्वाद्याः इति समासात् । न च मनुरादिर्यासामिति सोस्तु प्रसिद्धेरिति वाच्यम् । अष्टादशसु मार्गेषु निर्णय इत्युक्तेः । न च तर्हि पाठक्रमानादरे कः क्रम इति वाच्यम् । ईश्वरवराहाज्ञया पुराणे ज्ञातः क्रमः प्रधानक्रमः । तेन क्रमेण योगाङ्गानां धर्माङ्गानां स्मृतीनां क्रम आश्रियते स मुख्यः क्रमः स चात्रेति । न च प्रधानत्वं नास्ति फलसंबन्धाभावादिति शङ्क्यम् । पुराणफलस्य सत्त्वात् । न चाष्टादशस्मृतिमार्गव्यतिरिक्तस्मृतीनां क्व गतिरिति चेच्छृणु वराह एव ।

भाष्यप्रकाशः ।

अथ प्रसङ्गादिदं विचार्यते । शूद्रादयः सर्वे भारतं पुराणं च पठेयुर्न वेति । तत्र,

'भारतव्यपदेशेन ह्याम्नायार्थश्च दर्शितः ।
दृश्यते यत्र वै धर्मः स्त्रीशूद्रादिभिरप्युत' ॥

इति प्रथमस्कन्धे,

'विप्रोऽधीत्याप्नुयात् प्रज्ञां राजन्योदधिमेखलाम् ।
वैश्यो निधिपतित्वं च शूद्रः शुद्ध्येत पातकात्' ॥

इति द्वादशस्कन्धे च धर्मदर्शनश्रीभागवताध्ययनयोर्बोधनात् । 'तस्माद् भारत सर्वात्मा' इत्यत्राभयेच्छायां सर्वसाधारण्येन कीर्तनविधानाच्च सर्वमेव भारतं पुराणं च सर्वे पठेयुरित्येवं प्राप्ते । अभिधीयते । ब्रह्मज्ञानभागांशव्यतिरिक्तमेव पठनीयम् । धर्मब्रह्मणोरतीन्द्रियत्वेन प्रथमवाक्ये दृशेर्मुख्यार्थस्य ग्रहीतुमशक्यतया धर्मादिशाब्दज्ञानमात्रार्थकत्वेन पाठाप्रापकत्वात् । द्वितीयेऽप्यधीत्येत्यस्य स्मरणाध्ययनसाधारण्यात् स्मृत्वा गुरुमुखाद्वा गृहीत्वेत्यर्थेन तथात्वात् । नच स्वाध्यायब्राह्मणश्रुतौ, प्राङ्कासीनः स्वाध्यायमधीयीतेत्यादौ केवलोच्चारणेऽपि तथा प्रयोगात् तत्प्राप्तिरिति वाच्यम् । विनिगमनाविरहात् । न चेतः पूर्वं, य एतां श्रावयेदिति सर्वां संहितां पठन्नभन् प्रयत इति पाठं च प्रक्रम्य, विप्रोऽधीत्येति श्लोककथनादुपक्रम एव विनिगमकोऽस्त्विति वाच्यम् । तत्रापि श्रावणानुत्तरमेतत्कथनेनाध्ययनशब्दमहिम्ना च श्रावणौत्तर्ये सिद्धे,

रश्मिः ।

'वेदार्थोक्तानुसारेण मन्वाद्याः स्मारकाः स्मृताः ।
तेषां वै स्मृतयो नाना धर्मनिर्णायका भुवि' ॥

इत्यष्टादशातिरिक्तानां नानानाम्नां नानानामकधर्मनिर्णायकत्वात् । भेषजत्वे श्रुतिः यद्वन्मनुर्वै यत्किंचिदवदत्तद्भेषजं भेषजताया इति छान्दोग्यब्राह्मण इति टीकाकृत् । माधवटीकायां पराशरस्मृतेः यत्किंच मनुरवदत्तद्भेषजमिति श्रुतिर्मानवी ऋचौ धाय्ये कुर्यादिति विधाय तद्विधिस्तावकत्वेन यद्वै किंच मनुरवददित्यस्याः पाठात्स्वार्थे तात्पर्याभावात् इति भणितम् । तस्य विधेरयमर्थः । इष्टिविकृतरूपे सोमारौद्रे चरौ अतिदेशतः प्राप्तासु सामिधेनीषु मध्ये प्रक्षेप्तव्यौ धाय्यासंज्ञकौ द्वौ यौ मन्त्रौ तौ मानवौ कर्तव्याविति । ननु तत्र मनुपदस्य स्मृतिकर्तृमनुवाचकत्वेऽनित्यसंयोगापत्तिरत आधिदैविकमनुवाचकत्वमतः स्मृतौ मनुपदेन प्रत्यभिज्ञाभावात् मनुस्मृतेः कुतो भेषजत्वमिति चेन्न । श्रुतीर्दृष्ट्वा मनुस्मृतिं चकारेत्यनुवादरूपत्वेन यथाकथंचित् प्रत्यभिज्ञासत्त्वात् । प्रकृतमनुसर्यतेऽस्माभिः । अथेति पुराणविषये निरूपिते स्मृतस्य भारतविषयस्योपेक्षानर्हत्वात् । धर्मेति धर्मदर्शनं प्रथमवाक्ये भारतरूपे । अभीति महतामधिकार इति भाष्ये विस्तरोभिधीयते । धर्मेति भावार्थपादभाष्ये धर्मातीन्द्रियता । ब्रह्मणस्तु विशेषणानास्कन्दितेन्द्रियातिक्रान्तता । धर्मस्यापि 'धर्मो यस्यां मदात्मकः' इति वाक्यात् । ननु पाठाभावे कथं शाब्दं ज्ञानं पदजन्यपदार्थोपस्थितेरभावादित्यतः । द्वितीयेप्येतस्योपपादकमाहुः द्वितीय इति । पाठो ह्युच्चारणं तस्य श्रवणस्मरणयोर्निर्वाहकत्वं मुक्तिभक्तिजनकत्वं चेति शाब्दज्ञानमात्रार्थत्वं नास्ति तर्हि पाठव्यतिरेकेण केनापि शाब्दज्ञानकारणेन भाव्यमित्यत आहुः स्मृत्वेति । तथा च स्मरणाध्ययनाभ्यां शाब्दज्ञानमिति भावः । न च स्मरणनिर्वाहकपाठप्राप्तिरिति शङ्क्यम् । यत्र स्मरणमात्रं तस्योदाहरणत्वात् । तथा प्रेति । अधीयीत इत्यध्ययनप्रकारकप्रयोगात्पाठप्राप्तिः । विनिगमनेति । अधीयीत इत्यस्य स्मरेदित्यर्थस्यापि संभवात् । श्रावणादिति 'य एवं श्रावयेदितं

भाष्यप्रकाशः ।

कपिलदेवैः स्वमातुरप्यौपनिषदभागवतज्ञानयोरनुक्तत्वेन स्त्रीशूद्रयोस्तदंशाभावेऽपि तयोस्तच्छ्रवणानधिकारे च सिद्धे,

'शूद्रयोनावहं जातो नातोऽन्यद् वक्तुमुत्सहे ।
कुमारस्य तु या बुद्धिर्वेद तां शाश्वतीमहम्' ॥

इत्युद्योगे ॥ सनत्सुजातीयारम्भे विदुरवाक्याज्ज्ञानोत्तरमपि वदनानधिकारे च सिद्धे, श्रवणपठनयोः पठन एव वा तावदंशत्यागस्यैवौचित्यात् । तथा प्रणवादिमान् वैदिकमन्त्रयुक्तोऽपि त्याज्यः । वेदः प्रणव एवाग्र इति, स सर्ववेदोपनिषद्वेदबीजं सनातनमित्यादिवाक्यैः प्रणवस्य विशेषतो वेदत्वनिश्चयात् । औपनिषदानां नारायणाष्टाक्षरादीनां मन्त्राणां नारायणकवचादौ प्रत्यभिज्ञानाच्च । नच देवतादिवाचकपदवत् प्रत्यभिज्ञाया अप्रयोजकत्वमिति शङ्क्यम् । 'नाममन्त्रस्तु शूद्रस्येति'

रश्मिः ।

यामं क्षणमनन्यधीः' आदिना 'श्रद्धावान् योऽनु शृणुयात् पुनात्यात्मानमेव सः' इति श्रवणसंग्रहः । श्रवणेति सप्तमीद्विवचनान्तम् । त्याज्यः भागस्त्याज्यः । प्रणवादिमतस्त्यागे हेतुः वेदः प्रणव इति । इत्यादीनि स सर्वेत्यादि येषां वाक्यानां तानि इत्यादीनि तानि वाक्यानि तैः । वैदिकमन्त्रयुक्तस्य त्यागे हेतुः औपनिषदेति । उपनिषदः नारायणरामतापिनीयनृसिंहतापिनीयरूपाः ताभिर्गृह्यन्ते शैषिकोण् । तेषां नारायणाष्टाक्षरमन्त्रः ॐ नमो नारायणमिति मन्त्रोपासको वैकुण्ठं भगवल्लोकं गमिष्यति इति श्रुत्युक्तः ।

'जीववाची नमो राम चात्मारामेति गीयते ।
तदात्मिका या चतुर्थी तथा मायेति गीयते' ॥ इति ।

रामतापिनीयश्रुत्युक्तः पञ्चाक्षरः नमो रामायेति समेतीति च । तथा द्वात्रिंशाक्षरो नृसिंहतापिनीयोक्तः ॐ यो वै नृसिंहो देवो भगवान् यश्च ब्रह्मा तस्मै वै नमो नमः इति अन्यो वा नारायणकवचे यथा 'ॐ नमो नारायणायेति विपर्ययमथापि वा' इत्यष्टमे षष्ठस्य । प्रत्यभिज्ञानं नारायणकवचे तत्तेदन्ताप्रकारकं ज्ञानं प्रत्यभिज्ञा' सोयं नारायणमन्त्र इति । नमो रामायेति प्रसिद्धम् । रामरक्षास्तोत्रे

'रामेति रामभद्रेति रामचन्द्रेति वा स्मरन् ।
नरो न विन्दते पापं भुक्तिं मुक्तिं च विन्दति' ॥

इति रामेति मन्त्रप्रत्यभिज्ञानम् । एवं नृसिंहमन्त्रस्य प्रत्यभिज्ञानं बोध्यम् । एवं च सति मन्त्रज्ञानव्यतिरिक्तोपि पुराणाद्यंशो न पठनीयः प्रत्यभिज्ञासाम्यादित्याशङ्क्य समादधुः न चेति । अस्या देवतायाः सायुज्यमिति 'तन्मूला देवताः सर्वाः' इति दशमे । परदेवताप्रसादेति पञ्चमे देवतावाचकपदम् । एवं 'विष्णोः कर्माणि पश्यत' इति संहितास्थम् । 'विष्णोस्तु त्रीणि रूपाणि' इत्यत्र विष्णुवाचकं पदम् । 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' इत्युपनिषत्स्थं 'बुद्धीन्द्रियमनःप्राणान् जनानामसृजत्प्रभुः' इति वेदस्तुतौ इन्द्रियादिवाचकं पदं तेष्विव प्रत्यभिज्ञायाः ऐक्येऽप्रयोजकत्वम् । एतेषामिति शूद्रादीनाम् । मन्त्रज्ञानवाचकपुराणादेः प्रणवादिमतो वैदिकमन्त्रयुक्तस्य च पुराणादेश्चाज्ञाभावेन । न च भगवानिति पदेन मन्त्रज्ञानाज्ञप्तेति वाच्यम् । मन्त्रपदस्य स्वाहाकारनमस्कारादिरूपवेदाङ्गत्व-

भाष्यप्रकाशः ।

'स्वाहाकारनमस्कारौ मन्त्रौ शूद्रे विधीयते ।
ताभ्यां शूद्रः पाकयज्ञैर्यजेत व्रतवान् स्वयम्' ॥

इत्यानुशासनिकपर्वादौ तदनुज्ञादर्शनेनैतेषां च तदभावेनैतद्दृष्टान्तस्यात्र वक्तुमशक्य-त्वात् । किंच द्वितीयस्कन्धे श्रीशुकैः 'श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्च' इति श्रवणात् तृतीयं स्मरणमुक्तम् । प्रथमे सूतेनापि, 'श्रोतव्यः कीर्तितव्यश्च ध्येयः पूज्यश्च' इति तथोक्तम् । एवं प्रकृतेऽपि श्रवणपठनफलकथनोत्तरं स्मरणस्यापि तद् वाच्यम् । अन्यथाऽऽकाङ्क्षान्तरोदयप्रसङ्गात् । अतः सादेश्यादप्यधीत्येति पदं स्मरणार्थकमवसीयते । यत्तु

'ब्राह्मणो ब्रह्मवर्चस्वी राजन्यो जगतीपतिः ।
वैश्यः पठन् विट्पतिः स्याच्छूद्रः सत्तमतामियात्' ॥

इति चतुर्थस्कन्धीयम् । तत्तु पृथुचरितमुपक्रम्य पठितत्वात् प्रकरणावरुद्धमिति न तेन सर्वपाठः प्रापयितुं शक्यते । नच 'पठेच्च नियमं कृत्वा श्रीभागवतमादराद्' इति निबन्धे श्रीमदाचार्यैरुक्तत्वात् सर्वं पठनीयमिति शङ्क्यम् । तत्रापि तदंशत्यागे बाधकाभावात् । अन्यथा

'यदौपनिषदं ज्ञानं श्रीभागवतमेव वा ।
वर्णिनामेव तद्धि स्यात् स्त्रीशूद्राणां ततोऽन्यथा' ॥

इति तृतीयस्कन्धीयनिबन्धवाक्यस्य, 'भागवतज्ञानमपि त्रैवर्णिकानामेव । उपासनायाः प्राधान्यात् । यदेव भगवता ब्रह्मणे प्रोच्यते, तत् त्रैवर्णिकानामेवेति ज्ञातव्यम्' इति तत्प्रकाश-ग्रन्थस्य च विरोधापत्तेः । नचैकादशस्कन्धेऽपि, 'एष तेऽभिहितः कृत्स्नो ब्रह्मवादस्य संग्रहः' इति

रश्मिः ।

कत्वात् । न च पौराणब्रह्मज्ञानादेः स्वतन्त्रत्वेन पुराणादिवत्प्राप्तिः बाधकाभावादिति शङ्क्यम् । भावबोधेऽङ्गत्वेनास्वतन्त्रत्वात् । तदुक्तं सर्वनिर्णये—न च ब्रह्मज्ञानमन्तरेण पुराणपठनं व्यर्थमिति वाच्यम् । व्यर्थत्वे भगवतो गुह्यजन्माभावस्य हेतुत्वात् । 'यस्मिन्न मे पावनमङ्ग कर्म' इत्युपक्रम्य 'वन्ध्यां गिरं तां बिभृयान्न धीरः' इति वाक्यात् । विप्रोधीत्येत्यत्र नेङ् अध्ययने अ. आ. अनिटो रूपम् । किं तु इक् स्मरणे अ. प. अनिटः तस्मान्न पाठप्रापकत्वमित्याहुः किं चेति । तथोक्तमिति ध्यै चिन्तायां भ्वा. प. अ. चिती स्मृत्यां चु. प. से. 'अचो यत्' । श्रवणकीर्तनस्मरणप्रकारेणोक्तम् । श्रवणपठनेति । फलबोधके वाक्ये उक्ते तदिति फलम् । आकाङ्क्षेति सादेश्यात्स्मरणाकाङ्क्षा ततोन्या फलबोधाकाङ्क्षाऽऽकाङ्क्षान्तरं तस्योदयप्रसङ्गात् । सादेश्यादिति स्मरणसमानस्तृतीयो देशः तस्य भावात् । सादेश्यं यथासंख्यरूपम् । तेन यथासंख्यपाठरूपदेशसामान्येन श्रवणदेशे श्रवणं कीर्तनदेशे कीर्तनं स्मरणदेशे अधीत्येति स्मरणम् । न तु पाठः । यथा समिधो यजतीत्यादिः । समिधः समिधो अग्न आज्यस्य व्यन्त्वित्यादि च । समिधः समिधो अग्न इत्यादिपञ्चमन्त्राणां यथासंख्यपाठरूपदेशसामान्येन प्रथमप्रयाजस्य समिधो यजतीत्युक्तस्य प्रथमो मन्त्रोङ्गं द्वितीये द्वितीयः इत्येवमङ्गत्वं बोधयति इति तथा । सर्वपाठ इति पृथुचरितव्यतिरिक्तसर्वपाठः । उपेति भागवत-ज्ञानमित्युक्ते मनोव्यापारविशेषः प्रतीयते 'कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भी-रित्येतत्सर्वं मन एव' इत्यत्र मनोवृत्तित्वात् । उपासनायाश्च मनोव्यापारविशेषरूपाया ग्रहणं न तु

भाष्यप्रकाशः ।

कथनाच्चतुःश्लोकीतुल्यतयोपदेशस्य तत्रापि सत्त्वात् तत्राप्यनधिकारः शङ्क्यः । तदग्रे,

'नैतत् त्वया दाम्भिकाय नास्तिकाय शठाय च ।
अशुश्रूषोरभक्ताय दुर्विनीताय दीयताम्' ॥
'एतैर्दोषैर्विहीनाय ब्रह्मण्याय प्रियाय च ।
साधवे शुचये ब्रूयाद् भक्तिः स्याच्छूद्रयोषिताम्' ॥

इति कथनात् कर्मज्ञानादिमिश्रतयोपदेशाच्च तादृशां श्रावणे बाधकाभावेन तत्र तेषां श्रवणाधिकारस्य सिद्धेः । अन्यथा तद्विरोधापत्तेश्च । नचाभयेच्छायां तदर्थं कीर्तनस्य विरोधः शङ्क्यः । तत्र भगवत एव कथनाच्छ्रीभागवतपदाभावाच्चोक्तैकदेशातिरिक्तभागवतकीर्तनादपि तत्परिहारसिद्धेः । पुरुषोत्तमसहस्रनामपाठस्यापि फलोक्तिप्रसङ्गे, 'सहस्रं यैस्तु पठितैः पठितं स्याच्छुकाऽमृतम्' । इत्याचार्याणां वाक्यात् तस्मादपि तत्सिद्धेश्च । ये पुनरेतानि वाक्यान्याश्रित्य तस्यापि पाठाधिकारं शूद्रा आपादयन्ति, तेषां मात्सर्यादिदोषग्रासेन श्रीभागवतोक्तधर्मेष्वप्यनधिकारः । 'धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सताम्' इति वाक्यात् । किं पुनः पाठे । एतेनैव गीतापाठो व्याख्यातः । तत्राप्यध्यायसमाप्तौ, उपनिषत्सु ब्रह्मविद्यायामिति दर्शनात् । तस्मादुक्तातिरिक्तमेव शूद्रैः पठनीयम् । न तु श्रावणीयं, पाठनीयं वा । विध्यभावादिति निष्कर्षः ॥ ३८ ॥

इति नवमं शुगस्येत्यधिकरणम् ॥ ९ ॥

रश्मिः ।

उपसमीपे स्थित्वा यथायोग्यकरणरूपायाः ज्ञानपदेनाप्रतीतेः । एवं च ज्ञानस्य प्राधान्यात् विशेष्यत्वात् । चतुःश्लोकीति तत्र ब्रह्मवादस्य सुबोधिन्यां करणात्तत्तुल्यत्वम् । तत्रापीति एकादशस्कन्धे एकोनत्रिंशे श्रीभगवानुवाचोद्धवं प्रति । 'कुर्यात्सर्वाणि कर्माणि' इत्यादि । तेनोक्ते । ननु ब्रह्मवादसंग्रहातिरिक्तं शूद्रयोषिद्भ्यो ब्रूयादित्यर्थो यद्वा दोषविहीनायेत्येवमादिभ्यो ब्रूयात् शृण्वन्तीनां शूद्रयोषितां भक्तिः स्यादित्येवमर्थं इति न भक्तिः स्याच्छूद्रयोषितामित्यस्याप्रयोजकत्वमिति चेत्तत्राहुः कर्मेति 'कुर्यात्सर्वाणि कर्माणि' इति कर्म । तद्धीति भक्तिः स्याच्छूद्रयोषितामित्यस्य विरोधापत्तेः । न च एतादृश एव ब्रह्मवाद इति शङ्क्यम् । तत्राधिकारस्तर्हि वर्तत एव । तदर्थमिति अभयार्थम् । कीर्तनस्य पाठरूपस्य शूद्रयोषित्सु सहानवस्थानम् । तत्रेति तस्माद्भारत सर्वात्मेति द्वितीयस्कन्धे । भगवत इति 'भगवान् हरिरीश्वरः श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताभयम्' इति । एवकारेण श्रुतिस्मृत्योः ब्रह्मात्मनोर्व्यवच्छेदः । तदिति शङ्कापरिहारसिद्धेः । शुकामृतमिति शुकदेवस्यामृतं 'तव कथामृतं तप्तजीवनम्' आनन्ददातृ तस्मादित्यानन्ददातुः कीर्तनात् । तत्सिद्धेरभयसिद्धेः । पुराणमतम् । तेनाभयंचिदिति भाष्यस्य न विरोधः । एति यदि शूद्रादीनां पाठे नाधिकारः स्यात्तदा इमानि वाक्यानि न स्युरिति तर्कयन्ति इति वाक्यादिति । निर्मत्सराणां सतां वेद्यमिति निर्मत्सराः सन्तोधिकारिणो न तु मात्सर्ययुक्ता इति भावः । किं पुनरिति । सत्सङ्गेन भागवतोक्ताः स्वधर्माः तदनु अध्ययनानन्तरं पाठः 'श्रुत्वान्येभ्य उपासते' ॥ ३८ ॥

इति नवममधिकरणम् ॥ ९ ॥

कम्पनात् ॥ ३९ ॥

कठवल्लीविचारेण निश्चिता ह्यधिकारिणः ।
वाक्यान्तरं च तत्रत्यं चिन्त्यते प्रलयावधि ॥

'यदिदं किंच जगत् सर्वं प्राण एजति निःसृतं महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति' इति। अत्र प्राणवज्रोद्यमनशब्दाभ्यां संदेहः । किं प्राणोपासना, इन्द्रोपासना वा, ब्रह्मवाक्यं वेति। बाधकशब्दस्य श्रुतित्वान्न प्रकरणेन निर्णयः । 'अमृतं वै प्राणाः' इति श्रुतेः । प्राणोपासकस्याप्यमृतप्राप्तिर्युज्यते । इन्द्रस्याप्यमरत्वात् । वज्रमुद्यतमिति प्राणपक्षे वियोजने मरणजनकत्वाद्

भाष्यप्रकाशः ।

कम्पनात् ॥ ३९ ॥ एवं प्रासङ्गिकमधिकारनिरूपणं कृत्वा पूर्वप्रस्तुतमेव पुनः सिंहावलोकनेन विचारयतीत्याहुः कठवल्लीत्यादि । हि यतो हेतोर्मृत्यूपाख्यानं मनुष्यानधिकृत्य प्रवृत्तम् । अतः, 'शब्दादेव प्रमितः' इत्यधिकरणे प्रस्तुतेन कठवल्लीस्थाङ्गुष्ठमात्रविचारेणाधिकारिस्मरणे प्रसङ्गात् ते निश्चिताः । च पुनः प्रासङ्गिकसमाप्तौ तत्रत्यं षष्ठवल्लीस्थं वाक्यान्तरं चिन्त्यते । अवसरसंगत्या विचार्यते । तच्चिन्तनस्य किं प्रयोजनमत आहुः प्रलयावधीति । तद्वाक्यप्रतिपाद्यं रूपं प्रलयस्यावधिभूतम् । तस्य ज्ञाने तत्र लयः स्यादतो हेतोश्चिन्त्यत इत्यर्थः । विषयवाक्यं, संदेहबीजं, संदेहाकारं चाहुः यदिदमित्यादि । वेतीत्यन्तम् । ननु प्रकरणस्य प्रबलत्वात् तेनैव निश्चये विचारोऽनर्थक इति शङ्कायामाहुः बाधकेत्यादि । तथाच प्रकरणापेक्षया श्रुतेर्बलिष्ठत्वात् प्रकरणेन न निर्णय इत्यतो विचार आवश्यक इत्यर्थः । पूर्वपक्षमाहुः अमृतमित्यादि । तथा अमृतपदस्याप्यनेकार्थत्वाद् वाक्योक्तफलेनापि न निर्णय इत्यर्थः । तर्हि प्राणविधैवास्त्वित्यत आहुः इन्द्रस्येत्यादि । तदुपासकस्याप्यमृतत्वप्राप्तिर्युज्यत इति पूर्वेण संबन्धः, इन्द्रस्यात्र कथं प्राप्तिरित्यत आहुः वज्रमुद्यतमिति । तथाच लिङ्गात् प्राप्तिरित्यर्थः ।

रश्मिः ।

कम्पनात् ॥ ३९ ॥ अवसरेति अत्र प्रतिबन्धकीभूतजिज्ञासा । केऽधिकारिण इति । तत्र लय इति प्रेक्षावत्प्रवृत्त्यर्थं फलस्य वाच्यत्वादिति भावः । विचार इति ब्रह्मवाक्यं वेति कोटीतरकोटीद्वयं प्रक्षिप्येषा मीमांसानिष्फला प्रकरणादेव ब्रह्मवाक्यत्वसिद्धेरिति तर्के आहुरिति विचारस्यार्थक्यमाहुः तेन तृतीयकोटीतरकोटिद्वयसिद्ध्याऽयं ग्रन्थः संशयशेषः । बाधकेत्यादीति । प्राणवज्रोद्यमनशब्दौ श्रुतीबाधकशब्दौ । विचार इति । ब्रह्मवाक्यं वेति····कोटीतरकोटी प्रक्षिप्य मीमांसा । न निर्णय इति । ब्रह्मवाक्यत्वनिर्णयो मीमांसानिष्फलत्वसंपादकः । इत्यर्थ इति इत्यर्थः प्रयोजनम् । अन्यथा पूर्वपक्षग्रन्थे ब्रह्मवाक्यं वेति कोटेरितरकोटिद्वयसंपादको ग्रन्थः संगतो न स्यात् । अत एव प्राणेत्याद्युत्तरभाष्ये हेतुतास्य स्फुटा प्रतीयते । लिङ्गादिति लिङ्गं शब्दस्य सामर्थ्यम् । भाष्ये । प्राणपक्ष इति स्ववियोजने मरणजनकत्वं स्फुटमतस्तद् भूतपूर्वं भयमतस्तज्जनकत्वमपीति लक्षणया भयं प्राण इति भयरूपत्वमित्यर्थः । प्राणपक्षे भयमित्यस्य संगतिमिवेन्द्रपक्षे प्राण इत्यस्य संगतिमाहुः इन्द्रपक्ष इति । बलेति द्वितीयस्य ब्रह्मभाष्ये 'इमौ स्वसृतुस्तस्य नानाकर्मचिकीर्षया । तयोस्तु बलवानिन्द्रः' इति वाक्ये बलमिन्द्रक-

भयरूपत्वम्। इन्द्रपक्षे बलाधिष्ठातृत्वात् प्राणत्वम्। तस्मात् प्राण इन्द्रो वा वाक्यार्थ इत्येवं प्राप्ते। उच्यते। कम्पनात्। कम्पनमत्र प्रथमवाक्यार्थः। स च भयहेतुकः। अविशेषेण सर्वजगत्कम्पनं भगवद्धेतुकमेव भवति।

नचैकान्ततो वज्र इन्द्रस्यैवायुधं भवति। अग्निहृदयत्वात्। तस्य तांतस्य हृदयमाच्छिन्दत् साऽशनिरभवदिति श्रुतेः। तस्मान्मारकरूपमेवेदं भगवतः।

भाष्यप्रकाशः।

तस्मादिति प्रकरणापेक्षया श्रुतिलिङ्गयोः प्रबलत्वात्। तथाच ब्रह्मवाक्यत्वाभावे पूर्वपक्षे तात्पर्यम्। सिद्धान्तं व्याचक्षते उच्यत इत्यादि। अत्र हि, यदिदं किंचेति पादत्रयमेकं वाक्यम्। य एतदिति तुरीयपादो भिन्नं वाक्यम्। तत्र, यदिदं किंच परिदृश्यमानमपरिदृश्यमानं च सर्वं जगत् प्राणे विद्यमाने निःसृतं बहिरागतं सदेजति कम्पते। तत्र हेतुः। महतां भयं यस्मात् तादृशं वज्रमायुधमुद्यतं जगन्नियमनायोल्लासितमिति पदसंबन्धात् कम्पनमत्र प्रथमवाक्यार्थः। स च भयहेतुकः। तेन स्वतः कम्पनं वार्यते। तथा, यदिदं किंचेत्यनेन सर्वपदे संकोचो वार्यते। अतोऽविशेषेणासंकोचेनेदृशं सर्वं जगत्कम्पनं भगवद्धेतुकमेव भवति। न प्राणे। तस्य स्ववियोगेन भयजनकतयेदृशकम्पनाहेतुत्वात्। ननु तर्हि श्रुतेः साधारणत्वान्माऽस्तु प्राणः, किंत्विन्द्र एवास्तु। वाक्यापेक्षया लिङ्गस्य प्राबल्यादित्यत आहुः नचेत्यादि। सिद्धमाहुः तस्मादित्यादि। यस्मादिन्द्रप्राणौ नात्र शक्यवचनौ तस्मात् तथेत्यर्थः। ननु तथापि प्राणशब्दवाच्यत्वस्य, 'अत एव प्राणः' इत्यधिकरण एवावधारितत्वादस्याधिकरणस्य किं

रश्मिः।

मिन्द्रो देवतेत्युक्तेः। प्रकृते। प्रकरणेति। पूर्वतनीयं प्रकरणादि स्पष्टम्। वाक्यमिति एकतिङ् वाक्यम्। अग्रे तु सुप्तिङ्चयो वाक्यम् कोशोक्तम्। कोशशब्दस्तालव्यान्तोपि श्वादेराकृतिगणत्वात् कोषस्तु बहुषु स्थलेषु। प्रथमेति। ननु कथं कम्पनं वाक्यार्थ इति चेन्न मिश्रमते फलमात्रं धात्वर्थ इति धात्वर्थविशेष्यकबोधे कम्पनस्य विशेष्यत्वम्। प्रकृतं जगन्निष्ठव्यापारजन्यं कम्पनमिति। न च मण्डनमिश्रमते प्रथमान्तविशेष्यको बोध इति कुतः कम्पनविशेष्यको बोध इति शङ्क्यं देवदत्तेन स्नीयते इत्यादिस्थले तदभावादिति वैयाकरणोक्तदूषणग्रासात्। न च व्यापारविशेष्यकबोधोस्त्विति शङ्क्यम्। धात्वर्थत्वाभावात् भावप्रधानमाख्यातमिति यास्कोक्तेः। व्यापारमात्रमाख्यातार्थ इत्यादि स्पष्टमाख्यातवादे गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय इति। विशेष्ये धात्वर्थे वाक्यार्थपदप्रयोगः। न च सुप्तिङ्चयस्यान्वयो वाक्यार्थः। कृत्रिमत्वेनान्यथासिद्धौ श्रुतिविरुद्धत्वात् अस्माभिरेव भगवदिच्छया प्रोच्यते। नाचार्यैरिति। श्रुतेरिति विषयवाक्यस्थस्य ब्रह्मप्राणसाधारणत्वात्। लिङ्गस्येति। ननु न महद्भयं वज्रमुद्यतमितीन्द्रलिङ्गम्। किं तु श्रुतिरेव निरपेक्षरवत्वादिति चेन्न। ईश्वरवाचकस्यास्येन्द्रे शक्तिसंकोचलक्षणा रूढिरिति। किं च निरपेक्षत्वं नामलिङ्गादिकल्पनाव्यतिरेकेणाङ्गत्वबोधकत्वम्। यथा दध्ना जुहोतीत्यत्र दध्नेति तृतीयाश्रुत्या दध्नो होमाङ्गत्वबोधात्। तथात्र नास्ति। महद्भयं वज्रमुद्यतमित्यत्र शब्दगतं सामर्थ्यं उद्यन्तमिति शब्दादस्य भानस्य वज्रोद्यमनसामर्थ्यमालोच्यानेन भागेनोद्यमनं प्रतिपाद्यमिति श्रुतिं कल्पयित्वोद्यमनाङ्गस्य बोधितत्वात्। उद्यमनस्य कम्पनाङ्गत्वं हेतुरिति यावत्। न च 'बर्हिर्देवसदनं दामि' इत्यत्र

प्राणशब्दवाच्यत्वं तु पूर्वमेव सिद्धम् । तस्मात् सर्वजगत्कम्पनं भगवत्कृतमिति भगवानेव वाक्यार्थः ॥ ३९ ॥

इति प्रथमाध्यायतृतीयपादे दशमं कम्पनाधिकरणम् ॥ १० ॥

भाष्यप्रकाशः ।

अथोक्तमेव आहुः प्राणेत्यादि । तस्मादिति । यस्मादुक्तवाक्यार्थरूपत्वं न पूर्वत्र प्राणशब्दशब्दिते सिद्धं तस्मात् । अत्रैतादृशस्य हेतोर्वाक्यान्तरे अदर्शनाद्धेतुरेव पक्षमाक्षेप्स्यतीत्याशयाद्विमृष्टनिष्ठविशेषान्तरविमर्शावधारणेनैव तत्स्फुरणाच्च पश्चानुल्लेख इति न न्यूनता । आधारता तु विषयवाक्य एव स्फुटा । अत्राऽवान्तरप्रलयकर्तृत्वं प्राणे आशङ्क्य तन्निवारणाय अशनयोत्पादकत्वेन तद् ब्रह्मणि साधितम् । तेन बुद्धिस्थानात्मिकैवाधिकरणसंगतिः ।

रश्मिः ।

उत्थनं भयान्तर्गतमत्र तु वज्रमुद्यतमित्यत्र कम्पनं नान्तर्गतमिति दृष्टान्ताभावः शङ्कः । प्रथमवाक्ये कम्पनस्यान्तर्गतत्वात् । तथेति मारकरूपत्वेन प्रकारेणाग्निर्वज्रमिति यावत् । तस्मात्तेजोऽतस्य हृदयमिति भगवतो रूपं 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' इति गीतायाः । 'यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात्' इति महानारायणीयोपनिषच्छ्रुतेर्ब्रह्मणः साकारत्वात् । अत एव एवकारः । इत्यधीति प्रथमचरणस्थे । किमिति तथा श्रुतौ प्राण इति प्रथमान्तमपि संभवति महद्भयं वज्रमुद्यन्तं प्राणे सर्वं जगदेजतीत्यर्थादिति भावः । प्राणेत्यादीति अत्र तु साकारब्रह्मणोऽग्निहृदयरूपं स्वहृदयरूपं मीमांसितमिति भावः । श्रुतौ प्राण इति सप्तम्यन्तं न प्रथमान्तमिति भावः । न्यूनताख्यनिग्रहस्थानं परिजह्नुः सूत्रे अत्रेति । एतादृशस्येति साध्यपक्षशून्यस्य सूत्रान्तररहितस्य । हेत्वन्तरमाहुः विमृष्टेति । विमृष्टं यद्विषयवाक्यं तन्निष्ठो विशेषः वज्ररूपाग्निहृदयप्रतिपादकत्वं तदन्यो विशेषस्तस्माद् ब्रह्मप्रतिपादकत्वम्, भगवानेव वाक्यार्थ इति भाष्यात् तस्य विमर्शावधारणमुक्तभाष्यात् । विमर्शस्तु वाक्यं भगवत्प्रमितिजनकं कम्पनात् । आश्रयता साध्यतावच्छेदकसंबन्धः प्रतिपादकता हेतुतावच्छेदकसंबन्धः यत्रैवं तत्रैवं घटोस्तीति वाक्यवदिति । तदवधारणेनैव पश्चादिस्फुरणादित्यर्थः । एतेन हृदयब्राह्मणं बृहदारण्यकस्थं स्मारितम् । तेन हृदयपदं व्युत्पादितम् । तथा हि । एष प्रजापतिर्यद्धृदयमेतद्ब्रह्मैतत्सर्वमिति स्पष्टम् । अभिहरन्त्यस्मै स्वाश्चान्ये च बलिमिति । हृ संप्रदाने प्रत्यय औणादिकः क्विप् । अस्यां व्युत्पत्तौ प्रमाणमुच्यते तदेतत्त्र्यक्षरं हृदयमित्युपक्रम्य हृ इत्येकमक्षरं अभिहरन्त्यस्मै स्वाश्चान्ये च य एवं वेदेति श्रुत्या हृ इत्येकाक्षरवेत्तुः फलं स्वाश्चान्ये च बलिं स्वं स्वं कार्यं च निरोधलक्षणोक्तप्रकारेणाभिहरन्ति इति तत्फलं तदा भवति यदा वेद्यं 'हृ' इत्येकाक्षरं तथा भवेत् । स्वा स्वा इन्द्रियाणि । जसो डा । अन्ये विषयाः । 'द' इत्येकमक्षरं ददत्यस्मै स्वाश्चान्ये च य एवं वेदेति श्रुतेः । स्वाश्चान्ये चास्मै वेत्रे स्वं स्वं वीर्यं ददति तस्माद् ददत्यस्मा इति दः 'आतोनुपसर्गे कः' संप्रदानेऽस्माज्ज्ञापकात् । यमित्येकमक्षरमेति स्वर्गं लोकं य एवं वेदेति श्रुतेः य एवं वेद स स्वर्गमात्मसुखमेति तस्मादेतीति 'यम्' एरच् 'इको यणचि' तथा च हृं च दश्च यं चैतेषां समाहारो हृदयमिति व्युत्पत्तिः सिद्धा । अमेराचार्यत्वेन सर्वात्मभावकेन निरोधेन हृदयभावं बलिं स्वस्वकार्यं च अभिहरन्तीत्युक्त्वा सर्वतो निवृत्तव्यापारा भगवत्परा ददत्यस्मा इत्युक्त्वा स्वर्गसुखाद्भगवत आत्मसुखं य एवं वेद स एति स्वाश्चान्ये च यन्ति ब्रह्मोपञ्जुपा सती आनन्दरूपा यदा सेवा जायते तदा एवं भवति तदुक्तं भव्यभाष्ये पुराणमतेपि ।

९६ ब्र० सू० र०

## ज्योतिर्दर्शनात् ॥ ४० ॥ (१।३।११)

'य एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरभिसंपद्य स्वेन

भाष्यप्रकाशः ।

यत्तु शंकराचार्यैरत्र ब्रह्मप्रतिपत्तौ पूर्वोत्तरपर्यालोचनादिति हेतुरुक्तः । तत्तु सूत्रमेव विरुणद्धि । सूत्रे कम्पनस्यैव हेतुत्वेन कथनात् । योऽप्येजयितृत्वस्य ब्रह्मधर्मत्वे न प्राणेनेति मन्त्रस्य तद्बोधकतयोपन्यासः सोऽपि तथा । मन्त्रे जीवनस्य तथात्वेनोक्ततया कम्पनाबोधकत्वादिति ॥ ३९ ॥

इति दशमं कम्पनाधिकरणम् ॥ १० ॥

ज्योतिर्दर्शनात् ॥ ४० ॥ य एष इत्यादि । इदं छान्दोग्ये दशमप्रपाठके दहरविद्याया-मिन्द्रप्रजापतिसंवादे च पठ्यते । एतावान् परं विशेषः । पूर्वत्र, निष्पद्यत इत्यनन्तरं स आत्मेति वाक्यशेषः । द्वितीये तु, स उत्तमः पुरुष इति । तत्रोत्तरवाक्यमसंदिग्धम् । गीतायाम्, 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इत्युपबृंहणेनास्य जीवबोधकताया वक्तुमशक्यत्वात् । तेन स

रश्मिः ।

'चक्रं चंक्रमणादेष वर्जनाद्वज्रमुच्यते ।
खण्डनात्खड्ग एवैष हेतिनामा हरिः स्वयम्' ॥ इति ।

स्वयं पदादिदं भगवतो मारकं रूपम् । प्रकृतमनुसरामः । पूर्वोत्तरेति । पूर्वोत्तरयोः श्रुत्योः पूर्वोच्यते ।

'तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते ।
तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन' ॥ इति तद्भाष्ये ।

उत्तरोच्यते ।

'भयादस्याग्निस्तपति भयात्तपति सूर्यः ।
भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः' ॥ इति ।

उभयत्रापि ब्रह्मैव प्रतिपाद्यते न वायुरिति मध्येपि ब्रह्मैव प्रतिपाद्यम् । न प्राणेनेति ।

'न प्राणेन नापानेन मर्त्यो जीवति कश्चन ।
इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ' ॥

इति मन्त्रस्य ॥ ३९ ॥

इति दशममधिकरणम् ॥ १० ॥

ज्योतिर्दर्शनात् ॥ ४० ॥ दहरविद्यायामिति पूर्वान्वयि । तत्रेति । द्वितीये इन्द्रप्रजापतिसंवादे । जीवेति यथा स आत्मेत्युत्तरवाक्ये आत्मपदस्य जीवबोधकत्वमपि अयमात्मा ब्रह्मेति श्रुतेः । तथा जीवबोधकताया इत्यर्थः । तेनेति । इयमिन्द्रप्रजापतिसंवादस्था । स उत्तमः पुरुषरूपः । तत्र पुरुषोत्तमे क्रीडन् क्रीड विहारे । रममाणः पर्येति पर्यटति स्त्रीभिरिति मानसोत्पन्नाभिः सह यानैर्वा ज्ञातिभिर्वा । न उपजनं समुत्पन्नशरीरं इदं स्थूलशरीरं च स्मरति । स यथा प्रयोग्य इति । प्रयोग्यः प्रयुज्यते इति प्रयोग्यः अश्वादिः । आचरणे आचरति गच्छत्यनेनेत्याचरणं रथादिस्तत्र युक्तः । एवमेवास्मिन् विस्मृतशरीरेऽयं प्राणो ईश्वरेण नियुक्तो वर्तते । श्रुतिस्तु 'तत्र पर्येति जक्षन् क्रीडन् स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं स्मरतीदं शरीरं स यथा प्रयोग्य आचरणे युक्त एवमेवायमस्मिञ्छरीरे

रूपेणाभिनिष्पद्यते' इति । तत्र संशयः । परं ज्योतिर्महाभूतरूपं ब्रह्म वेति ।
ब्रह्मधर्माश्च ये केचित् सिद्धा युक्त्यापि साधिताः ।
निर्णायकास्ततोऽप्यन्ये चत्वारोऽत्र निरूपिताः ॥

भाष्यप्रकाशः

तत्र पर्येति जक्षन् क्रीडन्नित्यग्रिमे वाक्ये तच्छब्दद्वयेनोभयोः परामर्शेऽपि विभक्तिसामानाधिकरण्यं सन्निधिं चानादृत्य व्यवहितं व्यधिकरणविभक्तिबोधितमपि ब्रह्मैवादरणीयमिति निश्चयात् । अतो दहरविद्यास्थं वाक्यमेव विषयः । संशयस्तु स्फुट एव । तद्बीजं तु प्रकरणापेक्षया श्रुतेः प्राबल्यम् । ज्योतिश्चरणाधिकरणेनास्य गतार्थतानिरासायास्य प्रयोजनं कारिकयाहुः ब्रह्मेत्यादि । चत्वार इति । उपसंपद्यव्यत्वम् उपसंपन्नस्वरूपाभिनिष्पादकत्वम् । पूर्ववाक्यगतं

रश्मिः ।

प्राणो युक्त' इति । उभयोरिति जीवोत्तमपुरुषयोः । अनादृत्येति । स तत्रेति विभक्तिसामानाधिकरण्यानादरः स तत्रेत्यत्रैव संनिध्यनादरः जीवद्वारा पर्यटनस्येश्वरे सत्त्वात् तत्रेति सप्तमी । 'चैतन्यस्य तत्त्वममलं मणिमस्य कण्ठे' इति वाक्याज्जीवश्चैत्यम् । स्वतत्त्वव्यवहितमप्युभयं ब्रह्मैव । ननु एकरसत्वासक्तित्वविरुद्धमिदं रूपमिति चेत्तत्राहुः आदरणीयमिति श्रुतिप्रामाण्यादादरणीयम् । ननु श्रुतिरन्यार्था भवतीति चेत्तत्राहुः इति निश्चयादिति । (भाष्ये) विरुद्धधर्माश्रयब्रह्मोपपादनमिति इति निश्चयात् । किं च सुषुप्तिसामयिकं रूपं निर्गुणमिति हेतोर्निश्चयात् । सगुणनिर्गुणयोरैक्याच्च विद्वन्मण्डने इति ।

अत इति इन्द्रप्रजापतिसंवादस्यासंदिग्धत्वात् । दहरविद्यास्थस्य संदिग्धत्वात् । स्फुट इति दहरविद्यास्थे स आत्मेत्येवं य एष संप्रसाद इति वाक्यस्य शेषे वाक्ये तच्छब्देन महाभूतज्योतिःसंपन्नजीवात्मा वा ब्रह्मरूपज्योतिःसंपन्नजीवात्मा वेति संदेहज्ञाने विशेषणभूतविषयवाक्योक्तज्योतिर्ज्ञानं कारणम् । किं ज्योतिर्ब्रह्म उत महाभूतमिति तस्मात्संशयः स्फुटः । कल्पितसंशयबीजं तु स आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति वाक्यशेषे ब्रह्म इत्यस्य विधानार्थं उपासार्थश्च ग्रहणसंभवः । न च कल्पितसंशये भाष्यसंशयपर्यवसानमिति शङ्क्यम् । भाष्यसंशयादिभिरात्मनो ब्रह्मरूपज्योतिःसंपन्नजीवात्मत्वे निश्चिते स आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मेत्यत्र आत्मा ब्रह्मरूपज्योतिःसंपन्नजीवात्मा न महाभूतज्योतिःसंपन्नजीवात्मेति सिद्धान्तसंचारात् । स आत्मेति वाक्यशेषस्य एष आत्मेत्यपि पाठः कचित्पुस्तके तेनैव ब्रह्मेत्यस्योपासार्थत्वहानेः कल्पितसंशयोपक्रमः । प्रकृतमनुसरामः । भाष्यप्रकाशे श्रुतेरिति रूढिर्योगमपहरतीत्यस्याः पूर्वत्रासति बाधकेऽङ्गीकारोक्तेः । प्रकरणाप्राबल्यादकारणत्वाच्च रूढेरित्यनुक्त्वा श्रुतेरित्युक्तम् । सा च परं ज्योतिरित्यत्र कर्मवाचकद्वितीयाश्रुत्वा उपसंपदनाङ्गत्वं उपसदनकर्मत्वम् । अत्र लिङ्गादिकल्पनव्यतिरेकेण महाभूतज्योतिर्वासनाप्राबल्यात् प्रतीयते इति बीजत्वम् । श्रुतेर्निरपेक्षस्वरूपायाः । ब्रह्मेत्यादीति निरूपणं हि लक्षणैस्तानि चासाधारणधर्मरूपाणि इति ब्रह्मनिरूपणार्थं धर्मापेक्षायां ब्रह्मधर्माश्चकारात् तद्रूपं ब्रह्म यद्वा चकारात् जीवमुख्यप्राणलिङ्गानि । 'जीवमुख्यप्राणलिङ्गादिति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्' इति सूत्रभाष्ये जीवमुख्यप्राणव्यवहिताः । ये केचिदिति सामान्यतो निर्देशः । सिद्धा इति सत्यज्ञानानन्तानन्दादयः ते जन्माद्यस्य यत इत्यधिकरणे यत इति पदेन ब्रह्मवाक्यत्वनिर्णायकाः निरूपितप्रायाः युक्त्या अपिपदेन श्रुत्या च समन्वयाद्यधिकरणेषु समवायित्वेनाकारत्वादयः साधिताः प्रपेक्षां मतभेदेन । निर्णायका निरूपिताः ततोऽप्यन्य इति तेभ्योऽप्यन्ये ।

तत्र रूक्मोपपत्त्या च महाभूतमेव ज्योतिरित्येवं प्राप्ते। उच्यते। ज्योतिर्ब्रह्मैव। कुतः। दर्शनात्। सर्वत्र दर्शनं न्याय इति यावत्। सुषुप्तौ सर्वत्र, 'सता सोम्य तदा संपन्नो भवति। सति संपद्य न विदुः सति संपद्यामहे' इति।

भाष्यप्रकाशः

हृदयत्वं सत्यपदोक्तं मर्त्याऽमृतनियामकत्वं चोत्तरवाक्यगतम्। तद्यथापि हिरण्यनिधिमित्यारभ्यैवंवित् स्वर्गं लोकमेतीति वाक्यैक्यात्। निरूपिता इति निर्णायका निरूपिताः। अतो न गतार्थतेत्यर्थः। पूर्वपक्षमाहुः तत्रेत्यादि। उपपत्त्येति। अस्माच्छरीरात् समुत्थायेत्यादिबोधितया तथा। राजशिबिराणि तीरात् समुत्थितानीत्यादौ लोके समुत्थानस्योद्गमने प्रयोगदर्शनादत्र च शरीरादुद्गमनोत्तरं ज्योतिष उपसंपत्तिबोधनात्। तस्माच्चार्चिरादिमार्गेण जीवस्य गमने अर्चिराद्यपेक्षया आदित्यादेः परत्वादिति। सिद्धान्तमाहुः उच्यत इत्यादि। सर्वत्र दर्शनमिति। समानप्रकरणे एतत्स्थाने ब्रह्मवाचकपददर्शनम्। तथा च यत्र ब्रह्मवाचकं पदमभिधीयते तस्मिन् स्थाने। अत्र ज्योतिःपदं दृश्यते अतस्तथेत्यर्थः। तदेव दर्शयन्ति सुषुप्तावित्यादि।

रश्मिः।

उपेति परंज्योतिरुपसंपद्य इत्यनेनोपसंपत्तव्यत्वं स्वेन रूपेणाभिनिष्पद्यत इत्यनेनोपसंपन्नेत्यादिः। पूर्वेति स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृदयमिति तस्माद्धृदयमहरहर्वा एवंवित्स्वर्गं लोकमेतीति श्रुतिगतम्। हृदीत्यत्र केर्लुक् हृदयम्। उत्तरेति उत्तरवाक्यं तु तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति तानि ह वा एतानि त्रीण्यक्षराणि सतियमिति तद्यत्सत् तदमृतमथ यत्ति तन्मर्त्यमथ यद्यं तेनोभे यच्छति यदनेनोभे यच्छति तस्माद्यमहरहर्वा य एवंवित्स्वर्गं लोकमेतीति श्रुतिवाक्यगतम्। सतीत्यत्र केर्लुक् सत्यम्। यमित्यत्र कर्तरि अन्येभ्योपीति यम्। यच्छादेशो दाण्धातोः। स इत्यस्य पारिभाषिकोर्थोऽमृतम्। मर्त्यं तिइत्यस्य। ननु य एष संप्रसाद इति श्रुतावेव चत्वारो धर्मा वक्तव्या इत्याकाङ्क्षायामाहुः तथेति। न गतार्थतेति तथा च ज्योतिश्चरणाधिकरणे ज्योतिष्ट्वं श्रुतियुक्तिभ्यां साधितो धर्मोत्र तु उपसंपत्तव्यत्वं सिद्धप्रायं ज्योतिष्ट्वं पुरस्कृत्योच्यते इति तथेत्यर्थः। कथमस्य युक्तित्वं अत आहुः राजेति। तथा च दृष्टान्तेनोपपादनं युक्तिर्यथा श्वेतकेतूपाख्याने न्यग्रोधफलमाहरेत्यादि। न त्वन्यथाज्ञानरूपस्तर्कः। इतीति राजेत्यादिदृष्टान्ते राजशिबिराणि तीरात्समुत्थितानि स्वेष्टदेशपूर्वदेशात् महाभूतज्योतिःस्थानापन्नान्प्राप्य स्वरूपरूपस्थानीयमिष्टदेशं प्राप्नुवन्तीति। तथा च शंकरभाष्यम्। नाडीखण्डे अथ यत्रैतदस्माच्छरीरात् उत्क्रामति अथ एतैरेव रश्मिभिरूर्ध्वमाक्रमते इति मुमुक्षोरादित्यप्राप्तिरभिहितेति। समानेति इदं प्रकरणं वाजिनामतो वाजिशाखायामेतद्वाक्यं द्रष्टव्यम्। न बृहदारण्यके न छान्दोग्येऽन्यत्रैव वाक्यमिदम्। 'शब्दविशेषात्' इत्यधिकरणे स्पष्टः समानप्रकरणविचारः। तथेति ज्योतिःपदस्य ब्रह्मवाचकत्वम्। सुषुप्तावित्यादीति इमाः श्रुतयोऽष्टमप्रपाठकस्थे द्वे दशमस्याथोपनिबन्धनाऽपरा इत्येवं तिस्रः। अत्र सच्छब्दस्य ब्रह्मणि शक्तिः 'ॐ तत् सदिति निर्देशो ब्रह्मणः' इति गीतायाः। अत्र ब्रह्मज्योतिर्दर्शनादिति जिज्ञासाधिकरणाद् 'ब्रह्म' इत्यनुवर्त्य पक्षं ब्रह्म कृत्वा सूत्रार्थो न भवति पक्षस्य सूत्रेऽनुपादानात्। किं तु ज्योतिर्ब्रह्म दर्शनात्। ज्योतीरूपपक्षस्य सूत्रे उपादानात्। अत एव पक्षहेतूपादानकृतदोषोपि न। पर्वतो धूमादित्यप्रयोगः पर्वतस्य प्रत्यक्षत्वात्। तद्ब्रह्मज्योतिषः शास्त्रप्रत्यक्षविषयस्य पक्षत्वं दर्शनादित्युक्ते दर्शनविषयत्वादित्यर्थो भवति तदा [illegible]

दहरश्रुतावुक्तं गच्छन्तीत्यादिप्रदेशेषु ब्रह्मसंपत्तिरेवोक्ता । अत्रापि संप्रसाद-वचनात् परं ज्योतिर्ब्रह्मैव । तस्माद् यः कश्चन शब्दो ब्रह्मस्थाने पठितस्तद्वाचक एवेति ॥ ४० ॥

इति प्रथमाध्याये तृतीयपादे एकादशं ज्योतिरधिकरणम् ॥ ११ ॥

भाष्यप्रकाशः ।

संप्रसादवचनादिति । सुषुप्त्यवस्थत्वबोधकादेतद्वचनात् । सिद्धमाहुः तस्मादित्यादि । अत्र जीवस्वरूपापत्तिहेतुत्वेन महाभूतरूपे ज्योतिषि प्रलयकर्तृत्वख्यातिभ्रान्तिर्बुद्धिस्था निवारिता ॥४०॥

इत्येकादशं ज्योतिरधिकरणम् ॥ ११ ॥

रश्मिः ।

सर्वत्र पदं मायाया अदर्शनात् । 'नास्ति श्रुतिषु तद्वार्ता' इति निबन्धात्श्रुतिषु मायाया अदर्शनात् । सर्वत्र श्रुत्यादिषु इन्द्रादिशब्दानां दर्शनात्तदर्थस्य ब्रह्मत्वं स्यात्तद्वारणाय संपूर्वकपदेः समभिव्याहारे सर्वत्र दर्शनं वाच्यम् । इषे त्वेत्यादाविडादीनां तत्रास्तीति न तदर्थस्य ब्रह्मत्वम् । संपूर्वकपदेः समभिव्याहारे सर्वत्र दर्शनमुपसौम्य तदादिपदानां संभाव्येत तद्वारणाय संपूर्वकस्य पदेः समभिव्याहारे ब्रह्मस्थाने पठितस्य सर्वत्र दर्शनं हेतुः । न च भाष्यीयहेतुविघटनमिति शङ्क्यम् । तस्माद्यः कश्चन शब्दो ब्रह्मस्थाने पठितस्तद्वाचक एवेति भाष्यात् । न च स्वमतदृष्टे हेतोः साध्याभाववृत्तित्वेन साधारण्यमिति शङ्क्यम् । 'अत एव च नित्यत्वम्' इति सूत्रे वेदस्य ब्रह्मतुल्यत्वेन मिथ्यात्वाभावात् । तथा च हेतोः साध्यवद्वृत्तित्वेन न साधारण्यम् । ब्रह्मव्यतिरिक्तसृष्टौ हेतुसत्त्वयने वेदे इति विशेषणं देयम् । ननु एवमपि ब्रह्मस्थाने पठितस्य सतो ज्योतिषश्च सर्वत्रादर्शनात् स्वरूपासिद्धो हेतुरिति चेन्न । ब्रह्मस्थाने पठितस्य ब्रह्मवाचकत्वस्य सर्वत्र दर्शनं हेतुरित्यर्थात् ब्रह्मवाचकत्वं तु पदभेदेपि सतो ज्योतिषश्च समानमिति न स्वरूपासिद्धो हेतुः । न च सर्वत्र दर्शनमित्येवास्तु विशेषणस्य किं प्रयोजनमिति वाच्यम् । यस्य कस्यचिद् सर्वत्र दर्शनादपि ब्रह्मत्वसिद्धेः । अतो वेदे संपूर्वकस्य पदेः समभिव्याहारे ब्रह्मस्थाने पठितस्य ब्रह्मवाचकत्वस्य सर्वत्र दर्शनादिति हेतुः साध्यतावच्छेदकसंबन्धः स्वाश्रयवाचकता । शब्दार्थयोरत्यन्ताप्रविवेके आश्रयता हेतुतावच्छेदकसंबन्धो विषयता इति न साध्यहेत्वोः अर्थवाचकशब्दोभयनिष्ठत्वं जैमिनिमतस्य व्यासचरणैः यत्र कुत्राङ्गीकारादर्थशब्दयोः पक्षत्वापत्तावपि क्षतिदोषो नास्ति । ननु य एष संप्रसाद इति दहरविद्यास्थेऽयं हेतुर्न गच्छति हेतोः सुषुप्ति-वाच्यजीवत्वात् इत्याशङ्क्याहुः सुषुप्तेति । तथा च संप्रसीदत्यस्यां चित्तमिति व्युत्पत्तेः विज्ञानेन्द्राचार्यैः कृतत्वात् सुषुप्तिः जीवे संप्रसादस्यौपाधिकतया धर्मधर्म्यभेदेनौपचारिकः संप्रसादशब्दः । एवं जीवे सुषुप्त्यवस्थाया बोधकात् आकृतिशक्तिवादिमतेनोक्तम् । तथा च दहरविद्यायामपि सुषुप्तिरस्तीति हेतुर्गच्छत्येवेति भावः । अत्र स एष संप्रसाद इत्यत्र जीवः संप्रसादशब्दवाच्यः संप्रसाद इत्यत्र सुषुप्तिः संप्रसादशब्दवाच्या तदा सुषुप्त्यवस्थाबोधकत्वम् । तद् संप्रसाद इति सप्तम्यन्तं ङेः सुः । तथा च जीवोऽस्माच्छरीरात् समुत्थाने सुषुप्तिविशिष्टः सुषुप्तौ वा उत्तिष्ठति तदुक्तं प्राज्ञेनात्मनान्वारूढ उत्सर्जन्यातीति वचने । न च मध्वभाष्ये अन्वारूढो विष्णुरिति जीवः कुतोन्वारूढ इति शङ्क्यम् । विष्णुत्वाज्जीवस्यापि । सर्वो विष्णुर्यतः परं ज्योतिरुपसंपत्तिः सुषुप्त्यनुवादिका स्वेन रूपेणाभिनिष्पद्यत इति । बालरूपेण ज्ञानी भक्तोपि आत्मीयाभ्यामलौकिकसामर्थ्यभगवत्सेवोपयोगिदेहाभ्यां युक्त एव निष्पद्यते ॥ ४० ॥

इत्येकादशाधिकरणम् ॥ ११ ॥

## आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥ (१।३।१२)

'आकाशो वै नामरूपयोर्निर्वहिता ते यदन्तरा तद् ब्रह्म' इति श्रूयते। तत्राकाशशब्दे संदेहः। भूताकाशः परमात्मा वेति। नामरूपनिर्वाहमात्रत्वमव-काशदानाद् भूताकाशस्यापि भवतीति न ब्रह्मपरत्वम्। अन्यस्य च नियामकस्या-भावादित्येवं प्राप्ते। उच्यते। आकाशः। परमात्मा। अर्थान्तरत्वादिव्यपदेशात्।

भाष्यप्रकाशः।

आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥ श्रूयते इति । छान्दोग्यसमाप्तौ श्रूयते। आकाशशब्दे संदेह इति। उभयत्र प्रयोगसाधारण्यात्। श्रुतौ वैशब्दात् प्रसिद्ध-सुग्रहेण ब्रह्मशब्दोक्त्या चोभयोर्बोधनाच्च शब्दे संदेह इत्यर्थः। अनेन बीजमुक्तम् । पूर्वपक्षमाहुः नामेत्यादि। नामरूपयोर्निर्वाहोऽविच्छेदेन चालनम्। तत्कर्तृत्वमात्रमत्र प्रतीयते, न तु कश्चिदन्यो धर्मः। तच्चावकाशदानाद् भूताकाशस्यापि संभवतीत्याकाशपदस्य न ब्रह्मपरत्वम् । न च धर्मस्य सामान्यत्वेन प्रकरणबलाद् ब्रह्मपरत्वमेव कुतो नाद्रियत इति शङ्क्यम् । प्रजापतिरुवाचेत्यस्य द्विरुक्त्या ब्रह्मप्रकरणस्य समाप्त्यवगमात्। श्यामाच्छबलमित्यादिना प्रकरणान्तरेण व्यवधानाच्च। नापि जीवपरत्वं शङ्कितुं शक्यम् । अभिसंभवानीत्यस्य द्विरुक्त्या तत्प्रकरणस्यापि समाप्तेः। आकाशपदस्य जीवे क्वापि प्रयोगादर्शनाच्च । अतोऽस्यैव धर्मस्य यद् ब्रह्मधर्मतानियामकं तदत्र किमपि न दृश्यते। न चोपसंहारगतानां ब्रह्माऽमृतात्मशब्दानां तथात्वम्। अवकाशदानकृतबृंह-णनित्यत्वव्यापकत्वगुणयोगेन प्रशंसानिबन्धनया गौण्यापि नेतुं शक्यत्वात् । नापि, ते यद-

रश्मिः।

आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥ छान्दोग्यसमाप्तौ इति चरमवर्णध्वंसः समाप्तिर्नास्ति नैयायिकमताभावात् । अतश्चतुर्दशानुवाकः समाप्तिपदेनोच्यते पञ्चदशानुवाको यद्यपि समाप्त्यनुवाकस्तथापि तत्र तद्धै तद्ब्रह्मा प्रजापतये उवाच प्रजापतिर्मनवे मनुः प्रजाभ्यः इति विद्यापरंपरामुक्त्वाऽऽचार्यकुलाद्वेदमधीत्येत्यादेः 'कृत्स्नभावात्तु गृहिणोपसंहारः' इति सूत्रे विषयवाक्यत्वेन भक्तिमार्गीयत्वेन दुर्लभाधिकारविषयत्वात् चतुर्दशानुवाकः समाप्त्यनुवाकः। शब्द इति आकाशशब्दे सति अर्थयोः संदेहः । शब्दसंदेहस्य प्रथमपादे निवारणात् द्वितीयपादे आधेयार्थसंदेहं निवार्य तृतीयपादे आधारसंदेहवारणात्। यद्वा नायं नियमो यः सर्वत्रार्थसंदेह अतः शब्दे संदेहः। बीजमिति आकाशशब्दरूपम्। अन्यस्येति भाष्यं विवरीतुमाहुः न चेति। धर्मस्येति नामरूपयोरविच्छेदेन चालनस्य । समानत्वेन स्वार्थे ष्यञ् । द्विरुक्त्येति क्वचित्पुस्तके छान्दोग्ये एकवारमुक्तिर्वर्तते। प्रकरणेति। जीवप्रकरणेन दहरप्रकरणेनेति यावत्। इदं त्रयोदशात्मकानुवाकेनोच्यते । अतो द्वादशानुवाकपर्यन्तमुक्तस्येन्द्रप्रजापतिसंवादस्य ब्रह्म-प्राकरणिकस्य त्रयोदशानुवाकेन व्यवधानात्। नापीति व्यवहितब्रह्मप्रकरणात् मामूदाकाशस्य ब्रह्मपरत्वम्। अव्यवहितजीवप्रकरणात् जीवपरत्वं तु स्यादिति शङ्कितुम्। अस्येति नामरूपयो-रविच्छेदेन चालनस्य। ब्रह्मामृतेति तदमृतं स आत्मेति विषयवाक्योत्तरं पठनात्। तथात्वमिति ब्रह्मधर्मतानियामकत्वप्रकारेण । त्वं न च वदेरिति योजना । अवेति बृंहणत्वाद् ब्रह्मत्वं नित्यत्वादमृतत्वं व्यापकत्वादात्मत्वमिति एकं प्रत्यक्षसिद्धं द्वयं 'आकाशवत्सर्वगतश्च नित्यः' इति श्रौतालम्बम्। प्रशंसेति प्रशंसया निबन्धनं कल्पनं यस्याः सा प्रशंसानिबन्धना गौणी। उपचारार्थ-

यद् भूताकाशस्य प्रयोजनं श्रुतिसिद्धं, तस्मादन्यस्य व्यपदेशः कार्यान्तरादिव्यपदेशश्च । यत्रैव हि सिद्धवत्कारेणोत्कृष्टधर्मा अतदीयास्तदेव ब्रह्मेति । नापि नामरूपनिर्वाह आकाशस्य माहात्म्यहेतुर्भवति । वै निश्चयेनेति सिद्धवत्कारात्नोपासनापरत्वम् ।

---

भाष्यप्रकाशः ।

न्तरेत्युक्तस्य नामरूपान्तर्वर्तित्वस्य तथात्वम् । व्यापकतयाऽऽकाशेऽपि तत्सिद्धेः । अत उपक्रमगतस्याकाशपदस्योच्चारणमात्रेण भूताकाशावगमात् स एव ग्राह्य इत्येवं प्राप्त इत्यर्थः । सिद्धान्तं व्याचक्षते । यद्भूतेत्यादि । अर्थः प्रयोजनं यद्भूताकाशस्य श्रुतिसिद्धं वायुजननं तस्मादन्यस्य व्यपदेशः । ते यदन्तरेत्यनेनोक्तस्यासमन्तात् तदन्तःस्थापनरूपस्यादिपदेन ब्रह्मत्वादेश्च यो व्यपदेशः कथनम् । तथा च, अन्तरः अर्थो यस्मादित्यर्थान्तरम् । वाऽऽहिताग्न्यादिष्विति परनिपातः । एवमत्र बहुव्रीहिणा कर्ता बोध्यते । अन्योऽर्थोऽर्थान्तरमिति नित्यसमासपक्षे लक्षणया कर्तृलाभः । तस्य भावोऽर्थान्तरत्वम् । तदादीनि । ते यदन्तरेत्युक्तं बहिःस्थान्तःस्थापनम् ।

रश्मिः ।

सादृश्यात्मकशक्यसंबन्धरूपा गौणी तया नेतुं तद्यथा आकाशो ह वा इत्यत्र ब्रह्म आकाशं ब्रह्म सत्त्वादिविशिष्टसत्त्वाद्युपचारविशिष्टा अर्था बृंहणनित्यत्वव्यापकत्वानि ब्रह्मविशिष्टानि तैः सादृश्यं ब्रह्मगतभूयोधर्मवत्त्वमाकाशे तदेवाकाशे शक्यस्य ब्रह्मत्वादिविशिष्टब्रह्मणः संबन्धः । तद्रूपा गौण्याकाश इति लक्षणसमन्वयः । यथा छत्रिणो यान्ति इत्यत्रेयम् । उपचारो लक्षणा यथाऽत्रैव शक्यस्य सत्वादेः संबन्ध आधेयता बृंहणादिनिष्ठा । तदुक्तम् 'लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता' इति काव्यप्रकाशे । तथात्वमिति ब्रह्मधर्मत्वं तु भ्रम् । ऐक्यं भातीत्यर्थः । भ्रम् ऐक्यात्मयोरिति मनोरमा । ते नामरूपे यदस्यान्तरा मध्ये इति श्रुत्यर्थः । वाय्विति । आकाशाद्वायुरिति श्रुतेः तैत्तिरीयायाः । वायुजननं प्रयोजनं फलं कार्यमिति यावत् । अन्तर आ इति छेदं मत्वाहुः आसमन्तादिति । हरिभ्यां याह्योक आ इतिवत् । छन्दसि परेपीति परनिपातः अन्तःस्थापनं बहिष्ठस्य । ब्रह्मेति तद्ब्रह्म तदमृतं स आत्मेति श्रुत्युक्तस्य । अन्तर इति । वायुजननादन्तरोऽन्यः । बहिष्ठस्यान्तःस्थापनरूपः । अर्थः कार्यं यस्मात् कर्तुः 'जनिकर्तुः प्रकृतिः' जायमानस्य हेतुरपादानं स्यात् इति पञ्चमी क्वचित् । परनिपात इति अर्थो जायमानो विवक्ष्यते । क्वचिदाहिताग्न्यादीनामाकृतिगणत्वादिति भावः । आहिताग्निः अभ्याहितः जातपुत्र पुत्रजातः जातदन्ता जातश्मश्रुः तैलपीतः घृतपीतः ऊढभार्यः गतार्थः इत्याहिताग्न्यादयः । ननु षष्ठीसप्तम्यौ बहुव्रीहावन्यपदार्थोत्तरं कुतो नोक्ते अत आहुः एवमत्रेति । ननु नित्यसमासः कुतो न कृत इत्याकाङ्क्षायां लक्षणापत्त्या न कृत इत्याहुः अन्य इति । लक्षणयेति । शक्यसंबन्धः कार्यकारणभावः । सूत्रे भावप्रत्ययाङ्गाध्ये विशेषं पूरयन्तः आहुः तस्य भाव इति भाष्यशेषपूरणाभावे आकाशोर्थान्तरादिव्यपदेशादिति पाठे भान्यते । कुतः, यतोऽर्थान्तरं बहिष्ठस्यान्तःस्थापनं तस्य व्यपदेशोत्र न त्वन्तःस्थापनत्वस्येति । परं स्वहस्तेन पाठो न भणितः त्वपदरहितपाठादर्शनात् । कार्यान्तरेति भाष्यं विवृण्वन्ति स्म तदादीनीति । कार्यान्तरं कार्यं वायुजननं तदन्यद् बहिष्ठस्यान्तःस्थापनं भावप्रधानो निर्देशः । एव तच्छब्दार्थः । अर्थान्तरत्वमिति यावत् एव तच्छब्दार्थः । तत् अर्थान्तरत्वमादिर्येषां तानि तदादीनि सामान्ये नपुंसकं बहु

भाष्यप्रकाशः

ब्रह्मादिश्रुतयश्च । तेषां व्यपदेशात् कथनादाकाशो ब्रह्मैव । नहि रूपान्तर्गतस्य निरूढस्या- काशस्यासंकुचितं तन्निर्वोढृत्वं संभवति न वा क्वापि श्रुतावाकाशमाहात्म्यहेतुत्वेन तदुक्तमस्ति । नाप्यसंकुचितं तयोरन्तःस्थापनं बृंहणं वा तथा । वायुजनकत्वस्यैव श्रावणात् । अत आकाश- कार्यातिरिक्तकार्यकर्तृत्वादेरत्रोक्तत्वाद् ब्रह्मादिश्रुतीनां चानुकूल्यादुपसंहारस्य प्राबल्यमिति ब्रह्मै- वाकाशः । स्वारसिकं च शब्दानां ब्रह्मवाचकत्वमतो न लक्षणादोषोऽपि । तेनेदं सिद्धम् । यत्रैव

रश्मिः ।

कार्यान्तरादिव्यपदेशश्चेति भाष्यस्यायमर्थः । कार्यमर्थान्तरत्वं तदन्यत् बहिष्ठान्तःस्थापनं तत्कार्यान्तरं तदादि येषामिति तदादीनि । भाष्ये चकारश्रावणात् । नन्वर्थान्तरत्वादिव्यपदेशादित्यत्र नामरूप- निर्वोढृत्वं हेतावप्रविष्टमिति न्यूनतादोषस्तद्वारणायाहुः नहीति । रूपप्रपञ्चः नामप्रपञ्चश्च तयोर्मध्ये रूपप्रपञ्चान्तर्गतस्य निरूढस्य नामरूपाभ्यां अन्य इव ऊढः वह प्रापणे प्राप्यस्य निर्वाहस्यर्ह तर्कस्य वा ऊह वितर्के ऋहलोर्ण्यत् । तन्निर्वोढृत्वं रूपनामनिर्वोढृत्वम् । तदुक्तमिति निर्वोढृत्वमुक्तम् । तथेत्याकाशकार्यत्वेनोक्तम् । 'तदमृतं स आत्मा' इति श्रुतेः । विषयवाक्येनुक्तेर्बृंहणपर्यन्तमुक्तम् । उपसंहारस्येति आकाशो ह वा इत्यत्राकाशपदमुपक्रमे । उपसंहारे तद् ब्रह्मेति ब्रह्मपदं स आत्मेति आत्मपदं वा । तत्रोपक्रमस्य भाष्योक्तरीत्या संजातविरोधित्वेन प्रकरणादुपसंहारस्यासंजातविरोधित्वेन प्राबल्यम् । नन्वाकाशपदं वियति रूढं आकाशशरीरं ब्रह्मेति आरणे । 'आत्मन आकाशः संभूतः' इति तैत्तिरीये च तत्र ब्रह्म आकाश इत्युक्तौ शरीरशारीरकभावसंबन्धो वा कार्यकारणभावसंबन्धो वा लक्षणा वाच्येत्यत आहुः स्वारसिकमिति । वेदान्ते असति बाधके रूढिर्योगमपहरतीति ब्रुगस्य तदनादरश्रवणादिति सूत्रे व्युत्पत्तेर्विशेषितत्वेन प्रकृते व्याकरणरूपाङ्गबाधरूपबाधकस्य सत्त्वात् आकाश्यते दीप्यते इत्याकाश इति योगस्य सुवचत्वेन स्वारसिकत्वम् । तथा चार्थान्तरत्वस्यादी आकाशत्वनामरूपत्वनिर्वोढृत्वे ते अर्थान्तरत्वादी अर्थान्तरत्वादी च अर्थान्तरत्वादयश्चार्थान्तरत्वादयः स्वरूपैकशेषः अर्थान्तरत्वादीनां व्यपदेशः अर्थान्तरत्वादिव्यपदेशस्तस्मादिति हेत्वर्थः । सिद्धमाहुः तेनेति । इदं भाष्ये व्युत्पादनं व्युत्पत्तिरिति यावत् । वक्ष्यते प्रकारभेदेन यत्रैवाकाशादौ सिद्धवत्कारेण भावे घञ् सिद्धवत्करणेन वा इत्यादिपदयोगेनोत्कृष्टनामधर्मरूपनामनिर्वाहकत्वादयः अतदीया यत्र इति निर्दिष्टाधिकरणाः संबन्धिनः तदेवाधिकरणं ब्रह्म यथात्राकाशः परमात्मा यथा च उषा वा अश्वस्य शिरः सूर्यश्चक्षुः वातः प्राणः इति अत्रैवकारेण सिद्धवत्कारोस्ति अतदीयाः अश्वासंबन्धिनः तदश्वरूपाधिकरणं ब्रह्म न हयः व्युत्पत्तौ दशमस्य विशुद्धयर्थं नवानामिह लक्षणमिति द्वितीयस्कन्धा- द्यैवेह किं च नाग्र आसीदिति श्रुतेरिहेत्याश्रयनिर्देशादन्यविभक्त्यन्तं पदं त्यक्त्वा सप्तम्यन्तमुक्तम् । यत् सिद्धवत्कारेण उत्कृष्टधर्मा इत्यत्र प्रकाशाश्रयन्यायेनाभेदान्वयः । सूर्यः प्रकाश इतिवत् । एवं यत्प्रति सिद्धवत्कारेणोत्कृष्टधर्माः येन सिद्धवत्कारेणोत्कृष्टधर्माः यस्मा उत्कृष्टधर्माः यस्मादुत्कृष्टधर्माः यस्योत्कृष्टधर्माः इत्यत्र यल्लक्षीकृत्योत्कृष्टधर्मा इत्यादि बोध्यम् । एवकारेणेन्द्रप्रतर्दनसंवादे जीवीयधर्माः जीवे यत्रेति यत्पदवाच्यप्राणरूपाधिकरणात् अन्यस्मिन्नतदीयाः अप्राणसंबन्धिनः उक्ता इति जीवस्य व्यवहारकाले भेदेन व्यपदेशस्यांशिभिन्नत्वापत्तिर्वार्यते । जीवस्य प्राणेतरस्य व्यवच्छेदात् । इतरव्यव- च्छेद एवकारार्थः । 'प्राणस्तथानुगमात्' इत्यधिकरणे इन्द्रप्रतर्दनसंवादो व्याकृतः । सिद्धवत्कारेणेति पदं चेन्न दीयते तदा 'शंभुर्विश्रमवलय स्वीकृत्य समकच्छिताम्' इत्यत्रोक्तव्युत्पत्त्या राज्ञः शंभुत्वापत्तिः

भाष्यप्रकाशः ।

सिद्धवत्कारेणोत्कृष्टधर्मा अतदीयास्तदेव ब्रह्मेति । अथ लोकदृष्ट्या विचार्यम् । तदसंगतम् । 'अदो ददाति श्वसतां पदं यन्नियमात्क्षमः' इति स्मृतेस्तस्यापि भगवदधीनत्वान्नामरूपनिर्वाह आकाशस्य

रश्मिः ।

तद्वारणाय सिद्धवत्कारेणेति पदम् । तथाहि चन्द्रालोककारिकेन्द्रपदघटिता कार्यान्यथा तदीयपदोक्तशंभुसंबन्धित्वस्य समदृष्टितायाममावादेव व्युत्पत्त्यसंचारे सिद्धवत्कारस्य किं प्रयोजनं स्यात् यद्वाऽऽलंकारिकाणां शंभुरसमदृष्टिर्वेदान्तिनां तस्य समदृष्टित्वेन वा शंभुसंबन्धित्वस्य समदृष्टितायाममभावः ततश्च व्युत्पत्त्यसंचारे राज्ञः शंभुत्वापत्तिः सा वारिता । यतो वा इत्यादिपदानां सिद्धवत्कारबोधकानाममभावोत्र । अथ इत्यस्यास्मिन्नहनीत्यर्थात् न सिद्धवत्कारवाचकत्वं उत्कृष्टताधर्मेषु चेन्नोच्येत तर्हि मर्यादापुष्टस्य पुष्टत्वापत्तिः अत्रोदाहरणं किमिति चेन्न ।

'भक्तो मार्यादिकश्चैव विधर्मैरपि संगतः ।
अनुग्रहेण पुष्टः स्यादत्र सात्र ह्युदाहृतिः' ॥

व्युत्पत्तिसंचारे तु पुष्टत्वं स्यात् । विधर्मा ह्यनुत्कृष्टा इति व्युत्पत्त्यसंचारः । अतदीया इति । किमर्थमेतदर्थम् । अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्येत्यत्र व्युत्पत्तिसंचारे प्राणस्य ब्रह्मत्वापत्तिः प्रज्ञात्मेदमिति ह्यात्मपदार्थत्वेनैव प्राण एव सिद्धवत्कारेण सिद्धवत्कारवाचकः श्रौत एवकारस्तदर्थेनोत्कृष्टधर्माः प्रज्ञात्मत्वादयस्तदेव ब्रह्म । अत्र ब्रह्मपदाभावात् प्रज्ञात्मेति पदसत्त्वात् प्रज्ञात्मा । अतदीयपदस्य व्युत्पत्तौ सत्त्वे तु उत्कृष्टा धर्मा अतदीया न सन्तीत्यथ खलु इत्युक्त-प्राणस्य न प्रज्ञात्मत्वं प्रज्ञात्वमात्मत्वं च किं तु प्रज्ञारूपत्वं तथा च यत्रैवाकाशादौ हि निश्चयेन सिद्धवत्कारेण वैकारादिवाच्येनोत्कृष्टा धर्मास्ते यदन्तरा तद् ब्रह्मेत्युक्ता अतदीया अनाकाशीयाः तदेवाकाशमेव ब्रह्मेति व्युत्पत्तिसमन्वयः । नापीति भाष्यं विवरीतुमाहुः अथ लोकेति । लोकदृष्ट्यावकाशदानात् नामरूपनिर्वाहकत्वं विचार्यम् । तन्नैयायिकमते न लौकिकदृष्टित्वात्तस्य । तत्र यमस्मृतौ । यन्नियमात् यस्यान्तर्यामिणो नियमनात् । श्वसतां प्राणिनाम् । पदं स्थानं श्वासावकाशमिति यावत् । भगवदिति भगवदधीनत्वमालोच्य तस्माद्धेतोर्वा समवायिकारणे कारणैकार्थप्रत्यासत्त्या सत्ताहेतुर्नामरूपनिर्वाहः तथाहि आकाशो भूतानां छिद्रदातृत्वे सति बहिरन्तर-व्यवहारविषयत्वे च सति प्राणेन्द्रियान्तःकरणाधारत्वम् । तत्रेदं लक्षणमाधिदैविकाधिभौतिकाध्यात्मि-काकाशस्य क्रमेण । भूतानां छिद्रदातृत्वमाधिदैविकस्येत्येवं लक्षणलक्षितः जन्यश्च 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इति श्रुतेः । तत्रोक्तवाक्येन भगवद्रूपसमवायिकारणनिष्ठो नामरूप-निर्वाहः 'नामानि कृत्वाभिवदन् यदास्ते', 'यतो वा इमानि भूतानि जायन्ते' इति श्रुतिभ्याम् । लक्षणसंगमनं तु कारणेन नामरूपनिर्वाहकारणेनाकाशेन सहैकार्थे ब्रह्मणि तादात्म्येन वृत्तित्वे सति कारणं नामरूपनिर्वाहस्येति । यथा घटरूपं प्रति कारणेन घटेन सह कारणस्य कपालरूपस्यैकार्थे कपाले प्रत्यासत्तिरस्तीति । न चाकाशनामरूपनिर्वाहयोः न समवायः किं तु स्वरूपसंबन्ध इति शङ्क्यम् । 'समवायाभ्युपगमात्' इति सूत्रे समवायं दूषयित्वा तादात्म्याङ्गीकारात् । तेनैव लक्षणं संगमयितव्यम् । न च समवाय्यसमवायिकारणमिति प्रतीतिविरोध इति शङ्क्यः । एतस्यास्ता-दात्म्यविषयिणीत्वात् । एतादृशरूपनामनिर्वाहो ब्रह्मनिष्ठ आकाशस्य महात्मनो भावः भूतानां छिद्रदातृत्वादिः तस्य हेतुरसमवाय्यपि न भवति निमित्तत्वेनासमवायिनोऽङ्गीकारात् । तत्र तु

निर्वाहस्य ब्रह्मधर्मत्वं न श्रुत्यन्तरसिद्धमिति विचारः । अर्थापत्तिसूचक-

भाष्यप्रकाशः ।

माहात्म्यहेतुरपि न भवति । न च तर्ह्युपासनार्थं तदुक्तिराकाशेऽस्त्विति वाच्यम् । यतो, वै निश्चयेनेति सिद्धवत्काराओपासनापरत्वं वक्तुं शक्यते । तस्माद् ब्रह्मधर्म एवायं निर्वाह इत्यर्थः । ननु यद्ययं निर्वाहो ब्रह्मधर्म एव, तदा, तद्धर्माधिकरणेन वा, तल्लिङ्गाधिकरणेन वा गतार्थत्वाद् व्यर्थः सूत्रारम्भ इत्यत आहुः निर्वाहस्येत्यादि । तत्रापि विशेषमाहुः अर्थापत्तीत्यादि । यद्यपि कम्पनमपि न प्रसिद्धश्रुत्यन्तरसिद्धं तथापि प्रकरणबलादुत्तरवाक्ये कम्पनहेतोर्ब्रह्मणः सकाशाद् भयस्योक्तत्वाच्च तस्य ब्रह्मकार्यत्वनिश्चयेन ब्रह्मवाक्यत्वसाधकता तस्य युक्ता । प्रकृते तु वाक्यस्यानारभ्याधीतत्वात् प्रमाणान्तराभावाच्च न कथमपि ब्रह्मवाक्यत्वसिद्धिरतोऽयमेव न्यायस्तथेत्यर्थः । नन्वस्त्वेवं तथापि पक्षनिर्देशोऽत्र न युक्तः । किं तु ब्रह्मत्वमात्रं साधनीयम् ।

रश्मिः ।

आकाशस्य माहात्म्यस्य महतः परममहत्परिमाणविशिष्टस्य आत्मनो व्यापकस्य भाव आकाशत्वं तस्य हेतुरपि न भवति अपिपदेनाकाशत्वमतः कथं लोकदृष्ट्या नामरूपनिर्वाह आकाशधर्मः । आकाशस्तु तव नित्यो निरवयवत्वेन समवायाद्यभावात् शब्दाश्रयत्वेन सिद्धश्च । वै नीति भाष्यं विवरीतुमाहुः न च तर्हीति । तदुक्तिर्नामरूपनिर्वाहोक्तिः । वा इति तथा च वै एवादिप्रयोगः सिद्धवत्कारः । तद्धर्मेति प्रथमपादेऽधिकरणे स्तः । अन्तस्तद्धर्माधिकरणेनाकाशवार्तेत्यत उक्तं न वा तल्लिङ्गेति । तत्रापीति निर्वाहस्य ब्रह्मधर्मत्वोपपादके·······पि । विशेषमर्थापत्तिसूचकत्वरूपम् । कम्पनादिति न्यायस्यार्थापत्तिसूचकत्वं कुतो नेत्यत आहुः यद्यपीति । तस्येति कम्पनस्य । वह्निमान् धूमादितिवद्युक्ता । प्रमाणेति नामरूपनिर्वाहे प्रमाणान्तराभावात् । तथेति अर्थापत्ति-सूचकत्वेन प्रकारेण वर्तत इत्यर्थः । एवकारेण तल्लिङ्गाधिकरणन्यायोपि नार्थापत्तिसाधकः । यतस्तत्र जगज्जन्मादिकर्तृत्वस्य ब्रह्मणि प्रसिद्धस्यातिव्याप्तिवारणायापि आकाशपदार्थो ब्रह्मैवेत्युक्तम् । अर्थापत्तिस्त्वेवं प्रत्यक्षेण शब्देन वा प्रमितस्यार्थस्यार्थान्तरं विना उपपद्यमानस्योपपत्तयेऽर्थान्तर-कल्पना । अत्र शब्देन प्रमितस्यार्थस्य वाक्यार्थस्यार्थान्तरमुक्तरीत्या ब्रह्मपरत्वलक्षणं विनोक्तप्रकारेणा-नुपपद्यमानस्योपपत्तयेऽर्थान्तरस्योक्तस्य कल्पनेति । अन्यथानुपपत्तिजन्याप्यर्थापत्तिर्ज्ञेयाऽग्रेऽधिकरणे तथोपपद्यमानत्वात् । उक्तव्युत्पत्तौ सूत्रं मानं सूत्रतात्पर्यवृत्तिरर्थापत्तौ अर्थापत्तिर्न प्रमाणान्तरं प्रत्यक्षशब्दयोरनुग्राहिका प्रत्यक्षादिप्रमितार्थज्ञानदार्ढ्यहेतुत्वात् अभ्यासादिवत् अतस्तद्गमकस्य बली-यसो भावान्न प्रमाणान्तरम् । अतोऽनुपपद्यमानार्थवाचकयोस्तात्पर्यवृत्तिरर्थान्तरकल्पने । काकेभ्यो दधि रक्ष्यतामित्यत्र दध्युपघातके तात्पर्यवत् । नैयायिकानां लक्षणात्र स्पष्टा त्वग्रेतनाधिकरणे भविष्यति । ब्रह्मत्वेति 'तं त्वौपनिषदं पुरुषं पृच्छामि' इति श्रुतेः । सर्वप्रमाणातीतत्वात् । अन्येति मध्यमपदलोपी समासः । पदजन्यपदार्थोपस्थितेः कारणत्वात् । अन्यस्य वाच्यस्य वा । भाष्ये । अन्यवाच्यस्यातद्धर्मा इत्यन्वयः । यत्रेत्यस्य तद्धर्मा इत्युक्तेऽन्यवाच्यस्यानन्वयापत्तेः । यत्रेत्यस्य प्रतिपादिकासु श्रुतिषु इत्यर्थः । भाष्ये । सिद्धकथने यत्रैव हि सिद्धवत्कारेण इत्यस्यां व्युत्पत्तौ यत्राधिकरण इत्यर्थाद्यर्थपरत्वं व्याकृतमेव । अतदीया अत्र यत्रेत्युक्ताधिकरणस्यातदीयाः ।

स्त्वयमेव न्याय इति । तस्माद् यत्रैवातद्धर्मकथनमन्यवाच्यस्य तत्रैव ब्रह्मपरत्वमिति सिद्धम् ॥ ४१ ॥

इति प्रथमाध्याये तृतीयपादे द्वादशमर्थान्तराधिकरणम् ॥ १२ ॥

---

भाष्यप्रकाशः ।

ततश्च वाक्यस्यापि ब्रह्मवाक्यत्वं सुखेनैव सिद्ध्येदित्यत आहुः तस्मादित्यादि । अन्यवाच्यस्येति अन्यवाचकपदवाच्यस्य । तथा चैतदर्थं पक्षनिर्देश इत्यर्थः । एवं प्रयोजनकथनेनास्य, तल्लिङ्गाधिकरणेन गतार्थता तत्प्रपञ्चत्वं च निवारितम् । अत्र चाकाशस्य नामादिनिर्वाहकत्वेन स्थितिकर्तृत्वस्यातिव्याप्तिमाशङ्क्य बुद्धिस्था सा निवारिता ।

यत्तु शिवतत्त्वविवेके, उपक्रमस्थाभ्यामाकाशश्रुतिप्रसिद्धलिङ्गाभ्यामस्य वाक्यस्य भूताकाशपरत्वेऽपि पाश्चात्यानामसंकुचितनामरूपनिर्वोढृत्वतदर्थान्तरत्वाऽमृतत्वलिङ्गब्रह्मात्मश्रुतीनां भूयस्तया प्राबल्यात् तदनुरोधेनोपक्रमप्रापितमपि भूताकाशपरत्वमपोह्य ब्रह्मपरत्वं स्थाप्यत इत्युक्तम् । तत् सूत्रविरुद्धमेव । लिङ्गभूयस्त्वस्यात्र हेतुत्वानुल्लेखात् ।

यत्तु शंकराचार्याः । ते यदन्तरेत्यस्य नामरूपे यद्भिन्ने इत्यर्थान्नामरूपाभ्यां व्यतिरिक्तमर्थान्तरं व्यपदिशतीति नामरूपव्यतिरिक्तत्वं ब्रह्मलिङ्गं हेतूकृत्यास्य तल्लिङ्गाधिकरणप्रपञ्चत्वमूचुः ।

तन्मतेऽधिकरणवैयर्थ्यमेव । निर्वाहस्य स्थितिरूपत्वेन तल्लिङ्गाधिकरणविषयवाक्यादेव

रश्मिः ।

व्युत्पत्तिसमन्वयः । यत्रैवाकाशो नामरूपयोर्निर्वहितेत्यत्रैव अन्य अन्यपदवाच्यस्याकाशस्यातद्धर्मास्ते यदन्तरा तद् ब्रह्मेत्यादयस्तेषां कथनमिति तत्रैव आकाशो ह वै नामरूपयोरित्यत्रैव ब्रह्मपरत्वमिति । एतदर्थमिति अन्यवाच्यस्येत्यर्थः । ननु पक्षनिर्देशोऽनुचितः । 'तं त्वौपनिषदं पुरुषं पृच्छामि' इति श्रुत्या तन्निषेधादिति चेन्न भाष्येणौपनिषदपुरुषव्याख्याने तत्प्रकाशे तदनुगुणानुमानस्योचितत्वात् । 'अत्र मां मार्गयन्त्यद्धा युक्ता हेतुभिरीश्वरम्' इति वाक्यात् । तल्लिङ्गाधिकरणेस्य प्रयोजनमाकाशपदार्थो ब्रह्मेति भाष्यात् तत्रत्यादाकाशपदार्थाभेदो ब्रह्मणः अस्याधिकरणस्य तु यत्रान्यवाचकपदवाच्ये सिद्धवत्कारेणोत्कृष्टा धर्माः अतदीयाः तदेवार्थापत्त्या ब्रह्म ज्ञेयमिति प्रयोजनं तदाहुः एवं प्रयोजनेति । असंकुचितेति आकाशस्य कार्यत्वेन नामरूपनिर्वाहस्यापि कार्यत्वात् तेन संकुचितं ईश्वरे तु कारणत्वान्न तेन संकुचितमित्यसंकुचितेत्यर्थः । तदर्थेत्याकाशादर्थान्तरत्वेत्यर्थः । असंकुचितेत्यादीनाममृतत्वान्तानां लिङ्गानि ब्रह्मात्मनोः श्रुती । तानि च ते चासंकुचितनामरूपनिर्वोढृत्वतदर्थान्तरत्वामृतत्वलिङ्गब्रह्मात्मश्रुतीनाम् । तदनुरोधेनेति श्रुतिलिङ्गानुरोधेन । हेतुत्वेति न चार्थान्तरत्वादीत्यादिपदेन लिङ्गभूयस्त्वप्राप्तिरिति शङ्क्यम् । उल्लेखपदेन सौत्रहेतुतावच्छेदकानाक्रान्तत्वात् । श्रुतिलिङ्गे न लिङ्गमिति प्रतीतेः । श्रुतिलिङ्गयोः लिङ्गेनाभेदोपि न संभवति । तल्लिङ्गेति विषयवाक्यं तु अस्य लोकस्य का गतिरित्यादि आकाशः परायणमित्यन्तम् । न च निर्वाहस्य ब्रह्मधर्मत्वं न श्रुत्यन्तरसिद्धमिति भाष्यविरोध इति शङ्क्यम् । ते यदन्तरा तद्ब्रह्मेति श्रुत्या निर्वोढे नामरूपे ब्रह्ममध्ये स्तः इत्यर्थो हि अन्तःस्थापनमन्तरा न भवतीत्याशयेन ते यदन्तरेत्यनेनोक्तस्यासमन्वात् तदन्तःस्थापनरूपस्येति भाष्यप्रकाशस्य प्रणयनान्न स्थितिरूपार्थो निर्वाहस्य किं तु योगक्षेमरूपः तस्यान्तःस्थापनेन साकं जन्यजनकभावसंबन्धान्निर्वाहस्यान्तःस्थापनं लाक्षणिकोर्थ इति । न च तल्लिङ्गाधिकरणविषयवाक्यगतस्य आकाशस्थितिकर्तृत्वस्य स्थितिरूपत्वेनात्राधिकरणे चान्तः-

भाष्यप्रकाशः ।

प्राप्ततया प्रपञ्चरूपत्वस्य वक्तुमशक्यत्वात् । नामरूपव्यतिरिक्तत्वस्य स्पष्टलिङ्गत्वेनैतत्प्रणयनानावश्यकताया अपरिहाराच्च ।

भास्कराचार्योक्तमप्येतेनैव व्याख्यातप्रायम् ।

यदपि विज्ञानभिक्षुः । यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः । आकाशो वै नामरूपयोर्निर्वहिता । परमे व्योमन् प्रतिष्ठितेत्यादिषु ब्रह्मैवाकाशशब्दवाच्यं भवति । अर्थान्तरत्वादिव्यपदेशात् । अर्थस्य अन्तरोऽर्थान्तरः । तस्य भावस्तत्त्वम् । आदिपदेन नित्यत्वासंगत्वसूक्ष्मत्वादयो ग्राह्याः । तेषां व्यपदेशात् । 'आकाशवत् सर्वगतश्च नित्यः' इत्यादिषु कथनादित्याह ।

तन्मते व्यापकत्वकृतस्यार्थान्तर्वर्तित्वस्याकाशसाधारण्याद्, यावान् वेत्येतद्भिन्नेषूक्तवाक्येष्वाकाशपदेन केवलब्रह्मासिद्ध्या लिङ्गसत्त्वे च तल्लिङ्गाधिकरणेन गतार्थत्वापत्त्याऽधिकरणवैयर्थ्यमेव ।

शैवस्तु । आकाशो भूतं, जीवो, ब्रह्म वा ? इति संदिह्य, अमृतत्वादितद्धर्मव्यपदेशादित्याह ।

तदपि, यद्धि तदमृतमिति, 'अमृताऽक्षरं हरः' इति जीवेऽप्यमृतप्रयोगात् सौत्रहेतोरयोगाच्चासंगतमेव ।

रश्मिः ।

स्थापनस्योक्तेः प्रपञ्चरूपत्वमस्त्वेवेति शङ्क्यम् । विषयवाक्येऽस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायान् इत्यत्रोत्पत्तिगमनयोर्मध्ये स्थितेः कल्पितत्वेन तल्लिङ्गाधिकरणविषयवाक्यगतस्याकाशस्थितिकर्तृत्वस्य काल्पनिकत्वेन तत्प्रपञ्चरूपस्याभावात् । तस्माद्वेदेऽक्षरमात्रस्याप्यसत्यार्थस्याभावात् वैदिकानां न संदेहोपीति भाष्यम् । सिद्धान्तसिद्धेर्थे श्रुतिः काठके ।

'अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च' ॥ इति ।

भास्करेति शंकराचार्यवदुक्तम् । एतेनेति स्पष्टलिङ्गत्वेनैतत्प्रणयनानावश्यकतायाः अपरिहारेण । अर्थान्तरिति अर्थस्यान्तवर्तित्वस्य । यावानिति अत्र दृष्टान्तदार्ष्टान्तिकयोराकाशपदप्रयोगात् एकत्राकाशस्य ब्रह्मत्वे साधिते आकाशान्तरे हेतुसत्त्वेपि ब्रह्मत्वरूपसाध्याभावाद्वा हेतोर्बाधितत्वेनैकत्र केवलब्रह्मसिद्ध्या तद्भिन्नेष्वित्युक्तम् । न च ब्रह्मत्वाभावः क्वापि नास्तीति न हेतोर्बाधितत्वमिति शङ्क्यम् । साधनसाध्यब्रह्मत्वाभावस्य विवक्षितत्वात् । तर्हि साधनसत्त्वाद् ब्रह्मत्वं साध्यतामिति वाच्यम् । आकाशत्वप्रत्यक्षेण ब्रह्मत्वाप्रत्यक्षात् । न च हेतोः साध्याभाववदाकाशान्तरे साधारण्यमिति शङ्क्यम् । इष्टापत्तेः दूषणप्रकरणात् । आकाशेति आकाशपदेनोपस्थापितपक्षेऽर्थान्तर्वर्तित्वेन हेतुना केवलब्रह्मासिद्धिरनेनैव हेतुनाकाशत्वस्यापि सिद्धेः । लिङ्गसत्त्व इति तद्ब्रह्मेति पूर्वत्र परम इति द्वितीये लिङ्गस्य । न च श्रुतित्वमिति शङ्क्यम् । आकाशो ह वा इत्यत्र परमे व्योमन्नित्यत्र च ब्रह्मपरमयोः सामर्थ्यमालोच्याकाशव्योमनी अभेदान्वययोग्ये इत्यभिधाभ्यौ श्रुती पृथक्कल्पयित्वा ब्रह्मपरमयोरभेदान्वयेऽङ्गत्वबोधनात् लिङ्गलक्षणसत्त्वात् । श्रुतेस्तु निरपेक्षस्वरूपत्वात् । हेतोः साधारण्यमाहुः तदपीति । छान्दोग्ये दशमे प्रपाठके तद्यत्सत्तदमृतं,

भाष्यप्रकाशः ।

रामानुजाचार्यास्तु आकाशपदोक्तो मुक्तात्मा, परमात्मा वा ? इति संदेहे । अश्व इव रोमाणि विधूय पापमिति मन्त्रे मुक्तस्यानन्तरं प्रकृतत्वात्, ते यदन्तरेत्यत्रापि नामरूपविमुक्तस्य

रश्मिः ।

अथ यत्ति तन्मर्त्यं, अथ यद्यं तेनोभे यच्छति इति श्रुतं तत् 'अन्यार्थश्च परामर्शः' इति सूत्र उक्तम् । तत्र तिकारस्य मर्त्यत्वेपि 'य एष संप्रसादः' इत्युक्त्वा 'एष आत्मा' इति होवाचैतदमृतमभयमेतद् ब्रह्मेति तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति तानि ह वा एतानि त्रीण्यक्षराणि 'स. ति. यम्' इति वाक्यमुक्त्वा तद्यत्सत्तदमृतमित्याद्युच्यतेऽतोमृतशरीरनिविष्टत्वात्तिकारोप्यमृतं न चामृतशरीरनिविष्टत्वेपि मर्त्यत्वं कथमिति वाच्यम् । मर्त्यत्वस्य तिरोभावमादाय व्युत्पाद्यत्वात् । 'आविर्भावतिरोभावौ शक्ती वै मुरवैरिणः' इत्यमृतधर्मत्वात् । तेन यत्तीति भाष्यप्रकाशो न श्रुतिरूपः । अमृताक्षरमिति श्वेताश्वतरे ।

'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः ।
तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः' ॥

इति अभिधानं चोद्याजनं च तयोः समाहारः । जीवेपीत्यपिना हरः । तथा च जीवहरयोरमृतत्वादिसत्त्वात् साधारण्यम् । सौत्रेति न चामृतत्वादि तद्धर्मव्यपदेशादिति हेतौ अमृतत्वस्यादयोऽमृतत्वादयः । नामरूपनिर्वोढृत्वादयः अमृतत्वमादिर्यस्य तदमृतत्वादि आत्मत्वं अमृतत्वादयश्च अमृतत्वादि चामृतत्वादयः अमृतत्वादीनां तद्धर्माणां व्यपदेशः अमृतत्वादितद्धर्मव्यपदेशः इति समासात् कथं सौत्रहेतोरयोग इति शङ्क्यम् । समासस्यागतिकगतित्वात् । एककोटिस्पष्टत्वाद द्वितीयकोटिबीजं पूर्वपक्षे स्पष्टम् । अश्व इति देहलीदीपन्यायेन पूर्वापरग्रन्थहेतुत्वम् । श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामं प्रपद्येऽश्व इवेत्यादिः । अत्र श्यामं अमआत् श्यामं शबलं प्रपद्ये प्रपत्तिमार्गविषयं करोमि श्यामं वर्णतः शबलं सुन्दरम् । इन्द्रियैः शबलात् सुंदराद्धेतोः श्यामं प्रपद्ये । तत्प्रपत्तिमनेकदृष्टान्तेनाह अश्व इवेति । यथाश्वो रोमाणि विधूय कम्पनेन श्रमं पांश्वादिं च रोमतोपनीय निर्मलो भवति । एवं हार्दब्रह्मज्ञानेनोपासको मर्यादाभक्तः पापविधूननश्रवणात् । शरीरं धूत्वा पापं धर्माधर्माख्यं विधूय निर्मलः सन् चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि अभिसंभवामीति अस्या अर्थः । चन्द्र इव यथा राहुग्रस्तश्चन्द्रो राहोर्मुखात्प्रमुच्य भास्वरो भवत्येवमुपासको ह शरीरं धूत्वा प्रहाय कीदृशमकृतं आत्मरूपं आत्मोपनिषदि शरीरस्यात्मत्वात् । इहैव ध्याने कृतात्मा कृतकृत्यः सन् अहं अकृतं नित्यं ब्रह्मलोकमभिसंभवामीति । द्विरुक्तिर्ज्ञानिभक्तयोर्द्वित्वात् । श्याममिति हेतुगर्भं विशेषणम् । यतो ज्ञानिनः श्यामात् ।

'अथवा शून्यवद्गाढं व्योमवद्ब्रह्म तादृशम् ।
प्रकाशते लोकदृष्ट्या नान्यथा दृक् स्पृशेत्परम्' ॥

इति निबन्धात् श्यामाद् गाढत्वात्प्रपद्यन्ते भक्तास्तु शबलाद्धेतोः गाढं शून्यवद्गातं प्रपद्यन्ते इति केवलगाढे भक्तानां प्रयोजनाभावेन गौरवाऽज्ञानमात्रेणाकाङ्क्षापूरणात् । पूर्वपक्ष्यर्थमाह ते यदन्तरेति ते नामरूपे विना यदित्यर्थः । 'अन्तरापि विनार्थे स्यात् मध्यार्थनिकटार्थयोः' इति विश्वः ।

भाष्यप्रकाशः ।

तस्यैवाभिधानात् । नामरूपनिर्वाहकत्वस्य तत्पूर्वावस्थायां संभवात् । मुक्तावस्थायां ब्रह्मादिशब्दानां संभवात् । असंकुचितप्रकाशयोगेनाकाशप्रयोगस्यापि संभवान्मुक्तजीव एवात्रोच्यत इति पूर्वपक्षे । अत्र परमात्मैव । अर्थान्तरत्वादिव्यपदेशात् । आकाशो वै नामरूपयोर्निर्वहितेति निर्वोढृत्वमत्रोच्यते । तथामुक्तस्य नामरूपभाक्त्वान्मुक्तस्य जगद्व्यापाररहित्यादित्येवमुभयोर्न संगच्छते । ईश्वरस्य तु, अनेन जीवेनात्मनेति, यः सर्वज्ञः सर्ववित्, तस्मादेतद् ब्रह्म नामरूपमन्नं च जायते, सर्वाणि रूपाणि विचित्येत्यादिषु श्रुत्यन्तं तदेवोपपादयति । ते यदन्तरेति । यद् यस्माद् अयमाकाशस्ते नामरूपे अन्तरा ताभ्यामस्पृष्टोऽर्थान्तरभूतस्तस्मात् तयोर्निर्वोढा अपहतपाप्मत्वात् सत्यसंकल्पत्वाच्च निर्वहिता । आदिपदेन ब्रह्मत्वादीनां संग्रहः । तथाचाभ्योर्योऽर्थान्तरं, तस्य भावस्तत्त्वम् । तदादीनां व्यपदेशादित्यर्थः । न च मुक्तस्यानन्तरं प्रकृतत्वान्नैवमिति वाच्यम् । मन्त्रेऽपि ब्रह्मलोकमभिसंभवानीति परस्यैव ब्रह्मणः प्रकृतत्वादित्याहुः ।

तत्र सर्वापेक्षया प्रबलां श्रुतिमतिहाय लिङ्गाद्यपेक्षया निर्बलं प्रकरणमादाय संशयोत्थापनं चिन्त्यम् ।

मध्वभाष्यव्याख्यायां जयतीर्थस्तु । ते यदन्तरेत्यस्य, यद् ब्रह्म ते अन्तरा नामरूपे विना वर्तत इति व्याख्यानं कृत्वा, नामरूपराहित्याख्यविलक्षणार्थव्यपदेशात्, तद् ब्रह्मेति ब्रह्मत्वव्यपदेशाच्च । यद्वा । अर्थान्तरत्वं रूपराहित्यम् । आदिपदेनाऽनामत्वमित्येवं सौत्रं हेतुं व्याचख्यौ । तथानामरूपत्वं भाष्यकारैरनामासौ प्रसिद्धत्वादरूपो भूतवर्जनादिति ब्रह्मवाक्येनोपबृंहितम् ॥ ४१ ॥ इति द्वादशमर्थान्तरव्यपदेशाधिकरणम् ॥ १२ ॥

रश्मिः ।

तस्येति मुक्तजीवस्य । तत्पूर्वेति मुक्तिपूर्वावस्थायाम् । मुक्तानामवस्थायाम् । ईश्वरस्येति चिदचिद्विशिष्टस्यातो नेश्वरनिर्वोढृत्वस्य मुक्तजीव आपत्तिः । अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति छान्दोग्ये । जानातीच्छति यतते इत्याहुः य इति । तस्मादिति तैत्तिरीयाणां नारायणोपनिषदि 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन् यदास्ते' इति श्रुतम् । ते नामेति नामरूपे अन्तरा ताभ्यामिति तद्भाष्यम् । अत्र नामरूपाभ्यां सुपां सुलुक् इति शे नामरूपेऽतोत्र लौकिकद्विवचनस्येकारस्याभावान्न प्रकृतिभावः । अस्पष्ट इति अन्तरा निकटार्थक इति भावः । विनार्थकत्वेप्ययमर्थो भवति । तस्मादिति अन्यो ह्यन्ययोर्निर्वाहको भवतीति वैषम्यनैर्घृण्याभ्यां पापसंभवमालोच्याहुः अपहतेति । सत्यसंकल्पस्य निर्वाहहेतुत्वादाहुः सत्येति । व्युत्पत्तिमाहुः तथा चेति । प्रत्यगात्मनोऽन्योर्थः आकाशः अर्थान्तरम् । तदादीनामित्याकाशत्वादीनाम् । मुक्तस्येति । अथ इवेति श्रुतेः । नैवमिति । ब्रह्मवाक्यत्वं न । श्रुतिमिति आकाशश्रुतिम् । प्रकरणमिति मुक्तस्य प्रकरणं तथा च भाष्यं प्रजापतिवाक्ये च प्रत्यगात्मनो मुक्त्यवस्थान्तं रूपमभिहितमनन्तरं च विधूय पापमिति स एव मुक्तावस्थः प्रस्तुतोऽतोत्राकाशो मुक्तात्मेति प्राप्ते उच्यते आकाशोर्थान्तरत्वादिव्यपदेशादिति । प्रजापतिवाक्यं तु मघवन्मर्त्यमित्यारभ्य प्रजापतिरुवाचेत्यन्तम्, द्वादशानुवाकरूपम् । अनामेति अनेन प्रसिद्धत्वस्य नामरूपकरणकार्यत्वमुक्तम् । नाम्ना प्रसिद्धो भवतीति पञ्चमहाभूतवर्जनादरूपो नाकृतिकः । इदं ब्रह्मणोऽक्षररूपं मुमुक्षावाविष्कृतं इति न साकारब्रह्मत्वप्रतिबन्धकमत्र पुराणमतत्वं दूषणम् ॥४१॥

इति द्वादशाधिकरणम् ॥ १२ ॥

## सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥ (१।३।४२)

बृहदारण्यके ज्योतिर्ब्राह्मणे, 'याज्ञवल्क्य किं ज्योतिरयं पुरुषः' इत्यारभ्य, 'अभयꣳ ह वै ब्रह्म भवति य एवं वेद' इत्यन्ते संदेहः । किं ब्रह्मवाक्यमेतदुत जीवस्येति । जीवस्य ब्रह्मत्वप्रतिपादने जीववाक्यत्वम् । स्वातन्त्र्येण ब्रह्मण एव ज्ञानकर्मत्वे ब्रह्मवाक्यत्वमिति ।

---

### भाष्यप्रकाशः ।

सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥ विषयवाक्यमाहुः बृहदारण्यक इत्यादि य एवं वेदेत्यन्ते संदेह इति । बृहदारण्यक इति तस्य षष्ठे प्रपाठके । अत्र, पत्यादिशब्दसत्त्वात् तावदन्तं विषयवाक्यं ब्राह्मणभेदेऽपि द्विरुक्त्यर्थादिरूपवाक्यभेदकादर्शनाच्चेति ज्ञेयम् । तेन ज्योतिर्ब्राह्मणं शारीरब्राह्मणं चेत्युभयोरत्र विषयवाक्यत्वात् तत्र संदेह इत्यर्थः । संदेहाकारमाहुः किं ब्रह्मेत्यादि । तथा च वाक्यमेव संदिग्धं न तु पूर्ववद्वाक्यगतः कश्चिदेव शब्द इत्यर्थः । संदेहबीजमाहुः जीवस्येत्यादि । स्वातन्त्र्येणेति मुख्यतया । ज्ञानकर्मत्वे इति ज्ञेयत्वे । तथाचोभयथापि शक्यवचनत्वं संदेहबीजमित्यर्थः । अत्र पूर्वा कोटिः शंकराचार्योक्ता बोध्या । तर्ह्युभयथा शक्यवचनत्वे कथं संदेहनिवृत्तिरित्याकाङ्क्षायामर्थज्ञानान्निवृत्तिरित्यभिप्रेत्य तत्तात्पर्यबोधकं हेतुमवतारयन्ति यद्यपीत्यादि । संदेहो ह्युभयसाधारणैः पदैस्ता-दृशैरवान्तरवाक्यैश्च भवति । यदा पुनस्तेषां प्रयोजनविचारात् तात्पर्यमवधार्यते तदेकतरपक्षपाते

### रश्मिः ।

सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥ षष्ठ इति शाखान्तरेऽयं षष्ठः शंकरभाष्येऽपि षष्ठ-प्रपाठकः । शाखान्तरे तु चतुर्थः प्रपाठक इति ज्ञेयम् । अत्रेत्यधिकरणे । तावदिति तावत्पर्यन्ते उत्तरसूत्रे सर्वस्य वशीत्यादिशारीरब्राह्मणश्रुतिदर्शनात्सकलशारीरब्राह्मणस्यान्तमस्मिन् तत् । ज्योति-र्ब्राह्मणशारीरब्राह्मणयोर्भेदेऽपि । भेदः संज्ञाभेदात् । द्विरुक्तीति यत्रैतदूर्ध्वोच्छ्वासी भवति इति ज्योतिर्ब्राह्मणे समाप्तौ द्विरुक्तेः स यत्रायं शारीर इति शारीरब्राह्मणारम्भे । अथशब्दस्याविषयत्वेन स इत्यनेन अव्यवहितपूर्वपरामर्शकेनोभयोर्ब्राह्मणयोरैक्यम् । ननु कथं भेदाभेदाविति चेत् । भेदाभेदवादस्य श्रीपुरुषोत्तमजित्कृतस्य सत्त्वात् । शारीरेति अन्यत्र तु शारीरकब्राह्मणमुच्यते । श्रुतौ तु शारीरपदम् । भेदाभेदवादापत्त्याऽन्यो भेदांशेऽभिप्रायो भाष्यस्योच्यते । भिदां 'मायामात्र-मनूद्यान्ते प्रतिषिध्य प्रसीदति' इति भगवद्वाक्यात् भेदस्य मायामात्रत्वेन सखण्डनप्रवाद उपयोगात् भेदोपादानं सर्वत्रात्र त्वाचार्याणां भेदादर्शनमनुमीयते इति । अन्यथा भेदमात्रस्य श्रुतेर्थे प्रतीयमानत्वं न स्यात् । अभेदे सति भेदस्य श्रुतेर्थे प्रतीयमानत्वस्य क्वाप्यदर्शनात् । पूर्वेति आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद् ब्रह्म इत्यत्राकाशशब्दवत् । ज्ञेयत्व इति ज्ञानविषयत्वे । अर्थज्ञानादिति संशयनिवर्तकनैकट्यस्थानापन्नादर्थज्ञानात् सिद्धान्तपूर्वपक्षाभ्यां जायमानात् । तथा च संशयनिवृत्तिः पूर्वपक्षात्, पूर्वपक्षनिवृत्तिः सिद्धान्तात् । तेषु अर्थबोधकेषु ब्राह्मणपदवाक्येषु उत्तरार्धे तत्प्रतीतीच्छयोच्चरितत्वं तस्योक्तस्यार्थज्ञानं भावयित्वैवमुच्चरितत्वं तस्य बोधकं भेदेन व्यपदे-शादिति हेतुश्च । पदैः आनन्दमयादिभिः अत्राकाशादिपदैरवान्तरवाक्यैः आकाशो ह वै नामरूपयो-र्निर्वहितेति यदन्तरा तद् ब्रह्म इत्येवं विधैः । तात्पर्यमिति यथा तत्रैव प्रयोजनविचारात् तात्पर्यावधारणम् ।

यद्यप्यर्थज्ञाने न संदेहस्तथापि नियामकं हेतुमाह भेदेनेति । तस्यायमर्थः । किंज्योतिरयं जीव इति प्रश्ने सूर्यचन्द्राग्निवाङ्निराकरणानन्तरम्, आत्मज्योतिः । आत्मा भगवानेवास्य ज्योतिरित्युत्तरानन्तरं, कतम आत्मेति प्रश्ने,

भाष्यप्रकाशः ।

सोऽपैतीत्यर्थज्ञाने सति न संदेहस्तथापि तदेव कथं स्यादित्याकाङ्क्षायां विवक्षितार्थनियामकं हेतुमाहेत्यर्थः । भेदेनेति । व्यपदेशादिति पूर्वसूत्रोक्तहेत्वेकदेशोऽत्रानुवर्तते । तथाच, भेदेन व्यपदेशादित्येतावानत्र हेतुरित्यर्थः । नन्वयं हेतुर्जीवब्रह्मताप्रतिपादकवाक्यत्वाङ्गीकर्तृभिस्तत्प्रतिपादकत्वेनैवाद्रियते । तथाहि । अत्र योऽयं विज्ञानमयः प्राणेष्वित्युपक्रमे जीवलिङ्गादुपसंहारे च, स वा एष इत्यनेन तस्यैव परामर्शान्मध्ये बुद्धान्ताद्यवस्थोक्तेश्च संसार्युच्यत इत्याशङ्क्य पुनः पुनर्मोक्षप्रश्नात्तत्र तत्रानन्वागतपदस्य पुण्यपापबुद्धान्ताद्यवस्थासंबन्धराहित्यबोधकस्य प्रयोगाच्च तैर्युक्तं तत्स्वरूपं प्राज्ञपदोक्तादीश्वराद् भेदेनोच्यत इति कथनात् । अतः कथमस्य विवक्षितार्थनियामकत्वमित्यपेक्षायां तद् व्युत्पादयन्ति तस्यायमर्थ इत्यादि । अयमिति वक्ष्यमाणरीतिकः । जीव इति श्रौतस्य पुरुषपदस्यार्थः । आत्मा भगवानिति याज्ञवल्क्यस्याशय

रश्मिः ।

एकतरेति एकतरस्य । सिद्धान्तपूर्वपक्षयोरेकतरस्य सिद्धान्तस्य पक्षपाते । स संशयः पूर्वपक्षश्च अप. आ. एति इति पदच्छेदः पूर्वं आ. एति इत्यत्र वृद्धिः पश्चादपस्य पररूपे प्राप्ते वृद्धिः । यद्वा एकारः स्मृतौ एतीति सुब्धातुः एकादौ सुब्धातौ वा पररूपमिति पक्षे वृद्धिः उपैडकीयतीतिवत् । स स्मृतिविषयो न भवति न करोति विषयतामिति वा वस्तुतस्तु स्मार्तः प्रयोगः । तेनावैहि इति वृद्धेरसाधुत्वेपि पूर्वोक्तरीत्या साधनीयः । स्मृतिस्तु 'उपैति शान्तरजसम्' इति गीताष्टमाध्याये तदेवार्थज्ञानम् । विवक्षितेति भेदेन व्यपदेशो विवक्षितार्थं नियमयतीति । जीवेति शंकराचार्यैः । स वा एष इति 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु' इति वाक्येन । पुनरिति यदत ऊर्ध्वं विमोक्षायैव ब्रूहीति पदे पदे प्रश्नात् । तत्र तत्रेति पदे पदे । पदे पदे प्रतिवक्ति । अनन्वागतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवतीति भाष्यम् । अनन्वागतमसंबद्धम् । पुण्येति संबन्धराहित्यमनन्वागतपदस्यार्थ उक्तः । कैरसंबद्ध इत्याकाङ्क्षायामाहुः पुण्येन पापेन बुद्धान्ताद्यवस्थाभिरसंबद्धः । प्राज्ञेति अयं पुरुषो प्राज्ञेनात्मना संपरिष्वक्त इत्यादिना । अस्येति हेतोः । तस्येति हेतोः । श्रौतस्येति किं ज्योतिरयं पुरुष इति श्रुतिसंबन्धिनः । भाष्ये । इति प्रश्न इति जनकसम्राजः प्रश्ने आदित्यज्योतिरिति सम्राडिति होवाचेत्युत्तरेऽस्तमित आदित्ये याज्ञवल्क्य किं ज्योतिरेवायं पुरुषः इति चन्द्रज्योतिरेवायं पुरुष इत्यादित्यनिराकरणेनैवं चन्द्रादिनिराकरणं ज्ञेयम् । इत्युत्तरेति अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तायां वाचि किं ज्योतिरेवायं पुरुष इत्यात्मज्योतिः सम्राडिति होवाचेत्यन्तरानन्तरमित्यर्थः । प्रकृते । याज्ञवल्क्यस्येति । कुतः क्रियामात्रस्य तन्मूलत्वाय । सन्मूलाः सोम्येमाः सर्वाः प्रजाः इति श्रुतेश्छान्दोग्येऽष्टमे । इन्द्रियान्तःकरणधर्मानुकार्यार्थं च तत्रानुकरणमाहेति भाष्यात् । 'द्वा सुपर्णा सयुजा सखाया समाने वृक्षे परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति' इति श्रुतौ जीवब्रह्मणोः समानत्वेन क्रीडोक्ता तत्प्रपञ्चार्थम् । स समानः सन् जीवतुल्यः सन् क्रीडतीति भाष्यात् । अतो भगवतो बुद्ध्यवधर्मा उच्यन्तेऽतो याज्ञवल्क्याशयोप्युक्तः । तत्रेति आत्मशब्दस्य जीवभिन्नभगवद्वाचकत्वे ।

**योऽयं विज्ञानमयो ज्ञानरूप इन्द्रियेषु हृदि च प्रकाशमान इत्युत्तरे, जीवोऽप्ये-तादृश इति तन्निराकरणार्थं स समानः सन् जीवतुल्यः सन् क्रीडतीत्याह ।**

भाष्यप्रकाशः

उक्तः । तत्र युक्तिस्तु यदि जीवः स्वज्योतिः स्यादादित्यादिसत्तायामपि तदनपेक्ष एव पर्य-यनादिकं कुर्यात् । एवं त्वादित्यादिवद् यदा भगवाननुगृह्णाति तदा तत् कुरुते, नो चेन्नेति कार्यकादाचित्कत्वरूपाऽवगन्तव्या । तस्या अनुक्तत्वादात्मज्योतिरित्युत्तरानन्तरं राज्ञा आत्म-विषयकः, कतम आत्मेति प्रश्नः कृतः । स च न देहेन्द्रियप्राणान्तःकरणेष्वन्यतमस्यात्मत्वसं-भावनामूलकः । सम्राट्त्वेन बहुश्रुततया तस्य तत्कोट्यनुपस्थानात् । मेधावी राजेत्यग्रे कथनाच्च । किं तु जीवब्रह्मकोटिमूलक एव । तादृशे प्रश्ने, योऽयमित्यादिनोक्तमुत्तरम् । तत्रान्तर्ज्योति-रित्यस्य तेषु प्रकाशमान इत्यर्थः । इदं च प्रकाशमानत्वं जीवस्याभिमानतया भगवतस्त्वन्तर्या-मितयेत्युभयसाधारणम् । अत एतावत्युत्तरे उक्ते जीवोऽप्येतादृश इति तस्य संदेहो नापैष्यतीति

रश्मिः ।

युक्तिस्तर्कः । पर्ययनेति कुर्यादित्यन्तस्तर्कः । मिथ्याज्ञानं तर्क इति अन्यत्फलितम् । पूर्वं किंज्योतिरयं पुरुष इत्यत्र किं ज्योतिरस्येति किंज्योतिः व्यवहारे स्वयंज्योतिरुत परज्योतिरयं जीवः इति प्रश्ने आदित्यज्योतिः सम्राट् इति होवाचादित्येनैव ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपर्येति इत्युत्तरे पर्ययनादिकम् । अनयाऽऽदित्येन चक्षुरनुग्राहकेणास्ते गच्छति कर्म कुरुते पुनः परिवर्तते इत्युक्तम् । परि रकारस्य लकारः अय गतौ । टीकाकृद्व्याख्यानं दूषयांबभूवुः स्म चेति । याज्ञवल्क्यं प्रति जनकप्रश्नः । प्रच्छ ज्ञीप्सायाम् तु. प. अ. संप्रसारणम् । अत्र तु यजयाचयतविछप्रच्छरक्षोनङिति नङ् कर्मणि । प्रश्ने चासन्नेति ज्ञापकान्न संप्रसारणम् । ङित्वं तु यज्ञः याञ्चा यत्न विश्नः प्रश्नः रक्ष्णः इत्यत्र विश्न इत्यत्र गुणनिषेधाय । एवं च ज्ञानेच्छाविषयः प्रश्नः ज्ञीप्सार्थज्ञानेच्छाप्रकृत्यर्थः । विषयः प्रत्ययार्थः । अत्रात्मविषयो ज्ञानेच्छाविषय इत्यर्थः । भवति चात्रात्मविषयः ज्ञानमात्मविषयकं तद्विषयिण्या जनकराज्ञ इच्छाया विषयो ज्ञानमिति आत्मज्ञानं मम स्यादितीच्छा । अयं प्रश्नः बुद्ध्या-दिषु कतम आत्मा इति प्रश्नः इति टीकायाम् । मूलं कारणम् । बह्विति याज्ञवल्क्यसंज्ञकथनात् । तत्कोटिर्बुद्ध्यादिकोटिः । एकस्मिन् विरुद्धधर्मज्ञानस्य संशयत्वात् । अन्यथा घटपटाविति ज्ञानस्यापि संशयत्वापत्तिः । मेधेति मेधा धारणावती बुद्धिः । तथा च यदि देहेन्द्रियादिषु अन्यतमः पृष्टः स्यात्तदोत्तरोत्तरोक्ताधारणेन प्रश्नान् मेधावीति विशेषणं नोच्येत । तादृशे प्रश्न इति । प्रश्न इत्यन्तं भाष्यं विवृतम् । सूर्यचन्द्राग्निवागात्मसु कतम आत्मा जीवसकलक्रियामूलमिति प्रश्नः । योयमिति योयं विज्ञानमयः पुरुषः प्राणेषु ह्यन्तर्ज्योतिः । तेषु प्राणेषु । हृन्मनस्तत्रेति न व्याख्यानं अप्रसिद्धेः । प्राणा इन्द्रियाणि तत्र मनःस्थितिः ।

'श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।
अधिष्ठाय मनश्चायं विषयानुपसेवते' ॥

इति गीतायां पञ्चदशेपि । मनः कर्म अयमीश्वरः कर्तेति 'स मानसीन आत्मा जनानाम्' इति श्रुत्या चकारः । अपि च मानसप्रत्यक्षसंग्रहाय चकारलोपो भाष्ये ध्वनितोत्रातः प्राणेषु हृदि चान्तर्ज्योतिरिति । चकारसहिता श्रुतिर्वा गीती ह्रीश्रीति वाक्यात् । इत्युत्तर इति भाष्यं विवृण्वन्ति स्म तस्येति । जनकस्य श्रोतुः । अपैष्यतीति । अप. आ. एष्यतीति छित्वा पूर्ववत्साधनीयः ।

भाष्यप्रकाशः ।

तन्निराकरणार्थं स समानः सन्नित्याद्याह । एवं विज्ञानमयत्वस्य प्राणान्तर्वर्तित्वस्य च साधारण्यबोधनेन तयोर्जीवलिङ्गता निवारिता । तेनैवोपसंहारस्यापि जीवपरत्वं वारितप्रायमेव । अतःपरं स समान इत्यादेरर्थो विचार्यते । तत्र स इत्यादिस्त्वादिवजीवानुग्राहकः । क्रीडा तु, उभौ लोकौ संचरति ध्यायतीव लेलायतीवेत्युक्ता । लेलायतीवेत्यस्य लोलायतीवेत्यर्थः । ओकारस्थान एकारः ।

यत्तु विज्ञायतेऽनेनेति विज्ञानं बुद्धिः । तन्मयस्तत्प्रायःप्राणेष्विति सामीप्ये सप्तमी । बुद्धीन्द्रियकर्मेन्द्रियप्राणात्मकपञ्चदशप्राणसमीपस्थो हृद्यन्तर्ज्योतिरिरिति लक्षणया हृदयस्थबुद्धावन्तर्वर्तमानं ज्योतिरात्मा । आत्मनैवायं ज्योतिषेत्युपक्रमात् पुरुषः पूर्णः स हृद्यन्तर्ज्योतीरूप आत्मा समानः सन् प्रकृतत्वात् सन्निहितत्वाच्च बुद्ध्या सदृशः सन्नन्योन्यधर्माध्यासे सति तप्तायःपिण्डवत् तादात्म्यमापन्नः सन्निति कैश्चिद् व्याख्यातम् ।

तन्मन्दम् । बुद्धेरत्राप्रकृतत्वेन तत्सादृश्यकथनस्यासंगतत्वात् । विज्ञानमय इत्यत्र विज्ञानपदे, नित्यं विज्ञानमानन्दं ब्रह्मेति ब्रह्मवाचकत्वत्यागेन योगग्रहणे बीजाभावे बुद्धेर्ग्रहीतुमशक्यत्वात् । यद्यत्र बुद्धिरभिप्रेता स्याद् वाक्यनिराकरणोत्तरं, बुद्धिज्योतिरित्यपि मध्ये वदेत् । अतोऽत्र विज्ञानमयपदे ज्ञानप्रचुरं सर्वज्ञं ब्रह्मैवाभिप्रेतम् । अनुग्राहकत्वेनात्मन एवो-

रश्मिः ।

एङि पररूपमित्यस्य न प्राप्तिः । इत्यादीति । स समानः सन्नुभौ लोकौ संचरतीत्याह । तेनैवेति साधारण्येनैव । उपसंहारस्तु स वा एष महानज आत्मायं विज्ञानमयः प्राणेष्विति । अनुग्राहक इति सकलक्रियासंपादनद्वारा । संचरतीत्यस्य क्रीडतीत्यर्थो भाष्ये उक्तः, तत्र प्रकृत्यर्थं प्रपञ्चयामासुः क्रीडेति । उभाविहपरलोकौ ध्यायतीवेत्यादौ अनुकरणं भाष्ये वक्ष्यते । आदिपदार्थस्तु बुद्धिसहितइत्यादि भाष्येणाग्रे वक्ष्यते । अज्विकारमाहुः ओकारेति । लुल धातुः भ्वादेराकृतिगणत्वात् । यद्वा । लोलमेति गच्छतीति लोलायः एरच् । लोलायमिवाचरति लोलायति । ननु लेलीयते इत्यत्रैकारस्याकारमात्रविकारे कृते लाघवमिति चेन्न लाघवस्य वेदे अप्रयोजकत्वेन लिङ् श्लेष इत्यस्य रूपे विनिगमनाविरहात् । ये धातुशब्दा यत्रार्थे इति पत्रावलम्बनानुरोधे तु यथान्यायम् । टीकाकृद्व्याख्यानं स्वव्याख्यानपोषाय दूषयामासुः यत्त्विति । लक्षणयेति । वृत्तिवर्तकभावसंबन्धः सामान्यविशेषभावः संबन्धो वा वृत्तिमतोर्बुद्धिहृदययोः 'बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यपरोपि दृष्टः' इति श्रुतावणुत्वस्य बुद्ध्याद्युपाधिकृतत्वेन बुद्धावन्तर्वर्तमानम् । अन्योन्येति आत्मधर्माः निर्गुणत्वशान्तत्वादयः बुद्धिधर्मा आराग्रमात्रत्वादयः । अप्रकृतेति । 'योऽयं विज्ञानमयः प्राणेषु' इत्यत्र विज्ञानमयपदस्य जीवब्रह्मसाधारण्यादिति भावः । योगेति विज्ञानं बुद्धिस्तद्विकारस्तत्प्रचुरं वाऽणु जीवत्वं विज्ञायतेऽनेनेति व्युत्पत्त्या विज्ञानं बुद्धिः तत्प्रायस्तन्मय इति च । ननु 'बुद्धिर्विज्ञानरूपिणी' इति वाक्यात् । कुतो योगादरे बीजाभाव इति चेत्तत्राहुः यद्यत्रेति । मध्य इति आत्मवाचोर्मध्ये । तथा च सति करिष्यमाणो विज्ञानमयपदार्थो बुद्धितदुपाधिकात्मरूपः संगच्छेत । कतम आत्मेत्यत्रात्मोपाधिकः पृष्टः शारीरत्वात् । तत्र 'बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यपरोपि दृष्टः' इत्यत्र बुद्धेः सत्त्वात् मध्ये पाठाभावे कुतो बुद्धिः समनुवर्तेत योयं विज्ञानमय इत्यत्रेति भावः । विज्ञानेति । सप्तमी अभिव्यापकाधारे ब्रह्मणो वर्णकज्ञापकत्वात् । अन्त्विति सकलक्रियात्मानस्ते इत्याद्युक्त-

तस्योभयधर्मा अप्युच्यन्ते क्रियामात्रस्य तन्मूलत्वाय। तत्र हि चत्वारि

भाष्यप्रकाशः।

कत्वात्। तस्य चान्तर्यामितया सर्वेष्वेव प्राणेष्ववस्थानात्। हृदयमिति श्रुतेर्हृद्यप्यवस्थानात्। एवं च हृदीत्यत्र लक्षणापि न स्यात्। परं त्वेतेषां पदानां कथंचिज्जीवेऽपि वृत्तेस्तस्य निराकरणाय स समानः सन्नित्यादि वदतीत्येव युक्तम्। श्लेषेण परोक्षवादस्तु, स मेने न वदिष्य इति प्राथमिकाभिसंधानाद् भगवतः परोक्षप्रियत्वज्ञानाच्च। तस्मादुक्त एवार्थ इति निश्चयः। ननु यद्यत्र ब्रह्म प्रतिपाद्यं स्यात् तदा ब्रह्मधर्मा एवात्र उक्ताः स्युर्न जीवधर्मा इत्यत आहुः तस्योभयेत्यादि। जीवमुख्यप्राणलिङ्गसूत्रे ब्रह्माश्रितत्वेन हेतुना जीवधर्माणां ब्रह्ममूलकत्वस्य साधितत्वात् तद्वदत्रापि जीवक्रियाणां तन्मूलत्वं बोधयितुं तद्धर्मा उच्यन्ते। भगवद्धर्माश्चोच्यन्त इति तस्यैवोभये धर्मा इति न ब्रह्मप्रतिपादकत्वक्षतिरित्यर्थः। एवं ब्रह्मधर्मकथनव्युत्पादनेन प्रकरणस्य ब्राह्मत्वं प्रतिपाद्य क्रीडां व्युत्पादयितुमुभौ लोकावित्यादेरर्थमाहुः तत्रेत्यादि। तत्र

रश्मिः।

नामनुग्राहकत्वेन। एवकारेणोपाधिव्यवच्छेदः संचरतीत्यन्तस्य क्रीडतीत्यन्तं विवरणं जीवब्रह्मानेकार्थत्वाद्भवति तद्वेदान्तेऽसंगतं शारीरब्राह्मणस्याब्रह्मपरत्वादत आहुः श्लेषेणेति। श्लेषस्तु वाक्यशेषव्यञ्जनाभाष्यादिभिरनेकार्थप्रयोगः। यथा 'स्वर्गकामो यजेत' इत्यत्र वाक्यशेषत्वादात्मसुखं प्रसिद्धेर्लोक उच्यते यथा वा भद्रात्मनो दुरधिरोहतनोरित्यत्राभिधाव्यञ्जनाभ्यां राजगजयोर्बोधः यथा च हरिरित्युक्ते विष्णुचन्द्रयोर्बोधस्तथात्र भाष्यादनेकार्थत्वरूपः श्लेषस्तेन परोक्षस्य ब्रह्मणो वाद इत्यर्थः। स मेन इति स याज्ञवल्क्यो न वदिष्य इति मेने। अत्र पदयोजनान्तरेणानेकार्थरूपः श्लेषः। अनेन राज्ञा सहाहं वदिष्ये स च राजा मे याज्ञवल्क्यं वदिष्यते इति पुरुषव्यत्ययेनान्वयात्। प्राथमिकोऽर्थः। ननु प्राथमिकेऽर्थेऽस्तु अत्र किमागतं तत्राहुः भगवत इति। याज्ञवल्क्यस्य भगवतः परोक्षेत्यादि। उक्त इति व्यवस्थया जीवब्रह्मपररूपः। ननु परोक्षवादोऽन्यत्र निगमयितार इत्यस्य निगन्तव इति अति परोक्षवादो निघण्टव इति षड्ढूतꣳसन्तं षड्ढोतेत्याचक्षते परोक्षेणेति इन्ध इत्यस्येन्द्र इति परोक्षवादोऽत्र त्वनैवमिति चेन्न परोक्षवादस्य सत्त्वात् व्युत्पत्तेः सत्त्वात् अपरोक्षं ब्रह्म तु उषस्तब्राह्मणे। कहोडब्राह्मणे च योऽशनाया पिपासा शोकं मोहं जरामृत्युमत्येतीति श्रुतेऽस्युषुप्तिसामयिकमाधिभौतिकं प्रसिद्धत्वात् यः प्राणेन प्राणितीत्यादिनोक्तव्यानरहितचतुर्वाय्वाश्रयत्वमाध्यात्मिकं 'प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्' इति गीता। तेन 'दृष्टेः द्रष्टारं पश्येर्न श्रुतेः श्रोतारꣳशृणुयान्न मतेर्मन्तारं मन्वीयाः न विज्ञातेर्विज्ञातारं विजानीयात्' इति श्रुतेः द्रष्टृत्वादय उक्तास्तद्वत्त्वमाधिदैविकम्। यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः तन्मे व्याचक्ष्वेति सावधारणश्रुतेः। आध्यात्मिकाधिभौतिकयोस्तु यत्साक्षादपरोक्षाद् ब्रह्मेत्यसाधारणश्रुतेः। टीकायां तु षडुषस्तेन पृष्टं तदेवाहं कहोडः पृच्छामीत्येवमेवकारव्याख्या। अत्र ब्राह्मणव्यत्ययः काण्वादिपाठभेदात्। जीवमुख्येति इदं सूत्रं प्रथमचरणेऽस्ति। तस्यैवेति ब्रह्मणः। तस्येति भाष्यपदमपि व्याकृतम्। क्रियामिति क्रियामात्रस्य तन्मूलत्वायेति भाष्योक्तम्। आस्ते पल्ययते कर्म कुरुते विपर्येतीति श्रुतेश्चतुर्धा। यत्तु उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्च कर्माणीत्युक्त्वा यद्यपि सर्वेषां कर्मणां

१. षड्ढूतꣳसन्तं षड्ढोतेत्याचक्षते।

स्थानानि । अयं लोकः परलोकः स्वप्न इति त्रयं जीवसमानतया अनुभवति । तत्र स्वप्नस्य मिथ्यात्वाद् द्वयमेव । सुषुप्तं च चतुर्थम् । जीवस्य तु मोक्षोऽपि ।

तत्रास्मिँल्लोके जीवस्यानीशित्वं प्रत्यक्षसिद्धम् । मोक्षे त्वैक्यम् । स्वप्नस्तु

भाष्यप्रकाशः ।

भगवत्क्रीडायामेतल्लोकपरलोकसंध्यसंप्रसादाख्यानि चत्वारि स्थानानि । तेष्वेतल्लोकादित्रयं जीवसमानतयाऽनुभवति । समानः सन्नुभौ लोकौ संचरतीति श्रावणात् । न च त्रयाणां सत्त्वे कथं द्वयोर्निर्देश इति शङ्क्यम् । तत्र तेषु स्थानेषु, स्वप्नस्य मिथ्यात्वात् सत्यं द्वयमेवेत्य-भिप्रायेणोभयनिर्देशात् । सुषुप्तं च चतुर्थम् । स एष तस्मिन् संप्रसादे रत्वा चरित्वेति वक्ष्य-माणाल्लिङ्गात् । जीवस्य तु मोक्षोऽपि पञ्चम इति शेषः । एषोऽस्य परमो लोक इति वक्ष्यमाण-त्वात् । तत्र समानताया भेदतन्त्रत्वात् तं सर्वत्र वक्तुं विशेषमाहुः तत्रास्मिन्नित्यादि । तत्रायेऽ-नीशत्वाद् भेदः प्रत्यक्षसिद्धोऽतो नोक्तः । मोक्षे त्वैक्यमविभागे सत्यभेदप्रतीतिविषयत्व-

रश्मिः ।

गमनेऽन्तर्भावः कर्तुं शक्यते तथापि स्वतन्त्रेच्छमुनेः पर्यनुयोगानर्हत्वात् पञ्च कर्माणीति. मतं तेन पल्ययनेऽन्येषामन्तर्भाव इति वचस्तत्र आस्ते इत्यादिप्रयोगस्थले पल्ययते इति प्रयोगापत्तेः । न च संयोगानुकूलव्यापारस्य चतुर्षु सत्त्वादिष्टापत्तिरिति वाच्यम् । पृथगर्थधातूनां प्रयोगात् वैयाकरणमतेऽन्येषामपि धात्वर्थानां सत्त्वात् । सर्वो हि पूर्वमास्ते पश्चाद्गच्छति आगच्छति च अवान्तरक्रियाणां तिसृष्वन्तर्भावो निरुक्त उपपादितः यथा यच्च व्रजितं व्रजिष्यमाणं च यच्च मध्ये स्थितं शयितं भुक्तं तत्सर्वमेकीकृत्य वक्तारो भवन्ति व्रजति देवदत्त इति एवमास्ते इत्यादौ बोध्यम् । एवं प्रपञ्चे प्रपञ्चनिर्माणसमये स्वप्नारयर्थं भक्तिमार्गनिरमासीत्तत्र क्रियामाह श्रुतिः कर्म कुरुते इति अतो भाष्ये क्रियामात्रस्येति मात्रपदम् । तन्मूलत्वायेति आत्ममूलत्वाय । अयमर्थः । 'अत एव च नित्यत्वम्' इति सूत्रे वेदस्य ब्रह्मतुल्यत्वमुक्तम् । तदर्थं धर्मरूपक्रियायाः ब्रह्मतुल्यत्वं तेनैव ज्ञातव्यम् । 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः' इति जैमिनिसूत्रात् । 'धर्मो यस्यां मदात्मकः' इति भगवद्वाक्याच्च ।

'कर्मणा जायते जन्तुः कर्मणैव प्रलीयते ।
सुखं दुःखं भयं क्षेमं कर्मणैवाभिपद्यते' ॥

इत्यादिभिः साधनप्रकरणे एकविंशाध्याये कर्महेतुकवादे निष्ठात्याजनायोक्तम् । हैतुकानामाहत्य 'हेतुवादेय इत्क्के ब्रह्मवादो न वाच्यकः' इति ब्रह्मवादो न वाच्य इति । अतः क्रियापि चतुष्पदा ब्रह्मतुल्यत्वात् । ते चत्वारः पादाः आस्ते इत्याद्युक्ताः तेष्ववान्तरक्रियासन्निवेशो ब्रह्मपादेषु विश्वादिषु तत्तत्पदार्थसंनिवेशवत् । अत एव पञ्चरात्रे क्रियाज्ञानमित्युक्तम् 'आसीज्ज्ञानमथो ह्यर्थ एकमेवाविकल्पितम्' इति । उभाविति स समानः सन्नुभौ लोकौ संचरतीत्यत्र । श्रावणादिति 'द्वा सुपर्णा सयुजा सखाया समाने वृक्षे परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योमिचाकशीति' इत्यत्र सुपर्णेत्यादिना जीवे ब्रह्मानुकरणम् । 'ततो ह जातो भुवनस्य गोपा हिरण्मयः शकुनिर्ब्रह्मनाम' इत्यत्र सुपर्णत्वात् । एतैर्धर्मैः समानः । तत्र स्वप्नस्येति भाष्यमवतारयन्ति स्म न चेति । द्वयोर्लो-कयोः । स्वप्नस्येति स्वपिति स्वप्नः स्वपो नन् इति सूत्रेण नन् ञिष्वप् शये शीङ् स्वप्ने स्वप्नं सुप्तस्य विज्ञानं करोति इति स्वप्नः विज्ञानस्य फलविषयत्वेन विज्ञानसाधनमायिकविषयं करोति उपादानतयेति । स्वप्नस्तु मायेति भाष्येण वक्ष्यते तस्य । सुषुप्तं चेति भाष्यस्य । लिङ्गादिति संप्रसाद इत्यस्य

माया । अतःपरं द्वयमवशिष्यते । तत्र श्रुत्यैव भेदः प्रतिपादितः ।

तत्र भगवतो जीवसाम्ये अन्तःकरणेन्द्रियधर्माः प्राप्नुवन्तीति तत्रानुकरणमाह ध्यायतीव लेलायतीवेति । बुद्धिसहितः स्वयमेव स्वप्नो भूत्वा जागरणा-

भाष्यप्रकाशः ।

लक्षणमत्र, 'ब्रह्मैव सन् ब्रह्माप्येति' इति श्रुत्यैव वक्ष्यतेऽतस्तत्रापि नोक्तः । स्वप्नस्तु माया । अतस्तत्रापि नोक्तः । अतःपरं द्वयमवशिष्यते । सुषुप्तिः परलोकश्च । तत्र भेदः श्रुत्यैव । अयं शारीर आत्मा प्राज्ञेनात्मना संपरिष्वक्त इति । अयं शारीर आत्मा प्राज्ञेनात्मनाऽन्वारूढ इत्यनेन प्रतिपादितः । तथा च मोक्षव्यतिरिक्तेषु सत्येषु सर्वेषु स्थानेषु भेदस्य सिद्धत्वात् तस्यैव जीवे ब्रह्मतानिरासकतया विवक्षितार्थनियामकत्वमित्यभिप्रेत्याचार्यः सुषुप्त्युत्क्रान्त्योरित्याहेत्यर्थः । एवं विशेषं बोधयित्वा इह लोके क्रीडाप्रकारमाहुः तत्रेत्यादि । तथा चेह लोकेऽनुकरणेन क्रीडेत्यर्थः । इदं चावतारदशायामपि पुराणेषु तत्र सिद्धम् । चेरतुः प्राकृतौ यथेत्यादौ च । स्वप्ने क्रीडाप्रकारमाहुः बुद्धीत्यादि । अयं च, सधीः स्वप्नो भूत्वेत्यादेरर्थः । तथा च तत्र

रश्मिः ।

लिङ्गात् संप्रसादः सुषुप्तिः । जीवस्येति तु भाष्यम् । एष मोक्षोऽस्य जीवस्य । सर्वत्र इति अवस्थासु । भेदाभेदवादस्यैतत्कृतस्य सत्त्वात् भाष्याभिप्रायमाहुः तत्राद्य इति । अत्रेति मोक्षे । 'अविभक्तं च भूतेषु विभक्तमिव च स्थितम्' इति गीतात्रयोदशाध्याये ब्रह्मनिरूपणे । तत्रापीति मोक्षेऽपि भेदो नोक्तः । स्वप्न इति । इदमपि भाष्यम् । अतः परमिति भाष्यं द्वयमेतद्व्याकुर्वन्ति स्म सुषुप्तिरिति । तत्र श्रुत्येति भाष्यं विवृण्वन्ति स्म तत्र भेद इति । विवक्षितेति । जीवभेदेन ब्रह्मरूपार्थनियामकत्वम् । अत्रोत्क्रान्तिः परलोको व्याकृतः । विशेषमिति जीवाद्भेदलक्षणं विशेषम् । अनुकरणेनेति । ननु जीवो ब्रह्मानुकरोति न तु ब्रह्म जीवमिति चेन्न । नात्रानुकृत्यधिकरणानुसारि भाष्यं किं तु 'जीवमुख्यप्राणलिङ्गात्' इति सूत्रानुसारि तत्र प्रथमवर्णके जीवधर्माणां जीवद्वारा भगवद्वृत्तिरुक्तैव अन्तःकरणेन्द्रियधर्माणामनुकरणेनेत्यर्थात् 'सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम्' इति गीतात्र । पुराणेष्विति श्रीभागवतब्रह्मवैवर्तपद्मविष्णुपुराणेषु तत्र श्रीभागवते एकादशाध्याये दशमस्कन्धे ।

'तौ वत्सपालकौ भूत्वा सर्वलोकैकपालकौ ।
सप्रातराशौ तौ वत्सांश्चारयन्तौ विचेरतुः' ॥

इति वत्सपालकत्वादि जीवानुकरणम् । तत्र पुराणान्तरे श्रीरघुनाथजितः पुरुषोत्तमसहस्रनामटीकायाम् ।

'सूर्यकोटिसमप्रभः । सुधाकोटिस्वास्थ्यहेतुः कामधुक् कोटिकामदः ।
समुद्रकोटिगम्भीरस्तीर्थकोटिसमाह्वयः । सुमेरुकोटिनिष्कम्पः' ।

इति । एवमन्यत्र । चेरतुरिति इदं दशमस्यैकादशाध्यायेऽस्ति । आदिपदेन ।

'चकोरक्रौञ्चचक्राह्वभारद्वाजांश्च बर्हिणः ।
अनुरौति स्म सत्त्वानां भीतवद्व्याघ्रसिंहयोः' ॥

इत्यस्य दशमद्वादशोक्तस्य संग्रहः । तथा चेश्वरो ध्यायतीव लेलायतीव । अयमिति सधीः स्वप्नो भूत्वेमं लोकमतिक्रामतीति श्रुतिः स ईश्वरः धिया सह स्वप्नः सुखविज्ञानं भूत्वा विश्वस्तु माया

नुसंधानं न करोति । एवं जाग्रत्स्वापौ ब्रह्मणो लोकद्वयं जीवस्य स्थानत्रयमाह स वा अयमिति कण्डिकाद्वयेन । स इति पूर्वप्रक्रान्तो जीवः । जीवस्य शरीरेन्द्रि-

---

भाष्यप्रकाशः ।

मायारूपेण जागरणाननुसंधानरूपा जीववत् क्रीडेत्यर्थः । एवमुभयत्र भगवत्क्रीडामुक्त्वा, स वा अयं पुरुष इति, तस्य वा एतस्य पुरुषस्येति कण्डिकाद्वयस्यार्थमाहुः जीवस्येत्यादि । पूर्वप्रक्रान्त इति । किंज्योतिरयं पुरुष इति प्रश्ने प्रक्रान्तो न तु, स समान इत्यत्रोक्तः । अयमितीदमा प्रत्यभिज्ञानात् । कण्डिकाद्वयसिद्धमर्थमाहुः जीवस्येत्यादि । दुःखदातृत्वं च पाप्मपदाज्ज्ञेयम् । तथा चैतद्बोधनेनानीशत्वख्यापनार्थमेतत्कण्डिकाद्वयकथनमित्यर्थः । अथ

रश्मिः ।

'न तत्र रथा न रथयोगा न पन्थानः' इति श्रुतेः 'सन्ध्ये सृष्टिराह हि' इत्यत्र वक्ष्यन्ति । इमं लोक-मिन्द्रियैर्विषयग्रहणं जाग्रदवस्थारूपमतिक्रामति तस्यानुसंधानं न करोति स्वतन्त्रत्वात् । अत्र सुप्तस्य विज्ञानं धीः 'बुद्धिर्विज्ञानरूपिणी' इति वाक्यात् । तत्राप्य । शुद्ध प्राप्तौ भ्वा. आ. से. इडभाव-श्छान्दसः । अनिड्धातुसत्त्वे नास्य प्रयोगः इति चेद्भूसत्तायामित्यस्यैवास्तु । विज्ञानस्य सत्तां कृत्वा इत्यर्थः । एतदाशयेनाहुः तथा चेति । जागरणस्याननुसंधानं यत्र स्वप्ने एतदुक्तिस्तु स्वप्नसृष्टेर्मिथ्या-त्वाद्भगवांस्तत्र पश्यतीति अक्रीडासाधनमिति जीवद्वारा पश्यतीति जीववत् क्रीडेत्यर्थः । स्वप्नसृष्टेः मायोपादानकारणं ईश्वरः कर्तेति 'ऐन्द्रजालिकपक्षेपि तत्कर्तृत्वं नटे यथा' इति निबन्धात् । एवमिति भाष्यार्थमुपनिबध्नन्ति एवमिति । उभयत्रेति जाग्रत्स्वप्नयोः । स्वापः शयनं स्वप्न इति यावत् । अज्ञानपात्रकरूपोयों ध्वन्यते स्वप्नस्थाने स्वापपददानेन भाष्ये 'स्वापः स्पर्शाज्ञतानिद्राशयनाज्ञानपात्रकः' इति विश्वात् । लोकद्वयमिति भाष्ये जाग्रद्दर्शनं लोकृ दर्शने इति धातुपाठात् स्वापस्तु लोको मायारूपभासात् । लोकृ भासेऽर्थविशेषे चेति । स वा अयमिति । स वा अयं पुरुषो जायमानः शरीरमभिसंपद्यमानः पाप्मभिः संसृज्यते स उत्क्रामन् म्रियमाणः पाप्मनो विजहातीति । तस्य वा इति । तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत इदं च परलोकस्थानं संध्यं तृतीयं स्वप्नस्थानं तस्मिन् संध्ये स्थाने तिष्ठन्नुभे स्थाने पश्यतीदं च परलोकस्थानं चेति । जीवस्येत्यादीति । भाष्ये । स्थीयतेऽस्मिन् इति स्थानम् । प्रक्रान्त इति । योयं विज्ञानमयः प्राणेषु इति प्रक्रान्तः । अयमिति । स वा अयमित्यत्रायमित्यादिः । न च स समान इत्यस्य प्रत्यभिज्ञानमिति शङ्क्यम् । अस्य प्रश्नमात्रवाक्यत्वात् । पाप्मेति पाप्मपदाज्ज्ञेयमिति स्मार्तः प्रयोगः तेन 'स्तोः श्चुना श्चुः' इत्यस्य न प्राप्तिः 'झलां जशोन्ते' इत्यस्य सपादसप्ताध्यायीस्थत्वेन त्रिपादीस्थस्य स्तोः श्चुना श्चुरित्यस्याप्राप्तेः 'झलां जश् झशि' इत्यस्य त्रिपाद्यामपि स्तोः श्चुना श्चुः इत्यस्मात् परत्वेन तत्प्रति तस्यासिद्धत्वात् । तेन पाप्मपदाज्ज्ञेयमित्यत्र स्तोः श्चुना श्चुरिति प्रापयित्वा झलां जश् झशीति प्रापणीयम् । इति तयोस्त्रि-पादीस्थत्वेन 'झलां जशोन्ते' इति सूत्रं प्रत्यसिद्धत्वात् । एतस्य त्रिपादीस्थत्वे पूर्वत्वात् । त्रिपाद्यामपि पूर्वं प्रति परस्यासिद्धत्वात् । अनीशोति तत्रास्मिन् लोके जीवस्यानीशित्वं प्रत्यक्षसिद्धमिति भाष्यात् । भाष्ये पूर्वप्रक्रान्त इति पाठे वर्णागमः । अभिवाक्यत्वेन वेदतुल्यत्वात् । दुःखदातृत्वं तु पाप्मभिः 'पाप्मभिः संसृज्यते' इति श्रुतेरिति पाप्मपदाज्ज्ञेयमित्यनेन भाष्यप्रकाशेनोक्तम् । तत्र दुःखदातृत्वं कर्मांकुरोत्पादनः इति ज्ञेयम् । पाप्मानस्तु कर्मांकुरोत्पत्तेरन्यथा अन्नात्मके जनाति सुखपत्तरि ईर्ष्यासूयामत्सरादिरूपाः तैर्दोषैः अभिमीहते चिरे मुखं दुःखावत इति व्यर्थितें

पाणां दुःखवातृत्वमेव । अथेति भगवच्चरित्रम् । स तु स्वस्यानन्दं जीवस्य दुःखं च पश्यति ।

भेदोऽथशब्दात् । जीवस्यानीशित्वात् येन प्रकारेणायं जीवः परलोके गच्छति तदुपायं भगवानेव करोति ।

---

भाष्यप्रकाशः ।

यथाक्रममित्यादेरर्थमाहुः अथेतीत्यादि । चरित्रस्य स्वरूपमाहुः स त्वित्यादि । तदुक्तम्, अथ यथाक्रमोऽयं परलोकस्थाने भवति तमाक्रममाक्रम्योभयान् पाप्मन आनन्दांश्च पश्यति स इत्यन्तेन । श्रुत्यर्थस्तु, अथेति भिन्नप्रक्रमे । यथाक्रमः । आक्रमत्यनेनेत्याक्रम आश्रयोऽव-ष्टम्भो विद्याकर्मपूर्वप्रज्ञालक्षणो यादृश आक्रमो यस्यासौ यथाक्रमः । अयं जीवः परलोकस्थाने भवति । परलोकस्थाने प्राप्तव्ये सति यादृशविद्याकर्मपूर्वप्रज्ञायुक्तो भवति तमाक्रमं विद्यादि-लक्षणमाक्रम्यावष्टम्य । उभयान् एतस्यैव व्याख्यानं, पाप्मन आनन्दांश्चेति । पश्यति स परमात्मेति । तथा च जीवस्य क्वचिद् विद्यया परलोकः, क्वचित् कर्मपूर्वप्रज्ञाभ्याम् । भगवांस्तु तत्तदन्तर्यामितया लोकान्तर्यामितया च तत्तन्नियमयन् स्वस्यानन्दं जीवस्य दुःखं च सुखं च पश्यतीत्येषा परलोके जीववत् क्रीडेत्यर्थः । नन्वस्यां कण्डिकायां भगवच्चरित्रमेवोच्यत इत्यत्र किं गमकमत आहुः भेदोऽथशब्दादिति । तथा च क्रमभेद एव गमक इत्यर्थः । तत्र यत् सिद्धं तदाहुः जीवस्येत्यादि । तथा चैषा द्वितीया तत्रत्या क्रीडेत्यर्थः ।

यत्रायं प्रस्वपितीत्यारभ्य, न प्रतिपद्यत इत्यन्ते यत् सिध्यति तदत्र न प्रदर्शितमतः प्रदर्श्यते । यत्रायं प्रस्वपिति । यत्र स्थाने अयं जीवः प्रस्वपिति निद्राति, तत्र जीवस्य स्वामानु-

रश्मिः ।

शर्करा यथा कटुरसायते मिष्टापि तथा । तदुक्तं वाराहे चातुर्मास्यमाहात्म्ये चतुर्विंशेऽध्याये ।

'असूयेर्ष्यादिदोषाणां संसर्गान्मलिनीकृते ।
सुखं दुःखायते चित्ते ज्वरिते शर्करा यथा' ॥ इति ।

अथ यथेति । पूर्वमुक्तां श्रुतिं वक्तुमाहुः तदुक्तमिति । कण्डिकाद्वयानन्तरमेवोक्तं भगवान-वष्टभ्येत्यवष्टभ्येत्यस्य कर्ता तथा च भगवान् आक्रमं कृत्वेत्यर्थः 'कर्ता कारयिता हरिः' इति वाक्यात् । ननु 'एव उ एव' इति श्रुत्यावष्टभ्य इत्यस्य कारयित्वेत्यर्थ इति चेन्न जीवस्यानीशित्वादित्यग्रेतन-भाष्यात् । भगवांस्त्विति अत्र नश्छव्यप्रशानिति सूत्रेण रुः, विसर्गः सत्वम्. अनुस्वारागमः भगवांस्त्विति पाठः । तत्तदिति जीवपृथिव्याद्यन्तर्यामितया । जीवस्येत्यादीति ईशनमीशः नेशनमनीशः अनीशोऽस्यास्तीत्यनीशी तृतीयाध्यायद्वितीयपादे पराभिध्यानसूत्रे वीर्यतिरोभावात्सर्व-दुःखसहनमिति भाष्यात् भगवानेवेत्येवकारस्तु परात्तु तच्छ्रुतेरिति द्वितीयाध्यायसूत्रात् । तथा च जीवस्य क्वचिदिति भाष्यप्रकाशस्य कर्मपूर्वप्रज्ञाभ्यामित्यस्याग्रे तत्र जीवस्य कर्तृत्वं भगवत्संबन्धादेव भगवत्संबन्धस्तु अन्तर्यामिणोऽधिदैवादिनिष्ठस्य संबन्धादित्याहुरिति शेषं पूरयित्वा भगवांस्त्विति योजनीयम् । यत्रान्यमिति तत्र यत्रायं प्रस्वपित्यस्य लोकस्य सर्वावतो मात्रामुपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपित्यत्रायं पुरुषः स्वयंज्योतिर्भवति । न तत्र रथा न रथयोगा न पन्थानो भवन्ति अथ रथान् रथयोगान् पथः सृजते न तत्रानन्दाः मुदः प्रमुदो भवन्ति अथानन्दान् मुदः प्रमुदः सृजते न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्ति अथ वेशान्तान् पुष्करिणीः स्रवतीः सृजते स हि कर्तेत्यन्तस्य यत्र स्थाने इत्यारभ्य निश्चय इत्यन्तग्रन्थेनार्थमाहुः

भाष्यप्रकाशः।

भवप्रकारं वक्ष्यँस्तद्धेतुभूतं भगवत्स्वापप्रकारमाह। अस्य जाग्रदवस्थायामनुभूयमानस्य लोकस्य, सर्वावतः सर्वपदार्थयुक्तस्य, मात्रां वासनात्मकमंशमुपादाय गृहीत्वा स्वयं भगवान् विहृत्य वासनाग्रहणे ज्ञानस्य स्थूलरूपतिरोभावाज्जाग्रद्देहं निःसंबोधं कृत्वा स्वयं निर्माय वक्ष्यमाणप्रकारेण नानापदार्थनिर्माणं कृत्वा, तत्र करणं स्वेन भासा स्वधर्मात्मकेन ज्ञानेनेति स्वेन ज्योतिषा प्रस्वपिति, अलुप्तदृक्स्वभावेन स्वरूपेण, 'स सर्वधीवृत्त्यनुभूतसर्वः' इत्यत्र स्वप्नजनेश्रितैकपद-व्याख्यानव्युत्पादितया रीत्या सर्वं स्वाप्निकं विषयीकुर्वन् प्रस्वपितीति प्रकार उक्तः। अतःपरं जीवस्य तत्प्रकारमाह अत्रायमित्यादि। अत्रास्मिन् भगवत्स्वापे, अयं पुरुषो जीवः स्वयंज्यो-तिर्भवति। भगवज्ज्योतिषा स्वप्नमनुभवन्नात्मज्योतिर्भवतीत्यर्थः। ननु दृश्यानां बहिःष्ठत्वात् स्वप्नेऽन्तस्थः किं पश्यतीत्याकाङ्क्षायां स्वाप्नसृष्टेर्भिन्नत्वाय तत्र भगवत्कृतां सृष्टिमाह न तत्र रथा इति कण्डिकया। अत एव, स हि कर्तेत्युक्तं न त्वयं कर्तेति। किं च, स्वप्नेऽपि सर्वपदार्थान् प्रति न जीवस्य कर्तृत्वं प्रतीयते। सिद्धवदेव बहूनां प्रत्ययात्। स्वदुःखजनकपदार्थं प्रति स्वकर्तृत्वस्यासंगतत्वाच्च। अत्राप्यग्रे, घ्नन्तीव जिनन्तीवेति श्रावणाच्च। तस्माद् भगवानेव स्वप्नसृष्टिकर्तेति निश्चयः। इममेवार्थं श्लोकैः संगृह्णाह तदप्येते श्लोका इति। तत् तत्र पूर्वोक्तेऽर्थेऽपि, एते वक्ष्यमाणाः श्लोका मन्त्राः सन्तीति शेषः। तानाह स्वप्नेनेति स्वप्नेन मायिकेन रूपेण शारीरं जीवमभिप्रहत्य तिरस्कृत्य असुप्तः स्वयं, सुप्तान् प्राणादीन् अभिचाकशीतीति प्रकाशयति।

रश्मिः।

तद्धेत्विति। जीवस्यानीशत्वादिति भावः। सर्वपवेति सर्वपदे दीर्घ आर्षः अथ वा सर्वा व्यक्तयो विद्यन्तेऽस्य यस्येति व्युत्पत्तौ मतुप् मतुपो मस्य वः। सर्वावत्त इति पाठे सर्वेषामवदत्तः स्वयम्। 'अच उपसर्गात्तः' इति सूत्रेण 'दा' इत्यस्याकारस्य तकारः। वासनेति कर्मभिः पृथक् ताः कर्मभिरे-वोक्ताः सप्तमस्कन्धनिबन्धेऽतिस्फुटाः। उपादायेति अपादायेत्यपि पाठः। अर्थस्त्वयमेव। स्वयमिति। स हि सर्वकर्तेति श्रुत्युक्तः स्वयं कर्ता। तत्र करणमिति तत्र वक्ष्यमाणस्वापे नाना-पदार्थनिर्माण इति नार्थः। तत्र मायायाः करणत्वात्। स्वप्नस्तु मायेतिभाष्यात्। स्वं भासा माया वा ज्ञानकाशात्वात्। तदा तत्रेत्यस्य नानापदार्थनिर्माण इत्यर्थः। अर्थमाहुः अलुप्तेति। रीत्येति सर्वस्य मिथ्यात्वाद्भगवानेव पश्यतीति। नेन्द्रियादिः गोलकस्य मिथ्यात्वात्। तदभाव इन्द्रियाणामसामर्थ्यात्। तत्प्रकारमिति स्वप्नप्रकारं जीवस्य साक्षित्वेनावस्थानरूपम्। आत्मज्योतिरिति भगवज्ज्योतिः तेन जीवः साक्षी। अन्तःस्थ इति देहान्तःस्थः। तत्रेति स्वप्ने। भगवत्कर्तृकां न तु भगवदु-पादानिकाम्। स हीति स भगवान्। न त्वयमिति। अयं श्रुतिभिः शाब्दप्रत्यक्षविषयोऽभिन्न-निमित्तोपादानरूपः अयं जीवो वा। आत्मत्वाज्जीवस्य कर्तृत्वम्। असंगतेति इष्टसाधनताज्ञानस्य प्रवर्तकत्वात्। अदृष्टद्वारेति चेन्न ईश्वरस्यादृष्टसंबन्धापत्तेः। स्वप्नेनेति स्वप्नेन शारीरमभिहत्यासुप्तः सुप्तानभिचाकशीति। शुक्रमादाय पुनरैति स्थानं हिरण्मयः पौरुष एकहंस इति मन्त्रः। एकहंस-पदार्थमाहुः एक इति। एके मुख्यान्यकेवलाः इति कोशः। सुप्तेति सुप्तो जीवादिः तेन तिरस्कृतान् जाग्रत्पदार्थान्। हसतीति हंसः न वर्णागमः। पचाद्यच् गमनरूपार्थासंगतेर्न हन्ति गच्छति हंसः वृत्तवद्विहनीति सः। यद्वा अचि 'भवेद्वर्णागमाद्धंस' इति सक्। नापि टीकाकृदुक्तव्युत्पत्तिः। हिनस्ति वेति हिंसार्थकत्वमाहत्य। नश्चापदान्तस्य झलीत्यनुस्वारः न हि परमात्मा सुप्ततिरस्कृतान् गच्छति अनद्धु-

भाष्यप्रकाशः ।

शुक्रं शुद्धं स्वप्रकाशितं जीवमिन्द्रियादिकं चादाय पुनरैति आगच्छति । स्थानं जाग्रल्लोकं हिरण्मय आनन्दमयः, पौरुषः पुरुषः, पुरुषस्य जीवस्य सखा । एकहंसः । एको मुख्यः सन् सुप्ततिरस्कृतान् हसतीत्यर्थः । अन्यदपि स्वाप्नं विशेषमाह प्राणेनेति । प्राणेन पञ्चवृत्तिना आसन्येन, अपरं निकृष्टं स्थूलं कुलायं नीडं शरीरं रक्षन् मरणशून्यं कुर्वन् अमृतः । पञ्चम्याः स्वादेशः । अमृतात् कुलायाद् बहिर्बुद्धिसंपर्करहिते देशे चरित्वा स्वाप्नं भोगं कृत्वा तत्कौतुकं दृष्ट्वेति यावत् । सः परमात्मा, यत्र कामम् । लिङ्गमशिष्यम् । यत्रेच्छा तत्र, अमृतः, अमरणधर्मा ईयते गच्छति । हिरण्मय इत्यादिकं पूर्ववत् । यत्र काममिति विवृणोति । स्वप्नान्ते इति स्वाप्नान्ते स्वप्नदेशे । ईयमानः प्राप्नुवन् । शेषं स्फुटम् । रूपाणि देव इत्यादेः प्रदर्शितस्वप्नकथनस्य प्रयोजनं स्वयंज्योतिष्ट्वसमर्थनमित्यभिप्रायेणाह आराममिति । आराममारमणं क्रीडेति यावत् । अत्र यदि जीवः कर्तृत्वेनाभिप्रेतः स्यात् तदा, आरामं स्वस्य पश्यन्ति न स्वं पश्यति कश्चनेति श्रुतिर्ब्रूयात् । तं कश्चनेति कर्मकर्तृभावं च न ब्रूयात् । एवं क्रीडां बोधयित्वा तस्या दुर्ज्ञेयत्वाय जागरणं निषेधति तदित्यादि । तत् तस्मात् को वेद तस्मिन् समये भगवान् किं प्रदर्शितवानिति ज्ञानाभावात् कारणात् । आयतं गाढसुप्तं, न बोधयेत् । न जागरयेत् । तत्र हेतुः इत्याहुरित्यादि । इति एवं वक्ष्यमाणं चिकित्सका आहुः । दुर्भिषज्यं दुश्चिकित्स्यत्वमस्मै सुप्ताय भवति । यदि बोधयेत् । यं देशमयं पश्यन् स्थितस्तमेष न प्रतिपद्यते, न प्राप्नोति । अत्रोदाहरणं बाणदुहिता ऊषा

रश्मिः ।

संधानात् । नापि हिनस्ति नित्यत्वाज्जाग्रत्पदार्थानाम् । न चेदं व्यत्ययो बहुलमिति सूत्रस्य प्रपञ्चभूताः सर्वे विधयः छन्दसि विकल्पन्ते इति परिभाषा तस्या अविषयं प्रतिपद्यते येन वृतृवदीत्यादिसूत्रस्यालौकिकस्य विषयो भवेत् न त्वेवमतोऽङ्गभूतसूत्रानुरोधयर्थं त्यक्त्वा कुत उत्सूत्रं व्याख्यानमिति वाच्यम् । अग्रे हंसपदेऽस्य सूत्रसंचारोस्तीति निरवकाशत्वाभावात् । धातूनामनेकार्थत्वाच्च । न च सूत्रेण हन्तेः प्राप्तिः हसतेः प्राप्तिः कुतः इति वाच्यम् । जक्षद्धंस इत्युत्तरवाक्येऽन्वयेन जक्ष्यर्थस्य हसनस्यार्थासंगतेर्हेतोः पूर्ववाक्येपि सत्त्वात् नाकस्मिकत्वम् । जक्षभक्षहसनयोरिति । प्राणेनेति

'प्राणेन रक्षन्नवरं कुलायं बहिष्कुलायादमृतश्चरित्वा ।
स ईयतेऽमृतो यत्र कामं हिरण्मयः पौरुषः एकहंसः' ॥

इति मन्त्रः । स्वादेश इति सुपां सुलुगिति सूत्रेण । लिङ्गमिति लिङ्गं काममित्यत्र नपुंसकमाक्षेप्यम् । अशिष्यमशिष्टं न शासितमिति यावत् । कामपदार्थमाहुरिच्छेति । कमु कान्तौ कान्तिरिच्छा । स्वप्नान्त इतीति ।

'स्वप्नान्त उच्चावचमीयमानो रूपाणि देवः कुरुते बहूनि ।
उतेव स्त्रीभिः सह मोदमानो जक्षदुत वापि भयानि पश्यन्' ॥ इति मन्त्रः ।

स्फुटमिति जक्षभक्षहसनयोः रु. प. से. शता जक्षतीति जक्षत् । अत्रार्थासंगतेरभावात् हन्तीति हंसः यत्रेच्छा तत्र गमने वराहवद्धिनस्त्येवेति विकल्पेन लौकिकसूत्रस्य प्रवृत्तिः । आराममिति 'आराममस्य पश्यन्ति न ते पश्यन्ति कश्चन' इति स्वयंज्योतिष्ट्वं स्वतन्त्रज्योतिष्ट्वं तत्समर्थनमाहुः अत्रेति । पश्यतीति । जीवा इति वचनव्यत्ययेनान्वयो न तु जना इत्यध्याहारेणेति ज्ञेयम् । तमिति आत्मानम् । न ब्रूयादिति कर्मकर्त्रोरेकत्वान्माया तदास्तीति चेन्न ईश्वरस्य मायासंबन्धापत्तेः । बुद्धिरिति चेन्न मायिकीत्वात् । जागरणमिति जागरणे तस्य तस्या अदुर्ज्ञेयत्वात् । तदिति तदायतं बोधयेदित्याहुः दुर्भिषज्य९हास्मै भवति यमेष न प्रतिपद्यत इति मन्त्रः ।

अथो खल्विति भगवतो न जागरितस्वप्नभेदोऽस्तीति पक्षः । परं स्वयञ्ज्योतिष्ट्वं तत्र स्पष्टम् । एतावद्दूरे भगवच्चरित्रमङ्गीकृत्य जीवविमोक्षार्थं प्रश्नः । स वा एष इति जीववाक्यम् । तस्य सहजः सङ्गो नास्तीति स्वप्नसङ्गाभावं

भाष्यप्रकाशः ।

ज्ञेया । एवं भगवतः स्वप्नमङ्गीकृत्य स्वयंज्योतिष्ट्वं साधितम् । अतःपरं भगवतः स्वप्नमनङ्गीकृत्य तथात्वं साधयतीत्याहुः अथो इत्यादि । तथा च मतान्तरतयोल्लेखादयमन्यः पक्ष इत्यर्थः । श्रुत्यर्थस्तु । अथो इति भिन्नप्रक्रमे । खल्वाहुः । अर्थादन्ये । किमेष पूर्वोक्तोऽस्य भगवतो जागरितदेश एव । हि यतो हेतोः । यान्येव पदार्थजातानि जाग्रत् पश्यति तान्येव सुप्तः पश्यतीति । तदुक्तं श्रीभागवतेऽपि, 'लोकानपीतान् ददृशे स्वदेहे' इति । तथा च यत्रापीतानामपि दर्शनं, तत्र स्थितानां दर्शने कः संदेह इति भगवतो न जागरितस्वप्नभेद इति प्रलय इवात्रापि स्वयंज्योतिष्ट्वमिति तदाशयः । एतस्य मतान्तरत्वे हेतुमाहुः परमित्यादि । तत्रेति । व्याख्याते पक्षे पूर्वमादित्यादीनां कथनाज्जागरिते स्वयंज्योतिष्ट्वस्यास्पष्टत्वादत्रास्यानुपयोगित्वम् । परप्रतिपत्त्यभावादतः पूर्वोक्त एव पक्षो युक्त इति तदाशय इत्यर्थः । एतच्छ्रवणोत्तरम्, एवमेवैतद् याज्ञवल्क्येति जनकेनाङ्गीकारात् प्रश्नोत्तरपूर्तिर्जातेति सिद्धम् । अतःपरं यो मोक्षप्रश्नः, अत ऊर्ध्वं विमोक्षायैव ब्रूहीति स कुत इत्यपेक्षायामाहुः एतावदित्यादि । स समानः सन्नित्यारभ्य स्वप्नपर्यन्तं भगवच्चरित्रं बन्धकमङ्गीकृत्य मोक्षस्तर्हि कथमित्याशयेन तत्प्रश्न इत्यर्थः । तर्हि मोक्षसाधनं तत्र वाच्यम् । जीवाऽवस्थादिकथनस्य कः प्रसङ्ग इत्यत आहुः स वा एष इत्यादि । जीववाक्ये-

रश्मिः ।

आयतं भूम्नमत्यर्थमित्यन्ये । भगवत इति स्वप्नस्तु मायेति भाष्यात् । मायामायाविनोराधाराधेयभावः । तथात्वमिति स्वयंज्योतिष्ट्वं तु भ्रम् । अन्य इति तेन पूर्वोक्तपक्षे बीजमप्युक्तम् । मतान्तरत्वाय श्रुत्यर्थमाहुः श्रुत्यर्थ इति । श्रुतिस्तु अथो खल्वाहुः जागरितदेश एव अस्यैष इति यान्येव जाग्रत्पश्यति तानि सुप्त इत्यत्र अयं पुरुषः स्वयंज्योतिर्भवति । इत्येवमेवैतद्याज्ञवल्क्य सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीति । श्रीभागवत इति तृतीयस्कन्धे । अपीतान् अपि इतान् अपीता लोकाः स्वप्ने स्थिता जाग्रति । अत्रापि स्वप्नेपि । प्रलये विश्वाभावः । स्वप्नेपि मायेति । तदाशयो याज्ञवल्क्याशयः । अत्रेति जाग्रत्स्वप्नभेदाभावपक्षे । अस्येति । स्वयं ज्योतिष्ट्वस्य जाग्रद्दृष्टीनां स्वप्नेपि दर्शनेन विघटनात्तस्यानुपयोगित्वम् । जाग्रता चारितार्थ्यात् । परप्रतिपत्त्यभावात् । स्वप्न एव स्वयंज्योतिष्ट्वस्य परप्रतिपत्तिरस्ति । तदादित्यादेरभावादिन्द्रियाणां गोलकाभावेन प्रदर्शनासामर्थ्यात् । गोलकस्य च स्वाप्नस्य मिथ्यात्वात् भगवानेव पश्यतीत्युक्त्याध्यवसीयत इति । अतः कारणात् परममुत्कृष्टं स्वयंज्योतिष्ट्वं तत्र जाग्रत्स्वप्नभेदपक्षे स्पष्टम् । तत्र स्वेन भासा स्वेन ज्योतिषा प्रस्वपितीत्याधिक्यात् पूर्वोक्त एव पक्षो युक्त इति । तदाशय इति अत्रायं स्वयंज्योतिर्भवतीति श्रुतेर्याज्ञवल्क्यस्य चाशयः । बन्धकमिति बन्धिका ज्ञेया इति अत एव च नित्यत्वमिति सूत्रभाष्यस्वारस्यात् । जीवेति आदिपदेनासंगत्वस्य । जीवेति । भाष्ये । स वा एष इति जीववाक्यम् । एतस्याग्रे तेनेति शेषं पूरयित्वा हेत्वनेनान्वयः कर्तव्य इति भावः । स वा एष एतस्मिन् स्वप्नान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव स यदत्र किंचित्पश्यति अनन्वागतः तेन भवत्यसंगो ह्ययं पुरुष इत्येवमेवैतद्

प्रत्यक्षतः प्रदर्शयन्नसङ्गत्वमाह । तावतापि जागरणावस्थायामसङ्गत्वज्ञानाय पुनः प्रश्नः । तत्र मत्स्यदृष्टान्तोऽवस्थाभेदज्ञानाय क्रियाज्ञानप्रधानः ।

---

भाष्यप्रकाशः ।

माहेत्यर्थः । श्रुत्यर्थस्तु, स वा एष जीव एतस्मिन् स्वप्नान्ते स्वप्नदेशे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रातिलोम्येन नितरामयो गमनं यथा स्यात् तथा, प्रतियोनि यौति मिश्रीभवतीति योनिर्जागरितादिस्थानं तल्लक्ष्यीकृत्य आद्रवत्यागच्छति बुद्धान्ताय जागरणायैव । एवं जीवस्य क्रियां बोधयित्वा तस्यासंगत्वं व्युत्पादयति । स यदत्र किंचित् पश्यत्यनन्वागतः । अनुलक्ष्यीकृत्याऽऽगतोन्वागतस्तद्भिन्नोऽनन्वागतः साक्षिभूत उदासीनः सन् पश्यतीत्यनुभवसिद्धम् । तत्रत्यसुखदुःखेषु तत्साधने चानासक्तेरनुभवसिद्धत्वात् । तेन साक्षित्वेन हेतुना भवत्यसङ्गोऽनासक्तो हि निश्चयेनायं पुरुष इतीति । तथा च मोक्षे स्वरूपयोग्यताबोधनं प्रसङ्ग इत्यर्थः । द्वितीयप्रश्नतात्पर्यमाहुः तावतापीत्यादि । स्वप्ने असंगत्वे ज्ञातेऽपि जाग्रत्यासक्तिदर्शनात् तस्या योग्यताया अकिंचित्करत्वमतस्तत्रासंगतत्वज्ञानाय पुनः प्रश्न इत्यर्थः । श्रुतावत ऊर्ध्वमित्यस्य स्वप्नादुत्कृष्टायां जाग्रदवस्थायामित्यर्थः । उत्तरस्य तात्पर्यमाहुः तत्रेत्यादि । तत्रेति उत्तरे । क्रियाज्ञानप्रधान इति क्रियाया ज्ञानं मुख्यं यत्र तादृशः । तथा च यथा नदीक्रियाविलक्षणया क्रियया मत्स्ये नदीभिन्नत्वज्ञानं, कूलद्वये संचरणात् तत्र तत्र सहजासक्तिशून्यत्वज्ञानं च । तथा जीवस्य स्वप्नदेशे बुद्धदेशे च संचरणक्रिययाऽवस्थाद्वयभिन्नत्वज्ञानम् । उभयत्र संचरणाच्च तत्र तत्र सहजासक्तिरहितत्वज्ञानम् अतोऽयं दृष्टान्तस्तदर्थं तथेत्यर्थः । एवं जागरितेऽप्यस्यासङ्गत्वे ज्ञाते, एतस्य सहजासक्तिः केत्याकाङ्क्षा स्यात्, तदर्थं प्रश्नं च कुर्यादतस्तदर्थं स्वत एवाग्रिमं वरदानानुरोधाद् वक्तीत्यग्रेऽनुशशासेति पदोक्त्या ज्ञायते । तदर्थं सर्वस्य

रश्मिः ।

याज्ञवल्क्य सोहं ते भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीति श्रुतिः । रत्वेति रमु क्रीडायाम् क्त्वा । पुण्यमिति पुणति तु. प. से. पुण शुभे कर्मणि इगुपधेति कः । पुणेषु भवं पुण्यम् । वैदिकीप्रक्रियात्वेन 'भवे च्छन्दसि' सप्तम्यन्ताद्भवार्थे यदित्यनेन यत् । पापमिति । पान्त्यस्मादात्मानमिति पापं पा रक्षणे पानीविषिभ्यः प इति पप्रत्ययः । योनिरिति वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो निरिति नित् । तत्रेत्येति । स्वाप्निकसुखदुःखेषु । अयमिति जीवः । स्वरूपेति मोक्षो हि अन्यथारूपं हित्वा स्वरूपेण व्यवस्थितिरूपः । स्वरूपं हि तत्त्वपरित्यक्तं तत्त्वान्यष्टाविंशतिः । तत्र मोक्षे स्वरूपे योग्यता एकपदार्थेऽपरपदार्थसंसर्गरूपा । मोक्षरूपे पदार्थे अपरपदार्थस्यानासक्तिरूपस्य अन्यजनकभावो योग्यता तद्बोधनं तत्स्मारणं प्रसङ्गः । तथा चैतादृशस्मारणेनोपेक्षानर्हत्वं तेन च जीवावस्थादिकथनमिति भावः । द्वितीयेति अत ऊर्ध्वं विमोक्षाय ब्रूहीति । उत्तरस्येति तद्यथा महामत्स्यः उभे कूले अनुसंचरति पूर्वं चापरं चैवमेवायं पुरुष एतावुभावन्तावनुसंचरति बुद्धान्तं च स्वप्नान्तं चेति । तत्र तत्रेति पूर्वस्मिन् कूलेऽपरे कूले सहजासक्तिशून्यत्वज्ञानं नद्यां वासात् स्रोतसा वशीकृतत्वाद्वा । तदर्थमिति अवस्थाभेदज्ञानाय तथापृष्ठप्रतिवाक्यमित्यर्थः । विश्वात् । तदर्थमिति सहजासक्तिज्ञानाय । तदर्थमिति प्रश्नाभावार्थम् । स्वत इति स्वतो याज्ञवल्क्योऽग्रिमं ग्रन्थं वरदानं वरमुत्कृष्टं कामप्रश्ने दानं तदनुरोधात् दानानुरूपं वक्ति । अत्र गमकमाहुः इतीति इत्येवमग्रेऽनुशशासेति पदोक्त्या ज्ञायते । तथाहि । अनु भागे इत्थंभूताख्याने वा । शशास

श्येनसुपर्णदृष्टान्तस्तु सुषुप्तौ भगवत्स्वरूपप्राप्तयेऽवस्थान्तः । यत्रेति च

भाष्यप्रकाशः ।

प्रपञ्चकस्यार्थं वक्ष्यन्तः श्येनादिदृष्टान्ततात्पर्यमाहुः श्येनेत्यादि । तत्र भगवत्सत्त्वे किं मानमत आहुः अथस्येत्यादि । एतस्मा अन्ताय धावतीत्यन्तपदोक्तोऽवस्थान्तः । यत्र सुप्त इत्यग्रिमं वाक्यं च सुषुप्तौ भगवत्सत्त्वे मानम् । श्रुतौ, सल्लयायैव ध्रियत इत्यस्य सम्यग् लयः शेषो यत्र तादृशस्थानाय गच्छतीत्यर्थादन्तपदेन भगवल्लाभः । यत्रेति वाक्ये तु सर्वकामनाभावकथनेन तल्लाभादित्यर्थः । तत्प्राप्तिश्च न धावनमात्रेण, किं तु हेत्वन्तरेणेति वक्तुं, ता वा अस्यैता

रश्मिः ।

शास अनुशिष्टौ अ. प. सेटो रूपं न तु शास् इच्छायाम् । अ. आ. सेटः । वक्तीति भाष्यप्रकाशात् । श्रुतौ परस्मैपदाच्च । जानातीच्छति यतते इति शास्त्रकथनात्तस्य च प्रयत्नपूर्वकत्वेनेच्छार्थस्याशक्यत्वाच्च । शिषु विशेषणे रु. प. अ. शेषणम् । शिष प्रसवोपयोगे चु. प. से. भावार्थकल्युडन्तम् । तेन एनमनुशशासेति श्रुतौ एतस्य जनकस्य सम्राजो नु नाम भागमग्रिमं तस्य शासनं प्रसवोपयोगं चकार याज्ञवल्क्यो भगवान् इत्थंभूताख्यानं प्रकारविशेषनिरूपकं वाक्प्रसवोपयोगं चकारेति वा । वैयाकरणास्तु अनुना द्योत्यते भागरूपोर्थः । एनमित्यत्र द्वितीयार्थः स अर्शआद्यजन्तेन तत्स्वामी उच्यते इति । तन्मते जनकामित्रं भागस्वामिनं शशासेत्यर्थः । तथा जनकामित्रेत्थंभूतं आख्यानं आख्यायतेऽनेन तदग्रिमं शशासेति द्विकर्मकः ।

'दुह्याच्पच्दण्ड्रुधिपृच्छिचिब्रूशासुजिमथ्मुषाम् ।
कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम्' ॥ इति ।

अग्रिमं एनमनुशशासेति द्विकर्मकोयं शासिः । तदर्थमिति अनुशशासेति पदोक्त्या ज्ञानार्थम् । श्येनेत्यादीति तद्यथास्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः संहत्य पक्षौ सल्लयायैव ध्रियते एवमेवायं पुरुष एतस्मा अन्ताय धावति यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यतीति श्रुतिः । तत्रेति सुषुप्तौ । अथेति स्वप्नावस्थाया अन्तो यत्र भगवति सुषुप्तिरूपे सोऽवस्थान्तः यत्रेत्याश्रयणीये भगवति । कथमित्यपेक्षायामाहुः श्रुत्ताविति । श्येनस्तु श्रान्तः पक्षौ संहत्य प्रसार्य सति निर्गुणे लयायैव ध्रियते पतनप्रतिबन्धः क्रियते । श्येनः श्रान्तः इत्यत्र टः सुः सुपां सुलुगिति सूत्रेण श्येनेन श्रान्तेनेत्यर्थः । निर्गुणलयः सुषुप्तौ इति सगुणलयाय दृष्टान्तान्तरमाह सुपर्णो वेति सुपर्णो गरुत्मान् । सगुणलयायैव पतनप्रतिबन्धः क्रियते । सुपर्णेनेति पूर्ववत् । अत्र समासदौर्घट्यादाहुः सल्लयायेति प्रकाशे । गच्छतीति टः सुमनादत्य धातूनामनेकार्थत्वं स्वीकृत्य यकःस्थाने यकं वर्णलोपं चाश्रित्योक्तं तदुक्तम् ।

'सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च ।
व्यत्ययमिच्छति शास्त्रकृदेषां तदपि च सिद्ध्यति बाहुलकेन' ॥ इति ।

वैदिकप्रक्रियायाम् । यद्वा त्रुटिरत्र तादृशस्थानायेत्यग्रे तादृशस्थानाय निर्गुणसगुणप्राप्तये श्येनेन सुपर्णेन वा ध्रियते एवमेवायं पुरुषो जीव एतस्मै अन्ताय धावतीत्येवं रूपा । धावतीत्यस्यार्थमाहुः गच्छतीति । धावु गतौ शुद्धौ च भ्वा. उ. से. । ननु भाष्ये सुषुप्तौ भगवत्स्वरूपप्राप्तये इत्युक्तं तत्कथं दृष्टान्तौ भित्त्वा व्याख्यातमिति चेन्न । सगुणनिर्गुणयोर्विद्वन्मण्डने भेदमङ्गात् । चिन्त्यौविषया-निर्वाचे विशेषः । ता वा अस्यैता इत्यादेरिति ता वा अस्यैता हिता नाम नाड्यो यथा केशः

भगवान् पञ्चपर्णनाडीकृत एवास्य क्लेशो भगवत्कृत एवानन्द इति स्वप्नानन्दो

भाष्यप्रकाशः ।

इत्यादेस्तात्पर्यमाहुः पञ्चेत्यादि । भगवद्रूप इति अक्षरात्मकः । तथा श्रुतौ नाडीः प्रक्रम्यान्ते, अविद्यया भयं मन्यत इत्युपसंहारात् तास्वेवाविद्यासंबन्धो दुःखदः । अग्रे तु भगवत्संबन्धात् साभिभूयते । ततोऽथेति प्रक्रमान्तरादुपसंहारे लोकपदाच्चाक्षरम् । ततः पुनरथशब्दात् कामाभाव-

रश्मिः ।

सहस्रधा भिन्नस्तावताणिम्ना तिष्ठति शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णा अथ यत्रैनं घ्नन्तीव जिनन्तीव हस्तीव विच्छाययति गर्तमिव पतति यदेव जाग्रद्भयं पश्यति तदत्राविद्यया भयं मन्यते अथ यत्र देव इवराजेवाहमेवेद९सर्वमस्मीति मन्यते सोस्य परमो लोक इति अस्यास्तात्पर्यम् । तृतीयाध्यायद्वितीयपादे तदभावाधिकरणे सुषुप्तिर्द्विविधेत्युक्तम् । नाडीषु आत्मनि चेति पदद्वयात्सूत्रे । अर्थस्तु ता वै यत्तदोर्नित्यसंबन्धाद् यत्र सुप्त इत्यत्र यच्छन्दार्थरूपाः 'तदभावो नाडीषु तच्छ्रुतेरात्मनि च' इति सूत्रेण निश्चिताश्चेत्यर्थो भवति तथापि यत्रेति च भगवानिति भाष्यात् यत्रेत्यस्य भगवतीत्यर्थात् ता वै प्रसिद्धाः सूत्रेण निश्चिताश्चेत्यर्थः । अस्य शिरःपाण्यादिलक्षणाया पुरि शेते इति पुरुषः सास्य हितानाम नाड्यो हि । तावतेति तावत्परिमाणेनाणिम्ना अणुत्वेन तिष्ठन्ति । ताः शुक्लस्येत्यादि तृतीयार्थे षष्ठी शुक्लादिभिः पूर्णाः तदुक्तं सुश्रुते ।

'अरुणा शिरा वातवहा नीलाः पित्तवहाः शिराः ।
असृग्वहाश्च रोहिण्यः गौर्यः श्लेष्मवहाः शिराः' ॥ इत्यादि ।

जीवो हृत्योपि व्यतिरेकवत्त्वात् नाडीषु स्वगुणभूतचैतन्येन व्याप्तः सन्नाडीभिः श्लिष्टो भवति । वातादिभिः क्लेशः सर्वानुभूतोपि । अथ भिन्नप्रक्रमेण तासु स्वप्नदनाडीषु व्यवतिष्ठमाने सति यस्मिन् स्वप्नकाले एनं स्वप्नदृशं घ्नन्तीव तस्करादयो अन्ये केचन जिनन्तीव वशीकुर्वन्तीव दासरूपेण कदाचिद्धस्तीव विच्छापयति विछादयति विद्रावयति इत्यव्यत्ययः परोक्षवादार्थं निगमयितारः इत्यस्य निगन्तव इति परोक्षवादवत् । निरुक्तौ । तथा गर्तं जीर्णकूपादिकं प्रपततीव न वस्तुतः किं तत इत्यत आह 'यदिति' यदेव जाग्रत् जाग्रति पश्यति तदेव भयं यत्रास्मिन् स्वप्ने अविद्यया वासनात्मिकया मन्यते जानाति उक्तनाडीकृत एवास्य क्लेश इत्युक्त्वा भगवत्कृत एवानन्द इति स चानन्दः स्वप्नानन्दो भगवद्रूपः परमो लोक इत्याह 'अथेति' क्लेशदनाड्यन्तरसंबन्धेन भिन्नप्रक्रमो भगवत्संबन्धात् क्लेशदाक्लेशदनाडीव्यतिरिक्तपुरितन्नाड्यां नाडीषु वा हृदये वेति विकल्पार्थकोऽथ शब्दः इति तृतीयाध्याये 'तदभावो नाडीषु' इति सूत्रभाष्यप्रकाशे यत्र स्वप्ने राजेव देव इवाहमेवेद९सर्वमस्मीति मन्यते जीवस्तं प्रति मोक्षानन्दो भगवत्कृत एव जीवस्यानीशत्वात् । विषयानन्दे राजेवेति दृष्टान्तः । 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतेः । स स्वप्नानन्दो भगवान् अदृश्यत्वादि-गुणकाधिकरणे अक्षरामिव उक्तस्वरूपः परमो लोक इति भाष्यात् । लोकस्याक्षरत्वादिति । तथा चेति । अविद्येति । वातपित्तकफादिरूपायाः संबन्धोऽविद्यायाः । सेति वातादिरूपा । अत इत्यस्याविद्याराहित्यलिङ्गादित्यर्थः । ब्रह्मलोक आनन्द इति श्रुतेराहुः लोकपदादिति । ननु सुषुप्तिनिरूपणे स्वप्ननिरूपणस्य किं प्रयोजनमिति चेन्न अभावनिरूपणस्य प्रतियोगिनिरूपणाधीनत्वेन

भगवद्रूपः परमो लोकः । सुषुप्तिस्त्वकामरूपो भगवान् । अत्र ज्ञानाभावादुभयोः स्पष्टतया भेदनिर्देशः । शारीरः प्राज्ञ इति ।

भाष्यप्रकाशः ।

रूपलिङ्गप्रत्यभिज्ञानाच्च सुषुप्तिः सुष्ठु सुप्तिर्यत्रेति तत्स्थानं भगवान् । तेन तत्संबन्धादस्यापि सुषुप्तिरित्यर्थः । तत्र जीवेश्वरयोर्निर्देशस्य तात्पर्यमाहुः अत्रेत्यादि । तद्वा अस्यैतदात्मकाममिति श्रुतौ तद् अन्ताय धावदेतद् उच्यमानमस्य जीवस्य आत्मकामरूपमकाममाप्तकाममित्युक्तम् । अत उभयोः साधर्म्ये भेदज्ञानाभावात् तज्ज्ञानार्थं स्त्रीदृष्टान्तपरिष्वङ्गक्रियातृतीयाविभक्तिभिर्भेद-निर्देशः कृत इत्यर्थः । बाह्याभ्यन्तरज्ञानाभावस्तु परिष्वङ्गहेतुक इति श्रुतावेव स्फुटम् । तथा च यद्यवस्थात्रयमुक्तं जीवस्वरूपमेतन्महावाक्ये विवक्षितं स्यात् तदा शारीरप्राज्ञयोर्भिन्नावस्थावै-शिष्ट्येऽपि स्वरूपभेदादत्रोक्तमेतत्त्रयं विरुध्येत । यदि च परिष्वङ्गो नामात्यन्तमैक्यमिति

रश्मिः ।

न स्वप्नं पश्यतीत्यत्र प्रतियोगिनिरूपकत्वात् । सुषुप्तिस्त्विति भाष्यमवतारयामासुः तत्र इति । परमो लोक इत्यनन्तरं 'अथ यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति' इति श्रुतिस्त-त्तात्पर्यमाहुः अथ शब्दादिति । यत्र नाडीषु भगवति वा सुप्तो जीवः कामं काम्यते इति कामस्तम् । अत्र सुप्त इति स्वप्नविषय उक्तः । न स्वप्नं पश्यतीति स्वप्नदर्शनाभाव उक्तः । किं च नाडीषु भगवति च सुप्त इत्यसंभवि स्वप्ननिषेधादत्रोच्यते । सुप्त इति पदेन सुप्तविषयकज्ञानरूपस्वप्नविषय उक्तः । न स्वप्नं पश्यतीत्यत्र स्वप्नो माया स्वप्नसृष्टिविषयकज्ञानकर्त्री रूपा । स्वप्न इत्यत्र कर्तरि नन् स्वीकारात् । नाडीषु भगवति वा सुप्त इत्यत्र वर्णलोपः । सुषुप्त इत्यर्थः । निरुक्तेस्ति । व्याकरणेन तु धातोरेव सुषुप्तोर्थः । सुषुप्त इत्यत्र तथादर्शनात् । सूपसर्गो द्योतक इति सिद्ध्यति । गाढत्वं शोभनत्वं तत्सूप-सर्गद्योत्यं तथा च 'तदभावो नाडीषु तच्छ्रुतेरात्मनि च' इति गाढसुप्तो ज्ञानरहित इति । षुलोपो वाहोरात्रवत् । अहोरात्रमित्यत्रात्रयोर्वर्णयोर्लोपः । अथ सुषुप्त इत्यत्र न स्वप्नं पश्यतीति श्रुतेः स्वप्नाभावप्रकारः । सुषुप्त इत्यत्र शोभनत्वं गाढत्वं तच्च निद्रया स्वप्नाच्छादितत्वं तथा च निद्राच्छादित स्वप्नविषयत्वं सुषुप्तत्वमिति । इदं हेतुद्वयमग्रे । प्रत्यभिज्ञानं तु नाड्यादिषु संपन्नस्य कामाभावे सोयं सति संपन्नस्य कामाभाव इति तत्तेदन्ताप्रकारकज्ञानत्वात् । आभ्यां हेतुभ्यां शोभना निद्रा-च्छादितस्वप्ना सुप्तिर्यत्रेति सत् स्थानं स्थीयतेऽस्मिन्नधिकरणे ल्युट् । अस्यापीति जीवस्यापि । भेदज्ञानेति । न चास्यैतद्रूपमिति षष्ठ्या भेदज्ञानमस्त्येवेति शङ्क्यम् । अभेदेपि षष्ठीसंभवात् राहोः शिर इतिवत् । स्त्रीदृष्टान्तेति स्त्रीदृष्टान्तश्च परिष्वङ्गक्रिया च तृतीयाविभक्तिश्च ताभिः । तथा च 'प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम् । एवमेवायमशारीरआत्मा प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं कंचन वेद नान्तरम्' इति श्रुतिः । प्राज्ञः सुषुप्तिसाक्षी । अनेन सुषुप्तौ जीवब्रह्मणो भेदेन व्यपदेशात् नेदं जीवब्रह्मताप्रतिपादकं वाक्यं किं तु ब्रह्मवाक्यमिति सिद्धः सूत्रार्थः । अत्र परमार्थतो जीव एव ब्रह्म चेच्छाखं च तत्रैवं समाप्तं चेद् दहराधिकरणे साधितमपि दहरविद्याया जीवब्रह्मविद्यात्वाभावमपीदमधिकरणं विघटयेत् । ननु शंकरभाष्येऽत्राधिकरणे जीवब्रह्मताप्रतिपादकत्वं वाक्यस्योक्तमिति कुतो ब्रह्मवाक्यत्वमित्याकाङ्क्षायां शंकरभाष्योक्तमसंसारिजीवपरत्वेन जीवब्रह्मता-प्रतिपादकत्वं दूषयन्तोऽस्य हृदयमाहुः तथा चेति । यद्यपीति सुषुप्त्युत्क्रान्त्योरवस्थयोः शारीराद्भेदेन ईश्वरस्य प्राज्ञशब्देन व्यपदेशादिति सूत्रार्थवेलायाम् । तथा हि । सुषुप्तौ तावद्व्यपदेशो दृश्यते तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं वेद किंच नान्तरमेवमेवायं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरमिति । उत्क्रान्तावपि अयं शारीर आत्मा प्राज्ञेनात्मनान्वारूढ

भाष्यप्रकाशः ।

विभाव्यते, तदापि लक्षणादोषो दृष्टान्तविरोधश्च दुरुद्धरः । तस्मान्नेदं जीवब्रह्मताप्रतिपादकं वाक्यमिति हृदयम् ।

रश्मिः ।

उत्सर्जन्यातीति शारीरान्तर्भेदेन परमात्मानं प्राज्ञशब्देन व्यपदिशति 'अन्वारूढः' अधिष्ठितः 'उत्सर्जत्' वेदनातः शब्दं कुर्वन् इति भाष्यामृतवर्षिण्याम् । अवस्थात्रयेण मुक्तं तथा च शंकरभाष्यं यदुक्तमाद्यन्तमध्येषु शारीरलिङ्गात्तत्परत्वमस्य वाक्यस्येत्यत्र ब्रूमः उपक्रमे तावद्योयं विज्ञानमयः प्राणेष्विति न संसारिस्वरूपं विवक्षितं किं तर्हि अनुद्य संसारिस्वरूपं परेणास्यैकतां विवक्षति । अतो ध्यायतीव लेलायतीवैवमेवाद्योत्तरग्रन्थप्रवृत्तिः संसारिधर्मनिवृत्तिपरा लक्ष्यते तथा चोपसंहारेपि यथोपक्रममेवोपसंहरति स वा एष महानज आत्मा योयं विज्ञानमयः प्राणेष्विति । योयं विज्ञानमयः प्राणेषु संसारी लक्ष्यते स वा एष महानज आत्मा परमेश्वर एवास्माभिः प्रतिपादित इत्यर्थः । यस्तु मध्ये बुद्धान्ताद्यवस्थोपन्यासः तत्संसारिस्वरूपविवक्षां मन्यते स प्राचीमपि दिशं प्रस्थापितः प्रतीचीं प्रतिष्ठेत यतो न बुद्धान्ताद्यवस्थोपन्यासेनावस्थावत्त्वं संसारित्वं वा विवक्षति । किं तर्हि अवस्थारहितत्वमसंसारित्वं च । कथमेतदवगम्यते यदत ऊर्ध्वं विमोक्षायैव ब्रूहीति पदे पदे पृच्छति यत्र किंचित्पश्यति अनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुषः इति । पदे पदे प्रतिवक्ति अनन्वागतं पुण्येन अनन्वागतं पापेन तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवतीति । तत्परत्वं संसारिपरत्वम् । संसारिधर्मेति बुद्धौ ध्यायन्त्यां स्वयमात्मा ध्यायतीव चलन्त्यां चलतीव वस्तुतो न ध्यायती न लेलायति इत्यर्थात् संसारिधर्मनिवृत्तिपरा । यदत इति अतः कामादिविवेकानन्तरं मोक्षसाधनाऽभूत् । साक्षात्कारायैव ब्रूहि इति जनकप्रश्नार्थः । तेन जाग्रद्भोगादिनाऽनन्वागतोऽसंस्पृष्टो भवत्यसंगत्वादित्यर्थः । अत्र समस्या केषांचित् तवैवेदं तु नो ममेति । तस्यास्य पादस्य समस्यया पूर्णस्येदं स्वरूपं

'शारीरं भाष्यव्याख्यानं व्याख्यान्तरा विदाकृतम् ।
नातिदाढ्यात्तदेवं हि तवैवेदं तु नो मम' ॥

इति मत्कृतं समस्याकृदाशयप्रकाशकं दूषणमाहुः तदेति । सूत्रार्थवेलायाम् । भिन्नेति सुषुप्त्युत्क्रान्तिरूपभिन्नावस्थावैशिष्ट्ये । एतदिति स्त्रीदृष्टान्तपरिष्वङ्गक्रियातृतीयाविभक्तिश्चेत्येतत्त्रयम् । विरोधाभावमाशङ्क्य वारयामासुः यदि चेति । अत्यन्तमैक्यमिति तदुपपादितं यतो ध्यायतीवेत्यादिना पूर्वम् । लक्षणेति परिष्वङ्गो हि स्पर्शस्तज्जन्यमैक्यमिति जन्यजनकभावः । शक्यसंबन्धो लक्षणा । दुरुद्धर इति । दृष्टान्ते तादृशैक्यस्यासंभवादिति भावः । भवतीति क्रियापदम् । यत्र स्याद्विरुध्येतेत्येवं हेतुहेतुमद्भावाभावान्न लिङ् किं तु लडेव । एतर्ह्यपि सुषुप्तिस्त्वकामरूपो भगवानितस्त्र तु भाष्ये अन्यविधसुषुप्तिप्रसङ्गः । अकामरूपस्यासंसारित्वेपि आत्मकामरूपसमानाधिकरणस्यास्य संसारित्वात् । अत इदमेकं बाधकम् । सुषुप्तिस्तु बुद्धेः कारणात्मनावस्थानं बुद्धेर्यत्कारणं तस्यैव तद्वासनाविशिष्टस्य पुनर्बुद्ध्युत्पादनयोग्यतावस्थितिरिति पञ्चीकरणभाष्ये तस्यैव कर्मण इत्येतदर्थः । तथा च श्रुत्यर्थः । अस्य सुषुप्तौ सर्वात्मकत्वमापन्नस्यात्मनस्तदेतत्प्रकृतं रूपमाप्तकामं आत्मकाम इति कामाः सुखादयः आप्ता यस्मिन्रूपे तदाप्तकामं एवं सति हिरण्यगर्भतुल्यत्वं स्यादित्यत

भाष्यप्रकाशः।

'जाग्रत् स्वप्नः सुषुप्तिश्च गुणतो बुद्धिवृत्तयः।
तासां विलक्षणो जीवः साक्षित्वेन विनिश्चितः'॥

इत्यादिवाक्योक्ता वृत्तयस्तु विषयोपधानाज्जायन्ते। जाग्रति तथा निश्चयात्। विषयस्तु ततो भिन्न इति भगवतः सुषुप्तित्वोक्तौ न किंचिद् बाधकम्। तमोऽभिभूतः सुखरूपमेतीति श्रुत्युक्तोऽभिभवस्तु भेदज्ञानाभावे हेतुः। 'अविद्याप्युपकाराय विषवज्जायते नृणाम्' इति मार्कण्डेयपुराणोक्तन्यायादागमनं प्रति च। ततोऽन्यत्र बुद्धान्ताय गमनं चाविद्ययैवेति न कोऽपि क्वापि विरोधः। अतः परमात्मकामे रूपे आप्तकामत्वमकामत्वं च कुत इत्याकाङ्क्षापूरणाय,

रश्मिः।

आह आत्मकाममिति। आत्मैव कामः सुखसाक्षात्कारलक्षणो यस्मिन् विज्ञानमित्येतदानन्दरूपे ब्रह्मणि तदात्मकामं अत एव एतदकामं कामरहितं रूपं काम्याभावादिति टीकायाम्। यद्वा। अस्य बुद्ध्युपाधिकस्य रूपं न शुद्धस्येति कारणात्मना बुद्धेरवस्थानं सुषुप्तिरिति द्वितीयं बाधकम्। तमसा बुद्धिवृत्तिः सुषुप्तिरिति तृतीयं बाधकम्। तत्र न प्रथमं स्वाप्ययसंपत्त्योरन्यतरेति सूत्रे स्वाप्यये ब्रह्म निर्गुणमित्यसंसारित्वात्। आत्मकामरूपसमानाधिकरणं श्रौतमुपपादनीयं तद् द्वितीयं मायिकत्वेन बुद्धेः कारणात्मनावस्थानस्याभावात्। ब्रह्मवादेऽनुपयोगात्। न तृतीयमित्याहुः जाग्रत्स्वप्न इति गुणतः सत्त्वरजस्तमोभिः। तथा च तामसा बुद्धेः वृत्तिः सुषुप्तिः यतोऽहरहः सुषुप्तौ निर्गुणं गच्छन्त्याः प्रजास्तं न विन्देयुः। बुद्धेस्तमसावरणात्। ब्रह्मपदार्थं लिङ्गदेहत्वेन चित्तं पश्यति तत्सुषुप्तम्। अत एव नीलप्रतीतिलिङ्गस्य नीलत्वादिति केचित्। तदुक्तम्—

'अधर्मं धर्ममिति या मन्यते तमसावृता।
सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी'॥ इति।

आदिपदेनेयं गीता। विषयोपेति। ननु सुषुप्तौ विषयाभावात् कथं विषयोपधानमिति चेन्न। जीवकर्मणां विषयत्वात्। सुखमहमस्वाप्सं न किंचिदवेदिषमित्यज्ञाने कर्मणां हेतुत्वेन तादृशविषयोपधानाद्यत एव विषयविषयितया जायन्ते इत्यनुक्त्वा सुषुप्तिविषयोपधानसंग्रहाय विषयोपधानाज्जायन्ते इत्युक्तम्। जाग्रतीति इन्द्रियैर्विषयसाक्षात्कारो जाग्रत्। विषय इति कर्मविषयः ततः सुषुप्तेः जीवब्रह्मभेदो वा दृष्टान्तवाक्योक्तो विषयः। तत्त्वमसीत्यत्र तस्य त्वमसीत्यपि च्छेदात्। किंचिदिति सर्वोपनिषन्नामकोपनिषदि चतुर्दशकरणोपरमाद्विशेषविज्ञानाभावाद्यदा (चन्द्रादी-न्नोपलभते तदात्मनः) सुषुप्तमिति श्रुतिविरोधरूपं बाधकमपि न। ननु अवबोधे भगवानवबोधोऽवबोधकर्ता वा। दशेन्द्रियाणि चत्वारो मनोबुद्धिचित्ताहंकारा इति चतुर्दशविज्ञानाभावान्निर्गुणत्वात्। ननु मनः प्रसिद्धं कुतो न इति चेन्न वेदान्तयोगादरणेन योगरूढ्यभावात्। किं च सुषुप्तिरूपभगवतो विषयापरिरूपबाधकमपि न सुषुप्तौ भगवत्स्वरूपप्राप्तये इति भाष्ये श्रुत्यन्तरमाहुः तम इति तमसाभितो व्याप्तः सुखस्य भूमरूपस्य निर्गुणं रूपमेति प्राप्नोति। प्राज्ञशारीरयोर्भेदज्ञानाभावे हेतुः न तु तमसा सुषुप्तिरूपेणाभितो व्याप्त इति व्याख्याने हेतुः। अत्र हेतुमाहुः अविद्येति। तमोऽविद्या। देहेन्द्रियासन्तःकरणस्वरूपविस्मरणेषु स्वरूपविस्मरणात्मकपूर्वरूपत्वात्। ननु स्वरूपविस्मरणं भावत्युक्तम्। तमः कर्तृप्रत्ययान्तं पदं कथमुभयोः सामानाधिकरण्यमिति चेन्न स्वरूपविस्मारकत्वात् स्वरूपविस्मरणस्य स्वरूपे आत्मनि सत्त्वात्। विषवदिति। 'तादृश-

नाच्छादनाभावोऽतिच्छन्दः, तत्र भगवत्स्वरूपं गतस्य बाह्येन्द्रियधर्मा-भावमाह विजानीयादित्यन्तेन। बाह्येन्द्रियाणां सलिलस्त्वमिति पूर्वोपपत्तिः।

---

भाष्यप्रकाशः।

तद्वा अस्यैतदतिच्छन्द इत्यादिग्रन्थ इत्याशयेन तत्तात्पर्यमाहुः नाच्छेत्यादि। तत्रेति सुषुप्तौ। बाह्येन्द्रियधर्माभावमिति बाह्यादीनां त्रयाणामभावम्। पूर्वोपपत्तिरिति पूर्वोक्ते सर्वस्मिन् युक्तिः। श्रुत्यर्थस्तु, तद् आत्मकामं वै निश्चयेन अस्य जीवस्य एतत् प्राज्ञपरिष्वक्तमतिच्छन्दः।

रश्मिः।

बलाद्वापि देहत्यागो विमुक्तिदः' इति निबन्धात्। विषभक्षणेन देहं त्यजतीति न्यायस्त्वनुप-कर्तृत्वकर्तृत्वे कश्चिदिति। अयं हेतुरवस्थात आगमनेपि इत्याहुः आगमनमिति। ननु कथमवस्थात आगमनेऽविद्याहेतुत्वं यतः सर्वो हि स्वकृतं भुङ्क्ते इति कर्मणां हेतुत्वमिति चेन्न 'अविद्यायामन्तरे वर्तमानाः' इति मुण्डके कर्मण्यविद्यापदप्रयोगात्। सर्वं सर्वमयमिति च। इदानीं तद्वा अस्यैतत्। 'आत्मकाममाप्तकाममकाम१रूपम्' अस्याः 'तमोभिभूतः सुखरूपमेति' इत्यस्याश्च विरोधश्चिन्त्यते। तद्वा इत्यत्रास्येत्यस्य तमोभिभूतस्येति विशेषणम्। न च विशेषणवैयर्थ्यमिति शङ्क्यम्। प्राज्ञशारीरयोर्भेद-ज्ञानाभावे हेतुत्वात्। तत्त इति सुषुप्तेरन्यत्र स्वप्नजागरितस्थानयोः। बुद्धान्ताय जागरितस्थानाय। आत्मकाम इति आत्मानः कामाः काम्यन्त इति कामाः कल्याणगुणाः यस्मिन्रूपे। आप्ताः कामा यस्मिन्रूपे। न सन्ति कामा यस्मिन्रूपे तद्रूपमात्मकाममाप्तकाममकामं आप्तकामं पूर्वोत्तराभ्यामन्वेति देहलीदीपन्यायात्। ननु त्रिष्वस्य विशेषत्वे किं गमकमिति चेन्न प्रथमत्यागे मानाभावस्य गमकत्वात्। ननु रूपं विशेष्यं न त्वात्मकाममिति चेन्न रूपसामान्यावच्छेदकत्वेन रूपाभेदविवक्षणात्। ननु तथापि सुषुप्तिस्त्वकामरूपो भगवान् इति भाष्याद् कामस्य रूपसामान्यावच्छेदकत्वमुचितं प्रथमसंनिहितयोः संनिहितस्य बलीयस्त्वद्योतनात् भाष्ये इति चेन्न। भाष्य एव भगवत्पदात्। तस्य त्वाप्तवाचकत्वेन ब्रह्मणश्च सधर्मकनिर्धर्मकत्वेन विरुद्धधर्माश्रयत्वेनाकामत्वात्मकामत्वयोरकामत्वं कुतः तत्प्रसङ्गादात्म-कामत्वं च कुत इति प्रश्नात्। अत्रोत्तरं नाच्छादनाभावात् सुषुप्तेरकामं रूपं सकलसाधारणं भक्तानां तदा प्रपत्त्यभावात् न तान् प्रत्यप्यात्मकाममकामाप्तकामाभ्यां निगूढत्वात्। तदुक्तम्।

'आत्मा यावत्प्रपन्नोऽभूत्तावद्वै रमते हरिः।
सोन्तःकरणसंबन्धी तिरोधत्ते हरिश्च सः'॥ इति।

'स्वरूपं द्विविधं चैव सगुणं निर्गुणं तथा' इति सुबोधिनीगोपालतापिनीययोः। अत्र इत्यद्य इत्याहुः बाह्येति। दर्शनादर्शनरूपे अर्थे। पूर्वोक्तेति तेन पूर्वस्मिन्नुपपत्तिः पूर्वोपपत्तिः। सप्तमीति योगविभागा-त्सुपसुपेति वा समासः। प्रघट्टकार्थमाहुः श्रुत्यर्थ इति। तदिति। 'तद्वा अस्यैतदतिच्छन्दोऽपहत-पाप्माऽभयं रूपमशोकान्तरम्' इति श्रुतिः। आत्मकाममिति अकामं वै निश्चयेनेति वक्तव्ये त्रयाणाम-भेदादित्यनेनोपात्तम्। जीवस्य प्राज्ञपरिष्वक्तत्वात्। प्राज्ञपरिष्वक्तमात्मकाममतिच्छन्द इति योजना।

भाष्यप्रकाशः ।

छादयतीति छन्दो नाडी । अतिक्रान्तं छन्दांसीत्यतिच्छन्दस्तदादिगुणकमतस्तथा । तदपहतपाप्मत्वादिकमेव कथमित्यत आह अत्र पितेत्यादि । तथाच नाडीछादनाभावेन पित्रादीनां देहसंबन्धिनां स्तेनादीनां देहानां च संबन्धविरहादपहतपाप्मपुण्यपापाऽसंबन्धादभयं तीर्णशोकत्वादशोकान्तरमित्यर्थः । तर्हि पित्रादीनां पापान्तानां सत्त्वे कथं तदसंबन्ध इत्यत आह

रश्मिः ।

छादेति संवृणोति । छद संवरणे चु. प. से. वृञ् वरणे स्वा. उ से. छन्द इति । चदि आह्लादने दीप्तौ च भ्वा. प. से. 'चन्देरादेश्च छः' इत्यसुन्न । छन्दसि सर्वे विधयो विकल्प्यन्ते इति विकल्पात् । अतः सार्वधातुभ्योऽसुन् इत्यसुन् वर्णागमाच्छन्दः । न च प्रकृतेर्विकल्पो नास्तीति वाच्यम् । छत्वविकल्पेन चकारश्रवणापत्तेश्चन्द इति । तथा च नाडीरूपाऽऽच्छादनस्याभावोऽतिच्छन्द इति भाष्यार्थः । अत्राभावस्य भावेन रूपेणाभेदान्वयोऽभावस्य विष्णुत्वात् । पुराणात् । ननु आत्मकामेऽकामे रूपेऽकामत्वमात्रं कुतः इति प्रश्ने नाड्येत्यादि भाष्यं प्रवृत्तं तत्राङ्गेन व्याकरणेन छन्दसोराह्लादकदीपकयोरभावेऽतिच्छन्दः आह्लादाभावान्निर्गुणत्वं दीप्त्यभावः स्पष्ट इति चेन्न आह्लादजन्यत्वे साकारत्वस्यापसिद्धान्तात् । तदादीति । अतिच्छन्दस्त्वादिगुणकमात्मकाममतः कारणात्तथाकामत्वमकामत्वेऽस्य कारणत्वमित्यम् । अतिच्छन्दस्त्वेन नाडीरूपाऽऽच्छादनाभावान्न साकारकल्याणगुणकत्वमतोऽकामत्वम् । अपहतः पाप्मा धर्माधर्मलक्षणो यस्मिन्रूपे तदपहतपाप्माऽतोपहतपाप्मत्वेनाकामत्वं न विद्यते भयं यत्र रूपे रसरूपान्तर्गतमपि तदभयमतो रसत्वाभावादप्यकामत्वम् । शोकः संसारजः तदन्यः शोको रसान्तर्गतोपि स शोकान्तरं न विद्यते शोकान्तरं यत्र रूपे तदशोकान्तरमतः शोकान्तरत्वेनाकामत्वमिति । अत्र पितेत्यादीति 'अत्र पिताऽपिता भवति माताऽमाता लोकाअलोका देवा अदेवा वेदा अवेदाः अत्र स्तेनोऽस्तेनो भवति भ्रूणहाऽभ्रूणहा पौल्कसोऽपौल्कसश्चाण्डालोऽचाण्डालः श्रमणोऽश्रमणः तापसोऽतापसोऽनन्वागतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा सर्वाञ्छोकान् हृदयस्य भवति' इति श्रुतिः । अत्र सुषुप्तौ भगवद्रूपायाम् । अधर्मप्रयोजनात् वक्तुं पुनरत्रेति । भ्रूणहा मुख्यो ब्राह्मणहन्ता । पौल्कसः शूद्रायां ब्राह्मणाज्जातो निषादस्तस्मात् क्षत्रियायां जातः पुल्कस एव पौल्कस इति टीकायाम् । वेदान्तत्वायोगः सिद्धान्ते । चाण्डालो ब्राह्मण्यां शूद्राज्जातो जात्या चण्डालः । चण्डाल एव चाण्डालः चडि कोपे भ्वा. आ. से. कृदन्तः सिद्धान्ते श्रमणः परिव्राट् टीकायाम् । श्रम खेदतपसोः दि. प. से. नन्द्यादित्वाल्ल्युः । खिन्नः तापसो वानप्रस्थः, सर्वेषु प्रकारेषु यत्किंचित्तापसत्वविशिष्टः सिद्धान्ते । अनन्वागतमसंबद्धम् । ननु सुषुप्तौ न सृष्टिरतः पित्राद्यभावात्कथं तदभाव इति चेन्न । जीवरूपेण तस्य विश्वस्मिन् सुषुप्त्यतिरिक्ताधिकरणे पित्रादिसत्त्वात् । भावार्थमाहुः तथा चेति । नाडीरूपछादनाभावेन । न च नाडीछादनयोरेकार्थत्वाभावान्नैवमिति शङ्क्यम् । एकार्थत्वात् । नाडी नालयति नल गन्धे पचाद्यच् । डलयोरेकत्वं गौरादिः । गन्ध अर्दने चु. आ. से. । अर्द गतियाचनयोः भ्वा. प. से. । अर्द हिंसायां चु. आ. से. । नाडी गतिकर्त्री । छादनं छद संवरणे सं संभजनकर्तृ । गमनेन सं सं भजतीति प्रयोगे गमनाभिन्न सं सं भजनकर्त्रीति गमन सं सं भजनयोरेकार्थत्वात् । प्रकृत्यर्थस्यैवैकार्थत्वात् । प्रत्ययार्थस्य च कर्तृरूपस्य चैकार्थ्यात् । विशिष्टं शुद्धान्नातिरिच्यते इति नैयायिकोक्तेः विशिष्टसत्तायाः सत्तायाश्चैकत्वादिति । एवं गमनात्मकं भजनं सं संभजनम् । जीवस्यापि पिताऽपितेत्यादि भवति सुषुप्तौ ततो जीवविषय आहुः तर्हीति । अत्र

भाष्यप्रकाशः ।

यद्वै तदित्यादि । वै एवकारार्थः । यद् वै यदेव तद् पूर्वोक्तं पित्रादिकं न पश्यति, सुषुप्तौ भगवत्स्वरूपं प्राप्तो न चक्षुर्विषयीकरोति तत् द्रष्टव्यं पूर्वोक्तं पश्यँश्चक्षुर्गोचरीकुर्वन्नेव न पश्यति । एवमुभयं प्रतिज्ञाय पूर्वं दर्शनमुपपादयति । हि यतो हेतोर्द्रष्टुर्जीवस्य दृष्टेस्तद्धर्मरूपस्य ज्ञानस्य विपरिलोपो दर्शनसाधनतद्विषययोस्तत्राभावेन विरोधात् सर्वात्मनादर्शनं तन्न विद्यते । कुतः । अविनाशित्वात् । प्रकाशकस्यात्मज्योतिषः, 'सर्वे जीवाः सर्वमयाः' इति श्रुत्यन्तरात् सर्वप्रचुरस्य जीवस्वरूपस्य च नित्यत्वात् । तर्ह्यदर्शनं कुत इत्यतस्तदुपपादयति । तुः शङ्कानिरासे । यत् पश्येदत्र यत्पदेन करणस्य विषयस्य च संग्रहः । तद् द्वितीयं करणं विषयश्च ततोऽन्यद् विभक्तं नास्ति । तथाच बाह्यस्य विषयस्य विभक्तस्य करणस्य चाभावात् । तद्धर्मरूपस्य दर्शनस्याभाव इत्यर्थः । एवमग्रेऽपि सर्वत्र एवमत्र बाह्येन्द्रियधर्माणामभावः प्रतिपादितः । अतः परमन्यत्व-विभक्तत्वयोरभाव एव कथमित्यतस्तदुपपादयति सलिल इत्यादि । एको मुख्यो द्रष्टा भगवानेव

रश्मिः ।

सुषुप्तौ जीवस्य पिताऽपितेत्यादि भवतीत्यस्मिन् पक्षेऽर्थः । सुषुप्तावनुभवस्याकिंचित्करत्वात्कथमिति प्रश्नः । वा इति । 'यद्वै तन्न पश्यति पश्यन् वै तन्न पश्यति' इति श्रुतिः । उपेति 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्' इति श्रुतिरुपपादयति । तद्धर्मेति । चतुर्विधनित्यज्ञानेषु चैतन्यरूपस्य । तत्रेति सुषुप्तौ । विरोधादिति ज्ञानस्य चैतन्यस्याकामेन भगवता सहानवस्थानलक्षणविरोधात् । भगवतोऽज्ञाना-विषयत्वात् । तर्हि विषयाद्यभावात् सर्वथा ज्ञानाभावेनानित्यत्वं ज्ञानस्य स्यात्तत्राहुः सर्वात्मनेति सर्वथा । यस्मिन्नदृष्टे कोपि पुरुषार्थो न सिद्ध्यति तत्सर्वात्मनाऽदर्शनम् । आत्मेति जीवचैतन्यस्य । सर्वप्रेति सर्वविकार इति छन्दसीति सूत्रेणार्थो भवति तथापि जीवस्याविकृतत्वात् न संभवति जाग्रज्जीवाद्यं तदात्मना सुषुप्तस्य दर्शनेऽङ्गीकृते सुषुप्तिकालेऽदर्शनं कुत इति पृच्छति तर्हीति । उपेति न तु तद् द्वितीयमस्ति ततोन्यद्विभक्तं यत्पश्येदिति श्रुतिरुपपादयति । तद्धर्मेति जीवधर्मरूपस्य । अभावस्तिरोभावः अतो नानित्यत्वम् । सर्वत्रेति । यद्वै तन्न जिघ्रति जिघ्रन् वै तद् घ्रातव्यं न जिघ्रति न तु घ्रातेर्घ्राणाद्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद् द्वितीयमस्ति ततोन्य-द्विभक्तं यज्जिघ्रेदित्यत्र । एवं यद्वै तन्न रसयति रसयन् वै तद्रसं न रसयतीत्यादि । यद्वै तन्न वदति वदन् वै तद्वक्तव्यं न वदतीत्यादि । यद्वै तन्न शृणोति शृण्वन् वै तच्छ्रोतव्यं न शृणोतीत्यादि । यद्वै तन्न मनुते मन्वानो वै तन्मन्तव्यं न मनुत इत्यादि । यद्वै तन्न स्पृशति स्पृशन् वै तत्स्प्रष्टव्यं न स्पृशतीत्यादि । यद्वै तन्न विजानाति विजानन् वै तद्विज्ञेयं न विजानातीत्यादि । आसु श्रुतिषु । बाह्येति बाह्या जाग्रदनुभूताः । इन्द्रियाणि चक्षुरादीनि । धर्मा ज्ञानानि । अत्र पक्षे कुत इन्द्रियचतुष्टयपरित्याग इति प्रश्नः प्राप्नोति प्रातीतिकार्थपरित्यागश्च अतो बाह्येन्द्रियाणां ये धर्मास्तेषामभाव इति भाष्यार्थे चतुर्णामान्तरेन्द्रियत्वं ध्वन्यते तेन दोर्मेढ्राङ्घ्रिपायूनां चतुर्णामणुत्वेन प्रतीतानां सत्त्वं सुषुप्तौ इन्द्रोपेन्द्रमित्रकानां चतुर्णां देवानामकामभगवत्सुषुप्तिसामयिकत्वम् । आनन्दभुगिति श्रुतेः आनन्दभोगे कस्य प्रजापतेर्देवस्योपयोगः । एवमिन्द्रोपेन्द्रमित्राणामुपयोगः यथा प्रियया स्त्रिया संपरिष्वक्त इत्यादि-दृष्टान्तश्रुतेः । इन्द्रोपेन्द्रपदाभ्यां सर्वतःपाणिपादान्तमित्युक्तं रूपमपि । जीवोक्षरः तस्य निर्गुणब्रह्म-प्राप्तिरत्र सुषुप्तौ । श्येनसुपर्णदृष्टान्तस्तु भगवत्स्वरूपप्राप्तये इति भाष्यात् । विशेषस्तु अनधिकारात् अत्र ज्ञातव्यं रहस्यत्वात् । एक इति । सलिल एको द्रष्टाऽद्वैतो भवतीति श्रुतिः । सलिल इति सल

एष ब्रह्मलोक इत्यारभ्य, अनुशशासैतदमृतमित्यन्तेनानन्दरूपो भगवान्

भाष्यप्रकाशः ।

सलिलः । 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति' इति श्रुत्यन्तरात् सलिलवत् । अद्वैतः । द्विधा इतं द्वीतम् । तस्य भावो द्वैतम् । न विद्यते द्वैतं यस्मिन्नित्यद्वैतो भवतीति तदानीं भगवतः सर्वात्मकत्वप्राकट्येन द्वैतराहित्यादन्यत्वविभक्तत्वयोरभाव इत्यर्थः । तदिदमाहुः बाह्येत्यादि । एतदग्रिमग्रन्थस्य तात्पर्यमाहुः एष इत्यादि । एष इत्यनेन, एको द्रष्टेत्यनेनोक्तं मुख्यं द्रष्टारं परामृश्य ब्रह्मलोकपदेन तस्य ब्रह्मात्मकत्वानन्तं विधाय जीवस्य तावत्पर्यन्तं प्राप्तिरिति बोधनाय,

रश्मिः ।

गतौ भ्वा. प. से. सलति सलकलीति लच् । गन्तेत्यर्थः । योगमात्राद्वेदान्ते । बृहदारण्यकटीकानुरोधादाहुः यथोदकमिति । यथोदकं तादृगेव भवति तथात्मा भवतीति श्रुत्यन्तर आत्मोदकयोः दृष्टान्तदार्ष्टान्तिकभावात् । अत्रापि योगरूढ्या दृष्टान्तदार्ष्टान्तिकभावायथा सलिल इत्यर्थः । द्वैतमिति द्वैतपदाद्यञि यकारलोप इति भावः । द्वयोर्भावो द्विता सैव द्वैतं प्रज्ञादेराकृतिगणत्वात् 'प्रज्ञादिभ्यश्च' इत्यण् इति केचित् । कैय्यटे तु द्वाभ्यामितं प्रकारद्वयेन विरुद्धत्वाद्विशाधारवर्तिना युक्तं वस्तु द्वीतं तत्र भवं द्वैतं संशयरूपं ज्ञानं यद्वा द्वयोर्भावो द्विता तत्र भवं द्वैतं तदेव संशयज्ञानमित्युक्तम् । तदिदमिति । तद्दर्शनमेव कुत इत्यारम्योक्तम् । बाह्येत्यादीति । बाह्येन्द्रियाणां सलिलत्वं विषयगन्तृत्वमान्तराणां चतुर्णामसलिलत्वं विषयागन्तृत्वमिति पूर्वोक्ते दर्शनादर्शनरूपेर्थे उपपत्तिः । एष इति । एष ब्रह्मलोकः सम्राडिति हैनमनुशशास याज्ञवल्क्य एषास्य परमा गतिरेषास्य परमा संपत् एषोस्य परमो लोक एषोस्य परमानन्दः एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति स यो मनुष्याणां राद्धः समृद्धो भवति अन्येषामधिपतिः सर्वैर्मानुष्यकैः कामैः संपन्नतमः स मनुष्याणां परम आनन्दः अथ ये शतं मनुष्याणामानन्दाः स एकः पितॄणां जितलोकानामानन्दः । अथ ये शतं पितॄणां जितलोकानामानन्दाः स एकः कर्मदेवानामानन्दः ये कर्मणा देवत्वमपि संपद्यन्ते । अथ ये शतं कर्मदेवानामानन्दाः स एक आजानदेवानामानन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः । अथ ये शतमाजानदेवानामानन्दाः स एको देवलोक आनन्दः यश्च श्रोत्रियोऽवृजिनोऽकामहतः अथ ये शतं देवलोक आनन्दाः स एको गन्धर्वलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः । अथ ये शतं गन्धर्वलोक आनन्दाः स एकः प्रजापतिलोक आनन्दो यश्चाश्रोत्रियोऽवृजिनोऽकामहतः । अथ ये शतं प्रजापतिलोक आनन्दाः स एको ब्रह्मलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः एष ब्रह्मलोकः सम्राडिति हैनमनुशशासैतदमृतमित्यनेन संदर्भेण । ब्रह्मात्मकेति । एतेन ब्रह्मलोकपदे ब्रह्म चासौ लोक इति कर्मधारयोऽस्त्विति । ननु एष इत्यनेन सुषुप्तिरूपमकामं परामष्टुं योग्यं न तु बाह्येन्द्रियरूप एको द्रष्टेति चेन्न । अपहतपाप्मप्रपञ्चत्वेनादोषात् । अपहतपाप्मत्वस्य सत्यत्वादिवदसाधारणधर्मत्वात् । न चामयपदमपि वर्तते इत्यमयं चित् ज्ञानमिति यावत् तस्य परामर्शोस्त्विति वाच्यम् । ज्ञानपदेनानुक्तत्वात् । अमृतमानन्दोऽभयं चित् सद् ब्रह्मेति भाष्ये सत्पदेन ब्रह्मणः पृथगुपादानात् । नन्वकामरूपस्य परामर्शः स्यादिति चेन्नैवम् । रूपेऽकामत्वं न चाकामं रूपमपहतपाप्मत्वेव ब्राह्मणसाधारणधर्मत्वादित्युपपत्तेः । सम्राडिति जनकं संबोध्य एनं जनकं याज्ञवल्क्य उवाच । तावदिति साधनैरिति बोध्यम् । मुक्तिवत्यादिमिस्तु सगुणस्यापि प्राप्तिः । एतदिति मात्रा

भाष्यप्रकाशः ।

एषाऽस्य परमा संपदित्याद्युक्त्वा तस्य माहात्म्यबोधनायाऽन्येषामानन्दानामेतदंशत्वं बोधयित्वा,

रश्मिः ।

अंश इति यावत् । विरुद्धधर्माश्रयत्वादनंशकस्यांशोपि टीकायां त्वेतस्यैव ब्रह्मानन्दस्य मात्रां कलाम् । पूर्णस्याप्यानन्दस्याविद्योत्थानेकबुद्धिवृत्त्यवच्छेदवशात् मात्राशब्दार्हा विषयेन्द्रियसंबन्धकाले विभाव्यमानान्यान्याविषयकानि ब्रह्मादिस्तंबपर्यन्तानि भूतानि उपजीवन्त्युपभुञ्जते इति सुखस्योपाधिनांशत्वमुक्तम् । राद्धः संसिद्धः अविद्यां गमयित्वा सिद्धः । 'अविद्यां गमयित्वाऽन्यं नवतरं कल्याणतरं रूपं तनुते पित्र्यं वा गान्धर्वं वा ब्राह्मं वा प्राजापत्यं वा दैवं वा मानुषं वा अन्येभ्यो वा भूतेभ्यः' इति वक्ष्यमाणश्रुतेः । अन्येषां भूतानां संबन्धि वा रूपमित्यर्थः । सञ्जातभ्रष्टस्य मुक्त्यभावात्तस्य श्रीमतां शुचीनां गेहे जननात्तस्य मानुषरूपस्यानन्दः 'शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते' इति वाक्यात् । युधिष्ठिरादीनां चानन्दोयम् । अदृष्टग्रहादिवशाज्जातानामादिशब्दार्थानां च । मानुष्यकैरिति । इवार्थे कन् प्रवृत्तिमार्गनिष्ठानां मानुष्याणां सदृशैर्निवृत्तिमार्गीयाणां कामैः प्रवृत्तिमार्गस्य जाघन्यात् । तथा च मानुष्यकैः कामैः कर्मज्ञानभक्त्युपयुक्तैः निवृत्तिमार्गीयैरपि संपन्नतमः । प्रवृत्तिमार्गे आत्मनिवेदनगुरुशिष्यसंवादवर्णने उक्तः त्वं ज्ञातिधर्मकुलधर्मदेशधर्मग्रामधर्मपरिपालनेन देवपितृयजनेन कृत्वोर्जवत्सुखी भविष्यति मृतः सद्गतिं यास्यसि इति सर्वत्र प्रसिद्धमित्येवमन्ये मार्गा अपि ततो द्रष्टव्याः । 'यजुर्वेदस्तु मानुषः' इति मनुस्मृतेर्यजुर्वेदार्थानां मनुष्याणामानन्दः अतो नानित्यसंयोगः । एतेषामपेक्षया पितॄणामुत्कृष्टत्वं सामवेदार्थत्वेन नित्यत्वात् । तेपि युधिष्ठिरादितुल्या इति भेदकं विशेषणम् । जितेति जितः स्ववशीकृतो लोकः [भक्तिमार्गपरंपरासिद्ध्यर्थं तन्तुसन्तानरूपो येषां भगवत्त्वेपि पितॄणाम्] चरस्य मृत्योर्लोकः प्रेक्षको भासको वा कालो यैस्तेषाम् । कालजयो भीष्मस्य । मनुष्याणां परमानन्दानन्तरं पितॄणामानन्दकथनं परमानन्दिनां मनुष्याणां भक्तिमार्गपरंपरासिद्ध्यर्थं तन्तुसंतानकामना तया पितॄणां यष्टव्यत्वात् । 'तन्तून् तन्वन् पितॄन् यजेत्' इति द्वितीयस्कन्धात् । पितरश्चाग्निष्वात्तादयः । के ते इत्यत आह य इति, ये जितलोका पितरः सामवेदार्थभूताः कर्मणा कर्मविद्याविशेषेण शंकरभाष्योक्तेन देवत्वमृग्वेदार्थत्वमपि संपद्यत इत्यर्थः । अत आनन्दोत्कर्षः । ततश्च पूर्वोत्तरभावः । पितॄणां कर्मदेवानां च । मनुष्याणां परमानन्दानन्तरं कर्मदेवानामानन्दकथनं भजने वेदज्ञानेन्द्रियधनरूपश्रीपूर्वकत्वाय ताश्च 'ब्रह्मवर्चसकामस्तु यजेत ब्रह्मणस्पतिम् । इन्द्रमिन्द्रियकामस्तु' इति पादत्रयेण 'देवीं मायां तु श्रीकामः' इति पादेन चोक्ताः ता वेदज्ञानेन्द्रियश्रियो न धर्तुं शक्या आश्रयनाशकत्वादतस्तद्धारकदुर्धर्षतेजःकामना तया कर्मदेवानां यष्टव्यत्वात् । 'तेजस्कामो विभावसुम्' इति वाक्यात् । विभावसुरग्निः विशेषेण भा दीप्तिः वसु धनं यस्य इति विभावसुशब्दनिर्वचनं सुबोधिन्याम् । बहुवचनात् 'वसुकामो वसून् रुद्रान् वीर्यकामोथ वीर्यवान्' इत्याद्युक्ता वस्वादयोऽत्रेऽनुपयुक्ता ग्राह्याः तेषामपि तत्कामनाभिर्यष्टव्यत्वात् । एतावत्पर्यन्तं कामहतानामानन्दः कर्मविद्याविशेषेणोक्तोतः परमकामहतानामानन्दः आजानेति आजानजेतिपाठः आजानजेत्यर्थः इत्युपसर्ग आ, गन्तुः, जायुः आयन्त इत्याजानाः स्थानम् । सूत्रं तु 'हलः श्नः शानज्झौ' । छन्दसि शायजपि । अपि शब्दाच्छानजिति तेभ्यो जायन्तेऽतः आजानजाः आजान इति देवलोकः तस्मिन् जाताः आजानजा देवाः स्मार्तकर्मविशेषतो देवस्थानेषु जाताः इति शंकरभाष्यं ब्रह्मविदपाठकस्य । अकामहतत्वकृत आनन्दोत्कर्षः श्रोत्रियत्वाद्युक्तिनत्वे पूर्वस्यापीति

रश्मिः ।

प्रांकमते । स्वमते तु पञ्चीकरणस्थाने त्रिवृत्करणवत् पूर्वत्र ते संदिग्धे । अकामहतत्वकृत आनन्दोत्कर्षो वैराग्यस्य भगवत्त्वात् । 'जनयत्याशु वैराग्यम्' इत्यस्य सुबोधिन्यां भगवत्त्वं वैराग्यस्य । 'अथर्वा चतुर्थो वेदश्चतुष्के त्रिषु सामवत्' इति वाक्यादथर्वाजानदैवत्य इत्यथर्वकृतोत्कर्षोऽपि । ततश्च पूर्वोत्तरभावः कर्मदेवानामाजानदेवानां च । मनुष्याणां परमानन्दानन्तरमाजानदेवानामानन्दानां कथनं भजने विद्याकामना तया गिरिशस्य यष्टव्यत्वात् । 'विद्याकामस्तु गिरिशम्' इति वाक्यात् । गिरिशे यष्टे विषयाऽकामत्वे संपन्ने यद्वा शमदमाद्युपेत इति सूत्रभाष्योक्ते स्वतोऽकामत्वे वा संपन्ने 'अकामः पुरुषं परम्' इति वाक्यात् । सेवायां स्वर्गस्यात्मसुखस्य कामना तयाऽदितेः सुतान्तर्गताजानदेवानां यष्टव्यत्वान्मनुष्याणां परमानन्दानन्तरमाजानदेवानन्दकथनं 'स्वर्गकामोऽदितेः सुतान्' इति वाक्यात् । देवत्वाददितेः सुतत्वमाजानानाम् । यश्चेति सुपां सुः येषां याजकानां आजानदेवानां तेऽमुं लोकमयजन्निति श्रुतेः । च आह्लादेन श्रोत्रियाणां छन्दोऽध्येतॄणां अपापानामित्यवृजिनपदार्थः । वृजि वर्जने अ. आ. से. वृज्यते वृजेः क्विपेतीति नञ् न विद्यते वृजिनं वर्जनं येषां ते अवृजिनास्तेषामिति वा । अकामहतः अकामहतानामानन्दाः । यद्वाच सुलुक् आह्लादः श्रोत्रियैः भिसः सुः छन्दोध्येतृभिरवृजिनैः अकामहतैः नात्र पक्षे आनन्दानुत्कर्षः । तदुक्तं 'महानुभावाः प्रायेण शास्त्रं शुद्धत्वहेतवे' इति । अथेति देवलोकः स्वर्गलोकः । तत्र स वा यश्चेति पूर्ववत् । येषां याजकानां देवानाम् । अकामहतत्वोत्कर्षकृत आनन्दोत्कर्षो देवलोकस्य फलत्वात्तत्कृत आनन्दोत्कर्षश्च ततश्च पूर्वोत्तरभाव आजानदेवानां देवलोकानन्दानां च । मनुष्याणां परमानन्दानन्तरं देवलोकानन्दकथनं भजने भूमौ भगवद्भजनं कृत्वा दिव्यानां पदार्थानामभावात् स्वर्गे कर्तव्यमिति स्वर्गकामना भवति तत्रादित्याः भवन्ति तेऽमुं लोकमयजन्निति श्रुतेः अतः कारणादादित्यानां यष्टव्यत्वात् । 'स्वर्गकामोऽदितेः सुतान्' इति वाक्यात् । अत्र स्वर्गो लोकः । अथेति गन्धर्वेति गन्ध अर्दने चु. आ. से. अर्द्द गतियाचनयोः भ्वा. प. से. अर्व गतौ गन्धाय गत्वा याचनाय गच्छन्ति तैत्तिरीयानन्दमीमांसायां मनुष्यगन्धर्वपदात् मनुष्यानवबोधकर्दृन् गत्वा लब्धावबोधा अन्यत्र तुरीयाश्रमे याचनाय भिक्षार्थं गच्छन्तीत्यर्थः । 'भिक्षाचर्यां चरन्ति' इति श्रुतेः । गन्धर्वपदं शकन्ध्वादि तेषां लोको भासकस्तत्र । यश्चेति पूर्ववत् । येषां याजकानां गन्धर्वाणामकामहतत्वोत्कर्षकृतः आनन्दोत्कर्षः । तुरीयाश्रमकृत उत्कर्षश्चानन्दानां ततश्च पूर्वोत्तरभावो देवलोकानन्दानां गन्धर्वलोकानां च । मनुष्याणां परमानन्दानन्तरं गन्धर्वलोकानन्दकथनम् । सेवायां स्वयों धर्मकामना तयोत्तमश्लोकस्य यष्टव्यत्वात् । 'धर्मार्थमुत्तमश्लोकम्' इति वाक्यात् सेवायां रूपकामना तया गन्धर्वाणां यष्टव्यत्वम् । 'रूपाभिकामो गन्धर्वान्' इति वाक्यात् । गन्धर्वा राष्ट्रभृतो देवताः 'एते वै गन्धर्वाप्सरसो यद्राष्ट्रभृतः' इति श्रुतेः । अथेति प्रजापतिः विष्णुः वेदान्ते प्रोक्तत्वात् । तस्य लोकस्तत्रानन्दः । आ. गन्तुः आशुः सम्यक्स्थिरानन्दः । यश्चेति । विष्णुयाजकानां यजमानैः आह्लादेन आह्लादो वेति पूर्ववत् । अत्राप्यकामहतत्वोत्कर्षकृत आह्लादोत्कर्षः । विष्णुकृत आनन्दोत्कर्षः । सेवायां यशसो भक्तिकारणस्य कामना कीर्त्या हि सर्वे समायान्ति पश्चात् [illegible] श्रुतिस्तस्ते 'यज्ञो वै विष्णुः' यशः प्राप्तवान् 'देवा वै सत्रमासत' ऋद्धिपरिमितयशस्कामा इत्यत्र [illegible] यशसः प्राप्तत्वात् स सेव्योऽतो मनुष्याणां परमानन्दकथनोत्तरं प्राजापत्यानन्दकथनम् । पूर्वोत्तरभावः आनन्दयोः स्पष्टः । एतावत्पर्यन्तं कर्ममार्गः तत्प्रधानो भक्तिव्यापारी सर्वोत्तममार्गश्चोक्तः । [illegible] भक्तिमार्गीयमुच्यते अथेति । ब्रह्मणो बृंहितत्वाद्व्यापकत्वात् ब्रह्मणो लोक इत्यपि ब्रह्मणो बृंहितस्य

भाष्यप्रकाशः ।

एष ब्रह्मलोकः सम्राडिति निगमयित्वा तस्य परब्रह्माभिन्नत्वाय भूमवाचकेनाऽमृतपदेनोपसंहाराद् तथेत्यर्थः । ननु स्वप्ने जीवस्यासंगतत्वप्रश्नेऽपि जागरिते सङ्गेन स्वरूपयोग्यताविघटनमाशङ्क्य तत्रापि तज्ज्ञानार्थं मोक्षसाधनप्रश्ने, तद्यथा महामत्स्य इति महामत्स्यदृष्टान्तेन पुनः पुनः समा-

रश्मिः ।

कर्मणा मोक्ष इति सर्वोत्तममार्गीयत्वम् । अक्षरपुरुषोत्तमयोस्त्वभेदात् ब्रह्मपदेनोपादानं फलत्वं च । ब्रह्मणः श्रीपुरुषोत्तमस्याक्षराभेदादेव प्रक्रान्तसुषुप्तिरूपनिर्गुणरूपानन्दप्रस्तावेऽभिधेयत्वम् । श्रुतित्वात्तैत्तिरीयानन्दमीमांसोक्तन्यूनानन्दकथनेपि न न्यूनतालक्षणनिग्रहस्थानम् । ननु तथापि प्रजापत्यानन्दात्पूर्वमिन्द्रबृहस्पत्योरानन्दौ कुतो नोक्तौ इति चेन्न । सेवायामिन्द्रियकामना तयेन्द्रस्य यष्टव्यत्वं बृहस्पतेस्त्वपृथक्भावेन देवेष्वन्तर्भावाद् यष्टव्यत्वमतस्तदानन्दयोरन्यानन्दसंभिन्नत्वात् तयोरनुक्तेः यश्चेति पूर्ववत् । विस्तारोपि वर्तते स उन्नेयः इति शुभम् । ब्रह्मत्वादानन्दोत्कर्षः स्पष्टः पूर्वोत्तरभावश्च स्पष्टः । मनुष्याणां परमानन्दकथनोत्तरं ब्रह्मानन्दकथनं भजने ब्रह्मवर्चसः कामना तया हिरण्यगर्भस्य यष्टव्यत्वात् । 'ब्रह्मवर्चस्कामस्तु यजेत ब्रह्मणस्पतिम्' इति वाक्यात् । भजने इयं कामना प्रथमं कर्तव्या ।

'ज्ञात्वाऽज्ञात्वा च कर्माणि जनोयमनुतिष्ठति ।
विदुषः कर्मसिद्धिः स्यात्तथा नाविदुषो भवेत्' ॥

इति वाक्याद्ब्रह्मगतं वेदगतं वा वर्चस्तेजः प्रकाशनसामर्थ्यं ब्रह्मधर्माणाम् । न च ते वेदेन प्रकाश्यन्ते इति वाच्यम् । वेदस्य ब्रह्ममात्रप्रकाशकत्वादतो ब्रह्मणः पतिः तत्सामर्थ्यं दातुं शक्तो यष्टव्यः । ब्रह्मधर्मान् सर्वान् गृहीत्वा जगति प्रकटनार्थं या रजोगुणदेवता ब्रह्मणः पतिः सैवोपास्येति । 'आधिपत्यकामः सर्वेषां यजेत परमेष्ठिनम्' इति वाक्यं तु गुणाधिष्ठातृपरम् । तथा भजने वैराग्यकामना तयाक्षरब्रह्मणो यष्टव्यत्वात् मनुष्याणां परमानन्दकथनोत्तरं ब्रह्मानन्दकथनम् । 'अकामः पुरुषं परम्' इति वाक्यात् । तथा मनुष्याणां परमानन्दकथनोत्तरं ब्रह्मानन्दकथनं भजने ससाधनभक्तिकामना तया परपुरुषस्य यष्टव्यत्वात् ।

'अकामः सर्वकामो वा मोक्षकाम उदारधीः ।
तीव्रेण भक्तियोगेन यजेत पुरुषं परम्' ॥

इति वाक्यात् । अकामो वैराग्यवान् इति वैराग्यं भक्तिसाधनम् । सर्वे कामा द्वितीयस्कन्ध-तृतीयाध्यायोक्ता ब्रह्मवर्च आदयः । भक्तिसाधनानि । मोक्षो भक्तिसाधनं 'मुक्तोपसृप्यव्यपदेशात्' इति व्याससूत्रात् । भक्तिस्तु—

'तस्मात्सर्वात्मना राजन् हरिः सर्वत्र सर्वदा ।
श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यो भगवान् नृणाम्' ॥

इति वाक्योक्तात्र संबध्यते । प्रकृतमनुसरामः । एवमेतदंशस्य बोधयित्वा । निगमयित्वेति एष ब्रह्मलोकः सम्राडिति शब्दवृत्त्यवयवविभाजकोपाधिमत्त्वं निगमनत्वम् । यथाहुर्नैयायिकाः पञ्चावयवान् प्रतिज्ञाहेतूदाहरणनिगमनानि पञ्चावयवाः परार्थानुमाने । तदेवं निगमयित्वा तदनु हेत-वनुवयासेत्यनुवासयित्वेति शेषः । मुमुक्षुपक्रमाद् ब्रह्मलोकपदमक्षरस्य वाचकं तस्य ब्रह्मलोकत्वात् तेनामृतपदस्य भूमवाचकस्यार्थस्यामृतस्याभेदसंसर्गानुपपत्तिमाशङ्क्याहुः तस्येति अक्षरस्य । भूमेति यो वै भूमा तदमृतमिति छान्दोग्यात् । फलत्वाय प्रतिपादितत्वेन प्रकारेण भगवानिति तथेत्यर्थः । स्वरूपेति मोक्षे स्वरूपयोग्यताविघटनम् । तत्रापीति जागरितेप्यसङ्गज्ञानार्थम् । मोक्षेति

प्रतिपादितः फलत्वाय । एतावता उभयासङ्गः प्रतिपादितः ।
तस्यानुभवारूढत्वाय पुनः प्रश्नः । दर्शनादर्शनाभ्यामपोह्यापाभ्यां सिद्धमसङ्गो

---

भाष्यप्रकाशः ।

न्तबुद्धान्तसंचरणादेवासङ्गत्वं सिद्धम् । तदुत्तरं श्येनसुपर्णमारभ्य यदेतावत् सुषुप्तिमाहात्म्यमुक्तं तस्य किं प्रयोजनमत आहुः एतावतेत्यादि । पुनः पुनरुभयत्र संचरणादुभयत्र समाना तस्यासक्तिरिति स्यादतस्तन्निवृत्त्यर्थमेतावान् ग्रन्थ इत्यर्थः । तर्हि पुनर्मोक्षसाधनप्रश्नस्य किं प्रयोजनमत आहुः तस्येत्यादि । यदि सुषुप्तेः सकाशात् तस्य भेदो न ज्ञायेत, तदेश्वराद् भेदोऽपि न ज्ञायेतेति तस्यानुभवारूढत्वाय स इत्यर्थः । उत्तरस्य तात्पर्यमाहुः दर्शनेत्यादि । तत्रापि स्वप्नान्तवद् वाक्यम् । अत्र संप्रसादः सुषुप्तिः । सम्यक् प्रसादो यत्रेति समासात् । रमणं स्वरूपानन्दानुभवः । आनन्दभुगिति श्रुतेः । चरणं सत्संपत्तिः । सता सौम्य तदा संपन्नो भवतीति श्रुतेः । पुण्यदर्शनमानन्दानुभवः । तस्य तत्फलत्वात् । अत्र सुखमस्वाप्समित्यनुस्मरणात् । पापदर्शनं तु

रश्मिः ।

'अत ऊर्ध्वं विमोक्षाय ब्रूहि' इति श्रुत्या प्रश्ने । सिद्धमिति पूर्वमेतच्छ्रुतिव्याख्याने सिद्धम् । यदेतावदिति यच्छब्दद्वयं चिन्त्यम् । यत् यत्र ग्रन्थे वा । तस्य ग्रन्थोक्तसामर्थ्यस्येत्यर्थः । अत्र मूलपुस्तकप्रतिपुस्तके यदेतावच्छुषुप्तिमाविष्य यदुक्तं तस्य किं प्रयोजनमिति पाठः स लेखकस्य वर्णभ्रमात् वर्णभ्रंशाच्च स्फुरति चेद्बोध्यः संशोधितस्तु व्याकृतः प्रायोयं शोधितः प्राचीनैरस्ति । उभयत्रेति बुद्धान्तस्वप्नान्तयोः । असक्तिरसङ्गः । तथा च माहात्म्यामाहात्म्याभ्यामसामान्यं सुषुप्तिजागरितासङ्गस्येति भावः । तथा च माहात्म्यामाहात्म्याभ्यामेतावतोभयासङ्गः प्रतिपादितः इति भाष्यार्थः । तर्हीति । सोऽहं भगवते सहस्रं ददामि अत ऊर्ध्वं विमोक्षायैव ब्रूहीति प्रश्नस्य । तस्येति शारीरस्य । ईश्वरादिति । भाष्ये । सुषुप्तिस्त्वकामरूपो भगवान् इत्युक्तत्वादिति भावः । न ज्ञायेतेति पुनः पुनः कथने शास्त्रार्थो हृदयारूढो भवतीति प्रश्नः पुनरपि । ननु कथनरूपमुत्तरमेवास्तु तर्हि प्रश्नस्य किं प्रयोजनमिति चेन्न । नापृष्टो ब्रूयादिति सुबोधिन्या उत्तराभावप्रसङ्गात् । तस्येति तस्य शारीरस्य मोक्षे स्वरूपयोग्यताया अनुभवारूढत्वाय स पुनः प्रश्न इत्यर्थः । तस्य भगवतो वा 'ऋते ज्ञानान्न मुक्तिः' इति श्रुतेः । उत्तरस्येति 'स वा एष एतस्मिन् संप्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव स यदत्र किंचित् पश्यत्यनन्वागतस्तेन भवति असङ्गो ह्ययं पुरुषः इत्येवमेवैतद् याज्ञवल्क्य सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहि' इत्यस्योत्तरस्य तात्पर्यम् । अत्रेति अप्येवकारार्थे अत्र माध्यंदिनपाठे । अत एव काण्वा इदं वाक्यं न पेठुः स्वप्नान्तवत् इति प्रथमान्ताद्वतिः स वा एष तस्मिन् स्वप्नान्त इति वाक्यवत् स्वप्नप्रासावन्तः बृहदारण्यकटीकाव्याख्यानमाहुः अत्रेति वाक्ये । तस्येति तस्यानन्दस्य पुण्यफलत्वात् । कार्यकारणभावसंबन्धेन पुण्यस्यानन्दे लक्षणा सा दुष्टेत्यत्रानुस्मरणं प्रयोजकमाहुः अत्र सुखमिति । सुखानन्दयोरभेदः । अन्वियति । आनन्दानुभवजन्यत्वात्तज्जन्यसंस्कारमनुस्मरणात् । नन्वनुस्मरणमाधुनिककल्पितं न श्रुतौ पुण्यपदे लक्षणां प्रयोजयति इति चेत्तस्य तत्फलत्वादित्यस्य भाष्यप्रकाशस्यान्यार्थकत्वात् । तथाहि । उत्कार्थस्य बृहदारण्यकटीकाकारस्यास्मन्मते । पुण्यस्य शुभकर्मकर्तुः तत्फलत्वात् । तस्याहंकर्तुः फलत्वात् । शुभकर्मकर्तुः फलस्याभावाच्छुभकर्मणः फलत्वमत्र । शुभं कर्म आनन्दः आनन्दः साधनैः क्रियते इति कर्म आनन्दवाचकः शुभत्वं निर्गुणादिभावत्वं कामतृप्तित्वं वा कामस्य तृप्तिरानन्द इति वाक्यार्थः ।

ऽयं पुरुष इति । एवं जीवं सुषुप्तौ भगवन्तं च ज्ञात्वा मोक्षोपायं पृच्छति । तत्र याज्ञवल्क्यस्य भयं जातं, सुबुद्धिरयं निर्बन्धेनापि सर्वं ज्ञास्यतीति जीवब्रह्मधर्मा-

भाष्यप्रकाशः ।

न किंचिदवेदिषमित्यज्ञानानुस्मरणम् शेषं पूर्ववाक्यसमानम् । अत्र बुद्धान्ताऽऽद्रावणकृतो यो दर्शनाबापोऽदर्शनोद्वापश्च, ताभ्यां कृत्वा सुषुप्तावपि साक्षित्वेनैव दर्शनं सिद्धम् । अतस्ततोऽपि भिन्न इति तत्राप्यनासक्तत्वादसङ्गो ह्ययं पुरुष इति सिद्धम् । तत्स्वरूपस्यावस्थातो भिन्नत्वं, तास्वनासक्तत्वं च सिद्धम् । तावता तस्य मोक्षे स्वरूपयोग्यताऽनुभवारूढा जातेत्यर्थः । अग्रिम-प्रश्नतात्पर्यमाहुः एवमित्यादि । जीवं मोक्षयोग्यत्वेन, भगवन्तं तद्दातृत्वेन च ज्ञात्वा तत्प्रश्न इत्यर्थः । उत्तरस्य तात्पर्यमाहुः तत्रेत्यादि । सर्वं ज्ञास्यतीति । कामप्रश्नव्याजेन सर्वं ज्ञानं मदीयं ग्रहीष्यतीति । आहेति । कामप्रश्नवरदानस्य भयस्य चानुरोधादुक्तरीत्या मोक्षोपायं

रश्मिः ।

सर्वधातुभ्यो मनिनिति कृञो मनिन् कर्मणि छान्दसः । पुण कर्मणि शुभे तु. प. से. पुणति इगुपधेति कः पुणः तमर्हतीत्यर्हणकर्तरि यत् पुण्यम् । आनन्दोतः पुण्यदर्शनमानन्दानुभवः । अपि च पुणे साधुः पुण्यं तत्र साधुरिति यत् । शुभकर्मकर्तरि कार्यं साध्नोतीति कार्यमानन्दस्तस्य साधकः साधुरात्मा । तथा च तस्यानन्दसाधकस्य तत्फलत्वात् शुभकर्मकर्तृफलत्वात् । शुभकर्मकर्तुरानन्दसाधक आनन्दो भगवान् विवक्षितः । किं च पुनाति यः स पुण्यमानन्दः ।

'प्रविष्टः कर्णरन्ध्रेण स्वानां भावसरोरुहम् ।
धुनोति शमलं कृष्णः सलिलस्य यथा शरत्' ॥ इति वाक्यात् ।

पृञो नुट् ह्रस्वश्चेति यत् ह्रस्वश्चेति । सुखमहमस्वाप्समित्यानन्दानुभवः । अयं घट इत्यनुभववत् पात्यस्मादात्मानमिति पापं पा रक्षणे अ. प. अ. भीत्रार्थानामित्यादपादाने यद्वा पिबति भक्षयति कर्तारं पा पाने भ्वा. प. अ. अज्ञानमित्याहुः न किंचिदिति । न किंचिदवेदिषमित्यज्ञानं पापं अनुस्मरणं दर्शनं सुखमस्वाप्सं न किंचिदवेदिषम् इति सुषुप्त्यनुभवः संपूर्णः । संस्कारोद्बोधमनु-लक्ष्यीकृत्य स्मरणमनुस्मरणम् । शेषमिति । भगव इति पाठे त इत्यस्य लोपः भगव इति छेदोत्र बोध्यः । भाष्यं व्याचक्रुः अत्रेति । बुद्धान्ताय जागरिताय आद्रावणमागमनं व्याप्तुः सकाशाद्गमनम् । तस्य कृतित्वेन जानातीच्छति यतते इत्यत्रेच्छापरित्यागेन ज्ञानानुमापकत्वम् । अत आद्रावणकृतः दर्शनस्य पुण्यपापज्ञानस्यावापः दृष्ट्वैव पुण्यमित्यादौ । न च सुषुप्तावनुभवो बाधक इति वाच्यम् । श्रौतत्वेन दर्शनस्यानुभवस्याबाधकत्वात् । कृतकारणस्यादर्शनस्योद्वापश्च जीवस्य साक्षित्वेन वर्तमानस्य दर्शनं पुण्यादिदर्शनम् । ततोपीति सुषुप्तेरपि न आ असक्तत्वात् । अनेति न आ असक्तत्वम् । तस्येति जीवस्य । अग्रिमेति प्रश्नस्तु श्रुत्युपन्यास उक्तः । एवमित्यादीति एवमसङ्गं जीवं मोक्षयोग्यत्वेन ज्ञात्वा सुषुप्तौ सत्यां सतिसप्तम्याः सामानाधिकरण्यमर्थः सुषुप्तिः समानाधिकरणं सुषुप्तावित्यस्यार्थः । तथा च सुषुप्तिरूपमकामं भगवन्तं जनको ज्ञात्वा । यद्वा सुषुप्तौ अकामरूपे भगवति एवं जीव-मिति योजना । अत्र भगवत्पदोक्तितात्पर्यमाहुः तद्दातृत्वेनेति । भगपदार्थेषु केनचित्तद्दातृत्वम् । उत्तरस्येति । अत्र याज्ञवल्क्यो बिभयांचकार मेधावी राजेति मां तेभ्य उदरौत्सीदित्युक्त्वा स यत्राणि-मानं न्येति जरया वोपतपता वाणिमानं निगच्छति यथाम्रमौदुम्बरं वा पिप्पलं वा बन्धनात् प्रमुच्यते एवमेवायं शारीर आत्मैभ्योऽङ्गेभ्यः संप्रमुच्य प्रतिन्यायं प्रतियोन्याद्रवति प्राणायैवेत्युत्तरस्य । कामप्रश्नेति । ननु भाष्ये निर्बन्धेनेति हेतुरस्ति अस्य किं प्रयोजनमिति चेन्न । सर्वं ज्ञास्यतीति

नेकीकृत्य जीवोपक्रमेण प्रश्नोपसंहारेणाह । तत्र, स यत्रेति जीवस्य मूर्च्छोपपत्ता-

भाष्यप्रकाशः

वस्थां पूर्वं सकामस्य कर्तुर्मरणावस्थां सप्रकारामुक्त्वा ततो निष्कामस्य कर्तुर्मोक्षोपायं सुषुप्त्यवस्थयै-कीकृत्य श्लिष्टतया आहेत्यर्थः । श्रुतौ तु, अन्तेभ्य उदरौत्सीदिति प्रश्ननिर्णयावसानेभ्यः पुनः-पुनरवरोधं कृतवानिति हेतोर्भयं जातमित्यर्थः । उत्तरं विवृण्वन्ति स यत्रेत्यादि । श्रुतौ तु, अणिमानं स्थूलशरीरकार्श्यम् । उपतपतेति उपतापजनकेन ज्वरादिना, न्येति प्राप्नोति । ततोऽणिमानं ज्ञानकार्श्यरूपां मूर्च्छां नितरां गच्छति । बन्धनादिति वृन्तात् । संप्रमुच्येति

रश्मिः ।

हेतुवाचकेतिशब्दस्य देहलीदीपन्यायेन भये जीवधर्मानेकीकृत्य वचने च हेतुत्वेन उभयोरेकतरार्थे हेत्वन्तरस्यास्य प्रयोजनसत्त्वात् । तथा च सुबुद्धिरयं निर्बन्धेनापि सर्वं ज्ञास्यतीति हेतुना तत्र याज्ञवल्क्यस्य भयं जातं कामप्रश्नव्याजेन मदीयं सर्वं ज्ञानं ग्रहीष्यतीति हेतुना जीवब्रह्म-धर्मानेकीकृत्येत्यादिरिति भाष्यार्थः । अत्र निर्बन्धः । 'निर्बन्धं तस्य तं ज्ञात्वा' इत्यस्य सुबोधिन्युक्तदिशा सर्वज्ञानरूपोऽवश्यसर्वज्ञानसाधकयत्नः । न च निर्बन्धेन सर्वज्ञानस्य न भयहेतुत्वं किं तु कोपस्येति वाच्यम् । पापाद्भयमित्याशयात् । पापं तु सर्वज्ञानाविषये ब्रह्मणि सर्वज्ञानात् । 'यस्यामतं तस्य मतं मतं यस्य न वेद सः' इति श्रुतेः 'यतो वाचः' इति श्रुतेश्च । पापं—

'योन्यथासन्तमात्मानं अन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चौरेणात्मापहारिणा' ॥

इति श्रुतेः । सर्वज्ञानाविषयस्य ब्रह्मणः सर्वज्ञानविषयत्वेन प्रतिपादनकर्ता अन्यथा प्रतिपद्यते इत्यस्यार्थः । ननु तर्हि स्पष्टमेव कुतो नोक्तमिदमित्यतया ज्ञातुं शक्यं न भवति ब्रह्मेति अनतिप्रश्न्या वै देवतेति चेत्तत्राहुः कामेति । कामप्रश्नमिषेण सर्वं ज्ञानं मदीयं ग्रहीष्यतीति स्पष्टं नोक्तम् । किं तु जीवब्रह्मेत्याद्युक्तम् । कामप्रश्नवरदानस्य अन्यथयितुमशक्यत्वेन स्पष्टं नोक्तम् । तदाहुः आहेति । कामप्रश्नवरदानस्य भयस्य चानुरोधात् इति । कामप्रश्नवरदानं तूपक्रमे तस्मै ह याज्ञवल्क्यो वरं ददौ स ह कामप्रश्नमेव वव्रे तं हास्मै ददाविति । जीवब्रह्मधर्मानिति भाष्यं विवरीतुमाहुः उक्तेति । स समानः सन्नित्यादिनोक्तस्वप्नजागरणयोः संचरणोक्त्या सुषुप्त्युक्त्या च स्वप्नजागरणसुषुप्तिबोधकश्रुत्युक्तरीत्या सुषुप्तिर्भगवान् । जीवब्रह्मधर्मसंश्लिष्टतया मां तेभ्य इत्युक्तौ विवक्षितबहुवचनानुपपत्तिः प्रश्नेभ्यः उद्रोधाभावात् । अत आहुः अन्तेभ्य इति मा मां अन्तेभ्यः इति छेदः । 'अन्तः प्रान्तेन्तिके नाशे स्वरूपे मनोहरे' इति विश्वादन्तपदं त्रिष्वाहुः प्रश्नेति । अन्तिकवाचकान्तपदार्थः प्रश्नः निकटत्वात् । निर्णय उत्तरं प्रान्तवाचकान्तपदार्थत्वात् । अन्तोऽव-सानं तेभ्यः । प्रश्नाश्च निर्णयाश्च अवसानं चेति विग्रहः । अवेति रुधिर् आवरणे रु. उ. अ. उत् । उङ् शब्दे । क्विप् । तुक् । शब्देन व्याप्तः संबन्धिरोधं वरणं वकृत्वेन स्वीकरणं कृतवान् इति हेतोर्भयं जातमिति । उक्तवरणे निर्बन्धेन सर्वं ज्ञानं जनकस्य भवत्येवेत्युक्तवाण्यस्य निर्बन्धेन सर्वज्ञानद्वारा भयहेतुत्वमस्ति निर्बन्धेन सर्वज्ञानस्य भयहेतुत्वमुक्तमेव । उक्तरमिति जीवोपक्रमं वदन्त एवोत्तरं सजीवः शिरःपाण्यादिमान् देहो वा । उपतापेति । उपतपतीत्युपतपत् तेनोप-तापकर्त्रेत्यर्थो भवति । तदुक्तं कर्ता जनको भवत्येव । बन्धनात्प्रमुच्यत इति पाठः । अडभावश्छान्दसः तदर्थमाहुः वृन्तादिति । 'वृन्तं प्रसवबन्धे स्यात् वटधाराकुचाग्रयोः' इति विश्वात् । प्रसवबन्धा-

पावस्था । तद्यथा अन इति मरणावस्था । तत्र भगवानेवैनं लोकान्तरे नयति ।
तद्यथा राजानमिति भगवत्सन्मानम् । एवंविदमिति वचनात् । जीवस्तु

भाष्यप्रकाशः ।

ममतात्यागेन स्वगुणं चैतन्यमाकृष्य । प्रतियोनीति स्थूलशरीरं लक्ष्यीकृत्य । प्राणायेति पुनरुज्जीवनाय । सा स्थूलदेहप्राप्तिरस्य येन हेतुना प्रकारेण च भवति तं हेतुं प्रकारं वक्तुं मरणावस्थोच्यत इत्याहुः तद्यथा अन इति । मरणावस्थेति । हेतुर्भगवान् दार्ष्टान्तिके स्पष्टः । श्रुतौ सुसमाहितमिति, भाराक्रान्तम् । उत्सर्जदिति, शब्दं कुर्वत् । शारीर आत्मेति लिङ्गशरीरविशिष्टो जीवः । अन्वारूढ इति शाकटिकेनेवाधिष्ठितः । उत्सर्जदिति वेदनया हिक्कादिशब्दान् कुर्वन् । अग्रिमकण्डिकयोरर्थमाहुः तद्यथा राजानमित्यादि । श्रुतौ । प्रत्येनसः,

रश्मिः ।

दित्यर्थः । रसप्रसवेन फलं बध्यतेऽस्मिन् बन्धनं वृन्तम् । तस्माद्बन्धनात्प्रमुच्यते वा तनुगुरुत्वादिना प्रमुच्यत व्यच्छिद्यत । अङ्गेभ्यो द्वादशेभ्यः । ममतेति । ननु देहादिषु अभिमानं कारयति साऽविद्या तमभिमानं त्याजयति सा विद्येति सकामस्य कर्तुर्मरणावस्थाप्रकारोक्तौ कुतो ममतात्यागो विद्याभावादिति चेन्न अयं ममतात्यागो न विद्याकृतः स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामतीति वक्ष्यमाणश्रुतेः अर्थोऽग्रे वाच्यः । प्रतिन्यायमित्यस्य प्रति प्रातिलोम्येन नि नितरामायो गमनं यथा स्यात्तथेत्यर्थः । क्रियाविशेषणम् । जीवनायेति । जीव प्राणधारणे प्राणधारणाय । तथा च प्राणाय इत्योर्लुक् प्राणानामायो जीवाद् गमनं तस्मै प्राणानां जीवादुद्गमने धारणं भवति । तद्यथेति । तद्यथा अनः सुसमाहितमुत्सर्जद्यायादेवमेवाय९शारीर आत्मा प्राज्ञेनात्मनान्वारूढ उत्सर्जद्यातीति श्रुतिः । भाराक्रान्तमिति । फलितार्थोयं सुसमाधीयते स्म सुसमाहितं दधातेर्हिः । तादौ किति । ह्रुषु गतौ सृयते क्विप् । तुगभावः द्रुर्वा । सम् षम् वैक्लव्ये क्विप् । आपु व्याप्तौ डाड् डा वा । निरुक्ते निपातः पादपूरणे इति तदर्थमपहायाहुः शब्दमिति उच्छब्दार्थः । उद् शब्दे क्विप् । शब्दाभिन्नं सृज विसर्गे विसर्गं कुर्वत् इत्युपसर्गत्वं उतो व्याकरणमतेनार्थः । शाकेति । प्राज्ञेनेति दार्ष्टान्तिके । अधिष्ठित इति अत्र पर्यायता । अनुचैतन्याकर्ष लक्ष्यीकृत्य जीव आरूढः आ व्याप्तः स्वस्मात् । रुह जन्मनि कर्मवशाज्जन्मविषयः योग्येन जन्मना संबद्ध्यते । विशेषेण सीयते इति षयः कर्मण्येरच् । शब्दानिति । विसर्गात् । भाष्ये । जीवस्य निराकारस्य प्राज्ञ आत्मा लोकान्तरे वक्ष्यमाणेत्यनेनेति प्राहुः तत्रेति तत्र मरणावस्थायां सत्यां भगवत्प्राज्ञपदोक्त एनं जीवं लोकान्तरे नयतीति प्रासङ्गिकं प्रकाशेन व्याख्यातम् । प्राज्ञपदोक्तितात्पर्यं चोक्तम् । प्रकृते । अग्रिमेति तथा च राजानमायान्तमुग्राः प्रत्येनसः सूतग्रामण्योऽन्नैः पानैरावसथैः प्रतिकल्पन्तेऽयमायात्ययमागच्छतीति । इत्येव९हैवंविद९सर्वाणि भूतानि प्रतिकल्पन्ते इदं ब्रह्म आयातीदमागच्छतीति । तद्यथा राजानं प्रयियासन्तं उग्राः प्रत्येनसः सूतग्रामण्यः उपसमायान्त्येव९हैवंविदं प्राणाः उपसमायन्ति यत्रैतदूर्ध्वोच्छ्वासी भवतीत्येतयोः । तद्विस्तृते यथा येभ्यो याजकेभ्यः प्रकारेभ्यः उग्राः उच्यन्ति उच समवाये वि. प. से. ऋज्रेत्यादिना रन् । गश्चान्तादेशः । समप्रतीति एनः पापं तद्वन्तं पापिनं लक्षयति तद्वान् पापो जात इति न लक्षणा वा तेषां पापिनां पापानां प्रति । प्रतिरारम्भेऽतस्य योगे लक्षणेत्थंभूताख्यानेति सूत्रेण द्वितीया न । आरम्भः स चार्थात् पापिनां शासनार्थं नियोगः । तादृशनियोगयुक्ता एनसः पापाः प्रत्येनसः मध्यमपदलोपी समासः एनोभ्योतिक्रान्ताः पापिनां शासनार्थं

नैवंवित् । सिद्धवद्वचनाच्च ज्ञानविधिः । वाक्यभेदप्रसङ्गाच्च ।

भाष्यप्रकाशः ।

पापिनां शासनार्थं नियुक्ताः । ग्रामण्यो, ग्रामनायकाः । प्रतिकल्पन्ते, उद्युज्य स्वोपयोगाय प्रतीक्षन्ते । भूतानि शरीरान्तरारम्भणायेश्वरेण नियुक्तानि । ननु जीवब्रह्मणोरुभयोरपि तत्र गमने कथं ब्रह्मण एव सन्मानमित्यत आहुः एवंविदमित्यादि । नैवंविदिति संसारिण उपक्रान्तत्वादेवंवित्पदे परामृश्यमाणो जीवत्वेन न वक्तुं शक्य इत्यर्थः । ननु प्राज्ञान्वारोहान्तज्ञानवन्तमनूद्य, तस्मिन् ब्रह्मायातीति ज्ञानकथनात् पूर्वोक्तकर्मफलविदः संसारिणो जीवस्यैवेदं सन्मानं, न ब्रह्मण इति चेत् तत्राहुः सिद्धवदित्यादि । अत्र किमेवं ज्ञानं विधीयते, उतानूद्यते । नाद्यः । सिद्धवचनात् । एवंविद्भवेदिति विधिवाक्यं कल्पयित्वैतद्योजनेन वाक्यभेदप्रसङ्गाच्च । अतोऽनूद्यत इत्येव वक्तव्यम् । तथा सति जीवस्य तथात्वबाधाद् ब्रह्मण एव सन्मानमित्यर्थः ।

यत्तु पूर्वं भूतानि राजभृत्यवद्देहमारभ्य प्रतीक्षन्ते । पश्चादात्मा राजवत् तत्र गच्छतीत्यंशोऽत्र न विवक्षितः । शरीरारम्भकैर्भूतैः सहैवात्मनो गमनमिति राद्धान्तस्थितेरित्युक्तम् ।

तत् साहसमेव । अविवक्षितत्वे मानाभावात् । दृष्टान्तकथनवैयर्थ्यप्रसङ्गाच्च । प्रयियासाबोधिकायामग्रिमकण्डिकायां प्राणोपसमायनोक्तिवद् भूतोपसमायनस्यानुक्तत्वेन भूतैः सह गमनसिद्धान्तस्याप्रयोजकत्वाच्च । श्रुतौ । उपसमायन्तीति स्वस्ववसतिं त्यक्त्वा तेन सह गन्तुं

रश्मिः ।

नियुक्ताः प्रत्येनसो वा । 'निरादयः क्रान्त्याद्यर्थे पञ्चम्याः' इति समासः सूताः ब्राह्मण्यां क्षत्रियाज्जाताः । सर्वे वा सूताः । अन्नैः भक्षणैः पृथ्वीभिर्वा केचित्तु भक्ष्यादिप्रकारैः मदिरादिभिरित्यर्थमाहुः पानैरिति । ग्रातैः आवसथ्यैः आवसन्त्यत्र वस निवासे 'उपसर्गे वसः' इत्यथच् । यत् । आवसथैरिति पाठे न प्रासादादिभिः । प्रतीक्षन्त इति प्रति प्रतिनिधिभिः समर्था भवन्ति कुर्वन्ति वा सामर्थ्यम् । अयमिति राजा आयात्याप्रापयति जीवमागच्छति स्वयम् । पुनरुक्तिरादरार्थेत्यन्ये । इत्येवमिति इति पदायो गच्छन्तं जीवं एवमित्यस्य ए इत्थं वमुद्गिरन्तम् । टुवम उद्गिरणे विच् । कंचित् ह इत्यस्य ग्रतो ज्वरादीन् पुरीम् । चतुर्थस्कन्धे पुरञ्जनोपाख्याने विशेषो द्रष्टव्यः । हन्तीति ह हन्तेर्डप्रत्ययः । एवं नामेत्थमुद्गिरन्तं उच्छब्देन विजानन्तम् वित् तं विदं गृ विज्ञाने तु. आ. से. द्वितीयमेवं प्रकारान्तरेण पूर्वप्रकारवाचि । एवंविदमिति वचनादिति भाष्यात् । पूर्वोक्तप्रकारेण विदमित्यर्थः । सर्वाणि देहारम्भकाणि भूतानीति व्याकृतं प्रकाशे । दीर्घपाठे ह आश्चर्ये प्रतिकल्पन्त इत्यस्यार्थं उक्तः । आयाति जीवं प्रापयति इदं ब्रह्मागच्छति आगच्छति इति । एति समानवृक्षम् । 'द्वा सुपर्णा सयुजा सखाया' इति श्रुतेः । नैवंविदितीति । तथा च श्रुतिः जरया वोपतपता वाणिमानं निगच्छतीति तदाहुः संसारिण इति इदानीं मूर्च्छितस्योक्तेः मूर्च्छिष्यतः संसारिणः । पूर्वोक्तेति प्राज्ञान्वारोहान्तकर्मफलविदः । वाक्येति भाष्यं विवृण्वन्ति स्म न ज्ञानविधिरित्यत्र द्वितीयहेतुबाधकम् । एवं विदिति । वाक्येति एकतिङ्वाक्यम् । तथात्वेति एवं वित्त्वबाधात् । 'परात्तु तच्छ्रुतेः' इति सूत्रात् । तथा च पूर्वोक्तकर्मफलवित्त्वं भगवत एव । टीकाकृन्मतमाहुः यत्त्विति । आत्मानं प्रतीक्षन्ते प्रयातुमिच्छा प्रयियासा तस्या बोधिकायाम् । द्वितीयकण्डिकार्थमाहुः स्वस्वेति स्वस्य स्वस्य प्राणस्य वसतिम् ।

'हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः । उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः' ॥

इति वाक्योक्तं स्थानं हृदादि । तेनेति भगवता । एवंविदमिति वचनात् । अत्र प्राणा

स यत्रेति जीवे मोहोऽधिकः । अथैनमेते प्राणा इति भगवच्चरित्रं, संयन्त

भाष्यप्रकाशः ।

निकटे समायान्ति । यत्रैतदूर्ध्वोच्छ्वासी भवतीति, पूर्वोक्तमरणावस्थाया उपसंहारे स्मारणम् । अतः परं शारीरब्राह्मणस्यार्थमाहुः स यत्रेत्यादि । स यत्रायं शारीर आत्मा लिङ्गविशिष्टो जीवः । अबल्यं नीत्य, पूर्वोक्तोपतापादिना नैर्बल्यं नितरां प्राप्य । संमोहमिव न्येति, मरणावस्थायामधिकं मोहं प्राप्नोति । तदा तूत्क्रमणस्य कर्तुमशक्यत्वात् तदुपायं भगवानेव करोति । यथाक्रमोऽयं परलोकस्थान इत्यादिना पूर्वं तस्योक्तत्वात् । तदिदानीं सविस्तरं वदामीति ज्ञापनायायैनमेते प्राणा इत्यथशब्दः । नच प्राणाः स्वत एवायान्तीति शङ्क्यम् । जडत्वात् । अतो जीवे संमुग्धे भगवत्प्रेरिता एवायान्तीत्याशयेनाहुः अथैनमित्यादि श्रुतौ । अथेति भगवत्प्रेरणोत्तरम् । प्राणा वागादयः । स इति जीवः । तेजोमात्रा इति प्रज्ञांशभूतानि करणानि । समभ्याददान इति । उपसंहरन् । अवक्रामति । अन्यतश्चैतन्यमुपसंहृत्य हृदयेऽभिव्यनक्ति । चाक्षुष इति । चक्षुषि भवः सूर्यांशः । पराङ् न पर्यावर्तत इति । स्वकार्यरहितो भवति । अरूपज्ञ इति जीवस्तथा भवति । तत्र हेतुः । एकीभवतीति । लिङ्गात्मना करणग्रामे

रश्मिः ।

वागादय इति टीकाकृद्व्याख्यानम् । तत्समायन्तीत्यनेन वागादीनामन्वयमलभमानं विरुणद्धि अतः प्राणा वायवः । यद्वा प्राणा वागादयः एत एवाग्रे भगवत्प्रेरणया जीवे समायास्यन्तीति । यत्रैतदिति एतद् यत्र । ऊर्ध्वोच्छ्वासीति । इ आश्चर्ये उपसमिति भाष्योक्तस्य प्रश्नोपसंहारेणाहेत्वस्योपसंहारस्योत्तरब्राह्मणान्ते वक्तव्यत्वम् । स यत्रेति । स यत्रायं शारीरः आत्मा अबल्यं नीत्य संमोहमिव न्येतीति श्रुतिः । अत्रात्मा भगवान् न जीवे मोहोधिक इति भाष्यादित्याहुः लिङ्गेति । तत्रेति तदापीत्यर्थः । परात्तु तच्छ्रुतेरिति न्यायात् । अथैनमिति अथैनमेते प्राणाः अभिसमायन्ति स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति इति पूर्वश्रुतिशेषश्रुतिः । कार्त्स्न्येऽथशब्दः । अनन्तरार्थे वा भगवत्प्रेरणानन्तरमित्यर्थः । भगवत्प्रेरणोत्तरमिति यावत् । प्रज्ञेति तेजांसि प्रज्ञांशभूतानि प्रज्ञाया अवबोधत्वात् । मात्राः करणानि मात्राशब्दस्य प्रमाणवाचकत्वात् । मीयन्ते विषया याभिस्तास्तेजोमात्राश्चक्षुरादिकरणानि टीकाव्युत्पत्तिरेषा अथवा सविस्तारकः । वि गन्ता स्तृञ् आच्छादने आ व्याहुः छद् अपवारणे चु. प. से. वर ईप्सायां चुरादि. प. से वारकः ईप्साकर्ता देहे स्पृहाकर्तृत्वं व्याहुर्भगवतः सकाशात्तदशायामित्युक्तम् । अप इत्यस्यार्थः कर्तव्यः अन्यथा मूर्च्छितस्य देहस्पृहाभावप्रसङ्गात् । एता इति गच्छ्यः तेजसो निधानकर्तुः मात्रा मानस्य विरोधतः कर्म्यः मान्ति विरोधतिं कुर्वन्ति मात्राः हुयामेति त्रन् । ऊपेति । यद्वा सम् धम वैक्लव्ये क्विप् । वि गन्तृत्वेन क्लव्येन शब्दकर्तृत्वेन वर्तमानो जीवः अभि अभये अभयाय आभ्यासे प्राज्ञाय ददानः हृदयमेव हृदयमेति । अनु अन प्राणने अनिति बाहुलकाडुः । अव रक्षणादौ वाति वानं वा डः नवं अव न गच्छति हृदयमेतीत्युक्तम् । तत्र विक्षेपः क्रामति अरत्नपादयोर्विक्षेपं करोति सर्वतः पाणिपादान्तस्तांशो जीवोऽप्यंशतः सर्वतः पाणिपादान्त इति । चाक्षुष इति स यत्रैष चाक्षुषः पुरुषः पराङ्पर्यावर्ततेऽथारूपज्ञो भवति एकीभवति न पश्यतीत्याहुरिति श्रुतिः । चक्षुषि व्यक्तवाक्कर्तरि ॐकारे पश्चिद् व्यक्तवां वाचि । पश्यन् चक्षुर्भवतीति श्रुतेः सूर्यांशः[1] सूर्यस्यांशस्तत्र भवः । करणग्रामो लिङ्गदेहः । आहुरित्यनेन अस्यार्थस्योऽस्त्यपि । स तु 'तदेवैतत्प्रकारेण भवतीति

भाष्यप्रकाशः।

मिश्रीभवति। तदा पार्श्वस्थाश्च पश्यतीत्याहुस्तद्विदः। एवमग्रेऽपि सर्वत्र। एवमुपसंहृते करणग्रामे निष्क्रमणसाधनीभूतं व्यापारमाह तस्येत्यादिना। हृदयस्याग्रं, हृदयच्छिद्रनाडीमुखं प्रद्योतते भगवज्ज्योतिषा स्वप्न इव तदानीं प्रकाशयुक्तं तिष्ठति। प्राण इति मुख्यः प्राणः। प्राणा इति वागादयः। अनूत्क्रामन्तीति। मुख्यप्राणगमनोत्तरं सहैकीभूय गच्छन्ति। संज्ञानमिति। पूर्वोक्तप्रद्योतहेतुत्वेन मतां बुद्धिम्। अन्ववक्रामतीति। अश्ववत्तामारोहति। सविज्ञानो

रश्मिः।

श्रुतेर्मतम्' आविर्भावतिरोभावशालिनो ब्रह्मणः इच्छातो मोक्तृकर्मक्षये तिरोभावान्न पश्यतीति। सर्वत्रेति। एकीभवति न जिघ्रतीत्याहुः, एकीभवति न रसयतीत्याहुः, एकीभवति न वदतीत्याहुः, एकीभवति न शृणोतीत्याहुः, एकीभवति न मनुते इत्याहुः, एकीभवति न स्पृशतीत्याहुः, एकीभवति न विजानातीत्याहुरित्यत्र। एवमिति। मिश्रीभावेन। हृदयस्येति तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं९ सर्वे प्राणाः अनूत्क्रामन्ति संज्ञानमेवान्ववक्रामति स एष ज्ञः सविज्ञानो भवति तं विद्याकर्मणी समान्वारभेते पूर्वप्रज्ञा च तद्यथा तृणजलायुका तृणस्यान्तं गत्वात्मानमुपसंहरति एवमेवायं पुरुष इदं शरीरं विहत्य अविद्यां गमयित्वान्यमाक्रममाक्रम्यात्मानमुपसंहरति 'तद्यथा पेशस्कारी पेशसो मात्रामुपादायान्यन्नवतरं कल्याणतर९रूपं तनुते एवमेवमेवायं पुरुषः इद९शरीरं निहत्याविद्यां गमयित्वाऽन्यन्नवतरं कल्याणतर९रूपं तनुते पित्र्यं वा गान्धर्वं वा ब्राह्मं वा प्राजापत्यं वा दैवं वा मानुषं वाऽन्येभ्यो वा भूतेभ्यः' इति श्रुतिः। तस्य अथवा सविस्तारक इत्यादिनोक्तार्थस्य ह एतस्य प्रकृतस्योपसंहृतकरणस्य गन्तुः। हृदयेति हृदये छिद्रं जीवप्रत्ययोपाधिरूपं तस्याग्रं नाडीमुखं नाडीरूपे निःसरणोपायः। अयं सकलसाधारणः विद्वांस्तु एकशततम्या नाड्या मूर्धन्या निष्क्रामति।

'शतं चैका हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका।

तयोर्ध्वमायन्नमृतत्वमेति विष्वगन्या उत्क्रमणे भवन्ति'॥ इति।

यतः श्रुतिराह। मुख्य इति आसन्यः। पूर्वोक्तेति भगवज्ज्योतिषा प्रद्योतनात्। 'अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्' इति स्मृतौ तादृशसमयेऽङ्गुष्ठमात्रतोक्ता तां समर्थयितुमाहुः तां बुद्धिमिति।

'अङ्गुष्ठमात्रो रवितुल्यरूपः संकल्पाहंकारसमन्वितो यः।

बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यपरोपि दृष्टः'॥

इतिश्रुतेः तथा च कामाहंकारबुद्धिगुणानामुपलब्धिका बुद्धिः तथा च सम्यग्विशेषेण ज्ञानं संज्ञानं विज्ञानमित्यर्थः। 'स एष ज्ञः' 'स विज्ञानो भवति'। इति श्रुतेः। क्रामतीत्यत्र क्रमु पादविक्षेपे इति पादविक्षेपार्थमाहुः अश्ववदिति पादविक्षेपेणाश्वं यथा रोहति तथा पादविक्षेपेण बुद्धिमारोहति न च तस्या बुद्धिरिति शङ्क्यम्। अङ्गुष्ठमात्रतासाधकत्वात्। यथाकथंचिदश्ववद् बुद्धिः। विशेषविज्ञानवानिति बुद्धिमान् 'बुद्धिर्विज्ञानरूपिणी' इति वाक्यात्। यदि च हृदयस्याङ्गुष्ठमात्रत्वं ब्रह्मापेक्षया स्थितिसूत्रेऽतो मानुषाणां हृदयस्याङ्गुष्ठमात्रत्वादिति भाष्यात्। इति विभाव्येत। आराग्रमात्रोऽङ्गुष्ठमात्राद्भगवतोऽपरः हृदयस्थत्वात्। हृदयस्याङ्गुष्ठमात्रत्वात्। अपिपदेन परः भिन्नो दृष्ट इति च विभाव्येत। तदापि स्मृतिबलात् जीवस्यास्त्येव। हृदयमेवान्ववक्रामतीति श्रुतेः। ननु तर्हि तथैवाङ्गुष्ठमात्रता जीवस्य भवतु किं बुद्ध्येति चेन्न। तर्हि संज्ञानं नाम विशेषविज्ञानोत्पादिनं

भाष्यप्रकाशः ।

भवति, गमनार्थं विशेषज्ञानवान् भवति, । तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चेति । विद्या सदसद्विषयकं ज्ञानम् । कर्माऽदृष्टरूपं लिङ्गगतिरूपं च । यद्वा, विद्या उपासनात्मकं ज्ञानम् । कर्म यज्ञादिरूपम् । यथाक्रतुरस्मिन् लोक इत्यादिश्रुतेः पूर्वप्रज्ञा, संस्कारात्मना वर्तमानं ज्ञानम् । समन्वारभेते अनुगच्छतः । जलायुका जलौका । निहत्येत्यस्य व्याख्यानमविद्यां गमयित्वेति ।

रश्मिः ।

गन्तव्यम् । अन्ववक्रामति उद्गच्छति इति तव मनीषितं तदसंगतम् । आक्रममाक्रामतीति श्रुतावाक्रमस्य गन्तव्यस्य वक्ष्यमाणत्वात् । अतो हृदयस्याग्रे प्रद्योतितेऽङ्गुमात्रहृदयजीवो निःसरतीत्युक्तम् । इदं निःसरणं संसारिणस्तस्य कर्मवैशिष्ट्यादित्याहुः तमिति । तं जीवम् । विद्यापदेन पञ्चपर्वविद्या नात्र विवक्षिता कर्मोक्तेः विद्यायाः कर्मनाशकत्वात् । कर्मणां प्ररोहैकस्वभावत्वादाहुः सदिति । तदुक्तम् । विद्याशब्देनेह प्रमाणाप्रमाणजनितं ज्ञानमात्रं विहितप्रतिषिद्धादिरूपमात्मज्ञानव्यतिरिक्तमुच्यत इति टीकाकृता । अदृष्टेति 'धर्माधर्मावदृष्टं स्यात्' । लिङ्गेति पूर्वं मुख्यप्राणेत्याद्युक्ता लिङ्गगतिः । टीकायां तु तेनैव शास्त्रलोकस्वभावेभ्य उत्पन्नं दृष्टादृष्टार्थरूपं वाङ्मनःकायसाध्यं सर्वं कर्मशब्देनोच्यते इत्युक्तम् । सर्वत्र प्रसिद्धाधिकरणानुसारेणाहुः यद्वेति । पूर्वाभ्यां ज्ञानकर्मभ्यां जन्यौ संस्कारवासनात्मकौ संस्कारौ ताभ्यां आत्मा स्वरूपं तेन । यद्वा । पूर्वोक्तज्ञानेन जन्यः संस्कारस्तेन जन्य आत्मा स्वरूपं यस्य तेन । रभि राभस्ये भ्वा. आ. अ. 'रभसो हर्षवेगयोः' इति विश्वात् । रभसो वेगः वेगश्चोविजी भयचलनयोरिति धातुपाठाच्चलने । चल कम्पने । कपि चलने । इति चलनार्थं इत्याहुः अनुगच्छत इति सम् गन्तारं जीवं पूर्वोक्तम् । शब्दे शब्दआविष्कारे । आशुर्भगवतो वियोगकाले विष् वियोगे क्विप् । कारः कृतिः काल इति यावत् । अनु अनन्तौ गच्छतः । तथा च तदापि प्राणधारणाजीवत्वम् । पूर्वप्रज्ञा च अत्र चकारार्थः । आह्लादयति समन्वारभते वा । समन्वारम्भे इति पाठे तु रभि राभस्ये भ्वा. आ. से. अन्यत्र श्रुतौ च,

'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' ॥ इति ।

अत्र परावरदर्शनस्य भिदादिसमानाधिकरणत्वेनानुगमनं हृदयग्रन्थ्यादीनां स्फुटति तत्र विद्यापदेन हृदयग्रन्थिः पूर्वप्रज्ञापदेन पंचपर्वाविद्या प्रस्तुतौ सुबोधिन्यान्ते च पूर्वं ज्ञाते च देहेन्द्रियप्राणान्तःकरणाध्यासरहिता ज्ञाता इति,

'वैराग्यं सांख्ययोगौ च तपो भक्तिश्च केशवे ।
पञ्चपर्वेति विद्येयं यया विद्वान् हरिं विशेत्' ॥ इति निबन्धे ।

अत्र विद्यया 'मनो यत्र निषक्तमस्य' इति वाक्यात् तत्प्राप्तिस्तत्र तं जीवम् । विद्या जीवनिष्ठः सम् अनुमनोनिषक्तपदार्थोत्पश्चाच्चक्षुरादेरारोप उद्यमः तदनुकूलव्यापारवती तथा कर्म प्ररोहैकस्वभावत्वात् स्थूलदेहोत्पत्तिः । कारणं जीवनिष्ठः सम् अनुमनो निषक्तपदार्थोत्पश्चात् आरम्भो राभस्यं कर्मवशगत्वात् तदनुकूलव्यापारवत् । एवमपि न्यूनतात्व्यनिग्रहस्थानमित्याशङ्क्याह पूर्वप्रज्ञेति । पूर्वप्रज्ञा पञ्चपर्वा विद्या सापि त्वानुगृहीतजीवकृष्णसालोक्यप्राप्तजीवदेहहेतुः तद्वदन्ते यं पुरुषं इत्युपक्रम्य पित्र्यं वा गान्धर्वं वा ब्राह्मं वेति । रूपं तनुते इत्युक्तरूपविशेषणं संपद्याविर्भावाधिकरणे चोक्तम् । तस्य देहान्तरप्राप्ति—

भाष्यप्रकाशः ।

अज्ञानं प्रापयित्वा, निश्चेष्टं कृत्वेत्यर्थः । पेशस्कारी भ्रमरीविशेषः । पेशसो रूपस्य मात्रामपादायापच्छिद्यान्यं स्वरुद्धकीटीयं नवतरं रूपं तनुत एवमयं पुरुष इदं स्थूलशरीरं निहत्य तस्माद् रूपाद् वासनया तदंशं गृहीत्वेति यावत् । त्यक्ते पूर्वशरीरे वासनया कथं तदंशग्रहणमित्यत रश्मिः ।

'देहे पञ्चत्वमापन्ने देही कर्मानुगोऽवशः ।
देहान्तरमनुप्राप्य प्राक्तनं त्यजते वपुः ॥
व्रजन् तिष्ठन् पदैकेन यथैवैकेन गच्छति ।
यथा तृणजलौकैवं देही कर्मगतिं गतः' ॥

इति वाक्याभ्यां स्फुटीकृतामाहुः तद्यथेति । तत्र दृष्टान्तः जलायुका इत्यत्र वर्णलोपः । हन हिंसागत्योस्तत्र गत्यर्थो हनिरित्याह श्रुतिरित्याशयेनाहुः व्याख्यानमिति । अज्ञानं ज्ञानाभावं विषयत्वेन ज्ञानं शरीरे तत्रैव विषयत्वेन ज्ञानाभावं गमयित्वा शरीरमदृष्ट्वेति यावत् । यद्वा निश्चेष्टं कृत्वेत्यर्थः । अन्यमाक्रमं देहं आक्रम्यते इत्याक्रमो देहः आत्मानं पादव्यतिरिक्तं उपसंहरति जीवो भगवत्कर्तृत्वविशिष्टः । आक्रमारम्भकानाह तद्यथेति तत् तत्र देहारम्भकविचारे पेशस्कारीति मूर्धन्यषकारः आन्यत्रिकप्रयोगानुरोधात् । भ्रमरीति श्रीभागवते सप्तमस्कन्धे—

'कीटः पेशस्कृता रुद्धः कुड्यान्तमनुसंस्मरन् ।
संरम्भभययोगेन विन्दते तत्सरूपताम्' ॥

इत्यत्र तथा व्याख्यानात् पूर्वं पिषु संचूर्णने रु. प. अ. रूपमुक्त्वा पिश इत्यस्य रूपमाहुः पेशस इति । पिश अवयवे तु. प. से. असुन् अवयवकर्तृ रूपस्य । रूपत्वं मूर्तत्वं तच्च परिच्छिन्नपरिमाणवत्त्वं तच्छिद्रस्यावयवानुकूलव्यापारस्य विवक्षितत्वात् । मात्रां लेशमपछिद्य आशुः सकाशाद् अपद्वैधीकृत्यावयवावयवित्वे द्विधा धीविषयं कृत्वाऽर्थाद् दत्त्वा अन्यं स्वरुद्धेत्यादि । निहत्येति अविद्यां गमयित्वा । माया भिदा सा स्वस्माल्लिङ्गाच्च शरीरगा तया जन्यो भेदः पञ्चसु महाभूतेषु पञ्चधाविभक्तदेहेऽविद्यापदवाच्यः तदुक्तम् । 'भिन्ने पञ्चात्मके देहे गते पञ्चसु पञ्चधा' इति पिण्डोपनिषदि । तथा च जगदन्तर्गतदेहस्यात्मत्वात् अविद्याप्रापणं कृत्वाऽऽत्मरूपपञ्चमहाभूतांशस्य ग्रहणं प्राप्तं तदाहुः तस्मादिति यावदित्यवधौ शरीरं क्षेत्रं तच्च—

'महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः' ॥
इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।
एतत् क्षेत्रं समासेन सविकारमुदाहृतम्' ॥

इति गीतात्रयोदशे उदाहृतम् । श्रुतावन्यमित्यादि । रूपं मूर्तं पित्र्यं पितृभ्यो हितं पितृलोकभोगयोग्यं यदि पितृलोककामो भवेत् । गान्धर्वलोककामो गान्धर्वं रूपं भावं भक्तिमतो रूपं मध्ये वेदान्तत्वादुक्तम् । अखण्डं कृष्णवत्सर्वमिति

'काचं मणिं काञ्चनमेकसूत्रे ग्रथ्नन्ति मूढा न हि तत्र चित्रम् ।
विवेकवित्पाणिनिरेकसूत्रे श्वानं युवानं मघवानमाह' ॥

इत्यवेदान्तविषयं कस्यचित् । प्राजापत्यं वैष्णवं रूपं विष्णुलोकभोगयोग्यं । दैवं हिरण्यगर्भेन्द्रतडिदादिलोकं तत्तल्लोकभोगयोग्यं सत्यलोकादि । सात्त्विकानां 'ऊर्ध्वं गच्छन्ति सत्त्वस्थाः

भाष्यप्रकाशः ।

उपपादयति । स वा अयमात्मेत्यादिना । तथाच सर्वमयत्वेन नानावासनाशालित्वाद् वा वासना

रश्मिः ।

इति । मानुष्यं मनुष्यलोकभोगयोग्यम् । राजसानां 'मध्ये तिष्ठन्ति राजसाः' इति । अन्येभ्य इति षष्ठ्यर्थे चतुर्थी । अन्येषां भूतानां प्रेततिर्यगादीनां संबन्धि शरीरं कुरुते इति प्रत्येकं संबध्यते । उपपादयतीति श्रुतिः कर्त्री । श्रुतयः प्रतिपादयन्तीति वा । श्रुतिलिखापितम् । स वा अयमिति । अयमात्मा ब्रह्म विज्ञानमयो मनोमयो वाङ्मयः प्राणमयश्चक्षुर्मयः श्रोत्रमय आकाशमयो वायुमयस्तेजोमय आपोमयः पृथ्वीमयः क्रोधमयोऽक्रोधमयो हर्षमयो धर्ममयोऽधर्ममयः सर्वमयस्तदेदंमय अदोमय इति यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्मणा भवति पापः पापेनेति श्रुतयः । अत्र प्रत्येत्यन्तेनासङ्गः । स्वरूपमुक्तम् । आध्यासिकं रूपमाहुः विज्ञानमय इत्यादिना । जीवस्याविकृतत्वात् । प्राचुर्ये मयड्विकारे । विज्ञानं बुद्धिस्तत्प्रचुरः मया जानन्तीति बुद्ध्यध्यासः । अहं मन्व इति इति मनोध्यासः । मया वक्तव्यार्थो ज्ञात इति वागध्यासः । अहं देहं धारयामीति प्राणाध्यासः । पश्यामीति चक्षुषः । शृणोमीति श्रोत्रस्य एतावत्पर्यन्तं सहैव गतानां बुद्ध्यादीनामनुवादः मात्रापादानामतः परमाकाशमय इत्यादीनां पञ्चमहाभूतानामुच्यते यथाकर्तुं शीलमस्यास्तीति यथाकारी यथाचरितुं शीलमस्यास्तीति यथाचारी यथातथाशब्दौ व्याकरोति साध्वीति अग्रे स्पष्टम् । तदुक्तम् । शरीरं निहत्य पञ्चसु महाभूतेषु पञ्चधा गमयित्वा—

'त्र्यहं वसति तोयेषु त्र्यहं वसति चाग्निषु ।
त्र्यहमाकाशतो भूत्वा दिनमेकं तु वायुगः' ॥
तस्यैतस्य जीवस्य पिण्डदानेन संभवः ।

तथाहि पिण्डोपनिषदि त्र्यहं वसतीति पूर्वोक्तमुक्त्वा पठ्यते—

प्रथमेन तु पिण्डेन कालातान्तस्य संभवः ।
द्वितीयेन तु पिण्डेन मांसत्वक्शोणितोद्भवः ॥
तृतीयेन तु पिण्डेन मतिस्तस्याभिजायते ।
चतुर्थेन तु पिण्डेन अस्थि मज्जा प्रजायते ॥
पञ्चमेन तु पिण्डेन हस्ताङ्गुल्यः शिरोमुखम् ।
षष्ठेन तु पिण्डेन हृत्कण्ठतालु जायते ।
सप्तमेन तु पिण्डेन दीर्घमायुः प्रजायते ॥
अष्टमेन तु पिण्डेन वाचं पुष्यति वीर्यवान् ।
नवमेन तु पिण्डेन सर्वेन्द्रियसमाहितः ॥
दशमेन तु पिण्डेन भावानां प्लवनं तथा ।
पिण्डपिण्डे शरीरस्य पिण्डदानेन संभवः पिण्डदानेन संभवः ॥

इतीत्यत्र संघातात्संघातस्य शरीरस्य संघातदानेन द्विरुक्त्या मर्यादाप्रवाहयोः संभवः । पिण्डि संघाते इत्यादिः आ. से. । चमितुं शीलमस्येति चामी आत्मा तेषु । कलातः कुत्सितः । कृष्णगमकः आसन्नजात् । वीर्यवान् भवति । पिण्डपिण्डे । पिण्डात् पिण्डस्य जन्मः से । अत्रेति लकारेऽन्याथा-

इत्यन्तेन श्लोके तद् ब्रह्म अस्य जीवस्य अकामयमानस्य भगवतः स्वरूपं पूर्वमेवो-क्रमनुवदति।

---

भाष्यप्रकाशः।

तदा कर्मणोद्बुध्यते तया पूर्वस्माद् रूपांशोपादानमित्यर्थः। अत्र पक्षान्तरमाह। अथो खल्वित्यादि। तेन कस्य चित् कर्मणा वासनोद्बोधे तदनुरूपो देहः। कस्यचित्तु कामाधीनः। यथा नृगस्य। उभयत्रापि भगवदिच्छा नियामिका। एवं जीवस्य लोकान्तरप्रापकं भगवच्चरित्रं विस्तारेणोक्तम्। अस्य भगवच्चरित्रत्वे गमकमाहुः श्लोक इत्यादि। श्लोकस्तु सार्द्धः—

'तदेव तत् सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य।
प्राप्यान्तं कर्मणस्तस्य यत् किं चेह करोत्ययम्।
तस्माल्लोकात् पुनरेत्यास्मै लोकाय कर्मणे॥'

रश्मिः।

ग्रहणे पक्षस्तदेव तदन्यत् कर्मपक्षः पक्षान्तरम्। अथखिति। अथो खल्वाहुः काममय एवायं पुरुष इति स यथाकामो भवति तथा क्रतुर्भवति यथा क्रतुर्भवति तथा कर्म कुरुते यत्कर्म कुरुते तदभिसंपद्यते इति श्रुतयः। आहुरन्याः श्रुतयः काम इच्छा तत्प्रचुरः कामो विषयोपादित्सेत्यन्ये। यथाकामः। देवपूजासंगतिकरणदानप्रकारेण इच्छा यस्य तादृशो भवति। यादृशकामविशेषेण युक्तो भवतीत्यन्ये। तथा क्रतुर्यस्य तादृशो भवति। इदमुक्तम्। देवपूजासंगतिकरणदानविषयिणीच्छा तद्वान् भवति तथाविस्तारकप्रकारकक्रतुर्यज्ञस्तद्वान् भवति। वि. गन्ता स्तृन् आच्छादने आप्नेरित्या इत्यस्यार्थः आप्त्रे भक्षणे। छद संवरणे। सम्. वि गन्धनस्य गत्वा याचनस्य कर्ता शब्दकर्ता। वरणं सभक्तिस्तस्य कर्ता तस्य क्रतुस्तद्वान् भवतीति। अतः परं यथा क्रतुरित्यादेरर्थः। देवपूजादिप्रकारेण क्रतुर्यस्य देवपूजादिविशिष्टक्रतुमान् भवति। तत्कर्म विस्तारकं कर्म। यत्कर्म। देवपूजादिकर्म। तदभिसंपद्यते। तद्विस्तारकम्। अभि अभयं-सम्-गन्तृ-शब्दकर्तृ पद्यते गच्छतीति एवं काममयस्य मुख्यफलपर्यन्तमुक्तम्। वेदान्तत्वात् कर्मणा देहः फलं तदाद्यन्तर्भाव्य तदाहुः तेनेति कस्येति। देहकामस्य कर्मणा संचितेन प्रारब्धकर्मणो भोगेन नाशात्। क्रियमाणेन कर्मणा वा संसारिप्रकरणा-तदनुरूपो देहो मानुषादि देवपूजादि कर्मप्रसक्तं तेन पिप्यादिदेहप्राप्तिः। नृगस्येति—

'पूर्वं त्वमशुभं भुङ्क्ष्व उताहो नृपते शुभम्।
नान्तं दानस्य धर्मस्य पश्ये लोकस्य भास्वतः॥
पूर्वं देवाशुभं भुञ्जे इति प्राह पतेति सः।
तावदद्राक्षदात्मानं कृकलासं पतन् प्रभो'॥ इति दशमस्कन्धात्।

नियामिकेति 'एष उ एव साधु कर्म कारयति यमुन्निनीषति एष उ एवासाधु कर्म कारयति यमधो निनीषति' इत्यत्रेच्छार्थसन्नन्तनीञः प्रयोगात्। भगवच्चरित्रमिति जीवस्यानीशत्वादिति भावः। श्लोकस्त्विति तदेष श्लोको भवतीति श्रुतिः तत् तत्र ब्राह्मणोक्तेर्थे एष इत्यस्यार्थः सार्धं इति। ये चातुर्मास्या यजामेहे इति पञ्चावत्तमनादत्यमित्यादिश्रुतीनामर्था इच्छा भगवदिच्छया

भाष्यप्रकाशः ।

इति । अर्थस्तु, स जीवः, तत् सह । तृतीयाया लुक् । तेन ब्रह्मणा प्राज्ञेन सह । तदेव एति इति प्राप्नोति । तत् किमित्यत आह । अस्य जीवस्य लिङ्गं लिङ्गशरीरे प्रधानभूतं मनः । कर्मणा पूर्वकृतेन कर्मणा यत्र यस्मिन्नर्थे निषक्तं नितरां सक्तमिति । शेषं स्फुटम् । तथा च पूर्वत्र भगवच्चरित्रं यदि प्रतिपाद्यं न स्यात् तदा श्लोके तत्सहेति न वदेत् । भगवदन्यारूढत्वोक्तिश्च पौर्वत्रिकी मुधा स्यादतस्तत्परेत्यर्थः । अतः पूर्वोक्तभयादकामयमानस्य मोक्षोपायं गूढतया वदन् मुच्यमानावस्थां सुषुप्तिसमानत्वेन श्लिष्टतयाह । अथाकामयमान इत्यादि, सम्राडित्यन्तेन । तत्र मोक्षावस्थायाः प्रकरणेन प्रतीयमानत्वात् सुषुप्त्यवस्थां व्याकुर्वन्ति अकामयमानस्येत्यादि । अकामयमानस्य जीवस्य भगवत्सम्बन्धि यत् स्वरूपं, तद्वा असैतदात्मकाममाप्तकाममकाम१

रश्मिः ।

प्रकटार्थप्रत्यूहा इति तदिच्छानुसार्यर्थमाहुः अर्थस्त्विति तद्ब्रह्मैवेतीति संबन्धः सत् सद्ब्रह्मेति भाष्यात् विशेषणमत्र सतदिति पाठमङ्गीकृत्याहुः स जीव इति । तदेव एतीति व्याख्यातम् । तत्किमिति । तत्पदार्थो भाष्ये ब्रह्मोक्तं मुख्ये कार्यसंप्रलयेन सामान्यस्तत्पदार्थः किमिति प्रश्नः । प्रधानभूतमित्यर्थोलिङ्गैः इन्द्रियनायकत्वात् । तथेति भगवच्चरित्रत्वम् । अग्रिमग्रन्थमवतारयांबभूवुः । अत इति अस्य ग्रन्थस्यानन्तरं पूर्वोक्तात् अस्मै लोकाय कर्मणे इति गतागतभयात् । वदन् वेदः । श्लिष्टेति सुषुप्तिश्लिष्टतया । अथेति अथाकामयमानो योकामो निष्काम आत्मकाम आप्तकामो भवति न तस्मात्प्राणा उत्क्रामन्ति अत्रैव समवनीयन्ते ब्रह्मैव सन् ब्रह्माप्येति । तदेष श्लोको भवति ।

'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते' ॥ इति ।

तद्यथाहि निर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेद१शरीर१शेतेऽथायमनस्थिकोऽशरीरः प्राज्ञः आत्मा ब्रह्मैव लोक एव सम्राड् इति श्रुतिः । व्याकुर्वन्तीति सुषुप्तिपक्षेण व्याकुर्वन्ति स्म अकामेति । असेति भाष्यस्यार्थः । प्राणस्थितीति न तस्मात्प्राणा उत्क्रामन्ति इति श्रुतेः । भगवत इति । भगवत्कर्तृकत्वस्य जीवे सत्त्वात् । भगवतः सकाशाज्जीवस्य निर्गमने । अर्थेति तथा च हृल्लभ्यत्वयः । समवनीयन्ते इत्यत्रेति भावः । श्लोकेति तत्तस्मिन्मुक्ते मोक्षतत्साधनेयै अत्रास्मिन्नेव शरीरे । अत्रेदं वक्तव्यम् । एतच्छ्लोकीयस्यास्येत्यस्याकामयमानस्येत्यादिना प्रकाशे व्याख्यानं तदसंगतं पाश्चात्यत्वादिति । अतोत्र भ्रमो भाति तस्मात्स्वार्थश्लोकादारभ्य व्याख्यान्तरं रच्यते तदेवेत्यादि । तदेव ब्रह्मैव सत् सद् ब्रह्मेति भाष्यात् । तदवस्थायामन्येषामसत्त्वात् । असन्नेवस्युरिति श्रुतेः । तदिति ब्रह्मकर्मणा सहास्याकामयमानस्य मनो यत्र नितरां सक्तं तल्लिङ्गमेति । कर्मणोन्तमवसानं प्राप्य । अयं भगवान् न च जीवः । कर्ता कर्मसंबद्धश्चेति भाष्यम् । एष उ एव साधु कर्म कारयतीति परात्तु तच्छ्रुतेरित्यत्र कर्तृत्वं कृतिमत्त्वं स्वातन्त्र्यं वा कर्तृत्वम् । 'स्वतन्त्रः कर्ता' इति सूत्रात् । श्लोके तद्ब्रह्मेत्यादि भाष्यं व्याकृतम् । एवम्—

'निर्विण्णानां ज्ञानयोगः कर्मयोगस्तु कामिनाम् ।
न निर्विण्णो नातिसक्तो भक्तियोगोस्य सिद्धिदः' ॥ इति ।

भगवन्निर्गमने हि प्राणानां निर्गमनात् तस्य चेच्छाधीनत्वात् तदभावे इन्द्रियाणि सुषुप्तौ तत्रैव समवलीयन्ते । ब्रह्मैव सन् कूटस्थः सन् । अपिः समु-

भाष्यप्रकाशः ।

स्वरूपमिति सुषुप्तिस्थले पूर्वमुक्तम् तत्प्राणविलयमनुवदति । तत्रहेतुः भगवन्निर्गमन इत्यादि । भगवन्निर्गमन इति । भगवतः सकाशाज्जीवस्य निर्गमने । तस्येति निर्गमनस्य समवलीयन्ते इति समवनीयन्त इति श्रौतपदस्यार्थकथनम् । अस्मिन् पक्षे, ब्रह्मैव सन्नित्यस्यार्थमाहुः ब्रह्मैवेत्यादि । ब्रह्माप्येतीत्यत्र ब्रह्मेति प्रथमान्तम्, एतीत्यस्य कर्तृ । एतीति प्रादुर्भवतीत्यर्थः ।

रश्मिः ।

काम्योक्तकामिनां कर्मयोगः कथितः अन्यद्वयं वक्तुमतः परमथाकामयमान इत्यस्य अर्थमाहुः भगवत इति । पूर्वोक्तं तद्वा अस्यैतदाप्तकाममात्मकाममकाम५स्वरूपमिति सुषुप्तिस्थले पूर्वमुक्तम् । अथाकामयमान इत्यनयानुवदति । अकामयमान इत्युद्देश्यम् । निष्काम इति । अकामपदविवरणम् । ब्रह्मविदाप्नोति परमित्यत्र ब्रह्मपदस्य सत्यं ज्ञानमनन्तं ब्रह्मेति विवरणवत् । अतो अनूद्यानुवादयोः पदत्रयं विधायकम् । भगवन्निर्गमन इति उत्तरत्र हेतुः । तदुक्तम् ।

'शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात्' ॥ इति गीतायाम् ।

एतानि मनःषष्ठेन्द्रियाणि आशयात् कुसुमादेः स्थानात् । जीवनिष्ठमपीदं निर्गमनं परात्तु तच्छ्रुतेरिति व्याससूत्रात् । तस्येति भगवन्निर्गमनस्य । तदभावे इच्छाभावे । इन्द्रियाणीति प्राणपदवाच्यानि । सुषुप्तौ इति सुषुप्तिपदवाच्ये तत्र निर्गुणे ब्रह्मणि समवलीयन्ते भाव्यत्वात् । भक्तिमार्गे तु हृदि प्रकटे भगवति । न च भक्तिमार्गो नास्त्यत्रात्मकामाप्तकामयोः ज्ञानित्वसंभवात् ।

'कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।
इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते' ॥ इति गीतायाः ।

अन्यथा मिथ्याचारप्रसङ्गात् । कर्मयोगाध्यायोक्तत्वेपि ज्ञानमार्गेपकर्षो वाक्यस्य बाधकाभावादिति वाच्यम् । आत्मनः कामो भक्तिरिच्छारूपा यस्येति बहुव्रीहिणा तस्य सूचनात् । स्नेहवदिच्छाया भक्तित्वस्य तृतीयस्कन्धे सत्त्वात् । ब्रह्मैव सन्निति । ब्रह्मैव सन् कूटस्थः सन् ब्रह्माविर्भवतीत्यन्वयः । कूटस्थ इति स च 'ब्रह्मादिपिपीलिकापर्यन्तं सर्वप्राणिबुद्धिरष्टविशिष्टतयोपलभ्यमानः सर्वप्राणिबुद्धिस्थो यदा तदा कूटस्थ इत्युच्यते' इति सर्वोपनिषच्छ्रुत्युक्तः । अत्रैकं क्रियाविशेषणम् । त्रीणि प्रथमान्तानि पदानि । अष्ट—

'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा' ॥

इति गीतोक्ताः प्रकृतयः । इदमेव कपालाष्टकम् । चलनायालं भवतीतीदमष्टकम् बुद्धेर्बुद्धिस्थत्वं तु बहुव्रीहेर्नास्ति । ननु सर्वोपनिषदि सत्यादिरूपाण्युक्तानि । तान्येवकारेण व्यावर्त्य ब्रह्मपदस्य कूटस्थे वर्त्तौ किं मानमिति चेन्न समाख्याप्रामाण्यात् ब्रह्मोपनिषदुक्तलक्षणस्यैव मानत्वात् । तथा हि । दिव्ये ब्रह्मपुरे विरजं निष्कलं शुभ्रमक्षरं यद्ब्रह्म विभातीत्युक्त्वा किंचिदन्यं निरूप्य कपालाष्टकमाह कपात्मानं पालयतीति कपाले वा सूर्यमादिः पूर्वोक्तः तमष्टं निविशतेऽतोष्टविशिष्टतयोपलभ्यमानः अक्षरात्मकं जगदिति प्रसिद्धत् । ब्रह्मादिपिपीलिकापर्यन्तं सर्वप्राणिबुद्धिः सर्वेषां प्राणिनां

चरमे। सह स्थिते जीवे ब्रह्माविर्भवतीत्यर्थः। जीवे ब्रह्माविर्भावो न संगत इति तत्प्रतिपादनार्थं श्लोकः। जीवोपदेशप्रकरणाभावेन सिद्धवदुच्यनाच्च जीवन्मुक्त-वस्था। नाप्यसंप्रज्ञातसमाधिः। मतान्तरत्वात्। ब्रह्मप्रकरणत्वाच्च जीवस्य तयो,

भाष्यप्रकाशः।

यदा सर्वे प्रमुच्यन्त इति श्लोकप्रयोजनमाहुः जीव इत्यादि। नन्वत्रोत्क्रमणस्यैवोपक्रान्तत्वा-ज्जीवन्मुक्तावस्थैवाकाममयमानस्य वाच्या, न तु मुमुक्ष्ववस्थेति शङ्कायां मुमुक्ष्ववस्थाज्ञापनाय ता दूषयन्ति जीव इत्यादि। यथा हि काठके, अन्यच्छ्रेय इत्यादिकं जीवोपदेशो, न तथात्र जीवस्वरूपोपदेशः। येन तदनुरोधाज्जीवन्मुक्तिरत्रोच्येत। किं तु, सिद्धवदुच्यते। अतो न सा। अथो खल्वाहुरित्यादिनोक्तस्य काममयपक्षस्य मतान्तरत्वादकामोऽपि तेनैव मतेनोच्यत इति

रश्मिः।

बुद्धिः एकमेव परं ब्रह्म विभाति हृद्याकाशे तद्विज्ञानमाकाशमिति श्रुतेः। बुद्धिर्विज्ञानरूपिणीति वाक्यं सर्वप्राणिनां बुद्धयः स्थाः यस्मात् तिष्ठन्ति इति स्थाः 'आतोऽनुपसर्गे कः' किं च भक्तिमार्ग-स्याकामपदेन निरासाज्ज्ञानमार्गीयं रूपं कूटस्थपदेनोक्तम्। प्राज्ञपदाच्च। तदुक्तं तृतीयस्कन्धे सप्तमे 'यत्सेवया भगवतः कूटस्थस्य मधुद्विषः' इति श्लोके कूटस्थस्येति ज्ञानमार्गानुसारीति तद्व्याख्यायां भक्तिमार्गीयरूपस्यासंभवाच्च। अपिरिति अव्ययादाप्सुप इति न सुपो लुक् अनुकरणशब्दत्वात्। 'उभेऽनेरसंभूतास्यानभागवीप्सासु प्रतिपर्यनवः' इतिवत्। समुच्चितार्थमाहुः सहेति। प्रकृतमनुसरामः। जीव इत्यादीति। न संगत इति तयो यो देवानां प्रत्यबुध्यत स एव तदभवत् इति बृहदारण्यके न जीवे ब्रह्माविर्भावोऽपि तु प्रत्यबुध्यतात्मानं यथावद् ब्रह्मांशत्वेन प्रतिबोधितवान्। तत्सर्वात्मकं ब्रह्माभवदित्यर्थः। ता इति जीवन्मुक्त्याद्या अवस्थाः। जीव इत्यादीति। जीवो इत्यादीति स्थिते 'एचोयवायावः' 'लोपः शाकल्यस्ये'ति सूत्राभ्यां अवयकारलोपश्च। काठक इति द्वितीयवल्ल्यां 'अन्यच्छ्रेयोऽन्यदुतैव प्रेयः ते उभे नानार्थे पुरुषं सिनीतः तयोः श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते' इति श्रुतिः। श्रेय इति अतिशयेन प्रशस्यम्। द्विवचने ईयसुन् 'प्रशस्यस्य श्रः' श्रेयो मुक्तौ शुभे धर्मेऽतिप्रशस्ते च वाच्यवत् इति सिनीते सिञ् बन्धने क्या. उ. अ. सिन्वाते स्वादिरपि उ. अ. प्रेयः पदार्थः पुत्र पुत्रादिः।

'श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोपि बहवो यं न विद्युः।
आश्चर्यो वक्ता कुशलोस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः'॥

इति जीवनिरूपणं पुनर्जन्ममापद्यते मे इति मृत्युना स्ववशापत्त्युक्तेः अत्रैव गुहाहितं गह्वरेष्ठं पुराणमिति श्रुतिः। अग्रे 'नायं हन्ति न हन्यते' इत्युक्त्वा 'अणोरणीयान् महतो महीयानात्मास्य जन्तोर्निहितो गुहायाम्' इति जीवन्मुक्तदशोक्ता। तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमान-मात्मनः इति। अक्रतुरिति जीवोपदेशः। वीतशोक इति जीवन्मुक्तोपदेशः। तदुक्तमन्यच्छ्रेय इत्यादिकं जीवोपदेश इति। नापीत्यादिभाष्यं विवृण्वन्ति स्म अथेति। मतेति। आहुरित्यस्य क्रियापदस्य श्रुत्यन्यकर्तृकत्वादिति भावः। असंप्रेति। तेन संप्रज्ञातसमाधिः मुमुक्ष्ववस्था च सूच्यते। संप्रज्ञातसमाधिरकामादिपदतात्पर्यार्थपक्षे मुमुक्षित्वमभिधेयार्थपक्षे इति विवेकः। किं च अन्योक्ति प्रकारः। वेदवेदान्तसांख्ययोगपञ्चरात्रपाशुपतमतरूपषड्दर्शनेषु समाधेर्योगशास्त्रीयत्वमपि मतान्तरत्वं न कश्चिद् व्याख्याने संप्रज्ञातस्य मतान्तरत्वात्तात्पर्यार्थविरोधः शङ्कयः प्रतीयमेव

मुक्तिः फलम्। उत्क्रमण एव ब्राह्मणस्याप्युक्तत्वात्। तथयेति सुषुप्तशारीरम्। अनस्थिक इत्यादि, सम्राडित्यन्तमुपसंहारः।

भाष्यप्रकाशः।

तेनासंप्रज्ञातसमाधिरपि न वक्तुं शक्यः। मुख्यं प्रकरणं ब्रह्मणोऽवान्तरं चोत्क्रमणस्येति स्वतः स्वरूपावस्थानरूपा सद्योमुक्तिरपि न फलत्वेन वक्तुं शक्या। तत्र हेतुः उत्क्रमण इत्यादि। ऊर्ध्वोच्छ्वासीभवतीत्युत्क्रमण एवोपक्रान्ते शारीरब्राह्मणस्योक्तत्वात्। तथाच तदनारत्य

रश्मिः।

त्यागायोगाच्छास्त्रान्तरीयस्य ग्रहणे बाधकाभावात्। न च संप्रज्ञातसमाधेः सिद्धिहेतुत्वेनामोक्षफलकत्वात् अप्रतिषिद्धमनुमतं भवतीति न्यायासंचारात्कुतः प्राप्तिरिति शङ्क्यम्। योऽकाम इति श्रुतावकामादिपदानां तात्पर्यार्थस्याप्यङ्गीकारात्। तत्र च भक्तिनिवेशेन निर्गुणब्रह्माविर्भावमात्रेणानिर्वाहान्न्यायप्राप्तं समाधिमुररीकृत्य भक्तेः समाधेयत्वात्। शास्त्रान्तरीयसिद्धिफलकत्वमात्रत्यागात्। एकादशे पञ्चदशाध्याये।

'निर्गुणे ब्रह्मणि मयि धारयन् विशदं मनः।
परमानन्दमाप्नोति यत्र कामोऽवसीयते' ॥

इति वाक्ये सिद्धीनामकथनात्। प्रत्युत परमानन्दपदेन भक्तेरनुग्रहजन्यायाः सत्त्वोक्तेर्विद्वन्मण्डनोक्तदिशा निर्गुणसगुणयोरभेदसिद्धत्वेनाकामादिपदतात्पर्यार्थे भक्तिहेतूक्तदिशाऽनुग्रहेण भक्त्या भक्तमनोरथपूरकरूपफलकत्वसंभवेन सिद्धिफलकत्वासंभवात्। अप्रज्ञातसमाधेः मोक्षफलकत्वेन मतान्तरीयत्वं लक्षणं तु सम्यक् संशयविपर्ययानध्यवसायरहितत्वेन न ज्ञायते प्रकर्षेण विशेषरूपेण स्वोपास्यस्वरूपेण ज्ञायते भाव्यस्वरूपं येन स संप्रज्ञातसमाधिर्भावनाविशेषः। भावना हि भाव्यस्य विषयान्तरपरिहारेण चेतसि पुनः पुनर्निवेशनं तथा च सांख्यप्रवचनसूत्रवृत्तौ 'समाधिसुषुप्तिमोक्षेषु ब्रह्मरूपतः' इति। ब्रह्मप्रेति भाष्यं विवृण्वन्ति स्म मुख्यमिति। स्वत इति। ईश्वरविचारितस्वरूपावस्थानरूपसद्योमुक्तेर्यद्यपि सत्त्वं तथापि जीवविचारितसद्योमुक्तिः सांख्ययोगाभ्यां बालबोधे उक्ता सा स्वतः स्वीयसाधनैः परतः सद्योमुक्तिर्विष्णुशिवाभ्यां ताभ्यां फलदानोक्तेः तद्वदीश्वरविचारितसद्योमुक्तौ स्वतस्त्वपरतस्त्वयोः विवक्षां कृत्वा परतः सद्योमुक्तिर्नास्ति सत्त्वतमोगुणावैशिष्ट्यात्। ब्रह्मप्रकरणाच्च स्वतोपि किं तु ब्रह्मणः सकाशात्। सापि न प्राज्ञत्वेन सुषुप्तिसाक्षित्वमात्रकार्यकारित्वेन मुक्तिदत्वाभावात्। स्वतः स्वरूपावस्थानरूपा सद्योमुक्तिरपि न फलत्वेन वक्तुं शक्येत्यर्थः। अपिपदेन परतः स्वरूपावस्थानरूपा सद्योमुक्तिः। ननु तर्हि मा भूतादीश्वरविचारितमुक्तौ स्वतस्त्वपरतस्त्वे मास्तु ब्रह्मप्रकरणस्य हेतुत्वं प्रसङ्गात् सद्योमुक्तिरस्तु इत्याशङ्क्य अन्यं हेतुमाहुरित्याहुः तत्रेति। हेतुः अन्यो हेतुः ऊर्ध्वेति ज्योतिर्ब्राह्मणं समाप्येति शेषः। ऊर्ध्वोच्छ्वासीभवतीति ज्योतिर्ब्राह्मणं समाप्यशारीरब्राह्मणे उपक्रान्ते उत्क्रमणे तमुत्क्रामन्तमित्याद्युक्तोत्क्रमणे एव शारीरश्चासौ ब्राह्मणश्च 'ब्रह्म जानाति ब्राह्मणः' तस्योक्तत्वात्। ब्राह्मणोक्तिस्तु संज्ञानमेवान्ववक्रामति स एष ज्ञः सविज्ञानो भवतीति श्रुतिवाक्याभ्याम्। तथा च जीवब्रह्मणोः कर्मत्वकर्तृत्वव्यपदेशात् ऐक्याभावाच्च प्रसङ्गात्सद्योमुक्तिः फलत्वेनेति भावः। भाष्यार्थस्तु उत्क्रमण एव शारिपदोक्तस्य ब्राह्मणस्य अपिपदेन जीवस्य चोक्तत्वादिति अत्र क्रममुक्तिः सूच्यते परं तु अत्रैव समवलीयन्त इति श्रुतिविरुद्धा न

भाष्यप्रकाशः ।

अकामत्वमात्रेण रूपेण उत्क्रान्तिशून्या सद्योमुक्तिरपि न वक्तुं शक्येत्यर्थः । अतः सुषुप्तिप्रकरणाभावेऽप्यकामत्वादिना सौषुप्तिकलिङ्गेन, तद्यथाऽहिनिर्ल्वयनीत्यग्रिमवाक्येऽपि शेत इति शयनलिङ्गेन चावान्तरमुत्क्रमणप्रकरणं बाधित्वा सुषुप्तिरेव जनकेन ज्ञातव्या । तदा तु न वदिष्यत इति मदभीष्टसिद्धिः । अथ लिङ्गस्य मुक्त्यवस्थासाधारणत्वात् तदनादृत्य प्रकरणबलेन ज्ञास्यति तदा तु स्वकृतवरदानानुरोधाद् विशिष्य वक्तव्यमित्याशयेन, अथायमनस्थिकोऽशरीरः प्राज्ञ आत्मा ब्रह्मैव लोक एव सम्राडित्यन्तं श्लिष्टवचनमुपसंहारः । अत्र श्रुतावनस्थिक इति स्थूलशरीरराहित्यम् । तच्च जीवन्मुक्तस्य सुषुप्तस्य चाभिमानाभावात् तुल्यम् । प्राज्ञ आत्मेति सुषुप्ति-

रश्मिः ।

विवक्षिता । शांकरा असंसारिपरत्वेन शारीरब्राह्मणं व्याकुर्वन्ति तं निषेधन्ति स अत इति । तद्यथेति भाष्यं व्याचक्षुः तद्यथेति । तद्यथेति श्रुत्यर्थस्तु तत् तत्र दृष्टान्तः यथाऽहिर्नागः तस्य निर्ल्वयनी स निलीयते यस्यां सा निर्ल्वयनी अहित्वक् तथा च परोक्षवाद इति भावः । निलयनीत्यस्य निर्ल्वयनीति लूयते इति लूः देहः क्विप् । निर्गता लुवो निर्लू रहितत्वक् निर्लूरयनी निर्ल्वयनी । स्त्रीत्वविवक्षायां ङीप् वल्मीके तत्स्थाने मृता सर्पदेहत्यक्ता शयीत स्वप्नं कुर्वीत । मृता मृतः प्रत्यस्ता प्रत्यस्तः सुपोर्व्यादेशः । स्वप्नस्तु माया । सदसतीं मायां कुर्वीत । इदंशरीरं सुषुप्तशरीरम् । शेते इत्यन्वयो भाष्ये । एवेति जीवन्मुक्त्याद्यवस्था व्यवच्छिनत्त्येषः । न तु संप्रज्ञातसमाधिम् । तस्य तात्पर्यार्थविषयत्वेनाभिधेयार्थे प्रसक्त्यभावात् । तदा त्विति स मेने न वदिष्य इतीति श्रुतिः । स याज्ञवल्क्यो न वदिष्य इति मेने । यद्वाऽनेन राज्ञा सहाहं वदिष्ये स च मे वदिष्यत इति पुरुषव्यत्ययेनान्वयः । पूर्वार्थे मम याज्ञवल्क्यस्याभिप्रायसिद्धिः । राज्ञोधिकाराभावान्न वदिष्य इति मेने याज्ञवल्क्यः स इति । अनस्थिक इत्यादिभाष्यमवतारयामासुः । द्वितीयार्थमङ्गीकृत्य अथेति । तदनेति सुषुप्तिमभिधेयामनादृत्य तात्पर्यविषयभूतं संप्रज्ञातसमाधिं प्रकरणं ब्राह्मणस्तद्बलेन ज्ञास्यतीत्यर्थः । स्वकृतेति । स्वेन याज्ञवल्क्येन कृतो यो वरदानानुरोधस्तस्मात् । स ह कामप्रश्नमेव वव्रे तंहास्मै ददाविति श्रुतिरत्र स राजा तं कामप्रश्नं वरमस्मै राज्ञे याज्ञवल्क्यो ददौ इति वरदानं तस्यानुरोधात् । अथायमिति अथायं संप्रज्ञातसमाधिस्थः शेते इति पूर्वेणान्वयः । अनस्थिक इत्याद्युपसंहारः अनस्थिक इत्यादि सम्राडित्यन्तमुपसंहार इति भाष्यात् । श्लिष्टेति संप्रज्ञातसमाधिरूपमुक्तिसद्योमुक्तिरूपमुक्तिसंश्लिष्टवचनं यथा भवति तथोपसंहारः समाप्तिः । श्लिष्यमुच्यतेऽनेति श्लिष्टवचनं वा । जीवन्मुक्तपदं संप्रज्ञातसमाधियुक्तस्य लक्षकं जीवन्मुक्त्याद्यवस्थानां भाष्ये प्रत्याख्यानात् । श्रुत्यर्थस्तु अथ तदनन्तरं अयं संप्रज्ञातसमाधिस्थः शेते इत्यन्वयः । उपसंजहार । अनस्थिक इति । अनस्थिकः सर्पवत् तत्र निर्ममाहंकृतित्वात् अशरीरश्च तत एव । प्राज्ञः सुषुप्तिसाक्षी आत्मा परमात्मा । अत्र संप्रज्ञातसमाधेर्निवेशादात्मपदात् जीवांशमादायाह मुक्तिपक्षे । ब्रह्मैवेति जीवो ब्रह्मैव । सुषुप्तिपक्षे लोकत्वमक्षरत्वम्, जीवो लोकोऽक्षर एव ह सम्राडिति होवाच याज्ञवल्क्य इति । अत्र पूर्वं शरीरं शेते इति शरीरस्य स्वप्नानुकूलव्यापारवत्त्वमुक्तं तत्र स्वप्नो माया माया तु सदसती तत्र कः सदंशः कोऽसदंश इति विचारः । अनस्थिकोऽशरीर इत्यत्र [हेतुगर्भं विशेषणमन-

१. स्रोः ।

भाष्यप्रकाशः।

साक्षिपरमात्मनोर्वाचकमित्यवस्थाद्वयसाधारणम्। तत्र आत्मा इत्यनेन जीवात्मानमनूद्य, ब्रह्मैव लोक एवेति विधत्ते। तत्र मुक्तिपक्षे जीवस्य ब्रह्मत्वविधानम्। सुषुप्तिपक्षे लोकत्वविधानम्। सम्राडिति राज्ञः संबोधनम्। अतोऽत्र श्लिष्टतयोपसंहार इत्यर्थः। एतेन सुषुप्तिव्याख्याने बीजं प्रदर्शितम्। याज्ञवल्क्यभयानुरोधादिदमेतावत् सुषुप्तिपरत्वेन व्याख्यातम्। अग्रे च वरदानुरोधान्मुक्तिपरत्वेन व्याख्यास्यत इति न कोऽपि क्वापि संदेहः। एतदग्रे, सोऽहं

रश्मिः।

स्थिकत्वादशरीर इति] अनस्थिकत्वांशे सती माया अस्थीनामनस्थिकदेहेष्वदर्शनात्। अत्रानस्थिक-पदात्तदर्शनमुक्तं तथा च न विद्यन्तेऽस्थीनि यस्मिन् सोनस्थिकः। दर्शनविषयत्वेन संप्रज्ञातसमाधिस्थस्य न विद्यन्तेऽस्थीनि। ऋतेर्थं प्रतीयमानत्वाच्च माया। सतीत्वं तु यदस्ति यन्नास्ति तदेव विष्णुरित्येवं विष्णुपुराणे दर्शनान्नास्तीति प्रतीतिविषयस्य विष्णुत्वेन मृत्युव्यतिरिक्तत्वात्। शरीरांशेप्येवं सतीत्वं न विद्यते दर्शनविषयत्वेन शरीरं यस्मिन्निति।

'अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति'॥

इत्यशरीर आत्मा अन्यजीवानां द्रष्टृत्वं तु ब्रह्ममेव तद्यदि ह्यस्थिरशरीरविषयकं दृष्टं तदा असतीप्रतीतिविषयस्य भिदांशे मायात्वेन 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इति श्रुतेः। 'न प्रतीयेत चात्मनि' अस्थि शरीरे मायेति पुराणमतम्। तथा च सर्वोपनिषत् 'अनादिरन्तर्वर्ती प्रमाणाप्रमाणसाधारणा न सती नासती स्वयमविकाराद्विकारहेतौ निरूप्यमाणेऽसती अनिरूप्यमाणे सती लक्षणशून्या सा मायेत्युच्यते। अनादिरिति देवामरन्यायेन। भिदारूपेण प्रमाणाप्रमाणविषयत्वेन साधारणा भिदानां दोषसहितदोषरहितचक्षुरादिग्राह्यत्वात्। ज्ञानकाश्येति वाक्यात्। ज्ञानतुल्यत्वमाह नेत्यादिनाऽविकारादित्यन्तेन। विकारेति षड्भावविकारास्तेषां हेतावस्थिशरीरादौ निरूप्यमाण इति पूर्वं व्याख्यातम्। लक्षणेत्यत्र मकारागमः लक्षणशून्या। इयमप्रसिद्धत्वाददृश्यमाना अतो 'नास्ति श्रुतिषु तद्वार्ता दृश्यमानासु कुत्रचित्' इति निबन्धो निर्दोषः। तथा च शरीर शेत इत्यत्र शरीरनिष्ठः सदसती माया भिदा वा माया तदनुकूलो व्यापार इत्यर्थः। अयं व्यापारोऽत्रेति इदं पदवाच्ये परमैश्वर्यकर्त्राश्रये इह लोके वा शरीरे वास्ति अत्र ब्रह्म समश्नुत इति श्रुतेः। प्रकृतमनुसरामः। तत्रेति संप्रज्ञातसमाधिस्थस्य सद्योमुक्तस्य सुषुप्तस्य वा परमात्मनि। अस्यां दशायां परमात्मवाचकात्मपदस्य जीवात्मवाचकत्वमप्यैक्यात्। अतः पूर्वं परमात्मवाचकत्वस्याप्यात्मपदस्य जीववाचकत्वमित्याहुः आत्मा इत्यनेनेति। एवकारद्वयतात्पर्यमाहुः तत्र मुक्तीति सद्योमुक्तिपक्षे संप्रज्ञातसमाधिपक्षेपि। ब्रह्मत्वेति विरुद्धधर्माश्रये ब्रह्मत्वविधानम्। लोकत्वेति अक्षरत्वविधानम्। अत इति अवस्थाद्वयसाधारण्यात्। श्लिष्टतया सद्योमुक्तिसंप्रज्ञातसमाधिश्लिष्टतया। एतेनेति। प्राज्ञपदेन। कोपीति भाष्ये सुषुप्तेरुक्तत्वात् संप्रज्ञातसमाधिस्थो व्याकर्तव्यो नो वा व्याकर्तव्य इति संदेहः। क्वापीति श्लिष्टतयोपसंहारेपि याज्ञवल्क्यभयानुरोधवरदानानुरोधाभ्यां श्रौताभ्यां वस्तुतस्तु संप्रज्ञातसमाधिरपि भाष्ये जीवन्मुक्त्यादिनिराकरणात् सूचितैव। तेनेति प्रभाभावेन। जीवन्मुक्तिपदलक्षितसंप्रज्ञातसमाधेः सुषुप्तेः सद्योमुक्तेश्च संश्लेषे मोक्षप्रश्नस्य पौनःपुन्यस्यासंगतिमाशङ्क्याहुः श्लोका इत्यादि भाष्याभासं एतदग्र इति। लिङ्गस्येति। जीवन्मुक्त्याद्यवस्थाप्रत्याख्यानेन

श्लोका अत्र त्रयोदश सर्वनिर्धारकाः । आद्यो ब्रह्मविद्गतेः । एष इति सुषुप्तौ नाडीत्वात् पञ्चवर्णाः । अन्धन्तम इति द्वाभ्यामनेवंविदो निन्दा । तदेव सन्त इति बुद्धिमतां वचनम् । आत्मानमिति वैराग्यम् । यस्यानुवित्तिरिति नव-

भाष्यप्रकाशः ।

भगवते सहस्रं ददामीति जनकवाक्यम् । तत्र न पुनर्मोक्षप्रश्नः । तेन एवं श्लिष्टप्रयोगेऽपि जनकेन लिङ्गस्य साधारण्यं प्रकरणस्योत्क्रमगोचरत्वादसाधारण्यं चावगत्य, अथाकामयमान इति निष्कामप्रकरणं मतान्तराद् विविक्तत्वेन सिद्धान्ते निवेश्य तत्र सद्योमुक्त्यवस्थामवधार्य, ब्रह्माप्येतीत्यत्र ब्रह्मपदं च द्वितीयान्तमवगत्य, तत्रास्य ब्रह्मभूतस्य लयं चावगत्य, श्लोकमप्येतदवस्थाप्रतिपादकत्वेनावगत्य, अहिनिर्ल्वयनीदृष्टान्तं मृतशरीरपरमेवावगत्य, अप्राज्ञ आत्मा ब्रह्मैवेत्यस्य प्राज्ञत्वादयमात्मा ब्रह्मैव सन् लोक एव ब्रह्मापीतो ब्रह्मलोकात्मको भवतीति निश्चितवान् । तेन जाग्रद्दशायां हृदयस्थसर्वकामप्रमोको मोक्षसाधनत्वेनावधारित इति बोधितम् । तदा याज्ञवल्क्योऽपि तस्य सम्यग्बोधनाय सर्वं सिद्धान्तमाह तद्विवृण्वन्ति श्लोका इत्यादिना । अत्र त्रयोदशेति । एकोपक्रमगतास्त्रयोदश । आद्यो ब्रह्मविद्गतेरिति ब्रह्मविदः सद्योमुक्तिमुक्त्वा ततो न्यूनाधिकारिणो ब्रह्मविदः क्रममुक्तेर्बोधकः, 'अणुः पन्था' इति श्लोकः । तस्मिन् शुक्लमिति श्लोकस्तु निष्क्रमणमार्गबोधक इत्याहुः एष इत्यादि । बुद्धिमतां वचन-

रश्मिः ।

तस्यैव सुषुप्तिसद्योमुक्तिसंप्रज्ञातसमाध्यवस्थासूचकस्य लिङ्गस्य । असाधारण्यमिति । सुषुप्तिसंप्रज्ञातसमाधिस्थसद्योमुक्तिषु साधारण्याभावः । उत्क्रमणाभावात् । उत्क्रम्य तोयादिवासे तु साधारण्यम् । सद्येति सद्योमुक्तिर्न मूलत्वेन । द्वितीयान्तमिति ननु ब्रह्मैव सन् कूटस्थः सन् ब्रह्माविर्भवतीति भाष्यव्याख्यानात् कथमेवमिति चेन्न ब्रह्मपदं च प्रथमान्तमवधार्येति पूर्वेणान्वयः । आविर्भावमित्येवमाविर्भवतीति भाष्यस्य आविर्भावं करोतीत्यर्थं कृत्वाध्याहार्याविर्भावपदं द्वितीयान्तमित्यर्थः । तत्रास्येति तत्रापिपदसमुच्चिते जीवेऽस्य परमैश्वर्यकर्त्राश्रयस्य कूटस्थब्रह्मभूतस्य ब्रह्मणो लयं श्लेषं चावगत्येत्यर्थः । श्लोकमपीति अमृतपदं मुख्यवृत्तम् । 'भगवानेव हि फलं स यथाविर्भवेद्भुवि' इति निरोधलक्षणग्रन्थात् । अयमिति । यथायं शेते इत्यत्रायमित्युक्तः । एवेति उपसंहारव्यवच्छेदक एवशब्दः । उपसंहारेन्यान्वयायाहुः प्राज्ञेति । ब्रह्मैव कूटस्थः सन् ज्ञान्युपास्यः सन् लोकोऽक्षर एष एव आत्मैव । कीदृश इत्यत आह ब्रह्मापीति ब्रह्मा अपि । अपि पदार्थे जीवे इतः प्राप्तः । नपुंसकस्य पुंस्त्वेन निर्देशोऽवताररूपसंग्रहाय 'कृष्णस्तु भगवान् स्वयम्' इति वाक्यात् । अत्र संप्रज्ञातसमाधिरप्यूह्यः । भावार्थमाहुः ब्रह्मेति । ब्रह्मकर्तृकलोकात्मनि मनसि यस्य जीवस्य स तथोक्तः । इति बोधितमिति जनकेन मोक्षार्थिना कर्त्रा पुनर्मोक्षप्रश्नाभावेन कारणेन मया बुद्धमिति बोधितम् । अन्यथा न दद्यादिति सहस्रं मोक्षार्थित्वादतः संप्रज्ञातसमाधेर्मोक्षत्वं व्यज्यते तदुक्तम् । 'यं लब्ध्वाप्यवमन्येत समाधिः परिकीर्तितः' इत्यमृतबिन्दूपनिषदा गीता चात्मसंयमयोगाध्यायस्था ।

'यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति' ॥ इत्युपक्रम्य,
'स निश्चयेन योक्तव्यो योगो निर्विण्णचेतसा' इति ।

सर्वमिति वरदानानुरोधात्सर्वं सिद्धान्तम् । एकोपेति एकश्वासावुपक्रमश्चारम्भस्तत्र

रश्मिः ।

गतास्तदुपक्रमसामीप्यं गताः सर्वसिद्धान्तनिर्धारकाः वरदानानुरोधाद्याज्ञवल्क्येनोक्ताः इति होवाच याज्ञवल्क्य इति वक्ष्यमाणश्रुतेः । अत्रात्मवदथाकामयमान इत्यादिना ज्ञानसाध्या सुषुप्तिः कारिकायां संप्रज्ञातसमाधिः सूचिता न जीवस्य सद्योमुक्तिः फलमिति भाष्ये सद्योमुक्तिः फलत्वेन न विवक्षितेति सूचितमतः परं ब्राह्मणद्वयार्थस्य निर्धारणं चकार । पूर्वोक्तपित्र्यादिरूपदेहार्थं लोकानुदाजहार । तदप्येते श्लोका इति तत्तस्मिन्नात्मकामस्य ब्रह्मविदः सद्योमुक्तिः तात्पर्यार्थे संप्रज्ञातसमाधिर्भक्तस्य सुषुप्तिर्जीवस्य ज्ञानिन इत्यर्थे ब्राह्मणद्वयं तन्निर्धारकाः श्लोका भवन्ति । तस्याद्यं श्लोकं कर्ममार्गस्य तदेव सक्तदिति श्लोकेन 'गतागतं कामकामा लभन्ते' इत्युक्तत्वात् भक्तज्ञानवाचकब्रह्मवित्पदघटितं किं च हिरण्यगर्भस्य कर्मठस्य ब्रह्मवित्त्वमुक्तत्वात् अकामयमानो विधिरतः कर्मठेषु विधिमात्रबोधक-ब्रह्मवित्पदघटितं विवृण्वन्ति स्म ब्रह्मविद इति संज्ञानमेवान्ववक्रामति स एष ज्ञ इत्युक्तः सद्योमुक्तस्तस्य । न्यूनाधिकारित्वं ब्रह्मव्यसनाभावेन द्वितीयस्कन्धोक्तं 'यदि प्रयास्यन्नृप पारमेष्ठ्यं वैहायसानामुत यद्विहारम्' इत्यादिभिर्लोकदिदृक्षुत्वमुत्क्रम्येति लिङ्गात्क्रममुक्तिः 'अणुः पन्थाः विततः पुराणो माऽस्पृष्टोनुवित्तोमयैव । तेन धीरा अपि यन्ति ब्रह्मविदः उत्क्रम्य स्वर्गं लोकमितो विमुक्ताः' इति श्लोकः अणुः सूक्ष्मः भगवत्कृपारूपः पन्थाः मार्गो वितरो विततः कर्मज्ञानभक्तिरूपेण विस्तृतः पुराणः प्राचीनः 'मार्गास्त्रयो मया प्रोक्ताः नृणाम्' इति वाक्यात् । पुरा अणोर्जीवस्य वा । मां याज्ञवल्क्यं स्पृष्टः संबद्धः संबन्धानन्तरं मयैव वित्तो ज्ञातः तेन शरणमारभ्य आ सर्वात्मभावम् । धीराः विद्वांसः आवृत्तचक्षुष्काः प्रत्यगात्मेक्षकाः अपियन्ति अप्ययं सुषुप्तिं कुर्वन्ति । अत्रैव सद्योमुक्तिं फलमिन्नां पूर्वोक्तरीत्या प्राप्नुवन्ति ब्रह्मविदो लोकभोगकामा ब्रह्मादयो भक्ताः लोकमात्म-सुखाभिन्नमक्षरं 'प्रभुत्वेन हरेः स्फूर्तौ लोकत्वेन तदुद्भवः' इत्युक्तं यन्ति भगवत्सेवोपयोगिदेहाना-मक्षरत्वात् । ज्ञानिनो ब्रह्मवित्पदवाच्याः स्वर्गमात्मसुखं यन्ति । 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इति सूत्रात् । इतो देहात् विमुक्ताः अकामो निष्काम इत्यस्य सूचितार्थे क्रियमाणे भक्ता लभ्यन्ते तेषां भक्तिभिः प्रसन्ने हरौ भाष्यसूचितसंप्रज्ञातसमाधिः श्रुत्युक्तसमाधिलक्षणात् । ननु पूर्वं लोकः पश्चात्समाधिः पूर्वं समाधिः पश्चाल्लोको वा मोक्षाय प्रश्नात् । मैवं, योगं युञ्जानस्य समाधेः पूर्वप्रज्ञायामन्तर्भावात् तं विद्याकर्मणी समारभेते पूर्वप्रज्ञा चेति श्रुत्या सहगमनात् । तत्र साधन-दशायां तनुवित्तजसेवामानसीसेवोक्तसमाधिरूपा यदि फलरूपा सत्यन्यफलत्वेन न ग्राहयति । तदा कर्मनिर्हारिणी कर्मपदवाच्योक्तश्रुतौ विद्या तु 'ज्ञानी चेद्भजते' इति वाक्यात् ज्ञानं माहात्म्यज्ञानमैक्यज्ञानं सर्वभूतेषु भगवज्ज्ञानं भक्तेषु भगवद्भक्तत्वेन ज्ञानं तत्सेवा चेति । तत्र सत्ये भक्तजीवस्यापि ज्ञाने संप्रज्ञातस्यानन्ते समाधेरिति बोध्यम् । किं पुनः 'रसो वै सः' इति श्रुतेः सर्वा भक्तिरससामग्री संकर्षणात्मकवेदात्मकानन्तरूपेति सर्वं रसस्वरूपं सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुत्युक्तम् । तस्य प्राप्त्यात्र मार्गे संप्रज्ञातसमाधेर्मोक्षत्वात् । फलानुरोधेन सर्वा साधनसामग्री कल्प्या । तदुक्तं षष्ठाध्याये गीतायाः ।

'युञ्जन्नेवं सदात्मानं योगी नियतमानसः ।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति' ॥ इति ।

न चायं योगः आत्मसंयमयोगाध्यायस्थत्वात् । तदुक्तम् । 'मदर्थेऽर्थपरित्यागो भोगस्य च सुखस्य च' इत्येकादशस्कन्धे । मत्संस्था मम संस्था भक्तिर्यत्र तनुवित्तजरूपा साधनत्वेन ताम् । तत्संस्थस्यामृतत्वोपदेशादिति शाण्डिल्यसूत्रे संस्थापदस्य भक्तिवाचकत्वात् । तथोपसंहारे ।

रश्मिः ।

'योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः' ॥ इति ।

पूर्वोक्तसमासं सूचयति । शान्तिरिति क्तिजन्तं शाम्यतीति शान्तिरिति भाष्यसूचितार्थसंप्रज्ञात-समाधिसंवाद्यर्थोऽतोन्यटीकासु यथास्थितोर्थः । प्रातिलोम्येनाथ अकामयमान इत्यादिश्रुतीनां निर्धारार्थः कारिकयोक्तः । उत्क्रमणे नाडीनामुपयोगात्ता वा अस्यैता इत्यारभ्य परमो लोक इत्यन्तं निर्धारयामास कारिका । तदाहुः तस्मिन्निति । श्लोकस्तु तस्मिञ्छुक्लमुत नीलमाहुः पिङ्गलं हरितं लोहितं च । एष पन्था ब्रह्मणा ह्यनुवित्तस्तेनैति ब्रह्मवित्तैजसः पुण्यकृच्चेति । तस्मिन् मोक्षमार्गे । तैजसः स्वप्नसाक्षी स चारम्भ उक्तः सुषुप्तेः पूर्वं सुषुप्तिकथनं फलनिरूपणेऽनुवादाय । तेन पूर्वकारिकाविषयः । आनन्दमीमांसा निर्गुणस्य सुषुप्तिरूपस्यानन्दनिरूपणं फलत्वाय । तस्यानुभवा-रूढत्वाय पुनः प्रश्नः । पुनरपि मोक्षार्थं जीवोपक्रमेण ब्रह्मोपसंहारेणाह पापः पापेनेत्यन्तेन । तत्रान्येभ्यो वा भूतेभ्यः इत्यत्र वाकारं गर्हायां स्वीकृत्याधोनिनीषया क्रोधकर्मकर्तॄणां निन्दा तदाहुर्भाष्येऽन्धन्तम इति ।

'अन्धन्तमः प्रविशन्ति ये संभूतिमुपासते ।
ततो भूय इव ते तमो य उ संभूत्याᳪरताः' ॥
'असुर्या नाम ते लोका अन्धेन तमसावृताः ।
तांस्ते प्रेत्याभिगच्छन्त्यविद्वांसोऽबुधा जनाम्' ॥

तमो मृत्युः ग्लानिकर्तृ काङ्क्षाकर्तृ वा । प्रविशन्ति । संभूतिमविद्याम् । भगवन्तं त्यक्त्वा संभूत्यां विद्यायां असुर्याः अनन्दाः । जनाम् जनाः आम् । सोर्डा । आमर्थस्तु अङ्गीकृता इति आम् अङ्गीकारे इति मनोरमा । तदुक्तं पापः पापेनेति यथाकारीत्यस्या अर्थं निर्धारयामास कारिका तदेव सन्त इति तदेवसन्तस्तदु तद्भवामो न चेदवेदीन्महती विनष्टि येन विदुरमृतास्तेभवन्त्यथेतरे दुःख-मेवोपयन्तिति इदं वचनं बुद्धिमतामिति भाष्ये तद्विवृण्वन्ति स्म सत्य इति तदेव सन्त इत्यस्य इहैव देहे अज्ञानरहिताः सन्तस्तदु ब्रह्म उ विश्व इत्यर्थात् ज्ञानवतां तद्भवाम इत्यस्य ब्रह्म भवाम इत्यर्थात् सद्योमुक्तिभाजां ये तद्विदुरमृतास्ते भवन्तीत्यस्य । ये तदमृतमानन्दं तिरोहिताविर्भूतं विदुरिति ब्रह्मभावः । तिरोहितस्याविर्भावे ब्रह्मभाव इति ग्रन्थात् । तेन ब्रह्मभावेन । अमृतास्ते भवन्ति । इत्यस्यामृतस्यानन्दस्य प्राप्त्यानन्दा भवन्तीत्यर्थः । न चेदित्यस्यायमर्थः । न चेद्विदितवन्तो वयं तदावेद्यज्ञानी स्यां सा महती विनष्टिर्विनाशः स्यादित्यर्थः । शेषमिति । आत्मानमित्यादि भाष्यं स्फुटम् । तदित्थम्—

'आत्मानं चेद्विजानीयादहमस्मीति पुरुषः ।
किमिच्छन् कस्य कामाय शरीरमनु संज्वरेत्' ॥ इति ।

आत्मानं परपुरुषं चेद्यद्ययं परमैश्वर्यकर्ता अहमणुर्जीवोस्मि सुषुप्तिसमयेऽफलं सद्योमुक्तिसमये संप्रज्ञातसमाधिसमये विषयवैतृष्ण्याद्वैराग्यं आप्तकामत्वाद्विषयवैतृष्ण्यम् । शरीरतापमनु तप्येत इति शरीरमनुसंज्वरेदित्यस्यार्थः । एवं वैराग्यवतो दोषनाशद्वारा विज्ञानं वक्तुमाहेत्याहुर्भाष्ये यस्यान्विति । 'स्तुवन्ति दोषनाशाय तत्राविष्टो भवेद्यथा' इति सुबोधिन्याः । स्तुतिरुत्कर्षाधायकगुणवर्णनम् । चकारः समुच्चयेऽतो नवभिः स्तुतिविज्ञाने उच्येते ।

रश्मिः ।

'यस्यानुवित्तः प्रतिबुद्ध आत्मा अस्मिन् संदेहे गहने प्रविष्टः ।
सविश्वकृत्स हि सर्वस्य कर्ता तस्य लोकः स उ लोक एव' ॥

भाष्ये यस्यानुवित्तिरिति पाठः । अस्मिन् प्रसिद्धे संदेहे संदिह्यते उपचीयते तेजोबन्नादिभूतैरिति संदेहः ऋहलोर्ण्यत् । यकारलोपश्छान्दसः । तकारागमः । तस्मिन् किं लक्षणे गहने आध्यात्मिकाद्यनेकार्यसंकीर्णत्वात् दुर्विषये प्रविष्टः आत्मा यस्य येन ब्राह्मणेनानु ब्रह्मज्ञानमनुवित्तो ज्ञातो भक्त्यापि प्रतिबुद्धः प्रति प्रतिनिधौ प्रतिनिधिरूपसर्वात्मभावरूपबोधविषयः । ब्राह्मं चेति रूपविशेषणस्य श्रुतावुक्तेः स सर्वात्मभाववान् भक्तो वा विश्वकृदित्यादि । तस्येश्वरस्य लोकोऽक्षरः 'आत्मा यावत्प्रपञ्चोभूत्तावद्दै रमते हरिः' इति 'सोन्तःकरणसंबन्धि तिरोधत्ते हरिश्च सः' । इत्याद्यवितिउ आश्चर्ये स जीवो लोकोऽक्षर एव न तु भगवत्संबन्धी । 'जीवाः स्वभावतो दुष्टाः' तेषां संयोगविप्रयोगदानादीश्वरोत्कर्षः । तद्बाधका गुणाः संयोगादिदातृत्वादयः । तेषां वर्णनमस्त्येव विज्ञानं च ।

'यदैतमनुपश्यन्ति आत्मानं देवमञ्जसा ।
ईशानं भूतभव्यस्य न तदा विचिकित्सति' ॥

एतं हृदयस्थमात्मानमञ्जसा साक्षात् अनुपश्यति आचार्याल्लब्धप्रसादमनुपश्यति 'अपि संराधने प्रत्यक्षानुमानाभ्याम्' इति सूत्रात्संराधनानन्तरं वा पश्यति उभयानन्तरं वा पश्यति विचिकित्सति संदेग्धि यद्वा जुगुप्सते गुप्तिं नेच्छति किं तु भक्तिमार्गानुसरणात् हरेर्हरित्वं स्वस्येच्छति अर्थात् देवात् । गुप गोपनकुत्सनयोः चु. आ. से. गोपनं नेच्छति साधनमन्तरा पश्यतीत्युत्कर्षबाधका गुणाः असाधनवतां स्वस्य प्रत्यक्षविषयत्वादयस्तेषां यथाकथंचिद्वर्णनं विज्ञानं च ।

'यस्मिन् पञ्च पञ्चजनाः आकाशश्च प्रतिष्ठितः ।
तमेव मन्य आत्मानं विद्वान् ब्रह्मामृतोमृतम्' ॥

यस्मिन् पञ्चवक्ष्यमाणवाक्यगतज्योतिषा सह तदग्रवाक्योक्तप्राणचक्षुःश्रोत्रमनांसीति पञ्च पञ्चजनसंज्ञकाः तमेवात्मानं मन्ये ब्रह्मामृतो विद्वानमृतोस्मि अमृत आनन्दः ज्ञानमात्रेणामृतसंपादकत्वादयो गुणाः तेषां वर्णनमत्र विज्ञानं च । इयं कारिका·······पादे 'न संख्योपसंग्रहादपि इति' सूत्रे विचरिष्यते । यस्मादर्वाक् संवत्सरोऽहोभिः परिवर्तते तद्देवाः ज्योतिषां ज्योतिरायुर्होपासतेमृतम् । यस्माज्ज्योतिश्चक्रादर्वाक् अधः संवत्सरकालोऽहोभिः स्वावयवैः परिवर्तते न तं स्पृशति । न परिच्छिनत्ति देवा उपासते कालापरिच्छिन्नस्य देवोपास्यत्वादय उत्कर्षबाधकगुणास्तेषां वर्णनं विज्ञानं च प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुः । ते निचिक्युर्ब्रह्मपुराणमग्र्यं मनसैवावाप्तव्यं नेह नानास्ति किंचन । अर्धप्रपाठकः । प्राणस्य प्राणः आधिदैविक आधिभौतिकस्य प्राणः एवमग्रेपि । ते ब्राह्मणा अग्र्यमग्रे भवं अत एव पुराणं चिरंतनं ब्रह्म निचिक्युः ज्ञातवन्तः सर्वस्माद्विभक्तवन्तः केन साधनेनेत्यत आह मनसेति आचार्योपदेशं प्राप्य मनसैव ब्रह्म प्राप्तव्यं मानसी सेवा कर्तव्या न तु भक्त्यावाप्तव्यमिति चेन्न वेदान्ते मनसावबोधकर्मत्वमर्थात् प्रेमलक्षणात् सहकारिकारणत्वं वा मनसः । नाना भेदः साकारब्रह्मणोऽनेकेषु रूपेषु मनोवाप्तव्यं रूपं वा तादृग्ब्रह्म जीवानामवाप्तुं योग्यं इत्युत्कर्षः । तद्बाधकगुणवर्णनं स्तुतिरस्ति विज्ञानं च ।

'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ।
मनसैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवम्' ॥

भिर्भगवत्स्तुतिः । तद्विज्ञानं च । पुनरेतदेव स्पष्टतयोपदिशति । स वा अयमात्मे-

भाष्यप्रकाशः ।

मिति । सद्योमुक्तिभाजां ज्ञानवतां ब्रह्मभावेन ब्रह्मप्राप्तिवचनम् । शेषं स्फुटम् । शेषस्यार्थमाहुः पुनरित्यादि । अत्रैतद् बोध्यम् । यस्यानुवित्त इत्यस्योत्तरार्धे, स विश्वकृदित्यादिना यत् सर्वकर्तृत्वमुक्तं तत् स वा एष आत्मा सर्वस्य वशीत्यारभ्य, सेतुर्विधरण इत्यन्तेन स्पष्टीकृतम् । तस्य लोक इत्युक्तं लोकाधिपत्यं च, एषां लोकानामसंभेदायेत्यनेन । यत् पुनः पूर्वार्धे, यस्यानुवित्त इत्यादिनोक्तम्, अग्रिमश्लोकेश्च तत् तमेतं वेदानुवचनेनेत्यारभ्य आन्तं स्फुटीकृतमिति ।

रश्मिः ।

मृत्योरसतः सकाशान्मृत्युमसन्तं प्राप्नोति यः पूजादिकर्ता नानाभेद इव पश्यति किं तु 'अविभक्तं च भूतेषु विभक्तमिव च स्थितम्' पश्यति । अनु कर्मज्ञानभक्तीरनुद्रष्टव्यम् । पूजादिकर्तुरनुरोधात् विभक्तमिवेत्युत्कर्षः । तद्बाधकगुणा विभक्तसादृश्यादयस्तद्वर्णनमस्ति विज्ञानं च—

'विरजः पर आकाशादज आत्मा महान् ध्रुवः' ।
'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ।
नानुध्यायाद् बहून् शब्दान् वाचो विग्लापनं हि तत्' ॥ इति ।

विगतं रजो धर्माधर्मादिलक्षणं यस्मात् स विरजः महान् परिमाणतः । धीरो धीमान् धीर्धारणावती बुद्धिः तया विज्ञाय मोक्षेतरत्वेन ज्ञात्वा भक्तिविषयत्वेन विज्ञाय 'भगवदीयत्वेनैव परिसमाप्तसर्वार्थाः' इति वाक्यात् । एवं शास्त्रोत्थज्ञानविषयं कृत्वा प्रज्ञां सिद्धान्तमुक्तावल्युक्तसंराधनेन प्रत्यक्षं कुर्वीतेत्यर्थः । विग्लापनं साकारस्यानन्तमूर्तेस्तत्तन्मूर्तिष्वनादरकर्तृ । बहुष्वादरो न संभवतीति सुबोधिन्याः । एतावान् भाष्ये विज्ञानपदार्थः स्तुतिश्च अत्र द्वौ श्लोकौ सार्धौ यतः पठितावतोऽष्टौ श्लोकाः । प्राणस्येत्यत्र श्लोकद्वयमिति नवमिरिति भाष्यम् । अग्र्यमित्यन्त एकः मनसेति द्वितीयः । आज्ञावत्त्वात् । पुनरिति भाष्यमवतारयामासुः शेषेति । कथमुपदिशतीत्यत आहुः अत्रेति 'स वा एष आत्मा सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किं च स न साधुना कर्मणा भूयान् नो एवासाधुना कनीयानेष भूताधिपतिरेष लोकेश्वर एष लोकपालः स सेतुर्विधरण एषां लोकानामसंभेदाय' अत्र भगवत्स्तुतिर्विज्ञानं चैकत्रोच्यते । उत्कर्षाधायकगुणवर्णनं स्पष्टं शाब्दं विज्ञानं च वशमस्यास्तीति वशी । साधुना वेदविहितेन । असाधुना वेदनिषिद्धेन सर्वस्य वश्यादिकं स विश्वकृदित्यादिना सर्वकर्तृत्वमुक्तम्, तन्निर्वाहमित्येकवाक्यता । उत्पत्तिस्थितिप्रलयानां परस्परनिर्वाहकत्वम् । स भगवान् सेतुः सिनोति बध्नातीति सेतुः । रूपप्रपञ्चकरणात् । वर्णाश्रमादिव्यवस्थाविधारकः अत उक्तं स्पष्टीकृतमिति । तस्य लोक इति तस्य भगवतो लोकोऽश्वरः इति प्राप्तं लोकाधिपत्यम् । किमर्थं लोकाधिपत्यमित्याकाङ्क्षायामाह एषां भूरादिब्रह्मलोकान्तानामाधिदैविकानामसंभेदायासांकर्याय एकवर्णता माभूदिति । तमेतमिति 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनानाशकेन चैतमेवं विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमभीप्सन्तः प्रव्रजन्ति एतद्ध स्म वै पूर्वे ब्राह्मणाः अनूचानाः विद्वाꣳसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोयमात्माऽयं लोक इति ते ह स्म तु पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षुचर्यां चरन्ति या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणा उभे ह्येते एव भवतः । स एष नेति नेत्यात्माऽग्राह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गोऽसितो न सज्यते

रश्मिः।

न बध्यते इत्यतः पापमकरवमित्यतः कल्याणमकरवमित्युभे ह्येष तरत्यमृतः साध्वसाधुनी नैनं कृताकृते तपतो नास्य केनचन कर्मणा लोको मीयते तदेतदृचाभ्युक्तम् एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयान् तस्यैव स्यात् पदवित्तं विदित्वा न कर्मणा लिप्यते पापकेन' इति। तस्मादेवंविच्छान्तो दान्तः उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्येत् सर्वमेवं पश्यति सर्वोप्यात्मा भवति सर्वस्यात्मा भवति सर्वं पाप्मानं तरति नैनं पाप्मा तरति सर्वं पाप्मानं तपति नैनं पाप्मा तपति विजरो विजिघत्सोऽपिपासो ब्राह्मणो भवति य एवं वेद स वा एष महानज आत्मा अन्नादो वसुदानः स यो हैवमेतं महान्तमजमात्मानमन्नादं वसुदानं वेद विन्दते वसु स वा एष महानज आत्माऽजरोऽमृतोऽभयोऽमृतो ब्रह्माभयं वै ब्रह्माभय१ हि वै ब्रह्म भवति य एवं वेद इत्येतासु। ब्राह्मणा विविदिषन्ति इत्यत्र तत्र तु यस्य ब्रह्मज्ञानमनुवित्त इति केषांचिद्विविदिषाविषयः। कैश्चिद्वित्त इति विशेषः। रामानुजाचार्यमते तु सनर्थस्याविवक्षातः ब्राह्मणा विदन्तीति कालभेदमात्रम्। तमेव प्रव्राजिनो लोकमभीप्सन्तः प्रव्रजन्तीत्यत्र तत्र तु तस्य लोकः स उ लोक एवेति लोकव्रजनोत्तरं भक्तितद्भावाभ्यां स्थितिरिति विशेषः एतद्धस्म वा इत्याद्यत्र तत्र तु यदैतमनुपश्यति इत्यादीति केषांचिदात्माभावप्रयुक्तः किं प्रजयेति क्षेपः केषांचिदात्मानुदर्शनवतां न तदा विचिकित्सतीति नावक्षेपेति विशेषः। विचिकित्सति जुगुप्सत इत्यर्थः। गुप गोपनकुत्सनयोः भ्वा. आ. से. कुत्स अवक्षेपे चु. आ. से. श्रुत्यर्थः स्पष्टः पूर्वत्र अस्या श्रुतेरर्थः। एतद्धस्म एतत्समीपतरवर्ति पूर्वोक्तं ह प्रसिद्धे स्म भूतकाले वै निश्चयेनानु गुरूच्चारणमनु उचाना वदन्तः किं क्षेपे उभे लोकेषणाभिक्षचर्याचरणेषणे चरणस्यैषणात्वायैवकारः इति स एष नेति नेति अत्र तत्र यस्मिन् पञ्चेत्येकत्रात्मामृतयोः स्वरूपमुक्तं स्पष्टतयैकत्रत्वस्पष्टतयेति विशेषः। कारिकोक्तात्मस्वरूपमाह स एष नेति मूर्तामूर्तब्राह्मणोक्त आत्मा केनाप्यगृह्यः न गृह्यते केनापि। अशीर्यः केनापि कोपि न शीर्यते असङ्गः असितोऽबद्धः न केनापि कर्त्रा सज्यते इतिः प्रकारे अतः कारणात्। एष आत्मा। अमृतस्वरूपमाह अमृत इति मीयत इति। जयोऽभिभवः क्रियते लोकस्याभिभवः क्रियते। तदेतदिति तदेतत्पूर्वेणोक्तम्। वस्तुतत्त्वमृचाप्युक्तम्। एष साधननिःस्पृहो नेति नेत्यादिलक्षणस्वरूपभूते महिमा ऐश्वर्यविशेषः स्वाभाविकत्वान्नित्यः कुतः शुभकर्मणा न वर्धते यत एष महिमा तस्यैव ब्राह्मणस्य पदं गम्यं वित्तं ज्ञातं तं महिमानं विदित्वा य एवं वेदान्योपि सोप्येवं भवति। स वा एष इत्यत्र तत्र तु यस्मादर्वागिति। ज्योतिश्चक्रं स्पष्टतयोच्यते। उपासना च ज्ञानात्मा वसुदान इत्यन्तेन ज्योतिर्निरूपणम्। स य इत्यादिनोपासनायाः सफलायाः स वा एष इत्यत्र तत्र तु प्राणस्य प्राणमिति तद्वितीयन्तम्। प्रमेयविशेषेपि विलक्षणप्रमेयाभावात्। अत्र प्राणाद्याधिदैविकम्। ये विदुस्ते पुराणमग्र्यं ब्रह्म निचिक्युरित्युक्तम्। तत्रामृत इत्यन्तेनांशेन ये विदुस्ते उक्ताः पुराणमग्र्यं ब्रह्म ब्रह्माभयमिति पदद्वयेन। मनसैवावाप्तव्यमित्युक्तं प्राप्तुं योग्यं त्वया प्राप्तमिति जनकप्राप्तोसि इत्यनेनांशेनोक्तम्। पुनश्च मृत्योरित्यनेन भेदस्याक्षदर्शनं मृत्युप्रापकमित्युक्त्वा चक्षुराद्यप्रमेयं ध्रुवमात्यनन्तरं मनोदर्शनयोग्यमित्युक्तम्। तेन ससंभोगो मोक्षः सूचितः। एवं प्रकाशे स वा अयमिति भाष्यं विवृतम्। तत्र जीवस्यानिश्चीत्वात् येन प्रकारेण जीवः परलोके गच्छति तदुपायं भगवानेव करोतीति भाष्यात्। भगवता त्वधिष्ठेन मोक्षो मत्वं दत्त इति भक्तिरहस्यभजनं तदिहामुत्र फलभोगनैराश्येनामुष्मिन् मनःकल्पनमिति मानसी सेवा तत्र मुख्या यद्यपि तथापि मानसां दास्यविस्तं साधनं मन्वान आह

इत्यादि । अभयं वै जनक प्राप्तोऽसीत्यन्तम् । काण्वानां क्वचित् पाठभेदेऽप्ययमेवार्थः । अत्र प्रकरणे जीवो वाच्य इति प्राप्ते ।

---

भाष्यप्रकाशः ।

पूर्वपक्षमाहुः अत्र प्रकरणे जीवो वाच्य इति । अयमर्थः । अत्रोपक्रमे, कतम आत्मेति प्रश्ने, योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष इति शारीरलिङ्गादुपसंहारे च, योऽयं विज्ञानमयः प्राणेष्विति कण्वपाठे तदपरित्यागान्मध्ये बुद्धान्ताद्यवस्थोपन्यासेन तस्यैव प्रपञ्चनाच्च । यद्यपि संसारी प्रतीयते, तथापि मध्ये, ध्यायतीव लेलायतीवेति ग्रन्थे संसारिधर्मनिराकरणात् । उपसंहारे च, स वा एष महानज आत्मेति संसारिधर्मरहितपरमेश्वरात्मकत्वबोधनात् । उपक्रमोक्तविज्ञानमयत्वादेस्तस्मिन्नपि सत्त्वेन उपक्रमस्य संदिग्धतया नैर्बल्यात् । माध्यमिकबुद्धान्ताद्यवस्थोपन्यासस्य च संसार्यवस्थानुवादेन तद्रहितदशायां परमेश्वराभेदबोधनपरत्वावगमात् । सुषुप्त्यादौ भेदबोधनस्यापि संसारिदशायामेव पर्यवसानात् । पुनः पुनर्मोक्षप्रश्नेन, यत् किंचित् पश्यत्यनन्वागतस्तेन भवत्यसङ्गोऽयं पुरुष इति तदुत्तरे पुनः पुनरनन्वागततया असङ्गत्वप्रतिपादनेन, अनन्वागतं पुण्येनानन्वागतं पापेनेति कर्मसंबन्धराहित्यस्य च प्रतिपादनेन,

रश्मिः ।

सोहमिति विदेहैर्देशैः समानामन्यां महीं मां चापि पुत्रादिभिः सह दास्यायेति स वा एष इत्युपसंहारः तत्र तु विरजः पर इति । अत्र धीरार्थस्पष्टीकरणं ब्राह्मणार्थस्पष्टीकरणं ज्ञानिभक्तज्ञेयत्वेनात्मनः उपसंहारश्च । तथा चायं श्रुत्यर्थः । स वा एष महानज आत्माऽजरोऽमरोऽमयोऽमृतः इत्यंशः स्पष्टः धीरो ज्ञानी भक्तश्चेत्याह फलबलेन ब्रह्माभयं वै निश्चयेनेति ज्ञानी । भक्तस्तु ब्रह्माऽभयं हि वै हि शब्देन विशेषः । ब्रह्मा ब्राह्मणो ब्रह्मज्ञो भवति । य एवं वेद कर्ममार्गे सोपि ब्रह्मा भवतीति परं कृपाप्रसादयुक्तः कश्चिदित्यर्थः । प्रकृतमनुसरामः । आन्तमिति अन्तमभिव्याप्येत्यन्तम् । ब्राह्मणान्तम् । भाष्ये काण्वानामिति षोडशकण्डिकानन्तरं स्वप्नान्त इत्यत्र स्वप्न इति पाठो यद्वा संप्रसाद इति पाठः बुद्धान्तायेत्यत्र स्वप्नायेति पाठः । त्रिंशकण्डिकानन्तरं हैनमनुशशास याज्ञवल्क्य एषास्य परमा गतिरिति पाठः । त्रयस्त्रिंशकण्डिकानन्तरं जितलोकानामानन्दा इत्यस्याग्रे स एको गन्धर्वलोक आनन्दोथ ये शतं गन्धर्वलोक आनन्दा इति पाठः गन्धर्वलोकस्थले प्रजापतिलोकः पठ्यते । विचिकित्सतीत्यत्र विजुगुप्सते इति पाठः । अत्र स्वप्नान्तसंप्रसादपदयोः सामानाधिकरण्यं प्रसिद्धम् । तथा स्वप्नबुद्धान्तयोर्गतिसंपदोश्च लोकपौर्वापर्यं विकल्पेनेत्ययमेवार्थः इदानीं विचिकित्सतीत्यस्य विजुगुप्सते इति पर्यायः कथमिति चिन्ता अत्र कित निवासे भ्वा. प. से. निवसितुमिच्छति । गुप गोपनकुत्सनयोः भ्वा. आ. से. गोपितुमिच्छति सन् निवसितुमिच्छति यः स आत्मानं गोपितुमिच्छत्यात्मानं गोपितुमिच्छति यः स निवसितुमिच्छतीति जीवो वाच्य इति शंकराचार्यसिद्धान्तः पूर्वपक्षे उक्तः ब्रह्मपरत्वेन व्याकृतस्य ब्राह्मणद्वयस्य शांकरीत्यार्थमाहुः अयमर्थ इति संसारीति ध्यायति बुद्धिः जीवोपि ध्यायतीव लक्ष्यते यथा बुद्धौ ध्यायन्त्यां जीवो ध्यायतीव प्रतीयते यथा गच्छन्त्यां नावि तटस्थास्तरवश्चलन्तीव प्रतीयन्ते लेलायतीव बुद्धौ चलन्त्यां जीवश्चलतीव प्रतीयते । एवं संसारिधर्मनिराकरणात् । तस्मिन्निति संसारिधर्मरहिते । नैर्बल्यादिति । तथा च उपसंहारस्यासंजातविरोधित्वेन संसारिधर्मरहितपरमेश्वरपरत्वं संदर्भस्येति भावः । तद्रहितदशेति विशेषदर्शनोत्तरं तद्रहितदशायाम् । अनन्वागतः कर्मसंबन्धरहितः । प्रतिपिपादयिषितोऽभेद ऐक्यरूपसंख्यारूपोऽत-

अभिधीयते । ब्रह्मैव प्रकरणार्थः । सुषुप्त्युत्क्रमणे च जीवब्रह्मणोर्भेदेन व्यपदेशात् ।

भाष्यप्रकाशः ।

तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवतीति सर्वदुःखतरणश्रावणेन च परमात्माभिन्नाऽसंसारिरूपप्रतिपादनपरमेवैतद्वाक्यमित्यतोऽत्रासंसारी परमेश्वराभिन्नो जीवो वाच्य इत्यर्थः । सिद्धान्तं व्याकुर्वन्ति ब्रह्मैवेत्यादि । अयमर्थः । सत्यमत्र मुक्तजीवस्तथा निरूप्यते । तथापि स न प्रकरणार्थः । तत्र हेतुः सुषुप्तावित्यादि । तथा च यदि मुक्तो जीवो ब्रह्माभेदेनात्र प्रतिपाद्यः स्यात् तदा अवस्थाभेदस्याप्रयोजकत्वेन तत्र जीवं परमेश्वराच्च भिन्द्यात् । प्रतिपिपादयिषिते अभेदे भेदकथनस्य प्रयोजनशून्यतया वैयर्थ्यप्रसङ्गात् । नच संसार्यवस्थायां भेदबोधनाय तदिति युक्तम् । तदानीं जाग्रत्स्वप्नयोरज्ञत्वादिवैशिष्ट्यस्य प्रत्यक्षसिद्धत्वेन सुषुप्तिमरणयोस्तमोऽभिभवेन तथात्वस्याज्ञानेऽपि सौषुप्तिकस्मरणेन मृतानां भूतादिभावदर्शनेन चानुमानसिद्धतया तत्कथनवैयर्थ्यानपायात् । अतो ज्ञायमानावस्थासिद्धं भेदमनूद्य यदज्ञायमानावस्थासिद्धं भेदमनुवदति तदसंसार्यवस्थायामपि भेदबोधनायैवानुवदति । यथोदकं शुद्धं शुद्धे आसिक्तं तादृगेव भवति एवं मुनेर्विजानत आत्मा भवति गौतमेति काठके तथैव श्रावणात् । नच तदुपक्रमाद्यनुरोधादसंसारी परमेश्वरसमानधर्मा जीवो वाच्योऽस्त्विति वाच्यम् । उपक्रमे किं ज्योतिरयं पुरुष इति प्रकाशकप्रश्ने, आदित्याद्यनन्तरमात्मज्योतिरित्युत्तरे पुरुषस्य प्रकाशापेक्षित्वेनाप्रकाशकत्वात् । प्रकाशक आत्मा क इत्याशयेन पृच्छति । कतम आत्मेति । तत्र स्पष्टतया वक्तव्येऽप्युत्तरे याज्ञवल्क्यो, न वदिष्य इति स्वाभिसंधेर्वरदानस्य चानुरोधाच्छ्लिष्टमेवोत्तरं ददातीति पूर्वं व्युत्पादितम् । अतस्तद्विचारे, अत्रायं स्वयञ्ज्योतिर्भवतीति निगमनवाक्ये परमात्मैव स्वयंपदवाच्यः सिध्यतीत्युपक्रमगतः प्रश्नस्तत्पर एव पर्यवस्यति । तथापि श्लिष्टप्रयोगाज्जनकेन सम्यङ् न ज्ञातः । एतावज्ज्ञातं, संसारिव्यतिरिक्तः प्रकाशक इति ।

रश्मिः ।

स्वस्याभावरूपत्वाभावान्न भेदरूपप्रतियोगिनः प्रयोजकत्वमित्याहुः प्रतीति । तम इति ज्ञानावरणदर्शनात्तमोभिभवः । तथात्वस्येति अज्ञत्वादिवैशिष्ट्यस्य । सौषुप्तीति सुखमहमस्वाप्सं न किंचिदवेदिषमिति स्मरणेन तथा च न किंचिदवेदिषमित्यत्र किंचिद्विषयकवेदनप्रतियोगिकाऽभावः किंचिद्विषयकवेदनं विनानुपपद्यमानं पूर्वं किंचिद्वेदनं ज्ञापयति । भूतादिभावश्च मरणेऽज्ञत्वादिवैशिष्ट्यम् । सुषुप्तः पूर्वमज्ञत्वादिविशिष्टः न किंचिदवेदिषमिति स्मरणाद् देवदत्तवत् । मृतः अज्ञत्वादिविशिष्टः प्रेतयोनेः धुन्धुकारिवत् । धुन्धुकारी श्रीभागवतमहात्म्येस्ति यन्नैवं तन्नैवं जनकवत् । तत्कथनेति भेदकथनेत्यर्थः । अधुना 'स ईक्षांचक्रे' 'एकोहं बहु स्यां प्रजायेय' इति भेदस्यैच्छिकत्वात् तादृशभेदमादायाहुः अत इति । अज्ञायमानेति सुषुप्त्युत्क्रान्त्यवस्थाऽज्ञायमानावस्था तत्सिद्धं भेदं सुषुप्त्युत्क्रान्त्योर्भेदेनेति सूत्रे व्यासोनुवदति सिद्धस्य कथनमनुवादः । अत्र श्रुतिं प्रमाणयामासुः यथोदकमिति । पुरुषस्येत्यात्मनः । तत्रेति अन्ते । श्लिष्टमिति संसारिश्लिष्टं असङ्गत्वरूपमुक्तिश्लिष्टं वा इयं स्वप्नावस्था । पूर्वमिति भाष्यव्याख्याने । तद्विचार इति प्रकाशकात्मविचारे । उपक्रमेति कतम आत्मेति प्रश्नः । किं ज्योतिरयं पुरुष इति वा प्रश्नः । तत्पर इति जाग्रदवस्थातिक्रमेण स्वाप्निकात्मपर एव । श्लिष्टेति स्वप्नासङ्गत्वरूपमुक्तिश्लिष्टप्रयोगात् ।

## आकाशवद् ब्रह्मनिर्धार एव युक्तः ॥ ४२ ॥

भाष्यप्रकाशः ।

ततस्तत्संदेहनिवारणाय पृच्छति । विमोक्षाय ब्रूहीति । तदापि श्लिष्टमेवोत्तरं ददाति । स एष एतस्मिन् संप्रसादे रत्वा चरित्वेत्यादि । तदा जीवस्यासंगतत्व उक्तेऽपि जनकस्य संदेहो न निवृत्त इति पुनर्मोक्षाय पृच्छति । तदा पुनरपि मत्स्यादिदृष्टान्तं वदन् स्वप्नसुषुप्ती अवस्थे उक्त्वा सुषुप्तौ परमात्मानमसङ्गादपि जीवाद् भेदेनाह । तदापि तस्य प्रकाशकसंदेहो न निवृत्त इति पुनर्मोक्षाय पृच्छति । तदा पुनरपि संप्रसादवाक्येनैवोत्तरे पुनरपि मोक्षाय पप्रच्छ । तदा याज्ञवल्क्यो राज्ञो मेधावित्वाद् भीतो मरणावस्थां संसारिणो वदन् परमेश्वराज्जीवस्य भेदमाह । तदापि श्लिष्टप्रयोगात् तस्य संदेहो न निवृत्त इत्यकामयमानस्य सद्योमुक्तिमाह । तत्र, ब्रह्मैव सन् ब्रह्माप्येतीति श्रुतेः प्राज्ञ आत्मा ब्रह्मैवेति च श्रुतेर्जीवस्य ब्रह्मभाव एव मुक्तिः । प्राज्ञ आत्मा ब्रह्म योऽस्ति स एव प्रकाशकः । तज्ज्योतिषैवायं जीवः सर्वं करोतीति ज्ञात्वा, सोऽहं भगवते सहस्रं ददामीत्युक्तवान् । तदा याज्ञवल्क्यस्त्रयोदशश्लोकैः सर्वं शास्त्रार्थमुक्त्वा, स एष आत्मेत्यादिना तमेवार्थं स्पष्टमुक्तवान् । तदा जनको विदेहान् स्वात्मानं च दास्यार्थं तस्मै दत्तवान् । विद्यां च याज्ञवल्क्यः समार्पितवान् । अत उपक्रमोपसंहारयोः परमात्मन एव प्रकृतत्वसिद्ध्या तस्यैव प्रकरणित्वमिति सिद्धम् । तदाहुः आकाशवदित्यादि । तथाच यथा पूर्वाधिकरणे अन्यथानुपपत्तिबलादाकाशवाक्यस्य ब्रह्मपरत्वनिर्धारस्तथात्र भेदव्यपदेशान्यथानुपपत्तिबलात्

रश्मिः ।

श्लिष्टमिति स्वप्नासंगत्वरूपमुक्तिश्लिष्टम् । स एष एतस्मिन् संप्रसादे इति । काण्वानां स्वप्नायेति प्रसङ्गो यं ह्ययं पुरुष इति चात्रैव श्रावणात् । अतो न पुनरुक्तिः स्वप्नासङ्गत्वरूपमुक्तिकथनस्य । मोक्षायेति जागरणासङ्गत्वमुक्तये वदन् वेदः । स्वप्नेति ईश्वरस्य स्वप्नजागरणाभेदाज्जागरणसुषुप्ती इत्यर्थः । सुषुप्ताविति जागरणोपलक्षिका सुषुप्तिजागरणयोः । मोक्षायेति मोक्षार्थम् । भगवतेऽनु भगवत्त्वाय । मोक्षायेति सुषुप्तिसंप्रज्ञातसमाधिसद्योमुक्तिरूपमोक्षाय । श्लिष्टेति सद्योमुक्तिसंप्रज्ञातसमाधिसुषुप्तिसंश्लिष्टप्रयोगात् । प्राज्ञ इति सुषुप्तौ प्राज्ञः । संप्रज्ञातसमाधावात्मा सद्योमुक्तौ ब्रह्मेति पदत्रयम् । यद्वा । प्राज्ञश्चात्मा प्राज्ञात्मा ब्रह्मेत्यर्थः । विदेहान् इति विदेहामित्यत्र विदेहानिति पाठमङ्गीकृत्योक्तम् । अत इति उपक्रमगतप्रश्नस्य जाग्रदवस्थातिक्रमेण स्वाप्निकात्पर्यवसानात् एष आत्मेत्युक्तोपसंहाराभ्याम् । अन्यथेति यत्रैव सिद्धवत्कारेणोत्कृष्टधर्मा अतदीयाः तदेव ब्रह्मेति व्युत्पत्तिः । अनयार्थापत्तिः सूच्यते परं कारणाभावात् निर्विषयार्थापत्तिर्न संभवतीति पार्थसारथिमिश्रमतानुसारेण कारणमन्यथानुपपत्तिरूपमुक्तम् । तथा हि । अत्र ब्राह्मणद्वये जीवस्य ब्रह्मत्वप्रतिपादनपक्षः स्वातन्त्र्येण ब्रह्मण एव ज्ञानकर्मत्वपक्षः तयोराद्यपक्षे । अत्र शब्देन ब्राह्मणद्वयरूपेण पृथितस्य ब्राह्मणद्वयार्थब्रह्मोपक्रमवाच्यत्वाभावरूपार्थस्यार्थान्तरमुपसंहारब्रह्मार्थत्वं विनानुपपद्यमानस्योपपत्तये उपसंहारब्रह्मार्थत्वकल्पनार्थापत्तिः । अर्थस्योपसंहारब्रह्मार्थत्वरूपस्यापत्तिः कल्पना । कस्माद् ब्राह्मणद्वयार्थं ब्रह्मादिज्ञानात्तदा ब्राह्मणद्वयार्थब्रह्मोपक्रमवाच्यत्वाभावोऽर्थापत्तिः सा यत्रैव हीति व्युत्पत्त्या व्यज्यते यत्रैव जीव एव उत्कृष्टधर्मा ज्योतिरात्मत्वकर्तृत्वरूपा अतदीया अजीवीयाः सिद्धवत्कारेण स वा अयमित्यत्र तस्य वा एतस्येत्यत्र च कण्डिकायां वै प्रयोगेण तथया राजानमिति वाक्यद्वये हकारप्रयोगेण तदेव जीव एव ब्रह्म । अत्र प्रमाणं सूत्रं वाच्यार्थ उक्तः

भाष्यप्रकाशः ।

प्रकरणस्य ब्रह्मपरत्वनिर्धार इत्यर्थः । किं चात्र संसारिणोऽपि जीवस्य परमेश्वराद् भेदसाधनेन मुक्तावस्थायामपि जीवे ब्रह्मलक्षणस्य नातिव्याप्तिरिति बुद्धिस्थं प्रसङ्गाद् बोधितम् ।। ४२ ।।

रश्मिः ।

सूच्यार्थोर्थापत्तिरस्याः इयमपि प्रमाणान्तरं नास्ति शब्दानुग्राहिका त्वियम् । प्रत्यक्षादिप्रमितार्थ-ज्ञानदार्ढ्यहेतुत्वादभ्यासादिवदिति स्थितं प्रस्थानरत्नाकरे । अत्र ब्राह्मणद्वयार्थो ब्रह्मोपक्रमे वाच्यत्वेन नास्तीत्यत्र ब्राह्मणद्वयार्थत्वसंसृष्टोपक्रमवाच्यत्वाभावस्यानुपपत्त्या उपसंहारस्य ब्रह्मार्थत्वं कल्प्यते तथा चोपक्रमापेक्षयासंजातविरोधित्वेनोपसंहारस्य प्राबल्याद्ब्रह्मरूपोर्थः यथा पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्र पीनत्वानुपपत्त्या रात्रिभोजनं कल्प्यत इति । ननु ब्राह्मणद्वयार्थो जीवोपसंहारे वाच्यत्वेन नास्तीत्यत्र ब्राह्मणद्वयार्थत्वसंसृष्टोपसंहारवाच्यत्वाभावस्यानुपपत्त्यानुपक्रमस्य जीवपरत्वं कुतो न कल्प्यते इति चेन्न । जीवोपक्रमेण ब्रह्मोपसंहारेणाहेति भाष्यस्य स यत्राणिमानं न्येतीत्यवान्तरोप-क्रमविषयत्वात् । ब्रह्मैव प्रकरणार्थ इति भाष्याच्च ।

'सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः ।
वने वृन्दावने क्रीडन् गोपगोपीसुरैः सह' ।।

इत्यत्र यथा भक्तियोग्यं भगवद्रूपं सूच्यते ते अन्येषामतथात्राप्यर्थापत्तिः सूच्यते मुद्रालंकारः । नन्वर्थापत्तिरनुमानम् । ब्रह्म उपसंहारार्थः । ब्राह्मणद्वयार्थत्वे सति उपक्रमवाच्यत्वाभावात् यन्नैवं तन्नैवं वियद्वदिति चेन्न न प्रमाणान्तरं शब्दानुग्राहिका त्वियमिति पूर्वमुक्तत्वात् ब्राह्मणद्वयार्थत्व-संसृष्टोपक्रमवाच्यत्वाभावः उपसंहारार्थ एतदुभयविषयकज्ञानयोरेककालिकत्वेन हेतुहेतुमद्भावाभावात् । न च तयोः नैककालिकत्वमिति वाच्यं उपसंहारार्थमनन्तरभाव्य ब्राह्मणद्वयार्थत्वोपक्रमवाच्यत्वा-भावयोः संसृष्टयोः प्रत्येतुमशक्यत्वेन तत्संसर्गग्रहदशायामुपसंहारार्थान्तरभावस्य नियतत्वादेककालिक-ज्ञानविषयत्वस्यानपनोद्यत्वात् । न च एवं प्रमाणान्तरत्वाभावेपि शब्दस्य प्रमाणत्वे तात्पर्यवृत्तौ सत्यां केवलस्य ब्राह्मणद्वयार्थत्वस्योपक्रमवाच्यत्वाभावस्य वा गमकत्वाभावात्संसृष्टमुभयं गमकमित्यङ्गी-कार्यम् । तथा सति तयैव संविदोपसंहारार्थस्यापि प्रमितत्वादेतत्कालमेव प्रमानमित्यर्थापत्तावपि अनुग्राह्यभावेनानुग्राहकत्वसिद्धिर्न स्यादिति चेन्न । संसृष्टबुद्धेरेवानुग्राह्यत्वात् । न च कारणाभावः शङ्क्यः । यथा पूर्वाधिकरणेऽन्यथानुपपत्तिरूपकारणबलादर्थापत्त्याकाशवाक्यस्य ब्रह्मपरत्वनिर्धार इति । तथाहि । अर्थान्तरकल्पनया समाधेयत्वेनोच्यमानप्रमाणसिद्धयोरर्थयोः एकस्य वा परस्परं तदितरेण वा प्रकारेण प्रतिघातोऽन्यथानुपपत्तिः तत्समाधानायार्थान्तरकल्पनं चार्थापत्तिः तया च समाहिते प्रतिघाते प्रमितयोः संसृष्टबुद्धिः प्रमेयप्रमारूपेति प्रमितस्य वा । द्वारमित्यादौ । अर्थान्तरमाकाशस्य परमात्मवाचकत्वं तत्कल्पनया समाधेयत्वेनोच्यमानयोराकाशो ह वा इति प्रमाणसिद्धयोराकाशत्वं ते यदन्तरा तद् ब्रह्मेत्युक्तनामरूपान्तर्वर्तित्वं चेत्येतयोरर्थयोः प्रतिघातः । तत्समाधानार्थमर्थान्तर-स्याकाशस्य परमात्मरूपत्वस्य कल्पनमर्थापत्तिः । अनया समाहिते प्रतिघाते उक्तयोरर्थयोः संसृष्ट-बुद्धिस्तयाकाशवाक्यस्य परब्रह्मत्वनिर्धारः । तथात्र ब्राह्मणद्वयेपि । ब्राह्मणद्वयार्थत्वोपक्रमवाच्यत्वा-भावयोरर्थयोर्ब्राह्मणद्वयप्रमाणसिद्धयोः अर्थान्तरस्योपसंहारे ब्रह्मार्थकत्वस्य कल्पनया समाधेयत्वेनोच्य-मानयोः परस्परं प्रतिघातो वर्तत इत्यन्यथानुपपत्तिर्वर्तते । एतादृशं प्रतिघातं निमित्तीकृत्य अर्थापत्तिः प्रकृते प्रवर्तते उपसंहारस्य ब्रह्मार्थकत्वकल्पनरूपात्रापीति ब्राह्मणद्वयस्य ब्रह्मपरत्वनिर्धार इत्यर्थः ।।४२।।

## पत्यादिशब्देभ्यः ॥ ४३ ॥

**किंच । सर्वस्य वशीत्यादिशब्देभ्यः स्पष्टमेव ब्रह्मप्रकरणमिति ॥ ४३ ॥**

**इति प्रथमाध्यायतृतीयपादे त्रयोदशं सुषुप्त्युत्क्रान्त्यधिकरणम् ॥ १३ ॥**

**इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये प्रथमाध्यायस्य तृतीयः पादः ॥ १ ॥ ३ ॥**

---

भाष्यप्रकाशः ।

पत्यादिशब्देभ्यः ॥ ४३ ॥ भेदव्यपदेशेन प्रकरणस्य ब्रह्मपरत्वसाधनं क्लिष्टमित्यतो हेत्वन्तरं वदतीत्याशयेनाहुः किं चेत्यादि । तेषामुपासनार्थत्वं वारयितुं बहुवचनम् । तथाच यदि ते शब्दा उपासनार्थाः स्युः, सकृदुक्ताः स्युर्न त्वसकृत् । न वा विवृताः स्युः । यतस्ते तथा, अतो न जीवस्य तथोपासनार्थाः । किं तु परमेश्वरस्य जीवाद् भेदनार्था एवेत्यहंग्रहोपासनापेक्षया ईश्वरत्वेन पृथक्तयोपासनैव युक्तेत्यर्थः ॥

अत्र शंकराचार्याः । किमिदं वाक्यं संसारिरूपान्वाख्यानपरमुतासंसारिस्वरूपप्रतिपादनपरमिति संशये, संसारिपरमिति पूर्वपक्षं, संसाररहितपरमेश्वराभिन्नजीवात्मप्रतिपादनपरमिति सिद्धान्तमाहुः । भेदव्यपदेशं च संसारिभेदपरमाहुः ।

तदसंगतमित्युपपादितम् ।

भास्कराचार्यास्तु, किं संसारिस्वरूपपरम्, उत पररूपपरमिति संशये, पररूपपरमिति सिद्धान्तयन्ति ।

रश्मिः ।

पत्यादिशब्देभ्यः ॥ ४३ ॥ क्लिष्टमिति उपक्रमे जीवब्रह्मोभयपरतामानोक्तेः परस्परप्रतिहतशब्दयोः वाक्ययोर्वा तात्पर्यवृत्त्यार्थान्तरकल्पनं वाच्यं तदर्थान्तरकल्पनं उपसंहारस्य ब्रह्मार्थत्वकल्पनं तदेवार्थापत्तिः । उपसंहारप्राबल्यं चेति क्लिष्टम् । तथा च भाष्यम् । जन्माद्यस्य यत इत्यस्याथ वा किमनया कुसृष्ट्येति । ननु किंचेत्यनेन भाष्ये ब्रह्मनिर्धारे कात्स्न्र्येनोपपादकोक्तेः कुत पूर्वोक्तोपपादकास्वरसेन व्याख्यानमिति चेन्न अस्वरसपूर्वकव्याख्यानस्य किं चेत्यस्यान्योपपादकारम्भार्थत्वस्वीकारेण प्रवृत्तत्वात् 'किं चारम्भे च साकल्ये' इति विश्वः । तेष.मिति पत्यादिशब्दानाम् । श्रुत्यर्थस्तूक्तः । न स्थिवति वश्यादिपदानां टीकायां कथंचित्कृत्यमुक्तम् । तदुन्यापर्यायत्वेसकृदुक्तिः एष भूताधिपतिरित्यादिना विवृताः पर्यायकथनं विचरणम् । यद्यत्रैवासकृदुक्तिः । नासर्वमस्य वशे वर्तते कुतः सर्वस्येशान इति राजकुमारोपीदृश इत्याशङ्का सर्वस्याधिपतिरिति टीका निर्दुष्टा यतोऽतो नास्थिरत्र तावतैवोपासनसिद्धेरसकृदुक्त्यादि वैफल्यम् ब्रह्मप्रकरणसाधकत्वे तु जीवस्याप्युपक्रम उक्तेरसकृदुक्त्या विवरणेन चाप्राबल्यमिति । तथेति । सर्ववशित्वादिभिः । भेदका इति संज्ञादयो भेदकाः पूर्वतन्त्रे द्वितीयाध्याय उक्ताः अहंग्रहोपासना गोपालोहमिति भावयेदिति गोपालतापिनीये । न चासंभेदायेत्यस्यासंकर्यायेत्यर्थापेक्षया असम्यग्भेदाय विभक्तमिव स्थितये इत्यर्थो ज्यायान् इत्यहंग्रहोपासना युक्तेति शङ्क्यम् । जीवे ब्रह्माविर्भवतीति भाष्याशयाप्येवं तथापि

भाष्यप्रकाशः ।

तन्मतं संदिग्धमिव । तत्र यदि मुक्तजीवपरं, तदा तु पूर्वोक्तदूषणग्रस्तमित्यप्रयोजकम् । यदि केवलपरमेश्वरपरं, तदा तु न दुष्टम् ।

रामानुजाचार्यास्तु, अत्र पक्षानुल्लेखादिदं सूत्रद्वयं पूर्वसूत्रशेषत्वेन योजयन्ति । तेन तन्मतेऽत्र जीवाद् भिन्न एव परमेश्वरः प्रतिपाद्यः । एवं तच्छौरमतेऽपि ।

अत्रेदं बोध्यम् । सत्यमत्र पक्षानुल्लेखस्तथापि, आद्ये विषयवाक्ये आकाशः पक्षो द्वितीये त्वात्मा पक्ष इति पक्षभेदाद्धेतुभेदाच्चाधिकरणभेद एव युक्तः । अन्यथा, अर्थान्तरत्वादिव्यपदेशादिति सर्वस्य हेतोरनुवृत्त्याऽप्यात्मनः प्रत्यगात्मभेदसिद्धिर्भेदेनेति पदस्य, पत्यादिसूत्रस्य च वैयर्थ्यापत्तेदुर्वारत्वादिति ।

माध्वास्तु, स वा एष संप्रसादे रत्वा चरित्वेत्यादिना स्वप्नादिद्रष्टा यः प्रतिपादितोऽसङ्गत्वेन च, स जीवो, ब्रह्म वेति संशये, सुषुप्त्यादौ जीवाद् भेदेन व्यपदेशाद् ब्रह्मैवात्र प्रतिपाद्यम् । स्वप्नस्य सत्यत्वात् तद्द्रष्टृत्वं सर्वज्ञे ब्रह्मण्यविरुद्धम् । तस्मादसङ्गं ब्रह्मैवेत्याहुः । द्वितीयसूत्रे च पत्यादिशब्दानां श्रावणात् परमेश्वर एव प्रतिपाद्यो न तु, स वा एष महानज आत्मेति वाक्यप्रतिपादितः । अजशब्दवाच्यश्च चतुर्मुख इत्याहुः ।

भिक्षुस्तु, अत्रोत्क्रान्तिशब्दो जीवस्य देहत्यागमात्रपरतया मोक्षादीनामपि संग्राहकः । मोक्षावस्थायामपि निरञ्जनः परमं साम्यमुपैतीति साम्यान्तर्गतस्य भेदस्य व्यपदेशात् ब्रह्मैव सन् ब्रह्माप्येतीत्युक्तवाक्येऽप्यप्ययस्य भेदतत्परत्वाच्च । ब्रह्मैव सन्निति तु त्यक्तदेहाभिमान इति, प्राप्तगौणब्रह्मभाव इति वेत्यर्थबोधकम् । प्रलयावस्थायां च यत् प्रयन्त्यभिसंविशन्तीत्यादिश्रुतौ कोशखड्गयोरिव प्रवेष्टृव्यप्रवेष्ट्रोर्भेदोऽवगम्यत इति । नन्वेवमपि सुषुप्तावेकीभावः । तुरीयाख्ये महाप्रलये च ब्रह्मचिन्मात्रावशेषो जीवो माण्डूक्यादिवाक्येभ्यः सेत्स्यतीति चेन्न । उक्तबृहदार-

रश्मिः ।

फलत्वेन सद्योमुक्तेर्निषेधात् संप्रज्ञातसमाधिसूचनात् सुषुप्त्युक्तेश्चाहंग्रहस्यानुक्तेः । पूर्वसूत्रेति तथाहि पूर्वसूत्रे मुक्तात्मप्रतिषेधेन परमात्माकाशशब्दार्थ उक्तः । अथ स्यात् प्रत्यगात्मनोर्थान्तरमेव नास्ति ऐक्योपदेशात् द्वैतप्रतिषेधाच्च शुद्धावस्था एव प्रत्यगात्मनोर्थात् परं ब्रह्म परमेश्वर इति व्यपदिश्यतेऽतः प्रकृतान्मुक्तात्मनोऽभिसंभवितुर्नार्थान्तरमभिसंभाव्यो ब्रह्मलोकः । अतो नामरूपयोर्निर्वहिताकाशोपि स एव भवितुमर्हतीति अत उत्तरं पठति श्रीसुषुप्त्योत्क्रान्त्योर्भेदेन श्रीव्यपदेशादिति वर्तते सुषुप्त्युत्क्रान्त्योः प्रत्यगात्मनोर्थान्तरत्वेन परमात्मनो व्यपदेशात् प्रत्यगात्मनो अर्थान्तरभूतः प्रत्यगात्मेति तथा हि द्वितीयः सूत्रे यं परिष्वक्त आत्मोत्तरत्र पत्यादिशब्दैः व्यपदिश्यते सर्वस्याधिपतिः सर्वस्य वशीति । एवं च पतित्वजगद्विधरणसर्वेश्वरत्वादयः प्रत्यगात्मनि मुक्तावस्थेपि न कथंचित्संभवन्ति । अतो मुक्तात्मनोऽर्थान्तर्भूतो नामरूपयोर्निर्वहिता आकाश इत्येवं पूर्वसूत्रशेषत्वेन योजयन्ति । न तु स्वमते कुतो न शेषत्वमत आहुः अत्रेदमिति । पक्ष इति । आकाशः परमात्मा अर्थान्तरत्वादि व्यपदेशात् । आत्मा प्रकरणार्थः । सुषुप्तावुत्क्रमणे च जीवब्रह्मणोर्भेदेन व्यपदेशादिति तथा च भाष्यम् । ब्रह्मैव प्रकरणार्थ इत्यादि अन्यथेत्येकाधिकरणत्वे प्रकारे सति । भेद इति इमे अविभागाद्वैतवादिनः अतोऽविभाग इत्यर्थः । एकीभाव इति नाविभागाद्वैतमिति भावः । माण्डूक्येति

भाष्यप्रकाशः ।

ष्यकवाक्ययोरविभागपरत्वस्यागत्या वक्तव्यतया तदेकवाक्यत्वेनेतरश्रुतेरपि तत्परत्वावधारणात् । अविभागो वचनात् इति सूत्रे व्यासैरपि वक्ष्यमाणत्वाच्चेत्याह ।

तत्र यदविरुद्धं; तद् ग्राह्यम् । शेषे उदासीना वयम् ।

एवमस्मिन् पादे पदार्थान्तरेऽतिव्याप्तिवारणात् तल्लिङ्गाद्यधिकरणोक्तार्थप्रपञ्चनेनोपास्य-

रश्मिः ।

यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति तत्सुषुप्तं सुषुप्तस्थाने एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पाद इत्येकीभावो माण्डूक्योपनिषदि ।

'प्रज्ञानांशुप्रतानैः स्थिरचरनिकरव्यापिभिर्व्याप्य लोकान्
भुक्त्वा भोगान् स्थविष्ठान् पुनरपि धिषणोद्भासितान् कामजन्यान् ।
पीत्वा सर्वान् विशेषान् स्वपिति मधुरभुक् मायया मोहयन्नो
मायासंख्यातुरीयं परममृतमजं ब्रह्म यत्तन्नतोस्मि' ॥

इति च माण्डूक्ये । अगत्येति जीवब्रह्मप्रतीत्या मुक्तिप्रतीत्या चागतिस्तया । न चैक्यमस्त्विति शङ्क्यम् । छान्दोग्ये श्वेतकेतूपाख्याने यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणां रसान् समवहारमेकताꣳरसं गमयन्तीत्यत्राविभागोक्तेः अविभागाद्वैतान् निस्तिष्ठन्ति निष्पादयन्ति । नानेति नानागतीनां नानादिक्कानाम् । समवेति समाहृत्य एकतां मध्वात्मकताम् । इत्यविभागाद्वैतसिद्धेः । तत्परत्वेति अविभागाद्वैतपरत्वावधारणान्न त्वात्यन्तिकैक्यपरत्वावधारणात् । अविभागेति इदं फलाध्याये द्वितीयपादेस्ति जीवस्य मुक्तौ ब्रह्मणा सहाविभागः । यदविरुद्धमिति तत्रासङ्गं ब्रह्मेति विरुद्धम् । तस्य विरुद्धधर्माश्रयत्वात् । सेतुर्विधरण इत्यत्रैवोक्तेः पतनप्रतिबन्धकव्यापारस्य विधरणपदार्थत्वात् । द्वितीयसूत्रोक्तमविरुद्धम् । अजपदार्थो विरुद्धः अजपदस्यान्यार्थकत्वात् मोक्षादीनां संग्रहोऽविरुद्धः सद्योमुक्त्याद्यङ्गीकारात् । त्यक्तदेहेत्यादिकं विरुद्धम् । ब्रह्मैवसच्चित्त्वस्यांशस्य कूटस्थः सच्चित्त्वमर्थात् । कोशखड्गयोरिति विरुद्धम् । सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयते इति दृष्टान्तात् । इतरश्रुतेस्तत्परत्वावधारणं विरुद्धम् 'अविभक्तं च भूतेषु' इत्यत्र नञर्थानां षट्कात् ।

'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः' ॥

अब्राह्मणः अपापमनश्वः अनुदरा कन्या अपशवो वा अन्ये गो अश्वेभ्यः अधर्म इत्युदाहरणानि। तल्लिङ्गादिति आदिपदेन दहराधिकरणं उपास्येति ज्योतिरधिकरणे ज्योतिः शरीरात् समुत्थिताधिकरणम् । नामरूपान्तर्वर्तित्वेन नामरूपाधाररूपोपास्यनिरूपकेत्यर्थः । तथा ब्रह्मप्रकरणमित्यस्मिन्नधिकरणे ब्रह्म सर्वाधिकरणं देशकालौ प्रकरणमिति देशकालरूपाधिकरणं च प्रत्यपादि ।

भाष्यप्रकाशः ।

रूपनिरूपकवाक्यविचारादुपासनाधिकारिविचारपूर्वकं त्रयोदशाधिकरण्या आधाररूपो भगवान् विचारितः ॥ ४३ ॥

इति त्रयोदशं सुषुप्त्युत्क्रान्त्यधिकरणम् ॥ १३ ॥

इति श्रीमद्वल्लभाचार्यचरणनखचन्द्रकिरणनिवारितहृदयान्धकारेण पीताम्बरात्मजपुरुषोत्तमेन कृते ब्रह्मसूत्राणुभाष्यप्रकाशे प्रथमाध्यायस्य तृतीयः पादः समाप्तः ॥ १ ॥ ३ ॥

रश्मिः ।

ब्रह्माविर्भवतीति जीवरूपाधारोपि । आधारनिरूपके पादे तदुपर्यपीत्याद्यधिकरणतात्पर्यमाहुः उपासनेति । विचारित इति संगतिस्तूपोद्घातोग्रे पादे कथयिष्यते ॥ ४३ ॥

इति त्रयोदशाधिकरणम् ॥ १३ ॥

इति श्रीविद्वन्मण्डनश्रीगिरिधरात्मजश्रीदामोदरभ्रात्रीयेण श्रीगोविन्दरायपौत्रेण पूर्णवेत्रा श्रीविठ्ठलरायभ्रात्रीयश्रीगोकुलोत्सवात्मजगोपेश्वरेण कृते भाष्यप्रकाशरश्मौ प्रथमाध्याये तृतीयः पादः संपूर्णतामगमत् ॥ १ ॥ ३ ॥



श्रीकृष्णाय नमः ।

# श्रीमद्ब्रह्मसूत्राणुभाष्यम् ।

शुद्धाद्वैतब्रह्मवादनिर्गुणभक्तिमार्गप्रवर्तकाचार्यचक्रचूडामणि-
श्रीमद्वल्लभाचार्यचरणप्रणीतम् ।

दशदिगन्तविजयिश्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणप्रणीत-
भाष्यप्रकाश-संपूर्णवेत्तृश्रीमद्गोस्वामिश्रीगोपेश्वर-
जिचरणप्रणीतभाष्यप्रकाशरश्मिपरिबृंहितम् ।

## प्रथमाध्यायस्य चतुर्थः पादः

'भगवद्धर्मपरायणसद्गतश्रेष्ठिगोवर्धनदास सुन्दरदास' इत्यस्य पुष्टिमार्गीय-
संस्कृतसाहित्यसमुद्धारार्थं निर्दिष्टद्रव्यसंग्रहतः 'प्राप्तभगवत्पद-
मूलचन्द्र तुलसीदास तेलीवाला, बी. ए., एल्‌एल्. बी.,
वकील, हाइकोर्ट' इत्येतेषां सुहृद्भिः
संशोध्य 'निर्णयसागर' मुद्रणालये
मुद्रयित्वा प्रकटीकृतम् ।

श्रीवल्लभाब्दाः ४६४. संवत् १९९८.

मूल्यं रूपकचतुष्टयम् ।

# EDITORS' NOTE.

The publication of this great work, the Anu Bhashya together with the commentary Prakasha thereon by Shri Purushottamaji, the erudite Acharya of Vallabha Sampradaya, and the Rashmi on both of these by Goswami Shri Gopeshvarji, who flourished in the nineteenth century and who is known to have written various books and commentaries on Shuddhadwaita Philosophy and allied subjects, was undertaken under the auspices of the Trust of the Late Sheth Gordhandas Soondardas Mulji Jetha, by Mr. Mulchandra Tulsidas Telivalla. He began to publish these from the Third Adhyaya of Anu Bhashya, and published in February 1926, the First Pada of the said Adhyaya. The reader is referred to the introduction of the said Pada in which a short history is given of the author and the literature on the Anu Bhashya available in the Shuddhadwaita Sampradaya.

He published the Second and Third Padas of the Third Adhyaya, and the reader is referred to the Preface of the Third Pada published on 27-4-1927, in which is established the connection of Shri Krishnachandraji with the great work. By the impenetrable will of God, the Editor, Mr. Telivalla, died suddenly on 26-6-1927, to the utter dismay and consternation of us, his friends and collaborators.

Through extreme diffidence, and with the consent of the Trustees of Sheth Gordhandas Soondardas Trust, we took upon ourselves to continue the work left incomplete by our colleague. We are thankful to the Almighty for removing all difficulties and putting facilities in our way of completing this stupendous task.

In the middle of the task, we were deprived of the help of one of our colleagues, the late Mr. Gordhandas Pragji of the Editorial Staff of the Bombay Samachar. His enthusiasm and rigidity of purpose are still present in our minds. We may frankly mention that Shastri Kalyanji Kanji of Gondal has been chiefly instumental in getting the work carried through the Press. He deserves our thanks, and the Sampradaya will always remain indebted to him for this.

It was our intention to provide the reader with the comparative views of the different Bhashyakaras on the various Adhikaranas of the Brahma Sutras, which have been so lucidly given by Goswami Shri Purushottamaji, and with a view to have them in the Introduction to this publication, we requested Prof. G. H. Bhatt, M. A., Professor of Sanskrit in the Baroda

College, to take up the work, and he readily undertook to do it. Unfortunately, on account of other engagements, he could not find time to do it. We, however, wish that he may be able to do this as an Introduction to the Translation of the Anu Bhashya, which he has undertaken under the Gaekwar Oriental Series. In these circumstances and in view of the daily growing scarcity of paper and printing materials, we have thought it fit to give as Preface to this work the very clear analysis of the Adhikaranas made by Goswami Shri Purushottamaji himself in his Adhikaranamala, and to complete this work, without further delay.

We are thankful to H. H. Goswami Shri Gokulnathaji Maharaja of Bombay, for his favour of co-operation and consent for getting the work published, and it may be safely said that the present work sees the light of day through his good offices with the Trustees, and chiefly with the late Mr. Lalji Naranji, one of the Trustees.

Thus by the grace of God we have been able to complete the work left unfinished by our friend the late Mr. Mulchandra Telivalla, and we offer this fruit of our labour of love at the Lotus Feet of Lord Shri Krishna.

*Bombay,*
*31st May 1942.*

DHIRAJLAL VRAJDAS SANKALIA.
JAMNADAS KANJEE.
HIRALAL MOOLJEE.
PURUSHOTTAM KANJEE.

श्रीकृष्णाय नमः ।

# वेदान्ताधिकरणमाला ।

## श्रीपुरुषोत्तमविरचिता ।



### प्रथमोऽध्यायः ।

श्रीबालकृष्णमाचार्यान् प्रभून् श्रीविठ्ठलेश्वरान् । व्यासाचार्यांस्तद्वचांसि प्रणमामि पुनः पुनः ॥
भाष्यप्रकाशे विस्तीर्णोर्थोवगन्तुं न शक्यते । सर्वैरतोर्थं संगृह्य न्यायमाला वितन्यते ॥ २ ॥

तत्र तावद् व्यासचरणैरज्ञजनानुग्रहार्थं सर्ववेदार्थरूपस्य ब्रह्मणः स्वरूपसाधनफलमतान्तरनिराकरणभेदेन चतुर्धा विचारोत्र शास्त्रे क्रियते । तत्र सर्ववेदार्थरूपं ब्रह्मैवेति ज्ञापयितुं चतुर्लक्षण्यां तत्सम्बन्धि सर्वं विचारितम् । तत्र प्रथमेऽध्याये सर्वेषां वेदान्तानां ब्रह्मण्येव समन्वयः, वेदार्थनिश्चयश्च वेदान्तविचाराधीन इति सर्वोपि वेदो ब्रह्मण्येव प्रमाणमित्युक्तम् । द्वितीये च श्रुतीनां परस्परविरोधपरिहारेण विरुद्धस्मृतीनां दूषणेन च ब्रह्मैव प्रमेयमिति निर्णीतम् । ततस्तृतीयेऽन्तरङ्गं बहिरङ्गं च साधनं सोपकरणं विचारितम् । ततश्चतुर्थे फलप्राप्तिप्रकारस्तदनुभवप्रकारो ब्रह्मैव च फलमिति निर्णीतमिति शास्त्रार्थसङ्ग्रहः ।

तत्र प्रथमेऽध्याये सर्वेषां वेदान्तानां ब्रह्मणि समन्वयश्चतुर्भिः पादैर्वक्तव्यः । तत्रासन्दिग्धेषु वेदान्तवाक्येषु विचारासम्भारात्सन्दिग्धान्येव निर्णेतव्यानि । तानि चतुर्धा, कार्यप्रतिपादकानि, अन्तर्यामिप्रतिपादकानि, उपास्यरूपप्रतिपादकानि प्रकीर्णकानि चेत्यतश्चत्वारः पादाः ।

तत्र प्रथमपादे ब्रह्मसम्बन्धिविचारं प्रतिज्ञाय ब्रह्म लक्षयित्वा ततः कार्यवाक्यानि विचारितानि ।

तत्र प्रथमे एकसूत्रे जिज्ञासाधिकरणे षडङ्गैरेव वेदार्थनिश्चयस्य संभवादत्यन्तनिश्चयस्य तपःप्रभृतिभिरेव संभवात्तदर्थं किं वेदान्तविचारेणेत्याशङ्क्य, ऋषिभिर्नानाशाखानां कृतत्वात्तच्छ्रवणेन बुद्धिदोषान्मन्दानां संदेहसम्भवे तन्निवारणार्थं विचारशास्त्रं कर्तव्यम् । तत्र यद्यपि 'सर्वे वेदा यत्पदमामनन्ति' इति, 'वेदैश्च सर्वैरहमेव वेद्य' इत्यादिश्रुतिस्मृतिभिर्ब्रह्मैव सर्ववेदार्थः, तथापीदं वाक्यं वेदान्ते श्रुतं 'तं त्वौपनिषदं पुरुषं पृच्छामी'ति, पुरुषरूपता च तत्रैव श्रुता, 'वेदान्तविज्ञानसुनिश्चितार्था' इतिवाक्येन वेदान्तानामर्थनिश्चायकत्वं च तत्रैव श्रुतम्, अत इदानीं तपःप्रभृतीनामसंभवाद्वेदान्तविचारेणैव वेदार्थरूपब्रह्मस्वरूपनिश्चय इत्यभिसंधाय ब्रह्मसंबन्धिविचारः श्रीबादरायणाचार्यैः प्रस्तुत इत्युक्तम् । अतोग्रिमाणि यान्यधिकरणानि शास्त्रसमाप्तिपर्यन्तं तानि सर्वाण्यस्यैव विषय इति तेषामस्य च विषयविषयिभावः संगतिरित्यपि बोधितम् ॥ १ ॥

---

१. ग्रन्थे अस्मिन् प्रतिपाद्यः को विषय इति प्रस्तावनायां वक्तव्यमावश्यकं प्रकाशकानाम् । साधारणसंशोधको यं सारमुद्धरेत् तदपेक्षया श्रीमदणुभाष्यप्रकाशकारैः गो. श्रीपुरुषोत्तमचरणैः अणुभाष्याधिकरणतो सारमात्रं संगृह्य अधिकरणमाला रचितास्ति सैवास्माभिः ग्रन्थप्रतिपाद्यविषयत्वात्र मुद्रापितास्ति । सा यद्यपि सेठीबालपंक्तिः संशोध्य पृथक् मुद्रितास्ति तथापि विपुलविस्तरार्थं पुनर्मुद्राप्यते इति न मोघास्मत्कृतिरिति विदांकुर्वन्तु विद्वांसः ।

ततो द्वितीये एकसूत्रे जन्माद्यधिकरणे ब्रह्म किंलक्षणकं किंप्रमाणकं चेत्याकाङ्क्षायां जगदुत्पत्तिस्थितिकारणं ब्रह्मेति सूत्रांशेन लक्षितम् । ततोंऽशान्तरेण वेदरूपशास्त्रप्रमाणकं ब्रह्मेत्युक्तम् । तेन कर्तृरूपं निमित्ततया सिध्यति ॥ २ ॥

ततस्तृतीये एकसूत्रे समन्वयाधिकरणे ब्रह्म जगतः कर्तृ निमित्तं चेति चेत्, किं जगतः समवायीत्याशङ्कायामनारोपितानागन्तुकरूपेण समनुगमाद्ब्रह्मैव जगतः समवायीति निर्णीतम् । तेनाभिन्ननिमित्तोपादानवादोऽस्मिन् शास्त्र इति बोधितम् ॥ ३ ॥

एवं त्रिसूत्र्या ब्रह्मणो जिज्ञासा ब्रह्मलक्षणं तद्विचारस्य कर्तव्यता च साधिता । ये पुनः कर्तृत्वे वैषम्यादयो दोषाः, समवायित्वे च विकृतत्वादयः, ते सर्वेऽग्रिमाध्याये परिहर्तव्याः, विचारकर्तव्यतायाः प्रतिज्ञातत्वात् । तत्र सच्चिदानन्दरूपत्वस्य ब्रह्मणः स्वरूपलक्षणत्वात्पूर्वोक्तं कार्यलक्षणं त्रिष्वप्यनुगतं वक्तव्यम्, अन्यथा लक्षणेऽव्याप्तिप्रसङ्गात् । अन्यतश्च निवारणीयम्, अन्यथातिव्याप्तिप्रसङ्गात् । असंभवश्च निवारणीयः ।

तत्र द्वाभ्यामधिकरणाभ्यां सद्रूपे तल्लक्षणं योजितम् । अतःपरं चिद्रूपेऽव्याप्तिनिवारणाय प्रकृतिपरमाण्वादावतिव्याप्तिनिवारणाय च चतुर्थं सप्तसूत्रमीक्षत्यधिकरणमारभ्यते । तत्र प्रथमसूत्रे 'यतो वाचो निवर्तन्ते'इत्यादिश्रुत्या ब्रह्मणः सर्वव्यवहारातीतत्वेन सर्वप्रमाणागोचरतया तज्ज्ञानासंभवाद्विचारो व्यर्थ इत्याशङ्क्य, ब्रह्म सर्ववेदान्तप्रतिपाद्यम्, 'सदेव सोम्येदमग्र आसीत्' इत्युपक्रम्य, 'तदैक्षत', 'बहु स्यां प्रजायेय' इत्यनेनेक्षणस्य बहुभवनस्य च श्रावणात् । अतः सृष्टेः पूर्वमव्यवहार्यत्वेपि तदनन्तरं तत्कर्तृत्वेन तदुपादानत्वेन च व्यवहार्यत्वं श्रुत्योच्यत इति तया तज्ज्ञानस्य संभवात्तद्विचारो न व्यर्थ इति बोधितम् । ईक्षणकर्तृत्वेन चेतने तस्मिन् पूर्वोक्तलक्षण-समन्वयाच्चिद्रूपे लक्षणाव्याप्तिरपि परिहृता । तेनैव प्रकृतिपरमाण्वादावतिव्याप्तिरपि निवारिता, असंभवश्च निवारितः । ततो द्वितीयसूत्रे तस्येक्षणकर्तुरात्मशब्दवाच्यत्वात्प्राकृतगुणवत्त्वं निवारितम् । ततस्तृतीये तदुपासकस्य मोक्षरूपफलकथनादपि तन्निवारितम् । ततश्चतुर्थे जगद्धेयत्वस्याकथनादपि तन्निवारितम् । एवं चतुःसूत्र्यां कार्यविधिमुखेन तद्विचार उक्तः । ततोऽग्रे त्रिसूत्र्यां कार्यनिषेधमुखेन तद्विचार्यते, निषेधश्च प्रलयात्मकः । तत्र पञ्चमे स्वाप्ययसूत्रे जीवसुषुप्तिर्ब्रह्मसंबन्धेनोच्यते । सा च मोक्षभिन्नापि जाग्रदादिवत्कर्मसंबन्धरहितेति प्रलयतुल्या । सा च स्वसंबन्धेनैव जायत इति भगवतस्तत्कर्तृत्वम् । ततः षष्ठे मोक्षदशायां जीवस्य भगवत्तुल्यत्वं श्रुत्योक्तम् । तत्र मैत्रेयीब्राह्मण आदिमध्यावसानेषु ब्रह्मण एव बोधनात् तदात्मत्वं ब्रह्मण एवेति बोधितम् । ततः सप्तमे सर्वप्रलये ब्रह्मैवावशिष्यत इति श्रुत्या बोध्यते । अतः प्रलयो ब्रह्मकर्तृक एवेति बोधितम् । एवमनेनाधिकरणेन चित्स्वरूपे कार्यलक्षणयोजनादव्याप्तिः परिहृता । चित्स्वरूप-त्वबोधनात्प्रकृत्यादावतिव्याप्तिरपि परिहृता ॥ ४ ॥

ततः पञ्चमेऽष्टसूत्र आनन्दमयाधिकरण आनन्दे लक्षणयोजनेन तत्राव्याप्तिः परिह्रियते । तत्र प्रथमसूत्रेऽविशेषेण पुनःकथनरूपादभ्यासादानन्दमयस्य ब्रह्मत्वं स्थापितम् । तत्र प्रथमवर्णके आनन्दस्यार्थतोऽभ्यासः शब्दतश्च । द्वितीयवर्णके तु 'तस्यैष एव शारीर आत्मा यः पूर्वस्ये'ति-वाक्याभ्यास उक्तः । एवमभ्यासेन मयट्प्रवाहाद्भेदे साधिते आनन्दमयस्य ब्रह्मत्वम् । यथा पूर्वतन्त्रे यजत्यभ्यासात्कर्मणस्तद्वत् । ततो द्वितीयसूत्रे मयटो विकारार्थत्वादानन्दमयस्य न ब्रह्मत्वमिति

सूत्रांशेनाशङ्क्य, मयटः प्राचुर्यार्थकत्वान्न मयट्प्रत्ययेनाब्रह्मत्वं वक्तुं शक्यत इत्यंशान्तरेण समाहितम् । ततस्तृतीये सूत्रे आनन्दजनकत्वेन तत्कारणत्वान्मयटो विकारार्थत्वं निवारितम् । ततश्चतुर्थसूत्रे 'सत्यं ज्ञान'मितिमन्त्रे योऽर्थ उक्तः स एव संपूर्णे प्रपाठके प्रपञ्च्य गीयते, अत आनन्दमयो ब्रह्मैवेति निर्णीतम् । ततः पुनरग्रिमया चतुःसूत्र्यायमेवार्थो निषेधमुखेन निर्णीयते । तत्र प्रथमेन जीवस्यानन्दमयत्वं निराक्रियते, जीवे निरङ्कुशजगत्कर्तृत्वादिरूपस्य माहात्म्यस्यानुपपद्यमानत्वात् । द्वितीये 'आनन्दीभवती'त्यादिना जीवस्यानन्दनीयत्वमुच्यते, न त्वानन्दत्वम्, अतो भेदव्यपदेशादपि जीवस्य नानन्दमयत्वमित्युक्तम् । ततस्तृतीये 'सोकामयते'तिचेतनधर्मस्य कामस्य जडायां प्रकृतावनुपपद्यमानत्वात्तस्यापि नानन्दमयीत्युच्यते । ततश्चतुर्थेऽस्य जीवस्यानन्दमये ब्रह्मणि योगमुपसङ्क्रमरूपं फलत्वेन कथयति श्रुतिः, तेन जीवापेक्षया उत्कृष्ट एवानन्दमयो, न तु जीवादपकृष्टः । तस्मादानन्दमयो ब्रह्मैवेति निरूपितम् । एवं चतुःसूत्र्यां जीवजडनिषेधमुखेनानन्दमयो विचारितः । एवमष्टसूत्र्यानन्दमयस्य ब्रह्मत्वे साधिते निरङ्कुशजगत्कारणत्वं तत्रैव पर्यवस्यतीत्यानन्देपि लक्षणसमन्वयात्तत्राव्याप्तिः परिहृता । जीवजडयोर्निवारणादतिव्याप्तिश्च एवमधिकरणचतुष्टयेन सच्चिदानन्देषु लक्षणसमन्वयादसंभवोप्यर्थादेव परिहृतः । तेन जन्माद्यधिकरणस्य शेषभूतमधिकरणत्रयमिति शेषशेषिभावः संगतिः ॥ ५ ॥

ततः षष्ठे द्विसूत्रेऽन्तस्तद्धर्माधिकरणे आदित्यान्तरक्ष्यन्तश्च विद्यमानो हिरण्मयः पुरुष उदित्यादिब्रह्मधर्मोपदेशाद्ब्रह्मैवेत्युक्तम् । ततो द्वितीयसूत्रे 'यमादित्यो न वेदे'तिश्रुत्यादित्याद्भेदनिर्देशेनापि तस्य ब्रह्मत्वं स्थापितम् । तदज्ञाने सति, यदि तस्य ब्रह्मत्वं न विचार्येत तदा, तदज्ञाने सति, 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः स य एवंविदि'त्युक्त्वाग्रे 'एतमानन्दमयमात्मानुपसङ्क्रामती'त्यनेन श्रावितं तद्विदोऽक्षरसायुज्यं परब्रह्मप्राप्तिश्च नोपपद्येत । तस्माद्धेतुतागर्भया प्रसंगसंगत्यैतद्विचारितम् ।

किंच, अयं जन्मादिसूत्रस्थविचारः सर्वस्याग्रिमविचारस्य मूलम् । तत्राग्रे 'फलमत उपपत्ते'रित्यनेन सर्वफलदाता भगवानेवेति वक्तव्यम् । ततोऽग्रे चतुर्थेऽध्याये निषेधमुखेन प्रतीकोपासना, विधिमुखेनाङ्गोपासनाश्चादित्यादिमतिसूत्रे वक्तव्याः । तत्र मतान्तरोक्तरीत्या प्रतीकोपासनानामब्रह्मपरत्वेपि तद्वाक्योक्तफलसिद्धिस्तत्तदन्तःस्थाद्ब्रह्मण एवेति ज्ञापनायाङ्गोपासनानां ब्रह्मपरत्वे तदुक्तमवान्तरफलं तत्क्रतुत्वरूपं मुख्यं फलं च भगवत एवेति ज्ञापनाय चाप्येतद् बोध्यम् ॥ ६ ॥

ततः सप्तम एकसूत्रे तल्लिङ्गाधिकरणे, अष्टम एकसूत्रेऽतिदेशाधिकरणे च ब्रह्मप्रकरणे आकाशप्राणादिशब्दैः ब्रह्मैवोच्यते, निरङ्कुशजगत्कारणत्वरूपब्रह्मलिङ्गादिति विचारितम् । तेन पूर्वोक्तलक्षणेतिव्याप्तिदोषः परिहृियत इति पूर्वोक्तशेषभूतमिदमधिकरणद्वयम् । पञ्चमाद्यधिकरणद्वये प्रत्ययकृतसंदेहनिरासः, सप्तमाद्यधिकरणेषु तु प्रकृतिकृतसंदेहनिरास इति विशेषः, प्रकृतिप्रत्ययभेदेन शब्दस्य द्विविधत्वादिति । षष्ठाद्यधिकरणत्रयस्य विषयवाक्यान्युद्गीथविद्यास्थान्युक्तानि । तेन कर्माङ्गोपासनास्वपि ब्रह्मैव फलदम्, तज्ज्ञानेनैव च कर्मणो वीर्यवत्तरत्वमित्यपि बोधितम् । तेन प्रसङ्गोपि संगतिः ॥ ७ ॥ ८ ॥

ततो नवमे चतुःसूत्रे ज्योतिश्चरणाधिकरणे 'अथ यदितः परो दिवो ज्योतिर्दीप्यत' इतिवाक्ये ज्योतिःशब्देन ब्रह्मैवोच्यत इति निर्णीतम् । तत्र प्रथमसूत्रे 'एतावानस्य महिमे'तिमन्त्रे

भूतात्मकानां चरणानां ब्रह्मधर्मत्वाज्ज्योतिःशब्देन ब्रह्मैवोच्यत इति निर्णीतम् । ततो द्वितीयसूत्र एतत्संदर्भारम्भे गायत्रीछन्द एवोच्यत इति न चरणानां ब्रह्मधर्मत्वमिति सूत्रांशेनाशङ्क्यांशान्तरेण समाहितम् । भगवति चेतोर्पणार्थं संदर्भादौ गायत्री प्रस्तुता, तयोपासने ब्रह्मदर्शनं भवतीति तस्माद्ब्रह्मण एव पादाः, न गायत्र्या इत्युक्तम् । ततस्तृतीये गायत्रीछन्दो हि शब्दरूपम्, भूतपृथिवीशरीरहृदयान्यर्थरूपाणि । तेषां शब्दरूपछन्दःपादत्वं न संगच्छते । अतो ब्रह्मण एव पादा इत्युक्तम् । ततश्चतुर्थसूत्रे यद्यप्येवं पादानां ब्रह्मधर्मत्वमायाति, तथापि 'एतावानि'तिमन्त्रे 'दिवी'ति सप्तम्या पादानां द्युलोकाधारत्वकथनेन विवक्षितस्य ज्योतिषस्तदाधारत्वमुक्तम् । 'अथ यदतः परो दिव' इतिपञ्चम्यानाधारत्वमुच्यत इत्युपदेशभेदाज्ज्योतिर्न ब्रह्मेत्याशङ्क्य, यथा 'वृक्षे श्येनो वृक्षाग्रात्परतः श्येन' इतिविभक्तिभेदेपि यथैकार्थ्यप्रत्यभिज्ञा न विरुध्यते, तथात्रापीति न दोष इति समाहितम् । तस्मादत्र ज्योतिःशब्दवाच्यं ब्रह्मैवेति निर्णीतम् । यद्यपि पूर्वाधिकरणन्यायेन ज्योतिःशब्दस्य ब्रह्मवाचकत्वमायाति, तथाप्यत्र प्रकरणस्य लिङ्गस्य च संदिग्धत्वात्पुनर्विचारितम् । तेन सामान्यविशेषभावः पूर्वाधिकरणसङ्गतिः । एतेनान्या अपि पादसंबद्धाः प्रणवादिविधा अपि ब्रह्मपरा इत्यपि बोधितम् ॥ ९ ॥

ततो दशमे चतुःसूत्रेनुगमाधिकरणे कौशीतकिब्राह्मणस्थ इन्द्रप्रतर्दनसंवादे 'प्राणोहमस्मि प्रज्ञात्मे'त्यादिनोच्यमानः प्राणो ब्रह्मैव, नासन्यो, नापि जीवः, तस्य ब्रह्मत्वाङ्गीकार एव वाक्योक्तपदार्थसंगतेरित्युक्तम् । तदुपपादितं च भाष्ये । ततो द्वितीयसूत्रे वक्त्रेन्द्रेण प्रतर्दनं प्रति स्वात्मैव प्राणत्वेनोपदिश्यत इति न तस्य ब्रह्मबोधकत्वमिति सूत्रांशेनाशङ्क्य, ततोंशान्तरेण समाधानायास्मिन् प्रकरणे ब्रह्मसंबन्ध एव भूयानुपलभ्यते, तस्मादत्र प्रतिपाद्यः प्राणः परमात्मेत्येवं प्रतिपादितम् । ततस्तृतीये यदि ब्रह्मैवात्र प्रतिपाद्यं तदा 'मामेव विजानीही'तिस्वात्मोपदेशस्य का गतिरित्याशङ्कायामयमुपदेशः शास्त्रदृष्टया, न तु लोकदृष्टया । शास्त्रे च ब्रह्मज्ञाने सति ज्ञातुर्ब्रह्माभेदेन सर्वभाव उच्यते । यथा श्रुत्यन्तरे वामदेवस्य सर्वात्मभाव उच्यते, 'तद्धैतत्पश्यन्नृषिर्वामदेव' इत्यादिना, तद्वदत्रापि ज्ञानेन ब्रह्मात्मभावात्स्वस्योपास्यत्वेनोपदेश इत्युक्तम् । ततश्चतुर्थे नन्वस्मिन्प्रकरणे जीवधर्मा मुख्यप्राणधर्माश्च भूयांस उपदिश्यन्त इति नास्य ब्रह्मप्रकरणत्वमिति सूत्रांशेनाशङ्क्यांशान्तरेण समाधानमाह । यदि जीवप्राणब्रह्मणां धर्मदर्शनात्त्रयाणां मुख्यत्वं स्वीक्रियेत, तथा सत्युपासनात्रयप्रसङ्गाद्वाक्यभेद आपद्येत । स तु दुष्ट इति न युक्तः । तथा सति योत्र जीवधर्माणां प्राणधर्माणां चोपदेशः, सोत्र जीवस्य ब्रह्माश्रितत्वात्, प्राणस्य तु तद्योगात् । तस्माच्चे सर्वे ब्रह्मधर्मा एवेति प्राणो ब्रह्मेति प्रतिपादितम् । इदं चाधिकरणं पूर्वोक्तसर्वनिगमनार्थम् । इदं यथा तथा भाष्यप्रकाशादवगन्तव्यम् । भाष्ये तु चिदचित्संश्लेषनिवारणार्थमित्युक्तम् । ब्रह्मवादे केवलस्यैव ब्रह्मणो जगत्कारणत्वेन चिदचिच्छरीरापेक्षाराहित्यादिति । तेन न पुनरुक्तिदोषः । कार्यप्रतिपादनद्वारा वाक्यानां स्वरूपपरत्वं नवस्वप्यधिकरणेषु स्पष्टम् ॥ १० ॥

इति श्रीवल्लभाचार्यचरणदासस्य श्रीपीताम्बरात्मजपुरुषोत्तमस्य कृतौ वेदान्ताधिकरणमालायां प्रथमाध्यायस्य प्रथमः पादः ॥

---

एवं प्रथमपादे कार्यप्रतिपादकानां वाक्यानां ब्रह्मणि समन्वयो विचारितः । प्रकृतिप्रत्ययभेदेन शब्दस्यान्यपरत्वसंदेहे तन्निवारणं च कृतम् । अतःपरं द्वितीयादिष्वर्थसंदेहो निवारणीयः । जीवजडतत्समुदायभेदेनार्थस्य त्रैविध्यात् । तत्र द्वितीयपादे जीवपुरःसरेणार्थसंदेहो निवारणीयः । अन्तर्यामिप्रतिपादकानां वाक्यानां ब्रह्मणि समन्वयो वक्तव्यः । तेन पादानामेककार्यत्वं संगतिः ।

तत्र प्रथमे चतुःसूत्रे सर्वत्र प्रसिद्धोपदेशाधिकरणे छान्दोग्यस्था शाण्डिल्यविद्या विचार्यते । तत्रास्यां विद्यायां 'मनोमयः प्राणशरीर'इत्यनेन विज्ञानमयस्य जीवस्य मनोमयत्वादिधर्मवैशिष्टये तैरेव च धर्मैः कर्तृत्वनिर्वाहाद्ब्रह्मणो जगत्कर्तृत्वमपि नोपपद्यत इत्याशङ्कायां, जीवस्य ब्रह्मत्वेनोपासनं निवार्य, सर्ववेदान्तप्रसिद्धस्य ब्रह्मण एवोपदेशाद्ब्रह्मैवात्रोच्यत इति प्रथमसूत्रे आक्षेपनिवारणादाक्षेपोधिकरणसंगतिरित्युक्तम् । ततो द्वितीयसूत्रेस्यां विद्यायां फलत्वेन विवक्षिता ये गुणास्तेषां प्राप्तिर्भगवत्स्वरूपलाभात् तत्सारूप्यलाभाद्वोपपद्यते, अतोपि तथेत्युक्तम् । ततस्तृतीयसूत्रे तिरोहितानन्दत्वेन निराकारत्वादपि नात्र जीव उच्यते, किंतु ब्रह्मैवेत्युक्तम् । ततस्तुरीये ब्रह्मात्र ध्येयत्वेन प्राप्तत्वेन च व्यपदिश्यते, जीवस्तु प्राप्तृत्वेन ध्यातृत्वेन च व्यपदिश्यत इत्युक्तम् । तेनात्रान्तर्यामिभूत ब्रह्मैवोच्यत इति साधितम् ॥ १ ॥

ततो द्वितीये चतुःसूत्रे शब्दविशेषाधिकरणे वाजिशाखास्थं 'यथा व्रीहिर्वा यवो वे'त्यादिविषयवाक्यमुपन्यस्य, तत्रान्तरात्मन्युक्तो हिरण्मयः पुरुषो न जीवः, किंतु ब्रह्मैव, शब्देनोक्ताद्धिरण्मयत्वरूपाद्विशेषादित्युक्तम् । ततो द्वितीये सूत्रे ईश्वरः सर्वभूतानां हृद्देशेर्जुन तिष्ठती'ति गीतास्मृतेरपि हृद्देशे वर्तमानस्य ब्रह्मत्वमित्युक्तम् । ततस्तृतीयसूत्रे व्यापकस्येश्वरस्याल्पे हृदयस्थाने स्थितेरयुक्तत्वाच्छ्रुतौ व्रीह्यादितुल्यताश्रावणाच्च तस्य ब्रह्मत्वं न युक्तमिति सूत्रांशेनाशङ्कांशान्तरेण समाहितम् । हृदये निदिध्यासने कृते ब्रह्म ज्ञातुं शक्यते, तत्रैव साक्षात्कारात् । तस्माद् हृदयस्य स्थानत्वमुच्यते । अन्ये त्वत्र दृष्टान्तमप्याहुर्यथा सर्वलोकपतिरप्ययोध्यापतिरिति । तस्मान्न व्यापकत्वहानिः । यत्पुनर्व्रीह्यादितुल्यत्वकथनं तत्तु चतुर्विधभूतान्तरवर्तित्वज्ञापनार्थम् । अतो व्योमवत्सर्वत्र स्थितिर्बोध्यते । तस्मान्न दोष इत्युक्तम् । ततश्चतुर्थसूत्रे तस्य हृदये वर्तमानत्वे जीववत्सुखदुःखभोगोपि संभवतीति सूत्रांशेनाशङ्कांशान्तरेण समाहितम् । तस्य स भोगो न संभवति, तस्य सर्वरूपत्वानन्दरूपत्वादिरूपाणां विशेषाणां विद्यमानत्वादिति । तस्माद्ब्रह्मैवात्रोच्यते । इदं चाधिकरणमन्तर्यामिणो रूपनिश्चायनार्थं हिरण्मयपुरुषत्वेनान्तस्तद्धर्माधिकरणविषयवाक्योक्ताकारस्य मासाग्निहोत्रे नित्याग्निहोत्रधर्मवद्वक्तुं शक्यत्वादिति मम प्रतिभाति । संगतिरत्र प्रसङ्गो बोध्यः ॥ २ ॥

ततस्तृतीये द्विसूत्रे अत्ता चराचरेत्यधिकरणे 'यस्य ब्रह्म च क्षत्रं चे'तिकाठकवाक्योक्तं ब्रह्मक्षत्रात्तृत्वं न जीवस्य, किंतु ब्रह्मण एवेति निर्धारितम् । तत्र प्रथमसूत्रे चराचरग्रहणं हेतुः, चरो मृत्युरचरं कस्याप्यचाल्यम्, ब्रह्मक्षत्राणां संपद्यमानानां भोगः साधितः, सर्वरूपत्वात्मकं वैशेष्यं च । द्वितीयसूत्रे च प्रकरणं हेतुः । तथा च जीवाशक्यभोगस्य चराचरस्य ग्रहणरूपालिङ्गादस्य वाक्यस्य ब्रह्मप्रकरणपठितत्वाच्चात्रोक्तं ब्रह्मैवेति सिध्यति । मोक्षापेक्षिब्रह्मक्षत्रप्राणानामुत्क्रमणाभावेनान्तःप्रकटे भगवत्येव लयादन्तर्यामित्वमपि सिद्धम् पूर्वाधिकरणे ब्रह्मणो जीवविलक्षणस्य भोगस्योक्तत्वात्तत्साधनायात्रोपोद्घातेनानन्दरूपाद्वैशेष्यात्संपन्नजीवसाहाय्येन भोगो विचारितः, अन्तर्यामिधर्मविचारस्यैव प्रकृतत्वादिति ॥ ३ ॥

ततश्चतुर्थे द्विसूत्रे गुहां प्रविष्टावित्यधिकरणे 'ऋतं पिबन्ता'विति काठकवाक्यं विषयत्वेनोपन्यस्यात्र जीवद्वयं नोच्यते, किंतु जीवब्रह्मणी उच्येते। अत्र जीवब्रह्मणोरेव प्रतिपाद्यत्वदर्शनात्। इतः पूर्वं 'येयं प्रेते विचिकित्सा'इति 'अन्यत्र धर्मा'दिति वाक्यद्वयेन तयोरेव पृष्टत्वादिति पूर्वसूत्र उक्तम्। ततो द्वितीयसूत्रे पूर्वप्रकरणोक्तविशेषणबलादप्यत्र जीवब्रह्मणी एवोच्येते इति साधितम्। पूर्वाधिकरणोक्तब्रह्मक्षत्रभोगोत्रैवेतिज्ञापनार्थम्। तेनानुप्रसङ्गः संगतिः॥ ४॥

ततः पञ्चमे पञ्चसूत्र अन्तर उपपत्तेरित्यधिकरणे छान्दोग्ये उपकोसलविद्यास्थं 'य एषोऽक्षिणि पुरुषो दृश्यत'इतिवाक्यं विषयत्वेनोपन्यस्य अक्षिपुरुषस्य ब्रह्मत्वं निर्धारितम्। तत्र प्रथमसूत्र आर्षदर्शनस्योपपद्यमानत्वान्न तत्र प्रतिबिम्बस्य ब्रह्मत्वेनोपासना विधीयते, किंतु ब्रह्मैवेत्युक्तम्। ततो द्वितीयसूत्रे सर्वलोकस्य भामवामनयनरूपस्थानादिव्यपदेशात्तदेव साधितम्। ततस्तृतीयेऽमृतादिपदकथनादपि तत्साधितम्। ततश्चतुर्थसूत्रे तदुपासकस्य ब्रह्मविद्गतिकथनादपि तत्साधितम्। ततः पञ्चमसूत्रे जीवो निवारितः। एवं चात्र पञ्चसूत्र्यां स्थानमाहात्म्यादिरूपं वैशेष्यं बोधितम्। अक्षिस्थितस्य भोगस्तु वाजिनां मण्डलब्राह्मणे प्रसिद्धः। एवमधिकरणत्रयेण भोगदोषासंसर्गहेतुभूतं वैशेष्यमक्षिस्थितस्य पुरुषस्यान्तर्यामित्वं च विचारितम्॥ ५॥

ततः षष्ठे त्रिसूत्रे अन्तर्याम्यधिकरणे बृहदारण्यकस्थमन्तर्यामिब्राह्मणं विषयवाक्यत्वेनोपन्यस्तम्। अन्तर्यामी सर्वत्रैकः, अथवाधिदैवादिशब्दभेदाद्भिन्नः, तत्तदभिमानी जीवो वेत्याशङ्क्य प्रथमसूत्रे पृथिव्यादीनां तदभिमानिनां च ये धर्मास्तेषां भगवत्प्रयुक्तत्वबोधनादन्तर्यामी सर्वत्र भगवानेवेति निर्णीतम्। आधिदैवादिसञ्ज्ञोपि स एवेति च। ततो द्वितीयसूत्रेऽन्तर्यामी ब्रह्मवादे न प्रसिद्धः, जीवब्रह्मजडानामेव प्रसिद्धत्वात्। ततोऽन्तर्यामी साङ्ख्यपरिकल्पितः कश्चिद्भविष्यतीत्याशङ्क्य, नात्र साङ्ख्यमतम्, तद्धर्माणामनभिलापात्, अतोऽन्तर्यामी भगवानेवेति ब्रह्मवादसिद्ध इत्युक्तम्। ततस्तृतीयसूत्रेऽन्तर्यामी जीवो न संभवति, काण्वशाखायां 'यो विज्ञाने तिष्ठ'न्निति माध्यन्दिनीयशाखायां च 'य आत्मनि तिष्ठ'न्नितिवाक्याभ्यां जीवाद्भेदस्य श्रावणादित्युक्तम्। अस्मिन्नधिकरणे स्थितिकर्तृत्वनिर्वाहकतयोपोद्घातेन सर्वनियमनं विचारितम्। गुहांप्रविष्टावित्यधिकरणे प्रतिगुहं भिन्नतया प्रवेशादन्तर्यामिणां भेदे प्राप्ते तदभावाय तस्यैक्यमत्र साधितम्। तेन रूपभेदाद्भिन्नोप्येक एवान्तर्यामी नामेत्युक्तं भवति॥ ६॥

ततः सप्तमे त्रिसूत्रे अदृश्यत्वाधिकरणे 'अथ परा यया तदक्षरमधिगम्यत' इति मुण्डकस्थं वाक्यं विषयत्वेनोपन्यस्येयमुपनिषत् साङ्ख्यविद्या ब्रह्मविद्या वेत्याशङ्क्येयं ब्रह्मविद्यैव। यद्यप्यत्राक्षरं पुरुषश्चेत्युभयमुच्यते, पुरुषस्याक्षरात्परत्वं चोच्यते, एवं परापरभावेप्यक्षरं परमात्मैवेति निर्णीतम्। तत्र प्रथमसूत्रे अदृश्यत्वादिगुणकोऽक्षरत्वेनोक्तः परमात्मैव, विश्वजनकत्वरूपस्य ब्रह्मधर्मस्य तत्रोक्तेरित्युक्तम्। ततो द्वितीयसूत्रे अत्राक्षरपुरुषौ साङ्ख्यविद्यासिद्धप्रकृतिपुरुषावेवेत्याशङ्क्य, तौ नात्र संभवतः, अक्षरस्य सर्वज्ञत्वादिना पुरुषत्वेन च विशेषणात्, पुरुषस्य च दिव्यत्वादिना प्राणादिजनकत्वेन च विशेषणात्। न हीदं साङ्ख्ये सिध्यति। किंच, अत्र हि समाप्तावादौ मध्ये च ब्रह्मविद्या इति विद्याविशेषणमुक्तम्। तस्मादपि नात्र साङ्ख्यसिद्धौ प्रकृतिपुरुषावित्युक्तम्। ततस्तृतीयसूत्रे 'अग्निर्मूर्धे'त्यादिना यद्रूपमुक्तं तद्विश्वकायस्य ब्रह्मण एव संगच्छते न तु साङ्ख्यसिद्धस्येत्युक्तम्। तेन सृष्टिपूर्वदशायामप्यक्षरनियामकत्वाद्भगवतोऽन्तर्यामित्वं नित्यमित्युपोद्घातने बोधितम्॥ ७॥

ततोऽष्टमे नवसूत्रे वैश्वानराधिकरणे पूर्वाधिकरणोक्तं रूपं साङ्ख्यसिद्धकार्येश्वरस्य कुतो न ? अक्षरपरमपुरुषयोर्भेदाभेदौ च कथमित्याकाङ्क्षायां, छान्दोग्यस्थां वैश्वानरविद्यां विषयवाक्यत्वेनोपन्यस्य, रूपस्य नित्यत्वं विरुद्धधर्माश्रयत्वं च तत्रोपोद्घातेन विचारितम् । तत्र प्रथमसूत्रे वैश्वानरशब्दवाच्यो हिरण्यगर्भादिः परमात्मा वेति संशये, हिरण्यगर्भादिबोधकसाधारणशब्दाद्यो विशेषः प्रादेशमात्रस्यैवामितो विगतमानस्वरूपः, तस्मादित्युक्तम् । ततो द्वितीयसूत्रे 'केचित्स्वदेहान्तर्हृदयावकाश'इत्यादिस्मृत्युक्तस्यानुमापकत्वम् । अतः प्रादेशमात्रो द्युमूर्धत्वादिविशिष्टः परमात्मैवेत्युक्तम् । ततस्तृतीयसूत्रे ननु प्रादेशमात्रस्मृत्या वैश्वानरपदस्य भगवत्परत्वं निर्णेतुं न शक्यम्, 'अहं वैश्वानरो भूत्वे'ति जाठराग्निपरत्वस्यापि स्मरणात्, समानप्रकरण 'एष वा अग्निर्वैश्वानर' इत्यग्निसमभिव्याहारेण श्रावणाद् भगवद्विभूतित्वाच्च । अत्राप्यग्नेः 'हृदयं गार्हपत्य' इत्यादिना त्रेताग्निकल्पनश्रावणात् पुरुषेऽन्तःप्रतिष्ठितत्वश्रावणाच्च न भगवत्परत्वं शक्यवचनमिति सूत्रांशेनाशङ्क्य, नात्र भगवत्परत्वं निषेद्धुं शक्यम्, भगवतो भोक्तृत्वं वक्तुं श्रुतावग्निदृष्ट्युपदेशाज्जाठरे द्युमूर्धत्वादिधर्माणामसंभवाच्च । नच तदुपासनार्थमिति शङ्क्यम्, वाजसनेयिभिः पुरुषत्वस्य श्रावणादित्येवमंशान्तरेण समाहितम् । तस्माद्वैश्वानरः परमात्मैव । ततश्चतुर्थे उक्तहेतुभ्य एव जाठरोऽग्निर्देवतारूपोऽग्निश्च न संभवतीत्युक्तम् । एवं चतुर्भिः सूत्रैर्वैश्वानरस्य ब्रह्मत्वं निर्णीतम् । ततोग्रिमैः पञ्चभिः सूत्रैस्तस्य परिमाणं विचार्यते, ग्रहिलवादिनिवृत्त्यर्थम् । तत्र पञ्चमे जैमिनिमतेन परिमाणविरोधपरिहारमाह, व्यापकस्य प्रादेशमात्रत्वं कल्पनां विना साक्षादपि संभवति, यथाकाशस्य । तथा च 'प्रादेशमात्रमभिविमान'मित्यत्र शाब्दक्रमादर्थक्रमो बलिष्ठ इति जैमिनेराशयो बोधितः । ततः षष्ठे निराकारमेव ब्रह्म मायाजवनिकाच्छन्नं विष्ण्वादिदेवताधिष्ठितेन पुरुषाकारेणाभिव्यक्तः पुरुषविधोऽन्तर्यामी, न तु स्वाभाविकस्तस्याकार इत्याश्मरथ्यस्य मतमुक्तम् । ततः सप्तमेऽनुस्मृतिवशात्पुरुषाकारो 'यद्यद्धिया त उरुगाय विभावयन्ति तत्तद्वपुः प्रणयसे सदनुग्रहाये'तिस्मृतेः साधकानुग्रहार्थमिति बादरिमतमुक्तम् । ततोष्टमे पूर्वोक्तं नियतपरिमाणवादबोधकं जैमिनिमतं तदेकदेशिनो, न तस्येतिबोधनार्थं पुनर्जैमिनिमतमाह । श्रुतौ 'प्रादेशमात्रमिह वै देवा' इत्यारभ्य अभिसंपादयिष्यामी'तिकथनात्सम्पत्तिनिमित्तं प्रादेशमात्रत्वम्, न तु वास्तवमिति तदाशय उक्तः । ततो नवमे 'आमनन्ति चैनमस्मि'न्निति सूत्र 'एनं वैश्वानरमस्मिन्मूर्धचिबुकान्तराले' जाबालाः समामनन्ति 'एषोव्यक्त' इत्यादिना । तस्मात्प्रादेशमात्र एव व्यापकः, अतो वस्तुभावादेव विरुद्धधर्माश्रय इति वैश्वानरो भगवानेवेति स्वसिद्धान्त उक्तः । एवमस्मिन्पादे स्थितिरूपकार्यनिर्वाहार्थमन्तर्यामिप्रतिपादकानि वाक्यानि विचारितानि ॥ ८ ॥

**इति श्रीवल्लभाचार्यचरणदासस्य श्रीपीताम्बरात्मजपुरुषोत्तमस्य कृतौ**
**वेदान्ताधिकरणमालायां प्रथमाध्यायस्य द्वितीयः पादः ॥**

---

अतःपरं मोक्षदातृत्वार्थमुपास्यरूपप्रतिपादकानि वाक्यान्यस्मिन्पादे विचार्यन्ते, साधनाध्याये गुणोपसंहारपादे तत्तन्मार्गभेदेनोपासनाया एव साधनत्वेन वक्ष्यमाणत्वात् ।

तत्र प्रथमे सप्तसूत्रे द्युभ्वाद्यधिकरणे 'अस्मिन् द्यौः पृथिवी'तिमुण्डकवाक्यं विषयत्वेनोपन्यस्य, तत्र किं साङ्ख्यसिद्धं प्रधानमुच्यते, ब्रह्म वेति संशये, प्रधानं निरस्य ब्रह्मैवेति साध्यते ।

तत्र प्रथमसूत्रे स्वशब्दो हेतुत्वेन, स च श्रुतिस्थ'स्वात्मान'मित्यात्मशब्दस्य वाचकः । तथा च द्युभ्वादीनां भारत्वं तदा स्याद्यदि तेषां सूत्रे मणिगणवत् प्रोतत्वं स्यात्, न तु तथा, तेषां कार्यत्वेनैतदात्मकत्वेनैतत्स्वरूपान्तःपातित्वात् । न च सेतुत्वेन साधनत्वबोधनात्फलरूपत्वाभावे सति न ब्रह्मत्वमिति शङ्क्यम् । 'अमृतस्य सेतुरित्यत्र षष्ठ्याऽभेदबोधकत्वेन फलरूपत्वानपायात् । तस्माद् द्युभ्वाद्यायतनं ब्रह्मैव । ब्रह्मणो व्यापकत्वव्युत्पादनं तु पूर्वमन्त्रे 'लक्ष्यं सर्वगतं चैवे'त्यनेन ब्रह्मणः सर्वगतत्वकथनात् तद्बोधनार्थमित्युक्तम् । ततो द्वितीयसूत्रे ननु भवतु ब्रह्मत्वं तथापि तज्ज्ञानेन सर्वविज्ञानस्योपक्रान्तत्वादन्यवाग्विमोकः कथं संगत इत्याशङ्क्य, ब्रह्मणि मुक्तोपसृप्यत्वं वक्तुं शररूपस्य जीवस्य पूर्वमन्त्रे ब्रह्मणि योजनस्योक्तत्वात् तस्य निरध्यस्तत्स्वरूपं मुक्तत्वमन्यवाग्विमोकेन बोध्यत इति तदपि संगच्छत इत्युक्तम् । ततस्तृतीयसूत्रे एतत्प्रकरणे जडधर्मबाहुल्यस्य जडदृष्टान्तस्य चोक्तत्वादत्र प्रधानमेवाङ्गीकार्यमित्याशङ्क्य, तद्बोधकानां निःसंदिग्धानां धर्माणामदर्शनाद्ब्रह्मबोधकानामात्मसर्वज्ञानन्दरूपादिशब्दानां निःसंदिग्धानां दर्शनान्न प्रधानमङ्गीकर्तुं शक्यम्, किंतु परमात्मैवेत्युक्तम् । ततश्चतुर्थसूत्रे तर्हि जडजीवविशिष्टः साङ्ख्यवादोत्रास्त्वित्याशङ्क्य, तद्वाचकनिःसंदिग्धशब्दाभावात् न जीवो, नापि प्रधानम्, किंतु सर्वज्ञत्वादीनां ब्रह्मधर्माणां निःसंदिग्धानां दर्शनाद्ब्रह्मैव । ततः पञ्चमसूत्रे 'तमेवैकं जानथात्मान'मिति ब्रह्मणि ज्ञानकर्मत्वस्य जीवे ज्ञानकर्तृत्वस्य बोधनेन भेदव्यपदेशात् न जीवपरत्वं तस्येत्युक्तम् । ततः षष्ठे सूत्रे अस्य वाक्यस्य ब्रह्मप्रकरणपठितत्वादपि न जीवपरत्वमित्युक्तम् । ततः सप्तमे सूत्रे 'द्वा सुपर्णा'विति श्रुतौ परमात्मनः शरीरे स्थितिमात्रं प्रकाशकत्वं च श्राव्यते, जीवस्य तु कर्मफलभोगोपीति स्थित्यदनाभ्यां ब्रह्मजीवौ पृथगेव निर्णीयेते । तस्मादपीदं ब्रह्मवाक्यमेव, न तु प्रधानजीवसंदेहात् साङ्ख्यपरमिति निर्णीतम् । तेन पूर्वपादोक्तमन्तर्यामिरूपमपि व्यापकत्वसर्वात्मकत्वादिगुणविशिष्टमेवोपासनीयमिति साधितम् । अत्र शरधनुर्न्यायश्रावणात्पृथगुपासनं ज्ञानमार्गीयाणामपि कर्तव्यत्वेन बोधितम् ॥ १ ॥

ततो द्वितीये द्विसूत्रे भूमाधिकरणे 'यो वै भूमा तत्सुख'मिति छान्दोग्यस्थसनत्कुमारनारदसंवादगतं वाक्यं विषयत्वेनोपन्यस्य, तत्र बाहुल्यं सुषुप्तिश्च नोच्यते किंतु ब्रह्मैवेति साधितम् । तत्र प्रथमसूत्रे सुषुप्तेः सकाशादाधिक्यस्य 'स एवाधस्तादि'त्यादिना बोधनात् मुख्यवृत्त्यात्मशब्दपरिग्रहसंभवाद् ब्रह्मणः सर्वशब्दवाचकत्वेन भाववाचकशब्दानामपि ब्रह्मपरत्वसंभवाच्च भूमा भगवानेवेत्युक्तम् । ततो द्वितीयसूत्रे 'नान्यत्पश्यती'त्यादिनोक्ता अन्या दर्शनादयो धर्मा अप्याविर्भूते परस्मिन् भगवति तद्दर्शनेन तदैक्यात्तदविभागाद्वा तदेकतानतायां संभवन्तीति भूमा ब्रह्मैवेति साधितम् । तेन नित्यनिरवध्यानन्दरूप एवान्तर्याम्युपास्य इति पृथगपि भक्तिमार्गीयैरुपास्य इति बुद्धिस्थं प्रसङ्गाद्बोधितम् ॥ २ ॥

ततस्तृतीये त्रिसूत्रे अक्षराधिकरणे बृहदारण्यकस्थ'मेतद्वै तदक्षरं गार्गी'तिवाक्यं विषयत्वेनोपन्यस्य, सूत्रद्वयेनाज्ञया पृथिव्याद्यम्बरान्तधारकत्वेनाक्षरस्य ब्रह्मत्वं साधितम् । ततस्तृतीये सूत्रे तस्य प्रशासनस्य जीवधर्मत्वव्यावृत्त्याक्षरज्ञानफलबोधनेन च ब्रह्मत्वम् । अत्र च पूर्वपादेऽदृश्यत्वाधिकरणेन विचारितस्याक्षरस्य विरुद्धधर्मत्वबोधनमिति बुद्धिस्थोपोद्घातः संगतिः । अक्षरोपासनं च ज्ञानमार्गीयाणां केषांचिन्मुख्यम्, 'ये त्वक्षरमनिर्देश्य'मित्यादिगीतावाक्यात् । भक्तिमार्गीयाणां त्वक्षरज्ञानमङ्गत्वेन प्रविशतीत्यग्रे 'अक्षरधिया'मित्यत्र वाच्यम् । तेनेदं मार्गद्वयोपयोगीति तदुभयोरन्तरं प्रसङ्गत उक्तम् । तेनात्र क्रमनियामिका प्रसङ्गः सङ्गतिः ॥ ३ ॥

ततश्चतुर्थे एकसूत्रे ईक्षतिकर्माधिकरणे प्रश्नोपनिषत्पञ्चमप्रश्नस्थ'मेतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कार' इतिवाक्यं विषयत्वेनोपन्यस्य, अत्र ध्येयः परमात्मैव, न तु विराट्, ब्रह्मा वा । 'परात्परं पुरिशयं पुरुषमीक्षत' इतिवाक्यशेषे ईक्षतिकर्मत्वेन जीवघनादक्षरात्परस्यैवोक्तत्वात् । अत्र ध्यानविषयस्येक्षतिकर्मत्वप्रतिपादनेनोपासनानां फलं साक्षात्कार इत्यप्यनेन साधितम् । तेन प्रसङ्गः संगतिरिति बोधितम् ॥ ४ ॥

ततः पञ्चमे अष्टसूत्रे दहराधिकरणे 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्मे'त्यादि छान्दोग्यस्थं वाक्यं विषयत्वेनोपन्यस्य, तत्र दहरशब्दवाच्य आकाशः परमात्मैव न जीव इति निर्णीयते । तत्र प्रथमसूत्रे उक्तछान्दोग्यवाक्ये वक्ष्यमाणेभ्यो हेतुभ्यो दहरः परमात्मैवेत्युक्तम् । ततो द्वितीयसूत्रे 'यथा सुवर्णनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तोपि न विदुः एवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ती'त्यनेनोक्तं प्रजाशब्दवाच्यानां जीवानां यद् ब्रह्मलोके गमनं सा गतिः 'एष आत्मापहतपाप्मा सत्यसङ्कल्प'इत्यत्रापहतपाप्मत्वादिविशिष्ट आत्मशब्दः पूर्वोक्तो ब्रह्मलोकशब्दश्च ताभ्यां हेतुभ्यां दहरः परमात्मैव । न च जीवपरमात्मनोस्ततो भेदाभावात्स्वप्नदशायामज्ञानकल्पितानामेव ब्रह्मलोकगमनमात्मशब्दश्च जीवसाधारण इति न ताभ्यां परमात्मसिद्धिरिति शङ्क्यम् । अत्र हि प्रजानां ब्रह्मलोके गच्छन्तीनां 'अनृतेन प्रत्यूढा' इति विशेषणं दृश्यते । तदर्थस्तु अनृतेन पिहितत्वम् । 'अनृतापिधाना' इतिश्रुत्यन्तरे तथादर्शनात् । तच्च सुषुप्तौ 'सुखमहमस्वाप्सम्, न किञ्चिदवेदिष'मित्यनुभवस्तासां प्रजानामज्ञत्वं साधयति, न त्वज्ञानकल्पितत्वम्, अज्ञानकल्पितत्वे सति ब्रह्मलोकगतिर्न संगच्छते, तथापहतपाप्मत्वादिविशेषणादात्मशब्दश्च न संगच्छते, अतो गतिशब्दयोर्ब्रह्मपरत्वाद्दहरः परमात्मैव । किं च, अत्र 'तद्य इहात्मानमननुविद्य व्रजन्ती'त्यात्माज्ञानं लोकक्षयहेतुत्वेनोच्यते । यद्यात्मा ब्रह्माभिन्नः स्यात्तदापहतपाप्मादिगुणकत्वात्स्वस्य स्वाज्ञानं न स्यात् । अत इदमज्ञानं जीवस्य ब्रह्माभिन्नत्वं बोधयद् गतेर्ब्रह्मविषयत्वे लिङ्गम् । एवमपहतपाप्मत्वादिविशेषणान्यप्यात्मशब्दस्य ब्रह्मपरत्वे लिङ्गमिति प्रागेवोक्तम् । अतो दहरः परमात्मैवेति साधितम् । ततः तृतीयसूत्रे 'य आत्मा सेतुर्विधृति'रितिश्रुतेः सर्वलोकविधारकत्वात्स्वयं साधनीभूय संसारपारप्रापकत्वात् एकस्यैवाकाशद्यावापृथिव्यादेरन्तर्बहिःस्थापनेन तस्य सर्वलोकधारणस्य महिमरूपत्वात् तस्य महिम्नो विरुद्धधर्माश्रयत्वरूपतया श्रीयशोदादिभिरन्तर्बहिरुपलब्धश्च दहरः परमात्मैवेत्युक्तम् । ततश्चतुर्थे आकाशशब्दवाच्यत्वप्रसिद्धेरपहतपाप्मत्वादिप्रसिद्धेः प्रकरणोक्तसर्वधर्मप्रसिद्धेश्च दहरः परमात्मैवेत्युक्तम् । एवं चतुःसूत्र्या विधिमुखेन दहरस्य परमात्मत्वं विचारितम् ।

अतः परमग्रिमचतुःसूत्र्येतरनिषेधमुखेन तस्यैव परमात्मत्वं पुनः साधयति । ततः पञ्चमे अस्मिन् प्रकरण आदिमध्यावसानेषु सम्प्रसादादिशब्दैर्जीवस्य परामर्शाज्जीव एव दहर इति सूत्रांशेनाशङ्क्य, जीवे जगदाधारत्वादेरसंभवात् स न दहर इत्युक्तम् । ततः षष्ठ एतदनंतरमुक्त इन्द्रप्रजापतिप्रकरणे जीवस्यैवामृताभयत्वादिरूपेणोक्ततयात्रापि स एव परामृश्यतामिति सूत्रांशेनाशङ्क्य, तत्र प्रजापतिरुपदेशसमय आविर्भूतब्रह्मरूपो जातः, यथा नृसिंहोपासको नृसिंहाविष्टो भवति, अतस्तथाभूतत्वात्सर्वत्रात्मानं पश्यन्नुपदिष्टवान्, अतो न तत्र जीवः प्रकरणार्थः । अतस्तदनुरोधेनात्र जीवस्य ब्रह्माभिन्नत्वं न वक्तुं शक्यम् । तस्माद्दहरः परमात्मैव । ततः सप्तमे तर्हि तत्र जीवपरामर्शस्य किं

प्रयोजनमित्याकाङ्क्षायां पूर्वप्रकरणे सत्यनामकस्य ब्रह्मणो ज्ञानेन ब्रह्मसुखरूपं फलमुक्तम् । तदपेक्षायां तादृशं ब्रह्मज्ञानमावश्यकम् । तत्र सच्छब्देनामृतस्य जीवस्य, तिशब्देन मर्त्यस्य जडस्य, यशब्देनोभयनियामकस्य ब्रह्मण उक्तत्वात् । नियम्यद्वयज्ञानाभावे नियामकस्य ब्रह्मणो ज्ञानासंभवात् । तदर्थं शब्दोक्तस्य नियम्यस्य जीवस्य स्वरूपज्ञानाय जीवपरामर्शः, न तु प्रकरणित्वेनेत्युक्तम् । ततोऽष्टमे भवत्वेवं तथाप्यल्पे हृदयपुण्डरीके आकाशरूपस्य ज्यायसो ब्रह्मणः स्थितिर्न संभवतीत्यतो जीव एवोच्यतामित्याशङ्कायां 'निचाय्यत्वादेवं व्योमवच्चे'त्यत्र विरुद्धधर्माश्रयत्वेन ब्रह्मणः स्थितिर्वक्तुं शक्येत्युक्तम् । तादृशत्वस्यात्राप्यनुसंधेयत्वात्तेन तत्समाधिसिद्धिरिति दहरः परमात्मैव । अत्र मुक्तिस्थस्य विचारादुपोद्घातधर्मः प्रसङ्गः सङ्गतिः । किं च, परामर्शसूत्रे जीवस्य सर्वावस्थासु ब्रह्मनियम्यत्वस्यैव सिद्धत्वात्, अतो जीवस्य परममुक्तिदशायामपि ब्रह्मनियम्यत्वमेव सिध्यति । वेदस्तुतावपि 'अजनि च यन्मयं तदविमुच्य नियंतृ भवे'दित्यत्र तथैव सिद्धत्वाच्च ॥ ५ ॥

ततः षष्ठे द्विसूत्रे अनुकृत्यधिकरणे 'न तत्र सूर्यो भाती'ति कठवल्लीस्थं वाक्यं विषयत्वेनोदाहृत्य, लोकप्रकाशकानां सूर्यादीनां दहरांतःस्थत्वकथनात् कठवल्लीस्थमुक्तवाक्यं तद्विरुद्धमित्याशङ्क्य, तेषां स्वतो न प्रकाशकत्वम्, किंतु भगवदनुकारित्वाद्भगवत्प्रकाशेनैव प्रकाशकत्वं सर्वत्र सर्वदेतिप्रसङ्गान्निर्णीतम् । तेन जीवस्य मुक्तिदशायां तदनुकारित्वरूपमेव साम्यम्, न तु परममित्यपि बोधितम् । अन्यथैतद्विचारस्यात्र निष्प्रयोजनत्वापत्तेरिति ॥ ६ ॥

ततः सप्तमे द्विसूत्रे शब्दादेव प्रमित इत्यधिकरणे कठवल्लीस्थमङ्गुष्ठमात्रवाक्यं विषयत्वेनोदाहृत्याङ्गुष्ठमात्रस्य भूतभव्येशानत्वं शब्दादेव प्रमीयते इति प्रथमसूत्रे निर्णीतम् । द्वितीये च तस्य तत्र स्थितिर्मनुष्याणामधिकारार्थेति निर्णीतम् । अत्रापि प्रसङ्ग एव सङ्गतिः । इदं च जीवस्य मुक्तिदशायां ब्रह्माविर्भावेन विरुद्धधर्माश्रयत्वे फलिष्यति ॥ ७ ॥

ततोऽष्टमेऽष्टसूत्रे तदुपर्यपीत्यधिकरणे प्रसङ्गाद्देवादीनां ब्रह्मविद्यायामधिकारो विचारितः । तत्र प्रथमे सूत्रे मनुष्येषु त्रैवर्णिकानामुपनयनादिसंस्कारवतां कर्माधिकाराद् ब्रह्मविद्यायामप्यधिकार इति पूर्वतन्त्रादेव सिध्यति । ततो मनुष्याद्धीनजातीयानां तु योग्यताऽभावादेव नाधिकारः । अतः परं मनुष्यादुत्कृष्टानां ब्रह्मविद्यायामधिकारः संभवादुक्तः । यद्यपि देवादीनामुपनयनादिकं न प्रसिद्धम्, तथापि यज्ञोपवीतमन्त्रे 'प्रजापतेर्यत्सहजं पुरस्तादि' तिश्रावणात्तन्न्यायेनान्यत्रापि जन्मानुग्रहविशेषतपःप्रभृतिभिर्मतङ्गविश्वामित्रादीनामिवाधिकारः संभवति । तस्मादप्यधिकार इत्युक्तम् । ततो द्वितीयसूत्रे पूर्वसूत्रोक्तस्य देवादीनामधिकारस्य विप्रतिपन्नतया तद्बलेन तेषु ब्राह्मण्यादेर्वक्तुमशक्यत्वात्, तेषां स्वर्गस्थत्वेन पृथिवीरूपदेशस्य, व्रीह्यादिरूपद्रव्यस्य तत्र सूर्यगत्यभावेन दर्शादिरूपकालस्य च, तदतिरिक्तदेवाभावेनोद्देश्यदेवतान्तरस्यापि वक्तुमशक्यतया तदभावेऽपि कर्मकरणे श्रुतिविरोध इति सूत्रांशेनाशङ्क्य, अंशान्तरेण प्रजापतिन्यायाद् वर्णसत्तायाः साधितप्रायत्वात्, 'इन्द्रो ह्येकशतवर्षाणि प्रजापतौ ब्रह्मचर्यमुवासे'तिश्रावणादाश्रमसत्तायाः, 'साध्या वै देवाः सुवर्गकामा एतꣳ षड्रात्रमपश्यन् तमाहरन् तेनायजन्ते'तियज्ञकरणश्रावणाद्, 'देवा वै सत्रमासते'त्यादौ भूमावागत्य ऋषीन् कृत्वा यज्ञकरणश्रावणात्तेषां चोपयोगो देवानां वेदे दृश्यते । भगवद्रूपस्वरूपा ये देवास्ते तेषामुपदेष्टारोऽपि भवंति । 'उभौ वै देवानाꣳ शमितारौ प्रापयन्त्वे'त्यादौ ऋत्विजोऽपि श्रूयन्ते । तस्मान्न श्रुतिविरोध इत्युक्तम् । ततस्तृतीये ननु वेदात् कर्म ज्ञात्वा पश्चात् कर्तव्यं देवैः, तत्र देवानां कर्म-

करणं वदन् वेदो देवानामधिकारं वदेत् । देवाश्च जन्या इति वेदार्थज्ञानसमये तेषामभावाद्, असौ चात्माश्रय इति कर्मकर्तॄणां ज्ञातृत्वेन वक्तुमशक्यत्वात् कर्मकर्तृविरोधः । वेदश्च तेषां वृत्तान्तं वदन् स्वयं कथं नित्यो भवेत् । अतो वेदानित्यत्वापादकत्वादयं देवाधिकारपक्षो न सङ्गत इति सूत्रांशेनाशङ्क्य, अंशान्तरेण समाधिमाह, शब्दोक्ताः पदार्थाः सर्वे एवाधिदैविका भगवदवयवरूपाः, शब्द एव विवर्तते, नित्यास्तैः सह पदानां सम्बन्धोपि नित्य इति न वेदस्यानित्यत्वम् । इदमेव चतुर्थेन सूत्रेण वक्तव्यम् । न च वैदिकपदार्थानामतिरिक्तत्वाङ्गीकारे प्रत्यक्षविरोधः शङ्क्यः । इदानीमपि यजमानर्त्विक्प्रभृतीनां वेदादेव सपरिकरकर्मावगतेर्वृद्धव्यवहारादिना दर्शनेन वैदिकपदार्थेतरेष्वपि तेनैवावगतिसम्भवात् । अतो यैर्भगवान् दृष्टस्तेषां तु तत्रैव सर्वपदार्थदर्शनात्तेष्वेव संकेतग्रहः, ततोर्वाचीनानामिदानीन्तनपर्यंतानां तूपमानात्तेषु संकेतग्रहः, भगवतः सर्वानुकारित्वात् । किं च, यथा 'जमदग्नीनां पञ्चावत्त'मित्यत्र स्वस्मिन् जामदग्न्य इति प्रत्यक्षज्ञानाभावेपि परोक्षानुभवो भवति, तथा वैदिकप्रपञ्चस्यापि परोक्षानुभवो भवत्येवेति वैदिकप्रपञ्चोतिरिक्त एव । तस्मान्न ज्ञाने कर्मकर्तृविरोध इति सूत्रद्वयेनोक्तम् । ततः पञ्चमे ननु भवत्वेवं वैदिकसृष्टिरतिरिक्ता, तथापि 'यतो वा इमानि भूतानि जायंते'इत्यादिषु सृष्टयादिरुच्यते इति तदनुरोधेनानित्यापि सृष्टिर्वेदे उच्यते इत्यङ्गीकार्यम् । तथा ये देवाः कर्म कुर्वंति तेप्यनित्या इति च । एवं सति वेदस्य तद्वाचकत्वे शब्दार्थयोर्नित्यसंबंधविरोधः, अतस्तदभावार्थमाकृत्यैव संबंधो वक्तव्यः । तथासति किं जैमिनिमतदूषणेनेत्याशङ्क्य, लोकदृष्टिमङ्गीकृत्य तद्रीत्यापि समाधानमाह । यद्यपि सर्वस्य भगवद्रूपत्वादुत्पत्तिप्रलययोः सञ्चरप्रतिसञ्चररूपत्वेन वस्तुनित्यत्वाबाधकतया दर्शनादर्शनयोरेव नित्यानित्यत्वपर्यवसानम्, न तु वस्तुनीति न काचिदाशङ्का । तथापि लोकदृष्टया प्रपञ्चस्य देवादीनां चानित्यत्वाङ्गीकारे तत्तत्प्रवाहे एव शब्दसंबंधः । लोकेऽपि शरीरगङ्गाप्रभृतिषु प्रवाहे एव शब्दसंबंधदर्शनात् । अतो देवादीनां तत्कर्मणां चानित्यत्वेपि तत्प्रवाहस्य नित्यत्वात् तद्बोधके वेदेपि नानित्यत्वं शङ्कितुं शक्यते इति । ततः षष्ठसूत्रे ननु यद्यपि श्रुतिविरोधपरिहारेण कर्मण्युपासने च देवानामधिकारः प्रतिपादितस्तथापि छांदोग्ये 'असौ वा आदित्यो देवमध्वि'त्यादिनोक्तायां मधुविद्यायां स न सङ्गच्छते । तत्र मधुत्वेनोपवर्ण्यमानस्यादित्यस्य विद्याविषयत्वात् स कमन्यमादित्यमुपासीत । एवं संवर्गविद्यादिषु वाय्वादीनां विषयत्वात्तेषामप्यनधिकारो बोध्य इत्याद्युक्तम् । ततः सप्तमे 'अग्निः पुच्छस्य प्रथमं काण्ड'मित्यादिश्रुतिष्वग्न्यादीनां देवानां ज्योतिर्मण्डले विद्यमानत्वकथनात्तेषां च तत्र महाभोगकथनात्प्राप्तफलत्वेनोपासनायामधिकारो न संगत इत्येवं जैमिनिमतेनाशङ्कितम् । ततोऽष्टमे तत्परिहारमाह, वेदे हि प्रजापत्यादीनां कर्माधिकारो निरूप्यते, 'प्रजापतिरकामयत प्रजायेयेति', 'स एतमग्निहोत्रमिथुनमपश्यत्, तदुदिते सूर्येऽजुहोदि'त्यादिषु । तथा ज्ञानेपि श्रूयते, 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभव'दित्यादिषु । अत्र च भूतार्थवादः, तेन स्वार्थे प्रमाणं न स्यात् तदा तादृशाग्निहोत्रहोमेन तादृशज्ञानेनान्यस्यापि फलं न स्यात् । अतः कर्मणि ज्ञाने चाधिकारोयमवश्यमभ्युपेयः । ये पुनरुपास्यत्वेन तत्रोक्तास्ते भगवदंशा एव । 'न ह वै देवा अश्नन्ति न पिबन्ती'त्यनशनतादिरूपालिंगात् । इदं च पूर्वमेव साधितम्, तथापि जैमिनिमतनिराकरणाय पुनरुक्तम् । एवमष्टभिः सूत्रैर्देवानामधिकारो वेदनित्यत्वं च प्रसङ्गान्निर्णीतम् ॥ ८ ॥

---

१. आदित्यस्यानामिति पाठः । २. विषयतया देवानामधिकार इति पाठः ।

ततो नवमे पञ्चसूत्रे शुगस्येत्यधिकरणे शूद्राणां ब्रह्मविद्यायामधिकारोनुप्रसक्तान्निराकृतः। तत्र प्रथमसूत्रे छांदोग्यस्था संवर्गविद्या विषयत्वेनोपन्यस्ता । तत्र च जानश्रुतिं 'हा शूद्रे'त्येवं संबोध्य पश्चात् संवर्गविद्योपदिष्टा । तस्माज्जातिशूद्रस्याप्यधिकार इत्याशङ्कायाम्, नात्र शूद्रशब्दो जातिवाची, किंतु शुचा आद्रवतीति शूद्र इति यौगिकः। अतो योगेन जानश्रुतेर्मत्सरित्वं बोधयति। तेन पूर्वं धिक्कारः पश्चाच्चोपसरणेन मत्सरत्यागे विद्योपदेश इति नात्र जातिशूद्रस्याप्यधिकार इत्युक्तम्। ततो द्वितीयसूत्रे जानश्रुतिजातेः श्रुतावनुक्तत्वात् योगापेक्षया च रूढेः प्रबलत्वादत्र शूद्रशब्दो रूढ एव सन् जानश्रुतिजातिं बोधयतीति जातिशूद्रस्याप्यधिकारोस्त्वित्याशङ्कायां जानश्रुतेः क्षत्रियत्वमुत्तरत्र प्रकरणान्तरे काक्षसेनिपदादवगम्यते । कक्षा स्पर्धास्थानं सेना रथा यस्येति कक्षसेनस्तस्यापत्यं काक्षसेनिरिति क्षत्रियलिङ्गात् । यद्यपि तत् प्रकरणान्तरम्, तथापि छन्दोगानां द्विरात्रे 'एतेन वै चैत्ररथं कापेया अयाजय'न्निति श्रवणात् 'समानान्वयानां समानान्वया एव याजका भवन्ती'ति कापेयसंबंधेन काक्षसेनेः क्षत्रियत्वमवगतम् । अतो लिङ्गबलादस्य क्षत्रियत्वावगतेः जानश्रुतेः जातिर्निर्धार्यते । तस्माज्जातिशूद्रस्य नाधिकारः । यत्र परम्परितब्रह्मविद्यायामपि नाधिकारस्तत्र साक्षाद्ब्रह्मविद्यायां तु शङ्कितुमपि न शक्यते इत्युक्तम्। ततस्तृतीये श्रौतेषु साधनेषु सर्वत्रोपनयनसंस्कारपरामर्शाच्छूद्रे च तदभावान्नाधिकार इत्युक्तम् । ततश्चतुर्थे 'सत्यकामो ह जाबाल' इत्यत्र जाबाले शूद्रत्वाभावनिर्धारण एव गौतमेन तस्मिन् शिष्यभावः प्रवर्तितः । तस्मादपि जातिशूद्रस्य नाधिकार इत्युक्तम् । ततः पञ्चमे शूद्रस्य वेदे श्रवणाध्ययनार्थज्ञानानां निषेधश्रावणात् स्मृतिष्वपि वेदाक्षरविचारेण शूद्रस्य पातकथनाच्च नाधिकार इत्युक्तम् । एवमिदं प्रासङ्गिकमधिकरणद्वयम् ॥ ९ ॥

ततो दशमे एकसूत्रे कम्पनाधिकरणे कठवल्लीस्थं 'यदिदं किञ्च जगत् सर्व'मितिवाक्यं विषयत्वेनोदाहृत्य, किमत्रेंद्रः प्राणो ब्रह्म वा निरूप्यते इति संदेहे, प्राणेंद्रौ निवार्य, सर्वजगत्कंपनाद्धेतोर्ब्रह्मैवात्रोच्यते इति निर्धारितम् । तेनावतारदशायामपि भगवतो दण्डपाणित्वबोधनाय तत्र जीवानां सन्नतये च भगवत इदं कार्यं प्रसङ्गेनावसरेण वा विचारितम् ॥ १० ॥

तत एकादशे एकसूत्रे ज्योतिर्दर्शनाधिकरणे दहरविद्यास्थं 'परं ज्योतिरुपसंपद्ये'तिवाक्यं विषयत्वेनोपन्यस्य, ज्योतिःशब्देन महाभूतरूपं ज्योतिरुच्यते, उत ब्रह्म वेति संदेहे, महाभूतरूपं ज्योतिर्निवार्य, संपत्तिरूपादर्शनाद्ब्रह्मैवात्र निरूप्यते इति प्रसङ्गाद्विचारितम् । तत्प्रयोजनं तूपसंपत्तव्यत्वोपसंपन्नस्वरूपाभिनिष्पादकत्वपूर्ववाक्यगतहृदयत्वोत्तरवाक्यगतसत्यपदोक्तमर्त्यामृतनियामकत्वरूपाणां चतुर्णां धर्माणां निष्कर्षार्थत्वान्न ज्योतिश्चरणाधिकरणेन गतार्थता ॥ ११ ॥

ततो द्वादशे एकसूत्रेऽर्थान्तरव्यपदेशाधिकरणे छांदोग्यसमाप्तिस्थ'माकाशो वै नाम नामरूपयोर्निर्वहिते'तिवाक्यं विषयत्वेनोपन्यस्य, तत्र भूताकाशो ब्रह्म वेति संदेहे, भूताकाशस्य यत्प्रयोजनं वायुजननं तस्माद्भिन्नस्य प्रयोजनस्य नामरूपनिर्वाहकत्वरूपस्य कथनाद्, ब्रह्मादिश्रुतीनां च कथनाद्, ब्रह्मैवाकाश इत्युक्तम् । तेनान्यवाचकपदवाच्यस्य यत्रैव तद्धर्मातिरिक्तधर्मकथनं तत्रान्यवाचकपदस्य ब्रह्मपरत्वमिति न्यायबोधकमिदमधिकरणमिति प्रसङ्गादुक्तम् । अतो न तद्धर्माद्यधिकरणादिना गतार्थता ॥ १२ ॥

ततस्त्रयोदशे द्विसूत्रे सुषुप्त्युत्क्रांत्योरित्यधिकरणे बृहदारण्यकस्थं ज्योतिर्ब्राह्मणं शारीरब्राह्मणं चेत्युभयं विषयत्वेनोपन्यस्य, तयोः किं जीववाक्यत्वमुत ब्रह्मवाक्यत्वमिति संदेहे, उपक्रमस्यासञ्जातविरोधत्वेन प्राबल्यात्, तत्र च 'कतम आत्मे'तिप्रश्ने 'योयं विज्ञानमयः प्राणेषु हृद्यंतर्ज्योतिः पुरुष' इति शारीरलिङ्गात्, 'योयं विज्ञानमयः प्राणे'ष्विति काण्वपाठे उपसंहारे च तादृशवाक्याद्, यद्यपि संसारी प्रतीयते, तथापि मध्ये 'ध्यायतीवे'त्यादिसंसारिधर्मनिराकरणादुपसंहारे च 'स वा एष महानज आत्मे'तिसंसारधर्मरहितपरमेश्वरात्मबोधनादन्यैश्च हेतुभिः परमात्माभिन्नो संसारी मुक्तो जीवः प्रतिपाद्यते इति पूर्वपक्षे, यदि मुक्तो जीवो ब्रह्माभेदेनात्र प्रतिपाद्यः स्यात्तदावस्थाभेदस्याप्रयोजकत्वात्सुषुप्त्युत्क्रांतौ च जीवं परमेश्वरान्न भिन्द्यात्, प्रतिपिपादयिषितेऽभेदे अवस्थया भेदकथनस्य निष्प्रयोजनतया वैयर्थ्यप्रसङ्गात्, जाग्रत्स्वप्नयोरज्ञत्वादिवैशिष्ट्यस्य प्रत्यक्षसिद्धत्वेन सुषुप्तिमरणयोस्तमोभिभवादज्ञानादिवैशिष्ट्याज्ञानेपि सौषुप्तिकस्मरणेन मृतानां भूतादिभावदर्शनेन चानुमानसिद्धतया तत्कथनवैयर्थ्यानपायाच्च । अतो यत् ज्ञायमानावस्थासिद्धं भेदमनुवदति तदसंसार्यवस्थायामपि भेदबोधनायैवानुवदति । 'यथोदकं शुद्धं शुद्धे आसिक्तं तादृगेव भवति एवं मुनेर्विजानत आत्मा भवति गौतमे'ति काठकेपि तथैव श्रावणात् । न च तद्बुपक्रमाद्यनुरोधादसंसारी परमेश्वरसमानधर्मा जीवो वाच्योस्त्विति शङ्क्यम् । उपक्रमादिष्वपि तथार्थाभावात् । तथाहि । उपक्रमे 'किंज्योतिरयं पुरुष' इति प्रकाशकप्रश्ने 'आदित्याद्यनंतरमात्मज्योति'रित्युत्तरे संसारिणः पुरुषस्य प्रकाशापेक्षित्वेनाप्रकाशकत्वात् 'प्रकाशक आत्मा क' इत्याशयेन पृच्छति 'कतम आत्मेति ?'। तत्र स्पष्टतया वक्तव्येप्युत्तरे याज्ञवल्क्यो 'न वदिष्ये' इति स्वाभिसंधेर्वरदानस्य चानुरोधात् श्लिष्टमेवोत्तरं दत्तवान् । अतस्तद्विचारे 'अत्रायं पुरुषः स्वयंज्योतिर्भवती'ति निगमनवाक्ये परमात्मैव स्वयंपदवाच्यः सिध्यतीत्युपक्रमगतः प्रश्नः सामान्योप्युत्तरे तत्पर एव पर्यवस्यति । तथापि श्लिष्टप्रयोगात् जनकेन सोर्थः सम्यक् न ज्ञातः, किंत्वेतावत् ज्ञातं संसारिव्यतिरिक्त आत्मा प्रकाशक इति । ततस्तत्संदेहवारणाय पृच्छति 'विमोक्षाय ब्रूही'ति । तदापि पूर्वोक्तानुरोधात् 'स वा एष एतस्मिन् संप्रसादे रत्वा चरित्वे'त्यादि श्लिष्टमेवोत्तरं दत्तवान् । तदा सुषुप्तौ जीवस्यासङ्गत्वे उक्तेपि जनकस्य संदेहो न निवृत्त इति पुनर्मोक्षाय पृच्छति । तदा पुनरपि तथैव वदन् मत्स्यादिदृष्टांतेन स्वप्नसुषुप्ती अवस्थे उक्त्वा, सुषुप्तौ असङ्गादपि जीवात् परमात्मानं भेदेनाह, संपरिष्वक्तस्त्रीपुंदृष्टान्तेन । तदापि जनकस्य प्रकाशकसंदेहो न निवृत्त इति पुनर्मोक्षाय पृच्छति । तदा पुनरपि श्लिष्टवाक्येनैवोत्तरे, पुनरपि मोक्षाय पप्रच्छ । तदा याज्ञवल्क्यो राज्ञो मेधावित्वाद्भीतः संसारिणो जीवस्य मरणावस्थां वदन् परमेश्वराज्जीवस्य भेदमाह । तदापि श्लिष्टप्रयोगात्तस्य संदेहो न निवृत्त इति तदानीमकामयमानस्य सद्योमुक्तिमाह । तत्र 'ब्रह्मैव सन् ब्रह्माप्येती'तिश्रुतेः 'प्राज्ञ आत्मा ब्रह्मैवे'ति च श्रुतेर्जीवस्य ब्रह्मभाव एव मुक्तिः । प्राज्ञ आत्मा ब्रह्म योस्ति स एव प्रकाशकस्वज्योतिषैवायं जीवः सर्वं करोतीति ज्ञात्वा जनकः 'सोहं भगवते सहस्रं ददामी'त्युक्तवान् । तदा याज्ञवल्क्यः श्लोकैः सर्वं शास्त्रार्थमुक्त्वा 'स एष आत्मे'त्यादिना तमेवार्थं स्पष्टमुक्तवान् । तदा जनको विदेहान् स्वात्मानं च तस्मै दत्तवान् । याज्ञवल्क्योपि तथा विद्यां समापितवान् । अत उपक्रमोपसंहारयोः परमात्मन एव प्रकृतत्वसिद्ध्या तस्यैव प्रकरणित्वम्, न तु ब्रह्मभावापन्नस्य जीवस्येति सिध्यति, समासौ पत्यादिशब्देभ्यश्च । तस्मादिदं ब्रह्मवाक्यमेवेति ।

अत्र पादे उपास्यरूपाण्याधाररूपाणि च विचार्य ब्रह्मातिरिक्तानामनुकारित्वं च विचार्य समासौ यत् जीवब्रह्मणोर्भेदः साधितः, तेन मुक्तिदशायामपि जीवस्यानुकारित्वमेव, तदात्मकत्वात्, न त्वत्यन्ताभेदः, सर्वथा तौल्यं वेति प्रसङ्गादुपोद्घाताद्वेति विचारितम् ॥ १३ ॥

**इति श्रीवल्लभाचार्यचरणदासस्य श्रीपीतांबरात्मजपुरुषोत्तमस्य कृतौ वेदांताधिकरणमालायां प्रथमाध्यायस्य तृतीयः पादः ॥**

---

अतीतेषु पादेषु प्रथमे कार्यरूपवाक्यानि, द्वितीये अन्तर्यामिवाक्यानि, तृतीये उपास्यरूपवाक्यानि विचार्य, सर्वेषां वेदांतानां ब्रह्मणि समन्वयः प्रतिपादितः । तद्दार्ढ्यार्थं प्रकीर्णकानि वाक्यानि विचार्यंते । तेषां च जीवजडसमुदायात्मकार्यनिरूपकतया कापिलमतश्रौतताभ्रमजनकत्वं प्रकीर्णत्वमिति तद्भ्रमनिरासायोपोद्घाततया तेषां विचारः ।

तत्र **प्रथमस्य सप्तसूत्रस्यानुमानिकाधिकरणस्य प्रथमसूत्रे** 'इंद्रियेभ्यः परा ह्यर्था' इति काठकवाक्यं विषयत्वेनोपन्यस्य । तत्र ज्ञानकर्ममयाणि दशेंद्रियाणि भूतमात्राभेदभिन्ना दशार्था मनोबुद्ध्यहङ्कारमहत्तत्त्वाव्यक्तपुरुषाः साङ्ख्यमतसिद्धाः पदार्थास्तत्रोच्यंते इति कापिलमतमपि श्रौतमिति 'आनुमानिकमप्येकेषामिति चेदि'तिसूत्रांशेनाशङ्क्य, अंशांतरेण समाधानमाह । नात्र तन्मतसिद्धाः पदार्था उच्यंते, किंतु पूर्व'मात्मानं रथिनं विद्धी'त्यादिना शरीररूपकं यदुक्तं तत्रत्या ये रथादिभावेन पदार्था निविष्टास्ते एवात्रास्मिन् वाक्ये गृह्यंते । एतद्धि जीवप्रकरणम् । अत्र च तस्य मुक्त्युपायो निरूप्यते । 'योग्यं शरीरमारुह्य हरेः पदं गच्छे'दिति । तत्र योग्यं शरीरं रथः, आत्मा रथी, इंद्रियाणि हयाः, बुद्धिः सारथिः, मनः प्रग्रहः, भगवदीया विषयाः, तेषां हयानामात्मरूपाः सम्यक्त्वेन भावितत्वात् । बुद्धेरात्मा ब्रह्मविषयं विज्ञानं तन्महत्तत्त्वेनोच्यते । अव्यक्तं तु भगवत्कृपैव, पुरुषस्तु भगवानेवेति ब्रह्मवाद एवात्र सिध्यति, न साङ्ख्यमतम् । यतोग्रे 'एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभि'रितिमत्रेणात्मदर्शनपरिकरतयैव त उच्यंते । तस्माद्ब्रह्मवाद एवात्रेत्युक्तम् । ततो **द्वितीये सूत्रे** अव्यक्तशब्देन भगवत्कृपा वक्तुं न शक्यते, अत्र धर्मिप्रवाहमध्ये धर्मरूपायास्तस्या वक्तुमशक्यत्वादित्याशङ्क्य, अत्राव्यक्तशब्देन सूक्ष्ममुच्यते, तच्च ब्रह्मैव, धर्मधर्मिणोश्चाविनाभावेन स्थितत्वादभेद इति तदभिन्ना कृपैवात्रोच्यते इत्यदोष इत्युक्तम्, योग्यताबलात् । तथा च न प्रायपाठविरोध इत्युक्तम् । ततस्तृतीये ननु यद्युक्तयुक्त्या कृपाया ब्रह्मत्वम्, तदाऽभिन्नत्वे ब्रह्मभिन्नत्वमसङ्गतम् । अथ कयाचिद्युक्त्या तस्या धर्मत्वम्, तदा धर्मिप्रायपाठविरोध इत्युभयथापि दोषात्पूर्वसूत्रोक्तमसङ्गतमित्याशङ्क्य, कृपाया ब्रह्माभिन्नत्वेपि ब्रह्माधीनत्वाद्ब्रह्मभिन्नत्वम्, ब्रह्मभिन्नत्वात् ब्रह्मनियम्यत्वम् । अतो यथैकरूप्येण ग्रहणमभेदे युक्तिः, तथा नियम्यनियामकभावोपि भेदे युक्तिरित्युभयथाप्युपपन्नम् । न चाभेदेनैकत्वे नियम्यनियामकभावानुपपत्तिरिति शङ्क्यम् । 'ब्रह्मविदाप्नोति पर'मित्यत्रैकस्यैव ब्रह्मणः सच्चिद्रूपेण विषयत्वम्, आनंदरूपेण फलत्वमितिवदुपपत्तेः । तथा च कृपाविष्टः साधनम्, आनंदरूपः फलम् । अथवा, अव्यक्तं सच्चिद्रूपमक्षरम्, आनंदरूपः पुरुष इति तयोरभेदेपि परापरभावो युक्तः । अदृश्यत्वाद्यधिकरणे तथा साधितत्वात् । तस्मा'दिन्द्रियेभ्यः परा' इतिवाक्ये आनुमानिकं न किंचिदस्तीत्युक्तम् । एवं त्रिभिः सूत्रैर्वाक्यानां पूर्वापरसंबंधेन मतांतरं निराकृत्य ब्रह्मवादः प्रतिपादितः । इदानीं तु केव-

लैतद्वाक्यविचारेण मतांतरं निराकरोति । ततश्चतुर्थेऽस्मिन् वाक्येऽव्यक्तं ज्ञेयत्वेनोच्यते । कापिलमते तु 'गुणपुरुषान्तरज्ञानात्कैवल्य'मितिप्रवचनसूत्रात् प्रकृतिपुरुषयोरन्तरं मोक्षार्थं ज्ञेयम्, न त्वव्यक्तरूपा प्रकृतिः । अतो ज्ञेयत्वावचनादपि नात्र तन्मतसिद्धिरित्युक्तम् । ततः पञ्चमे ननु ज्ञेयत्वावचनमसिद्धम्, एतदुत्तरवाक्ये 'अशब्दमस्पर्शमरूपमव्यय'मित्यत्राव्ययस्य 'महतः परमव्यक्त'मित्यत्र महतः परस्याव्यक्तस्य ज्ञानान्मुक्तिश्रावणादितिसूत्रांशेनाशङ्क्य, अंशांतरेण समाधानमाह । अत्र संदर्भे श्रुतिलिङ्गवाक्यानां संदिग्धत्वान्न निर्णायकत्वम्, अतो 'महतः पर'मितिवाक्यस्य'शब्दमस्पर्श'मितिवाक्यस्य चेति द्वयोरेकवाक्यत्वम्, नान्येषामित्यत्र नियामकाभावेन प्रकरणस्यैव निर्णायकत्वं वक्तव्यम् । तच्च 'ऋतं पिबन्ता'वित्यारभ्य 'नाचिकेतमुपाख्यान'मित्यंतमेकं प्रकरणम् । तत्र चात्मानावेव परामृश्य जीवात्मनो रथित्वं तदुपकरणं फलं चोक्त्वा, अग्रे 'एष सर्वेषु भूतेष्वि'त्यारभ्यासमाप्ति परमात्मैव ज्ञेयत्वेन परामृश्यते इति मृत्युमुखात्प्रमोकरूपं फलं चोच्यते । अतः प्राज्ञः परमेश्वर एवात्रार्थः, नाव्यक्तं प्रधानम् । अतो ज्ञेयत्वावचनं नासिद्धमित्युक्तम् । तेन प्रकरणस्य नियामकत्वादशब्दवाक्यमपि भगवत्परमेवेत्युक्तम् । ततः षष्ठे ननु नेदमेकं प्रकरणम्, किंत्विं'द्रियेभ्यः परा' इत्यारभ्य 'नाचिकेतमुपाख्यान'मित्येकं भिन्नं प्रकरणम् । तत्र प्रथमं पदार्थान्निर्दिश्य, ततोग्रे पुरुषज्ञानं चोच्यते इति साङ्ख्यमतस्यापि निरूपणात्तस्याश्रौतत्वमसंगतमित्याशङ्क्य, तत्र परिहारमाह । अत्र हि त्रयः प्रश्नाः, अग्निजीवब्रह्मविषयकाः । तेषामुत्तराणि च त्रीणि । तत्र 'स त्वमग्नि'मितिप्रश्ने 'प्रतिब्रवीमी'त्याद्युत्तरम्, ततो 'येयं प्रेते' इतिजीवप्रश्ने 'देवैरत्रापी'त्याद्युत्तरम् । ततो'न्यत्र धर्मादि'तिब्रह्मप्रश्ने 'सर्वे वेदा' इत्याद्युत्तरम् । अतस्त्रय एव प्रश्नाः त्रीण्येवोत्तराणि च यदि साङ्ख्यमत'मिंद्रियेभ्य'इत्यादि स्यात्तदा चतुर्थे प्रश्नोत्तरे स्याताम् । ते तु न स्त इति नात्र तन्मतसिद्धिरित्युक्तम् । ततः सप्तमे ननु मतान्तरेन्यत्र प्रसिद्धाः शब्दा ब्रह्मवादे ब्रह्मपरतया कथं योजयितुं शक्या इत्याशङ्क्य, महद्दृष्टांत उक्तः । यथा महच्छब्दो 'महांतं विभुमात्मान'मित्यादौ ब्रह्मपरः, तथाव्यक्तशब्दोप्यक्षरपरः । तस्मादिंद्रियादिवाक्येन न साङ्ख्यमतसिद्धिः, किंतु ब्रह्मवाद एवात्र सिध्यतीत्युक्तम् ॥ १ ॥

ततो द्वितीये त्रिसूत्रे चमसवदित्यधिकरणे 'अजामेका'मित्यादीनि श्वेताश्वतरवाक्यानि विषयत्वेनोपन्यस्य, एतेषु मन्त्रेष्वजादिशब्दैः प्रकृतिः परामृश्यते, मुक्तामुक्तभेदेन जीवद्वैविध्यमजायाः प्रकृतेरेकत्वमग्रे कपिलस्य नाम च पठ्यते । यद्यपि किंकारणेत्युपक्रमाद्ब्रह्मविद्यात्वेनोपनिषत् प्रतीयते, तथापि पूर्वकाण्डे यथा प्रणवादिमन्त्राणां नानास्थले विनियोगान्न प्रकरणानुरोधः, तथैतेष्वपि मन्त्रेषु कपिलमतप्रत्यभिज्ञानान्नोपक्रमाद्यनुरोध इति साङ्ख्यमतमपि वैदिकमितिशङ्कायाम्, पूर्वसूत्रेण समाधिमाह । यथा 'अर्वाग्बिलश्चमस' इतिबृहदारण्यकमन्त्रे कर्मविशेषः । तत्रार्वाग्बिलं चमसं यज्ञोरूपं सोमं सप्त होतारो भक्षयेयुरिति कल्पयितुं न शक्यते, तथा प्रकृतमन्त्रे लोहितशुक्लादिशब्दैः रजःसत्त्वादि कल्पयित्वा तद्बलेन सर्वमेव मतं कल्पयितुं न शक्यते, विशेषाभावात् । कपिलवाक्येपि कपिलशब्देन ब्रह्मैवोच्यते, न त्वनित्यर्षिः, नित्यानित्यसंयोगप्रसंगादित्युक्तम् । ततो द्वितीये सूत्रे ननूक्तस्य चमसमन्त्रस्य व्याख्यानं 'शिरश्चमस' इत्यादिना श्रुतौ क्रियते, तथात्र मन्त्रव्याख्यानाभावात्तदृष्टांतोत्र न युक्त इत्याशङ्कां तुशब्देन परिहरन्नजाशब्दार्थकथनमुखेन समाधत्ते । अत्राजाशब्देन ज्योतिरुच्यते, प्रथमकार्यरूपत्वाच्चतुर्मुखाजत्वन्यायेन । यथाजाल्पदोग्ध्री, तथैवेयं नश्वरफलदात्रीतिबोधनाय चाजाशब्देनोच्यते । सत्यकामब्राह्मणेग्निसोमसूर्यविद्युद्रूपचरणरूपतया हंसेनोक्तश्चतुष्कलो यो ब्रह्मणः पादस्तद्रूपत्वात् ज्योतीरूपा त्रिवृत्कृतत्वात्त्रिवर्णा ज्योतिरेवाजाशब्देनोच्यते । अत्रोपक्रमे ब्रह्मणः प्रकृत-

त्वात् 'तदेवाग्निस्तद्वायुस्तदादित्यस्तदु चन्द्रमा'इतिकथनाच्च। सा च चेतनाधिष्ठिता, मध्ये 'द्वासुपर्णे'ति मन्त्रकथनात्, अजद्वयं च जीवब्रह्मरूपं ताभ्यामधिष्ठिता। सा च प्रथमसृष्टिरनादिजननेन बहुप्रजास्रष्ट्री चेति। एतच्छंदोगशाखायामधीयते। अतस्तदनुसारेणायमेवार्थः, न तु मतांतररूप इत्युक्तम्। ततस्तृतीये ननु शब्दस्य वृत्तिद्वयं योगो रूढिर्वा। तत्र न जायते इति योगः प्रथमसृष्टौ न सङ्गच्छते, जननात्। रूढिस्तु छाग्याम्, साप्यत्र न सङ्गच्छते, तदाकाराभावात्। अतः कथमजाशब्देन प्रथमसृष्टिप्राप्तिः। साङ्ख्यमते तु प्रधानस्य जननानङ्गीकाराद्योगो निर्बाधः। तस्मात्साङ्ख्यमतमेवादर्तव्यमित्याशङ्कायां समाधिमाह। अत्र हि किंचित्कार्यार्थं परोक्षवादेनाजाशब्दस्तस्यां कल्पनयोपदिश्यते। यथाजार्बकरसहिता सवत्सा स्वामिहिता, तथेयं जीवविशिष्टा कार्यवती भगवल्लीलोपयोगायेति भगवतः परोक्षप्रियत्वाच्चेति। तथा च यथा मध्वादिविद्यायां 'असावादित्यो देवमध्वि'त्यादौ (कल्पना, तथैवात्र)। अतो गौण्या तथोपदिश्यते। तस्मान्नाजामन्त्रेण साङ्ख्यमतसिद्धिरित्युक्तम्॥ २॥

ततस्तृतीये त्रिसूत्रे न सङ्ख्योपसङ्ग्रहाधिकरणे 'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठित'इतिवाक्यं विषयत्वेनोपन्यस्य, तत्र 'पञ्च पञ्चजना' इतिशब्दे पञ्च च ते पञ्च च पञ्चपञ्च, तादृशाश्च ते जनाश्च पञ्चपञ्चजना इत्येवं समस्य, अनेन शब्देन पञ्चविंशतिसङ्ख्यासङ्ग्रहादत्र साङ्ख्यसिद्धानि पञ्चविंशतितत्त्वान्युच्यंते इति साङ्ख्यमतसिद्धिरित्याशङ्क्य निषेधति। अत्रानेन समासेन पञ्चानां समूहानां पञ्चतया तदुक्ता सङ्ख्या सिध्यति, न त्वन्यथा। तेषां तु न समूहाः पञ्च। 'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त। षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुष' इतिभिन्नप्रकारेण सङ्ख्याव्युत्पादनात्। मन्त्रे आकाशस्यात्मनश्च ततोतिरेकेणोक्तत्वाच्च। तस्मान्न तन्मतसिद्धिरिति प्रथमसूत्र उक्तम्। ततो द्वितीयसूत्रे तर्हि को वा मन्त्रार्थः, किं च, तत्र प्रमाणमित्याकाङ्क्षायां बुद्धेः संशयाद्याः पञ्च वृत्तीर्जनयंतीति पञ्चजनास्तादृशा ये प्राणादयः पञ्च तेत्र पञ्च पञ्चजनशब्देनोच्यंते। अत्र 'प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदु'रितिवाक्यशेषः प्रमाणम्, 'संदिग्धेषु वाक्यशेषा'दितिन्यायात्। तस्मान्न तन्मतसिद्धिरित्युक्तम्। ततस्तृतीयसूत्रे ननु वाक्यशेषे कण्वशाखायां 'अन्नस्यान्न'मिति पाठाभावात् पञ्चवृत्तिजनकानां प्राणादीनां पञ्चसङ्ख्याकत्वं नास्तीति न वाक्यशेषस्य निर्णायकत्वमितिशङ्कायाम्, 'तद्देवा ज्योतिषां ज्योतिर्वायुर्होपासतेऽमृत'मिति पञ्चमस्य ज्योतिषः पाठात्तेन सङ्ख्यापूर्तिरिति वाक्यशेषस्य निर्णायकत्वमक्षुण्णम्। तस्माद्ब्रह्मवाद एवात्र, न साङ्ख्यमतसिद्धिरित्युक्तम्। एवमेतैस्त्रिभिरधिकरणैः श्रुतीनां ब्रह्मणि समन्वयार्थमुपोद्घातेन साङ्ख्यमतस्य श्रौतत्वं निराकृतम्॥ ३॥

अतः परमग्रिमैः श्रुतिविप्रतिषेधं निराकरोति। तत्र चतुर्थे एकसूत्रे यथाव्यपदिष्टाधिकरणे ननु श्रुतौ सृष्टिप्रकारा बहुधा दृश्यंते, क्वचिदाकाशादिका, क्वचित्तेजआदिका, क्वचिच्च युगपत् सर्वसृष्टिः। तत्रैकस्य पदार्थस्य नानाप्रकारतया वक्तुमशक्यत्वात्सृष्टिवाक्यानामर्थवादत्वेन ब्रह्मस्वरूपमात्रज्ञापकत्वं वक्तव्यम्, न तु सृष्टौ तत्प्रकारे वा तात्पर्यम्। अतोध्यारोपापवादेन ब्रह्मणस्तटस्थत्वसिद्ध्या न पूर्वोक्तरूपं कारणत्वं सिध्यतीति श्रुतिं विहाय कपिलस्मृत्युक्तप्रकारेणैव जगद्ब्रह्मवस्त्वाङ्गीकार्येत्याशङ्कायाम्, आकाशादिवाक्येषु यद्यपि क्रमादिविप्रतिपत्तिः, तथापि ब्रह्मणः कारणत्वविप्रतिपत्तिर्नास्ति। एकत्र यादृशं ब्रह्मोच्यते तादृशमेव सर्वेषु सृष्टिवाक्येषु कारणत्वेनाभिप्रेयते। क्रमप्रकारादिभेदस्तु माहात्म्यस्यैव सूचकः। तस्मात् श्रुत्यैव निर्णय इति कारणत्वांशे स्मृतिर्न ग्राह्येत्युक्तम्॥४॥

ततः पञ्चमे एकसूत्रे समाकर्षाधिकरणे ननु श्रुतौ क्वचित्सतः कारणत्वमुच्यते, क्वचिदसतः, क्वचिदुभौ निषिध्य तमसः, क्वचिदव्याकृतस्येत्येवं विप्रतिषेधाद् ब्रह्मणोपि कारणत्वं न सिध्यति । तस्मात्स्मृतिरेव कारणबोधिका ग्राह्येत्याशंकायाम्, असदादिशब्देषु न निरात्मकत्वाद्यर्था उच्यंते, किंतु ततः समाकर्ष्य सर्वैः शब्दैर्ब्रह्मैवोच्यते । सर्वेषां शब्दानां प्रणवविकृतित्वेन प्रणवार्थे एव पर्यवसानात् । प्रणवस्य च ब्रह्मवाचकत्वात् । तस्मान्न विप्रतिषेध इत्युक्तम् । एवं द्वाभ्यां श्रुतौ शब्दविप्रतिषेध उपोद्घातेन परिहृतः ॥ ५ ॥

ततः षष्ठे त्रिसूत्रे जगद्वाचित्वाधिकरणे कौषीतकिब्राह्मणषष्ठाध्यायस्थं बालाक्यजातशत्रुसंवादं विषयत्वेनोपन्यस्य तत्र किं ब्रह्मसहितो जीवः कर्तृत्वेनोच्यते, उत ब्रह्मैव वेतिसंदेहे, ब्रह्मसहितस्य जीवस्यैव कर्तृत्वमाशङ्क्य, 'यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वै तत्कर्म स वै वेदितव्य' इत्यजातशत्रुणा सिद्धांतकथनोपक्रमे एतच्छब्देनादित्यमण्डलादिजडोल्लेखात्पुरुषशब्देन च जीवोल्लेखात् जीवजडात्मकं जगद्यत्कर्तृकं तस्य वेदितव्यत्वकथनेन श्रुत्यंतरसिद्धब्रह्मण एव कर्तृत्वम्, न प्रकृत्यभिमानिजीवस्येति प्रथमसूत्रे उक्तम् । ततो द्वितीयसूत्रे जीवमुख्यप्राणलिङ्गदर्शनान्न ब्रह्मणः कर्तृत्वमितिसूत्रांशेनाशङ्क्य, अंशांतरेण पूर्वमनुगमाधिकरणे उक्तं समाधानं स्मारयामास । जीवस्य ब्रह्माश्रितत्वान्मुख्यप्राणस्य च ब्रह्मयोगादत्र तथात्वेन कथनं न स्वेन रूपेण । तस्माद्ब्रह्मैव कर्त्रित्युक्तम् । ततस्तृतीये सूत्रे प्रकृत्यभिमानिजीवस्य कर्तृत्वमप्यस्मिन् वाक्येऽनभिमतम्, जीवलयोद्गमयोर्ब्रह्मप्रतिपत्त्यर्थत्वात् । प्रश्नव्याख्यानाभ्यां तथावसायात् । वाजसनेयिनामेतत्समानप्रकरणेपि तथावसायाच्चेत्युक्तम् । एवमत्र जीवब्रह्मवादनिराकरणेन जीवविशिष्टा प्रकृतिरेव कारणमित्येतदुपोद्घातेन निराकृतम् ॥ ६ ॥

ततः सप्तमे चतुःसूत्रे वाक्यान्वयाधिकरणे जीवब्रह्मवादनिराकरणेन प्रकृतिकारणवादो निराक्रियते । तत्र बृहदारण्यकस्थं मैत्रेयीब्राह्मणद्वयं विषयत्वेनोपन्यस्य, तत्र जीवस्य प्रकरणित्वं ब्रह्मणो वेति संशये, वेदरूपमहावाक्यस्य ब्रह्मण्येवान्वयदर्शनात्, सुखरूपभगवदन्वयेनैव जीवस्यापि प्रियत्वात्, सर्वोपनिषदनुरोधेनास्यापि वाक्यस्य ब्रह्मण्येवान्वयादत्रापि ब्रह्मैवोच्यत इत्युक्तम् । ततो द्वितीयसूत्रेऽस्मिन् वाक्ये ब्रह्मैवोच्यते इत्यत्रान्येषां ब्रह्मवादैकदेशिनां संमतिं वक्तुं प्रथममाश्मरथ्यमतेनाह । तन्मते हि ब्रह्मणा स्वस्य भोगनिष्पत्त्यर्थं विस्फुलिङ्गवत्प्रकटीकृतः स्वांशो जीवः, तेन जीवेनोपक्रमः, तस्यैव प्रियत्वेन संसूचनात्, उपक्रमस्य च बलिष्ठत्वात् जीवात्मैव प्रकरणीति स एव ज्ञेयत्वेनोपदिश्यते इतिशंकायाम्, नात्र जीवात्मनो ज्ञेयत्वेनोपदेशः, किंतु परमात्मन एव । जीवेनोपक्रमस्तु 'आत्मनि वा विज्ञाते सर्वमिदं विज्ञातं भवती'तिप्रतिज्ञायाः सिद्धिः तस्या लिङ्गम्, यदि हि जीवः परमात्मनः सकाशाद्भिन्नः स्यात्, तदा परमात्मज्ञाने तदज्ञानादात्मज्ञानेन सर्वज्ञानप्रतिज्ञा न सिध्येत् । अतस्तदर्थमुपक्रमे जीवः परामृश्यते, न तु प्रकृतिसंसृष्टस्य जीवस्य कारणत्वार्थमित्याश्मरथ्यमतमुक्तम् । ततस्तृतीये सूत्रे, यदत्रोपक्रमे गौणप्रियवैराग्यार्थं जीवकथनं, तत्त्वनादिसिद्धस्यापि जीवस्य संसारभावादुत्क्रमिष्यतो मुक्तौ जीवो भगवानेव भविष्यतीति बोधनार्थं लिङ्गम्, न तु प्रकृतिसंसृष्टजीवस्य कारणत्वार्थम् । तस्मान्नात्र प्रकृतिसंसृष्टजीवकारणवाद इत्यौडुलोमिमतमुक्तम् । ततश्चतुर्थे सूत्रे कयाचिदवस्थयावस्थितं ब्रह्मैव जीवः । अतः संसारदशायामपि जीवो ब्रह्मैवेति ज्ञापनार्थं तदुपक्रमो, नतु प्रकृतिसंसृष्टस्य जीवस्य कारणत्वार्थमितिकाशकृत्स्नमतमुक्तम् । तस्माद्ब्रह्मैवात्र कारणत्वेनोच्यते ॥ ७ ॥

ततोऽष्टमे पञ्चसूत्रे प्रकृतिश्चेत्यधिकरणे प्रकृतिः समवायिकारणम्, ब्रह्म तु निमित्तादिकारणमित्येवमाशंक्य, प्रकृतिशब्दवाच्यं ब्रह्मैवेति साधितम् । छांदोग्ये एकविज्ञानेन सर्वविज्ञानं यत् प्रतिज्ञातं, मृत्पिण्डादिदृष्टांतत्रयं च यदुक्तं, तदनुपरोधादितिहेतुश्च प्रथमसूत्रे उक्तः । तथा च यदि मूलकारणे ब्रह्मणि समवायिकारणत्वरूपं प्रकृतित्वं न स्वीक्रियेत, तदा प्रतिज्ञादिसामञ्जस्यं न स्यात्, अतस्तथेत्युक्तम् । ततो द्वितीयसूत्रे सृष्टौ भगवत्कृतमभिध्यानं 'बहु स्यां प्रजायेये'ति स्वस्य बहुरूपत्वेन उच्चनीचभावेन च यद्विचारणं तद्धेतुत्वेनोक्तम् । तेन स्वयमेव तत्तद्रूप इति सिध्यति । किंच, 'सर्वं खल्विदं ब्रह्म तज्जलानिति शांत उपासीत' इत्येवमुपासनाप्युपदिश्यते । अतोपि प्रकृतिशब्दवाच्यं ब्रह्मैव । ततस्तृतीये 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यंते । आकाशं प्रत्यस्तं यंती'तिश्रुत्या ब्रह्मणः प्रपञ्चोत्पत्तिलयाधारत्वं साक्षादेवोच्यते । तच्च समवायित्वस्यैव लिङ्गम् । अतोपि प्रकृतिशब्दवाच्यं ब्रह्मैव । ततश्चतुर्थे 'तदात्मानं स्वयमकुरुते'तिश्रुतिः ब्रह्मणः परिणाममाह । परिणामश्चोपादानसमसत्ताककार्यापत्तिरूपः । अतोपि ब्रह्मैव प्रकृतिशब्दवाच्यम् । ततः पञ्चमे ननु जडस्य समवायिकारणं ब्रह्मास्तु, यत्तु चेतनाधिष्ठितं शरीरं तस्य शुक्रशोणितजन्यत्वदर्शनात् तत्र ब्रह्मणो निमित्तत्वम्, प्रधानस्य तु समवायित्वमित्यस्त्वित्याशङ्कायाम्, 'सदेव सोम्येद'—मित्यादिषु सृष्टिबोधकश्रुतिष्ववधारणदर्शनात् ब्रह्मैवोभयरूपम्, अन्यथावधारणविरोधापत्तेः । किंच, 'कर्तारमीशं पुरुषं ब्रह्मयोनि'मित्यादिषु योनित्वमपि ब्रह्मण एवोच्यते, पुरुषत्वं च । तस्मादक्षरपुरुषभावनोभयरूपो भगवानेव, योनिर्बीजं च । अतः कथञ्चिदपि न प्रकृतिप्रवेशः । एवं त्रिभिरधिकरणैरुपोद्घातेनार्थविप्रतिषेधः परिहृतः । अतः साङ्ख्यमतमशब्दमेव ॥ ८ ॥

ततो नवमेधिकरणे एकसूत्रे अन्येपि स्मार्ता वादा येषु ब्रह्मणः सर्वविधं कारणत्वं नोच्यते, ते सर्वे अश्रौता एवेत्यतिदिष्टम् । तदेवाग्रिमाध्याये विस्तरेण वक्ष्यते ॥ ९ ॥

**इति श्रीवल्लभाचार्यचरणदासस्य श्रीपीताम्बरात्मजपुरुषोत्तमस्य कृतौ वेदान्ताधिकरणमालायां प्रथमाध्यायस्य चतुर्थः पादः ।**

**प्रथमाध्यायः समाप्तः ।**

---

## द्वितीयोध्यायः ।

प्रथमाध्याये सर्वासां श्रुतीनां ब्रह्मणि समन्वयः प्रतिपादितः । स तदा स्थिरो भवति यदा श्रुतीनां परस्परविरोधः परिह्रियते, अन्ये विरुद्धाः स्मार्ता वादाश्च निराक्रियंते । अतस्तदर्थं द्वितीयेऽध्याये श्रुत्यविरोधं प्रतिपादयति, विरुद्धवादांश्च निराकरोति ।

तत्र प्रथमे पादे युक्त्या श्रुतिविरोधपरिहारः । ततो द्वितीयपादे स्मृतीनां वेदबोधकत्वाभावेपि ताभिः स्वातन्त्र्येण कश्चित् पुरुषार्थः सेत्स्यतीत्याशङ्कानिवृत्त्यर्थं बाह्याबाह्यमतान्येकीकृत्य तेषां निराकरणम् । मतैकीकरणं च भ्रान्तेस्तुल्यत्वबोधनार्थम् । तृतीयपादे प्रथमं भूतानामुत्पत्तिस्वरूपमुत्पत्तिक्रमश्च विचार्यते, ततो जीवात्मस्वरूपं तद्धर्माश्च । चतुर्थे च इन्द्रियोत्पत्तिक्रमस्तत्स्वरूपादिकं च विचार्यते ।

तत्र प्रथमाध्याये 'अपि स्मर्यते, स्मृतेश्चे'तिकथनेन स्मृतिप्रामाण्याङ्गीकारात् तथैव श्रुत्यर्थनिर्णयः कार्यः, अन्यथा तद्वैयर्थ्यप्रसंग इत्याशङ्कानिवृत्त्यर्थं प्रथमं सूत्रत्रयेण साङ्ख्ययोगस्मृत्यो-

नित्यानुमेयश्रुतिमूलकत्वाभावाय प्रामाण्यमुपोद्घातेन निराकृतम् । ततः प्रथमे सूत्रे साङ्ख्यस्मृतेर्मोक्षैकोपयोगित्वात् तत्प्रामाण्यमङ्गीकृत्य तदनुरोधेनैव श्रुतिविप्रतिषेधः परिहार्यः, अन्यथा तद्वैयर्थ्यप्रसङ्गादितिसूत्रांशेनाशङ्क्य, तत्प्रामाण्याङ्गीकारे 'अहं सर्वस्य जगतः प्रभवः प्रलयस्तथे'त्यादिगीतास्मृतिविरोधः । तदप्रामाण्याङ्गीकारे च ब्रह्मकारणत्वबोधकश्रुतिविरोधः । अतो गीतास्मृतिप्रामाण्यमावश्यकम् । तेन श्रुतिविप्रतिषेधनिराकरणे कपिलस्मृतेर्न प्रामाण्यमित्युक्तम् । ततो द्वितीये सूत्रे प्रकृतिव्यतिरिक्तानां महदादीनां लोके वेदे चानुपलम्भात् तदुक्तयुक्तीनामप्रयोजकत्वमित्युक्तम् । ततस्तृतीये सूत्रे पूर्वोक्तश्रुतिस्मृतिविरोधाद् योगस्मृतिरपि साङ्ख्यवत् प्रधानकारणत्वांशेऽप्रमाणमित्युक्तम् । एतेषु पूर्वपादोक्तस्यैवार्थस्य परामर्शात् तदुपोद्घातगर्भः प्रसंगः संगतिः । एवमग्रेऽपि बोध्यम् । त्रीण्येतानि प्रत्येकमधिकरणानीति भाष्यप्रकाशादवगंतव्यम् ॥ १,२,३ ॥

ततश्चतुर्थे त्रिसूत्रे न विलक्षणत्वाधिकरणे प्रथमसूत्रद्वयेन पूर्वः पक्षः । एकेनाग्रे सिद्धांतः । तत्र प्रथमसूत्रे चेतनं ब्रह्म जगदुपादानं न भवति, जगतो जडत्वेन ब्रह्मणस्तद्विलक्षणत्वात् । विलक्षणत्वस्य 'विज्ञानं चाविज्ञानं चे'तिश्रौतशब्दादेव प्रतीतेरित्युक्तम् । ततो द्वितीये सूत्रे ननु 'मृदब्रवी'दितिश्रुतौ मृदादेर्वक्तृत्वादिकथनेन मृदादिष्वपि चेतनत्वस्य श्रुत्यभिप्रेतत्वात् जगतोपि चेतनतया ब्रह्मसालक्षण्याद् ब्रह्मकार्यत्वमिति सिद्धांतिनाशङ्किते, अत्र मृदाद्यभिमानिनी देवतैव वक्तृत्वादिरूपेण व्यपदिश्यते, 'अन्यथा विज्ञानं चाविज्ञानं चे'तिचेतनाचेतनविभागरूपो विशेषो नोच्येत । 'अग्निर्वाग् भूत्वा मुखं प्राविश'दितिश्रुतौ देवताप्रवेशो वागादिषु नोच्येत । तस्माच्चेतनाचेतनात्मकं जगत् न ब्रह्मोपादेयमिति सूत्रद्वयेन पूर्वपक्ष उक्तः । ततस्तृतीये समाधिमाह । कार्यकारणयोर्वैलक्षण्यं लोके गोमयवृश्चिकादौ देहकेशादौ च दृश्यते । अतो विलक्षणत्वेन हेतुना जगति ब्रह्मोपादेयत्वबाधनं न शक्यवचनम् । सदंशस्य कार्यकारणयोस्तुल्यत्वेन सालक्षण्याच्च । तस्मान्न जगतो ब्रह्मकार्यत्वप्रतिषेधः ॥ ४ ॥

ततः पञ्चमे पञ्चसूत्रे असदिति चेदित्यधिकरणे असत्कारणत्वसत्कारणत्वबोधकश्रुत्योः परस्परविरोधः परिह्रियते । तत्र प्रथमे सूत्रे 'असद्वा इदमग्र आसी'दितिश्रुतावसतः कारणत्वमुच्यते । 'सदेव सोम्येद'मित्यत्र च सतः कारणत्वमुच्यते, तयोः कथं विरोधपरिहार इत्याशङ्क्य, उक्तश्रुतौ 'असदि'ति यत् कथनं तत् छांदोग्ये 'कथमसतः सज्जायंते'ति कथनात् असतः कारणत्वनिषेधार्थम् । यत् पुनस्तैत्तिरीये तथावचनं तत् वक्ष्यमाणापेक्षया पूर्वसृष्टस्यासाधुत्वार्थम्, असाधुन्यप्यसदितिप्रयोगात् । कार्यस्थूलरूपसत्ताभावार्थं वा । अतो न श्रुत्योर्विरोध इत्युक्तम् । ततो द्वितीये सूत्रे ब्रह्मकारणवादे पूर्वपक्ष उच्यते । ब्रह्मकारणवादे यदा कार्यस्य ब्रह्मणि लयः, तदा कार्यधर्माः परिच्छिन्नत्वाशुद्धत्वादयो ब्रह्मणि भविष्यंतीत्यसंगतं ब्रह्मकारणत्वमित्येवं शंकाकरणात् । ततोऽग्रिमेषु तत्परिहार उक्तः । ततस्तृतीये ब्रह्मकारणवादो नासंगतः । कार्यस्य कारणे लये कार्यधर्मा न कारणे दृश्यंते, शरावरुचकादीनां मृदि लये शरावादिधर्मादर्शनादित्युक्तम् । ततश्चतुर्थे प्रतिबंदी उक्ता । तवापि सत्कार्यवादित्वात्सविशेषस्य कार्यस्य ये धर्माः परिच्छिन्नत्वव्यक्तत्वादयस्ते अव्यक्ते प्रधाने भविष्यंति । अतो न वयं पर्यनुयोक्तव्या इत्युक्तम् । ततः पञ्चमे सावयतर्कस्याप्रतिष्ठितत्वात् प्रतिवादिना तदनङ्गीकारेण दोषादविमोक इत्युक्तम् ॥ ५ ॥

ततः षष्ठे एकसूत्रे एतेनेत्यधिकरणे सांख्यनिराकरणेनान्येपि वादा निराकृता इत्युक्तम् ॥ ६ ॥ इदं क्रमिक मजुले अध्याधिकरण एव पाद इति भूते ।

ततः सप्तमे एकसूत्रे भोक्त्रापत्तेरित्यधिकरणे ननु प्रलये सर्वस्य कार्यस्य कारणरूपतया एकरूपत्वे जाते पुनरुत्पत्तिदशायां भोग्यस्य स्रक्चंदनादेः भोक्तृत्वापत्तिः, भोक्तुश्चेतनस्य भोग्यत्वापत्तिरित्येवमविभागः स्यादितिसूत्रांशेनाशंक्य, अंशांतरेण समाहितम् । यथा लोके कटकमुपमृद्य रुचके क्रियमाणे कटकत्वं न भवति, तथोत्पत्तिदशायां भोग्यस्य भोग्यत्वेनैवोत्पत्तिः, भोक्तुर्भोक्तृत्वेनैवेति न विभागाभावः । कारणस्य चेतनत्वेन तस्य तस्य तथैवोत्पादनादित्युक्तम् । तेन 'विज्ञानं चाविज्ञानं चे'ति श्रुतौ कार्ये विभागाभावरूपो दोषः परिहृतः ॥ ७ ॥

ततोष्टमे त्रिसूत्रे तदनन्यत्वाधिकरणे छांदोग्यस्थे वाचारंभणवाक्ये कार्यस्य कारणाभिन्नत्वं प्रतिपादितम्, न तु कार्यमिथ्यात्वमित्युक्तं प्रथमसूत्रे । ततो द्वितीयसूत्रे कार्यस्य घटादेर्विद्यमानत्व एवोपलम्भः । नत्वविद्यमानत्वे । अतः श्रुत्यविरुद्धं प्रत्यक्षमपि कार्यस्य कारणानन्यत्वे प्रमाणमित्युक्तम् । ततस्तृतीये प्रपञ्चस्य सदैव सत्त्वम्, 'सदेव सोम्येदमग्र आसी'दित्यादिश्रुतौ परिदृश्यमानबोधकादिदंपदात् । 'तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् । आविर्भावतिरोभावजन्मनाशविकल्पव'दितिविष्णुपुराणवाक्याच्च । एवमनेनाधिकरणेन श्रुतिप्रत्यक्षाभ्यां कार्यस्य सदात्मकत्वेन ब्रह्मानन्यत्वं साधितम् ॥ ८ ॥

ततो नवमे चतुःसूत्रे असद्व्यपदेशाधिकरणे असत्कार्यवादो निराकृतः । ततः प्रथमसूत्रे 'असद्वा इदमग्र आसी'दितिश्रुतौ कार्यमसदितिव्यपदेशात् असत्कार्यवाद आस्थेय इतिसूत्रांशेनाशंक्य, सूत्रांशेन समाहितम् । एतद्वाक्यशेषे 'स आत्मानं स्वयमकुरुते'तिश्रावणात् कार्यस्य प्रागुत्पत्तेरात्मत्वेनैव रूपेण सत्त्वम्, नतु व्याकृतस्वरूपेण । तस्मादसत्त्वमुच्यते, न त्वसत्त्वेनेत्युक्तम् । ततो द्वितीयसूत्रे सत्कार्यवादस्थापिर्युक्तिभिरात्मानमितिशब्दांतराच्च नासत्कार्यवाद आस्थेय इत्युक्तम् । युक्तयस्तु भाष्यप्रकाशादवगंतव्याः । ततस्तृतीये पटदृष्टांत उक्तः । यथा पटः संवेष्टितो न तावान् प्रतीयते, तथा कारणे कार्यं सूक्ष्मरूपत्वान्न प्रतीयते, प्रकटं तु प्रतीयत इत्युक्तम् । ततश्चतुर्थे प्राणादिदृष्टांत उक्तः । यथा प्राणादीनां नियमने जीवनमात्रम्, अनियमने त्वाकुञ्चनादिः संभवति, तथा जगदपि कारणे प्रविष्टं सन्मात्रं तिष्ठति, बहिःप्रकटं कार्यं करोति । अतोऽसत्कार्यवादो न प्रामाणिक इत्युक्तम् ॥ ९ ॥

ततो दशमे त्रिसूत्रे इतरव्यपदेशाधिकरणे चेतनकारणतायां प्राप्ता दोषाः परिह्रियंते । तत्र प्रथमे चेतनस्य जीवस्यापि ब्रह्मत्वात्सृष्टौ तस्य प्रवेशे दुःखित्वादिकं भवति । तच्च ब्रह्मणो हिताकरणत्वादिदोषप्रसक्त्या असंगतमित्याशंक्य, अग्रिमसूत्रद्वये परिहारमाह । तत्र द्वितीये ब्रह्म जीवादधिकम्, न तु जीवमात्रम्, तेन तद्दोषेपि न दुष्यति । यथा सुवर्णखण्डस्यान्यमेलनेन दुष्टत्वेपि न सुवर्णस्य दुष्टत्वम्, तद्धिताहितं च करोति, लोके स्वदेहेपि नखनिकृंतनकेशप्रसाधनादिदर्शनात् । जीवपरमात्मनोर्भेदस्तु विज्ञानानंदप्राधान्यभेदात् । आनंदस्याधिक्यं तु भूमविद्यायां तत्रैव ज्ञेयत्वस्य पर्यवसानात् । ततस्तृतीये यथा पार्थिवत्वाविशेषेपि हीरकपाषाणयोश्चंदननिंबयोश्च स्वभावभेदः, तथा जीवानामपि । तथा च ब्रह्मवादे लोकन्यायेन प्रत्यवस्थानं नोचितमिति साधितम् ॥ १० ॥

तत एकादशे षट्सूत्रे उपसंहारदर्शनाधिकरणे तत्रैकस्यैव ब्रह्मणः सर्वविधकारणत्वे ये दोषास्ते परिह्रियंते । तत्र प्रथमसूत्रे लोके मृत्कुलालचक्रचीवरादीनामुपादानकर्तृनिमित्तांत-

राणां परस्परभिन्नानां दर्शनादेकस्यैव सर्वविधकारणत्वमसंगतमिति सूत्रांशेनाशंक्य, क्षीरं यथा यदा दध्याकारेण परिणमति, तदा नान्यत्किञ्चिदपेक्षते, तथा ब्रह्मापीत्यंशांतरेण समाहितम्। ततो द्वितीयसूत्रे यथा देवर्षिपितर इतरनिरपेक्षा योगबलेन सर्वं कुर्वंति, तथा ब्रह्मापीच्छयेति समाधानांतरमुक्तम्। ततस्तृतीये ब्रह्मण उपादानत्वे कृत्स्नप्रसक्त्यादिर्दोष आशंकितः। ततश्चतुर्थे ब्रह्मणः स्वरूपं कारणत्वं च न लोकगम्यं येनैवमाशंक्येत, किंतु श्रुत्येकसमधिगम्यम्। सा च स्वत एव प्रमाणम्। सा च यथा वदति, तथैवांगीकार्यमित्येवं समाहितम्। ततः पञ्चमे ब्रह्मणः सर्वविधकारणत्वेपि देशकालाधिकरणापेक्षा त्वावश्यकीत्याशंक्य, 'परास्य शक्ति'रिति श्रुतेर्ब्रह्मणो विचित्रशक्तित्वाद्देशकालाद्यनपेक्षा युक्ता। 'आत्मन्येवात्मनात्मानं सृजेहमनुपालय' इत्यात्मन्यपि सृष्टिर्युक्तेत्युक्तम्। ततः षष्ठे प्रधानकारणवादेपि ते दोषास्तुल्या ये ब्रह्मकारणवादे दीयंते। तस्मात्पर्यनुयोगो न युक्त इत्युक्तम्॥ ११॥

ततो द्वादशेष्टसूत्रे सर्वोपेता इत्यधिकरणे भगवतः कर्तृत्वे दोषान् परिहरति। तत्र 'स विश्वकृ'दिति श्रुतौ कर्तृत्वं बोध्यते, निर्वाहकाभावे तत्कथं संगच्छत इत्याकांक्षायां प्रथमसूत्रे सर्वशक्तियुक्तत्वं साधितम्। ततो द्वितीये सूत्रे ब्रह्मणो निरिंद्रियकत्वात्कथं कर्तृत्वम्। ततस्तृतीयसूत्रे ब्रह्मणः प्रयोजनाभावात्किमर्थं कर्तृत्वमित्येवमाशंकितम्। ततश्चतुर्थे लोकवल्लीलया समाहितम्। ततः पञ्चमे ब्रह्मणः सृष्टिकरणे जीवानां सुखदुःखसंभवात् वैषम्यनैर्घृण्ये स्यातामित्याशंक्य, जीवकर्मसापेक्षत्वान्न ब्रह्मणि दोष इत्युक्तम्। कर्मसापेक्षत्वेपि नेश्वरत्वहानिरिति चोक्तम्। ततः षष्ठे जीवानां प्रपञ्चप्रलयदशायां ब्रह्माविभागात्कथं कर्मसत्तेति सूत्रांशेनाशंक्य, बीजाङ्कुरवत्प्रवाहानादित्वादिति सूत्रांशेन समाहितम्। ततः सप्तमे उपपत्त्या श्रुतिस्मृत्योस्तदुपलम्भाच्च जीवस्यानादित्वं समर्थितम्। ततोष्टमे ब्रह्मणः सर्वसमर्थत्वात्सर्वं संगच्छत इत्युक्तम्। एवं चास्मिन्पादे पूर्वाध्यायचतुर्थपादस्थितं हृदिकृत्य सर्वं चिंतितम्। तेन बुद्धिस्थानात्मकोपोद्घातात्तद्गर्भः प्रसंगः संगतिरिति॥ १२॥

**इति श्रीवल्लभाचार्यचरणदासस्य श्रीपीताम्बरात्मजपुरुषोत्तमस्य कृतौ वेदान्ताधिकरणमालायां द्वितीयाध्यायस्य प्रथमः पादः॥**

---

अथ द्वितीयपादे वेदविरुद्धा बाह्या अबाह्याश्च स्मृतयो दूष्यंते, तासां न परमफलसाधकत्वमिति ज्ञापनार्थम्।

तत्र प्रथमे षट्सूत्रे रचनानुपपत्तेरित्यधिकरणे प्रधानस्य कर्तृत्वं दूष्यते। तत्र प्रथमसूत्रे अचेतनस्य प्रधानस्य बुद्धिपूर्वकक्रियारूपा या रचना सा नोपपद्यते, प्रधानस्याचेतनत्वेन क्रियाकारणभूताया बुद्धेस्तत्र वक्तुमशक्यत्वादित्युक्तम्। ततो द्वितीये सूत्रे लोकरचना यथा केवलादचेतनान्नोपपद्यते, तथा शुक्रशोणितजन्या शरीररचनापि। तत्र मातापित्रोरुभयोश्चेतनयोः प्रवृत्तिदर्शनात्, अचेतने केवले तादृशप्रवृत्त्यदर्शनादित्युक्तम्। ततस्तृतीये ननु केवलाचेतनेपि दुग्धे फेनरचनादयो विचित्रा दृश्यंते, तादृशे नदीजले च स्पंदनादयः। तद्दृष्टांतेनाचेतनस्य केवलस्य प्रधानस्यापि रचनाकर्तृत्वं प्रवृत्तिश्चास्त्विति सूत्रांशेनाशंक्य, अंशांतरेण समाधत्ते। तत्रापि दोह-

१. कर्मसत्तेति मूले पाठः।

नाधिश्रवणयोश्चेतनकर्तृकयोर्निमित्तत्वेन दर्शनात् । नदीजले च मेघानां चेतनानां निमित्तत्वेन दर्शनादित्युक्तम् । ततश्चतुर्थे एवं त्रिभिः सूत्रैः केवलप्रधानस्य कर्तृत्वं दूषयित्वा केवलस्य तस्य परिणामं दूषयति । केवलं प्रधानं चेत् स्वतः परिणमेत, सर्वदैव परिणमेत्, तथा सति प्रलयो न स्यात् । गुणाश्च साम्यावस्थयावस्थिताः स्वत एव संक्षुभ्येरन्, तदा सृष्टिस्थितिप्रलया युगपदेव स्युः, कार्यं च सात्त्विकादिभेदेन न विभज्येतेत्युक्तम् । ततः पञ्चमे ननु तृणपल्लवादयः पशुभक्षिताः स्वभावादेव क्षीरभावेन परिणमंते इत्याशंकायां समाधीयते । यदि तृणादिकं स्वभावत एव क्षीरभावेन परिणमेत, तदा शृङ्गेपि क्षीरं लभ्येत, तत्तु न लभ्यते, धेन्वादिकृता भक्षणक्रिया च तत्र सहकरोतीति न केवलस्य प्रधानस्य परिणामः शक्यवचन इत्युक्तम् । ततः षष्ठे 'तुष्यतु दुर्जन' इति न्यायेन केवलस्य प्रधानस्य परिणाममभ्युपगम्य पुनर्दूषयति । यदि केवलस्य प्रधानस्य परिणामोऽभ्युपगम्यते, तदापि स किमर्थः । न च पुरुषार्थ इति वक्तव्यम् । प्रयोजनप्रेक्षापूर्वकप्रवृत्तेश्चेतनधर्मत्वेन केवले प्रधाने सा न वक्तुं शक्यते । तस्माद् दूषणतादवस्थ्यम् । एवमनेनाधिकरणेन केवलप्रधानकारणवादो निराकृतः ॥ १ ॥

ततो द्वितीये चतुःसूत्रे पुरुषाश्मवदित्यधिकरणे पुरुषप्रेरितप्रधानकारणवादो निराक्रियते । पंग्वारूढोन्धो यथा गच्छति, तथा पुरुषाश्लिष्टं तत्प्रेरितं प्रधानं महदादिसृष्टिं करोतीत्येकं मतम् । अन्यच्च, यथा अयःकान्तसन्निधौ लोहस्य क्रिया, तथा पुरुषसन्निधानमात्रेण प्रधानस्य महदादिकर्तृत्वमिति द्वितीयम् । तत्पुनः सूत्रांशेनाशंक्य, अंशांतरेण दूषयति । प्रधानपुरुषयोर्व्यापकत्वेन संसर्गस्य सन्निधेश्च सार्वदिकत्वात्पूर्वोक्तदोषस्तदवस्थः । अनिर्मोक्षश्चाधिकः । तस्मान्मतद्वयमप्यसंगतमिति पूर्वसूत्रे उक्तम् । ततो द्वितीयसूत्रे प्रधानपुरुषयोर्मध्ये किं पुरुषस्यांगित्वं प्रधानस्य वा । तत्र नाद्यः, सर्वेषां पुरुषाणां समत्वेनैकस्य नियामकत्वम्, नान्येषामिति विभागो न स्यात् । न द्वितीयः, स्वतन्त्रेण प्रधानेन पुरुषाय स्वदोषा न प्रदर्शनीयाः । तथा सति दुःखाभावेन वैराग्याभावात् मोक्षार्थं प्रयत्न उच्छिद्येत । तस्मादंगित्वमनुपपन्नमित्युक्तम् । ततस्तृतीये ननु गुणा एवं विभागशः प्रवृत्तिमंतः, चलस्वभावत्वात्, चलदलदलवदित्येवमनुमाने पूर्वोक्ताः सर्वे दोषाः निराकृताः स्युरित्याशङ्क्य, तत्र दूषणमाह । एवं प्रकारांतरेणानुमितावपि न दोषपरिहारः, कार्यक्रमानुपपत्त्यादिदूषणप्रासात् । नहि गुणैः कालो ज्ञायते, येन प्रथमं रजः क्षुभ्यति, ततः सत्त्वम्, ततस्तम इति । अतो गुणेषु ज्ञानशक्तिवियोगात् सर्वमसमञ्जसमित्युक्तम् । ततश्चतुर्थे सांख्यमतवर्तिनां नानाविधानि मतानि लोके दृश्यंते । एकादशस्कंधे उद्धवप्रश्ने भगवता चानूदितानि । अतः परस्परविरोधादपि तन्मतमसंगतमित्युक्तम् । एवं दशभिः सूत्रैरधिकरणद्वयेन प्रधानकारणवादो निराकृतः ॥ २ ॥

ततस्तृतीये सप्तसूत्रे महद्दीर्घवद्वेत्यधिकरणे न्यायवैशेषिकादिमतमवसरसंगत्या दूष्यते । ते हि परमाणूनां समवायित्वमंगीकृत्य, ईश्वरकृतात्तत्संयोगाद्भूतादिसृष्टिमंगीकुर्वंति । तत्र संयोगप्रकारो दूष्यते । परमाणूनां स्वरूपं ह्रस्वं परिमण्डलं च । तयोर्यद्युपर्युपरि संयोगः, तदा कार्यं वह्निवन्महत्त्वात् । यदि तिर्यक्, तदा नौकादिवद्दीर्घं स्यात् । पुञ्जसंयोगस्तु तैर्नेष्यते । अतस्तन्मतमसंगतमिति प्रथमसूत्रेणोक्तम् । ततो द्वितीयसूत्रे परमाणुद्वयसंयोगः सार्वदेशिको वैकदेशिको वा । नांत्यः । प्रदेशांगीकारे प्रदेशवत्त्वस्य सावयवत्वव्याप्यत्वात्परमाणोः सावयवत्वमनित्यत्वं चापद्येत । नाद्यः । संयोगस्याव्याप्यवृत्तित्वनियमात् । किंच, कर्मजोऽवयवजश्च संयोगो द्विविधः ।

तत्र निरवयवत्वान्नावयवज इत्युक्तम् । अथ कर्मजः । तत्र किं स्वभावादुत्पद्यते, ईश्वरसिसृक्षया वा । तयोरुभयोरपि नित्यत्वात्सर्वदा सृष्टिप्रसंगः । तस्मान्न स वक्तुं शक्यते इत्युक्तम् । ततस्तृतीये समवायो दूष्यते । स हि संबंधः, संबंधिद्वयनिरूप्यः । तथा सति द्व्यणुकस्य पूर्वमभावेन स कथं वक्तुं शक्यत इत्युक्तम् । ततश्चतुर्थे, किंच, परमाणोः समवायिन ईश्वरेच्छाजीवादृष्टयोर्निमित्तयोश्च सृष्टिप्राक्काले सत्त्वात् सामग्रीसमवधानजन्यस्य परमाणुकर्मणस्तज्जन्यस्य संयोगस्य च सर्वदा आपत्त्या तयोरपि नित्यत्वापत्तिरित्युक्तम् । ततः पञ्चमे परमाणुनित्यत्वं दूष्यते । परमाणुषु तै रूपाद्यंगीक्रियते । यच्च रूपादिमत्, तदनित्यं लोके दृष्टम् । अतः परमाणुरनित्य इत्युक्तम् । ततः षष्ठे यदि परमाणुषु रूपादिकं नांगीक्रियते, तदा द्व्यणुकादिषु रूपाद्यभावापत्तिः । कारणगुणाः कार्यगुणारंभका इति तन्नियमात् । अतो रूपाद्यंगीकारे तदनंगीकारे च दोषादसंगतः परमाणुकारणवाद इत्युक्तम् । ततः सप्तमे सर्ववैदिकानादृतत्वादप्यसंगतः परमाणुकारणवाद इत्युक्तम् ॥ २ ॥

ततश्चतुर्थे दशसूत्रे समुदाय उभयहेतुकेपीत्यधिकरणे । एकोनविंशतिसूत्रैर्बौद्धमतान्यवसरसंगत्या निराक्रियंते । तत्र सौगताश्चतुर्विधाः वैभाषिकसौत्रांतिकविज्ञानवादिमाध्यमिकभेदात् । तत्र पूर्वं वैभाषिकमतं निराक्रियते । तेषां मते समुदायद्वयं जीवभोगार्थं संहन्यते । तत्र पृथिव्यादिपरमाणुसमुदाय एकः । रूपादिस्कंधसमुदायश्चापरः । रूपविज्ञानवेदनासंज्ञासंस्कारनामकाः पञ्चस्कंधाः । तदुभयसंबंधे जीवस्य संसारः, तदपगमे मोक्ष इति तेषां मतं प्रथमसूत्रे दूषयति । जीवस्य क्षणिकत्वेन तदुभयसमुदायाप्राप्तिः, तेन तदुक्तः संसारप्रकारो मोक्षश्चासंगत इत्युक्तम् । ततो द्वितीये क्षणिकत्वदूषणपरिहारं सूत्रांशेनोद्भाव्य, अंशांतरेण दूषयति । तन्मते प्रत्ययः कारणसमुदायः । तत्र संस्कारः । सर्वक्षणिकत्वेपि मध्यपातिभ्योऽविद्यादिभ्यः स्कंधप्रत्ययेभ्यो जन्मादयः जन्मादिभ्यः प्रत्ययेभ्यश्चाविद्यादय इत्येवं चक्रवत्परिवृत्तावपि न कारणव्यक्तिं प्रति कार्यव्यक्तेः प्रत्ययता, किंतु पूर्वपूर्वप्रत्ययस्योत्तरोत्तरप्रत्ययं प्रति कारणत्वम् । उत्तरोत्तरक्षणिकविज्ञानसंततेरेव जीवत्वम्, तादृशार्थं संततेरेव जडत्वम् । अतः क्षणिकविज्ञानसंतत्यात्मकस्य जीवस्य क्षणिकार्थं संतत्यात्मकसविषयेन्द्रियशरीराख्यरूपस्कंधसंबंध इति संसारः । रागादिरूपसंस्कारस्कंधविरामादेव तदभावरूपो मोक्षः । अतो न काप्यनुपपत्तिरितिसूत्रांशेनाशंक्य, अंशांतरेण तद्दूषयति । ये हि प्रत्यया उक्तास्ते सदृशीं संततिमुत्पाद्य नश्यंति । तथा सति विज्ञानसंततिरूपस्य जीवस्य पूर्वकालीनप्रियाप्रियसंस्पर्शाननुसंधानात् कथं वेदनादिस्कन्धात्मसंसारसिद्धिः, कथं च तदभावसिद्धिः, स्थिरस्य कस्याप्यभावात् । तस्मादसंगतं तन्मतम् । ततस्तृतीये । किंच, तन्मते स्थितिक्षणस्याभावात्प्रथमक्षणे उत्पत्तिः, द्वितीयक्षणे नाश इति प्रत्ययत्वस्यैवासंभवः, संघातस्य चासंभव इत्युक्तम् । एवं त्रिभिः सूत्रैः पुञ्जस्य कारणता दूषिता । ततश्चतुर्थे । असत्ये हेतौ फलोत्पत्तिरित्याकस्मिकत्वपक्षं दूषयति । तेषां हि प्रतिज्ञाद्वयम् । एका तु सर्वं क्षणिकमिति प्रतिज्ञा । द्वितीया तु आलंबनप्रत्ययसमनंतरप्रत्ययाधिपतिप्रत्ययसहकारिप्रत्ययाख्यांश्चतुर्विधान् हेतून् प्राप्य विज्ञानस्कंधात्मकं चित्तं वेदनास्कंधात्मकाश्चैत्ता उत्पद्यंत इति । तत्र द्वितीयांगीकारे वस्तुनः क्षणांतरसंबंधात्प्रथमप्रतिज्ञा नश्यति । द्वितीया चेन्नांगीक्रियते, तदा प्रतिनियतहेत्वभावात्सर्वं सर्वतो युगपदेव स्यात् । तस्मात्तदसंगतमित्युक्तम् । ततः पञ्चमे एवं तदुक्तमुत्पत्तिप्रकारं दूषयित्वा नाशप्रकारं दूषयति च । तत्र तेषां मते पञ्चपदार्थाः । एनं नाशयामीति बुद्धिपूर्वको विनाशः प्रतिसंख्यानिरोधः । तां विना यो नाशः स अप्रतिसंख्यानिरोधः । आकाशश्च । एतत्त्रयं निरूपाख्यम् । अवस्त्विति

यावत्। तत्राकाशस्वरूपं तद्दूषणसूत्रे वाच्यम्। क्षणिकं संस्कृतं, चेति पक्ष। तत्र क्षणिकं संस्कृतं चेति द्वयं पूर्वसूत्रेषु दूषितम्। अधुना निरोधद्वयं दूष्यते। तन्मते पदार्थाः सर्वे क्षणिकाः सदृशसंतानजननस्वभावाः। क्षणिकानां च नाशकसंबंधो न पूर्वदृष्ट इत्यन्त्यानामपि पदार्थानां नाशकसंबन्धाभावात्पूर्ववदेव संततिप्रतिबंधाभाव इत्यविच्छेदादित्युक्तम्। एवमत्र कार्यविचारेण निरोधद्वयं दूषितम्। ततः षष्ठे तद्द्वयस्वरूपविचारेण तद्दूषयति। तत्र वैभाषिकाः सौत्रांतिकाः योगाचाराश्च उक्तनिरोधैकदेशभूतेऽविद्याविनाशे मोक्षस्तद्दर्शनोक्तरीतिको भवतीति मन्यंते। तदसंगतम्। अविद्या-(या)निर्हेतुके नाशेंगीक्रियमाणे तन्मतीयसाधनविधायकशास्त्रवैफल्यम्। सहेतुकनाशांगीकारे निर्हेतुकत्वप्रतिज्ञाहानिरित्युभयथापि दोष इत्युक्तम्। एवं सूत्रद्वयेन तदुक्तनाशप्रकारो दूषितः। ततः सप्तमे आकाशं दूषयति। तेषां मते आवरणाभाव एवाकाशः। सोपि निरूपाख्यः। तादृशेपि भूतांतरवद्वस्तुत्वव्यवहारस्याविशिष्टत्वात्। अत्र गृध्रः, अत्र श्येन इत्यादिव्यवहारस्य तत्रापि दर्शनात्। अवकाशरूपेण प्रत्यक्षत्वाच्चावस्तुत्वमसंगतमित्युक्तम्। ततोऽष्टमे पुनः संक्षेपेण क्षणिकवादं निराकरोति। सर्वत्र स एवायमिति प्रत्यभिज्ञा दृश्यते। क्षणिकत्वे तु तस्य नष्टत्वात्कालान्तरे प्रत्यभिज्ञा बाध्येत। तस्मादसंगतः क्षणिकवाद इत्युक्तम्। ततो नवमे तदभिमताभावाद्भावोत्पत्तिं निराकरोति। ते हि बीजोपमर्दं विनांकुरोत्पत्तिं, दुग्धोपमर्दं विना दध्युत्पत्तिमपश्यंतो नष्टेभ्य एव बीजादिभ्यस्तत्तदुत्पत्तिं पश्यंतः केवलादभावादेव भावोत्पत्तिं मन्यंते। तथाचालीकादेवोत्पत्तिरिति सिध्यति। तदसंगतम्। दृष्टविरोधात्। यदि ह्यलीकादभावादेव केवलात्कार्यं स्यात्तदा बीजादपि स्यात्, दुग्धादंकुरं च। तत्तु न दृश्यते। तस्मान्नाभावाद्भावोत्पत्तिरित्युक्तम्। ततो दशमे यद्यभावादेव सर्वं स्यात्, तदा तस्य सर्वत्र सुलभत्वात् कृषिहलादिसाधनरहितानामपि धान्यादिः सिध्येत्। तत्तु न दृश्यते। अतोपि नाभावाद् भावोत्पत्तिरित्युक्तम्। एवं दशभिः सूत्रैः वैभाषिकसौत्रांतिकयोर्मतं निराकृतम्॥ ४॥

ततः पञ्चमे पञ्चसूत्रे नाभाव उपलब्धेरित्यधिकरणे कारणांशे पूर्वं निराकृतोपि विज्ञानवादी कार्यांशे निराक्रियते। विज्ञानवाद्येव योगाचारः। स हि बाह्यं प्रपञ्चं नीलं पीतं घट इत्येतत्सर्वं विज्ञानाकारं मन्यते, न तु बाह्यार्थोस्तीति। अनादिवासनयैव च भासत इति तन्मतम्। एवं यस्तेन बाह्यार्थाभाव उक्तः, स न युक्तः। यदि सर्वं ज्ञानाकारमेवानादिवासनया भासेत, तदा वासनाया अन्तः विद्यमानत्वात् सर्वं सर्वदा सर्वत्र भासेत। तत्तु नास्ति। अतः कदाचित्कचिदुपलंभात् बाह्यार्थोस्तीति मंतव्यमित्युक्तम्। ततो द्वितीये उपलब्धिमात्रेण वस्तुसत्त्वं चेत्तदा स्वप्नमायाभ्रमादिषु ये उपलब्धास्तेपि सत्याः स्युः। तस्मान्नोपलब्धिमात्रेण वस्तुसत्त्वं वक्तुं शक्यमित्याशङ्क्य निराकरोति। बाह्यः प्रपञ्चः स्वप्नादिविलक्षणः, बहुकालस्थायित्वात्। नहि तथा स्वप्नादिषु दृश्यते। तस्मात्तद्दृष्टान्तोप्यसङ्गत इत्युक्तम्। ततस्तृतीये यच्चैर्बाह्यार्थं विनैव वासनया ज्ञानवैचित्र्यमंगीक्रियते, तत्र बाह्यार्थं विना वासनैवानुपपन्ना, बाह्यार्थस्यैव वासनाजनकत्वात्। तस्य च तन्मतेऽभावादित्युक्तम्। ततश्चतुर्थे वासनाया आधारभूतस्य, अहमित्याकारो रूपादिविषय इंद्रियादिजन्योयं क्षणिकविज्ञानसंतानः कर्ता भोक्तेत्यभिमानवान् आलयविज्ञानाख्यः, तस्य क्षणिकत्वाद्वासनायाः आधारोपि न वक्तुं शक्यः। तस्मादपि तन्मतमसङ्गतमित्युक्तम्। ततः पञ्चमे सर्वथानुपपन्नत्वादपि तन्मतमसंगतम्। तेन माध्यमिकोप्यसंबद्धभाषित्वादुपेक्षित इत्यपि सूचितम्। एवं पञ्चदशभिः सौगता निराकृताः॥ ५॥

ततः षष्ठे चतुःसूत्रे नैकस्मिन्नसंभवादित्यधिकरणे विवसनस्य स्याद्वादिनो निराकरणम्। स हि स्यादस्ति, स्यान्नास्ति, स्यादस्ति नास्ति, स्यादवक्तव्यः, स्यादस्ति चावक्तव्यः, स्यान्नास्ति चावक्तव्यः, स्यादस्ति नास्ति चावक्तव्य इत्येवं सप्तभंगीं मन्यते। सप्तभंगी नाम सप्तानां भंगानां समाहारः। सा च सार्वत्रिकी। तदिदं प्रत्यक्षविरुद्धम्। न ह्यस्तिनास्त्यादिभंगं एककालं सर्वेषां दर्शनगोचरीभवतीति। तस्मादसंभवन्नसंगतः। किंचेयं सप्तभंगी सार्वत्रिकीति तदुक्तसाधनेषु तदुपदेष्टृषु तीर्थंकरेषु तदुक्ते मोक्षरूपे फले चानुवर्तमाना सर्वेष्वेव तदुक्तेष्वनाश्वासं जनयतीत्यतोऽप्यसंगतस्तद्वाद इत्युक्तम्। ततो द्वितीयसूत्रे तदुक्तमात्मस्वरूपं दूष्यते। स हि आत्मानं कृत्स्नं मन्यते। सृष्टिं च परमाणुभ्योंऽगीकरोति। मोक्षे च निरावरण आत्मा तिष्ठतीति। तदिदं दूष्यते। परमाणुभ्य एव सृष्ट्यंगीकारेणात्मनो वस्तुपरिच्छेदांगीकारादकात्स्न्ये सर्वत्वं न भवति। तथा च मोक्षदशायामवलोकाकाशवर्तित्वेन तत्कृतावरणसंभवान्निरावरणप्रतिज्ञाहानिः। किंच, सर्ववस्तुष्वात्माभावादात्मनामस्तिकायत्वप्रतिज्ञाहानिश्चेत्यर्थ इत्युक्तम्। ततस्तृतीये तदभ्युपगतो देहपरिमाणात्मवादो दूष्यते। स हि देहपरिमाण आत्मेति मन्यते। सूक्ष्मदेहे सूक्ष्मः। स एव स्थूलदेहे स्थूल इति। एवं पर्यायेण तत्तत्परिमाणांगीकारे अवयवोपचयापचयाभ्यामात्मनोपि विकारापत्तिः। संकोचविकाशेपि विकारस्य दुःपरिहारत्वादित्युक्तम्। ततश्चतुर्थे तदुक्तमात्मपरिमाणमेव दूष्यते। स हि मोक्षावस्थावस्थितजीवस्य परिमाणं नित्यं वदति। तदग्रे देहाभावात्। संसारावस्थायां त्वनित्यम्। तथा सति संसारावस्थायां चार्वाकवदात्मन अनित्यत्वापत्तिः। तथा सति मोक्षः कस्य स्यात्। अतः संसारावस्थायामपि तस्य नित्यं परिमाणमंगीकार्यम्। अणु वा महद्वा। तथा सति देहपरिमाणात्मवादस्त्वसंगत इत्येवं दूषितमित्युक्तम्।

एतेषु षट्स्वप्यधिकरणेषु ब्रह्म जगदुपादानं न वेति संदेहः, तत्तन्मतविरोधः संदेहबीजम्, नेति पूर्वः पक्षः, सर्वसमयानामयुक्तत्वाद् ब्रह्मैवोपादानमिति सिद्धांतो ज्ञेयः। षष्ठे तु ब्रह्मैव विरुद्धधर्माधारम्, नेतरदिति नियमो युक्तो न वेति संदेहे, स्याद्वादिभिः सर्वत्र तथाभ्युपगमान्नेति पूर्वः पक्षः, स्याद्वादस्यासंगतत्वाद्ब्रह्मैव तथेति नियमो युक्त एव, श्रुत्या भक्तप्रत्यक्षेण च प्रमितत्वादिति सिद्धांत इति प्रकारांतरमधिकं ज्ञेयम्॥ ६॥

ततः सप्तमे पंचसूत्रे पत्युरसामंजस्यादित्यधिकरणे नैयायिकवैशेषिकहैरण्यगर्भपातंजलकापालिककालामुखपाशुपतैशवा ईश्वरस्य निमित्तमात्रत्वं मन्यंते, न तूपादानत्वम्, तद्दूषयति। यदीश्वरः निमित्तमात्रं स्यात्तदा केषांचित्सुखं केषांचिद्दुःखं ददद्विषमो निर्घृणश्च स्यात्। अतो सामंजस्यात्तन्मतमसंगतम्। ततो द्वितीये तन्मते जीवब्रह्मणोर्विभुत्वादजसंयोगस्य वक्तुमयुक्तत्वेन पतित्वानुपपत्तिः। यजि च संबंधोंगीक्रियेत, तदापि विभुत्वनित्यत्वाभ्यां तुल्यत्वापत्त्या नियम्यनियामकभावानुपपत्तेः संबंधानुपपत्तिरित्युक्तम्। ततस्तृतीये ईश्वरः शरीरं किंचिदाधारं चाधिष्ठाय करोति, तद्विना वा। आद्ये तन्नित्यमनित्यं वा। आद्ये परमाणुपुंजरूपस्य तस्य कार्यानिर्वाहकत्वम्, अवयवित्वाभावात्। द्वितीये तु जन्यत्वम्। तथा सति तत्कर्तुर्निर्वक्तुमशक्यत्वादनवस्थापत्तिः। अथाशरीर एव करोतीति मतम्, तदा तु मुक्तानामिव तस्यापि कर्तृत्वानुपपत्तिः। अतोधिष्ठानानुपपत्त्या तन्मतमसंगतम्। ततश्चतुर्थे यथा जीवोऽशरीर एवेंद्रियादीनि करणान्यधितिष्ठति, नियमयति, तथेश्वरोप्यशरीर एव जीवान् नियमयिष्यतीति सूत्रांशेनाशंक्य, सूत्रांशेन समाहितम्। यदि जीवदृष्टांतेन तथांगीक्रियते, तदा तद्दृष्टांतेनैव तस्य सुखदुःखभोगाद्यापत्तिः। (ततः पंचमे तैजंड-

जीवनियमनार्थं हीश्वरोऽभ्युपगम्यते । नियमनं चेयत्तायां संभवति । ततश्च तेषामियत्तापत्तिः । तथा सति तेषामंतवत्त्वम् । इयत्तापरिच्छिन्नेषु घटादिष्वंतवत्त्वस्य दृष्टत्वात् । एतद्दोषपरिहाराय जीवानां व्यापकत्वमसंख्येयत्वं चांगीक्रियते, तदा असंख्येयत्वस्य सर्वाज्ञेयत्वनियमात् सर्वतद्विषयकज्ञानस्येश्वरेऽभावेनासर्वज्ञता स्यात् । ) तदनापत्तौ नियामकाभावादित्युक्तम् । तेनेश्वरविषयेपि तन्मतमसंगतमित्युक्तं भवति ॥ ७ ॥

ततोऽष्टमे चतुःसूत्रे उत्पत्त्यसंभवादित्यधिकरणे पाञ्चरात्रमते योंशो हि श्रुतिविरुद्धः सोंशो दूष्यते । पंचरात्रस्य भगवत्प्रणीतत्वेपि तावतोंशस्य बुद्धिपूर्वकमेव गौतमशप्तानामृषीणामर्थे स्थापनात् । सोंशस्त्वयम् । ते हि परब्रह्मणो वासुदेवात् संकर्षणस्य जीवस्य, तस्मात्प्रद्युम्नस्य मनसः, ततोऽनिरुद्धस्याहंकारस्योत्पत्तिं वदंति । तेषां चतुर्णां व्यूहतां च वदंति । तदेतच्छ्रुतिविरुद्धम् । एवमुत्पत्तौ व्यूहत्वासंभवात् । व्यूहत्वे चैवमुत्पत्त्यसंभवात् । जीवोत्पत्तौ मोक्षस्याप्यसंभवात् । तस्मादयमंशो विरुद्ध इति पूर्वसूत्रे दूषितः । ततो द्वितीये संकर्षणात्प्रद्युम्नोत्पत्तिर्दूष्यते । कर्तुर्जीवात् करणस्य उत्पत्तिर्लोकविरुद्धा; मनसः करणादहंकारोत्पत्तिरपि तथा । अतः प्रद्युम्नादनिरुद्धोत्पत्तिरप्यसंगता । ततस्तृतीये तेषां सर्वेषां परमेश्वरत्वं चेदंगीक्रियते, तदा अनेकेश्वरत्वापत्तिरित्युक्तम् । ततश्चतुर्थे शांडिल्यश्चतुर्षु वेदेषु परं श्रेयः अलब्ध्वा इदं शास्त्रमधीतवान् । तथा तप्तचक्रादिधारणं च तत्र विहितम् । तदेतच्छ्रुतिविरुद्धम् । तप्तचक्रादिधारणस्य पुराणेषु शूद्रधर्मत्वेनोक्तत्वात् । वेदेषु परमश्रेयोलाभाभावकथनस्यापि तथात्वात् । तस्मादेतत्सूत्रचतुष्टयोक्तं दूष्यं यत् तद्वेदविरुद्धम् । एवं स्मृतिषु वेदविरुद्धांशदूषणेन सर्वाण्येव वेदविरुद्धानि शास्त्राण्युपलक्षणविधया दूषितानि ज्ञेयानि ॥८॥

इति श्रीवल्लभाचार्यचरणदासस्य श्रीपीतांबरात्मजपुरुषोत्तमस्य कृतौ वेदान्ताधिकरणमालायां द्वितीयाध्यायस्य द्वितीयः पादः ॥

---

अथ ततस्तृतीये पादे पूर्वं क्रमसृष्टौ भूतोत्पत्तिप्रकारस्तत्स्वरूपं च विचार्यते ।

तत्र प्रथमे सप्तसूत्रे न वियदित्यधिकरणे आकाशोत्पत्तिर्विचारिता । तत्र छांदोग्ये तेजआदिका सृष्टिः, तैत्तिरीयके आकाशादिका, तत्रासृजतेति पदाभावादाकाशस्योत्पत्तिः संदिग्धा । तत्र प्रथमसूत्रे आकाशस्योत्पत्तिः छांदोग्ये न श्रूयते । तस्मात्तदुत्पत्तिरित्याशंकितम् । ततो द्वितीये तैत्तिरीये द्वितीये सृष्टिप्रकरणे 'इदं सर्वमसृजते'ति श्रावणात् पूर्वं 'वात्मन आकाशः संभूत' इति कथनादस्त्युत्पत्तिरित्युक्तम् । तेन छांदोग्येपि तत्सृष्टिरनुमातव्येति सिध्यति । ततस्तृतीये आकाशस्य निरवयवत्वेन व्यापकत्वेन चाकाशस्योत्पत्तिर्न संभवति । तस्मादाकाशोत्पत्तिर्गौणीत्याशंकितम् । ततश्चतुर्थे 'वायुश्चांतरिक्षं चे'ति श्रुतावमृतत्वश्रवणादपि नोत्पत्तिः संभवतीत्युक्तम् । ततः पंचमे ननु तैत्तिरीये संभूत इतिपदस्य सर्वत्रानुवृत्तिदर्शनादेकत्र गौणी, अन्यत्र मुख्या, संभूतिपदस्य वृत्तिरिति न वक्तुं शक्यम् । युगपद्वृत्तिद्वयविरोधादित्याशंक्य, यथा 'तपसा ब्रह्म विजिज्ञासस्व, तपो ब्रह्मे'तिश्रुतौ एकस्यैव ब्रह्मशब्दस्यैकत्र मुख्या, तपसि गौणी, तथात्रापि पदावृत्त्या विरोधाभावो भविष्यतीत्युक्तम् । एवं त्रिभिः सूत्रैः पूर्वपक्षमुक्त्वा, षष्ठे सप्तमे च समाधानमाह । तत्र स्यादेवं यदि छांदोग्योक्ता एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा न बाध्येत । तत्रैकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय दृष्टांते कार्यकारणभावेन तदुपपादितम् । तदनंगीकारे तद्बाध्येत । तस्मादाकाशोत्पत्तिरंगीकार्यैवेत्युक्तम् । ततः

सप्तमे ननु निरवयवत्वादीनां बाधकानामुक्तत्वात्सा कथं संभवतीत्याशंकायाम्, आकाशो नोत्पद्यते, निरवयवत्वादित्येवं साधने, उत्पद्यते लौकिकव्यवहारविषयत्वादित्येवं साधने, उत्पद्यते, लौकिकव्यवहारविषयत्वादित्येवं सत्प्रतिपक्षत्वेन युक्तीनामप्रयोजकत्वमुक्तम् । तस्माच्छ्रुत्युक्ता आकाशोत्पत्तिरंगीकार्येत्युक्तम् ॥ १ ॥

ततो द्वितीये एकसूत्रे एतेन मातरिश्वेत्यधिकरणे एवमेव वायूत्पत्तिरिति साधितम् ॥ २ ॥

ततोग्रिमसूत्रे ब्रह्मणोप्युत्पत्तिरस्त्विति वितंडयाशंक्य, मूलभूतस्य सतः नित्यत्वव्यापकत्वयोर्निरंकुशत्वादुत्पत्तिर्न संभवतीत्युक्तम् ॥ ३ ॥

ततश्चतुर्थे एकसूत्रे तेजोत इत्यधिकरणे वायुतस्तेजस उत्पत्तिः समर्थिता ॥ ४ ॥

ततः पंचमे एकसूत्रे आप इत्यधिकरणे तेजस अपामुत्पत्तिः समर्थिता ॥ ५ ॥

ततः षष्ठे एकसूत्रे पृथिव्यधिकारेत्यधिकरणे छांदोग्ये अद्भ्यः सकाशादन्नोत्पत्तिरुक्ता, तैत्तिरीये च पृथिव्युत्पत्तिरिति विरोधपरिहारार्थमन्नशब्देन पृथिव्येवोच्यते । छांदोग्ये भूताधिकारात् 'यत्कृष्णं तदन्नस्ये'ति नीलरूपकथनात्तैत्तिरीये अद्भ्यः पृथिवीति शब्दांतराच्चेत्युक्तम् ॥ ६ ॥

ततः सप्तमे एकसूत्रे तदभिध्यानादेवेत्यधिकरणे आकाशभावापन्नात्परमेश्वराद्वायोरुत्पत्तिः, एवं वाय्वादिभावापन्नादग्रेपि तेजआदीनां ज्ञेया । सर्वकर्तृत्वस्य ब्रह्मलिंगत्वादित्युक्तम् ॥ ७ ॥

ततोष्टमे एकसूत्रे विपर्ययेणेत्यधिकरणे प्रसंगात्प्रलयप्रकारो विचारितः । क्रमसृष्टौ येन क्रमेणोत्पत्तिस्तद्विपरीतक्रमेण प्रलय इत्युक्तम् ॥ ८ ॥

ततो नवमे द्विसूत्रे अंतरा विज्ञानमनसीत्यधिकरणे विज्ञानशब्देन जीवः मनश्च एतयोरपि क्रमेण मध्ये उत्पत्तिरिति सूत्रांशेनाशंक्य, अंशांतरेण समाहितम् । विज्ञानमयो जीवात्मकः, मनोमयस्तु वेदात्मकस्तैत्तिरीये उक्तः । अतस्तयोरुत्पत्तिर्न वेदाभिप्रेता । नामरूपव्याकरणात्मिकायां सृष्टौ जीवस्य करणत्वेन वेदस्य च द्वारत्वेन तत्पूर्वभावितया सृष्ट्युत्पत्त्यभावात् । यद्यपि न्यूनांशपूरणाय प्राणेंद्रियमनसां क्वचिदुत्पत्तिर्वक्तव्येति चेत् ? पुराणानां श्रुत्युपबृंहणत्वात्तदनुसारेणाकाशात्पूर्वमेव तत्कारणभावापन्नाद्ब्रह्मण एवेति जानीहि । ततो द्वितीये ननु विज्ञानमयस्य जीवस्यानुत्पत्तौ सर्वव्यवहारोच्छेदप्रसंग इत्याशंक्य, जीवस्यापि स्थावरजंगमशरीरे समागमरूपोत्पत्तिस्तु भवत्येव, न तु स्वरूपोत्पत्तिरूपा । अतो न व्यवहारोच्छेद इत्युक्तम् । तेन जीवोत्पत्तिर्गौणीति सूचितम् ॥ ९ ॥

ततो दशमे एकसूत्रे नात्माऽश्रुतेरित्यधिकरणे जीवस्य स्वरूपत उत्पत्तिर्निवारिता । देवदत्तो जात इत्यादौ देहोत्पत्तेरेव श्रवणेन जीवोत्पत्त्यश्रवणात् । 'न जायते म्रियते वा विपश्चि'दित्यादिषु जन्ममरणाभावश्रावणेन नित्यत्वबोधनाच्चेति ॥ १० ॥

तत एकादशे एकसूत्रे ज्ञोत एवेत्यधिकरणे जीवो ज्ञानस्वरूपो ज्ञानधर्मा च विज्ञानमयः, 'विज्ञानं यज्ञं तनुते' इत्यादिस्वरूपबोधकश्रुतिभ्यः । 'न पश्यो मृत्युं पश्यति', 'द्रष्टा श्रोता मंते'त्यादिज्ञानधर्मत्वबोधकश्रुतिभ्यश्चेत्युक्तम् ॥ ११ ॥

ततो द्वादशे चतुःसूत्रे उत्क्रांतिगत्यागतीनामित्यधिकरणे तत्र जीवस्य नित्यत्वेन अणुपरिमाणस्य वक्तुमशक्यत्वात्तस्याणु वा परिमाणं महद्वा संभवति । तत्र किं युक्तमिता-

कांक्षायां परिमाणं विचारितम् । तत्र प्रथमसूत्रे 'स यदास्माच्छरीरादुत्क्रामती'ति, 'ये के चास्माल्लोकात्प्रयांती'ति तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मण' इति श्रुतिषु उत्क्रांतिगत्यागतिश्रावणात् जीवोऽणुरित्युक्तम् । ततो द्वितीये 'ऊर्णनाभिर्यथा तंतून्सृजते हरत्यपि, जाग्रत्स्वप्ने तथा जीवो गच्छत्यागच्छते पुन'रिति श्रुतावेंद्रियरहितस्य केवलस्यैव गत्यागतिश्रवणादपि तथेत्युक्तम् । ततस्तृतीये जीवोऽणुर्भवितुं नार्हति, 'स वा एष महानज आत्मा योयं विज्ञानमयः प्राणेष्वि'ति विज्ञानमयस्य जीवस्य महत्त्वश्रावणात् जीवो नाणुरिति सूत्रांशेनाशंक्य, अंशांतरेण समाहितम् । उक्तश्रुतेर्ब्रह्मप्रकरणपठितत्वान्न तया जीवमहत्त्वसिद्धिरित्युक्तम् । ततश्चतुर्थे 'स्वयं विहत्य स्वयं निर्माये'ति स्वप्नविषयकश्रुतौ स्वशब्दः जीवस्याणुत्वं बोधयति । स्वप्ने शरीरमध्ये तावत्परिमाणस्य व्यापकस्य च विहारकर्तृत्वासंभवात् । 'वालाग्रशतभागस्य शतधा कल्पितस्य तु । भागो जीवः स विज्ञेयः स चानंत्याय कल्पते' इतिश्रुतौ जीवमुपक्रम्य तत्परिमाणबोधनाच्चाणुरित्युक्तम् । ततः पञ्चमे अणोर्जीवस्य सर्वशरीरव्याप्तिः कथं संगच्छते इत्याशंकायां यथा स्वल्पश्चंदनखंडः महाकटाहे तप्ततैले निक्षिप्तस्तैलं शीतलं करोति, तथा जीवोपि सामर्थ्यात्करोतीति व्याप्तौ युक्तिरुक्ता । ततः षष्ठे ननु चन्दनस्यावस्थानं प्रत्यक्षतो निश्चितम्, तेन तस्य तथात्वम् । जीवस्य स्थितिस्तु नैकत्र निश्चितेति स दृष्टांतो न वक्तुं शक्यते इति सूत्रांशेनाशंक्य, 'गुहां प्रविष्टा'वितिश्रुत्या जीवस्य हृदि स्थितिः शास्त्रान्निश्चितेति न दृष्टांतवैषम्यमित्युक्तम् । ततः सप्तमे जीवस्य यो गुणश्चैतन्यं तेन जीवः सर्वशरीरं व्याप्नोति । यथा मणेः कांतिर्बहुदेशव्यापिनी, तद्वदित्युक्तम् । ततोष्टमे चैतन्यगुणस्य स्वाश्रयाधिकदेशवृत्तित्वं चंपकादिगंधवदवगंतव्यमित्युक्तम् । ततो नवमे चैतन्यगुणेन सर्वशरीरव्याप्तौ कौषीतकिब्राह्मणे 'हिता नाम पुरुषस्य नाड्य' इत्यादिना तासां नाडीनामणुत्वं तासु जीवस्य स्थितिं चाभिधाय, स एष इह प्रविष्टः 'आलोमभ्य आनखाग्रेभ्य' इत्यनेन व्याप्तिं प्रदर्शयति । तस्मात्सामर्थ्येन गुणेन च व्याप्तिरुपपन्नेत्युक्तम् । ततो दशमे 'प्रज्ञया शरीरं समारुह्ये'ति श्रुतौ प्रज्ञायाः करणत्वनिर्देशात्स्वरूपचैतन्याद्भिन्नं गुणरूपं चैतन्यं निरूपितम् । अतो गुणेन व्याप्तिरुपपन्नेति साधितम् ॥ १२ ॥

ततस्त्रयोदशे चतुःसूत्रे तद्गुणसारत्वादित्यधिकरणे जीवे ब्रह्मत्वव्यपदेशो मुख्यो गौणो वेत्याशंकायाम्, सुषुप्तिसाक्षिणि प्राज्ञे यथा ब्रह्मत्वव्यपदेशो गौणस्तथा 'प्रज्ञानघनस्त्वमसी'त्यादावपि ब्रह्मगुणसारत्वाद्ब्रह्मत्वव्यपदेशो गौण इत्युक्तम् । ततो द्वितीये ननु नीचस्यात्युत्कृष्टत्वव्यपदेशो न युक्तः । य च प्राज्ञवदिति वाच्यम् । तथा सति प्राज्ञवत्तत्तिरोहितं स्यात् । तथा सति किं व्यपदेशेनेत्याशंक्य, समाधानमाह । यावदात्मा वर्तते, तावत्सर्वोत्कृष्टत्वं तस्य स्फुरति । अर्थादात्मा नित्य इति सर्वदैव स्फुरति । तस्मान्न दोष इत्युक्तम् । ततस्तृतीये (ननु) जीवे आनंदांशाभिव्यक्त्या ब्रह्मधर्माविर्भाव इत्युक्तम् । तन्न युक्तम् । आनंदांशस्य पूर्वमसत्त्वेन पश्चाजन्यत्वात्, जन्यत्वेन नश्वरत्वेन च व्याप्त्या तस्य नश्वरत्वप्रसंगादित्याशंक्य, यथा बालकस्य सदेव पुंस्त्वं यौवनेऽभिव्यज्यते, तथा पूर्वं सूक्ष्मरूपेण वर्तमान एवानंदो ब्रह्मभावे सत्यभिव्यज्यते । अतो न तस्य नश्वरत्वमित्युक्तम् । ततश्चतुर्थे नन्विदानीं सच्चिदंशावेव प्रकटौ, मोक्षे त्वानंदांशोपि प्रकट्यो भवतीत्येवमवस्थाभेदेन विभागे को हेतुरित्याशंक्य, तत्र हेतुमाह । यदीदानीमप्यानंदः प्रकटः स्यात्तदा सच्चिदंशवदिदानीमप्यानंद उपलभ्येत, संसारश्च न स्यात् । यदि कदापि न स्यात्तदा मोक्षावस्था विरुध्येत । नित्यनिरतिशयसुखाभिव्यक्तेरेव मोक्षत्वात् । यदि जीवो निरानंद एव, ब्रह्मैवानंदमय-

मिति नियमोऽङ्गीक्रियते, तदा 'ब्रह्मैव सन् ब्रह्माप्येती'तिश्रुतिर्विरुध्येत । अतः प्रमाणाद्यविरोध एव-मंगीकारे हेतुरित्युक्तम् ॥ १३ ॥

ततश्चतुर्दशेऽष्टसूत्रे कर्ता शास्त्रार्थवत्त्वादित्यधिकरणे जीवस्य कर्तृत्वं व्यवस्थापितम् । सांख्यैः प्रकृतिगतमेव जीवे तत् प्रतीयत इत्यंगीक्रियते, तन्निवृत्त्यर्थम् । तत्र प्रथमसूत्रे शास्त्रार्थवत्त्वं हेतुरुक्तः । वेदादिषु जीवमेवाधिकृत्याभ्युदयनिःश्रेयसफलकानां यज्ञोपासनारूपाणां कर्मणां विज्ञानदर्शनादित्युक्तम् । ततो द्वितीये जीवस्य स्वतः कर्तृत्वाभावेपि संसारदशायां प्रकृतिसंसृष्टत्वेन विवेकाग्रहात्प्राकृतकर्तृत्वग्रहणेपि न शास्त्रानर्थक्यमित्याशंक्य, विहारोपदेशादिति हेतुरुक्तः । विहारः स्वेच्छाक्रीडात्मकभोगरूपो दहरविद्यायामुपदिश्यते, स च दहरविदः कर्तृत्वमाक्षिपतीति जीव एव कर्ता इत्युक्तम् । ततस्तृतीये 'तदेषां प्राणानां विज्ञानेन विज्ञानमादाये'तिश्रुतौ विज्ञानादानकथनेन जीवस्य स्वातन्त्र्यबोधनात्तस्यैव कर्तृत्वमित्युक्तम् । ततश्चतुर्थे 'विज्ञानं यज्ञं तनुते कर्माणि तनुतेपि चे'तिश्रुतौ साक्षादेव कर्मकर्तृत्वव्यपदेशात् । तच्चेन्नांगीक्रियते, तदा श्रुतौ प्रथमानिर्देशो विरुध्येत । प्रथमानिर्देशाद्विपरीतस्तृतीयाविभक्तिनिर्देशश्चापद्येतेत्युक्तम् । ततः पंचमे यदि जीवस्य कर्तृत्वं स्यात्तदा स्वतंत्रत्वात्स्वाहितं न कुर्यादित्याशंक्य, यथा चक्षुषेष्टमनिष्टं चोपलभते, तथैवेंद्रियैः कर्म कुर्वन्निष्टमनिष्टं चाप्नोति । तथा च सांख्यवत् केवलभोक्तृत्वांगीकारेप्ययं दोषस्तुल्य इति कर्तृत्वे पर्यनुयोगो न कार्य इत्युक्तम् । ततः षष्ठे ननु स्वतंत्रश्चेदीश्वरवत् स्वार्थमन्यथा न कुर्यादित्याशंक्य, अस्य शक्तिस्तिरोहितेति तथा करोति । तावता न कर्तृत्वहानिरित्युक्तम् । ततः सप्तमे जीवस्य शक्तितिरोभाव एव कुत इत्याशंक्य, जीवस्य क्रियाज्ञानशक्तियोगेन घृतद्रवत्ववत् सिध्यति । अतस्तदभावाच्छक्तितिरोभाव इत्युक्तम् । ततोऽष्टमे ननु कर्तृत्वभोक्तृत्वयोर्भिन्नधर्मत्वं दृष्टम्, यथैको गृहं निर्मिमीते, अन्यस्तु तद्भुंक्ते, तस्माच्चेदं साधीय इत्याशंक्य, यथा तक्षा रथं पीठं वा निर्माय तमारूढो विहरति, तथा तयोरैकाधिकरण्यस्यापि दर्शनान्न दोष इत्युक्तम् । एवमनेनाधिकरणेन जीवस्य कर्तृत्वं साधितम् ॥ १४ ॥

ततः पंचदशे द्विसूत्रे परात्तु तच्छ्रुतेरित्यधिकरणे जीवस्य कर्तृत्वं स्वतो वा भगवतो वेत्याशंकायां भगवद्गतमेव कर्तृत्वं भगवदंशत्वाज्जीवे भासते । 'एष एव साधु कर्म कारयती'तिश्रुतेः । ब्रह्मणः सर्वरूपत्वान्न वैषम्यनैर्घृण्यादिदोष इति प्रथमसूत्रे उक्तम् । ततो द्वितीयसूत्रे क्रीडार्थं यो भगवता उद्यमः कृतो वर्तते, तदपेक्ष एव भगवान् स्वांशं जीवं तत्र तत्र तथा प्रवर्तयतीत्युक्तम् । दोषपरिहारस्तु सर्वरूपत्वादेव कृतः ॥ १५ ॥

ततः षोडशे एकादशसूत्रे अंशो नानाव्यपदेशादित्यधिकरणे जीवस्य ब्रह्मसंबंधिरूपमुच्यते तत्र प्रथमसूत्रे जीवो ब्रह्मणोंश एव । 'सर्व एवात्मानो व्युच्चरंति, कपूयचरणा रमणीयचरणा' इतिश्रुतौ बहुत्वेन व्यपदेशाद् 'ब्रह्मदाशा ब्रह्मदासा ब्रह्मेमे कितवा उते'तिश्रुतौ ब्रह्मत्वेन च व्यपदेशाच्च । न ह्येकस्य जीवस्य बहुत्वं ब्रह्मरूपत्वं चेत्युभयमंशत्वं विना संगच्छते । तस्मादंश इत्युक्तम् । ततो द्वितीये 'पादोऽस्य विश्वा भूतानी'तिमंत्रवर्णे जीवस्य पादत्वादप्यंशत्वमित्युक्तम् । ततस्तृतीये 'ममैवांशो जीवलोके जीवभूतः सनातन' इति स्मृतौ कंठत एवांशत्वमुक्तम् । एवं त्रिभिः सूत्रैर्जीवस्य ब्रह्मसंबंधिरूपमुक्तम् । ततश्चतुर्थे जीवस्य ब्रह्मांशत्वे तद्द्वारा ब्रह्मण्यपि या दोषसंबंधशंका सा द्वाभ्यां परिहृता इति न वक्तुं शक्यम् । जीवस्य दुःखित्वेन तदंशिभूते ब्रह्मण्यपि दुःखित्वाविप्रसंगात् । पाददुःखे पुरुषदुःखवदित्याशंक्य, तस्य परिहार उक्तः । तथाहि प्रकाशादीनां दुष्ट-

प्रकाश्यसंसर्गेपि न सूर्यादेर्दुष्टत्वम्, तथा ब्रह्मणोपि। वस्तुतस्तु दुष्टप्रकाश्यसंसर्गेपि प्रकाशस्यापि न दुष्टत्वम्। कुतः सूर्यादेः, तथा जीवस्य ब्रह्मणश्चेत्यदोष इति। ततः पंचमे स्मृत्यादिदोषपरिहार उक्तः 'तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः। न लिप्यते फलैश्चापि पद्मपत्रमिवांभसे'ति। 'कर्मात्माप्यपरो योसौ मोक्षबंधैः स युज्यते' इति जीवस्य दोषसंसर्गो, न ब्रह्मण इति। ततः षष्ठे ननु जीवस्य यदि ब्रह्मांशत्वम्, तदा विधिविषयत्वाभावात्कर्मसंबंधाभावः फलासंबंधश्चेत्याशंक्य, जीवस्यापि न स्वतो विध्यादिविषयत्वम्, किंतु देहयोगादेव विधिनिषेधाधीनत्वमपि। तत एव यथा शवाग्निश्चंडालोदकं तद्घटादिश्च परिहियते, शिष्टसंबंधिनस्ते गृह्यंते, एवं जीवस्य देहसंबंधकृतौ गुणदोषौ न स्वत इत्युक्तम्। तेनैव फलसंबंधश्चेत्यपि साधितम्। ततः सप्तमे जीवस्य देहसंबंधाद्गुणदोषसंसर्गकथनं न युक्तम्, कालिकनित्यप्रलयेन देहस्य प्रतिक्षणमन्यान्यत्वादाधानकाले ब्राह्मण्यस्य वक्तुमशक्यत्वेन कर्मानधिकारप्रसक्तेर्जीवैक्यमादायाधिकारसाधने तु देहांतरेपि तदापत्तेरित्याशंक्य, देहांतरे पूर्वदेहसंतत्यभावान्न पूर्वदैहिककर्माद्यापत्तिः। एकस्मिन् देहे तु संततिसामान्यात्कर्माधिकारः सुघटः। ततः सिद्धे देहसंतत्यैक्ये तद्द्वारा जीवस्य गुणदोषसंसर्गौ न दुर्घटावित्युक्तम्। ततोऽष्टमे सच्चिदानंदस्य ब्रह्मणोंशोपि तादृश एव वक्तव्यः, तथासति कथं तस्य देहसंबंध इत्याशंक्य, जीवो ब्रह्माभास इत्युक्तम्। यथा अनाचारी ब्राह्मणो ब्राह्मणाभासः, अखिलब्राह्मणधर्माणामभावात्, एवमानंदांशस्य तिरोधानेन ऐश्वर्यादीनां ब्रह्मधर्माणामभावात् तादृशाकारस्य चाभावात् जीवोपि ब्रह्माभासः। तथा चानंदांशाभावाद्देहसंबंध इत्युक्तम्। एवं त्रिभिः सूत्रैर्जीवस्य स्वतो निर्दुष्टत्वे देहसंबंधाद्दोषसंबंधो देहसंबंधहेतुश्च साधितः।

ततोग्रिमेषु त्रिषु यन्नैयायिकादिभिर्भोगव्यवस्थया जीवनानात्वं व्यापकत्वं चांगीकृतं तद्दूष्यते। तत्र प्रथमे तेषामात्मनां व्यापकत्वेन सर्वमनइंद्रियदेहसंबंधाद्येनकेनचित्करणग्रामेण यत् कर्म क्रियते, तज्जन्यादृष्टस्य सर्वत्र तुल्यत्वाददृष्टनियमो न स्यात्। तस्मात्तदुक्तप्रकारेण जीवव्यापकत्वनानात्वस्थापनमसंगतमित्यर्थः। ततो द्वितीये विलक्षणमनःसंयोगेन पूर्वोक्तं सर्वं साधयंति। तद्दूष्यते। तत्र दृष्टादृष्टकारणकलापसामान्ये एकस्यैव वैलक्षण्यम्, नान्यस्येत्यत्र हेतोर्वक्तुमशक्यत्वादिति बोधितम्। ततस्तृतीये जीवस्य व्यापकत्वेपि प्रदेशभेदान्न दोष इति ते वदंति। तद्दूष्यते। यदि तथांगीक्रियते, तदा यत्र कर्मकरणेन यस्मिन्प्रदेशेऽदृष्टमुत्पन्नं, तस्य प्रदेशस्य देशांतरेऽभावात् तत्रोत्पन्नानां वस्तूनां भोगो न स्यात्, अदृष्टस्याचंचलत्वात्। तस्मान्न तदुक्तरीत्या तन्मतसिद्धिरिति त्रिभिः सूत्रैरुक्तम्। एवमेकादशभिः सूत्रैर्जीवस्य ब्रह्मसंबंधिरूपमुक्तम्॥ १६॥

इति श्रीवल्लभाचार्यचरणदासस्य श्रीपीतांबरात्मजपुरुषोत्तमस्य कृतौ वेदान्ताधिकरणमालायां द्वितीयाध्यायस्य तृतीयः पादः॥

---

पूर्वपादे जीवस्य स्थूलशरीरनिष्पादकानां भूतानां स्वरूपमुत्पत्त्यादिकं च विचारितम्। अस्मिन् पादे इंद्रियादीनां तदवसरसंगत्या विचार्यते।

तत्र प्रथमे पंचसूत्रे तथा प्राणा इत्यधिकरणे इंद्रियाणां भूतवत् कार्यत्वं वा, जीववदंशत्वं वेति संदेहे जीववदंशत्वमिति निर्णीतम्। तत्र प्रथमसूत्रे पूर्वपादे निरूपितजीवस्य ये

१. वस्तु इति पाठः।

चिदंशत्वातिरिक्ता धर्मा उत्क्रांत्यादयस्ते सर्वेतिदिश्यंते । ततो द्वितीये ननु प्राणेषु नित्यत्वाश्रवणादुत्क्रांत्यादिश्रुतिर्गौणी भविष्यतीत्याशंक्य, एकैव श्रुतिर्जीवे मुख्या, प्राणादौ गौणीति वक्तुं न शक्यत इत्युक्तम् । ततस्तृतीये सृष्टेः पूर्वमपि प्राणादीनां स्थितिः श्रूयते । 'असद्वा इदमग्र आसी'-दित्यारभ्य, 'प्राणा वा ऋषय' इत्यंतेन तन्निगमनात् । ततश्चतुर्थे मनःपूर्वो वागुत्तर' इतिश्रुतेर्मनसो वाक्पूर्वरूपत्वात् । वाचश्च वेदरूपाया 'वाचा विरूपनित्यये'ति श्रुत्या नित्यत्वश्रावणात्तत्पूर्वरूपस्य मनसः कथमनित्यत्वं भवेत् । ततः पंचमे 'तमुत्क्रामंतं प्राणोऽनूत्क्रामती'तिश्रुतौ सप्तानां गतिभिर्जीवगतिर्विशेष्यते । अतो जीवसमानयोगक्षेमत्वात्तेषामपि जीवतुल्यत्वमित्युक्तम् ॥ १ ॥'

ततो द्वितीये एकसूत्रे हस्तादय इत्यधिकरणे उत्क्रांतिश्रुतौ प्राणानां जीवेन सहोत्क्रमणकथनात् तेषां नित्यत्वमंशत्वं चांगीकृतम् । अतःपरं ते कतीति विचार्यते । श्रुतौ क्वचित् सप्तोक्ताः, क्वचिदष्टौ, क्वचिन्नव, क्वचिद्दश, क्वचिदेकादशेति नानापक्षाः श्रूयंते । तद्विप्रतिषेधपरिहारार्थं विचारः । तत्र 'हस्तौ चादातव्यं चे'ति श्रुतौ हस्तोपस्थपायुपादानां सप्तभ्योधिकानां कथनात् चक्षुस्त्वग्घ्राणरसनश्रवणमनोवाचां सप्तानां पूर्वं कथनाच्चैकादश, न तु सप्तैवेत्युक्तम् । तेषु पंच ज्ञानेंद्रियाणि, पंच कर्मेंद्रियाणि, उभयनायकमंतःकरणं मन इत्येवं तेषां विभागो ज्ञेयः ॥ २ ॥

ततस्तृतीये एकसूत्रे अणवश्चेत्यधिकरणे तेषां जीववत् परमाणुपरिमाणं विचारितम् ।

ततश्चतुर्थे द्विसूत्रे श्रेष्ठश्चेत्यधिकरणे मुख्यप्राणस्याणुत्वं विचारितम् । 'आनीदवातं स्वधया तदेक'मितिश्रुत्या अननात्मकत्वेन सृष्टेः पूर्वं सत्ता च प्रदर्शिता । ततो द्वितीयसूत्रे वायुर्वा, इंद्रियक्रिया वा, मुख्यः प्राणोस्त्वित्याशंक्य, 'एतस्माज्जायते प्राणो मनः सर्वेंद्रियाणि च, खं वायुर्ज्योतिरापः पृथ्वी विश्वस्य धारिणी'तिश्रुतौ वायुभिन्नत्वेन पृथगुपदेशात् । वृत्तिवृत्तिमतोरभेदेन क्रियाया इंद्रियांतःपातित्वे सिद्धे तेभ्योपि प्राणस्य पृथक्त्वात् भिन्न एवासन्य इति साधितम् ॥ ४ ॥

ततः पंचमे चतुःसूत्रे चक्षुरादिवत्त्वित्यधिकरणे प्राणः स्वतंत्रः, परतंत्रो वेति शंकायाम्, मुख्यः प्राणोपि आसन्यत्वाद्भगवदधीनः । व्यवहारे तु जीवाधीनः । श्वेताश्वतरे इंद्रियादिजयवत् तज्जयस्याप्यनुशासनादित्युक्तम् । ततो द्वितीये प्राणश्चेज्जीवाधीनः, तदा करणवत् किंचिद्व्यापारं कुर्वन् जीवोपकरणरूपो भवेत् । तत्तु न करोतीति कथं तस्य जीवोपकरणत्वमित्याशंक्य, मुख्यप्राणस्य यः व्यापाराभावः सः करणत्वाभावात् । उपकरणत्वं तु देहस्थितिरूपकार्यस्य करणात् । अतो व्यापाराभावेपि तस्य जीवोपकरणत्वं न विरुद्धमित्युक्तम् । ततस्तृतीये ननु व्यापाराभावे तस्य जीवोपकारित्वमसमंजसमित्याशंक्य श्रुतौ 'अहमेवैतत् पंचधात्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामी'ति व्यपदिश्यते । अतो यथा मनसो द्वारभेदेन स्वरूपत एकादशवृत्तयस्तथा प्राणेपि पंचवृत्तयो व्यपदेशप्रामाण्यादंगीक्रियंते । ताभिरेव देहं स्थापयञ्जीवस्योपकरणं संभवतीत्युक्तम् । ततश्चतुर्थे तस्याप्यणुत्वं साधितम् ॥ ५ ॥

ततः षष्ठे एकसूत्रे ज्योतिराद्यधिष्ठानं त्वित्यधिकरणे वागादयः किं देवताधिष्ठानेन स्वस्वकार्ये प्रवर्तंते, स्वत एवेत्याशंक्य, आधिभौतिकाः आध्यात्मिकास्ते स्वस्वाधिदैविकाधीना इत्यग्न्यादिस्वस्वदेवताधिष्ठानेनैव प्रवर्तंते, न तु स्वत इति निर्णीतम् ॥ ६ ॥

ततः सप्तमे द्विसूत्रे प्राणवतेत्यधिकरणे अग्न्यादिदेवताः किं स्वत एव केवला वागादीनधितिष्ठंति, मुख्यप्राणसहिता वेत्याशंक्य, मुख्यप्राणसहिता एवाधितिष्ठंति । 'सोऽयमग्निः परेण

मृत्युमतिक्रांतो दीप्यत' इतिश्रुतेरित्युक्तम् । ततो द्वितीये प्राणस्य तत्संबंधस्य च नित्यत्वमुक्तम् । तेन प्राणसहिता एव देवा वागादीनधितिष्ठंति । तेनैव जीवस्य भोगसिद्धिः, तेषां जीवोपकारकत्वं च सिद्धमित्युक्तम् ॥ ७ ॥

ततोऽष्टमे त्रिसूत्रे इंद्रियाणि तद्व्यपदेशादित्यधिकरणे इंद्रियाणां प्राणाधीनसर्वव्यापारत्वात् प्राणशब्दवाच्यत्वाच्च प्राणवृत्तिरूपाणींद्रियाणीत्याशंक्य, तत्त्वांतराणीति सिद्धांतितम् । 'एतस्माज्जायते प्राणो मनः सर्वेंद्रियाणि चे'ति तत्त्वोत्पत्तिबोधकश्रुतौ प्राणाद्भिन्नतयेंद्रियत्वेन व्यपदेशात् । नन्वेवं व्यपदेशमात्रेण भेदे सति प्राणापानादिव्यपदेशभेदादासन्योपि प्राणादिभ्यो भिन्नः स्यादिति नाशंकनीयम् । प्राणादिशब्दानां पाचकपाठकादिवदासन्ये यौगिकत्वान्न तद्भेदकत्वम् । इंद्रियशब्दस्य तु न यौगिकत्वम् । अतो नैतद्दृष्टान्तेनाशंकनीयमित्युक्तम् । ततोऽग्रिमसूत्रद्वये हेत्वंतरमित्युक्तम् । यत्रापि प्राणशब्दप्रयोगस्तत्रापि भेदेन श्रूयते । 'तमुत्क्रामंतं प्राणोऽनूत्क्रामती'ति, 'प्राणमुत्क्रामंतं सर्वे प्राणा अनूत्क्रामंती'ति । वैलक्षण्यं च, प्राणस्य चेंद्रियाणां च । 'सुप्तेषु वागादिषु प्राणो जागर्ति । स्वामिसेवकवच्चानेकं वैलक्षण्यम्' ॥ ८ ॥

ततो नवमे एकसूत्रे संज्ञामूर्तिक्लृप्तिरित्यधिकरणे भूतभौतिकसृष्टिः परमेश्वरादेवेति निर्णीय, नामरूपव्याकरणमपि परमेश्वरादेवेति निर्णीयते । तत्र नामरूपव्याकरणं लोके जीवानामेव दृष्टमिति हिरण्यगर्भादेव तद्व्याकरणमित्याशंक्य, नामरूपव्याकर्ता परमेश्वर एव । छांदोग्ये 'हंताहमिमास्तिस्रो देवताः अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी'तिश्रुतौ नामरूपव्याकर्तृत्वेन त्रिवृत्कुर्वतः परमेश्वरस्यैवोक्तत्वात् । नामव्याकरणं हि वाक्साध्यम् । रूपव्याकरणं क्रियासाध्यम् । वाक्क्रिये च शरीरं विना जीवस्य न संभवतः । शरीरं नामरूपव्याकरणोत्तरं भावि । तस्मान्न जीवस्तत्कर्ता, किंतु परमेश्वर एव तत्कर्तेत्युक्तम् ॥ ९ ॥

ततो दशमे द्विसूत्रे मांसादिभौममित्यधिकरणे 'एतस्माज्जायते प्राण' इतिश्रुतौ प्राणस्येंद्रियाणां च भगवतः सकाशात्सृष्टिरुक्ता । छांदोग्ये तु 'अन्नमशितं त्रेधा विधीयत इतिश्रुतौ मनःप्राणवाचां भौतिकत्वं श्राव्यते । 'अन्नमयं हि सौम्य मनः, आपोमयः प्राणः, तेजोमयी वागि'त्यनेन, 'एतस्माज्जायत' इतिश्रुत्युक्ताया उत्पत्तेः परम्परयाप्युपपद्यमानत्वात् । 'अन्नमय'मित्यादिश्रुतेस्तु मांसादिसाहचर्येण विशेषबोधकत्वात् । मनआदीनां भौतिकत्वमेवेति प्रथमसूत्रेणाशंक्य, द्वितीयसूत्रे तेषां तत्त्वांतरत्वमेवेति स्थापितम् । मनःप्रभृतीनामन्नमयत्वादिकं तु अन्नादिपोषितत्वेनाप्युपपद्यते । 'पंचदशाहानि माशी'रित्याद्युपपादकदर्शनात् । सर्ववाक्ये साक्षात्सृष्टेरुक्तत्वेन तत्र परंपरायाः प्रवेष्टुमशक्यत्वात् । तस्मात्तत्त्वरूपाणि तानि भगवत एवेति सिद्धांतितम् । एवमस्मिन्नध्याये सर्वोपि विरोधः परिहृतः ॥ १० ॥

इति श्रीवल्लभाचार्यचरणदासस्य श्रीपीतांबरात्मजपुरुषोत्तमस्य कृतौ वेदान्ताधिकरणमालायां द्वितीयाध्यायस्य चतुर्थः पादः ।

द्वितीयाध्यायः समाप्तः ।

---

## तृतीयोऽध्यायः ।

तृतीयाध्यायस्याधिकरणार्थसंग्रहः । ततस्तृतीयेऽध्याये जघन्यमध्यमाधिकारिणां साधनसंपत्तावुपनिषदां विद्याजनकता, अन्यथा तु सत्संप्रदायेपि परोक्षज्ञानजनकतैवेत्यतः प्रथमे पादेऽधि-

कारिणो जन्मनिर्धारः क्रियते । तत्र पंचाग्निविद्यया निष्पन्नदेहः स्वरूपतोऽधिकारीति तदर्थं तद्विद्यायाः पंचाप्याहुतयो विचार्यंते । तत्र ब्रह्मसंबंधिविचारविशेषरूपत्वाच्छास्त्रसंगतिः । साधनविचारशेषत्वादध्यायसंगतिः । तत्राष्टावधिकरणानि ।

तत्र प्रथमेऽधिकरणे जीवेंद्रियाणां होमाभावेनाशुद्धिमाशंक्य, तेषामपि शुद्ध्यर्थं जीवस्येतो लोकांतरगमनावसरे संस्कृतभूतसूक्ष्मेंद्रियसाहित्यं सप्तभिः सूत्रैः साध्यते । तत्र प्रथमसूत्रे संस्कृतभूतसूक्ष्मैः संपरिष्वक्त एव परलोकं गच्छतीत्युच्यते । ततो द्वितीये सूत्रे श्रुत्युक्तप्रश्ननिरूपणाभ्यामद्भिः संपरिष्वक्त एव गच्छतीति ज्ञायते, ननु भूतांतरसंपरिष्वक्त इत्याशंक्य, अपां भूतत्रयात्मकत्वं साध्यते । ततस्तृतीयसूत्रे, प्राणस्यापि गमनं बोध्यते । ततश्चतुर्थे प्राणगमनस्याग्न्यादिभावश्रुत्या बाधमाशंक्य, तन्निवारणेन प्राणानां परलोकगतिः साध्यते । ततः पंचमे श्रुतौ श्रद्धापदान्नापां होम इत्याशंक्य, श्रद्धापदेनाप एवोच्यंते इति निर्धार्यते । ततः षष्ठे सूत्रे, सर्वे जीवास्तथा गच्छंति, उत ज्ञानोपयोगिन एवेत्याशंक्य, ज्ञानोपयोगिनो यज्ञादिकृतो गच्छंतीति निर्णीयते । ततः सप्तमे तेषां होमेन सोमभावेऽनिष्टमाशंक्य, तन्निवार्यत इति । एवं प्रथमाहुतिः सफला विचारिता भवति ॥ १ ॥

ततो द्वितीये चतुःसूत्रे कृतात्ययाधिकरणेऽवसरसंगत्या सोमभावोत्तरं वृष्टिभावं प्राप्नोतीति द्वितीयाहुतिर्विचार्यते । तत्र प्रथमसूत्रे सानुशयो वृष्टिभावं प्राप्नोतीति बोधनार्थमनुशयो विचार्यते । अनुशयो द्विविधः । 'यद्यत्र नः स्वर्गसुखावशेषित'मिति श्रीभागवतवाक्याद्भोगसाधकसामग्रीशेषरूपं यत् फलं तदात्मकः सुखलेशरूप एकः, कर्मशेषरूपो द्वितीय इति निर्णीतम् । ततो द्वितीयसूत्रे आचरणात्तत्तद्योनिप्राप्तिमाशंक्य, चरणस्य पूर्वजन्मीनकर्मोपलक्षकत्वम्, नत्वग्रिमजन्मनि समीचीनकरणाहेतुत्वम् । तस्मादग्रिमार्थं कर्मशेषरूपोऽनुशयोऽवश्यमपेक्षणीय इत्युच्यते । ततस्तृतीयसूत्रे चरणस्य पूर्वजन्मीनकर्मोपलक्षकत्वे प्रयोजनाभावेन चरणश्रुतेरानर्थक्यप्राप्तौ तस्या जन्मविधायकत्वमंगीकर्तव्यम् । तथा सति कर्मशेषरूपानुशयवैयर्थ्यमित्याशंक्य, निष्कामसकामभेदेन द्विविधानां कर्मिणां मध्ये निष्कामस्य पूर्वोक्तफलशेषरूपोनुशयः । द्वितीयस्य तु सुकृतदुःकृतकर्मशेषरूप इति तस्य दुःशरीरप्राप्तिः, 'सुखानन्तरं दुःख'मितिन्यायेनोपपद्यते, तन्निवारणार्थं चरणश्रुत्या शरीरप्राप्तिरिति बोध्यत इति दुःशरीरनिषेधार्थं सा धूममार्गमुपक्रम्योक्ता । अतो धूममार्गस्य तदपेक्षत्वान्न सा कर्मशेषरूपानुशयप्रतिषेधिका । तस्मान्न सोमभावापन्नस्य वृष्टिभावबाधः, अन्यथा तादृशशरीरप्राप्तेराकस्मिकता स्यात्, अतोनुशय आवश्यक इति निर्णीयते । ततश्चतुर्थे द्विविधकर्मशेषरूप एवानुशय इति बादरिमतम् । तेन मोक्षपर्यंतमनुशयानुवृत्तिरिति बोध्यते । एवं द्वितीयाहुतिः सफला विचारिता ॥ २ ॥

ततोऽनिष्टादिकारिणामिति पञ्चसूत्रे तृतीयाधिकरणे इष्टादिकारिव्यतिरिक्तानां पंचाहुतिधूममार्गयोः संबंध इति प्रथमसूत्रे आशंक्यते । तेन सर्वेषां सोमभावप्राप्त्यनंतरं जन्मेत्याशंक्यते । ततो द्वितीयसूत्रे तन्निषिध्यते । यदि सर्वेषां स स्यात्तदा यमगतिश्रुतिर्विरुध्येत । तस्मान्न सर्वेषां सोमभावः । ततः सूत्रद्वयेन स्मृत्यापि यमगतिः स्थाप्यते । ततः पञ्चमे सूत्रे चित्रगुप्तादीनामपि यमसेवकत्वं निर्णीयते । तेन यमगतेरपि सत्त्वान्न सर्वेषां सोमभावः, किंतु मार्गद्वयस्थानामेवेत्युपोद्घातप्रसंगाभ्यां निर्णीयते ॥ ३ ॥

ततश्चतुर्थे चतुःसूत्रे विद्याकर्मणोरित्यधिकरणे । सर्वेषां चंद्रलोकप्राप्तिः श्रुता । पंचाग्निविद्याप्रस्तावे यमगतिस्तु नोक्ता । अतो विद्यया कर्मणा सोममार्गे इति न यममार्गे इति आशंक्य, वेदांते गौणमुख्यफलभेदार्थं तत्कारणत्वेन विद्याकर्मणोरुक्तत्वान्न तृतीयमार्गबाधकत्वमिति प्रथमसूत्रे निर्णीयते । ततो द्वितीये सूत्रे 'जायस्व म्रियस्वे'तिश्रुत्युक्तस्य तृतीयमार्गत्वमाशंक्य, तस्मिन्मार्गे पुण्यपापभोगस्यातिस्वल्पत्वान्न तेन यममार्गबाध इत्युक्तम् । अयं च पंचाहुतिनियमो मर्यादामार्गे एव, न सर्वत्र चेति निर्णीतम् । ततः सूत्रद्वये स्मृतिलौकिकदर्शनाभ्यां यममार्गसत्ता साधिता । तेन 'जायस्वे'ति मार्गो विवेचकसापेक्षत्वात् यममार्गे एव प्रविशतीति साधितम् ॥ ४ ॥

ततः पञ्चमे त्रिसूत्रे तृतीयशब्दावरोध इत्यधिकरणे । वृष्टेरन्नभावस्तृतीयाहुतेः फलम् । तत्र बीजावापं विना केवलवृष्टेरन्नासंभवात्प्रत्यक्षविरोधमाशंक्य, तृतीयाहुतौ देवहोमात्कारणभूतमेव जलं वर्षतीत्युच्यते । तस्माच्चान्नं श्रुतावेवोक्तम् । 'ता आप अन्नमसृजंते'ति । तस्मात्प्रत्यक्षस्य लौकिकत्वात्तद्विरोधो न दोषायेत्युक्तम् । ततो द्वितीयसूत्रे, 'वायुर्भूत्वा धूमो भवती'तिश्रावणात्ते वाय्वादयो जन्या इति तदनंतरभाविनी वृष्टिरपि जन्या, अपामिवेति कारणभूतं जलं न वक्तुं शक्यत इत्याशंक्य, वाय्वाद्याकृतिमात्रेण स्वरूपान्यथाभावाभावाद्वायुभवनाद्युक्तिर्गौणी । अतस्तदनुरोधेन वृष्टौ जन्या आपो वक्तुमशक्याः । तस्मात्कारणभूता एव ता आप इति निर्बाधमित्युक्तम् । ततस्तृतीये सूत्रे, शीघ्रमेव वृष्टेः सकाशादन्नरूपो भवतीत्युक्तम् । तेन तृतीयाहुतिः सफला विचारिता ॥ ५ ॥

ततः षष्ठे द्विसूत्रे, अन्याधिष्ठित इत्यधिकरणे, अन्नाद्रेतोभवनरूपा चतुर्थी आहुतिर्विचार्यते । तत्रान्नस्य कंडनपाकादौ क्रियमाणे जीवस्यापगमात्कथं जीवस्य रेतोभाव इत्याशंक्य, उप्ते बीजे पापिजीवांतराधिष्ठितेऽन्नरूपेण जायमाने पश्चाद्वृष्टौ देवहुतौ जीवोऽन्ने प्रविश्यातिथिवन्निरभिमानस्तत्र तिष्ठतीति न तस्य कंडनादिक्लेशः, किंतु पापिन एव सः । न च तस्यापगमः शंकनीयः । सिद्धान्नादेर्बहुकालपर्युषितत्वे कृमिभावदर्शनात् । एवं तस्यान्नस्य भक्षणेपि पापिन एवान्नभूतस्य जरणादिक्लेशः, नास्य निरभिमानस्येति तस्य रेतोभावो युक्त इत्युक्तम् । ततो द्वितीये सूत्रे तस्मिन्नन्ने पापिजीवसहभावादन्नस्याशुद्धौ कथं तेन योग्यदेहसंपत्तिरित्याशंक्य, यथा वैदिकेन प्रोक्षणादिसंस्कारेण लौकिकव्रीहीणां शुद्धिः, तथा वैदिकेन देवकृतहोमरूपसंस्कारेण तस्यान्नस्य शुद्धिरिति । तेन योग्यदेहनिष्पत्तिः निष्प्रत्यूहेत्युक्तम् ॥ ६ ॥

ततः सप्तमे एकसूत्रे रेतःसिगधिकरणे, रेतसः पुरुषभावो विचारितः ॥ ७ ॥

ततोष्टमे एकसूत्रे योनेःशरीरमित्यधिकरणे, गर्भस्य न पुरुषत्वम्, किंतु बहिर्निर्गतस्यैव पुरुषत्वमिति निर्णीतम् । अत्र सर्वत्रावसर एव संगतिरिति बोध्यम् ॥ ८ ॥

तेन जघन्याधिकारिणो देहनिष्पत्तिविचारः, मध्यमस्य च योगादिना देहसंपत्तौ पुनर्विचालनाभावाय वैराग्यविचारः पादार्थत्वेन सिध्यति । मुख्याधिकारिणां तु वरणादेव तत्सिद्धिरिति नात्र तद्विचार इति बोध्यम् ॥

**इति श्रीवल्लभाचार्यचरणदासस्य श्रीपीतांबरात्मजपुरुषोत्तमस्य कृतौ वेदान्ताधिकरणमालायां तृतीयाध्यायस्य प्रथमः पादः ।**

अथ द्वितीये पादे जीवस्य स्वरूपतो मुक्तियोग्यता विचार्यते। प्रथमपादोक्ताया योग्यताया ज्ञानोक्तिरूपे साधने एव पर्यवसानात्। तदुत्तरं विषयनिश्चयश्च क्रियते। तेनाधिकारसिद्ध्यनंतरं विषयस्य निश्चयो वेदांतार्थरूपब्रह्मस्वरूपस्य शाब्दं परोक्षज्ञानं हृदि स्थिरीभवतीत्येतदर्थं पादारंभः। तथा सति पादयोरेककार्यत्वं संगतिः। आनंतर्यनियामक उपजीव्योपजीवकभावश्चेति बोध्यम्। अत्रैकादशाधिकरणानि। तत्र प्रथमैस्त्रिभिः जीवस्य स्वप्नसुषुप्तिजाग्रदवस्था मुक्तियोग्यताज्ञापनार्थमुपोद्घातेन विचार्यंते। अंतिमैरष्टभिः ब्रह्मस्वरूपम्।

तत्र प्रथमे षट्सूत्रे संध्याधिकरणे द्वाभ्यां स्वप्नसृष्टिर्भगवतस्तत्कर्तृत्वं च यद्बृहदारण्यके काठके च श्रावितं तत्सृष्टिसंबंधो जीवस्य भवतीति निरूपिता शुद्धिर्व्यर्थेत्याशंक्य, तृतीये तस्याः सृष्टेः मायामात्रत्वेन मिथ्यात्वं साध्यते। तेन जीवस्य तत्कृतगुणदोषसंबंधाभावान्न पूर्वोक्तशुद्धिनिरूपणस्य वैयर्थ्यम्। ततश्चतुर्थे स्वप्नसृष्टेर्मिथ्यात्वे तत्करणस्य किं प्रयोजनमित्याकांक्षाया स्वप्नस्य क्वचित् शुभाशुभसूचकत्वात्फलतः सत्यत्वम्, अन्यत्र तु तादृशभगवल्लीलाप्रदर्शनमात्रं प्रयोजनमित्युच्यते, तच्च वैराग्याय फलिष्यति। ततः पंचमे जीवस्यापि भगवदंशत्वात्कथं स्वप्ने दुःखसंबंधः, दुःखाद्यभिमानो वेत्याकांक्षायां भगवदभिध्यानात् जीवस्यैश्वर्यादिषड्धर्मतिरोभावेन जीवस्य बंधो भगवद्धर्मविपरीतधर्मवत्त्वं च भवति। तेन दुःखित्वादिकं तदभिमानश्च। ततो भगवदिच्छया कथंचिन्मोक्षश्चेति स्वमतमुक्तम्। ततः षष्ठे देहयोगाद्वा ऐश्वर्यादितिरोभावो बंधदुःखादिकं चेति मतांतरमुक्तम्। अस्मिन्पक्षे देहवियोगे सत्येवैश्वर्याद्याविर्भावः, पूर्वस्मिन्पक्षे तु देहसद्भावेऽपि भगवदिच्छया ऐश्वर्याद्याविर्भावो बंधाभावश्चेत्यैश्वर्याद्याविर्भावदशायां दुःखित्वादिसर्वदोषाभावाद् मुक्तियोग्यता निष्प्रत्यूहेति सिद्धम्॥ १॥

ततो द्वितीये एकसूत्रे तदभावो नाडीष्वित्यधिकरणे जीवस्य द्विविधा सुषुप्तिः। एका नाडीषु, द्वितीया सत्संपत्तौ। तत्र प्रथमायां दुःखाभावमात्रम्, द्वितीयायां तु सुखमपीति द्विविधायामपि सुषुप्तौ न प्रपंचसृष्टिरिति प्रसंगाद्विचारितम्॥ २॥

ततस्तृतीये त्रिसूत्रे अतःप्रबोध इत्यधिकरणे प्रथमसूत्रे जाग्रदवस्थापि भगवत एव भवतीति, यत्र स्वपिति तत्रैव जागर्ति, पश्चाद्धृदयं समागच्छति चेति निरूपितम्। ततो द्वितीये सूत्रे स एव जीवः समायाति, अन्यो वेत्याशंक्य, कर्मानुस्मृत्यादिभिर्हेतुभिः स एव समायातीति निर्णीतम्। ततस्तृतीये सूत्रे मूर्च्छाविशेषेऽतिमुग्धे कर्मानुस्मृत्यादयो न संभवंति। तत्र स एवान्यो वेत्याशंक्य, तत्र स वाऽन्यो वेति संदेह एव पर्यवसतीति सिद्धांतितम्। अयं च विचारः प्रसंगानुप्रसंगायात एव।

एवमधिकरणत्रयेण स्वप्नसुषुप्तिजाग्रद्रूपावस्थात्रयं भगवत्कृतमेव। तत्र जाग्रति जीवस्य मात्रासंसर्गवारणार्थमुपनिषदर्थनिश्चय आवश्यक इति सूचितम्। एताश्च गुणतो बुद्ध्यवस्थाः। तत्र स्वप्नो राजसः, सुषुप्तिः तामसी, जाग्रदवस्था सात्त्विकी। जीवस्तु देहयोगेन स्वस्मिन्नभिमन्यते, तस्मादेक एव जीवः स्वप्नादिदोषसंबंधरहितस्तादृशजन्मयुक्तो भगवज्ज्ञानरहितो ज्ञानाधिकारीति त्रिभिरधिकरणैः सिद्धमिति ज्ञेयम्॥ ३॥

ततश्चतुर्थे त्रिसूत्रे उभयलिंगाधिकरणे ब्रह्मणः साकारत्वं निराकारत्वं चेत्युभयं सर्वत्र श्रूयत इति स्थानोपाधिकं तत्तदवच्छेदभेदेन च न वक्तुं शक्यत इत्युच्यते। न चोक्तप्रकारेण ब्रह्मभेदेंगीकृते न दोष इति वक्तुं शक्यम्, सर्वत्र ब्रह्मण एकस्यैव कथनाद्, भेददर्शने दोषकथनाच्च।

१. दोषसंबंधाभावादसंगत्वादिति पाठः।

एवमुभयलिङ्गविरोधे सिद्धे उपनिषदां पूर्वाध्यायद्वयोक्ता ब्रह्मबोधकता वक्तुं न शक्यत इत्याक्षेपसंगत्योक्तम् ॥ ४ ॥

ततः पंचमे पंचमसूत्रे अरूपवदेव हीत्यधिकरणे एकदेशिमतेन समाधानमुच्यते । सत्यमुभयलिंगविरोधस्तथापि 'सर्वकामः सर्वगंधः' इत्यादयो जडजीवधर्मा ब्रह्मण्युपदिश्यमाना उपासनार्था भवंति । न च जडस्य भगवत्कार्यत्वाज्जीवस्य भगवदंशत्वात्तद्धर्मा अपि भगवद्धर्मा एवेति कथमुपासनार्थत्वमिति शंक्यम् । 'बहु स्या'मितीच्छया भगवत एव कार्यरूपतयांशरूपतया चैकदेशेन भवनात्कारणरूपस्य ततो भिन्नतया तस्मिन् रूपे जडजीवधर्मनिषेध एव युक्तः । तथा चाद्वैतपक्षे जडजीवधर्माणामपि ब्रह्मात्मकत्वाद् ब्रह्मत्वमेव, न तु ब्रह्मधर्मत्वम्, अतः सर्वकर्मत्वादीनां ब्रह्मण्युपचार एव, अरूपवतः सर्वप्रपञ्चविलक्षणस्यैवास्थूलादिवाक्यैः प्रधानत्वेन निरूपणात् । ततो द्वितीयसूत्रे एवं ब्रह्मणः सर्वव्यवहारातीतत्वे शास्त्रवैफल्यम्, 'मनसैवैतदाप्तव्य'मित्यादिश्रुतिविरोधश्चेत्याशंक्य, यथा सौरः प्रकाशो व्यवहार्योऽव्यवहार्यश्च स्वतो न कर्तुं शक्यते, आगते तु सूर्ये मेघाद्यभावेन सांनिध्यात् व्यवहर्तुं शक्यते, तथा लौकिकवाङ्मनोभिर्ब्रह्म स्वतो न व्यवहर्तुं शक्यते, ईश्वरसंनिधाने तु शक्यते, अतोऽसंनिधाने सर्वव्यवहारातीतत्वम्, संनिधाने तु धर्मवत्त्वेन व्यवहार्यत्वमिति न शास्त्रवैफल्यम् । नापि श्रुतिविरोधः । अन्यथा 'तं त्वौपनिषदं पुरुषं पृच्छामि', 'यतो वाचो निवर्तंत' इत्यादिष्वन्यतरवैयर्थ्यं स्यात् । अतः संनिधानासंनिधानाभ्यां सधर्मकत्वनिर्धर्मकत्वबोधनव्यवस्था मंतव्येत्युक्तम् । ततस्तृतीयसूत्रे 'आसीनो दूरं व्रजति,' 'अपाणिपादो जवनो ग्रहीते'त्यादौ परस्परविरुद्धा अलौकिकधर्माः अकारणककार्यवचनान्नित्याः श्राव्यंत इत्यव्यवहार्येपि तादृशधर्मसिद्ध्या शास्त्रवैफल्यनिरास इति किमर्थं संनिधानासंनिधानाभ्यां व्यवस्थांगीक्रियते, अलौकिकानींद्रियाण्येव कुतो नांगीक्रियंत इत्याशंक्य, बृहदारण्यके 'स यथा सैंधवघन' इत्यादिना कृत्स्नस्य ब्रह्मणः प्रज्ञानघनत्वश्रावणान्नेंद्रियाणि कल्पयितुं शक्यानि । न च क्रियाभावोपि । तत्रैव वेदानां निःश्वसितत्वस्य भूतसमुत्थानादेश्च श्रावणेन, तत्रैव निःश्वासोत्थानक्रिययोरुक्तत्वात् । अतो ब्रह्मैव सर्वाकारस्वरूपं, कृत्स्नत्वश्रावणात् । तस्मादिंद्रियकल्पनया विरोधपरिहारो न युक्त इत्युक्तम् । ततश्चतुर्थे सूत्रे नन्वभिन्ननिमित्तोपादानतया ब्रह्म जगत्कारणत्वेन सिद्धम्, कारणधर्मा एव च कार्ये भवंति, कामादयस्तु श्राव्यंते निषिध्यंते च, वेदवादिभिस्त्वणुप्यन्यथा न कल्पनीयम्, अतः कथं विरोधपरिहार इत्याशंक्य, मूर्तामूर्तब्राह्मणे ब्रह्मणो रूपद्वयमुक्त्वा, 'अथात आदेशो नेति नेती'तिवारद्वयं कथनेन कार्यकारणयोः समानप्रकारनिषेधः कारणस्य ब्रह्मण एव स्वनिषेधश्च क्रियते । एवं रूपं निरूप्य 'सत्यस्य सत्य'मिति नाम च श्राव्यते, तेन प्रपंचातिरिक्तस्य ब्रह्मणो विद्यमानत्वात् तस्मिन् जडजीवधर्माणामौपचारिकत्वमेव युक्तम् । गीतास्मृतावपि 'सर्वेंद्रियगुणाभासं सर्वेंद्रियविवर्जित'मिति 'अनादिमत्परं ब्रह्म न सत् तन्नासदुच्यते' इति चोच्यते । तेन श्रुतिस्मृतिभ्यां जडजीवधर्मरहितं ब्रह्मेति सिध्यतीत्युक्तम् । ततः पंचमे प्रपंचधर्मा ब्रह्मण्यौपचारिका इत्यत्र निदर्शनांतरमप्युच्यते, 'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोनुगच्छन्, उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोयमात्मे'तिस्मृतौ उपाधिना रूपभेदकथनात्, 'सम प्लुषिणे'त्यादावपि निरूपमस्य भगवतो यत् प्लुष्यादिकमुपमानं तदप्युपाधिसंबंधादेव जलसूर्यन्यायेन संभवति । तस्मात् साकारेपि ब्रह्मणि ते धर्मा न संतीत्यौपचारिका मंतव्याः, उपासनार्थमिति नोभयलिंगविरोध इत्येकदेशिमतेन समाधानम् । एतस्य मतस्य किंचिदंशेनोपादेयत्वाय प्रसंगादुक्तम् ॥ ५ ॥

ततः षष्ठे चतुःसूत्रे अंबुवदग्रहणादित्यधिकरणे एकदेशिमतं दूषयित्वा स्वमतेन विरोधः समाधीयते । यदुक्तं समवाय्यतिरिक्तस्य ब्रह्मणः समवेतजडजीवसंबंधात् सर्वकामत्वादयः प्रतिबिंबे बिंबधर्मवत् प्रतीयंते, तस्मादौपचारिका इति । तदयुक्तम् । तथाहि । समवाय्यतिरिक्तस्य ब्रह्मणो जडजीवेषु प्रतिबिंबो न वक्तुं शक्यः, तेषामस्वच्छत्वेन प्रतिबिंबाग्राहकत्वात् । ब्रह्मणो व्यापकत्वेन तत्र विद्यमानत्वाच । यदि ह्यस्वच्छे व्यापकस्य प्रतिबिंबः स्यात्, दारुण्याकाशस्य स्यात्, स तु न दृश्यत इति । तस्मादुक्तरीत्यौपचारिकत्वमंगीकृत्य समाधानमसंगतमिति प्रथमसूत्रे उक्तम् । ततो द्वितीयसूत्रे यथा व्यापकस्याप्याकाशस्य करकादिप्रवेशे वृद्धिह्रासभाक्त्वं, महानाकाशः स्वल्प आकाश इत्याद्यभ्रमप्रतीतेः । नच महत्त्वाल्पत्वादीनामौपाधिकत्वम् । करकादीनां व्यंजकत्वेन जनकत्वानंगीकारात् । तथा च यथाकाशे सदोदितव्यंग्यभेदेन व्यापकत्वाल्पत्वयोः सामंजस्यम्, तथा ब्रह्मणि निर्धर्मकत्वसधर्मकत्वयोरपि सामंजस्यात् ब्रह्मगता एव सर्वकामत्वादयो जडजीवाभ्याममिव्यज्यंते । तस्मात्ते ब्रह्मगता एवेति आकाशधर्मवदुभयलिंगत्वविरोधपरिहारः । ततस्तृतीये सूत्रे दर्शनादपि विरोधपरिहारः क्रियते । न हि दृष्टेऽनुपपन्नं नाम, व्याघातात्, अतो विरुद्धधर्माश्रयमेव ब्रह्मेत्यवगंतव्यम् । दर्शनं च मृत्स्नाभक्षणोलूखलबंधनादिषु स्पष्टमिति परमार्थतः स्वरूपविचारेण ब्रह्मस्वभावादेव विरोधपरिहारः । ततश्चतुर्थे युक्त्यापि विरोधः परिह्रियते । प्रकृते ब्रह्मणि लौकिका जडजीवधर्माः निषिध्यंते । अस्थूलादिवाक्येषु स्थूलादिपर्युदासस्यैव दर्शनात् । तथा च पर्युदासः सदृग्ग्राहीति स्थूलसदृशं ब्रह्मेत्येवं सर्वत्र ब्रह्मस्वरूपं ग्राहयति । तथा सति सदोदितमेव तत् । न च व्यंग्यमेव तदिति वाच्यम् । यतो यत्रैव धर्मान् निषेधति, तत्रैवालौकिकान् वक्ति, यथाऽस्थूलादिवाक्ये 'एतस्यैवाक्षरस्य प्रशासने गार्गी'त्यादिनालौकिकं प्रशासितृत्वादिकं वदति, तथा सति तत्सहचरितत्वात् स्थूलत्वादयोप्यलौकिका एव सदोदिताः सेत्स्यंतीति लौकिकानां निषेधः, अलौकिकानां सत्ता, इति युक्त्या विरोधपरिहार इति मतेन शब्दबलविचारेण द्वेधा समाधानम् ॥ ६ ॥

ततः सप्तमे द्विसूत्रे तदव्यक्तमाह हीत्यधिकरणेऽर्थबलविचारेण विरोधः परिह्रियते, अन्यथा अर्थबलेन विचारकाणामृषीणामाक्षेप उत्तिष्ठेदिति तन्निवारणायायमारंभः । तत्र सर्वाणि विरुद्धवाक्यान्युदाहृत्य चिंत्यंते, 'न चक्षुषा गृह्यते,' 'कश्चिद्धीरः प्रत्यगात्मानमैक्षत,' 'अपाणिपादः,' 'विश्वतश्चक्षु'रित्यादीनि विरुद्धवाक्यानि श्रौतत्वात् प्रमाणानि । वस्तुविचारे तु एकं वस्तु द्विरूपं न संभवति । अतः प्रमाणांतरानुरोधेन एकस्य स्वार्थे प्रामाण्यमन्यस्योपचरितार्थत्वं वक्तव्यम् । तत्र कस्य स्वार्थत्वं, कस्योपचरितार्थत्वमित्याकांक्षायां 'अगृह्यो नहि गृह्यते,' इति श्रुतिः प्रत्यक्षानुरोधिनी । नहि ब्रह्म केनचित् चक्षुषा वा मनसा वा दृष्टमस्ति, सर्व(स्व)रूपत्वे तु सर्वैर्द्रष्टुं शक्येत, तस्मात् सर्वधर्मवत्त्वेन प्रतिपादकानि वचनान्युपचरितार्थानि, अनुभवविरोधात्, अव्यक्तत्वबोधकानि तु स्वार्थप्रतिपादकानि, अनुभवसंवादादिति प्रथमसूत्रे पूर्वपक्षमुक्त्वा, अपि संराधने इति द्वितीयेन समाधानमाह । 'श्रद्धाभक्तिज्ञानयोगादवेहि,' 'यमेवैष वृणुते' इत्यादिश्रुतिभिः, 'भक्त्या त्वनन्यया शक्य' इत्यादिस्मृतिभिश्च साकारब्रह्मणो दर्शनमुच्यते । 'ततस्तु तं पश्यते निष्कलं ध्यायमान' इत्यनेन निष्कलस्यापि दर्शनमुच्यते । अतः प्रत्यक्षस्य रूपद्वयसाधारणत्वात् साकारमनंतगुणपरिपूर्णं निर्गुणं विरुद्धधर्माश्रयं ब्रह्मेति साक्षात्क्रियमाणार्थबलेन साक्षात्काररूपार्थबलेन वा निर्णय इति साधितम् ॥ ७ ॥

ततोऽष्टमे त्रिसूत्रे प्रकाशादिवद्वेत्यधिकरणे पूर्वोक्त एवार्थः प्रकारांतरेण स्थिरीक्रियते। तत्र यथा सूर्यचंद्रमणिप्रकाशादिषूष्णशीतौ उभयरूपाः स्पर्शाः प्रतीयमाना अपि तेजसि तावंतो नांगीक्रियंते, किंतूष्ण एव स्पर्शोंगीक्रियते, एवं हिमतप्तकुंडादिषु प्रतीयमाना अपि जले तावंतो नांगीक्रियंते, किंतु शीतस्पर्श एवांगीक्रियते, एवं सुवर्णे वर्णभेदा अपि, अतो न ते स्वाभाविकाः, तेजस्त्वादिस्वभावहानिप्रसंगात्, तथा ब्रह्मणोऽपि निर्विशेषत्वमेवांगीकर्तव्यं, सर्वत्र निर्विशेषं ब्रह्मेत्येव प्रसिद्धेः। अत एव 'अगृह्यो नहि गृह्यते' इत्यादिश्रुतयोऽपि संगच्छंते। न च पूर्वोक्तश्रुतिप्रत्यक्षादेः का गतिरिति शंकनीयम्। तपःप्रणिधानादिकर्मणि यथा तेषामुपासकानां कामस्तथा प्रकटीभवतीति तत्कामहेतुकं तादृशप्रत्यक्षम्। अत एव क्वचित्प्रत्यक्षं क्वचिदन्यथाप्रत्यक्षं च यद्येकवारमेकरूप एव प्रकटः स्यात्तादृशरूपमंगीक्रियेतापि, किंतु वारंवारं किंचिद्वैलक्षण्येन प्रकटीभवति। अतः प्रकाशोऽपि कृत्रिम एव, दीपप्रकाशवदित्येका शंका। तस्मान्न भक्तप्रत्यक्षेण निर्णय इति प्रथमसूत्रे उक्तम्। ततो द्वितीयसूत्रे एकस्य वस्तुनः निमित्तं विना प्रतिक्षणमन्यान्यादृशत्वं न वक्तुं शक्यते, अतोनंतरूपेणाविर्भावे भक्तकाम एव निमित्तम्। तथा सति तद्विग्रह एव, न तु ब्रह्मस्वरूपम्। अत एव 'यद्यद्धिया तु उरुगाय विभावयंति तत्तद्वपुः प्रणयसे सदनुग्रहाये'ति तृतीयस्कंधे ब्रह्मणाप्युक्तम्। अतस्तच्छरीरमेव, न तु ब्रह्मस्वरूपमिति द्वितीया शंका। तस्मान्न श्रुत्या निर्णयः, नापि भक्तप्रत्यक्षेणेति सूत्रद्वयेनाशंक्य, तृतीयसूत्रेण सिद्धांतमाह। नैवं केवलयुक्त्या लौकिकदृष्टांतेन निर्णयः कर्तुं शक्यः, शास्त्रवैयर्थ्यप्रसंगात्। अत्र हि वेदादेव ब्रह्मस्वरूपमवगम्यते, तत्कथं स्वरूपशक्त्यैकतरनिर्णयः, वेदे निर्गुणत्वेनानंतगुणपूर्णत्वेन च व्यपदेशात्। तर्ह्येकस्यानेकधाभानं कथमिति तु न शंक्यम्। यथा एक एव सर्प ऋजुरनेकाकारः कुंडलश्च भवति, तद्वदुभयरूपताया उपपत्तेः। न चैवं यथाश्रुतांगीकारे शास्त्रवैफल्यं शंक्यम्, नानास्वभावैः सूरिव्यामोहे तन्निवारणार्थत्वेन शास्त्रसाफल्यात्। तस्माच्छ्रुतिप्रत्यक्षाभ्यां यत्पूर्वं निर्णय उक्तः, स एव सिद्धांत इत्युक्तम्॥ ८॥

ततो नवमे त्रिसूत्रे प्रकाशाश्रयवद्वेत्यधिकरणे धर्मस्वरूपविचारेण ब्रह्म सगुणं निर्गुणमिति पक्षद्वयमपि स्थाप्यते। तत्र धर्मा यदि ब्रह्मस्वरूपाद्भिन्नास्तदा कार्याः, यद्यभिन्नास्तदा ब्रह्मैवेत्याशंक्य, प्रकाशाश्रयवत् भिन्नाभिन्ना इति सिद्धांत उक्तः। यथा प्रकाशाश्रयाः सूर्यादयस्तेजःप्रकाशाद्भिन्नाः प्रकाशधर्मकत्वात्, अभिन्नाश्च तेजस्त्वात्, एवं 'परास्य शक्ति'रित्यादौ षष्ठीनिर्देशाद्भिन्नाः, सच्चिदानंदरूपत्वेनाभिन्नाश्च। तथा च धर्माणां भिन्नत्वेन ब्रह्मणोनंतगुणपूर्णत्वं, तेषामपि सच्चिदानंदरूपत्वेन ब्रह्माभिन्नत्वाद्ब्रह्मणो निर्गुणत्वमित्युभयमप्युपपन्नमिति स्वमतम्। ततः पूर्वं ब्रह्म निर्गुणमेव, पश्चादिच्छारूपेण, ततो धर्मरूपेण, ततः प्रपंचरूपेणाविर्भवतीत्युत्पत्तिविचारेण धर्माणां पश्चाद्भिन्नत्वेपि कार्यत्वाद्ब्रह्मत्वं, कटककुंडलादीनां सुवर्णत्ववदित्येकदेशिमतमपि सूत्रद्वयेनांगीकृतम्। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया अत्राप्युपपत्तेरिति। एतयोः प्रथममेव ज्याय इति भाष्यप्रकाशादवगंतव्यम्। एतेषां पंचानामप्यधिकरणानामेककार्यकारित्वं संगतिरवगंतव्या। पंचभिरपि श्रुतेर्बोधकताप्रकारस्यैव निश्चायनात्॥ ९॥

ततो दशमे सप्तसूत्रे परमतः सेतून्मानेत्यधिकरणे, 'य आत्मा स सेतुर्विधरण' इत्यादिभिः श्रुतिभिर्ब्रह्मणः सेतुत्वादिकमुक्तम्, ब्रह्मणस्तथात्वे परत्वं न संगच्छते, सेत्वादीनां साधनादि-

१. विरुद्धधर्माश्रयत्वरूपब्रह्मप्रामाण्यं दृढीक्रियते। २. शीतानुभवरूपा इति पाठः।

रूपत्वात् । अतो देशकालवस्तुस्वरूपकृतचतुर्विधपरिच्छेदरहितं ब्रह्मणोऽन्यदेव किंचित्परं वक्तव्यमिति प्रथमसूत्रे आशंक्य, द्वितीये 'सेत्वादिसामान्यात्सेत्वादिव्यपदेशार्थः । संसारसागरतरणोपायत्वात्सेतुत्वम्, निर्लेपत्वायाकाशत्वमित्यादिकं गौण्या व्यपदिश्यते । यथा कुंडपायिनामयने 'मासमग्निहोत्रं जुहोती'ति, तस्मात् गुणार्थमेव तदुक्तिः, न तु सर्वप्रकारकसाम्यार्थम् । अतः सेत्वादिदोषाभावात् ब्रह्मैव परम्, नान्यदिति समाहितम् । ततस्तृतीये यथा भूतादि पादवत्त्वेनोपासनीयम्, तथा गौण्यान्यसमानधर्मवत्त्वव्यपदेशस्य किं प्रयोजनमित्याकांक्षायां सेत्वादिधर्मवत्त्वेनोपासनीयमित्युपासनार्थत्वं प्रयोजनमुक्तम् । ततश्चतुर्थे स एवायमित्यतिदेशेप्युपासनासंपत्तेः किमर्थो धर्मातिदेश इत्याशंक्य, यथा चंद्रादित्याग्नितेजसां तेजस्त्वेनैक्येपि स्थानविशेषान्न समानप्रकाशकत्वम्, तथा स एवायमित्यतिदेशेऽपि न समानधर्मवत्त्वमिति ज्ञानसंभवात्, तन्निवृत्त्यर्थं धर्मातिदेश इति प्रयोजनमित्युक्तम् । तेन ब्रह्मैव सर्वत्रोत्कृष्टमिति साधितम् । ततः पंचमे ब्रह्मणोऽन्यत् परमितिमतस्य दूषणार्थं, यदि हि सत्यज्ञानाद्युक्तधर्मविशिष्टब्रह्मणोऽन्यत्किंचित्परं स्यात्, तदा येनकेनचित्प्रमाणेन प्रमितं स्यात्, यतो नैवमतो नैवमितिप्रमाणाभावरूपा युक्तिरुक्ता । ततः षष्ठे यथा ब्रह्मणि सेतुत्वादिकं श्रुत्योक्तम्, तथा 'न तत्समश्चाभ्यधिकश्च दृश्यते' इति श्रुत्या समाभ्यधिकनिषेधोप्युक्तः । यदि ब्रह्मणः सकाशादधिकं परमन्यत्स्यात्तदा तन्न निषेधेत्, यत एवमतो नैवमिति युक्त्यंतरमुक्तम् । तस्मात्सेत्वाद्युक्तिर्गौण्येवेति साधितम् । ततः सप्तमे ब्रह्मणोन्यस्य परत्वनिरासेन 'आकाशवत्सर्वगतश्च नित्य' इत्यादिश्रुतिभ्य एव ब्रह्मणः सर्वगतत्वम्, नत्वनुमानैकशरणम् । अनुमानं तु श्रुतिसंवादित्वात्प्रमाणमस्त्विति फलितमुक्तम् । तेन ब्रह्मण एव परत्वम्, नान्यस्य । यद्यपि समन्वयविचार एवैताः श्रुतीः विचार्य दोषाः परिहृताः, तथापि स्वरूपविरोधपरिहारप्रस्तावात्पुनरुच्यंते । सर्ववाक्यप्रतिपाद्यमेकमेव ब्रह्मेत्यपि अर्थबलविचारेण न सिद्धम्, अतो विशिष्टज्ञानोत्पादनार्थं पुनः अर्थबलेन विचारितम्; अतो न दोष इति ज्ञेयम् । अर्थबलं च समाभ्यधिकरहितं यत्स्वरूपं तद्बलम् । एवं सर्वोत्तमत्वनिरूपणेनोत्तमाधिकारिणां भजनीयत्वप्रयोजकं रूपं वक्ष्यमाणोपोद्घाततया निरूपितम् । एवमग्रेऽपि ॥ १० ॥

तत एकादशे चतुःसूत्रे फलमत इत्यधिकरणे जघन्यमध्यमानामर्थे ब्रह्मणः फलदत्वं सूत्रद्वयेनोच्यते । ततस्तृतीये श्रुत्युपपत्तिभ्यां जैमिनिमतेन धर्मस्य फलदातृत्वमाशंक्य, चतुर्थेन भगवत एव कर्मकारयितृत्वान्न धर्मस्य फलदाने स्वातंत्र्यम्, किंतु ब्रह्मण एव इत्येवं तन्मतं दूष्यते ॥ ११ ॥

एवमष्टभिरधिकरणैः श्रुतीनां बोधकताप्रकारविचारेण तत्तदधिकारिणं प्रति श्रुतीनां तादृशतादृशबोधजनकत्वमित्यस्मिन्पादे निर्णीतमिति बोध्यम् ।

## इति श्रीवल्लभाचार्यचरणदासस्य श्रीपीतांबरात्मजपुरुषोत्तमस्य कृतौ वेदान्ताधिकरणमालायां तृतीयाध्यायस्य द्वितीयः पादः ।

---

अत्र पूर्वपादे श्रुतीनां बोधकताप्रकारनिरूपेण यथा परोक्षज्ञानजनकत्वं तथा निरूपितम् । अतःपरं यथा साक्षात्कारो भवति, तथा तत्साधनमुपासनारूपं वक्तव्यम् । उपासनायां च क्रियमाणायां धारणासिद्धौ मानसी मूर्तिरभिव्यक्ता भवति । तत उपासनापरिपाके साक्षात्कार इति तदर्थमस्मिन्पादे गुणोपसंहारोंतरंगविचारेण कर्तव्यतया विचार्यते । तत्र किमंतरंगमित्याकांक्षायां 'योगा-

स्त्रयो मया प्रोक्ता' इति भगवदुक्तेषु त्रिषु साधनेषु ज्ञानभक्ती अंतरंगे । तत्र निर्विण्णाधिकारकत्वात् ज्ञानस्यांतरंगता । निर्वेदाभावेपि लौकिकात्यासक्तिरहिताधिकारकत्वाद्भक्तेरंतरंगतेति भेदः । कर्म तु कामाधिकारकत्वाद्बहिरंगसाधनम् । अतः कर्मोपसंहारात्पूर्वं ज्ञानभक्त्युपयोगित्वात् पूर्वं गुणोपसंहारो विचार्यते ।

स कथं कर्तव्य इत्याकांक्षायां ज्ञानभक्त्योः सविषयत्वात् पूर्वं विषयो विचारणीयः । तत्र विषयः पूर्वसिद्धं ब्रह्म, तदेव च फलदाने समर्थमिति द्वितीयपादांते स्थितम् । तदेतत्स्मारयितुमुपसंहारोपोद्घातत्वेन ज्ञानभक्त्योर्विषयतया ब्रह्मणः ज्ञानभक्तिषु युक्ततयोपासनायाश्च सर्ववेदांतप्रत्ययत्वं सूत्रद्वयेन विचारितम् । तेन ज्ञानाधिकारिभिस्तैथैवोपासना कार्येति सेत्स्यति ॥ १ ॥

तत इदानींतनानां सर्वशाखाज्ञानाभावेन सर्ववेदांतप्रत्ययत्वस्यावधारयितुमशक्यत्वात्तेषामुपकाराय भक्तिमार्गीयोपासनोपकाराय काम्योपासनोपकाराय च तत्तच्छाखानुरुद्धशिष्टाचारमनुरुध्य, तत्तद्भक्तिमनुरुध्य, तत्तत्काममनुरुध्य च स्वाध्यायादिसूत्रद्वयेऽनुपसंहारहेतुकथनेन तत्तद्गुणोपसंहाररूपः संकोचो विचारितः ॥ २ ॥

ततो गुणोपसंहार एवास्य पादस्यार्थ इति बोधयितुमुपसंहारसूत्रेण सर्वोपसंहारतत्संकोचयोः काम्योपासनोपयुक्तोपसंहारस्य च बीजमुक्तम् । ततोऽन्यथात्वादिसूत्रत्रयमध्ये प्रथमेन सर्वोपसंहारपक्षेऽब्रह्मत्वरूपं बाधकं निवारितम् । ततो द्वाभ्यां संकोचपक्षे तदेव बाधकांतरेण भक्तिमार्गीयोपासकानामर्थे निवारितम् । ततश्च अनित्यत्वेन प्रतीयमानानां स्वरूपधर्माणामेकेन नित्यत्वं, तदग्रिमे तदुपपत्त्यर्थं भक्तनित्यत्वं, लीलापदार्थानां भगवदभेदश्चोपपादितः । एवं लीलापदार्थानां भगवदभेदे सति भगवत्तुल्यत्वं स्यादिति तन्निवृत्त्यर्थं पूर्णानंदत्वादीनां भगवदसाधारणधर्माणां तेष्वभाव आनंदादिसूत्रेण प्रतिपादितः । तेन भक्तेषु तदनुपसंहारः सिध्यति । ततः प्रियशिरस्त्वसूत्रे अधिकारिभेदेन स्वरूपोपासकस्य प्रियत्वादीनां शिरस्त्वादिरूपेणानुपसंहारस्तदुपसंहारश्च प्रतिपादितः । तत एकेनोपसंहारपक्षे बीजमुक्तम् । तत आध्यानादिसूत्रद्वये उपसंहारसंकोचे बीजमुक्तम् । एवमस्मिन्नधिकरणे पादार्थरूप उपसंहारप्रकारः सपरिकरो विचारितः । भगवतः कैवल्यरूपं मुख्यत्वरूपमैक्यं च समर्थितम् । ततोग्रे एतस्यैव प्रपंचः ॥ १ ॥

ततोग्रे चतुर्भिरधिकरणैरुपासनानियामकसंबंधिभेदे रूपात्मकः संबंधो विचार्यते । तत्रादौ द्वितीये द्विसूत्रे **आत्मगृहीत्यधिकरणे** तद्गुणोपसंहारनियमनाय तत्तद्विभूतिद्वारा ब्रह्मण एव फलदातृत्वसमर्थनाय भक्तिज्ञानमार्गोपकारकशांत्युत्पादनाय विभूतीनां ब्रह्मात्मकत्वभावनाय च अन्नमयादिषु विभूतिष्वानंदमयस्यैव शरीराभिमानित्वं विचारितम् ।

ततस्तृतीये षट्सूत्रे **कार्याख्यानादित्यधिकरणे** प्रथमसूत्रवर्णकद्वयमध्ये प्रथमवर्णकेन विभूत्युपासनेषु आनंदमयस्याध्यात्मिकरूपेणैव फलदातृत्वरूपविशेषसमर्थनाय पूर्वोक्तविभूतीनामन्नमयादीनां चतुर्णां पुरुषाणामाधिभौतिकत्वनिराकरणेनाध्यात्मिकत्वं समर्थितम् । द्वितीयेन वर्णकेन सर्वगुणोपसंहारायानाविर्भूतपुरुषोत्तमविग्रहस्यैवात्मत्वं ज्ञानभक्तिमार्गीयसाधारण्येन विचारितम् । ततो द्वितीयसूत्र आविर्भूतस्य श्रीकृष्णादिरूपस्याप्यात्मत्वमेवेति व्यापकत्वैकरसत्वसच्चिदानंदत्वादयः सर्वे धर्मा उपसंहर्तव्या इति केवलभक्तार्थं विचारितम् । ततस्तृतीयसूत्रे आवेशिनि गुर्वादावाविष्टे रूपे

१. प्रथमेति मूलपाठः ।　　२. सर्ववेदांतप्रत्ययत्वेन ।

सर्वभगवद्गुणोपसंहारः ज्ञानिभक्तार्थं विचारितः । ततस्त्रिभिरावेशिनि गुरुप्रतिमादावाविष्टे रूपे तदनुपसंहारः केवलभक्तार्थं विचारितः ॥ ३ ॥

ततश्चतुर्थे एकसूत्रे पुरुषविद्यायामित्यधिकरणे उत्तमाधिकारिभिरशेषगुणपूर्णं परं ब्रह्मैवोपास्यम्, न विभूतिरूपमिति साधितम् । आध्यात्मिकेषु विभूतिरूपेषु सर्वगुणानुपसंहारेऽसाधारणगुणानाम्ज्ञानरूपो हेतुश्चोक्तः ॥ ४ ॥

ततः पंचमे द्विसूत्रे वेधाद्यधिकरणे पूर्वसूत्रेणासन्यरूपे चेतनविभूतौ भगवत्संबंधाद्दोषाभावनिरूपणात्कैमुतिकन्यायेन मूलरूपस्य निर्दोषत्वं समर्थितम्, आधिभौतिकरूपाणां जीवानां सदोषत्वं च बोधितम् । ततो द्वितीये सूत्रे तत्सदोषत्वं भगवत्सकाशात् विभागदशायामेव, तथा सति मुक्तिदशायां तारतम्याभावे प्राप्ते भगवत्तुल्यतापि स्यादिति तन्निवारणार्थं तदापि न्यूनगुणकत्वं स्थापितम् । तेनाध्यात्मिकरूपेषु कतिपयगुणोपसंहारः, मूलरूपे सर्वगुणोपसंहारः । लौकिकरूपेषु मुक्तिदशायामेव निर्दोषत्वपरिमितगुणोपसंहारौ, न संसारदशायामिति निर्णीतम् । एवं चतुर्भिरधिकरणैः रूपभेदः प्रपंचितः ॥ ५ ॥

ततः षष्ठाधिकरणमारभ्य पंचदशभिरधिकरणैरुपसंहारनियामकस्तत्तन्मार्गरूपः संबंधिभेदस्तत्तदधिकारनियामकं मार्गतारतम्यं च निरूप्यते ।

तत्र षष्ठे द्विसूत्रे संपरायाधिकरणे अंतरंगसाधनयोर्ज्ञानभक्तयोर्मूलरूपोपासनासंभवाद्विशेषे प्राप्तेवसरसंगत्या स्वरूपतो मर्यादाभक्तेर्ज्ञानाज्ज्यायस्त्वस्य भक्तौ दोषाभावस्य च निरूपणेनांतरंगतरत्वं निरूपितम् ॥ ६ ॥

ततः सप्तमे एकसूत्रे गतेरर्थवत्त्वमित्यधिकरणे हेतुबोधनेन तदेव दृढीकृतम्, मार्गभेदेन पुष्टिभक्तेरंतरंगतमत्वं च निरूपितम् ॥ ७ ॥

ततोऽष्टमे उपपन्नाधिकरणे पुष्टिभक्तेरंतरंगतमत्वं दृढीकृतम् । एवं त्रिभिरधिकरणैरंतरंगसाधनानां त्रैविध्ये निर्णीते पूर्वं 'इतरे त्वर्थसामान्या'दित्यादिसूत्रत्रयेणोपसंहारानुपसंहारबीजबोधने कृते किमीयोपासनायां के के गुणा उपसंहार्या इत्याकांक्षापि पूरिता । ज्ञानमार्गीयोपासनायां तदुपयोगिनः सर्वे, तत्तद्भक्तिमार्गीयोपासनायां तु तत्तदुपयोगिनस्ते ते इत्यर्थादेव सिद्धेरिति ॥ ८ ॥

ततो नवमेऽनियमाधिकरणे ज्ञानापेक्षयांतरंगाणां भक्तीनां मुक्तिसाधने समुच्चयविकल्पयोरनियमः प्रसंगेन विचारितः । पादार्थसंगतिस्तु पूर्वसिद्धैवात्रापि ॥ ९ ॥

ततो दशमे आधिकारिकाधिकरणे आधिकारिकाणां मुक्तिसाधने प्रवृत्त्यर्थमाधिकारिकाणां भगवद्धर्माणां मुक्तिसाधनत्वाभाव उपोद्घातगर्भप्रसंगसंगत्या प्रतिपादितः । आधिकारिकाणां धर्माणां भगवत्संबंधितया साधनत्वप्राप्तावपवादसंगत्या उपोद्घातगर्भप्रसंगसंगत्या वा मुक्तिसाधनत्वाभावः प्रतिपादितः । उपसंहारस्तु ज्ञानादिमार्गानुरोधीति तदनुसारेणायातीति पादार्थेनापि संगतिः १०

ततः पूर्वं संपरायाद्यधिकरणेषु ज्ञानभक्त्योः स्वरूपतस्तारतम्यसाधनेपि विषयफलयोरविशेषादंतरंगतरत्वादिकस्याप्रयोजकत्वं प्राप्तमिति तन्निवारणार्थमेकादशे द्विसूत्रेऽक्षरधियामित्यधिकरणे ज्ञानभक्तिसंबंधिविषयफलयोर्भेदबोधनात् भक्त्यपेक्षया ज्ञानस्यापकर्षबोधनेन भक्तावंतरंगतरत्वादिकं तयैव संगत्या दृढीकृतम् । उपसंहारस्तु तत्तदुपयोगी प्रागेव सिद्धः ॥ ११ ॥

---

१. भौतिक इति पाठः । २. भक्ति इति पाठः ।

ततो द्वादशे त्रिसूत्र्यंतरा भूतग्रामवदित्यधिकरणे श्रुतावहंग्रहोपासनस्य मुख्यत्वकथनात् ज्ञाने भक्तौ च तस्य तुल्यत्वादुभयोस्तौल्यस्य ज्ञानाधिक्यस्य वा प्राप्तौ तस्या उपासनाया भक्त्येकदेशत्वकथनेन ज्ञानापेक्षया मुख्यभक्तेर्विरहरूपांतरंगसाधनत उत्कर्षः पूर्वोक्तसंगत्या प्रतिपादितः ॥ १२ ॥

ततस्त्रयोदशे द्विसूत्रे सैव हीत्यधिकरणे प्रथमसूत्रेण विहिताविहितरूपाया द्विविधाया अपि मध्यमभक्तेः पूर्वोक्तसंगत्या साधनत उत्कर्षः प्रतिपादितः। द्वितीयसूत्रेण भगवद्विषयककामादीनामपि मुक्तिफलकत्वकथनेन मुक्तौ भगवद्विषयकत्वरूपसाक्षात्संबंधस्यैव मुक्तिसाधनतावच्छेदकत्वम्, न तु ज्ञानत्वं भक्तित्वं वेति निरूपितम् ॥ १३ ॥

ततश्चतुर्दशे द्विसूत्रे आदरादित्यधिकरणे कैमुतिकन्यायेन कर्मापेक्षया भक्तिसाधनानामुत्कर्षः कर्मिप्रत्यवस्थाननिवृत्त्यर्थं प्रतिपादितः ॥ १४ ॥

ततः पंचदशे एकसूत्रे तन्निर्धारणाधिकरणे स्वकृतवेदमर्यादारक्षार्थं विहिताविहितभक्तिमार्गीयस्य कर्मकरणाकरणयोर्हेतुफले बोधिते। द्वितीयपक्षेपि मुख्यभक्तेः पूर्वोक्तभक्तिद्वयादुत्कर्षः साधनतः फलतश्च प्रसंगात् प्रतिपादितः ॥ १५ ॥

ततः षोडशे प्रदानवदित्यधिकरणे सर्वात्मभावात्मकमुख्यभक्तेर्विहितयावत्साधनसाध्यत्वनिराकरणेन वरदानवत्प्राप्तिरित्युक्तम् ॥ १६ ॥

ततः सप्तदशे दशसूत्रात्मके लिंगभूयस्त्वाधिकरणे सर्वात्मभावात्मकमुख्यभक्तेः स्वरूपमंतरंगतमत्वकाष्ठाबोधनार्थं श्रुतिवाक्यैः प्रपंचितम् ॥ १७ ॥

ततोऽष्टादशे त्रिसूत्रे व्यतिरेकाधिकरणे ज्ञानिनां पूर्णाक्षरज्ञानाभावस्य प्रतिपादनेन अग्रिमसूत्रद्वये निदर्शनकथनेन च भक्तानां पूर्णतज्ज्ञानकथनात्सर्वात्मभावरूपमुख्यभक्तिफलस्य भोग्यस्य पुरुषोत्तमज्ञानमध्यमभक्तिफलरूपपुरुषोत्तमसायुज्यादाधिक्यमर्थतः प्रतिपादितम् ॥ १८ ॥

तत ऊनविंशे एकसूत्रे भूम्न इत्यधिकरणे फलविचारेण सर्वात्मभावस्य साधनदशायां दुःखरूपदोषः परिहृतः ॥ १९ ॥

एवं च पंचदशभिरधिकरणैः संबंधिरूपमार्गस्तत्तारतम्यं च निरूपितम्। एवं स्वरूपपरासूपासनासु तारतम्यबोधनेन तासु तासु तत्तज्ज्ञानोपयोगिनो गुणा उपसंहार्या इति पादार्थसंगतिः।

ततो विंशे एकसूत्रे नानाशब्दादिभेदादित्यधिकरणे ततो न्यूनासु सत्त्वोपहितावताररूपोपासनासु नानात्वं विचारितम् ॥ २० ॥

ततोऽग्रिमे एकसूत्रे एकविंशे तासां तासां विकल्पो विचारितः। गुणोपसंहारस्तु तत्तज्ज्ञानोपयोग्येवेति पूर्वोक्तैव व्यवस्था ॥ २१ ॥

ततो द्वाविंशे काम्योपासनासु समुच्चयविकल्पौ यथाकामं विचारितौ, तेन तासु तत्तत्कामोपयोगी गुणोपसंहारो बोधितः ॥ २२ ॥

ततस्त्रयोविंशे द्विसूत्रे अंगेष्वित्यधिकरणे उपासनांगानां व्रतानामाश्रयनित्यत्वं प्रसंगाद्विचारितम् ॥ २३ ॥

ततोऽग्रिमे द्विसूत्रे समाहारादित्यधिकरणद्वये ज्ञानमार्गीयोपासनासु सर्वगुणोपसंहारानुपसंहारावधिकारिभेदेन विचारितौ । तेन ज्ञानमार्गीयो विचार एवात्र मुख्यो, भक्तिमार्गविचारस्तु भक्तौ भगवत्कृपारूपस्याधिकस्य साधनस्य प्रवेशान्न सर्वोपयोगी यद्यपि, तथापि शास्त्रारंभे ब्रह्मसंबंधिजिज्ञासाप्रतिज्ञानुरोधात्कृतः, तत्प्रयोजनं त्वग्रिमपादे 'भक्तिमार्गप्रचारैकहृदयो बादरायण' इति श्लोकेन वक्तव्यमिति ॥२४,२५॥

इति श्रीवल्लभाचार्यचरणदासस्य श्रीपीतांबरात्मजपुरुषोत्तमस्य कृतौ
वेदान्ताधिकरणमालायां तृतीयाध्यायस्य तृतीयः पादः ॥

---

वेदांतेषु कर्मांगभूता उद्गीथाद्युपासना उक्ताः । आचार्येणापि अंगेषु यथाश्रयभाव इत्यादिना पूर्वपादांते ता विचारिताः । भाष्यकारैरपि प्राचीनवृत्तिकारादिसंमतं 'पूर्वोत्तरकांडयोरैकशास्त्र्यमंगीकृतम् । तृतीयाध्यायारंभे च चतुर्थपादस्य कर्मोपसंहारोऽर्थ उक्तः । तथा सति ज्ञानेपि कर्मापेक्षास्तीति सिद्धम् । प्रकृतपादारंभे च प्रथमसूत्रेण स्वमतमुक्त्वा, ततः षट्सूत्रैरीश्वरस्य ज्ञानस्य च कर्मशेषबोधकं जैमिनिमतं पूर्वपक्षत्वेनोपन्यस्य, अधिकोपदेशादित्यादिभिर्नवभिः सूत्रैर्ज्ञानस्येश्वरस्य च यज्ञादिकर्मशेषत्वं निराकृतम् । ततः ऊर्ध्वरेतःसु चेति सूत्रेण ज्ञानस्य संन्यासाश्रमिणः कर्मशेषत्वमपि निराकृतम् । तेन ज्ञानस्य न कर्मशेषत्वम् । तेन पूर्वकांडवैयर्थ्यापत्तौ यज्ञादिकर्मणां यथाकथंचित्परंपरया मोक्ष एव फलत्वेन परामृश्यत इति नैकशास्त्र्यादिहानिरित्यभिसंहितम् । ततः परामर्शसूत्रे तदपवादं पूर्वपक्षीकृत्य, अनुष्ठेयसूत्रे ज्ञानसाधनत्वेन तत्करणमंगीकृत्य कर्मस्वातंत्र्यं निवारितम् । अग्रिमैः पंचभिः सूत्रैस्तदेव समर्थयित्वा ज्ञानस्योत्कृष्टत्वं साधितम् । एवं पंचविंशतिसूत्रात्मकेनाद्याधिकरणेन उपसंहारोपोद्घातत्वेन कर्मणः स्वातंत्र्यास्वातंत्र्ये विचारिते । तत्र भगवत्प्राप्तिरूपस्य पुरुषार्थस्य सर्वात्मभावरूपपुरुषोत्तमज्ञानैकलभ्यत्वमिति स्थितम् ॥ १ ॥

ततः कर्मणः किं परोक्षज्ञानसाधनत्वमपरोक्षज्ञानसाधनत्वं वेत्यपेक्षायां सर्वापेक्षेति षट्सूत्रे द्वितीयाधिकरणे साक्षात्कारस्य स्वरूपोपकारार्थं कर्मज्ञानभक्त्यपेक्षां प्रतिज्ञाय तत्तन्मार्गोक्तकर्मसापेक्षत्वं साधितम् । पूर्वपाद एवांतरंगसाधनविचारे ज्ञानभक्त्यावश्यकताया निरूपितत्वात् । ततो द्वितीयसूत्रे शमदमादीनां सत्त्वशोधकत्वे तैरेव ज्ञानसिद्धा यज्ञादिकर्मनिरपेक्षत्वमाशंक्य, तेषां विशेषानुष्ठेयत्वम्, न तु कर्मनिवारकत्वमिति तदानीमपि यज्ञादिकर्म कर्तव्यमेवेति सिद्धांतितम् । ततः ज्ञानिनः सर्वान्नभक्षणस्यानुज्ञानात्कामतः सर्वभक्षणे प्राप्ते आहारशुद्ध्यभावेन शमाद्यसंभवात् पयोव्रताद्यभावेन यज्ञादेरप्यसंभवाद्यज्ञशमदमादीनां साक्षात्कारजनकत्वमसंगतमित्याशंक्य, सर्वान्नानुमतेः प्राणात्ययापत्तिविषयत्वेनान्यदा तदप्राप्त्या तदानीं कामचाराभावात् यज्ञशमदमादिसंभवेन तेषां ज्ञानप्रतिबंधनिवर्तकतया कारणत्वं निर्बाधम् । यद्यपि पूर्णस्य ज्ञानस्य कर्मनाशकत्वम्, तथापि साधनदशायां तदपेक्षास्तीत्युपसंहारहेतुतया सर्वान्नानुमत्यादिसूत्रचतुष्टये साधितम् ॥ २ ॥

ततस्तृतीयेऽष्टसूत्रे विहितत्वाच्चाश्रमकर्मेत्यधिकरणे प्रथमसूत्रद्वयेन जातज्ञानस्यापि ज्ञानमार्गीयस्याश्रमधर्माणां नित्यत्वेन प्रत्यवायपरिहारकतया शमदमादिसहकारितया च कर्तव्यत्वं निर्णीतम् । तेनैव कर्ममार्गीयस्य निष्कामतायामपि तदावश्यकत्वमित्यर्थादेव बोधितम् । ततोऽग्रिमैः सर्वथापीत्यादिभिः षड्भिः सूत्रैर्विहितानां भगवच्छ्रवणादीनां पूर्वोक्तेभ्यः सर्वेभ्य आधिक्यं, तदविरोधेनैवाश्रमधर्माणां कर्तव्यत्वं, भगवद्धर्मकर्तुरनभिभवं, आश्रमधर्माणां फलसिद्धावंतरायरूपत्वादविरोधेनैव कार्यत्वं, भगवद्धर्माणां भक्तेस्तत्फलस्य च ज्ञानादिफलाभ्यायस्त्वमंतरंगतरविचारेण निरूपितम्, तेन भगवद्धर्माविरोधेनैव ते कर्तव्या इत्युपसंहारप्रकारो दर्शितः ॥ ३ ॥

ततस्तत्फलं किं, कथं च तस्य ज्ञानफलादाधिक्यमित्याकांक्षायां चतुर्थे एकसूत्रे तद्भूतस्येत्यधिकरणे भगवद्धर्माणां साधनदशायामुत्कृष्टत्वेपि फलदशायां मुक्तिभवने फलतो न कश्चिद्विशेष इत्याशंक्य, नियमादिभिर्हेतुभिस्तस्य नित्यत्वं, भक्तानां मुक्त्यनिच्छया तत आधिक्यं च मुख्यभक्तिमार्गस्योत्कर्षार्थं प्रसंगात्प्रतिपादितम् ॥ ४ ॥

ततः पंचमे द्विसूत्रे न चाधिकारिकमित्यधिकरणे मर्यादापुष्टस्यापि यत् भगवदीयत्वरूपमंतर्निष्ठारूपं यत्फलं तन्नित्यं, ज्ञानमार्गीयमुक्तेः सकाशादधिकमित्यनुप्रसंगेन निरूपितम् । एवमधिकरणद्वयेन पूर्वोक्तकर्मोपसंहारप्रकारे बीजं बोधितम् ॥ ५ ॥

ततः षष्ठे चतुःसूत्रे बहिस्तूभयथेत्यधिकरणे सर्वविधस्य पुष्टिमार्गीयस्य आश्रमरूपसंन्यासधर्मानुपसंहारार्थं साधनत उत्कर्षबोधनायानुप्रसंगेन गृहत्यागो विचारितः । स च मध्यमाधिकारे एवेति फलति ॥ ६ ॥

ततः सप्तमे एकसूत्रे सहकार्यंतराधिकरणे गृहत्यागिनो मर्यादापुष्टिमार्गीयस्य शमादिकं भावनासहकारित्वेन कर्तव्यम्, पुष्ट्यंशबाहुल्ये तु तेनापि भावनामात्रमेव कर्तव्यमिति साधनव्यवस्थानुप्रसंगाद् दर्शिता ॥ ७ ॥

ततोऽष्टमे चतुःसूत्रे गृहिणोपसंहाराधिकरणे, प्रथमसूत्रेण पूर्वोक्तेभ्यो जघन्याधिकारिणां त्यागानुकल्परूपं गृहे स्थित्वा भगवद्भजनं कर्तव्यमिति विचार्य, द्वितीयादिभिस्तस्य करणप्रकारस्तदाधिक्यं, भगवद्भावस्य लोकेष्वप्रकटनं, भगवद्भजनव्यतिरिक्तसमये लौकिककरणं, गृहिणोपसंहारश्रुतिमनुसृत्यानुप्रसंगाद्विचारितम् । तेन विहितत्वाच्चाश्रमकर्मापीत्यत्रेन यत्पूर्वमुक्तं तस्य प्रकारो बोधितः ॥ ८ ॥

ततो नवमे एकसूत्रे एवं मुक्तिफलानियम इत्यधिकरणे तादृशस्य देहपातोत्तरं मुक्तिर्वा भगवदीयत्वं वेति संशये मुक्तिस्तु नियतैव, भगवदीयत्वं तु भगवत्कृपाधीनमित्यनियमो निर्णीतः । तेनानुकल्पोपि मर्यादामार्गादधिकः, निरवध्यानंदपुरुषोत्तमसायुज्यादिति ॥ ९ ॥

एवमस्मिन्पादे बहिरंगविचारेण सप्रकारः कर्मोपसंहारो दर्शितः । एवमस्मिन्नध्याये चतुर्भिः पादैः सर्वसाधनं सप्रकारमुपदिष्टम् ॥

इति श्रीवल्लभाचार्यचरणदासस्य श्रीपीतांबरात्मजपुरुषोत्तमस्य कृतौ वेदान्ताधिकरणमालायां तृतीयाध्यायस्य चतुर्थः पादः समाप्तः ।

तृतीयाध्यायः समाप्तः ।

---

## चतुर्थोध्यायः ।

अथ चतुर्थाध्यायेवसरसंगत्या फलं निरूप्यते । तत्र फलं ब्रह्मविद इति चतुर्भिः पादैर्जीवतो म्रियमाणस्य गच्छतः प्राप्तफलस्य च क्रमेण तस्य यथाधिकारमवस्था निरूप्यंते ।

तत्र प्रथमपादस्य द्विसूत्रे प्रथमेधिकरणे प्रथमवर्णकेन श्रवणादीनामवांतरफलत्वाय तेषामावृत्तिः कर्तव्येत्युच्यते । तेन पूर्वपादांते गृहिणोपसंहारे सर्वेंद्रियाणामात्मनि प्रतिष्ठापनमुक्तम्, तत्प्रकारोत्र दर्शित इति पूर्वेण सह प्रकारप्रकारिभावः संगतिरिति बोध्यम् । द्वितीयवर्णकेन तु

ज्ञानभक्त्योः फलत उत्कृष्टत्वाय कर्ममार्गे आवृत्तिव्युत्पादनेन फलजघन्यत्वमपि बोधितम् । तेन कर्मणि तत्फले चानासक्तिरपि तत्प्रकारत्वेन बोध्यत इति सैव पूर्वेण सह संगतिरिति बोध्यम् ॥ १ ॥

ततो द्वितीये त्रिसूत्रे आत्मेतीत्यधिकरणे प्रथमवर्णकेन ज्ञानफलं द्विविधं विचार्यते । मुख्यं त्वात्मप्रवेशरूपमनश्वरम्, द्वितीयं त्वधिकारिषूपस्थितेषु तेभ्यो ज्ञानोपदेशरूपमवांतरफलम्, भगवदाज्ञापरिपालनात्मकम्, न त्वाचार्यत्वकामनाकृतमित्युच्यते । द्वितीये ननु 'न स पुनरावर्तते' इतिश्रुत्युक्तो ज्ञानभक्त्योः फलरूपः पुनरावृत्त्यभावः किं सावधिक उत निरवधिक इत्याशंकायाम्, निरवधिक इति सिद्धांत उच्यते । नित्ये भगवद्रूप आत्मनि ब्रह्मविदो जीवात्मनः शुद्धजले जलस्येव प्रवेशेन तादृक्त्वस्यैव श्रुतावुक्तत्वादिति, भक्तिमार्गे च भगवतो मुक्तोपसृप्यत्वेन सेवार्थं तन्निकट-स्थितेरपि नित्यत्वादिति । एवमात्मोपदेशस्यावांतरफलत्वं त्वत्रापि समानम् । ततो द्वितीयसूत्रे प्रतीकोपासकानां न मोक्षः, अतद्रूपे तत्त्वेनोपासनादिति । अतः सा न कर्तव्येति बोधितम् । तृतीये सर्वत्र ब्रह्मदृष्टिः कर्तव्येति बोधितम् । तथा च सर्वत्रात्मभावनात् तथा स्फुरणाच्च दुःखस्य निवृत्ते-स्तस्याप्यवांतरफलत्वम् । पूर्वपाद उक्तानां गृहत्यागिनां यदांतरं बाह्यं च साधनं तदत्रोपदिश्यत इत्यत्रापि तेन सह प्रकारप्रकारिभाव एव संगतिरिति बोधितम् ॥ २ ॥

ततस्तृतीये पंचसूत्रे आदित्यादिमतय इत्यधिकरणे प्रथमसूत्रे प्रतीकोपासना न कर्तव्या एव चेत्, ताः किमर्थमुपदिश्यंते, (नन्वेवमंगोपासना एव?) सिद्धांते प्रतीकोपासना इत्याकांक्षायाम्, अवसरसंगत्या सिद्धांते अंगोपासना एव प्रतीकोपासना इति तत्स्वरूपमुच्यते । ताश्चोपासना जघन्याधिकारिणां फलदानद्वारा माहात्म्यज्ञापनेन भक्तिद्वारा आधिभौतिकसर्वात्मभाव-रूपज्ञान एवोपकुर्वंतीत्युच्यते, अग्रिमसूत्रैस्तथैव प्रतिपादनात् । ततो द्वितीयसूत्रे भावनौत्कट्ये बहिर्भगवदध्यासरूपं प्राकट्यं फलमुच्यते । ततस्तृतीये ध्यानात्मनो मानसीमूर्तिसिद्धिरूपं फल-मुच्यते । ततश्चतुर्थे लीला अपि भगवान् तथा प्रकटयतीत्युच्यते । ततः पंचमे अधिकारौत्कट्येन तेषां तत्रैव फलत्वं भासत इति श्रीभागवतोक्तस्मृतिबलेनोच्यते । तस्मात् तासां ज्ञानोपकार एव फलमिति सिध्यति ॥ ३ ॥

ततश्चतुर्थे एकसूत्रे यत्रैकाग्रतेत्यधिकरणे बहिरंतर्भगवत्प्राकट्यवतोरुपासकयोर्न तार-तम्यमिति सिद्धांतः प्रसंगेन क्रियते ॥ ४ ॥

ततः पंचमे एकसूत्रे आप्रायणेत्यधिकरणे भगवत्प्राप्तिरूपपरमफलपर्यंतं तस्य सैवावस्था तिष्ठति । परमफलं च तस्य साक्षाद्भगवत्सेवनरूपं सिध्यतीत्यनुप्रसंगेन पुष्टिमार्गीयस्योक्तम् । इदमेव च पूर्वं तद्भूताधिकरणे प्रतिपादितमत्रांगोपासनाविषयेपि स्मार्यते । तेन पुष्टिमार्गीयस्य जीवत इदम-वांतरफलमिति बोधितम् ॥ ५ ॥

ततः षष्ठे चतुःसूत्रे तदधिगम इत्यधिकरणे मर्यादामार्गीयस्यावांतरफलमवसरसंग-त्योच्यते । तत्र प्रथमसूत्रे (चित्तशुद्धौ) ज्ञानोदये सति पूर्वपापनाशः, तदनंतरं पापस्यानुत्पत्तिः । द्वितीयसूत्रे पूर्वपुण्यस्य नाशः, तदनंतरं तदनुत्पत्तिः । कदाचित् प्रारब्धवशाद्भगवद्भावाच्च्युतौ उत्तरकर्मण उत्पत्तिरित्युक्तम् । ततस्तृतीये ज्ञानात् कर्मनाशे इति कर्मजन्यदेहस्यापि नाशादा-चार्याभावेन ज्ञानादिसंप्रदायोच्छेद इत्याशंक्य, अनारब्धकार्याणामेव तेषां नाशः, न प्रारब्धकार्याणा-मिति, तेषां भोगैकनाश्यत्वादित्युक्तम् । ततश्चतुर्थे ब्रह्मविदोग्निहोत्रादिकरणमपि प्रारब्धयोगरूप-

कार्यायैव, येषामग्निहोत्रकरणरूपं प्रारब्धमस्ति तेषां तत्करणरूपेण भोगेन तन्निवृत्तेः, न तु तस्य कर्मणः संश्लेष इत्युक्तम् । तेन मर्यादामार्गीयस्य कर्मसंसर्गाभाव इत्यनेनाधिकरणेनावसराद्वा प्रसंगाद्वा साधितम् ॥ ६ ॥

ततः सप्तमे त्रिसूत्रे अतोन्यापीत्यधिकरणे पुष्टिमार्गीयस्य 'तस्य पुत्रा दायमुपयंति सुहृदः साधुकृत्याम् द्विषंतः पापकृत्या'मिति श्रुतिबलाद् विनैव भोगं प्रारब्धनिवृत्तिरिति प्रथमसूत्र उच्यते । ततो द्वितीये 'यदेव विद्यये'ति श्रुत्या ब्रह्मविदः कर्मकरणप्राप्तौ तत्संश्लेषमाशंक्य, इदं वाक्यं कर्मांगभूतोद्गीथोपासनाविषयम्, न तु ब्रह्मविद्याविषयम्, अतो न तस्य आपादयितुं शक्यते कर्मसंश्लेषो ब्रह्मविदः । किंच, यद्यनया कर्मकरणं प्रसक्तं क्रियते, तदा ब्रह्मवित्कर्ममोक्षायैव कर्म करोतीति तच्छ्लेषाभावायैव तत् फलिष्यतीति तु मर्यादामार्गरीत्या समाधानम् । पुष्टिमार्गीयस्तु केवलं भगवदासक्तः, भगवद्गुणानां च जीवगुणाः अंशाः, जीवनिष्ठं विद्यारूपं यज्ज्ञानं तद्भगवज्ज्ञानस्य अंश इति सिध्यति । तथा सति जीवनिष्ठविद्ययापि चेत् न मर्यादामार्गीयस्य कर्मश्लेषः, तदा भगवत्स्वरूपासक्तस्य पुष्टिमार्गीयस्य कर्मश्लेषः कैमुतिकन्यायेनैवापास्त इत्युक्तम् । ततस्तृतीये पुष्टिमार्गीयः पूर्वोक्तप्रकारेण स्थूललिंगशरीरे क्षपयित्वा ततो यथाधिकारं भगवत्साक्षात्कारादिरूपेण फलेन संपद्यत इति परमफलमुक्तम् । अत्र क्षपणं च कुरुक्षेत्रप्रसंगे व्रजभक्तानां जीवकोशध्वंसरूपम् । भोगश्च तदनंतरदर्शनादिरूपो जीवद्दशायामेव भवतीत्यवांतरफलपरिसमाप्तिरिति मम प्रतिभाति ।

इति श्रीवल्लभाचार्यचरणदासस्य श्रीपीतांबरात्मजपुरुषोत्तमस्य कृतौ वेदान्ताधिकरणमालायां चतुर्थाध्यायस्य प्रथमः पादः ॥

---

अथ द्वितीयपादे म्रियमाणस्य ब्रह्मविदोवांतरफलव्यवस्था अवसरसंगत्योच्यते ।

तत्र प्रथमे चतुःसूत्रे वाङ्मनसीत्यधिकरणे तत्र प्रथमसूत्रे 'अथाकामयमान' इति वाजसनेयिश्रुतिमालंब्य म्रियमाणस्य पुष्टिमार्गीयस्य म्रियमाणदशायां बहिर्मनसि वा दर्शनं वेणुनादश्रवणं वा भवति, तदा तस्य वाङ्मनसि संपन्ना भवतीत्युक्तम् । ततो द्वितीयसूत्रे पूर्वोक्तेनैव हेतुना अन्यान्यपींद्रियाणि मनसा सह संगतानि भवंतीत्युक्तम् । ततस्तृतीये सर्वेंद्रियविशिष्टं मनः प्राणे संगतं भवतीत्युच्यते । ततश्चतुर्थे तत्सर्वविशिष्टप्राणो हृदि वा बहिर्वा प्रकटे भगवति लीनो भवतीत्युच्यते । तथा चानेन क्रमेण तत्सेंद्रियाणि भगवति लीयंते, आत्मापि लीयते, 'न तस्मात्प्राणा उत्क्रामंति, अत्रैव समवनीयंते ब्रह्मैव सन् ब्रह्माप्येती'ति श्रुतेरित्युच्यते । तस्यालौकिकदेहप्राप्तिश्चतुर्थे पादे वक्ष्यते ॥ १ ॥

ततो द्विसूत्रे द्वितीये भूतेष्वित्यधिकरणे म्रियमाणस्य मर्यादामार्गीयस्य व्यवस्था अवसरगर्भेण प्रसंगेनोच्यते । तत्र प्रथमसूत्रे तत्सेंद्रियाणि भूतेषु लीयंत इत्युच्यते, स्वयं तु ह्येवं भगवंतं प्राप्य मुक्तो भवतीत्यपि तेन सूच्यते । ततो द्वितीये सूत्रे भक्तो ज्ञानी च मर्यादामार्गीयो भवतः । तत्रोभयोरियं व्यवस्था, उत भक्तस्य पुष्टिमार्गे प्रवेश इत्याशंक्य, द्वयोरपीयं व्यवस्थेत्युच्यते ।

ततस्तृतीये नवसूत्रे समाना चासृतीत्यधिकरणे उभयोर्मुच्यमानत्वेपि प्राणादिलयप्रकारे पुष्टिमर्यादास्थयोः कुत एवं (विशेषादेव) विशेष इति वक्तुं पुष्टिमार्गीयस्य मर्यादामार्गीयाधिक्यमुपोद्घातेन विचारितम् । तत्र प्रथमसूत्रे साधनद्वारा मोचनेच्छा हि मर्यादामार्गीया मर्यादा,

विहितसाधनं विनैव मोचनेच्छा पुष्टिमार्गमर्यादा। अतस्तयोः संकरः कदापि न भवतीति विशिष्टेच्छया आधिक्यमुक्तम्। ततो द्वितीये पुष्टिमार्गीयमुक्तिदशायां मर्यादामार्गीयमुक्तेः संसारतौल्यव्यपदेश इत्युक्तम्, तेन पुष्टिमार्गस्याधिक्यं सूच्यते। ततस्तृतीये यदि तस्याः संसारतुल्यत्वं तदा तस्या हेयत्वं स्यात्, तद्बोधकश्रुतेः प्रतारकत्वं चेत्याशंकायाम्, पुष्टिमार्गीयं तत्त्वं दुर्ज्ञेयम्। अतस्तदज्ञानान्मर्यादामार्गीयमुक्तिर्येषामीप्सिता तान् प्रति तामेवोपादेयत्वेन श्रुतिर्वदति, रागिणः प्रति स्वर्गादि उपदिश्यते (तद्वत्। ततश्चतुर्थे तर्हि ब्रह्मविदामिव तादृशानां भक्तानामपि स्वमार्गोपदेशनं क्वचिच्छ्रूयेत), यतो नैवम्, अतो नैवमित्याशंकायाम्, तदनुपदेशने बीजमाह। पुष्टिमार्गीयाणां हि अवस्थाद्वयम्, विरहः प्रियसंगो वा। तत्राद्ये स्वास्थ्याभावान्नोपदेशः। द्वितीये तु भगवत्संनिधानेन तदग्रे धाष्टर्यस्य कर्तुमशक्यत्वान्नोपदेशः। अत उपदेशाभावान्न तस्यासत्ता वक्तुं शक्येत्युक्तम्। ततः पंचमे भगवदीयानां विरह एव कथमित्याशंकायाम्, पुष्टिमार्गे भगवतो रसात्मकत्वस्यैव प्राकट्यात् तेनैव तदुपपत्तिरिति युक्त्या समाहितम्। ततः षष्ठे विरहांगीकारे श्रुतिविरोधमाशंक्य, श्रुतौ शरीरसंबंधिन एव दुःखस्य निषेधो, न भगवद्विरहजन्यस्येत्येवं समाहितम्। ततः सप्तमे श्रुत्या, अष्टमे च स्मृत्या तद्दृढीकृतम्। ततो नवमे सर्वासां रसावस्थानां सत्ता श्रीगोकुल एव विधत इति श्रुत्या व्यवस्थापितम्। एवं पंचभिः सूत्रैः प्रमाणपूर्वकं रसावस्थास्थापनेन पुष्टिमार्गस्य सर्वोत्कृष्टत्वं व्यवस्थापितम्। अतः पुष्टिमर्यादायामुपदेशेपि न कश्चिद् दोष इत्यर्थात् सूचितं भवति ॥ ३ ॥

ततश्चतुर्थे एकसूत्रे अविभागो वचनादित्यधिकरणे प्रसंगात् पुष्टिमार्गीयस्य नित्यलीलारूपफलानुभवस्य नित्यत्वं मर्यादामार्गात् फलतो विशेषप्रतिपादनाय विचारितम् ॥ ४ ॥

ततः पंचमे एकसूत्रे तदोकोऽग्रज्वलनाधिकरणे मर्यादामार्गीयस्य ब्रह्माण्डमध्ये सद्यो मुक्तिप्रकारो विचारितः। तदग्रिमे च अवसरसंगत्या मर्यादामार्गीयस्य जीवोत्क्रांत्यनंतरं क्रममुक्तिप्रकार उच्यते। तत्र साधारणस्यापि जीवस्य इंद्रियरूपाभिस्तेजोमात्राभिः सहैव येन केनचिद्द्वारेण निर्गमनम्, तथापि यस्य साधनेन (परमात्मा तुष्टः,) स जीवस्तु एकशतनाडीषु या शताधिका मूर्धन्या नाडी, तया ऊर्ध्वं त्व 'क्त्वा' निष्क्रामति, साधनेन तुष्टो यो हृदयवर्ती परमात्मा तदनुग्रहाद्विद्यासामर्थ्याच्च या भगवत्स्मृतिपरंपरा, तया तस्यानुग्रहः, तेन मूर्धन्यनाड्या निष्क्रमणमित्युक्तम् ॥ ५ ॥

ततः षष्ठे चतुःसूत्रे रश्म्यनुसार्यधिकरणे। तत्र प्रथमसूत्रे यः क्रमेण मोक्षाधिकारी रश्म्यनुसारी मूर्धन्यनाड्या निःसरति तस्यापि हृदयाग्रे प्रकाश इत्युक्तम्। ततो द्वितीये तृतीये च रात्रिकृतोऽयनकृतो विशेषश्च नास्तीत्युक्तम्। ततश्चतुर्थे स्मृतौ धूममार्गस्याप्युक्तत्वात् तत्र च रात्रिदक्षिणायनादीनामुक्तत्वादर्चिरादिमार्गे च ज्योतिरुत्तरायणादीनामुक्तत्वान्मुच्यमानस्य कथं न विशेष इत्याशंक्य, स विशेषो योगिन एव, गती च ते स्मार्ते, अतो न ज्ञानिनः, तेन ज्ञानिन उत्क्रमणे सर्वोपि कालः समान इत्युक्तम्। एतस्य करणग्रामनिष्पत्तिस्तु यत्र प्रारब्धसमाप्तिस्तत्र भूतेष्वेव भविष्यतीति ज्ञेयम्। उपक्रमे तथैवोक्तत्वादिति ॥ ६ ॥

---

१. विहांतर्गतफलविचार त्रुटितेति प्रतिभाति। २. इतः परं सूत्रत्रयं भिन्नाधिकरणत्वेन श्रीगोपेश्वरा इच्छंति, वाक्यप्रकाशिकाकाराः श्रीकृष्णचंद्राश्च।

एवमस्मिन् पादे पुष्टिमर्यादामार्गीययोर्म्रियमाणावस्था विचारिता ॥

इति श्रीवल्लभाचार्यचरणदासस्य श्रीपीतांबरात्मजपुरुषोत्तमस्य कृतौ
वेदान्ताधिकरणमालायां चतुर्थाध्यायस्य द्वितीयः पादः ॥

---

अथ तृतीयपादे क्रममुक्त्यधिकारिणो ब्रह्मविदोर्चिरादिमार्गेण गच्छतो व्यवस्थावसर-प्राप्तोच्यते ।

तत्र प्रथमे चतुःसूत्रे अर्चिरादीत्यधिकरणे ज्ञानमार्गीयस्य भक्तस्य चेत्युभयोरर्चिरादिमार्गेण गमनम्, उत सद्योमुक्तिरितिसंशये, यथा ज्ञानिनो नियमाभावस्तथा भक्तस्यापीति पूर्वपक्षे, पंचाग्निविद्यायां ज्ञानमार्गीयाणामेवोपक्रांतत्वात्तेषामेव तेन मार्गेण गतिः, न तु भक्तस्यापीति निश्चीयते। ततस्त्रिभिः सूत्रैस्तन्मार्गपर्वनिर्धारः क्रियते । श्रुतिभेदेन पर्वभेदानामनेकधोक्तत्वात् मार्गभेदे प्राप्ते देवयानस्य मार्गस्य श्रुत्यंतरे यदैक्यमुक्तं तद्विरोधसंभवात् । पर्वसु निर्धारितेषु तु यस्य यत्पर्वभोगो भावी तं प्रति तत् पर्व, अन्यं प्रत्यन्यत् । यथा महामार्गे नानाग्रामेषु सत्स्वपि कस्यचित् कस्मिंश्चिद् ग्रामे अवांतरनिवासः, अन्यस्यान्यस्मिन् ग्रामे सः, तद्वत् । एवं पर्वभेदेप्युपपत्तौ ब्रह्मलोकगमनस्यैक एवार्चिरादिमार्गो देवयानाख्यः सिध्यतीति निर्णीतम् ॥ १ ॥

ततो द्वितीये त्रिसूत्रे आतिवाहिकाधिकरणे तेन मार्गेण कथं गच्छतीत्याकांक्षायामवसरगर्भेण प्रसंगेन गमनप्रकारो निर्धार्यते । तत्र पर्वभूतविद्युल्लोकपर्यंतं विद्यासामर्थ्येनैव गच्छति । ततो विद्युल्लोके अमानवः पुरुषो ब्रह्मलोकगमयिता तत्रागत्य तं विद्युल्लोकस्थं गंतारं ब्रह्मलोकं प्रापयतीति श्रावितम् । एवं सति येषां विद्युल्लोकभोगोस्ति ते वरुणादिलोकं गच्छंति । तत्र सः ब्रह्मलोकप्रापयिता आयाति न वेति संशये, तत्राप्यायाति, श्रुत्यंतरे प्रजापतिलोकानंतरमपि ब्रह्मलोकस्योक्तत्वात्, ब्रह्मलोकप्रापयितॄणां पुरुषाणां च बहुत्वात्, यस्य यल्लोकभोगेन प्रारब्धसमाप्तिस्तं तत एव लोकाद्ब्रह्म प्रापयंतीति प्रथमसूत्रे निर्णीतम् । तेषां ब्रह्मलोकप्रापका ये पुरुषास्ते आतिवाहिकशब्देनोच्यंत इत्यपि । ततो द्वितीये सूत्रे अपुनरावृत्तिश्रुत्या देवयानं पंथानं प्राप्तानां ब्रह्मवित्त्वात्तेषां सद्योमुक्तिरेवोचितेति तेषामवांतरलोकभोगजनिका कामनैव कुतः । किंच, 'यत्कर्मभिर्यत्तपसे'ति भगवद्वाक्ये मर्यादाभक्तस्य या लोकांतरकामनोक्ता सापि कुतः । तेषां सद्योमुक्तेरेव प्रथमाधिकरणे निर्धारादित्याशंक्य, केषांचित् ज्ञानिनां मर्यादाभक्तानां व्यामोहितत्वात् सा । व्यामोहश्च लीलासिद्ध्यर्थं, येऽवांतरलोकाः कृतास्तत्पुष्टिसार्थकत्वाय भगवतैव क्रियते । अतो नानुपपत्तिरित्युक्तम् । ततस्तृतीयसूत्रे ये वरुणादिलोकं गतास्तेषां स्वत एव ब्रह्मप्राप्तिरस्तु । आतिवाहिकस्य विद्युल्लोकीयत्वश्रावणेन तेषु लोकेषु तदभावादित्याशंक्य, श्रुतावातिवाहिकस्य न विद्युल्लोकीयत्वमभिप्रेतम् । 'पुरुषोऽमानव एत्ये'ति श्रावणाद्ब्रह्मलोकीयत्वम् । वैद्युतत्वं तु तस्य विद्युल्लोकपर्यंतमागमनात् । अतो लोकांतरादपि ब्रह्मलोकप्राप्तावातिवाहिकापेक्षास्तीत्युक्तम् । किंच, वाजसनेयके 'ब्रह्मलोकान् गमयती'ति श्रावितम् । छांदोग्ये तु 'ब्रह्म गमयती'ति श्रावितम् । तेन मर्यादामार्गीयं भक्तं वैकुंठलोकान् गमयति । ज्ञानमार्गीयं त्वक्षरब्रह्म गमयतीत्यपि तत्र निर्णीतम् । एवमेतेन गमनप्रकारो निर्णीतः ॥२॥

ततस्तृतीये अष्टसूत्रे **कार्यं बादरिरित्यधिकरणे** पूर्वसूत्राधिकरणश्रुत्युक्तस्य प्राप्तव्यस्य ब्रह्मणः किमविकृतब्रह्मत्वम्, उत कार्यब्रह्मलोकत्वमिति संशये, प्रथमं पंचसूत्रैर्बादरिमतमुक्तम्, तत्राधिकृतस्य परब्रह्मणो व्यापकत्वादत्रोक्तं गमनं न संगच्छते तस्मात्। किंच, श्रुत्यंतरे 'ब्रह्मलोका'-निति 'तेषु वसंती'ति च बहुत्वेन वासाधिकरणत्वेन च विशेषितत्वादपि तथा। तत्र ब्रह्मत्वव्यपदेशस्तु ब्रह्मसामीप्यात्। कल्पसमाप्तौ कार्यब्रह्मलोकस्य नाशे चतुर्मुखेन ब्रह्मणा सह तस्यापि चतुर्मुखवत् परब्रह्मप्राप्तेः श्रुतौ स्मृतौ चाभिधानादपि प्राप्यब्रह्मलोकोऽपर एव, न तु परब्रह्मेति पूर्वपक्षत्वेनोक्तम्। ततस्त्रिभिः सूत्रैर्जैमिनिमतं सिद्धांतत्वेनोक्तम्। तत्र प्रथमसूत्रे ब्रह्मशब्दस्य बृहत्त्वादिगुणविशिष्टत्वेन परस्मिन्नेव मुख्यवृत्तत्वात् गौण्याऽपरब्रह्मांगीकारो न युक्त इत्युक्तम्। ततो द्वितीये कौषीतकिश्रुतौ प्रजापतिलोकाद्ब्रह्मलोकस्य पार्थक्येनोक्तत्वात् छांदोग्ये अर्चिरादिमार्गप्राप्यत्वेन समाप्तौ 'ब्रह्म गमयती'त्युक्तत्वात् प्रजापतिलोकादन्यस्य कार्यब्रह्मलोकस्य कुत्राप्यश्रवणाद्गमनस्य प्रारब्धहेतुकत्वेन विलंब्यप्राप्तेः संभवाच्च न गमनादिश्रुतिस्मृतिविरोध इत्युक्तम्। ततस्तृतीये 'ब्रह्मविदाप्नोति पर'मिति श्रुतौ परप्राप्तिर्या उक्ता सैवाग्रिमर्चा विव्रीयते। तस्यां च ब्रह्मणा सह सर्वकामभोगलक्षणा या प्रतिपत्तिरुच्यते, सा परेणैव सह। कुत्रापि श्रुतौ कार्यरूपे प्रतिपत्तेरनभिप्रेतत्वात्। अतो ब्रह्मशब्देन परब्रह्मैवोच्यत इति सिद्धांतितम्। एवमष्टभिः सूत्रैः गंतव्यब्रह्मस्वरूपं प्रसंगान्निरूपितम्॥ ३॥

ततश्चतुर्थे एकसूत्रे **अप्रतीकालंबनाधिकरणे** पूर्वोक्तप्रकारेणातिवाहिकप्रापिता ब्रह्मप्राप्तिः किं सर्वेषामुपासकानाम्, उत केषांचिदेवेति संशये, अप्रतीकालंबनानेवातिवाहको नयतीति निश्चीयते। तत्र प्रतीकोपासका द्विधा। केचिदतस्मिंस्तत्त्वेनोपासकाः, अन्यं तु तदंगेषु तत्त्वेनोपासकाः। तत्राद्यानामुपासनैव व्यंगा। 'योऽन्यथा संतमात्मान'मिति वाक्योक्तदोषप्रसंगात्। द्वितीयानां तूपासनाव्यंगत्वाभावेपि 'यावन्मनसो गतं तत्रास्य कामचारो भवती'त्यादिश्रावणेन तत्क्रतुन्यायतस्तत्रैव पर्यवसानेन तेषां ब्रह्मप्राप्तेरनभिप्रेतत्वात्। पंचाग्निविद्यायास्तु अंगोपासनात्वेन प्रतीकत्वेपि वाचनिकत्वात् तेषां नयनम्। तस्मात् ये परब्रह्मोपासकास्तानेव नयतीति ज्ञानमार्गीया व्यवस्था। भक्तिमार्गीयस्तु निष्कामांगोपासनकर्ता भक्तः सन् भक्तिबलादेवातिवाहिकं विनैव स्वयं गच्छतीति तत्क्रतुश्चेति सूत्रशेषेण निश्चीयत इत्युक्तम्। एवमत्र चतुर्भिरधिकरणैः सप्रकारा गच्छद्ब्रह्मविद्व्यवस्थोक्ता। संगतिस्तत्रावसर एव॥ ४॥

ततः पंचमे एकसूत्रे **विशेषं च दर्शयतीत्यधिकरणे** भक्तिमार्गीयाणां ज्ञानमार्गीयाणां चाविशेषेणैव ब्रह्मप्राप्तिः, उत गमने विशेषात् फलप्राप्तावपि कश्चिद्विशेषोस्तीति संदेहे, 'ब्रह्मविदाप्नोति पर'मिति यजुर्व्याख्यानरूपायां 'सत्यं ज्ञान'मित्यस्यामृचि ज्ञानमार्गीयस्य अक्षरप्राप्तिरेव, भक्तिमार्गीयस्य तु 'यमेवैष वृणुते' इति श्रुत्युक्तवरणेन भक्त्या हृदि अक्षरब्रह्मप्रादुर्भावात्तत्र स्थितेन पुरुषोत्तमेन सह भोग उच्यते। तत्र भक्तिमार्गः पुष्टिमर्यादाकेवलपुष्टिभेदेन द्विविधः। तत्राद्यस्य यथाधिकारं पुरुषोत्तमानुभवरूपो भोगः। द्वितीयस्य तु यथाधिकारं ब्रह्मणा सह सर्वकामाशनरूप इति विशेषं श्रुतिर्दर्शयति। तस्माद् ब्रह्मप्राप्तावस्ति तयोर्विशेष इति प्रसंगगर्भया पूर्वोक्तसंगत्यैव निर्णीतम्॥ ५॥

**इति श्रीवल्लभाचार्यचरणदासस्य श्रीपीतांबरात्मजपुरुषोत्तमस्य कृतौ वेदान्ताधिकरणमालायां चतुर्थाध्यायस्य तृतीयः पादः।**

ततश्चतुर्थे पादे पंचभिरधिकरणैः प्राप्तफलस्य ब्रह्मविदो व्यवस्था वक्तव्या । तत्र ब्रह्मविदो भक्तिज्ञानमार्गभेदेन द्विविधाः । भक्तिमार्गीया अपि मर्यादापुष्टिकेवलपुष्टिभेदेन द्विविधाः । अवांतरभेदास्त्वनेके । तत्र ज्ञानमार्गीयाः पुष्टिमर्यादामार्गीयाश्च प्रायशः क्रमेणैव मुच्यंते । अतिकृपया तु केचित् सद्योऽपि । पुष्टिमार्गीयास्तु सद्य एव । एवमेतेषु ब्रह्मवित्सु ज्ञानमार्गीया अक्षरोपासकत्वात्तत्रैव पर्यवसन्नाः सद्यः क्रमेण वा तमेव प्रविशंति । पुष्टिमर्यादामार्गीयास्तु सद्यः क्रमेण वा नित्यं ब्रह्मलोकं प्राप्नुवंति । तेषां लौकिक्यामेव गुहायामक्षरम् । तत्र स्थितं पुरुषोत्तमं चानुभूय पुरुषोत्तमस्वरूपे प्रविशंतीत्येतावत्पूर्वपादांते सिद्धम् । ये पुनः क्रमेण नित्यं भगवल्लोकं प्राप्नुवंति, ते तत्रैव भगवंतं भिन्नमीश्वरत्वेनानुभवंतो यथाधिकारं सेवौपयिकदेहं प्राप्नुवंतीत्यर्थात् सिध्यति । तदपि तृतीयस्कंधे 'अथो विभूतिं मम मायाविनस्ता'मिति कपिलदेववाक्यादवसीयते ।

अतःपरं पुष्टिमार्गीयस्य प्राप्तफलस्य 'सोऽश्नुते सर्वान् कामान्' इति श्रुत्युक्ता व्यवस्थावशिष्यते । सा विशेषदर्शनसूत्रे संक्षेपेण सिद्धास्मिन्पादे प्रपंच्यते ।

ततः **संपद्याविर्भाव इति चतुःसूत्रे प्रथमाधिकरणे प्रथमसूत्रे** भगवत्स्वरूपे लीनस्य पुष्टिमार्गीयस्य स्वलीलानुभावनार्थं भगवता बहिराविर्भावः क्रियते, अनुगृहीतत्वात् । स चाविर्भावो भगवत्स्वरूपबलेनैव लीलाधिकरणे भवति, न तु प्रपंच इति श्रुतिबलादुक्तम् । ततो **द्वितीये** तस्यैवमाविर्भावेपि मुक्तत्वं नापैतीत्युक्तम् । ततस्तृतीये एवं फलदातुः परमात्मत्वमेवेत्युक्तम् । ततश्चतुर्थे 'सत्यं ज्ञान'मित्यस्या ऋचः 'ब्रह्मविदाप्नोती'त्यनेनैकवाक्यत्वं व्याख्यानव्याख्येयभावादस्ति, तस्मादयमेवार्थ इति निर्धारितम् ॥

ततो **द्वितीये अष्टसूत्रे ब्राह्मेणेत्यधिकरणे** येन देहेनायं जीवो लीलानुभवं करोति तादृशो देह उपोद्घातेनावसरेण वा विचारितः । तत्र **प्रथमसूत्रे** सच्चिदानंदात्मकेनैव देहेन ब्रह्मणा सह भोगान् भुंक्त इति स देहस्तादृशो ब्रह्मणा संपादित इति साधितम् । तत्प्रकरणे ब्रह्मात्मकानामेवान्नमयादिविभूतीनामुपन्यासादिति जैमिनिमतकथनमुखेन तत्संपत्तिश्च प्रदर्शिता । ततो **द्वितीयसूत्रे** प्रज्ञानघनश्रुत्या केवलज्ञानात्मको ब्रह्मणो विग्रहो बोध्यते । अतस्तादृशेन सह भोगकर्त्रा ज्ञानात्मकेनैव भवितव्यम् । नचैवमानंदानुभवेन सर्वकामाशनबाधः शंकनीयः । भगवतः पूर्णानंदत्वात् तत्संबंधेनैवानंदानुभवः सिद्धः । तस्माद्विग्रहं विनैव केवलस्वरूपेण भुंक्त इत्यौडुलोमिमतमुक्तम् । ततस्तृतीये सूत्रे 'सत्यं ज्ञान'मित्यस्यामृचि गुहाया उक्तत्वात् तस्याश्च विग्रह एव संभवात् श्रुतौ विग्रहत्वेनैवोपन्यासः । ते च विग्रहा भगवद्धाम्नि पूर्वमेव वर्तंते भगवद्धर्मरूपाः । तेषु कस्मिंश्चिदयं चिन्मात्र एवाविश्याभिमानं कृत्वा भगवदिच्छानुरूपलीलात्मकान् भोगान् भुंक्ते । तस्मान्न चिन्मात्रत्वस्य नित्यविग्रहवत्त्वस्य च विरोध इति मतद्वयं संगृह्य तादृशविग्रहेणैव भुंक्त इति स्वमतमुक्तम् । ततश्चतुर्थे सूत्रे तादृशदेहप्राप्तौ भक्ते भगवदनुग्रह एव हेतुरित्युक्तम् । तेन तादृशो भोगो न सर्वेषाम्, किंत्वत्यंतभगवदनुगृहीतानामेवेति वरणश्रुत्या सिध्यति । ततः **पंचमसूत्रे** अतो हेतोः भगवाननन्याधिपतिः । अनन्याश्च त एव ये साधनत्वेन (फलत्वेन) च भगवंतमेव जानंति । तस्मात्तदर्थमेवं भगवतः संकल्प इत्युक्तम् । तेन तदेकतानतया तदाश्रयतया च ते सर्वदा तिष्ठंतीति सिध्यति । ततः **षष्ठे सूत्रे** मुक्तस्य देहांगीकारप्रतिकूलं बादरिमतमाह । 'यत्र हि द्वैतमिव भवती'त्यादिश्रुतिरमुक्तिदशायां द्वैतदर्शनमुक्त्वा 'यत्र त्वस्य सर्वमात्मैवाभू'दित्यादिना मुक्तस्य द्वैतदर्शनं

निषेधति। तथा सति द्वितीयदर्शनाभावे कामभोगवार्तैव दूरेति तदाक्षेप्यो देहोपि दूरतरः। एतन्मते 'ब्रह्मविदाप्नोति पर'मित्यादिश्रुतिः पूर्वकक्षाविश्रांता। ततः सप्तमे बादरिविरुद्धं जैमिनिमतमाह। जैमिनिस्तु मुक्तस्य देहसत्तां मन्यते। 'ब्रह्मविदाप्नोती'ति श्रुतिः पूर्वकक्षाविश्रांतेत्यत्र मानाभावान्न बादरिमतं साधीयः। अनेन श्रुतिविरोधापत्तेः। श्रुतौ हि 'ब्रह्मविदाप्नोती'त्यत्र ज्ञानस्य तत्प्राप्तिसाधनत्वमुच्यते, 'नायमात्मे'त्यत्र वरणैकप्राप्यत्वम्। अतः साधनबोधकश्रुत्योः परस्परविरोधः। 'सोश्नुत' इत्यादिना परप्राप्तिरूपन्यस्यते। 'ब्रह्मैव सन् ब्रह्माप्येती'त्यत्र ब्रह्मणि जीवस्य लय उच्यते। अतः फलबोधकश्रुत्योर्विरोधः। एवं विरोधे सति तदभावाय गतिरवश्यं कल्पनीया। तत्र पुष्टिमर्यादाभ्यां मार्गभेदस्य सिद्धत्वात् तत्तन्मार्गीयस्य तत्तदेव फलं परममिति व्यवस्थितविकल्प एव ज्यायानिति नैकतरादरणं युक्तमिति। ततोष्टमे भगवान् व्यासः स्वसिद्धांतमाह। लोके हि शरीरं भूतजन्यं भोगायतनं च दृष्टम्। मुक्तस्य तु शरीरतदभावावाक्षेपलभ्यौ न निवारयितुं शक्यौ। अतः शरीरमेव तादृशं कल्पनीयं येन श्रुत्यविरोधः। तत्र भूमविद्याया'मात्मतः प्राण' इत्युपक्रम्य 'आत्मत एवेदं सर्व'मित्यंतेन भगवत एव सकाशाद्भोगोपयोगिसर्वसामग्रीश्रावणान्मुक्तस्य शरीरं न भूतजन्यम्, तस्मादशरीरम्। तत्रैव 'आत्मरतिरात्मक्रीड आत्ममिथुन आत्मानंद' इति श्रावणात्तच्छरीरं भोगायतनम्। तस्माच्छरीरमपि। एवमुभयविधत्व आस्थिते श्रुतीनां न कश्चिद्विरोधः॥

ततस्तृतीये द्विसूत्रे तत्त्वभावाधिकरणे गुणोपसंहारपादोक्तं निर्दोषपूर्णगुणं भगवत्स्वरूपमेव फलमिति विचारितम्। तत्र पूर्वसूत्रे दोषरूपाणामज्ञत्वादीनां भगवति या प्रतीतिः, सा भ्रांता, स्वप्नवदर्थाभावेपि प्रतीयते। तस्माद् ब्रह्म निर्दोषमित्युक्तम्। ततो द्वितीये सूत्रे याः पौगंडादयोवस्थाः, ये च गुणास्ते सर्वे संत एव मायापसारणाद्भक्तानां प्रतीयंते। तस्माद् ब्रह्मानंतगुणपूर्णमवतारेपीत्युक्तम्। तथा चावसर एव संगतिरित्यर्थः॥ ३॥

ततश्चतुर्थे द्विसूत्रे प्रदीपवदित्यधिकरणे फलानुभवोपकरणं प्रकृतत्वाद्विचार्यते। पूर्वाधिकरणयोः फलप्राप्त्युपकरणस्य फलस्वरूपस्य च विचारितत्वात्। अतोवसरोत्र संगतिः। तत्र प्रथमसूत्रे मुक्तस्य भगवत्कृपयाभिव्यक्ताभ्यां जैवज्ञानक्रियाभ्यां योगेपि न ताभ्यां भगवता सह कामभोगकरणसमर्थो भवति, किंतु यथा प्राचीनः प्रकृष्टो दीपः स्नेहयुक्तायामर्वाचीनायां वर्त्यां प्रविष्टस्तां समानकार्यक्षमां करोति, तथा भगवानपि स्वदत्ते मुक्तदेहे जीवेन सह प्रविष्टस्तं देहं स्वभोगरूपकार्यक्षमं करोति। यतो 'भर्ता स'न्निति भर्तृसूक्तारंभमंत्रे भगवतः क्रीडार्थं बहुधा आवेश उक्तः। तेनैवं ज्ञायते क्रीडोपयोगिभगवदावेश एव फलानुभवोपकरणमिति। ततो द्वितीयसूत्रे अस्थूलादिश्रुतेः सर्वकामभोगश्रुतेश्च यो विरोधः स सुषुप्तिमोक्षभेदेन भगवदाविर्भावप्रकारभेदात् परिहृतः॥

ततः पंचमे षट्सूत्रे जगद्व्यापाराधिकरणे भोगप्रकारो विचारितः। तत्र प्रथमसूत्रे 'सोश्नुते सर्वान् कामा'निति श्रुतिर्मुक्तिप्रकरणस्था। तस्मात्तत्र न जगत्संबंधः। किंच, भगवल्लीला कालमायाद्यतीता। तेन प्राकृतं जगत् ततो दूरतरमिति न तत्संबंधः। अतो लौकिकव्यापाररहितमेव मुक्तस्य भोगकरणमित्युक्तम्। ततो द्वितीयसूत्रे 'सर्वं हि पश्यः पश्यती'तिश्रुत्युक्तप्रत्यक्षोपदेशेन तस्य जगद्व्यापारसाहित्यमाशंक्य, श्रुतौ सर्वपदेन न जगदुच्यते, किंतु लीलास्थाः पदार्था एवोच्यंते। तेषामेव दर्शनम्। अतो न श्रुतिविरोधः। किंच, पूर्वोक्तश्रुत्यनंतरं 'स एकधा भवती'ति भक्तस्य नानारूपबोधिकाश्रुतिः पठ्यते। तेन नानारूपैर्नानालीलां भगवदनुभावितामनुभवतीति न

लीलानामनित्यत्वम्, नापि काचिदन्यानुपपत्तिरित्युक्तम् । ततस्तृतीये सूत्रे 'आयास' इत्यागमनभविष्यत्वबोधकभगवद्वाक्याल्लीलानां भक्तरूपाणां चानित्यत्वमाशंक्य, भगवल्लीला प्राकृतविलक्षणा भगवदिच्छयैवोपपद्यमाना न कुतर्कैरन्यथा भाव्या, किंतु श्रुत्या नित्यत्वेनोक्तत्वादलौकिकानुसरणमेव कर्तव्यमित्युक्तम् । ततश्चतुर्थसूत्रे अस्मिन् सूत्रे कुतर्केणान्यथाभावनं न कर्तव्यमिति यदुक्तं तदेव श्रुतिप्रत्यक्षाभ्यां साधितम् । ततः पंचमसूत्रे जीवस्य भोगमात्र एव भगवत्साम्यम्, न तु सर्वथेति 'न तत्समश्चाभ्यधिकश्च दृश्यते' इतिश्रुतेर्न विरोध इत्युक्तम् । एवमत्र पंचसूत्र्या भगवतः परमफलत्वमर्थादुक्तं भवति । ततः षष्ठे ईदृशं परमफलं प्राप्य भक्तानां ज्ञानिनां चावृत्तिर्नास्ति । तत्र प्रमाणं च शब्दः श्रुतिरूपः स्मृतिरूपश्चेत्युक्तम् । एवं षड्भिः सूत्रैर्फलभोगप्रकारो विचारितः ॥ ५ ॥

वेदांतीयन्यायमालामणुभाष्यानुसारिणीम् । सौकर्यायार्थबोधस्य चकार पुरुषोत्तमः ॥ १ ॥

**इति श्रीवल्लभाचार्यचरणदासस्य श्रीपीतांबरात्मजपुरुषोत्तमस्य कृतौ वेदान्ताधिकरणमालायां चतुर्थाध्यायस्य चतुर्थः पादः ।**

**चतुर्थाध्यायः समाप्तः ॥**

---

श्रीकृष्णाय नमः।
श्रीगोपीजनवल्लभाय नमः।
श्रीमदाचार्यचरणकमलेभ्यो नमः।

# श्रीमद्ब्रह्मसूत्राणुभाष्यम्।



## भाष्यप्रकाश-रश्मि-परिबृंहितम्।

## अथ प्रथमोऽध्यायः।

### चतुर्थः पादः।

**आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥ (१।४।१)**

एवं सर्वेषां वेदान्तानां ब्रह्मपरत्वे निर्णीते, केचिद् वेदार्थाऽज्ञानात् कचिद् वेदभागे कापिलमतानुसारिपददर्शनेन तस्यापि वेदमूलकत्वं वदन्ति। तन्निराकर-

भाष्यप्रकाशः।

**आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥**
अतीतेषु पादेषु प्रथमेऽतिव्याप्तिजनकशब्दकृतसंदेहवारणाय कार्यनिरूपकाणि वाक्यानि विचार्य, द्वितीयतृतीययोश्च यथायथं जीवजडरूपार्थकृततत्संदेहवारणायान्तर्याम्युपास्यरूपनिरूपकाणि च वाक्यानि विचार्य सर्वेषां वेदान्तानां साक्षात् परंपरया च ब्रह्मणि समन्वयः प्रतिपादितः। स तदा दृढीभवति यदा श्रौतत्वेनाभिमन्यमानस्य मतान्तरस्य श्रौतता निराक्रियते। अतस्तदर्थं चतुर्थे पादे जीवजडसमुदायात्मकार्थनिरूपकतया मतान्तरश्रौतताभ्रमजनकानि प्रकीर्णानि वाक्यानि विचार्यन्त इत्युपोद्घातबोधनाय पूर्वपादत्रयसिद्धमर्थमनुवदन्त एतत्पादार्थमाहुः एवमित्यादि। तथा च तन्निराकरणं प्रयोजनं, तादृशवाक्यविचारश्चार्थ इत्यर्थः। नन्वदृश्यत्वाद्य-

रश्मिः।

**आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥**
परंपरयेति जीवमुख्यप्राणलिङ्गादित्यत्र जीवमुख्यप्राणप्रतिपादकवेदान्तानां परंपरया समन्वय। उपोद्घात इति। तथाच प्रकृतः स च वेदान्तानां समन्वयः तत्सिद्ध्यर्थां चिन्तां मतान्तरनिराकरणचिन्तामुपोद्घातं बुधा विदुरिति। ननु सांख्यमतनिराकरणमाकस्मिकमिति चेन्न, षट्सु शास्त्रेषु वेदवेदान्तयोरङ्गाङ्गिभावः परस्परं, स आरम्भ एव विचारितः। अधुना तृतीयशास्त्रस्य विचारः प्राप्तावसरः क्रियत इति योगः प्रत्युक्त एव। द्वितीयेध्याये पञ्चरात्रविचारः पाशुपतमतदूषणं 'येप्यन्यदेवता भक्ताः' इत्यादिना गीतायां स्पष्टमेव। नास्तिकादिमतानि दूष्यत्वेन पुराणप्रसिद्धानि द्वितीये द्वितीयपादे प्रतिवक्तव्यानीति ज्ञेयम्। तादृशेति प्रकीर्णकवाक्यविचारः प्रकीर्णकत्वं कापिलमतश्रौतताभ्रमजनकत्वं कचिद्वेदभागे कापिलमतेत्यादिभाष्यात्। समन्वयानुकूलः मतान्तरश्रौतताभ्रमजनकवाक्यविचारः इत्यत्र विचारपदं तादृशसमन्वये लाक्षणिकं वा। समन्वयस्त्वध्यायार्थः।

णाय चतुर्थः पाद आरभ्यते। तत्र, ईक्षतेर्नाशब्दमिति सांख्यमतमशब्दत्वादिति निवारितम्। वेदेन प्रतिपादितमिति तत्राशङ्कते। आनुमानिकमप्येकेषाम्।

एकेषां शाखिनां शाखासु सांख्यपरिकल्पितप्रकृत्यादि श्रूयते।

'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः॥

भाष्यप्रकाशः।

धिकरणे एतादृशमपि वाक्यं विचारितमेवेति, किमनेन विचारेणेत्याशङ्कां समादधानाः सूत्रांश-मवतारयन्ति तत्र ईक्षतेरित्यादि। तथाच यद्यपि तद्वाक्यं विचारितं, तथापि तन्मतस्य सर्वथा अश्रौतत्वमेवेति नोपपादितमतो विचार इत्यर्थः। एतेनास्य पादस्य, ईक्षतिसमन्वयसूत्रप्रपञ्च-रूपत्वं बोधितम्। नन्वत्र प्रकृतिनिराकरणमेवास्तु। मतस्य श्रौततानिराकरणे किं गमकमित्या, काङ्क्षायामानुमानिकपदमेव गमकमित्याशयेन व्याकुर्वन्ति एकेषामित्यादि। तथा च पूर्वग्रन्थे-'कामाच्च नानुमानापेक्षा,' 'नानुमानमतच्छब्दात्' इत्यादौ केवलानुमानपदादत्र च संबन्धितद्धि-तान्तानुमानिकपदात् सांख्यप्रवचनीये, 'संघातपरार्थत्वात् पुरुषस्य' इति सूत्रेऽनुमानेन प्रकृतिसं-बन्धित्वेन सिद्धः पुरुषोऽपि संग्राह्यत्वेन गम्यते। तयोश्च निराकरणे तन्मतमेव निराकृतं भवतीति सौत्रं पदमेव गमकमित्यर्थः। केषां शाखायामित्याकाङ्क्षायां विषयवाक्यमुदाहरन्ति इन्द्रियेभ्य

रश्मिः।

एतादृशमिति 'अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रम्' इत्यादिवाक्यं मायाप्रकृत्यविद्यावादानां श्रौतताभ्रमजनकम्। अवतारयन्तीति इदमुपलक्षणं तन्मतं पूर्वपक्षे निक्षेप्तुं शंकराचार्यमतेनावतारयन्ति स्म विचारितमिति। नन्वीक्षत्यधिकरणे तु शब्दा-प्रतिपाद्यं न भवति ईक्षतेः श्रावणादित्युक्तं न प्रकृतिर्निवारिता शंकरभाष्ये तु निवारितेति चेन्न। प्रकृतिनिराकरणं सूचितार्थत्वेनाङ्गीकृत्य विचारितप्रायमित्यर्थः। नोपपादितमिति सूचितार्थपक्षे। एतेनेति सूचितार्थाङ्गीकारेण 'सर्वेषामेव शब्दानां व्यञ्जकत्वमपीष्यते' इति। बोधितमिति व्यञ्जनया बोधितं सूचितमिति यावत्। तथा चायं भाष्यार्थः। तत्रेति शांकरमतेऽस्माकं सूचितार्थपक्षे। इतीति इत्येवं तयोः पक्षयोराशङ्कत इत्यर्थः। ननु शांकरमतपूर्वपक्षस्य पूर्वपक्षकरणे किं फलमिति चेन्न सिद्धान्तस्य पूर्वपक्षतुल्यत्वात्। तथा च शांकरभाष्यमेतत्सूत्रसमाप्तौ। तदेवं पूर्वापरालोचनायां नास्त्यत्र परपरिकल्पितस्य प्रधानस्यावकाश इति। परपरिकल्पितस्येति प्रधानविशेषणान्मायाङ्गीकार-ध्वननात्। पूर्वग्रन्थ इति आनन्दमयाधिकरणे द्युभ्वाद्यायतनाधिकरणे च। संबन्धीति अनुमानेन संबद्धत इत्यानुमानिकं 'शेषे' इति ठक्। इति सूत्रे प्रथमाध्यायस्थे। अनुमानेनेति। ननु आनुमानिकेनेति वक्तव्ये अनुमानपदं कुतः इति चेन्न। अनुमानेन प्रकृत्या सिद्धः पुरुषः संग्राह्यत्वेन काठके गम्यते। प्रकृतिसंबन्धित्वेन संघातपरार्थत्वेन सिद्धः पुरुषः संग्राह्यत्वेन गम्यते इत्यपि पदादर्थात्। तथा च सूत्राणि 'सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः प्रकृतेर्महान् महतोहं-कारात्पञ्चतन्मात्राणि उभयमिन्द्रियं स्थूलभूतानि पुरुष इति पञ्चविंशतिर्गुणाः' 'स्थूलात्पञ्चतन्मात्रस्य' 'बाह्याभ्यन्तराभ्यां तैरहंकारस्य' 'तेनान्तःकरणस्य' 'ततः प्रकृतेः' 'संघातपरार्थत्वात्पुरुषस्य' तयो-रिति प्रकृतिपुरुषयोः। इन्द्रियेभ्य इत्यादीति तथा च काठकपदाद्यजुर्वेदे चरकानाम द्वादशविध

महतः परमव्यक्तमव्यक्तात् पुरुषः परः ।
पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः' ॥ इति काठके श्रूयते ।

तत्र बुद्धेरात्मा अहंकारः । ततो महान् महत्तत्त्वम् । ततोऽव्यक्तं प्रकृतिः । ततः पुरुष इति । न ह्यहंकारादयः पदार्था ब्रह्मवादे संभवन्ति । तस्मादेवंजातीयकेषु तन्मतपदार्थानां श्रवणान्मायाप्रकृत्यविद्यावादा अपि श्रौता इति चेन्न ।

---

भाष्यप्रकाशः ।

इत्यादि । कात्र प्रकृत्यादीत्यतो व्याकुर्वन्ति तत्र बुद्धेरित्यादि । बुद्धेरात्मा अहंकार इति । पर इत्यनुषज्यते । बुद्धेः सकाशादात्मा । 'सर्वात्मनोऽन्तःकरणं गिरित्रम्' इत्यन्तःकरणत्वेन सिद्धस्य गिरित्रस्य, 'चन्द्रो मनो यस्य दृगर्क आत्मा अहं समुद्रो जठरं भुजेन्द्रः' इति स्वस्मिन्नात्मपदप्रयोगादात्माऽहंकारः पर इत्यर्थः । शेषं स्फुटम् । तथा चैवमत्र सांख्यमतप्रत्यभिज्ञानात् तन्मतं श्रौतमिति तदाहुः नहीत्यादि । अपिशब्दार्थमाहुः तस्मादित्यादि । एवंजातीयकेष्विति । वक्ष्यमाणेष्वजादिवाक्येषु । मायाप्रकृत्यविद्यावादा इति । मायां तु प्रकृतिं विद्यात्, पञ्चाशद्भेदां पञ्चपर्वामधीम' इत्यादिवाक्येष्वभिमन्यमानाः । एवं पूर्वपक्षांशमनूद्य तद्दूषकं

रश्मिः ।

भवन्ति चरकाह्वरकाः कठाः प्राच्यकठाः कपिष्ठलकठाश्चारायणीयाः वार्तन्तव्याः श्वेताः अश्वतराः औपमन्यवः पांता ऐरिनेयाः मैत्रायणीयाश्चेति । श्वेताश्वतरोपनिषदिति प्रसिद्धश्चाकारो न वाचनीयः यथालिखितपाठक इति हि भाष्ये पाठकाधमेषु गणनात् । अतो द्वादश । यद्वा चरका इत्युद्देश्यं अग्रे द्वादशविधेयानि । तथा चायं भाष्यार्थः । एकेषां मुख्येभ्यः सामाथर्वशाखिभ्योऽन्येषां यजुर्वेदशाखिनां शाखासु चरकादिनाम्नीषु यद्वा एकेषां चरकाणां केवलानां शाखिनां शाखासु ह्वरकादिषु इति । कठशाखायामित्यर्थः । कात्रेति अत्र श्रुतिषु सांख्यसिद्धप्रकृत्यादि केति प्रश्नः । सांख्यसूत्राण्युक्तान्येव । आत्मपदस्याहंकारवाचकत्वं बुद्धेः परत्वं च व्युत्पादयन्ति बुद्धेरिति । सर्वात्मनः पुरुषस्य । इदं द्वितीयस्कन्धेस्ति । अन्तःकरणत्वेनेत्यस्याहंकारत्वेनेत्यर्थः । चन्द्रो मनः । इदमुत्तरार्धे त्रिषष्टितमेध्याये शिवस्तुतावस्ति । अहं श्रीशिवः अहंकारः । आत्मेत्यात्मपदमहंकारवाचकम् । बुद्धेः परत्वमीश्वरस्य स्पष्टम् ।

'यश्च मूढतमो लोके यश्च बुद्धेः परं गतः ।
तावुभौ सुखमेधेते क्लिश्यत्यन्तरितो जनः' ॥

इति । भुजा इन्द्रः । स्वस्मिन्निति श्रीकपर्दिनि अहंकारे तथाच गिरित्रस्याहंकारस्य चन्द्रो मन इत्याद्युक्तरीत्या वाचकं यदात्मपदं तस्य प्रयोगात् कस्मिन्नित्यतः स्वस्मिन्नहंकाररूपे श्रीशिवे इति फक्किकान्वयः । चैत्रस्य गुरुकुलमित्यस्येवैकदेशान्वयः । सांख्येति तदिदं सांख्यमतं श्रुताविति सांख्यमतप्रत्यभिज्ञानम् । ननु वैदिकशब्दानां भिन्नत्वात्कथं श्रौतमिति चेन्न परमत ऐक्यात् अपीति मायाविद्यासमुच्चये रूपम् । ननु मायावादः शांकराणां प्रकृतिवादो निरीश्वरसांख्यानां अविद्यावादः सैषाऽविद्या जगत्सर्वमिति श्रीनृसिंहतापिनीयश्रुतेः तापिनीयशाखिनामनिर्णयकर्तॄणामिति त्रयाणां भेद उक्तो भाष्ये तेषामैक्यं पूर्वपक्ष इति प्रमाणपूर्वकं तं पक्षमाहुः मायां त्विति । पञ्चपर्वाविद्या तासामभेदान्वयः आदिनाऽजादिवाक्यानि । श्रौता इति समस्ता अभेदान्वयान् नामधेयेन प्रयुक्ताः व्यस्ता । अभीति अभिमन्यन्ते ये तदात्मेभिमन्यमानाः 'लटः शतृशानचौ' 'भावे ह्रस्व' ।

शब्दसाम्यमात्रेण न तन्मतं सिद्ध्यति ।

'संदिग्धानां पदार्थानां पौर्वापर्येण निर्णयः ।
न तु संदिग्धवाक्येन सर्वव्याकुलतोचिता' ॥
अत्र हि पूर्वम् ।
'आत्मानं रथिनं विद्धि शरीरं रथमेव तु ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥
इन्द्रियाणि हयानाहुर्विषयाँस्तेषु गोचरान् ।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' ॥

तदनु चत्वारि वाक्यानि । 'यस्त्वविज्ञानवान्' इत्यादि । तदनु 'इन्द्रियेभ्यः

भाष्यप्रकाशः ।

हेतुमवतारयितुं निषेधं व्याकुर्वन्ति शब्देत्यादि । तन्मतमिति । अहंकारमहत्तत्त्वप्रकृतिपुरुषाणामुत्तरोत्तरं परत्वबोधकं सांख्यमतं कुतो न सिद्ध्यतीत्यतः कारिकया तद्धेतुमाहुः संदिग्धेत्यादि । पौर्वापर्येणेति पूर्वापरसंदर्भेण । संदिग्धा ह्यस्मिन् वाक्ये पदवाच्या अर्थाः । पदानि वाक्यावयवभूतानि, वाक्यं च महावाक्यस्य । अतो महावाक्यानुरोधेन तदर्थो निर्णयः । न तु संदिग्धपदघटितवाक्येनावयविभूतस्य महावाक्यस्य व्याकुलता युक्ता । तथा च तद्व्याकुलीभावादेतन्मतं न सिद्ध्यतीत्यर्थः । तदेतद् व्युत्पादयन्ति अत्र हीत्यादि । अत्रेति प्रकरणे । हिर्हेतौ । चत्वारीति । विज्ञानसारथिवाक्यस्य क्वचिदिन्द्रियेभ्यः परा इत्याद्यनन्तरं दर्शनाच्चत्वारि, विज्ञान-

रश्मिः ।

ननु 'कर्तरि कृत्' इति चेन्न पचादौ कर्तरि कृदित्यस्याप्रवृत्तिवदत्राप्यप्रवृत्तेरिति वैयाकरणभूषणसारे सिद्धान्तनिर्णय उक्तत्वात् । निषेधमिति सौत्रनकारार्थम् । मह्वेति अवयवभूतम् । व्याकुलतेति उक्तशरीररूपकविन्यस्तगृहीतिपरित्यागेन सूक्ष्मदर्शनपरित्यागेन च स्थूलदृष्ट्या शब्दपीडा युक्तेत्यर्थः । हिरिति । परा इतीति हेतोः इत्यग्रेन्वयः । चत्वारीति ।

'यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सदा ।
तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः' ॥
'यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा ।
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः' ॥
'यस्त्वविज्ञानवान् भवत्यमनस्कः सदाऽशुचिः ।
न स तत्पदमाप्नोति संसारं चाधिगच्छति' ॥
'यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः ।
स तु तत्पदमाप्नोति यस्माद्भूयो न जायते' ॥

इति चत्वारि । वदतीति सूत्रे व्यासो वदति । भाष्ये । पूर्वेति आत्मानं रथिनमित्यादिसंदर्भः । एवकारेण सांख्यमतव्यवच्छेदः । तमिति पूर्वसंदर्भार्थम् । प्रकृते । ननु प्रथमसुबोधिन्यां काव्यवद्रूपकनिरूपणे स्पष्टोर्थो भवति यद्यपि तथापि भागवते तथाकथनमनुचितं सर्ववेदसारोद्धारत्वात् । रूपकादिकं तु बुद्धिपरिकल्पितमिति रूपककरणं भाष्ये कुतः इति चेन्न ईश्वरवद्वेदोपि कर्तुमकर्तुमन्यथयितुं समर्थ इति ज्ञापनाय क्वचिद्रूपककरणात् 'अत एव च नित्यत्वम्' इति व्याससूत्रात्

पराः' इति । तत्र पूर्वसंबन्ध एवार्थ उचितस्तमाह शरीररूपकविन्यस्तगृहीतेः। शरीरेण रूप्यन्ते ये शरीरेन्द्रियादयस्ते विन्यस्ता यत्र रूपकभावेन रथादिषु तेषामेवात्र गृहीतिर्ग्रहणम् । अन्यथा प्रकृतहानाप्रकृतपरिग्रहापत्तिः ।

जीवप्रकरणं ह्येतन्मुक्त्युपायोऽस्य रूप्यते ।
योग्यं शरीरमारुह्य गच्छेदिति हरेः पदम् ॥

तत्र जीवस्य ब्रह्मप्राप्तौ मुख्यं साधनं शरीरम् । स रथः । सर्वसामग्रीसहिताऽपराधीनयानत्वात् । रथस्तु हयाधीनः । हयाश्च स्वबुद्ध्यधीनाः । सा च

---

भाष्यप्रकाशः ।

सारथिवाक्यार्थस्त्वग्रे कारिकया वक्तव्यः । एवं संदर्भे यत् सिद्धं तद्वक्तुं हेतुं वदतीत्याहुः तत्रेत्यादि । तत्रेति इन्द्रियेभ्य इति वाक्ये । विष्णुधर्मोत्तरे तृतीयकाण्डे । 'उपमानेन तुल्यत्वमुपमेयस्य रूपकम्' इति रूपकलक्षणाद् रूप्यते यत् तद्रूपमिति कर्मणि घञि कृते, 'इवे प्रतिकृतौ' इति कनि च कृते रूपकमित्यलंकारनाम सिद्ध्यतीत्यभिसंधाय हेतुं व्याकुर्वन्ति शरीरेणेत्यादि । स्वस्य स्वज्ञापकत्वेऽपि दोषाभावाच्छरीरेण रूप्यन्ते ये शरीरेन्द्रियादयस्ते यत्र

रश्मिः ।

यद्वेदं समाधानम् 'काव्यादीनामसत्यत्वान्नोपयोगः कथंचन' इत्यनुपयोगाद्धर्मवाचकलुप्तोपमा रूपकमत्र न काव्योक्तमिति तदाहुः विष्णुधर्मेति । उपमीयतेऽनेन करणे ल्युट् । उपमानम् । उपमातुमर्हमुपमेयम् 'हंसीव कृष्ण ते कीर्तिः स्वर्गङ्गामवगाहते' इत्यत्र हंसी उपमानं तद्वाचकं 'इव' पदम् । कीर्तिरुपमेयं उपमानेन तुल्यत्वं स्वर्गङ्गावगाहनं उपमानोपमेयसाधारणधर्मः इयं पूर्णोपमा 'कर्पूरन्ती दृशोर्मम' इति धर्मवाचकलुप्तोपमा कर्पूरमिवाचरन्तीत्यर्थे विहितस्य कर्पूरवदानन्दात्मकाचारार्थस्य क्विप इवशब्देन सह लोपात् धर्मलोपस्त्वैच्छिकः दृशोरानन्दात्मकतयो कर्पूरन्तीति तदुपादानस्यापि संभवात् तथा चोपमेयसंबन्धिरूपकमिति भावः । अत्र शरीरेन्द्रियादयः उपमेयाः रथादीन्युपमानानि । घञीति कर्मणि घञि दीर्घत्वम् । रूप रूपकरणे चुरादिरिति । यद्वा रुशब्दः रूयते स्तूयते रूपं खष्पशिल्पेति सूत्रेण पप्रत्ययो दीर्घश्च निपातितः । ननु भाष्ये स्वार्थे कप्रत्ययो वक्ष्यते अत्रेवार्थे कुत उच्यते तत्राहुः अलमिति । अत्र भाष्ये शरीरेण पदेन रूयन्तेऽस्य परोक्षवादः रूप्यन्ते शब्द्यन्ते शरीरेन्द्रियादयः । ननु विषयाः कथं शरीरेण शब्द्यन्ते सत्यम् । जीवप्रकरणे मोक्षे निरूपणीये विषयाणां बाधत्वात् । 'सर्वेषां बाधता ततः' इति सिद्धान्तरहस्यात् तथा चात्मपदशक्तिर्विषयेषु । शरीरेन्द्रियादयः इत्यत्रादिपदेनानिन्द्रियं मनो वा आत्मन उपलक्षकम् । यद्वा सर्वे सर्वार्थवाचका इति शरीरस्य सर्ववाचकत्वेन शरीरेन्द्रियात्मवाचकत्वं यद्यपि तथापि अन्यावाचकत्वं दोषः स्यात् तद्वारणायात्मोपनिषदा शरीरस्यात्मत्वेन ग्रहणमिति शरीरेण त्रिविधात्मनापदेन रूप्यन्ते शब्द्यन्ते शरीरादयः शरीरद्वयात्मानः रथादिष्विति भाष्यात् । यत्रेत्यस्यार्थमाहुः रूपकेति रूपपदस्थले स्वार्थे कप्रत्ययेन सूच्यतेऽयमर्थः । तेषामिति रथादीनाम् । एतावतो हेतोः श्रुतौ सूत्रेण सांख्यमतनिराकरणाय प्रयुक्तैर्न विशेषणादिकृत्यमतिदुरूहम् । प्रकृते । एतदाहुः स्वस्येति । स्वस्य शरीरपदस्य स्वेषां प्रतिपाद्यत्वेन स्वीयानामर्थानां शरीरेन्द्रियादीनां ज्ञापकत्वेऽवबोधकत्वे अपिरेवकारार्थे अवबोधकत्व एवपदजन्यपदार्थोपस्थितिरुक्ता । दोषः सर्वार्थवाचकत्वं तस्याभावात् । शरीरेण

प्रग्रहाधीना। स च सारथ्यधीनः। स च स्वबुद्ध्यधीनः। सा च मार्गाधीना। स

भाष्यप्रकाशः।

वाक्ये रथादिषु रूपकभावेन अलंकारबोधितप्रतिकृतिभावेन विन्यस्ताः स्थापितास्तेषां सर्वेषां रथादिप्रतिकृतिभूतानामेवात्र गृहीतिर्ग्रहणम्। अतः शरीररूपा रूपकविन्यस्ताः। शरीररूपकविन्यस्ताः। रूपकविन्यस्तानां व्यावर्तकं शरीररूपत्वमित्युपसर्जनत्वात् तस्य पूर्वनिपातः। शाकपार्थिवादेराकृतिगणत्वाद् रूपपदलोपश्च। अतः शरीररूपकविन्यस्तानां गृहीतिर्ग्रहणं शरीररूपकविन्यस्तगृहीतिस्तस्मादित्यर्थः। तथा च स्यात् सांख्यमतापत्तिर्महदहंकारादीनां पदार्थानां तत्त्वेन गृहीतिः स्यात् सा तु नास्ति। यतः शरीरेण ये रूप्यन्ते शरीरेन्द्रियादयस्ते विन्यस्ता यत्र

रश्मिः।

शरीरपदेन रूप्यन्ते रुयन्ते रुशब्दे परोक्षवादात्। शब्द्यन्ते शब्दव्यापारोभिधा तद्विषयीक्रियन्ते ये शरीरेन्द्रियादयः। ननु काव्यनिषेधेन रूपकस्य।

'विषय्यभेदताद्रूप्यरञ्जनं विषयस्य यत्।
रूपकं तु त्रिधाधिक्यन्यूनत्वानुभयोक्तिभिः॥
अयं हि धूर्जटिः साक्षाद्येन दग्धाः पुरः क्षणात्।
अयमास्ते विना शंभुस्तार्तीयीकं विलोचनम्॥
शंभुर्विश्वमवत्यद्य स्वीकृत्य समदृष्टिताम्।
अस्या मुखेन्दुना लब्धे नेत्रानन्दे किमिन्दुना॥
साध्वीयमपरा लक्ष्मीरसुधासागरोदिता।
अयं कलङ्किनश्चन्द्रान्मुखचन्द्रोतिरिच्यते'॥

विषय्युपमानभूतं पद्मादि विषयस्तु उपमेयं वर्णनीयं मुखादि। रूपकं द्विविधमभेदरूपकं ताद्रूप्यरूपकं च। अयं हीति सार्धेनाभेदरूपकाणि। अस्या मुखेन्दुनेति सार्धेन ताद्रूप्यरूपकाणि आधिक्यन्यूनत्वानुभयोक्त्युद्देशक्रमप्रातिलोम्येनोदाहृतानीत्येवंरूपस्य विवक्षां वारयितुमाहुः अलंकारेति अलंकारबोधितस्य सदृशभावेन धर्मवाचकलुप्तोपमात्वेन रूपकस्य विन्यस्ताः विशेषेण नितरामस्ताः प्रेरिताः स्थापिताः शरीरेन्द्रियादयः स्वाभेदसंबन्धेनान्यत्र गतिनिवृत्तियुक्ताः कृताः भवन्ति त इत्यन्वयः। एतेन तेषामिति भाष्यपदं व्याकृतम्। कीदृशामित्यत आहुः प्रतिकृतयः सदृशाः भूतानि शरीरेन्द्रियादीनि येषां तेषां रथादीनां तथा च रथादयश्च ते प्रतिकृतिभूता रथादिप्रतिकृतिभूतास्तेषां रथादिप्रतिकृतिभूतानां तेषामिति रथादीनाम्। समासमाहुः अत इति उक्तकारणात्। रूपकेति शरीरेन्द्रियादीनाम्। व्यावर्तकं विशेषणम्। ननु विशेषणं शरीररूपा इति न तु शरीररूपकत्वमितीति चेन्न कप्रत्ययेन स्वार्थिकेन शरीररूपा शरीररूपकाणीत्येतयोरेकार्थबोधकत्वेन विशेषाभावात्। इत्थं कप्रत्ययस्यालंकारनामत्वार्थी रूपकपदसूचितार्थनिबन्धनत्वात्। पूर्वेति 'उपसर्जनं पूर्वम्' इति पूर्वनिपातः सूत्रे व्यासपादैः कृतः। आकृतीति गणपाठे नास्ति काचित्कमाकृतिगणत्वम्। तत उपपदस्य रूपपदस्य लोपः। आकृतिगणत्वाभावे शरीररूपका विन्यस्ता यत्रेति भाष्यप्रोक्तो बहुव्रीहिः। तस्मादिति ननु तस्य इति वक्तव्ये तस्मादिति कुत इति चेन्न शरीररूपकविन्यस्तग्रहणादित्यर्थे तात्पर्यात्। गृहीतेर्ग्रहणादिति वक्ष्यन्ति तथा च सामान्ये नपुंसकमिति भावः।

च प्राप्याधीन इति । एवं ज्ञात्वा युक्तसामग्रीकस्तद्देशं प्राप्नोति । तत्रेन्द्रियाणामात्मा विषयाः ।

---

भाष्यप्रकाशः ।

वाक्ये रूपकभावेन रथादिषु, आत्मानं रथिनं विद्धीत्यादिना, तेषामेवात्र गृहीतेर्ग्रहणात् । यदि ह्येवं नोपगम्येत तदा प्रकृतहानादिदोषावापद्येताम् । किंचेदं हीति निश्चयेन जीवप्रकरणम् । अत्रास्य मुक्त्युपायो, योग्यं शरीरमारुह्य हरेः पदं गच्छेदित्येवं विज्ञानसारथिमत्त्रेण रूप्यते । न ह्येतत्त सांख्यमते संभवति । स्वरूपावस्थानातिरिक्तस्य भगवत्पदप्राप्तिरूपस्य मोक्षस्य तैरनङ्गीकरात् । अत इन्द्रियेभ्य इति वाक्ये अहंकारादितत्त्वरूपो नार्थः । किंतु वक्ष्यमाणप्रकारकः । तथाहि । तत्र मुक्त्युपायेषु बोधनीयेषु वक्तव्ये रूपके जीवः स्वतन्त्रत्वाद् रथी । जीवस्येत्यादिना विवृतं शरीरं रथः । तत्र हेतुः सर्वेत्यादि । सामग्री इन्द्रियादिरूपा । अपराधीनता तु स्वायत्ततया । तेन शरीरे रथरूपकम् । रथस्तु गमने हयाधीन इतीन्द्रियेषु हयरूपकम् । हयबुद्धिस्थानापन्नाऽत्रेन्द्रियदेवता देवताप्राधान्य एवेन्द्रियाणां भगवत्परत्वस्य, 'देवानां गुणलिङ्गानाम्' इत्यत्र तृतीयस्कन्धे सिद्धत्वात् । देवतासाहित्यस्यार्थतः प्राप्तत्वाच्च एवमग्रेऽपि बुद्धिस्थानापन्ना देवतैव । हयबुद्धिस्तु प्रग्रहाधीनेतीन्द्रियनियामकमनसि तद्रूपकम् । एवमेव बुद्धौ सारथिरूपकम् । सारथिबुद्धिर्मार्गाधीनेति विषयेषु गोचरपदेन मार्गरूपकम् । रथिस्वरूपबोधनायात्मेन्द्रियेत्यर्धश्लोकः । ततो, मार्गस्तु प्राप्याधीन इति तद्बोधनाय प्रापकसामग्री निगमनपूर्वका, यस्त्वविज्ञानवानित्यादयश्चत्वारः श्लोकाः । प्राप्यनिगमनाय पञ्चम इति बोधयितुम्, एवं ज्ञात्वेत्यादिना हयरूपकपर्यन्तग्रन्थस्य तात्पर्यकथनम् । इन्द्रियविषयेषु देशरूपकस्य तात्पर्यं वक्तुम्, 'इन्द्रियेभ्यः परा' इत्यादेस्तात्पर्यमाहुः तत्रेन्द्रियाणामित्यादि । आत्मेति 'घ्राणं च गन्ध' इति न्यायेन भगवदिन्द्रियरूपतया तदाधिदैविकत्वात् तेषां नियामकाः । श्रौतस्य परपदस्यायमर्थः । यद्यप्याकर्षकत्वान्नियामकत्वमुक्तं श्रीभागवते । 'इन्द्रियैर्विषयाकृष्टैरिति' । अनुभवश्च कामिनीकुचकुम्भादिदर्शने चक्षुराद्याकर्षस्य ।

रश्मिः ।

अन्यथेति भाष्यं विवृण्वन्ति स्म यदि हीति । कारिकार्थमाहुः किं चेति । योग्यमिति तत्तल्लीलायोग्यम् । मयूरादिरूपमपि । प्राप्तत्वाच्चेति एतेन भाष्ये एतदनुक्तावपि न क्षतिरिति द्योतितम् । पञ्चम इति ।

'विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः ।
सोध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' ॥ इति ।

भाष्येऽर्थपदार्थो विषयाः इत्युक्तम् । इन्द्रियाणामर्था विषया इति पाठे क्वचिदिन्द्रियाणामात्मा विषया इति पाठस्तमाहुः । प्रकृते । आत्मेति । घ्राणं च गन्ध इति अयं न्यायः द्वितीयस्कन्धे तु 'घ्राणोस्य गन्धो मुखमग्निरिद्धः' इति अस्यानन्तस्य गन्धो घ्राणग्राह्यो गुणो घ्राणेन्द्रियम् । तदाधीति इन्द्रियाधिदैविकत्वात् । तेषामिति इन्द्रियाणाम् । तथा च भाष्ये आत्माधिदैविकरूपा जसो ङा । आचार्येषु भेदबुद्धेः अपराधेषु गणनात् तद्भाष्यस्य वेदतुल्यत्वात् सविसर्गो नकारः पतितो वा तथा चेन्द्रियाणां परा आत्मानः आधिदैविकाः अर्था विषया इति भाष्यार्थः । अयमिति नियामकरूपः । ननु न परपदस्यायमर्थः किं तु विषयपदस्येत्याहुः यद्यपीति । न विषयपदस्यार्थं

ते च मनसा सम्यक्त्वेन भावितास्तथा भवन्ति। विरक्तेन्द्रियाणामतथात्वात्। बुद्धेरात्मा विज्ञानम्, तद् ब्रह्मविषयकं महद् भवति। ततः परमव्यक्तं, न प्रकटं, भगवत्कृपैव। सा तु भगवदधीना, न साधनान्तराधीना। स च भगवान् स्वाधीन इति। एवमेवार्थस्तस्योचितः। किंच, दर्शयति स्वयमेवेममर्थम्।

'एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते।
दृश्यते त्वग्र्या बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः'॥ इति।

भाष्यप्रकाशः।

तथापि नात्र तदभिप्रेतम्। मोक्षप्रकरणत्वादित्यभिप्रेत्याहुः ते चेत्यादि। तथाच मोक्षप्रकरणे यदिन्द्रियेभ्यः परत्वं विषयाणामुच्यते, तद् भगवदीयतया मनसा सम्यक्त्वेन भावितानामेव। यथा नवमस्कन्धादावम्बरीषादिचरिते, 'स वै मनः कृष्णपदारविन्दयोः' इत्यादिश्लोकत्रयोक्तानां तादृशाम्। न तु सामान्यानाम्। नापि ज्ञानीन्द्रियविषयविवक्षया। विरक्तेन्द्रियाणां विषयानाकृष्टत्वात्। अतः 'तस्यारविन्दनयनस्य' इत्यादिवद् यत्र भगवदभिप्रायः सा मोक्षप्रणाल्यत्र विवक्षिता, न तु शुष्कज्ञानप्रणाडीति बोधनाय तदुक्तिरित्यर्थः। एतेन अर्थेभ्यश्च परं मन इत्यपि व्याख्यातप्रायम्। मनसा सम्यक्त्वेन भावन एव तेषां तथात्वादिति। मनसस्तु परा बुद्धिरिति सारथिभावादेव स्पष्टम्। बुद्धेरात्मेत्यादिकं व्याकुर्वन्ति बुद्धेरात्मेत्यादि। विज्ञानमिति तत्कार्यभूतं विशिष्टज्ञानम्। तस्य बुद्धिनियामकत्वं तु ब्रह्मविषयकत्वेन महत्त्वादित्यर्थः।

रश्मिः।

इत्याहुः तथापीति। नात्रेति किं तु 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' इति श्रुत्युक्तआत्मेन्द्रियमनोयुक्तं भोक्ता विषयग्रहणेन सुखदुःखसाक्षात्कारवानित्याकर्षकत्वमभिप्रेतम्। ननु तद्वाक्यं हानोपादानबुद्धौ तु विशेष इत्युक्त्वा प्रस्थानरत्नाकरे व्याकृतम्। अत्र मोक्षप्रकरणे आत्मोपादानबुद्धौ विशेषापेक्षायां कुतो नाभिप्रेतमिति चेन्न विषयोपादानबुद्धौ[1] मनसा सम्यक्त्वेनाभावितत्वस्य मोक्षप्रकरणे प्रतिबन्धकत्वात्। ते च मनसा सम्यक्त्वेन भाविताः इति भाष्यात्। भावितानामिति गुरूपदेशादिना भगवदीयत्वादिना वा स्मृतानाम्। तादृशामिति क्रियाकलापं 'सर्वात्मभावं विदधन्महीमिमां तन्निष्ठविप्राभिहितः शशास ह' इति सर्वात्मभाववताम्। श्लोकत्रयार्थानुवादकोयं श्लोकः।

'एवं सदा कर्मकलापमात्मनः परेऽधियज्ञे भगवत्यधोक्षजे।
सर्वात्मभावं विदधन्महीमिमां तन्निष्ठविप्राभिहितः शशास ह'॥ इति।

तस्यारविन्देति तृतीयस्कन्धे सनकादिप्रसङ्गेस्ति। भगवदिति श्रुत्यभिप्रायः भगवत्पदस्य श्रुतिवाचकत्वं ब्रह्मपदवत्। तदुक्तं कृष्णोपनिषदि 'तस्मान्न भिन्ना एतास्ता आभिर्भिन्नो न वै विभुः' इति। अत्रेति आत्मानं रथिनमित्यादिश्रुतिषु। तदुक्तिरिति साधनोक्तिः। तेषामिति आधिदैविकानामर्थविषयाणाम्। तथात्वात् युक्तपदार्थत्वात्। एतेनैव विरक्तेन्द्रियाणामिति भाष्यमपि विवृतम्। अतथात्वात् अयुक्तपदार्थत्वात्। ननु शमदमाद्युपेतसूत्रे भक्तिमार्गीयस्य स्वतः क्षमाद्युक्तेः कुतो विरक्तेन्द्रियाणामतथात्वादिति भाष्यमिति चेन्न 'ततो भूय एव तमो ये संभूत्या९रताः' इति शारीरब्राह्मणात्। संभूत्यां विद्यायां पञ्चपर्वात्मिकायां वैराग्यादिरतौ सत्यां तमः प्रविशतीति कथनात्। महत्त्वादिति व्यापकधर्मस्य व्यापकत्वनियमात्। ननु ज्ञाने गुणे परिमाणं नास्ति गुणे गुणानङ्गीकारादिति चेन्न प्रकाशाश्रयन्यायेन ब्रह्माभेदपक्षेऽगुणे सत्त्वात्। एकं रूपं रसात्पृथगिति-

१. विषयोपादानबुद्धौ।

सूक्ष्मया उपनिषदनुसारिण्या बुद्ध्या । भगवज्ज्ञाने हि तत्प्राप्तिरिति । चकारात्, 'ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्' इति स्मृतिर्गृहीता । तस्मात्, साधनोपदेशान्न सांख्यमतमिह विवक्षितमिति ॥ १ ॥

भाष्यप्रकाशः ।

शेषं स्फुटम् । एवं हेतुं व्याख्याय दर्शनपदं व्याकुर्वन्ति किंचेत्यादि । इममिति पूर्वोक्तम् कथं दर्शयतीत्यत आहुः सूक्ष्मयेत्यादि । तथाच सूक्ष्मपदेन बुद्धेरुपनिषदनुसारित्वबोधनादुक्तरीत्या भक्तिप्रणाड्या प्राप्तिं दर्शयतीत्यर्थः । तेन श्रुतौ गम्यत इति गतिरिति प्राप्यत्वबोधनात्, स्मृतावपि, विशत इति पदेन तस्यैवार्थस्योपबृंहणादत्र प्राप्तिरूप एवार्थोऽभिप्रेतो दृश्यते, न तु रूपदर्शनरूपोऽतो नात्र सांख्यमतप्रत्यभिज्ञानमिति भावः ॥ १ ॥

रश्मिः ।

वद्वा । ब्रह्मगतपरिमाणस्य विज्ञाने भावात् ब्रह्मविषयकत्वमेव ज्ञाने वैशिष्ट्यम् । शेषमिति । ननु अव्यक्तपदस्य कृपायां शक्तिः कुत इति चेत्तत्राहुर्भाष्ये । नेति तथा च योग इति भावः । सत्त्वरजस्तमःसाम्यावस्थारूपा प्रकृतिः व्यक्ता स्वकार्यद्वारापि । ननु अव्यक्तोऽक्षर इति चेन्न पुरुषपदेनैव ग्रहणात् । पुरि शेते इति व्युत्पत्तेः । पूरक्षरः अस्फुटेप्यभिधेयवदिति विश्वः । तथा चाव्यक्तमिति सामान्ये नपुंसकम् । अव्यक्तमित्यत्राञ्विकारो वा अव्यक्ता आम् अङ्गीकारे । 'अव्यक्तं महदादिके' इति विश्वात् कृपायां वा । न चैवं मायावज्जगद्बीजेपि स्यादुपनिषद्भाष्ये तस्यापि महदादित्वादिति शङ्क्यम् । मायावादमसच्छास्त्रमिति तस्याकिंचित्करत्वात् । न च कृपातुल्यो भक्तोऽव्यक्तपदवाच्य इति वाच्यम् । अव्यक्तमिति नपुंसकलिङ्गादत एव न विष्णुर्वाच्यः । तथा च विश्वः । 'अव्यक्तः शंकरे विष्णौ' इति अयं श्लोकः ।

'अव्यक्तः शंकरे विष्णौ अव्यक्तं महदादिके ।
आत्मन्यपि स्यादव्यक्तमस्फुटेप्यभिधेयवत्' ॥ इति ।

ननु वरणमेवाव्यक्तमस्तु तस्य कार्येण स्पष्टत्वात् । ऋत्विग्वत् । तथा च कोशाच्छक्तिग्राहकात् शक्तिग्रहोऽव्यक्तपदस्य कृपायामित्युक्तम् । तथा हि अव्यक्तं न प्रकटं भगवत्कृपैवेति भाष्यम् । तत्राव्यक्तपदविग्रहः सूक्ष्मं त्विति सूत्रभाष्ये सर्वप्रकारेण न व्यज्यते तदव्यक्तमिति सूच्यते तत्र न व्यज्यते व्यनक्तिकर्मत्वावच्छिन्नप्रतियोगिताकाभावोर्थः अत्र न प्रकटमित्यस्यान्वयः । अभावेन शब्दार्थाभावस्याभेदः संसर्गः कर्मणि ते प्रत्ययार्थभूते प्रकटस्याभेदान्वयः व्यनक्तिप्रकटकर्मत्वावच्छिन्नप्रतियोगिताकोभावः स भगवत्कृपाभिन्न इति भाष्यार्थः । तेनाव्यक्तमिति कर्मप्रत्ययान्तं कृपा न प्रकटे कर्तृप्रत्ययान्ते तेषां कथमन्वय इति कुचोद्यं निरस्तम् । न साधनेति । ननु साधनैः कृपा लोके दृष्टा कुतो न साधनाधीनेत्युच्यते इति चेन्न भक्तिहेतुग्रन्थे उपपादितप्रायत्वात् । तस्येति श्रुतिसंदर्भस्य । एवं शेषं स्फुटमित्यर्थः । उपनिषदिति । ननु सांख्यानुसारित्वं कुतो न बोधितमिति चेन्न शाखान्तरे शाखान्तरीयस्तुतेरनौचित्यात् । छान्दसः सा काष्ठा सा परा गतिरित्यत्र पुरुषविशेषणत्वेन कर्मणि क्तिन् इत्याहुः गम्यत इति । स्त्रियां क्तिन् भावे लोके वेदे विकल्पात् कर्मण्यपि कर्तरि तु न भावेन बाधात् । उपेति । गतिरिति गमनकर्म पुरुषः । मां विशते । इति विशेः कर्म पुरुष इत्युपबृंहणात् । अत्रेति । आत्मा दृश्यत इत्यत्र । अभिप्रेति तथा चायुक्त

## सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥

नन्वव्यक्तशब्देन न भगवत्कृपा वक्तुं शक्या । धर्मिप्रवाहादित्याशङ्क्य परिहरति तुशब्दः । सूक्ष्मं तद् ब्रह्मैव । धर्मधर्मिणोरभेदात् । अव्यक्तशब्देन हि सूक्ष्ममुच्यते । तदेव हि सर्वप्रकारेण न व्यज्यते । अर्हत्वात् । तदेव अर्हं योग्यम् । उभयत्राप्ययं हेतुः । तस्माद्धर्मधर्मिणोरभेदाद् भगवानेव सूक्ष्ममिति तत्कृपैवाऽव्यक्तवाच्या ॥ २ ॥

---

भाष्यप्रकाशः ।

सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥ उभयत्रेति अव्यक्तस्य ब्रह्मत्वे, भगवत्कृपात्वे च । अयमर्थः । 'बुद्धेरात्मा महान् परः' इत्यत्र, 'अथ परा यया तदक्षरमधिगम्यते' इति श्रुत्यन्तरोक्तं ज्ञानं बुद्धिनियामकत्वेन परामृष्टम् । तच्च नायमात्मेति श्रुत्यन्तराद्वरणाधीनम् । वरणं च कृपयैवेति ज्ञानात् परस्य विमर्शे योग्यताबलात् कृपैव तथात्वेन सिद्ध्यति । सा च भगवद्धर्मः । धर्मधर्मिणोश्चाविनाभावेन स्थितत्वादभेद इति तस्या अपि ब्रह्मत्वं योग्यताबलादेव सिद्ध्यतीति तथेति । तथाच न प्रायपाठविरोध इत्यर्थः ॥ २ ॥

रश्मिः ।

आत्मा प्राप्यत इत्यर्थः । न तु गूढः सूक्ष्म आत्मा दृश्यत इति प्रत्यभिज्ञानं तत्तेदंताप्रकारकं ज्ञानं प्रत्यभिज्ञा 'ये धातुशब्दा यत्रार्थे' इति पत्रावलम्बनात्पूर्वोक्तोर्थो धातूनामनेकार्थत्वादरेणासंभवीत्यतो गूढ आत्मा दृश्यते तदनन्तरं तं विशते इति पूर्ववद्विशतेः कर्म आध्याहारेण पूरयित्वा श्रुत्यर्थ इत्याहुः । भाष्ये । भगवदिति भगवज्ज्ञानं आत्मा दृश्यत इति तत्प्राप्तिस्त्वध्याहृत्य व्याकृता सैव । स्मृति-र्गीताष्टादशाध्यायस्था तेन मुख्यपक्षेण श्रुतिव्याकरणे संमतिरुक्ता अध्याहारे च । साधनेति सांख्ये तु 'मुक्तिरन्तरायध्वस्तेर्न परः' अन्तरायस्य निःसङ्गेप्युपरागस्याविवेकाज्जातस्य 'ध्यानधारणाभ्यासवैराग्यादिभिः निरोधोस्य' इति ध्यानादिसाधनैरन्तरायध्वस्तिः न निःसंगस्य सा साधनजन्या ॥ १ ॥

सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥ भाष्ये । धर्मीति । ननु बुद्धेर्ज्ञानरूपायाः गुणत्वेन न धर्मिप्रवाह इति चेन्न मनोभेदत्वेनागुणत्वात् । प्रकृते । अत्राव्यक्तपदस्य योगेन कृपावाचकत्वेपि श्रुतौ क्वापि तद्वाच्यादर्शनात् कृपावाच्यानुपस्थित्या वरणोपस्थित्या वरणमहिम्ना कृपोपस्थितिमाहुः अयमिति । अपरं चात्मा विज्ञानमिति भाष्ये विज्ञानमपि बुद्धिरित्येकस्या नियम्यनियामकभावासंगतिरित्याहुः बुद्धेरिति । अथ परेति मुण्डके । नायमात्मेति श्रुतिर्मुण्डके । योग्यतेति यथा 'पातु वो दयितामुखम्' इत्यत्र मुखं सांमुख्यं न वदनं कामत्राणायोग्यत्वात् । यद्यपि चुम्बनादिना वदनमपि कामत्रायकं तदापि सांमुख्यमेव योग्यम् । असति तस्मिन् सर्वं वैरस्यायैवेति तस्यैवौचित्यम् । औचित्यं योग्यता । तथात्वेनेति विज्ञानात्परत्वयुक्तपदार्थत्वेन युक्तपदमव्यक्तपरम् । तथेति औकारस्य 'अव्ययादाप् सुपः' इति लुक् । अव्यक्तस्य ब्रह्मभगवत्कृपात्वे प्रकारौ । तथा चेति कृपाया ब्रह्मत्वेन धर्मित्वे च । भाष्ये । तस्मादिति प्रसिद्धात् । 'प्रकाशाश्रयवद्वा तेजस्त्वात्' इति व्याससूत्रात् धर्मधर्मिणोरभेदस्योक्तत्वात् । अव्यक्तपदवाच्या । प्रकृतमुच्यते इदं त्विह वक्तव्यम् । तद्वाच्यानुपस्थित्यैत्यादि तदसिद्धम् । लिङ्कवीया इत्यस्य वाच्यादर्शनेन योग्यार्थानुपस्थित्या पद-वैयर्थ्यमतोव्यक्तपदयोगेनार्थोऽङ्गुष्टः । नाप्यत्र वरणोपस्थितिर्युक्ता । इदं श्रुतिद्वयं 'विद्यैव तु

तदधीनत्वादर्थवत् ॥ ३ ॥

ननु धर्मित्वे परत्वमनुपपन्नम् । अन्यथा पूर्वोक्तो दोष इत्यत आह अभेदेऽपि कृपायास्तदधीनत्वात् परत्वम् । तत्र दृष्टान्तः । अर्थवत् । अर्थः पुरुषार्थः फलं, तद्वत् । 'ब्रह्मविदाप्नोति परम्' इत्यत्र एकस्यैव ब्रह्मणः सच्चिद्रूपेण विषयत्वमानन्दरूपेण फलत्वमिति । तथैवाक्षरपुरुषोत्तमविभागोऽपि । स्वधर्मा अपि स्वाधीनाः । स्वयमपि स्वाधीन इति । तथा कृपाविष्टः साधनम्, आनन्दरूपः फलमिति ।

---

भाष्यप्रकाशः ।

तदधीनत्वादर्थवत् ॥ ३ ॥ उक्तं समाधिमाक्षिपति नन्वित्यादि । यदि पूर्वोक्तयुक्त्या कृपाया ब्रह्मत्वं, तदा धर्मित्वे तद्भिन्नत्वरूपं परत्वं युक्तिरहितम् । यदि कयाचिद्युक्त्या धर्मत्वं तदा धर्मिप्रायपाठविरोधरूपो दोष इति पूर्वोक्तः समाधिरसंगत इत्याशङ्कायामस्यापि समाधिमाहेत्यर्थः । समाधिं व्याचक्षते अभेदेऽपीत्यादि । तथाचाभेदे यथैकरूप्येण ग्रहणं युक्तिस्तथा भेदे नियम्यनियामकभावो युक्तिरित्युभयमप्युपपन्नमित्यर्थः । एकत्वेऽपि नियम्यनियामकभाव एव कथमित्यत आहुः तत्रेत्यादि । तथैवेति एकत्वेऽपि गणितानन्दत्वागणितानन्दत्वात्मकरूपभेदेनैव तथाच रूपभेदेन सोऽप्युपपन्न इत्यर्थः । एतदेव निगमयन्ति स्वधर्मा इत्यादि, फल-

रश्मिः ।

निर्धारणात्' इत्यत्र पुष्टिमार्गसद्योमुक्तिपरत्वेन वर्णितमत्र मर्यादामक्तौ क्रममुक्तौ च कुत उपतिष्ठेत बुद्धेर्बुद्धिनियामकत्वं तु घ्राणं च गन्ध इति न्यायेनोपपन्नम् । कृपोपस्थितिस्त्वनुकूलधिकरणसिद्धा । अन्यथा इति भारतमाख्यानं कृपया मुनिः कस्मादनुकुर्यात् ।

'स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।
कर्मश्रेयसि मूढानां श्रेय एवं भवेदिह ।
इति भारतमाख्यानं कृपया मुनिना कृतम्' ॥

इति वाक्ये मुनिकृपया भारतीयपदैः वाक्यैश्च भारतार्थविज्ञानं व्यादीनां कृपया पदवाक्यैः भगवद्विज्ञानं भगवदीयमनुकरोतीति 'मदन्यत्ते न जानन्ति नाहं तेभ्यो मनागपि' इति भक्तविषयकं भगवदीयं ज्ञानमिति अन्यच व्यक्तं प्रपञ्चरूपमपि ज्ञानं भगवान् अव्यक्त ईषद्व्यक्तस्तद्धर्मः तत्त्वत्वात् । अव्यक्तः परमात्मा 'ईश्वरः पुरुषोऽव्यक्तः परमात्मेति गीयते' इति वाक्यात् ॥ २ ॥

तदधीनत्वादर्थवत् ॥ ३ ॥ परत्वमिति 'अव्यक्तात्पुरुषः परः' इत्यत्र परनिष्ठम् । कयेति तत्र सूर्यः प्रकाशः सूर्यस्य प्रकाश इति धर्मधर्मिणोर्भेदाभेदयोरनुभवसिद्धतया प्रकाशाश्रयन्यायेन । यथैकेति नीलमुत्पलमित्यत्र । नियम्येति राज्ञः पुरुष इत्यत्र । एकत्व इति । ननु सच्चिद्रूपेणाक्षरत्वमानन्दरूपेण फलत्वमिति भाष्योक्तः कुतो नार्थः भाष्यार्थोपलक्षणत्वादस्यार्थस्य । न चात्रार्थे विकृतत्वं निरवयवत्वशब्दकोपो वा स्यादिति वाच्यम् । विकृतत्वस्य समन्वयाधिकरणे वारणाद् द्वितीयस्य तु 'श्रुतेस्तु शब्दमूलत्वात्' इति सूत्रेणेति । निगमयन्तीति स्वधर्मा इत्यत्र तस्मादिति पूर्वस्य एतद्वाक्यनिष्ठावयवविभाजकोपाधिमत्त्वं निगमनत्वं यथा तस्माद्वह्निमानित्यत्र । प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चावयवा तन्निगमनं कुर्वन्तीत्यर्थः । स्वधर्माः सत्यत्वादयः कृपादयश्च स्वकमपि 'न रोधयति मां योगो न सांख्यं धर्म उद्धव' इत्यादिना तस्य सर्वात्मनाथस्वाधीनः ।

अथवा अव्यक्तं सच्चिद्रूपमक्षरमेवास्तु। तस्मिन् सति विज्ञानस्य विषयाधीनत्वमर्थः।

एतेनान्येऽपि सर्वसंप्लववादिनो निराकृता वेदितव्याः । असंबद्धाभिलापाच्च।

---

भाष्यप्रकाशः।

मितीत्यन्तम्। अस्मिन् पक्षे अव्यक्तपदस्य यौगिकत्वाच्छैथिल्यं शङ्क्येतेत्यरुच्या पक्षान्तरमाहुः अथवेत्यादि अक्षरमेव, 'अव्यक्तोऽक्षर इत्युक्तः' इति गीतावाक्यादव्यक्तमस्तु। नच लिङ्गविरोधः। 'अक्षरं ब्रह्म परमम्' इति ब्रह्मत्वविवक्षायां तत्रापि नपुंसकलिङ्गप्रयोगात् तस्य च भगवतः सकाशाद् भेदाभेदौ, गीतायाम्, 'एवं सततयुक्ता ये' इति प्रश्नोत्तरसंदर्भे स्फुटौ। धामत्वाद्भगवदधीनत्वं च स्फुटम्। अतस्तदधीनत्वादक्षरमेवाव्यक्तम्। अस्मिन् पक्षे यो दृष्टान्तस्तमाहुः तस्मिन्नित्यादि। तस्मिन्नक्षरे स्फुरिते सति, विज्ञानस्य बुद्धेर्यदक्षरात्मकविषयाधीनत्वं सोऽत्र दृष्टान्तभूतोऽर्थो ग्राह्यः। तथाच तद्विज्ञानं यथा अक्षरसारूप्येऽप्यक्षराद् भिन्नमक्षराधीनं च, तथा अक्षरमपि ब्रह्मस्वरूपं ब्रह्मणः परस्माद् भिन्नं तदधीनं चेत्यैक्येऽपि न परत्वानुपपत्तिप्रवाहविरोधावित्यर्थः।

एवं त्रिसूत्रीव्याख्यानेनैकदेशिकृतं व्याख्यानान्तरमपि निराकृतमित्याहुः एतेनेत्यादि। अयमर्थः। मायावादिनो ह्यानुमानिकसूत्रे अव्यक्तशब्देन रथरूपकविन्यस्तं शरीरमङ्गीकृत्य तस्य कथमव्यक्तशब्दितत्वमित्याकाङ्क्षायां द्वितीयसूत्रे भूतसूक्ष्मस्याऽव्यक्तशब्दार्हत्वात् तत्कार्यस्य शरीरस्याव्यक्तशब्देन ग्रहणं यथा, 'गोभिः श्रीणीत मत्सरम्' इत्यत्र गोशब्देन पयस इत्युक्त्वा, तृतीयसूत्रे, तद् भूतसूक्ष्मं न स्वतन्त्रं येन प्रधानकारणवादः प्रसज्येत किंतु परमेश्वराधीनम्। तथावश्यकम्। शक्तिरहितस्य कर्तृत्वानुपपत्तेः। अतस्तदर्थवदित्युक्त्वा, अव्यक्तशब्दवाच्यामविद्यां वदन्ति। यथोक्तं तेषां भाष्ये। अविद्यात्मिका हि सा बीजशक्तिरव्यक्तशब्दनिर्देश्या परमेश्वराश्रया मायामयी महासुप्तिर्यस्यां स्वरूपबोधरहिताः शेरते संसारिणो जीवास्तदव्यक्तं क्वचिदाकाशशब्दनिर्दिष्टम्। 'एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' इति श्रुतेः। क्वचिदक्षरशब्दोदितम्। 'अक्षरात् परतः परः' इति श्रुतेः। क्वचिन्मायेति सूचितम्। 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इति मन्त्रवर्णादिति।

रश्मिः।

यौगिकत्वादिति योगस्य वेदान्ते मुख्यत्वेन पक्षान्तरोत्थाने तुष्यतु दुर्जनन्यायेन दोष उक्तः। इतिहासमतमाहुः। भाष्ये। अथ वेति। भेदाभेदाविति भेदोविभक्तकः 'अविभक्तं च भूतेषु विभक्तमिव च स्थितम्' इति गीतायाः। अत इति परत्वस्य नियामकत्वस्य प्रकरणात्। तदधीनत्वाद् ब्रह्माधीनत्वात्। आर्थिकस्तदधीनत्वादिति सूत्रार्थ उक्तः। दृष्टान्तोऽर्थवदित्यंशस्तं वक्तुमाहुः अन्यस्मिन् पक्ष इति। ननु भाष्ये दृष्टान्तत्वबोधकपदाभाव इति चेन्न अर्थ इति पदस्य बोधकत्वात्। अर्थवद्वदिति भाष्यार्थात्। पक्षान्तरे संपूर्णसूत्रार्थ उक्तः। अत्रेतिहासपक्षे एकमेव सूत्रम्। तत्तस्यापि स्मृतेश्चेति सूत्रे कथनात्। क्वचिदेकार्थत्वेन क्वचित्पृथक्त्वेनेति। भूतेति शब्दरूपरसगन्धस्पर्शरूपस्य। तत्कार्येति पञ्चमहाभौतिकत्वाच्छरीरस्य। ग्रहणमिति लक्षणया।

भाष्यप्रकाशः।

तदेतदसंगतम्। कारणग्रहणेनैव संभवति गत्यन्तरे कारणवाचिशब्देन कार्यग्रहणस्य लक्षणादोषयुक्तस्यानुचितत्वात्। 'द्वाविमौ पुरुषौ लोके' इति गीतोक्ते अक्षरे कारणत्वस्य श्रुत्यादिषु 'तन्मायाफलरूपेण' इत्याद्येकादशस्कन्धवाक्यैर्निर्द्धारणात्। अधीनत्वस्य धामत्वादेव सिद्धेश्च। तद्विहाय तत्प्रथमकार्यरूपमायापदवाच्यशक्तिग्रहणस्यानुचितत्वात्। 'यो वेद निहितं गुहायां परमे व्योमन्' 'ऋचो अक्षरे परमे व्योमन्' इत्यादिश्रुतावाकाशपदवाच्यत्वस्यापि तत्रैव स्पष्टत्वात्। 'अक्षरात् परतः परः' इत्यत्रापि परत इति विशेषणेन मायाशक्तिव्यावृत्त्या भगवद्धामरूपस्यैव तस्य सिद्धेः। अतो व्यासाशयविरुद्धत्वाद् अयमसंबद्धाऽभिलाप एव। जगद्बीजं तु भगवानेव। 'बीजं मां सर्वभूतानाम्' इति गीतावाक्यात्। अक्षरस्य कारणत्वं तु योनित्वात्। 'मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम्' इति वाक्यात्। नच पुरुषत्वोक्तिविरोधः। 'त्वं स्त्री त्वं पुमान्' इत्यादिश्रुत्या सर्वरूपत्वेन सिद्धत्वादिति।

रश्मिः।

शक्यसंबन्धो लक्षणा, संबन्धः कार्यता, गोभिः पयोभिः मत्सरं सोमं श्रीणीत मिश्रितं कुर्वीत। तथेति। तदधीनत्वं शक्त्यधीनत्वम्। शक्तिरहितस्य परमेश्वरस्य नित्यस्य शुद्धबुद्धमुक्तस्वभावस्य। तदर्थवत् तदविद्याख्यं बीजं अर्थवत् न तेन विना परमेश्वरस्य स्रष्टृत्वं सिध्यते शक्तिरहितस्य प्रवृत्त्यनुपपत्तेः। तदसमिति असंबद्धाभिलापश्चेति भाष्यार्थ उक्तः। कारणेति भूतसूक्ष्मग्रहणेन। कार्येति शरीरग्रहणस्य। निर्धारेति चतुर्विंशे।

'तन्मायाफलरूपेण केवलं निर्विकल्पितम्।
वाङ्मनोगोचरातीतं द्विधा समभवद्बृहत्'॥

इत्यत्र बृहत्पदात् 'गणितानन्दकं बृहत्' इत्यक्षरपदस्याक्षरे शक्तिः सिद्धान्तमुक्तावल्याम्। स्पष्टेति। व्योमन्नित्यत्र सप्तम्या लुक् व्योम्नि आकाश इत्यर्थः। परत इतीति अदृश्यत्वादिगुणकाधिकरणे मायावादिनोऽक्षरान्मायायाः परतः। परो भूतयोनिरिति व्याचक्रुः। स्वमते तु अक्षरात् कीदृशः परतः इदं विशेषणं सांख्ये प्रधानस्याक्षरत्वात् तद्वारणायेत्यदृश्यत्वाधिकरण उक्तम्। सांख्यमतसादृश्यान्मायावादेप्याहुः मायाशक्तीति। तथा चाक्षरमविद्यापरत्वं मायाप्रधानभिन्नत्वं तेनात्रैकः संप्लववादी। एतेनेति भाष्योक्तेतिहासमताङ्गीकारेणासंबद्धाभिलापेन च निराकृतः 'सम्यक् पाठप्रशंसयोः' इति विश्वात् सम्यक् प्रशस्तेऽङ्गीकृतो वा 'येप्यन्यदेवता भक्ताः' इति गीतोक्तेः। प्लवः शब्दः तेन तेषां वदितुं शीलमेषां ते संप्लववादिनः सर्वेषां संप्लववादिनः सर्वसंप्लववादिनः सर्वे च ते संप्लववादिनो वा। स्वस्ववादेन स्वीयदेवताप्राप्तेः। तत्र मायावादेन मायादेवताप्तिः तत्राधिकारिणां च कदाचित्कृष्णप्रसादयुक्तस्य मुक्तिरपि। अयं निराकृतः। इतिहासमतेनाक्षरेव्यक्तपदशक्तेर्मुख्ये संभवति गौणस्यान्याय्यत्वात्। असंबद्धाभिलापस्तु कारणग्रहणेनैवेत्यादिना प्रकाश एव कृतः। कारिकार्थैक्यं यथा अनेकेति। अनेकेषां रूढेः शब्दानां व्यापारव्यापारिभावः संबन्धः षष्ठ्यर्थः। वाच्यं ब्रह्मेति ॐमित्येकाक्षरं ब्रह्म सर्वं तस्योपव्याख्यानमिति प्रस्थानरत्नाकरे स्पष्टम्। एवकारो विशेषणसंगतोऽयोगव्यवच्छेदकः यथा शङ्खः पाण्डुर एवेत्यत्र। ब्रह्मत्वायोगव्यवच्छेदवद्वाच्यमिति। वाच्यं विशेष्यम्। ब्रह्म विशेषणं व्यावर्तकत्वात्। आर्थिकमाहुर्नापरमिति उत्तरार्धं

अनेकरूढिशब्दानां वाच्यं ब्रह्मैव नापरम् ।
शाक्तास्तांश्चेत् तथा ब्रूयुस्ते सन्मार्गाद् बहिष्कृताः ॥

भाष्यप्रकाशः ।

तदेतत् सर्वमभिसंधायाहुः अनेकेत्यादि । शक्तित इति । जैमिन्युक्तं भाट्टप्रसिद्धं लोकवेदाधिकरणमाश्रित्य लौकिकशक्तितः । तथेति प्रकृतिवाचकत्वम् । शाक्तास्तां चेदिति क्वचित् पाठः । तदा तु, तां प्रकृतिं तथा जगद्बीजभूतां ब्रूयुरित्येवं योजना । तथाच, 'शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि'

रश्मिः ।

व्याचख्युः जैमिन्यनुक्तमिति य एव लौकिकाः शब्दाः ते एव वैदिका इति वदन्ति तद्यदि जैमिन्युक्तं स्यात्तदा सर्वे विधयश्छन्दसि विकल्प्यन्ते इत्यादिपूर्वं व्याकृतेः स्फुटा इति कारिकांशव्याख्याने स्वरादिना भेदोपपादनं विरुद्धमिव भायात् अतो हि उत्पत्तौ वेत्यादिप्रथमपादाधिकरणमन्यथा व्याकरणीयं यल्लोकवेदाधिकरणमित्युच्यते । तर्हि शक्तितश्चेत्तथा ब्रुवाणा मीमांसकाः के इत्यत आहुः भाट्टेति तथा चाहुः जैमिनिन्यायमालाविस्तरे तदेवमधिकरणत्रये व्युत्पादनाय भाट्टप्राभाकरमतभेद उक्तः । अथ प्रायेण भाट्टमतमेवोपन्यस्यते इति चतुर्थाधिकरणावतरणे सप्तमाधिकरणकारिके ।

'वेदवाक्यममानं स्यात् मानं वा नास्य मानता ।
पृथक्संकेतवीक्षायामनपेक्षत्ववर्जनात् ॥
वेदेपि लोकवन्नैव वाक्यार्थे संगतिः पृथक् ।
ग्रहीतव्या ततो वाक्यं प्रमाणं नैरपेक्ष्यतः' ॥ इति ।

तथा च वृद्धव्यवहारेण लोके शक्तिग्रहः गृहीतशक्तिकः शब्दो वेदेपि बोधक इति इदं भाट्टमतं भाट्टप्रसिद्धम् । लौकिकशक्तितो वेदे व्यक्तपदे तथा प्रकृतिवाचकत्वं ब्रूयुः ते सन्मार्गादुक्तादोमित्येकाक्षरं ब्रह्मेत्यादि श्रौतान्मार्गाद्बहिःकृताः पाषण्डिन इति भावः । अत्रेतिहासमते रूढिशब्दान्तर्गतोव्यक्तशब्दोपि भवति । ननु पूर्वपक्षे यौगिकोव्यक्तशब्दः उक्तः वेदान्ते योगादरादितिहासे तु रूढिरव्यक्तपदस्याक्षरे । ननु योगोपि संभवीति चेन्न ज्ञानिनः प्रति व्यक्तत्वेन तदेव हि सर्वप्रकारेण न व्यज्यत इति भाष्यविरोधात् । अत एव न कोशोक्तशंकरादौ योगः । अत एव न योगरूढः शब्दः । ततो रूढ्यास्य वाच्यं ब्रह्माक्षरं ब्रह्मेत्यर्थः । विष्ण्वादयो वाच्या इति वदन्तः श्रौतान्मताद्बहिःकृताः विशिष्टाद्वैतवादिनोव्यक्तपदेनाक्षरग्रहणेनासंबद्धाभिलापेन च सर्वसंप्लववादिनो निराकरणं इदमयुक्तम् । 'आचार्यचैत्यवपुषा स्वगतिं व्यनक्ति' इति 'आचार्यं मां विजानीयान्नावमन्येत कंचन' 'सर्ववादानवसरं नानावादानुरोधि तत्' इति निबन्धे । तथापि नानावादानुरोधेन क्रीडतः क्रीडाप्रकाशपूर्वकनिर्दुष्टक्रीडानिरूपणं ज्ञेयमेवं पूर्वत्रात्रेपि बोध्यम् । यथा शंकराचार्यमतेव्यक्तपदेन शरीररूपमाया सैवाविद्या सोच्यते । एते तु शरीरमव्यक्तपदार्थमाहुः तत्र कोशः प्रमाणं तदपेक्षया गीताप्रमाणं प्रबलमिति नाव्यक्तवाच्यं शरीरमपि त्वक्षरमित्येतेनेति भाष्यार्थकृतनिराकरणं 'शरीरं रथमेव तु' इत्यत्र शरीरग्रहणेनानन्यलभ्यो हि शब्दार्थः इत्यसंबद्धाभिलापश्च । भास्कराचार्यमतेप्येवं अव्यक्तपदार्थः शरीरं असंबद्धाभिलाप भाष्यार्थकृतनिराकरणे पूर्ववत् । भिक्षुमतेपि ज्ञेयम् । माध्वमते तु अव्यक्तपदार्थो विष्णुरक्षरः । सोपि सत्त्वगुणोपाधिरतः सविदक्षराद्भिन्ना इति वीतविशेषः

**तस्मादिन्द्रियेभ्यः परवाक्ये नानुमानिकं किंचिदस्ति ॥ ३ ॥**

**ज्ञेयत्वावचनाच्च ॥ ४ ॥**

पूर्वापरसंबन्धेनार्थः प्रतिपादितः । केवलैतद्वाक्यविचारेऽपि न तदभीष्टं प्रकृतिरूपमव्यक्तं सिध्यतीत्याह । अत्र हि वाक्ये अव्यक्तं ज्ञेयत्वेन नोक्तं, तेषां तु प्रकृतिपुरुषान्तरं ज्ञातव्यम् । न हि सिद्धवन्मात्रनिर्देशो तेषां मते पुरुषार्थः सिद्ध्यति । अपुरुषार्थसाधनत्वे वा असंबद्धार्थवाक्यत्वमेव स्यात् । परत्वे-

---

भाष्यप्रकाशः ।

इत्यादि स्वश्रद्धाजाड्याद् वदन्तो वेदान्तविरुद्धवादित्वात्तथेत्यर्थः । सिद्धमाहुः तस्मा-दित्यादि ॥ ३ ॥

ज्ञेयत्वावचनाच्च ॥ ४ ॥ सूत्रमवतारयन्तः प्रयोजनमाहुः पूर्वेत्यादि । व्याकुर्वन्ति अत्र हीत्यादि । ज्ञातव्यमिति । 'गुणपुरुषान्तरज्ञानात् कैवल्यम्' इति प्रवचनसूत्रात् । विभूतिविशेषाप्तये प्रधानस्यापि ज्ञेयत्वस्मरणाच्च तथेत्यर्थः । परत्वेत्यादि । परापरभावो हि

रश्मिः ।

अक्षरस्य निर्गुणत्वात् मुख्यार्थस्य भाष्ये गीतोपन्यासेनोक्तवैष्णवमार्गस्यासंबद्धाभिलापत्वम् । शैवा-चार्यमतेप्येवं ज्ञात्वा वक्तव्यम् । सिद्धमाहुः तथा चेति । शिव इति । सौन्दर्यलहरीस्थं शिवपदं ब्रह्मपरं शक्तिर्माया । वेदान्तेति ॐमित्येकाक्षरं ब्रह्मेत्युक्तवेदान्तविरुद्धवादित्वात् तथा ते सन्मार्गा-द्बहिःकृतत्वेन प्रकारेण संपन्नाः । तस्मादितीति अत्र भाष्ये तस्मात् अव्यक्तपदस्याप्रधान-वाचकत्वात् । परस्य वाक्यं परवाक्यं 'इन्द्रियेभ्यः परा ह्यर्था' इति वाक्यं तस्मिन् । ननु कस्मात्पर-वाक्यमित्यत आहुः इन्द्रियेभ्य इति । ननु इन्द्रियेभ्यः परा इति वाक्ये इति वक्तव्ये इन्द्रियेभ्यः परवाक्य इति विलम्बोपस्थितिकप्रयोगः कुत इति चेन्न सर्वशब्दत्वात् । आचार्याणां प्रयोगेऽतात्-तम्यात् ॥ ३ ॥

ज्ञेयत्वावचनाच्च ॥ ४ ॥ गुणेति गुणश्च प्रकृतिरूपः तदन्यः पुरुषश्च तयोर्ज्ञानात् । पुस्तकान्तरस्थं सूत्रं शंकरभाष्ये उक्तमिहोपन्यस्तं सूत्रं तु तदा सर्वावरणमपलापे तस्य ज्ञानस्यानन्त्यात् ज्ञेयमल्पमिति तदा पूर्वसूत्रोक्तसमाधिः ततः क्लेशकर्मनिवृत्तिः इति सूत्रं ततस्तदेति सूत्रमतस्तदा नाम समाध्यनन्तरं क्लेशकर्मनिवृत्तिकाले । विभूतीति 'मन्त्रौषधितपःसमाधिजाः सिद्धयः' इति सांख्यप्रवचनसूत्रात् । विभूतिविशेषाः परिणामत्रयसंयमादतीतानागतज्ञानमिति स्मरणम् । तथेति ज्ञातव्यत्वेन । परिणामत्रयसंयमो हि प्रधानरूपप्रधानकार्यज्ञानाधीनमस्त्येव श्रीभागवते चैकादशस्य पञ्चदशेऽध्याये क्वचित्स्मर्यते ।

'उदासीने मयि परे प्रकृतेर्गुणवृत्तिषु ।
चिन्मये धारयेच्चेतो द्वन्द्वैर्नैवाभिभूयते' ॥ इति ।

अत्र विभूतिविशेषो द्वन्द्वाभिभवाभावः । यद्वा गुण इत्यस्यायमर्थः सत्वादिगुणरूपात्प्रधाना-त्पुरुषस्यान्तरं भेदस्तज्ज्ञानादित्यर्थः । न हि शक्यमिति च वदद्भिः प्रधानं ज्ञेयत्वेन स्मर्यते इति । न केवलं प्रधानस्य भेदप्रतियोगितया ज्ञेयत्वं तैरिष्टं किं तु तस्योपासनयाऽणिमादिप्राप्तयेपीत्याहुः विभूतीति । भाष्ये । ननु 'अव्यक्तात्पुरुषः परः' इति शाब्दज्ञानविषयत्वमस्त्येव समाध्यनन्तरं

**वचनं चासंगतम् । श्लिष्टत्वादुभयोरिति चकारार्थः । अयं हेतुः पूर्वमुक्तोऽप्यवसरे स्मारितः । तस्मादव्यक्तं न प्रकृतिः ॥ ४ ॥**

---

भाष्यप्रकाशः ।

**विश्लेषेऽवगन्तुं शक्यते, न तु संश्लेषे । इदानीमज्ञानदशायां तु श्लेष एवेत्युदासीनतयोक्तौ पुरुषस्य परत्ववचनमप्यसंगतं स्यादित्यर्थः । अयमिति । चकारसूचितः । पूर्वमिति अदृश्यत्वाद्यधिकरणे ॥ ४ ॥**

रश्मिः ।

सिद्धयोपि भवन्ति इति ज्ञेयत्वेनोक्तमेव प्रधानं कथं ज्ञेयत्वेन नोक्तं इति भाष्यमित्याकाङ्क्षायामाहुः नहीति । मत इति तदुक्तं सांख्यप्रवचनसूत्रवृत्तौ 'प्रात्यहिकक्षुत्प्रतिकारवत् तत्प्रतिकारचेष्टनात् पुरुषार्थत्वम्' इति । 'निबन्धे

'वामा शाक्ताश्च योगे तु प्रकटाप्रकटे भिदा ।
प्रकृतिस्तत्र संराध्या साध्यो योगश्चतुष्टये' ॥

छलयोगो द्विविधसांख्यं शाक्तो मार्गश्च चतुर्थो वामः इति चतुष्टयम् । अत्र योगो पुरुषार्थः । 'अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः' इति सांख्यप्रवचनसूत्रवृत्तेः 'यद्वा तद्वा तदुच्छित्तिः पुरुषार्थस्तदुच्छित्तिः पुरुषार्थः' इति सूत्रवृत्तेः तदाहुरपुरुषार्थेति प्रधानस्य तथा वा पुरुषार्थेन हरेः पदे गमनेन संबद्धेष्वात्मानं रथिनमित्यादिवाक्येषु अस्य वाक्यस्यासंबद्धार्थोऽपुरुषार्थसाधनत्वं तस्य वाक्यत्वमेव स्यादेवकारेण मार्गान्तरत्वात् पुरुषार्थवाक्यत्वव्यवच्छेदः । प्रकृते । श्लेष इति 'असंगोयं पुरुषः' 'प्रधानाज्जगज्जायते' 'निःसंगेप्युपरागो विवेकात्' 'द्वयोरेकतरस्य वा औदासीन्यमपवर्गः' इति । उदासीनतया अपवर्गे उदासीनतया । चकारेति वैयाकरणमतादरेण निपातानां द्योतकत्वमाहुः सूचितपदेन । अदृश्येति उभयोः संश्लिष्टत्वादयं हेतुः । पूर्वं प्रकृतिपुरुषयोः श्लिष्टत्वात् इति भाष्येणोक्तोपि 'अक्षरात् परतः परः' इति मुण्डके प्रकृतिपुरुषयोः श्लिष्टत्वात्परापरभावासंगतिरित्यंशे वक्तव्येपि प्रतिबन्धकीभूतजिज्ञासा कथमदृश्यत्वादिगुणकस्याक्षरस्य परमात्मत्वादिकमिति तन्निवृत्तये अदृश्यत्वादिगुणकाक्षरस्य परमात्मत्वं त्रिसूत्र्योक्तम् । ततः पूर्वाधिकरणोक्तं रूपं सांख्यसिद्धस्य कार्येश्वरस्य कुतो न अक्षरपरपुरुषयोः भेदाभेदौ च कथमित्याकाङ्क्षायां वैश्वानराधिकरणं नवसूत्र्योक्तम् । द्वितीयपादः समापितः । अन्तर्यामिप्रतिपादकवाक्यानां द्वितीयपादे विचारणात् । तृतीयपाद उपास्यरूपप्रतिपादकानि वाक्यान्यन्तर्याम्यानन्दत्वेन मोक्षदातृप्रतिपादकानि स्मृतानि विचारयितुं द्युभ्वाद्यायतनाधिकरणम् । तत्र तस्मिन् द्यौः पृथिवीति मुण्डकवाक्यं विषयत्वेनोपन्यस्य तत्र किं सांख्यसिद्धं प्रधानमुच्यते ब्रह्म वेति संदेहे प्रधानं निरस्य ब्रह्मेति साध्यते सप्तसूत्र्या तेन पूर्वपादोक्तमन्तर्यामिरूपमपि व्यापकत्वसर्वात्मकत्वगुणविशिष्टमेवोपासनीयमिति साधितम् । ततो नित्यनिरवध्यानन्दरूप एवान्तर्याम्युपास्यः पृथगपि भक्तिमार्गीयैरुपास्य इति बुद्धिस्थं प्रसङ्गाद्बोधयितुं द्वितीयं द्विसूत्रं भूमाधिकरणम् । ततो हि पूर्वपादेऽदृश्यत्वाद्यधिकरणेन विचारितस्याक्षरस्य विरुद्धधर्मत्वं बोधयितुं बुद्धिस्थोपोद्घातसंगत्या तृतीयं त्रिसूत्रमक्षराधिकरणम् । तत उपासना न फलं साक्षात्कार इति साधयितुं चतुर्थमेकसूत्रमीक्षतिकर्माधिकरणम् । ततः प्रसङ्गसंगत्या जीवब्रह्मवादं निर्णेतुं पञ्चममष्टसूत्रं दहराधिकरणम् । ततो दहरविरुद्धं 'न तत्सूर्यो भाति न चन्द्रतारकम्' इति

वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥

ननु ज्ञेयत्वावचनमसिद्धम् । पूर्वं निर्देशमात्रमुक्त्वाऽग्रे ज्ञेयत्ववचनात् ।

'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् ।
अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते' ॥

इत्युत्तरवाक्ये वदतीति चेन्न । प्रकरणस्य नियामकत्वेनैकवाक्यत्वे द्वयोः सर्वैकवाक्यत्वेन प्राज्ञः परमात्मैव निचाय्यः । न तु द्वयोरेवैकवाक्यत्वं वक्तुं शक्यम् । तस्मात् प्रकरणस्य नियामकत्वे अशब्दवाक्यमपि भगवत्परमेव ॥ ५ ॥

---

भाष्यप्रकाशः ।

वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥ प्रकरणस्येत्यादि अव्यक्तश्रुतेः परत्वलिङ्गस्य तद्धटितवाक्यस्य च साधारणत्वात् प्रकरणस्य निर्णायकत्वं वक्तव्यम् । अतस्तस्य नियामकत्वेनैकवाक्यत्वे वाच्ये, 'महतः परमव्यक्तम्' इति, 'अशब्दमस्पर्शम्' इति द्वयोरेवैक-

रश्मिः ।

वाक्यमाशङ्क्य समाधातुं प्रसङ्गसंगत्या षष्ठं द्विसूत्रमनुकृत्यधिकरणम् । ततः प्रसङ्गसंगत्या जीवस्य मुक्तिदशायां ब्रह्माविर्भावेन विरुद्धधर्माश्रयत्वं फलितुं सप्तमं द्विसूत्रं 'शब्दादेव प्रमितः' इत्यधिकरणम् । ततः प्रसङ्गसंगत्या देवादीनां ब्रह्मविद्याधिकारं विचारयितुमष्टममष्टसूत्रं तदुपर्यपीत्यधिकरणम् । ततोनु प्रसङ्गसंगत्या शूद्राणां ब्रह्मविद्याधिकारं निराकर्तुं नवमं पञ्चसूत्रं शुगस्येत्यधिकरणम् । ततः प्रसङ्गसंगत्यावतारदशायामपि भगवतो दण्डपाणित्वं बोधयितुं दशममेकसूत्रं कम्पनाधिकरणम् । ततः प्रसङ्गसंगत्या उपसंपत्तव्यत्वोपसंपन्नस्वरूपाभिनिष्पादकत्वपूर्ववाक्यगतहृदयत्वोत्तरवाक्यगतसत्यपदोक्तमर्त्यामृतनियामकत्वरूपाणां चतुरो धर्मान् निष्कष्टुमेकादशमेकसूत्रं ज्योतिर्दर्शनाधिकरणम् । ततः प्रसङ्गसंगत्यान्यवाचकपदवाच्यस्य यत्रैवान्तर्धर्मातिरिक्तधर्मकथनं तत्रान्यवाचकपदस्य ब्रह्मपरत्वमिति न्यायं बोधयितुं द्वादशमेकसूत्रमर्थान्तरव्यपदेशाधिकरणम् । ततः प्रसङ्गोपोद्घातान्यतरसंगत्या मुक्तिदशायामपि जीवस्यानुकारित्वमेव तदात्मकत्वात् न त्वत्यन्ताभेदः सर्वथा तौल्यं वेति ब्राह्मणद्वये विचारयितुं त्रयोदशं द्विसूत्रं सुषुप्त्युत्क्रान्त्योरित्यधिकरणम् । एवं निरूपणेन परापरभावासंगतिनिरूपणे प्रतिबन्धकीभूतायाः कथमदृश्यत्वादिगुणकस्याक्षरस्य परमात्मत्वादिकमित्यस्यानिवृत्तावावश्यवक्तव्यत्वं चकारार्थहेतावित्यवसर इत्युक्तं भाष्ये । स्मारितो व्यासपादैश्चकारप्रयोगेण । तस्मादिति ज्ञेयत्वावचनाच्चकारसूचितहेतोश्च ॥ ४ ॥

वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥ भाष्ये । पूर्वमिति महतः परमव्यक्तमित्यत्र । वदतीति महतः परमित्यव्यक्तमुक्त्वा तन्निचाय्य ज्ञात्वेति वदति । प्रकरणापेक्षया श्रुत्यादीनामुपन्यासः सूत्र उचित इत्याशङ्क्य तेषां साधारण्येनाप्रयोजकत्वमाहुः अव्यक्तेति । महतः परमव्यक्तमित्यव्यक्तश्रुतिः निरपेक्षस्वरूपा महतः परं ध्रुवमिति परपदश्रुतिरिति अक्षरप्रकृत्योः साधारण्यं श्रुतेः परत्वरूपपरशब्दसामर्थ्यस्य । तद्घटितेति लिङ्गघटितवाक्यस्य पदानां वाक्यानां वा एकवाक्यतारूपस्य वाक्यस्य साधारण्यं तत्र लिङ्गघटितत्वं वाक्यद्वये पूर्वमीमांसोक्तवाक्यलक्षणघटनायोग्यत्वाय । तदित्थं वाक्यद्वयं महतः परमव्यक्तमिति महतः परं ध्रुवं निचाय्य तमिति च । अत्र परत्वलिङ्गघटितत्वं तेनोभयोः पदानां वाक्यानां चैकवाक्यताघटनायोग्यत्वम् । वाक्यं नाम

## त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥

ननु न वयं सर्वमेकं प्रकरणमिति वदामः। किंतु, 'इन्द्रियेभ्यः पराः' इत्यारभ्य, नाचिकेतमुपाख्यानमित्यन्तं भिन्नं प्रकरणम्। तत्र प्रथमं पदार्थनिर्देशः।

भाष्यप्रकाशः।

वाक्यत्वं नान्येषामित्यत्र नियामकाभावात् सर्वेषामेवैकवाक्यत्वं वक्तव्यम्। प्रकरणं च, 'ऋतं पिबन्तौ इत्यारभ्य 'नाचिकेतमुपाख्यनम्' इत्यन्तमेकम्। तत्र चात्मानावेव परामृश्य जीवात्मनो रथित्वं, तदुपकरणं तत्फलं चोक्त्वाग्रे, एष सर्वेषु भूतेष्वित्यारभ्य वल्लीसमाप्तिपर्यतं परमात्मैव ज्ञेयत्वेन परामृष्टः। मृत्युमुखप्रमोक्षरूपफलदर्शनात्। प्रधानज्ञानेन सांख्यैस्तदनभ्युपगमात् चेतनात्मज्ञानादेव तदभ्युपगमाच्च। अतः प्रकरणस्य नियामकत्वे अज्ञब्दवाक्यस्यापि भगवत्परत्वाज्ज्ञेयत्वावचनं नासिद्धमित्यर्थः॥ ५॥

त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥ किं स्विन्द्रियेभ्य इत्यादि। तथाचात्रेवं पदार्थनिर्देशानन्तरं पुरुषविषयस्य प्रकृतिविषयस्य च ज्ञानस्य पार्थक्येन निर्देशात्

रश्मिः।

पदानां वाक्यानां वा एकवाक्यता तत्र पदानां महदादीनामेकवाक्यता। अत्र यावतां पदानामेकोर्थः प्रयोजनं विष्णुपदगमनं मृत्युमुखात्प्रमोक्षरूपं च विभागे साकाङ्क्षता। पूर्वस्य ज्ञेयत्वावचनसाधकाकाङ्क्षा परस्य ज्ञेयत्वावचनसाध्याकाङ्क्षा तत्र लिङ्गश्रुतिकल्पनेनाङ्गत्वबोधकं परस्याव्यक्तबोधनसामर्थ्यमालोच्य महतः परमव्यक्तमित्यत्र ज्ञेयत्वावचनं सिद्धं कुर्यादिति लिङ्गश्रुतिकल्पनम्। वाक्यैकवाक्यता नाम स्वार्थबोधे समाप्तानां वाक्यानां पुनराकाङ्क्षावशेनैकवाक्यता, तथथा स्वार्थबोधे समाप्तयोः वाक्ययोरङ्गाङ्गित्वाद्यपेक्षया पूर्ववाक्यीयज्ञेयत्वावचनस्य साध्यस्य साधकापरवाक्यापेक्षा तया एकवाक्यतया पुनरुभयोर्ज्ञेयत्वावचनसाध्यसाधकभावाख्यपरवाक्यस्य परमात्मज्ञेयत्वप्रतिपादनसामर्थ्यमस्तीति सामर्थ्यमालोच्य महतः परमव्यक्तमित्यत्र ज्ञेयत्वावचनं सिद्धं कुर्यादिति लिङ्गश्रुतिकल्पनम्। प्राञ्च इति भाष्यं विवृण्वन्ति स्म प्रकरणमिति। ज्ञेयत्वेनेति। निचाय्य इति भाष्यार्थः। तेन भाष्ये हिकारस्य सौत्रस्यावधारणमर्थस्तमाहुः परमात्मैवेति। प्रकृते। फलेति अग्रे नाचिकेतमुपाख्यानमित्यादिश्लोकद्वयं तूपाख्यानवचनश्रवणश्रावणफलबोधकं ज्ञेयम्। शंकरभाष्योक्तं किंचिदाहुः प्रधानेति। प्रकरणस्येति 'उभयाकाङ्क्षा प्रकरणम्' प्रकृते नास्तीति देशकालौ प्रकरणम्। ज्ञेयत्वेति। ननु नञ्नकारौ कुतः ज्ञेयत्ववचनं सिद्धं सांख्यानामित्येव कुतो नोक्तमिति चेन्न अप्रयोजकत्वात्। न हि सांख्यानां ज्ञेयत्ववचनं साधयितुं व्यासचरणानां प्रवृत्तिरिति किं तु सांख्ये ज्ञेयत्ववचनं वेदान्ते ज्ञेयत्वावचनमिति वक्तुम्। ततश्च ज्ञेयत्वावचनमसिद्धमिति भाष्यम्। ततो नञ्शब्दं पूरयित्वा ज्ञेयत्वावचनं नासिद्धमिति प्रकाश इति न नञ्नकारौ ह्ययुक्तौ। माध्वास्तु प्रकरणादिति सूत्रविभागेनाहुः। अर्थस्त्वयमेव तत्र जन्माद्यधिकरणरीत्या हेतुघटितं सूत्रं युक्तम्॥ ५॥

त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥ भाष्ये। प्रकरणमिति सूत्रोक्तं प्रकरणम्। प्रकृते। एवमिति सांख्यभ्रमजनकं यथा भवति तथात्मानं रथिनमित्यादिप्रकारेण। पुरुषेति। दृश्यते त्वग्र्यया बुद्ध्या' इति। महतः परं ध्रुवं तं निचाय्येति। प्रकृतिविषयकस्य तयोः प्रकृति-

तदनु, एव सर्वेषु भूतेष्विति पुरुषज्ञानम् । अशब्दमिति तु प्रकृतिज्ञानम् । तस्मादेतावत्प्रकरणे साङ्ख्यमतनिरूपणादशब्दत्वमसिद्धमित्याशङ्क्य परिहरति ॥ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ अस्मादुक्तव्याख्याने त्रिप्रकरणत्वमन्यथा

भाष्यप्रकाशः ।

तयोरन्तरमेव ज्ञातं भवतीति नेदमीश्वरबोधकत्वेन वक्तुं शक्यमिति प्रधानस्याशब्दत्वकथनमयुक्तमित्यर्थः । अस्मादुक्तेत्यादि । अयमर्थः । उभयाऽऽकाङ्क्षा हि प्रकरणम् । साऽत्र त्रयाणामग्निजीवब्रह्मणामेव प्रश्नोत्तराभ्यां प्रतीयते । यदि तृतीयस्यां वक्ष्यमाणम्, 'इन्द्रियेभ्यः' इत्यारभ्य प्रकरणान्तरं स्यात् तदा पूर्ववदत्रापि प्रश्नोत्तरे स्याताम् । यदि च स्वत एव वरान्तरं दद्यात्, तदा, 'तमब्रवीत् प्रीयमाणः' इतिवत् तमप्युपक्षिपेत् । किंचैतस्य प्रकरणान्तरस्य किं प्रयोजनमित्यपि विचारणीयम् । यदि मुक्तिस्तदा तु, 'अन्यच्छ्रेयो अन्यदुतैव प्रेयः' इत्यारभ्य, 'सोऽध्वनः पारमाप्नोति, तद्विष्णोः परमं पदम्' इत्यन्तैरेव वाक्यैः सपरिकरायास्तस्या उक्तत्वात् किमनेन । यदि च स्वरूपावस्थानरूपा काचिदन्या परमपदप्राप्तिर्तोऽप्युत्कृष्टाभिमन्यते, तदा तु, 'स तु तत्पदमाप्नोति यस्माद् भूयो न जायते । सोऽध्वनः पारमाप्नोति' इत्येतस्य पूर्वग्रन्थस्य विरोधः । त्रिविधदुःखात्यन्तनिवृत्तेः पदप्राप्त्यैवोक्तत्वात् । विज्ञानरूपस्य स्वरूपावस्थानसाधनस्यापि ततः प्रागेवोक्तत्वाच्च । किंचाशब्दमत्रे प्रकृतिज्ञाना-

रश्मिः ।

पुरुषयोरन्तरं भेदः । नेदमिति 'अशब्दमस्पर्शमरूपमव्ययम्' इति वाक्यम् । अनेन भाष्यार्थः स्पष्टः । उभयेति यथा प्रयाजादिषु समिधो यजतीत्यत्रेष्टविशेषाश्रवणात् समिधा यागेन भावयेत् किमित्यस्त्युपकार्याकाङ्क्षा । दर्शपूर्णमासवाक्येऽपि दर्शपूर्णमासाभ्यां स्वर्गं भावयेत् कथमित्यस्त्युपकारकाकाङ्क्षा तया दर्शपूर्णमासाङ्गत्वं प्रयाजादीनां सिद्ध्यतीति । अत्र विश्वजिन्न्यायसत्रिसत्रन्याययोर्नावकाश इत्युपपादितं पूर्वतन्त्रे । श्रूयमाणफलस्यैव साधनसाकाङ्क्षत्वादत्र चातथात्वात् केवलं किं भावयेदिति भाव्यमात्राकाङ्क्षा प्रयाजादीनामित्येवं बोध्यम् । सेति उभयोः प्रश्नोत्तरयोः प्रतिपाद्यप्रतिपादकयोः परस्पराकाङ्क्षा । अन्यथेति भाष्यं विवृण्वन्ति स्म यदीति । ननु तमब्रवीत् प्रीयमाण इति वरोऽस्तु सांख्यविधेत्याकाङ्क्षायामाहुः यदि चेति । वच्यादमिः । तं नचिकेतसं, तं वरं तवैव नाम्ना भवितायमग्निरिति श्रुत्वा नचिकेतसो वाजःश्रवःपुत्रस्य नाम्नाग्निरपि नचिकेता इति वरः । मुक्तिरिति 'मुक्तिरन्तरायध्वस्तेर्न परः' इति सांख्यसूत्रम् । अभीति पञ्चशिखर्षिः अभिमन्यते सनन्दनाचार्यो वा । उक्तत्वादिति 'यस्माद्भूयो न जायते' इति श्रुत्योक्तत्वात् । नन्वन्यच्छ्रेय इत्यादिना मुक्तेरुक्तावपि विज्ञानं तत्साधनं नोक्तमिति चेत्तत्राहुः विज्ञानेति । तत इति मुक्तिबोधकादन्यच्छ्रेय इत्यादिसंदर्भात्प्राक्

'यस्मिन्निदं विचिकित्सन्ति मृत्यो
यत्सांपराये महति ब्रूहि नस्तत् ।
योयं वरो गूढमनुप्रविष्टो
नान्यं तस्मान्नचिकेता वृणीते' ॥

इति श्रुत्योक्तत्वात् । अस्या भाष्यम् । यस्मिन् प्रेते इदं विचिकित्सनं सांपराये परलोकविषये । महति महत्प्रयोजननिमित्ते, गूढं गहनं दुर्विवेचनं प्राप्तस्तस्माद्वरादन्यं वरं नचिकेता न

चतुष्प्रकरणत्वं स्यात्। तृतीया चैषा वल्ली। 'स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यम्' इति प्रश्नः प्रथमः। 'प्रतिब्रवीमि तदु मे निबोध स्वर्ग्यमग्निं

भाष्यप्रकाशः।

टीकारस्तु 'मृत्युमुखात् प्रमुच्यते' इति फलोक्त्यैव विरुध्यते। तस्माच्चतुष्प्रकरणत्वमसंगतमिति। किंच, तृतीयैषा वल्ली। अतस्तृतीयप्रश्नोत्तरत्वमेवात्र युक्तम्। न त्वाकस्मिकं सांख्यमतनिरूपकत्वेन प्रकरणान्तरत्वम्। यतः, स त्वमग्निमित्यादिना, प्रतिब्रवीमीत्यादिना च त्रीण्येव

रश्मिः।

वृणीते मनसापीति श्रुतेर्वचनमिति। अत्रेदं विचिकित्सनं करोति बहुवचनं छान्दसं बहुलमिति योगविभागसूत्रेण यथा चषालं ये अश्वयूपाय तक्षतीति ये तक्षतीति प्राप्तं तत्र

'सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च।
व्यत्ययमिच्छति शास्त्रकृदेषां सोपि च सिध्यति बाहुलकेन' ॥

इति व्यत्ययो बहुल मिति सूत्रकारिकया तिङ्व्यत्ययः। सूत्रे योगविभागो महाभाष्येस्ति। अन्यार्थे विज्ञानं न स्पष्टं यतो यस्मिन् पूजके प्रेते यत्पूजादि कर्तृ इदं परमैश्वर्यवद्ब्रह्म तदन्यं गतं प्राप्तं तोयादि विचिकित्सन्ति कित निवासे भ्वा. प. से. केतितुमिच्छति सांपराये परलोके प्रापयितव्ये सति। अथवा परः पुरुषोत्तमः तस्यायो ज्ञानं तथा च सम्यग्भूतं पुरुषोत्तमज्ञानं येन स संपरायो भक्तिमार्ग इति यावत्। अथवा परे पुरुषोत्तमे अयो गमनं प्रवेश इति यावत्। तथा च सम्यक् परायो येन स तथा भक्तिमार्ग इत्यर्थः। तस्मिन् प्रापयितव्ये महति फलानां मध्ये तेनाल्पे ज्ञानमार्गीयाक्षरे प्रापयितव्ये तदप्युक्तं तृतीयाध्यायतृतीयचरणे 'संपराये तर्तव्याभावात् तथा ह्यन्ये' इति सूत्रभाष्ये ज्ञानमार्गेक्षरप्राप्त्येत्यादिना किं चान्येष्वल्पेषु पित्र्यगान्धर्वप्राजापत्यदैवमानुषान्यभूतसंबन्धिषु प्राप्यं त्वत्र श्रुतं नाल्पं किं तु महत् तद्विस्तारकं नोस्मान् ब्रूहि हे मृत्यो गूढं ज्ञानसंवरणं यथा भवति तथा श्रद्धामनु पश्चात् नचिकेतसि प्रविष्ट इत्यादिश्रुतेर्वचनम्। अत्र विज्ञानं तेनाल्पे इत्यनेन प्राप्यते स्वरूपावस्थानमपि परमपदप्राप्त्यङ्गं प्राप्नोति। मुक्तोपसृप्यव्यपदेशादिति सूत्रात्। तृतीयेत्यादि भाष्यं व्याचख्युः किं चेति। तृतीयेति तृतीयं च तत् प्रश्नश्चोत्तरं च तयोः समाहारः प्रश्नोत्तरं तृतीयं प्रश्नोत्तरं तस्य भावः। तद्भाष्ये स्पष्टम्। स त्वमग्निमित्यादिभाष्यार्थमाहुः यत इति। श्रुत्यर्थस्तु हे मृत्यो स एवं गुणविशेषणविशिष्टः स्वर्गलोकस्य प्राप्तिसाधनमग्निं स्वर्गे साधुं 'तत्र साधुः' इति यत्। त्वमध्येषि स्मरसि तं मह्यं नचिकेतसे ब्रूहि श्रत् सत्यं दधानाय कर्तरि शानच्। अयं प्रश्नः, ब्रूहीति संप्रश्ने लोट्। इत्यादिनेत्यादिपदेन भाष्योक्तोत्तरादि। उत्तरार्थः। प्रति ते भागं ब्रवीमि त्वां प्रतीत्यध्याहारात्। क्वचित् प्र ते ब्रवीमीति पाठः ते तुभ्यं प्रब्रवीमीत्यर्थः। तत उभे मत्तो विबोध प्रजानन्नहं मृत्युः तदुभे इत्यपपाठः। भाष्ये। आदिपदेन स्वर्गलोक। अमृतत्वं भजन्ते एतद्द्वितीयेन वृणे वरेणेति येनाग्निनोचितेन स्वर्गो लोको येषां ते स्वर्गलोका यजमाना अमृतत्वमानन्दं भजन्ते तदुपर्यप्यधिकारात् सेवन्ते तदेतदग्निविज्ञानं द्वितीयेन वरेण वृण इत्यर्थः। प्रकृते। येयं विचिकित्सा गन्तुर्भगवतो निवासेच्छा। अयमिति अव्विकारद्वयम्। विचिकित्सत्यर्थः। प्रश्नोयम्। अश्लीलत्व लेडाश्रयणात्। अस् भुवि 'लिङर्थे लेट्' इति सूत्रेण लेट्, अस्ति 'सिब्बहुलं लेटि' इति बहुलग्रहणान्न सिप् 'इतश्च लोपः परस्मैपदेषु' इति तिप इकारालोपः। वृत्तौ वाकारग्रहणाद्विकल्पात् 'लेटो डाटौ' इति सूत्रेण नाडाद्यवम्, छन्दसि सर्वविधीनां विकल्पात्। अश्लीलं परमनुपपत्तीत्वस्ति इति प्रयोगसिद्धिः। अत्र संप्रश्ने लेडिति। देवैरत्रापि विचिकित्सितं पुरा नहि

भाष्यप्रकाशः ।

प्रश्नोत्तराणि प्रतीयन्ते । नच पितृसौमनस्येनाग्निजीवप्रश्नाभ्यां च वरत्रयपूर्तेस्तृतीयप्रश्नस्य.

रश्मिः ।

सुविज्ञेयमणुरेष धर्म इत्युत्तरम् । शाब्दविज्ञानविषयत्वमात्रमिति तु । अन्यत्रेति धर्मादिभ्योऽन्यत्र ।

'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् ।
अन्यत्र भूताच्च भव्याच्च यत्तत् पश्यसि तद्वद' ॥

इति स्पष्टा । प्रश्नोयम् । वदेति प्रश्ने लोट् ।

'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्' ॥
'एतद्ध्येवाक्षरं ब्रह्म ह्येतद्ध्येवाक्षरं परम् ।
एतद्ध्येवाक्षरं ब्रह्म यो यदिच्छति तस्य तत्' ॥ इत्युत्तरम् ।

आमनन्ति अभ्यसन्ति, तपांसि पुराणानि विचारकत्वात् तप आलोचनेऽसुन् । गुरुभजनवान् ईश्वरभजनकर्तृत्वादत्र । भाष्ये । ननु पाठक्रमात्पूर्वमुपन्यासात्प्रश्नप्रक्षेपोऽयुक्त इत्याशङ्क्याहुः उपेति । उपन्यासः कथनम् । पश्चादिति तथा च यथा वह्निमान् धूमादित्यत्र हेतोः पश्चाद्वचनम् । तथात्रोपन्यासः प्रश्नात् । यथा दशमस्कन्धे प्रश्नादुपन्यासः साध्यतावच्छेदकसंबन्धो वाच्यतया प्रबन्धः । हेतुतावच्छेदकसंबन्धो वाच्यता । अत एवेति अनुमानध्वननादेव । तस्येति प्रश्नस्य । प्रकृते । इन्द्रियेभ्यः परा इत्यारभ्य नाचिकेतमुपाख्यानमित्यन्ते भिन्ने प्रकरणेऽभावात् पूर्ववल्लोट- लेटोरभावेन तस्य । ननु घटो घटश्चेत्युक्तिवदुपन्यासः प्रश्नश्चेत्युक्तिरस्त्वनुमानबोधकं किं पदमित्यत आहुः उत्तरेति । स्यादेवं घटः पट इत्यनुक्त्वा पोट घट इतिवदुपन्यासः प्रश्नश्चेति विपरीतं न त्वेवं किं तु भिक्षामट गां चानयेतिवदन्वाचये चकारोस्तीति तेन गवानयनवत् भिक्षाटनकर्तृत्वादेव- दस्यवदिति चोपन्यासवती प्रश्नवतीत्वादिति चकारान्वाचययोरर्थादुत्तरः उपन्यासादुत्तरः प्रश्नस्तस्य भावः सत्ता तदर्थं चकार इति भाष्यार्थः । प्रकृते । त्रीण्येवेति । भाष्ये एवकारं समर्थयितुं जीवब्रह्मवादं च निराकर्तुं शंकरभाष्यस्थं किंचिदाहुः न च पित्रिति । अयमर्थः । पूर्वं उशन् इच्छन् अर्थात् पुत्रं वाजश्रवसो वाजमन्नं तस्माच्छ्रवः श्रवणं यस्य स वाजश्रवास्तस्यापत्ये वाजश्रवसो नाम स पुत्रेष्ट्येजे तत्फलं कामयमानः स तस्यामिष्टौ सर्ववेदसं सर्वस्वं ददौ । तस्य ह नचिकेताः पुत्र आस स सर्वस्वान्तर्गतः स्वस्यादाने पितुरनिष्टं फलं श्रद्धावेशादाज्ञाय तात 'कस्मै मां दास्यसि' इत्युक्तवान् । शंकरभाष्ये तु वाजमन्नं तद्दानादिनिमित्तं पुत्रेष्ट्येजे इत्यत्र विश्वजिता सर्वमेधेनेजे इति पठितम् । तदा पिता स्वस्य सर्वस्वदानसत्यतायै मृत्यवे दत्तवान् स च यमभवनं गत्वा तिस्रो रात्रीरुवास ततश्च यममाह भार्या भगिनी वा, पद्मपुराणे यमुनामाहात्म्ये यमुनावचनं यमं प्रति स्मर्यते

'ब्रूहि भ्रातः स्वकार्यं हि किं त्वं श्रावय तत्पदम् ।
तदाकर्ण्य करिष्यामि विचार्य स्वहृदि प्रियम्' ॥ इति, तद्वत् ।

उदकाहरणं ब्राह्मणाय कर्तव्यमित्येवमुक्तो यम आह—

'तिस्रो रात्रीर्यदवात्सीर्गृहे मे अनश्नन् ब्रह्मन् अतिथिर्नमस्यः ।
नमस्तेऽस्तु ब्रह्मन् स्वस्ति मेऽस्तु तस्मात्प्रति त्रीन् वरान् वृणीष्वेति' ॥

१. ईश्वरं गुरुं च भजतीति । २. सङ्गुणये । ३. गुरुभजनवान् ईश्वरभजनकर्तृत्वादत्रापीत्यत्र इति । ४. चकारस्तदुत्तरवाचर्थादुत्तरः ।

रश्मिः ।

तत्रैकैकां रात्रिं प्रति त्रीन् वरान् वृणीष्वेति शंकरभाष्यम् । शान्तसंकल्पः सुमना वीतमन्युरिति वरत्रयसंभवादिति त्रीन् वरान् वृणीष्वेति मृत्युनोक्तो नचिकेताः ।

'शान्तसंकल्पः सुमना यथा स्याद्वीतमन्युः गौतमो माभिमृत्यो ।
त्वत्प्रसृष्टं माभिवदेत् प्रतीत एतत्त्रयाणां प्रथमं वरं वृणे' ॥

इति पितृसौमनस्येनेत्यर्थः । किंचाग्निजीवप्रश्नाभ्यां स त्वमग्निमित्यस्योत्तरार्धे 'स्वर्गलोका अमृतत्वं भजन्ते' एतद्द्वितीयेन वृणे वरेणेति द्वितीये वरे प्रथमप्रश्नपरिसमाप्तेस्तथा 'येयं प्रेते विचिकित्सा' इत्यस्योत्तरार्धे 'एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः' इति तृतीये वरे द्वितीयप्रश्नपरिसमाप्तेरन्यत्र धर्मादित्युक्तस्तृतीयः प्रश्नः काल्पनिकः कल्पनेन व्यवहरति 'तेन दीव्यति खनति' इति ठक्, इत्याद्यज्ञानस्तृतीयः प्रश्न इति भाष्यमाक्षिप्तम् । तेन जीवप्रश्न एव परमात्मप्रश्न इति पुनरनुकृष्यते जीवप्राज्ञयोरभेदात् । न च जीवस्य धर्मादिगोचरत्वात् स नान्यत्र धर्मादिति प्रश्नमर्हति प्राज्ञस्तु धर्मातीतत्वात् अन्यत्र धर्मादिति प्रश्नमर्हति प्रश्नच्छाया च न समाना लक्ष्यते पूर्वस्यास्तित्वनास्तित्वविषयत्वादुत्तरस्य धर्मातीतविषयत्वात् । तस्मात्प्रत्यभिज्ञानाभावात् प्रश्नभेदो न पूर्वस्यैवोत्तरत्रानुकर्षणमिति शङ्क्यम् । भवत्प्रष्टव्यभेदात् प्रश्नभेदो यद्यन्यो जीवः प्राज्ञतः स्यान् न त्वन्यत्वमस्ति तत्त्वमसीत्यादिश्रुत्यन्तरेभ्यः इति शंकराचार्याः जीवब्रह्मवादमवतारयन्ति सोऽत्रावतारितस्तद्दूषयामासुः यत्तदिति । अयमभिप्रायः पश्यसीति पदात् ।

'ब्रह्म वा शून्यवद्भातं व्योमेव ब्रह्म तादृशम् ।
प्रकाशते लोकदृष्टया नान्यथादृक् स्पृशेत् परम्' ॥ इति ।

निबन्धोक्तरूपसारणात्तस्य चात्यन्तजीवभिन्नत्वेन प्रश्नभेद इति । जीवस्य त्वप्रत्यक्षत्वं 'कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्' इति श्रुतेः । न चावृत्तचक्षुस्त्वं पश्यसि तद्वदेर्थं इति शङ्क्यम् । 'त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि' इति वायुप्रतिपादकश्रुतेः 'ब्रह्म तर्हि अग्निः' इति श्रुतेश्च अग्निस्तु पृष्ट एव । जीवस्याणुत्वं जीवाणुत्ववाद उपपादि, अतो न जीवो वायुवत्प्रत्यक्ष इति । अन्यच्च वायुरपि त्वाचप्रत्यक्षविषयोतोऽक्षरं प्रत्यक्षं पृष्टं परं च अन्यच्च शंकरभाष्येऽस्य प्रश्नस्याङ्गीकारः केषांचिदस्य पृथक् सत्त्वं स्फोरयति सूत्रकृताङ्गीकृतं सत्त्वमिति चेत् कुतो निराक्रियते श्रुत्यर्थसंगतिबलादिति चेन्न पद्मपुराणे उत्तरखण्डे उमामहेश्वरसंवादे गुणत्रयविवरणकथने 'मायावादमसच्छास्त्रमित्यस्यानिराकरणाच्छिन्नेन । ननु तर्हि श्रुत्यर्थसंगतिरन्या केति चेन्न ब्रह्मवादेन संगतिः सुस्थिरा भवति । तथाहि सौमनस्यपर्यन्तं समानकं सर्वमुक्तम् । अर्थस्तु हे मृत्यो मामभि मां प्रति भविता शान्तसंकल्प इत्यादिरूपः सन् त्वत्प्रसृष्टं त्वदर्जितं माभिवदेत्प्रतीतो लब्धस्मृतिः स एवायं पुत्रो ममेत्यभिजानन् एतत्प्रयोजनं वरमाद्यं वृणे । तदा मृत्युरुवाच 'यथा पुरस्तात् भविता प्रतीतः' इति तव पिता भवितेत्यर्थः । नचिकेता उवाच ।

'स्वर्गे लोके न भयं किंचनास्ति न तत्र च त्वं न जरया बिभेति' किं च
'उभे तीर्त्वा अशनायापिपासे शोकातिगो मोदते स्वर्गलोके' इति

यामिति वर्णागमः । एतदग्रे स त्वमग्निमिति । इतः संगतिर्भिन्ना त्रयाणामेवाग्निजीवपरमात्मनामेव वरप्रदानसामर्थ्यात् वक्तव्यतयोपन्यासो दृश्यते कठवल्लीषु तद्विषय एव च प्रश्नो नातोऽन्यस्य प्रश्न उपन्यासो वा दृश्यते इति सूत्रार्थः परेषाम् । अवधारण एवं परं व्याकृतमम

नाचिकेतः प्रजानन्' इत्याद्युत्तरम् । 'येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके' इति द्वितीयः प्रश्नः । देवैरत्रापीत्यग्रे उत्तरम् । 'अन्यत्र धर्मादन्यत्राधर्मात्' इति तृतीयः प्रश्नः । 'सर्वे वेदा यत् पदमामनन्ति' इत्यादिना

भाष्यप्रकाशः ।

काल्पनिकत्वं शङ्क्यम् । 'यत् तत् पश्यसि तद् वद' इति श्रुत्यैव सिद्धत्वात् । नच निर्हेतुकत्वम् । 'तमब्रवीत् प्रीयमाणो महात्मा' इत्युक्तवरवदस्यापि वक्तृप्रीतिहेतुकत्वात् । नच तत्प्रीतेः काल्पनिकत्वम् । 'नैषा तर्केण' इति वाक्यस्थस्य प्रेष्ठपदस्यैव गमकत्वात् । नच 'यत् सांपराये महति ब्रूहि नस्तत्' इतिवदस्यापि पूर्वप्रश्नानुवादत्वं शङ्क्यम् । विषयनिर्देशविरोधात् । नच, 'येयं प्रेते'

रश्मिः ।

तु त्रयाणामेव प्रकरणानामेक एवशब्देन चतुर्थप्रकरणव्यवच्छेदः । अस्मदुक्तेति भाष्यात् । उत्तरत्वेन त्रयाणामेव न चतुर्थस्यैवमुपन्यासः । चकारोऽग्न्यादिसमुच्चये, अग्न्यादिकथनं च प्रश्नसमुच्चये, प्रश्नश्च द्वितीयचकार उत्तरप्रश्नभावार्थं स चोत्तरः प्रयोक्तव्यः उत्तरवतीवेदान्तप्रश्नात् यथैवं तथैवं वेदश्रुतिवदित्युत्तरोत्तरप्रश्नप्रयोगफलं वह्निमान् धूमादित्यत्र पर्वतो वह्निमानितिवदुत्तरप्रयोगफलमिति सूत्रार्थः । सिद्धत्वादिति वदेति लोटः संप्रश्नार्थकत्वेन तथा तस्मात् । नन्वन्येऽप्यर्थाः सन्ति संप्रश्नार्थग्रहणे किं कारणमिति चेन्न । तृतीयवरानन्तरमन्यं वरं नचिकेतो वृणीष्वेति मृत्यूक्तेः वर-कारणसत्त्वात् । श्रुत्यैवेत्यत्रैवकारेण वरव्यवच्छेदः । वराभावं तत्र कारणाभावं च शङ्कते स्म न च निरिति । आपद्येत इति शङ्क्यमिति शेषः । वरवदिति तवैव नाम्ना भवितायमग्निरिति वरवत् षष्ठ्यन्ताद्वतिः । अस्येति तुरीयवरस्य इति । वाक्येति

'नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ ।
यां त्वमापः सत्यधृतिर्बतासि त्वादृङ् नो भूयान्नचिकेतः प्रष्टा' ॥

इति वाक्यस्थस्य । किंच वरप्रदानसामर्थ्यात् प्रश्नोत्तरे इत्यसंबद्धं वरोऽभीष्टमिति पक्षे वरः श्रेष्ठ इति पक्षे च प्रश्ने तयोः सामर्थ्यस्याहेतुत्वात् । अभीष्टश्रेष्ठसामर्थ्याभावेऽप्यनुरोधात् प्रश्नदर्शनात् । तदत्र नास्ति यौक्तिकत्वात् । तर्हि अनुवादत्वमस्य तृतीयप्रश्नस्यास्त्वित्याहुः न च यदिति । अयं च 'येयं प्रेते' इति प्रश्नानुवादः । 'यस्मिन्निदं विचिकित्सन्ति मृत्यो' इति पूर्वपादात् । अर्थस्तूक्तः । तदुभयोरर्थयोः प्रथमेऽर्थेऽनुवादत्वम् । अस्येति तृतीयप्रश्नस्य । पूर्वप्रश्नो जीवप्रश्नस्तस्यानुवादत्वं सिद्धस्य कथनमनुवादस्तस्य भावः । विषयेति । पूर्वस्य जीवः तृतीयप्रश्नस्याक्षरः । न च जीवोऽक्षर इति पूर्वानुवादत्वं 'एतद्ध्येवाक्षरं परम्' इतिश्रुतौ परपदेनादृश्यत्वाद्यधिकरणोक्तपरब्रह्मोक्तेः । न च 'एतद्ध्येवाक्षरं ब्रह्म ह्येतद्ध्येवाक्षरं परम्' इत्याद्यनन्तरं 'न जायते म्रियते वा विपश्चित्' इति जन्ममरणप्रतिषेधेन प्रतिपाद्यमानशारीरपरमेश्वरयोर्भेदं दर्शयति । सति हि प्रसङ्गे प्रतिषेधो भागी भवति प्रसङ्गश्च जन्ममरणयोः शारीरसंस्पर्शात् शारीरस्य भवति न परमेश्वरस्य । तथा ।

'स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति' ॥

इति स्वप्नजागरितदृशो जीवस्यैव महत्त्वविभुत्वविशेषणस्य मननेन शोकविच्छेदं दर्शयन् प्राज्ञादन्यो जीव इति दर्शयति प्राज्ञविज्ञानाद्धि शोकविच्छेद इति वेदान्तसिद्धान्तः । तथाग्रे 'यदेवेह तदमुत्र यदमुत्र तदन्विह मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इति जीवप्राज्ञभेददर्शिनमपवदति

भाष्यप्रकाशः ।

इत्येतदुत्तरस्य ब्रह्मप्रश्नात् प्रागभावात् तत्पूर्वग्रन्थस्य तदनुत्तरत्वं शङ्क्यम् । 'न सांपरायः' इति वाक्ये परलोकासत्त्वमानिनः पुनः पुनः स्ववशगत्वोक्त्या तादृशस्याप्यस्तिबोधनस्यै वोत्तरत्वात् ।

रश्मिः ।

चातो जीवब्रह्मवादोस्त्विति वाच्यम् । अदृश्यत्वाद्यधिकरणोक्तं रूपमेतद्ध्येवाक्षरं ब्रह्मेत्युक्त्वा न जायत इति श्रुत्युक्तेरेतासां कृष्णावतारपरत्वात् । विपश्चित्पदात् 'सूर्यो विपश्चिन्मनसा पुनातु' इति विपश्चितः सूर्यत्वं कृष्णस्य सूर्यत्वं च 'कृष्णद्युमणिनिम्लोचे' इति वाक्यात् । अतः कृष्णविपश्चितोरेकार्थवाचकत्वम् । जन्ममरणयोराविर्भावतिरोभावात्मकत्वान्न दोषः । 'आविर्भावतिरोभावौ शक्ती वै मुरवैरिणः' इति वाक्यात् । न च मुरस्य जलदोषात्मकस्यारित्वसमकालिकावाविर्भावतिरोभावाविति शङ्क्यम् । नारायणत्वेनात्मत आविर्भावतिरोभावाविति श्रुतेश्च मुरवैरित्वसमकालिकत्वस्याविर्भावतिरोभावयोः पौराणत्वात् । स्वप्नान्तं जागरितान्तं चेत्यादि कृष्णावतारे 'लोकवत्तु लीलाकैवल्यम्'इति सूत्रात् । इहेति इह लोके कृष्णावतारे । अमुत्र परब्रह्मणि । नानादर्शने स्वगतद्वैतापत्तिरतः साधनै राजसतामसज्ञाने निहत्य सात्त्विकं ज्ञानं संपाद्य नानादृष्टिर्निवर्तनीया तदुक्तम्

'सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।
अविभक्तं विभक्तेषु तज्ज्ञानं सात्त्विकं स्मृतम्' ॥

इत्येकादशस्कन्धे । अतो न जीवब्रह्मवादः । एवं विषयनिर्देशविरोधादित्यर्थः । किं च अनूद्यजीवप्रश्न एकः अनुवादकं तु दृष्टान्तदार्ष्टान्तिकयोर्भिन्नं तत्र यदि दृष्टान्तेऽनुवादकं वाक्यं स्यात् तदा दार्ष्टान्तिकेपि वदेत् तदेव तु न दृष्टान्तीयानुवादकवाक्यस्य त्वर्थान्तरादिदं वाक्यं जीवप्रश्ने मृत्युना 'अन्यं वरं नचिकेतो वृणीष्व' इत्युक्तौ नचिकेताः

'यस्मिन्निदं विचिकित्सन्ति मृत्यो यत्सांपराये महति ब्रूहि नस्तत् ।
योयं वरो गूढमनुप्रविष्टो नान्यं वरं तस्मान्नचिकेता वृणीते' ॥

इत्याह । अत्र तस्मादित्यस्य यस्मिन्नित्यादिनानूदितद्वितीयप्रश्नार्थादित्यर्थे अनुवादः स्यान्न त्वेवं न्यूनताख्यनिग्रहस्थानापत्तेः । न हि ब्रह्म जीवस्यात्ममात्रं 'अधिकं तु भेदनिर्देशात्' इति सूत्रात् किं तु तस्मादित्यस्य श्रौतपदस्योक्तोभयार्थद्वितीयपक्षः ब्रह्मण इत्यर्थः । अतोनानुवादत्वं शङ्क्यमित्यर्थः । न चात्र चतुर्थो वरस्तस्य समाप्तत्वात् नचिकेता नामा अग्नि प्रसिद्धौ अतोन्यं वरं नचिकेतो वृणीष्व इत्यन्तं चरमवरकारणकस्तृतीयो ब्रह्मप्रश्न इति । एवं तृतीये प्रश्ने समर्थिते देवैरत्रापीत्यस्य प्रथमवल्लीसमाप्तिपर्यन्तस्योत्तरत्वम् । द्वितीयवल्लीस्थस्य ॐअन्यच्छ्रेय इत्यादेरनुत्तरत्वमाशङ्क्य समादधुः न च येयमिति । येयं प्रेत इत्यस्य प्रश्नस्य यदुत्तरं तस्य देवैरत्रापीत्यारभ्य 'नचिकेता वृणीते' इति प्रथमवल्लीसमाप्त्यन्तस्य ग्रन्थस्यात्र प्रागभावादित्यत्र प्राग्भावादिति पाठः । तत्पूर्वेति ब्रह्मप्रश्नात्पूर्वग्रन्थस्य प्रथमवल्लीसमाप्त्यनन्तरस्य ॐअन्यच्छ्रेय इत्यादिग्रन्थस्य द्वितीयवल्लीस्थस्य 'न सांपरायः' इति वाक्यात्पूर्वस्य । तदनुत्तरत्वं द्वितीयप्रश्नानुत्तरत्वं विचिकित्सनाभावाच्छङ्क्यम् । न इति ।

'न सांपरायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम् ।
अयं वा लोको नास्ति पर इति मानी पुनःपुनर्वशमापद्यते मे' ॥

इति वाक्ये । स्ववशेति मृत्युवशगत्वोक्त्या । तादृशेति परलोकासत्त्वमानिनोपि । अस्ति 'अस्तीत्येके नायमस्तीति चैके' इत्यनयोरस्तिबोधनपक्षस्यात्रापि सत्त्वात् । यद्धर्मप्रकारकयद्विषयकप्रश्नस्तद्धर्मावच्छिन्नतदुद्देश्यकमुत्तरमिति नियमस्य को घटः कम्बुग्रीवादिमान् घट इत्यादिषु दर्शनादस्ति-

भाष्यप्रकाशः ।

नच तदग्रिमग्रन्थवैयर्थ्यं शङ्क्यम् । उत्तमाधिकारदर्शनेनाधिकप्रश्नोदयार्थमेव तदुक्त्या अवैयर्थ्यात् । तत एव श्रेयःप्रेयसोर्विद्याविद्ययोश्च कथनमपि युज्यते । अतः 'तं दुर्दर्शम्' इति वाक्यद्वयान्त-

रश्मिः ।

घटितजीवप्रश्नस्याखिलबोधकस्यासंपराय इति वाक्यस्योत्तरत्वादिति । तदग्रिमेति न संपराये-तिवाक्याग्रिमस्य 'श्रवणायापि बहुभिर्यो न लभ्यः' इत्यादिजीवनिरूपकग्रन्थस्य वैयर्थ्यम् । उत्तमेति यस्मिन्निदमिति वाक्येन कामाप्रलोभादुत्तमाधिकारदर्शनेन त्वादृङ् नो भूयान्नचिकेतः प्रष्टा' इति प्रश्नप्रशंसया चोत्तमाधिकारदर्शनेन । अधिकेति ब्रह्मप्रश्नोदयार्थम् । तदुक्त्येति तदग्रिमग्रन्थोक्त्या हेतोः । तत इति अधिकप्रश्नोदयार्थत्वादेव

'अन्यच्छ्रेयो अन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषं सिनीते ।
तयोः श्रेयआददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते ॥
श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ संपरीत्य विविनक्ति धीरः ।
श्रेयो हि धीरो अभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद् वृणीते ॥
सत्त्वं प्रियान् प्रियरूपांश्च कामान् अभिध्यायन्नचिकेतोऽत्यस्राक्षीः ।
नैतां सृतिं वित्तमयीमवाप्तो यस्यां मज्जन्ति बहवो मनुष्याः' ॥

इति श्रेयःप्रेयसोः । सिनीत इति छान्दसत्वादेकवचनं बध्नीत इत्यर्थः । आ इत इति छेदः । एत इत्यत्र प्राप्तुतः । तौ संपरीत्य मनसालोच्य विविनक्ति पृथक्करोति गुरुलाघवम् । अभिप्रेयसे इति अभिप्रेयो विहाय । प्रेयः पशुपुत्रादिलक्षणम् । योगक्षेमात् योगक्षेमनिमित्तम् । सृतिमिति गतिम् । अतस्त्वं नचिकेतः श्रेय आददान इति भावः । विद्येति उक्तश्रुत्यग्र एव

'दूरमेते विपरीते विषुची अविद्या या च विद्येति ज्ञाता ।
विद्याभीप्सितं नाचिकेतसं मन्ये न त्वा कामा बहवो लोलुपन्तः ॥
'अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः ।
दन्द्रम्यमाणाः परियन्ति मूढाः अन्धेनैव नीयमाना यथान्धाः' ॥

इत्यनेन विद्याविद्ययोः दूरं महतान्तरेण एते श्रेयःप्रेयसी । विषूची इति । ष्वच गतौ भ्वा. आ. से. ष्वचते इन् संप्रसारणं नानागतिभिन्नफले संसारमोक्षहेतुत्वेन एका विषूचिरविद्या या । सोर्याच् । अपरा विषूचिर्विद्या इति ज्ञाता भवेत् । विद्या अभीप्सिता यस्य । दन्द्रेति द्रम गतौ भ्वादिः आ. से. यङ् दन्द्रम्यन्ते दन्द्रम्यमाना, शानच्, आने मुक् । पुनःपुनः कामकामा गम्यन्ते आगम्यन्ते चेत्यर्थः । परियन्तीति परितो गच्छन्ति श्रेयःप्रयसोर्विद्याविद्ययोश्च कथनमेवं कृतमस्याधिकप्रश्नोदया-र्थत्वं तु अर्थस्य प्रयोजनरूपत्वादधिकप्रश्नोदयः प्रयोजनमस्य कथनस्य । अत्र कथनस्य कारणत्वम-त्रापि कथनरसाभिनिवेशः कारणमिति ज्ञेयम् । तच्च प्रथमस्कन्धसुबोधिन्यां 'त एकदा तु मुनयः' इत्यत्रोक्तम् । अत्र प्रश्नकथनरसाभिनिवेशयोः शौनकनिष्ठत्वम् । तत्र तु प्रश्नस्य नचिकेतोनिष्ठत्वं कथन-रसाभिनिवेशस्य मृत्युनिष्ठत्वमिति । व्यधिकरणं फलं केनचित्संबन्धेन समानाधिकरणम् । अत इति एतावतो ग्रन्थस्योक्तसंगतिकत्वादग्रे जीवप्रश्नासंगतत्वाच्च । वाक्येति । वाक्यद्वयमग्रे वक्तव्यम् ।

१ विद्याभीप्सिनं नचिकेतसं मन्ये न त्वा कामा बहवो लोलुपन्ते ।

भाष्यप्रकाशः।

संदर्भ एव तृतीयवरप्राप्तस्य द्वितीयप्रश्नस्य पूर्तेः 'अन्यत्र धर्मात्' इत्यनेनोक्तस्य प्रश्नस्य तृतीयत्वं प्रसादहेतुकत्वं च मन्तव्यम्। नच प्रसङ्गाभावः शङ्क्यः। जीवप्रश्नप्रत्युत्तरोपसंहारत्वे दुर्दर्श-वाक्योत्तरम्।

'एतच्छ्रुत्वा संपरिगृह्य मर्त्यः प्रगृह्य धर्म्यमणुमेतमाप्य।
स मोदते मोदनीयं हि लब्ध्वा विवृतं सद्म नचिकेतसं मन्ये'॥

इत्यस्मिन् वाक्ये, एतत्पूर्ववाक्योक्तं, देवं व्यवहर्तारं जीवमाचार्यमुखाच्छ्रुत्वा संपरिगृह्य सम्यगात्मत्वेनोपादाय मर्त्यः शरीरद्वयव्यतिरिक्तत्वज्ञानेन हर्षशोकशून्योऽपि, येऽन्येऽरविन्दाक्षेतिवाक्योक्तन्यायान्मरणधर्मैव सन् प्रगृह्य धर्म्यं, 'न हि सुविज्ञेयमणुरेष धर्मः' इत्युपक्रमवाक्ये धर्मत्वेनोक्तो यो जीवस्तस्मादनपेतं सखित्वाभिकटस्थं प्रकर्षेणालम्ब्य, अणुमेतमाप्य,

रश्मिः।

वाक्यद्वयाग्रे तृतीयः प्रश्नः। तृतीयत्वमिति प्रश्नत्रये श्रुत्यभिप्राय उक्तः। तेन त्रयाणामेवेत्येवकारः सौत्रः समर्थितः। प्रसादेति प्रसादो वरद्वारा हेतुर्यस्य। न च मृत्युनाऽन्यं वरं नचिकेतो वृणीष्वेति प्रोक्ते वाक्ये प्रसादो न वर इति शङ्क्यम्। श्रुत्याग्रे यस्मिन्निदमिति वाक्ये गूढवरस्य नचिकेतस उक्तत्वात्। एवं चात्रापि प्रसादो वरः प्रश्न उत्तरं च। प्रसङ्गेति। तृतीयप्रश्ने संगत्यभावः। दुर्दर्शेति

'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्।
अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति'॥

इति वाक्यम्। गह्वरमनेकार्थसंकटम्। तत्र तिष्ठतीति गह्वरेष्ठम्। अधीति आत्मनीत्यध्यात्मं अव्ययीभावः, तत्संबन्धियोगः। जीवमिति जीवप्रश्नोत्तराभ्याम्। शरीरेत्यध्यात्मयोगाधिगमेनेत्यस्याभिप्रायः। येन्य इति।

'येऽन्येरविन्दाक्षविमुक्तिमानिन-
स्त्वय्यस्तभावादविशुद्धबुद्धयः।
आरुह्य कृच्छ्रेण परं पदं ततः
पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः'॥

अयं न्यायः प्राप्तसांख्यस्यामर्त्यत्वेन मर्त्यपदोपपादनाय तस्मान्मरणधर्मेत्यत्र हेतुः। यद्यप्यात्मत्रयप्राप्तविवेकस्तथापि मृत्योः सूक्ष्मदेहीयोऽत्यन्तविस्मरणरूपो जीवस्यास्त्येव पतन्त्यध इति वचनात्। इत्युपेति जीवप्रश्नान्तरमुत्तरोपक्रमवाक्ये 'देवैरत्रापि विचिकित्सितं पुरा नहि सुविज्ञेयमणुरेष धर्मः' इतिवाक्यम्। धर्मत्वेनेति तथाच धर्म्यमित्यत्र धर्म धर्मत्वमर्हतीति धर्म्यः। वैदिकप्रक्रियात्वेन 'छन्दसि च' इति सूत्रेण यत्। तथाच वृत्तिः 'प्रातिपदिकमात्रात्तदर्हतीति यत्' इति। धर्म्यमित्यत्र धर्मस्य भावप्रधाननिर्देशापत्त्या 'धर्मपथ्यर्थन्यायादनपेते' इति सूत्रेण यतमाहुः तस्मादिति। धर्माज्जीवादनपेतं सुपर्णं 'द्वा सुपर्णा सयुजा सखाया समाने वृक्षे परिषस्वजाते' इति श्रुतिः धर्म्यं प्रगृह्येत्यस्यार्थः। इदमेव धर्मत्वमर्हतीति धर्म्यम्। इदमेव धर्मेण प्राप्यं धर्म्यं 'नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसंमितेषु' इति सूत्रेण यत्। इदमेव धर्मे साधु धर्म्यं तत्र साधुरिति यत्। धर्मं प्रवृह्येति क्वचित् पाठः, पृथक्कृत्य शरीरादेरिति तद्भाष्यम्। भाष्यप्रकाशानुसारेण तु धर्मं जीवं प्रवृह्य वर्द्धयित्वा मुक्तं कृत्वा। अणुत्वं तत्र्वास्तवमित्याशयेनाणुमित्यस्यार्थमाहुः अणुमिति। एतं जीवमणुमाप्य प्राप्य ज्ञात्वेति यावत् मुक्तत्वानन्तर-

उत्तरम् । एवमग्निजीवब्रह्मणां प्रश्नोत्तराणि । तत्र यदि साङ्ख्यमतं निरूपणीयम्, 'इन्द्रियेभ्यः' इत्यादि स्यात् तदा चतुर्थस्याप्युपन्यासः स्यात् । उपन्यासे हेतुः प्रश्नः । अत एव पश्चाद्वचनम् । तस्य प्रकृतेऽभावादस्मदुक्तरीत्या त्रीण्येव प्रकरणानीति सिद्धम् । उत्तरप्रश्नभावार्थं चकारः ॥ ६ ॥

---

भाष्यप्रकाशः ।

सः, जीवं ज्ञात्वा विद्वान्, मोदनीयं सर्वथालम्बनेन प्रसादनीयं ब्रह्म लब्ध्वा प्राप्य मोदते । एष ह्येवानन्दयातीति श्रुतेः । मोदते हि यतो हेतोरतो नचिकेतसं त्वामधिकारिणं प्रति सद्म सदनभूतं ब्रह्म विवृतमपावृतद्वारं मन्य इति कथनेन ब्रह्मणः स्मारणात् । नच पञ्चमवल्लीस्थस्य, यथा च मरणं प्राप्येति सार्द्धवाक्यस्योत्तरत्वं शङ्क्यम् । व्यवहितत्वात् । हन्त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनमिति प्रतिज्ञानन्तरपठितत्वेन तल्लीलाबोधनार्थत्वावगमाच्च । नचात्र लीलाङ्गीकारे मानाभावः शङ्क्यः । य एष सुप्तेषु जागर्तीत्यारभ्य वल्लीसमाप्तिलीलाकथनदर्शनेनापि तथावसायादिति ।

रश्मिः ।

मपि । स इति मर्त्यः देहद्वयविशिष्टः, जीवमणुमक्षरांशमिति न कर्मकर्तृविरोधः । सदनेति अक्षरम् । अपेति नापृष्टो ब्रूयादिति सुबोधिन्या ब्रह्मपृच्छकः सत्युत्तरं धारयिष्यति चेति । स्मरणेनि तथा च स्मृतस्य ब्रह्मप्रश्नस्योपेक्षानर्हत्वात् जीवप्रश्नोत्तरेण ब्रह्मप्रश्नस्य प्रसङ्गसंगतिरिति न प्रसङ्गाभावः शङ्क्यः । ननु देवैरत्रापीत्यस्य उत्तरत्वं भाष्य उक्तं तन्न संभवति देवैरपि संदिग्धमत्र यत उपसंहारेपि 'यस्मिन्निदं विचिकित्सन्ति' इति संदेहः श्रुत्योक्तः । अत एवान्यं वरं नचिकेतो वृणीष्वेति मृत्युनोक्तम् । संदिग्धस्यानुत्तरत्वात् । अत्र प्रथमवल्ली समाप्ता । ततो हि ॐ मन्यच्छ्रेय इत्यादीनामधिकप्रश्नोदयार्थत्वं श्रवणायापीत्यादिना पुनर्जीवनिरूपणं तत्राप्याश्चर्यो वक्ता कुशलोस्य लब्धेति अस्य जीवस्य वक्ताश्चर्यः न नरेणावरप्रोक्त एष सुविज्ञेयो बहुधा चिन्त्यमान इति च एष जीवः । अतः संदिग्धस्यानुत्तरत्वम् । उत्तरसमाप्तिकायां तं दुर्दर्शमित्यादिवाक्यद्वयं तद्व्याकृतं तत्राप्यध्यात्मयोगाधिगमेन देवं जीवं मत्वेत्यध्यात्मयोगाधिगमसाध्यावबोधकत्वेनाज्ञानकं ततो ब्रह्मप्रश्नः । अतः शंकरभाष्योक्तम्

'हन्त त इदं वक्ष्यामि गुह्यं ब्रह्म सनातनम् ।
यथा च मरणं प्राप्यात्मा भवति गौतम' ॥
'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।
स्थाणुमन्येऽनु संयन्ति यथाकर्म यथाश्रुतम्' ॥

इति व्यवहितमुत्तरमित्याशङ्क्य समादधुर्न चेति । व्यवेति येयं प्रेते इति जीवप्रश्नस्य प्रथमवल्लीस्थत्वात्तथा । यथा प्रहरे प्रहरेऽसहोच्चारितानि पदानि न प्रमाणानि संनिध्यभावात् । तथात्र प्रश्नोत्तरप्रमाजनकमुत्तरमिति भावः । ननु

'स्वार्थबोधे समाप्तानामङ्गाङ्गित्वाद्यपेक्षया ।
वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते' ॥ इति ।

पूर्वतत्रास्त्रप्रश्नोत्तरभावो भविष्यतीति चेत्तत्राहुः हन्तेति । गुह्यमिति 'गूढं ब्रह्मणि वाङ्मये' इति श्रीभागवतात् कृष्णावताररूपम् । तथा च जीवविषयत्वाभावात् नाङ्गाङ्गित्वाद्यपेक्षेति भावः । लीलाकथनेति 'श्रोतव्यविषयत्वेन लीला दशविधा यतः' इति द्वितीयस्कन्धसुबोधिनीकारिकातो दशविधलीलासु-प्रथमाद् ।

रश्मिः ।

'यथा हि मरणं प्राप्यात्मा भवति गोतम ।
योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।
स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्' ।

मरणं प्राणत्यागं जीवीयं प्राप्य त्यक्ताः प्राणा भगवत्समीपं गच्छन्ति स आत्मा आध्यात्मिकादित्रितयविदाश्रयो भवति आत्मावतारादिरपि । लोकवत्तु लीलाकैवल्यमिति सूत्रानुसरणात् । धीरविषय उक्तः । अधीरविषयमाह योनिमिति 'योनेः शरीरम्' इति सूत्रात् । स्थाणुमन्ये । श्रुतं गुर्वादिमुखद्वारा । प्रसङ्गागतान्यगतिसहितेश्वरनिर्याणस्य मुक्तिलीलात्वेपि शोकदत्वात्तद्विहाय विसर्गलीलामारभ्याहुः य एष्विति ।

य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः ।
तदेवावक्रं तद्ब्रह्म तदेवामृतमुच्यते ॥

अवक्रं ऋजुः 'विसर्गः पौरुषः स्मृतः' इति वाक्यम् । अत्र स्वप्नसृष्टिनिर्मातृत्वं तत्र कर्तृत्वमात्रं नाभिन्ननिमित्तोपादानत्वरूपमिति न संध्याधिकरणभाष्यविरोधः 'यस्मिन् लोकाः श्रिताः सर्वे तदुनात्येति कश्चन एतद्वैतत्' इति श्रुतिरत्र अत्येति अत्यन्तमेति तद्ब्रह्म 'ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इति अत्र लोकधारकत्वादाश्रयलीला कृष्णाश्रयनामाश्रयः ।

'अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च' ॥

वायुर्यथैक इति वाक्यं पूर्ववत् । अत्र धर्मिणोऽसाधारणधर्मेण व्यापकत्वेन रूपनामनिर्वाहकत्वलीला तत्त्वादिरूपनामनिर्वाहकत्वेन सर्गलीला । महत्तत्त्वाहंकारादीनि नामानि 'प्रोचुः प्राञ्जलयः' इति वाक्यात् रूपाणि ।

'सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः ।
एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः' ॥

इत्यत्र लोकदुःखासंसृष्टत्वोक्त्या जगद्व्यापारवर्जं 'सर्वरसः' इति श्रुतेः सर्वरसलीला विसर्गलीला । भक्तानुरोधिनीं लीलां विसर्गरूपामाह ।

'एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति ।
तमात्मस्थं येऽनु पश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्' ॥ इति ।

अत्रैकरूपस्य बहुधाकरणं भक्तानुरोधात् यद्यद्धियेति वाक्यात् । आत्मस्थं श्रुतिस्थं 'तस्माद्भिन्ना एतास्ता आभिर्भिन्नो न वै विभुः' इति कृष्णोपनिषच्छ्रुतेः मनःस्थं वा 'स मानसीन आत्मा जनानां सर्वात्मा' इति श्रुतेः । फलदातृत्वरूपां स्थानादिलीलामाह 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् तमात्मस्थम्' इति पूर्ववत् । सुखस्थाने शान्तिः फलमत उपपत्तेरिति सूत्रात्

'तदेतदिति मन्यन्ते निर्देश्यं परमं सुखम् ।
कथं नु तद्विजानीयात् किमुतो भाति वा न वा' ॥

तद्ब्रह्म एतत्प्रत्यक्षं समीपतरं मन्यन्ते जानन्ति अवबोधयन्ति वा निवृत्तैषणा ब्राह्मणादयः तत्सुखं कथं केन प्रकारेण जानीयामहं नचिकेताः । विजानीयात् यः कोपि । किमुतेति नाभिप्रये

रश्मिः ।

आह्नुक्तेः, न विकल्पे, वाकारोक्तेः । अतः प्रश्ने आसमन्ताद्भाति न वेति प्रश्नः । भासाद्वारा दीप्यते इत्युत्तरमाह 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोयमग्निः ।

तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' ॥ इति ।

'अनुकृतेस्तस्य च' इत्यत्र व्याकृता पञ्चमवल्लीस्था लीला । एवमा वल्लीसमाप्ति लीलाकथनदर्शनेनेत्यर्थः । अग्रेतनवल्ल्यर्थः कथ्यते प्रसङ्गात् । 'अत एव च नित्यत्वम्' इति सूत्रभाष्ये वेदस्यार्थतौल्यं शब्दब्रह्मवेदपुरुषशब्दवाच्यत्वमुक्तं तदाहुः ऊर्ध्वमूल इति इयं विसर्गरूपेण लीला 'तस्माद्विराडजायत विराजो अधिपूरुषः' इत्युक्त्वा किंचिदन्यदुक्त्वोच्यते 'तस्माद्यज्ञात्सर्वहुतः ऋचः सामानि जज्ञिरे छन्दा१ँसि जज्ञिरे तस्माद् यजुस्तस्मादजायत' इति श्रुतेः । 'ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः । तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते' 'तस्मिंल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन एतद्वैतत्' इति श्रुतिः । अत्र पक्षिवृषभवृक्षेषु वृक्षत्वेन वेदोऽवर्णि । ननु वृक्षे लोकानां श्रितत्वं बाधितमिति चेन्न ऊर्ध्वमूलं तद्विष्णोः परमं पदमस्य स्वर्गनरकतिर्यगादिशाखाभिरवाक्शाखः अश्वत्थः अश्वत्थं जलमस्यास्ति 'अर्शआद्यच्' 'आपः प्रजाहितं शान्तं अश्वत्थं पवनं शिवम्' इति केशरमालाकोश इति व्याख्यासुधायां भानुदीक्षितः । यद्वा अश्वस्तिष्ठत्यस्मिन्नित्यश्वत्थः लोकास्त्वश्वे तिष्ठन्ति अस्मिंस्त्वश्वस्तिष्ठतीति अश्वो रूपं कृत्वा यदश्वत्थे तिष्ठते इति अश्वशब्दो योगरूढः 'विचारो योगरूढितः' इति पूर्वमीमांसाकारिकायाः । तथा च व्यापकोश्वनामा पदार्थः कल्की अवतारः । अवतारत्वाद्व्यापकः । रूपं प्रत्यक्षाश्वत्थरूपम् । तिष्ठत इति उपग्रहव्यत्ययः । परस्मैपदी आत्मनेपदी उपग्रहः । सनातनो नित्यः । तथा च वेदतरोः शब्दात्मकत्वमर्थतरोरवतारात्मकत्वमतोत्र शुक्रत्वादि विदधौ श्रुतिः तदेव शुक्रमिति । शुक गमने भ्वा. प. से. गतमित्यर्थः क्रियेति यावत् वेदार्थयोरभेदात् । तद्ब्रह्मेति अवतारावतारिणोरभेदात् । एतदमृतमिति तस्मिंल्लोकाः श्रिताः सर्वे । अत्यन्तं नेति प्राप्नोतीत्यर्थात् । अग्रे भगवतो मारणलीलार्थमारकं रूपं भगवत आह यदिदं किं चेति । कम्पनादित्यधिकरणे चिन्तिता । इयं लीला स्थानलीला । पुनः स्थानलीलामाह ।

'भयादस्याग्निस्तपति भयात्तपति सूर्यः ।

भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः' ॥

इति । स्पष्टम् । यथा वज्रोद्यतकरं स्वामिनं दृष्ट्वाऽभिमुखीकृत्य भृत्या नियमेन तच्छासने प्रवर्तन्ते तथेमाः प्रजा इति स्थानलीला । पूर्ववाक्ये फलमुक्तं य एतद्विदुरमृतास्ते भवन्तीति द्वितीयश्रुत्युक्तस्थानलीला ज्ञानफलमाह ।

'इह चेदशकद्बोद्धुं प्राक् शरीरस्य विस्रसः ।

ततः स्वर्गेषु लोकेषु शरीरत्वाय कल्पते' ॥

इति । स्थानलीलां बोद्धुमशकत् शक्नोति कालव्यत्ययः । शरीरस्य विस्रसः पतनात् प्राक् । क्वचिद्विस्रसः इत्यत्र विश्रम इति पाठः । श्रम धातुः खेदतपसोः दि. प. से. । बोद्धुमित्युक्ते स्थानलीलाबोधे वैजात्यात्फलवैजात्यमाह यथादर्शे तथात्मनि यथा स्वप्ने तथा पितृलोके यथाप्सु परीव ददृशे तथा गन्धर्वलोके छायातपौ ब्रह्मलोके इति । आदर्शे प्रतिबिम्बभूतकार्येश्वरं पश्यति तथात्मनि बुद्धौ मनसि वा 'स मानसीन आत्मा जनानाम्' इति श्रुतेः । पश्यति यथा च दर्शे चन्द्रसूर्ययोः संगमे यथा

१. वैयाख्याद । २. वैयाख्याद ।

रश्मिः।

भावलोकनात्मके दर्शे विषयत्वेन पश्यति तथा आत्मनि मनसीति पूर्ववत् 'दर्शस्तु संगमे चन्द्रसूर्ययोरवलोकने' इति विश्वः। चन्द्रसूर्ययोरवलोकने इत्यन्वये सूर्यत्वेन चन्द्रत्वेन पश्यतीत्यर्थः। यथा स्वप्ने जीवस्य मायिकभोगस्तथा पितृलोककामस्य पितृलोके उपस्थिते मायिकभोगः यथाप्सु परिदद्दशे परिदृश्यते एकोपि बहुत्वेन इव तद्वत्। तथा तेन प्रकारेणैको बहुत्वेन परिदृश्यते छायातपयोरिवात्यन्तविलक्षणो ब्रह्मलोके। शोकाभावफलार्थमाह।

'इन्द्रियाणां पृथग्भावमुदयास्तमयौ च यत्।
पृथगुत्पद्यमानानां मत्वा धीरो न शोचति'॥

इति। युक्तो हि इन्द्रियाणां पृथगुत्पन्नानां पृथग्भावं मत्वा ज्ञात्वा न शोचति। अयमपि भेदो निरध्यस्तदेहेन्द्रियकेषु। भक्तिज्ञानमार्गयोः निरध्यस्तदेहेन्द्रियकेषु भेदावाह निरध्यस्तेन्द्रियो भक्तश्चेदिन्द्रियाणामुदयः निरध्यस्तेन्द्रियैरेव कर्मकरणसंभवात्। ज्ञानी चेदिन्द्रियाणामस्तभावः। इन्द्रियत्वेनाज्ञानमात्मत्वेन ज्ञानम्। 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इति फलाध्यायसूत्रात् मुक्तस्यामृतत्वं फलमाह इन्द्रियेभ्य इति।

'इन्द्रियेभ्यः परं मनो मनसः सत्वमुत्तमम्।
सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम्।
अव्यक्तात्परः पुरुषो व्यापकोऽलिङ्ग एव च।
यज्ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति'॥ इति।

परत्वमिन्द्रियनायकत्वात् 'मनसैवानुद्रष्टव्यः' इति करणत्वाच्च। उत्तमत्वं ज्ञानजनकत्वाद्विष्णुत्वोपपादकत्वाच्च। अधि न दधातीत्यधि धेोः किः आधेयो जीवः आत्मा अस्य सत्त्वाद्विष्णुत्वापादकादुत्तमत्वं कथमित्यत आह महानिति। अपरिच्छिन्नपरिमाणवान् मुक्त इति यावत्। तथा च निर्गुणत्वादुत्तमत्वमधिकत्वं वा कवर्णलोपात्। अव्यक्तमक्षरम्। अलिङ्ग इति लिङ्ग्यते गम्यते येन तत्पयोक्तं चिह्नं तदविद्यमानमस्येत्यलिङ्गः। चिह्नादीनां विद्यमानत्वाल्लिङ्गः लिगि गतौ भ्वा. प. से.।

'नवाम्बुदानीकमनोहराय प्रफुल्लराजीवविलोचनाय।
वेणुस्वनामोदितगोकुलाय नमोस्तु गोपीजनवल्लभाय'॥ इति।

गोपीजनवल्लभाष्टकोक्तानि चिह्नानि गम्यन्ते येन स आत्मा लिङ्गः तज्ज्ञात्वेत्युक्तं तत्र करणाकाङ्क्षायामाह।

'न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्।
हृदा मनीषा मनसाभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति'॥ इति।

संदृशे सम्यग्ज्ञानाय रूपं तिष्ठति। द्रव्यचाक्षुषं प्रत्युद्भूतरूपस्य कारणत्वेन कथं तत्पश्यति। उच्यते। हृदा मनसा। मनीट् मनसः संकल्पादिरूपस्येष्टं नियन्तृत्वेनेति मनीट् बुद्धिस्तया मनसा अभितः क्लृप्तम्। मुर्पां सुः मनसाभिक्लृप्तः। एतद्विशेषणं रामतापिनीये 'उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना' इति। स मानसीन आत्मा जनानामिति मनसा। ननु मनोग्राह्यत्वापत्तिः आत्मा 'अस्त्याहमेकया ग्राह्यः' इति वाक्याद्भक्तिमात्रग्राह्य इति चेन्न। मनसाभिक्लृप्तपदेन मनसाभिकल्पनविषय उच्यतेऽत्र मनसा कल्पनं 'भक्तिरहस्यभजनं तदिहामुत्र फलभोगनैराश्येनामुष्मिन् मनःकल्पन-

१. मैत्रायणी। २. मैत्रायणी।

रश्मिः ।

मेतदेव च नैःकर्म्यम्' इति गोपालतापिनीयश्रुत्युक्तमनसः कल्पनरूपं गृह्यते इति मनसा कल्पनं मनः-कल्पनमिति विगृह्य समासस्यापि संभवात् तथा च मनःकल्पनेन भक्तिरूपेण ग्राह्यः, हृदा मनीषा च सहकारिकारणानुगृहीतेनेति करणमुक्तम् । 'भक्त्या प्रसन्ने तु हरौ तं योगेनैव योजयेत्' इति सुबोधिन्या योगमाह ।

'यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम्' ॥
'तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् ।
अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ' ॥

अवेति आत्मन्यवतिष्ठन्ते निरोधलक्षणोक्तरीत्या । बुद्धिश्च स्वव्यापारे न व्याप्रियते तां परमां गतिं फलरूपां सेवामाहुः । निरोधलीला इत्युक्तम् । अप्रमत्तस्तदा भवतीत्युक्त्या मन्यन्त इत्यत्र केचिदिति कर्तृबोधनात् विरलाः कर्तारः । अतः सकलसाधारणयोगमाह योग इति प्रभवत्यस्मादिति प्रभवः इति 'भुवः प्रभवः' इत्यत्र व्याकृतं मनोरमायां भट्टोजिदीक्षितेनात्रापि बोध्यम् । अपि अयः ब्रह्मणि गमनं संयोगो भवत्येव हि निश्चयेन यतः सर्वोपि वदति गच्छतीत्यत्र गमनं उत्तरदेशसंयोगं करोतीति न च फलानुकूलव्यापारो धात्वर्थ इति वाच्यम् मण्डनमिश्रवत्फलमात्रस्य धात्वर्थाङ्गी-कारादस्यामप्ययययोगदशायां निर्गुणेप्ययः न च साकारेनन्तमूर्तौ ब्रह्मणि कुतो नाप्ययः । भक्त्यैकलभ्यत्वात् ता नाविदन्निति वाक्यात् तथा चोभयोर्भक्तसाधारणयोर्ब्रह्मजीवयोश्च ग्रहण-कारणाभावादनुपलभ्यमाने न स्त एव जीवब्रह्मणी इति प्राप्त आह ।

'नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा ।
अस्तीति ब्रुवतोन्यत्र कथं तदुपलभ्यते ॥
अस्तीत्येवोपलब्धव्यस्तत्वभावेन चोभयोः ।
अस्तीत्येवोपलब्धस्य तत्वभावः प्रसीदति' ॥

इति नैव वागादिभिः प्राप्तुं शक्ये यद्यपि तथापि योगकाले आत्मद्वयमस्तीत्येवोपलब्धव्य आत्मा कस्मादस्तीति ब्रुवतो अस्तिवादिन आगमार्थानुसारिणः श्रद्धानादन्यत्र नास्तिकवादिनि विपरीतदर्शिनि कथं तद् द्वयमुपलभ्यते न कथंचनेत्यर्थः । तस्मादपोह्यासद्वादिपक्षमासुरमस्तीत्येवो-पलब्धव्यः आत्मा तत्त्वभावेन तस्य आत्मनो भावस्तत्त्वं तस्य भावः सत्ता तयोपलब्धव्या जीवात्मा तत्राप्युभयोर्जीवब्रह्मणोः । निर्धारणे षष्ठी । पूर्वमस्तीत्येवोपलब्धव्यः । आत्मा प्रसीदति तत्त्व-भावो जीवसत्ता प्रसीदति योग ऐक्यात्र चकारप्रयोगः । अधुना जीवन्मुक्तिप्रकार उच्यते ।

'यदा सर्वे प्रमुच्यन्ते कामा येस्य हृदि स्थिताः ।
अथ मर्त्योऽमृतो भवति अत्र ब्रह्म समश्नुते' ॥

इति स्पष्टम् । जीवन्मुक्तिप्रकार एव सलिङ्गदेहस्य ।

'यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः ।
अथ मर्त्योऽमृतो भवत्येतावदनुशासनम्' ॥

इति । हृदयस्य ग्रन्थयो लिङ्गदेहास्तेषां भेदनेऽमृतो भवति । इहेति पदाद्यमपि जीवन्मुक्त-प्रकारो द्वितीयः । मुक्तिप्रकारमाह शतमिति स्पष्टम् ।

रश्मिः।

'शतं चैका हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका।
तयोर्ध्वमायन्नमृतत्वमेति विश्वङ्ङन्या उत्क्रमणे भवन्ति'॥

इति श्रुतिः। सर्वबल्ल्यार्थोपसंहारार्थमाह।

'अङ्गुष्ठमात्रः पुरुषोन्तरात्मा सदा जनानां हृदये संनिविष्टः।
तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्येण।
तं विद्याच्छुक्रममृतं तं विद्याच्छुक्रममृतम्'॥ इति।

मुञ्जादिति श्रीभागवते स्पष्टम्। शुक्रमिति शुच शोके भ्वा. प. से. शोचति ऋज्रेन्द्रेति रन् तमङ्गुष्ठमात्रं जीवसहितं शोचन्तं जीवं संचितकर्मसद्भावात्। अमृतमानन्दरूपमात्मानं विद्याज्जानीयात् पुनर्वचनं कर्ममार्गीयजीवाङ्गुष्ठमात्रयोः ग्रहणाय। भक्तिमार्गे तु 'ततः संसारदुःखस्य निवृत्तिर्भवमोचनम्' इति न श्लोकान्वयः मनुष्यानधिकृत्येदं मृत्यूपाख्यानं प्रवृत्तम्। अतो मनुष्याणां हृदयस्याङ्गुष्ठमात्रत्वात्प्रश्नार्थमङ्गुष्ठमात्र उपसंहार उक्त इति 'शब्दादेव प्रमितः' इत्याधिकरणे उक्तम्। 'हृद्यपेक्षया तु मनुष्याधिकारत्वात्' इतिसूत्रे मुक्तिप्रकारकथनानन्तरमङ्गुष्ठमात्ररूपोक्तिर्जीवस्य मुक्तिदशायां ब्रह्माविर्भावेन विरुद्धधर्माश्रयत्वे फलिष्यतीति वेदान्ताधिकरणमालायामभिप्राय उक्तः। सोपि साकारस्यानन्तमूर्तेरनेकाकारस्याग्रहणे बाधकाभाव इत्यभिप्रायेण। नचिकेत उपाख्यानावगतसाधनस्य फलमाह।

मृत्युप्रोक्तां नचिकेतोऽथ लब्ध्वा विद्यामेतां योगविधिं च कृत्स्नम्।
ब्रह्मप्राप्तो विरजोभूद्विमृत्युरन्योप्येवं यो विद्ध्यात्ममेव॥

श्रुतेर्वचनान्मम श्रुतेरिव। अन्योर्थः। अन्योप्येवं यः सोध्यात्मविदेवेति। मनुष्याधिकारं ज्ञानकाण्डे निरूपयन्ती श्रुतिर्बिभयांचकार निःश्वसितत्वेन वायुत्वात्। वायुः शब्दतामापद्यत इति। ततश्च भयादिन्द्रश्च वायुश्चेति श्रुतेर्भयमस्याः सा श्रुतिराह स ह नाववतु इति स आत्मा ह प्रसिद्धः नौ वक्तृश्रोतारौ अवतु आमन्त्रणे लोट् अधीष्टे वा, न प्रार्थने 'प्रार्थिते वा ततः किंस्यात् स्वाम्यभिप्रायसंशयात्' इति वाक्यात्। ननु ज्ञानकाण्डीयस्याधिकारात्प्रच्यावनेन भगवान् मारयेदिति चेत्तत्राह सह नौ भुनक्तु इति पालयतु अभ्यवहरतु वा। 'यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः'। सह वीर्यं करवावहै वीर्यं विद्याकृतं सामर्थ्यं तेन सह आवां करवावहै यथा न द्विष्यात्। तथा च तृतीयप्रश्नोत्तरे प्रधानीकृत्य वीर्यं करवावहै आवामिति भावः। तेजस्वि नावधीतमस्तु यथा तेजस्वि नौ आवयोः वक्तृश्रोत्रोरधीतमस्तु मा विद्विषावहै मा निषेधे आत्मानं सर्वप्रशास्तारं आवां मा विद्विषावहै इत्यर्थः। शान्तिः शान्तिः शान्तिरिति। ननु वीर्ये कृतेप्युपक्रमोपसंहारयोर्मनुष्याधिकाराद्विद्याया ज्ञानकाण्डे कोपयोग इत्यत आह शान्तिरिति। शम उपशमे दि. प. से. शम आलोचने चु. आ. से. लोचृदर्शने चु. प. से. उपालोचनं विद्याया ज्ञानकाण्डीयब्रह्मज्ञाने कर्तव्यम्। मार्गत्रये शान्तित्रयम्। अन्यव्याख्याने शान्तिपदे योगरूढ्यापत्तिः। अत्र वेदान्ते योगमात्रादरणादेवं व्याकृतमिति। प्रकृतमनुसर्यते तथात्वस्याद्यादिति लीलात्वेन च एषु सुतेष्वित्यादिषु पदार्थेष्वङ्गीकारावसायात्। अतो देवैरत्रापि इत्यत्र उत्तरम्। प्रश्नोत्तरयोः समानविषयत्वस्य को घटः कम्बुग्रीवादिमान् घट इत्यादिषु दर्शनादिति भाष्यार्थः। तत्रग्रन्थ व्युत्पत्तिः। संगतिः ग्रन्थ उक्ता। यद्धर्मप्रकारकयद्विषयिणी जिज्ञासा तद्धर्मावच्छिन्नतदुद्देश्यकं लक्षणादिनिरूपणमिति नियमस्यास्योदाहरणं को घटः कम्बुग्रीवादिमान् घटः इति। किंच भाष्यं प्रति ब्रवीमि

भाष्यप्रकाशः ।

यत्तु वरदानानुरोधेन प्रश्नप्रश्नस्य जीवप्रश्नान्तर्गतत्वं शंकराचार्यैरङ्गीकृतं तदसंगतम् । वक्तृप्रसादस्यैवात्र प्रश्नकारणतादर्शनात् । न च त्रीन् वरान् वृणीष्वेति वाक्यबाधापत्तिः । स्वस्ति मेऽस्त्विति वाक्योक्तस्य स्वाविनाशार्थकवरत्रयस्य सौमनस्याग्निजीवप्रश्नाभ्यां च पूर्त्या तदभावात् । न च तृतीयप्रश्नस्य काल्पनिकत्वम् । वदेति श्रुत्यैव तन्निरासात् । न चाधिक्यं दोषः । दोषत्वाभावस्योपपादितत्वात् । अतोऽस्य भिन्नप्रश्नत्वेऽपि कल्पनाया अभावेन, यथा वरव्यतिरेकेण प्रश्नकल्पनायामदोष एवं प्रश्नव्यतिरेकेण प्रधानोपन्यासकल्पनायामप्यदोष इति । साङ्ख्योक्तप्रतिबन्देरपि परिहाराद् व्यर्थ एव प्रष्टव्यभेदमनादृत्य,

रश्मिः ।

इत्यग्निप्रश्नोत्तरमुक्तं तदपि शंकराचार्यैः 'लोकादिमग्निं तमुवाच तस्मै' इति तदग्निमवाक्यस्यो-त्तरत्वमुक्तं तन्निरसितुम् । न च 'प्रति ब्रवीमि तदु मे निबोध स्वर्ग्यमग्निं नचिकेतः प्रजानन्' इत्यस्य प्रतिज्ञावचनत्वात् तदेवोत्तरमिति शङ्क्यम् । 'अनन्तलोकाप्तिमथो प्रतिष्ठां विद्धि त्वमेतं निहितं गुहा-याम्' इत्युत्तरार्धेनास्यैवोत्तरत्वात् । यदपि 'न जायते म्रियते वा विपश्चित्' इति तृतीयप्रश्नोत्तरमुक्तं तस्यात्राभिप्रायाभावाददर्शनाच्च 'सर्वे वेदा' इत्येवोत्तरम् । वरदानेति न वयमिह वरदानव्यति-रेकेण प्रश्नं कंचित्कल्पयामो वाक्योपक्रमसामर्थ्यात् । वरदानोपक्रमा हि मृत्युनचिकेतःसंवादरूपा वाक्यप्रवृत्तिरासमाप्तेः कठवल्लीनां लक्ष्यते । मृत्युः किल नचिकेतसे पित्रा प्रहिताय त्रीन् वरान् ददौ । नचिकेताः किल तेषां प्रथमेन वरेण पितुः सौमनस्यं वव्रे, द्वितीयेनाग्निविद्यां, तृतीयेनात्मविद्यां 'येयं प्रेते' इति 'वराणामेष वरस्तृतीयः' इति लिङ्गात् । तत्र यदि 'अन्यत्र धर्मात्' इत्यपूर्वोयमन्यः प्रश्न उत्थाप्यते ततो वरव्यतिरेकेणापि प्रश्नकल्पनाद्वाक्यं बाध्येतेति भाष्येण यत्त्वित्यादिः । प्रश्नेति वरप्रदानद्वारा प्रश्नकारणता । स्वस्तीति । मे नचिकेतसे । स्वेति नचिकेतसोऽविनाशार्थकवरत्रयस्य । तदभावादिति तथा च वरप्रदानव्यतिरेकेण प्रश्नाङ्गीकारः श्रुतिं विरुणद्धीति श्रुत्यन्तरोक्तवरो-ङ्गीकृत इति भावः । भाष्योपपादने समाहितमपि काल्पनिकत्वं मतान्तरे प्रश्नद्वयसैक्यसाधनप्रयासस्य व्यर्थत्वसाधने पुनराहुः न चेति । एतच्च पूर्वमुपपादितम् । पूर्वं वरत्रयान्तर्गततृतीयवरस्य काल्प-निकत्वमुक्तमत्र तु वरत्रयपृथगित्येतस्य । ननु त्रीन् वरानित्युक्ते चतुर्थोयमाधिक्यं निग्रहस्थानदोषः । यथाह दिनकर्याम् । अधिकस्याधिकहेत्वाद्यभिधानरूपस्य गुणेन्तर्भाव इति वाच्यम् । उपेति न च निर्हेतुकत्वमित्यादिनोपपादितत्वात् । अत इति उक्तोपपादनात् । यथाश्रुतग्रन्थव्याकरणपक्षेऽत्र तृतीयप्रश्ने वरप्रवेशाभावादाहुः वरव्यतिरेकेणेति । अत्रोच्यते नैव वयमिह वरदानव्यतिरेकेण प्रश्नं कंचित् कल्पयाम इति शंकरभाष्यं पूर्वोक्तयुक्त्याक्षिप्तं तेन च तेषामस्य पूर्वपक्षग्रन्थः । यथैव वरप्रदानव्यतिरेकेण प्रश्नकल्पनायामदोष एवं प्रश्नव्यतिरेकेण प्रधानोपन्यासकल्पनायामदोषः स्यादिति तत्रापि वरप्रदानव्यतिरेकेण प्रश्नकल्पना युक्तियुक्ता, प्रश्नव्यतिरेकेण प्रधानोपन्यासकल्पना युक्तियुक्ता न भवतीति दृष्टान्तदार्ष्टान्तिकयोः वैषम्यं सूचितम् । पूर्वपक्षग्रन्थे न प्रतिबन्दिः । अपरीति । अत्रो-च्यते । नैव वयमित्यादेः सिद्धान्तग्रन्थस्योक्तरीत्या शैथिल्येन पूर्वपक्षस्योक्तस्यापरिहारात् । प्रष्टव्येति द्वितीयतृतीयप्रश्नयोः जीवब्रह्मणोर्भेदं स च ननु च प्रष्टव्यभेदादपूर्वोयं प्रश्नो भवितुमर्हति । पूर्वो हि प्रश्नो जीवविषयः येयं प्रेते मनुष्येऽस्ति नास्तीति विचिकित्साभिधानात्, जीवस्य धर्मादिगोचरत्वात्, स

१. पिप्पलाद द्वितीय ।
१०९ भ० सू० ९०

भाष्यप्रकाशः ।

'स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति' ॥

इत्यादिश्रुत्युक्तं जीवब्रह्मणोर्धर्मभेदं चानादृत्य प्रश्नद्वयस्यैक्यसाधनप्रयास इति दिक् ।

रामानुजाचार्यास्तु, उपायोपेयोपेतॄणां त्रयाणां प्रश्नोपन्यासावत्राङ्गीकुर्वन्ति । तथाहि । नचिकेता हि मुमुक्षुर्मृत्युना दत्ते वरत्रये प्रथमवरेणात्मनः पुरुषार्थयोग्यतापादनायात्मनि पितुः सौमनस्यं प्रतिलभ्य द्वितीयेन वरेणाग्निविद्यां वव्रे । सा च मोक्षोपायभूता प्रश्नवाक्ये,

रश्मिः ।

नान्यत्र धर्मादिति प्रश्नमर्हति । प्राज्ञस्तु धर्माद्यतीतत्वात् 'अन्यत्र धर्मात्' इति प्रश्नमर्हति, प्रश्नच्छाया च न समाना लक्ष्यते । पूर्वस्यास्तित्वनास्तित्वविषयत्वात् । उत्तरस्य धर्माद्यतीतवस्तुविषयत्वात् । तस्मात्प्रत्यभिज्ञाभावात् प्रश्नभेदो न पूर्वस्यैवोत्तरत्रानुकर्षणमिति ग्रन्थोक्तः । अभेः इति चेन्न जीवप्राज्ञयोरेकत्वाभ्युपगमात् । भवति प्रष्टव्यभेदात् प्रश्नभेदो यद्यन्यो जीवः प्राज्ञतः स्यादित्यादिना तमनादृत्य

'स्वप्नान्तं जागरितान्तं च उभौ येनानुपश्यति ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति' ॥ इति ।

स्वप्नजागरितदृशोः जीवस्यैव महत्वविभुत्वविशेषणस्य मननेन शोकविच्छेदं दर्शयन्न प्राज्ञादन्यो जीव इति दर्शयति प्राज्ञविज्ञानाद्धि शोकविच्छेद इति वेदान्तसिद्धान्तः इति भाष्ये धर्मभेदानादररूपं दोषमुद्घाटयामासुः स्वप्नान्तमिति । स्वप्नान्तं बहुव्रीहिणा जागरितं, षष्ठीतत्पुरुषेण वा । जागरितान्तं स्वप्नः ताभ्यामेव । येन जीवभावेन पश्यति यत्तदोर्नित्यसंबन्धात् । तं महान्तं विभुमात्मानं मत्वेत्याद्यर्थः । अत्र कर्मकर्तृधर्मभेदानादरः । स च कर्मकर्तृव्यपदेशादिति सूत्रं विरुणद्धि । अतः प्रथमत्यागे मानाभावात्स धीरः महान्तमित्याद्यर्थः । नतु तमिति द्वितीयान्तमादाय धीरस्य पश्चादन्वयो भवति वाक्यभेदप्रसङ्गात् जीवब्रह्मवादापत्तेश्च । प्रश्नद्वयेति जीवब्रह्मप्रश्नद्वयस्य । यद्यत्रान्यत्र धर्मादित्यत्र न त्वयमपूर्वोयमन्यः प्रश्न उत्थाप्यते ततो वरप्रदानव्यतिरेकेणापि प्रश्नकल्पना त्रीन् वरानिति वाक्यं बाध्येतेति भाष्येणानुकर्षणं पूर्वप्रश्नस्यान्यत्र धर्मादित्यत्र न त्वयमपूर्वप्रश्न इत्यैक्यसाधनप्रयासः तदुक्तं तस्याद्येयं प्रेते इत्यस्यैव प्रश्नस्यैतदनुकर्षणमन्यत्र धर्मादिति । दिगिति । तेन 'यदेवेह तदमुत्र यदमुत्र तदेवेह' 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इति श्रुतिर्जीवप्राज्ञयोरभेदं वक्तीति यदुक्तं तदपि विस्फुलिङ्गो नाग्निरिति प्रत्ययाभावादंशांशिभावेनैव । किं च यदुक्तं अविद्याकल्पितजीवप्राज्ञभेदापेक्षया सूत्रं योजयितव्यमिति । तत्राविद्यासंबन्धे आत्मनो जीवत्वापत्तिस्तदसंबन्धे जीवत्वहानिरित्येवं बहूनि दूषणानि विद्वन्मण्डने उक्तान्यवधेयानि । पुरुषेति 'पितृदेवो भव' इति श्रुत्या पुरुषेत्यादिः । अग्निविद्येति अग्निज्ञानम् । प्रश्नेति,

'स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यम् ।
स्वर्गलोका अमृतत्वं भजन्त एतद् द्वितीयेन वृणे वरेण' ॥

इति वाक्ये स्वर्गशब्देनात्र परमपुरुषार्थलक्षणो मोक्षोभिधीयत इति । एते ज्ञानकर्मसमुच्चयवादिनः । वर्णाश्रमविहितं कर्माविद्या, ज्ञानं ध्रुवानुस्मृतिरूपम्, तयोः समुच्चयः । सत्यार्जवादिगुणयुक्तस्याश्रमाचारधर्मैरेव विद्यानिष्पत्तिरिति विद्या ज्ञानं ध्रुवा स्मृतिरिति यावत् । तदर्थं ज्ञानमुक्त्वा

भाष्यप्रकाशः ।

अमृतत्वं भजन्त इत्युत्तरवाक्ये, 'त्रिकर्मकृत् तरति जन्ममृत्यू' इति कथनात् । तृतीयेन वरेण मोक्ष-प्रश्नद्वारेण उपेयस्वरूपमुपेतृत्वस्वरूपमुपायभूतानुष्ठितकर्मानुगृहीतोपासनस्वरूपं च पृष्टं, 'येयं प्रेते' इत्यनेन । इत्येवं मोक्षे पृष्टे, तस्योपदेशयोग्यतां परीक्ष्य, 'तं दुर्दर्शं गूढम्' इत्यनेनोपदिदेश । तदा नचिकेताः प्रीतः सन्, देवं मत्वेत्युपास्यतया निर्दिष्टस्य प्राप्यस्य देवस्य, अध्यात्मयोगाधिगमेनेति वेदितव्यतया निर्दिष्टस्य प्राप्तुः प्रत्यगात्मनः, मत्वेत्यनेनोक्तस्य ब्रह्मोपासनस्य च स्वरूपावधानाय पुनः पप्रच्छ, अन्यत्र धर्मादन्यत्राधर्मादिति । एवं पृष्टे प्रथमं, सर्वे वेदा इत्यादिना प्रणवं प्रशस्य तद्वाच्यं प्राप्यस्वरूपं, तदन्तर्गतं प्रत्यक्स्वरूपं, वाचकस्वरूपं चोपायं पुनरपि सामान्येन ख्यापयन्

रश्मिः ।

आहुरुत्तरेति । 'त्रिणाचिकेतस्त्रिभिरेत्य सन्धिं त्रिकर्मकृत्तरति जन्ममृत्यू' इति वाक्यम् । त्रिःकृत्वो नाचिकेतोग्निः चितो येन स त्रिणाचिकेतास्तत्संबोधनं, तद्विज्ञानस्तदध्ययनस्तदनुष्ठानवांश्च त्रिभिः पितृमात्राचार्यैस्त्रिकर्मकृत् इज्याध्ययनदानानि । इत्येतद्भाष्ये शंकराचार्याः । तृतीयेनेति,

'येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके ।
एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः' ॥

इत्यत्र वरस्य प्रश्नहेतुत्वात्तृतीया । वरेणेति विशेषेण केतितुं वसितुमिच्छा सन्नर्थाविवक्षायां निवासः शाश्वतविष्णुलोके निवासो मोक्षस्तस्य स्वरूपं तस्य प्रश्नः स द्वारं यस्य वरस्य तेन मोक्षपदं मोक्षस्य रूपे लाक्षणिकं मोक्षस्वरूपप्रश्नद्वारेणेति भाष्यात् । अत्रोपेयं मोक्षस्वरूपं विचिकित्सापदेन, उपेतृस्वरूपं प्रेतमनुष्यपदाभ्यां, उपायभूतानुष्ठितकर्मानुगृहीतोपासनस्वरूपमेत-द्विद्यामिति । पृष्टमिति वरस्य प्रश्नहेतुत्वात् तेन वरेण त्रयाणां प्रश्नः कृत इत्यर्थः । तं दुरिति

'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् ।
अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति' ॥

इत्यनेन । नचिकेता इति पुनः पप्रच्छेत्येतेमान्वयः । उपास्येति ननूपास्यबोधकं पदं नास्तीति चेन्न आर्थिकार्थत्वात् । तथा च मत्वेत्युक्तं ज्ञानं स्मृत्यात्मकमुपासनम् । केन मत्वेत्युच्यते अधीति । अध्यात्ममात्मविषयकयोगेनाधिगमो ज्ञानं तेन मत्वा । निर्दिष्टस्येत्यत्र भाष्ये निर्दिश्येति पेठुः । निर्दिष्टस्येति देवस्येत्यस्य विशेषणम् । प्रणवमिति ॐमित्येतदिति श्रुत्योक्तं प्रणवं प्रशस्य । न च भाष्ये करणानुक्तेरस्य करणस्याग्रेन्वयोक्तेः प्रश्नवाक्येन प्रणवं प्रशस्येति कुतो नोक्तमिति शङ्क्यम् । अन्यत्र धर्मादिति प्रश्नवाक्ये प्रणवानुक्तेस्तस्य कर्मतानुपपत्तेः । वाचकस्वरूपस्यापनमाहुः पूर्वमिति । 'तस्य वाचकः प्रणवः' इति योगसूत्रात् । उपेति 'सर्वे वेदाः' इत्यादिना । ननु कथमेकस्य प्रशंसोपदेशयोः करणत्वमिति चेन्न एकं वाक्यं प्रशंसा या प्रकृष्टवचनरूपा तद्रूपं प्रकृष्टवाञ्छाविशिष्टं वा सदेव मन्त्ररूपोपदेशकर्मरूपमिति 'शंसा वचनवाञ्छयोः' इति विश्वः ।

'चन्द्रसूर्यग्रहे तीर्थे सिद्धक्षेत्रे शिवालये ।
मन्त्रमात्रप्रकथनमुपदेशः स कथ्यते' ॥

इति रामार्चनचन्द्रिकायां रुद्रयामलवचनम् । उत्तरवाक्यं प्रशंसाविशिष्टं ग्राह्यम् । तेन प्रश्नवाक्यस्य प्रशंसावैशिष्ट्येपि न क्षतिः । प्रशंसावैशिष्ट्यं यदि प्रश्नवाक्यस्य विभाव्यते तदोच्य ।

भाष्यप्रकाशः।

पूर्वं प्रणवमुपदिदेश प्रशशंस च। ततो, न जायत इत्यादिना प्राप्तुः स्वरूपमुक्त्वा अणोरणीया-नित्यारभ्य, 'क इत्था वेद यत्र सः' इत्यन्तेन प्राप्यस्य विष्णोः स्वरूपं वदन् मध्ये, नायमात्मे-त्यनेन उपायभूतस्योपासनस्य भक्तिरूपतामप्याहेत्यादि चाहुः।

तेन तन्मते प्रश्नद्वयस्य सामान्यविशेषभावेनैक्यादन्यत्र धर्मादिति प्रश्नोऽपि तृतीयं वरमनुरुन्धे। शैवमतेऽप्येवम्। अत्रोदासीना वयम्।

भास्कराचार्यास्तु जीवपरयोर्गोपुरुषवदत्यन्तभेदो नास्ति। पररूपादर्शनमेव चाविद्या। सा च विद्यया निवर्त्यते। ततश्च स्वरूपं प्रतिपद्यत इति पूर्वसूत्र उक्त्वाऽस्मिन् सूत्रे सौमनस्या-पेक्षया जीवप्रश्नस्य तृतीयत्वमुक्त्वा ब्रह्मप्रश्नस्य ततोऽतिरिक्तत्वं सूचयामासुः। तेन तन्मते जीवप्रश्नस्याऽनतिप्रयोजनत्वम्।

माध्वास्तु, आनुमानिकसूत्रे, 'अव्यक्तात् पुरुषः परः' इत्यत्राऽव्यक्तशब्देन, 'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः' इत्यत्र देहिशब्देन च सांख्यानुमानकल्पितं प्रधानं जीवश्चोच्यते, उत विष्णुरिति संदेहे विष्णुरेवोच्यते। कुतः। शरीररूपकविन्यस्तगृहीतेः। शरीरस्य रूपमिव शरीररूपकम्। कप्रत्ययः कुत्सने। तथाच यथा शरीरं पुरुषतन्त्रं, तथा परमात्म-तन्त्रत्वेन शरीरसमे प्रधानादौ स्थितस्य गृहीतेः। नन्वत्र शरीरं रथमेव त्वित्यत्रोक्तं शरीरम्, आत्मानं रथिनं विद्धीत्यत्रोक्तो जीव एव च गृह्यताम्। परमात्मग्रहणे किं मानमिति शङ्क्यम्। सूत्रकृतः कुत्सार्थकप्रत्ययप्रयोगस्य रूपपदप्रयोगस्य च मानत्वात्। अन्यथा तद्वैयर्थ्यात्। नच सूत्रकृता कथनेऽपि श्रुतेस्तथैवाशय इत्यत्र किं गमकमिति शङ्क्यम्। तुच्छेनाभ्वपिहितं यदासीदिति श्रुतावल्पेन विभोरपिधानं दर्शयति। अव्यक्तमचलं शान्तमिति पिप्पलाद-

रश्मिः।

प्रशशंसेति एतद्ध्येवाक्षरं ब्रह्मेत्यादिवाक्यद्वयेन प्रशशंस। तदन्तर्गतचिदचिद्विशिष्टेश्वरान्तर्गतं ब्रह्मस्वरूपमाहुः तत इति। भक्तिरूपतामिति। 'यमेवैष वृणुते तेन लभ्यः' इत्यत्र वरणं श्रुत्वानु-स्मृतिरिति भाति। इत्यादीति ऋतं पिबन्ताविति चोपास्यस्योपासकेन सहावस्थानात्सूपासतामुक्त्वा 'आत्मानं रथिनं विद्धि' इत्यादिना 'दुर्गंपदं तत्कवयो वदन्ति' इत्यन्तेनोपासनस्वरूपप्रकारमुपासीनस्य च वैष्णवपरमपदप्राप्तिमभिधाय अशब्दमस्पर्शमित्यादिनोपसंहृतम्। इत्यादिपदार्थः। तमाहुरित्यर्थः। तृतीयप्रश्नस्य सिद्धान्ते वरानुरोधिसापेक्षतया वरानुरोधप्रतिपादकग्रन्थस्यादुष्टत्वात्। उदासीनाः प्रकाशाय आसीनाः। उत् प्रकाशे। आस्त आसीनः शानच् 'ईदासः' इति सूत्रेणासः परस्यानस्येत् 'आदेः परस्य' आसीनः। वयम्। तत्त्वमस्यादिश्रुतेः जीवप्रश्नस्यात्मप्रश्नत्वेन सामान्यविशेषभावस्य यथाकथंचित्सत्त्वात्। गोपुरुषेति गोपुरुषयोरत्यन्तभेदः स नास्तीत्यर्थः। पूर्वेति 'वदतीति चेन्न प्राज्ञो हि प्रकरणात्' इति सूत्रे। तेनेति जीवपरयोर्भेदाभेदवादविषयत्वेन। अनतीति अभेदज्ञाने प्रयोजनाभावादनतीति पाक्षिकप्रयोजनत्वम्। जीवश्चोच्यत इति जीवश्च यदुक्तं तदुच्यते इत्यर्थः। शरीरेति शरीररूपं प्रधानादि तत्कुत्सितमव्यक्तमित्याहुः केति। प्रधानादाविति। 'तुच्छे-नाभ्वपिहितं यदासीत्' इति दर्शयति च। अर्थोऽस्ति। स्थितस्येति। सौत्रविन्यस्तपदार्थः विष्णोरित्यर्थः। गृह्यतामिति शरीररथिनस्तपदाभ्यां गृह्यताम्। तद्वा इति तयोर्वैयर्थ्यात्। अव्यक्तमिति।

भाष्यप्रकाशः ।

शालायामव्यक्तपदवाच्यतां च दर्शयति । अक्षरं ब्रह्म परममित्युक्ते अक्षरे, 'अव्यक्तोऽक्षर इत्युक्तः' इति गीतास्मृतेरित्याहुः । तथाऽग्रेऽपि ।

तत्रापि व्याख्यानस्य क्लिष्टत्वाच्छ्रुत्यर्थस्यान्यथापि संभवाद् गीतायां भगवद्वाक्यव्यक्त-पदप्रयोगाच्च वयं तत्रोदासीनाः ।

विज्ञानभिक्षुस्तु, आनुमानिकसूत्रे, अजामेकामिति श्वेताश्वतरश्रुतिमुदाहृत्य श्रुत्यन्तरे ब्रह्म-कारणताया अत्र च प्रकृतिकारणताया उक्तत्वात् कपालद्वयं घटस्येव जगतोऽपि द्वयं कारणं भवत्विति शङ्कायां ब्रह्मणो न कारणत्वं, विकारित्वापत्तेः । किंतु प्रकृतेरेवेति पूर्वपक्षदलार्थः । तमिमं पूर्वपक्षं शक्तिशक्तिमद्भावेनोभयोः कारणत्वेन समाधत्ते न शरीरेत्यादि । 'यत्तन्तुनाभ

रश्मिः ।

'अव्यक्तमचलं शान्तं निष्कलं निष्क्रियं परम् ।
यो वेद हरिमात्मानं स भयादनुमुच्यते' ॥

इति वाक्यम् । तथाग्र इति सूत्रद्वये । प्रथमे सूक्ष्ममव्यक्तं मुख्यगृहीतं तद्व्यक्ततामर्हतीति तदर्हत्वम् । द्वितीये सूत्रे । तदधीनत्वाच्चाव्यक्तत्वादीनां तस्यैवाव्यक्तत्वपरावरत्वादिकमर्थवत् । 'यदधीनो गुणो यस्य तद्गुणी सोभिधीयते' यथा जीवः परमात्मेति । यथा राजा जयीत्यपि स्कान्दे । तृतीये सूत्रे अन्यस्य वाच्यत्वं न युज्यते इति भाष्यं वदतीति सूत्रे विशेषार्थकाभावः । प्रकरणादिति सूत्रस्य सोध्वनः पारमाप्नोति तद्विष्णोः परमं पदमिति तस्य ह्येतत्प्रकरणमिति भाष्यम् । क्लिष्टत्वेति रूपपदस्य तत्सदृशे लक्षणा । तदधीनसूत्रे प्रधानादाव्यक्तपदगौणी । अप्रसिद्धाश्च श्रुतयः इति क्लिष्टत्वात् । ननु तथापि श्रुतय एता सर्वबाधिका इति चेत्तत्राहुः श्रुत्यर्थस्येति । तथा हि । 'एष ह्येव तुच्छः' इति महोपनिषच्छ्रुतेः । तुच्छेन ब्रह्मणाभ्यपिहितमभितो पिहितं बहिरपि गतं व्याप्तमिति यावत् । हि गतिवृद्ध्योः स्वा. प. अ. हितं वर्द्धितं वा । न च कथं तुच्छत्वमिति शङ्क्यम् । 'तोदनात्तुच्छमुच्यते' इति महाकौर्म्यात् तुदतीति तुच्छः प्रत्ययस्तु भावे घञ्, पाक इतिवत् । तोदनात्तुच्छमिति वाक्ये भावोक्तेः । बृद्धमावच्छन्दसि सर्वविधिविकल्पात् दकारस्य थकारो विकारः इत्विकारः । तुदः वर्णविकार इति 'सर्वेषां तदधीनत्वात् तत्तच्छब्दाभिधेयता' इति तत्रत्यवाक्यात् । मुख्यतयाव्यक्तपदप्रयोगाच्चेत्येवमन्यथासंभवादव्यक्तात्पुरुषः पर इतीतरमुख्यवचनात्तद्धाम परमं ममेति वचनाच्चाव्यक्तादित्यस्याक्षरादित्यर्थात् देहिन इत्यस्यान्यविशेषणत्वाच्च । न देहाव्यक्तशब्दौ परमात्मवचनाविन्त्युदासीनाः प्रकाशायासीनाः इत्यर्थः । गीतायामिति ।

'अव्यक्तोक्षर इत्युक्तस्तमाहुः परमां गतिम् ।
यं प्राप्य न निवर्तन्ते तद्धाम परमं मम' ॥

इति गीतायाः महापुरुषयोगाध्याये । तथैवेति उदासीनपदेनान्वयः । सौमनस्येति सुमना यथा स्यादिति लिङ्लकारबोधितायाः । तथा च भाष्यम् । त्रयाणामेव पितृसौमनस्यस्वर्ग्याग्नि-परमात्मनां प्रश्न उपन्यासश्च 'अविज्ञातप्रार्थनं च प्रश्न इत्यभिधीयते' इति वचनाच्च विरोध इति । 'येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके' इत्यत्रास्तीत्यत्र लेखनाश्रयणात् । जीवप्रश्नस्याविरोधः । श्रुत्यन्तर इति 'यतो वा इमानि' इति श्रुत्यन्तरे । प्रकृतीति बह्वीं प्रजां जनयन्तीमिति श्रुत्या ।

भाष्यप्रकाशः ।

इव तन्तुभिः प्रधानजैः स्वभावतो देव एकः समावृणोति स नो दधातु ब्रह्माऽव्ययम्' इत्यादिषु वाक्यशेषेषु शरीरेण रूपकेण दृष्टान्तेन विन्यस्तमुपन्यस्तं यन्मायाख्यं प्रधानं तस्यैवाजावाक्ये ग्रहणं, न तु स्वातन्त्र्येण परेच्छाननुविधायित्वरूपेण । अतो न तस्याः स्वातन्त्र्येण कारणत्वमिति व्याख्याय, त्रयाणामेवेति सूत्रे त्रयाणामपीति पाठमङ्गीकृत्य प्राज्ञस्य प्रकरणित्वसमर्थनार्थं तदित्याशयेन तत्सूत्रमेवं व्याचख्यौ । भोक्ता भोग्यं प्रेरितारं च मत्वेति श्रुत्युक्तानां त्रयाणां पुरुषप्रकृतिदेवतावर्गाणामपि वाक्योपक्रमे उपन्यासः, प्रतिवचनं, तत्प्रश्नश्च प्रसज्येयाताम् । न ह्येवं दृश्यते । किं कारणं ब्रह्म कुतः स्म जाता इत्यादिना केवलब्रह्मण एव प्रश्नदर्शनात् । 'यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः' इत्यादिना केवलब्रह्मण एवोपन्यासदर्शनाच्चेति ।

तदसंगतम् । अपिशब्दघटितपाठस्य क्वाप्यदर्शनात् । सांख्येऽपि देवतावर्गस्याधिदैवतत्वेन भोग्यकोटिपतिततया पृथग् ज्ञेयत्वाऽनङ्गीकारेण त्रयाणां प्रश्नाद्यापत्तेरपि दातुमशक्यत्वात् । किं कारणमिति श्रुतावपि विचारस्यैव दर्शनेन तत्र प्रश्नत्वायोगात्, 'ते ध्यानयोगानुगता अपश्यन्' इत्यग्रेऽपि दर्शनकथनेन प्रतिवचनादर्शनाच्च । एवं पूर्वोत्तरग्रन्थेऽप्यवगन्तव्यमिति दिक् ॥ ६ ॥

रश्मिः ।

प्रधानजैरिति सत्त्वरजस्तमोभिः । देवः कालः । एवं कालकर्मस्वभावा उक्ताः । कर्म प्रधानमज्ञानं मायेति यावत् । समावृणोतीति सम्यक् भजति विभागं करोति, वृङ् संभक्तौ क्र्या. आ. से. विकरणोपग्रहयोर्व्यत्ययः । वृञ् वरणे स्वा. उ. से. वा अर्थः । स एव वृञ् वरणे इत्यत्र वृङ् संभक्तावित्यस्य ल्युडन्तस्य रूपमिति । नोऽस्मान् धारयत्विति दधात्वित्यस्यार्थः । वाक्येति संदिग्धेषु वाक्यशेषात् । आदिपदार्थः स्पष्टः । शरीरेणेति तन्तुनाभशरीरेण । तदिति सूत्रम् । इत्यादीत्यादिना । तमेकनेमिमित्यादिः तन्मतसमाप्ताविति पदम् । भोग्येति प्रकृतिकोटिपतिततया । पृथक्ज्ञेयत्वेति । यथाहुः अपवादमात्रमबुद्धानामिति कापिलसांख्यप्रवचनसूत्रवृत्तौ । देवतावर्गः प्रधानकार्याध्याये निरूपितः इति प्रधानात्पृथक् ज्ञेयत्वानङ्गीकारः । विचारस्येति मननस्य । प्रश्नस्येति । ननु किं कुतः इति प्रश्नस्य वाचके पदे स्तः इति चेत्तत्राहुः ते ध्यानेति । 'ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्' इति श्रुतिः । अत्रात्मशक्तिस्तत्त्वशक्तिः स्वस्वकार्यनिर्माणसामर्थ्यम् । तद्दर्शनकथनेन ब्रह्मत्वावधित्वकरणत्वाधिकरणत्वानामदर्शनेन यद्धर्मप्रकारकयद्विषयकप्रश्नः तद्धर्मावच्छिन्नतदुद्देश्यकं लक्षणादिनिरूपणमिति व्युत्पत्तेः । को घटः कम्बुग्रीवादिमान् घटः इत्यादिषु दृष्टायाः प्रकृतेः अभावादप्रश्नत्वादतः किमिति प्रश्नः । कुत इत्यवधिकरणाद्यन्तर्गत एकापेक्षया बहूनामनुग्रहो न्याय्य इति प्रश्नं न्यक्कृत्य 'कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम्' इति श्रुत्युक्तमननं विचाररूपमङ्गीकृतमिति बोध्यम् । किं च वेदान्तत्वेन किं कारणं ब्रह्मेत्यत्र किंपदस्य योग आवश्यकः । स च कै शब्दे भ्वा. प. अ. कायतेर्डिमिः शब्दरूपं शब्दकर्तृ वा ब्रह्म कारणमित्यर्थात्, कुतः पञ्चम्यर्थाज्जाताः, केन शब्दकर्त्रा, क्व शब्दकर्तरि, इत्यर्थाच्च न प्रश्नार्थत्वम् । अतः पुरुष इति चिन्त्यमित्युक्तचिन्तनं मननात्मकमुच्यते न प्रश्नः तदुक्तं विचारस्यैवेत्यनेन । पूर्वोत्तरेति 'ज्ञेयत्वावचनाच्च' इति सूत्रस्य पूर्वोत्तरग्रन्थे यद्वा पूर्वस्यानुमानिकसूत्रस्योत्तरग्रन्थे 'सूक्ष्मं तु तदर्हत्वात्' इत्यादिग्रन्थे ॥ ६ ॥

१. प्रश्नस्येति रश्मिपाठः ।

महद्वच्च ॥ ७ ॥

ननु तथापि मतान्तरेऽन्यत्र संकेतिताः कथं ब्रह्मवादे ब्रह्मपरतया योज्यन्त इत्याशङ्क्य परिहरति महद्वत् । यथा महच्छब्दः । 'महान्तं विभुमात्मानम्' 'वेदाहमेतं पुरुषं महान्तम्' इत्यादौ महच्छब्दो ब्रह्मपरो योगेन । एवमव्यक्तशब्दोऽप्यक्षरवाचक इति । न हि सांख्यमत इव वेदान्तेऽपि महच्छब्दः प्रथमकार्ये वक्तुं शक्यते । तस्मादिन्द्रियादिवाक्ये सांख्यपरिकल्पितानां पदार्थानां नामापि नास्तीति सिद्धम् । चकारोऽधिकरणसंपूर्णत्वद्योतकः ॥ ७ ॥

इति श्रीप्रथमाध्याये चतुर्थपादे प्रथमं सप्तसूत्रात्मकमानुमानिकाधिकरणम् ॥१॥

---

भाष्यप्रकाशः ।

महद्वच्च ॥७॥ अत्र भाष्यं निगदव्याख्यातमित्युपरम्यते । मायादिवादानां निराकृतिरपि शरीररूपकविन्यस्तगृहीतेरेव बोध्या ॥ ७ ॥ इति प्रथममानुमानिकाधिकरणम् ॥ १ ॥

रश्मिः ।

महद्वच्च ॥ ७ ॥ निगदेति यथा महच्छब्दो महत्तत्त्वे प्रसिद्धोपि परममहत्त्वात्परमात्मन एव मुख्य एवमितरेपि इत्याहुः । भाष्ये । यथा महदिति । अथीति अत्राधिकरणसंपूर्णत्ववाचकं किमिति चेन्नाधिकरणस्य संपूर्णत्वे कर्तुः स्वमतनिराकरणपूर्वकस्वमतस्थापनरूपार्थपूर्तिः कारणम् । संपूर्णत्वं समाप्तिः । सा च चरमवर्णध्वंसरूपा । तद्ध्वंसश्च चरमवर्णस्य कारणमात्मा 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इति श्रुतेः । तथा च चरमवर्णस्य महद्वदित्यत्र तकारस्य ध्वंसस्तत्कारणभूतात्मरूपः । न तु अभावरूपः ध्वंसप्रागभावौ कारणावस्थातो नातिरिच्येते इति प्रस्थानरत्नाकर उपपादितत्वात् । ततश्च चरमवर्णध्वंस आत्मा तद्वाचकमात्मपदमध्याहार्यं पदजन्यपदार्थोपस्थितेः शाब्दबोधे कारणत्वात् । अर्थाध्याहारेप्येवम् । तथा चात्मपदं वाचकं, अभावपदं वाचकमित्यन्ये ध्वंसस्याभावत्वात् चकारध्वंसो वा चरमवर्णध्वंसः उभयथात्मपदमधिकरणसंपूर्णत्ववाचकं चकारस्तु अधिकरणसंपूर्णत्वद्योतकः । न च वाचकोस्त्विति शङ्क्यम् । वृक्षाश्चेत्यत्र केवलवृक्षशब्दात् समुच्चयाबोधाच्चकारश्रवणे तद्बोधाच्चकार एव तद्वाचको न द्योतकस्तद्वत् प्रकृते अभावात् । एवं निगदव्याख्यातम् । नन्वव्यक्तशब्दस्य योगो मायादौ पूर्वसूत्रे उक्तस्तस्य का गतिरिति चेत्तत्राहुः मायादीति । मायाप्रकृत्यविद्याविष्णुशिवादिपदार्थः तथा च विश्वः ।

'अव्यक्तः शंकरे विष्णावव्यक्तो महदादिके ।
आत्मन्यपि स्यादव्यक्तमस्फुटेप्यभिधेयवत्' ॥

इति । एते वादाः शंकराचार्यादीनां पूर्वमुक्तास्तेषां निराकृतिः शरीररूपकविन्यस्ता रथादयस्तेषां गृहीतेः । महदादिकेऽव्यक्तपदे प्रयोक्तव्ये कृपायामव्यक्तपदमात्मनि प्रयोक्तव्येऽक्षरे । 'अव्यक्तोक्षर इत्युक्तः' इति प्रमाणात् ।

'महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' ॥

इति विषयः । अत्र महदव्यक्तपुरुषशब्दानां सांख्यशास्त्रप्रसिद्धानां श्रवणात् सांख्यमपि श्रौतं भवति न वेति संशये, भवतीति पूर्वपक्षं सांख्यमतं श्रौतं न भवतीति सिद्धान्तः । संगतिः पूर्वमुक्ता ॥ ७ ॥

इति प्रथमाधिकरणम् ॥ १ ॥

चमसवदविशेषात् ॥ ८ ॥ (१।४।२)

पुनः श्रुत्यन्तरेण प्रत्यवस्थितं निराकर्तुमधिकरणान्तरमारभते । ननु प्रकरणवशात् पूर्वमसदुक्तोऽर्थोऽन्यथा वर्णितः । यत्र प्रकरणापेक्षैव नास्ति मन्त्रे तदस्माकं मूलम् ।

'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' ॥

इति । यद्यपीदं श्वेताश्वतरोपनिषदि चतुर्थाध्याये विद्यमानत्वात् पूर्वापर-

---

भाष्यप्रकाशः ।

चमसवदविशेषात् ॥ ८ ॥ अधिकरणप्रयोजनमाहुः श्रुत्यन्तरेणेत्यादि । अत्रापि साध्यमानुमानिके श्रौतत्वाभावरूपमेव । अजामन्त्रस्थोऽजाशब्दस्तु पूर्वपक्षोत्थाने द्वारमतः संशयं तद्बीजं चानुल्लिख्य पूर्वपक्षं विषयवाक्यं चाहुः नन्वित्यादि । नन्वस्य मन्त्रस्य श्वेताश्वतरोपनिषच्चतुर्थाध्याये, 'य एको वर्णो बहुधा शक्तियोगाद् वर्णाननेकान्निहितार्थो दधाति' इत्यादिमन्त्रैर्ब्रह्म प्रकृत्यैव पठितत्वाद् उपनिषदारम्भेऽपि, किं कारणं ब्रह्मेति ब्रह्मण एव प्रकृतत्वात् कथमस्य कारणानपेक्षत्वमित्याकाङ्क्षायां तदनपेक्षतामुपपादयति यद्यपीत्यादि । तथाच यथा प्रणवादिमन्त्राणामर्थान्तरवाचकानां प्रकृतोपयोगः 'इमं मे वरुण' इत्यादीनां च

रश्मिः ।

चमसवदविशेषात् ॥ ८ ॥ अत्रापीति अपिः समुच्चये । आनुमानिकं श्रौतत्वाभावच्छ्रुतौ शरीररूपकविन्यस्तगृहीतेस्तदग्रहणात् घटवत् । यत्र यत्रान्यगृहीतेस्तदग्रहणं तत्र तत्र तदप्रतिपाद्यत्वमिति व्याप्तिः । प्रतियोगिता हेतुतावच्छेदकसंबन्धः, विशेषणविशेष्यता च साध्यतावच्छेदकसंबन्धः इति समुच्चयः । अत्रेति सूत्रे । आनुमानिकं श्रौतत्वाभाववत् चमसवदविशेषात् इति । अत इति । उपस्थितत्वात् । पूर्वपक्षस्यान्याभिमतत्वेन सिद्धान्तस्पर्शित्वात् संशयोन्नायकत्वं तत एव तद्बीजोन्नायकत्वम् । अतो विषयवाक्यं पूर्वमनुक्त्वा पूर्वपक्षो विषयवाक्यात्पूर्वमुपात्तः । भाष्ये । प्रत्यवस्थितमिति सांख्यवादिनम् । प्रकरणेति 'वदतीति चेन्न प्राज्ञो हि प्रकरणात्' । इति सूत्रे । अजामिति न जायते इत्यजा तां मूलप्रकृतिरविकृतिरित्यभ्युपगमात् । ननु रूढिरत्र छागस्य स्त्रियां प्रजापदस्य रूढिर्योगमपहरतीति चेन्न विद्याप्रकरणात् । लोहितं रजो रञ्जनात्मकत्वात्, शुक्लं सत्त्वं प्रकाशात्मकत्वात्, कृष्णं तमः आवरणात्मकत्वात्, तेषां साम्यावस्थाऽवयवधर्मैर्व्यपदिश्यते । लोहितशुक्लकृष्णेति सरूपास्त्रैगुण्याः, अजोऽसङ्गः पुरुषः, जुषमाणः सेवमानः । अनुशेते तामेव । प्रकृतिमध्यासेनात्मत्वेनोपगम्य सुखी दुःखी मूढोहमित्यविवेकतया संसरति । अन्यः पुनरजः पुरुष उत्पन्नविवेकज्ञानो विरक्तो जहात्येनां प्रकृतिं भुक्तभोगां कृतभोगापवर्गां परित्यजति मुच्यत इत्यर्थः । प्रकृते । एको वर्ण इति प्रणवः । वर्णान् अकारेकारमाकारादीन् घटः पटः कुड्यं कुसुलं महाविष्णुः गोरोचनकमित्येवमनेकान् वर्णान् । बहुधा शक्तिलक्षणा लक्षितलक्षणा योगो रूढिर्योगरूढिरिति नामभिः बहुधा शक्तियोगान्निहिता अर्था शब्देषु येन । ब्रह्मेति एको वर्णः प्रणव इति ब्रह्म प्रकृत्य । तदनपेति प्रकरणानपेक्षताम् । यद्यपीत्यादीति । भाष्ये । पूर्वापरसंबद्धमिति ब्रह्मज्ञानम् । ब्रह्मविद्येति यावत् । प्रणवेति पूर्वकाण्डे हरिः ॐ इत्यस्य पूर्वापरसंबद्धस्यार्थस्याग्रे हरिः ओमित्युक्तवोक्ते ग्रन्थे न नियमः तदीयोपक्रमाद्यधीनत्वात् । तथा च

रश्मिः ।

प्रणवः तदादिश्च प्रणवादी प्रणवाद्योर्मन्त्राणां नायं नियम इत्यर्थः । यद्वा हरिः ॐ इति प्रणवमन्त्रो विशेषणविशिष्टः आदिशब्देन 'चत्वारि शृङ्गा त्रयो अस्य पादा' इति मन्त्रः । अत्र महाभाष्ये व्याकरण-परता पूर्वापरसंबद्धोर्थः न च नायमर्थः । 'यावानर्थः' इति गीतायाः । सांख्यमतमसङ्गपुरुषः । अन्य-न्मतम् । सिद्धान्ते ब्रह्मविद्या तद्वाचकस्य अन्यन्मतं मतान्तरमिति प्रकृते सांख्य उपयोगः । प्रकृते तदेवाहुः तथा चेति । अर्थान्तरं ब्रह्मविद्या । प्रणवादिमन्त्राणामिति बहुवचनघटितत्वाद्भाष्यस्य मन्त्रानाहुः 'इमं म' इति संहिताद्वितीयाष्टके प्रथमेध्यायेऽन्तिमो मन्त्रः इत्यादीनामित्यादिपदेन विश्वचर्षणे 'मित्रस्य चर्षणी धृतः श्रवः' इति मन्त्रः संहितातृतीयाष्टकचतुर्थेध्यायेन्तेस्ति । तथा 'आकृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च, हिरण्ययेन सविता रथेनादेवो याति भुवनानि पश्यन्' इति मन्त्रसंहितायां तत्रैव तृतीयाष्टकचतुर्थेध्यायेस्ति सूर्यादीत्यादिना वरुणः । तथा हि संध्यायां इमं मे वरुण इत्यादीनामित्यत्र संहितापाठक्रमः । सूर्यादीनामित्यत्रार्थक्रमः । सूर्योपस्थानमन्तरा सायंकालाभावेन वरुणानुपस्थितेः । अतः सूर्याद्युपस्थान इत्युक्तम् । अतः प्रथमं सूर्योपस्थानमन्त्रौ व्याख्यायेते । विश्वेषां सर्वेषां चर्षणे प्रजनने ऐष्ये च मित्रस्य पथश्चर्षण्यो हि परिभ्रमणशक्तयः तासां धृतः धारकस्य मित्रस्य इनस्य मेद्यति ध्यायति ञिमिदा स्नेहने दि. प. से. अमिचिमिदिशसिभ्यः इति क्त्रन् । श्रूयते इति श्रवो यशः तेन देवः दीव्यति हलश्चेति घः देवः यशसा देवस्य सानसिं भजनीयं सम्यक् । षण् संभक्तौ भ्वा. प. से. सानसिर्वर्ण-सीत्यादिना निपातितोऽसिजन्तः । सत्यमिति यथार्थम् । चित्रमाश्चर्यकरं श्रवः श्रवणं यस्य अतिशयेन तथाभूतं चित्रश्रवस्तमम् । मित्रो जनान्यातयतीति अन्तस्तद्धर्माधिकरणोक्तरूपस्य पूर्वोक्तस्य मित्रस्तं मेद्यति स्निह्यतीति मित्रः, क्त्रन् , सूर्यः । जनान् लोकान् यातयति जना यतन्ते 'भवाय नाशाय च कर्म कर्तुम्' इति पञ्चमस्कन्धात्प्रेरयतीति यातयति यती प्रयत्ने भ्वा. प. से. हेतुमण्ण्यन्ताल्लट्, कीदृशो मित्र इत्याह प्रजानन् तत्तज्जीवकृतधर्माधर्मज्ञानं प्रमिमाणः पुनः पुनर्मित्रपदं स्नेहमुख्यतया भक्तिप्रतिपादनाय । मित्रो भगवान् 'ध्येयः सदा सवितृमण्डलमध्यवर्ती' अत्रापि मित्रपदस्य योगरूढिः सर्वपदवाच्यत्वात् मित्रः सूर्यो वा पृथिवीमुत 'उतः प्रश्ने वितर्के स्यात्' इति विश्वात् । दाधारेति प्रश्नो वितर्को वा 'सूर्य आत्मा जगतस्तस्थुषश्च' इति श्रुतेः जङ्गमस्य स्थावरस्य च मित्रः वृष्टिद्वारा अन्नं गाश्च जनयन् दाधार धारयति । प्रश्नपक्ष उत्तरमाह मित्रः कृष्टीरनिमिषाभिचष्टे अभितोवतीर्यापि चष्टे वक्ति श्रीभागवत-द्वारापि सत्याय हव्यं घृतवद्विधेम इति । सत्याय यथार्थाय हव्यं दानादनयोः अदनयोग्यं घृतयुक्तं विधेम । विध विधाने तु. प. से. तस्य विधानं कुर्याम इति दानमपीन्द्रियाणां संभवति । इन्द्रियाणि जुहोतीति श्रुतेः । यथाग्नये घृतदानं तद्वदिन्द्रियदानं निरोधलक्षणग्रन्थोक्तदिशा विधेम प्रयच्छेम । इत्यन्यः 'प्रसमित्र मर्तो अस्तु प्रयस्वान् यस्त आदित्य शिक्षति व्रतेन' इति हे मित्र कृष्णस्य मुख्या-धिकारिन् स्नेहकर्त आदित्य स मित्रो भगवान् 'ध्येयः सदा सवितृमण्डलमध्यवर्ती' मर्तो यलोपः । मर्त्यो मनुष्यः वसुदेवद्वारा प्रास्तु स्वयं भगवान् भवतु स क इत्याह । बहुषु साकाररूपेष्वित्याह यो व्रतेन स्वानंशान् प्रशिक्षति यस्ते तुभ्यं शिक्षति व्रतेनेति 'न हन्यते न जीयते त्वोतो नैनमंहो अश्नोत्यन्ततो न दूरात्' । यत् त्वोतः त्वयाधिकारिणा सूर्येणोतः शिक्षितः उङ् शब्दे भ्वा. आ. अ. 'कृष्णद्युमणिनिम्लोचे गीर्णेष्वजगरेण ह' इति वाक्यात् । न हन्यते न जीयते नाभिभूयते केनापि न एनं त्वया शब्दितं अंहोतीतं समीपात् अश्नोति व्याप्नोति । अशूङ् व्याप्तौ उपग्रहव्यत्ययः स्वा. आ. वे. न दूरादपि यत् अहः निषिद्धदेवपूजादिकर्तृ इति योगः । निषिद्धदेवपूजाकर्ता पुरुषोपि

रश्मिः ।

भवत्यतः समुदायशक्तिरंहसीति रूढिः योगरूढं पदं यच्चिद्धिते विश्नो यथेतीमं मे वरुण इति मन्त्राग्रे व्याख्येयम् । अत्राप्यास्याम वरुणप्रियासः इत्युपसंहारादुपक्रमस्य तु विचारात्तस्य यज्ञ ऋध्यते यस्य हविरतिरिच्यते इत्यस्य यज्ञवृद्ध्यर्थत्वात् ॥ प्रकरणं यज्ञवृद्धेर्वरुणप्रीतेश्च तदुभयनिरपेक्षेण सूर्योपस्थाने मित्रस्येति मन्त्रः । न च वरुणोपस्थानायास्त्विति शङ्क्यम् । ततः सूर्योपस्थानं तत्र मन्त्राः मित्रस्येत्यादयः इति संध्याव्याख्यानात् । तत इत्यस्य गायत्रीजपानन्तरमित्यर्थः । आसत्येनेति मन्त्रो व्याख्यायते । सत्येन सह वर्तमानः सत्येन व्यावहारिकेणेत्यन्ये रजसान्तरिक्षलोकेन लोका रजांस्युच्यन्ते इति यास्कोक्तेः । सविता सूर्योऽक्षरो वा अमृतमानन्दं देवं वा मर्त्यं मनुष्यं कृष्णं वा आसमन्तात् नितरां वेशयन् मित्रत्वादधिकारित्वादक्षरस्य लोकत्वात् स्वस्थाने मनुष्यान् स्वक्रीडायां कृष्णं महाराजत्वाद्देशयन् इति भक्तिमार्गमर्यादाऽन्यत्र तु कर्ता कारयिता हरिरिति हिरण्ययेन निरोधस्कन्धोक्तेन रथेन देवः क्रीडयिता कृष्णः हिरण्ययेनेत्यत्र ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि च्छन्दसीति सूत्रेण मयटो मकारलोपः । यस्येति लोपे प्रत्ययस्वरः वर्णलोपः मयटो मकारस्य हलो लोपः । याति प्रापयति निरोधं दशरसः । आसमन्तात् भुवना जसोर्डा भुवनानि विशेषेण पश्यन् । अत्रापि प्रकरणं पूर्वोक्तम् । उद्वयमित्यादिमन्त्रव्याख्या उत् वयं यद्वा उ आश्चर्ये द्वयं कृष्णरामरूपं वेदार्थो रामकृष्णयोरिति कृष्णोपनिषदः । एकं द्वयमित्याश्चर्यम् । तमसः परि परितो वर्तमानं अक्षुष्टं द्वयं तमः सेवमानं तमसः पार इत्यन्ये । ज्योतिरुत्तरं पश्यन्तः वयं श्रुतयः । उत्तरं वितर्कतरं यथा भवति तथा वेदाः पश्यन्तो वा । उद्वयं तमसस्परि पश्यतो ज्योतिरुत्तरमिति व्याकृतम् । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् । देवत्रा देवेषु 'देवमनुष्यपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्' इति सप्तम्यर्थे त्राप्रत्ययः । देवेषु देवं इह वृन्दावनादौ क्रीडन्तं सूर्ये अन्तर्वर्तमानं सूर्यं द्युमणिं कृष्णं सूर्यं वा उत्तमं ज्योतिस्तदेवागन्म 'छन्दसि लुङ्लङ्लिटः' इति प्रार्थनायां लिट्, बहुलं छन्दसीति शपो लुक् म्वोश्चेति मकारस्य धातोर्नकारः पादादित्वान्निघातोर्नेति सन्ध्याटीका । संहिताचतुर्थाष्टकप्रथमाध्यायस्थेयं श्रुतिः । अत्र छन्दसि लुङ्लङ्लिट इति सर्वकाले लङ् इति पाठः । तथाहि धात्वर्थानां संबन्धे सर्वकालेषु एते वा स्युरिति वृत्त्यन्तरं देवो देवेभिरागमदिति लुङः लोडर्थे । इदं तेभ्यो करं नमः आग्निमथ होतारमवृणीतायं यजमान इति इमे उदाहरणे लङः । अथाममार इति लङर्थे लिटः । अथ म्रियत इत्यर्थः । तथा चागन्मेत्यत्र लङुपलब्ध्या लिटोनुपलब्धेः तथा चागन्मेति श्रुत्याज्ञाविधौ लङुत्तमपुरुषबहुवचनं सर्वकालेषु न तु भूतानद्यतनकाल एव । प्रकरणमत्र युञ्जानं प्रथमं मन इत्युपक्रमेण शं नो भवतु वाजे वाजे इत्युपसंहारेणोन्नेयम् । 'उदुत्यं जातवेदसं देवं वहन्ति केतवः' दृशे विश्वाय सूर्यम् । 'चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्ष५सूर्य आत्मा जगतस्तस्थुषश्च' इति मन्त्रः । प्रथमाष्टकचतुर्थाध्यायस्थः । उदित्यमिति टीकायां पाठः । उत् उ, इ वा, त्यं प्रसिद्धं जातं वेदो धनं यस्मात् जातवेदाः अग्निस्तं देवं केतवोऽश्वा नहन्ति बध्नन्ति वहन्ति प्रापयन्ति वा । जातवेदा इत्यत्र 'गतिकारकयोः पूर्वपदप्रकृतिस्वरत्वं च' इति उणादिसूत्रेणाऽसिः पूर्वपदप्रकृतिस्वरश्च । केतव इति 'केतुर्केतौ पताकायां ग्रहोत्पातारिलक्ष्मसु' इति विश्वः । अश्वाः केतव इति निरुक्तम् । योगरूढं पदं विश्वाय भुवनाय सामर्थ्योदये तस्य दृशे द्रष्टुं सूर्यम्, सूर्यजातवेदसोरभेदः । 'षष्ठ्यर्थे चतुर्थीति वाच्यम्' इति वार्तिकेन षष्ठ्यर्थे चतुर्थी या खर्वेण पिबति तस्यै खर्व इत्यत्र यथा । विश्वायेत्यत्र न ङे स्मै । विश्वस्येश्वरसामर्थ्य-

रश्मिः ।

नामत्वात् ॐमित्येकाक्षरं ब्रह्म सर्वं तस्योपव्याख्यानमिति उपपदवाच्यसामर्थ्यस्य व्याख्यानम् । उप 'सामर्थ्ये' इति विश्वात् । यद्वा सर्वमिति पदादिसर्वमित्यर्थात् । न उप इत्यस्य सामर्थ्यमात्रवाचकत्वद्योतकत्वेऽपि तु सामर्थ्यादेर्वाचकत्वद्योतकत्वे तथा च विश्वः ।

'उप सामर्थ्यदाक्षिण्यदोषाख्यानात्ययेषु च ।
आश्चर्यकरणे दाने व्याप्तावारम्भपूजयोः' ॥ इति ।
'नाभिः प्राण्यङ्गके क्षेत्रे चक्रान्ते चक्रवर्तिनि ।
नाभिः प्रधाने कस्तूरीमदेपि क्वचिदीरितः' ॥

इति च । दृशे इति 'दृशे विख्ये' इति तुमुनर्थे निपातितः । चित्रमिति देवानामिन्द्रादीनां कृष्णोपनिषदुक्तानां तं होचुः सुराः सर्वे इत्येषां देवानां वाऽनीकं सकलदेवसमूहात्मकं वा चित्रमाश्चर्यकरं उदगात् चक्षुर्मित्रस्य वरुणस्याग्नेः द्यावापृथिवी अन्तरिक्षं आप्राः तेजसा क्रीडया चापूरयत् । प्रा पूरणे लङ् पुरुषव्यत्ययः त्वमाप्रा इति श्रुतिवचनं वा । अदादिरयमनिट् परस्मैपदी च । जगतो जङ्गमस्य तस्थुषः स्थावरस्यात्मा व्यापकः । अत्राप्यादद्दे ग्रावास्त्वध्वरकृदित्युपक्रमः त्वमग्ने विचर्षणे इत्युपसंहारः । प्रकरणमुन्नेयम् । 'तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् पश्येम शरदः शतम् । जीवेम शरदः शतम् । नन्दाम शरदः शतम् । मोदाम शरदः शतम् । भवाम शरदः शतम् । शृणवाम शरदः शतम् । प्रब्रवाम शरदः शतमजीता स्याम शरदः शतम् । ज्योक् च सूर्यं दृशे' 'य उदगान्महतोर्णवात् विभ्राजमानः सरिरस्य मध्यात् स मा वृषभो लोहिताक्षः सूर्यो विपश्चिन्मनसा पुनातु' इति आरणश्रुतिनिरूपणम् । चक्षुः प्रकाशकम् । देवेभ्यो हितं निर्मलं पुरस्ताच्छुक्रं शोककर्तारम् ।

'उत्प्रकाशे वियोगे च प्राबल्यस्वास्थ्यशक्तिषु ।
प्राधान्ये बन्धने भावे मोक्षे लाभोर्ध्वकर्मणि' ॥

इति विश्वः । प्रकाशाय चरत् गच्छत् अडभावश्छान्दसः अभक्षयद्वा । अतश्चक्षुरादिभक्षकभक्षकत्वात् पश्येम इत्यादि स्पष्टम् । ज्योक् चेति ज्योक् बहुकालं तत् ब्रह्म वर्णलोपः सूर्यं सूर्यान्तस्थं दृशे द्रष्टुम् । मा माम् । 'शन्नो वातः पवतं मातरिश्वा शन्नस्तपतु सूर्यः' इत्युपक्रमकः ब्रह्म प्रावादिष्म तन्नो मा हासीद्युपसंहाराद्ब्रह्मप्रकरणम् । सायं वरुणोपस्थानं 'इमं मे वरुण श्रुधी हवमद्या च मृडय त्वामवस्युराचके 'तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः अहेडमानो वरुणेह बोध्युरुश२समान आयुः प्रमोषीः' इति । इमं मे मम हे वरुण हवं आह्वानं श्रुधि शृणु, अद्य मां मृडय सुखय त्वामवः रक्षणं आत्मन इच्छतीत्यवस्युः आचके आह्वये, कै शब्दे छन्दसि लिडिति लिङ्व्यत्ययेनात्मनेपदम् । तत्त्वेति । तत् सूर्यान्तस्थः त्वा त्वां वरुणं यामि याति कीदृश इत्याह ब्रह्मणा वेदेन वन्दमानः स्तूयमानः यकारलोपः, तत् त्वमाशास्ते आशास्ते यजमानो देवपूजादिकर्ताशास्ते हविर्भिस्तत् । हे वरुण अहेडमानः अनादरमकुर्वन् इह मत्कर्तृकां स्तुतिं बोधि बुद्ध्यस्व अबोधि वा । स्तुतिर्मत्कर्तृका त्वया । कीदृग्वरुण इत्याह उरुर्महान् शंस स्तुतिर्यस्य तादृक् नोऽस्माकं उत्तमश्लोकवार्तायातमानामायुर्मा प्रमोषीः न्यूनं मा कार्षीः । उपसंहारमत्रोयम् । उपक्रममन्त्रस्तु वायव्यं श्वेतमालभेत भूतिकाम इति ब्रह्मप्रकरणम् । वायुमुपक्रम्य त्वमेव प्रत्यक्षं ब्रह्मासीति श्रुतेः । अग्रे यच्चिद्धिते विशो यथेति मन्त्रः तृतीयाष्टकचतुर्थाध्यायान्तेस्ति । विश्वचर्षणे मित्रस्य चर्षणी धृतश्रवो देवस्येत्यस्याग्रेतनो मन्त्रः । यच् चिद्धिते विशो यथा प्र देव वरुण व्रतं मिनीमसि यद्यविद्यवि

संबन्धमेव वक्तव्यम्। तत्र, ब्रह्मवादिनो वदन्तीत्युपक्रम्य ब्रह्मविद्यैव निरूपिता। तथापि पूर्वकाण्डे प्रणवादिमन्त्रणां नायं नियम इति प्रकृतेऽपि मतान्तरवाचकस्यैव प्रकृतोपयोग इति शङ्का। 'ते ध्यानयोगानुगता अपश्यन् देवा-

---

भाष्यप्रकाशः ।

सूर्याद्युपस्थाने, तथास्यापि मन्त्रस्य कपिलमतसिद्धार्थवाचकस्यैव ब्रह्मविद्योपयोग इत्येष मन्त्रः स्वार्थनिरपेक्ष एवेति शङ्केत्यर्थः। किंचात्र यद्येक एव मन्त्र एतादृशोऽन्ये त्वन्यादृशा इति स्यात् तदा बहूनामनुग्रहो न्याय्य इत्यस्यैवार्थोऽन्यथा कल्प्येतापि। यथा कठवल्लीमन्त्रस्य। इह तु मन्त्रणां बहूनां तादृशत्वात् तदपि न वक्तुं शक्यमित्याह ते ध्यानेत्यादि।

रश्मिः।

यत् किं चेदं वरुण दैव्ये जनेभिद्रोहं मनुष्याश्चरामसि अचित्ती यत्तव धर्मायुयोपिम मा नः तस्मादेनसो देव रीरिषः कितवासो यद्रिरिपुर्न दीवि यद्वा घा सत्यमुतन्न विद्म। सर्वा ता विष्य शिथिरेव देवाथा ते स्याम वरुणप्रियास इति। हे देव वरुण ते व्रतं त्वदीयपरिचर्यारूपं द्यविद्यवि दिवसे दिवसे प्रमिनिमसि मिनीमः। मीञ् हिंसायां क्र्या. उ. अ. मीनातेर्निगमेति ह्रस्वः। यच्चिद्धि, चिद्धीति वा। यद्येवं तथापि विशो यथा, प्रजा इव, वयं तथा च सापराधाः अपि प्रजाः स्वासिना यथानुगृह्यन्ते तथा वयमप्यनुग्राह्या इति भावः। यत्किंचेति। किं च हे वरुण दैव्ये देवसमूहरूपे जने यत्। किं च अभिद्रोहमपकारजातं वयं चरामसि चरामो मनुष्याः किं चाचित्ती अचित्या अज्ञानेन तव त्वदीयं यद्धर्मधारकं कर्म आयुयोपिम युप विमोहे दि. प. से. विमोहितवन्त हे देव तस्मादेनसः पापात्नोऽस्मान् मा रीरिषः मा हिंसीः रिष् हिंसायां भ्वा. प. से.। कितवास इति कितवास्तीत्याचक्षाणाः कितवा द्यूतकृतः कितवेत्यनुकरणादाख्यातण्यन्तं पचाद्यच् पृषोदरादित्वात् किमो मलोपः दिवीति ते वरुणस्य दीविनीति ताच्छील्ये णिनौ प्राप्ते देवनमिव देवनं द्यौः तस्यां दिवि दिवेर्डिविः अन्येषामपीति दीर्घः। कितवासस्ते मित्रीभूतस्य दिवि नरि रिपुः रप व्यक्तवाचि भ्वा. प. से. यन्नाम देवपूजादिकर्तृ व्यक्तमूचुरिति यत् वाक् हा सत्यमिति छेदः यस्य देवपूजादिकर्तुः वाक् सत्यं हा जहाति उत वितर्के यत् यस्य न, न जहाति तन्न विद्म। यद्वा घा सत्यमिति छेदः ऋचि तुनुघ मक्षु तङ्कुत्रो रूष्माणामिति संहितायां दीर्घः सर्वा सर्वाणि ता तानि विष्य विशेषेण ष्य नाशय षोन्तकर्मणि दि. प. अ. विपूर्वाल्लोटि मध्यमैकवचनम्। शिथिरेव शिथिलानीव। शिथिरेत्यत्र शेश्छन्दसि बहुलमिति शिलोपे 'न लोपः प्रातिपदिकान्तस्य' इति न लोपः। हे वरुण अथ अनन्तरं तव प्रियासः प्रियाः। आज्जसेरसुगिति जसोऽसुगागमः। स्याम भवेम। अयमुपसंहारमन्त्रः। वि वा एतस्य यज्ञ ऋध्यते यस्य हविरतिरिच्यते इत्युपक्रमः। प्रकरणमुन्नेयम्। न चात्र सूर्योपस्थानं न वरुणोपस्थानमिति शङ्क्यम्। इमं मे वरुणेत्युपक्रमात्। वरुणप्रियास इत्युपसंहाराच्च। न च सूर्योपस्थानपरग्रन्थविरोध इति वाच्यम्। व्याख्याने सूर्यप्राधान्येन तत्परत्वात्। हेतुद्वयेनार्थद्वयव्यवस्था। प्रकृतमनुनानुसर्यते। एतादृश इति सांख्यप्रतिपादकः 'त्यदादिषु दृशोनालोचने कञ्च' इति कन्। अस्यैवेति अजामेकामित्यस्यैव। कठवल्लीमन्त्रस्येति 'इन्द्रियेभ्यः परा ह्यर्थाः, इत्यादिकं सकलमतसाधारणम्। अतो महतः परमव्यक्तमिति मन्त्रस्य। मन्त्राणामिति वक्ष्यमाणानां मन्त्राणाम्। तादृशेति कर्मकर्तरि प्रत्ययः रूढ्यनुगुणत्वादिति मनोरमायां प्रत्ययस्तु,

---

१. आज्जसेरसुगिति वा पाठः।

त्मशक्तिं स्वगुणैर्निगूढाम्' इति च । तथा 'ज्ञाज्ञौ द्वावजावीशानीशौ' अजा ह्येका भोक्तृभोग्यार्थयुक्ता । अग्रे च यो योनिं योनिमधितिष्ठत्येको विश्वानि रूपाणि योनीश्च सर्वाः । 'ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत्' इत्यादि च । वाक्यानि कपिलतन्मतवाचकानि वर्तन्त इति सांख्यमतमपि वैदिकमेवेत्येवं प्राप्ते, उच्यते—चमसवदविशेषात् ।

'अर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन् यशो निहितं विश्वरूपम् ।
तस्यासते ऋषयः सप्त तीरे वागष्टमी ब्रह्मणा संविदाना' ॥

---

भाष्यप्रकाशः ।

तथाचात्र स्वगुणैर्निगूढत्वम् । अग्रिमे मुक्तामुक्तात्मसंघैर्भोक्तृभिर्भोग्यार्थैर्मन्त्रादिकार्यैर्युक्ता अनादिः प्रकृतिः । तदग्रिमे चाधिष्ठातृत्वम् । तदग्रिमे च कपिलस्य नाम तद्धर्माश्च प्रत्यभिज्ञायन्ते । एतावान् परं विशेषो यत् कापिलैः प्रकृतिः स्वतन्त्रोच्यते । अत्र तु परमेश्वरशक्तित्वेनेति । न तावता तस्या अजात्वहानिः । शक्तेर्नित्यत्वात् । अतः शक्तित्वमात्रेण विशेषेण कपिलमतप्रत्यभिज्ञापकनानापदानादरणमनुचितमिति सांख्यमतस्यानुमानिकत्वोक्तिः प्रधानस्याशब्दत्वोक्तिश्चानुपपन्नेति प्राप्ते इत्यर्थः । सूत्रं पठित्वा सिद्धान्तं व्याकुर्वन्ति उच्यते इत्यादि । एकपदमिदं सूत्रम् । चमसेन तुल्योऽविशेषश्चमसवदविशेषस्तस्मात् । स्यात् सांख्यमतमत्र, यदि तस्याः सृष्टिकरणे स्वातन्त्र्योपपादको रजःसत्त्वतमःसाम्यावस्थात्मकः स्वरूपस्य विशेषो

रश्मिः ।

त्यदादिषु दृशोनालोचने कञ्च' इति सूत्रेण । बहवो मन्त्राः सांख्यप्रतिपादकास्ते । दृश्यन्ते स्वयमेवेति तादृशाः सांख्यप्रतिपादकत्वेन दृश्यन्त इति फलितम् । तथा च तादृशत्वात् सांख्यप्रतिपादकत्वात् । तदपीत्येकमन्त्रान्यथार्थकल्पनम् । तन्मताभिज्ञापकप्रदानि स्फोटयन्ति तथा चेति । शक्तिपदं प्रकृतिव्यतिरिक्तेपि शक्तमित्यज्ञापकम् । स्वगुणैर्निगूढस्त्वं तु ज्ञापकमिति तदुक्तं मुक्तामुक्तेति । ज्ञाऽज्ञावित्यनेनाविवक्षितैकत्वकेन । अजेति स्पष्टम् । मात्राः शब्दादयः आदिना महदादियुक्ताः । आत्मपदार्थमाहुरनादिरिति । अधीति । योनिः समवायिकारणं प्रकृतिस्तदधिष्ठातृत्वम् । असङ्गस्य पुरुषस्याभिमानेन । मायावादेऽविद्यावादे च युक्तयस्तत्त्वानुसंधाने सन्ति । तद्धर्मा इति ज्ञानैर्धारणकर्मत्वं जायमानत्वं दर्शनविषयत्वं च । त एते सांख्यपदार्था इति प्रत्यभिज्ञाविषयीक्रियन्ते सांख्यमतमपि वैदिकमेवेति भाष्ये एवकारव्यावर्त्यं सांख्यमतस्यानुमानिकत्वप्रधानस्याशब्दत्वं चेत्याहुः एतावानिति विशेष इति सांख्यमताद्विशेषः । स्वतन्त्रेति 'प्रकृतिपुरुषयोरन्यत्सर्वमनित्यम्' इति सूत्रवृत्तौ वदद्भिरुच्यते 'असङ्गोयं पुरुषः इति' 'प्रधानाज्जगज्जायते इति' च इतिशब्दान्तं सूत्रद्वयम् । (स्वातन्त्र्यं कर्तृत्वं 'प्रकृतिः कर्त्री पुरुषस्तु पुष्करपलाशवन्निर्लेपः' इति) परमेति हे देव । आत्मशक्तिमिति श्रुत्यर्थात्परमेश्वरस्य शक्तित्वेन । आनुमानिकेति । पूर्वाधिकरणपूर्वसूत्रे दृष्यत्वेनानुपपन्ना तथा चानुमानेन प्रकृत्या संबद्ध्यत इति आनुमानिकमित्युक्त्वा न व्युत्पत्तिः किं तु अनुमानेन व्याप्त्या परामर्शेन वा जयति पराभवतीति आनुमानिकं 'तेन दीव्यति खनति जयति जितम्' इत्यनेन ठक् । वैशेषिकादि इति भावः । अशब्देति । प्रधानस्याव्यक्तशब्दाप्रतिपाद्यत्वोक्तिः । अस्वपदविग्रहोऽविग्रहो वा नित्यसमासस्तदर्थमाहुः तुल्य इति । 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिः ।

इति मन्त्रे यथा न विशेषो विधातुं शक्यते । न हि कर्मविशेषं कल्पयित्वा तत्रार्वाग्बिलश्चमसं कल्पयित्वा तत्र यशोरूपं सोमं होतारो मन्त्रेण भक्षयेयुरिति कल्पयितुं शक्यते । तथा प्रकृते रोहितशुक्लकृष्णशब्देन रजःसत्त्वतमांसि कल्पयित्वा न तद्वशेन सर्वमेव मतं शक्यते कल्पयितुम् । कपिलऋषिवाक्यमप्यनित्यसंयोगभयान्नित्यऋषेरेवानुवादकम् । तस्मान्न मन्त्रमात्रेण प्रकरणश्रुत्यन्तरनिरपेक्षेण विशेषः कल्पयितुं शक्यः ॥ ८ ॥

भाष्यप्रकाशः ।

विधातुं शक्येत । स च न शक्यते । शक्तित्वेन शक्तिमदधीनोदयतया तत्सापेक्षतयैव सिद्धत्वात् नच स्वगुणैर्निगूढत्वं तद्गमकम् । तत्र स्वपदेन ब्रह्मण एव ग्रहीतुं शक्यतया तद्गुणानामेव ग्राह्यत्वात् । उत्तरार्धे, 'यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः' इत्यनेनापि तस्यैव परामृष्टत्वाच्च । नापि भोक्तृभोग्यार्थयोगस्तथा । जन्यायां शक्तावपि तथात्वस्य पुराणसिद्धत्वान्नापि, योनिं योनिमिति तद्गमकम् । वीप्साया बहुत्वस्य च बाधकत्वात् । नाप्यंशभेदात् समाधिः । तस्यापि शक्तिसाधारणत्वात् । अतश्चमसवाक्यवदत्राप्युक्तरीत्या कल्प्यमानस्य विशेषस्याभावाच्च सांख्यमतसिद्धिः । कपिलवाक्यादसिद्धिस्तु भाष्य एवोपपादितेति पूर्वाधिकरणोक्तमक्षुण्णमित्यर्थः ॥ ८ ॥

रश्मिः ।

तेन चमसेन तुल्यश्चमसवद्वर्ततेऽविशेष इति क्रिया । तत्सापेक्षेति शक्तिमदात्मसापेक्षतया । घटवद्भूतलमित्यादेः प्रयोगस्य भूतलादिज्ञानवत् संबन्धित्वात् । यद्यपि घटज्ञानवत् संबन्धित्वमपि प्रयोगस्य तथापि प्रकृते नोपयोगः । तद्गमकमिति अनादिप्रकृतिगमकम् । प्रकरणादाहुः । तत्रेति प्रकरणं श्वेताश्वतरे ॐ ब्रह्मवादिनो वदन्ति किं कारणं ब्रह्म कुतः स्म जाता जीवामेत्युपक्रमात्स्वशब्दस्यात्मात्मीयज्ञातिधनवाचकत्वाच्च ब्रह्मणः । स्वशब्देन प्रकृतिसंग्रहाभावे प्रमाणान्तरमाहुः उत्तरेति । निखिलानीति प्रकृतिरपि संगृहीता । अधितिष्ठति स्वगुणैः । तस्येति ब्रह्मणः । तथेति तद्गमकत्वेन । पुराणेति तृतीयस्कन्धपञ्चमाध्याये ।

'त्वं नः सुराणामसि सान्वयानां कूटस्थ आद्यः पुरुषः पुराणः ।
त्वं देवशक्त्यां गुणकर्मयोनौ रेतस्त्वजायां कविमादधेऽजः' ॥

इति पुराणसिद्धत्वात् । किं च 'ततो वयं सत्प्रमुखा यदर्थे बभूविम' इति पुराणम् । वयं सात्त्विकाहंकारप्रमुखाः । यदर्थे भगवतः कार्यार्थे । बहुत्वस्येति । योनीरित्यत्र । अंशेति प्रकृत्यंशभेदाद् वीप्साबहुत्वयोः समाधिः । शक्तीति जन्यशक्तिसाधारणत्वात् । अत इति कपिलवाक्यातिरिक्तवाक्यानां प्रकृत्यगमकत्वात् । विशेषस्येति । रोहितशुक्लकृष्णशब्दानां रजःसत्त्वतमोवाचकत्वरूपस्य । कपिलेति । 'ऋषिं प्रसूतं कपिलम्' इति कपिलस्य वाक्यम् । प्रतिपाद्यप्रतिपादकभावसंबन्धे षष्ठी । अत्राप्यानुमानिको न वैदिकश्चमसवदविशेषात् । यद्येवं तर्ह्येवं 'यतो वा इमानि' इत्युक्तजगज्जन्मादिकर्तृत्वादिवदित्यनुमानमपि । भाष्ये । न विशेष इति । ननु कं प्रत्याक्षेप इति चेच्छृणु—चम्यते भक्ष्यते सोमोऽस्मिन् पात्रविशेषे इति चमसः सोमपानपात्रं स्यात् अधिकरणे घञ्, वृद्धिर्न, छन्दसि विकल्पात् सोयं पूर्वतन्त्रे तृतीयस्य पञ्चमपादे ज्योतिष्टोमे मैत्रहोतुश्चमसः प्रशास्तुः ब्रह्मणःपोत्रादीनां प्रयजमानस्य प्रयन्तु सदस्यानामित्युक्तः । एवं च जिज्ञासाधिकरणोक्तं

## ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ॥ ९ ॥

ननु चमसमन्त्रे अर्वाग्बिल इति मन्त्रव्याख्यानमस्ति । शिरश्चमसः प्राणा वै यशः प्राणा वा ऋषय इति । नात्र तथा व्याख्यानमस्तीतीमां शङ्कां

भाष्यप्रकाशः ।

ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ॥ ९ ॥ सूत्रमवतारयन्तो व्याकुर्वन्ति नन्वित्यादि । इतीमामिति इति हेतोश्चमसदृष्टान्तस्य वक्तुमशक्यत्वादजाशब्दे यौगिकार्थमा-दृत्याध्यात्मप्रकरणासंबद्धत्वाद्रूढार्थं च विहायात्र सांख्यसिद्धा प्रकृतिरेवाङ्गीकार्येतीमामित्यर्थः ।

रश्मिः ।

तस्माद्यत्रापि विध्यश्रवणं तत्रापि अर्वाग्बिलश्चमसः ऊर्ध्वबुध्नोभवदिति विधिं परिकल्प्य तत्रत्यानां तच्छेषत्वं परिकल्प्य कर्मविशेषं प्रब्रह्मण एत्वित्युक्तब्रह्मत्वार्थं कल्पयित्वा ब्रह्मिष्ठो ब्रह्मा तं दर्शपूर्णमासयोर्वृणीत इति वाक्यात् । तथा च स्यादेतत् अथातो ब्रह्मजिज्ञासेत्यादि जिज्ञासाधिकरण-भाष्योक्तमानवं प्रत्याक्षेपः सिद्धः । एवं च विशेषो ब्रह्मत्वार्थ धर्मविशेषरूपः । एतदेवाहुर्नेहीति । तत्रार्वागिति विशेषणार्थः स्पष्टः । सोमे यशोरूपव्यापकत्वं तु श्रुतिप्रामाण्यात्, विश्वरूपत्वं तु सर्वस्य सर्वात्मकत्वात् । वागष्टमीत्यस्यार्थमाहुः मन्त्रेणेति । वागष्टमी ऋषिवत्तीरे निकटे कर्मविशेषस्ये-त्यष्टमीत्वं ब्रह्मणा वेदेन संविदाना संबध्नातीति मन्त्रार्थः । अत्र कर्मविशेषे चमसो ब्रह्मणः प्रैत्वित्यत्रोक्तचमसपदव्युत्पत्त्या सोमभक्षणं प्राप्तं तदाहुः भक्षयेयुरिति नान्यं क्रियापदमत्र । नित्यऋषेरिति बाहुणस्तु न । छन्दोवदृभिभाष्यमिति विकल्पात् । अन्विति । सिद्धस्य कथनमनुवाद-इति कपिलपदार्थः सिद्धः । विशेष इति ब्रह्मत्वार्थं धर्मविशेषः ॥ ८ ॥

ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ॥ ९ ॥ नन्वित्यादीति अयं मन्त्रो बृहदारण्यके शिशुब्राह्मणेस्ति । व्याख्यानमिति श्रुतिस्तु अर्वाग्बिलश्चमसः ऊर्ध्वबुध्न इतीदं तच्छिर एष अर्वाग्बिलश्चमसः ऊर्ध्वबुध्नस्तस्मिन् यशो निहितं विश्वरूपमिति । प्राणा वै यशो विश्वरूपप्राणा नो तदाह तस्यासत ऋषयः सप्ततीर इति प्राणा वा ऋषयः प्राणा तदाह वागष्टमी ब्रह्मणा संविदानेति अत्र हि शिशूपासनं प्रक्रम्येयं श्रुता सप्रतीकव्याख्यात्री तत्रेदं तच्छिर इति अयं वा व शिशुर्योयं मध्यमः प्राण इति श्रुतेः प्राणात्मकस्य शिशोः प्रत्याधानभूतशिर एव तत्र श्रोत्रादिच्छिद्रेषु प्रत्येकं प्राण आधीयते शृण्वञ्छ्रोत्रं भवतीति । अर्वाग्बिलः अवाङ्मुखः अधः स्थितस्यैव मुखस्य बिलत्वात् । शिरसो बुध्नाकारस्योपरिदर्शनात् ऊर्ध्वबुध्नः चमसो यज्ञपात्रविशेष-स्तद्वदिति । प्राणादीति प्राणादिरूपं यशःशब्दाद्विप्रकाशनं तत्कारणं नार्थोल्लासकत्वाद् विश्वरूपं तस्मिन् । शिरसि निहितं एतदिति यश इत्यर्थः प्राणा वा इति प्राणरूपा सप्तऋषयः शिरोलक्षण-चमसस्य तीरे निकटे आसते भवन्तीति । एतदिति ऋषीनित्यर्थः । ब्रह्मणेति वेदेन संबध्नाति के ते प्राणा ऋषयः इत्याहाग्रे इमावेव विश्वामित्रजमदग्नी अयमेव विश्वामित्रोऽयं जमदग्निरिमावेव वसिष्ठकश्यपावयमेव वसिष्ठोयं कश्यपो वागेवात्रिः वाचा ह्यन्नमद्यते अत्तिर्ह वै नामैतद्यदत्रिरिति इमाविति कर्णौ अयं दक्षिणः कर्णः अयमुत्तरः कर्णः इमौ चक्षुषी इमाविति नासापुटौ इति व्याख्यानम् । भाष्यसिद्धार्थेन समं भाष्यार्थमाहुः चमसेति । अविशेषे दृष्टान्तः अध्यात्मेति आत्मनि । आत्मविषयप्रकरणासंबद्धत्वात् । रूढेति अङ्गीकृतम् । इमामिति प्रत्यक्षगे इदमः

१. अणा ।

परिहरति तुशब्दः। अजाशब्देन ज्योतिरेवोच्यते। यथा अजा अल्पदोग्ध्री तथेयं नश्वरसुखदात्री अग्निसूर्यसोमविद्युद्रूपा ब्रह्मणो हंसोक्तचरणरूपा। भगवत्कार्यांशरूपत्वात् 'तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' इति श्रुतेश्च प्रथमोत्पन्ना

---

भाष्यप्रकाशः।

नन्वजाशब्दार्थानिर्द्धारे कथं तत्परिहार इत्यत आहुः अजेत्यादि। तर्ह्यजाशब्दप्रयोगः कुत इत्यत आहुः यथेत्यादि। तथाच 'पश्य नीलोत्पलद्वन्द्वान्निःसरन्ति शिताः शराः' इतिवन्निगीर्याध्यवसानेन तथात्वबोधनाय प्रयोग इत्यर्थः। ननु किं तज्ज्योतिर्यदेवमुच्यत इत्यत आहुः अग्नीत्यादि। अग्निसूर्यसोमविद्युद्रूपत्वाज्ज्योतिः। रूपादिति पाठे भावप्रधानो निर्देशः। रूपेति पाठः श्रीहस्ताक्षरेषु संदिग्धत्वाद् बोध्यः। छान्दोग्ये षष्ठे प्रपाठके सत्यकामाय हंसेन, अग्निः कला सूर्यः कला चन्द्रः कला विद्युत् कलैष वै सौम्य चतुष्कलः पादो ब्रह्मणो ज्योतिष्मान्नामेत्युक्तो यश्चरणस्तद्रूपा। तस्य चरणरूपत्वं तु, तत् तेजोऽसृजतेति श्रुत्युक्तभगवत्कार्यांशत्वात् तस्य त्रिरूपत्वं, कार्यत्वस्त्रीत्वे च। तासां त्रिवृतमिति श्रुतेः। चोऽवधारणे। अतः प्रथमोत्पन्ना या देवता तेजोरूपा सैवात्राजापदेनोच्यत इत्यर्थः। ननु तस्या अत्र

रश्मिः।

प्रयोगाद्भाष्यीयशब्दज्ञानगां प्रकाशोक्तसिद्धार्थप्रत्यक्षमाचार्याणां तद्वां चेत्यर्थः। अजेति ज्योतिःशब्दं विहाय। अध्याहृतगौणीबोधनायेति भाष्यार्थमाहुः तथा चेति। इदं वाक्यं चन्द्रालोकस्थम्। पूर्वार्धं तु 'रूपकातिशयोक्तिः स्यात् निगीर्याध्यवसानतः' इति। तथा च यथात्र नीलोत्पलशरपदाभ्यां लोचनकटाक्षाणां निगरणं विषयवाचकपदोल्लेखमन्तराप्युपस्थापनं तत्पूर्वकं तद्रूपताध्यवसानं तथा जातकार्यपदाभ्यां ज्योतिस्तत्कार्ययोस्तद्वाचकपदोल्लेखमन्तराप्युपस्थापनं तत्पूर्वकतद्रूपताध्यवसानं तेन तथात्वम्। अध्याहृतगौणीत्वं तु 'अम्' तस्य बोधनाय। तथा च गौर्वाहीक इत्यत्र इव लक्ष्यमाणगुणा गवाद्यपेक्षयाल्पदोग्ध्रीत्वादयः अजात्वविशिष्ट अजारूपशक्यस्यावेयतासंबन्धास्त्यलक्षणाया अल्पदोग्ध्रीत्वादिषु सत्त्वाद्गुणेषु लक्ष्यमाणत्वं 'लक्ष्यमाणगुणैर्योगात् वृत्तेरिष्टा तु गौणता' इति काव्यप्रकाशे। ननूपचारमिश्रेयं गौणीति चेदोम्। उपचारो गुणयोगः सोस्त्वेवेति। एवमल्पदोग्ध्रीत्वनश्वरफलदात्रीत्वयोः दुःखदातृत्वादिगुणयोगः अन्यत्पूर्ववत्। अल्पदोग्ध्रीत्वमजापदप्रवृत्तिनिमित्तं दुःखदातृत्वादि अल्पदोग्ध्रीत्वपदप्रवृत्तिनिमित्तम्। ज्योतिरिति तथेयमिति भाष्योक्ता ज्योतीरूपाजा। भावेति। यद्वा। अग्निसोमसूर्यविद्युतां रूपं प्राप्यात्मेयं ज्योतिरूपाजा नश्वरसुखदात्रीति भाष्यार्थः। ल्यब्लोपे पञ्चमी। ब्रह्मण इति भाष्यं विवृण्वन्ति स्म छान्दोग्य इति। भगवत्कार्येति भाष्यं विवृण्वन्ति स्म तस्येति ज्योतिषः। तासामिति भाष्यं विवृण्वन्ति स्म तस्येति। ननु तत्तेजोऽसृजतेति छान्दोग्यश्रुत्या कार्यत्वं तत्पदवाच्यसद्ब्रह्मणस्तेजसस्तर्हि तस्य त्रिरूपत्वं वक्तव्यम्। आनन्त्येपि हि कार्याणामित्युक्त्वा 'सर्वेषां त्रिगुणत्वाद्धि तयोर्भेदाः पृथक् मताः' इति निबन्धात्। किं च भगवत्कार्येति भाष्योक्तकार्यत्वं अग्न्यादावसंभवि ब्रह्म तर्हि अग्निरिति श्रुतेः। सूर्यचन्द्रयोः प्रश्नोपनिषदि बहुधासृष्टिकर्तृत्वोक्तेर्ब्रह्मलक्षणाक्रान्तत्वात्। विद्युतो विद्युद्ब्रह्मेत्याहुरिति बृहदारण्यकात्। अतः कार्यत्वे कारणं वक्तव्यम्। तथा ज्योतिषि नपुंसकेऽजेति स्त्रीत्वे हेतुर्वक्तव्यः इति चेत्तत्राहुः त्रिरूपत्वमित्यादि। अत इति दोषाभावात्। कार्येऽजापदयोगः कथमित्याशङ्काग्रे सूत्रे निराकार्या।

देवता अजाशब्देनोच्यते । तत्र हेतुः । उपक्रमात् । अत्रैवोपक्रमे, 'तदेवाग्निस्तद्वा-युस्तदादित्यस्तदु चन्द्रमाः' इति । द्वा सुपर्णेति चाग्रे । मध्ये चायं मन्त्रः पूर्वोक्त-रसंबद्धमेव वदति । सा मुख्या सृष्टिः । अजद्वयं जीवब्रह्मरूपमिति । अत्र

---

भाष्यप्रकाशः ।

कथं प्रत्यभिज्ञानमित्यत आहुः तत्र हेतुरित्यादि । तथापि चेतनाधिष्ठितत्वस्य कथं प्रत्यभि-ज्ञानमित्यत आहुः द्वा इत्यादि । सैव कुत उच्यत इत्यत आहुः सा मुख्या सृष्टिरिति । सा त्रिवृत्कृतदेवतारूपा मुख्या सृष्टिः । सृष्ट्यन्तरकरणसमर्थमाद्यं कार्यमत उच्यत इत्यर्थः । एवमत्राजामन्त्रस्य पूर्वार्धं व्याख्यातम् । उत्तरार्धं व्याकरोतीत्याहुः अजद्वयमित्यादि ।

रश्मिः ।

अयमर्थः । ब्रह्मत्वेपि चतुर्व्यूहेऽन्तर्भावस्य साध्यत्वेन स्वरूपलक्षणानाक्रान्तत्वेन चैकत्वाभावात् 'एकमेवाद्वितीयं ब्रह्म' इति श्रुत्यस्वारस्यादनेकेश्वरापत्तेः ।

'भयादस्याग्निस्तपति भयात्तपति सूर्यः ।
भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः' ॥ इति ।
'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोयमग्निः ।
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' ॥ इति च ।

काठके श्रावणात् विद्युति श्राव्यं ब्रह्मत्वं तदपि विद्युद्ब्रह्मेत्याहुरित्यत्र केचिदित्यध्याहारे केचिदित्यस्वरसं प्रस्तं तदपि केचिदिति विरला इति सुबोधिन्याः । स्वरूपलक्षणाक्रान्तेति ब्रह्म-योग्यकर्तृकविचारेणेति । किं च ब्रह्म तर्हि अग्निरिति श्रुतिरपि सुबोधिन्यामत उभयं सुबोधिनीप्रमाणकं तदुभयं विहाय कार्यत्वमत्रोक्ते ज्ञेयमिति चतुरस्रम् । त्रिरूपत्वं लोहितशुक्लकृष्णरूपत्वं तत्तेजोऽसृजत इत्युक्त्वोच्यते तदपोसृजत तदग्रे ता अन्नमसृजन्त इत्युक्त्वोच्यते तासां त्रिवृतं त्रिवृतमेकैकां करवाणि इत्युक्त्वा यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाण्येव सत्यमिति त्रिवृत्करणे छान्दोग्यश्रुतेः त्रिवृतमिति श्रुत्यंशेन बोध्यते कार्यत्वश्चीत्वे तासामिति श्रुत्यंशेन बोध्यते । तासामित्यस्य तेजोबन्नरूपदेवतानां कार्यरूपाणामित्यर्थात् । इमास्तिस्रो देवता इति श्रुतेः । कथमिति केन हेतुनेति प्रश्नः । प्रत्यभीति सेयमजेति प्रत्यभिज्ञा । न च नित्यानित्यसंयोग इति शङ्क्यम् । दृष्टान्तार्थमात्रत्वात् । दृष्टान्तव्यतिरिक्तस्थले ऐक्यविषयत्वात् ऐक्यप्रतीतेर्भ्रमत्वात् तत्र हेतुरित्यादीति उपक्रमोपसंहारा-भ्यामर्थनिर्णयादुपक्रमस्यासंजातविरोधित्वेन प्रबलत्वात् सृष्टिकर्तृत्वोक्त्याजा ज्योतिः प्रश्नोपनिषदुक्तौ सूर्यचन्द्रमसौ । वायुः बृहदारण्यकोक्तो यश्चक्षुषः स्वस्वरूपं प्रापितवान् सः । अग्निर्व्यापकः ब्रह्मरूपः एवमजा ज्योतिश्चतुष्टयरूपा । अत्र बृहदारण्योक्ता विद्युत् न छान्दोग्ये वायुर्न विद्युदस्ति । तस्या ब्रह्मरूपायाः संनिवेशार्थमुत्तरभाष्यं व्याचक्रुः तथापीति चेतनोग्निः । द्वा इत्यादीति । द्वौ जीवब्रह्मरूपौ ब्रह्माग्निः । विद्युत्पक्षे विद्युद् ब्रह्मेति । तदेवाग्निरित्यस्याः अग्निः कलेत्यस्याश्चैकवाक्यत्वे वायुः प्राणो विद्युदिति यावत् । सैवेति अव्याकृता देवता सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमिति श्रुत्युक्ता-ग्निविद्युदन्यतरात्र श्रुतौ कुतः कस्माद्धेतोरुच्यते तेजोनिरूपणे इत्यत इत्यर्थः । उच्यत इति । समकथितार्थम् । स्वतः प्रतीतत्वाद्वा भावप्रत्ययेन प्रकृतिजन्यबोधे प्रकारतामापन्नेनोच्यते इत्यर्थः । अत एव मुख्यपरम् । अजद्वयमित्यादीति प्रथममजपदं जीवपरम् । द्वितीयं ब्रह्मपरम् । तत्रेति

प्रकरणे न स्पष्ट इति निरूपयति। तथाहि श्रुत्यन्तरे स्पष्टमेव अधीयत एके 'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत् कृष्णं तदन्नस्य' इति। एवमग्रेऽपि कलात्रये। अनेन जीवेनात्मनेति जीवब्रह्मणोश्चानुप्रवेशः। बीजेऽपि त्रैविध्यमिति सरूपत्वम्। भगवतोऽभोगे हेतुः जीवेन भुक्तभोगामिति। तस्मात् प्रकृतेऽपि चमसवच्छ्रुतावेवार्थकथनान्न सांख्यमतप्रतिपादकत्वम् ॥ ९ ॥

---

भाष्यप्रकाशः।

नन्वज्ञाया ज्योतिष्ट्वेन निरूपणमयुक्तम्। छान्दोग्ये तेजस उत्पत्तिकथने त्रिरूपताया अनुक्तत्वात्। भाष्ये च हंसोक्तचरणरूपत्वेन व्याख्यानमयुक्तम्। तत्रापि तत्रानुक्तत्वादित्याशयेन सूत्रशेषमवतारयन्ति अत्रेत्यादि। अत्र प्रथमकार्यप्रकरणे त्रिरूपत्वं, हंसोक्तचरणो न स्पष्ट इति हेतोस्तत्रत्यं श्रुत्यन्तरं दर्शयतीत्यर्थः। श्रुतिमाहुः यदग्नेरित्यादि। ननु यदि तेजोरूपा देवताभिप्रेता तदा सूत्रकृता तेजःपदमेव कुतो नोक्तमित्यत आहुः एवमित्यादि। कलात्रय इति सूर्यसोमविद्युद्रूपे। तथाचैतदग्रे, यदादित्यस्य रोहितं रूपं यच्चन्द्रमसो यद् विद्युत इत्यादिनिरूपणात् तत्र हंसोक्तपादरूपतादिधर्मनिरूपणार्थं ज्योतिःपदं प्रयुक्तं, न तेजःपदमित्यर्थः। अस्यां श्रुतौ जीवब्रह्मणी कुत्रोक्ते इत्याकाङ्क्षायामाहुः अनेनेत्यादि। जीवेनेति सहार्थतृतीययाऽऽत्मनेति करणतृतीयया च बोधिते इत्यर्थः। सरूपत्वकथनप्रयोजनमाहुः बीजेऽपीत्यादि। 'बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम्' इति वाक्याद् बीजं भगवान्। तत्रापि सच्चिदानन्दरूपत्वात् त्रैविध्यमस्तीत्यतः प्रजासरूपत्वम्। तथाच कार्यकारणयोः सालक्षण्यस्यौत्सर्गिकत्वेनार्थात् प्राप्तावपि यत् सरूपत्वकथनं तत् प्रजानां तेजोऽबन्नात्मकत्वेऽपि बीजधर्मस्य सच्चिदानन्दरूपत्वस्य ज्ञापनार्थमित्यर्थः। तस्मादिति यस्मादेवं वाक्यतात्पर्यं तस्मात् ॥ ९ ॥

रश्मिः।

छान्दोग्ये। अनुक्तेति उक्तत्वेऽप्यग्रिमग्रन्थावतरणायाहार्यज्ञानविषयत्वं कृत्वानुक्तत्वादित्युक्तम्। एवं पूर्वत्रापि ज्ञेयम्। तत्रत्यमिति छान्दोग्ये भवं जातार्थेऽव्ययात्त्यप्। श्वेताश्वतरश्रुतेरन्या श्रुतिः श्रुत्यन्तरम्। तत्र छान्दोग्ये जातादिः तत्रत्यं तद्दर्शयति तत्रेति छान्दोग्ये। हंसोक्तेति आदिना त्रिरूपता। अस्यामिति श्वेताश्वतरव्याख्यानरूपायाम्। छान्दोग्यश्रुतौ जीवब्रह्मणी उत्तरार्धेऽजद्वयवाच्ये कुत्रेति खलप्रश्नः। सरूपेति व्याख्येयश्रुतौ 'सरूपा' इतिपदेन तेषां खल्वेषां भूतानां त्रीण्येव बीजानीति छान्दोग्योपबृंहितां गीतामाहुः बीजं मामिति। सच्चिदिति सद्रोहितं परिशेषात्, चित् शुक्ला प्रकाशकत्वात्, आनन्दः कृष्णस्तमोजनकत्वात्, तमसश्च कृष्णत्वात्। बीजधर्मेति तेन समवायित्वं स्फोरितम्। निमित्तत्वं सतः। ज्योतिषि कार्ये सतोऽभिन्ननिमित्तोपादानत्वम्। एवमिति उक्तप्रकारेण छान्दोग्यश्रुतिषु व्याख्यानतात्पर्यं श्वेताश्वतरीयामेकामिति श्रुतिवाक्यतात्पर्यम्। भाष्ये। श्रुतावेवेत्यत्रैकवचनमविवक्षितम्। ताश्च श्रुतयः पूर्वमर्यादानुरोधेन लक्ककमा अत्र प्रोच्यन्ते 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्, तद्धैक आहुरसदेवेदमग्र आसीत् एकमेवाद्वितीयम्। तदैक्षत बहु स्यां प्रजायेयेति, तत्तेजोऽसृजत तत्तेज ऐक्षत बहु स्यां प्रजायेयेति, तदपोऽसृजत तस्माद्यत्र क्व च शोचति स्वेदते वा पुरुषः तेजस एव तदध्यापो जायन्ते, ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहि इति, ता अन्नमसृजन्त तस्माद्यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवत्यद्भ्यः एव तदध्यन्नाद्यं जायते। तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्यण्डजं

रश्मिः ।

जीवजमुद्भिज्जमिति सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवताः अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति सेयं देवतेमास्तिस्रो देवता अनेनैव जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत् । तासां त्रिवृतं त्रिवृतमेकैकामकरोद्यथा नु खलु सोम्येमा-स्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवतीति तन्मे विजानीहीति । यदग्नेः रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाण्येव सत्यम् । यदादित्यस्य रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादादित्यादादित्यत्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाण्येव सत्यम् । यच्चन्द्रमसो रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागाच्चन्द्रमसश्चन्द्रमस्त्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाण्येव सत्यम् । यद्विद्युतो रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागाद्विद्युतो विद्युत्त्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाण्येव सत्यम् । एतद्ध स्म वै तद्विद्वाꣳस आहुः पूर्वे महाशाला महाश्रोत्रिया न नोऽद्य कश्चनाश्रुतममतमविज्ञातमुदाहरिष्यति इति ह्येभ्यो विदांचक्रुरिति श्वेताश्वतर-श्रुतिव्याख्यानरूपश्छान्दोग्यश्वेतकेतूपाख्यानस्थाः एकमेवाद्वितीयमित्युक्तं 'वीर्यं मे दुश्चरं तपः' इति द्वितीयस्कन्धालोचनाद्वीर्यात्तेजः अन्नोत्पत्तिः । वर्षति वर्षणमपां विमोकः तथा चापां वर्षणकर्तुः सामर्थ्यादन्नत्वं भस्म्यादिवत् ।.पृथिवी वा अन्नं आद्यं अद भक्षणे 'ऋहलोर्ण्यत्' अत्तुं योग्यं तयोः समाहारोऽन्नाद्यः अधिजायते अध्युपसर्गकृतविशेष उन्नेयः । अधुना तेजःपदवाच्याऽजायाः प्रथमकार्यत्वं वक्तुं कार्याणां सत्यदार्थभूतानि सदेव सोम्येदमग्र आसीदित्यत्र सत्पदेन उक्तानि बीजान्याह तेषामिति । तेषां प्रसिद्धानामेषां भूतानां मनुष्यपक्ष्यादिकानां कानीत्याह आण्डजमिति । खराद् 'एतन्नानावताराणां निधानं बीजमव्ययम्' इति वाक्यात् । जीवजं रेतः । जरायुजं वा जरायुजं मनुष्यादि । तत्र बीजपदप्रयोगश्चिन्त्यः । उद्भिनत्ति इत्युद्भित् कर्तरि क्विप् । स्थावरं ततो जातमुद्भिज्जं स्थावरपदमनुक्त्वोद्भिज्जपदमुक्तं तेनोद्भिनत्ति यो जगदाश्रयः स सर्वेषां बीजम् । अभिन्ननिमित्तोपादानम् । तत्तु समन्वयादिति व्याससूत्रात् । 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इति गीता । अत्र श्वेताश्वतरोक्तो ब्रह्मवादिनो वदन्ति किं कारणं ब्रह्म कुतः स्म जाता जीवाम इत्युक्तब्रह्मप्रश्नोत्तरं सदेव सोम्येत्यादि तदेव बीजत्रयं चतुष्टयं वा तेषु । एतस्माज्जगदाश्रयरूपात्सतः भूतान्तर्गततेजःपदं तदर्थश्चाजा अग्निवाय्वादित्यचन्द्ररूपा प्रथमकार्यम् । सापि नश्वरसुखदा न रूपकार्यसहितेति । तस्याश्च प्रत्येकं चत्वारि रूपाण्याह । सेयमिति प्रकृताव्यवहितोक्ता व्याकृताख्या देवता पूर्ववदैक्षत आत्मनाऽनश्वता सता । अन्विति । एषां सृष्टिमनु 'पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः पुरः स पक्षीभूत्वा पुरः पुरुष आविशत्' इति मधुब्राह्मणस्थश्रुत्युक्तन्यायेन । विजानीहहि इति हेति अन्विकारः । हि हीति, विजानीहीति पाठः स्पष्टः । तेजःपदवाच्याऽजायाः अग्न्यादित्यचन्द्रमो-विद्युद्रूपेष्वग्नित्रिवृत्करणमाह यदग्नेरिति अग्नौ सततस्तेजोनिविष्टस्य सत्वादाह रोहितमिति, अब्निविष्टस्य सत्वादाह यच्छुक्लमिति, पृथिवीनिविष्टस्य सत्वादाह यत्कृष्णमिति, तथा च यान्यग्नेस्त्रिवृत्कृतस्य रोहि-तादिरूपाणि तान्यत्रिवृत्कृतानां तेजोबन्नानां रूपाणि इत्युक्तम् । नन्वग्नित्वं गन्तृत्वं नाग्नौ दृश्यते । न च येनेन्द्रियेण यद्गृह्यते तेनैवेन्द्रियेण तद्गता जातिस्तदभावश्च गृह्येते इति नैयायिकोक्तेः दृश्येते इति वाच्यम् । अपागमनानन्तरमिन्द्रियेण तद्गृह्यते । अपागमनमेव कुतः इत्यतो विचारादित्याह अपेति । अग्नेः व्यासौ इत्यस्य रूपमपेति । अतो व्यापकेन सता रूपत्रयरूपाग्नित्वमागाद्विगो गा । अतोऽग्नौ

## कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥

ननु द्विविधा शब्दप्रवृत्तिः । योगो, रूढिर्वा । तत्राजाशब्दश्छागायां

भाष्यप्रकाशः ।

कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥ सूत्रमवतारयन्ति नन्वित्यादि ।

रश्मिः ।

रूपत्रयस्य उत्तरदेशसंयोगः । न च रूपत्रयसमवायो न संयोग इति शङ्क्यम् । संयोगस्य स्पर्शत्वं प्रस्थानरत्नाकर उपपादितम् । इत्याकाशातिरिक्तचतुर्भूतेषु स्पर्शसत्त्वेन रूपादावेकं रूपं रसात्पृथक् इतिवत्सत्त्वेनादोषात् । सर्वस्य सर्वमयत्वाद्वा । अग्नेर्व्यावहारिकं सत्यत्वं रूपत्रयस्य पारमार्थिकं सत्यत्वमित्याह वाचेति । वाचारम्भणं घटपटाग्न्यादिविकार इत्युक्ते 'शब्द इति चेन्नातः प्रभवात्प्रत्यक्षा-नुमानाभ्याम्' इति सूत्रोक्ताधिदैविकसृष्टौ वैदिकायां विकारत्वापत्तिरतो नामधेयमिति नामैव नामधेयं स्वार्थे धेयप्रत्ययः । नामरूपविभेदेन क्रीडयितुं कृतं नामधेयं लौकिकमग्निरिति । त्रीणि रूपाणि जातिस्थलेऽङ्गीकृतानि नित्यानि अग्नित्वरूपाणि मृत्स्व्यतिक्रान्तत्वादग्न्यादीनाम् । मृत्स्व्यतिक्रमो बृहदारण्यक उक्तः । न च विकारानङ्गीकारे नित्यानित्यसंयोग इति वाच्यम् । विकारस्यापि वैदिकत्वाददोषः । एवमेवाग्रेपि श्रुत्यर्थः । अतोऽजा तेजोरूपा तस्याः त्रिरूपत्वं तत्कार्यस्यापि त्रिरूपत्वमिति पूर्वार्धं व्याकृतं श्रुतिभिः । अतः सर्वस्य सत्कार्यत्वात् सतो ज्ञानेन सर्वमिदं ज्ञातं स्यात् इत्युक्तेर्थे विद्वत्प्रसिद्धिं प्रमाणयति एतद्ध स्मेति । एतत्रिवृत्करणं तत् ब्रह्म तत्कार्यत्वात् विद्वांसो विदितवन्तः । पूर्वे नित्या महाशाला महागृहस्था महाश्रोत्रिया महान्तश्छन्दोध्येतारः । न नोवेति न नः अस्माकं कुलेऽद्य इदानीं कश्चन कश्चिदपि नोदाहरिष्यति न वदिष्यतीति । ते पुनः कथमिव ज्ञातवन्तः सर्वमित्याह सोम्य इति हि यस्मादेभ्यो रोहितादित्रिरूपेभ्यो हेतुभ्यः अन्यदप्य-वशिष्टं ज्ञातवन्तः । विज्ञानप्रकारं दर्शयति यद्विति यत् उ कपोतादिषु रोहितमिवाभूत् । तदिति रोहितं स्पष्टमन्यत् । इति व्याख्यातश्रुत्यर्थः ॥ ९ ॥

कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥ इदं सूत्रमजाशब्दस्य ज्योतिर्वाचकत्वे गौणीवृत्तिप्रतिपादकत्वेन शक्तिधियः सहकारिण्याः प्रतिपादकमित्यस्य । नात्राधिकरणनाम । तथा च सुबोधिनीतृतीयपञ्चमाध्याये 'कल्पनोपदेशाच्च मध्वादिवदविरोधः' इत्यधिकरणेनेति ।

> 'त्वं नः सुराणामसि सान्वयानां
> कूटस्थ आद्यः पुरुषः पुराणः ।
> त्वं देवशक्त्यां गुणकर्मयोनौ
> रेतस्त्वजायां कविमादधेऽजः' ॥

इति श्लोके कविं महत्तत्त्वम् । पूर्वावस्था रेतः, उत्तरावस्था कविरिति । भाष्ये । नैयायिकाः वदन्ते । नन्विति वृत्तिः शक्तिलक्षणान्यतरः संबन्धः । अस्योपयोगः पदजन्यपदार्थोपस्थितिः तावेव पूर्वं शक्तिग्रहाभावे पदज्ञानेपि तत्संबन्धेन स्मरणानुपपत्तेः । पदज्ञानस्य संबन्धिज्ञानविधयार्थस्मारकत्वं शक्तिश्च पदेन सह पदार्थसंबन्धः । स चास्मात्पदादयमर्थो बोद्धव्य इति ईश्वरेच्छानुरूपः, उक्तेच्छा-विषयः । आधुनिके नाम्नि शक्तिरस्त्येव 'एकादशेऽहनि पिता नाम कुर्यात्' इतीश्वरेच्छायाः सत्त्वात् । आधुनिकसंकेते तु न शक्तिरिति संप्रदायः । नव्यास्तु ईश्वरेच्छा न शक्तिः किं तु इच्छैव तेनाधुनिकसंकेतेपि शक्तिरस्तीत्याहुः । शक्तिविशिष्टं पदं तच्च रूपियौगिकं रूढियोगं रूढियोगरूढञ्च ।

रूढः। न जायत इति योगः। अनुभयरूपत्वात् कथं सृष्टिवाचकत्वमित्याशङ्क्य परिहरति कल्पनोपदेशाच्च। कल्पनात्रोपदिश्यते।

आद्या सृष्टिः कल्पनया अजाशब्देनोच्यते। यथा छजा बर्करसहिता

---

भाष्यप्रकाशः।

परिहारं व्याकुर्वन्ति कल्पनाऽत्रेत्यादि। एतस्यैव विवरणम् आद्येत्यादि। कल्पनाया विवरणं यथेत्यादि। तथाच तस्या भगवत्साहित्येन कार्यसाहित्येन चोपासनार्थं गौण्याऽजत्वोपदेश

रश्मिः।

इति वदतां समुदायशक्ती रूढिः अवयवशक्तिर्योगः एतदुभयातिरिक्तयोर्यत्रावयवशक्तिमध्ये समुदायशक्तिरप्यस्ति तद्योगरूढं पङ्कजादिपदम्। यत्र तु यौगिकार्थरूढ्यर्थयोः स्वातन्त्र्येण बोधस्तद्यौगिकरूढं यथा उद्भिदादिपदम्। अत्र भूर्ध्वभेदकर्ता तरुगुल्मादिरपि बुध्यते योगविशेषोपि इति रूढियोगातिरिक्तशक्तिद्वयदर्शनान्न नैयायिकशङ्क्येयमिति चेन्न। पङ्कजादिपदं योगरूढं तत्र पङ्कजनिकर्तृरूपत्वमवयवशक्त्या पङ्कजपदं बोधयति, समुदायशक्त्या च पद्मत्वेन रूपेण पद्मं बोधयति। न च केवलावयवशक्त्या कुमुदादौ प्रयोगः स्यादिति वाच्यम्। रूढिज्ञानस्य केवलयौगिकार्थबोधप्रतिबन्धकत्वादिति प्राञ्चः। वस्तुतस्तु समुदायशक्त्योपस्थितपद्मे अवयवार्थपङ्कजनिकर्तुरन्वयो भवति, सांनिध्यात्र तु रूढ्यर्थस्य बाधः प्रतिसंधीयते कुमुदत्वेन रूपेण च बोधे तात्पर्यं तत्र लक्षणया कुमुदादेवेति। यत्र तु कुमुदत्वेन बोधेन तात्पर्यज्ञानं पद्मत्वस्य च बाधः तत्रावयवशक्तिमात्रेण निर्वाह इत्याहुः। यत्र तु स्थलपद्मादौ अवयवार्थबाधः तत्र समुदायशक्त्या पद्मत्वेन रूपेण बोधः। यदि स्थलपङ्कजं विजातीयमेव तदा लक्षणयैवेति सिद्धान्तमुक्तावल्याः वस्तुतस्त्वित्युक्तपक्षेपि रूढिर्योगमपहरतीत्यस्य प्रसक्तेः। न च पद्मत्वावच्छिन्नविशेष्यत्वानिरूपितपङ्कजपदप्रयोगजन्यपङ्कजनिकर्तृत्वावच्छिन्नविषयताशालिबोधं प्रति रूढिज्ञानस्य प्रतिबन्धकत्वेन पद्मधर्मिकपङ्कजादिपदयोगार्थबुद्धेः प्रतिबध्यतावच्छेदकानाक्रान्तत्वादिति वाच्यम्। विरोध्यविषयकज्ञानस्य प्रतिबन्धकत्वं ........ज्ञानविघटकत्वेनैवेति नियमभङ्गात्। अत उक्तं ननु द्विधा शब्दप्रवृत्तिरिति योगो रूढिर्वेति। छागायामिति। अत इति। सिद्धेऽजादिग्रहणं ज्ञापयति। जातिलक्षणं ङीषं बाधित्वाऽजबाधकाददन्ताट्टाबेवेति। तदुक्तं सिद्धान्तकौमुद्याम्। अजाद्युक्तिर्ङीपो ङीषश्च बाधनायैवेति। जातेरस्त्रीविषयादयोपधादिति सूत्रस्याजशब्दाट्टाब्विधान एव प्रवृत्तिर्न छागशब्दात् व्यक्तेरभेदस्य जातिबाधकसंग्रहस्य सत्त्वात्। यथा घटत्वं जातिर्न कलशत्वं व्यक्तेरभेदादिति। 'आकृतिग्रहणा जातिः' इति लक्षणपक्षे छागत्वं जातिः अनुगतसंस्थानव्यङ्ग्यत्वात्। तथापि नैयायिकपक्षैकवाक्यतयाऽजात्वं जातिरस्त्वेवेति गौरवात् न छागत्वं जातिरिति बोध्यम्। अनुभयेति अजाशब्दस्योभौ रूढियौगिकावयवौ यस्य। संख्याया अवयवे तयप्। तयपोऽयच् 'उभादुदात्तो नित्यम्' इत्युभयरूपत्वाभावात् प्रथमसृष्टिजेवाचकत्वं कथमिति प्रश्नः। प्रकृते। गौण्येति तेन योगरूढिव्यतिरेकेणापीति भाष्ये गौण्येति क्षेपः। भाष्ये तु शब्दब्रह्मण ब्रह्मतुल्यत्वस्य 'अत एव च नित्यत्वम्' इति सूत्रउक्तत्वात् तद्व्यतिरेकेणापि शब्दसामर्थ्यं द्योतते। गौणी तु पूर्वसूत्र उपपादिता। भाष्ये। बर्करेति। कोशे कस्मिन्निदं शब्दः। शंकरभाष्ये च बहुबर्करा सरूपबर्करा चेलजाविशेषणे। उपदेशोति कल्पनोक्तिरित्युक्त्वा।

भाष्यप्रकाशः।

इत्यर्थः। गूढामिसंधिमुद्घाटयन्ति चकारादित्यादि। चोऽप्यर्थे। तत् तेषां न प्रियं यन्मनुष्या विद्युरिति श्रुतेर्मनुष्याणां ज्ञानं देवहिताय न भवतीति तद्धिताय, यथेन्धे इन्द्र इति परोक्षवादस्तथात्र चतुर्मुखाऽजन्यायेनास्मदादिसाधारणजन्माभावात् प्रथमकार्ये ज्योतीरूपेऽजेति परोक्षवादो, भगवत्प्रियत्वाय वा परोक्षवाद इत्यर्थः। दृष्टान्तं व्याकुर्वन्ति यथेत्यादि। अत्रायमर्थः। सांख्यसमाससूत्राणां पञ्चशिखवृत्तौ सूर्यस्य चक्षुरधिदैवतत्वेन सिद्धत्वान्मधुविद्यायां सूर्यस्य मधुत्वेन रश्मिः।

'चन्द्रसूर्यग्रहे तीर्थे सिद्धक्षेत्रे शिवालये।
मन्त्रमात्रप्रकथनमुपदेशः स कथ्यते'॥

इति रामार्चनचन्द्रिकायां रुद्रयामलवचनान्मन्त्रस्य प्रकथनरूपस्य 'श्रीकृष्णः शरणं मम' इति मन्त्रोपदेशस्य ग्रहणात्। उप समीपे स्थित्वा यथा योग्यकरणे सर्गविसर्गक्रीडाभ्यां परोक्षीकृतशुद्धलीला..........नुपासने बोध्यते इत्यर्थः। तत एव मुक्तिलीलाख्यमेकादशाध्यायोक्तस्यैकोनत्रिंशाध्यायोक्तस्योपासनस्य भक्तिरूपस्योपासनापदपरोक्षीकृत........एतावता कल्पनोपदेशादिति सूत्रांशस्य भाष्यं प्रकाशितम्। चकारार्थमाहुः। प्रकृते। गूढामिति गुह संवरणे संवृताम्। वृक्ष संभक्तौ सम्यक् भक्तियुक्ताम्। वामिसंधिसमितां ममस्नेहसंधानकर्त्री मायासंबन्धी ममस्नेहोऽज्ञान....तः दृष्ट एव स्नेहः इत्युपपत्तेरिति भाष्यात्। देवेति देवहितायेत्यत्र वेदहितायेत्यपि, तत्र प्रथमपाठ आहुः। यथेति इन्द्रपदेन पुरंदरः प्रतीयते ञिइन्धि दीप्तौ इत्यस्य समभिव्याहाराद् दीप्तिमान् न त्वयमर्थः किं तु दक्षिणेऽक्षिण यः पुरुषः सः। तथा च बृहदारण्यकश्रुतिः 'स होवाच इन्धो वै नामैष योयं दक्षिणेऽक्षन् तं वा एतमिन्ध९सन्तमिन्द्र इत्याचक्षते परोक्षेणेव परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः' इति षष्ठे। चतुर्मुखेति अयं न्यायो दशमे प्रक्षिप्तेष्वध्यायेषु।

'जगत्त्रयान्तोदधिसंप्लवोदे
नारायणस्योदरनाभिनालात्।
विनिर्गतोऽजस्त्विति वाङ् न वै मृषा
किं त्वीश्वर त्वं न विनिर्गतोसि'॥ इत्युक्तः।

परोक्षेति अक्ष्णः परमिति व्युत्पत्त्या अत्राजाक्ष्णो विषयः ज्योतिस्तु नेति ज्योतिषि परोक्षवादः। वेदस्य हितायेति पक्षे 'परोक्षवादो वेदोयम्' इत्येकादशस्कन्धादाहुः भगवदिति 'परोक्षं च मम प्रियम्' इति वाक्यात्। वेदस्य हिताय परोक्षवादः। हिताय भगवत्प्रियत्वाय। नन्वात्मा वेदो भगवत्प्रिय एवेति। आत्मत्वादेव विरुद्धधर्माश्रयत्वात्। परोक्षवादादिति चकारार्थ उक्तः। मध्वादिवदिति व्याकर्तुमाहुः दृष्टान्तमिति। सिद्धत्वादिति। 'द्रष्टृत्वादिरात्मनः करणत्वमिन्द्रियाणाम्' इति सूत्रे। मधुत्वं ज्योतिषज्ञानकर्तृत्वमपि तस्य वक्तुमित्यनेनाशक्यत्वेनान्वयाशक्यत्वमिति विशेषणं मध्विति। मनेर्धश्छन्दसीति उत्प्रत्ययः नस्य धः। ज्ञानकर्तृत्वं मधुत्वम्, तस्य वक्तुमशक्यत्वम्। ज्ञानेन भक्तेति शिवश्रुतेः।

'स्वयंभूर्नारदः शंभुः कुमारः कपिलो मनुः।
प्रह्लादो जनको भीष्मो बलिर्वैयासकिर्वयम्।
द्वादशैते विजानीमो धर्मं भागवतं भटाः'॥

भाष्यप्रकाशः ।

योक्तस मधुत्वस्य तस्मिन् वक्तुमशक्यत्वेन सांख्यवादिनापि तत्र गौण्येव वृत्तिः कल्पनोपदेश-मादायैवादरणीया । अन्यथा श्रुतिविरोधापत्तेः । निर्गुणादिश्रुतिविरोधश्चेति सूत्रयतः कपिलाऽऽचार्यस्यापि तद्विरोधस्यासह्यत्वात् । अतो यथा मध्वादिविद्यायां कल्पनोपदेशस्त्वयाङ्गीक्रियते तथा श्रुतिविरोधपरिहारायात्राप्यङ्गीकार्यमिति प्रतिवादिबोधनार्थं तदनुसारेणोक्तम् । वस्तुतस्तु पुरुषविधब्राह्मणे रमणार्थं सृष्टिं प्रकृत्य अजेतराभवद् बस्त इतर इति श्रावणादत्रापि तादृगाकारमादाय चतुर्मुखाऽजन्यायबाधादजात्वमाद्यसृष्टेरुच्यते बन्धकत्वाय । नचात्र मानाभावः ।

रश्मिः ।

इति वाक्याच्च । अपीति । ननु अनेन पदेन प्रतिवादिमते गौणी ध्वन्यते सा न संभवति एकविज्ञानेन सर्वविज्ञानस्य प्रतिज्ञातत्वात् । आदित्यादीनां ज्ञानकर्तृभगवदभेदबोधनाय मधुब्राह्मणस्य प्रवृत्तेरभेदसंभवादिति चेन्न 'आनन्दादयः प्रधानस्य' इति सूत्रे आदिपदेन मधुत्वस्यापि संग्रहात् । सूर्यधर्मत्वाभावेनाभेदान्वयासंभवात् । अतो गौण्यर्थं, योगरूढिव्यतिरेकेणापि शब्दप्रवृत्त्यर्थं वा मधुब्राह्मणम् । श्रुतीति श्रुतीनां व्याख्यातश्रुतीनां छान्दोग्यस्थानां विरोधः । तत्तेजोऽसृजत इत्यस्या वा । त्वयेति सांख्यप्रतिपादकेन प्रतिवादिना वा । तदन्विति तदनुसारः तदुक्ताभिन्नप्रकारेणानुसरणं तेनोक्तमविरुद्धम् । तेन मात्सर्याभावो ध्वन्यते । तेन भाष्यस्य परमार्थत्वं ज्ञातव्यम् । धर्मस्थानं उच्चैः स्थितोऽत एव बृहस्पतिर्मङ्गलयुतश्च तत्फलं जातकाभरणेस्ति,

'विलग्नतः शीतमयूखतः कर्मणि मघोनः सचिवो यदा स्यात् ।
नानाधनाभ्यागमनानि पुंसां विचित्रवृत्तं नृपगौरवं च' ॥

मङ्गलसाहित्यफलं—

'मन्त्राभिचारादिकलाकलापैः विवेकशीलो मनुजः किल स्यात् ।
चमूपतिर्वा नृपतिः पुरेशो ग्रामेश्वरो वा सकुजे सुरेज्ये' ॥ इति

ज्ञानप्रदीपनामग्रन्थे—

'भवति भाग्यपतिर्नृपवल्लभः सुरगुरौ नवमे सुखवान् गुणी ।
त्रिदशयज्ञपरः परमार्थवित् प्रचुरकीर्तिकरः कुलवर्धनः' ॥ इति ।

यथाश्रुतार्थे मधुविद्यायाम् । अक्षरमात्रमपि वेदो नान्यथावक्तीति पक्षेप्यविरुद्धः प्रतीतार्थउक्तः । भेदान्वयस्फूर्तेर्गौणी न मधुब्राह्मणे संभवतीत्यरुच्या अजामेकामिति मन्त्रे परोक्षवादमाहुः वस्तुत इति । पुरुषेति बृहदारण्यके । अजेति अजा इतरा शतरूपा, इतरो मनुः । इतीति 'अजेतराभवद् बस्त इतरोऽविरितरा मेष इतरस्ताᳪसमेवाभवत्ततोऽजावयोऽजायन्तैवमेव च यदिदं किं च मिथुनमापिपीलिकाभ्यस्तत्सर्वमसृजत' इति श्रावणात् । समेत्यस्य मिथुनाय गतवान् इत्यर्थः । समाय सुपां डा पुत्राय । 'इ'आश्चर्ये पुत्रीत्वात् स्वसेत्याश्चर्यम् । वा । वा गत्यादौ गतवान् । अभवत् सत्तां कृतवान् । अत्रेति अजामेकामिति मन्त्रे । सा दृश्यते स्वयमेवेति तादृक् । कर्मकर्तरि प्रत्ययः । आकार आकृतिः तमादाय जातित्वात् । नित्यमेकमनेकानुगतं सामान्यमिति । विशिष्टे अजात्वविशिष्टे अजारूपेर्थे बाधितो योगो विशेषणमुपसंक्रामतीत्यजात्वं न जायते इति योगमाह । अतः श्रौतेन पौराणस्य चतुर्मुखाजन्यायस्य बाधात् । पुराणानां वेदत्वपक्षे विकल्पः । तथा सति कया वृत्त्योच्यते इत्यत आहुः बन्धेति । बन्धकत्वमिन्द्रियविक्षेपकत्वं तस्या अजात्वमुच्यते तेनाजापदप्रयोगः ज्योतिःस्थलेऽजापदप्रयोगेऽजात्वेन ज्योतिर्बोधो न ज्योतिष्ट्वेन, यथा कलशस्थले घटपदप्रयोगे घटत्वेन बोधो न कलशत्वेनेति

सवत्सा स्वामिहिता तथेयमिति उपदेशपदात् तथोपासनमभिप्रेतम्। चकारात् परोक्षवादोऽपि देवस्य हिताय। यथा आदित्यो वै देवमधु, वाचं धेनुमुपासीत। द्युलोकादीनां चाग्नित्वं पञ्चाग्निविद्यायां तथा प्रकृतेऽप्यविरोधः। योगरूढिव्यतिरेकेणाप्येषा वेदे शब्दप्रवृत्तिः। तस्मादजामात्रेण न सांख्यमतसिद्धिः॥ १०॥

इति प्रथमाध्याये चतुर्थपादे द्वितीयं त्रिसूत्रं चमसाधिकरणम्॥ २॥

भाष्यप्रकाशः।

'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः' इत्यग्रिमग्रन्थेन तथावसायात्। एवं मधुविद्यायामपि, दृष्ट्वैव तृप्यन्तीति तृप्तिलिङ्गादादित्यस्य मधुत्वम्। नच विरोधः। सैषा त्रय्येव विद्या तपतीति श्रुत्या शब्दात्मकत्ववद् रसात्मकत्वेऽप्यदोषात्। एवमेव वाचो धेनुत्वमपि धरणीवज्ज्ञातव्यम्। एवं द्युलोकादीनामग्नित्वमपि। 'सर्वं सर्वमयम्' इति तापनीयश्रुतेः सर्वत्र सर्वसत्त्वात् तत्तदुद्भवानुद्भवयोर्भगवदिच्छया नियामकत्वेन प्रत्यक्षविरोधस्याकिंचित्करत्वादिति। तदेतदुक्तं चकारात् परोक्षवादोऽपीति। अनेनैवाशयेन सुबोधिन्यां निगमकल्पतरोरित्यत्र, असौ वा आदित्यो देवमध्विति स्वर्गस्थानां सूर्यो मधु। यथास्माकं सारघमित्युक्तम्। एतावान् परं विशेषो यच्छ्रुतौ परोक्षवादोऽत्र नेति न कोऽपि शङ्कालेशः॥ १०॥

इति द्वितीयं चमसाधिकरणम्॥ २॥

रश्मिः।

तद्वत्। तथा चाजामत्रे रूढमजापदम्। अजेतरेत्यत्रेव। मैवं योगेप्यजात्वमविरुद्धमिति। पाठकस्थले भाषकपदप्रयोगे पाठकस्य भाषकत्वेन बोधो न पाठकत्वेनेति तद्वत्। नन्वजेतरेत्यत्र योगो बाधित इति चेन्न। नित्यानित्यसंयोगभियाधिदैविकाजाऽजापदवाच्या नित्येति योगाविरोधात्। अत्रेति बन्धकत्वे। वृक्षो देहः अनीशा माया इन्द्रियरूपा अनीशतयेति वार्थः। तकारलोपः। अग्निमेत्यजामत्राग्रिमग्रन्थेन। तथेति बन्धकत्वावसायात्। दृष्टान्ते परोक्षवादमाहुः एवं मध्विति। दृष्ट्वेति इदं दर्शनं भक्त्यनन्तरं दर्शनानन्तरं भक्तिर्वा 'दृष्ट एव स्नेहः' इति भाष्यात्। आदित्यपदस्यात्मन्यधिकरणे वा पारोक्ष्यं आदित्यत्वे वा पारोक्ष्यम्। आदित्यत्वस्य, ध्येयः सदा सवितृमण्डलमध्यवर्तीत्यन्तस्तद्धर्माधिकरणोक्तरूपत्वात् 'येनेन्द्रियेण यद्गृह्यते तेनैवेन्द्रियेण तद्गता जातिस्तदभावश्च गृह्यते' इति स्वीकारस्य मतान्तरीयत्वात्। एतादृशादित्यस्य अभेदान्वयी मधु तस्य ज्ञानकर्तृत्वात्। तदाहुरादित्यस्य मधुत्वमिति। विरोधः प्रत्यक्षविरोधः परोक्षवादे मानाभावादित्यर्थः। मानमाहुः सैवेति। श्रुत्येति महानारायणीयोपनिषच्छ्रुत्या। रसेति सर्वं सर्वमयमिति श्रुतेः। तथा च त्रयीविद्याया भक्तिरसात्मकोप्ययम् 'रसो वै सः' इति श्रुतेश्च। धरणीवदिति। भूमिर्धेनुर्धरणी लोकधारिणीति तैत्तिरीये यथा भूमेर्धेनुत्वमाधिदैविकं रूपं श्रीभागवते तथा वाचोप्यान्यत्रिकमाधिदैविकं ज्ञातव्यम्। परोक्षवादे, प्रत्यक्षवादे गौणी स्पष्टा। युक्तिमाहुः तापनीति नृसिंहतापिनीयश्रुतेः। नन्विदमपि प्रत्यक्षबाधितं तत्राहुः तत्तदिति। अकिमिति। श्रुत्यपेक्षया। अत्रापि परोक्षवादे। प्रत्यक्षवादे तु गौण्येवमत्र परोक्षवादो वेदान्तत्वेन योगादङ्गतीत्यग्निरिति द्युलोकादिरग्निर्गतेत्येव सर्वस्य सर्वमयत्वे। तदेतदिति वस्तुत इत्यादिनोक्तं भाष्यीयम्। चकारात् परोक्षवादोपीति दार्ष्टान्तिके दृष्टान्ते चास्माभिरुक्तं परोक्षवादार्थम्। अनेनेति परोक्षवादोक्तेन। सारघमिति सरघा मधुमक्षिका तासु जातं सारघं 'तत्र जातः' इति सूत्रेणाण्। अत्रेति सारघे। न कोपीति। अविरोधपदार्थस्य कण्ठे

## न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥ (१।४।३)

मन्त्रान्तरेण पुनराशङ्क्य परिहरति । बृहदारण्यकषष्ठे श्रूयते ।
'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः ।
तमेव मन्य आत्मानं विद्वान् ब्रह्माऽमृतोऽमृतम्' ॥

भाष्यप्रकाशः ।

न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥ सूत्रमवतारयन्ति मन्त्रान्तरेणेत्यादि । आशङ्क्येति सांख्यमतस्य श्रौतत्वमाशङ्क्य । तेन विषयरूपहेतुभेदादधिकरणान्तरत्वं वा, पूर्वशेषत्वाच्च वेत्यपि बोधितम् । विषयमाहुः बृहदित्यादि अत्र षष्ठ इति काण्वपाठाभिप्रायेणोक्तम् । माध्यंदिनानां चतुर्थे दर्शनादिति । मन्त्रार्थस्तु, यस्मिन्नेते पञ्चादय आकाशान्ताः प्रतिष्ठितास्तमात्मानमेवं ब्रह्माऽमृतं विद्वानन्यो जीवः, अमृतो मुक्तो भवतीति शेषः । अन्यैस्तु तमेवात्मानं ब्रह्माऽमृतं विद्वानहममृत इति मन्य इति व्याक्रियते ।

रश्मिः ।

स्फुटत्वान्न कोपीत्यर्थः । सूत्रार्थः । कल्पनोपदेशाच्चकारात् पञ्चम्या लुक् । चकारात् परोक्षवादात् । मध्वादिष्विव मध्वादिवदित्यत्र सप्तम्यन्ताद्वतेर्व्याकृतत्वात् अजाशब्दस्याद्यसृष्टिरूपज्योतिर्वाचकत्वस्याविरोधः । विरोधः सहानवस्थानलक्षणः । अजात्वविशिष्टाजावाचकत्वेन सह ज्योतिर्वाचकत्वस्यानवस्थानं न । प्रत्यक्षवादे पूर्वस्य परोक्षवाद उत्तरस्य सत्वादिति । भाष्ये । वेद इति वेदस्येश्वरात्मत्वादिति भावः । प्रकाशे गौण्युक्तेव । अत्राजामेकां लोहितशुक्लकृष्णामिति विषयः । अत्राजाशब्देन सांख्यमतसिद्धा प्रकृतिरुच्यते वा अग्निसोमसूर्यविद्युदादिरूपं ज्योतिरुच्यते इति संशये प्रकृतिरिति पूर्वपक्षेऽजाशब्देन ज्योतिरेवोच्यत इति सिद्धान्तः । संगतिस्ततोक्ता निर्वाहकत्वरूपा ज्ञेया । पूर्वाधिकरणनिरूपणानन्तरं किं सांख्यनिराकरणनिर्वाहप्रयोजकमिति जिज्ञासया 'कल्पनोपदेशाच्च मध्वादिवदविरोधः' इत्यधिकरणनिरूपणमिति ॥ १० ॥

### इति द्वितीयमधिकरणम् ॥ २ ॥

न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥ भाष्ये । बृहदारण्यकेति माध्यंदिनानां षष्ठेध्याये 'अथ जनको ह वैदेहः कूर्चात्' इत्यारम्भके तत्रापि शारीरब्राह्मणे श्रूयते । प्रकृते । सूत्रमिति त्रिसूत्रमिदमधिकरणम् । तत्रात्र सूत्रे मंत्रान्तरेण पुनराशङ्क्य परिहार इतरयोर्मंत्रार्थः संख्यापूरणं च । एवमन्यत्रापि । यस्मिन्निति । पूर्वार्धं भाष्ये व्याकरिष्यते । उत्तरार्धं व्याकुर्वन्ति यद्यपि तमेव मन्येहमात्मानं विद्वान् वेदोवबोधयामि ब्रह्मामृतं कृष्णं सदानन्दं अमृतोहं मन्ये ब्रह्म सदमृतमानन्द इत्यर्थो भवति । तथापि पूर्वमन्त्रे 'यदैतमनुपश्यत्यात्मानं देवमञ्जसा । ईशानं भूतभव्यस्य न तदा विचिकित्सति' इति मन्त्रे आत्मदर्शी विशेषेण निवासं कर्तुं नेच्छतीत्युक्तम् । तत्रात्मदर्शनस्य पूर्वं सिद्धत्वाद्बोधनं नोपयुज्यत इत्यर्थान्तरमाहुः तमात्मानमिति । ब्रह्मामृतं कृष्णम् ।

'कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते' ॥ इति वाक्यात् ।

अन्यैरिति बृहदारण्यकटीकाकृदादिभिः । शाब्दापरोक्षवादोत्र । तत्तच्छब्दार्थ एव जीवात्मानः तत्त्वमसीति वाक्येन ब्रह्मामृतं विद्वान् शाब्दज्ञानवान् । मन्ये अपरोक्षज्ञानवान् । अस्वरसस्तु शाब्दापरोक्षस्य दूषणादाकरे दूषितत्वं ज्ञेयम् । विषयवाक्यार्थ उक्तः । विषयस्त्वत्र पञ्चगुणिताः

इति। यद्यप्यत्र पञ्चजनाः पञ्चोच्यन्ते, न पञ्चानां पञ्चगुणत्वम्। समासानुपपत्तेः। तथा हि। आद्यः पञ्चशब्दः संख्यावाची, संख्येयवाची वा? । आद्ये पञ्चसंख्याया एकत्वान्न षष्ठीसमासः। संख्यायां संख्याभावाच्च। संख्येयपरत्वे

---

भाष्यप्रकाशः ।

अनेन मन्त्रेण कथमाशङ्कोत्थानमित्याकाङ्क्षायामस्मिन् मन्त्रे पञ्चशब्दद्वयदर्शनात् पञ्चसंख्याविषयकपञ्चसंख्यान्तरश्रवणाभिमानरूपेण मूढग्राहेणेति वक्तुं तं व्युत्पादयन्ति यद्यपीत्यादि । तथाच तद्विवक्षितसंख्यानुपसंग्रहान्मूढग्राह इत्यर्थः । कथं समासानुपपत्तिरित्याकाङ्क्षायां तां व्युत्पादयन्ति तथा हीत्यादि। अयमर्थः। संख्योपसंग्रहार्थे पञ्चानां पञ्चेति समासे वाच्ये पञ्चसंख्याया एकत्वाद् ब्राह्मणसमाज इत्यत्र ब्राह्मणानामित्यस्येव पञ्चानामित्यस्य संख्यावाचिनो बहुवचनान्तस्य प्रवेशो न वक्तुं शक्य इति न षष्ठीसमासः। यदि च पञ्चशब्दस्य नित्यं बहुवचनान्तत्वेन दारा इत्यादिवद् बहुत्वस्याविवक्षितत्वेन प्रवेशो विभाव्यते, तदापि पञ्चपञ्चेत्यस्य पञ्चसंख्यासंबन्धिनी पञ्चसंख्येत्यर्थो वक्तव्यः। संबन्धश्च विषयतया वक्तव्यः। तथा सति तस्यां संख्यायां

रश्मिः ।

पञ्चेति व्याख्याय सांख्योक्तानि पञ्चविंशतितत्त्वानि ग्राह्याणि वाक्प्राणश्चक्षुःश्रोत्रमन्नं मन इति पञ्चकं पञ्चजनशब्देन ग्राह्याणीति अत्र पूर्वपक्षमनुवदन्ति स्वाचार्याः इति सूत्रयामासुरनेनेति। पञ्चेति पञ्चसु पञ्चेत्यत्र तं मूढग्राहं मूढो मोहयुक्तस्तस्य ग्राहो ग्रहणम्। तद्धीति गुणो विंशतिस्तत्त्वं 'गुणोऽप्रधाने रूपादौ' इति विश्वात् रूपादिनैयायिकोक्तोतः संख्यालाभः। भाष्ये। पञ्चानां पञ्चगुणत्वे पञ्चविंशतिसंख्यालब्ध्या न पञ्चानामिति तेषां सांख्यपदार्थश्रौतत्वकल्पकानां विवक्षिता संख्या पञ्चविंशतिसंख्या। आद्य इत्यादि भाष्यार्थमाहुः अयमिति। संख्येति पञ्चविंशतिसंख्योपसंग्रहार्थं पञ्चानां संख्यानां पञ्चेति षष्ठीतत्पुरुषः। षष्ठ्या वैशिष्ट्यमर्थः। गुणगुणिनोः समवायात् 'विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः। संख्यार्थे द्विबहुत्वे स्तः' इत्यमरात् पञ्चसंख्या न पञ्चत्वम्। पञ्चेति पञ्चपञ्चकेषु एकं पञ्चकं पञ्चतत्त्वरूपं पञ्चसंख्याविशिष्टमिति प्रतीतेः सामानाधिकरण्यसंबन्धेन पञ्चसंख्यायामेकत्वं एकं रूपं रसात्पृथगित्यत्र रूपे गुणे एकत्वसंख्यावत्। न षष्ठीति भाष्यं विवृण्वन्ति स्म ब्राह्मणेति। ब्राह्मणानां समाजः। अनेन प्रकारेण प्रकृतिविचारे प्रत्ययार्थबहुत्वसंख्यास्मरणात्तद्विचार्यते इत्यस्येति। अत्र प्रकृत्यर्थे प्रत्ययार्थबहुत्वस्याश्रयतयान्वयः बहुत्वावच्छिन्नब्राह्मणसंबन्धी, अस्य समाजपदार्थेऽभेदान्वयः संबन्धस्य पदार्थमर्यादयाऽभावात्। तादृशसंबन्ध्यभिन्न एकत्वविशिष्टः समाज इति बोधः। एकत्वस्य समाजेन्वयात् बहुत्वसंख्याया इव इत्यस्य। प्रवेशः इति न च पञ्चपदं पञ्चसंख्यावाचकं भागत्यागलक्षणिकया सामानाधिकरण्येनैकत्रान्वयीत्युक्तम्। तत्र बहुत्वं पञ्चपदवाच्यसंख्येयान्वयि वाच्यं बहुत्वावच्छिन्नपञ्चसंख्येयनिष्ठपञ्चनिष्ठमेकं नैयायिकमते पञ्चसंख्यायामेक इत्यत्र प्रथमान्तविशेष्यकबोधाङ्गीकारादिति वाच्यम्। भागत्यागलक्षणिकया बहुत्वान्वयिपञ्चसंख्येयाप्रतीतेर्बहुत्वान्वयप्रवेशस्य वक्तुमशक्यत्वात्। नेति बहुत्वस्यैकार्थीभावेऽन्वयाऽप्रतीतेः सामर्थ्याभावाच्च षष्ठीसमासः। ननु बहुत्वस्य विवक्षा नास्ति इत्यप्रतीतत्वेपि समासः सामर्थ्यादिति चेत्तत्राहुः यदि चेति। तस्यामिति पञ्चानां पञ्चेत्यत्र विषयतासंबन्धोङ्गीकृतः विषयतासंबन्धेन सत्त्वे सप्तम्या भाष्यमिति सप्तम्युक्ता।

भाष्यप्रकाशः ।

तत्संख्याऽभावात् समासानुपपत्तिः । अनेन सप्तमीसमासोऽपि नेत्युक्तप्रायम् । एवमन्येऽपि बोध्याः । यदि चाद्यस्य पञ्चशब्दस्य संख्येयपरत्वेन द्वितीयस्य संख्यापरत्वेन सप्तमीसमासो भाष्यते, तदा पञ्चसंख्यासंख्येयेषु पञ्चसंख्येत्यर्थलाभादभीष्टायाः संख्याया अलिब्धा समास-वैयर्थ्यम् । यदि च पूर्ववदाद्यस्य संख्यार्थत्वं, द्वितीयस्य संख्येयार्थत्वं, तदापि षष्ठीसमासे संख्येयबोधकपदादेव विशेषणीभूतसंख्यालाभेन पूर्वपदस्यानन्वयः । सप्तमीसमासे तु संख्यायां संख्येयाभावादुत्तरपदस्यानन्वयः । न चात्रासूर्यंपश्या राजदारा इतिवदसमर्थसमास एवास्त्विति वाच्यम् । अत्र 'असूर्यललाटयोर्दृशितपोः' इतिवत् तादृशसमासज्ञापकाभावादिति । एतेनान्येऽप्य-

रश्मिः ।

संख्यायामिति भाष्यं विवृण्वन्ति स्म अनेनेति । पञ्चानां पञ्चगुणत्वमित्यत्र पञ्चानां पञ्चेति विग्रहे षष्ठ्या विषयत्वसंबन्धाङ्गीकारेण संख्यायां संख्यानङ्गीकारेण च पञ्चसंख्यासु पञ्चसंख्येया इति विग्रहः । द्वितीयपञ्चपदं संख्यावाचि चेत् पञ्चानां पञ्चगुणत्वं, अत्र पञ्चानां पञ्च इत्यत्र घटानां घटा इतिवदतिमूढग्राह्यत्वं पञ्चानां सकलानां पञ्चविंशतिपञ्चेति । यदि च शते पञ्चाशदितिवदुच्यते तथापि द्रव्यादिगतायाः एव प्रत्ययाङ्गीकाराददोषः । एवमन्य इति द्वन्द्वाव्ययी-भावयोरसंभवात्तत्पुरुषबहुव्रीहिद्विगुकर्मधारया इत्यर्थः । अत्र षष्ठीसप्तम्योस्तत्पुरुषस्योक्तत्वात् मूढग्राह्यत्वात् तृतीयादिसमासस्तु न सूत्राभावात् । संख्येयपरस्य इत्यादि भाष्यं विवृण्वन्ति स्म यदि चेति, तं समासमाहुः तदेति, पञ्चेति संख्यावाचकः । अभीति एतत्समासे पञ्चत्वमेवेति अभीष्टायाः पञ्चविंशतिसंख्यायाः । पूर्ववचेदनन्वय इति व्याचक्रुः यदि चेति चेद्यदि पूर्ववदिति संख्यार्थत्वमित्यनेनान्वयि । संख्यायां संख्याभावादित्युक्तभाष्यात् । अत्र भाष्य एव संख्यावाचकत्वं पञ्चपदस्य द्वितीयस्य तदा तु संख्येयार्थत्वमित्यन्तमन्वयः । संख्येयेति पञ्चानां पञ्चेत्यत्र संख्येयवाची पञ्चशब्दः । स च पञ्चविशिष्टवाचकः । तत्र पञ्चत्वे पञ्चानामित्युक्तपञ्चसंख्या-नामभेदान्वयः स च नास्ति उद्देश्यतानवच्छेदकविधेययोरैक्यात् । घटो घट इत्यत्र यथा । विशेषणीति पञ्चसंख्यालाभात् । पूर्वपदस्येति पञ्चानामिति पदस्य । हेतुभाष्यमवतारयन्ति स्म न चात्रेति । अत्र पञ्चानां पञ्चेत्यत्र षष्ठीति सूत्रेण वा कृतसमासके । असमर्थेति दृशिना नञः संबन्धादसूर्यमित्यसमर्थसमासः सूर्यं न पश्यन्तीत्यसूर्यंपश्याः इत्यर्थात् । अत्रासूर्योपपदे दृशेः खश् प्रत्ययः कृतः । मनोरमात्र गुप्तिपरं चेदं वचनं यदपरिहार्यदर्शनं सूर्यमपि न पश्यन्ति सत्यपि सूर्यदर्शने प्रयोगो भवत्येव यदा तु सूर्यदर्शनाभावमात्रं सूर्येतरस्य चन्द्रादेः दर्शनं वा विवक्षितं तदा खश् न भवत्यनभिधानात् इति । तथा च दार्ष्टान्तिकेऽसमर्थसमासः । पञ्चानां पञ्चत्वानां व्यपेक्षा जना इत्यनेन जना इत्यस्य पञ्चेत्यनेन पञ्चानामाश्रयतया संबन्धिनो जनास्ते च पञ्च पञ्चगुणिताः पञ्चेति पञ्चविंशतिसंख्या लब्धा । अयं समास एवास्त्विति वाच्यमित्यर्थः । पञ्चानां जनाः पञ्चेत्यर्थात् । असमर्थसमासत्वं तु समर्थपदमहिम्ना समासपदसंनिवेशश्च 'समर्थः पदविधिः' इत्यत्र व्याख्यातं सामर्थ्यं तद्विशिष्टत्वम् । सामर्थ्यं च व्यपेक्षालक्षणं एकार्थीभावलक्षणं च, अजहत्स्वार्था वृत्तिः जहत्स्वार्था वृत्तिश्च उभयोः पर्यायरूपे । जहदजहत्स्वार्थवृत्तिरूपसामर्थ्यविशिष्टत्वं समर्थत्वं तद्विशिष्टः समर्थः । न समर्थोऽसमर्थः । तादृशसमसनत्वम् । तथा च राजपुरुष इत्यत्र वृत्तिद्वयमस्ति तद्वत्प्रकृते

१. संख्यानाम् ।

द्वितीयस्य संख्यात्वे पञ्चत्वमेव पूर्ववचेदनन्वयः । विधायकाभावाच्च । अतो वीप्सा । पञ्चजनसंज्ञाविशिष्टानां वा पञ्चत्वमिति यथासंभवमर्थः । तथापि मूढग्राहेण संख्योपसंग्रहेऽपि लक्षणार्थं केनचिद्धर्मेण पञ्चसंग्राहकेण भाव्यम् । स च तेषां मते न संभवति । तथा सति पञ्चैव तत्त्वानि स्युः । अतस्ते

भाष्यप्रकाशः ।

समर्थसमासा निवारिताः । एवं समासानुपपत्त्या तन्मतं दूषयित्वा सूत्रोक्तं पूर्वपक्षहेतुं साधयितुं पुनस्तन्मतोत्थापनायाहुः अत इत्यादि । यतः पूर्वोक्तरीत्या न पञ्चविंशतिसंख्योपसंग्रहोऽतस्त्वया असमस्तयोरेव पञ्चपञ्चेति पदयोर्वीप्सा द्विरुक्तिर्वा, अथ समासान्तरेण पञ्चजनसंज्ञाविशिष्टानां वा पञ्चत्वं यथासंभवं त्वदभीष्टं यथा स्यात् तथा, अर्थो वक्तव्यः । स चेत्थम् । वीप्सापक्षे पञ्चसंख्यायाः पञ्चगुणत्वबोधकस्याभावादंशानामेव बोधो न पञ्चविंशतीनाम् । अतो यस्मिन्जनाः पञ्चशः पञ्चेत्येवं संख्योपसंग्राह्या । द्वितीयपक्षादरे तु पञ्चजनपदस्य, 'दैत्यः पञ्चजनो महान्' इत्युक्ते दैत्ये वा, 'स्युः पुमांसः पञ्चजनाः' इतिकोशोक्तेषु मनुष्येषु वा रूढिमाश्रित्य पञ्च पञ्चपूल्य इतिवत् पञ्चानां पञ्चजनानां समाहारः पञ्चजना इति समासो लिङ्गव्यत्ययादेश्छान्दसत्वं च वक्तव्यम् । अथवा 'दिक्संख्ये संज्ञायाम्' इत्यनेन सप्तर्षय इतिवत्

रश्मिः ।

नेति वैयाकरणभूषणसारे विस्तरः । असमर्थेति यथा देवदत्तो राज्ञः पुरुषो विष्णुमित्रस्य इत्यत्र राजपुरुष इति समासस्तद्वत् । पञ्चत्वानां संबन्धिनां जनाः पञ्च पञ्चगुणिताः पञ्च पञ्चजनाः । पञ्चसु जनाः पञ्चपञ्चगुणिता इत्यर्थे पञ्चविषया जनाः पञ्चगुणिता पञ्चपञ्चेति द्वितीयः समासः । पञ्चसु स्थलेषु जनाः पञ्चपञ्चगुणिताः पञ्चपञ्च । षष्ठीति सूत्रेण सप्तमीति योगविभागात् । सुपेति सूत्रेण वा समासास्तेषामनुपपत्तेर्निवारिताः ॥ भाष्ये । विधायकेति । 'न निर्धारणे' इति सूत्रेण 'पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन' इति सूत्रेण गुणे परे समासनिषेधे विधायकाभावात् । 'असूर्यललाटयोर्दृशितपोः' इतिवत् । पूर्वेति संख्योपसंग्रहादिति हेतुम् । स चेति वीप्सयार्थः । समासान्तरेणार्थश्च । एवं सांख्यमतमुत्थाप्य पूर्वपक्षहेतुं साधयामासुः अत इति । पञ्चश इति 'संख्यैकवचनाच्च वीप्सायाम्' इति शस् । पञ्च पञ्च ददति द्वितीयपञ्चशब्दस्य पञ्चकवाचकत्वाद्वीप्सया पञ्चकलाभः । जनाः पञ्च पञ्चकान् ददतीत्यर्थः । अतो वीप्सेति भाष्यं व्याख्याय पञ्चजनसंज्ञेति भाष्यं व्याचख्युः द्वितीयपक्षेति । रूढिमिति । नृवर्गे पञ्चभिर्भूतैर्जन्यते इति पञ्चजनाः घञ् । जनिवध्योश्चेति न वृद्धिः । यद्वा पञ्चजना उत्पादका यस्येति विग्रहौ प्रकृतिप्रत्ययज्ञानार्थं, नावयवशक्त्यर्थम् । समुदायशक्त्यापहारात् । पञ्चानां पञ्चपूलीनां समाहार इत्यत्र 'संख्यापूर्वो द्विगुः' इति समासो विहितः । ततो 'द्विगोः' इति सूत्रेण ङीब् विधानात् समाहारप्रतीतौ समाहाराः कति इत्याकाङ्क्षायां सत्यां पञ्चेति पदान्तरान्वयो युक्त इतिवत् । अत्र शंकरभाष्यादौ पूलशब्दः 'पूलं तु विपुलेऽन्यवत् । पुलः स्यात्पुलके चापि' इति विश्वात् । ह्रस्वादिः पुलशब्दः । मूलशब्दो वा 'मूलं मोचे शिफायां च भे निकुञ्जेऽन्तिकेऽपि च' इति विश्वः । शिफा जटा । लिङ्गेति स्त्रीलिङ्गव्यत्ययैकवचनव्यत्ययौ । सप्तेति प्रागग्रं शकटाकारं तारासप्तकं सप्तर्षिसंज्ञकं मण्डलम् । एवं भाष्यं व्याख्याय तस्य विवक्षितसंख्यासाधनत्वाय पूर्वस्मिन् पक्षे पञ्चविंशतिसंख्या स्पष्टेति । वीप्सापक्षमपहाय समास-

भाष्यप्रकाशः ।

पञ्च च ते पञ्चजनाश्चेति संज्ञासमासो वा वक्तव्यः । तत्र पूर्वस्मिन् विकल्पे दैत्यस्यैकत्वेन समाहारासंभवान्न समासः । द्वितीयविकल्पे तु मनुष्याणां बहुत्वेन समूहघटकतया समाससंभवेऽपि विशेषणीभूतपञ्चत्वोपपत्त्यर्थं, 'वैवस्वतो न तृप्यति पञ्चभिर्मानवैर्यमः' इति मन्त्रोक्ता वा, जना यदग्निमयजन्त पञ्चेति यागसंबन्धलिङ्गेन निषादपञ्चमाश्चत्वारो वर्णा वा ग्राह्याः । तदापि न पञ्चविंशतिसंख्योपसंग्रहः । संख्याया एकस्मिन्नेव पञ्चशब्दे प्रविष्टत्वेन गुणकसंख्यान्तरस्याभावात् । तथा संज्ञासमासपक्षेऽपि । वस्तुतस्तु वशिष्ठादिषु सप्तर्षय इतिवत् पञ्च पञ्चजना इति संज्ञायाः क्वाप्यभावात् समासस्यैवानुपपत्तिः । अत एतत्सर्वं विहाय जनयन्तीति जना इति योगं चाश्रित्य तत्त्वानि ग्राह्याणि । ततः पञ्चानां जनानां समाहारः पञ्चजनाः, पञ्चानां पञ्चजनानां सः पञ्चपञ्चजना इति समाहारसमासद्वयस्य वा पञ्चगुणिताः पञ्च पञ्चपञ्च, ते च ते जनाश्चेत्युत्तरपदलोपिनोऽमुस्य कर्मधारयस्य वा आश्रयणेन पञ्चविंशतिसंख्यामुपसंगृह्य वेदान्ते

रश्मिः ।

पक्षे पञ्चविंशतिसंख्यासाधकत्वं स्पष्टमाहुस्तत्र पूर्वेति । निषादेति ब्राह्मणाच्छूद्रायां जातो निषादः । यागसंबन्धस्तु 'निषादस्थपतिं याजयेत्' इति श्रुतेः । एकस्मिन्निति विशेषणे द्वितीयस्य रूढपदान्तर्गतत्वात् । गुणकेति गुणः विंशतिसंख्या तत्र पञ्चसंख्या पञ्चशब्देनोक्ता विंशतिः संख्या गुणपदार्थः । गुण एव गुणकः । 'गुणोऽप्रधाने रूपादौ' इति विश्वः । रूपादिः रूपरसगन्धस्पर्श इत्यादिनैयायिकोक्तः । तत्र संख्या गुणः । तथेति यथा समाहारद्विगुपक्षे तथा । एवमुपपादितेपि भाष्ये समासपक्ष एव पञ्चजनपदे व्याकरणसंचारात् प्रतिपिपादयिषितवाक्यशेषाच्छक्तिग्रहे पञ्चजनपदे उपपदमतिङिति सूत्रेणापि समासस्य वैयर्थ्यमापादयतीति पञ्चजनपदे उक्तव्याकरणनैर्बल्याच पक्षान्तरमाहुः वस्तुत इति । न चात्रापि व्याकरणं वक्ष्यमाणं भवतीति 'दिक्संख्ये संज्ञायाम्' इति व्याकरणं कुतो नेति शङ्क्यम् । पञ्चजनपदे अन्यस्य वक्ष्यमाणस्यापि व्याकरणस्य क्लिष्टकत्वेन युक्त्यन्तरतौल्यात् स्पष्टस्य दिक्संख्येति सूत्रस्याप्राप्तिमाहुः वशिष्ठेति । ननु पूर्वपक्षभाष्यस्य पञ्चजनसंज्ञाविशिष्टानां वेत्यस्य विरोध इति चेन्न । पञ्चजनपदे संज्ञासमासं परित्यज्य वाक्यशेषेण प्राणादिवाचकत्वस्योत्तरसूत्रभाष्य एवादरात् । किं च प्राणादिवाचकत्वेपि समासस्तु दिक्संख्येत्यनेनैव । न च सप्तर्षय इतिवत्पञ्चजना इति संज्ञायाः क्वाप्यदर्शनान्न 'दिक्' समासः किंतूपपदमतिङिति सूत्रेण समास इति वाच्यम् । कर्मणि चेति निषेधात् । न च कुम्भकार इत्यत्रेवोभयप्राप्त्यभावादस्तु समासो बुद्धेः पञ्चवृत्तिं जनयन्तीति प्राणादयः पञ्चजनाः इति भाष्यादिति वाच्यम् । कुम्भकार इत्यत्रास्तु उपपदमतिङिति सूत्रेण समास इह तु पञ्चसंख्याश्रावणात् दिक्संख्येतिसूत्रेण समासः । समानाधिकरण एवेति नियमाश्रयणे तु उपपदमतिङिति सूत्रेण समासः । वसिष्ठादयस्तु 'सप्तर्षीणां तु यौ पूर्वौ' इति श्लोकव्याख्याने द्वादशस्कन्धे सन्ति वसिष्ठो, मरीचिरङ्गिरसः, अत्रिः, पुलस्त्यः, पुलहः, क्रतुरिति अयं प्रकाशो दिक्संख्ये संज्ञायामिति सूत्रप्रवृत्तिर्या पञ्चजनपदे तस्या नैर्बल्यं प्रतिपादयति । दिक्संख्यासमासप्रसङ्गात् । उत्तरसूत्रे वक्तव्यमत्र पूर्वपक्षग्रन्थ उक्तम् । संख्योपसंग्रहादपि नेति सूत्रांशं व्याकरिष्यन्तो यथा संभवमिति भाष्येण वीप्सादिक्संख्येतिसमासयोरनास्थासूचनादाहुः अत इति । यथासंभवमिति भाष्यतात्पर्यात् । जना इति पचाद्यच् । उपपदाभावाज्जन्येष्वपि दृश्यत इति डः । योगमिति । तथा च योगरूढं पदमिति भावः । बबबबबकेः कुलालादौ सत्त्वात् । उत्तरेति पञ्चगुणिता इत्यत्र पञ्चोत्तरपद इत्यर्थः । शाकपार्थि-

**नानाभावा एव स्वीकर्तव्याः । यद्यपि भूततन्मात्राकृतिविस्यन्तःस्थितत्वधर्मो वक्तुं शक्यन्ते । तथापि न ते तथोक्तवन्तः ।**

भाष्यप्रकाशः ।

**मोक्षाधिकारान्मुमुक्षुभिः कपिलस्मृतिसिद्धानि पञ्चविंशतितत्त्वानि ग्राह्याणीति तन्मतस्यापि श्रौतत्वकल्पनं मूढग्राह इतीदं सर्वं संख्योपसंग्रहादपीत्यनेनोत्थाप्य, नेत्यनेन निषेधन्ति । तत्र हेतुर्नानाभावादिति । तद् व्याकुर्वन्ति तथापीत्यादि । एवं बाधेऽप्युक्तरीत्या मूढग्राहेण संख्योपसंग्रहेऽपि जनशब्दवाच्यानां तत्त्वानां प्रत्यभिज्ञानार्थं तत्पञ्चकनिष्ठपञ्चत्वसंग्राहकेण केनचिद्धर्मेण सांख्यमते भाव्यम् । तादृशश्च धर्मस्तन्मते अप्रसिद्ध इति न संभवति । तदसंभवे सति पञ्चैव तत्त्वानि स्युर्न तु पञ्चपञ्च । अतस्तेषां संख्यासंग्रहस्यावश्यकत्वात् पञ्चकनिष्ठपञ्चत्वसंग्राहका धर्मा नानाभावाः, प्रकृतित्वादिधर्मेभ्योऽतिरिक्तो भावो धर्मो येषां तादृशाः स्वीकर्तव्याः ।**

रश्मिः ।

वादिराकृतिगण इति भावः । **पञ्चविंशतीति** पञ्चगुणिताः पञ्च पञ्चविंशतिः संख्या पञ्चानां जनानां समाहार इत्यत्र समाहारः पञ्चानां जनानामेवैकैकस्य पञ्चकरणं ततः पञ्चककृतस्य जनस्य पञ्चत्वाय पञ्चानां पञ्चजनानां समाहारः पञ्चकरणं पञ्च पञ्चजना इति पञ्चविंशतिसंख्या तामुपसंगृह्णेत्यर्थः । सौत्रापिपदार्थं भाष्ये तमाहुः **मूढेति** । अपि गर्हायाम् । मूढग्राह इति गर्ह्या सप्तम्यन्तपदं मूढेन मोहयुक्तेन ग्राह्यो ग्रहणं यस्य समासमात्रस्य स मूढग्राहकस्तस्मिन् । **निषेधन्तीति** सूत्रकारो निषेधति । **तत्रेति** निषेधे हेतुः सूत्रे नानाभावादिति । **एवमिति** पूर्वोक्तप्रकारेणातः एतत्सर्वमित्युक्तसमासयोरर्थबाधे । बाधस्तु पञ्चपदस्य पञ्चगुणितरूपत्वं कल्पितं अन्यस्यार्थस्य संभवात् । गौरवात् । समाहारे एकैकस्य पञ्चकरणमित्यपि न समाहृतिस्तु इति शब्दादिवर्गीयामरकोशात् ।

'विस्तरेणोपदिष्टानामर्थानां सूत्रभाष्ययोः ।
निबन्धो यः समासेन संग्रहं तं विदुर्बुधाः' ॥ इति ।

'संग्रहो बृहदुद्रङ्गे मुष्टिसंक्षययोरपि' इति हैमः । अपि गर्हायाम् । मूढग्राहो गर्ह्या । **लक्षणेति** भाष्यार्थमाहुः **जनशब्देति** । **तत्त्वानामिति** पञ्चविंशतितत्त्वानाम् । पञ्च पञ्चजना इत्यत्र प्रत्यभिज्ञानार्थम् । जनपञ्चकनिष्ठपञ्चत्वसंग्राहकेण । पञ्चेति भाष्यस्य संख्यापरत्वस्फोरणार्थं भावप्रत्ययो न तु भाष्ये पञ्चपदं भावप्रधानमिति बोधनार्थम् । 'विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः' इत्यमरात् । **केनचिदिति** द्वितीयपञ्चपदं पञ्चगुणेषु लाक्षणिकम् । शक्यसंबन्धो लक्षणा संबन्धश्च स्वरूपः गुणपदवाच्यविंशतिसंख्यायाम् । तथा च स्वरूपसंबन्धः कश्चिद्धर्मस्तेन । **स चेति** भाष्यं विवृण्वन्ति **तादृशश्चेति** । स धर्मो दृश्यते स्वयमेव । त्यदादिष्विति कन् । **अप्रेति** । यथा नैयायिकमते शब्दप्रत्यक्षानुमितयः तथा सांख्यमतेपि स्वरूपसंबन्धो नैयायिकमते नैतेषां मते इति भावः । **तथासतीति** भाष्यं विवृण्वन्ति **तदसमिति** अयमपि कश्चित्प्रकारोतस्तथापदार्थः । पञ्चानां पञ्चगुणत्वमित्यत्र पञ्चगुणेषु लक्षणाभावाद्गुणाबोधे पञ्चानां पञ्चानां पञ्चेति स्थितौ पञ्चैव तत्त्वानि स्युरित्यर्थः । **पञ्चपञ्चेति** पञ्च पञ्चगुणिताः । **अतस्त इति** भाष्यं विवृण्वन्ति **स्त अत** इति पञ्चतत्त्वापत्तेः । तेषां संख्यानां तत्त्वानां वा । प्रेति आदिपदेन महत्तत्त्वादित्वे । **अतिरिक्त इति** । नानापदार्थः । नाना भिन्नवाची नैयायिकभेदवादे य इह नानेव पश्यतीति श्रुतिविचारे । विनार्थेपि । 'नाना विनार्थेपि भवेत्' इति विश्वात् । अपिना 'नानानेकोभयार्थयोः' इति विश्वोक्तम् ।

भाष्यप्रकाशः ।

न च तादृशामभावः । भूतादिषु भूतत्वतन्मात्रात्वाकूतित्वचितित्वानां प्रकृतिपुरुषमहदहंकारमनस्त्वन्तःस्थत्वस्येत्येवं तादृशां वक्तुं शक्यत्वात् । यद्यप्येवं शक्यन्ते वक्तुं तथापि न ते तथोक्तवन्तः । मूलप्रकृतिरित्यादिना एकैकनिष्ठसप्तनिष्ठषोडशनिष्ठानां चतुर्णामेव धर्माणां स्वाभिमतसंख्यासंग्राहकत्वेनोपगमात् । तथा चायं सूत्रार्थः । पञ्चपञ्चजना इत्यत्र केनचित् समासेन संख्योपसंग्रहादपि न सांख्यमतस्य शब्दवत्त्वम् । कुतः ? नानाभावात् । संख्यासंग्राहकधर्माणां तन्मते पञ्चपञ्चकनिष्ठधर्मभिन्नत्वेन विद्यमानत्वात् । यदि हि तत्त्वेषु श्रौतत्वं तदभिप्रेतं स्यात् संग्राहकधर्माणां श्रौतशब्दविरुद्धसंख्याकत्वं न ब्रूयुरतस्तथेति । भाष्ये, आकूतित्वं कर्मेन्द्रियाणां धर्मः । चितित्वं ज्ञानेन्द्रियाणाम् । अन्तःस्थितत्वं प्रकृतिपुरुषमहदहंकारमनसाम् । सांख्यकारिकायां

रश्मिः ।

(शेषपत्रमत्र) नानापदस्यानेकार्थकत्वे तु कारिकोक्तचतुष्कं नाभिप्रेतम् । अत्रोच्यते । मूलप्रकृतिरविकृतिरित्यत्र मूलप्रकृतेः प्रकृतित्वेनोपस्थितौ अनेकार्थकत्वं अविकृतित्वेनोपस्थितौ अविकृतित्वप्रकृतिविकृतित्व-विकृतित्वप्रकृतिविकृतिविलक्षणत्वरूपचतुष्कमतो विकृतित्वेन रूपेणोपस्थितिं वदामः यथा क्षितिर्गन्धसमवायिकारणमित्यत्र गन्धसमवायिकारणत्वेन क्षितिबोधो न पृथिवीत्वेन तस्या गन्धसमवायिकारणतासिद्ध्यधीनत्वात् । तथाहि । क्षितौ गन्धसमवायिकारणता किंचिद्धर्मावच्छिन्ना कारणतात्वात् घटस्य समवायिकारणतावत् । तद्वदविकृतित्वं तत्त्वान्तरोपादानत्वं किंचिद्धर्मावच्छिन्नं कारणत्वाद् घटदृष्टान्तः पूर्ववत् । एवं 'महदाद्या प्रकृतिविकृतयः' इत्यत्र न महदाद्यत्वेन बोधः किं तु प्रकृतिविकृतित्वेन तत्र किंचित्तत्त्वोपादानत्वे सति किंचित्तत्त्वोपादेयत्वमत्रत्यं तत्त्वोपादानत्वमादाय किंचिद्धर्मावच्छिन्नकारणतात्वात् । दृष्टान्तः स एव । अग्रे 'षोडशकश्च विकारः' इत्यत्र विकारत्वं साक्षात्तत्त्वोपादेयत्वमत्र कारणताभावाभावात्तादृशज्ञानकारणतां विषयनिष्ठामादाय किंचिद्धर्मावच्छिन्नमित्यादि पूर्ववत् । एवं पुरुषलक्षणे उक्तत्रितयविलक्षणत्वेन ज्ञानं तत्कारणतां पुरुषनिष्ठामादाय किंचिद्धर्मावच्छिन्नमित्यादि पूर्ववत् । तदुक्तं द्वितीयपरिच्छेदे दिनकर्याः 'स्पर्शस्तस्यास्तु विज्ञेयो ह्यनुष्णाशीतपाकजः' इत्यस्या मुक्तावल्या व्याख्याने ॥ अत्र शंकरभाष्ये तु नाना अनेकार्थकः नानाभावात् । नाना ह्येतानि पञ्चविंशतत्त्वानि तेषां पञ्चशः पञ्चशः साधारणो धर्मोऽस्ति येन पञ्चविंशत्यन्तरालेऽपरा पञ्चपञ्चसंख्या निविशेरन् । न ह्येकं निबन्धनमन्तरेण नानाभूतेषु द्वित्वादिसंख्याः निविशन्ते इति भाष्यात् । अत्र नानाभावादिति सांख्यमतानुवादो भगवता व्यासेन कृतः । इति सांख्यकारिकोपन्यासेन गम्यते । यद्यपीति भाष्यं विवृण्वन्ति स्म न चेति । भूतादीति आदिपदेन तन्मात्राः पञ्च । आकूतयः कर्मेन्द्रियाणि पञ्च, चित्तयः पञ्च ज्ञानेन्द्रियाणि । अन्तःस्थिततत्त्वानि तानि धर्माः । इति द्वन्द्वगर्भितकर्मधारयः । द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकं अभिसंबद्ध्यते । मूलेति भाष्यं विवृण्वन्ति स्म मूलेति । चतुर्णामिति अविकृतित्व-प्रकृतिविकृतित्व-विकारत्व-प्रकृतिविकृतिविलक्षणत्वानाम् । केनेति पूर्वं लक्षणोक्ता केनचित्स्वरूपसंबन्धघटितेन समासेन षष्ठीतत्पुरुषेण 'उपपदमतिङ्' इति सूत्रकृतसमासेन वा । अपीति मूढग्राहेणेत्यर्थः । नानाभिन्नत्ववाचकं लुप्ततृतीयान्तम् । भिन्नत्वं धर्मप्रतियोगिनावपक्षेते । भावो विद्यमानत्वमित्याशयेन विवृण्वन्ति स्म संख्यासमिति । अतस्तथेति संख्योपसंग्रहादपि न सांख्यस्य श्रौतत्वम् । कारिकेति । आर्याछन्दः ।

'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः' ॥

इत्यन्यथोपगमात् । पुरुषे वैलक्षण्याभावप्रसङ्गश्च । किंच नायं श्रुत्यर्थं इति श्रुतावेव प्रतीयते । अतिरेकादाकाशश्चेति । चकारादात्मा यस्मिन्नित्यधिकरणत्वेनोक्तः । तस्मान्नानेनापि मन्त्रेण तन्मतसिद्धिः ॥ ११ ॥

भाष्यप्रकाशः ।

तु प्रकृतित्वं तत्त्वान्तरोपादानत्वम् । प्रकृतिविकृतित्वं किंचित्तत्त्वोपादानत्वे सति किंचित्तत्त्वोपादेयत्वम् । विकारत्वं साक्षात् तत्त्वोपादेयत्वम् । पुरुषत्वं चोक्तत्रितयविलक्षणत्वं बोध्यम् । जनशब्दोऽपि तन्मते विरुध्यत इति दूषणान्तरमधिकमाहुः पुरुष इत्यादि । जनशब्दस्य जनकत्वोपाधिना तत्त्ववाचकत्वेन गृहीतत्वात् पुरुषेऽपि तदापत्त्या तथेत्यर्थः । न च छत्रिणो यान्तीतिवद् गौण्या तत्संग्रहान्न दोष इति शङ्क्यम् । तत्र प्रत्यक्षस्येवात्र गौणीनियामकस्याभावेन तस्या वक्तुमशक्यत्वाज्जनशब्दे युगपद् वृत्तिद्वयापातादगतिकगतित्वाच्चेति । हेत्वन्तरं व्याकुर्वन्ति

रश्मिः ।

'यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेपि ।
अष्टादश द्वितीये पञ्चदश चतुर्थके सार्या' ॥

तत्त्वेति अविकृतिपदार्थः । विकृतिर्विकारः कार्यं तत्त्वान्तररूपं तद्भिन्ना उपादानकारणरूपा । विकृतीराह महदाद्या इति द्वितीयपादे महदहंकारपञ्चतन्मात्राणि इति सप्तप्रकृतिविकृतयः । तत्त्वं च किंचित्तत्त्वस्याहंकारस्योपादानत्वं महति तत्त्वे सति किंचित्त्वं प्रकृतिस्तस्या उपादेयत्वं किंचित्तत्त्वस्येति षष्ठ्याऽभेदोर्थकः । षष्ठ्योर्निरूपितमर्थः । एवमन्यत्रापि । षोडशके विकारत्वं पञ्चस्थूलभूतान्येकादशेन्द्रियाणि च षोडशके विकारत्वं न प्रकृतित्वं तत्त्वान्तरभ्यो भिन्नत्वाभावात् । साक्षात्तत्त्वानि महदादीनि । न च मनसो महत्तत्त्वमतः षोडशकत्वं विकारस्येति कथमिति वाच्यम् । अहंकारवच्चित्तबुद्ध्योः पृथक्कृत्वात् दोषाभावात् । उक्तेति प्रकृति-प्रकृतिविकृति-विकृतिभ्यो विलक्षणत्वम् । तदुक्तं 'सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः प्रकृतेर्महान् महतोहंकारात् पञ्चतन्मात्राण्युभयमिन्द्रियं स्थूलभूतानि पुरुष इति पञ्चविंशतिर्गुणाः' इति प्रवचनसूत्रवृत्तौ । भाष्ये । अन्यथेति पञ्चपञ्चकत्वप्रकारादन्यः प्रकारः । चतुष्कत्वं तत्त्वान्तरोपादानत्वं किंचित्तत्त्वोपादानत्वे सति किंचित्तत्त्वोपादेयत्वं साक्षात्तत्त्वोपादेयत्वम् । उक्तत्रितयविलक्षणत्वमेतेषामुपगमात् पञ्चविंशतितत्त्वेषु । प्रकृते । दूषणेति पुरुषस्य जनत्वापत्तिरूपं दूषणान्तरम् । तदिति 'असङ्गोऽयं पुरुषः इति' इति सांख्यप्रवचनसूत्रात् । वैलक्षण्यवति पुरुषे जनकत्वापत्त्या तथावैलक्षण्याभावप्रसङ्गः । ननु 'प्रकारवचने थाल्' इति तथापदस्योक्तप्रसङ्गोर्थः कथं स्यादिति चेन्नास्य पुरुषधर्मत्वेन प्रकारत्वात् । असङ्गस्य पुरुषस्य वैलक्षण्यमजहत्स्वार्थलक्षणया जनपदवाच्यत्वं चाशङ्क्य निषेधन्ति स्म न चेति । एतत्स्वमिति असङ्गपुरुषसंग्रहात् । तथाहि । यथा छत्रिण इत्यत्र एकसार्थवाहित्वे छत्रिपदलक्षणा इयमेवाजहत्स्वार्था लक्षणोच्यते । एकसार्थवाहित्वेन छत्रितदन्ययोर्बोधात् । तथा जनपदस्यैकप्रक्रमपठितत्वे लक्षणा । एकप्रक्रमपठितत्वेन जनतदन्ययोर्बोधात् । तत्रेति दृष्टान्ते । वृत्तिद्वयेति गौणीयोगरूढ्योरापातात् । ननु छत्रिपदस्य वृत्तिद्वयमस्त्येवेत्यत आहुः अगतीति । हेत्वन्तरमिति सौत्रमति-

## प्राणादयो वाक्यशेषात् ॥ १२ ॥

नन्ववश्यं मन्त्रस्यार्थो वक्तव्यः। तदनुरोधेन लक्षणयापि ज्योतिःशास्त्रवत् पञ्चपञ्चशब्दः पञ्चविंशतिवाचकतया परिकल्प्यः। स्पष्टमाहात्म्यार्थमात्माकाशयोराधाराधेयभावः प्रदर्शितस्तत्रत्ययोरेव। अतो मन्त्रे तन्मतसिद्धिरित्याशङ्क्य

---

भाष्यप्रकाशः।

किंचेत्यादि। आकाश आत्मा चेत्येतयोरतिरेकाज्जनशब्दोक्तेभ्य आधिक्यात् संख्याविरोधे सति न तन्मतसिद्धिरित्यर्थः॥ ११॥

प्राणादयो वाक्यशेषात्॥ १२॥ सूत्रमवतारयन्ति नन्वित्यादि। अयमर्थः। पञ्चविंशतिसंख्योपसंग्रहे मन्त्रवर्णविरोधो दोषत्वेनोक्तः। सोऽस्माभिः परिह्रियते। यतो मन्त्रस्यार्थो भवतामस्माकं चावश्यं वक्तव्यः। तत्र भवन्मते आत्मनि प्रतिष्ठिता द्विपञ्चसंख्याकाः पञ्चविंशतिसंख्याका वा एते जनाः, पञ्चसंख्याका वा एते पञ्चजना इति निश्चेतुमशक्यत्वादस्मन्मते तु पञ्चविंशतिसंख्याकानां तत्त्वानां निश्चितत्वादस्मन्मतमेव ज्यायः। एवं सति तदनुरोधेन यथा, 'पञ्च सप्त च वर्षाणि न ववर्ष शतक्रतुः' इत्यत्र द्वादशसंख्याघटकतया पञ्च सप्तेति पदद्वयेऽवयवद्वारेण समुदाये लक्षणा। तथात्र पञ्चविंशतिसंख्याघटके पञ्चेतिपदद्वये समुदाय-

रश्मिः।

रेकादिति हेतुम्। संख्येति। सप्तविंशतिसंख्यापत्त्या पञ्चविंशतिसंख्याविरोध इति। न चाकाशः स्थूलभूतमात्मापुरुष इति कुतोतिरेक इति चेन्न यस्मिन् पञ्चपञ्चजना इति श्रुतौ यच्छन्दार्थ आत्माकाशश्च तयोरतिरेक आधिक्यं पुनरुक्त्यापत्तेः। भाष्ये श्रुतावयमिति यस्मिन् पञ्चपञ्चजना इति श्रुतौ अयं पञ्चविंशतिसंख्याप्रतिरूपोर्थः। प्रतीयत इति आत्माकाशयोः पञ्चविंशतिसंख्यातोतिरेकस्यातिरिक्तत्वस्य सत्त्वात्। तदाहुः सौत्रं हेतुम्। अतिरेकादिति आकाश इति अनेन भाष्येण सौत्रचकारार्थाकथनेन च ज्ञायते नायं श्रुत्यर्थ इति भाष्यमतिरेकाच्चेति सौत्रचकारार्थप्रतिपादकमिति। तथा चानुक्तसमुच्चयार्थकश्चकार इति भावः। आकाशश्चेति सौत्रचकारादात्मा। नन्वात्मग्रहणे किं बीजमत आहुः यस्मिन्निति। ननु कथमेकस्याधाराधेयभाव इति चेन्न 'अदृश्यत्वादिगुणको धर्मोक्तेः' इत्यधिकरणे एतादृश एव ब्रह्मवाद इति भाष्यात्॥ ११॥

प्राणादयो वाक्यशेषात्॥ १२॥ ननु सत्यमुक्तं मन्त्रवर्णे सप्तविंशतिसंख्या वर्तत इति। तथाप्यस्माकं शास्त्रत्वाच्छ्रुतार्थो वक्तव्य एवेति तमर्थान्तरेण प्रत्यवतिष्ठन्तं सांख्यं प्रत्याहुः भाष्ये इत्याशयेनाहुः अयमिति। मन्त्रवर्णो यस्मिन् पञ्चपञ्चजना इति। द्वीति। द्वौ च ते पञ्चेति विग्रहे 'तत्पुरुषः समानाधिकरणः कर्मधारयः' संख्यापूर्वो द्विगुरित्यत्र चरितार्थः। दशसंख्याका इत्यर्थः। पञ्चजनाः पुमांसः। ज्योतिःशास्त्रवदिति भाष्यं विवृण्वन्ति स्म यथेति। द्वादशवर्षाणि इन्द्रो न ववर्षेत्यर्थः। द्वादशसंख्या घटयतीति द्वादशसंख्याघटकपदद्वयम्। अत्रेति। अत्र पञ्चपदेन पञ्चानां संख्येयानां वर्षाणामुपस्थितिः सप्तपदेन सप्तानां संख्येयानां वर्षाणामुपस्थितिः समवायेन कीदृशेनावयवौ पञ्चसप्तरूपौ, द्वारे अभ्युपायौ निर्गमौ यस्य 'द्वारं निर्गमे अभ्युपाये' इति हैमः। समुदाये द्वादशसंख्येयरूपे लक्षणा। अवयवद्वयसमवायरूपा। समुदाय इति। पञ्चविंशतिसंख्येयरूपे लक्षणा पञ्चावयवसमवायसंबन्धरूपा तथा। परिकल्प्य इति भाष्येणान्वयः। भाष्ये लक्षणयापीत्यपिपदं समुच्चये तदर्थ-

परिहरति । प्राणादयः पञ्चजनाः वाक्यशेषस्य मन्त्रार्थनियामकत्वात् । 'प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो मनः' इति ।

भाष्यप्रकाशः ।

लक्षणया, अथवा, त्रिणवेनौजस्कामं याजयेत्, 'युद्धं त्रिणवरात्रं तदभूत्तुमुलमुल्वणम्'इत्यत्र यथा त्रयो नव यत्रेति बहुव्रीहिस्तथात्र पञ्च पञ्च यत्रेति बहुव्रीहिणा सुन्लुका च गणलक्षणयापि ज्योतिःशास्त्रे इव पञ्चपञ्चशब्दः पञ्चविंशतिवाचकतया परिकल्प्यः । एवं वाचकत्वे कल्पितेऽत्र पञ्चविंशतितत्त्वसिद्धावेवं मन्त्रार्थः । यस्मिन् पञ्चविंशतिसंख्याकानि तत्त्वानि आकाशश्च प्रतिष्ठित उत्कर्षं प्राप्तस्तमात्मानमेव ब्रह्माऽमृतं विद्वान् अमृतो मुक्तो भवतीति मन्य इति । न च तत्त्वेष्वात्माकाशयोः प्रविष्टत्वात् पुनस्तत्कथनमतिरेकापादकतया बाधकमिति शङ्क्यम् । यतोऽत्र तत्रत्ययोर्गणस्थयोरेवात्माकाशयोराधाराधेयभावः । आत्मनः स्पष्टमाहात्म्यार्थं प्रदर्शितो योऽन्यत्र सर्वाधारत्वादिधर्मवत्तया प्रसिद्धः सोऽपि यस्मिन्निति । अत्रात्मन आधारता, मोक्षे इच्छाऽस्तीतिवद् विषयतया । तथा च यस्मिन्नात्मनि विषये तत्त्वान्याकाशश्च संघातरूपतया परार्थत्वेन ज्ञेयत्वरूपां प्रतिष्ठां प्राप्तवन्तस्तमात्मानं विद्वाँस्तथेति निर्गलितोऽर्थः । अतो मन्त्रे तन्मतसिद्धिरित्याशङ्क्य परिहरतीति । परिहारं व्याकुर्वन्ति प्राणादय इत्यादि । भवेदयं मन्त्रविरोधपरिहारो यद्यसन्मते पञ्चजनानामनिश्चयः स्यात् । स तु नास्ति । यतः प्राणादयो निश्चिताः पञ्चजनाः । कुतः ? वाक्यशेषात् । बहूनां प्राप्तौ वक्ष्यमाणस्य वाक्यशेषस्य मन्त्रार्थनियामकत्वात् ।

रश्मिः ।

माहुः अथवेति । सुन्लुकेति 'अव्ययादाप्सुपः' इति सूत्रेण लुकृता बहुत्वसंख्या प्रथमपञ्चपदाल्लुकृता पञ्चदशसंख्या द्वितीयपञ्चपदाद्बहुत्वं पञ्चैवेति पञ्चविंशतिः । गुणेति गुणे विशेषणे लक्षणा पञ्चगुणितेषु अवयवेषु समवायः तयापि । ज्योतिरिति गुणपदं गुणितेषु तद्वत् । उत्कर्षमिति विकारत्वं माहात्म्यसूचकत्वं वा । यद्यपि मायाऽविद्याप्रकृतिवादाः किंचित्परस्परं विलक्षणा अपि मुक्त्यंशे भिन्ना इति मायावाद्यनुसार्यर्थः पूर्वोक्तो वक्तव्यस्तथापि जगन्नित्यत्वपरिणामभक्त्यङ्गीकारपूर्वकं 'मुक्तिरन्तरायध्वस्ते र्न परः' इति सूत्रणात् । तन्मतरीत्यार्थमाहुरुभयार्थमिश्रणेन । तमात्मानमिति । मन्य इति अहममृतो ध्वस्तान्तराय इति मन्य इत्यर्थः । स्पष्टमिति भाष्यं व्याकर्तुमाहुः न चेति । अस्तीति । भिन्नत्वापादकतया सप्तविंशतितत्त्वानुसंधानजनकतया सांख्यमतबाधकम् । गणेति पञ्चविंशतिगणस्थयोः । माहात्म्यमाहुर्योन्यत्रेति । अन्यत्र गीतादौ 'आकाशवत् सर्वगतश्च नित्यः' इति । अत्रेति श्रुतौ विषयेति वैषयिकाधारे सप्तमी । विषय इति विषये आधारे तत्त्वानि तत्त्वान्तर्गत इन्द्रियाणामिवान्येषामपि सविषयत्वेन । आकाशस्तु तत्त्वान्तर्गतोप्युक्तमाहात्म्यार्थं पृथगुपात्तः । ननु माहात्म्यस्य सांख्ये कोपयोगः इति चेन्न स्नेहकारणत्वादस्य भक्तौ तात्पर्यं भविष्यति ।

'एकं सांख्यं च योगं च वेदारण्यकमेव च ।
परस्पराङ्गान्येतानि पञ्चरात्रं च कथ्यते' ॥ इति भारतात् ।

पञ्चरात्रे 'स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथा' इत्युक्तेः । संघातेति । 'संघातपरार्थत्वात्पुरुषस्य इति' इति सूत्रे यदेते संहता भावा तदैतदर्थं पुरुषः 'शरीरादिव्यतिरिक्तः पुमान्' 'संहतपरार्थत्वात्' इति सूत्राभ्यां परार्थः पुरुष इति प्रयोगे परार्थत्वेन पुरुषमाने पुरुषस्यासंगत्वादाधेयत्वेन ज्ञेयत्वरूपाम् । तमात्मानमिति तमात्मानमेवेति पूर्वमुक्ते सेश्वरसांख्यापत्तिरदूष्यत्वं चातस्तत्पुरुषमात्मानं जीवं विद्वानिति लाघवोक्तिः । अर्थस्योक्तत्वात् । तथेति इति पूर्वोक्तप्रकारेण ।

ननु कथमस्य वाक्यशेषत्वम्। उच्यते । प्राणादयः संज्ञाशब्दाः करण-वाचकाः । ते ज्ञानरूपं वा, क्रियारूपं वा कार्यं जनयन्ति स्वव्यापारेण । तत्र तेषां करणान्तरापेक्षाभावात् प्राणादीनां पुनः प्राणादिमत्त्वं बाधितं स्यात्। भगवतो

भाष्यप्रकाशः ।

एतस्य वाक्यशेषत्वे प्रत्यवतिष्ठते नन्वित्यादि । एकवाक्यलक्षणे परस्परसाकाङ्क्षत्वस्यैकवाक्यता-बीजस्य सूचितत्वात् तस्याश्चात्राप्रतीयमानत्वे एकवाक्यत्वाभावेन शेषताया निश्चेतुमशक्यत्वात् कथमस्य वाक्यशेषत्वमित्यर्थः । एवं प्रत्यवस्थाने तां व्युत्पादयन्ति उच्यते प्राणादय इत्यादि । सत्यमापाततो नाकाङ्क्षा प्रतीयते । तथापि सूक्ष्मविचारे, प्राणादय इत्यादिनोक्तप्रकारेण पुनः प्राणादिमत्त्वं बाधितं स्यादित्यतः प्रतीयते । किंच । ते निचिक्युरित्युत्तरार्धाद् भगवतो माहात्म्यनिरूपणार्थमिदं वाक्यं प्रवृत्तम् । सांख्यमते चेश्वरानङ्गीकाराद् भगवतो माहात्म्य-

रश्मिः ।

निर्गलितो निष्कृष्टः । बहूनामिति पञ्चानाम् । भाष्ये वक्ष्यमाणस्य । एतस्येति भाष्योक्तस्य प्राणस्य प्राणमित्यस्य । न तु वाक्यस्य यस्मिन् पञ्चपञ्चेत्यस्य शेषः तदर्थः । पारार्थ्यं शेषलक्षणमिति पञ्चपञ्चजना इति गूढार्थं इति तदग्रेतनवाक्ये प्राणादिपञ्चोक्तेः तच्छेष इति । नन्विति भाष्यस्य किं प्रयोजनमित्याकाङ्क्षायां वाक्यशेषत्वे कारणं वक्तुम् । मुक्तावल्यामपि वाक्यशेषे एकवाक्यतायाः कारणभूताया अनुक्तेस्तामाहुः एकेति । पूर्वतन्त्रे द्वितीयाध्याये 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्' इति सूत्रे । सूचीति यदि विभागे साकाङ्क्षं स्यात् तदैकवाक्यं स्यात्, अर्थैकत्वादित्यत्र हेतुहेतुमद्भावे लिङ्गाबोधितत्वं यद्यपि तथापि अर्थैकत्वादेकं वाक्यं भवति चेद्विभागे साकाङ्क्षं स्यात् इत्यर्थे लिङ् भावाद् हेतुहेतुमद्भावस्य सूचितत्वम् । शेषताया इति एतस्य प्रयोजनं वै यस्य तो न तृप्यति निषादपञ्चमा वर्णा इत्येतयोरसंग्रहोऽग्रे । एवं सतीत्यनेनात्रैव स्फुटीभविष्यति । तामिति आका-ङ्क्षाम् । प्राणादय इति एतेषां संज्ञाशब्दत्वकथनं पाचको याचक इतिवदुभयो संज्ञाशब्दत्वार्थम् । यद्वा प्राणा आदिर्येषां ते प्राणादय इत्यत्र 'न संज्ञायाम्' इति सूत्रेण 'शेषाद्विभाषा' इति सूत्र-विकल्पितकबभावो नित्यः । तेन प्राणादय इति सौत्रप्रयोगः । न कदापि प्राणादिका इति सूचितम् । ज्ञानकरणानि ज्ञानरूपं कार्यं कर्मेन्द्रियाणि क्रियारूपं कार्यम् । करणत्वं व्यापारनियतमत आहुः स्वेति । करणेति । द्वितीयान्तप्राणादिपदवाचकानामपेक्षाभावात् । उत्तरत्र हेतुः । बाधितमिति बाधितत्वमाधाराधेयभावः । अनेन उक्तप्रकारेण । प्रतीयत इति अर्थान्तराकाङ्क्षा प्रतीयते प्राणादीनां भगवतः प्राणादिरूपस्याकाङ्क्षा वर्तते । ननूक्तं न कारणानां कारणान्तरापेक्षेति । अत्रोच्यते । 'यद्वाचानभ्युदितं येन वागभ्युद्यते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' इति केनोपनिषच्छ्रुतेः भगवत आकाङ्क्षास्ति । भगवत इति भाष्यं विवृण्वन्ति स्म किं चेति । ननु द्वितीयप्राणादीनां भगवति शक्तौ किं मानमत आहुः ते निचिक्युरिति ते निचिक्युर्ब्रह्म पुराणमग्र्यम्' 'मनसैवानुद्रष्टव्यम्' 'नेह नानास्ति किंचन' इति 'ये प्राणस्य प्राणमिति विदुः ते ब्रह्मपुराणमग्र्यं निचिक्युः ज्ञातवन्तः । अत्र ब्रह्मज्ञानोक्तेः प्राणस्य प्राणमित्यादि भगवतो माहात्म्यं देवत्वं तन्निरूपणार्थे । अतो द्वितीयप्राणादिशब्दार्थो भगवान् । किं च शारीरब्राह्मणेपि भगवत्प्रकरण-मस्ति । सांख्येपि किंचिदाहुः सांख्येति चकारस्तदर्थे । सांख्यमते त्वीश्वरानङ्गीकारान्नेदं प्रवृत्तम् ।

माहात्म्यविरोधश्च । अतः स्वार्थनिर्वाहार्थमन्यार्थो वर्तते पञ्चजनवाक्यस्य च । अतो बुद्धेः पञ्चवृत्तीर्जनयन्तीति प्राणादयः पञ्चजनाः ।

---

भाष्यप्रकाशः ।

विरोधश्च स्यादतोऽपि सा प्रतीयते । अतस्त्वद्रीत्या वाक्यस्याबोधकत्वात् तस्य स्वार्थनिर्वाहार्थमन्योऽर्थो वर्तते । अन्यार्थे वर्तत इति सप्तम्यन्तपाठे तु, तद्वाक्यमन्यार्थे वर्तते इत्येवं व्याख्येयम् । पञ्चजनवाक्यस्य च सांख्यरीत्या पञ्चपञ्चकनिष्ठधर्मपञ्चकानुपलम्भात् पञ्चपञ्चजननिश्चायकोऽन्योऽर्थो वर्तते । स क इत्यपेक्षायां संशयादिरूपपञ्चबुद्धिवृत्तिजनकाः पञ्चजनास्ते यस्मेति पञ्चानां ब्रह्मणि प्रतिष्ठितत्वमर्थः प्रतीयते । तदेतदुक्तमतो बुद्धेरित्यादि । एवं सति प्राणवाक्यं तेषां करणत्वं बोधयत् पञ्चजनवाक्यसूचितं कार्यमाकाङ्क्षते, पञ्चजनवाक्यं च तेषां तदित्यादिनोक्तरीत्या प्राणवाक्योक्तं भगवन्तमाकाङ्क्षत इति द्वयोर्विभागे साकाङ्क्षत्वे ब्रह्मबोधकतया च द्वयोरेकार्थत्वे ब्रह्मज्ञानार्थतया द्वयोरेकप्रयोजनकत्वे च सति यदत्रानुपपद्यमानत्वेनोक्तं तत् सर्वं संगतं स्यादतोऽस्य वाक्यशेषत्वम् । यदि चोभयोः परस्परसाकाङ्क्षत्वाद् गौणमुख्यभावाच्च एकस्य शेषित्वमपरस्य शेषत्वमिति नोपेयते, तदा तु साकाङ्क्षत्वेन खण्डत्वादेव शेषत्वमतो

रश्मिः ।

अस्त इति शेषः । अतो द्वितीयप्राणादिपदार्थोऽन्यश्चेद्भगवतो माहात्म्यविरोधः । स्येति अर्थान्तराकाङ्क्षा । अत इति भाष्यं विवृण्वन्ति अत इति सांख्यरीत्या । भाष्यं प्रतीकं धृत्वा स्वयं विवृण्वन्ति पञ्चेति । पञ्चकाः इति पञ्चविंशतितत्त्वावयवाः पञ्चकाः पञ्च तन्निष्ठो यो धर्मपञ्चकस्तस्यानुपलम्भात् । किं तु प्रकृतिर्विकृतिरिति कारिकोक्तमविकृतित्वादिरूपं चतुष्कम् । अतो बुद्धेरिति भाष्यं विवृण्वन्ति स स क इति । पञ्चजना इति अत्र पञ्चबुद्धिवृत्तीर्जनयन्ति ते पञ्चजनाः कर्मणि घञ् । पञ्चानां जनाः पञ्चजनाः 'दिक्संख्ये संज्ञायाम्' इति समासः । सामानाधिकरण्यनियमस्य छन्दसि विकल्पात् । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति परिभाषया । सामानाधिकरण्यपक्षे तु 'उपपदमतिङ्' इति सूत्रेण समासः । भाष्ये वाक्यं तु तृतीयस्कन्धस्य षड्विंशेऽध्याये । तेषां तदिति वाक्यं विवृण्वन्ति स एवमिति । पञ्चजनेति एकार्थीभावात्पञ्चजनेषु शक्तिः समासशक्तेः । बुद्धिवृत्तिरूपं कार्यं तु तात्पर्यवृत्त्या । विग्रहेण तत्प्रतीतीच्छयोच्चरितत्वं तात्पर्यं तदवगतेः । तेषां तदिति तेषां प्राणानां तत्तद्गन्धत्वादिप्रकारो यत्र गन्धादिज्ञानेषु तादृंशि स्वकार्याणि प्राणकार्याणि तेषां जननं न स्वतो न प्राणेभ्यो किं तु भगवतोऽजडत्वात् । केनोपनिषच्छ्रुतेः । इति द्वयोरिति भाष्यार्थमाहुः इति द्वयोरिति । सर्वमिति भाष्यार्थमाहुः यदत्रेति । यदत्र प्राणवाक्ये पञ्चजनवाक्ये च । अनुपपद्येति प्राणादीनां प्राणादिमत्त्वं पञ्चजनानां पञ्चत्वम् । ननु सर्वादीनि सर्वनामानीति अन्वर्थसंज्ञाकरणात् किं किमन्यस्संगतमिति चेन्न प्राणस्य प्राणवत्त्वं चक्षुषः चक्षुष्मत्त्वं इत्येवं प्रातिस्विकरूपैः सर्वं बोध्यमिति । अतोऽस्येति विभागे साकाङ्क्षयोरर्थः प्रयोजनं ब्रह्मज्ञानं तस्यैकत्वात् । एकं वाक्यमस्मात् वैवस्वतो न तृप्यतीत्यस्य निषादपञ्चमानां वर्णानां च पञ्चजनप्रतिपादकत्वं पञ्चजनत्वं चेत्युक्तम् । मन्त्रस्य यममाहात्म्यपरत्वात् । निषादेत्युक्तानां लौकिकत्वात् । जना यदग्निमित्यत्र तु पञ्चजना ये ते एव 'वनस्पतयः सत्रमासते' इति श्रुतेः । खण्डत्वादिति भाष्यं विवृण्वन्ति यदि चेति । उभयोरिति यस्मिन् पञ्च पञ्चजना इत्यस्य प्राणस्य प्राणमित्यस्य च । साकाङ्क्षत्वेनेति

'संशयोऽथ विपर्यासो निश्चयः स्मृतिरेव च ।
स्वाप इत्युच्यते बुद्धेर्लक्षणं वृत्तितः पृथक्' ॥

इति । तेषां तत्तत्प्रकारकं स्वकार्यजननं न स्वतः किंतु भगवत इति द्वयो रैकार्थत्वे सर्वं संगतं स्यात् । खण्डत्वाच्च शेषत्वम् । सर्वप्रवर्तकत्वात् भगवतो न माहात्म्यविरोधः । तत्र प्राणशब्देन त्वग्घ्राणप्राणा गृहीताः । रसना वाचे

भाष्यप्रकाशः ।

न वाक्यशेषत्वानुपपत्तिरित्यर्थः । ननु प्राणादिप्रवर्तकत्वं जीवस्याप्यस्तीति भगवन्माहात्म्यमत्र वाक्यद्वयेऽपि न स्फुटतीति तद्विरोधात् कथमस्य ब्रह्मवाक्यत्वमित्यत आहुः सर्वेत्यादि । नन्वत्र पञ्चैव प्राणादयः प्रतीयन्ते, नान्ये इति कथमत्र सर्वप्रवर्तकत्वसिद्धिरित्यतः पञ्चसु सर्वनिवेशं व्युत्पादयन्ति तत्रेत्यादि । प्राणशब्दो मुख्यप्राणवाचकः । स च वायुरूप इति प्राणशब्देन वायुविकारभूता त्वक्, तत्सहभूतं घ्राणं मुख्यप्राणस्य रूपान्तरभूता अन्ये अपानादयः प्राणा गृहीताः । रसना वाचे प्रतिष्ठिता 'तमिरमस्य वर्धते' इति वाक्यादत्यन्तासा-

रश्मिः ।

यस्मिन् पञ्चपञ्चेति वाक्यस्य ह्याकाङ्क्षत्वेन प्राणस्य प्राणमिति वाक्यं पञ्चसंख्यापूरकं यावत् तावतो खण्डत्वं पूर्ववाक्यशकलत्वं तस्माच्च शेषत्वमतो नैव वाक्यशेषत्वानुपपत्तिः । एवकारो न-शब्देनान्वयी । भाष्ये चकारस्यान्यार्थत्वाभावात् । नैवशब्दार्थकत्वम् । जीवस्येति 'तमुत्क्रामन्तं प्राणोनूत्क्रामति प्राणमनूत्क्रामन्त५सर्वे प्राणा अनूत्क्रामन्ति' इति श्रुतेः । तं जीवम् । स्फुटतीति तु. प. स्फुट विकसन इत्यस्य रूपम् । स्फोटतीति तु स्फुट विशरणे भ्वा. प. से. रूपम् । धातूनामनेकार्थत्वात् प्रयुक्तमन्यत्रास्माभिः स्फुट विकसन इत्यस्यैव रूपं नामधातुत्वाद्वा तत्प्रयुक्तम् । सर्वेत्यादीति सर्वान्तर्गतो जीवोपि । तेन जीवस्याणुत्वान्न व्यापकत्वं तत एव न प्राणादिप्रवर्तकत्व-मित्यग्रे वक्ष्यते । प्राणादीनां सर्ववाचकत्वं व्युत्पादयन्ति प्राणशब्द इति । प्राणपदे वर्णविकारात् घ्राणवाचकं घ्राणपदमनुक्त्वा प्राणपदोक्त्या प्राणान् पञ्चेन्द्रियाणि चानुक्तानि सूचयति तत्र सूचितार्थे उक्तः प्राणशब्द इति वाचको व्यञ्जनया । त्वक् स्वरूपमाहुः वाय्वित्यादि तथा च सूत्रे प्राणश्च प्राणश्च प्राणश्च प्राणश्च प्राणश्च प्राणाः सरूपैकशेषः । व्यञ्जनापक्षे श्रुतौ प्राणस्येत्येकवचनं प्राणापेक्षं जात्यभिप्रायेण व्यञ्जनापक्षे । तत्र द्वितीयप्राणशब्दस्त्वचो वाचकः प्राणपदे हल्विकारः प्राणादय इति भाष्यात् । तस्याभिधावृत्तिर्घ्राणे तदाहुः तत्सहेति । ततोभिधावृत्त्या घ्राणं प्राणपद-वाच्यं प्रसिद्धं हेति । स भगवान् श्रुतिप्रसिद्धः प्राणमिति द्वितीयान्तमुक्तं तदर्थं उक्तः । पुनः तृतीयार्थमाहुः मुख्येति । रसनेति भाष्यार्थमाहुः रसनेति रस आस्वादने रसाः षड् मधुराम्ल-लवणकटुकषायतिक्तभेदात् । रसयन्ते ये इति रसाः चु. प. से. कर्मणि घञ् । तदुक्तं प्रश्नोपनिषदि रसं च रसनीयं चेत्युक्त्वा एष पुरुषः परेऽक्षरेत्युक्तम् । तत्र रसो रसना रसनीयमन्नं पुरुषरूपं तदक्षरं उक्तं तथाप्यक्षरस्य साधारणाश्रयत्वात् संनिहितान्नत्यागे मानाभावाद्विशेषाश्रयत्वमन्नस्य न जिह्वायाः श्रुतावग्रहणात् । न चान्नं पृथिवी सा चान्नं जिह्वेति शङ्क्यम् । पुराणमतत्वात् । तृतीयस्य स्कन्धे ।

'विर्भिन्ने तालु वरुणो लोकपालोविशद्धरेः ।
जिह्वयांशेन च रसं ययासौ प्रतिपद्यते' ॥ इति ।

प्रतिष्ठितेत्यन्नं गृहीतम् । वाग् वा तेजसि । अत्ता चान्नं चैकत्र भवतः । सह-भावित्वात् क्वचिदेकग्रहणं, क्वचिदुभयग्रहणमिति तेनैते सर्वे पञ्चैव भवन्त्यति-रिच्यते परमाकाशः ।

---

भाष्यप्रकाशः ।

काङ्क्षिणीति तद्ग्रहणायात्रान्नं गृहीतम् । पाठान्तरेऽन्नस्थाने ज्योतिः पठितम् । तच्च तेजः ।

रश्मिः ।

जिह्वापीन्द्रियमिति सुबोधिनी । रसति अनयाऽस्यां वा रसना । णिचो वैकल्पिकत्वं अन्ने प्रतिष्ठितत्वमेवं 'रसना' इन्द्रियम् । रामानुजभाष्ये तु अन्नस्येति घ्राणरसनयोः तन्त्रेणोपादानमन्न-शब्दोदितपृथ्वीसंबन्धित्वादित्युक्तम् । 'पृथ्वी वा अन्नमिति' अत्र प्रमाणमाहुः ताम्निरन्नेति निष्क्रान्तोन्नान्निरन्नः पुरुषः 'अन्नात् पुरुषः' इति श्रुतेः, यतो पुरुषस्य वर्धते अतोन्ने प्रतिष्ठिता पुरुषस्या-न्नान्निर्गतस्यान्नत्वात् यथा घटो मृदिति प्रतीतिः समवायित्वात्तथा पुरुषोन्नमिति प्रतीतिः । ननु निरोषधेर्वर्धते इति कुतो नोक्तं साक्षादन्ने प्रतिष्ठितत्वसंभवादिनि चेन्न पुराणस्याज्ञासिद्धत्वात् न चैवं सति पुंसो वर्धत इत्युक्त्या अन्नात्पुरुष इत्युक्त्या पुरुषप्रतिष्ठिता सती जायते, अस्ति, विपरिणमते, इति शङ्क्यम् । 'अत्ता चान्नं चैकत्र भवतः' इति भाष्यात् । अत्तृत्वं तु जिह्वायां यतो जिह्वा गलाधः-संयोगानुकूलव्यापारवती तत्रान्नमत्र विवक्षितं अन्ने रसना इन्द्रियरूपा करणाधिकरणयोश्चेति निष्पन्ना न भावल्युडन्ता । शारीरब्राह्मणस्थत्वेन विचार्यवाक्यानां शरीरस्य तत्र त्याज्यत्वेन षड्रसानां स्थूलस्थत्वादत्र भावल्युडन्ततामावात् । ननु जिह्वायां प्रतिष्ठिता रसनं जिह्वाग्रवर्तीति नैयायिकग्रन्था-दिति चेन्न रसना हि रसग्राहिकेति रसग्रहकारणं कारणताग्राहकस्तर्को न जिह्वाग्रवर्तित्वेऽपि तु अन्ने प्रतिष्ठिततत्वे अन्नसत्त्वे रसग्राहकत्वं तदभावे तदभाव इति रसाभिव्यक्तिस्थानत्वं भवतु जिह्वाग्रस्येति अन्नं पृथिवीति पक्षे जिह्वा अन्नं तस्मिन् प्रतिष्ठिता न चान्नमत्र पृथिव्याधिदैविकी रूपत्रयोक्तेः । तदन्नं त्रिवृत्कृतम् । त्रिवृत्करणस्य पुरुषं प्राप्य भिन्नत्वात् । तदन्नमत्ता बृहदारण्यकोक्तः 'सर्वमत्तुमध्रियत' इति श्रुतेः । न च गलाधःसंयोगानुकूलव्यापाराभावः शङ्क्यः 'सर्वतोक्षिशिरोमुखम्' इति श्रुतेः । तथा चात्ता चान्नं चैकत्र भवतः इति भाष्यस्यायमर्थो रसनायास्तत्राकाङ्क्षया संभवान्न पूर्वोक्त इति वाच्यम् । सहभावित्वादिति भाष्यविरोधात् 'तस्माद्वा एतस्मादात्मन आकाशः संभूत आकाशाद्वायुः वायोरग्नि-रग्नेरापः अद्भ्यः पृथिवी पृथिव्या ओषधयः ओषधिभ्योऽन्नमन्नात्पुरुषः' इति श्रुतौ आत्मन आकाशो-त्पादकत्वेन सर्वपूर्वत्वं अन्नस्य तु औषधिभ्योऽर्वाक्त्वमिति सहभावित्वाभावात् । वृद्धिस्तु परिणामस्य ।

'पूर्वरूपपरित्यागो द्वितीयस्यादिमस्तथा ।
उभौ चैकीकृतौ लोके वृद्ध्यादिभिरुदितौ' ॥

इति द्वितीयस्य दशमाध्याये 'आभासश्च विरोधश्च, इति श्लोकेस्ति । यद्वा अन्ने प्रतिष्ठितेति भाष्ये नान्नपदेनान्नजः पुरुषः किं तु अन्नमेवेति पक्षे । अत्र प्रमाणमाहुरिति न संभवत्यतस्त-न्निरन्नेत्युत्तरत्र हेतुः यतः पुंसो वर्धतेऽतोत्यन्तान्नाकाङ्क्षिणी आकाङ्क्षा पुरुषगता रसनायामारोप्यते पुरुषोत्पन्नाकाङ्क्षा क्षुधितोत्पन्नाकाङ्क्षी यद्यपि तथापि 'रसवर्जं रसोप्यस्य परं दृष्ट्वा निवर्तते' इत्यतिक्षुधितो रसनावानपि । उपलक्षणार्थं रसनान्नयोराकाङ्क्ष्याकाङ्क्षकभावसंबन्धोप्युक्तः । तथा चान्नपदं रसनोपलक्षणार्थं गृहीतमिति भाष्यार्थः । तद्ग्रहणायेति उपलक्षणविषया रसनाग्रहणायान्नं गृहीतमित्यर्थः । तथा च प्रश्नोपनिषच्छ्रुतिः रसश्च रसनीयं चेति अत्र रसो सना प्रायपाठात् रसनीयमन्नं रस इत्यत्र वर्णलोपः । वाग्वेति भाष्यार्थमाहुः पाठेति

भाष्यप्रकाशः ।

वाक् च तेजोमयीति सा तेजसीति तेन वाक्संग्रहः । अथा चाजं चैकत्र भवतः । अत्रार्थमेवान्न-प्राकट्यात् । अतोऽन्नग्रहणेनैवाचापि गृहीतः । तथा च तस्य तस्य तत्तत्सहभावित्वात् क्वचिदेकग्रहणं, क्वचिदुभयोर्ग्रहणम् । तेजसेकस्या वाचो ग्रहणम् । प्राणान्नयोस्तूभयोस्त्वग्घ्राणयो रसनान्नयोश्च ग्रहणमिति सिध्यति । तेन प्राणादिपदैरन्येषां संगृहीतत्वेन, चक्षुःश्रोत्रमनसां च कण्ठत उक्तत्वेनैते सर्वे प्राणवाक्ये पञ्चसु निविष्टत्वात् पञ्चैव भवन्ति । अतः पञ्चजनवाक्येऽपि पञ्चजनपदेनैत एव संगृह्यन्ते । अतिरिच्यते परमाकाशः । स च भूतत्वादिविषया पृथिव्या-दीनां भूतानां तद्गुणानां च संग्राहक इति तेषां सर्वेषां ब्रह्मणि प्रतिष्ठितत्वकथनात् प्राणवाक्ये च तत्प्रवर्तकत्वकथनाज्जीवे तादृशत्वाभावेन वाक्यद्वयेऽपि भगवन्माहात्म्यमेव स्फुटतीति ब्रह्मवाक्यत्वमेतयोरविवादमित्यर्थः । एतेन बुद्धिवृत्तिजनकत्वं चक्षुःश्रोत्रमनसामेव, न तु

रश्मिः ।

माध्यंदिनपाठादन्यः पाठः काण्वपाठः पाठान्तरं तस्मिन् । तेजोमयीति त्रिवृत्करणप्रसङ्गे तेजोऽशितं त्रेधा विधीयत इत्युक्त्वा 'योणिष्ठः सा वाग्' इत्युक्तेस्तेजोविकारः, विकारे मयट्, 'अग्निर्वाग् भूत्वा मुखं प्राविशत्' इति तेजोभिन्ना वाङ् नोक्ता । अभेदस्योपलक्षणविरुद्धत्वादत आहुः सा तेजसीति । तेनेति । ज्योतिषोपलक्षणविधया वाक्संग्रहः विकारविकार्यभावसंबन्धात् । अन्नेति भाष्यं विवृण्वन्ति अन्नेति । एकत्रेति । परेऽक्षरे । तथा च श्रुतिः प्रश्नोपनिषदि गार्ग्येण पृष्टः कस्मिन्नु सर्वे संप्रतिष्ठिता भवन्ति इति पृष्टः पिप्पलादः पृथिवी च पृथिवीमात्रा चेत्याद्युक्त्वा प्राणश्च घ्रातव्यं च रसश्च रसनीयं चेदित्याद्युक्त्वा 'एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः स परेऽक्षरे आत्मनि संप्रतिष्ठित' इति । सहेति भाष्यं विवृण्वन्ति अत्रार्थमिति । अन्तुरर्थम् । गृहीत इति उपलक्षणेन गृहीतः । तथा च रसयितेत्युक्तश्रौतपदे रस आस्वादने चुरादिः पठितः । न तु रस शब्दे भ्वा. आं. से. ह्रस्वपाठात् । पुरुषविशेषणं रसनया-स्वादकर्ता प्रतीयते सोयमत्ता तस्य रसनीयं चेति श्रुतौ रसनीयपदेन अन्नग्रहणात् । रसरसनीय एव इत्यनेनोक्त्वा रसयितेति एष इत्यनेनाभेदकथनात् । तथा चात्र रसनान्ने रसयितृपदेनोच्येते । आस्वादनानुकूलव्यापारो रसनानिष्ठः काष्ठानि पचन्तीतिवत् । अन्ननिष्ठो वा व्यापारः । व्यापाराणा-मनेकविधत्वात् । क्वचिदिति भाष्यं विवृण्वन्ति तथा चेति । उदाजह्रुः । तेजसीति तेजसा वाचा ग्रहणमिति प्राप्ते विवक्षातः कारकाणि भवन्तीति औपश्लेषिकाधारे सप्तमी । यथा 'इको यणचि' इत्यत्र । उप समीपे श्लेषः संबन्धस्तत्कृतमौपश्लेषिकम् । प्राणान्नयोरिति सप्तम्यन्तं पदद्वयम् । प्राणे कयो-र्ग्रहणमित्याहुः त्वग्घ्राणेति षष्ठ्यन्तम् । रसना चात्ता च तयोः । तेनैत इति भाष्यार्थमाहुः तेन प्राणेति आदिपदेनान्नज्योतिषी । अतीति पञ्चजनवाक्य एव संगृहीतेभ्योतिरेको भेदः, तस्य कर्म, भिन्न इति यावत् । भूतत्वादित्यादिपदेन पञ्चतन्मात्रत्वम् । तद्गुणानामिति शब्दरूपरसगन्ध-स्पर्शानाम् । तत्प्रवर्तेति । ननु प्राणस्य प्राणमित्युक्ते कथं प्रवर्तकत्वमिति चेन्न 'यद्वाचानभ्युदितं येन वागभ्युद्यते तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' इति श्रुत्युक्तवागभ्युदयकर्तृयच्छब्दार्थत्व-प्रवर्तकत्ववत् प्राणस्य प्राणमित्यत्र द्वितीयान्तस्य प्राणस्य प्रवर्तकत्वात् । प्राणपदवाच्यत्वं ब्रह्मणो 'अत एव प्राणः' इत्यधिकरणे छान्दोग्ये कतमा सा देवता प्राण इति होवोचेत्यत्र श्रुतौ । एतयोरिति अथपञ्चजनभावचाक्ययोः । एतेनेति । बुद्धीति बुद्धेर्वृत्तीनां संशयादीनां जनकत्वम् । ननु

तस्मात् प्राणादय एव पञ्चजना इति न तन्मतसिद्धिः ॥ १२ ॥

भाष्यप्रकाशः ।

प्राणान्नयोरतः कथं प्राणादीनां पञ्चजनत्वमित्याशङ्कापि निरस्ता । केवलानां चक्षुरादीनां न तथात्वमपि तु कर्तृगोलकादियुक्तानाम् । अतस्तद्विशिष्टानामेव पञ्चजनत्वमिति बोधनात् । किंचात्रैवं ग्रहणे सर्वप्रतिष्ठासिद्धया पञ्चसंख्यादीनामपि न निस्तात्पर्यकत्वम् । परोक्षवादत्वाच्चैवमुक्तिरिति सर्वं सुस्थम् । तदेतदभिसंधायाहुः तस्मादित्यादि । एवंचात्र पञ्चजनपदे योग आस्थः ।

रश्मिः ।

बुद्धिवृत्तिजनकत्वे संशयादीनां चाक्षुषत्वं बुद्धित्वं वेति चेदुच्यते । एतस्य पूर्ववाक्ये—

'तैजसात्तु विकुर्वाणाद् बुद्धितत्त्वमभूत् सति ।

द्रव्यस्फुरणविज्ञानमिन्द्रियाणामनुग्रहः' ॥ इत्यत्र ।

तैजसात्तैजसाहंकारात् । बुद्धिलक्षणमाह इन्द्रियाणामिति । कार्यलक्षणमिदम् । बुद्ध्यनुगृहीतान्येवेन्द्रियाणि पश्यन्ति कुर्वन्ति चेति । अत एव बुद्धितारतम्येन इन्द्रियज्ञानक्रिययोस्तारतम्यं 'द्रव्यस्फुरणविज्ञानम्' इति स्वरूपलक्षणम् । द्रव्यस्य घटादेः स्फुरणे सति शब्देन संस्कारेणालोकेन वा यद्विशिष्टं ज्ञानं यस्मात्, केवलं चक्षुषा ज्ञाने तारतम्यं न स्यात् । स्वतः स्फुरणं योगजधर्मादिभिरपि भवति अतो द्रव्यस्फुरणविज्ञानं बुद्धेर्लक्षणमित्युक्त्वाधिभौतिकं विभागनिरूपणेनैव लक्षयति संशयेति । एवमाध्यात्मिकबुद्ध्यनुगृहीतानीन्द्रियाणि मनसि सूक्ष्मरूपेण स्थितमाधिभौतिकं संशयादिकं बुद्धिवृत्तिशब्देनोक्तं जायते इति बुद्धिवृत्तिजनकत्वं चक्षुरादीनामिति संशयादीनां चाक्षुषत्वं बुद्धित्वं चेत्युभयम् । अत्र प्रस्थानरत्नाकरे दैवानुकूल्येनान्तर्यामिणा मनस्तत्कार्यार्थं प्रेर्यते तच्चेन्द्रियप्रेरणाय तत्तदिन्द्रियेण संसृज्यते तत्र तत्तदिन्द्रियदेवतानुकूल्ये विषयसंसृष्टैरिन्द्रियैः स्वावच्छिन्नमनसि पूर्वं निर्विकल्पकमुत्पाद्यते तदा इन्द्रियदेशे बुद्धेर्वृत्तिः । तदा बुद्ध्यापि वृत्तिद्वारा तदनुग्रहे सविकल्पकं भवतीति बुद्धितत्त्वनिवेश उक्तः । तथात्वमिति तथा बुद्धिवृत्तिजनकत्वम् । तु अन्नम् । कर्त्रिति आदिना प्राणाद्ये । तद्वीति तथा च साक्षात्परंपरया बुद्धिवृत्तिजनकत्वं विवक्षितमिति भावः । ननु पञ्च बुद्धिवृत्तीर्जनयन्ति इति पञ्चजना इत्यत्र पञ्चपदं साक्षाद् बुद्धिवृत्तिवाचकमिति कुतः परंपरापि विवक्षितेत्याशङ्क्याहुः किं चेति । निस्तात्पर्येति तथा च पञ्चपदस्य प्राणान्नयोस्तात्पर्यवृत्तिरिति भावः । 'प्रायशः सर्वशब्दानां व्यञ्जकत्वमपीष्यते' इति काव्यप्रकाशे । साक्षाद्बुद्धिवृत्तिवाचकत्वमपि पञ्चपदस्याहुः परोक्षेति । प्राणस्य प्राणमित्यत्र प्राणपदे परोक्षवादः, प्राणस्य प्राणमित्यर्थः । तथान्नपदे परोक्षवादः रसनाया रसनेत्यर्थः । तथा च प्रश्नोपनिषत् । प्राणश्च घ्रातव्यं च रसश्च रसनीयं चेति प्राणः पवर्गादिः घ्रातव्यं कवर्गादिः । ननु रसपदे रसनेत्यस्य परोक्षवादो न त्वन्नपदे इति चेन्न रस्यते यः स रसः । कर्मणि घञ् । इत्यर्थस्यापि रसपदोक्त्या सूचनात् । भवते यत्तदन्नमित्युभयोरेकार्थतया रसपदे परोक्षवादेनान्नपदेपि परोक्षवादात् । ऐकार्थ्याच्च इत्यत्रान्त्याक्षरैक्यात् परोक्षवादः औचित्याच्च प्रायपाठाच्च रस इत्यत्राद्याक्षरैक्यात् परोक्षवादो प्राणरसनयोः । एवमिति पञ्चजनान्तर्गतत्वेन प्रकारेण प्राणान्नयोरुक्तिः । सर्वं पूर्वोक्तं शोभनं तस्याक्षितिकर्ता यस्य तत् । तस्मादित्यादीति । भाष्ये । तन्मतेति सांख्यमतसिद्धिः । शंकराचार्यादिमतैः पञ्चजनपदार्थे योगं निवेतुमाहुः एवं चेति । ननु रूढिर्योगमपहरतीति न्यायाद् योगः कुत आस्थः इति

भाष्यप्रकाशः ।

शंकराचार्यास्तु, 'ते वा एते पञ्च ब्रह्मपुरुषाः' इत्यत्र पञ्चसु प्राणेषु प्रयुक्तत्वात् 'प्राणो हि पिता प्राणो माता' इत्यत्रापि पित्रादिरूपेण प्राणस्यैवोक्तत्वाच्च जनसंबन्धेन प्राणादीनां जनशब्द-भाक्त्वे सिद्धे दिक्संख्येति संज्ञासमासबलात् पञ्चजनेति समुदायस्यापि प्राणादिषु रूढत्वमविरुद्ध-मित्याहुः तच्चिन्त्यम्। ते वा इति श्रुतौ जनवचनस्य पुरुषपदस्य प्राणापानादिषु प्रयुक्तत्वे-

रश्मिः ।

चेन्न पूर्वपादे 'शुगस्य तदनादरश्रवणात्' इति सूत्रे दत्तोत्तरत्वात् । ननु प्रकृते किं सूचकमिति चेन्न वाक्यशेषस्यैव योगसूचकत्वात् । ननु कथं योगसूचकत्वमिति चेद् भाष्यार्थः स्फुटं नोक्तोऽत्रोच्यते । शांकरमतमनुवदति स्म प्राणादय इति । ननु पञ्चजना इत्यत्र 'दिक्संख्ये संज्ञायाम्' इति सूत्रेण समासः स न संभवति पञ्चेत्यस्य संज्ञाशब्दत्वाभावात् । इत्याशङ्क्याहुः संज्ञाशब्दा इति । तथा च शंकरभाष्यं पञ्चजनशब्दः समासान्वाख्यानादवगते संज्ञाभावः संज्ञाकाङ्क्षी वाक्यशेषसमभिव्याहृतेषु प्राणादिषु वर्तिष्यते इति । जातिगुणक्रियायदृच्छाशब्देषु यदृच्छाशब्दाः गौः शुक्लः चलति डित्थः इति चतुष्टयशब्दाः न च जातिशब्दाः । संज्ञारूपो यदृच्छात्मक इति काव्यप्रकाशात् । तथा च पञ्चक इत्युक्तौ प्राणादयः पञ्चेत्युत्तरे संज्ञाशब्दत्वेनार्थस्य संज्ञाप्रत्यायकत्वात् पञ्चजना इति समास इति भावः । 'दिक्संख्ये संज्ञायाम्' इति विशेषस्मरणात् संज्ञायामेव पञ्चशब्दस्य जनशब्देन समास इति 'न संख्योपसंग्रहादपि' इति सूत्रस्य शंकरभाष्यं तेन 'संज्ञा पञ्चजनेत्येषा प्राणाद्याः संज्ञिनः श्रुताः' इति वैयासिकन्यायमालायां संज्ञा प्राणादयः इति पञ्चजनास्तु संज्ञिनः इति युक्तः पाठः । पञ्चजनानां विधार्यत्वेन संज्ञि····दिति ज्ञेयम् । स्वेति यतो 'व्यापारवदसाधारणं कारणं करणं' 'साधकतमं करणं' क्रियासिद्धौ प्रकृष्टोपकारकं करणसंज्ञं स्यात् यद्व्यापाराव्यवधानेन क्रियानिष्पत्तिस्तत्प्रकृष्टमिति शेखरे । माहात्म्यमिति तच्च निबन्धे टीकायाम् । रतिर्देवादिविषयेत्यत्र रतिः स्नेहः देवत्वं माहात्म्य-मित्युक्त्या देवत्वं सर्वप्रेरकत्वं तस्य विरोधः । प्राणस्य प्राणमित्यादौ द्वितीयप्राणादिपदार्थानुक्तेः । वैयासिकन्यायमालायां प्राणादीनां पञ्चानां साक्षी चिदात्मा द्वितीयप्राणादिशब्दैरभिधीयत इत्युक्तं तच्च विवर्तप्रेरकमिति विरोधः । भावामृतवर्षिणीकारोपि द्वितीयप्राणादिपदार्थांश्च जगाद । वर्णागम इति पक्षे एकवर्णागमादन्योऽप्रसिद्धः स्पष्टमन्यत् । अत्र वाक्यशेषात् पञ्चानां बुद्धिवृत्तीनां जनाः पञ्च प्राणादयः इत्येकवाक्यतया सूचनात् । ननु रूढिः कैरुच्यत इति चेत्तत्राहुः शांकरेति श्रुतिमाहुः ते वा इति । अत्र वायुः पुरुषा जनाः तथा च पञ्च ब्रह्मावयवः पुरुषा जना यद्वा ब्रह्मणो वायोः जना इति श्रुतिवचनव्यक्तेः, पञ्चसु प्राणेषु जनेषु पञ्चजनपदस्य प्रयुक्तत्वात् । जना पुरुष-पदार्थाः स्पष्टा इति नोक्ताः । ब्राह्मणमाहुः प्राणो हीति । जनेति पुरुषपदोक्तजनसंबन्धेन संबन्धश्च ब्रह्मेति भिन्नं पदं यदा तदा भेदः । ब्रह्मणः पुरुषा इति षष्ठीसमासे तु अवयवावयविभावः संबन्धः । प्राणादीनां ब्रह्मपदार्थानां पुरुषपदार्थजनपदभाक्त्वे इत्यर्थः । संज्ञेति संज्ञाशब्दा रूढा इति भावः । प्राणादिष्विति प्राणचक्षुःश्रोत्रादिषु । अविरुद्धमिति प्रथमप्रयोगस्य श्रुत्युक्तेषु प्राणेषु सत्त्वात् प्राणादिषु वाक्यशेषोक्तेषु रूढत्वं पञ्चजनशब्दस्याविरुद्धम् । तथा च भाष्यम् । कथं पुनरसति प्रयोगे रूढिराश्रयितुं शक्येति । ननु रत्नप्रभायां प्राणेषु रूढस्य पञ्चजनपदस्य प्राणादिषु लक्षणेत्युक्तमिति रूढत्वं विरुद्धमिति चेन्न । पञ्चजनशब्दस्य रूढिरेव नावयवशक्त्यात्मको योग इत्युक्तत्वात् । प्राणापाना-दिष्विति । ते वा एते प्राणापानादयः पञ्चजनाः ब्रह्मावयव इत्यन्वयः । समासे लक्षणाप्रसङ्गात् ।

११४ ब्र० सू० ८०

भाष्यप्रकाशः ।

नान्येषु रूढ्यभावात् समुदायस्यापि तत्रैव रूढिसिद्ध्या वाक्यशेषोक्तेषु चक्षुरादिषु पञ्चजनशब्दस्य रूढेर्दूरनिरस्तत्वात् । न च प्राणापानादय एव पञ्चजनाः सन्त्विति वाच्यम् । तथा सति प्राणा इति बहुवचनेनैव चारितार्थ्ये आदय इत्यस्य वैयर्थ्यप्रसङ्गात् । तस्यापि वाक्यशेषगता विवक्ष्यन्त इति कथनविरोधप्रसङ्गाच्चेति । समुदायशब्दार्थेऽवयवार्थस्याभावेन जनशब्दस्य तत्रानर्थकतया तेन तदुपपादनस्याशक्यत्वादित्यन्ये ।

रश्मिः ।

इत्येवं प्राणापानादीति । चक्षुरादिषु प्रयुक्तत्वेन । अन्येष्विति वाक्यशेषोक्तेषु प्राणेषु समुदायस्य पञ्चजनस्यापि तत्रैव प्राणापानादिष्वेव । घटादिपदवदनेकेषु रूढिदर्शनात् प्राणचक्षुरादिष्वपि प्राणेष्वस्तु रूढिरित्याशयेन प्राणानुक्तिः । ननु तर्हि प्राणेषु रूढिस्तत्सहचरितत्वसंबन्धश्चक्षुरादिष्विति चक्षुरादिषु लक्षणास्त्विति चेन्न योगेन निर्वाहेऽस्य गौरवग्रस्तत्वात् । वाक्यशेषान्तरस्य श्रौतत्वादि-कल्पमाशङ्कते स्म न चेति । एवकारोप्यर्थे । ते वा एते इति श्रुतौ उक्तवाक्यशेषे संमिषिवत् पञ्चेति पुरुषा इति च पञ्चजना इत्यस्य संबन्धिनो दर्शनात् । प्राणा इतीति सूत्रीयप्राणादयः इत्यत्रेदं बोध्यम् । ननु प्राणा इत्युक्तेपि प्राणापानादिषु रूढिः, तथा वाक्यशेषोक्तप्राणेषु रूढिश्चक्षुरादिषु संबन्धरूपा लक्षणेति चेत्तत्राहुः तस्येति । शंकराचार्यस्यापि वाक्यशेषगताः पञ्चजनाः । प्राचां नैयायिकानां मतमाहत्याहुः समुदायेति । अत्र योगः स्फुटति परं तु रूढिर्योगमपहरतीति रूढिरेवोक्ता सा तु पञ्चजनपदैकार्थीभावप्रतिबन्धिका पञ्चबुद्धिवृत्तीर्जनयतीति पञ्चजनाः प्राणादय इति भाष्याद् योगसत्त्वादेतदाहुः समुदायेति । इदं प्राचां नैयायिकानां मतम् । समुदायशक्तिः रूढिः, अवयवशक्तिर्योगः । तत्र पञ्चजनशब्देऽनर्थकतया । अयमर्थः । शब्देन्दुशेखरे तु एकार्थीभावस्य स्थलं दर्शितं 'समर्थः पदविधिः' इति सूत्रस्य । अवयवार्थविरुद्धो यत्र समुदायार्थस्तत्रैवैकार्थीभाव इति । तदुक्तं वृद्धैः 'जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी' जहत्स्वर्था एकार्थीभावः जहन्ति पदानि स्वार्थं यस्यां वृत्तौ सा जहत्स्वार्था । तथा च तेन जहत्स्वार्थेन पञ्चजनसमुदायगतेन जनशब्देन तदुपपादनं तस्या रूढेरुपपादनं तस्याशक्यत्वात् । न चाजहत्स्वार्था वृत्तिरस्तु व्यपेक्षालक्षणसामर्थ्यरूपेति शङ्क्यम् । महाभाष्ये ऋद्धस्य राजपुरुष इति वारणाय तस्या अनादृतत्वात् योगप्रतीत्यापत्तेश्च । अन्य इति एकदेशिनः । एकदेशिमतस्याक्षेपस्यस्ये वक्ष्यमाणत्वात् । तेन तदुपपादनस्याशक्यत्वं त्वेवम् । समुदायान्तर्गतजनशब्दस्यानर्थकतया । कथं पुनः प्राणादिषु जनशब्दप्रयोगः तत्त्वेषु वा कथं वा जनप्रयोग इति शंकराचार्यभाष्यासंगतिः । समाय-शक्तेरतिरिक्तत्वात् । जनशब्दाशक्तेः । न च शब्देन्दुशेखरे कृप्तशक्तित्यागे मानाभावात् प्रत्येकशक्ति-सहकृतया समुदायशक्त्या तथोपस्थितिरयमेव चैकार्थीभावः । जहत्स्वार्था वृत्तिः । पदानामानर्थक्य-मिति तु न युक्तम् । महाबाहुः सुपन्था इत्यादावात्वाद्यनापत्तेः भूतपूर्वाश्रयणं तु सत्यां गतावयुक्तम् । तदुक्तं वृद्धैः 'जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी' । अवयवार्थविरुद्धो यत्र समुदायार्थः तत्रैव त्रेति तदर्थ इति ग्रन्थेन जनशब्दशक्त्युक्तेः न शंकराचार्यभाष्यासंगतिरिति वाच्यम् ।

'पदं न वाचकं वाक्ये सादृश्यात्स्मारकं परम् ।
विशिष्टवाक्यमेवात्र वाक्यार्थस्य च वाचकम्' ॥ इति ।

सर्वनिर्णयात् । तदुक्तं वैयाकरणभूषणसारे 'जहति पदानि स्वार्थं यस्यां सा जहत्स्वार्था' पदमर्था वा वृत्तौ पदानामानर्थक्यमिति कथं तर्हि महाबाहुः सुपन्था इति च 'आन्महतः

भाष्यप्रकाशः ।

यदपि, देवाः पितरो गन्धर्वा असुरा रक्षांसि वा निषादपञ्चमाश्चत्वारो वर्णा वा यत् पाञ्चजन्यया विशेति प्रजापरः पञ्चजनशब्द इति तत्परिग्रहेऽपि न दोषः । आचार्येण तु, न सङ्ख्यानामिह प्रतीतिरस्तीत्येतावन्मात्राभिप्रायेण वाक्यशेषोक्तमादृतमित्याहुः । तदपि स्वप्रज्ञाविलसितमात्रम् । पूर्वोक्तपक्षद्वयोपगमे सर्वाधारत्वरूपब्रह्ममाहात्म्यासिद्ध्या पञ्चसंख्याया निस्तात्पर्य-

रश्मिः ।

समानाधिकरणजातीययोः' इत्यस्य शब्दविषयत्वात् । पथिमथ्यृभुक्षामात्' इत्यस्य च शब्दविषयत्वात् पदानामानर्थक्येप्यदोषात् । न च समानाधिकरणस्य भिन्नप्रवृत्तिनिमित्तत्वे सति एकार्थबोधकत्वादानर्थक्येऽर्थबोधकत्वासंभवात् समानाधिकरणे आत्वानापत्तिरिति वाच्यम् । सादृश्यात् स्मारकत्वात् समानाधिकरणत्वस्य । अनर्थकपदैः सार्थकपदसमानाधिकरणस्मारणेनान्महत इति सूत्रे स्मृतसमानाधिकरणाश्रवणात् । पूर्वं महच्छब्दस्य बाहुशब्दस्य चार्थोनुभूतो महाबाहुरित्यत्र तत्सदृशशब्दाभ्यां सोर्थः स्मारितः । 'सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः' इति भाषापरिच्छेदात् । तदुक्तं टीकायां तथा वाक्येपि पदं न वाचकं तर्हि संकेताग्रहेपि वाक्यार्थज्ञानं स्यात् गौरवं च स्यादित्याशङ्क्याह सादृश्यात्स्मारकं परमिति । वाक्यावयवभूतस्य स्वतन्त्रपदतुल्यत्वात् पदार्थस्मारकत्वम् । अन्यथा स्वार्थं प्रतिपाद्य कृतार्थत्वे वाक्यार्थो न तैर्जन्येतेति शंकराचार्यैकदेशिनोमतद्वयमाहुः यदपीति । निषादेति निषादः पञ्चमो येषाम् । शंकराचार्यैः श्रुत्या पञ्चजनशब्दार्थ उक्तस्तमाहुः यत्पाञ्चेति श्रुत्यर्थस्तु पाञ्चजन्यया प्रजया विशतीति विट् तया विशा पुरुषरूपस्येन्द्रियस्याह्वानार्थं घोषाः सृष्टा इति यत्तद्युक्तम् । घोषातिरेकेणेन्द्राह्वानायोगात् इति श्रुत्यनुसारेण प्रजामात्रग्रहेपि न दोष इत्यर्थः । प्राणादयः पञ्चजना इति सूत्रोक्तविरोधमाशङ्क्याह शंकरभाष्ये भाष्यकारस्तदाहुराचार्येणेति भगवता व्यासेन । वाक्येति प्राणादीनां पञ्चजनत्वम् । सर्वाधारेति अत्रार्थे श्रुतिः प्रश्नोपनिषत्था कस्मिन् सर्वे संप्रतिष्ठिता भवन्तीत्यादिः पूर्वमुक्ता । ननु पृथिव्यादीनां पूर्वमुक्तत्वादेव पितृगन्धर्वासुररक्षोभिर्निषादपञ्चमचतुर्वर्णैश्च सर्वप्रतिष्ठा सिद्धिरस्तु इति चेत्तत्राहुः पञ्चेति । पञ्चशब्दद्वये द्वितीयपञ्चशब्दस्य पञ्चबुद्धिवृत्तिवाचकत्वेन प्रथमपञ्चपदं पञ्चसंख्येयान् वक्ति त्वग्प्राणादिपञ्च प्राणाः प्राणापानव्यानादयः पञ्च पुनः प्राणाः नागकूर्मकृकलदेवदत्तधनंजयाः इति पञ्च, रसनादयः पञ्च । काण्वपाठे वागादयः पञ्च, एतदेकवाक्यतया रसना कर्मेन्द्रियम् । न च पुराणे ज्ञानेन्द्रियेषु पाठविरोध इति शङ्क्यं पुराणमतत्वात् 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' इतिप्रकाशकत्वेन वागिन्द्रियस्य ज्ञानेन्द्रियत्वात् । न च वस्तुप्राप्यकारित्वप्रसङ्ग इति वाच्यम् । ज्ञानेन्द्रियाणां वस्तुप्राप्यप्रकाशकारित्वेपि निस्तात्पर्यकत्वप्रसङ्गवारणप्रसङ्गे चतुर्णां प्राप्यप्रकाशकारित्वं न वाचः । यथा दोरादिचतुष्कमन्यदेवेति व्यष्टिसमष्टिभेदेन श्रुत्युक्तमनोबुद्धिचित्ताहंकाराः । पञ्चेति तन्निष्ठपञ्चसंख्यायाः निस्तात्पर्यकत्वं निष्क्रान्ता तात्पर्यकादिति निस्तात्पर्यका तस्याः भावो निस्तात्पर्यकत्वम् । त्वे चेति सूत्रेण ह्रस्वो वा समासाश्रयविधिस्थं सूत्रं तस्य प्रसङ्गस्य । अयं भावः । यस्मिन् पञ्च पञ्चजना इति मन्त्रे बुद्धिवृत्तिजनाः पञ्चेत्यनुक्त्वा पञ्च पञ्चजना इत्युक्तम् । पञ्चेत्यपि वाक्यशेषाद्गुणनया लभ्यते एवं च पञ्च पञ्च पञ्च पञ्च पञ्च जना इत्युक्तम् । पञ्चजना गुणनविशिष्ट पञ्च पञ्च पञ्च । बहुत्वं च पञ्च पञ्च पञ्च पञ्च पञ्चनिष्ठमप्येतदितीच्छयोक्तम् । 'सङ्ख्यैक्य तु तात्पर्यं' तत्प्रतीतीच्छयोच्चरितत्वं वा । एवं च पञ्चपदस्य त्वग्प्राणादिपञ्चसु तात्पर्यम् ।

भाष्यप्रकाशः ।

कत्वप्रसङ्गस्य दुर्वारत्वात् । वाक्यशेषानादरे खले कपोतिकावत् सर्वपक्षापातेन वाक्यार्थनिर्णयाभावप्रसङ्गाच्च । वाक्यशेषस्यानिर्णायकत्वेन न्यायचर्चावैयर्थ्यापत्तेश्च ।

अन्ये तु वाक्यशेषबलादेव पञ्चजनशब्दस्य प्राणादिषु रूढिमाहुः । तत् पूर्वोक्तपक्षापेक्षया सम्यगपि वाक्यशेषस्य वराहं गावोऽनुधावन्तीत्यादौ नियामकत्वेन शक्तिग्राहकत्वदर्शनान्नियमस्य

रश्मिः ।

द्वितीयपञ्चपदस्य प्राणेषु पञ्चसु, तृतीयस्य नागादिप्राणेषु, चतुर्थस्य रसनादीन्द्रियेषु वागादीन्द्रियेषु वा, पञ्चमस्य मन आदिकरणेषु । श्रुत्या प्रजापरः पञ्चजनशब्द इति यदुक्तं तदपि पञ्चजना प्राणादयस्तेभ्यो हिताः पाञ्चजन्या इति न भवति 'पञ्चजनादुपसंख्यानं' इति वार्तिकाच्छप्रत्ययः पञ्चजनीनमिति स्यात् अतः स्वार्थे ष्यञ् । नापि छान्दसेन 'भवे छन्दसि' इति सूत्रेण यत् । अर्थासंभवात् । तया विशा प्रजयेत्यन्यत् पूर्ववदित्यर्थस्यापि वक्तुं शक्यत्वादविरुद्धम् । अतो वाक्यशेषानादरे दोषमाहुः वाक्यशेषेति । खले कपोतिकान्यायस्तु—

वृद्धा युवानः शिशवः कपोताः
खले यथामी युगपत्पतन्ति ।
तथैव चामी युगपत्पदार्थाः
परस्परेणान्वयिनो भवन्ति ॥ इति ।

वाक्येति वाक्यं तु यस्मिन् पञ्च पञ्चजना इति । न्यायेति सिद्धान्तमुक्तावल्यां विश्वनाथः । वाक्यशेषादपि शक्तिग्रहः यथा 'यवमयश्चरुर्भवति' इत्यत्र यवपदस्य दीर्घशूकविशेषे आर्याणां प्रयोगः कङ्गौ च म्लेच्छानां यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ति तत्र ।

'वसन्ते सर्वसस्यानां जायते पत्रशातनम् ।
मोदमानाश्च तिष्ठन्ति यवा कणशशालिनः' ॥

इति वाक्यशेषाद्दीर्घशूकविशेषे शक्तिर्निर्णीयते कङ्गौ च शक्तिभ्रमात्प्रयोगः । नानाशक्तिकल्पनागौरवात् । हरिपदादौ विनिगमकाभावान् नानाशक्तिकल्पनमिति चकाराद्वेदव्याससूत्रप्रामाण्यात्छ्रुतेरुक्त एवार्थः । आहुरिति रामानुजाचार्या व्यञ्जनामाहुः तथा च वाक्यशेषोक्त्यनन्तरं भाषयन्ति ब्रह्माश्रयाः प्राणादयः एव पञ्च पञ्चजना इति विज्ञायत इति सम्यगपीति सर्वाधारत्वरूपब्रह्ममाहात्म्यसिद्ध्या सम्यक् तात्पर्यार्थानुक्त्या न तादृश ब्रह्ममाहात्म्यासिद्ध्यापीति पदम् । अपिर्गर्हायाम् । माहात्म्यसिद्धिर्गर्हिता तात्पर्याभावात् पञ्चपञ्चपदयोः । वाक्यशेषस्येति वाक्यशेषत्वेन रूपेण वाक्यशेषस्य । पूर्वतन्त्रे प्रथमस्य तृतीयपादे पञ्चमाधिकरणे वाराही उपानहावुपमुञ्चते इति श्रूयते अत्र वराहशब्दमार्याः शूकरे प्रयुञ्जते म्लेच्छाः कृष्णशकुनौ तथा सति लोकव्यवहारेण निश्चेतव्येषु शब्दार्थेषु आर्यम्लेच्छप्रसिद्ध्योः समबलत्वादुभयविधोप्यर्थः विकल्पेन स्वीकार्य इति प्राप्ते उक्तम् । शास्त्रीयधर्मावबोधे शास्त्रप्रसिद्धिर्बलीयसी प्रत्यासन्नत्वादविच्छिन्नपारंपर्यागतत्वाच्च शास्त्रे च वराहं गावोनुधावन्ति इत्यादौ वाक्यशेष इत्यर्थः । आदिपदेन यवमयश्चरुर्भवति इत्यस्य वाक्यशेषः । यत्रान्या ओषधयो म्लायन्ते अथ ते मोदमाना इवोत्तिष्ठन्ति इति तस्य संग्रहः । गवामनुधावनं शूकरविषये संभवति न कृष्णशकुनिविषये इति वाक्यशेषत्वं वराह इत्यस्य । शक्तीति वराहे वराहपदस्य

ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥

काण्वपाठे, अन्नस्यान्नमिति नास्ति, तदा कथं पञ्च? तत्राह। ज्योतिषा संख्यापूर्तिस्तेषाम्। यस्मादर्वाक् संवत्सर इति पूर्वं पठितो मन्त्रः। तत्र तद्देवा ज्योतिषां ज्योतिरिति। अन्नस्थाने ज्योतिर्ग्राह्यम्। व्याख्यानं पूर्वमेव। तस्मात् सिद्धं न तन्मतस्य श्रुतिमूलत्वम् ॥ १३ ॥

इति प्रथमाध्यायचतुर्थपादे तृतीयं त्रिसूत्रं न संख्योपसंग्रहाधिकरणम् ॥ ३ ॥

भाष्यप्रकाशः।

च प्रसिद्धप्रसृत्वरशक्तिसापेक्षत्वात् प्रकृते च प्रसिद्ध्यभावाच्चिन्त्यम्। तस्माद् योग एव साधीयानिति दिक् ॥ १२ ॥

ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥ व्याख्यानं पूर्वमेवेति ज्योतिषा तेजोवाचौ ग्रहीतव्ये। मनसोऽन्नमयत्वेन मनसाऽन्नाचूरसना ग्राह्याः। चक्षुषैकं चक्षुरेव ग्राह्यमित्येवं पूर्वोक्त-रीतिकमेवेत्यर्थः। ननु काण्वमाध्यंदिनपाठविरोधादिह वाक्यशेषगतप्राणादिग्रहणं न युक्तम्। विकल्पापादकत्वादिति चेन्न। तुल्यबलतया षोडशिग्रहणाग्रहणवत् श्रुत्यभिप्रेतत्वेन विकल्पस्या-दुष्टत्वात्। न च तत्रातिरात्रयागे व्यक्तिभेदेन ग्रहणाग्रहणयोरुपपत्तिवत् प्रकृते ब्रह्मण एकत्वेन

रश्मिः।

शक्तिग्राहकत्वेत्यादिः। प्रसृत्वरेति प्रपूर्वकसर्त्तेः क्वरप्। सूत्रं तु 'इणनशजिसर्तिभ्यः क्वरप्' इति। प्रसिद्धीति पञ्चजनशब्दस्य प्राणादिषु। योग एवेति तथा च भाष्यम्। महद्वदेति सूत्रस्य 'महान्तं विभुमात्मानं' 'वेदाहमेतं पुरुषं महान्त'मित्यादौ महच्छब्दो ब्रह्मपरो योगेन एवमव्यक्तशब्दोप्यक्षरवाचक इतीति। दिगिति व्याकरणस्याङ्गतया वेदान्ते योगाबाधे रूढियुक्तेति न रूढिर्योगमपहरतीति नैया-यिकमतप्रसरः। नैयायिकमतस्य पातित्यसाधकत्वस्मरणाच्छ्रुतिविरुद्धांशत्याजकत्वस्मरणाच्च ॥ १२ ॥

ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥ भाष्ये। यस्मादर्वागिति।

'यस्मादर्वाक् संवत्सरोऽहोभिः परिवर्तते।
तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्' ॥ इति मन्त्रः।

प्रकृते। काठिन्याद् व्याकुर्वन्ति स्म ज्योतिषा तेजोवाचाविति व्याख्यातम्। विकल्प इति केषां-चिदन्नं केषांचिज्ज्योतिरिति स च पूर्वतन्त्रे परिसंख्याविधिनिरूपणे विकल्पस्य दोषत्वकथनात्। तुल्येति अन्नज्योतिर्ग्रहणयोस्तुल्यबलत्वम्। अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णातीति श्रुतिर्ज्यो-तिष्टोमस्य संस्थाविशेषेस्ति। अदुष्टत्वादिति यथाह जैमिनीयन्यायमालाविस्तरे सत्स्वप्यष्टदोषेषु गत्यन्त-राभावाद् व्रीहियववत् विकल्पोस्त्विति तत्र व्रीहियवविकल्पो द्वादशतृतीयपादे चतुर्थाधिकरणे व्रीहि-भिर्यजेत यवैर्यजेत इति श्रुत्युपन्यासेनोपपादितः। व्यक्तीति दशमस्याष्टमे पादे तृतीयाधिकरणेस्ति अतिरात्रेभेदादतिरात्रव्यक्तिभेदेन। इदमपि तत्रैव। पर्युदासार्थवादनिषेधेषु निषेधार्थमङ्गीकृत्य न चात्रापि व्याघातः शङ्कनीयः। अनुष्ठानविकल्पाङ्गीकारेण भिन्नप्रयोगविषयत्वात्। सत्स्वप्यष्टदोषेषु गत्यन्तराभावात् व्रीहियववत् विकल्पोभ्युपेतव्यः। तस्मात्प्रतिषेध इति राद्धान्त इति इयमुपपत्तिरपि। तद्वद् दार्ष्टान्तिके योजयन्ति प्रकृत इति। ब्रह्मणोतिरात्रस्थानीयत्वम्। यस्मिन् पञ्च पञ्चजना इत्यत्र यच्छब्दार्थस्य।

१. पाठे उमामहेश्वरसंवादेस्ति।

भाष्यप्रकाशः ।

प्राणानां प्राणादीनामन्यान्यत्वेन युगपद् ग्रहीतुमशक्तिरिति ज्ञापनम् । प्रकृतेऽपि तेषामेव सत्त्वेन ग्राहकशब्दमात्रभेदस्य तत्तत्पाठकरूपाधिकारिभेदाद् ग्रहीतुं शक्यतया सुखेनैकोपपत्तेरिति । भाष्यं तु निगदव्याख्यातमेवेति शुभम् ॥ १३ ॥

इति तृतीयं न संख्योपसंग्रहाधिकरणम् ॥ ३ ॥

रश्मिः ।

दृष्टान्ते षोडशिग्रहणाग्रहणे उक्ते दार्ष्टान्तिकेऽन्नस्यान्नमित्यस्य ग्रहणाग्रहणे ते प्राणाद्यन्तर्गते इति । प्राणादीनां ग्राहकत्वमाहुः प्राणानामिति । अन्येति अन्येषां काण्वानामन्यत्वम् । कर्मव्यतिहाराभावात् समासः । समासवत् सुपः सोरभावश्च तद्धितसमासिसमीपे सर्वनाम्नो द्वे विहिते कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये समासवच्च बहुलम् । बहुलग्रहणात् अन्यपरयोर्न समासवत् । इतरशब्दस्य तु नित्यम् । असमासवद्भावे पूर्वपदस्य सुपः सुर्वक्तव्यः अन्योन्यं विप्रा नमन्तीतिवत् । अन्यमित्यस्य द्वित्वे पूर्वपदस्य सुपः सौ रूपसिद्धिः । ग्रहीतुमिति षोडशिग्रहणाग्रहणवत् । प्रकृत इति काण्वपाठे । तेषामिति सोयं गकार इतिवत् । तेषां माध्यंदिनपठितानां प्राणादीनामेव सत्त्वेन । ग्राहकौ शब्दौ अन्नज्योतीरूपौ तावेव ग्राहकशब्दमात्रौ तयोर्भेदस्य । तत्तत्पाठकेति काण्वमाध्यंदिनपाठकेत्यर्थः । ग्रहीतुमिति षोडशिग्रहणाग्रहणयोर्ग्रहणवत् । षोडशी ज्योतिष्टोमसंस्था । स्वयमेकोपि ज्योतिष्टोमः समाप्तिभेदात् भिद्यते यतो यज्ञायज्ञीयस्तोत्रेण समाप्तावग्निष्टोम इत्युच्यते । तस्मादपि स्तोत्रादूर्ध्वमुक्थ्यस्तोत्रेण समाप्तावुक्थ्य इत्युच्यते । अतिरात्रे षोडशिनमित्यादिमन्त्रेण समाप्तौ षोडशीत्युच्यते । इत्येवं सप्तसंस्थावान् ज्योतिष्टोमः । श्रीभागवते तृतीयद्वादशेऽध्याये—

'षोडश्युक्थ्यौ पूर्ववक्त्रात् पुरीष्यग्निष्टुतावथ ।
आप्तोर्यामातिरात्रौ च वाजपेयं स गोसवम्' ॥ इति वाक्यम् ।

अग्निष्टुत् अग्निष्टोमः पुरीष्या अग्नयः चयनात्मकाः पुरीषं यस्यास्तीति पुरीषी च अग्निष्टुच्च पुरीष्याग्निष्टुतौ समासान्तः आप्तोर्यामः अतिरात्रस्यैव भूमा सविशेषोतिरात्र इत्यर्थः । वाजपेयोपि स्वतन्त्रो महाफलः । गोसवः गोसत्रं तयोरपि सहभावः । इति सुबोधिनी । शंकराचार्यभाष्ये तु कथं पुनरुभयेषां तुल्यवदिदं ज्योतिः पठ्यमानं समानमन्त्रगतया पञ्चसंख्यया केषांचिद्गृह्यते केषांचिन्नेति अपेक्षाभेदादित्याह माध्यंदिनानां समानमन्त्रपठितप्राणादिपञ्चतया लाभादस्मिन् मन्त्रान्तरपठिते ज्योतिष्यपेक्षा भवति तदलाभाच्च काण्वानां भवत्यपेक्षा अपेक्षाभेदाच्च समानेपि मन्त्रे ज्योतिषो ग्रहणाग्रहणे यथा समानेप्यतिरात्रे वचनभेदात् षोडशिनो ग्रहणाग्रहणे तद्वत् इत्युक्तम् । ननु व्याख्यानं पूर्वमेवेति भाष्यमात्रं व्याकृतमन्यत्कुतो न व्याकृतमित्याशङ्क्याहुः भाष्यं त्विति । अत्र यस्मिन् पञ्च पञ्चजना इति विषये संशयः अत्र पञ्च पञ्चजना इति प्रोक्ताः पदार्थाः किं सांख्यशास्त्रोक्ततत्त्वानि आहोस्विच्छ्रुतिप्रोक्ताः प्राणचक्षुःश्रोत्रमनोन्नसंज्ञकाः इति । पूर्वपक्षस्तु सांख्यशास्त्रप्रसिद्धायाः पञ्चविंशतिसंख्याया अत्रावभासनात् सांख्यतत्त्वानि पञ्च पञ्चजना इति । सिद्धान्तस्तु वाक्यशेषोक्ताः प्राणादयः पञ्च पञ्चजनाः इति । संगतिस्तु पूर्वाधिकरणोक्ता । किं च वक्ष्यपदं पचि व्यक्तीकरणे भ्वा. आ. सेट्, पचि विस्तारे चुरा प. सेट् ।

'संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ।
कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु' ॥

कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १४ ॥ (१।४।४)

श्रुतेर्विप्रतिषेधात् स्मृतिरेव ग्राह्येति मतं दूरीकर्तुं श्रुतिविप्रतिषेधो नास्तीत्यधिकरणमारभते । तत्र श्रुतौ सृष्टिभेदा बहवः क्वचिदाकाशादिका । 'आत्मन आकाशः संभूतः' इति । क्वचित् तेजःप्रभृतिका । तत् तेजोऽसृजतेति । क्वचिदन्य-

भाष्यप्रकाशः ।

कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १४ ॥ ननु पूर्वाधिकरणैः सांख्यमतस्य श्रौतत्वे निराकृते पुनरस्य किं प्रयोजनमित्याकाङ्क्षायामधिकरणप्रयोजनमाहुः श्रुतेरित्यादि । स्मृतिरिति सांख्यस्मृतिः । मतमिति सांख्याभिमतम् । नास्तीति इति बोधनाय । विप्रतिषेधबोधकं विषयमाहुः तत्रेत्यादि । असृजतेत्यन्तम् । अन्यथैवेति युगपत् साक्षात् । संशयस्तु एकस्यां सृष्टौ वक्तव्यायामेवं विप्रतिषिद्धनानाप्रकारकमनेन तदनिर्णायिकां श्रुतिं विहायैकप्रकारनिर्णायिका स्मृतिरेवादर्तव्या ? उत, विप्रतिषेधं परिहृत्य सर्वस्मृत्युपजीव्या

रश्मिः ।

इति पचेः कनिन् कर्तरि, तथा च व्यक्तीकृतबुद्धिवृत्तीनां जनाः पञ्च व्यक्तिकारका प्राणादय इत्यर्थो भवति न रूढ्या प्राणादयोर्थाः । रूढेर्वेदान्तानङ्गत्वात् । योगबोधकव्याकरणसाङ्गत्वात् । न च भाष्ये यौगिकार्थः कुतो न कृतः इति शङ्क्यम् । भगवदिच्छया प्रसिद्धो योर्थस्तत्परत्वात् भाष्यस्य, उक्तार्थाविरुद्धत्वाद्वा भाष्यस्येति ॥ १३ ॥

इति तृतीयमधिकरणम् ।

कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १४ ॥ श्रुतेरित्यादीति । भाष्ये । विप्रतिषेधात् अनेकधा विरुद्धप्रतिनिधिप्रापणात् । श्रुतेर्हेतोर्ब्रह्मणो विप्रतिषेधात् । ग्राह्येति । बुद्ध्यर्थः । ननु प्रथमस्य तृतीयपादे औदुम्बरीं स्पृष्ट्वोद्गायेदिति श्रुत्या औदुम्बरी सर्वा वेष्टयितव्येति स्मृतिरप्रमाणमित्युक्ते ग्राह्येति बुद्धिरेव नोदेतीति चेन्न । मूढग्राहेण स्मृतिसंग्रहात् । तथाहि औदुम्बरी ज्योतिष्टोमे सदोनामकस्य मण्डपस्य मध्ये काचिदौदुम्बरीशाखा निखन्यते तस्याश्च वेष्टनं वाससा स्मर्यते इति श्रुतिमूलरहिता स्मृतिरप्रमाणम् । सांख्यस्मृतिस्तु तच्छाखारूपा अष्टकाः कर्तव्या इति वाक्य-प्रत्यक्षत्वं सांख्यानाम् ।

'एकं सांख्यं च योगं च वेदारण्यकमेव च ।
परस्पराङ्गान्येतानि पञ्चरात्रं च कथ्यते' ॥

इति परस्पराङ्गत्वात् । तथा चैतन्मतम् । तदुक्तं 'यावानर्थ उदपाने' इति गीतायाम् । 'सांख्योऽप्येकः सदादृतः' इति निबन्धे । तृतीयाधिकरणे सदाचारस्य मानत्वोक्तेश्च । दूरीकर्तुमिति तस्य अप्रामाण्यवचनेन पाषण्डित्वापादकं दूरीकर्तुमधिकरणमारभत आचार्यः । ननु श्रुतिविप्रतिषेधोऽस्ति इति व्यर्थोऽधिकरणारम्भः इति चेत्तत्राहुः श्रुतीति । नास्तीति बोधनायेति योजनामाहुः प्रकाशे इत्यादि । तत्रेति भाष्यं व्याकर्तुमाहुः विप्रतीति । युगपदिति । अग्रेतनश्रुतिद्वये द्रष्टव्यम् ।

'एतस्माद् ब्रह्मणः प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथ्वी विश्वस्य धारिणी' इति ॥

मुण्डके श्रूयते । इदं परिदृश्यमानं सर्वं ब्रह्म कर्तृ असृजत इति तैत्तिरीये साक्षात् । एवं पूर्वोक्ता-तैत्तिरीये । द्वितीया छान्दोग्ये श्वेतकेतूपाख्याने । सर्वस्मृतीति इदमुपपादितं पूर्वतन्त्रे प्रथमस्य तृतीयपादे

थैव। 'एतस्माज्जायते प्राण' इति। 'इदꣳ सर्वमसृजत' इति च। एवं क्रमव्युत्क्रमानेक-विधसृष्टिप्रतिपादकत्वाद् वस्तुनो द्वैरूप्यासंभवाद्, 'ब्रह्मान्त्वा अनु प्रजा पशवः प्रजायन्ते' इतिवत् सृष्टिवाक्यानामर्थवादत्वेन ब्रह्मस्वरूपज्ञानार्थत्वादध्यारोपाप-वादन्यायेन न वेदाद्ब्रह्मणः कारणत्वं सिध्यति। अतः परिदृश्यमानजगतः कारणा-न्वेषणे क्रियमाणे बाह्याबाह्यमतभेदेषु सत्सु कपिलस्य भगवज्ज्ञानांऽशावता-रत्वात् तन्मतप्रकारेणैव जगद्व्यवस्थोचितेत्येवं प्राप्ते, उच्यते। न सृष्टिभेदेषु

भाष्यप्रकाशः।

श्रुतिरेवादरणीयेति। अनिर्णायकत्वमुपजीव्यता च संदेहबीजम्। तत्र संशयस्य पूर्वपक्षयुक्ति-भिरेवावगमात् तमनुक्त्वा पूर्वपक्षमेवाहुः एवमित्यादि। क्रमव्युत्क्रमेति नानाविधक्रमैर्नाना-विधव्युत्क्रमैश्चेत्यर्थः। सृष्टिवाक्यानीतिपाठे त्वर्थवादत्वेनेत्यस्याग्रे, प्राह्याणीति शेषो बोध्यः। शेषं स्फुटम्। एतत्समाधिं व्याकुर्वते न सृष्टीत्यादि। अयमर्थः। श्रुतयो हि ब्रह्मणस्तन्मा-हात्म्यस्य च बोधनार्थं प्रवृत्ताः। 'बन्दिनस्तत्पराक्रमैः' इति श्रीभागवते वेदस्तुतौ वाक्यात्। तत्रापि माहात्म्यमेव मुख्यम्। बोधनद्वारत्वात्। न चाध्यारोपापवादन्यायादरे ब्रह्मस्वरूप-प्रतिपत्तिः। उन्मत्तादिप्रलाप इव तत्रापि वाक्ये अप्रामाण्यस्य, श्रुतौ च प्रतारकत्वस्य स्फूर्त्या

रश्मिः।

विमता स्मृतिर्वेदमूला वैदिकमन्वादिप्रणीतस्मृतित्वात् उपनयनाध्ययनादिस्मृतिवत् न च वैयर्थ्यम्। अस्मदादीनां प्रत्यक्षेषु परोक्षेषु नानावेदेषु प्रकीर्णस्यानुष्ठेयार्थस्यैकत्र संक्षिप्यमाणत्वात्। अनिर्णायेति नन्वेतेषां पदानां श्रुतौ कुतोऽनिर्णायकत्वमिति चेन्न पुराणोपबृंहितस्य वेदस्य निर्णायकत्वात्। तमिति संशयम्। नानेति नानापदार्थो भेदः अनेकपदे नञोर्थः। आश्रयतया एकभेदोऽन्यत्रैकस्यां संख्येयायां विधायां सा भेदविशिष्टा। नानापदार्थोपि भेदः आश्रयतया विधासु। अतो भाष्योक्ता-नेकविधापदस्य नानाविधापदस्यैकार्थत्वम्। 'नानानेकोभयार्थयोः' इतिविश्वाच्च। तथा च क्रमव्युत्क्र-माभ्यामनेकविधानां सृष्टीनां प्रतिपादकत्वादिति भाष्यार्थप्राबल्येपि क्रमव्युत्क्रमयोरनेकविधानां सृष्टीनां प्रतिपादकत्वादित्यर्थे क्रमव्युत्क्रमसंबन्ध्यनेकविधासंबन्धिनी न सृष्टीनामित्यर्थेनेकविधानां क्रमव्युत्क्रमयोरपि नानादेवमर्थ उक्तः। शेषमिति। वस्तुनो ब्रह्मणः। द्वैरूप्यं विकृतत्वम्। अतः प्रकृतिर्मायाऽविद्या वा कर्त्री पुरुषोऽसंग इति भावः। गृह्णानिति श्रुतौ वै निश्चये गृह्णानिति द्वितीयाऽनोर्योगे ज्ञेया। श्रुतिस्तु षष्ठाष्टकपञ्चमाध्याये। अर्थवादत्वेनेति दृष्टान्तेऽर्थवादोऽनुवादा-त्मकः प्रत्यक्षसिद्धार्थानुवादात्। 'अग्निर्हिमस्य भेषजम्' इतिवत्। दार्ष्टान्तिकेप्यर्थवादत्वं आद्ये गुणानु-वादत्वं वा 'आदित्यो यूपः' इतिवत्। गुणवादरूपार्थवादत्वम्। आकाशाद्वायुरित्यत्राथवा अद्भ्यः पृथिवी-त्यत्राप्सु पृथिव्युपादानत्वरूपप्रत्यक्षविरुधार्थबोधकत्वविरोध इति। आदित्ये यूपे आदित्यत्वरूप-प्रत्यक्षविरुद्धार्थबोधकत्वविरोधवत्। ननु सांख्यमते निराकर्तव्ये भाट्टमतस्य किं प्रयोजनमिति चेदुच्यते। मायाप्रकृत्यविद्यावादा अपि श्रौता इति भाष्यस्यानुमानिकसूत्रे दर्शनान्मायावादिनां व्यवहारे भाट्टमताङ्गीकारात् तत्तुल्ये सांख्यमतेपि भाट्टमतबोधनस्यैव प्रयोजनत्वात्। ब्रह्मेति 'असङ्गो ह्ययं पुरुषः' सांख्यसूत्रोक्तब्रह्मस्वरूपेत्यादिः। अध्यारोपेति जगज्जन्मादिकर्तृत्वं तटस्थ-लक्षणं काकवन्तो देवदत्तस्य गृहाः इतिवत्। इदं मायोपहितस्य ब्रह्मणः, अयमेवाध्यारोप इत्युच्यते। अस्यापवाद इदानीमुच्यते अपवादो नाम अधिष्ठाने भ्रान्त्या प्रतीतस्य तद्व्यतिरेकेणाभावनिश्चयः।

रश्मिः ।

यथा शुक्त्यादौ भ्रान्त्या प्रतीतस्य रजतादेः शुक्तिव्यतिरेकेण नेदं रजतं किं तु शुक्तिरित्यभावनिश्चयः, अनेन न्यायेन । तत्त्वानुसंधानेस्य प्रपञ्चः । न वेदादिति 'अथात आदेशो नेति नेति' 'नेह नानास्ति किंचनेति' अपवादरूपाद्वेदात् । बाह्येति बाह्या नास्तिकाः । अबाह्याः प्रच्छन्नबौधाः माया-प्रकृत्यविद्यावादिनः । ज्ञानेति तृतीयस्कन्धे कपिलोपाख्याने । एवं शेषं स्फुटमित्यर्थः । अत्र वेदार्थस्य निर्गुणसगुणरूपस्य आरोपापवादसंगत्यधीनत्वं सतो ह्यारोपापवादयोः वेदस्यार्थवादत्वं स्वार्थे प्रमाणाभावोपपादने बाधकाभावादतो निर्वाहकसंगतिं सूचयितुं श्रुतिविप्रतिषेधं निषेधन्ति अतोऽध्यारोपापवादसंगतिनिषेधतात्पर्यमिति । अनेनाशयेन भाष्यं विवृण्वन्ति अयमर्थ इति । स्याद्यदि ह्यारोपापवादसंगत्या वेदार्थः स्याच्चेर्हि अधिष्ठाने भ्रान्त्या प्रतीतस्य जगत्कर्तृत्वादेः तद्व्यतिरे-केणाभावनिश्चयः न त्वेवं श्रीभागवते क्वचिच्छ्रूयमाणोप्यध्यारोपपावादो न सार्वत्रिकः । जगन्मिथ्यात्व एव जगज्जन्मादिकर्तृत्वापवादापत्त्या जगन्नित्यत्वबोधकश्रीभागवतविरोधात् । किं तु पुराणमतत्वेन पुराण एव । भगवदिच्छावशात् । अतो वेदस्तुतिवाक्यं श्रीभागवतीयं वक्ष्यन्ति तदाहुः श्रुतय इति । माहात्म्यं देवत्वं तच्च पदजन्यपदार्थो भवति । अत्र पदज्ञानं तु करणं 'यतो वा इमानि भूतानि जायन्ते' इत्याद्युक्तपदानां ज्ञानं करणं, माहात्म्यरूपपदार्थधीस्तद्बोधनरूपा द्वारं, शाब्दबोधः फलम् । स च यतो यच्छब्दार्थभूताभिन्ननिमित्तोपादानिका प्रत्यक्षभूतकर्तृका जनिरिति । नन्वध्या-रोपापवादानङ्गीकारे वस्तुनो वैरूप्यापत्तिस्तदङ्गीकारे ब्रह्मस्वरूपस्य शुद्धबुद्धमुक्तस्वभावासङ्ग-रूपस्य प्रतिपत्तिः प्रकृत्यादेर्वैरूप्यादित्याशङ्कते वादीत्याहुः न चेति । इति शङ्क्यमिति योजनीयम् । तत्रापीति वेदान्तेष्वपि यत्र विधिं परिकल्प्यार्थवादा योज्यन्ते तत्रेत्यर्थः । प्रतारेति प्रकृष्टतारको दैत्यः 'प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः' इत्युक्तस्तत्त्वस्फूर्त्या । अत इति । तादृशन्याया-नादरणसमानाधिकरणा कारणस्य सिद्धिः । कालोधिकरणम् । अयमर्थः यावत्कालमुक्तन्यायादर-स्तावत्कालं न कारणसिद्धिः वेदस्यार्थवादत्वेन स्वार्थे प्रामाण्याभावात् कारणत्वबोधकस्य । यदा तु उक्तन्यायानादरस्तदा तु वेदस्यानधिगतार्थगन्तृत्वलक्षणप्रामाण्यम् । निर्वाहकसंगत्या स्फोरणात् । ननु क्वोक्तेयं संगतिरिति चेन्न श्रीभागवत एव—

'ब्रह्मन् ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः ।
कथं चरन्ति श्रुतयः साक्षात्सदसतः परे' ॥

इति राज्ञा पृष्टः श्रीशुकः स्वरूपलक्षणं त्यक्त्वा 'बुद्धीन्द्रियमनःप्राणान् जनानामसृजत्प्रभुः' इति तटस्थलक्षणमाहेति । न च गुणवृत्तय इति श्रुतिविशेषणात् आरोपापवादोपीति वाच्यम् । 'अथातो ब्रह्मजिज्ञासा' इति प्रतिज्ञाय 'जन्माद्यस्य यतः' इत्यवदद्यतो व्यासः अत्राप्येवमिति चेन्न पूर्वं स्वरूपलक्षणमित्यादसंदिग्धत्वेपीति सहृदयैर्विचारणीयम् । निर्गुणब्रह्म प्रतिज्ञाय सगुणनिरूपणे व्यासस्य प्रतिज्ञाहानिरूपनिग्रहस्थानापत्तिरुपक्रमविरोध इत्यलम् । विद्वन्मण्डने निर्गुणसगुणप्रति-पादकश्रुतिभागौ कल्पयित्वा बाध्यबाधकभावविचारे

'अभेदादनुपाधित्वाज्जगदप्रत्ययाश्रितः ।
सर्वाधारत्वतस्तावच्छक्तित्वान्नास्य बाधनम्' ॥

इत्यस्याः कारिकायाः विवरणे । किं च ब्रह्मनिरूपकमहावाक्ये त्वन्मते सृष्टिनिरूपकाणि वाक्यान्यसंगतानि स्युः तदनिरूपकत्वात् । नन्वस्ति संगतिरध्यारोपापवादलक्षणा । तथाहि शुद्धब्रह्मणो

ब्रह्मणः कारणत्वे विप्रतिपत्तिः । सर्वप्रकारेषु तस्यैव कारणत्वोक्तेः । आकाशादिषु कारणत्वेन ब्रह्म यथा व्यपदिष्टमेवैकत्र, अन्यत्रापि तथैव कारणत्वेनोक्तम् । 'न तस्य कार्यं करणं च विद्यते' इत्यादिनिराकरणं तु लौकिककर्तृत्वनिषेधपरम् ।

भाष्यप्रकाशः ।

विश्वासनाशप्रसङ्गात् । अतस्तस्य न्यायस्यानादरे कारणस्य सिद्धौ न सृष्टिप्रभेदेषु ब्रह्मणः कारणत्वे विप्रतिपत्तिः । सर्वप्रकारेषु कारणत्वोक्तेः । तदेतदाह कारणत्वेन चाकाशादिष्विति । आकाशतेजःप्रभृतिषु क्रमिकेषु प्राणादिषु चाक्रमिकेषु कार्येषु कारणत्वेन यथाव्यपदिष्टोक्तेः । एकत्र यथैव सर्वज्ञत्वसर्वेश्वरत्वसर्वात्मत्वैकत्वाद्वितीयत्वसच्चिदानन्दरूपत्वादिधर्मवत्तया कारणत्वेन व्यपदिष्टमेवमन्यत्रापि तदेव कारणत्वेनोक्तं, तस्मादिति । नच, 'न तस्य कार्यम्' इति निषेध-

रश्मिः ।

दुर्ज्ञेयत्वेन तज्ज्ञापनाय जगज्जननमुक्त्वा कर्तृत्वभोक्तृत्वे प्रतिपाद्य तद्द्वारा सोपाधिके ब्रह्मणि बुद्धौ सिद्धायां शाखारुन्धतीन्यायेन पूर्वोक्तमपोह्य कर्तृत्वाद्यपेतं ब्रह्म पश्चाद्बोध्यते इति चेन्नैवं वक्तुं युक्तं जगद्प्रतीतिप्रसङ्गात् । तथाहि न हि जगत्प्रतीतिः श्रुतिसिद्धा येन पूर्वं बोधयति पश्चान्निषेधतीत्युच्येत किंतु लौकिकसिद्धा । तथा च तत्र कर्त्रपेक्षायां कर्तारमेवोपदिशतीति वक्तुं युक्तं न तु लोकसिद्धमेव जगदनुद्य तत्र कर्तृत्वं बोधयित्वा पश्चान्निषेधतीति । तथा सति कार्यस्य प्रतीतिसिद्धत्वेन कर्त्रन्तरस्याभावाच्च जगत एवासंभवेनानुवादो बाधितविषयः स्यादित्यादिना । जगत्प्रतीतिरत्र शाब्दी श्रुतिसिद्धेति चेन्न नित्यानित्यसंयोगमिया इमानि भूतानि इत्यत्र शाब्यास्तस्या अभावात् । आधिदैविकानीमानि भूतानीति प्रतीतिः श्रुतिसिद्धा, आधिभौतिकभूतविषयिणी त्वियम् । इदंपदप्रयोगात् । नन्विमानि भूतानीत्यत्राधिदैविकप्रतिपादकान्याधिभौतिकप्रतिपादकानीति चेन्न आधिदैविकप्रतिपादकानि सन्तीदृशस्थलेऽभियुक्तप्रसिद्ध्याधिभौतिकेष्वर्थेषु तात्पर्यवन्तीत्यभ्युपगमात् । सादृश्यात्स्मारकाणि आधिभौतिकानां वा । तथा च निर्वाहकसंगतिः स्फुटति । 'न कर्तृत्वनिषेधो ब्रह्मणि शक्यनिरूपणः' इति विद्वन्मण्डनात् । किमन्यद्ब्रह्मज्ञाननिर्वाहकमिति जिज्ञासया सृष्टिनिरूपकवाक्यानां निरूपणात् । प्रकृतमुच्यते । कारणस्य सिद्धाविति सामानाधिकरण्ये सति सप्तमी 'सिद्धिसमानाधिकरणं न सृष्टीत्यादिभाष्योक्तमित्यर्थः । तथाहि । निर्वाहकसंगत्यार्थवादत्वनिवृत्तौ सर्वकारणप्रतिपादकानां 'आत्मन आकाशः संभूतः' इत्यादीनां स्वार्थे प्रामाण्योपपत्तौ तदुक्तेषु सर्वप्रकारेषु तस्यैव न तु प्रकृतेः कारणत्वोक्तिस्तस्याः । न सृष्टिभेदेषु ब्रह्मणः कारणत्वे विप्रतिपत्तिरिति भाष्यार्थः प्रकाशेन सिद्धः । न च कारणस्य सिद्धावित्यन्तप्रकाशस्य न सृष्टीत्यादिभाष्येणान्वयोऽस्त्विति शङ्क्यम् । अस्य भाष्यस्य सिद्धत्वापत्त्या सर्वप्रकारेष्विति भाष्यस्य न सृष्टीत्याद्यर्थसाधकस्य वैयर्थ्यापत्तेः । आहेति सूत्रकार आह । कारणत्वेनेति । सूत्रव्याख्यानेनैवाकाशादिष्विति भाष्यं विवृण्वन्त आहुः आकाशतेज इति । स्पष्टयांचक्रुः एकत्रेति । 'यतो वा इमानि भूतानि जायन्ते' इत्यत्र 'जन्माद्यस्य यतः' इत्यधिकरणे मुख्यतयोक्तेः । सर्वज्ञेति जगदुपादानापरोक्षज्ञानचिकीर्षाकृतिमत्त्वं जगत्कर्तृत्वं तेन 'यः सर्वज्ञः' इति श्रुत्युक्तसर्वज्ञेति । मनसाप्याकलयितुमशक्यस्य विचित्रसन्निवेशस्य सर्वेश्वरातिरिक्तकारणासंभवात् सर्वेश्वरत्वेति । समवायित्वात्सर्वात्मत्वेति अनेकेश्वरेषु सत्सु विसंमतिरत एकत्वेति । एकरसत्वव्याहत्यापत्तिरतोऽद्वितीयत्वेति । सगुणत्वं स्यादतः सच्चिदानन्दरूपत्वेति । आदिपदेन वैषम्यनैर्घृण्यापत्तिवारणाय कृतप्रयत्नापेक्षत्वम् । व्यपदिष्टमिति यथा यथावद्व्यपदिष्टम् । तस्योक्तेरिति सूत्रेर्थो न तु व्यपदिष्टमनतिक्रम्येति यथाव्यपदिष्टमित्यव्ययीभावो व्याख्यानात् । अन्यत्रेति उक्तेषु 'आत्मन आकाशः संभूतः' इत्यादिषु । न तस्येति भाष्यं विवृण्वन्ति स्म न चेति । श्वेताश्वतरे षष्ठाध्याये ।

तस्यैव प्रतीतेः । सर्ववैलक्षण्यार्थं वैदिकानामबाधितार्थैकवाक्यस्वस्याभिप्रेतत्वादिति चकारार्थः । कार्यप्रकारे भेदस्तु माहात्म्यज्ञापको न तु बाधकः । बहुधा कृतिसामर्थ्यं लोकेऽपि माहात्म्यसूचकमिति । तस्माच्च श्रुतिविप्रतिषेधात् स्मृतिपरिग्रह इति सिद्धम् ॥ १४ ॥

इति प्रथमाध्याये चतुर्थपादे एकसूत्रं यथा व्यपदिष्टाधिकरणं चतुर्थम् ॥ ४ ॥

---

भाष्यप्रकाशः ।

श्रुतिव्याकोपः । तस्य लौकिककर्तृत्वनिषेधपरत्वात् । निषेधकवाक्योत्तरार्धे 'स्वाभाविकी ज्ञानबलक्रिया च' इति स्वाभाविकक्रियासद्भावप्रतिपादनात् । द्वितीयपादे समाऽभ्यधिकनिषेधाच्च । कार्यकारणसापेक्षलौकिककर्तृत्वनिषेधस्यैव प्रतीतेरिति । चकारसूचितं हेत्वन्तरमाहुः सर्ववैलक्षण्येत्यादि । वैदिकानामिति पदवाक्यानाम् । सिद्धमाहुः तस्मादित्यादि । उक्तरीतौ कस्या अपि श्रुतेर्व्याकोपाभावात् तथेत्यर्थः ॥ १४ ॥

इति प्रथमाध्याये चतुर्थपादे चतुर्थमेकसूत्रं यथाव्यपदिष्टाधिकरणम् ॥ ४ ॥

रश्मिः ।

'न तस्य कार्यं करणं च विद्यते न तत्समश्चाप्यधिकश्च दृश्यते ।
परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' ॥ इति ।

लौकिकेति तत्त्वं तु कार्यस्य घटादेः कारणं समवायिनिमित्तं तज्ज्ञानरूपं तत् सापेक्षत्वं अलौकिकत्वं ब्रह्मनिष्ठमभिन्ननिमित्तोपादानत्वम् । इच्छाया धर्मत्वेन कार्यत्वादन्यानपेक्षत्वं च । एतदेवाहुः कार्यकारणेति तस्यैवेत्यादिभाष्यविवरणमिदम् । तथा च तस्यैवेत्यादिभाष्यस्यार्थस्तावत् तस्य कार्यकारणसापेक्षलौकिककर्तृत्वनिषेधस्यैव प्रतीतेः । कस्मै प्रयोजनायेत्याहुः सर्वेति । न च पदार्थकारणेभ्यो वैलक्षण्यार्थम् । न च कामधेन्वादेर्नवतत्त्वान्तर्गतत्वेन न नवपदार्थकारणेभ्यो वैलक्षण्यमिति शङ्क्यम् । कामधेन्वादेः कार्यत्वेनाकार्यत्वेनापि वैलक्षण्यस्य विवक्षणात् । अत्र नैयायिकयुक्तिसंचार इति सर्वेति भाष्यस्यार्थान्तरं चाहुः चकारेति । चकारार्थोऽग्रे वाच्यस्तेनायमर्थः सूच्यते । भाष्येसोक्तार्थेन चकारार्थो वैदिकानामित्यादिर्ध्वनितः अनधिगतो यः सृष्टिभेदेषु ब्रह्मणः कारणत्वे विप्रतिपत्त्यभावोर्थः तस्य गन्तृत्वं तस्य प्रमाण्यस्य 'आत्मन आकाशः संभूतः' इत्यादिषु विषयत्वेनोदाहृतेषु सत्त्वात् । वैदिकानां लोकानधिगतो यो अबाधितार्थः पूर्वोक्तस्तस्याधिकरणात्मकेनार्थेऽस्यैकवाक्यत्वस्य तथा च सर्ववैलक्षण्यं चकारेण सूच्यत इत्यर्थः । अनधिगतार्थगन्तृत्वं प्रामाण्यमित्यत्र चकारो मानमित्युक्तम् । तथा च व्याकरणादिना श्रुत्यर्थे कृते 'यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः' इति तर्कादिसंपातेनाधिगतार्थगन्तृत्वं प्रामाण्यं दुष्टं भवेत् । एवं तु श्रुत्यनुकूलतर्कं प्रगृह्य नैषा तर्केण मतिरापनेयेति श्रुत्या यथार्थवस्तुज्ञानं भवतीति । माहात्म्येति । 'यथा त्रिविधभक्तेषु त्रिविधा भगवत्कृतिः' देवत्वबोधकम् । यथा वा दशविधलीला देवत्वबोधिका । लोके इति स्मृतौ व्यासादीनां माहात्म्यस्य वाचकं माहात्म्यपदं, सूचकं तु बहुधा कृतिसामर्थ्यं पदमर्थो वा काव्यप्रकाशे अर्थस्य व्यञ्जकत्वं यथा 'सर्वेषां प्रायशोर्थानां व्यञ्जकत्वमपीष्यते' इति । तत्त्वं वाच्यस्य यथा ।

'माए घरोव अरणं अज्जहु णत्थि त्ति साहिअं तुमए ।
ता भण किं करणिज्जं एमेअ ण वासरो ठाइ' ॥

---

१. मातर्गृहोपकरणमद्य खलु नास्तीति साधितं त्वया । तद्भण किंकरणीयमेवमेव न वासरः स्थायी ॥

## समाकर्षात् ॥ १५ ॥ (१।४।१५)

पुनरन्यथाशङ्क्य परिहरति । ननु क्वचित् 'असद्वा इदमग्र आसीत्' इति क्वचित्, 'सदेव सोम्येदमग्र आसीत्' । तद्धैक आहुरसदेवेदमग्र आसीत् । अव्याकृतमासीत् । 'नासदासीन्नो सदासीत्' 'तम आसीत्' इत्यादिवाक्येषु ब्रह्मणोऽपि विगानं श्रूयते । तद्धैक आहुरितिवत् पक्षान्तरं संभवति । न ह्यसत्तमःशब्दैर्ब्रह्म

---

भाष्यप्रकाशः ।

**समाकर्षात्** ॥ १५ ॥ सूत्रमवतारयन्ति पुनरित्यादि । प्रकारान्तरेण श्रुतिविप्रतिषेधमाशङ्क्य परिहरतीत्यर्थः । अत्रापि संशयस्तद्बीजं च पूर्ववदेव । एकस्य ब्रह्मणः कारणत्वे वक्तव्ये नानाशब्दानां कारणे प्रयोगादनिर्णायिकां श्रुतिं विहायेत्येतावान् विशेषः । पूर्वपक्षमाहुः ननु क्वचिदित्यादि । विगानमिति विरुद्धं गानम् । कै गै शब्दे । विरुद्धः शब्दः कारणान्तरबु-

रश्मिः ।

माए मातः अनेन सुखानुज्ञानार्थं प्रियोक्तिः सूच्यते । घरोव अरणं गृहोपकरणं तण्डुलादि, अनेनावश्यकरणीयत्वं सूच्यते । अज्ज अद्य, अनेन शीघ्रत्वं सूच्यते । खलु ण त्थित्ति नास्तीति साहियं कथितम्, तुमए त्वया । अनेन मया व्याजो नोत्पादितः इति सूच्यते, ता तस्मात् भण, भणं अनेन प्रेरणार्थः शीघ्रत्वं सूच्यते, किंकरणिज्जं किं करणीयम् । एमेय एवमेव, ण न, वासरो वासरः, ठाइ तिष्ठति । अनेन सायंकाले मम पतिव्रताया गमनं नोचितमित्यात्मनः शुद्धत्वं द्योत्यते । त्वरया प्रेरय इति वा । अत्र व्यङ्ग्यं किमित्याकाङ्क्षायां काव्यप्रकाशे व्यङ्ग्यमुक्तम् । अत्र स्वैरविहारार्थिनीति व्यज्यते । अत्रान्येषां मतानि नान्यविधानि । माध्वास्तु आकाशादिष्ववान्तरकारणत्वेनापि स एव स्थितः । यथाव्यपदिष्टस्यैव परस्य यश्चाकाशे तिष्ठतीत्यादिनाऽऽकाशादिषूक्तेः ॥१४॥

इति चतुर्थाधिकरणम् ॥ ४ ॥

**समाकर्षात्** ॥१५॥ सर्वशब्दानां परमात्मवाचिनः शब्दाः अन्यत्र समाकृष्य व्यवह्रियन्ते ।

'परस्य वाचकाः शब्दाः समाकृष्येतरेष्वपि ।
व्यवह्रियन्ते सततं लोकवेदानुसारतः' ॥

इति पाद्मे चेत्याहुः तत्स्पष्टमिति नात्र सिद्धान्ते सूत्रं प्रवर्तितम् । समाकर्षादित्यधिकरणे भिन्नभिन्नशब्दप्रयोगप्रयोजनं न किमपि स्फुटतीति दूषणं वक्ष्यते संगतिस्तु निर्वाहकरूपैव । विषयस्तु उक्तश्रुतिरूपः । सांख्यस्मृतिरूपश्च । आकाशादिषु कारणत्वेन यथा व्यपदिष्टायाः प्रकृतेरित्येवं सूत्रार्थस्पर्शित्वात् । न च स्मृतेः सूत्रविषयत्वं नास्त्यपीति युक्तम्, पूर्वतन्त्रे षष्ठेध्याये सत्त्वात्, तथा हि षष्ठस्य द्वितीयपादे षष्ठाधिकरणे 'उपनयनादिर्नियमः' इति प्रागुपनयनात्कामचारवादभक्षा' इति स्मृतिविषय इति । ननु तर्हि कुतो दूषणमष्टकाः कर्तव्या इति स्मृतिवत् प्रमाणमस्त्विति चेन्न प्रकृतिवादत्वेन मूलश्रुत्यभावात् सर्ववेष्टनस्मृतिवत् प्रमाणत्वं न श्रुत्युक्तत्वेनेत्यलम् । सदाचारस्यापि मातुलकन्यापरिणयवदादरः । पूर्वतन्त्रे तृतीयपादे पञ्चमाधिकरणे मातुलकन्यापरिणये सदाचार उक्तः । सदाचारस्य स्मृतिमूलत्वम् ।

स्मृतिस्तु—'मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च ।
समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत्' ॥ इति ।

तद्वत्प्रकृतेऽपि पाद्मे द्विचत्वारिंशाध्याये रुद्र उवाच ।

'शृणु देवि प्रवक्ष्यामि तामसानि यथाक्रमम् ।
येषां श्रवणमात्रेण पातित्यं ज्ञानिनामपि' ॥ इत्युक्त्वा ।

भाष्यप्रकाशः ।

ज्ञमुल्लासकः । कर्मवदिति । यथा, मलवद्वाससोऽन्नं नाद्यादिति निषिध्य अथो खल्वाहुरभ्यञ्जनं वा व स्त्रिया अन्नमभ्यञ्जनमेव न प्रतिगृह्यं कामनयान्यदिति पक्षान्तरं कर्मविशेष उक्तं तद्वत् ।

रश्मिः ।

'प्रथमं हि मयोक्तं वै शैवम्' इत्युक्त्वा 'काणादेन तु संप्रोक्तं शास्त्र'मित्युक्त्वा 'सांख्यं तु कपिलेन वा' इति परंपरया पातित्यसाधकवाक्यम् । समाकर्षात् । सूत्रमित्यधिकरणात्मकं सूत्रम् । ननु पूर्वाधिकरणे इमाः श्रुतीरुक्त्वा ब्रह्मविगानपरिहारार्थं सूत्रमिदमिति कुतोधिकरणमिति चेन्न । पूर्वश्रुतिषु सृष्टिवैचित्र्याद्ब्रह्मणः सतो विकारित्वापत्त्या प्रकृतिः कर्त्री पुरुषोऽसङ्ग इति श्रुतिविप्रतिषेधात्स्मृतिपरिग्रहस्तर्कितः । अत्र तु ब्रह्मविगानेन श्रुतिविप्रतिषेधात् स्मृतिपरिग्रहस्तर्कितः इति भेदात् । प्रकारेति प्रकारोत्र विप्रतिषेधे स च प्रकृतिः कर्त्री पुरुषोऽसङ्ग इति हेतुकः श्रुतिविप्रतिषेध इति तादृशहेतुकत्वम् तस्मादन्यः प्रकारः प्रकारान्तरं ब्रह्मविगानेन श्रुतिविप्रतिषेध इत्यत्र ब्रह्मविगानहेतुकः श्रुतिविप्रतिषेध इति ब्रह्मविगानहेतुकत्वं तेन अयं भाष्यीयान्यथाशब्दार्थः । तथा च पूर्वाधिकरणे सेश्वरसांख्यः अस्मिन्नधिकरणे निरीश्वरः सांख्य इत्यपि भेदः । पूर्ववदिति अत्रापि श्रुतिरूपो निरीश्वरसांख्यस्मृतिरूपश्च विषयः । संदेहबीजं तु अनिर्णायकत्वमुपजीवत्वं च । पूर्वस्माद्विशेषमाहुः एकस्येति । विशेष इति अग्रे तु एकप्रकारनिर्णायका निरीश्वरसांख्यस्मृतिरेवादर्तव्या उत विप्रतिषेधं परिहृत्य सर्वस्मृत्युपजीव्या श्रुतिरेवादरणीयेति विशेषपूरणम् । ननु क्वचिदित्यादीति तैत्तिरीये क्वचिदिति छान्दोग्ये । एवमव्याकृतमिति पुरुषविधब्राह्मणेस्ति । नासदासीदिति ब्राह्मणे द्वितीयाष्टकेऽष्टमाध्याये पीवोन्ना९रजिवृद्धः सुमेधा इत्यारम्भकेस्ति वै आदिपदेन बृहदारण्यके आरणे । नेति नेतीति मूर्तामूर्तब्राह्मणे वाक्यपदोपादानं श्रुतिपदमपहाय ज्ञापयति 'यन्नेति नेतीत्यतदुत्सिसृक्षवः' इति श्रीभागवतवाक्यम् । तद्धैक इति । एके मुख्यान्यकेवलाः इति कोशात् एके मुख्या आहुरित्यर्थे कर्मणा ब्रह्मत्वे पक्षान्तरे तत्कर्म तदसतो ब्रह्मत्वे पक्षान्तरं संभवतीत्यर्थः । कर्मवदित्यस्यार्थमाहुः यथा मलवदिति कर्मवत् ससम्याद्वतिः । दर्शपूर्णमासाख्य कर्मणीव तद्धैक इति श्रुतावपि पक्षान्तरं संभवतीति भाष्यार्थः । कर्मणि किं पक्षान्तरमित्याकाङ्क्षायामाहुः यथा मलेति अयं न्यायः तृतीयस्य चतुर्थपादेस्ति प्रागवरोधान्मलवद्वाससः इत्यधिकरणे मलवद्वाससा न संवदेत न सहासीत नास्यान्नमद्यात् ब्रह्महत्यायै ह्येषा वर्णं प्रतिमुच्यास्ते इति निषिद्ध नास्या अन्नमद्यादिति श्रुत्यर्थः प्रकाशे उपन्यस्तः । तत्रायं प्रतिषेधः क्रत्वर्थ आहोस्वित् पुरुषार्थ इति संदेहे क्रत्वर्थः प्रकरणादिति प्राप्ते रजस्वला निःक्रतुव्यापारा तामवरुद्ध्य यजेत इति वाक्यात् क्रतावप्राप्तत्वात् पुरुषे च स्वतन्त्रे प्राप्तत्वान्निषेधोत्र पुरुषार्थ इति स्थितम् । अभ्यञ्जनं घृततैलेन वा युक्तं दीपधूमः । कामं यथेच्छम् । अन्यदिति पृथ्वी वा अन्नमिति श्रुतौ पृथ्वी ग्राह्येत्यर्थः । कर्मविशेष इति दर्शपूर्णमासयोः । वेश्मिति 'असन्नेव स भवति असद्ब्रह्मेति वेद चेत्' इत्यत्रासद्ब्रह्मवेत्तृनिन्दया । भवतो निषेधः । श्रुती तैत्तिरीये । अन्येति प्रथमनिर्दिष्टा अप्यसत्प्रतिपादिकाः श्रुतयः पक्षान्तरपरत्वेन पश्चात् संगृहीता अतः प्रथमा परित्यज्याव्याकृतपदपठितश्रुत्यर्थपुरस्कारेणार्थमाहुः अव्याकृतेति ।

प्रतिपादयितुं शक्यते। असन्नेव स भवतीति बाधात्। आदित्यवर्णं तमसः परस्तादिति च। तस्मात् कारणत्वेनापि श्रुतिविप्रतिषेधाद् ब्रह्म कारणं नेत्येवं प्राप्ते उच्यते समाकर्षात्। आकृष्यते स्वस्थानाद्यत्राऽन्यत इत्याकर्षः सर्वेष्वेतेषु वाक्येषु असदादिपदानां न निरात्मकत्वाद्यर्था उच्यन्ते। किंतु वैलक्षण्येन।

भाष्यप्रकाशः।

तमसः परस्तादिति असन्नेवेत्यत्र यथावेत्तृनिन्दया बाध एवमत्र तमःपरत्वकथनेन बाधादित्यर्थः। तस्मादिति अव्याकृतपदेनाव्यक्तस्य प्रधानस्य ग्रहीतुं शक्यत्वात्। श्रुतौ पक्षान्तरस्याप्यङ्गीकारादसदादिशब्दैर्ब्रह्मणः प्रतिपादयितुमशक्यत्वाच्च। शेषमतिरोहितार्थम्। अत्र समाधानं सूत्रकथनपूर्वकं व्याचक्षते आकृष्यत इत्यादि। कारणत्वेनेति पूर्वस्मादनुवर्तते। कारणत्वेन ब्रह्मैवादरणीयम्। अतो नात्र श्रुतिविप्रतिषेधः। कुतः? समाकर्षात्। आकर्षत इत्याकर्षः। समीचीनो निश्चायनार्थं आकर्षः समाकर्षस्तस्मात्। सामीचीन्यं व्युत्पादयन्ति सर्वेष्वित्यादि। किंतु वैलक्षण्येनेति एकश्रुत्युक्तरूपविलक्षणरूपान्तरमभिप्रेत्य श्रुत्यन्तरे तस्य तस्य शब्दस्य स्वार्थात्

रश्मिः।

श्रुताविति तद्धैक आहुरिति श्रुतौ। तर्हि असदादिपदैः कः प्रतिपाद्य इति चेच्छृणु असन्मृत्युरिति बृहदारण्यकादसच्छब्दप्रतिपाद्यो मृत्युः 'मेनेऽसन्तमिवात्मानम्' इति लोकोक्तासच्छब्दार्थो वा। आदिपदेन 'नासदासीन्नो सदासीत्तदानीम्' इत्युक्तः सदसद्विलक्षणः पदार्थः कश्चित्। भाष्यार्थस्तु तस्माद्ब्रह्मणोपि विगानात् कारणत्वेन रूपेण श्रुतिभिरसदादिनिरूपकैः विरुद्धस्य प्रधानस्य प्रति प्रतिनिधिरूपस्य षेधात्प्रापणात्। अपिशब्देन पूर्वाधिकरणोक्ताभिरात्मन आकाश इत्यादिश्रुतिभिः वैरूप्यप्रतिपादिकाभिः श्रुतिप्रतिपाद्याद्विरुद्धस्य प्रधानस्य प्रति प्रतिनिधिरूपस्य प्रापणाच्च ब्रह्मकारणं नेति। न च श्रुतेर्विप्रतिषेधादिति भाष्ये षष्ठीतत्पुरुषाङ्गीकारात् तद्विरोध इति शङ्क्यम्। कर्मादीनामपि संबन्धसामान्यविवक्षायां षष्ठ्येवेति षष्ठ्यङ्गीकारात् विप्रतिषेधपदेन बाधोक्तेश्च। इह तु बाधपदमतिहाय विप्रतिषेधपदमुक्तम् तदन्वर्थमित्येवं समर्थितम्। सूत्रकथनेति। व्याख्यातुमिति भावः। पूर्वं तु उद्देशमात्रम्। ब्रह्मैवेति जिज्ञासासूत्रादनुवृत्तम्। नात्रेति साध्यं तु भाष्यम्। एतदर्थं हेतुरूपाधिकरणावतरणात्। तथाहि ब्रह्मपक्षः न कारणमिति साध्यम्। श्रुतिविप्रतिषेधादिति हेतुः। अत्र ब्रह्मणि श्रुतिविप्रतिषेधरूपत्वप्रसिद्धिः। स्वरूपासिद्धिभेद इत्याहुः। नात्रेति अत्र ब्रह्मणि न श्रुतिविप्रतिषेधः समाकर्षादिति पूर्वसूत्रादनुवृत्तश्चकारस्तदर्थः। वैदिकानामबाधितार्थैकवाक्यत्वस्याभिप्रेतत्वाच्चेति। अधुना व्याचख्युः आकृष्यत इतीति। समीचीनं विवृण्वन्ति निश्चयनार्थं इति यथा असदितिपदं स्वस्थानान्मृत्युरूपादर्थात् प्रच्याव्यन्ते स आकर्षः स समीचीनः। लक्षणाद्यन्तरेण तृतीयाध्याये वक्ष्यमाणविरुद्धधर्माश्रयत्वनिश्चायनार्थः। सद्ब्रह्मासद्ब्रह्मेति सत्त्वासत्त्वे हि नकुलवद्विरुद्धौ धर्मौ. तदाश्रयत्वनिश्चायनार्थः। 'न चासन्नेव स भवति असद्ब्रह्मेति वेद चेत्' इति श्रुत्युक्तासत्त्वं वेत्तरि स्यादिति शङ्क्यम्। विरुद्धधर्माश्रयत्वेन वेत्तुरङ्गीकारात्। सामीचीन्यमिति विरुद्धधर्माश्रयत्वस्य लक्षणाद्यन्तरानिश्चायनार्थः। निश्चायनेत्यत्र नन्द्यादित्वाल्ल्युः। सर्वेष्वित्यादीति। भाष्ये। न निरात्मकेति। निर्गतः सत्पदार्थ आत्मा यस्मात्तन्निरात्मकम्। 'असन्नेव स' इति श्रुतौ निन्दाश्रवणात्। किं त्विति नञर्थभूतवैलक्षण्येन। प्रकृते। नञर्थषट्कं प्राचीनानां तेषु विरोधितारूपं वैलक्षण्यमादाय भाष्यार्थमाहुः एकेति। विरोधो नञर्थः अधर्म इत्यत्र

सर्वशब्दवाच्यत्वं च सिद्धं ब्रह्मणः । यथा 'को अद्धा वेद' । 'क इह प्रावोचत्' । 'सर्वे वेदा यत् पदमामनन्ति' । 'यतो वाचो निवर्तन्ते' । 'मनसैवानुद्रष्टव्यम्' इत्यादिसर्वे विरुद्धधर्मा भगवत्युच्यन्ते । एवमनेकविरुद्धशब्दवाच्यत्वं लोक-प्रसिद्धताद्दशार्थात् समाकर्षादवगम्यते । तं यथा यथोपासते तथा भवतीति फलज्ञापनार्थमसन्नेव स भवतीति यथा कंसादीनां मारकः । तद्धैक आहुरित्यत्र

भाष्यप्रकाशः ।

प्रच्यावनं कृत्वा तत्तद्रूपविशिष्टं ब्रह्मैवोच्यते । नच लक्षणापत्तिः । यतः सर्वशब्दवाच्यत्वमपि सिद्धं ब्रह्मणः । तदप्युपपादितं तल्लिङ्गाद्यधिकरणेषु । नच सर्वत्र ब्रह्मण एव कारणत्वे वक्तव्ये विरुद्धशब्दप्रयोगस्य किं प्रयोजनमिति शङ्क्यम् । यथा को अद्धा वेदेत्यत्र सृष्टिकर्तृविषयकमज्ञानं, सर्वे वेदा इत्यत्र साधनैस्तज्ज्ञानं यतो वाच इत्यत्र वागाद्यप्राप्यत्वं, मनसेत्यत्र तत्प्राप्यत्वमित्येवं ब्रह्मणि विरुद्धा धर्मास्तत्र तत्र ते ते उच्यन्त एवमनेकविरुद्धशब्दवाच्यत्वमपि लोकप्रसिद्धो यस्ताद्दशधर्मविशिष्टोऽर्थस्ततः शब्दस्य समाकर्षादवगम्यते । तस्य प्रयोजनं तु तेन तेन प्रकारेण तद्भावने ताद्दशताद्दशफलाप्तिरिति । तत्रोदाहरणं तु कंसादीनां मारकत्वभावनाद् यथा मृत्युः । एवमसत्त्वेन भावनादसत्त्वमिति । अतस्तत्तत्फलार्थे समाकर्षे ब्रह्मणः कारणत्वमक्षुण्णमित्यर्थः । एवं सूत्रं व्याख्यायासदादिशब्दानां प्रवृत्तिनिमित्तं सिद्धान्तसिद्धं स्फुटीकुर्वन्ति तद्धैक इत्यादि ।

रश्मिः ।

धर्मविरोधोर्थः । अभावो वा नञर्थः । आर्थिकार्थो विरोधः । यद्वा पर्युदासो नञर्थः । सद् ब्रह्म तद्भिन्नतत्सद्दशो मृत्युः असन्मृत्युरिति बृहदारण्यकात् । तथा चैकश्रुतिः सदेव सोम्येदमिति तदुक्तं रूपं सद्रूपं तद्विलक्षणमसदेवेदमित्यत्रासद्रूपान्तरमित्यर्थः । श्रुत्यन्तर इति असदेवेति श्रुतौ । तस्येति । असच्छब्दस्यार्थो मृत्युस्तस्मात्प्रच्यावनं कृत्वा तत्तदसद्रूपविशिष्टमभेदेन विरुद्धधर्मा-श्रयत्वाय ब्रह्मैवोच्यते इत्यर्थः । सर्वशब्द इति भाष्यमवतारयामासुः न चेति । मृत्युवाचकस्या-सच्छब्दस्य ब्रह्मणि लक्षणा । संबन्धस्तु भेतव्यभीषकभावः 'मृत्युर्धावति पञ्चमः' इति श्रुतेः शून्यवाचकस्यासच्छब्दस्य लोकोक्तस्य वा ब्रह्मणि लक्षणा । 'मेनेऽसन्तमिवात्मानम्' इति लोके ज्ञानाश्रयस्य कर्तुरसद्विषयः तस्य शुद्धा सति ब्रह्मणि भागत्यागलक्षणा ज्ञानाश्रयब्रह्मणो ज्ञानविषयत्वस्य भागस्य त्यागात् । न च शुद्धा सति प्रयोग इति शङ्क्यम् । धर्मः प्रोज्झितकैतवोत्रेत्यस्य विरोधात् । तदुक्तं पद्मपुराणे उत्तरखण्डे उमामहेश्वरसंवादे गुणत्रयकथने द्विचत्वारिंशेध्याये ।

'बौधशास्त्रमसत्प्रोक्तं नग्ननीलपटादिकम् ।
मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते' ॥ इति ।

शास्त्रं शब्दात्मकमिति तत्प्रतिपाद्यमप्यसतदिति । यथा क इति भाष्यमवतारयन्ति न च सर्वेति । अद्धेति साक्षात् । अज्ञानमिति क इह प्रपञ्चे प्रवोचन्न कोपीत्यर्थात् । तज्ज्ञानमिति सृष्टिकर्तृज्ञानम् । आमनन्ति अभ्यसन्ति । यतो वेदोक्तसाधनैः तज्ज्ञानमिति ज्ञायते इति । तत्रेति श्रुतिषु । ते सत्त्वमसत्त्वं च ज्ञानमज्ञानं च वागाद्यप्राप्यत्वं वागादिप्राप्यत्वं च धर्माः । ननु मनसैवेत्यत्र कथं वागादिग्रहणमिति चेन्न । मनः पूर्वरूपं वागुत्तररूपमिति श्रुतेः वाचामादि मनः तद्ग्रहणात् । यद्वा मनसैवेत्येवकारेणान्येन्द्रियव्यवच्छेदः भक्तिरूपव्यापारस्य तु मनसेति करणतृतीयया बोधनात् भक्तिश्च वागादिरूपा कीर्तनादिरूपा । एवमुच्यन्त इत्यन्तं भाष्यं व्याख्यायैवमिति भाष्यं व्याचक्रुः ।

रश्मिः ।

एवमिति अनेके विरुद्धाः सदसदादयः शब्दास्तद्वाच्यत्वमपीत्यर्थः । लोकेति भाष्यं विवृण्वन्ति लोकप्रसिद्ध इति लोकः स्मृतिः मेनेऽसन्तमिवात्मानमिति तत्प्रसिद्धो यस्तादृशः असत्त्वरूपो धर्मः तद्विशिष्टोर्थोसद्रूपः स्पष्टमन्यत् । तं यथेति भाष्यमवतारयन्ति लोकप्रसिद्धस्येति लोकसिद्धार्थाभ्यावनस्य । तेनेति असत्त्वेन प्रकारेण । तद्भावने ब्रह्मभावने । तादृशेति 'मृत्युरत्यन्तविस्मृतिः' इत्यत्यन्तविस्मरणरूपफलाप्तिः । न च लोकोक्तासच्छब्दे प्रतिपाद्यासत्त्वेन प्रकारेण ब्रह्मभावने तादृशफलमस्त्विति वाच्यम् । तादृशफलाभावप्रसङ्गात् । पुराणस्य स्वतन्त्रत्वेन तदुक्तरीत्या भावनेनौपनिषत्पुरुषरूपं फलं भवेत् । असन्निति भाष्यं विवरीतुमाहुः तत्रोदाहरणमिति । मारक इति आदिपदेनाम्बष्ठचाणूरमल्लानां मारकः । मृत्युपदार्थः मृत्युर्भोजपतेरिति वाक्यात् । मारकोपि भावनान्मृत्युरित्यभेदान्वयः । असन्मृत्युरिति बृहदारण्यकात् । निगमर्यांवभूवुः एवमसत्त्वेनेति एवं पूर्वोक्तप्रकारेण एवं चासन्निति श्रुतौ स परमात्मा असन्मृत्युर्भवति योसद्ब्रह्म मृत्युर्भवेति वेद स्मरति स्म भावयति स्मेति यावत् । स वेदेति नार्थः । 'ॐ तत् सत्' इति त्रिविधब्रह्मनिर्देशात् । नित्यानित्यसंयोगापत्तेश्च । न च य इत्यत्र नित्यानित्यसंयोग इति वाच्यम् । वेदस्याधिदैविकप्रतिपादकत्वात् । तद्धैक इत्यादीति । भाष्ये । सर्वप्रपञ्चवैलक्षण्यमसच्छब्दप्रवृत्तिनिमित्तम् । सत् सर्वप्रपञ्चः नञो वैलक्षण्यमर्थः । सद्विलक्षणत्वम् । तत् सत् असत् सर्वप्रपञ्चवैलक्षण्यविशिष्टम् । इदमित्युक्तप्रपञ्चाभेदकथनात् प्रपञ्चरूपोपि स इत्यर्थः । प्रकृते । इत्युक्तः पक्ष इति सत्पदोक्तब्रह्मणो विरुद्धधर्माश्रयत्वेन एके इत्यस्य मुख्यार्थकत्वेन च प्रथम इत्यर्थः । भाष्ये । अरूपवस्त्वत्रोक्तं द्वितीयपक्षमाहुः अव्याकृतमिति । इदं रूपमिदं नाम इदमित्यव्याकृतम् । प्रकृते । वैलक्षण्यबोधकमिति तथा च न तृतीयः पक्ष इति भावः । भाष्ये । नासदासीदिति न असत् सद्विलक्षणो मृत्युः नो निषेधे न सद्ब्रह्मासीत् इति द्वयोर्निषेधेन हेतुना मनोग्राह्यम् । नैवेह किंचनाग्र आसीत् । मृत्युनैवेदमावृतमासीत् इति कालस्याग्रपदेन मृत्योश्च मृत्युपदेनाभिधानात् । तदुक्तं बृहदारण्यके मनोमयब्राह्मणे मनोमयोयं पुरुषः भाः सत्यः तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा एवमयमन्तरात्मन् पुरुषः स एष सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किं च य एवं वेदेति मनोमयो मनःप्रायः भाः सत्यस्वरूपं यस्य स भाः सत्यः अन्तरात्मन् इत्यत्र सप्तम्या लुक् । वेदेत्यस्य सस्मार इत्यप्यर्थः । मनःप्रायपदेन टीकास्थेन मनु अवबोधने असुन् । एवं भूतेन सत्यं ज्ञानमनन्तं ब्रह्म ज्ञानप्रधानम् न चान्नमयप्राणमयविज्ञानमयानन्दमयाः कुतो न गृहीता इति शङ्क्यम् । बृहदारण्यक एव अन्नं ब्रह्मेत्येक आहुः तन्न तथा पूयति वा अन्नमृते प्राणात् प्राणो ब्रह्मेत्येक आहुः तन्न तथा शुष्यति प्राणमृतेन्नादेते ह त्वेव देवते एकधाभूयं भूत्वा परमतां गच्छत इति एकेन्येन्ने दूषणात् । तद्यथा न ग्रहीतव्यम् यथा प्राणाद्ब्रह्मकारते विनान्नं वै पूयति क्लिद्यत इति प्रसिद्धं तथा प्राणो ब्रह्मेत्येकेऽन्य आहुः तदपि न तथा न ग्राह्यम् । अतोन्नादनीयात् इच्छीरूपाद्य ऋते प्राणः शुष्यति वै ह शोषमुपेतीति प्रसिद्धम् । अन्न तु क्लेदशोषविवर्जितम् । एत एव तु देवते अन्नप्राणलक्षणे एकधाभूयं एकभावं भूत्वा गत्वा परमतां ब्रह्मतां गच्छतः प्राप्नुतः इत्यर्थः । विज्ञानमयो जीवो न सृष्टिकर्ता इत्यनुपयुक्तः । आनन्दमयस्तु नित्यलीलायां 'भद्रमाचे न जानन्ति नाहं तेभ्यो मनागपि' इति स्मृतेः । सृष्टिकर्तापि । विरुद्धधर्माश्रयत्वात् । इदमित्यतथा ज्ञानत्वात् । यत उक्तं तदपि ब्रह्मेति । तथा च श्रुतिः मनो ब्रह्मेति व्यपानात् मनसो ज्ञेन ज्ञानिमानि

सर्वप्रपञ्चवैलक्षण्यम् । प्रपञ्चरूपोऽपि स इति प्रथमः पक्षः । अव्याकृतमसत्पक्षेण तुल्यम् । नासदासीदिति मनस्तदपि ब्रह्म, तम आसीदित्यनभिव्यक्तम् । कर्मणोऽपि भगवत्त्वात् । पूर्वकाण्डेऽपि तस्मादेव सृष्टिः । न हि तमस्तः स्वेन गूढत्वं लोके संभवति । अतः कश्चित् विलक्षणात् कश्चिदविलक्षणात् ब्रह्मणो जगत् । भगवत्त्वादेव स्वयं कर्तृकता च । संभवति चैकवाक्यत्वे

---

भाष्यप्रकाशः ।

प्रथमः पक्ष इति सदेव सोम्येत्युक्तः पक्षः । असत्पक्षेण तुल्यमिति वैलक्षण्यबोधकम् । तमःशब्देन कर्माप्युच्यते । पूर्वमनभिव्यक्तत्वादित्यभिप्रेत्याहुः कर्मण इत्यादि । कर्मणस्तमःशब्दवाच्यत्वे युक्तिः न हीत्यादि । शेषं स्फुटम् । एतेनैव यज्ञादिकारणे शिवरुद्रभगवती-

रश्मिः ।

भूतानि जायन्त इत्यादि । यद्वा मनसैवानुद्रष्टव्यः इति श्रुतेर्मनसो दर्शनसाधनत्वमुच्यते तन्मनश्चेन्न ब्रह्म तदा मनः संकल्पनभक्त्यादिव्यापारेण न ब्रह्मदर्शनसाधनं 'स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम' इत्यस्यात्र पाठस्यापि वक्तुं शक्यत्वात् । द्वितीये नवमाध्याये त्रयस्त्रिंशे श्लोके तु नासदासीन्नो सदासीत्तदानीमित्यादेस्तु स्थूलसूक्ष्मकार्यपरत्वमित्युक्तम् । तत्पक्षेऽत्र न ब्रह्मवार्ता । तम इति अनभिव्यक्तं ब्रह्म तमः इत्यर्थः । तत्रैव सुबोधिनी तम आसीदिति तमोपि ब्रह्मैव सर्वतः सुसत्त्वसाम्यात् न प्रकृतिः किमावरीवः कुह कस्य शर्मन्निति कार्याश्रयप्रयोजनाभावात् तस्याः कार्याश्रयप्रयोजनाभावादिति किं कार्यं कुह कुत्र कस्य शर्मन् कस्य सुखाय आवरीवः आवृणुयादिति श्रुत्यर्थः । इदमप्यवान्तरकल्पाभिप्रायेण । प्रकृते । कर्मापीति यथा तमु काङ्क्षायामित्यस्य रूपमन्धकारे, तथा तम ग्लानावित्यस्य रूपं कर्मणि वाच्ये । कर्मणो गहना गतिरिति कर्मग्लानिं करोतीति एतेन कर्मणो हि पूर्वभावे श्रुतिरुक्ता । ननु पूर्वं कर्म वा ब्रह्म वा, उभयोः पूर्वत्वे द्वैतमिति चेन्न 'अत एव च नित्यत्वम्' इति सूत्रे वेदस्य ब्रह्मपदवाच्यत्वेपि भाष्येऽङ्गाङ्गिभावोक्तेश्चोभयोः 'अथातो धर्मजिज्ञासा' 'अथातो ब्रह्मजिज्ञासा' इति धर्मधर्मिभावेन धर्मिपूर्वत्वस्य न्याय्यत्वात् । पूर्वमनभिव्यक्तत्वादिति सृष्टेः पूर्वस्य । तथा च प्रस्थानरत्नाकरे सुबोधिनी द्वितीयस्कन्धस्य प्रदर्शिता ब्रह्म हि धर्मरूपेण भवन् ज्ञानानन्दकालेच्छाक्रियामायाप्रकृतिरूपेण पूर्वं भवतीति, अतः कर्मानभिव्यक्तम् । कर्मण इत्यादीति कर्मणो भगवत्त्वं 'धर्मो यस्यां मदात्मकः' इति भगवद्वाक्यात् । भावार्थपादस्वक्रियामात्रं न धर्मः किं तु अतीन्द्रियो यागादिः स्थिरो धर्मः । द्रव्यदेवतासंबन्धो यागः देवताया अतीन्द्रियत्वं तत्संबन्धोपि प्रीतिहेतुत्वेन स्वीकाररूपोतीन्द्रियः द्रव्यं चालौकिकमित्यनित्यतायां न कोपि हेतुरिति । भाष्ये । तस्मादिति तृतीयाष्टके प्रजापतिरकामयत प्रजा सृजेयमिति । प्रकृते । युक्तिरिति स्वस्य स्वेन गूढत्वाभाव इति न्यायः । न हीत्यादीति । लोक इति वेदे तु संभवति अनधिगतार्थगन्तृत्वात् । घटः घटेन गूढः इत्यत्र योगजधर्मेण घटस्य घटत्वे स्वस्य घटस्य स्वेन घटेन गूढत्वात् । स्फुटमिति विलक्षणादसतः । अविलक्षणात् सतः । ननु कर्मणः सृष्टिरित्युक्तं तत्र कर्मरूपसहकारिकारणनिष्ठव्यापारमपेक्ष्य कर्म करोतीति प्रयोगो न तु ब्रह्म करोतीतिवत् प्रसिद्धप्रयोग इति कर्तृकत्वं ब्रह्मापेक्षमित्याशङ्क्याहुः भगवत्त्वादेवेति । ननु शंकरभाष्ये असद्वा इदमग्र आसीदित्यत्र सदेव ब्रह्म सदेवासीदित्युपचर्यते प्रागुत्पत्तेः तद्व्याकरणाभावापेक्षयाऽतोऽसद्वादापवादेनास्तित्वलक्षणं ब्रह्मेत्युक्तमिति चेत्तत्राहुः संभवतीति सहस्रयत्वे संभवति विरुद्धधर्माश्रयत्वाद्वार्ताज्ञानाविराकरण-

भाष्यप्रकाशः ।

यथादिशब्दाः प्रयुज्यन्ते अथर्वशिरःशिखासुन्दरीतापनीयगोपथब्राह्मणादिषु तत्राप्ययमेव न्यायो बोध्य इति बोधितम् ।

रश्मिः ।

माहुः तस्मादिति विरुद्धधर्माश्रयत्वाद् ब्रह्मणः । शब्दवैलक्षण्येनासच्छब्देन श्रुतिविप्रतिषेधः श्रुतिबाधः एवं स्फुटमित्यर्थः । द्वितीयस्कन्धनवमाध्याये सुबोधिनी, एवमन्यान्यपि वाक्यानि तत्तद्भावप्रकारेण बोधयन्ति पूर्वमेकरूपे भगवति न बाधकानि भवन्तीति तथाहुः एतेनेति । शिखेति । आदिपदेन आत्मा वाय्वादयः । अथर्वेति । अथर्वशिरः अथर्वशिखा च तत्राहमेकः प्रथममासीद्वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्त इतीति रुद्रवचनं देवान् प्रति । अथर्वशिखायां च शिव एको ध्येयः शिवंकरः इति सुन्दरीतापिनीयं यथा दुर्गामाहात्म्यं ब्रह्माण्डपुराणे तत्र

स्थिता नित्या अर्धमात्रा यानुचार्या विशेषतः ।
त्वमेव सत्त्वं सावित्रि त्वं देवि जननी परा ।
त्वयैव धार्यते सर्वं त्वयैतत्सृज्यते जगत् ।

इत्युक्त्वाग्रेन्यदुक्त्वोक्तं महामोहा च भगवतीति तथाग्रे 'सौम्या सौम्यतराशेषसौम्येभ्य-स्त्वतिसुन्दरी' इति अत्र भगवती अतिसुन्दरी च । गोपथब्राह्मणं यथा बृहदारण्यके महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति आदिपदार्थः पुरुषविधब्राह्मणे 'आत्मैवेदमग्र आसीत्पुरुषविधः' इति वायुविषये त्वमेव प्रत्यक्षं ब्रह्मासीति श्रुतिस्तैत्तिरीये । अत्र लोकप्रसिद्धो यस्तादृशधर्मविशिष्टोर्थः । तस्माच्छब्दस्य प्रच्यावनं शिवादित्वेन रूपेण ब्रह्मणो भावुकाः शिवादिभक्ताः शिवादिशब्दैर्ब्रह्मैवाहुरिति समाकर्षन्यायावतरणम् । एवं न्यायो बोध्य इति बोधितम् । अयं न्यायः कारणशब्दविषयः तेन तल्लिङ्गाधिकरणेषु सर्वशब्दवाच्यत्वं मुख्यवृत्त्या प्रतिपादितम् । अत्र तु असच्छब्दस्य मृत्युबाधकस्य समाकर्ष इति विरोध इति कुचोद्यं निरस्तम् । वस्तुतस्तु पुरुषविधब्राह्मणे साकारब्रह्माभिधायके आत्मपुरुषपदे समाकर्षणन्यायो प्रसिद्धकारणशब्दा असदादयस्तद्विषयः इति । आत्मा परमात्मनि प्रसिद्धः 'आत्मा देहमनोब्रह्मस्वभावधृतिबुद्धिषु' इति विश्वात् । पुरुषशब्दश्चात्मनि 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' इति श्रुतेः । असदादयस्तु अप्रसिद्धा इति । न चायं न्यायः कारण-शब्दविषय इति व्युत्पत्तावप्रसिद्धकारणविषय इति विशेषणनिवेशे सोऽभिभेदित्वसंगतमिति वाच्यम् । विरुद्धधर्माश्रयत्वात् 'व्रजे स बालको भूत्वा क्रीडते पुरुषोत्तमः' इति व्रजे बाललीलापरत्वात् ।

'कृतागसं तं प्ररुदन्तमक्षिणी कषन्तमञ्जन्मषिणी स्वपाणिना ।
उद्वीक्षमाणं भयविह्वलेक्षणं हस्ते गृहीत्वा भिषयन्त्यवागुरत्' ॥

इति बाललीलावाक्यात् आश्रितत्वादिह तद्योगाच्च जीवधर्मभयस्य योगात् । सुबोधिन्यां ब्रह्मानामशनिरित्यत्र दशधा रसरूपत्वोक्तेः तन्निर्वाहकत्वाद्वा तदात्मनोकुरुतेति बृहदारण्यकान्मनसः करणानन्तरं भयं वा 'कामः संकल्पो विचिकित्सा श्रद्धाश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव' इति बृहदारण्यकात् ।

'न चान्तर्न बहिर्यस्य न पूर्वं नापि चापरम् ।
पूर्वापरं बहिश्चान्तर्जगतो यो जगच्च यः' ॥ इति

असन्नामनिराकरणं चायुक्तम्। तस्मात्छब्दवैलक्षण्येन श्रुतिविप्रतिषेधो वक्तुं न शक्य इति सिद्धम्॥ १५॥

इति प्रथमाध्याये चतुर्थपादे पञ्चमं समाकर्षाधिकरणम्॥ ५॥

---

भाष्यप्रकाशः।

अन्येतु स माकर्षादित्यस्य पूर्वप्रकृतपरामर्शादित्यर्थमाहुः। तन्मते भिन्नशब्दप्रयोगप्रयोजनं न किमपि स्फुटति।

माध्वास्तु भगवद्वाचिनां शब्दानां जगति समाकर्षणमर्थमाहुस्तत्रापि तथा बोध्यम्॥ १५॥

इति पञ्चममधिकरणम्॥ ५॥

रश्मिः।

वाक्यात्। शंकररामानुजभास्कराचार्यमतमाहुः अन्ये त्विति। पूर्वप्रकृतेति असद्वा इदमग्र आसीदिति नात्रासन्निरात्मकं कारणत्वेन श्राव्यते यतो—

'असन्नेव स भवति असद्ब्रह्मेति वेद चेत्।
अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः'॥

इतीत्यसद्वादापवादेनास्तित्वलक्षणं ब्रह्मान्नमयादिकोशे परंपरया ब्रह्मप्रत्यगात्मानं निर्धार्य सोऽकामयत इति तमेव प्रकृतं समाकृष्य सप्रपञ्चां सृष्टिं तस्माच्छ्रावयित्वा तत्सत्यमित्याचक्षत इत्यादिना चोपसंहृत्य तदप्येष श्लोको भवति इति तस्मिन्नेव प्रकृतेर्थे श्लोकमिममुदाहरति असद्वा इदमग्र आसीदिति यदि त्वसन्निरात्मकमस्मिञ्छ्लोकेऽभिप्रेयेत ततोन्यसमाकर्षणेऽन्यस्योदाहरणाद-संबद्धवाक्यमापद्येत तस्मान्नामरूपव्याकृतवस्तुविषयः प्रायेणाऽसच्छब्दः प्रसिद्धः इति तद्व्याकरणा-भावापेक्षया प्रागुत्पत्तेः सदेव ब्रह्मासीदित्युपचर्यते इति भाष्यादस्ति ब्रह्मेति पूर्वप्रकृतं ब्रह्म तस्य सोकामयत इत्यत्राकर्षः तस्य तस्मिन्नेव प्रकृतेर्थे यः श्लोकोऽसद्वा इति तत्राकर्षादित्यर्थमाहुः।

रामानुजाचार्याश्चानन्दमयविषयत्वमस्य मन्त्रस्याहुः असद्वा इदमग्र आसीदिति सत्यसंकल्पमा-नन्दमयं विपश्चिद्ब्रह्मैव समाकृष्यत इति तदानीं नामरूपविभागाभावेन तत्संबन्धितयास्तित्वाभावात् ब्रह्मैवासच्छब्देनोच्यते इति च। भास्कराचार्यास्तु जगत्तदासदिवासीत् असदस्पष्टमिवाभूत् इत्यर्थ-थामाहुः दूषणमाहुः तन्मत इति अयमभिप्रायः इदंशब्दोक्तप्रत्यक्षकार्यस्य भगवदिच्छयेदंपदार्थस्य स्वकारणे लयो वाच्यः। इदंशब्दस्य परमैश्वर्यकर्तृरूपकार्यवाचकस्यार्थः परमैश्वर्यकर्ता तस्यापि स्वकारणे लयः तस्मिन् वाच्ये सत्यसति लये विशेषाभावादुपचारवैयर्थ्यं ततश्च सदसदिति भिन्नभिन्न-कारणशब्दप्रयोजनं न किमपि स्फुटति 'मेनेऽसन्तमिवात्मानं सुप्तशक्तिरसुप्तदृक्' इति वाक्यं पुराणमते रामानुजाचार्यमतेप्येवम्। असच्छब्दप्रयोगप्रयोजनं न किमपि। भास्कराचार्यमतेप्येवम्। जगत्सदासीदसदासीदिति भिन्नभिन्नकारणशब्दप्रयोगप्रयोजनं न किमपि स्फुटति। ननु कदाचित्स-ज्जगत्कदाचिदसज्जगदिति प्रतीतिः प्रयोजनमस्त्विति वाच्यम्। सिद्धान्तेपि तौल्यात्। आचार्यैस्त्वे-तन्निराकरणायासदित्यत्र पर्युदासमङ्गीकृत्यातः कश्चित् इत्याद्युक्तमिति ज्ञेयम्। शैवविज्ञानेन्द्रभिक्षुमतयो-र्द्वैतमाहुः इति। तथा च मध्वाचार्यवाच्यीयपायवाक्यम्—

जगद्वाचित्वात् ॥ १६ ॥ (१।४।६)

एवं शब्दविप्रतिषेधं परिहृत्यार्थविप्रतिषेधं परिहरति कौषीतकिब्राह्मणे बालाक्यजातशत्रुसंवादे । बालाकिरजातशत्रवे ब्रह्मोपदेष्टुमागतः । आदित्यादिदक्षिणेक्षिपुरुषपर्यन्तं परिच्छिन्नब्रह्मोपासनान्युक्त्वा तथा निराकृते तमेव ज्ञानार्थमुपससाद । ततः सुप्तपुरुषसमीपमुभावागत्य ब्रह्मवाद्यं चक्रतुः ।

---

भाष्यप्रकाशः ।

जगद्वाचित्वात् ॥ १६ ॥ अधिकरणप्रयोजनमाहुः एवमित्यादि । शब्दविरोधकृतो यो ब्रह्मणि कारणत्वप्रतिषेधस्तं परिहृत्य अर्थविरोधकृतं तमनेनाधिकरणेन परिहरतीत्यर्थः । विषयमाहुः कौषीतकीत्यादि । गार्ग्यनामा बालाकिर्बलाकपुत्रोऽजातशत्रवे काशिराजाय

रश्मिः ।

'परस्य वाचकाः शब्दाः समाकृष्यान्तरेष्वपि ।
व्यवह्रियन्ते सततं लोकवेदानुसारतः' ॥ इति ।

वेदो य आकाशे तिष्ठन्नित्याद्यन्तर्यामिब्राह्मणम् । तत्कारणत्वेनेति पूर्वसूत्रे तथाहि । आकाशादिष्ववान्तरकारणत्वेनापि स एव स्थितः । यथा व्यपदिष्टस्यैव परस्य य आकाशे तिष्ठन्नित्यादिना आकाशादिषूक्तेरिति जगति तु जगद्वाचित्वादिति सूत्रे तथाहि । तर्हि कथं तेषां शब्दानां जगति प्रसिद्धिः ॐ जगद्वाचित्वात् ॐ········जगति हि व्यवहारो लोकस्य न तु परमात्मनि तथा । अतो जगति प्रसिद्धिः शब्दानामिति । तथेति प्रसिद्धः प्रकारो दूषणं बोध्यम् । अयमभिप्रायो द्रष्टव्यः । मण्डूकोपनिषदि ॐ इत्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोङ्कार एव यच्चान्यत्किंचित्कालातीतं तदप्योङ्कार एव सर्वं ह्येतद्ब्रह्म अयमात्मा ब्रह्मेति श्रुतेः । उक्तः प्रकारः प्रसिद्धो न विषयः सूत्राणामिति संदिग्धस्यैव विषयत्वात् ॥ १५ ॥

इति पञ्चमाधिकरणम् ॥ ५ ॥

जगद्वाचित्वात् ॥ १६ ॥ शब्देति असदादिशब्दविरोधकृतः । अर्थेति जीवरूपोऽर्थः । कर्तृत्वेवमर्थविरोधकृतम् । तमिति ब्रह्मणि कारणत्वप्रतिषेधम् । कौषीतकीत्यादीति कौषीतकिन इति रामानुजाचार्यभाष्यात्कौषीतकाः केचन सामवेदभेदाः सन्ति । तथा च चरणव्यूहे सामवेदस्य सहस्रमासीत्तेष्वनध्यायेष्वधीयानास्ते शतक्रतुना वज्रेणाभिहताः । शेषान्व्याख्यास्यामः तत्र राणायनीयानां सप्तभेदा भवन्ति राणायनीयाः शाट्यमुग्र्याः कालेपाः महाकालेपा लाङ्गलायनाः शार्दूलाः कौथुमाश्चेति अत्र कौषीतका न गणिताः अत शतक्रतुहतेषु भेदोयं द्रष्टव्यः । हननात्पूर्वं ब्राह्मणं कौषीतक्याख्यं तदधुना शंकराचार्यादिभाष्येषु प्रसिद्धम् । न च बालाकिब्राह्मणमिदमग्रे एक इत्यस्य व्याख्याने पृथक्तया तस्योपादानात् । ते च कौषीतकिनः केशधारिणः । 'कौषातकः कचे' इति विश्वात् । तालव्यस्य मूर्धन्यः आकारस्यैकारश्छान्दसौ यथा लोके षाण्डिल्यपदं वेदे तु शाण्डिल्यपदं तद्वत् । लोके मूर्धन्यादिर्वेदे तालव्यादिरेवमत्र वेदे मूर्धन्यषकारमध्ये । लोके तु तालव्यशकारमध्ये इत्यपि द्रष्टव्यम् । गार्ग्योक्तनामेति गर्गसगोत्रापत्यं गार्ग्यः तन्नाम गर्ग इति तत् [illegible] ब्राह्मणे नैकवाक्यताप्यत्रोक्ता गार्ग्यपदेन बालाकिर्हानूचानो गार्ग्य आस इति श्रुतेः । बलाकेति मत इम् । [illegible] अपत्यमिति विग्रहे [illegible] [illegible]

भाष्यप्रकाशः ।

ब्रह्मोपदेष्टुं स्वकीर्त्यर्थं स्वत एवागतः आदित्यचन्द्रविद्युत्स्तनयित्नुवाय्वाकाशाग्न्यप्सादर्शच्छायाप्रतिश्रुत्काशब्दस्वप्नशरीरदक्षिणाक्षिसव्याक्षिषु यः पुरुषस्तत्पर्यन्तं यान्युपासनान्युक्तवान् यथा आदित्यनिष्ठपुरुषस्य बृहत्पाण्डरवासा अतिष्ठाः सर्वेषां भूतानां मूर्धेत्येवं गुणकोपासने अतिष्ठाः सर्वेषां मूर्धा भवतीति परिच्छिन्नं फलम् । तथान्यत्रापि तत्तद्गुणकोपासने तत्तत्परिच्छिन्नफलमजातशत्रुणा तस्मा उक्तमिति तादृशानि परिच्छिन्नब्रह्मोपासनानि तान्युक्त्वा ततो राज्ञा उक्तप्रकारेण तदुक्ते प्रकारे निराकृते बालाकिस्तमेव पूर्णब्रह्मज्ञानार्थमुपससाद शिष्यत्वेन समित्पाणिर्निकटे गतः । ततो राजा स्नेहेन हस्ते तं गृहीत्वा सभात उत्थाय कस्मिंश्चिदेकान्ते सुप्तपुरुषसमीपमुभावागत्य, बृहत्पाण्डरवासः सोमराजन्नित्यादिभिः संबोधनैस्तं राजा संबोधयाञ्चक्रे तदापि तं सुप्तं दृष्ट्वा

रश्मिः ।

प्रवृत्तिरित्यगतिकगतिः न च वंशब्राह्मणे । बलाकाकौशिकाद्बलाकाकौशिक इति बलाकाशब्दो न बलाकशब्द इति शङ्क्यम् । समासौ काश्यपीबालाक्यमाठरीपुत्रात् काश्यपीबालाक्यमाठरीपुत्र इत्यत्र बलाकशब्दस्य स्वार्थे ष्यञन्तस्य सत्त्वात् । स्त्रीलिङ्गशब्दात् ष्यञः प्रसिद्धेः । स्वेति दृप्तबालाकिमेकवाक्यार्थं वक्ष्यन्ति 'अन्यार्थं तु जैमिनिः' इति सूत्रे तत्रत्यदृप्तत्वं ब्रह्मवित्त्वाद्गर्वितत्वं तदत्राप्येकवाक्यार्थत्वाय च वक्तव्यमित्याशयेन स्वकीर्त्यर्थमिति । आदित्यचन्द्रेत्यादिभाष्यार्थमाहुः आदित्येति सहोवाच गार्ग्यः य एवादित्ये पुरुषः एतमेव ब्रह्मोपास इत्येवंविधेषु । अत्र पुरुषपर्यन्तमिति भाष्याय एवादित्ये पुरुष इत्युपासना तमेव ब्रह्मोपास इति तदनुवाद उपासनाया गानत्वादवग्रह इतिवत् ज्ञानमुपासना । आदित्यपुरुष इति श्रुतं श्रवणं प्रति लक्षीकृत्य यः शब्दः स प्रतिश्रुत् स इवेति प्रतिश्रुत्कः स च शब्दश्चेति स च दृप्तबालाकिब्राह्मणे य एवायं यन्तं पश्चाच्छब्दोनूदेत्येतमेवाहं ब्रह्मोपासे इत्यत्रोक्तः । यन्तं गच्छन्तं पुरुषं अनूदेति उत्पद्यते प्रतिश्रुत्काशब्देति पाठे प्रतिश्रुत्का टाप् । शब्दश्च । यानीति दृप्तबालाकिब्राह्मणे च स होवाच गार्ग्यः य एवासावादित्ये पुरुष एतमेवाहं ब्रह्मोपासे इति । स्वसंघाते कर्ता भोक्तेत्येवमुपासे । स यश्चायं पुरुषे यश्चासावादित्ये स एक इति भृगूपनिषत्कात् । तान्यपोष्य मा मैतस्मिन् संवदिष्ठा इति । एतस्मिन् संघाते । यानि अतिष्ठाः सर्वेषां भूतानां मूर्धा राजेति वा अहमेतमुपासे इत्युपासनान्यजातशत्रुरुक्तवानित्यर्थः । बृहत्पाण्डरवासा इति दृप्तबालाकिब्राह्मणे । अतिष्ठाः सर्वेषां भूतानामिति श्रुतौ बृहत्पाण्डरवासा नास्ति । अतिष्ठा इति स य एतमेवमुपास्ते इति श्रुतेः अस्याः श्रुतेः शेषश्रुतिमाहु अतिष्ठा इति । परिच्छिन्नमिति । सर्वभूतातीतत्वं सर्वपूज्यत्वं राजत्वं च । अतीत्य सर्वाणि भूतानि तिष्ठतीत्यतिष्ठाः स्योतिक्रान्तो तिष्ठ इति वा । अन्यत्रेति चन्द्रादिषु । तत्तद्गुणकेति । यथा दृप्तबालाकिब्राह्मणे बृहत्पाण्डरवासाः सोमो राजेत्येवंगुणकोपासने परिच्छिन्नफलं तु अहरहर्हसुतः प्रसुतो भवतीति श्रुत्युक्ता अस्योपासकस्य प्रकृत्यात्मके यज्ञे अहरहः किल सोमः सुतः कृताभिषवो भवति विकृत्यात्मके च यज्ञे प्रस्तुतः प्रकृष्टं सुतरां स्तुतो भवति सुतो भवतीति वा । उभयविषयज्ञानुष्ठानसामर्थ्यं भवतीत्यर्थः । एवमन्यत्र विद्युदादिषु । तस्मा इति बालाकये । परिच्छिन्नेति भाष्यं विवृण्वन्ति स्म परिच्छिन्नेति । तथा निराकृत इति भाष्यार्थमाहुः तत इति । उक्तेति यथा आदित्यनिष्ठपुरुषस्येत्याद्युक्तप्रकारेण । तदुक्त इति बालाक्युक्ते कर्तृभोक्तृत्वेन स्वसंघात उपासनप्रकारे निराकृते । तमेवेति भाष्यार्थमाहुः बालाकिरिति । तमजातशत्रुम् । उपेति यथा दृप्तबालाकिब्राह्मणे स होवाच गार्ग्य उप त्वायानीति त्वा त्वामजातशत्रुम् । ततः सुप्तेति भाष्यं विवृण्वन्ति स्म । तत्र राजेति । बृहत्पाण्डरवासः शुक्लवासः । इत्यादिभिरिति कौषीतकि-

भाष्यप्रकाशः ।

यष्ट्या क्षिप्तवान् । स पुरुषस्तत एव समुत्तस्थौ । तदा राजबालाकी वक्ष्यमाणाभ्यां प्रश्नोत्तराभ्यां ब्रह्मवाद्यं चक्रतुः । तत्र, कैष एतद् बालाके इत्यादिके बालाकिं प्रति, पुरुषस्वप्नस्थानं, स्वप्नावस्था, तत आगमनं चेति त्रयविषयके राजप्रश्ने पुरुषपदेन जीवः प्रक्रान्तः । यदा च बालाकिस्तं न ज्ञातवाँस्तदा राजैव, यत्रैष एतद् बालाके पुरुषोऽशयिष्टेत्यादिनोत्तरं जगाद । तत्र हिताख्यासु हृदयनिकटस्थनाडीषु जीवस्य शयनं, तत्र स्वप्नसुषुप्त्याख्यमवस्थाद्वयं, ततः पुनरत्रागमनं वदता राज्ञा तत एवाग्निविस्फुलिङ्गन्यायेनोत्पत्तिरुक्ता । ततः, स एष प्राण एव प्रज्ञात्मेदं शरीरमात्मानमनुप्रविष्ट आलोमभ्य आनखेभ्यस्तद्यथा क्षुरः क्षुरधानेऽवहितो विश्वम्भरो वा विश्वम्भरकुलाय इति दृष्टान्तद्वयेन ब्रह्मणः प्रज्ञात्मप्राणाख्यस्यानुप्रवेश उक्त इति सर्वोऽपि षष्ठोऽध्यायो

रश्मिः ।

ब्राह्मणाभिप्रायं दृप्तबालाकिब्राह्मणे नास्ति संबोधनत्रयातिरिक्तम् । यष्ट्येति दृप्तबालाकिब्राह्मणे तु स नोत्तस्थौ तं पाणिपेषं बोधयाञ्चकार सहोत्तस्थौ इति श्रुतिः । राजाबालाकी इति द्विवचनान्तम् । ब्रह्मवाद्यमिति वादयितुं योग्यं ब्रह्म चक्रतुः । यद्वा । वाद्यते ध्वन्यते वदेर्ण्यन्ताद्यो यत् । तत्रेति भाष्यं विवृण्वन्ति स्म तत्रेति । इत्यादिक इति कैष बालाके पुरुषोऽशयिष्ट क वै तदभूत् कुत एतदगात् इत्येवं रूपे । पुरुषेति स्थीयतेस्मिन्निति स्थानम् । ततकेतिपदेन पृष्टम् । स्पष्टमन्यत् । तस्मादेवेति भाष्यं विवृण्वन्ति स्म यदा च बालाकिरिति । इत्यादिनेति कुत एतदगादित्यस्याः अग्रे यथा सुप्तः स्वप्नं न किंचन पश्यत्यथास्मिन् प्राण एवैकधा भवतीत्यादिना शयनभवनयोराधार उत्थानापादानं च प्राणपदवाच्यः परमात्मेत्युत्तरार्थः ब्रह्मामृतवर्षिण्याम् । रामानुजाचार्यभास्कराचार्यानुसारेणार्थमाहुः तत्र हिताख्येति । तत्रेत्युत्तरे तत्रेति हितानामनाडीषु अत्र स्वप्न उक्तो न सुषुप्तिः सा दृप्तबालाकिब्राह्मणे पुरितत्यामुक्ता । अथ यदा सुषुप्तो भवतीत्युपक्रम्य पुरितति शेते इति श्रुतेः । तत इत्यवस्थाद्वयात् । अत्रेति हृदये । तत एवेति जागरितावस्थावस्थिताजीवादेव । उक्तेति । तथा च श्रुतिः । कुत एतदागादित्यस्याः अग्रे पृष्टमर्थमजानते गार्ग्याय बालाकये स्वयमेवाजातशत्रुणोक्ता हितानाम नाड्यः तासु तथा भवति यथा सुप्तः स्वप्नं न कथंचन पश्यत्यथास्मिन् प्राण एवैकधा भवति तदैनं वाक् सर्वैर्नामभिः सहाप्येति मनः सर्वैर्ध्यानैः सहाप्येति स यदा प्रतिबुध्यते यथाग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गाः विप्रतिष्ठेरन् एवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोका इति । ब्रह्मणोप्यनुप्रवेशश्चेति भाष्यं विवृण्वन्ति स्म ततः स एष इति । पुरुषविधब्राह्मणे तु स एष इह प्रविष्ट इति पठ्यतेऽत इयमपि कौषीतकिब्राह्मणस्था । श्रुत्यर्थस्तु । प्राणस्य प्रकृष्टज्ञानात्मकत्वं ब्रह्म ते ब्रवाणीत्युपक्रमात् । आत्मानमिति अत एव विश्वः 'आत्मा देहमनोब्रह्मस्वभावधृतिबुद्धिषु' इति । आलोमभ्य इत्यादि आङभिविधौ मर्यादायामाङिति टीकायाम् । तत्र लोमनखाव्यापकत्वप्रसङ्गः लोमाग्रं नखाग्रमिति व्याख्याने लोमनखयोर्लक्षणापत्तिः । क्षुरः क्षुरधाने क्षुरो धीयतेऽस्मिन् नापितोपस्काराधाने एकदेशेऽवहितः प्रवेशितः स्थितः स्यात् यथा वा विश्वंभरो अग्निः जाठरत्वेन विश्वस्य भरणाद्विश्वंभरकुलाये अस्याधारभूतकाष्ठादिलक्षणे नीडे व्याप्य स्थितः । सर्वोपीति कौषीतकिब्राह्मणस्य षष्ठाध्याये । दृप्तबालाकिब्राह्मणं

तत्र, 'कैष एतद् बालाके पुरुषोऽशयिष्ट'इत्यादौ जीवः प्रक्रान्तः । तस्मादेव सर्वोत्पत्तिरुक्ता ब्रह्मणोऽप्यनुप्रवेशश्च । तत्र संदेहः । जीव एव ब्रह्मसहितः कर्ता ? ब्रह्मैव वेति ? । तत्र जीव एव कर्ता सर्वस्य जगतो ब्रह्मत्वादयस्तस्य धर्माः राजत्ववद् यजमानत्ववद्वा । अस्मिन् प्रकरणे ब्रह्मोपक्रमेण जीवपर्यवसानोक्तेः । सर्वत्रैव ब्रह्मत्वेनोक्तो जीव एव कर्ता । तथा सति लोकेऽपि जीवकर्तृत्वं सहजं भवेद् । बन्धमोक्षव्यवस्था च । एवं सत्यर्थात् प्रकृतेरेव फलिष्यतीत्येवं प्राप्ते

भाष्यप्रकाशः ।

विषयः । संदेहमाहुस्तत्रेत्यादि । पूर्वपक्षमाहुः तत्र जीव इत्यादि । सर्वस्य जगतो जीव एव कर्ता । यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य चैतत्कर्मेति कर्तारं वेदितव्यत्वेनोपक्षिप्य सुप्तपुरुषनिकटगमनाद्युत्तरं तस्मादेव प्राणानां देवानां लोकानां चोत्पत्तिकथनात् । नच ब्रह्मणोऽपि कर्तृत्वम् । तदनुप्रवेशमात्रस्यैव बोधनात् । अतः साहित्यमात्रं ब्रह्मणो भवतु । नच जीवस्य

रश्मिः ।

तु चतुर्थाध्याये बृहदारण्यके । तत्रेत्यादीति कैष एतद्बालाके पुरुषोऽशयिष्टेति पुरुषपदमुपक्रमो ब्रह्म ते ब्रवाणीति संदेहबीजं ब्रह्मणोनुप्रवेशस्यावार्यत्वाद्ब्रह्मसहित इति । एतेषामिति स वेदितव्य इति श्रुतिशेषः । श्रुत्यर्थः पूर्वपक्षे जीवपरः यत्तदोर्नित्यसंबन्धात् । यस्य वा एतत्कर्म त्रिविधमिति जीवः कर्ता न ब्रह्म धर्माधर्मलक्षणकर्मानाश्रयत्वात् स जीवो वेदितव्य इति । उपक्षिप्येति प्राप्तकाले कृत्यप्रत्ययेनोपक्षेपो ध्वनितः । सुप्तपुरुषेति आदिपदार्थः पूर्वमुक्तः । तस्मादेवेति जीवादेव । साहित्यमात्रमिति । ब्रह्मणा सहपुरुष इति न तु स यदा प्रतिबुद्ध्यते इत्यनन्तरमेतस्मादात्मनः इत्यत्र ब्रह्मसहितादात्मनो जीवादित्यर्थेन ब्रह्मणो विप्रतिष्ठन्ते इति क्रियायामन्वयः । पुत्रेण सहागतः पिता इत्यत्रेव । ब्रह्मत्वादय इति भाष्यमवतारयन्ति न च जीवस्येति । तथात्रेति अत्र सांख्यमते 'प्रकृतिपुरुषयोः अन्यत्सर्वमनित्यम्' 'असङ्गो ह्ययं पुरुषः' इति च वदतां सांख्यानां न जीवः पुरुषातिरिक्तः तस्य व्यवस्था मायावादिवत् । प्रकृत्यभिमन्तृत्वमिति मलिनबुद्धौ प्रतिबिम्बितत्वं जीवत्वं प्रकृतौ प्रतिबिम्बितत्वमीश्वरत्वं प्रकृतिपुरुषयोरनादिरविवेकः । 'निःसंगेप्युपरागोऽविवेकात्' जपास्फटिकयोरिव नोपरागः किं त्वभिमानः । तथा च प्रकृतेर्जडायाः अप्यभिमन्तृत्वमहं कर्तेति तदेव ब्रह्मत्वं चिदुपरागस्याप्यविवेकानादित्वेनानादित्वात् । तदभिमन्तृत्वमुपाधिस्तदा भवति यदा ज्ञानान्मुक्तिः सा तु मलिनबुद्धिरूपप्रतिबिम्बाधारनिवृत्तिः 'मुक्तिरन्तरायध्वस्तेर्न परः' इति अतस्तेषां ब्रह्मत्वादीनामपि आगन्तुकत्वं मलिनबुद्धिरूपोपाधेः स्वाभाविकत्वात् । अभिमन्ता गीतात्रयोदशाध्याये ।

'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥
कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥
पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् ।
कारणं गुणसङ्गोस्य सदसद्योनिजन्मसु ॥
उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तो देहेस्मिन् पुरुषः परः' ॥ इति ।

भाष्यप्रकाशः।

कर्तृत्वे उपक्रमोक्तस्य ब्रह्मत्वस्य बृहदादीनां धर्माणां न विरोधः शङ्क्यः। यथा तुल्येऽपि सर्वत्र जीवत्वे क्वचिदेव देहे अन्यनियोजकत्वोपाधिना राजत्वं, कर्मकरणे मुख्यत्वोपाधिना यजमानत्वं चोच्यते, तथात्र प्रकृत्यभिमन्तृत्वोपाधिना तेषामाप्यगन्तुकानां वक्तुं शक्यत्वात्। नचोपक्रमस्यासंजातविरोधत्वेन प्राबल्याद् ब्रह्मण एव कर्तृत्वं युक्तमिति शङ्क्यम्। उपसंहारस्यात्र विवरणरूपत्वेन पूर्वोक्तार्थनिर्णायकत्वादत्र ब्रह्मोपक्रमेण जीवपर्यवसानोक्तेर्ब्रह्मत्वेनोक्तो जीवः एव कर्ता। एवमुपक्रमोपसंहारभेदस्तु सर्वत्रैवैतन्न्यायज्ञापनार्थम्। एवमत्र देहविशिष्टस्याभिमानिनो देहान् प्रति कर्तृत्वे बोधिते सति लोकेऽपि जीवस्य कर्तृत्वं देहसहभाव्येव भवेत्। तथात्कर्मणां बन्धमोक्षव्यवस्था च सुखेनोपपद्येत। एवमभिमानिनः कर्तृत्वे सिद्धे सति यो यादृगभिमानी तेन तादृक् कर्तव्यमिति नियमात् सर्वकर्तृत्वं प्रकृत्यभिमानिनः सेत्स्यति। सांख्यमते प्रकृतौ महत्तत्त्वे वा प्रतिबिम्बितस्यैवेश्वरत्वोपगमान्मलिनबुद्धौ प्रतिबिम्बितस्यैव जीवत्वात् प्रतिबिम्बस्य चाधाराधीनत्वाच्च तथा।

रश्मिः।

मधुसूदन्यामत्र जीवो व्याकृतः प्रकृतिं पुरुषं चैव विद्धीत्यादिश्लोकेषु। अस्मिन्नित्यादि भाष्यमवतारयन्ति स्म न चोपक्रमस्येति। ब्रह्म ते ब्रवाणीत्यस्य। अग्रे षोडशपुरुषा आदित्यादय उक्ताः। उपसंहारस्येति स एष प्राण एव प्रज्ञात्मेदं शरीरमात्मानमनुप्रविष्ट इत्यस्य। दृप्तबालाकिब्राह्मणे तु सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यमित्यस्य। उपसंहारार्थ उक्तः। द्वितीयस्य तु तस्योपनिषदिति पूर्वमुक्तं तत्र कासावुपनिषदित्यत आह सत्यस्येति किं वा सत्यं किं पुनः सत्यमित्यत आह प्राणा इति प्राणा वै सत्यं सच्च सत्यमिति व्युत्पत्तेः। तेषां प्राणानां मध्ये य एष उक्तः आत्मा सत्यमबाध्यं तत्त्वमित्यर्थः। तस्योपनिषदित्यस्य तु तस्याकाशशब्दोदितस्य आत्मनो ब्रह्मणः उपनिषत् इति नाम उपसमीपं निरन्तरं सादयति गमयतीति व्युत्पत्तेः निरन्तरं समीपगमिकेत्यर्थः। रामानुजाचार्यभाष्ये तु सर्वान्पाप्मनो अपहत्य सर्वेषां च भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति य एवं वेदेत्युपसंहारः एकत्र फलस्तुत्योपसंहारोन्यत्र तां विहाय। फलस्तुतेर्व्यतिरिक्तत्वादिति विवेकः। विवरणेति उपक्रमोक्तब्रह्मानुसंधायैष प्राणो ब्रह्म एव प्रज्ञायां बुद्धावात्मा स्वरूपं यस्य जीवस्येत्यन्यत् स्पष्टम्। पूर्वोक्तेति घटः कलश इतिवत्। शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्चेति वाक्यात्। प्रासङ्गिकमाहुः एवमिति। एतन्न्यायेति। उपक्रमस्यासंजातविरोधत्वेपि विवरणेन शक्तिग्रहो नोपक्रमेणेति न्यायज्ञापनार्थम्। तथा सतीति भाष्यं विवृण्वन्ति स्म एवमत्रेति। देहानित्यादि प्रकृतिजान् 'पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान्' इति गीतायाः। कर्तृत्वं भोगकर्तृत्वम्। देहसह सहभावि एव। बन्धमोक्षेति भाष्यार्थमाहुः तत्तदिति। अन्यथैकजीवस्य देहभेदेपि कर्तृत्वस्य प्रकृतिगुणनिष्ठत्वेन प्रकृतेर्बन्धमोक्षापत्तिः बन्धमोक्षव्यवस्था च सहजा भवेदिति भाष्यार्थात्। यादृगिति यादृक्कर्माभिमानी तादृक्कर्म कर्तव्यम्। सर्वेति। आदेहं सर्वकर्मकर्तृत्वम्। आधारेति प्रतिबिम्बाधारः। प्रकृतिमहत्तत्त्वाख्यं मनः मलिनबुद्धिश्च तदधीनत्वे चारुणजपाकुसुमाधीनस्फटिकारुणिमवत्कर्तृत्वं जीवस्याभिमानिन इति भावः। अयं जीवाणुत्ववादे तृतीयः पक्षः। तत्र मूलप्रकृतावेव चित्प्रतिबिम्ब ईश्वर इति आवरणशक्तिप्राधान्येनाविद्यादिशब्दितायां तस्यामेव चित्प्रतिबिम्बो जीव इति च कथनात्। मूलप्रकृतिरविकृतिरिति अविपत्तदयो उद्गुणसंविज्ञानेन महत्तत्त्वमलिनबुद्ध्यादयः तैः शब्दितायां

इच्यते । जगद्वाचित्वात् । एतेषां पुरुषाणां कर्ता यस्य चैतत् कर्मेत्युपक्रमे एतच्छब्देन जगदुच्यते । पुरुषशब्देन च जीवः । तज्जडजीवात्मकं जगद् ब्रह्मकर्तृकमिति हि पूर्वसिद्धम् । तदनुरोधेनात्रापि ब्रह्मपरत्वमेवोचितं, न तु सर्वविप्लवोऽश्रुतकल्पना च । अतः सुषुप्तावपि ब्रह्मण्येव लयस्तस्मादेव सर्वमिति ज्ञातव्यम् । प्राणात्मशब्दवाच्यत्वं तु पूर्वमेव सिद्धम् । तस्मान्न जीवाधिष्ठिता प्रकृतिः कारणम् ॥ १६ ॥

भाष्यप्रकाशः ।

धीनत्वात् । नच ब्रह्मानुप्रवेशोक्तिवैयर्थ्यम् । तस्य साक्षित्वमात्रबोधनार्थत्वात् । तत्त्वं तु, स एष इत्यैक्यविधानाञ्च ब्रह्मेतो भिन्नम् । अतोऽभिमानिन एव कर्तृत्वात् प्रकृतेरेव कर्तृत्वमर्थादेव फलिष्यतीत्येवं प्राप्ते इत्यर्थः । समाधिं व्याकुर्वन्ति एतेषामित्यादि । अत्रापि कारणत्वेनेत्यनुवर्तते । कारणत्वेन ब्रह्मैवादरणीयम् । नात्र जीवः कर्तृत्वेन विवक्षितः । कुतः? जगद्वाचित्वात् । अत्र हि बालाकिनोक्तानादित्यादीन्निराकृत्य अजातशत्रुणा, 'यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य चैतत् कर्म स वै वेदितव्यः' इति सिद्धान्तकथनोपक्रमे, एतेषामित्येतच्छब्देनादित्यमण्डलाद्युल्लेखादुपलक्षणविधया जडं जगदुच्यते । पुरुषशब्देन च जीवरूपम् । तज्जडजीवात्मकं जगद् ब्रह्मकर्तृकमिति हि पूर्वसिद्धम् । आदित्यमण्डलाद्युत्पत्तेः प्रागेव, 'यतो वा इमानि भूतानि जायन्ते', 'तत्तेजोऽसृजत', 'एतस्माज्जायते प्राणः' इत्यादिष्वादिसृष्टिबोधिकासु

रश्मिः ।

तस्यां मूलप्रकृतावेवेति सांख्यमतम् । न च कर्ता कारयिता हरिः इत्युक्तब्रह्मानुप्रवेशो हि कर्तृत्वादेवं तु तदुक्तिवैयर्थ्यमित्याशङ्क्य समाधत्ते न च ब्रह्मेति । 'असङ्गो ह्ययं पुरुषः' इति सूत्रात् । पञ्चविंशतितत्त्वेषु कुत्रास्य प्रतिबिम्बितत्वस्य निवेश इत्याशङ्क्याहुः तत्त्वं त्विति । स एष इत्युपसंहारश्रुतिः । एवं सतीति भाष्यं विवृण्वन्ति स्म अत इति । ननु भाष्ये एवं सतीत्यस्याभिमानिन एव कर्तृत्वे सतीत्यर्थः । अत्र तु पञ्चम्यन्तं कुत इति चेन्न विवक्षातः कारकाणि भवन्तीति । अर्थादिति असङ्गत्वरूपार्थात् प्रकृतेर्विकारशीलायाः । एतेषामित्यादीति भाष्ये एतेषामादित्यादीनाम् । एतत् इति गच्छतीत्येतत् 'एतेस्तुट् च' इति सूत्रेणादिप्रत्ययस्तस्य तस्य तुडागमश्च । कर्मेति क्रियत इति कर्म 'सर्वधातुभ्यो मनिन्' इति मनिन् । कृति कर्म जगदित्युक्तम्, तच्च जडम् ।

'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया' ॥

इति गीतातः । पुरुषेति पुरुषाणामित्युक्तः पुरुषशब्देन जीवः । प्रकृते । अत्रेमां श्रुतिं सकलामाहुः पूर्वापरसंबन्धाय । अत्र हि बालाकिनेति । निराकृत्येति अत्र हि बालाकिरजातशत्रुणा ब्रह्म ते ब्रवाणीति संवदितुमुपचक्रमे स च कतिचिदादित्याद्यकारणान्पुरुषान् मुख्यब्रह्मदृष्टिमात्र उक्त्वा तूष्णीं बभूव तमजातशत्रुर्मृषा वै खलु मा संवदिष्ठा ब्रह्म ते ब्रवाणीति । अमुख्यब्रह्मवादितया तं निराकृत्येत्यर्थः । तत्कर्तारमन्यं वेदितव्यतयोपचिक्षेप तमाहुः अजातशत्रुणेति । एतच्छब्देनेति भाष्यमवतारयन्ति एतेषामित्येतच्छब्देनेति । उक्तार्थस्य भगवदिच्छया प्रसिद्ध्यभावात् प्रसिद्ध्यर्थमाहुः उपलक्षणेति । पुरुषेति भाष्यं विवृण्वन्ति पुरुषशब्देनेति । जीवेति पुरि शेते इति व्युत्पत्त्या जीवरूपं जगदुच्यते । तज्जडेति भाष्यं विवृण्वन्ति तज्जडेति । भूतानीति तत्तं अग्नि विश्वाचादि च तेजोवाम छान्दोग्यश्रुतिः । इत्यादिष्विति ।

११७ ब्र० सू० र०

भाष्यप्रकाशः ।

श्रुतिषु सिद्धम् । अत्रापि पूर्वमिन्द्रप्रतर्दनसंवादे एवमेव सिद्धमतस्तदनुरोधेनात्रापि कर्तृत्वस्य ब्रह्मपरत्वमेवोचितम् । न तु पुरुषशब्देन देहमात्रमभिप्रेत्य तत्कर्तृत्वस्य प्रकृत्यभिमानिनि संभवदुक्तिकत्वेन तदङ्गीकृत्य सर्वश्रुत्युपप्लवो विधेयः । नच, न जायते न म्रियते वेति श्रुतेर्जीवोत्पत्तिः सिद्धान्तेऽप्यनिष्टेति जडजीवात्मकजगत्कर्तृत्वकथनमसंगतमिति शङ्क्यम् । 'सर्व एवात्मानो व्युच्चरन्ति' इति श्रुत्यन्तरेण व्युच्चरणरूपाया उत्पत्तेस्तत्राप्यङ्गीकारात् । अतो जडवत् स्वरूपान्यथाभावाभावादेव, न जायत इत्युपपत्तेर्न सिद्धान्ते दोषः । नच सिद्धान्ते उपलक्षणविधावत् पूर्वपक्षे संकोच इति दोषतौल्यात् साम्यं शङ्क्यम् । ब्रह्मण उपक्रमे श्रुतत्वेन तदादरस्य युक्ततया उपलक्षणविधाया अदुष्टत्वात् । प्रकृत्यभिमानिनस्त्वश्रुतत्वेन तत्कल्पने श्रुतत्यागोऽश्रुतकल्पना च स्यादिति दोषाधिक्यात् । नच ब्रह्मपदमत्र सांख्याभिमतजडब्रह्मवाचकमिति शङ्क्यम् । स्वरूपलक्षणविरोधप्रसङ्गात् । अतः सर्वश्रुत्येकवाक्यत्वायात्रापि ब्रह्मैव कर्त्रीति मन्तव्यत्वात् सुषुप्तावपि ब्रह्मण्येव वागादीनामत्रोक्तानां लयः । तस्मादेव सर्वे यथायतनं विप्रतिष्ठत इति ज्ञातव्यम् । नच प्राण एव प्रज्ञात्मेत्यस्य विरोधः । ब्रह्मणि प्राणात्मशब्दवाच्यस्येन्द्रप्रतर्दनसंवादे पूर्वमेव सिद्धत्वादिति । तस्मादत्र प्रकृत्यभिमानी जीवो न तत्कर्तृत्वेन सिध्यतीति न तदधिष्ठिता प्रकृतिः करणमित्यर्थः ॥ १६ ॥

रश्मिः ।

'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथ्वी विश्वस्य धारिणी' ॥

इति । मुण्डके आदिपदेन 'द्यावापृथिवी जनयन् देव एकः' इति । पूर्वसिद्धमित्यस्य भाष्यस्यार्थान्तरमाहुः अत्रापि । पूर्वमिति भाष्येपि पूर्वमनुगमाधिकरणे कौषीतकिब्राह्मणे वा पूर्वम् । एवमेवेति जगद् ब्रह्मकर्तृकमेव सिद्धम् । तदनुरोधेनेति भाष्यं विवृण्वन्ति अतस्तदनुरोधेनेति । अत्रापीति कौषीतकिब्राह्मणेपि । संभवदिति प्राक्तनकर्मद्वारा । कर्मणां प्ररोहैकस्वभावत्वम् । सर्वश्रुतीति यतो वा इमानीति श्रुतिविप्लवः । न जायत इति 'न जायते म्रियते वा विपश्चित्' इति । न च विपश्चित् सूर्य इति शङ्क्यम् । सूर्य आत्मा जगतस्तस्थुषश्चेति आत्मत्वात् । व्युच्चरणेति सर्व एव जीवाः सर्व एवात्मानः इति व्युच्चरणं समागमः । 'अनित्ये जननं नित्ये परिच्छिन्ने समागमः' इति सुबोधिनीकारिकायाः । जडे शब्दरूपरसगन्धस्पर्शपरावृत्तिवज्जीवेष्वित्याहुः अत इति । अन्यथाभावः शब्दादिपरावृत्तिः । अश्रुतकल्पना चेति भाष्यमवतारयन्ति न चेति । उपलक्षणेति एतच्छब्देनोपलक्षणविधया । संकोच इति देहमात्रसंकोचः । शङ्कते न च ब्रह्मेति । सांख्येति सांख्यैरभिमतं जडं प्रकृतिः ब्रह्म असङ्गपुरुषस्तदुभयवाचकमभिमानिवाचकमिति यावत् प्रतिबिम्बं वा जडं ब्रह्म तद्वाचकं वोपक्रमगतं ब्रह्मपदमित्यर्थः । स्वरूपेति सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुत्युक्तम् । अतः सुषुप्तावित्यादिभाष्यं विवृण्वन्ति स्म अतः सर्वेति । अत्रापीति कौषीतकिब्राह्मणेपि । विप्रतिष्ठन्ते इति जागरिते विप्रतिष्ठन्ते तत्र विषयोपपादनं पूर्वमुक्तम् । न जीवादिति भावः । प्राणात्मेति भाष्यं विवृण्वन्ति न च प्राण इति । पूर्वमिति अनुगमाधिकरणे । कौषीतकिब्राह्मणे वा पूर्वम् । तदधिष्ठेति प्रतिबिम्बाधिष्ठिता प्रतिबिम्बाधारभूता प्रकृतिः । न च गीताविरोध इति वाच्यम् । यद्यपि क्षेत्रक्षेत्रज्ञनिर्देशाध्याये क्षेत्रज्ञनिरूपणं न्याय्यं तथापि क्षेत्रेषु देहेषु द्वा सुपर्णेति श्रुत्या

जीवमुख्यप्राणलिङ्गादिति चेत्तद्व्याख्यातम् ॥ १७ ॥

किंचिदाशङ्क्य परिहरति । नन्वत्र जीव एव प्रक्रान्तः । क्वैष एतद् बालाके पुरुषोऽशयिष्टेति । ब्रह्म त्वयापि न सिद्धमेतादृशं, नैतादृशमिति । अतः शयनोत्थानलक्षणजीवधर्मदर्शनात् तस्यैव ब्रह्मत्वं जगत्कर्तृत्वं च । तत् स्वतोऽनुपपन्नं प्रकृतौ फलिष्यति । अथवा मुख्यप्राणलिङ्गमप्यत्रास्ति । प्राण एवैकधा भवतीति सुषुप्तौ तस्यैव वृत्तिरुपलभ्यते । विद्यमानादेव सर्वोत्पत्तिप्रलयौ । स च

भाष्यप्रकाशः ।

जीवमुख्यप्राणलिङ्गादिति चेत्तद्व्याख्यातम् ॥ १७ ॥ भाष्यमत्र निगदव्या-

रश्मिः ।

जीवमात्रस्याशक्यनिरूपणत्वात् उपद्रष्टेत्यादिना ब्रह्मनिरूपणात् । न चात्र मानाभाव इति शङ्क्यम् । गुहे इति जीवे भोक्तृत्वसिद्ध्या भोक्तेति भोक्तृत्वस्य पृथगुक्तस्य मानत्वात् । न चानुवाद इति शङ्क्यम् । गौरवात् । न चानश्नन्नन्योभिचाकशीति श्रुतिविरोधः शङ्क्यः स्वेनाशननिषेधात् । जीवरूपेण भोक्तृत्वस्यावरणात् । अन्यथा माण्डूक्योपनिषदि स्थूलभुक्त्वोक्तेर्विरोधः स्यात् । न च चरणरूपेण स्थूलभुक्त्वमिति शङ्क्यम् । ॐ । न च प्रकृतेरनादित्वं न युज्यत इति शङ्क्यम् । मायया च निषेवितमिति वाक्यात् । माया प्रकृतिरिति । न च क्षेत्रक्षेत्रज्ञनिर्देशविरोध इति शङ्क्यम् । उपक्रमे,

'प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च ।
एतद्वेदितुमिच्छामि ज्ञानं ज्ञेयं च केशव' ॥

इति ज्ञेयोक्तेः । न च क्षेत्रक्षेत्रज्ञयोरेवं सांख्यरीत्या सर्वनिवेशः क्षेत्रक्षेत्रज्ञनिर्देश इत्यध्यायनाम्नः इति शङ्क्यम् । प्रतिबिम्बस्य विद्वन्मण्डने दूषणात् निरीश्वरवादापत्तेश्चेति ॥ १६ ॥

जीवमुख्यप्राणलिङ्गादिति चेत्तद्व्याख्यातम् ॥ १७ ॥ निगदेति । तथाहि । किंचिदिति प्रतीतार्थत्यागेनायमात्मा ब्रह्मेति शारीरब्राह्मणे जीवस्य ब्रह्मत्वोक्तेरुपक्रमो जीवपरः क्वैष इत्यत्र जीवः स्पष्टः । सुप्तात् सुषुप्ताच्च जीवाच्छ्रौती सृष्टिः तत्कर्तृत्वं प्रतिबिम्बे बाधितम् । प्रकृतौ भविष्यति उपसंहारे स एष प्राण एव विज्ञानात्मेत्येकवचनेन सांख्यवाददर्शनात् फलनिरूपणेपि पापाहत्यादीनां संभव इत्याशङ्क्येति । ननु ब्रह्म ते ब्रवाणि इत्युपक्रम इति चेत्तत्राहुः ब्रह्म त्विति । अस्तूपक्रमवार्ता अत्रेन्द्रप्रतर्दनसंवादेपि ब्रह्म न सिद्धं प्राणपदं ब्रह्मवाचकमिति सिद्धं ततस्त्वदृष्टपधोत्र तु शारीरब्राह्मणोक्तो जीव उपक्रमे उक्तः । अत इति शक्यार्थविचारात् । जीवमुख्यप्राणलिङ्गादित्येकवचनादेकं दुष्टमेकं लिङ्गमित्युक्त्या दुष्टं जीवलिङ्गं व्याख्याय मुख्यप्राणलिङ्गं व्याकुर्वन्ति स्म अथ वेति । ननु कोऽस्वरसो येन पक्षान्तरोक्तिरिति चेच्छृणु उपक्रम एवासंभवी यतोऽशयिष्टेति स्वप्नार्थकधातुमात्रं न किं तु सुषुप्तिसहितस्वप्नवाचकः यदा सुप्तः स्वप्नं न कंचन पश्यति इति श्रुतेः स्त्रयाणाकिब्राह्मणे पुरीतति शेते इति सुषुप्तिनाडीपुरीतत्प्रणाया उक्तेश्च सुषुप्तात्सुप्तात्सृष्टिः सुखमहमस्वाप्सं न किंचिदवेदिषमिति प्रत्ययविरुद्धेति प्रविष्टब्रह्मणः सृष्टियुक्तेत्वस्वरस इति । ननु अत्रापि स दोषस्तदवस्थ इति चेत्तत्राहुः सुषुप्ताविति यदा सुप्तः स्वप्नं न कंचन पश्यति अथास्मिन् प्राण एवैकधा भवतीति उपक्रम्य एतस्मादात्मनः प्राणा यथायतनं प्रतिष्ठन्ते प्राणेभ्यो

प्रकृत्यंशोऽतो जडादेव प्रधानात् सुषुप्तावपि सर्वोत्पत्तिः । अतोऽस्मात् प्रकरणाज्जीवद्वारा साक्षाद्वा प्रकृतेः कारणत्वमित्येवं प्राप्ते उच्यते तद्व्याख्यातम् । एतयोरुभयलिङ्गत्वमेव नास्तीति, आश्रयत्वादिह तद्योगादित्यत्र सर्वमेव कार्यं भगवत एव नान्यस्मादिति । अतोऽस्माद् ब्रह्मवाद एव सिद्ध्यति, न प्रकृतिवादः ॥ १७ ॥

अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १८ ॥

स्वमतेन परिहारमुक्त्वा नियतधर्मवादेनापि परिहारमाह । स्वापप्रतिबोधौ जीवधर्मावेव । चक्षुरादिलयाधारत्वं प्राणस्येति । तस्मिन्नपि पक्षे अन्यार्थं तद्धर्मकीर्तनम् । भेदे हि तन्निराकरणमवश्यं कर्तव्यमिति तुशब्दः । ब्रह्मप्रति-

---

भाष्यप्रकाशः ।

ख्यातमित्युपरम्यते ॥ १७ ॥

अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १८ ॥ अत्र सांख्यमतमाचार्यदेश्यानामन्येषामप्यनुमतं न भवतीति ज्ञापनाय सूत्रप्रयोजनमाहुः स्वमतेनेत्यादि । नियतधर्मवादस्वरूपमाहुः स्वापेत्यादि । परिहारमाहुः तस्मिन्नित्यादि । यस्मिन् पक्ष

रश्मिः ।

देवा देवेभ्यो लोका इति च । प्राणवृत्तयोऽपानादयः प्रतिष्ठन्ते जागरिते परीक्षकैरुपलभ्यन्ते । ननु प्राणोस्तु परं तु ब्रह्मणोनुप्रवेश उक्तः । तस्मादेवात्मनः सकाशात्प्राणप्रतिष्ठाद्युक्तम् । तथा च शंकराचार्यभाष्यं 'परस्माच्च ब्रह्मणः प्राणादिकं जगज्जायते' इति वेदान्तमर्यादेति चेत्तत्राहुः विद्यमानादिति । प्राणादिति वृत्तौ मरीचिकाख्यायां लालुभट्टकृतायां वृत्तावप्येवम् । प्राणे विद्यमानाद् ब्रह्मणः सत्यत्वादिवत् कर्तृत्वरूपादित्यर्थः अत एव एतस्मादात्मन इति श्रुतावात्मपदं प्राणेष्वात्मपदाभावात् । भाष्यं चातः सुषुप्तावपि ब्रह्मण्येव लयस्तस्मादेव सर्वं ज्ञातव्यमिति स च प्राणः प्रकृत्यंशः । प्रकृतेर्मायारूपाया महत्तत्त्वं महत्तत्त्वादहंतत्त्वं तस्मात्तामसाहंकाराच्छब्दः ततः खं ततः स्पर्शस्ततो वायुरिति प्रकृत्यंशः समष्टिप्राणः व्यष्टीनां प्राणा अपि प्रकृत्यंशाः । सांख्य आह अत इति यतो भवतामेवमतोस्माकमपि जडादेवेत्यादिः । अतोस्मादिति । कौषीतकिप्रकरणात् । जीवद्वारेति प्रकृतौ प्रतिबिम्बो जीवस्तस्मात्सर्वम् । साक्षादिति 'प्रधानाज्जगज्जायते' इति । एतयोरिति लिङ्गयोः । प्रकरणित्वोपपादने उभयलिङ्गत्वमेव नास्तीति उभयलिङ्गत्वाभावो व्याख्यातः केत्याकाङ्क्षायामनुगमाधिकरण इत्याहुः आश्रितत्वादिहेति कथं व्याख्यातमित्याहुः सर्वमिति । नन्वेवं सति प्रतर्दनवाक्यनिर्णयेनैवेदमपि वाक्यं निर्णीयेत न निर्णीयते यस्य वै तत्कर्मेतस्य वाक्यस्य ब्रह्मविषयत्वेन तत्रानवधारितत्वात् तस्मादत्र जीवमुख्यप्राणाशङ्का पुनरुत्पद्यमाना निवर्तते । सिद्धमाहुः अत इति ब्रह्मवादेस्माद्ब्राह्मणात् । एवं निगदव्याख्यातमित्यर्थः ॥ १७ ॥

अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १८ ॥ अत्र जैमिनिमतोक्तेः प्रयोजनं वक्तुमाहुः अत्र सांख्येति । आचार्यदेश्यानामिति ईषदूना आचार्या आचार्यदेश्याः 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' इति सूत्रेण देश्यप्रत्ययः । अन्येषामाचार्यदेश्यत्वं प्रत्यधिकरणं स्फुटमेव दूषणात् । अन्येषामिति जैमिनीनाम् । नियतेति स्वापप्रतिबोधौ जीवस्यैव चक्षुरादिलयाधारत्वं प्राणस्येति नियतधर्मवादः 'तदप्रसक्तं चक्षुरवयवत्वानमेत्वात्' इति पक्षे

पत्त्यर्थमेव जीवलयोद्गमौ। श्रुतिवैलक्षण्येन प्राणकीर्तनमाश्रयब्रह्मबोधाय। कुत एतदवगम्यते तत्राह उपक्रमोपसंहाराभ्यामेवावगम्यते। 'यो वै बालाक एतेषां पुरुषाणाम्' इत्युपक्रमे मुख्यं ब्रह्मैव निर्दिष्टम्। तज्ज्ञानेनासुरजयः, सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं चेति फलम्। न ह्येतद्द्वयममुख्ये संभवति। अपि च प्रश्नव्याख्यानाभ्याम्। 'क्वैष एतद् बालाके पुरुषोऽशयिष्टेति प्रश्नः। तत्र जीवस्य ज्ञातत्वादधिकरणमेव न ज्ञातम्। यत्रैष एतद्बालाके पुरुषोऽशयिष्टेति

भाष्यप्रकाशः।

एतयोर्जीवमुख्यप्राणधर्मत्वात् तल्लिङ्गत्वमेव, न ब्रह्मधर्मत्वं, तस्मिन्नपि तद्धर्माणां कीर्तनमन्यार्थे ब्रह्मबोधार्थम्। तथा च ब्रह्मपरिचायनाय तच्छेषत्वेनैतत्कथनादेतेन सांख्यमतसिद्धिरित्यर्थः। ननु सूत्रे तुशब्दादस्य पक्षस्य पूर्वस्माज्ज्यायस्त्वमेव कुतो नाद्रियत इत्याकाङ्क्षायां तोः प्रयोजनमाहुः भेदे हीत्यादि। एतस्य मतस्य पूर्वस्माद् भेदे यतो हेतोर्जैमिनिनापि सांख्यमतनिकारणमवश्यं कर्तव्यमिति ज्ञापनाय तुशब्दो, न तु सिद्धान्तपक्षादस्योत्कर्षज्ञापनार्थः। गामाविश्य च भूतानीत्यादिभिर्भूतादिसर्वकार्यस्य भगवत्कार्यतयैव सिद्धत्वादिति। तर्ह्यस्मिन् पक्षे जीवप्राणयोः कथमन्यार्थत्वमित्यत उपपादयन्ति ब्रह्मप्रतीत्यादि। अपिचेत्यनेन सूचितं हेतुमाहुः

रश्मिः।

जैमिनिना व्यासग्रहणात् जीवस्वरूपं व्यासोक्तं यथाशास्त्रम्। 'जैमिनिः कर्मतत्त्वज्ञः' इति धर्मशास्त्रे नियतधर्मवादः। यथा मध्वादिष्वनधिकारं जैमिनिः। अधिकारं व्यास आह स्वापेत्यादीति श्रुतिं यदा सुप्तः स्वप्नं न कंचन पश्यति अथास्मिन् प्राण एवैकधा भवतीति। न ब्रह्मेति परंपरया न ब्रह्मधर्मत्वम्। नन्वत्रापि ब्रह्मणः एकविधत्वं तत्प्रमाणं बादरायणस्यानपेक्षत्वादित्यौत्पत्तिकसूत्रशेषादिति शङ्कनम्। आत्माधिकः कलादिभिर्न भोगः इति जैमिनिसूत्रात् आदित्यादिग्रहेषु कलादिभिः सकलगुणैरधिक आत्मा न भोगो ग्रहः आत्मेति ज्योतिषजैमिनिसूत्रसुबोधिन्याम्। आत्मलक्षणस्य ज्योतिर्विन्नीलकण्ठैः प्रतिपादनात्। तस्मिन्नपीति वेदवेदान्तादिषड्शास्त्रेषु वेदशास्त्रपक्षे। ब्रह्मपरीति दर्शपूर्णमासयोर्ब्रह्मत्वार्थं ब्रह्मपरिचायनाय। एतदिति जीवमुख्यप्राणलिङ्गकथनात्। ब्रह्मिष्ठो ब्रह्मा तं दर्शपूर्णमासयोः वृणीत इति वाक्यात्। ज्यायस्त्वमिति तोः पूर्वोक्तस्य व्यासपक्षस्य निराकरणस्य तोरर्थात् इति भावः। तु इति पूर्वपक्षिणमिति तुः, तुः पूर्वपक्षनिरास इति भाष्यात्। पूर्वस्मादिति वेदान्तमतात्। कर्तव्यमिति अन्यथा षड्शास्त्रव्यवस्था भज्येत। वेदशास्त्रमेव सांख्यशास्त्रम्। कर्मणः कर्तृत्वादि च न स्यात् प्रकृतेरुपादानत्वे। तथा च पूर्वपक्षिणं सांख्यं तुदतीति तुरिति भावः। भगवदिति। गीतायां न कर्मकार्यतया न सिद्धत्वमित्येवकारव्यावर्त्यम्। ब्रह्मप्रतिपत्तीत्यादीति प्रतिपत्तिर्ज्ञानं तद्ब्रह्मणो जगज्जन्मादिकर्तृत्वेन भवति तज्जगज्जन्मादिकर्तृत्वमेतेषां पुरुषाणां कर्तेत्यनेनोक्तं सुषुप्तावपि ब्रह्मण्यपलयः इति भाष्योक्तो लयः। तावेतौ जीवलयोद्गमौ ब्रह्मप्रतिपत्त्यर्थमेव तल्लक्षणत्वात्। श्रुतिः शारीरब्राह्मणे उक्ता 'सुषुप्त्युत्क्रान्त्योर्भेदेन' इत्यधिकरणे विवृता तत्र सर्वप्राणानां भगवन्निकटे गमनमुक्तमत्र तु वागादिल्याधारत्वं प्राणस्येति वैलक्षण्यं तेन। प्राणकीर्तनं प्राण एवैकधा भवति इति श्रुत्वा। एतदिति आश्रयब्रह्मबोधनार्थत्वम्। जीव प्राणधारणे इति धातुपाठात् साक्षात्प्राणाश्रयजीवमपहायाश्रितत्वं परंपरयावगम्यते। अपि चेति स्वरादेराकृति-

व्याख्यानम् । न हि नाडीर्ज्ञापयितुं व्याख्याति, किं तु प्रतिज्ञातं ब्रह्म । कथमेतदवगम्यते, नाडीव्यतिरिक्त आत्मा ज्ञाप्यत इति तत्राह एवमेके । एके शाखिनो वाजसनेयिनः । तत्रापि हस्तबालाकिब्राह्मणे, 'स होवाचाजातशत्रुर्यत्रैष एतत् सुप्तोऽभूद् य एष विज्ञानमयः पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय, य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते' इत्यत्र आकाशशब्दं ब्रह्म सता सोम्य तदा संपन्नो भवतीति च । स्वं ह्यपीतो भवतीति च । तस्मादाधारभूतब्रह्मज्ञापनार्थत्वाज्जीवमुख्यप्राणलिङ्गात् प्रकृतिवाद इत्यसंगतम् ॥ १८ ॥

इति प्रथमाध्यायचतुर्थपादे षष्ठं त्रिसूत्रं जगद्वाचित्वाधिकरणम् ॥ ६ ॥

भाष्यप्रकाशः ।

उपक्रमेत्यादि । फलमिति उपसंहारे निर्दिष्टं फलम् । जीवस्य ज्ञातत्वादिति । एष इति पदेन बालाकिज्ञातपदार्थस्यैव निर्देशात् तथेत्यर्थः । शेषं स्फुटम् ॥ १८ ॥

इति षष्ठमधिकरणम् ॥ ६ ॥

रश्मिः ।

गमकत्वादन्यचेत्यर्थे प्रयुज्यते तत्र किं चेत्यनुक्त्वा एतत्प्रयोगः सूचयति सूत्रान्वयान्तरम् । प्रश्नव्याख्यानाभ्यामप्येवमेवैके शाखिनश्चेति तदाहुरपि चेत्यनेनेति हेतुमिति । उपक्रमोपसंहाररूपम् । समुच्चयार्थकेनापि नायं हेतुः समुचित इति भावः । उपसंहार इति सर्वान्पाप्मनोपहत्येत्यादिनोक्तस्तस्मिन् । भाष्ये । अमुख्ये साक्षात्प्राणाश्रये जीवेऽङ्गीकृते सति संभवत्यपि तु परंपरयाश्रये ब्रह्मण्यङ्गीकृते सति संभवति । सूचितार्थं व्याख्याय वाच्यार्थं वक्तुमाहुः अपि चेति । अन्यचेत्यर्थकमव्ययम् । मनोरमायां स्वरादेराकृतिगणत्वात् । क्वेत्यत्र किमः सप्तम्यन्तात् किमोऽदिति अत्प्रत्ययादधिकरणसप्तम्या अधिकरणविषयकः प्रश्नः इत्याहुः तत्रेति । प्रकृते । बालाकिज्ञातेति ज्ञातपत्र ज्ञातप्रश्ना प्रत्यक्षं वा । अधिकरणं न ज्ञानमिति जीवाधिकरणं किमिति प्रश्नः । शेषमिति उत्तरस्य यद्धर्मप्रकारकयद्विषयी प्रश्नः तद्धर्मावच्छिन्नत्वतदुद्देश्यकं लक्षणादिनिरूपणमिति व्युत्पत्त्या को घटः कम्बुग्रीवादिमान् घट इत्यत्र दर्शनेन तादृशत्वाच्छ्रुत्यन्तरसिद्धमाकाशब्रह्मद्योतयतीत्याहुः यत्रैव इति यत्रेत्यस्याकाशशब्दब्रह्मणि इत्यर्थः । ननु श्रुत्यन्तरे पुरीतति शेते इति यत्रेत्यस्य पुरीतति इत्यर्थः । कुतो नेति चेत्तत्राहुः नहीति । आकाशेति आकाशः शब्दो यस्य प्रतिपादकस्तदाकाशशब्दं ब्रह्म । यत्रैव जीवः सुप्तोभूत् एतज्जगत्सुप्तोभूत् । स्वयं विवृणोति य एष इति विज्ञानमयो जीवः प्राणानामिन्द्रियाणां विज्ञानं प्रकाशनसामर्थ्यम् । करणे ल्युटा स्वविज्ञानेन प्रत्यक्षप्रमाणत्यामङ्गीकृतेनादाय गृहीत्वा हृदय इत्याकाशविशेषणम् । सप्तम्यन्तं न हृदयब्रह्मणोक्तब्रह्मत्रहृदयमिति नपुंसकशब्दात् । अत उक्तमाकाशशब्दं ब्रह्मेति । अन्यच सतेति सता ब्रह्मणा तदा सुषुप्तौ । स्वमिति स्वमात्मानमपि इतः प्राप्तो भवति । सिद्धमाहुः तस्मादिति जीवमुख्येत्यत्र ल्यब्लोपे पञ्चमी आधारभूतब्रह्मज्ञापनार्थत्वात् जीवमुख्यप्राणलिङ्गमाश्राय पूर्वसूत्रोक्तरीत्या प्रकृतिवाद इत्यसंगतमित्यर्थः । संगतिस्तु निर्वाहकरूपा प्रत्यधिकरणम् ॥ १८ ॥

इति षष्ठाधिकरणम् ॥ ६ ॥

## वाक्यान्वयात् ॥ १९ ॥ (१।४।७)

पुनर्जीवब्रह्मवादेन प्रकृतिकारणवादमाशङ्क्य निराकरोति । बृहदारण्यके चतुर्थे षष्ठे च याज्ञवल्क्यमैत्रेयीसंवादे, येनाहं नामृता स्यां किमहं तेन कुर्यामिति विरक्तिमुक्त्वा, यदेव भगवान् वेद तदेव मे ब्रूहीति पृष्टे तामभिमुखीकृत्य, न वा अरे पत्युः कामायेत्यादिना अमृतत्वाय ज्ञानमुपदिशति षष्ठे । पुनरुपसंहारेऽप्येतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यः प्रवव्राजेति ।

---

भाष्यप्रकाशः ।

वाक्यान्वयात् ॥ १९ ॥ अधिकरणमवतारयन्ति पुनर्जीवेत्यादि विषयमाहुः बृहदित्यादि प्रवव्राजेत्यन्तम् । इदं वाक्यद्वयं प्रकृतिसंबन्धशून्यकेवलपुरुषतत्त्वज्ञापनपरम् । यथार्द्रैन्धाग्नेरित्यारभ्य वागेकायनमित्यन्तेन नामरूपात्मकप्रपञ्चोत्पत्तिलयाधारश्रावणात् । सांख्यमते केवलस्य पुरुषस्य तथात्वाभावात् । किंतु प्रकृतसंसृष्टतत्परम् । तेन तादृशस्य जीवस्य प्रकरणित्वम् ।

रश्मिः ।

वाक्यान्वयात् ॥१९॥ पुनर्जीवेत्यादीति जीव एव ब्रह्मेतिवादेन जीवस्य प्रतिबिम्बत्वात् प्रतिबिम्बस्याकारणत्वात् प्रकृतौ कारणत्वपर्यवसानात् प्रकृतिकारणवादेत्यादि । चतुर्थ इति चतुर्थे ब्राह्मणे षष्ठेध्याये च ब्राह्मणं तु पञ्चमं एतद्ब्राह्मणद्वयं विषयः । येन जन्मना हेतुना 'जातस्य हि ध्रुवो मृत्युः' इति वाक्यात् । अहं मैत्रेयी नामृता न शब्दो नञ् चामृतत्वाभिलाषसूचनायान्यथामृता स्यामित्येतावतैव चारितार्थ्यं लाघवं च । किं चामृतत्वाय ज्ञानोपदेशस्यासंगतिः स्यात् 'नाऽपृष्टो ब्रूयात्' इति सुबोधिन्याः एवं तु किं कुर्याममृतत्वार्थं किं कुर्यामिति प्रश्नव्यक्तेरमृतत्वाय पृष्टोऽमृतत्वाय ज्ञानमुपदिदेशेति अमृतत्वाय ज्ञानोपदेशस्यासंगतिर्नेति । स्यामिति हेतुहेतुमद्भावे लिङ् तेन जन्मना संपूर्णेन किं कुर्यामिति कृतिविषयकप्रश्नः नामृतत्वस्य कृतेश्च कार्यकारणभावः । न मृतत्वस्य कृतेश्च कार्यकारणभावः । कृतिपदेन सेवाकृतिकर्मकृत्योर्विवक्षणात् मृतत्वेप्यसत्कृतिसंभवात् । अतो हेतुहेतुमद्भावे लिङर्थमपि न नञौ । विरक्तिमिति । येनाहमिति वाक्यार्थस्य व्यञ्जकत्वात् व्यञ्जनयोक्त्वा वाक्यार्थेन विरक्तिव्यञ्जनात् । भगवान् याज्ञवल्क्यः । मे मम मैत्रेय्या मा इ इति च्छेदे मा मामित्यर्थः । एवं विषयः स्फुटः संशयस्फोटमाहुः संशयबीजमिति । पूर्वेति पूर्वं शारीरब्राह्मणं ततः पूर्वस्मिञ्ज्योतिर्ब्राह्मणे । आत्मज्योतिः सम्राडिति होवाचेति श्रुतेर्ब्रह्मणः प्रकृतत्वम् । तत्र आत्मन इत्यादीति । ननु जायापत्योरादित्वमपेक्षितमित्याशङ्क्याहुः स्वप्रतीत्येति । स्वप्रतीतिर्दम्पत्योर्नास्ति । ननु दम्पत्योर्मित्रस्वभार्यारूपयोः स्वप्रतीत्या प्रियत्वमस्त्येवेति चेन्न मुक्तस्य विषयरागाभावात् भार्याया अपि 'पुत्रे कृष्णप्रिये रतिः' इति वाक्याद्विषयप्रियत्वाभावात् । जायायाः पत्नीत्वे दम्पत्योः सहाधिकारस्य पूर्वतन्त्रसिद्धत्वात् तयोः प्रियत्वं स्वप्रतीतिगोचरो न भवति तथा च प्रतीतिप्राधान्यात् न पाठक्रम इति भावः । यद्वा पुत्राणामादी पुत्रादी पुत्रा आदयो येषां वित्तब्रह्मक्षत्रादीनां ते पुत्रादयः पुत्रादी च पुत्रादयश्च पुत्रादयस्तेषामपेक्षयेत्यर्थः । जीवमेवेति अयमात्मा ब्रह्मेति श्रुतौ जीवे आत्मपदप्रयोगात् । जीवस्येति । भाष्ये । तदित्यव्ययं लुप्तषष्ठीकं तस्येति निष्पन्नं तदर्थो जीवस्येति अव्ययार्थं आत्मत्वेन बोधानन्तरमिति । तत्रेत्यत्र विषयसप्तमी तदर्थस्तद्विषयकत्वेन जीवविषयकमेव दर्शनादिकं विधत्ते इति भाष्यान्वयः 'न वा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय पतिः प्रियो भवति न वा अरे जायायाः कामाय जाया प्रिया भवति आत्मनस्तु

तत्र जीवस्य प्रकरणित्वं ब्रह्मणो वेति संशयः। तत्रात्मनः प्रियत्वं स्वप्रतीत्या पुत्राद्यपेक्षया बोधयञ्जीवमेवोपक्रमे आत्मत्वेन वदति। तदनु तत्र दर्शनादि विधत्ते। तेन सर्वं विदितमिति फलमाह। तत्र कथमात्मज्ञानेन सर्वज्ञानमित्याकाङ्क्षायां, ब्रह्म तं परादादित्यादिना, इदं सर्वं यदयमात्मेत्यन्तेन तस्यैव सर्वत्वमाह।

---

भाष्यप्रकाशः।

जीवलिङ्गस्य भूयस्त्वात्। अथवा ब्रह्मणः प्रकरणित्वम् मृतस्वरूपस्य फलस्योक्तत्वादित्याशयेनाहुः तत्रेत्यादि। एवंचास्मिन्नपि सूत्रे आनुमानिकं नेत्यानुमानिकसूत्रादाकाशादिषु कारणत्वेनेत्याकाशादिसूत्राच्चानुवर्तते। तथाच ब्रह्मण्येव वाक्यान्वयाद् ब्रह्मैव कारणत्वेन मन्तव्यं, न तु प्रकृतिविशिष्टो जीवः। सर्वश्रुतीनामेकवाक्यात्। अतो नानुमानिकसूत्रे योजनं पर्यवस्यतीत्याशयेन पूर्वपक्षमाहुः तत्रात्मन इत्यादि। स्वप्रतीत्येति लौकिक्या स्वप्रतीत्या। जीवमिति प्रकृतिसंसृष्टं पुरुषम्। तदनु तत्रेति जीवस्यात्मत्वेन बोधनानन्तरं तद्विषयकमेव। 'ब्रह्म तं परादात्'-इत्यादिनेति ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद क्षत्रं तं परादादित्यादिना। अर्थस्तु—ब्रह्मक्षत्रादिरूपा वर्णाभिमानिनी देवता तं वक्ष्यमाणलक्षणं पुरुषं परादाज्ज्ञानापराधात् पराकुर्यात्। अपराधमाह। योऽन्यत्रात्मनो ब्रह्म वेदेति। यः पुमान् अन्यत्रात्मन आत्मनः सकाशादन्यद् ब्रह्मक्षत्रादि वेदेति। त्रल् सार्वविभक्तिकः। तथाचायमात्माभिन्नत्वेन मां पश्यतीत्यपराधात् तमात्मज्ञानरहितं कुर्यादित्यर्थः। सर्वत्वमाहेति। इदं सर्वं यदित्यन्तमनूद्यभागः। अयमात्मेति विधेयभागः। तथाचात्मनः सर्वत्वादात्मज्ञाने सर्वज्ञानमुपपन्नमिति भावेनात्मनः सर्वरूपत्वमाहेत्यर्थः। तदन्विति एवं प्रतिज्ञोपपादनमुखेन तन्माहात्म्यश्रावणानन्तरं कथमस्मिन् संघाते आत्मज्ञानं भवतीत्याकाङ्क्षायां दुन्दुभ्यादिदृष्टान्तत्रयमाह। यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छक्नुयात् ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीत इत्यादि। अर्थस्तु—यथा दुन्दुभेर्हन्यमानस्य सकाशाद् बाह्यान् अतिरिक्ताञ्छब्दान् महाकोलाहले ग्रहणाय ग्रहीतुं न शक्नुयान्न समर्थः पुरुषो भवेत्। किंतु हन्यमानस्य दुन्दुभेरेव शब्दो गृहीतो भवति। तत्र करणं दुन्दुभेर्दर्शनम्। दुन्दुभ्याघातस्य वा दर्शनम्। तदेतदुक्तं, दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वेति। तथा च महाकोलाहलाभिभावके कस्मिंश्चि-

रश्मिः।

कामाय जाया प्रिया भवति' इत्यारभ्य 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनि वा अरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितमित्यादिज्ञानोपदेशं जीवविषयकं विधत्ते। भाष्ये। तेनेति आत्मश्रवणादिना श्रुतिराह। प्रकृते। वक्ष्यमाणेति अपराधिनम्। सार्वेति तथा च त्रल् द्वितीयायाः अन्यदित्यन्यत्रेति। आत्मन इति भाष्यीयस्य तसेत्यस्यार्थः। प्रतिज्ञेति प्रतिज्ञात्वावच्छिन्ना प्रतिज्ञा तद्विशिष्टं वाक्यमपि प्रतिज्ञावाक्यम्। तन्माहात्म्येति जीवमाहात्म्य श्रावणानन्तरम् परंपरयेत्यादि भाष्यार्थोऽग्रे स्पष्टोऽत्र। यथा महेति भाष्यं विवरीतुं श्रुतिमाहुः यथा दुन्दुभेरिति आदिपदेन स यथा वीणायै वाद्यमानायै न बाह्याञ्छब्दाञ्छक्नुयात् ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः स यथा शङ्खस्य ध्मायमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीत इति दृष्टान्तद्वयबोधकश्रुतिसंग्रहो बोध्यः। भाष्यं विवृण्वन्ति स यथा दुन्दुभेरिति आघातास्यः संयोगः। अनुमानेति भाष्यं विवरीतुमाहुः

तदनु कथमस्मिन् संघाते आत्मज्ञानं भवतीत्याकाङ्क्षायां दुन्दुभ्यादिदृष्टान्तत्रयमाह । परंपरया बाह्याभ्यन्तरभेदेन । यथा महाकोलाहले दुन्दुभेर्हन्यमानस्य शब्दो गृहीतो भवति । तत्र करणं दुन्दुभिदर्शनं दुन्दुभ्याघातदर्शनं वा । अनुमानद्वारा चित्ते तत्र निविष्टे तत्साक्षात्कारो भवतीति तथा आत्मनो बोधककार्यानुसंधाने तत्साक्षात्कारो भवतीति । तत्र कथं सर्वत्वमित्याकाङ्क्षायां तत एवोत्पन्नं सर्वं नामरूपात्मकं तस्मिन्नेव लीयत इति । स यथेति द्वयेनाह । मध्ये

भाष्यप्रकाशः ।

च्छब्दे श्रुते, कस्यायमिति जिज्ञासायां योग्यतया सजातीयशब्दान्तरेण वा कारणमनुमिनोति । एवमनुमानद्वारा चित्ते तत्र निविष्टे ततः प्रयत्नेनान्यथा वा तस्य दुन्दुभेः साक्षात्कारो भवतीति दृष्टान्तः । तथात्रात्मबुभुत्सायाम्, आत्मनो बोधकानि यानि चेष्टादिरूपाणि तत्कार्याणि तेषां विचारेण चित्तेऽनुमानद्वारा आत्मानुसंधाने तस्यात्मनोऽप्यस्मिन् संघाते श्रवणादिभिः

रश्मिः ।

तथा चेति योग्यतयेति एकपदार्थेऽपरपदार्थसंबन्धो योग्यता । एकस्मिन् पदार्थे महाकोलाहलाभिभावके शब्देऽपरपदार्थस्य दुन्दुभेः संबन्धः । स्वान्वितान्वितत्वं संबन्धः स्वं शब्दः तस्माद्वा एतस्मादात्मनः इति श्रुतेः तेनान्वित आकाशस्तेनान्वितो वायुरित्येवं संबन्धः स्वरूपः । अनया कारणानुमानं दुन्दुभिशब्दः क्वचिदाश्रितः गुणत्वाद्रूपादिवदिति । ननु रूपादिकं न दृष्टान्तः साध्यतावच्छेदकस्वरूपसंबन्धेन हेतुतावच्छेदकसमवायसंबन्धेन हेतुमति घटादिरूपादौ साध्याभावात् । प्रत्युत साध्याभाववद्वृत्तित्वेन साधारणो हेतुरिति चेन्न घटादिभिन्नौषधिवृत्तिरूपादीनां दृष्टान्तत्वात् । तथा च श्रुतिः 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः आकाशाद्वायुर्वायोरग्निरग्नेरापः अद्भ्यः पृथिवी पृथिव्या ओषधयः' इति । स्वरूपं रूपं तेजसस्तन्मात्रा तत्राश्रयो दुन्दुभिरेव संबद्धत्वात् ततश्च शब्दः दुन्दुभ्याश्रित इत्यनुमितिः । अत्र नैयायिकैः साध्यतावच्छेदकसंबन्धशैथिल्यप्रयुक्तसमवायाङ्गीकारेण शब्द आकाशाश्रित इत्यनुमित्यापत्त्यार्थान्तरं निग्रहस्थानमित्यरुच्या पक्षान्तरमाहुः सजातीयेति।

'सर्वः शब्दो नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते ।
वीचीतरङ्गन्यायेन तदुत्पत्तिस्तु कीर्तिता' ॥

इति भाषापरिच्छेदस्य मुक्तावल्याम् । दूरस्थशब्दस्याग्रहणादाह श्रोत्रेति ननु मृदङ्गाद्यवच्छेदेनोत्पन्ने शब्दे श्रोत्रे कथमुत्पत्तिरित्यत/आह वीचीति आद्यशब्दस्य बहिर्दशदिगवच्छिन्नोन्यशब्दस्तेनैव शब्देनोत्पाद्यते एवाद्यशब्दव्यापकः । एवं क्रमेण श्रोत्रोत्पन्नः शब्द उपलभ्यत इति । एवं च श्रोत्रोत्पन्नेन तत्कारणं शब्दाद्यनुमिनोति तेन शब्देन तत्कारणं तेन तत्कारणमित्येव सजातीयशब्दान्तरेण कारणं दुन्दुभिमनुमिनोति शब्दान्तरं कारणजन्यं कार्यत्वात् घटवदिति कारणं दुन्दुभ्यादिकमिति । अनुमानेति भाष्यं विवृण्वन्ति एवमनुमानद्वारेति । तत्रेति दुन्दुभ्यादौ जानाति इच्छति यतते इत्यत्रेच्छा न नियतेत्याशयेनाहुः ततः प्रयत्न इति । अन्यथेति । अप्रयत्नकर्तृत्वेन द्वितीयपक्षे दुन्दुभिसाक्षात्कारोनुमितिः सोक्ता । तथेति भाष्यं विवृण्वन्ति तथात्रात्मेति । बुभुत्सेति बोद्धुमिच्छायां सन् मषूभावः खरि चेति चर्त्वम् । तत्कार्याणीति शरीरकार्याणि शरीरसमवेतचेष्टयेति अग्रे ग्रन्थात् । अनुमानेति अनुमानं च संघातः आत्मवान् चेष्टावत्त्वात् देवदत्तसंघातवत् । कार्यादिति वा हेतुः । भाष्यप्रकाशे तत्र कार्यलिङ्गकानुमानमित्यग्रे वक्ष्य-

भाष्यप्रकाशः ।

साक्षात्कारो भवतीति अत्र प्रथमो दुन्दुभिदृष्टान्तः परंपरया ज्ञानजनने । शरीरसमवेतचेष्टया निमित्तभूतस्यात्मनो ज्ञानात् । द्वितीयस्तु बाह्याद् भेदेन ज्ञानजनने । तत्र बाह्यशब्दा रागादिभेदज्ञापकास्ते शब्दप्रयोजकं नेतरभेदेन प्रत्याययन्तीति तांस्तद्ग्रहणाय न शक्नुयात् । वीणाया वीणावादस्य वा ग्रहणेन तु अयमीदृशः शब्दो न केवलमङ्गुलीसंसर्गप्रयुक्तः, किंतु मनोव्यापारविशेषप्रयुक्त इति ज्ञायते । अतः स शब्दस्तत्कारणस्य बाह्याद् भेदेन ज्ञापकतया गृहीतो भवति ।

रश्मिः ।

माणत्वात् । एतदनुमानद्वारा संघातात्मवान् इत्यनुमितिविषयास्यात्मनोनु अनुमितेरनु पश्चात् चित्तप्रवेशस्यानुपश्चाद्वा संधानेनुमितिविषयत्वेन ज्ञाने संघट्टने 'संधानं स्यादभिषवे तथा संघट्टनेपि च' इति विश्वात् । चित्तस्याधिकरणत्वोक्तेः । मनसि धीरिव चित्तेपीति । भवतीति यथा चैषदेहोत्थितं ज्योतिरित्यत्र भगवत्प्रमेयबलेन जीवदर्शनं तथा द्रष्टव्य इति श्रुतिबलेन भवति । अत्रेति मैत्रेयीब्राह्मणे । अनेन प्रकाशेन परंपरयेति भाष्यं विवृतम् । ज्ञानेति आत्मनो ज्ञानजनने । उपपादयन्ति शरीरेति चेष्टाक्रिययोर्भेदोऽस्मन्मतेऽतः शरीरसमवेता चेष्टा । निमित्तेति शरीरसमवेतचेष्टानिमित्तभूतस्य अनेन आत्मनो बोधकानि यानि चेष्टादिरूपाणि कार्याणि तैश्चित्ते चात्मानुसंधाने जीवसाक्षात्कारो भवतीति भाष्यार्थः । ननु चेष्टावत्त्वं हेतुरर्थान्तरसाधकम् । संघात इन्द्रियवान् चेष्टावत्त्वादिति चेत् तत्र द्वितीयदृष्टान्तमाहेत्याहुः द्वितीयस्त्विति बाह्यादात्मनः सकाशाद्बाह्यादिन्द्रियसमूहात् लिङ्गदेहात् वृत्तावप्येवमर्थो बाह्यशब्दस्य मनसः आत्मनो वा भेदेन ज्ञानजनने । तत्रेति तत्र श्रुतौ । वीणायां वा विचार्यमाणायाम् । वीणाशब्दाच्चतुर्थ्यौ षष्ठ्यर्थे । कोलाहलाभावात् परमैश्वर्यवद्योग्यशब्दा रागाद्यनुकूला बाह्या अतिरिक्ताः शब्दाः रागतानमूर्च्छनानां भेदा भैरवादयस्तेषां ज्ञापकाः शब्दसामान्यं विहाय रागादिपदं वीणापदसूचितम् । वीणैश्वर्यवद्वृहे वाद्यते इति श्रुतिप्रसिद्धार्थात् ते शब्दाः शब्दप्रयोजकं मनोव्यापारं नेतरभेदेन इतरलिङ्गशरीरं ततो भेदेन न प्रत्याययन्ति मनोव्यापारो न लिङ्गभिन्नः रागादिभेदज्ञापकशब्दप्रयोजकत्वात् अस्मदाद्यभ्यस्तरागशब्दवत् [1] इति तानिति इति हेतोः तान् शब्दान् तद्ग्रहणाय लिङ्गभिन्नमनोव्यापारग्रहणायात्मपदार्थमनोग्रहणाय वा । न शक्नुयान्न शक्तान् हेतून् पुरुषः कुर्यात् इति श्रुत्याज्ञाविधौ लिङ् । तर्हि कं शब्दं शक्नुयात् इत्याह वीणाया इति । ग्रहणं ज्ञानम् । तद्यथा रागादिभेदज्ञापकशब्दानामभिभावके कस्मिंश्चिच्छब्दे श्रुते कस्यायं शब्द इति जिज्ञासायां योग्यतया सजातीयशब्दान्तरेण वा कारणमनुमिनोति । एवमनुमानद्वारा चित्ते तत्र प्रविष्टे प्रयतनेनान्यथा वा तस्या वीणायाः तद्वादस्य वा साक्षात्कारो भवतीति । एतादृशग्रहणे न तु अयमीदृशः वीणासंबन्धी शब्दः समानो व्यापारो रागादिभेदज्ञापकशब्दप्रयोजको न त्वङ्गुलीचालनविशेषजन्यशब्दप्रयोजकोऽतो मनोव्यापारविशेषप्रयुक्त इत्युक्तम् । स शब्दो वीणाशब्दः । तत्कारणस्येति मनोव्यापारविशेषस्य मनसो वा विलक्षणस्य बाह्याल्लिङ्गात् । तथा च मनोव्यापारविशेषं लिङ्गभिन्नं वीणाशब्दप्रयोजकत्वात् आत्मवत् यन्नैवं तन्नैवं गन्धवत् । ननु पक्षः पक्षतावच्छेदकावच्छिन्नभेदवान् कथमिति चेन्न मनोव्यापारविशेषं पक्षः । तस्य षोडशकलिङ्गभेदात् मनोव्यापारस्य लिङ्गनिवेशेपि तद्विशेषस्य लिङ्गनिवेशाभावात् । नन्वस्त्वेवं प्रकृते आत्मविषये किमायातमिति चेन्न मनस आत्मत्वात् । तद्व्यापारतद्विशेषयोरप्यात्म-

१. इतिपदं श्रुतिप्रसिद्धार्थेन्येति ।

रश्मिः ।

त्वात् । नन्वन्नमयादि व्यतिहायात्र मन आत्मग्रहणे किं कारणमिति चेन्न 'मनसैवानुद्रष्टव्यः' इति श्रुतेरुक्तात्मनो मनोग्राह्यत्वात् । ननु ग्राहकस्य किं प्रयोजनमात्मत्वेन निरूपणे इति चेन्न आत्मनः स्वग्राह्यत्वात् । 'स्वयमेवात्मनात्मानं वेत्थ' इति गीतायाः । ननु स यथा वीणायै इति श्रुतौ यथा-पदात्तथेत्यायाति तस्य संदर्भस्य कोर्थ इति चेच्छृणु । तथात्मनो बाह्याद्भेदबुभुत्सायां आत्मा बाह्यभिन्नः प्राणधारकत्वात् जीववत् । 'जीवो जीवमजीवयत्' इत्यत्रात्मवाचकत्वं जीवपदस्य आत्मा लिङ्गभिन्नः वीणाशब्दप्रयोजकत्वाद् वा । मनोव्यापारविशेषवदिति दृष्टान्तः तथा चेष्टया इन्द्रियाणि सिद्ध्यन्तु नाम परं तु चेष्टया तद्भिन्नात्मसिद्धौ बाधकाभाव इति भावः । सकलेन्द्रिय-रहितसंघाते चेष्टावत्त्वस्य साधारण्याच्च । ननु बाह्याद्भेदसाधनेपि न मनोभिन्न आत्मा मनसैवानु-द्रष्टव्य इति श्रुतेः मनोग्राह्यत्वात् । 'स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम' इति गीतावाक्यादिति चेत्तत्राहुः तृतीयस्त्विति । मनसः सकाशात्प्राणस्य प्राणब्राह्मण उपसंहारब्राह्मणे वा त्रयं वा इदं नामरूपकर्मेत्यारम्भके निरूपितस्य नामरूपकर्मात्मकस्य तदेतत्त्रय९सदेकमयमात्मेति श्रुतेः आत्म-रूपस्य भेदज्ञानजनने । तत्रेति ध्मा शब्दाग्निसंयोगयोः भ्वा. प. अ. धमतीति ध्मा कर्तरि क्विप् अन्विकारच्छान्दसः शङ्खस्य ध्मः शङ्खध्म इति । बाह्या अतिरिक्ताः शङ्खशब्दाः प्राणेन मनोभेद-ज्ञापकाः प्राण आत्मा मनोभिन्नः परंपरया शङ्खशब्दस्वस्य प्रयोजनकत्वादित्यत्र हेतोः स्वरूपा-सिद्धत्वात् । परंपरया शङ्खशब्दप्रयोजकत्वस्य हेतोरवान्तरशब्दादौ सत्त्वेन प्राणेऽभावात् । ग्रहणं ज्ञानं पूर्ववत् अनुमानं तु प्राण आत्मा मनोभिन्नरूपनामकर्मात्मत्वात् । यन्नैवं तन्नैवं मनोवत् । साक्षाच्छङ्खशब्दप्रयोजकत्वाद्वा । ननु साक्षाच्छङ्खशब्दप्रयोजकत्वं मनोमये वेदे ।

'स एष जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः ।
मनोमयं सूक्ष्ममुपेत्य रूपं मात्रा स्वरो वर्ण इति स्थविष्ठः' ॥ इति ।

एकादशस्कन्धवाक्यात् । तथा हृदि च वर्तते मनोभिन्नत्वं नास्तीति हेतोः साधारण्यमिति चेन्न मनोमयस्य कारणत्वेन प्रयोजकत्वाभावात् हृदस्त्वन्यथासिद्धत्वात् मनोनिविष्टमनसैव स्थविष्ठ-व्यक्तेः संभवाद्धृदन्यथासिद्धमिति भावः । जीवादीनां साक्षाच्छङ्खशब्दप्रयोजकत्वं वर्तते तेषां मनो-भिन्नत्वमपि वर्तेत इत्यदोषः । मुख्यप्राणस्येति आसन्यप्राणस्य आसन्यस्य सेवायामिन्द्रियाणां देवतात्वमिति शास्त्रार्थनिबन्धटीका । अस्योक्तत्रयस्यात्मत्वमुक्तश्रुतेः । आत्मनः अमृतत्वम् । एकः सन्नेतत्रयं तदेतदमृतमिति श्रुतेः एक इत्यात्मा पूर्वमुक्तः । अमृतस्य प्राणत्वं प्राणो वामृतमिति श्रुतेः । ननु दुन्दुभिदृष्टान्तेन संघात आत्मज्ञानमुक्तम् । द्वितीयेन दृष्टान्तेन मनस्तदात्मकं करणम-प्युक्तम् । तृतीयेन प्राण उक्तः । स क इति चेच्छृणु प्राणपदेन प्राणादयः पञ्चोपस्थाप्यन्ते आत्म-पदेनात्मत्वमप्युपस्थाप्यते एवं च प्राणा आत्मरूपाः प्राणपदार्थः । ते च संध्यायां ॐमित्येकाक्षरं ब्रह्मेति ब्रह्मपदेनात्मानमुपक्रम्य गायत्रीं छन्दसां मातेदं जुषस्व म इति गायत्र्यभेद उक्तः माता मातरं अमो डा संध्याव्याख्याने तु गायत्रीं गायत्रीमातेव मातेति व्याख्यानं भट्टोजीदीक्षितकृतम् । ननु स्त्रीत्वान्वयः कथमिति चेन्न भगवत्सेवानुकूल्यरूपपुंस्त्वस्योमित्यनेन प्राप्तेः । गायत्र्यां प्रसादरूप-शक्तेरेव स्त्रीत्वात् भगवत्सेवाप्रातिकूल्यरूपस्त्रीत्वस्येह जुषस्वेति श्रुतिपदविरुद्धत्वात् । तदुक्तं गोपाल-तापिनीये प्रणवत्वेन प्रकृतित्वं वदन्ति ब्रह्मवादिन इति महोपनिषच्चतुर्थे ॐ देवा ह वै प्रजापतिम-ब्रुवन् अनुष्टुभस्य मन्त्रराजस्य नारसिंहस्याङ्ग मन्त्राङ्गो ब्रूहि स होवाच प्रजापतिरोङ्कारं सावित्रीं

भाष्यप्रकाशः ।

तृतीयस्त्वभ्यन्तरान्मनसोऽपि भेदज्ञानजनने तत्र बाह्याः शब्दा मन्द्रतारादयस्ते प्राणस्य न मनोभेदज्ञापकाः । शंखस्य शंखध्मस्य वा ग्रहणेन तु शब्दस्तत्कारणस्यान्तःकरणाद् भेदेन ज्ञापकतया गृहीतो भवति । मुख्यप्राणस्यायं शब्द इति । एवं संघाताद् भिन्नतया संघातेऽन्तरात्मज्ञाने उपायो मननात्मक उक्तः । तत्र कार्यलिङ्गमनुमानमात्मनि चित्तं निवेशयतीति सिद्धम् । तत्रात्मकार्यविवक्षयैव इतः पूर्वमात्मज्ञाने सर्वज्ञानस्योक्तत्वादात्मा सर्वत्वेन वक्तव्यः । तत्र कथमात्मनः सर्वत्वमित्याकाङ्क्षायां तत एवोत्पन्नं सर्वं तत्रैव लीयत इति घटादेः पूर्वं पश्चाच्च मृदिव सर्वस्यात्मेति बोधनाय, स यथा आर्द्रैधाग्नेरिति स यथा सर्वासामपामिति कण्डिकाद्वयेनाह । तेन नैयायिकाद्यभिमतं निमित्तमात्रत्वं निराकृतम् । तथापि स्थितिदशायां

रश्मिः ।

गायत्रीमित्यज्ञानि जानीयाद्यो जानीते सोमृतत्वं च गच्छति अग्रे ओंभूर्लक्ष्मीर्भुवर्लक्ष्मीः सुवः कालकर्णी तन्नो महालक्ष्मीति श्रुतिः अत्र ओं सुवः महालक्ष्मीत्यभेदेनोक्तिः । पद्मपुराणे चोत्तरखण्डे ।

'वृषभानुरिति ख्यातो गोपो ज्ञातिमतां वरः ।
तस्य पत्नी महाभागा नाम्ना सौभाग्यसुन्दरी ॥
तावुभौ ब्रह्मसाविन्यौ स्वांशेन जगतीं गतौ ।
तयोर्गेहे महालक्ष्मीः प्रादुर्भूता सुरेश्वरी ॥
अयोनिजा विशालाक्षी कृष्णस्यानन्दकारिणी ।
मासे भाद्रपदेऽष्टम्यां भौमे मूलर्क्षमण्डिते' ॥ इति ।

तस्य वाचकः प्रणव इति योगसूत्रम् । तस्यासङ्गपुरुषस्य । तथा चात्मतद्ग्राहके मनसि उक्त्वा आत्मवाचकः प्रणवः उक्तः । स प्राणपदार्थः । नामरूपकर्मत्वात् । कर्म च 'क्रिया सा राधिका देवी' इति कुत्रचिद्वाक्यात् राधिका । ननु आकाशस्य शब्दो न प्राणस्य नामरूपकर्मरूपस्य श्रुतेस्तु शब्दमूलत्वात् आकाशशरीरं ब्रह्म कार्यत्वेनाकाशसमन्वयाच्च । ननु स यथेत्यत्रापि श्रुतौ दर्शनात् तथेत्यायाति तस्य संदर्भस्य कोर्थ इति चेच्छृणु तथात्रात्मबुभुत्सायां आत्मा प्राणभिन्नः प्राणकर्तृत्वात् कुलालवत् ।

'आसीज्ज्ञानमयो ह्यर्थः केवलं निर्विकल्पितम् ।
वाङ्मनोगोचरातीतं द्विधा समभवद् बृहत् ।
तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका' ॥ इति ।

एकादशस्कन्धसार्धश्लोकात् । सिद्धमाहुः एवमिति । संघातादिति सूक्ष्मदेहात्ममनसश्च । ननु सूक्ष्मदेहग्रहणेनैव मनोग्रहणात् । पृथङ्मनोग्रहणमपार्थमिति चेन्न श्रुतिप्रामाण्यात् सूक्ष्मदेहे वक्तव्ये पञ्चदशग्रहणात् । तथा सकीचकैर्मारुतपूर्णरन्ध्रैरित्यत्र न कीचकपदस्य मारुतपूर्णरन्ध्रत्वविशिष्टे वेणौ शक्तिः किं तु वेणावेवैवमत्रापि बाह्यपदस्य पञ्चदशके शक्तिर्न तु षोडशत्वविशिष्टे इति । मननेति दुन्दुभ्यादिदृष्टान्तत्रयेणात्मज्ञानोक्त्या दृष्टान्तावधारणमात्रेणात्मनोपि दृष्टान्तोक्तरीत्यानुचिन्तनरूपं मननं तदात्मक इत्यर्थः । 'अत्र मां मार्गयन्त्यद्धा युक्ता हेतुभिरीश्वरम्' इति वाक्यादाहुस्तत्रेति । युक्तिषु कार्यलिङ्गकानुमानम् । तच्च संघात आत्मवान् चेष्टावत्त्वादिति चेष्टाया आत्मकार्यत्वात् । कार्यादिति हेतुर्वा । तच्च कथमिति भाष्यं विवरीतुमाहुः तत्रात्मकार्येति

स एव नातिरिक्तं विशतीति, स यथा सैन्धवघन इत्यनेनाह । आधेयत्वेन ताव-न्मात्रतानिराकरणायाह न प्रेत्य संज्ञास्तीति । कार्यातिरिक्तरूपं कथयितुं न शक्यत इति तत्र विशेषाकाङ्क्षायामतिरिक्ताकथने वञ्चकत्वमाशङ्क्य तत्परिहा-

भाष्यप्रकाशः ।

भेददर्शनात् पूर्वोक्तं सर्वमुपचारमात्रं मंस्यत इति तन्निवारणाय मध्ये स्थितिदशायामपि स आत्मैव केवलो, नातिरिक्तं किमप्याधेयत्वेन विशतीत्यन्तर्बहिस्तस्यानन्तरत्वमबाह्यत्वमैकरूप्यं चाह । 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव स्यादेवं वा अरे इदं महद्भूतमन-न्तमपारं कृत्स्नः प्रज्ञानघन एव' इति । तर्हि सर्वदा कुतो न प्रतीयते इत्यत आह । एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यतीति । एतानि शरीरात्मकानि महान्ति च भूतानि कार्यत्वादस्य ज्ञापकानीति तेभ्यः समुत्थाय तद्द्वारा स्वं ज्ञापयित्वा तानि विनश्यन्ति सन्त्ययमात्माऽप्यनुविनश्यत्यदर्शनं प्राप्नोतीति तर्हि समुत्थानानुविनाशक्रियादर्शनात् कालपरि-च्छिन्नो भविष्यतीत्याशङ्कायां तावन्मात्रतानिराकरणायाह न प्रेत्य संज्ञास्तीति । प्रेत्य भूतलयोत्तरं संज्ञा सम्यग् ज्ञापकं नास्ति । कार्यमेव तस्य ज्ञापकं रूपम् । अतस्तस्मिन् लीने कार्यातिरिक्तं तस्य रूपं वक्तुं न शक्यत इति न ज्ञायते । न तु स एव नास्तीत्यतो न ज्ञायत इति । तथाच तदानीमपि विद्यमानत्वान्न स कालपरिच्छिन्न इत्यर्थः । एवमुक्ते मैत्रेय्या मोहो जातः । सा होवाच मैत्रेयी, अत्रैव मा भगवान् मोहान्तमापीपदन्न वा अहमिदं विजानामि न प्रेत्य संज्ञास्तीति । मोहान्तं मोहमध्यमापीपदद् आपादितवानसि शेषोऽर्थः स्फुटः । एवं मैत्रेय्या उक्ते तत्र विशेषाकाङ्क्षायामतिरिक्ताकथने वञ्चकत्वमाशङ्क्य तत्परिहारायाह ।

रश्मिः ।

तन्तुकार्यपटवत् । इतः पूर्वं विषयश्रुतौ विवृण्वन्ति तत्र कथमिति । निमित्तेति 'संसारमहीरुहस्य बीजाय' इति नैयायिकाः । मायावादिनस्तु सगुणात् सृष्टिरिति, सांख्याः 'प्रधानाज्जगज्जायत' इति तेषाममिमतं निमित्तमात्रत्वमात्मनो निराकृतमभिन्ननिमित्तोपादानत्वं मृदिवेति दृष्टान्तेन समन्वया-धिकरणोक्तं स्मारितम् । मध्येपीति भाष्यं विवरीतुमाहुः तथापीति । पूर्वोक्तं मृदिव घटादेः पूर्वं पश्चाच्च सर्वस्यात्मेति बोधनाय कण्डिकाद्वयोक्तम् । तावन्मात्रेति भाष्यं विवरीतुमाहुः तर्हीति । कालेति कालपरिच्छेदः शरदः शतं सूर्यपरिस्पन्दस्तद्विषयस्तावदिति । कार्यमात्रता-निराकरणाय । कार्यातिरिक्तेति भाष्यं विवरीतुमाहुः कार्यमेवेति । कार्यमिति शरीरं जीवपक्षे जगत् सिद्धान्ते कार्यं तस्य जीवस्य ज्ञापकमपि व्यक्तिस्थानं सिद्धान्ते जगत्कर्तृत्वं लक्षणम् । स एव जीव एव । तदानीमिति संघातादिलयकाले । स इति जीवः । मोहान्तमिति 'अन्तः प्रान्तेन्तिके' इति विश्वात् । एकस्य मध्यवाचकत्वात् । कोशान्तराद्वा मध्यार्थकस्तदाहुः मोहमध्यमिति मोहमध्यं यथा भवति तथा । मोहमध्ये इति यावत् । आसमन्तात् प्रापितवानसि । शेष इति न वा इत्यादेरर्थः शेषः स स्फुट इत्यर्थः । तत्र विशेषेति भाष्यं विवृण्वन्ति एवं मैत्रेय्येति तृतीयान्तं संहिताविवक्षाभावाज्ज्ञुणः विवक्षातः कारकाणि भवन्तीति षष्ठ्यन्तं वा । तत्रेति विज्ञानघन एवेति प्रतिज्ञाय पुनर्न प्रेत्य संज्ञास्तीति विरुद्धवदने । कार्येति कार्याद्वैलक्षण्यं नित्यत्वेनेश्वरस्य ।

रायाह स होवाचेति । अविनाशीत्यनेन कार्यवैलक्षण्यं सिद्धवत्कारेणोक्त्वा विषयसंबन्धेन संसारमाह मात्रासंसर्गस्त्वस्य भवतीति । विशेषतस्त्वकथने हेतुमाह यद्वैतमित्यादिना, यावत्समाप्ति । चक्षू रूपमेव पश्यति, नात्मानम् ।

भाष्यप्रकाशः ।

स होवाचेत्यादि । स होवाच याज्ञवल्क्यः । न वा अरे मोहमहं ब्रवीम्यविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मा मात्रासंसर्गस्त्वस्य भवतीति । अत्र, अविनाशीत्यनेन स्वरूप-नित्यत्वस्य, न विद्यते उच्छित्तिर्येषां तेऽनुच्छित्तयस्तादृशा धर्मा यस्येत्यनुच्छित्तिधर्मेत्यनेन स्वरूपधर्माणां च नित्यत्वस्य बोधनात् कार्यवैलक्षण्यं सिद्धवत्कारेणोक्त्वा विषयसंबन्धेन संसारमाह । मात्रासंसर्गस्त्वस्य भवतीति । तथाच यद्यनित्यः स्याद् विषयसंबन्धेन पुनः संसारः कस्य स्यादतः सोऽविनाशीत्यर्थः । यद्येवं तर्हि तद्दर्शनार्थे विशेषोऽपि वक्तव्य इत्याकाङ्क्षायां विशेषतस्त्वकथने हेतुमाह यद्वै तमित्यादिना, यावत्समाप्ति यद्वै तन्न पश्यति पश्यन् वै तद् द्रष्टव्यं न पश्यति । न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वात् । न तु द्वितीयमस्ति ततोऽन्यद् विभक्तं यत् पश्येदिति । तन्न पश्यतीत्यत्रानुस्वारस्य परसवर्णः । यतश्चक्षू रूपमेव पश्यति, नात्मानमतो यद्वै तन्न पश्यतीत्यनेनात्मदर्शनाभावमनूद्य कार्यस्य कारणात्मकत्वात् । ननु रूपमप्यात्मेति कथमदर्शनमुच्यत इति चेत् तत्राह । पश्यन् वै तद्द्रष्टव्यं न पश्यति । रूपात्मकमात्मानं पश्यन्नपि द्रष्टव्यत्वेन न पश्यतीति । तथाचेदं तस्य दर्शनाभावस्य स्वरूपं, न तु सर्वथा अविषयतया तद्दर्शनाभावरूपमित्यर्थः । ननु कथमेतदवगम्यते अस्येदमेव स्वरूपं, न सर्वथा तद्दर्शनाभावरूपमित्यतो युक्तिमाह । न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वादित्यादि । दृष्टेरिति पञ्चमी । घ्राणाद् रसादित्यादिपञ्चमीप्रायपाठस्यैवात्र दर्शनात् । तथाच द्रष्टुरात्मनो दृष्टेश्चक्षुरिन्द्रियाद् विपरिलोपो विरुद्धः परिलोपः सर्वथा अदर्शन-

रश्मिः ।

सिद्धवत्कारसूचकं वैपदं निश्चयवाचकम् । वै निश्चयेनाविनाश्यनुच्छित्तिधर्मेति । विशेषत इति भाष्यं विवरीतुमाहुः यद्येवमिति । विवृण्वन्ति विशेषतस्त्विति । चक्षू रूपमिति भाष्यं विवरीतुं व्याख्येयां श्रुतिमाहुः यद्वै तन्नेति । यद्वै तन्नित्यादीति भाष्ये परसवर्णकथनादाहुः तन्न पश्यती-त्यत्रेति 'अनुस्वारस्य ययि परसवर्णः' इति सूत्रेण । विवृण्वन्ति यतश्चक्षुरिति अत्र यदित्यव्ययं यत इत्यर्थे, वै निश्चयेन । द्रष्टुर्दृष्टेर्वक्ष्यमाणाया कर्तृत्वमभिप्रेत्योक्तं चक्षुरिति । रूपमेवेति आत्मकर्म-कदर्शनाभावस्य किंचित्कर्मकदर्शनरूपप्रतियोगिनिरूपणाधीननिरूपणकत्वाद्रूपमेव पश्यतीति लभ्यम् । ननु द्रव्यमपि पश्यन्तीति चेन्न । बौद्धास्तावद्रूपातिरिक्तं द्रव्यं नेच्छन्ति तद्वादानुरोधिरूपं भगवत उक्तमिति । नात्मानमिति तन्न पश्यतीत्यस्यार्थः । एतेन भाष्यमपि व्याकृतम् । ननु रूपमिति भाष्यं व्याचक्रुः कार्यस्येति । तत्राहेति एतेन तत्रेति भाष्यं क्रियाध्याहारेण व्याकृतम् । पश्यन् वा इति भाष्यं व्याचक्रुः पश्यन्वेति । व्यत्ययो बहुलमिति सूत्रविभागेन ।

'सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च ।
व्यत्ययमिच्छति शास्त्रकृदेषां तदपि च सिध्यति बाहुलकेन' ॥

इति लिङ्गव्यत्ययः पश्यन्तीत्यर्थः । द्रष्टुर्दृष्टिः । द्रष्टव्यत्वेनेति किं तु रूपत्वेन पश्यति । इदमिति द्रष्टव्यत्वेनादर्शनम् । सर्वथेति रूपत्वेनापि । तद्दर्शनेनेति आत्मदर्शनाभावरूपम् ।

ननु रूपमप्यात्मेतिचेत् । तत्रापश्यन् वै तद् द्रष्टव्यत्वेन न पश्यति । न हि द्रष्टृ-स्वरूपं दृश्यज्ञानेन ज्ञातं भवत्यतद्रूपत्वात् । एवं द्रष्टृदृश्यव्यवहारे अज्ञानावस्थायां विशेषतस्तज्ज्ञानमशक्यमुक्त्वा ज्ञानोत्तरं कर्मकर्तृभाव एव नास्तीत्याह यत्र

भाष्यप्रकाशः ।

रूपो न विद्यते । कुतः । अविनाशित्वात् । स्वरूपतः स्वरूपधर्मतश्च नित्यत्वात् । तर्हि पश्यत्वमेव, नापश्यत्त्वं तत्राह । न त्वित्यादि । यद् द्वितीयं पश्येद् यद् दर्शनकरणमिन्द्रियं तत्तु तत आत्मनोऽन्यद् विभक्तं नास्ति । भेदे विभागे च सति द्रष्टृदृश्यभावः । स तु कार्ययो रूपचक्षुषोरेवातो रूपदर्शनम् । न तु कार्यस्य रूपस्य चक्षुषश्च कारणादात्मनो भेदो विभागो वा । अतस्तदभावाच्चक्षुः स्वकारणमात्मानं न पश्यतीत्यपश्यत्त्वम् । न हि द्रष्टुः स्वरूपं दृश्यज्ञानेन ज्ञातं भवति । अतद्रूपत्वात् एवमग्रेऽपि बोध्यम् । एवं द्रष्टृदृश्यव्यवहारे अज्ञानावस्थायां विशेषतस्तज्ज्ञान-मशक्यमुक्त्वा ज्ञानदशायां विशेषतो वक्तुं शक्यो भविष्यतीत्याकाङ्क्षायां ज्ञानोत्तरं कर्मकर्तृभाव

रश्मिः ।

स्वरूपत इति आत्मत्वादिरूपतः । स्वरूपधर्मो अविनाशित्वं जगज्जन्मादिकर्तृत्वं समन्वयाधि-करणोक्तमभिन्ननिमित्तोपादानत्वमिदमित्थतया शब्दाप्रतिपाद्यत्वं चेक्षत्यधिकरणोक्तं तथा च रूपेष्वस्ति-भातिप्रियत्वेनान्वयात् रूपत्वेन विरुद्धः परिलोपोऽदर्शनरूपो न विद्यत इति भावः । पश्यत्त्वमिति चक्षुष आत्मनः पश्यतीति पश्यस्तत्त्वम् । अपश्यत्वं स्वाभिन्नात्मनश्चक्षुषोऽपश्यत्त्वं न रूपतौल्यात् । भेदे विभागे चेति । ननु च न तु तद्द्वितीयमस्तीत्यत्राभावप्रतियोगिद्वितीयं चक्षुरादीन्द्रियं तत्र द्वितीयत्वं अन्यदित्युक्तभेदप्रयोज्यमस्तु विभक्तमित्यधिकमिति चेन्न समवायाभ्युपगमाच्च साम्यादनवस्थितेरिति सूत्रे गुणादिष्वपि विचारे इत्यादिना विभागस्यापि स्वरूपानतिरेक उक्तः स न क्षोदक्षमः । पदार्थतत्वविवेचनग्रन्थे शिरोमणिना विभागतत्त्वाविवेचनात् । यथा दिक्कालौ नेश्वरादतिरिच्येते इति दिक्कालतत्वे विवेचिते तथा । एवमपि भिन्नो घटः पटाद्विभक्तः । इति प्रत्यये विभागो भेदस्वरूप एवमन्यत्रापि स्वरूपानतिरेको द्रष्टव्यः । ततोन्यद्विभक्तमिति श्रुतिरिति । विभागो गुणान्तरमिति नैयायिकाः । न चैवंसति न तु द्वितीयमस्तीत्युक्त्वा ततोन्यदिति विभक्तमिति चोभयोरेकपदमस्तु तावतैव चारितार्थ्यमिति दोषानुद्धार इति वाच्यम् । सजातीयविजातीयस्वगत-द्वैतवारणाय द्वितीयान्यविभक्तपदानामावश्यकत्वेनादोषात् । यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येदिति वक्ष्यमाणत्वात् । द्वितीये सजातीयमन्यद्विजातीयं घटः पटादन्यो न तु घटो घटात् अन्य इति प्रत्ययात् । विभक्तत्वं स्वमते । यथाविभागमविभागः स्वगतः यत्र कपाले कर्म ततः कपालद्वयविभागः । ततो घटारम्भकसंयोगनाशस्ततस्तेनैवं कपालविभागेन सकर्मणः कपालस्याकाशा-द्विभागो जन्यते ततः पूर्वसंयोगनाशः तत उत्तरदेशसंयोगः ततः कर्मनाश इति मुक्तावल्याम् । 'अविभक्तं च भूतेषु विभक्तमिव च स्थितम्' इति गीता ब्रह्मणि । एकमेवाद्वितीयं ब्रह्म इति च । नहीति भाष्यं विवृण्वन्ति नहीति स्पष्टम् । विरुद्धधर्माश्रयत्वादाहुः अतद्रूपेति । अरूपवत्सूत्रे जगद्विलक्षणं ब्रह्मेति प्रतिपादनात् । अत एव रूपब्रह्मज्ञाने तत्तुल्यचक्षुरादिसाधनं आत्मज्ञाने तु भक्त्यादीति युज्यते । ननु रूपमेव चक्षुःस्थले कुतो नोक्तं कार्यत्वसाम्यादिति शङ्कम् । भाष्ये दृश्यज्ञानेनेत्यत्र दृश्यपदेन रूपं गृहीतम् । तस्याः तद्रूपत्वप्रतिपिपादयिषायाः । युगपदेकत्रैवात्मा-भेदाभेदौ न प्रतिपत्तुं शक्येते इति अतो रूपं नोक्तम् । चक्षुरुपात्तं प्रकाशे । अतिदिशति एवमग्रेपीति

वा अन्यदिव स्यादित्यादिना । इदमेव हि ज्ञानममृतत्वमिति ।

भाष्यप्रकाशः ।

एव नास्तीत्याह । यत्र वा अन्यदिव स्यात् तत्रान्योऽन्यत् पश्येदित्यादि । यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येदित्यादि । तथाचावस्थाद्वयेऽप्यशक्यवचनत्वाद् विशेषतो न वक्तुं शक्य इत्यर्थः । तदेतन्निगमयति येनेदं सर्वं विजानाति तं केन विजानीयाद्, विज्ञातारमरे केन विजानीयादिति । एवमुपदिश्योक्तमुपसंहरति उक्तानुशासनासि मैत्रेय्येतावदरे खल्वमृतत्वमिति । इदमेव हि ज्ञानं सर्वनिमित्तोपादानभूतमविनाश्येकमेव तत्त्वमित्याकारकज्ञानोत्तरं यस्मिन्निर्विषयमात्मरूपं ज्ञानं तदेवाऽमृतत्वमित्यर्थः ।

रश्मिः ।

यद्वै तन्न जिघ्रतीत्यादौ यद्वै तन्न रसयतीत्यादौ यद्वै तन्न वदतीत्यादौ यद्वै तन्न शृणोतीत्यादौ यद्वै तन्न मनुते इत्यादौ यद्वै तन्न स्पृशतीत्यादौ यद्वै तन्न विजानातीत्यादौ । एवं द्रष्टीति भाष्यं विवृण्वन्ति स्म एवं द्रष्ट्रिति । यत्र वा अन्यदिव स्यात्तत्रान्योन्यत्पश्येदन्योन्यज्जिघ्रेदन्योन्यद्रसयेत् अन्योन्यदभिवदेत् अन्योन्यं शृणुयादन्योन्यन्मन्वीतान्योन्यत्स्पृशेदन्योन्यद्विजानीयादिति । अग्रिमां श्रुतिमाहुः यत्र त्वस्येति । इत्यादीति तत्केन कं जिघ्रेत् तत्केन क९ रसयेत्तत्केन कमभिवदेत् तत्केन क९ शृणुयात् तत्केन कं मन्वीत तत्केन कं स्पृशेत् तत्केन कं विजानीयात् इति । अग्रिमामाहुः येनेदमिति येनेद९सर्वमिति क्वचित्पाठः । श्रुत्यर्थः स्पष्टः । इत्तीति श्रुतिस्थं पदम् । अग्रिमाया आभासमाहुः एवमुपेति इदमेव हीत्यादिभाष्यं विवृण्वन्ति इदमेवेति । सर्वस्य निमित्तोपादानभूतं अविद्वद्दशायां सखण्डब्रह्मज्ञाने विचारविषये 'आत्मा वा अरे द्रष्टव्यः' इत्यादिभिः ज्ञानं प्रवृत्तं तदत्रोक्तम् । यन्निर्विषयमात्मरूपं ज्ञापितं विद्वद्दशायामखण्डब्रह्मज्ञाने विचारविषये यत्र त्वस्य सर्वमात्मैवाभूदित्यादिभिर्ज्ञानं तदत्रोक्तम् । इदमखण्डसखण्डभेदेन द्वैराद्यं प्राप्तं ज्ञानं मैत्रेयीब्राह्मणे एकस्मिन्नमृतत्वप्रश्ने उक्तमित्येतदेवामृतत्वम् । निष्क्रान्तं विषयेभ्यः इति निर्विषयं ग्राहकस्य मन आदेरात्मरूपत्वात् तद्विषयादपि निष्क्रान्तम् । श्रुत्यन्तरेति शारीरब्राह्मणस्थेन । तस्येति जीवस्य ब्रह्मत्वमेतदात्मत्वम् । ननु सिद्धान्ते जीवस्यैतद्ब्रह्मत्वं दूषणाय कुतः पूर्वपक्षिज्ञानविषयमाचार्यमतस्याधुनिकत्वाच्चेति चेन्न पूर्वपक्षिपूर्वपक्षत्वात् जीवीयब्रह्मत्वस्याचार्यमतस्याधुनिकत्वेपि छान्दोग्ये ऐतदात्म्यमिदं सर्वमिति मतस्यानाधुनिकत्वाच्च । अतिरिक्तत्वादिति 'अधिकं तु भेदनिर्देशात्' इति सूत्रभाष्ये एतदुक्तम् । अत्र चेति ब्राह्मणे । स यथार्द्रैधाग्नेरभ्याहितस्य पृथग्धूमाविनिश्चरन्त्येवं वा अरे अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोथर्वाङ्गिरस इतिहासः पुराणविद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानि दत्तं हुतमाशितं याचितमयं लोकः परलोकः सर्वाणि भूतानि अस्यैवैतानि सर्वाणि प्रतिष्वसितानीत्यत्र । ब्रह्म तं परादाद्योन्यत्रात्मनो ब्रह्म वेद क्षत्रं तं परादाद्योन्यत्रात्मनो इत्याद्युक्त्वा इदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमानि भूतानीद९ सर्वं परमात्मेत्यत्र चात्राभ्याहितस्येत्यस्य प्रज्वलितस्येत्यर्थः । अभित आसमन्ताद्धितस्य अन्यत्रेत्यत्र सार्वविभक्तिकस्त्रल् । अन्यत् । जगत्कर्तृत्वेति यथाक्रममुक्तश्रुत्यर्थौ आदिपदेनेदं ब्रह्मेत्यत्र ब्रह्मसमन्वयेन ब्राह्मणजातित्वरूपं ब्रह्मत्वं ब्रह्मलिङ्गम् । अभ्यर्हितेति अभ्यर्हितत्वं सेश्वरसांख्ये इवानीश्वरसांख्ये ईश्वरवजीवप्रतिपादकब्राह्मणप्रतिपाद्यत्वम् । तस्मिन्निति जीवे शारीरब्राह्मणोक्तं ब्रह्मत्वं जगत्कर्तृत्वं च । अस्माच्छरीरात्पुरुषादुत्क्रम्य जीव उत्कर्षः उत्कर्षणं तस्मै । सिद्धान्ते तु जीवे एतदात्मत्वम् ब्रह्मत्वं जगज्जन्मादिकर्तृत्वं ब्रह्मत्वमंशमात्रं तत्त्वमसीत्यत्र तस्य त्वं तत्

तत्रादिमध्यावसानेषु जीवप्रकरणमित्येव प्रतिभाति । तस्य ब्रह्मता जगत्कर्तृत्वमित्युत्कर्षः । न तु तस्मादन्यद् ब्रह्मत्वेन वक्तुं युक्तम् । अर्थविरोधाच्च । तस्माद् वेदे सृष्टिवाक्यानामेतन्न्यायेनान्यार्थत्वान्न ब्रह्म जगत्कारणमिति प्रकृति-

भाष्यप्रकाशः ।

एवं विषयवाक्यं व्याख्याय पूर्वपक्षी स्वाभिप्रायमाह तत्रादीत्यादि । नन्वयमात्मा ब्रह्मेति श्रुत्यन्तरे एतस्य ब्रह्मत्वं विहितं, न तु ब्रह्मण एतदात्मत्वमतोऽस्मादात्मनो ब्रह्मणोऽतिरिक्तत्वादत्र च जगत्कर्तृत्वजगदात्मकत्वादिरूपब्रह्मलिङ्गादस्य ब्रह्मप्रकरणत्वमेवास्त्वितिचेत् तत्राह तस्य ब्रह्मतेत्यादि । तथाचाम्यर्हितत्वात् तस्मिन्नेतद्द्वयमुत्कर्षायोच्यते । ननु किमत्र मानमिति चेदन्यथाऽनुपपत्तिमेव जानीहि । एतावदरे खल्वमृतत्वमित्यनेनाऽमृतत्वस्यात्रैव नियमितत्वान्न तु तस्मादन्यद् ब्रह्मत्वेन वक्तुं युक्तमर्थविरोधाच्च । ब्रह्म ह्यविकारं कथं कार्यरूपेण विकुर्यादित्यर्थविरोधादित्यर्थः । सिद्धमाह तस्मादित्यादि । [अर्थविरोधेन ब्रह्मणः कारणताया बाधितत्वादात्मातिरिक्तब्रह्माभावाच्च वेदे सृष्टिवाक्यानामेतन्न्यायेन अत्रार्द्रैधाग्नेरिति दृष्टान्ताद्यथा तत्संसृष्टस्याग्नेर्नानाविधधूमजनकत्वं तथा प्रकृतिसंसृष्टस्यैव जीवस्य रूपनामात्मकप्रपञ्चजनकत्वमिति सिध्यतीत्येतन्न्यायेन] जीवस्तुत्यर्थत्वान्नातिरिक्तं ब्रह्म जगत्कारणमिति जीवाधिष्ठिता प्रकृतिरेव कारणम् । तेन प्रकृतिकारणवाद एव युक्त इति प्राप्ते इत्यर्थः । सूत्रं

रश्मिः ।

त्वमसीति प्रकारद्वयदर्शनात् । न स्वित्यादि भाष्यमवतारयन्ति स्म ननु किमिति । अन्यथेति तथा हि अत्रोपसंहारस्यार्थस्यामृतत्वरूपस्य निर्णायकत्वेन तत्र च ब्रह्मता जगत्कर्तृत्वं चेत्येतद्द्वयविशिष्टजीवं एतावत्पदेन परामृश्यामृतत्वोक्तिः प्रमितार्थः । जीवस्यामृतत्वं तद्ब्रह्मतारूपार्थान्तरं विनानुपपद्यमानस्तस्योपपत्तयेर्थान्तरकल्पना जीवस्य ब्रह्मत्वकल्पनार्थापत्तिस्तन्मानमिति प्रस्थानरत्नाकरेर्थापत्तिस्तु प्रत्यक्षेण शब्देन वा प्रमितस्यार्थस्यार्थान्तरं विनानुपपद्यमानस्य उपपत्तये यथार्थान्तरकल्पना एवमर्थापत्तेर्मानतोक्ता । तथापि लाघवाज्जीवस्य ब्रह्मत्वजगज्जन्मादिकर्तृत्वयोः कल्पनाप्रकारान्यप्रकारेणोपक्रमोक्तस्य ब्राह्मणेऽमृतत्वानुपपत्तिरित्यन्यथानुपपत्तिर्मानं जानीहीत्युक्तम् । सांख्यमते प्रमाणानां त्रैविध्यात् 'त्रिविधं प्रमाणं तत्सिद्धौ सर्वसिद्धेर्नाधिक्यसिद्धिः' इति सूत्रात् । तदपि मानत्वमनुमानत्वेनान्यथानुपपत्तेर्नान्यथानुपपत्तित्वेन यथा नैयायिकानाम् । तदनुमानं तु जीवन्देवदत्तो गृहे नास्तीत्यत्र देवदत्तो बहिरस्ति जीवत्वे सति गृहेऽसत्त्वात् इति केवलव्यतिरेकि सांख्यमतत्वादुपात्तम् । यादृशार्थान्तरं विनानुपपद्यमानत्वं तादृशार्थान्तरं ब्रह्म जगत्कर्तृत्वविशिष्टजीवरूपं भाष्ये वक्ष्यते इत्याशयेन विवरीतुमाहुः एतावदिति । अत्रैवेति । त्रिविधप्रमाणेषु शब्दप्रमाणेन जीव एव । विवृण्वन्ति न तु तस्मादिति । अर्थेतिभाष्यं निक्षिप्य व्याचक्रुः अर्थेति । विकुर्यादिति परिणामवादिनः सांख्याः । आहेति पूर्वपक्ष्याह । ब्रह्मण इत्यविकृतस्येत्यर्थः । आत्मेति आत्मा जीवः तदतिरिक्तस्य ब्रह्मणोऽभावात् । ननु वेदे 'प्रजापतिरकामयत प्रजाः सृजेय' इति तृतीयाष्टके सृष्टिरुक्ता तस्याः का गतिरित्यत आहुः वेदे सृष्टीति । एतन्न्यायो मैत्रेयीब्राह्मणन्यायस्तेन । अतिरिक्तमिति जीवातिरिक्तं तदुक्तं 'जन्मादिरवस्थातः पुरुषबहुत्वम्' इति 'उपाधिभेदेप्येकस्य नानायोग आकाशस्येव घटादिभिः' इति च सूत्राभ्याम् । कापिलसांख्यप्रवचनसूत्रवृत्तौ ।

११९ अ० सू० ८०

जीव एव युक्त इत्येवं प्राप्ते उच्यते वाक्यान्वयात् । इदं वाक्यं भगवत्येवान्वेति,

भाष्यप्रकाशः ।

पठित्वा सिद्धान्तं व्याकुर्वते इदमित्यादि । अत्रापि कारणत्वेनेत्यनुवर्तते [इति प्रागेवोक्तम्] । कारणत्वेन ब्रह्मैवात्रावगन्तव्यं, न जीवः । कुतः? वाक्यान्वयात् । वाक्यस्यान्वयो वाक्यान्वयस्तस्मात् । सर्वस्मिन् वेदरूपे महावाक्ये ब्रह्मण एव कारणत्वेनानुगमदर्शनादिदमपि

रश्मिः ।

तेनेति जीवेपि बाधात् प्रकृतिमात्रपर्यवसानेन । अनुवर्तत इति मण्डूकप्लुत्यानुवर्तते । 'कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेः' इति सूत्रात् । वाक्य इति सप्तमीसमासः वाक्ये अन्वय इति । पाठः प्रमादात् । यद्वा श्रुतिः स्ववाक्यं कर्म भगवत्येवान्वेति अन्तर्भावितण्यर्थः । कर्मणि घञ् अन्विधातोः संहिताया नित्यत्वात् 'नित्या धातूपसर्गयोः' इति वाक्यात् । वाक्ये अन्वयः इति पाठे । ननु वाक्यं भगवत्येवान्वेतीति भाष्याय प्रतीतार्थमादाय कर्तर्युपपदे समासोस्त्विति चेत्सत्यं कर्तरि कृदित्यस्य तत्रोपपदं सप्तमीस्थमित्यत्राविचारितत्वात्, प्रत्ययस्याचो विधानेपि एरजित्यनेन चयो जयोऽय इति साधनान्न कर्तर्युपपदेऽज्विधानमिति । एतदाशयेनाहुः सर्वस्मिन्निति । वेदरूप इति वेदान्तरूपेपि । वेदपदस्य वेदान्तेपि शक्तेः । वेदेनुगमो वेदार्थो रामकृष्णयोरिति कृष्णोपनिषदः 'गूढं ब्रह्मणि वाङ्मये' इति श्रीभागवततृतीयस्कन्धे अनुगमपदेन वेदान्तेनुगमाधिकरणे शब्दसंदेह-वारकप्रथमपादे संदिग्धतत्पराणां वाक्येषु ब्रह्मण एव कारणत्वेनानुगमप्रतिपादनात् स स्मार्यते । एवं सूत्रं व्याख्याय कुम्भकारः कारः करः कृतिः कर्तेत्येवमादिषु धातोरेकस्मादप्युपपदेऽनुपपदे प्रत्ययनियमाभावात् कर्तर्युपपदेऽच् प्रत्यय इति संभवेन भाष्यं विवृण्वन्ति इदमपीति । तथा च महावाक्यस्यान्वयो वाक्यान्वयः इति भाष्ये विग्रहः सप्तमीसमासे योगविभागस्येष्टसिद्ध्यर्थत्वात् षष्ठीतत्पुरुषः कर्तृकर्मणोः कृतीति कर्तुर्वाक्यात्षष्ठी सुप्तिङ्चयो वाक्यं भगवति भगवद्विषयं वैषयिकाधारे सप्तमी । अन्वयं सुप्तिङ्संबन्धं प्रतिपाद्यप्रतिपादकभावं करोतीत्यर्थः । अत्र वाक्ये कर्तर्युपपदे एरजित्यच् । ननु यथा कर्मण्यणित्यादौ कर्मणीत्यादिः सौत्री प्रथमार्थे सप्तमी धातोरण् भवति कर्म चोपपदसंज्ञमिति तदर्थ इतीति चेन्न भाष्ये कर्तर्युपपदे ध्वनितेऽचि धातोरज् भवति कर्ता चोपपदसंज्ञः इति कर्तरि कृदित्यनुसंधायैरजिति सूत्रार्थे इत्यस्यापि वक्तुं शक्यत्वात् । ननु 'तत्रोपपदं सप्तमीस्थम्' इति सूत्रमत्र तत्रेतिपदेन सामान्यतः सप्तम्यन्ते पदे कर्तरीत्यादौ वाच्यत्वेन स्थितं वाक्यादि तद्वाचकं पदमुपपदसंज्ञं स्यादिति वृत्तौ संभावितायामपि वृत्तिकारः सप्तम्यन्ते पदे कर्मणीत्यादौ वाच्यत्वेन स्थितं कुम्भादि तद्वाचकं पदमुपपदसंज्ञं स्यादित्याहेति कर्त्रुपपदेऽज् दुर्लभ इति चेन्न 'श्यालः स्वस्रोरथाग्रहीत्' इत्यत्र पुमान् स्त्रियेति सूत्रविचारदर्शनात् अत्राप्यसति दोषे तत्रोपपदं सप्तमीस्थमित्यस्य विचारे बाधकाभावात् । तथा च सिद्धान्तकौमुद्या प्रथमर्थः । तत्रोपपदमिति सूत्रेण मुख्यस्य कर्तुस्तत्रेतिपदेन गौणमुख्यन्यायसनाथेन ग्रहणात् कर्मण्यणित्यादेरग्रहणापत्त्या कुम्भकार इत्यत्र कर्मणि घञ् प्रसक्तिरतः कर्तुर्मुख्यस्योपपदेन्वयः । संस्कारः सकर्मणीत्यादौ सप्तम्यन्त उपपदेपि यथा प्रयाजशेषेणाभिघारयति अत्र प्रधानक्रमानु-रोधेनादावाग्नेयहविषोरभिघारणं पश्चादैन्द्रस्येति मुख्यक्रमेण ज्ञाप्यते तथेत्याह वृत्तिकृत् गौणमुख्य-न्यायं बाधितुं सप्तम्यन्ते पदे कर्मणि इत्यादावित्यादि । तस्मिंश्च सत्येव वक्ष्यमाणः प्रत्ययः स्यादिति

१. कुम्भादि । २. वाक्यादिः ।

**नात्र जीवप्राधान्यगन्धोऽपि । सर्वत्र भगवदन्वयेनैव जीवस्यापि प्रियत्वम् ।**

भाष्यप्रकाशः ।

वाक्यं भगवत्येवान्वेति । नात्र जीवप्राधान्यगन्धोऽपि, येन प्रकृतिवाद आशङ्क्येत । न [नु] चोपक्रमे । 'न वा अरे' इत्यादिना निरुपधिप्रियत्वेन जीवात्मन एव प्रकृतत्वात् कथं न तस्य प्राधान्यमिति [अत आहुः सर्वत्रेत्यादि । अत्रायमर्थः । अत्र मैत्रेय्यै मोक्षोपायमुपदेष्टुं निरुपधिप्रियमात्मानं प्रकृत्य मोक्षोपायभूतं तद्दर्शनं दर्शनोपायभूतं श्रवणादित्रयं चोपदिशति । तत्र प्रियत्वस्यापाततो विचारे देह एव तादृशः प्रतिभातीति तन्निवारयितुमात्मदर्शनादिना सर्वज्ञानं सर्वत्रात्मभेदद्रष्टुरपराधं च वदन् सर्वस्याप्यात्मत्वं बोधयति तादृशसर्वात्मकत्वं च देहस्य न संभवति, इति तद्भिन्नः कश्चिदात्मात्र द्रष्टव्यत्वादिनोपदिश्यते इति तस्याः ज्ञाने श्रवणेन जाते ततः स क इत्याकाङ्क्षायां दुन्दुभ्यादिदृष्टान्तत्रयं मननार्थं वक्ति तत्र देहचेष्टादिभिः परंपरया ज्ञापयितुमाद्यो दृष्टान्तः । ततो बाह्याच्छेदं ज्ञापयितुं द्वितीयः । ततोऽभ्यन्तराच्छेदं ज्ञापयितुं तृतीयस्तेषु त्रिष्वपि दुन्दुभिदुन्दुभ्याघातः वीणावीणावादः शङ्खशङ्खध्मरूपेण द्वौ द्वौ वदन् द्वौ जीवपरमात्मानौ देहाद्भिन्नाविति साधयति ततो यदि द्वावपीदृशौ तदा द्रष्टव्ये आत्मन्येकवचनं किमित्युक्तं ? यद्येक एव तादृशस्तदाजीवे तादृशस्यानुभवात् पूर्वदृष्टान्तत्रये द्वौ द्वौ किमित्युक्ताविस्याकाङ्क्षायां जीवस्य तदंशत्वेन तदधीनत्वं वक्तुं 'स यथार्द्रैधाग्नेः' 'स यथा सर्वासामपाम्' इति कण्डिकाद्वयेन सर्वोत्पादकं प्रलये सर्वाधारं च साधयति तेन नियामकादात्मनो नियम्यस्यात्मनो भेदः आत्मत्वेनैकरूप्याच्चाभेद इति सिध्यति । एवं सिद्धे भेदे सर्वोत्पत्तिलयाधारो य आत्मा स एव मोक्षार्थं निदिध्यासितव्य इति बोधयति तथा च ] शङ्क्यम् ।

रश्मिः ।

कौमुदी । वक्ष्यमाणः कर्मणि घञ् । उपात्तकर्मानुरोधेनोक्तम् । तेन अन्येष्यजादयः प्रत्यया भवन्त्येव यथा वाक्यान्वय इत्यत्रैरच् । ननु तर्हि चयो जयो भय इति प्रयोगा न स्युः उपपदाभावादिति चेन्न भगवदिच्छया प्रवृत्तानामदुष्टत्वात् ।

'लोके शब्दार्थसंबन्धो रूपं तेषां च यादृशम् ।
न विवादस्तत्र कार्यो लोकोच्छित्तिस्तथा भवेत्' ॥

इति पत्रावलम्बनात् । लौकिकत्वाच्च छन्दोवत्सूत्राणि भवन्तीति वाक्यान्वयादित्यलौकिकः प्रयोग इति । तेन वाक्यान्वयपदं द्वेधा व्याकृतम् । वाक्येऽन्वयो वाक्यान्वयः । वाक्यस्यान्वयो वाक्यान्वय इति । ननु वाक्यस्यान्वय इति भाष्योक्तमस्तु योगविभागस्येष्टसिद्ध्यर्थत्वाद्भाष्यप्रकाशोक्तमपि मा स्त्विति चेन्न । इष्टसिद्धिसत्त्वात् । अनुव्याख्यानस्यापि निःश्वसितत्वात् । एवं वाक्यं महावाक्यमित्यङ्गीकृत्योक्तम् । वाक्यमित्यत्र महत्त्वाभिनिवेशे तु एकत्वमविवक्षितमित्याशयेन वृत्तौ वाक्यानामन्वय इत्युक्तम् । अन्यथा भाष्ये महावाक्यमिति वदेयुः । अत एव माध्वभाष्येप्ये कवचनान्तेन समासः । वाक्यस्यान्वय इति । वाक्यं हीदमिति शंकरभाष्येप्येकवचनम् । नात्रेति भाष्यं विवृण्वन्ति नात्रेति । गन्धशब्दस्तु लेशे संबन्धिनि वा जीवप्राधान्यसंबन्धिवाक्यमपीत्यर्थः । 'गन्धो गन्धक आमोदे लेशे संबन्धिगर्वयोः' इति विश्वात् । येनेति जीवप्राधान्येन । जीवस्य प्रधानतिरेकादसंगित्वेन प्रकृतिकारणवादः । न चोपक्रम इति इत आरभ्य कस्मिंश्चित्पुस्तके लघुबृहद्व्याख्यानं तयोः सूचीकटाहन्यायेन लघुव्याख्यानं व्याक्रियते । सर्वत्रेति

तस्यैव सुखरूपत्वात् । सर्वोपनिषदनुरोधेनैवास्याप्यर्थस्य वक्तुमुचितत्वात् ।

भाष्यप्रकाशः ।

आत्मनः प्रकृतत्वेऽपि प्रियत्वेनैव प्रकृततया स्वेन रूपेणाप्रकृतत्वात् प्रकृततावच्छेदकविचारे सर्वत्र भगवदन्वयेन जीवेऽपि तस्य सत्त्वात् तदन्वयेनैव जीवस्यापि प्रियत्वम् । प्रियत्वस्य सुखधर्मत्वात्, यो वै भूमा तत् सुखं नाल्पे सुखमस्तीति श्रुत्या ब्रह्मण एव सुखरूपत्वादत्र प्रतीयमानस्यापि [ प्रियत्वादिरूप ]प्राधान्यस्य ब्रह्मण्येव पर्यवसानेनोपक्र[ मस्य जीवबोधकताया निर्वेतुमशक्यत्वादुपक्र ]मापेक्षया उपपत्तेर्बलिष्ठत्वात् । [ अतः परमात्मैव मोक्षार्थे ज्ञेय इत्यर्थः । ननु आर्द्रैधाग्नेर्दृष्टान्तेन प्रकृतिसंसृष्टस्यैवात्मनः प्रकृतत्वात्तत्र च सत्त्वगुणसंसर्गेण प्रियत्वस्यापि कृत्यवचनत्वात्तेयमुपपत्तिरिति चेत्तत्राहुः सर्वेत्यादि 'आत्मैवेदमग्र आसीत्' 'स ऐक्षत लोकान्नु सृजै' 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' 'सदेव सोम्येदमग्र आसीत्' 'तत्तेजोऽसृजत' 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' इत्यादिषु सर्वेषु सावधारणेषु वाक्येषु केवलस्यैवात्मनः प्रकृतत्वात् । बहूनामनुग्रहस्य च न्याय्यत्वात् सर्वोपनिषदनुरोधेनैवैतद्वाक्यार्थो वक्तुमुचितः । न च दृष्टान्तबाधः । ऐक्षत इत्यादिनेच्छाया उक्तत्वात् तत्संसर्गेणैव दृष्टान्तोपपत्तेः । किंच तन्मते प्रकृतेर्नित्यत्वेनानश्वरत्वादार्द्रैधसां च नश्वरत्वेन तेषां प्रकृतिस्थानीयत्वेन वक्तुमशक्यत्वाच्च । दृष्टान्ते विवक्षितार्थमात्रग्रहणे तु इच्छामात्रसंसर्गस्यैव वक्तुमुचितत्वम् । न त्विच्छाया द्वितीयत्वं धर्मत्वेनात्मान्तःपातित्वात् भिन्नाभिन्नत्वम् । किंच याज्ञवल्क्यो मोक्षार्थमुपदिशति । मोक्षस्तु ब्रह्मात्मज्ञानादेव संगतो भवतीत्याहुः

रश्मिः ।

भाष्यमवतारयन्ति न चोपक्रम इति । प्रियत्वेनेति ।

'अहमात्मात्मनां धातः प्रेष्ठः सन् प्रेयसामपि ।
अतो मयि रतिं कुर्याद्देहादिर्यत्कृते प्रियः' ॥

इति श्रीभागवते प्रेयांस आत्मानो मैत्रेयीब्राह्मणद्वये जीवाः तेषां मध्ये हे धातः अहं प्रेष्ठः । देहादिर्यत्कृते प्रिय इत्यत्र निरुपधिप्रीतिविषयत्वस्य स्वस्मिन्नुक्तेरानन्दधर्मत्वाच्च प्रियत्वं ब्रह्मधर्मस्तेन । एवकारेणात्मत्वे व्यवच्छेदो येन जीवोपि संभाव्येत । एतदेवाहुः स्वेनेति । आत्मत्वेन जीवत्वेन वा । प्रकृततावच्छेदकं प्रियत्वं अन्यब्राह्मणेषु प्रकृतान्येषु सर्वेष्वत्र ब्राह्मणे तां प्रियत्वमवच्छिनत्ति इति तस्य विचारे इत्यर्थः । भाष्यं विवृण्वन्ति सर्वत्रेति जगति समन्वयाधिकरणोक्तेनाखिमातिप्रियत्वेन भगवदन्वयेनेत्यर्थः । तस्येति ब्रह्मधर्मस्य प्रियत्वस्येत्यर्थः । तस्यैवेति हेतुभाष्यं विवृण्वन्ति प्रियत्वस्येति । सुखेति सुखरूपस्येति भाष्ये व्युत्पत्त्या तु सुखधर्मेति । यद्वा सुखधर्मत्वात् सुखरूपत्वं धर्मधर्मिणोरैक्यादित्यर्थः । शोभनानि खानि येन प्रियत्वेनेति सुखं प्रियत्वं भवति । ननु भूमाधिकरणे ब्रह्मणः सुखत्वमुक्तमत आहुः यो वै भूमेति । एवकारोप्यर्थे ब्रह्मणोपीत्यर्थः । ब्रह्मण्येवेति प्रियत्वावच्छिन्ने इत्यर्थः । उपक्रमेति ।

'अलौकिको हि वेदार्थः न युक्त्या प्रतिपद्यते ।
तपसा वेदयुक्त्या च प्रसादात् परमात्मनः' ॥

इति श्रुतेरुपक्रमादिन्यायरूपयुक्तिर्दुर्बला । का सा बलिष्ठोपपत्तिरित्याकाङ्क्षायां सर्वोपनिषदि

'तमेव विदित्वा अतिमृत्युमेति' 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते'

भाष्यप्रकाशः ।

तमेव विदित्वेत्यादि । तथा च सावधारणश्रुत्या न प्रकृतिसंसृष्टज्ञानान्मोक्ष इत्यर्थः । किंचाग्रे सर्वासामपां समुद्र एकायनमेवमित्यादिना अप्स्पर्शानां त्रयोदशानां समुद्रादयस्त्रयोदश यथा आधारभूतास्तथा आत्मा आधारभूत इत्युक्तं तत्र आपः समुद्रसजातीयाः स्पर्शादय पञ्च त्वगादीनां ग्राह्याः । संकल्पादयः सप्त मनआदीनां कार्याणि । अध्वशब्दश्च गतौ यौगिकः । अधि बल-मित्यध्वेति व्युत्पत्तेः । अयनशब्दश्चाधिकरणव्युत्पन्नः यन्त्यस्मिन्निति व्युत्पत्तेः । तथा च यथा सजातीयानि सजातीये ग्राह्याणि ग्राहके कार्याणि कारणे लीयन्ते इति तेषां तल्लयस्थानमेव-मात्मापि सजातीयानां ग्राह्याणां कार्याणां च लयस्थानमिति सिद्ध्यति । तच्च तदेकमप्यक्रम-नन्तरूपमिति श्रुत्युक्तप्रकारके भगवत्युपपद्यते सांख्यमते भूतानां मात्रासु तासामिन्द्रियाणां चाहं-कारे तस्य महति महतश्च प्रकृतौ लयः । आत्मनि तु न कस्यापि लयः इत्यतः प्रकृतिसंसृष्टो वा न वक्तुं शक्यते । अतो लयस्थानविचारेपि आत्मा ब्रह्मैव आयाति न तु प्रकृतिसंसृष्ट इत्याशये-नाहुः आनन्दाद्ध्येवेत्यादि । अत्रापि सावधारणश्रुत्योत्पत्तिस्थितिलयहेतुत्वस्थानं च ब्रह्मै-त्युक्तं तेनापि तथा । अतो यत्पूर्वपक्षिणोक्तं ब्रह्मता जगत्कर्तृत्वं च तस्योत्कर्षार्थं तदसंगतमित्यर्थः । ननु सांख्यप्रवचने 'ईश्वरासिद्धेः सिद्धा', इतिसूत्राद्याद्यः पूर्वमुक्तस्तादृशः प्रकृतिसंसृष्ट एवास्त्विति चेत्राहुः सर्व एवात्मान इति । अस्यां सावधारणश्रुतौ हि बहूनामात्मनां ब्रह्मणः सकाशाद्व्युच्चरणमुक्तं तथा सति 'एष उ एव इत्यादिश्रुते स यं व्युच्चरितमात्मानं कर्म करोति स तथा भवतीत्युपपद्यते । सांख्यमते तु नित्या बहवः आत्मानस्तेषु यः प्रकृतिसंसृष्टस्तस्य कार्येश्वरत्वं तच्चासंगतम् । बहुषु समानेष्वेकस्यैव प्रकृतिसंसृष्टस्येश्वरत्वं नान्येषामित्यत्र निया-मकाभावात् । न च कर्मानादित्वात्तदुपपत्तिस्तेषां मते प्रकृतिपुरुषातिरिक्तस्यानादित्वाभावात् । नापि प्रकृतिस्वभावात्तदुपपत्तिस्तस्याः आत्मनां च स्वस्वभावस्यैकरूप्यादेकस्यैव संगो नान्येषा-मित्यत्र तन्मते नियामकस्य वक्तुमशक्यत्वादतस्तन्मतमप्यसंगतम् । किंच तन्मते चिद्रूपस्य जीव-स्याहंताममतानाशे स्वरूपेणावस्थानं मोक्षस्तदसंगतमित्याहुः 'एष ह्येवानन्दयाति' तथा च श्रुतौ निरुपधिसुखस्यैव मोक्षरूपत्वात् ब्रह्मणः अतस्तन्मते मोक्षवाक्यमप्यसंगतं स्यात् । तदेतत्सर्वं हृदिकृत्याहुः संदिग्धादित्यादि ।] किंचेदमवान्तरवाक्यं महावाक्याद् दुर्बलम् । तच्छेषत्वात् । महावाक्यं तूपनिषत् । ततोऽपि महावाक्यं वेदः । स तु सर्वोऽपि भगवत्पर एव । सर्वे वेदा इति श्रुतेः । वेदैश्च सर्वैरित्यादिस्मृतेश्च । उपनिषद्विचारेऽपि, तं त्वौपनिषदमिति, आत्मैवेदमग्र आसीदित्यादिवाक्यदर्शनात् तस्या अपि तत्परत्वमेव ।

रश्मिः ।

त्यादिभाष्यमित्याशयेनाहुः किंचेदमित्यादि । किंचेति साकल्ये उपपत्तेः साकल्याद्वक्तुमुचितत्वादि-त्यर्थः । बलिष्ठोपपत्तिरारभ्यत इति वा । 'किंचारम्भे च साकल्ये' इति विश्वः । इदं ब्राह्मणद्वयम् । तं त्वौपनिषदमिति शाकल्यब्राह्मणे आत्मैवेदमिति पुरुषविधब्राह्मणे । अन्यत्रापीति मैत्रेयी-

---

[ ] एतच्चिह्नान्तर्गतः प्रकाशः पश्चात् तत्कर्तृभिः प्रणीय योजितः इति ज्ञायते । मूलभीहस्ताक्षरलिखितपुस्तकेऽयं भागो नास्ति कर्तृभिर्नवीनो निर्मितः । पुस्तकान्तरे तैरेव स्वकरेणाधिकतया पत्रप्रान्तभागे निवेशितोऽस्ति सोऽत्र मुद्रितोऽस्ति ।

भाष्यप्रकाशः ।

[ अत उदाहृतजातीयैः श्रुतिसहस्रैस्तथाप्रतिपादनादत्रापि प्रियत्वबोधनेन नित्यनिरवधिसुखात्मकं तत्स्वरूपम् । आर्द्रैधाग्निरित्यादिकण्डिकाद्वयेन तत्कार्यं सर्वाणि भूतान्यस्यैव निःश्वसितानीति-कथनादंशाश्च प्रतिपादिता इतीदमपि वाक्यं ब्रह्मपरमेवोचितमित्यर्थः । एतावानर्थस्तद्बोधक-वाक्यसमूहश्च मैत्रेयीब्राह्मणद्वयेपि समानः । अग्रे तु तयोर्भेदः । तत्र यौ द्वावात्मानौ पूर्वं कार्यद्वारा परिचायितौ तयोः किं सर्वथा भेदः किं वा कार्यकारणयोरिव भेदाभेदावुत अंशांशिनोरिव तावुत सर्वथा अभेदः तयोः स्वरूपं च किमित्याकाङ्क्षायां मैत्रेय्या अधिकार-परीक्षार्थं प्रथमे ब्राह्मणे 'स यथा सैन्धवखिल्यः' इत्यादिना दृष्टान्तेनांशत्वं 'एवं वा अरे इदं महद्भूतम्' इत्यादिना दार्ष्टान्तिकस्य जीवस्य स्वरूपं च वदति । स यथा सैन्धवखिल्यः स जीवः सिन्धुरुदकं तत्र भवं सैन्धवं लवणं तस्य खिल्यः शकलः उदके जले प्रास्तः प्रक्षिप्तः सन् उदकमेवानुक्षेपाधारभूतमुदकमेव लक्ष्यीकृत्य विलीयेतोदकभावमापद्येत नाहास्य न कश्चिदस्य सैन्धवखिल्यस्योद्ग्रहणाय उद्धृत्य पूर्ववत् ग्रहणायैव स्यात् इवशब्दोनर्थकः शक्तः स्यात् । यतो हेतोर्यतः यस्मादुदकदेशादाददीत आस्वादनाय तद्गृह्णीयात् लवणमेव लवणरसमेवास्वादयेत् । अतो लवणभावेनांशत्वेपि उदकरूपेणैव तस्य सत्ता । न तु खिल्यभावेनेति लयदृष्टान्तं व्याख्याय 'एवं वा अरे इदं महद्भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञास्ति' इति लयं निरूप्य यथायं लवणदृष्टान्त एवमेवारे मैत्रेयि इदं जीवात्मतत्त्वं महदादिलक्षणकत्वाद्ब्रह्मैव महदनवच्छिन्नं भूतं सिद्धं अनन्तमविनाशिअपार-मनादिविज्ञानघने ज्ञप्तिमात्रस्वरूपे एव । प्रथमान्तपक्षे ज्ञप्तिस्वरूप एव इत्यर्थो वाच्यः । तादृशः सन्नेव एतेभ्यः स्थूलसूक्ष्मशरीराकारेण परिणतेभ्यो भूतेभ्यः समुत्थाय भूसूर्यरश्म्यादिभ्यो रसः सैन्धवभावमिव पराभिध्यानाद्देहमाविशेषफलभोक्तृभावं प्राप्य तेन स्वस्वरूपं ज्ञापयित्वा तानि विनश्यन्ति सन्ति अनु पश्चात् विनश्यति भोक्तृभावं त्यजति न प्रेत्य संज्ञास्ति विमुक्त्यनन्तरं संज्ञा देवमनुष्यादिसंज्ञा नास्ति किंतु ज्ञप्तिमात्रस्वरूप एव भवति । इत्येवं लये संज्ञाभावं व्याख्याय तन्निरूपणार्थं मिष्टोदके तत्प्रक्षेपे अविभागदशायामपि भेदज्ञानाच्च संज्ञाया अभावे इति मैत्रेय्या मोहो जातः प्रेत्य सम्यग्ज्ञानाभावः कथं किमात्मनः स्वरूपनाशादुत दर्शनाभावात् तत्र यदि स्वरूपनाशात्तदा विज्ञानघने आत्मनि अनन्तमपारमिति विशेषणाभ्यां अनादिनिधनत्वं यदुक्तं तत्कथं संगच्छते अहं च कथममृता भविष्यामि यदि दर्शनाभावात् तदा स्वरूपसद्भावे कथं दर्शनाभाव इति मैत्रेय्या मोहे जाते याज्ञवल्क्यः आत्मन स्वरूपसद्भावमभिप्रेत्य सर्वात्मना दर्श-नाभावस्य प्रकारमाह यत्र हि द्वैतमिव भवति तदितर इतरं पश्यतीत्युपक्रम्य जिघ्रति अभिवदति शृणोति मनुते विजानातीत्यन्तमाह यत्र यस्यां विभागदशायां हि निश्चये तद् द्वैतमिव भवति वास्तवद्वैताभावेपि द्वैतावरुद्धमद्वैतं भवति तत्र इतर इतरं पश्यत्येवं सर्वेन्द्रियव्यापारजनकभेदक-धर्मस्य स्थूलसूक्ष्मदेहरूपस्य सत्तायां द्वैतदर्शनकथनपूर्वकं यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत् जिघ्रेत् अभिवदेत् शृणुयात् मन्वीत विजानीयात् येनेदं सर्वं विजानाति तं केन विजा-नीयात् विज्ञातारमरे केन विजानीयादित्यन्तेन । यत्राविभागदशायामेतदीयभेदकधर्मस्य स्थूलसूक्ष्मदेहरूपस्य लये कटककुण्डलाकारलये तयोः सुवर्णभावे कटककुण्डलादिकार्यभूतहस्तकर्ण-

१. परलोकगमनानन्तरम् ।

भाष्यप्रकाशः ।

क्षोभाजननाद्यकरणवत् देहयोः विज्ञातृभावाद्ब्रह्मरूपतायां तयोरपि ज्ञानजननरूपस्वकार्यकरणाभावात् सम्यक्ज्ञानाभावः । समुद्रे लवणस्येव ब्रह्मणि लीनस्य जीवस्य स्वस्मिन् भगवतो भिन्नत्वेन प्रतीतिराहित्यं अन्यस्य ब्रह्मविदोपि तस्मिन् जीवे तथाप्रतीतिराहित्यं न्यरूपयदिति सिद्ध्यति । अत्र च भूतरूपदेहद्वयनाशो न विशेषदर्शनात् शुक्तिकारजतनाशवत् अभिप्रेतः किं तु कार्यस्य कारणे लये कार्यरूपादर्शनवदभिप्रेतः । 'यत्र त्वस्य सर्वमात्मैवाभूत्' इतिवाक्यसामञ्जस्यात् । एवं जीवस्यापि लये स्वकार्याक्षमत्वं तेन दर्शनादिकर्तृत्वाभावोपि बोध्यः । तेनेदं सिद्ध्यति यत्पूर्वं मोक्षार्थं ससाधनमात्मज्ञानमुपदिष्टं तत् जीवदशायामेव श्रवणादिभिः साधनीयम् । लयेऽविभागे सति तस्य कर्तुमशक्यत्वादिति । जीवस्वरूपं किमित्याकाङ्क्षा तु 'इदं वा अरे महद्भूतमनन्तमपारं विज्ञानघन एवेत्यनेन पूरिता । तेन मोक्षार्थिनो जीवस्य स्वरूपज्ञानार्थमत्र ब्रह्मोपदेशः । तथा च करणग्रामाभावात् तस्य ज्ञानाभावः । तेनांशरूपस्य विज्ञानात्मनः सत्त्वादिदानीं च करणग्रामस्यापि सत्त्वात् पूर्वोक्तैः दर्शनसाधनैस्तवामृतत्वाय परमात्मा द्रष्टव्य इति तव तस्य ज्ञानमित्युक्तं भवति । एवमधिकारपरीक्षायां ज्ञातायां तस्यै मोक्षार्थं ब्रह्मस्वरूपमुपदेष्टुं द्वितीयब्राह्मणे वागेकायनमित्यन्तं पूर्ववदुक्त्वा 'स यथा सैन्धवघनः अनन्तरोऽबाह्यः कृत्स्नो रसघन एव स्यादेवं वा अरे इदं महद्भूतमनन्तमपारं कृत्स्नः प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञास्ति' इत्यादिपूर्ववदाह तेन जीवस्वरूपाद्विशेषो बोधितः । अयं तु यथा सैन्धवघनः अनन्तरोऽबाह्यः कृत्स्नो रसघन एव स्यादिति दृष्टान्तं निरूप्य दार्ष्टान्तिकेऽनन्तरत्वमबाह्यत्वं च संगृह्णन् अग्रे कृत्स्नत्वं प्रज्ञानघनत्वं चाह इदं महद्भूतमनन्तमपारमिति पूर्ववदाह तेन ब्रह्मणो महदादिभिश्चतुर्भिर्विशेषणैरेव जीवसाम्यं प्रज्ञानघनत्वेन स्वरूपसाम्यं वस्तुतस्तु तत्र विज्ञानघनपदादत्र च प्रज्ञानघनपदात्ततः कश्चिद्विशेषोपि, अनन्तरत्वमबाह्यत्वं कृत्स्नत्वं च ततोऽधिकं तेन ब्रह्म जीवादधिकमिति बोधयन् जीवस्य सान्तरत्वं सबाह्यत्वमकृत्स्नत्वं च सूचयति तेन तस्य खिल्यतां द्रढयति भूतसमुत्थानानुविनाशप्रेत्यसंज्ञाभावात् पूर्ववदाह तत्र मैत्रेय्याः ब्रह्मनिष्ठयोर्भूतसमुत्थानविनाशयोर्न संदेहः । हृदि द्वयोर्जीवपरमात्मनोराध्यात्मिकाधिदैविकतया स्थितत्वेन जीवे तथात्वस्येव परमात्मनि तथात्वस्य सुखेन बोद्धुं शक्यत्वात् । प्रेत्यसंज्ञाभावस्तु लोकान्तरगत्यनन्तरं सम्यग्ज्ञानाभावरूपः स तु जीवेन्द्रियाणां लये सति जीवविषयो भवति ब्रह्म तु न विलीयते जीवोपि इदानीं वर्तत इति ब्रह्मविषयकः संज्ञाभावो जीवस्य लोकान्तरगमनोत्तरं कथमित्येवं मैत्रेय्या मोहे जाते तन्निवारणार्थं अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मा मात्रासंसर्गस्त्वस्य भवति इत्याह तत्र मात्रारूपाणां विषयाणां यः संसर्गः स ब्रह्मण्यनुपपन्नः इति तेन जीवलिङ्गेन जीवरूपमेव अत्र ब्रह्मास्तु न तु ततोधिकम् । अन्यथैतद्विरोधापत्तेरित्यत आहुः सर्वव्यवहारेत्यादि । तथा च पूर्वं जीवब्राह्मणलिङ्गसूत्रे जीवस्य ब्रह्माश्रितताया उक्तत्वात् जीवीयसर्वव्यवहारस्य तन्मूलकत्वात् हस्तपुत्तलकसंयोगे पुत्तलकसंयोगवत् विषयस्पर्शोपि ब्रह्मण उपपद्यते अग्रिमवाक्योक्तं विज्ञातृत्वमपि ब्रह्मण एव धर्मः नान्योऽतोस्ति द्रष्टा इत्यादिश्रुतेर्द्रष्टृत्वस्य तत्रैव नियमनात् स च धर्मस्तदंशत्वात् जीवेपि भासते इति नात्र जीववाक्यसन्देहस्यावर्थः । ननु तथापि मात्रासंसर्गे सत्यदर्शनं कथमुपपद्यत इत्याकाङ्क्षायामाहुः पूर्वं स्वतीत्यादि । अयमर्थः । अत्र हि यद्वै तं न पश्यति इत्यादिना आत्मविषयक-

भाष्यप्रकाशः ।

सर्वेन्द्रियजन्यज्ञानाभावस्य स्वरूपं प्रकारश्चोच्यते तथा हि यत्रेति तत्रेत्यत्रानुस्वारस्य परसवर्णः । तं प्रज्ञानघनमात्मानं यत्र पश्यति तत्पश्यन् वै तद्द्रष्टव्यं न पश्यति द्रष्टव्यत्वेन पश्यति । ननु रूपमप्यात्मा इति द्रष्टव्येन दर्शनसत्त्वे कथमदर्शनमित्याकाङ्क्षायामदर्शनमुपपादयति नहीत्यादि । अदर्शनं लोपः विरुद्धः सर्वतो लोपः विपरिलोपः दृष्टेरिति पञ्चमी प्राणादित्या प्रायपाठात् हि यतो हेतोः द्रष्टुर्दृष्टेर्विपरिलोपः द्रष्टुरात्मनो दृष्टेः दर्शनात् विपरिलोपः विरुद्धदर्शनसामर्थ्यकृतं अदर्शनं न विद्यते तत्र हेतुरविनाशित्वात् । ज्ञानात्मकस्य स्वरूपस्य धर्मस्य च नित्यत्वात् । तेन जीवस्य पश्यत्त्वम् । तर्हि कथमपश्यत्त्वं तत्राह न त्वित्यादि । यदन्यत्कार्यं रूपमिन्द्रियं करणं विभक्तमंशरूपं जीवतत्त्वं द्रष्टृ पश्येत् परमात्मविषयकं दर्शनं कुर्यात् तत्तु ततः परमात्मनः सकाशात् द्वितीयमन्यद्भिन्नं नास्ति तथा च दर्शनसाधनस्य द्रष्टुश्च परमात्मनः सकाशादन्यत्वाभावेन विभक्तत्वाभावेन च द्वितीयत्वाभावात् द्रष्टव्यत्वेनादर्शनं तथा च सामान्यतो द्रष्टव्यत्वेन रूपात्मकस्यात्मनो दर्शनात् पश्यत्त्वं तेन मात्रासंसर्गात् द्रष्टृदृश्यव्यवहारदशायां विशेषतः कारणत्वेनाविभक्तत्वेन द्वितीयत्वेन च अदर्शनादपश्यत्त्वमित्युभयमपि संगच्छते एवं सर्वत्रापि । ननु तर्हि ज्ञानस्वरूपत्वात् ज्ञानधर्मकत्वाच्च द्रष्टृत्वे सिद्धे स्वरूपेणैव परमात्मानं कुतो न पश्यति इत्यतः किंचित्पाठभेदेन पूर्ववदाह यत्रा अन्यदिव स्यादित्यादि तथा च स्वरूपे धर्मे च विद्यमानेपि ब्रह्मणि लीनत्वेन द्रष्टृदृश्यभावाभावात् न विजानीयादित्यर्थः । तथा च साधकस्य संसारदशातोऽग्रिमे लोकान्तरे मात्रारूपविषयसंसर्गे सत्यपि तस्य संसर्गस्यैतदात्म्येऽनुसंहिते द्वितीयत्वाभावात्सम्यग्दर्शनाभावः । मुक्तौ तु अविभागे सति द्रष्टृदृश्यत्वाभावात् सम्यग्ज्ञानाभावः । तेन ब्रह्माविभक्ततया ब्रह्मात्मकत्वेनावस्थाने ब्रह्मैव विज्ञातृ सर्वज्ञेयं तु ज्ञप्तिमात्रस्वरूपो ज्ञप्तिधर्मा च कार्यकारणशक्तिरहितस्तिष्ठति न तु सविषयज्ञानवान् । इदमेवामृतत्वमित्युपसंहरति । उक्तानुशासनासि मैत्रेयि एतावदेव खल्वमृतत्वमिति प्रव्रजति च । तत एतस्य ब्राह्मणस्य पूर्वब्राह्मणार्थनिश्चायकं इत्याशयेन सिद्धमाहुः अतो वाक्येत्यादि । एवं प्रकृतिकारणवादे निरस्ते यो याज्ञवल्क्येनोक्तः परमात्मा स मैत्रेय्या श्रुत इति पूर्वोक्तरीत्या मननं निदिध्यासनं च त्वया कर्तव्यं जीवदशायां ततः साधनपरिपाकेन दर्शने मुक्तौ जीवस्य विज्ञातृभावरूपो ब्रह्मभाव इति फलं सिध्यति । एतदेव तत्त्वदीपे तत्प्रकाशे चाचार्यैः—

'व्यापकत्वश्रुतिस्तस्य भगवत्त्वेन युज्यते ।
आनन्दांशाभिव्यक्तौ तु तत्र ब्रह्माण्डकोटयः ।
प्रतीयेरन् परिच्छेदो व्यापकत्वं च तस्य तत्' ॥

इत्येतेनोक्तं व्याख्यातं च । किं चायमेव संवादो न प्रेत्यसंज्ञास्तीति प्रेत्यसंज्ञाभावं बोधयन् एतावदेव खल्वमृतत्वमिति मोक्षस्यैतावत्त्वं च बोधयन् निःसंबन्धो निरानन्दो मोक्ष इतिवादमुत्थापयति तथा आत्मनः प्रज्ञानघनं नित्यमेकरसं स्वरूपं बोधयन् अनुच्छित्तिधर्मपदस्याविनाशिपदव्याख्यानत्ववादिमते निर्धर्मकनिर्विषयकनित्यज्ञानात्मकस्वरूपेणावस्थानं मोक्ष इतिवादमुत्थापयति सिद्धान्ते तु आनन्दधर्मस्य प्रियत्वस्य परमात्मनिष्ठत्वात् परमात्मनश्च सर्वत्रैव जीवेप्यन्वयात् सोपि धर्मो इत्याकारमित्युच्यते । अनुच्छित्तिधर्मपदं च धर्मनित्यत्ववाचकमिति पूर्वं व्याख्यातम् । तत्र सति जीवविज्ञानपरिमाणादीनां धर्माणां नित्यत्वात् निर्विषयकज्ञानस्वरूपः सविषयज्ञानधर्मा

'सर्व एवात्मानो व्युचरन्ति' 'एष ह्येवानन्दयाति' इत्यादिश्रुतिसहकृतैर्नि:संदिग्धै-र्ब्रह्मणः स्वरूपं कार्यमंशाश्च प्रतिपादिता इतीदमपि वाक्यं तत्परमेवोचितम् ।

भाष्यप्रकाशः ।

लयः भावनाचाणुः ब्रह्माविभक्तत्वादत्तु च ब्रह्मधर्मो ब्रह्मभूतो मुक्तावप्यवतिष्ठते । इत्येतद्बोधनाय निबन्धे तथोक्तमिति ज्ञेयम् ] एवमन्यत्रापि । अतः सर्वोपनिषदनुरोधेनैवास्याप्यर्थस्य वक्तुमुचित-त्वात् तासु च, तमेव विदित्वा अतिमृत्युमेतीत्यवधारणदर्शनादत्रापि श्रवणादिविधीनां ब्रह्म-विषयत्वमेव मन्तव्यम् । तथा अत्रोक्तं यथार्द्रैधाग्नेरित्यादिदृष्टान्तसिद्धं कारणत्वं समुद्रादिदृष्टान्त-सिद्धं प्रलयाधारत्वं च तदैव संगच्छेत यदा प्रियं ब्रह्मैवात्राद्रियेत । आनन्दद्ध्येवेति सावधारण-श्रुत्या तत्रैव तन्नियमनात् । नच जीव एव ब्रह्मेति युक्तम् । सर्व एवात्मानो व्युचरन्तीति श्रुति-विरोधात् । अमृतत्वरूपं फलमपि तत एव । एष ह्येवानन्दयातीति सावधारणश्रुतेः । अत

रश्मिः ।

ब्राह्मणद्वयेपि । अस्यापीति मैत्रेयीब्राह्मणद्वयस्यापि । तमेव विदित्वेति भाष्यं विवृण्वन्ति स्म तासु चेति । मैत्रेयीब्राह्मणेन सहैक्यतां वक्तुं तद्विमजन्ते अत्रापीति । ननु प्रियत्वेनोपक्रमात् 'प्रेमा ना प्रियता हार्दं प्रेम स्नेहः' इति कोशात् मैत्रेयीब्राह्मणद्वयस्य भक्तिप्रतिपादकत्वेपि एकवा-क्यतया उपात्ताया महानारायणोपनिषदः कथं भक्तिप्रतिपादकत्वमिति चेन्न । तमेवेत्यत्रैवकारो नान्यथा व्याख्येयः तं विदित्वैवेति किं तु तमात्मानमेव विदित्वेति ततश्चात्मज्ञानं तु भक्त्या । भक्त्या जानाति चाव्ययमिति श्रुतेः । 'भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः' इति गीतायाश्चेति भक्तिरर्थापत्तिलभ्येत्यदोषात् । न च भक्त्या ज्ञानं कुतो नेति शङ्क्यम् । 'नायमात्मा बलहीनेन लभ्यः' इति मुण्डके बलपदवाच्यभक्तिहीनालभ्यत्वोक्तेः । सिद्धान्तमुक्तावल्यां 'ज्ञानाधिको भक्तिमार्ग एवं तस्मान्निरूपितः' इति तट्टीकायां च प्रभवः उपपादयांचक्रुः मृत्युमतिक्रामतीति मृत्युमतिक्रान्तो मोक्षः । ब्रह्मविषयत्वमिति एवकारेण विभूतिव्युदासः । भक्तिहंसेऽयं विषयः स्पष्टः । आर्द्रैधाग्नेरिति व्याकृतम् । समुद्रादीति स यथा सर्वासामपा९ समुद्र एकायनमेव९ सर्वेषां स्पर्शानां त्वगेकायनमेव९ सर्वेषां गन्धानां नासिके एकायनमित्यादि । आनन्देति । ननु प्रियं प्रीतिविषयमा-नन्दः सुखमिति कथं पर्यायतेति चेन्न तत्तु समन्वयादित्यधिकरणे ब्रह्मणोस्तिभातिप्रियत्वेनान्वयोक्तेः । अस्ति सत्यधर्मः, भाति ज्ञानधर्मः, प्रियत्वमनन्तानन्दधर्म इति सिद्ध्या प्रियत्वेनोपक्रान्तधर्मप्रियत्व-स्यानन्दे सत्त्वादानन्दस्य पर्यायत्वम् । तत्रैवेति प्रिये ब्रह्मण्यानन्दरूप एव भूतकर्तृत्वादिनियमनात् । सर्व एवेति भाष्यं विवरीतुमाहुः न चेति । आत्मान इति । आत्मानोऽवतारा जीवास्तु पृथगुक्ता व्युचरन्त्येवेति माध्वाः । तथात्रात्मजीवयोः पृथग्व्युचरणं श्रुतं तत्रास्त्येव । भाष्यं तु केवलात्मव्युचरणबोधिका श्रुतिस्तद्विषयमात्मपदं यत्रात्मजीवोभयविषयं तच्छ्रुतिसंग्राहकं च । अमृतत्वेति उपसंहारोक्तामृतत्वरूपम् । तत इति ब्रह्मणः 'फलमत उपपत्तेः' इति व्याससूत्रात् । अमृत आनन्द इति भाष्यादाहुः एष ह्येवेति । एष आकाश आनन्दः । आनन्दममृतं करोतीत्यर्थः । अत इति । तमेवेति भक्तिरसविषयं ब्रह्मणो रूपं तत्पदेनोक्तं प्रसिद्धं सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुत्या । नन्वत्राम्भस्यपारे भुवनस्य मध्ये इति महानारायणोपनिषदो रामानुजाचार्यभाष्येण रसो वै स इति श्रुत्यनुवर्तितरसपदीयानारायणोऽनात्मा तत्पदार्थ इति चेन्न पुरुषसूक्तोक्तसाकारब्रह्म तत्पदार्थः सान्निध्यात् । तस्य च दशरसरूपत्वं सर्वरस इति श्रुतेः विरुद्धसर्वधर्माश्रयत्वेनावन्तरूपत्वेन

सर्वव्यवहारस्य तन्मूलकत्वेन पूर्वमुक्तत्वात्। विषयस्पर्शो विज्ञातृत्वमपि तस्यैव।

भाष्यप्रकाशः।

उदाहृतजातीयैः श्रुतिसहस्रैस्तथा प्रतिपादनादिदमपि वाक्यं ब्रह्मपरमेवोचितमित्यर्थः। ननु सत्यमेवं, तथापि मात्रासंसर्गस्तस्य भवतीति विषयसंसर्गरूपेण लिङ्गेनात्र जीव एव वक्तव्योऽन्यथा तद्विरोधस्य दुर्वारत्वादित्यत आहुः सर्वेत्यादि। पूर्वमिति। जीवमुख्यप्राणलिङ्गसूत्रे। तथाच जीवस्य ब्रह्माश्रितत्वाज्जीवधर्मा ब्रह्मण्युच्यन्त इति विषयस्पर्शोऽप्युपपद्यते। न त्वेतावताऽत्र जीववाक्यत्वम्। विज्ञातृत्वं तु ब्रह्मधर्म एव। नान्योऽतोऽस्ति द्रष्टेत्यादिश्रुतेः।

रश्मिः।

च रसरूपत्वमेतस्य ज्ञानं तु भक्त्येत्युक्त्यान्यनिष्ठभक्तिरसविषयं च शास्त्रार्थनिरूपकद्वितीयस्कन्ध-नवमाध्यायोक्तमिति आनन्दाद्ध्येवेति कार्यं माहात्म्यज्ञानाय तेन सुबोधिन्युक्तस्य—

'माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः।
स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथा'॥

इति श्रुतिवाक्यद्वयेन सिद्धम्। आनन्दस्य प्रियशिरस्त्वादिकमानन्दमयाधिकरणे प्रपञ्चितम्। सर्व एवात्मान इत्यंशाः आत्मपदवाच्या जीवाः अंशो नानाव्यपदेशादिति सूत्रात्। एष ह्येवा-नन्दयातीति फलमानन्दस्य फलत्वात्। एतच्चतुष्टयादित्यर्थः। सजातीयैरिति सजातीयत्वं च भक्तिरसविषयब्रह्म-भक्तिजनकमाहात्म्य-जीव-फलेतिचतुष्टयप्रतिपादकत्वेन। श्रुतीति यथा अन्तस्त-द्धर्माधिकरणे छान्दोग्ये प्रथमप्रपाठके य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते इति स एष सर्वेभ्यः पाप्मभ्य उदित इति भक्तिजनकमाहात्म्यं, उदेति ह वै सर्वेभ्यः पाप्मभ्य इति फलम्। य एवं वेदेति जीवः। तमेव विदित्वेति समानम्। यथा तल्लिङ्गाधिकरणे छान्दोग्ये प्रथमप्रपाठके सर्वाणि ह इमानि भूतानि आकाशादेव समुत्पद्यन्त इति भक्तिजनकमाहात्म्यं परोवरीयसो ह लोकान् जयति इति फलं य एतदेवं विद्वान् परोवरीयांसमुद्गीथमुपास्ते इति जीवः। तमेव विदित्वेति समानम्। यथातिदेशाधिकरणे तत्रैव कतमा सा देवता प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमे-वाभिसंविशन्ति प्राणमुज्जिहते इति भक्तिजनकमाहात्म्यं तांश्चेदविद्वान् प्रस्तोष्यः इति जीवः, मूर्धा ते व्यपतिष्यदिति फलम्। लङ्। न त्वं प्रस्तोष्यसि न ते मूर्धा व्यपतिष्यतीत्यर्थः। तमेव विद्वानिति समानं इत्येवं श्रुतिसहस्रैरित्यर्थः। तैश्चासंदिग्धैः निःसंदिग्धत्वमिति भाष्यात् पूर्वं संदिग्धत्वेपि केषुचिच्छ्रुतिवाक्येषु न्याय(सूत्र)प्रापणानन्तरमसंदिग्धत्वमिति श्रुतिसहस्राणां निःसंदिग्धैरितिभाष्ये विशेषणं तथा भाष्ये ब्रह्मणः स्वरूपं तमेव विदित्वेति श्रुत्युक्तं भक्तिविषयं तं लोकवेदप्रसिद्धं पुरुषोत्तममिति पुरुषोत्तमरूपम्। ॐ स्वराट् जन्माद्यस्य यतोऽन्वयादितरतश्चेति वाक्यात्। इमानि भूतानीति कार्यं प्रसिद्धमंशा जीवा इति प्रसिद्धं चकारेण फलम्। तत्परं ब्रह्मपरम्। प्रकृते। तद्विरोधस्येति विषयवाचकमात्रापदवाच्यमात्रासंसर्गविरोधस्य। सर्वेत्यादीति सर्वो यो 'व्यवहारः सन्निपातो मनोमात्रेन्द्रियासुभिः' अहंममेति मतिः अहमित्यस्मत्प्रत्ययः ममेत्यस्मत्प्रत्ययगोचरसंबन्धिनो जीवजडधर्मास्ते तत्रैव 'जीवमुख्यप्राणलिङ्गादिति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्' इति सूत्रभाष्ये उद्दिष्टास्तद्विषयिणी मतिर्या सापि व्यवहारस्तस्य ब्रह्म मूलं परंपरा च यस्यार्थात्साक्षात्कारणं व्याख्यानात् स तन्मूलको व्यवहारःस्तत्वेनेत्यर्थः। अत्रेति मैत्रेयीब्राह्मणद्वये। विज्ञातृत्वमितिभाष्यं विवृण्वन्ति विज्ञातृत्वमिति। अत इति ब्रह्मणः। भाष्ये। तस्येति साकारब्रह्मणः। अत्र पक्षे तन्मूलकत्वेनेति भाष्यस्य तानि ब्रह्मणः स्वरूपकार्यांशफलानि मूलानि कारणानि यस्य व्यवहारस्य स

भाष्यप्रकाशः ।

स च धर्मस्तदंशत्वाज्जीवेऽपि भासत इति न तेनापि जीववाक्यत्वशङ्का । ननु यथात्र लयाधिकरणदृष्टान्तनिरूपणोत्तरं, स यथा सैन्धवघन इत्यादि भाष्यते, तथा पूर्वस्मिन् मैत्रेयीब्राह्मणे सर्वासामपामित्याद्युत्तरं, 'स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयेत नाहास्योद्ग्रहणायेव स्यात् यतो यतस्त्वाददीत लवणमेव' इति भाष्यते । खिल्यश्च शकल इति प्रज्ञांशस्तत्र प्रतीयत इतीहापि जीव एवास्त्वितिचेत् तत्राहुः एवं सतीत्यादि । सर्वस्यापि व्यवहारस्य ब्रह्ममूलकत्वे सिद्धे सति यदत्रोक्तं यत्र वा अन्यदिव स्यादित्यादिना कर्मकर्तृभावराहित्यं, तदपि, यद्वै तन्न पश्यतीत्यादिना जीवस्य स्वरूपतो धर्मतश्च नित्यत्वं प्रतिपाद्य विभक्तत्वनिषेधेनाविभागानुसंधानदशायां द्वितीयस्य विभक्तत्वेन दर्शनं निषिद्ध्य सर्वस्यात्मभावं च

रश्मिः ।

तथोक्तः तत्त्वेन । अयमर्थः । चत्वारोर्थाः प्रतिपाद्यन्त इति नवार्ष्यां वेदटीकायां कारिकासूपपादयिष्यामिः अतश्चतुर्भ्योर्थेभ्यः नातिरिक्तं किंचिदिति सर्वव्यवहारस्य तन्मूलकत्वम् । तेन पूर्वं सर्वत्र प्रसिद्धोपदेशादित्यधिकरणेऽनुगमाधिकरणेवेत्यर्थः । प्रलयेति स यथा सर्वासामपां समुद्र एकायनमित्यादिप्रलयाधिकरणदृष्टान्तः । इत्यादीति स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव स्यादेवं वा अरे इदं महद्भूतमनन्तमपारं कृत्स्नः प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्तीत्यन्ताः श्रुत्यर्थाः स्पष्टाः । कर्मकर्त्रीति यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येदित्यत्र तत्कर्तृकं कर्माणमिति कर्मकर्तृभावस्तद्राहित्यम् । केनेति करणभावराहित्यमुपलक्षणविधया ग्रहव्यम् । इतः पूर्वं प्रमेयमाहुः तदपि यद्वैतमिति यत् यतश्चक्षुस्तमात्मानं न पश्यतीत्यर्थः । स्वरूपतः इति स्वतः । धर्मेत इत्यविनाशित्वतः । यद्वै तन्न पश्यति पश्यन् वा इत्यादिना । विभक्तेति न तु तद्द्वितीयमस्ति ततोन्यद्विभक्तं यत्पश्येदिति विभक्तत्वनिषेधः । तत आत्मनोन्यद्विभक्तत्वं नास्तीत्यर्थात् अन्यदस्ति विभक्तं नास्तीत्यन्वयः । अविभागेति विभागाननुसंधानदशायामिति नोक्तम् । अविभक्तं च भूतेषु इत्यविभागस्य प्राबल्यात् । द्वितीयस्येति द्वितीयत्वेन द्वितीयं चक्षुरादीन्द्रियं तद्द्वितीयत्वेन वर्तते एव । सात्त्विकज्ञानाभावात् । अन्यत्वेन वर्तते तत एव अतो विभक्तमिव च स्थितमिति गीता तादृशविभक्तत्वेन दर्शनं निषिद्धं । न चान्यत्वेन द्वितीयत्वेन कुतो न दर्शनं निषिद्धमिति शङ्क्यम् । ब्रह्मणो द्वितीयत्वमिन्द्रियेषु अविभागानुसंधानदशायामस्ति अन्यत्वं च । यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येदित्यत्रात्मभावानन्तरं न किमप्यस्तीत्यनुक्त्वा केनेति करणनिषेधः कमिति कर्मनिषेधश्च ज्ञापयति श्रुतिश्चात्मैवेदमग्र आसीत्पुरुषविध इति । चिदाद्यादिन्द्रियेषु द्वितीयत्वमिन्द्रियेष्वन्यत्वं चास्ति सप्रतियोगित्वाल्लीलायाः 'अन्तरा भूतग्रामवत् स्वात्मनः' इति व्याससूत्राच्चात्र आत्मत्वेन साजात्ये 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इति फलाध्यायसूत्रात् । अतः प्रतियोगिसजातीयं द्वितीयम् । एकमेवाद्वितीयं ब्रह्मेति तु स्वगतद्वितीयव्यूहेतरविषयं गोपालतापिनीये कथं चतुर्भिरेको देवो भवेदिति प्रश्ने एकमेवेति श्रुतिप्रवृत्तेः । व्यूहानां परस्परं द्वितीयत्वमस्त्येव अन्तरा भूतेति सूत्रोक्तो भेदोपि योगमाया । मायाभिन्नमायासदृशी, अतम इति श्रुतौ तमोभिन्नं तमःसदृशमिति पर्युदासार्थकनञोऽङ्गीकारात् । न चान्यत्वद्वितीयत्वे इन्द्रियेषूक्ते इति वासुदेवादिव्यूहेषु कुत उक्ते इति वाच्यम् । तत्प्रयोगोपवेशोप्रायोऽनादिभक्तमनोरथेव फलाध्यायोक्तलीलास्थेनैवादनादिना भक्तमनोरथपूरणायेच्छाविषयीकृतः सकललीलासामग्रीरूप-

एवं सति सर्वमेव संगतं भवेत् । अतो वाक्यान्वयान्न जीवपरत्वं येन प्रकृतिवादः स्यादिति ॥ १९ ॥

भाष्यप्रकाशः ।

बोधयित्वोक्तम् । अतस्तदपि सर्वस्य जीवजडरूपस्य वस्तुतो ब्रह्मत्वादेव संगतं भवेत् । यच्च कृत्योक्तं प्रियत्वं जीवस्य संज्ञाभावादिकं च तदपि संगतं भवेत् । तत्रापि प्रियत्वरूपस्य प्रकृत-तावच्छेदकस्य महावाक्यशेषत्वादीनां च तुल्यत्वात् तस्यापि ब्रह्मण्येव तात्पर्यादविरुद्धं भवेत् । तत्र यत्, यत्र हि तत्र पश्यतीत्यादिवाक्यराहित्यं पाठभेदादिकं च तदपि मैत्रेय्या अधिकारपरी-क्षार्थम् । अत एव तत्र, उक्तानुशासनासीति नोक्तम् । पुनरुपदेशस्य चिकीर्षितत्वात् संन्यस्तमपि न इह तदुभयमुक्तमतोऽर्थभेदेऽपि तात्पर्यैक्यादैकार्थ्यम् । एतस्य तदर्थनिश्चायकत्वात्तस्यैव च प्राबल्यम् । तदेतद्धृदि कृत्वा सिद्धमाहुः अत इत्यादि ॥ १९ ॥

रश्मिः ।

संकर्षणव्यूहः तस्य तत्तल्लीलासामग्रीरूपेण भवने प्रद्युम्नव्यूहः अयं धर्मो यद्भक्तमनोरथपूरणं तदेव वासुदेवव्यूहरूपं वासुदेवस्य मोक्षत्वात् लोकवत्तु लीलाकैवल्यमिति व्याससूत्रात् । इति चतुर्व्यूहानुप-कम्यैकमेवाद्वितीयमिति श्रुतिसंनिवेशात् तथा चाविभागदशायां भेदरूपान्यत्वाथौ विभागजन्योऽद्वि-तीयत्वं जनयति तत्रान्यत्वं योगमाया 'योगमायामुपाश्रितः' इति वाक्यात् । विभागश्च विभक्तमिवेति वाक्योक्तः द्वितीयत्वं च स्वरूपे प्रतीतं विभागानुसंधानदशायां तु माया भिदारूपा औपाधिकं द्वितीयत्वं चेति । इदमात्मा न पश्यति विभागजन्ययोगमायाजन्यत्वात् । भक्तिमार्गे द्वितीयस्कन्धनवमाध्यायोक्ते नित्यलीलावादोक्ते चात्मनि । न तु विभक्तत्वमिति विभक्तमिव च स्थितमिति गीतायाः । किं च इदं सर्वं यदयमात्मेति ब्रह्म तं परादात् योऽन्यत्रात्मनो ब्रह्म वेदेत्युक्त्वोक्तम् । तदपि यत्र हि तत्र पश्यती-त्यादिभिरिन्द्रियाणां सर्वेषामात्मत्वं बोधितम् । अत्र सर्वपदं सर्वेषां नाम्नि शक्तम् । अतोपि द्वितीयत्वं भेदश्चातोपि द्वितीयत्वेनान्यत्वेन च दर्शनं न निषिद्धं तदेतदाहुः सर्वस्येति चक्षुरादेः । अग्रे सर्वत्र ततोन्यद्विभक्तं यच्चिभेत्ततोन्यद्विभक्तं यद्रसयेदित्येवमात्मत्वं बोधयित्वेत्यर्थः । किमनेन सिद्धमित्याकाङ्क्षायामाहुः अतस्तदपीति । सर्वपदात्सर्वस्य चान्यत्वद्वितीयत्वाभ्यां विनाऽ-निरूप्यत्वात् । तदपि कर्तृकर्मभावराहित्यमपीत्यर्थः । एवेति प्रकृतिव्युदासकं न प्रकृतित्वात् । संगतत्वमिति इदं सर्वं यदयमात्मेति श्रुतौ सर्वस्यात्माभेदोक्तेः । न च प्रकृत्यभेदोस्त्विति शङ्क्यम् । गौणश्चेन्नात्मशब्दादिति व्याससूत्रात् । अत इद"सर्वमित्यत्रात्मपदं न प्रकृतिप्रतिबिम्बवाचकं गौणत्वापत्तेः, एवमसंगतं भवेत् । ब्रह्मपरिग्रहगुणमाहुः यच्चेति आदिपदेन मात्रासंसर्गस्तस्य भवतीत्युक्तं मात्रासंसर्गः तदपि आश्रितत्वादिह तद्योगात् संगतं भवेत् । प्रकृतिपरिग्रहे तु सत्त्वरजस्तमसां साम्यावस्थायां प्रकृतावस्वच्छायां प्रतिबिम्बासंभवेन तद्धर्मानाश्रितत्वात् । उपक्रमस्था-प्रतिबिम्बसाधारण्यमाहुः तत्रापीति ब्रह्मण्यपि । तुल्यत्वं 'अतो मयि रतिं कुर्याद्देहादिर्यत्कृते प्रियः' इति । महावाक्यशेषत्वादयो अत्रैव पूर्वमुक्ताः । तत्रात्रोक्तप्रियस्य ब्रह्मणो हि प्रतिपादकस्य ब्राह्मणद्वयस्य महावाक्यवेदरूपस्य शेषत्वं तादर्थ्यं भक्तार्थब्रह्मप्रतिपादकत्वेन पूर्णतार्थत्वमिति यावत् । अन्यथा ज्ञानत्वेन प्रसिद्धस्वयंप्रकाशत्वप्रतिपादकत्वेन न्यूनताक्यनिग्रहस्थानापत्तेः । तत्रेति द्वितीये ब्राह्मणे । उपदेशस्येति षष्ठ इत्यर्थः । षष्ठस्य तात्पर्यानुक्तौ तात्पर्यमाहुः एतस्येति तेन

प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥

नियतधर्मवादिनामपि मतेन प्रकृते सिद्धान्तं वक्तुं पक्षान्तराण्याह । तत्र ब्रह्मवादैकदेशिवादाः सन्ति । तत्र जीवो नाम स्वस्य भोगनिष्पत्त्यर्थं स्वांशो भगवता कृतो विस्फुलिङ्गवदित्याश्मरथ्यो मन्यते । अनादिसिद्ध एव जीवश्चै-तन्यमात्रं शरीरादिसंघाते प्रविष्ट इति चिति तन्मात्रेण प्रवेशो च मोक्ष इति च औडुलोमिराचार्यः । काशकृत्स्नस्तु आसक्त्या विषयभोक्तृरूपं भगवत एव जीव इति । तेऽपि स्वमतानुसारेणात्र परिहरन्ति । तत्र पुत्रादिप्रियसहवचनाज्जी-वप्रकरणमेवैतदित्याशङ्क्य जीवोपक्रमस्यान्यत् प्रयोजनमित्याह । प्रतिज्ञा-सिद्धेरिति षष्ठी । तस्यां लिङ्गमंशत्वाज्जीवस्य तदभेदेनोपक्रमः प्रतिज्ञासिद्धेर्लिङ्गं भवति । एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञा ।

---

भाष्यप्रकाशः ।

प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥ सूत्राण्यवतारयन्ति नियतेत्यादि । अत्रोक्तं प्रियत्वं जीवधर्म एवेतिवादिनां मतेन मैत्रेयीब्राह्मणे प्रकृतिवादनिरासरूपं सिद्धान्तं वक्तुं संमतत्वे पक्षान्तराण्याहेत्यर्थः । अत्र आश्मरथ्यमते श्रुतिर्भाष्य एव सूचिता । औडुलोमिमते तु,

'यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं यन्ति नामरूपे विहाय ।
तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' ॥

इति मुण्डके श्रुतिर्मूलं बोध्यम् । नामरूपेति स्त्रीये नामरूपे । नदीदृष्टान्ताच्च भिन्नत्वं शरीरे प्रवेशश्च नामरूपव्याकरणश्रुत्या । चैतन्यात्मकत्वादिकं तु भाष्य एव स्फुटम् । काशकृत्स्न-मतेपि व्याकरणश्रुतिः 'सर्वाणि रूपाणि विचित्य धीरः नामानि कृत्वाऽभिवदन्यदास्ते' इति पुरुषसूक्त-श्रुतिश्च मूले इति बोध्यम् । पुत्रादिप्रियसहवचनेनावित्यादि पुत्रादिरूपा ये लौकिकाः प्रियास्तैः सह वचनादत्रात्मनोऽपि लौकिकमेव प्रियत्वं प्रतीयत इति जीव एवात्रात्मपदेन परामृश्यते । अतो जीवप्रकरणमेवेदमित्याशङ्क्येत्यर्थः । तदभेदेनेति ब्रह्माभेदेन । एकविज्ञानेन सर्वविज्ञानमिति

रश्मिः ।

'अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत्' ॥

इति व्यापकजीवो जीवन्मुक्तोपि आध्यात्मिकादित्रितयविदाश्रयः प्रकृतिरपि न समवायिनी किं तु प्रियत्वरूपब्रह्मधर्माविष्टो जीव इति भगवानेवाश्रयः इति सिद्धम् ॥ १९ ॥

प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥ एवेति निराकारे आश्मरथ्योररीकृते द्वितीय-पादे प्रियत्वं बाधितम् । नियतो जीवधर्म इत्येवकारः । भाष्ये । सन्तीति कृष्णद्वैपायनमता-देकदेशविदः परे । 'वदन्ति ते यथाप्राज्ञं न विरोधः कथंचन' इतिपाठात् । स्वस्येति निराकारस्य द्वितीयपादे आश्मरथ्यमतकथने उक्तत्वात् । व्यासमते स्वसिद्धान्ते तु स्वस्य 'अनश्नन्नन्योभिचाकशीति' इति श्रुतेर्जीवस्यैव भोगः । भगवतेति निराकारेणैव साकारेणेति वार्थः । तदभेदेनेति ब्र जीवस्यैवोपक्रम इति शङ्कम् । गौणमुख्यन्यायबाधात् प्रतिज्ञासिद्धेश्च । प्रकृते । जीवात्मकथन-

तस्यैवाग्रे व्युत्पाद्यमानत्वात् तस्या एतत् साधकम्। यथा जीवो भगवानेवं जड इति। एवमाश्मरथ्यो मन्यते। श्रोतव्यादिविषयस्तु भगवानेव। तस्मान्नियतधर्मजीववादेऽपि न जीवोपक्रमो दोषः॥ २०॥

## उत्क्रमिष्यत एवंभावादित्यौडुलोमिः॥ २१॥

लिङ्गमित्यनुवर्तते। यदत्र जीवोपक्रमेण भगवतः श्रवणादिकमुक्तं तत् संसारभावादुत्क्रमिष्यतो जीवस्य लिङ्गम्। मुक्तौ जीवो भगवानेव भविष्यतीति ज्ञापकम्। अन्यथा सैव कथममृता भवेत्। इतिशब्दो हेतौ। स्त्रिया विश्वासार्थं

---

भाष्यप्रकाशः।

मैत्रेय्यात्मनि वा अरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितमिति वाक्योक्तं तत्। प्रतिज्ञासिद्धेरिदं कथं लिङ्गमित्यत आहुः तस्यैवेत्यादि। तस्यैवेति सर्वत्वस्यैव। तस्या एतत्साधकमिति। उपक्रमे जीवात्मकथनं प्रतिज्ञायाः साधकम्। अन्यथा एतद्व्युत्पादनकोटौ जीवस्या[स्फुटतयाऽ] कथनाज्जीवज्ञानाभावे प्रतिज्ञा बाधिता स्यात्। कृते तूपक्रम उल्लेखे सोऽपि ब्रह्मक्षत्राद्यभिमानितया तत्र निविशेदत स्तथेत्यर्थः। [यथा जडे ब्रह्मकार्यत्वाद्ब्रह्मत्वोपचार एवं जीवेपि ब्रह्मांशत्वा ब्रह्मोब्रह्मत्वोपचार इत्यर्थः।] तथा सत्यस्मिन् मते प्रतिज्ञैवास्य ब्रह्मणः प्रकरणत्वनियामिकेति ज्ञेयम्। एवमेवाग्रिमे मतद्वयेऽपि॥ २०॥

उत्क्रमिष्यत एवंभावादित्यौडुलोमिः॥ २१॥ एवंभावादित्यस्य विवरणं संसारभावादिति। एवं कथनस्य मुक्तिप्राप्तिलिङ्गत्वे किं गमकमित्यत आहुः अन्यथेत्यादि। चिद्रूपे ब्रह्मणि जीवस्य प्रवेशो हि तन्मते मोक्षः। ब्रह्म तु चिद्रूपं व्यापकमितीदानीमपि जीवस्तत्र प्रविष्टोऽस्त्येव। परं संघातान्तरायेण। यथा कुशूलस्थं वस्तु गृहे। तद् यदा ततो बहिः

रश्मिः।

मिति तदभेदेनेत्येव। अन्यथेति जीवात्मकथनत्वे प्रकारे। बाधितेति सर्वविज्ञानाभावप्रसक्तेरिति भावः। उल्लेख इति आपाततः। प्रियपदसमभिव्याहारेण जीवस्योल्लेखे सोपि आत्मापि पूर्वोक्तब्रह्मक्षत्राद्यभिमानतयेत्यादिः। तथेति ब्रह्माभेदेन जीवात्मकथनत्वम्। अत्र पाशेन विरोध इत्युक्तं तत्तट्टीकाविषयकम्। प्राज्ञपदात्र तुरीयविषयकं च। किं च आचार्यवान् पुरुषो वेदेति छान्दोग्यादेकदेशिमतानि तत्तद्भाष्यनियतानि। एवं च तत्तदर्थानां पदस्यान्यस्य संनिधेः कारणाद् बोधे श्रुतिसिद्धार्थबोधे बाधकाभावः। यथेह सहकारतरौ मधुरं पिको रौति अत्र पिकपदशक्तिग्रहः। तथात्र वाङ्मयं भाष्यमिति। सिद्धमाहुः तथा सतीति। एवमेवेति यथात्वेपि प्रतिज्ञाया विषयवाक्योक्ताया अन्वयो नोक्त इति तत्स्मारणम्॥ २०॥

उत्क्रमिष्यत एवंभावादित्यौडुलोमिः॥ २१॥ संसारभावादिति। एवमिति शब्देन संसारबोधः स चेत्थम्। संसारिणो विषयवाक्ये मात्रासंसर्गेस्त्वस्य भवतीति पूर्वमुक्तत्वेन यत्र वा अन्यदिव स्यादित्यादिना यत्रेति संसार इत्यर्थात्। यत्र त्वस्य सर्वमात्मैवाभूत् इत्यत्र यत्रेति मोक्षे ज्ञाने इत्यर्थात्। तत्रैवंभावादुत्क्रमिष्यतो जीवस्य लिङ्गमित्येवंभावात् इत्यस्य संसारभावादित्यर्थः। एवमित्यस्य पूर्वोक्तादित्यर्थात्। एवंभावात्पूर्वोक्तभावादित्यर्थः। पूर्वोक्तः संसारः। भाष्ये। जीवस्येत्यस्याज्ञादिसिद्धस्येत्यर्थः। औडुलोमिमते तथेति। अनादिसिद्धत्वं तु आर्त्विज्यमिति सूत्रे

गौणप्रियवैराग्यार्थं च जीवोपक्रमः कर्तव्य एवेति औडुलोमिराचार्यो मन्यते । तस्माद् भिन्नजीवपक्षेऽपि नात्र दूषणम् ॥ २१ ॥

अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥

लिङ्गमित्येव । भगवत एवावस्था जीव इति । अतः संसारदशायामपि जीवो ब्रह्मेति नात्रोत्क्रमणमुपचारो वा । अन्यथा कथमात्मनस्तु कामाय सर्वं

भाष्यप्रकाशः ।

प्रक्षिप्यते तदा गृहस्थं भवति । तथा जीवोऽपि संघाताद् बहिर्भूय यदा साक्षाच्चित्संबद्धः स्यात् तदा मुच्येतेति संघाताद् भिन्नत्वबोधनार्थमेव जीवोपक्रमः । सा हि मोक्षेच्छुर्विद्यां पृच्छति । तद् यदि तस्यै मोक्षयोग्यं जीवस्वरूपं न ज्ञापयेत् सैव कथममृता भवेत् । अतो, येनाहं नामृता स्यामित्यादिकं तद्वाक्यमेवैवं कथनस्य मुक्तिलिङ्गत्वे गमकमित्यर्थः । तदेतदाहुः इतिशब्द इत्यादिना । दूषणमिति प्रकृतिवादापत्तिरूपं दूषणम् ॥ २१ ॥

अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥ जीवस्य ब्रह्मावस्थाविशेषत्वबोधनार्थं जीवोपक्रम इत्यत्र किं गमकमित्यपेक्षायामाहुः अन्यथेत्यादि । यदि हि जीवस्य ब्रह्मावस्थाविशेषत्वमत्र

रश्मिः ।

ऋतौ यजतीति ऋत्विगिति व्युत्पत्त्यार्त्विज्यमनादीति । मुक्ताविति ज्ञाने । 'आर्त्विज्यमित्यौडुलोमिः तस्मै परिक्रीयते' इति तृतीयाध्यायस्य चतुर्थचरणे 'चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः'इति चतुर्थेध्याये चतुर्थपादे । ज्ञापकमिति एतेन प्रतिज्ञापि व्याख्याता । प्रकृते । सैवेति एवकारेण कात्यायन्या व्यवच्छेदः याज्ञवल्क्यस्य द्वे भार्ये बभूवतुः । अमृतेति संघाताद्भिन्न आत्मा मैत्रेय्या अमृता मुक्तिर्हित्वान्यथारूपमिति वाक्यात् । नामृतेति अत्र ना पुमान् भगवत्सेवानुकूलत्ववत्यहमिति सिद्धान्ते वर्णागमोन्यत्र नकारो वर्णः । यद्वा न अमृता स्याम् किं तु शरीरे मृतेऽमृता स्यामित्यर्थः । टीकायां तु येनाहममृता न स्यां तेन कर्मणा किं कुर्याम् किं तु यदेवामृतत्वसाधनं मे मह्यं भूयुपदिशेत्यर्थः । मुक्तीति । लिङ्गत्वं हेतुत्वम् । भाष्ये । स्त्रिया इति 'स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा' इति वाक्ये विश्वासात् त्रयी न श्रुतिगोचरेत्यर्थात् । गौणेति स्वोत्कृष्टत्वज्ञानस्य स्वस्मिन् वैराग्यजनकत्वनियमेन गौणमुख्यन्यायमनादृत्य गौणेत्यादिः । भिन्नेति संघाताद्भिन्नेत्यर्थः । अनादिसिद्धजीव इति ॥ २१ ॥

अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥ अवस्थितिरवस्था संसारावस्था इति यावत् । भाष्ये । अवस्थितेरवस्थाया लिङ्गं हेतुः विषयवाक्ये उपसंहारेण प्रकारेणेति इतिशब्दार्थं इत्याहुः लिङ्गमित्येवेति । कस्यावस्थेत्याकाङ्क्षायामाहुः भगवत एवेति । प्रतिज्ञासूत्राद्ब्रह्मेत्यनुवृत्त्या भगवतः एवकारेण मायाव्युदासः । अवस्थेति मात्रासंसर्गस्त्वस्य भवतीत्युक्त्वाऽऽसक्त्याविषयभोक्तृरूपावस्था जीवः । पूर्वसूत्रे दोषमाहुः अत इति उपक्रमोपसंहाराभ्यामित्यर्थः । नात्रोत्क्रमणमिति विषयवाक्ये यत्र त्वस्य सर्वमात्मैवेत्यादिना ज्ञानोक्तौ उत्क्रमणं नोक्तमत एव न ज्ञानोपचारः

प्रियं भवतीति । न ह्यन्यस्य सर्वं प्रियं भवति । मोक्षस्तु ज्ञानमेव । उत्तरत्र कर्तव्याभावात् । अवस्थया व्यवसायात् सिद्धान्ताद्विशेषः । इतिशब्देनैतावदरे खल्वमृतत्वमित्युपसंहारो हेतुरस्य पक्षस्येति काशकृत्स्नो मन्यते । तस्माज्जीवोपक्रमो, भगवत एवावस्थाविशेषो जीव इत्यस्य पक्षस्य लिङ्गम् । तस्मान्मैत्रेयीब्राह्मणेनापि जीवद्वारा प्रकृतिकारणवादासिद्धिरिति सिद्धम् ॥ २२ ॥

इति प्रथमाध्याये चतुर्थपादे सप्तमं वाक्यान्वयाधिकरणम् ॥ ७ ॥

---

भाष्यप्रकाशः ।

बोधनीयं न स्यात् तदा, आत्मनस्तु कामाय सर्वं प्रियं भवतीति सर्वभोक्तृत्वमात्मनो न वदेत् । ब्रह्मातिरिक्तस्य सर्वभोक्तृत्वाभावेन सर्वस्मिन् प्रियत्वाभावात् । अतः सर्वभोक्तर्येकस्मिन्नात्मनि वक्तव्ये प्रतिनियततत्तद्विषयभोक्तारं तदवस्थाविशेषमुपक्रमे वदति । तथाच सर्वप्रियत्ववाक्यमेव तद्गमकमित्यर्थः । येनाहं नामृता स्यामिति मोक्षार्थं प्रश्नात् तत्रानुत्तरे तदपूर्तिरित्याशङ्कायां तन्मतेन समाधिमाहुः मोक्ष इत्यादि । सिद्धान्ताद् विशेष इति सिद्धान्ते[तूपपत्तिपक्षादरात्सर्वं नित्यं यथास्थितमेव ब्रह्मरूपं तेन कालकृतविशेषरूपयाऽवस्थया न तादृशरूपव्यवसायः । अत्र त्ववस्थया व्यवसाय इति सिद्धान्ताद्विशेष इत्यर्थः ]त्वंशत्वे व्यवसाय इति तथा । अस्य पक्षस्येति ज्ञानमेव मोक्ष इति पक्षस्य । शेषमतिरोहितार्थम् ॥ २२ ॥

इति सप्तमाधिकरणम् ॥ ७ ॥

रश्मिः ।

जीवे । प्रकृते । न ह्यन्यस्येति भाष्यं विवृण्वन्ति ब्रह्मातीति । प्रियत्वेति भोक्तृत्वनिबन्धनप्रियत्वाभावात् । भाष्ये । अस्य पक्षस्यापूर्वत्वाद्धेतुमाहुः इतिशब्देनेति । हेतुरिति । इति शब्दार्थे तृतीयार्थः । प्रकृते । ज्ञानमेवेति श्रुतावेतावत्पदेन पूर्वोक्तज्ञानमनूद्यामृतत्वविधानात् । 'आत्मा वा अरे द्रष्टव्यः' इति ब्रह्ममात्रविषयकं तत् । इति पक्षस्येति इत्येवं सर्वस्य काशकृत्स्नपक्षस्य आश्मरथ्यौडुलोमिमतयोः सूत्रान्तरसत्त्वात् । अतिरोहितेति भाष्ये । काशकृत्स्नमतसिद्धमाहुः तस्मादिति उपसंहारस्यार्थनिर्णायकत्वात् । अधिकरणसिद्धमर्थमाहुः तस्मादिति । ब्रह्मैकदेशिवादात् । जीवद्वारेति 'अपरेयमितस्त्वन्यां' 'जीवभूताम्' इति गीतायाः काशकृत्स्नमते त्वियं शक्तिः संसारदशापन्नापि इत्येवमतिरोहितार्थम् । शंकराचार्यमते पूर्वसूत्र एव पूर्वपक्षः सिद्धान्तस्त्वृषिमतभेदात् । माध्वास्त्वत्राध्यायसमाप्तिवाक्यशब्दाक्षराणां ब्रह्मणि समन्वयमाहुः । रामानुजाचार्यास्तु सांख्यात्मा वा परमात्मा वेति संशयमाहुः । भास्कराचार्यास्तु शंकराचार्यवत् पूर्वसूत्रं व्याख्याय वाक्यं नामैकार्थप्रतिपादनपरं विभज्यमानमाकाङ्क्षावत्पदं पदजातमुच्यत इति वाक्यलक्षणमुक्त्वा त्रिसूत्र्यां भेदाभेदावुक्त्वा प्रतिपादिता भेदे भेदोपीत्याहुः भेदोप्यस्ति यतः संसारी न कदाचिन्मुक्तपूर्वः । तस्य मुक्त्यर्थं विद्योपदेशोर्थवानिति त देतन्नातिविरुद्धम् । माध्वोक्तवाक्यान्वयः श्रुतिषु स्मृतिषु च स्पष्ट इति न सूत्रविषयवाक्यत्वमर्हतीति भाष्ये प्रकाशे नानूदितानि मतानीति ज्ञेयम् । रामानुजभाष्ये तु काशकृत्स्नमतेन व्याससिद्धान्तसमाप्तिस्तदेकदेशिमतवाक्यं विरुणद्धि । भास्करभाष्येपि 'आसीज्ज्ञानमयो ह्यर्थः' इत्यस्य विरोधः । जीवानामपि सत्त्वात् ॥ २२ ॥

इति सप्तममधिकरणम् ॥ ७ ॥

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥ (१।४।८)

**एवं प्रकृतिकारणवादनिराकरणेन ब्रह्मण एव कारणत्वे सिद्धेऽप्यर्धजरतीयतयोभयस्थापनपक्षं परिहर्तुमधिकरणमारभते ।**

---

भाष्यप्रकाशः ।

**प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥** अधिकरणप्रयोजनमाहुः **एवं प्रकृतीत्यादि** । आनुमानिकाधिकरणमारभ्य वाक्यान्वयाधिकरणान्तग्रन्थे आद्यैस्त्रिभिः सांख्यमतस्याशब्दत्वसाधनात् प्रकृतिकारणवादनिराकरणेन, यथाव्यपदिष्टाद्यधिकरणत्रये श्रुतिविप्रतिषेधपरिहाराद्, वाक्यान्वयाधिकरणे जीवब्रह्मवादनिराकरणात् पुरुषच्छायायुक्तप्रकृतिकारणवादनिराकरणेन ब्रह्मण एव जगत्कारणत्वे सिद्धेऽपि ब्रह्मणो निर्विकारत्वात् कार्ये त्रिगुणात्मकत्वादिदर्शनाच्च ब्रह्मणो निमित्तत्वं, स्मृतिसिद्धस्य प्रधानस्य समवायित्वमित्यभ्युपेयम् । यदि च श्रौत एवाग्रहस्तदाऽपि श्वेताश्वतरादावजावाक्यस्थस्याजापदस्य छागीशरीराभिधायकत्वाच्छागीशरीरां यथा तदधिष्ठातृशरीरात्मशक्तिविषया नानाप्रजाजनकं, तथा सांख्योक्तं प्रधानमपीश्वरोपाधिभूतं सन्नानाविधप्रजाजनकमित्येतमर्थं रूपकातिशयोक्त्या बोधयितुं शक्नोति । यदि चेदं नोपेयते तदापि,

रश्मिः ।

**प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥** सांख्यराद्धान्तीयप्रकृतिनिराकरणात् स्मृताया गीतोक्तायाः 'अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूताम्' इति जीवरूपायाः उपेक्षानर्हत्वात् प्रसङ्गसंगत्या निरूपणमित्याहुः **वाक्यान्वयाधिकरण इति** । **जीवब्रह्मेति** ।

'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा' ॥

इति गीतायामष्टसु प्रकृतिपदम् । कापिलसांख्यप्रवचनसूत्रवृत्तौ विषयाध्याये 'सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः प्रकृतेर्महान् महतोहंकारात् पञ्चतन्मात्राण्युभयमिन्द्रियं स्थूलभूतानि पुरुष इति पञ्चविंशतिगुणाः' इति सूत्रम् । तत्र पुरुषो जीवः । गीतायाम्

'अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत्' ॥

इति नवमी प्रकृतिः । स जीवब्रह्मवादः अंशत्वाज्जीवस्य तदभेदेनोपक्रम्य मैत्रेयीब्राह्मणे तस्य निराकरणात् । **पुरुषच्छायेति** पुरुषो जीवः सांख्योक्तः । छायाऽर्कयोषिद् युक्ता प्रकृतिर्जगत्कर्त्री व्यामोहिका च ताभ्यां युक्तो यः प्रकृतिकारणवादः तस्य निराकरणेन । यद्वा । पुरुषो महत्स्रष्टा तस्य छाया प्रतिबिम्बो जीवः तेन युक्तो यः प्रकृतिकारणवादस्तस्य निराकरणेन । **अर्धजरतीयतयेत्यादि** भाष्यं विशदयन्ति **ब्रह्मणो निर्विकारत्वादिति** । एवमपि चिन्तामण्यादिवदविकृतं ब्रह्म कारणमिति चेत्तत्राह **कार्ये त्रिगुणेति** । **स्मृतीति** सांख्यस्मृतिसिद्धस्य 'प्रधानाज्जगज्जायत इति' इति सूत्रं स्मृतिः । **अभ्युपेयमिति** कार्ये त्रिगुणात्मकत्वायाभ्युपेयम् । **अजेति** अजामेकां लोहितेत्यादिवाक्यस्थस्य । **छागेति** कल्पनोपदेशसूत्रभाष्ये व्युत्पादितम् । छागीति पाठे जातित्वं विवक्ष्य यथाकथंचित्प्रयोगः । छागा शरीराधिष्ठाता जीवः तस्य शरीरात्मकशक्तिस्तत्कर्मार्जितत्वात् । अतस्तद्विषया । **रूपकेति**

भाष्यप्रकाशः ।

'यस्तन्तुनाभ इव तन्तुभिः प्रधानजैः स्वभावतो देव एकः समावृणोति स नो दधातु ब्रह्माऽव्ययम्' इति तत्रत्यवाक्यान्तरे तन्तुनाभशरीरस्य दृष्टान्तितत्वेन तन्तूनां प्रधानजत्वकथनेन च ईश्वरशरीरात्मकप्रधानांशैः शरीरैर्जीवानावृणोतीति सिद्ध्यति । अत एव, 'कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः' इत्यपि क्वचिदुच्यते तेन शुद्धसत्त्वात्मिका ईश्वरोपाधिः । रजस्तमोमिश्रमलिनसत्त्वात्मिका जीवोपाधिरित्युपाधिविभागोऽपि युज्यते । अत ईश्वराऽधिष्ठिता तच्छरीरभूता प्रकृतिरपि कारणम् । नच सा प्रथमकार्यरूपेति युक्तम् । चूलिकोपनिषदि,

'विकारजननीं मायामष्टरूपामजां ध्रुवाम् ।
ध्यायतेऽध्यासितां तेन तन्यते प्रेर्यते पुनः ॥
सूयते पुरुषार्थाश्च तेनैवाधिष्ठिता जगत् ।
गौरनाद्यन्तवती जनित्री भूतभाविनी' ॥ इति ।

श्रावणेन तद्विरोधात् । नच माया काचिदतिरिक्तैवेति वाच्यम् । विकारजननीमित्यनेन षोडशविकारजनकत्वस्य, अष्टरूपामित्यनेन प्रकृतिप्रकृतिविकृतिभेदेनाष्टरूपत्वस्य प्रकृतिधर्मस्य तस्यां श्रावणेन, श्वेताश्वतरे 'मायां तु प्रकृतिं विद्यात्' इति श्रावणेन, गीतायामपि, 'दैवी ह्येषा गुणमयी मम माया' इति, 'सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः' इति स्मरणेन च मायाशब्दस्य पर्यायतायामेव पर्यवसानात् । श्वेताश्वतरे, 'कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम्' इति सर्वान् वादानपास्य, 'ते ध्यानयोगमनुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्' इति परमेश्वरशक्तेः स्वगुणनिगूढत्वश्रावणान्मैत्रायणीयोपनिषदि च, 'तमो वा इदमग्र आसीदेकं तत्परे स्यात् तत्परेणेरितं विषमत्वं प्रयात्येतद्रूपं वै रजस्तद्रजः खल्वीरितं विषमत्वं प्रयात्येतद्वै सत्त्वस्य रूपम्' इति श्रावणाद् गुणा अपि सत्त्वादय एव ग्राह्याः । अतः पूर्वोक्तन्यायैः सिद्धेऽपि ब्रह्मणः कारणत्वे शरीराख्यशक्तिरूपां तां विना कारणतानिर्वाहाभावादर्धजरतीयतया मायायाः समवायित्वं, ब्रह्मणो निमित्तत्वमित्युभयकारणत्वस्थापनपक्षपरिहारः प्रयोजनमित्यर्थः । एवं सति श्रुत्युक्तस्याविशेषात् समवायिकारणं, प्रकृतिर्निमित्तकारणं ब्रह्म ? उत सर्वविधं कारणं

रश्मिः ।

'रूपकातिशयोक्तिः स्यान्निगीर्णाध्यवसानतः ।
पश्य नीलोत्पलद्वन्द्वान्निःसरन्ति शिताः शराः' ॥ इति ।

ननूक्तमजापदं सृष्टिलक्षकमिति चेत्तत्राहुः यदि चेदमिति । क्वचिदिति तत्त्वानुसंधानग्रन्थादावुच्यते । अष्टरूपां गीतोक्ताम् । अध्यासितामिति ब्रह्मणाऽध्यासाख्यसंबन्धेन संबद्धाम् । अथ वा अन्यसंबन्धेन संबद्धाम् । गौरिति गौरनादवती सा त्विति पाठस्त्वन्यतः । प्रकृतीति एका प्रकृतिः सप्तप्रकृतिविकृतयः । इति श्रावणेनेति अभेदश्रावणेन । न्यायाः सूत्राणि । कारणतेति कुलालादौ तथादर्शनादिति भावः । अर्धजरतीयेति समन्वये सति जीवपरमात्मा ब्रह्म तल्लक्षणं जगदभिन्ननिमित्तोपादानत्वमत्रार्धजरतीयम् । अर्धनारीश्वरवत् । निमित्तं ब्रह्म समवायी

ननु ब्रह्मकारणतां न निराकुर्मः श्रुतिसिद्धत्वात् । किंतु समवायिकारणं प्रकृतिरेव । कार्यकारणयोर्वैलक्षण्यात् । समवायिकारणानुरोधि हि कार्यम् । अन्यत् सर्वं भगवानस्तु । अपेक्ष्यते च समवायिनिमित्तयोर्भेदः । कर्मण्यपि श्रुतिस्मृतिसमवायो धर्मे । एवं ब्रह्मवादेऽपि स्मृत्युक्ता प्रकृतिः समवायिकारणम् ।

भाष्यप्रकाशः ।

ब्रह्मेति संशयः । स च प्रयोजनकथनादर्थादेव लभ्यते इत्यतो नोक्तः । पूर्वपक्षमाहुः नन्वित्यादि । कार्यकारणयोर्वैलक्षण्यं व्युत्पादयति समवायीत्यादि । तथाच कार्येषु क्वचिद् रजसः, क्वचित् तमसः क्वचित् त्रयाणामपि गुणानां प्रकाशप्रवृत्तिनियमादिभिरनुवृत्तिदर्शनाद्धेयत्वतुच्छत्वादेर्दर्शनाच्च कार्यमात्रं प्रकृत्यनुरोधीत्यतः प्रकृतिरेव समवायिकारणमित्यर्थः । ननु सत्तायाः सर्वत्रानुवृत्तिदर्शनाद् ब्रह्मणोऽपि समवायित्वमस्तु, किं बाधकमित्यत आह अपेक्ष्यते चेत्यादि । यदि हि भगवतः समवायित्वं स्यात् तद्गुणा अपहतपाप्मत्वादयः स्वरूपधर्माः सच्चिदानन्दाश्चानुवर्तेरन् । नचात्र भगवत्सत्तानुवर्तते । प्रतीयमानायास्तस्या भावविकारत्वेन ब्रह्मधर्मत्वाभावात् । किंच । यदि भगवानेव समवायी निमित्तं च स्यात् सर्वं कार्यं सर्वदा स्यात् । अपेक्षितस्य सामग्रीमात्रस्य भगवद्रूपतया सत्त्वात् । नचेयं लौकिकी युक्तिर्न वैदिकैरादरणीयेति वाच्यम् । यतः कर्मकाण्डेऽपि श्रुतिस्मृतिसमवायो धर्मेऽङ्गीक्रियते । असदादिकृतेश्च निमित्तत्वम् । एवं ब्रह्मवादेऽपि स्मृत्युक्ता प्रकृतिः समवायिकारणं, ब्रह्म निमित्तकारणमित्येवाङ्गीकार्यम् । न चैवं तस्याः श्रौतत्वहानिः । यथा हि ब्रह्मणोऽनुमानगम्यत्वेऽपि मुख्यतया उपनिषद एव गमयन्तीत्यौपनिषदत्वमेवं प्रकृतिं मुख्यतया स्मृतिरनुमानं च गमयतीति तस्या आनुमानिकत्वं स्मार्तत्वं चाभिलप्यत इति तावन्मात्रेण तद्धानेरभावादित्येवं प्राप्ते इत्यर्थः ।

रश्मिः ।

जीव इति । इत्युभयकारणव्यवस्थापनपक्षो मैत्रेयीब्राह्मणे तस्य परिहारः । प्रयोजनेति । तदुक्तं पूर्वपक्षमिति । पूर्वोक्तसंशयप्रकारं स्फुटं सूचयन्तः पूर्वपक्षमाहुरित्यर्थः । भाष्ये । न निराकुर्म इति । मैत्रेयीब्राह्मणविचारेण न निराकुर्म इति । किंतु समन्वयसूत्रे तेन ब्राह्मणेनार्धजरतीयमुच्यते इत्यर्थः । किंतु समवायीति । अत्र सूत्रे पादार्थमहिम्ना एकसंबन्धिज्ञानमपरसंबन्धि स्मारकमिति 'प्रधानाज्जगज्जायत इति' इति सूत्रस्मरणात् । प्रकृतिः समावायिनी चेति स्फूर्त्या समन्वयसूत्रे मैत्रेयीब्राह्मणेन किंतु समवायिकारणं प्रकृतिरेवेत्यर्थः । यद्यपि 'न समवायोस्ति प्रमाणाभावात्' इति सांख्यसूत्रं तथापि प्रसिद्धाभिप्रायेण तदुक्तिरतो न व्याससूत्रविरोधः । प्रकृते । प्रकाशेत्यादि । तथा च सूत्रं 'प्रकृतेराद्योपादानतामन्येषां कार्यत्वश्रुतेः' 'प्रकाशस्तत्सिद्धौ कर्मकर्तृत्वविरोधः' । तत्सिद्धौ जीवसिद्धौ । कर्म जीवः कर्त्री प्रकृतिः प्रवृत्ती रजसानियमश्चादिनाऽप्रकाशस्तमःकार्यम् । अनुवर्तेरन्निति ब्रह्मवादाननुसंधायकोक्तिरतो न समन्वयाधिकरणविरोधः । जायतेऽस्ति विपरिणमति वर्धतेऽपक्षीयते नश्यतीति षड् भावविकाराः प्रकृतिधर्माः सांख्ये । कर्मण्यपीति भाष्यं विवृण्वन्ति न चेयमिति कर्मणीत्यस्यार्थमाह कर्मकाण्ड इति । श्रुतिस्मृती विधिपादे श्रुतयः स्मृतिपादे स्मृतयः इति । समवायो नित्यसंबन्धः । धर्मे नित्यधर्मव्यञ्जकक्रियारूपे धर्मे । एवं ब्रह्मेति भाष्यं विवृण्वन्ति एवं ब्रह्मेति । श्रौतत्वेति प्रधानाज्जगज्जायते इति श्रौतत्वं चूलिकोपनिषदाद्युक्तं च

१. विपरिणमते ।

ब्रह्म निमित्तकारणमित्येवं प्राप्ते उच्यते । प्रकृतिश्च निमित्तकारणं, समवायिकारणं च ब्रह्मैव । प्रकृतिपदप्रयोगात् स्मृतिसिद्धतृतीयसर्वधर्मोपदेशः । चकाराद् यत्रेत्यादिसर्वसंग्रहः । कुत एतत् ? । प्रतिज्ञादृष्टान्ताऽनुपरोधात् ।

भाष्यप्रकाशः ।

अत्र सिद्धान्तं वक्तुं सूत्रं व्याकुर्वन्ति प्रकृतिश्चेत्यादि । ईक्षतिना ईक्षत्यादिभिर्वा कर्तृत्वेन ब्रह्म सिद्धमेवेति न तत्रेदानीं शङ्का । अतः परं लोकन्यायेन कर्तुरुपादानोपकरणसापेक्षत्वादिह तदाकाङ्क्षायां पूर्वपक्षिणा प्रकृतिरुपस्थाप्यते । सा निमित्तकारणभूता समवायिकारणभूता च प्रकृतिरत्र ब्रह्मैव । न तु ततोऽतिरिक्ता प्रकृतिशब्दश्च स्वरूपे रूढो मृत्प्रकृतिर्घटः कार्पासप्रकृतिः पट इत्यादिप्रयोगदर्शनात् समवायिकारणमभिधत्ते, प्रकृष्टा कृतिर्येनेति योगमहिम्ना च निमित्तम् । अतः प्रकृतिपदप्रयोगात् स्मृतिसिद्धा ये तृतीयकारणात्मका असमवायिनः सर्वे धर्माः संयोगादयस्तेषामपदेशः कथनम् । चकारात् पुराणोक्तानां,

'यत्र येन यतो यस्य यस्मै यद् यद् यथा यदा ।
स्यादिदं भगवान् साक्षात् प्रधानपुरुषेश्वरः' ॥

रश्मिः ।

पूर्वोक्तम् । ब्रह्मैवेति आकाशस्तल्लिङ्गादित्यधिकरणे उक्तत्वात् । हन्तैतमेव पुरुषं सर्वाणि नामान्यभिवदन्ति इति माध्वभाष्योक्तवाक्यादेवकारः । प्रतिज्ञासूत्राद्ब्रह्मेत्यनुवर्तते । न त्विति 'स पतिः पत्नी चाभवताम्' इति पुरुषविधब्राह्मणे 'प्राप्तं तन्निजरूपाय गोविन्दाय नमो नमः' इति श्रीविट्ठलेशदीक्षिताः अर्धनारीश्वरेऽपि । सांख्यमतेनोक्त्वाऽधुना प्रकृतिपदं प्रयुक्तं न प्रधानपदं तदाशयमाहुरित्याशयेन प्रकृतिपदेत्यादिभाष्यं विवृण्वन्ति स्म प्रकृतिशब्द इति । अयमर्थः । सत्यं प्रधानपदं प्रयोक्तव्यं 'प्रधानाज्जगज्जायत इति' क्षीरवद्वेष्टितं प्रधानस्य' इति चातः पुरुषोऽसङ्गः प्रधानं यत्तदभिन्ननिमित्तोपादानं तद्वाचकं आकाशस्तल्लिङ्गादिति न्याये ब्रह्मवाचकमिति तथापि तस्य न प्रसिद्धमीश्वरवाचकत्वं प्रकृतिपदस्य तु 'प्रणवत्वेन प्रकृतित्वं वदन्ति ब्रह्मवादिनः' इति गोपालतापिनीये 'प्रकृतिमगन् किल यस्य गोपवध्वः' इति च प्रसिद्धमतः प्रधानपदमतिहाय प्रकृतिपदमुपात्तमिति तदेतदुक्तं प्रकृतीत्यारभ्य रूढ इत्यन्तेन । यद्यपि वेदान्ते रूढिर्नास्ति तथापि ब्रह्मवादिनो वदन्तीति संहिताश्रुतेः ब्रह्मवाचकप्रकृतिपदरूढिः । यद्वा । योगमात्रं ब्रह्मज्ञानमित्यदोषः । यद्यपि यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणम् । आविर्भावकशक्त्याधारत्वं वा कारणत्वं तद् ब्रह्मसामानाधिकरण्यादुपपन्नं तथापि पौवार्यं प्रयोगावाहुः मृत्प्रकृतिरिरिति । अभीति । स्वरूपप्रकृतिपदार्थः 'प्रकृतिमगन् किल यस्य गोपवध्वः' इति स्मृतौ । अतः प्रयोगादिप्रसिद्ध्या प्रकृतिपदं ब्रह्मणि प्रयुक्तं न ज्ञानिनामिव घटपटादिपदवत् । प्रकृष्टेति व्यवहारोपयोगित्वं प्रकृष्टत्वं न तु बालक्रीडार्थं मृदादिवद्या कृतिः । संयोगादय इति सिद्धान्ते विभागात्सृष्टिः सृष्टिभेदवाद एभिः भाष्यप्रकाशकृद्भिरुक्ता सा । तेषां निमित्तान्तर्भूतानाम् । अत्र यद्यपि तृतीयपदार्थः सुषुप्तिः कामश्च संयोगादीनां चकारार्थे संग्रहात् तथा च कामसुषुप्त्योः सर्वधर्मोपदेश इति भाष्यार्थो भवेत् कामाकामरूपं ब्रह्मेत्यर्थोऽपि लोष्टुपलक्षणविषयास्तु न च वैराग्याय भाष्यप्रकाशीयोर्थः । स च सुषुप्तिव्याख्यानेपि तुल्ये सुषुप्तिस्त्वकामरूपो भगवानिति भाष्यादिति वाच्यम् । विरुद्धधर्माश्रयत्वेन कामस्फूर्तेः । चकारादि-

प्रतिज्ञा, 'अपि वा तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतं मविज्ञातं विज्ञातं भवति' इति । दृष्टान्तो यथा 'एकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्' इत्यादि । प्रतिज्ञादृष्टान्तयोरनुपरोधोऽबाधनं, तस्मात् । समवायिकारणज्ञाने हि कार्यज्ञानम् । उभयोर्ग्रहणमुपचारव्यावृत्त्यर्थम् । उपक्रमोपसंहारवत् ।

भाष्यप्रकाशः ।

इत्याधारादीनां सर्वेषां संग्रहः । तथाच जगतः सर्वविधं कारणं भगवानेवेत्यर्थः । हेतुं व्याकुर्वन्ति प्रतिज्ञेत्यादि । अपि वेत्युतशब्दस्यार्थः पाठान्तरं वा । प्रतिज्ञा तु नियमः । 'संविदागूः प्रतिज्ञानं नियमाश्रवसंश्रवा' इति कोशात् । स चात्रैकविज्ञानेन सर्वविज्ञानं भवतीत्याकारको निश्चय इति तद्बोधकं वाक्यमिह वाच्यवाचकयोरभेदविवक्षया प्रतिज्ञापदेनोच्यते । एवं दृष्टान्तवाक्यमपि दृष्टान्तपदेन । दृष्टान्तस्तु श्रोतृबोधसौकर्यहेतुर्वक्तृश्रोत्रोः संप्रतिपत्तिविषयोऽर्थः । तयोर्बोधकं चेदं वाक्यद्वयं तयोरबाधनाद्धेतोस्तथा । तथा च यदि समवायित्वं ब्रह्मणो नाङ्गिक्रियेत कारकान्तरत्वं च तदिदं वाक्यद्वयं पीड्येत । अतस्तदभावादेव तथाऽभ्युपेयमित्यर्थः । तदाहुः समवायीत्यादि । नन्वेकतरेणापि कार्यसिद्धेः किमित्युभयोल्लेख इत्याकाङ्क्षायामाहुः उभयोरित्यादि । यथोपक्रमोपसंहारयोरैकार्थ्येनैकस्यार्थस्य सिद्धौ न तत्रोपचार इति शङ्का, तथात्र प्रति-

रश्मिः ।

ज्ञादिभाष्यं विवृण्वन्ति चकारादिति । आधारेति तेनाधिष्ठानकारणस्यभावार्थान्तरैकार्थं तस्याश्रितम् । निमित्तान्तर्गतम् । पाठान्तरमिति अर्थान्वयसहिता श्रुतिरन्यस्या आचार्यादित्यर्थः । अत एव भवतिद्वयमन्वयार्थमधिकमुक्तम् । ननु छान्दोग्यीयश्वेतकेतूपाख्यानस्य प्रतिज्ञादिग्रहवत् मैत्रेयीब्राह्मणोक्तप्रतिज्ञात्यागस्तत्र को हेतुरितिचेन्न विवादाध्यासितक्लिष्टकल्पनासंभवादुपदेशवाक्यापेक्षया गौणत्वाच्च । संविदागूरिति अयं कोशो धीवर्गेऽमरः दशाङ्गीकारनामानि । उत्तरार्धं तु 'अङ्गीकाराभ्युपगमप्रतिश्रवसमाधयः' इति । पक्षभिन्नत्वे सति निश्चितसाध्यवत्त्वं दृष्टान्तत्वम् । अनुमानमात्रविषयमिति दृष्टान्तं लक्षयामासुः श्रोत्रिति । यथा श्रोता यथा महानस इति पञ्चावयवगतावयवं श्रुत्वा सौकर्येण व्याप्तिं गृह्णातीति श्रोतृबोधसौकर्यहेतुर्दृष्टान्तः । एवं वक्तृश्रोत्रोः संप्रतिपत्तिः सम्यक् दृष्टान्तसहितः प्रबोधः संप्रतिपत्तिस्तद्विषयोऽर्थो भवति । प्रकृतेपि भवति हि मृत्पिण्डे ज्ञानं श्रोतुरेकविज्ञानेन सर्वविज्ञानसंप्रतिपत्तेः सौकर्यहेतुर्भवति च वक्तृश्रोत्रोः संप्रबोधविषयः सामान्यवाक्यवाच्ये विवरणेतिव्याप्तिवारणाय सौकर्यपदम् । सौकर्यं च श्रोतृबोध्यार्थासंस्पर्शित्वे सति तत्सुकरत्वम् । विवरणादौ श्रोतृबोधार्थसंस्पर्शित्वात् नातिव्याप्तिः यथा ब्रह्मविदाप्नोति परमित्यादौ सत्यं ज्ञानमनन्तं ब्रह्मेति विवरणे श्रोतृबोधार्थब्रह्मसंस्पर्शित्वम् । सुगमे दृष्टान्तरहिते वाक्येतिव्याप्तिवारणाय विशेषणदलम् । प्रशस्तस्य विशेष्यगतसमुपसर्गार्थस्य सत्त्वात् । काकेतिव्याप्तिवारणाय विशेष्यम् । 'सम्यग्भावप्रशंसयोः' इति विश्वः । ननु तथापि नवकृत्व उपदेशे अतिव्याप्तिरितिचेन्न पौनःपुन्योपदेशवाच्यभिन्नत्वेन विशेषणीयत्वात् । एवं च पौनःपुन्योपदेशवाच्यभिन्नत्वे सति श्रोतृबोधसौकर्यहेतुत्वे च सति वक्तृश्रोतृप्रबोधविषयार्थत्वं दृष्टान्तत्वमिति फलितम् । अत्र तथा महानस इत्यत्र साम्यं यथाशब्दोऽमरात् । तथा च समत्वं दृष्टान्तत्वं तथा तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं सादृश्यम् । तदेव दृष्टान्तत्वं यद्यपि तथापि धर्मैः साम्यविवक्षनार्थं इवार्थभेदार्थमिदमेव लक्षणम् । तयोरिति प्रतिज्ञादृष्टान्तयोः । वाक्यद्वयं प्रतिज्ञावाक्यं दृष्टान्तवाक्यं च । पीड्येत

प्रतिज्ञामात्रत्वे अदृष्टद्वारापि भवेत् । दृष्टान्तमात्रत्वे त्वनुमानविषया स्यात् तथा सति सर्वसमानधर्मवद्ब्रह्म स्यान्न समवायिकारणम् । उभयोर्ग्रहणे तु प्रतिज्ञाया दृष्टमेव द्वारमिति समवायित्वसिद्धिः ।

---

भाष्यप्रकाशः ।

ज्ञादृष्टान्तयोरैकार्थ्येनेत्यत उभयोर्ग्रहणमित्यर्थः । तदेतदुपपादयन्ति प्रतिज्ञामात्रत्व इत्यादि । हेतोरिति शेषः । तथा च हेतुर्भेत् प्रतिज्ञामात्रमत्रोच्येत तदा अदृष्टा या योगजप्रत्यासत्ति-द्द्वाराऽप्येकविज्ञानेन सर्वज्ञानं भवेत् । यथा, 'विश्वं पश्यति दूरतः' इति ।

'अनागतमतीतं च वर्तमानमतीन्द्रियम् ।
विप्रकृष्टं व्यवहितं सम्यक् पश्यन्ति योगिनः' ॥

इत्यादिवाक्योक्तम् । तथा सति न तेन समवायित्वसिद्धिः । यदि च दृष्टान्तमात्रं हेतुः स्यात् तदा, सर्वं वाच्यं ज्ञेयत्वात् तदेकदेशवत्, घटो वाच्यो ज्ञेयत्वात् पटवदित्यादिवत्, सर्वं सज्ज्ञेयत्वादित्यप्यनुमानं संभवतीत्यनुमानविषया स्यात् । तथा सति सर्वसमानो यो धर्मो ज्ञेय-त्वादिरूपस्तद्वद् ब्रह्म स्यान्न तु समवायिकारणम् । उभयोर्ग्रहणे त्वेकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया दृष्टमेव कार्यैकदेशप्रत्यक्षमेव द्वारं समवायित्वगमकम् । यथा ह्येकस्मिन् मृत्पिण्डे मृद्विकारत्वनिश्चयो-त्तरं सर्वस्मिंस्तत्सजातीये तथा ज्ञानान्मृत्तिकायां तत्समवायित्वज्ञानं तादृशैकदेशप्रत्यक्षादेव भवति, नानुमानात्, तथा प्रकृतेऽप्येकत्र सन्मयत्वे निश्चिते सर्वेषु तत्सजातीयेषु सद्विकारत्वज्ञानात् सति सर्वसमवायित्वज्ञानं तादृशप्रत्यक्षादेव भवतीति सति समवायित्वसिद्धिर्न तु स्मृतिसि-द्धायाः प्रकृतेरित्यर्थः । ननु भवत्वेवमेकविज्ञानात् सर्वविज्ञानं, तथापि सा ब्रह्मोपाधिभूतत्वाद्

रश्मिः ।

इति क्लिष्टकल्पकं क्रियेत । योगजेति योगिनो द्विधा युक्ता युञ्जानाश्चातो योगजधर्मस्यापि द्वैविध्यम् । युक्तस्य तावद् योगजधर्मसहायेन मनसाकाशपरमाण्वादिनिखिलपदार्थगोचरं ज्ञानं सर्वदैव भवितुमर्हति द्वितीयस्य चिन्ताविशेषोपि सहकारीति । योगजधर्मप्रत्यासत्तिं प्रकृते वर्णयन्ति यथा विश्वमिति । न तेनेति विषयतासंबन्धेन संबन्धिनि विश्वस्मिन् समवायाभावात् । न च धर्मोऽदृष्टम् । योगजधर्मेपि धर्म-त्वात् । दृष्टान्तेत्यादि भाष्यं विवृण्वन्ति यदि चेति । सर्वं सदिति सर्वं ज्ञेयत्वेनानुभूतं पक्षः न चिज्ञाप्यन्तर्यामी । अतो न साधारण्यं ज्ञेयत्वरूपहेतोः । इत्यपीति ननु किमनुमानान्तरमिति वाच्यम् । ब्रह्मज्ञानं सर्वज्ञानकारणं समवायिविषयकत्वात् मृत्पिण्डज्ञानवदित्यनुमानमस्तु । न त्विति तथाच सर्ववज्ज्ञाने विषयतासंबन्धो न तादात्म्यं समवायापरपर्यायम् । उभयोरिति भाष्यं विवृण्वन्ति उभ-योरिति । दृष्टमिति दर्शनविषयमित्यर्थः । इदमेव विषयविषयकं दर्शनं तदाहुः दृष्टमेव कार्यैकदेश-प्रत्यक्षमिति । दृष्टान्तरूपं तद्द्वारं कथमित्याकाङ्क्षायामाहुः यथा हीति । तथा ज्ञानादिति सामान्य-लक्षणालौकिकप्रत्यासत्त्यावृतत्वेन ज्ञानात् । स्मृतीति । अनेन विशेषणेन वेदवेदान्तसारे द्वितीयनवमा-ध्याये आनन्दस्य जगत्कर्त्री शक्तिस्तस्याः कर्तृत्वं न विरुद्धम् । आत्मनोर्धत्वात् तेन तत्राभिन्ननिमि-त्तोपादानत्वमविरुद्धम् । समन्वयाधिकरणभाष्यविरोधश्च न । अत्राग्रे भेदाभेदमतनिरासदर्शनाद्विवर्त-विशिष्टाद्वैतमते निरस्यन्तः परिणामसूत्रस्य वक्ष्यमाणत्वाच्छ्रावाद्वैतं समर्थयितुं चिदचिच्छरीरविशिष्टस्य सत्त्वाद्युपाधिकस्य चोपादानत्वं दूषयितुं समवायिनं विचारयन्ति ननु भवत्विति । एवमिति पूर्वोक्तप्रकारेण केवलस्यैव प्रकृतित्वमित्येकविज्ञानेनेत्यादिः । ब्रह्मोपाधीति शुद्धसत्त्वप्रधाना मामा

भाष्यप्रकाशः ।

ब्रह्माविनाभूता वा, ब्रह्माविभक्ता वास्तीति शरीरद्वारकं ब्रह्मण एव समवायित्वं स्वतश्च कर्तृत्वमित्येव युक्तं पूर्वोक्तश्रुतिभ्यः । न तु केवलस्यैव प्रकृतित्वम् । उक्तव्याकोपात् । न च 'सदेव सोम्येदमग्र आसीद् एकमेवाद्वितीयम्' इत्यादिश्रुतिविरोधः । तत्र हि, सदेवेत्येवकारेणान्ययोगं व्यवच्छिद्याग्रे विवृणोत्येकमेवेति । एकशब्दश्च मुख्ये रूढः । 'एके मुख्यान्यकेवलाः' इति । तथा च मुख्यं ब्रह्मैवास्तीति सिद्ध्यति, न तु तेन तदविनाभूतस्याविभक्तस्य वा शरीरस्यासिद्धिरिति तदविरोधात् । न चैकपदस्य मुख्यार्थत्वमेव, न केवलार्थत्वमित्यत्र किं गमकमिति शङ्क्यम् । सुबालोपनिषदि प्रलयप्रकरणे पृथिवीलयमारभ्याक्षरं तमसि लीयत इत्यन्तेन सर्वस्य तमसि लयमुक्त्वाऽग्रे, 'तमः परे देवे एकीभवति दिव्यो देव एको नारायणः इति तमसो नामरूपविभागानर्हतया ब्रह्माविनाभावेनाविभक्ततया वाऽवस्थितिबोधनस्यैव गमकत्वात् । न च, 'लीङ् श्लेषणे' इति धात्वर्थादक्षरान्तानां तमसा अविभागस्तमसस्तु ब्रह्मणा स्वरूपैक्यमिति शब्दान्तरादवगम्यते, न त्वविनाभावोऽविभागो वेति वाच्यम् । अन्तर्यामिब्राह्मणे, यस्य तेजः शरीरं यस्य तमः शरीरमिति शरीरत्वेन श्रावणात् सुबालोपनिषद्यपि, यो मृत्युमन्तरे संचरन् यस्य मृत्युः शरीरमिति मृत्युपदेन सर्वानर्थमूलतया तस्यैवोल्लेखाच्च तमसः शरीरतयैव सिद्धत्वेन स्वरूपैक्यस्य ग्रहीतुमशक्यत्वात् । तस्मात् सशरीरस्यैव प्रकृतित्वं सच्छब्दवाच्यत्वं च, न केवलस्येति येनैवम् । अद्वितीयपदविरोधापत्तेः । एकमेवेति कथनोत्तरं मुख्यान्यार्थयोर्वा-

रश्मिः ।

सा ब्रह्मोपाधिस्तदवच्छिन्ना चित् सगुणं ब्रह्म तथा च शंकरभाष्यं प्रकृतिश्चोपादानकारणं ब्रह्माभ्युपगन्तव्यं निमित्तकारणं चेति। ब्रह्माविनाभूतेति प्रतिबिम्बपक्षे ब्रह्मसगुणत्वापादिका। ब्रह्माविभक्तत्वेति रामानुजाचार्यमते तथाच भाष्यं प्रकृतिश्च ब्रह्मेति । तथा तत्राप्यविभक्तनामरूपं कारणावस्थं ब्रह्मैव प्रकृतिशब्देनोच्यत इति ब्रह्मविभक्ताप्युक्ता आत्मकृतेरिति सूत्रस्य भाष्ये अविभक्तनामरूप आत्मा कर्ता स एव विभक्तनामरूपः कार्यमिति । शरीरेति प्रकृतिद्वारकं मायायां ब्रह्मप्रतिबिम्बात् प्रकृतेः शरीरं रामानुजाचार्यमते अन्तर्यामिब्राह्मणोक्तं चिदचिच्छरीरं ब्रह्मणः सगुणस्येत्यर्थः । कर्तृत्वं स्वस्या एव स ईक्षांचक्रे स प्राणमसृजत इति श्रुतेः ईक्षापूर्वकं च कर्तृत्वं निमित्तकारणेष्वेव दृष्टं उभयमते । स्वतश्चेति आत्मनः स्वस्य च । अत्र मायाशरीरब्रह्मणः समवायित्वं प्रकृतिद्वारा स्वस्य कर्तृत्वमपि । पूर्वोक्तेति प्रतिज्ञादृष्टान्तोक्तादिभ्यः उभयमते । केवलस्येति प्रकृतिपदसामानाधिकरण्यस्। श्रुतीति उभयोः पक्षयोरेवकारेणोपाधिशरीरयोः व्यवच्छेदात् । अग्रे सृष्टेः पूर्वकाल इत्यर्थात् ब्रह्मणः । शुद्धस्य ब्रह्मणः तत्रोपनिषदि सदसती माया पुरुषविधब्राह्मणे च 'स आत्मानं द्वेधापातयदिति ततः पतिः पत्नी चाभवताम्' इति प्रकृतिपदस्वरूपे शक्तिरुक्तैव चूलिकायां तेन ब्रह्मणा अध्यासितां स्वस्यात्मरूपायामध्यासविषयायामहं प्रकृतिरिति परस्मिन्परावभासस्याध्यासत्वादिति नो व्याकोप इति वाच्यम् । उभयोरेकतरपक्षे विशेषात् । विवृणोतीति भगवान् निश्वासद्वारा । एक इति कोशोयम् । गमकत्वेति तथा च यदि केवलार्थः स्यात् तर्हि तमोवस्थितिकथनं न स्यात् । शब्दान्तरादिति लीयत इत्यनुक्त्वा एकीभवतीति कथनादित्यर्थः । यस्य तमः शरीरमिति तेजः शरीरमिति समभिव्याहारात् विरुद्धधर्माश्रयत्वे पर्यवसानात् नावान्तरप्रलयकारणतमोग्रहणम् । तस्यैवेति तमस एवकारेण शान्तस्य मङ्गलरूपस्य व्यवच्छेदः । स्वरूपेति अवान्तरमूलकारणतमसो

भाष्यप्रकाशः।

स्वार्थमेव तत्प्रयोगात्। अन्यथा तद्वैयर्थ्यस्य वज्रलेपायितत्वात्। न चाद्वितीयपदेन मुख्यत्व-मेव विधीयत इति वाच्यम्। एकमेवेत्यनेनैव समाभ्यधिकराहित्ये सिद्धे व्याख्यानापेक्षाया एवाभावात्। तेनासिद्धावनेनाप्यसिद्धेः सुतरां तदभावाच्च। एतेनैव, 'नान्यत् किंचन मिषत्' इत्यन्तरविशेषपरत्वमपि दत्तोत्तरम्। 'साक्षी चेता केवलो निर्गुणश्च,' 'यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासत् शिव एव केवलः' इति सर्वभूतवति काले तद्रहिते तमोऽवशेषाङ्किते च काले ब्रह्मण एव केवलत्वभावबोधेन, यदा तमस्तत् स्वेनैकीभूतं तदा केवलो न शरीरीत्यर्थव्य-क्तेर्द्वित्वसंख्यापूरक एव निषेधपर्यवसानसिद्धेश्च। न च कालोक्तिविरोधः तस्याः सुमुक्षुतरव्य-वहारे सर्वाधारतया प्रतीयमानकालोपरञ्जनेन पूर्ववृत्तान्तबोधनार्थत्वात्। अन्यथा शिष्यस्य सृष्टिकालसत्त्वेन कालसत्तामवधारयतः पूर्ववृत्तान्तबोधनाभावप्रसङ्गात्। न च कालसत्ताबोध-कत्वे किं बाधकमिति शङ्क्यम्। एतस्य सर्वतः पूर्ववृत्तान्तबोधकत्वेन तत्र च सतोऽन्यस्य व्यव-च्छेदे कालावच्छेदकप्रमाणस्यापि व्यवच्छिन्नत्वादत्र कालानुवादस्य वक्तुमशक्यत्वेन स्वत-न्त्रतया कालसत्ताबोधने वाक्यभेदप्रसक्तेरेव बाधकत्वात्। न चात्र कालविशिष्टसत्सत्ताबोधक-त्वमिति शङ्क्यम्। गौरवप्रसङ्गात्। समानजातीये बृहदारण्यकवाक्ये, सोऽनुवीक्ष्य नान्यदा-

रश्मिः।

त्मनोऽपश्यत्। तत्प्रयोगादिति अद्वितीयपदप्रयोगात्। विधूतमिति तथा च अद्वितीयत्वरूपं मुख्यत्वमित्यर्थः। व्याख्यानेति विवरणेत्यर्थः। नन्वेकमेवेत्यनेन द्वित्वादिवैशिष्ट्यं निषिध्यते इति कथं समाभ्यधिकराहित्यं युगपद्वृत्तिद्वयविरोधात्। इति चेत्तत्राहुः तेनेति एकमेवेत्यनेन। अनेनेति तद्विवरणेनाद्वितीयमित्यनेन। तदभावादिति व्याख्यानापेक्षाभावात्। एतेनेति एकपदव्याख्यानत्वेन। मिषदिति श्रुत्युत्तरादिति शेषः। मिषदन्तरेति व्यापारयद्विशे-षपरत्वमद्वितीयपदस्येत्यर्थः। शिव इति। तमःपदादवान्तरप्रलयविषयत्वे तमोधिष्ठाता शिवः कृष्णः। सर्वभूतेति साक्षित्वं सर्वभूतवति काले सति। तद्रहित इति। तन्नेत्यादिनिषेधात्। तमोऽवशेषाङ्कित इति कालस्याग्रे विचार्यत्वात् बोधनार्थाय काल इत्यर्थात् तमो न कालविशेषण-मपि तु तमः स्वाभाविककृष्णविशिष्टं तत्तदा शिवः सन्नवान्तरप्रलये केवल इत्यर्थः। एवं च तमोवशेष आधारत्वेन संपद्यांशस्तेनाङ्कित इत्यर्थो भवति न तु कालाधिकरणकं तमः इति किंतु कृष्णाधिकरणकं तमः काले तु तमोवशेष इति। ब्रह्मण इति शिवस्य चेत्यपि द्रष्टव्यम्। यदा तम इति विवृण्वन्ति यदा तम इति। कालोक्तीति केवलपदार्थेन सः। प्रतीयमानेति। स्थितिकालस्यो-परञ्जनं सर्वोपरञ्जनं अभावात्मकप्रलये प्रतियोगिनां कारणत्वेन योग्यं तेन पूर्ववृत्तान्तः। प्रतियो-गिवृत्तान्तस्य बोधनं तदर्थत्वात्। अभावज्ञाने प्रतियोगिज्ञानस्य कारणत्वात्। नन्वेवमपि सृष्टि-वृत्तान्तकथनमस्तु कालोपरञ्जनस्य किं प्रयोजनमितिचेत्तत्राहुः अन्यथेति। बोधाभावेति। कालस्वभावे सति बोधाभावेत्यादिः। व्यवेति सदेवेत्यवकारेण शिव एवेत्येवकारेण चेत्यर्थः। वाक्यभेदेति यदा पराग्रपदाभ्यां बोधितः कालोऽप्यासीत्तत्र साक्ष्यप्यासीच्छिवोऽप्यासीत् सदप्या-सीदिति वाक्यभेदप्रसङ्गादित्यर्थः। अनुवीक्ष्येति।

'अनु-हीने सहार्थे च पश्चात् सादृश्ययोरनु।
आयामे च समीपे च लक्षणाद्यन्वु कर्मणः'॥

भाष्यप्रकाशः ।

त्मनोऽपश्यदित्यनुवीक्षाश्रावणस्य बाधापत्तेश्च । तस्माच्चिदचिच्छरीरविशिष्टस्य सत्त्वाद्युपाधिकस्य वोपादानत्वाङ्गीकारे केवलाद्वितीयश्रुत्योर्विरोधो दुर्वार एव । एवं च, तमः परे देवे एकीभवतीति, तमो वा इदमग्र आसीदेकं तत् परे स्यादित्यादावपि य एकीभावः स परस्वरूपत्वमेव, न तु नामरूपविभागानर्हत्वमात्रमित्येवं मन्तव्यम् । लयस्य श्लेषरूपत्वेन विभागाभावात्मकत्वे

रश्मिः ।

इति विश्वः । एतेषु सहार्थे अनु । तथा च अर्धाङ्गत्वेन सह वर्तमानां वीक्ष्यात्मनोन्यन्नापश्यत् किं तु आत्मैवेदमग्र आसीत् इति सृष्टिपूर्वकालेऽग्रे व्यवच्छिन्नात्मरूपेण स्वरूपात्मिकां प्रकृतिमगिति वाक्योक्तां प्रकृतिमपश्यत् । तृतीयसर्वधर्मोपदेश इति भाष्यात् । 'प्रणवत्वेन प्रकृतित्वं वदन्ति ब्रह्मवादिनः' इति गोपालतापिनीयाच्च । युक्तं च शब्दार्थयोरैक्यं औत्पत्तिकसूत्रात् । प्रणवस्वरूपं गायत्र्यर्थविवरणकारिकासु श्रीमद्गोस्वामिभिर्निरूपितम् । अनोरन्येऽर्थाः । हीने रामानुजाः शैवाचार्याश्च । हीनं चिदचिच्छरीरं वीक्ष्यात्मनोन्यन्नापश्यदपि तु चिदचिच्छरीरविशिष्टं आत्मानमद्वैतमपश्यत् विशिष्टाद्वैतमपश्यत् । माध्वनिम्बार्कयोः समीपेऽनुः अनु समीपे वर्तमानं भिन्नं जगद्वीक्ष्य आत्मनः आत्मकार्यात् अन्यन्नापश्यत् तथैव नैयायिकाः । यथा 'अविभक्तं च भूतेषु विभक्तमिव च स्थितम्' इति गीतायां तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वरूपसादृश्यं तत्रापि योज्यम् । ना पुरुषो वाऽन्यदिति छेदः सादृश्ये शंकरपादाः अन्वर्थसादृश्यं ज्ञानकाशायां मायायां विवर्ताद्वैते पश्चादित्यर्थे वांनुः तथाऽविभागाद्वैते पश्चादर्थेऽनुः अनुमानसृष्टेः पश्चादनुवीक्ष्यात्मनोन्यत् नापश्यत् किं तु नानावृक्षरसा यथा मधुकृत् मधुभावानन्तरमद्वैतमपश्यत् तथापश्यत् । अविभागाद्वैतमपश्यत् । सादृश्येनुक्रमे भास्कराचार्याः ज्ञानकाशायां सदृश्यां मायायामनुवीक्ष्य भेदवाचकानां पदानां विक्षेपं कार्यात्मना वीक्ष्य यथा कटकं सुवर्णं सुवर्णं कटकं नेत्यत्र आत्मनोऽन्यन्नापश्यत् । ना आत्मनोऽन्यदपश्यदिति तन्मार्गीयोऽन्योर्थोपि ज्ञेयः । लक्षणादौ अनुरिति वैयाकरणाः 'लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः' इतिसूत्रे आयामेपि क्वचिद् द्रष्टव्यः । इति ब्रह्मणो निबन्धोक्तनानावादानुरोधिरूपं सोनुवीक्ष्येत्यत्र । सिद्धमाहुः तस्मादिति । पूर्वग्रन्थात् । एवेति । कालस्य तु श्रुत्यन्यथानुपपत्त्या ब्रह्मत्वं 'कालोऽस्मि लोकक्षयकृत्' इति स्मृतेश्चेति । नोपरञ्जनेनाप्यन्यमतसिद्धिः कालवदित्येवकारः । माया च तमोरूपेति नृसिंहतापिनीयात् । प्रकृतिरूपतमोपि स्वरूपमित्यापत्त्या सुबोधिन्युक्तावान्तरप्रलयविषयत्वं भज्येतेति तदर्थं तत्स्वरूपमाहुः एवं च तम इति अक्षरं तमसि लीयते तमः परे देवे एकीभवतीति वाक्यम् । परस्वरूपत्वमिति समाकर्षादित्यधिकरणोक्तरीत्या तमः स्वार्थात्समाकृष्यते प्रच्याव्यत इत्यनभिव्यक्तस्य तमसः परस्वरूपत्वं तथा च सुबोधिन्यामिष्टापत्त्या न तत्र विरोधः । एकीभावलक्षणं रामानुजभाष्येस्ति तद्भिन्नेष्वीकुर्वन्ति न त्विति तथा च परस्वरूपत्वे सति नामरूपविभागानर्हत्वमेकीभावः । तथा च भाष्यं न तु लय एकीभावः इति तमोभिधानातिसूक्ष्मचिद्वस्तुप्रकारस्य ब्रह्मणो विभक्तनामरूपतयावस्थानमभिधीयते इति रामानुजानाम् । श्लेषेति श्लिष आलिङ्गने । तदक्षरात्मकत्वाज्जगतो ब्रह्मणा सह भवति । श्लेषरूपत्वेन विभागाभावात्मकत्वं न संयुक्तत्वम् । गुणत्वापत्त्या 'नायं गुणः कर्म न सच्च नासन्' इति गुणत्वनिषेधात् । तथा च 'श्रुतिः यथा प्रियया स्त्रिया संपरिष्वक्तः'.इति । प्रस्थानरत्नाकरेपि स्पर्शनिरूपणे श्लेषस्तु विभागाभाव एव संयुक्ता अप्यङ्गुल्यश्चतस्रो भवन्ति संश्लेषे तु न तथा

भाष्यप्रकाशः ।

एकीभावस्य पृथक्त्वाभावात्मकत्व एव पर्यवसानात् । न च शरीरत्वबोधकश्रुतिविरोधः तस्याः सृष्टिकालीनवृत्तान्तपरत्वात् । अन्तर्यामिब्राह्मणे तथात्वस्य स्फुटत्वात् । सुबालोपनिषद्यपि, 'अन्तःशरीरे निहितो गुहायामज एको नित्यः' इत्युपक्रम्य पृथिव्यादिमृत्य्वन्तानां शरीरत्वकथनेन तत्रापि सृष्टिपूर्वकालाऽलाभात् । प्रलयप्रकरणस्य प्रागेव समाप्तत्वाच्च । तस्मादुक्तशरीरविशिष्टस्य प्रकृतित्वम् । नापि प्रधानादेर्गर्तपतितमृतसर्पादिवत् स्थितिरिति निश्चयः ।

रश्मिः ।

यथा मिलिताङ्गुलेरिति । एवेति न चैकत्वरूपसंख्यायामन्तर्भावोऽस्त्विति शङ्क्यम् । 'न पश्यतीत्याहुरेकीभवति' इत्यादि बृहदारण्यके 'ततोन्यद्विभक्तं यत्पश्येत्' इत्यादौ विभक्तपदेन विभागोपस्थित्वा एवमन्यत्र शारीरब्राह्मणेऽन्यं नवतरं कल्याणतर९रूपं तनुत इत्यत्र पृथक्कुरुते इत्यर्थ इति पार्थक्योपस्थित्वा चैवकारः । शरीरत्वेति 'तम आसीत् तमसा गूढमग्रे प्रकेतम्' । तमसस्तन्महानजायतैकम्' इत्यादि श्रुतिविरोधः । रामानुजाचार्यमतेऽस्याः शरीरत्वबोधकत्वं तथा मनुस्मृतेश्च—

'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः' ॥

इति शरीरत्वबोधकत्वं सिद्धान्ते तस्यास्तस्याश्चावान्तरसृष्टिकालीनेत्यादिः । न तु स्थितिप्रलयकालीनवृत्तान्तबोधकत्वमिति वार्थः । न तु सृष्टिप्राक्कालीनवृत्तान्तबोधकत्वमिति वार्थः । स्फुटत्वादिति पृथिव्यादिशरीराणां सृष्टिकालीनत्वादित्यर्थः । ननु परस्वरूपसत्त्वे इति विशेषणेक्रीकृते एकीभावलक्षणस्यासंभवः । तमसोऽव्यक्तत्वेन तस्य च महानव्यक्ते लीयते अव्यक्तमक्षरे लीयते इति प्रलयश्रुतेरव्यक्तस्योत्पत्तिप्रलयौ प्रतीयेते तथा च महाभारते

'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम ।
अव्यक्तं पुरुषे ब्रह्मन् निष्कले संप्रलीयते' ॥

इति परस्वरूपत्वाभावाद्विशेषणाभावप्रयुक्तविशिष्टाभावादिति चेन्न । अत्र हेतुमाहुः प्रलयेति । प्रागेवेति । अक्षरं तमसि लीयते तमः परे देवे एकीभवतीत्यादेः प्रागेवेत्यर्थः । तथा चात्र प्रकरणाभावात् नोत्पत्तिप्रलयौ ततश्चानित्यत्वाभावात् न विशेषणाभावप्रयुक्तविशिष्टाभावः । तस्मादिति ततश्च परस्वरूपत्वात् । नोक्तेति व्याख्यातमेतत् । एवं चिदचिच्छरीरविशिष्टस्यप्रकृतित्वं निवार्य शंकराचार्यमतेपि वारयन्तो भास्कराचार्यमतेप्याहुः नापीति गर्तं विषयादिदार्ष्टान्तिके । मृतेत्यनेन जडत्वं दार्ष्टान्तिकेपि दृष्टान्तस्तु टीकायां द्रष्टव्यः । तथा च विषयपतितजडप्रधानादेरित्यर्थः । विवर्तोत्मन एव परिणामसूत्रे विवर्तः परिणाम इति व्याख्यानात् । गीतायां विज्ञनादी उभावपीत्यत्र व्यवहारे वयं भाट्टा इति 'न कदाचिदनीदृशं जगत्' इति पूर्वमीमांसायाः प्रच्छन्नबौद्धत्वाच्च प्रतिबिम्बितसगुणस्यानादित्वम् । अतः सगुणस्यैव निमित्तत्वं उपादानत्वं चेत्यपि न केवलाद्वितीयश्रुत्योर्विरोधादिति । गीतायां कारणताशक्तिः प्रकृतिरिति विशिष्टाद्वैतमिति रामानुजाः । पुष्टोपिन्त्वां द्वितीयस्य नवमाध्याये सदानन्दस्य जगत्कर्त्रीं शक्तिः सा स्वरूपं सदत्रोपयुज्यते इति 'प्रकृतिं पुरुषं चैव विज्ञनादी उभावपि' इत्यत्र तृतीयपुमर्थरूपं केवलं ब्रह्मैवोच्यतेत्रापि । अत्र परिणामस्तात्त्विकोन्यात्माभावः इति विशेषः तन्तुनामतन्तुवत् । आदिपदेन भास्कराचार्यभाष्ये शंकराचार्यमतेव व्यास्याप्रसेति सूत्रे आत्मकृतेरित्यादि व्याख्याय परिणामो विवर्तत्वेन न स्वीकृतः ततश्चाभेदे भेदाभेद-

भाष्यप्रकाशः ।

एवं सति गौरनाद्यन्तवतीत्यादौ, 'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि' इत्यादौ च यदनादित्वादिकथनं, तच्चतुर्मुखाऽजत्रिदशाऽमरन्यायेन जगत्साधारणोत्पत्तिनाशनिषेधपरमित्येव मन्तव्यम् ।

'तन्मायाफलरूपेण केवलं निर्विकल्पितम् ।
वाङ्मनोगोचरातीतं द्विधा समभवद् बृहत् ॥
तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका ।
ज्ञानं त्वन्यतमो भावः पुरुषः सोऽभिधीयते' ॥

इत्यादिपुराणवाक्येभ्यश्च । तेन, यत्तन्तुनाभ इति वाक्यमपि प्रधानोत्पत्त्यनन्तरकालवृत्तान्तबोधकमेवेत्येव निश्चयः । एवैव परमाण्वादिकारणवादानामपि गतिर्बोध्या । कालः स्वभाव इतिश्रुत्यैव तेषामनादरणीयत्वस्योक्तत्वादिति । तस्मात् केवलस्यैव ब्रह्मणः समवायित्वमिति निश्चयः । एवं सत्येकविज्ञानेन यत् सर्वं विज्ञातं तत्र योगजधर्मादिना, न वा अविनाभाव-

रश्मिः ।

सांकर्यप्रसङ्गः इति भेद आस्थित कार्यात्मना इत्येव । एवं च न त्रैलोक्यसांकर्यप्रसङ्गः इति मतम् । तत्र विक्षिप्तगुणः प्रकृतिः परिणामः । विक्षिप्तगुणा प्रकृतिरित्यादिपदार्थो विक्षिप्तगुणप्रधानं तस्य स्थितिः द्वितीयादिशब्दार्थभूतमुपाधिदृष्टान्तो जलचन्द्रेषु जलं तद्वत् । एवं चेति गौः प्रकृतिः । अनादित्वादीति । आदिशब्देनान्तर्विकृतत्वं च 'विकारांश्च गुणांश्चापि विद्धि प्रकृतिसंभवान्' इत्युत्तरार्धात् । चतुर्मुखे चतुर्मुखश्चासावजश्च त्रिदशाश्च तेऽमराश्चेत्यनेन न्यायेन । अत्र अजशब्देनोत्पत्तिनिषेधो जगत्साधारणः परब्रह्मणस्तूत्पत्तिरस्त्येव नारायणाद् ब्रह्माऽजायत इति श्रुतेश्च । अमरशब्देन नाशनिषेधः सोपि जगत्साधारणः त्रिदशानां प्रलये नाशात् । यथा पश्चाच्छायी प्रथमप्रबोधी तं प्रति लोको वक्ति न स्वपितीति तद्वत् । मन्तव्यमिति शंकररामानुजभास्करादिमतानुयायिभिर्मन्तव्यं कुत इत्यतो हेतुमाहुः तन्मायेति । मायाफलं प्रतिबिम्बादि शंकरभास्करमतयोः । मायाचित् फलं चित् ताभ्यां रूप्यते व्यवह्रियत इति इति रामानुजाचार्यमतोर्थकः । शैवमतेपि चकारादुक्तवाक्यानि । तेनेति उपाधिचिदचित्तां विवक्षणेन । एवैवेति सांख्यमतस्य कारणत्वांशेऽवैदिकत्वप्रतिपादनेन समीपतरवर्तिनि कारणत्वांशेऽवैदिकत्वादिरूपा सा सामान्यतोग्रेधिकरणे विशेषतो द्वितीयाध्याये स्पष्टा । परमाण्वादयः कारणानि तेषां वादानामित्यत्र परमाणवः आदयो येषां कालादीनामित्यतद्गुणसंविज्ञानोपीत्याशयेनाहुः काल इति । इयं श्वेताश्वतरेस्ति । तद्गुणसंविज्ञानपक्षे परमाण्वादिवादा उपलक्षणविधया ज्ञेयाः

'कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम् ।
संयोग एषां न त्वात्मभावादात्माप्यनीशः सुखदुःखहेतोः' ॥

इति । सिद्धमाहुस्तस्मादिति प्रकृतेः स्वरूपत्वेनोपाध्याभावात् । सिद्धान्ते तु प्रकृतिं पुरुषं चेति व्युत्पादितम् । श्लोकानन्तरम्

'कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते' ॥

इत्यादिकं द्वितीयस्कन्धनवमाध्यायोक्तरीत्योपपाद्य तन्मायाफलरूपेणेत्यादिसांख्यमतेन वेदान्ते इति च न तदर्थं उच्यते । न योगजेत्यादि नैयायिकादिमते भेदवादा श्रोमञ्ज्ञानकल्प

कार्यकारणयोर्भेदाभेदमतनिराकरणाय पिण्डमणिनखनिकृन्तनग्रहणम् । तथा सति यत्र कश्चिद् भगवान् ज्ञातः सर्वत्र ज्ञातो भवति । सर्वं च ज्ञातं भवति

भाष्यप्रकाशः ।

महिम्ना, नाप्यविभागादिमहिम्ना श्रुत्यभिप्रेतं, किंतु दृष्टेनैव द्वारेणेति सिद्धम् । अतः परं दृष्टान्ते पिण्डादिपदग्रहणस्य प्रयोजनं विचारयन्ति कार्यकारणयोरित्यादि । कार्यकारणयोरभेदे त्रैलोक्यव्यवहारः संकीर्येत । अत्यन्तभेदे चैकविज्ञानेन सर्वविज्ञानं बाध्येत । अतस्तयोर्भेदाभेद एवास्थेयः । दृश्यते च तथा । तन्तव एव ह्याततावितताश्च सन्तो लोके पटत्वेन व्यवह्रियन्ते, प्राव्रियन्ते, पटत्वजातिं च बिभ्रति । एवं च प्रतिज्ञादृष्टान्तयोरुभयोरप्युपपत्तिरिति मतनिराकरणाय पिण्डादित्रयग्रहणम् । यदि हि भेदाभेद आद्रियते, तदा येन रूपेण भेदस्तद्रूपं कारणज्ञानेन न ज्ञात भवेत् । ततो भिन्नत्वात् । अथ ज्ञायते तर्हि न तद्रूपं भिन्नमित्यभेद एवास्थेयः, कृतं भेदेन । न च सर्वथा अभेदे व्यवहारसांकर्यप्रसङ्गः । अवस्थाभेदादेव तन्निवृत्तेः । अतः कयाचिदवस्थयाऽवस्थितं कारणमेव कार्यं न तु ततो भिन्नाभिन्नमिति बोधनायावस्थारूपाणां पिण्डादीनां ग्रहणमित्यर्थः । एवमङ्गीकारे गुणमाहुः तथा सतीत्यादि । कार्यस्यैव-

रश्मिः ।

सामान्यलक्षणा चालौकिक्यः प्रत्यासत्तयः उपाधिवादिनामविनाभावोपि पूर्वं व्याख्यातः । विशिष्टाद्वैतवादिनामविभागादिः । भिक्षुमतेपि । दृष्टेनैवेति शास्त्रदृष्टेन मनसा भक्तिसहकारिकारणकेन भक्तिरेव वा मनःकल्पनरूपा । तथा च बृहदारण्यके मनसैवानुद्रष्टव्यो नेह नानास्ति किंचन । गोपालतापिनीये भक्ती रहस्यभजनं तदिहामुत्रफलभोगनैराश्येनामुष्मिन् मनःकल्पनमेतदेव च नैःकर्म्यमिति । यद्वा दृष्टेन समवाय्येकदेशमृत्पिण्डादिप्रत्यक्षेण द्वारेण । भेदाभेद इति । न भेदाभेदावित्युक्तम् । अत्यन्तभेदस्य प्रतीयमानस्याविवक्षणात् ततः 'समर्थः पदविधिः' इत्यस्याप्राप्तिः । अतः भेदयुक्तोऽभेद इति समासः स त्वत्यन्तभेदे बाधितः । अत्यन्तभिन्नपरनिष्ठभेदेन युक्तो घटप्रतियोगिकभेदाभावो नास्तीति । अतस्त्रैलोक्यव्यवहारसांकर्यनिवृत्तिमात्रप्रयोजकः सुवर्णे कटकं नेत्यादिरूपभेदस्तेन युक्तोऽभेदः कटकं सुवर्णमित्यादिरूपस्तद्वाचकपदैः समासस्येष्टेः । ननु द्वन्द्वनियामकोऽवास्तवो भेद इति मुक्तावल्यां विश्वनाथ इति चेन्न भास्कराचार्यमतेऽस्य वास्तवत्वात् । अन्यथैकविज्ञानेन सर्वविज्ञानबाधापत्तेः । जयरामकृतसमासवादे च समासत्वं विभक्तिशून्यपूर्वपदकनामसमुदायत्वम् । अत्र विभक्तिशून्यपूर्वपदकत्वं विभक्तिशून्यपदघटितशाब्दबोधप्रयोजकानुपूर्वीमत्त्वम् । शाब्दबोधे तु अत्यन्तभेदस्याभावाद्भेदाभेदाविति द्वन्द्वे कृतेऽव्याप्तिरतो भेदयुक्तोऽभेद इति समासान्तरं युक्तम् । देवपूजको ब्राह्मणो देवब्राह्मण इतिवत् । भेदस्याभेदो भेदाभेद इति वा सहिष्णुत्वं षष्ठ्यर्थः । भेदसहिष्णुरभेदो भेदाभेद इत्यर्थः । प्रतिज्ञादृष्टान्तयोरिति आत्मा कर्ता प्रधानं समवायि तां शक्तिं विक्षिपति यथा सूर्यो रश्मीनां विक्षेपं करोति तद्वदेव संहरति अत एव प्रतिज्ञा 'उत तमादेशम्' इत्यादिः दृष्टान्तो मृत्पिण्डादिस्तयोरित्यर्थः । उपपत्तिरिति अभेदे प्रतिज्ञोपपत्तिः कार्यकारणयोः सूर्यरश्म्यादिरूपयोर्भेदे पिण्डादिदृष्टान्तोपपत्तिः । अवस्थेति धर्मरूपेणाविर्भवतीति द्वितीयनवमाध्याये इति साऽवस्था तेन भेदाभेदवादे भेदाभेदोप्यनया दिशा समर्थनीय इति सूचितम् । न त्वन्तर्यामिब्राह्मणोक्तपृथिव्यादिशरीरज्ञानेन किं तु तदेकदेशपिण्डादिज्ञानेन सर्वविज्ञानमिति । यद्वा भेदाभेद-

इति सामान्यलक्षणप्रत्यासत्तिनिराकरणाय च, वाचारम्भणं विकारो नामधेय-

भाष्यप्रकाशः।

मवस्थाविशेषविशिष्टकारणरूपत्वे ज्ञाते सति यत्र कश्चित्कार्ये केनचिदवस्थावैशिष्ट्येन भगवान् ज्ञातः सर्वत्र कार्ये तत्तदवस्थाविशिष्टत्वेन ज्ञातो भवति, सर्वं च कार्यं तदभिन्नत्वेन ज्ञातं भवतीति बोधसौकर्यरूपो गुण इत्यर्थः। नन्वत्र सामान्यप्रत्यासत्तिर्नोद्धतेत्यत्र किं गमकमित्यत आहुः सामान्येत्यादि। चोऽवधारणे। यदि हि सामान्यलक्षणात्र विवक्षिता स्यात् तदा, तत् सामान्यादिति वदेन्न तु वाचारम्भणमित्यादि। वदति त्वेवम्। तत्रायमर्थः। यो विकारः पृथुबुध्नोदरादिः स वाचारम्भणं वाचिकक्रियात्मको न तु कारणाद् व्यक्तिभेदापादकः। यथा सुप्त उत्थित उपविष्टे च पुरुषेऽवयवविन्यासभेदोऽतो नामधेयं नैमित्तिकक्रियायाः पदार्थस्वरूपभेदानापादकत्वान्नामैव। तथा चात्र कारणावस्थात्मनैवैकरूप्यस्य विवक्षितत्वाद् व्यक्ति-

रश्मिः।

वादः। संभ्रमात्। भ्रान्तेर्जीवधर्मत्वात्। कश्चित्कार्ये इति कचिदिति कार्यानियमः ब्रह्मविदां ज्ञानादिविषयो तेन कारणावस्थायामपि ब्रह्मविदां ज्ञानादिविषयायां बोध्यम्। भगवानिति तथा च सुबोधिन्यां एकैकस्मिन् पदार्थे दशविधलीलासहितो भगवांस्तिष्ठतीति। वदेदिति एकविज्ञानेन सर्वविज्ञानाय वदेत्। वाचिकेति वाचिकेत्यनेन मानस्याः कायिक्याश्च व्युदासः तादृशक्रियाजन्यः 'शब्द इति चेन्नातः प्रभवात्' इति सूत्रोक्तः स वाचिकक्रियात्मकः तथा च तदनन्यत्वसूत्रभाष्यम्। तत्र विकारो वाङ्मात्रेणैवारभ्यते न वस्तुत इत्यर्थः। प्रतिभातीति। एवं च पृथुबुध्नोदरादिरिति यथा श्रुतं चेत् 'मृदादि भगवत्कार्यं घटाद्याकारसंयुतम्' इति निबन्धो विरुध्येतेति पृथुबुध्नोदरादिपदं षड्भावविकारलक्षकं स षड्भावविकारः वाचैवारभ्यते यतः सुवर्णं वस्तु मृत्पिण्डादि च 'जायतेऽस्ति विपरिणमति वर्धतेऽपक्षीयते नश्यति' इत्यादिशब्दविषयकं भवति। न त्विति किं तु कायिकक्रियात्मक एव कारणाद्व्यक्तिभेदापादकः। अत्र दृष्टान्तमाहुः यथेति। अवयवेति षड्भावविकारस्थानापन्नः। नैमित्तिकेति जलाहरणादिनिमित्तैः संपाद्यते या क्रिया तस्याः जननादिषड्रूपायाः। पदार्थेति अन्यथा षड्भावविकारैः देवदत्तादिरूपपदार्थभेदः स्यात् तेन च प्रत्यभिज्ञाबाधप्रसङ्गः स्यात्। नामैवेति तथा च स्वार्थे धेयप्रत्ययः इति भावः। व्यक्तिभेदानादर इति। अयमर्थः। सुकृतं सुवर्णमिति सुवर्णस्य विशेषणविशिष्टस्य वाक्ये ग्रहणात्। सुकृतं समवायि विवक्षितम्। एवं च कटकादिरूपं सुवर्णं जगद्रूपं ब्रह्म घटशरावादिरूपं पिण्डमित्येवं व्यक्तिभेदानादरः स च सामान्यलक्षणप्रत्यासत्त्या न कटकत्वादिरूपया ब्रह्मत्वरूपया घटत्वादिरूपया ज्ञानेन संभवति व्यक्तिभेद एव तत्प्रसरात्। नन्वस्ति व्यक्तिभेदः स्वस्वकारणाभेदेपि अन्यस्मात् स्वस्वकारणभेदभिन्नाद्भेद इति। जगति त्वनुभवेनैव भेद इति चेन्न स्वस्वकारणेत्याद्युक्तानां जगत्यन्तर्भावात् तस्य च ब्रह्मत्वात् तस्य चैकत्वात् तत्र च स्वगतभेदाभावान्मनसा भक्त्या जगदन्तर्गतपदार्थानामेकत्वेन ज्ञानं तत्र भक्तिर्व्यापारो मनःकरणं तथा च भक्तिः प्रत्यासत्तिर्न सामान्यलक्षणेति। इदं बृहदारण्यकोक्तरीत्या मनसैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवमिति गोपालतापिनीये 'भक्तिरस्य भजनं तदिहामुत्र फलभोगनैराश्येनामुष्मिन् मनःकल्पनमेतदेव च नैष्कर्म्यमिति' गीतायां च—

भाष्यप्रकाशः ।

भेदानादर एव सामान्यलक्षणानादरगमकः । यथा बहुसुवर्णाकाङ्क्षायां कटककुण्डलकलशभृङ्गारादिव्यक्त्यनादरस्तथेत्यर्थः । एतदेवैकादशस्कन्धे भगवताप्युक्तम् ।

'यथा सुवर्णं सुकृतं पुरस्तात् पश्चाच्च सर्वस्य हिरण्मयस्य ।
तदेव मध्ये व्यवहार्यमाणं नानापदेशैरहमस्य तद्वत् ॥
न यत् पुरस्तादुत यन्न पश्चान्मध्येऽपि तन्न व्यपदेशमात्रम् ।
भूतं प्रसिद्धं च परेण यद्यत् तदेव तत्स्यादिति मे मनीषा' ॥

इति । यत् परेण भूतं यच्च परेण प्रसिद्धं तत्तदेव स्यादित्यर्थः । अंशे कार्यत्वाभावात् प्रसिद्धमिति पृथग्व्यपदेशः । एवमष्टमस्कन्धेऽपि ।

'यथा हिरण्यं बहुधा समीयते नृभिः क्रियाभिर्व्यवहारवर्त्मसु ।
एवं वचोभिर्भगवानधोक्षजो व्याख्यायते लौकिकवैदिकैर्जनैः' ॥ इति ।

एतेनाकारादिभेदकृत एव तत्तल्लौकिकवैदिकव्यवहारभेदो, न वस्तुभेदकृतः । यथा कलशरूपेण सुवर्णेन जलाहरणादिकं, कटककुण्डलादिरूपेण तेन हस्तकर्णादिशोभनमिति । एतेनैव फलभेदोऽपि व्याख्यातः । अन्यच्च तत्रैवाऽमृतमन्थने ब्रह्मस्तुतौ—

'त्वय्यग्र आसीत् त्वयि मध्य आसीत् त्वय्यन्त आसीदिदमात्मतन्त्रे ।
त्वमादिरन्तो जगतोऽस्य मध्यं घटस्य मृत्स्नेव परः परस्मात्' ॥

इति । कुत्सितत्वादिभानं तु दोषदृशामेव, न ब्रह्मविदाम् । यथा स्वाङ्गे पुरुषस्य । प्रसिद्धं तत् ऋषभदेवादिषु । तस्मात् भगवतः समवायित्वमप्रत्यूहम् । ननु यदि विकारस्य वाचारम्भणमात्रत्वं तदेतेन

रश्मिः ।

'सर्वभूतेषु येनैकं भावमव्ययमीक्षते' ।
'अविभक्तं च भूतेषु तज्ज्ञानं विद्धि सात्त्विकम्' ॥

इति सत्त्वं वा प्रत्यासत्तिः 'सत्त्वात्संजायते ज्ञानम्' इति वाक्यात् । अधिकारभेदेन ननु भक्तिसत्त्वयोः प्रत्यासत्तित्वं न प्रसिद्धं इति चेन्न ज्ञानलक्षणप्रत्यासत्तेः प्रसिद्धत्वात् भक्तिर्ज्ञानं सत्त्वं ज्ञानं अतः सामान्यलक्षणानादर इत्यर्थः । यथेति बहु सुवर्णमित्यत्र सुकृतमित्येव तस्याकाङ्क्षायां तत्तद्व्यक्तित्वेनानादरः किं तु सुवर्णत्वेन कटकादिकं सुवर्णमिति प्रत्येति तद्वत् 'भृङ्गारः कनकालुका' इति कोशः । सुकृतमिति विशेषणं कार्यात्मनावस्थितमित्यर्थकं योग्यत्वाय । असुकृतस्य पुरस्तात्स्वाभावात् । अस्येति जगतः । कारणताग्राहकान्वयमुक्त्वा व्यतिरेकबोधकं वाक्यमाहुः न यदिति । प्रसिद्धमिति । अंशत्वेन प्रसिद्धमकार्यम् । अष्टमेति । द्वादशस्कन्ध इत्यपि पाठः । क्रियाभिरिति जलाहरणादिरूपाभिः तत्तदाकारवचनानुकूलाभिर्वा । वचोभिरिति घटपटादिरूपाभिः । अजः शब्दान्मोंकारः । एतेनेति दृष्टान्ते फलभेदेनैव दार्ष्टान्तिक इत्यर्थः । मृत्पिण्डेन सर्वं मृण्मयमिति श्रुत्यनुकूलवाक्यान्तरमाहुः अन्यच्चेति । विकारस्येति षड्भावविकारस्य ।

मिति । अलीकत्वनिराकरणाय च मृत्तिकेत्येव सत्यमिति । ब्रह्मत्वेनैव जगतः सत्यत्वं, नान्यथेति ।

सामान्यलक्षणप्रत्यासत्तिनिराकरणं च स्पष्टमेवाग्रे त्रीणि रूपाणीत्यत्र करिष्यति । अतो ब्रह्मरूपेण सत्यस्य जगतो ब्रह्मैव समवायिकारणम् ।

---

भाष्यप्रकाशः ।

वाक्येन ब्रह्मणो विवर्तोपादानत्वमभ्युपगम्य प्रपञ्चस्यालीकत्वमेवाद्रियतां तावताऽप्येकविज्ञानेन सर्वविज्ञानसिद्धेरित्यत आहुः अलीकत्वेत्यादि । नान्यथेति न प्रतिनियतेन घटादिरूपेण, न वा जातिरूपेण नाप्यवान्तरोपादानरूपेण । तेषां रूपाणां व्यवहारमात्रार्थत्वादित्यर्थः । एतेन सिद्धान्ते प्रतिनियतरूपेण जगतः सत्यत्वाभावो न तु सत्यत्वेन रूपेण जगदभाव इति बोधितम् । ननु यदि ब्रह्मत्वेनैव जगतः सत्यत्वं तदा तेन रूपेण सामान्यलक्षणैवाद्रियतां, को दोष इत्यत आहुः सामान्येत्यादि । स्पष्टमिति अग्न्यादिविद्युदन्तेषु तेज इत्येव सत्यमित्यकथनात् त्रिवृत्करणस्य

रश्मिः ।

विवर्तेति उपादानविषमसत्ताकोऽन्यथाभावो विवर्तः । सर्वेति सर्वस्यानिर्वचनीयान्यथाख्याति-रूपत्वेपि विशेषदर्शनात्पूर्वं सर्वमस्त्येवेति न निर्विषयकं ज्ञानम् । व्यवहारे वयं भाट्टा इति वदतां जातिरूपसर्वत्वे शक्तिः । तेन सामान्यलक्षणा प्रत्यासत्तिः । अलीकत्वेत्यादीति । भाष्ये । मृत्तिकात्र । यत्र कश्चिद्भगवान् ज्ञातः इत्यादिभाष्यात् ब्रह्मविज्ज्ञानविषयिणी आज्ञा ब्रह्मापहाय एतस्याग्रहणं ब्रह्मरूपत्वख्यापनाय । भाष्ये । ब्रह्मत्वेनैवेति शुक्तौ रजतं शुक्तित्वेन न भासते परिणामे तु रजतस्थानीयं जगद्ब्रह्मत्वेन भासते इति न प्रच्छन्नबौद्धत्वम् । एवकारव्यावर्त्यमाहुः नान्यथेति । प्रकृते । न प्रतीति जगत्त्वेन षड्भावविकारेणेत्यर्थः । सत्यत्वेनेति जगतः पारमार्थिकेन रूपेण । तदुक्तं पद्यद्वयेन 'सत इदमुत्थितम्' इत्यनेन 'न यदिदमग्र आस' इत्यनेन च । तत्र कारिके

'सद्बुद्ध्या सर्वया सद्भिर्न सेव्यमखिलं जगत् ।
भ्रान्त्या सद्बुद्धिरत्रेति सन्तं कृष्णं भजेद्बुधः' ॥ इति पूर्वपक्षे ।

द्वितीये तु । 'खपुष्पादिसमत्वाद्धि मिथ्याभूतं जगद्यतः ।
अधिष्ठानाच्च सद्भानं तं कृष्णं नियतं भजेत्' ॥

इति । ब्रह्मत्वेनेति ननु सत्यत्वेनाव्यवहितत्वेपि जगत्त्वसमानाधिकरणसत्यत्वस्योक्तकारि-काभ्यामभावात् । समन्वयाधिकरणोक्तसत्यत्वं तु वर्तत एव ब्रह्मलक्षणान्तर्गतम् । अग्न्यादिष्वेति चन्द्रमा नोक्तः सामान्यलक्षणप्रत्यासत्तिनिराकरणप्रस्तावात् चन्द्रमस्त्वं न सत्यत्वं किं तु ब्रह्मत्वेनैव जगतः सत्यत्वमित्यादिभाष्योक्तब्रह्मत्वाभिन्नमतो न सामान्यलक्षणप्रत्यासत्तिनिराकरणप्रस्तावेन तदुक्तिः । न च ब्रह्मत्वमेव सामान्यलक्षणप्रत्यासत्तिरस्त्विति शङ्क्यम् । अवान्तरजातिलक्षणप्रत्यासत्ति-निराकरणप्रस्तावात् तस्य सामान्यत्वे द्वैतप्रसङ्गाच्च । तेज इति यथा मृत्तिकेत्येव सत्यमित्यवान्तरो-पादाने सत्यत्वं तद्वदकथनात् । तथा च श्रुतिः 'सदेव सोम्येदमग्र आसीत्' इत्यादि । प्रतिज्ञातमेक-विज्ञानेन सर्वविज्ञानं देवतासु प्रवृत्तिनिमित्तत्वायोक्त्वा 'तत्तेजोऽसृजत' 'तत्तेज ऐक्षत' इति । त्रिवृत्करणस्येति यथा तु खलु सोम्येमास्तिस्रो देवताः त्रिवृत्त्रिवृदेकैका भवति इति तन्मे विजानीह हीति' 'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादग्नेरग्नित्वं

भाष्यप्रकाशः ।

च बोधनात् त्रीणि रूपाणीत्येव सत्यमिति सावधारणं कथनाच्च स्पष्टम् । तेन, अपागादग्नेरग्नित्वमित्यादेरयमर्थः । यदग्न्यादौ रोहितादिगुणकं रूपमाकारत्रयं तदनागन्तुकस्वरूपविचारे अत्रिवृत्कृतानां तेजोऽबन्नानामेव, न तु त्रिवृत्कृतस्याग्न्यादेः कार्यस्य । त्रिवृत्करणात् प्रागपि सत्त्वात् । अतस्त्रिवृत्करणोत्तरमागन्तुकमग्नित्वादिकम्, अनागन्तुकरूपविचारे अनागन्तुकानारोपितरूपेणापागाद्, अग्न्यादेः सकाशादपगतम् । यतोऽग्नित्वादिकं वाचारम्भणमवस्थारूपत्वात्ताग्न्यादीनां तेभ्यो

रश्मिः ।

वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् । यदादित्यस्य रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादादित्यादादित्यत्वम् । वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् । यच्चन्द्रमसो रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागाच्चन्द्राच्चन्द्रत्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् । यद्विद्युतो रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागाद्विद्युतो विद्युत्त्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यमित्येवमित्यर्थः । तेन रूपत्रयं प्रवृत्तिनिमित्तमित्युक्तम् । अत्र पूर्वाङ्के निरुक्ते त्रिदेवतापक्षः चतुर्थश्चन्द्रमाः तासामपि ब्रह्मत्वेन मानं न वा । मुण्डकेपि क्षरात्सर्वे आत्मानो व्युच्चरन्तीत्यवताराणां जीवजडभिन्नत्वं न व्युच्चरणश्रावणाच्च तेषामपि जगत्त्वेन सत्यत्वं नान्यथेति प्राप्तं तत्र कृष्णाय देवकीपुत्रायेति छान्दोग्ये 'यज्ञेन यज्ञमयजन्त देवाः' इति यज्ञनारायणवाराहविषये महानारायणे तदादौ जगत्त्वेन सत्यत्वं बाधितं तदर्थं निरुक्ते अग्निः स्वाहाकृतिनामसु पठितस्तेन राधाग्निः । आत्मा पुरुषविधब्राह्मणोक्तस्तस्मै स्वाहाकृतिः पशुरूपायाः अग्निः पशुरासीत्तेनायजन्तेति पञ्चमाष्टकसमाप्तिकश्रुतेस्तेन प्रथमं तत्कथा । तदत्रादित्यः पशुरासीत्तेनायजन्त इत्यादित्यः कृष्णः 'कृष्णद्युमणिः' इति वाक्यात् तत्र कृष्णे वक्तव्ये प्रकृतिश्च राधारूपापि स्वाहाकृतिः । रामकृष्णयोः प्रकृतिपुरुषयोः सत्त्वेपि वायुः पशुरासीत्तेनायजन्तेत्यत्र विद्युदत्रोक्ता वायोरग्निरिति श्रुतेः । कार्यात्मत्वेन विद्युदुक्ता 'विद्युद्ब्रह्मेत्याहुः' इति बृहदारण्यकात् । तत्राप्यग्नित्वादीनामपायनं चन्द्रमस्त्वं कृष्णे वर्तते इति त्रयाणां रूपाणामसत्यत्वे शरदादौ रूपत्रयमुपमर्द्योपमर्दकभावेन प्रसिद्धम् । अत एव प्रकृतेः सत्त्वरजस्तमसां ते गुणाः । न च द्वैतापत्तिः 'प्रणवत्वेन प्रकृतित्वं वदन्ति ब्रह्मवादिनः' इति श्रुतेः तस्या गुणाः न द्वैतापादकाः । 'प्रकृतिमगन्' इति वाक्यात् । प्रकृतिः स्वरूपमित्युक्तम् । तेन रूपत्रयं प्रकृत्यवशिष्टा ।

'आसन् वर्णास्त्रयो ह्यस्य गृह्णतोनुयुगं तनुः ।
शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः' ॥

इति । त्रिवृत्करणोदाहरणश्रुत्यर्थमाहुः तेनेति । रोहितादीति । रोहितादयो गुणा यत्रेति बहुव्रीहिः । आकारत्रयमिति जगतो ब्रह्मत्वेन सत्यत्वे सति सामान्याभावे प्रवृत्तिनिमित्तमाकृतित्रयम् । अत्रिवृदिति कारणभूतानां तत्तेजो सृजत' 'तत्तेज ऐक्षत' 'बहु स्याम् प्रजायेयेति' 'तदपोऽसृजत' 'ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहि' । इति 'ता अन्नमसृजन्त' इति श्रुत्युक्तानामित्यर्थः । कार्यस्येति त्रत्कार्यस्यात्रिवृत्कृतस्याग्न्यादेरित्यर्थः । अनागन्तुकेति अनागन्तुकानि अत्रिवृत्कृताग्न्यादिरूपाणि रोहितादीनि तेषां विचारे तन्नितयरूपेणानागन्तुकानारोपितरूपेण । विचारस्वरूपमाहुः यत इति वाचारम्भणं वाङ्मात्रेणारभ्यते । अवस्थेति षड्भावविकाररूपत्वात् । तेभ्यः स्वकारणेभ्यो

भाष्यप्रकाशः।

भेदकमतत्त्रीणि रूपाणीत्येव सत्यमनागन्तुकानारोपितं रूपमिति बोध्यः। इदं च मूलकारणत्वात्यन्तपरोक्षत्वादन्त्यकार्यापेक्षया शिष्यविश्वासायोक्तम्। तत्र मूलकारणे ब्रह्मण्येव पर्यव-

रश्मिः।

भेदकं यथा कटकादीनामवस्था न कारणात्सुवर्णात् कार्यं कटकादेर्भेदकं कटकं सुवर्णमिति प्रतीतेः। तथा तेभ्यः पदार्थेभ्यो वा यथा पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वात्। तद्वन्न भेदकम्। वाचारम्भणत्वात्। अत इति व्यवहारदशायां भेदकस्य जातिरूपस्यासाधारणधर्मस्य ब्रह्मप्रकृतिगुणरूपस्य विवक्षणात्। अनागन्तुकेति। कारणताशक्तिः प्रकृतिरिति रामानुजभाष्येऽद्वैतांशे। विशिष्टांशे चिज्जडसमुदायः प्रपञ्चः प्रकृतिः। अत्र रोहितादिरूपाणां स्वरूपं मधुप्रपाठके पञ्चमे उक्तम्। अमृतानीत्यतो घटपटादिद्रव्यमपहाय गुणा जगत्यसाधारणधर्मा भेदका उक्ताः। घटः पटाद्भिद्यते घटत्वादित्येवं तत्र घटत्वादिस्थानापन्नं रोहितादिकं तु ऋग्वेदादिरूपशब्दानां रसाः आस्वादिका शक्तयः व्यामोहिकाः। तदुक्तम्। द्वितीयस्य नवमाध्याये चिद्रूपस्य व्यामोहिका शक्तिरिति। नाम चिद्विवक्तनेति ऋग्वेदान्नाम वेदश्चित् तस्य शक्ती रूपं, रूप विमोहन इति धातुपाठात्। सा प्रतिपाद्यप्रतिपादकभावसंबन्धेनार्थनिष्ठा शब्दप्रवृत्तिनिमित्तमिति मोहकत्वसाम्यात्। तत्रापि रोहितादिरूपं घटादिनिष्ठपटादिशक्तिः स्यादिति चेन्न। शक्तिश्च पदेन सह पदार्थसंबन्धोपि सोपि व्यामोहकत्वाद्रूपं व्यामोहकत्वं शब्दसंबन्धात् स चास्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छानुरूपः सः पदेन सह पदार्थसंबन्धः। अस्माकमिच्छावादः। आधुनिके नाम्नि शक्तिरस्त्येव एकादशेऽहनि पिता नाम कुर्यादिति ईश्वरेच्छायाः सत्त्वात्। आधुनिकसंकेते तु न शक्तिरिति संप्रदायः। नव्यास्तु ईश्वरेच्छा न शक्तिः किं तु इच्छैव तेनाधुनिकसंकेतेपि शक्तिरस्तीत्याहुः। शक्तिग्रहस्तु व्याकरणादिना

'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सांनिध्यतः सिद्धपदस्य वृद्धाः'॥

इति उदाहरणानि सिद्धान्तमुक्तावल्यां न्यायशास्त्रे। तथा च श्रुतिः 'नामानि कृत्वाभिवदन् यदास्ते' इति। अभिशब्दार्थः शक्त्यादिः तदप्युक्तम्

'लोके शब्दार्थसंबन्धो रूपं तेषां च यादृशम्।
न विवादस्तत्र कार्यो लोकोच्छित्तिस्तथा भवेत्'॥

इत्यलं पल्लवितेन। सन्तं कृष्णं भजेद् बुधः इत्युक्तम्। तथैकविज्ञानेन। किं च अप्रतीकालम्बनसूत्रे गुरौ प्रतिमायां च भगवान् सांनिध्यं करोतीत्युक्तम्। महानारायणे च 'यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात्' इति 'मृदादि भगवद्रूपं घटाद्याकारसंयुतम्' इति निबन्धे। अन्तस्तद्धर्मोपदेशादित्यधिकरणे 'ध्येयः सदा सवितृमण्डलमध्यवर्ती' इति तथात्मोपनिषदन्तरात्मपरमात्मबाह्यात्मप्रतिपादिका इत्यादिकं पूर्वोक्तपक्षे विरुद्ध्यते अत एव 'न यदिदमग्र आस' इति श्लोके निधनादन्तरा त्वयि भाति मृषैकरसे इत्यन्तरालिकसृष्टिरुक्तातो ब्रह्मत्वेनैव जगतः सत्यत्वं नान्यथेति भाष्यतात्पर्यं वदन्ति इदं चेति। अन्त्यकार्येति। 'ऐन्द्रजालिकपक्षेपि तत्कर्तृत्वं नटे यथा' इति निबन्धोक्तकार्यापेक्षायाम्। यत्तु अन्त्यस्य कुलिण्डस्य कार्यापेक्षया लोहमणिरप्यन्त्यः चिन्तामणिवत्।

भाष्यप्रकाशः ।

स्तीत्यभिप्रायेण । तदग्रे च यदुपदिष्टं तत् सर्वं मूलकारणस्य कार्यद्वारा परिचायनार्थम् । अतः सर्वस्य ब्रह्मैव समवायिकारणमिति सर्वं सुस्थम् । ननु जगतो ब्रह्मरूपेण सत्यत्वे तस्मिन्

रश्मिः ।

तत्र नखनिकृन्तनस्यात्यन्तसत्त्वं चिन्त्यमतो यत्र कुत्रचिद्भगवान् ज्ञात इत्यादिभाष्योक्ताभिप्राय एवेति ज्ञेयम् । शिष्यस्य श्वेतकेतोर्विश्वासार्थमारुणिना पित्रोक्तम् । यतः श्वेतकेतुः पित्राज्ञया सर्वान्वेदानधीत्यानूचानमानी स्तब्ध इति तदधिकारेण विश्वासः । मूलकारणे इन्द्रजालकर्तरि । एवं च समवायिनिरूपणे प्रकृतेनाकाङ्क्षितनिमित्तनिरूपणं जातमित्यर्थान्तराख्यनिग्रहस्थानं परिहर्तुं वाचारम्भण-स्यार्थमुपक्रान्त 'उत तमादेशः' स उपसंहारे एवं९सोम्य स आदेशो भवतीत्यनूदितस्तस्य सर्वस्य तस्याप्यग्रेतनस्य 'सदेव सोम्येदमग्र आसीत्' इत्यादेः अभिप्रायमाहुः एतदग्रे चेति, उपदिष्टम् । 'एवं सोम्य स आदेशो भवतीति सर्वं च सदेव सोम्येदमग्र आसीत्' इत्यादि । आ समाप्ति । तत्र यत्किंचित्पूर्वं व्याख्यातमन्यट्टीकायामस्ति । समवायीति अतो न निग्रहस्थानमितिभावः । प्रकृता-नाकाङ्क्षिताभिधानस्यार्थान्तररूपनिग्रहस्थानत्वात् । उपदेशेषु विशेषोपि भाति टीकानुगुणमेव । 'सर्व-वादानवसरं नानावादानुरोधि यत्' इतिनिबन्धाट्टीकोक्तसंदेहापनुत्तये उपदेशान्तरावतरणात् । पूर्वोप-देशे परदेवतोक्ता सा माध्वानाम् । तेषां भाष्ये श्रुतिस्मृत्युदाहरणेन विशेषानुपलम्भात् । द्वितीयोपदेशो विज्ञानेन्द्रभिक्षुमिमतकः 'यथा मधु मधुकृतो निस्तिष्ठन्ति' इति श्रुतिः तदीयग्रन्थेषु दृश्यते इति । तृतीयोवान्तरकारणादिविषयकः चतुर्थेऽवान्तरकारणादिविषयकः । नमामि यमुनामहमित्याचार्याः । सर्वं जहाति सर्वः शुध्यतीति श्रुतेः । 'आपमापामपः सर्वा' इत्यारण्ये । जैमिन्याचार्यविषयकः वृक्षस्यौष-धिविधोपयुक्तत्वात् तस्याश्च वेदस्यादौ सत्त्वात् । पञ्चमः जीवब्रह्मवादविषय इति शंकरभाष्यविषयः । 'तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इत्यष्टपदात्मकोपदेशात् । षष्ठो भेदाभेदविषयको भास्कराचार्य-मतकः । यदोषा लवणमुदके अवाधा अत्र तदाहरेति तद्धावमृश्य न विवेद यथा विलीनमेवेति श्रुतेः । लवणं न समुद्ररूपं जलं । जलं न लवणमिति भेदाभेदौ । सप्तमः समष्टिः साधारणः । पण्डितो मेधावीति स्वस्याधिकारबोधनात् 'आचार्यवान् पुरुषो वेद' इति श्रुतिकथनाच्च । 'यावन्न विमोक्ष्येऽथ संपत्स्ये' इति श्रुतिः । सर्वभाष्यप्रसिद्धत्वाच्च तस्या अत्र सत्त्वात् । अष्टमो रामानुजशैवाज्ञानवाद-विषयकः तस्य यावन्न वाङ्मनसि संपद्यते इत्यादिना संपत्त्युक्तेः संपत्तेभिदविद्वैशिष्ट्ये संभवः । अथ न जानातीति श्रुत्या अद्वैतमज्ञानवादश्च । नवमः श्रीवल्लभाचार्याणामुपदेशः 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इत्येकादशपदात्मकः सत्येनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स न दाह्यते अथ मुच्यते इति स्वरूपलक्षणोक्तेः सत्येनेत्युपलक्षणं ज्ञानानन्तयोः अतोऽष्टाक्षरमन्त्रे कृष्णोर्थः सदानन्दरूपः शब्दश्चिदिति सच्चिदानन्दः श्रीः प्रेक्षश्रितलक्ष्म्याः 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति श्रुतेः । 'शरणं विहितं मुमुक्षुर्वै शरणमनुव्रजेत्' इति । महाराजत्वात् अस्मिन् पक्षे समागते शरणमार्गस्त्वष्टाक्षरे च, त्रयक्षरे भक्तिमार्गः । ममेति निक्षेपः । अमुकशर्मण

देहात्मबुद्धिस्तु सत्यां विकारबुद्धौ दोषः । श्रुतिसामर्थ्यं प्रमाणमित्युक्तम् । तस्माद् ब्रह्मैव समवायिकारणं, न प्रकृतिः ॥ २३ ॥

भाष्यप्रकाशः ।

ब्रह्मधर्मविरुद्धधर्माध्यासो न स्याद्, देहादेरप्यात्मत्वेन सत्यता स्यात् । तथा सति देहात्मबुद्धेर्दोषत्वमप्यपेयात् । ततश्चाविद्यानिवर्तकशास्त्रवैयर्थ्यमापद्येतेत्यतो जगन्मिथ्यात्वमेव साधीय इत्यत आहुः देहात्मेत्यादि । वस्तुविचारेण जगतो ब्रह्मरूपत्वेऽपीदानीं बहुजन्माभ्यस्तविकारबुद्धेरनिवृत्तत्वात् तस्यां सत्यां या देहात्मबुद्धिः सा देहाभिन्नत्वेनात्मावगाहिनी, न त्वात्माभिन्नत्वेन देहावगाहिनी । आत्मस्वरूपस्याज्ञातत्वादतो दोषरूपैवेति न कोपि जगतो ब्रह्मरूपत्वे पूर्वोक्तो दोष इत्यर्थः । नन्वेवं व्यवस्थया देहात्मबुद्धेर्दोषत्वे किं मानमित्याकाङ्क्षायां पूर्वोक्तं स्मारयन्ति श्रुतीत्यादि । श्रुतिसामर्थ्यमिति । दृष्टान्ते हि कार्यत्वन्यकारेण कारणात्मकत्वमुपदिष्टं, न तु तत्पुरस्कारेण । किंच । कारणात्मना कार्यज्ञानमभिसंहितं, न तु कार्यात्मना कारणज्ञानम् । अतस्तत्सामर्थ्यमेव तादृशव्यवस्थायां प्रमाणमित्यर्थः । सिद्धमाहुः तस्मादित्यादि ॥ २३ ॥

रश्मिः ।

इति । ब्रह्मधर्मेति । ब्रह्मधर्मा अपहतपाप्मत्वव्यापकत्वादयः तद्विरुद्धाः पापित्वाव्यापकत्वादयः तेषां त्वध्यास एवातस्मिन् तत्त्वारोपात् । देहात्मबुद्धेरिति अहं स्थूल इत्यादिरेव देहात्मबुद्धिः । ततश्चेति सार्वविभक्तिकस्तसिः देहात्मबुद्धेर्दोषत्वापाये । अविद्या पञ्चपर्वा देहाध्यासः प्राणाध्यासोन्तःकारणाध्यास इन्द्रियाध्यास इति तन्निवर्तकं शास्त्रं पञ्चपर्वविद्याबोधकम् । 'वैराग्यं सांख्यायोगौ च तपो भक्तिश्च केशवे' इति पञ्चपर्वाणि तद्बोधकं शास्त्रं 'त्रय्या चोपनिषद्भिश्च सांख्ययोगैश्च सात्वतैः उपगीयमानमाहात्म्यम्' इतिवाक्यात् षट् शास्त्राणि । जगन्मिथ्यात्वमिति । शुक्तिकारजतवत् न त्ववान्तरकारणमृत्पिण्डादिदृष्टान्तेन ब्रह्मत्वेन । विकारेति षड्भावविकारबुद्धेः । आत्मावगाहिनीति अतिरिक्तस्यात्मनो दर्शनादिति हेतुः । अज्ञातत्वादिति तथाच विशिष्टज्ञाने विशेषणज्ञानस्य कारणत्वात् विशेषणस्यात्मरूपत्वात् । पूर्वोक्त इति आभासोक्तः । तत्पुरस्कारेणेति । तत्सामर्थ्यमिति श्रुतेः सामर्थ्यम् शब्दव्यापारः तदपि प्रमाणं श्रुतिसंबन्धात् श्रुतिकृतिः प्रमाणं तत्संबन्धात्कृतिस्तस्येति तृतीयस्कन्धपद्यस्य यतो भवद्भिश्चमित्यस्य कारिकायाम्[1] । तादृशेति दोषो दृश्यते यत्र व्यवस्थायां प्रमाणं समर्था श्रुतिः प्रमाणं व्यापारानाविष्टयाप्रमाणात्वाभावात् करणत्वाभावेन प्रमाणलक्षणाप्रसक्तेः । तस्मादित्यादीति । तस्मात् । अर्धजरतीयेनोभयस्थापनपक्षाभावात् ॥ २३ ॥

---

१. सर्वैरादरणीयो यः स प्रमाणमिहोच्यते । तत्संबन्धात्कृतिस्तस्य प्रमाणं वाक्यमेव च ॥

 भाग० ३।२३।२० श्लोकस्येयं कारिका ।

## अभिध्योपदेशाच्च ॥ २४ ॥

लिङ्गान्तरमाह । सोऽकामयत बहु स्यां प्रजायेयेतीत्यत्र कामनं तस्याभिध्यानम् । आप्तकामत्वान्न कामना । तदभिध्यानं सृष्टावुपदिश्यते । बहु स्यामिति स्वस्यैव बहुरूपत्वाभिध्यानेन सृष्टं स्वयमेव भवति । सुवर्णस्यानेकरूपत्वं सुवर्णप्रकृतिकत्व एव । अध्यासाभावात् गौणत्वापत्तेश्च । न हि मुख्यं बहुभवनं

---

भाष्यप्रकाशः ।

अभिध्योपदेशाच्च ॥ २४ ॥ सूत्रमवतारयन्ति । लिङ्गान्तरमाहेति । ननु दृष्टान्ते मृत्तिकेत्येव सत्यमिति कारणे सत्यपदमुक्तम् । अतस्तत्सामर्थ्येन कार्ये मिथ्यात्वमपि प्रमातुं शक्यत इति शङ्कायां प्रपञ्चे विवर्तत्वस्य ब्रह्मणि विवर्तोपादानत्वस्य च निरासाय लिङ्गान्तरमाहेत्यर्थः । अभिध्यानमिति । एवमेवमिदं करिष्यामीत्यालोचनम् । विचार इति यावत् । सुवर्णप्रकृतिकत्व इति अंशकार्ययोस्तथात्वे । नन्वभिध्योपदेशोऽपि न ब्रह्मणः समवायित्वसाधकः । योगिकायव्यूहवदपि बहुभवनाभिध्योपपत्तेरित्याशङ्कायामाहुः अध्यासेत्यारभ्य नान्यथेत्य-

रश्मिः ।

अभिध्योपदेशाच्च ॥ २४ ॥ चेति अनुक्तसमुच्चये चकारः । पूर्वपक्षनिरासाय च इत्यस्यार्थस्य समुच्चायकः । प्रमातुमिति कार्यं मृत्पिण्डादि मिथ्या कृतकत्वात् घटवत् इति । लिङ्गान्तरमिति अर्धजरतीयाभावो लिङ्गम् । अभिध्योपदेशोन्यलिङ्गमिति अन्यलिङ्गं लिङ्गान्तरम् । भाष्ये । कामनमित्यादि कामयतेत्यस्य विवरणम् । बहु स्यामिति बहुनिष्ठसत्तानुकूलव्यापारोऽभीष्टस्तद्विषयिणी कामनात्र कामनं तस्याभिध्यानं 'प्रजायेय' इत्युक्तम् । अभित उच्चनीचभावेन ध्यानं चिन्तनमुपादानकारणसहितचिन्तनं प्रजायेयेति इत्युक्तप्रजननानुकूलव्यापारोभीष्ट इत्येवम् । ननु ह्यभिध्यानं पराभिध्यानसूत्रोक्तं परस्य भगवतो अभितो ध्यानं रमणेच्छेति विहाय कुतोभीष्टे इच्छाविषयो लक्षणया व्याख्यात इति चेन्न तदभिध्यानादेवेति सूत्रे तस्य तस्य कार्यस्योत्पादनार्थं तदभिध्यानं ततस्तदात्मकत्वं तेन तद्वाच्यत्वमिति भाष्यात् । ननु स्वरूपे प्रकृतिं निवेश्य मुख्यार्थत्यागे को हेतुरत आहुः । आप्तेति आप्तकाम इति श्रुत्यन्तरेणेत्यर्थः । सृष्टाविति सृष्ट्यर्थमेकोहं बहु स्यां प्रजायेयेत्युपदिश्यते । भवतीति न तु शुक्तौ रजतवन्मिथ्या । नापि पूर्वपक्षः । त्वया पूर्वपक्षिणा प्रकृतेर्जडत्वाङ्गीकारादिति भावः । 'क्षीरवच्चेष्टितं प्रधानस्य' इत्यग्रे प्रतिविधास्यते । प्रकृते । अंशेत्यादि ननु सुवर्णस्य कार्यरूपस्य सुवर्णपिण्डरूपस्य सुवर्णप्रकृतिकत्व इत्यर्थं इतिचेन्न दार्ष्टान्तिके सुवर्णस्थानापन्नयोरुक्तेः । अंशाः शकलानि सुवर्णस्य भेदस्वरूपायां प्रकृतौ भवन्ति जलस्य तु न भवन्ति शकलानि भेदरूपप्रकृत्यभावात् तद्रूपप्रकृतेरंशेषु स्वरूपभूतप्रकृतिसत्त्वात् तत्संबन्धे जीवत्वं इवार्थे भेदकवत्त्वं च कार्येषु सुवर्णरूपत्ववत् ब्रह्मत्वं इवार्थभेदकवत्त्वम् । इवशब्दस्त्वेवं स्मर्यते 'अविभक्तं च भूतेषु विभक्तमिव च स्थितम्' इति ब्रह्मनिरूपणे गीतायाम् । तथात्व इति दार्ष्टान्तिके ब्रह्मप्रकृतिकत्वे ब्रह्मप्रकृतिर्ययोस्तेंशकार्ये तथा सुवर्णांशकार्यत्वेन प्रकारेण यथा तथा ब्रह्मांशकार्यत्वेन प्रकारेण तयोर्भावस्तथात्वं तस्मिन् । अध्यासेत्यारभ्येति इह ब्रह्मण इति शेषं पूरयित्वा तत्र हेतुद्वयं योजनीयम् । कायव्यूहे अध्यासोपयोगः । मुख्यमिति समवायिनः स्वस्य विद्यमानत्वे सिंहादिरूपत्वं ब्रह्मसमवायिवत् किंतु स्वस्यैव

योगिनां संभवति । सर्वभवनसामर्थ्यान्मुख्ये संभवति गौणकल्पनाया अन्याय्यत्वात् । चकारात्, इदं सर्वं यदयमात्मेति कार्यस्य ब्रह्मत्वश्रुतिर्ब्रह्मप्रकृतित्वे संभवति, नान्यथा ।

अथवा 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इति तस्य जगद्रूपत्वेनाभिध्यानमुपदिश्यते । तद् ब्रह्मसमवायित्वे घटत इति चकारात् 'एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम्' इति ॥ २४ ॥

भाष्यप्रकाशः ।

न्तम् । ननु योगबलेनाभ्यासाभावेऽपि भगवान् नानाभावं कर्तुं शक्नोति, गौणत्वं ब्रह्मणोऽविकृतत्वसाधकत्वाददुष्टम् । अतो नेयमभिध्या समवायित्वसाधने लिङ्गं भवितुं शक्नोतीत्याशङ्क्य व्याख्यानान्तरमाहुः अथवेत्यादि । तत्र हि सर्वस्य ब्रह्मत्वे, तज्जलानित्यनेनोत्पत्तिस्थितिलयाधारत्वं हेतुत्वेनोक्त्वा तथाभिध्यानमुपदिश्यते । यदि समवायित्वं नाभिप्रेयाद्धेतुं न वदेदतस्तथेत्यर्थः ॥२४॥

रश्मिः ।

सिंहत्वादिः । ननु क्षीरवच्चेष्टितं प्रधानस्येति सांख्यसूत्रात् अर्धजरतीयन्याय इति चेत्तत्राहुः सर्वभवनेति मुख्ये बहुभवने । गौणेति प्रकृतिगुणसंसर्गवत्त्वादर्धजरतीयकल्पनायाः । सूत्रीयचकारार्थमाहुः चकारादिति इदं सर्वं चिज्जडात्मकम् । ब्रह्मप्रकृतिकत्व इति जीवेषु ब्रह्मोपादानत्वे प्रकृतिरिवांशभेदके । जडेष्वप्येवम् । नान्यथेति प्रकृत्यंशपरित्यागे प्रकारे । प्रकृते । गौणत्वमिति प्रकृतिगुणसंसर्गवत्त्वम् अविकृतस्य चिन्तामण्यादिवदविकृतत्वं यत्तत्प्रकृतिस्वरूपकत्वे इत्यविकृतत्वसाधकत्ववत् । इयमिति अभित उच्चनीचभावेन चिन्तनं स्वस्य रमणेच्छाविषयम् । अभिध्यानमित्युपासनम् । पराभिध्यानात्तु तिरोहितमित्यत्र यद्व्याख्यातं तत्तु पूर्वव्याख्याने हेतुमिति तज्जलानितीतिपदं हेतुवाचकं हेतुर्वाच्यः । तथेत्यर्थ इति यो यदंशः स तं भजेदिति वाक्यात् समवायित्वम् । इदं ब्रह्मसमवायित्वे घटते इतीति भाष्यस्यार्थः । प्रकृते । किं प्रयोजनमित्याशङ्क्य भाष्ये प्रयोजनमाहुः चकारादिति इयं राजविद्याराजगुह्यनिरूपणेऽस्ति प्रकृतेः स्वरूपत्वे एकत्वं एकं ब्रह्मप्रकृतिरित्यत्रापाततोभातेनेवार्थपृथक्त्वेनाभेदेपि अत्र शंकराचार्याः प्रकृतिरुपाधिरिति बहु स्यामिति प्रत्यगात्मविषयत्वाज्जीवरूपेण बहुत्वमित्याहुः । किंच सोऽकामयत इति कर्तृत्वम् । तेन सगुणब्रह्मत्वं द्योतितम् । रामानुजभाष्ये विचित्रचिदचिद्रूपेणाहं बहु स्यामिति विशिष्टाद्वैतम् । माध्वभाष्ये तु

'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
महामायेत्यविद्येति नियतिर्मोहिनीति च ।
प्रकृतिर्वासनेत्येवं तवेच्छाऽनन्त कथ्यते' ॥

इतिवचनात् तदभिध्यैव प्रकृतिशब्देनोच्यते 'सोभिध्या स कृतिः स प्रज्ञा स आनन्दः' इति श्रुतेरभिध्या च स्वरूपमेव ।

'ध्यायति ध्यानरूपोसौ सुखी सुखयतीव च ।
परमैश्वर्ययोगेन विरुद्धार्थतयेष्यते' ॥

इति ब्रह्माण्डे । एतद्वक्ष्यन्ति चाग्रे भास्करभाष्ये इतश्चापोदानं 'तदैक्षत बहु स्यां प्रजायेय' इति बहु भवामीति संकल्पपूर्विका प्रकृतिरभिध्यानमिति प्रकृतिस्तूपाधिरित्येवं भाति तन्मते जीवस्य व्यापकत्वात् ॥ २४ ॥

साक्षाच्चोभयाम्नानात् ॥ २५ ॥

लिङ्गमुक्त्वा श्रुतिमेव प्रमाणमाह । साक्षाच्छ्रुत्यैव समवायित्वमुच्यते । चकारात् स्मृत्यापि । कथं श्रुत्योच्यते तत्राह उभयाम्नानात् । ब्रह्मणः सकाशात् ब्रह्मण्येव च सृष्टिप्रलययोराम्नानात् । सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्तीति । 'अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा' इति च । न ह्येतस्मिन्निमित्तत्वे संभवति । सुवर्णादिषु तथोपलब्धेः । लोकवेदन्यायेन साक्षात्त्वम् । तस्मात् भगवानेव समवायिकारणम् ॥ २५ ॥

---

भाष्यप्रकाशः ।

साक्षाच्चोभयाम्नानात् ॥ २५ ॥ सूत्रमवतारयन्ति लिङ्गमित्यादि । 'मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्' इति स्मृत्या कश्चित् प्रत्यवतिष्ठेदतस्तन्निरासाय श्रुतिमाहेत्यर्थः । एतस्मिन्निति प्रलयबोधक आकाशवाक्ये । लोकवेदन्यायेनेति लौकिकेन वैदिकेन च न्यायेनेत्यर्थः ॥ २५ ॥

रश्मिः ।

साक्षाच्चोभयाम्नानात् ॥ २५ ॥ लिङ्गमित्यादीति भाष्ये लिङ्गं शब्दस्य सामर्थ्यं सर्वं खल्विदं ब्रह्मेतिशब्दस्य । हेतुं वोक्त्वा । श्रुतिमेवेति आनुमानिकसूत्रोक्तानुमानं व्यवच्छिनत्त्येवकारः । प्रकृते । मयाध्यक्षेणेति इयं राजविद्याराजगुह्ययोगाध्यायेस्ति अतोन्यथाज्ञाने स्वमार्गीयोपि कश्चित् प्रत्यवतिष्ठेदित्यर्थः । अस्या उल्लेखो भाष्ये सृष्टिद्वयविवरणादत्रापि प्रकृतिं यान्ति मामिकामिति स्वरूपं प्रकृतिरुक्ता विकृतसमवायित्वार्थं नतु विपरिवर्तनार्थम् ।

'यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय' ॥

इति पूर्वमुक्तत्वात् पुनः प्रकृतिं स्वामवष्टभ्य विसृजामि इत्यविकृतसमवायित्वार्थम् । स्वामिति अग्रे आन्तरालिकसृष्ट्यर्थम्—

'मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनानेन कौन्तेय जगद्विपरिवर्तते' ॥

इति विवर्तकरूपान्तरालिकसृष्टिरुक्तेति । भाष्ये । ब्रह्मणः सकाशादिति कर्तृत्वं कुलालाद् घट इतिवत् ब्रह्मणीति समवायिनि । इह कपालयोर्घटो भविष्यति कपालयोर्घटो ध्वस्त इतिवत् आकाशादिति आकाशस्तल्लिङ्गादिति सूत्रे आकाशो ब्रह्मेति निर्णीतम् । आकाशशरीरं ब्रह्मेति श्रमते । तत्स्वरूपमित्युक्ता प्रकृतिः . सा च कर्तृत्वस्य शरीरव्यापकत्वात् अविकृतत्वसाधकत्वेपि स्वरूपं शरीरम् । कर्तृत्वात् कुलालस्य कर्तृत्वाच्छरीरित्वं दृष्टं अस्तं यन्ति लयं यन्ति समवायित्वबोधकम् । प्रभवत्स्मादिति प्रभवः प्रलीयतेऽस्मिन्निति प्रलयः । प्रकृते । आकाशेति निमित्तत्वं संभवति निमित्तत्व इति पाठे निमित्तत्वे प्रतिपाद्ये सत्यभिन्ननिमित्तोपादानत्वरूपो मुख्यार्थः संभवतीत्यर्थः । क्वचित्पुस्तके न ह्येतन्निर्निमित्तत्वे संभवतीति पाठः । भाष्ये । सुवर्णादिष्विति सुवर्णं सुवर्णः सुवर्णकारश्च सुवर्णौ निमित्तोपादाने आदी येषां मृत्पिण्डकुलालादीनां ते सुवर्णादयस्तेषु एकैकत्वोपलब्धेः । यद्वा निमित्तत्वमीश्वरेतिना ईश्वरत्वादिभिर्वा मृद्वपि सिद्धं तादृशे

आत्मकृतेः परिणामात् ॥ २६ ॥

ननु 'स एव सर्वं सृजति स एवावति हन्ति च' इति कर्तृत्वप्रतीतेरा-काशादिवाक्यमप्यौपचारिकं भविष्यतीति तन्निराकरणायाह आत्मकृतेः । 'तदात्मानं स्वयमकुरुत' इति स्वस्यैव कर्मकर्तृभावात् । सुकृतत्ववचनाच्चालौकिकत्वम् । तथापि ज्ञानार्थमुपपत्तिमाह परिणामात् । परिणमते कार्याकारेणेति ।

---

भाष्यप्रकाशः ।

आत्मकृतेः परिणामात् ॥ २६ ॥ परिणामात् प्राप्तस्य विकृतत्वस्य परिहारार्थं युक्ति-

रश्मिः ।

निमित्तत्वे न ह्येतत्संभवति यतः सुवर्णादिषु समवायिषु तथास्तापनादि तस्य भावः तस्योपलब्धेरतो ब्रह्मसमवायीत्यर्थः । परंपरयोपलब्धिः । प्रकृते । लोकवेदेति कथमस्याः साक्षात्त्वं तत्राहुरित्य-वतरणं पूरणीयम् । स्मृतिर्हि लोकवेदात्मिकेति । गर्भस्तुतिसुबोधिन्याम् । सह अक्षेण प्रत्यक्ष-मूलवेदन चिद्रूपेण वा यो लोकः । साक्षाच्चेति सूत्ररूपस्मृत्यात्मकः स साक्षस्तमततीति साक्षात् सर्वाणि ह वा इमानीति श्रुतिः तस्य भावः साक्षात्त्वम् । लोकवेदन्यायोप्ययम् । अयं न्यायो लोके भवो वेदे भवो न तु मन्वादिस्मृतिषु भव इत्याहुः लौकिकेनेत्यादि । भवार्थे ठक् । तथा च लोक-भवेन न्यायेन वेदभवेन न्यायेनेति भाष्यार्थः । 'मयाध्यक्षेण' इति गीता समाधनं तु व्याख्याना-वसरे जातमिति न पुनरुच्यते आन्तरालिकसृष्टेः सिद्धान्तेप्यङ्गीकारात् । भाष्ये । तस्मादिति साक्षाच्छ्रुतिसत्त्वात् । अन्यत्र भाष्ये ब्रह्मणः समवायित्वं रामानुजभाष्ये साक्षादुभयात्मानं किंस्विद्वनं क उ स वृक्ष आसीत् इत्यादि श्रुतावित्युक्तम् । माध्वभाष्ये पैङ्गिश्रुतिः प्रकृतिपुरुषौ ब्रह्मेति वक्ती-त्युक्तम् । तदग्रे वक्ष्यन्ति । भास्कराचार्यभाष्ये सर्वाणि ह वा इमानीति श्रुतिः तत्र स्वस्वमतभेदो ज्ञातव्यः नानावादानुरोधित्वाद् ब्रह्मणः ॥ २५ ॥

आत्मकृतेः परिणामात् ॥ २६ ॥ भाष्ये । औपचारिकम् आकाशस्तल्लिङ्गादित्य-धिकरणस्य विकृतसमवायिब्रह्मपरत्वमौपचारिकम् । प्रकृतिगुणसंसर्गवत्त्वेन ।

'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहंकारविमूढात्मा कर्ताहमिति मन्यते' ॥

इति गीतायास्तन्निराकरणाय सुकृतत्वेति । सोऽकामयतेति पूर्वसूत्रोक्तश्रुत्यनन्तरं स तपस्तप्त्वा इदं सर्वमसृजतेत्याद्युक्त्वा 'तदप्येष श्लोको भवति' 'असद्वा इदमग्र आसीत् ततो वै सदजायत' 'तदात्मान९स्वयमकुरुत तस्मात्तत्सुकृतमुच्यते' इतीति पठ्यते अत्र सच्छब्देन ब्रह्मैवोच्यते 'अहमेवा-समेवाग्रे' इत्यस्य सुबोधिन्याम् । सदसदिति सच्छब्देन च ब्रह्मैवोच्यत इत्यर्थः तथा च अः सत् असत् तत्कर्म आत्मा नगः पर्वतः इति पाठान्तरम् । आत्मानमिति पाठः । सुकृतमात्मानं परिणमय्य कृतं तस्य वचनादित्यर्थः । अलौकिकत्वं परिणामित्वेप्यविकृतत्वम् । ज्ञानार्थमिति अविकृतत्व-ज्ञानार्थम् । कार्यकारणवस्त्वैक्येति वाक्यात् यद्यपि दुग्धं दधि भवतीति प्रत्ययेन दुग्धं न स्यात् चेत्प्रत्यक्षविरुद्धघटादि दधि स्यात् इत्युपपत्तिः । तथा प्रपञ्चो ब्रह्म न स्यान्मनसाप्याकलयितुम-शक्यरचनो न स्यात् इति परिणामविषयिणी तथापि विकृतपरिणामविषयिणीति सर्वाणि तैजसानीति वक्ष्यन्ति यदि सुवर्णमविकृतपरिणामि न स्यात् कटकमपि कुण्डलं स्यात् सुवर्णवत् । न

अविकृतमेव परिणमते सुवर्णम् । सर्वाणि च तैजसानि । वृद्धेश्चालौकिकत्वाद् ब्रह्मकारणत्व एव घटते पूर्वावस्थान्यथाभावस्तु कार्यश्रुत्यनुरोधादङ्गीकर्तव्यः ।

भाष्यप्रकाशः ।

आहुः अविकृतमित्यादि । सर्वाणि च तैजसानीति यथविकृतपरिणामस्य बाहुल्यं नाभिप्रेयात् पूर्वं सर्वतैजससाधारणस्य लोहपदस्योक्तत्वेऽपि पुनः कृष्णायसं न दृष्टान्तीकुर्यात् । अतो बाहुल्याभिप्रायेणैव तदुक्तिरसमीचीनत्वेन प्रतीयमानस्यापि ब्रह्मसमवायिकत्वबोधनार्थं च । ननु, तदैक्षत बहु स्यां प्रजायेयेति बहुभवनादिवृद्धेस्तेजःप्रभृतिषूक्तत्वात् तेषामपि विकारित्वं चेत् सुवर्णादीनां का वार्तेत्यत आहुः वृद्धेरित्यादि । तेषां वृद्धिर्न लौकिकी । सर्वतः पूर्वभावित्वेन श्रुत्येकसमधिगम्यत्वात् । अतः सा तेजआदिकर्तृकस्यापीक्षणस्य ब्रह्मकारणत्व एव घटते । तासु जीवानुप्रवेशस्य पश्चादुक्तत्वेनेक्षणदशायामचेतनत्वात् । अतस्तासामपि ब्रह्मवदविकृतत्वाच्च सुवर्णादिषु तद्दृष्टान्तेनानुपपत्तिरित्यर्थः । ननु पूर्वावस्थान्यथाभावरूपो विकारस्तु ब्रह्मणोऽप्यायातीति कथं ब्रह्मणोऽप्यविकृतत्वमित्यत आहुः पूर्वेत्यादि । तथा च दधिदुग्धन्यायेन स्वरूपस्य गन्धादिगुणानां चान्यथाभाव एवात्राग्राह्यविकारत्वेनाभिप्रेयते, न तु संख्याद्यन्यथाभावोऽपि तथात्वेनेति कार्यश्रुत्यनुरोधादङ्गीक्रियते । अत एव वेदस्तुतौ, 'न हि विकृतिं त्यजन्ति कनकस्य तदात्मतया स्वकृतमनुप्रविष्टमिदमात्मतयावसितम्' इति ग्राह्यविकार-

रश्मिः ।

त्वेवमिति मम न विकृतं परिणामि परिणमत इति, णम प्रह्वत्वे शब्दे च भ्वा. प. से. पर्युपसर्गात्मनेपदम् । लोहदृष्टान्तानन्तरं नखनिकृन्तनदृष्टान्तसूचितमर्थमाहुः असमीचीनेति । बहुभवनादीति बहुषु भवनं जायते इति भावविकारः आदिशब्देन अस्ति विपरिणमते वर्धते भवनादि वृद्धिः तस्याः । न लौकिकीति परिणामपरित्यागो द्वितीयस्य वृद्धिरूपस्यादिमः उभावेकीकृतो लोके वृद्धिः एवमपक्षीयते इत्यपक्षयः । नश्यतीति नाशः । तदेतद्द्वितीयसुबोधिन्यां द्रष्टव्यम् । तेजआदीति । छान्दोग्ये श्वेतकेतूपाख्यान एव 'तत्तेजोऽसृजत' 'तत्तेज ऐक्षत' 'बहु स्यां प्रजायेय' इति 'तदपोऽसृजत' 'ता आप ऐक्षन्त बह्व्यः स्याम प्रजामहि' इति 'ता अन्नमसृजन्त' । ब्रह्मेति तत्रैवेत्यस्याः पूर्वं 'सदेव सोम्येदमग्र आसीत्' 'एकमेवाद्वितीयं तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयम्' 'तदैक्षत बहु स्यां प्रजायेय' इति 'तत्तेजोऽसृजत' 'तत्तेज ऐक्षत' इत्येवं ब्रह्मकारणत्वं तस्मिन् । तास्विति तेजोबन्नात्मिकासु देवतासु । पश्चादिति 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इत्यनेन जीवानुप्रवेशस्य तत्तेज ऐक्षतेत्यादिनोक्तक्षणात्पश्चात् उक्तत्वेनेत्यर्थः । सेयमित्यस्य सदेवेत्यनेनोक्ता देवतेत्यर्थः । अत्र वाक्ये पूरयन्ति अत इति जडत्वेपि तासामित्यन्वयः । अविकृतेति । ब्रह्म ईक्षणात्पूर्वं ब्रह्मवत् । तेजआदीनां स्वस्वेक्षणात्पूर्वमविकृतत्वं तस्मात् तद्दृष्टान्तेन तद्देवतादृष्टान्तेन । अनुपपत्तिरविकृतत्वानुपपत्तिः । सुवर्णादिः विकृतं समवायित्वात् तेजआदिदेवतावत् । इत्यनेनानुमानेनेत्यर्थः । अन्यथाभावत्वेनान्यथाभावरूपविकाराभावात् न दोष इत्याहुः तथा च दधीति । गन्धादीति शब्दरूपरसगन्धस्पर्शपरा वृत्तिः कार्येष्वन्यथाभावः । संख्यादीति आदिशब्देन परिमाणम् । तथात्वेन ग्राह्यविकारत्वेन अङ्गीति अन्यथाकार्यश्रुतिविष इति भावः । नहीति कनकार्थिनः कनकस्य विकृतिं कुण्डलादिकं न त्यजन्ति कुतः तदात्मतया कनकात्मतया तद्वत् । स्वकृतमिदं जगत् जीवात्मनानुप्रविष्टं ब्रह्मविद्भि-

वक्ष्यति च, श्रुतेस्तु शब्दमूलत्वादिति । अन्यानि च युक्तिदूषणानि परिहरिष्यति । तस्मात् ब्रह्मपरिणामलक्षणं कार्यमिति जगत्समवायिकारणत्वं ब्रह्मण एवेति सिद्धम् ॥ २६ ॥

**योनिश्च हि गीयते ॥ २७ ॥**

चेतनेषु किंचिदाशङ्क्य परिहरति । नन्वस्तु जडानां ब्रह्मैककारणत्वम् । चेतनेषु तु योनिबीजयोः समवायित्वदर्शनात् पुरुषत्वात् भगवतो योनिरूपा प्रकृतिः समवायिकारणं भवतु । शुक्रशोणितसमवेतत्वाच्छरीरस्येत्याशङ्क्य परिहरति

---

भाष्यप्रकाशः ।

स्यादुष्टत्वमुक्तमिति नायं दोष इत्यर्थः । नन्वयमेव सूत्रकाराशय इत्यत्र किं गमकमत आहुः वक्ष्यतीत्यादि । स्फुटमन्यत् ॥ २६ ॥

**योनिश्च हि गीयते ॥ २७ ॥** अत्रापि सर्वं निगदव्याख्यातम् ।

रश्मिः ।

रात्मतयावसितमिति । अदुष्टत्वमिति प्रामाण्यांशे अन्यथा हानिजनकत्वाच्च गृह्णीयुः । अयमिति अन्यथाभावरूपविकाररूपो दोषः । स्फुटमिति । अग्रे इति द्वितीयाध्याये । ब्रह्मपरिणामो लक्ष्यते ज्ञायते अनेन इति करणे ल्युट् । कार्यं मनसाप्याकलयितुमशक्यरचनम् । सिद्धमिति सूत्रान्तरान्तेऽनुक्त्वाप्युक्तम् । जडविचारसंपूर्णता द्योतयति । एवं स्फुटमित्यर्थः । शंकरभाष्ये तु विकृतत्वापत्तिर्भिया परिणामादिति पृथक् सूत्रमङ्गीकृतं तस्यैषोऽर्थः । इतश्च प्रकृतिर्ब्रह्म यत्कारणं ब्रह्मण एव विकारात्मना परिणामः सामानाधिकरण्येनाम्नायते सच्च त्यच्चाभवन्निरुक्तं चानिरुक्तं चेत्यादिना तत्तु विकारस्य परिहृतत्वात् प्रकृतेः स्वरूपत्वस्योक्तत्वाच्चिन्त्यम् । रामानुजाचार्यास्तु सूत्रद्वयमङ्गीकृत्य पूर्ववद्व्याकुर्वन्ति द्वितीयसूत्रेऽन्तर्यामिब्राह्मणं सर्वं लापयन्ति । माध्वमतमग्रे वक्ष्यन्ति । भास्कराचार्यास्त्वेकसूत्रमङ्गीकृत्य सूत्रकारः श्रुत्यनुसारी परिणामपक्षं सूत्रयांबभूव अयमेव छान्दोग्ये वाक्यकारवृत्तिकाराभ्यां संप्रदीयतेऽतः समाश्रित इत्याहुः ॥ २६ ॥

**योनिश्च हि गीयते ॥ २७ ॥** रश्मित्वं भाष्यभास्कराव्यवहितकिरणेषु न तु प्रकाशव्यवहितप्रकाशे अतो यथाबुद्धि व्याख्यायते समवायित्वमीश्वरे समर्थितं तत्तु जन्माद्यस्य यत इत्यत्र तत्तु समन्वयादित्यधिकरणैकवाक्यतया । सूत्रे अस्येति मनसाप्याकलयितुमशक्यरचनस्य प्रपञ्चस्य तस्य समवायित्वमर्धांशस्य जडस्य न चैतन्यस्येति चिज्जडसमुदायेऽर्धजरतीयापत्तिः । तथा च चेतनेषु प्रत्यक्षेण शब्दशतोक्तमपि समवायित्वं नाद्रियत इति प्रत्यक्षदृष्टबीजयोनिसमवायिकत्वमाशङ्क्य कार्ये अर्धजरतीयापत्तिं परिहरतीत्यर्थः । अस्त्वति । 'बीजं माम्' इति वाक्यात् बीजाद्यन्तरापि जडपिप्पलादिवृक्षतृणोत्पत्तिदर्शनात् लाघवादस्तु । योनिरूपेति अक्षररूपा प्रकृतिः न त्वविकृतत्वापादिका स्वरूपरूपा युक्तं चैतत् । संयुक्तकपालद्वयसमवेतघटवत् संयुक्तशुक्रशोणितसमवेतत्वाच्छरीरस्येत्यर्थः । तथा च श्रुतिः 'शुक्रशोणितसंयोगादावर्तते गर्भ इति' गर्भोपनिषदि योनिपदस्यक्तिर्ब्रह्मणि न प्रकृतौ तदाहुः योनिश्च ब्रह्मैवेति । प्रस्थानरत्नाकरे अमुख्यवृत्त्या ब्रह्मप्रतिपादकानां शक्तिसंकोचलक्षणकल्पनान्वय प्रवृत्तिस्वीकारात् । छन्दोवत्सूत्राणि भवन्तीति न समुदायशक्तिरूपा रूढिः । वेदान्तत्वेन योनिपदे योगमात्रप्रवृत्तेः । नन्वव्यवधानेनोत्पत्तिद्वारत्वं च प्रकृतित्वं तद्विशिष्टा योनिः

योनिश्च ब्रह्मैव। शाक्तवादनिराकरणाय चकारः। तत्र युक्तिश्रुती प्रमाणयति हि गीयत इति। युक्तिस्तावत् 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इति पूर्वमेकमेव प्रतिज्ञातम्। आकाशादेव, आनन्दाद्ध्येवेत्याद्येवकारैश्चानन्यकारणत्वं जगतोऽवगम्यते। इतरापेक्षायां द्वैतापत्तेः। गीयते च 'कर्तारमीशं पुरुषं

रश्मिः।

कर्तारमीशं पुरुषं ब्रह्मयोनिम्' इति श्रावणात् ब्रह्म भवतु परं तु पृथिवीयोनिरोषधिवनानामिति च दर्शनात्। पृथिवी कथं स्वरूपं किं च अथ देव्या अथर्वणशीर्षं व्याख्यास्यामः ॐ सर्वे वै देवा देवीमुपतस्थुः। कासि त्वं महादेवी साब्रवीदहं ब्रह्मस्वरूपिणी ततः प्रकृतिपुरुषात्मकं जगत्। शून्यं चाशून्यं च अहमानन्दानानन्दौ अहं विज्ञानाविज्ञाने अहं ब्रह्माब्रह्मणी द्वे ब्रह्मणी वेदितव्ये इति आथर्वणीश्रुतिः। एवं च शक्तिः समवायिनी इति शाक्तानां वादः तदुक्तं—

'सर्वे शाक्ता द्विजा ज्ञात्वा न शैवा न च वैष्णवाः।
यस्मादुपासते नित्यं गायत्रीं वेदमातरम्'॥

इति तस्य वादस्य निराकरणाय चकारः कथं योनिः शक्तिश्च युक्तिश्रुतिभ्यां ब्रह्मेति हि गीयत इति सूत्रार्थात्। योनित्वप्रतिपादनस्यानतिगूढत्वात् युक्तेश्च गूढत्वेनाभ्यर्हितत्वाद् ब्रह्मविदां तां पुरस्कृत्याहुः तत्र युक्तीति हिर्युक्तिवाचकमव्ययमित्याहुः युक्तिस्तावदिति। सदेवेति अयमर्थः। पृथिवीयं चानन्तपदाभ्यामुच्यते कोशे पृथिवी अनन्तां विजयां शुद्धामिति यस्या अन्तो न लभ्यते तस्मादुच्यते अनन्तेति च इति देव्याः अथर्वणशीर्षे तथा च यदि शक्तिवादो न निरस्यात् तदा एवकारेण ज्ञानानन्तेन व्यवच्छिन्द्यात्। उपलक्षकं सत्पदं न वदेदद्वितीयपदं चेत्यन्यथाज्ञानं युक्तिः। ननूपलक्षणविषयास्तु शक्तिवाद इति चेत्तत्राहुः पूर्वमेकमिति तथा च वादान्तरमित्यत आपाततः एकमेव विज्ञानं प्रतिज्ञातं बाध्येतेत्यर्थः। ननु देव्या अथर्वणशीर्षे सैषा सत्त्वरजस्तमांसि सैषा ब्रह्मविष्णुशिवरूपिणी सैषा प्रजापतीन्द्रमनव इति श्रावणात् सदपि सास्त्विति चेत्तत्राहुः आकाशादेवेति अस्तु परं त्वाकाशपदवाच्यायास्तद्रूपाया न त्वन्नग्रन्थप्रस्तुतायाः भगवच्चरिताविद्याया ब्रह्मवादवद्वादेनेति द्योतनाय आकाशादेवेति पूर्वमुक्तम् 'यस्याः परतरं नास्ति सैषा दुर्गा प्रकीर्तिता' इति श्रुतेः। अवगम्यत इति। ननु भगवच्चरित्राविद्यायाः 'कृष्णोऽहं पश्यत गतिम्' इति फलप्रकरणे यथा तस्या एवकारव्यावर्त्यता नावगम्यते अत एव देव्या अथर्वणशीर्षे—

'कालरात्रीं ब्रह्मस्तुतां वैष्णवीं स्कन्दमातरम्।
सरस्वतीमदितिं दक्षदुहितरं नमामः पावनां शिवाम्।
महालक्ष्म्यै च विद्महे सर्वशक्त्यै च धीमहि।
तन्नो देवी प्रचोदयात्'॥ इति।

अत्र अदितिः दुहिता। अदितिर्ह्यजनिष्ट दक्षया दुहितेति श्रुतेः। महालक्ष्मी राधापि। अस्य अर्थोत्थापने उपनिषज्ज्ञानमावश्यकमिदमथर्वशीर्षमज्ञात्वा योऽर्चां स्थापयति शतलक्षं जप्त्वा नार्चां सिद्धिं च विन्दति। नन्वव्यभिचारिभक्तिश्रद्धालुत्वेपि प्रभुत्वमेदान्तशास्त्रसिद्धान्तविरोधस्तु स्यात् अथाच पाक्षिकत्वापत्ती राद्धान्ते स्यादत आहुः इतरापेति ननु सत्यं पाक्षिकत्वापत्तिरिति परं तु द्वैतापत्तिस्तु वारणीया।

ब्रह्मयोनिम्' । 'यद्भूतयोनिं परिपश्यन्ति धीराः' इति च 'मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम्' इति । 'तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता' इति च । अक्षरपुरुषोत्तमभावेन तथात्वम् । तस्मात् योनिरपि भगवान् पुरुषोऽपि सर्वं वीर्यं जीवश्च सर्वं भगवानिति । 'इदं सर्वं, यदयमात्मा' इति सिद्धम् । तस्मात् केनाप्यंशेन प्रकृतिप्रवेशो नास्तीत्यशब्दत्वं सांख्यमतस्य सिद्धम् ॥ २७ ॥

इति प्रथमाध्यायस्य चतुर्थपादेऽष्टमं ब्रह्मसूत्रं प्रकृत्यधिकरणम् ॥ ८ ॥

---

रश्मिः ।

'रुद्रोऽरुद्रश्च दन्ती च नन्दिः षण्मुख एव च ।
गरुडो ब्रह्म विष्णुश्च नारसिंहस्तथैव च ।
आदित्योऽग्निश्च दुर्गिश्च क्रमेण द्वादशाम्भसि' ॥

इति तैत्तिरीये द्वादशाङ्गः पुरुषः स च महानारायण 'अम्भस्यपारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान्' इत्यत्र रामानुजभाष्ये रसरूपः 'रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवति' इति तैत्तिरीयादाहृत्य व्याक्रियतेऽतो न द्वैतमिति बोध्यम् । साकारब्रह्मस्थापिका महानारायणे श्रुतिः 'यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात्' इति अनन्तरूपेषु द्वादशाङ्गः पुरुषोप्यतः 'ब्राह्मतद्विजरूपाय गोविन्दाय नमोनमः' 'गायत्री वेदमातरम्' इति यदुक्तं तत्तु 'पूजां तैः कल्पयेत् सम्यक्संकल्पः कर्मपावनीम्' इति वाक्यात् पूजोपयोगि तदुपासनम् । एवं युक्तिमुक्त्वा श्रुतिं वक्तुमाहुः गीयते चेति अक्षरब्रह्मपुरुषोत्तमभावार्थं ब्रह्मणोऽक्षरस्य योनिः पञ्चमहाभूतयोनिम् । ननु भूतयोनिरित्युक्तं न सर्वयोनिरिति चेत्तत्रोपबृंहितश्रुतिः सूत्रे गीयत इत्याशयेनाहुः मम योनिरिति । ननु तथापि चेतने तौल्यमिति सिद्धमित्यसिद्धमिति चेत्तत्राहुः तासामिति । एवं जडेषु बीजप्रदत्वं चेतनेषु पितृत्वमिति विशेषः । अक्षरपुरुषोत्तमिति । ब्रह्मयोनिमित्यत्र व्याख्यातम् । तथात्वं योनित्वम् । बीजप्रदत्वं च । सिद्धमाहुस्तस्मादिति उक्तोपपादनात् । योनिपुरुषौ चरमवाक्ये । सर्वमिति तृतीये वीर्यं गर्भमिति तृतीये जीवोपि महद्ब्रह्मेति तृतीये उक्तेर्थे श्रुतिं प्रमाणयन्ति इदं सर्वमिति । सांख्यमतस्येति अन्यथा वदशाखेषु निवेशो न स्यात् । पञ्च चत्वारि वा शास्त्राणि स्युः तथा च ।

'ऋग्भ्या चोपनिषद्भिश्च सांख्ययोगैश्च सात्वतैः ।
उपगीयमानमाहात्म्यं हरिं साऽमन्यतात्मजम्' ॥

इति वाक्यं विरुद्ध्येत । तथा च द्वितीयस्कन्धनवमाध्यायोक्तोर्णनाभिवत्समवायित्वमिति सिद्धम् । तथा सति जडवद्ब्रह्मवस्तु प्रवर्तते चिन्मनुप्रजापतीन्द्रा य एष स्तन इवालम्बते सेन्द्र योनिरिति तैत्तिरीयात् ब्रह्मविष्णुशिवाः नारदः 'उत्सङ्गान्नारदो जज्ञे' इति स्मृत्या अयोनिजाः शंकरभाष्ये तु क्वचित्स्थानवचनोपि योनिशब्दो दृष्टः 'योनिष्ट इन्द्रनिषदे अकारीति' सर्वे योनिजा इति बहूनामनुग्रहो न्याय्यः इत्यनेन बाधात् इति बोध्यम् । अन्यत्र स्त्रीयोनेरप्यस्त्येवावयवद्वारेण गर्भं प्रत्युपादानत्वमित्युक्तम् । तच्छुक्रशोणितसमवेतत्वात् शरीरस्येति भाष्यविरुद्धम् । रामानुजभाष्येपि योनिशब्दश्च ब्रह्मवचनः इत्यूर्णनाभिदृष्टान्तः । मध्वभाष्ये तु ब्रह्माण्डवाक्ये अप्युक्ते

'व्यवधानेन सूतिस्तु पुंस्त्वं विद्भिरिष्यते ।
सूतिरव्यवधानेन प्रकृतित्वमिति स्थितिः' ॥

भाष्यप्रकाशः ।

माध्वास्तु—प्रकृतिश्चेति सूत्रे, हन्त तमेव पुरुषं सर्वाणि नामान्यभिवदन्ति, 'यथा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रमभिसंविशन्त्येवमेवैतानि नामानि पुरुषमभिसंविशन्ति' इति श्रुतिम्, अभिध्यासूत्रे च, मायां तु प्रकृतिं विद्यादिति,

'महामायेत्यविद्येति नियतिर्मोहिनीति च ।
प्रकृतिर्वासनेत्येवं तवेच्छाऽनन्त ! कथ्यते' ॥

इति वचनम्, 'सोऽभिध्या स जूतिः स प्रज्ञा स आनन्दः' इति श्रुतिम्,

'ध्यायति ध्यानरूपोऽसौ सुखी सुखमतीव च ।
परस्यैश्वर्ययोगेन विरुद्धार्थतयेष्यते' ॥

इति ब्रह्माण्डवाक्यम्, साक्षात्सूत्रे चैष ह्येष पुरुष एष प्रकृतिरेष आत्मैष ब्रह्मैष लोक एष आलोको योऽसौ हरिरादिरनादिरनन्तोऽन्तः परमः परात् विश्वरूप इति पैङ्गश्रुतिं चोपन्यस्य भगवतः सर्वविधशब्दवाच्यत्वं च स्थापयित्वा, आत्मकृतिसूत्रे प्रकर्षेण करोतीति प्रकृतिरिति प्रयोगात् प्रकृतावनुप्रविश्य तां परिणाम्य तत्परिणामनियामकत्वेन तत्र स्थित्वाऽऽत्मनो बहुधाकरणात् प्रकृतिशब्दवाच्यतां स्थापयित्वा, अथ हैष आत्मा प्रकृतिमनुप्रविश्यात्मानं बहुधा चकार तस्मात् प्रकृतिरित्याचक्षत इति माध्वेयश्रुतिम्—

'अविकारोऽपि परमः प्रकृतिं तु विकारिणीम् ।
अनुप्रविश्य गोविन्दः प्रकृतिश्चाभिधीयते' ॥

रश्मिः ।

'उभयात्मकसूतित्वाद्वासुदेवः परः पुमान् ।
प्रकृतिः पुरुषश्चेति शब्दैरेकोभिधीयते' ॥

इति अग्रेपि वक्ष्यते ग्रन्थकृद्भिः । भास्करभाष्येप्येवं तत्तन्मतभेदेन विशेषः हिर्हेतौ यतो हेतोः अत्र श्रुतिसंग्रहेपि न युक्तिसंग्रहः मुख्ये कार्यसंप्रत्ययात् जडदेहयोरियान् विशेषो येन बाह्यात्मा जडात्पृथक्कृत्य निरूपणम् । देहे पाञ्चभौतिक इदं निरूप्यते आत्मोपनिषदि त्रिविधात्मनिरूपणे पञ्चमहाभूतात्मको निरूपित इति पृथिवी अस्थीनि यत्कठिनं तत्पृथिवीति श्रुतौ । तेषामात्मत्वे एवास्थि शस्त्रं दधीचेरस्थीनि तेन वृत्रवधः । 'अपां फेनेन नमुचेः शिर आहरत्' इत्यपामात्मत्वं विलक्षणसामर्थ्यात् । तेजः क्रममुक्तौ प्रतिबन्धनिवृत्तिद्वारात्मा । वायुरात्मा प्रसिद्धः । त्वमेव प्रत्यक्षं ब्रह्मासीति श्रुतौ । आकाश आत्मा बृहदारण्यकोक्त आकाशोपासकान् प्रति मांसस्याकाशत्वं संहितायां तस्यात्मत्वं वेनजङ्घागतस्यान्यथा मनूत्पत्तिर्न स्यात् इति जडौषधिषु तु योगेन पृथग्वेत्सुपवेदवैद्यकगतमिति समवायित्वं माध्वा नाङ्गीकुर्वते तन्निराकर्तुं, तदाहुः अत्रापि सर्वमिति गतं भाष्य० व्याख्यानमधुना प्रकृते भावाद्वैतं परिणामवादे न सिद्ध्यति परिणामश्चेत्क्षणिकः तदा कथंभावाद्वैतमिति परिणामं समर्थयितुं विषयादिकं चाधिकरणस्यार्थं सूचयितुं माध्वमतमुपक्षिपन्तः माध्वास्त्वित्यति । प्रकृतिपरिणामो न जगदिति शंकरभाष्ये तत्सूत्रं भङ्क्त्वा सप्रयोजकमित्यन्येषां तु संमतः परिणाम इति माध्वास्त्वित्यति माध्वमतमुपक्षिप्तं हन्त तमिति इयं प्रतिज्ञाबोधिका । यथा नद्य इति दृष्टान्तबोधिकेयम् । अभिध्यापदार्थमाहुः प्रकृतिमिति । साक्षात्पदार्थमाहुः एष ह्येति परिणामं विशदयन्ति प्रकृतावन्विति तत्सृष्ट्वा तदेवानुप्राविशदिति श्रुतौ समवायित्वाद्यनङ्गीकारे सूत्राणां निर्विषयत्वमित्याशयेनाहुः अभिधीयत इति अभिधानं क्रियते प्रकृतिरित्यत्र कुत्रो किंच ।

भाष्यप्रकाशः ।

इति नारदीयवाक्यं च तदुपष्टम्भायोदाहरन्ति । तच्चिन्त्यम् । श्रुतेरप्रसिद्धत्वात् । तादृश्या अपि कथंचित् प्रामाण्योपगमेऽप्यस्या आत्मनो बहुधाकरणबोधकतयाऽऽत्मकृतिबोधकत्वाभावेन विषयतयोपन्यासायोगाच्च । हन्त तमित्यारभ्य विश्वरूप इत्यन्तासु स्वोपन्यस्तासु श्रुतिषु सर्वशब्दवाच्यत्वस्य सर्वरूपत्वस्य च स्वत एव बोधनेन तासां पूर्वकालीनव्यवस्थाबोधकतायाः, माल्लवेयश्रुतौ चाथशब्देन पाश्चात्यबोधकतायाः स्फुटं भानेन कालभेदकृतविषयभेदस्य स्फुटत्वे एतदनुरोधेन तदर्थनिर्णयस्याप्ययुक्तत्वाच्च । ध्यायतीति ब्रह्माण्डवाक्ये ऐश्वर्ययोगेन विरुद्धार्थतया सर्वरूपत्वादेरिष्टताया उक्ततया सर्वानुपपत्तिपरिहारसंभवे प्रकृतिशब्दयोगादरणेन स्कन्दोपष्टम्भस्य व्यर्थत्वाच्च ।

यत्तु जयतीर्थः—ब्रह्मणो जगदुपादानत्वे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया मृत्पिण्डादिदृष्टान्तोक्तेश्च न प्रमाणत्वम् । तस्या अन्यार्थत्वस्य सूत्रव्याख्याने सम्यग्व्याख्यातत्वादित्याह ।

रश्मिः ।

क्विर्वा कर्तरि । श्रुतेरिति माल्लवेयश्रुतेः समाकर्षादित्यधिकरणे विचारितत्वाच्च । आत्मनो बहुधेति आत्मानं बहुधा चकारेति श्रुतौ विषयभूतायाम् । अत्र कर्ताप्यात्माऽत आत्मनः स्वस्याः प्रकृतेः कृतिः आत्मकृतिसूत्रोक्ता तस्या विषयवाक्ये बोधकत्वाभावेन । विषयतयेति अनेनास्मिन्नधिकरणे 'सोऽकामयत बहु स्यां प्रजायेय इति स तपोऽतप्यत स तपस्तप्त्वा इदं सर्वमसृजत यदिदं किंच तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत् निरुक्तं चानिरुक्तं च निलयनं चानिलयनं च विज्ञानं चाविज्ञानं च सत्यं चानृतं च सत्यमभवत् यदिदं किंच तत्सत्यमित्याचक्षते तदप्येष श्लोको भवति असद्वा इदमग्र आसीत् ततो वै सदजायत तदात्मानꣳ स्वयमकुरुत तस्मात्सुकृतमुच्यते' इति विषयवाक्यम् । संशयस्तु परिणामः भवति न वेति श्रुतिः अद्वैतस्थापकत्वविशिष्टा चेयमेवेति संशयबीजं नेति पूर्वपक्षः प्रकृतिप्रवेशे सगुणत्वापत्तिः न यत्र मायेति निषेधाच्चेति प्राप्ते सिद्धान्तः । प्रकृतिश्चेति प्रकृतिः स्वरूपमिति न सगुणत्वापत्तिः 'योगमायामुपाश्रितः' इति न मायाविरोधः मायेन्द्रियाणि वा सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितमिति ब्रह्मप्रकरणे गीता । यतः इति स्वमतेऽधिकरणरचना द्योतिता । उपन्यासायोगादिति । ननु सत्यमात्मकृतिबोधकत्वाभावः परं त्वपरो हेतुर्भवति तस्मात्प्रकृतिरित्यचक्षते इत्यत्रात्मा प्रकृतिरित्यभिधानात् । तथाच प्रकृतिश्चेति सूत्रभाष्यं माध्वानां प्रकृतिशब्दवाच्योपि स एवेति तथाच कुतो ह्युपन्यासायोग इति चेन्न तथाप्युपन्यासायोगात् । प्रकृतिशब्दवाच्यत्वस्याप्युक्ताधिकरणेनैव लाभात् स्वार्थात्मव्यावनस्यात्रापि सत्वात् । विषयवाक्य एव नामरूपविश्वात्मकत्वश्रावणे समवायित्वं भाष्य एव श्रावितं भवति इत्याशयेनाहुः सततमित्यारभ्येति । स्वोपन्यस्तास्विति साक्षात्सूत्रमभिव्याप्योपन्यस्तासु । पूर्वकालीनेति प्रकृतिप्रवेशपूर्वकालीनेत्यर्थः । पाश्चात्येति आनन्तर्यवाचकत्वमथेत्यस्येति भावः । कालभेदेति प्रकृतिप्रवेशात्पूर्वकाल उत्तरकालश्च । एतदन्विति माल्लवेयश्रुत्यनुरोधेन । तदर्थेति प्रकृतिप्रवेशोत्तरकालीनप्रकृतिशब्दवाच्यत्वरूपो यः प्रकृतिश्चेत्यादित्रिसूत्रीविषयवाक्यार्थस्तस्य निर्णयस्य । अयुक्तत्वेति तथा चास्मदीयोर्थः स्फुट इति स युक्त इति भावः । अतः समवायित्वनिरूपणम् । एवं प्रथमकूर्मविषय उक्त्वा अभिध्यासूत्र आहुः ध्यायतीति । विरुद्धेति ध्यानाश्रयत्वेपि ध्याने रूपत्वरूपविरुद्धार्थतया सर्वानुपपत्तिः सर्वशब्दवाच्यत्वानुपपत्तिः । स्कन्दोपेति स्कन्दायां कृतिः

भाष्यप्रकाशः ।

तदपि भद्राज्ञामात्रम् । सूत्रव्याख्यानस्यैवासंगततायाः प्रदर्शितत्वादिति । यदपि ब्रह्मणः परिणामोक्तिरसंगतैव । एतदध्यायस्याशेषशास्त्रस्य ब्रह्मणि समन्वयप्रतिपादनाय प्रवृत्तत्वादित्याह । तदप्यसंगतम् । अशेषशास्त्रमध्ये, 'स आत्मानꣳ स्वयमकुरुत,' 'सर्व्विदं', ब्रह्म, तज्जलान् इति', 'स आत्मानमेव द्वेधापातयत्, ततः पतिश्च पत्नी चाभवताम्,' 'हन्ताहं मदेव मन्मात्रं सर्वं यस्मिन्नाकाश ओतश्च' इत्यादिश्रुतीनां, 'विश्वं वै ब्रह्मतन्मात्रम्–

'नैतच्चित्रं भगवति ह्यनन्ते जगदीश्वरे, ।
ओतप्रोतमिदं यस्मिंस्तन्तुष्वङ्ग यथा पटः' ॥

'त्वय्यग्र आसीत्' इत्यादिस्मृतीनां च प्रविष्टत्वात् तासां समन्वयस्यावश्यं प्रतिपाद्यत्वात् परिणामं विना च तदसंभवादिति । यदप्यानुमानिकपादे, प्रकृतेः शब्दप्रतिपाद्यत्वनिराकरणं चेत् प्रकृतिस्वरूपस्यानिराकृतत्वात् तस्या उपादानतया वर्तमानत्वात् प्रकृतित्वेन ब्रह्मण उपादानत्वस्थापनमसंगतमेव । प्रकृतिस्वरूपनिराकरणं चेत् सूत्रेषु तददर्शनात् तदप्यसंगतमिति न ब्रह्मण उपादानत्वे कापि संगतिरित्युक्तं । तदप्यबुद्ध्वैव । प्रकृतेर्मूलकारणतायाः शब्दप्रतिपाद्यत्वस्य निराकरणं सूत्रेषु सिद्धमिति तस्या अवान्तरोपादानतया विद्यमानत्वेऽपि ब्रह्मणि मूलोपादानत्वाबाधात् । एकादशस्कन्धे, 'आसीज्ज्ञानमथो ह्यर्थ एकमेवाविकल्पितम् ।

'यदा विवेकनिपुणा आदौ कृतयुगे युगे ।
तन्मायाफलरूपेण केवलं निर्विकल्पितम् ॥
वाङ्मनोगोचरातीतं द्विधा समभवद् बृहत् ।
तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका' ॥

इत्यादिना भगवतैव तथा निर्णीतत्वात् । अतो ब्रह्मण उपादानत्वानङ्गीकरणमबोधाग्रहयोरन्यतरमूलकमेवेति दिक् ॥ २७ ॥

इत्यष्टमाधिकरणम् ॥ ८ ॥

रश्मिः ।

समुदायशक्तिः तस्या उपष्टम्भस्य । स आत्मानमिति एतच्च समाकर्षादित्यधिकरणे उपपादितम् । परिणाममिति परिणामस्तात्त्विकोन्यथाभावः । शब्देति वैदिकशब्देत्यर्थः । सूत्रेषु रचनानुपपत्तेश्च नानुमानमित्यादिषु । अवान्तरेति । आन्तरालिकसृष्ट्युपादानतया । रजतोपादानतया केषांचित् शुक्तिरुपादानं स्वमते एवमपि प्रकृतिपुरुषपरिणामैरद्वैतेऽधीतिनां विचिकित्सासंभवे भ्रमवारकमेव सांख्यमाहुः एकादशेति । तथेति केवलं निर्विकल्पितम् एकं तन्मायाफलरूपं प्रकृतिमायाफलरूपं प्रतिबिम्बमिति निर्गुणसगुणफलरूपेणेति मायावादो भासते न स प्रकृते सांख्येन समाधानात् । दिगिति अन्यानि दूषणानि प्रसिद्धशक्तिविचारस्य विषयत्वादिरूपाणि सूचयति दिक्शब्दः । तथापि 'पूर्णा भगवदीयास्ते शेषव्यासाग्निमारुताः' इति 'आचार्यवान् पुरुषो वेद' इत्यादिविरोधात् दिक्शब्दार्थं एवम् । यथानेकमार्गेण क्रीडा तेपि पुष्टा युक्ताश्चापेक्षिताः इति 'युक्तं च सन्ति सर्वत्र भाषन्ते ब्राह्मणा यथा' इत्याद्युक्ता यथा विविक्तं यदङ्कं गृह्णीमो युक्तिसंभवादिति भगवता ग्रहणादिगुक्तेत्यर्थः नाधिकम् ॥ २७ ॥

इत्यष्टमाधिकरणम् ॥ ८ ॥

एतेन सर्वे व्याख्याता व्याख्याताः ॥ २८ ॥ (१।४।९)

ब्रह्मवादव्यतिरिक्ताः सर्वे वादा अवैदिका वेदविरुद्धाश्चेत्याह। एतेन ब्रह्मवादस्थापनपूर्वकसांख्यमतनिराकरणेन सर्वे पातञ्जलादिवादा व्याख्याताः। अवैदिका अनुपयुक्ताश्च। वैदिकानां हि वेदः प्रमाणम्। तस्मिन्नव्याकुले भ्रान्तिप्रतिपन्ना एव सर्वे वादा इति। एतत् सौकर्यार्थं विस्तरेणाग्रे वक्ष्यते। आवृत्तिरध्यायसमाप्तिबोधिका ॥ २८ ॥

इति प्रथमाध्यायचतुर्थपादे नवममेकसूत्रं व्याख्यानाधिकरणम् ॥ ९ ॥

इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये प्रथमाध्यायस्य चतुर्थः पादः ॥ १ ॥ ४ ॥

॥ प्रथमोऽध्यायः समाप्तः ॥

---

भाष्यप्रकाशः।

एतेन सर्वे व्याख्याता व्याख्याताः ॥ २८ ॥ सूत्रमवतारयन्ति ब्रह्मवादेत्यादि। एतेन सांख्यमतस्याश्रौतत्वसाधनेन पूर्वपादत्रयोक्तं सर्वं समर्थितं ज्ञेयम्। नन्वेवं मतान्तरनिराससिद्धावग्रिमाध्यायस्य किं प्रयोजनमित्यत आहुः। एतदित्यादि। एतदिति वादान्तरनिराकरणमग्रिमाध्याये बोधसौकर्यार्थं विस्तरेण वक्ष्यत इत्यर्थः। एतेन सामान्यविशेषभावरूपा संगतिरपि दर्शिता ॥ २८ ॥

इति नवमाधिकरणम् ॥ ९ ॥

इति श्रीमद्वल्लभाचार्यचरणनखचन्द्रकिरणनिवारितहृदयान्धकारेण पीताम्बरात्मजपुरुषोत्तमेन कृते ब्रह्मसूत्राणुभाष्यप्रकाशे प्रथमाध्यायस्य चतुर्थः पादः समाप्तः ॥ १ ॥ ४ ॥

॥ समाप्तश्चायं प्रथमोध्यायः ॥

रश्मिः।

एतेन सर्वे व्याख्याता व्याख्याताः ॥ २८ ॥ सूत्रमेवेति सांख्यमते उक्तमश्रौतत्वं पातञ्जलादिष्वतिदेष्टुं सूत्रात्मकमधिकरणमवतारयन्तीत्यर्थः। न च सूत्रत्वे किं बाधकमिति शङ्क्यम्। अधिकरणप्रायपाठपठितत्वमेव बाधकमिति। भाष्ये। पतञ्जलादीति तेन पातञ्जलादिवादा विषयाः ते व्याख्याता न वेति संदेहः। 'वेदान्तविज्ञानसुनिश्चितार्थाः' इति 'नानुध्यायाद्बहून् शब्दान्' इति नानुध्यायादित्यस्याः अनुपसर्गेण अन्यथाप्यर्थसंभवात् तथाच शब्दान प्रतिज्ञातान् च संदेहबीजं नेति पूर्वपक्षः व्याख्यानादर्शनात्। सिद्धान्तस्तु व्याख्यानदर्शनम्। व्याख्याताः वेदान्तविज्ञानेति श्रुतेः। आदिपदेन सामान्यवादः परमाणुवादः ज्योतिषवादः गणपतिवादः सूर्यवादः शून्यवादः स्वभाववादः भूतवादः योनिवादः पुरुषवादः नियतिवादः यदृच्छावादः कालवादः तमोवादः अन्धवादः एते अवैदिकत्वेनानुपयुक्तत्वेन व्याख्याताः। कुत इत्याकाङ्क्षायां हेतुमाहुः वैदिकानां हीति। अव्याकुल इति व्याकुल इति वक्तव्ये ईषदर्थकनञ्प्रयोगः 'नानात्वभ्रमानुरोधि तत्' इतिनिबन्धात्। ईषद्व्याकुलतामन्तरा नानावादायोगात्। यस्मिन्

रश्मिः ।

प्रतिश्लोकमबद्धवत्यपीति न्यायेन वा नानावादानुरोधिरूपे प्रतिपादनीये तु अव्याकुलेऽभ्रान्तिप्रतिपन्ना इति ईषदुपयुक्तत्वेनैषद्वैदिकत्वेन च प्रकृतिवादवद्व्याख्याताः । भ्रान्तिप्रतिपन्ना ईषद्व्याकुलवैदिकत्वात् । शून्यवादवत् । शून्यवादो हि 'मेनेऽसन्तमिवात्मानं सुप्तशक्तिरसुप्तदृक्' इतिवाक्यानुसंधानमूलकः । एवं सिद्धे भ्रान्तिप्रतिपन्नत्वे विमतभावा अनुपयुक्ताः भ्रान्तिप्रतिपन्नत्वात् शुक्तिरजतवत् । अवैदिकाः अनुपयुक्तत्वात् । अवादवत् । यन्नैवं तन्नैवं ब्रह्मवादवत् । नहि ब्रह्मवादव्यतिरेकेण ब्रह्मज्ञानं भवतीति । बोधिकेति ननु कः शब्द इति चेन्न आवृत्तिबोधकौ शब्दौ आवृत्तिरर्थोपि व्यञ्जकोध्यायसमासेः । शक्यार्थावृत्तिस्तु भक्तिकर्मभेदेन शक्यद्वैविध्यात् । ज्ञानमार्गे प्रकृत्यादिनिरूपणस्यानतिप्रयोजनत्वात् । ननु तर्हि भक्तिकर्ममार्गयोः व्याख्याता इत्येव सूत्रांशोऽस्त्विति शङ्क्यम् । अवधारणार्थं सर्वस्याप्युक्तस्याध्यायमूलतः । 'द्विरुक्तिं कुर्वते प्राज्ञा अध्यायान्ते विनिर्णये' इति वाराहसंहितावाक्यात् । माध्वैरङ्गीकृतमिदम् । अध्यायान्तो यस्य विनिर्णयस्य । प्रकृते । सामान्येति एकसंबन्धिज्ञानमपरसंबन्धिस्मारकमिति प्रसङ्गसंगतावन्तर्भावः सामान्यः सर्वे वादा विशेषः सामान्यवादादिः । यथा प्रकृतिः सांख्ये समवायिकारणं पुरुषोऽसङ्गः । सिद्धान्ते प्रकृतिः अविकृतत्वसाधकं स्वरूपं 'प्रकृतिमगन् किल यस्य गोपवध्वः' इतिवाक्यात् तेन नार्धजरतीयम् । तथा सामान्यं वाक्यपदीये आत्मा तदेव समवायि स्यात् प्रकृतौ प्रतिफलितमिति मायावादः शून्यवादसदृशः । सिद्धान्ते सामान्यं द्वितीयस्कन्धनवमाध्यायोक्तरीत्या धर्मरूपमतो धर्मिणोऽसामान्यं जन्यं धर्मविशिष्टे शक्तावुपयुज्यते इति शक्तिधीविषयत्वसाधकं स्वरूपं समाधिकरणात् तेन नार्धजरतीयम् । तथा नित्या परमाणवः समवायिकारणं ज्ञानाधिकरणमात्मा निमित्तकारणं सिद्धान्ते परमाणवः ईश्वरस्य शरीरैक्यज्ञानजन्याः अन्येषां शरीरैक्यभ्रमजनकाः ।

'चरमः सद्विशेषाणामनेकोऽसंयुतः सदा ।
परमाणुः स विज्ञेयो नृणामैक्यभ्रमो यतः' ॥

इति तेन नार्धजरतीयम् । तथा ज्योतिषे वासुदेवः सर्वोत्पादक ईश्वरः । सप्तग्रहेषु बलाधिको यः सः शनिर्वा आत्माधिकः कलादिभिर्न भोगः इति जैमिनिसूत्रम् । एवं शनिविषये..............
सिद्धान्ते वासुदेवोवतार उच्यते 'वदन्ति वासुदेवेति वसुदेवसुतं हि माम्' इत्युत्तरार्धवाक्यात् तेन नार्धजरतीयम् । तथा गणपत्युपनिषदि गणपतेर्जगज्जन्मादिकमुक्तमतः स एव समवायीति । सिद्धान्ते गणपत्यथर्वशीर्षे ब्रह्ममय इति शिवसुत इति च कथनात् ब्रह्मचरित्रमिति द्वादशाङ्के निविष्टो दन्तिः समवायी 'त्वमानन्दमयस्त्वं ब्रह्ममयः' इति गणपत्यथर्वशीर्षवाक्यात् । प्रमथपतये नमस्ते अस्तु लम्बोदरायैकदन्ताय विघ्ननाशिने । शिवसुताय वरदमूर्तये इति वाक्याच्च तेन नार्धजरतीयम् । तथा सूर्योपनिषदि गायत्री प्रसिद्धा सूर्य आत्मा जगतस्तस्थुषश्च सूर्यात् खल्विमानि भूतानि जायन्ते इति सूर्य एव समवायी इति स्मार्ताः—

'स्मृतिः प्रत्यक्षमैतिह्यमनुमानश्चतुष्टयम् ।
एतैः सर्वैरादित्यमण्डलमेव विधास्यते' ॥

इत्यादरणात् । सिद्धान्ते निरुक्ते सूर्यः देवपत्नी सपत्नीनामसु पठित इति प्रकृतिवन्निर्णयः । असावादित्यो ब्रह्मेति सूर्योपनिषद्वाक्यात् । आदित्योभिरभिरादित्य इति ब्राह्मणम् । तथाच वेदत्रयी

रश्मिः ।

सूर्यमिदिति सदानन्दप्रतिपादक इति स्वरूपलक्षणलक्षित सत्यज्ञानानन्तानन्देन्तर्भावात् तत्स्वरूपम् । तेन नार्धजरतीयम् । समवायिकारणं सूर्यः ब्रह्म निमित्तकारणं सिद्धान्ते कालो ब्रह्म षड्गुणभूष-गृहीतप्राणगुणकरकारकं रूपं कर्तृ विषयत्वान्न समवायिविषयमिति वा । कालः सूर्यमेष्टारूप इति प्रकृतिवदेव । तथा कालोस्मीति भगवद्वाक्यात् तेन नार्धजरतीयम् । तथा स्वभावः समवायी ईश्वरो निमित्तं सिद्धान्ते कृष्णः प्रवर्तकः इति प्रवृत्तिरूपे धर्मे स्वभावपदम् । 'प्रवर्तकत्वं कृष्णस्य' इतिवाक्यात् तेन नार्धजरतीयं प्रकाशाश्रयन्यायात् । तथा नियतिरन्तर्यामिब्राह्मणोक्तं दैवं नियम्यनियामकभावः संबन्धो वा समवायिकारणं ईश्वरः कर्ता सिद्धान्ते दैवं कर्तृसंबन्ध आत्माऽऽत्मस्वरूपे निविष्टत्वात् । ब्रह्मब्रह्मत्वसंबन्धावगाहिज्ञानस्यात्मत्वात् आत्मनः कर्तृ न समवायिविषयः ।

'अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
विविधाश्च पृथक् चेष्टा दैवं चैवात्र पञ्चमम्' ॥
'तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः' ॥

इति । 'दैवादपेतमथ दैववशादुपेतम्' इत्यादिवाक्यनिचयात् । पृथिवीमन्तरो यमयतीति श्रुतेः नियम्यनियामकभावः संबन्धस्तेन नार्धजरतीयम् । तथा यदृच्छा भगवदिच्छा समवायिनी सिद्धान्ते इच्छाशक्त्यधीना अन्या शक्तयः इति शक्तौ निवेशः वाराहपुराणवाक्यात् तेन नार्धजरतीयम् । तथा भूतवादे पञ्चमहाभूतानां ब्रह्माहं प्रपद्ये इति तान्येव समवायीनि सिद्धान्ते वृतश्चतुःषोडश पञ्चशक्तिभिरिति द्वितीयस्कन्धनवमाध्यायवाक्याद्धरणशक्तयः उक्तवाक्यात् तेन नार्धजरतीयकम् । तथा योनिः स्थानं अश्वः बृहदारण्यकोक्तः समवायी सिद्धान्ते कर्तृत्वं तत्पुरस्कारेण समवायित्वं उक्तवाक्यात् तेन नार्धजरतीयकम् । पुरुषो ब्रह्माण्डविग्रहः समवायी तज्जनकं महतः स्रष्टृ निमित्त-कारणं सिद्धान्ते महतः स्रष्टृ समवायि निमित्तं च तस्माद्विराडजायत इति श्रुतिवाक्यात् । न च 'एतन्नानावताराणां निधानं बीजमव्ययम्' इति वाक्यात् नैवमिति वाच्यम् । श्वेताश्वतरे कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यमित्युक्त्वा युक्त्या संयोग एषां न त्वात्मभावादिति संयोगः एषां संबन्धः न त्वात्मभावादात्मत्वादित्युक्त्वात्माप्यनीशः सुखदुःखहेतोरिति कृतप्रयत्नापेक्षत्वात् वैषम्यनैर्घृण्ये वारिते तमोवादे आसीदिदं तमोभूतमिति तदेव समवायि सिद्धान्ते अवान्तरप्रलयविषयत्वं तमो ब्रह्मैव वा अहमेवासमेवाग्रे इति वाक्यात् । तमआसीदिति अनभिव्यक्त······भाधिकरणभाष्यं तेन नार्धजरतीयकम् । आपो वा इदमग्रे सलिलमासीत् इत्यादेऽवान्तरप्रलयविषयः समवायिविषयः सिद्धान्तेप्येवम् । आपमापामपः सर्वा इत्यारणात् । तेन नार्धजरतीयम् । शून्यवादो नास्तिकानां शून्यं विजनं शुने हितं 'शुनः संप्रसारणं वा च दीर्घः' इति यत् शून्यम् विजनं शमून्यमिति पाठे सर्वस्य ज्ञानात्म-कत्वात् असुराणां च असत्यमिति वाक्यात् कायः समवायी सिद्धान्ते शमूनकर्त्रपि ब्रह्म शम् ऊनम् । नास्तिकानामसुराणां च ऊनाय हितं यत् शमून्यं 'शमूनं कुरुते विष्णुरदृश्यः सन् परः स्वयम् । तस्माच्छून्यमिति प्रोक्तः' इति महाकौर्मात् तेन नार्धजरतीयम् । अन्ये तु छान्दोग्यस्थारुणुद्दालक-श्वेतकेतूपाख्यानस्थां न्यग्रोधफलमाहरेति इदं भगव इति भिन्धीति भिन्नं भगव इति किमत्र पश्यसीति

रश्मिः ।

अण्व्य इवेमाधाना भगव इति आसामङ्गैकां भिन्धीति भिन्ना भगव इति किमत्र पश्यसीति न किंच-न भगव इति तं होवाच यं वै सोम्यैतमणिमानं न निभालयसे एतस्य वै सोम्यैषोणिम्न एव महान्य-ग्रोधस्तिष्ठतीति जगतः पूर्वावस्थायां दृष्टान्तः । अथ किंचनाणुपदश्रावणात् शून्यस्वभावाणुकारणवादा भ्रान्त्या प्रतीयन्ते तत्रैतासां तात्पर्यमस्ति न वेति संदेहोस्तीति पूर्वपक्षस्तत्रेदं सूत्रं प्रवर्तते । एतेनेति प्रधाननिराकरणे हेतूनां शब्दत्वादचेतनत्वैकविज्ञानं प्रतिज्ञानुपपत्तीनामण्वादिपक्षसामान्येन सर्वे अण्वादिकारणवादा निराकृतत्वेन व्याख्याता इत्याहुः एतेनेत्यस्य स्वस्वमतानुगुणार्थानाहुः ॥ २८ ॥

इति नवमाधिकरणम् ॥ ९ ॥

**इति श्रीविद्वन्मण्डनश्रीविट्ठलेश्वरैश्वर्यनिरस्तसमस्तान्तरायेण श्रीगिरि-**
**धरात्मजश्रीदामोदरश्राश्रीयेण श्रीगोविन्दरायपौत्रेण पूर्णवेश्रा**
**श्रीविट्ठलरायश्राश्रीयश्रीगोकुलोत्सवात्मजगोपेश्वरेण कृते**
**भाष्यप्रकाशरश्मौ प्रथमस्याध्यायस्य तुरीयः**
**पादः संपूर्णतामगमत् ॥ १ ॥ ४ ॥**

॥ प्रथमाध्यायः समाप्तः ॥

राग—प्रकटे पूरणपुरुषोत्तम व्रजनाथ ।
दिनदयाल भक्तजनवत्सल सबगुन जिनके हाथ ॥ १ ॥
श्रीवल्लभके पक्षपातसें इनबिन जनम अकाज ।
सुरश्याम तिहारे हित यातें कीने सकलअपात ॥ २ ॥ [ भक्तकृतिः ]

(ग्रन्थकारः समाप्तौ हस्ताक्षरेण लिखति)

एतावतो ग्रन्थस्य श्लोकानां संख्या ( १०९०० ) दशसहस्रनवशतमुच्यते, अस्य ग्रन्थस्य (अस्मिन् प्रकरणे) षट्दशसहस्रश्लोकसंख्याह । द्विशतपञ्चदश पत्राणि ॥ शुभं भवतु ॥

॥ श्रीविट्ठलेशो जयति ॥

३८८ पत्राणि १२ शोधपत्राणि=पत्राणि ४००। पत्र ४ सों पत्र २२ तांई नहि हे आगें संपूर्ण हे.



# श्रीमद्विठ्ठलेश्वरकारिकाः ।



॥ आचार्याणां कारिकाः समाप्ताः ॥



# अधिकरणानां सूचीपत्रम् ।

# श्रीमच्छाङ्करभाष्यपाठानुसारतः श्रीमद्बादरायणप्रणीत-ब्रह्मसूत्राणां वर्णानुक्रमः ।

# श्रीमदणुभाष्योद्धृतानां प्रमाणवाक्यानां सूचीपत्रम् ।

## [ सर्वत्र अध्यायपादपृष्ठाङ्काः निर्दिष्टाः ]

उपरिनिर्दिष्टस्थूलाक्षरग्रन्थस्थान्तरसंकेतसूचका आङ्ग्लाङ्काः

### तैत्तिरीयब्राह्मणम् ।

## बृहदारण्यकोपनिषद् ।

ब्रह्मबिन्दूपनिषत्।



ब्रह्मसूत्रम्।







भगवद्गीता।

भागवतम् ।

### मनुस्मृतिः ।



### महानारायणोपनिषत् ।



### महाभारतम् ।

### मत्स्यपुराणम्।



### मार्कण्डेयपुराणं देवीमाहात्म्यम्।



### मुण्डकोपनिषद्।



### मैत्रेय्युपनिषद्।



### याज्ञवल्क्यस्मृतिः।



### योगसूत्रम्।



### रामोत्तरतापनीयोपनिषत्।



### वराहपुराणम्।



### वसिष्ठस्मृतिः।



### शतपथब्राह्मणम्।



### शुक्लयजुर्वेदसंहिता।



### श्वेताश्वतरोपनिषद्।

# श्रीमद्ब्रह्मसूत्राणुभाष्यम्

श्रीमद्वल्लभाचार्यचरणप्रणीतम्

# AṆUBHĀṢYA
## ON
# THE BRAHMASŪTRA

WITH THE COMMENTARY
## BHĀṢYAPRAKĀŚA
AND
THE SUPER- COMMENTARY
## RAŚMI ON THE BHĀṢYAPRAKĀŚA

## VOLUME 2
## ADHYAYA 2

EDITED WITH INTRODUCTION BY
**MULCHANDRA TULSIDAS TELIWALA**

WITH A NEW INTRODUCTION BY
**GOSWAMI SRI SHYAM MANOHARJI MAHARAJ**

Ācārya Śrī Vallabha, the founder of the *Śuddhādvaita* school of *Vedānta* tradition is said to be of a divine origin imbued with spiritual insight. His philosophy is called pure-non-dualism undefiled by *Māyā*. He was born in *Vikram Saṁvat* 1535 (1479 A.D.), to Śrī Lakṣmaṇa Bhaṭṭa, a Telugu Brahmin and Illammāgāru, a family which had learning towards Vedic rituals and the worship of Gopālakṛṣṇa. He travelled extensively to the religious places such as Vijyanagar, Kāśī and Aḍail (near Prayāga). At these places, he developed his literary and religious activities. His firm faith in lord Kṛṣṇa's commandment led him to devote to the task of a faithful interpretation of the sacred texts like the *Upaniṣad, Gītā* and *Brahmasūtra*. He found that the essential reality is *Śuddha* (pure) unalloyed with *māyā,* and non-dualism (*Advaya*). He advocated the *Puṣṭi* (divine grace), as the most powerful and unfailing method for attaining Supreme Bliss. His *Siddhānta* is known as *Śuddhādvaita-Brahmavāda-Nirguṇa-Puṣtibhakti Mārga*.

Ācārya Vallabha has written a commentary on the *Brahmasūtra,* known as *Aṇubhaṣya* which is available only in the summary form upto III.2.33, the remaining part was supplemented by his second son Śri Viṭṭhalanātha.

Ācārya differs from the earlier Ācāryas viz. Śaṁkara, Rāmānuja, Madhva, and Nimbārka with regard to the interpretation of the nature of Reality. According to Vallabha, Reality is *Brahman* which is *Sat* (existence), *Cit* (conscious), *Ānanda* (bliss)

*Continued on back flap*

**ISBN 81-88643-09-2 (Vol.2)**
**ISBN 81-88643-07-6 (Set)**

**Rs. 3700**
**(Set of 4 Vols.)**

*continued from front flap*

which is denominated as *Rasa* (sentiment). He is *Pūrṇa Puruṣottama*. Among his divine characteristics *Jñāna* and *Kriyā* are important. He is *Kartā* (doer) and *Bhoktā* (enjoyer). For *Līlā*, He creates the universe out of Himself. Vallabha propagates the path of *Puṣṭi Bhakti* (Divine grace) in order to enjoy the union with the Supreme. The *Puṣṭi* can be realised as in the case of gopi's of Vṛndāvan who, in fact, opened the gateway to realize everything with lord Kṛṣṇa. He is for *Svarūpānanda,* instead of *Brahmānanda*. Lord is full of *Rasa* in which love is most important. This brings enjoyment of the Bliss of the Union with Divine.

The present commentaries on *Aṇubhāṣya* known as *Prakāśa* written by Śrī Puruṣottama Caraṇa, a descendent of Śrī Vallabhācārya and another on the same known as *Raśmi* by Śrī Yogi Gopeśvara, of the same lineage, provide excellent and appropriate interpretation of the tradition. In fact, *Aṇubhaṣya* of Vallabhācārya with these two commentaries given by Śrī Puruṣottamacaraṇa and Gopeśvarajī is the most authentic text for providing illuminating interpretation of the *Brahmasūtra*.

This edition was originally printed by Nirnaysagar Press, Bombay, an institution known for publishing and printing the authentic editions. This work was published some eighty years ago, now printed again with a new Introduction by one of the greatest scholars of modern times in the tradition.

MAHĀPRABHU ŚRĪ VALLABHĀCHĀRYA'S

# AṆUBHĀṢYA

ON

# THE BRAHMASŪTRA

WITH THE COMMENTARY

## BHĀṢYAPRAKĀŚA

OF

## GOSVĀMI ŚRĪ PURUṢOTTAMAJI

AND

THE SUPER- COMMENTARY

## RAŚMI ON THE BHĀṢYAPRAKĀŚA

OF

## GOSVĀMI ŚRĪ GOPEŚVARJI

EDITED WITH INTRODUCTION AND APPENDICES ETC. BY
MULCHANDRA TULSIDAS TELIWALA

WITH A NEW INTRODUCTION BY
GOSWAMI SRI SHYAM MANOHARJI MAHARAJ

ṢAṢṬHAPĪṬHĀDHĪŚVARA,
MANDIRA ŚRĪ MUKUNDARĀYAJĪ ŚRĪ GOPĀLALĀLAJĪ, KĀŚĪ.

VOLUME TWO

ADHYĀYA 2

AKṢHAYA PRAKASHAN
DELHI

श्रीकृष्णाय नमः

# श्रीमद्ब्रह्मसूत्राणुभाष्यम्

शुद्धाद्वैतब्रह्मवादनिर्गुणभक्तिमार्गप्रवर्तकाचार्यचक्रचूडामणि-

## श्रीमद्वल्लभाचार्यचरणप्रणीतम्

दशदिगन्तविजयिश्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणप्रणीत-

## भाष्यप्रकाशेन

सम्पूर्णवेत्तृश्रीमद्गोस्वामिश्रीगोपेश्वरजिचरणप्रणीत-

## भाष्यप्रकाशरश्मिना

च परिबृंहितम्

मूलचन्द्रतुलसीदासतेलीवाला

इत्यनेन संशोधितम्

काशीस्थ-श्रीमुकुन्दरायजी-श्रीगोपाललालजीमन्दिराधिष्ठित-

षष्ठपीठाधीश्वर-गोस्वामिश्रीश्याममनोहरपाद-

विरचितया नवीनभूमिकया समुल्लसितम्

द्वितीयो भागः

द्वितीयोऽध्यायः

देहलीस्थ-

अक्षयप्रकाशननेन

प्रकाशितम्

श्रीकृष्णाय नमः।

# श्रीमद्ब्रह्मसूत्राणुभाष्यम्।

शुद्धाद्वैतब्रह्मवादनिर्गुणभक्तिमार्गप्रवर्तकाचार्यचक्रचूडामणि-
श्रीमद्वल्लभाचार्यचरणप्रणीतम्।

दशदिगन्तविजयिश्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणप्रणीत
भाष्यप्रकाशसम्पूर्णवेतृश्रीमद्गोस्वामिश्रीगोपेश्वर-
जिचरणप्रणीतभाष्यप्रकाशरश्मिपरिबृंहितम्।

## द्वितीयाध्यायस्य प्रथमः पादः।

'भगवद्धर्मपरायणसद्गतश्रेष्ठिगोवर्धनदाससुन्दरदास' इत्यस्य पुष्टिमार्गीय-
संस्कृतसाहित्यसमुद्धारार्थं निर्दिष्टद्रव्यसङ्ग्रहतः 'प्राप्तभगवत्पद
मूलचन्द्र तुलसीदास तेलीवाला, बी. ए., एल्एल्. बी.,
वकील, हाइकोर्ट' इत्येतेषां सुहृद्भिः
संशोध्य 'निर्णयसागर' मुद्रणालये
मुद्रयित्वा प्रकटीकृतम्।

श्रीवल्लभाब्दाः ४५२. संवत् १९८६.

मूल्यं सार्धमुद्रिका।

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# श्रीमद्ब्रह्मसूत्राणुभाष्यम् ।

## भाष्यप्रकाश-रश्मि-परिबृंहितम् ।



## अथ द्वितीयोऽध्यायः ।

### प्रथमः पादः

**स्मृत्यनवकाशदोषप्रसङ्ग इतिचेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥१॥(२-१-१)**

प्रथमाध्याये वेदान्तवाक्यानां विवादास्पदानां ब्रह्मपरत्वेन समन्वयः प्रतिपादितः । अधुना श्रुतिस्मृत्यविरोधः प्रतिपाद्यते ।

---

भाष्यप्रकाशः ।

स्मृत्यनवकाशदोषप्रसङ्ग इतिचेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥ अथ द्वितीयाध्यायं व्याचिख्यासवोऽध्यायसङ्गतिं प्रदर्शयितुं पूर्वाध्यायार्थमनुवदन्तोऽस्यार्थमाहुः प्रथमेत्यादि । अधुना समन्वयप्रतिपादनादनन्तरं, श्रुतिस्मृत्यविरोधः श्रुतयश्च स्मृतयश्च तासामविरोधः प्रतिपाद्यते । तथा सति श्रुतीनां परस्परमविरोधः[1] स्मृतीनां च श्रुत्यविरोध इत्यर्थात् सेत्स्यति सोऽत्र विचार्यते । तथा च पूर्वाध्यायार्थविचार उपोद्घातः सङ्गतिरित्यर्थः । ननु समन्वयानन्तरं श्रुतिविप्रतिषेधे निराकरणीये स्मृतिविरोधाविरोधविचारस्य किं

रश्मिः ।

स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥ 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यः' इति 'भोक्ता भोग्यं प्रेरितारं च मत्वा' इति श्वेताश्वतराच्छ्रवणानन्तरं द्वितीयाध्याये मननं प्राप्तं भक्तिमार्गीयत्वाद्भाष्यस्य । तच्च युक्तिभिरनुचिन्तनं मननं, तत्रापि युक्त्या वेदवेदोपबृंहकत्वमितिहासादीनां न स्यात् । सांख्यादीनां शास्त्रान्तरत्वं न स्यात्, तदा सांख्यादिस्मृतयः उपबृंहिकाः स्युरिति तर्केण प्रथमसूत्रं प्रवृत्ते । तेन सांख्यस्य शास्त्रान्तरत्वं वैदिकार्थाभावाच्छ्रीभागवते 'त्रय्या चोपनिषद्भिश्च' इति शास्त्रषट्के गणनाच । बालबोधेपि शास्त्रषट्कमुक्तम् । निर्वाहकसङ्गत्या द्वितीयं सूत्रम् । योगे शास्त्रत्वसमर्थनाय तृतीयं सूत्रमिति । भाष्यमवतारयन्ति स्म अथेति । एवं सतीति श्रुतीनां कपिलादिमहर्षिकृतानां स्मृत्यविरोध इति न समासः वक्ष्यमाणविरोधादत एवं द्वन्द्वाभिप्राये सति । उपोद्घात इति । श्रुतीनां परस्परमविरोधः स्मृतीनां च श्रुत्यविरोधः तदा ज्ञातो भवति यदेमा ब्रह्मसमन्विताभ्यो विरुद्धा, इमा नेति विभागः स्यात् स च समन्वयाधीन इति समन्वये प्रकृतसिद्ध्यर्था चिन्ता अत उपोद्घात-

---

१. 'तथा सति' इति प्रकाशकारपाठः ।

भ्रान्तिमूलतया सर्वसमयानामयुक्तितः ।
न तद्विरोधाद् वचनं वैदिकं शङ्क्यतां व्रजेत् ॥

श्रुतिविप्रतिषेधस्त्ववश्यं प्रतिविधेयः । प्रथमचतुर्थपादे सर्वथानुपयोगे प्रतिपादिते, स्मृतिप्रतिपादिते स्मृतित्ववचनेन प्रामाण्ये च यावत् तदप्रामाण्यं न प्रतिपाद्यते तावत् तद्विरोधः परिहर्तुमशक्य इति तन्निराकरणार्थं प्रथमतः

---

भाष्यप्रकाशः ।

प्रयोजनमित्यतस्तद् गृह्णन्ति भ्रान्तीत्यादि प्रतिविधेय इत्यन्तम् । श्रुतिविरुद्धस्मृतीनां, भ्रान्तिमूलतया तदुक्तानां सर्वेषां समयानां युक्तिनियमानाम्, अयुक्तितोऽयुक्तताया । सप्तम्यर्थे तसिः । भावप्रधानो निर्देशः । तद्विरोधात् स्मृतिविरोधात् । वैदिकं वचनं शङ्क्यतामस्य वाक्यस्यायमर्थो भवति न वेति शङ्काविषयतां, न व्रजेन्न प्राप्नुयादित्येकं प्रयोजनम् । एतच्चाद्यसूत्रत्रयेण सिद्ध्यति । तु पुनः श्रुतिविरोधः श्रुतौ विरोधः श्रुतिविरोधोऽवश्यं सर्वथा प्रतिविधेयः, अन्यथा विवक्षितार्थबोधो न स्यादिति द्वितीयम् । एतदुभयप्रयोजनार्थमविरोधो विचार्यते । तथा च श्रुतीनां बलिष्ठत्वात् स्मृतीनां च नैर्बल्येन तथा निराकार्यत्वाच्छ्रुतिविरोधे कासांचित् स्मृतीनां संकोचेन कासांचिद् दूषणेन लोकमात्रसिद्धानां च युक्तीनां दूषणेन विरोधपरिहारो न तु तद्विरोधेन श्रुतिसंकोचस्तदनुरोधेन वा श्रुत्यर्थविचार इत्यर्थः । एतदेव पादार्थकथनमुखेन विभजन्ते प्रथमचतुर्थेत्यादि । आनुमानिकाद्यधिकरणत्रयेण सांख्यमतस्यावैदिकत्वं समर्थयित्वा, कारणत्वेन चाकाशादिष्वित्याद्यधिकरणद्वयेन श्रौतशब्दविप्रतिषेधं जगद्वाचित्वाधिकरणेनार्थविरोधं च परिहृत्य, वाक्यान्वयाधिकरणे जीवब्रह्मवादोत्थापितप्रकृतिकारणवादं च परिहृत्य, प्रकृतिश्चेत्यधिकरणेन ब्रह्मण एवोपादानत्वनिमित्तत्वयोः साधनाज्जगत्कारणविचारणायां सांख्यमतस्य सर्वथाऽनुपयोगे प्रतिपादिते, प्रतिपादिते च 'स्मृतेश्च' इत्यादिसूत्रेषु स्मृतिप्रामाण्याङ्गीकाराच्छेषाभ्यनुज्ञया विविक्तात्मज्ञानवैराग्यादिषु तस्याः स्मृतित्ववचनेन प्रामाण्ये, पुनः स्मृतित्वेन प्रकृतिकारणत्वांशेपि प्रामाण्यप्रत्ययस्थाने यावत् तदंशे सर्ववेष्टनस्मृतिवत् स्मृतित्वप्रयुक्तमप्यप्रामाण्यं न प्रतिपाद्यते तावत् तस्याः स्मृतेर्विरोधः परिहर्तुमशक्य इति तदंशे स्मृतित्वप्रयुक्तप्रामाण्यनिरा-

---

रश्मिः ।

इत्यर्थः । अध्यायसमाप्तावुक्तां पादार्थसङ्गतिमाहुः पादार्थेति । मूलपुस्तकानुरोधेन क्वचिदध्यायगतसमन्वयेनैव चारितार्थ्ये सामान्यविशेषभावश्चेत्यन्तो ग्रन्थो न पठ्यते । प्रसङ्गसङ्गतावन्तर्भावः । तेनोपोद्घातगर्भः ससङ्गतिरित्यर्थः । युक्तिनियमानामिति युक्तिभिर्नियमितानाम् । न प्राप्नुयादिति वेदमूलत्वेन 'यत्र दृष्टं तु वेदेषु तदुक्तं स्मृतिभिः किल' इति बृहस्पतिस्मृत्या निषेध्यकोटावनिवेशादुपष्टम्भकत्वेन तु निवेशादधिकरणे तर्कविषयसंशयविषयतां न प्राप्नुयात् । शङ्काशब्दस्तर्कयुक्तसंशये । यद्वा शङ्क्यतां तर्कविषयतां पूर्वपक्षविषयतामिति यावत् । विवक्षितेति । युक्तिपूर्वकपरमार्थबोधो न स्यात् । नैर्बल्येनेति पौरुषेयत्वेन नैर्बल्यम् । तदनुरोधेनेति । तर्कयेति वक्तव्यम् । शेषाभीति । अनुज्ञाऽऽज्ञा । सर्ववेष्टनेति 'औदुम्बरीं स्पृष्ट्वोद्गायेत्'इति श्रुतौ औदुम्बरी सर्वा वेष्टयितव्येति सर्ववेष्टनस्मृतिवत् । तदंश इति प्रकृतिकारणत्वांशे ।

सूत्रत्रयमाह । तुल्यबलानां परस्परविरोधे न प्रकारान्तरस्थितिरिति ततो युक्त्या श्रुतिविप्रतिषेधपरिहारः । ततो द्वितीये पादे वेदबाधकत्वाभावेऽपि तैरपि स्वातन्त्र्येण कश्चन पुरुषार्थः सेत्स्यतीत्याशङ्क्य बाह्याबाह्यमतान्येकीकृत्य निराकरोति । भ्रान्तेस्तुल्यत्वात् । ततः सम्यग् वेदार्थविचारायैव वैदिकपदार्थानां क्रमस्वरूपविचारः पादद्वयेन । अतः संपूर्णेनाप्यध्यायेनाविरोधः प्रतिपाद्यते । कपिलादिमहर्षिकृतस्मृतेर्न मन्वादिवदन्यत्रोपयोगः । मोक्षैकोपयोगित्वात् । तत्राप्यनवकाशो वैयर्थ्यापत्तेरितिचेन्न । कपिलव्यतिरिक्तशुद्धब्रह्मकारणबाधक-

---

भाष्यप्रकाशः ।

करणार्थं सूत्रत्रयमाहेत्यर्थः । तत्र हेतुः तुल्येत्यादि । तथा च सांख्य ईश्वरस्य निराकृतत्वाद् योगे च वेदप्रवर्तकतयानुग्राहकतया च तदङ्गीकारात् तुल्यबलानां स्मृतीनां परस्परविरोधे एकतरप्रामाण्यस्य वक्तुमशक्यत्वान्न तदुक्तरीत्या प्रकारान्तरस्य सेश्वरत्वानीश्वरत्वादेः स्थितिर्निर्णयः । इति अस्माद्धेतोः । तथा चैवमप्रामाण्यबोधनार्थं सूत्रत्रयमित्यर्थः । शिष्टानामर्थमाहुः ततो युक्त्येत्यादि । तत आद्यसूत्रत्रयोत्तरं, शिष्टेषु युक्त्या प्रत्यक्षस्य श्रुतेश्च श्रुत्योश्च परस्परविप्रतिषेधे प्रतिपादिते युक्त्या तत्परिहार इति प्रथमपादार्थः । द्वितीयपादार्थमाहुः ततो द्वितीय इत्यादि । वेदबाधकत्वाभाव इति सर्ववेष्टनस्मृतिवदप्रामाण्यात् तथात्वे । तैरिति बाह्याबाह्यस्मृत्युक्तसाधनैः । कश्चनेति यत्किंचिन्मुक्तिरूपः । फलेनुपयोगात् तन्निराकरणं द्वितीयपादार्थः । अग्रिमयोरर्थमाहुः ततः सम्यगित्यादि । तृतीये वियदादिपादे प्रथमं भूतानामुत्पत्तिः, स्वरूपम्, उत्पत्तिक्रमश्च विचार्यते । ततो जीवात्मस्वरूपं तद्धर्माश्च । चतुर्थे चेन्द्रियोत्पत्तिक्रमस्तत्स्वरूपादिकं च । तथा चैतद्द्वयं पादद्वयार्थः । सिद्धमाहुः अत इत्यादि । अत इति पादेषूक्तप्रकारकार्थप्रतिपादनात् । उपन्यस्तं सूत्रं व्याकुर्वन्ति कपिलेत्यादि । अयमर्थः । 'ज्ञानादेव तु कैवल्यम्' इत्यादिश्रुत्युक्तमोक्षफलकज्ञानार्थं जगत्कारणविचार-

रश्मिः ।

तत्र हेतुरिति प्रकृतिकारणत्वांशे प्रामाण्यनिराकरणे । योगे चेति 'एकं सांख्यं च योगं च यः पश्यति' इति वाक्यात् सेश्वरसांख्य इत्यर्थः । योगस्याग्रे प्रतिवक्तव्यत्वात् । वेदेति 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः' 'तत्र निरतिशयं सर्वज्ञबीजम्' 'पूर्वेषामपि गुरुः कालेनानवच्छेदात्' 'तस्य वाचकः प्रणवः' इति वेदप्रवर्तकता । 'तज्जपस्तदर्थभावनम्' 'ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च' इत्यनुग्राहकता । निर्णय इति । तेन न्यूनताख्यनिग्रहस्थानव्यावृत्त्यर्थम्, युक्त्येति भाष्यात् न्यायशास्त्रत्वाभावेऽपि श्रुतिविप्रतिषेधपरिहारव्याख्यानाय तुल्यबलानां शास्त्रत्वेन सांख्ययोगस्मृतीनामिव पुराणानाम्, 'अहं सर्वस्य' इत्यादीतिहासानां छान्दोग्योक्तपञ्चमवेदानां वेदान्तानां च वेदत्वेन तुल्यानां परस्परं प्रथमाध्याये विषयत्वे विरोधेन प्रकारः प्रथमाध्यायोक्तवेदान्तप्रकारः, ततो अन्यप्रकारः उपबृंहणप्रकारः प्रकारान्तरं तेन पञ्चमवेदानां स्थितिरिति निर्णय इत्यप्युपलक्षणविधया तुल्येत्यादि भाष्यार्थः । तदा ततो युक्त्येति भाष्ये तत इत्यस्य न क्रमोर्थः, किं तु ततस्तदनन्तरं, युक्त्या सूत्रत्रयेपि श्रुतिविप्रतिषेधपरिहार इत्यर्थः । शिष्टानामिति सूत्राणामित्यर्थः । पुरुषाणां वा । ननु तर्हि सूत्रत्रये श्रुतिविप्रतिषेधपरिहाराभावात् पादार्थस्याव्याप्तिरिति चेन्न न्यायशास्त्रत्वाभावात् । ननु तथापि युक्त्येत्युक्त्या किंचिद्वक्तव्यमिति चेन्न, पूर्वं निर्णय इत्यादिग्रन्थेनोक्तत्वात् । फलितमाहुः फलेति ।

स्मृत्यनवकाशदोषप्रसङ्गः। 'अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा' इति ॥ १ ॥

इति द्वितीयाध्याये प्रथमपादे प्रथमं स्मृत्यधिकरणम् ॥ १ ॥

भाष्यप्रकाशः।

ननु सांख्यस्मृत्यनुपयोगे नित्यानुमेयश्रुतिविरोधो भवति न वेति संशये कापिलास्तावदेवं प्रत्यवतिष्ठन्ते। पूर्वाध्याये यद्यपि श्रुतिविचारेण ब्रह्मणो जगत्कर्तृत्वं जगदुपादानत्वं च प्रतिपादितं, तथापि कपिलप्रणीतसांख्यस्मृतिविरोधात् तदनादरणीयम्। न च श्रुतीनां स्वतःप्रामाण्यस्य तद्विरोधे स्मृतीनामप्रामाण्यस्य च पूर्वतन्त्रे, 'विरोधे त्वनपेक्षं स्यात्' इत्यत्र प्रतिपादितत्वात् स्मृतिविरोधोऽप्रयोजक इति शङ्क्यम्। 'औदुम्बरीं स्पृष्ट्वोद्गायति' इति श्रुत्युक्तस्य तत्स्पर्शरूपस्यार्थस्य प्रत्यक्षतो निश्चेतुं शक्यतया सर्ववेष्टनस्मृतौ तद्विरोधस्यापि प्रत्यक्षत एव मानेन तादृशीनां विरोधस्य तथात्वेपि जगत्कारणरूपस्य वेदान्तश्रुतिविषयस्याप्रत्यक्षत्वेन तादृशविषये पूर्वोक्तश्रुतिकपिलस्मृत्योर्विरोधे यदि प्रत्यक्षश्रुतिमालम्ब्य तस्या अप्रामाण्यमाश्रीयते तदा तन्मूलभूता श्रुतिर्महर्षिप्रत्यक्षं चोपरुध्येत। न चेदं सर्ववेष्टनस्मृत्यनादरेपि तुल्यमिति वाच्यम्। तत्र हि 'असति ह्यनुमानम्' इति सूत्रांशेन स्मृतेर्मन्थरगामित्वबोधनात् प्रत्यक्षश्रुतौ स्वीकृतस्य प्रामाण्यस्य परित्याग आपततीति तदपेक्षया स्मृतेरेव प्रामाण्यत्यागो वरम्। स्वप्रत्यक्षापेक्षया परप्रत्यक्षस्य निर्बलत्वेन तुल्यत्वाभावात्। इह तु वेदान्तविषयस्य दुरवबोधत्वेन तादृशमहर्षिगोचरताया एवास्थेयत्वाद्, 'आनर्थक्ये प्रमाणानां विपरीतं बलाबलम्' इति न्यायाच्च कपिलस्मृत्यनुरोधेन श्रुतिरेव प्रधानविषये संकोच्या तदनुग्राहकस्य स्वप्रत्यक्षस्यात्राभावात्। किंच सर्वश्वेतो हयः, सर्वश्यामः पुरुष इत्यत्र यथा खुरनेत्रनखादिषु तद्वर्णाभावेपि श्वेतादिबाहुल्यात् सर्वपदप्रयोगस्तथा वेष्टनस्मृतावपि किंचिदंशपरित्यागेन बहुंशवेष्टनेपि सर्वपदस्योपपत्तिरिति तस्याः संकोचसहिष्णुता तथा नात्र केवलयथार्थज्ञानमप्रावरणमोक्षोपयोगितया

रश्मिः।

भाष्ये। भ्रान्तेरिति बाह्याबाह्यमतप्रवक्तॄणाम्। पूर्वपक्षमाहुः नित्यानुमेयेति। तन्मूलभूतश्रुतिविरोधः। पूर्वपक्षमाहुः कापिला इति। 'विरोधे त्वनपेक्षम्'इति प्रथमस्य तृतीये चिन्तितम्। औदुम्बरीमिति औदुम्बरी शाखा सदोनाममण्डपस्य मध्ये ज्योतिष्टोमे निखन्यते। तथात्व इति प्रयोजकत्वेऽपि। वेदान्तेति अर्थस्येत्यर्थः। पूर्वोक्तेति आनुमानिकाद्यधिकरणोक्तेत्यर्थः। तस्या इति कपिलस्मृतेः। महर्षीति उत्सन्नप्रच्छन्नशाखाप्रत्यक्षम् 'अनागतमतीतं च वर्तमानमतीन्द्रियम्। विप्रकृष्टं व्यवहितं सम्यक्पश्यन्ति योगिनः' इति वाक्योक्तं प्रत्यक्षम्। इदमिति तन्मूलभूतश्रुतिमहर्षिप्रत्यक्षयोरुपरोधनम्। तत्र हीति स्मृतिपादस्थे 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्'इति सूत्रे हि। मन्थरेति श्रुतिस्मृत्योर्विरोधे यथौदुम्बरी सर्वा वेष्टयितव्येत्यस्याः स्मृतेः 'औदुम्बरीं स्पृष्ट्वोद्गायति' इति श्रुत्या विरोधे तु स्मृतमनपेक्षं स्यात्, स्वतन्त्रं स्यात्। असति विरोधेऽनुमानं स्मृतेर्श्रुत्यात्मकं स्यात्। तथा चैवं विचारसापेक्षत्वं मन्थरत्वम्। अत्रापि तौल्यमाशङ्क्य वारयन्ति स्म स्वप्रत्यक्षेति। तथा सति प्रकृतेप्येवमित्याशङ्क्य वैपरीत्यमाहुः इह त्विति। आनर्थक्य इति। उदाहरणं तु। 'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च'इति श्रुतिं सावकाशां 'वैतानं प्रक्षिपेदप्सु आवसथ्यं चतुष्पथे। पात्राणि तु दहेदग्नौ यजमाने वृथा मृते' इति पतिताग्निहोत्रप्रतिपत्तिबोधिका स्मृतिः संकोचयति इति। श्रुतिरेवेति कारणत्वप्रतिपादिका श्रुतिः। नात्रेति कपिलस्मृतौ नेत्यर्थः। केवलेति केवलं यथार्थज्ञानं तेन यत्नं यदावरणं स एव मोक्षस्तदुपयोगितया। सांख्यमतमिदम्।

भाष्यप्रकाशः ।

कस्मिन्नप्यंशे संकोचसहिष्णुत्वस्य वक्तुमशक्यत्वात् । किंच यथा, 'मानवी ऋचौ धाय्ये कुर्यात्' इति विधाय, 'यद्वै किंच मनुरवदत् तद् भेषजम्' इति श्रुतिर्धर्मे तदुपयोगं नियमित-वतीति तस्यास्तत्र सावकाशत्वं तथास्याः क्वचन न वक्तुं शक्यते । तस्मादेतद्वैयर्थ्यमेवापततीति तन्मूलभूतनित्यानुमेयश्रुतिविरोधो महर्षिप्रत्यक्षविरोधश्चेति कापिलप्रत्यवस्थानात् प्राप्तं तदेतत् स्मृत्यनवकाशदोषप्रसङ्ग इति चेदिति सूत्रांशेनानूद्य प्रतिबन्द्या प्रतिविधत्ते नान्यस्मृत्यनव-काशदोषप्रसङ्गादिति । तथा च, 'वेदान्तकृद् वेदविदेव चाहम्' इति सर्ववेदवेद्या वेदान्तकर्त्रा भगवता गीतास्मृतौ 'अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा' इति, 'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते, इति मत्वा भजन्ते मां बुधा भावसमन्विताः' इत्यादिकथनादुक्तज्ञानवतां स्वभजन-कथनेन बहूनां चेतनकारणत्वास्थितिबोधनाच्च बहूनामनुग्रहो न्याय्य इति ताभिरेव वेदा-न्तवाक्यनिर्णय उचितः, अन्यथा तासां सर्वासामेवानवकाशप्रसङ्गात् तथा च वेदान्तो-क्तविषयस्याप्रत्यक्षत्वेप्येतदनुरोधेन कपिलस्मृतिरेव जघन्याधिकारिविषयत्वेन संकोच्या । ये

रश्मिः ।

धाय्य इति । यत्किंचेति यत्किमपि स्मृत्यादि । धर्म इति मनुस्मृतिर्धर्मप्रतिपादिका तट्टीकायामस्याः श्रुतेरुल्लेखान्नियमितवती । मन्वादिः स्मृतिरिति पुराणादिर्प्रसिद्धा मुख्यो धर्मः । तदुपयोगं मन्वादिस्मृत्युपयोगम् । अस्या इति कपिलस्मृतेः । शक्यत इति समवायित्वबोधकश्रुत्या शक्यते । कापिलप्रत्यवेति 'ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति ज्ञायमानं च पश्येत्'इति श्रुत्या पूर्वपक्ष-माहुः तदेतदिति । प्रतिबन्द्या इति प्रतिबन्दिम् । कर्मणः संबन्धसामान्यविवक्षया षष्ठी, तुल्योदोषः प्रतिबन्दिः । प्रतीति सूत्रकार उत्तरयतीत्यर्थः । नान्यस्मृत्यनवेति तेन भाष्ये कपिलेत्याधन्ते तस्मादिति पूरणीयमिति बोधितम् । ननु भाष्यान्तरेषु सर्वाः स्मृतयः संगृहीताः यथा शक्त्यन्तरात्मा भूतानां क्षेत्रज्ञश्चेति कथ्यत इति ता विहाय भाष्यान्तरोक्तगीतामात्रग्रहणं कुत इत्यतस्तदुपपादयन्ति तथा चेति । उक्तज्ञानेति इति मत्वेत्यनेनोक्तजगत्कर्तृत्वज्ञानवताम् । बुधा इति बहुवचनस्याभिप्राय-माहुः बहूनामिति । ननु प्रकृतिश्चेत्यधिकरणे 'सदेव सोम्येदमग्र आसीत्'इति सन्मात्रस्य विषयत्वे मामिति चेतनविषयस्मृत्युपन्यासः कथमित्यत आहुः चेतनेति । तथा च सदित्युपलक्षणमिति भावः । बहूनामिति नात्र सर्वभाष्योक्तबहूनां स्मृतिवाक्यानामनुग्रहोर्थः । स्मृतिपुराणमतसांकर्य-प्रसङ्गात् किंतु बहूनां बुधानां भ्रान्तिरहितानां वाक्यानामित्यर्थः । ताभिः शुद्धब्रह्मवादोपयोगिनीभि-र्जिज्ञासासूत्रप्रतिज्ञाताभिः । एवकारेणान्यस्मृतिव्युदासः । 'नानुध्यायाद् बहून्'इति श्रुतेरुक्तिवत् इति । अत एव जिज्ञासासूत्रे ब्रह्मशब्देन पञ्चमवेदानामपि प्रतिज्ञा वक्तुं शक्यते न संकोचः । तदुक्तम् 'वेदाः श्रीकृष्णवाक्यानि व्याससूत्राणि चैव हि । समाधिभाषा व्यासस्य प्रमाणं तच्चतुष्टयम्' इति निबन्धे । अन्यथेति गीतातिरिक्तश्रीमद्भागवतवाक्यातिरिक्तस्मृतीनामुपष्टम्भकत्वे । अनवेति परस्परविरुद्धतया नैकस्मिन्नर्थे पर्यवसानादनवकाशप्रसङ्गात् । अतः 'तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना नैको मुनिर्यस्य वचः प्रमाणम् । धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः' इत्यधिकारानुसारेण फलति । एतदिति गीतानुरोधेन । ननु भाष्ये 'अरूपवदेव हि तत् प्रधानत्वात्' इत्येकदेशि गतं, सुबोधिन्यां पञ्चविंशाध्याये तृतीयस्कन्धे सिद्धान्तान्तरनिरूपणाच्छास्त्रत्वाच्च तासां कोऽभिप्राय इत्यतस्तत्संगृह्णन्तः सिद्धमाहुः तथा चेति । संकोच्येति । तथा चर्षिं प्रसूतं

१. वाराहपुराणशङ्करभाष्यन्यायमालाविस्तरादि ।

भाष्यप्रकाशः।

मुमुक्षवः परप्राप्त्यनर्हास्तेनया स्वात्मानं प्रकृतिप्राकृतेभ्यो विविच्य स्वस्वरूपावस्थिता भविष्यन्तीति तादृक्सामर्थ्ये परब्रह्मकारणतांशं परित्यज्य देवामरन्यायेन प्रकृतेरनादित्वं बोधयित्वा तथोक्तमित्येवं संकोचसहिष्णुत्वात्। न च तन्मूलभूतश्रुतेर्महर्षिप्रत्यक्षस्य वा विरोधः, महर्षेराशयस्य तन्मूलश्रुतेश्च प्रत्यक्षश्रुत्यविरुद्ध एवार्थे तात्पर्यात्। अन्यथा देवहूतिं स्वमातरं प्रति सर्वतत्त्वयाथात्म्यमुक्त्वाऽग्रे 'ज्ञानमेकं पराचीनैरिन्द्रियैर्ब्रह्म निर्गुणम्, अवभात्यर्थरूपेण भ्रान्त्या शब्दादिधर्मिणा' इत्यादि न वदेत्। एतदेवाभिप्रेत्य मोक्षधर्मे, 'सांख्ययोगः पञ्चरात्रं वेदाः पाशुपतं तथा, ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै' इति पञ्चसिद्धान्तांस्तद्वक्तॄँश्चोक्त्वा, 'सर्वेषु च नृपश्रेष्ठ ज्ञानेष्वेतेषु दृश्यते, यथागतं तथा ज्ञानं निष्ठा नारायणः प्रभुः,' 'न चैनमेव जानन्ति तमोभूता विशाम्पते, तमेव शास्त्रकर्तारः प्रवदन्ति मनीषिणः, निष्ठां नारायणमृषिं नान्योऽस्तीति वचो मम' इत्युक्तम्। यथागतमिति श्रुत्यविरुद्धम्। तथा चाज्ञानामर्थे संकोच इत्यर्थः। अथवा पाद्मोत्तरखण्डे भगवच्छिवसंवादे, 'त्वं च रुद्र महाबाहो मोहनार्थम्' इति मोहनं प्रक्रम्य, 'मयि भक्ताश्च ये विप्रा भविष्यन्ति महर्षयः। त्वच्छक्त्या तान् समाविश्य कथयस्व च तापसान्। कणादं गौतमं शक्तिमुपमन्युं च जैमिनिम्। कपिलं चैव दुर्वासं मृकण्डं च बृहस्पतिम्। भार्गवं जामदग्न्यं च दशैतांस्तापसानृषीन्। तव शक्त्या समाविश्य कुर्वतो जगतोहितम्। त्वच्छक्त्या सन्निविष्टास्ते

रश्मिः।

कपिलेत्यस्या अपि न विरोधः। सिद्धान्तान्तरत्वात्। प्रत्यक्षश्रुत्यविरुद्ध इति न चैकदेशिमतं विरुद्धमिति वाच्यम्, स्वगृहीतमतत्वेन विरुद्धत्वेऽपि स्वगृहीतत्वेन रूपेणाविरुद्धत्वात्। तात्पर्यादिति जानातीच्छति यतत इति तात्पर्ये ज्ञानं कारणं ज्ञानं तु मुख्यैकदेशिसिद्धान्तयोः प्रणयनादस्त्येव। अन्यथेति प्रत्यक्षश्रुत्यर्थे तदविरुद्धैकदेशिमते च तात्पर्याभावे। इदानीं सर्वविधसांख्यस्यानादरणीयता प्राप्नोति तथापि 'सांख्यो बहुविधः प्रोक्तस्तत्रैकः सत्प्रमाणकः। अष्टाविंशतितत्त्वानां स्वरूपं यत्र वै हरिः। अन्ये सूत्रे निषिध्यन्ते' इति शास्त्रार्थात् 'अथ ते संप्रवक्ष्यामि सांख्यं पूर्वैर्विनिश्चितम्'इति प्रतिज्ञाय 'आसीज्ज्ञानमथो ह्यर्थः' इत्यादिनैकादशे भगवत्तत्कृततत्प्रस्तावाच्चाष्टाविंशतितत्त्वानां स्वरूपं यत्र नवकं भवति। 'पुरुषः प्रकृतिर्व्यक्तमहंकारो नभोऽनिलः। ज्योतिरापः क्षितिरिति तत्त्वान्युक्तानि मे नव'इत्युक्तं भागवतं भवति तदतिरिक्तसांख्यस्य 'केचित् षड्विंशतिं प्राहुरितरे पञ्चविंशतिः। सप्तैके नव षट्केचिच्चत्वार्येकादशापरे। केचित्सप्तदश प्राहुः षोडशैके त्रयोदश'इत्युक्तस्य सूत्रेषु प्रत्याख्यानान्न त्रैलोक्यं सांख्यं प्रत्याख्यातमित्याशयेन सिद्धान्तान्तरकापिलं सांख्यमाहुः सर्वतत्त्वेति। पराचीनैरिति प्राकृतैः। 'पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात् पराङ् पश्यति नान्तरात्मन्'इति श्रुतेः। निर्गुणमिति एकदेशिमतत्वान्निर्गुणपदम्। शून्याभावतुच्छादृश्यनिर्गुणादिपदानां सामानाधिकरण्यात्। महोपनिषदि 'एष ह्येव शून्य एष ह्येव तुच्छ एष ह्येवाभाव एष ह्येवाव्यक्तोऽदृश्यो निर्गुणश्च'इति माध्वभाष्ये उक्तम्। अर्थरूपेणेति घटपटादिरूपेण शब्दार्थधर्मिणा भ्रान्त्यावभातीत्यर्थः ख्यातिबोधकम्। इत्यादीति ख्यातिबोधकं न वदेदित्यर्थः। एवं जानन्तीति मुख्यगौणसिद्धान्तेन न जानन्ति। तमेवेति सिद्धान्तद्वयप्रतिपाद्यमेव। ऋषिमिति अस्माभिः सप्तर्षयः समिधः तेषु 'नारायणपरा वेदा' इति तस्य ग्रहणम्। श्रुत्य-

१. शब्दादीति श्रीप्रकाशकाराः।

## इतरेषां चानुपलब्धेः ॥ २ ॥ (२-१-२)

**प्रकृतिव्यतिरिक्तानां महदादीनां लोके वेदे चानुपलब्धेः ॥ २ ॥**

**इति द्वितीयाध्याये प्रथमपादे द्वितीयमितरेषामित्यधिकरणम् ॥ २ ॥**

भाष्यप्रकाशः ।

तमसोद्रिक्तया भृशम् । तामसास्ते भविष्यन्ति क्षणादेव न संशयः । कथयन्ति च ते विप्रास्तामसानि जगत्त्रये । पुराणानि च शास्त्राणि त्वं चासत्त्वेन बृंहितः । कपालचर्मभस्मास्थिचिह्नान्यमरपूजित । त्वमेव धृत्वा ताँल्लोकान् मोहयस्व जगत्त्रये । तथा पाशुपतं शास्त्रं त्वमेव कुरु सत्तम । कङ्कालशैवपाखण्डमहाशैवादिभेदतः' इति कथनात् कपिलाचार्यैस्तामसशक्तिप्रवेशोत्तरं तथा कथितमिति देवहूत्यादिकं प्रति च तदावेशाभावदशायां कथितमिति विषयभेदाच्च मोक्षधर्मवाक्यानां सूत्राणां च विरोध इति दिक् । अत एव हेमाद्रौ श्राद्धखण्डे स्नानार्हप्रकरणे षट्त्रिंशन्मते, 'शैवान् पाशुपतान् दृष्ट्वा लोकायतिककापिलान् । विकर्मस्थान् द्विजान् शूद्रान् सवासा जलमाविशेत्' इत्युक्तम् ॥ १ ॥ इति प्रथमं स्मृत्यधिकरणम् ॥ १ ॥

इतरेषां चानुपलब्धेः ॥ २ ॥ एवं प्रतिबन्द्या कपिलस्मृतेर्निरङ्कुशप्रधानकारणत्वांशे संकोचसहिष्णुत्वमुक्त्वा महदाद्यंशेपि तथात्वमाहेत्याशयेन सूत्रं पठित्वा व्याचक्षते इतरेषां चानुपलब्धेरित्यादि । लोके गीतापुराणादिस्मृतौ प्रश्नोपनिषदादिश्रुतौ चोपलभ्यमानत्वेपि कपिलोक्तप्रकारेणानुपलभ्यमानत्वात् तथाहि प्रवचनसूत्रेषु तावत् 'स्थूलात् पञ्चतन्मात्रस्य' 'बाह्याभ्यन्तराभ्यां तैश्चाहङ्कारस्य' 'तेनान्तःकरणस्य' 'ततः प्रकृतेः' इति सूत्रयता पञ्चभूतव्यतिरिक्तानां कार्यलिङ्गकानुमानगम्यत्वमाहत्याग्रे, 'मूले मूलाभावादमूलं मूलम्' इति कथनात्

रश्मिः ।

विरुद्धमिति श्रुतयः स्पष्टाः । एतस्यैव परम्पराप्राप्तत्वादिति भावः । मोक्षेति । तेनैकादशोक्तानां भगवद्वाक्यानामप्यविरोधो बोध्यः । सूत्राणां चेति । 'दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्'इत्यारम्भे वैराग्यं भगवद्धर्मो भगवान् 'असङ्गोयं पुरुष इति'इति 'प्रधानाज्जगज्जायत इति'इति च सूत्रद्वयं च । पञ्चस्वध्यायेषु इति श्रीकापिलसांख्यप्रवचनसूत्रवृत्ताविति वृत्तिशब्दः । षष्ठेऽध्याये 'अस्त्यात्मा नास्तित्वसाधनाभावात्' स्पष्टमित्यारम्भः । इति श्रीकपिलसांख्यप्रवचनसूत्र इति न वृत्तिशब्दः । एषां सूत्राणां न विरोधः । अत एवेति स्वतन्त्रकापिलकमतस्यैव दूषणादेव । अस्मिन्पादे सर्वेष्वप्यधिकरणेषु पूर्वाध्यायोक्तसमन्वयो विषयः, तत्रास्मिन्नधिकरणे वैदिकस्य समन्वयस्य सांख्यस्मृत्या संकोचोऽस्ति न वेति संशयः, संकोचोऽस्तीति तावत्प्राप्तम् । कुतः । सांख्यस्मृतेर्निरवकाशत्वेन प्रबलत्वाद्वेदस्योपबृंहणत्वं युक्तमिति प्राप्तेऽभिधीयते । सांख्यस्मृतीनां वेदोपबृंहणत्वं न युक्तम् । मोक्षैकप्रयोजनानामन्यासाम् 'अहं सर्वस्य जगतः प्रभवः' इत्यादिगीताश्रीभागवतीयकपिलर्षिस्मृत्यनवकाशप्रसङ्गात्तासामुपबृंहणत्वमिति राद्धान्तः ॥ १ ॥ इति प्रथमं स्मृत्यधिकरणम् ॥ १ ॥

इतरेषां चानुपलब्धेः ॥ २ ॥ प्रतिबन्द्या इति । प्रतिबन्दिस्तुल्यदोषः । 'लोकस्तु भुवने जने' इति जननशीलः कुयुक्त्यादिनेति लोकपदेन जने युक्त्यादिभिरनुपलब्धिमाहुः प्रवचनेति । पञ्चभूतेति सूत्रस्थस्थूलादित्यस्यार्थः । बाह्याभ्यन्तराभ्यां सूक्ष्मस्थूलदेहाभ्याम् । कार्यलिङ्गकेति स्थूलानां सावयवानां भूतानां कार्यत्वात्तैस्तत्कारणानि तन्मात्राणि शब्दादीन्यनुमीयन्ते द्विविधेन्द्रियैः तन्मात्रैः कार्यैरहंकारोऽनुमीयते । तेन बुद्ध्यात्मकं महत्तत्त्वं, तेन कार्येण प्रकृतिरिति । एवं कार्यलिङ्गकानुमानगम्यत्वम् । तेनानुमानमित्याहत्य योजनीयानि सूत्राणीत्युक्तम् । मूल इति मूलं

तस्मायोग्यशरीरनिष्पत्तये स्वयमेव गच्छति भूतसहितः, श्रद्धाहोमानन्तरं सोमभावे वा सम्बन्ध इति संशयः । भिन्नपक्षे योनौ वेति ।

तत्र श्रौतेऽर्थे श्रौतन्यायेनैव निर्णयस्योचितत्वादाहुतावपां गौणत्वापत्तेः

भाष्यप्रकाशः ।

एवं श्रुत्यर्थनिर्णयेनाधिकरणस्य तादर्थ्यं साधयित्वाधिकरणप्रयोजकसंशयाकारमाहुः तस्मादित्यादि । यस्मादस्ति ज्ञानार्थं योग्यदेहापेक्षा, तस्मात्तदर्थमेवं संशय इत्यर्थः । सम्बन्ध इति । भूतसम्बन्धः 'अङ्गुष्ठमात्रं पुरुषं निश्चकर्षे'ति परिमाणबोधकस्मृतिः 'तमुत्क्रामन्त' मित्युत्क्रमप्रकरणे भूतोत्क्रमाश्रवणं च संशयबीजं यथायथम् । तत्र द्वितीयकोटौ पक्षद्वयम् । श्रद्धाहोमानन्तरं सोमभावे वा, भिन्नपक्षे योनौ वेति । पञ्चाहुतिभ्यो धूमादिमार्गेण गच्छतः सोमभावेऽपां द्रवीभावमान्द्यात् तदा वा । ततो भिन्ने सकामपक्षे पञ्चाहुत्यभावात् सकामान् यष्टॄँल्लोकाल्लोकान्तरं मन एव कर्मसहितं नयति । शारीरब्राह्मणे 'काममयं पुरुष'मुपक्रम्य, 'तदेव स तत्सहकर्मणैति लिङ्गं मनो यत्र निषक्तमस्य, प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम्, तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मणे' इति श्रुते'र्मनः कर्ममयं नृणामिन्द्रियैः पञ्चभिर्युतम्, लोकाल्लोकं प्रयात्यन्य आत्मा तदनुवर्तत' इत्येकादशस्कन्धवाक्याच्च । तस्मिन् पक्षे भूमिरूपायां योनौ वेत्यर्थः ।

पूर्वपक्षमाहुः तत्र श्रौत इत्यादि । प्रत्यक्षाद्यगम्ये जीवाद्युत्क्रमणरूपे श्रौतेऽर्थे श्रुत्युक्तेन

रश्मिः ।

च पश्चात्सादृश्ययोरनु । आयामे च समीपे च लक्षणादावनुक्रम' इति विश्वे 'लक्षणे'ति सूत्रे 'इत्थंभूताख्यानभागवीप्सा' आदिशब्दार्थः । प्रकृते इत्थम्भूताख्यानेऽनुः । भक्तो विष्णुमनु । विष्णोर्भक्तेश्च विषयविषयिभावोऽनुद्योत्यः । भक्तः कञ्चित्प्रकारं प्राप्त इत्यर्थः । तद्वत् अन्ये परिवर्तनप्रकारं प्राप्ता इत्यर्थः । यद्वा एवमित्येव हेतुः । पूर्वप्रकारेणेति हेतुतृतीया एवमित्यत्र । तस्मादित्यत्र हेतुपञ्चमीति । निष्कामसकामरूपप्रकारभेदात्तस्य बृहदारण्यकोक्तस्य सकामप्रकारस्य नैतस्य छान्दोग्योक्तनिष्कामप्रकारस्य बाधकत्वम् । तादर्थ्यं ज्ञानार्थत्वम् । अधीति । अधिकरणे । प्रयोजकस्येत्यस्य हेतोः संशयस्याकारम् । द्रवीति । चन्द्रवैलक्षण्यदर्शनान्यथानुपपत्त्या'ऽपां पुष्पं यो वेदे'ति श्रुत्या च द्रवीभावमान्द्यात् । तदेत्यपां द्रवीभावमान्द्यकाले वा । भाष्यविवरणं ततो निष्कामाद्भिन्ने । पञ्चाहुत्यभावः छान्दोग्ये बोध्यः । प्रसङ्गादाहुर्बृहदारण्यकेपि । सकामानिति । बृहदारण्यके श्वेतकेतुब्राह्मणे । 'अथ ये यज्ञेन दानेन तपसा लोकं जयन्ति ते धूममभिसम्भवन्ति धूमाद्रात्रिᳪ रात्रेरपक्षीयमाणपक्षमपक्षीयमाणपक्षाद्यान्षण्मासान्दक्षिणादित्य एति मासेभ्यः पितृलोकं पितृलोकाच्चन्द्रं ते चन्द्रं प्राप्यान्नं भवन्ति तांस्तत्र देवा यथा सोमᳪ राजानमाप्यायस्वापक्षीयस्वेत्येवमेनांस्तत्र भक्षयन्ति तेषां यदा तत्पर्यवैत्यथेममेवाकाशमभिनिष्पद्यन्त आकाशाद्वायुं वायोर्वृष्टिं वृष्टेः पृथिवीं ते पृथिवीं प्राप्यान्नं भवन्ति ( ते पुनः पुरुषाग्नौ हूयन्ते ततो योषाग्नौ जायन्ते लोकान् प्रत्युत्थायिनः ) त एवमेवानुपरिवर्तन्त' इति श्रुतौ सकामान् । पुनरावृत्त्युक्त्या यष्टॄनित्यादि । नायकोत्र नोक्तोऽत आहुः मन एवेति । कर्मसहितमिति मनोविशेषणम् । 'मनःकर्ममयमि'ति वक्ष्यमाणवाक्यात् । एवकारो मनःकर्तृकनयनस्य श्रौतत्वादित्याहुः शारीरेति । मन इति । लिङ्गान्तर्गतं मनः । पञ्चभिः कर्मेन्द्रियैः । अन्यः आत्मा । तदन्विति । मनोऽनुवर्तते । तस्मिन्निति । सकामपक्षे । भूमीति । योनाविति बोध्यम् । भूतसम्बन्धः । वाजसनेयके 'इमामाविश्य तर्पयित्वे'ति श्रावणात् । इमां भूमिम् । एवमादिप्रतिभातीत्यन्तग्रन्थोऽत्र सम्पातापातः । इत्यक्षराण्यत्रेति प्रतिभातीत्यन्तो वा सम्पातापातः । सिद्धान्तन्यायग्रहणेन प्रतिभातीति वा । 'तस्माज्जुगुप्सेते'ति न्यायाग्रहणेन प्रतिभातीति

संस्कृतभूतानामुपस्थापकस्याभावाच्छरीरवियोगे देवानां च तावद्विलम्बे कारणाभावाच श्रद्धारूपा आप एव हूयन्ते। अतो न तैः परिष्वक्तो गच्छतीत्येवं प्राप्ते, उच्यते।

तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ तस्य जीवस्य यज्ञादिकर्तुरन्तरप्रतिपत्तौ, अन्तरे मध्ये, मुख्यप्रतिपत्तेर्मोक्षलक्षणाया अर्वाग् योग्यशरीरनिष्पत्त्यर्थम्। न हि वस्तुतो यज्ञानामिदं फलं भवति। अतो

भाष्यप्रकाशः।

कर्मसाहित्यन्यायेनैव निर्णयस्य युक्तत्वात्। भूतसाहित्ये तु तैरेव शरीरनिष्पत्त्या अवाहुतेस्तत्संस्कारकत्वेन अपामाहुतौ गुणकर्मत्वापत्तेः अदृष्टस्य दृष्टसामग्रीं विना अकिञ्चित्करतया संस्कृतभूतानामुपस्थापकस्याभावात्, यदि भूताभावे लिङ्गशरीरं वियुज्येत, तदा मनसोऽप्यभावादुत्क्रमणं विरुध्येत। स तु नास्ति। शरीरवियोगे कारणस्य कर्माभावस्याभावात्। अप्सहकारीणि भूतानि यावदुपतिष्ठन्ते, देवानां तावद्विलम्बे कारणाभावाच शीघ्रमेवापो योग्यशरीरनिष्पत्त्यर्थं हूयन्ते। तथा च सोमभावानन्तरं वा योनौ वा भूतसम्बन्धः, न तु रंहणावसर इत्यर्थः।

सूत्रमुपन्यस्य सिद्धान्तं व्याकुर्वन्ति तस्येत्यादि। तच्छब्दस्य जीवपरामर्शित्वे हेतुः प्रश्ननिरूपणविवरणे विषयवाक्यस्थपुरुषपदविचारे व्युत्पाद्यः। अन्तरपदं च मध्यवाचकम्। 'अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये, छिद्रात्मीयविना बहिरवसरमध्येऽन्तरात्मनि चे'ति कोशात्। प्रतिपत्ताविति सप्तमी च तादर्थ्ये। 'चर्मणि द्वीपिनं हन्ती'त्यादिवत्। शरीरनिष्पत्तेः कुतो न मुख्यफलत्वमित्यत आहुः न हीत्यादि। 'तमेतं वेदानुवचनेने'त्यत्र 'विविदिषन्ती'ति पदस्य ज्ञानपर्यन्तत्वसमर्थनाज्ज्ञानकर्मसमुच्चयपक्षस्य वक्तव्यत्वाच तथा। यज्ञानां हि मुख्यं फलं भगवत्प्रादुर्भावः सहस्रसमे प्रसिद्धः। 'ततो ह जज्ञे भुवनस्य गोपाः, हिरण्मयः शकुनिर्ब्रह्मनामे'ति श्रुतेः। पृथुप्रभृतीनां यज्ञे भगवत्प्रादुर्भावस्य पुराणेष्वपि कथनाच न शरीरनिष्पत्तेर्मुख्यफलत्वमत-

रश्मिः।

वा। जीवाद्युत्क्रमणेत्यारभ्य न्यायेनेत्यन्तः पुनरनुवादको ग्रन्थः। एवेति। अन्येषां बाधकत्वादिति तद्व्यवच्छेदक एवकारः। आहुतावित्यादिभाष्यं विवृण्वन्ति स्म भूतेति। तैरेवेति। दृष्टानुसारेण पञ्चमहाभूतमार्गैः। पञ्चीकरणभाष्यसत्त्वादेवकारः। तत्संस्कारमिति। 'देवाः श्रद्धां जुह्वती'ति श्रुतौ होमकर्मत्वसार्थक्याय। साहित्येन गुणाधानं संस्कारः। गुणेति। श्रुत्युक्तत्वादप्रयोजककर्मत्वापत्तेः। संस्कृतेत्यादिभाष्यं विवृण्वन्ति स्म अदृष्टस्येति। शरीरेत्यादिभाष्यं विवृण्वन्ति स्म यदीति। लिङ्गेति। भूतसूक्ष्मशब्दादिपञ्चघटितत्वाल्लिङ्गशरीरस्य। आप इति। भाष्य एवकारः भूतसूक्ष्मव्यवच्छेदकः। तैरिति। भूतसूक्ष्मैरित्यर्थः। रंहणेति। 'रहि गतौ'। शरीरान्तरप्रतिपत्ताविति भेदार्थकत्वेऽन्तरशब्दस्य प्रतियोगिसापेक्षत्वेन पूर्वसूत्रे शरीराभावाद्भाष्यं तद्विवृण्वन्ति स्म अन्तरेति। प्रतिपत्तावितीति। अन्तरे प्रतिपत्तिस्तस्यामिति विग्रहे प्रतीकोयम्। योग्यशरीरनिष्पत्त्यर्थमिति भाष्यविवरणम्। चर्मणीत्यादि। 'निमित्तात्कर्मयोग' इति सूत्रात्। ननु लोकं रंहतीत्यत्र लोकशरीरनिष्पत्त्योः कः सम्बन्ध इति चेत्। न। उभयोर्द्रव्यत्वेन संयोगसत्त्वात्। संयुक्तसमवायो वा। लोकसंयुक्तशरीरे निष्पत्तेः समवायात्। ज्ञानपरीति। सनर्थो विवक्षित इति रामानुजमते। वेदानुवचनेन विविदिषन्ति, परं न विदन्ति। वेदनं तु विषयाधीनमित्यर्थः। एवं समर्थनात्। वक्तव्येति। 'सर्वापेक्षा चे'ति सूत्रे। गोपा इति। 'असौ वा आदित्यो गोपाः स इमाः प्रजा गोपायति तमेतं प्रजानां गोप्तारं कुरुत' इति श्रुतेः। पुराणेष्विति। श्रीभागवतादिषु। तथेति।

मुख्ये विलम्बात् प्रतिपत्तिरेषा। तस्य मुख्यफलस्य वा अन्तरे या प्रतिपत्तिस्तदर्थं वा। तत्कारणभूतैः सम्परिष्वक्त एव रंहति। मरणानन्तरमेव कर्मसमाप्तेः। सम्यग् भूतानि तदैव संस्कृतानि। प्रतिदिनसंस्कारार्थं च नैकट्यमपेक्ष्यते। अतः सम्यगेव च परिष्वक्तः। पूर्वं शरीरेण व्यवधानात्। शरीरदाहे वा तद्गतानि भूतसूक्ष्माणि

---

भाष्यप्रकाशः।

स्तथेत्यर्थः। ननु तच्छब्दस्य जीवपरत्वे सम्परिष्वक्तपदस्यानन्वयप्रसङ्ग इति तद्वारणाय सूत्रे 'विचार्यत' इति पदमध्याहार्यम्, तदन्तरप्रतिपत्तौ विचार आरभ्यत इति, स च गुरुभूत इत्यतो व्याख्यानान्तरमाहुः तस्य मुख्यफलस्य वेत्यादि। तथाच यथा 'अपः प्रणयति' 'श्रद्धा वा आप' इति विधाय, पृथिवीध्यानपूर्वकमपःप्रणयनं कार्यमिति वक्तुं 'मनसा प्रणयतीयं वै मनोऽन्नयैवैनाः प्रणयती'त्यत्र पूर्वमनुक्तामपि पृथिवीं बुद्धिस्थामेव इयमनयेतिपदाभ्यां श्रुतिः परामृशति। नच श्रद्धैवैताभ्यां परामृश्यत इति वाच्यम्। कल्पसूत्रकृता ब्राह्मणान्तरमनुसृत्य 'पृथिवीं ध्याय'न्निति पृथिवीध्यानस्य विशेषणत्वेनोक्तत्वात्, सायणभाष्ये तथा व्याख्यानात्, अतस्तत्रेवात्रापि तच्छब्देन मुख्यं फलमेव ग्राह्यमिति बुद्धिस्थस्य मुख्यफलस्य परामर्शकं तत्पदमतस्तथेत्यर्थः।

अन्ये तु तच्छब्देन 'संज्ञामूर्तिक्लृप्ति'रिति पूर्वाध्यायान्त्यपादस्थसूत्रोक्तं देहं परामृशन्ति। अर्थस्तु तुल्यः।

तत्कारणभूतैरिति। ज्ञानयोग्यशरीरकारणभूतैर्भूतसूक्ष्मैः। संस्कृतानां भूतानां कारणतार्थं तत्परिष्वङ्गमुपपादयन्ति मरणेत्यादि। तदैवेति। मृताग्निहोत्रकाले। प्रतिदिनसंस्कारार्थमिति। साम्परायिकविधौ तथात्वार्थम्। तथा च समुपसर्गोक्तं सम्यक्त्वं भूतविशेषणं सत् परिष्वङ्गविशेषणं भवतीत्यतः सम्परिष्वक्त इत्यर्थः। अस्य क्लिष्टत्वाद् व्याख्यानान्तरमाहुः शरीरदाहे

रश्मिः।

मुख्ये विलम्बात् प्रतिपत्तिरेषेत्यर्थः। प्रतिपत्तिर्योग्यशरीरनिष्पत्तिः। एना इति। प्रणयनार्थमुपादानादेनादेशः। श्रुत्यर्थः स्पष्टो नोच्यते सर्वत्र। ब्राह्मणेति। ब्राह्मणं मनसेत्याद्युक्तं ततोऽन्यत्। 'पृथिवीं ध्याय'न्निति ब्राह्मणान्तरम्। 'पृथिवीं ध्याय'न्निति पृथिवीध्यानपूर्वकमपःप्रणयनं कार्यमिति वक्तुमित्येवं पृथिवीध्यानस्य विशेषणत्वेनोक्तत्वात्। तत्रेवेति। तत्रेदंशब्देनेव। अत्रापीति। सूत्रेपि। एवेति। दृष्टान्तसद्भावात्। तथेत्यर्थ इति। तस्य मुख्यफलस्येत्यादिरित्यर्थ इत्यर्थः। मुख्यं फलं मोक्ष इत्युक्तम्।

अन्ये त्विति। शङ्कराचार्यादयस्तु। अर्थस्त्विति। सूत्रार्थः, न तु पदार्थः।

तत्कारणभूतैरितीति। बहुसम्मतत्वादेवकारः। उपेति। स्मेति ज्ञेयम्। मरणेत्यादीति। मरणप्राक्कालव्यवच्छेदक एवकारः। कर्माभोगे मरणासम्भवाच्च। मृतेति। मृतोऽग्नये हूयतेऽस्मिन्। 'हु दानादनयोः'। हुयागमेति त्रन्। तस्मिन्काले। तथात्वेति। प्रतिदिनसंस्कारार्थम्। दिनविरामस्य मृताग्निहोत्रेऽभावात्। यागवत्। अत इत्यादिभाष्यं विवृण्वन्ति स्म तथाचेति। भाष्ये तत्कारणभूतैरित्यत्र तैरित्यस्य सम्बन्धात्तत्र सहार्थकतृतीयान्तभूतसूक्ष्मपदे। सूत्रे कर्मणोऽविवक्षया ष्वञ्जेरकर्मकत्वेन कर्तरिक्तप्रत्यये चाङ्गीकृत इत्यर्थः। अतो नैकट्यापेक्षणात्सम्यक्पूर्वशरीरव्यवधानरहितः। युक्तेरेवकारः। च पुनः भूतसम्यक्त्वानन्तरम्। पुनः सम्यक्त्वे हेतुमाहुः पूर्वमिति। क्लिष्टेति। नन्वम्भोमान्यथासिद्धिवारकस्य सम्यग्भूतानीति

सम्यक् तमेवासक्तानि । 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चे'ति । जीवपक्षे ज्ञानकर्मणी । कर्मणो हि स्वरूपभूता आपः । तत्र हेतुः प्रश्ननिरूपणाभ्याम् । 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती'ति प्रश्नः । 'असौ वा व लोको गौतमाग्निस्तस्यादित्य एव समि'दित्यादि निरूपणम् । प्रश्ने हि पुरुषत्वं वदति, न देहमात्रम् । तज्जीवाधिष्ठितानामेव भवति । सिद्धवत्कारवचनाच्च । निरूपणेपि चन्द्रो भवतीति । तत्रापि सोमो राजा चेतनः । न ह्यन्याधिष्ठाने ह्यन्यस्य शरीरं भवेत् । तथा (वर्षा) श्रेतोगर्भौश्च । अन्यथापि विनियोगसम्भवात् ।

---

भाष्यप्रकाशः ।

इत्यादि । एवं सम्परिष्वङ्गं साधयित्वा परिष्वक्तस्य होम्यत्वाय तस्य भूतासङ्गने हेतुमाहुः तमित्यादि । बृहदारण्यके शारीरब्राह्मणे 'अथैनमेते प्राणा अभिसमायन्ती'त्यादिना प्राणैः सहितस्य जीवस्योत्क्रमणमुक्त्वा, 'स एष ज्ञः स विज्ञानो भवति, तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चे'त्यनेन जीवदशासम्बन्धिप्रमाणाप्रमाणेन्द्रियजनितं ज्ञानम्, कर्मेन्द्रियजनितं द्विविधं कर्म, मरणाव्यवहितकालीना 'यं यं वापि स्मरन् भाव'मित्याद्युक्ता पूर्वबुद्धिश्च तदीयदेहारम्भकारणत्वेन श्राव्यत इति जीवस्य होम्यत्वपक्षे ज्ञानकर्मणी आसङ्गिके । तथाच भूतपरिष्वक्त एव होम्य इत्यर्थः । अथाहुतेर्गौणत्वं वारयन्ति कर्मण इत्यादि । हि यतो हेतोर्द्रव्यरूपत्वात् कर्मणः स्वरूपभूता आपः । तथाचात्रापां होम्यद्रव्यत्वेनोक्ततया कर्मस्वरूपे प्रवेशेन केवलं संस्कार्यत्वेनाप्रवेशादत्राहुतेर्गौणत्वमित्यर्थः । अत्र प्रमाणं वदतीत्याहुः तत्र हेतुरित्यादि । अम्भोमकाले तासु जीवाधिष्ठानं व्युत्पादयन्ति प्रश्ने हीत्यादि सम्भवादित्यन्तम् । तथाच छान्दोग्ये 'प्राणो हि पिता प्राणो माते'त्यत्र प्राणविशिष्ट एव मातृपित्रादिशब्दप्रवृत्तिव्युत्पादनात् तस्य न्यायस्य पुरुषपदेऽपि तुल्यत्वात् पुरुषत्वं जीवाधिष्ठितानामेव भवति । 'पुरुषौ चात्ममानवा'विति कोशेऽपि मानवपदेन शरीरविशिष्ट एव पुरुषपदशक्तिग्राहणेनात्र तस्य सिद्धवदुक्त्या च प्रश्ने सपरिकरजीवलाभात् । निरूपणे चाङ्गारतया चन्द्रमसः पूर्वं सत्तामुक्त्वा आहुत्यनन्तरं 'सोमो राजा सम्भवती'त्यम्भोमसम्भूतकलावृद्धिकृतराजत्वकथनतः प्रजारूपचेतनसाहित्यसूचनेन तेषां चन्द्रसायुज्याङ्गीकारेऽपि यदा

रश्मिः ।

भाष्यस्याक्लिष्टत्वेनास्याक्लिष्टत्वात्कुतो नाक्लिष्टत्वमिति चेत् । न । अम्भोमश्रुतेः कालनिश्वासत्वेन गौणतयाप्युपपत्तेः । 'यजमानः प्रस्तर' इति श्रुतिवत् । अतः क्लिष्टत्वादित्यर्थः । व्याख्येति । कर्मणि क्तप्रत्ययबोधकम् । तथा च कर्तरिक्तप्रत्ययेपि क्लिष्टत्वं बोध्यम् । शरीरदाह इत्यादीनि । तमेवेति । एवकारोऽत्राकाशादिव्यवच्छेदकः । नात्राकाशादिधर्माः शब्दादीनि भूतसूक्ष्माणि । होम्यत्वेति । अम्भोमे प्राणाधारकजीवस्य होम्यत्वपक्षे । द्रव्येति । 'करणं कर्म कर्तेति त्रिविधः कर्मसङ्ग्रहः' इति वाक्यात्करणे निवेशेन द्रव्यरूपत्वात् । प्राणेति । प्राणविशिष्ट इति सप्तम्यन्तम् । तज्जीवेत्यादिभाष्यं विवृण्वन्ति स्म तस्येति । स्वार्थे कारप्रत्ययान्तसिद्धवत्कारेत्यादिहेतुभाष्यं विवरीतुं हेतुमाहुः पुरुषौ चेति । अत्रेति । 'पुरुषवचसो भवन्ती'त्यत्र तस्य पुरुषपदस्योक्तप्रमाणसिद्धविशिष्टपुरुषस्येवोक्त्येत्यर्थः । निरूपण इत्यादिभाष्यं विवृण्वन्ति स्म निरूपण इति । 'अपां पुष्पं यो वेदे'ति चन्द्रविषयिण्या श्रुत्याहुः अम्भोमेति । तसिल् भाष्यीयेतिशब्दस्थले । तत्रापीति भाष्यं विवृण्वन्ति स्म प्रजारूपेति । 'अनेन जीवेनात्मनानुप्रविश्ये'ति श्रुतेरपां पुष्पं चन्द्रश्चेतनः । सूचनेनेति । सम्भवतीत्यस्य सम्भवानु-

---

१ वर्षाजरेतोगर्भाश्चेति रश्मिपाठ आदर्शेषु क्वाप्यदर्शनाबात्र रक्षित इति । २ प्रतिपादयन्तीति पाठः ।

**जीवसाहित्येऽप्यपामेव मुख्यत्वम् । शरीरवत् । अयं होमस्तत्र तथा तं जनयन्तीति न दुःखहेतुः ।**

भाष्यप्रकाशः ।

द्वितीयाद्याहुत्या वृष्ट्यादिरूपता, तदा अन्याधिष्ठानादन्यदीयदेहासम्भवेन, वर्षस्योषरपातेऽन्नस्य मांसादिभावे रेतसो वृथापाते गर्भस्य स्रावादौ च पुरुषभावाभावेन, तैः फलोपहितैः सर्वैरपि सपरिकरजीवस्यैव होम्यत्वेन लाभाच्चेत उत्क्रमणे संस्कृतभूतैः सम्परिष्वक्त एव रंहतीत्यर्थः । एवमत्र श्रौतन्यायदर्शनेन सम्परिष्वङ्गस्याप्यौचित्यं साधितम् ।

ननु यद्युत्क्रमणमारभ्य जीवसाहित्यम्, तदा अपामेव कुतो होम्यत्वमुक्तमित्यत आहुः जीवेत्यादि । यथा वाजसनेयिनां षष्ठेऽग्नावग्नौ पुरुषस्य होम्यत्वे शरीरस्य मुख्यत्वम्, तद्वदत्र प्रथमहोमेऽपां मुख्यत्वम्, अतस्तासामेव होम्यत्वोक्तिरित्यर्थः । ननु तथापि दुःखहेतुत्वादेवं होमस्यापि वैराग्यहेतुत्वमेव वक्तव्यमित्यत आहुः अयमित्यादि । अयं देवैः कृतो होमः षष्ठे पर्याये ब्रह्मलोकगमनयोग्यं भास्वरवर्णं पुरुषं देवा जनयन्तीति, सात्त्विकसुखवत् परिणामसुखदत्वादनभिमानतयैव तत्र स्थितेश्च न दुःखहेतुः, अतो नास्योपाख्यानस्य वैराग्यमात्रहेतुत्वमित्यर्थः । नच जीवस्य चिद्रूपत्वात् प्राणानां च देवरूपत्वेनाशुद्ध्यभावाच्च होमार्हत्वमिति शङ्क्यम् । तैत्तिरीयोपनिषदि विरजाहोमे प्राणवृत्तीरारभ्यात्मान्तरात्मपरमात्मपर्यन्तं शोध्यत्वश्रावणात् । नच परमात्मनोऽन्तर्यामिणः किं शोधनीयमिति शङ्क्यम् । प्रेरणस्यैव शोध्यत्वात् । अन्यथा असत्कार्येऽपि प्रेरयेत् । इदं च तृतीयस्कन्धे विदुरवाक्ये 'हृदि स्थितो यच्छति भक्तिपूत' इत्यत्र सुबोधिन्यां व्याख्यातम् । अतो न शङ्कालेशः । नच तर्हि विरजाहोमादेव शुद्धिरस्तु, किं पुनराहुत्येति शङ्क्यम् । तत्र

रश्मिः ।

कृतो व्यापारो वाच्योऽर्थः । प्रजया रूप्यते यश्चेतनस्तत्साहित्यं सूचितार्थः । नह्रीत्यादिभाष्यं विवृण्वन्ति स्म तेषामिति । हुतावंशानाम् । वृष्ट्यादीति । चन्द्रस्य तथा । अन्येति । अन्याधिष्ठाने सति अन्याधिष्ठानाच्चन्द्राधिष्ठानादन्यस्य जीवस्य शरीरं न हि भवेत् । तस्य विवरणं अन्यदीयेत्यादि । जीवीयदेहासम्भवेन । तथा वर्षेत्यादिभाष्यं विवृण्वन्ति स्म वर्षस्येति । स्रावादाविति । आदिना पातः । तथा वर्षान्नरेतोगर्भाश्च पुरुषा न भवेयुरिति भाष्यार्थः । तैः पूर्वोक्तैः फलं पुरुषत्वं तदुपहितैर्विशिष्टैः । सपरीति । परिकरत्वं ज्ञानौपयिकदेहकारणत्वम् । एवेति । सर्वसम्मत्यैवकारः । प्रश्नश्रुतिविरोधाद्वा । अत्र पूर्वो लाभान्तो हेतुरुत्तरोपि । तत्रोत्तरहेतौ निरूपणादिवाक्येष्वन्ते इतिशब्दं योजयित्वा इतिहेतुनेति व्याख्येयम् । तानि प्रकाशे तृतीयान्तैर्वाक्यैर्विवृतानि । एतैर्हेतुभिरन्यथाप्यपुरुषत्वेनापि विनियोगसम्भवादित्यन्यथेत्यादिभाष्यार्थः । अत इत उत्क्रमण इत्यादिरिति भाष्यप्रकाशार्थः । एवमिति । प्रश्ननिरूपणं श्रौतन्यायः । अपिना जीवसत्ता । षष्ठेऽग्नाविति । 'तस्याग्निरेवाग्नि'रित्यादिनोक्ते । अपामिति । भविष्यच्छरीरयोग्यानाम् । एवेति । षष्ठाग्निश्रुतेरेवकारः । षष्ठाग्निर्बृहदारण्यके श्वेतकेतुब्राह्मणेप्यस्ति । एवेति । ज्ञानयोग्यदेहहेतुत्वव्यवच्छेदकः । सात्त्विकेति । 'यत्तदग्रे विषमिव परिणामेऽमृतोपम'मिति वाक्यात् । अनभीति । मृतस्य भयनाम्नोऽनुवर्तनात्तथा । अभिमानस्याश्रुतत्वादेवकारः । देवेति । तृतीयस्कन्धे स्पष्टम् । प्राणवृत्तीति । 'अपानं मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास स्वाहे'त्येवमादिश्रुतिभिरारभ्य 'आत्मा मे शुध्यन्तां ज्योतिरहं० परमात्मा मे शुध्यन्तां ज्योति० स्वाहे'त्येवम् । प्रेरणेति । तत्कर्तृकप्रेरणस्य । एवेति । अन्यव्यवच्छेदकः । पूर्वपक्षदोषोद्धारं तच्छब्दार्थीयत्वेनाहुः होम

तस्मात् प्रश्ननिरूपणान्यथानुपपत्त्या सम्परिष्वक्त एव संस्कृतैर्भूतै रंहतीति सिद्धम् १

त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥

ननु कथं भूतसंस्कारमात्रत्वमवगम्यते, यावता प्रश्ननिरूपणाभ्यामाप एवावगम्यन्ते । नच तावन्मात्रसंस्कारकत्वम् । नियामकाभावात् । 'अस्थि चैव तेन मांसं च यजमानः संस्कुरुत' इति विरोधश्चेति शङ्कां निराकरोति तुशब्दः ।

---

भाष्यप्रकाशः ।

'विरजा विपाप्मे'ति पदाभ्यां रजस्तमोनिवृत्तिरेवाशासिता, न तु सत्त्वस्यापीति सत्त्वस्यापि निवृत्त्यर्थं तस्या आवश्यकत्वादिति । सिद्धमाहुः तस्मादित्यादि । होमे अपां गौणत्वस्य परिहृतत्वात्, श्रौतन्यायस्योपदर्शितत्वात्, होमप्रयोजकानां पूर्वजन्मीनानां निष्कामकर्मणामेव संस्कृतसूक्ष्मभूतोपस्थापकत्वात्, अम्भोमस्य द्युलोकाग्नावुक्तत्वेन तत्फलस्य सोमराजात्मकत्वेन च स्थूलशरीरारम्भकस्थूलभूतसंस्कारकतया, तत्प्रयोजकलिङ्गशरीरसापेक्षत्वात्तदनागमने प्रश्ननिरूपणानुपपत्त्या, तदागमनस्यैव देवविलम्बे कारणत्वात् संस्कृतैर्भूतैः सम्परिष्वक्त एव रंहति, न तु होमानन्तरं भूतसम्बन्ध इति सिद्धमित्यर्थः ॥ १ ॥

त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥ अत्रैव किञ्चिदाशङ्क्य परिहरतीत्याशयेन तुशब्दं व्याकुर्वन्ति नन्वित्यादि । यावतेति । यतः । अवगम्यन्त इति । होम्यतया संस्कार्यत्वेन ज्ञायन्ते । तावन्मात्रसंस्कारकत्वमिति । देवानां सर्वभूतसंस्कारकत्वम् । मात्रं कार्त्स्न्ये । तथाचोपलक्षणतया भूतान्तरावगमाङ्गीकारे नियामकाभावात्, 'अस्थी'त्यादितैत्तिरीयश्रुत्यन्तरे स्थूलभूतरूपास्थ्यादिसंस्कारस्य पूर्वमेव सिद्धतया तद्विरोधाच्च, जलमात्रसंस्कार एवात्राङ्गीकार्य इत्याशङ्कामित्यर्थः ।

रश्मिः ।

इत्यादिना । परीति । जीवसाहित्य इत्यादिभाष्येण परिहृतत्वात् । उपेति । प्रश्ने हीत्यादिसम्भवादित्यन्तेन भाष्येण तथा । होमप्रेति । सिद्धान्तायारब्धभाष्येण । एवकारार्थस्तु भाष्यव्याख्यानावसर उक्तः । न हीत्यादिभाष्येणोक्तदेवविलम्बे कारणं लिङ्गशरीरागमनं वक्तुं प्रश्ननिरूपणान्यथेत्यादिभाष्यं विवरीतुमाहुः अम्भोमस्येति । तत्प्रयोजकेति । स्थूलभूतप्रयोजकेत्यर्थः । तदनेति । लिङ्गशरीरानागमने । प्रश्ननिरूपणयोः पुरुषपदघटितत्वादन्यथा लिङ्गागमनकल्पनं विनानुपपत्तिस्तया । अनुपपत्तिस्तु अर्थान्तरकल्पनया समाधेयत्वेनोच्यमानप्रमाणसिद्धयोरर्थयोर्द्वयोरर्थयोः परस्परप्रतिघातः । तदागमनेति । लिङ्गागमनस्य । एवकारः स्थूलभूतसंस्कारकाम्भोमस्य चन्द्रद्वारकस्य व्यवच्छेदकः । उपस्थितत्वात् । अग्रिमभाष्यं विवृण्वन्तोऽन्यथानुपपत्तिकार्यभूताया अर्थापत्तेरन्यथानुपपत्तिसमाधानायार्थान्तरकल्पनरूपायार्थान्तर्गतार्थान्तरमाहुः संस्कृतैर्भूतैरिति । इमान्युक्तप्रतिघातसमाधायकानि । विवृण्वन्ति स्म सम्परीति । एवकारो बहुसंमत्या ॥ १ ॥

त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥ नन्वित्यादीति । अवगम्यत इति । अपामवगम्यते । यावतेत्यव्ययं हेतावित्याहुः यत इति । पूर्वपक्षिमतत्वान्निरूपणग्रहणम् । सिद्धान्ते निरूपणे उत्तरे केवलापामवगमनं नास्तीति । सूत्रव्याख्यानयोरज्ञानादेवकारः । सर्वभूतेति । अम्भोमद्वारा । श्रुतीति । 'तं विद्याकर्मणी'ति पूर्वसूत्रभाष्योक्ता श्रुतिरतोऽन्या श्रुति'रस्थि चैवे'तिश्रुत्यन्तरं तस्मिन् । पूर्वमेवेति । विचारात्पूर्वमेव । प्रसिद्धेरेवकारः । चकारार्थमन्यमप्याहुः जलेति । एवकारो भूतसंस्कारव्यवच्छेदकः ।

**अपामेव ग्रहणेन तेजोऽन्नानि गृहीतानि ज्ञातव्यानि । कुतः । त्र्यात्मकत्वात् । लोकादिनिर्माणानन्तरभावित्वात् ता आपस्त्रिवृत्कृता एव । अतस्त्रयोपि गृहीता अपां ग्रहणेन । उपलक्षणत्वेऽप्यपामेव ग्रहणे हेत्वन्तरमाह भूयस्त्वात् । शुद्धत्वात् विशेषाभावान्मध्यभावाच्च । दीक्षिततुल्यत्वेन भारूपत्वेनाग्रे वक्तव्यत्वात् । शुद्धापामेवेदं शरीरम् । बहुहेतुकत्वमेव भूयस्त्वम् । बहुधा परिणामाच्च ।**

भाष्यप्रकाशः ।

सिद्धान्तं व्याकुर्वन्ति अपामित्यादि । हेत्वन्तरप्रयोजनमाहुः उपलक्षणत्व इति । त्रिषु तुल्य इति शेषः । भूयस्त्वादित्यस्य नियामकभूयस्त्वमर्थ इति तानि व्याकुर्वन्ति शुद्धत्वादित्यादि । 'आपः स्वभावतो मेध्या' इति स्मृत्याऽपां स्वभावतः शुद्धत्वात् प्राणाप्यायकतया सर्वपोषकत्वस्य साम्येन विशेषाभावात्, रसमयतया तेजोऽन्नयोः सङ्ग्राहकत्वेन तदुभयमध्यभावाच्च अग्रे बृहदारण्यकोक्ते षष्ठे पर्याये भास्वरवर्णपुरुषतायां दीक्षिततुल्यत्वेन अब्जनकभारूपत्वेन वक्तव्यत्वादिदं प्रस्तुतं शरीरं शुद्धापामेव शुद्धाप्प्रधानमेवेत्येकं नियामकम् । किञ्च । पयःसोमादिरूपबहुहेतुक-

रश्मिः ।

**अपामित्यादी**ति । एवकारेणान्नतेजसी व्यवच्छिद्येते । त्रिग्रहणे गौरवमिति भावः । तर्हि न्यूनताख्यनिग्रहस्थानापत्तिरत आहुः **तेजोऽन्नानी**ति । उपलक्षणेनेति भावः । **त्र्यात्मकत्वा**दिति । अपाम् । ताश्चात्रिवृत्कृतास्त्रिवृत्कृताश्च । तयोरत्र ब्रह्माण्डनिष्ठास्त्रिवृत्कृता गृह्यन्त इत्याहुः **लोकादी**ति । आदिना पुरुषः लोकानन्तरं भवनात् । छान्दोग्ये 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्या'दित्यादिश्रुतेः । एतत्कण्डिकानन्तरं द्वितीयकण्डिका 'सदेव सोम्ये'त्यादिः । तत्र त्रिवृत्करणम् । तत्र त्रिवृत्करणं ब्रह्माण्डीयं पौरुषं चेत्यापः त्रिवृत्कृता एव । लोकत्रयात्मकब्रह्माण्डनिर्माणानन्तरं पुरुषनिर्माणानन्तरं च भवन्तीति । लोकादिनिर्माणानन्तरभावित्वादिति हेतुः । 'हन्तेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति, तासां त्रिवृतं त्रिवृतमेकैकां करवाणी'ति श्रुतिः विराड्विषया । पुरुषविषया तु 'यथा खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीही'ति 'अन्नमशितं त्रेधा विधीयत' इत्यादिश्च । एवकारस्तु लोकादि द्युलोकादि । आदिना पर्जन्य-पृथिवी-पुरुष-योषा ग्राह्याः । तदनन्तरमापस्त्रिवृत्कृता इति । **अत** इति । लाघवादुपलक्षणात् त्रयोपि ब्रह्माण्डीयास्त्रयोप्यर्था गृहीताः । **तुल्य** इति । सप्तम्यन्तम् । भाष्ये एवकारोऽन्नतेजसोर्व्यवच्छेदकः । **इत्यस्ये**ति । शब्दस्य । **नियामकं** प्रवर्तकम् । **तानी**ति । भूयस्त्वमपां कार्यमतोऽष्टवपां कार्याणि तानीत्यर्थः । तत्र 'क्लेदनं पिण्डनं तृप्तिः प्राणनाप्यायनोदनम् । तापापनोदो भूयस्त्वमम्भसो वृत्तयस्त्विमा' इति वाक्योक्तं प्राणनं जीवनं कार्यम् । तदाहुः **आप** इत्यादिना । आप्याय आप्यायनं प्राणसन्तर्पणम् । तत्कार्यमाहुः **प्राणाप्यायके**ति । क्लेदनमपां कार्यमाहुः **रसमये**ति । क्लेदनमार्द्रीकरणमन्नतेजसोः । पिण्डनं च । तच्च संग्रहः चूर्णीभूतानां पिण्डतासंपादनम् । **तदुभये**ति । तेजोऽन्नानीति भाष्ये तदुभयमध्यभावः । छान्दोग्ये चायं मध्यभावः । तृप्तितापापनोदावपां कार्ये आहुः **अग्र** इति । दीक्षिततुल्यत्वेन विधात्वाद्दीक्षितः दीक्षामितः । दीयन्ते इन्द्रियाणि क्षीयन्ते पापानीति दीक्षा । क्षत्रियविधात्वेन तुल्यशब्दः । ब्राह्मणदीक्षिततुल्यः क्षत्रियदीक्षितः । पूर्वानुवाके क्षत्रियविधात्वम् । दीक्षितस्य क्षुधादिनिवृत्त्या सन्तर्पणम् । तद्देहस्थापां कार्यम् । तापापनोदमाहुः **अब्जनके**ति । 'ते य एवमेतद्विदु'रित्यादिना । पुनरावृत्तिपर्यन्तार्थोक्तेर्ब्रह्मरूपस्याब्जनकभारूपत्वं तेन । ब्रह्मभूतस्य तापापनोदोऽप्सत्तारूपाद्देहेन । शुद्धापामित्यादिभाष्यं विवृण्वन्ति स्म **इदं प्रस्तुत**मित्यादि । **शुद्धापां** संस्कारकापाम् । शुद्धानां भूतानामपामिति वा । तदाहुः **शुद्धावि**ति । एवकारो बहुसंमत्या । **नियामक**मिति । कार्यमुपलक्षणत्वेप्यपामेव ग्रहणे । **बह्वि**त्यादिभाष्यं विवृण्वन्ति **किञ्चे**ति । भूयस्त्वं कार्यमपामत्र । पयःसोमादिपदेन साम्नाय्यौषधि-

द्रव्यभूयस्करत्वं च । तस्मान्नियामकानां भूयस्त्वादपामेव ग्रहणम् ॥ २ ॥

प्राणगतेश्च ॥ ३ ॥

वैदिकीं युक्तिमुक्त्वा लौकिकीमाह । प्राणस्य गतिः प्राणगतिः । 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामती'ति प्राणाप्यायनजनकत्वादपाम् । प्राणो गच्छन् स्वाप्यायकं गृहीत्वैव गच्छति । जलौकावदन्यत्र देहसम्बन्धः । मुक्तौ न प्राणा

भाष्यप्रकाशः ।

त्वमपि भूयस्त्वम् । एवकारोऽप्यर्थे । किञ्च । वृष्टयन्नरेतःशोणितरूपेण बहुधा परिणामादपि भूयस्त्वम् । तथा द्रव्यभूयोवरेण द्रव्यभूयस्करत्वादपि भूयस्त्वम् । तस्माद्धेतोर्नियामकानां भूयस्त्वादपामेव ग्रहणम्, न तु भूतान्तरनिवृत्त्यर्थम् । नच श्रुत्यन्तरविरोधः । अस्थिमांसयोः स्थूलदेहनिवृत्तावेव निवृत्तत्वात् । अतोऽग्रिमदेहार्थं सर्वसंस्कार एव युक्त इत्यर्थः ॥ २ ॥

प्राणगतेश्च॥३॥ सूत्रप्रयोजनमाहुः वैदिकीमित्यादि । युक्तिमाहुः प्राणो गच्छन्नित्यादि । 'काममपः पिब, आपोमयः प्राणः, पिबतो न विच्छेत्स्यती'त्यत्रापां प्राणाप्यायकत्वं सिद्धम् । लोके च पथिकः स्वाप्यायकं गृहीत्वैव गच्छतीत्येषा लौकिकी युक्तिरित्यर्थः । एतेन वाङ्मनसी अपि स्वाप्यायकं गृह्णीत इत्यपि बोधितम् । तेन संस्कृतभूतसूक्ष्मोपस्थापिका दृष्टसामग्री दर्शिता । लिङ्गशरीरावियोगे कर्मसत्तारूपं कारणमपि सूचितम् । तेन देवकृतहोमे विलम्बाभावोपि साधित इति सर्वापि पूर्वपक्षयुक्तिः परिहृतेति बोध्यम् । ननु प्राणोत्क्रमणं त्वन्यत्रापि वर्तत इति, अत्रैव विशेषविचारः किमिति क्रियत इत्याकाङ्क्षायां विचारे हेतुमाहुः जलौकावदित्यादि । अन्यत्र पूर्वप्रज्ञाप्राधान्येन गमनं यत्रोच्यते, तस्यां श्रुतौ 'यथा तृणजलायुका तृणस्यान्तं गत्वात्मानमुपसंहरती'ति दृष्टान्तस्योक्तत्वात् तदानीमेव देहसम्बन्धः । सद्योमुक्तौ तु 'न तस्मात् प्राणा उत्क्रामन्ती'तिश्रुतेर्न

रश्मिः ।

विधे । सान्नाय्यं पयः । आदिना वेदान्तीयं भूयस्त्वम् । पयःसोमादिरूपे बहुभूयस्त्वम् । तस्य हेतुत्वमप्स्विति । स्वार्थे कः । भूयस्त्वमिति । भूयस्त्वं यद्यपि कार्यं तथापि कर्तृप्रत्ययाद्भूयस्त्वमपां धर्मः । बहुधेति भाष्यं विवृण्वन्ति स्म किञ्च । वृष्टीति । नोदनं प्रेरणं कार्यमुक्तम् । तच्च प्रवाहादाविति तथा । द्रव्येतिभाष्यं विवृण्वन्ति स्म तथा द्रव्येति । पृथिव्यां तथा । अयं वरः षष्ठस्कन्धे । कर्तरि प्रत्यय इति भावः । तस्मादिति भाष्यं विवृण्वन्ति स्म तस्मादित्यादि । नियामकानामिति । अप्कार्याणाम् । एवकारेणान्नतेजसोर्व्यवच्छेदः क्रियते । एवेति । प्रसिद्धेः । एवेति बहुसंमत्या ॥ २ ॥

प्राणगतेश्च ॥ ३ ॥ युक्तिमिति । अपामेव ग्रहणे युक्तिं लौकिकीं योजनाम् । 'युक्तिर्न्याये च योजन' इति विश्वात् । इत्यत्रेति । छान्दोग्ये । गृहीत्वैवेति । परीक्षित्तु राजेत्यन्यदेतत् । एतेनेति । वाङ्मनःसापेक्षगमनग्रहणेन । गृह्णीत इति । 'यन्मनसा ध्यायति तद्वाचा वदति यद्वदति तत्करोती'ति श्रुतेर्गृह्णीतः । दृष्टेति । अदृष्टभिन्नातीन्द्रियेन्द्रियदेवतारूपा होमकर्त्री । मोक्षाभावाल्लिङ्गशरीरावियोगमाहुः लिङ्गेति । तेनेति । कर्मणां प्ररोहैकस्वभावत्वेन । विलम्बेति । यतः कर्मसचिवा देवाः । अत्रैवेत्येवकारोऽन्यौपश्लेषिकाधारव्यवच्छेदकः । अन्यत्रेति । प्रकारेषु । श्रुताविति । 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चे'ति श्रुतौ । उक्तत्वादिति । दशमस्कन्ध उक्तत्वात् । पुराणेति । द्वितीयस्कन्धे

गच्छन्ति । क्रममुक्तावपि देहसम्बन्ध इति पौराणिकाः । देवभाव इत्यौपनिषदाः । अतो दूरे प्राणगतिरत्रैव । अतोऽपां संश्लेषो वक्तव्यः । चकारात् 'विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चे'ति कर्मसहभावं बोधयति श्रुतिः । तस्मादद्भिः परिष्वक्तो गच्छति ॥ ३ ॥

भाष्यप्रकाशः ।

प्राणा गच्छन्ति । क्रममुक्तावपि 'वैश्वानरं याति विहायसा गतः सुषुम्नया ब्रह्मपथेन शोचिषे'-त्यादिभिर्देहसम्बन्ध इति पुराणाचार्याः शुकादयः सूचयन्ति । उद्गीथब्राह्मणे तु प्राणानां देवभाव-स्तदुपासनयेत्यौपनिषदा आहुः । अतो दूरे प्राणगतिरत्रैवास्मिन्नेव प्रकारे । अतः सद्योमुक्तिं विहाय सर्वत्र देहसम्बन्धोऽस्तीत्यत्राप्यावश्यक इत्यपां संश्लेषो वक्तव्यः । श्रुतिश्च कर्मसहभावं बोधयतीत्य-तोऽपि तथेत्येतत्प्रयोजनं विशेषविचारस्येत्यर्थः ।

एतेन 'उपाधिकल्पितावच्छेदः परमात्मैव जीवः, स च सूक्ष्मदेहपरिष्वक्तो रंहति । तस्य कर्मोपस्थापितप्राप्यदेहविषयाया भावनाया दीर्घीभावमात्रं जलौकावदुपमीयत' इत्येकदे-शिमतम् । 'स्वर्गे नरके वा यत्र फलभोगस्तत्र तादृशां भूतमात्राणां सुलभत्वमात्मनां व्याप-कत्वात् करणानां चाहङ्कारिकत्वेन तथात्वात् तत्र वृत्तिलाभमात्रम्, न तु कस्यापि गम-न'मिति सांख्यमतम् । 'मनसो नित्यत्वात् तदेव भोगस्थानपर्यन्तं गच्छति, इन्द्रियाणि स्वामिनवानि जायन्ते । तदात्मनस्तत्र वृत्तिलाभाद्भोग' इति काणभुजमतम् । एवमन्येषां बाह्यानां च यानि मतानि 'जीव एवोत्प्लुत्य देहाद्देहान्तरं गच्छती'ति, 'देह एवात्मा, स च नश्यतीति न कस्यापि गमन'मित्यादीनि तानि सर्वाण्येवापास्तानि ॥ ३ ॥

रश्मिः ।

सूचयन्ति श्रीभागवताद्याचार्याः । दूर इति । सद्योमुक्त्यादौ तु हृदो बहिर्भगवति शरीरान्तरे च समीपा । अत इत्यादिभाष्यं विवृण्वन्ति स्म अत इति । अत्रापीति । अत्र प्रकारे । वक्तव्य इति । भूतसंस्कारार्थम् । चकारादित्यादिभाष्यं विवृण्वन्ति स्म श्रुतिरिति । भाष्योक्ता श्रुतिः । तथेति । देहसम्बन्धः । किञ्च, भाष्ये तस्मादित्यस्य लौकिकयुक्तिसद्भावादित्यर्थात्तथाऽद्भिः परिष्वक्तो गच्छति । एतेनेति । अणोरुत्क्रमणसाधनेन । एवकारोऽन्यव्यवच्छेदकः । रंहतीति । अन्तःकरणावच्छिन्नो जीवो भवतीत्यन्तःकरणावच्छिन्नत्वं स्वरूपसम्बन्धविशेषो रंहति । भावनाया इति । 'तं विद्याक-र्मणी' इति श्रुत्युक्तप्रज्ञायाः । ज्ञानरूपत्वेन जीवसाम्यात्फलसाधनयोर्वैयधिकरण्याभावाय । मात्रचोक्ता-वच्छेदे परमात्मनोऽविकृतत्वं व्यवच्छिद्यते । जलौकेति । 'जलौकासदृशो बुद्धिरूपभावनादीर्घीभाव' इति वाक्यात् लक्षणत्वेन पूर्वं ज्ञातस्य ततः पदार्थस्फुरणेन स्फुरितस्य सादृश्यस्य संस्कारेण शब्दाभिव्यक्तौ दृष्ट-संवादनिश्चितप्रामाण्यस्य च वाक्यस्य च सहकारेणायं दीर्घीभावपदवाच्य इत्युपमीयते । सुलभेति । अदृष्टवशात् । अहमिति सांख्ये प्रसिद्धम् । करणानामिति । इन्द्रियाणामाहङ्कारिकत्वेनाहङ्कारस्य मनो-भेदत्वेन तथात्वात् सुलभत्वात् । तत्रेति । देहान्तरे वृत्तिलाभस्थाने । मात्रचा गमनव्यवच्छेदः । भोग इति । सुखदुःखसाक्षात्कारः । जीव इति । देहेन्द्रियसम्बन्ध आत्मेति मुण्डाः । 'बुद्धिश्चित्तं समालम्ब्य तता निर्विषयाथवा । स्वरूपविषयाहंधीर्जीव इत्यभिधीयत' इति दिगम्बराः । समेति । विषयीकृत्वा तता । देह आत्मा उक्तः । द्विसम्बध्यते । देहजन्यत्वं देहत्वम् । एवकारोऽतियुक्त्या । तानीति । मतानि । एवेति । स्वस्य परमार्थादेवकारः । अपेति । गौणगमनापत्त्या तथा ॥ ३ ॥

## अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥

श्रुतिविरोधं परिहरति । परस्परविरोधे व्यवस्था वा बोध्यते । ननु 'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति, वातं प्राण' इत्यादिना अग्न्यादिगतिः प्राणानां श्रूयते । नच 'ओषधीर्लोमानि वनस्पतीन् केशा' इत्यत्र प्रत्यक्षविरोधात् बाधितविषयेयं श्रुतिरिति वाच्यम् । आध्यात्मिकेन्द्रियमध्यपाताल्लोमकेशा अप्याध्यात्मिका एव ग्राह्याः । यैः कण्डूलावण्यप्रतीतिः । दृश्यमानानि तु गोलकस्थानानि । तस्मात् प्राणोत्क्रमणश्रुतिरग्न्यादिभावश्रुत्या बाध्यत इति चेत् । न । भाक्तत्वात् । प्रकरणव्यतिरेकेणामुक्तविषये प्रवृत्ता भाक्ता भवति ।

---

### भाष्यप्रकाशः ।

अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥ सूत्रप्रयोजनमाहुः श्रुतीत्यादि । पदद्वयमपि सिद्धान्तविवरणे व्युत्पाद्यम् । पूर्वपक्षांशं व्याकुर्वन्ति नन्वित्यादि । विषयश्रुतिस्तु बृहदारण्यक आर्तभागब्राह्मणस्था । एकदेशिभिः प्रतिपादितमस्याः श्रुतेर्भाक्तत्वं निषेधन्ति नचेत्यादि । लोमकेशयोरनप्ययवतोरप्ययकथनेन बाधितविषयत्वात् सा श्रुतिर्मरणसमय इन्द्रियाधिष्ठातृक्रियमाणोपकाराभावात् कार्यमकुर्वदिन्द्रियजातमपीतमिव भवतीति गौण्या बोधयन्ती भाक्तेत्याहुस्तन्नेत्यर्थः । निषेधे हेतुमाहुः आध्यात्मिकेत्यादि । तथाच प्रायपाठबलाल्लोमादीनामाध्यात्मिकत्वे निश्चिते दृश्यमानानां लोमादीनां गोलकान्तरवत् स्थितावपि श्रुतेर्बाधितविषयत्वाभावान्न तया रीत्या भाक्तत्वमित्यर्थः । हेतुं विवृण्वन्तो विवक्षितं भाक्तत्वं स्फुटीकुर्वन्ति प्रकरणेत्यादि । उक्तश्रुतौ मरणावस्था सिद्धवदनूद्यते । सा च मुक्तामुक्तयोस्तुल्या । तत्र मुक्तस्येन्द्रियाणां 'अत्रैव समवनीयन्त'

### रश्मिः ।

अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥ विषयेति । 'यत्रास्य पुरुषस्ये'त्यादिः । विषयशब्दप्रयोगस्तु प्राणोत्क्रमणश्रुतिं विधिमुखेन विचार्य निषेधमुखेन विचारयन्तीति । एकदेशिभिरिति । शङ्कराचार्यादिभिः । अनप्ययेति । कृष्णाजिनं ब्रह्मेति संहितायाः । 'मृता वा एषा त्व'गिति तु 'न ब्रह्मविदां क्वचित्कुत्सितत्वं प्रतिभाती'ति भाष्यात् । यद्वा । प्रत्यक्षविरोधादनप्ययवतोः । अप्ययेति । तेन 'लोमानि औषधीरपियन्ती'तिवचनविपरिणामं कृत्वा पूर्वेणाप्येतीत्यनेनान्वयः । केशा वनस्पतीनपियन्तीति च । बाधितेति । बाधितो विषयोप्ययलक्षणो ययोस्तत्त्वात् । अपीतमिति । अपिगतम् । प्रायेति । अग्न्यादिप्रायपाठबलात् । निश्चित इति । उपनिषत्प्रसिद्धत्वेपि वह्न्यादीनां स्वाधिभौतिकमुखसम्बन्धाद्वागाद्याध्यात्मिकं रूपं भवतीति । भाष्ये । एवकारः प्रायपाठप्रामाण्यात् । कण्डूति । 'कण्डूः कण्ठे वृषभस्कन्धे लावण्ये केशधारण'मिति द्वादशस्कन्धे । प्रकृते । दृश्यमानानीत्यादिभाष्यं विवृण्वन्ति स्म दृश्येति । लोमादीनामोषधिवनस्पतीनां विराजो लोमादीनाम् । आदिना केशाः । विराजो वनस्पतयः । तस्मादित्यादिभाष्यं विवृण्वन्ति स्म श्रुतेर्बाधितेत्यादिना । न तयेति । प्राणोत्क्रमणश्रुतिरग्न्यादिभावश्रुत्या बाध्यत इति न तया एकदेश्युक्तरीत्या भाक्तत्वमिति भाष्येण सहार्थः । गौणमुख्यन्यायेन समबलत्वाभावाद्बाध्यत इत्युक्तम् । समबलत्वे विकल्प एव । मनुस्मृतेः । उक्तेति । 'यत्रास्य पुरुषस्ये'त्यादिश्रुतौ । सिद्धवदिति । न त्वस्माद्धेतोर्वागग्निम-

'अथ हैनं जारत्कारव आर्तभागः पप्रच्छे'त्यत्र ग्रहनिरूपणानन्तरं मृत्युं पृष्ट्वा म्रियमाणप्रश्ने, 'नामैव न जहात्यन्यज्जहाती'ति प्रतिज्ञाते, प्राणोत्क्रमणप्रश्ने, 'ने'ति प्रतिवचने, वागादीनामग्न्यादिभावानुवादः। ततो मन्त्रणाज्जीवस्य ब्रह्मभावोऽवगम्यते। सामग्र्या गतत्वात्। 'तौ ह यदूचतु'रिति कर्मप्रशंसा भिन्नप्रश्नोत्तरा।

---

भाष्यप्रकाशः।

इति श्रुतेर्ब्रह्मणि लयो वा, 'स वाचमेव प्रथममत्यवह'दिति श्रुत्युक्तरीत्या देवभावो वा भवतीति देवभावपक्षमादाय प्रवृत्तेयं श्रुतिः प्रकरणव्यतिरेकेणाभुक्तविषये त्वयोच्यत इति तत्र प्रवृत्ता अप्ययमिव बोधयन्ती भाक्ता भवतीत्येवं भाक्तत्वमित्यर्थः। एवमविरोधपक्षो विवृतः। द्वितीयं विवरीतुं विषयश्रुतेः सर्वमर्थमाहुः अथेत्यादि। मृत्युं पृष्ट्वेति। 'कास्वित् सा देवता यस्या मृत्युरन्न'मित्यनेन मृत्युविषयकं प्रश्नं कृत्वा। प्राणोत्क्रमणप्रश्ने, नेति प्रतिवचन इति। 'उदस्मात् प्राणाः क्रमन्त्याहो ने'ति प्रश्ने, तत्र च नेति प्रतिवचने। ततो 'यत्रास्य पुरुषस्य मृतस्ये'त्यादिना वागादीनामग्न्यादिभावानुवादः। ततः 'क्वायं तदा पुरुषो भवती'तिप्रश्ने, 'आहर सौम्य हस्त'मित्यादिना मन्त्रणाज्जीवस्य ब्रह्मभावोऽवगम्यते। सांसारिकभोगसामग्र्या गतत्वात्। नच मन्त्रणव्याख्यानश्रुतौ कर्मप्रशंसाया उक्तत्वान्मन्त्रणस्य न जीवब्रह्मभावबोधकत्वमिति शङ्क्यम्। 'तौ होत्क्रम्य मन्त्रयाञ्चक्रतु'रित्यनेनैव समापनात्। ततः 'तौ यदूचतु'रित्यादिनोक्ता या कर्मप्रशंसा सा एतद्भिन्न-

रश्मिः।

प्येतीति साध्यवत्। स वाचमिति। बृहदारण्यकेस्ति। स प्राणः। अत्यवहत् स्वस्वरूपं प्रापितवान्। तत्रेति। अभुक्तविषये प्रवृत्ताप्ययमिवाप्ययं भाक्तं बोधयन्ती भाक्तेत्यर्थः। द्वितीयमिति। परस्परेति भाष्योक्तं व्यवस्थापक्षम्। अथेत्यादीति। भाष्ये। एनमित्यादि। याज्ञवल्क्यम्। जारत्कारुगोत्रः। ऋतभागस्य पुत्रः। ग्रहेति। इन्द्रियनिरूपणानन्तरम्। 'चक्षुर्वै ग्रह' इति श्रुतेः। कास्विदित्यादि। कास्वित् तर्के। भाष्ये। म्रियमाणेति। 'यत्रायं पुरुषो म्रियते किमेनं न जहातीति, नामेती'ति श्रुतेः। शुको शुक्तो वामदेवो मुक्त इति नामव्यवहारपारम्पर्यान्नाम न जहातीत्यर्थः। प्रकृते। वागादीनामिति भाष्यं विवृण्वन्ति स्म तत इति। अग्न्यादीति। नेति प्रतिवचनस्य 'नेति होवाच याज्ञवल्क्योत्रैव समवनीयन्ते स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेत' इति रूपत्वेन तदनन्तरं 'यत्रास्य पुरुषस्ये'त्यादिश्रुतौ 'समवनीयन्त' इति पूर्वश्रुत्युक्तसमवनयनोक्ताग्न्यादिभावानुवादः। तत इति भाष्यं विवृण्वन्ति स्म ततः क्वायमिति। हेतुभाष्यं विवृण्वन्ति स्म सांसारिकेति। जनसङ्के जनसमूहे। ब्रह्मविद्येति भाष्यं विवरीतुमाहुः नचेति। तदयोग्यस्मरणैस्तथा। तथाच श्रुतिः 'आर्तभागेति होवाच आवामेवैतद्वेदिष्यावो नावेतत्सजन इति तौ होत्क्रम्य मन्त्रयांचक्रतु'रिति। अग्रे 'तौ ह यदूचतु'रिति भाष्ये वक्ष्यमाणा श्रुतिः। न नाविन्यादेरर्थः। नौ आवयोरेतद्वस्तु सजने जनसमूहे देशे निर्णेतुं न शक्यत इतीति। मन्त्रणव्याख्यानेति। 'तौ ह यदूचतुः कर्म हैव तदूचतुरथ ह यत्प्रशशꣳसतुः कर्म हैव तत्प्रशशꣳसतुः पुण्यः पुण्येन कर्मणा भवति पापः पापेनेति ततो ह जारत्कारव आर्तभाग उपरराम' इति मन्त्रणव्याख्यानश्रुतिस्तस्याम्। न जीवेति। कर्मरूपसाधनपरत्वान्न तत्फलं जीवब्रह्मभावस्तस्य बोधकत्वमिति शङ्क्यमित्यर्थः। एवेति। अनेन फलसाधने एकीकृत्योक्तौ कर्मोक्तिरिति पक्षो व्यवच्छिद्यते। कर्म हैवेत्येवकारस्य फलव्यवच्छेदकस्य सत्त्वात्। समापनं ब्रह्मभावस्य तस्मात्। तौ हेति भाष्यं विवृण्वन्ति स्म ततस्ताविति। भिन्ने प्रश्नोत्तरे। यस्याः प्रशंसाया इत्यत्र षष्ठी विषयविषयिभावसम्बन्ध इत्याशयेनाहुः एतद्भिन्नेति। उभयोरिति भाष्यं विवृण्वन्ति स्म तौ

उभयोर्वचनविधानात् । ब्रह्मविद्या च गोप्या । उत्क्रमणश्रुतिस्तु 'स यत्रायं शारीर आत्मे'ति ब्राह्मणे जीवस्य परलोकविहारार्थं 'निष्क्रामति चक्षुष्टो वे'त्यादिना प्राणानां विहारसाधकानां निर्गमनमाह । अतो मुक्तामुक्तविषयभेदस्य व्यवस्थापकस्य विद्यमानत्वादन्यादिभावश्रुतिर्नोत्क्रमणश्रुतिबाधिका । तस्मादन्यत्र सिद्धो धर्मोऽन्यत्रावस्थासाम्यात् योज्यमानो भाक्तो भवति । अतः

---

भाष्यप्रकाशः ।

प्रश्नोत्तरविषया । 'तौ यदूचतु'रित्युभयोर्वचनविधानात् । यदि हि मन्त्रणार्थ एव विवरणीयः स्यात्, तदा 'तौ यन्मन्त्रयाञ्चक्रतु'रित्येवमनुवदेत्, न तु 'यदूचतु'रिति । नचैवं सति सा कुतो न विवृतेति शङ्क्यम् । ब्रह्मविद्या चातिगोप्येति । अत इदमप्यन्यन्मुक्तिप्रकरणलिङ्गम् । अन्यथा एकान्तगमनमनर्थकं स्यात् । कर्मणो गोप्यत्वाभावात् । ब्रह्मरूपाया एव देवताया अनतिप्रश्न्यत्वस्याग्रे गार्गीं प्रति वक्तव्यत्वादिति । तस्मादिदं मुक्तिप्रकरणमिति सिद्धम् । उत्क्रमणश्रुतिस्त्वमुक्तविषया । अतो विषयभेदान्न बाध्यबाधकभाव इत्यर्थः । एवं द्वितीयं प्रयोजनं विवृतम् । तेन तन्मते

रश्मिः ।

यदूचतुरिति । वचनेति । ते नोचतुरित्यत्र लिङर्थे लिट् छान्दस इति बोधितम् । न तु यदिति । विशेषप्रकारकजिज्ञासायाः सामान्यवचनप्रकारकजिज्ञासाजनकत्वाभावात् । 'मन्त्रि गुप्तभाषणे' । 'वच परिभाषणे' इति । विशेषसामान्यभावः । यद्वा । उक्तायां 'तौ हे'त्यादिश्रुतौ मध्येऽथशब्दो देहलीदीपन्यायेनोभयत्रान्वेति । पूर्वमपि प्रश्नमूचतुः कर्मैवोचतुः । ङसः सुः । कर्मण इत्यर्थः । 'एवमुत्तरं प्रशशंसतुस्तत्कर्मण एवे'ति । एवकारो ब्रह्मभावव्यवच्छेदक इत्युक्तम् । सेति । ब्रह्मभावरूपा विद्या । मुक्तीति । ब्रह्मभावप्रकरणलिङ्गम् । एवेति कर्मव्यवच्छेदः । अग्र इति । षष्ठे ब्राह्मणे । इदमिति । 'क्वायं तदा पुरुषो भवतीत्याहर सौम्य हस्त'मित्यारभ्य 'मन्त्रयाञ्चक्रतु'रित्यन्तं ब्रह्मभावप्रकरणमित्यर्थः । उत्क्रमणेति भाष्यं विवृण्वन्ति स्म उत्क्रमणेत्यादिना । अमुक्तेति । यथार्तभागब्राह्मणे 'अत्रैव समवनीयन्त' इत्युक्त्वा 'यत्रास्य पुरुषस्ये'ति श्रूयते । शारीरके तु नैवम्, अतोऽमुक्तविषया । तथा च भाष्ये 'शारीर आत्मेति ब्राह्मण' इत्युक्त्या शारीरः सन् मुख्य आत्मा । गौणमुख्यन्यायात् । तदुक्तं ब्राह्मण इति । ब्रह्म जानाति ब्राह्मणम्, न तु जीवमात्रम् । तत इच्छानन्तरं ब्रह्म वक्तुं यतते । अतः 'जीवेशविभेदेन मुक्तिरेकादशे द्विधे'त्येकादशस्कन्धनिबन्धात् । स इत्यादावपरोप्युच्यते छान्दोग्येऽष्टमोपदेशस्फूर्त्यै । तत्र शुद्धबुद्धमुक्तस्वभावो जीव इन्द्रियलयाधारत्वेन प्रतीयते तद्ब्रह्मदहतिकृते । स कृष्ण आश्रयः अयमिति प्रयोगात् इदमः प्रत्यक्षगे रूपात् । यत्रावतारकाले शारीरः 'अवजानन्ति मां मूढा मानुषीं तनुमाश्रित'मिति वाक्यात् । स प्रसिद्धो ब्रह्मत्वेन जीवस्य नारं जीवसमूहः तदयनमिति । 'पूतनाऽसुपयःपानरक्षिताशेषबालक' इति । परलोकविहारार्थम् । 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन पितृलोकेन सम्पन्नो महीयते, एवमथ यदि मातृलोककाम' इत्यादि छान्दोग्ये दहरविद्यायाम् । निष्क्रामति चक्षुष्टो वेत्यादिनेति । शारीरब्राह्मणे आत्मा व्यापक इति निष्क्रमणकर्तृत्वाभावान्न निष्क्रामतेरन्वयोतोत्र चक्षुष्ट इन्द्रः चक्षूरूपो वा निष्क्रामत्यत उक्तं 'निष्क्रामति चक्षुष्टो वेत्यादिने'ति । प्राणानां चक्षुरादीन्द्रियाणाम् । बहुवचन'मन्येभ्यो वा शरीरदेशेभ्य' इति श्रुतेः । अत इत्यादिभाष्यं संक्षिपन्ति स्म अत इत्यादि । मुक्तामुक्तविषयभेदात् । द्वितीय-

प्राणोत्क्रमणमस्ति । तस्मात् सम्परिष्वक्तो गच्छतीति सिद्धम् ॥ ४ ॥

**प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥**

किञ्चिदाशङ्क्य परिहरति । 'असौ वाव लोको गौतमाग्नि'रित्यत्र, 'देवाः श्रद्धां जुह्वती'ति श्रुतेरापो न संकीर्तिताः । अपां हि पञ्चम्यामाहुतौ पुरुषवचनम् । श्रद्धा मनोधर्मः । स कथं हूयत इति चेत् । न । मनसा सह भविष्यति । तथाप्यरुणान्यायेन धर्ममुख्यत्वम् ।

भाष्यप्रकाशः ।

भाक्तत्वं साधयन्तः सिद्धमाहुः तस्मादित्यादि ॥ ४ ॥

प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥५॥ सूत्रप्रयोजनमाहुः किञ्चिदित्यादि । आशङ्काभागं व्याकुर्वन्ति असावित्यादि । अत्र अपां हीत्यादिना तासामुपसंहारवाक्यगतत्वादुपसंहारस्य च सञ्जातविरोधत्वेन उपक्रमापेक्षया नैर्बल्यान्न निर्णायकत्वमिति बोधयति । श्रद्धा मनोधर्म इत्यादिना श्रद्धाहोमवाक्यस्यायोग्यत्वादन्यथानुपपत्त्या अप्कल्पनमाशङ्क्य, 'मनसा सह भविष्यती'त्यनेन परिहरति । 'मनसा प्रणयतीयं वै मन' इत्यत्र पुरःस्फूर्तिकतया पूर्वोक्तायाः श्रद्धाया इदमा ग्रहीतुं शक्यत्वेन तस्याश्च मनोधर्मत्वेन मनःसाहित्यस्य युक्तत्वादिति । नन्वेवं सति मनसो होम्यतया मुख्यत्वाच्छ्रद्धाया गौणत्वापत्तिरिति शङ्कां निरस्यन्ति तथापीत्यादि ।

अयं न्यायः पूर्वतन्त्रे तृतीयस्य प्रथमपादेऽस्ति । तत्र ह्येवं विचारितम् । 'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाती'ति ज्योतिष्टोमप्रकरणीयवाक्ये अरुणो गुणः क्रयसाधनं भवति, नवेति । तत्रारुणपदस्यान्वयव्यतिरेकाभ्यां गुणे व्युत्पन्नत्वात् गुणस्य चामूर्ततया द्रव्यत्वराहित्येन च क्रयसाधनत्वायोगात् तत्रत्यतृतीयाश्रुतेर्विनियोजकत्वाभावेऽरुणशब्दो वाक्यात् पृथक्कृत्य प्रकरणे योजनीयः । तत्र च ग्रहचमसादयो बहवोऽर्था इत्यरुणिमा तेषु निविशते । तथा सत्यरुणयेत्यस्य अरुणगुणयुक्तं करणमित्यर्थो भवति । तत् कस्येत्याकाङ्क्षायां प्रकरणाज्ज्योतिष्टोमस्येति लभ्यते । तथाच ज्योतिष्टोमसाधनं ग्रहचमसादिकमरुणगुणयुक्तं कर्तव्यमिति तदर्थः । शेषं तु बहुव्रीहिणा

रश्मिः ।

मिति । भाष्योक्तम् । तस्मादित्यादीति । अन्यत्रार्तभागब्राह्मणसिद्धोऽप्ययरूपो धर्मोऽन्यत्र शारीरब्राह्मणे मरणावस्थासाम्यात्त्वया योज्यमानोऽप्यय इवाप्यय इत्येवं भाक्तो भवतीत्यर्थः । अत इति । श्रुतेरबाधकत्वात् । तस्मादिति । इन्द्रियोत्क्रमणसत्त्वात् । परिष्वक्त इति । जीवः ॥ ४ ॥

प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥ सञ्जातेति । अप्रसिद्धेः । पार्थिवं शरीरमिति पृथ्वीमात्रप्रसिद्धेः साङ्ख्यशास्त्रे । न्याये तु वर्तते शरीरं वरुणलोक इति । अत्र तु षड्ढ शास्त्राणां विषयः । अयोग्यत्वादिति । यो यस्य धर्मः स तत्र हूयत इति । श्रौतत्वादन्यथानुपपत्तिर्होमकारणत्वेन प्राप्ता तां निषेधन्ति स्म अन्यथेति । स्वाश्रयस्य मनसोऽन्यत्र सम्बन्धसत्त्वादाहुः मनसेति । परीति । स्वाश्रयद्वारा श्रद्धाया होमयोग्यत्वात्सम्बन्धान्तरं विनापीत्येवं परिहरन्ति मनोधर्मत्वेनेति । 'कामः सङ्कल्प' इति बृहदारण्यकात् । विनियोजकेति । अयमभावो विशेषणविभक्तेः साधुत्वार्थकत्वेनाभेदार्थकत्वेन वापि बोध्यः । पृथक्कृत्येति । पूर्वपक्षे पृथक्कृत्य । विवक्षितग्रहचमसाद्यरुणिमार्थं च । ग्रहेति । ग्रह उलूखलाकारस्तस्माद्ध्रस्वतरः । चमसः पानपात्रं । दण्डविशिष्टो दीर्घचतुष्कोणः । आदिना षोडशी । प्रत्ययार्थे प्रकृत्यर्थस्य विशेषणतयान्वयमाह अरुणेति । ततो 'दध्ना जुहोती'तिवद्गुणविधिरयमित्याह तथाचेति । तथाचाग्निहोत्रस्य 'अग्निहोत्रं जुहोती'त्यनेन प्राप्तत्वाद्दध्नेति दधिगुण-

तर्हि कथं प्रश्नोपसंहारौ। परोक्षवादाद्भविष्यति। चमसवत्। 'श्रद्धा वा आप' इति श्रुतेः शुद्धिहेतुत्वसाम्यात् । 'चन्द्रमा मनसो जात' इति श्रुतिश्चैवंपरा भविष्यति। तस्मात् प्रथमाहुतावपामश्रवणान्न ताभिः सम्परिष्वक्तो गच्छतीति चेत् । न। ता एव आप एव श्रद्धाशब्देनोच्यन्ते । हि युक्तोऽयमर्थः। यथा

भाष्यप्रकाशः।

गोविशेषणं सत् सुखेन क्रयेऽन्वेष्यतीति पूर्वः पक्षः ।

सिद्धान्तस्तु। अरुणाशब्दः स्त्रीलिङ्गतया गुणिवचनः। तथा सत्यरुणगुणः स्वयोगेन द्रव्यं व्यवच्छिन्दन् द्रव्यद्वारा सुखेन क्रये करणभावं प्राप्स्यतीति तृतीयाश्रुतेस्तद्विनियोजकत्वमपि निर्बाधम्। नच प्राधान्यहानिः। इतरव्यावर्तकत्वेन तस्यैव साधनतायां मुख्यत्वात्। एवं सति वाक्यभेदोऽपि न भविष्यति। नच यथा पिङ्गाक्ष्यादिपदे समासवृत्त्या तादृशधर्मविशिष्टगोद्रव्यबोधकत्वम्, तथारुणापदे द्रव्यबोधककृदादिप्रत्ययात्मकवृत्त्यन्तरस्याभावात् स्त्रीत्वमात्रबोधकस्य टापश्च विवक्षितगोद्रव्यपरतानन्तरभावित्वात् पूर्वं तत्परत्वाङ्गीकारे लक्षणापत्तिरिति वाच्यम्। तृतीयया बोधिते गुणस्य करणत्वे तदन्यथानुपपत्त्या द्रव्यस्य द्वारत्वं कल्प्यते। अतो घटे निश्छिद्रत्ववदर्थबलादेव तस्य द्रव्यावच्छेदकत्वसिद्धेर्लक्षणाया अत्राभावात्। तस्मात् द्रव्यावच्छेदकत्वेनारुणिम्नोऽपि करणत्वमिति। तथाच यथा तत्रारुणधर्मस्य मुख्यत्वम्, न गोः, तथात्र होमे मनसो होम्यत्वेऽपि श्रद्धाया एव मुख्यत्वम्, न मनस इत्यर्थः।

पुनरप्याशङ्कते तर्हीत्यादि। यदि श्रद्धापदेनापो न गृह्यन्ते, तदा प्रश्न उपसंहारे च या अप्युक्तिः सा विरुध्येतेति तौ केन प्रकारेण सङ्गच्छेतामित्यर्थः। समाधत्ते परोक्षेत्यादि। तथाच यथा 'अर्वाग्बिलश्चमस ऊर्ध्वबुध्न' इत्यत्र शिरःप्रभृतिचमसादिशब्दैः परोक्षवादेन गौण्या वृत्त्योच्यते, तथात्र 'श्रद्धा वा आप' इति श्रुतेः शुद्धिहेतुत्वसाम्यादाप इति पदेन श्रद्धैवोच्यत इत्यर्थः। नन्वेवमप्पदस्य श्रद्धापरत्वे, 'श्रद्धां जुह्वति, तस्या आहुतेः सोमो राजा सम्भवती'ति श्रद्धापरिणामत्वेन सोमस्य कथनं विरुध्येतेत्याशङ्क्य तत्परिहरति चन्द्रमा इत्यादि। एवंपरेति। अनुकूला। तथाच श्रद्धायां मनःसहभावात् तद्धोमेन चन्द्ररूपस्य सोमस्य तत्परिणामतायां श्रुत्यन्तरानुकूल्यान्न कश्चिद्दोष इत्यर्थः। सिद्धमाह तस्मादित्यादि।

रश्मिः।

विधिरग्निहोत्रे, तद्वद्ग्रहचमसादावरुणगुणविधिरित्यर्थः। गवेति। अरुणयेति श्रुतौ गवेति विशेष्यात्। स्त्रीलिङ्गेति। 'गुणे शुक्लादयः पुंसी'ति पुंलिङ्गं विहाय स्त्रीलिङ्गेत्यादिः। द्रव्यमिति। शुक्लादिगुणयुक्ताभ्यो गोभ्योऽरुणगुणां गाम्। तद्विनीति। द्रव्यविनियोजकत्वम्। विवक्षितेत्यादि। वृत्तावजाद्यदन्तस्य स्त्रीत्वे विवक्षिते टाबित्युक्तेः। लक्षणेति। अरुणगव्यभेदसम्बन्धरूपलक्षणापत्तिः। विशेष्यविशेषणयोरभेदसम्बन्धात्। द्वारत्वमिति। करणत्वस्य व्यापारनियतत्वादिति भावः। निश्छिद्रेति। षष्ठ्यन्ताद्वतिः। घटत्वमितरव्यवच्छेदकम्। निश्छिद्रत्वं सच्छिद्रघटेभ्यः। तस्येति। अरुणस्य। शुक्लादिगोभ्योऽवच्छेदकत्वसिद्धेर्गोत्वस्मरणादेवाहार्यज्ञानविषयस्त्रीत्वस्मरणाल्लक्षणां विनापि टाप्सिद्धेः। अत्रेति। अरुणापदे। तस्मादिति। द्रव्यरूपव्यापारसत्त्वात्। द्रव्येति। शुक्लादिगोद्रव्यावच्छेदकत्वेन। करणत्वमिति। क्रये करणत्वम्। श्रद्धाया एवेति। मनोव्यवच्छेदक एवकारः। चमसवदितिभाष्यं विवृण्वन्ति स्म तथाचेति। अर्वागित्यादि। बृहदारण्यकेस्ति। चमसवदविशेषाधिकरणेऽर्थः स्पष्टः। श्रद्धा वा इति भाष्यं विवृण्वन्ति स्म तथात्रेति। अप्पदस्येति। अप्शब्दस्य।

कर्मकाण्डे आपः श्रद्धाशब्देनोच्यन्ते, तथा प्रकृतेपि। परं नोपचारः। उपपत्तेः। उपक्रमोपसंहारयोर्बलीयस्त्वात्। नतु मध्ये श्रुतेन श्रद्धाशब्देनोपक्रमोपसंहारावन्यथाकर्तुं युक्तौ। श्रद्धासहभावः संस्कारद्वारेण संस्कृतेषु भूतेषु सिद्धः। तेन मनःस्थाने आप एव वाच्याः। 'चन्द्रमा मनसो जात' इति तु भिन्ना सृष्टिः।

भाष्यप्रकाशः।

सिद्धान्तमार्गं व्याचक्षते आप एवेत्यादि। युक्तत्वं स्फुटीकुर्वन्ति यथेत्यादि। परं नोपचार इति। वैदिके निघण्टौ श्रदिति सत्यनाम। 'श्रत् सत्यं दधाती'ति श्रद्धाशब्दस्य योगेनाप्सु प्रवृत्तिसौकर्यान्नोपचारः। तथाच 'एतद्वा अपां नामधेयं गुह्यं यदाधावा' इतिवत् 'श्रद्धा वा आप' इति श्रुतेरिदमपि योगरूढम्, योगेन वा तद्वाचकम्, अत उपचाराभावाद्युक्तत्वमित्यर्थः।

एतेन यदन्यैस्तत्तुल्येन श्रद्धासारूप्यात् 'सिंहो देवदत्त' इतिवच्छ्रद्धापूर्वककर्मसमवायात् 'मञ्चाः क्रोशन्ती'त्यादौ पुरुषेषु मञ्चशब्दवत् 'आपो हास्मै श्रद्धां संनमन्ते पुण्याय कर्मण' इत्यैतरेयश्रुत्या श्रद्धाजनकत्वात्, यथा अन्त्येष्टौ हुतस्य पुरुषस्य श्रद्धाभक्तिमतो लिङ्गदेहादिरूपो रस एव श्रद्धापदेनोच्यते, तथाप्सु श्रद्धाशब्दो गौण्या लक्षणया चोपपादितस्तन्निरस्तम्।

अत्र विनिगमकं बोधयितुं हेतुं व्याकुर्वन्ति उपक्रमेत्यादि। नन्वेवं श्रद्धाशब्दस्याब्वाचकत्वे श्रद्धासहभावः परित्यक्तः स्यात्, तथा सत्यैतरेयश्रुतिविरोध इत्यत आहुः श्रद्धासहेत्यादि। तथाच पूर्वजन्मनि यजमाना इदानीं देवाश्च होतारो न श्रद्धाविरहिताः। 'यो वै श्रद्धामनारभ्य यज्ञेन यजते, नास्येष्टाय श्रद्दधत' इत्यादितैत्तिरीयश्रुतौ 'अश्रद्धया हुतं दत्त'मिति गीतास्मृतौ चाश्रद्धानिन्दया श्रद्धाया आवश्यकत्वबोधनात्। 'अस्कन्नहविर्भवति य एवं वेदे'ति श्रद्धापूर्वकत्वज्ञानफलबोधनाच्च नित्याग्निहोत्रहोमरूपसंस्कारद्वारेण संस्कृतेषु भूतेषु श्रद्धासहभावः प्रागेव सिद्धः। अतो नैतरेयविरोध इत्यर्थः। एवं श्रद्धापदस्याब्वाचकत्वं श्रद्धासाहित्यं च साधयित्वा पूर्वपक्षिणं प्रत्याहुः तेनेत्यादि। तेनेति। उक्तोपपत्तित्रयेण। 'चन्द्रमा' इति श्रुतेरपि तन्मते प्रातिकूल्यं दर्शयन्ति चन्द्रमा इत्यादि। श्रद्धापदप्रयोगे हेतुं गृह्णन्ति श्रद्धेत्यादि। विभजन्ते तत्रेत्यादि।

रश्मिः।

आप एवेत्यादीति। एवकारः श्रद्धाव्यवच्छेदकः। यथेत्यादीति। उच्यन्त इति। 'श्रद्धा वा आप' इत्युक्तश्रुत्या। परं नोपचार इति। परमित्यस्य किन्त्वित्यर्थः। प्रवृत्तीति। अत्र सत्यं न जलं निरुक्तोक्तम्, किन्तु 'असावात्मा नारायण' इति प्रवृत्तिसौकर्यं तस्मात्। योगेति। वैदिके। वेदान्ते आहुः योगेनेति। मीमांसाकारिकया स्पष्टम्। तत्तुल्येनेति। अन्त्येष्टौ। सिंह इति। क्रौर्येण। श्रद्धेति। वाक्यमग्रे। समवायः सम्बन्धः। अस्मा इति। यजमानाय। संनमन्ते जनयन्ति। अन्त्येष्टौ पञ्चमाहुतौ। लिङ्गेति। लिङ्गे रसः पञ्चतन्मात्रासु। आदिना स्थूले पाञ्चभौतिक आपः। एवकारः श्रुत्या। गौण्येति। तत्तुल्यगुणयोगात् गौणी गुणेन युज्यत इति गौणी। शैषिकोऽण्। तथा। लक्षणयेति। यथा इत्यत्र संयोगसम्बन्धवज्जन्यजनकभावसम्बन्धो लक्षणा तथा। लक्ष्यतेऽनयेति लक्षणा। शक्यसम्बन्धो लक्षणेति लक्षणालक्षणम्। परीति। सहभावस्य भिन्ननिष्ठत्वात्। ऐतरेयेति। पूर्वोक्ता श्रुतिः। विशेष्यविशेषणयोरभेदसम्बन्धे जन्यजनकभावसम्बन्धः। श्रद्दधत इति। यः कोपि। अस्कन्नेति। अत्रुटहविः। नित्याग्निहोत्रेति। तेन नित्याग्निहोत्रिणः पञ्चाग्निविद्यायामधिकारिण इति बोध्यम्। प्रागेवेति। पञ्चाग्निविद्यायाः प्रागेव। एवकारः 'प्रायशः कर्मठाः पूर्वा' इति सूचनात्। तेनेत्यादीति। मनःस्थान इति। श्रद्धा मनोधर्मः, स कथं हूयत इति भाष्ये। एवेति। 'सर्वं सर्वमय'मिति श्रुत्या ज्ञानवादिवा त्वया। भिन्नेति। बोद्धा सृष्टिषु 'कदाचित्पुनरन्यथे'त्यत्र निविष्टा। उक्तेति।

श्रद्धाप्रयोगस्तु कामनाकृतव्यावृत्त्यर्थः । तत्र फल एव श्रद्धा, न कर्मणि । 'यो यच्छ्रद्धः स एव सः' इति श्रद्धाया आश्रयस्य विषयभावजनकत्वात् कर्तुः कर्मभावाय श्रद्धाप्रयोगः । ततः संस्कृता आपो यजमानरूपा हूयमाना भवन्तीति सिद्धं भवति । तस्मात् प्रथमेऽप्यपामस्ति श्रवणम् ॥ ५ ॥

## अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥

स्थितमेतज्जीवः सम्परिष्वक्तो रंहतीति । तत्र विचार्यते। सर्वे जीवाः सम्परिष्वक्ता गच्छन्ति, आहोस्विज्ज्ञानोपयोगिन इति विमर्शः । तत्र पञ्चाहुतिब्राह्मणे नाधिकारिणः श्रुताः । वेदे हि श्रुतानुसारिकल्पना । अतो विशेषस्याश्रुतत्वात् सर्वेषामेव पञ्चाहुतिप्रकार इति चेत् । न। इष्टादिकारिणां प्रतीतेः। साधारणपक्षं दूषयति । कुतः । इष्टादिकारिणां प्रतीतेः । इष्टादिकारिणः प्रतीयन्ते श्रद्धा-

---

भाष्यप्रकाशः ।

तत्रेति । सकामे यष्टरि । फल एव श्रद्धा आदर उपादेयबुद्धिविशेष इति यावत्, न कर्मणि । तथाच श्रद्धाया अयं स्वभावो यत् स्वाश्रयं स्वविषयं करोतीति गीतावाक्यादवधार्यते । अतो निष्कामस्य कर्मण्येव श्रद्धेति तादृशकर्तुः कर्मात्मकत्वं बोधयितुं श्रद्धाप्रयोग इत्यर्थः । एवमुपपादनेन सिद्धमाहुः तत इत्यादि । सूत्रात् सिद्धमाहुः तस्मादित्यादि ॥ ५ ॥

अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः॥६॥ अस्या आहुतेः फलं विचारयितुं किञ्चिदाशङ्क्य परिहरतीत्याहुः स्थितमित्यादि । स्थितमिति । निर्धारितम् । ननु निर्णीते संशयस्योच्छिन्नत्वात् को विचारांश इत्यत आहुः सर्वे इत्यादि । संशयबीजं तु विशेषाश्रवणम् । उपकारार्थे देवानां प्रवृत्तिश्च । पूर्वपक्षांशं व्याकुर्वन्ति तत्रेत्यादि । नाधिकारिणः श्रुता इति । न श्रुता इत्यन्वयः। सिद्धान्तांशं व्याकुर्वन्ति इष्टादिकारिण इत्यादि । श्रद्धापदेन देवकर्तृत्वेन चेति। 'यो वै श्रद्धामनारभ्य यज्ञेन यजते, नास्येष्टाय श्रद्दधत' इत्यश्रद्धालुनिन्दया 'उभयेऽस्य देवमनुष्या इष्टा यः श्रद्दधते' इति श्रद्धालुस्तुत्या च श्रद्धावत एव यज्ञः फलमुख इति पूर्वकाण्डे लभ्यते। अत्र

रश्मिः ।

सौत्राणां 'ता एवोपपत्ति'रितिशब्दानां व्याख्यानभूतेन । प्रातिकूल्यमिति । चन्द्रमसोऽब्जातत्वेन मनोजातत्वबोधकश्रुतिविरोधरूपप्रातिकूल्यम् । दर्शयन्तीति । स्वमतोक्त्यैव दर्शयन्ति स्म श्रद्धेत्यादीति । कामनया कृतो होमस्तद्व्यावृत्त्यर्थ इति भाष्यार्थः । विभजन्त इति । सकामनिष्कामत्वेनोभयं यष्टारं विभजन्ते तत्रेत्यादीति । एवकारव्यवच्छेद्यमाहुः न कर्मणीति । अग्रिमभाष्यस्य पिण्डितार्थमाहुः तथा चेति । स्वाश्रयं यजमानम् । स्वं श्रद्धा तद्विषयं कर्म तत्करोतीति 'यो यच्छ्रद्धः स एव स' इति गीतावाक्यादवधार्यत इत्यर्थः । तथा च भाष्ये आश्रयस्य जीवस्य । विषयः कर्म । तद्भावजनकत्वात् । तस्मादित्यादीति । प्रथम इति । उपक्रमे ॥ ५ ॥

अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥ अत्रादिना पूर्तम् । 'अथ य इमे ग्राम इष्टापूर्ते दत्त इत्युपासते ते धूममभिसम्भवन्ती'ति श्रुतेः । परीति । भगवान् व्यासः । विशेषेति । अधिकारिविशेषाश्रवणम् । अत्र संशयादिकं सौत्रम्, न त्वधिकरणत्वसमर्पकम् । विषयवाक्यपदाभावात् । एवेति । अश्रद्धावद्व्यवच्छेदकोयम् । फलमुख इति । फलोपायः । 'मुखं निःसरणे

पदेन देवकर्तृत्वेन च । सोमभावसाम्याच्च । इष्टादिकारिणां धूममार्गव्युत्पादने सोमभाव उक्तः । अत्रापि प्रथमाहुतिफलं सोमभाव उच्यते । अतः श्रुतिसाम्यादपि इष्टादिकारिणो रंहन्तीति सिद्धम् ॥ ६ ॥

## भाक्तं वानात्मवित्त्वात् तथाहि दर्शयति ॥ ७ ॥

किञ्चित् दूषणं परिहरति । ननु यदि श्रुतिसाम्येन सोमभावादिष्टादिकारिणो रंहन्तीत्युच्यते, तदा सोमभावे तेषामनिष्टं श्रूयते, 'तद्देवानामन्नं तं देवा भक्षयन्ती'ति, समानश्रुतौ च 'आप्यायस्वापक्षीयस्वेत्येवमेनाँस्तत्र भक्षयन्ती'ति चन्द्रदृष्टान्तेन ते च भक्ष्यन्ते, ततश्च देवाः स्वान्नं पर्जन्येऽग्नौ कथं जुहुवुः, अतः

भाष्यप्रकाशः ।

च श्रद्धापदेनोक्तरीत्या निष्कामकर्तारो लभ्यन्ते । देवानां च प्रत्युपकारस्तेषामेवावश्यक इति होमं प्रति देवानां कर्तृत्वेन च त एव प्रतीयन्ते । सोमभावसाम्याच्चेति तृतीयं हेतुं गृहीत्वा विभजन्ते इष्टादिकारिणामित्यादि । धूममार्गे 'आकाशाच्चन्द्रमसमेष सोमो राजे'ति 'तस्या आहुतेः सोमो राजा सम्भवती'ति चोच्यते । अतः श्रुतिसाम्यात् पूर्वोक्तेष्टादिकारिण एव रंहन्ति, न सर्व इति सिद्धमित्यर्थः ॥ ६ ॥

भाक्तं वानात्मवित्त्वात् तथाहि दर्शयति ॥ ७ ॥ सूत्रमवतारयन्ति किञ्चिदित्यादि । किं तदित्याकाङ्क्षायामाशङ्कामुखेन व्युत्पादयन्ति नन्वित्यादि । तदिति । सोमात्मकं द्रव्यम् ।

रश्मिः ।

वक्रे प्रारम्भोपाययोरपी'ति विश्वात् । उक्तेति । तत्र फल एवेत्यादिभाष्योक्तरीत्या । तेषामिति । इष्टादिकारिणामेव । 'देवान्भावयताऽनेन ते देवा भावयन्त्वि'तिवाक्यादेवकारः । त एवेति । इष्टादिकारिणः । 'यो वै श्रद्धामनारभ्ये'त्याद्युक्तश्रुत्यैवकारः । तृतीयमिति । उपपत्तेश्चेत्यनुवर्तत इति । विभजन्त इति । प्रासङ्गिकत्वं सूचयन्तो व्याख्यान्तीत्यर्थः । एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमित्याशयेनाहुः धूमेति । छान्दोग्येऽस्ति । अभिप्राप्नुवन्तीति पूर्वेणान्वयः । एवेति । सर्वव्यवच्छेदकः ॥ ६ ॥

भाक्तं वानात्मवित्त्वात् तथा हि दर्शयति ॥७॥ आशङ्केति । मुखं प्रारम्भः । 'मुखनिःसरणे वक्रे प्रारम्भोपाययोरपी'ति विश्वः । नन्वित्यादीति । समानेति । बृहदारण्यके छान्दोग्यसमानश्रुतौ । एनानिति । धूममार्गेण सम्भूतान् कर्मिणः । तत्रेति । सोमलोके । भक्षयन्तीति । अयमर्थः । 'ते चन्द्रं प्राप्यान्नं भवन्ति तांस्तत्र देवा यथा सोमꣳराजानमाप्यायस्वापक्षीयस्वेत्येवमेनांस्तत्र भक्षयन्ति' । अत्र ते कर्मिणः चन्द्रं प्राप्यान्नं जलं भवन्ति । चन्द्रस्याप्पुष्पत्वात् । अन्नस्य जलवाचकत्वात् । तान् कर्मिणः । तत्र चन्द्रलोके । देवाः कर्मठाः । यथा सोमꣳराजानमिति । च(न्द्र)मसं सोमवल्लीरसम् । 'सोमोऽस्माकं ब्राह्मणानां राजे'ति वाक्यात् । अस्मानाप्यायस्व आप्यायनं कुरुष्वेति प्रार्थयन्ति । अपक्षीयस्व कर्मान्तःपातित्वात्कर्मरूपस्त्वमपक्षीयस्व । कर्मणामाप्यायनापक्षयजनकत्वात् । एवमाप्यायाप्याय पुनःपुनराप्यायनं कृत्वा भक्षयन्ति यथायं दृष्टान्तः, एवं तानन्नभूतान् जलभूतान् तत्र चन्द्रलोके भक्षयन्ति । छान्दोग्ये 'षोडशकलः पुरुष' इत्युक्तेः । तत्रा'प्याप्यायस्वापक्षीयस्वे'ति वर्तते । तत्र द्रष्टव्यम् । यद्वा । भक्षणं भाष्यीयं 'प्रथमां पिबते वह्नि'रित्यादि वक्ष्यमाणम् । चन्द्रेति । सोमवल्लीरसदृष्टान्त उक्तोऽन्यैः, अत्र तु चन्द्रदृष्टान्त उच्यते । तेन षोडशकलः पुरुषः महाचम(स)स्य मतेन तैत्तिरीयोक्ततुरीयचन्द्रांशः । तेन दृष्टान्तेन ते कर्मिणश्च भक्ष्यन्त इत्यर्थः । तत इत्यादि । स्वात्मत्वात् । स्वान्नं आत्मरूपान्नम् । कथमिति ।

पश्चाहुत्यभाव इत्याशङ्क्य, परिहरति वाशब्दः । तेषां सोमभावो गौणः । भक्षणं च । प्रकृतेप्यङ्गारत्वाच्चन्द्रमसः कथमाहुतिफलं भवेत् । सोमभावस्य भाक्तत्वमग्रे निरूपयिष्यामः । इदानीं भक्षणस्य गौणत्वं निरूपयति । अन्नभावे हि मुख्यं भक्षणं भवति । तदन्यस्यान्नभावो नोपपद्यते । ब्रह्मज्ञाने तु भवति । 'स सर्वं भवति । तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चे'ति । प्रकृते तु तन्न । अनात्मवित्त्वात् । तथा सति मोक्ष एव भवेत् । अतो

भाष्यप्रकाशः ।

परिहारं व्याकुर्वन्ति तेषामित्यादि । गौणत्वे हेतुमाहुः प्रकृतेपीत्यादि । तथाच चन्द्रमसः स गौणश्चेत्, एतेषां सुतरां गौण इत्यर्थः । ननु सोमभावस्य गौणत्वं नात्र विवक्षितम्, सूत्रे भाक्तपदस्य नपुंसकत्वादेकवचनत्वाच्चेत्यत आहुः सोमभावस्येत्यादि । अग्र इति । तथाच न सूत्रविरोध इत्यर्थः । गौणत्वमुपपादयन्ति अन्नभाव इत्यादि । अन्यस्येति । ज्ञानिव्यतिरिक्तस्य । अन्न-भावानुपपत्तिं विभजन्ते ब्रह्मज्ञाने त्वित्यादि । तुरुपपत्तिशङ्कानिरासे, द्वितीयस्तुर्हेतौ । तथाच ज्ञानेन ब्रह्मभावे सर्वरूपता श्राव्यत इत्यन्नभावो ज्ञानिनो मुख्यः स्यात् । अज्ञानिनि तु तन्नोपपद्यते । तत्र हेतुः अनात्मवित्त्वादिति । यदि हि तेषामन्नभावो मुख्यः स्यात्, वामदेवादिवदात्मवित्त्वे सति मोक्ष एव स्यात् । सर्वभावस्य तल्लिङ्गत्वात् । अतोऽन्नभावस्यामुख्यत्वेऽन्नभावस्यापि देहात्म-भाववद्गौणत्वात् तद्भक्षणमपि गौणम् । अन्नस्यैव भक्ष्यत्वेन तेषां भक्ष्यत्वाभावादिति । उपष्टम्भकं

रश्मिः ।

आत्महानेरपुरुषार्थत्वादात्मत्वभिन्नेन केन प्रकारेणेति प्रश्नः । अत इति । आत्महानेरपुरुषार्थत्वेन सोमस्याहोम्यत्वात् । वाशब्द इति । अवधारणार्थकत्वादिति भावः । 'वाऽन्वाचये समाहारेप्यन्या-न्यर्थे समुच्चये । पक्षान्तरे ग्रहे पादपूरणेऽप्यवधारण' इति विश्वात् । गौणस्य इति । तेषां कर्मिणां सोमभावस्य गौणत्वे । प्रकृतेपीत्यादीति । प्रकृते प्रथमाहुतौ । 'चन्द्रमा अङ्गारा' इति श्रुतेः । भवेदिति । सोमो राजा भवेत् । स इति । सोमभावः । गौण इति । श्रुत्युक्तत्वान्मुख्यत्वा-भावेपि गौणस्तु वक्तव्य इति भावः । एतेषामिति । कर्मिणाम् । कर्मिणां जीवानां सत्यादिरूपत्वेन सोमस्याग्रूपस्य भावो गौणः । ऐक्यासंभवात् । भक्षणं च गौणम् । न जीवानां भक्षणं संभवति भोक्तृत्वात् । कर्मणि षष्ठी । प्रकृते नह्यङ्गाराः फलं भवन्तीति सोमभावो गौणोऽङ्गाराणाम् । एतेषां हुतानां कर्मिणां जीवानां सत्यादिरूपत्वेन सोमभावोऽन्भावः सुतरां गौणः । अत्रेति । सूत्रे । भाक्त-मिति । सोमभावो भाक्त एकं चेत्यनन्वयात् । एकस्य वचनं सुर्यस्मादित्येकवचनं तस्मात् । क्पो वैकल्पिकत्वम् । ज्ञानीति । जीवस्य सत्यादिरूपस्यान्यभावोऽन्भावः मुख्यसोमभावो नोपपद्यते । अन्नेति । 'पृथिवी वा अन्नम्, आपो वा अन्नं' 'अद्यतेऽत्ति च भूतानी'त्येवंपरोऽन्नशब्दः । ब्रह्मज्ञाने तु अनुपपत्तिनिरासो भवतीति भाष्यार्थमाहुः तुरिति । उपपत्तिशङ्का उपपत्त्यन्यथाज्ञानमनुपपत्तित्वेन ज्ञानम् । अन्यस्यान्यभावेऽनुपपत्तिरुक्ता तस्या निरास इत्यर्थः । प्रकृते । अज्ञानिनि तुर्हेतुः । तत् ब्रह्म-ज्ञानं न भवतीति प्रकृते तु तन्नेति भाष्यार्थ इत्याशयेनाहुः द्वितीय इत्यादि । तु तदिति । हेतुः स ब्रह्मभावः । तदित्यव्ययम् । तथासतीत्यादिभाष्यं विवृण्वन्ति स्म यदि हीत्यादि । एवेति । सोमभावव्यवच्छेदकः एवेति । सर्वेति । सर्वभावः 'स सर्वं भवती'त्यादिभाष्योक्तश्रुत्युक्तस्तस्य । देहात्मेति । देहः सुखीत्यादौ सुखमात्मधर्मः । परं तिरोहितम्, चित्प्रधानत्वात् । गौणत्वादिति । 'अहमन्नमहमन्नमहमन्नम् । अहमन्नादोऽहमन्नादोऽहमन्नाद' इत्यत्र । अन्नस्यैवेति । एवकारः कर्मिणां

१. अन्नभाव इति प्रकाशपाठः, अन्यभाव इति रश्मिपाठ इति प्रतिभाति ।

भक्षणमपि गौणम् । तथाहि । श्रुतिरेव गौणभावं शब्दस्य बोधयति । 'अथ योऽन्यां देवतामुपास्त' इत्यत्र यथा पशुशब्दः, एवमत्रापि भक्षणं सहक्रीडनं सेवकभावः । चन्द्रतुल्यापदेशाय तथा वचनम् । तथा सति तेषाममरत्वेन तथा श्रुतिः । चन्द्रस्य भक्षणं तु क्षयादनुमीयते श्रुत्या, 'प्रथमां पिबते वह्नि'रित्यादि-

भाष्यप्रकाशः ।

व्याकुर्वन्ति तथाहीत्यादि । श्रुतिरिति । 'यावत्सम्पातमुषित्वे'त्यादिश्रुतिः । पशुशब्द इति । पशुतुल्यत्वबोधको गौण इति शेषः । एवमत्रापीत्यादि । यथा 'स्त्रियं भुङ्क्ते' इत्यत्राभ्यवहारो भोग एव, न तु चर्वणादिकम्, तथात्रापि भक्षणं क्रीडनादिकमित्यर्थः । नन्वेवमुपचारस्य किं प्रयोजनम्, न हि प्रयोजनं विना उपचारोपि युक्त इत्याशङ्कायां तत्प्रयोजनमाहुः चन्द्रेत्यादि । तथाच यथा चन्द्रः क्षीयते वर्धते च, तथैतेपि पुनः पुनरावर्तमाना अमरतां चाप्नुवन्तीत्येतदर्थं तद्वचनमित्यर्थः । ननु 'आप्यायस्वे'त्युक्तश्रुत्या चन्द्रस्यापि भक्षणं चेत्, कथमेतेषां गौणमित्यत आहुः चन्द्रस्येत्यादि । श्रुतिस्तु सोमोत्पत्तिनामकपरिशिष्टस्था । तथाच चन्द्रस्य भक्षणं तु श्रुत्यनुमानाभ्यां सिद्धत्वान्न गौणमिति निश्चीयते । एतेषां तु न चन्द्रस्येव वरो येन पुनरेधेरन् । ततश्च

रश्मिः ।

व्यवच्छेदकः । तेषामिति । कर्मिणाम् । उपष्टम्भकमिति । 'तथा हि दर्शयती'ति सौत्रम् । यावदिति । भक्षयन्तीत्यस्यात्राव्यवहितोत्तरेयं श्रुतिः । 'तस्मिन्यावत्संपातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्त' इति । अर्थस्तु संपतन्त्यमुं लोकमनेनेति संपातः कर्मसमूहः । स यावानिति यावत्संपातम् । अव्ययीभावः । यावत्कर्मसमूहः तस्मिन् चन्द्रमण्डले उषित्वा । 'उष दाहे' । 'करेप्यग्निर्जलेप्यग्नि'रिति मनुस्मृतेः जले दाहः । अथ कर्मक्षयानन्तरमन्येन कर्मणा एतमेव वक्ष्यमाणमध्वानं मार्गं पुनर्निवर्तन्त इति । वक्ष्यमाणं 'जायस्व म्रियस्वेत्येतत्तृतीय९स्थान'मिति श्रुत्या । भाष्ये । शब्दस्येति । सोमभावशब्दस्य । भक्षयन्तीत्यस्य च । दर्शयतीत्यस्यार्थो बोधयतीति । मुख्यत्वे एनयोर्यावदित्यादि नोपपद्यते । पुरुषविधब्राह्मणश्रुतिमाहुः अथ य इति । 'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेव९स देवाना'मिति । प्रकृते । पश्विति । अभेदाज्ञानवत्त्वगुणयोगाद्गौणी तया गृह्यत इति शैषिकोऽण् । अभ्यवहार इति । 'भुज पालनाभ्यवहारयो'रिति धातुपाठात् । भोग एवेति । सुखदुःखसाक्षात्कारो भोगः । एवकारव्यवच्छेद्यमाहुः न त्विति । क्रीडनेति । आदिना सेवकत्वम् । तथाच यथा उपासकः पशुः अज्ञानवत्त्वगुणयोगात्तथा जीवस्य भक्षणमित्यत्र भोक्तुर्भक्ष्यत्वाभावेन भक्षणमिव भक्षणं भोगः सहक्रीडनं सेवकभावः, नतु चर्वणादिकमित्यर्थः । तथाच भोज्यत्वमात्रगुणयोगात् 'तद्देवानामन्नं तं देवा भक्षयन्ती'त्यत्र जीवेऽन्नपदं गौणमित्यर्थः । बृहदारण्यकटीकायामप्येवम् । तत्प्रेति । उपचारप्रयोजनम् । भाष्ये । चन्द्रेत्यादौ । चन्द्रतुल्यं अपदेशो लक्ष्यम् । 'अपदेशः स्मृतो लक्ष्य'मिति विश्वात् । तस्मै प्रयोजनाय । तथा वचनं उपचारत्वेन भक्षणवचनम् । तथा सति उपचारत्वेन भक्षणवचने सति । तेषां कर्मिणाममरत्वेन गुणेन चान्द्रेण । तथाश्रुतिरुपचारश्रुतिरित्यर्थ इत्याशयेन पिण्डितार्थमाहुः तथाच यथेत्यादि । एतदर्थमिति । अमरत्वेन चन्द्रतुल्यापदेशार्थम् । तद्वचनमुपचारवचनम् । श्रुत्यनुमानाभ्यामिति । अनुमानं च श्रुतिश्च श्रुत्यनुमाने । 'अल्पाच्तरं पूर्वम्' 'अभ्यर्हितं चे'ति सूत्राभ्यां पूर्वनिपातः । श्रुत्येतिभाष्याच्छ्रुतिशब्दः । ताभ्याम् । अनुमानं तु अपक्षीयमाणचन्द्रः भक्षणवान् । क्षयात् । यन्नैवं तन्नैवम् । आपूर्यमाणचन्द्रवत् । एतेषामिति । कर्मिणाम् । चन्द्रस्येवेति । षष्ठस्कन्धे षष्ठाध्याये 'कृत्तिकादीनि नक्षत्राणीन्दोः पत्न्यस्तु भारत । दक्षशापा-

१. स्तुतिरितिपाठः ।

रूपया । देवानामभक्षणं भगवद्वयवानामेव । अशनानशने तस्याविरुद्धे । आधिभौतिकानां देवानामशनमेव । तस्मात् भक्षणस्य गौणत्वात् सोमभावे न काचिचिन्ता ॥ ७ ॥

इति तृतीयाध्याये प्रथमपादे प्रथमं रंहत्यधिकरणम् ॥ १ ॥

भाष्यप्रकाशः

तन्नाशे यः श्रुत्यन्तरे भोगसद्भावः प्रतिपाद्यते, स सोमलोके विभूतिमनुभूय पुनरावर्तत इति । आनन्दमीमांसायां च 'ते ये शतं पितॄणां चिरलोकलोकानामानन्दाः, स एकः कर्मदेवानामानन्दः, ये कर्मणा देवानपियन्ती'ति विरुध्येत ।

एतेनैव भिक्षूक्तमप्यपास्तम् ।

अतस्तेषां तद्गौणमेवेत्यर्थः । ननु 'न वै देवा अश्नन्ति न पिबन्ती'ति श्रुत्यन्तरे देवानामशनं निवारितम्, अतः पानश्रुतिरपि गौणीत्येवादरणीया, तथा सत्येषां भक्षणमपि गौणं सेत्स्यतीति वृथायं प्रयास इत्याशङ्कायामाहुः देवानामित्यादि । देवताविग्रहाधिकरणे देवतायाः शरीरसिद्ध्या यज्ञादिहविर्भोक्तृत्वे सिद्धेऽशनं सिद्धमेवेत्यनशनश्रुतिर्भगवदवयवपरैव भवितुं युक्ता । यथा 'न ह वै देवान् पापं गच्छती'ति श्रुतिः । अन्यथा 'तस्माञ्जलिना ब्रह्महत्यामुपागृह्ना'दित्यादेर्विरोधापत्तेः । अतो देवभेदेन व्यवस्थैव श्रुत्योर्युक्ता । नच 'ऋतं पिबन्तौ' 'अनश्नन्नन्य' इतिवत् देवेषु श्रुतिद्वयाविरोधः सम्भवति । जीवत्वात् । तस्य ब्रह्मणस्तु विरुद्धधर्माश्रयत्वादशनानशने अविरुद्धे । अत आधिभौतिकानां कर्मसचिवानामशनमेवोचितमिति गौण्यभावान्न प्रयासो व्यर्थ इत्यर्थः। सिद्धमाहुः तस्मादित्यादि । यस्माच्चन्द्रस्यैव मुख्यं भक्षणम्, नैतेषाम्, अत एषां सोमभावे बाधकाभावान्न कोपि दोष इत्यर्थः ।

अनेनापि सूत्रेणैतस्य विचारस्य केवलवैराग्यार्थता वारिता । अन्यथा व्याघ्रादिकृतभक्षणस्येवास्यापि सुतरां वैराग्यजनकतया तद्गौणीत्वप्रतिपादनव्यर्थत्वप्रसङ्गादिति । तस्मादस्योभयार्थतैवेति निश्चयः ॥ ७ ॥ इति प्रथमं रंहत्यधिकरणम् ॥ १ ॥

रश्मिः ।

त्सोऽनपत्यस्तासु यक्ष्मग्रहार्दितः । पुनः प्रसाद्य तं सोमः कला लेभे क्षयेर्दिता' इति वाक्यात् । क्षयेर्दिता इत्यपि पाठः । तन्नाशे इति । कर्मिनाशे । श्रुत्यन्तर इति । 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती'त्यस्या अग्रे सोमभावश्रुतेरन्यश्रुतौ । 'स उल्बावृतो गर्भो दश वा मासानन्तः शयित्वा यावद्वाथ जायते स जातो यावदायुषं जीवति तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति यत एवेतो यतः सम्भूतो भवती'त्यस्याम् । विरुध्येतेति । नच मोक्षाभावोक्तेः कर्मभिरेव न विरोध इति वाच्यम् । भिक्षूक्तमिति । तेन भगवद्भिक्षुमते कर्मिणां चन्द्रवद्भक्षणं मुख्यमित्युक्तम् । अपास्तमिति । कर्मिणां गौणभक्षणोक्त्यापास्तम् । तेषामिति । कर्मिणां तद्भक्षणं गौणम् । एवेति । उक्तरीत्या जागरूकत्वादेवकारः । ननु नेति । श्रुतिश्छान्दोग्ये स्पष्टार्था । पानेति । 'ऋतं पिबन्ता'विति । अयमिति । गौणत्वसाधनेन प्रत्यक्षविषयः । यज्ञादीति । आदिना प्रभुप्रसादादस्य । 'अद्धीदिन्द्र प्रस्थितेमा हवींषी'ति श्रुतेः । अद्धि इत् इन्द्र प्रस्थिता इमा स सोढा हवींषि । एवकार इन्द्रयागस्मृतेः । इत्यादेरिति । पापगमनबोधकवाक्यस्य पाठस्य । अशनेत्यादिभाष्यं विवृण्वन्ति स्म न चेति । आधीत्यादिभाष्यं विवृण्वन्ति स्म अत आधीति । एवेति । 'अद्धीदिन्द्रे'तिश्रुतेरेवकारः । नेति । व्यवस्थायाः पूर्वरीत्याऽसिद्धत्वा नेत्यादिः । चन्द्रस्यैवेति । एवकारः कर्मिव्यवच्छेदकः । एतेषामिति । कर्मिणाम् । एषामिति । कर्मिणाम् । उभयेति । ज्ञानवैराग्योभयार्थता । एवकारस्तु उपक्रमस्यासञ्जातविरोधत्वेन ज्ञानार्थतोपसंहारेण 'तस्माज्जुगुप्सेते'त्यनेन वैराग्यार्थतेति ॥ ७ ॥ इति प्रथमं रंहत्यधिकरणम् ॥ १ ॥

कृतात्ययेनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८ ॥ (३.१.२.)

प्रथमाहुतिः सफला विचारिता। द्वितीयां विचारयितुमधिकरणारम्भः। सोमस्य पर्जन्यहोमे वृष्टित्वमिति। सोमाद्वृष्टिभावे रूपरसादीनां हीनतया प्रतीयमानत्वात् यागस्यावान्तरफलं तत्र भुङ्क्ते इति निश्चितम्।

तत्र संशयः। किं सर्वमेवावान्तरफलं तत्र भुङ्क्ते, आहोस्विदनुशयवान् वृष्टिर्भवतीति।

सद्वासनयाग्रिमजन्मनि सदाचारयुक्त एव स्यादिति। 'आचारहीनं न पुनन्ति वेदा' इति बाधोपलब्धेः। अतो विचार उचितः।

तत्रावान्तरफलस्यावशेषे अवान्तरफलत्वबाधाज्ज्ञानौपयिकशरीरभावादेव सदाचारसिद्धेः प्रयोजनाभावाच्च निरनुशय एव वृष्टिभावं प्राप्नोतीत्येवं प्राप्ते, उच्यते।

---

भाष्यप्रकाशः।

कृतात्ययेनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८ ॥ अधिकरणप्रयोजनमाहुः प्रथमेत्यादि। ननु द्वितीयस्यां किं विचारणीयम्, येनायं संरम्भ इत्यत आहुः सोमस्येत्यादि। सोमादिति। सोमभावानन्तरम्। निश्चितमिति। 'सोमं राजानं जुह्वति, तस्या आहुतेर्वर्षं सम्भवती'ति सोमाद्धीनभावबोधिकया आहुतिफलश्रुत्यैव निश्चितम्। तत्र संशय इति। तत्र भोगे संशयः। अनुशयवानिति। अनुपश्चाच्छेते, कर्मफलभोगानन्तरं तिष्ठति यः शेषः, सोऽनुशयस्तद्वान्। नन्वेतद्विचारस्य किं प्रयोजनम्, यथाकथञ्चिदस्त्वित्यत आहुः सद्वासनयेत्यादि। तथाच सर्वस्य स्वभावाधीनतयोभयविधं कर्म संभवति, तत्र निरनुशयत्वे, पूर्वकृतदुष्कर्मभोगस्यानुक्तत्वात् तदनुवृत्त्या कपूययोनित्वमापद्येतेति तद्विचार उचित इत्यर्थः।

एवं विचारावश्यकत्वं समर्थयित्वा पूर्वपक्षमाहुः तत्रेत्यादि।

रश्मिः।

कृतात्ययेनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८ ॥ सोमभावेति। श्रद्धायाः सोमभावादनन्तरमितिशेषः। सोमादितिभाष्ये भावप्रधानः। भाष्ये श्रद्धारूपस्य जीवस्य सोमं प्राप्य वृष्टिभावे इत्यप्यर्थः। रूपरसादीनामपाकजानां हीनतया वृष्टेः सोमाद्धीनत्वं प्रत्यक्षसिद्धं यागस्य मुख्यं फलम्। स्वर्गोऽवान्तरं फलम्। तत्रेति वृष्टिभावे। भुङ्क्ते। रूपरसादीनामित्यत्रादिशब्देन शब्दगन्धस्पर्शाः। प्रकृते। आहुतीति। एवकारोऽन्यस्य शब्दस्य व्यवच्छेदकः। भाष्ये। सर्वमेवेति। सामान्ये नपुंसकम्। एवकारो विशेषव्यवच्छेदकः। तत्रेति। वृष्टिभावे। प्रकृते। अन्वितिः। 'भवेदनुशयो द्वेषे पश्चात्तापानुबन्धयो'रिति विश्वादनुबन्धेऽनुशयशब्द इति भावः। यः प्रारब्धसञ्चितक्रियमाणेषु कर्मसु यत्किञ्चित्कर्मजन्यभोगसाधकसामग्रीशेषः। एतद्वीति। अनुशयरूपकर्मणो विचारस्य। यथेति। अनुशयवत्त्वेनाननुशयवत्त्वेन वा। अत आहुरिति। अतो द्वितीयकोटौ हेतुमाहुरित्यर्थः। स्वभावेति। गीतापञ्चमाध्याये 'न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः। न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते' इति वाक्यात्। उभयेति। कपूयरमणीयोभयविधम्। निरनुशयत्व इति। निष्क्रान्तमनुशयपदान्निरनुशयं सूत्रं तत्त्वे। तद्विचार

**कृतात्यये अनुशयवान्।** कृतस्य सोमभावस्यात्यये नाशे सति अनुशयवान् अवान्तरफलसाधकक्लेशसहित एव वृष्टिभावं प्राप्नोति । कुतः । दृष्टस्मृतिभ्याम् । दृष्टं तावत् भोगसाधकमूलद्रव्यनाशेपि भोगसाधकतादृशदेहवस्त्रादिसहित

भाष्यप्रकाशः ।

अयमर्थः । आहुतिभिर्द्युलोके नीतानां द्युलोकाग्नौ देवकृतहोमोत्तरं सोमभावः । ततः पर्जन्याग्नौ हुतानां तेषां वृष्टिभावः । स हि न तत्कालमेव, किन्तु कृतकर्मभोगान्ते इति चन्द्रमण्डलमारूढानां धूममार्गिणामवस्थाबोधिकया 'आकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति, तस्मिन् यावत्सम्पातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशाद्वायु'मित्यादिकया श्रुत्यावसीयते । सम्यक् पतत्युत्पतत्यस्माल्लोकात् स्वर्गलोकमिति व्युत्पत्त्या सम्पातपदेन कर्मबोधनात् । एवं सति सकामानां धूममार्गिणां सुकृतभोगोत्तरं यथा आवृत्तिः, तथैतेषां भोगोत्तरमेव वृष्टिभाव इति न्यायसाम्यात् सिध्यति । स च भोगः सकामानां मुख्यं फलम्, निष्कामानामवान्तरफलम् । उभयथापि फलत्वस्याप्रच्यवात् सर्वस्य भोगः प्राप्नोति, न त्ववान्तरफलत्वे सशेषत्वम् । यदि तस्मिन् शेषोऽङ्गीक्रियते, तदा तत्र अभुक्तेऽवान्तरफलस्यावशेषे 'यावत्सम्पात'श्रुत्यनुरोधेनावान्तरफलत्वबाधः । नचानुशयाभावे सद्वासनाशून्यतायामग्रिमजन्मनि सदाचाराभावप्रसङ्गादवशेषस्यावश्यकत्वं शङ्क्यम् । उक्तरूपेण देवकृतोद्यमेन ज्ञानौपयिकशरीरभावादेव घटे छिद्राहित्यवत् सदाचारसिद्धेर्न तस्य किञ्चित्प्रयोजनम् । अत उक्तहेतुद्वयाभिरनुशय एव वृष्टिभावं प्राप्नोतीति ।

सिद्धान्तं व्याकुर्वन्ति कृतेत्यादि । कृतपदेनात्र सोमभाव एवोच्यते । प्रकृतप्रश्नप्रतिवचने

रश्मिः ।

इति । अनुशयविचारः । आहुतिभिरिति । आहुतिभिः करणैः अग्निभिः कर्तृभिः नीतानां जीवानाम् । 'तं प्रेतं दिष्टमितोऽग्नय एव हरन्ती'ति श्रुतेः । एवकारेणाहुतिव्यवच्छेदात् । तत्कालमेवेति । तस्मिन् होमकाले । अत्यन्तसंयोगे द्वितीया । एवस्तु होमकालान्यकालव्यवच्छेदकः । कर्मेति । अग्रे एवः श्रुतित्वात् । यथेतमिति । यथा इतं आकाशाद्वायुं निवर्तन्त इत्यन्वयः । 'यथेतमाकाशाद्वायुं वायुर्भूत्वाभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षती'ति पाठः । अनेन इत्यादिकयेत्यत्रादिपदार्थोऽप्युक्तः । अवान्तरेति । 'नाऽभुक्तं क्षीयते कर्मे'त्यवान्तरफलम् । कर्मणः प्रतिबन्धकत्वात्सायुज्ये । सर्वस्येति । सकामनिष्कामरूपस्य । न त्ववान्तरेति । रूपरसादीनां भोगस्य । पूर्वपक्षभाष्यं व्याकुर्वन्ति स्म यदीति । तस्मिन्निति । भोगे । शेष इति । जीवे कर्मशेषः । अवान्तरेति । उत्तरफलेऽनुवृत्त्यांशतोऽवान्तरफलत्वबाधः । ज्ञानौपयिकेत्यादिभाष्यं विवृण्वन्ति स्म नचेत्यादिना । संशयद्वितीयकोटिसत्त्वे पूर्वकोटिरूपपूर्वपक्षप्रतिबन्धात् शङ्का । भाष्ये द्वितीयकोटौ सद्वासनायाः सदाचारे कारणत्वमुक्तम् । तत्र निष्कामा अनुशयवन्तः । सद्वासनायाः । अम्बरीषवदित्यनुमानं फलति । एवं सत्यनुशयाभाव इत्यादिः । अवशेषस्येति । प्रारब्धातिरिक्तकर्मशेषस्य । तथाच न पूर्वपक्षसमर्पिका पूर्वकोटिरिति भावः । अनावश्यकत्वं वदति पूर्वपक्षी उक्तरूपेणेत्यादि । प्रथमसूत्र एव तत्र पूर्वजन्मनीत्यादिभाष्येण उक्तं रूपं देवाधिष्ठानसम्पादकत्वं यस्योद्यमस्य तेन । एवेति । अयं सदाचारवाचकपदव्यवच्छेदकः । तस्येति । अवशेषस्य । अत इति । प्रयोजनाभावात् । उक्तेति । भाष्योक्तसदाचारसिद्धिप्रयोजनाभावरूपहेतुद्वयात् । एवेति । हेतुद्वयादेव । एवेति । कृतकर्मव्यवच्छेदकः । प्रकृतेति । पञ्चाग्निविद्यायाम् । 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती'ति प्रवाहणस्य जैवलेः श्वेतकेतुं प्रति प्रश्नः । जैवलेः गौतमं प्रति प्रतिवचनम् ।

एव तस्मात् स्थानादपगच्छति । अन्यथा सद्य एव देहपातः स्यात् । अतो यथा लोके सानुशयः, तथात्रापि । स्मृतिश्च 'यद्यत्र नः स्वर्ग्यसुखावशेषितं स्विष्टस्य दत्तस्य कृतस्य शोभनम् । तेनाजनाभे स्मृतिमज्जन्म नः स्यात् वर्षे हरिर्यद्भजतां शं तनोति' इति देवगाथा । अतो ज्ञानौपयिकजन्म सानुशयवत एव भवति । अन्यथा पूर्वजन्मस्मृत्यभावे विषयासक्तिः प्रसज्येत ।

---

भाष्यप्रकाशः ।

प्रथमं तस्यैव देवकृतत्वेनोक्तत्वात् । न तु कर्म । तस्य मुख्यफलावधिकत्वेनावान्तरफलभोगतस्तदत्ययाभावादत्ययपदविरोधापत्तेः । अनुशयश्चात्रावान्तरफलसाधिका या सामग्री तस्या लेशः । अतः सोमभावनाशे तथेत्यर्थः । हेतुं व्याकुर्वन्ति दृष्टमित्यादि । अन्यथा सद्य एव देहपातः स्यादिति । उक्तरूपस्य लेशस्यापि कर्मजन्यत्वेन कर्मनाश एव तन्नाशात् 'प्रारब्धकर्मनिर्वाणो न्यपतत् पाञ्चभौतिक' इतिवत् सद्य एव देहः पतेत् । तथा सति गमनं न सम्भवेत् । अतो यथा लोके सानुशयः, तथात्रापीत्यर्थः । नन्वेवं सत्यावश्यकत्वाल्लाघवाच्च कर्मशेष एवानुशयोस्तु, न तु सामग्रीशेषोपीत्यत आहुः स्मृतिरित्यादि । तथाचास्यां गाथायां शेषितं स्विष्टं दत्तं कृतमित्यनुक्त्वा, यत् 'स्विष्टस्य दत्तस्य कृतस्य शोभन'मिति स्विष्टादिसम्बन्धिसमीचीनमुक्तम्, तेन कर्मजन्यो भोगसाधकसामग्रीलेश एव विवक्षित इति ज्ञायते, न कर्मशेषः, अतः स एवात्रानुशय इत्यर्थः । सिद्धमाहुः अत इत्यादि । ननु 'कदाचित् सुकृतं कर्म कूटस्थमिव तिष्ठति । मज्जमानस्य संसारे यावद् दुःखाद्विमुच्यत' इत्यन्या स्मृतिः कर्मरूपमप्यनुशयं दर्शयतीति नैकान्तत उक्तरूपानुशयनिश्चय इत्यत आहुः अन्यथेत्यादि । उक्तरूपस्यानुशयस्याभावे पूर्वजन्मस्मारकस्याभावेन पूर्वजन्मस्मृत्यभावे सति विषयासक्तिः प्रसज्येत । अतः प्रकृते उक्तरूप एवानुशयो ग्राह्य इत्यर्थः ।

रश्मिः ।

तस्य प्रश्नस्य प्रतिवचने । तस्यैवेति । सोमभावस्यैव । एवोऽन्यव्यवच्छेदकः । नत्विति । कृतशब्देन नतु कर्म ग्राह्यम् । तस्येति । प्रारब्धातिरिक्तकर्मणः सञ्चितस्य क्रियमाणस्य वा । येति । कर्मरूपा । तथेति । वृष्टिभावं प्राप्नोतीत्यर्थः । एवकारः सूत्रप्रामाण्यात् । एवेति । दृष्टमित्यादीति । तादृशेति । अनुशयदर्शनवद्देहवस्त्रादिसहितः । एवेति । प्रत्यक्षात् । अन्यथाशब्दं व्याकुर्वन्ति स्म उक्तरूपस्येति । अन्यथेत्यस्य अनुशयाभाववत्त्वेनान्येन प्रकारेण देहवस्त्रादिसहित इत्यर्थं मत्वोक्तं तन्नाशादित्यन्तम् । तथा चान्यथेत्यत्र प्रकारे थाल् । पञ्चम्या अव्ययत्वाल्लुक् । एवेति । लेशलेशिनोस्तयादर्शनादेवकारः । तन्नाशात्प्रकारात् । प्रकारो देहादौ । अन्यथाशब्दं व्याख्याय सद्य एवेत्यादिभाष्यं व्याख्यान्ति स्म प्रारब्धेति । सद्य एवेति । विलम्बव्यवच्छेदकः । अतो यथेति भाष्यं विवृण्वन्ति स्म अतो यथेति । अत्रेति । पञ्चाग्निविद्यायाम् । लाघवादिति । शरीरलाघवात् शक्यतावच्छेदकलाघवाच्च । न कर्मेति । यद्येवं स्यात्तदा 'कृतस्य शोभन'मित्येव वदेत् । स एवेति । स्विष्टादिरूपभोगसाधकसामग्रीशेषः । एवकारोऽन्यभाष्यकृत्संमत्या । भाष्ये । स्मृतिमत् जन्म नारदस्येव । नोऽस्माकं देवानाम् । वर्षे अजनाभे भारतवर्षे । यत् यस्मात् । अत इति । देवाभिलषितत्वात् । एवेति । 'कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन्नि'ति श्रुतेरेवेति । प्रकृते । विषयेति । विषयासक्तित्वेन । तत्कृतपूर्वजन्मीनदुःखस्मृत्यभावत्वेन कार्यकारणभावात् । एवेति । नारदभरतादौ दृष्टविषयानासक्तिमज्जन्मिवे-

**ननु अनुशयसहकृत एव जीवो नाद्भिः परिष्वक्तो भवेत्, अत आह यथेतम् । यथागतम् । अन्यथा प्रश्ननिरूपणयोर्बाधः स्यात् । तर्हि तावदवान्तरफलसाधकसहितः स्यात्, अत आह अनेवं च । एवम्प्रकारयुक्तागमनं नास्ति । भोगस्य**

भाष्यप्रकाशः ।

पुनः शङ्कते नन्वित्यादि ।

अयमर्थः । पूर्वजन्मसारकं यददृष्टं वक्तव्यं संस्कृतेन्द्रियप्रभृति, तद्देहमन्तरेण स्वकार्यासमर्थं सद्देहमाक्षेप्स्यति । तथा सति तत एव सिद्धावपां परिष्वङ्गो निःप्रयोजन इति सोमभावनाशेऽपामपि साजात्यान्नाशापत्त्या प्रक्रान्तत्याग ईदृशेनुशये स्यात् । अतोऽयमयुक्त इति पूर्वपक्षस्याशयः ।

सिद्धान्तमाहुः यथागतमित्यादि । धूममार्गे यथेतमित्युक्तम् । अत्राप्यग्रे वृष्टिभावादिरुच्यते । अतः प्रकारान्तरीयदेहाङ्गीकारे तद्विरुध्येतेत्यतो न तथेत्यर्थः । शेषं स्फुटम् ।

तेन सिद्धमाहुः तस्मादित्यादि । अपां भिन्नप्रकारत्वं तु भोगमात्रसाधिकाभ्यः पूर्वाभ्य इदानीन्तनानां वैराग्यसांहित्यात् संस्काराधिक्येन तत उत्कर्षाच्च बोध्यम् ।

अत्रैवं सूत्रार्थः सिध्यति । कृतात्यये देवकृतस्य सोमभावस्य नाशे सति, अनुशयवान् तच्छेषवान् । यथेतं पूर्ववदद्भिः सम्परिष्वक्तः । अनेवं च, अपां संस्कृतत्वात् भिन्नप्रकारेण

रश्मिः ।

वकारः । तत एवेत्यादि । संस्कृतेन्द्रियप्रभृतिभिः । एवकारोऽपां व्यवच्छेदकः । संस्कारसिद्धौ । संस्कारार्थोऽपां परिष्वङ्गः । साजात्यादिति । सोमभावाचन्द्रत्वेन साजात्यात् । नचैकघटनाशेऽपरघटनाशापत्तिरिति वाच्यम् । अपेक्षाबुद्ध्यविषयसाजात्यापेक्षणात् । चन्द्रत्वेन साजात्ये वर्तत इति साजात्यान्नाशापत्तिः । घटत्वेन साजात्ये न वर्तत इति । प्रक्रान्तस्यापां पुरुषभावस्य त्यागः । ईदृश इति । कर्मजन्ये भोगसाधकसामग्रीलेशमात्ररूपे । स्यादिति । अपां सामग्र्यन्तर्गतत्वाभावात्स्यात् । अयमिति । उक्तानुशयः । तथाचायं भाष्यार्थः । अनुशयसहकृत एव, नतु भोगासाधकसामग्रीसहित इत्येवकारो भोगासाधकसामग्रीं व्यवच्छिनत्ति । अत आह नाद्भिर्भोगासाधकसामग्रीरूपाभिः परिष्वक्तो भवेत् । अत एतादृशपूर्वपक्षाद्भगवान्व्यास आह यथेतमितीति । प्रकृते । धूममार्ग इति । 'अथ य इमे ग्राम इष्टापूर्ते दत्त इत्युपासत'इत्यादिना छान्दोग्योक्ते । यथा येन प्रकारेण इतं गतं चन्द्रलोके तथा एतमेवाध्वानं पुनर्निवर्तन्ते यथेतं इत्यर्थः । अग्रे तमेवाध्वानमाह 'आकाशमाकाशाद्वायुं वायुर्भूत्वे'त्यादिना । अर्थः पूर्वमुक्तः । कर्मी आकाशं प्रतिपद्यते । अत्रापीति । आर्चिरादिमार्गेपि । वृष्टीति । अब्रूपत्वम् । आदिनान्नरेतआदि । अन्यथेत्यादिभाष्यार्थमाहुः अतः प्रकारेति । श्रुत्युक्तत्वादप्रकारादन्यप्रकारो निष्प्रयोजनास्यागप्रकारः तत्सम्बन्धिदेहाङ्गीकारे तत् प्रश्ननिरूपणं अब्रूपदेहविषयकं विरुध्येत बाध्येत । 'यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती'ति प्रश्नः । 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती'ति निरूपणम् । अधिकमाहुः सङ्गत्यर्थम् । इत्यत इत्यादि । न तथा कर्मजन्यभोगसाधकसप्रयोजनसामग्रीमात्रलेशत्वेन लेशो नेत्यर्थः । शेषं स्फुटमिति । तर्हि यथेतमित्यङ्गीकृते तावत् अपां पुरुषवचस्त्वमवधि मोक्षावान्तरफलं शरीरं तत्साधिका निःप्रयोजनसप्रयोजनसामग्री कर्मजन्या तत्सहितः स्यात् । ततु चन्द्रमण्डले भोगस्य जातत्वान्न सम्भवति । आगमनस्य तादृशभोगजनकत्वरहितसामग्रीसहितत्वेन यथेतं तथागमनाभावादतो भगवान् व्यास आह अनेवं चेति । च पुनः आगमनमनेवं भिन्नो भोगरहितप्रकारस्तेन युक्तमागमनमपाम् । एवंप्रकारो भोगजन-

जातत्वात् । चकारात् वैराग्यसहितोपि । तस्मादनुशयवान् भिन्नप्रकारान्निः परिष्वक्तो देवकृपासहितो वृष्टिर्भवतीति ॥ ८ ॥

चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥

किञ्चिदाशङ्क्य परिहरति । ननु नात्रोत्तमजन्मार्थमनुशयोऽपेक्ष्यते, चरणादेव भविष्यति, 'तद् य इह रमणीयचरणा अभ्याशो ह यत् ते रमणीयां योनिमापद्येर'न्नित्यादिना यः पूर्वजन्मनि विहिताचारं करोति, स उत्तमं जन्म प्राप्नोति, यस्तु निषिद्धाचरणं करोति, स श्वादियोनिं प्राप्नोतीति 'साधुकारी साधुर्भवती'त्यादिश्रुत्या च प्रतिपाद्यते, प्रकृते तु तस्य रमणीयचरणस्य चरणादेव तस्य सम्यग् जन्म भविष्यति, किमनुशयसहभावेनेति चेत् । न । चरणश्रुतौ या योनिरुक्ता, सा उपलक्षणार्था, अनेन पूर्वजन्मनि समीचीनं कृतमिति ज्ञापिका, न तु तस्मिन्

भाष्यप्रकाशः ।

नीचैर्वृष्टिभावार्थं रंहति । चकारो नीचैरागमनस्य द्योतकः । तत्र हेतुः दृष्टस्मृतिभ्यामिति ॥८॥

चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥९॥ किञ्चिदित्यादिना सूत्रमवतार्य पूर्वपक्षांशं व्याकुर्वन्ति नन्वित्यादि । श्रुतौ 'अभ्याशो ह'ेति पदं क्षिप्रार्थकम् । यत्पदं तु क्रियाविशेषणं हेत्वर्थकं वा । तथाच यद्यप्येताभ्यां श्रुतिभ्यां यथायथमाचारतः कर्मतश्च जन्मोक्तम्, तथापि प्रकृते पञ्चाग्निप्रकरणे तु चरणादेवोक्तम्, अतोत्र तदेव ग्राह्यमित्यर्थः । परिहाराशयमाहुः नेत्यादि । चरणस्य जन्मनियामकत्वोपगमेपि न तज्जन्मीनकर्मनियामकत्वम् । उक्तरूपनिषिद्धकर्मप्रत्यक्षविरोधात् ।

रश्मिः ।

कत्वं तद्युक्तागमनमपां नास्ति । भोगस्य चन्द्रमण्डले जातत्वादागमनसमये तदभावात् । उपसंहारादाहुः चकारादिति । अपिनानेवं चेत्यस्य यथेतमित्यनेन समुच्चयः । अपिः समुच्चये । एवं शेषं स्फुटमित्यर्थः । वैराग्येति । भोगानन्तरं वैराग्यप्रसिद्धेः । 'तस्माज्जुगुप्सेते'त्युपसंहाराच्च । संस्कारेति । संस्कृतेन्द्रियसंस्कारेण द्विगुणसंस्कारेण ततो गमनादुत्कर्षात् । बोध्यमिति । अनुशयवानिति । विद्याप्रकरणेन कपूययोनिबाधाय ज्ञानौपयिकदेहसाधनाय चेदम् । देवकृपासहित इति तु देव इत्यनुवृत्तावपि पुनर्देवाः सोम९ राजानं जुह्वतीति देवपदोपादानात् । तच्छेषवानिति । कर्मजन्यभोगसाधकसामग्रीलेशवान् । भिन्नेति । गमनप्रकारे भोगसाधकत्वं आगमनप्रकारे वैराग्यसाहित्यम् । भोगस्य जातत्वात् । किञ्च । गमनमुच्चैः द्युलोकस्योच्चत्वात् । तद्भिन्नप्रकारेण नीचैर्नीचैस्त्वेन । अनेन यथेतमनेवं चेत्यनयोर्विरोधः परिहृतः । यथेतं तथागतं इत्युक्त्वानेवं आगमनमित्युक्तेर्विरोधः । रंहतीत्यनुवर्तते पूर्वसूत्रात् । चकारार्थो भाष्ये वाच्य उक्तोऽतस्तस्य भाष्योक्तस्य द्योत्यार्थमाहुः चकार इति ॥८॥

चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥ इतिपदमिति । नच 'अव्ययादाप्सुप' इति विभक्तेर्लुका लुप्तत्वेन पदत्वाभावः 'न लुमताङ्गस्ये'ति सूत्रादिति शङ्क्यम् । पदशब्दस्य शब्दे लक्षणाङ्गीकारात् । अभेदो लक्षणा । पदशब्दयोरभेदात् । शक्तं पदं वा । क्वचिन्नैयायिकमताङ्गीकारात् । यथात्रेव सोमाद्वृष्टिभावे रूपरसादीनामिति । एताभ्यामिति । रमणीयचरणकपूयचरणाभ्यां 'साधुकारी साधुर्भवति पापकारी पापो भवती'त्येताभ्याम् । जन्मेति । कपूयरमणीयजन्मोक्तम् । चरणादेवेति । एवकारः साधुकारीतिश्रुतिव्यवच्छेदकः । अनुशयव्यवच्छेदको वा । तदेवेति । चरणम् । एवकारोऽनुशयसहभावव्यवच्छेदकः । अन्यथेत्यादि विवृण्वन्ति स्म चरणस्य जन्मेत्यादि । अयमन्यथाशब्दार्थः । अपिर्गर्हायाम् । उक्तेति । भाष्योक्तश्रुत्युक्तकपूयचरणरूप-

जन्मनि समीचीनकरणे नियामिका, अन्यथा ब्राह्मणानां निषिद्धकरणं न स्यात् । तस्मादनुशयोऽपेक्ष्यते ज्ञानोपयोगार्थमिति कार्ष्णाजिनिराचार्यो मन्यते ।

कार्ष्णाजिनिग्रहणं पञ्चाग्निविद्याया भिन्नप्रकारत्वज्ञापनार्थम् । तस्मादस्य स्वमते भिन्नत्वान्न शङ्का, नचोत्तरम् । न हि पञ्चाग्निविद्यायां पुरुषादन्यभावः सम्भवति । प्रकरणपरिगृहीता श्रुतिर्नान्यत्र न्यायसम्पादिका ॥ ९ ॥

भाष्यप्रकाशः ।

अतस्तदर्थमनुशयेऽवश्यं वाच्ये जन्मबोधिकापि चरणश्रुतिः 'काकवद्देवदत्तस्य गृह'मितिवत् पूर्वजन्मकृतं समीचीनं कर्मोपलक्षयिष्यति । यत् ये रमणीयचरणास्ते रमणीयां योनिं आसमन्तात् पद्येरन् । गत्यर्थपद्यतेर्ज्ञानार्थत्वात् तत्र विशेषावधारणे कर्मजन्यां तां योनिं ज्ञापयेयुरित्यर्थात् । अतः सिद्धमनुशयेनेति कार्ष्णाजिनेराशयः । नामग्रहणप्रयोजनमाहुः कार्ष्णाजिनीत्यादि । भिन्नप्रकारत्वं तु कर्मशेषरूपानुशयशून्यत्वम् । तेन सिद्धमाहुः तस्मादित्यादि । कार्ष्णाजिनिमतीयात् कर्मशेषरूपानुशयात् अस्य भोगसाधकसामग्रीशेषरूपस्य फलशेषस्यानुशयस्य भिन्नत्वात् तस्य च दृष्टस्मृतिभ्यां सिद्धतया चरणेन गतार्थताया आपादयितुमशक्यत्वान्नाशङ्का । तदभावादेव च नोत्तरमप्यपेक्षितमित्यर्थः । एतदेवोपपाद्य दर्शयन्ति न हीत्यादि । पञ्चाग्निविद्यायां हि उक्तप्रकारेण देवैर्हुतस्य प्रश्ननिरूपणाभ्यां पुरुषभावः प्रतिपादितः, अतः साङ्गाद्वैदिककर्मणः फलावश्यंभावनियमेन पुरुषादन्यभावो न सम्भवत्यतोऽस्याः कर्मान्तराद्भिन्नप्रकारत्वम् । पञ्चाग्निश्रुतिश्च प्रश्नादिबोधितप्रकरणपरिगृहीता न कर्मान्तरस्थले न्यायसम्पादिका । अतो नात्र शङ्कोत्तरे, किन्त्वन्यत्रैव ते इत्यर्थः ॥९॥

रश्मिः ।

प्रत्यक्षविरोधात् । व्युत्क्रमेण व्याख्याने यदि वाक्यार्थज्ञानं भवेत्तदोपलक्षणज्ञानं तेन ज्ञापकरूपार्थान्तरमिति वक्तुमाहुः अत इति । तदर्थमिति । निषिद्धकर्मकरणनिवृत्तये । मशकार्थो धूम इतिवत् मशकनिवृत्तये इत्यर्थात् । 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिष्वि'ति कोशात् । जन्मबोधिकापि । शक्यार्थो जन्मेत्यर्थः । तथापि युगपद्वृत्तिद्वयविरोधो न, उपलक्षणस्य तात्पर्यवृत्तौ पर्यवसानात् । शब्दमात्रस्य व्यञ्जकत्वमपीष्यत इत्याहुः काकवदिति । मतुबन्तम् । गृहस्य तटस्थलक्षणम् । उपेति । तात्पर्यवृत्तिं समीचीनकर्मनिष्ठां करिष्यति । उपलक्षणं समीपपदार्थलक्षणा सा तात्पर्यानुपपत्तौ स्वबीजे पर्यवस्यति लाघवात् । शक्यसम्बन्धस्य पाश्चात्यस्य स्वीकारे गौरवात् । तथाच क्व युगपद्वृत्तिद्वयविरोधः । यत् यथा भवति तथा । यत् यस्माद्वा । तत्रेत्यादि । पदने ज्ञानत्वरूपविशेषावधारणे । तामिति । रमणीयां योनिमस्य जीवस्य ज्ञापयेयुः । भाष्यीयानेनपदस्यार्थोऽनेन जीवेनेति । स्पष्टमन्यद्भाष्यम् । आपादयितुमिति । यदि स्वमतेऽस्मात् कर्मशेषरूपानुशयः स्यात्तदाशङ्केत्यापादयितुम् । कर्मशेषरूपानुशय आपादकः । आपाद्याशङ्का । अपेक्षितमिति । स्वमते । पञ्चाग्नीति । प्रकरणेति भाष्यविवरणम् । प्रश्नादीति । पञ्चाग्निविद्याप्रकरणम् । न कर्मेति । पञ्चाग्निविद्याऽप्राकरणिककर्मान्तरस्थले न । न्यायेति । वक्ष्यन्ति च 'यदेव विद्यये'ति हीति सूत्रभाष्ये । नात्रेति । भाष्ये न शङ्कोत्तरे । अन्यत्रैवेति । आगममते । एवकारः कार्ष्णाजिनिपदात् । कृष्णाजिनस्यापत्यं कार्ष्णाजिनिः । अत इञ् । कृष्णाजिनं ब्रह्मेति संहिता । कृष्णाजिनं सर्पो भवतीति दृष्टम् । संहितायां औषधिविद्या सान्नाय्यविद्येति माधवीये । तत्र सान्नाय्यविद्या प्रसिद्धा । औषधिविद्या काष्ठपुंसा मृगपातनरूपा दृष्टा । वयसां सृष्टिः कपोतानां दृष्टा । शब्दप्रत्यक्षं घण्टाके जातम् । ॐ सच्चिदालिङ्गनप्रसूः ततो नीचैः ॐ सच्चिदालिङ्गनप्रसो इति मन्त्रद्वयम् । वेदान्ते तु सर्वात्मभावविद्या । 'वशे कुर्वन्ति मां भक्त्ये'ति वाक्यात् ॥९॥

## आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥

**नन्वेवं सति चरणश्रुतिरनर्थिका, ज्ञापनायां प्रयोजनाभावात्, अतो विधायकत्वं श्रुतेः, इष्टानिष्टफलबोधकश्रुतिवत्, अतः कर्मतारतम्येन फलविधानान्निष्कामकर्मकर्तुर्ज्ञानोपयोगिदेहविधानं भविष्यतीति अनुशयसहभावो व्यर्थ इति चेत् । न । तदपेक्षत्वात् । धूमादिमार्गस्य तस्याः श्रुतेरपेक्षत्वात् । काम्येष्टादिकारिणः**

---

भाष्यप्रकाशः ।

**आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥** साधारणानुशयपक्षे किञ्चिदाशङ्क्य परिहरतीत्याशयेन पूर्वपक्षांशं व्याकुर्वन्ति नन्वित्यादि ।

अयमर्थः । चरणश्रुतेः पूर्वजन्मीनकृत्युपलक्षकत्वं तस्या वैयर्थ्यापादकम् । न हि तस्मिन् ज्ञात इह जन्मनि कोपि पुमर्थः सिद्ध्यति । अतस्तदभावाय चरणेनैतज्जन्मनि विधायकत्वं तस्या अङ्गीकार्यम् । यथा 'प्रतितिष्ठन्तीह वै य एता रात्रीरुपयन्ती'ति 'केवलाद्यो भवति केवलादी'त्यादौ प्रतिष्ठाकेवलाद्यत्वादिबोधनेन रात्रिसत्रं कुर्यात्, केवलादनं न कुर्यादिति कल्प्यते, तथा रमणीययोनिकामो रमणीयाचरणं कुर्यादिति । अतः कर्मतारतम्येनात्र फलस्यैव विधानान्निष्कामकर्तुर्ज्ञानोपयोगिदेहविधानं तादृशदेहोत्पत्तिश्चरणादेव भविष्यतीत्यनुशयसहभावो व्यर्थ इत्यर्थः ।

परिहारांशं व्याकुर्वन्ति धूमादीति । अपेक्षत इत्यपेक्षः । पचाद्यच् । तस्या अपेक्षस्तदपेक्षः । धूमादिमार्गस्य तथात्वादित्यर्थः । धूमादिमार्गस्य कथं चरणश्रुत्यपेक्षत्वमित्याकाङ्क्षायां तद्व्युत्पादयन्ति काम्येत्यादि । द्विविधा हीष्टादिकारिणो निष्कामाः सकामाश्च । तत्राद्यस्य फलसामग्रीशेषरूप एवानुशय इत्युक्तम् । द्वितीयस्य तु देवगाथोक्तबुद्ध्यभावात् सुकृते भुक्ते तदनन्तरमुत्पत्तौ 'सुखानन्तरं दुःख'मिति न्यायेन पापस्यैवोपस्थितत्वादसमीचीनशरीरप्राप्तिरापद्यते । सा तस्य मा

रश्मिः ।

**आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥ साधारणेति ।** कर्मशेषोऽनुशय इति पक्षे । **वैयर्थ्येति ।** यदि चरणश्रुतिः पूर्वजन्मीनकृत्युपलक्षिका स्यात्तदेह जन्मनि पुमर्थासिद्ध्या व्यर्था स्यादित्येवं वैयर्थ्यापादकम् । **तस्मिन्निति ।** साधारणानुशये । हेत्वन्तं भाष्यं विवृतम् । **अतो** वीत्यादिभाष्यं विवृण्वन्ति स्म **अतस्तदिति । विधायकत्वमिति ।** किञ्चिद्विधायकत्वम् । **इष्टे**त्यादिभाष्यं विवृण्वन्ति स्म **यथा प्रतीति । इत्यादाविति ।** प्रयोजनगौरवग्रन्थविस्तरभियादिशब्दार्थौ नोच्यते । एवमन्यत्रापि । **रात्रीति ।** 'ये प्रतितिष्ठासन्ति त एता रात्रीरुपेयु'रित्यर्थाद्रात्रिसत्रं कुर्यात् । **केवलादीति ।** केवलश्चासावादः केवलादः सोऽस्यास्तीति केवलादीति । श्रुतौ केवलस्यादविशेषणत्वमभिप्रेत्याहुः **केवलादनमिति ।** केवलश्चासावादी चेति पक्ष आद इत्यत्र समीचीनादे पङ्क्तिभेदापादकादे च लक्षणादशब्दस्येति स नाङ्गीकृतः । अतः कर्मेति भाष्यं विवृण्वन्ति स्म **अतः कर्मेति । फलस्यैवेति ।** रमणीययोनिरूपफलस्य । एवकारश्चरणव्यवच्छेदकः । **विधानादिति ।** रमणीयचरणश्रुतौ स्वोक्तफललिङ्गं तद्रमणीययोनिकामो रमणीयाचरणं कुर्यादिति विनियोक्त्रीं श्रुतिं कल्पयित्वा विनियोजकमिति तथा । **चरणादेवेति ।** आचारात् । एवकारोऽनुशयव्यवच्छेदकः । **इत्युक्तमिति ।** कृतात्ययसूत्रभाष्यप्रकाशे । स च भोगः सकामानामित्यादिनोक्तम् । **देवगाथेति ।** कृतात्ययसूत्रभाष्य उक्ता देवगाथा । बुद्धिस्तु 'हरिर्यद् भजतां शं तनोति' इत्युक्ता । भजतां शंविस्तारकर्तृत्वेन हरिविषयिणी बुद्धिः । **इति न्यायेनेति ।** 'ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ती'ति श्लोको न्यायस्तेन । **पापस्यैवेति ।** एवकारेण सुकृतव्यव-

फलभोगानन्तरमुत्पत्तौ 'सुखानन्तरं दुःख'मिति न्यायेन पापस्यैवोपस्थितत्वादसमीचीनशरीरप्राप्तिर्मा भवत्विति रमणीयानुष्ठातॄणां रमणीयशरीरप्राप्तिरेव बोध्यते, न न्यायेनासमीचीनशरीरमिति। तस्मादन्यनिषेधार्थं सार्थकत्वान्नानुशयप्रतिषेधिका ।

किञ्च । रमणीययोनिः किमाकस्मिकी, सकारणा वा । नाद्या वेदवादिनाम्,

---

भाष्यप्रकाशः ।

भवत्वित्येतदर्थं रमणीयानुष्ठातॄणां रमणीयशरीरप्राप्तिरेव बोध्यते । ये सकामा इष्टादिकारिणस्ते समीचीनाचरणात् समीचीनं शरीरमाप्नुवन्ति, न न्यायेनासमीचीनं शरीरमिति । तस्मात् सकामानामसमीचीनशरीरनिषेधार्थं तस्या उक्तत्वान्नानुशयस्य सा प्रतिषेधिका । धूममार्गमुपक्रम्य तस्या उक्तत्वात्, 'तद्य इहे'त्यनेन तन्मार्गीयाणामेवोल्लेखाच्च धूममार्गस्यैव तदपेक्षत्वम् । 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती'त्यादिना पञ्चाग्निविद्यायाः समापितत्वाच्च तस्यां तदपेक्षेति तथेत्यर्थः ।

ननु 'तद्य इहे'त्यत्रान्नादानां रेतःसिचामेवोल्लेखः, तथात्वं च निष्कामकारिष्वपि तुल्यम् । अतस्तेष्वपि नानुशयापेक्षेत्यत आहुः किञ्चेत्यादि । यत्त्वं देहार्थमनुशयं नाङ्गीकरोषि, तत् किं रमणीययोनिराकस्मिकी तवाभिप्रेता, उत सकारणा । तत्राद्या कल्पना तु बाह्यत्वापादिका । अतो द्वितीयः पक्ष आदर्तव्यः । तत्र चरणमेव कारणत्वेन त्वया वाच्यम् । चरणं शीलम् । 'अक्रोधः सर्वभूतेषु कर्मणा मनसा गिरा । अनुग्रहश्च ज्ञानं च शीलमेतद्विदुर्बुधा' इति स्मृत्युक्तं वा । 'शुचौ तु चरिते शील'मिति कोशाद्वर्णाद्यविरुद्धमन्यद्वा स्वकर्म चरणपदेन ग्राह्यम् । तदा 'स्वकर्मणा पितृलोक' इति वाक्यादग्निष्वात्तादिलोकस्तत्फलम् । तथा पैतृमेधिकेन संस्कृतानां सपिण्डीकरणवाक्यानुरोधाद्वस्वादिरूपता च वक्तव्या । तथा 'प्रजामन्वि'ति वाक्यानुरोधात् पुत्रगृहे तत्पुत्ररूपेण जननमपि वक्तव्यम् । तथा 'त्रैविद्या मा'मिति वाक्यान्मर्त्यलोके पूर्ववदेव सोमपात्वेन भवनं

रश्मिः ।

च्छेदः क्रियते । प्राप्तिरेवेति । कपूयचरणव्यवच्छेदक एवकारः । न न्यायेनेति भाष्यं विवृण्वन्ति स्म ये सकामा इति । तस्मादित्यादिभाष्यं विवृण्वन्ति स्म तस्मादिति । तस्या इति । चरणश्रुतेः । एवेति । अर्चिरादिमार्गव्यवच्छेदकोऽयम् । तस्यामिति । पञ्चाग्निविद्यायाम् । तदपेक्षा चरणश्रुत्यपेक्षेति । तथा नानुशयप्रतिषेधिकेत्यर्थ इत्यर्थः । अन्नादानामिति । 'यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येर'न्निति श्रुतेः । बाह्यत्वेति । यतो वेदवादिनां नाद्या । ईश्वरस्य कर्तृत्वात् । चरणं आचरणं शीलमिति पर्यायाः । अन्यव्यवच्छेदक एवकारोऽश्रुतत्वात् । स्वकर्मणेतिभाष्यं विवृण्वन्ति स्म तदा स्वेति । अग्निष्वात्तेति । अग्निष्वात्तादयः पितृगणाः । वस्विति भाष्यं विवृण्वन्ति स्म तथेति । आहिताग्नेर्दहनादिसंस्कारः पितृमेधः । पितृमेधेन संस्कृतं पैतृमेधिकं कर्म, तेन 'संस्कृत'मिति सूत्रेण ठक् । तेनेत्यनुवर्तते । सापिण्ड्यं साप्तपौरुषम् । तत्रोक्तवस्वादित्यरूपता । प्रजामित्यादिभाष्यं विवृण्वन्ति स्म तथेति । वक्तव्यमिति । तथाच स्मशानान्तक्रियाकारयितारः स्मशानान्तक्रियाकृत इति वक्तव्यम् । त्रैविद्येतिभाष्यं विवृण्वन्ति स्म तथा त्रैविद्येति । पूर्ववदिति । पञ्चाग्निविद्यावत् । यद्वा । पूर्ववाक्यवत् । पुनर्भवनमिति भाष्यात् । एवकारस्तु

द्वितीये तु 'स्वकर्मणा पितृलोक' इति वस्वादित्यरूपता च वक्तव्या। 'प्रजामनुप्रजायन्ते स्मशानान्तक्रियाकृत' इति च। 'त्रैविद्या मां सोमपा' इत्यादिना इन्द्रलोकभोगानन्तरं तथैव पुनर्भवनं च वक्तव्यम्। नच सर्वेषामैक्यम्। भिन्नरूपत्वात्। तस्मात् कर्मकर्तृवैचित्र्येण श्रुतिस्मृतिभेदाः समर्थयितव्याः, न त्वेकमपरत्र निविशते। उपरोधप्रसङ्गात्। तथाच प्रकृतेपि अनुशयाभावे भक्षणभवनयोर्नियमो न स्यात्। ब्राह्मणादीनामप्यन्ने बलिहरणे श्वचण्डालयोर्भक्षणम्। ब्राह्मणभक्षणेपि

भाष्यप्रकाशः।

वक्तव्यम्। नच सर्वेषां फलैक्यम्। तेषां फलानां देशभेदेन प्रकारभेदेन च भिन्नरूपत्वात्। तस्मात् फलभेदे कारणभेदस्यावश्यकत्वात् कर्मवैचित्र्येण भिन्नस्वभावकर्तृवैचित्र्येण च वाक्यभेदाः समर्थयितव्याः। इदं वाक्यमेतादृशकर्मपरमेतादृशकर्तृपरमिति। 'ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना। करणं कर्म कर्तेति त्रिविधः कर्मसंग्रह' इति प्रतिज्ञाय गीतायां तद्भेदानामुक्तत्वात्। एवं सिद्धे असङ्कीर्णत्वे तत्र तत्र तत्तत्फलभोगोत्तरमावृत्तौ तज्जन्मीनकर्मनियमार्थमनुशयोऽवश्यं वक्तव्यः। एवं यथान्यत्र, तथाच प्रकृतेपि तथैव प्रकृते चरणवाक्ये, अपिशब्दात् ततः पूर्वस्मिन् धूममार्गवाक्ये च नानाभानां तद्भक्षणस्य नानायोनीनां चोक्तत्वादनुशयस्तत्रापि नियामकत्वेनावश्यमभ्युपेयः। तदभावे भक्षणभवननियमाभावापत्तेः। नच भक्षणे तस्य न नियामकत्वमिति शङ्क्यम्। ब्राह्मणादीनामित्याद्युक्तप्रकारस्य दर्शनादनुशयाभावे भक्षितादप्यन्नात् समीचीनं रेतो न

रश्मिः।

सोमपात्वान्यव्यवच्छेदकः। तथैवेतिभाष्यं विवृतम्। नचेतिभाष्यं विवृण्वन्ति स्म नचेति। भिन्नेतिभाष्यं विवृण्वन्ति स्म तेषामित्यादिना। देशेति। देशः स्थानं तद्भेदेन। तस्मादितिभाष्यं विवृण्वन्ति स्म तस्मादिति। कर्मेति। संज्ञाभेदात्कर्मभेदस्तेन वैचित्र्यं पूर्वतन्त्रद्वितीयाध्याये। तेन। कर्त्रिति। एकादशस्कन्धे 'तेषां प्रकृतिवैचित्र्याच्चित्रा वाचः स्रवन्ति ही'ति वाक्याद्वाक्यभेदकर्तृवैचित्र्ययोः कार्यकारणभावः। तद्भेदानामिति। ज्ञानज्ञेयादिभेदानाम्। ज्ञेयं कर्म। विधिपादे कर्मनोदना कर्मविधिरेव ज्ञानविधिः परिज्ञातृविधिश्च। अष्टादशाध्याय उक्तत्वात्। असंकीर्णत्व इति। एतेन भाष्य उपरोधस्य साङ्कर्यमर्थ इत्युक्तम्। तथाचेति भाष्यं विवरीतुं सङ्गत्यर्थमाहुः एवं यथान्यत्रेति। विवृण्वन्ति स्म तथैव प्रकृते इति। चकार एवकारार्थे। उक्तरीत्या सङ्गत्यर्थमेवं यथान्यत्रेति वाक्यपूरणे। शब्दादिति। अनुशयवाचकशब्दात्। रमणीयचरणरूपात्। पूर्वस्मिन्निति। 'त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते ततो वै खलु दुर्निष्प्रपतरं यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्रूप एव भवती'तिपूर्वस्मिन्। खल्विति खेदे। दुर्निष्प्रपतरमिति। अत्राकारस्य लुप्तत्वाद्दुष्प्रापतरम्। व्रीह्यादिसंश्लेषणं दुष्प्रापतरम्। रेतःसिग्देहसम्बन्धरूपम्। अन्यैर्भुज्यन्ते काकतालीयवृत्त्या रेतःसिग्भिर्भक्षणमिति। नानेति। नानेत्यादि स्पष्टम्। नानायोनीनां त्वित्थम्। यो रेतः सिञ्चति तद्रूप एव भवतीति सामान्यतो नानायोनयस्तासां सामान्यत उक्तत्वात्। अनुशयाभाव इति भाष्यं विवृण्वन्ति स्म तदभाव इति। अन्नभक्षणयोनिभवनयोर्नियमाभावापत्तेः। एवं त्वनुशयमवरुध्य तयोर्नियमः। ब्राह्मणादीनामित्यादिभाष्यं विवरीतुमाहुः न चेति। तस्येति। अनुशयस्य। ब्राह्मणादीनामिति। उक्तप्रकारस्तु ब्राह्मणादीनामप्यन्ने बलिहरणरूपे श्वचाण्डालयोः स्वभागादन्नभक्षणम्। ब्राह्मणकर्तृकभक्षणेपि मलभावेत्यादि स्पष्टम्। अयम्। तस्य दर्शनात्। समीचीनमिति। सामीचीन्यं कपूययोन्यनुत्पादकत्वम्।

**मलभावे शूकरभक्षणम् । अनुशयस्य नियामकत्वे तुषादिष्वन्नभाव एव यावत् समीचीनरेतोभावः । तस्मादुपलक्षणतैव चरणश्रुतेर्युक्ता । तस्मादनुशयसहित एव वृष्टिभावं प्राप्नोतीति सिद्धम् ॥ १० ॥**

## सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥

भाष्यप्रकाशः ।

स्यात् । तादृशस्य रेतसः अभावे ततः समीचीनयोनेरप्यभावः । अतो रमणीययोनिं प्रति चरणस्य हेतुत्वं वदताप्यवश्यं नियामकत्वेनानुशयोऽङ्गीकार्यः । नचान्नभावेपि तत्र तुषस्यापि दर्शनात् ततः समीचीनरेतोनुत्पत्तिः शङ्क्या । तस्य गोप्रभृतिभिर्भक्षणे ततो दुग्धरूपेणान्नभावस्य सिद्धेः । अद्यमानस्यैवान्नत्वादिति । एवं सिद्धे तस्यावश्यकत्वे अनुसीव्यमानस्य तस्यैव चरणं प्रत्यपि नियामकत्वम् । अतः सकाम एव धूममार्गे नानाफलानामुक्तत्वात् तत्रैव चरणापेक्षा, न तु निष्कामे पञ्चाग्निविद्यासम्पादितदेहे । तस्मादत्र योन्यादिनिरूपणद्वाराप्यनुशयोपलक्षणतैव चरणश्रुतेर्युक्तेत्यर्थः । सिद्धमाहुः **तस्मादनुशयेत्यादि** । **तस्मादिति** । सर्वत्राप्यनुशयस्यावश्यकत्वात् ॥ १० ॥

**सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥** एवं चरणादेव फलं भविष्यत्यनुशयाङ्गीकारो व्यर्थ इत्याशङ्क्य कार्ष्णाजिनिमतोपन्यासेन तदुपष्टम्भेन च धूमादिमार्गे कर्मात्मकानुशयस्याप्यावश्यकत्वं साधितम् । अतः परं तस्य कियत्पर्यन्तमनुवृत्तिरित्याकाङ्क्षायां तद्विवेक्तुमिदं सूत्रं प्रवृत्त

रश्मिः ।

**रेतसः अभाव इति** । स्मार्तः प्रयोगः । अतो नात्र 'अतो रोरप्लुतादि'त्यस्य प्राप्तिः । **अनुशय इति** । कपूययोनिनिवर्तकः । अनुशयस्येतिभाष्यं विवृण्वन्ति स्म **न चान्नभाव इति** । परम्परया समीचीनरेतोभाव इत्याहुः **तस्येत्यादि** । **दुग्धेति** । दुग्धस्य रेतोजनकत्वं वैद्यके प्रसिद्धम् । तेन 'यावत्समीचीनरेतोभाव' इति भाष्यमपि व्याख्यातम् । एवकारार्थमाहुः **अद्येति** । एवकारो वेदान्ते योगमात्रात् योगरूढिव्यवच्छेदकः । अनुशये सिद्धमाहुरेवं **सिद्ध** इत्यादि । **तस्यैवेति** । अनुशयस्य । एवकारो भगवदिच्छाव्यवच्छेदकः । परम्पराकारणभूताया एवंविधविषयत्वात् । **सकाम इति** । सप्तम्यन्तम् । एवकारो निष्कामव्यवच्छेदकः । **निष्काम इति** । धूममार्ग इत्येव । निष्कामो धूममार्गो मोक्षफलकः । पौर्वतन्त्रीयषष्ठाध्याये आत्मकामस्यापि प्रवेशनीयत्वात् । अन्यथा कर्ममिश्रचित्तशुद्धिद्वारा मोक्षबोधकपुराणभागो व्यर्थः स्यात् । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ती'तिश्रुतिश्च । तस्मादितिभाष्यं विवृण्वन्ति स्म **तस्मादिति** । **योन्यादीति** । आदिना 'तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येर'न्नित्यस्या अग्रे 'ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वे'त्युक्तविशेषयोनयो ग्राह्याः । शक्यार्थनिरूपणद्वारापि । अपिना शक्यार्थपरित्यागेन लक्षणामात्रम् । शक्यार्थः सम्बन्धमात्रग्राहकः । एवेति । शक्यार्थवाचकत्वव्यवच्छेदक एवेति । तथा च लाक्षणिकायाश्चरणश्रुतेर्युक्तेत्यर्थः इति काशकृत्स्नमते, स्वमतं तात्पर्यवृत्त्यङ्गीकारेणोक्तं पूर्वं व्यासमतवर्तित्वादाचार्याणाम् । **आवश्यकत्वादिति** । भाष्ये एवकार उक्तोपपादनात् ॥ १० ॥

**सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥** एवकारव्यवच्छेद्यमाहुः **अनुशयेति** । **व्यर्थ इति** । व्यवच्छेद्यो व्यर्थः । **तदुपेति** । आनर्थक्यसूत्रेण तथा । **कर्मात्मकेति** । कर्मण आत्मा शेषः स्वार्थे कः । तस्यानुशयस्य । **अपीति** । पदार्थसम्भावनायां कर्मजन्यभोगलेशसामग्रीशेषस्यावश्यकत्वम् । **कियदिति** । कियतां पुरुषाणां पर्यन्तमनुवृत्तिरिति प्रश्नः । निरनुशयपक्षशङ्कैव नास्तीत्युत्तरं फलिष्यति ।

१. साधक ।
ब्र० सू० र० ६

फलांश एवानुशय इति तु स्वमतम्। कर्म फलं च द्वयमेवेश्वरेच्छया नियतम्। कर्म पुनर्भगवत्स्वरूपमेव ब्रह्मवादे। सोऽभिव्यक्तः फलपर्यन्तं तदादिसंयोग इति स्वमतम्। अन्तसंयोगपक्षमाहैकदेशित्वज्ञापनाय।

भाष्यप्रकाशः।

इति बोधयितुं सूत्रमवतारयन्ति फलांश इत्यादि। पञ्चमस्कन्धोक्तदेवगाथारूपस्मृतौ फलांशरूप एवानुशय इति सोऽन्तिमं भगवत्स्मृतियुक्तं जन्मोत्पाद्य निवर्तते। तदुत्तरं यन्मोक्षसाधनमपेक्षितम्, तत्तु शरणपूर्वकं भजतां भगवानेव सम्पादयति। यदि कथञ्चित् पापोत्पत्तिः, तदापि 'स्वपादमूलं भजतः प्रियस्य त्यक्तान्यभावस्य हरिः परेशः। विकर्म यच्चोत्पतितं कथञ्चित् धुनोति सर्वं हृदि संनिविष्ट' इति, 'यत् करोषि यदश्नासी'त्यादिवाक्यात् साक्षात् परम्परया वा भगवतैव निवार्यत इति न पूर्वोक्तानुशयापेक्षेति स्वमतम्।

किञ्च। कर्मात्मकानुशयपक्षेपि, कर्म तत्फलं चेति द्वयं 'एष उ एवे'त्यादिश्रुत्या ईश्वरेच्छयैव नियतम्। कर्म पुनर्भगवत्स्वरूपमेव ब्रह्मवादे। 'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च। वासुदेवात् परो ब्रह्मन् चान्योऽर्थोऽस्ति तत्त्वत' इति द्वितीयस्कन्धे ब्रह्मवाक्यात्। स द्विविधकर्मस्वरूपो भगवान् फलपर्यन्तमभिव्यक्तस्तिष्ठति। सम्पूर्णे फले जाते तिरोधत्ते। कर्मशेषात्मकोऽनुशयो निवर्तते। अतस्तस्य अभिव्यक्तिमारभ्य फलपर्यन्तं संयोग इति स्वस्य बादरायणाचार्यस्य मतम्। तत् 'कृतात्यय'सूत्रव्याख्याने देवगाथास्मृत्या सूचितम्। तत्रान्येषां न संमतिरिति बोधयन् आन्तं मोक्षा-

रश्मिः।

एवेति। उपष्टम्भत्वादेवकारः। किञ्च, एवकारस्य साधनाव्यवच्छेदकत्वे समीचीनरेतोजनकत्वं न स्यात्साधने तुषातिरिक्तानां सज्जात्सेवायां नष्टानां जन्मसाधकानुशयस्यांशतः समीचीनरेतोऽनुत्पादकत्वात्। भगवानेवेति। एवकारस्तदर्थसाधनव्यवच्छेदकः। परम्परयेति। भगवदर्पणद्वारा। एवेति। पूर्ववत्। स्वमते कर्म विहाय श्राद्धे बृहदारण्यकशारीरब्राह्मणोक्ते देहेऽनुशयानुवृत्तिः, कर्मशेषरूपत्वे सुकृतदुष्कृतरूपत्वे चानुशयस्य नानुवृत्तिः। कर्म द्विविधं साधनं फलं चेति। तत्र साधनकर्म विहायेत्सत्र कर्मत्वेनोक्तं फलकर्मविषयं बोद्धुम्। कर्मेति भाष्यं विवृण्वन्ति स्म किञ्चेति। कर्मात्मकेति। कर्म चित्तशोधकत्वेन आत्मा स्वरूपं यस्य कर्मजन्यभोगसाधकसामग्रीलेशरूपस्य स कर्मात्मकः कर्मात्मकश्चासावनुशयश्च कर्मात्मकानुशयस्तस्य पक्षेपि। एवेति। पुष्टिमार्गातिरिक्त इच्छैव नियामिकेतीश्वरव्यवच्छेदकः। कर्म पुनरिति भाष्यं विवृण्वन्ति स्म कर्म पुनरिति। स्वरूपमेवेति। 'प्रकाशाश्रयवद्वा तेजस्त्वा'दितिसूत्रात्। स्वरूपं तु 'ज्ञानशक्तिक्रियाशक्ती सन्दिह्येते परस्थिते' इति भाष्योक्तम्। एवकारस्तु वेदशास्त्रार्थत्वात्। 'कर्मैके तत्र दर्शना' दितिजैमिनिसूत्रात्। फलपर्यन्तमिति। तदादिसंयोग इति वक्ष्यमाणत्वात्तस्य कर्मणः आदिसंयोगो लेशरूप इत्यभिव्यक्तस्तिष्ठति। कर्मशेषात्मक इति। समासः पूर्ववत्। निवर्तत इति। ब्रह्मदेहस्य कर्माजन्यत्वमिति चतुर्थाध्याये चतुर्थचरणे वक्ष्यन्ति। तदादीति भाष्यं विवृण्वन्ति स्म अतस्तस्येति। संयोग इति। कर्मणो द्रव्येण समवायो यद्यपि, तथाप्यपां पुरुषवचस्त्वेन तदन्तर्गतस्य संयोगः। तत्रेति। स्वानुशये। अन्येषां बादरिप्रभृतीनाम्। बोधयन्निति। बादरायणः। मोक्षावधीति। न तु मोक्षे कर्मशेषः कार्ष्णाजिनिमतसिद्धः, नापि कर्मजन्यभोगसाधकसामग्रीलेश इति भावः।

सुकृतदुष्कृते एव विहितनिषिद्धकर्मणी अनुशय इति बादरिराचार्यो मन्यते । तेन मोक्षपर्यन्तमनुशयोऽनुवर्तिष्यत इति सूत्रफलम् । तुशब्देन निरनुशयपक्षशङ्कैव नास्तीत्युक्तम् । एवं द्वितीयाहुतिर्निर्धारिता ॥ ११ ॥

इति तृतीयाध्याये प्रथमपादे द्वितीयमनुशयाधिकरणम् ॥ २ ॥

---

भाष्यप्रकाशः ।

यदि कर्मसम्बन्ध इत्याकारकमन्तसंयोगपक्षं बादरेरेकदेशित्वज्ञापनायाहेत्यर्थः । एकदेशित्वं त्वनुशयमात्राङ्गीकाराज्ज्ञेयम् ।

सूत्रं व्याकुर्वन्ति सुकृतेत्यादि । अभुक्तफले ते इत्यर्थः । शेषोऽर्थस्तु निगदव्याख्यात एव ।

अन्ये तु चरणसूत्रे उपलक्षणार्थेत्यस्य चरणश्रुतिर्लक्षणया कर्मबोधिकेत्यर्थमाहुः । अग्रिमे तु, तर्हि चरणानर्थक्यमितिचेन्न, कर्मण आचारापेक्षत्वादित्यर्थमाहुः । तृतीये तु, 'धर्मं चरती'त्यादिप्रयोगाच्चरणशब्देन सुकृतदुष्कृते एवोच्येते इत्यर्थमाहुः । तत्राप्यन्ततो गत्वैक एवार्थः ।

सिद्धं निगमयन्ति एवमित्यादि ।

अत्रेदं हृदयम् । निष्कामकर्माणि न स्वर्गादिजनकानि, किन्तु पावनान्येवेति तत्प्रकारबोधनाय पञ्चाग्निविद्याप्रवृत्तिं ज्ञापयितुमयं पादः । अन्यथा चन्द्रगतेः सर्वसाधारण्यादेतद्धोमवैयर्थ्यमेव स्यात् । अतो निष्कामकर्माणि द्युलोके यजमानमानीय तिरोदधति । तदनन्तरकार्यं तु तद्व्यापारभूता देवा एव कुर्वन्तीति न तत्र कर्मानुशयः, अपि तु फलानुशय एव । यः पुनः सकामकर्मात्मको मार्गः, तत्र तु कर्मानुशय एव । अत एवैकादशे 'आत्मा च कर्मानुशयं विधूये'ति भगवतोक्तम् । अतस्तन्मार्गीयानुशयं संग्रहीतुं मतान्तरोपन्यासः । अतो द्वितीया सोमाहुतिरेवमुक्तप्रकारेणानुशयवत एव वृष्टिभावं जनयति । अनुशयश्च योग्यदेहसम्पत्तिपर्यन्तमनुवर्तते इति प्रकारेण निर्धारिता, न तु मतान्तरोक्तप्रकारेणेत्यर्थः ॥ ११ ॥ इति द्वितीयमनुशयाधिकरणम् ॥ २ ॥

रश्मिः ।

अन्तेति । आन्तं मोक्षावधीत्यत्र व्याख्यातं पूर्वम् । अनुशयेति । व्यासस्वीकृतानुशयेऽनुशयमात्रं कर्ममात्रं तस्याङ्गीकारात् । निगदेति । सूत्रेति । शेषरहितोऽनुशय इति कार्ष्णाजिनिमताद्द्वितीयमतं सूत्रफलम् । एवेति । निरनुशयपक्षव्यवच्छेदकः । एवं निगदव्याख्यातः । एवकारस्तु एतद्विषयकदृढवासनायाः । धर्ममिति । आदिनाऽधर्मं चरतीति प्रयोगः । तस्मात् । एवेति । सौत्रत्वादुक्तः । अन्तत इति । युगपद्वृत्तिद्वयविरोधेन तात्पर्यवृत्त्यङ्गीकारेपि तादृशकर्मबोधिका । 'विशिष्टं शुद्धाद्यातिरिच्यत' इत्युक्तेरेवकारः । पावनान्येवेति । एवकारस्तु 'तमेतं वेदानुवचनेने'ति श्रुतेः । 'यथानुष्ठीयमानेने'त्येकादशस्कन्धाच्च । विविदिषायाः भक्तेश्च चित्तशुद्धिरूपपावनं विनासम्भवात् । एवेति । अवैयर्थ्यव्यवच्छेदकः । तद्व्यापारेति । कर्मणो भगवत्स्वरूपत्वेनापि सव्यापारत्वम् । देवा एवेति । निष्कामकर्मव्यवच्छेदकः । तिरोहितत्वात् । न तत्रेति । देवकृताहुतौ न । फलेति । सामग्रीलेशरूपः । एवेति । 'दुःसहप्रेष्ठविरहतीव्रतापधुताशुभा' इति वाक्यात् । कर्मेति । बादरिकार्ष्णाजिनिमतोक्तः । एवकारो विशेषधूननदर्शनात् । अत एवेति । कर्मात्मकानुशयादेव । एवकारः सामग्रीलेशव्यवच्छेदकः । अत इति । समाधिभाषापोषकमतान्तरभाषारूपत्वात् । एतेन सामग्रीलेशो नानुष्टब्ध इति शङ्कापास्ता । भाष्यं विवृण्वन्ति स्म अतो द्वीति । आभासोक्तं निगमनमाहुः एवमुक्तेति । निगमनस्य हेतुघटितत्वाद्धेतुतृतीयान्तम् । तस्मात् पर्वतो वह्निमानिति निगमनमिति । एवेति । उक्तोपपादनात् । योग्येति । भाव्योपि देहः सङ्गृहीतो योग्यशब्देन । सामग्रीलेशरूपेणानुवर्तते ॥ ११ ॥ इति द्वितीयमनुशयाधिकरणम् ॥ २ ॥

## अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥ (३.१.३.)

तुल्यत्वेन विचारे ऐक्ये वा पञ्चाहुतिधूममार्गयोः सोमभावं गतस्य पुनरावृत्त्युपसंहारे उपलक्षणेनापि पापाचारवतामुपसंहारदर्शनात् तेषामप्याहुतिसम्बन्धो धूममार्गश्च प्राप्नोति, तन्निराकरणार्थमधिकरणारम्भः ।

ननु अनिष्टादिकारिणामपि सोमभावः श्रूयते, इष्टादिकारिव्यतिरिक्तानां 'ये वै के चास्माल्लोकात् प्रयान्ति, चन्द्रमसमेव ते सर्वे गच्छन्ती'ति कौषीतकिनः समामनन्ति । अत्र च 'कपूयां योनिमापद्यन्त' इति पर्यवसानम् । तेन सर्वे चन्द्रमसं गच्छन्ति ।

अयमाशयः । 'कर्माकर्मविकर्मे'ति त्रिविधो कर्मविधायको वेदः । 'अग्निहोत्रं

भाष्यप्रकाशः ।

अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥ ननु उक्ताधिकरणेन फलपर्यन्तं विचारे कृते किमन्यदवशिष्टं येनाधिकरणप्रणयनमित्याकाङ्क्षायां तत्प्रणयनप्रयोजनमाहुः तुल्यत्वेनेत्यादि । सोमभावस्य पञ्चाग्निविद्यायां धूममार्गे चोक्तत्वात् पञ्चाग्निप्रकारेण शरीरं प्राप्स्यतो धूममार्गिणश्चैकरीत्या विचारे, सोमभावतौल्यादैक्ये वाङ्गीकृते, मार्गद्वयेन सोमभावं गतयोः पुनरावृत्त्युपसंहारे कपूयचरणानामप्युक्ततया तेषामपि मार्गद्वयसम्बन्धः प्राप्नोति । स च वाक्यान्तरविरोधान्नेष्ट इत्यस्यावशिष्टत्वात् तदर्थमधिकरणारम्भ इत्यर्थः ।

एवमारम्भं समर्थयित्वा अस्य पूर्वपक्षसूत्रत्वं ज्ञापयन्तो व्याकुर्वन्ति नन्वित्यादि । ननु सर्वेषां सोमभावेऽप्याहुत्यादिसंसर्गः कथमित्याकाङ्क्षायां तदाशयमाहुः अयमित्यादि । 'कर्माकर्मविकर्मे'ति प्रकारेण कर्मत्रैविध्यं बोधयन् विधायको वेदस्त्रिविधः । अग्निहोत्रमित्यादिवाक्यत्रयं तत्रोदाहरणम् । तेष्वकर्मबोधकस्य कर्माकर्तृनिन्दया अकर्मनिषेधमुखेन तत्कर्मविधायकत्वम् । विकर्मबोधकस्य तु निषिद्धप्रागभावपरिपालनद्वारा तद्विधायकत्वम् । स चैवं त्रिविधो वेदस्त्रैवर्णि-

रश्मिः ।

अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥ उक्तत्वादिति । 'सोमो राजा सम्भवती'ति पञ्चाग्निविद्यायाम् । 'एष सोमो राजा तद्देवानामन्न'मिति धूममार्गे । पुनरावृत्तीति । धूममार्गे 'अथैतमेवाध्वान५पुनर्निवर्तन्ते' इत्यनया पुनरावृत्त्युपसंहारे इति नार्थः । कपूयाचरणानामप्युक्ततयेत्यव्यवहितभूतक्तप्रत्ययात् । किन्तु 'जायस्व म्रियस्वेत्येतत्तृतीय५ स्थानम्, तेनासौ लोको न संपूर्यते, तस्माज्जुगुप्सेते'ति पुनरावृत्त्युपसंहारस्तस्मिन् । उपलक्षणेनेत्यादिभाष्यं विवृण्वन्ति स्म कपूयचरणानामित्यादिना । वाक्यान्तरेति । वाक्यं प्रकृतं तस्मादन्यत् वाक्यं शारीरब्राह्मणे 'अन्धं तमः प्रविशन्ति ये सम्भूतिमुपासते । ततो भूय इव ते तमो य उ सम्भूत्या५ रता' इति । तस्य विरोधादित्यर्थः । अस्येति । पूर्वपक्षसिद्धान्तस्य । कर्माकर्त्रिति । 'स वै दुर्ब्राह्मणः प्रोक्त' इत्युत्तरार्धेन कर्माकर्तृनिन्दया । मुखमुपायः । तत्कर्मणो कर्मकर्मणो विधायकत्वम् । निषिद्धेति । निषिद्धं यद्ब्राह्मणहननं तत्प्रागभावो भूतजातहननं करिष्यतीति प्रतीतिविरोधः । तस्य परिपालनं तद्द्वारा परिपालनाभ्युपायः । 'द्वारं पुनर्निर्गमनेऽभ्युपाय' इति विश्वः । टाप् । स्त्रीत्वं लोकात् । यद्वा । 'स्त्री द्वार्द्वारं प्रतीहार' इति कोशाद्द्वाश्शब्दाट्टाप् । 'द्वाःस्थितायां तु योषिती'ति यदा, तदा पूर्व एव प्रकारः । तद्विधायकत्वं विकर्मविधायकत्वम् । षष्ठे द्वितीयस्य पादस्य पञ्चमे चिन्तितम् । एतत्पूर्वान्वयीत्याहुः स चैवमित्यादि । त्रैवर्णिकेति ।

जुहुयात्' । 'यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम् ।' 'न हिंस्याद्भूतजातानि' । ब्राह्मणादीनामपि त्रिविधकरणं सम्भवति । न हि सर्वोऽप्येकान्ततो विहितं वा प्रतिषिद्धं वा करोति । ततो विहितकर्तुरपि त्रयसम्भवाज्ज्ञानाभावेन फलभोगनैयत्यात् सोमभावानन्तरमेवाकर्मविकर्मभोगो वक्तव्यः । अत एवाविशेषोपसंहारौ । तस्मात् सोमभावानन्तरमेव सर्वेषां जन्मेति प्राप्तम् ॥ १२ ॥

**संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ १३ ॥**

तुशब्दः पक्षं व्यावर्तयति । विहितव्यतिरिक्तकर्मणां संयमने यमसंनिधाने सुखं दुःखं वा अनुभूय आरोहावरोहौ । अनुभवार्थमारोहः, अनुभूयावरोह इति । कुतः । तद्गतिदर्शनात् । तेषां गतिर्विसदृशी दृश्यते । वेदे हि प्रथमं विहिता द्वेधा

भाष्यप्रकाशः ।

काधिकारिकः । तेषां च न हीत्यादिनोक्तरीत्या त्रयसम्भवात् । ज्ञानाभावेन फलभोगनैयत्यात् । विहितस्य बलिष्ठत्वेन पूर्वं तद्भोगात् पूर्वं सोमभावः, ततो भुक्ते तस्मिन्नन्ययोर्भोगः । स च भूम्यादिष्वेवेति ज्ञापनायैव 'तद्य इह रमणीयचरणा य इह कपूयचरणा' इत्युभयोरविशेषेणोपसंहारावुक्तौ । तस्मात् सोमभावानन्तरमेव सर्वेषामकर्मविकर्मभोगार्थं जन्म, सोमभावश्च पूर्वोक्तरीत्या द्वाभ्यामेवेति सर्वेषामेव आहुत्यादिसम्बन्ध इति प्राप्तम् । तथाच पूर्वाधिकरणे यः सर्वेषां सोमभावाभावः प्रतिपादितः, यच्च पञ्चाग्निसाधितदेहानां फलानुशय एवेति निर्णीतम्, तदयुक्तमित्यर्थः ॥ १२ ॥

**संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ १३ ॥** पक्षमिति । इष्टादिव्यतिरिक्तकारिणां सोमभावप्राप्तिपक्षम् । अनुभवार्थमिति । पुण्यफलानुभवार्थम् । अनुभूयेति । तत्तल्लोके पुण्यफलमनुभूय । तस्मात् स्थानादवरोहः, न तु चन्द्रगतिरित्यर्थः । हेतुं व्याकुर्वन्ति तेषामित्यादि । तेषां विहितव्यतिरिक्तकर्मणां गतिः फलप्राप्तिर्वेदे विसदृशी सोमभावविलक्षणा

रश्मिः ।

षष्ठस्य सप्तमेऽधिकरणे चिन्तितम् । तत इत्यादिभाष्यं विवृण्वन्ति स्म तेषां चेति । सर्वेषां च । उक्तेति । भाष्योक्तरीत्या । सोमभावेत्यत्रानन्तरशब्दार्थमाहुः ततो भुक्त इति । अन्ययोर्योन्योर्मार्गयोर्वा भोगो वक्तव्य इति भाष्यार्थः । अत एवेति भाष्यं विवृण्वन्ति स्म स चेति । भोगश्च । अत इति सार्वविभक्तिकस्तसिरित्याशयेनाहुः भूम्यादिष्विति । आदिना द्युलोकः । एवकारः इहेति शब्दात् । ज्ञापनायैवेति । श्रुतेरिहशब्दघटितत्वादेवकारः । तामेवाहुः तद्य इहेत्यादिना । उभयोरिति । योन्योः । मार्गयोर्वा । भाष्ये । अविशेषेणोपसंहारावविशेषोपसंहारौ इत्याशयेनाहुः अविशेषेणेति । तस्मादिति भाष्यं विवृण्वन्ति स्म तस्मादिति । एवेति । विहितस्येत्यादिनोपपादनादेवकारः । पूर्वोक्तेति । पञ्चाग्निधूममार्गोक्तरीत्या । द्वाभ्यां पञ्चाग्निधूममार्गाभ्याम् । श्रुतत्वादेवकारः । एवेति । पूर्वपक्षोपपादनादेवेति । आहुत्यादीति । आदिना सोमभावः । फलानुशय एवेति । द्वितीयाधिकरणसमाप्तौ फलानुशय एवेत्यस्य प्रकाशस्य रश्मौ व्याख्यातः ॥ १२ ॥

**संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ १३ ॥** भाष्ये । संयमने इति । 'वासः कुटी द्वयोः शाला सभा संयमनं त्विद'मिति सङ्गमनं साधारणं वासः, 'वैवस्वतं सङ्गमनं जनाना'मिति विशेषवासोत आहुः यमेति । विवस्वद्यमस्य संनिधानं भगवतो भवति । घातकशक्ति-

गतिः, सकामा निष्कामा चेति। सकामा यथाकाममनन्तविधा। निष्कामा ज्ञानरहिता द्विविधा, वैदिकगृह्यस्मार्तभेदेन। तत्र गृह्यस्मार्ते यमः। श्रौते सोमभावः। तत्र त्रेताग्निविधानेन 'निष्कामानामदम्भानां पुण्यः स्या'दित्यधिकारिविशेषणात् विशेषतः सामान्यतश्च प्रायश्चित्तविधानात्। 'यदर्वाचीनमेनो भ्रूणहत्यायास्तस्मान्मुच्यत' इति। 'तरति ब्रह्महत्या'मिति च सर्वप्रायश्चित्तविधानात्। ब्रह्मानुभवाभावे सोमगतिरेव।

---

भाष्यप्रकाशः।

रुच्यत इत्यर्थः। तत् व्युत्पादयन्ति वेदे हीत्यादि। अर्थस्तु स्पष्टः। श्रौते सोमभाव एवेत्यत्र किं नियामकमित्याकाङ्क्षायां विभजन्ते तत्रेत्यादि। 'निष्कामाना'मिति वाक्यं तु स्मार्तम्। श्रुत्योस्तु तैत्तिरीयस्वाध्यायब्राह्मणस्था प्रथमा। संहितापञ्चमाष्टकस्था द्वितीया। पुण्यः स्यादिति। पुण्यो लोको भवेत्। विशेषतः प्रायश्चित्तविधानं पूर्वस्यां 'यदर्वाचीनमेन' इति श्रुतावुक्तम्। सामान्यतस्तद्विधानं द्वितीयस्यां 'तरती'ति श्रुतौ। तथाच निष्कामानामदम्भानां पापस्योक्तप्रकारेण निवृत्तत्वात् ब्रह्मानुभवाभावे मोक्षस्याभावात् सोमभावेऽधिकारिविशेषणं पापनिवृत्तिश्च नियामिकेत्यर्थः।

नन्वग्न्याधानिनां गृह्यस्मार्तधर्मस्यापि सत्त्वात् तेषां यमगतिरपि वक्तव्येति कथं सोमगति-

रश्मिः।

त्वात्। तदाहुः यमसंनिधान इति। प्रकृते। नन्विति। छान्दोग्ये पञ्चाग्निविद्यायामुक्तेः। स्पष्ट इति। तत्र गृह्यस्मार्ते यम इति। यमवचनसरूपा श्रुतिः प्रयतामनिष्टादिकारिणां यमवश्यतां दर्शयति। 'न सांपरायः प्रतिभाति बालं प्रमाद्यन्तं चित्तमोहेन मूढम्। अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे' इति। 'वैवस्वतं संयमनं जनाना'मिति चेति शङ्करभाष्ये। गृह्यसूत्राणि प्रसिद्धकर्मणि पात्रासादनादावुपयुज्यन्ते। तादृशगृह्यस्मार्ते यमः। 'अथ चेत्मन्त्रविद्युक्तो वैष्णवो ज्ञानवान् हि सः। हव्यकव्ये नियोक्तव्य इति प्राह स्वयं यमः। तस्मात्सर्वप्रयत्नेन श्राद्धे यज्ञे च कर्मणि। अदुष्यं चैव विप्रेन्द्र योजनीयं प्रयत्नतः। तथैव मन्त्रविद्युक्तो शारीरैः पङ्क्तिदूषकैः। वर्जितं च यमः प्राह पङ्क्तिपावन एव सः। निर्मत्सरः सदाचारः श्रोत्रियो ब्रह्मविद्युवा। विद्याविनयसंयुक्तो पात्रभूतो द्विजोत्तमाः। वेदान्तविज्ज्येष्ठसाम अलुब्धो वेदतत्परः। योजनीयः प्रयत्नेन दैवे पित्र्ये च कर्मणि। यद्दत्तं च हुतं तस्मै ह्यनन्तं नात्र संशय' इति यमस्मृतौ। सोमभावोऽग्रे स्वयमेव विवेच्यः। उक्तमिति। ननु प्रायश्चित्तं पापस्य शोधनम्, तद्वाचकं पदं पूर्वस्यां किमिति चेत्। न। अधिकारिविशेषणस्य निष्कामस्य हेतुगर्भत्वेन तदेव तद्वाचकमिति। निष्कामत्वात्तस्मादेनसो मुच्यत इति। अतो निष्कामेन भवितव्यमिति निष्कामत्वविधानम्। तव्यस्य विधौ विधानात्। तद्विधानं प्रायश्चित्तविधानम्। इति श्रुताविति। अत्राप्यदम्भविशेषणस्य हेतुगर्भत्वेन तदेव प्रायश्चित्तवाचकम्। अदम्भत्वाद्ब्रह्महत्यां तरतीति। अतोऽदम्भेन भवितव्यमित्यदम्भत्वविधानम्। न दम्भो यस्येति। 'दम्भस्तु कैतवे कल्के' इति विश्वः। अग्रे भाष्ये। सर्वप्रायश्चित्तेति। भ्रूणस्य स्त्रीगर्भस्य शुक्रत्वेन ब्राह्मणश्च नित्यत्वे तद्धिंसाभावात्तत्त्वसर्वस्य हत्येति तथा। प्रकृते। उक्तप्रकारेणेति। शक्तितात्पर्याभ्यां उक्तो यो हेतुगर्भविशेषणप्रकारस्तेन। विशेषणमिति। अदम्भविशेषणम्। भाष्ये। एवेति। मोक्षव्यवच्छेदकः। अर्द्धेति। श्रौतस्मार्ताधानिनामित्यर्थो भाति। अपिना श्रौतधर्मस्। यमगतिरपीति। अपिना सोमगतिः। एवेति।

---

१. स्नापनम्।

पूर्वजन्मधर्मस्य चित्तशुद्धावुपयोगः । तदानीन्तनस्य गङ्गास्नानादेः श्रौताङ्गत्वम् । अतः पापस्याभावात् पुण्यस्योपक्षीणत्वात् तस्य पञ्चाग्निप्रकार एव । ज्ञानोपयोगिजन्मनि पापसंश्लेषाभावोपायमग्रे वक्ष्यति । पितृमेधप्रथमाहुतिमन्त्रस्तु मन्त्रत्वाद्यमसदन गतिनियामकः ।

त्रेताग्निविचाररहितानां पुण्यपापोपभोगो यम एव । 'वैवस्वते विविच्यन्ते यमे राजनि ते जनाः । ये चेह सत्येनेच्छन्ते य उ चानृतवादिन' इति । यमगतेः

भाष्यप्रकाशः ।

रेवेत्युच्यत इत्याशङ्कायामाहुः पूर्वेत्यादि । पूर्वजन्मधर्मस्येति । पूर्वजन्मीनस्मार्तधर्मस्य । तथाच श्रौतस्य बलिष्ठत्वेन गृह्यस्मार्तस्यैवमुपयोगात् सा नेत्यर्थः । तेन सिद्धमाहुः अत इत्यादि । ननु भवत्वेवं पूर्वनिवृत्तिः, तथाप्युत्तरपापसंसर्गस्त्वनिवार्य इति पञ्चाग्निप्रकारेप्यपायः संभाव्यत इति ज्ञानोत्पत्तिस्तु दुर्घटैवेत्यत आहुः ज्ञानेत्यादि । अग्र इति । 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशा'-वित्यत्र । ननु ब्रह्मतत्त्वज्ञस्याहिताग्नेर्दहनादिसंस्कारो ब्रह्ममेधः, तद्रहितस्याहिताग्नेर्दहनादिसंस्कारः पितृमेधः, तस्य प्रथमाहुतौ 'वैवस्वतं संगमनं जनानां यमं राजान'मिति मन्त्रे यमसंबन्ध उक्त इति कथं वैदिकानां सोमगतिरेवेत्युच्यत इत्यत आहुः पितृमेधेत्यादि । अयं मन्त्रस्तु 'अर्वाग्बिलश्चमस ऊर्ध्वबुध्न' इतिमन्त्रवत् सिद्धार्थबोधकत्वान्नाहिताग्निमात्रस्य यमगतिनियामकः । त्रेताग्निबोधकपदाभावात् । केवलगृह्यस्मार्ताग्निवत्त्वप्याहिताग्नित्वस्य तुल्यतया तैरेव चारितार्थ्याच्च । तस्मान्निष्काम-स्याद्धाधानिनोपि सोमगतिरेवेति निश्चयः ।

अतः परं गृह्यस्मार्तानां गतिं विचारयन्ति त्रेतेत्यादि । पापान्तराभावेपि त्रेताग्निराहित्येन विहिताननुष्ठानस्य जातत्वात् तथेत्यर्थः । तेन सिद्धमाहुः यमगतेरित्यादि । तथाच यमगतेः पञ्चाग्निविद्यायाश्च एषा गृह्यस्मार्तश्रौतभेदेन भिन्ना व्यवस्थेत्यर्थः । ननु 'वैवस्वते विविच्यन्त' इति

रश्मिः ।

यमगतिव्यवच्छेदकः । एवमिति । स्मार्ताधानं पूर्वजन्मीनम् । श्रौताधानमस्मिञ्जन्मनीत्येवम् । सेति । यमगतिः । तेन तदानीन्तनस्येत्यादिभाष्यस्य तज्जन्मकालिकस्य । आदिना विष्णुस्मरणम् । श्रौताङ्गत्वमिति । श्रौतगृह्येऽवान्तरपापनाशकत्वेन तथेत्यर्थो ज्ञापितः । गङ्गास्नानान्मार्जारीहत्याविमोकः । विष्णुस्मरणेन पिपीलिकादिहत्याया विमोकः । निष्पापिश्रौताधानस्य पञ्चाग्निविद्यया ज्ञानभक्त्यङ्गत्वमिति । अत इत्यादीति । एवेति । मोक्षव्यवच्छेदकः । ननु पुण्यपापक्षये मोक्ष इति कुत एवकार इति चेत् । न । अत्र संदिग्धे विषये पञ्चाग्निप्रकार एवेत्यर्थात् । अपाय इति । निष्पापदेहनाशः । पापसंसर्गस्य सत्त्वात् । विशेषणाभावप्रयुक्तो विशिष्टाभावः । रक्तसरोजस्थले नीलं सरोजं नास्तीतिवत् । दुर्घटैवेति । 'निरवद्यं निरञ्जन'मिति श्रुत्यैवकारः । कामक्रोधाभ्यां पापकरणात्तामिस्ररूपाविद्यापर्वणश्च । भक्त्युत्पत्तिश्चेत् 'नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायत' इति वाक्यादेवकारः । आध्यात्मिकशुद्धौ ज्ञानोत्पत्तिः । आधिदैविकशुद्धौ भक्तिरिति । एवेति । यमगतिव्यवच्छेदकः । सिद्धार्थेति । चमसेऽर्वाग्बिलत्वोर्ध्वबुध्नत्वयोः सिद्धयोर्बोधकत्वं मन्त्रे, न तु साध्ययोः । तद्वत्सङ्गमने यमे राजत्ववैवस्वतत्वयोः सिद्धयोः, न तु साध्ययोरर्थयोर्बोधकत्वात् । केवलेति । केवलगृह्यस्मार्ताग्निवत्सु अपि आहिताग्नित्वस्येति छेदः । तैरित्यादि । केवलगृह्यस्मार्ताग्निमद्भिः । एवकारः श्रौताग्निमद्व्यवच्छेदकः । तथाच केवलगृह्यस्मार्ताग्निमद्विषया यमगतिरिति भावः । सोमगतिरेवेति । यमगतिव्यवच्छेदक एवेति । तथेत्यर्थ इति । पुण्यपापोपभोगो यम एवेत्यर्थ इत्यर्थः । एवकारव्यावर्त्यवाक्याभावः । तदाहुः वैवस्वत

१. इदानीन्तनस्य ।

**पञ्चाग्निविद्यायाश्चैषा व्यवस्था । चित्तशुद्धिभावाभावाभ्यां वा अवश्यं काण्डद्वय-व्यवस्था । एकस्यैतद्वक्तव्यम् । सकामनिष्कामभेदो वा । वेदान्तिनामपि पापार्थे यमापेक्षणात् सा गतिर्वक्तव्यैव । तस्मान्न सर्वेषां सोमगतिः ॥ १३ ॥**

---

भाष्यप्रकाशः ।

हि तैत्तिरीयाणां श्रुतिः, सा च वैदिकानपि सङ्ग्रहीष्यति, तस्या गृह्यस्मार्तैकपरत्वे नियामकाभावात्, अतो न पूर्वोक्ता व्यवस्थाऽयुक्तेत्याशङ्क्य पक्षान्तरमाहुः चित्तेत्यादि । यस्य चित्तशुद्धिस्तस्योत्तर-काण्डोक्तः पञ्चाग्निसंबन्धः । यस्य न सा, तस्य 'न साम्परायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम्, अयं लोको नास्ति पर इति मानी पुनःपुनर्वशमापद्यते मे' इति यमवचनश्रुतेः पूर्वकाण्डोक्ता वैवस्वतगतिरित्येवं श्रौतपरत्वेनैव तदुभयव्यवस्था मन्तव्या । तत्र हेतुः अवश्यमित्यादि । गतिर्हि पञ्चाग्नियमभेदेन काण्डद्वयेऽप्युक्ता । यदि तत्र व्यवस्था काचिन्नोच्येत, तदा गतिद्वयं सङ्कीर्येत । अतस्तदभावार्थमवश्यं काण्डद्वयस्य व्यवस्था । तत्र एकस्य येन केनापि प्रकारेण जघन्य-स्योत्तमस्य च यथायथमेतद्गतिद्वयमसङ्कीर्णं वक्तव्यम् । सङ्गफलयोस्त्याग एव यज्ञादीनां पावन-त्वस्य गीतायामुक्तत्वात् । पूर्वोपपादितः सकामनिष्कामभेदो वा तदर्थं वक्तव्यः । अन्यथा एकतर-श्रुतिव्याकोपस्य दुष्परिहरत्वादिति । ननु पूर्वकाण्ड एवेयं व्यवस्था भवतु, उत्तरकाण्डे तु ज्ञानस्य प्राधान्यात् तस्य च सर्वकर्मदाहकत्वान्नैतद्व्यवस्थोपयोग इत्याशङ्कायामाहुः वेदान्तिनामित्यादि । तथाच 'सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि' 'न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृ'दिति वाक्यात् कर्म तु नियतम्, ज्ञानं तूपायसाध्यत्वान्न श्रवणमात्रात् सर्वस्योत्पद्यते । अतस्तेषामपि सा वक्तव्यैवेति 'ये चे'ति श्रुतिः पूर्वोक्त एव विषये सङ्कोच्येत्यर्थः ॥ १३ ॥

रश्मिः ।

इति । व्यवस्थेति । यमवैवस्वतयमयोश्च श्रौतस्मार्तभेदेन । व्यवस्थेति । व्यवस्था अयुक्तेति पदच्छेदः । चित्तेति । चित्तस्य शुद्धिस्तस्या भावाभावाभ्याम् । एवेति । गृह्यस्मार्तव्यवच्छेदकोऽ-यम् । सकामेति भाष्यं विवृण्वन्ति स्म सङ्गेति । एवेति । सङ्गाद्धरिणस्य जडभरतस्य, कामफलात् अजामिलस्य चित्तकालुष्येणापावनरूपेण जन्म यमदूताभ्यां क्लेशो दृष्ट इत्येवकारः । गीताया-मिति । अष्टादशाध्याये । 'एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च । कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम्' । 'यज्ञो दानं तपश्चैव पावनानि मनीषिणा'मिति । पूर्वेति । वेदे हीत्याद्युक्तपूर्व-भाष्येणोपपादितः । तदर्थमिति । पञ्चाग्निविद्यायाः यमगतेश्च व्यवस्थार्थम् । एकतरेति । पञ्चाग्निय-मगतिप्रतिपादिकयोः श्रुत्योरेकतरेत्यादिः । एवेति । उत्तरकाण्डव्यवच्छेदकः । वेदान्तिनामित्यादीति । पापार्थमिति । पापनिवृत्त्यर्थम् । 'अर्थोऽभिधेये'ति कोशात् । सेति । यमगतिः । एवेति । विकर्मपाते हृदि सन्निविष्टस्य धूननकर्तृत्वेनाभावादेवकारः । तस्मादिति । 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽ-र्जुने'ति वाक्याविषयाणामपि सत्त्वात्तेषां यमगतेः सत्त्वान्न सर्वेषां सोमगतिरित्यर्थः । पूर्वोक्त इति । 'वेदे ही'त्याद्युक्ते । अन्त्यपक्षत्वादेवकारः । विषय इति । निष्कामे ॥ १३ ॥

## स्मरन्ति च ॥ १४ ॥

स्मरन्ति च व्यासादयः । 'यमेन पृष्टस्तत्राहं देवदेव जगत्पते । पूर्वं त्वमशुभं भुङ्क्ष्व उताहो नृपते शुभमि'त्यादि । चकाराल्लोकप्रसिद्धिः ॥ १४ ॥

## अपि सप्त ॥ १५ ॥

चेत्यनुवर्तते । पापोपभोगार्थं यमालयगमनमङ्गीकर्तव्यम् । यतस्तत्र नरकाः सप्त सन्ति रौरवादयः । सप्तसंख्या संख्याभेदेष्ववरकक्षा । सर्वथा निराकरणाभावाय सप्तग्रहणम् । तस्मात् यमगतिरस्ति ॥ १५ ॥

भाष्यप्रकाशः ।

स्मरन्ति च ॥ १४ ॥ अपि सप्त ॥ १५ ॥ एतत्सूत्रद्वयभाष्यं प्रकटार्थम् ।

तत्रापि पूर्वसूत्रभाष्ये लोकप्रसिद्धिर्नामभ्रान्त्या यमदूतनीतानां प्रत्यागतानामनुभवस्य पौराणिकवाक्यसंवादरूपा बोध्या ।

द्वितीयसूत्रभाष्ये च यमगतिरस्तीत्यस्य सोमगतेरतिरिक्तास्तीत्यर्थो बोध्यः ॥१४॥१५॥

रश्मिः ।

स्मरन्ति च ॥ १४ ॥ अपि सप्त ॥ १५ ॥ प्रकटेति । वाक्यं नृगप्रसङ्ग उत्तरार्धे । इति प्रथमसूत्रे भाष्यं प्रकटार्थम् । द्वितीयसूत्रभाष्यं चेतीति । अर्थः पूर्वोक्तः लोकप्रसिद्धिरूपः । सप्तसंख्या संख्याभेदेष्विति । संख्याभेदेषु सप्तसंख्या अवरकक्षेत्यर्थः । संख्याभेदाः श्रीभागवतादौ । तथाहि । एकविंशतिनरकास्तामिस्रादयः । सप्तान्ये क्षारकर्दमादयः । मिलिता नरका अष्टाविंशतिसंख्याकाः । मनुस्मृतौ चैकविंशतिसंख्याकाः तामिस्रादयः अन्यनिवेशेन व्युत्क्रमेण च । तथैव याज्ञवल्क्यस्मृतौ एकविंशतिनरकास्तामिस्रादयः । तत्रैको भाग उपात्तश्चेत्सप्त भवन्ति । तत्रापि नियामकाकाङ्क्षायां तामिस्रान्धतामिस्ररौरवमहारौरवकालसूत्रासिपत्रवनशाल्मलीनामकानां सप्तानामेव त्रिषु सत्त्वेन प्रसिद्धत्वात्सप्तग्रहणम् । यद्वा । भारते सप्त रौरवादयो गणिताः । तेऽत्र माध्वभाष्ये प्रसिद्धाः । वाराहे चातुर्मास्यमाहात्म्ये तृतीयाध्याये च 'रौरवः प्रथमः प्रोक्तो महारौरव एव च । कुम्भीपाकोऽसिपत्राख्यः पूयशोणितमद्गरौ । तप्तवालुक इत्येते सप्तैव नरकाः स्मृता' इति । तदेतदाहुः सर्वथेत्यादि । एवं प्रकटार्थम् । अजामिलप्रसङ्गे लौकिकी भाषेत्याशयेनाहुः भ्रान्त्येति । 'अथैनं मापनयत कृताशेषाघनिष्कृतम् । यदसौ भगवन्नाम म्रियमाणः समग्रही'दिति विष्णुदूतवाक्येन पापाभाववत्यजामिले । 'तत एनं दण्डपाणेः सकाशं कृतकिल्बिषम् । नेष्यामोऽकृतनिर्वेशं यत्र दण्डेन शुध्यती'ति यमदूतवाक्ये तेषां कृतकिल्बिषत्वेन ज्ञानं भ्रान्तिस्तया । यमदूतनीतानां यथाजामिलस्य । 'स पाशहस्तांस्त्रीन् दृष्ट्वा पुरुषान् भृशदारुणान् । वक्रतुण्डानूर्ध्वरोम्ण आत्मानं नेतुमागता'निति । 'विकर्षन्तोऽन्तर्हृदयाद्दासीपतिमजामिल'मिति भयात्रीतस्य । प्रत्यागतानामिति । यथाजामिलस्य । 'द्विजः पाशाद्विनिर्मुक्तो गतभीः प्रकृतिं गत' इति प्रत्यागतस्य । अनुभवस्येति । यथा 'ववन्दे शिरसा विष्णोः किङ्करान् दर्शनोत्सव' इत्यनुभवस्य पौराणिकानि वाक्यान्युक्तानि । तत्संवादरूपा बोध्येत्यर्थः । भाष्योक्तनृगप्रसङ्गे च 'एतस्मिन्नन्तरे याम्यैर्दूतैर्नीतो यमालयम् । यमेन पृष्टस्तत्राहं देवदेव जगत्पते । पूर्वं त्वमशुभं भुङ्क्ष्व उताहो नृपते शुभम् । नान्तं दानस्य धर्मस्य पश्ये लोकस्य भास्वतः । पूर्वं देवाशुभं भुञ्ज इति प्राह पतेति सः । तावदद्राक्षमात्मानं कृकलासं पतन् प्रभो' इति पौराणिकवाक्यसंवादरूपा बोध्या । बहुवचनादन्यत्रिकाणि वाक्यानि संग्राह्याणि ॥ १४ ॥ १५ ॥

१. यमक्षयम् ।

# तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥

किञ्चिदाशङ्क्य परिहरति । ननु नरकेषु चित्रगुप्ताद्यो भिन्ना एवाधिकारिणः सन्ति, तथा सति तृतीयः पक्षः स्यात्, अत आह । तत्र नरकादिषु येऽधिकारिणः, ते यमायत्तास्तत्सेवकाः । अतो यमस्यैव तत्रापि व्यापारान्न तृतीयपक्षप्राप्तिः । चकारात् सुखदुःखभोगेपि तृतीयपक्ष एव विरोधः ।

अथवा । यमगतेर्मन्त्रलिङ्गसिद्धेः पापस्य च पौराणिकत्वे चन्द्रगतिरेवैव

भाष्यप्रकाशः ।

तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥ सूत्रमवतारयन्ति किञ्चिदित्यादि । आशङ्कां व्युत्पादयन्ति नन्वित्यादि । यदि विलक्षणगतिदर्शनानुरोधेन 'ये के चे'ति श्रुतिं सङ्कोच्य फलाधिकारिभ्यां यमगतिर्द्वितीयाङ्गीकृता, तदा नरकाणां चित्रगुप्तादीनां च ततोपि वैलक्षण्ये सति युक्तेस्तौल्यात् सोपि तृतीयः पक्षः स्यात्, अन्यथा तु यमस्य नरकेष्वधिकारित्वाभावान्नियामकाभावेन तद्गतेरप्राप्त्या तद्बोधकस्मृतिविरोधापत्तेरित्यर्थः । परिहारं व्याकुर्वन्ति तत्रेत्यादि । तत्रापीति । नरकादिषु । तथाचैवं नरकगतिप्राप्तिसिद्धौ तद्गतिबोधकस्मृतिविरोधाभावेनातिरेकाङ्गीकारस्य वैयर्थ्यान्न तृतीयपक्षप्राप्तिरित्यर्थः । चकारसूचितं दूषणान्तरमाहुः चकारादित्यादि । तथाच सोमयमगती श्रौते अङ्गीकृत्य अस्य तथा तृतीयत्वमङ्गीक्रियते, तदास्याश्रौतस्य तृतीयत्वादेव विरोधः । अथवा । इयं यमगतिश्च चन्द्रगत्यवान्तरगतित्वेनाङ्गीक्रियते, तदा मन्त्रलिङ्गविरोधाद्विरोध इत्यर्थः । यद्वा । तद्भोगे चित्रगुप्ताद्यधिकारवत् तेषां यमायत्ततायाः अपि स्मार्तत्वात् तस्या अनङ्गीकारे तृतीयपक्ष एव विरोध इत्यर्थः ।

ननु स्मृतिविरोधः शिथिलः, श्रुतिस्तु यथा न वक्ति, तथा न निषेधति, अतः 'अप्रतिषिद्धमनुमतं भवती'ति न्यायेनातिरेकाङ्गीकारेपि को दोष इत्याशङ्क्य पक्षान्तरमाहुः अथवेत्यादि ।

रश्मिः ।

तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥ चित्रगुप्तेति । आदिना पञ्चमस्कन्धसमाप्त्युक्तास्तत्पुरुषाः अग्निष्वात्तादयस्तु निवसन्ति । युक्तेरिति । फलाधिकारिभ्यां गतिविभेदः स्यात्, तदा सोपि तृतीयः पक्षः स्यादित्यन्यथाज्ञानरूपायाः । अधिकारित्वेति । 'द्वादशैते विजानीमो धर्मं भागवतं भटा' इति वाक्यात् । एतेन भिन्ना एवेति भाष्यं समर्थितम् । नहि धर्मज्ञोऽधिकारी भवतीत्येवकारः । तद्बोधकेति । 'यमेन पृष्टस्तत्राह'मितिनृगवाक्यविरोधापत्तेः । नरकेति । नरक आदिर्येषां कर्मिणां चित्रगुप्तादीनां तेषु यमस्य भगवतोऽधोक्षजस्य व्यापारसंभवात् । एवकारस्तु ब्रह्मव्यापाराभावाय । यमस्य द्वारत्वात् । तदपि 'कृष्णायाक्लिष्टकारिण' इतिश्रुतेः विष्णोरपि न । स्थितिदशामात्रवृत्त्योत्पत्तिसंहारयोरननुगमात् । नरकगतीति । तद्गतीत्यपि पाठः । सोमयमेति । भाष्यीयसुखदुःखपदार्थौ । एवेति । पौराणत्वान्यव्यवच्छेदकः । बाध्यत्वेन विकल्पास्पदत्वाभावाच्छ्रौतमते सहानवस्थानां अविरोधस्तु सुखयोः कर्मवदत्राप्यश्रौतेपि श्रौतयमगतिकर्मव्यापारात्सौत्रः । अथवेति । चकारस्य द्वितीयार्थ इत आरभ्य । मन्त्रलिङ्गेति । पितृमेधे 'वैवस्वतं सङ्गमनं जनानां यमं राजान'मिति मन्त्रलिङ्गविरोधात् शास्त्रभेदाद्विरोधः । अविरोधस्तु वेदान्तशास्त्रत्वात्तत्रापि यमगतावपि तद्व्यापाराच्चन्द्रगतिरूपव्यापारात्सौत्रः । तेषामिति । चित्रगुप्तादीनाम् । तृतीयेति । तत्प्राप्तिलक्षणो विरोधः । श्रौतेन बाधात् । तत्रापि तादृशविषयेपि तद्व्यापाराद्यमव्यापारादविरोधः सौत्रः । पूर्वेन्त-

स्यादिति विरोधः । तेषां यमसेवकत्वे तु मन्त्रलिङ्गपोषकत्वान्मार्गद्वयसिद्धेरविरोधः । तस्मात् यमगतिरस्तीति सिद्धम् ॥ १६ ॥

इति तृतीयाध्याये प्रथमपादे तृतीयमनिष्टादिकारिणामित्यधिकरणम् ॥ ३ ॥

विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥ (३.१.४.)

साधारणत्वाभावाय पूर्वोक्तार्थसाधकमधिकरणमारभते । ननु 'ये के चास्माल्लोकात् प्रयान्ति[1], चन्द्रमसमेव ते सर्वे गच्छन्ती'त्यस्याः श्रुतेः का गतिः, पञ्चाग्निविद्याप्रस्तावे वा यमगतिः कुतो नोक्ता, तस्मात् वेदविरोधान्न तृतीयपक्षसिद्धिरित्याशङ्कां परिहरति तुशब्दः । अत्र वेदान्ते गौणमुख्यफलभेदार्थं[2] विद्याकर्मणो-

भाष्यप्रकाशः ।

तथाच निषेधाभावेनानुमतावपि श्रौतत्वं त्ववचनान्न शक्यवचनम् । अतः पापतन्नियामकयोः पौराणिकत्वमेव वाच्यम् । तथा सति कौशीतकिश्रुतावसङ्कोचाच्चन्द्रगतिरेकैव त्वन्मते श्रौती स्यात्, तदा यमगतेर्मन्त्रलिङ्गसिद्धेर्विरोधः श्रौत एवापतित इत्यर्थः । मार्गद्वयसिद्धेरिति । चन्द्रगतियमगत्योः सिद्धेः । तथाच तदा अस्यापि श्रौतमध्यपातादविरोध इत्यर्थः ॥ १६ ॥ इति तृतीयमनिष्टादिकारिणामित्यधिकरणम् ॥ ३ ॥

विद्याकर्मणोरिति तु प्रकृतत्वात् ॥१७॥ अधिकरणप्रयोजनमाहुः साधारणेत्यादि । सोमगतेः सर्वजीवसाधारणत्वाभावाय यमगतिसाधकं तदारभत इत्यर्थः । कथं साधकमित्यपेक्षायां तुशब्दव्याख्यानमुखेन शङ्कामुत्थाप्य तत्परिहारेण साधकमित्याशयेन सूत्रं व्याकुर्वन्ति नन्वित्यादि । तथाच यदि यमगतिरत्राभिप्रेता स्यात्, तदा कौशीतकिश्रुतौ सर्वेषां चन्द्रगतिर्नोच्येत । पञ्चाग्निविद्याप्रस्तावेपि सोच्येत । अतो गतिबोधके स्थलद्वयेप्यनुक्तत्वात् तदङ्गीकार एतदुभयविरोधान्न तस्यास्तृतीयस्या गतेः सिद्धिरिति शङ्कामित्यर्थः । परिहारं व्याकुर्वन्ति अत्रेत्यादि ।

रश्मिः ।

भावेनाप्राप्तेस्तृतीयपक्षस्य । द्वितीयपक्षव्यवच्छेदक एवकारः । पापेति । नियामकाः चित्रगुप्तादयः । एवेति । श्रौतताव्यच्छेदकः । कौशीतकीति । अग्रिमाधिकरणे वक्ष्यमाणायाः सर्वस्याश्चन्द्रगतेरसङ्कोचात् । एकैवेति । यमगतिव्यच्छेदक एवकारः । मन्त्रलिङ्गेति । मन्त्रलिङ्गेन सिद्धिर्यस्या यमगतेः । एवेति । स्मार्तव्यवच्छेदकः । इत्यर्थ इति । भाष्ये । तेषामित्यादि । चित्रगुप्तादीनाम् । मन्त्रेति । मन्त्रे लिङ्गं यमगतेस्तस्याः पोषकत्वात् राजत्वपोषकत्वात् मन्त्रगतं राजत्वम् । चन्द्रगतीति मार्गद्वयपोषकयोः सिद्धेः ॥ १६ ॥ इति तृतीयमनिष्टादिकारिणामित्यधिकरणम् ॥ ३ ॥

विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥ यमगतीति । द्वितीयायाः चन्द्रमार्गीयमगतेः बाधकम् । तुशब्देति । मुखमुपायः । तत्परीति । पञ्चाग्नीतिभाष्यं विवृण्वन्ति स्म पञ्चाग्नीति । तदङ्गीकार एतदुभयेति । यमगत्यङ्गीकारे । तस्मादित्यादिभाष्यं विवृण्वन्ति स्म एतदुभयेति । पञ्चाग्निविद्याकौषीतकीश्रुत्युभयविरोधात् । तृतीयस्या इति । तृतीयत्वं चित्रगुप्तपक्षस्य सोममार्गयमगतिपक्षेतरत्वात् । अत्रेत्यादीति । एवेति । चित्रगुप्तपक्षव्यवच्छेदकः ।

१. प्रलयन्ति, प्रयन्ति । २. दानार्थं देहार्थमिति पाठौ ।

रेव हेतुत्वेन निरूपणम् । विद्यया देवयानम्, कर्मणा सोमभाव इति । तयोरेव प्रकृतत्वात् कारणत्वात् । तेन कौषीतकिब्राह्मणेपि प्रकृतत्वात् कर्मिण एव सर्व-शब्देनोक्ताः । अत्रापि न यममार्ग उक्तः । तस्मात् विद्याकर्मणोर्मुख्यत्वान्मार्ग-द्वयमेवोक्तम् । नैतावता तृतीयबाधः ॥ १७ ॥

न तृतीयेऽतथोपलब्धेः ॥ १८ ॥

ननु द्वयोः स्तुत्यर्थं यस्तृतीयो मार्ग उक्तः, 'अथैतयोः पथोर्न कतरेणचन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ती'त्यादिना 'जुगुप्सेते'त्यन्तेन तृतीयनिन्दया द्वयोः स्तुतिरिति स एव तृतीयोऽस्तु, किं यममार्गेणेत्यत आह । न तृतीये मार्गे तथा पुण्यपापयोरुपभोग उपलभ्यते । यतः समानब्राह्मणे

---

भाष्यप्रकाशः ।

सोमभाव इति । प्रथमाहुतिफलात्मकः पितृयाणात्मकधूममार्गोक्तश्च सोमभावः । तयोरेव प्रकृतत्वात् कारणत्वादिति । मुख्यफलार्थं 'तद्य इत्थं विदु'रिति विद्यायाः, गौणफलार्थं 'य इमे ग्राम' इत्यादिना कर्मणश्च कारणत्वेन प्रकृतत्वात् । तथाच प्रकृतत्वाभावात् तदनुक्तिः, न तु यमगत्यभावादित्यर्थः । एतदेव स्फुटीकुर्वन्तो द्वितीयामपि शङ्कां परिहरन्ति तेनेत्यादि । मार्गद्वयमेवोक्तमिति । इदं सौत्रस्येतिशब्दस्य व्याख्यानं ज्ञेयम् ॥ १७ ॥

न तृतीयेऽतथोपलब्धेः ॥ १८ ॥ किञ्चिदाशङ्क्य परिहरतीत्याशयेनाहुः ननु द्वयोरि-त्यादि । इत्यत आहेति । यतः पूर्वसूत्रोक्तेऽर्थे एवमाशङ्कोत्पद्यते, अतस्तन्निवर्तकं हेतुमाहेत्यर्थः । यद्वा । अत्र 'न तृतीये मार्गे' इत्यादिकं सूत्रसिद्धार्थकथनम् । सूत्रयोजना त्वेवम् । न, यममार्गबाधो न । कुतः । तृतीयेऽतथोपलब्धेः । 'तानीमानी'त्यादिनोक्ते मार्गे यमगतिविलक्षणपापभोगोपलम्भा-दिति ज्ञेया । यतः समानब्राह्मण इत्यादिना तदुपपादनम् । समानब्राह्मणं च बृहदारण्यकस्थम् । तत्र 'कीटा' इत्यादिना क्षुद्राणि भूतानि निष्कृष्यन्ते । तादृश्यां योनौ निर्वृतिस्तु महाभारते

रश्मिः ।

विद्याया इति । पञ्चाग्निविद्यायाः । प्रकृतत्वादिति । प्रकृतत्वादित्यस्य सौत्रपदस्य कारणत्वादित्यर्थः । तदनुक्तिरिति । तृतीयचित्रगुप्तपक्षानुक्तिः । स्फुटीति । तेनेत्यारभ्य उक्त इत्यन्तेन । अत्रा-पीति । पञ्चाग्निविद्यायाम् । एवोक्तमिति । तुरेवकारार्थ इति भावः । भाष्ये । एतावतेति । पक्षाविष-यमार्गोक्त्या । तृतीयबाध इति । सोममार्गो यमगतिश्चेति पक्षद्वयम् । चित्रगुप्तपक्षस्तृतीयः । तथा चात्र मार्गत्रयं पक्षत्रयं च । तथाच तृतीयपक्षबाध इत्यर्थः ॥ १७ ॥

न तृतीयेऽतथोपलब्धेः ॥ १८ ॥ भाष्ये । उक्त इति । छान्दोग्ये मार्गद्वयोक्त्यनन्तर-मुक्तः । अथैतयोरिति । पञ्चाग्न्यादिचतुष्टयानन्तरम् । तृतीयोऽस्त्विति । पक्षोऽस्तु । यम-मार्गेणेति । चित्रगुप्तपक्षेण । प्रकृते । यद्यपि पुण्यपापभोगस्योपलब्धेरिति कर्मणिक्तिन्नुपलभ्यते, तथापि भावेक्तिन्नन्तस्य प्रयोगे न सम्भवतीत्याशयेनाहुः यद्वेति । यममार्गेति । मार्गपक्षयोरभेदेन पक्षस्थले मार्गशब्दः । यमगतीति । उपलम्भशब्दे भावे घञोपलब्धेरित्यत्र भावेक्तिनोऽविरोध इति भावः ।

---

१. अतथोपलब्धेरिति श्रीपुरुषोत्तमानां संमतः पाठः, अन्ये तु तथोपलब्धेरिति पठन्ति । २. क्षेत्राणि ।

'कीटाः पतङ्गा यदि दन्दशूक'मिति योनौ निर्वृतेर्विद्यमानत्वान्न महत्पापोपभोगः।[1] नापि कीटादिषु महासुखोपभोगः। एकवाक्यता चोभयोर्युक्ता। यद्यपि महाराजाधिराजदण्डादिषु तथोपभोगः सम्भवति, तथापि रम्भादिसम्भोगे नरके च यथा,

भाष्यप्रकाशः।

कीटोपाख्यानात् बोध्या। तथाच यममार्गे यादृशः सुखदुःखभोगः, तादृशो न छान्दोग्योक्ते तृतीयमार्गे इति न तेन तस्य गतार्थतेत्यर्थः। ननु योनिनिर्वृत्या पापभोगवैलक्षण्यसाधनमयुक्तम्, 'नरकस्थोपि वै जन्तुर्न देहं मोक्तुमिच्छति। नारक्यां निर्वृतौ सत्यां देवमायाविमोहित' इति तृतीयस्कन्धे नरकेपि निर्वृतिकथनात्, अतो न तृतीयस्य यममार्गाद्वैलक्षण्यमित्यत आहुः एकवाक्यतेत्यादि। 'तानीमानी'त्यादिनोक्तस्य उभयोर्देवयानपितृयाणयोरेकवाक्यतैव प्रकरणाद्युक्ता। पूरणप्रत्ययान्तस्य तृतीयशब्दस्य संख्यापूरणार्थं मार्गद्वयसाकाङ्क्षत्वात्। मार्गद्वयवाक्यस्य च तत्स्तुत्यर्थं तृतीयसाकाङ्क्षत्वात्। यममार्गस्य तु भिन्नप्रक्रमपठितत्वेन मार्गद्वयापेक्षाराहित्यान्न छान्दोग्योक्तमार्गद्वयैकवाक्यत्वमित्युपपादितम्। यद्ययं यमगत्यवैलक्षण्येन तदात्मकः स्यात्, अस्याप्युभयैकवाक्यता भज्येत, अतो न तदवैलक्षण्यमित्यर्थः। एतदुपष्टम्भाय युक्त्यन्तरमाहुः यद्यपीत्यादि। तथोपभोगः सम्भवतीति। 'जायस्वे'ति मार्गेपि महोपभोगः संभवति। तथाचैवमपि वैलक्षण्यानपायाद्यममार्ग एतस्माद्भिन्न इत्यर्थः। ननु तर्हि पञ्चाग्निमार्ग एव यममार्गः प्रविशतु, पञ्चाग्निमार्गेपि यममार्ग इव देहान्तरप्राप्तेर्जडभरते दर्शनात्। अत एव पञ्चाग्निमार्गस्य ज्ञानोपयोगिदेहजनकत्वमप्यसङ्गतम्, तथा सति ज्ञानोदयेनाग्रे जन्मद्वयाभावापत्तेः, अथ जडशरीरमेव पञ्चम्याहुतिफलमित्युच्यते, तदा तु रेतोभावस्य वारत्रयं भवनात् पुरुषभावस्य च विच्छेदेन वारद्वयं भवनादाहुतिक्रमबाध इति सर्वसामञ्जस्याय 'जायस्वे'ति मार्गस्यैव

रश्मिः।

**बोध्येति**। तथाच भाष्ये **महदि**त्यत्र महतां पापानि तेषामुपभोगः इति विग्रहान्न कर्मधारयः। अतो न 'आन्महद्'दिति सूत्रस्य प्राप्तिः। **महेति**। महच्च तत्सुखमिति न समासः। कीटादिषु तदभावेनानन्वयप्रसङ्गात्। तेन महांश्चासौ सुखोपभोग इति कर्मधारयः। 'आन्महद्'दित्यात्वम्। **यममार्ग इति**। यमगतौ। **तेन तस्येति**। छान्दोग्योक्तेन मार्गेण तृतीयेन। **तस्य** यममार्गस्य। **यमेति**। यमगतिरूपात्। **एवेति**। पृथग्वाक्यताव्यवच्छेदकः। आर्थक्रमे पञ्चाग्निविद्याप्रकरणान्तर्गतार्चिरादिप्रकरणाद्युक्ता। **पूरणेति**। व्याकरणप्रसिद्धः पूरणप्रत्ययः। **तत्स्तुत्यर्थमिति**। सा चासौ स्तुतिस्तत्स्तुतिस्तदर्थम्। **यममार्गस्येति**। यमगतेः। **भिन्नेति**। 'वैवस्वतं संगमन'मिति मन्त्रबोधितस्य यममार्गस्य मन्त्रप्रक्रमपठितत्वेन। **उपपादितमिति**। उपपादितप्रायम्। **अयमिति**। यममार्गः, यममार्गत्वेन यममार्गः, न तु यमगतित्वेन वैलक्षण्येन। **तदात्मकस्**तृतीयमार्गात्मकः। **अस्यापीति**। यममार्गस्यापि। अपिना यमगतेः। यथोक्त'तानीमानी'त्यस्य यमगतिविलक्षणस्य सन्नद्दण्डस्यैकवाक्यतायामसन्नद्दण्डस्यैकवाक्यताभावादेकवाक्यता भज्येत। अतो भङ्गभयात् 'तानीमानी'त्यादिनोक्तस्य छान्दोग्योक्तस्य तृतीयमार्गस्य न यमगत्यवैलक्षण्यमित्यर्थः। **एतदिति**। यममार्गयमगत्योरुपष्टम्भाय। **एवेति**। दृष्टान्तभावादेवकारः। **यममार्ग इति**। यमगतिः। **यममार्ग इति**। भिन्नप्रक्रमपठितोपि। **जडभरत इति**। भिन्नप्रक्रमपठिते दार्ष्टान्तिकत्वस्य दर्शनात्। **जन्मद्वयेति**। भरतस्य हरिणब्राह्मणजन्मद्वयाभावापत्तेः। **एवेति**। ज्ञानोदयव्यवच्छेदकः। **विच्छेदेनेति**। मृगशरीरव्यवधानेन। **आहुतीति**। 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती'ति पञ्चम्याहुतिक्रमबाधः। मृगशरीरेण विच्छेदात्। **मार्गस्यैवेति**। चित्रगुप्तव्यवच्छेदक एवेति, न तु

१. महापापोपभोगः।

तथा न सम्भवति। जडे तु पञ्चम्याहुतिर्भरत एव हीश्वरेच्छया जन्मद्वयमधिकम्। 'त्रिभि'रिति वचनात्। भरतोऽहमिति प्रतीतेश्च। ततः पूर्वमस्मरणात् बाल्यादिवदेव जन्मत्रयम्। तस्मात् 'जायस्वे'त्यादिवैलक्षण्यादतिरिक्तो यममार्गः। पञ्चाहु-

भाष्यप्रकाशः।

तृतीयत्वं भवतु, वैलक्षण्यस्य मार्गभेदकताया अप्रयोजकत्वादित्याशङ्कायामाहुः जडे त्वित्यादि। वचनं त्वेकादशस्कन्धे नारदेनार्षभान् प्रस्तुत्योक्तम्। 'स भुक्तभोगां त्यक्त्वेमां निर्गतस्तपसा हरिम्। उपासीनस्तत्पदवीं लेभे वै जन्मभिस्त्रिभि'रिति। अत्र या वैराग्यादिसंपदुक्ता, सैव तस्य पञ्चमाहुतिफलत्वस्येश्वरेच्छायाश्च ज्ञापिका। पञ्चमस्कन्धे प्रियव्रतं प्रति ब्रह्मवाक्येषु तथा निर्धारात्। प्रारब्धपक्षेपि तस्य द्वारत्वान्न शङ्कालेशः। प्रतीतेरिति। पञ्चमस्कन्ध एव 'अहं पुरा भरतो नाम राजे'ति जडोक्तायाः प्रतीतेः। एतेन स्मृतिमज्जन्मज्ञापनात् तादृशानुशयवत्त्वमुक्तम् उक्तहेतुद्वयात सिद्धम्। जन्मत्रयस्य स्वरूपमाहुः तत इत्यादि। ततः पूर्वमिति। भरतदेहात् पूर्वम्। तथाच भरतदेहस्यैव पञ्चमाहुतिफलत्वादग्रिमयोर्जन्मनोरवस्थातुल्यत्वेन तदभेदान्नाहुतिक्रमभङ्गः, न वा

रश्मिः।

चित्रगुप्तस्येति। मार्गेति। गतेर्मार्गाद्भेदकतायाः। जडे त्वित्यादीति। महाभागवतत्वात् ज्ञानोपयोगिदेहो ज्ञायते। जीवहोमं विहायाम्भोम उक्तस्तस्य स्वारस्यम् जडशब्देन। डलयोरभेदात्। तेन तृतीया जन्मतिथिर्जडभरतस्येति ज्ञायते। एवकारस्तु अन्यत्र चेतने जडशब्दाप्रयोगात्। हीति। तृतीयाजो निर्जीवदेह इति ज्योतिषे निश्चयात्। त्रिभिरिति भाष्यं विवृण्वन्ति स्म वचनमिति। वैराग्यादीति। 'गां त्यक्त्वेमा'मिति वैराग्यम्। आदिना तत्पदवीलाभः। ज्ञापिकेति। जडभरतः पञ्चमाहुतिफलं वैराग्यादिसम्पदः ब्रह्मवत्। पूर्वोक्तः जन्मद्वयवान्। ईश्वरेच्छायाः जयविजयवत् इत्येवंज्ञापिका। ब्रह्मवाक्येष्विति। 'भवाय नाशाय च कर्म कर्तुं शोकाय मोहाय सदाभयाय। सुखाय दुःखाय च देहयोगमव्यक्तदिष्टं जनताङ्ग धत्ते। ईशाभिसृष्टं ह्यवरुन्ध्महेऽङ्ग दुःखं सुखं वा गुणकर्मसङ्गात्। आस्थाय तत्तद्यदयुङ्क्त नाथश्चक्षुष्मतान्धा इव नीयमानाः। मुक्तोपि तावद्बिभृयात्स्वदेहमारब्धमश्नन्नभिमानशून्यः। यथानुभूतं प्रतियातनिद्रः किन्त्वन्यदेहाय गुणान्न वृङ्क्ते' इत्येतेषु तथा निर्धारः। तस्मात्। नाथ इत्युक्तेः ब्रह्मा पञ्चमाहुतिफलं वैराग्यादिसम्पदः जडभरतवत्। ब्रह्मा जन्मवान्, ईश्वरेच्छायाः जयविजयवत्। ईश्वरे पञ्चाग्निविद्यास्ति। अन्यथान्यत्रकार्ये पञ्चाग्निविद्या न स्यात्। प्रारब्धेति। जडभरतप्रसङ्ग उक्तोयं पक्षः। तस्मिन्। 'स्वप्रारब्धकर्मणा योगारम्भणतो विभ्रंशित' इति जडभरतप्रसङ्गे। द्वारेति। भगवदिच्छाद्वारत्वात्। एवेति। स्कन्धान्तरव्यवच्छेदकः। तादृशेति। फलशेषरूपानुशयवत्त्वम्। तादृशानुशयवत्त्वेन योग्यदेहेन कार्यकारणभावः। उक्तेति। त्रिभिरित्यादिभाष्योक्ताद्धेतुद्वयात्। भरतेति। ल्यब्लोपे पञ्चमी। भरतदेहं प्राप्य पूर्वत्वेनावच्छिन्नं पूर्वम्। जन्मत्रयस्येति। भरतस्य जन्मत्रयस्य। एवेति। अग्रिमदेहद्वयव्यवच्छेदकः। अवस्थेति। देहस्यावस्था देहस्यात्र जन्मेति तत्तुल्यत्वम्। पूर्वदेहेनैवात्मतया देहद्वयस्वीकारात्। 'जन्म त्वात्मतया पुंसः शरीरस्वीकृतिं प्राहु'रिति। तदभेदादिति। पूर्वदेहाभेदात्। 'अहं मनुरभवं सूर्यश्चे'ति वामदेववत्। इयान् विशेषः। वामदेवस्य जीवेश्वरः। अत्र तु जीवाभावः। जीवसहितवृष्टेः पुरुषवचस्त्वे ब्रह्मा उदाहरणम्। न च हरिणदेहः पार्थिव इति वाच्यम्। 'मृगशरीरं तीर्थोदकक्लिन्नमुत्ससर्जे'ति वाक्यात्। न हि पार्थिवदेहस्तीर्थोदक-

तिनियमाभावस्तु ज्ञानोपयोगिदेहेऽप्यंशावतरणे पुष्टिमार्गत्वान्न तत्र दोषः ॥ १८ ॥

स्मर्यतेपि च लोके ॥ १९ ॥

साधकान्तरमाह । अपि च लोकेपि मूर्च्छादिषु यमलोकगमनसम्भाषणपुनरागमनानि स्मर्यन्ते ॥ १९ ॥

दर्शनाच्च ॥ २० ॥

यमपुरुषा दृश्यन्तेपि कैश्चिदजामिलप्रभृतिभिः । चकारात् तेषां वाक्यादिश्रवणम् । तस्मात् वैवस्वतमार्गे न किमपि बाधकमिति सिद्धम् ॥ २० ॥

इति तृतीयाध्याये प्रथमपादे चतुर्थं विद्याकर्मणोरित्यधिकरणम् ॥ ४ ॥

---

भाष्यप्रकाशः ।

तद्देहस्य ज्ञानानुपयोगित्वमिति नात्र यममार्गप्रवेशः शक्यवचन इत्यर्थः । तस्मादित्यादि । ननु मास्त्वेवमाहुतिक्रमभङ्गः, तथापि विदुरार्जुनादौ सोमादिभावाभावात् संख्यानियमस्तु भग्न एवेत्यत आहुः पञ्चेत्यादि । तत्रेति । मर्यादामार्गे ॥ १८ ॥

स्मर्यतेपि च लोके ॥ १९ ॥ दर्शनाच्च ॥ २० ॥ एतत्सूत्रद्वयभाष्यं त्वतिरोहितार्थम् । एवञ्च सिद्धे यममार्गे 'जायस्वे'ति तृतीयस्यापि विवेचकसापेक्षत्वात् तस्मिन्निवेशः, न तु तस्य 'जायस्वे'ति मार्ग इति सिद्धमिति भावः ॥ १९ ॥ २० ॥ इति चतुर्थं विद्याकर्मणोरित्यधिकरणम् ॥ ४ ॥

रश्मिः ।

क्लिन्नो भवति । जले स्थातुमप्यशक्तः, अयं तु मीनवत्स्थातुं शक्तः क्लिन्नो भवत्येवेति । न चात्मसहचर इति मृगशरीरभरतस्य तस्मिन्नाद्ये विशेषणाज्जीवसहितवृष्टिः पुरुषवचा इति वाच्यम् । एकाकीत्यर्थेन जीवप्रापकत्वाभावात् । नेति । 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती'ति क्रमभङ्गो न । क्रमस्य भरतदेहपर्यन्तत्वात् । ब्रह्मभावं गतस्य जातदेहाभेदो देहद्वयेन योगिनामिव समवाय्यभेदो मृद्घटवदित्येवकारो भाष्ये बाल्यादिवदेवेत्यत्र । एवमिति । अभेदेन पूर्वदेहस्य । सोमादीति । दासीपुत्रो विदुरः, इन्द्रादिपुत्रा अर्जुनादयः, तत्र ज्ञानोपयोगिदेहमात्रम्, न सोमादिभावः, अस्मरणात् । संख्येति । पञ्चाहुतिपञ्चसंख्यानियमः पञ्चेत्यादीति । अंशावतरण इति । विदुरादयोंशावतारा इति भावः । मर्यादेति । 'पार्थास्तु देवो भगवा'निति वाक्यात् पुष्टिमर्यादायामङ्गीकारादिति भावः ॥१८॥

स्मर्यतेपि च लोके ॥ १९ ॥ दर्शनाच्च ॥ २० ॥ अतिरोहितेति । साधकान्तरेति । वैवस्वतमार्गे तथा । अजामिलेति । प्रभृतिशब्देन नृगादिः । वाक्यादीति । आदिना तदभावस्तज्जातिश्च । येनेन्द्रियेण यद्गृह्यते, तेनैवेन्द्रियेण तद्गता जातिस्तदभावश्च गृह्यत इति । एवमतिरोहितार्थमित्यर्थः । यममार्ग इति । यमगतिरूपे । विवेचकेति । मार्गत्वविवेचकगतिसापेक्षत्वात्तस्मिन् यमगतिरूपे । तस्येति । यममार्गस्य यमगतित्वरूपेण ॥ १९ ॥ २० ॥ इति चतुर्थं विद्याकर्मणोरित्यधिकरणम् ॥ ४ ॥

## तृतीयशब्दावरोधः संशोकजस्य ॥ २१ ॥ (३.१.५)

तृतीयामाहुतिं विचारयति। तत्र 'वृष्टेरन्नं भवती'ति तृतीयाहुतिः सफला। पूर्वद्वयं शब्दैकसमधिगम्यम्। 'वृष्टेरन्न'मिति साधनफलयोः प्रत्यक्षत्वान्न वृष्टिमात्रेणान्नं भवति बीजव्यतिरेकेण। बीजस्य हि फलम्। न निमित्तमात्रेण तद्भावो वक्तुं शक्यते। तस्मादसङ्गतं वृष्टेरन्नमित्याशङ्क्याह। तृतीयशब्दावरोधः। तृतीयाहुतौ शब्देन शब्दसाम्येन कारणभूतस्य जलस्य अवरोधो ग्रहणम्। 'सदेव सोम्येदमग्र आसी'दित्यत्र 'तत् तेज ऐक्षत, बहु स्यां प्रजायेयेति, तदपोऽसृजत, तस्माद्यत्र क्व च शोचति स्वेदते वा पुरुषस्तेजस एव तदध्यापो जायन्त' इत्यत्र कारणरूपापां निरूपणे शोकजत्वमपामुक्तम्। अग्रे च 'तस्मात् यत्र क्व च वर्षति, तदेव भूयिष्ठमन्नं भवती'ति। अतः पञ्चाग्निविद्यायामपि देवहोमात् कारणभूतैव वृष्टिर्जातेति नात्र बीजान्तरापेक्षा। शोकपदेन 'यदश्रु अशीयत तद्रजत५ हिरण्यम-

---

### भाष्यप्रकाशः।

तृतीयशब्दावरोधः संशोकजस्य ॥ २१ ॥ अधिकरणप्रयोजनं वदन्तोवतारयन्ति तृतीयामित्यादि। तथाच तृतीयाहुतावेतादृशशङ्कोत्थानात्तां विचारयतीत्यर्थः। सूत्रं व्याकुर्वन्ति तृतीयाहुतावित्यादि। शब्दसाम्येनेति। अन्नफलजनकहोम्यवाचकस्य वर्षशब्दस्य जलसंग्राहकतया कारणभूते कार्यभूते च जले तुल्यत्वेन। हेतुं व्याकुर्वन्ति सदेवेत्यादि। उक्तमित्यन्तेन। आसीदित्यत्रेति। अस्मिन् सन्दर्भे। जायन्त इत्यत्रेति। अस्मिन् वाक्ये। तथाचात्र कारणभूतानामपां शोकजत्वकथनादित्यर्थः। ननु तासां शोकजत्वकथने कथं प्रकृते कारणरूपजलसिद्धिरित्यत आहुः अग्रे चेत्यादि। तथाच कारणरूपापां प्रक्रमात् पश्चादन्नकारणत्वेन तत्कथनात्तत्सन्दष्टत्वेन शोकजानामपि कारणरूपत्वमेवाभिप्रेतमित्यर्थः। अत इति। उक्तरीत्या कारणरूपापां वर्षणात्मकफलकथनात्। अत्र च होतारो देवा अप्याधिदैविका भगवदवयवभूता एव बोध्याः। वैदिकसृष्टेरतिरिक्तत्वस्य प्रथमाध्याये एव व्यवस्थापनादिति। नन्वेवं सति शोकपदकथनस्य किं प्रयोजनमत आहुः शोकेत्यादि। इयं श्रुतिस्तु तैत्तिरीयसंहिताप्रथमाष्टकीयपञ्चमप्रपाठकार-

### रश्मिः।

तृतीयशब्दावरोधः संशोकजस्य ॥ २१ ॥ हेतुमिति। संशोकजस्येति हेतोरिति सम्बन्धसामान्यविवक्षायां षष्ठीत्याशयेनोक्तं हेतुपदम्। संशोकजशब्दो भावप्रधानः संशोकजत्वस्येत्यर्थः। तथा च संशोकजत्वादिति हेतुस्तम्। शोकजत्वेति। संशोकजस्येति भावप्रधानमित्युक्तम्। हेतुतासम्बन्धविवक्षायां षष्ठी सम्बन्धसामान्ये इति भावः। यद्यपि दर्शनाच्चेत्यनुवर्त्य संशोकजस्य जलस्य तृतीयायामाहुतौ ह्रस्वश्छान्दसः। कार्यकारणसाधारणशब्देन कारणभूतस्य जलस्यावरोधो ग्रहणम्। 'सदेव सोम्येद'मित्यत्र दर्शनादित्यर्थे संशोकजस्येत्यत्र न कल्पना। तथाप्येकवचनेनापां शब्दान्तरेण ग्रहणाल्लाघवाच्च संशोकजपदे कल्पनेति बोध्यम्। तत्सन्दष्टत्वेनेति। कारणसन्दंशविषयत्वेन। शोकजानां कार्यरूपाणाम्। एवेति। कार्यरूपत्वव्यवच्छेदक एवकारः। वर्षणेति। वृष्ट्या। भाष्ये। एव वृष्टिरिति। 'देवा वर्षं जुह्वती'ति श्रुतेरेवकारः। बीजेति। किन्तु जलस्यैवान्नसमवायिकारणत्वम्। शोकेत्यादीति। यत् अश्रु अशीयत। शोकप्रसङ्गादश्रु शोकसम्बन्धि। अशीयतेत्यत्र 'शीङ् स्वप्ने' अ. आ. अ. लङ-

भव'दिति सहायः सूचितः । यद्यपि तत्रान्नशब्देन पृथिवी, तथाप्यत्र पृथिव्या अग्निसमिद्रूपत्वादन्नमेव । तस्मात् कारणशक्तियुक्ताया वृष्टेरन्नं भवतीति न काप्यनुपपत्तिः ॥ २१ ॥

साभा व्यापत्तिरुपपत्तेः ॥ २२ ॥

किञ्चिदाशङ्क्य परिहरति। ननु कारणजलरूपवृष्टिरत्र वक्तुं न शक्यते, यतः समानधूममार्गश्रुतौ वृष्टेरन्नभावे ऐक्ये वा 'तस्मिन् यावत्सम्पातमुषित्वा अथैतमेवाध्वानं पुनर्निवर्तन्ते, यथेतमाकाश'मित्यादिना 'तिलमाषा इति जायन्त' इत्यन्तेन। तत्र 'यथेत'मित्याकाश एव। 'आकाशाच्चन्द्रमस'मिति पूर्वमुक्तत्वादाकाशस्य

भाष्यप्रकाशः ।

म्भस्था । तथाच भौतिकानामप्यपां कारणत्वस्य श्रुत्यन्तरेणोपष्टम्भार्थं तथा कथनमित्यर्थः । अग्निसमिद्रूपत्वादिति । छान्दोग्येऽग्निरूपत्वात् बृहदारण्यके समिद्रूपत्वात् । शेषं स्फुटम् ॥ २१ ॥

साभा व्यापत्तिरुपपत्तेः ॥२२॥ सूत्रमवतारयन्ति किञ्चिदित्यादि । ऐक्य इति । पञ्चाग्निमार्गधूममार्गयोरभेदे । समाने धूममार्गे ऐक्ये वा वृष्टेरन्नभाव इत्यन्वयः । इत्यन्तेनेति । विरोधादिति शेषः । विरोधं व्युत्पादयन्ति तत्र यथेत्यादि । तत्र श्रुतौ 'यथेत'मित्यनेनोक्तं पुनर्निवर्तनमा-

रश्मिः ।

धिकरणव्यत्ययः । शपः स्थाने श्यन् अलोपश्च । अद् । यद्यपीति । अत्रापां द्रव्यजनकत्वेन सहायः सूचितः, सः 'अद्भ्यः पृथिवी'ति श्रुत्युक्तः, न विलक्षणः, अतो नात्रोपयुज्यत इति यद्यपीत्यादिग्रन्थेनोक्तम् । तत्रेति । संहितायां यत्र कुत्रचित् अन्नशब्देन पृथिवी । 'पृथिवी वा अन्न'मिति तैत्तिरीयोपनिषच्छ्रुतेः । अत्रेति । उत्तरमीमांसायाम् । प्रकृते । उपष्टम्भेति । भाष्यीयसहायपदार्थः । सहाय उपष्टम्भस्तदर्थम् । अग्नीति । 'पृथिवी वा गौतमाग्नि'रिति श्रुतेः । समिदिति । 'अयं वै लोकोऽग्निर्गौतम तस्य पृथिव्येव समि'दिति श्रुतेः । अन्नमेवेति भाष्ये । 'देवा अन्नं जुह्वती'ति श्रुतौ। ननु 'अद्भ्यः पृथिवी'तिश्रुतेरब्जन्यान्नं पृथिवीति चेत् । न । एवेत्यवधारणात् । तथाच श्रुतिः 'तस्माद्यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवती'ति । न हि वर्षेण पृथिवी भवति । दृष्टविरोधात् । अतः पृथिव्या व्यवच्छेदक एवकारः । कारणेति । आविर्भावकशक्तियुक्तायाः । आविर्भावकशक्त्याधारस्य कारणत्वात् । घटोत्पत्त्यनन्तरमाविर्भावकशक्त्याधारत्वमिति चेदस्तु तथा व्यवहारात् प्रागभावाभावान्न घटोत्पत्तिः॥२१॥

साभा व्यापत्तिरुपपत्तेः ॥ २२ ॥ सा आभा व्यापत्तिः उपपत्तेरिति चतुष्पदमिदं सूत्रम् । भाष्ये । समानेति । अर्चिरादिमार्गेण समाने । उभयत्र चन्द्रगतिदर्शनात् 'आदित्याच्चन्द्रमस'मिति 'आकाशाच्चन्द्रमस'मिति क्रमेण । 'यदेव विद्यया करोति' इति श्रुत्योक्तं स्मारितम् । वेदान्ते जैमिनिमतवत् । अन्यथा वेदान्ते धूममार्गः कस्मै प्रयोजनाय स्यात् । तस्माच्छान्दोग्यीयवक्ष्यमाण'जायस्व म्रियस्वे'ति मार्गे विलक्षणयमगतिसहितचन्द्रगतिसमानधूममार्गश्रुतौ वृष्टेरन्नभावे 'मेघो भूत्वा प्रवर्षति त इह व्रीहियवा' इत्यादिश्रुत्युक्ते । तेन जीवमात्रहोमोऽत्र ज्ञेयः । 'तं प्रेतं दिष्टमितोऽग्नय एव हरन्ती'ति सावधारणश्रुतेः पञ्चाग्निविद्याविषयत्वेन धूममार्गे 'अथ य इम' इत्यथशब्देन भिन्नो-(पक्र)माच्च न धूममार्गे, श्रद्धाहोमाभावात् । प्रवर्षतीति प्रवर्षणं तु विद्यात्वा'त्तदपोऽसृजते'ति श्रुत्या भविष्यति । जीवकृतवृष्टेर्जीवेन सहान्नभाव इत्यर्थः । जैमिनिमते त्वाहुः ऐक्ये वेति । पूर्वत्र जीवस्य नैक्यं वृष्टेरैक्यमत्र तूभयोरिति विशेषः । तथाच श्रुतिः 'अस्य सोम्य महतो वृक्षस्य यो मूलेऽभ्याहन्यात् जीवन्स्रवे'दिति । स्पष्टार्थो । समानत्वप्रपञ्चार्थं विरोधं व्युत्पादयन्ति स्म तत्र यथेति । इतं गतं

मार्गतैव। 'वायुर्भूत्वा धूमो भवती'त्यादिषु तत्तद्भावः श्रूयते। ते च विकृताः। तदनन्तरभावित्वात् वृष्टिरपि विकृतैव। तस्मान्न कारणत्वमित्याशङ्क्य परिहरति।

सा वाय्वादिरूपापत्तिराभा ऽव्यापत्तिरेव। वायुवदाभा आभानम्। मध्ये वायुमण्डलेनागच्छन्ती आहुतिर्वायुभवनशब्देनोच्यते। आकृतेरेव पदार्थत्वात्।

भाष्यप्रकाशः।

काश एव। 'आकाशाच्चन्द्रमस'मिति पूर्वमारोहे उक्तत्वात्। नाग्रे। आरोहावरोहाध्वनोर्भेददर्शनात्। अत आकाशस्य मार्गतैव, न तु जीवस्याकाशरूपेण भवनमपि। तत्राकाशो भूत्वेत्यश्रवणात्। अग्रे तु 'वायुर्भूत्वे'त्यादिषु तत्तद्भावः श्रूयते। ते च वाय्वादयो विकृता जन्याः। तदनन्तरभावित्वात्। अतस्तथेत्यर्थः।

परिहारं व्याकुर्वन्तो भावशब्दे परे समानशब्दस्य सादेशः पाणिनीयविरुद्ध इत्यत एकदेशिकृतव्याख्यानं प्राञ्जलमपि परित्यज्य प्रकारान्तरेण व्याकुर्वन्ति सेत्यादि। ननु वाय्वादिवदाभाने वाय्वादिभवनोक्तिविरोधस्य कथं परिहार इत्यत आहुः आकृतेरेव पदार्थत्वादिति।

रश्मिः।

तदाकाश एव। शरीरिणोऽधोक्षजत्वात्। तथाच श्रुतिः 'यथेतमाकाश'मिति। यथा इतं आरोहे, तथा धूममार्गीयावरोहे इतं गतम्। कर्मी आकाशं प्रतिपद्यते। शरीरिणो ब्रह्मणोऽधोक्षजत्वात्। तेनाकाश एवेति भाष्ये एवकारः शरीरिब्रह्मव्यवच्छेदकः। 'यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वे'त्यादिश्रुतिः। पूर्वमिति। आरोहे। मार्गतेति। पथित्वम्। एवकारेणाकाशत्वापत्तिर्व्यवच्छिद्यते। अर्चिरादिमार्गेण 'आदित्याच्चन्द्रमस'मित्यनेन समानत्वार्थे विरोधो व्युत्पादितः। विरोधे समानत्वम्, अविरोधे ऐक्यमिति। यथा चन्द्रवन्मुखमित्यत्र चन्द्रत्वमुखत्वयोः सहानवस्थानलक्षणे विरोधे आह्लादादिमत्त्वेन साजात्यम्। घटत्वेनाविरोधे त्वैक्यमिति। तर्हि केषामापत्तिरित्यतो वायुत्वाद्यापत्तीराहुः वायुर्भूत्वेत्यादिना। तदेतदाहुः प्रकाशे पञ्चाग्निमार्गेत्यारम्य श्रूयत इत्यन्तेन। पञ्चाग्नीति। पञ्चाग्निमार्गधूममार्गयोर्धूममार्गेऽभेदे। स च पञ्चाग्निमार्गस्य धूममार्गे अभेदस्तदन्तर्गतत्वेन धूममार्गस्य तु धूममार्गत्वेन समाने ऐक्ये वेत्यन्वयः। ऐक्येऽभेदो नियामक इत्युक्तम्। विरोधादिति। जीवहोमपक्षेऽर्चिरादिमार्गधूममार्गयोरुक्तरीत्या विरोधात्समानत्वमिति शेष इत्यर्थः। विरोधः समानत्वे नियामक इत्युक्तम्। विरोधमिति। समानत्वनियामकं विरोधम्। निवर्तनमिति। अवरोहः। नावरोह इति नाग्र इत्यस्यार्थः। तत्तद्भाव इति। वाय्वादित्वम्। उत्पत्त्यर्थकभुवः प्रयोगात्। ते चेति भाष्यं विवृण्वन्ति स्म ते चेत्यादिना। तदनन्तरेति भाष्यं विवृण्वन्ति स्म तदनन्तरेति। आकाशमार्गानन्तरं भावित्वादुत्पन्नत्वात्। तथेत्यर्थ इति। वृष्टिरपिना वाय्वादयो विकृता विकृताश्च कार्यं कार्याणि चेत्यर्थः। एवकारेण कारणत्वव्यवच्छेदः। भावशब्द इत्यादि। इदमष्टाधिकरणीसमाप्त्यनन्तरं वक्तव्यम्। एकदेशीति। वाचस्पतिमिश्रकृतव्याख्यानम्। प्राञ्जलं 'वायुर्भूत्वे'त्यादिषु भवनोक्तिस्वारस्यात्। भाष्ये। आहुतिरिति। होम्यजीवजले अनुक्त्वा, होमरूपाहुतिरुक्ता, सा तिसृषु चन्द्रमण्डले जलस्य शोषाज्जीवस्यावरोहे कर्तृत्वाज्जीवो वायुर्भूत्वा वायुभवनं कृत्वा गौण्या आहुतिं कृत्वेत्यर्थानुरोधेन। नन्वत्राथशब्देन धूममार्गस्य भिन्नोपक्रमस्यत्वेनाहुतिप्राप्तिः केनेति चेत्। न। 'अथ

१. वायुमण्डलगागच्छन्ती, वायुमण्डलमागच्छन्ती, वायुमण्डले सा गच्छन्ती, वायुमण्डले गा गच्छन्तीति पाठाः।

व्यापत्तिशब्देन च तेजोभावापन्नस्य जलभावापत्तौ कान्तिनाशान्नाश इवेति द्योतयति। कुतः। उपपत्तेः। नथैवोपपद्यते, चित्रतुरगादिषु। विकारस्य विकारान्तरापत्ताविथमेव व्यवस्था। उपासनायां न तदपि। नच 'भूत्वा'श्रुतेर्बाधः।

भाष्यप्रकाशः।

'सर्वाणि रूपाणि विचित्य'त्यादिश्रुत्या तानि तानि पदानि तस्यां तस्यामाकृतावेव व्यवहारार्थं भगवता नियमितानि। अतस्तद्वदाभानेप्याकृतिसद्भावान्न भवनोक्तिविरोध इत्यर्थः। नन्वयं गौण्येव इत्यत्र किं गमकमित्याकाङ्क्षायां हेतुं व्याकुर्वन्ति तथेत्यादि। तथाच यद्येवं न स्यात्, तदा चित्रतुरगादावपि तुरगादिपदप्रयोगो मुख्यवृत्तः स्यात्, तदा तुरगादिसाध्या अर्थक्रियापि तेन स्यात्, सा च न दृश्यत इति गौण्येव तत्र निश्चीयत इत्युपपत्तिरेव तद्गमिकेत्यर्थः। एतं न्यायमन्यत्राप्यतिदिशन्ति विकारस्येत्यादि। इयमिति। तत्तुल्याकृतित्वरूपा। यथा 'विप्रो भूत्वाथ वृत्रहे'त्यादौ। उपासनायामिति। 'वाचं धेनुमुपासीते'त्याद्युपासनायाम्। तथाच तादृशस्थले किञ्चिदाकृतिसादृश्येपि चेत् तादृक्प्रयोगः, तदा भूयःसादृश्ये किं वाच्यमित्यर्थः। ननु तथापि तद्भावाभावे 'भूत्वा'श्रुतिर्बाध्येत, अतो नात्र गौणी युज्यत इत्यत आहुः नचेत्यादि।

रश्मिः।

य इमे ग्राम इष्टापूर्ते दत्त इत्युपासते' इति श्रुतेः। इष्टमग्निहोत्रखातादिकर्मणी। दत्तं बहिर्र्थिभ्यो द्रव्यदानम्। ननु गुणः को येन गौणीति चेत्। न। अन्तरिक्षस्थत्वं गुणस्तद्योगात्। 'वायुर्वा अन्तरिक्षस्याध्यक्ष' इति पूर्वकाण्डश्रुतेः। वाजसनेयके आहुत्यन्तरिक्षस्थत्वम्। 'ते वा एते आहुती हुते उत्क्रामतस्तेऽन्तरिक्षमाविशतस्ते तत आवर्तेते'इति श्रुतेः। प्रकृते। आकृतावेवेति। व्यक्तौ एवकारो जातिव्यवच्छेदकः। आकृतिर्जातिरिति मीमांसकाः, तन्नात्रेत्याहुः अतस्तद्वदिति। गौण्यैवेत्येवकारेण मुख्याव्यवच्छेदः। गौणीति। आहुतिः। वायुभवनमित्यत्र वायुभवनशब्दस्यान्तरिक्षस्थत्वस्वधर्मलक्षकत्वं तात्पर्यमात्रेण लक्षकत्वं लक्षणाबीजतात्पर्यानुपपत्तिप्रतीकेन। तादृशगुणयोगः आहुतौ 'माणवकं पश्यन् सिंह इति प्रयुङ्क्ते' तत्र सिंहपदलक्षिततदीयक्रौर्यगुणयोगो माणवके यथा, तेन सिंहत्वेन माणवकबोधः, तथा वायुभवनत्वेनाहुतिबोधः। घटः पृथिवीत्यत्रेव। अत्र पृथिवीत्वेन बोधः, न घटत्वेनेति। हेतुमिति। उपपत्तिरूपम्। अर्थक्रियेति। अर्थो मुख्योऽश्वस्तस्य क्रिया चलनादिः। आभाव्यापत्तिविशिष्टेन चित्रतुरगादिना। गौण्येवेति। मुख्या व्यवच्छिद्यते एवकारेण। तत्रेति। 'वायुर्भूत्वे'त्यत्र। वायुभवनं कृत्वेत्यर्थः। सर्वेषां धातूनां प्रत्ययान्तानां भवतीत्यादिषु करोतिना विवरणात्। 'करोतिशब्दा'दिति जैमिनिसूत्रात्। एवेति। हेत्वन्तराकथनादेवेति। तद्गमिकेति। विप्र इति। विप्रभवनं कृत्वा तदनन्तरं वृत्रहा। विप्रभवनं तदीयतमोगुणलक्षकम्। तादृशगुणयोगो वृत्रघ्नीति विप्रो वृत्रहेति। वृत्रहा इन्द्रः। देवेषु ब्राह्मणादिवर्णाः सन्ति। आदिना चित्रतुरगस्य विकारस्य मुख्याश्वस्य विकारान्तरस्यापत्तिस्तत्राभाव्यापत्तिरुपपत्तेः। इत्यादावित्यत्रेतिशब्दात्प्रकारवाचकात् षष्ठ्यालुक् इति प्रकारस्यादावित्यर्थः कर्तव्यः। इयमित्यस्य भाष्यीयेयं व्यवस्थेत्यर्थात्। आदिशब्दार्थोऽन्यो वा। इदं व्यवस्थामात्रम्। भाष्ये। एवकारः सौत्रत्वेनाप्रामाणिकत्वव्यवच्छेदकः। वाचमिति। शब्दात्। वृष्टिपक्षे वाचं शब्दं धेनुवपुषम्। 'उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पने'ति श्रुतेः। अनेकरूपस्य शब्दब्रह्मणो यत्किञ्चिद्रूपे तत् अव्ययम्। सा आभाव्यापत्तिरपि न। उपासकस्याभादर्शनात्। आदिना 'सर्वं खल्विदं ब्रह्मेति शान्त उपासीते'ति। जगदन्तर्गतभगवत्प्रतिकृत्यादिषु। किञ्चिदिति। बह्वीषु शब्दब्रह्माकृतिषु यत्किञ्चिदाकृतिसादृश्येपि तादृग्धेनुपदप्रयोगः, तदा भूयःसादृश्ये भक्तिमार्गीये सेव्यस्वरूपे साक्षाद्भगवानयमिति प्रयोगे किं वाच्यमित्यर्थः। तद्भावेति। वाय्वादिभावाभावे। नात्रेति।

प्रतिनियतपदार्था हि ते। भवनावरोहाभ्यामेव तथा वचनात्। अन्यस्यान्यभावं वदन्ती श्रुतिरेव गौणत्वं वदति। कारणांशभावव्यतिरिक्तस्थले तथैव प्रतीतेः। तस्मात् तदाकृतिमात्रेण न स्वरूपान्यथाभावः॥ २२॥

## नातिचिरेण विशेषात्॥ २३॥

उपपत्त्यन्तरमाह। तद्रूपता च नातिचिरेण। न बहुकालं तद्रूपता। कुतः। विशेषात्। अन्नभावापन्नस्यैव बहुकालश्रवणात्। 'अतो वै खलु दुर्निष्प्रपतर'मिति। प्रापतरं प्रपतरं वा। वर्णलोपश्छान्दसः। अतस्तृतीयाहुतौ न चिरेणेत्यायाति।

---

भाष्यप्रकाशः।

प्रतिस्वरूपं नियतेषु वाय्वादिष्वाहिते निविष्टे जीवे ताद्रूप्यभवनावरोहाभ्यामेव 'भूत्वे'त्यस्य वचनात्। तदेव स्फुटीकुर्वन्ति अन्यस्येत्यादि। वदने हेतुमाहुः कारणेत्यादि। तथैवेति। आकृतिमात्रेणैव। सिद्धमाहुः तस्मादित्यादि। अतः कारणभूता एवापो वर्षन्तीति पूर्वोक्तं निर्बाधम्॥ २२॥

नातिचिरेण विशेषात्॥२३॥ सूत्रप्रयोजनमाहुः उपेत्यादि। अत्र सूत्रे पूर्वसूत्रात् साभेत्यनुवर्तते। तथाच तद्रूपतायामुपपत्त्यन्तरमाहेत्यर्थः। अतिचिरेणेति। तृतीयाप्रतिरूपकम्, न तु तदर्थकम्। 'अतो वै खलु दुर्निष्प्रपतर'मित्येतस्य, अतः अन्नभावात् पुरुषभवनं दुष्प्रापतरं दुर्गमतरं वेत्यर्थात् यत् सिद्धं तदाहुः अतस्तृतीयेत्यादि। नन्वेवमवरोहक्लेशस्यात्र सिद्धौ पञ्चाग्निप्रकारे

रश्मिः।

'वायुर्भूत्वे'त्यादिश्रुतौ। प्रतीति। जीवस्य वाय्वादिप्रतिस्वरूपं स्वरूपं लक्षीकृत्येत्यर्थः। वाय्वादिष्विति। 'वायुर्भूत्वा धूमो भवति धूमो भूत्वाभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षती'ति श्रुतिः। आदिशब्दार्थोप्युक्तः। भवनेत्यादिभाष्यं विवृण्वन्ति स्म ताद्रूप्येति। एवेति। अनेकभवनविरोधादेवकारः। कर्मणां त्रिक्षणावस्थायित्वेन तदुत्तरक्षणे भूत्वेत्यस्यानुपपत्तेः। तदेवेत्येवकारोऽन्यव्यवच्छेदकः। अन्यस्येत्यादीति। एवकारो व्याख्यानव्यवच्छेदकः। कारणेति। 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः आकाशाद्वायुः वायोरग्निः अग्नेरापः' इत्युक्तकारणांशभावस्तद्व्यतिरिक्तस्थले। कारणांशोऽभावस्तद्व्यतिरिक्तत्वं क्वापि स्थले नास्त्यतो भावशब्दः। आकृतीति। आकृतिर्व्यक्तिरित्युक्तम्। एवकारेण वायुत्वादिजातिव्यवच्छेदः। तस्मादित्यादीति। स्वरूपान्यथाभावो जीवस्य वायुत्वादिना। स नेत्यर्थः॥ २२॥

नातिचिरेण विशेषात्॥ २३॥ तथाच साभेत्यस्य क्वान्वय इत्यतस्तद्रूपतेति भाष्यं विवृण्वन्ति स्म तथाचेति। तद्रूपतायामिति। अनुवृत्तपदार्थाभायाम्। तद्रूपता चेति भाष्यार्थोप्युक्तः। तद्रूपता वाय्वादिरूपता। भाष्ये। बहुकालमिति। अत्यन्तसंयोगे द्वितीया। 'कालाध्वनोरत्यन्तसंयोगे द्वितीये'ति सूत्रेण। विशेषादिति। अन्नभावापन्नाज्जीवाद्वाय्वादिरूपतायां जीवे विशेषात्। तत्र हेतुः अन्नभावेत्यादि। 'मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा जायन्तेऽतो खलु दुर्निष्प्रपतर'मिति श्रुतौ श्रवणात्। एवकारस्तु 'यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्रूप एव भवति, तद्य इह रमणीयचरणा अभ्याशो ह य'दिति श्रुतौ क्षिप्रार्थकाव्ययप्रयोगात्। प्रकृते। अतस्तृतीयेत्यादीति। अतः दुष्प्रापतरत्वात्। तृतीयाहुतौ वर्षाहुतावन्नसम्भविकायां वृष्टेरन्नभवनं न चिरेण

**बहुकालस्थितौ हि तद्रूपता । कारणवशाद्देवानां मनुष्यभाववत् । भिन्नपक्षे न कोपि दोषः । ऐक्यपक्षेपि ज्ञानवतो गृहस्थस्य दुर्लभत्वादेवं वचनम् । तस्मात् वृष्टेरन्नं भवतीति सिद्धम् ॥ २३ ॥**

**इति तृतीयाध्याये प्रथमपादे पञ्चमं तृतीयशब्दावरोधाधिकरणम् ॥ ५ ॥**

**अन्याधिष्ठितेऽपूर्ववदभिलापात् ॥ २४ ॥ ( ३.१.६ )**

**चतुर्थी आहुतिर्विचार्यते । ननु 'संसर्गजैः कर्मदोषैर्याति स्थावरतां नर' इति कथमस्यान्नत्वम्, अपूर्वान्नत्वेपि कण्डनपाकादिषु क्लेशेन जीवस्यापगमात् कथं**

भाष्यप्रकाशः ।

को विशेषो धूममार्गादित्याशङ्कायामाहुः **भिन्नपक्ष** इत्यादि । धूममार्गाद्भिन्नः पञ्चाग्निमार्ग इति पक्षे, न कोपि धूममार्गोक्तक्लेशसंसर्गदोषः । क्लेशस्य धूममार्ग एवोक्तत्वात् । तयोरैक्यपक्षे ज्ञानवतो गृहस्थस्य दुर्लभत्वादज्ञानिनं लक्ष्यीकृत्यैतत् क्लेशवचनम्, न तु साधारण्येनेति न पञ्चाग्निमार्गे दोष इत्यर्थः ॥ २३ ॥ **इति पञ्चमं तृतीयशब्दावरोधाधिकरणम् ॥ ५ ॥**

**अन्याधिष्ठितेऽपूर्ववदभिलापात्॥२४॥**अधिकरणप्रयोजनमाहुः **चतुर्थी**त्यादि । 'अन्नाद्रेतो भवती'ति चतुर्थ्याः सफलाया आहुतेरत्र विचारः प्रयोजनमित्यर्थः । 'पुरुषाग्नावन्नं जुह्वती'ति श्रुतावन्नस्य होम्यत्वमुक्तम् । स्मृतौ तु पापजन्यत्वमन्नस्योच्यते इति तदुपपद्यते, न वेति, अन्नस्य च रेतोभाव उपपद्यते, न वेति, जीवस्यान्नभावे क्लेशो भवति, न वेति च सन्देहाद्विचारं बोधयितुं सूत्रमवतारयन्ति **नन्वि**त्यादि । **इति कथमस्यान्नत्वमि**ति । अस्माद्वाक्यादन्नभावस्य पापजन्यत्वे निश्चिते अस्य उक्ताहुतिप्रकारेण शुद्धस्य जीवस्य कथमन्नत्वम् । **अपूर्वान्नत्व** इति । प्रोक्षणादिनेव

रश्मिः ।

बहुकालं न । तद्रूपता तु नातिचिरेणेत्युक्तम् । **भाष्ये** । **तद्रूपते**ति । दृष्टान्तमाहुः **कारणे**ति । 'यद्यत्र नः स्वर्गसुखावशेषितं स्विष्टस्य दत्तस्य कृतस्य शोभनम् । तेनाजनाभे स्मृतिमज्जन्म नः स्याद्वर्षे हरिर्यद्भजतां शं तनोती'ति वाक्योक्तकारणवशात् । बहुकालस्थितिः कारणे । किञ्च, **कारणवशात्** स्पृहावशात् । 'एतदेव हि देवा गायन्ति' 'अहो अमीषां किमकारि शोभनं प्रसन्न एषां स्विदुत स्वयं हरिः । यैर्जन्म लब्धं नृषु भारताजिरे मुकुन्दसेवौपयिकं स्पृहा हि न' इति वाक्यात् । बहुकालस्थितिभावे । **प्रकृते** । **धूममार्गोक्ते**ति । पञ्चाग्निविद्यायां बोध्यः । **एवे**ति । अवरोहस्यातथात्वादेवकारः । ऐक्येति भाष्यं विवृण्वन्ति स्म **तयोरैक्ये**ति । **गृहस्थस्ये**ति । ननु गृहस्थस्येति कुतो लब्धमिति चेत् । न । 'तं प्रेतं दिष्टमितोऽग्नय एव हरन्ती'त्यग्निहोत्रलिङ्गात् गृहस्थलाभः । छान्दोग्यसमाप्तावपि गृहिणोपसंहाराद्गृहस्थलाभः । **अज्ञानिनमि**ति । दुर्निष्प्रापतरत्वात्पञ्चाग्निविद्यासाधितदेहस्यापि । **एतदि**ति । 'वायुर्भूत्वा धूमो भवती'ति वचनम् । **दोष** इति । क्लेशदोषः ॥ २३ ॥ **इति पञ्चमं तृतीयशब्दावरोधाधिकरणम् ॥ ५ ॥**

**अन्याधिष्ठितेऽपूर्ववदभिलापात्** ॥ २४ ॥ **अत्रे**ति । अधिकरणे । **स्मृतावि**ति । भाष्योक्तायां स्मृतौ । तेन कर्मदोषाः पापानि । **स्थावरतामन्नताम्** । मुख्ये कार्यसंप्रत्ययात् । **तदुपपद्यत** इति । ज्ञानिदेहार्थं पापजन्यान्नभक्षण'मन्नं जुह्वती'त्यत्रोपपद्यते । **जीवस्ये**ति । वृष्टिसहितजीवस्य । **कथमस्यान्नत्वमि**ति । ज्ञानोपयोगिदेहार्थं कथमिति प्रश्नः । **अपूर्वान्नत्व** इति । अदृष्टजनकत्वेन पूर्वान्नत्वाभावः । **भाष्ये** । **एवे**ति । दृष्टत्वादेवकारः । **मर्यादे**ति । घटस्य पटत्वापत्त्या

रेतोभावः, चर्वणौदर्यपाकस्त्वावश्यक एव, न च जीवस्य जडभावः, मर्यादाभङ्गप्रसङ्गात्, तस्मात् कथमन्नस्य रेतोभाव इत्याशङ्क्य परिहरति ।

अन्याधिष्ठिते वृष्टेरन्नभावसमय एव अन्यैर्जीवैरधिष्ठितो व्रीह्यादिस्तस्मिन् न पूर्ववत् तद्भावापत्तिः । अतिथिवत् । पूर्ववैलक्षण्येन वा । कुतः । अभिलापात् । 'व्रीहियवा ओषधिवनस्पतयस्तिलमाषा' इति पूर्ववत् तत्तद्भावमात्रं न वदति, किन्तु जगति स्थितव्रीह्यादिभाव एवाभिलप्यते । तथा सति यथान्येषु व्रीह्यादिषु तदधिष्ठातृदेवतया नियुक्ता जीवास्तानात्मत्वेनाभिमन्यन्ते, एवमत्रापीति न

भाष्यप्रकाशः ।

आहुतिभिः संस्कारस्य जातत्वादपूर्वात्मत्वे ।

परिहारं व्याकुर्वन्ति अन्याधिष्ठित इत्यादि । उप्ते बीजे यदा वृष्टिर्जायते, तदा जलमावापन्ना जीवास्तेन सहान्नादिबीजे प्रविशन्तीति तस्मिन् समयेऽन्यैर्जीवैरधिष्ठितो यो व्रीह्यादिस्तस्मिन् पूर्ववत् 'वायुर्भूत्वे'त्यादिवत् तद्भावापत्तिस्तत्साम्यम्, किन्त्वतिथिवत् कार्यमात्रार्थं स्थितिः, पूर्ववैलक्षण्येन निरभिमानगृहस्थवद्वा स्थितिरित्यर्थः । तत्र हेतुः अभिलापादिति । तं व्याकुर्वन्ति व्रीहीत्यादि । अत्रापीत्यादि । हौम्येऽन्नेपीति । अन्याधिष्ठानाद्धेतोर्न कोऽपि दोषः,

रश्मिः ।

पटत्वं पट एवेति मर्यादाभङ्गप्रसङ्गात् । परिहरतीति । सूत्रकारः । प्रकृते । अन्यैर्जीवैरधिष्ठिते व्रीह्यादौ अपूर्ववत् व्रीह्यादिभावः, तस्यापत्तिः, न तु व्यापत्तिः 'व्रीहियवा' इति श्रुतेरिति सूत्रार्थस्तं विशदयन्ति स्म आचार्या इत्याशयेनाहुः उप्त इति । वृष्टेरन्नभावसमय इति भाष्यं विवृतं समय इत्यन्तेन । वृष्टेः सजीवायाः अन्नादिरूपबीजभाव उप्तबीजप्रवेशः तस्य सर्वस्मिन् प्रसिद्धे समय इति भाष्यार्थः । क्षेत्र उप्ते । जलेति । चतुर्थोपदेशे 'अस्य सोम्य महतो वृक्षस्य यो मूलेऽभ्याहन्याज्जीवन्स्रवे'दिति श्रुत्या जलभावापन्ना जीवाः तेन वर्षेण सह अन्नादि च तद्बीजमिति कर्मधारयसमस्तान्नादिबीजे प्रविशन्तीतिहेतोः तस्मिन् समय इत्यर्थः । भाष्यीयैवकारः । 'देवा वर्षं जुह्वति तस्या आहुतेरन्नं सम्भवती'ति श्रुतेः । अन्यैरित्यादिभाष्यार्थः अन्यैर्जीवैरित्यादिना क्रियते । 'न्यग्रोधफलमत आहरेतीदं भगव इति, भिन्धीति, भिन्नं भगव इति, किमत्र पश्यसीत्यण्व्य इमा धाना भगव इत्यासामङ्गैकैकं भिन्धीति, भिन्ना भगव इति, किमत्र पश्यसीति, न किञ्चन भगव इति, तं होवाच यं वै सोम्यैतमणिमानं न निभालयसे एतस्य वै सोम्य योऽणिम्न एवं महान्न्यग्रोधस्तिष्ठति श्रद्धत्स्व सोम्येती'त्युक्तत्रयांशहुतजीवान्यैरष्टभिर्जीवैः । यद्वा । तपोवीप्साकृतोंशजीवान्यैरुक्तादिजीवैर्नवांशैः अधिष्ठितो यो व्रीह्यादिः तस्मिन् । इतः परमपूर्ववदितिभाष्यार्थः । न पूर्ववदित्यस्यार्थः 'वायुर्भूत्वे'त्यादिवदिति । तद्भावापत्तिरित्यस्यार्थः तत्साम्यमिति । अतिथिवदित्यादिभाष्यं विवृण्वन्ति स्म किन्त्विति । कार्यमात्रार्थं स्थितिर्गृहस्थितिः । पूर्वेतिभाष्यं विवृण्वन्ति स्म पूर्वेति । अतिथिवैलक्षण्येन निरभिमानिगृहस्थः । गृह एवोपैति शान्तिं यस्तद्वत् । व्रीहीत्यादीति । एवेति । तत्तद्भावमात्रं व्यवच्छिनत्ति । अभिलप्यत इति । अभिलप्यत इत्यभिलापस्तस्मादिति सौत्राभिलापपदार्थः । अन्येष्विति । पञ्चाग्निविद्याऽविषयेषु । तदधीति । 'अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशा'दिति सिद्धया । तान् व्रीह्यादीन् । आत्मत्वेनेति । व्रीह्यादिरहमिति । अस्मत्पदार्थ आत्मा तत्त्वेनाभिमन्यन्त इत्यर्थः । हौम्येऽन्नेपीति । 'अहमन्नमहमन्नमहमन्न'मिति तैत्तिरीयश्रुतेः हौम्येऽन्नेप्यात्मत्वेनाभिमानो जीवस्य । अन्याधीति । अन्यैर्जीवैरधिष्ठा-

कोपि दोषः । अधिष्ठाने हि वेदना । मरणानन्तरं कृमिभावस्य दृष्टत्वात् । तस्मादन्नस्य रेतोभावो युक्तः ॥ २४ ॥

अशुद्धमितिचेन्न शब्दात् ॥ २५ ॥

किञ्चिदाशङ्क्य परिहरति । ननु अन्याधिष्ठानेङ्गीक्रियमाणे यातनाजीवानामशुद्धत्वादशुद्धमन्नं स्यात्, तथाच कथं योग्यदेह इति चेत् । न । शब्दात् । 'देवा अन्नं जुह्वति, तस्या आहुते रेतः सम्भवती'ति देवैराहुतिरूपेण होमवचनाच्छुद्धत्वम् । अन्यस्य हि संस्कारेणैव शुद्धिः । अन्यथा यावज्जीवं का गतिः स्यात् । तस्मात् संस्कारशब्दाच्छुद्धमेवान्नम् ॥ २५ ॥

इति तृतीयाध्याये प्रथमपादे षष्ठमन्याधिष्ठित इत्यधिकरणम् ॥ ६ ॥

---

भाष्यप्रकाशः ।

पापान्नसंसर्गजन्यो वा, कण्डनादिजन्यक्लेशात्मको वा दोषो होम्ये जीवे न । तथाच क्लेशाभावादेव कण्डनचर्वणादिदशायामपि नापगमः । अभिमानाभावादेव च नास्य जडभाव इत्यदोष इत्यर्थः । तदेतद्विशदयन्ति अधिष्ठाने हीत्यादि । हि यतो हेतोः । अधिष्ठाने अधिष्ठीयतेऽनेनेत्यधिष्ठानमभिमानस्तस्मिन् सत्येव वेदना, न तु तदभाव इति लोके दर्शनादित्यर्थः । ननु मा भवतु क्लेशोऽस्य, तथापि कण्डनादिना जीवान्तरे गतेऽस्याप्यपगमात् कथं रेतोभाव इत्याशङ्कायां तादृशक्लेशोत्तरमपि जीवसत्तायां मानमाहुः मरणेत्यादि । तस्मादिति । जीवसत्त्वस्योपपादितत्वात् ॥ २४ ॥

अशुद्धमितिचेन्न शब्दात् ॥२५॥ सूत्रप्रयोजनमाहुः किञ्चिदित्यादि । अन्यस्येति । अशुद्धस्य । शेषं स्फुटम् ॥ २५ ॥ इति षष्ठमन्याधिष्ठित इत्यधिकरणम् ॥ ६ ॥

रश्मिः ।

नात् । न कोपि दोष इति । व्याख्येयं भाष्यम् । व्याख्यान्ति स्म पापान्नेत्यादिना । वाकारद्वयं पूर्वतन्त्रात् । अस्येति । जीवस्य । अदोष इति । क्लेशजडभावरूपो दोषो नेत्यर्थः । एवकारव्यवच्छेद्यमाहुः नन्विति । अस्येति । वृष्टियुक्तजीवस्य । जीवान्तर इति । हुतजीवादन्यस्मिन् जीवे गतेऽस्यापि हुतजीवस्यापि । कथमिति । केन प्रकारेण कस्य रेतोभावः उभयाभावात् । मरणेत्यादीति । क्लिष्टं मरणं ग्राह्यम् । कृमिः देहसमवायिकः । ननु क्लेशेन जीवो देही गतः कृमिजीवापगमे क्लेशान्तराभावात्कथं क्लेशोत्तरमपि जीवसत्तेति चेत् । सत्यम् । मरणोत्तरक्षणे कृम्युत्पत्त्यङ्गीकारेण पूर्वक्लेशसत्त्वात् । तद्देहावच्छेदेन तस्य तत्कर्मफलभोगे तु मरणानन्तरमशुष्कदेहे वृष्टिजीवो जलात्मा ग्राह्यः । तथा च मृतदेहैकदेशः कृमिः स जीवस्तद्देहावच्छेदेन कर्मफलभोगेनादोषात् । अधिष्ठान इत्यस्य पुरःस्फूर्तिकार्ये देहो भासते, तदा देहोऽधिशिष्टोऽधिष्ठानम् । आग्रहेयम् । जीवसत्त्वस्येति । अप्रूपजीवसत्त्वस्य । अन्नशुद्धिरग्रे वाच्याधिकरणरचना च ॥ २४ ॥

अशुद्धमिति चेन्न शब्दात् ॥ २५ ॥ स्फुटमिति । अन्याधीति । अन्येषां हुतव्यतिरिक्तानां अधिष्ठानेङ्गीक्रियमाणे यमगतावनेकदेहसाध्यैकनरके अशुद्धत्वाच्छुद्धस्य देहान्तरेऽशुद्धत्वादशुद्धमन्नं वृष्टिजीवरूपमन्नं स्यादिति । 'प्रेतं दिष्टमितोऽग्नय एव हरन्ती'त्यत्र तदपायकल्पनात् । आहुतिरूपेणेति । 'प्रकृत्यादिभ्य उपसंख्यान'मितिवार्तिकेनाभेदतृतीया, प्रकृत्या चारुरितिवत् । होमेति । अन्नस्य होमवचनात् । अन्यस्येति । भाष्यप्रकाशे व्याख्यातम् । पञ्चाग्निविद्यासाधितदेहिभिन्नस्य । अशुद्धस्येति । भाष्यप्रकाशविशेषणम् । एवेति । संस्कारेतरव्यवच्छेदकः । शुद्धिरिति ।

## रेतःसिग्योगोऽथ ॥ २६ ॥ (३.१.७.)

पञ्चमाहुतिं विचारयति । ननु कथं पुरुषेऽन्नहोमाद्रेतोभावः, बाल्यकौमारवार्धकेषु व्यभिचारात्, तारुण्येपि न हि सर्वमन्नं रेतो भवति, जातमपि न नियमेन योनौ सिच्यते, नापि देवापेक्षा, पुरुषप्रयत्नस्य विद्यमानत्वादित्याशङ्क्य, परिहरति । रेतःसिग्योगः । पुरुषशब्देन पौरुषधर्मवानुच्यते । पौरुषं च देशकालसंविधानेन मन्त्रवद्रेतःसेकसामर्थ्यम् । न ह्येतत् सर्वजनीनं सार्वत्रिकं वा ।

भाष्यप्रकाशः ।

रेतःसिग्योगोऽथ ॥ २६ ॥ अधिकरणप्रयोजनमाहुः पञ्चमेत्यादि । विचारयतीति । फलं पृथक्कृत्य केवलां विचारयति । कोत्र विचारांश इत्याकाङ्क्षायामाहुः नन्वित्यादि । चतुर्थ्यामन्नाहुतौ पुरुषस्य यदि पुरुषत्वेनाग्नित्वम्, तदा बाल्यादौ तद्धोमस्य नैष्फल्यम्, यदि तारुण्यविशिष्टत्वेनाग्नित्वम्, तदापि न सर्वस्य होमस्य साफल्यम्, अथ यज्जातं रेतस्तेनैव पञ्चम्याहुतिः, तदापि होमानियमः, अथ नियमः, तदापि न देवापेक्षेत्यतो विचार इत्यर्थः ।

परिहारं व्याकुर्वन्ति पुरुषेत्यादि । सूत्रे रेतःसिक्पदोक्त्या पुरुषपदव्याख्यानात् 'पुरुषो वा व गौतमाग्नि'रित्येतेन पुरुषशब्देन पौरुषधर्मवानुच्यत इत्यर्थः । तावता कथं पूर्वोक्तदोष-

रश्मिः ।

सा मर्यादायाम्, न तु ब्रह्मभावे 'सर्वं ब्रह्मात्मकं तस्य विद्ययात्ममनीषये'ति । मर्यादायां तु वर्तत एव, संस्कारवैयर्थ्येन तद्बोधकवेदानर्थक्यप्रसङ्गात् । यावज्जीवमिति । संस्कारानङ्गीकारे एकदिनेनाग्निहोत्रफलसिद्धेः 'यावज्जीवमग्निहोत्रं जुहुया'दित्यत्र मध्ये पापे तच्छोधकसंस्कारस्य यावजीवं पापशोधनातिरिक्ता का गतिः स्यादिति प्रश्नः । सौत्रं हेतुं विवृण्वन्ति स्म तस्मादिति । एवेति । प्रसिद्धेरेवकारः । एवमन्नशुद्धिरुक्ता । अधिकरणरचना त्वेवम् । चतुर्थ्याहुतिर्विषयः । पापजन्यत्वमन्नस्योपपद्यते न वेति संदेहे, ज्ञानोप(योग)योगिदेहानुपयोगान्नोपपद्यत इति पूर्वपक्षः । सिद्धान्तस्तु संस्कारशब्दात्संस्कारार्थं पापजन्यत्वमन्नस्योपपद्यत इति शुद्धमन्नमिति ॥ २५ ॥ इति षष्ठमन्याधिष्ठित इत्यधिकरणम् ॥ ६ ॥

रेतःसिग्योगोऽथ ॥ २६ ॥ फलमिति । 'तस्या आहुतेर्गर्भः सम्भवती'ति गर्भः फलम् । तत्पृथक्कृत्याग्रिमे विचारयितुं केवलां विचारयन्तीत्यर्थः । सूत्रान्तरे फलविचारस्तु षष्ठाहुतिग्रहणाय । तेन गर्भानुक्तौ कथं पञ्चमाहुतिविचार इति कुचोद्यं निरस्तं वेदितव्यम् । नच गर्भानुक्तौ न्यूनतानिग्रहस्थानमिति वाच्यम् । बृहदारण्यकषष्ठाग्निसंग्रहार्थमेतावदुक्तौ न निग्रहस्थानमिति । तत्र गर्भशब्दाभावात् । 'देवाः पुरुषं जुह्वति तस्या आहुतेः पुरुषो भास्वरवर्णः सम्भवती'ति श्रुतेः । पुरुषेऽन्नहोमाद्रेतस्तु कारणत्वादुभयत्रेति षष्ठ्या आहुतेरविचारेपि न निग्रहस्थानमिति । दृष्टानुसारेण व्याख्यान्ति स्म चतुर्थ्यामित्यादिना । तद्धोमस्येति । रेतोहोमस्येत्यर्थः । तारुण्य इति भाष्यं विवृण्वन्ति स्म यदीति । पुरीषादिभावात् न सर्वमन्नं रेतो भवति । जातमितिभाष्यं विवृण्वन्ति स्म अथेति । होमेति । धौतवाससि सेकाद्धोमानियमः । नापीतिभाष्यं विवृण्वन्ति स्म अथेति । पूर्वोक्तेति । रेतस्त्वेन अन्नत्वेन कार्यकारणभाव उक्तः श्रुतौ । तत्र 'योषाग्नौ देवा रेतो जुह्वती'ति रेतोहोमनियमश्च उभयत्र 'पुरीषत्वेनान्नत्वेनापि कार्यकारणभावात्पूर्वत्र पूर्वोक्त आशङ्कोक्तो दोषः । कार्यकारणभावग्राहकान्वयव्यतिरेकव्यभिचाररूपः । द्वितीये तु धौतवाससि सेकात्तत्तदिन्द्रियदेवद्धोमकृतान्नियमे पूर्वदोष इति । तन्निरास इत्यर्थः ।

**तदर्थं देवापेक्षा । तथा सति न कोपि व्यभिचारः । कथं पुरुषशब्दमात्रेण च ज्ञायते, तत्राह । अथ आनन्तर्यात् । शरीरार्थमेव देवैस्तत्र तत्र होमः कृतः ।**

भाष्यप्रकाशः ।

निरास इत्याकाङ्क्षायां तदुपपादयन्ति पौरुषमित्यादि । तथाच पुरुषपदेनैतादृशो रेतःसिगभिप्रेयते, तादृशे योऽन्नहोमः, स प्राणाग्निहोत्रोपनिषदाद्युक्तप्रकारेणेति तत्र देवापेक्षा । न हीन्द्रियाधिष्ठातृदेवप्रसादं विना तथा भोक्तुं शक्यते । ईश्वरेच्छया भवनेपि तेषामेव द्वारत्वात् । अत एव

रश्मिः ।

**पौरुषमित्यादीति** । अत्र 'ऋतौ भार्यामुपेया'दिति श्रुत्या भार्या देशः ऋतुः कालः संश्रौतं विधानं तेन संविधानेन मन्त्रवत् । पुत्रमन्थब्राह्मणोक्त 'बहु वा इद९ंसुप्तस्य वा जाग्रतो वा रेतः स्कन्दति । तदभिमृशेदनु वा मन्त्रयेत यन्मेऽद्य रेतः पृथिवीमस्कान्त्सीद्यदोषधीरप्यसरद्यदपः । इदमहं तद्रेत आददे पुनर्मामैत्विन्द्रियं पुनस्तेजः पुनर्भगः पुनरग्नयो धिष्ण्या यथास्थानं कल्पन्तामित्यनामिकाङ्गुष्ठाभ्यामादायान्तरेण स्तनौ वा भ्रुवौ वा निमृज्या'दित्यत्रोक्तमन्त्रयुक्तं रेतः तस्य सेकसामर्थ्यम् । विहितत्वार्थं तृतीयान्तं कारणत्वार्थम् । मन्त्रवदिति रेतोविशेषणम् । **नन्वेत**दित्येतच्छब्देन पूर्वभाष्यसङ्गतिः । एतत्पौरुषमित्यर्थात् । **तदर्थं** होमार्थम् । **देवापेक्षा** इन्द्रियदेवापेक्षा । **तथा सतीति** । इन्द्रियदेवापेक्षया शरीरकारणत्वे सति । **न कोपि** । ज्ञानोपयोगिशरीरत्वेन इन्द्रियदेवत्वेन कार्यकारणभावः । अत्र 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चे'ति श्रुत्युक्तविद्याकर्मपूर्वप्रज्ञारूपकारणव्यभिचारो न । साधारणदेहत्वेन विद्याकर्मपूर्वप्रज्ञात्वेन कार्यकारणभावात् । तृणारणिमणिन्यायोऽत्र । भाष्यसिद्धार्थमाहुः **तथा चेति** । **एतादृश इति** । देशकालसन्निधानेन मन्त्रवद्रेतःसेकसामर्थ्यवान् **रेतःसिगभिप्रेयते** । सूत्रेण 'पुरुषो वावे'ति श्रुतौ पुरुषो रेतःसिगिति प्रयोगाद्रेतःसिक्त्वेन रूपेण पुरुषोऽस्थितिः । घटः पृथिवीत्यत्र पृथिवीत्वेन घटोपस्थितिवत् । एतेन मन्त्रवद्रेतःसेकसामर्थ्यमित्यन्तं भाष्यसिद्धार्थ उक्तः । तत्सङ्गत्यर्थं **तादृश** इत्यादिग्रन्थः भाष्यीयैतत्पदार्थः इत्यन्तः । सुगमान्वयस्तूक्तः एतच्छब्दार्थः पौरुषमिति पूर्वम् । **प्राणाग्नीति** । 'यदन्नमग्नि बहुधाति राजन् रुद्रैः प्रजग्धं यदि वा पिशाचैः । सर्वत ईशानो अभयं नः कृणोतु शिवमीशानाय स्वाहे'ति । अग्रे 'प्राणाय (प्रदानाय) स्वाहा अपानाय स्वाहा व्यानाय स्वाहा समानाय स्वाहोदानाय स्वाहे'ति कनिष्ठिकायाङ्गुल्याङ्गुष्ठेन च प्राणे जुहोती, अनामिकयाऽपाने, मध्यमया व्याने, प्रदेशिन्या समाने, सर्वाभिरुदाने, तूष्णीमेका एक ऋषौ जुहोति । अत्र पुष्टिमार्गे शिवः प्रथमः 'मद्भक्तपूजाभ्यधिके'ति वाक्यात् । तदग्रे पञ्च प्राणाः । तदग्रे प्रकारः । तत्र अत्यश्नीत्यतिशब्दान्वयः । राजन् वरुण । 'यन्मे भुक्तमसाधूनां पापेभ्यश्च प्रतिग्रहः । तन्नो वरुणो राजा पाणिना ह्यवमर्शत्वि'ति श्रुतेः । प्रजग्धं प्रभक्षितम् । नोऽस्माकम् । कृणोतु विकरणव्यत्ययः । उं बाधित्वा श्नुः । स्वाहा देवतोद्देशेन त्यक्तमन्नम् । कनिष्ठकाया इत्यत्र ककारेऽज्विकारः कनिष्ठकया । जुहोतीति दीर्घपाठे ई । एका इत्यत्रामो डः । एक इति सप्तम्यन्तम् । सर्वनामसंज्ञाया वेदे विकल्पात्तस्मिन् । ऋषौ ब्रह्मणि । प्राणाग्निहोत्रोपनिषदादीत्यत्रादिना तैत्तिरीये 'अन्नं न निन्द्यात्तद्व्रतम् । प्राणो वा अन्नम् । शरीरमन्नादम् । प्राणे शरीरं प्रतिष्ठितम् । शरीरे प्राणः प्रतिष्ठित' इत्यादि । पुत्रमन्थब्राह्मणं च अग्रे स्फुटम् । **तत्र देवापेक्षेति** । तदर्थं देवापेक्षेति भाष्यार्थः । तत्रेत्यस्य होम इत्यर्थः । देवापेक्षायां युक्तिमाहुः **नहीति** । इन्द्रियं मनस्तदाद्यधिष्ठातृदेव ईशानादिस्तस्य प्रसादस्तं विना । **तथेति** । प्राणाग्निहोत्राद्युक्तप्रकारेण । **तेषामिति** । देवानाम् । एवकारस्तु श्रुत्यादौ दर्शनात् अन्यव्यवच्छेदकः । **अत एवेति** । तथा सतीति भाष्यसिद्धार्थः । इन्द्रियदेवापेक्षया ज्ञानोपयोगिदेहकारणत्वादेव ।

तत् कथं पञ्चमाहुतावेवान्यथा भवेत् । तस्मादानन्तर्यात् पुरुषाहुतिर्नान्नम्, रेतःसिग्योगः । योगशब्देनात्रापि अन्याधिष्ठानेन रेतःसिग्योगाभावः ॥ २६ ॥

इति तृतीयाध्याये प्रथमपादे सप्तमं रेतःसिग्योगाधिकरणम् ॥ ७ ॥

भाष्यप्रकाशः ।

तस्यान्नस्य रेतोभावो योनौ नियमेन सेकश्च पुत्रमन्थब्राह्मणोक्तरीत्या भवतीति सुखेन पूर्वोक्तदोषनिरास इत्यर्थः । कथमित्यादि । भवत्वन्यत् सर्वम्, तथापि पुरुषशब्दमात्रेण सर्वस्यान्नस्य रेतस्त्वं कथं प्राप्यत इत्याकाङ्क्षायामाहेत्यर्थः । सिद्धमाहुः तस्मादित्यादि । अन्नपदोत्तरं किन्त्विति शेषोऽध्याहार्यः । तथाच पुरुषाग्नौ आहुतिर्नान्नम्, किन्तु रेतःसिचि योऽन्नयोगः सेत्यर्थः । ननु भवत्वेवमाहुतिसिद्धिः, तथापि पूर्वाधिकरणेनान्नेऽन्याधिष्ठानस्य साधितत्वात् तज्जन्ये रेतस्यपि तत्सम्भव इत्याशङ्क्य तत्र तदभावमाहेत्याहुः योगशब्देनेत्यादि । तथाच तत्रैक

रश्मिः ।

तेन ज्ञानोपयोगिदेहत्वेन इन्द्रियदेवत्वेन कार्यकारणभाव उक्तः । तत्र देवापेक्षेत्युक्तत्वात्तत्रेत्यस्य होम इत्यर्थात् ज्ञानोपयोगिदेहत्वेन इन्द्रियदेवकृतहोमत्वेन कार्यकारणभावो वा । एतेन तथासतीत्यस्यार्थो जातः । अतः परं न कोपि व्यभिचार इति भाष्यसिद्धार्थः । तस्य देवैर्हुतस्यान्नस्यार्थात् देवकृतहोमस्य रेतोभावः, न पुरीषभावः । पुरीषस्य ज्ञानोपयोगिदेहत्वाभावात् । योनाविति । धौतवाससो ज्ञानोपयोगिदेहानुपयोगात् । योनौ नियमेन सेकश्चेत्यर्थः । पुत्रमन्थेति । बृहदारण्यके 'एषां वै भूतानां पृथिवी रस' इत्यारम्भकं पुत्रमन्थब्राह्मणम् । तदुक्तरीतिः । 'एषां वै भूतानां पृथिवी रसः पृथिव्या आपोऽपामोषधयः ओषधीनां पुष्पाणि पुष्पाणां फलानि फलानां पुरुषः पुरुषस्य रेत' इति श्रुत्युक्ता तयान्नस्य रेतोभावः पुरुषेऽन्नाहुतिद्वारा । तथा 'स ह प्रजापतिरीक्षांचक्रे । हन्तास्मै प्रतिष्ठां कल्पयानीति । स स्त्रियꣳससृजे, ताꣳसृष्ट्वाध उपास्ते' इति श्रुत्युक्ता तया । योनौ नियमेन सेकश्च भवतीति सुखेन, रेतस्त्वेन अन्नत्वेन कार्यकारणभावः, न पुरीषत्वेन अन्नत्वेन, अश्रुतत्वात् । अतएव विहितकर्तॄणां सात्विकानां नियमेन योनौ सेकः, न (धौतवा)ससि । यथा 'पुत्रे कृष्णप्रिये रति'रित्याचार्याः । पूर्वोक्तेति । भाष्ये । न कोपि पूर्वोक्तो व्यभिचारः । स व्याख्यातस्तथा सतीत्यादिभाष्यविभागे पूर्वम् । किन्तु रेतःसिचीति । तेन रेतःसिचि योग इति विगृह्य सप्तमीति योगविभागात् 'सह सुपे'ति वा समासः । तथा च रेतःसिचि योगः रेतः सिञ्चतीति रेतःसिच् कर्तरि क्विप् । किञ्च, रेतःसिच्यन्नयोगः रेतःसिक्पुरुषेऽन्नहोमात् अन्नयोगः । किञ्च, अन्नस्य विकारोऽन्नमय इति योगः । 'द्व्यचश्छन्दसी'ति सूत्राद्विकारे मयट् । अन्नमयत्वं 'स एषोऽन्नरसमय'इत्यत्र पुरुषे प्रसिद्धम् । सेत्यर्थ इत्यर्थः । किञ्च, भाष्यप्रकाशे पूर्वोक्तः शङ्काग्रन्थोक्तो दोषे तस्य निरास इत्यर्थः । पुरुषशब्देति । भाष्यीयचकारादन्नशब्देन च । इत्यर्थ इति । अग्रे भाष्ये । अथेत्यानन्तर्ये इत्याहुः अथेति । पुरुषशब्दमात्रेणान्नशब्देन च तदानन्तर्यात्सर्वस्यान्नस्य रेतस्त्वं ज्ञायते, ज्ञाप्यते यो यदनन्तरं जायते, स तस्य कार्यमिति । एवेति । 'आपः पुरुषवचसो भवन्ती'ति श्रुतेरेवकारः । तत्कथमिति । तच्छरीरपञ्चमाहुतौ । अन्यथा छान्दोग्ये गर्भत्वेन बृहदारण्यके पुरुषत्वेन च कथं भवेदिति प्रश्नः । पञ्चमाहुतौ 'देवा रेतो जुह्वति तस्या आहुतेर्गर्भः सम्भवती'ति छान्दोग्ये । बृहदारण्यके तु 'तस्या आहुतेः पुरुषः सम्भवती'ति । एवकारोऽन्याहुतिव्यवच्छेदकः । सिद्धमिति । सूत्रार्थं वदन्तः सिद्धमाहुः अन्नेऽन्येति । अन्नेऽन्येषां जीवानां अधिष्ठानं स्थितिः तस्य । तत्सम्भव इति । अन्येषां जीवानां स्थितिसम्भवः । तत्र रेतसि । तदभावं अन्यजीवस्थित्यभावम् । तत्रेति । रेतसि । योगशब्देनेत्यादीति । रेतःसिक्शब्देन चारितार्थ्ये सूत्रे

## योनेः शरीरम् ॥ २७ ॥ ( ३.१.८. )

हूयमानं निरूप्य फलं निरूपयति । 'तस्या आहुतेर्गर्भः सम्भवती'त्युच्यते। तत्र सन्देहः । योनावन्तःस्थितमेव फलम्, बहिर्निर्गतं वेति । तत्र गर्भशब्देनान्तःस्थित एव । शरीरपरत्वे श्रुतिबाधः स्यात् । उपसंहारोप्यग्रे कर्तव्याभावादुपपद्यते । ततश्च षण्मासानन्तरं गर्भे ज्ञानसम्भवाज्जननानन्तरं न गुरूपसत्त्यादि कर्तव्यमित्याशङ्क्य, परिहरति । योनेर्निर्गतं शरीरं गर्भशब्देनोच्यते । अग्नेरुत्थ-

---

भाष्यप्रकाशः ।

एव जीवः शुद्धस्तिष्ठति, न त्वन्योपि । अन्यथा बहव एव श्वादिवदुत्पद्येरन्, नत्वेक इत्यर्थः ॥२६॥ इति सप्तमं रेतःसिग्योगाधिकरणम् ॥ ७ ॥

योनेः शरीरम् ॥२७॥ सूत्रप्रयोजनमाहुः हूयमानमित्यादि । उपसंहार इति । 'इति

रश्मिः ।

योगशब्दस्य किं प्रयोजनमित्यत उक्तं योगशब्देनेति । रेतःसिचि योग इति योगशब्देन । अत्रापीति । रेतस्यपि । अन्याधिष्ठाने अन्येषां जीवानामधिष्ठाने रेतःसिग्योगाभावो न । अयमर्थः । रेतःसिक्शब्दो रूढः । 'रूढिर्योगमपहरती'ति प्रसिद्धिर्नैयायिकानाम् । तेन रेतःसिक्शब्दः एकजीवयुक्तरेतसि रूढः, सोऽन्याधिष्ठाने रेतसि सति पुरुषे न प्रवर्तते । अतोऽनेकजीवयुक्तोऽतः सिचि प्रवृत्त्यर्थं योग आदर्तव्यः । अवयवशक्तिरूपः । तथाच रेतःसिग्योगाभावो न अनेकजीवयुक्तरेतःसिचि । अतो यमले ज्ञानोपयोगिदेहसत्त्वान्नाहुत्यनुपपत्तिः । ननु 'रूढिर्योगमपहरती'त्युक्तमिति चेत् । न । वेदान्ते योगः, वेदे योगरूढिरिति मीमांसाकारिकायामुक्तत्वेन नात्र तत्प्रवृत्तिरिति । तथा च सूत्रार्थः । रेतःसिग्योगः अथेति द्विपदमिदं सूत्रम् । रेतःसिक्शब्दो यौगिकः, न रूढः, यमले ज्ञानोपयोगिदेहवति पुरुषाभ्याहुत्यप्रवृत्तिप्रसङ्गात् । अतो रेतःसिचि योगः रेतःसिग्योगः । अथेत्यानन्तर्ये प्रसिद्धः । रेतःसिग्योगः पुरुषे । आनन्तर्यं रेतसि । पुरुषहुतान्नस्य रेतोभावश्रुतेः । 'पुरुषो वाव गौतमाग्नि'रित्युपक्रम्य 'देवा अन्नं जुह्वति तस्या आहुते रेतः सम्भवती'ति श्रुतिः । 'तर्काप्रतिष्ठान'सूत्रेणानुमानस्याभावात् शब्दार्थयोर्वैयधिकरण्यम् । 'केचिदत्र जन्मादिसूत्रमनुमानमिति वर्णयन्ती'ति भाष्ये केचित्पदात् । तथा च अथ पुरुषान्नानन्तर्यात् रेतसि पुरुषे रेतःसिचि योगः, न रूढिरित्यर्थः । अत्र पञ्चमाहुतिर्विषयः । तत्र गर्भः फलं पुरुषो वेति श्रुतिद्वयबीजे संशये । यद्वा । पुरुषेऽन्नहोमो रेतःसिचि वेति श्रुतिसूत्रबीजे संशये । पूर्वसंशये तु गर्भ एव कारणत्वात्पुरुषोऽपीति पूर्वपक्षे, उभये फले श्रुतत्वादिति सिद्धान्तः । पुरुषेऽन्नहोमः श्रुतत्वान्न तु रेतःसिचि सौत्रत्वादिति पूर्वपक्षे, रेतःसिगिति सिद्धान्तः ॥ २६ ॥ इति सप्तमं रेतःसिग्योग इत्यधिकरणम् ॥ ७ ॥

योनेः शरीरम् ॥ २७ ॥ हूयमानमित्यादीति । अन्नरूपं रेतोरूपं च । एवेति । दर्शनादित्येवकारः । श्रुतीति । 'गर्भः संभवती'ति श्रुतिबाधः । पूर्वपक्षसत्त्वाद्बाधशब्दः । पूर्वपक्षिणो हि श्रुत्योर्विरोधे विकल्पस्य मानवस्यास्फूर्तेः । अर्थवादत्वात् । षण्मासेति । तदनन्तरं नवमे मासि । 'अथ नवमे मासि स सर्वलक्षणज्ञानसंपूर्णो भवती'ति श्रुतेः । कुत उच्यत इत्यतो बृहदारण्यकसंग्रहादित्याहुः अग्नेरिति । योषारूपात् । एवकारो बृहदारण्यके 'तस्या आहुतेः पुरुषः सम्भवती'ति श्रुतेः गर्भपुरुषपदवाच्यशरीरेतरव्यवच्छेदकः । गर्भपुरुषरूपस्य फलरूपत्वात् । अग्नेरुत्थितत्वस्यैव फलतावच्छे-

तस्यैव फलरूपत्वात् । मध्यभावस्याप्रयोजकत्वात् । मातृपरिपाल्यत्वाय गर्भवचनम् । कललादिभावे पुरुषवचनत्वाभावादुपसंहारानुपपत्तिश्च । शरीरशब्देन वैराग्यादियुक्तः सूचितः । न तु स्वयं तदभिमानेन जात इति । तस्मात्

भाष्यप्रकाशः ।

तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती'त्युपसंहारः । मध्यभावस्याप्रयोजकत्वादित्यनेन गार्भिकज्ञानित्वस्याप्यप्रयोजकत्वं संगृहीतम् । उत्पत्तिसमये वैष्णव्या मायया तस्य ज्ञानस्य तिरोधानात् । शरीरपरत्वे गर्भश्रुतिबाधं परिहरन्ति मात्रित्यादि । उपसंहारानुपपत्तिं पूर्वपक्षिमते बोधयन्ति कलिलेत्यादि । शरीरशब्देनेति । शीर्यत इति शरीरमिति निरुक्तेन तेनेत्यर्थः । अधिकरणार्थनिगमनेनैतत्पादार्थमपि निगमयन्ति तस्मादित्यादि ॥

अत्रैतद्बोध्यम् । रंहतिसूत्रे 'प्रश्ननिरूपणाभ्या'मित्यनेन पञ्चाग्निविद्यैव विषयत्वेनादृता । पादान्ते च 'योनेः शरीर'मिति सूत्रेण 'पुरुषवचसो भवन्ती'ति पञ्चमाहुतिफलमेव विचारितमिति स्पष्टं प्रतीयते । श्रुतौ च मध्ये यन्मार्गादिकं प्रश्नान्तरोत्तरत्वेनोक्तम्, तत्सर्वं पञ्चाग्निविद्याशेषत्वेनैव, मुख्या तु पञ्चाग्निविद्यैवेति 'य एतान् पञ्चाग्नीन् वेदे'त्युपसंहारात् तस्य फलसंबन्धाच्चावगम्यते । एतस्य पादस्य मुख्यतया ज्ञानोपयोगिदेहप्राप्तिप्रकारविचारार्थता, न तु वैराग्योत्पादन-

रश्मिः ।

दकत्वात् । गार्भिकज्ञानित्वस्यापीति । अपिना गर्भपुरुषयोर्मध्यभावस्य । गार्भिकज्ञानं तृतीयस्कन्धे प्रसिद्धम् । अप्रयोजकत्वं पञ्चाग्निविद्यायामपि । किञ्च, गार्भिकज्ञानित्वम् । 'ऋतुकाले प्रयोगादेकरात्रोषितं कललं भवती'त्युपक्रम्य 'जातश्चाहं मृतश्चैव जन्म जन्म पुनः पुनः । यन्मे परिजनस्यार्थे कृतं कर्म शुभाशुभम् । एकाकी तेन दह्येहं गतास्ते फलभागिनः । यदि योन्याः प्रमुच्येऽहं तत्प्रपद्ये महेश्वरम् । अशुभक्षयकारकं परमुक्तिप्रदायकम् । यदि योन्याः प्रमुच्येऽहं तत्प्रपद्ये नारायण'मिति गर्भोपनिषच्छ्रुत्योक्तम् । वैष्णव्येति । 'अथ योनिद्वारणं संप्राप्तो यन्त्रेणापीड्यमानो महता दुःखेन जातमात्रस्तु वैष्णवेन वायुना संस्पृष्टः तदा न स्मरति जन्ममरणानि न कर्म शुभाशुभं विन्दती'ति गर्भोपनिषच्छ्रुतेः । तस्येति । गार्भिकस्य । शरीरेति । बृहदारण्यकोक्तपुरुषरूपफलपरत्वे । गर्भेति । गर्भश्रुतिविकल्पं परिहरन्ति । बाधबाधोऽत्र बाधशब्दार्थः । कललेत्यादीति । 'एकरात्रोषितं कललं भवति सप्तरात्रोषितं बुद्बुदं अर्धमासाभ्यन्तरे पिण्डं मासाभ्यन्तरे कठिनं मासद्वयेन शिर' इत्यादिश्रुतेः । कललं शुक्रशोणितमिश्रितम् । बुद्बुदं वर्तुलाकारम् । पिण्डं पेशीमांसपिण्डाकारम् । तेनेति । सौत्रेण । भाष्ये । नत्विति । देहशब्दाभावात्सूत्रे । तदभीति । शरीराभिमानोपचयेन । 'दिह उपचये' । पचाद्यच् । प्रकृते । निगमनेनेति । पञ्चम्यन्तघटितत्वेन तथा । तस्मात्पर्वतो वह्निमानिति निगमनवत् । तस्मादित्यादीति । साधनेति । 'अभयो हरन्ती'ति श्रुतेरग्निहोत्रादिसाधनं होमश्च साधनं तत्सहित इत्यर्थः । अधिकरणार्थोऽयम् । ब्रह्मज्ञानमिति पादार्थः । 'तत्र प्रथमे पादे ब्रह्मज्ञानौपयिकं जन्म विचार्यत' इति भाष्यात् ।

पञ्चाग्निविद्यैवेति । तल्लिङ्गादेवकारोऽन्यव्यवच्छेदकः । एवेति । पुरुषशरीरयोः पर्यायत्वादेवकारोऽन्ययोगव्यवच्छेदकः । 'यद्य इत्थं विदु'रित्याद्युक्तार्चिरादिमार्गत्रयं यमगतिश्चेत्येतेषां योजनामाहुः श्रुतौ चेति । प्रश्नेति । पञ्चाग्निविद्याप्रश्नेतरप्रश्नाः 'वेत्थ यदितोऽधि प्रजाः प्रयन्ती'त्यादयश्चत्वारः । तदुत्तरत्वेन । एवेति । तन्मध्यपातिनां तच्छेषत्वमिति नियमादेवकारः । एवेतीत्युक्तैवकारसार्थक्यायाहुः य एतानिति । फलेति । 'य एतान्पञ्चाग्नीन्वेद न सह तैरप्याचरन् पाप्मना लिप्यते

भाष्यप्रकाशः ।

मात्रार्थतेति प्रथमसूत्रव्याख्यान एव व्युत्पादितम् । श्रुतावपि 'य इत्थं विदु'रित्यत्र 'य एतानेवं पञ्चाग्नीन् वेदे'त्यत्र च 'शुद्धः पूतः पुण्यलोको भवती'त्यनेन ब्रह्मप्राप्तिरेव फलत्वेन प्रतिपादिता । वैराग्यं तु मध्ये धूममार्गव्युत्पादने 'अतो वै खलु दुर्निष्प्रपतर'मित्यादिना तृतीयस्थानव्युत्पादने च 'तस्माज्जुगुप्सेते'त्यनेनोक्तम् । तथा सति तत्त्वयोः पथोर्ज्ञानस्यैव फलम् । तदत्र ब्रह्मज्ञानोपकारकत्वेनोक्तम् । आहुतीनां यथाज्ञानोपयोगः, तदपि प्रागेवोक्तम् । इयं च मर्यादामार्गीया व्यवस्था । पुष्टिमार्गे तु पञ्चाहुतिनियमाभाव इत्यपि 'न तृतीय' इति सूत्रे साधितम्, अतो वैराग्यमात्रार्थत्वं पादस्य यदुच्यते परैः, तदप्रयोजकम् ।

एवमनुशयाधिकरणे फलानुशयो यथाङ्गीक्रियते, तदपि तथेत्यपि तत्रैव व्युत्पादितम् ।

अनिष्टादिकारिणामित्यधिकरणं तु सर्वैर्दशसूत्रमङ्गीक्रियते । तत्र सर्वेषां न चन्द्रगतिरिति सिद्धान्तस्तु समानः । न तृतीय इत्यादिसूत्रचतुष्टयं तु तृतीयस्थानेऽन्यत्र च पञ्चाहुतिनियमाभावबोधकम् । तत्र न तृतीये स्थाने आहुतिसंख्यानियम आदर्तव्यः । कुतः । तथोपलब्धेः । आहुतिसंख्यानियमं विनैव 'जायस्व म्रियस्वे'त्युक्तप्रकारेण तृतीयस्थानोपलब्धेः । किञ्च । 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती'ति मनुष्यशरीरहेतुत्वेनाहुतिनियमः सङ्कीर्त्यते, न कीटपतङ्गादिशरीरहेतुत्वेन । पुरुषशब्दस्य मनुष्यजातिपरत्वात् । अपि च । पञ्चम्यामाहुतावपां पुरुषवचस्त्वमुपदिश्यते, न त्वपञ्चम्यां तन्निषिध्यते । वाक्यभेदप्रसङ्गात् । अतो येषामारोहावरोहौ संभवतः, तेषां पञ्चम्यां

रश्मिः ।

शुद्धः पूतः पुण्यलोको भवति य एवं वेदे'ति श्रुत्युक्तफलसम्बन्धात् । एवेति । अन्यसूत्रव्याख्यानव्यवच्छेदकः एवेति । पुण्यलोक इति । पुण्यः पुण्यसाध्यो लोकोऽवस्थेति व्याख्यायाम् । ब्रह्मप्राप्तिरेवेति । लोको ब्रह्मलोकः । 'मुख्ये कार्यसम्प्रत्ययात्' । अत उक्तं ब्रह्मप्राप्तिरिति । एवकारस्तु 'ब्रह्मज्ञानौपयिकं जन्म विचार्यत' इति भाष्यात् । तृतीयेति । 'जायस्व म्रियस्वे'ति श्रुत्युक्तम् । तथा सतीति । वैराग्यब्रह्मज्ञानयोर्निरूपणीयत्वे सति । तदिति । वैराग्यम् । तयोः धूमतृतीयमार्गयोः । ज्ञानस्यैवेति । 'य एवं वेदे'ति श्रुत्युक्तज्ञानस्य । एवकारेण ब्रह्मज्ञानं न स्वसाधकवैराग्येणाफलं भवतीत्यर्चिरादिमार्गज्ञानं व्यवच्छिद्यते । तदत्रेति । वैराग्यमत्र पञ्चाग्निविद्यायां साधनचतुष्टयान्तर्गतत्वाद्ब्रह्मज्ञानेत्यादिः । प्रागेवेति । प्रथमसूत्रे एवकारोऽन्ययोगव्यवच्छेदकः । परैरिति । शङ्कररामानुजप्रभृतिभिः । तथाच भाष्यम् । 'प्रथमे तावत्पादे पञ्चाग्निमाश्रित्य संसारगतिप्रभेदः प्रदर्श्यते वैराग्यहेतोः । 'तस्माज्जुगुप्सेते'ति चान्ते श्रवणात् ।' 'उपासनारम्भाय्यर्हितोपायश्च प्राप्यवस्तुव्यतिरिक्तवैतृष्ण्यं प्राप्यतृष्णा चेति तत्सिद्ध्यर्थं जीवस्य लोकान्तरेषु संचरतो जाग्रतः स्वपतः सुषुप्तस्य मूर्च्छतश्च दोषाः परस्य च ब्रह्मणस्तद्रहितता कल्याणगुणाकरता च प्रथमद्वितीयपादयोः प्रतिपाद्यत' इति च भाष्यान्तरम् । तथेति । अप्रयोजकम् । तत्रैवेति । एवकारेणेतरयोगो व्यवच्छिद्यते । न चन्द्रगतिरिति । 'ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ती'ति श्रुतेः सुकृतिविषयत्वात् पापिनां न चन्द्रगतिरिति सिद्धान्तस्तु समान इति । परन्तु सूत्रचतुष्टयार्थासङ्गतिरिति भावः । तामेवाहुः न तृतीयेति । तृतीयं स्थानमुक्तम् । अन्यत्रेति । अर्चिरादिमार्गे धूममार्गे च । इत्युक्तेति । इति छान्दोग्योक्तप्रकारेण । वाक्यभेदेति । वाक्यस्य द्व्यर्थताप्रसङ्गात् । 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति,' नत्वपञ्चम्यां भवन्तीति वाक्यस्य द्व्यर्थता वाक्यभेदरूपा । आरोहेति । 'ते धूममभिसम्भवन्ति धूमाद्रात्रि'मित्याद्यारोहः । 'तस्मिन्यावत्सम्पातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्त' इत्यवरोहः । 'अपि

भाष्यप्रकाशः ।

देहोद्भवः । अन्येषां तु विनैव संख्यां भूतान्तरोपसृष्टाभिरद्भिर्देह आरप्स्यते । अपि च । द्रोणधृष्टद्युम्नसीताद्रौपदीप्रभृतीनां चायोनिजत्वं स्मर्यते । द्रोणादीनां योषिद्विषयैकाहुतिर्नास्ति । धृष्टद्युम्नादीनां तु योषित्पुरुषविषये द्वे न स्तः । तत्र यथा संख्यानादरः, तथान्यत्रापि ज्ञेयः । बलाकापि रेतःसिचं विनैव गर्भं धत्त इति लोकरूढिः । अपि च । चतुर्विधे भूतग्रामे स्वेदजोद्भिज्जयोरुत्पत्तिर्ग्राम्यधर्मं विनैव दृश्यत इत्येवं सूत्रत्रये व्याख्याय, छान्दोग्ये 'तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्याण्डजं जीवजमुद्भिज्ज'मिति भूतग्रामत्रैविध्यश्रावणात्, कथं चातुर्विध्यमित्याकाङ्क्षायाम्, 'तृतीयशब्दावरोधः संशोकजस्ये'ति सूत्रं लिखित्वा, 'आण्डजं जीवजमुद्भिज्ज'मित्यत्र तृतीयेनोद्भिज्जशब्देनैव स्वेदजोपसंग्रहो ज्ञेयः । स्वेदजोद्भिज्जयोर्भूम्युदकोष्मप्रभवत्वेन तुल्यत्वादिति व्याकुर्वन्ति ।

तदपि तथा । पञ्चाग्निविद्यायाः पुरुषशरीरभवनं प्रकृत्यैव प्रवृत्ततया तृतीयस्थाने आहुतिशङ्काया एवानुदयेन तत्र समाधेरपेक्षैव नेति सूत्रवैयर्थ्यप्रसङ्गात् । किञ्च, आहुतिनियमस्य बहुषु व्यभिचारेण तासामाहुतीनां कैमर्थ्याकाङ्क्षायां तद्विषयविचारे धूममार्गीयाः सर्वे तु न संभवन्तीति तदाकाङ्क्षापूरणाभावादपि ग्रन्थशैथिल्यम् । संशोकजशब्देन स्वेदजग्रहणमपि न रोचिष्णु । ईदृशशब्दप्रयोगे प्रयोजनाभावादिति ।

रश्मिः ।

स्मर्यत'इति सूत्रार्थमाहुः अपिचेत्यादिना । स्मर्यते इति । यथा 'सीता सीराग्रतो जाते'ति सीताविषयिणी स्मृतिः । प्रभृतिशब्देन 'उत्सङ्गान्नारदो जज्ञ' इति नारदः । लोकेति । मदनसारिका । दर्शनाच्चेति सूत्रार्थमाहुः अपि चेत्यादिना । चतुर्विध इति । जरायुजाण्डजस्वेदजोद्भिज्जरूपा विधा यस्य । विनैवेति । एवकारो दर्शनात् । क्रमशो दूषणानि । पञ्चाग्निविद्याया इत्यादिना । प्रकृत्यैवेति । प्रसिद्ध्यैवकारः । पुरुषशरीरभवनेतरस्वेदजोद्भिज्जयोगव्यवच्छेदकः । पुरि शयनेपि स्वेदजोद्भिज्जयोः पुरुषशब्दाप्रवृत्तिरप्रसिद्धेः । एवेति । ननु स्मर्यत इति सूत्रोक्तस्मृतिविरोधात्कुत एवकार इति चेत् । न । तस्याः स्मार्तविषयत्वेन श्रौतेऽप्रवृत्तेः । मायावत् । उपष्टम्भिका स्मृतिरिति चेत्, पक्षान्तरं भविष्यति । 'तत्त्वमसी'त्यत्र तत् त्वमसीत्युक्त्वा 'भिन्ना जीवाः, परो भिन्नः, तथापि ज्ञानरूपतः । प्रोच्यन्ते ब्रह्मरूपेण वेदवादेषु सर्वश' इति स्मृत्युपष्टब्धो विग्रहः तस्य त्वमिति तद्वत् । अपेक्षैव नेति । अपेक्षावधारणं न । प्रसङ्गसङ्गत्या सङ्गतं सर्वमिति चेत्, तत्राहुः किञ्चेति । बहुष्विति । द्रोणधृष्टद्युम्नसीताद्रौपदीप्रभृतिषु । ज्ञानोपयोगिदेहत्वेन पञ्चाग्निहोमत्वेन कार्यकारणभावस्यान्वयव्यतिरेकव्यभिचारस्तेन । पञ्चाग्निविद्याविषये यमले कुमार्यां ज्ञानोपयोगिदेहाभावेनान्वयव्यभिचारः । द्रोणादिषु पञ्चाग्निविद्याभावेपि ज्ञानोपयोगिदेहसत्त्वात् व्यतिरेकव्यभिचारः । पुष्टिमार्गिषु नन्दप्रभृतिषु च । तेनाप्रयोजकत्वात्कैमर्थ्याकाङ्क्षा 'प्रयोजनमनुद्दिश्य न मन्दोपि प्रवर्तत' इति । तस्याम् । न सम्भवन्तीति । 'अथ य इह कपूयचरणा' इत्यादिना श्वादियोन्यादिनिरूपणान्न सम्भवन्ति । उदाहरणेन 'अहं मनुरभवं सूर्यश्चे'त्यनेनैकेनाहुतिव्यभिचारशङ्कानिवृत्त्याकाङ्क्षापूरणाभावात् शैथिल्यमिति । ईदृशेति । अयमर्थः । संशोकजपदस्य स्वेदजे रूढेरप्रसिद्धत्वादत एव योगरूढेरभावाद्यौगिकत्वं वक्तव्यम् । योगश्च सम्यक् शोको यत्र स्वेदे सम्बन्धविशेषेणेति संशोकः स्वेदस्तज्जन्य इति । एवं चैतादृशशब्दप्रयोगे प्रयोजनाभावः । यदि च लक्षणा, तदाप्यप्रयोजनवती सेति । ईदृशशब्दप्रयोगे प्रयोजनाभावादिति । सिद्धान्ते तु अप्सु संशोकजपदस्य श्रौतो योगः । शोकाश्रुषु लक्षणाग्रहेपि 'यदश्वशीयते'ति श्रुत्याश्रुषु समवायिकारणत्वबोधनात्र-

भाष्यप्रकाशः ।

तथा, साभाव्यापत्तिसूत्रे, समानो भावो रूपं येषां ते सभावाः । तेषां भावः साभाव्यं सारूप्यमिति वाचस्पतिव्याख्यानमप्ययुक्तम् । भावशब्दे परे समानपदस्य सादेश इत्यत्र पाणिनीयानुशासनादर्शनात् ।

रामानुजाचार्यभास्कराचार्याभ्यां तु स्वाभाव्यापत्तिरित्येवं सूत्रपाठो भेद्यते ।

मध्वाचार्यैस्तु तद्भावापत्तिरित्येवं भेद्यते ।

तन्मतं तु न मयानूद्यते । अप्रसिद्धश्रुत्युदाहरणेन भिन्नविषत्वादिति ।

भिक्षुस्तु, कृतात्ययसूत्रादारभ्य संशोकजस्येत्यन्तं चतुर्दशसूत्रमेकमधिकरणं जीवावरोहप्रतिपादकमङ्गीकृत्य, कृतात्ययादिसूत्रचतुष्टये कर्मशेषरूपमनुशयम्, अनिष्टादिकारिणामित्यादिसूत्रचतुष्टये प्रयतां सर्वेषां चन्द्रमण्डलगमनं सूर्यमण्डलस्थदेवैस्तेषां भक्षणम्, न तृतीय इति सूत्रे च, यथोक्तारोहावरोहौ स्वर्गिनारक्यपेक्षया तृतीये यूकादिजीवे न स्तः । कुतः । तथोपलब्धेः । 'अथैतयोः पथोर्न कतरेणचन तानीमान्यसकृदावर्तीनि क्षुद्राणि भूतानि भवन्ति जायस्व म्रियस्वे'त्येतत् तृतीयं स्थानम् । तेनासौ लोको न संपूर्यते । 'तस्माज्जुगुप्सेते'ति छान्दोग्यश्रुतौ आरोहावरोहाभावोपलब्धेरित्येवं व्याख्याय, अग्रिमसूत्रद्वयव्याख्यानेऽन्येषामप्यारोहाद्यभावं साधयित्वा, श्रुतौ या पञ्चाग्निक्रमेण भूतानामुत्पत्तिः, साप्युत्सर्गाभिप्रायेत्युक्तवान् । संशोकजपदं च सर्ववद्व्याख्यातवान् ।

रश्मिः ।

योजनवती सेति । पाणिनीयेति । अयमाशयः । समानस्य सादेशे प्रकारद्वयं संभावितम् । 'समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु' इति सूत्रे समानस्येति योगविभागेन सादेशः । यथा सपक्षः साधर्म्यमित्यादि । अथवा । 'ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुष्वि'ति सूत्रे रूपशब्दस्यार्थपरत्वमङ्गीकृत्य सादेश इति । तदसङ्गतम् । योगविभागस्य भाष्यानुक्तत्वादिति स्थितं शेखरे । अतएव सपक्षः साधर्म्यमित्यत्र सदृशवचनस्य सहशब्दस्य सादेश इति दीक्षिताः । एवं द्वितीयसूत्रेपि रूपपदस्यार्थपरत्वमप्यन्यैर्न स्वीकृतमिति । अत उक्तं पाणिनीयानुशासनादर्शनादिति । तत्त्वं त्वेतत् । समानो भावो येषामित्यस्वपदविग्रहं स्वीकृत्य सदृशवाचकस्य सहशब्दस्य 'वोपसर्जनस्ये'ति सूत्रेण सादेशे सत्त्वे ष्यति च कृते साभाव्यमिति सिध्यतीति व्याख्यानान्तरमेतदिति । को विशेष इति चेदुच्यते । साभाव्यापत्तिरित्यस्य तन्मते आहुतावाकाशसाम्यापादनमित्यर्थो भवति । आपत्तिशब्देन तस्यैवार्थस्य प्रतीतेः । स चासङ्गतः । सादृश्यापादनस्याविवक्षितत्वात् । यद्यप्यापत्तेः प्रापणमप्यर्थः, तथाप्यवक्तव्यः । असमर्थत्वाद्विरुद्धमतिकृत्त्वाच्च । 'तीर्थान्तरेषु स्नानेन समुपार्जितसत्कृतिः । सुरस्रोतस्विनीमेष हन्ति संप्रति सादर'मित्यत्र गमनार्थहन्तीतिवत् । 'सुधाकरकराकारविशारदविचेष्टितैः । अकार्यमित्रमेकोऽसौ तस्य किं वर्णयाम्यह'मित्यत्राकार्यमित्रमितिवच्च । अत्र कार्यं विना मित्रं मित्रमिति विवक्षितम् । अकार्येषु मित्रमिति प्रतीतिः । तस्मादस्मदुक्तमेव साधीयः । किञ्च, अस्वपदविग्रहस्वीकारेपि समस्यमानयावत्पदाघटितत्वस्य विग्रहेऽभावेन मुख्यलक्षणानाक्रान्तत्वात् यथाकथञ्चित् अस्वपदविग्रहोऽत्र वक्तव्यः । तदपेक्षयाऽसमस्तत्वेन व्याख्यानमेव ज्याय इति । अत एव न बहुव्रीहेस्तादृशनित्यत्वमिति शब्दरत्नकारः । सूत्रपाठ इति । भिद्यते स ताभ्यां भेद्यते । ण्यन्ताद्यक् । तद्भावेति । पुस्तकान्तरे तु तत्स्वाभाव्यापत्तिरिति पठ्यते । व्याख्यानं तु तद्गतौ गतिः, तत्स्थितौ स्थितिरित्येव तद्भावापत्तिरिति । अप्रसिद्धेति । पुस्तकान्तरे तु 'धूमो भूत्वाभ्रं भवती'ति श्रुतिरुदाहृता । प्रयतामिति । प्रयाणं कुर्वताम् । अन्येषामिति ।

**योग्यदेहः साधनसहितो ब्रह्मज्ञानार्थं निरूपितः ॥ २७ ॥**

**इति तृतीयाध्याये प्रथमपादेऽष्टमं योनेः शरीरमित्यधिकरणम् ॥ ८ ॥**

**इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते श्रीमद्ब्रह्मसूत्राणुभाष्ये तृतीयाध्यायस्य प्रथमः पादः ॥ ३ ॥ १ ॥**

---

भाष्यप्रकाशः।

तत्र प्रयतां सर्वेषां चन्द्रगतिर्योक्ता, सा न युक्ता। प्रयाणस्य मरणरूपत्वेन क्षुद्रजन्तुष्वपि तुल्यतया तेषामप्यारोहाद्यापातात्। तेषामसकृदावृत्तिश्रुत्या निवारणे कौपीतकिश्रुतिस्थसर्वपदस्य सङ्कोचार्हताया आवश्यकत्वे अनिष्टादिकारिणामपि 'वैवस्वते विविच्यन्ते' इति श्रुत्या वारणादिष्टादिकारिपरतया संकोचेपि बाधकाभावात्। पञ्चाग्निक्रमेणोत्पत्तेरौत्सर्गिकत्वोक्तिरपि तथा। बहुषु व्यभिचारे औत्सर्गिकत्वस्य वक्तुमयुक्तत्वात्। संशोकजव्याख्यानमग्रिमाधिकरणस्थसाभाव्यपदव्याख्यानं च पूर्ववदेवासंगतम्। यत्पुनरवान्तरसृष्टेरपि ब्रह्मकर्तृकत्वप्रतिपादनार्थमयं पाद इत्युक्तम्। तत्त्वविरुद्धत्वादनुमन्यामहे ॥ २७ ॥ इत्यष्टमं योनेः शरीरमित्यधिकरणम् ॥ ८ ॥

**इति श्रीवल्लभाचार्यचरणनखचन्द्रकिरणनिवारितहृदयध्वान्तेन पीताम्बरात्मजेन पुरुषोत्तमेन कृते ब्रह्मसूत्रभाष्यप्रकाशे तृतीयाध्यायस्य प्रथमः पादः ॥ ३ ॥ १ ॥ श्रीः ॥**

रश्मिः।

क्षुद्रादिजीवानाम्। **निवारण** इति। चन्द्रगतिनिवारणे। चन्द्रगतावसकृद्व्यावृत्त्यभावात्। **कौषीतकीति**। 'ये के चास्माल्लोकात्प्रयान्ति चन्द्रमसमेव ते सर्वे गच्छन्ती'ति श्रुतिः। **वारणा**दिति। चन्द्रगतिवारणात्। **सङ्कोच** इति। विपरीतलक्षणया संकोचे। यथा 'बहूपकृतं त्वये'त्यपकारिणि लक्षणया बहूपकृतपदसंकोचः। **औत्सर्गिकत्वे**ति। साप्युत्सर्गोभिप्रायेणेति ग्रन्थेन पूर्वमुक्ता। **बहुष्वि**ति। 'सदेव सोम्येदमग्र आसीत्' 'तस्माद्वा एतस्मादात्मनः' 'तदात्मानꣳस्वयमकुरुते'त्यादिषु। शङ्करैः प्रथमाधिकरणे बीजैः सम्परिष्वक्त एव गच्छतीति साधितम्। द्वितीये सानुशया अवरोहन्ति। तृतीये पापिनां स्वर्गे गमनाभावः। चतुर्थे धूमादिभावो धूमादिभिः सम्बन्धः। पञ्चमे व्रीह्यादिभावान्निर्गमो दुष्कर इति विलम्बः पूर्वं त्वरेति। षष्ठे स्वर्गादवरोहतां व्रीह्यादौ संश्लेषमात्रमिति। सिद्धान्ते तु प्रथमे सफला प्रथमाहुतिः। द्वितीये द्वितीयाहुतिः सफला। तृतीये पुष्टिमार्गीयाणां मर्यादामार्गीयाणां च सोमभावः, न सर्वेषाम्। चतुर्थे मर्यादायामेव पञ्चमाहुतिः निरोधलक्षणग्रन्थोक्तकर्त्रनुमेया। तस्या नियमः। न पुष्टौ। 'जायस्व म्रियस्वे'ति मार्गस्य यममार्गप्रवेशश्च। पञ्चमे तृतीयाहुतिः सफला। षष्ठे संस्कारेणान्नशुद्धिः। सप्तमे रेतसः पुरुषभावः। अष्टमे बहिर्निर्गतस्यैव पुरुषत्वमिति ॥ २७ ॥ **इत्यष्टमं योनेः शरीरमित्यधिकरणम् ॥ ८ ॥**

**इति श्रीविठ्ठलेश्वरैश्वर्यनिरस्तसमस्तान्तरायेण श्रीगोविन्दरायजित्पौत्रेण सम्पूर्णवेत्त्रा विठ्ठलरायजिद्भ्रात्रीयगोकुलोत्सवजिदात्मजगोपेश्वरजिता कृते भाष्यप्रकाशरश्मौ तृतीयाध्यायस्य रश्मौ प्रथमपादः सम्पूर्णतामगमत् ॥ ३ ॥ १ ॥**

**इति श्रीकृष्णद्वैपायनप्रणीतब्रह्मसूत्रेषु तृतीये उपनिषदां बोधकताप्रकारनिरूपके साधनाध्याये अधिकारिजन्मनिर्धारो नाम प्रथमः पादः ॥**

श्रीकृष्णाय नमः ।

# श्रीमद्ब्रह्मसूत्राणुभाष्यम् ।

शुद्धाद्वैतब्रह्मवादनिर्गुणभक्तिमार्गप्रवर्तकाचार्यचक्रचूडामणि-
श्रीमद्वल्लभाचार्यचरणप्रणीतम् ।

दशदिगन्तविजयिश्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणप्रणीत-
भाष्यप्रकाशसंपूर्णवेत्तृश्रीमद्गोस्वामिश्रीगोपेश्वरजि-
चरणप्रणीतभाष्यप्रकाशरश्मिपरिबृंहितम् ।

## तृतीयाध्यायस्य द्वितीयः पादः ।

'भगवद्धर्मपरायण सद्व्रत श्रेष्ठि गोवर्धनदास सुन्दरदास' इत्यस्य
पुष्टिमार्गीयसंस्कृतसाहित्यसमुद्धारार्थं निर्दिष्टद्रव्यसंग्रहतो
'भृगुपुरस्थ मूलचन्द्र तुलसीदास तेलीवाला, बी. ए.,
एल्एल्. बी., वकील, हाइ कोर्ट' इत्यनेन संशोध्य
'निर्णयसागर' मुद्रणालये मुद्रयित्वा
प्रकटीकृतम् ।

श्रीवल्लभाब्दाः ४४८. संवत् १९८२.

मूल्यं मुद्रिकाद्वयम् ।

श्रीकृष्णाय नमः ।
श्रीगोपीजनवल्लभाय नमः ।
श्रीमदाचार्यचरणकमलेभ्यो नमः ।*

# श्रीमद्ब्रह्मसूत्राणुभाष्यम् ।

## भाष्यप्रकाश-रश्मि-परिबृंहितम् ।

## तृतीयोऽध्यायः ।

### द्वितीयः पादः ।

### सन्ध्ये सृष्टिराह हि ॥ १ ॥ ( ३-२-१- )

पूर्वपादे अधिकारियोग्यदेहो निरूपितः । द्वितीये जीवस्य मुक्तियोग्यता

---

भाष्यप्रकाशः ।

सन्ध्ये सृष्टिराह हि ॥ १ ॥ अथ द्वितीयपादं व्याचिख्यासवः पादयोः सङ्गतिमाहुः पूर्वेत्यादि । अधिकारिणो ज्ञानोपदेशयोग्यदेहप्राप्तावपि यदि स्वरूपतो मुक्तियोग्यता न स्यात्, तदा तादृशदेहाप्तिवैयर्थ्यम्, अतस्तदर्थं द्वितीयपादे सा निरूप्यते । यदि हि सा न स्यात्, उपदेशो न स्थिरीभवेत्, अतस्तदर्थं तन्निरूपणमित्यर्थः ।

माध्वास्तु माहात्म्यज्ञानपूर्वकस्नेहस्य भक्तित्वादनुक्ते माहात्म्ये तदज्ञानेऽस्य भक्तेरप्यसम्भवात् तत्सिद्धये माहात्म्यप्रदर्शनायायं पाद इत्याहुः ।

तत्र माहात्म्योक्तिस्तु पूर्वमपि निराबाधा ।

भिक्षुस्तु, पूर्वस्मिन् पादे ब्रह्मणः सकाशादवान्तरसृष्टिरुक्ता । अत्र त्वेकस्मिन् देहेपि स्वप्नादिसृष्टिस्तत उच्यते । तावता जन्मादिसूत्रस्थं लक्षणं विचारितं भवति । ततः स्वरूपलक्षणं विचार्यते, ततः प्रपञ्चब्रह्मणोर्भेदाभेदावित्याह ।

तत्रापि विचारस्य कैमर्थ्याकाङ्क्षा न पूर्यते । तस्मादुक्तमेव प्रयोजनम् । ततश्चैककार्यत्वं पादयोः सङ्गतिः । अस्या योग्यताया आन्तरत्वं च पादानन्तर्ये हेतुरिति द्रष्टव्यम् ।

रश्मिः ।

सन्ध्ये सृष्टिराह हि ॥ १ ॥ तदर्थमिति । उपदेशस्थिरीकरणार्थम् । तन्निरूपणं स्वरूपतो मुक्तियोग्यतानिरूपणम् । तदज्ञान इति । विषयत्वेन माहात्म्याज्ञाने । कारणाभावेन ज्ञानाभावात् । अस्य पञ्चाग्निविद्यासाधितदेहकस्य । तत्सिद्धये माहात्म्यज्ञानसिद्धये । पूर्वमिति । पूर्वं गतपादे । तेनास्यार्थस्यातिव्याप्तिः । स्वरूपतो मुक्तियोग्यता तु दीक्षितस्य स्वप्नेऽन्नभोजनादौ प्रायश्चित्तस्मरणात्स्वप्नेऽन्नभोजनादिदोषनिवृत्त्या तादृशदोषज्ञानार्थमधिकरणारम्भः । अग्रे दोषासंसर्गे विषयनिर्धारार्थं ब्रह्मस्वरूपविचार इति नातिव्याप्तिः । माहात्म्यज्ञानं तु श्रवणाङ्गमीमांसाफलं षोडशपादानुस्यूतम् । स्वप्नादीति । आदि सुषुप्तिः । तत इति । तदनन्तरं द्वितीयपादे । तत इति । तदनन्तरं तृतीयपादे । तत इति । तदनन्तरं चतुर्थपादे । कैमर्थ्येति । असंदिग्धस्य स्वरूपलक्षणस्य सूत्राविषयस्य महता प्रबन्धेन विचारः किमर्थ इति कैमर्थ्याकाङ्क्षा । उक्तमिति । स्वप्नदोषज्ञानम् । एवेति । प्रयोजनद्वयनिरासादेवकारः । एककार्यत्वमिति । अविरोधस्य द्वितीयाध्या-

निरूप्यते । तत्र प्रथमं स्वप्नं निरूपयति । स्वप्नस्य सत्यत्वे तत्कृतगुणदोषसम्बन्धो जीवस्य भवेत् । ततश्च निरूपिता शुद्धिर्व्यर्था स्यात् । अतः स्वप्नस्य मिथ्यात्वं प्रदर्शयितुमधिकरणारम्भः ।

तत्र पूर्वपक्षमाह । सन्ध्ये स्वप्ने सृष्टिराह । 'तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत इदं च परलोकस्थानं च सन्ध्यं तृतीयं स्वप्नस्थान'मित्युपक्रम्य, 'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजत' इत्यादिना सृष्टिराह । सन्ध्ये स्थाने सृष्टिरस्ति । यतः श्रुतिः स्वयमेवाह । युक्तश्चायमर्थः ।

भाष्यप्रकाशः ।

पूर्वाधिकरणविषयमाहुः तत्रेत्यादि । तत्रेति । योग्यतायां निरूप्यायाम् । ननु तथा सति प्रथमं स्वप्ननिरूपणस्य किं प्रयोजनम्, अत आहुः स्वप्नस्येत्यादि । जीवस्येति । प्राप्तयोग्यदेहस्यापि जीवस्य ।

शङ्करभास्कराचार्ययोर्मते तु स्वयंज्योतिष्ट्वसिद्ध्यर्थं स्वप्ननिरूपणम् ।

तत्तु मुक्तियोग्यतायामेव पर्यवस्यति ।

रामानुजाचार्यास्तु, पूर्वपादे जीवस्य कर्मगतिं प्रदर्श्य दुःखित्वं स्थापितम्, इदानीमस्य स्वप्नावस्था परीक्ष्यत इत्याहुः ।

एवं तच्चौरोपि ।

तन्मते वैराग्यार्थतामात्रमायातीति बोध्यम् ।

प्रकृते त्वधिकरणप्रयोजनोक्त्यैव स्वप्नसृष्टिः सत्या मिथ्या वेति संशयोप्युक्त इति तमनुक्त्वा पूर्वपक्षमेवाहुः तत्रेत्यादि । सन्ध्यमिति । एतल्लोकपरलोकयोः सन्धौ भवम् ।

रश्मिः ।

यार्थस्य शाब्दज्ञानजननस्वभावस्य पादयोः सङ्गतिरित्यर्थः । पूर्वोक्तशाब्दज्ञानस्य ज्ञानोपयोगिदेहसाधनं कार्यम् । तदनन्तरं किमन्यकार्यजनकत्वमिति जिज्ञासयां स्वरूपतो मुक्तियोग्यतारूपकार्यनिरूपणात् । एकस्य कारणस्य कार्यत्वमित्येककार्यत्वम् । पादयोस्तु प्रसङ्गः । स्वयमिति । 'अत्रात्मा स्वयंज्योतिर्भवती'ति श्रुतेः । 'अत्र' स्वप्ने । तत्तु मुक्तीति । शाब्दविषयं स्वयंज्योतिष्ट्वं मुक्तियोग्यतायाम् । एवेति । मुक्तेः स्वयंज्योतिष्ट्वम् । ज्योतिश्चरणाधिकरणे च ब्रह्मणः स्वयंज्योतिष्ट्वमित्येवकारः । पर्येवेति । मुक्तियोग्यता स्वाप्निकदोषाभावः । तत्र स्वयंज्योतिष्ट्वं स्वयंप्रकाशत्वं स्वाप्निकदोषरहितत्वेऽभिन्नात्मत्वं विषयान्तराप्रकाश्यत्वं स्वयंज्योतिष्ट्वं 'अत्रात्मे'ति श्रुतेरित्येवं पर्यवस्यतीत्यर्थः । तच्चौर इति । भगवान्श्चैवाचार्यः । वैराग्येति । जगतः कर्मगत्यधीनत्वे दुःखित्वं विषयवैतृष्ण्यरूपवैराग्यार्थतामात्रम् । स्वप्नावस्थापरीक्षणेन च वैराग्यमिति तथा । मात्रचा ज्ञानोपयोगिदेहव्यवच्छेदः । एवेति । जगद्दृष्टिः सत्यत्वे बीजम्, निरूपितशुद्धिवैयर्थ्यं मिथ्यात्वे बीजमित्येवकारः । पूर्वपक्षमेवेति । संशयव्यवच्छेदक एवकारः ।

भाष्ये । सृष्टिराहेति । अत्र सृष्टिमाहेत्यापत्त्या तन्निवृत्तये सूत्रमेव विवृण्वन्ति स्म सन्ध्यइत्यादि । सूत्रे 'सन्ध्य' इत्यस्य 'स्थान' इति विशेष्यं 'सृष्टि'रित्यस्याग्रे'ऽस्ती'त्यस्यानुसन्धानं विभक्तिप्रयोजकम्, तदाह सृष्टिरस्तीति । आहेत्यस्यार्थमाह पूर्वपक्षी यत इति । आहेत्यत्र श्रुतिः कर्त्री । एवकारः श्रुत्यन्ययोगव्यवच्छेदकः । सौत्रहीत्यस्यार्थमाहुः युक्त इति ।

यथा श्रुतिर्वदति, तथैव स्वप्ने दृश्यते । देवादिवाक्यानां प्रबोधेपि बाधाभावात् । नचेयमेव सृष्टिस्तत्र दृश्यते । 'न तत्र रथा' इत्यादिना निषेधात् । श्रुतिवादिनां

भाष्यप्रकाशः ।

स्वप्न इयमेव सृष्टिः स्मर्यत इति नैयायिकादयो मन्यन्ते ।

तदयुक्तम् । स्वप्ने दर्शनाद्यभिमानस्य क्वचित् पश्यामीत्याद्यनुव्यवसायस्य जागरणोत्तरं चेदं मया दृष्टमिदं भुक्तमित्यादिज्ञानस्य च बाधापत्तेः । नचेयमेव दृश्यत इत्यपि युक्तम् । स्थूलानां गजतुरगादीनां शरीरान्तर्मातुमशक्यत्वात् । नच मिद्धामनःसंयोगे स्मृत्युपनीतमारोपितं भासत इत्यपि युक्तम् । आरोपनियामकस्य तत्तद्वस्तुसादृश्यस्यात्मनि मिद्धायां चासिद्धत्वात् । अप्रामाणिकस्य तस्य कल्पने गौरवाच्च । क्षणे क्षणेऽन्यान्यदर्शनेऽन्यस्यान्यथात्वेपि नियामकाभावाच्च । नच क्षणानामेव नियामकत्वम् । साधनान्तरानपेक्षाणां तेषां तथात्वस्यासिद्धत्वात् । कल्पने चाप्रामाणिकगौरवप्रसङ्गात् । नच बहिर्निर्गत्य पश्यतीत्यपि युक्तम् । तथा सति नेत्रोन्मीलनप्रसङ्गात् । भुक्तौ चर्वणाद्यापत्तेः । बहिर्विषयकज्ञाने मनसः पारतन्त्र्यात् । जागरे तृप्त्यापत्तेः । पार्श्वस्थानामपि तद्दर्शनापत्तेश्च । मिद्धासंयोगविघटनापत्तेस्तदा जागरापत्तेश्च । तस्मात् तत्रैतत्सृष्टिदर्शनाङ्गीकारो

रश्मिः ।

प्रकृते । यथा श्रुतिरिति भाष्यं विवृण्वन्ति स्म स्वप्न इयमेवेति । इति नैयायिकादयो मन्यन्त इति शेषेणान्वयः । इयमिति । यथा श्रुतिर्वदति, तथैव । इदंलोकपरलोकरूपस्य प्रायपाठं त्यक्त्वा सत्यत्वेन प्रतीता । एवकारो वाक्यभेदप्रसङ्गात् । नैयायिकादय इति । आदिना नास्तिकादयः । देवादीतिभाष्यं विवृण्वन्ति स्म स्वप्ने दर्शनादीति । बाधेति । प्रबोधेपि सत्यत्वेन बाधेपि तदापत्तेर्बाधाभावादित्यर्थः । नचेयमेवेतिभाष्यं विवरीतुमाहुः नचेयमेवेति । इयं जाग्रत्सृष्टिः । एवकारो नैयायिकादियुक्त्या । 'तस्मिन्सन्ध्ये स्थाने तिष्ठन्नुभे स्थाने पश्यतीदं च परलोकस्थानं चे'ति श्रुतेः । तेन भाष्यीयतत्रेत्यस्य वासनया स्वप्ने । 'तस्मिन्सन्ध्ये स्थान' इत्युक्तश्रुतौ उभयोर्दर्शनं शरीरान्तः स्थित्वा जीवस्योत बहिर्निर्गत्येति विकल्प्याद्ये दोषमाह स्थूलानामित्यादि । स्थूलानां शरीरान्तर्मानं शङ्कते नच मिद्धामन इति । अत्र लेखकप्रमादः । मिद्धानाडी न्यायशास्त्रप्रसिद्धा । तत्र मनःसंयोग इति । अथवा । प्रसिद्ध्यभावात् सिद्धा देवयोनिः, पञ्चाग्निविद्यासाधितदेहः तस्यां मनःसंयोगे स्वप्नात्मकज्ञानस्य मानस्य स्थूलं तत्स्मृत्युपनीतं सूक्ष्मं वृत्तिवत् अन्तःकरणावच्छिन्नविषयावच्छिन्नचैतन्यैक्यप्रत्यक्षं विषयनिष्ठं स्मृत्युपनीतं यथा शाब्दं ह्युपनीतं तथा स्वप्नाभेदेन हृदयाकाश आरोपितं शुक्तौ रजतमिव भासत इत्यर्थः । तत्तदिति । यथा चाकचक्येन सादृश्यस्यात्मनीत्यन्यमतं मनसीति स्वमतम् । प्रभौ सर्वविषयकम्, 'यः सर्वज्ञ' इति श्रुतेः । जीवीयं त्वणुव्यवहार्यम् । मिद्धायामितिलेखकप्रमादोऽप्रसिद्धेः । सिद्धायाम् । तस्येति । तत्तद्वस्तुसादृश्यस्य । तथात्वस्येति । नियामकत्वस्य । नच जन्यमात्रं कालोपाधिरिति नियामकत्वमस्त्विति । कस्यापि मते मिथ्याकालस्य नियामकत्वाभावेन तव मते सत्त्वात् । कल्पन इति । क्षणानां जन्यमात्रं प्रति कारणानां निमित्तत्वस्य कार्यानुरोधात्कल्पने । जीवः शरीरान्तर्गतो न, किन्तु बहिर्निर्गत्य 'तस्मिन्सन्ध्य' इत्युक्तश्रुतौ द्वितीयविकल्पे दोषशङ्का । दर्शनत्वेन बहिर्निर्गतत्वेन कार्यकारणभावमाहुः तथा सतीति । आदिना गिलनम् । एतत्स्वप्ने न जायते । पारेति । स्थूलविषयपारतन्त्र्यात् । स्वप्नसृष्टिसत्यत्वेन बहिर्विषयकज्ञाने त्वाह जागर इति । पार्श्वस्थानामिति च । तद्दर्शनेति । औपाधिकत्वात्तथा । मिद्धेति । सिद्धेति पाठः । तथाच स्वप्नकृतदोषसम्बन्धे ज्ञानोपयोगित्वाभावो देहे । जागरेति । स्वप्नकारणदेहान्तःसंयोगनाशात्तथा । तत्रैतदिति । स्वप्न एतत्समीपवर्तिजगद्रूपसृष्टिदर्शनाङ्गीकारः ।

१ चाकचक्ये मनसा दृश्येत्यादिपाठः । २ नियामकत्वस्य ।

श्रुतिरेव प्रमाणम्। किं पुनरनुभवसंवादिनी। तस्मात् स्वप्ने सृष्टिरस्ति ॥ १ ॥

निर्मातारं चैके पुत्रादयश्च ॥ २ ॥

काठके चतुर्थवल्ल्यां श्रूयते। 'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः। तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यत' इति निर्मातारमेके वदन्ति। यद्यपि 'सुषुप्त्युत्क्रान्त्योर्भेदेने'त्यत्र 'न तत्र रथा' इत्यपि ब्रह्मप्रकरणम्, तथापि नियतधर्मपक्षे जीव एव कर्तेति प्रतिभाति। तदर्थं निःसन्दिग्धं वचनमुदाहरन्ति। भगवन्निर्मितत्वात् स्वप्नस्यस्यापि सत्यत्वम्। न हि कर्तुः स्वापोऽस्ति, येन भ्रमः

---

भाष्यप्रकाशः।

युक्तिविरुद्धः श्रुतिविरुद्धश्चेत्याहुः नचेत्यादि। अन्यत् स्पष्टम् ॥ १ ॥

निर्मातारं चैके पुत्रादयश्च ॥ २ ॥ ननु पूर्वसूत्रविषयवाक्येनैव सृष्टौ सिद्धायां पुनरेतत्सूत्रप्रणयनस्य किं प्रयोजनमित्यत आहुः यद्यपीत्यादि। ब्रह्मप्रकरणमिति। इति सिद्धमिति शेषः। नियतधर्मपक्ष इत्यादि। 'कतम आत्मे'ति प्रश्ने, 'योऽयं विज्ञानमयः पुरुषः प्राणेष्वि'-त्युपक्रम्याग्रे 'स्वयं विहत्य स्वयं निर्माये'ति कथनात्, तस्यैवाग्रे 'न तत्र रथा' इत्यादिना विवरणाच्चस्यैवायं धर्म इति पक्षे अदृष्टद्वारा जीव एव कर्तेति प्रतिभाति। तदर्थं तन्निवृत्तये। तथाच निःसन्दिग्धं भगवत्कृतत्वप्रतिपादनायास्य सूत्रस्य प्रणयनमित्यर्थः। एवं निर्बन्धेन प्रतिपादनस्य फलमाह भगवदित्यादि। तथाच पूर्वस्मिन् वाक्ये 'स्वयं निर्माये'त्यनन्तरं 'प्रस्वपिती'ति स्वापश्रावणादत्र तद्राहित्यश्रावणाद्भगवानेव कर्तेति लिङ्गबलात् प्रकरणात् 'तदेव शुक्र'मित्यादिवाक्य-

रश्मिः।

श्रुतीति। 'अत्रात्मे'ति श्रुतिविरुद्धः। स्वप्नविषयकज्ञानाधिकरणमात्मा स्वयंज्योतिरित्यर्थात्। स्वप्नमिथ्यात्वे निर्विषयकज्ञानाभावान्न ज्ञानाधिकरणत्वमात्मनः स्यात्। अन्यदिति। सृष्टिरिति। पूर्वपक्ष्युक्ता। एवमन्यत्स्पष्टम् ॥ १ ॥

निर्मातारं चैके पुत्रादयश्च ॥ २ ॥ प्राणेष्विति। प्राणा इन्द्रियाणि। सूक्ष्मदेहे। तस्यैवेति। विहननस्वयंनिर्माणस्याग्रे। एवकारोऽन्ययोगव्यवच्छेदकः। तस्यैवेति। विहत्य निर्मातुः। विवरणविक्रियमाणसम्बन्धादेवकारः। अयमिति। 'न तत्र रथा' इत्युक्तः स्वप्नः। जीव एवेति। स्वयंशब्देनापि जीवपरामर्शात् पूर्वपक्षोक्तपुरुषयोगव्यवच्छेदक एवकारः। तदर्थमितिभाष्यं विवृण्वन्ति स्म तदर्थमिति। व्याख्येयम्। भाष्ये। उदाहरन्तीति। तद्विदः। प्रकृते। पूर्वस्मिन्निति। पौर्वसूत्रीयपूर्वस्मिन् ज्योतिर्ब्राह्मणे। प्रस्वपितीति। 'स्वेन भासा स्वेन ज्योतिषा प्रस्वपिती'ति। अत्रेति। बृहदारण्यकज्योतिर्ब्राह्मणे। तत्रेति। द्वैतीयसूत्रीयोत्तरस्मिन् काठके स्वापराहित्यात् 'तदेवामृतमुच्यते'इत्यनन्तरं 'तदेव शुक्र'मित्यादिश्रुतेः। ननु राहित्यश्रावणं कुत्रेति चेत्। न। राहित्यस्य श्रावणादिति न विग्रहसमासः, किन्तु स्वापराहित्येन 'तदेव शुक्र'मित्यादिश्रावणात्। तद्राहित्यपदं तद्राहित्यश्रावणे लाक्षणिकमिति समासः। तदेव 'अवक्रं तद्ब्रह्मे'त्याद्यपि पाठः। एवेति। जीवयोगव्यवच्छेदकः। कर्तेति। निर्माणकर्ता निर्माता। इति हेतोः स्वापराहित्यलिङ्गबलात्। प्रकरणात्। 'सुषुप्त्युत्क्रान्त्योर्भेदेने'त्यत्र 'न तत्र रथा' इत्यत्र ब्रह्मप्रकरणात्। तदेव शुक्रमिति। बृहदारण्यके जीवः, काठके 'पुरुषो ब्रह्मे'ति किं ग्राह्यं तत्र। यद्वा। पुरुषः जीवो ग्राह्यः, ब्रह्म वा। तत्र वाक्यशेषः। 'तदेव शुक्र'मित्यादिः। अत्र तद्ब्रह्मेतिपदाद्ब्रह्म ग्राह्यमित्येष वाक्यशेषः तस्मात्। नहि

स्यात् । 'जागर्ती'ति वचनात् । इच्छापूर्वकं च सर्वं सृजति । 'शतायुषः पुत्रपौत्रा'-निति कामविषयाः पुत्रादय उक्ताः । ते च निर्मिताः परलोकसाधका इति लोकत्रयकल्पना । चकारद्वयेन कारणकार्यगताः सर्वे धर्मा उक्ताः । तस्माच्छ्रुत्युपपत्तिभ्यां स्वप्नप्रपञ्चस्य सिद्धत्वात् तत्कृतगुणदोषसम्बन्धे पूर्वोक्तदेहनिर्माणं व्यर्थमित्येवं प्राप्तम् ॥ २ ॥

---

भाष्यप्रकाशः ।

शेषाच्चावसीयते । अतो भ्रमाभावादपि स्वप्नसृष्टेः सत्यत्वम् । किञ्च । 'ये ये कामा दुर्लभा मर्त्यलोके तांस्तान् कामान् छन्दतः प्रार्थयस्वे'ति पूर्वं कामशब्दस्य कामविषयेषु प्रयुक्तत्वात् 'कामं कामं पुरुषो निर्मिमाण' इत्यत्रापि कामपदेन तद्विषय एव लभ्यते । वीप्सया क्रियाविशेषणत्वेन चेच्छापूर्वकतेत्यतोपि भगवत्कर्तृकत्वम् । न हि जीव इच्छापूर्वकं स्वक्लेशाद्युत्पादकं स्वयं सृजेत् । अत एतेन ज्योतिर्ब्राह्मणस्थे 'उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवापि भयानि पश्य'न्नित्यादिवाक्य उक्तायामपि सृष्टौ ब्रह्मकर्तृकता निश्चाय्यते । किञ्च, 'शतायुषः पुत्रपौत्रान् वृणीष्वे'ति पूर्वं कामविषयाः पुत्रादय ऐहिका उक्ताः । ते च भगवन्निर्मिताः । 'सर्वयोनिषु कौन्तेये'ति गीतास्मृतेः । अतः परलोकनिर्मातृत्वस्यापि साधका इति ब्रह्मैवात्र कर्तृ । न हि जीवेन स्वपित्रादयः कर्तुं शक्यन्ते । स्वपूर्वजत्वात् । लोकत्रयकल्पना च जीवपक्षे, ब्रह्मपक्षे तु न कापीत्यतोपि ब्रह्मकर्तृकत्वम् । चकारार्थमाह चकारेत्यादि । कारणगता धर्माः सामर्थ्यैश्वर्याद्युपादानगोचरापरोक्षज्ञानादयः । कार्यगताः सत्यत्वादयः । सिद्धमाह तस्मादित्यादि । सिद्धत्वादिति । उक्तप्रकारैः सत्येन सिद्धत्वात् । सूत्रयोजना तु, पूर्वसूत्रीयस्याहेतिपदस्य वचनविपरिणामेन कार्या । एके शाखिनो निर्मातारं चाहुः । पुत्रादयश्च तदाहुरिति । तेषां वक्तृत्वं तु बोधकत्वात् । 'तपांसि सर्वाणि च यद्वदन्ती'तिवद्बोध्यम् ॥ २ ॥

रश्मिः ।

कर्तुरित्यादिभाष्यविवरणं अतो भ्रमेति । भगवतो भ्रमाभावः स्वापाभावात् । स्वापस्य भ्रमहेतुत्वं तामसत्वात् । 'सुखमहमस्वाप्सम्, न किञ्चिदवेदिष'मिति ज्ञानावरणोक्तेः । 'यत्रायं प्रस्वपिती'त्यादिबृहदारण्यकज्योतिर्ब्राह्मणाद्वा । स्वापाभावे भाष्ये हेतुः 'जागर्ती'ति वचनादिति । तद्विषय एवेति । काम्यन्त इति कामाः अनन्तकल्याणगुणाः इति कर्मप्रत्यये कृतेपि तथार्थादेवकारः । वीप्सयेति । 'कामं काम'मिति द्विरुक्त्या । 'काम इच्छे'तीच्छापूर्वकता 'निर्मिमाण' इत्यत्र निर्माणे इत्यतोपि इच्छापूर्वकसृष्टिकर्तृत्वलिङ्गादपि । इच्छापूर्वकमितिभाष्यं विवृण्वन्ति स्म न हीत्यादि । अत इति । जीवस्यास्रष्टृत्वात् । शतायुष इतिभाष्यं विवृण्वन्ति स्म किञ्चेति । किञ्चेत्युक्तिर्भाष्यप्रकाशे कामपदघटितश्रुतेः पूर्वं विचारात् । उक्ता इति । काठके उक्ताः । ते चेतिभाष्यं विवृण्वन्ति स्म ते चेति । परलोकेति । भाष्ये परलोकसाधकाः, व्यञ्जनया तु परलोकनिर्मातृत्वस्यापि ब्रह्मणि साधकाः । अतो लोकत्रयेतिभाष्यं स्पष्टमपि व्याचक्षते लोकत्रयेति । जीवपक्ष इति । परलोकं साध्नोति भूलोकस्थ इति तथा । न कापीति । परलोकसाधनाभावात्तथा । चकारार्थमिति । समुच्चयार्थकचकारार्थम् । तदाहुरिति । तदित्यव्ययम् । ते । ननु श्रुतिनिर्मातारमाह, न ते आहुः, अत आहुः तेषामित्यादि । तपांसि पुराणानि । भगवान् व्यासो वदति पुराणव्यासद्वारेति तथा । भाष्ये । इत्येवं प्राप्तमिति । भवतीति क्रियापदम् । इत्येवं प्राप्तं पूर्वपक्षमित्युत्तरत्रान्वयो वा ॥ २ ॥

## मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ ॥

**तुशब्दः पक्षं व्यावर्तयति । स्वप्नसृष्टिर्मायामात्रम् । तत्र हेतुः । कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् । कृत्स्नत्वेन यस्य यादृशं स्वरूपं देशकालवस्तुसापेक्षं तथाभिव्यक्तिः कार्त्स्न्येनाभिव्यक्तिस्तदभावात् ।**

---

भाष्यप्रकाशः ।

**मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्** ॥ ३ ॥ सिद्धान्तं व्याकुर्वन्ति **तुशब्द** इत्यादि । **पक्ष**मिति । सत्यत्वपक्षम् । **मायामात्र**मिति ।

वैदिके निघण्टौ प्रज्ञानामसु 'माया, वयुनम्, अभिख्ये'ति पाठादर्थशून्यः प्रत्ययो माया, तदात्मकमिति भास्कराचार्याः ।

मायाशब्दो ह्याश्चर्यवाची । 'जनकस्य कुले जाता देवमायेव निर्मिते'त्यादिषु तथा दर्शनात् । 'न तत्र रथा' इत्यत्रापि सकलपुरुषानुभाव्यतया न भवन्ति । 'अथ रथान् सृजत' इत्यपि स्वप्नदृगनुभाव्यतया तत्कालमात्रावसानात् सृजत इत्याश्चर्यरूपत्वमुपपद्यते । न हीदृशी सृष्टिर्जीवेन कर्तुं शक्या । संसारदशायां जीवस्य कार्त्स्न्येन अनभिव्यक्तस्वरूपत्वात् तादृशसामर्थ्यायोगात् । अतः सा आश्चर्यात्मिकेति रामानुजाचार्याः ।

सिद्धान्ते तु सामर्थ्यविशेषो माया । अष्टमस्कन्धे 'नटवन्मूढ मायाभिर्मायेशान्नो जिगीषसी'ति । प्रथमस्कन्धे च 'अपश्यत् पुरुषं पूर्णं मायां च तदुपाश्रयाम् । यया सम्मोहितो जीव आत्मानं त्रिगुणात्मकम् । परोपि मनुतेऽनर्थं तत्कृतं चाभिपद्यत'इति कथनात् । अत ईश्वरस्य या व्यामोहिका शक्तिः, सा माया प्रकृते ज्ञेया । तन्मात्रं तदेकोपादानकम् । तेन बाह्योपादानादिव्यावृत्तिः । **कृत्स्नत्वेने**ति । देशः कालो विषयसन्निधिरिन्द्रियव्यापारो बाधाभावश्चेति कार्त्स्न्यम्, तेन । तथा चैन्द्रजालिकेन नटेन यथा सामाजिकव्यामोहेन कौतुकार्थं मायामात्रसृष्टिः क्रियते, तथेश्वरेण जीवव्यामोहनाद्यर्थं स्वप्नसृष्टिः क्रियत इति न तस्याः सत्यत्वमित्यर्थः ।

अत्र बहूनि मतानि ।

तत्र भास्कराचार्याः । पूर्ववासनावासितं शुभाशुभकर्मप्रेरितं नाडीषु परिवर्तमानं मनः स्मृतिज्ञानहेतुर्भवति । स एव स्मर्यमाणोऽर्थः प्रत्ययालम्बनः । 'यान्येव जाग्रत् पश्यति, तानि सुप्त' इति श्रुतेः । इयं च जीवसृष्टिः । सुखदुःखप्रतिभासनात् । नेश्वरस्य । 'य एष स्वप्ने महीयमानश्चरति एष आत्मे'ति श्रुतेरित्याहुः ।

तेन तन्मते जीवकर्तृका स्मर्यमाणार्थविषयप्रत्ययमात्रमेव स्वप्नसृष्टिरिति सिध्यति ।

रश्मिः ।

**मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्** ॥ ३ ॥ **अर्थे**ति । अर्थो विषयः । विषयशून्यं ज्ञानम् । **तदात्मक**मिति । मात्रचोर्थः । **सामाजिके**ति । सामाजिकानां व्यामोहो येन नटेन । **मोहनादी**ति । आदिनेष्टानिष्टसूचनम् । **पूर्वे**ति । त्यक्तपूर्वापरानुसन्धानं यदादानं पदार्थस्य सा वासना । **स्मृती**ति । स्वाप्निकस्मृतिज्ञानयोर्हेतुः । **स एवे**ति । पूर्ववासनावासितः । अन्यथाऽलौकिकं स्मर्यमाणं स्यादित्येवकारः । **प्रत्यये**ति । ज्ञानस्मृतिविषयः । **जाग्र**दिति । सप्तम्यालुक् ।

भाष्यप्रकाशः ।

**भिक्षुस्तु** । सन्ध्यसूत्रे, 'न तत्र रथा' इति श्रुतेः 'स्वप्ने च जीवः सुखदुःखभोक्ता स्वमायया कल्पितविश्वलोके' इति कैवल्योपनिषच्छ्रुतेश्चोदाहरणेन सृष्टिमङ्गीकृत्य, ततो निर्मातृसूत्रे स्वप्नसृष्टिमीश्वरकर्तृकामुक्त्वा, तर्हि 'स्वयं विहृत्य स्वयं निर्माय' त्यन्यनिरपेक्षताबोधकस्य स्वयंपदस्य कथं सङ्गतिरित्याशङ्कायाम्, उपाधिद्वारकोपादानाभिप्रायेण स्वयंपदप्रयोग इति 'न तत्र रथा' इत्यत्रोक्तं जीवकर्तृत्वमपि 'पच्यते तण्डुलः स्वयमेवे'तिवदुपाधिद्वारकपरिणामस्वातन्त्र्यविवक्षयोपपन्नमित्युक्त्वा, ततो 'न तत्र रथा' इत्यत्रादृष्टद्वारा परम्परया गौणं कर्तृत्वं जीवस्योक्तम्, अतो न विरोध इति कस्यचिन्मतं चोक्त्वा, ततो ननु स्वप्ने ज्ञानमात्रमेवास्तु, किं तत्र सृष्टिकल्पनयेत्याशङ्कायामाह, स्वप्ने जाग्रद्वदेव पुत्रादयः प्रतीयन्ते, ते चात्मचैतन्यमात्रा भवितुं नार्हन्ति, नित्यतापत्तेः, स्वरूपचैतन्यस्य निराकारत्वाच्च, कर्मकर्तृविरोधेनैकस्य भास्यभासकतानुपपत्तेश्च, जाग्रत्पदार्थानामपि तथात्वापत्त्या विज्ञानवादिबौद्धमताभ्युपगमापत्तेश्च । यदि च बुद्धेर्घटाकारः परिणाम एव ज्ञानशब्देनोच्यते, तदा स एवास्माभिः स्वप्नसृष्टिरुच्यते । नैवमिष्यत इति विशेषः । स्वाप्नाः पदार्था बाह्या भवितुं न युक्ताः । बाधकं विना अन्तःस्थत्वांशे स्फुटप्रत्यक्षतांशे च बाधोत्तरमप्यनुभूयमाने भ्रमत्वकल्पनानौचित्यादित्याह । मायामात्रसूत्रे, स्वाप्ना विषया ऐन्द्रजालिकवत् परमेश्वरमायाकार्यतया मायामात्राः, न त्वभावस्वरूपास्तुच्छाः । 'नाभाव उपलब्धे'रिति सूत्रेणात्यन्तासत उपलब्धिनिषेधात् । ऐन्द्रजालिकेश्वरयोर्विशेषस्त्वियान्, यदैन्द्रजालिकस्य मन्त्रादि, ईश्वरस्तु माययैव व्यामोहयतीति तयैव मनसः परिणाममात्रमर्थं कटककुण्डलादिवन्निर्मिमीते । स्वाप्नविषये बुद्धिवृत्त्यतिरिक्ताकारा बुद्धिवृत्तिरेव मोहो भ्रम इत्यतस्मिंस्तद्बुद्धिर्भ्रम इत्यादिरूपं लक्षणमपि तुल्यमित्याद्याह ।

तेन तन्मते बुद्धिग्राह्यो मनःपरिणामविशेषः स्वप्नसृष्टिरिति सिध्यति ।

**माध्वास्तु** । सन्ध्यं स्थानं मायामात्रम्, मनोगतान् पूर्वानुभूतवस्तुसंस्कारानुपादानीकृत्य निमित्तभूतया स्वेच्छयैवेश्वरेण निर्मितम् । 'मनोगतांस्तु संस्कारान् स्वेच्छया परमेश्वरः । प्रदर्शयति जीवाय स स्वप्न इति गीयते' । 'यदन्यथात्वजाग्रत्त्वं सा भ्रान्तिस्तत्र तत्कृता । अनभिव्यक्तरूपत्वान्नान्यसाधनजं भवे'दिति ब्रह्माण्डवाक्यात् । अत्र स्वशिरश्छेदनादीनाममत्त्वनिरासायाना-

रश्मिः ।

स्वयमिति । जीवः । **अन्येति** । ईश्वरनिरपेक्षतेत्यादिः । **उपाधीति** । अदृष्टमुपाधिः । उक्तेश्वरकर्तृकत्वविरोधं परिहरन्ति स्म **न तत्रेति** । **पच्यत** इति । ईश्वरः जडजीवान् सृजति । यदा तु सौकर्यातिशयं द्योतयितुं कर्तृव्यापारो न विवक्ष्यते, कर्मणः कर्तृत्वं विवक्ष्यते, तदा सृज्यते जीवः स्वयमेवेति तन्मते उपाधिरणुत्वं तद्वारकपरिणामः सृष्टिरूपस्तस्मिन् स्वातन्त्र्यं कर्तृत्वं तस्य विवक्षयोपपन्नम् । **आहेति** । 'पुत्रादयश्चे'ति सूत्र आह **कर्मकर्त्रिति** । ज्ञानं कर्तृ तत्कथं कर्म आत्मचैतन्यमात्रं पुत्रादिरूपमिति विरोधः । कर्मकर्तृत्वसहानवस्थानलक्षणस्तेन । **एकस्येति** । ईश्वरस्य । **तथात्वेति** । आत्मचैतन्यत्वापत्त्या । **परिणाम एवेति** । एवकारः पदार्थयोगव्यवच्छेदकः । **स्फुटेति** । अयमंशः स्वाप्नः । जाग्रतश्च **बुद्धिवृत्तिरेवेति** । तामसी बुद्धिः, अतो गीतोक्तो मोहस्तस्या वृत्तिः । **इत्यादीति** । तदभाववति तत्प्रकारकं ज्ञानमादिशब्दार्थः । यद्वा । विशेषदर्शननाश्यत्वमादिशब्दार्थः । **इत्याद्याहेति** । ग्रन्थगौरवभियैतावतैव निर्वाहः । **मनःपरिणामेति** । मनोपि द्वारमित्येवमुक्तम् । जीवस्योपाधिद्वारकपरिणामविशेष इत्यर्थः । **माध्वाः** स्वप्नं सत्यमाहुः । तद्विषयकं ज्ञानं तु मिथ्येत्याहुः । अतो विषयपदव्याख्या क्रियते **अत्र स्वशिर** इत्यादि । **अनादीति** । अनादीति 'मनोगता'नित्यत्र विशेषणं दत्त्वानादिमनो-

**अयमाशयः। श्रुतिः सृष्टिमेवाह, न तस्य सत्यत्वमपि। यथा 'ऐतदात्म्यमिदं सर्वं तत् सत्य'मिति 'आत्मानं स्वयमकुरुत' 'तत् सत्यमित्याचक्षते' 'कथमसतः सज्जायेते'त्यादिश्रुतिसहस्रेभ्योऽस्य सत्यत्वं प्रतीयते, नैवं स्वप्नप्रपञ्चस्य श्रुतिराह। सत्यप्रयोजनाभावाच्च। स्वमात्रविहारस्तु महामायावित्वान्माययापि सिध्यति।**

---

भाष्यप्रकाशः।

दिमनोगतग्रहणम्। 'यदन्यथात्व'मित्यादिना च स्वप्नविषयाणां जाग्रत्पदार्थत्वमेव बाध्यत इति तत्प्रतीतिरेव भ्रान्ता, न स्वप्नप्रतीतिरित्याहुः।

तेन तट्टीकाकारमते संस्काराणामुपादानत्वम्, भाष्यकारमते तु संस्काराणामेव विषयत्वम्। मायापदं च मनसः संस्कारस्य वा वाचकमिति सिध्यति।

तत्र सूत्राशयं स्फुटीकुर्वन्तः स्वप्नसृष्टेः सत्यत्वं प्रथमं निरस्यन्ति **अयमाशय** इत्यादि। **अस्येति**। बाह्यप्रपञ्चस्य। अत्र च सत्यत्वं जाग्रत्क्रियमाणा या तत्तत्प्रतिनियता यावदर्थक्रिया तत्कारित्वं विवक्षितम्। न तु साक्षात् परम्परया वा ब्रह्मोपादानकत्वमात्रम्। परम्परया ब्रह्मोपादानकत्वस्य मायामात्रेपि सत्त्वात्। नाप्यर्थक्रियाकारित्वमात्रम्। तस्य प्रतिबिम्बादिष्वपि दर्शनात्। 'छायाप्रत्याह्वयाभासा असन्तोऽप्यर्थकारिण' इति भगवद्वाक्याच्च। **नैवमिति**। न सत्यत्वं ब्रह्मात्मकत्वं वा। तथाच तादृशश्रुत्यभावेपि भगवत्कर्तृकत्वादाश्चर्यरूपत्वाच्च यः सत्यत्वाग्रहः, सोऽसङ्गत इत्यर्थः। ननु सत्यत्वस्याश्रावितत्वेपि 'स वै नैव रेमे' इत्यत्र सृष्टेर्विहारार्थत्वस्य श्रावितत्वात्तद्बलेन सत्यत्वं कल्प्यत इत्याशङ्कायामाहुः **सत्ये**त्यादि। विभजन्ते **स्वमात्रे**त्यादि।

रश्मिः।

गतानां ग्रहणम्। **तत्प्रतीति**रिति। जाग्रत्पदार्थत्वप्रतीतिः। एवकारेण स्वप्नप्रतीतियोगव्यवच्छेदः। तथाच यत्स्वप्नविषयाणां जाग्रत्त्वं जाग्रत्पदार्थत्वं अन्यथात्वं सा भ्रान्तिः। **तत्र** स्वप्ने। **तत्कृता** जाग्रत्पदार्थसादृश्यकृता। अनभिव्यक्तत्वादिति सौत्रांशार्थः। **अनभिव्यक्ते**ति। अनभिव्यक्तरूपत्वात्स्वप्नस्य नान्येन जाग्रत्पदार्थसादृश्यान्येन साधनेन जन्यत इति भवेदित्यर्थः। **तट्टीके**ति। ब्रह्माण्डवाक्यातिरिक्ता टीका। ब्रह्माण्डवाक्यानि तु भाष्यमिति पूर्वं विवेचनीयम्। ब्रह्माण्डे 'संस्कारा'निति द्वितीया विषयार्थका। एवकारो ब्रह्माण्डवाक्यप्रामाण्यात्। **मायापद**मिति। 'मनोगतांस्तु संस्कारा'नित्यत्र **वाचकम्**। मायामात्रपदं मनोमात्रं संस्कारमात्रं वेत्यर्थकम्। **भाष्ये**। देशकालवस्तुनानभिव्यक्तस्वरूपत्वपदार्थः। अन्यलभ्यत्वात्। केनापि रूपेणानभिव्यक्तम्। स्वरूपं तु स्वप्नदेशकालपरीक्षाबोधकशब्दलभ्यं पुराणे प्रसिद्धम्। तथा च हेतुतावच्छेदकगौरवापत्त्यानभिव्यक्तेरिति हेतुः। तदाहुः **तथाभिव्यक्ति**रिति। **तथे**ति। कार्त्स्न्येन। तथाच कार्त्स्न्येनानभिव्यक्त्यभावत्वं हेतुतावच्छेदकम्। अत्राग्रे सहस्रशब्दाद्बहुवचनम्। संख्येयवाचकत्वात्। संख्यावाचकत्वे त्वेकत्वम्। 'विंशत्याद्याः सदैकत्व' इति कोशात्। **प्रकृते**। **सत्यत्वं** च त्रैकालिकाबाधविषयत्वम्। तच्च बाधित्वान्यल्लक्षणमाहुः **अत्र चेति**। **जाग्रदिति**। जाग्रति क्रियमाणा। 'सहसुपे'ति समासः। **तत्तदिति**। घटादिप्रतिनियता जलाहरणादिरूपा, भोजनप्रयोजकत्वादिरूपा च। **यावदर्थक्रिया** यावदर्थाः यावद्घटादिवर्तमानकालं अर्था घटादयः तेषां क्रियार्थक्रिया। **सत्त्वादिति**। माया ब्रह्मोपादानिकेति। **प्रतिबिम्बेति**। आदिना छायाप्रत्याह्वयादिः। **मायये**ति। 'विष्णुर्नाम महायोगी महामायो महातपा' इति योगतत्त्वोपनिषच्छ्रुतेः। **स वा इति**। पुरुषविधब्राह्मणे। **सृष्टेरिति**। 'स द्वितीयमैच्छदि'त्यादिना।

नापि भिन्नः प्रपञ्चः। जीवस्यैकत्वात्। 'अविद्यया मन्यते' इति वचनाञ्च तत्सुख-

भाष्यप्रकाशः।

तथाच नटवन्मायया पि विहारसम्भवान्न तद्बलेन सत्यत्वं कल्पयितुं शक्यमित्यर्थः। ननु यत्र स्वप्नसृष्टिस्थले 'तस्य वा एतस्य पुरुषस्ये'ति जीव एवोपक्रान्तः, 'प्रस्वपिती'ति स्वापलिङ्गाच्च बोधितः, अतस्तत्कृता सा मिथ्यास्तु, तत्र विहारोपि जीवस्यैव, नेश्वरस्य, काठके तु प्रकरणलिङ्गवाक्य-शेषैः परमात्मैव प्रतीयत इति तत्कृतः प्रपञ्चो भिन्नोऽस्तु, तस्य सत्यत्व आश्चर्यरूपत्वे च को दोष इत्यत आहुः नापीत्यादि। यो हि प्रपञ्चो भिन्न आपाद्यते, स न सर्वसाधारणः, कात्स्न्येनाभि-व्यक्तस्वरूपो वा, येन भिन्नत्वं कल्पयितुं शक्येत, किन्तु यदेकेन दृश्यते, तदेतरेणेति प्रतिनि-यतो द्रष्टुर्जीवस्यैकत्वात्, अतो न भिन्नः। किञ्च। स यदि भिन्नः सत्यः स्यात्, तदा तद्भोगोपि भिन्नः सत्योऽनुभूयेत, श्रुत्या वोच्येत। श्रुत्या तु जीवस्य भोगस्तत्राज्ञानिक एव बोध्यते। हिताख्या नाडीरुपक्रम्य 'अथ यत्रैनं घ्नन्तीव जिनन्तीव हस्तीव विच्छाययति गर्तमिव पतति यदेव जाग्रद्भयं पश्यति तदत्राविद्यया भयं मन्यत' इति वचनात्। एवमेव 'अथ यत्र राजेव देव इवे'त्यादिनोक्तं सुखमप्याज्ञानिकम्। 'अविद्यया मन्यत' इत्यस्य देहलीदीपवदुभयत्र सम्बन्धात्। काठके तु न भोगवचनम्।

अतः परं भेदसाधकत्वेन कर्तृभेदोऽवशिष्यते। सोऽप्ययुक्तः। स्वप्नसृष्टिवाक्येपि जीवकर्तृ-त्वाबोधनेन तदभावात्। तत्र हि 'आत्मज्योतिरेवायं पुरुष' इति कथनोत्तरं 'कतम आत्मे'ति प्रश्ने,

रश्मिः।

जीव एवेति। एवकारः 'कतम आत्मेति, योयं विज्ञानमयः प्राणेष्वि'त्युपक्रमे विज्ञानमयपदात्। जीवस्यै-वेति। एवकार उपक्रमादीश्वरयोगव्यवच्छेदकः। काठके त्विति। तुना ज्योतिर्ब्राह्मणं व्यावर्त्यते। प्रकरणं ब्रह्मणः। 'हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातन'मित्युपक्रमात्। 'सुप्तेषु जागर्ती'ति लिङ्गम्। शब्दस्य सामर्थ्यम्। स्वप्नो जीवावस्था, जागर्तीति ब्रह्मलिङ्गम्। 'तदेदं शुक्रं तद्ब्रह्मे'ति वाक्यशेषः। उपक्रमः यथा 'मरणं प्राप्य आत्मा भवति गौतम' इति जीवलिङ्गं च सन्देहबीजम्। तेन स्वप्नकर्ता जीवः परमात्मा वेति संशय उक्तवाक्यशेषः प्रवर्तते। तैः। परमात्मैवेत्येवकारः 'यस्मिँल्लोकाः श्रिताः सर्वे' इति श्रुतेः। जीवस्येतिभाष्यं विवृण्वन्ति स्म यो हीति। काठकोक्तो हि। भिन्नः ज्योति-र्ब्राह्मणोक्ताद्भिन्नः। आपाद्यत इति। यदि प्रपञ्चो भिन्नो न स्यात्, प्रकरणलिङ्गवाक्यशेषाः परमा-त्मनो न स्युरिति। अतः काठके ज्योतिर्ब्राह्मणे प्रपञ्चो भिन्न इत्यापद्यते। स इति। स्वाप्निकः प्रपञ्चः। न भिन्न इति। ज्योतिर्ब्राह्मणोक्तात्काठकोक्तः प्रपञ्चो न भिन्नः। अविद्ययेति भाष्यं विवृण्वन्ति स्म किञ्चेति। तत्राज्ञानिक एवेति। तत्र स्वप्ने। आज्ञानिक आविद्यकः। एवेति। बाधात्। हिताख्येति। ज्योतिर्ब्राह्मणे। अर्थस्तु उक्तसुषुप्तावस्थाकामभगवतोरविद्यायाः स्वाप्निकायाः सम्बन्धो न स्वाभाविक इति दर्शयितुम्। 'ता वा अस्यैता हिता नाम नाड्यः' इत्यादिना नाडीनिरूपणम्। अस्येति। अकामभगवतो भेदे षष्ठी। अतोऽविद्यानाडीभिन्नाः स्वाप्निक्यः। ता उपक्रम्य 'अथ यत्रैन'मित्यादिग्रन्थः। पूर्वं 'न कञ्चन स्वप्नं पश्यती'त्युक्तम्, तत्र प्रतियोगि स्वप्नं निरूपयन्ति स्म। यत्र स्वप्ने एनं स्वप्नसद्दशं घ्नन्तीव तस्करादयो ये केचन जिनन्तीव वशीकुर्वन्तीव दासरूपेण। कदा-चिद्धस्तीव विच्छाययति विच्छादयति, विद्रावयति। तथा गर्तं जीर्णकूपादिकं प्रति पततीव, न वस्तुतः। किं तत इत्यत आह यदिति। यदेव जाग्रत् जाग्रतः सम्बन्धि भयं पश्यति। षष्ठ्या लुक्। अन्ये तु जाग्रत् जागरित इति सप्तम्यालुक् सूचयन्ति। तदत्र स्वप्ने इति। अग्रे स्पष्टम्। कर्तृभेद इति।

दुःखभोगार्थमपि सत्यत्वमङ्गीकर्तव्यम् । स्थानद्वयप्रतिज्ञा च विरुध्येत । 'जीवतो मृतांश्च पश्यती'ति लोकद्वयदर्शनम् । अतो लोकद्वयप्रतिच्छायरूपत्वान्मायया क्रीडायामन्यानुरोधाभावेनातिसुखत्वात् भगवत्कृतमात्रवाचकत्वाच्च श्रुतेरतिरि-

---

भाष्यप्रकाशः ।

'योऽयं विज्ञानमयः पुरुषः प्राणेषु हृद्यन्तर्ज्योति'रिति प्रतिवचनं दत्वा, तादृशत्वं जीवस्याप्यस्तीति तन्निराकरणार्थं 'स समानः सन्नुभौ लोकौ सञ्चरती'त्यादिना जीवतुल्यतया क्रीडितुरन्यस्य कथनेन तस्मिन्नेव तत्कर्तृत्वस्य 'सुषुप्त्युत्क्रान्त्योर्भेदेने'ति सूत्रे व्यवस्थापितत्वात् । जीवस्य स्वदुःखभयादिजनकसृष्टिकरणायोगाच्च । कात्स्न्र्येनानभिव्यक्तस्वरूपतया सत्यसङ्कल्पत्वाद्यभावाच्च । अतस्तत्र भगवानेव कर्ता । जीवस्त्वविद्यया दुःखादिकमिव कर्तृत्वमपि मन्यते । अतो न तत्सुखदुःखभोगार्थमपि स्वप्नप्रपञ्चस्य सत्यत्वमङ्गीकर्तव्यम् । किञ्च । यदि स्वाप्नप्रपञ्चस्य सत्यत्वं स्यात्, तदा 'तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत इदं च परलोकस्थानं चे'ति श्रुत्युक्ता स्थानद्वयप्रतिज्ञा च विरुध्येत ।

ननु तत्रैव 'सन्ध्यं च तृतीयं स्थानं तस्मिन् सन्ध्ये स्थाने तिष्ठन्नुभे स्थाने पश्यतीदं च परलोकस्थानं चे'ति तृतीयमप्युक्तम् ।

सत्यमुक्तम्, परं तूभयविलक्षणतया, तत्र च लोकद्वयदर्शनं जीवतां मृतानां च दर्शनेन । न हि ते तत्र सन्तीति प्रागेवोक्तम् । अतस्तृतीयत्वेपि लोकद्वयप्रतिच्छायरूपत्वाच्च तेन प्रतिज्ञाविरोधः । सत्यत्वे स स्यादेव । नच किमीदृशसृष्ट्या क्रीडयेति शङ्क्यम् । मायया क्रीडायामन्यानुरोधाभावेनातिसुखत्वात् । अतो भगवत्कृतमात्रवाचकत्वात् काठकश्रुतेस्तद्बलेनातिरिक्तसत्यसृष्टिकल्पनायां प्रमाणाभावान्नातिरिक्तः स्वाप्नः प्रपञ्च इत्यर्थः ।

ननु कात्स्न्र्येनानभिव्यक्तत्वस्य जीवविशेषणत्वे 'न तत्र रथा' इति श्रुतेश्चाश्चर्यपरत्वे सति जीवदर्शनस्य भ्रान्तित्वात् किं वा स्वप्नस्य भवदभिमतमायामात्रत्वगमकम्, येन तत्कृतगुणदोष-

रश्मिः ।

ब्रह्मजीवरूपस्वप्नकर्तृभेदः । प्राणेष्विति । सामीप्यसप्तमीति केचित् । सूक्ष्मदेह इति व्याख्यातम् । तादृशत्वं विज्ञानमयत्वम् । स समान इति । स ईश्वरः समानो जीवसमानः । अन्यस्येति । ईश्वरस्य । तस्मिन्नेवेति । ब्रह्मण्येव, नतु जीवे । बलवदनिष्टाननुबन्धीष्टतासाधनज्ञानप्रवर्तकं तत्कृष्णसम्बन्धीत्याहुः जीवस्य स्वेति । तत्रेति । स्वप्ने । भगवानेव, नतु जीव इति जीवयोगव्यवच्छेदक एवकारः । मन्यत इति । अहं कर्तेत्यभिमन्यते । 'परात्तु तच्छ्रुते'रिति सूत्रात् । स्थानद्वयेतिभाष्यं विवृण्वन्ति स्म किञ्चेति । जीवत इत्यादिभाष्यं विवृण्वन्ति स्म ननु तत्रैवेति । बृहदारण्यक एव । काठकव्यवच्छेदक एवकारः । इदंलोकपरलोकस्थाने उभे स्थाने । नहि ते तत्रेति । सन्ध्ये स्थाने मृताः सन्ति । मुक्तानामैक्येऽमुक्तानां सकर्मत्वेपि पृथग्दर्शनानर्हत्वेन परलोके सत्वात् । प्रागेवेति । 'सन्ध्यं तृतीय९स्वप्नस्थानमिति, तस्मिन्सन्ध्ये स्थाने तिष्ठन्नुभे स्थाने पश्यतीदं परलोकस्थानं चे'त्यस्याः प्रागेवोक्तम् । उभयविलक्षणतयेत्युक्तं विशदयन्तो लोकेतिभाष्यं विवृण्वन्ति स्म अतस्तृतीयत्व इति । 'जीवतो मृतांश्च पश्यती'ति लोकद्वयप्रतिच्छायरूपत्वात् लोकद्वयसूक्ष्मरूपत्वात् । न तेनेति । न तृतीयेन द्वयप्रतिज्ञाविरोध इत्यर्थः । स इति । प्रतिज्ञाविरोधः । माययेतिभाष्यं विवरीतुं शङ्कते नचेति । अन्येति । विषयानुरोधाभावेन मिथ्यात्वादिति भावः । भगवत्कृतेतिभाष्यं विवृण्वन्ति स्म

त्वकल्पनायां प्रमाणाभावाज्ज्योतिःशास्त्रनियमाभावाच्च मायामात्रमेव स्वप्न इति न तत्कृतगुणदोषसम्बन्धः। दीक्षितस्यान्नभोजनादिप्रायश्चित्तं तु भगवत्क्रीडायामपि प्रतिच्छायत्वात् क्रियते। तदानीं कर्तृत्वस्यारोपात्। अन्यदा कर्तृत्वस्याशास्त्रत्वान्न धर्माधर्मजनकत्वम् । देवताज्ञादिस्तु जीवब्रह्मणोर्विद्यमानत्वाद्युक्ता ।

भाष्यप्रकाशः ।

सम्बन्धो नाङ्गीक्रियते इत्याशङ्कायामाहुः ज्योतिरित्यादि । मेषादिराशिगे सूर्ये एतावद्दिनम्, एतावती रात्रिः, अस्मिन् देशे चेत्यादिनियमस्य तत्राभावात् तथेति न तत्कृतगुणदोषसम्बन्ध इत्यर्थः ।

ननु यदि स्वप्नप्रपञ्चो मिथ्या, तदा दीक्षितेन स्वप्नेऽन्नभोजनादौ कृते यद्दीक्षितस्य प्रायश्चित्तविधानं तद्विरुध्येत, मिथ्याभूते भोजनादौ तदयोगादित्यत आहुः दीक्षितस्येत्यादि । यद्यपि तन्न भोजनम्, तथापि स्वाप्निक्यां भगवत्क्रीडायां भोजनसदृशत्वात् तदानीं जीवेपि कर्तृत्वस्याविद्ययारोपात् प्रायश्चित्तं क्रियते । यथा व्रीह्यभावेपि नीवारेण कार्यसिद्धिः, तद्वदत्रारोपितकर्तृत्वमादायाप्यपराधसिद्धेः । शास्त्रेण यज्ञकर्मण्येव कर्तृत्वे नियमिते निषिद्धेष्वाभिमानिककर्तृत्वस्यापि दोषत्वादिति । अतो न तेन तस्य सत्यत्वसिद्धिरित्यर्थः । एतदुपष्टम्भाय युक्त्यन्तरमाहुः अन्यदेत्यादि । तथाच यदि सा सत्या स्यात्, तदा तेनान्यदापि धर्माधर्मौ स्याताम् । तथा सति 'स्वप्नेऽप्यगम्यागमनं च धन्य'मित्यादिकं न सर्येतेति सा मिथ्यैवेत्यर्थः ।

ननु यदि स्वप्नः सर्वोपि मिथ्या स्यात्, तदा तत्र देवतादर्शनाज्ञादिकं न स्यात्, भवद्वानुभवादिविसंवादि स्यादित्यत आहुः देवतेत्यादि । जीवा इन्द्रादयो योगोत्थसामर्थ्याः, ब्रह्म स्वत एवातिसमर्थम् । अतः समाधाविव स्वप्नेऽप्यन्तर्हृदि प्रविश्य विद्यमानत्वाद्दर्शनाज्ञादिकं ददाति, तदानीं बुद्धिर्जागर्तीति स्वप्नद्रष्टा जीवोप्यनुभवति । तेन तस्य तदानीं रथादिवत् करणाभावेन स्वप्नत्वाभावात्तत्सत्यता युक्ता । किञ्च । तत्र यज्ज्ञानं जायते, तन्न लौकिकम्, तत्तदि-

रश्मिः ।

अतो भगवदिति । तद्बलेनेति । भगवत्कृतमात्रवाचकशब्दबलेन । सूर्ये इति । सप्तम्यन्तम् । एतावत् त्रिंशद्घटिकापलचतुःपञ्चाशद्दिनम्, एतावती एकोनत्रिंशद्घटिकापलषट्[रात्रिः]। आदिना वृषेर्के द्वात्रिंशद्घटिकापलचतुर्विंशदिनम् । एकोनत्रिंशद्घटिकापलषड्विंशरात्रिर्यथा । देश इति । ब्रह्मावर्तादौ । तत्रेति । स्वप्ने । तथेति । मायामात्रत्वम् । अन्नेति । आदिना रेतःस्रावः । आरोपादिति । भ्राम्तस्य कर्तृत्वस्य । यज्ञकर्मण्येवेति। एवकारेण स्वप्नयोगव्यवच्छेद(कः) क्रियते। निषिद्धेष्विति । स्वप्नाचार्याज्ञाविश्वासादिषु । तेनेति । आरोपितकर्तृत्वेन । तस्य स्वप्नस्य । सेति । स्वप्नसृष्टिः । अन्यदेति । दीक्षान्यकाले । भोजनकर्तृत्वेऽस्य न विद्यते शास्त्रं यस्मिन् तादृशत्वात् । धर्माधर्मजनकत्वं गुणदोषजनकत्वम् । देवतेति । आदिना बाहुना मेलनम् । अनुभवादीति । आदिनाप्तवाक्यम् । स्वत एवेति । उपाधिव्यवच्छेदकैवकारः । बुद्धिरिति । स्वप्नग्राहिका । तस्येति । दर्शनाज्ञादिकस्य । रथादिवदिति। आदिनाऽविद्या। करणाभावे हेतुरनुभवतीत्यनुभव उक्तः। अत उक्तं करणाभावेन । तत्सत्यता दर्शनाज्ञादेः सत्यता । अलौकिकेतिभाष्यं विवृण्वन्ति स्म किञ्चेति ।

१. अष्टाविंश ।

अलौकिकज्ञाने हि प्रतिच्छायत्वात् संवादः । क्वचिद्भगवदावेशे ईषत्संवादोपि । तस्मात् स्वतन्त्रसत्यतायां प्रमाणाभावान्मायामात्रं स्वप्नप्रपञ्च इति सिद्धम् ॥ ३ ॥

**सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ४ ॥**

ननु तर्हि जीवसाक्षिकमेकदेशेन किमिति सृजति, तत्राह । सूचकः शुभा-

---

भाष्यप्रकाशः ।

न्द्रियाजन्यत्वात् । किन्त्वात्मज्योतिषैव जायमानत्वादलौकिकम् । तस्मिंश्च ज्ञाने प्रतिच्छायरूपं सर्वं भासत इत्युपपादितम् । अतः प्रतिबिम्बवदस्यासत्त्वं चेदङ्गीक्रियते, तदा तद्वदेवा-स्याप्यर्थक्रियाकारित्वरूपः संवाद उपपन्नः । किञ्च । यथा प्रतर्दनाख्यायिकायामिन्द्रे भगवदावेशे सति तेन स्वोपासनाद्युक्तम्, तथात्रापि क्वचिद्भगवदावेशे सति ज्ञाने क्रियायां चोत्कर्षरूप ईषत्संवादो भवति । स च भगवदावेशस्यैव धर्मः, न तु स्वप्नस्येति तावतापि न स्वप्नस्य सत्यत्वसिद्धिरित्यर्थः । सिद्धमाहुः तस्मादित्यादि ।

ननु भवत्वेवं स्वप्नस्यासत्यत्वम्, तथापि तस्य जीवकर्तृकत्वं न प्रतिक्षेप्तुं शक्यम्, कैवल्यो-पनिषदि 'स्वप्ने च जीवः सुखदुःखभोक्ता स्वमायया कल्पितविश्वलोक' इति जीवमायाकल्पितत्व-कथनात्, श्रीभागवते च 'यथा शयानः पुरुषो मनसैवात्ममायया। सृष्ट्वा लोकं परं स्वाप्नमनुविश्या-वभासत' इति स्वाप्नस्रष्टृत्वकथनाच्चेति चेत् । न । श्रुतेर्ब्रह्मप्रकरणस्थत्वेन 'स्वमायये'त्यत्र 'स्वमपीतो भवती'तिवत् स्वपदेन ब्रह्मण एव परामर्षणीयत्वात् । जीवकर्तृत्वे स्वप्रतिकूलसृष्टिकरणविरोधरूपस्य बाधकस्य प्रागेवोक्तत्वात् । जीवपरामर्षपक्षेपि कल्पितपदेनाज्ञानिकमेव कर्तृत्वमायाति, न तु ब्रह्म यथा नटवज्ज्ञानपूर्वकं करोति तथा । आज्ञानिकं तु तत् ब्रह्मकृतौ स्वकृतत्वाभिमान एव पर्य-वस्यतीति तेन तदसिद्धेः । श्रीभागवतवाक्यं तु न स्वप्नसृष्टिकर्तारं निर्णेतुं प्रवृत्तम्, किन्तु तद्दृष्टान्तेन ब्रह्मणः स्रष्टृत्वमनुप्रविष्टत्वं च बोधयितुम् । दृष्टान्तस्तु परप्रसिद्ध्यापि भवतीति तमादाय जीवस्य स्वाप्नपदार्थस्रष्टृत्वं वदति, तत्राभिमानिककर्तृत्वाङ्गीकृतावपि बोधनसिद्धेर्न दृष्टान्तस्य बाध इति तेनापि तदसिद्धेः । तस्मात् पूर्वोक्तमनवद्यम् ॥ ३ ॥

सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ४ ॥ सूत्रमवतारयन्ति नन्वित्यादि । यदि

रश्मिः ।

उपपादितमिति । अतो लोकेतिभाष्यव्याख्याने उपपादितम् । क्वचिदितिभाष्यं विवृण्वन्ति स्म किञ्च । यथेति । स्वोपासनादीति । 'मामेवोपास्स्वे'ति । आदिना 'मामेवात्मानं जानीही'ति । अत्रापीति । स्वप्नेपि । ईषदिति । यथोपायाः । यथा वा गोपीनाम् । 'ता हि स्वप्ने सदा भगवन्तं पश्यन्ती'ति । ज्ञाने 'यत्पत्यपत्यसुहृदा'मित्यत्र । क्रियायां 'कृष्णोऽहं पश्यत गति'मित्यादौ । एवेति । स्वप्नव्यवच्छेदकः । तस्मादित्यादीति । स्वातन्त्र्यं व्यावहारिकत्वम्, न त्रैकालिकबाधविषयत्वम् । नापि शुक्तिरजतवद्विशेषदर्शननिवर्त्यत्वम् । ब्रह्मण एवेति । जीवयोगव्यवच्छेदकैवकारः । प्रागेवेति । अस्मिन्नेव सूत्रे । प्रातीतिकार्थाङ्गीकारत्वे त्वाहुः जीवेति । 'मृष तितिक्षाया'मिति मूर्धन्यान्तोऽपि धातुः । एवेति । स्वकृतत्वव्यवच्छेदक एवेति । तेन तदिति । स्वमायापदेन । स्वप्नस्य जीव(कर्तृ)कर्तृकत्वा-सिद्धेः । बोधयितुमिति । यथेतिशब्दादिति भावः । दृष्टान्तस्येति । भावप्रधानः । तेनापीति । श्रीभागवतवाक्येनापि स्वप्नस्य जीवकर्तृकत्वासिद्धेः ॥ ३ ॥

सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥४॥ तत्तदिति । 'साक्षी चेता केवलो निर्गुणश्चे'ति

शुभफलसूचको भवति स्वप्नः । चकारात् कश्चिदाज्ञाविशेषदानम् । कलिकालादेः प्रत्यक्षे बाधकत्वात् । युक्तश्चायमर्थः । प्रातःसूचकफलस्यैव दृष्टत्वात्, न तु स्वप्नपदार्थस्य । सूचकत्वे प्रमाणमाह । 'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शन' इत्यादिश्रुतेः । किञ्च । आचक्षते च तद्विदः । स्वप्नाध्यायविदस्तथैवाचक्षते । 'आरोहणं गोवृषकुञ्जराणा'मित्यादिना । तस्मात् सूचनार्थं जीवप्रदर्शनमिति ॥ ४ ॥

भाष्यप्रकाशः ।

स्वक्रीडार्थं सृजति, तर्हि तत्तज्जीवसाक्षिकं पदार्थैकदेशेन द्रव्यशून्यधर्ममात्रेण कुतः सृजतीत्यर्थः । व्याकुर्वन्ति सूचक इत्यादि । आज्ञाविशेषदानमिति । तथाच तेनापि तस्योत्कर्षसूचक इत्यर्थः । अयमिति । सूचकत्वादिरूपः । तत्र हेतुः । प्रातरित्यादि । पदार्थस्येति । असत्यत्वादिति शेषः । इत्यादिश्रुतेरिति । आदिपदेन 'पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ती'त्याद्यशुभसूचकश्रुतेः संग्रहः । शेषं स्फुटम् । एतेन 'मन एव मनुष्याणां पूर्वरूपाणि शंसती'त्यादि, 'परिणमति फलोक्तिः स्वप्नचिन्ता स्ववीर्यै'रित्यादि च सर्वं सूचितं ज्ञेयम् । तेन ये स्वाप्नमतितुच्छमभ्युपगच्छन्ति, तन्निरस्तं वेदितव्यम् । तादृशस्य खपुष्पादितुल्यत्वे तदभानप्रसङ्गेन सूचकताया वक्तुमशक्यत्वादिति ॥ ४ ॥

रश्मिः ।

श्रुतेः तत्तज्जीवसाक्षिकम् । पदार्थौ तयोरेकदेशेन शब्देन ज्योतिषा द्रव्यशून्यधर्मः ज्योतिर्मात्रं तेन । तस्येति । पदार्थशून्यज्योतिषः । भाष्ये । कश्चिदित्युक्तेर्हेतुमाहुः कलीति । आदिना पापम् । आज्ञादिविशेषदानं प्रत्यक्षे । 'कलिनाऽधर्मबन्धुने'ति वाक्यम् । 'नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायत' इति वाक्यं च । प्रकृते । सूचकत्वादीति । आदिना कलिकालादेर्बाधकत्वम् । अशुभेति । मरणसूचकश्रुतेः । शेषमिति । तद्विद् इति । बृहस्पत्यादयः । 'बृहस्पतिप्रणीतं च स्वप्नाध्यायं पठेदपी'ति ज्योतिषे दुःस्वप्नशान्तौ वाक्यात् । एवकारेण प्रकारान्तरव्यवच्छेदः । आरोहणमित्यादि । आदिना 'स्वप्नेष्वगम्यागमनं च धन्य'मिति । 'खरयानतैलाभ्यञ्जनान्यधन्यानी'ति च । जीवप्रदर्शनमिति । जीवाय प्रदर्शनम् । 'सह सुपे'ति समासः । एवं शेषं स्फुटम् । मन एवेति । उक्तश्रीभागवत 'मनोमात्रमिदं ज्ञात्वे'त्यादिवाक्यैर्मनोमयः प्रपञ्चः स्वाप्नः । प्रपञ्चरूपं मन एव । मनोमयत्वेतरयोगव्यवच्छेदकैवकारः । अत्र पक्षेऽन्ययोगाभावात् । पूर्वरूपाणि स्वप्नैः सुकृतित्वदुःकृतित्वादिरूपैः । शंसति । अयं पूर्वजन्मनि सुकृती, अयं पूर्वजन्मनि दुःकृतीत्येवम् । किञ्च, कर्मविपाके वैद्यके मनोमयदेहैः पूर्वरूपशंसनं प्रसिद्धम् । आदिना ············ । किञ्च । देवताज्ञादिः स्वाप्निकः शब्दसृष्टिः, अतो न मिथ्या । वैदिक्याः सृष्टेः 'शब्द इति चे'दितिसूत्रे शाब्दीत्वात् । परिणमतीत्यादि । फलोक्तिः फलानामुक्तिः । 'येऽन्योन्यतो भागवताः प्रसज्य सभाजयन्ते मम पौरुषाणी'त्यादिवाक्योक्ता । 'कीदृशी सा स्वप्नचिन्ता । स्वप्नेषु चिन्तनं यया ।' सा स्ववीर्यैः कीर्तनभक्तिजसामर्थ्यैः प्रेमलक्षणभक्त्यादिभिः परिणमति । तात्त्विकान्यथाभावं स्वप्ने देवताज्ञादिरूपं करोति । सूचितमिति । स्वप्ने मिथ्यायुक्ताभ्यां पदार्थाभ्यां सूचितम् । य इति । नास्तिकभेदाः । अतितुच्छमिति । चन्द्रादिद्वैताभासम् ॥ ४ ॥

## पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ५ ॥

किञ्चिदाशङ्क्य परिहरति । ननु जीवाय भगवान् सृष्टिं करोति, प्रदर्शयति च स्वस्य सर्वलीलाम्, अंशश्चायम्, कथमस्य दुःखित्वमित्याशङ्क्य, परिहरति तुशब्दः । अस्य जीवस्यैश्वर्यादि तिरोहितम् । तत्र हेतुः पराभिध्यानात् । परस्य भगवतोऽभितो ध्यानं स्वस्यैतस्य च सर्वतो भोगेच्छा, तस्मात् । ईश्वरेच्छया जीवस्य भगवद्धर्मतिरोभावः । ऐश्वर्यतिरोभावाद्दीनत्वं पराधीनत्वम्, वीर्यतिरोभावात् सर्वदुःखसहनम्, यशस्तिरोभावात् सर्वहीनत्वम्, श्रीतिरोभावाज्जन्मादिसर्वापद्विषयत्वम्, ज्ञानतिरोभावाद्देहादिष्वहंबुद्धिः सर्वविपरीतज्ञानं चापस्मारसहितस्येव, वैराग्यतिरोभावाद्विषयासक्तिः । बन्धश्चतुर्णां कार्यः, विपर्ययो द्वयोः, तिरोभावादेवैवम्, नान्यथा । युक्तोऽयमर्थः । एकस्यैकांशप्राकट्येपि तथाभावात् ।

---

भाष्यप्रकाशः ।

पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥५॥ सूत्रमवतारयन्ति किञ्चिदित्यादि । तुशब्दार्थकथनमुखेन तद्विभजन्ते नन्वित्यादि । परिहारं व्याकुर्वन्ति अस्य जीवस्येत्यादि । चतुर्णामिति । ऐश्वर्यादिचतुष्टयतिरोभावानाम् । विपर्ययो द्वयोरिति । अन्यथाज्ञानं ज्ञानवैराग्यतिरोभावयोः कार्यमित्यर्थः । तत इत्यादिकं व्याकुर्वन्ति तिरोभावादेवैवम्, नान्यथेति । ऐश्वर्यादितिरोभावादेव बन्धविपर्ययौ, न तु स्वत इत्यर्थः । युक्तत्वं विवृण्वन्ति एकस्येत्यादि । 'युक्तं भगैः स्वै'रित्यादिवाक्यात् पूर्णा ऐश्वर्यादयो भगवत्येव । तन्मध्ये एकस्यैश्वर्यादेरेकांशप्राकट्येपि 'यत्पादपङ्कजे'त्यादिवाक्यैस्तथानिश्चयेन बन्धाभावात् । तदभावादेव बन्धविपर्ययाविति युक्तमित्यर्थः । नन्वानन्दांशतिरोभावादेवैतद्द्वयं कुतो न स्वीक्रियत इत्यत आहुः

रश्मिः ।

पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ५ ॥ तुशब्दार्थेति । आशङ्कापरिहारस्तुशब्दार्थः । तत्कथनोपायेनेत्यर्थः । नन्वित्यादि । जीवायेति । भक्ताय साधारणाय च । लीलाशब्देन स्वप्रदर्शने यथा तथेत्युक्तम् । स्वस्यैतस्येति । यथा गोकुलाष्टके तथा । शृङ्गाररसमण्डने च । अमुक्तत्वदशायाम् । स्वस्योत्कर्षेण जीवस्य निकृष्टत्वेन च सर्वतो भोगेच्छा । भगवद्धर्मेति । उच्चनीचभावाय । समत्वे लीला न स्युः । दीनत्वमित्यादि । अन्यानुरञ्जनाभावात् । पराधीनत्वं परोक्तकरणात् । सर्वदुःखेति । अनुभवसिद्धम् । सर्वहीनत्वमिति । 'यथा वृक्षस्य संपुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य कर्मणो दूराद्गन्धो वाति, यथासिधारां कर्तेव हि तामवक्रामेयद्युवे युवे ह वा विह्वयिष्यामि कर्त पतिष्यामीत्येवममृतादात्मानं जुगुप्सेत्' । अत्र कर्मगन्धो यशः । स्वधर्माभावात्सर्वहीनत्वम् । जन्मादीति । लक्ष्म्यभावं श्र्यभावो ज्ञापयति । लक्ष्म्यभावात्सत्कर्माभावेन जन्मादि । आदिना स्वार्थात्प्रच्यवः । अहंबुद्धिरविद्यारूपा । एवेति । स्वतो योगव्यवच्छेदकः । बन्धेति । दीनत्वादिर्बन्धोऽहंबुद्ध्यादिः स्वरूपविपर्ययः तौ । युक्तत्वमिति । सौत्रहिशब्दार्थम् । भगवत्येवेति । एवकारेण जीवयोगव्यवच्छेदः । यत्पादेति । आदिना 'वञ्चितोहं महाराज हरिणा बन्धुरूपिणा । येन मेऽपहृतं तेजो देवविस्मापनं मह'दिति प्रथमस्कन्धोक्तम् । तथेति । अस्यार्थो निश्चयेन बन्धः तस्याभावात् । तदभावादिति । बन्धाभावाभावाद्बन्धरूपात् । एवेति । इतरयोगव्यवच्छेदकः । नच बन्धाद्बन्धविपर्ययौ न स्यातामिति चेत् । न । बन्धविपर्ययौ न बन्ध इति प्रयोगात्

आनन्दांशस्तु पूर्वमेव तिरोहितः, येन जीवभावः । अत एव काममयः । अकामरूपत्वादानन्दस्य । निद्रा च सुतरां तिरोभावकर्त्री भगवच्छक्तिः । अतोऽस्मिन् प्रस्तावे जीवस्य धर्मतिरोभाव उक्तः । अन्यथा भगवत ऐश्वर्यादिलीला निर्विषया स्यात् । तस्मान्न जीवस्वरूपपर्यालोचनया किञ्चिदाशङ्कनीयम् ॥ ५ ॥

देहयोगाद्वा सोपि ॥ ६ ॥

ईश्वरेच्छयैश्वर्यादितिरोभावं स्वमते निरूप्य, मतान्तरेणापि नियतधर्मवादेन निरूपयति । देहयोगाद्वा । देहसम्बन्धादेवास्य सर्वतिरोभावः । विपर्ययो वा । अपिशब्दादन्यत् । अस्मिन् पक्षे देहवियोग एव पुनरैश्वर्यादिप्राप्तिः । पूर्वस्मिन्

भाष्यप्रकाशः ।

आनन्देत्यादि । पूर्वमिति । व्युच्चरणकाले । द्विविधा हि जीवाः, सदा मुक्ताः, बन्धयोग्याश्च । तत्राद्याः सेवायोग्या इति तेषु स्वरूपानन्दमात्रस्यैव तिरोभावः, न धर्मरूपस्य तस्य, नाप्यैश्वर्यादेः । द्वितीयेषु यथायोग्यं सर्वेषां तिरोभाव इति निर्णयादिति । अत्र गमकमाहुः अत एवेत्यादि । नन्वत्रैतन्निरूपणस्य कः प्रसङ्ग इत्यत आहुः निद्रा चेत्यादि । तस्य प्रयोजनमाहुः अन्यथेत्यादि । सिद्धमाहुः तस्मादित्यादि । किञ्चिदिति । दुःखित्वानुपपत्त्यादिकम् ॥ ५ ॥

देहयोगाद्वा सोपि ॥ ६ ॥ सूत्रप्रयोजनमाहुः ईश्वरेच्छेत्यादि । व्याकुर्वन्ति देहेत्यादि । वाशब्दोऽवधारणे, अनादरे वा । सूक्ष्मदेहसम्बन्धादेवास्य सः आनन्दैश्वर्यादीनां तिरोभावो विपरीतज्ञानं वा । अपिशब्दादन्यद्बन्धदुःखादि । एतस्य पक्षस्य जघन्यत्वज्ञापनाय पक्षद्वयतारतम्यं

रश्मिः ।

कर्मतावच्छेदकभेदात् । व्युच्चरणेति । 'यथाग्नेः क्षुद्रा विस्फुलिङ्गा' इति श्रुतौ व्युच्चरणमुक्तम् । तत्र व्युच्चरणोत्तरं वियोगज आनन्दतिरोभावः । इदमुत्तरार्धे अष्टपञ्चाशत्तमाध्याये सत्यावाक्यं तदादिभिस्तन्मध्य इत्यादिरित्यन्वयः । तथाहि । द्वितीयस्कन्धनवमाध्यायवाक्यो'क्तेतरत्र चाधुवै'रत्राप्यैश्वर्यादेरंशप्राकट्यम् । तत्र सत्यायां दीनत्वपराधीनत्वाभावेनैश्वर्यस्यैकांशप्राकट्यम् । सर्वदुःखासहनेन वीर्यैकांशप्राकट्यमर्जुने । वाक्यं तूक्तम् । वियोगत्वेनानन्दतिरोभावत्वेन कार्यकारणभावात् । ननु नानन्दतिरोभावः, 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'तिश्रुतेः, अत आहुः द्विविधेति । बन्धयोग्या इति । सकर्मकाः । स्वरूपेति । एवकारो मात्रायोगव्यवच्छेदकः । निर्णयादिति । 'यत्पादपङ्कजे'त्यादौ निर्णयात् । अत एवेत्यादीति । काममय इति । 'काममयोऽयं पुरुष' इति श्रुतेः । अकामेति । 'सुषुप्तिस्त्वकामरूपो भगवा'निति 'सुषुप्त्युत्क्रान्त्योर्भेदेने'ति सूत्रभाष्यम् । 'सुषुप्तावानन्दभु'गिति नृसिंहतापनीये । मात्रारूपस्यापि तथानुभवात् । तथा चाकामरूपत्वं सुषुप्त्यानन्दस्य । तन्मात्रायाश्च । अत्रैतदिति । स्वप्ने षड्गुणतिरोभावनिरूपणस्य । निद्रा चेत्यादीति । षड्गुणैश्वर्यतिरोभावकर्त्री । अतोस्मिन् स्वाप्निके प्रस्तावे जीवस्य षड्गुणैश्वर्यतिरोभाव उक्तः । अन्यथेत्यादीति । स्वेतरस्मिन् जीवे एकस्यैश्वर्यादेरेकांशप्राकट्याभावे स्वप्ने तिरोभावाभावे । निर्विषयेति । अन्यविषयाभावात्तथा । दुःखित्वेति । आदिना ऐश्वर्यादितिरोधानानुपपत्तिः । क्रीडार्थत्वात् ॥ ५ ॥

देहयोगाद्वा सोपि ॥६॥ ईश्वरेच्छेत्यादीति । नियतधर्मव्यवच्छेदकैवकारः । नियतधर्मेति । स च समवायातिरिक्तविषयतासम्बन्धेनेच्छाधर्मोऽनियत इति नियतेन देहधर्मेण । सूक्ष्मदेहसम्बन्धादेवेति । एवकारोऽनियतधर्मेच्छायोगव्यवच्छेदकः । अपिशब्दादितिभाष्यं विवृण्वन्ति स्म अपि-

**कल्पे विद्यमानेपीति विशेषः । न त्वीश्वरेच्छया विकल्पः ।**

**कश्चित् परशब्देन देहादिमाह । तदा अभिध्यानयोगयोराकस्मिकता स्यात् । 'सर्वस्य वशी सर्वस्येशान' इति विरोधश्च ।**

**कश्चित्तु तस्याभिध्यानात् 'तृतीयं देहभेद' इति श्रुत्यनुरोधेन जीवकर्तृका-**

---

भाष्यप्रकाशः ।

स्फुटीकुर्वन्ति अस्मिन्नित्यादि । नन्वित्यादि । क्वचिदीश्वरेच्छया क्वचिद्देहयोगेनेति विकल्पो नात्राभिप्रेत इत्यर्थः ।

उक्तव्याख्यानदार्ढ्यार्थं व्याख्यानान्तरं दूषयितुमनुवदन्ति कश्चित् परशब्देन देहादि-माहेति । देहारम्भकं कर्माहेत्यर्थः । इदं च न प्रसिद्धषड्भाष्यस्थम् । मध्वरामानुजशैवभिक्षुभिः पराभिध्यानपदे ब्रह्मकर्तृकाभिध्यानस्यैव व्याख्यानात् । अत इदानीमुत्सन्नस्यैव कस्यचिन्मतस्यो-ल्लेखः । दूषयन्ति तदेत्यादि । आकस्मिकतेति । निर्हेतुकता । तथाच देहारम्भकेन कर्मणा बन्धे विपरीतज्ञाने चाभ्युपगम्यमानेऽभिध्यानयोगयोर्निर्हेतुकतया तत्पदप्रयोगवैयर्थ्यं स्यात् । बन्धादेः कर्माद्यधीनत्वे ईश्वरस्य सर्वनियन्तृत्वभङ्गेन 'सर्वस्ये'त्यादिश्रुतिश्च विरुध्येतेत्यत उपेक्ष्यमित्यर्थः ।

शङ्करभास्कराचार्ययोर्मतमाहुः कश्चित्त्वित्यादि । ऐकमत्यादेकवचनेनोल्लेखः । श्रुतिस्तु श्वेताश्वतरस्था । 'ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः, तस्याभिध्यानात्तृतीयं देहभेदे विश्वैश्वर्यं केवल आप्तकाम' इति । अर्थस्तु, देवं ज्ञात्वा देवज्ञानेन सर्वेषां पाशानां बन्धकानां पुण्यपापादीनामपहानिर्दाहः, क्षीणैर्दग्धैः क्लेशैरविद्यास्मितादिभिर्जन्ममृत्युप्रहाणिः पुनः पुनर्जन्ममरणप्रवाहनिवृत्तिः, तस्याभिध्यानात् परमेश्वरविषयकाच्चिन्तनात् देहभेदे देहनिवृत्तौ, 'देहभेदै'रितिपाठे नानादेहैः, तृतीयं विश्वैश्वर्यम्, ऐहिकाचान्द्रादिलोकसम्बन्धिनश्चैश्वर्यादतिरिक्तं ब्रह्मलोकसम्बन्ध्यैश्वर्यं भवेदिति शेषः । ततः केवलो ब्रह्मभूत आप्तकामो भवतीति । 'तृतीयदेहभेदे' इति पाठे तु ऐहिकात् पारलौकिकाच्च तृतीयो ज्ञानिदेहस्तस्य निवृत्तौ सत्यां विश्वैश्वर्यं प्राप्य ब्रह्म-

रश्मिः ।

शब्दादिति । बन्धदुःखादीति । आदिना षड्गुणतिरोभावः । अस्मिन्नित्यादीति । एवकारो विद्यमानदेहयोगव्यवच्छेदकः । विद्यमाने इति । भगवान् व्यासः भगवान्नारद इति प्रयोगात् । कर्माहेति । देहस्यादिः कर्म देहादिस्तम् । आदिशब्दो 'न नपुंसक'मिति पुंस्त्वम् । ब्रह्मकर्तृकेति । 'परस्य ब्रह्मणोऽमितो ध्यानं सर्वतो रमणेच्छे'त्यत्र परस्येति कर्तरि षष्ठीति भावः । तत्तद्भाष्यादेवकारः । रामानुजभाष्यं यथा (पराभिध्यानात्परमपुरुषसंकल्पादिति) । उत्सन्नस्यैवेति । उत्सन्नप्रच्छन्नशाखामूलत्वस्य स्मृतिषु प्रसिद्धेः । एवकारः प्रच्छन्नयोगव्यवच्छेदकः । जैमिनिबादरिकाशकृत्स्नौडुलोम्यादिमतानां भाष्येऽप्रच्छन्नत्वात् । एकदेशिमतं च 'अरूपवदेव हि तत्प्रधानत्वादि'तिसूत्रोक्तम् । अत आहुः कस्यचिन्मतस्येति । कर्मपदोक्त्या जैमिनिमतमिति भवत्येवावधृतिः । निर्हेतुकतयेति । बन्धविपरीतज्ञाने उत्पाद्य क्षीणशक्ति कर्म नाभिध्यानयोगयोर्हेतुतामर्हत्यतो निर्हेतुकतया । प्रयोगेति । सूत्रद्वये प्रयोगद्वयस्य वैयर्थ्यं स्यादित्यर्थः । सर्वस्येतिभाष्यं विवृण्वन्ति स्म बन्धादेरिति । आदिना विपर्ययः । देहयोगश्च । कर्मादीत्यादिना इच्छा विद्या पूर्वप्रज्ञा चेति । 'ईश्वरेच्छयैवैश्वर्यादितिरोभाव'मित्याद्युक्तभाष्यात् । 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चे'ति श्रुतेश्च । उल्लेख इति । शङ्करभास्कराचार्ययोरुल्लेखः कश्चिदितिशब्देन । अविद्यास्मितेति । 'अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशा' इति योगसूत्रम् । तृतीयत्वं समर्थयन्ति स्म ऐहिकादिति । चान्द्रादीति । आदिनादित्यविद्युल्लोकौ । छान्दोग्य

भिध्यानं मत्वा, अनिरोहितमिति कल्पयति । विपर्ययशब्देन च मोक्षम् । बहु-ध्याहारेण च सूत्रद्वयं योजयन्ति । तत् ब्रह्मवादापरिज्ञानादसङ्गतेश्च साधनोपदेशस्य भ्रान्तोक्तमित्युपेक्ष्यम् । निद्राया विवेकज्ञानाभावावसरत्वात् यथा व्याख्यात एवार्थः ॥ ६ ॥

इति तृतीयाध्याये द्वितीयपादे प्रथमं सन्ध्याधिकरणम् ॥ १ ॥

भाष्यप्रकाशः ।

भूतो भवतीत्यर्थो ज्ञेयः । एतस्यां श्रुतौ पराभिध्यानपदेन परमेश्वरविषयकं ध्यानमुच्यत इति शब्दसाम्यकृतेनैतदनुरोधेनेश्वरविषयकं जीवकर्तृकाभिध्यानं सौत्रत्वेन विचार्य, पूर्वं तिरोहितमैश्वर्यं तस्माद्धेतोरतिरोहितं भवतीति कल्पयति । तत ईश्वरादेवास्य बन्धविपर्ययौ, ईश्वरापरिज्ञानाद्बन्धः, ईश्वरपरिज्ञानान्मोक्ष इति ।

तद्दूषयन्ति तदित्यादि । तथाच यदि ब्रह्मवादं जानीयात्, देहयोगसूत्रं सिद्धान्तीयत्वेन नोरीकुर्यात्, वाशब्दं च जीवेश्वरान्यत्वाशङ्काव्यावृत्त्यर्थं न व्याकुर्यात् । ब्रह्मवादेऽन्येषां हेतूना'मिदमनेनैवमेवं करिष्यामी'तीश्वरेच्छायाः शरीर एव व्यापारतया निवेशात्, अवान्तरेऽस्मिन्नवस्थाप्रकरणे ईश्वराभिध्यानरूपसाधनोपदेशस्यासङ्गतेश्च तथेत्यर्थः । स्वोक्तव्याख्यानस्योचितत्वाय पूर्वोक्तां युक्तिं स्मारयन्ति निद्राया इत्यादि । इदं हि निद्राप्रकरणम् । निद्रा च तदेवावसरं प्राप्नोति, यदा विवेकज्ञानं न भवति । अतो ज्ञानतिरोभावस्यैवात्र वक्तव्यत्वात् तस्य चोक्तरीत्यैव बोधाद्यथोक्त एवार्थ इत्यर्थः ॥ ६ ॥ इति प्रथमं सन्ध्याधिकरणम् ॥ १ ॥

रश्मिः ।

'आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोमानवः स एनान्ब्रह्म गमयत्येष देवयानः पन्था इती'ति श्रुतेः । पञ्चम्यन्तं पदम् । शब्दसाम्येति । ब्रह्मजीवसाधारणपरशब्दकृतेनैतस्य जीवस्यानुरोधेनेत्यर्थः । परशब्दोत्रावृत्त्योभयवाचक इतीश्वरविषयकं जीवकर्तृकाभिध्यानम् । ईश्वरस्याभिध्यानं जीवस्येति । 'कर्तृकर्मणोः कृती'त्युभयत्र षष्ठी । ईश्वरस्येति कर्मणि विषयार्थके षष्ठी । जीवस्येति कर्तरि । तथाचेश्वरविषयकं जीवकर्तृकाभिध्यानं भवति । विचार्येति । विद्यमानमपि तत्तिरोहित'मविद्याव्यवधानात् तत्पुनस्तिरोहितं सत्परमेश्वरमभिध्याय, ततो यतमानस्य जन्तोर्विधूतध्वान्तस्य तिमिरतिरस्कृतस्येव दृक्शक्तिरौषधवीर्यादीश्वरप्रसादात्संसिद्धस्य कस्यचिदेवाविर्भवतीति न स्वभावत एव सर्वेषां जन्तूना'मितिभाष्येण विचार्य । तत् जीवैश्वर्यम् । अतिरोहितमितिभाष्यं विवृण्वन्ति स्म पूर्वमिति । भाष्ये । बहुध्याहारेणेति । ज्ञानैश्वर्यशन्यध्याहारः । अंशांशिभावाध्याहारः । ब्रह्मजीवकर्मकर्तृत्वाध्याहारः पूर्वसूत्रे । देहेतिसूत्रे ऐश्वर्यतिरोभावः । देहयोगाद्वेति सूत्रद्वयं योजयन्ति स्म प्रकृते । ऊरीकुर्यादिति । इच्छावादत्याजकत्वादिति भावः । जीवेश्वरेति । जीवस्येश्वरान्यत्वं तस्याशङ्का तस्या व्यावृत्त्यर्थम् । किन्तूक्तरीत्या विकल्पार्थं व्याकुर्यात् । इदमित्यादि । इदमैश्वर्यं अनेन देहयोगहेतुना एवं तिरोहितत्वप्रकारेण एवमतिरोहितत्वप्रकारेण करिष्यामीति 'स ईक्षांचक्र' इति ब्रह्मवादे पूर्वसूत्रोक्तेच्छायाः शरीरे निविष्टत्वात् । परन्तु व्यापारतया । इच्छया तत्तद्धेतूपस्थापनात् । तज्जन्यत्वे सति तज्जन्यजनकत्वं व्यापारः । अवान्तर इति । साधनप्रकरणावान्तरे स्वप्नाद्यवस्थाप्रकरणे । तथेति । भ्रान्तोक्तमित्यर्थः । पूर्वोक्तामिति । पूर्वसूत्रोक्ताम् । निद्रेति । स्वप्नप्रकरणम् । तदेवेति । कालान्तरयोगव्यवच्छेदकः । विवेकेति । देहगेहादेर्विवेकेन ज्ञानम् । आत्मानात्मविवेकज्ञानं न भवतीति वा । अज्ञानं भवतीति यावत् । तमःकार्यत्वान्निद्रायाः । यथा व्याख्यान इतिभाष्यं विवृण्वन्ति स्म अतो ज्ञानेति । अतो निद्रावसरस्यावश्यकत्वात् । ज्ञानतिरोभावोऽज्ञानं तस्यैवात्राधिकरणे योग्यदेहेपि शुभाशुभसूचनाय स्वप्नप्रदर्शनस्य वक्तव्यत्वात्तस्य स्वप्नदर्शनस्य चोक्तरीत्या भाष्योक्तरीत्या योग्यदेहानन्तरं सङ्गत्या बोधात् । एवकारोऽन्योक्तव्याख्यायोगव्यवच्छेदकः । एवार्थ इत्यत्रैवकारोऽन्योक्तार्थव्यवच्छेदकः ॥ ६ ॥ इति प्रथमं सन्ध्याधिकरणम् ॥ १ ॥

## तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥ ( ३-२-२ )

प्रसङ्गाज्जीवस्याज्ञानं निरूप्य सुषुप्तौ केवलमज्ञानं निरूपयितुं स्थानस्वप्नाभावौ निरूपयति। एवं श्रूयते। नाडीरनुक्रम्य 'तासु तदा भवति, यदा सुप्तः स्वप्नं न कश्चन पश्यति। अथास्मिन् प्राण एवैकधा भवती'ति। तथा 'प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तर'मिति।

तत्र संशयः। स्वप्नवत् प्रपञ्चसृष्टिं मायिकीमपि भगवान् करोति, न वेति संशयः।

तत्र 'य एष सुप्तेषु जागर्ती'त्यत्र जीवस्वापमात्रे भगवत्सृष्टेरुक्तत्वात्, 'स्वप्नं न कश्चन पश्यती'त्यत्रापि दर्शनमात्रनिषेधात्, 'न बाह्यं किञ्चन वेद नान्तर'मिति च जागरणस्वप्नप्रपञ्चयोरविशेषेणादर्शनकथनात्, सुषुप्तावपि प्रपञ्चनिर्माणमस्ती-

---

भाष्यप्रकाशः।

तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥ सूत्रमवतारयन्ति प्रसङ्गादित्यादि। अज्ञानमिति। विपरीतज्ञानजनकमज्ञानम्। स्थानपदेनाज्ञानस्थानं बोध्यम्। अस्य सूत्रस्याधिकरणत्वाय विषयवाक्याद्याहुः एवमित्यादि। अत्र प्रथमं वाक्यं कौशीतकिब्राह्मणे बालाकथजातशत्रुसंवादस्थम्। द्वितीयं बृहदारण्यकीयज्योतिर्ब्राह्मणस्थम्।

तत्र संशय इति। सुषुप्तौ सृष्टिकरणस्य संशयः। काठकवाक्ये सृष्टिनिर्माणश्रावणं विषयश्रुतौ दर्शनाभावमात्रश्रावणं च सन्देहबीजम्। तदेतत् पूर्वपक्ष एव सूचयन्तस्तमाहुः तत्रेत्यादि। मुक्त्यवस्थायामपि बाह्यप्रपञ्चसत्तापादनं पूर्वपक्षयुक्तिफलम्। सत्ताया द्रष्टृदर्शनव्याप्तिदर्शनात् तदभावे प्रपञ्चसत्ताभाव इत्याशङ्क्य परिहरति स्वाप्ययेत्यादि। तथाच सत्तादर्शनयोर्व्याप्त्यभावात् तदभावमात्रेण सत्ताभावो न वक्तुं शक्य इत्यर्थः।

रश्मिः।

तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥ प्रसङ्गं बोधयितुमज्ञानस्वरूपमाहुः। विपरीतं विपर्ययः पराभिध्यानसूत्रोक्तः भगवद्धर्मविपरीतधर्मरूपः भाष्ये दुःखित्वमित्यनेनोपलक्षणयोक्तः। बन्धो दुःखित्वं विपर्ययः भगवद्धर्मविपरीतधर्म इति। तथा च पूर्वाधिकरणोक्तविपर्ययोक्तेः प्रसङ्ग इत्यर्थः। अन्योपि प्रसङ्गो भाष्ये स्वप्नवदित्यादिना वक्तव्यः। एवं चायं भाष्यार्थः। विपर्ययो जीवनिष्ठः तज्ज्ञानं विपर्ययाधीनं ज्ञातविपर्ययजनकं अज्ञानं तमः। 'सुषुप्तावानन्दभु'गिति ह्यानन्दधर्मस्तमः। 'आनन्दाच्च तम' इति सुबोधिन्याः। अज्ञानस्थानमिति। आनन्दः। 'सुषुप्तिस्त्वकामरूपो भगवा'निति भाष्यात्। 'अकामरूपत्वादानन्दस्ये'त्युक्तभाष्याच्च। बृहदिति। सूत्रान्तराच्छः। वृद्धत्वाभावात्। द्वितीयमिति। प्राज्ञेनात्मनेत्यादि। तत्रेत्यस्य सुषुप्तावित्यर्थः। सुषुप्तावपि प्रपञ्चनिर्माणमस्तीति पूर्वपक्षभाष्यात्। दर्शनाभावेति। 'न कंचन पश्यती'त्यत्र नञो दर्शनानुकूलव्यापारेऽन्वयादिति भावः। मात्रचा सृष्टिनिर्माणव्यवच्छेदः क्रियते। बाह्येति। मुक्तौ प्रपञ्चव्यतिरेकः स्यात्, यदि सर्वावस्थायां प्रपञ्चव्यतिरेकः स्यात्। अतो मुक्तावपि प्रपञ्चव्यतिरेकाभाव इति बाह्यप्रपञ्चसत्तापादनम्। सत्ताया इति। सत्ताया द्रष्टृदर्शने व्याप्तिः। मुक्तिः प्रपञ्चसत्तावती। द्रष्टृदर्शनात्। स्वप्नवदित्यत्र। तदभाव इति। व्याप्त्यभावे। परिहरतीति। पूर्वत्र हेतुं वदन्तीति शेषः। व्याप्त्यभावादिति। मायादर्शने साध्याभाववति हेतुसत्त्वात्साधारण्येन व्याप्त्यभावात्। स्वाप्ययशब्देन गृहीतसुषुप्तौ स्वप्नसन्निधानाद्यत्किञ्चित्सत्यमायादर्शनसत्त्वात्। सत्ताभाव इति। मुक्त्यवस्थायां प्रपञ्चसत्ताभावः।

स्यवगन्तव्यम् । ततश्च कस्यामप्यवस्थायां प्रपञ्चव्यतिरेकाभावान्मुक्तावपि स्यात् । स्वाप्ययसम्पत्त्योरज्ञानमात्रविशेषात् । 'सति सम्पद्य न विदुः सति सम्पद्यामह' इति । तस्मात् बाह्यसत्सम्पदोर्विद्यमानयोरपि यथा ज्ञानाभावादग्रहणम्, एवं प्रपञ्चस्यापीत्येवं प्राप्ते, उच्यते ।

**तदभावो नाडीषु ।** तस्य स्वप्नस्याभावो नाडीषु । तथा आत्मनि च । कुतः । तच्छ्रुतेः । प्रपञ्चाभावश्रुतेः । कामनया हि प्रपञ्चः । सुषुप्तावस्थाया अकामरूपत्वश्रुतेः । 'तद्वा अस्यैतदात्मकाममाप्तकाममकामं रूप'मिति । नाडीषु आत्मनि चेति ग्रहणात् सुषुप्तिर्द्विविधेति सूचयति । तथाहि । 'हिता नाम नाड्यः' पुरीतत्यन्ता हृदयदेशात् बाह्याः, आभ्यन्तरः परमात्मा, हृदयदेशस्तु

---

भाष्यप्रकाशः ।

सिद्धान्तं व्याचक्षते तस्येत्यादि । स्वप्नस्येति । मायिकसृष्टेः । सा प्रपञ्चाभावश्रुतिः केत्याकाङ्क्षायां तां व्युत्पादनेन स्फुटीकुर्वन्ति कामनयेत्यादि । हि यतो हेतोः 'कामं काम'मिति स्वप्नसृष्टिबोधकवाक्ये कामविषयाणां निर्माणश्रावणात् पुरुषकामनया स प्रपञ्चो बोधितः । बृहदारण्यके तु 'तद्वा अस्यैत'दित्यनेन सुषुप्तावकामं रूपं जीवस्य श्राव्यते । अतः स्वप्नसृष्टिहेत्वभावबोधिका या सुषुप्तावस्थायां अकामरूपत्वश्रुतिः, सैव तच्छ्रुतिस्तस्याः । तथाच यथा ज्योतिश्चरणाधिकरणे प्राकरणिको व्युत्पादनसापेक्षो हेतुः साधकः, तथात्रापीत्यर्थः । एवं व्याख्याने बीजं तु तदभावपदस्य लाक्षणिकतानिवृत्तिर्बोध्या । एवं स्वप्नाभावनिरूपणं व्याकृत्य स्थाननिरूपणं व्याकुर्वन्तो मतान्तरादत्र विशेषमाहुः नाडीष्वित्यादि । हृदयदेशात् बाह्या इति । हृदयदेशात् बाह्यदेशं

रश्मिः ।

भाष्ये । तस्मादिति । श्रुत्यापादकवाक्ययोः सत्त्वात् । बाह्येति । बाह्यप्रपञ्चः । विद्यमानयोः प्रपञ्चसत्तावतोः । अग्रहणमिति । तथाचानयोः साध्यव्यापकताग्रहाद्धेतोः व्याप्यताग्रहः । तथाच मायादर्शने उक्तरीत्या साधारण्यमिति भावः । एवं प्रपञ्चस्यापि विद्यमानस्याग्रहणं ज्ञानाभावादित्यर्थः । आपादनाभावे भाष्यार्थः स्पष्टः । यद्यपि बाह्यप्रपञ्चसत्ता यस्माद्द्रष्टृदर्शनादिति द्रष्टृदर्शवापादनमर्थः । सत्ताया इत्यनुमानं तु मुक्तिः द्रष्टृदर्शनवती, सत्तायाः, स्वप्नवत् । व्याप्त्यभावादित्यपि पूर्ववन्न स्वाप्ययसम्पत्त्योः साध्याभाववति हेतुसत्त्वात्साधारण्येन व्याप्त्यभावात् । प्रकृते । तदभावमात्रेणेति । प्रपञ्चदर्शनाभावमात्रेण । सत्ताभावो हेत्वभावः । भाष्ये । अग्रहणमिति । प्रपञ्चदर्शनस्यानुव्यवसायेऽग्रहणम् । तथाच हेतुमति साध्यसत्त्वान्न साधारण्यमित्यनुमानपक्षेपि भाष्यार्थः सुष्ठु । प्रकृते । मायिकेति । इयं ज्ञानात्मिका ग्राह्या । 'स्वप्नः सुप्तस्य विज्ञान' इति कोशात्स्वप्नस्य ज्ञानत्वात् । जीवस्येति । ननु 'सुषुप्तिस्त्वकामरूपो भगवा'निति 'सुषुप्त्युत्क्रान्ति'सूत्रभाष्यविरोध इति चेत् । न । 'अकामरूपत्वादानन्दस्ये'त्युभयरूपत्वात् । प्राकरणिक इति । ज्योतिर्ब्रह्म प्राकरणिकः हेतुश्चरणाभिधानादिति । एवं व्याख्यान इति । ब्रह्मजीवसाधारण्येन व्युत्पादनसापेक्षतच्छ्रुतिरूपहेतुव्याख्याने । अयमर्थः । अन्यत्र तदभावपदेन स्वप्नदर्शनाभावो व्याख्यातः । 'तद्वा अस्यैत'दिति श्रुतिर्नोक्तेति । लाक्षणिकतेति । स्वप्नदर्शने लाक्षणिकता । दर्शनमनुव्यवसाय इत्यपि गौरवग्रस्तः पक्षः । हृदयदेशादिति भाष्ये ल्यब्लोपे पञ्चमीत्याहुः हृदयेति ।

**जीवस्य। इन्द्रियाणां च स एव देशः। तत्र निद्रया भगवच्छक्त्या बहिर्दृष्ट्याच्छादने भगवल्लीलायां तां पश्यति। तत्राप्याच्छादने गाढसुप्तो ज्ञानरहितः क्रियाशक्त्या अन्तर्भगवन्तं वा प्रविशति। बहिर्नाडीषु वा समायाति। अत एव बृहदारण्यकषष्ठे 'यत्र सुप्तो न कञ्चन कामं कामयत' इति वारद्वयमाह। 'ता वा अस्यैता हिता**

भाष्यप्रकाशः।

प्राप्य स्थिताः। आभ्यन्तर इति। हृदयदेशादाभ्यन्तरः। तामिति। स्वाप्निकीं भगवल्लीलाम्। द्वैविध्ये प्रमाणमाहुः अत एवेत्यादि। तदेव स्फुटीकुर्वन्ति ता वा इत्यादि। तथाच बृहदारण्यके 'यत्र सुप्त' इत्याद्युक्त्वा, किं तत् स्वापस्थानमित्याकाङ्क्षायां 'ता वा अस्यैता हिता नाम नाड्य' इति पूर्वमुक्त्वा, पुनरपि तथैवोक्त्वा, 'तद्वा अस्यैत'दित्यादिना आत्मरूपं स्थानान्तरमुक्तम्। तस्मात् सुषुप्तेर्द्वैविध्यम्। उभयत्रापि कामनाभावाच्च न सृष्टिः, अत एव च न मुक्तावपीत्यर्थः।

यत्तु, 'तद्यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सृप्तो भवती'ति, 'ताभिः प्रत्यवसृप्य पुरीतति शेत' इति, 'तासु तदा भवती'ति च, 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेत' इति, 'सता सोम्य तदा सम्पन्न' इत्यादीनि दहरदृप्तबालाकीयबालाकीयानि विषयवाक्यान्युपन्यस्य, किमेतेषां नाडीपुरीतत्परमात्मनां परस्परनिरपेक्षाणां सुषुप्तिस्थानत्वम्, उत परस्परसापेक्षतयैकस्येति संशये, परस्परनैरपेक्ष्यमयुक्तम्। तथा सति व्रीहियववद्विकल्पापत्त्या पक्षे बाधापत्तेः। नच नाडीषु सृप्तो भवति, पुरीतति शेते, य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेत इत्येकविभक्तिनिर्देशेनैकार्थत्वात् विकल्पस्योचितत्वं शङ्क्यम्। प्रासादे शेते, पर्यङ्के शेते, इत्यादौ नानार्थत्वसमुच्चययोरप्येकविभक्तिदर्शनेन हेतोः साधारणत्वात्। 'तासु तदा भवति, यदा सुप्तः स्वप्नं

रश्मिः।

भाष्ये। **इन्द्रियाणां** चेति। 'मन इन्द्रियनायक'स्तत्रेति तथा। यद्वा। हृदयब्राह्मणे 'एष प्रजापतिर्यद्धृदयम्, एतद्ब्रह्मैतत्सर्वं तदेतत्त्र्यक्षरꣳहृदय'मित्युक्त्वा 'एतत्सर्व'मिति सर्वपदार्थमाह। 'हृ इत्येकमक्षरमभिहरन्त्यस्मै स्वाश्चान्ये च य एवं वेद, द इत्येकमक्षरं ददत्यस्मै स्वाश्चान्ये च य एवं वेद, यमित्येकमक्षरमेति स्वर्गलोकं य एवं वेदे'ति। अर्थस्तु, असै ब्रह्मणे स्वाश्चा जीवेन्द्रियाणि अन्ये विषयाः। मर्यादामार्गीयसर्वात्मभाव उक्तः, अम्बरीषस्येव। निरोधलक्षणग्रन्थोक्तः। 'इन्द्रियाणि जुहोती'ति सामश्रुतेः। अत एवैवकारः। **भगवच्छक्त्येति**। त्रिष्वनन्तरूपभगवच्छक्त्या। अनन्तस्यानन्तानन्दरूपत्वेनानन्दस्य तमःशक्तित्वात्। 'आनन्दाच्च तम' इति सुबोधिन्या द्वितीयनवमाध्याये स्पष्टम्। **बहिरिति**। सतिसप्तम्यन्तम्। **तत्रापीति**। स्वप्नेपि स्वप्नदृष्ट्याच्छादने सति। **गाढत्वं** सम्यक्त्वम्। 'प्राज्ञेनात्मना सम्परिष्वक्त' इत्युक्तश्रुतेः। **ज्ञानरहित** इति। 'न बाह्यं किञ्चन वेद न चान्तर'मिति श्रुतेः। **क्रियाशक्त्येति**। 'सम्परिष्वक्त' इतिश्रुतेः। **भगवन्तमिति**। अकामरूपं भगवन्तम्। **प्रकृते**। **स्थानान्तरमिति**। नाडीस्थानम्। अन्यत्स्थानं स्थानान्तरम्। **उभयत्रेति**। सुषुप्त्योः। सुषुप्तिस्त्वित्यादिभाष्यार्थः स्फुटः।

**यत्त्वित्यादि**। तदेतत्समीपतरवर्ति यत्र यस्मिन्काले सम्यक् अस्तः। **ताभिरिति**। नाडीभिः। **तास्विति**। नाडीषु। **दहरेति**। जलीयाः परमाणव इत्यत्रेव छः। **पक्ष** इति। नाड्यः तदभाववत्यः तच्छ्रुतेः। आत्मवत्। 'आत्मा तदभाववान् तच्छ्रुतेः नाडीव'दित्यत्र हृदये स्वप्नदर्शनाभावरूपसाध्ये पक्षे नाडीषु बाधः। पक्षे साध्याभावस्य बाधत्वात्। **नानार्थत्वेति**।

भाष्यप्रकाशः ।

न कश्चन पश्यति, अथास्मिन् प्राण एवैकधा भवती'ति कौशीतकिश्रुतौ प्राणाख्यस्य परमात्मनो नाडीसमुच्चयावधारणात् । यत्र पुनः केवलनाडीनामेव सुषुप्तिस्थानत्वेन श्रावणम्, तत्रापि ब्रह्मणः प्रतिषेधाभावान्नाडीद्वारेण ब्रह्मण एव स्थानत्वस्य युक्तत्वात् । नच द्वारत्वे 'नाडीषु सुप्तो भवती'ति सप्तमीविरोधः । सञ्चारस्थानत्वेन तदविरोधात् । गङ्गया सागरं गच्छतो गङ्गायां स्थितिवत् तदुपपत्तेः । तस्मान्नाडीब्रह्मणोः समुच्चयः । एवं पुरीतद्ब्रह्मणोरपि । पुरीततोपि ब्रह्मप्रक्रियायां सङ्कीर्तनात् । 'योऽन्तर्हृदय आकाशस्तस्मिञ्छेत' इति प्रकृत्य, 'पुरीतति शेत' इति कथनात् । हृदयाकाशस्य ब्रह्मत्वं तु दहराधिकरणे सिद्धम् । पुरीतत्तु हृदयवेष्टनम् । एवञ्च तद्वेष्टितो हृदयाकाशः प्राकारपरिक्षिप्तपुरवत् भवतीति हृदयाकाशे शयने पुरीततोपि समुच्चयो जात एवेति । एवञ्च श्रुतिषु स्थानत्रयकथनेपि नाडीपुरीततोर्द्वारमात्रत्वम् । ब्रह्मैव तु सुषुप्तिस्थानमित्युक्तम् ।

तत्र पुरीतत्समुच्चयं त्वनुमन्यामहे । एकवाक्यगतत्वात् । नाडीनां समुच्चयं तु न मृष्यामः । बृहदारण्यके ज्योतिर्ब्राह्मणे 'यत्र सुप्तो न कञ्चन कामं कामयते, न कञ्चन स्वप्नं पश्यति, ता वा अस्यैता हिता नाम नाड्य इति, अथ यत्र सुप्तो न कञ्चन कामं कामयते, न कञ्चन स्वप्नं पश्यति, तद्वा अस्यैतदात्मकाममाप्तकाममकाम९ रूपं तद्यथा प्रियया स्त्रिये'ति नाडीपरमात्मभेदेन अथशब्दात् प्रकृतच्छेदेन च श्रुतस्य 'यत्र सुप्त'वाक्याभ्यासस्य विरोधात् । अभ्यासप्रकृतच्छेदाभ्यां सिद्धे सुषुप्तिस्थानभेदे विकल्पस्यापि प्राप्ततया दुष्टत्वाभावात् । 'ताभिः प्रत्यवसृप्ये'त्युक्ते नाडीषु सर्पण इत्यर्थादपि तत्प्राप्तेश्च । एवं सति कौशीतकीये 'अथास्मिन् प्राण एवे'ति वाक्येपि विकल्पार्थक एवाथशब्दो ग्राह्यः । आनन्तर्यार्थकत्वेपि पूर्वापरकालभेदस्य प्राप्तत्वेन पूर्वकालिकस्य नाडीषु सुष्वापस्याबाधात् । अपरकालिकस्य प्राण एकीभावस्यापि भगवदिच्छाकृतप्रत्यवसर्पणतः

रश्मिः ।

समुच्चयस्तु प्रासादे शेते, ततः प्रत्यवसृत्य पर्यङ्के शेत इति । एकविभक्तिः सप्तमी । हेतोः तच्छ्रुतिरूपस्य साध्याभाववत्यात्मनि सत्त्वेन साधारणत्वात् । नाडीति । तास्वितिपदोक्तनाडीसमुच्चयावधारणात् । अथेत्यस्यानन्तर्यार्थत्वात् । यत्रेति । 'आसु तदा नाडीषु सुप्तो भवती'त्यादौ । प्रकरणाभावादेवकार आत्मव्यवच्छेदकः । ब्रह्मण एवेति । एकवाक्यतासम्भवादेवकारः साक्षान्नाडीव्यवच्छेदकः । सप्तमीति । किन्तु नाडीभिः सुप्तो भवतीति तृतीयापत्तिरित्यर्थः । सञ्चारेति । समस्तो जीवो नाडीषु सञ्चरतीति तथा । तदविरोधात् सप्तम्यविरोधात् । गच्छत इति । काष्ठादेः । समुद्रे गच्छतः काष्ठादेः गङ्गायां समुद्रधारायां काष्ठादिर्गच्छतीति प्रयोगात् । तदुपेति । सप्तम्युपपत्तेः । नाडीब्रह्मणोरिति । नाड्यात्मनोः । कथनादिति । दहरस्य परमात्मत्वनिर्णयात् । अन्तर्हृदय आकाशो दहरः । हृदयेऽन्तराकाश इत्यन्वयः । हृदयवेष्टनमिति । भास्करभाष्येप्येवम् । हृदयाकाश इति । ब्रह्मपुरम् । तदाहुः प्राकारेति । प्राकारो हर्म्यं परिक्षिप्तः यत्र पुरे तद्वत् । जात एवेति । उक्तदृष्टान्तादेवकारः । ब्रह्मैवेति । नाडीपुरीततोर्व्यवच्छेदकैवकारः । सुषुप्तिस्थानभेद इति । नाड्यकामजीवरूपसुषुप्तिस्थानभेद इत्यर्थः । दुष्टत्वेति । अयमग्रे विचारयिष्यते । ताभिरिति । नाडीभिः सह जीवः । प्रत्यवसृप्येत्युक्ते नाडीषु सर्पणम् । पुत्रेण सह तृणं स्पृष्ट्वा गतः पितेत्यत्र पुत्रे तृणस्पर्शवत् । अर्थादाक्षेपादपि तत्प्राप्तेर्विकल्पप्राप्तेः । विकल्पस्तु नाडीपुरीततोः । विकल्पार्थक एवेति । कोशादेवकारः । नन्वष्टदोषदुष्टविकल्पार्थं विकल्पार्थत्वं न युक्तमत आहुः आनन्तर्येति । पूर्वेति । अनन्तरस्य काल-

भाष्यप्रकाशः।

सुखेन सिद्धेश्च। नच नाडीस्वापवाक्ये ब्रह्मणोऽप्रतिषेधात् प्राप्तिरिति वाच्यम्। आभ्यासिकभेदादेवार्थात् तत्प्रतिषेधसिद्धेः। अन्यथा तद्वैयर्थ्यप्रसङ्गस्य दुर्निवारत्वादिति। एवञ्च सुष्वापोत्तरकालीनस्मरणेपि कदाचित् सुखस्य स्वापविशेषणतया भानं कदाचिच्च नेत्यपि युज्यते। नच नाडीषु स्वापे प्रपञ्चदर्शनप्रसङ्गः। सुषुप्तौ कामाभावश्रावणेन मनसो लयावगमात् करणाभावेन मायिकप्रपञ्चानुत्पत्त्या बाह्यस्य च विप्रकृष्टतया करणलयेन च तदप्रसङ्गात्। अतो न दर्शनाभावार्थमपि सत्सम्पत्त्यपेक्षा। किञ्च। सूत्रकारस्यापि सुषुप्तिद्वैविध्यमेवाभिप्रेतम्। अन्यथा 'तदभाव आत्मनि तच्छ्रुते'रित्येव सूत्रयेत्। तावतैव द्वैतदर्शनाभावपाप्मसंसर्गाभावयोः सिद्ध्या नाडीचकारयोर्निर्देशस्य वैयर्थ्यात्। तेनैतत् सिद्धम्। नाडीपरिवर्तने स्वप्नदर्शनम्। तासां प्रान्तभागे पुरीतन्निकटे सुषुप्तिः। पुरीतदन्तर्हृदये आकाशे सत्सम्पत्तिरिति।

ननु भवत्वेवम्, तथापि विकल्पस्य कथमदुष्टत्वमितिचेत्। उच्यते। विकल्पे हि प्राप्तप्रामाण्यपरित्यागः, अप्राप्ताप्रामाण्यस्वीकारः, परित्यक्तप्रामाण्यस्वीकारः, स्वीकृताप्रामाण्यपरित्यागश्चेति

रश्मिः।

विशेषणत्वादिति भावः। **आभ्यासिकेति**। 'यत्र सुप्तो न कञ्चन कामं कामयत' इति वारद्वयमाह, अतो 'यत्र सुप्त' इति वाक्याभ्यासिकभेदात्। अभ्यासस्य भेदकत्वं पूर्वतन्त्रेस्ति। एवकारेण प्रकृतच्छेदयोगव्यवच्छेदः क्रियते। **तत्प्रतीति**। ब्रह्मणः 'योन्तर्हृदयाकाशस्तस्मिञ्छेत' इति श्रुत्युक्तस्य प्रतिषेधसिद्धेः। ननु नञाद्यभावात्कुतस्तत्प्रतिषेधसिद्धिः, अत उक्तं **अर्था**दिति। आक्षेपात्। ननु किमर्थं नञाद्यर्थप्रतिषेधाक्षेप इत्यतो युक्तिमाहुः **अन्यथेति**। **तद्वैयर्थ्यप्रसङ्गस्या**भ्यासिकभेदवैयर्थ्यप्रसङ्गस्य। तथाचाभ्यासिकभेदवैयर्थ्यप्रसङ्गनिवारणार्थमित्यर्थः। **सुष्वापेति**। 'सुखमहमस्वाप्सं न किञ्चिदवेदिष'मिति स्मरणे। **कदाचिच्चेति**। सुखसहचरितदुःखाभावकाले यदि। चिद्यद्यर्थकम्। **मनस** इति। कामरूपवृत्तिमतो मनसः। **करणाभावेनेति**। 'यथा शयानः पुरुषो मनसैवात्ममायया। सृष्ट्वा लोकं परं स्वाप्नमनुविश्यावभासत' इत्युक्तश्रीभागवतवाक्यात्। **तदप्रसङ्गात्** प्रपञ्चदर्शनाप्रसङ्गात्। **अपीति**। पूर्वं सुषुप्तौ प्रपञ्चसत्तार्थं सत्सम्पत्तिः स्वाप्ययसम्पत्तिसूत्रोपन्यासेनोक्ता। तथाच सत्सम्पत्तिश्रुत्युपन्यासो विषयश्रुत्युपन्यासे समाप्तपुनरात्तत्वदोषग्रस्त इति भावः। **एवेति**। नाडीषुपदस्य चशब्दस्य चोपादानादेवकारः। **द्वैतदर्शनेति**। तथाच भाष्यं 'नाडीषु सुप्तो भवती'त्युक्त्वा 'तन्न कश्चन पाप्मा स्पृशती'ति। ब्रह्मसम्पत्तिश्च पाप्मसंस्पर्शाभावे हेतुः समधिगतः। 'सर्वे पाप्मानो निवर्तन्ते अपहतपाप्मा ह्येष ब्रह्मलोक' इत्यादिश्रुतिभ्यः। ब्रह्मसम्पत्त्या द्वैतदर्शनाभावोपि। पाप्मसंसर्गाभावोपि विवृतः। स्वप्नदर्शनसुषुप्तिद्वयविवेकमाहुः **तेनैत**दिति। **प्रान्तभाग** इति। 'ताभिः प्रत्यवसृप्य पुरीतति शेत' इति श्रुतेः। **पुरीतन्निकट** इति। तेन 'पुरीतति शेत' इत्यत्र सामीप्ये सप्तम्युक्ता। **सति सम्पत्ति**रिति[1]। 'आत्मनि चे'त्युक्ता सुषुप्तिरपीयम्। **कथमिति**। शाङ्करप्रश्नः। श्रुतीनां विरोधे विकल्प इति मन्वङ्गीकारात्समादधतिस्म **विकल्पे हीति**। 'नाडीषु सुप्तो भवतीति,' 'पुरीतति शेते,' 'य एषोन्तर्हृदय आकाशस्तस्मिञ्छेत' इति। 'एतदेकवाक्यतापन्ने नाडीपरिवर्तन' इत्याद्युक्ते वाक्ये। विकल्पे हि अष्टौ दोषाः। 'तस्मादात्मैव सुषुप्तिस्थान'मिति शङ्करभाष्ये समुच्चयोऽङ्गीकृतः, तत्र नैकोपीति तान् गणयन्तिस्मानुवादरूपात्। **प्राप्तेति**। 'इषत्वेति शाखां छिनत्ती'त्यनेन खशयनस्य प्राप्तत्वात्। शाखा खशयेति व्याख्यानात्[2]। **अप्राप्तेति**। वैदिकत्वेनाप्राप्तमप्रामाण्यं तस्य स्वीकारः। **परित्यक्तेति**। अर्थबोधार्थं तथा। गौणं प्रामाण्यम्। **स्वीकृतेति**। तदर्थमेव

१. सतित्यत्र रश्मौ सतीति पाठः। २. मीमांसक।

**नाम नाड्यः', 'तद्वा अस्यैतदात्मकाम'मितिभेदेन । सुषुप्तिस्तूभयत्र । ज्ञानशक्तेः सर्वथा तिरोधानात् । तस्मात् सुषुप्तौ न प्रपञ्चसृष्टिः ॥ ७ ॥**

**इति तृतीयाध्याये द्वितीयपादे द्वितीयं तदभावो नाडीष्वित्यधिकरणम् ॥ २ ॥**

**अतः प्रबोधोऽस्मात् ॥ ८ ॥ ( ३-२-३ )**

**प्रबोधे सन्देहः । 'प्रतियोन्याद्रवति बुद्धान्तायैवे'ति जीवसमानधर्मब्रह्म-**

भाष्यप्रकाशः ।

ब्रह्मवाक्यकोटौ दोषचतुष्टयम् । एवं नाडीवाक्यकोटौ दोषचतुष्टये व्रीहियववाक्यवद्योजितेऽष्टौ दोषा इति हि भवतां मतम् । तत्र प्रामाण्याप्रामाण्ययोः स्वरूपं विचारणीयम् । किं सदर्थबोधकत्वं प्रामाण्यम्, असदर्थबोधकत्वमप्रामाण्यम्, उत बोधकत्वं प्रामाण्यम्, अबोधकत्वमप्रामाण्यम्, अथवा अनुष्ठापकत्वं प्रामाण्यम्, अननुष्ठापकत्वमप्रामाण्यमिति । तत्र नाद्येन । वाक्यद्वयेनापि सदर्थबोधस्य जायमानतया तत्त्यागस्याभावेनासदर्थबोधकत्वस्य क्वाप्यनङ्गीकारेण तत्कृतदोषाणामत्राभावात् । अत एव न द्वितीयेन । नापि तृतीयेन । वाक्यद्वयस्यापि सिद्धार्थपरतया अनुष्ठापकत्वस्याभावेन त्याज्यत्वस्य तत्रायोगात् । अननुष्ठापकत्वस्य सर्वसम्मतत्वेन विकल्पानङ्गीकर्तृमतेपि तुल्यतया तत्र पर्यनुयोगानवकाशात् । तस्मात् पूर्वोक्तमनवद्यम् ॥ ७ ॥ **इति द्वितीयं तदभावो नाडीष्वित्यधिकरणम् ॥ २ ॥**

**अतः प्रबोधोऽस्मात्** ॥ ८ ॥ अधिकरणप्रयोजनमाहुः **प्रबोधे सन्देह** इति । तथाच तन्निरासायेदमधिकरणमित्यर्थः । विषयवाक्यमाहुः **प्रतियोनी**त्यादि ।

इदं बृहदारण्यकीयज्योतिर्ब्राह्मणस्थम् । 'स वा एष एतस्मिन् सम्प्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैवे'ति । अर्थस्तु, स प्रकृतो जीवात्मा

रश्मिः ।

वेदान्ताधिकरणमालायां तु 'यदा जीवो नाडीषु शेते, तदा पुरीतद्ब्रह्मवाक्ययोः प्राप्तं प्रामाण्यं परित्यक्तं स्यात् । अप्राप्तं प्रामाण्यं चाङ्गीक्रियेत । यदा पुनः पुरीतद्ब्रह्मणोः शेते, तदा पुरीतद्ब्रह्मवाक्ययोः पूर्वत्यक्तं प्रामाण्यं स्वीक्रियेत । पूर्वस्वीकृतं चाप्रामाण्यं परित्यज्येतेति प्राप्तपरित्यागोऽप्राप्तस्वीकारस्त्यक्तस्वीकारः स्वीकृतत्यागश्चेति दोषचतुष्टयं पुरीतद्ब्रह्मवाक्यकोटौ । तथा नाडीवाक्यकोट्यामपि दोषचतुष्टये योजिते सत्यष्टौ दोषाः सम्पद्यन्त' इति । **एवमिति** । ब्रह्मवाक्योक्तप्रकारेण । **व्रीहीति** । एकपुरोडाशार्थत्वं व्रीहियवयोर्दृष्टम्, तद्वाक्ये तु 'व्रीहिभिर्यजेत यवैर्यजेते'ति च । तद्वत्सुषुप्त्यर्थत्वं ब्रह्मवाक्यनाडीवाक्ययोरिति ब्रह्मवाक्य इव नाडीवाक्ये दोषचतुष्टये योजिते भवतां शाङ्कराणां मतम् । अत्र वितण्डामाहुः **सदर्थेति** । प्रमाकरणं सदर्थबोधकं तत्त्वं प्रामाण्यमित्यर्थः । **बोधकत्वमिति** । अनधिगतार्थगन्तृत्वम् । **वाक्यद्वयेनेति** । विकल्पसङ्ग्राहकेण 'तासां प्रान्तभागे'त्याद्युक्तेन समुच्चायकसङ्ग्राहकेण । 'तस्मादात्मैव सुषुप्तिस्थान'मिति शङ्करभाष्यवाक्येन च । **क्वापीति** । प्रमाणलक्षणत्वेनोक्तव्याख्याकत्वेन च क्वापि । **अत्रेति** । प्रामाणिकविकल्पे । **अत एव** क्वाप्यनङ्गीकारादेव । **सिद्धार्थेति** । नतु साध्यार्थाग्निष्टोमवत्साध्यार्थपरतया । **तत्रेति** । अनुष्ठापकत्वाभावे । **तत्रेति** । विकल्पे । 'यत्रोभयोः समो दोषः परिहारश्च तत्समः । नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारण' इत्युक्तेः ॥ ७ ॥ **इति द्वितीयं तदभावो नाडीष्वित्यधिकरणम् ॥ २ ॥**

**अतः प्रबोधोऽस्मात्** ॥ ८ ॥ **प्रतियोनीत्यादीति** । जीवसमानधर्म ब्रह्म तस्य प्रकरणे ।

**प्रकरणे निरूपितम्। ततो नाडीभ्यः पुनर्हृदयदेशं गत्वा, भगवतो वा समागत्य, जागर्तीति, आहोस्विद्यत्र स्थितः, तत एव जागर्तीति।**

**तत्र श्रुत्यनुरोधात् हृदयदेशमागत्य जागर्तीत्येवं प्राप्ते, उच्यते।**

**अतो नाडीभ्य एव प्रबोधः। गर्तपतितस्य प्रबोधे हि ततो गमनम्। प्रतियो-**

---

भाष्यप्रकाशः।

वै निश्चयेन एषः स्वयंज्योतिः। एतस्मिन् सम्प्रसादे सम्यक्प्रसीदत्यस्मिन्निति सम्प्रसादः सुषुप्तिस्थानं तस्मिन् सम्प्रसादे रत्वा क्रीडित्वा सता सम्परिष्वज्य, चरित्वा 'चर गतिभक्षणयोः' तदानन्दं भुक्त्वा, दृष्ट्वैव पुण्यं च पापं च। चकारात् तदुभयफलभूते सुखदुःखे स्वाप्ने नाडीष्वनुभूय, प्रतिन्यायम्, आयो गमनं नितरामायो न्यायः पूर्वस्मात् गमनात् प्रातिकूल्येन गमनं प्रतिन्यायः, तद्यथा स्यात् तथा, प्रतियोनि, यतः सम्प्रसादे समागतस्तत्स्थानं योनिस्तल्लक्ष्यीकृत्य आद्रवत्यागच्छति बुद्धान्ताय जागरणायेति।

अन्ये तु, रमणं स्वरूपानन्दानुभवः। 'आनन्दभु'गिति श्रुतेः। चरणं सुषुप्तावीश्वरसम्पत्तिः। 'सता सौम्य तदा सम्पन्नो भवती'ति श्रुतेः। पुण्यदर्शनं त्वानन्दानुभवः। तस्य तत्फलत्वात्। सुखमहमस्वाप्समित्यनुभवात्। पापदर्शनं त्वज्ञानानुभवः। तस्य तत्फलत्वात्। न किञ्चिदवेदिषमित्यनुभवादिनेति श्रुतेरित्याहुः। तदग्रे विचारणीयम्।

संशयाकारमाहुः तत इत्यादि। भगवतो वा समागत्येति। भगवतः सकाशात् हृदयदेशं समागत्य।

पूर्वपक्षमाहुः तत्रेत्यादि। श्रुतौ 'चरित्वा प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्ताये'ति गमनार्थकधातूत्पन्नक्त्वाप्रत्ययेन प्रतियोन्याद्रवणात् पूर्वकाले गमनं श्राव्यते। अतस्तदनुरोधात् स्वस्थानं हृदयदेशमागत्यैव जागर्तीत्येवं प्राप्त इत्यर्थः।

सिद्धान्तं व्याकुर्वन्ति अत इत्यादि। श्रुतौ हि प्रतिन्यायमाद्रवणमुक्तम्। तच्चागमनक्रियारूपम्। तादृशी च क्रिया न जागरणं विनोपपद्यते। अतः प्रतिकूलागमनरूपाज्जागरण-

रश्मिः।

सुषुप्त्युत्क्रान्त्यधिकरणे स्फुटम्। न्यायशब्दं व्युत्पादयन्तिस्म आय इत्यादि। योनिर्बीजम्। गमनादिति। हृदयान्नाड्यात्मनो गमनात्। प्रातिकूल्येन नाड्यात्मभ्यां हृदये गमनम्। भगवत इति। 'आत्मनि चे'ति सूत्रांशेन भगवान् स्थानत्वेनोक्तस्तस्मात्। भाष्ये। यत्र स्थित इति। नाडीषु भगवति च। एवकारः प्रतिन्यायव्यवच्छेदकः। प्रकृते। तत्रेतिभाष्यशब्दार्थमाहुः श्रुताविति। प्रतियोनीति। यतः सम्प्रसादे समागतस्तत्स्थानं योनिस्तल्लक्षीकृत्याद्रवत्यागच्छति तस्मात्प्रतियोन्याद्रवणात् पूर्वकाले चरित्वेति गमनं विषयश्रुतौ श्राव्यते। अत इति। उक्तार्थवाचकपदघटितत्वात्। तदनुरोधाद्विषयश्रुत्यनुरोधात्। स्वस्थानं जीवस्थानम्। आगत्यैवेति। भाष्य एवकारो नास्ति, परं पूर्वपक्षिप्रौढ्योक्तः। पुरीतन्नाडीब्रह्मयोगव्यवच्छेदकः। प्रतिन्यायमिति। 'प्रतिन्यायं प्रतियोन्याद्रवती'त्यनेनोक्तम्। आगमनेति। आद्रवतीत्यस्यागच्छतीत्यर्थात्। न जागरणमिति। 'बुद्धान्ताये'त्युक्तजागरणं फलरूपप्रवर्तकं विना नोपपद्यते। 'प्रयोजनमनुद्दिश्य न मन्दोपि प्रवर्तत' इति वाक्यात्। अतः प्रतीति। फलस्य विवक्षणात्। प्रतिकूलागमनं हृदयागमनं तेन रूप्यते व्यवह्रियते यद्बुद्धान्तरूपं जागरणं इन्द्रियैर्विषयग्रहणं तस्मात्फललिङ्गात्। अत इत्यावर्तते। अतो नाम नाडीभ्य एव प्रबोध इत्यर्थः। एवकारो हृदययोगव्यवच्छेदकः। एवकारस्य

न्याद्रवणं तु भगवत इति । किञ्च । प्रबोधोऽस्मात् । अस्मादात्मनः सकाशादेव प्रबोधः । प्रिययेव सम्परिष्वक्तस्य बोधाभावे कथमागमनम् । अत एव सम्परिष्वक्तो निबिडनिद्रः । तस्मात् यत्रैव तिष्ठति, तत एव प्रबोध इति सिद्धम् ॥ ८ ॥

भाष्यप्रकाशः ।

लिङ्गान्नाडीभ्य एव प्रबोधः । युक्तं चैतत् । गर्तपतितस्य प्रबोध एव ततो गमनं लोके यतो दृश्यते । न च 'चरित्वे'त्यस्य विरोधः । 'चर गतिभक्षणयो'रिति भक्षणार्थस्यैव तत्र ग्राह्यत्वात् । 'आनन्दभु'गिति श्रुत्या भोगस्य तत्रोक्तत्वादिति । नच तत्र प्रबुद्धोऽन्यत्र कुतो न गच्छतीति शङ्कनीयम् । श्रुत्यन्तर इन्द्रियाणां यथास्थानं विप्रतिष्ठावदत्र जीवस्य प्रतियोन्याद्रवणं भगवत एव । तस्यैव प्रेरकत्वात् । किञ्च । प्रतियोन्याद्रवणवत् प्रबोधोपि भगवद्धेतुकः । न हि स कर्मणेति वक्तुं शक्यम् । 'अनन्वागतं पुण्येनानन्वागतं पापेने'ति श्रुतेः । किञ्च । तत्र प्राज्ञेन सम्परिष्वक्तः प्रियया स्त्रियेव । न हि तादृशस्य बोधाभावे ततो निर्गत्यागमनं सम्भवति । अत एव सम्परिष्वक्तो निबिडनिद्रः । यदा हि भगवता परिष्वङ्गस्त्यज्यते, तदायं प्रबुध्यते । प्रतियोन्याद्रवति च । एवं सति तदभिप्रायाण्येव 'सत आगत्य न विदुः सत आगच्छामहे' इत्यादीनि वाक्यानि । न तु स्थानान्तराभावाभिप्रायाणि । स्थानान्तरसद्भाव उपपत्तेरुक्तत्वात् । अतो यत्रैव स्वपिति, तत एव प्रबुध्यते, न तु हृदयदेशमागत्येति सिद्धम् ॥ ८ ॥

रश्मिः ।

स एवेतिसूत्रादनुकर्षात् । ननु प्रतिकूलागमनं जागरणे हेतुरुक्तः, स हृदयागमनरूपमिति सौत्रो नाडीभ्यः प्रबोधेपीत्येवकारानुकर्षो व्यर्थ इति शङ्कामपनुदन्तो गर्तेतिभाष्यं विवृण्वन्तिस्म युक्तं चेति । दृष्टान्तपूर्वकं विवृण्वन्तिस्म गर्तेति । विवशाशयस्येति विशेषणमत्र । लोके यतो दृश्यतेऽतो नाडीगर्तपतितस्य प्रबोध एव बुद्धान्तायैव ततो नाडीगर्तेभ्य एव गमनमित्यर्थः । विरोध इति । समस्तस्य गमनासम्भवादिति भावः । एवेति । गत्यर्थयोगव्यवच्छेदकः । प्रतियोन्याद्रवणमितिभाष्यं विवरीतुमाहुः नच तत्रेति । नाडीषु । अन्यत्रेति । हृदयादन्यत्र । श्रुत्यन्तर इति । सप्तान्नब्राह्मणे व्रतमीमांसायां 'वदिष्याम्यहमिति वाग्दध्रे द्रक्ष्याम्यहमिति चक्षु'रित्यादौ । यथास्थानं स्वगोलकान्यनतिक्रम्य विशेषेण प्रतिष्ठा तद्वत् अत्र सुषुप्तौ प्रतियोनिर्हृदयम् । एवेति । रत्वेति श्रुतेः । किञ्च प्रबोध इति भाष्यं विवृण्वन्तिस्म किञ्चेत्यादिना । कर्मणेति । प्रारब्धभोजकेन । अनन्विति । पुण्यपापकर्मनिषेधोऽत्र । अत आत्मनः सकाशादेव बोधः, 'आत्मनि चे'ति पूर्वसूत्रे दर्शनात् । एवकारोत्र कर्मयोगव्यवच्छेदकः । प्रिययेतिभाष्यं विवृण्वन्तिस्म किञ्च तत्रेति । अत एवेतिभाष्यं विवृण्वन्तिस्म अत एवेति । प्रतियोनीति । हृदयम् । आङ्पूर्वको द्रु गतौ धातुः । तदभीति । भगवत्परिष्वङ्गत्यागाभिप्रायाणि । इत्यादीनीति । आदिना 'अहं सर्वस्य प्रभवः' 'मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यह'मिति । 'सत आगच्छामहे' इति ज्ञानेऽर्जुनस्य तं प्रति न वदेद्भगवान् । एवकारव्यवच्छेद्यमाहुः नत्विति । स्थानान्तरं भगवत्परिष्वङ्गः । उपपत्तेरिति । श्रुतार्थानुपपत्तेः पूर्वाधिकरण उक्तप्रायत्वात् । स्थानान्तराभावे श्रुतानि नाडीपुरीतद्ब्रह्महृदयान्यनुपपन्नानि भवेयुरिति । अत्रेदं बोध्यम् । 'न विदु'रित्यज्ञानं भगवत्परित्यागहेतुकम् । न तु भगवत्परिष्वङ्गाभावहेतुकमिति । तस्मादितिभाष्यं विवृण्वन्तिस्म अत इत्यादि । यत्रैवेति । नाड्यादिषु विकल्पपक्षाश्रयणात् । समुच्चयपक्षानाश्रयात् । एवकारः सुषुप्त्यधिकरणान्तरयोगव्यवच्छेदकः । एवकारव्यवच्छेद्यमाहुः नत्विति ॥ ८ ॥

१. हृदयादि ।

# स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥

किञ्चिदाशङ्क्य परिहरति । ननु प्रिययेव प्राज्ञेनात्मना परिष्वक्तस्य ब्रह्मलोकं गतस्य प्रबोधेन ज्ञाने मुक्त एव भवेत्, न तु पुनरागच्छेत्, अतो भगवदिच्छया देहनिर्वाहाय तत्स्थाने नियुक्तोऽन्य एव जीवः समायातु, अन्यतः प्रबोधे तु स एव, व्यवहारस्तु तावता सेत्स्यति, मुक्त्यर्थं प्रयत्नस्तु न कर्तव्य इत्याशङ्क्य, परिहरति तुशब्दः ।

अस्मादपि प्रबोधे स एव । कुतः । कर्मानुस्मृतिशब्दविधिभ्यः । चत्वारो हेतवः । लौकिकवैदिकयोर्ज्ञानकर्मभेदात् । तत्र लौकिके कर्मणि सामिकृतकर्मणः शेषसमापनात् । न हि कश्चिदपि सुप्तप्रबुद्धः[1] सामिकृतं न समापयतीति क्वचित् सिद्धम् । तथानुस्मृतिः । न हि पूर्वदृष्टं न स्मरतीति क्वचित् सिद्धम् । शब्दाश्च 'पुण्यः पुण्येन कर्मणा भवति, पापः पापेन' 'क्वैष तदाभूत्, कुत एतदागा'दिति,

---

भाष्यप्रकाशः ।

स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥ सूत्रमवतारयन्ति किञ्चिदित्यादि । एतेनाधिकरणान्तरत्वं निवारितम् । तुशब्दव्याख्यानमुखेन शङ्कां व्याकुर्वन्ति नन्वित्यादि । अत्र समायात्वित्यन्तमेक आक्षेपः । अन्यत इत्यादिस्त्वन्यः । तथाच लाघवात् द्वितीयः पक्ष एवादर्तव्य इति युक्तम् । किञ्च, अन्यस्मिन् जीवे तत्रागते पितृपुत्रभर्तृभार्यादिव्यवहारविघातापत्तौ स भगवता योगिप्रवेशन्यायेन सेत्स्यतीति कल्प्यम् । किञ्च । मुक्त्यर्थं यत्नस्तु न कर्तव्यः । निद्रयैव तत्सिद्धेः । तेन साधनशास्त्रवैफल्यम् । अन्यतः प्रबोधे तु न कश्चिदपि दोष इति स एवादर्तव्य इत्याशङ्क्येत्यर्थः ।

परिहारं व्याकुर्वन्ति अस्मादित्यादि, सिद्धमित्यन्तेन लौकिकं हेतुद्वयमुक्तम् ।

रश्मिः ।

स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥ निवारितमिति । शङ्काव्यावर्तकत्वेन पूर्वपक्षाव्यावर्तकत्वात् । तुशब्देति । मुखमुपायः । समायात्वित्यन्तमिति । अत्र भाष्य एवकारः 'न स पुनरावर्तत' इति श्रुतेः । अन्यत इति । नाडीतः । स इत्यादि । स व्यवहारः भगवता व्यापकेण सर्वपित्रादिरूपिणा योगिप्रवेशन्यायेन राजादिव्यवहारन्यायेन । मुक्त्यर्थमितिभाष्यं विवृण्वन्तिस्म मुक्त्यर्थमिति । निद्रयैवेति । सुषुप्तेस्तृतीयावस्थात्वेनैवकारः । तत्सिद्धेः 'स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं ही'त्याविष्कृतेन सायुज्ये मुक्तिसिद्धेः । तेनेति । अस्य साधनस्य सकलसाधारण्येन । तत्रागतजीवस्यान्यत्वेन च । स एवेति । द्वितीय एव । निर्दुष्टत्वादेवकारः । परिहारमिति । ॐमिति परिहारम् । अङ्गीकारेण परिहारस्य दृष्टत्वात् । अस्मादित्यादीति । नाडीतोस्मादात्मनोपि प्रबोधे स एव समायाति । लौकिके होलाकाद्युत्सवाख्ये कर्मणि । न स्मरतीति । अनु न स्मरतीत्यर्थः । शास्त्रक्रमेण पूर्वं कर्मोदाहृतम्, पश्चाज्ज्ञानम् । क्वैष तदेति । दृप्तबालाकिब्राह्मणस्थम् । तदेति । सुप्तकाले । 'सति सम्पद्ये'त्यादिश्रुतिः स्पष्टा । आदिशब्दार्थो व्याख्यातः ।

---

१. सुप्तप्रतिबुद्ध इति पाठः ।

तथा 'सति सम्पद्ये'त्यादयश्च । विषयश्च 'श्वोभूते ब्राह्मणं वृणीते' 'श्वोभूते शेषं समाप्नुयात्' 'एक एव यजेत' 'द्वादशरात्रीर्दीक्षितः स्या'दित्यादि, 'यः कामयेत वीरो म आजायेते'त्यादयः । भगवतैव मर्यादारक्षार्थं तथा करणात् । पूर्वपक्षयुक्तयो दुर्बलाः । तस्मात् स एव प्रतिबुध्यते ॥ ९ ॥

---

भाष्यप्रकाशः ।

वैदिकं हेतुद्वयं व्याकुर्वन्ति शब्दाश्चेत्यादि । तथाच सौषुप्तिकसत्सम्पत्त्या मुक्तौ पुण्यपापात्मकफलाभावादुक्तवाक्यं विरुध्येत । 'कैष' इत्यत्रा'प्येष' इत्यनेन सुप्तं आगतं चैकमेव परामृशति । तदपि विरुध्येत । 'सति सम्पद्ये'त्यत्रापि सर्वासां प्रजानामज्ञानं वदति । यदि ता मुक्ताः स्युः, तदा अज्ञानोक्तिरपि विरुध्येत । अत एते शब्दाः सुप्तप्रबुद्धस्यैकस्यैव ज्ञापकाः । एवं विषयोपि । ननु भवत्वेवमेकः, तथापि भगवत एव प्रबोधे मुक्त्यापत्तिः कथं परिहर्तव्येत्यत आहुः भगवतेत्यादि ।

अयमर्थः । 'नायमात्मे'ति श्रुत्या भगवज्ज्ञानं प्रति वरणमेव साधनम् । तच्च मर्यादायां साधनद्वारैवेति मर्यादारक्षार्थं भगवता बोधसमये मुक्त्यजनकस्वाज्ञानकरणात् न मुक्तिरिति शेषः । 'सति सम्पद्य न विदुः सति सम्पद्यामह' इत्यादिश्रुत्या तथा निश्चयात् । अतः पूर्वपक्षयुक्तीनां दुर्बलत्वात् भगवतः सकाशात् प्रबोधेपि स एव प्रबुध्यत इत्यर्थः ॥ ९ ॥

रश्मिः ।

पुराणस्यापि वेदत्वात् । एक एवेति । द्वितीयादिजीवपत्न्यृत्विग्योगव्यवच्छेदकः । मे इति । मत्तः । वैदिकज्ञानकर्मणोः सिद्धार्थमाहुः तथाचेति । मुक्ताविति । अद्वैतरूपायाम् । पुण्यपापाभ्यां कर्मभ्यां आत्मा स्वरूपं यस्य मुक्तिरूपफलस्य तदभावात् । 'पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैती'ति श्रुतेः । उक्तवाक्यं पुण्यपापरूपसाधनसत्ताया मुक्तौ बोधकं वाक्यम् । तदन्यजीवपक्षे विरुध्येतेत्यर्थः । आगतमिति । हृदयान्नाडीष्वागतं जीवम् । एकमेवेति । एष इत्येकवचनादेवकारो द्वितीयादिजीवयोगव्यवच्छेदकः । तदपि एकत्वमपि । ता इति । प्रजाः । एत इति । 'पुण्येन' 'पापेन' 'एषः' 'न विदु'रित्यादिशब्दाः । एकस्यैवेति । द्वितीयादिजीवयोगव्यवच्छेदकैवकारः । एवमिति । वृणीतेत्येकवचनात् । समाप्नुयादित्येकवचनात् । 'एक एवे'ति सावधारणात् । 'द्वादशरात्री'रित्यत्यन्तसंयोगे द्वितीया । 'दीक्षित' इत्येकवचनाच्च । एवमग्रेपि । एवं विषयोपि सुप्तप्रबुद्धस्यैकस्यैव ज्ञापका बोध्याः । एक इति । नान्यः । भगवत एवेति । पञ्चम्यन्तं पदम् । एवकारो नाडीयोगव्यवच्छेदकः । मर्यादापदेन मर्यादामार्गं गृहीत्वा वरणशब्देन स्वकीयेन स्वीकारं गृहीत्वा व्याचक्रुः अयमिति । भगवज्ज्ञानमिति । स्मार्तः प्रयोगः । गीतायां तथादर्शनात् । श्रौतवरणपदार्थः । लभ्यः प्राप्तव्यः । सा च वरणव्यापारज्ञानमन्तरा न भवतीति । एवेति । ज्ञानयोगव्यवच्छेदकः । ज्ञाने सति वरणेन व्यापारेण लभ्य इत्यस्य सुवचत्वात् । एवेति । भक्तिहेतुनिर्णयग्रन्थोक्तपुष्टिमार्गीयकेवलानुग्रहयोगव्यवच्छेदकः । अत्र साधनं मुक्त्यजनकस्वाज्ञानम् । तेन सुषुप्तिमर्यादारक्षार्थम् । भगवतेति । अत्र भाष्ये एवकारः स इच्छायोगव्यवच्छेदकः । भगवति सतीच्छाऽप्रयोजिकेति ज्ञापकः । नाडीयोगव्यवच्छेदको वा । इत्यादीति । आदिना 'इमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विदन्तीति' 'न विदु'रिति निश्चयादिति । न विदुरितिशब्दाभ्यां तथा । पूर्वपक्षेतिभाष्यं विवृण्वन्तिस्म अत इत्यादि । 'व्यवहारस्त्वि'त्यादिभाष्योक्तानाम् । प्रबोधेपीति । नाडीप्रबोधसमुच्चायकोपिः । स एवेति । नान्यः ॥ ९ ॥

## मुग्धेऽर्धसम्पत्तिः परिशेषात् ॥ १० ॥

किञ्चिदाशङ्क्य परिहरति । ननु यत्र कर्मानुस्मृतयो न सन्ति, तत्रान्यो भविष्यति, कश्चिन्मूर्च्छादिविशेषे सर्वस्मृतिनाशेन मुग्धभावदर्शनात्, तत्र यथा लौकिकवैदिकव्यवहाराः, तथान्यत्रापि भविष्यन्ति, अनुस्मरणादयश्च बुद्धिवृत्तयः, गङ्गाप्रवाहजलस्य गङ्गावत्, य एव चिदंशस्तत्रायाति, स एव तथा भवतु, किं स एवेति निर्बन्धेनेत्याशङ्क्य परिहरति ।

---

भाष्यप्रकाशः ।

मुग्धेऽर्धसम्पत्तिः परिशेषात् ॥ १० ॥ सूत्रमवतारयन्ति किञ्चिदित्यादि । एतदेव विभजन्ते नन्वित्यादि । यत्रैते हेतवः सन्ति, तत्र स एव भवतु । यत्र पुनरैक्यसाधका एते हेतवो न सन्ति, यथा मूर्च्छाविशेषनिवृत्त्यनन्तरमतिमुग्धे अमरुनामके राजनि । तद्देहे शङ्कराचार्यजीवप्रवेशस्य लोके प्रसिद्धेः । अतस्तादृशे मुग्धे यथा लौकिकवैदिकव्यवहाराः, तथा सौषुप्तिकेऽप्यन्यजीवे भविष्यन्ति । किञ्च । अनुस्मृत्यादयो बुद्धेर्वृत्तयः, ता जाग्रत्यपि नाना भवन्ति । अतो गङ्गाप्रवाहे पतितस्य जलान्तरस्यापि यथा गङ्गावत् व्यवहारः, तथा य एव चिदंशस्तस्मिन् बुद्धिवृत्तिप्रवाह आयाति, स एव पूर्वकर्मसमापनकर्ता भवतु । एवं शब्दा विषयश्च बुद्ध्यैक्यमादायैव नेतव्या इति लौकिकवैदिकव्यवहारसिद्धौ किं स एव समायातीति निर्बन्धेनेत्याशङ्क्य परिहरतीत्यर्थः ।

परिहारं व्याकुर्वन्ति मुग्ध इत्यादि । मूर्च्छाद्यनन्तरं जीवतो मुग्धभावे अर्धसम्पत्तिः तत्तदितरानिश्चायिका साधारण्येव बुद्धिर्विचारकस्य भवति, न सर्वा, नान्यतरनिश्चायिकेत्यर्थः ।

रश्मिः ।

मुग्धेऽर्धसम्पत्तिः परिशेषात् ॥ १० ॥ एते हेतव इति । 'अनुस्मरणादयश्च बुद्धिवृत्तय' इति भाष्यात् । अन्यजीव इति । 'ननु प्रिययेवे'ति भाष्योक्ते । न सन्तीति । 'तत्रान्यो भविष्यती'तिभाष्यमत्र ज्ञेयम् । दृष्टान्तमुखेन कश्चिन्मूर्च्छादीतिभाष्यार्थमाहुः यथा मूर्च्छेति । मूर्च्छाविशेषो मरणमूर्च्छाभिन्नः । अतिमुग्धे इति । एकदेशविकृतिन्यायेन भाष्ये मुग्धशब्द इत्याशयः । भाष्ये मूर्च्छादीत्यत्रादिशब्देनाघातः । राजनीति । सर्वस्मृतिनाशेन मुग्धभावदर्शनादिति भाष्यं योजनीयम् । सर्वस्मृतिनाशो 'मेनेऽसन्तमिवात्मान'मिति वाक्योक्त इव । अत्र हेतुः तद्देह इत्यादिः । तत्र यथेतिभाष्यं विवृण्वन्तिस्म अतस्तादृश इति । तथान्यत्रापीति भाष्यविवरणं तथा सौषुप्तिकेत्यादि । अन्वित्यादिभाष्यं विवृण्वन्ति स्म किञ्चेति । 'अनुस्मरणादय' इत्युक्ते शाङ्करोक्तोपाधिबुद्धिसरणमाकस्मिकं स्यात्तदर्थं लाघवाय सौत्रानुस्मृतिशब्दपुरःसरं व्याकुर्वन्तिस्म अनुस्मृत्यादय इति । 'बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यपरोपि दृष्ट' इति श्रुतेर्जीवोपाधिबुद्धेर्वृत्तयः । आदिना पूर्वदृष्टस्मरणानुव्यवसायस्मृतस्मरणे । य एवेति । अन्ययोगव्यवच्छेदकः । बुद्ध्यैक्यमिति । बुद्ध्यैक्यमेवादाय । जीवैक्ययोगव्यवच्छेदकैवकारः । स एवेति । अन्ययोगव्यवच्छेदक एवेति । नान्यः समायातीति । गङ्गेत्यादिभाष्यस्य गङ्गाप्रवहणजले प्रवहणक्रियैक्यप्राप्ते जले । कर्मादीनां सम्बन्धसामान्यविवक्षायां षष्ठी । गङ्गाम्बुवपुस्तद्वदित्यप्यर्थः । मूर्च्छादीति । आदिनाघात इत्युक्तम् । तत्तदिति । तत्तत् च यत् इतरत् तत्तदितरत् । कर्मधारयः । तस्यानिश्चायिका । साधारण्येव, नतु तत्तद्विषयिकाऽसाधारणीत्येवकारार्थः । सापि विचारकस्य, अविचारकस्य तु राजामरुवत्सर्वापि । नान्यतरेति । तयोस्तयोः संशयविषययोरन्यतरस्य निश्चायिका । ततश्च तयोः संशायिकेति सर्वेत्यु-

मुग्धे मुग्धभावे अर्धसम्पत्तिरेव, न सर्वा । नहि मुग्धस्य यज्ञादावधिकारोऽस्ति । पूर्वप्रवृत्तानि तु जीवनाधिकारात् क्रियन्ते । लौकिकव्यवहारोपि नापूर्वः सिध्यति । पूर्वोक्तहेतुसद्भावे तु न कोपि दोषः । अतो मुग्धे अर्धसम्पत्तिः पूर्वैव, नोत्तरा । कुत एतत् । परिशेषात् । स एव वा, न वेति निश्चयप्रमाणानामभा-

भाष्यप्रकाशः ।

कथमर्धेत्याकाङ्क्षायामेतदेव व्युत्पादयन्ति न हीत्यादि । मुग्धस्येति । मूर्च्छोपरतावपि निवृत्तपूर्वसंस्कारस्य ।

अयमर्थः । शास्त्रार्थवत्त्वाधिकरणे कर्तृत्वं जीवगतमेव, न तूपाधिगतमिति स्थितम् । अतः शब्दा विषयश्च जीवमेव विषयीकुर्वन्ति । तत्र 'अर्थी समर्थो विद्वा'नित्यादिनोक्तो यो यज्ञादावधिकारः, स मुग्धस्य तस्यापि नास्ति, अर्थित्वाद्यभावात्, अतोऽपूर्वाणि न क्रियन्ते । पूर्वप्रवृत्तानि त्वग्निहोत्रादीनि जीवनाधिकारात् क्रियन्ते । एवं लौकिकव्यवहारोपि पूर्व एव निर्वहति, नापूर्वः कोपि सिध्यति । असिद्धे च तस्मिंस्तत्र स वा, अन्यो वेति निर्णेतुं न शक्यते । लोके अमरुशरीरे अन्यस्येव, ब्रह्मवैवर्तब्रह्मखण्ड उपबर्हणगन्धर्वशरीरे तस्यैव प्रवेशस्मरणात् । वसिष्ठोपदिष्टविस्मृतमन्त्रपूजादेस्तत्पत्न्या बोधनेनातिमुग्धताया अपि स्मरणाच्च । अतो यत्र मुग्धभावानन्तरं कर्मानुस्मृत्यादिहेतूनां सद्भावः, तदा तु स एव तत्र जीव इति न कोपि शब्दादिविरोधदोषः । यत्र पुनरनुस्मृत्याद्यभावः, तत्र, अत उक्तदोषात् हेतूनां पूर्वैव संपत्तिः, नोत्तरेत्यर्धैव विचारकस्य बुद्धिरित्यर्थः । अत्र पृच्छति कुत इत्यादि । एतत् अर्धमपि कुत इत्यर्थः । तत्रार्धसत्तायां हेतुं विवृण्वन्ति स एव वा न वेत्यादि । प्रसक्तप्रतिषेधे यः प्रसक्तस्तदप्रतियोगी स परिशेषः ।

रश्मिः ।

च्यते । शास्त्रार्थेति । गताध्यायेऽस्ति । एवेति । उपाधिव्यवच्छेदकः । तदेवाहुः नत्विति । जीवमेवेति । न तूपाधिम् । उक्त इति । कचिच्छास्त्रे उक्तः । तस्यापीति । विचारकस्यापि । पूर्वेतिभाष्यं विवृण्वन्ति स्म पूर्वप्रवृत्तानीति । जीवनेति । 'यावज्जीवमग्निहोत्रं जुहोती'ति श्रुत्या । लौकिकेतिभाष्यं विवृण्वन्ति एवं लौकिकेति । पूर्व एवेति । अपूर्वयोगव्यवच्छेदकः । सिध्यतीति । पूर्वकर्मवदपूर्वकर्मणि विध्यभावान्न सिध्यति । तस्यैवेति । गन्धर्वस्य । एवकारेण नान्यस्य । वसिष्ठेति । गन्धर्वस्य । पूर्वोक्तेतिभाष्यं विवृण्वन्ति स्म अतो यत्रेति । स एवेति । हेतुसत्त्वे साध्यसत्त्वनियमादेवकारः । न कोपीति । साधारण्यादिहेत्वाभासरूपोपि । शब्दादिसहानवस्थानलक्षणविरोधरूपो दोषः । अत इतिभाष्यं विवृण्वन्ति स्म यत्र पुनरिति । गन्धर्वे । उक्तेति । शब्दादिविरोधदोषात् । पूर्वैवेति । कर्मरूपा । एवकारः उत्तरानुस्मृत्यादियोगव्यवच्छेदकः । तेनार्धा कर्मसम्पत्तिः । नोत्तरेति । अनुस्मृतिशब्दविधिरूपा । नेत्येवमेवकारव्यवच्छेद्योत्तरा सम्पत्तिरुक्ता । तेनार्धसम्पत्तिरंशसंपत्तिः । अर्धसम्पत्तित्वेनार्धसम्पत्तिस्वीकारः । अर्धमपीति । अपिनांशरूपं गौणार्धम् । अर्धसत्तायामिति । गौणमुख्यार्धसत्तायाम् । हेतुं विशेषम् । स वान्यो वेत्युक्ते संशय एवकारघटितत्वे प्रत्यभिज्ञेत्याशयेन विवृण्वन्ति स्म प्रस्तुते[1] ति । प्रस्तुतं पूर्वसूत्र एक्यं हेतुचतुष्टयकं तस्य प्रतिषेधः नवेति द्वितीयकोट्युक्तः । तस्मिन् सति यः प्रसक्तोऽभावः तत्प्रतियोगिहेतुचतुष्टयकमैक्यम् । तदप्रतियोगी

१. प्रसक्तेत्यत्र प्रस्तुतेति रश्मिपाठः ।

वादर्थात् सन्देहोऽवशिष्यते। तस्मात् सन्देहान्मुग्धे अर्धप्रतिपत्तिः।

भाष्यप्रकाशः।

प्रकृते च स एवायं न वेति सन्देहे एकतरनिश्चयजनकप्रमाणानामभावात् सन्देह एवार्थाभिधेयाप्रतियोगित्वेनावशिष्यते। अतः स एव परिशेष इत्यर्थः। सिद्धमाहुः तस्मादित्यादि। उक्तविधात् परिशेषरूपात्सन्देहान्मुग्धेऽर्धप्रतिपत्तिरर्धं ज्ञानं विचारकस्य, तस्मादेव पूर्वा संपत्तिः, न तु निश्चयात्। अतो मुग्धदृष्टान्तेन न सौषुप्तिकसिद्धान्तभङ्ग इत्यर्थः। किञ्च, अत्र प्रतिपत्त्यादिपदमनुक्त्वा यत् संपत्तिपदमुक्तम्, तेन मुग्धे मूर्च्छितेऽर्धसंपत्तिः। यथा नाडीषु सतो नैकट्यात् दुःखाभावमात्ररूपार्धसंपत्तिः, तथेति बोध्यते। तेन कालीयदमनस्थले मूर्च्छितस्यार्धसंपत्त्या इन्द्रियाणां प्राणानां च पुनरागमनं यदुक्तम्, तदपि न विरुध्यत इति बोधितम्। अनुस्मृत्या च स एव जीव इत्यपि। अविचारस्तु जीवावस्थाभावत्वादेवेति च। एवमत्र प्रासङ्गिकपरिहारेण सुषुप्तेः प्रबुद्धः स एव, न त्वन्य इति निर्णीतम्।

अन्ये तु। अस्मिन् सूत्रे मुसलाद्यभिघातजन्यां मूर्च्छां विचारयन्तो, 'जाग्रत्स्वप्नः सुषुप्त'मिति तिस्रोऽवस्था बृहदारण्यके जीवस्योक्ताः, ताः पूर्वं विचारिताः, उत्क्रान्तिश्चतुर्थी, साग्रे विचारयिष्यते, इयं तु न जाग्रत्स्वप्नयोरन्तर्भवति, ज्ञानाभावात्, नापि सुषुप्तौ, निमित्तभेदादाकारभेदाच्च, नापि मरणे, प्राणोष्मणोरुपलम्भात्, अतः परिशेषादियं पञ्चमीत्याहुः।

रश्मिः।

स एव वा नवेति सन्देहः स परिशेष इत्यर्थः। सन्देह इति। प्रत्यभिज्ञाविषयविषयके सन्देहे द्वितीयकोटिसहिते। कोट्योरेकतरनिश्चये प्रमाणानां शब्दयोगिप्रत्यक्षानुमानानामभावात्। सन्देह एवेति। एकतरयोगव्यवच्छेदकैवकारः। स एवेति। सन्देहः। एवकारः पूर्ववत्। अर्धं ज्ञानमिति। सन्देहार्धं स एवेति ज्ञानम्। तस्मादेव अर्धज्ञानात्। एवेति। कर्मयोगव्यवच्छेदकः। गौणत्वात्। किञ्च, ननु स एवेत्येकविषयकान्निश्चयात्। पूर्वोत्तरीयभावाभावात्। अत इति। आभ्यां सन्देहात् परिशेषरूपात् निश्चयाभावाच्चेत्यर्थः। मुग्धेति। सुषुप्तिः स एवेत्यैक्यवती कर्मानुस्मृतिशब्दविधिभ्यः सैवेयं दीपमालिकेतिवत्। अस्य सौषुप्तिकसिद्धान्तस्य। मुग्धदृष्टान्तेन सुषुप्तिः न स एवेत्यैक्यवती। परिशेषात्। मुग्धवदिति सत्प्रतिपक्षाद्भङ्गो नेत्यर्थः। किञ्च, अत्रेति। सूत्रे। तेनेति। सत्स्मारकेण सम्पत्तिशब्देन। 'सता सौम्य तदा संपन्नो भवती'त्यत्र सत्सम्पत्तिरित्यत्र च सम्बन्धावधारणादेकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति सत्स्मारकत्वम्। हेतुचतुष्टये कर्मरूपार्धसम्पत्तिः स एवेत्यर्धसम्पत्तिः सन्देहे। मोक्षेऽर्धसम्पत्तिं दृष्टान्तेनाहुः यथेति। दुःखेति। 'दुःखाभावः सुखं चैव पुरुषार्थद्वयं मत'मिति मोक्षेऽर्धसम्पत्तिर्दुःखाभावरूपा। असौत्री नात्र दार्ष्टान्तिके सन्देग्धव्या। मूर्च्छितस्येति। नन्दादिषु यस्यकस्यचिन्मुग्धस्य त्रिविधार्धसम्पत्तिः। यदुक्तमिति। श्रीभागवते यदुक्तम्। ननु नन्दादीनां गर्गोपदिष्टानां कुतो न 'नारायणसमो गुणै'रित्यस्य विचारो मोहजनक इत्याशङ्क्याहुः अविचार इति। विचारस्य न जीवावस्थात्वम्। प्रकरणं तु जीवावस्थानामिति भावः। एवकारो मोहयोगव्यवच्छेदकः। अत्रेति। सूत्रद्वये। प्रासङ्गिक आशङ्काविषयस्तस्य परिहारेण। स एवेति। उक्तद्वितीयकोटिकः। नत्वन्य इति। प्रथमकोटिको नेत्यर्थः। निमित्तेति। मूर्च्छाया मुशलाद्यभिघातो निमित्तम्। सुषुप्तौ तु तमः। 'न किञ्चिदवेदिष'मिति तमःकार्याज्ञानकथनात्। इति भेदात्। उपेनि। मूर्च्छायां

न तत्र प्राणायनविघातकृता मूर्च्छा विचार्यते। तस्याः प्राणधर्मत्वात्। यथा बाल्यं शरीरधर्मः। व्यर्थश्च विचारः। जीवावस्था एव हि विचार्यन्ते। केवलसाक्षिवादस्तु न ब्रह्मवादः। तस्मादेक एव जीवः स्वप्नादिदोषसम्बन्धरहितस्तादृशजन्म-

भाष्यप्रकाशः।

तत् दूषयन्ति न तत्रेत्यादि। तत्रावस्थासु इन्द्रियादिस्थानभूतगोलकाभिघातकृता मूर्च्छा तु न विचार्यते, तस्याः प्राणानां स्वस्थानपरित्यागेन जायमानतया प्राणधर्मत्वात्, अतो यथा बाल्यं शरीरधर्मो न विचार्यः, तथेयमपि। किञ्च, अयं व्यर्थो विचारः। यथा भवन्मते नाड्यः पुरीतद्वा सुषुप्तिस्थानमिति विज्ञानेन न किञ्चित्प्रयोजनम्, तथैतज्ज्ञानेनापि न किञ्चित् प्रयोजनम्।

यत् पुनर्भामत्याम्, एतस्या अवस्थान्तरत्वे तत्प्रविलयाय यत्नान्तरमास्थेयमित्येतद्विचारप्रयोजनमुक्तम्। तदपि तदा युज्येत, यदि सूत्राणि संसारव्यवहाराय प्रवृत्तानि स्युः। आराज्ज्ञानोपयोगस्तु शरीरारोग्यस्याप्यस्तीति वयसः स्थापनमपि सूत्रे विचारयेत्। अतो न किञ्चिदेतत्।

नच जीवस्य केवलं साक्षित्वात् सर्वा अप्यवस्थास्तदुपाधीनामेवेति प्राणावस्थारूपाया अस्या अपि विचारे को दोष इति वाच्यम्। यतः केवलसाक्षिवादो न ब्रह्मवादः। 'सुषुप्त्युत्क्रान्त्योर्भेदेने'त्यत्र सम्यङ्निवारितत्वात्। अतोऽस्या जीवावस्थात्वाभावाद्व्यर्थैवैतद्विचार इत्यस्य सूत्रस्य सुषुप्त्यधिकरणशेषत्वमेव युक्तमित्यर्थः।

भास्कराचार्यैस्तु केवलसाक्षिवादेऽन्यद्दूषणमुक्तम्। येषामीश्वर एव साक्षात् संसारीति दर्शनम्, तेषां न पूर्वपक्षोऽवकल्पते, न सिद्धान्त इति। तथाच 'स एव त्वि'ति सूत्रवैयर्थ्यापात इति तेषामाशयः।

सिद्धमाहुः तस्मादित्यादि। यस्मादस्मिन्नधिकरणे यः सुषुप्तो भवति, स एव प्रबुध्यत इति सिद्धम्, पूर्वाधिकरणे च स्वप्नादेर्मिथ्यात्वम्, पूर्वपादे च योग्यशरीरावाप्तिप्रकारः सिद्धः, तस्मादेक एवेत्यादिना यदुक्तम्, तत् सिद्धमित्यर्थः।

भिक्षुस्तु। एतां मूर्च्छां सुषुप्तिविशेषत्वेनाङ्गीकृत्य, मुग्धे अस्पष्टज्ञाने पुरुषे अर्धसंपत्तिरूपा

रश्मिः।

तथा। न तत्रेत्यादीति। नत्वत्रेत्यपि क्वचिद्भाष्यपुस्तके पाठः। तस्या इति भाष्यं विवृण्वन्ति स्म तस्या इत्यादि। मूर्च्छायाः प्राणपरित्यागेनेत्याद्यग्रे स्पष्टम्। यथेतिभाष्यं विवृण्वन्ति स्म अतो यथेति व्यर्थ इतिभाष्यं विवृण्वन्तिस्म किञ्चेति। इत्येतदिति। इत्येतज्ज्ञानं विचारप्रयोजनम्। आरादिति। संसारव्यवहाराय प्रवृत्तानीत्यङ्गीकार आराज्ज्ञानोपयोगः दूरज्ञानोपयोगः। शरीरेति। वयसः स्थापनस्य। अतो न किञ्चिदेतत्। किन्तु जीवावस्था एव विचार्यन्त इति। एवकारेण प्राणधर्मयोगव्यवच्छेदः क्रियते। केवलेति भाष्यं विवरीतुमाहुः नचेति। एवेति। साक्षियोगव्यवच्छेदकः। विवृण्वन्तिस्म यतः केवलेति। सुषुप्त्यधीति। तव मते तथा। एवेति। अवस्थात्रयप्रसिद्ध्या तुरीयाकाङ्क्षायां चतुर्थीति, नतु पञ्चमीत्येवकारः। ईश्वर एवेति। अवधारणविषय ईश्वरः। साक्षादिति भिन्नजीवः, न संसारी। न पूर्वपक्ष इति। स एवान्यो वा प्रतिबुध्यत इत्यनियमरूपः पूर्वपक्षो न, तथा स एवेति नियमरूपसिद्धान्तो न। पूर्वपक्षस्यान्यो वेति भेदघटितत्वात्। सिद्धान्ते स एवेत्यत्र भेदघटितान्ययोगव्यवच्छेदकैवकारघटितत्वादवकल्पत इत्यर्थः। तथाचेति। स एवेतिसूत्रविषये भास्करभाष्ये च। तेषामिति। भास्कराचार्याणाम्। एक एवेति। भाष्येण। भिक्षुरिति। भगवान् भिक्षुः। अर्धसंपत्तिरूपेति। सुखमहमस्वाप्समित्यर्धसम्पत्तिरूपा इयमेव अस्पष्टज्ञानम्।

**युक्तो भगवज्ज्ञानरहितो ज्ञानाधिकारीति सिद्धम् ॥ १० ॥**

**इति तृतीयाध्याये द्वितीयपादे तृतीयमतः प्रबोध इत्यधिकरणम् ॥ ३ ॥**

---

भाष्यप्रकाशः ।

सुषुप्तिर्भवति, यथा संप्रज्ञातासंप्रज्ञातभेदेन योगो द्विविधो भवति, तथा सुषुप्तिरपीति । इमां च ब्रह्मण्यधर्मसंपत्तिरूपां सुषुप्तिमधिकृत्य, 'आनन्दभुक् चेतोमुखः प्राज्ञः' 'जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चं यत् प्रकाशत' इत्यादिश्रुतयः प्रवृत्ता इत्याह ।

तत्र । श्रुतीनां या प्रवृत्तिः, सा नाडीषु सुषुप्तिमादायाप्युपपद्यमाना न मोहावस्थामपेक्षत इति न श्रुतिभ्यस्तत्रान्तर्भावः शक्यवचनः । सुखदुःखमोहानुस्मृतीनां रोमहर्षवेपथुवैकृत्यादीनां च दर्शनेन सुषुप्तेः सकाशाद्भेदस्य स्वयमेवाङ्गीकारात् तस्याः सुषुप्तावन्तर्भावेपि हेत्वभावः । नचायोगिनां जीवद्दशायां बृहदारण्यकेऽवस्थात्रयस्यैवोक्तत्वाज्जाग्रत्स्वप्नयोर्वैलक्षण्ये परिशेषात् सुषुप्तावन्तर्भाव इति युक्तम् । परिशेषस्य मरणार्धसंपत्तावपि तौल्यात् । नच पुनरुत्थानान्न मरणेऽन्तर्भाव इति वाच्यम् । नामभ्रान्त्या यमदूतनीतानामपि पुनरुत्थानात् । षष्ठस्कन्धे चित्रकेतुसुतस्य पुराणान्तरेषु सावित्रीपत्युः सत्यवतश्च पुनरुत्थानकथनाच्च ।

अतो मरणं सर्वप्राणदेहसंबन्धोपरतिः, मूर्च्छा तु सूक्ष्मप्राणदेहसंबन्धावस्थितिरिति रामानुजाचार्योक्तमेवात्र युक्तम् । परमेतद्विचारस्यात्र प्रयोजनं तैरपि नोक्तम् ।

**माध्वास्तु भिक्षुवदेवाङ्गीकुर्वन्ति ॥ १० ॥ इति तृतीयमतः प्रबोध इत्यधिकरणम् ॥ ३ ॥**

रश्मिः ।

**सम्प्रज्ञातेति** । सबीजनिर्बीजसमाधिः । 'परो हि योगो मनसः समाधि'रिति वाक्यात् । तत्र शब्दार्थज्ञानविकल्पे संकीर्णा सवितर्का समापत्तिः । **तत्रेति** । समापत्त्योर्मध्ये । स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्केति तयोर्लक्षणे । **इमामिति** । सम्प्रज्ञातसमाधिवदस्पष्टज्ञानरूपाम् । **आनन्दभुगिति** । सुखमहमस्वाप्समित्यर्थे सुखत्वेनानन्दभुक् मनोबुद्धिचेतस्सु सुषुप्तिश्चेतोमुखः चेतउपाया चेतःकरणा । प्राज्ञस्तु सुषुप्तिसाक्षी । **यदिति** । यदव्ययं प्रकाशते । अत्र यदव्ययं प्राज्ञः । **इत्यादीति** । आदिना 'यत्र न कंचन कामं कामयते न स्वप्नं पश्यती'ति । वितण्डां वारयन्ति स्म **न मोहेति** । मूर्च्छावस्थां नापेक्षते । **तत्रान्तरिति** । अवस्थात्रये मूर्च्छान्तर्भावः । **रोमेति** । आदिना स्नेहः । **स्वयमिति** । भगवता भिक्षुणैव । नान्येन युक्तिं सहपक्षकेण । **तस्या** मूर्च्छायाः । **एवेति** । अन्यावस्थाव्यवच्छेदकः । **मूर्च्छा** सुषुप्त्यन्तर्भूता । अवस्थात्रयबोधकबृहदारण्यकात् । जाग्रत्स्वप्नवैलक्षण्यपरिशेषवत् इत्यनुमानमाहुः **नचायोगिनामिति** । अयं हेतुः हेतुतावच्छेदकलाघवे उक्तो हेतुः । **परिशेषादिति** । शङ्कराचार्यजाग्रत्स्वप्नवदिति स्फुटम् । अतः सन्देहात् सुषुप्तौ स्वप्नवज्जाग्रतोप्यन्तर्भावः । अयं दृष्टान्तः । **सुषुप्तावित्यादि**साध्यम् । **स्मरणादिति** सौत्रात्स्मरणात्प्रमाणात् संशयार्धसम्पत्तावपि । **तौल्यादिति** । एककोटिकस्य । एवं कृते मूर्च्छाया मरणेन्तर्भावः वैद्यके प्रसिद्धः । 'मूर्च्छायां चतस्रो गुटिकाः संजीविन्या देया' इति । जीवनसंभावनाकर्त्री संजीवनीति । तत्र शङ्कते **न चेति** । **यमेति** । नृगाजामिलप्रभृतीनाम् । **पुनरुत्थानेति** । मृतस्य । **एवात्रेति** । मूर्च्छाविषयेऽन्ययोगव्यवच्छेदः क्रियते । रामानुजाचार्यवचनात् । **तद्युक्तम्** । **एवेति** । अन्यप्रकारयोगव्यवच्छेदकः ॥ १० ॥ **इति तृतीयमतः प्रबोध इत्यधिकरणम् ॥ ३ ॥**

## न स्थानतोपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥ (३. २. ४.)

इदानीं विषयनिर्धारार्थं ब्रह्मस्वरूपं विचार्यते । तत्र प्रथममन्योन्यविरुद्ध-वाक्यानां निर्णयः क्रियते । तदर्थमेतावत् सिद्धम् । समन्वयाविरोधाभ्यामेकमेव ब्रह्म प्रतिपाद्यत इति । तत्र यथा कार्यविरोधः परिहृतः, एवं ब्रह्मधर्मविरोधोपि परिहरणीयः । अन्यथा अबोधकता स्यात् । तत्र स्वगतधर्माणामविरुद्धानामग्रिम-पादे विचारः । जडजीवधर्मत्वेन प्रतीतानामत्र विचारः क्रियते ।

---

### भाष्यप्रकाशः ।

**न स्थानतोपि परस्योभयलिङ्गं सर्वत्र हि ॥११॥** प्रस्तूयमानस्य ग्रन्थस्य सङ्गतिं वदन्तः प्रयोजनमाहुः इदानीमित्यादि । ज्ञानाधिकारिविचारोत्तरं ज्ञानविषयनिर्धारो युक्त इति तदर्थ-मवसरसङ्गत्या ब्रह्मणो विवक्षितज्ञानविषयस्य स्वरूपं पादशेषेणाग्रिमपादेन च विचार्यत इत्यर्थः । एतेन विचारेणोपनिषदां ब्रह्मबोधकताप्रकारो ज्ञातो भविष्यतीति तदर्थोऽयं विचार इति बोधितम् । नन्वस्मिन्नधिकरणे वाक्यविचारो दृश्यते, न तु स्वरूपस्येत्याशङ्क्य एतदधिकरणप्रयोजनमाहुः तत्र प्रथममित्यादि । प्रथममिति । स्वरूपविचारात् पूर्वम् । ननु ब्रह्मस्वरूपनिर्णयः प्रथमाध्याये कृतः, विरुद्धवाक्यनिर्णयश्च द्वितीयाध्याय इति किं पुनस्तन्निर्धारणादिनेत्यत आहुः तदर्थ-मित्यादि । तदर्थमिति । स्वरूपनिर्धारार्थम् । तथाच कार्यमन्यस्य न भवति, किन्तु सर्वं ब्रह्मण एव कार्यमिति तत्र निर्धारात् सर्वत्र वेदान्तेष्वेकमेव ब्रह्म प्रतिपाद्यत इत्येतावत् सिद्धम् । द्वितीयोक्तो विरोधपरिहारोपि तद्विषयनिर्धारार्थत्वेनैव फलितः, न तु ब्रह्मस्वरूपनिर्धारार्थत्वेन, ब्रह्मधर्मविरोधस्यापरिहृतत्वात् । अतस्तत्र यथा कार्ये अन्यजन्यत्वकृतो विरोधः कारणैक्य-निर्धारार्थं परिहृतः, एवं कारणभूतब्रह्मस्वरूपनिर्धारार्थं ब्रह्मधर्मविरोधोपि परिहरणीयः । अन्यथा सधर्मकं निर्धर्मकं वा, जीववत् सदोषं वा, यावद्दोषरहितं वेत्यादिसन्देहानपायादबोधकता वाक्यानां स्यात् । अतस्तन्निवृत्त्यर्थमिदं निर्धारणमित्यर्थः ।

एवं विचारावश्यकत्वं प्रतिपाद्य तत्रावान्तरविषयं विभजन्ते तत्र स्वगतेत्यादि । अविरुद्धानामिति । परस्परविरुद्धत्वेपि भगवदीयत्वेन प्रतीततया स्वरूपाविरुद्धानाम् ।

### रश्मिः ।

**न स्थानतोपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥** अवसरेति । समन्वयेऽविरोधेन स्थिरीकृते विषयनिर्धारः प्रसङ्गसङ्गत्या युक्तः, परन्तु अनधिकारिहृदये न स्फुरतीति प्रतिबन्धकीभूताधि-कारिचिन्तानिवृत्तौ सत्यामवश्यवक्तव्यत्वमवसर उक्तः । आवृत्तौ गौरवमित्यवसरसङ्गत्या । विव-क्षितेति । परम्परासम्बद्धधर्मिसाक्षात्सम्बद्धधर्मिविषयकज्ञानविषयस्य । ब्रह्मण एवेति । एवकारेण सांख्यादिस्मृत्युपष्टब्धप्रधानादिव्यवच्छेदः । तत्रेति । प्रथमद्वितीयाध्याययोः । तत्र यथेति भाष्यं विवरीतुमाहुः द्वितीयोक्त इति । तद्विषयेति । वाक्यविषयनिर्धारार्थत्वेन । एवेति । ब्रह्मस्वरूपनि-र्धारार्थत्वव्यवच्छेदकः । ब्रह्मधर्मेति । द्वितीयाध्याये तथा । विवृण्वन्ति स्म अतस्तत्रेति । तत्र द्वितीयाध्याये ब्रह्मणि ब्रह्मत्वेन सहावस्थानलक्षणो हि कार्यस्य विरोधः ब्रह्मरूपकारणैक्यनिर्धारार्थं प्रधानादि-कारणवादनिरासेन परिहृतः । एवमितिभाष्यं विवृण्वन्ति स्म एवं कारणेति । ब्रह्मधर्मेति । रूपमरूपं चेति ब्रह्मधर्मयोर्विरोधः सहानवस्थानलक्षणः । अन्यथेति भाष्यं विवृण्वन्ति स्म अन्यथेति । इत्या-दीति । आदिना रूपमरूपं चेति सन्देहः तेषामनपायात् । तत्तद्धर्मप्रकारकबोधकता तत्प्रतियोगिता-

तत्र क्वचिज्जडजीवधर्मा भगवति बोध्यन्ते, क्वचिन्निषिध्यन्ते । यथा 'सर्वकर्मा सर्वकामः' ।

नचैते जीवधर्मा एव न भवन्तीति वाच्यम् । उच्चावचकर्मणां कामानां च जीवगतत्वप्रतीतेः । 'नेतरोऽनुपपत्ते'रिति सर्वत्र वैलक्षण्यस्योक्तत्वात् । कार्यविशेषधर्माणां कारणे वक्तुमशक्यत्वात् । नच कारणधर्मा एव सर्वे कार्ये अंशे वा प्रतीयन्त इति वाच्यम् । 'अस्थूलमनण्वि'त्यादिवाक्यैः प्रापञ्चिकसर्वधर्मवैलक्षण्यस्योक्तत्वात् ।

अत्र केचिद्विरोधमेवमाहुः । सर्वत्र कारणत्वात् भगवानस्ति । ततश्च अस्थूले अस्थूलः, अनणावनणुः, उच्चावचकर्तर्युच्चावचकर्ता, उच्चावचकामे उच्चावचकामः, पृथिव्यां सर्वगन्धः, जलादावगन्धः । एवं रसादिषु । एवं स्थानतः परस्योभयलिङ्गमुपपद्यते ।

---

भाष्यप्रकाशः ।

एवं विषयं विभज्य प्रस्तुताधिकरणविषयादिकमाहुः तत्र क्वचिदित्यादि, निषिध्यन्त इति । अस्थूलादिवाक्येषु निषिध्यन्ते । तथाच विरुद्धवाक्यद्वयदर्शनात् संशयः । किमुभयलिङ्गं ब्रह्म, अन्यतरलिङ्गं वेति ।

पूर्वपक्षमाहुः नचेत्यादि । प्रकरणावरुद्धत्वान्नेति न वाच्यमित्यर्थः । तत्र हेतुः उच्चावचेत्यादि । प्रतीतेरिति । प्रत्यक्षादेव प्रतीयमानत्वात् । नच श्रुत्यपेक्षया लौकिकप्रमाणस्य निर्बलत्वात् तस्य भ्रान्तत्वमिति वाच्यम् । 'नेतरोऽनुपपत्ते'रित्यादिसूत्रेषु सर्वत्र जीववैलक्षण्यस्योक्तत्वात् सर्वकामत्वादीनां ब्रह्मधर्मत्वे जीवसालक्षण्यापत्त्या शास्त्रस्यापि विरोधात् । कार्यकारणव्यवहारभङ्गापत्त्या कार्यविशेषधर्माणां कारणे वक्तुमशक्यत्वात् । शेषं स्फुटम् । तथाच धर्मविधेरुपासनार्थतयोपचारादपि नेतुं शक्यत्वान्निषेधस्य तु प्रयोजनान्तरशून्यतया स्वरूपबोधनमात्रफलकत्वेनान्यथा नेतुमशक्यत्वान्निर्विशेषलिङ्गमेव प्रतिपत्तव्यमिति प्राप्तम् ।

तत्र सूत्रं व्याकुर्वन्ति अत्रेत्यादि ।

रश्मिः ।

काभावो वाक्यानां स्यादित्यर्थः । प्रकरणेति । ब्रह्मप्रकरणावरुद्धत्वात् । एवेति । अनुमानयोगव्यवच्छेदकः । न चेतिभाष्यं विवरीतुमाहुः नच श्रुतीति । तस्येति । अंशांशिनोरभेदे सति वैलक्षण्यस्य अप्रत्येतुः । विवृण्वन्ति स्म नेतरेति । आनन्दमयाधिकरणे व्याकृतानि । सर्वत्रेति । जीवे जडे च । शास्त्रस्येति । 'नेतरोऽनुपपत्ते'रित्यादेः । कार्येतिभाष्यं विवृण्वन्ति स्म कार्येति । कार्यविशेषेति । सर्वकर्मसर्वकामादीनाम् । पूर्णत्वेन तत्राभावात्, नतु कार्यत्वादीनाम् । 'अजायमानो बहुधा विजायते' इति प्राकट्यरूपामुत्पत्तिमादायांशतस्तेषां सत्त्वात् । स्फुटमिति । एवेति । नैयायिकप्रवादादेवकारः । अंश इति । 'यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे जीवाः सर्व आत्मान' इति पृथगुपदेशात् । प्रापञ्चिकेति । नञः पर्युदासार्थत्वात्तथा । एवं शेषं स्फुटमित्यर्थः । पर्युदासः सदृग्ग्राही । अस्य पूर्वपक्षत्वं स्फुटयन्ति स्म तथाच धर्मेति । धर्मविधेरिति । 'सर्वकर्मा सर्वकाम' इति भाष्योक्तोभयकोडीकारेण यो धर्मविधिः 'ज्योतिष्टोमेन स्वर्गकामो यजेते'ति धर्मैकदेशधर्मविधेः । 'धर्मं चरे'ति विधेर्वा । सर्वकर्मत्वेन सर्वकामत्वेन ब्रह्मोपासनार्थतया सामान्यविशेषभावसम्बन्धरूपोपचाराच्छक्यसम्बन्धात् । शक्यसम्बन्धो लक्षणा । एवेति । आरोपापवादसङ्गतिसत्त्वादेवकारः । तत्रेति ।

अथवा । कारण एव रूपमरूपं चावच्छेदभेदेन अचिन्त्यसामर्थ्याद्वा । अन्यथा असतः सज्जननप्रसङ्ग इति अपिना संगृहीत इति ।

एतदुभयमपि न । कुतः । सर्वत्र हि । सर्वत्रैतादृशं रूपं भगवत उपदिश्यते । हि युक्तोऽयमर्थः । भगवत्स्वरूपप्रतिपादकानि हि एतानि वाक्यानि,

---

भाष्यप्रकाशः ।

केचित् ब्रह्मवादैकदेशिन ऋषयो वक्ष्यमाणरीत्योभयलिङ्गाविरोधं व्युत्पादयन्ति । 'यतो वा इमानि' 'सदेव सौम्ये'त्यादिभिर्भगवत उपादानत्वस्य सिद्धत्वात् सर्वत्रोपादेये कार्ये भगवानस्तीत्यविवादम् । ततश्च यथा पार्थिवकारणभूता पृथिवी घटपटस्तम्भादिषु कार्येषु निमित्तवशात् तत्तद्रूपतां धत्ते, तथा भगवानप्यस्थूलादिषु द्रव्येषु, रसादिषु च गुणेषु, तत्तद्रूपतां धत्ते इत्येवं स्थानधर्मरूपं तत्तल्लिङ्गं परस्मिन् भासत इति परस्योभयलिङ्गमुपपद्यत इत्येकं मतम् ।

अथवेत्यादिनोक्तं द्वितीयं मतम् । अवच्छेदभेदेनेति । अवच्छिद्यत इत्यवच्छेदः प्रदेशस्तेन । तत्र युक्तिस्त्वचिन्त्यसामर्थ्यम् । भाष्ये वाशब्दो वाक्यालङ्कारे । पूर्वोक्तरीत्यान्यथाङ्गीकारे तु स्थानस्य कार्यत्वात् स स धर्मस्तत्र तत्र स्थाने कुत आगत इति विमर्शे कारणस्य तद्धर्मवत्ताभावेन कार्ये तस्यासतः सत्ता स्यात् । तस्मात् तद्विहायैवं तत्तदवच्छेदभेदेनाचिन्त्यसामर्थ्यादुभयलिङ्गत्वमुपपादनीयमिति । तदिदमपिना संगृहीतम् ।

एवं स्थानतोपीतिपदद्वयेन तदुभयमनुवदन्निषेधति नेत्यनेन । तत्र हेतुः सर्वत्रेति । तं व्याकुर्वन्ति सर्वत्रेत्यादि । ननु तत्तद्वाक्येषु तत्तलिङ्गताया एव श्रवणात् सर्वत्रैतादृशरूपोपदेशस्य चाश्रवणात् कथं युक्तत्वमित्याकाङ्क्षायां तद्व्याकुर्वन्ति भगवदित्यादि । एतानीति । सर्वकर्मत्वास्थूलत्वादिबोधकानि ।

तथाहि । सर्वकर्मत्वादिवाक्यं तावत्, 'अथ खलु क्रतुमयः पुरुष' इति क्रतूपदेशं प्रकृत्य शाण्डिल्यविद्यायाम्, 'एष म आत्मान्तर्हृदय एतद्ब्रह्मैतमितः प्रेत्य संभवितास्मी'त्युपसंहारे

रश्मिः ।

एवं पूर्वपक्षे सिद्धान्तसूत्रं व्याकुर्वन्ति अस्तीति । कार्यरूपतया तदाधेयतया च । तेन 'तद्रूपं तत्र च स्थितं साकारव्यापकत्वाच्चे'त्युक्तेषु द्वयं द्रव्ये, साकारव्यापकं तु गुणे द्रव्येपीत्याशयेनाहुः अस्थूलादिष्विति । अस्थूलादिषु स्थानेषु रसादिषु च स्थानेषु । अथवेत्यादिनेति । पूर्वत्र कारणरूपस्य ब्रह्मणः कार्यस्थानत उभयलिङ्गमुक्तम् । अधुना कारणस्थानत उभयलिङ्गमाहुः अथवेति । एवकारेण कार्यरूपव्यवच्छेदः । रूपं मूर्तं अरूपममूर्तम् । मूर्तामूर्तब्राह्मणेन । अन्यथेति भाष्यं विवृण्वन्ति स्म अन्यथेति । अस्मात्प्रकारादन्यप्रकारस्य । अन्यथेत्यस्मात्षष्ठ्या लुक् । तद्विहायेति । पूर्वपक्षं विहाय । अवेति । पृथिवीदेशेन रूपं वायुदेशेनारूपमिति देशभेदरूपावच्छेदभेदेन । पदद्वयेनेति । नन्वेकमपि न पदं 'अव्ययादाप्सुप' इति 'सुब्लुकि लुकालुसत्वे नलुमताङ्गस्ये'त्यस्य प्राप्त्या कथं 'सुप्तिङन्त'मित्यनेन पदत्वमिति चेत् । न । शब्दलक्षकत्वाद्भ्रान्तेर्जीवधर्मत्वात् । तदुभयमिति । पक्षद्वयम् । एतेनैतदुभयमिति भाष्यं विवृतम् । तत्तल्लिङ्गताया इति । 'सर्वकर्मा सर्वकाम' इत्यादिषु सर्वकर्मत्वादिना तत्तजीवादिषु तत्तच्छब्दस्य सामर्थ्यं शक्त्यादि तस्य समूहस्यैव श्रावणात् । एवकारः शक्त्याद्यर्थव्यवच्छेदकः । अर्थपदशक्त्यादिज्ञानानन्तरं गुरूपदेशादिसहकारणसाध्यत्वात् । तत्तलिङ्गसमूहस्तत्तलिङ्गता तस्या इत्यर्थः । शब्दरूपमङ्गीकृत्य यत्किञ्चिच्छान्दं वाङ्गीकृत्याह सर्वत्रेति । युक्तत्वमिति । भगवदुपदेशरू-

न त्वनुवादकानि । वैयर्थ्योपत्तेः ।

अचिन्त्यत्वे ज्ञानानुदयः । 'तमेव विदित्वातिमृत्युमेति' 'भक्त्या माम-

भाष्यप्रकाशः ।

तत्क्रतुविषयं ब्रह्मैव बोधयति । क्रतुश्चात्र नोपासना । शब्दान्तरात् । अन्यथा तद्वैयर्थ्यप्रसङ्गात् । किन्तु मननम् । एवमन्यान्यपि वाक्यानि 'अणोरणीया'नित्यादीनि जीवव्यतिरिक्तमात्मानं विषयीकुर्वन्तीत्यस्थूलादिवाक्यवत् प्रमाणान्तरानवगतभगवत्स्वरूपप्रतिपादकानि, न त्वनुवादकानि । यदि हि तेषां स्थानगतधर्मानुवादकत्वं स्यात्, तदा तत्रब्रह्मज्ञानाभावात् तेषां वैयर्थ्यमेव स्यात् । न ह्यौपाधिकानां धर्माणां तद्वत्तया ब्रह्मणो वा ज्ञानं मुक्त्यर्थमिति वक्तुं शक्यम् । तथा सति दर्शनान्तरीयज्ञानादपि सा स्यात् । ततश्च शास्त्रवैयर्थ्यापत्तिः । नापि यथाकथञ्चिच्छाखाचन्द्रन्यायेन ब्रह्मप्रतिपत्त्यर्थम् । तथा सति परस्परविरुद्धान् धर्मांश्च बोधयेयुः । प्रतिपत्तिजननप्रतिबन्धकत्वात् । किञ्च । अस्मिन् वाक्येऽनुवादकत्वं संभवत्यपि न । 'ज्यायानाकाशा'दित्युक्तेः । न हि लोके आकाशाज्ज्यायः किञ्चिदस्ति स्थानम्, येन तद्वशाद्ब्रह्मणि तदनूद्येत । दिक्कालात्मनां तत्समत्वात् । एवं सांख्यादिदृष्ट्या प्रकृत्यादिग्रहणेपि ततो नान्यस्य ज्यायस्त्वम् । ज्यायस्त्वं चात्र परिमाणादेव विवक्षितं ज्ञायते । अग्रे 'अणीयान् व्रीहे'रिति श्रावणात् । अतस्तत्प्रतिपादकत्वमेवात्र मन्तव्यम् । तथा सर्वकर्मत्वादिप्रतिपादकत्वमपि, निरङ्कुशानां तेषामन्यत्राभावादिति । तस्मान्नात्र स्थानप्रयुक्तानुवादकत्वम् ।

एवं द्वितीयेपि मते, सामर्थ्यस्याचिन्त्यतया तस्याज्ञानात् तद्वतो ब्रह्मणोप्यज्ञानापत्तिः ।

रश्मिः ।

पार्थस्य युक्तत्वम् । तद्ब्रेति । ब्रह्मैवेति । अन्तर्हृदय इति लिङ्गादेवकारः । तद्वैयर्थ्येति । शब्दान्तरवैयर्थ्यप्रसङ्गात् । विषयीति । विरुद्धसर्वधर्माश्रयत्वेन विषयीकुर्वन्ति । अनधिगतार्थगन्तृत्वप्रमाणादन्यत् प्रमाणं प्रमाणान्तरं तदनवगतं यद्ब्रह्मस्वरूपं विरुद्धधर्माश्रयं तस्य प्रतिपादकानि । हेतुभाष्यं विवृण्वन्ति स्म यदि हीत्यादि । ब्रह्मेति । किन्तु स्थानगतधर्मज्ञानात् । तेषां ब्रह्मज्ञानांशे वैयर्थ्यम् । एवेति । अवैयर्थ्ययोगव्यवच्छेदकः । नहीति । उपाधिः अस्थूलादिः स्थानं अस्थूलादेः । पृथिवीस्थानं सर्वगन्धस्य । जलादिस्थानमगन्धस्य । तादृशधर्माणामौपाधिकानाम् । तादृशधर्मवत्तया तादृशास्थूलाद्यौपाधिकस्थूलादिमत्तया पृथिव्याद्यौपाधिकसर्वगन्धादिमत्तया वा ब्रह्मणो वा ज्ञानम् । दर्शनेति । मायावच्छिन्नं चैतन्यमीश्वरः इति ज्ञानात् । सांख्यदर्शनेऽसङ्गोपाधिकासङ्गपुरुषज्ञानात् । शास्त्रेति । अविरोधाध्यायसहकृतोक्तोपपादकवेदान्तशास्त्रवैयर्थ्यापत्तिः । यथाकथमिति । औपाधिकेनापि प्रकारेण । अस्यां स्थूलायां शाखायां चन्द्र इति न्यायेन । शाखाग्रद्रष्टारं चन्द्राद्रष्टारं प्रत्युक्तिः सूक्ष्मप्रतिपत्त्यर्था । प्रतिपत्तीति । नच विरुद्धधर्माश्रयत्वेन प्रतिपत्तिः । अन्यैरनङ्गीकारात् । तद्वशादिति । स्थानवशात् । तदनूद्येतेति । तदित्यव्ययम् । स्थानगतधर्मः । ननु नास्ति चेत्कथमाकाशाज्ज्यायस्त्वेन स्थानं प्रतिपत्तव्यमिति चेत्, तत्राहुः दिक्कालेति । प्रसिद्धं नैयायिकमते । दिशं प्रस्तुत्य सा चैका विम्बी नित्या चेति, तथा कालं प्रस्तुत्य स चैको विभुर्नित्यश्चेति । तथात्मानं प्रस्तुत्य स चैको विभुर्नित्यश्चेति । शब्दगुणकमाकाशमित्याकाशात् ज्यायस्त्वम् । नैयायिकमते । सिद्धान्ते तु अचिन्त्यशक्तिमत्त्वादाकाशाज्ज्यायःशब्दप्रवृत्तिः । तत इति । प्रकृत्यादेः । एवेति । ब्रह्मत्वादियोगव्यवच्छेदकः । अणीयानिति । अत्राणुपरिमाणम् । अतिशये ईयसुन् । तत्प्रतीति । ब्रह्मप्रतिपादकत्वम् । एवकारेणानुवादकत्वयोगव्यवच्छेदः । अपीति । ब्रह्मणि मन्तव्यमित्यन्वयः । तेषामिति । सर्वकर्मत्वसर्वकामत्वादीनाम् । नात्रेति । अत्र श्रुतिषु स्थानमस्थूलादि प्रयोजकं तत्प्रयुक्तं तद्गतधर्मानुवादकत्वं न

भिजानाति यावान् यश्चास्मि यादृशः, ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तर'मिति ज्ञानानन्तरमेव सायुज्यप्राप्तेः । नच 'यस्यामतं तस्य मतं मतं यस्य न वेद सः, अविज्ञातं विजानतां विज्ञातमविजानता'मिति वाच्यम् । शास्त्रानारम्भप्रसङ्गात् । अयं च विरोधः परिहरणीयः । सर्वे हि विरोधा अत्र चिन्त्यन्ते । नापि तत्तदुपादानभूतप्रदेशविशेषेणाविरोधः । अनुवादकत्वेन वैयर्थ्यापत्तेः । न च भगवति भेदोऽस्ति । प्रत्यारम्भ'मेकमेवा-

भाष्यप्रकाशः ।

ततश्च 'तमेवे'त्यादिश्रुत्युक्तसाधनाभावान्मोक्षस्याप्यप्राप्त्यापत्तिः । भक्त्याभिज्ञानादेरपि बाधापत्तिः स्यात् । नच 'यस्यामत'मित्यादावमतस्य मतत्वश्रावणादचिन्त्यत्वेनामतत्वेपि सुखेन ज्ञानोदयसंभव इति वाच्यम् । तथा सति विचारशून्यानामपि ज्ञानसंभवेन विचारशास्त्रस्य वेदान्तरूपशास्त्रस्य वानारम्भप्रसङ्गात् । किञ्च । एतद्वाक्योक्तममततायां मतत्वं तदा बुद्धिगोचरीभवेत्, यदास्य बोधनप्रकारोवगम्येत, स एव तु नावगम्यते । वदतो व्याघातात् । अतोयमपि विरोधः परिहरणीयः । यतः सर्वे विरोधा अत्र चिन्त्यन्ते । अतो यावदस्य बोधनप्रकारो न व्युत्पादितः, तावत्पर्यन्तमबोधकत्वान्नानेन ज्ञानं वक्तुं शक्यम् । किञ्च । नापि तत्तदुपादानभूतप्रदेशविशेषेणाविरोधो युज्यते । तादृशत्वस्य पृथिव्यादौ दर्शनात् वाक्यस्य लोकसिद्धानुवादकत्वेन वैयर्थ्यापत्तेः । नच पृथिव्यादीनां सांशत्वादंशभेदेन तथात्वम्, भगवतस्तु निरंशत्वात् प्रदेशभेदेनोपगम्यत इत्यनुवादकत्वाभावान्न वैयर्थ्यमिति वाच्यम् । यदि भगवति स्वगतभेदो भवेत्, तर्हि पत्रपुष्पादीनामिव, तदैवमुपगन्तुं शक्येत । स तु नास्ति । प्रत्यारम्भं यत्र यत्र ब्रह्म निरूपणमारभ्यते, तत्र तत्र 'एकमेवाद्वितीय'मिति वचनात् । यदि सर्वत्रैकरूपता न स्यात्, तदा प्रत्यारम्भं तथा कथन-

रश्मिः ।

किन्तु ब्रह्मप्रतिपादकत्वम् । अचिन्त्यत्व इति भाष्यं विवृण्वन्ति स्म एवं द्वितीय इति । तमेवेतिभाष्यं विवृण्वन्ति स्म ततश्चेति । बाधेति । ज्ञानाभावेऽभिज्ञानबाधः । अभित इत्यस्य ज्ञानधर्मत्वात् ।

भाष्ये ज्ञानानन्तरमिति 'विदित्वे'ति क्त्वान्तार्थः । क्रमादेवकारः । अन्यथा 'अतिमृत्युमेति विदित्वे'त्यपि वदेत् । नचेतिभाष्यं विवृण्वन्ति स्म नचेति । शास्त्रेतिभाष्यं विवृण्वन्ति स्म तथा सतीति । विचारेति । मतपदोक्तं मननं विचारस्तच्छून्यानाम् । अयं चेति भाष्यं विवरीतुमाहुः किञ्च एतदिति । वाक्योक्तेति । ममेदं मतमिति ममतायां श्रुतिनिष्ठायाम् । अवगम्येतेति । अधोक्षजत्वातिरिक्तप्रकारः सर्वेषामाचार्याणां नूतनमार्गप्रवर्तकत्वात्तन्मध्ये कस्यचिन्मार्गत्वेन ज्ञायेत सर्वैः । वदत इति । मतममतमितिवदतो व्याघातः 'मम माता वन्ध्ये'ति वाक्यवत् । विवृण्वन्ति स्म अतोयमपीति । यतो हीतिभाष्यं विवृण्वन्ति स्म यत इति । अत्रेति पूर्वपादे । उत्तरत्र च पादे । अस्येति विरोधस्य । बोधनप्रकारो विरुद्धसर्वधर्माधारत्वलक्षणः । विरोध्यस्य ज्ञानावरोधकत्वात् । नापीतिभाष्यं विवृण्वन्तिस्म किञ्चेति । तत्तदुपादानेति । यथोद्भूतगन्धोपादानपृथिवीभूतप्रदेशरूपविशेषेण पाषाणभूतप्रदेशेन चाविरोधो गन्धतदभावयोः । वैयर्थ्येति । लोकेऽनधिगतार्थगन्तृत्वाभावेनाप्रामाण्यात्तथा । न चेतिभाष्यं विवरीतुमाहुः न चेति । विवृण्वन्ति स्म भगवत इति । इत्यन्विति । इति उक्तप्रकारेण लोकेंशभेदात्तदननुवादमादाय प्रमाणलक्षणोपपत्तेरनुवादकत्वाभावादित्यर्थः । स्वगतेति । गीताष्टादशाध्यायोक्तसात्त्विकज्ञाननष्टस्वगतभदो भवेत् । प्रत्यारम्भमिति भाष्यं विवृण्वन्ति स्म प्रत्या-

१. अमततायामित्यत्र ममतायामिति पाठो रश्मौ । २. सर्वे हीत्यत्र यतो हीति रश्मौ पाठः स्यात् ।

द्वितीय'मिति वचनात् । अल्पकल्पनायामपि श्रुतिविरोधः सिद्धः । श्रुत्यविरोधार्थमेव हि प्रवृत्तेः । तस्मान्न मतान्तरानुसारेण जडजीवधर्माणां सत्त्वासत्त्वे परिहर्तुं शक्ये ॥ ११ ॥

## न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥

प्रकारान्तरेण समाधानमाशङ्क्य परिहरति । न भवदुक्तो विरोधः सम्भवति । भेदात् । कारणकार्येषु सर्वत्र भेदाङ्गीकारात् । प्रपञ्चविलक्षणं ब्रह्म भिन्नम् । प्रपञ्चधर्मवत् ब्रह्म भिन्नम् । तथा अज्ञातं ज्ञातं च । एकस्य भेदस्याङ्गीकारे सर्वमुपपद्यत इति चेत् । न । प्रत्येकमतद्वचनात् । अभेदवचनात् । 'इयं पृथिवी सर्वेषां भूतानां मध्वि'ति ब्राह्मणे 'अयमेव स योऽय'मिति सर्वत्राभेदवचनात्, कार्यकारणरूप-

भाष्यप्रकाशः ।

मनर्थकमेव स्यात् । अतोल्पकल्पनायामपि श्रुतिविरोधः सिद्धः । नच सोल्पत्वान्न दुष्ट इति युक्तम् । श्रुत्यविरोधार्थमेव भगवतो व्यासस्य प्रवृत्तेः । तस्मान्न मतान्तरोक्तरीत्या जडजीवधर्माणां सत्त्वासत्त्वरूपस्योभयलिङ्गविरोधस्य परिहारसिद्धिरित्यर्थः ।

विद्वन्मण्डने तु प्रकरणसिद्धार्थविचारेणैतस्य सिद्धान्तसूत्रत्वमेव सेत्स्यतीत्याशयेन वक्ष्यमाणरीत्यैतदधिकं व्याख्यातम् । सोपाधिकं ब्रह्म सविशेषश्रुतिविषयः, निरुपाधिकं तन्निर्विशेषश्रुतेरित्यपि मतमर्थान्निरस्तम् । विशेषाणामौपाधिकत्वे ब्रह्मणस्तत्स्वभावत्वाभावेन तन्निरूपकश्रुतीनामब्रह्मनिरूपकत्वापत्तेरिति ॥ ११ ॥

न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥ सूत्रमवतारयन्ति प्रकारान्तरेणेत्यादि । अत्र सूत्रे उभयलिङ्गमिति पूर्वसूत्रादनुवर्तते, तदाहुः न भवदुक्त इत्यादि । उभयलिङ्गपदेन भवता उक्तो विरोधो न सम्भवतीत्यर्थः । भेदादिति विवृण्वन्ति कारणेत्यादि । सर्वत्रेति । लोके वेदे च । सिद्धान्तांशं व्याकुर्वन्ति इयमित्यादि । सर्वत्राभेदवचनादिति । सर्ववाक्येष्वभेदवचनात् । अभेदवचनस्यैव व्याख्यानं कार्यकारणेत्यादि । मधुब्राह्मणस्थाः कार्यादयस्त्वेवं बोध्याः । तथाहि । 'इयं पृथिवी सर्वेषां भूतानां मध्वस्यै पृथिव्यै सर्वाणि भूतानि मधु यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव

रश्मिः ।

रम्भमिति । एवेति । अप्यर्थक एवकारः । अल्पेति भाष्यं विवृण्वन्ति स अत इति । अंशभेदात् । अल्पोंशभेदस्तस्य ब्रह्मणि कल्पनायामपि श्रुतिविरोधः सिद्ध इति नापि तत्तदुपादानभूतप्रदेशविशेषेणाविरोधो युज्यते । श्रुत्यविरोधार्थमिति भाष्यं विवरीतुमाहुः न च स इति । 'एकदेशविकृतमनन्यव'दिति न्यायेनादुष्टः । अन्यथा 'जराया जरसन्यतरस्या'मिति सूत्रेण निर्जरशब्दस्य जरसादेशाभावे निर्जरसाविति न स्यात् । विवृण्वन्तिस्म श्रुत्यविरोधेति । एवेति । अत्र 'केचिदविरोधमेवमाहु'रित्यादिभाष्यादेवकारः । प्रवृत्तेरिति । शब्दार्थे कृते प्रवृत्तिज्ञानम् । मतान्तरेति । 'स्थानतः परस्योभयलिङ्ग'मितिरीत्या ॥ ११ ॥

न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥ इत्यर्थ इति । सौत्रप्रथमनकारेणार्थः कर्तव्यः ।

प्रकाराणां भेदनिषेधात्। तस्मान्न भेदाङ्गीकारेण श्रुतयो योजयितुं शक्याः॥ १२॥

भाष्यप्रकाशः।

स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वे'मित्येकं वाक्यम्। एवमग्रेपि, अबग्न्याकाशवाय्वादित्यचन्द्र-दिग्विद्युत्स्तनयित्नुधर्मसत्यमानुषात्मवाक्यानि। एवं चतुर्दश।

तत्रायमर्थः। इयं प्रसिद्धा पृथिवी सर्वेषां भूतानां ब्रह्मादितृणस्तम्बान्तानां मधु मध्विव। उपकारकं कार्यम्, भूतादृष्टजन्यत्वात्। तथा, अस्यै पृथिव्यै अस्याः पृथिव्याः सर्वाणि भूतानि पूर्वोक्तानि मधु मध्विव उपकारकाणि, कारणत्वात्। किञ्च। यश्चायमस्यां पृथिव्यां तेजोमयश्चिन्मात्र-प्रकाशमयः अमृतमयः अमरणधर्मा पुरुषः, सोपि 'तदभिध्यानादेव त्वि'ति न्यायेन पृथिवी-रूपतया तदुपकारकत्वात् तस्यै मध्विति चकारेण समुच्चीयते। यश्चायमध्यात्मम्, 'अधिशरीरं शारीरः शरीराभिमानी' त्यन्ये। वस्तुतस्तु 'यः पृथिव्यां तिष्ठ'न्नित्यादिनोक्तोऽन्तर्यामी तेजोमयो-ऽमृतमयः पुरुषः सोपि तेनाभिमानेन प्रकारेण भूतोपकारकत्वाद्भूतानां मध्वित्यपि चकारान्तरेण समुच्चीयते। अयमेव सः। अयं तेजोमयादिरूपः पुरुष एव सः। मैत्रेयीब्राह्मणान्ते पूर्वग्रन्थ उक्तो योऽयमात्मा उक्तविधपुरुषरूप इदममृतमानन्दः। इदं ब्रह्माक्षरम्। इदं सर्वं पूर्वोक्तकार्यकार-णरूपप्रकारात्मकमिति। एवमग्रिमेष्वपि वाक्येषु बोध्यम्।

सिद्धमाहुः तस्मादित्यादि। एतेषां कार्यादीनां भगवदात्मकत्वनिगमनेन प्रतिवा-

रश्मिः।

एवेति। अन्यवादानां द्वितीयाध्यायपादयोर्निराकरणादेवकारः। कार्यकारणरूपभेदात्। छान्दसी षष्ठीस्थाने चतुर्थीत्याहुः अस्याः पृथिव्या इति। पूर्वोक्तानीति। ब्रह्मादितृणस्तम्बान्तानि। कारणत्वादिति। ब्रह्मणः कारणत्वं तृतीयस्कन्धे। तृणस्तम्बान्तानां सत्तारूपाणां कारणत्वमवयवत्वात्। तदभिध्यानादिति। अयं न्यायः द्वितीयाध्यायतृतीयपादे गतः। पृथिवीति। तस्य तस्य कार्यस्यो-त्पादनार्थं तदभिध्यानं ततस्तदात्मकत्वं तत्तत्कार्यकारणात्मकत्वं तेन तत्कारणवाचकत्वमिति 'तदभि-ध्यानादेव तु तल्लिङ्गात्स' इति सूत्रांशार्थात् पृथिवीरूपतया तदुपकारकत्वात् तस्य 'तस्माद्वा एतस्मा'दिति श्रुतिप्रसिद्धस्योषध्यादेः उपकारकत्वात् कारणत्वात्। तस्यै तस्याः पृथिव्या मधु कार्यम्। चकारेण 'यश्चाय'मिति चकारेण। अधुना 'इयं पृथिवी सर्वेषां भूतानां मध्वस्यै पृथिव्यै सर्वाणि भूतानि मधु यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मᳪशरीरस्तेजोमयोऽमृतमयः पुरुषोयमेव स योयमात्मेदममृतमिदं ब्रह्मेदᳪसर्व'मिति पूर्वकण्डिकां पुरुषान्तां व्याकृत्य भाष्य'मयमेव स' इत्यंशवि-वरणेन विवरिष्यन्त आहुः यश्चायमिति। अधिशरीरमित्यव्ययीभावः। आत्मनीत्यध्यात्ममिति। भूतोपेति। शरीररूपभूतस्योपकारकत्वात्कारणत्वात्। भूतानां मधु कारणम्। भाष्यं विवृण्वन्तिस्म अयमेवेति। उक्त इति। विज्ञाता। 'विज्ञातामरे केन विजानीया' दिति श्रुतेः। 'इदममृत'मि-त्यादित्रयं व्याकुर्वन्तिस्म इदममृतमिति। पूर्वोक्तेति। एतेन कार्यकारणेति भाष्यं व्याकृतम्। कार्यादिरूपमग्रे वक्तव्यम्। एवमिति। कार्यकारणरूपप्रकाराणां भेदनिषेध इति बोध्यम्। एतेषामिति। कार्यकारणरूपप्रकाराणाम्। भगवदात्मेति। इदं निगमनं मधुब्राह्मणसमाप्तौ 'तदेतद्ब्रह्मापूर्वमनपरम-नन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूरित्यनुशासन'मिति श्रुतौ तच्छब्दान्निगमनेन। यद्यपि यदेतादृशं ब्रह्म तदेवैतत्समस्तं जगदिति व्याख्यानम्, तथाप्यारम्भेऽथवैतैर्हेतुभिः साधित'मिदं सर्वं यदयमात्मे'त्यस्यैव पूर्वप्रतिज्ञातस्य निगमनार्थमिदमिति ग्रन्थान्निगमनं बोध्यम्। प्रतिवाक्यमिति। चतुर्दशवाक्येषु।

## अपिचैवमेके ॥ १३ ॥

**भेदाङ्गीकारे बाधकमाह । अपिच एवमेवाभेदमेव भेदनिषेधेनैके शाखिनो वदन्ति । 'मनसैवेदमाप्तव्यम्, नेह नानास्ति किञ्चन, मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यती'ति भेददर्शननिन्दावचनात् । तस्मान्न भेदाङ्गीकारः कर्तुं शक्यः । इवशब्दो 'बहु स्या'मिति व्यावृत्त्यर्थः । तस्मादुपनिषत्सु सर्वप्रकारोऽविरोधः सिद्धः ॥ १३ ॥**

**इति तृतीयाध्याये द्वितीयपादे चतुर्थमुभयलिङ्गमधिकरणम् ॥ ४ ॥**

---

भाष्यप्रकाशः ।

कथमभेदस्य बोधनात् । तथाच तत्तद्वाक्येषु तत्तद्धर्मश्रावणेपि ब्रह्मण ऐक्यात् सर्वत्र सर्वं कार्यं सर्वं कारणं सर्वाणि रूपाणि सर्वे प्रकाराः सन्तीति विरोधतादवस्थ्यान्न भेदाङ्गीकारेण श्रुतयो योजयितुं शक्या इत्यर्थः ॥ १२ ॥

**अपिचैवमेके** ॥ १३ ॥ ननु पूर्वसूत्रेणैव भेदे श्रुतिबलेन वारिते, अस्य सूत्रस्य किं प्रयोजनमित्याशङ्कायां तत्प्रयोजनमाहुः भेदेत्यादि । तथाच भेदाङ्गीकारे बाधकप्रदर्शनेन कदाचित् स्मार्ततया नित्यानुमेयवेदमूलत्वं शङ्क्येतेति तन्निवारणार्थमिदं सूत्रमित्यर्थः । तत् व्याकुर्वन्ति अपिचेत्यादिना । श्रुतिस्तु बृहदारण्यके शारीरब्राह्मणेस्ति । अत्र पूर्वं 'प्राणस्य प्राण'मित्यादिना प्राणाद्याधिदैविकं ये विदुः, ते ब्रह्म विदुरित्युक्त्वा, तस्य वेद्यस्यैव प्राप्यत्वं वदँस्तस्य स्वरूपमाह 'नेह नानास्ति किञ्चने'ति । अर्थस्तु, इह मनसावाप्तव्ये ब्रह्मणि न नानास्ति । यत्किञ्चन नियम्यत्वेना-

रश्मिः ।

अभेदबोधनं तेजोमयादिरूपस्य 'तदभिध्यानादेवे'तिन्यायेन पृथिव्यादिस्थस्य शारीरेण तेजोमयादिरूपेण 'अयमेव स योय'मिति वाक्येन तस्मात् । **तत्तद्धर्मे**ति । पृथिव्यादिधर्माणां शारीरधर्माणां च तेजोमयादीनां तत्तत्पृथिव्यादिशरीरधर्माणां श्रावणेपि 'अयमेव स योय'मिति वाक्येनोभयनिष्ठब्रह्मण ऐक्यात् । **सर्वत्रे**ति । चतुर्दशवाक्येषु सर्वं कार्यं 'इयं पृथिवी सर्वेषां भूतानां मध्वि'त्यत्र मधुशब्दार्थः सर्वेषां भूतानां कार्यमपि तत्सर्वमिति कार्यविशेषणं सर्वमिति । **सर्वं कारणमि**ति । 'अस्यै पृथिव्यै सर्वाणि भूतानि मध्वि'त्यत्र मधुशब्दार्थः । अत्र सर्वमिति विशेषणं स्पष्टम् । **सर्वाणि रूपाणी**ति । 'यश्चाय'मिति प्रथमचकारसमुच्चितानि 'तदभिध्यानादेव त्वि'ति न्यायेन पृथिव्यादिनिष्ठतेजोमयादिपुरुषाणां पृथिव्यादिरूपतया, तेजोमयादिपृथिवीरूपाणि सर्वाणि चतुर्दशवाक्योक्तानि । **सर्वे प्रकारा** इति । 'यश्चायमध्यात्म'मिति द्वितीयचकारसमुच्चिताः शरीराभिमानाः प्रकाराः । **सर्व** इति पूर्ववत् । **विरोधे**ति । 'यस्यामत'मितिश्रुत्युक्तज्ञाताज्ञातविरोधस्य ज्ञाताज्ञातयोर्ब्रह्मण ऐक्यादेकत्र सत्त्वेन तादवस्थ्यात् न भाष्योक्तरीत्यभेदाङ्गीकारेण । **श्रुतयः** 'यस्यामतं तस्य मत'मिति 'सर्वकर्मा सर्वकामः' 'अणोरणीयान्महतो महीयानि'त्यादयः ॥ १२ ॥

**अपिचैवमेके** ॥ १३ ॥ **स्मार्ततये**ति । स्मार्तं कर्म सर्वमपि स्नानसन्ध्यादिभेदाधीनम् । किञ्च, जीवब्रह्मभेदस्मृतयश्च 'यदधीना यस्य सत्ता तत्तदित्येव भण्यते । विद्यमाने विभेदेपि मिथो नित्यं स्वरूपत' इति, 'ब्राह्मणो मुखमित्येवं मुखाज्जातत्वहेतुतः । यथाऽवदच्छ्रुतिस्तद्वज्जीवो ब्रह्मेति वा भवे'दिति । 'भिन्ना जीवाः परो भिन्नस्तथापि ज्ञानरूपतः । प्रोच्यन्ते ब्रह्मरूपेण वेदवादेषु सर्वशः' इति । **नित्ये**ति । अपौरुषेयोऽनुमेयवेदस्तन्मूलत्वम् । स्मृतिः वेदमूला, स्मृतित्वात्, याज्ञवल्क्यस्मृतिवत् । पक्षैकदेशस्य दृष्टान्तत्वम् । **वेद्यस्यैवे**ति । विदुरितिक्रियाकर्मणः एवकारेणाधिभौतिकप्राणादि-

## अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥ (३-२-५.)

एकदेशिमतेन समाधानमाह । कथमत्र सन्देहः, विरोधो वा जडजीवध-

भाष्यप्रकाशः ।

वयवत्वेन वा अतिरिक्ततया वेदनविषयं भवति, तत् ब्रह्मैव, न तु तदतिरिक्तम् । विलक्षणप्रतीतिविषयस्य कथमपृथक्त्वमित्याशङ्कावारणाय अर्थान्तरकल्पनेनास्य भेदपरत्ववारणाय च भेदाङ्गीकारे बाधकमाह मृत्योः स इत्यादि । इवशब्दं विनापि भेददर्शननिन्दासिद्धेस्तद्वैयर्थ्यं स्यादिति तत्प्रयोजनमाहुः इवेत्यादि । तथाच घटपटवत् घटान्तरवत् तरुकुसुमवच्च तत्त्वतो नानेव नाना पश्यति तस्य दोषः, न त्वैच्छिकं विलक्षणप्रतीत्युत्पादकं यः पश्यति, तस्य दोषः । तादृशस्य श्रौतत्वेन वास्तवत्वादिति बोधनं प्रयोजनमित्यर्थः । सिद्धमाहुः तस्मादित्यादि । यस्मादुपनिषत्सु सर्वत्रोभयलिङ्गमुच्यते, भेदश्च सर्वप्रकारेण निषिध्यते, तस्मात् तथेति श्रुतीनामबोधकत्वमेव प्रसक्तमित्यर्थः । एवमत्राधिकरणे आक्षेपसङ्गत्या विरोधः साधितः ॥ १३ ॥ इति चतुर्थमुभयलिङ्गाधिकरणम् ॥ ४ ॥

अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥ सङ्गतिं वदन्तोधिकरणमवतारयन्ति एकदेशीत्यादि । अयं ह्येकदेशी ब्रह्मण एकदेशेन जगत्समवायित्वं तदतिरिक्तस्य जगद्वैलक्षण्यं स्वरूपतः सधर्मकत्वं स्वेच्छया व्यवहार्यत्वं ज्ञानात्मकं ब्रह्मण आकारं च मन्वानो ज्ञानाकारस्य ब्रह्मणः प्रपञ्चे प्रतिबिम्बेन लौकिकधर्मवत्त्वभानं मनुते । तन्मतेन विरोधसमाधानमाहेत्यर्थः । अस्याग्रे किञ्चिद्दंशेनादरणीयत्वादादावेतन्मतेन कथनम् । तत्रैकदेशी स्वमतं व्युत्पादयितुं पूर्वाधिकरणसन्देहं सिद्धान्तं चाक्षिपन्ननुयुङ्क्ते कथमित्यादि । अत्रोभयलिङ्गवाक्यश्रवणे किमापाततः

रश्मिः ।

व्यवच्छेदः । मनसा मानसीसेवानिविष्टेन । ब्रह्मैवेति । 'एकमेवाद्वितीय'मिति श्रुतेर्ब्रह्म, नतु तदतिरिक्तमित्येवकारार्थः । सात्त्विकज्ञानविषयत्वेन तत्स्मृत्युपष्टम्भात् । विलक्षणेति । प्रतीतिशब्देन शब्दात्प्राबल्यम् । अर्थान्तरेति । अर्थः भेदपक्षे नानेव यत्किञ्चिदभेदद्रष्टुः निन्दाश्रावणात्, किं पुनरभेदद्रष्टुरित्येकः । द्वितीयस्तु 'य इह नानेव पश्यति' भेदमिव पश्यति किं पुनर्भेदमिति । तदुभयादन्योर्थोऽर्थान्तरम् । यथा 'य इह स्वप्ने' नानेव भातं ब्रह्म पश्यति 'अविभक्तं च भूतेषु विभक्तमिव च स्थित'मिति ब्रह्मप्रकरणीयगीतावाक्याद्ब्रह्म तादृक् 'स मृत्योर्मृत्युमाप्नोति' । तथाच स्वप्नाध्याये आत्मदर्शनस्य मृत्युजनकत्वमुक्तम् । एवमर्थान्तरकल्पनेनेत्यर्थः । भेदाङ्गीकार इति । 'बहु स्या'मितीच्छातः पूर्वं नानेव भाते भेदाङ्गीकारे । तत्प्रयोजनमिति । ब्रह्मस्वरूपे इवार्थसाधनं गीतानुरोधेन फलम् । तत्त्वत इत्यादि । इच्छातोपि पूर्वम् । नानेव वर्तमानं नाना तत्र भेदं पश्यति । विलक्षणेति । नाना, भेदमिति यावत् । तादृशस्येति । ऐच्छिकभेदस्य । अतएव भेदाभेदवादः । तादृशस्य नानेव भानस्येति वार्थः । श्रौतत्वं तु मुखपद्माद्विनिःसृतत्वेन वेदत्वाद्गीतायाः । तथेति । जीवपरत्वेन प्रतीतानां विरोधादपि तथा । एवेति । उभयलिङ्गवत्त्वस्य वक्ष्यमाणत्वेनानिष्पत्तेस्तथा । आक्षेपेति । अबोधकत्वमाक्षेप्यमिति विरोधाग्रे तन्निराकरणयोराक्षेपसङ्गत्येत्यर्थः ॥ १३ ॥ इति चतुर्थमुभयलिङ्गाधिकरणम् ॥ ४ ॥

अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥ सङ्गतिमिति । आक्षेपसङ्गतिं समाधानपदेन वदन्तः । आक्षेप्यविरोधसमाधानात् । मुख्यसिद्धान्तं त्यक्त्वैकदेशिमतकथने बीजमाहुः अस्याग्र इति । एकदेशिमतस्य । अनुयुङ्क्त इति । अत्रैकदेशी जैमिन्यादीनां सौत्राणामन्यतमो नोदयति

१. विरोधे । २. अविरोध आक्षेप्यः ।

र्माणां विधिनिषेधयोः । जडजीवयोर्हि जडजीवधर्मा भवन्ति । अन्यत्र तूपदिश्यमाना उपासनार्था भवन्ति । ननूक्तो भेदाभावः । सत्यम् । तथापि कार्यकारणांशभावकृतस्य भगवद्विहारार्थं जातस्य भेदस्य निषेद्धुमशक्यत्वात् । तस्मात् ब्रह्मणि जडजीवधर्माणां निषेधो युक्तः । उपचारात्तु सर्वकर्मादयः ।

विपरीतं किं न स्यात्, अत आह । अरूपवदेव । रूप्यते निरूप्यते व्यवह्रियत इति रूपं सर्वव्यवहारविषयत्वम्, तद्युक्तं रूपवत् विश्वम् । ब्रह्म तु

भाष्यप्रकाशः ।

सन्देहः, उत ब्रह्मणि जडजीवधर्माणां विधिनिषेधयोर्विरोधनिर्धारात् । विरोधश्च किमुभयलिङ्गश्रवणात्, उतोभयलिङ्गवतोर्भेदनिश्चयादिति । तत्र सन्देहे द्वितीयं हेतुं निरसति जडजीवयोरित्यादि । तथाच द्वितीयस्य हेतोरभावात् ततः सन्देहो न युक्त इत्यर्थः । सन्देहे द्वितीयं हेतुं निरस्य स्वमतं साधयितुं विरोधद्वितीयहेतुमुज्जीवयति नन्वित्यादि । तथापीति । उक्तत्वेपि । तथाच तादृशस्यापि निषेधे 'बहु स्या'मित्यादेः 'स वै नैव रेम' इत्यादेश्च पीडया सृष्टिदशायां भेदाभावस्यैवाशक्यवचनत्वात् द्वितीय एव हेतुरवश्यमभ्युपेय इति तादृग्वाक्यश्रवणादापातत एव सन्देहः, उभयलिङ्गवतोर्भेदनिश्चयादेव च विरोध इत्यर्थः । तेन सिद्धं स्वसिद्धान्तमाह तस्मादित्यादि ।

एवमेकदेशिसिद्धान्तेन समाधानं सङ्क्षेपतो निरूप्य, तदेव विशेषतो वक्तुं सूत्रमवतारयन्ति विपरीतमित्यादि । ब्रह्मण उपादानकारणत्वं पूर्वं सिद्धम् । अतः कारणधर्मा एव सर्वकर्मादयः कार्ये प्रतीयन्ते, सुवर्णरूपादय इव कटकादिषु, अतस्ते युक्त्या श्रुत्या च तत्र सिद्धा इत्यनेकप्रमाणसिद्धत्वात् विधिपक्षोपि युक्त इति स एव कुतो न स्यात्, विरोधपक्ष एव वा कुतो न स्यादित्याश-

रश्मिः ।

स्येत्यर्थः । अत्रेत्यस्य व्याख्यानमुभयेति । जीवब्रह्मलिङ्गवाक्यश्रवणे । आपाततो निर्धारं विना । जीवधर्मा ब्रह्मधर्मा वेति सन्देहः । एवं पूर्वाधिकरणसन्देहमुक्त्वा विरोधमाहुः सिद्धान्तरूपम् । विरोधश्चेति । उभयलिङ्गवतोर्ब्रह्मजीवयोः । 'न भेदा'दिति सूत्रे भेदस्य निश्चयादाशङ्कांशे । तथाच भाष्यार्थ एवम् । विरोधो वा जडजीवधर्मसम्बन्धिनोः सर्वकर्मादिवाक्यास्थूलादिवाक्यगतविधिनिषेधयोः श्रवणादिति । निरस्यतीति । एकदेशी । तत इति । हेत्वभावात्सन्देहो न युक्तः । एतेन पूर्वाधिकरणसन्देह आक्षिप्त इत्याक्षेपसङ्गतिरुक्ता । उज्जीवयतीति । शङ्कामुखेन प्रतिपादयति । उक्तत्वेपीति । 'प्रत्येकमतद्वचना'दिति हेतुनोक्तत्वेपि । तादृशस्येति । क्रीडोपयोगिभेदस्येत्यर्थः । तेनैकदेशी जैमिनिः शिष्य इत्युक्तम् । पूर्वतन्त्रे भेदस्य द्वितीयाध्यायार्थत्वात् । तादृशस्येति । एवेति । भेदव्यवच्छेदकः । द्वितीय एवेति । उभयलिङ्गवतोर्भेदरूपः । एवकारः प्रथमहेतुव्यवच्छेदकः । आपातत एवेति । एवकारो ब्रह्मणि जडजीवधर्माणां विरोधनिर्धाररूपद्वितीयहेतुव्यवच्छेदकः । एवेति । उभयलिङ्गश्रवणरूपहेतुव्यवच्छेदकः । विरोध इति । सिद्धान्तः । तस्मादित्यादीति । भाष्ये । निषेध इति । अस्थूलादिश्रुतिषु निषेधः । उपचारादंशांशिभावसम्बन्धरूपात्तु सर्वकर्मसर्वकामादयो ब्रह्मणि जीवधर्मा इत्यर्थः । प्रकृते । तदेवेति । अन्ययोगव्यवच्छेदक एवकारः । पूर्वमिति । द्वितीयाध्याये समन्वयाधिकरणोक्तं उपादानकारणत्वं मतान्तरनिरासेन सिद्धम् । एवेति । कार्यधर्मयोगव्यवच्छेदक एवकारः । तत्रेति । ब्रह्मणि सिद्धाः । अतो नोपचार इति भावः । विरोधेति । पूर्वाधिकरणसि-

तद्विलक्षणम् । कार्यकारणांशांशिनोर्वैलक्षण्यस्य युक्तत्वात् । नन्ववैलक्षण्यमपि युक्तम्, कारणत्वात्, अत आह । तत्प्रधानत्वात् । तस्य ब्रह्मणः प्रधानत्वान्मुख्यत्वात् । यत्र हि यत् प्रतिपाद्यते, तत्र तस्य मुख्यत्वम् । ब्रह्मप्रतिपादने ब्रह्मधर्माणामेव मुख्यत्वम्, नान्यधर्माणाम् । यथा प्रशासनस्य मुख्यत्वम्, तथा 'सर्वकर्मे'ति लौकिककर्मानुवादेन भगवत्सम्बन्धे स्पष्टमेवामुख्यत्वम् । विशि-

भाष्यप्रकाशः ।

ङ्कायामेकदेशिमतेन समाधिं वक्तुं ब्रह्मणः प्रपञ्चवैलक्षण्यं तत्समवायित्वादिकं चाहेत्यर्थः । तेन सर्वकर्मत्वादयो धर्माः पाणिपादादयश्च ब्रह्मणि सन्ति न वेति सन्देहः । उभयविधवाक्यश्रवणं सन्देहबीजम् । सन्तीति पूर्वः पक्षः । न सन्तीति तन्मते समाधानमिति बोधितम् । समाधानव्युत्पादनाय सूत्रं व्याकुर्वन्ति रूप्यत इत्यादि । हेतुं व्युत्पादयन्ति यथेत्यादि । तथेति । वैधर्म्ये दृष्टान्तः । भगवत्सम्बन्ध इति । विधीयमान इति शेषः । तथाच तत्र 'ह्येतद्वै तदक्षर'मिति ब्रह्मैवोपक्रम्य प्रशासनस्योक्तत्वात् तस्य मुख्यत्वम्, अत्र तु 'मनोमयः प्राणशरीर' इति शरीरविशिष्टमुपक्रम्य पठितत्वात् तथेत्यर्थः । नन्वत्र न केवलोनुवादः, किन्तु लौकिकधर्मतुल्य-

रश्मिः ।

द्धान्तपक्षः । एवकार एकदेशिमतयोगव्यवच्छेदकः । उभयेति । सर्वकर्मास्थूलादिरूपविधिनिषेध(द्वि)-विधवाक्यश्रवणम् । समाधीति । पूर्वपक्षस्तु सर्वकर्मत्वादयो धर्मा ब्रह्मणि सन्तीति सिद्धान्तेन सेत्स्यति । भाष्ये । युक्तमिति । घटकपालद्वययोर्मृत्त्वेनावैलक्षण्यमपि युक्तम् । तस्येति । घट इत्युक्ते घटस्य मुख्यत्वं यथा । ब्रह्मणोऽधोक्षजत्वाद्ब्रह्मेत्यनुक्त्वा धर्मपर्यन्तानुधावनम् । ब्रह्मधर्मा अस्थूलादयस्तेषाम् । अन्यधर्मा जीवधर्मत्वेन प्रतीताः सर्वकर्मादयस्तेषाम् । एवकारव्यवच्छेद्यमाहुः नान्येति । एवकारेण न ब्रह्म व्यवच्छेद्यमधोक्षजत्वात् । प्रकृते । व्युत्पादयन्तीति । दृष्टान्तेन स्पष्टयन्ति । यथेत्यादीति । प्रशासनस्येत्यादि । मधुब्राह्मणान्त उक्तस्य । 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्ममयमात्मा ब्रह्म सर्वानुभूरित्यनुशासन'मिति श्रुतिः । यद्वा । प्रशासनं 'अथ ह वाचक्नव्युवाचे'त्यारम्भकेऽक्षरब्राह्मणोक्तं प्रशासनं तस्येत्यर्थः । 'एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिवी विधृते तिष्ठत' इति श्रुतिः । भाष्ये । लौकिकेति । जीवधर्मत्वेन प्रतीतकर्मणामनुवादेन सिद्धकथनेन । स्पष्टमेवेति । एवकार आरोपापवादसङ्गतेरपि । अमुख्यत्वमौपचारिकत्वम् । जीवधर्मत्वेन प्रतीतधर्मविरोधपरिहारोत्र निरूप्यत इति सर्वत्वविशिष्टकर्मणामजीवधर्मत्वेन निरूपणविरोधमाशङ्क्य समादधुः विशिष्टेति । सर्वत्वविशिष्टकर्मबोधनेपि । प्रसिद्धसिद्धकथकत्वात् । प्रसिद्धातिरिक्तकर्मकल्पनायाम् । प्रमाणेति । 'सर्वे ब्राह्मणा भोजयितव्या' इति दृष्टान्तसहितशब्दप्रमाणवद्विलक्षणप्रमाणाभावात् । ननु सर्वकर्मणां सर्वकामानां प्रारब्धसञ्चितादिरूपत्वात्पशुपुत्रादिविषयत्वाच्च कथमविरोध ईश्वरपरत्वेनेत्यत आरोपेणेत्याह यथाकथञ्चिदिति । उपासनायां बोध्यम् । एतेन पादार्थो जीवस्य मुक्तियोग्यता सापि स्मारिता । एवकारो 'वाचं धेनुमुपासीते'त्यादौ तथा दर्शनात् । एवेति । ननु सर्वकर्मत्वादीन् छान्दसाननूद्य । निषेधार्थं सर्वकर्मत्वादिवैशिष्ट्यबोधनमुचितम् । प्रक्षालनपङ्कन्यायेन प्रतिपादनवैयर्थ्यापातात् । तथेति । वैधर्म्ये इति । दृष्टान्ते मुख्यत्वपदम्, दार्ष्टान्तिकेऽमुख्यत्वपदमिति साधर्म्ये दृष्टान्तवैषम्यमाशङ्क्योक्तम् । उक्तार्थसिद्धमाहुः तथाचेति । 'अथ ह वाचक्नव्युवाचे'त्यारम्भकेऽ-

१. समाधिं । २. नानुवाद इति मूले पाठः । 

ष्टबोधनेपि सर्वशब्दस्य प्रसिद्धानुवादकत्वाद्तिरिक्तकल्पनायां गौरवात् प्रमाणाभावाच्च यथाकथञ्चित्तद्धर्मवत्त्वेन ज्ञानस्यैवोपयोगाल्लोकधर्मानेवानूद्य विशिष्टबोधनमुचितम्। अरूपमिति वक्तव्ये अरूपवदिति वचनम्, भिन्नधर्माणामेवैवं निर्णयः, न तु प्रशासनवद्भगवद्धर्माणाम्। तस्मात् कार्यवत् तद्धर्माणामपि कार्यत्वात् भगवत्त्वम्, न भगवद्धर्मत्वमिति सिद्धम् ॥ १४ ॥

भाष्यप्रकाशः।

धर्मवत्ता ब्रह्मणो बोध्यत इत्यवयुत्यानुवादान्नैतेषामप्यमुख्यत्वम्, अत आहुः विशिष्टेत्यादि। मास्तु सर्वकर्मादिशब्दानामनुवादकत्वम्, तथापि के सर्वे इत्याकाङ्क्षायां ये लोकप्रसिद्धास्तानेव सर्वपदेनानूद्य, 'कुन्त्या हि सदृशौ पादौ दृष्ट्वा कर्णस्य धीमत' इतिवत् सर्वेषामिव कर्माणि यस्येति तत्तुल्यानामतिरिक्तानां विधानं समारोपाङ्गीकार्यम्, तथा सति गौरवात्, सर्वकर्मादिश्रुतेर्वादकवलितत्वात् तदतिरिक्तस्यैतद्धर्मविधायकप्रमाणस्याभावाच्चातिरिक्तकल्पनामकृत्वा यथाकथञ्चित् तद्धर्मवत्त्वेन ज्ञानस्यैवोपासनायामुपयोगाल्लोकधर्मानेवानूद्योपचारेण शरीरधर्मविशिष्टबोधनं युक्तमित्यर्थः। ननु यदि सर्वकर्माद्यभावेन सर्वव्यवहारातीततया जगद्वैलक्षण्यं सूत्रकृतोभिप्रेतं स्यात्, तदा अरूपमित्येव वदेत्, नत्वरूपवदिति, वदति त्वेवम्, अतोतिरिक्तधर्मकल्पनैव युक्तेत्यत आहुः अरूपमित्यादि। एवं निर्णय इति। औपचारिकत्वनिर्णयः। तथाच लोकवैलक्षण्येन लौकिकव्यवहारातीतत्वमेवाभिप्रेतम्, न तु यावद्व्यवहारातीतत्वम्, अस्थूलादिवाक्य एव प्रशासनश्रावणेन तथा निश्चयादिति बोधनाय तथा कथनम्, अतो नानेनातिरिक्तधर्मकल्पनसिद्धिरि-

रश्मिः।

क्षरब्राह्मणे श्रुतिरियम्। मुख्यत्वमिति। ब्रह्मरूपत्वान्निन्दितस्यापि मुख्यत्वं प्रकाशाश्रयन्यायेन। अत्र त्विति। छान्दोग्यीयपञ्चमप्रपाठके तु। पठितत्वादिति। 'सर्वकर्मा सर्वकाम' इत्यादेः पठितत्वात्। तथेति। अमुख्यत्वमौपचारिकत्वम्। अनुवाद इति। जीवधर्माणां सिद्धानां कथनम्। अवयुत्येति। लौकिकधर्मान् तुल्यत्वेन रूपेणालौकिकधर्मेषु मिश्रीकृत्य। एतेषामिति। सर्वकर्मत्वादीनाम्। अमुख्यत्वमिति। औपचारिकत्वम्। ननु शक्यस्य तौल्यसम्बन्धरूपा लक्षणा कुतो नेति चेत्। न। तथा सति लौकिकधर्मपदप्रयोगः स्यात्, अलौकिकधर्मेषु, तीरे गङ्गापदप्रयोगवत्। अतो नौपचारिकत्वमिति। अनुवादकत्वमिति। जीवे सिद्धानां कथकत्वमीश्वरे। मास्त्विति। पूर्वोक्तावयुत्यानुवादकत्वमस्तु। यथाकथञ्चिदिति भाष्यं विवृण्वन्ति स्म यथाकथञ्चिदिति। उपचारेणेति। तेषामुपचारेणालौकिकान् हित्वा लौकिकानेवारोप्यापवादार्थं तैर्धर्मैः शरीरविशिष्टबोधनमित्यर्थः। अतिरिक्तेति। आरोप्यातिरिक्तनित्यधर्मकल्पना। एवकार आरोप्यधर्मयोगं व्यवच्छिनत्ति। अरूपमित्यादीति। रूपं सर्वव्यवहारविषयत्वम्, अरूपं सर्वलौकिकव्यवहारातीतत्वम्। इति वक्तव्ये रूपवद्विश्ववैलक्षण्यायारूपवदितिवचनम्, भिन्नधर्माणां विश्वगतानामेव, नतु भगवद्गतानामिति वक्ष्यन्ति। एवं आरोप्यत्वेन निर्णयः। एवकारव्यवच्छेद्यमाहुः नत्विति। तद्धर्माणामिति। कार्यधर्माणाम्। नेति। नञा भेदोक्तेर्नेति। भेद एव विलक्षणशब्देनोच्यते, ब्रह्म तु तद्विलक्षणमिति भाष्ये। तदेतदाहुः तथाचेति। पूर्वोक्तविश्ववैलक्षण्येन। एवेति। अरूपवदित्यत्र नञा भेदप्रत्यायनाद्विलक्षणं न भेदातिरिक्तमिति भेदातिरिक्तविलक्षणयोगव्यवच्छेदकैवकारः। अन्यमप्येवकारव्यावर्त्यमाहुः नत्विति। एको वाच्यः, एकस्तात्पर्यविषयः। अत्र हेतुमाहुः अस्थूलादीति। तथेति। लौकिकव्यवहारातीतत्वम्, नतु सर्वव्यवहारातीतत्वमिति निश्चयात्। तथेति। मतुबन्तारूपवत्पदकथनम्। अनेनेति। अरू-

१. धर्मवत्त्वेन। २. वैशिष्ट्यबोधनम्।

प्रकाशवच्चावैयर्थ्यात् ॥ १५ ॥

ननु सर्वव्यवहारातीते शास्त्रवैफल्यम्, 'मनसैवैतदाप्तव्य'मिति विरोधश्च न परिहृतः, 'तं त्वौपनिषदं पुरुषं पृच्छामि' 'यतो वाचो निवर्तन्त' इति चेत्यत आह । प्रकाशवत् । यथा सौरः प्रकाशो व्यवहार्योऽव्यवहार्यश्च, न हि स्वतः सम्पादयितुं शक्यते, स्थापयितुं वा, आगते तु सूर्ये मेघाद्यभावे च सान्निध्यमात्रेण व्यवहारः कर्तुं शक्यते, तथा लौकिकवाङ्मनोभिर्न शक्यते व्यवहर्तुम्, ईश्वरसन्निधाने तु शक्यत इति द्वयमाह श्रुतिः । कुत एतदवगम्यते । तत्राह । अवैयर्थ्यात् । अन्यथा शास्त्रं व्यर्थं स्यात् । चकाराद्धर्माणां तथात्वविरोधः परिहृतः । 'आसीनो दूरं व्रजति' 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणो-

भाष्यप्रकाशः ।

त्यर्थः । तेन सिद्धमाह तस्मादित्यादि । कार्यवदिति । प्रपञ्चवत् । न भगवद्धर्मत्वमिति । न नित्यभगवद्धर्मत्वम् ॥ १४ ॥

प्रकाशवच्चावैयर्थ्यात् ॥१५॥ सूत्रमवतारयन्ति नन्वित्यादि । सर्वकर्मत्वादीनामौपचारिकत्वात् प्रशासितृत्वादीनां चालौकिकत्वेन सम्यग्बुद्धावनारोहात् सर्वव्यवहारातीते ब्रह्मण्यङ्गीकारे कृते ज्ञेयत्वेनापि व्यवहारस्यासम्भवाज्ज्ञानार्थस्य विचारशास्त्रस्य वैफल्यम् । 'मनसैवैतदाप्तव्य'मिति विरोध इति । सर्वव्यवहारातीतस्य मनोविषयत्वाभावेन, तथा एतस्याः श्रुतेः 'अप्राप्य मनसा सहे'त्यनेन च सह विरोधो न परिहृत इत्यर्थः । अस्मिन् सूत्रे प्रकाशवदिति न मतुप्, किन्तु तृतीयान्ताद्वतिः । पूर्वसूत्रादेकदेशभूतमपि तत्पदमनुवर्तते । तत् ब्रह्म प्रकाशेन तुल्यम् । तत्र कथं तुल्यमित्याकाङ्क्षायां सूत्रं व्याकुर्वन्ति यथेत्यादि । व्यवहार्यत्वाव्यवहार्यत्वे व्युत्पादयति नहीत्यादि । स्थापयितुमिति । आयातो यथा नापयाति तथा निरोद्धुम् । सन्निधाने तु शक्यत इति । उपासनादिसाधनेनेश्वरसन्निधाने प्रतिबन्धकाभावाच्छक्यते । द्वयमिति । मनसा वाचा चावाप्यमनाप्यं चेति द्वयम् । शास्त्रमिति । मनसैवैतत्, तापनीयरूपम्, ज्ञानफलबोधकं 'तमेवे'त्यादिरूपं चेत्यादिकं उभयबोधकं शास्त्रम् । प्रकाशतुल्यत्वसङ्ग्राहकचकारसूचितं धर्माणां लौकिकत्वादिविरोधपरिहारं व्याकुर्वन्ति आसीन इत्यादि । अलौकिका इति । लोकविरुद्धाः ।

रश्मिः ।

पदत्पदेन । अतिरिक्ताः धर्मा वैदिकाः तेषां कल्पनस्य सिद्धिरारोपार्थम् । नित्येति । साक्षात् । साक्षाद्धर्मा नित्यभगवद्धर्माः ॥ १४ ॥

प्रकाशवच्चावैयर्थ्यात् ॥ १५ ॥ बुद्धाविति । यथा बालस्य भृङ्गमितोयादिभ्यो वारितस्य बुद्धौ वारणादेरनाहस्तद्वत् । मनसेति भाष्यं विवृण्वन्ति स्म मनसैवेति । इति चेति भाष्यीयचकारार्थमाहुः एतस्या इति । सन्निधाने तु शक्यत इति । ईश्वरसन्निधानं हृदि 'प्रविष्टः कर्णरन्ध्रेणे'तिवाक्यात् । फलप्रकरणे प्रसिद्धम् । व्रजभक्तेषु ईश्वरसन्निधानं भगवद्वाक्यपूर्वपक्षीकरणसमये । प्रतिबन्धकेति । अलौकिके तु लौकिकत्वरूपप्रतिबन्धकाभावात् । तापनीयेति । 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम्' । एवंरूपं शास्त्रम् । अत्र मनश्चक्षुषोः करणत्वविरोधः । तमेवेति । 'तमेव विदित्वातिमृत्युमेती'ति । किञ्चादिना 'यतो वाच' इत्यपि । अत आहुः उभयेति । मनश्चक्षूरूपकरणबोधकम् । मनसा वाचा चावाप्यमनाप्यं चेति बोधकम् । धर्माणा-

त्यकर्ण' इत्याद्यालौकिका भगवद्धर्मा उच्यन्ते । अकारणककार्यवचनात् तद्धर्माणां चाकार्यत्वं बोधयति । तस्माद्व्यवहार्येपि न शास्त्रवैफल्यम् ॥ १५ ॥

आह च तन्मात्रम् ॥ १६ ॥

किञ्चिदाशङ्क्य परिहरति । नन्वलौकिकानीन्द्रियाणि विरोधाभावाय कथं न कल्प्यन्ते, अन्यथा अकारणककार्यत्वम्, तस्य च नित्यत्वमलौकिकत्वम्, ततश्च 'पश्यत्यचक्षु'रिति विरोध इत्याशङ्क्य परिहरति । आह च श्रुतिः स्वयमेव तन्मात्रं प्रज्ञानघनमात्रम् । 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवं वा अरे अयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवे'ति स्वरूपातिरिक्तानामिन्द्रियाणामभावात् । नच क्रियाभावोपि । वेदविरोधेन तथा कल्पयितुमशक्यत्वात् । वेदनिःश्वासायनभूतसमुत्थानादेरुक्तत्वाच्च । अतो नेन्द्रियाणां परिक-

भाष्यप्रकाशः ।

अकार्यत्वमिति । नित्यत्वम् । तस्मादिति । अलौकिकधर्मसत्त्वाच्छास्त्रस्य च सभिधानार्थत्वात् ॥ १५ ॥

आह च तन्मात्रम् ॥१६॥ सूत्रमवतारयन्ति किञ्चिदित्यादि । एतस्यैव विभागो नन्वित्यादि । विरोध इति । लोकविरोधः । सूत्रं व्याकुर्वन्ति आहेत्यादि । तथाच कृत्स्नस्य प्रज्ञानघनत्वोक्त्या शास्त्रतः प्रतीयमानस्य सर्वस्य केवलज्ञानात्मकताया एव सिद्धेः स्वरूपातिरिक्तानामिन्द्रियाणामभावादतिरिक्तेन्द्रियकल्पना न युक्ता । नचेन्द्रियाभाववत् क्रियाया अभावोपि शङ्क्यः । दूरव्रजनादिबोधकवेदवाक्यविरोधेन तथा कल्पयितुमशक्यत्वात् । नच तत्प्रकरणान्तरत्वाच्छरीरविशिष्टबोधनपरमिति शङ्क्यम् । अत्रापि वेदनिःश्वासायनभूतसमुत्थानादेः श्रावणेन श्वासोच्छ्वासजगत्स्थापनभूतसमुत्थानतदनुविनाशनक्रियाणामुक्तत्वादित्यर्थः । उक्तत्वाच्चेति । चकारः 'प्राण-

रश्मिः ।

मिति । सर्वकर्मत्वादीनाम् । आदिनाऽलौकिकत्वम् । भाष्ये । अकारणेति । दूरं व्रजनस्य आसनमुपवेशनं न कारणम् । 'गतिरिति पादयो'रिति श्रुतेः । अपाणेर्ग्रहीतृत्वमकारणककार्यम् । पाण्यभावस्याकारणत्वात् । तथाऽपादो जवन इत्यादि । तद्धर्माणां चेति । अकारणककार्यधर्माणां अकार्यत्वमलौकिकत्वात् ॥ १५ ॥

आह च तन्मात्रम् ॥ १६ ॥ एतस्यैवेति । अव्याख्यानार्थव्यवच्छेदक एवकारः । विभाग इति । व्याख्यानम् । पूर्वं व्याख्यानात् । एवेति । अश्रुतत्वादन्यव्यवच्छेदकः । क्रियाया इति । 'ज्ञानशक्तिक्रियाशक्ती सन्दिह्येते परस्थिते' इति भाष्योक्तायाः । नचेत्यारभ्य हेत्वन्तं भाष्यं विवृतम् । वेदेत्यादिभाष्यं विवरीतुमाहुः नचेत्यादिना । प्रकरणं जीवपरत्वेन प्रतीतधर्माणाम् । तदन्यत्प्रकरणं शुद्धब्रह्मप्रकरणं प्रकरणान्तरं तत्त्वात् । शरीरे ति । आकाशरूपशरीरविशिष्टेत्यर्थः । परब्रह्मणोऽधोक्षजत्वात् । विवृण्वन्ति स्म अत्रापीति । अत्रापि गार्गिब्राह्मणद्वयेपीत्यर्थः । जीवपरत्वधर्माणां द्वाभ्यामेव प्रतीतेः । एकत्र 'विज्ञानघन एवैतेभ्यो भूतेभ्य' इति पठनम्, एकत्र 'प्रज्ञानघन एवैतेभ्यो भूतेभ्य' इति पठनमिति । वेदनिःश्वासायनं च भूतसमुत्थानं च तदादेः । श्रावणेनेति । 'स यथार्द्रैन्धाग्ने'रित्यारभ्य 'निरासितानी'त्यन्तश्रुतौ श्रावणेन । 'प्रज्ञानघन एवे'त्युक्त्वाग्रे पठ्यते 'एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु

१. धर्माणां च कार्यत्वमिति पाठः । २. अलौकिकधर्मबोधनार्थत्वादिति पाठः मूले ।

ल्पना, किन्तु सर्वाकारस्वरूपं वस्त्वेव तादृशमिति मन्तव्यम्। कृत्स्नवचनात्। चकारात् 'सर्वेन्द्रियविवर्जित'मिति स्मृतिरपि। तस्मान्नेन्द्रियकल्पनया अविरोधः ॥ १६ ॥

## दर्शयति चाथोपि स्मर्यते ॥ १७ ॥

पुनः प्रकारान्तरेण विरोधमाशङ्क्य परिहरति। ननु ब्रह्म जगत्कारणमिति सिद्धम्, तच्च समवायि निमित्तं चेति च, कारणधर्मा एव हि कार्ये भवन्ति, असम्भावनायां त्वन्यथा कल्पनम्, कामाद्यो धर्माश्च श्रुतौ विहिताः, ते ब्रह्मण एव भवितुं युक्ताः, निषेधिकापि श्रुतिः, न हि वेदवादिनामणुमात्रमप्यन्यथा कल्पनमुचितमित्याशङ्क्य परिहरति।

---

भाष्यप्रकाशः।

ण्णेव प्राणो भवती'त्यादेः समुच्चायकः। विषयवाक्यसिद्धमर्थं निगमयन्ति अत इत्यादि। अकृत्स्नत्वबुद्ध्युत्पादकप्रकारसत्त्व एव तन्निवारकस्य कृत्स्नपदस्य सार्थक्यसिद्धेस्तद्वचनात् तथेत्यर्थः। सिद्धमाहुः तस्मादित्यादि। क्रियाणां केवलज्ञानात्मकेन स्वरूपेणैव सिद्धत्वान्न तदनुरोधेनापि तथेत्यर्थः ॥ १६ ॥

दर्शयति चाथोपि स्मर्यते ॥ १७ ॥ पुनरित्यादिना सूत्रमवतार्य तद्विभजन्ति नन्वित्यादि। असम्भावनायां त्वन्यथा कल्पनमिति। कार्यासाधारणधर्माणां कार्यत्ववत् कारणे असम्भावनायां तु विवर्तवादस्य वा असतः सत्ताया वा आश्रयणेन श्रुतिविरुद्धं कल्पनम्। इत्याशङ्क्येति। एवं प्रकारेण विरोधमाशङ्क्य।

रश्मिः।

विनश्यति न प्रेत्य संज्ञास्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्य' इत्यनया श्रावणेन। पूर्वश्रुतौ श्वासोच्छ्वासः वेदशब्दजन्यजगतः स्थापनम्। 'कार्यवत्तद्धर्माणा'मित्युक्तभाष्ये कार्यप्रसङ्गे तद्धर्माणामुक्तेर्जगत्स्थापनमुक्तम्। द्वितीयायां भूतसमुत्थानादिकं स्पष्टम्। छान्दोग्यीयाष्टमोपदेशानुसारेण सर्वभूतसमुत्थानम्, नतु ताम्बूलपूगीफलादिजन्यमदशक्तिवदित्याहुः उक्तत्वादिति। तथाच निलीनप्राणादेराविर्भावः, नतु तत्रासत्याया मदशक्तेरित्यर्थः। 'नासतो विद्यते भाव'इति वाक्यात्। विषयेति। विषयवाक्यं 'स यथा सैन्धवे'त्युक्तम्। तत्सिद्धमर्थम्। अत इति शब्देन पञ्चम्यन्तेन घटितं भाष्यमिति निगमयन्तीत्युक्तम्। तस्मात्पर्वतो वह्निमानितिवत्। सर्वाकारत्वसमर्थनायाहुः अकृत्स्नत्वेति। तादृशप्रकारः प्रज्ञानस्य गुणत्वप्रकारः। तद्वचनादिति। कृत्स्नपदवचनात्। तथा प्रज्ञानघनत्वेन गुणगुणिसर्वाकारस्वरूपं वस्त्वेव, न तु मिश्रम्। तादृशमित्यर्थः। क्रियाणामिति। 'प्राणन्नेवे'त्यादौ प्राणेन्द्रियानुकूलक्रियाणाम्। स्वरूपेण स्वसत्तारूपेण। एवकारोऽसतः सताव्यवच्छेदकः। तदन्विति। अलौकिकेन्द्रियकल्पनानुरोधेनापि तथा अविरोध इत्यर्थः ॥ १६ ॥

दर्शयति चाथोपि स्मर्यते ॥१७॥ नन्वित्यादीति। विरोधमिति। कामाकामबोधकश्रुतिविरोधम्। कार्येति। कार्यासाधारणधर्माः अनित्ये जननदास्यसाधनकर्तृत्वानपहतपाप्मत्वानि तेषाम्। कार्यत्वेति। षष्ठ्यन्ताद्वतिः। श्रुतीति। 'यतो वा इमानी'ति श्रुतिविरुद्धम्। भाष्ये। कामाद्य इति। शारीरकब्राह्मणे 'काममय एवायं पुरुषः यथाक्रतुर्भवति, तत्कर्म कुरुत' इति श्रुतौ तत्कर्मा। 'तदभिसम्पद्यत' इति श्रुतौ तत्कर्मसम्पन्नः। एवं विहिताः। अत्र भवतीति लेडन्तं पदमिति। एवेति। न तु जीवस्येत्यर्थः। युक्ता इति। नैयायिका अपि कारणधर्माः कार्यधर्मानारभन्त इत्याहुः निषेधिकेति। 'अथाकामयमानो योऽकामो निष्काम आत्मकाम आप्तकामो भवती'ति। ज्योतिर्ब्राह्मणेपि 'अथ सुप्तो यत्र न कंचन कामं कामयते न

दर्शयति श्रुतिरेव जडजीवधर्माणां भगवत्यभाव इति। 'द्वे वाव ब्रह्मणो रूपे' इत्युपक्रम्य, द्वेधा पञ्चभूतान्युक्त्वा, 'अथात आदेशो नेति नेती'त्याह। इतिशब्दः प्रकारवाची। ब्रह्म पञ्चमहाभूतानि भवति, न त्वेवंप्रकारकम्। तत् साधयति। न। न भवत्येव ब्रह्म तादृशम्। हि युक्तोऽयमर्थः। 'एतस्माज्जात'मिति। न हि कार्यकारणयोरेकः प्रकारो भवति। अतो 'नेती'ति प्रकारनिषेधोपसंहारः, न तु समवायित्वमात्रत्वम्, किन्तु 'अन्यत् परमस्ति' इति

---

भाष्यप्रकाशः।

परिहारं वदन्तो दर्शयतिपदसूचितं विषयवाक्यमुपन्यस्य व्याकुर्वन्ति द्वे इत्यादि।

इदं बृहदारण्यके मूर्तामूर्तब्राह्मणे। तत्र 'द्वे वाव ब्रह्मणो रूपे' इत्युपक्रम्य अधिदैवताध्यात्मभेदेन द्वेधा पञ्चभूतान्युक्त्वा, 'अथात आदेशो नेति नेती'तिनिषेधमाह। तत्र किं द्वौ नञौ प्रकृतमर्थं गमयत इति द्वयोः स्थापनमात्रं क्रियते, किं वा वीप्सया पूर्वोक्तं सर्वं निषेधति, उत रूपद्वयमेव निषेधति, अथवा पूर्वप्रतिषेधो भूतराशिं निषेधति, द्वितीयो वासनाराशिमित्यादिशङ्कायां श्रुतिः स्वयमेव विवृणोति। 'न ह्यस्मादिति नेत्यन्यत्परमस्ती'ति। अत्र व्याख्येये वाक्ये अथशब्दः प्रक्रमभेदकः। अत इति हेतौ पञ्चमी, ल्यब्लोपे वा। उक्तं रूपद्वयं हेतूकृत्य आदेशः ताभ्यां कार्याभ्यां रूपाभ्यां ज्ञाप्यस्य ब्रह्मण उपदेशो 'नेति नेती'ति। पूर्व इतिशब्दः प्रकारवाची। तथाच समवायित्वात् ब्रह्म पञ्चभूतानि भवति, न तु इति एवं प्रकारकं पञ्चभूतप्रकारकम्। एषः प्रथमनेत्यर्थः। तदेतद्व्याख्यानेन साधयति। 'न ह्यस्मा'दित्यनेन। न, न भवत्येव ब्रह्म तादृशम्। हि युक्तोयमर्थः। युक्तत्वे हेतुः 'एतस्मा'दिति। यत एतस्माज्जातं तत्। न हि कार्यकारणयोरेकः प्रकारो भवति। अतो व्याख्यानात् प्रथमेन नेतीत्यनेन प्रकारनिषेधोपसंहारः। द्वितीयं नेतीति व्याख्याति 'अन्यत्परमस्ती'ति। भिन्नप्रकारकत्वेपि न तु समवायित्वमात्रत्वम्,

रश्मिः।

कंचन स्वप्नं पश्यति तद्वा अस्यैतत् आत्मकाममाप्तकाममकाम९रूप'मिति। श्रुतिरेवेति। स्मृतिव्यवच्छेदकः। 'जडजीवधर्माणां भगवत्यभाव' इति श्रुतिर्मूर्तामूर्तब्राह्मणस्यैव दर्शयतीत्यन्वयः। प्रकृते। दर्शयतीति। प्रज्ञानघनविचारात् सदसद्विलक्षणत्वं तस्य मूर्तामूर्तब्राह्मणे दर्शयति इत्येवं सूचितम्। विषयवाक्यशब्दस्तु सूचितशब्दसमभिव्याहारान्नाधिकरणावयवत्वं वक्ति। अधिकरणावयवे विषयवाक्ये सूत्रपदघटितत्वस्य प्रायो दर्शनात्। इत्यादीति। आदिना प्रकारैतावत्तयोर्निषेधो वा। प्रक्रमेति। मूर्तामूर्तप्रक्रमभेदकः। इतिशब्द इति भाष्यं विवृण्वन्ति पूर्व इति। ब्रह्मेतिभाष्यं विवृण्वन्ति स्म तथाचेति। एवमिति। एवं पूर्वपरामर्शे पूर्वपरामृष्टपञ्चमहाभूतत्वं तत्प्रकारकं पञ्चमहाभूतत्वप्रकारकं नत्वित्यर्थः। भावप्रधानः पञ्चभूतशब्दः। एष प्रथमनेतीत्यस्यार्थः। तत्साधयतीति भाष्यविवरणं तदेतदित्यादिश्रुतिः। तामाहुः नह्यस्मादित्यनेनेति। व्याख्यानेनेत्यनेनान्वेति। एतस्मादितीति। अस्मादिति श्रौतपदार्थः। श्रुतेः प्रत्यक्षमिति इदमः प्रयोगः। आचार्यास्तु तत्काले समीपतरं पश्यन्तीत्येतच्छब्दं प्रयुयुजुः। अत एव क्वचित्पुस्तके नह्येतस्मादिति नेत्यन्यत्वमिति पठ्यते। न हीतिभाष्यविवरणं नहीति। अत इति भाष्यं विवृण्वन्ति स्म अत इति। नेतीत्यनेनेति। व्याख्यानश्रुतिगतेन नेतीत्यनेन। नेतीति। व्याख्येयनेतीतिशब्दो व्याख्यातश्रुतिर्व्याख्याति। तदेतद्भाष्यवि-

रूपं निरूप्य, नाम निरूपयति । 'सत्यस्य सत्य'मिति । तेन प्रपञ्चातिरिक्तब्रह्मणो

भाष्यप्रकाशः ।

किन्त्वन्यत् परमस्तीति । तथाच द्वितीयेन नेतीत्यनेन एतावत्तानिषेधोपसंहारः । तथाचात्र न सर्वनिषेधः, नापि रूपद्वयनिषेधः, नापि भूतवासनाराश्योर्निषेधः, न वा तत्स्थापनमात्रम्, निषेधपक्षेषु व्युत्पादनपूर्वकप्रतिपादनवैयर्थ्यापातात्, स्थापनमात्रपक्षे निषेधस्य प्रक्रमान्तरस्य च वैयर्थ्यप्रसङ्गात्, अतः प्रकारैतावत्तयोरेव निषेध इत्यर्थः ।

एतदेव निगमयितुमाहुः इतीत्यादि । इत्येवं अरूपत्ववारणाय रूपं निरूप्यानामत्ववारणाय नाम निरूपयति 'सत्यस्य सत्य'मिति । तत्र व्याख्येयवाक्य इव व्याख्यानवाक्येपि एवं शङ्का स्यात् । हि निश्चयेन । न एतस्मात् किन्त्वाविद्यकमिति हेतोर्नेति इति, इदं ब्रह्म न भवतीत्युच्यते, किन्त्वन्यत् परं ब्रह्मास्तीति । यद्वा । हि यस्माद्धेतोर्नेति नेतीति वीप्सया मूर्तामूर्ते तद्वासनात्मिकामविद्यां तत्कार्यादि च सर्वं निषिध्य सर्वनिषेधावधित्वेन तत्साक्षित्वेन च ब्रह्मैवात्र निर्दिष्टं इति, कृत्वा, नेति नेतीत्येतस्मात् परं उत्कृष्टं ब्रह्मणो निर्देशनं अन्यन्नास्तीति । अथवा । न ह्येतस्माद्ब्रह्मणो व्यतिरिक्तमस्तीति नेतीत्युच्यते, न पुनः स्वयमेव नास्तीत्यर्थः । तच्च दर्शयति, अन्यत् परमनिषिद्धं ब्रह्मास्तीति त्रिधापि अक्षरयोजना सम्भाव्यते । अतः को वा व्याख्यानवाक्यार्थ इति, तत्सन्देहं निराकर्तुं नाम निर्वक्ति । 'प्राणा वै सत्यं तेषामेष सत्य'मिति । प्राणन्तीति प्राणाः पूर्वोक्ता अपरब्रह्मरूपाः तत्कार्यत्वात् । सत्यम् । नाविद्यकाः ब्रह्मविवर्तभूताः । तत्र

रश्मिः ।

वरणेनैव विवृण्वन्तोऽन्वयमाहुः भिन्नेति । एतावत्तेति । पञ्चमहाभूतमात्रतानिषेधोपसंहारः । तथाच इति नाम पञ्चमहाभूतप्रकारेण ब्रह्म नेति द्वितीयनेतीत्यस्यार्थः, किन्त्वन्यत्तत्समवायि परमस्ति तत इति भावः । नवेति । नञ्द्वयेन मूर्तामूर्तस्थापनमात्रम् । व्युत्पादनेति । निषेधस्य व्युत्पादनेत्यादिः । व्युत्पादनं व्युत्पत्तिः । सा च नश्यतीति नञ् । नच भावे वा डञ् डौ । प्रतिपादनं 'किं द्वौ नञा'-वित्यादिनोक्तपक्षाणाम् । मूर्तामूर्ते नेति न, किन्तु इति उक्तप्रकारेण । नैयायिकानां प्रसिद्धमिति । निषेधवीप्सया निषेधादरात्सर्वं निषिद्धम् । नो चेदुपसंहारे न भवेत् । किंवा रूपद्वयनिषेधद्वयमिति यथासंख्यमन्वयः । व्याकरणात् । पूर्वप्रतिषेधो भूतराशिं आध्यात्मिकं निषेधति । द्वितीयो वासनाराशिं अधिदैवतम् । स्वयमेवेति । एवकारः स्मृत्यादियोगव्यवच्छेदकः । एवेति । प्रतिपादनादन्ययोगव्यवच्छेदकैवकारः । इत्येवमिति । इतिर्हेतावित्यनुक्त्वेत्येवमिति यदुक्तम्, तेन निगमनमेवं प्रकारेणेत्येवं तृतीयान्तोक्तहेतुघटितमिति बोध्यम् । तत्रेति । रूपनिरूपणे । एतस्मादित्यस्मादित्यत्र भाष्यानुरोधात् । आविद्यकमिति । मूर्तामूर्तरूपं इति हेतोः नेति । इमौ शब्दौ व्याकुर्वन्ति स्म इतीति । इत्येवंप्रकारं इदं मूर्तामूर्तरूपं ब्रह्म न भवत्याविद्यकत्वात् इत्युच्यते । प्रथमं द्वयोः स्थापनमात्रं क्रियत इत्युक्त्वा द्वितीय आहुः यद्वेति । तत्कार्यादीत्यादिनाकार्यकार्यग्रहणम् । सर्वनिषेधेति । यथा नेदं रजतमिति निषेधे निषेधावधित्वेन शुक्तिस्तद्वत् । ब्रह्मैवेति । एवकारेण मूर्तामूर्तयोगव्यवच्छेदः क्रियते । नेतीत्येतस्मादत्यन्तेन ह्यस्मादिति नेतीत्यन्तं व्याख्यानं व्याकृतम् । परमित्यारभ्याभ्यत्परमस्तीति व्याकृतम् । नहीति नञोत्रास्तिनान्वयः कृतः । उत रूपद्वयमिति तृतीयपक्ष आहुः अथवेति । अत इति । व्याख्यानवाक्यस्यार्थः । पूर्वोक्ता इति । 'प्राणन्नेव प्राणो भवती'ति श्रुत्युपन्यासेन पूर्वसूत्रचकारोक्ताः । यद्वा 'अथामूर्तम् । प्राणश्च यश्चायमन्तरात्मन्नाकाशः । एतदमूर्तमेतदधदेतस्य'मिति मूर्तामूर्तब्राह्मणस्थाः प्राणाः । तत्कार्यत्वादिति । ब्रह्मकार्यत्वात् । सत्यमिति । प्राणाः

विद्यमानत्वात् प्रपञ्चधर्मवचनं तस्मिन्नौपचारिकमेव युक्तम् । श्रुत्यैव तथा प्रतिपादनात् । चकारः पूर्वयुक्त्यनुसन्धानार्थः । अथो इति प्रक्रमभेदोपि । 'अथात आदेश' इति भिन्नप्रक्रमेणाह । श्रुतेरन्यार्थतानिराकरणायाह । अपि स्मर्यते । 'अनादिमत्परं ब्रह्म न सत् तन्नासदुच्यत' इति । सदसतोः क्षेत्रत्वात् । ज्ञेयनिरूपणे निषेधः । प्रपञ्चधर्मा भगवति उच्यन्ते वेदादौ, न तु तद्धर्मा भवन्तीति ज्ञापयति । तस्माच्छ्रुतिस्मृतिभ्यामेव तथा निर्णयः ॥ १७ ॥

---

भाष्यप्रकाशः ।

हेतुः । तेषां प्राणानां एष परमात्मैव सत्यं स्वरूपभूत इति । यद्वा । सद्रूपत्वात् त्यरूपत्वाच्च सत्यं प्राणास्तेषामेष स्वरूपभूत इति । तथाच व्याख्यानवाक्यमपि न निषेधस्य प्रपञ्चे पर्यवसानं गमयति, न वा ब्रह्मणः सर्वविशेषशून्यत्वे, किन्तु ब्रह्मणः प्रपञ्चप्रकारकत्वे प्रपञ्चसमवायिमात्रत्वे चेत्येतदर्थं रूपनामवत्त्वार्थं च नामनिर्वचनम् । तदेतदुक्तं इतीत्यादिना । तेन यत् सिद्धं तदाहुः तेनेत्यादि । नामव्याख्यानपूर्वकं ब्रह्मणोतिरिक्तत्वस्थापनेन ब्रह्मणस्तथात्वात् तथेत्यर्थः । प्रक्रमभेदोपीति । प्रकारभेदब्रह्मातिरेकयोरुपोद्बलक इत्यर्थः । स्मृतौ ब्रह्मणः सदसत्त्वं निषिध्यते इति कथं तेन विवक्षितव्यतिरिक्तार्थवारणमित्यतो व्याकुर्वन्ति सदसतोरित्यादि ॥ १७ ॥

रश्मिः ।

सत्यमित्यन्वयः । सत्यं नाम नाविद्यकाः, किन्तु ब्रह्मविवर्तभूताः ब्रह्मणो विशेषेण वर्तनभूताः । ब्रह्मवैवर्तपुराणमपि भवति । परमात्मैवेति । तदन्याभावादेवकारोऽन्ययोगव्यवच्छेदकः । अन्यत्परमस्तीत्यत्रान्यत्त्यमिति पुस्तकान्तरपाठात्स्मृतमर्थमाहुः यद्वेति । प्रपञ्च इति । मूर्तामूर्तरूपे । किंवा वीप्सयेत्युक्तद्वितीयपक्षे आहुः न वा ब्रह्मण इति । प्रपञ्चेति । पञ्चमहाभूतप्रकारकत्वे । प्रपञ्चेति । ब्रह्मणोऽभिन्ननिमित्तोपादानत्वादिति भावः । इतीतीति । इति रूपमित्यादिना । अतिरिक्तत्वेति । पञ्चमहाभूतातिरिक्तत्वस्थापनेन । तथेति । प्रपञ्चधर्मस्य पञ्चमहाभूतत्वस्य वचनं तस्मिन् ब्रह्मणि औपचारिकत्वं लाक्षणिकत्वं स्वसमवायिकारणत्वं सम्बन्धः । एवकार आरोपापवादसङ्गतिसत्त्वात् । श्रुत्यैवेति अस्थूलादिश्रुत्यैव । तथेति । औपचारिकत्वम् । स्वभावतो निषेधायोगात् । प्रकारेति । प्रक्रमो मूर्तामूर्तयोः । तस्य भेदं सौत्रोयोशब्द आहेति । निषेधो हि विधिरूपप्रकारस्य भेदेन निषेधरूपप्रकारेण भवति । अतः पूर्वस्मात्प्रकारभेदः । अभावरूपनिषेधे ब्रह्मणोऽतिरेकोऽभावः । नहि खपुष्पे ब्रह्मास्ति । प्रतीत्यभावेन तस्यैवाभावात् । खपुष्पं तु ब्रह्मास्ति । 'यदस्ति यन्नास्ति स एव विष्णु'रिति विष्णुपुराणात् । तयोः सतोः । उपोदिति । नहि घटो नास्तीत्यादिस्थले प्रक्रमभेदेनाभावनिरूपणमस्ति सत्यपि प्रक्रमभेदे । अथो इति शब्दप्रमाणेन तु सतोरुपोद्बलनात्पृथङ्निरूपणमस्ति । 'अथातो ब्रह्मजिज्ञासा' 'अथातो धर्मजिज्ञासे'ति ब्रह्मधर्मयोः ब्रह्मकर्मणोर्वैक्यात् । 'कर्मैके तत्र दर्शना'दिति जैमिनिसूत्रे धर्मस्थले कर्मोक्तिः । भाष्ये । अथो इति विषयवाक्यघटकाथशब्दपर्याय इत्याहुः अथात इति । यतोतः सूत्रेपि भिन्नप्रक्रम इति भावः । मत्परमिति । अहं परो यस्येति मत्परम् । कथं तेनेत्यादि । सदसन्निषेधेन कथं विवक्षितोर्थः अस्थूलादिरूपः तद्व्यतिरिक्तो जडजीवधर्मो औपचारिका ब्रह्मणीति तद्व्यतिरिक्तोर्थः वैदिकधर्मवद्ब्रह्म तस्य वारणमित्यर्थः । सदसतोरित्यादीति । निरूपण इति । गीतायाम् । निषेधः ज्ञापयतीत्यन्वयः । किं ज्ञापयतीत्यत आहुः प्रपञ्चेति । उच्यन्त इति । उपचारेणोच्यन्ते, न तु

## अत एव चोपमा सूर्यकादिवत् ॥ १८ ॥

प्रपञ्चधर्मा भगवत्युपचारादुच्यन्त इत्यत्र निदर्शनान्तरमाह । अतएव इममेव निर्णयमाश्रित्य, 'समः प्लुषिणा समो नागेन समो मशकेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेणे'ति निरुपमस्य भगवतो यदुपमानं तत् तद्धर्मसम्बन्धात् । न चात्र स्वतन्त्रतादृशधर्मवत्त्वं ब्रह्मणो वक्तुं युक्तम् । नन्विदमपि विरुद्धमित्याशङ्क्य दृष्टान्तमाह । सूर्यकादिवत् । सूर्येण सहितं जलं सूर्यकम् । 'यथा ह्ययं ज्योतिरात्मा विवस्वान् अपो भिन्ना बहुधैकोऽनुगच्छन्', 'एकधा बहुधा चैव दृश्यते जलचन्द्रव'दिति । यथेतरसंश्लिष्टस्योपमानत्वम्, एवं 'समः प्लुषिणे'त्यपि ।

---

भाष्यप्रकाशः ।

अत एव चोपमा सूर्यकादिवत् ॥ १८ ॥ सूत्रमवतारयन्ति प्रपञ्चेत्यादि । व्याकुर्वन्ति अत एवेत्यादि । निरूपमस्येति । 'न तत्सम' इति श्रुत्या तथा प्रतिपादितस्य । तद्धर्मसम्बन्धादित्यादि । यदि प्रपञ्चधर्मवत्त्वं ब्रह्मणः स्यात्, तदा 'प्लुषिर्नाग' इत्यादि प्रथमान्तमेव निर्दिशेत्, समपदं च न निर्दिशेत्, अतस्तथा निर्देशाभावात् प्रपञ्चधर्मसम्बन्धादेव तद्धर्मवत्त्वम्, न स्वतस्तथात्वमित्यर्थः । दृष्टान्तोक्तिप्रयोजनमाहुः नन्वित्यादि । इदं निदर्शनमपि समत्वासमत्वयोरुभयोरपि श्रावितत्वेन विरुद्धम्, अथवा तद्धर्मसम्बन्धेन तद्धर्मवत्त्वे ब्रह्मणोऽङ्गीक्रियमाणे दुष्टसम्बन्धे दुष्टत्वमपि स्यात्, अतोपि विरुद्धम्, अतो निर्णायकत्वाभावमाशङ्क्य श्रौतं दृष्टान्तमाहेत्यर्थः । सिद्धमाहुः यथेत्यादि । यथा किरणद्वारा जलादिसंश्लिष्टस्य सूर्यादेर्ब्रह्मोपमानत्वम्, 'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोनुगच्छन्, उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोयमात्मे'त्यादिवाक्येषूच्यते, एवं 'समः प्लुषिणे'तिवाक्येपि प्लुष्यादिसंश्लिष्टस्य तदुपमेयत्वमप्युच्यत

रश्मिः ।

प्रपञ्चधर्मा भगवति भवन्तीति । एव तथेति । प्रसिद्धप्रमाणान्तरव्यवच्छेदकैवकारः । अस्थूलत्वादिप्रकारेणेति तथेत्यस्यार्थः ॥ १७ ॥

अत एव चोपमा सूर्यकादिवत् ॥ १८ ॥ प्रपञ्चेत्यादि । निदर्शनेति । 'दर्शयति चे'ति निदर्शनमुक्तम्, अन्यन्निदर्शनं 'समः प्लुषिणे'त्यादि, तदाह । निदर्शनं दृष्टान्तः यथा ब्रह्मास्थूलत्वादिश्रुतौ तथात्रारूपवत् यथा सम इत्यादिश्रुतौ तथात्रारूपवत् । प्लुष्यादिविश्वविलक्षणम् । अतएवेत्यादीति । अतः ल्यब्लोपे पञ्चमी । इमं निर्णयमाश्रित्यैवेत्यन्वयः । उपमानमिति । एतेन भाष्येण सूत्रे उपमाशब्द उपमीयतेऽनेनेत्युपमा । करणे घञन्त इत्युक्तम् । उपमेयधर्मलुप्तम् । उपमानं प्लुष्यादि । समपदं वाचकं श्रुतावस्ति । उपमेयं लुप्तम्, धर्मो लुप्तः । 'हंसीव कृष्ण ते कीर्तिः स्वर्गङ्गामवगाहत' इत्यत्र चतुष्टयमस्ति । तद्धर्मेति । प्रपञ्चधर्माणां उपचारेण सम्बन्धात् । स्वतन्त्रेति । यथा पञ्चमहाभूतत्वं पञ्चमहाभूते स्वातन्त्र्येण घट इत्युक्ते घटवत्त्ववदुच्यते । युक्तमिति । ब्रह्मत्वेन ब्रह्मस्वतन्त्रधर्मेण तिरस्कारात् । ब्रह्म पञ्चमहाभूतानीत्येवं सदा पञ्चमहाभूतपदसन्निध्यभावात् । अतो न युक्तमित्यर्थः । दृष्टान्तेति । सौत्रदृष्टान्तेत्यादिः । इदमिति । समत्वनिदर्शनम् । असमत्वं 'न तत्समश्चाभ्यधिकश्च दृश्यत' इति श्रुत्युक्तम् । निर्णायकेति । निदर्शनान्तरस्य तथा । सिद्धमाहुरिति । श्रौतदृष्टान्तसिद्धं निदर्शनान्तरेऽविरोधमाहुरित्यर्थः । विवस्वानिति । सूर्यः । भाष्ये । दृष्टान्तप्रसङ्गात् दार्ष्टान्तिकेन समं दृष्टान्तवाक्यमप्याहुः उपाधिनेति । जलाद्युपाधिना । भेदेन रूप्यते व्यवह्रियत इति भेदरूपः । क्षेत्रेषु योन्यादिषु । इत्यादीति । आदिना सौत्रादिशब्दार्थैकधाबहुधेति भाष्यीयवाक्यम् ।

चकारस्तु विरोधाभावो वक्तव्यः, अधिकरणं च संपूर्णमेकदेशिन इति सूचयति। तस्माज्जडजीवधर्माणां भगवत्युपचारः, निषेधस्तु मुख्य इति ॥ १८ ॥

इति तृतीयाध्याये द्वितीयपादे पञ्चममरूपवदेव हीत्यधिकरणम् ॥ ५ ॥

---

भाष्यप्रकाशः।

इति विरोधाभावादुपमारूपं निदर्शनमपि निर्णायकमित्यर्थः। सिद्धमाहुः तस्मादिति। ब्रह्मणः प्रपञ्चविलक्षणत्वेन कार्यासाधारणधर्माणां कारणे ब्रह्मण्यभावेन ब्रह्मणस्तत्स्वरूपधर्माणां च लौकिकमनोवागगोचरत्वेन 'कृत्स्नः प्रज्ञानघन' इति श्रुत्या आकारस्य ज्ञानात्मकत्वेन तच्चरित्रक्रियादीनां धर्माणां च नैसर्गिकत्वेन तेषां च भगवत्प्राकट्ये एव दर्शनादिव्यवहारविषयत्वेन लौकिकवाङ्मनोभिः प्रतीयमानानां स्थानधर्मत्वात् तथेत्येकदेशिमतेन सिद्धमित्यर्थः। तेन ब्रह्मणः स्थानतो जडजीवधर्मवत्त्वम्, स्वतस्तु तद्रहितत्वमित्येकदेशिमतेन सिद्धम्। एतेनास्याधिकरणस्य प्रासङ्गिकत्वं वक्ष्यमाणोपोद्घातत्वं वेति सूचितम्।

विद्वन्मण्डने तु मायावादिमतेन अरूपवत्सूत्रप्रकृतैतावत्सूत्रद्वयाभ्यां निर्विशेषस्यैव मुख्यतया निरूपणं दृश्यते इत्याशङ्कायां 'न स्थानतोपी'त्यादिसूत्रत्रयम्, 'अरूपव'दित्यादिसूत्रचतुष्टयं चोपादेयांशमादायैवं व्याख्यातम्। तथाहि। तत्र जडजीवधर्मा ब्रह्मणि सन्ति न वेति विचारयंस्तन्निरूपकनिषेधकश्रुतीनामन्योन्यविरोधपरिहारं च विचारयन्नुभयोरपि श्रुतिवाक्यत्वेनान्यतरबाधमप्यशक्यं जानन्नौपाधिकं ब्रह्म सविशेषश्रुतिविषयः, निरुपाधिस्वरूपं तन्निर्विशेषश्रुतेरिति मतम्, 'न स्थानतोपि परस्योभयलिङ्गं सर्वत्र ही'ति सूत्रेणौपाधिकत्वे तत्स्वभावत्वं ब्रह्मणो न सम्भवतीति तच्छ्रुतीनामब्रह्मनिरूपकत्वापत्तिरिति निरस्य, पुनरुपहितानुपहितयोर्भेदाङ्गीकारेणोभयरूपत्वं ब्रह्मणि भविष्यतीति तन्मतोपपत्तिमाशङ्क्य, 'न भेदादितिचेन्न प्रत्येकमतद्वचना'दिति सूत्रेण 'अपि चैवमेक' इत्यग्रिमेण चाभेदबोधकश्रुतिविरोधनिरूपणेन निरस्य, पुनराकाराणां प्रपञ्चमध्यपातित्वात् प्रपञ्चस्य जन्यत्वात् तेषामपि तथात्वात् तेषु ब्रह्माभेदबोधनमौपचारिकम्, अतः साकारवादिन्यो न ब्रह्मनिरूपिका इति प्राप्त आह 'अरूपवदेव हि तत्प्रधानत्वा'दिति। स्यादेतदेवम्, यद्याकाराणां प्रापञ्चिकत्वं भवेत्, न त्वेवम्। न हि प्रपञ्चस्थितत्वेनैव प्रापञ्चिकत्वं वक्तुं शक्यम्। त्वदभिमतस्यापि तथात्वापत्तेः। अतो निराकारवादिनीष्विव साकारवादिनीष्वपि श्रुतिष्वरूपवदेव तत् प्रतिपाद्यते। रूप्यते निरूप्यते व्यवह्रियते इति रूपं सर्वव्यवहारविषयत्वम्, तद्युक्तं रूपवद्भिन्नम्, ब्रह्म तु तद्विलक्षणमित्यर्थः। यथा चैतत् तथा मृत्स्नाभक्षणादिप्रसङ्गनिरूपणेन निरूपितम्।

रश्मिः।

तद्युपेति। सूर्याद्युपमेयत्वम्। विरोधाभावादिति। असमस्यैव प्लुष्यादिसमत्वमिति तथा। ध्रुषिणेत्युपमोपमानं सूर्यादि तद्रूपं निदर्शनम्। शेषमिति। अवक्तव्यः उक्तप्रायत्वात्। सूचयन्तीति। समुच्चयार्थकत्वात्सूचयति। जडेति। सर्वकर्मसर्वकामत्वादीनां लौकिकानाम्। निषेधोऽस्थूलादिश्रुत्या। इति विरोधपरिहारः। एवं शेषं स्फुटमित्यर्थः। स्थानत इति। तत्सूत्रे स्पष्टम्। प्रासङ्गिकत्वमिति। अविरोधप्रतिपादकेनाधिकरणेन स्मृतस्यैकदेशिमतस्याविरोधप्रतिपादकस्योपेक्षानर्हत्वादिति भावः। वक्ष्यमाणेति। मुख्यसिद्धान्तबोधकवक्ष्यमाणाधिकरणस्य किमपेक्षया मुख्यत्वमिति निरूपकसापेक्षस्य प्रकृतस्य सिद्धयर्थैकदेशिमतस्य मुख्यत्वनिरूपकस्य चिन्तात्र कृतेत्युपोद्घातत्वम्।

---

१. मूलपुस्तके ब्रह्मण इत्यारभ्य इत्यर्थ इत्यन्तं सिद्धार्थकथनं नास्ति, किन्तु शेषं स्फुटमित्येव वर्तते, रश्मिकारैस्तथैव लिखितमिति।

## अम्बुवद्ग्रहणात्तु न तथात्वम् ॥ १९ ॥ (३-२-६.)

मुख्यसिद्धान्तं वक्तुमेकदेशिनं दूषयति । तुशब्दस्तथा सिद्धान्तं व्यावर्तयति । तथात्वं समवाय्यतिरिक्तस्य तद्धर्मयोगात् । जडजीवधर्मयोगात् सर्वकामा-

भाष्यप्रकाशः ।

अथवा । रूप्यते व्यवह्रियते अनेनेति करचरणाद्युच्यते । तथाच यथा लोके करादिकं भिन्नम्, तदानभिमानी भिन्नः, तथा ब्रह्म न श्रुतौ करादिभिन्नं तदभिमानित्वेन निरूप्यते, किन्तु करादेरपि ब्रह्मत्वाद्भेदाभावाद्रूपरूपमेव निरूप्यते, न तु रूपवदित्यर्थः । ननु कुत एव तदवगम्यते करादीनामपि ब्रह्मत्वमेव, न तद्भिन्नत्वमित्यत आह तद्विनिगमकम्, 'तत्प्रधानत्वा'दिति । सर्वेषां वेदान्तानां ब्रह्मैव प्राधान्येन प्रतिपाद्यं यतः । अयमर्थः । करादीनामब्रह्मत्वे तन्निरूपकाणां वेदान्तानामब्रह्मपरतया ब्रह्मपरत्वनियमव्याहतिः, अतः करादिनिरूपकाः साक्षाद्ब्रह्मप्रतिपादका एवेति । 'सर्वत्र प्रसिद्धोपदेशात्', 'आमनन्ति चैनमस्मि'न्नित्याद्यधिकरणरूपोपपत्तिर्हिशब्देनोच्यते । 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवं वा अरे अयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवे'ति, 'सत्यं विज्ञानमानन्दं ब्रह्मे'ति, 'आनन्दमात्रकरपादमुखोदरादि'रिति, 'आनन्दमयोऽभ्यासा'दित्यादिश्रुतिस्मृतिन्यायैकवाक्यतया सच्चिदानन्दरूपत्वं करादीनामवधारणीयम् । अत एवाग्रे सूत्रकारोप्याह 'आह च तन्मात्र'मिति । एता एव श्रुतयोऽत्रानुसन्धेयाः । त्वदभिमतव्याख्याने तु 'अरूप'मित्येतावतैव चारितार्थ्यं स्यात् । रूपवत्त्वस्योभयवादिसम्मतत्वेनाविवादास्पदत्वात् तन्निषेधानुपपत्तिः । रूपरूपवत्त्वस्य सिद्धान्त्यभिमतत्वात् । एवं सति तथा कथनादस्मदुक्त एवार्थः सूत्रकाराभिमत इति ज्ञायते इति ॥१८॥ इति पञ्चममरूपवदेव हीत्यधिकरणम् ॥५॥

अम्बुवद्ग्रहणात्तु न तथात्वम् ॥ १९ ॥ सूत्रमवतारयन्ति मुख्येत्यादि । एतेनास्मिन्नप्यधिकरणे सर्वकर्मादयो ब्रह्मणि सन्ति, नवेत्येवं सन्देहः । उभयवाक्यश्रवणमेव सन्देहबीजम् । पूर्वपक्षस्त्वौपचारिका इति पूर्वस्माद्विशेष इति बोधितम् । ननूक्तस्य मुख्यत्वाभावे किं गमकमित्यतो गमकं वदन्त एव सूत्रं व्याकुर्वन्ति तुशब्द इत्यादि । व्यावर्तनीयं सिद्धान्तमाहुः तथात्वमित्यादि । तथात्वं नाम एकदेशिनाङ्गीक्रियमाणं त्रिवृत्कृतजलसमवायिव्यतिरिक्तस्य ज्योतिषः सूर्यादेस्तद्धर्मयोगाज्जलधर्मयोगात् कम्पादिकमिव जडादिसमवायिव्यतिरिक्तस्य ब्रह्मणो जडजीवधर्मयोगात् सर्वकामादय इत्येतं सिद्धान्तं नशब्दो व्यावर्तयति । तथाच तुशब्द एव तथा

रश्मिः ।

'चिन्ता प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधा' इत्युपोद्घातलक्षणम् ॥ १८ ॥ इति पञ्चममरूपवदेव हीत्यधिकरणम् ॥ ५ ॥

अम्बुवद्ग्रहणात्तु न तथात्वम् ॥ १९ ॥ एवेति । पूर्वाधिकरणेऽप्यसत्त्वम् । द्वितीयैवकारार्थोप्येवम् । उक्तस्येति । निषेधस्तु मुख्य इत्युक्तस्य निषेधस्य । नशब्दस्य एवेति । सूत्राणां सर्वतोमुखत्वादन्यार्थवदनयोगव्यवच्छेदकैवकारः । त्रिवृदित्यादि । 'अग्नेराप' इति श्रुतेर्जलसमवायित्रिवृत्कृततेजो घृतादि । तद्व्यतिरिक्तस्य । जडादीति । आदिना जङ्गमः । तत्समवायिकर्मफलरूपकर्मफलेच्छामयफलपुष्परूपं तद्व्यतिरिक्तस्य ब्रह्मणोऽस्थूलादिरूपस्य उपचारेण जडजीवधर्मा अभिनाद्यकर्म्यावर्ति-कर्मसर्वकामादयस्तेषां योगात् । व्यावर्तयतीति । तथाच तथात्वं नेतिति सूत्रे योजना । तुशब्द इति । नशब्दकर्तृकव्यावर्तयतिव्याख्यानकस्तुशब्द इत्यर्थः । एवकारो हेतुयोगव्यवच्छेदकः । नशब्देति ।

१. नकारः ।

त्वादयो न भवन्ति। कुतः। अम्बुवदग्रहणात्। सर्वपरस्य हि प्रतिबिम्बेऽधिकरणधर्मवत्त्वम्। तत्र रूपरहितं तत्र विद्यमानं च न प्रतिबिम्बत इति वक्तव्यम्। तथापि स्वमतविरोधादम्बुवदग्रहणमिति। स्वच्छमम्बु प्रतिबिम्बं गृह्णाति। न हि

भाष्यप्रकाशः।

मुख्यत्वाभावगमक इत्यर्थः। हेतुं व्याकुर्वन्ति सर्वेत्यादि। सर्वस्मात् परस्य ब्रह्मणः प्रतिबिम्बे सति अधिकरणधर्मवत्त्वमेकदेशिना सिद्धान्तितम्। तत्र, तन्मते निराकर्तव्ये, रूपरहितं तत्र विद्यमानं च न प्रतिबिम्बत इति दूषणं वक्तव्यम्। ब्रह्मणो जगद्वैलक्षण्यं वदता एकदेशिना ब्रह्मणि नीरूपत्वस्य व्यापकत्वस्य च तत्राङ्गीकारात्। तथाप्येवमुक्तौ सिद्धान्तिनमपि पर्यनुयुञ्जीत। सिद्धान्तेपि विरुद्धधर्माश्रयत्वाङ्गीकारेण तयोरिवाकाशनैर्मल्यवत् स्वरूपात्मकरूपस्य दूरत्वस्य चाङ्गीकारादाकाशस्येव प्रतिबिम्बः सम्भवति, अतः स्वमतविरोधात् प्रतिबिम्बाधिकरणस्वभावमादाय तन्मतदूषकं हेतुमाह अम्बुवदग्रहणमिति। तत् व्युत्पादयन्ति स्वच्छमित्यादि। अम्बु स्वच्छं तस्मादंशेन संश्लिष्टस्य सूर्यादेः प्रतिबिम्बं गृह्णाति। न हि तथा धर्मा ग्रहीतुं शक्नुवन्ति। हि यतो हेतोर्धर्मा मनोमयादिशब्दैकदेशोक्तानि पृथिव्या घटादय इव ब्रह्मण उपादेयानि मनःप्रभृतीनि कार्याणि अस्वच्छानि। मनो हि शुद्धाशुद्धभेदेन द्विविधम्। तत्र शुद्धं कामविवर्जितमिति। तत्र प्रतिबिम्बिते ब्रह्मणि सर्वकामा एव न भासेरन्। अशुद्धस्य तु कामवत्त्वेपि अस्वच्छत्वादेव प्रतिबिम्बाग्राहकत्वम्। प्राणस्त्वापोमयोपि वायुरूपत्वात् प्रतिबिम्बग्रहणायोग्यः। तथा भारूपं तेजः आकाशश्च। तस्माज्जलादिवत् अंशेन संश्लिष्टस्य ब्रह्मणः प्रतिबिम्बं ग्रहीतुं न शक्नुवन्ति। किञ्च। धर्मत्वात्। समवेतं हि कार्यं कारणस्यावस्थाविशेषरूपत्वात् तद्धर्मभूतं तस्मात्। न हि समवेते कार्ये समवायिनः प्रतिबिम्बः क्वापि दृष्टचरः, नाप्यस्वच्छे कस्यापि। अतः समवायिव्यतिरिक्तस्य समवायिनश्च ब्रह्मणो ग्रहीतुमशक्यत्वबोधनायाम्बुवदग्रहणादित्युक्तमित्यर्थः। ननु

रश्मिः।

अस्थूलादिवाक्योक्तनिषेधस्य। जडजीवधर्मयोगादित्युक्तम्। सच 'पृथिव्यां तिष्ठन्' 'आत्मनि तिष्ठ'न्नित्यादिश्रुतिसानुकूल इति तमाहुः सर्वस्मादिति। सतीति। पृथिव्यामात्मनि च सति। अधीति। आत्मपृथिवीधर्मवत्त्वम्। तत्र रूपेतिभाष्यं विवृण्वन्ति स्म तत्र, तन्मत इति। तत्रेति। अधिकरणे। एवमग्रेपि। तथापीतिभाष्यं विवृण्वन्ति स्म तथापीति। पर्यनुयुञ्जीतेति। भगवान् व्यासोनेन सूत्रेणैकदेशिमतवत्स्वमतसिद्धान्तिनमपि पर्यनुयुञ्जीत दूषयेत्। तयोरिति। ब्रह्मनिरूपणव्यापकत्वयोः। अत इति। उक्तरूपात्स्वमतविरोधात्। प्रतिबिम्बेति। दर्पणादेः स्वभावम्, स्वच्छत्वादि। हेतुमाहेति। भगवान् व्यासः। अम्बुवदग्रहणं हेतुमाहेतीत्यप्यन्वयः। नहीत्यादिभाष्यम्। हि यत इति विवरणम्। मनोमयेत्यादि। छान्दोग्ये पञ्चमप्रपाठके। 'मनोमयः प्राणशरीरो भारूपः सत्यसंकल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः' इत्यत्र मनोमयादिशब्दैकदेशा मनःप्राणभासत्यादिरूपाः तदुक्तानि मनःप्रभृतीनीत्यन्वयः। तानि पृथिव्या घटादय इव ब्रह्मण उपादेयानि कार्यत्वेनोपादातुं योग्यानि। 'तन्मनोऽकुरुते'ति। बृहदारण्यके 'एतस्माज्जायते प्राण' इति। एवमन्या ज्ञेयाः। तथेत्यस्यार्थो जलादिवत्। धर्मेतिभाष्यं विवृण्वन्ति स्म किञ्चेति। धर्मत्वादिति व्याख्येयम्। समवायिन इति। कपालादेः। समवायीति। कपालादेः व्यतिरिक्तस्याकाशादिसमवायिनश्च। अशक्येति। ब्रह्माधारपृथिव्यादिभिरशक्यत्वबोधनाय। अम्बुवदिति। व्यतिरेके दृष्टान्तः। अम्बु यथा स्वच्छत्वात्प्रतिबिम्बं

**तथा धर्मा ग्रहीतुं शक्नुवन्ति । धर्मत्वाच्च । सर्वाधारत्वेन तथोच्यमाने वैयर्थ्य-**

भाष्यप्रकाशः ।

भास्तु धर्माणामुपाधिभूतानां प्रतिबिम्बग्राहकत्वम्, तथापि द्युभ्वाद्यधिकरणविषयवाक्ये ब्रह्मणः सर्वाधारतायाः सिद्धत्वात् ब्रह्मण्येव मनःप्रभृतीनां तद्धर्माणां च प्रतिबिम्बोस्तु, तथा सति तेषां धर्माणामौपचारिकत्वमेव सेत्स्यतीत्यत आहुः सर्वेत्यादि । यद्यपि रूपरहितस्य ब्रह्मणो न प्रतिबिम्बग्राहकत्वम्, आकाशादितुल्यत्वात्, तथापि भारूपत्वमादाय ग्रहिलतया तथोच्यमाने तेषां धर्माणामुपाधिधर्मत्वेनैव प्रत्ययः । लोके हि स्थिर आधारे प्रतिबिम्बचञ्चलतायां तद्धर्मे चलने बिम्बीयत्वेनैव भानस्य दृष्टत्वात् । अतस्तद्धर्मत्वेन उपासनाया असिद्धेस्तदनुवादवैयर्थ्यमिति पूर्वं अरूपवत्सूत्रव्याख्याने सर्वशब्दस्य प्रसिद्धानुवादकत्वकथनेनावोचामेति नात्र प्रत्यवस्थानावकाश इत्यर्थः । न च यद्ययोग्यतैवोभयोः, तदा श्रुतौ कुतो जलचन्द्रादिदृष्टान्त उच्यत इति शङ्क्यम् । एकस्यैवोपाधिभेदेन नानात्वबोधनाय तत्कथनात् । 'उपाधिना क्रियते भेदरूप' इति,

रश्मिः ।

गृह्णाति, तथा पृथिव्यादयोरस्वच्छत्वान्न प्रतिबिम्बं गृह्णन्तीति । **उपाधीति** । 'पृथिवी शरीर'मित्यादिश्रुतिभिः पृथिव्यादीनाम् । **ब्रह्मण्येवेति** । एवकार उपाधियोगव्यच्छेदकः । **मनःप्रभृतीनामिति** । मनःप्राणभासत्यादिप्रभृतीनाम् । **तद्धर्माणामिति** । मनोधर्माः 'कामः सङ्कल्प' इत्यादिश्रुत्युक्ताः । प्राणधर्मो बाणावष्टम्भः । एवमन्येपि । बाणो देहः । **तेषामिति** । प्रतिबिम्बितानाम् । **औपचारिकत्वमिति** । अन्यधर्माणामन्यत्र भाने उपचारो गौणत्वम् । तत्सम्बन्धित्वम् । शुक्तौ रजतत्ववत् । वेदान्ताद्यविचारसहकृतशब्दजन्यज्ञानविषयत्वं च पित्तकामलादिदोषसहकृतचक्षुर्जन्यज्ञानविषयत्ववत् । इत्येवकारः । **ब्रह्मण इति** । ब्रह्म प्रतिबिम्बं गृह्णातीति ब्रह्मणः प्रतिबिम्बग्राहकत्वं न । आकाशस्य यथा नीरूपत्वात्तत्र विद्यमानत्वान्न प्रतिबिम्ब इति आकाशादितुल्यत्वं तस्मात् । आदिना वायुः । **ग्रहिलतया** आग्रहवादेन । **भारूपेति** । 'भारूप' इति श्रुतेः । **तथेति** । प्रतिबिम्बग्राहकत्वेन । तथा शब्दात्तृतीयाया लुक् । ब्रह्मण्युच्यमाने । मनआदिधर्माणां उपाधिपृथिव्यादिधर्मत्वेन । अधोक्षजत्वादेवकारः । **स्थिर इति** । दर्पणादौ । **प्रतिबिम्बेति** । चलजलादिप्रतिबिम्बचलतायाम् । **तद्धर्म इति** । प्रतिबिम्बधर्मे । **एवेति** । दृष्टत्वात् । **तद्धर्मत्वेनेति** । उपाधिपृथिव्यादिधर्मत्वेन हेतुना ब्रह्मोपासनायाः । **तदन्विति** । 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीते'त्युक्त्वा 'स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूप' इत्याद्युक्तम् । स पुरुषः । क्रतुमविचलप्रत्ययं कुर्वीत । क्रतुविषयं दर्शयन्ति स्म । मनोमय इत्यादीत्यर्थान्मनोमयात्वाद्यनुवादवैयर्थ्यम् । अन्यधर्मत्वेनानुवादः । **अयोग्यतैवेति** । प्रसिद्धेरेवकारः । **उभयोरिति** । ब्रह्मतदुपाध्योः । ब्रह्मणो नीरूपत्वाद्बिम्बायोग्यता । पृथिव्याद्युपाधीनामस्वच्छत्वात्प्रतिबिम्बग्राहकत्वायोग्यता । **जलचन्द्रादीति** । स्वच्छसरूपदृष्टान्तः । आदिना सूर्यकम् । भवेदेतदेवमन्यमते मायाविषयोर्ब्रह्मप्रतिबिम्बाङ्गीकारात् । ब्रह्ममाययोश्च नीरूपास्वच्छत्वाभ्याम् । अस्मन्मते तु विश्वमप्रतिबिम्बितमिति 'एकोहं बहु स्या'मिति श्रुत्युक्ते विश्वस्मिन्दृष्टान्त इत्याशयेन हेतुमाहुः **एकस्यैवेति** । 'एकोहं बहु स्या'मिति श्रुतेरेवकारः । **तत्कथनात्** जलचन्द्रदृष्टान्तकथनात् । ननु यथा विश्वमप्रतिबिम्बितम्, तथाऽनित्यत्वात्प्रतिबिम्बितमपि इत्येकस्यैवेत्यादिनिश्चयः कुत इत्यत आहुः **उपाधिनेति** । 'एकधा बहुधे'ति इतिशब्दात्षष्ठ्यालुक् । इति दार्ष्टान्तिकस्य यो जल-

मिति पूर्वमवोचाम। नच भ्रमात् कल्पनं वेदेनोच्यते। अप्रतारकत्वात्। सर्व-

भाष्यप्रकाशः।

'एकधा बहुधा चैव दृश्यत' इति दृष्टान्तप्रयोजनोक्त्यैव तथा निश्चयादिति। नन्वत्र पूर्वं ब्रह्मणः सर्वत्वेनोपासनायाः 'शान्त उपासीते'त्यन्तेन विधानात् 'स क्रतुं कुर्वीते'त्यस्यापि व्यवहितेनो-पासीतेत्यनेनैव सम्बन्धान्मनोमयत्वादिधर्मविशिष्टत्वेन ब्रह्मण एवोपासनं विधीयत इति, तत्र यथा सर्वत्वमारोपितम्, एवमत्र मनोमयत्वादिकमप्यारोपितमेवेत्यम्बुवद्ग्रहणाभावेपि सर्वकाम-त्वादिधर्माणां कल्पितत्वादौपचारिकत्वमेवेत्यत आहुः नचेत्यादि। नात्र मनोमयत्वादिकमा-रोपितम्। उपासनाया एवात्राभावात्। अथेत्यनेन प्रक्रमभेदे बोधिते प्रकृतच्छेदेन व्यवहितसम्ब-न्धस्य वक्तुमशक्यत्वात्। किन्तु पूर्वोपासनया शुद्धान्तःकरणस्य सर्ववेदान्तप्रसिद्धब्रह्मण उपदेशो-ऽयम्। स शान्तोऽन्यत्र रागरहितः, क्रतुं वक्ष्यमाणप्रकारकं निश्चयमध्यवसायात्मकमविचल-प्रत्ययं तथा मननं वा स्वस्य वक्ष्यमाणभगवत्स्वरूपलाभार्थं कुर्वीतेति। एतेन शब्दान्तरेणापि तथा निश्चयात्। उपसंहारे च पूर्वोक्तधर्मविशिष्टस्यात्मनो ब्रह्मत्वं 'एतत् ब्रह्मे'त्यनेन निगमयित्वा 'एतमितः प्रेत्याभिसम्भवितास्मी'ति, 'यस्य स्यादद्धा न विचिकित्सास्ती'त्यत्रेतिशब्देन पूर्वोक्तं सर्वं परामृश्य, 'यस्य स्यादद्धे'त्यनेन सर्वस्य सत्यत्वनिगमनादपि तथा निश्चयात्। आरोपितत्वे

रश्मिः।

चन्द्रवदिति दृष्टान्तस्तस्य प्रयोजनं फलं देवभेदः तस्योक्त्यैव। एवकारो दृष्टान्तप्रयोजनोक्त्यन्यवाक्य-योगव्यवच्छेदकः। 'उपाधिना क्रियते भेदरूपो देव' इति दृष्टान्तेन। इतिशब्दात्तृतीयाया लुक्। तथेति। एकस्यैवोपाधिभेदेन नानात्वबोधनाय दृष्टान्तकथननिश्चयादित्यर्थः। तेनान्वयोयम्। ब्रह्मण एवेति। एवकारोऽन्ययोगव्यवच्छेदकः। तत्रेति। विराजि। अत्रेति। पृथिव्यादिस्थिते। औपचारिकत्व-मिति। गौणत्वम्। एवकारो मुख्यत्वयोगव्यच्छेदकः। भाष्यं विवरीतुमाहुः नात्रेति। एवेति। षष्ठ्या लुक्। अवधारणस्य। अथेति। 'अथ खलु क्रतुमयः पुरुष' इत्यत्र। प्रकृतमुपासनम्। तस्य छेदेन। उपासनाया व्यवहितसम्बन्धस्य। पूर्वोपेति। 'सर्वं खल्वि'त्युक्तया। शुद्धान्तःकरणस्योपास-कस्य। उपासनायान्तःकरणशुद्धिः प्रसिद्धा। अयमिति। वक्ष्यमाणः। तमाहुः स शान्त इति। स क्रत्वधिकारी पुरुषः। अन्यत्र भगवद्व्यतिरिक्ते। क्रतोर्मननार्थकत्वस्य वक्ष्यमाणत्वात्। वक्ष्य-माणेति। 'एतमितः प्रेत्याभिसम्भवितास्मी'ति श्रुत्या वक्ष्यमाणभेदम्। मनसः चलनिश्चयं वारय-न्तिस्म अध्यवेति। मानस्याः सेवायाः अविचलप्रत्ययम्। वक्ष्यमाणेति। 'एतमित' इति श्रुत्युक्त-भगवत्स्वरूपलाभार्थम्। शब्दान्तरेणेति। ब्रह्मशब्दादन्येन क्रतुरूपशब्दान्तरेण। नन्वविचलप्रत्य-यात्मकं साधनम्, ब्रह्मरूपं फलं कुत इतिचेत्। न। अस्य क्रतोर्निरोधलक्षणग्रन्थोक्तार्थविषयत्वेन ब्रह्म-त्वात्। भूमाधिकरणे लिङ्गभूयस्त्वाधिकरणे च 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमे'त्येकविषयत्वात्। तथेति। सर्वकर्मत्वादिधर्माणामनौपचारिकत्वनिश्चयात्। 'एतद्ब्रह्मे'त्यत्र 'एष म आत्मान्तर्हृदय'मत एतद्ब्रह्मेत्यतःशब्दमध्याहृत्यार्थ इत्याहुः निगमयित्वेति। निगमनस्य हेतुघटित-त्वात्। एतमिति। एतच्छब्दार्थम्। अद्धेति। साक्षात्। विचिकित्सा संशयः। सर्वस्येति। विश्व-रूपेण प्रत्यक्षकथनात्सर्वस्य सत्यत्वनिगमनात्। ननु निगमनं हेत्वभावात्कथमितिचेत्। न। साक्षादि-त्यत्र पञ्चम्या लुगङ्गीकारात्। तथेति। सर्वकर्मत्वादिधर्माणामनौपचारिकत्वनिश्चयात्। नहि सत्या धर्मा औपचारिका भवन्ति। भाष्यं विवृण्वन्तिस्म आरोपितत्व इति। भ्रमादतद्वति तत्प्रकारकज्ञानरूपात्

ज्ञत्वाच्च। विप्लववादिन एवैवं वचनम्, न वैदिकस्य। 'पृथिव्यां तिष्ठ'न्नित्यादिविरोधश्च। तस्मात् ब्रह्मधर्मा एव सर्वकामादयः, न तूपाधिसम्बन्धादौपचारिका इति॥ १९॥

वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्॥ २०॥

सिद्धान्तेन विरोधपरिहारमाह। विरोधो हि परिहरणीयो लोकवेदाभ्यां तद्व-

भाष्यप्रकाशः।

च भ्रमात् कल्पनम्। तत्तु नात्र वेदेनोच्यते। अप्रतारकत्वात् सर्वज्ञत्वाच्च। यदि ह्येवं सत्यत्वं निगमयन् स्वयं सम्यक् ज्ञात्वा परस्मा आरोप्यान्यथा ब्रूयात्, प्रतारक एव स्यात्। अज्ञात्वारोपितं चेत् ब्रूयात्, सर्वज्ञत्वादेव हीयेत। अतो नात्र तथा वक्तुं शक्यमित्यर्थः। एतेन मध्वादिविद्यास्विवात्र कल्पनोपदेश इत्यपि निरस्तम्। तत्रैवमवचनात्। सांख्यवादिनं प्रति तद्रीतिबोधने तत्र तथा कथनाच्च। तत् तत्रैवोपपादितम्। अतो वेदान्तार्थविप्लववादिन एवैवं वचनम्, न वैदिकस्येति युक्तम्। किञ्च। यदि ग्रहिलतया भ्रमात् कल्पनमत्राङ्गीक्रियेत, तदान्तर्यामिब्राह्मणमपि विरुध्येतेति दोषान्तरमाहुः पृथिव्यामित्यादि। पृथिव्यादिप्रपञ्चस्याविद्याकल्पितत्वाच्छुक्तिरजतकल्पे तस्मिन्निरविद्यस्येश्वरस्य स्थित्ययोगात् तद्बोधकश्रुतिविरोधश्चेत्यर्थः। सिद्धमाहुः तस्मादित्यादि। तस्मादिति। अम्बुनीव मनःप्रभृतिषु ब्रह्मप्रतिबिम्बस्यासम्भवात्। तथाच धर्माणामौपचारिकत्वनिर्णयमाश्रित्य यत् बुध्यादिसाम्यं ब्रह्मण उक्तम्, तदसङ्गतमित्यर्थः॥ १९॥

वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्॥ २०॥ सूत्रमवतारयन्ति सिद्धान्तेनेत्यादि। विरोधपरिहारकस्यैकदेशिमतस्यानुपपन्नत्वे दर्शिते विरोधस्यैव स्थैर्यात् कथं तत्परिहार इत्याकाङ्क्षायां तथेत्यर्थः। परिहारं व्युत्पादयन्तः सूत्रं व्याकुर्वन्ति विरोधो हीत्यादि। तथाच तन्मते प्रतिबिम्बस्य वक्तुमशक्यतया लोकाननुसरणम्, भ्रमात् कल्पनस्याशक्यवचनतया वेदाननुसरणम्, अतस्तद्विहाय हेत्वन्तरेण परिहरतीत्यर्थः। अनुसारं व्युत्पादयन्ति महानित्यादि,

रश्मिः।

सर्वकामत्वादिधर्माणां कल्पनम्। वेदेनेति। छान्दोग्येन। स्वयमिति। 'यस्य स्यादद्धा न विचिकित्सास्ती'ति वेदः। एवेति। अन्ययोगव्यवच्छेदकः। एवेति। असर्वज्ञत्वव्यवच्छेदक एवेति। नात्रेति। वेदे धर्माणां तथाकल्पितत्वं न वक्तुं शक्यम्। मध्वादीति। 'असौ वा आदित्यो देवमधु तस्य द्यौरेवे'त्यादिना सूर्यस्य देवमधुत्वं प्रतिपादितम्, रश्मीनां वेदत्वं च। आदिशब्देन सर्वा एव देवोपासनविद्या गृहीताः। निरस्तमिति। अप्रतारकत्वात्सर्वज्ञत्वाच्च। ननु तद्वदित्युक्ते न प्रतारकत्वम्, नाप्यज्ञत्वमितिचेत्, तत्र हेतुमाहुः तत्रैवमिति। 'स क्रतुं कुर्वीते'त्यध्यवसायावचनात्। तत्र तथेति। मध्वादिविद्यासु तथाकल्पितत्वकथनात्। तत्रैवेति। प्रथमाध्यायचतुर्थपादे 'कल्पनोपदेशाच्च मध्वादिवदविरोध' इति सूत्रभाष्य एव। एवकारो 'मध्वादिष्वसंभवादनधिकारं जैमिनि'रितिसूत्रभाष्ययोगव्यवच्छेदकः। विप्लवेतिभाष्यं विवृण्वन्तिस्म अतो वेदान्तेति। एवेति। अन्ययोगव्यवच्छेदकः। एवं वचनमिति। धर्माणां कल्पनवचनम्। तस्मादित्यादीति। एवकारो जडजीवधर्मयोगव्यवच्छेदकः। नतूपाधीति। जडजीवसम्बन्धात्कल्पिताः॥ १९॥

वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्॥ २०॥ दर्शित इति। पूर्वसूत्रेण दर्शिते। एवेति। अविरोधयोगव्यवच्छेदकः। तत्परिहारस्ते विरोधपरिहारः। तथेति।

नुसारेण। महानवकाशोऽल्पोऽवकाशः, 'यथावकाशं दश चमसा'निति लौकिकवैदिकव्यवहारो वस्तुधर्मविरुद्धो दृश्यते। व्यापकत्वं वृद्धिह्रासौ च आकाशस्यैव। तत्र यथा करके प्रविष्ट आकाशस्तथा व्यपदिश्यते, तथा सत्युभयसामञ्जस्यं भवति, अन्यथा एकतरबाधो भवति, एवं तत्तदनुप्रवेशात् ब्रह्माप्येवम्। नचौपाधिकत्वम् । जपाकुसुमलौहित्यवदन्यधर्मत्वाभावात् । अन्यानुविधायित्वेपि

भाष्यप्रकाशः।

ब्रह्माप्येवमित्यन्तम् । 'यथावकाशं दश चमसा'नित्यासादनविषये श्रुतिः। एवं चयनेपि 'एतैरग्निं चिन्वीते'ति 'चित्तिः स्रु'गित्यादिमन्त्रैश्चयनं विधाय, प्रकारप्रदर्शनावसरे चतुर्षु दिक्षु तत्तद्धोतृमन्त्रैश्चयनं दर्शयित्वा, 'यथावकाशं ग्रहान् यथावकाशं प्रतिग्रहा'निति 'वाचस्पते विधे नाम'मित्यादिमन्त्रोपधेयानां ग्रहसंज्ञकानां 'देवस्य त्वे'त्यादिमन्त्रोपधेयानां प्रतिग्रहसंज्ञकानामिष्टकानां तद्विमध्ये योऽवकाशस्तदविरोधेनोपधानमाह। अवकाशश्चाकाश एव । तत्र यथापदेन स्वल्पत्वमहत्त्वादिकं सूच्यते। लोकव्यवहारस्तु स्फुट एव। वस्तुधर्मविरुद्ध इति। आकाशीयनैसर्गिकधर्मभूतविभुत्वव्यधिकरणः । उभयसामञ्जस्यमिति। विभुत्वाल्पत्वयोरैकाधिकरण्येन प्रामाणिकादरणीयत्वम्। तथाच यथा आकाशस्योपाध्यन्तर्भावाद्वृद्ध्यादिभाक्त्वम्, एवं ब्रह्मणोऽप्युपाध्यन्तर्भावात् तदभिव्यङ्ग्यसर्वकामादिधर्मवत्त्वमिति सूत्रार्थः। अत्र बीजं तु विषयश्रुतावाकाशात्मेत्युक्तिः। अत आकाशदृष्टान्तस्य प्रकृतश्रुत्यनुसारित्वे तत्तदुपाधिप्रविष्टं ब्रह्मापि तत्तद्धर्मवत् वक्तव्यम्, न त्वेकदेश्युक्तरीत्येत्यर्थः । नन्वेवमपि तेषां धर्माणामौपाधिकत्वेनौपचारिकत्वमेवायातीति को विशेषः सिद्धान्त इत्यत आहुः नचौपाधिकत्वमित्यादि। यदि हि ते श्रुतौ

रश्मिः।

विरोधपरिहारमाह। हेत्वन्तरेणेति। अग्रहणादितिहेतोरन्यो हेतुरन्तर्भावादिति तेनेत्यर्थः। आसादनेति पात्रासादनविषये। चयनयागे। एवेति। 'अवकाशं कुर्वि'तिप्रयोगादेवकारः। सूच्यत इति। सादृश्यं वाच्यम्। लोकेति। महानवकाशोऽल्पोवकाश इति भाष्योक्तः। आकाशीयेति। तादृशविभुत्वं सकलमूर्तिबहिःसंयोगित्वं तदधिकरणमाकाशो महान् लोकदृष्टिगम्यः। तादृशविभुत्वव्यधिकरणस्त्वन्तराकाशः शास्त्रदृष्टिगम्यः। न च 'विशिष्टं शुद्धान्नातिरिच्यत' इति वाच्यम्। प्रायश्चित्तानापत्तेः । दृष्टविरोधाच्च। तथाचेति । सूत्रतद्भाष्यपर्यालोचने चेत्यर्थः। यथाकाशस्येति शब्दद्वयं 'यथा करके प्रविष्ट आकाश' इतिभाष्यात्। भाष्येपि कुत इति चेत्, वृद्धिह्रासभाक्त्वपदान्वयानुरोधेनाक्षेपादिति गृहाण। वृद्धिह्रासभाक्त्वं चाकाशस्यैवेति सावधारणं भाष्यम्। ननु ब्रह्मण इति ब्रह्मयोगव्यवच्छेदकः। अन्तर्भावादित्यपि सापेक्षमुपाधिमाक्षिपति। तदाहुः उपाध्यन्तर्भावादिति। एवमितिसौत्रं शब्दं वृद्धिह्रासभाक्त्वमित्यस्याग्रे प्रयोज्य, ब्रह्मेतिप्रथमसूत्रादनुवर्त्य षष्ठ्यन्तं कृत्वा संस्कृतभेदेपि शब्दं धृत्वोपाध्यन्तर्भावादितिपदमावर्त्याहुः एवं ब्रह्मणोप्युपाध्यन्तर्भावादिति। 'उभयसामञ्जस्या'दित्यत्र विभुत्वसामञ्जस्यं स्पष्टमित्यल्पत्वसामञ्जस्यमाहुः तदभिव्यङ्ग्येति। उपाधिरूपपुरुषाभिव्यङ्ग्याः सर्वकामादिधर्मास्तद्वत्त्वरूपं सामञ्जस्यमिति हेतोः व्यापकत्वं वृद्धिह्रासौ चेतीतिशेषः। अनेन सूत्रार्थ इति पदं योजनीयम्। विषयेति। 'सर्वं खल्विदं ब्रह्मे'त्यादिछान्दोग्यीयायां श्रुतौ। 'आकाशात्मे'ति षष्ठीतत्पुरुषा'दाकाशवत्सर्वगतश्च नित्य' इतिस्मृतिस्मरणादाहुः अत आकाशेत्यादि। प्रकृतेति। विषयश्रुत्यनुसारित्वे। एकदेशीति। 'जडजीवधर्माणां भगवत्युपचारः, निषेधस्तु मुख्य इती'ति भाष्येणोक्तैकदेशिरीत्या। एवमपीति। उपाधिनिवेशेन विरोधपरिहारेपि। नचौ-

**स्वधर्मा एव ते । कारणत्वादिवत् । नचागन्तुकत्वात् तद्धर्मा एव न भवन्तीति वाच्यम् । अन्यधर्मत्वे प्रमाणाभावात् । तद्गतत्वप्रतीतेश्च । दृष्टत्वाच्चाविरोधः । अविरोधप्रकारोऽयम् । यथोभयसामञ्जस्यं भवति, प्रकारोपि तस्यैव तथा**

भाष्यप्रकाशः ।

जपाकुसुमलौहित्यवदन्यधर्मत्वेन प्रत्यायिताः स्युः, तदा तेषामौपाधिकत्वं स्यात् । प्रत्यायितास्त्वात्मविशेषणेष्वात्मधर्मत्वेन, अतो न तथात्वमित्यर्थः । ननु यद्यप्येते आत्मविशेषणत्वेनोक्ताः, तथापि मनोमयत्वादिकं पूर्वमुक्त्वा पश्चादुक्ताः, तेन ब्रह्मणो मनआद्यनुविधायित्वमेव स्फुटीकृतम्, तथा सति तेषां तद्धर्मत्वमेव, न ब्रह्मधर्मत्वम्, अन्यानुविधायित्वस्यैव स्फुटीभावादित्यत आहुः अन्येत्यादि । तदभिध्यानसूत्रे आकाशादिलिङ्गतया तत्तदनुविधायित्वस्य सिद्धत्वादत्र मनआद्यन्यानुविधायित्वेपि सर्वकामादयो ब्रह्मधर्मा एव । यथा तत्रत्यं कारणत्वम् । आदिपदेन 'विश्लिष्टशक्तिर्बहुधेव भाती'ति स्मृत्युक्तं शक्तिविश्लेषादिकमपि संगृहीतं ज्ञेयम् । तेन स्वल्पकार्यकरणेपि नौपाधिकत्वमित्यर्थः । नन्वेवमन्यानुविधायित्वे तेषामागन्तुकत्वं तु सिद्धम्, तथा सति नैसर्गिकत्वाभावादन्यधर्मा एव भवन्ति, न तु भगवद्धर्मा इत्यत आहुः नचागन्तुकेत्यादि । 'कामः सङ्कल्प' इति श्रुतौ 'अशुद्धं कामसङ्कल्प'मिति श्रुतौ च कामसङ्कल्पयोः केवलयोरेव मनोधर्मत्वं श्रूयते, न तु सर्वत्वसत्यत्वविशिष्टयोस्तयोः, अतोऽन्यधर्मत्वे श्रुत्यभावः । लिङ्गवाक्यप्रकरणाभावस्तु स्फुटः । स्थानं त्वन्यानुविधानेनैव व्याख्यातम्, अतः प्रमाणाभावात् तथेत्यर्थः । समाख्या तु बहुव्रीहिणा ब्रह्मधर्मत्वमेव स्फुटीकरोतीत्याहुः तद्गतेत्यादि । ननु यद्यप्येवम्, तथापि युक्तिभिरनुचिन्तनस्य मननत्वात् तच्छेषत्वेनैतत्पाठेप्युपासनाशेषत्वमेव, न तु स्वतन्त्रब्रह्मधर्मत्वमेषाम्, यथा अस्थूलत्वादीनाम्, अतस्तदपेक्षया निर्बलत्वात् कथमविरोध इत्यत आहुः दृष्टत्वाच्चाविरोध इति । 'सोऽकामयत बहु स्या'मित्यत्र सर्वविषयककामस्य ब्रह्मधर्मत्वेन दृष्टत्वादेतेषां स्वाभाविकब्रह्मधर्मत्वेन नैर्बल्याभावादविरोध इत्यर्थः । नन्वेवं सति धर्मविधिनिषेधयोरेकविषयत्वाद्विरोध एवायातीति कथमविरोध इत्यत आहुः अविरोधेत्यादि । अयमस्मदुक्तरीतिकः ।

रश्मिः ।

पाधिकत्वमित्यादीति । जपेति । विलक्षणलौहित्यबोधनाय जपाकुसुमोपादानम् । वैलक्षण्यं त्वन्यधर्मत्वम् । 'तत्सृष्ट्वा तदेवानुप्राविश'दिति श्रुतेः सर्वकामत्वादीनामन्यस्योपाधेर्धर्मत्वाभावात् । अन्येति । उपाध्यनुविधायित्वेपि धर्माणां ते धर्माः स्वस्य ब्रह्मण एव, नतूपाधेः, श्रुतावुपाधिसमत्वोक्त्या तथावसायात् । समत्वं धर्मैरिति । ननु समत्वेपि विभुत्वविरुद्धा अन्य धर्मा इति चेत्, तत्राहुः एवेति । 'यदेकमव्यक्तमनन्तरूप'मिति श्रुत्या निर्धारणादित्यर्थः । एवेत्यस्मात्पञ्चम्या लुक् । ननु स दोषस्तदवस्थ इति चेत्, तत्र दृष्टान्तमाहुः कारणत्वेत्यादि । नहि कारणत्वमुपाधिगतमुपाधेर्यस्ति । 'कर्ता शास्त्रार्थवत्त्वा'दित्यधिकरणविरोधात् । आदिना सत्यत्वादयः । तद्वदिति न स दोषस्तदवस्थ इति भावः । ननु कारणत्वादयो नागन्तुका इति दृष्टान्तवैषम्यमिति प्रतिवादिनं पर्यनुयुञ्जतेऽस्म नचागन्तुकेति । जानाति इच्छति यतत इति प्रवादात् सर्वकामादीनां ज्ञानाधीनत्वेनागन्तुकत्वात्ते तद्धर्माः ब्रह्मधर्मा एव न । एवकारो 'नहि जन्या भगवद्धर्मा भवन्ती'ति तद्योगव्यवच्छेदकः । श्रुत्यादीति । आदिना

१. न चौपाधिकत्वमित्यादि प्रमाणाभावादिति, श्रुत्यादिरूपनाल्पर्यलिङ्गाभावात् । तद्गतत्वेत्यादिना तेषां वास्तवत्वानङ्गीकारे प्रत्यक्षविरोधोपीति बोधितम् । तस्यैवेति, विचार्य वस्तुन एव । सिद्धमाहुः तस्मादित्यादि । एवं ब्रह्मापीति । तत्तदुपाध्यन्तर्भूतं तथा तथा भवति, तथा च पूर्वमर्भकौकःसूत्रे व्योमवच्चेत्यनेन यदुक्तम्, तदेवात्र स्मारितम् । अत्र ब्रह्मधर्मविचारप्रसङ्गेन जीवधर्मोपि विचारित इत्याशयेनाहुः इहिहासपदेनेति मूलपाठः रश्मौ व्याख्यातः ।

वक्तव्यः । तस्मात् यथा आकाशस्य वृद्धिह्रासभाक्त्वं करकादिष्वन्तर्भावात् तथैवोभयसामञ्जस्यात्, एवं ब्रह्मापि । वृद्धिह्रासपदेन शरीरे आकाशजीवयोरेकमुदाहरणं बोधयति ॥ २० ॥

## दर्शनाच्च ॥ २१ ॥

हेत्वन्तरमाह । भगवति सर्वे विरुद्धधर्मा दृश्यन्ते । 'न हि दृष्टेऽनुपपन्नं नाम ।' व्याघातात् । तादृशमेव तद्वस्त्विति त्वध्यवसायः प्रामाणिकः । चकारादुलूखल-

भाष्यप्रकाशः ।

यथोभयसामञ्जस्ये श्रुतिद्वयस्य मुख्यार्थप्रतिपादकता भवति । एकदेशिना दृष्टान्तेनैवाविरोधसाधनात् । प्रकारोऽपि दृष्टान्तस्यैव श्रुत्यनुसारेण वक्तव्यः, अन्यथैकदेशी न मन्येत, अतस्तथेत्यर्थः । उक्तं निगमयन्ति तस्मादित्यादि । तथाच यदा भगवान् सत्त्वादिष्ववतरति, किञ्चित्कार्यार्थं जीवे आविशति वा, तथात्र ये कर्मादयः आश्चर्यजनकाः प्रतीयन्ते, यथा परशुरामादिषु निःक्षत्रीकरणादयः, यथा चन्द्रे प्रतर्दनाख्यायिकोक्ता दैत्यवधादयः, यथा च गुर्वादौ भगवद्गतिव्यञ्जनादयः, ते सर्वे आधाराभिव्यङ्ग्या भगवद्धर्मा एव, न त्वाधारधर्माः । एतदेव ज्ञापयितुमाहुः वृद्धिह्रासपदेनेत्यादि । तथाच जीवन्मुक्तदशायामानन्दाविर्भावेन व्यापकत्वेप्यणुत्वस्य यदबाधः, तत्राप्येषा युक्तिः । शरीरान्तःस्थितौ तेनाभिव्यज्यमानमपि जीवधर्मभूतमेवाणुत्वम्, आनन्दाविर्भावेन चाभिव्यज्यमानं व्यापकत्वम्, ब्रह्म तु ततोप्यधिकम्, अन्यथा व्युच्चरणादिश्रुतिविरोधापत्तेः । एतावान् परं विशेषः । आकाशे विभुत्ववज्जीवेणुत्वं सहजम्, अन्यथा 'क्षुद्रा' इति विशेषणबाधापत्तेरिति । तथाच पूर्वमर्भकौकःसूत्रे 'व्योमवच्चे'त्यनेन यदुक्तम्, तदेवात्र स्मारितम् ॥ २० ॥

दर्शनाच्च॥२१॥ सूत्रमवतारयन्ति हेत्वन्तरमाहेति । एवमुपाधिसम्बन्धेनाभिव्यज्यमानत्वे तेषां नैमित्तिकत्वेनागन्तुकत्वमेव घृतद्रवत्वादिवत्, नतु स्वाभाविकत्वम् । तथा सति सृष्टेः पूर्वं निर्धर्मकमेव स्यात्, ततश्च 'सोऽकामयते'त्यादिरपि पीड्येतेति तदभावाय हेत्वन्तरमाहेत्यर्थः । अत्र सूत्रे 'उभयसामञ्जस्यादेव'मिति पदद्वयं पूर्वसूत्रादनुवर्तते । चो बुद्धिस्थसमुच्चायकः । तथाच

रश्मिः ।

स्मृतिः । श्रुतिस्तु 'नेति नेति' 'अस्थूलमनण्वि' त्यादिश्च । स्मृतिश्च 'मायामयं वेद स वेद वेद'मिति । एतद्रूपाणां प्रमाणानां तात्पर्यं सर्वकामादिधर्मनिषेधविषये लिङ्गं हेतुस्तदभावात् । तर्हि किंविषये तात्पर्ये लिङ्गमितिचेत्, उच्यते । श्रुतेस्तात्पर्यविषयस्य 'नेति नेती'त्यस्य व्याख्याने पूर्वमुक्तम् । स्मृतेस्तात्पर्यविषयं वैराग्यमिति । पूर्वमिति । प्रथमाध्यायद्वितीयपादे । विचारित इति । आकाशदृष्टान्तेन विचारितः । क्षुद्रा इतीति । 'यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ती'ति श्रुतौ तथा ॥ २० ॥

दर्शनाच्च ॥ २१ ॥ एवेति । स्वाभाविकत्वयोगव्यवच्छेदकैवकारः । घृतेति । आदिना जतुसुवर्णद्रवत्वम् । तथा सतीति । धर्माणां नैमितिकत्वे सति । एवेति । सधर्मकाभिन्नत्वयोगव्यवच्छेदकैवकारः । पीड्येतेति । सृष्टेः पूर्वमिच्छारूपधर्मबोधकं वाक्यं इच्छाया अपि ज्ञाननिमित्तत्वेनागन्तुकत्वसम्भवात्पीड्येत, नित्येच्छाबोधकत्वाभावात्पीडा । इच्छादीनां 'अविनाशी वारे अयमात्मानुच्छित्तिधर्मे'ति श्रुतेर्नित्यत्वात् । सिद्धवचनभाष्यादाहुः अत्र सूत्र इति । अनुवर्तेत इति । किञ्च, ब्रह्मप्रतीतेर्न विरोध इति भाष्यात्तत्रत्यात् । प्रथमसूत्राद्ब्रह्मेत्यनुवर्तते । एवमिति । सौत्रपदार्थोयम् । न विरोधशब्दाभ्यां पादार्थोप्युक्तः । तत्रत्यभाष्यादेवाहुः च इति । बुद्धिस्थानां श्रुतिस्मृतिप्रत्यक्षाणां समुच्चायक

बन्धनादिषु प्रत्यक्षमेवोभयसाधकं दृष्टमिति। 'अथो अमुष्यैव ममार्भकस्ये'ति च। तस्माच्छ्रुतिस्मृतिप्रत्यक्षैः सर्वविरुद्धधर्माश्रयत्वेन ब्रह्मप्रतीतेर्न विरोधः ॥ २१ ॥

भाष्यप्रकाशः।

केवलब्रह्मबोधकश्रुतिषु तत्तद्धर्मदर्शनात् प्रत्यक्षेणापि भानात् स्मृतावपि सिद्धत्वात् ब्रह्म एवम्, यथा प्रतीयते तादृशम्। तत्र हेतुरुभयसामञ्जस्यमेव। तदेतत् हृदिकृत्य सूत्रोक्तं दर्शनं विवृण्वन्ति भगवतीत्यादि। तथाच वैश्वानरविद्यायां प्रादेशमात्रत्वाभिविमानत्वं द्युमूर्धत्वादिकं पुरुषत्वं पुरुषविधत्वं पुरुषेऽन्तःप्रतिष्ठितत्वम्। तैत्तिरीये 'यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्ता'दित्येकस्याव्यक्तस्यानन्तरूपत्वम्। एवं श्रुत्यन्तरेऽपि 'आसीनो दूरं व्रजती'त्यादीनि दृश्यन्ते। एवं मिथिलागमने श्रुतदेवजनकयोर्गृह एककालावच्छेदेन प्रवेशादिकं स्मृतिसिद्धं दृश्यते। अवतारदशायां गोवर्धनोद्धरणादिकमवस्थासाधनविरुद्धं कार्यं च दृश्यते। तत्र प्रत्यक्ष-श्रुतिसिद्धे सर्वजनीनदर्शनसिद्धे तादृक्स्मृतिसिद्धे च ब्रह्मणो विरुद्धधर्माश्रयत्वेऽनुपपत्तेर्वक्तुम-शक्यत्वाद्वस्तुस्वभावमेवादाय दर्शनस्येच्छानुग्रहादिहेतुकत्वं चादाय तादृशनिश्चयस्य प्रामाणिकत्व-मवगन्तव्यमित्यर्थः। उभयसाधकमिति। स्वल्पत्वमहत्त्वयोः साधकम्। तत्र बहूनां दाम्नां सन्धानेपि न स्वरूपवेष्टकत्वम्, स्वरूपस्य च न प्रथमपरिमाणादाधिक्यम्, अन्यथा विस्मया-नापत्तेः। मृत्स्नाभक्षणव्यादानस्थले च स्पष्टमेव तथात्वम्। 'एवं विदिततत्त्वाया' इति तत्र कथनात्। मायामोहस्य तदुत्तरं कथनाच्चेति। तेन सिद्धमाहुः तस्मादित्यादि। वैश्वानरेऽर्थ-

रश्मिः।

इत्यर्थः। च दर्शनादिति सूत्रयोजनामाहुः तथा चेति। तत्तद्धर्मेति। सत्यत्वज्ञानत्वादिधर्म-दर्शनात्। स्मृताविति। 'अथो अमुष्यैव ममार्भकस्य यः कश्चनौत्पत्तिक आत्मयोग' इतिस्मृतौ। तेन चकारात्सप्तम्या लुक्। एवं चकारार्थेषु मध्ये श्रुतिषु दर्शनादिति सूत्रं व्याख्यातं पञ्चम्यन्तेन। प्रत्यक्षे-णेति। उलूखलबन्धनादिषु प्रत्यक्षेण। बुद्धिस्थद्वितीयचकारार्थेन समं सूत्रार्थः। बुद्धिस्थतृतीयचकारार्थेन समं सूत्रार्थमाहुः स्मृतावपीति। भानेन सिद्धत्वात् भानात्। एवं सूत्रार्थमुक्त्वानुवृत्तपदानामर्थमाहुः ब्रह्म एवमिति। एवंशब्दार्थः यथेत्यादिः। न विरोधः। उभयेति। पञ्चम्यन्तमितिविशेषणं बोध्यम्। एवेति। अयं दर्शनादितिहेतुयोगव्यवच्छेदकः। तस्याननुवृत्तपदेन्वयो न सकलसूत्रेऽहेतुत्वात्। नापि पूर्वहेतुसमुच्चयेन हेतुत्वम्। अन्यचकारार्थोक्तेः। वैश्वानरेति। इय प्रथमाध्याये 'वैश्वानरः साधारण-शब्दविशेषा'दित्यत्र समर्थिता। प्रवेशादिकमिति। आदिशब्देन स्थित्यादिकम्। दशमस्कन्धे स्पष्टम्। अवस्थेति। सप्तवार्षिकी। साधनं गोवर्धनोद्धरणम्। तदुभयविरुद्धं कार्यं गोष्ठरक्षणम्। एतावता दृश्यन्त इति भाष्यार्थ उक्तः। नहीत्यादिभाष्यार्थमाहुः तत्र प्रत्यक्षेति। प्रत्यक्षा श्रुतिः प्रत्यक्षश्रुतिः। तत्सिद्धे विषये सति सार्वजनीनप्रत्यक्षसिद्धे विषये सति। तादृगित्यादावप्येवम्। अनुपपत्तेर्विरुद्धधर्म-रूपानुपपन्नपदार्थनिष्ठाया वक्तुमशक्यत्वाद्दृष्टे दर्शनविषये सति हि निश्चयेन नानुपपन्नं विरुद्धधर्मादि नाम। व्याघातात्। चक्षुरादौ प्रामाण्यहिंसनात्। स स्वभाव इव दृश्यते इति तादृशं ब्रह्मरूपनिश्चय-रूपवस्तुस्वभावम्। एवेत्यन्ययोगव्यवच्छेदकः। तादृशेति। 'इति त्वध्यवसायः प्रामाणिक' इति भाष्यार्थः। भाष्ये। चकारादिति। बुद्धिस्थसमुच्चायकात्। भाष्यप्रकाशोक्तार्थकात्। आदिशब्देन मृत्स्नाभक्षणविश्वरूपदर्शने। प्रत्यक्षमेवेति। सूत्रोक्तत्वात्प्रत्यक्षम्। एवकारेण श्रुतिस्मृतिरूपान्य-योगव्यवच्छेदकेनोभयसाधकम्। प्रकृते। स्पष्टमेवेति। अस्पष्टत्वयोगव्यवच्छेदक एवेति। विरुद्ध-धर्माश्रयत्वं तथात्वमित्यस्यार्थः, विरुद्धधर्माश्रयत्वं तत्त्वमिति वाक्येनाहुः एवं विदितेति। तत्र प्रमाणमाहुरित्यप्यामासः। कथनादिति। 'वैष्णवीं व्यतनोन्माया'मित्येवम्। प्रत्यक्षमेवेति भाष्येण

## प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २२ ॥

परमार्थतो विरोधं परिहृत्य युक्त्यापि प्रतिषेधति। ननु सर्वविशेषधर्माणामस्थूलादिवाक्यैर्निषेधात् कथमविरोधः प्रत्येतव्य इति चेत्। तत्राह। प्रकृतैतावत्त्वं हि प्रतिषेधति। प्रकृते यदेतावत् परिदृश्यमाना यावन्तः पदार्था लौकिकाः,

भाष्यप्रकाशः।

क्रमस्य बलीयस्त्वमुपगम्य विरोधस्य परिहर्तुं शक्यत्वेपि काठके तथा वक्तुमशक्यत्वात्। उलूखलबन्धने स्वल्पस्य यत्तावत्सु दामस्वमानं तस्य स्वरूपधर्मत्वे, मतान्तरेण शरीरधर्मत्वे वा तदाधारस्य विरुद्धधर्माश्रयतायाः प्रत्यक्षसिद्धतया स्मृतिसिद्धतया चापह्नोतुमशक्यत्वेन अभिन्ननिमित्तोपादानत्वोपगमेन च विरुद्धधर्माश्रयत्वस्य प्रामाणिकत्वाच्छ्रुत्यादिभिस्तथात्वेन ब्रह्मप्रतीतेर्न विरोध इति प्रकृतानां सर्वकामत्वादीनामप्यौपचारिकत्वकल्पनं नैमित्तिकत्वेनानित्यत्वोद्भावनं चाप्रयोजकमित्यर्थः। एवमेताभ्यां सूत्राभ्यां 'अत एव चोपमे'तिसूत्रोक्तं सर्वं प्रत्युक्तं ज्ञेयम्॥२१॥

प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २२ ॥ सूत्रमवतारयन्ति परमार्थत इत्यादि। परमार्थत इति। वस्तुविचारात्। एवं सर्वैः प्रकारैः परिहृतेपि विरोधे पुनर्युक्त्या परिहारस्य किं प्रयोजनमित्याकाङ्क्षायां वस्तुनस्तादृक्स्वभावत्वममन्वानं प्रति युक्तिरवश्यं वक्तव्येत्यतः सूत्रांशमवतारयन्ति नन्वित्यादि। तथाच पूर्वसूत्रोक्तदर्शनस्य अवतीर्णे स्वेच्छया

रश्मिः।

सौत्रदर्शनस्य मुख्यत्वं श्रुतिस्मृत्योर्व्यवच्छेदेनोक्तं तयोरन्वयमत्र भाष्य उक्तं तत्स्पष्टयन्तिस्म वैश्वानर इति। प्रादेशमात्रेभिविमाने औपाधिकेऽभिविमानत्वासंभवादार्थक्रमेणाभिविमाने इति वक्तव्ये अर्थक्रमस्य बलीयस्त्वमुपगम्येत्यर्थः। काठक इति। 'आश्चर्यो वक्ता कुशलोऽस्य लब्धा, आश्चर्योस्य ज्ञाता कुशलोऽनुशिष्ट' इत्यत्राश्चर्ये वक्तव्ये औपाधिकोप्यभिविमान इत्यर्थक्रमेण तथा नामविरोधपरिहारस्य वक्तुमशक्यत्वात्। तस्येति। अमानस्य। मतान्तरेणेति। पुराणमतेन मायारूपशरीरधर्मत्वे वा। स्मृतेर्मुख्ये दर्शने उपष्टम्भकतयान्वयमाहुः स्मृतिसिद्धेति। प्रत्यक्षमुपष्टब्धमिति सप्रमाणम्, न तु शुक्तिरजतप्रत्यक्षवदप्रमाणमित्युक्तम्। अभिन्नेति। समन्वयाधिकरणेयमुपगमः। अत्र श्रुतेरन्वयमाहुः श्रुत्यादिभिरिति। श्रुतिस्मृतिप्रत्यक्षैः। तथात्वेन विरुद्धधर्माधारत्वेन। ब्रह्मप्रतीतेरिति। ब्रह्मदर्शनात्। अत्र श्रुत्यादिभिरित्यन्तेन श्रुतिस्मृतिप्रत्यक्षैरितिचकारार्थभाष्यार्थ उक्तः। तथात्वेनेत्यनेनानुवृत्तोभयसामञ्जस्यं पञ्चम्यन्तं तस्यार्थः सर्वविरुद्धधर्माश्रयत्वेनेति शक्यतावच्छेदक उक्तः। ब्रह्मप्रतीतेरित्यनेनावृत्तब्रह्मपदार्थः सौत्रदर्शनादितिपदार्थ उक्तः। न विरोध इत्यनेनावृत्तैवंशब्दार्थ उक्तः। नैमित्तिकत्वेनेति। जानातीच्छति यतत इति प्रवादात् निमित्तं ज्ञानं तत्सम्बन्धिविशेषत्वे च। अत एव चोपमेति। 'तस्माज्जडजीवधर्माणां भगवत्युपचारः, निषेधस्तु मुख्य' इति भाष्येण संगृहीतम्। प्रत्युक्तमिति। सर्वकामत्वादीनामौपचारिकत्वकल्पनस्यानित्यत्वोद्भावनस्य चाप्रयोजकत्वोक्त्या प्रत्युक्तमित्यर्थः ॥ २१ ॥

प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २२ ॥ निश्चिते इति। स्वाभाविकानां निषेधायोगात्। कथमिति। कथमविरोधः प्रत्येतव्य इत्यर्थः। भाष्ये। प्रतीतस्यै-

१. तथा च सर्वविशेषनिषेधेन तादृक्स्वभावाभावे निश्चिते कथं तथेत्यर्थः इति मूले पाठः।

तेषामेव धर्मान् निषेधति । प्रतीतस्यैव हि निषेधात् । अतो जगद्वैलक्षण्यमेवा-स्थूलादिवाक्यैः प्रतिपाद्यते, न तु वेदोक्ता ब्रह्मधर्मा निषेद्धुं शक्यन्ते । कुत एत-दवगम्यते । तत्राह । ततो ब्रवीति च भूयः । यत्रैव वाक्ये पूर्वं निषेधति, तस्मिन्नेव वाक्ये पुनस्तमेव विधत्ते । 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह, आनन्दं ब्रह्मणो विद्वा'निति । तथा अस्थूलवाक्येपि 'एतस्यैव प्रशासने' 'एतद्वि-दित्वा' 'आकाश ओतश्च प्रोतश्चे'ति । चकारादेकवाक्योपाख्यानभेदौ संगृ-

भाष्यप्रकाशः ।

व्यवहार्ये प्रपञ्चसलक्षण एव प्रतीयमानैकविशेषविरुद्धविशेषान्तरविषयत्वान्न तेन प्रपञ्चविलक्षणे सर्वविशेषशून्ये ज्ञानाकारे तद्विरुद्धविशेषवत्त्वसिद्धिरिति तत्र धर्मविधिनिषेधयोरविरोधः कथं प्रत्येतव्य इत्याकाङ्क्षायामविरोधप्रत्ययप्रकारमाहेत्यर्थः । व्याकुर्वन्ति प्रकृते यदित्यादि शक्यन्त इत्यन्तम् । प्रकृते इति । गार्ग्युपक्रान्ते प्रपञ्चे, गार्गीप्रश्ने वा । तथाच जगद्वैलक्षण्यबोधनेन तत्प्रकारका धर्मा निषिध्यन्ते, न तु तत्सदृशाः स्वरूपधर्मा अपि । अतो न ते औपचारिका इत्ययं तत्तदभावयोरविरोधप्रत्ययप्रकारः । तेन निषेधमात्रदर्शनात् सर्वकामत्वादीनामौपचारि-कत्वकल्पनं यत् दर्शयतिसूत्रे कृतम्, तदनया युक्त्या परिहृतमित्यर्थः । अत्र प्रमाणाकाङ्क्षायां सूत्रशेषमवतारयन्ति कुत इत्यादि । उदाहरणमाहुः यत इत्यादि । अत्र ज्ञानकारणाप्राप्तिकथन-मुखेन पूर्वार्धे ज्ञानं निषिध्य, उत्तरार्धे तद्विधत्ते । अस्थूलवाक्येपि 'अवागमनः अमुख'मिति प्रशासनकारणनिषेधमुखेन प्रशासनं निषिध्य, 'एतस्यैवे'त्यादिना तद्विधत्ते । एवं सर्वधर्मनि-षेधमुखेन वेद्यत्वं निषिध्य, 'एतद्विदित्वे'त्यादिना तद्विधत्ते। तथा 'न तदश्नोति कश्चने'ति व्याप्तिं निषिध्य, 'आकाश ओतश्च प्रोतश्चे'त्यनेन तां विधत्ते । 'न तदश्नोती'त्यस्य भोजनार्थकत्वपक्षे त्वत्र भगवत्कर्तृकं च भोगं निषेधति, 'सोऽश्नुते सर्वान् कामा'नित्यादौ तद्विधत्ते इति बोधयि-तुमाहुः चकारादित्यादि । तथाच यथा श्वेताश्वतरे 'अनन्तश्चात्मा विश्वरूपो ह्यकर्ते'ति कर्तृत्वं निषेधति, तथा मुण्डके 'कर्तारमीश'मिति विधत्ते । एवमन्यत्रापि बोध्यम् । तथाच कर्मणि साध्ये

रश्मिः ।

वेति । अप्रतीतयोगव्यवच्छेदक एवकारः । जगद्वैलक्षण्यमेवेति । नन्वस्थूलादिवाक्ये वैलक्षण्यं न नञर्थः, षट्स्वनुक्तेरितिचेत् । न । पर्युदासार्थकनञर्थेन सुखेन वैलक्षण्योपलब्धेः । तद्भिन्नस्त-त्सदृशो विलक्षणो भवतीति । चन्द्रवन्मुखमित्यत्र चन्द्रभिन्नं चन्द्रसदृशं मुखं भवति । तद्विलक्षणमि-त्येवकारः । यत्रैवेति । आरोपापवादस्यासङ्गतत्वबोधनायैवकारत्रयम् । अन्यथैवकारत्रयं व्यर्थं स्यात् । तथाच यद्यारोपापवादो भाष्ये विवक्षितः स्यात्, एवकारत्रयघटितं भाष्यं न स्यादिति । तेनैतादृशस्थले नारोपापवादः । यत्र क्वचिद्धर्मा विहिताः, अन्यत्र निषिद्धाः, तत्रैवारोपापवादसन्देहः कर्तव्य इति भाष्येण द्योत्यते । उदाहरणमिति । उक्तार्थस्य उत् अधिकमाहरणं यस्मिन् तद्वाक्यमाहुः । एकत्वम-विवक्षितम् । ज्ञानेति । ज्ञानं शब्दं तत्कारणं वाचस्ताभिरप्राप्तिकथनमुखेनेत्यर्थः । अवागिति । अवाक् अमन इति छेदः । प्रशासनेति । प्रशासनकारणानि वाङ्मनोमुखानि । तन्निषेधमुखेन । एतस्येति । 'एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिवी विधृते तिष्ठत' इति श्रुत्या । सर्वधर्मेति । अस्थूल-श्रुत्यैव सर्वधर्मनिषेधमुखेन । एतद्विदित्वेत्यादीति । 'अथ य एतदक्षरं गार्गि विदित्वास्माल्लोका-त्प्रैति स ब्राह्मण' इत्यादिना । अन्यत्रापीति । मूर्तामूर्तब्राह्मणे 'अथात आदेशो ने'ति मूर्तामूर्ते निषिध्य तद्विधत्ते 'नह्येतस्मादिति नेत्यन्यत्परमस्तीति प्राणा वै सत्यं तेषामेष सत्य'मिति श्रुत्या । चकारादित्या-दिभाष्यस्य चकारादनुक्तसमुच्चयार्थकात् एकं ब्रह्मवाक्येन षोडशिग्रहणाग्रहणरूपेण यदुपाख्यानं तयोः परस्परं भेदौ तौ संगृहीतावित्यर्थं मन्वाना आहुः तथा चेति । कर्मणीति । अतिरात्राख्ये व्यक्तिमे-

ह्नीतौ । सर्वत्र लौकिकं प्रतिषेधति, अलौकिकं विधत्ते इति युक्त्या निर्णयः । तस्मात् युक्त्याप्यविरोधः ॥ २२ ॥

इति तृतीयाध्याये द्वितीयपादे षष्ठमम्बुवद्ग्रहणादित्यधिकरणम् ॥ ६ ॥

---

भाष्यप्रकाशः ।

व्यक्तिभेदेन षोडशिग्रहणाग्रहणवभित्य एकस्मिन् ब्रह्मणि ज्ञेयत्वाज्ञेयत्वप्रशासितृत्वाप्रशासितृत्वादीनां विकल्पस्याशक्यवचनतया वाक्यस्याबोधकतायां तन्निवृत्त्यर्थं लौकिकं निषेधति, अलौकिकं तं धर्मं विधत्ते इति व्यवस्था मन्तव्या । स्थूलत्वादीनां लौकिकानामेव निषेधदर्शनात् । ईदृशप्रशासितृत्वादीनामलौकिकानामेव विधानदर्शनात् । अतो ये वस्तुस्वभावतो विरुद्धधर्माश्रयत्वं न मन्वते, तान् प्रत्येवं लौकिकालौकिकविभागरूपया युक्त्या निर्णयः । तेन श्रुत्या बोध्यमाना ये सर्वकामत्वादयः, तेप्यलौकिका एव । मन्दधियामविचारकाणां परं नामतौल्येन भ्रमः । नचानाप्तकामत्वापत्तिः । अभिध्यारूपत्वेन, स्वयमेव तत्पूर्तिकरणेन चादोषात् । एतेन जीवतुल्यतापत्तिरपि परिहृता बोध्या । तस्माच्छ्रुत्यक्षराण्यननुसन्दधानानां बोधार्थं युक्त्याप्यविरोध आचार्येणोक्त इत्यर्थः । एतेनैव यावद्धर्मशून्यत्वं ब्रह्मणो वदन्तोपि प्रत्युक्ता वेदितव्याः ।

अन्ये त्वस्मिन् सूत्रे 'द्वे वा व ब्रह्मण' इति वाक्यं विषयत्वेनाहुः । तदर्थं विद्वन्मण्डने एतद्वाक्यार्थोपि विचारितः । तथाहि । 'नेति नेती'त्यत्र इतिशब्दः प्रकारवाची । तथाच पूर्वं मूर्तामूर्तब्रह्मणो विभूतिरूपं 'य एवं वेदे'त्यन्तेन निरूप्य यस्यैतद्रूपद्वयं पूर्वमेव षष्ठ्यन्तेन पदेन निरूपितभेदस्य तस्मिन्निरूप्यमाणेष्वपि सर्वतःपाणिपादान्तत्वादिष्वेवं लौकिकत्वेन वेदनं मा भूदिति भिन्नप्रक्रमेणैतत्प्रकारकं वेदनं ब्रह्मणो निषेधति 'अथात' इत्यादिना । अयमर्थः । ब्रह्मण्यपि मूर्तामूर्तरूपे सर्वतःपाणिपादान्तेत्यादिश्रुत्युक्ते वेदितव्ये । परन्त्वित्यनेन प्रकारेण न वेदितव्ये ब्रह्मण एते रूपे इति, किन्तु ब्रह्मैवेति वेदितव्ये इत्यर्थः । अत्र विनिगमकमाह सूत्रकारः 'ततो ब्रवीति च भूय' इति । शेषं स्फुटम् ।

यत्तु प्रकृतशब्देन 'द्वे वा व ब्रह्मण' इत्यादिनोक्तं मूर्तामूर्तलक्षणं रूपद्वयं परामृश्यत इति मतम्, तत्र प्रकृतत्वं प्रतिषेधतीत्येतावतैव चारितार्थ्ये सत्येतावत्पदं व्यर्थम् । नच प्रकृतस्य ब्रह्मणः प्रकृते वा ब्रह्मणि एतावत्त्वं प्रतिषेधतीति व्याख्यानान्न दोष इति वाच्यम् । तथा सति 'ततो ब्रवीति च भूय' इत्यस्य वैयर्थ्यापातात् । प्रकृतपदेनैव ब्रह्मप्रमितौ तदभावशङ्कानुदयेन तत्सत्तायां मानाकाङ्क्षार्थं तत्कथनप्रयोजनाभावात् । तस्मादसदुक्त एवार्थ इति ॥ २२ ॥ इति षष्ठमम्बुवद्ग्रहणादित्यधिकरणम् ॥ ६ ॥

रश्मिः ।

देनैकैकेन । अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णातीति षोडशिग्रहणाग्रहणयोर्विकल्पस्येव । षष्ठ्यान्ताद्वतिः । अशक्येति । व्यक्तिभेदाभावादितिभावः । अबोधकेति । दृष्टान्ताभावात्तथा । एवेति । प्रक्षालनपङ्कन्यायेनैवकारः । विद्वन्मण्डनेयं विषयः स्पष्टः । सर्वत्रेतिभाष्यं विवृण्वन्ति स्म लौकिकं निषेधती । एवेति । नित्यानां निषेधायोगात् । एवेति । 'लौकिकं नैव मनुत' इत्याचार्यवचसः । नित्यानित्यसंयोगापत्तेश्च । अलौकिका एवेति । एवकारार्थ उक्तः । नामेति । स्थूलसर्वकामादिनाम्नां तौल्येनालौकिकनामवति लौकिकनामवत्त्वेन ज्ञानमितिभ्रमः । तस्मादितिभाष्यं विवृण्वन्तिस्म तस्मादिति । अनन्विति । युक्तीर्विनाननुसन्दधानानाम् । युक्त्यापीति । अपिशब्देन परमार्थतः । आचार्येण व्यासेन ॥ २२ ॥ इति षष्ठमम्बुवद्ग्रहणादित्यधिकरणम् ॥ ६ ॥

## तदव्यक्तमाह हि ॥ २३ ॥ ( ३-२-७. )

शब्दबलविचारेण विरोधं परिहृत्यार्थबलविचारेणाविरोधप्रतिपादनायाधिकरणमारभते । सर्वाणि विरुद्धवाक्यान्युदाहृत्य चिन्त्यन्ते । 'न चक्षुषा गृह्यते' 'कश्चिद्धीरः प्रत्यगात्मानमैक्षत्,' 'नापि वाचा' 'सर्वे वेदा यत् पदमामनन्ति' 'अप्राप्य मनसा सह' 'मनसैवैतदाप्तव्यम्,' 'अस्पर्शमगन्धमरसम्' 'सर्वरूपः सर्वगन्धः सर्वरसः', 'अपाणिपाद' इत्यादि 'विश्वतश्चक्षु'रित्यादि, 'निर्गुणश्च' 'यः सर्वज्ञः सर्वशक्ति'रित्यादिविरुद्धवाक्यानि । न हि वस्तु द्विरूपं सम्भवति । वाक्यद्वयमपि प्रमाणम् । तथा सति प्रमाणान्तरानुरोधेनैकस्य स्वार्थे प्रामाण्यम्, अन्यस्योपचरितार्थत्वमिति युक्तम् । तत्र प्रत्यक्षानुरोधेन निर्णयो विचार्यते ।

तत्र पूर्वपक्षमाह । तदव्यक्तम् । तत् ब्रह्म अव्यक्तमेव भवितुमर्हति ।

---

भाष्यप्रकाशः ।

तदव्यक्तमाह हि ॥ २३ ॥ अधिकरणप्रयोजनमाहुः शब्दबलेत्यादि । तथाच यद्यपि स्वविचारे तस्यानावश्यकत्वम्, तथाप्यन्यैः ऋषिभिरर्थबलेन विचारस्याङ्गीकृतत्वात् तेनाविचारे तेषां निर्विशेषपक्षपातात् सविशेषश्रुतिः पीड्येत, विचारिते त्वर्थसामर्थ्ये वस्तुस्वभावादेवोभयसम्भवाच्च श्रुतिपीडेत्यतस्तन्निवारणार्थं तदारभत इत्यर्थः । ननु विरुद्धवाक्येषु चिन्तितेषु किमवशिष्टं येनार्थबलाद्विरोधोत्थानमित्यत आहुः सर्वाणीत्यादि । सर्वाणीति । प्रमाणाग्राह्यत्वतद्ग्राह्यत्वयोर्धर्मराहित्यतद्वत्त्वयोराकारराहित्यतद्वत्त्वयोर्गुणराहित्यतद्वत्त्वयोर्बोधकानि । 'सर्वरूप' इत्यनेन 'यथामाहारजनं वास' इत्यादिश्रुतिस्तद्विरुद्धा 'अरूपमव्यय'मिति श्रुतिश्च स्मार्यत इति बोध्यम् । सन्देहमाहुः न हीत्यादि । तथाच लौकिकालौकिकभेदेन व्यवस्थायां कृतायां मास्तु शब्दे संशयः, तथाप्यर्थे संशयो दुर्वार इत्यर्थः । सन्देहबीजमाहुः वाक्येत्यादि । तत्र[1] पूर्वपक्षमुत्थापयितुमापाततो निर्णयप्रकारं वदन्ति तथा सतीत्यादि, विचार्यत इत्यन्तम् ।

पूर्वपक्षमाहुः तत्रेत्यादि । यद्यपि पूर्वं सर्वप्रमाणापेक्षया शब्दस्यैव प्राबल्यं निर्णीतम्, तथापि शब्दस्यार्थसापेक्षत्वादर्थबलेनैव विचारो मुख्य इति श्रुत्यर्थनिश्चायनायार्थबले विचार्ये

रश्मिः ।

तदव्यक्तमाह हि ॥ २३ ॥ तस्येति । अर्थबलविचारस्यास्मिन्भगवद्व्यासमते शब्दबलसिद्धेनावश्यकत्वम् । अन्यैरिति । अत्रैव बादरिप्रभृतिभिः । यथेति । आमाहारेण जनं जननम् । वर्णलोपः । वासः शरीरे इत्यनव्ययम् । संशय इति । चक्षुरग्राह्यो ग्राह्यो वेत्यादिः । सन्देहबीजमिति । प्रमाणे विकल्पोत्थापकं बीजमित्यर्थः । 'श्रुत्योर्विरोधे विकल्प' इति मनुस्मरणात् । आपाततः इति । अविचार आपातस्तस्मात् । एकदेशिनिर्णयप्रकारम् । पूर्वमिति । प्रथमाध्यायद्वितीयचरणे वैश्वानराधिकरणे । शब्दस्यैवेति । एवकारस्तु 'केवलं शब्दबलविचारका आचार्या' इति 'साक्षादप्यविरोधं जैमिनि' रितिसूत्रभाष्यात् । शब्दस्यार्थेति । घटं दृष्ट्वा घटशब्द इति तथा । यद्यप्यर्थस्य शब्दसापेक्षत्वं 'शब्द इति चे'दितिसूत्रात्, तथापि पूर्वपक्षग्रन्थत्वाद्युक्तम् । एवेति । 'अर्थबलविचारको बादरि'रिति तथा । 'केवलार्थवि-

---

१. तत्रापाततो निर्णयप्रकारं वदन्तः पूर्वपक्षमुत्थापयन्तीति पाठः मूले ।

कुतः। आह हि। श्रुतिप्रत्यक्षाभ्याम्। 'नेति नेत्यात्मा अग्राह्यो न हि गृह्यत' इति। 'न हि गृह्यत' इत्यनुभवसाक्षिकं प्रमाणं श्रुतिराह। न हि केनचिदपि चक्षुषा मनसा वा ब्रह्म दृष्टमस्ति। सर्वरूपत्वे तु सर्वैरेव द्रष्टुं शक्येत। तस्मात् सर्वधर्मवत्त्वेन प्रतिपादकान्युपचरितार्थान्येव। अनुभवविरोधादित्येवं प्राप्तम् ॥ २३ ॥

अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ २४ ॥

अपीति पूर्वपक्षगर्हायाम्। सर्वथा मूर्खः पूर्वपक्षवादी। यतः संराधने सम्यक् सेवायां भगवत्तोषे जाते दृश्यते। 'श्रद्धाभक्तिज्ञानयोगादवैहि' 'यमे-

भाष्यप्रकाशः।

पूर्वपक्षमाहेत्यर्थः। हेतुं व्याकुर्वन्ति आह हीति। हि श्रुतिप्रत्यक्षाभ्यां हेतुभ्यां श्रुतिराह। अतस्तदव्यक्तमिति योजना। श्रुतिप्रत्यक्षाभ्यामिति यदुक्तम्, तत्र का श्रुतिः, किं प्रत्यक्षमित्याकाङ्क्षायां तदेव विभजन्ते नेतीत्यादि। अस्यां श्रुतौ कथं प्रत्यक्षप्राप्तिरित्यत आहुः नहीत्यादि। तदेव विवृण्वन्ति न हि केनचिदित्यादि ॥ २३ ॥

अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥२४॥ सूत्रं व्याकुर्वन्ति अपीत्यादि। अत्र दर्शनसूत्रोक्तो दृशिर्व्यवहितोऽप्यर्थबलात् परामृश्यते। तथाच केवलस्य प्रत्यक्षादेः प्रमाणस्य लौकिकत्वेन नैर्बल्येपि साधनबलसिद्धस्य तस्यालौकिकत्वेन प्रबलत्वात् केवलानुभवविरोधोऽप्रयोजक इति साधनसिद्धेन प्रत्यक्षेण निर्णय इत्यर्थः। हेतुं व्याकर्तुं श्रुतिस्मृती उपन्यस्यन्ति श्रद्धेत्यादि। इयं

रश्मिः।

धारको बादरि'रिति उक्तसूत्रभाष्यात्। नहि केनचिदित्यादीति। सर्वैरेवेति। योग्यत्वादेवकारः। उपचरितेति। उपचारो व्याख्यातः। एवकारः सर्वेषां दर्शनाभावात् ॥ २३ ॥

अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ २४ ॥ केवलस्येति। श्रुतिरहितस्य। पूर्वं 'श्रुतिप्रत्यक्षाभ्या'मित्युक्तत्वात्। प्रत्यक्षादेरित्यत्रादिशब्देनानुमानादि। भाष्ये प्रत्यक्षस्योपलक्षकत्वात्। तथा च 'सर्वैरेव द्रष्टुं शक्येते'तिभाष्याद्वह्निरूपत्वे धूमरूपेणानुमातुं शक्येत। गवयरूपत्वे उपमातुं शक्येत। घटादिरूपत्वे शब्दितुं शक्येतेति बोध्यम्। केवलानुभवेति। केवलस्य धर्मशून्यस्य नीरूपत्वादनुभवो विरुध्यते, तद्विषयको न भवतीत्यर्थः। नीरूपत्वसमानाधिकरणो न भवति। तथाच 'मूर्खो देहाद्यहंबुद्धि'रिति वाक्यात् अग्राह्यत्वेन प्रकारेण प्रत्यक्षशून्यो देहाद्यहंवादी। अग्राह्यत्वस्योपचरितत्वात्। 'कश्चिद्धीरः प्रत्यगात्मानमैक्ष'दित्युक्तप्रकारेण प्रत्यक्षशून्यो देहाद्यहंबुद्धिः। ताम्बूलमदशक्तिवदप्यदर्शनम्। व्यापकत्वेनाप्यदर्शनम्। किञ्च। आत्मोपनिषदुक्तरीत्यात्मत्वेन देहप्रत्यक्षशून्यः आत्मत्वेनान्तरात्मप्रत्यक्षशून्यः। इति भाष्ये सर्वथाशब्दः। एवं देहाद्यध्यासे 'अहं स्थूल' इत्यादौ ह्यस्मच्छब्दः प्रत्यगात्मवाचको व्याख्यातः। अहङ्कारेऽस्मच्छब्दप्रयोगं कृत्वा भाष्यं यत इत्यादि। देहगेहादिष्वहंममेत्यभिमानवता भगवान्न दृश्यते। अभिमानस्य तामसत्वेनाज्ञानकार्यत्वादज्ञानस्य च दर्शनावरकत्वात्। यतो यथाकथञ्चिदप्यमूर्खत्वमवलम्ब्य सम्यक्संराधने। करणल्युडन्तं पदम्। सम्यक्संसिद्धिर्येन पुष्टिसेवनेन मोक्षावान्तरकालनिर्गमाय तत्संराधनं तस्मिन्संराधने तदाहुः, सम्यक्सेवायामिति। ननु सिद्धिजनकोऽन्योपि पदार्थोऽस्तीत्यत आहुः भगवत्तोष इति। 'यद्वृत्त्या तुष्यते हरि'रिति वाक्यान्नान्यपदार्थो भगवत्तोषजनक इति सिद्ध्युपस्थापिका सेवैवात्र व्यासाशयीयेति भावः। नन्वधोक्षजत्वात्सेवयाप्यदर्शनमस्त्विति चेत्, तत्राहुः दृश्यत इति। स्वेच्छया दृश्यो भवति। अथवा

वैष वृणुते तेन लभ्यः' 'भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तपे'ति । द्विविधमपि रूपं दृश्यते । 'ततस्तु तं पश्यते निष्कलं ध्यायमानः' 'अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्वतोऽनन्तरूप'मिति संराधकस्य स्वानुभवः, ध्रुवादीनामनुमापकत्वं च । तस्मात् प्रत्यक्षानुमानाभ्यां

भाष्यप्रकाशः ।

कैवल्योपनिषत्स्था । परमेष्ठिना आश्वलायनं प्रत्येतेन साधनेन जानीहीत्यत्रोपदिष्टम् । ज्ञानविषयं च ब्रह्म सर्वदेवतादिमयं शिवाकारं निराकारं चोपदिष्टम् । द्वितीया काठके मुण्डके च । तत्राद्ये, 'आसीनो दूरं व्रजती'त्याद्युक्त्वोक्ता । तत्राप्यासीनत्वादिना साकारताया 'अशरीर'मित्यनेनानाकारतायाश्च लाभः । द्वितीयेपि द्वितीयमुण्डके विरुद्धधर्माश्रयं परमात्मानं प्रस्तुत्योक्ता । अत्र 'तनुं स्वा'मिति कथनात् साकारलाभ इति तत्राप्येवम् । गीतावाक्यं तु विश्वरूपं दर्शयित्वा ततः स्वरूपं चतुर्भुजाकारं प्रदर्श्योक्तं भगवता । द्विविधमिति । साकारं निराकारं च । तथाच श्रुतिस्मृत्युक्तसंराधकप्रत्यक्षानुरोधेनार्थबले विचारितेपि निराकारं साकारं चेति सिध्यति, न तु केवलमव्यक्तमग्राह्यमेवेति त्वदुक्तमसङ्गतमित्यर्थः । एवं प्रत्यक्षानुमानशब्दयोः श्रुतिस्मृतिपरत्वमभिप्रेत्य व्याख्यातम् । एवं व्याख्याने शब्दबलमेवायातीत्यपरितोषेणातः परं साक्षात्कारानुमितिपरत्वं प्रत्यक्षानुमानपरत्वं चादाय व्याकुर्वन्ति ततस्त्वित्यादि । लौकिकप्रत्यक्षं शुद्धमनःसंयोगजम्, अलौकिकं दिव्यदृष्टिजम्, विपरीतं वा । तथाचैतयोः श्रुतिस्मृत्योः प्रत्यक्षमात्रबोधकत्वादत्र साधनसिद्धप्रत्यक्षादर्थस्वभावेऽवधारिते, 'तं यथा यथोपासते' इति श्रुत्या अव्यक्तनिष्कलोपासकस्य तथैव प्रत्यक्षं वाङ्मनसेनाप्राप्यं च, वृतस्य तु तत्तद्धर्मवत्त्वेन प्रत्यक्षं वाङ्मनसगम्यं चेति, तादृशतादृशसम्यक्प्रत्यक्षविषयादर्थस्वभावादेवाविरोधनिर्णय इत्यर्थः । प्रत्यक्षस्य प्रामाणिकत्व-

रश्मिः ।

अनिदमित्थतया दृश्यते । ननु ज्ञानकर्मणी विहाय शूद्रधर्मे कुत आशयः, किञ्च, कीर्तनभक्तेः सुबोधिन्यां मुख्यत्वेनोक्तायाः संराधनत्वं कुतो नेति चेत् । न । तोषकामस्यान्यत्रानधिकारात् । एतेन सेवायां प्रकारभेदोपि प्रत्युक्तः । तोषकामस्य स्वधर्माणां परधर्मत्वाभावात् । 'शमो दमस्तपः शौचं सन्तोषः क्षान्तिरार्जवम् । मद्भक्तिश्च दया सत्यं ब्रह्मप्रकृतयस्त्विमा' इत्येकादशस्कन्धात् । किञ्च । भक्तिमार्गप्रवेशानन्तरं ब्राह्मणधर्मा अपि परधर्माः, भक्तिः स्वधर्म इति । कीर्तनभक्तेर्मुख्यत्वेऽप्यशास्त्रार्थत्वात् । 'सेवायां वा कथायां वे'ति विकल्पोक्तेश्च व्यवस्था । शास्त्रार्थत्वं तु क्रिया पूर्वकाण्डार्थ इति । 'ज्ञानं क्रिये'ति पञ्चरात्रशास्त्रात् ज्ञानकाण्डं ज्ञानक्रियार्थकम् । सांख्ययोगसूत्रं 'तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोग' इति । 'ज्ञानेन भक्त्ये'त्यथर्वशिरआदिना पशुपतिमते भक्तिरिति षड्शास्त्राणि भक्तिप्रतिपादकानि । 'ब्रह्म तर्हि अग्नि'रित्युत्तरार्धसुबोधिनी । 'अग्नये जुष्टं निर्वपामी'ति संहिता । 'जुष प्रीतिसेवनयोः' । प्रणिधानं प्रयत्नः । आद्य इति । काठके । द्वितीय इति । मुण्डके । संराधकस्येति । अर्जुनस्य । श्रुतिस्मृतीति । प्रत्यक्षशब्देन श्रुतिबोधस्तु ब्राह्मण आर्षात् । ऋषिर्मन्त्रद्रष्टेति । 'अपश्यत्पुरोडाशं कूर्मभूत९ सर्पन्त'मिति श्रुत्या प्रत्यक्षमूलत्वाल्लाक्षणिकः । अनुमीयन्त उत्सन्नप्रच्छन्नशाखा येनेत्यनुमानं स्मृतिः । अतः परमिति । लाक्षणिकत्वापत्तेः परम् । प्रत्यक्षेति । चक्षुर्व्याप्तिज्ञानपरत्वम् । एवेति । उपचरितत्वयोगव्यवच्छेदकैवकारः । अविरोधेति । सर्वधर्मप्रतिपादकानां'अग्राह्यो न हि गृह्यते'इत्यादीनां चाविरोधनिर्णय इत्यर्थः । प्रत्यक्षस्येति । दर्शनसूत्रीयानूदितप्रत्यक्षस्य । पुष्टभक्तानां दर्शनसूत्रे प्रत्यक्षं तदप्रामाणिकमपि भवेत्प्रमेयबलस्याधिक्यात् । मर्यादायां तु संराधनसाधनजन्यायां प्रत्यक्षरूपं दर्शनं

श्रुतिस्मृतिभ्यां वा ब्रह्म साकारमनन्तगुणपरिपूर्णं चेति नाव्यक्तमेवेति निश्चयः। अतो लौकिकालौकिकप्रत्यक्षविषयत्वादुभयवाक्यार्थरूपमपि ब्रह्म ॥ २४ ॥

इति तृतीयाध्याये द्वितीयपादे सप्तमं तदव्यक्तमाह हीत्यधिकरणम् ॥ ७ ॥

**प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २५ ॥ (३. २. ८.)**

पुनः प्रकारान्तरेण पूर्वोक्तमेव स्थिरीकर्तुमधिकरणान्तरमारभते।

तत्र सूत्रद्वयेन पूर्वपक्षद्वयमाह।

ननु प्रत्यक्षानुरोधेनोभयविधवाक्यसमाधानं नोपपद्यते, वस्तुशक्त्यैव निर्णय उचितः, न तु श्रुतिप्रत्यक्षाभ्याम्, यथा प्रकाशजलसुवर्णादीनामनेकविधत्वं नाङ्गीक्रियते, सूर्यचन्द्रमणिप्रकाशादिषूष्णशीतानुभवरूपस्पर्शाः प्रतीयन्ते, न हि तेजसि तावन्तः स्पर्शा अङ्गीक्रियन्ते, जले च हिमतप्तकुण्डादिषु, तथा सुवर्णे वर्णभेदाः, न हि सर्वे स्वाभाविकाः, तेजस्त्वादिस्वभावहानिप्रसङ्गात्, तथा ब्रह्मणोऽप्यवैशेष्यमङ्गीकर्तव्यम्, निर्विशेषं हि ब्रह्मेति सर्वप्रसिद्धिः। चकारादेवं साधकाः 'अगृह्यो न हि गृह्यत' इत्येवमादयः।

भाष्यप्रकाशः।

साधनं दर्शनसूत्रादत्राधिकम्। तेन प्रकाशवत्सूत्रोक्तमेव दृढीकृतं ज्ञेयम् ॥ २४ ॥ इति सप्तमं तदव्यक्तमाह हीत्यधिकरणम् ॥ ७ ॥

प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥२५॥ अधिकरणप्रयोजनमाहुः पुनरित्यादि। ब्रह्मणः श्रुत्येकसमधिगम्यत्वाच्छ्रुत्यवगतस्वरूपस्यैव बलेनोभयरूपत्वं दृढीकर्तुमधिकरणान्तरमुपोद्घातसङ्गत्यारभते। अत्र ब्रह्मस्वभावः संराधकप्रत्यक्षेणावधारयितुं शक्यः, न वेति संशयः। साधनस्य ज्ञानार्थत्वम्, अगृह्यश्रुत्या ब्रह्मणो दुर्ज्ञेयत्वं च सन्देहबीजम्। पूर्वपक्षौ तु तत्र द्वाविति तावाहुः तत्रेत्यादि। पूर्वपक्षद्वयमिति। भक्तप्रत्यक्षेण न निर्णय इत्येकः। श्रुत्यापि नेत्यपरः। स च द्वितीयसूत्रे फलितकथनेन स्फुटो भवतीति तथेत्यर्थः। कुतो वस्तुशक्त्यैवेत्यतो दृष्टान्तं व्याकुर्वन्ति यथेत्यादि। एतस्यैव विवरणं सूर्यचन्द्रेत्यादि। एवं साधका इति।

रश्मिः।

प्रामाणिकमेव प्रमेयबलाभावादिति तथा। भाष्ये। ध्रुवादीनामिति। 'स्वरूपं द्विविधं चैव सगुणं निर्गुणं तथे'ति गोपालतापिनीयादुभयाविरोधपद्यकानाम्। द्वितीयस्कन्धनवमाध्यायोक्तब्रह्मादिशब्देन। गोपालतापिनीयोक्तब्रह्मणश्च तादृशोभयधर्मवत्त्वानुमापकत्वम्। ब्रह्म तादृशोभयधर्मवत्। ध्रुवादीनां चक्षुर्विषयत्वात्। घटादिवत्। चक्षुर्विषयत्वाद्रूपघटत्वोभयधर्मवत्त्वम्। अव्यक्तमेवेति। व्यक्तयोगव्यवच्छेदक एवकारः। उभयेति। सर्वधर्मप्रतिपादकवाक्यानां धर्मनिषेधकवाक्यानां चार्थरूपम् ॥ २४ ॥ इति सप्तमं तदव्यक्तमाह हीत्यधिकरणम् ॥ ७ ॥

प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २५ ॥ पूर्वोक्तमित्यादिभाष्यविवरणं उभयरूपत्वं दृढीकर्तुमिति। अत्र भाष्य एवकारोऽग्रिमसूत्रीयोभयव्यपदेशयोगव्यवच्छेदकः। उपोद्घातेति। प्रकृतं 'न स्थानतोपि परस्योभयलिङ्ग'मिति सूत्रादारभ्य यदुभयरूपत्वं तत्सिद्ध्यर्था चिन्ता पूर्वपक्षद्वयचिन्ता। सङ्गत्या। ताविति। पूर्वपक्षौ। वस्तुशक्त्यैवेति। वस्तुशक्त्या निर्दोषत्वरूपया। एवकारस्तु भक्तप्रत्यक्षं चक्षुस्तस्य सदोषत्वायोगस्य व्यवच्छेदकः। भाष्ये। अङ्गीति। अस्माभिरङ्गीक्रियन्ते। जले चेति। विचार्यमाणे। हिमकुण्डः प्रसिद्धः। तप्तकुण्डः

१ केवलं तद्बलेनेति मूले पाठः।

ननूक्तं तस्य तथा साक्षात्कारात् तादृशश्रुतेश्च नैकविधत्वमङ्गीकर्तुं शक्यत इति । नैष दोषः । प्रकाशश्च कर्मणि । तपःप्रणिधानादिकर्मणि भगवतः प्रकाशः । तत्र यथा तेषां कामः, तथा प्रकटीभवति । चकारादप्रकाशान्यथाप्रकाशौ । तत्र हेतुः । अभ्यासादावृत्तेः । यद्येकवारं प्रकटः स्यात्, तदा तद्रूपत्वमङ्गीक्रियेतापि । प्रतिभक्तं प्रतिकर्म चाविर्भावः । अतः प्रकाशोपि कृत्रिम एव । दीपप्रकाशवत् । अन्यथा सर्वदा स्यात् । तस्मान्न भक्तप्रत्यक्षेण निर्णयः ॥ २५ ॥

अतोऽनन्तेन तथा हि लिङ्गम् ॥ २६ ॥

फलितमाह । अतः अभ्यासात् । अनन्तेन अनन्तरूपेण आविर्भावः । न ह्येकं वस्तु प्रतिक्षणमन्यादृशं भवति निमित्तभेदव्यतिरेकेण । क्वचित् भक्तकामश्च निमित्तत्वेन प्रतीयते । न हि निमित्तभेदेन जायमानं वस्तु भवति । किन्तु तथा सति लिङ्गं विग्रह एव भवति । युक्तश्चायमर्थः । 'यद्यद्धिया त उरुगाय

भाष्यप्रकाशः ।

निर्विशेषत्वसाधकाः । पूर्वस्मादयं भिन्न एकदेशीति ज्ञापयन्तः सूत्रशेषमवतारयन्ति ननूक्तमित्यादि । अनेन सूत्रेण प्रकाशवत्सूत्रोक्तमप्याक्षिप्तं ज्ञेयम् ॥ २५ ॥

अतोऽनन्तेन तथा हि लिङ्गम् ॥ २६ ॥ न हि निमित्तभेदेन जायमानं वस्तु भवतीति । अत्रावस्तुत्वे हेतुर्जायमानत्वमेव । तत्रापि हेतुः 'यद्यद्धिये'त्यत्र 'प्रणयस' इतिपदोक्तेः करणम् । तथाच तेषां धर्माणां शरीरविशिष्टमुपक्रम्य पठितत्वाच्छरीरधर्मत्वं वा, तदभिव्यञ्जकता-

रश्मिः ।

बदरीनाथे । आदिनानुभयस्पर्शवत्कुण्डः तेजस्तोतिबध्यस्पर्शवत्तेजः भास्वरशुक्लरूपवच्च । आदिना ज्ञानस्पर्शवज्जलं अभास्वरशुक्लरूपवच्च । तस्य तथेति । तस्याग्राह्यस्य तथाऽस्वाभाविकधर्मैः । तादृशेति । 'तद्धैनान्भूत्वावती'ति श्रुतेः । तप इति । आदिना भक्तिः । प्रणिधानं प्रयत्नः । कर्मणीति । कृत इति शेषः । तेषामिति । तपआदिकर्तृणाम् । अप्रकाशेति । अकर्मणि अप्रकाशः । नृसिंहत्वादिनान्यथाप्रकाशः । कृत्रिम इति । जन्यत्वात् । स्वोक्तयुक्त्या एवेति । भक्तप्रेति । अस्वाभाविकधर्मविषयेण ॥ २५ ॥

अतोऽनन्तेन तथा हि लिङ्गम् ॥ २६ ॥ भाष्ये । फलितमिति । 'अग्राह्य' इति श्रुत्या तपः-प्रणिधानानि, कर्म तत्रत्य'कर्मणैव तु संसिद्धिमास्थिता जनकादय' इति श्रुत्या च फलितम् । प्रापणकरणम् । वक्ष्यन्ति च 'उभयव्यपदेशा'दिति सूत्रभाष्यप्रकाशे । एवेति । ननु निमित्तभेदः । एवकारो निमित्तभेदयोगव्यवच्छेदक इति । करणमिति । प्रणयस इत्यस्य कुरुष इत्यर्थात् । तेषामिति । सकर्मत्वादीनाम् । 'प्राणशरीर' इति शरीरविशिष्टमुपक्रम्य । तदभीति । शरीराभिव्यञ्जकेत्यर्थः । अपागादिति । 'अपागादग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्य'मिति श्रुतावपागादग्नेरग्नित्वमितिवत्कार्यत्वमेव । एवकारेण वस्तुत्वयोगो व्यवच्छिद्यते । भाष्ये । अग्राह्यश्रुतिप्रतिपादितस्यानन्तरूपेणाविर्भावः, तत्र सर्वकर्मत्वादयः 'अपागा'दिति श्रुतेरवस्तुभूता इत्युक्तम् । एवं पदद्वयं व्याख्याय, पदत्रयं व्याकुर्वन्ति स्म किन्त्वित्यादिना । सौत्रतथेत्यस्य तथा सतीत्यर्थः । लिङ्गमित्यस्यार्थो विग्रह इति । देह इत्यर्थः । 'अतएव चोपमे'तिसूत्रादेवकारो मण्डूकप्लुत्यानुवर्तत इत्येवेति । हीत्यस्यार्थमाहुः युक्तश्चेति । तेन पञ्चपदमिदं सूत्रमित्युक्तम् ।

विभावयन्ति तत्तद्वपुः प्रणयसे सदनुग्रहाये'ति। अतः श्रुत्या प्रत्यक्षेण वा न तथा निर्णयः कर्तुं शक्यः। तस्मात् सर्वागोचरमेव ब्रह्मेत्येवं प्राप्तम् ॥ २६ ॥

उभयव्यपदेशात् त्वहिकुण्डलवत् ॥ २७ ॥

तुशब्दः पक्षं व्यावर्तयति। नैवं केवलयुक्त्या लोकदृष्टान्तेन निर्णयः शक्यते कर्तुम्। अन्यथेदं शास्त्रं व्यर्थमेव स्यात्। अत्र हि वेदादेव ब्रह्मस्वरूपज्ञानम्।

भाष्यप्रकाशः

गन्तुकधर्मत्वं वा। तथा सति 'अपागादग्नेरग्नित्व'मितिवत् कार्यत्वमेव, न त्वनागन्तुकानारोपितत्वरूपं वस्तुत्वम्। अत्र 'यद्धिये'ति स्मृत्युपन्यासेन प्रकाशवत्सूत्रोक्तोऽवैयर्थ्यादिति हेतुरपि सदनुग्रहार्थत्वेनान्यथासिद्ध इति ज्ञाप्यते। तस्मादिति। उक्तविधप्रत्यक्षबोधकश्रुतिभिर्भक्तप्रत्यक्षेण चानिर्णयात् ॥ २६ ॥

उभयव्यपदेशात् त्वहिकुण्डलवत् ॥ २७ ॥ सूत्रं व्याकुर्वन्ति तुशब्द इत्यादि, अन्यथेति। युक्त्या लोकदृष्टान्तेन च निर्णये इदं विचारशास्त्रं व्यर्थमेव स्यात्। अत्र हि दर्शनान्तरादयमेव विशेषो यद्वेदादेव ब्रह्मस्वरूपज्ञानं प्रमितिरूपम्, न लौकिकैः प्रमाणैस्तन्न्यायैर्वा। उपचारनिवृत्त्या श्रौततात्पर्यज्ञापनार्थमेवास्य शास्त्रस्य प्रवृत्तेः। तच्च जन्माद्यधिकरण एव 'शास्त्रयोनित्वा'दित्यनेन निर्णीतम्। अतो वेदमन्तरेण स्वरूपस्य तच्छक्तेश्चानवगमात् केन प्रकारेण स्वरूपशक्त्या

रश्मिः।

न तथेति। न 'अपि संराधन' सूत्रोक्त'मुभयवाक्यार्थरूप'मिति निर्णय इत्यर्थः। प्रकृते। उक्तविधेति। 'अपि संराधन'सूत्रोक्तविधप्रत्यक्षबोधिकाभिः श्रद्धाभक्तिज्ञानेत्यादिभिः। भाष्ये। सर्वागोचरमेवेति। सर्वैः प्रकारैः सत्यत्वादिभिरपि अगोचरमित्यर्थः। पूर्वपक्षयुक्त्यैवकारोऽवधारणे। अगोचरपदं नपुंसकमपि। न चाधोक्षजत्वापत्त्या नेदं पूर्वपक्षे युक्तमिति वाच्यम्। भाष्यमते इदमित्थतयाऽगोचरत्वम्। इदमेव श्रीभागवतमतेपि। अन्यथाधोक्षजत्वेन रूपेणाप्यधोक्षजं स्यादिति ॥ २६ ॥

उभयव्यपदेशात् त्वहिकुण्डलवत् ॥ २७ ॥ युक्त्यालोकेति। आलोकेति।[1] प्रकाशदृष्टान्तेन। विचारेति। मीमांसाशास्त्रम्। व्यर्थमेवेति। नहि लौकिकानां दृष्टान्तैरलौकिकं ब्रह्म प्रत्येष्यति। अधोक्षजत्वादित्येवकारः। अत्र हीतिभाष्यं विवृण्वन्ति स्म अत्र हीति। अयमेवेति। सिद्धान्तावधारितः। वेदादेवेति। वेदवेदान्ताभ्याम्। वेदशब्दस्य वेदान्तेपि शक्तिः 'स्मृतेश्चे'तिसूत्रभाष्येस्ति। एवेत्यन्ययोगव्यवच्छेदकः। अन्यशास्त्राणां प्रत्यक्षादेर्दुर्बलत्वम्, किंपुनर्वेदे ब्रह्मण आर्षम्। वेदान्तेपि 'वेदान्तकृद्वेदविदेव चाह'मिति स्मृतेर्वेदमूलकत्वम्। तन्न्यायैरिति। लौकिकयुक्तिभिः। तन्मूलैरन्यैः सांख्यादिचतुःशास्त्रैश्च। उपचारेति। तादृशफलेन प्रवर्तकेनास्य शास्त्रस्य प्रवृत्तेरित्यन्वयः। किमर्थमिति चेत्, तत्राहुः श्रौतेति। श्रोते शक्तिलक्षणे। तात्पर्यं तु स्वानुपपत्तिद्वारा लक्षणाबीजम्। यद्येवं स्यात्तदा वेदे शक्तिलक्षणाभ्यामर्थावबोधे 'पश्यत्यचक्षुः स शृणोत्यकर्ण' इत्यादिषु लक्षणया निर्वाहे तात्पर्योच्छेदापत्तेः श्रौतानां पदानां स्वारसिकार्थत्यागापत्तेः। अतस्तत्र विरुद्धधर्माश्रयत्वे तात्पर्यवृत्तेर्ज्ञापनार्थमित्यर्थः। श्रौतपदस्वारसिकार्थो व्यर्थः सन् किञ्चिज्ज्ञापयति तात्पर्यवृत्तिरस्तीति। श्रुतित्वादेवकारः। श्रुतिज्ञापितं सर्वथादरणीयमिति। तच्चेति। विरुद्धधर्माश्रयत्वम्। निर्णीतमिति। शास्त्रे योनिः शास्त्रयोनिः शास्त्रोक्ताभिन्ननिमित्तोपादानत्वादित्येवमर्थान्निर्णीतम्। नन्वज्ञानमन्यथाज्ञानं च निवार्यत इत्यज्ञानादिनिवृत्त्यर्थमस्य शास्त्रस्य प्रवृत्तिः, नतु तात्पर्यवृत्तिज्ञापनार्थमिति

1. रश्मिकारा आलोकेति पदच्छेदं स्वीकुर्वन्ति

तत् कथं स्वरूपशक्त्या निर्णयः। ब्रह्म तूभयरूपम् । उभयव्यपदेशात् । उभयरूपेण निर्गुणत्वेनानन्तगुणत्वेन सर्वविरुद्धधर्मेण रूपेण व्यपदेशात् । तर्हि कथमेकं वस्त्वनेकधा भासते । तत्राह । अहिकुण्डलवत् । यथा सर्प ऋजुरनेकाकारः

भाष्यप्रकाशः।

निर्णय इत्यर्थः । एवं तुशब्दं व्याख्याय शेषं व्याकुर्वन्ति ब्रह्मेत्यादि । न केवलं स्वरूपशक्त्या निर्णीयते, किन्तु श्रुत्युपष्टम्भयेत्यतो हेतुं विवृण्वन्ति उभयेत्यादि । उभयोर्विरुद्धधर्मयोर्व्यपदेश उभयव्यपदेशस्तस्मात् । यत्रैवास्थूलादिवाक्ये निर्गुणत्वेन व्यपदिश्यते, तत्रैव 'आकाश ओतश्च प्रोतश्चे'ति कथनात् कार्यगुणजनकानन्तगुणवत्तापि बोध्यते । तथा, यत्र शारीरब्राह्मणे 'स एष नेति नेत्यात्मा, अगृह्यो न हि गृह्यत' इत्युच्यते, तत्रापि 'स वा अयमात्मा सर्वस्य वशी सर्वस्येशान' इत्यादिकं पूर्वमुच्यते । 'स वा एष महानज आत्मा अन्नादो वसुदान' इति चानन्तरम् । एवं श्वेताश्वतरेपि 'साक्षी चेता केवलो निर्गुणश्चे'त्युक्त्वा, 'एको वशी निष्क्रियाणां बहूनामेकं बीजं बहुधा यः करोती'त्यादि । तथा तत्रैव 'ततो यदुत्तरतरं तदरूपमनामय'मित्येतदग्रे, 'सर्वाननशिरोग्रीवः सर्वभूतगुहाशय' इति । एवं तैत्तिरीयेपि 'यदेकमव्यक्तमनन्तरूप'मिति, तथा 'विश्वतश्चक्षुरुत विश्वतोमुख' इत्यादि चोक्तम् । 'कृत्स्नः प्रज्ञानघन एवे'त्यस्यार्थस्तु प्रागेवोक्तः । तथा 'अथात आदेश' इत्यस्यापि । एतेष्वेवंविधेष्वन्येष्वपि उभयरूपेण व्यपदेशात् । तथाचास्थूलादिवाक्यस्य धर्मनिषेधमुखेनेव 'विश्वतश्चक्षु'रित्यादेर्धर्मविधिमुखेनापि ब्रह्मस्वरूपस्यैव निरूप्यतया धर्मविधिद्वारा तन्निषेधद्वारा च निरूपकाणां मध्ये एकस्योपजीव्यत्वमन्तरङ्गत्वम्, अन्यस्योपजीवकत्वं वहिरङ्गत्वमिति निर्णेतुमशक्यत्वेनोभयवाक्ययोस्तुल्यबलत्वादुभयरूपमेव ब्रह्मेत्यर्थः । दृष्टान्तमवतारयन्ति तर्हीत्यादि । यद्युभयलिङ्गं ब्रह्म, तदा संराधनसिद्धानां सर्वेषां तथैव प्रकाशेत, न तु कञ्चित् प्रति कथञ्चित्, अन्यं प्रत्यन्यथा, अत एकं वस्तु कथमनेकधा भासते, तत्र हेतुर्वक्तव्यः,

रश्मिः।

चेत् । न । तात्पर्यवृत्तिविषयस्य विरुद्धधर्माधारत्वस्य तेन प्रकारेणाज्ञानेऽज्ञानरूपत्वादन्यथाज्ञानरूपत्वाचाज्ञानान्यथाज्ञानयोरन्तर्भावात् । तत्कथमिति भाष्यं विवृण्वन्ति स अत इति । तच्छक्तेरिति । वेदपदशक्तेः । इत्यर्थ इति । निर्णयशब्दान्तभाष्यार्थः । स्वरूपेति । प्रमेयबलेन । उभयव्यपदेशश्रुत्युपष्टम्भेन । हेतुमिति । स्वरूपं न यथाश्रुतिप्रतिपाद्यं सङ्गतेः मूर्तामूर्तब्राह्मणवत् । स्वरूपं यथाश्रुतिप्रतिपाद्यं उभयव्यपदेशात् अहिकुण्डलवदित्यत्र सत्प्रतिपक्षत्वसाधके हेतुम् । यत्रैवेत्येवकारो विरुद्धधर्माधारत्वेन प्रतिपादनसूचक इत्युक्तम् । यत्रान्यत्र धर्मनिरूपणमन्यत्र निषेधस्तत्रारोपापवादसङ्गतिसन्देहोपीत्युक्तम् । कार्येति । 'आकाशशरीरं ब्रह्मे'तिश्रुतेः 'आकाशो वै नामरूपयोर्निर्वहिते'ति तथा । बोध्यत इति । व्यञ्जनया बोध्यते । पूर्वमिति । स्पष्टम् । अनन्तरमिति । 'स एष नेति नेत्यात्मे' त्यस्या अनन्तरम् । प्रागेवेति । 'आह च तन्मात्र'मितिसूत्रभाष्यप्रकाशे 'दर्शयति'चेतिसूत्रभाष्यप्रकाशे च । एवकारश्च पश्चाद्योगव्यवच्छेदकः । एवंविधेष्विति । 'अपाणिपादो जवनो ग्रहीते'त्यादिषु । धर्मविधिमुखेनेति । धर्मविधानं तत्कथनं तेनोपादेयेन । एवेति । 'वेदैश्च सर्वैरहमेव वेद्य' इति श्रुतेरेवकारः । एवेति । अवधारणं यथा भवति तथा । एकरूपत्वयोगव्यवच्छेदको वा । तथैवेति । सर्वरूपवत्त्वेन, नत्वेकेन तत्तत्संराधकं

१. आरोपापवादरूपायाः ।

कुण्डलश्च भवति, तथा ब्रह्मस्वरूपं सर्वप्रकारं भक्तेच्छया तथा स्फुरति। कल्पनाशाक्ते हीदं बाधकम्। अनेककल्पनागौरवं चेति। न तु केवलं श्रुत्येकसमधिगम्ये। न च शास्त्रवैफल्यम्। एवं साधनार्थत्वात्। अत्रैव हि सूरिव्यामोहादन्यशास्त्रोत्पत्तिः। अतः सर्वविरुद्धधर्माणामाश्रयो भगवान्। न हि प्रमाणश्रुतदृष्टे अनुपपत्तिरस्ति, यदर्थं युक्त्यपेक्षा। लोकेपि शरीरान्तःकरणादीनि परस्परविरुद्ध-

भाष्यप्रकाशः।

नो वेददर्शनस्याप्रामाण्यं वक्तव्यम्, ततश्च सर्वमेव शिथिलमिति शङ्कायां दृष्टान्तेन समाधिमाहेत्यर्थः। दृष्टान्तं व्याकुर्वन्ति यथेत्यादि। भवतीति। तथा सामर्थ्यस्य विद्यमानत्वात् स्वरूपतस्तथास्ति। इदमिति। एकस्यानेकधा भानम्। यद्यपि सर्पः कालभेदेन स्वेच्छया तथा तथा भवति, ब्रह्म त्वेकस्मिन्नेव काले संराधकभक्तेच्छयेति वैषम्यम्, तथापि संराधकस्य तादृशेच्छोत्पत्तौ तादृशतादृशफलदित्सैव प्रयोजिकेति न वैषम्यलेश इति बोध्यम्। नन्वेवं चेत् सिद्धमेवास्ति, तदा शास्त्रेणैवं साधनस्यापि किं प्रयोजनमित्यतः पूर्वोक्तमेव स्मारयन्ति अत्रैवेत्यादि। तथाच विरुद्धशास्त्रसम्भेदजन्यदोषवारणमेव प्रयोजनमित्यर्थः। प्रमाणश्रुतदृष्ट इति। पूर्वोक्तप्रमाणैः श्रुते, साधनसिद्धप्रमाणैर्दृष्टे। विरुद्धशास्त्रसम्भेदेन व्यामुग्धस्य समाधानाय व्यासपादैरत्र युक्तेरुक्तत्वादत्रापि युक्त्यन्तरमाहुः लोकेपीत्यादि। सूत्रोक्ते दृष्टान्ते ऋजुकुण्डलभावो नैककालावच्छेदेनेत्यत एतत्कथनम्। तथाच यथा शरीरादीनां विषयभेदेन तथात्वम्, एवं ब्रह्मणोपि भक्तभेदेन

रश्मिः।

प्रति प्रकटेन रूपवत्त्वेन। दर्शनस्येति। वेदशास्त्रस्य। ततः सर्वमेवेति। उक्तदर्शनात्सर्वं सर्वरूपवत्त्वसाधकमुभयव्यपदेशैकदेशरूपमङ्गम्। तादृशतादृशेति। एवकारो ज्ञानयोगव्यवच्छेदकः। जानातीच्छति यतत इति। इदं विद्वन्मण्डन उक्तम्। नचेति भाष्यं विवृण्वन्ति नन्वेवं चेदिति। फलदित्सैव प्रयोजिका चेत्। सिद्धमेवेत्येवं साधनार्थत्वादिति भाष्यार्थः। अत्रैवेति। तदा। शास्त्रेणैवमिति। शास्त्रेण फलदित्साविषयेण। एवं ब्रह्मण एकस्यानेकविधभानं विद्वन्मण्डनोक्तरीत्येच्छयैव सिद्धम्। एवेति। विद्वन्मण्डनोक्तात्रत्ययुक्त्यैवकारः। तथाच वेदशास्त्रवैफल्यमिति भावः। फलदित्सया मोचनान्नामरूपयोर्नामवैफल्ययुक्तम्। साधनस्यापीति। ब्रह्मस्वरूपे सर्वप्रकारे भक्तेच्छासाधनस्यापि। अपिना वेदशास्त्रम्। पूर्वोक्तमिति। जिज्ञासाधिकरण उक्तम्। एवं साधनार्थत्वादित्यन्तं पूर्वोक्तम्। एवकारोऽन्यस्यास्य योगव्यवच्छेदकः। एवं फलदित्साविषयत्वेन वेदशास्त्रस्य मोक्षसाधनार्थत्वादित्यादीति। अत्र फलदित्साविषये वेदशास्त्र एव अन्यशास्त्रयोगव्यवच्छेदकः। 'मुह्यन्ति यत्सूरय'इति वाक्यात्सूरिव्यामोहस्तस्मात्। अन्येति। उत्तरमीमांसाशास्त्रोत्पत्तिः। अत इति। 'उभयव्यपदेशा'दित्यादिमीमांसाशास्त्रात्। अन्यत्र पञ्चरात्रशास्त्रोत्पत्तिः। सांख्ययोगपशुपतिशास्त्रोत्पत्तिः। अस्य भाष्यस्य प्रघट्टकार्थमाहुः तथाचेति। विरुद्धेत्यादि। जिज्ञासाधिकरणे व्याख्यातानीमानि पदानि। विरुद्धं शास्त्रं सांख्यादि। अनुपबृंहकत्वात्। तत्र 'असङ्गोयं पुरुष इती'ति सूत्रान्निर्धर्मकोक्तेर्विरुद्धत्वम्। एतन्मिश्रणजन्यो दोष आरोपापवादेन व्याख्यानं तस्य विरुद्धधर्माश्रयत्वे मीमांसया वारणं एवेति। अस्थूलादिश्रुतेस्तत्रैव आकाशौतप्रोतश्रुतेर्विरुद्धधर्माधारत्वबोधिकायाः। पूर्वोक्तेति। अत्रैव पूर्वोक्तप्रमाणैः। अस्थूलादिवाक्याकाशौतप्रोतवाक्यैः। साधनेति। साधनं भक्तिस्तया सिद्धं प्रमाणं भक्तप्रत्यक्षं तेन बहुवचनात्प्रत्यक्षप्रेरकभगवता भक्तशब्दैश्च। अत्रेति। उत्तरमीमांसायाम्। अत्रापीति। विरुद्धधर्माश्रयत्वेपि। दृष्टान्तान्तरे प्रयोजनमाहुः सूत्रोक्ते इति। एतदिति। दृष्टान्तान्तरकथनम्। विषयभेदेनेति। यथा गोशरीरं पुत्रे दयां करोति, सिंहं मारयतीति पुत्रसिंहरूपविषयभेदः। तेन। मनोनैवं

यामारकत्वादीनि विषयभेदेनैकस्मिन्नपि क्षणे प्रतीयन्ते। तस्मात् सकलविरुद्धधर्मा भगवत्येव वर्तन्त इति न कापि श्रुतिरुपचरितार्थेति सिद्धम् ॥ २७ ॥

इति तृतीयाध्याये द्वितीयपादेऽष्टमं प्रकाशादिवच्चेत्यधिकरणम् ॥ ८ ॥

## प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २८ ॥ (३. २. ९.)

धर्मस्वरूपविचारेण पूर्वोक्तपक्षद्वयं स्थापयितुमधिकरणारम्भः ।

ननु धर्मा नाम के, ब्रह्मणो भिन्नास्तत्कार्यरूपाः, आहोस्वित् ब्रह्मैवेति संशयः। तत्र लोके कार्यस्यैव पटरूपादेस्तद्धर्मत्वात् समवेतत्वात् तन्नित्यतायां प्रमा-

भाष्यप्रकाशः ।

तथात्वम् । एतेन 'तत्तद्वपुः प्रणयस' इत्यत्र प्रणयनं तच्चक्षुर्मनोविषये प्रापणमेव, न तु करणमिति बोधितम् । एतच्च 'श्रुतेस्तु शब्दमूलत्वात्' 'सर्वोपेता च तद्दर्शनात्' 'लोकवत्तु लीलाकैवल्य'मित्यादिषु यदुक्तम्, तस्यैवेह निगमनमिति न कोपि शङ्कालेशः । सिद्धमाहुः तस्मादित्यादि । एवञ्च शब्दबलविचारेण विरुद्धसर्वधर्माश्रयो ब्रह्मेति निर्णयः । श्रुत्युक्तयुक्त्या विचारे तु लौकिकधर्मशून्यमलौकिकसर्वधर्मयुक्तमिति निर्णयः । अर्थबलविचारे तु विरुद्धसर्वरूपमिति निर्णय इति बोधनार्थमत्र त्रेधा विचारितम् ॥ २७ ॥ इत्यष्टमं प्रकाशादिवच्चेत्यधिकरणम् ॥ ८ ॥

प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २८ ॥ अधिकरणप्रयोजनमाहुः धर्मेत्यादि । पूर्वोक्तपक्षद्वयमिति । पूर्वाधिकरणे निर्गुणमनन्तगुणपूर्णं च ब्रह्म सिद्धम् । तत्र ये गुणा धर्मास्तेषां स्वरूपविचारेण पूर्वोक्तपक्षद्वयम् । शब्दबलविचारसिद्धः 'प्रपञ्चविलक्षणविरुद्धसर्वधर्माधारं ब्रह्मे'त्येकः । अर्थबलविचारसिद्धः 'सर्वरूपं ब्रह्म तत्तत्फलदित्सया तत्तत्कार्यार्थं वा तं तं प्रति तथाविर्भवती'त्यपर इत्येतत्पक्षद्वयं स्थापयितुं तथेत्यर्थः । विषयसंशयावाहुः नन्वित्यादि । धर्मवत्त्वश्रवणमद्वितीयश्रुतिश्च सन्देहबीजम् । पूर्वपक्षमाहुः तत्रेत्यादि । ब्रह्मधर्माणां स्वरूपे विचारणीये लौकिकमेव प्रमाणमनुसर्तव्यम् । श्रुतौ तन्नित्यत्वस्यानुक्तत्वात् । तत्राप्यनुमानमेवाप्रत्यक्षत्वादादर्तव्यम् ।

रश्मिः ।

स्पष्टम् । 'यन्मनसा ध्यायति तद्वाचा वदति यद्वदति तत्करोती'ति श्रुतेः । तथात्वमिति । एकस्मिन्क्षणे प्रतीतिविषयत्वम् । प्रतीतिकर्तृत्वं वा । प्रणयनमिति । यत्तच्चक्षुर्मनोविषये स्थूलदेहे सृष्टे सूक्ष्मप्रापणं गोविन्दावेश इत्यर्थः । एवेति । 'तत्सृष्ट्वा तदेवानुप्राविश'दिति श्रुतेरेवकारः । पुनरुक्तिं वारयन्ति स्म एतच्चेति । यदुक्तमिति । द्वितीयाध्याये यदुक्तम् । तस्यैवेहेति । एवकारोऽन्ययोगव्यवच्छेदकः । इहास्मिन्सूत्रे निगमनं उभयव्यपदेशादिति हेतुघटितत्वात् । तस्मात्तथेति निगमनवत् । तस्मादित्यादीति । उपचरितार्थेति । गौणार्था ॥ २७ ॥ इत्यष्टमं प्रकाशादिवच्चेत्यधिकरणम् ॥ ८ ॥

प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २८ ॥ सर्वकल्पनेति । पूर्वपक्षिमतम् । एवकारो विरुद्धधर्मरूपान्ययोगव्यवच्छेदकः । विरुद्धेति । सिद्धान्तिमतम् । एवकारः सर्वकल्पनाराहित्यरूपान्ययोगव्यवच्छेदकः । नन्वित्यादीति । ब्रह्मैवेत्येवकारो भिन्नरूपान्ययोगव्यवच्छेदकः । लौकिकमेवेति । एवकारेण श्रुतिप्रमाणयोगव्यवच्छेदः । अविनाशीतिश्रुतेरन्योर्थ इति । कार्यस्यैवेति ।

१. सर्वकल्पनारहितमेव ब्रह्म पश्चाद्धर्मयुक्तं भवतीत्येकः । विरुद्धधर्माधारमेव ब्रह्मैकं तत्तत्फलदित्सया तत्तत्कार्यार्थं वा तं तं प्रति तथा तथाविर्भवतीत्यपर इत्येतत्पक्षद्वयम्—इति मूले पाठः ।

णाभावात् स्वाभाविकत्वमात्रेण नित्यत्वकल्पनायां गौरवापत्तेः 'एकमेवाद्वितीय'-मिति श्रुतिविरोधाच्च धर्माः प्रपञ्चवत् कार्याः, तथा सति ब्रह्म सर्वकल्पनारहित-मेव सेत्स्यतीत्येवं प्राप्ते, इदमुच्यते। प्रकाशाश्रयवद्वा । वाशब्दः पक्षं व्यावर्त-यति । यथा प्रकाशाश्रयाः सूर्यादयः प्रकाशेन न भिन्नाः । पृथक्स्थित्यभावात् । समवेतत्वाच्च । मूलाविच्छेदरूपेण तदाधारतया स्थितत्वाच्च । नापि सूर्य एव ।

---

भाष्यप्रकाशः ।

लोके च कार्यस्यैव पटरूपादेस्तद्धर्मत्वात् तत्समवेतत्वाच्च धर्मत्वलिङ्गके दृष्टान्ताभावेन, नित्यव-स्तुसमवेतत्वलिङ्गके चानुमाने आकाशत्वस्य दृष्टान्तस्य सत्त्वेपि शब्दादिदृष्टान्तेन हेतोः साधारणतया तन्नित्यतायां प्रमाणाभावात् । स्वाभाविकत्वं हेतूकृत्याकाशत्वं दृष्टान्तीकृत्य तन्मात्रेण साधने यद्यपि तत् सिध्यति, तथापि तत्कल्पनायां नित्यवस्त्वन्तरसिद्ध्या गौरवापत्तेरद्वितीयश्रु-तिविरोधाच्च गौरवस्याप्रामाणिकत्वात् तथेति । 'तदव्यक्तमाह ही'त्यनेनोक्त एव पक्ष आदरणीय इत्यर्थः । समाधिं व्याकुर्वते इदमित्यादि । प्रकाशाश्रयवदिति । प्रकाशस्याश्रयाः प्रकाशा-श्रयास्तैस्तुल्यम् । प्रथमार्थे वतिः । सूत्रं व्याकुर्वन्ति वाशब्द इत्यादि । पूर्वाधिकरणेऽहि-कुण्डलदृष्टान्तेनैकस्य ब्रह्मणः सधर्मकत्वनिर्धर्मकत्वसिद्ध्या धर्माणामपि ब्रह्मरूपत्वमेव सिद्धम्, अत्र तु धर्मधर्मिणोर्भेदाभेदः साध्यते । अन्यथैतत्सूत्रवैयर्थ्यमेव स्यात् । भिन्नाभिन्नत्वं कार्यकारण-भावेन पटतद्रूपयोर्धर्मधर्मिभावेन जातिव्यक्त्योर्दृष्टम् । तत्र वाशब्दः प्रथमं पक्षं व्यावर्तयति । ब्रह्मतद्धर्मौ कार्यकारणभावेनैकरूपौ न भवतः, किन्तु यथा प्रकाशाश्रयाः सूर्यादयः प्रकाशेन सह न भिन्नाः, न विनाभूताः, नित्यसहचारिण इति यावत् । तत्र हेतुः । पृथक्स्थित्यभावात् । एवं प्रकाशोपि न सूर्यादिविनाभूत इत्यर्थबलाज्ज्ञातव्यम् । तदेतत् 'समवेतत्वाच्चे'ति चकारेण समुच्चिन्वन्ति । तत्र हेतुः । समवेतत्वादिति । अयुतसिद्धत्वात् । तज्जन्यधर्मेष्वप्यस्तीति तथा-त्ववारणाय हेत्वन्तरमाहुः मूलाविच्छेदेति । सर्वेपि भगवद्धर्मा भगवदविनाभूता भगवदविभक्ता इत्यर्थः । अत्र यद्यपि पृथक्स्थित्यभावादित्यनेनैव तथात्वसिद्धावपि यद्धेतुद्वयमुक्तम्, तेन प्रपञ्च-स्याक्षरस्य च भिन्नाभिन्नत्वं निबन्धोक्तं स्मारितम् । एवमभेदे मानमुक्त्वा भेदे मानमाहुः नापी-त्यादि । प्रकाश इति शेषः । चकार आधाराधेयभावस्य 'परास्य शक्ति'रित्यादिषष्ठीनिर्देशस्य च

रश्मिः ।

एवकारः कारणान्ययोगव्यवच्छेदकः । तद्धर्मत्वादिति । तन्तुमृदादिधर्मत्वात् । तावत्तन्तुकपालादि-समवेतत्वात् । यद्वा । धर्मा नित्याः धर्मत्वादित्यनुमाने दृष्टान्ताभावेन । धर्मा नित्याः नित्यवस्तुसमवेतत्वात् आकाशत्ववदित्यत्र । शब्दादीति । एकदेशिमतेन शब्दादि द्रष्टव्यम् । पक्षभिन्ननिश्चितसाध्यवत्त्वं दृष्टान्तत्वम् । तेन शब्दादिषु पक्षभिन्नेषु निश्चितसाध्यवत्सु । नित्यवस्तुसमवेतत्वरूपहेत्वभावः साध्य-व्यापकत्वसाधकः । तेनादिशब्दार्थवशे साध्याभाववति नित्यवस्तुसमवेतत्वरूपहेत्वभावात्साधारण्यं साध्या-भाववद्वृत्तित्वरूपम् । ननु नाकाशदृष्टान्तः निश्चितसाध्यवत्त्वाभावादिति चेन्न । न शब्दादिदृष्टान्ते हेतोः साधारणता, किन्तु शब्दशब्दस्मारिताकाशहेतोः साधारणता प्रसङ्गः पुरुष इति तथेत्यर्थात् । स्वाभा-विकत्वेति भाष्यं विवृण्वन्ति स्म स्वाभाविकत्वमिति । धर्मा नित्याः स्वाभाविकत्वात् आकाश-त्ववत् । नित्यवस्त्विति । जातिसिद्ध्या । एतादृशत्वम् । भेदे इति सतिसप्तम्यन्तम् । भेदसामानाधिकरण्य एतादृशत्वं भिन्ननिष्ठम् । तथेत्यभिप्रेतनभाष्योक्तम् । अत्रैवकारः विरुद्धधर्माधारत्वकल्प-

भिन्नप्रतीतेर्विद्यमानत्वाच । तादृशमेव तद्वस्तूत्पत्तिसिद्धमिति मन्तव्यम् । कल्पनायामपि यथा सूर्यप्रकाशयोः कल्पना, एवं ब्रह्मधर्मयोरपि । न ह्यन्यथा वेदप्रवृत्तिर्निषेधशेषता सत्यज्ञानानन्तानन्दपदानां सामानाधिकरण्यं वा सम्भवति । लक्षणायां तु सुतरामेव धर्मापेक्षा । अतो विशिष्टपदार्थ एव तादृशो वेद-

भाष्यप्रकाशः ।

समुदायकः । तेन सिद्धमाहुः तादृशमित्यादि । प्रकाशरूपं वस्तु मूलाद्भिन्नमप्यभिन्नमेवोत्पत्ति-सिद्धमिति मन्तव्यम् । युक्तिभिरनुचिन्तनीयम् । यथा अमित्रो न मित्रम्, न मित्राभावः, किन्तु मित्रविरुद्धसम्पत् । यथा चाविद्या न विद्या, न विद्याभावः, किन्तु विद्याविरुद्धं भावरूपमज्ञानम्, एवं प्रकाशतदाश्रययोरभेदोपि न भेदः, न भेदाभावः, किन्तु भेदविरुद्धसम्पदेव भावरूप इति विभावनीयम् । सा च सम्पत्, भावरूपत्वे सति स्वाश्रयाविनाभूतत्वं तद्विहायावर्तमानत्वमिति यावत् । न ह्येतादृशत्वमन्योन्याभावरूपे भेदेस्तीति । तथाच कल्पनायामपि यथा सूर्यप्रकाश-योस्तादात्म्यरूपस्य भेदविरुद्धसम्पदोऽभेदस्य कल्पना, एवं ब्रह्मतद्धर्मयोरपि परबोधनाय कार्ये-त्यर्थः । नन्वत्र का वा उपपत्तिर्येन धर्माणां सदा सत्तामङ्गीकृत्य तादृशोऽभेदः कल्प्यत इत्यत आहुः न हीत्यादि । यदि हि स्वाभाविकधर्मसत्तामनुपगम्य सर्वविशेषशून्यमेव ब्रह्माङ्गीक्रियते, तदा केवलचिन्मात्रत्वेन प्रतिपिपादयिषितस्य ब्रह्मणः सकाशात् 'अस्य महतो भूतस्य निःश्वसि-तमेतद्यदृग्वेद' इत्यादिना श्राविता चेतनधर्मरूपा वेदप्रवृत्तिर्न सम्भवेत् । 'अथात आदेश' इत्यत्र परामिमता निषेधशेषतापि न सम्भवेत् । तस्या अपि विशेषत्वात् । 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति स्वरूपलक्षणश्रुतौ 'विज्ञानमानन्दं ब्रह्मे'तिश्रुतौ चोक्तं सत्यादिपदानामेकवस्तुवाचकत्वमपि

रश्मिः ।

नायोगव्यवच्छेदकः । अभिन्नमेवेति । एवेत्यत्र तृतीयालुक् । अवधारणेनेत्यर्थः । नन्वभिन्नमेव भिन्नमिति कुतो न कल्प्यत इत्यत आहुः नहीति । अभेदे सिद्धं ब्रह्म विरुद्धधर्माश्रयमितिग्रहणात्पृथि-वीवदित्यनुमानेन एतादृशत्वे खण्डब्रह्मवादापत्त्याऽखण्डब्रह्मवादो हीयेत । एतां पृथिवीमिव तं पश्यन्ति भक्ता जनाः । एषेवान्यस्तु पश्यति इति विगृह्य कार्ये तादृशं तत्त्वम् । 'त्यदादिषु दृशोऽनालोचने कञ्चे'-तिसूत्रम् । पूर्वविग्रहास्तु सूत्रस्य सर्वतोमुखत्वाद्यथाकथञ्चिज्ज्ञेयाः । अनालोचनेऽविचारे इत्यर्थमादाय । नच वृत्तिविरोधः । श्यालस्वस्रोरित्यत्र 'पुमान् स्त्रिये'त्यस्य वृत्त्यनङ्गीकारात् । तथा मनोरमायां तादृशादयस्तु रूढिशब्दत्वादसतार्थावयवार्थेन व्युत्पाद्यन्ते । अतएवाज्ञानार्था दृशेरिति सङ्गच्छत इति । न हि स्वमते केवलरूढिरस्ति । महाभाष्योक्तयोगेन रूढिशब्दत्वादिति मनोरमाविरोधः । नन्वस्तु विरोध इति चेत् । न । 'लोके शब्दार्थसम्बन्धो रूपं तेषां च यादृशम्, न विचारस्तत्र कार्य' इति निषेधात् । तर्हि रूढौ यः कोपि योगो न भवेदिति चेत् । न । 'लोकसिद्धं प्रस्तुत्य वैदिको बोध्यते यथा,' वैदिकबोधार्थं रूढौ यथाकथञ्चित् योगोप्यस्तु । आचार्योक्तत्वात् । मा भूच्च महाभाष्योक्तयोग इति रूढ्यभावात् । नच भाष्वानां भेदे एतादृशत्वमस्तीति वाच्यम् । उभयव्यपदेशाधिकरणे चतुःसूत्रे आनन्दादिरूपोपि श्रुतिबला-दानन्दगुणकोपीति सर्वत्र माहात्म्यमेवोच्यते भक्त्यर्थमित्यर्थात् । कल्पनायामिति भाष्यं विवृण्वन्ति स्म तथाचेति । वस्तुनस्तादृशत्वे विरुद्धधर्माश्रयत्वे उत्पत्तिसिद्धे सति । तादृश इति । तादात्म्यरूपः । एवेति । विरुद्धधर्माश्रयत्वरूपान्ययोगव्यवच्छेदकः । निषेधेति । मूर्तामूर्तस्य विवर्तत्वेन तथा । तस्याः इति । निषेधशेषतायाः । विशेषत्वं विवर्तत्वं तस्मात् । सत्येत्यादिभाष्यं विवृण्वन्ति स्म सत्यमित्या-दिना । एकेति । भिन्नप्रवृत्तिनिमित्तत्वे सत्येकार्थबोधकत्वं सामानाधिकरण्यम् । भाष्ये तस्यार्थः ।

भाष्यप्रकाशः ।

**न सम्भवेत्। तेषां सत्यत्वादिविशिष्टवाचकत्वात्, सत्यत्वादीनां च धर्मत्वात्। नच सत्यादिपदानां लक्षकत्वमेव। असत्यजडसान्तदुःखव्यावृत्तमेकरूपमेव ब्रह्म लक्ष्यत इति न तेषां सामानाधिकरण्यभङ्ग इति वाच्यम्। लक्षणायां तु सुतरां धर्मापेक्षा। निर्धर्मकस्य क्वापि लक्ष्यत्वादर्शनात्। लक्षणायाः शक्यसम्बन्धरूपत्वेन ब्रह्मणि सत्यादिपदशक्यसम्बन्धलक्ष्यत्वयोर्धर्मयोरापाताच्च। किञ्च। लक्ष्यत्वे यत्किञ्चिच्छब्दवाच्यत्वमप्यर्थादेवायातम्। लक्ष्यत्वस्य वाच्यत्वव्याप्यत्वात्।**

**यत्तु लक्ष्यत्वे सधर्मकत्वस्योपाधित्वान्न व्याप्तिरिति कश्चित्।**

**तन्न। लक्ष्यत्वेनैव धर्मेण ब्रह्मणः सधर्मकत्वे सिद्धे सधर्मकत्वस्य साधनव्यापकतयोपाधितानिवृत्तौ व्याप्तेः सुस्थिरत्वात्। नच वाङ्निवृत्तिश्रुत्या अवाच्यत्वे ब्रह्मणः सिद्धे सधर्मकत्वस्य नोपाधितानिवृत्तिरिति वाच्यम्। तस्याः सामस्त्येन वदनासामर्थ्यपरत्वात्। अप्राप्येति प्रशब्देन तथावसायात्। अनाप्येत्युक्त्यापि तन्निवृत्तिसिद्धेः लक्षणया वाचः प्राप्त्यापि निवृत्त्यसिद्धेश्च।**

रश्मिः ।

**विशिष्टेति**। द्वितीयस्कन्धसुबोधिन्याम्। विशिष्टवाचकत्वम्। प्रस्थानरत्नाकरे तु व्यक्तिमात्रवाचकत्वमुक्तम्। भावार्थपादभाष्येण जातिमात्रवाचकत्वमुक्तप्रायम्। आकृतौ शक्तेः पूर्वमीमांसायामिति। शास्त्रद्वयभेदेन पक्षद्वयम्। व्यक्तिमात्रवाचकत्वपक्षस्तु सूक्ष्मग्रन्थाभिप्रायेण। 'नाहं वेदैर्न तपसा' 'भक्त्या त्वनन्यया' 'आचार्यवान्पुरुषो वेदे'ति 'महतामन्तःकरणं प्रमाण'मिति च। लक्षणायामिति भाष्यं विवरीतुमाहुः **नचेति**। **एवेति**। सविशेषत्वापत्त्या एवकारो वाच्यत्वयोगव्यवच्छेदकः। कुत इत्यत आहुः **असत्येति**। सत्यत्वमसत्यत्वाभावरूपमधिकरणात्मकं सदसत्त्वव्यावृत्तम्। एवं ज्ञानत्वमज्ञानत्वाभावरूपमधिकरणात्मकं सत् जडव्यावृत्तम्। एवमनन्तत्वं अनन्तत्वाभावाभावरूपमधिकरणात्मकं सत् सान्तव्यावृत्तम्। एवं आनन्दत्वमानन्दत्वाभावाभावरूपमधिकरणात्मकं सत् दुःखव्यावृत्तम्। प्रतिकूलवेदनीयं दुःखम्, अनुकूलवेदनीयं सुखम्। आनन्दः सुखम्। **एवेति**। अस्थूलादिश्रुतेरेवकारः। **लक्ष्यत इति**। सत्यत्वादीनां सत्यत्वाद्यभावाभावे लक्षणा। स्वाभावप्रतियोगित्वसम्बन्धः। तेन सम्बन्धेन सम्बद्धं क्रियते ज्ञानविषयीक्रियते। भाष्यं विवृण्वन्ति स्म **लक्षणायामिति**। **लक्ष्यत्वेति**। लक्ष्यार्थत्वादर्शनात्। **सत्यादीति**। सधर्मकत्वापत्त्या सत्यादिपदशक्यः सत्यत्वादिविशिष्टः सत्यादिः तस्य सम्बन्धः स्वरूपात्मकः। लक्ष्यत्वं च उक्तसम्बन्धरूपलक्षणायोग्यं लक्ष्यं तस्य भावो लक्ष्यत्वम्। लक्षयितुं योग्यं लक्ष्यत्वम्। तयोरित्यर्थः। **यत्किञ्चिदिति**। लक्ष्यादिशब्दवाच्यत्वम्। **एवेति**। अवधारणेनागतम्। **लक्ष्यत्वस्येति**। यथा तीरं वाच्यं लक्ष्यत्वात्, एवं ब्रह्म सत्यादिशब्दवाच्यं लक्ष्यत्वात्, गङ्गातीरवत्। **वाच्यत्वेति**। वाच्यत्वन्यूनदेशवृत्तित्वात्। **लक्ष्यत्व इति**। हेतौ। **उपाधित्वादिति**। यत्र वाच्यत्वम्, तत्र सधर्मकत्वमिति साध्यव्यापकता। ब्रह्मणोपि यत्किञ्चिच्छब्दवाच्यत्वं लक्ष्यत्वेन सधर्मकत्वम्। यत्र लक्ष्यत्वम्, तत्र सधर्मकत्वमिति नास्ति। ब्रह्मणि लक्ष्यत्वातिरिक्तधर्माभाववति सधर्मकत्वाभावात्। साध्यव्यापकत्वे सति साधनाव्यापक उपाधिस्तत्त्वात्। **न व्याप्तिरिति**। यत्र यत्र लक्ष्यत्वम्, तत्र तत्र वाच्यत्वमिति व्याप्तिः सा न। **एवेति**। लक्ष्यत्वेतरधर्मयोगव्यवच्छेदकः। **साधनेति**। यत्र लक्ष्यत्वं तत्र सधर्मकत्वाभावाभावात्तथा। **नोपाधितेति**। वाच्यत्वाभाववति ब्रह्मणि लक्ष्यत्वेन सधर्मकत्वस्य सत्त्वात्साध्यव्यापकत्वाभावात्तथेत्यर्थः। यद्वा। श्रुतिबलेन लक्ष्यत्वेपि लक्ष्यस्यावाच्यत्वे सधर्मकत्वस्य लक्ष्यत्वरूपहेतुमति विरहान्नोपाधितानिवृत्तिः। **तस्या इति**। 'यतो वाच' इति श्रुतेः। ईक्षत्यधिकरणभाष्येण तथा। **अप्राप्येति**। श्रौतेन। **तन्निवृत्तीति**। वाङ्निवृत्तिसिद्धेः। **वाच इति**। **ब्रह्म** लक्ष्यमिति

**सिद्ध इति मन्तव्यम् । तत्र हेतुः । तेजस्त्वात् । तेजःशब्दवाच्यत्वात् । बहुवृ-**

भाष्यप्रकाशः ।

**सर्वथा अप्राप्तौ 'यतो वाच' इति यच्छब्दस्यापि ब्रह्माप्राप्त्या तदज्ञाने कुतो निवर्तन्ते वाच इति ज्ञानानुदयेन वाक्यस्याबोधकताप्रसक्तेरनिरुक्तश्रुतिविरोधप्रसक्तेश्च । किञ्च । सत्यादिपदानां ब्रह्मणि शक्त्यभावे ब्रह्मातिरिक्तानां चासत्यजडादिरूपत्वात् तेष्वपि तच्छक्त्यभावे तेषां पदानामनर्थकत्वेन शक्यसम्बन्धरूपा लक्षणा नितरां सिध्येदिति स्वरूपलक्षणमप्यबोधकमेव स्यात् । ततश्च विचार-शास्त्रस्य मोक्षस्य च तिलाञ्जलिरेव दीयेत । अथ व्यावहारिकं सत्यज्ञानादिकं तेषां शक्यमिति तत्सम्बन्धस्य ब्रह्मणि भवनान्न कोपि दोष इति विभाव्यते । तदा तु तस्यैव धर्मत्वान्न ब्रह्मणो यावद्धर्मरहितत्वसिद्धिरिति लक्षणायां सुतरां धर्मापेक्षा । अतो धर्माणामावश्यकत्वादस्य शास्त्रस्य वेदानुरोधित्वात् वेदवाक्यानां च ब्रह्मबोधकतया सर्वेषां तुल्यबलत्वेन धर्मविशिष्ट एव पदार्थो ( निर्धर्मको ) विरुद्धधर्माश्रयो वेदसिद्ध इति मन्तव्यमित्यर्थः ।**

**धर्मधर्मिणोरभेदबोधकं रूपं वक्तुं हेतुं व्याकुर्वन्ति तेजःशब्दवाच्यत्वादिति । 'तद्देवा ज्योतिषां ज्योतिः', 'अथ यदतः परो दिवो ज्योतिर्दीप्यते,' 'भारूपः, तस्य भासा सर्वमिदं विभाति,' 'यदादित्यगतं तेज' इत्यादौ ब्रह्मतद्धर्मयोस्तेजोवाचकशब्दवाच्यत्वात् । तथाच प्रकाशकस्वभा-वत्वात् सूर्यतत्प्रकाशयोर्यथा भेदविरुद्धसम्पद्भेदः, तथा ब्रह्मतद्धर्मयोरपि प्रकाशकत्वात्तथेत्यर्थः । ननु पूर्वसूत्रेण ब्रह्मण उभयरूपत्वे विरुद्धधर्माश्रयत्वे तं तं प्रति तथा प्रदर्शने च सिद्धे धर्माणां**

रश्मिः ।

वाचःप्राप्त्यापि वाङ्निवृत्त्यसिद्धेश्च । **वाक्यस्येति** । अवधिघटितयत इतिवाक्यस्य 'मम माता वन्ध्ये'ति वाक्यवदनर्थकपदघटितत्वादबोधकताप्रसक्तेः । **अनिरुक्तेति** । 'एष ह्येवानन्दयाती'त्युक्त्वाग्रे पठ्यते 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयने अभयं प्रतिष्ठां विन्दते, अथ सोऽभयं गतो भवती'ति। न निरुक्ते अनिरुक्ते । अत्र निरुक्तत्वे प्राप्तेऽनिरुक्त इति प्रतिषेधसम्भवात्तथा । यद्यप्यभावज्ञानेन प्रतियोगिज्ञानं सर्वत्र कारणम् । 'अग्निचयनस्य न दिवी'ति श्रुत्या दिवि निषेधात्, तथापि विरुद्धधर्मा-श्रयप्रकरणादियमेवमुक्ता । **अथेति** । भिन्नप्रक्रमेऽनिरुक्ते प्रतिष्ठारूपभक्तिं विन्दते लभते । अथ स उपासको भिन्नमोक्षविषयं गतो भवतीत्यर्थात् । कस्माद्भिन्नमोक्षविषय इति चेत्, साधनविषयाद्भिन्न-विषयोऽधोक्षजः । पुष्टिमार्गीयम् । साधनविषयफलयोर्भेदादिति । तत्त्वायामीत्यत्राप्ययं बोध्यः संध्यायाम् । **अनर्थकत्वेनेति** । तथा शक्यार्थाभावेन शक्यसम्बन्धेत्यादिः । **अपीति** । अपिना कार्यलक्षणम् । उभयलक्षणयोरबोधकत्वादेवकारो बोधकत्वरूपान्ययोगव्यवच्छेदकः । **विचारेति** । उत्तरमीमांसा-शास्त्रस्य । **तिलाञ्जलिरेवेति** । विचारशास्त्रस्य मोक्षस्य च पदजन्यपदार्थोपस्थितिसाध्यत्वादेवकारः । **व्यावहारिकमिति** । ध्वंसप्रतियोगि । **शक्यमिति** । शक्यार्थवस्तु । **लक्षणायामित्यादिभाष्यार्थो-नुवादपूर्वकमत** इत्यादिभाष्यं विवृण्वन्ति स्म **तदा त्विति** । एवमनूद्य अत इत्यादिभाष्यं विवृण्वन्ति स्म **अत इत्यादि** । **एव पदार्थ इति** । धर्मविशिष्टः पदार्थ एवेत्यन्वयः । पदार्थैकदेशेनान्वयानुपपत्तेः । अयमुभयव्यपदेशसूत्रान्निर्धारणेनेत्यर्थक उक्तः । तादृशपदार्थमाहुः **निर्धर्मक इति** । तथाच श्रुतिः 'स्वरूपं द्विविधं चैव सगुणं निर्गुणं तथे'ति गोपालतापिनीयश्रुतेः । अत्र स्वरूपत्वावच्छेदकं सगुणत्वं निर्गुणत्वं चोक्तम् । **तेजोवाचकेति** । 'ज्योतिषां ज्योति'रिति, 'दिवो ज्योति'रिति, 'तस्य भासे'ति च प्रत्येकं षष्ठ्यवधिघटिताभ्यां तेजोवाचकशब्दाभ्यां वाच्यत्वात् । तथाच सूत्रे तेजःपदं तेजस्त्वेन शब्दार्थसाधारणमुक्तं तत्तेजोवाचकमतस्तेजःशब्दवाच्यत्वादयमर्थो भवति । उभयसमावेशात् । **तं त-**

१. अन्तिमावृत्तौ लोपितम् ।

एव्याप्त्यर्थमेव हेतुरुक्तः। आतपादेर्धर्मत्वेन धर्मित्वेन च प्रतीतेः। अपूर्ववदेव दृष्टत्वाच्छ्रुतत्वाच्च न धर्मेष्वपि युक्त्यपेक्षा। तस्मात् सिद्धं यथाश्रुतमेव ब्रह्मेति ॥ २८ ॥

---

भाष्यप्रकाशः।

ब्रह्मणा सह भिन्नाभिन्नत्वमात्रं साधनीयम्, तत्तु प्रकृतदृष्टान्तमात्रेणैव सिध्यतीति हेतूक्तेः किं प्रयोजनमित्याकाङ्क्षायां तत्प्रयोजनमाहुः बहुदूरेत्यादि। अवतारदशायां सृष्टिदशायां च ब्रह्मणो व्यापकत्वतिरोभावे धर्माणां स्वभावतो बहुदूरव्याप्त्यर्थमेव तद्व्यापकतेजस्स्वरूपो हेतुरुक्त इत्यर्थः। तेजसि तथात्वस्य दृष्टत्वादिति। तथाचोक्तं विष्णुपुराणे प्रथमांशसमाप्तौ 'एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा। परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत्। तत्राप्यासन्नदूरत्वबहुत्वस्वल्पतामयः। ज्योत्स्नाभेदोऽस्ति तच्छक्तिस्तद्वन्मैत्रेय वर्तते' इति। एवमभेदबोधकं रूपं व्याख्याय प्रकाशाश्रयपदाभ्यां बोधितं भेदबोधकं रूपं व्याकुर्वन्ति आतपादेरित्यादि। आतपश्च तदादिश्च तयोः समाहार आतपादिः, तस्यातपादेः। तथाचात्रादिपदेन सूर्यादिः। तथाच आतपस्य प्रकाशस्य धर्मत्वेन सूर्यादेर्धर्मित्वेन च प्रतीतेर्यथा भेदः, तथा ब्रह्मतद्धर्मयोरपि। 'सत्यं ज्ञान'मिति स्वरूपलक्षणात् सच्चिदानन्दरूपेणाभेदः, धर्मेषु तत्तद्धर्मत्वेन रूपेण भेदः, ब्रह्मणि तदाश्रयत्वरूपेण भेद इति तयोस्तावविरुद्धावित्यर्थः। ननु प्रकाशतदाश्रययोस्तथात्वं प्रत्यक्षगम्यम्, ब्रह्मतद्धर्मयोस्तु न तथेति तत्र कथं तथात्वसम्प्रत्यय इत्यत आहुः अपूर्ववदित्यादि। एतेन 'दर्शनाच्चे'त्यत्र व्याख्यातं भक्तप्रत्यक्षम्, विष्णुपुराणस्था स्मृतिः, 'प्राणस्य प्राणं' 'नेह नानास्ती'त्यादयः श्रुतयश्च स्मारिताः। तथाचात्रापि प्रमाणद्वयप्रमितत्वान्न युक्त्यपेक्षेति युक्तिकथनमन्यप्रतिपत्त्यर्थमित्यर्थः। एवञ्च ब्रह्मधर्मा ब्रह्मणो भिन्नाभिन्नाः, प्रकाशकधर्मत्वात्, सूर्यादिप्रकाशवदित्यनुमानमपि प्रयोक्तुं शक्यम्। सिद्धं निगमयन्ति तस्मादित्यादि। एवञ्च ब्रह्मणः सच्चिदानन्दरूपेण सर्वेषां ब्रह्माभेदः। ब्रह्मणस्तु कार्यलक्षणेन सर्वस्माद्भेदः। जगतः कार्यत्वाच्चिदानन्दतिरोभावात् तयोः स्वल्पत्वाच्च भेदः। जीवे चानन्दतिरोभावादल्पत्वादंशत्वादिभ्यश्च भेदः। अक्षरे च गणितानन्दत्वादिभ्यो भेदः। जीवस्य तथात्वं तु जीवप्रकरणे द्वितीयाध्याये सिद्धम्। अक्षरस्य चादृश्यत्वाधिकरणे इति बोध्यम् ॥ २८ ॥

रश्मिः।

मिति। भक्तं भक्तम्। स्वल्पत्व इति। जीवपरत्वेन प्रतीतधर्माणां ब्रह्मपरत्वमत्र प्रतिपाद्यत इति। एवेति। 'अणोरणीयान्महतो महीया'निति श्रुतेरेवकारः। तच्छक्तिरिति। ब्रह्मशक्तिः। ब्रह्मतद्धर्मयोरिति। स्वज्ञानद्वारेति बोध्यम्। ताविति। भेदाभेदौ। भाष्योक्तं धर्मित्वमधस्तनांशस्य। एतेनेति। न पूर्वं पूर्वर्ष्युक्तं सगुणत्वं निर्गुणत्वं वा तत् अपूर्वं विरुद्धधर्माधिकरणत्वं तदस्यास्तीति तद्वत् भवति। कुतः। दृष्टत्वाद्भक्तैः श्रुतत्वाद्वेदान्तिभिः। पूर्वाधिकरणे विरुद्धधर्माधारत्वमुक्तम्, तेन स्मृतौ धर्मधर्म्यभेदाभेदौ, तेन पूर्वाधिकरणेनास्य प्रसङ्गसङ्गतिः प्रदर्शिता। अतो भेदेप्यभेदेन। स्मारिता इति। धर्मविषयेपि स्मारिताः। प्रमाणेति। श्रुतिप्रत्यक्षरूपं प्रमाणद्वयं तत्प्रमितत्वात्। नेति। धर्मिवद्धर्मेष्वपि नेति न धर्मेष्वित्यादिभाष्यार्थः। निगमयन्तीति। हेतुघटितत्वान्निगमनम्। तस्मात्तथेति निगमनवत्। तस्मादित्यादीति। यथाश्रुतमेवेति। पूर्वोपपादनादेवकारः निर्धारणेनेत्यर्थकः। यथाश्रुतं निर्धारणेन ब्रह्मेत्यर्थः ॥ २८ ॥

# पूर्ववद्वा ॥ २९ ॥

एकदेशिमतेनापि सर्वसमाधानमाह । अथवा । 'अरूपवदेव ही'त्यादिपञ्चसूत्र्या यः सिद्धान्तः कथितः, तादृशं वा ब्रह्म प्रतिपत्तव्यम् ।

अयमाशयः । वेदस्थापनार्थं हि प्रवृत्तिः । तत्र यथा अक्षरमात्रस्यापि बाधो न भवति, तथा वक्तव्यम् । यदर्थमुभयरूपता अङ्गीकृता, तत्र धर्माणां

भाष्यप्रकाशः ।

पूर्ववद्वा ॥२९॥ सूत्रमवतारयन्ति व्याकुर्वन्ति च एकेत्यादि । अथवेत्यादि च । वाशब्दः पक्षान्तरे । पूर्ववत् । 'अरूपवदेव ही'ति पञ्चसूत्र्या यः सिद्धान्तः कथितः, प्रपञ्चविलक्षणं तत्समवायित्वेपि न तत्प्रकारकम्, नापि समवायिमात्रम्, किन्तु ततोप्यतिरिक्तं कृत्स्नं चिन्मात्रस्वरूपं यदा आविर्भवति, तदा व्यवहार्यं भवति । तत्र जडजीवधर्मा औपचारिका इत्येवंरूपः । तादृशं कारणरूपं ब्रह्म प्रतिपत्तव्यमित्यर्थः । एतन्मताभ्युपगमे बीजं व्युत्पादयन्ति अयमित्यादि । तथाच यत् पूर्वोपगमे बीजम्, तदेवात्रापीत्यर्थः । बीजमुक्त्वा पञ्चसूत्रीसिद्धस्य प्रकृते यथा विवक्षितत्वम्, तथोपपादयन्ति तत्र धर्माणामित्यादि । तस्मिन् पक्ष एकदेशिप्रतिपन्नमौपचारिकत्वं दूषयित्वा नित्यब्रह्मत्वेन स्थापितानां धर्माणां स्वरूपस्य वृत्तिमत्त्वस्य निर्वाहार्थं सविशेषनिर्विशेषभेदेन ब्रह्मवैलक्षण्यमङ्गीकर्तव्यम् । ततो वैलक्षण्येन भेदे सत्यद्वितीयत्वश्रुतिर्बाध्येत । तथाच तदभावायोत्पत्त्या विचारः कर्तव्यः । यो यथा यथा परिणमते, स तत्तद्वानपि पूर्वमव्यक्तः घटपटदध्यादिरूपेण परिणममाणमृत्तन्तुदुग्धादिवदिति । एवमुत्पत्त्या विचारे कारणभूतं निर्धर्मकमेव ब्रह्म सेत्स्यतीति पूर्वं तादृशमेव प्रतिपत्तव्यम् । ततश्च ब्रह्माहिकुण्डलवदुभयरूपम्, तद्धर्माः प्रकाशाश्रयवद्भिन्नाभिन्ना इत्युपपत्त्या विचारोपि कारणस्वरूपानुरोधेनैव कर्तव्यः । तत्र कथं कर्तव्य इत्याकाङ्क्षायां कारणविचारे श्रुतावेकविज्ञानेन सर्वविज्ञानस्य प्रतिज्ञातत्वाद्धर्माणामपि ब्रह्मरूपत्वं वक्तव्यम् । तदैव तदुपपद्यते, न तु धर्माणां नित्यभिन्नत्व आविद्यकत्वे वा । आद्ये भिन्नत्वेन, द्वितीये मिथ्यात्वेन च तत्प्रतिबन्धात् । नचाविद्यकत्वेप्यसत्यव्यावृत्तत्वेन सत्यरूपब्रह्मज्ञाने

रश्मिः ।

पूर्ववद्वा ॥ २९ ॥ तदेवेति । अन्ययोगव्यवच्छेदक एवकारः । दूषयित्वेति । 'तत्र धर्माणा'मित्यादिना दूषयित्वा । सविशेषेति । ब्रह्मस्वरूपस्य निर्विशेषे लक्ष्यत्वादिवृत्तिमत्त्वस्येति विवेकः । विपरीतं वा । तथा सतीति भाष्यं विवृण्वन्ति स्म तत इति । बाध्येतेति । भिन्नस्य द्वितीयत्वात्तथा । तथा चेति भाष्यं विवृण्वन्ति स्म तथा चेति । उत्पत्त्या विचारं घटयन्ति स्म यो यथेति । परीति । हैमधातुपाठे तु परस्मैपदी । तत्तद्वान् तत्तत्परिणामवान् । स्विति । अनृतं शुक्त्यादिवत् । आदिना गोमयादि । परिणामो वृश्चिकः । निर्धर्मकमेवेति निर्गुणब्रह्मवादिसम्मतत्वादेवकारः । एवेति पूर्ववत् । उपपत्त्येतिभाष्यं विवृण्वन्ति स्म ततश्चेति । एवेति । वृत्तिमत्त्वानुरोधव्यवच्छेदक एवकारः । विपरीतं तु न । भाष्यानुक्तत्वात् । तत्रेति भाष्यं विवरीतुं न चेत्यादिशङ्कोत्थापनार्थं पीठिकां कुर्वन्ति स्म तत्र कथमित्यादिना । श्रुताविति । 'उत तमादेशमप्राक्ष्य'मित्यादिछान्दोग्यश्रुतौ । तदैवेति । ब्रह्मरूपत्ववचनकाले । एवकारो धर्माणां नित्यभिन्नत्वाविद्यकत्वकालौ व्यवच्छिनत्ति । नान्यथेत्यंशं स्फोरयन्ति स्म न तु धर्माणामिति । आविद्यकत्व इति । रजतवदसत्त्वात् । तत्प्रतीति । एकविज्ञानेन सर्वविज्ञानप्रतिबन्धात् । भाष्यं विवरीतुमाशङ्कामाहुः न चेति ।

**स्वरूपनिर्वाहार्थमवश्यं ब्रह्मवैलक्षण्यमङ्गीकर्तव्यम् । तथा सति 'एकमेवाद्वितीय'-मिति बाधः प्रसज्येत । तथाचोत्पत्त्या विचारे निर्धर्मकमेव पूर्वं ब्रह्मेति प्रतिपत्तव्यम् । उपपत्त्यापि विचारः पूर्वानुरोधेनैव कर्तव्यः । तत्र धर्माणामपि ब्रह्मत्वे एकविज्ञानेन सर्वविज्ञानमुपपद्यते, नान्यथा । ततश्च प्रथमं ब्रह्म स्वधर्मरूपेण भवति । तदनु क्रियादिरूपेण प्रपञ्चरूपेण च। तावतैव सर्ववेदार्थसिद्धेः । नच लौकिकी युक्तिस्तत्रापेक्ष्यते, येन तादृशस्य कथं सर्वभाव इति पर्यनुयोगो भवेत्। धर्मकल्पनायामपि 'नैषा तर्केण मतिरापनेये'ति**

भाष्यप्रकाशः।

एकविज्ञानेन सर्वविज्ञानं भवत्येवेति शङ्क्यम् । मृत्पिण्डादिदृष्टान्तोपरोधेन जायमानस्य तस्याप्रयोजकत्वात् । अतो धर्माणां ब्रह्मत्व एवैकविज्ञानेन सर्वविज्ञानोपपत्तिः, नान्यथा । तस्मात् ततश्चेत्याद्युक्तप्रकारेण धर्माणां ब्रह्मकार्यत्वात् ब्रह्मरूपत्वमङ्गीकर्तव्यम् । तावतैव सर्ववेदार्थाविरोधसिद्धेः । नच पूर्वमव्यक्तस्य पश्चात् व्यक्तत्वं लोके हेत्वन्तरसमवधानादेव दृष्टमितीतरासद्भावे निर्धर्मकस्य कथं धर्मरूपेण भवनमिति शङ्क्यम् । ब्रह्मणो वेदैकसमधिगम्यतया तत्र लौकिकयुक्त्यपेक्षाया अभावेन तादृशशङ्काया एव तत्र कर्तुमयुक्तत्वात् । तथाच पञ्चसूत्रीसिद्धस्यानेन प्रकारेण विवक्षितत्वमित्यर्थः । नन्वेवं सति लौकिकयुक्त्यनपेक्षत्वाच्छ्रौतत्वाच्चेदमेव मतमादर्तव्यम्, किं पूर्वेणेत्यत आहुः धर्मेत्यादि । धर्मकल्पनायामिति । विरुद्धधर्माश्रयत्वरूपधर्मकल्पनायाम् । तथाच द्वयोस्तौल्यात् तस्याप्यादरणमित्यर्थः। ननु द्वयोस्तौल्येप्ययं पक्षश्चेत् व्यासचरणैः पश्चाद्विचार्योक्तः, तदा न पूर्वत्र व्यासाशय इति शङ्कायां द्वयोः कथनस्य तात्पर्यमाहुः उत्पत्त्येत्यादि । उत्पत्त्या एतत्सू-

रश्मिः।

असत्येति । सत्यत्वाभावाभावरूपेणासत्यव्यावृत्तत्वेन । भवत्येवेति । एकविज्ञानेन सर्वविज्ञानायोगव्यवच्छेदक एवेति । नीलं सरोजं भवत्येवेत्यत्रेव । मृत्पिण्डेति । आविधकमृत्पिण्डलोहनिकृन्तनदृष्टान्तोपरोधेन। तस्येति। एकविज्ञानेन सर्वविज्ञानस्य। अप्रयोजकत्वादिति। ब्रह्मज्ञानरूपविशेषदर्शने सर्वस्य प्रविलाप्यत्वात्सर्वविज्ञानानुत्पत्त्या तथा । विवृण्वन्ति स्म अत इति । मृत्पिण्डादिदृष्टान्तोपरोधेन जायमानस्य तस्याप्रयोजकत्वात् । ब्रह्मत्व एवेति । एवकारस्तु नित्यभिन्नाविधकत्वयोर्व्यवच्छेदकः । नान्यथेति व्याख्यातप्रायं पीठिकाग्रन्थे । ततश्चेति भाष्यं विवृण्वन्ति स्म तस्मात्ततश्चेति । तावतेति भाष्यं विवृण्वन्ति स्म तावतेति। लघुना। एवकारः सर्ववेदार्थाविरोधाय गुरुप्रकारव्यवच्छेदकः। एतावता येन तादृशस्येत्यादिभाष्यार्थ उक्तः । न च लौकिकी युक्तिस्तत्रापेक्ष्यत इति भाष्यार्थमाहुः ब्रह्मण इत्यादि । न चेत्यादि भवेदित्यन्तभाष्यस्य प्रघट्टकार्थमाहुः नचेत्यारभ्येत्यर्थ इत्यन्तेन । हेत्वन्तरेति । यथा वायोर्हेतुराकाशः हेत्वन्तरं व्यजनादि, तस्य समवधानात् । दृष्टत्वादेवकारः प्रणयति । तृतीयाया लुक् । अनेनेति। नच पूर्वमित्यादिनोक्तेन प्रकारेण। इदमेवेति । निर्गुणवादिसम्मतत्वादेवकारः । पूर्वेणेति । पूर्वाधिकरणोक्तेन विरुद्धधर्माश्रयत्वेन । द्वयोरिति पक्षयोः । अयमर्थः । 'श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोपि बहवो यं न विद्युः । आश्चर्यो वक्ता कुशलोस्य लब्धा आश्चर्यो ज्ञाता कुशलोनुशिष्टः । न नरेणावरप्रोक्त एष सुविज्ञेयो बहुधा चिन्त्यमानः । अनन्यप्रोक्ते गतिरन्यत्र नास्त्यणीयान्ह्यतर्क्यमणु प्रमाणात् । नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ । यां त्वमापः सत्यधृतिर्बतासि । त्वादृङ्नो भूयान्नचिकेतः प्रष्टा । जानाम्यहं शेवधिरित्यनित्यं नह्यध्रुवैः प्राप्यते हि ध्रुवं तत् । ततो मया नाचिकेतश्चितोग्निरनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्य'मित्यत्र सिद्धान्तपक्षैकदेशिपक्षयोरर्थे

**समानम् । उत्पत्त्या चोपपत्त्या च विचारद्वयम् । उपपत्त्या पूर्वनयनं स्वसिद्धान्तः ।**

भाष्यप्रकाशः ।

**त्रव्याख्योक्तप्रकारिकया उत्पत्त्या, पूर्वसूत्रव्याख्योक्तप्रकारिकया उपपत्त्या च अस्मिन्नधिकरणे विचारद्वयम् । तयोर्मध्य उपपत्त्या पूर्वनयनम् । मैत्रेयीब्राह्मणे 'स यथा सैन्धवघन' इत्यादिना चिन्मात्रत्वेन प्रतिपादितस्यैवात्मनः 'अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मे'त्यनेन स्वरूपाविनाशधर्मानुच्छित्त्योः कथनेन स्वरूपधर्मयोर्नित्यत्वबोधनात् । 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति स्वरूपलक्षणस्थे सत्यपदेपि 'सत्यस्य सत्य'मिति नामधेयतन्निर्वचनयोरनुरोधेन मूलसद्रूपत्वमूलत्यरूपत्वयोरपि बोधनात् । नृसिंहोत्तरतापनीये तुरीयनिरूपणे तुरीयस्य प्रपञ्चोपशमत्वमुक्त्वा, 'ईश्वरग्रासः स्वराट् स्वयमीश्वर' इति ईश्वरत्वश्रावणात् । तैत्तिरीये 'यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्ता'दिति प्रपञ्चात् परस्य कारणस्य एकत्वादिपञ्चधर्मवत्त्वश्रावणात्, द्वितीयस्कन्धे भगवता 'पश्चादह'मिति, तृतीयस्कन्धे मैत्रेयेण 'यथेदानीं तथाचाग्रे पश्चादप्येतदीदृश'मिति, विष्णुपुराणे प्रथमेंशे 'तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् । आविर्भावतिरोभावजन्मनाशविकल्पव'दिति**

रश्मिः ।

तौल्यात् । यथा विरुद्धधर्मकल्पनायां 'नैषा तर्केणे'ति श्रुतिः, तथास्मन्मतेपीति तौल्यात् । एकदेशिमतेऽरूपवत उत्पत्तिर्नैयायिकयुक्तिविरुद्धेति 'नैषा तर्केणे'ति श्रुतेर्विरुद्धधर्माश्रयत्व इव प्रवृत्तेः तस्यैकदेशिमतस्याप्यादरणम् । श्रुत्यर्थस्तु । बहुभिरन्याचार्यग्रन्थैरपि । **आश्चर्य** इति । आश्चर्ये सति ब्रह्मेति वचनप्रयोजक आश्चर्य एव वक्ता आश्चर्यरसो वा ब्रह्मरूपः तत्र प्रविष्टः । अर्शआद्यजन्तो वा । अनुशिष्टः दत्तात्रेयवद्गुरुर्वनुशिष्टः । अवरः जगद्रूपः न सुविज्ञेयः, किन्तु भगवान् सुविज्ञेयः । जगत्तु तज्जलान्त्वेन । **अनन्येति** । अपृथग्दर्शनेनाचार्येण प्रोक्ते आत्मगतिरन्यत्र परब्रह्मणि नास्ति । यतोऽणीयान् 'अणुः पन्था विततः पुराणः' इति द्वितीयाध्याये चिन्तितम् । नहि अतर्क्यम् । 'अलौकिको हि वेदार्थो न युक्त्या प्रतिपद्यते । तपसा वेदयुक्त्या तु प्रसादात्परमात्मनः' इति श्रुतेर्नहि अतर्क्यम् । अणु ब्रह्म प्रमाणं प्रमाणप्रेरकत्वेन मुख्यत्वात् । **अन्येनेति** । आगमाभिज्ञेनाचार्येण गतिम् । **त्वादिति** । त्वत्सदृशः । **शं** कल्याणम् । सोः शेः । इतिहेतोः । **अध्रुवैः साधनैरिति** । **अयमिति** । विरुद्धधर्माश्रयपक्षः । **पश्चात्** एकदेशिमतात्पश्चात् । **पूर्वत्रेति** । एकदेशिमते । **उत्पत्त्येति** । विरुद्धधर्मोत्पत्त्या । **पूर्वसूत्रे** प्रकाशाश्रयवत्सूत्रे । **व्याख्योक्तेति** । कल्पनायामपीत्यादिव्याख्योक्तप्रकारिकया । उपपत्त्येतिभाष्यं विवृण्वन्ति स्म **तयोरिति** । **पूर्वनयनमिति** । पूर्वस्य पक्षस्य नयनम् । **एवेति** । अन्ययोगव्यवच्छेदकः । **कथनेनेति** । अनुच्छित्तिर्धर्मो यस्येति विग्रहे पुनरुक्तिरतो न उच्छित्तिर्नाशो येषां तेऽनुच्छित्तयः अनुच्छित्तयो धर्मा यस्येति विग्रहात्तथा । **स्वरूपेति** । स्वरूपं च धर्मश्च तयोः । एतदादयो हेतवः । **स्वसिद्धान्त** इति भाष्यविवरणस्य व्यासचरणानां सिद्धान्त इति ग्रन्थस्य । **सत्यपदेपीति** । अपिना मूर्तामूर्तब्राह्मणीय-'प्राणा वै सत्यं तेषामेष सत्य' मित्युक्तसत्यपदे । 'सत्यस्य सत्य' मिति ब्रह्मस्तुतौ । नामधेयं स्वरूपलक्षणस्थम्, निर्वचनं ब्रह्मस्तुतिरूपम् । यद्यपि नामधेयं त्रैकालिकाबाधविषयम्, तथापि विरुद्धधर्माधारत्वायाहुः **मूलेति** । मूलसद्रूपपदत्वं मूलत्यरूपपदत्वं तयोः । सन्मूर्तं त्यममूर्तं मूर्तामूर्तब्राह्मणे स्फुटं । **ईश्वरत्वेति** । श्रुत्यर्थस्तु प्रपञ्चस्योपशमो यत्रेति निर्धर्मकम् । पूर्वोक्तं प्राज्ञं ईश्वरं ग्रसतीतीश्वरग्रासः कर्मण्यण् । ओतत्वेनेश्वरग्रासत्वमनुज्ञातृत्वेन स्वराट्त्वमनुज्ञात्वेन स्वयमीश्वरत्वमिति सधर्मकम् । **अनन्तरूपमिति** । व्यक्तम् । श्रुतीरुक्त्वोपबृंहणमाहुः **द्वितीयस्कन्ध** इति । **भगवदिति** । आदिनैकरूपत्वाक्षयत्वाविर्भावतिरोभा-

१. आदर्शेषु एतत्त्वादिपञ्चधर्मेति पाठः, काशीपुस्तके प्रपञ्चधर्मेति पाठः, मूलपुस्तके इदं नास्ति, अतोपेक्षितपाठो रक्षितः । मूलेऽभावाद्भ्रमो न विभृत इति ।

एकदेशिनस्तद्विपरीतम् । उभयमपि सूत्रकारस्य संमतमिति ॥ २९ ॥

प्रतिषेधाच्च ॥ ३० ॥

एकदेशिमते उपपत्त्यन्तरमाह । 'एकमेवे'त्युक्त्वा पुनः 'अद्वितीय'मिति

भाष्यप्रकाशः ।

पराशरेण च भगवद्रूपत्वादिनैव तदुपबृंहणाच्च विरुद्धधर्माधारत्वलौकिकयुक्त्यगम्यत्वविदिताविदितपरत्वानिरुक्तत्वरूपाणां श्रुत्युक्तयुक्तीनां अनन्तगुणपूर्णत्वपक्षेपि तुल्यत्वात् युक्त्या कारणरूपस्यैवमविरोधानुकूल्यप्रापणं व्यासचरणानां सिद्धान्तः । द्वितीयस्कन्धे 'नास्य कर्माणि जन्मादौ परस्यानुविधीयत' इति मुख्याधिकारिणामर्थे जन्मकर्मनिषेधकथनेन सदैकरूपत्वबोधनात् । एकदेशिनस्तु पूर्वोक्तरीत्या कालभेदेनाविरोधप्रापणमिति व्यासोक्तपक्षाद्विपरीतम् । तस्य पक्षस्य द्वितीयस्कन्ध एव 'इत्थं भावेन कथितो भगवान् भगवत्तमः । नेत्थं भावेन हि परं द्रष्टुमर्हन्ति सूरय'इति मध्यमाधिकारिपरतयोक्तत्वेन इतो न्यूनत्वात् । एतावान् परं विशेषः, यत्पुराणे मायाद्वारकं कर्तृत्वादि, श्रौते मते तु तथेत्येकदेशिमतं तत उत्तमम् । तथापि 'अनुच्छित्तिधर्मे'त्यादिश्रुतीनां 'पश्चादह'मित्याद्युपबृंहणानां चाञ्जस्याभावेन न तथोपपन्नम् । एवमपि सत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः कर्तृत्वादिश्रुतीनां च नासामञ्जस्यमित्यल्पदोषदुष्टत्वेन सूत्रकारादृतम् । अत उभयमपि सूत्रकारस्य संमतमित्यर्थः ॥ २९ ॥

प्रतिषेधाच्च ॥ ३० ॥ सूत्रमवतारयन्ति एकदेशीत्यादि । भगवन्माहात्म्यबोधकत्वेपि किञ्चिद्दोषादनादरो मा भूदित्यत एकदेशिमते उपपत्त्यन्तरमाहेत्यर्थः । व्याकुर्वन्ति एकमेवे-

रश्मिः ।

वजन्मनाशविकल्पवत्त्वानि । अत्र उपपत्त्यापि विचारः पूर्वानुरोधेनैव कर्तव्य इति भाष्यानुरोधात्पूर्वानयनमाहुः विरुद्धधर्मेत्यादि । विरुद्धधर्माधारत्वं उभयव्यपदेशसूत्रस्थात् 'सकलविरुद्धधर्मा भगवत्येव वर्तन्त' इति भाष्यात् । लौकिकयुक्त्यगम्यत्वं 'तादृशमेव तद्वस्तूत्पत्तिसिद्ध'मिति भाष्यात् 'न धर्मेष्वपि युक्त्यपेक्षे'ति भाष्याच्च । विदितेत्यादि । विदितं वर्तमानं अविदितं भूतं भविष्यच्च तयोः परत्वम् । 'अन्यदेव तद्विदितादथोऽविदितादधी'ति श्रुतेः । अनिरुक्तत्वं तैत्तिरीये । अभिधेयानामित्युक्ते एकदेशिमतवादकवलितता स्यादत आहुः श्रुत्युक्तयुक्तीनामिति । विरुद्धधर्माधारत्वं नित्यं न भवेन्नित्यानित्यसंयोगभिया श्रुत्यभिधेयं न भवेत् । लौकिकयुक्त्यगम्यत्वं नित्यं न भवेत्, श्रुत्यभिधेयं न भवेत् । 'आसीनो दूरं व्रजति शयानो याति सर्वतः' । 'अपाणिपादो जवनो ग्रहीते'ति श्रुत्यभिधेयं नित्यानित्यसंयोगभिया न भवेत् । विदिताविदितपरत्वं नित्यं न भवेत् । नित्यानित्यसंयोगभिया श्रुतिरभिधेयं न वदेत् । अनिरुक्तत्वं नित्यं न भवेत् । नित्यानित्यसंयोगभिया श्रुत्यभिधेयं न भवेदित्येवं युक्तीनाम् । नास्येति । अस्य परस्य आदौ कर्माणि जन्म नानुविधीयते इति । मुख्याधिकारिणामिति । एकदेशिन इति भाष्यं विवृण्वन्ति स्म एकदेशिन इति । पूर्वोक्तेति । अत्रैव पूर्वोक्तरीत्या सृष्टिकालस्य भेदेन । सिद्धान्ते तु सृष्टिकालात्पूर्वकालेपि धर्माः । मायाद्वारकमिति । 'मुमुक्षुस्यादवे' इति वाक्यात् । तत इति । पुराणमतात् । आञ्जस्येति । सिद्धान्तरीत्या नयनाभावेन । स्वार्थे ष्यञ् । न तथेति । सिद्धान्तत्वेन नोपपन्नम् । अल्पदोषेति । अपसिद्धान्तत्वदोषदुष्टत्वेन । सूत्रकारादृतं अत इति पदच्छेदः ॥ २९ ॥

प्रतिषेधाच्च ॥ ३० ॥ किञ्चिदिति । अपसिद्धान्तत्वदोषात् । प्रतीति । धर्मप्रतिषेधयुक्ता

द्वितीयं प्रतिषेधति । स एवकारेणैव सिद्धो व्यर्थः सन् धर्मनिषेधमपि सूचयति । 'ऐक्षते'ति वचनात् तदुत्पत्तिः । चकारादेकविज्ञानेन सर्वविज्ञानोपक्रमः परिगृहीतः । तस्मान्न ब्रह्मणि कश्चिद्विरोध इति सिद्धम् ॥ ३० ॥

इति तृतीयाध्याये द्वितीयपादे नवमं प्रकाशाश्रयवद्वेत्यधिकरणम् ॥ ९ ॥

भाष्यप्रकाशः ।

त्यादि । स इति । द्वितीयनिषेधः । नन्वनुच्छित्तिधर्मेत्यादिना तन्नित्यत्वे कुतो निषेध इत्यत आहुः ऐक्षतेत्यादि । तथाचोक्तश्रुत्यनुरोधेन धर्मनित्यताबोधकश्रुतिरनुच्छित्तिधर्मो यस्येतिसमासेनाविनाशिपदव्याख्यानपरतया नेयेत्यर्थः । स्फुटमन्यत् ।

नचैकदेशिमतस्य युक्त्यन्तरेणोपष्टम्भात् पूर्वमततुल्यत्वमस्य सूत्रकाराभिप्रेतमिति शङ्क्यम् । प्रतिषेधश्रुतेर्द्वित्वसंख्यापूरकनिषेधपरतायाः प्रागुपपादितत्वेन, 'सूर्य एकाकी चरती'तिश्रुतौ सपरिकरे एव सूर्य एकाकित्ववत् 'गेहे देवदत्त एवास्ति, न द्वितीय' इति लौकिकप्रयोगे करचरणादियुक्तदेवदत्ताद्वितीयत्ववच्चापि निषेधगतेः शक्यवचनत्वेन, अनुच्छित्तिधर्मपदस्याविनाशिपदव्याख्यानताया अपि मानान्तरविरहादगतिकगतित्वेन च तस्य शैथिल्यात् । अत एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानुरोध एवैतत्संग्रहे बीजम् । एतस्योपष्टम्भकं च नैतस्मादन्यदिति बोधनायैवैतद्युक्तिकथनमिति बोध्यम् । तस्मान्न कोपि शङ्कालेशः ।

( ननु मतद्वयस्यापि सूत्रकारसम्मतत्वे स्वसिद्धान्त इति भाष्यस्थस्य स्वशब्दस्य सूत्रकारपरत्वेन व्याख्यानमनुचितम् । एकदेशिपदे च व्यासैकदेशित्वव्याख्यानमपि तथा । व्यासैस्तन्नामानुल्लेखादिति चेत् ।

मैवम् । एकदेशिपदेत्र व्यासस्यैवैकदेशी ग्राह्यः । अन्यथाम्बुवत्सूत्रेण 'अत एवे'तिसूत्रसिद्धं दृष्टान्तं न दूषयेत् । वृद्धिह्रासादिसूत्रद्वये युक्त्यन्तरं च न वदेत् । एकदेशिनामानुल्लेखस्तु जैमिन्यादिवदप्रसिद्धत्वात् । 'जीवमुख्यप्राणलिङ्गा'दित्यादिपूर्वपक्षिनामवत् । अस्मिन् सूत्रे जघन्यानामर्थेऽस्य सङ्ग्राह्यत्वाद्वा । अथवा । जीवप्रसङ्गे 'अवस्थितेरिति काशकृत्स्न' इति काशकृत्स्नेन जीवस्य ब्रह्मावस्थाविशेषत्वेनाङ्गीकारात् तस्य न्यायस्यापि तुल्यत्वात् स एवैकदेशी ग्राह्यः । अत एव द्वितीयस्कन्धपञ्चमाध्याये सृष्टिप्रकरणे 'सत्त्वं रजस्तम' इत्यस्य सुबोधिन्यां 'काशकृत्स्नमतमत्र सिद्धं भविष्यती'त्याचार्यैरपि तथाङ्गीकारः कृत उत्पत्त्या विमर्शविचारे इति नात्र शङ्कालेशः । एवमेकदेशिनि निश्चिते स्वशब्दो व्यासपर एव युक्त इत्यत्राप्यदोषः । नचास्य पश्चात् कथनेनास्यैव मुख्यत्वमिति शङ्क्यम् । द्वितीयस्कन्धे 'इत्थंभावेन कथितो भगवान् भगवत्तमाः । नेत्थं भावेन हि परं द्रष्टुमर्हन्ति सूरय' इत्यादिभिरेतदमुख्यतायाः शुकवाक्ये व्यासचरणैरेवोक्तत्वात् । एतस्य

रश्मिः ।

श्रुतिरद्वितीयमितिश्रुतिस्तस्याः । द्वित्वेति । द्वितीयमित्यत्र पूरणार्थकप्रत्यय इति भावः । प्रागिति । सपरीति । चरणादिः परिकरः । श्रौतत्वादेवकारः । एवेति । अन्ययोगव्यवच्छेदकः । निषेधगतेरिति । अद्वितीयश्रुत्युक्तायाः । तस्येति । एकदेशिमतस्य । एवेति । अन्ययोगव्यवच्छेदकः । एतत्संग्रहे एकदेशिमतसंग्रहे । एतस्मादिति । प्रतिषेधसूत्रादित्यर्थः । एवकारोऽन्ययोगव्यवच्छेदकः । (ए)तद्युक्तीति । एकदेशिमतयुक्तिकथनमनेन सूत्रेणेत्यर्थः । शङ्केति । एकदेशिमतोपपत्त्यनावश्यकत्वशङ्का तस्या लेशः ।

१. अधिकरणादित्यर्थः ।

भाष्यप्रकाशः ।

सम्मतत्वं तु जघन्याधिकारिणामर्थे एतस्यैव सुबोधत्वेनोपयोगात् । अत एवेदं मतं पूर्वमुक्तम् । यथा द्वितीयस्कन्धे राजार्थम् । किञ्च, भाववृत्तसूक्ते 'नासदासी'दित्यादिभिः सृष्टिं पूर्वमुक्त्वा, समाप्तौ 'इयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न योऽस्या अध्यक्षः परमे व्योमन् सोऽङ्ग वेद यदि वा न वेदे'ति सृष्ट्याधानानाधानात्मकं पक्षद्वयमुक्त्वा तस्य ज्ञानाज्ञाने आह । तेन विसृष्टिं कदाचिदाधत्ते, कदाचित् स्वतःसिद्धामेव प्रकटयति । अथवा सामान्यां करोति । लीलासृष्टिं तु स्वतःसिद्धामेवाविष्करोतीतीति ज्ञानाज्ञाने उभये अपि युक्ते । एतज्ज्ञापनाय सन्देहवचनम् । अन्यथा वेदस्य ब्रह्मणश्च सन्देहाभावादेवं न वदेत् । अतो लीलासृष्टिमनुसन्धाय व्यासः स्वमतं वक्ति । एकदेशिनस्तु तत्र जानन्तीति ब्रह्मणो निर्विशेषादुत्पत्तिं वदन्ति । तस्मादुपपत्तिपक्ष एव व्यासाशयगोचरः, इतर इतरस्येति दिक् । )

शङ्कराचार्यास्तु । 'न स्थानतोपी'त्यारभ्यैकादशसूत्रमेकमधिकरणं कल्पयन्ति । 'प्रकृतैतावत्त्वे'त्यारभ्य नवसूत्रमपरम् ।

तत्र प्रथमे, सुषुप्तादिषूपाध्युपशमाज्जीवो यत् सम्पद्यते तत् ब्रह्म । 'सर्वकर्मे'त्यादिभिः सविशेषत्वश्रावणादस्थूलमित्यादिभिर्निर्विशेषत्वश्रावणाच्च किमुभयलिङ्गं ब्रह्म प्रतिपत्तव्यम्, उतान्यतरलिङ्गम् । यद्यन्यतरलिङ्गम्, तदापि किं सविशेषम्, उत निर्विशेषमिति सन्देहे, उभयलिङ्गश्रुत्यनुग्रहादुभयलिङ्गं ब्रह्मेति प्राप्ते, अभिधीयते । न स्थानत इत्यादि । परस्य ब्रह्मण उभयचिह्नत्वं स्वत उपाधितश्च न । कुतः । सर्वत्र हि । ब्रह्मस्वरूपप्रतिपादनपरेषु 'अशब्दमस्पर्शमरूपमव्यय'मित्यादिषु निर्विशेषस्यैवोपदेशादिति । 'न भेदा'दिति द्वितीये च प्रतिविद्यं ब्रह्मण आकारभेदश्रावणान्निर्विशेषाङ्गीकारे च तस्य शास्त्रस्य निर्विषयत्वापत्तेरौपाधिक आकार आदर्तव्य इत्याशङ्क्य, मधुविद्यायां प्रत्युपाधिभेदं ब्रह्मणोऽभेदश्रावणान्न भिन्नाकारयोगो ब्रह्मणः शास्त्रीय इति । 'अपिचैवमेक' इति तृतीये च, 'मनसैवेदमाप्तव्यम्' 'नेह नानास्ति किञ्चने'ति भेददर्शननिन्दापूर्वकमभेदमेके, तथान्ये भोक्तृभोग्यादिप्रपञ्चस्य 'त्रिविधं ब्रह्ममेत'दिति ब्रह्मैकस्वभावत्वमामनन्तीति व्याख्याय, ननूभयलिङ्गासु श्रुतिषु सतीषु कथमनाकारमेव ब्रह्मावधार्यते, न पुनः साकारमिति शङ्कायाम्, चतुर्थस्यारूपवत्सूत्रस्य प्रवृत्तिमुक्त्वा, अरूपवदेव ब्रह्मावधारयितव्यम्, न रूपादिमत् । कुतः । तत्प्रधानत्वात् । 'अस्थूलमनणु,' 'अशब्दमस्पर्शमरूपमव्ययम्,' 'आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तत् ब्रह्म,' 'दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः,' 'तदेतत् ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभू'रित्यादीनां निर्विशेषब्रह्मप्रधानत्वात्, आकारलिङ्गानां चोपासनाप्रधान-

रश्मिः ।

**सुषुप्त्यादिष्विति** । आदिना सम्पत्तिसमाधी । **एवेति** । सविशेषव्यवच्छेदक एवकारः । **आकारेति** । 'चतुष्पाद्ब्रह्म' 'षोडशकलं ब्रह्म', वामनीत्वभामनीत्वलक्षणं ब्रह्म, त्रैलोक्यशरीरं वैश्वानरशब्दोदितं ब्रह्म, 'सर्वं खल्विदं ब्रह्मे'ति, चतुर्दशभुवनात्मकं ब्रह्मेत्येवमाकारभेदश्रावणात् । **मधुविद्यायामिति** । 'यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मे'त्यादिरूपायाम् । **अभेदेति** । पृथिव्यादीनामुपाधित्वाच्चेति भावः । **भोक्तृभोग्यादीति** । आदिना प्रेरिता । 'भोक्ता भोग्यं प्रेरितारं च मत्वे'ति श्रुतेः । **अनाकारमेवेति** । साकारयोगव्यवच्छेदक एवकारः । **ते यदिति** । ते नामरूपे यस्यान्तरा मध्ये व्यवधायके वर्तेते तद्ब्रह्मेत्यर्थः ।

१. प्रकाशमूलपुस्तके सुषुप्तादिषु, रश्मौ च सुषुप्त्यादिषु । २. स्वाप्यय ।

भाष्यप्रकाशः।

त्वेन ततो निर्बलत्वादिति व्याख्यातवन्तः। ततो, ननु तर्हि आकारवद्विषयाणां का गतिरित्याशङ्कायां पञ्चमं 'प्रकाशवच्चावैयर्थ्या'दिति सूत्रमवतार्य, यथा सौर्यश्चान्द्रो वा प्रकाशो वियद् व्याप्यावतिष्ठमानोऽङ्गुल्याद्युपाधिसंसर्गादृजुवक्रादिभावं प्रतिपद्यमानेषु संसर्गिषु तदाकारतामिव प्रतिपद्यते, तथा ब्रह्मापि पृथिव्याद्युपाधिसम्बन्धात् तदाकारतामिव प्रतिपद्यते, तदालम्बनो ब्रह्मण आकारविशेषोपदेश उपासनार्थो न विरुध्यते, एवमाकारवद्ब्रह्मविषयाणामवैयर्थ्यात्। नच नोपाधियोगादप्युभयलिङ्गमिति प्रतिज्ञाहानिः। उपाधिनिमित्तस्य वस्तुधर्मत्वानुपपत्तेः। उपाधीनामाविद्यकत्वाच्चेति व्याख्याय, 'आह च तन्मात्र'मिति सूत्रं च यथावद्व्याख्याय, 'दर्शयति' सूत्रे च 'अथात आदेशो नेति नेति', 'अन्यदेव तद्विदितादथो अविदितात्,' 'यतो वाचो निवर्तन्ते, 'अवचनेनैवोवाचे'ति श्रुतीः,' 'ज्ञेयं यत् तत् प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते। अनादिमत्परं ब्रह्म' न सत्तन्नासदुच्यत' इति गीतावाक्यम्, 'माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद। सर्वभूतगुणैर्युक्तं नैवं मां द्रष्टुमर्हसी'ति स्मृती उपन्यस्य परप्रतिषेधेनैव निर्विशेषं ब्रह्म प्रतिपाद्यत इत्युक्त्वा, 'अत एवे' 'त्यम्बुव'दिति सूत्रद्वयं च यथावद्व्याख्याय, 'वृद्धिह्रास'सूत्रे जलसूर्यकादिदृष्टान्तं साधितुं जलगतं सूर्यप्रतिबिम्बं जलवृद्धौ वर्धते, तद्ह्रासे ह्रसति, तच्चलने चलति, तद्भेदे भिद्यत इत्येवं जलधर्मानुविधायि भवति, न तु सूर्यस्य तथात्वमस्ति, एवं परमार्थतोऽविकृतमेकरूपमपि सद्ब्रह्म देहाद्युपाध्यन्तर्भावाद्वृद्धिह्रासादीनुपाधिधर्मान् भजत इत्येवमुक्त्वा, 'दर्शनाच्चे'ति सूत्रे, 'पुरश्चक्रे द्विपदः,' 'अनेन जीवेनात्मनानुप्रविश्ये'ति श्रुतिभ्यामुपाधिप्रवेशं ब्रह्मणो दर्शयित्वा, युक्त एवातः सूर्यकादिदृष्टान्त इत्युक्त्वा, तस्मान्निर्विकल्पैकलिङ्गमेव ब्रह्म,नोभयलिङ्गम्, न विपरीतलिङ्गं चेति सिद्धान्तमाहुः।

तत्र प्रथमसूत्रव्याख्यानमयुक्तम्। 'सर्वत्र ही'ति हेतुबोधके पदे निर्विशेषस्यैवोपदेशादित्यस्यार्थस्यासौत्रत्वेन तृतीयाध्याये वा शास्त्रे वा ईदृशस्य शब्दस्यार्थस्य च काप्यनुक्ततया अनुवृत्तेरपि कर्तुमशक्यत्वेनाभ्युपगमैकशरणत्वात्। 'अशब्दमस्पर्श'मिति विषयवाक्योत्तरार्धेऽपि, 'अनाद्यनन्तं महतः परं ध्रुवं निचाय्य त'मित्यनेन 'महतः पर'मित्यादिना पूर्वोक्तस्य ध्रुवस्य पुरुषस्य परामर्शेन प्राप्तायाः सविशेषताया अनादरणेन तद्विरुद्धत्वात्। निर्विशेषमेव ब्रह्मेति सिद्धान्तस्यात्रैव सिद्धाव-

रश्मिः।

**निर्बलत्वादिति**। उपासनायाः कल्पिताकारपरत्वादिति भावः। **संसर्गिषु** प्रकाशेषु। **इति प्रतिज्ञेति**। 'न स्थानत उभयलिङ्ग'मितिसूत्रभाष्ये इति प्रतिज्ञा। **यथावदिति**। निराकारपरत्वेपि सिद्धान्तानुसारित्वाद्यथावत्। तेषां सिद्धान्ते यथावदिति वा। **परप्रतीति**। चिन्मात्रात्परप्रतिषेधेन। नेतिनेतीत्यादिना। 'मत् परं ब्रह्मे'त्यत्र मत् मत्तः ब्रह्म परमित्यर्थयोगव्यवच्छेदक एवकारः। **यथावदिति**। व्याख्यातम्। **वृद्धिह्रासादीनिति**। आदिनोक्तचलनादयः। एवकारव्यावर्त्यमाहुः **नोभयेति**। **विपरीतेति**। साकारलिङ्गमेव, न तु निराकारमित्येवम्। **निर्विशेषस्यैवेति**। परस्योभयलिङ्गमिति प्रतियोगिनिर्वचनेन सर्वत्र प्रतियोगिस्फूर्तेर्नेतिनेतीत्यादौ नञा निषेध इति तथा। **ईदृशस्येति**। निर्विशेषमात्रस्य। **अनुक्ततयेति**। किन्तु 'अस्थूलमनण्वि'त्यादिवाक्यैः प्रापञ्चिकसर्वधर्मवैलक्षण्यस्य सर्वत्र कारणत्वाद्भगवानस्तीत्यर्थस्य चोक्ततया। **निचाय्य तमिति**। तं पुरुषं निचाय्य ज्ञानकाण्डत्वाज्ज्ञात्वा। अत्र परामर्शमाहुः **महतः परमिति**। काठके 'महतः परमव्यक्तमव्यक्तात्पुरुषः परः। पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गति'रित्यनेन पूर्वोक्तस्य। ध्रुवपदसामानाधिकरण्यायाहुः **ध्रुवस्येति**। 'सा काष्ठा सा परा गति'रित्यस्यार्थः। **तद्धीति**। उत्तरार्धविरुद्धत्वात्। **अत्रैवेति**। अस्मिन्सूत्र एव

भाष्यप्रकाशः ।

ग्रिमस्यारूपवत्सूत्रस्य वैयर्थ्यप्रसक्तेः । तत्र साध्यमानस्यात्र सिद्धवन्निर्देशाङ्गीकार इत्यस्याप्ययुक्तत्वाच्च । तथा, अरूपवत्सूत्रे 'तत्प्रधानत्वा'दित्यस्य निर्विशेषप्रधानत्वादिति व्याख्यानमप्ययुक्तम् । तदुपन्यस्तानां विषयवाक्यानामुपक्रमादिविचारे तथात्वस्यालाभात् । तथाहि । प्रथमं तत्रास्थूलवाक्यम् । तच्च 'कस्मिन् वा आकाश ओतश्चे'ति गार्गीप्रश्नात् प्रवृत्तम्, स्थूलत्वादीन् लौकिकान् धर्मान्निषेधत् प्रशासितृत्वाम्बरान्तधारकत्वद्रष्टृत्वादीनाकाशोपादानत्वान्तानलौकिकान् दर्शयति । अशब्दवाक्यं तु प्राग्व्याख्यातम् । आकाशवाक्यं च नामरूपनिर्वाहकत्वम् । 'दिव्यो ह्यमूर्त' इति वाक्यं चेयत्तावच्छिन्नं परिमाणं निषेधत् पुरुषं बाह्याभ्यन्तरसाहित्यं बाह्याभ्यन्तररूपत्वं वा दर्शयदक्षरात् परत्वमग्रे श्रावयति । 'तदेतद् ब्रह्मे'ति मधुविद्योपसंहारस्थमपि मधुविद्यायामुपक्रमे, 'अयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्व'मित्येवं चतुर्दशपर्यायैरभ्यस्तं सर्वत्वं मध्य उक्तं सर्वभूताधिपतित्वादिकं 'रूपं रूप'मिति मन्त्रव्याख्यानोक्तं 'अयं हरयोऽयं वै दश च सहस्राणि च बहूनि चानन्तानि चे'त्यनन्तरूपतां श्रावयतीति निर्विशेषब्रह्मप्रधानतया वक्तुमयुक्तत्वात् । नच 'तदेतद् ब्रह्मे'ति भिन्नं वाक्यं पूर्वेभ्य इति वाच्यम् । तच्छब्दात् पूर्वपरामर्शाद्विभागे साकाङ्क्षतया तदभावात् । नचेदं तच्छब्देन पूर्वोक्तरूपत्वं परामृशदप्यपूर्वमित्यनेन तन्निषेधतीति न दोष इति वाच्यम् । एवं तर्हनपरमित्यनेनानन्तरत्वादीनग्रिमानपि निषेधच्छून्यवादमेव प्रसञ्जयेत् । अतोऽत्र पूर्वत्वादीनां धर्माणामेव निषेध इत्येवाङ्गीकार्यम् । तथा सति 'न शुष्केण न चार्द्रेण

रश्मिः ।

निर्धारणेनेत्येवकारार्थः । इत्यस्यापीति । इति हेतोः सूत्रस्यापि । अशब्दवाक्यमिति । काठकेऽस्ति । प्राक् । अत्रैव पूर्वम् । नामरूपेति । दर्शयदित्यनेनान्वेति । पुरुषत्वमिति । दर्शयदित्यनेनान्वेति । 'दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः' इत्यत्र बाह्याभ्यन्तराभ्यां समानः सह वेति विग्रहे आहुः बाह्याभ्यन्तरेति । सः बाह्याभ्यन्तरः इति पदद्वयेनेत्याहुः बाह्याभ्यन्तरेति । श्रावयतीति । 'अक्षरात्परतः परः' इति श्रुत्या श्रावयति । सर्वभूतेति । आदिना राजत्वसमर्पितत्वे । 'स वा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानाᳪ राजा तद्यथा रथनाभौ रथनेमौ चाराः सर्वे समर्पिता एवमेवास्मिन्नात्मनि सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एत आत्मानः समर्पिता' इति श्रुतिः । रूपं रूपमिति । 'रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय । इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दशेत्ययं वै हरय'इत्यादि । युक्ता इति । रथयुक्तवाजिवत् अस्य इन्द्रस्य परमात्मनः रथस्थानीये आकाशे शरीरे युक्ताः गोविन्दं स्वविषयान्प्रति हरन्तीति हरयः इन्द्रियाणि, शता शतानि, नित्यलीलास्थभक्तेन्द्रियाभिप्रायेण दश प्राणाः, प्राणानामिन्द्रियपदवाच्यत्वात् । मन्त्रः समाप्तः । नित्यलीलास्थगोपीजनवल्लभ उक्तः । लीलायां भेदवारणाय मन्त्रव्याख्यानं प्रकाशे । अयं वा इति । अयं परमात्मा । अत्र श्रुतिश्छान्दोग्ये 'आत्मत आविर्भावतिरोभावा'विति सर्वात्मभावप्रकरणश्रुतेः । पूर्वेभ्य इति । चतुर्दशपर्यायेभ्यः । तदभावादिति । 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्या'दिति जैमिनिसूत्रेणैकवाक्यत्वे भिन्नवाक्यत्वाभावात् । पूर्वोक्तेति । 'अयमेव स योयमात्मे'ति पूर्वोक्तरूपत्वम् । अपूर्वमिति । 'तदेतद्ब्रह्म' इत्यस्या अग्रे 'अपूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूरित्यनुशासन'मित्यस्यामपूर्वमित्यनेनेत्यर्थः । न दोष इति । सधर्मकत्वदोषो न । शून्यवादमेवेति । अन्ययोगव्यवच्छेदक एवकारः । द्वितीयस्कन्धनवमाध्यायेपि कारणत्वाङ्गीकारात् साकारत्वाङ्गीकाराच्च । एवेति । पूर्वोक्तरूपत्वानन्तरत्वादियोगव्यवच्छेदकः ।

भाष्यप्रकाशः ।

जहार नमुचेः शिर' इत्यत्र यथोभयात्मकस्य फेनस्याशुष्कत्वमनार्द्रत्वम्, एवमत्राप्येकैकतन्निषेधेन सर्वात्मकमेव बोध्यत इत्येव युक्तम् । अत एव गजेन्द्रस्तुतौ 'स वै न देवासुरमर्त्यतिर्यङ् न स्त्री न षण्ढो न पुमान्न जन्तुः । नायं गुणः कर्म न सन्न चासन्निषेधशेषो जयतादशेष' इत्यशेषत्वमुक्तम् । तथा शुकैरपि 'एवं गजेन्द्रमुपवर्णितनिर्विशेषं ब्रह्मादयो विविधलिङ्गभिदाभिमानाः । नैते यदोपससृपुर्निखिलात्मकत्वात् तत्राखिलामरमयो हरिराविरासी'दिति निर्विशेषस्य निखिलात्मकत्वं बोधितम् । तथात्राप्यन्ते 'सर्वानुभू'रिति श्राव्यते । सर्वसत्त्वे एव सर्वानुभवितृत्वसम्भवादिति । नचेदं प्रलये न सम्भवतीति वाच्यम् । को नाम प्रलयः । ध्वंसो वा, प्रतिसञ्चरो वा । नाद्यः । असत्कार्यवादप्रसङ्गात् । द्वितीयश्चेत्, असदाद्यगोचरत्वेपि सर्वं ब्रह्मगोचरोऽस्त्येवेति नासम्भवः । वस्तुतस्त्वखण्डब्रह्मवादे असदाद्यगोचरत्वमेव प्रलयः, क्रमेण वा युगपद्वा तद्गोचरत्वमेव सृष्टिरितीच्छया समर्थनान्न कश्चिद्दोषः । एवमेवास्थूलादिवाक्योक्तनिषेधस्थलेपि बोध्यम् । अत उपासनाप्रधानानामाकारलिङ्गानामपि श्रुतीनां तत्तदाकारमात्रलिङ्गत्वेन प्रतीकत्वादेव निर्बलत्वं शङ्क्यताम्, न त्वाकारलिङ्गत्वादित्यपि बोध्यम् । यदपि प्रकाशवत्सूत्रे उपाधियोगादपि नोभयलिङ्गमिति प्रतिज्ञोपपत्त्यर्थमुपाधिनिमित्तस्य न वस्तुधर्मत्वमुपाधीनां चाविद्यकत्वमित्युक्तम् । तदपि तथा । नैमित्तिके घृतद्रवत्वादौ व्यभिचारेण उपाध्याविद्यकतायाश्च 'न विलक्षणत्वा'धिकरणे दूषितत्वेन चाप्रयोजकत्वात् । एवं दर्शयतिसूत्रे निर्विशेषब्रह्मप्रतिपादकत्वेन यानि

रश्मिः ।

उभयेति । शुष्कार्द्रोभयरूपस्यापां फेनस्य । एवेति । एकैकपूर्वत्वादियोगव्यवच्छेदक एवेति । इत्येवेति । न शुष्केणेत्यादिदृष्टान्तोक्तेरेवेति । अत एवेति । एकैकनिषेधेन सर्वात्मकत्वबोधकत्वादेव । अशेष इति । न विद्यते शेषः एकैकधर्मो यस्य, किन्तु सर्वे धर्माः । एवेति । 'न यत्र माये'ति वाक्यादेवकारः । प्रतिसञ्चर इति । प्रतिकूलः सर्वगोचरत्वप्रतिकूलः सर्वागोचरः । अस्त्येवेति । अयोगव्यवच्छेदकैवकारः । नीलं सरोजं भवत्येवेत्यत्रेव । 'पूर्ववद्वे'ति सूत्रोक्तपश्चा'दहं' 'यथेदानीं तथा चाग्रे पश्चादप्येतदीदृशम् । तदेतदक्षय'मिति वाक्यसञ्चारेण प्रलयलक्षणमाहुः वस्तुत इति । एवेति । उक्तवाक्येभ्यः । 'तस्माद्वा एतस्मादि'ति क्रमेण वा, 'तदात्मानꣳ स्वयमकुरुते'ति युगपद्वा । तद्गोचरत्वमसदादिगोचरत्वम् । 'लोकद्वारा व्यवहार्यो भविष्यामीती'च्छाकारादेवकारः । इतीच्छयेति । असागोचरत्वमेव प्रलयोस्तु, तद्गोचरत्वमेव सृष्टिरस्त्वितीच्छया । कश्चिदिति । सर्वानुभवितृत्वं दोषः, प्रलयो न संभवतीति दोषः । एवमेवेति । पूर्वोक्तप्रकारेण एकैकनिषेधेन सर्वात्मकत्वबोधत्वरूपेण । एवकारोऽन्तरङ्गबहिरङ्गन्यायेन । कल्पितः स्वल्पापेक्षः । अकल्पितोऽत्र भिन्नप्रकारो बह्वपेक्षो बहिरङ्गः । अस्थूलेति । स्थूलभिन्नस्थूलसदृशमित्यत्र भेदप्रतियोगिन्यपि बोध्यमित्यर्थः । अत इति । अस्मा उपपत्तेः । श्रुतीनामिति । 'चतुष्पाद्ब्रह्म' 'षोडशकलं ब्रह्मे'त्याद्युक्तानाम् । प्रतीकत्वादेवेति । प्रतीकत्वात् एकैकरूपस्य सर्वात्मकावयवत्वात् । एवेति । अवधारणेन निर्बलत्वं शंक्यताम् । अधीष्टे लोट् । नतूपासनाप्रधानत्वादिति भावः । तेषां नित्यत्वान्नत्वाकारलिङ्गत्वादित्यपि बोध्यमित्यर्थः । उपाधिनिमित्तस्येति । मायाया निमित्तस्याकस्मिकस्य । उपाधिर्निमित्तं यस्य सविशेषस्येति वा तथेत्यप्रयोजकम् । नैमित्तिक इति । ननु सांसिद्धिके जलद्रवत्वादौ वस्तुधर्मत्वाभावस्य व्यभिचारेण । द्वितीयं हेत्वन्तरमाहुः उपाधीत्यादिना । दूषितत्वेनेति । द्वितीयाध्यायचतुर्थे 'न यत्र किञ्चनानुभूयते नाविद्यानुभवात्मनि स्वप्रकाशे सर्वसाक्षिण्यविक्रियेऽद्वय' इति । अग्रे च 'अत एतस्य सतः आद्यन्ताव-

भाष्यप्रकाशः।

वाक्यान्युक्तानि, तेष्वपि 'अथात आदेश' इति वाक्यं तु न निर्विशेषप्रतिपादकमिति दर्शयतिसूत्रभाष्यव्याख्यान एव दर्शितम्। विदिताविदितवाक्यं तु तदुभयभिन्नत्वमेव वदति, न तु विशेषाभिषेधति। अथान्यत्वादिकथनमुखेन निषेधति, तदा लौकिकानेव निषेधति। तावतैव चारितार्थ्यम्, न तु स्वरूपात्मकानपि। 'तदेतद् ब्रह्मे'त्यादिश्रुतिविरोधप्रसङ्गात्। 'यतो वाच' इति वागाद्यप्राप्यत्वमेव वदतीत्यनिरुक्तश्रुतिसमानार्थम्, न तु विशेषनिषेधकमित्यपि प्रागेव व्युत्पादितम्। 'अवचनेनैवोवाचे'त्यपि 'यतो वाच' इत्येतस्य समानार्थकम्। लौकिकसर्वधर्मराहित्यादेवोपशान्तत्वसिद्धेरिति। 'न सत्तन्नासदुच्यत' इति गीतावाक्यमपि व्याकृताव्याकृतयोरेव निषेधकमिति लौकिकनिषेधपरमेव। 'सर्वतःपाणिपादान्त'मित्यग्रिमवाक्येन तथा निश्चयात्। सर्वतःपाणिपादत्वादेः क्वापि लौकिके अदर्शनादिति। 'माया ह्येषे'ति वाक्यमपि सर्वभूतगुणयुक्तदर्शननिषेधाभिप्रायकमिति तत्रैव स्फुटतीति न सार्वात्म्यबाधकम्, अतस्तत्सूत्रव्याख्यानमपि तथा। एवं

रश्मिः।

स्यविचारे यत्किमपि कार्यमविद्या च तत्सत्त्वेनैवानुभूयते, नतु प्रतिनियतेन तेन तेन रूपेणातो विजातीयद्वैतस्याप्यभावाच्छुद्धाद्वयसिद्धिरित्यर्थ इति' सन्दर्भे दूषितत्वेन, प्रयोजकहेतुत्वाभावात्। व्याख्यान एवेति नान्यत्रेत्येवकारः। **तदुभयेति**। विदिताविदितोभयभिन्नत्वमन्यदेवेत्यत्र भिन्नार्थकान्यशब्दप्रयोगात्। भिन्नवाचकपदसत्त्वाविशेषनिषेधवाचकपदाभावादेवकारः। **विशेषानिति**। द्वितीयान्तम्। **अथेति** पदार्थभिन्नप्रक्रमे। **अन्यत्वादीति**। आदिना विदितत्वाविदितत्वे। मुखमुपायः। **निषेधतीति**। विदितादन्यत् अविदितादन्यदित्युक्ते विदिताविदितप्रतियोगिकभेदवत्प्रतीतेः विदितत्वाविदितत्वरूपसामान्यधर्मनिषेध इति निषेधतीत्यर्थः। **एवेति**। प्रक्षालनपङ्कन्यायात्। **श्रुतिविरोधेति**। तत्स्थसर्वानुभूपदविरोधप्रसङ्गादित्यर्थः। **वागादीति**। आदिना मनः। एवकारोऽन्यस्य सविशेषत्वस्य योगव्यवच्छेदकः। नतु निर्विशेषत्वं वदतीत्यर्थः। किञ्च। **अनिरुक्तेति**। निरुक्तत्वे प्राप्तेऽनिरुक्तत्वं विरुद्धधर्माधारत्वार्थम्। तद्वद्वाक्प्राप्यत्वे प्राप्ते वाङ्निवृत्तिर्विरुद्धधर्माधारत्वार्थमित्यनिरुक्तश्रुतिसमानार्थमित्यर्थः। **प्रागेवेति**। **अवचनेति**। वचनेनोवाचेति प्राप्ते अवचनेनोवाचेति विरुद्धधर्माश्रयत्वाय। अवचनेन वचनविरुद्धवचनेन। परस्परं विरुद्धवचनेनेति यावत्। **विरोधो नञर्थ** इति। अत एवकारः। विरुद्धधर्माणामन्याभिर्निश्चयात्। **एवेति**। नत्वलौकिकसर्वधर्मराहित्यमुपशान्तत्वसिद्धिरपेक्षत इत्यर्थः। उपशान्तत्वं त्वेवम्। बाष्कलिना च राद्धः पृष्टः सन् 'अवचनेनैव ब्रह्म प्रोवाचे'ति श्रूयते 'स होवाचाधीहि भगवो ब्रह्मेति। स तूष्णींबभूव, तं ह द्वितीये तृतीये वा वचन उवाच ब्रूमः खलु त्वं न विजानासि उपशान्तोऽयमात्मे'ति। स ह बाष्कलिर्ह प्रसिद्धः। हे भगवन् पृष्टः सः पृष्टः। तं तूष्णींभूतं पृष्टं प्रति द्वितीय इति। प्रश्ने वचने, पृष्ट उवाच, ब्रूमः क्रमेण। सुपांसुः। हे खल, त्वं तु ब्रह्म न विजानासि, उपशान्तः लौकिकसर्वधर्मरहितः। यथा शान्तो वह्निर्भस्मात्मा। **व्याकृतेति**। लक्षणया सदसदर्थयोः। **एवेति**। समाकर्षाधिकरणादेवकारोयम्। तत्र शब्दाः स्वार्थात्प्रच्याव्यन्त इति। **लौकिकेति**। लौकिकसर्वधर्मनिषेधपरम्। श्रुत्येकवाक्यतासम्भवादेवकारः। **इत्यग्रिमेति**। अलौकिकसर्वधर्माणां सर्वतः पाणिपादान्तत्वादीनां बोधकेन। **तथेति**। लौकिकनिषेधपरत्वेन निश्चयात्। **सर्वत** इति। आदिना सर्वतोऽक्षिशिरोमुखत्वम्। **तत्रैवेति**। वाक्य एव, नत्वन्यत्र, 'नैवं मां द्रष्टुमर्हसी'त्यंशेन स्फुटतीत्यर्थः। **न सार्वात्म्येति**। परिच्छेदेन सर्वात्मत्वधर्मबाधकम्। एतादृशधर्मोपादानं जीवपरत्वेन प्रतीतानां ब्रह्मपरत्वप्रतिपादनाय। **अत इति**। सार्वा-

भाष्यप्रकाशः ।

वृद्धिह्राससूत्रे जलवृद्धिह्रासाभ्यां प्रतिबिम्बवृद्धिह्रासकथनमपि तथा । भूयसि स्वल्पेपि च जले सूर्यादिप्रतिबिम्बस्य तुल्यताया एव ग्रहणात् । अतोत्राकाशदृष्टान्तेन धर्माणामौपाधिकत्वसमर्थनमेव युक्तम्, न तु जलसूर्यदृष्टान्तसमर्थनमित्यवधेयम् ।

यत्तु भामत्यामेतत्तात्पर्यमुक्तम् । उपाधिजनितस्य रूपस्य पारमार्थिकत्वे ब्रह्मणः परिणामिभावः । स च प्राक्प्रतिषिद्ध इत्यपारमार्थिको ब्रह्मण्यध्यस्त इति । निर्विशेषप्रतिपादनार्थत्वाच्छ्रुतीनाम् । सविशेषतायामपि मधुविद्यायां 'यश्चायमस्यां पृथिव्या'मित्यादिभिर्ब्रह्मैकत्वप्रतिपादनपरत्वात् । एकत्वनानात्वयोश्चैकस्मिन्नसम्भवात् । एकत्वाङ्गत्वेनैव नानात्वप्रतिपादनपर्यवसानात् । नानात्वस्य प्रमाणान्तरसिद्धत्वेनानुवाद्यत्वादेकत्वस्य चानधिगतेर्विधेयत्वोपपत्तेः । भेददर्शननिन्दया च साक्षाद्भूयसीभिः श्रुतिभिरभेदप्रतिपादनात् । आकारवद्ब्रह्मविषयाणां च कासाञ्चिच्छ्रुतीनामुपासनापरत्वम्, तच्चासति बाधकेऽन्यपराद्वचनात् प्रतीयमानमपि गृह्यते । यथा देवतानां विग्रहवत्त्वम् । सन्ति चात्र साक्षाद्द्वैतापवादेनाद्वैतप्रतिपादनपराः शतशः श्रुतयः । कासाञ्चिच्च

रश्मिः ।

त्स्यात् । परस्याक्षरात्परस्य प्रतिषेधेनैव निर्विशेषं ब्रह्म प्रतिपाद्यत इतिव्याख्यानमपि तथा नाम शिथिलम् । एवेति । प्रत्यक्षादेवकारः । अतोत्रेति । भूयसि स्वल्पेपि च जले सूर्यादिप्रतिबिम्बस्य तुल्यतायाः । आकाशेति । घटाकाशः स्वल्पः, गृहाकाशो महान् इत्येवमाकाशदृष्टान्तेन घटीयाकाशगृहाकाशत्वादिधर्मवत्, ब्रह्मधर्माणां सर्वकर्मत्वसर्वकामत्वादीनां मायिकधर्मत्वमौपाधिकत्वं तत्समर्थनमित्यर्थः । स्वयं परमार्थतोऽविकृतमेकरूपमिति । एवेति । एतद्व्यवच्छेद्यमाहुः न त्विति । अम्बुवत्सूत्रेण दृष्टान्तस्यायुक्तत्वमुक्त्वा वृद्धिह्राससूत्रेण च जलसूर्यदृष्टान्तसमर्थनम् । एतत्तात्पर्यमिति । जलसूर्यदृष्टान्ततात्पर्यम् । प्रागिति । अरूपवत्सूत्रे । अपारमार्थिक इति । मायिकः । सविशेषेति । सविशेषपरतायाम् । विरुद्धधर्माधारप्रतिपादनपरत्वमस्त्वित्याशङ्क्याह एकत्वेति । मूर्तामूर्तब्राह्मणे निषेधशेषत्वेन प्रतियोगिमूर्तामूर्तनिरूपणेप्यारोपापवादादाहुः एकत्वाङ्गेति । एवेति । प्रतियोगिनोऽभावशेषत्वम्, न त्वभावस्य प्रतियोगिशेषत्वमित्येवकारः । किञ्च । नानात्वस्येति । प्रमाणान्तरेति । प्रत्यक्षेण सिद्धत्वेन । सिद्धस्य कथनमनुवाद इत्यनुवाद्यत्वात् । अनधिगतेरिति । लोके बोध्यम् । तथाच लोकेऽनधिगतार्थगन्तृत्वरूपप्रमाणस्यैकत्वात्मकांशे सत्त्वादनूद्यांशस्यार्थवादत्वान्निर्विशेषप्रतिपादने पर्यवसानमिति भावः । भेदेति । 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यती'ति भेददर्शननिन्दया । श्रुतिभिरिति । 'यत्र त्वस्य सर्वमात्मैवाभू'दित्यादिभिः । आकारवदिति । 'चतुष्पाद्ब्रह्मे'त्यादीनाम् । तच्चेति । उपासनापरत्वं च असति बाधके उपदेशादिपरत्वरूपे अन्यपराद्वचनादुपदेशादिपरा'दैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इत्येकादशपदात्, यद्वा पञ्चपदात् वाक्यात् । जीवात्मैक्यपरमपीदम् । तथाच नेदमुपासनापरम् । उपदेशपरत्वस्य ऐक्यपरत्वस्य च बाधकस्य सत्त्वात् । यत्र 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' 'आत्मेत्येवोपासीते'त्यादौ तु बाधकाभावः, अन्यपरवचनाभावात् । किञ्चोभयत्र प्रतीयमानः शक्यार्थोपि गृह्यते । सामान्ये नपुंसकम् । प्रतीयमानमिति । देवताविग्रहश्रुतिः पूर्वतन्त्रेऽस्ति । तत्र प्रतीयमानं विग्रहवत्त्वम् । शतश इति । यथा 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यती'ति 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्ये'दित्यादि । श्रुतयः शतं व्याख्यानद्वारा श्रुतीर्ददातीति शतशः सन्ति । कासाञ्चिदिति । 'आत्मेत्येवोपासीत' 'आत्मानं लोकमुपासीत' 'तज्जलानिति शान्त उपासीत'इत्यादीनां कर्मकर्तृरूपेण द्वैताभिधायिनीनाम् ।

भाष्यप्रकाशः।

द्वैताभिधायिनीनां तत्प्रलयपरत्वम्। तस्मान्निर्विशेषमेकरूपं चैतन्यैकरसं सत् ब्रह्म परमार्थतः। विशेषाश्च सर्वगन्धत्ववामनीत्वादय उपाधिवशादस्ता इति सिद्धमिति।

तदप्यसङ्गतमेव। ब्रह्मणः परिणामिभावस्य श्रुतिषु सूत्रेषु च प्रतिषेधादर्शनात्। 'बहु स्यां प्रजायेये'ति, 'स आत्मानं स्वयमकुरुते'त्यादिश्रुतिषु, 'आत्मकृतेः परिणामा'दित्यादिषु सूत्रेषु च तद्विपरीतस्य विधानस्यैव दर्शनाच्च। नच वाचारम्भणवाक्यं विकारस्य वाङ्मात्रताकथनमुखेन तदभावमेव बोधयत् प्रतिषेधतीति शक्यवचनम्। तत्र तत्कथनमुखेन कारणाभिन्नत्वबोधनस्यैव भगवता सूत्रकारेणादृततया स्वयमन्यथादर्तुमयुक्तत्वात्। तदनादृत्यादरे तु 'वाचारम्भणं विकारो मृत्तिकैव सत्य'मित्येतावतैव चारितार्थ्येन, इतिशब्दनामधेयपदयोर्वैयर्थ्यस्य दुर्वारत्वमित्यादिकं तदनन्यत्वसूत्रभाष्यविभाग एव विवृतमिति न पुनः प्रपञ्च्यते। अतो निर्विशेषप्रतिपादनार्थत्वं यच्छ्रुतीनामङ्गीकृतम्, तदप्यभिमानमात्रमेवेति प्रागेवोपपादितम्। एकत्वनानात्वयोरेकत्रासम्भवस्तु 'इदं सर्वं यदयमात्मा' 'यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्ता'दित्यादिश्रुतिभिरेवोदस्त इति तस्य निर्विशेषतासाधनादरः श्रुतिप्रद्वेषादेव। एकत्वाङ्गत्वेन नानात्वप्रतिपादनं त्विष्टमेव, परन्तु तत्र नानात्वस्यापोद्यत्वाय, अपि त्वभेदस्य भेदविरुद्धसम्पत्त्वबोधनायेत्यप्युक्तपूर्वम्। नानात्वस्य प्रमाणान्तरसिद्धत्वं तु लौकिकस्यैव, न तु ब्रह्मधर्मभूतस्यैकत्वाविरोधिनः। तादृशस्य

रश्मिः।

अन्येति। वधुरवेधत्वात्। तथाच नार्थवादत्वमिति भावः। तस्येति। नानात्वस्य। 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मण' इति श्रुत्या तस्य भेदस्य प्रलयपरत्वम्। 'प्रज्ञां कुर्वीते'त्यस्य दृशिमात्रं ब्रह्म कुर्यात्प्रपञ्चप्रविलायनेनेत्यर्थात्। उपाधीत्यादि। अन्यत्राप्रसिद्धानामध्यस्तत्वं भ्रमात्। इत्यादिष्विति। सूत्राणि तु समन्वयादित्यादीनि द्रष्टव्यानि। तद्विपरीतस्य प्रतिषेधविपरीतस्य। एवेति। प्रतिषेधयोगव्यवच्छेदक एवेति। तदभावमेवेति। परिणामिभावस्य प्रतिषेधम्। एवकारोऽन्ययोगव्यवच्छेदकः। प्रतीषेधतीति। ब्रह्मणः परिणामिभावं प्रतिषेधति। एवेति। स्वसिद्धान्तभाष्यादेवकारः। तदिति। भाष्यम्। तदनन्येति। विभागो व्याख्यानम्। एवकारोऽन्ययोगव्यवच्छेदकः। एवेति। ननु युक्त्यन्तरदूषणेन प्राप्तम्। प्रागेवेति। तदनन्यत्वाधिकरणे। एवकारोऽधिकरणान्तरयोगव्यवच्छेदकः। एवोदस्त इति। निर्धारणेनोदस्तः। एकात्मत्वविधानेन तमःपरत्वेन चोदस्तः। श्रुतिप्रेति। श्रुतीनामक्षरमात्रान्यथाऽप्रतिपादकत्वेन विरुद्धधर्माश्रयत्वे लोकविरोधात्प्रद्वेषः, आलोचनयुक्त्यभावात्, दुरूहे जिज्ञासोदयात्। अनुभवादेवकारः। इष्टमेवेति। नानात्वं विना सात्त्विकज्ञानेनैकत्वज्ञानानुदयादिष्टम्। एवेति। एकत्वस्याष्टादशाध्यायगीतयोपबृंहणादेवकारः। विरुद्धधर्माधारप्रकरणादाहुः परन्त्विति। तत्रेति। एकत्वं न। अभेदस्य एकत्वस्य भेदो नानात्वं तद्विरुद्धत्वसम्पत्त्वबोधनाय। पूर्वमिति। प्रकाशाश्रयवत्सूत्रे। प्रमाणान्तरेति। प्रत्यक्षसिद्धत्वम्। एवकारव्यवच्छेद्यमाहुः नत्विति। तादृशस्येति। नानात्वस्य। तादृशशब्दो रूढः। अवयवार्थो नास्ति। कुत्र रूढ इति चेत्। तत्पूर्वोक्तमेकत्वाविरोधित्वं दृश्यते यत्र तत्र। योग इति चेत्, वैदिकेस्तु, तल्लोके रूढ्यर्थं गृह्यते। योगस्तु तमिवेमं पश्यन्ति जना इति। बहुव्रीहिप्रसङ्ग इति चेत्,

१. मुद्रितभामत्यामप्यस्ता इति पाठ उपलभ्यते, श्रीहस्ताक्षरपुस्तके तथैव केचित् शोधितः, तथापि भाष्यप्रकाशकाराणां स्वयमेव पाठः संमत इति 'विशेषाणामस्तत्वे' तिफक्किकया प्रतिभाति, अतो यथोपलब्ध एव पाठोत्रास्त इति। स्वारस्यस्य तस्मिन्नेव रक्षणादिति।

भाष्यप्रकाशः ।

स्वरूपान्तःपातितया श्रुत्येकगम्यत्वेनान्यावेद्यत्वात् । अतस्तस्यानुवाद्यताङ्गीकारोपि स्वमनस्तोषणायैवालम्, न तु व्याख्येयसमर्थनाय । भेददर्शननिन्दा तु घटपटादिवत् तात्त्विकभेददर्शनपरा, न त्वैच्छिकतत्परा । अन्यथा 'इव'शब्दवैयर्थ्यप्रसङ्गादित्यपि 'अपिचैवमेक' इति सूत्रव्याख्यान एव दर्शितमिति न तथापि विशेषप्रतिषेधसिद्धिः । साक्षाद्द्वैतापवादेनाद्वैतप्रतिपादनपरत्वमपि श्रुतीनामस्मद्रीत्या, न तु युष्मद्रीत्येत्युपासनापराम्योपि देवताविग्रहवद्ब्रह्मण आकारादिग्रहणेपि न किञ्चिद्बाधकम् । अतो विशेषाणां नास्तता, अपि तु निर्विशेषमात्राम्युपगन्तॄणामेवास्ततेति बोध्यम् ।

यत्पुनः, प्रकृतैतावत्त्वसूत्रमारभ्य नवसूत्रमधिकरणम् । तत्र त्वारम्भ एव 'द्वे वा व ब्रह्मणो रूपे' इति मूर्तामूर्तब्राह्मणं विषयवाक्यत्वेनोपन्यस्य, तच्च व्याख्याय, 'नेति नेती'ति निषेधस्य किं रूपद्वयं ब्रह्म च विषयः, उत रूपद्वयमेव वा, ब्रह्मैव वेति सन्देहे, नञ्द्वयाद्रूपद्वयं ब्रह्म च, अथवा ब्रह्मणः प्रमाणान्तरागोचरत्वाद्ब्रह्मैव वा विषय इति पूर्वपक्षे, रूपद्वयमेव निषिध्यते, न ब्रह्म, रूपब्रह्मणोर्निषेधे शून्यवादप्रसङ्गात् । 'ब्रह्म ते ब्रवाणी'त्युपक्रमस्य 'असन्नेव स भवती'ति निन्दायाः 'अस्तीत्येवोपलब्धव्य' इत्यवधारणस्य च विरोधेन तन्निषेधस्यानुपपन्नत्वात् सर्ववेदान्तकोपप्रसङ्गाच्च । तस्माद्रूपद्वयं प्रतिषेधति, ब्रह्म तु परिशिनष्टीति । तदेतदाह । प्रकृतैतावत्त्वं हि प्रतिषेधतीति । प्रकृतं यदेतावता परिच्छिन्नं मूर्तामूर्तलक्षणं ब्रह्मणो रूपं तदेष शब्दः प्रतिषेधति । तद्धि प्रकृतम् । प्रपञ्चितं च पूर्वस्मिन् ग्रन्थे अधिदैवतमध्यात्मं च । तज्जनितं च वासनालक्षणम-

रश्मिः ।

तत् दृश्यत इति पदद्वयं तादृश इति प्रयोगे यत्रेति तु स्पष्टार्थम् । स्वरूपान्तरिति । 'अविभक्तं च भूतेषु विभक्तमिव च स्थित'मिति गीतायाः । तोषणायैवेति । 'नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगाच्चे'ति सूत्रेणालंयोगे चतुर्थी । व्याख्येयेति । नानात्वापनोदेनैकत्वसमर्थनाय । अतो विरुद्धधर्माधारत्वमर्थवादत्वाभावात्सुस्थिरमिति भावः । ननूक्ताया भेददर्शननिन्दायास्तादृशेष्ववतारात्स्वरूपान्तःपातित्वं कथमिति चेत्, तत्राहुः भेददर्शनेति । घटपटेति । घटपटयोः कुड्यकुसूलयोरिव । षष्ठ्यन्ताद्वतिः । इवशब्देति । 'य इह नानेव पश्यती'त्यत्रेवशब्दः । एवेति । नत्वन्यत्रेत्यर्थः । दर्शितमिति । इत्यनेन प्रकारेण । तया भेदनिन्दया । विशेषेति । स्वरूपान्तःपातिनानात्वरूपविशेषप्रतिषेधसिद्धिः । अस्मद्रीत्येति । विरुद्धधर्मप्रतिपादनरीत्या । युष्मद्रीत्येति । आरोपापवादसङ्गत्या । आकारेति । आदिनोपासना । शक्यार्थत्वेनाकाराणामुपासनानां च ग्रहणम् । विशेषाणामिति । सर्वकर्मसर्वकामत्वादीनाम् । एवेति । एकदेशिमतादरणेनास्तता । तादृशमनोभावेन वागस्तात् । एवेति । ब्रह्मयोगव्यवच्छेदकः । ब्रह्मैवेति । रूपद्वयव्यवच्छेदकैवकारः । सर्ववेदान्तेति । वेदान्तेषु प्रवृत्त्यभावात्कोपः । शून्यवादे फलाभावात् । परीति । परिशेषं करोति । शब्द इति । नञ्शब्दः । पूर्वस्मिन्निति । मूर्तामूर्तप्रतिपादनोत्तरग्रन्थे । चेति । प्रकृतमित्यन्वयः । 'इत्यधिदैवतम्' । 'अथाध्यात्म'मिति श्रुतिभ्याम् । तज्जनितमिति । अमूर्तजनितम् । मूर्तस्य तु एष तपति स रसः । वासनात्यक्तपूर्वापरानुसन्धानं पदार्थादानम् । अमूर्तेति । अमूर्तस्य वासनारूपरसभूतो यः पुरुषस्तस्य प्रतिपादको यः शब्दः तेनोदितमुक्तम् । उपादेये वासनाशब्दो लाक्षणिकः । तस्यैतस्यामूर्तस्य । 'एतस्यामूर्तस्यैतस्य स्थितस्यैतस्यैव सत्यस्यैव रसो य एष एतस्मिन्मण्डले पुरुषरूपस्त्यस्य ह्येष रस इत्यधिदैवत'मिति श्रुतिः । त्यस्य सत्यपदैकदेशस्य त्याक्षरार्थस्येत्यर्थः । य एतस्मिन्मण्डले पुरुषः कारणात्मको हिरण्यगर्भो

१. तस्यात्मकः ।

भाष्यप्रकाशः ।

परं रूपममूर्तरसभूतपुरुषशब्दोदितं लिङ्गात्मव्यपाश्रयं माहारजनाद्युपमाभिर्दर्शितम् । तदेतत् सप्रपञ्चं ब्रह्मणो रूपं सन्निहितावलम्बनेनेतिकरणेन प्रतिषेधकनञ् प्रत्युपनीयत इति गम्यते । ब्रह्म तु रूपविशेषणत्वेन षष्ठ्या निर्दिष्टं पूर्वस्मिन् ग्रन्थे, न तु स्वप्रधानत्वेन । प्रपञ्चिते च रूपद्वये रूपवतः स्वरूपजिज्ञासायामिदमुपक्रान्तं 'अथात आदेशो नेति नेती'ति । तत्र कल्पितरूपप्रत्याख्यानेन ब्रह्मणः स्वरूपावेदनमिदमिति निर्णीयते । नच स्वरूपद्वयं स्वयमेवोक्त्वा स्वयमेव निषेधे 'प्रक्षालनाद्धि पङ्कस्ये'ति न्यायेनाकथनमेव युक्तं स्यादिति शङ्क्यम् । एतस्य रूपद्वयस्य लोकप्रसिद्धस्य ब्रह्मणि कल्पितत्वेन प्रतिषेध्यत्वाय शुद्धब्रह्मस्वरूपप्रतिपादनाय च तत्परामर्शेन कथनस्य युक्तत्वात् । द्वौ चैतौ निषेधौ यथासंख्यं मूर्तामूर्ते प्रतिषेधतः । यद्वा । पूर्वप्रतिषेधो भूतराशिं निषेधति, उत्तरस्तु वासनाराशिम् । अथवा, 'नेति नेती'ति वीप्सा । तत्र 'इती'ति यावत्किञ्चिदुत्प्रेक्ष्यते, तत्सर्वं 'ने'त्यनेन निषिध्यते । परिगणितनिषेधे हि क्रियमाणे यदि नैतद्ब्रह्म, किमन्यत् ब्रह्म भवेदिति जिज्ञासा स्यात् । वीप्सायां तु सत्यां समस्तविषयजातस्य प्रतिषेधात् अविषयः प्रत्यगात्मा

रश्मिः ।

विराडात्मा एतच्चाधिदैविककारणात्मकस्य ब्रह्मणो रूपम् । निश्चयपूर्वकं पुनराह त्यस्य ह्येष इति । त्यमित्युक्तस्य हि निश्चयेन एष रसः रसशब्दप्रतिपाद्यः सारः वासनेत्यावृत्तिः । एवमुक्तमाधिदैविकं विभागमुपसंहरति स अधिदैवतमिति । लिङ्गात्मेति । 'तस्य हैतस्य पुरुषस्य रूपम् । यथा माहारजनं वासो यथा पाण्ड्वाविकं यथेन्द्रगोपो यथाग्न्यर्चिर्यथा पुण्डरीकं यथा सकृद्विद्युत्तं सकृद्विद्युत्तेव ह वा अस्य श्रीर्भवति य एवं वेदे'ति श्रुतिः । अत्र तस्याधिदैविकस्य ह एतस्याध्यात्मिकस्य लिङ्गपुरुषस्य आत्मनीत्यध्यात्मं तत्सम्बन्धिन इत्यर्थात् । मनसो वासनामयं रूपम् । यथा लोके महारजनं हरिद्रा तया रक्तं माहारजनं वासः वस्त्रम् । 'तेन रक्तं रागादि'ति सूत्रेणाण् । एवं स्त्र्यादिविषयसंयोगे सति । तादृशं रञ्जनाकारमुत्पद्यते । तथा चावेरिदमाविकम् । ऊर्णादि यत्पाण्डुरम् । तथान्यद्वासनारूपं लिङ्गस्य जायते । तथा चेन्द्रगोपः वर्षाकालीनकीटविशेषः कौसुम्भवदत्यन्तरक्तो भवत्येवमेवास्य वासनारूपम् । यथाचाग्न्यर्चिर्भास्वरं भवति, तथा क्वचित्कस्यचिद्वासनारूपम् । यथाच पुण्डरीकं शुभ्राम्भोजं तद्वदपि क्वचित्कस्यचिद्वासनारूपं भवति । यथाच सकृद्विद्युतं विद्योतनं सर्वतः प्रकाशकं भवति । यथा ज्ञानप्रकाशविवृद्ध्यपेक्षया कस्यचिद्धिरण्यगर्भादेर्वासनारूपमुपजायते । सत्त्वादितारतम्यादित्यर्थः । चरमोक्तहिरण्यगर्भवासनारूपोपासनफलमाह सकृदिति । एवं यथोक्तमत्यन्तं हिरण्यगर्भवासनारूपं यो वेद अस्योपासकस्य सकृद्विद्युत्तेव विद्योतनमिव श्रीः शोभा ख्यातिर्भवति । ह वै भवत्येवेत्यर्थः । तदेतदुक्तं लिङ्गात्मेत्यारभ्य दर्शितमित्यन्तेन । 'अथात आदेशो नेति नेती'त्यस्या अर्थमाह तदेतदिति । सन्निहितं मूर्तामूर्तं आध्यात्मिकमाधिदैविकं च तेषामवलम्बनं ग्राह्यं प्रतिपाद्यं यस्येतिकरणस्य तेन । प्रतिषेधकेति । प्रतिषेधकं नञ् प्रतिषेधकनञ् तं प्रति प्रतियोगितासम्बन्धेनोपनीयते प्राप्यते । 'द्वे वा व ब्रह्मणो रूपे' इत्यत्राह ब्रह्म त्विति । ब्रह्मसम्बन्धिनी रूपे इति रूपविशेषणत्वेन । ग्रन्थे श्रुतौ । रूपवत इति । ब्रह्मणः । स्वयमेवेति, नतु 'तदेषाभ्युक्ते'तिवदन्यमुखेन । एवमग्रेपि । प्रक्षालनेति । 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वर'मितिन्यायेन । एवेति । कथनयोगव्यवच्छेदकः । परीति । परिगणितानां वस्तूनां मूर्तामूर्ताधिदैवताध्यात्मिकानां निषेधे । एतदिति । वासनाभूतम् । अविषयः स्वयंप्रकाशः । 'प्रकृतैतावत्त्वं हि प्रतिषेधती'ति व्याकृत्य 'ततो ब्रवीति च

१. मूले रश्मौ च प्रतिषेधकनमिति पाठः, मुद्रितपुस्तके प्रतिषेधकनञमिति ।

भाष्यप्रकाशः ।

ब्रह्मेति जिज्ञासा निवर्तते । तस्मात् ब्रह्मणि कल्पितं प्रपञ्चं प्रतिषेधति, ब्रह्म तु परिशिनष्टीति निर्णयः । किञ्च । ततः प्रतिषेधात् 'भूयो ब्रवीति' 'अन्यत् परमस्ती'ति। अभावावसाने हि निषेधे किमन्यत् परमस्तीति ब्रूयात् । अतोपि ब्रह्मैव परिशिनष्टीति निर्णयः । तत्रैषा श्रुत्यक्षरयोजना । नेति नेतीति ब्रह्मादिश्य तमेवादेशं पुनर्निर्वक्ति । नेति नेतीत्यस्य कोर्थः। न ह्येतस्माद्ब्रह्मणो व्यतिरिक्तमस्तीत्यतो नेतीत्युच्यते, न पुनः स्वयमेव नास्तीत्यर्थः । तच्च दर्शयति 'अन्यत् परमस्ती'ति । यदा पुनः श्रुत्यक्षराण्येवं योज्यन्ते, न ह्येतस्मादिति नेति । न हि प्रपञ्चनिषेधरूपादादेशनादन्यत् परं ब्रह्मण आदेशनं नास्तीति, तदा 'ततो ब्रवीति च भूय' इत्येतन्नामधेयविषयं योजनीयम् । 'अथ नामधेयं सत्यस्य सत्य'मिति, 'प्राणा वै सत्यं तेषामेष सत्य'मिति हि ब्रवीतीति । तच्च ब्रह्मावसाने निषेध उपपद्यते । अभावावसाने तु किं 'सत्यस्य सत्य'मित्युच्येत । तस्माद्ब्रह्मावसानोऽयं निषेध इति सूत्रं व्याचक्रुः । तत् ब्रह्मास्ति चेत्, कुतो न गृह्यते इति शङ्कायां तदव्यक्तसूत्रम्, तस्य च, 'न चक्षुषा गृह्यते,' 'स एष नेति नेत्यात्मा,' 'अगृह्यः', 'यदा ह्येवैष एतस्मिन्नदृश्ये,' 'यत्तदद्रश्यमग्राह्यम्,' 'अव्यक्तोऽयमचिन्त्योऽय'मिति विषयवाक्यानि धृत्वा, सर्वसाक्षित्वादनिन्द्रियग्राह्यमिति व्याख्याय, 'अपि संराधन'सूत्रे भक्तिध्यानप्रणिधानाद्यनुष्ठानरूपसंराधनेन 'कश्चिद्धीरः प्रत्यगात्मानमैक्षत्,' 'ज्ञानप्रसादेन विशुद्धसत्त्व' इत्यादिश्रुत्यनुरोधेन अव्यक्तस्यापि ब्रह्मणो दर्शनमङ्गीकृत्य, ननु संराध्यसंराधकभावाभ्युपगमात् परेतरात्मनोरन्यत्वं स्यादिति शङ्कायां तन्निषेधाय 'प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासा'दिति सूत्रमवतार्य, यथा प्रकाशाकाशसूर्यादयोङ्गुलिकरकोदकादिषु कर्मसूपाधिभूतेषु सविशेषा इवावभासन्ते, न च स्वाभाविकीमविशेषात्मतां जहति, एवमुपाधिनिमित्त एवायमात्मभेदः, स्वतस्त्वैकात्म्यमेव । तथाहि वेदान्तेष्वभ्यासेनासकृज्जीवप्राज्ञयोरभेदः प्रतिपाद्यत इति व्याख्याय, 'अतोऽनन्तेन तथाहि लिङ्ग'मिति सूत्रं च अभेदस्य स्वाभाविकत्वात् भेदस्य चाविद्याकृतत्वाद्विद्यया अविद्यां विधूय जीवः परेणानन्तेन प्राज्ञेनैक्यं गच्छति । तथाहि लिङ्गम् । 'स यो ह वैतत्परमं ब्रह्म वेद ब्रह्मैव भवति, ब्रह्मैव सन् ब्रह्माप्येती'त्यादीनि व्याख्याय, स्वमतशुद्धये तस्मिन्नेव संराध्यसंराधकभावे मतान्तरोपन्यासायाहिकुण्डलादिसूत्रद्वयमित्येवं तदवतार्य, 'ततस्तु तं पश्यते निष्कलं ध्यायमानः,' 'परात् परं पुरुषमुपैति

रश्मिः ।

भूय' इति व्याकरोति स्म किञ्चेति । 'अन्यत्परमस्ती'ति श्रुतिस्तत्रत्या । अभावावसाने वासनावसानेऽप्यभावो वासनायामवसानं यस्य निषेधस्य तस्मिन्सति । ब्रूयादिति । किमः प्रश्ने प्रयोगात्प्रश्नं ब्रूयात् । अतोपीति । वीप्सया प्रतिषेधात् । तत्रैवेति । एतन्निर्वचनस्याग्रे दर्शनादेवकारः । श्रुतिस्तु 'नेति नेति नह्येतस्मादिति नेत्यन्यत्परमस्तीति प्राणा वै सत्यं तेषामेष सत्य'मिति । 'नह्येतस्मादिति' 'नेत्यन्यत्परमस्ती'ति द्वितीयपाठः । दर्शयतीति । श्रुतिः । नामधेयविषयं यथा तथाहुः अथेत्यादि । तत इत्यस्यार्थः आनन्तर्येऽथशब्दः । तदनन्तरम् । हीति चकारार्थः । ब्रवीति भूयो ब्रवीति । तच्चेति । सत्यत्वम् । वीप्सापक्षे ब्रह्मावसानं तस्मिन् । ब्रह्मण्यवसानं यस्य निषेधस्य तस्मिन्सत्युपपद्यते । सर्वेति । सर्वेषां साक्षित्वात् । इत्यादीति । 'ततस्तु तं पश्यते निष्कलं ध्यायमान' इति । परेति । परं च इतरात्मा चेति तयोः । प्रकाशेति । आदिना चन्द्रः । अङ्गुलीति । आदिना आदर्शः । यथासंख्यमधिकरणानि । कर्मस्विति । कर्मणीति सौत्रपदार्थः । अस्य विवरणमुपाधिष्विति रूढ्या । सविशेषा इति । विशेषा अङ्गुल्यादयः तैः सह समाना वा सविशेषाः । एवेति । 'मृत्योः स मृत्युमाप्नोती'ति श्रुतेरेवेति । ऐकात्म्यमेवेति । 'यत्र त्वस्य सर्वमात्मैवाभू'दिति श्रुतेरेवकारः । अभ्यासा-

भाष्यप्रकाशः।

दिव्यम्', 'यः सर्वाणि भूतान्यन्तरो यमयती'त्यादौ ध्यातृध्येयत्वद्रष्टृद्रष्टव्यत्वाभ्यां गन्तृगन्तव्यत्वेन नियन्तृनियन्तव्यत्वेन च भेदो व्यपदिश्यते। 'तत्त्वमसि''अहं ब्रह्मास्मि', 'एष त आत्मा सर्वान्तर एष त आत्मान्तर्याम्यमृत' इत्यभेदश्च। एवमुभयव्यपदेशे सति यद्यभेद एकान्त एव गृह्यते, तदा भेदव्यपदेशो निरालम्बन एव स्यात्। अतो यथा अहिरित्यभेदः, कुण्डलाभोगप्रांशुत्वादीनीति भेदः, एवमिहापि उभयव्यपदेशदर्शनादङ्गीकर्तव्यः। अथवा। यथा सौर्यः प्रकाशस्तदाश्रयश्च सूर्यो नात्यन्तभिन्नौ, उभयोस्तेजस्त्वाविशेषात्, अथ च भेदव्यपदेशभाजौ भवतः, एवमिहापीतिव्याख्याय, ततः, पूर्ववद्वेत्यादिसूत्रद्वयं सिद्धान्तीयत्वेनाभिप्रेत्य, यथा वा, 'प्रकाशादिवच्चावैशेष्य'मिति सूत्रे पूर्वमुपन्यस्तं तथैवैतद्भवितुमर्हति। तथा सत्यविद्याकृतत्वाद्बन्धस्य विद्यया मोक्ष उपपद्यते। यदि पुनः परमार्थत एव बद्धः कश्चिदात्माऽहिकुण्डलन्यायेन परमात्मनः संस्थानभूतः प्रकाशाश्रयन्यायेन वा एकदेशभूतोऽङ्गीक्रियते, तदा बन्धस्य पारमार्थिकत्वेन तिरस्कर्तुमशक्यत्वान्मोक्षशास्त्रवैयर्थ्यं स्यात्। श्रुतिश्च भेदाभेदौ न तुल्यवद्व्यपदिशति, किन्त्वभेदं प्रतिपाद्यत्वेन निर्दिशति। भेदं तु पूर्वप्रसिद्धमेवानुवदत्यर्थान्तरविवक्षया। किञ्च। 'नान्योऽतोऽस्ति द्रष्टे'त्यादिना चेतनान्तरं निषेधति, 'अथात आदेशो ने'ति, 'तदेतद्ब्रह्मापूर्वमनपर'मित्यादिना च प्रपञ्चम्। अतोऽन्यनिराकरणाद्ब्रह्ममात्रपरिशेषणाच्च 'प्रकाशादिवच्चावैशेष्य'मितिसूत्रोक्त एव सिद्धान्त इत्याहुः।

तदसङ्गतम्। तद्रीतिके प्रथमसूत्रव्याख्याने मूर्तामूर्तप्रतिषेधस्य 'प्रकृतं प्रतिषेधती'त्येतावतैव सिद्धेरेतावत्त्वमित्यस्य, एतावत्त्वपदादरे च प्रकृतपदस्य वैयर्थ्यप्रसक्तेर्दुर्निवारत्वात्। एतावत्त्वमिति त्वप्रत्ययस्य भावेऽनुशिष्टत्वेन एतावता परिच्छिन्नस्य मूर्तामूर्तलक्षणरूपद्वयस्य तेन पदेनालाभात्। त्वस्य षष्ठ्यन्तादनुशिष्टत्वेन तृतीयान्तादभवनेनापि तथात्वाच्च। अथ तन्न विग्रहवाक्यम्, किन्त्वर्थमात्रकथनमित्युच्यते, तदापि रूपद्वयात्मकस्य सर्वस्य प्रपञ्चस्य परिच्छिन्नान्तर्निवे-

रश्मिः।

दिति सौत्रं पदं व्याकरोति स्म तथाहीति। अविद्यां विधूयेत्यावरणभङ्गः। तदवतार्येति। सूत्रद्वयमवतार्य। एवेति। आलम्बनयोगव्यवच्छेदकः। अतो यथेति। रज्जुरहिरित्यभेदः। अहेः कुण्डलमाभोगो रज्जुः। प्रगतः अंशुः प्रांशुः तत्त्वम्। उभयेति। भेदाभेदव्यपदेशदर्शनात्। प्रकाशाश्रयसूत्रव्याख्यानमाहुः अथवेति। भेदव्यपेति। सूर्यस्य प्रकाश इति प्रयोगादिति भावः। अभिप्रेत्येति। इत्याहुरित्यनेनान्वेति। कथं सिद्धान्तत्वेनाभिप्रेतत्वमित्यतः पूर्वसूत्रीयभाष्यं प्रक्षिपन्ति स्म यथा वेति। इतीति। इति पूर्वं तस्मिन्सूत्र उपन्यस्तमितियोजना। एतदिति ब्रह्म। बन्धस्य भेदस्य। मोक्षोऽभेद उपपद्यते। संस्थानेति। ध्यातृध्येयादिभावात्तथा। एकदेशेति। भेदव्यपदेशभाक्त्वपक्षे ब्रह्मण एकदेशभूतः। भेदं त्विति। ध्यातृध्येयभावाद्भेदं तु पूर्वं अविद्यावस्थायां प्रसिद्धम्। एवेति। सार्वत्रिकत्वादेवेति। अन्विति। सिद्धस्य कथनमनुवादः। अर्थोऽभेदः अन्योर्थः भेदः अर्थान्तरं तस्य विवक्षया। प्रतिषेधसूत्रार्थमाहुः किञ्चेति। एवेति। अपिसंराधनसूत्रोक्तस्य सिद्धान्तत्वयोगव्यवच्छेदकैवकारः। ननु प्रकृतं मूर्तामूर्तं एतावत्त्वं यत्पदं इत्येवमेतावत्त्वपदादरे तस्य तद्वाच्यत्वे लक्षणायाः कचित् सिद्धत्वेनादोषाद्दूषणान्तरमाहुः प्रकृतपदस्येति। मूर्तामूर्तेति। भावप्रत्ययरहितस्य। तेनेति। भावप्रत्ययसहितेन। तृतीयान्तादिति। एतावता मूर्तामूर्तेन भावः प्रकृतजन्यबोधे प्रकारः एतावत्त्वम्। प्रकृतेन मूर्तामूर्तेन विशेषणेन जन्यो नेति नेतीत्युक्तब्रह्मविशेष्यकबोधः तत्र प्रकारः। तथात्वादिति। तेन पदेनालाभात्। अथेति। भिन्नप्रक्रमे। तत् एतावत्ताभावः। तदित्यव्ययात्। एतावतोर्भाव

भाष्यप्रकाशः ।

श्रादेतावतेत्यत्राभिप्रेतस्य परिच्छेदकस्यालाभेनासङ्गतिः । नच लौकिकप्रमाणमेव तथेति वाच्यम् । जन्मादिसूत्रव्याख्याने 'मनसाप्यचिन्त्यरचनारूपस्ये'ति स्वोक्तस्य प्रपञ्चविशेषणस्य विरोधेन तथा वक्तुमशक्यत्वाच्च । किञ्च, अत्र मूर्तामूर्ते रूपद्वयं यत्प्रकृतत्वेन विवक्षितं तत्प्राधान्यमालम्ब्य । तत् तस्य किं स्वेन रूपेण ब्रह्मरूपत्वेन वा । नाद्यः । ब्रह्मणो रूपे इति विशेषणवैयर्थ्यप्रसङ्गात् । द्वितीये तु ब्रह्मण एव प्राधान्यम् । ब्रह्मपरिचायनार्थमेव रूपद्वयस्य कथनात् । ब्रह्मण एवात्रोपदेश्यत्वाच्च । नच सम्बन्धषष्ठ्यन्तपदेन बोधनाद्ब्रह्मणोऽप्राधान्यमिति युक्तम् । 'राहोः शिर' इतिवदभेदेपि षष्ठीभवनेन सम्बन्धषष्ठ्या प्राधान्याबाधात् । 'आनन्दं ब्रह्मणो विद्वा'नित्यत्र स्वयमप्यभेदे षष्ठ्याः स्वीकृतत्वात् । कार्ये कारणानन्यत्वस्य भगवता सूत्रकारेणोक्ततया 'द्वे वा व ब्रह्मणो रूपे' इत्यत्र ब्रह्माभिन्ने रूपे इत्यर्थस्य वक्तुमुचितत्वाच्च । अतो ब्रह्मणः प्राधान्यस्याविघातात् 'ब्रह्म ते ब्रवाणी'ति वाक्योपन्यासेन स्वयमेवोपक्रान्तत्वाङ्गीकारादग्रे उपदेश्यत्वाच्च ब्रह्मणः प्रकृतत्वसिद्धेः तस्मिन्नेतावत्त्वं परिच्छिन्नत्वं प्रतिषेधतीत्येव व्याख्यातव्यम् । एतावच्छब्दस्य परिच्छिन्नवाचकतायाः प्रसिद्धत्वात् । तथाच मूर्तामूर्तमात्रत्वं ब्रह्मणि नास्तीत्यर्थः सिध्यति, न तु प्रकृतं यदेतावता परिच्छिन्नमिति सिध्यति । एवञ्च, 'नेति नेती'ति श्रुतिव्याख्याने नञ्द्वयेन यथासंख्यं मूर्तामूर्तनिषेधे वासनाशेषात् तद्विहाय भूतराशिवासनाराश्योर्निषेधाङ्गीकारे परिगणितनिषेधेन, यदि नेदं ब्रह्म, किमन्यद्ब्रह्मेति शङ्कापत्तेस्तदपि विहाय वीप्सया यावद्विषयजातनिषेधो यदङ्गीकृतः, सोपि तथा । भूतराशिनिषेधे कैमुतिकादेव वासनाराशिनिषेधसम्भवेन तदर्थं निषेधापेक्षाभावात् । त्यक्ते यथासंख्ये वासनानिषेधावतारकप्रमाणाभावात्, वासनाया अनुक्तत्वेन तन्निषेधस्याप्ययुक्तत्वाच्च । अत एव न यावन्निषेधोपि युक्तः ।

यदपि 'न ह्येतस्मा'दिति 'नेत्यन्यत् परमस्ती'त्यस्य योजनाद्वयम् । तत्र प्रथमयोजनायां निषेधवीप्सया ब्रह्मव्यतिरिक्ताभाव उच्यते, न पुनर्ब्रह्माभावः, तदेव दर्शयति'अन्यत्परमस्ती'ति व्याख्यातम् ।

रश्मिः ।

एतावत्त्वमिति षष्ठ्यन्तविगृहीतस्यार्थमात्रकथनम् । अभीति । अभेदसंसर्गेणाभिप्रेतस्य मूर्तामूर्तरूपस्य परिच्छेदकस्यालाभेन एकस्य परिच्छेदकपरिच्छिन्नभावायोगात् परिच्छिन्नपरिच्छेदकभावासंगतिरित्यर्थः । लौकिकेति । यादृशपरिच्छेदकेन मूर्तामूर्तेन यादृशं मूर्तामूर्तं परिच्छिन्नमिति लौकिकप्रमाणं चक्षुरादि तदेव नतु अलौकिकं प्रमाणं तथा संगतिप्रयोजकम् । भाष्ये प्रकृते ब्रह्मणि यदेतावत्त्वं लौकिकधर्मवत्त्वं तत्समर्थयितुमाहुः किञ्च, अत्रेति । प्राधान्येति । मूर्तामूर्तयोः प्राधान्यमालम्ब्य तत्तस्य प्राधान्यं तस्य मूर्तामूर्तस्य । स्वेन मूर्तामूर्तरूपेण । ब्राह्म(ण) इति । मूर्तामूर्तंब्राह्मणमिति ब्रह्मसम्बन्धिविशेषणरूपत्वेन । विशेषणस्य ब्रह्मणो वैयर्थ्यप्रसङ्गात् । ब्रह्मण एवेति । ननु मूर्तामूर्तयोरिति मूर्तामूर्तान्ययोगव्यवच्छेदक एवेति । एवेति । प्रसिद्धेरेवकारः । ब्रह्मण एवेति । 'द्वे वा व ब्रह्मणो रूपे' इत्युपक्रमात् । 'तेषामेष सत्य'मित्युपसंहाराच्चैवकारः । स्वयमिति । श्रुत्या । तदनन्यत्वसूत्रकारेण । ब्रह्म ते ब्रवाणीत्यादि । तथाच तद्भाष्यं प्रकृतसूत्रस्थम् । 'ब्रह्म ते ब्रवाणी'त्याद्युपक्रमविरोधात् । 'असन्नेव स भवति असद्ब्रह्मेति वेद चे'दित्यादिनिन्दाविरोधादिति । अग्र इति । उपसंहारे 'तेषामेष सत्य'मित्यनया । प्रतीति । प्रतिषेधत्येवेति व्याख्येयम् । अयोगव्यवच्छेदक एवकारः । एतावतेति । परिच्छिन्नत्वेन धर्मेण परिच्छिन्नं ब्रह्मेत्यर्थः । त्यक्त इति । वासनानिषेधापेक्षाभावात्त्यक्ते द्वितीयपक्षोक्ते यथासंख्ये । यद्वा । पूर्वप्रतिषेधो भूतराशिं निषेधत्युत्तरस्तु वासनाराशिमिति । अत एवेति । भूतराशिनिषेधेन कैमुति-

भाष्यप्रकाशः।

तदपि तथा। ब्रह्मव्यतिरिक्तनिषेधोत्तरं ब्रह्मसत्ताप्रदर्शनस्य अन्यदस्तीत्येतावतैव सिद्ध्या परपदवैयर्थ्यापत्तेः। अतो व्यतिरिक्तनिषेधेनाव्यतिरिक्तत्वं सर्वस्य स्वीकृत्य तावन्मात्रत्ववारणाय परं ब्रह्मान्यदस्तीत्यङ्गीकार्यमित्येव युक्तम्। द्वितीययोजनायामपि परपदवैयर्थ्यं पूर्ववदेव। तदर्थं परपदमुत्कृष्टार्थकतया व्याख्येयम्। तत्र चाभावावसान एव निषेधः सिध्यतीति ब्रह्मसत्तासाधनाय, 'ततो ब्रवीति च भूय' इति मन्त्रांशं नामधेयविषयत्वेन योजयित्वा, नामधेयेन तत्सत्तां साधयित्वा, निषेधस्य ब्रह्मावसानत्वमुपपादितम्। तदपि तथा। नामधेयाङ्गीकारे तद्वत्तासिद्ध्या यावद्विशेषशून्यत्वप्रतिज्ञाहानिप्रसङ्गात्। नामधेयकथनमात्रेणैव तत्सत्तासिद्धेस्तन्निर्वचनश्रुतिवैयर्थ्यप्रसङ्गात्। तदादरे च 'चक्षुषश्चक्षु'रित्यादिवन्नियामकत्वतन्मूलरूपत्वयोः सिद्ध्या प्रतिज्ञाहानितादवस्थ्याच्च। एवं तदव्यक्तादिसूत्रद्वयेपि यदि ब्रह्मणो दृश्यत्वादृश्यत्वयोर्द्वयोरपि स्थापनम्, तदा तु विरुद्धधर्माश्रयत्वापत्तिः। यदि च साधनाभ्यासपाकवशात् दृश्यत्वम्, तदभावे अदृश्यत्वमिति व्यवस्था, तदापि दृश्यत्वस्य प्रामाणिकत्वे 'यतो वाच' इत्यादिश्रुतिविरोधतादवस्थ्यम्। अप्रामाणिकत्वे च 'कश्चिद्धीर' इत्यादिश्रुतेस्तदुक्तसाधनानां च वैयर्थ्यम्। अपिसंराधनसूत्रस्य च, न हि तेन कश्चिन्निर्णयः सिध्यति, अपि तु ब्रह्मणो दृश्यत्वबोधनेन, जीवब्रह्मणोः संराधकसंराध्याभावाद्भेदबोधनेन च संशयस्यैवोत्पत्तिरिति। यदपि प्रकाशादिवत्सूत्रे जीवब्रह्मणोरभेदं युक्त्या व्याख्याय तत्र प्रमाणापेक्षायां वेदान्तेषु जीवप्राज्ञयोरभेदप्रतिपादनाभ्यासो हेतुत्वेन व्याख्यातः। सोपि शिथिलः। सौत्रस्याभ्यासपदोक्तस्य हेतोरवैशेष्ये कर्मणि प्रकाशे च साधारण्येनोक्ततया

रश्मिः।

कन्यायादेव। यावन्निषेध इति। तृतीयवीप्सापक्षोक्तः। तथेति। अयुक्तम्। सर्वस्येति। मूर्तामूर्तप्रपञ्चस्य। तावदिति। प्रपञ्चमात्रत्ववारणाय। इत्येवेति। 'मायावादमसच्छास्त्र'मिति पाठात्। पूर्ववदेवेति। अन्ययोगव्यवच्छेदकः। तदर्थमिति। परपदवैयर्थ्यपरिहारार्थम्। तत्र चेति। द्वितीययोजनायाम्। अभावावसान इति प्रथमान्तम्। नेति न इत्येवमभावे पर्यवसानम्। निषेधोऽभावपर्यवसानः। एवकारस्तु यदा पुनः श्रुत्यक्षराण्येवं योज्यन्ते। नह्येतस्मादिति नेति। नहि प्रपञ्चनिषेधरूपादेशनादन्यत्परं ब्रह्मण आदेशनं नास्तीति तदीयग्रन्थात्। तत्सत्तामिति। ब्रह्मसत्ताम्। तथेति। अयुक्तम्। नामधेयेति। मात्रचा 'ततो ब्रवीति च भूय' इति नामधेयवाचकेतरस्याः 'सत्यस्य सत्य'मित्यस्य व्यवच्छेदः। एवेति। मात्रजर्थानुवादः। तत्सत्ता ब्रह्मसत्ता तस्याः सिद्धेः। तन्निर्वचनेति। 'सत्यस्य सत्य'मिति श्रुतिवैयर्थ्यप्रसङ्गात्। तदादर इति। निर्वचनादरे। नियामकेति। सत्यमूलत्वं तन्मूलत्वम्। प्रतिज्ञेति। अरूपवत्सूत्रोक्ता। इत्यादीति। 'कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्' इति श्रुतेः। तदुक्तेति। धीरवृत्तचक्षुष्ट्वादीनाम्। संशयस्यैवेति। परेतरात्मनोरन्यत्वसंशयस्य। एवकारो व्याख्यानात्। अभेदेति। ज्योतिर्ब्राह्मणे 'यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमेवमेवायᳪशारीर आत्मा प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तर'मिति। 'अत्र पिताऽपिता भवती'त्यादि। 'यद्वैतन्न पश्यति पश्यन्वैतद्द्रष्टव्यं न पश्यती'ति अभेदप्रतिपादनाभ्यासः। वक्ष्यमाणवृत्तौ तु 'तत्त्वमसी'त्याद्यभेदश्रुत्यभ्यासादित्यर्थ उक्तः। अवैशेष्य इत्यादि। वैशेष्ये अभेदे कर्मणि आत्माभिध्यानज्ञानादौ कर्मण्युपाधौ। उक्ततयेति। तथाच वृत्तिः। यथा सौरः प्रकाश आकाशो वाङ्गुल्याद्युपाधौ कर्मणि भिन्न इव वक्र इव भाति, वस्तुतस्त्वेकरूपः, तद्वत्प्रकाशे आत्माभिध्यानज्ञानादौ। कर्मण्युपाधौ। भिन्न इव वक्र इव भाति, वस्तुतस्त्ववैशेष्य-

भाष्यप्रकाशः ।

जीवप्राज्ञाभेदाभ्यास एव नियमने प्रमाणानुपलम्भात् । वेदान्तेषु तयोरभेदस्येव भेदस्याप्यभ्यासदर्शनाच्च । यदप्युभयव्यपदेशादिसूत्रद्वयमेकदेशिमतीयत्वेन व्याख्याय, 'पूर्ववद्वे'ति सूत्रव्याख्याने तद्दूषणमुक्तम् । जीवात्मनः परमात्मसंस्थानभूतत्वे एकदेशभूतत्वे वाङ्गीक्रियमाणे बन्धस्य पारमार्थिकत्वेनातिरस्कार्यत्वापत्त्या मोक्षशास्त्रवैयर्थ्यमिति । तदपि तथा । 'बहु स्यां प्रजायेये'तीच्छाभ्यां भेदस्यागन्तुकत्वावगमाद्बन्धस्य पारमार्थिकत्वेपि तथात्वात् पल्यूलनेन वस्त्रमालिन्यस्येव शास्त्रीयसाधनैर्बन्धनाशसम्भवेन शास्त्रवैयर्थ्याभावात् । एवं प्रतिषेधसूत्रे 'नान्योऽतोऽस्ति द्रष्टे'ति चेतनान्तरनिषेधो य उक्तः, सोपि द्रष्टुर्ब्रह्माभिन्नत्वं वदति, न तु ब्रह्मणो द्रष्टृभिन्नत्वम्, अतो न तद्व्यवसायसाफल्याय । 'नेति नेती'ति वाक्यं 'तदेतद्ब्रह्मापूर्व'मिति वाक्यं च यथायथं प्रपञ्चस्य ब्रह्माभिन्नत्वं ब्रह्मणः सर्वाकारत्वं च वदतीति प्रागेवोपपादितम् । अतोऽन्यनिषेधो यो वर्तते, स सर्वं ब्रह्मणोऽन्तर्निवेश्येतरं निषेधति, न तु सर्वं मिथ्याकृत्येति सुधीभिरवधेयम् ।

भास्कराचार्यास्तु । विंशतिसूत्रमेकमेवाधिकरणमङ्गीकृत्य, सगुणासु शाण्डिल्यविद्यादिषु सगुणोपासितस्य प्रतिप्रकरणं चोदनासामर्थ्येन निर्णीतत्वात् तत्र नायं विचारः, किन्तु निर्गुणब्रह्मचोदनायां साकारं निराकारं च ब्रह्मोपास्यम्, उतैकतरमिति जिज्ञासायाम्, यथास्थितवस्तूपासनस्य युक्तत्वात् कारणात्मना प्रपञ्चात्मना चावस्थितमुपास्यमिति प्राप्तेऽभिधीयते । नोभयलिङ्गमुपास्यम् । कुतः । अस्थूलादिवाक्यैः समस्तप्रपञ्चाकारस्य निवर्तितत्वात् । स्वतश्च कारणस्य कूटस्थनित्यस्यैकस्याद्वितीयत्वात् । पाश्चात्यस्य कार्यरूपस्य कादाचित्कत्वात् । ननु कारणस्य विकारात्मकत्वा-

रश्मिः ।

रूपत्वमेवात्मनः । कुतः । अभ्यासात् । 'तत्त्वमसी'त्याद्यभेदश्रुत्यभ्यासादित्यर्थ इति । अवैशेष्ये दार्ष्टान्तिके यः स दृष्टान्तयोरपीति । एवेति । नतु कर्मप्रकाशयोरित्येवकारार्थः । तयोरिति । जीवप्राज्ञयोः । भेदस्यापीति । अपिसंराधनसूत्रेऽस्मद्भाष्योक्तरीत्याभ्यासदर्शनात् । परमात्मेति । अहिकुण्डलन्यायेन परमात्मनः संस्थानभूत इत्युक्तप्रकारेण । प्रकाशाश्रयन्यायेन एकदेशभूतत्वे । पारमार्थिकत्वेनेति । संस्थानभूतस्यैकदेशभूतस्य परमार्थस्य धर्मः पारमार्थिको बन्ध इति । तथेति । शिथिलम् । तथात्वादिति । तिरस्कार्यत्वात् । पल्यूलनेनेति । वस्त्रमालिन्यनाशसाधनेन । बन्धनाशेति । बन्धतिरोभावसम्भवेन । अतो ब्रह्मणोऽन्यो भिन्नो न द्रष्टास्तीति योजनामाहुः सोपीति । 'अधिकं तु भेदनिर्देशा'दिति सूत्रादाहुः नत्विति । तद्व्यवेति । ब्रह्माद्वितीयत्वरूपफलेन सर्वमिथ्यात्वव्यवसायस्य साफल्यं मिथ्या तस्मा इत्यर्थः । प्रागेवेति । 'दर्शयति चे'ति सूत्रे ब्रह्माभिन्नत्वं स्पष्टम् । 'तदेतद्ब्रह्मे'त्यपि तत्र स्पष्टम् । अन्तरिति । 'स्वसृष्टमिदमापीये'ति वाक्यात् । इतरमिति । प्रपञ्चम् । सुधीभिरिति । शोभना ब्रह्मगोपनाभावेन मोक्षार्था धीर्येषां तैः ।

विंशतीति । 'न स्थानतोपी'तिसूत्रमारभ्य 'प्रतिषेधाच्चे'त्यन्तम् । एवेति । न तु द्वयमिति द्वययोगव्यवच्छेदक एवेति । शाण्डिल्येति । छान्दोग्यपञ्चमप्रपाठकेऽस्ति 'सर्वं खल्विदं ब्रह्मे'त्यादिशाण्डिल्यविद्या । 'इति ह स्माह शाण्डिल्यः शाण्डिल्य'इति श्रुतेः । आदिना कोशविज्ञानम् । 'अन्तरिक्षोदरः कोश'इत्यादिश्रुतेः । तदग्रे कोशविद्या । तदग्रे यज्ञसम्पादनं 'पुरुषो वाव यज्ञ' इत्यादिना । चोदनेति । 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीते'त्यत्रोपासीतेत्युपासनाचोदना । कोशविज्ञाने चोदना । 'सामवेदं प्रपद्य' इति लेडाश्रयणात् । 'य एवं वेदे'ति यज्ञसम्पादने चोदनालेडाश्रयणात् । नोभ-

भाष्यप्रकाशः।

द्विकारपरित्यागे कारणस्वरूपस्यापि त्यक्तत्वात् कारणत्वेनोपासनमपि हीयेतेति चेत्, नेत्युच्यते। न पृथिव्यादिस्थानतोपि परस्योभयलिङ्गता। ब्रह्मणः स्वतोऽभिन्नत्वात्। स्थानकृतस्य रूपस्य चागन्तुकत्वात्। ब्रह्मात्मको हि नामरूपप्रपञ्चः, न प्रपञ्चात्मकं ब्रह्म। यथा समुद्रात्मकः फेनतरङ्गादिः, न तदात्मकः समुद्र इति। कथं पुनर्गम्यते, सर्वत्र, वेदान्तेषु, 'अशब्दमस्पर्शम्,' 'स एष नेति नेत्यात्मा,' 'अस्थूल'मित्यादिषु भूतभौतिकनिराकरणात्। ननैतैः प्रपञ्चस्य मायामात्रत्वप्राप्तिः। कारणे कार्यरूपं अनेकविधं नास्तीत्येतावदवधारणेनैव वाक्योपपत्तेः प्रपञ्चाभावस्य प्रतिपत्तुमशक्यत्वादित्येवं प्रथमसूत्रं व्याख्याय, 'न भेदा'दितिसूत्रे प्रथमं नकारमपठन्तः, 'सर्वाणि भूतानि सर्व एवात्मानः समर्पिता' इति श्रुतेर्नेमिस्थानीयेन बाह्यप्रपञ्चेन वेष्टितानामरस्थानीयानां विज्ञानात्मनामन्तरतमे रथचक्रनाभिस्थानीये परमात्मनि समर्पणाद्भेदोऽवगम्यते, अतो भोग्यभोक्त्राकारवदुपास्यमिति सूत्रांशेनाशङ्क्य, 'न प्रत्येकमतद्वचना'दित्यनेन मधुविद्यायां प्रत्युपाधि भेदवचनाभावाद्यत्र सर्वेषां चेतनाचेतनानामेकीभावः, स एव परमात्मा ध्येयत्वेनोपदिश्यत इति व्याख्याय, तन्मात्रसूत्रे चैतन्यमात्रं ब्रह्मेति व्याख्याय, 'ब्रह्मायाति प्रपञ्चोऽयं रूपं हित्वा तु वैकृतम्। जहाति कठिनावस्थां जलधौ लवणं यथा। चेतनेऽचेतनं क्षिप्तमभेदाच्चेतनीभवेत्। उषायां वस्तु विन्यस्तं तत्सर्वं लवणीभवेत्' इत्येतावदधिकमुक्त्वान्यानि सूत्राणि शङ्कराचार्यवत् व्याचक्रुः। ततः प्रकृतैतावत्त्वसूत्रे च प्रकृतस्य पुरुषस्य यदेतावत्त्वं मूर्तामूर्तोपाधिपरिच्छिन्नत्वं तत्प्रतिषेधति, ततो निर्विकल्पकं परिशिष्टं ब्रह्म भूयः पुनर्ब्रवीति, अन्यत् परमस्तीति व्याख्याय, शङ्कराचार्योक्तामधिकरणान्तरकल्पनां सर्वोपनिषद्दस्यामप्युपनिषदि ब्रह्मण उपक्रमोपसंहारयोरव-

रश्मिः।

येति। कार्यकारणोभयलिङ्गम्। सूत्रं व्याचक्षते स्म न पृथिव्यादीति। अत्र भेदाभेदावेतन्मते तावनुसंधेयौ। स्वत इति। कारणात्मना। अभेदस्तु कटकं सुवर्णमितिवत्। रूपस्येति। कार्यरूपस्य। कटकं सुवर्णं सुवर्णं कटकं नेति प्रतीत्याहुः ब्रह्मात्मक इति। तदात्मक इति। फेनतरङ्गबुद्बुदात्मकः। सर्वत्रेति सौत्रांशव्याख्या सर्वत्रेत्यादि। भूतभौतिकेति। भूतौ शब्दस्पर्शौ वाय्वाकाशतन्मात्रारूपौ। भौतिकं स्थूलं वाय्वाकाशरूपम्। तयोर्निराकरणात्। एतैरिति। भूतभौतिकनिराकरणैः। अनेकेति। न एकविधं अनेकविधं शब्दतत्स्थूलाकाशविधं स्पर्शतत्स्थूलवायुविधं नास्ति, किन्तु शब्दस्पर्शरूपं भूतसूक्ष्मरूपं कार्यरूपमिति। एवकारोऽन्ययोगव्यवच्छेदकः। 'अशब्दमस्पर्श'मित्यादिवाक्योपपत्तेः। सर्वाणीति। मधुब्राह्मणस्था। एवात्मान इत्यत्र एते आत्मान इत्यपि पाठः। नेमी रथचक्रवलयम्। अरा वलयेऽर्पिताः स्थूलशलाकाः। रथचक्रेति। नाभी रथचक्रपिण्डिका। भोग्येति। भोग्यः प्रपञ्चो नेमिः। भोक्तारो जीवा अराः। उपास्यं परमात्मा नाभिः। इत्यनेनेति। सूत्रांशेन। प्रत्युपाधीति। क्रियाविशेषणानां नपुंसकत्वमेकवचनान्तत्वं च। उपाधिपृथिव्यादि लक्षीकृत्येति प्रत्युपाधि। स एवेति। अत्रेति बोध्यम्। अन्ययोगव्यवच्छेदक एवकारः। आयातीत्यादि। आसमन्तादाप्नोति। कठिनेति। पृथिव्यवस्थाम्। 'यत्कठिनं सा पृथिवी'ति श्रुतेः। उषायामिति। रात्रौ क्वचित्। अधिकरणान्तरेति। मूर्तामूर्तब्राह्मणं विषयः। सन्देहः ब्रह्म वा मूर्तामूर्ते वा प्रतिपाद्ये इति। मूर्तामूर्ते सत्यमित्युपसंहाराद्ब्रह्मणोऽप्रत्यक्षत्वाच्च प्रतिपाद्ये इति पूर्वपक्षः। ब्रह्मप्रतिपाद्यमुपक्रमस्यासञ्जातविरोधित्वात् ब्रह्मणोऽप्रत्यक्षत्वेपि शून्यवादप्रसङ्गादिति सिद्धान्तः। तदिदं नाधिकरणान्तरम्। तत्र तृतीयान्तं

भाष्यप्रकाशः ।

स्थानात् सन्देहानुत्पत्त्या निरस्य, शेषं शङ्कराचार्यवदेव व्याख्यातवन्तः ।

तथाच तन्मते कारणस्यावस्थाविशेष एव कार्यम् । तन्तुनाभदृष्टान्तात् । अतो निमित्तवशादेव नानाकारः । स यद्यसन्नेवोत्पद्यते, तदा असतः सत्तानिषेधकश्रुतिविरोधः । अतः सन्नेव निमित्तवशादभिव्यज्यते । कारणं च ब्रह्म यथाकाशोऽविक्रियमाण एव वायुजनकः, एवमविक्रियमाणमेव प्रपञ्चजनकम् । तच्च कृत्स्नप्रसक्त्यादिदोषवारणार्थं श्रुतिबलादेव भगवता सूत्रकारेणाङ्गीकृतम् । स्वयमपि तथैव व्याख्यातम् । निमित्तं चात्रेच्छैव । परिणतिश्च शक्तेरेव । शक्तिशक्तिमतोर्नात्यन्तं भेदो गुणगुणिनोरिवेतरेतराविनाभावादिति तदनन्यत्वाधिकरणे व्युत्पादितम् ।

तत्रेदमवधेयम् । यदि श्रुतिबलादेवमवधारितम्, तदा ब्रह्मणि युक्तीनां लौकिकीनामकिञ्चित्करत्वादचिन्त्यसामर्थ्यं त्वङ्गीकृतमेव । तथा सति तेनैव विरुद्धधर्माश्रयत्वाद्दोषपरिहारसिद्धौ कुतः कारणरूपस्य केवलनिर्विकल्पकत्वाग्रहः । नचाशब्दादिवाक्येभ्य इति युक्तम् । तेषां यथा भूतभौतिकनिराकरणेऽप्युभयलिङ्गताप्रतिपादकत्वं तथोपपादितत्वात् । नापि 'कश्चिद्धीर' इति वाक्यात् । 'तं यथा यथोपासत' इति श्रुत्या तादृगुपासकेन तथादर्शनेपि तेन लिङ्गान्तरबाधस्याशक्यवचनत्वात् । सूत्रस्थेन केवलेन सर्वत्रेतिपदेन भूतभौतिकनिराकरणात्मकस्य हेतोरलाभात् । मधुविद्यायामपि यत्रैकीभावस्तादृशरूपस्य ध्येयत्वोपदेशेपि 'तदेतद्ब्रह्मापूर्व'मित्युपसंहारवाक्येपि

रश्मिः ।

हेतुमाहुः सर्वेत्यादिना सन्देहानुत्पत्त्येत्यन्तेन । यद्यप्यत्र गार्गिब्राह्मणेऽस्थूलादिवाक्यं पञ्चमप्रपाठकीयशाण्डिल्यविद्यादिषु 'सर्वकर्मा सर्वकाम' इति वाक्यम्, तथाप्यन्यसंग्रहाय सर्वत्वेनोपनिषद्गृहीता । अस्यामिति । मूर्तामूर्तब्राह्मणीयायामुपनिषदि । ब्रह्मण इति । 'द्वे वाव ब्रह्मणो रूपे' इत्युपक्रमः । 'तेषामेष सत्य'मित्युपसंहारः । रूपे वा रूपवद्वेति सन्देहानुत्पत्त्या इति हेतुः । निरस्येति । विंशतिसूत्रात्मकाधिकरणमिति नवसूत्र्यामधिकरणत्वं निरस्य । एवेति । भास्करभाष्याभ्याससूचनेनान्ययोगव्यवच्छेदक एवकारः । एवेति । दृष्टान्तसद्भावात् । निमित्तेति । क्रीडेच्छा निमित्तं तद्वशात् । तन्तुनाभवत् । एवेति । 'सदेव सोम्येदमग्र आसी'दित्यत्र सदितरव्यवच्छेदात् 'स ईक्षांचक्र' इत्यत्र निमित्तप्रदर्शनादन्ययोगव्यवच्छेदकैवकारः । असत इति । श्रुतिस्तु 'असन्नेव स भवति असद्ब्रह्मेति वेद चे'दिति । एवेति । चिन्तामणिदृष्टान्तसत्त्वादेवकारः । तच्चेति । अविकृतत्वम् । आदिना 'निरवयवत्वशब्दकोपो वा' । सूत्रेति । 'कृत्स्नप्रसक्तिनिरवयवत्वशब्दकोपो वे'ति सूत्रकारेण । स्वयमिति । भास्कराचार्यैः । इच्छैवेति । श्रुतेरेवकारः । शक्तेरेवेति । निर्गुणत्वाच्छक्तिमतो योगस्य व्यवच्छेदकैवकारः । तदेति । श्रुतिविचारकाले । एवेति । अवधारणेनैवकारार्थेन हेतुना । अशब्दादीति । अत्रैव पूर्वमुक्तेभ्यः । तेषामिति । इदमपि व्याख्यातम् । उपेति । दर्शयति चेति सूत्रोपन्यास एव पूर्वम् । भास्करभाष्योक्तेतरामप्याहुराशङ्काम् । नापीति । तादृगुपासकेनेति । तादृगिति रूढशब्दः । महाभाष्ये तु सोयं स इव दृश्यमानस्तमिवात्मानं पश्यतीति कर्मकर्तरि व्युत्पत्तिर्दर्शिता । सोयं तादृगुपासकः स इव आत्मदर्शीव अन्यैर्दृश्यमानस्तमिवात्मदर्शिनमिव स्वात्मानं पश्यतीत्यर्थः । तादृगुपासकेन । लिङ्गान्तरेति । निर्विकल्पकलिङ्गादन्यलिङ्गं सविकल्पकत्वलिङ्गं तस्य बाधस्य । अलाभादिति । सूत्रस्य सारवद्विश्वतोमुखत्वादिति भावः । विकल्प इति चेदोम् । भगवत्क्रीडार्थत्वात्सर्वमतानाम् । अपीति । अनेन यत्रैकीभावः, तत्रापि ध्येयत्वेन सर्वरूपत्वपदार्थसम्भावना । उपेति । शङ्कराचार्य-

१. उभयव्यपदेशाधिकरणे ।

भाष्यप्रकाशः।

सर्वरूपत्वबोधनस्योपपादितत्वाच्च। एवं तन्मात्रसूत्रविषयवाक्येपि कृत्स्नपदादेवाकारलाभो व्युत्पादित इति न तेनापि केवलनिराकारत्वसिद्धिरिति शाङ्करमतनिराकरणादेवैतदपि निराकृतं बोध्यम्।

विज्ञानभिक्षुस्तु। 'न स्थानतोपी'त्यादिचतुःसूत्र्या नित्यज्ञानेच्छादिमती ब्रह्मणो यान्तरङ्गशक्तिस्तद्द्वारकं ब्रह्मणो लक्षणमुच्यते, 'प्रकाशवच्चावैयर्थ्या'दित्याद्येकादशसूत्र्या जीवसाधारणं ब्रह्मस्वरूपमुच्यते, शेषैः सूत्रैस्त्वापादसमाप्ति ब्रह्मप्रपञ्चयोर्भेदाभेदौ परीक्ष्येते इति प्रतिज्ञाय, परस्य परमात्मन उभयलिङ्गं ज्ञानाज्ञानरूपधर्मद्वयं यथोक्तजाग्रदाद्यवस्थासम्बन्ध इति यावत्, स स्थानतः अभिव्यक्तिस्थानभूतादुपाधेरपि न, किन्त्वविलुप्तोपाधित्वात् सदा सर्वसाक्षित्वसदैश्वर्यसदानन्दत्वाद्येकरूपत्वमेव, कुतः, सर्वत्र हि, हि यस्मात् सर्वत्रैव वस्तुनि अधिष्ठातृतया परस्तिष्ठति। 'यः सर्वस्मिंस्तिष्ठन् सर्वमन्तरो यमयती'ति श्रुतेः। तच्च सर्वाधिष्ठानं साक्षित्वाद्यनित्यत्वे सति न सम्भवति, स्वाज्ञानकालीने कार्ये अधिष्ठानासम्भवादित्यर्थः। तथाचौपाधिकानेकरूपत्वाभावोपि परमात्मनो जीवव्यावृत्तं लक्षणम्, जीवे चाल्पं साक्षित्वादिकम्, तदप्यनित्यमिति व्याख्याय, द्वितीयसूत्रे च 'न भेदा'दिति पाठमङ्गीकृत्य, परस्य ब्रह्मण उभयलिङ्गत्वाभावो न घटते, माण्डूक्ये विश्वतैजसप्राज्ञतुरीयाभिधचतुष्पादकथने जाग्रदाद्यवस्थाभिर्ज्ञानाज्ञानरूपलिङ्गभेदश्रावणादिति चेत्, न, प्रत्येकमतद्वचनात्, 'नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञ'मित्यादिना वाक्यशेषेण प्रत्येकं तत्तदवस्थावदन्यत्ववचनात्। अत्र 'नान्तःप्रज्ञ'मित्यनेन स्वप्नावस्थायाः प्रतिषेधः। 'न बहिःप्रज्ञ'मित्यनेन जाग्रदवस्थायाः। 'नोभयतःप्रज्ञ'मिति मोहावस्थायाश्चोक्तः। 'न प्रज्ञानघन'मित्यनेनेच्छाकृत्यानन्दसम्भेदाज्जीवस्वरूपतो व्यावृत्तिरुक्ता। 'न प्रज्ञ'मित्यनेन चैतन्याश्रयत्वनिषेधः। 'नाप्रज्ञ'मित्यनेन सुषुप्तिमरणाद्यवस्थाः प्रतिषिद्धाः। अतो नावस्थाभिर्ब्रह्मण उभयलिङ्गत्वमित्यर्थं व्याख्याय, अग्रिमसूत्रे चैतमेवार्थमुपष्टभ्य, नन्ववस्थावत्त्वतद्राहित्ययोस्तुल्येपि श्रावणे कथं तद्राहित्यवाक्यानामेव बलवत्त्वमवधारितमित्यत आह

रश्मिः।

मतदूषकग्रन्थे उपपादितत्वात्। कृत्स्नपदादिति। तथाच भाष्यं 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवे'ति। एवेति। सदृशत्वादेवकारः। अन्तरङ्गेति। सदा सर्वसाक्षित्वादिरूपा वक्ष्यमाणा। तद्द्वारकं अन्तरङ्गशक्तिजनकसत्यादित्वम्। अत्राविभागाद्वैतमनुसन्धेयम्। 'यथा मधु मधुकृतो निस्तिष्ठन्ती'ति छान्दोग्यीयद्वितीयोपदेशरूपम्। जीवेति। जाग्रदादीति। सुषुप्तावज्ञानम्। 'न किञ्चिदवेदिष'मिति प्रतीतेः। उपाधेरिति। अणुत्वोपाधेर्जीवस्येवेश्वरस्य महत्त्वोपाधेरपि न। सदेति। आदिना चित्त्वम्। एवेति। उभयलिङ्गयोगव्यवच्छेदकैवकारः। ज्ञानाज्ञानेति। विश्वतैजसौ ज्ञाने प्राज्ञोऽज्ञाने। वाक्येति। एकरूपत्वमुभयलिङ्गत्वं वेति सन्देहोऽयं वाक्यशेषः। अविभागाद्वैतमङ्गाशङ्कायां अविभागाद्वैतस्थापकः। प्रत्येकं अन्तःप्रज्ञादि लक्षीकृत्य जाग्रदाद्यवस्थातद्वतोन्तःप्रज्ञादेरन्यत्वस्य भेदस्य वचनात्। मधुवदन्तःप्रज्ञाद्येकरूपमित्यर्थः। इच्छेति। प्रज्ञानमिच्छा करणव्युत्पत्त्याऽनयैव व्युत्पत्त्या प्रज्ञानं कृतिः भावव्युत्पत्त्यानन्दः प्रज्ञानानां घनं सम्भेदो मिश्रणमिति यावत्। प्रज्ञानघनम्। जीवेति। विज्ञानघनात्। इत्यनेनेति। जानातीति ज्ञः प्रकर्षेण ज्ञः प्रज्ञ इति व्युत्पादितेन। चैतन्येति। ज्ञानस्य कृत्यनधीनत्वादाश्रये लक्षणा। सुषुप्तीति। सुषुप्तावज्ञानेऽप्रज्ञत्वम्। आदिना मूर्च्छा। उभयेति। किन्त्वेकरूपत्वम्। एवेति। नत्ववस्थावत्त्ववाक्यानाम्।

भाष्यप्रकाशः ।

'अरूपवदेव ही'ति । हि यस्मात् अरूपवदेव ब्रह्म । मूर्तामूर्तब्राह्मणाज्जाग्रदाद्यवस्थाहेतुभूतस्थूलसूक्ष्म-शरीरद्वयरहितमेव ब्रह्म प्रतिपत्तव्यम्, कुतः, तत्प्रधानत्वात्, 'ततो यदुत्तरतरं तदरूपमनामय'-मिति, 'यन्मनसा न मनुते येनाहुर्मनो मतम्, तदेव ब्रह्म त्वं विद्धी'त्यादिश्रुतीनां तत्परत्वात्, अवस्थाधारैर्मनआदिकरणैः शून्यस्यैव ब्रह्मणः सम्यग्ज्ञानविषयत्वावधारणादित्यर्थः । अपिच, 'अथात आदेशो नेति नेति, न ह्यस्मादिति नेत्यन्यत् परमस्ती'ति मूर्तामूर्तरूपाभावादेशस्यैव पारमार्थि-कत्वं वदति, तदेवमुभयलिङ्गत्वनिषेधेनैकमात्ररूपत्वमुपाधिसाधारण्येन लक्षणमुक्तमित्याह ।

तदसङ्गतम् । सर्वत्रेति पदेन सर्वाधिष्ठानश्रुतय एवाभिप्रेयन्त इत्यत्र गमकस्यानुपलम्भात् । अथ जीवस्य पूर्वं निरूपितत्वात् तद्वद्ब्रह्मण्यप्युभयलिङ्गत्वशङ्कायां तन्निरासायास्य सूत्रस्य प्रवृत्त-त्वादर्थादेव तस्य हेतोः प्राप्तिरिष्यते, तदाप्येतादृशैकलिङ्गत्वस्य ब्रह्मलक्षणत्वमात्रं युक्तम् । श्रुति-सिद्धत्वात् । न तु लक्षणस्योपाधिसाधारण्यमपि युक्तम् । परमेश्वरस्य कारणसत्त्वोपाधिकत्वे प्रमा-णानुपलम्भात् । पूर्वं स्वयमपि 'न स्थानतोऽपी'त्यागामिसूत्रस्यैव प्रमाणत्वेनोपन्यस्तत्वात् । सर्व-कारणस्याद्वितीयस्य परस्य 'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्', 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः,' 'यथा सुदीप्तात् पावकाद्विस्फुलिङ्गाः,' 'दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः, अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात् परतः परः, एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चे'त्या-दिषु श्रुतिषु, 'तन्मायाफलरूपेण केवलं निर्विकल्पितम् । वाङ्मनोगोचरातीतं द्विधा समभव-द्बृहत् । तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका । ज्ञानं त्वन्यतमो भावः पुरुषः सोऽभिधीयत' इत्यादिषु पुराणेषु च निरुपाधिकत्वेनैव सिद्धेश्च । कार्योपाधिरयं जीवः कारणोपाधिरीश्वर इत्यादीनि तु ब्रह्मविष्ण्वादिपराणि । तत्रत्येश्वरपदस्य परमेश्वरपरत्वे नियामकस्य तेष्वदर्शनात् । नच निरु-पाधिकस्य निर्धर्मकत्वम् । तस्य शाङ्करमतनिरास एव निरस्तत्वात् । न चारूपवत्सूत्रविरोधः । रूपवद्वै-लक्षण्यस्यैव तत्र बोधनेन रूपराहित्यस्य तत्राबोधनीयत्वात् । 'आनन्दरूपममृतं यद्विभाति,' 'सच्चि-दानन्दरूपाये'त्यादिभिस्तत्र तद्रूपताया एव निर्धाराच्च । नच 'ततो यदुत्तरतरं तदरूप'मिति श्रुति-विरोधः । तदग्र एव 'सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः । सर्वव्यापी स भगवांस्तस्मात् सर्वगतः शिव' इत्यस्य मन्त्रस्य दर्शनात् । नापि 'यन्मनसा न मनुत' इत्यस्याः । तत्राप्युपास्यरूपस्यैव ब्रह्म-

रश्मिः ।

एवेति । 'नेति नेती'ति श्रुत्यैवकारः । तत इति । मूर्तामूर्तरूपद्वयात् । शून्यस्यैवेति । अशून्य-योगव्यवच्छेदकः । एवेति । मूर्तामूर्तरूपयोगव्यवच्छेदकैवकारः । एवेति । सर्ववाक्ययोगव्यवच्छेद-कैवकारः । पूर्वमिति । प्रथमपादे । पूर्वाध्याये वा । अर्थादेवेति । सङ्कुचितहेत्वाक्षेपादेव । एवकारः सर्वत्र शब्दशक्तियोगव्यवच्छेदकः । उपाधीति । एकरूपत्वोपाधिसाधारण्यमित्यर्थः । प्रमाणानुपलम्भं दर्शयन्ति स्म पूर्वं स्वयमिति । ईक्षत्यधिकरणे स्वयं विज्ञानेन्द्रभिक्षुणा । एवेति । पूर्वं स्वयमपि प्रमाणोपन्यासयोगव्यवच्छेदकैवकारः । एवेति । न तु सोपाधिकत्वेन । तत्रत्येति । कार्योपाधिरि-त्यादिवाक्यस्थेश्वरपदस्य । तेष्विति । वाक्येषु । निरस्तत्वादिति । यथाकथञ्चिदपि निर्धर्मकत्वा-सिद्धेः । एवेति । अन्ययोगव्यवच्छेदकः । एवेति । वदित्युक्त्या एवकारः । तत्रेत्यादि । ब्रह्मणि । तद्रूपतायाः आनन्दाकारतायाः सच्चिदानन्दाकारतायाः । एवकारस्तु श्रुतित्वात् । नचानन्देन रूप्यते व्यव-ह्रियते इत्यरूपमिति शक्यम् । व्यवहार्यत्वधर्मसिद्धेः । उपास्येति । अनुपास्ययोगव्यवच्छेदकैवकारः । नेदं परिदृश्यमानं इदं मनो न । यदिदं वैदिकोपासका उपासते तद्ब्रह्म विद्धीति । यदिदमुपासते नेदं

भाष्यप्रकाशः।

त्वेन निरूपणादुपास्यतयैव रूपादिसिद्धेरिदङ्कारान्तरप्रयोगबलेनास्माभिः प्रागेवोपपादितत्वादिति।

यत्पुनः, 'प्रकाशवच्चे'त्यादिसूत्रचतुष्टये प्रकाशतुल्यं ब्रह्म, चिन्मात्रमेव, न तु चिद्धर्मकमपि। सर्वज्ञ इति व्यवहारस्तु 'राहोः शिर' इतिवद्विकल्पमात्रः। यदि ह्यात्मनि ज्ञानाख्यं धर्मान्तरं कल्प्येत, तदा तद्व्यर्थं स्यादित्युक्तम्। तदपि मन्दम्। सर्वज्ञ इति व्यवहारस्येश्वरे ज्ञानधर्मकत्वस्य च 'यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तप'इति श्रुतिसिद्धत्वेन तद्विरोधस्य दुर्वारत्वात्। नच सा सोपाधिपरेति युक्तम्। परस्मिन्नुपाधिवैशिष्ट्याभावस्य साधितत्वादिति। यदपि वृद्धिह्राससूत्रे व्याख्यातम्। यद्यप्यम्बुवद्ग्रहणं नात्रास्ति, तथापि वृद्धिह्रासभाक्त्वम्, अन्तर्भावात्। प्रतिबिम्बरूपेणान्तःप्रवेशादेव सम्भवति। अतो दृष्टान्तदार्ष्टान्तिकयोर्जलबुद्ध्योरुभयोः सामञ्जस्यात् वृद्धिह्रासनियामकत्वरूपात् सादृश्यात् एवं प्रतिबिम्बितत्वं प्रतिपत्तव्यमित्यर्थ इति। तदपि तथा। सूत्रे वृद्धिह्रासभाक्त्वं प्रत्यन्तर्भावस्य सिद्धवद्धेतुत्वेन कथनात् वृद्धिह्रासभाक्त्वेनान्तर्भावस्वरूपसाधनस्य सूत्रविरुद्धत्वात्। अम्बुवदग्रहणादित्यस्य प्रतिपक्षहेतोराभासीकरणं विना वृद्धिह्रासभाक्त्वस्य साध्यसमत्वेन तस्यान्तर्भावस्वरूपसाधने सामर्थ्याभावाच्च। यदपि रूपरहितस्य बुद्ध्यादेः प्रतिबिम्बाधारत्वसमर्थनायाकाशे पर्वतनीलिमादिप्रतिबिम्बस्य प्रत्यक्षसिद्धत्वान्मठाकाशादौ शब्दप्रति-

रश्मिः।

ब्रह्मेति योजनां निरस्यन्ति स्म उपास्येति। यद्युपास्यस्य ब्रह्मत्वनिषेधः, तदा शून्यवादापत्तिः। 'यन्मनसा न मनुते येनाहुर्मनो मतम्। तदेव ब्रह्म त्वं विद्धि' इत्यत्राधोक्षजस्य मनोबोधकस्याहार्यज्ञानविषयस्य 'कश्चिद्धीरः प्रत्यगात्मानमैक्षत्' 'अपिसंराधन' इति श्रुतिसूत्रयोरविषयत्वादुपास्यस्य तु कल्पितरूपस्य तपोविषयत्वादुपास्यतयैव रूपादिसिद्धेरित्यर्थः। एवकारः 'चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः। उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पने'ति रामतापिनीयात्। रूपादीति। आदिना रूपस्थानां देवतानां च पुंरूपाङ्गव्यङ्गादिकल्पना ग्राह्या। 'नेदं यदिदमुपासत' इत्यत्रेदङ्कारान्तरं बोध्यम्। प्रागेवेति। यदुक्तं प्रकाशवच्चावैयर्थ्यादित्येकादशसूत्रेत्यादि तदप्रपञ्चितमिति प्रपञ्चयन्ति स्म यत्पुनरिति। एवकारव्यावर्त्यमाह नन्विति। सर्वज्ञ इति। ज्ञ इति ज्ञानाश्रयः जानातीति ज्ञ इतिव्युत्पत्तेः। विकल्पेति। विकल्प एव। राहोः शिरः राज्ञः पुरुषः इति प्रयोगाभ्यां विकल्पमात्रः। तदिति। धर्मान्तरं व्यर्थं धर्मिणैव प्रकाशात्। 'यः सर्वज्ञः सर्ववित्'। साधितत्वादिति। पूर्वं अम्बुवदग्रहणसूत्रमग्रे वक्तव्यमत आहुः यदपीति। नात्रेति। बुद्धावुपाधौ नास्ति। ब्रह्मणो बिम्बस्य नीरूपत्वात्प्रतिबिम्बाश्रयाया बुद्धेरस्वच्छत्वात्। वृद्धीति। एकरूपस्य ब्रह्मणो वृद्धिह्रासभाक्त्वम्। एवेति। बुद्धेर्ज्ञानात्मिकायाः शुद्धत्वात्सतो प्रजाभिरेकरूपस्य नीरूपत्वाभावादेवकारः। उभयेत्यादिसूत्रांशार्थमाह अतो दृष्टान्तेति। जलबुद्ध्योरिति। अम्बुवत्सूत्रोक्तं जलं दृष्टान्तः। अन्तर्भावपदोपात्तप्रतिबिम्बाक्षिप्तबुद्धिर्दार्ष्टान्तिकरूपा। सामञ्जस्यादित्यस्य व्याख्या वृद्धिह्रासेति। उभयोः सादृश्यात्। सूत्रेति। सूत्रोक्तकार्यकारणांशे विरुद्धत्वात्। किञ्च। अम्बुवदित्यादि। ब्रह्म जडजीवधर्मयोगात्सर्वकामत्वादिधर्माभाववत्, अम्बुवदग्रहणात्, देवदत्तवत् इत्यस्य प्रतिपक्षत्वं यादृशानुमाने तदुच्यते। ब्रह्म जडजीवयोगात्सर्वकामत्वादिधर्मवत्। 'यथा मधु मधुकृत' इत्यादिश्रुतिविषयत्वात्। कृष्णावतारवदिति। तथाच प्रतिपक्षस्य हेतोरित्यर्थः। तस्येत्यादि। ब्रह्म प्रतिबिम्बरूपेणान्तःप्रवेशं वृद्धिह्रासभाक्त्वात् इत्यत्र तस्य वृद्धिह्रासभाक्त्वस्य हेतोः। अन्तर्भावेति। अन्तर्भावस्य स्वरूपं प्रतिबिम्ब-

भाष्यप्रकाशः ।

बिम्बस्य स्मृतिसिद्धत्वाच्चेत्युक्तम् । तदपि तथा । आकाशनीलिमप्रतीतेराकाशस्वभावादेवोपपत्तौ पश्चाद्बाधाभावेन धियां प्रमात्वस्यौत्सर्गिकत्वेन च तस्याः प्रमात्वसिद्धौ नीलिम्नि पर्वतप्रतिबिम्बत्वबुद्धेरभिमानमात्रत्वात् । प्रतिध्वनौ शब्दप्रतिबिम्बत्वस्य स्मृतावनुक्तत्वेन तस्यापि तथात्वात् । नच 'छायाप्रत्याह्वयाभासा असन्तोप्यर्थकारिण' इत्येकादशस्कन्धवाक्ये प्रतिध्वनेरसत्त्वस्योक्तत्वात् सादृश्यस्य चोपलभ्यमानत्वात् तस्य प्रतिबिम्बरूपत्वं कल्प्यत इति वाच्यम् । नटकल्पितपारावतादिरुतवन्मायिकशब्दान्तरत्वस्याप्युक्तहेतुभ्यां शक्यवचनत्वेन तत्स्वरूपानिश्चयात् । इदं यथा तथा 'न प्रतिस्फुरणं रूपरहितस्य कदाचने'ति सर्वनिर्णयकारिकाया आवरणभङ्गे सम्यक् व्युत्पादितमिति न पुनः प्रपञ्च्यते । अतोऽम्बुवदग्रहणस्याभासीकरणं चतुर्वक्त्रस्याप्यशक्यमिति सूत्रव्याख्यानमसमञ्जसमेव । एवमग्रेप्यस्ति । तथापि तद्दूषणस्यानावश्यकत्वादुपरम्यते ।

रामानुजाचार्यास्तु । 'न स्थानतोपी'त्यारभ्य 'अतोऽनन्तेने'त्यन्तं षोडशसूत्रमेकमधिकरणमङ्गीकुर्वन्ति । 'उभयव्यपदेशा'दित्यारभ्य चतुःसूत्रमपरम् ।

तत्र प्रथमेऽधिकरणे पूर्वग्रन्थे जीवस्य वैराग्योत्पादनाय दोषान् दर्शयितुं जीवस्यावस्थाविशेषा निरूपिताः, इदानीं ब्रह्मप्राप्तीच्छाजननाय प्राप्यस्य ब्रह्मणो निर्दोषत्वं कल्याणगुणत्वं च प्रतिपादयितुमारभत इति प्रतिज्ञाय, देहसम्बन्धाज्जीवानां दोषसम्बन्धोऽतो देहसम्बन्धोऽपुरुषार्थः, स चाकर्मवश्यस्यापि परमात्मनोऽन्तर्यामितया सर्वचिदचिद्वस्तुषु विद्यमानत्वादस्त्येवेति प्राप्ते, आह, 'न स्थानतोपि परस्ये'ति । पृथिव्यादिस्थानतोपि परस्य ब्रह्मणो नापुरुषार्थसम्बन्धः । कुतः । उभयलिङ्गं सर्वत्र हीति । यतः सर्वत्र श्रुतिस्मृतिषु परं ब्रह्म उभयलिङ्गं निरस्तसमस्तदोषत्वकल्याणगुणाकरत्वलक्षणोपेतमभिधीयते । 'अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्प' इत्यादि, 'समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशोद्धृतभूतसर्गः । तेजोबलैश्वर्यमहावबोधः सुवीर्यशक्त्यादिगुणैकराशिः । परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे,' 'समस्तहेय-

रश्मिः ।

रूपेणान्तःप्रवेशः तस्य साधन इत्यर्थः । मठेति....। एवेति । प्रतिबिम्बयोगव्यवच्छेदकः । ननु शब्दगुणके आकाशे नीलिमप्रतीतिर्भ्रमो न स्वभावादित्यत आहुः पश्चादिति । यदि भ्रमात्मिका स्यात्पश्चाद्बाध्येत तदभावेन । तस्या इति । नीलिमप्रतीतेः । तस्यापीति । प्रतिबिम्बत्वस्यापि । तथात्वाद्स्मार्तत्वात् । सादृश्यस्येति । प्रतिबिम्बत्वप्रयोजकस्य । तस्येति । प्रत्याह्वयस्य ध्वनिपर्यायस्य । उक्तेति । प्रत्यक्षसिद्धश्रुतिसिद्धत्वाभ्याम् । तत्स्वरूपेति । प्रतिबिम्बस्वरूपानिश्चयात् । एवेति । सामञ्जस्ययोगव्यवच्छेदकैवकारः । पूर्वग्रन्थ इति । 'सन्ध्य'सूत्रमारभ्य 'मुग्धेऽर्धसम्पत्ति'सूत्रान्ते । दोषानिति । स्वप्नादिदोषान् । इच्छाया ज्ञानजन्यत्वाच्छाब्दज्ञानविषयत्वमाहुः प्राप्यस्येत्यादि । अस्त्येवेति । अयोगव्यवच्छेदकैवकारः । नीलं सरोजं भवत्येवेतिवत् । स्वशक्तीति । स्वशक्तिर्माया जीवश्च तयोर्लेशेन उद्धृतः भूतानामन्तर्यामिब्राह्मणोक्तानां पृथिव्यादीनां सर्गः कारणजन्मात्मा येन । अत्र विशिष्टाद्वैतमनुसन्धेयम् । 'अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः' । 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वर'मिति श्वेताश्वतरश्रुतिः । अस्मात् अस्माद्वा 'ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे निषेदु'रित्यनयोक्तात्पुरुषात् । विश्वता विश्वसमूहः । अन्यो जीवः । सुवीर्येति । आदिना । सकला इति क्लेशादय इत्यस्य विशेषणम् । एतमिति । उभयलिङ्गं निरस्तसमस्तदोषत्वकल्याणगुणाकरत्वलक्षणं पूर्वोक्तं समीपतरवर्तिनमर्थम् । ऊहापोहौ तर्कानुस्यूतत्वरूपौ

भाष्यप्रकाशः।

रहितं विष्ण्वाख्यं परमं पद'मित्यादि चेति सूत्रं व्याख्यायैतमेवार्थमग्रिमसूत्रेणोहापोहपूर्वकं स्थापयन्ति।

द्वितीये तु मूर्तामूर्तब्राह्मणे मूर्तामूर्तप्रपञ्चस्य ब्रह्मणि रूपत्वमुपदिश्यते। 'अथात आदेश' इत्यादिना मूर्तामूर्तरूपतया ब्रह्मणो या इयत्ता, सा प्रतिषिध्यते। 'न ह्येतस्मा'दित्यनेन ब्रह्मणोऽन्यदुत्कृष्टं नास्तीत्युक्त्वा, तदुपपादनाय 'अथ नामधेय'मित्यादिना नामनिर्वचनान्तेन प्राणशब्दनिर्दिष्टेभ्यश्चेतनेभ्योऽप्येष सत्यम्, कदाचिदपि ज्ञानादिसङ्कोचाभावादित्युक्तम्। तथा 'प्रधानक्षेत्रज्ञपतिर्गुणेश' इत्यादिश्रुतिष्वप्ययमर्थ उक्तः। तस्याचिद्वस्तुनो ब्रह्मरूपत्वप्रकार इदानीं चिन्त्यते, ब्रह्मणो निर्दोषत्वसिद्ध्यर्थम्। किमस्याचिद्वस्तुनो ब्रह्मरूपत्वमहिकुण्डलन्यायेन, उत प्रभाप्रभावतोरिवैकजातियोगेन, उत जीवस्येव विशेषणविशेष्यतयांशांशिभावेनेति। इह स्थाप्यमानं विशेषणविशेष्यभावमङ्गीकृत्य, 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्,' 'तदनन्यत्वमारम्भणशब्दादिभ्य' इत्यत्र सूक्ष्मचिदचिद्विशिष्टाद्ब्रह्मणः स्थूलचिदचिद्विशिष्टस्य ब्रह्मण उत्पत्तिरनन्यत्वेनोक्ता, किं युक्तम्, अहिकुण्डलवदिति, कुतः, उभयव्यपदेशात्। 'ब्रह्मैवेदं सर्वमात्मैवेदं सर्व'मिति तादात्म्यस्य 'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी'ति भेदस्य व्यपदेशाचाहिकुण्डलभावर्जुभाववत् तस्यैव ब्रह्मणः संस्थानविशेषा एवाचिद्वस्तूनि। अग्रिमसूत्रे वाशब्दः पक्षव्यावृत्त्यर्थः। ब्रह्मस्वरूपस्यैवाचिद्रूपेणावस्थाने भेदश्रुतयो ब्रह्मणोऽपरिणामित्ववादिन्यश्च बाधिता भवेयुः, अतो यथा प्रभातदाश्रययोर्भिन्नयोरपि तेजस्त्वेन तादात्म्यम्, एवमचित्प्रपञ्चस्यापि ब्रह्म-

रश्मिः।

तत्पूर्वकम्। अग्रे स्फुटिष्यति। उपेति। ऊहापोहरूपाय। माध्यन्दिनपाठभेदादाहुः अथ नामेति। प्राणशब्दनिर्दिष्टेभ्य इत्यनेनान्वयः। चेतनेभ्यो जीवेभ्यः 'मायया सन्निरुद्ध' इति श्रुतेः। विशिष्टाद्वैतात्। न तु प्राणा नापीन्द्रियाणि। 'प्राणा वै सत्यं तेषामेष सत्य'मिति श्रुत्यर्थ उक्तः। प्रधानेति। 'प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारबन्धस्थितिमोक्षहेतुः। स तन्मयो ह्यमृत ईशसंस्थोऽजः सर्वगो भुवनस्यास्य गोप्ता। य ईशे अस्य जगतो नित्यमेव नान्यो हेतुर्विद्यत ईशनाय। यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै। तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये' इति। अयमर्थ इति। विशिष्टमद्वैतम्। प्रधानं प्रकृतिः। क्षेत्रज्ञा जीवाः तेषां पतिः मूर्तामूर्तोत्कृष्टः। गुणत्रयेशः प्रधानेशः। यथायथं संसारेण बन्धस्य हेतुः। क्षेत्रज्ञः स्थितिहेतुः। प्रधानं विशिष्टाद्वैतात्। मोक्षहेतुः प्रधानक्षेत्रज्ञपतिरीश्वरः। स प्रसिद्ध ईश्वरस्तन्मयः प्रधानक्षेत्रज्ञमयः। ईशप्रलयोऽजो जीवः। एवेति। अवधारणेन। विदधाति उत्पादयति। दधाति पुष्णाति च। एवमयमर्थ उक्तः। षोडशसूत्र्यामुक्त्वा चतुःसूत्र्यामाहुः तस्याचिदिति। प्रधानवस्तुनः। निर्दोषत्वेति। विशिष्टत्वेऽपि अद्वैतत्वे दोषप्राप्तेर्निर्दोषत्वसिद्ध्यर्थम्। अहीति। अहेः कुण्डलं अहिकुण्डलिका अहिः कुण्डलिकेति प्रतीतिद्वयात्। एकजातीति। तेजस्त्वजातियोगेनेत्यर्थः। विशेषणेति। ब्रह्मणोंऽशो जीव इति जीवस्यांशि ब्रह्मेति च प्रत्ययात्। प्रकृतिश्चेति। प्रथमाध्यायसमाप्तौ। तदनन्यत्वसूत्रं पूर्वाध्याये। भेदस्येति। कर्ता गुणेशः करणं जीव इति भेदस्तस्य। अहेः कुण्डलभावः ऋजुभावश्च तद्वत्। तस्यैवेति। चिदचिद्विशिष्टस्यैव। उक्तश्रुतिभ्य एवकारः। एवेति। उक्तश्रुतिभ्य एवैवकारः। अग्रिमेति। प्रकाशाश्रयवद्वेति सूत्रे। पक्षेति। यथा स्थाणुर्वा पुरुषो वेत्यत्र। एवेति। स्वशक्तिलेशयोगव्यवच्छेदकैवकारः। भेदश्रुतय इति। 'प्रधानक्षेत्रज्ञपतिर्गुणेश' इत्यादय उक्ताः। प्रधानक्षेत्रज्ञानां पतिरिति भेदे षष्ठी। अपरीति।

भाष्यप्रकाशः।

रूपत्वमिति। 'पूर्ववद्वे'त्यग्रिमसूत्रे वाशब्दः पक्षद्वयव्यावृत्त्यर्थः। एकस्यैव द्रव्यस्यावस्थाविशेषयोगेपि ब्रह्मस्वरूपस्यैवाचिद्द्रव्यस्वरूपत्वादुक्तदोषादनिर्मोक्षप्रसङ्गः। अथ प्रभातदाश्रययोरिवाचिद्ब्रह्मणो-र्ब्रह्मत्वजातियोगमात्रं विवक्षितम्, तदा अश्वत्ववद्ब्रह्मापीश्वरे चिदचिद्वस्तुनोश्चानुवर्तमानं सामा-न्यमिति सकलश्रुतिस्मृतिव्यवहारविरोधः। अतः पूर्ववदेव, 'अंशो नानाव्यपदेशात्' 'प्रकाशादिवत्तु नैवं पर' इति जीववत् पृथक्स्थित्यनर्हविशेषणत्वेनाचिद्वस्तुनो ब्रह्मांशत्वम्, विशिष्टवस्त्वेकदेशत्वे-नाचिद्व्यवहारो मुख्यः, विशेषणविशेष्ययोः स्वरूपभेदेन भेदव्यवहारोपि मुख्य इति ब्रह्मणो निर्दोषत्वं रक्षितम्। तदेवं प्रकाशजातिगुणशरीराणां मणिव्यक्तिगुण्यात्मनोऽपृथक्सिद्धविशेषण-तया यथांशत्वम्, तथेह जीवस्याचिद्वस्तुनश्च ब्रह्म प्रत्यंशत्वम्। किञ्च। 'स एष महानज आत्मा अजरः' 'नास्य जरयैतज्जीर्यत' इत्यादिभिर्ब्रह्मणोऽचिद्धर्मप्रतिषेधादपि विशेषणविशेष्यत्वेनैवांशांशि-भाव इत्यर्थः। अतः सूक्ष्मचिदचिद्वस्तुविशिष्टं कारणभूतं ब्रह्म, स्थूलचिदचिद्विशिष्टं वस्तु कार्यभूतं ब्रह्मेति कारणात् कार्यस्यानन्यत्वं कारणभूतब्रह्मविज्ञानेन कार्यस्य ज्ञाततेत्यादि सर्वमुपपन्नम्। ब्रह्मणो निर्दोषत्वेन कल्याणगुणाकरत्वेन चोभयलिङ्गत्वमपि सिद्धमित्याहुः।

तत्र प्रथमे द्वितीये च यदधिकरणारम्भप्रयोजनमुक्तं तत्र वयमुदासीनाः। ब्रह्मप्राप्तीच्छा-जननाय ब्रह्मणो निर्दोषत्वसाधनाय चेदानीं ब्रह्मणो निर्दोषकल्याणगुणाकरत्वे निरूपणीये जिज्ञा-सासूत्रमारभ्य निरूपितस्य ब्रह्मस्वरूपनिरूपकग्रन्थस्य निष्प्रयोजनकत्वापत्तेः। तेनैव तथात्वसिद्धावे-तदधिकरणद्वयवैयर्थ्यप्रसङ्गाच्च। तेनासिद्धाविदानीमपि तद्विषयवाक्यैरेव निर्णयस्य कर्तव्यतया तत्सिद्धेः सुतरां दौर्घट्यादिति।

यत् पुनर्द्वितीये कारणभूतस्य ब्रह्मणश्चिदचिद्विशिष्टत्वमुक्तम्। तच्चिन्त्यम्। आदिसृष्टिप्रा-क्काले वैशिष्ट्यस्य वक्तुमशक्यत्वात्। तत्र सत्तत्सत्याक्षरादिपदैः कारणस्य निर्देशात्, तेषां च 'ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' 'सत्यं ज्ञानमनन्तं ब्रह्म' 'एतद्वै तदक्षरं गार्गी'त्यादि-

रश्मिः।

सकला न यत्र क्लेशादयः सन्ती'ति 'समस्तहेयरहितं विष्ण्वाख्यं परमं पद'मित्याद्याः। एवमिति। ब्रह्मा-चित्प्रपञ्चानां भिन्नानामपि विशिष्टत्वेन तादात्म्यमचित्प्रपञ्चस्यापि ब्रह्मस्वरूपत्वमित्यर्थः। पक्षद्वयेति। ब्रह्मणः संस्थानविशेषा एवाचिद्वस्तूनि, ब्रह्मस्वरूपस्यैवाचिद्रूपेणावस्थानमिति पक्षद्वयव्यावृत्त्यर्थः। उक्तेति। 'भेदश्रुतयो ब्रह्मणोऽपरिणामी'त्यादिग्रन्थोक्तात् दोषात्। अपहतपाप्मत्वादिप्रकारकज्ञाना-विषयत्वेपि तज्ज्ञानादनिर्मोक्षप्रसङ्गः। मोक्षनिष्क्रान्ताभावप्रसङ्गः। मोक्षनिष्क्रान्तशब्दो भावप्रधानः। अश्वत्ववदिति। 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदि'त्यस्य वासनयोपमानम्। ब्रह्मापीति। मनोवा-गविषयवस्तु महेश्वरत्वं वा सामान्यमित्यनेनान्वयः। तादृशं तत्त्वस्त्विति। विशिष्टाद्वैतम्। अतो भेदप्रतिपादिकाः सकलश्रुतिस्मृतयस्तासां व्यवहारास्तेषां विरोध इत्यर्थः। पूर्ववदेवेति सौत्रं पदं व्याख्यान्ति स्म अंशो नानेति। पृथगिति। चिदचिद्विशिष्ट ईश्वर इत्यत्रेदं बोध्यम्। निर्दोषत्वं मायाया भेदेन मायाकृतदोषान्निष्क्रान्तत्वम्। प्रकाशेत्यादि। प्रकाशो मणिनिष्ठः। जातिर्व्यक्तिनिष्ठा। गुणो गुणिनिष्ठः। शरीरमात्मनिष्ठम्। अपृथगिति। मणिः प्रकाशवान्, व्यक्तिर्जातिमती, गुणोस्त्य-स्मिन्गुणी, शरीरमचिद्वस्तु, शरीरवानात्मा इत्येवमपृथक्सिद्धे वस्तुनि विशेषणतयेत्यर्थः। तेनैवेति। पूर्वग्रन्थेन। एवकारोऽधिकरणद्वयारम्भप्रयोजनगोगन्यवच्छेदकः। तेनेति। पूर्वग्रन्थेन। एवेति। अर्थैक्ये प्रतिपादकैक्यस्य युक्तत्वादेवकारः। तत्सिद्धेरिति। असिद्धसिद्धेरित्यर्थः। तत्रेति।

१. ब्रह्मत्वमपीति मूलप्रकाशे टिप्पणम्। २. अभेदव्यवहारः। ३. वस्तुविशिष्टम्। ४. पृथक्स्थित्यनर्हविशेषणत्वेन।

भाष्यप्रकाशः ।

स्मृतिश्रुतिभिः केवलब्रह्मवाचकत्वावगमात् । सुबालोपनिषद्यपि पृथिव्यादीनां स्वस्वकारणे लयोक्त्यनन्तरं 'तमःपरे देवे एकीभवती'ति शब्दान्तरेण तमसो मूलकारणभूतपराभेदस्यैव बोधनात् । 'लीङ् श्लेषणे' 'श्लिष आलिङ्गने' इति धात्वर्थविचारे लयस्याविभागरूपत्वेन सिद्ध्या तद्विलक्षणस्यैकीभावस्य भेदाभावरूपेणैव सिद्धेर्वैपरीत्यस्य वक्तुमशक्यत्वात् । कारणप्रायपाठेन कारणतयैव परस्यापि देवस्य सिद्धेरिति । इदं यथा तथा समन्वयसूत्रे प्रतिज्ञादृष्टान्तानुपरोधसूत्रे तदनन्यत्वादिसूत्रे च व्युत्पादितमिति न पुनः प्रपञ्च्यते ।

एतन्मतचौरः शैवोऽप्येतेनैव दत्तोत्तरः, प्रहस्तेऽपास्तश्च ।

माध्वास्तु । 'न स्थानतोऽपी'त्यादिविंशतिसूत्र्यां त्रिसूत्र आद्ये अधिकरणे स्थानादिभेदकृताया भेदप्रतीतेः स्वरूपाभेदाबाधकत्वादेक एव सर्वत्र परमेश्वर इति, 'अरूपवदेवे'ति द्वितीये चतुःसूत्रे अरूपवत्त्वमप्राकृतरूपवत्त्वायेति, 'अत एव चे'त्येकसूत्रे तृतीये जीवस्य ब्रह्मभिन्नत्वाय प्रतिबिम्बत्वमुच्यत इति, 'अम्बुव'दित्येकसूत्रे चतुर्थे भक्तिं विना जीवस्य न स्वरूपसुखाभिव्यक्तिरिति, 'वृद्धिह्रासे'तिद्विसूत्रे पञ्चमे भक्तिः सर्वत्र नैकविधेति तत्फलदानेपि तारतम्यमिति, 'प्रकृतैतावत्त्वे'त्येकसूत्रे षष्ठे भगवान् पालकोपीति, 'तदव्यक्त'मिति चतुःसूत्रे 'प्रकाशवच्चावैशेष्य'मिति भेदनेन पञ्चसूत्रतां कृत्वा, तत्र सप्तमे परमात्मा सदा अव्यक्तस्वभावः, स च भक्तिसाध्यात् प्रसादाद्व्यक्तो भवतीति, 'उभयव्यपदेशा'दिति चतुःसूत्रेऽष्टमे आनन्दादिरूपोपि श्रुतिबलादानन्दादिगुणकोपीति सर्वत्र माहात्म्यमेवोच्यते भक्त्यर्थमित्याहुः ।

तत्रापि वयमुदासीनाः । आद्ये हेतोरध्याहार्यत्वात् । द्वितीयार्थस्य प्रागपि सिद्धत्वेन निष्प्रयोजन-

रश्मिः ।

कारणभूतप्रतिपादिकासु । शब्दान्तरेणेति । लयशब्दादन्येन 'एकीभवती'ति शब्देन । एवेति । लययोगव्यवच्छेदक एवेति । अविभागेति । द्वयोर्धर्मत्वेनार्धनारीश्वरवदविभागरूपत्वेन । एव सिद्धेरिति । सैन्धवखिल्य उदके प्रास्ते तथादर्शनादेवकारः । दृष्टान्तेन सिद्धेरित्यर्थः । वैपरीत्यस्येति । अविभाग एकीभावः भेदाभावो लय इति वैपरीत्यं तस्य । कारणप्रायेति । कारणभूतप्रतिपादिकासु प्रायपाठो बोध्यः । कारणतयैवेति । कार्यांशतयेत्यस्य योगस्तस्य व्यवच्छेदकः ।

शैव इति । भगवान् शैवः । एतेनैवेति । रामानुजाचार्यमतदूषकग्रन्थेन । प्रकारभेदाभावाद्वेति ।

अप्राकृतेति । तथाच रूपशब्दः प्राकृतरूपे लाक्षणिक इति भावः । भक्तिं विनेति । भक्तिं विनाम्बुवदग्रहणात् जीवस्य न तथात्वं स्वरूपसुखाभिव्यक्तिमत्त्वं स्वरूपसुखाभिव्यक्तिरिति यावत् । इत्यर्थकात्तथा । भक्तिः सर्वत्रेति । अत्र तु व्याख्यासुधायामर्थः कृतः । 'भक्तेर्वृद्धिह्रासभाक्त्वं ब्रह्मादीनां भक्तत्वेन्तर्भावात् । एवं भक्तितारतम्येऽङ्गीकृत एवेश्वरस्योभयान्प्रति सामञ्जस्यसंभवादिति ।' पालकोपीति । अत्र पूर्वपक्षप्रदर्शनपरं भाष्यम् । 'सृष्टिसंहारकर्तृत्वमेवास्य, न पालकत्वम् । स्वतःसिद्धेरिति । तदयुक्तम् । सृष्टिसंहारकर्तृत्वाभ्युपगमस्य व्यर्थत्वात् । स्वतःसिद्धेरित्यत्रास्येत्यप्रतीतेश्च । स्थितेरित्यध्याहारेपि स्वभाववादाश्रयणस्य सृष्टिसंहारसाम्येन तत्कर्तृत्वाभ्युपगमानुपपत्ते'रिति ग्रन्थात् । भेदनेनेति । 'प्रकाशादिवच्चावैशेष्यं प्रकाशश्च तत्कर्मण्यभ्यासा'दिति सूत्रभेदनेनेत्यर्थः । सप्तम इति । अधिकरणे । तदव्यक्तसूत्रार्थमाहुः परमात्मेति । अभक्तानामिति बोध्यम् । प्रकाशश्चेति सूत्रार्थमाहुः स चेति । प्रकाशपदार्थो व्यक्त इति । श्रुतीति । 'आनन्दं ब्रह्म' 'एष ह्येवानन्दयाती'ति श्रुतिबलात् । सर्वत्रेति । उभयव्यपदेशे । देवत्वं माहात्म्यम् । एवकारोऽभेदयोगव्यवच्छेदकः । हेतोरिति । भेदवा-

१. अज्ञाते कः ।

## परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥ ३१ ॥ ( ३-२-१० )

**धर्मिधर्मविरोधः परिहृतः । धर्म्यन्तरविरोधपरिहारार्थमधिकरणमारभते । तत्र पूर्वपक्षमाह । परमतः । अतोपि ब्रह्मणः परमन्युत्कृष्टं फलमस्ति । तत्र वैदिकहेतवः । सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः । यद्यपि समन्वय एवैते दोषाः**

भाष्यप्रकाशः ।

कत्वात् । तृतीयेपि जीवस्य मुख्यप्रतिबिम्बतायां मिथ्यात्वापत्तेर्भिन्नत्वस्य प्रागेव साधितत्वाच्च सूत्रवैयर्थ्यमित्यादिदोषाणां भानादिति ॥३०॥ इति नवमं प्रकाशाश्रयवद्वेत्यधिकरणम् ॥ ९ ॥

**परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥३१॥** सङ्गतिकथनपूर्वकमधिकरणप्रयोजनमाहुः **धर्मीत्यादि** । ब्रह्म सर्वधर्मशून्यम्, न तु धर्मीति, धर्माश्चेतरेतरविरुद्धाः न ह्येकत्र सम्भवन्तीति, धर्माश्च कार्याः, न ब्रह्मेत्यादिरूपो यो विरोधः, सोधिकरणचतुष्टयेन परिहृतः । अतः परं धर्म्यन्तरस्यापि सहावस्थानमाशङ्क्य तत्परिहारार्थमारभते । तथाच प्रसङ्गः सङ्गतिरुक्तविरोधपरिहारश्च प्रयोजनमित्यर्थः । तत्र यथा ज्ञेयाद्ब्रह्मणः फलरूपमुत्कृष्टम्, एवं ततोप्यन्यदुत्कृष्टमस्ति नवेति सन्देहः । तद्बीजं तु 'अक्षरात् परतः परः' 'पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गति'रिति व्यपदेशः सेत्वादिव्यपदेशश्च । तयोः पूर्वपक्षादेव बुध्यमानत्वात् तमेव वदतीत्याशयेनाहुः **तत्रेत्यादि** । **तत्र वैदिकहेतव इति** । फलान्तरसत्त्वे वैदिका एव हेतवः । तथाच

रश्मिः ।

दोनुसन्धेयः । प्रतिपिपादयिषितोभयलिङ्गे हेतुतयोभयलिङ्गनिषेधो हेतुः । भेदे प्रतिपिपादयिषिते उभयलिङ्गनिषेधो न हेतुरतोत्र परस्योभयलिङ्गं सर्वत्र स्थानतोपि नेत्यतोऽभेदः प्रसिद्धः प्रतिपत्तव्यः । अप्राकृतरूपवत्त्वं प्रसिद्धं प्रतिपत्तव्यम् । एक एव सर्वत्रेश्वर इति एवं हेतोरभेदरूपस्याप्राकृतरूपवत्त्वस्य चाध्याहार्यत्वात् । **द्वितीयार्थस्येति** । अत्राधिकरणे प्रथमसूत्रेण रूपराहित्यमुपपाद्य 'प्रकाशवच्चावैयर्थ्य'मिति सूत्रेण रूपवत्त्वविषयाणां श्रुतीनां वैयर्थ्यमाशङ्क्य विलक्षणरूपत्वाङ्गीकारेण परिहृतमित्येवं व्याख्यासुधोक्तस्येत्यर्थः । **प्रागपीति** । 'न स्थानतोपी'त्यधिकरणेपि । हेत्वन्तरमाहुः **भिन्नत्वस्येति** । **प्रागेवेति** । भेदघटितसूत्रेषु । **इत्यादीति** । आदिना प्रसिद्धार्थानां सूत्राविषयवाक्यप्रतिपाद्यत्वं दोषः ॥ ३० ॥ इति नवमं प्रकाशाश्रयवद्वेत्यधिकरणम् ॥ ९ ॥

**परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥ ३१ ॥ सङ्गतीति** । प्रसङ्गसङ्गतिरिति वक्ष्यन्ति । **धर्मीति** । 'ब्रह्मैवेदमग्र आसीत्' 'आत्मैवेदमग्र आसी'दिति पुरुषविधब्राह्मणे । प्रयोगाभिप्रायेण । स्पष्टं द्वितीयस्कन्धनवमाध्याये ब्रह्माणं प्रति स्वरूपदर्शने । 'द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ती'ति गृह्यसूत्रम् । **सहेति** । 'स्वरूपं द्विविधं चैव सगुणं निर्गुणं तथे'ति श्रीगोपालतापिनीयात् । न तु ब्रह्म प्रसिद्धम्, 'वासुदेव आत्मे'ति द्वितीयसुबोधिन्युक्तदिशा सहानवस्थानम् । **ज्ञेयादिति** । 'ब्रह्मविदाप्नोति पर'मित्याद्यनुसन्धेयम् । **तत्त इति** । **फलरूपात्** । **अक्षरादिति** । परतोऽक्षरादित्यन्वयः । अयमेको व्यपदेशः द्वितीयकोटौ बीजम् । प्रथमकोटौ बीजमाहुः **सेत्वादिव्यपदेश इति** । सेतून्मानसम्बन्धभेदव्यपदेशः । एतेऽत्र यथाक्रमं बीजे बोध्ये । अग्रे स्पष्टे । **एवेति** । संशयग्रन्थयोगव्यवच्छेदक एवकारः । **तमेवेति** । पूर्वपक्षम् । **एवेति** । पूर्ववत् । **फलेति** । फलमक्षरात्परं ततोऽन्यत्फलान्तरं परमत इति सूत्रभागोक्तम् । तत्सत्त्वे वैदिका हेतवो वक्तव्याः, अन्यथा 'अक्षरात्परतः पर'इत्याद्युक्तश्रुतिभ्यां फलान्तरबोधेऽवक्तव्यत्वं सूत्रस्य स्यात् । वैदिका एवेत्येवकारस्तु वैदिकहेतुसत्त्वेऽन्योक्तौ प्रतारकत्वं स्यादिति

**परिहृताः, तथापि स्वरूपविरोधपरिहारप्रस्तावात् पुनरुच्यन्ते। सर्ववाक्यप्रतिपाद्यमेकमेवेत्यपि न सिद्धम्। एतैर्हेतुभिः परिच्छेदेन धर्मिभेदे सिद्धे न पूर्वाधिकरणसिद्धान्तविरोधः। ननु समन्वयेन ब्रह्मत्वमुत्तरपादेनैक्यं पूर्वाधिकरणेनाविरोध इति व्यर्थमिदमधिकरणमिति चेत्। न। अर्थबलविचारोयम्। समन्वये चोत्तरपादे च शब्द-**

---

भाष्यप्रकाशः।

शब्दबलेन अद्वितीयत्वादिवदर्थबलेन फलान्तरस्यापि सिद्ध्या प्राप्ते विरोधे वेदान्तवाक्यार्थनिर्धाराय प्रवृत्तस्यैतद्विचारणमावश्यकमिति बोधितम्। ननु सेत्वादिवाक्यानां पूर्वं विचारितत्वात् पुनः कथनस्य किं प्रयोजनमित्यत आहुः **यद्यपीत्यादि**। सर्वेषां वेदान्तानां ब्रह्मपरत्वविचारे यद्यप्येते सेत्वादिपदोक्ता अवान्तरवर्तित्वादयः परिहृताः, तथापि परस्वरूपविरोधित्वेन बाधका इत्येवं न परिहृता इति तथा परिहर्तुं पुनरुच्यन्ते। **किञ्च**। तेषु तेषु वाक्येषु तत्तद्रूपाणां प्रतिपादनात् सर्ववाक्यप्रतिपाद्यमेकमेवेत्यपि न सिद्धम्, अतस्तत्साधनायापि पुनरुच्यन्त इत्यर्थः। ननु पूर्वाधिकरणे ब्रह्मणः परत्वमद्वितीयत्वं च सिद्धम्, अत्र चैतैर्हेतुभिस्तदाक्षिप्यत इत्याक्षेप एवात्र सङ्गतिरस्तु, न प्रसङ्ग इत्यत आहुः **एतैरित्यादि**। सेत्वादिभिर्हेतुभिः परिच्छेदेन ब्रह्मणोऽवान्तरत्वनिश्चयेन धर्म्यन्तरे सिद्धे तस्मिन्नेव परत्वमद्वितीयत्वं च पर्यवसास्यतीति न पूर्वाधिकरणसिद्धान्तानां विरोधः, अतो नाक्षेपः सङ्गतिः, किन्तु प्रसङ्ग एव सङ्गतिरित्यर्थः। पुनः प्रकारान्तरेण वैयर्थ्यमाशङ्क्य परिहरन्ति **नन्वित्यादि**। **अविरोध इति**। प्रतिषेधबोधकस्याद्वितीयपदस्यासङ्कुचितवृत्तिकत्वात् तेन धर्म्य-

रश्मिः।

न्यहेतूक्तियोगव्यवच्छेदकः। नत्वन्ये हेतव इति। **शब्देति**। 'एकमेवाद्वितीय'मित्यादिशब्दबलेन। **अर्थेति**। सेतून्मानाद्यर्थबलेन। अर्थास्तु वक्ष्यमाणानां सेत्वादिबोधिकानां श्रुतीनाम्। **विरोध इति**। अद्वितीयादिश्रुतिविरोधे। **प्रवृत्तस्येति**। भगवतो व्यासस्य। **एतदिति**। परतःपरस्य सम्बन्धि। अन्यथा वैदिकहेतूक्तिपुरःसरं परात्परविचारणमयुक्तं स्यात्। ब्रह्मेतरात्मधर्माणां तयोरभेदेन ब्रह्मपरत्वात्पादार्थसङ्गतिः। **पूर्वमिति**। दहराधिकरणे सेतुवाक्यम्। तत्रैवोन्मानवाक्यं 'यावान् वा अयमाकाश'इत्यादि। तत्रैवाधाराधेयसम्बन्धवाक्यं प्रमेयनिरूपणप्रस्तावे 'उभे अस्मि'न्नित्यादि। अन्तस्तद्धर्माधिकरणे भेदवाक्यं 'य एषोन्तरादित्ये हिरण्मयः पुरुष' इत्यादि। **अवान्तरेति**। अवान्तरवर्तित्वं परिच्छेदनिरूपणात्। आदिना परिच्छेदः आधाराधेयभावः सम्बन्धः भेदश्च। **परीति**। उक्ताधिकरणेषु परिहृताः। तथापीतिभाष्यं विवृण्वन्ति स्म **तथापीति**। **सर्वेतिभाष्यं** विवृण्वन्ति स्म **किञ्चेत्यादि**। **तेष्विति**। अधिकरणविषयवाक्येषु। 'यदेकमव्यक्तमनन्तरूप'मिति श्रुत्यैवकारः। **एतैरिति**। सेत्वादिभिः। **तदाक्षिप्यत इति**। परत्वमद्वितीयत्वं च पूर्वोक्तं कथमित्याक्षेप आक्रोश इत्यर्थः। एवकारव्यवच्छेद्यमाहुः **न प्रसङ्ग इति**। **धर्म्यन्तर इति**। अतः परस्मिन्। **तस्मिन्नेवेति**। एवकारेण परब्रह्मान्यरूपान्ययोगो व्यवच्छिद्यते। **विरोध इति**। 'अक्षरात्परतः पर'इति श्रुतावक्षरात्परतोपि परत्वकथनान्न विरोध इत्यर्थः। **प्रसङ्ग एवेति**। आक्षेपसङ्गतिव्यवच्छेदक एवकारः। **वैयर्थ्यमिति**। अधिकरणवैयर्थ्यम्। **नन्वित्यादीति**। समन्वयेन पूर्वाध्यायार्थेन धर्म्यन्तरस्य ब्रह्मत्वं तत्प्रतिपादकस्य 'अक्षरात्परतः पर' इत्यस्य परतोऽक्षरादित्यन्वयात्। उत्तरपादे 'सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषा'दित्यारम्भके वेद्यैक्येन विध्यैक्यम्। **प्रतिषेधेति**। द्वितीयप्रतिषेधबोधकस्य। स्वरूपस्येत्येकस्य। एतेनावान्तरवर्तित्वादीनां

बलविचारः । धर्मिविचारान्न पूर्वेण गतार्थत्वम् ।

फलतः साधनतश्च प्रमेयाच्च प्रमाणतः ।
विचारेणाबृहत् तच्चेत् कोऽन्यः साधयितुं क्षमः ॥ १ ॥

अतो हेतून् बाधकानाह । एकदेशबाधकत्वात् । तत्र फलतो बाधहेतुमाह । सेतुव्यपदेशात् । 'अथ य आत्मा स सेतुर्विधृति'रिति । 'दहर उत्तरेभ्य' इत्यत्र ब्रह्मत्वमस्य सिद्धम् । 'अथ य इहात्मानमनुविद्य व्रजन्ती'त्युपक्रम्य, 'सर्वेषु लोकेषु कामचारो भवती'त्युक्त्वा, कामानुपपाद्य, अज्ञानव्यवधानं ज्ञानप्रशंसार्थमुक्त्वा, ज्ञानानन्तरं संसारसम्बन्धाभावाय सेतुत्वं वदति । पापाब्धितरणार्थम् । यश्च तरति, तद्गताश्च दोषा गच्छन्तीति च । अतः संसारफलयोर्मध्ये विद्यमानत्वात् तीर्णस्यैव फलश्रवणात् फलरूपं वस्तु किञ्चिदन्यदस्तीति ज्ञायते । निधित्वेन

भाष्यप्रकाशः ।

न्तरस्यापि निवृत्तेः स्वरूपसाम्यविरोध इत्यर्थः । धर्मिविचारादित्यादि । पूर्वाधिकरणे धर्माणां ब्रह्मणः सकाशाद्भेदो निवारितः, इह तु धर्म्यन्तरं निवार्यत इति धर्मिविचारात् तथेत्यर्थः ।

अतः परं सूत्रं व्याकरिष्यन्तो हेतुचतुष्टयकथनप्रयोजनं गृह्णन्ति फलत इत्यादि । फलत इत्यादौ ल्यब्लोपे पञ्चमी । फलमनुसन्धायेत्यर्थः । एवमग्रेपि । अबृहत्तदिति । न परं ब्रह्म, पूर्वाधिकरणेषु विचारितम् । कोऽन्य इत्यादि । फलादिव्यतिरिक्तः कोऽन्यो हेतुस्तस्य परब्रह्मत्वं साधयितुं समर्थ इत्यर्थः । साधयितुमिति स्वार्थेणिच् । 'रामो राज्यमचीकर'दितिवत् । विभजन्ते अत इत्यादि । यत एवं विचारेऽन्यो हेतुर्न साधनसमर्थः, अतः परत्वबाधकान् हेतून् क्रमेणाहेत्यर्थः । क्रमे हेतुमाहुः एकेत्यादि । परब्रह्मत्वे साधनीये परत्वमेकदेशस्तद्बाधकत्वादित्यर्थः । 'ब्रह्मविदाप्नोति पर'मिति फलत्वात् परत्वमुक्तम्, अतस्तद्बाधकं हेतुं पूर्वं वदतीत्याशयेनाहुः तत्रेत्यादि । एकदेशबाधकत्वे मानमाहुः दहरेत्यादि । अस्येति । सेतोरित्यर्थः । फलतो बाधकं हेतुं व्युत्पादयन्ति अथेत्यादि । तद्गताश्च दोषा गच्छन्तीति । 'एतं सेतुं तीर्त्वा अन्धः सन्ननन्धो भवती'ति तत्र श्रावणादित्यर्थः । ननु पूर्वं 'तद्यथापि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तोपि न विन्देयु'रित्यादिना तस्मिन् फलत्वमपि दृष्टान्ते बोधितमिति कथं फलतो बाधकत्वमित्यत आहुः निधि-

रश्मिः ।

परस्वरूपविरोधित्वेन बाधकत्वं परिहृतम् । भाष्ये । इदमिति । ब्रह्मत्वविधैक्यप्रतिपादकम् । अर्थबलेति । धर्म्यन्तररूपार्थबलेन 'अक्षरात्परतः पर' इति यथावद्योज्येत्यर्थबलविचारः । बादरिमतम् । व्यासमतमाहुः समन्वय इति । व्यासमतत्वेन तस्य शब्दबलविचारकत्वात् । प्रकृते । एवं विचार इति । परब्रह्मतः परविचारे । परत्वेति । परब्रह्मणः परत्वबाधकान् अक्षरात्परतः परस्य साधकान् । सूत्रकार आह व्युत्पादयन्तीति । छान्दोग्यीयदशमप्रपाठकस्थाभ्यां श्रुतिभ्याम् । पूर्वमिति । छान्दोग्ये दशमप्रपाठक एव । 'अथ य आत्मा स सेतुर्विधृति'रित्यस्मात्पूर्वम् । इत्यादिनेति । 'एवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढा' इत्यादिपदार्थः । तस्मिन् फलत्वमिति । परब्रह्मणि फलत्वं दुर्विज्ञेयत्वेन निधित्वेन वा बोधितमित्यर्थः, ननु सेतावित्यर्थः । वाक्यस्य 'अथ य आत्मे'त्यस्मात्पूर्वत्वात् । अथेत्यस्यानन्तर्यार्थत्वे सेतावित्यर्थः । ब्रह्म सेतुरिति । फलत इति । फलमनुसन्धाय सेतुरूपहेतोः परत्वस्य बाधकत्वम् । फलतोऽत्र सेतुत्वं ब्रह्मत्वम् । यद्यपि 'ब्रह्मविदाप्नोति पर'मित्यत्र परपदम्, अत्र फलमिति तौल्यम्, तथापि 'अक्षरात्परतः पर'

फलवचनमवान्तरफलपरं भविष्यति। 'एतमानन्दमयमात्मानमुपसंक्रम्ये'त्यप्यत्रोदाहरणम्। तथा उन्मानव्यपदेशात्। तत्रैव 'यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश' इति साधनयुक्तिप्रश्ने, उन्मानेन परिच्छेदं निरूपयति। दृष्टान्तदार्ष्टान्तिकत्वेन ज्ञानं साधनम्। तत्र बहिराकाशज्ञानमपि साधनं भवति।

भाष्यप्रकाशः।

त्वेनेत्यादि। निधेरर्थरूपत्वेन परतः पुरुषार्थत्वात् तदृष्टान्तेनात्र फलकथनात् तथेत्यर्थः। अत्रोदाहरणमिति। ल्यबन्तप्रयोगादवान्तरत्वे उदाहरणमित्यर्थः। अत्र मध्ये विद्यमानत्वादित्यनेनाव्यापकत्वबोधनाद्देशपरिच्छेदो ज्ञापितः। साधनतो बाधकं व्युत्पादयन्ति तथा उन्मानेत्यादि। तत्रैवेति। दहरविद्यायामेव। तत्र हि दहरपुण्डरीकान्तर्यो दहर आकाशस्तदन्तःस्थितस्य ज्ञानार्थं कयत्नरूपमन्वेषणं साधनं तस्य युक्तिर्योजनं विषयावगमानुकूलत्वं तदर्थके प्रश्ने, 'तं चेद्ब्रूयु'रित्यादिना कृते, तदुत्तरं वदन् 'यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश' इति यावत्तावत्पदाभ्यामाकाशसमानताव्यपदेशेन दहराकाशस्य परिच्छेदं निरूपयति। ततश्च दृष्टान्तदार्ष्टान्तिकत्वेनाकाशद्वयज्ञानं दहराकाशस्वरूपज्ञानसाधनम्। तत्र च दृष्टान्तभूतबहिराकाशज्ञानमपि साधनं भवति। तथाच बहिराकाशः कालतः परिच्छिन्न इति दार्ष्टान्तिकभूतो दहराकाशोपि तथा भवति। नच यावत्तावत्पदाभ्यां परिमाणसाम्यमेवायाति, नान्यत्साम्यमिति वाच्यम्। 'प्रजापतिर्यज्ञानसृजते'त्यत्र 'तानुदमिमीत, यावदग्निहोत्रमासीत्तावानग्निष्टोम' इति फलतः साम्यवदत्रापि साम्यात्

रश्मिः।

इति श्रुतेर्बाधकत्वं बोध्यम्। परत इति। सुषुप्त्यवस्थातः। अवान्तरेति। ब्रह्मप्राप्तेरवान्तरफलपरम्। तदृष्टान्तेनेति। निधिघटितवाक्योक्तदुर्ज्ञेयत्वदृष्टान्तेनात्र धर्म्यन्तरे। तथा अवान्तरफलपरं भविष्यति। ल्यबन्तेति। 'क्त्वो ल्यबि'ति क्त्वो व्याकरणे समानकर्तृकाद्धातोर्विधानाद्भृगूपनिषदि कामरूप्यनुसंचरन्निति श्रुत्युक्तसंचरणफलात्फलेऽवान्तरत्वे इत्यर्थः। इत्यनेनेति। भाष्येण। तथाचातः धर्म्यन्तरं परब्रह्मणः परं सेतुव्यपदेशात्, यन्नैवं तन्नैवम्, 'जन्माद्यस्य यत' इत्यत्र परवत्। साधनत इति। साधनमनुसन्धायोन्मानरूपहेतुं धर्मिपरत्वबाधकं व्युत्पादयन्ति स्मेत्यर्थः। एवकारोऽन्ययोगव्यवच्छेदकः। अन्वेषणमिति। 'किं तत्र विद्यते यदन्वेष्टव्यं यद्वा विजिज्ञासितव्य'मिति प्रश्नेनेष्टत्वात्साधनम्। पाठान्तरे 'तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वा विजिज्ञासितव्य'मिति विधानात्साधनम्। तत्किंविशिष्टं आसमन्ताच्छन्देर्थे शङ्काराहित्यपूर्वकं यज्ज्ञानं तदर्थकस्तत्प्रयोजनको यत्नस्तद्रूपमन्वेषणं तद्विशिष्टम्। भाष्ये 'किं तत्रे'त्याद्युक्तपाठे युक्तेः प्रश्नेऽन्वयेपि पाठान्तरे किंप्रयोगाभावेन प्रश्नेऽन्वयाभावेनाहुः तस्य युक्तिरिति। योजनं पूर्वोक्ताकाशान्तःस्थिते बोध्यम्। शाब्दज्ञानविषयोऽर्थः तस्यावगमो ज्ञानम्। तदनुकूलं तज्जनकं तत्त्वं तदनुकूलत्वं साधन इति। तदर्थकेति। तत् विषयावगमानुकूलत्वमर्थः प्रयोजनं यस्य प्रश्नस्य तादृशप्रश्ने। इत्यादिनेति। 'तं चेद्ब्रूयुर्यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोस्मिन्नन्तराकाशः किं तदत्र वर्तते यदन्वेष्टव्यं यद्वा विजिज्ञासितव्य'मित्यादिशब्दार्थः। तदुत्तरं प्रश्नोत्तरम्। भाष्यीयोन्मानशब्दार्थमाहुः आकाशसमानतेति। दृष्टान्तेत्यादिभाष्यं विवृण्वन्ति स्म ततश्च दृष्टान्तेति। तत्र बहिरित्यादिभाष्यं विवृण्वन्ति स्म तत्र चेति। कालत इति। ईश्वरे कालकृतं परत्वं वियति कालकृतमपरत्वं तद्रूपः परिच्छेदस्तद्विषयः। तथेति। कालतः परिच्छिन्नः। नान्यदित्येवकारार्थः। कालतः परिच्छिन्नत्वं नेत्यर्थः। उदमिमीतेति। उन्मानमकुरुत। फलत इति। फले साम्यवत्।

चतुष्पाच्च ब्रह्म भूतादिपादाश्च ज्ञातव्याः । तथा सम्बन्धव्यपदेशात् । तत्रैव प्रमेयनिरूपणप्रस्तावे 'उभावस्मि'न्नित्यादिना आधाराधेयसम्बन्धो निरूपितः । अत्र च वस्तुपरिच्छेदो निरूपितः । 'प्राज्ञेनात्मना सम्परिष्वक्त' इति च । तथा भेदव्यपदेशात् । 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' 'य एषोऽन्तरऽक्षिणि पुरुषो दृश्यते' इत्यत्र स्थानद्वयस्थितयोः पुरुषयोः परस्परं धर्मातिदेशमाह । अक्षिस्थितनिरूपकमतिदेशः प्रमाणमिति । धर्म्यभेदे तु स एवायमिति वदेत् ।

भाष्यप्रकाशः ।

न्तरलाभस्य बोधनायोन्मानपदस्य सूत्रे उक्तत्वादिति । तथाच दृष्टान्ते कालपरिच्छेदात् तत्समानत्वज्ञानरूपसाधनतः परत्वनिवारणमित्यर्थः । उदाहरणान्तरमाहुः चतुष्पादित्यादि । अत्रापि भूतादीनां पादानामनित्यत्वात् तज्ज्ञानरूपसाधनतः कालपरिच्छेदात्तथा । तृतीयं हेतुं व्युत्पादयन्ति तथा सम्बन्धेत्यादि । तत्रैवेति । दहरवाक्ये । तथाचात्राधारत्वेनैव प्रमेयत्वम्, न तु सर्वोत्कृष्टत्वेनेति प्रमेयतो वस्तुपरिच्छेदान्न परत्वसिद्धिरित्यर्थः । वस्तुपरिच्छेदे उदाहरणान्तरमाहुः प्राज्ञेनेत्यादि । चतुर्थहेतूदाहरणमाहुः य एष इत्यादि । अतिदेशः प्रमाणमिति । 'तस्यैतस्य तदेव रूपं यदमुष्य रूपं यदमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नामे'ति श्रावणात् तथेत्यर्थः । गेष्णाविति,

रश्मिः ।

फलमुभयोः समानमित्यर्थः । तत्समानेति । तत्समानत्वज्ञानरूपसाधनमनुसन्धाय परब्रह्मणि परत्वनिवारणमित्यर्थः । पूर्वपक्षसूत्रत्वान्नाकाशान्तरन्वेषणम् । उदाहरणेति । उन्मानव्यपदेशे तथा । भूतादीनामिति । 'भूतादिपादव्यपदेशोपपत्तेश्चैव'मिति सूत्रे 'ज्योतिश्चरणा'धिकरणे स्पष्टम् । तज्ज्ञानेति । तज्ज्ञानरूपसाधनमनुसन्धाय, ज्योतिषि कालकृतं परत्वं पादेषु कालकृतमपरत्वं तद्रूपः परिच्छेदस्तस्मात् । तथा नामोन्मानेन ज्येष्ठे कालकृतं परत्वं कनिष्ठे कालकृतमपरत्वमितिवच्चतुष्पाद्ब्रह्म कालेन परत्वविशिष्टम् । भूतादिपादाश्च कालेनापरत्वविशिष्टा इत्यर्थः । अत्राधारेति । श्रुतौ 'उभे द्यावापृथिवी अस्मिन्नाकाशेऽन्तरे समाहिते' इत्युक्त्यात्र आकाशस्याधारत्वेन, नतु आधेयत्वेन प्रमेयत्वम् । द्यावापृथिव्योस्त्वाधेयत्वेन । उभयत्रैवकारव्यावर्त्यमाहुः नत्विति । वस्त्विति । आकाशद्यावापृथ्वीनामाधाराधेयभावसम्बन्धात्कालकृतापरत्वरूपपरिच्छेदान्न परब्रह्मणि परत्वसिद्धिः । वस्त्विति । वस्तूनामाकाशादीनां कालकृतापरत्वरूपपरिच्छेदे इत्यर्थः । अनेन 'अत्र च वस्तुपरिच्छेद' इति भाष्यमपि व्याख्यातम् । प्राज्ञेनेत्यादीति । इयं ज्योतिर्ब्राह्मणेऽस्ति । सुषुप्तौ जीव आधेयः, प्राज्ञ आधार इत्याधाराधेयसम्बन्धो निरूपितः । भाष्ये । धर्मातिदेशमिति । किमत्र कार्यमिति चेच्छृणु । उभयत्र पूर्वपक्षनिराकरणेन ब्रह्मत्वज्ञानमिति । धर्मस्वरूपमाहुः अक्षीति । स्थितिर्धर्मः । अक्षिस्थितः हिरण्मयनिरूपितः तत्सम्बन्धी इत्येवं हिरण्मयदर्शनमक्षिस्थितिनिरूपकम् । प्रकृते । तस्यैतस्येति । छान्दोग्ये प्रथमप्रपाठके । तस्य प्रसिद्धस्य, एतस्याक्षिस्थितस्य, अमुष्य हिरण्मयस्य । तथेति । 'अन्यत्र प्रतीतायाः कृत्स्नाया धर्मसन्ततेः, अन्यत्र कार्यतः प्राप्तावतिदेशः स कथ्यत' इत्यतिदेशलक्षणादन्यत्र आदित्ये हिरण्मयपुरुषे, अन्यत्र अक्षिस्थपुरुषे, कार्यतः ब्रह्मत्वतः । अतिदेशोयं शब्दः प्रमाणमित्यर्थः । पर्वणी इति । 'एषा त्रय्येव विद्या तपती'ति महानारायणश्रुतेः । व्यूहौ । 'तस्यर्क् साम च गेष्णौ' इत्यादिश्रुतेः । केचिदिति । विरलाः । अष्टरसात्मकोद्गीथविद्यायां अधिकारिपर्वतोतिरिक्तनटगायनपर्वौचित्यात् । 'नटवरवपु'रिति

**अतो देशकालवस्तुस्वरूपपरिच्छेदाच्चतुर्विधपरिच्छेदरहितमन्यत् किञ्चिदस्तीति प्रतिपत्तव्यमित्येवं प्राप्तम् ॥ ३१ ॥**

**सामान्यात्तु ॥ ३२ ॥**

**तुशब्दः पक्षं व्यावर्तयति। समानस्य भावः सामान्यम्। सेत्वाकाशादिशब्दास्तद्धर्मातिदेशार्थमुच्यन्ते, न तु तद्गतं दोषमपि कल्पयन्ति। संसारसागरोत्तरणोपायत्वात् सेतुत्वम्। निर्लेपायाकाशत्वम्। कामाभिदोहाय चतुष्पात्त्वम्।**

---

भाष्यप्रकाशः।

पर्वणी इत्यर्थः केचिदाहुः। 'गेष्णौ तु नटगायना'विति कोशात् ताविति वयं प्रतीमः ॥ ३१ ॥

**सामान्यात्तु** ॥३२॥ सिद्धान्तसूत्रं व्याकुर्वन्ति **तुशब्द इत्यादि**। **पक्षमिति**। एतैर्हेतुभिः परत्वनिराकरणपक्षम्। **न तु तद्गतं दोषमपि कल्पयन्तीति**। पूर्वाधिकरणे दोषनिरासस्य श्रुत्यैव कृतत्वाद्दोषं न कल्पयन्ति। सामान्यादिति सौत्रो हेतुः प्रयोजनगर्भ इत्याशयेन व्याकुर्वन्ति **संसारेत्यादि**। षोडशकलश्रुतिरत्र पूर्वं नोदाहृता, तथाप्यन्यैरुदाहृतेति तत्तात्पर्यमप्युक्तम्। एवमन्यत्रापि बोधार्थम्। अतिदेशकपदाभावे सेत्वादिशब्दैः कथं सामान्यावगमः, कथं च तद्गुणा-

रश्मिः।

श्रीमद्भागवते। 'जगौ कलं वामदृशां मनोहर'मिति च। **भाष्ये**। **देशकालेत्यादि**। सेतुर्देशकृतः। उन्मानं कालकृतम्। वस्तु सम्बन्धकृतम्। स्वरूपं भेदकृतम्। **अतो** देशादिपरिच्छेदात् ॥ ३१ ॥

**सामान्यात्तु** ॥ ३२ ॥ **परत्वेत्यादि**। इत्येवं प्राप्तमित्युक्तम्। **भाष्ये**। **सामान्यमिति**। **तस्मादिति** विस्तरः। सेत्वादिसामान्याच्चतुर्विधपरिच्छेदरहितेपीत्यर्थः, तदुपपादयन्ति स्म **तद्धर्मेति**। तेषां सेत्वादीनां धर्माः सेतुत्वादयो वक्ष्यमाणाः तेषामतिदेशः कार्यतः प्रापणम्। कार्यं चतुर्विधपरिच्छेदरहितस्यान्यत्वप्रतिपत्तिव्यावर्तनम्। तादृशप्रापणार्थमुच्यन्ते, नतु परिच्छेदेन दोषं प्रदर्श्य धर्म्यन्तरार्थमुच्यन्ते। **प्रकृते**। **पूर्वाधीति**। 'प्रकाशाश्रयवद्वे'त्यधिकरणे दोषो धर्मकृतद्वैतं तस्य निरासस्तस्य श्रुत्या स्वरूपलक्षणश्रुत्या ज्ञानस्य स्वयंप्रकाशत्वात्। 'स्वयंप्रकाशाय नमस्करोमी'ति गजेन्द्रस्तुतौ। प्रकाशाश्रयशब्दादेवकारः। **दोषमिति**। देशकालवस्तुस्वरूपपरिच्छेदरूपं न कल्पयन्ति, किन्तु धर्मभेदं कल्पयन्तीत्यर्थः। **प्रयोजनेति**। संसारसागरोत्तरणादिकं प्रयोजनं तद्गर्भे मध्ये यस्य स तथोक्तः। सेत्वादिपदैः सेत्वादिप्रतीतेः संसारसागरतरणादिप्रयोजनमपदार्थः स्यादित्येवमुक्तम्। **पूर्वमिति**। पूर्वपक्षसूत्रे। **अन्यैरिति**। शङ्कराचार्यप्रभृतिभिः। तथाच भाष्यं 'उन्मानव्यपदेशश्च भवति। तदेतद्ब्रह्म चतुष्पादष्टाशफं षोडशकल'मिति। यद्यपि चतुष्पाच्च ब्रह्मेति भाष्यश्रुत्योदाहृता, तथापि स्पष्टं नेत्येवमुक्तम्। षोडशी कला षोडशकला सा अस्यास्तीति षोडशकलं ब्रह्म। षोडशी चन्द्रकला ध्रुवा तुरीयामृतरूपेत्यमृतत्वाय। एवं हेतुद्वयमुक्त्वा सम्बन्धव्यपदेशहेतोः सामान्यमाहुः **भाष्ये** **अतुलेभत्वायेति**। नहि सम्बद्धो दुर्लभो भवति। भेदव्यपदेशहेतोः सामान्यमाहुः **दिव्यत्वायेति**। आदित्यपुरुषेऽक्षिस्थितदिव्यधर्मत्वाय। **प्रकृते**। **एवमन्यत्रापीति**। अग्निहोत्रशब्दस्तद्धर्मातिदेशार्थं नतु तद्गतं दोषं द्वित्वापादकं देशादिपरिच्छेदरूपं वापि कल्पयतीत्येवं अन्यत्र कुण्डपायिनामयनेपि। **अतिदेशकेति**। यथा पूर्वतन्त्रे प्रकृतिवद्विकृतिः कर्तव्येतिशिष्टवाक्ये प्रकृतिवत्पदं तथेहाभावेपि। **सामान्येति**। परब्रह्मधर्म्यन्तरयोः साम्यावगतिः। तद्गुणानां सेत्वादिगुणानां संसारसागरोत्तरणोपायत्वादीनाम्। एवकारो द्वित्वापादकगुणियोगव्यवच्छेदकः। **तद्गुणानामिति**। अग्निहोत्रगुणानां

अमृतत्वाय षोडशकलत्वम् । अदुर्लभत्वाय सम्बन्धः । दिव्यत्वाय धर्मातिदेशः । कुण्डपायिनामयने मासाग्निहोत्रवद्गुणार्थमेव वचनम्, न दोषार्थमिति न ततोऽन्यशङ्कोत्पादनीया । तस्मान्न पूर्वोक्ता दोषाः ॥ ३२ ॥

बुद्ध्यर्थः पादवत् ॥ ३३ ॥

अन्यसमानधर्मवत्त्वं कुत्रोपयुज्यत इत्यत आह । बुद्ध्यर्थः । तथा व्यपदेशो बुद्ध्यर्थः । बुद्धिरेव प्रयोजनं यस्य । तथोपासनार्थमयुक्तमित्याशङ्क्य दृष्टान्तमाह । यथा भूतादीनां पादत्वज्ञानमुपासनार्थम्, तथा तत्तद्गुणवत्त्वेन ज्ञानार्थं स्वधर्मप्रशंसार्थमेवमुच्यते ॥ ३३ ॥

स्थानविशेषात् प्रकाशादिवत् ॥ ३४ ॥

ननु स एवायमित्यतिदेशेपि तथा बुद्धिः सम्पद्यतैवेति व्यर्थो धर्मातिदेश इत्याशङ्क्य, तथोक्तेपि समानधर्मत्वज्ञानाभावे हेतुमाह । स्थानविशेषादिति । धर्म्यैक्येपि स्थानविशेषप्राप्त्या न समानधर्मवत्त्वं दृश्यते अन्यत्रेत्यत्रापि न तथा-

---

भाष्यप्रकाशः ।

नामेव ग्रहणमित्याकाङ्क्षायामाहुः कुण्डपायीत्यादि । तथाच पूर्वतन्त्रे यथा अग्निहोत्रनाम्ना तद्गुणानामतिदेशः, तथात्रापीत्यर्थः । ततोऽन्यशङ्केति । नाममात्रात् तद्दोषशङ्का ॥ ३२ ॥

बुद्ध्यर्थः पादवत् ॥ ३३ ॥ सूत्रमवतारयन्ति अन्येत्यादि । अयुक्तमिति । उत्तमस्य हीनसामान्यकथनमयुक्तम् । स्वधर्मप्रशंसार्थमिति । सेत्वादीनां तारकत्वादेर्धर्मस्य प्रशंसार्थम् । उपासनाधर्मस्य फलतः प्रशंसार्थं वा ॥ ३३ ॥

स्थानविशेषात् प्रकाशादिवत् ॥३४॥ सूत्रमवतारयन्ति नन्वित्यादि । तथोक्तेपीति । स एवायमित्युक्तेपि । व्याकुर्वन्ति धर्म्यैक्येपीत्यादि । अन्यत्रेति । स्फटिकादौ । वक्ष्यमाण-

रश्मिः ।

मासादीनाम् । तथात्रापीति । 'पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गति'रितिसंशयोत्तरकोटिबीजश्रुतेः 'एकमेवाद्वितीय'मितिश्रुतेश्चातिदेशिकायाः सत्त्वेनात्राप्यतिदेश इत्यर्थः । तेन भाष्ये । गुणार्थं मासादिगुणार्थम् । एवकारव्यावर्त्यमाहुः न दोषार्थमिति । द्वैतदेशादिपरिच्छेददोषार्थम् । नामेति । सेत्वादिनामाग्निहोत्रनाम च । तद्दोषेति । द्वैतदोषः देशादिपरिच्छेददोषाश्च तेषां शङ्का । अपिच ततः सत्यज्ञानानन्तानन्दतोऽन्यस्य धर्म्यन्तरस्य शङ्केत्यपि भाष्यार्थः । भाष्ये । तस्मादित्यादि । सामान्यात् न पूर्वोक्ताः सेत्वादिव्यपदेशजन्याः द्वैतं परात्परत्वं धर्म्यन्तरत्वं तद्रूपा दोषा न ॥ ३२ ॥

बुद्ध्यर्थः पादवत् ॥ ३३ ॥ अन्येत्यादीति । सेत्वादिसमाना धर्माः संसारसागरतरणोपायत्वादयस्तद्वत्त्वम् । हीनेति । सेत्वादिसामान्यकथनम् । जडत्वाद्धीनत्वम् । उपासनेति । उपासनाया धर्मस्य संसारसागरतरणोपायत्वादेराश्रयतो हीनत्वेपि फलतश्चित्तशुद्धिद्वारा ज्ञानभक्तिरूपफलतः ॥ ३३ ॥

स्थानविशेषात् प्रकाशादिवत् ॥ ३४ ॥ नन्वित्यादीति । इत्यतिदेश इति । धर्मसन्ततेः कार्यतः प्राप्तावतिदेश इत्यर्थः । तथा बुद्धिरिति । संसारसागरोत्तरणोपायत्वादिप्रकारिका बुद्धिः । एवकारोऽयोगव्यवच्छेदकः । समानेति । सेत्वादिसमानधर्मत्वज्ञानाभावे । धर्म्यैक्येत्यादीति । 'स एवाय'मिति धर्म्यैक्ये । स्फटिकादाविति । आदिनादर्शद्वयं परस्परं बिम्बप्रतिबिम्ब-

त्वमायास्यतीत्यतिदेशो धर्माणामपि कृत इत्यर्थः । अस्मिन्नर्थे दृष्टान्तमाह प्रकाशादिवदिति । 'यदादित्यगतं तेज' इति वाक्यादादित्यचन्द्राग्निगततेजसामैक्येपि न समानप्रकाशत्वं यथा, तथात्रापीति ज्ञानसम्भवादित्यर्थः । आदिपदादेकस्यैव कालस्य यथोपाधिविशेषसम्बन्धादुत्तरायणत्वादुत्तमधर्मवत्त्वं तद्विपरीतधर्मत्वं तथेत्यपि संगृह्यते ॥ ३४ ॥

---

भाष्यप्रकाशः ।

दृष्टान्ते च । शेषं स्फुटम् । इत आरभ्य प्रभूणामिति प्रतिभाति ॥ ३४ ॥

रश्मिः ।

भावापन्नम् । शेषमिति । न समानेति । परस्परमन्यसमानप्रकाशत्वम् । अत्रापीति । दार्ष्टान्तिकेपि । आदिपदादिति । ननु समासघटक आदिशब्दे कुतः पदत्वमिति चेत् । न । ईश्वरवाक्ये न नियमः । यः 'न लुमताङ्गस्ये'त्यनेन पदत्वाभावो बाहुलकात् । एकस्यैवेति । एवकारो द्वित्वसंख्यायोगव्यवच्छेदकः । उपाधीति । मकरसंक्रमणस्य कर्कसंक्रमणस्य च सम्बन्धात् । उत्तमेति । ब्रह्मप्रापकत्वधर्मवत्त्वम् । 'तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः' इति गीतायाः । तथेतीति । धर्मातिदेशः, न तु धर्मैक्यमिति । एवं शेषं स्फुटम् । इत आरभ्येति ।

प्रम्वाज्ञात्रयभाविनीं गतिमिहोद्भाव्याशु तत्त्वानुगः सार्धाध्याययुगं चकार रहितं स्वाचार्यवर्यः स्वयम् । शेषं सूचितमित्यतोऽन्यदपि निर्मातुं प्रवृत्तस्ततस्तन्न्यूनप्रतिपूरको विजयते श्रीविठ्ठलो दीक्षितः ॥१॥
श्रौतं स्मार्तं प्रमेयं यद्भिन्नमित्येव संस्थितम् । तदेकीकरणे शक्तो यः श्रीविठ्ठलदीक्षितः ॥ २ ॥
तद्भाष्यं प्रथितुं स्वज्ञो वावदीति जनः कथम् । तथापि वच्मि तत्तत्त्वं तच्चरणैकनिविष्टधीः ॥ ३ ॥

तथापि पार्थक्येन यथावद्वक्ष्यते । अत्रेदं ज्ञेयम् । श्रीमदाचार्याः स्वानुमतमार्गप्रचारार्थं भगवतावतारिताः । प्रथमस्कन्धसुबोधिन्यारम्भे 'अर्थं तस्य विवेचितुं नहि विभुर्वैश्वानराद्वाक्पतेरन्यस्तत्र विधाय मानुषतनुं मां व्यासवच्छ्रीपतिः । दत्त्वाज्ञां च कृपावलोकनपटुर्यस्मादतोऽहं मुदा गूढार्थं प्रकटीकरोमि बहुधा व्यासस्य विष्णोः प्रियम्' इति स्वानुभावघटितप्रतिज्ञावाक्यात् । 'आचार्यचैत्यवपुषा स्वगतिं व्यनक्ती'त्येकादशस्कन्धवाक्याच्च । नचाचार्येषु मूढबुद्ध्या मानुष्यं शङ्कनीयम् । 'यस्यावतारा ज्ञायन्ते शरीरेष्वशरीरिणः । तैस्तैरतुल्यातिशयैर्वीर्यैर्देहिष्वसङ्गतै'रिति दशमस्कन्धवाक्यादनुपमभाष्यं स्वमतसुबोधिन्यन्तसमये वक्तव्येत्येतावत्कृतमिति सर्वोत्कृष्टत्वावधारणात् । इत्थंच स्वमार्गोपयोगि यत्किञ्चित्तत्सर्वमेव वक्तव्यम् । कालश्च स्वल्पः । स्वलीलाया निर्विषयत्वपरिजिहीर्षया स्वतदीयसामीप्यार्थं भगवतोपेक्षितत्वेन वारत्रयमाज्ञापनात् । इदं चान्तःकरणप्रबोध आचार्यैरुक्तम् । 'आज्ञा पूर्वं तु या जाता गङ्गासागरसङ्गमे । यापि पश्चान्मधुवने न कृतं तद्द्वयं मया । देहदेशपरित्यागस्तृतीयो लोकगोचर'इति । 'नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना । श्रियं चात्यन्तिकीं ब्रह्मन्येषां गतिरहं परे'ति नवमस्कन्धवाक्याच्च । अतस्तत्र यः कठिनांशस्तद्विवेचनपरा जाताः । इत्थं चानवगाह्याभिप्रायाणां सूत्राणां भाष्यमुक्त्वा सुगमानां स्थापितवन्तः । तदेतत्पूरयितुं श्रीविठ्ठलदीक्षिताः 'स्थानविशेषात्प्रकाशादिव'दिति सूत्रादारभ्य भाष्यमारभन्त इत्याहुः इत आरभ्येत्यादि । श्रीप्रभूणां गोस्वामिनाम् । प्रतिभातीति । समाप्तौ श्रीवल्लभदीक्षितविरचित इति शब्दात् । भगवदाज्ञायाश्चान्तःकरणरूढत्वात्प्रतिभां ग्रन्थकरण उत्तरोत्तरस्फूर्तिरूपां करोतीत्यर्थः ॥ ३४ ॥

---

१. सूत्राष्टकरहितम् ।

## उपपत्तेश्च ॥ ३५ ॥

किञ्च। सत्यज्ञानाद्युक्तधर्मविशिष्टब्रह्मणोऽन्य उत्तमोऽस्तीति वदता तत्रैव उत्कृष्टधर्मवत्त्वं वाच्यम्। तच्चाशक्यम्। प्रमाणाभावात्। साम्येपि तथा विशेषाभावोऽद्वैतश्रुतिविरोधश्च। तस्मादितः परस्यानुपपन्नत्वादुक्तरूपमेव परमकाष्ठापन्नं वस्त्वित्युपपद्यत इत्यर्थः ॥ ३५ ॥

## तथान्यप्रतिषेधात् ॥ ३६ ॥

यथा सेत्वादयः श्रुत्योक्ताः, तथैव 'न तत्समश्चाभ्यधिकश्च दृश्यत' इति श्रुत्यैव ततोऽधिकस्य प्रतिषेधात् त्वयाप्यस्मदुक्त एव मार्गोऽनुसर्तव्य इत्यर्थः। अवतारकाले पूर्वं स्वशक्त्याविर्भावमकृत्वा पश्चात् तदाविर्भावे कृते लोकानां पूर्वावस्थातो भगवत्येवाधिक्यमिव प्रतीतं भवतीत्यभिप्रायेणान्यपदोपादानम्॥३६॥

## अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३७ ॥

प्रकरणमुपसंहरन् फलितमर्थमाह। अनेन सेत्वादिव्यपदेशानां मुख्यार्थकत्वनिराकरणेन व्यापकत्वं ब्रह्मणः सिद्धमित्यर्थ इति केचित्। तन्न। 'जन्माद्यस्य यत' इत्या-

---

भाष्यप्रकाशः।

उपपत्तेश्च ॥ ३५ ॥ अन्यो नेत उत्कृष्ट इत्यत्रोपपत्त्यन्तरं सूत्राभ्यामाहेत्याहुः किञ्चेत्यादि। विशेषाभाव इति, अन्यस्योत्कर्षाभावः ॥ ३५ ॥

तथान्यप्रतिषेधात् ॥ ३६ ॥ अस्मदुक्तमार्ग इति। एतस्यैव परत्वमितिप्रकारः। पूर्वसूत्रेणास्य गतार्थत्वमाशङ्क्य तन्निवृत्त्यर्थमाहुः अवतारेत्यादि। आधिक्यमिव प्रतीतं भवतीति। तत्रान्यहेतुकत्वशङ्का स्यादिति तन्निवृत्त्यभिप्रायेण तथेत्यर्थः ॥ ३६ ॥

रश्मिः।

उपपत्तेश्च ॥ ३५ ॥ भाष्ये। तथेति। उपपादनीयत्वेन। 'अक्षरात्परतः पर' इत्यत्र परतोऽक्षरादित्यन्वयसम्भवात् 'सा काष्ठा सा परा गति'रिति श्रुतेश्च। प्रकृते। अन्यथेति। ब्रह्मान्यप्रकारेण। भाष्ये। अनुपपन्नत्वादिति। सूत्रार्थः। चकारार्थमाहुः उक्तरूपमिति। 'परमत' इतिसूत्रे संशयद्वितीयकोट्युक्तं रूपं यस्येति तथोक्तम्। संशयबीजश्रुत्योरेकवाक्यतयैवकारः ॥ ३५ ॥

तथान्यप्रतिषेधात् ॥ ३६ ॥ भाष्ये। तथैवेति। श्रुतित्वेन, नतु स्मृतित्वेन। बाध्यबाधकभावायोमौ शब्दौ। इति श्रुत्यैवेति। उक्तश्रुतित्वेन प्रकारेण श्रुतिस्तया, नतु स्मृत्या। प्रकृते। अस्मदुक्तमार्ग इति। अस्मदुक्त एव मार्ग इति पाठः असत्पुस्तकानाम्। शङ्खः पाण्डुर एवेतिवत् विशेषणसंगतैवकारः। आङ्गात्र। अत आहुः एतस्यैवेति। विशेषणस्यास्मदुक्त इत्यस्य, नतु विशेष्यस्य। परत्वं इति हेतोः व्यावर्तकोऽस्मदुक्तः प्रकार इत्यर्थः। अस्येति। सूत्रस्य स्पष्टश्रुत्योपपन्नत्वाद्गतार्थत्वम्। अवतारेत्यादीति। स्वशक्त्येति। अवतारिनिरपेक्षावतारशक्त्या। आविर्भावं तावतीं मायां दूरीकृत्य प्राकट्यम्। तदाविर्भाव इति। कोटिकन्दर्पलावण्यादिरूपस्वशक्त्याविर्भावे भगवत्येवावतारिणि, नत्वन्यस्मिन्नधिकरणे। तत्रान्येति। तत्र उक्तभगवद्रूपाधिकरणे 'परमत' इति सूत्रोक्तान्यहेतुकत्वशङ्का स्यात्। तन्निवृत्तीति। परब्रह्मणः परमिति शङ्कानिवृत्त्यभिप्रायेण, तथा भगवत्यन्यहेतुकोऽवतार इति प्रतीतेरन्यपदोपादानमित्यर्थः ॥ ३६ ॥

दिना सर्वदेशगतकार्यकर्तृत्वमुक्तमिति तेनैव व्यापकत्वस्य सिद्धत्वात्। नचाविरोधसाधनप्रकरणत्वात् पूर्वसिद्धं सर्वगतत्वमनेनोक्तग्रन्थेन कृत्वा, सेत्वादिवाक्यैः सममविरुद्धमित्यर्थ इति वाच्यम्। अग्रिमपदवैयर्थ्यापत्तेरिति चेत्। अत्रैवं ज्ञेयम्। नोक्तकर्तृत्वेन व्यापकत्वमेकान्ततो ब्रह्मणि रोद्धुं शक्नोति। योगसिद्धदूरश्रवणादिवत् परिच्छिन्नेनाप्यनेकदेशगतकार्यकरणसामर्थ्यविशेषस्य वक्तुं शक्यत्वात्। अन्यथा पूर्वसिद्धव्यापकत्वविरोधेन सेत्वादिव्यपदेशैः परिच्छिन्नत्वेन ब्रह्मणोऽन्यस्य परत्वं न शङ्केत। विरोधपरिहाराय तु 'सामान्यात् त्वविरोध' इति वदेत्।

तस्मादेवं सूत्रार्थो ज्ञेयः। अनेन ब्रह्मणोऽन्यस्य परत्वनिरासेनायामशब्दादिभ्यो व्यापकत्ववाचकश्रुतिवाक्यादिभ्यः साक्षात् सर्वगतत्वप्रतिपादकेभ्य एव सर्वगतत्वं सिध्यति, न तु गौतमीयानामिव कर्तृत्वाद्यनुपपत्त्येत्यर्थः। ते च शब्दाः 'आकाशवत् सर्वगतश्च नित्यः' 'ज्यायान् दिवो ज्यायान् आकाशात्' 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्व'मित्यादयः। आदिपदात् 'सर्वतः पाणिपादान्तं सर्वतोक्षिशिरोमुखम्। सर्वतः श्रुतिमल्लोके सर्वमावृत्य

---

भाष्यप्रकाशः।

अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३७ ॥ सूत्रप्रयोजनमाहुः प्रकरणमित्यादि। प्रकरणमिति। अविरोधप्रकरणम्। उक्तोपष्टम्भायैकदेशिव्याख्यानं दूषयितुमुपक्षिपन्ति अनेनेत्यादि। केचिदिति। शाङ्कराः। दूषयन्ति तन्नेत्यादि। अर्थान्तरमुद्भाव्य दूषयन्ति नन्वेत्यादि। कथमग्रिमपदवैयर्थ्यमित्यत उपपादयन्ति अत्रैवमित्यादि। शक्नोतीति। सूत्रकारः शक्नोति। कुतो न शक्नोतीत्याकाङ्क्षायामशक्तौ गमकमाहुः अन्यथेत्यादि। यदुक्तमविरोधसाधनेत्यादिना, तत्राप्युत्तरमाहुः विरोधेत्यादि।

एवं मतान्तरमपाकृत्य सूत्रं व्याकुर्वन्ति तस्मादित्यादि। आयामशब्दादिभ्य इति। आयामो दैर्घ्यं व्याप्तिरिति यावत्। शब्द्यतेऽनेनेति शब्दः। आयामस्य शब्दो यत्र ते आयामशब्दाः। ते आदयो येषां तद्गुणसंविज्ञानः। तेभ्यः। व्यापकत्ववाचकश्रुतिवाक्यादिभ्य

रश्मिः।

अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३७ ॥ शाङ्करा इति। 'आयामशब्दादिभ्य' इत्यस्यार्थः समान इति नोक्तः। तन्नेत्यादीति। तेनैवेति। एवकारोऽस्य सूत्रस्य योगव्यवच्छेदकः। पूर्वेति। अत्रैव पूर्वसिद्धम्। अविरुद्धमिति। सर्वगतत्वं सूत्रोक्तं अनेन सेत्वादिवाक्यैः सममविरुद्धम्। अत्रैवमित्यादीति। दूरेति। आदिना चाक्षुषग्रहणे। अन्यथेत्यादीति। परिच्छिन्नेप्युक्तसामर्थ्याय व्यापकत्वाङ्गीकारे। परत्वमिति। व्यापकत्वप्रयुक्तं परत्वम्। 'परमत' इतिसूत्रेण सूत्रकारो न शङ्केतेत्यर्थः। विरोधेत्यादीति। सामान्यात्त्विति। सेत्वादिघटितसूत्रोत्तरसूत्रे तदविरोधाय सामान्यात्त्वित्यत्र सूत्रे सामान्यात्त्वविरोध इति सूत्रं वदेदित्यर्थः। आयामस्येति। आयामप्रतिपादकः शब्दो यत्र 'आकाशवत्सर्वगत' इत्यादिवाक्येषु ते श्रुतिवाक्यादयः। येषामिति। नित्यज्यायस्तब्धानाम्। तद्गुणेति। तेषां आयामशब्दादिपदवर्तिशब्दानां सम्यक् भवतिना क्रियापदेनान्वयित्वेन ज्ञानं येन समासेन स तद्गुणसंविज्ञानो बहुव्रीहिः। भाष्ये। एवेति। असाक्षात्सर्वगतत्वप्रतिपादकरूपान्यव्यवच्छेदकः। कर्तृत्वादीति। आदिना अपरोक्षज्ञानचिकीर्षाकृतिमत्त्वम्। भाष्यत्वात्स्वपदानि वर्णयन्ति स्म आदिपदादिति। 'व्यापकत्ववाचकश्रुतिवाक्यादिभ्य' इत्यत्रादि-

तिष्ठती'त्यादिस्मृतयः संगृह्यन्ते । अनेन ब्रह्मणि श्रुतिरेव मुख्यं प्रमाणम्, अनुमानं तु विलम्बोपस्थितिकत्वेन साध्यसिद्धिपराहतमपीच्छाविशेषेण जननीयं चेदभ्युच्चयमात्रं पर्यवसास्यतीति भावः ॥ ३७ ॥

इति तृतीयाध्याये द्वितीयपादे दशमं परमतः सेतून्मानेत्यधिकरणम् ॥ १० ॥

## फलमत उपपत्तेः ॥ ३८ ॥ ( ३-२-११. )

एवं सर्वोत्तमत्वनिरूपणेनोत्तमाधिकारिणां भजनीयत्वप्रयोजकं रूपमुक्त्वा तदितराधिकारिणां तदाह । ते हि फलप्रेप्सव एव भजिष्यन्ति । तच्च फलदातृत्व एव सम्भवतीति तदाह । अत ईश्वरादेव फलं भवति यत्किञ्चिदैहिकं पारलौकिकं वा । कुतः । उपपत्तेः । 'सर्वस्य वशी सर्वस्येशान' इति श्रुतिर्वस्तुमात्रेशितृत्वमसङ्कुचितमाह । न ह्यन्यस्य वस्त्वन्यो दातुं समर्थः । अतो भगवानेव तथेत्यर्थः ।

केचित्त्वत्रैव कर्मणस्तत्कार्यापूर्वस्य च फलदातृत्वमाशङ्क्य, तत्रानुपपत्तिमत्रोपपत्तित्वेन व्याकुर्वन्ति ।

---

भाष्यप्रकाशः ।

इति । व्यापकत्ववाचकयुक्तानि यानि श्रुतिवाक्यादीनि तेभ्य इत्यर्थः । फलितार्थबोधकत्वं स्फुटीकुर्वन्ति अनेन ब्रह्मणीत्यादि । अभ्युच्चयमात्रमिति । अनुमानस्य समुच्चयमात्रम् ॥ ३७ ॥ इति दशमं परमतः सेतून्मानेत्यधिकरणम् ॥ १० ॥

फलमत उपपत्तेः ॥ ३८ ॥ अन्ते एतदधिकरणप्रणयनेन अस्मिन् पादे अविरोधादिनिरूपणप्रयोजनं सूचयन्ननुप्रसङ्गेनाधिकरणमारभत इत्याशयेनाहुः एवमित्यादि । तदाहेति, भजनीयत्वमाह । नन्वत्र फलदातृत्वमेवोच्यत इति कथमेवमधिकारिविभागज्ञानमित्यत आहुः ते

रश्मिः ।

पदात् । सौत्रादिशब्दार्थ उक्तः । प्रकृते । अनेन ब्रह्मणीत्यादीति । श्रुतिरेवेति । एवकारेण स्मृतिव्यवच्छेदः क्रियते । अनुमानं स्मृतिः । अपिसंराधनसूत्रभाष्येऽनुमानं स्मृतिरित्युक्तम् । विलम्बेति । स्वमूलश्रुतिकल्पनद्वारा । साध्येति । श्रुतिसाध्यसिद्धिपराहतमपि श्रुत्या बाधात् । इच्छाविशेषो बाधकालीनेच्छा तेन । जननीयं स्मार्तज्ञानम् । अनुमानस्येति । स्मृतेः ॥ ३७ ॥ इति दशमं परमतः सेतून्मानेत्यधिकरणम् ॥ १० ॥

फलमत उपपत्तेः ॥ ३८ ॥ अविरोधादीति । विरुद्धानां धर्माणामविरोधं वस्तुस्वभावात् । आदि धर्म्यन्तरविरोधः । सूचयन्निति । धर्माद्यविरोधो वाच्यः । प्रयोजनं उत्तमेतराधिकारिणोरधिकारः । स तात्पर्यार्थः सूचितार्थः । अधिकरणसङ्गतिमाहुः अनुप्रसङ्गेनेति । अविरोधावनुस्मृतस्योत्तमेतरप्रवृत्तिरूपस्यार्थस्योपेक्षानर्हत्वात्प्रसङ्गलक्षणादनुप्रसङ्गसङ्गतिः । एवमित्यादीति । सर्वोत्तमत्वं वेदोक्तत्वमात्रेण निःसन्दिग्धत्वं दार्ढ्यं चार्थे तादृशार्थत्वरूपं ब्रह्म सर्वविरुद्धधर्माश्रयं धर्म्यन्तररहितं च । तस्य उक्तसर्वोत्तमत्वनिरूपणेन । उत्तमेति । वेदमात्रेण निःसन्दिग्धानां मीमांसानिरपेक्षाणां भजनीयत्वं प्रयोजनं यस्य रूपस्य तत् । तदितरेति । 'सन्देहवारकं शास्त्रं बुद्धिदोषात्तदुद्भवः । विरुद्धशास्त्रसम्भेदादङ्गैश्चाशक्यनिश्चयः । तस्मात्सूत्रानुसारेण कर्तव्यः सर्वनिर्णयः । अन्यथा भ्रश्यते स्वार्थान्मध्यमश्च तथादिम'इत्युक्तकारिकाभ्यामुक्तादिममध्यमानाम् । भजनीयत्वमाहेति । भजनी-

---

१. अत्र प्रवृत्तिः ।

तत्त्वग्रे जैमिनिमतोपन्यासस्वमतोपन्यासाभ्यां व्यास एव व्यक्तीकरिष्यतीत्यधुनैवाप्राप्तनिराकरणमग्रिमसूत्रद्वयवैयर्थ्यं स्यादिति चिन्त्यम् ॥ ३८ ॥

श्रुतत्वाच्च ॥ ३९ ॥

पूर्वसूत्रेण श्रुतमीशितृत्वं फलदाने उपपत्तित्वेन निरूपितम्। इह तु साक्षाच्छ्रुतिमेव फलदातृत्वबोधिकां प्रमाणयति। सा च 'स वा एष महानज आत्माऽन्नादो वसुदान' इत्यादिरूपा। चकारात् 'सुखं दुःखं भवो भाव' इत्युपक्रम्य, 'भवन्ति भावा भूतानां मत्त एव पृथग्विधा' इत्यादिरूपा स्मृतिः संगृह्यते ॥३९॥

धर्मं जैमिनिरत एव ॥ ४० ॥

अत्र कर्मवादी प्रत्यवतिष्ठते। ननु कर्मण एव फलमिति पक्षेप्युपपत्तिश्रवणे तुल्ये। तथाहि। ईश्वरवादिनापि कर्मनिरपेक्षेण तेन फलमिति

---

भाष्यप्रकाशः।

हीत्यादि। व्याकुर्वन्ति अत इत्यादि। एतेन प्रकृते ऐहिकामुष्मिकं फलं कर्मसचिवेभ्यस्तत्तद्देवेभ्यो वा, भगवतो वेति संशयः। तत्र तत्र तेषां तेषामुद्देश्यत्वेन श्रावणं 'सर्वस्य वशी सर्वस्येशान' इत्यादिश्रुतिश्च सन्देहबीजम्। तेभ्य एवेति युक्तम्, प्रतिनियतत्वादिति पूर्वपक्षश्च बोधितः। एकदेशिमतमनूद्य दूषयन्ति केचित्त्वित्यादि। तन्त्वित्यादि च ॥ ३८ ॥

श्रुतत्वाच्च ॥ ३९ ॥ भाष्यमत्र निगदव्याख्यातम्।

माध्वास्तु 'विज्ञानमानन्दं ब्रह्म', 'रातिर्दातुः परायण'मित्युदाहरन्ति ॥ ३९ ॥

धर्मं जैमिनिरत एव ॥४०॥ सूत्रं व्याकुर्वन्ति अत्रेत्यादि। तुल्ये इति। तथाच अत एव,

रश्मिः।

यत्वप्रयोजनमित्युक्ते रूपस्य विरुद्धधर्माश्रयस्य हीनमध्यमाधिकारिणां मीमांसया प्रयोजनं भजनीयत्वमाहेत्यर्थः। अत्रेति। सूत्रे। ते हीत्यादीति। एवेति। 'सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्तते। शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजन' इति एवकारः। उत्तमाधिकारिणस्त्वफलप्रेप्सवः। 'अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी'ति वाक्यात्। फलदातृत्व एवेति। देवादीनां जीवानां भगवत ईश्वरस्य वा फलदातृत्वे भजनस्यानुग्रहकारणकत्वेन भक्तिहेतुनिर्णयग्रन्थे उक्तत्वात्। अत इत्यादीति। ईश्वरादेवेति। नतु जीवदेवेभ्यः। भगवानेवेति। अन्यदीयं नास्ति स्वीयमिति भगवान्। पूर्ववदेवकारो व्याकर्तव्यः। तत्र तत्रेति। कर्मणि। तेषामिति। जीवदेवानाम्। 'सर्वस्य वशी'ति श्रुतिर्बृहदारण्यके। तेभ्य एवेति। जीवदेवेभ्यः, नत्वीश्वरात्। प्रतीति। प्रतिकर्मनियतत्वाज्जीवदेवानाम्। तेन 'धर्मं जैमिनि'रिति सूत्रेण पूर्वपक्षो यः सोऽनीश्वरजैमिनिमतेनेत्युक्तम्। केचित्त्वित्यादीति। शाङ्कराः ॥ ३८ ॥

श्रुतत्वाच्च ॥ ३९ ॥ निगदेति। इह त्विति। सूत्रे तु। श्रुतिमेवेति। 'अस्या देवतायाः सायुज्यं सलोकतामाप्नोती'ति श्रुतिमेव, नतु स्मृतिम्। चकारेणेयं भाष्ये वक्ष्यते। प्रमाणयति व्यासः। मत्त इति फलदातुः। एवं निगदव्याख्यातम् ॥ ३९ ॥

धर्मं जैमिनिरत एव ॥ ४० ॥ सूत्रार्थमाहुः तथा चेति। अत एवेति सौत्रशब्दौ व्याकुर्वन्ति स्म उपपत्तिश्रवणाभ्यामुक्तसूत्रोक्तहेतुभ्याम्। विध्यर्थेति। विध्यर्थं आज्ञा तस्य ज्ञानं

न वक्तुं शक्यम् । विधिवैयर्थ्यप्रवृत्त्यनुपपत्तिप्रसङ्गाभ्याम् । तत्सापेक्षत्वे तदेवास्तु, कृतं तत्सापेक्षेण तेन । नचाचेतनं चेतनाधिष्ठितमेव कार्यक्षममिति केवलेन तेन न फलं सम्भवतीति वाच्यम् । कर्मस्वरूपं स्वर्गादिकं च न लोकसिद्धम्, किन्तु श्रुतिसिद्धम् । तत्र च स्वर्गादिफलसाधकत्वेनैवोत्पत्तिवाक्येष्वर्थवादेषु च 'अग्निष्टोमेन स्वर्गकामो यजेत' 'अग्निहोत्रं जुहोति प्रजाकाम' इत्यादि । 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' 'परमेष्ठिनो वा एष यज्ञोऽग्र आसीत्,तेन स परमां काष्ठामगच्छ'दित्यादिषु कर्म श्रूयते । स च तत्साध्यत्वेनैव । एवं सति लोकेऽन्यथा दर्शनेपि धर्मिग्राहकप्रमाणेन तथैव सिद्धत्वान्नात्र काचन शङ्का । ईश्वरवादिनो नित्यज्ञानादिमत्त्व इव । आमुष्मिकफलत्वेन तत्प्रतिबन्धकापगमे भवतीत्यावयोस्तुल्यम् । तस्याशुतरविनाशित्वेपि श्रुतिसिद्धकारणतानिर्वाहाय तद्व्यापारोऽपूर्वं कल्प्यते । अविषमादीश्वरात् विषमफलोत्पत्त्यनुत्पत्तिवैषम्यनैर्घृण्ये च स्याताम् । अतः कर्मण एष फलमिति जैमिनिर्मनुते ॥ ४० ॥

---

भाष्यप्रकाशः ।

उपपत्तिश्रवणाभ्यामेव हेतुभ्यां धर्मं फलकारणं जैमिनिराचार्यो मन्यत इति सूत्रयोजना । तदेतत्तौल्यं व्युत्पादयन्ति तथा हीत्यादि । प्रवृत्तीति । विध्यर्थज्ञानोत्तरप्रवृत्तेरनुपपत्तिप्रसङ्गो दूषणान्तरमित्यर्थः । इत्यादीति, कामनावतः कर्माधिकारश्रावणात् स्वर्गकामादिपदैः कर्मफलं श्रूयत इत्यर्थः । स चेति । फलरूपः स्वर्गादिः । अन्यथा दर्शनेपीति । राजादिभ्यः फलप्राप्तिदर्शनेऽपि । अत्रेति । वेदबोधिते कर्मणि तत्फले च । नित्यज्ञानादिमत्त्व इवेति । धर्मिग्राहकेत्यादिकमत्रापि सम्बध्यते । ननु यदि कर्मणैव फलम्, तदा तदव्यवहितोत्तरं कुतो न जायत इत्यत आह आमुष्मिकेत्यादि । तदिति । स्वर्गादिरूपं फलम् । दूषणान्तरमाशङ्क्य परिहरति तस्याश्वित्यादि । तर्हि तौल्यान्नैकतरस्य फलहेतुत्वनिश्चयः, उभयोः समुच्चयो वेत्याकाङ्क्षायां स्वमतोपष्टम्भायाह अविषमादित्यादि ॥ ४० ॥

रश्मिः ।

तदुत्तरं प्रवृत्तिः तस्या अनुपपत्तिस्तस्याः प्रसङ्गः । भाष्ये । तदिति । कर्म । तेनेति । ईश्वरेण । एवेति । दर्शनादेवकारः । तेनेति । कर्मणा । एवेति । नतु तन्निरपेक्षेण कर्म श्रूयत इत्यग्रेऽन्वयः । उत्पत्तीति । प्रथमज्ञप्तिरुत्पत्तिः । साध्यसाधनत्वेन प्रथमज्ञप्तिः । तद्बोधकवाक्येषु । अर्थवादेष्विति । जैमिनिमतत्वादर्थवादपदम् । 'अन्यथा हीतिवाक्ये चतुरक्षरे द्वे पुण्यस्य पापस्य निदानभूते । उच्चारणादेव नृणां मुनीन्द्रा नारायणश्चेत्यर्थवादः' इत्यस्य विरोधः स्यात् । फलसम्बन्धाभावादर्थवादत्वमित्याशयेनाहुः अग्निहोत्रमिति । प्रकृते । इत्यादीति । कर्मफलमिति । तेनोत्पत्तिवाक्यत्वमर्थवादत्वं चेति भावः । एष यज्ञ इति । अग्निष्टोम इत्यर्थः । 'परमेष्ठिनो वा एष यज्ञोऽग्र आसीद्यदग्निष्टोम' इतिश्रुतेः । राजेति । राजादिभ्यश्चेतनेभ्यः फलं ग्रामधनादि । भाष्ये । तथैवेति । चेतननिरपेक्षसाधनत्वस्यैव । 'कर्मैके तत्र दर्शना'दिति जैमिनिसूत्रादेवकारः । प्रतिबन्धकेति । शरीराद्यपगमे । परीति । जैमिनिः परिहरति । तस्याश्वित्यादीति । श्रुतिसिद्धेति । व्यापारवदसाधारणं कारणमित्यर्थः । तस्य भावः कारणता । आहेति । जैमिनिराह । अविषमादीत्यादि । अवीति । सप्तमस्कन्धे 'समः प्रियः सुहृ'दिति वाक्यात् । कर्मण एवेति । जडात्, नतु चेतनादीश्वरात् ॥ ४० ॥

## पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४१ ॥

तुशब्दः पूर्वपक्षव्युदासार्थः। बादरायणस्त्वाचार्य इतः पूर्वोक्तमीश्वरमेव फलदत्वेन मनुते। कुतः। हेतुव्यपदेशात्। हेतुत्वेन श्रुतौ व्यपदेशादित्यर्थः। 'एष उ एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते, एष उ एवासाधु कर्म-कारयति यमधो निनीषत' इति श्रुतौ न केवलं कर्मकारयितृत्वमुच्यते, अपि तु फलदित्सया तया तथात्वम्। अतः फलदत्वमीश्वरस्यैव व्यपदिष्टं भवतीति नानुपपत्तिः काचित्। नन्वीश्वरस्य स्वतः फलदाने समर्थस्य फलदित्सायां सत्यां कर्मकारणे को हेतुः, कार्यवैचित्र्यं च कथमित्यादिचोद्यं 'कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्य' इत्यत्र निरस्तम्। विद्वन्मण्डने श्रीविट्ठलेन च। अतः सकामैरपि स एव भजनीयः, नान्य इति सिद्धम् ॥ ४१ ॥

इति तृतीयाध्याये द्वितीयपादे एकादशं फलमत इत्यधिकरणम् ॥ ११ ॥

इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते श्रीमद्ब्रह्मसूत्राणुभाष्ये तृतीयाध्यायस्य द्वितीयः पादः ॥ ३ ॥ २ ॥

---

भाष्यप्रकाशः।

पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥४१॥ दूषणमाशङ्क्य तत्परिहारः प्रागेवोक्त इति स्मारयन्ति नन्वित्यादि ॥ ४१ ॥ इत्येकादशं फलमत इत्यधिकरणम् ॥ ११ ॥

इति श्रीमद्वल्लभाचार्यचरणनखचन्द्रनिरस्तहृदयध्वान्तस्य पुरुषोत्तमस्य कृतौ भाष्यप्रकाशे तृतीयाध्यायस्य द्वितीयः पादः ॥ ३ ॥ २ ॥

रश्मिः।

पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४१ ॥ भाष्ये। पूर्वपक्षेति। प्रकाशोक्तरीत्या व्याख्यानम्। अनीश्वरजैमिनिमते पूर्वपक्षेत्यर्थः। ईश्वरमेवेति। ननु कर्म। उन्निनीषत इति। अन्यत्रोन्निनीषतीति परस्मैपदी। ईश्वरस्यैवेति। ननु कर्मणः। काचिदिति। प्रथमशास्त्रेऽपि व्यासस्य गुरुत्वात्पूर्वपक्षीकरणेऽपि न काचिदनुपपत्तिः। प्रागेवेति। कृतप्रयत्नापेक्षसूत्रे। विद्वन्मण्डने चेति योगित्वम्। 'अनागतमतीतं चे'ति वाक्यात्। भाष्ये। अतः सकामैरिति। आदिमम-ध्यमाधिकारिभिरपि। अपिनोत्तमाधिकारी। स विरुद्धधर्माश्रयः। मीमांसितत्वादेवकारः ॥ ४१ ॥ इत्येकादशं फलमत इत्यधिकरणम् ॥ ११ ॥

इति श्रीविट्ठलेश्वरैश्वर्यनिरस्तसमस्तान्तरायेण श्रीगोविन्दरायजित्पौत्रेण संपूर्ण-वेत्रा विट्ठलरायजिद्धात्रीयगोकुलोत्सवात्मजगोपेश्वरजिता कृते भाष्यप्रकाशस्य तृतीयाध्यायस्य रश्मौ तृतीयाध्यायस्य द्वितीयः पादः ॥ ३ ॥ २ ॥

इति श्रीमत्कृष्णद्वैपायनप्रणीतब्रह्मसूत्रेषु तृतीये उपनिषदां बोधकताप्रकारनिरूपके साधनाध्याये विषयावधृतिर्नाम द्वितीयः पादः।

---

श्रीकृष्णाय नमः ।

# श्रीमद्ब्रह्मसूत्राणुभाष्यम् ।

शुद्धाद्वैतब्रह्मवादनिर्गुणभक्तिमार्गप्रवर्तकाचार्यचक्रचूडामणि-
श्रीमद्वल्लभाचार्यचरणप्रणीतम् ।

दशदिगन्तविजयिश्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणप्रणीत-
भाष्यप्रकाशसंपूर्णवेत्तृश्रीमद्गोस्वामिश्रीगोपेश्वरजि-
चरणप्रणीतभाष्यप्रकाशरश्मिपरिबृंहितम् ।

## तृतीयाध्यायस्य तृतीयः पादः ।

'भगवद्धर्मपरायण सद्गत श्रेष्ठि गोवर्धनदास सुन्दरदास' इत्यस्य
पुष्टिमार्गीयसंस्कृतसाहित्यसमुद्धारार्थं निर्दिष्टद्रव्यसंग्रहतो
'भृगुपुरस्थ मूलचन्द्र तुलसीदास तेलीवाला, बी. ए.,
एलूएलू. बी., वकील, हाइ कोर्ट' इत्यनेन संशोध्य
'निर्णयसागर' मुद्रणालये मुद्रयित्वा
प्रकटीकृतम् ।

श्रीवल्लभाब्दाः ४४९. संवत् १९८३.

मूल्यं मुद्रिकाद्वयम् ।

श्रीकृष्णाय नमः।

श्रीगोपीजनवल्लभाय नमः।

श्रीमदाचार्यचरणकमलेभ्यो नमः।

# श्रीमद्ब्रह्मसूत्राणुभाष्यम्।

## भाष्यप्रकाश-रश्मि-परिबृंहितम्।

## तृतीयोऽध्यायः।

---

### तृतीयः पादः।

### सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥ (३-३-१.)

पूर्वपादे जडजीवधर्मनिराकरणेन शुद्धसच्चिदानन्दविग्रहरूपत्वं ब्रह्मणो निरूपितम्, इह तु ब्रह्मगता एव धर्मा विचार्यन्ते। ते चेत् एकस्मिन् वाक्य एव सर्वे

---

भाष्यप्रकाशः।

सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्॥ १ ॥ अथ तृतीयपादं व्याचिख्यासवः सङ्गतिबोधनाय पूर्वपादार्थमनुवदन्तः प्रस्तूयमानस्यार्थमाहुः पूर्वपादेत्यादि। उपनिषद एव ब्रह्मणि मुख्यं प्रमाणमिति तासां यथा बोधकता, स प्रकारः साधनाध्याये विचार्यः, अन्यथा ब्रह्मबोधाभावे तद्विषयकमुपासनादिसाधनं न कर्तुं शक्येत, अपराधं वा दध्यादिति, तदर्थं पूर्वस्मिन् पादे जडजीवधर्मनिराकरणेन तत्र प्रत्याख्यमानानां धर्माणां ब्राह्मत्वस्य ब्रह्मणो विरुद्धधर्माश्रयत्वस्य च व्यवस्थापनात् प्रपञ्चविलक्षणशुद्धसच्चिदानन्दविग्रहरूपत्वं ब्रह्मणो निरूपितम्, तेनैतादृशतया ता ब्रह्म बोधयन्तीति सिद्धम्। इह तु तादृशब्रह्मगता एव धर्मा उपासनादेरन्तरङ्गसाधनत्वात् तच्छेषतया उपसंहारार्थं विचार्यन्ते। तथाच पूर्वस्यास्य च पादस्योपजीव्योपजीवकभावः सङ्गतिरित्यर्थः। नन्वतीते पादे उभयलिङ्गाद्यधिकरणैर्विरुद्धसर्वधर्माधारब्रह्मस्वरूपबोधनेनोपनिषदां बोधनप्रकारावधारणे धर्मासङ्गावशङ्कानिवृत्तौ पुनः साधनशेषतयापि तद्विचारस्य किं प्रयोजनमित्याकाङ्क्षायामाहुः ते चेदित्यादि। ते चेत्तथा भवेयुः, तदा तत्तदुपासने तेषामितरेतरविरुद्धानामपि 'आसीनो दूरं व्रजती'त्यादिवत् ब्रह्मधर्मत्वेनोपादेयतया विरोधाभावात्, अथ चेद्भावनादौर्घट्यं विभाव्यते, तदापि 'स्थितं व्रजन्तमासीनं शयानं वा गुहाशय'मितिवत् कालभेदेन पर्यायभेदेन च भावने

रश्मिः।

सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥ इह त्विति भाष्यं विवृण्वन्ति स्म इह त्विति। एवेति। जडजीवगतधर्मयोगव्यवच्छेदक एवकारः। अन्तरङ्गेति। धर्ममात्रापेक्षत्वेन स्वल्पापेक्षत्वात्। पूर्वस्यास्येति। जडजीवधर्मनिराकरणं विना सकलधर्मोपसंहारो न भवेदित्युपजीव्यो द्वितीयपादार्थः। उपजीवकस्तृतीयपादार्थः उपसंहारः इति। तथेति। एकवाक्ये पठिता भवेयुः। भावनेति। स्मरणं दौर्घट्यम्। पठिता इत्यादिभाष्यं विवृण्वन्ति स्म पठि-

पठिता भवेयुः, तदा न विचारणीया भवेयुः, विरोधाभावात्। पठिताश्च तत्तदुपासनप्रकरणेषु, क्वचित् त एव, क्वचित् भिन्नाः। यथा वाजसनेयिनः पञ्चाग्निविद्यां प्रस्तुत्य षष्ठमन्यमग्निं पठन्ति। 'तस्याग्निरेवाग्नि'रिति। छन्दोगास्तु पञ्चसंख्ययैवोपसंहरन्ति।

---

भाष्यप्रकाशः ।

विरोधाभावाच्च विचारणीया भवेयुः । पठितास्तु न सर्वे एकत्र, किन्तु तत्तत्प्रकरणे क्वचित्त एव, क्वचित्तद्भिन्नाः। यथा पञ्चाग्निविद्यायामभ्यन्तरांशे त एव, षष्ठस्त्वधिक इति भेदः । प्राणविद्यायामन्ये प्राणास्त एव, रेतस्तद्भिन्नमिति । एवं सत्यब्रह्मविद्यायां व्याहृतिशरीरांशे तौल्यं स्थानभेदेनाहरित्यहमित्युपनिषदोर्भेद इति । तथाच तासूपासनासूपास्यविशेषणत्वादिना ब्रह्मपदस्यानुक्तत्वात् तेषां तद्धर्माणां च ब्रह्मत्वे ब्रह्मधर्मत्वे च सन्देहाद्विचारणीयाः । पादान्ते ब्रह्मण एव सकलफलदातृत्वस्य विचारितत्वात् । पूर्वोत्तरकाण्डयोस्तु तेषु तेषु वाक्येषु तत्तत्कर्मणा तत्तद्देवप्रीत्या तेन तेन तैस्तैः फलस्य श्रावणात् कथं ब्रह्मणः फलदातृत्वमित्याकाङ्क्षायां तेन तेन साधनेन तुष्टं ब्रह्मैव तैस्तै रूपैः फलं ददातीति वक्तुं विचार्यन्त इत्यर्थः । यद्यपि प्राणादिविद्या न परविद्याः, तथापि प्राणादीनां ब्रह्मत्वेनोपासनस्य वाक्यान्तरेषूक्तत्वात् तेषु च ब्रह्मशब्दस्य 'ॐमित्येतदक्षरमुद्गीथ'मित्यत्रोद्गीथ-

रश्मिः ।

तास्त्विति । पञ्चाग्नीति । भेद इति । विद्याभेदः । तथेत्यारभ्य पञ्चमं पठन्तीत्यन्तं भाष्यं विवृण्वन्ति स्म प्राणविद्यायामित्यादि, द्रष्टव्य इत्यन्तम् । 'प्राणविद्या वै ज्येष्ठं च श्रेष्ठं चे'त्यारभ्य छान्दोग्ये । त एवेति । छान्दोग्योक्ता एव । रेतस्तद्भिन्नमिति । प्राणभिन्नं 'रेतो होच्चक्रामे'ति पठितम् । सत्यब्रह्मेति । छान्दोग्ये 'अथ होवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्य कं त्वमात्मानमुपास्स इत्यादित्यमेव भगवो राजन्निति होवाच, एष वै विश्वरूप आत्मा वैश्वानर' इति । स इत्युद्दालक आरुणिः उद्दालको गोत्रतः अरुणस्यापत्यमारुणिः । सत्यं यज्ञो यस्य तं सत्ययज्ञं भक्त्यभावान्न सत्यमभिव्यक्तम्, किन्तूपासनासत्त्वात्तद्विषय आदित्यस्तत्रोपासनार्थं विश्वरूप आत्मा इति ब्रह्मधर्मौ । वैश्वानर इति च । अथवा । बृहदारण्यके सत्यब्राह्मणेस्ति सत्यब्रह्मविद्या । 'तद्वैतदेतदेव तदासे'त्यारम्भिका सत्यब्रह्मविद्या तस्याम् । तत्स्तावकेऽग्रिमब्राह्मणे 'आप एवेदमग्र आसु'रित्यारम्भके व्याहृतिशरीरांशेऽवान्तरोपनिषदोस्तौल्यमुपनिषत्त्वेन । प्रथमोपनिषदि 'य एष एतस्मिन्मण्डले पुरुषस्तस्य भूरिति शिर एक९शिरः एकमेतदक्षरम्, भुव इति बाहू द्वौ बाहू द्वे एते अक्षरे, स्वरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते अक्षरे' इति शरीरांशः । द्वितीये 'अथ योयं दक्षिणेक्षन्पुरुषस्तस्य भूरित्यादिशरीरांशस्तुल्य' इति तौल्यम् । स्थानेति । देशसामान्यं स्थानं तस्य भेदोऽवान्तरोपनिषद्रूपस्थानयोः परस्परं तेन । अहरित्यादि । 'तस्योपनिषदहरिति हन्ति पाप्मानं जहाति च य एवं वेदे'ति प्रथमेऽहरिति । अहमिति द्वितीये 'तस्योपनिषदहमिति हन्ति पाप्मानं जहाति च य एवं वेदे'ति । एवमुपनिषदोर्विद्याभेदः । तथा प्राणेत्यादिभाष्ये किञ्चिदाहुः यद्यपीति । न परेति । अक्षरविषयत्वाभावादिति भावः । 'अथ परा यया तदक्षरमधिगम्यते' इति मुण्डकात् । 'तथा चापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमितिहासपुराणं न्यायो मीमांसा धर्मशास्त्राणीत्यथ परा यया तदक्षरमधिगम्यते' इति श्रुतेरपरविद्याया बोधकतोक्तरीत्या ब्रह्मगतधर्मा ज्ञानभक्तिषूपासनाया युक्तत्वात्तद्विषययोरुपसंहार्याः । एवं चापराविद्याबोधिता ज्ञानभक्त्युपासना इति तासां बोधकताप्रकारः । वाक्यान्तरेति । 'प्राणो ब्रह्मेति व्यजाना'दित्यादिवाक्यान्तरेषु । उद्गीथेति । उद्गीथं 'ॐमित्येतद-

'अथ य एतानेवं पञ्चाग्नीन् वेदे'ति । तथा प्राणसंवादे मुख्यप्राणादन्याँश्चतुरः प्राणान् वाक्चक्षुःश्रोत्रमनांसि पठन्ति । वाजसनेयिनस्तु तमपि पञ्चमं पठन्ति ।

अपरं च । अथर्वोपनिषत्सु कचित् गोकुलवृन्दाकाननसञ्चरन्नोपरूपमनल्पकल्पद्रुमप्रसूनविरचितविचित्रस्थलीककालिन्दीसलिलकल्लोलसङ्गिमृदुतरपवनचलदलकविराजमानगण्डमण्डलद्युतिमण्डितकुण्डलप्रभानुभावितवामांसमिलन्मूर्धन्य-

भाष्यप्रकाशः ।

शब्दवत् तद्विशेषणत्वेन कार्यरूपप्राणादिव्यावर्तनार्थतायाः 'तं यथा यथोपासते तथैव भवति तद्धैतान् भूत्वावती'ति श्रुत्याध्यवसितत्वात् प्राणादीनामपि ब्रह्माङ्गत्वेन तद्धर्मा अपि ब्रह्मधर्मा एव, परं न मुख्या इति ब्रह्मधर्मत्वज्ञापनायैतदुदाहृतम् । तथाच यद्यपि ब्रह्मणि सर्वत्र सर्वे धर्माः सन्ति, तथापि तस्य तस्य संराधकस्य तत्तत्फलार्थं तांस्तानेव धर्मान् ब्रह्म प्रदर्शयति, न सर्वेषां सर्वान्, अतस्तत्तदुपासनायां ते त एव ध्यातव्याः, तत्तद्विधायकवाक्यानुरोधात् । तत्र चेदुक्तरीत्या सन्देहः, तदोपासना न कर्तुं शक्येतेति तदर्थं विचार्यन्त इति भावः । अत्र षष्ठोऽग्निर्बृहदारण्यके पञ्चमप्रपाठके पठितः । पञ्चाग्नयस्तु छान्दोग्ये सप्तमे प्रपाठके । प्राणसंवादोपि छान्दोग्ये तत्रैव । बृहदारण्यके तु पञ्चमे प्रपाठके द्रष्टव्यः । अत्र पादे अपरविद्योक्ता एव धर्मा विचार्यन्ते, न परविद्योक्ता अपीति शङ्कां निवारयन्त एव प्रस्तूयमानाधिकरणस्य विषयान्तरमप्याहुः अपरं चेत्यादि । अयमर्थः । गोपालपूर्वतापिन्यां 'सच्चिदानन्दरूपाय कृष्णयाक्लिष्टकर्मणे । नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे' इत्यादिना भगवतः कृष्णस्य परब्रह्मत्वमुक्त्वा, 'तदुहोवाच हैरण्यो गोपवेषमभ्राभं तरुणं कल्पद्रुमाश्रितम्, तदिह श्लोका भवन्ति । सत्पुण्डरीकनयन'मित्यारभ्य, 'चिन्तयँश्चेतसा कृष्णं मुक्तो भवति संसृते'रित्यन्तैः स्वरूपं ध्यानफलं चोक्तम् । 'कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः । तयोरैक्यं

रश्मिः ।

क्षरमुपासीते'त्यन्वयादुद्गीथशब्दवत् । कार्यादीति । व्यावर्तकविशेषणं यतः । प्राणादीनामिति । प्राणवाक्चक्षुःश्रोत्रमनसाम् । ब्रह्माङ्गत्वेनेति । ब्रह्म आकाशः श्रोत्रस्यापि । वाङ्मनसोरादेशः चक्षुषः सूर्यः आनन्दवल्ल्यां अन्यत्र च । यद्वा । प्राणविद्यास्थं ब्रह्म । तत्रास्पष्टत्वेपि 'प्रजापतिं पितरमेत्योचु'रिति प्रजापतिः । तदङ्गत्वेन । तद्धर्मा अङ्गधर्माः । करपाणित्वादीनां देहधर्मत्वदर्शनादेवकारः । मुख्यास्तु देहत्वादिवद्ब्रह्मत्वादयोऽतो न मुख्या इत्येवं ब्रह्मधर्मत्वज्ञापनाय प्राणसंवादरूपं भाष्य उदाहरणविषयम् । तथाचेति । अपरविद्याया ऋग्वेदादिरूपायाः शब्दरूपत्वेनार्थस्य भाव उक्तरीत्या प्राणाद्यर्थपरत्वे विचारिते ऋग्वेदाद्युपनिषदां बोधकताप्रकारे विचारिते चेत्यर्थः । तत्र चेदित्यादि । उपासनायां चेत् उक्तरीत्या पठिताश्चेत्यारभ्य पञ्चमं पठन्तीत्यन्तभाष्येणोक्तरीत्या । अन्वयार्थं तदोपासनेत्यादिग्रन्थः । तदर्थं ब्रह्मगता एव धर्मा विचार्यन्त इति पूर्वेणान्वय आवृत्त्येत्यर्थः । एवेति । व्यवच्छेद्यं तु न परेत्याद्युक्तम् । अत्र भाष्ये । तमपीति । प्राणमपि । प्रकृते । निवारयन्त एवेति । अवधारणेन निवारयन्तः । एवेत्यत्र तृतीयालुक् । प्रस्तूयेति । ननु सर्ववेदान्तशब्दात्प्रस्तूयमानाधिकरणविषयत्वमथर्वोपनिषद्येव कुत इति चेच्छृणु । उपलक्षणत्वात् । अपरं चेत्यादीति । अपरमाथर्वणं चकारेणर्ग्वेदाद्युपनिषदः । क्वचिदिति । गोपालतापिनीये । वृन्दाकाननं वृन्दावनम् । अनल्पेत्यादिविशेषणम् । अनल्पानि कल्पद्रुमस्य प्रसूनानि तैर्विरचिता विचित्रा स्थली यस्यां कालिन्द्याम् । तस्याः सलिलं तस्य कल्लोलानां सङ्गोऽस्यास्तीति सङ्गि उक्तविशेषणैः सिद्धं मृदुतरः पवनः तेन चलैर्दलै[1]र्विराजमानं गण्डमण्डलं तस्य द्युत्या मण्डितयोः कुण्डलयोः प्रभयानुभावितं अनु पश्चात्पुटितो

१. चलैर्दलैरिति रश्मिपाठ आदर्शेषु कुत्राप्यदर्शनादारत इति ।

**महामणिकमुरलिकामुखावलीमिलदतितरलकरकमलयुगलाङ्गुलीवशंवदविविधस्वरमूर्छनामोहितव्रजवरनितम्बिनीकदम्बकटाक्षकुवलयार्चितम्, क्वचित् कोदण्डमण्डितभुजदण्डखण्डितप्रचण्डदशमुण्डमतिविचित्रचरित्राभिरामं रामस्वरूपम्, क्वचिदतिकरालवदनवित्रासितकमलाकमलासनवृषभासनादिकं नृकेसरिरूपम्,**

भाष्यप्रकाशः ।

परं ब्रह्म कृष्ण इत्यभिधीयते' इति चोक्तम् । श्रीभागवते च 'कृष्णस्तु भगवान् स्वय'मित्युक्तम् । दशमस्कन्धसुबोधिन्यां च परब्रह्मत्वं व्युत्पादितम् । तथा रामतापनीये 'रमन्ते योगिनो यस्मिन्नित्यानन्दे चिदात्मनि । इति रामपदेनासौ परं ब्रह्माभिधीयत' इति श्रावणात् । श्रीमदाचार्यैरपि पञ्चमस्कन्धनिबन्धप्रकाशे 'कदाचिद्रामः पुरुषोत्तमावतार एवेति पद्मपुराणादवसीयते' इति कथनात् । अग्निकुमाराणां च 'व्रजे वो मनोरथः सम्पत्स्यत' इति श्रीरामेण वरदानाच्च । नवमस्कन्धे श्रीरामचरित्रे 'स यैः स्पृष्टोऽभिदृष्टो वा संविष्टोऽनुगतोऽपि वा । कोशलास्ते ययुः स्थानं यत्र गच्छन्ति योगिन' इत्यविशेषेण सर्वेषां मुक्तिदानाच्च श्रीरामस्य पुरुषोत्तमरूपत्वम् । नृसिंहस्वरूपे तु नृसिंहविद्यावत्युत्कर्षविश्रान्त्या नृसिंहस्य परत्वमवसीयते । तद्विद्याया रहस्यत्वश्रावणाच्च । उरुक्रमरूपे तु विष्णुसूक्तश्रीभागवतादिषु अनन्तवीर्यत्वकथनात्, पातिकया क्रियया सत्यलोकस्थापकत्वरूपाद्भुतकर्मकथनाच्च परत्वं निरूप्यते । आदिपदेन नारायणानुवाकसद्विद्यात्मविद्याश्वेताश्वतराद्युक्तनारायणस-

रश्मिः ।

वामांसः तेन मिलन्ती मूर्धन्या उत्तमा महामणयो यस्यां मुरलिकायां तस्या मुखानां छिद्राणामावल्यः पङ्क्तयस्ताभिर्मिलन्ती अत्यन्तं तरलं कररूपस्य कमलस्य युगलं तस्याङ्गुल्यः तासां वशंवदा । अत्र मूर्छनानिष्ठो व्यापारः । ता विविधाः सप्तानां स्वराणां मूर्छना एकविंशतिः ताभिर्मोहितो व्रजस्य वरो नितम्बिनीनां भक्तानां कदम्बो यासु ताः मोहितव्रजवरनितम्बिनीकदम्बास्तासां कटाक्षाणि तानि कुवलयानि तैरर्चितमिति । श्रुतयः प्रसिद्धाः । क्वचिदिति । रामतापिनीये । कोदण्डो धनुः । क्वचिदिति । नृसिंहतापिनीये भागवतोपष्टम्भे । इत्यादीति । रूपमित्यर्थः । मन्त्रे च तद्रूपम् । स च 'चरणं पवित्रं विततं पुराणमि'ति महानारायणे । तत्रेति । यजुरुपनिषदि बृहदारण्यके, सामोपनिषदि छान्दोग्य इत्यर्थः । तत्रेति । ऋग्वेदोपनिषदि मण्डूके । रूपान्तरमिति । मण्डूके तु 'अद्वैतः सर्वभूतानां देवस्तुर्यो विभुः स्मृतः' इत्यत्र देवे तुरीयत्वं विधीयते । तुर्य इति फले परोक्षवादात् । देवः क्रीडावान् । दशविधक्रीडाः । स तुर्यः तुरीय इत्यर्थः । उपबृंहितेयं तु कृष्णं वदिष्यतीति तद्रूपान्तरम् । आरम्भे तु 'ॐमित्येतदक्षर'मित्युक्तं तच्छब्दार्थयोरौत्पत्तिकसम्बन्धाद्गृह्यत उपासनायां तद्रूपं तु नात्र । ब्रह्मविद्योपनिषद्यस्ति 'ऋग्वेदो गार्हपत्यः पृथिवी ब्रह्म एव च । अकारस्य शरीरं तु व्याख्यातं ब्रह्मवादिभिः ॥ यजुर्वेदोऽन्तरिक्षं च दक्षिणाग्निस्तथैव च । विष्णुश्च भगवान् देव उकारः परिकीर्तितः ॥ सामवेदस्तथा द्यौश्चाहवनीयस्तथैव च । ईश्वरः परमो देवो मकारः परिकीर्तितः' इति । गार्हपत्याद्यग्नयः सोमपर्यन्ताः । तेषां रूपं [ सप्तहस्तश्चतुःशृङ्गः सप्तजिह्वो द्विशीर्षकः । त्रिपात्प्रसन्नवदनः सुखासीनः शुचिस्मितः ॥ स्वाहां तु दक्षिणे पार्श्वे देवीं वामे स्वधां तथा । बिभ्रद्दक्षिणहस्तैस्तु भक्तिमन्नं स्रुचं स्रुवम् ॥ तोमरं व्यजनं वामैर्घृतपात्रं च धारयन् । आत्माभिमुखमासीन एवंरूपो हुताशनः ] इति श्लोकोक्तम् । 'चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्तहस्तासो अस्य ।

१. मूले समग्रः श्लोको न लिखितः चिह्नान्तर्गतः [ ] ।

**कश्चिदुरुक्रमादिरूपं च निरूप्यते । तथाच द्रव्यदेवताभेदात् यागभेदवद्धर्माणामावापोद्वापाभ्यां दृष्टादृष्टफलभेदाच्च वेद्यभेदे प्राप्ते ब्रह्मानेकत्वापत्तौ श्रुतिविरोधात् विनिगमकाभावात् सर्वेषामुपासनाविषयाणामब्रह्मत्वमापतितम् ।**

भाष्यप्रकाशः ।

दात्मरूपं शिवरूपमन्यच्च तत्र तत्रोक्तं रूपान्तरं संगृह्यते । चकारेण तत्र तत्रोक्तविभूतिरूपसंग्रहः । तथाच श्रुतौ ब्रह्मणो नानारूपनिरूपणात् तेषु किं समानत्वम्, उत कस्यचिच्छीघ्रं फलदातृत्वेन सुगमोपायैः फलदत्वेन परमदयालुतया जीवापराधनिवारकत्वेनाधिक्यमिति सन्देहानपायात्तदर्थं विचार आवश्यक इत्यर्थः । एवमत्र विषय उक्तः । तथाच पूर्वत्र ब्रह्मप्राधान्येन विचारः, अत्र ब्रह्मरूपप्राधान्येनेति विशेषः ।

संशयं व्युत्पादयन्ति तथाचेत्यादि । तथा तेन धर्मभेदप्रकारेण द्रव्यदेवताभेदाद्यागभेदवत् । यथा पूर्वतन्त्र आमिक्षाधिकरणे, 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिन'-मित्यत्रामिक्षावाजिनात्मकघनविरलद्रव्यद्वयरूपक एको यागः, उत यागद्वयमिति सन्देहे, द्रव्यदेवताविशिष्टयागान्तरविधौ गौरवं व्यापारान्तरकल्पनापत्तिश्चेति न यागद्वयं युक्तम्, किन्त्वामिक्षायाग एव वाजिनं गुणो विधीयते । 'वाजिभ्य' इत्यनेन च वाज आमिक्षारूपमन्नं येषामिति योगेन पूर्वोक्ता विश्वेदेवा एवोपलक्ष्यन्त इति पूर्वः पक्षः । तत्रोत्पत्तिशिष्टामिक्षाद्रव्यावरुद्धे यागे उत्पन्नशिष्टं वाजिनं गुणत्वेन प्रवेशं न लभते, निर्बलत्वात् । ततश्च तत् द्रव्यं स्वसम्बन्धिनं यागं पूर्वस्माद्भिनत्ति । वाजिपदं चाश्वे रूढत्वान्न योगेन विश्वान् देवान् उपलक्षयिष्यति । योगस्य रूढितो नैर्बल्यात् । तथा सति विधिव्यापारान्तरयोः कल्पनस्य प्रामाणिकत्वात् तत्कृतं गौरवं न दोषायेति द्रव्यदेवताभेदात् तत्र यथा यागभेदः, तद्वदत्रोपासनायां गोपालरामनृसिंहादिरूपभेदेन परस्परं तेषां भेदात् धर्माणामावापोद्वापाभ्यां दृष्टादृष्टफलभेदाच्च प्रापश्चिकानां मुरलीकोदण्डधरत्वादीनामावापेन तद्भि-

रश्मिः ।

त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यानाविवेशे'ति श्रुत्युक्तं च । स्वाध्यायसूत्र उपयोक्ष्यते । भाष्यीयचकारार्थमाहुः **चकारेणेति** । **तत्रेति** । तैत्तिरीये । **तत्रेति** । दुर्गागणपतिसूर्योपनिषत्सु । **विभूतीति** । अन्नमयादिविभूतयः दुर्गादिविभूतयश्च । तासां रूपाणि पक्ष्यादिरूपाणि । **तथेति** । व्याख्येयम् । तेनामिक्षात्वेन वाजत्वेन विश्वेदेवत्वेन लक्षितविश्वेदेवत्वेनेत्यादि व्याख्यानम् । **व्यापारेति** । यागान्तरकल्पनापत्तिः । द्रव्यदेवता आमिक्षावाजिविश्वेदेवाः तेषां भेदात् । **वाजिभ्य इतीति** । अश्वे रूढेन पदेन । **पूर्वोक्ता इति** । आमिक्षायागोक्ताः । एवकारोऽन्ययोगव्यवच्छेदकः गौरवात् । **उपलक्ष्यन्त इति** । वाजिपदमश्वे रूढम्, तेनोपलक्षणेन विश्वेदेवा बोधविषयाः क्रियन्त इत्यर्थः । यद्वा । विरलद्रव्यवाजान्नसम्बन्धिषु वर्तते । वाजान्नसम्बन्धिषु विश्वेदेवेषु वाजान्नसम्बन्धिविशेषेषु विश्वेदेवेषु लाक्षणिकम् । **द्रव्यदेवताभेदाद्यागभेदवदिति** । व्याख्येयम् । सामान्यवाच्यस्य विशेषवाच्यस्य च सामान्यविशेषभावसम्बन्धो लक्षणा । **उत्पत्तीत्यादि** । **वैश्वदेव्यामिक्षेति** प्रथमज्ञप्तिशिष्टा । **उत्पन्नेति** । तप्ते पयसि दध्यानयनेनोत्पन्ने शिष्टम् । **योगेनेति** । वाजो येषामस्ति । 'अत इनिठनौ' इतियोगेन । **उपलक्षयिष्यतीति** । यथा घटपदं कम्बुग्रीवादिमति रूढं न भासाकरमुपलक्षयति योगेन । **विधीति** । द्रव्यदेवताविशिष्टयागान्तरविधिः । **व्यापारान्तरेति** । यागान्तरेत्यर्थः । दार्ष्टान्तिके योजयन्ति स्म **अत्रोपासनायामिति** । **भेदे**[1] **इति** । सति इत्यर्थः । **धर्माणामावापोद्वापाभ्यां दृष्टादृष्टफलभेदाच्चेति** । व्याख्येयम् । **साकारेति** । निष्कलं षोडशीकलारूपम् ।

१. भेदे इति पूर्वपाठः रश्मौ ।

ननूपासनाविषयाणामौपाधिकत्वात् तेषां चाविद्याकल्पितत्वात् तद्विशिष्टानां तथात्वं युक्तमेव, नचैवं तन्निरूपकाणां वेदान्तानामब्रह्मपरत्वप्रसङ्गः, शुद्धस्य ब्रह्मणो दुर्ज्ञेयत्वेनोपाधिविशिष्टोपासनया चित्तशुद्धौ सत्यां स्वत एव तज्ज्ञानं भविष्यतीत्येतत्तात्पर्यकत्वादिति चेत् । मैवम् । समन्वयविरोधापत्तेः । तासां ब्रह्मविद्यात्वहानेश्च । श्रुतेः प्रतारकत्वापत्तेश्च ।

भाष्यप्रकाशः ।

लक्षणानां सदेकरसत्वास्थूलत्वादीनामुद्धापेन चेत्येवं ताभ्यां तत्तद्रूपगततत्तद्धर्मावापोद्वाभ्यां च साकारदर्शननिष्कलदर्शनादिरूपयोर्दृष्टफलयोस्तत्तत्पदप्राप्तिब्रह्मभावरूपयोरदृष्टफलयोर्भेदाच्च ज्ञानवेद्यात् सर्वफलदातृत्वेन प्रतिपादितात् परब्रह्मणोपि सकाशाच्च तत्तद्वाक्यवेद्यानां भेदे प्राप्ते, तत्तद्वाक्येषु ब्रह्मत्वेनैवोपासनस्य विहितत्वात् ब्रह्मानेकत्वापत्तौ 'एकमेवाद्वितीय'मिति श्रुतिविरोधादुपास्यरूपेषु किं ब्रह्म, किं नेति विनिगमकाभावात् सर्वेषामुपासनाविषयाणामब्रह्मत्वमापतितम् । अतः किं सर्वेषामब्रह्मत्वम्, उत यागवद्ब्रह्मभेदः, उत सर्वत्रैकमेव ब्रह्म प्रतिपाद्यमिति संशय इत्यर्थः ।

पूर्वपक्षमाहुः नन्वित्यादि । ननूपासना नाम चिन्ताभावनाद्यपरपर्याया शास्त्रप्राप्ता सविषयकज्ञानरूपा मनोवृत्तिः, ब्रह्म तु निर्विषयज्ञानैकरसम्, न तादृशनानाविधधर्मवत्तया वृत्तिविषयीभवितुमर्हतीत्युपासनाविषयाणां धर्माणामौपाधिकत्वादौपाधिकानां चाविद्याकल्पितत्वात् तद्धर्मविशिष्टानां तेषां तेषां रूपाणामब्रह्मत्वं युक्तमेवेत्यर्थः । नचेत्यारभ्य चेदित्यन्तं स्पष्टम् । एवमत्रैकः पूर्वपक्षः । तमन्यो दूषयन्नाह मैवमित्यादि । न वेदान्तानामुक्तविधतात्पर्यकत्वेन ब्रह्मपरत्वं शक्यवचनम् । समन्वयविरोधापत्तेः । 'सर्वे वेदा यत्पदमामनन्ती'त्यादयः श्रुतयो हि 'अणोरणीयान्महतो महीया'नित्यादिभिर्विरुद्धधर्माश्रयमेवाशरीरमप्राकृततनुं सर्वाचारं मृत्यूपसेचनकं ब्रह्म बोधयन्ति । तथा 'अदृश्यमग्राह्य'मित्यादि प्रकृत्य, 'यथोर्णनाभिः सृजते गृह्णते चे'त्यादिभिः कारणत्वसर्वज्ञत्वादिकं तत्र वदन्ति । अक्षरं 'अस्थूलमनण्वि'त्यादिना प्रपञ्चविलक्षणं प्रकृत्य, प्रशासितृत्वादिधर्मकं वदन्तीति विरुद्धधर्माश्रय एव ब्रह्मणि श्रुतीनां समन्वयात् त्वदुक्तरीत्याङ्गीकारे तद्विरोधापत्तेः । उपासनाविषयाणामब्रह्मत्वे तद्बोधकानां ब्रह्मानिरूपकतया ब्रह्मविद्यात्वहानेः । चकारेण 'परं ब्रह्म परं धामे'त्यादिस्मृतीनामपि विरोधात् । अन्यथा सतो ब्रह्मणोऽन्यथा

रश्मिः ।

'निष्कलं निरवयव'मिति विरुद्धधर्माधिकरणं वा । ब्रह्मभावः 'कृष्णोह'मिति । 'ब्रह्माहमस्मी'ति । वेद्यभेद इति भाष्यं विवृण्वन्ति स्म ज्ञानवेद्यादिति । एकरूपादेकरसाच्च । ब्रह्मानेकत्वेति भाष्यं विवृण्वन्ति स्म तत्तद्वाक्येष्वित्यादि । विहितत्वादिति । 'आत्मेत्येवोपासीते'ति पुरुषविधब्राह्मणश्रुत्या विहितत्वात् । चिन्तेति । आदिना मनोव्यापारः । शास्त्रेति । 'आत्मेत्येवोपासीते'त्याद्युपासना शास्त्रप्राप्ता । 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीते'ति भावना । 'तस्मात्केनाप्युपायेन मनः कृष्णे निवेशये'दिति मनोव्यापारः । विषयो विराट् । ज्ञानमात्मत्वादिप्रकारकम् । निर्विषयेति । निर्विषयज्ञानं च तदेकरसम् । विषयस्याविद्यकत्वात् । तद्धर्मेति । औपाधिकधर्मविशिष्टानाम् । एवेति । अनौपाधिकत्वखण्डनयुक्त्यैवकारः । स्पष्टमिति । स्वत एवेति । चित्तशुद्धिश्चित्तलयात्मिका तद्भेदेऽहंकारे लीने (तद्भेदरूपायां बुद्धौ लीनायां) आद्यकार्यलयाज्जगल्लये स्वत एव, नतु साधनतः 'अहं ब्रह्मास्मी'त्यैक्यज्ञानं भविष्यति । एवं स्पष्टम् । उक्तेति । अव्यवहितपूर्वोक्तविधतात्पर्यकत्वेन । एवेति । उभयव्यपदेशाधिकरणादेवेति । तद्विरोधेति । समन्वयविरोधापत्तेः । तासामितिभाष्यं विवृण्वन्ति स्म उपासनेति । श्रुतेरितिभाष्यं विवृण्वन्ति स्म अन्यथेति । अन्यथेति ।

अपरश्च । 'योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चौरेणात्मापहारिणा' इत्यन्यथाज्ञानं निन्दती श्रुतिः कथं फलसाधकत्वेन तत्तदुपासनां वदेत् । स्पष्टार्थानां श्रुतिवाक्यानां निर्णयमकृत्वा सन्दिग्धार्थानां ज्योतिराकाशादिशब्दानां तद्वाचकत्वं न निर्णीयात् भगवान् व्यासः । एवञ्च सत्युक्तरीत्या यागवत्तेषां परस्परं भेदश्चावश्यक इत्युभयतःपाशा रज्जुरिति प्राप्ते, अभिधीयते ।

सर्ववेदान्तप्रत्ययम् । अनेकरूपनिरूपकैः सर्वैः वेदान्तैः प्रत्ययो ज्ञानं यस्य तत्तथा । ब्रह्मणोऽनन्तरूपत्वेपि यानि यानि रूपाणि विविधैर्जीवैरुपासितुं

भाष्यप्रकाशः ।

कथनेन तत्तच्छ्रुतेः प्रतारकत्वापत्तेश्च । अथाप्तोक्तविषभोजनकथनवदिदं क्रममुक्तिहेतुत्वेन वदतीति न प्रतारकत्वमिति विभाव्यते, तदप्ययुक्तमित्याह अपरश्चेत्यादि । यदि तथा स्यात्, तदा 'योऽन्यथा सन्त'मित्यादिनाऽन्यथा ज्ञानं निन्दन्ती श्रुतिश्चित्तशुद्धिद्वारा क्रममुक्तिहेतुत्वेन तदुपासनां न वदेत् । आत्मापहारेण महापापापादकतया चित्ताशुद्धिजनकत्वात् । किञ्च । इदं व्यासस्यापि न सम्मतमित्याह स्पष्टार्थानामित्यादि । यदि हि तेषामब्रह्मत्वं व्यासोऽभिप्रेयात्, तदा कृष्णरामादिपदानि देवतावाचकानि ब्रह्मवाचकानि वेति सन्दिह्य, तन्निर्णयमपि किञ्चित् कुर्यात् । अतः श्रुतिविरोधो व्यासाशयविरोधश्च न वैयासदर्शनानुसारिणो युक्त इत्यर्थः । एवं तन्मतं दूषयित्वा स्वमतमाह एवञ्च सतीत्यादि । उक्तहेतुभिः सर्वासां श्रुतीनां ब्रह्मनिरूपकत्वेपि सति उक्तरीत्या यागवद्धर्मभेदकृतधर्मिभेदेनामिक्षावाजिनयागवत् तेषां तत्तद्विद्यावेद्यानां परस्परमेद आवश्यक इति । अतो हेतोरुभयतःपाशा रज्जुः । एतदङ्गीकारे भेदापत्त्या 'अयमेव स योऽय'मित्याद्यभेदश्रुतिविरोधात्, एतदनङ्गीकारे चैकदेशिमतवद्रूपाणामविद्याकल्पितत्वापत्त्या चोभयथापि दोष इति प्राप्त इत्यर्थः । अत्र सूत्रप्रतीकमुपन्यस्य समादधते अभिधीयत इत्यादि । सूत्रे व्यधिकरणपदो बहुव्रीहिः । प्रत्ययो विश्वासोत्पादकं ज्ञानम् । यद्यपि भाष्ये ज्ञानमेवोक्तम्, तथापि लोके प्रत्ययपदस्य विश्वासे प्रसिद्धत्वादत्र शब्दमहिम्ना तथा व्याख्यानेप्यदोषः । प्रतिज्ञा च ब्रह्मतदुपासनोभयविषयिणी बोध्या । नन्विदं प्रतिज्ञावाक्यमुपासनापरतयैव व्याख्यातुमुचितम्, अतीतपादे ब्रह्मज्ञानप्रकारस्योक्तत्वात्, तेन निर्णीते वस्तुतत्त्वे यथा ज्ञातस्वरूपस्य गुरुप्रभृतेरुपासनं क्रियते, तद्वद्ब्रह्मोपासनस्य कर्तव्यत्वेन विचार्यत्वात्, न तु ब्रह्मपरतयापि, तज्ज्ञानप्रकारस्य प्रागेवोक्तत्वात्,

रश्मिः ।

विरुद्धधर्माश्रयत्वेन सतः । अन्यथेति । उक्तशुद्धत्वमात्रेण । आप्तोक्तेति । वाग्भटादिकंकायनाद्याप्तोक्तौषधाङ्गविषभोजनकथनवत् । इदं विषभोजनं रोगनिवर्तकम्, नतु मारकम् । क्रमेति । शाखारुन्धतीन्यायेन सोपाधिकद्वारा दुर्ज्ञेये बुद्धिसिद्धिरित्येवं क्रममुक्तिहेतुत्वेन वदतीत्यर्थः । न वदेदिति । उपासनाया औपाधिकविषयत्वेनान्यथाप्रतिपादनरूपत्वात् न वदेदित्यर्थः । चित्ताशुद्धीति । उपाधिरूपबुद्ध्यशुद्धिजनकत्वात् । स्पष्टार्थानामित्यादिभाष्यं विवरीतुमाहुः किञ्चेत्यादि । रज्जुं स्पष्टयन्ति स्म एतदङ्गीकार इति । इदमिति । सूत्रम् । उपासनेति । एवेति । ज्ञानयोगव्यवच्छेदकः । ब्रह्मेति । विरुद्धधर्माधारत्वस्य । प्रागेवेति । अतीतपादे । अयमेवेति । प्रत्ययः । ज्ञानो-

१. अयमेवेति पूर्वपाठः ।

शक्यानि, तानि तानि रूपाणि तैस्तैर्वेदान्तैर्निरूप्यन्त इति तावद्रूपात्मकमेकमेव ब्रह्मेत्यर्थः। तत्र हेतुः चोदनाद्यविशेषादिति। चोद्यते कर्तव्यत्वेन बोध्यतेऽनेनेति चोदना विधिवाक्यमिति यावत्। तस्याविशेषादित्यर्थः। यथैकस्मिन्नग्निष्टोमे शाखाभेदेपि चोदना तथैव भवति, 'अग्निष्टोमेन यजेते'ति, तथेहापि सर्वेषु वेदान्तेषु ब्रह्मत्वेनैवोपासना विधीयत इति तथा। आदिपदात् साक्षात्परम्पराभेदेन मोक्ष-

भाष्यप्रकाशः।

'यदेकमव्यक्तमनन्तरूप'मित्यनन्तरूपश्रुतौ वृत्तिसङ्कोचने मानाभावादसङ्कुचितवृत्तितया गणनापरिच्छेदरहितानां रूपाणां निरूपयितुमशक्यत्वाच्चेत्याशङ्कायामाहुः ब्रह्मण इत्यादि। तथाच विरुद्धधर्माश्रयतया सामान्यतो ब्रह्मज्ञानस्योक्तत्वेपि 'फलमत उपपत्ते'रित्यत्र ब्रह्मणः फलदातृत्वस्य निर्णीतत्वात्तत्र कथं फलं ददातीत्याकाङ्क्षायां तैस्तैः रूपैस्तेन तेन साधनेन तत्तत्फलं ददातीति बोधयितुं तत्तत्फलसाधकोपासनार्थं तत्तद्रूपनिरूपणमिति प्रयोजनस्यानुक्तत्वेन तन्निरूपणस्यावश्यकत्वात् सर्वेषां निरूपणाशक्यत्वेपि कियतां निरूपणेऽनुपपत्त्यभावाच्चायमपि प्रतिज्ञार्थ इति भावः।

नन्वेवं हेतुबोधकपदासङ्गतिः, ब्रह्मणो नित्यत्वेन तज्ज्ञानस्य चाविधेयत्वेन पुरुषव्यापारविषयत्वस्य तत्र वक्तुमशक्यत्वादित्याशङ्कायां हेतुमुपन्यस्य व्याकुर्वन्ति चोद्यत इत्यादि। तथाच यद्यपि ब्रह्मत्वेन ब्रह्मणो न चोदनाविषयत्वम्, तथाप्युपासनाविषयत्वादस्त्येव तद्द्वारा विषयत्वमित्यदोषः। एतदेव बोधयितुं विभजन्ते यथेत्यादि। इहापीत्यस्यैव व्याख्यानं सर्वेषु वेदान्तेष्विति। तथेति। चोदनायामविशेषः। ननु शाखान्तराधिकरणे केवलानां रूपादीनां व्यभिचारित्वं हृदिकृत्य, 'एकं वा संयोगरूपचोदनाख्याऽविशेषा'दिति सूत्रे संयोगादिरूपहेतुचतुष्टयेनाभेदः साधित इति प्रकृते एकेन हेतुना कथमभेदसिद्धिरित्याकाङ्क्षायामाहुः आदीत्यादि। अत्र भाष्ये रूपसङ्ग्रहानुक्तिस्तु साध्यनिर्देशेनैव रूपस्यार्थादेव सिद्धिमभिप्रेत्य, सूत्रे चोदनायाः प्रथममुक्तिस्तु चोदनाविषयस्योपासनस्यापि सर्ववेदान्तप्रत्ययत्वज्ञापनेन तद्विषयस्य ब्रह्मणस्तद्द्वारा तथात्वज्ञापनार्था। तेनान्येषां त्रयाणामपि सङ्ग्रहः। अथवा। चोदना च आदी च तत्समाहारश्चोदनादि, तस्य अविशेषः समानत्वं चोदनाद्यविशेषस्तस्मादित्यर्थो बोध्यः। तथाचैवं संयोगरूपचोदनात्मकहेतुत्रयस्यापि चोदनादिपदेऽभिप्रेतत्वात् सुखेनाभेदसिद्धिरित्यर्थः। आख्याया व्यभिचारित्वं त्वग्रे प्रदर्शनीयम्।

एवञ्चात्र सूत्रे, ब्रह्म तदुपासनं च सर्ववेदान्तप्रत्ययम्, तत्तदुपासनावाक्येषु तत्तन्नानाधर्मवत्तया प्रतिपादनेपि न भिद्यते। चोदनाद्यविशेषात्। यत्र यत्र चोदनाद्यविशेषः, तदनेकवाक्येष्वनेकविधतया प्रतिपादनेऽप्यभिन्नम्। नानाशाखोक्तज्योतिष्टोमादिवदित्यनुमानं सिध्यति। तेन ब्रह्मणस्त-

रश्मिः।

पासनयोर्विलक्षणप्रतीत्यर्थं विश्वासस्य निवेशितत्वादेवकारः। शाखान्तरेति। पूर्वतन्त्र इदं द्वितीयस्य चतुर्थपादे द्वितीयाधिकरणम्। रूपादीनामिति। 'नामरूपधर्मविशेषपुनरुक्तिनिन्दाशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनाच्छाखान्तरेषु कर्मभेदः स्या'दिति द्वितीय'मेकवे'तिसूत्रम्। तत्र रूपचोदनाख्यानां अभेदे सत्त्वेन भेदसाधने व्यभिचारित्वम्। कर्म भिन्नं रूपादिसत्त्वात्। अत्र साध्याभाववत्यभिन्ने हेतोः सत्वाद्व्यभिचारित्वं तद्धृदिकृत्येत्यर्थः। संयोगादीति। संयोगोऽर्थसंयोगः तस्याविशेषाच्छाखान्तरे। तदेव प्रयोजनमुद्दिश्य तदेव विधीयमानं 'ज्योतिष्टोमेन यजेते'त्येवं प्रत्यभिजानीमः। तदेवेदमिति। रूपमस्य तदेव द्रव्यदेवतम्। पुरुषप्रयत्नश्च तादृश एव चोद्यते इति चोदना।

फलकत्वकथनमप्युपासनानामविशिष्टमिति प्रयोजनसंयोगः संगृह्यते ॥ १ ॥

**भेदान्नेतिचेदेकस्यामपि ॥ २ ॥**

ननु द्रव्यदेवताभेदात् यागभेदवदुपास्यानां धर्मभेदेन मिथोभेदादुक्तहेत्वसिद्धिं भेदान्नेति चेदित्यनेनाशङ्क्य, तत्परिहारमाह सूत्रकारः एकस्यामपीति सूत्रावयवेन । यथैकस्यामपि गृहीतषोडशिकायामतिरात्रव्यक्तावगृहीतषोडशिकायाः सकाशात् गुणाधिक्येपि नातिरात्रभिन्नयागत्वम्, अतिरात्रलक्षणकमेवाधिकृत्य तद्ग्रहणाग्रहणयोर्विधानात्, एवमिहापि ब्रह्मैवाधिकृत्य तत्तद्धर्मवैशिष्ट्यावैशिष्ट्ययोरुक्तत्वान्न ब्रह्मोपासनाभिन्नत्वमुपासनासु । तथाच ब्रह्मधर्मस्वे-

भाष्यप्रकाशः ।

स्साक्षात्कारस्य च साक्षात्पुरुषव्यापारविषयत्वाभावेपि साक्षात्कारसाधनभूतप्रमाणसम्पादनद्वारा तादृशवृत्तिसम्पादनद्वारा च चोदनासम्बन्धो वर्तत एवेति तथा पुरुषव्यापारस्यापि सम्भवात् ब्रह्मपक्षकत्वेपि न हेतोः स्वरूपासिद्धत्वमिति ज्ञेयम् । नचैवं सति प्रतिज्ञापि केवलविज्ञानपरतयैव व्याख्यातुमुचितेति शङ्क्यम् । पक्षवाचकविज्ञानपदाध्याहारापेक्षया पूर्वपादान्तिमसूत्रे जैमिनिमतोपन्यासे धर्मपदेन चोदनालक्षणतयात्र विज्ञानपरामर्शवत् 'पूर्वं तु बादरायण' इति पूर्वपदोक्तब्रह्मणः सन्निहिततया तत्परामर्शस्यापि युक्तत्वात्, विद्याविचारस्य वेद्याधीनत्वाच्च तत्परतया व्याख्यानेऽप्यदोषात् ॥ १ ॥

भेदान्नेति चेदेकस्यामपि ॥ २ ॥ अस्मिन् सूत्रे केचिन्नैकस्यामपीति पठन्ति । अर्थस्तु तत्रापि तुल्यः । सूत्रप्रयोजनं वदन्तो व्याकुर्वन्ति नन्वित्यादि । मिथोभेदादुक्तहेत्वसिद्धिमिति । परस्परं रूपभेदाद्धेत्वेकदेशाभावेन पूर्वसूत्रोक्तस्य हेतोः स्वरूपासिद्धिम् । इहापीति । उपासनावाक्येष्वपि । नेत्यादि । न ब्रह्मणो भिन्नत्वम्, अतस्तदुपासनास्वपि न भिन्नत्वमित्यर्थः । एवं सूत्रे

रश्मिः ।

आख्या नाम । वेद्यं चाविशिष्टम् । वर्तत एवेति । चोदनावर्तनायोगव्यवच्छेदक एवकारः । तथेति । उक्तप्रकारेण । ब्रह्मपक्षकत्व इति । यथा कर्म भिन्नं रूपादिसत्त्वादित्यत्र ब्रह्मपक्षकत्वेपि । न हेतोरिति । नामरूपधर्मविशेषादिषु चोदनादेर्हेतोः ब्रह्मपक्षे सत्त्वान्न पक्षे हेत्वभावरूपस्वरूपासिद्धत्वमिति ज्ञेयम् । प्रतिज्ञा वाक्ये वेदान्तेऽग्निष्टोमविधिराचार्यस्याविशेषघटितसूत्रादभिमतेत्याचार्याणां यज्ञनारायणसोमयाजिनां पुत्रा गङ्गाधरसोमयाजिनः, तेषां पुत्रा गणपतिसोमयाजिनः, तेषां वल्लभभट्टजितः, तेषां लक्ष्मणभट्टजितः, तेषां रामकृष्णभट्टजितः, तेषां भ्रातरः श्रीवल्लभाचार्याः, तेषां सोमयागसंस्था पारम्परिकीति तदा विशेषेणोपासना युक्तेत्युक्तप्राया मङ्गलार्था ॥ १ ॥

भेदान्नेति चेदेकस्यामपि ॥ २ ॥ तुल्य इति । एकार्थे उभयप्रयोगात्तुल्यः । सर्ववेदान्तप्रत्ययं ब्रह्म, तदुपासनावाक्येषु तत्तन्नानाधर्मवत्तया प्रतिपादनेप्यभिन्नम्, चोदनाद्यविशेषात्, नानाशाखोक्तज्योतिष्टोमादिवदित्यत्र चोदनाद्यविशेषरूपहेतोः पक्षे ब्रह्मण्यभावात्तथा । 'परस्परं रूपभेदा'दिति 'मिथोभेदा'दितिभाष्यार्थः । भाष्ये । तद्ग्रहणेति । षोडशिग्रहणाग्रहणयोः 'अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णाती'त्यनेन विधानात् लेड्विवक्षया । प्रकृते । तयोरिति । परस्परं

१. परामर्शस्य लघुत्वेन ज्यायस्त्वाविति पूर्वपाठः । २. शाबरभाष्यम् ।

नाभेदस्य विवक्षितत्वात् त्वदुक्तहेत्वसिद्धिः । एवं सति यत्रैकस्मिन्नुपास्ये रूपेऽन्यस्माद्रूपादधिका गुणा उच्यन्ते, तत्र तेषामुपसंहार उचित इति भावः ।

भाष्यप्रकाशः ।

व्याख्याय सिद्धमाहुः तथाचेत्यादि । षोडशिग्रहणादिवत्तयोर्ब्रह्मधर्मत्वेन वेद्याभेदस्य विवक्षितत्वात् त्वदुक्तस्य भेदरूपस्य हेतोरेव प्रत्युत स्वरूपासिद्धिः । ब्रह्म तदुपासनं च न सर्ववेदान्तप्रत्ययं रूपभेदादित्येवं प्रतिसाधने, धर्मभेदेन रूपभेदः साधनीयः, तत्र रूपभेदो धर्मभेदादामिक्षादियागवदित्यत्र, न भेदोऽतिरात्रवदिति दृष्टान्तेन हेतोः साधारण्यात् व्याप्यत्वासिद्धिरिति तेन रूपभेदासिद्धौ प्रतिपक्षहेतोरेवासिद्धिः । अत एव गोपालोपासनायां 'चतुर्भुजं शङ्खचक्रशार्ङ्गपद्मगदान्वित'मिति चतुर्भुजध्यानमुक्त्वा, 'ध्यायेन्मनसि मां नित्यं वेणुशृङ्गधरं तु वे'ति द्विभुजध्यानमप्युक्तम्, अतो न धर्मभेदाद्रूपभेद इति तवैव दोषात् राद्धान्तहेतुर्निर्दुष्ट इत्यर्थः । नन्विदं पूर्वपादान्त एव साधनीयम्, ब्रह्मणः फलदातृत्वस्य तत्रैवोक्तत्वात्, पादान्तरे तत्साधनस्य किं प्रयोजनमित्याकाङ्क्षायां वक्ष्यमाणोपसंहारसूत्रविचारेण तदाहुः एवं सतीत्यादि । एवं सतीति । उक्तरीत्या वेद्यैक्ये विध्यैक्ये च सति । तत्र तेषामिति । न्यूनगुणकेऽधिकगुणानाम् । तथाच गुणोपसंहारः प्रयोजनमेतस्येति तदर्थमत्र विचार इत्यर्थः । ननु उपसंहारो नाम उप समीपे संहरणम्, तत्र तत्रोक्तानां धर्माणां हेतुबलादावाप इति यावत्, तदत्र तत्तद्वाक्येऽनुक्तानां गुणानां तेन तेन हेतुना तद्वाक्योक्ते विषये सत्तामनुसन्धाय विशिष्टबुद्धौ विषयीकरणम् । एतच्चाग्रे 'न वा विशेषा'दिति सूत्रानन्तरं 'दर्शयति' सूत्राभासे वक्ष्यते । अत एतदर्थत्वमेतदधिकरणस्य न युज्यते । अत्र हि सर्वेषामुपासनाविषयाणां ब्रह्माभेदाद्ब्रह्मत्वेन रूपैक्यस्य, यथाकथञ्चिन्मोक्षफलकत्वाच्च प्रयोजनैक्यस्य, सर्वत्रोपासीतेत्यादिचोदनैक्यस्य, ब्रह्मत्वेनोपासनाद्ब्रह्मोपासनेत्याख्यैक्यस्य च सिद्धत्वात्

रश्मिः ।

भिन्नरूपयोः । विवक्षितत्वादिति । प्रकाशाश्रयसूत्रात्तथा । त्वदुक्तस्येति । शङ्कितुक्तस्य । हेतोरेवेति । रूपभेदरूपस्य हेतोः । एवकारश्चोदनाद्यविशेषादित्यस्य योगस्य व्यवच्छेदकः । स्वरूपेति । ब्रह्मणि पक्षे रूपभेदरूपहेतोरभावात्तथा । रूपेति । ब्रह्मणि रूपभेदो धर्मभेदात् । आमिक्षादीति । आमिक्षात्वं वाजिनत्वं च धर्मौ । ब्रह्मणि न रूपभेदो धर्मभेदादतिरात्रवत् । अत्र षोडशिग्रहणाग्रहणे धर्मौ । न्यूनत्वं समत्वं वा धर्मौ । धर्मभेदेन रूपभेदः सौत्रो हेतुः । तत्साधकमनुमानं भाष्यीयम् । अत्र हेतोर्धर्मभेदरूपस्य । सौत्रहेतोर्धर्मभेदेन रूपभेदस्य साधारण्यं साध्यवदन्यवृत्तित्वं तस्मात् । ब्रह्मणि साध्यं रूपभेदस्तद्वान् आमिक्षादियागस्तदन्योऽतिरात्रयागस्तद्वृत्तित्वं धर्मभेदरूपहेतोरिति । व्याप्यत्वेति । रूपभेदरूपहेतौ गुरुतया हेतुतानवच्छेदकरूपत्वाद्रूपस्य । हेतौ हेतुतावच्छेदकाभावो व्याप्यत्वासिद्धिः । यथा वह्निमान् नीलधूमादित्यत्र । तव शङ्कितु रूपभेदादिति हेतौ व्याप्यत्वासिद्धिर्दोषस्तस्मात् । राद्धान्तस्य प्रतिज्ञायाः प्रतिज्ञासूत्रस्य हेतुरित्यर्थः । प्रागेवेति । समन्वयाधिकरणादौ । एतत्साधनस्य विध्यैक्यसाधनस्य । तदाहुरिति । विध्यैक्यसाधनप्रयोजनमाहुः तेन तेनेति । यथा 'ॐ यो वै श्रीरामचन्द्रः स भगवान् । यश्चाखण्डैकरसात्मा भूर्भुवःस्वस्तस्मै वै नमो नमः' इत्युक्त्वाग्रे 'ॐ यो वै श्री० न्ये मत्स्यकूर्माद्यवतारा भू०' इत्युपसंहारहेतुना वाक्येन । वाक्यो-

१. ननु ब्रह्मैक्यस्य प्रागेव सिद्धत्वाद्वेद्यैक्ये च विध्यैक्यस्याप्यर्थादेव सिद्धत्वात् पुनरेतत्साधनस्य किं प्रयोजनमित्याकाङ्क्षायां वक्ष्यमाणोपसंहारसूत्रविचारेण तदाहुः एवं सतीत्यादीति पूर्वः पाठः । २. सामान्यतः प्राप्तस्य विषयविशेषे नियमनमिति यावदिति पूर्वः पाठः ।

अत्रायं विशेषो ज्ञेयः । उपासनाविषयेष्वखिलेष्वविशिष्टं ब्रह्मत्वं ज्ञात्वा तेष्वेकतरं रूपं य उपास्ते, तस्य तत्र सर्वे गुणा उपसंहर्तुमुचिताः । यस्त्वनन्तेषु विभूतिरूपेषु ओमित्यक्षरादिषु 'ॐमित्येतदक्षरं ब्रह्मे'ति ज्ञात्वोपास्ते, तस्य शाखान्तरीया अप्येतदक्षरोपासनप्रकरणोक्ता एवोपसंहर्तव्याः, नान्ये । तद्रूपमधिकृत्यैव तेषां गुणानां कथनात् । अन्यथातिप्रसङ्गात् । इयं तूपासनामार्गीया व्यवस्थोक्ता, भक्तिमार्गीया त्वेतद्विलक्षणा, साग्रे वाच्येति ॥ २ ॥

भाष्यप्रकाशः ।

सर्वासामुपासनानामैक्ये प्राप्ते सर्वत्र सर्वधर्मोपसंहारप्राप्तेस्तत्र तत्र तत्तद्रूपतत्तत्फलकथनाच्च भेदे प्राप्ते सर्वानुपसंहारस्यापि प्राप्तेश्च तत्प्राप्त्यप्राप्तिविरोधादित्याकाङ्क्षायाम्, तथा यत्र ब्रह्मत्वेनोपासनं विधीयते, तत्रैवं वेद्यैक्यात्तद्वाक्यवेद्यस्य गुणोपसंहारनिर्णयो भवति, यत्र पुनर्ब्रह्मत्वेनोपासनं न विधीयते, यथा प्राणविद्यादौ, तत्र ब्रह्मत्वेनोपासनाया अभावेन वेद्यैक्याभावात् कथं निर्णय इत्याकाङ्क्षायां च सर्वत्रास्य न्यायस्य तौल्यादनेनैव निर्णयो विरोधाभावश्चेत्याशयेनाहुः अत्रेत्यादि । अत्र गुणोपसंहारे वक्ष्यमाणरूपो विशेषः प्रयोजकभेदबलाज्ज्ञेयः । उपासनाविषयेष्वखिलेष्ववताररूपेषु तुल्यं ब्रह्मत्वं वेदान्तवाक्यैरवधार्य, तेष्वेकतरं रूपं यो ब्रह्मत्वप्राधान्येनोपास्ते, तस्य तस्मिन् रूपे सर्वे गुणा उपसंहर्तुमुचिताः । उपसंहारप्रयोजकस्य विरुद्धसर्वधर्माश्रयब्रह्मस्वरूपप्राधान्यस्य तत्र तेनानुसंहितत्वाद्युक्ताः । एतदेवैतत्पादोपान्त्ये समाहारादिसूत्रद्वये स्फुटीभविष्यति । यस्त्वनन्तेषु विभूतिरूपेषु वर्णात्मकौङ्कारादिषु तद्रूपप्राधान्यं ब्रह्मत्वस्य गौणत्वं चानुसन्धाय उपास्ते, तस्यान्यत्रिकास्तदीया एवोपसंहर्तव्याः, नान्ये । तत्र हेतुः तद्रूपमित्यादि । अन्यथातिप्रसङ्गादिति । प्रकरणानादरे तद्विरोधप्रसङ्गात् । तथाच तत्तद्रूपानुसन्धानकृतया व्यवस्थया विषयभेदेनोपसंहारानुपसंहारप्राप्त्यप्राप्तिविरोधाभावादस्याधिकरणस्योपसंहारार्थत्वं सुखेन युज्यते । किञ्च, अन्यत्रापि तत्तद्विभूतिरूपवेद्यैक्यादन्येषां च हेतूनां तत्र सत्त्वादनेनैव न्यायेन निर्णय इत्यर्थः । अत्रोपासनामात्रनिर्णयो न क्रियते, अपि तु यद्ब्रह्मप्राप्तिसाधनत्वेन विवक्षितं तस्य सर्वस्येत्याशयेनाहुः भक्तीत्यादि । अग्र इति । 'न वा प्रकरणभेदात् परोवरीयस्त्वादिव'दित्यस्य द्वितीयव्याख्याने । नचोपासनातिरिक्ताया भक्तेरप्रसिद्धत्वादप्रस्तुतत्वाच्च तद्व्यवस्थास्मरणमाकस्मिकमिति वाच्यम् । गोपालतापनीये 'भक्तिरस्य भजनं तदिहामुत्रोपाधिनैराश्येनामुष्मिन् मनःकल्पनमेव, तदेव च

रश्मिः ।

क्तामेदलिङ्गेन वा । अभावेनेति । किन्तु बाणधारकत्वेन । प्राणसंवादेऽस्ति । अस्य न्यायस्येति । व्यापकब्रह्मत्वेन वेद्यैक्याद्विद्यैकत्वन्यायस्य तौल्यम् । व्यापकविभूतित्वेन रूपेण वेद्यैक्याद्विद्यैकत्वनिर्णय इति तस्मात् । प्रयोजकेति । विरुद्धधर्माश्रयत्वस्य तद्रूपाधिकारस्य च प्रयोजकस्य भेदात् । भेदबलमपि अधिकारस्यानिवार्यत्वात् । ज्ञेय इति परे स्तोःश्चुना श्चुरित्यस्य प्राप्तिः स्मार्ता । उपासनेत्यादिभाष्यं विवृण्वन्ति स्म उपासनेति । तेनेति । उपासकेन । यस्त्वित्यादिभाष्यं विवृण्वन्ति स्म यस्त्विति । तदीया एवेति । एवकारो विरुद्धधर्मरूपान्ययोगव्यवच्छेदकः । अन्य इति । अधिकारधर्मविरुद्धाः । प्रकरणेति । अधिकारप्राप्तप्रकरणानादरे । अधिकारः प्रारम्भः । प्रकरणं देशकालौ । भाष्येऽधिकृत्येत्यत्राधिकारः स्वप्राप्तप्रकरणवाचकः । लक्षणयेति भावः । अनेनैवेति । व्यापकधर्मेण वेद्यैक्याद्विद्यैकत्वनिर्णयरूपेणैव । एवकारोऽन्ययोगव्यवच्छेदकः । यदिति । साक्षात्परम्परया । सर्वस्येति । उप समीपे स्थित्वा यथायोग्यकरणमुपासनालक्षणमेकादशसुबोधिन्याम्, तस्या नवधाभक्तेः सर्वात्मभावस्य च । रामानुजमतेनाशङ्क्य परिहरन्ति स्म न चोपेति । अग्रेति । भक्तिहंसे

नन्वग्निष्टोममेवोद्दिश्य यावन्तो धर्मास्तैत्तिरीयके पठ्यन्ते, न तावन्तो वाजसनेयके, तथाच त्वदुक्तरीत्या वाजसनेयिनां तद्धर्मोपसंहारोपि न्याय्यो भवेत्, नत्वेवं सः, शिष्टाचारादिविरोधात्, तथा पञ्चाग्निविद्यामेवाधिकृत्योक्तोपि षष्ठोऽग्निर्न छन्दोगैः शक्यत उपसंहर्तुम्, तथैवाथर्वणिकैर्नैकस्मिन् रूपे रूपान्तरधर्मो

भाष्यप्रकाशः ।

नैष्कर्म्य'मिति लक्षणभेदेन, समाप्तौ च 'कृष्ण एव परो देवस्तं ध्यायेत् तं रसेत् तं भजे'दिति ध्यानरूपोपासनातो भिन्नतया विधानेन चोपासनातिरिक्ताया भक्तेः प्रसिद्धत्वात् प्रस्तुतत्वाच्च तदभावात् । एकस्मिन्नेव प्रकरणे सृष्टिकर्तृत्वादिना माहात्म्यस्यात्मत्वेन प्रियत्वस्य च बोधनेन श्रुत्यन्तरेपि श्रुतीनां माहात्म्यज्ञानपूर्वकसुदृढस्नेहरूपभक्तावेव तात्पर्यावसायाच्च । ननु विहिताविहितभेदेन भक्तिमार्गद्वैविध्यादत्र कस्य व्यवस्था वाच्येति चेत् । श्रीभागवते श्रीनन्दादीनां फलकथनेनाविहितभक्तेरपि प्रामाणिकत्वसिद्धौ मन्दमध्यमयोरर्थे तद्व्यवस्थाबोधनस्याप्यावश्यकत्वादुभयोरपीति बुध्यस्व । ननु सूत्रकारेणेदं कुत्रोक्तं येनैवमुच्यत इति चेत् । उच्यते । अग्रिमसूत्रेऽधिकारस्यानुपसंहारहेतुताकथनेनात्र यथाधिकारनिर्णयसूचनात् सूचितमिति जानीहि । तस्मान्नात्र शङ्कालेशः । एवञ्चास्मिन्नधिकरणे इदं सिद्धम् । 'यो देवानां नामधा एक एव', 'एकं सद्विप्रा बहुधा वदन्ती'त्यादिश्रुतिभिः, 'येऽप्यन्यदेवताभक्ता' इत्यादिस्मृतिभिश्च भगवतः सर्वरूपत्वात् तेन तेन रूपेण भगवत एव तत्तत्फलदातृत्वं काण्डद्वये पुराणेषु चेति । तेनादित्याद्यङ्गोपासनास्वपि ब्रह्मोपासनात्वमेवेति च सिद्धम् ॥ २ ॥ १ ॥

अतः परं ताः कथं कर्तव्या इत्याकाङ्क्षायामग्रिमसूत्रेषु तत्प्रकार उच्यत इत्याशयेन सूत्रमवतारयन्ति नन्वित्यादि । तथेति । वैधर्म्ये दृष्टान्तः । अयमर्थः । यथा कर्मणां वैलक्षण्येपि 'संयोगरूपचोदनाख्याविशेषा'दिति शाखान्तराधिकरणोक्तन्यायादैक्यम्, एवमुपासनानामपि तेनैव न्यायेनावान्तरैक्यमपि सिद्धम् । तथात्रास्यैव हेतोर्गुणोपसंहारप्रयोजकतयानेनैव हेतुना ज्योतिष्टोमादियागेषु शाखान्तरोक्तगुणोपसंहारोपि न्याय्यो भवेत् । तत्करणे शिष्टाचारविरोधस्तद्वदिया शाखान्तरोक्तानादरे उपासनायामपि तदापत्त्या पञ्चाग्न्यादिविद्यासु षष्ठाग्न्याद्यनुपसंहारापत्तिरथर्वणाद्युक्तरूपेषु रूपान्तरधर्मानुपसंहारापत्तिश्चेति शिष्टाचारविरोधतौल्ये प्राप्ते, तत्समाधानाय गुणानुप-

रश्मिः ।

'उपाप्तिं मन्यन्ते मधुमथनभक्ति'मिति कारिकायास्तथा । 'भक्तिरहस्यभजन'मितिपाठे लक्ष्यलक्षणैकीभावः । 'उपाधी'त्यत्र फलनैराश्येनेति पठन्ति । लक्षणेति । उक्तोपासनलक्षणभेदेनेत्यर्थः । तदभावात् आकस्मिकत्वाभावात् । एकस्मिन्निति । श्वेतकेतुप्रपाठके महाप्रकरणे एकविज्ञानेन सर्वविज्ञानरूपे । सृष्टीत्यादि । 'सदेव सौम्ये'त्यारभ्य 'तत्तेजोऽसृजते'त्यादि । आदिना त्रिवृत्करणम् । आत्मत्वेनेति । 'स आत्मा तत्त्वमसि श्वेतकेतो'इत्यनया तथा । श्रुत्यन्तर इति । 'यतो वा इमानि भूतानी'त्यत्र 'अयमात्मा ब्रह्मे'त्यत्र च । 'भगवान्ब्रह्म कार्त्स्न्येने'ति वाक्यादेवकारः । विहितेति । 'आत्मा वा अरे द्रष्टव्यः श्रोतव्य' इति श्रवणभक्तिर्विहिता । तिसृभिः प्रेम्णि जातेऽन्यासां स्वयंभवनादविहितत्वम् । 'तं रसेत्तं भजे'दिति द्वयं विहितम् । रस शब्दे । कीर्तनम् । भजेदिति 'भज सेवायाम्' । दास्यम् । 'यं मां स्मृत्वे'ति स्मरणम् । श्रवणमुक्तम् । किं पुन'र्भक्त्या जानाति चाव्यय'मिति नवधा भक्तिर्विहिता । अविहिताया ज्ञानाकरणत्वात् । फलेति । एकादशस्कन्धे कथनेन । मन्देति । उत्तमस्य तु गुरूपदेशेनेति । तथाच सर्ववेदान्तप्रत्ययं नैकमिति प्राप्तम् ॥ २ ॥

इति प्राप्ते, उत्तरं पठति ।

**स्वाध्यायस्य तथात्वेन समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥**

स्वाध्यायो वेदः । स एकमेव कर्म शाखाभेदेन भिन्नभिन्नप्रकारकं बोधयतीति तत्प्रयुक्तः सम्यग्भूतेऽग्निष्टोमादिलक्षण आचारे तत्तदङ्गाचारनियमोऽन्यूनानधिककरणलक्षण इत्यर्थः । तावद्भिरेवाङ्गैर्योगसम्पत्तेरधिककरणस्याप्रयोजकत्वात् तावतामेवाङ्गानां करणम् । ननूक्तं तद्धर्माणामप्युपसंहारस्त्ववुक्तरीत्या

भाष्यप्रकाशः ।

संहारहेतुकथनेनोपसंहारप्रकारं वदन्नुत्तरं पठतीति बोध्यः ।

**स्वाध्यायस्य तथात्वेन समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥** अत्र शाखान्तराधिकरणोक्तहेतोः पूर्वसूत्रे परामर्शात् पूर्वतन्त्रविचार्ये पूर्वकाण्डे च स्वाध्यायशब्दस्य वेदवाचकत्वेन प्रसिद्धेरस्मिन् सूत्रे 'तथात्वेने'त्यनेन तदुक्तस्य प्रसिद्धस्य प्रकारस्य, 'तन्नियम' इति तच्छब्देन तत्प्रसिद्धाङ्गाचारस्य च ग्रहणमित्याशयेन व्याकुर्वन्ति स्वाध्यायो वेद इत्यादि । तावन्मात्रनिरूपणस्य यागे तावदङ्गकरणनियमने बीजं स्फुटीकुर्वन्ति तावद्भिरित्यादि । तथाच निरूपणप्रकारभेदस्य बाधकस्य सत्त्वान्नोपसंहार इत्यर्थः । द्वितीयं [२]हेतुं व्याकर्तुमवतारयन्ति नन्वित्यादि ।

रश्मिः ।

**स्वाध्यायस्य तथात्वेन समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥ तद्व्यवस्थेति** । उपसंहारव्यवस्थास्मरणम् । उपेति । उपसंहारबाधकं तु 'यस्त्वनन्तेष्वि'त्यादि पूर्वसूत्रभाष्येणाधिकारप्राप्तं प्रकरणमुक्तम् । एवं च स्वाध्यायपूर्वसूत्रं स्वाध्यायसूत्रमिति मध्यमपदलोपी समासो व्याख्यातव्यः । **एवमिति** पूर्वोक्तप्रकारेण चोदनाद्यविशेषादिति हेतुशोधनात् । **शाखान्तरेति** । इदमधिकरणं पूर्वतन्त्रे द्वितीयचतुर्थपादद्वितीयाधिकरणेऽस्ति । संयोगादिरूपहेतुचतुष्टयात्मकेन । **सिद्ध** इत्यन्तेन **तथाचेति**भाष्यं व्याख्यातम् । अग्रे **शाखान्तरीये**त्यादि **वाजसनेयिनामि**त्यादिभाष्यव्याख्यानम् । अत्र मध्ये **त्वदुक्तरीत्ये**तिभाष्यं तद्व्याख्यानं 'विरुद्धधर्माश्रयत्वस्योपसंहारनियामकत्व'मिति त्वदुक्तरीत्येति । **नत्वेवं स** इति भाष्यं द्वेधा व्याकुर्वन्ति स्म **स चे**दित्यादिना । आद्रियत इति क्रियाध्याहारः । **शिष्टाचारेति** । भाष्योक्तादिशब्दार्थोपलक्षकोयम् । क आदिशब्दार्थ इति चेत् । नवीनव्याख्यात्रादिस्वीकृतत्वम् । **अतीति** । अधिकारप्राप्तप्रकरणविरोधः । **तत्स्मारकमिति** । उपसंहारस्मारकम् । तथा 'पञ्चाग्निविद्यामेवाधिकृत्योक्तोपि षष्ठोग्निर्न छन्दोगैः शक्यत उपसंहर्तु'मिति भाष्योक्तोपसंहारस्तत्स्मारकमित्यर्थः । **भाष्ये** । **उक्त इति** । बृहदारण्यक उक्तः । **स्वाध्यायो वेद इत्यादीति** । भाष्ये ह्यन्तसूत्रव्याख्यानमितीत्यन्तभाष्येण । तथाच स्वाध्यायस्य तथात्वेन एककर्मणः शाखाभेदेन भिन्नभिन्नप्रकारकत्वबोधकत्वेन । द्विहेतौ तदर्थस्तृतीयोक्तः । तत्प्रयुक्तस्तन्नियम इत्यन्वयः । केत्यत उक्तं **सम्यग्भूत** इत्यादि । **अग्निष्टोमादीति** । 'परमेष्ठिनो वा एष यज्ञोग्र आसीद्यदग्निष्टोम' इति श्रुतेरादिरग्निष्टोमः । अग्निष्टोमात्यग्निष्टोमोक्थ्याति-

१. ननूपसंहारस्याग्रे वाच्यत्वादिदानीं तत्प्रसङ्गस्याभावात्कुतस्तद्व्यवस्थास्मरणमित्याकाङ्क्षायां स्वाध्यायसूत्र उपसंहारबाधकधनात् तत्स्मरणमितिबोधनाय सूत्रमवतारयन्ति नन्वित्यादि । एवं हेतुशोधनाच्छाखान्तराधिकरणोक्तहेतुना कर्मैक्यवद्विद्यैक्ये वेद्यैक्ये च सिद्धे शाखान्तरीयकर्मणोपि विद्यातौल्याद्विद्यास्विव शाखान्तरीयकर्मस्वप्यनुक्तगुणोपसंहारः प्राप्नोति, स चेदाद्रियते, तदा शिष्टाचारविरोधोतिप्रसङ्गश्च, यदि नाद्रियते, तदा विद्यैक्यादिसाधनव्यर्थत्वमिति शङ्कायां सूत्रं वक्तीत्यर्थः । तदेव तत्स्मारकमित्यर्थः इति पूर्वं उत्थानिकापाठः । २. अंशम् ।

सम्भवतीत्यत आह अधिकारादिति । सर्वेषां शाखिनां स्वस्वशाखोक्तकर्मण्येवाधिकारः, न परशाखोक्तेपि । अतोपि तथा नियमः । चकारात् स्वशाखोक्तात् कर्मणोऽतिरिक्ततत्करणे न्यूनकरणे च 'यदस्य कर्मण' इत्यादिप्रायश्चित्तश्रवणमपि तन्नियमे हेतुः समुच्चीयते । अत एव क्वचित् परशाखोक्तमपि व्यवस्थितवि-

भाष्यप्रकाशः ।

तथाच शाखान्तरीयप्रकारविशेषकथनस्योत्पन्नशिष्टप्रायत्वेन नैर्बल्यात् स्वल्पकर्मभिर्वाजसनेयिभिस्तैत्तिरीयाद्युक्तकरणे 'अधिकं तत्रानुप्रविष्ट'मिति न्यायेन बाधाभावाबाधस्याप्रयोजकत्वमाशङ्क्य हेत्वन्तरमाहेत्यर्थः । व्याकुर्वन्ति सर्वेषामित्यादि । अधिकारोपष्टम्भाय सम्मत्यन्तरमाहुः अत एवेत्यादि । यत उक्तहेत्वोरस्ति कर्मनियामकत्वम्, अत एव हेतोः क्वचित् यथा 'कुक्कुटोऽसीत्यश्मानमादत्ते कुटरुरसीति वे'त्यश्मादानमन्त्रे, यथा वा उदितानुदितकालाभ्यां विकल्पिते होमे, 'उदिते जुहोत्यनुदिते जुहोती'ति तैत्तिरीयवाक्यद्वयोक्तं व्यवस्थितविषयत्वेन तत्तत्कल्पसूत्र

रश्मिः ।

रात्रषोडश्याप्तोर्यामवाजपेयाख्याः सप्त सोमसंस्थाः । 'सोमश्चन्द्रशेखरः' ज्ञानेन भक्त्या भगवन्मनस्काः, 'साधवो हृदयं मह्यं साधूनां हृदयं त्वह'मिति साधुहृदये सप्तस्वरूपाणि प्रसिद्धानि समष्टीनि । वेदव्याख्याने नवार्थ्यां स्फुटीकृतानि स्वाध्यायपदसामर्थ्यलभ्यानि । आचारो मीमांसकानां सम्यगाचारोऽस्माकम् । 'सोमेन यजेते'ति विधेः सप्तसंस्थाबोधकार्थवादमूलत्वात् । अर्थवादस्य 'विधिना त्वेकवाक्यत्वात्' । यथा 'वायव्यं श्वेतमालभेते'ति विधिः, 'वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावती'त्यर्थवादः । तन्नियम इत्यस्यार्थस्तत्तदङ्गेति । ननु सोमान्तर्गतषोडश्यादीनां स्वरूपनिर्माणभेदादिना नैवं सप्तस्वरूपपरत्वं सम्भवतीति चेत्, द्रव्ययागे प्रवर्तकत्वं सप्तसंस्थानाम् । तदतिरिक्तमानसीसेवादौ तथाकाराभावात् । आधिदैवाकाराणामनुष्ठान आधिभौतिकषोडश्यादिसम्बन्ध आध्यात्मिकसोमयागादिः । यथातिरात्रे मनःस्थानीयत्वेन वर्णनीये भावनायां षोडशिग्रहणाग्रहणे । 'सर्वेन्द्रियगुणाभासं'भावना षोडशिग्रहणे, षोडश्यग्रहणे तु 'सर्वेन्द्रियविवर्जित'मित्युक्तभावना । अनुष्ठाने न कोपि विकारः । यथाचारमेवाग्निष्टोमादयः । यद्यप्यत्रिवृत्कृता अग्निष्टोमादयः सन्ति, तथापि प्रेष्ठाभ्यर्हणायोग्यत्वेन 'यमादिभिर्योगपथैरान्वीक्षिक्या च विद्यया । मदर्चोपासनाभिर्वा नान्यैर्योग्यं स्मरेन्मनः' इति भावनानिषेधाद्भगवदर्चोपासनायोग्याः । तावदित्यादि । तावतामङ्गानां करणे नियमनं नियामकत्वम् । तत्र बीजं यागसम्पत्त्यादि । नन्वित्यादीति । तद्धर्माणामधिकधर्मविशिष्टस्य धर्माणां तैत्तिरीयकाग्निष्टोमधर्माणां षष्ठाग्निहोत्रधर्माणाम् । त्वदुक्तेति । विरुद्धधर्माधारत्वस्योपसंहारनियामकत्वमित्युक्तरीत्या । प्रघट्टकार्थमाहुः तथाचेति । एवंप्रकारेति । उपसंहारप्रकारविशेषकथनस्य उत्पन्नशिष्टवाजिनयागप्रायत्वेनोत्पत्तिशिष्टादतिरात्रयागसकाशान्नैर्बल्यात् । बाधेति । अधिकरणे तथा । अस्येति । यागसम्पत्त्यादेरव्यवहितपूर्वोक्तस्य । हेत्वन्तरेति । अधिकाराच्चेति चकारात्तथा । तथाच 'स्वाध्यायस्य हि समाचारे तथात्वेने'त्येको हेतुः, 'अधिकाराच्चे'त्यपरो नियमे हेतुः । सर्वेषामित्यादीति । तथा नियम इति । तत्तदङ्गाचारनियमः । यदस्य कर्मण इति । आदिना.....................। तन्नियम इति । तत्तदङ्गाचारनियमे हेतुः । कुक्कुटोसीति अश्यन्तमन्त्रः । त्वं अश्मा, कुत् कुत्सितः, कौ वा छुटः छुट छेदे तु. प. से. छुटति पचाद्यच् । वेदभाष्येऽर्थः स्पष्टः । 'कुरुः श्रीकण्ठजाङ्गले ओदने नृपभेदे चे'ति विश्वकोशे कुरुः प्रसिद्धः । यथाह श्रीगोवर्धननाथजितं प्रति कश्चित् 'कृष्णोय'मिति । व्यवस्थितेति । यथा भगवत्स्फोटायनस्येत्यत्र गवाक्षोर्यविशेषे, न तु गो अश्वः गोश्व इति ।

कल्पविषयत्वेन कल्पसूत्रे उच्यते । विकल्पे तूभयस्याशास्त्रार्थत्वम्, उपसंहारे तूभयस्यापि शास्त्रार्थत्वम् । अतोपि नात्रोपसंहारशङ्का । अत्र दृष्टान्तमाह सववदिति । यथा सवा होमाः सप्तसूर्यादयः शतौदनपर्यन्ता वेदान्तरोदितत्रेताग्न्यनभिसम्बन्धादथर्वणोदितैकाग्निसम्बन्धाच्चाथर्वणिकानामेव कार्यत्वेन नियम्यन्ते, तथा तत्तच्छाखाम्नायास्तथात्वात्तत्तदुक्त एव कर्मणि तत्तच्छाखिनामधिकाराच्च स्वस्वशाखोक्तादन्यूनानतिरिक्तकर्मकरणनियम इत्यर्थः । प्रकृतेपि यद्रूपोपासनाप्रकरणे यावन्तो धर्मा उक्ताः, तस्मिन् रूपे तावद्धर्मवत्त्वेनैवोपासना कार्या, तद्बोधकप्रमाणानुरोधात्, न तु रूपान्तरोपासनप्रकरणोक्तासाधारण-

---

भाष्यप्रकाशः ।

उच्यते, यदि प्रकारभेदोक्तेरधिकारस्य च नियामकत्वं न स्यात्, तदा तत्र तत्र व्यवस्थाप्येत, यदि तत्र न व्यवस्थाप्येत, तदा विकल्पो वा उपसंहारो वा प्राप्नुयात् । तत्राद्ये ऐच्छिकत्वेनाष्टदोषदुष्टत्वादुभयस्याशास्त्रार्थत्वम्, उपसंहारे तूभयस्यापि शास्त्रार्थत्वम्, तथापि विरुद्धत्वात् कर्तुं न शक्यमिति व्यवस्था आवश्यकी । अतो व्यवस्थावशादपि न कर्मण्युपसंहारशङ्केति न पूर्वोक्तस्याप्रयोजकत्वमित्यर्थः । ननु यदा शाखाभेदो न सिद्धः, तदा त्वधिकारस्य नियामकत्वाभावादुपसंहारः स्यादित्यत आहुः अत्रेत्यादि । ईदृशेपि स्थले दृष्टान्तमुखेन नियामकमाहेत्यर्थः । व्याकुर्वन्ति यथेत्यादि । यथा सवाः सम्बन्धिभेदान्नियम्यन्ते, तथा विभागाभावदशायामपि तत्तद्भेदे विद्यमानायास्तच्छाखाया एव नियामकत्वात् तथेत्यर्थः । एवमत्रोपसंहारहेतुः शोधितः । निरूपणप्रकारभेदादिबाधकरहित एव वेद्याभेद उपसंहारप्रयोजक इति । एवं कर्मण्युपसंहारबाधकान्युक्त्वा तेषामुपसंहारबाधकानामुपासनायामपि तुल्यत्वात् सववच्चेति चकारेण तासामप्यत्र सङ्ग्रहादे-

रश्मिः ।

तथोदिते होतुरनुदितहोमे दोषः, अनुदिते होतुरुदितहोमे दोष इति उदितहोतुरुदितहोमोऽनुदितहोतुरनुदितहोम इति व्यवस्थितविषयत्वं तेन । विकल्प इति भाष्यं विवरीतुमाहुः यदीति । प्रकारेति । प्रकारभेदः गुणभेदस्याप्रयोजकत्वरूपः । विद्यैकत्वं वेद्यैकत्वाधीनं तद्वेद्यैकत्वं गुणानां गोपरूपत्वरामत्वनृकेसरित्वानां भेदस्याप्रयोजकत्वाङ्गीकाराद्ब्रह्मत्वेनाङ्गीकृतम् । यथा घटत्वपटत्वकुड्यत्वकुसूलत्वानां गुणानां भेदस्याप्रयोजकत्वाङ्गीकारेण द्रव्यत्वेन रूपेण घटादीनां वेद्यानामभेदस्तथात्र अस्याः प्रकारभेदोक्तेरित्यर्थः । तत्र तत्रेति । तत्तत्कल्पसूत्रे तत् होमाश्मादानद्वयम् । उपसंहार इति । 'कुच्छुटोसी'ति मन्त्रयितरि 'कुरुरसी'ति मन्त्रयितृत्वोपसंहारः 'कुरुरसी'ति मन्त्रयितरि 'कुच्छुटोसी'ति मन्त्रयितृत्वोपसंहारः । उदिते होमकर्तर्यनुदिते होमकर्तृत्वोपसंहारः । अनुदिते होमकर्तर्युदिते होमकर्तृत्वोपसंहारः । भाष्यं व्याकुर्वन्ति स्म तत्राद्य इति । अष्टदोषेति । पूर्वमीमांसायां स्पष्टाः । कर्मणीति । अग्निष्टोमे । पूर्वोक्तस्येति । व्यवस्थितविषयत्वेन प्रकारभेदोक्तेरधिकारस्य च । यदेति । व्यासावतारपूर्वकाले । सम्बन्धीति । आथर्वणिकसम्बन्धिभेदात् । अस्यां फक्किकायां अथर्वणेति पदच्छेदः उदितेत्येकदेशान्वयि । न्यायेऽन्वयः प्रसिद्धः । तथेतिभाष्यविवरणं तथा विभागेति । विद्यमानाया इति । 'नासतो विद्यते भाव' इति वाक्यात् । नियामकत्वादिति । तथात्वादितिभाष्यार्थः । तथेत्यर्थ इति । तत्तदुक्त इत्यादिरित्यर्थः । उपसंहारेति । उपसंहारस्य हेतुः वेद्याभेदः । शोधनप्रकारमाहुः निरूपणेति । गुणनिरूपणं गुणरूपप्रकारभेद आदिनाधिकारः एतै-

धर्मवत्त्वेनापि। तथा सति मत्स्योपासकस्य चापशरादिकमपि भावनीयं स्यात्, पुरुषरूपोपासकस्य च लक्षयोजनायामशृङ्गादिकम्।

नन्वथर्वणोपनिषत्सु श्रीरामोपासनायां 'यो वै ये मत्स्यकूर्माद्यवतारा भूर्भुवःसुवस्तस्मै वै नमो नम' इति वाक्येन तदितरावताररूपत्वमुच्यते, तेन तद्धर्मवत्त्वमप्याक्षिप्यते।

सत्यमाक्षिप्यते तद्धर्मवत्त्वम्। तत्रायमभिसन्धिः। परमकाष्ठापन्नं ब्रह्मस्वरूपमिदमिति ज्ञात्वा ह्युपासना कार्या। तेनैतस्यैवान्येऽवताराः, तत्तद्रूपेण तानि तानि कर्माण्ययमेव कृतवानिति ज्ञेयं परम्, न तु तस्मिन्नेव रूपेऽन्यावतारधर्मवत्त्वमपीति।

भाष्यप्रकाशः।

ताँस्तत्रापि सङ्क्रमयन्ति[1] प्रकृतेपीत्यादि। तथा सतीति। तद्बोधकप्रमाणमननुरुध्य रूपान्तरासाधारणधर्मोपसंहारेऽङ्गीकृते सति। तथाचैवं तद्भावने निरूपणप्रकारभेदाधिकारभेदसम्बन्धिभेदरूपस्यानुपसंहारनियामकत्रयस्यापि बाधापत्त्या अपराध आपद्येत, अतस्तथा न भावनीयमित्यर्थः। एतदेवैतत्पादान्ते 'न वा तत्सहभावाश्रुते'रिति सूत्रद्वये सेत्स्यति। अत्र वादी साम्बन्धिकनियमस्याप्रयोजकत्वं शङ्कते नन्वित्यादि। तथाचोक्तमन्त्रवर्णाच्छ्रीरामस्यावतारान्तररूपत्वे प्राप्ते तदुपासकस्य तथा भावनाधिकारस्यापि प्राप्तौ मन्त्रलिङ्गविरोधात् यो यत्सम्बन्धी, तेन तत्सम्बन्ध्येव ग्राह्यमिति साम्बन्धिकोऽनुपसंहारनियमोऽत्राप्रयोजक इत्यर्थः। अत्र तदुक्तमुपगम्य सूक्ष्मेक्षिकया समादधते सत्यमित्यादि। तत्रायमभिसन्धिरिति। आक्षेपेऽयमाशयः। कार्येति। अवताररूपोपासकेन कार्या। इति ज्ञेयं परमिति। मन्त्रेऽवताराणामेव तत्त्वविधानदर्शनात् तथा भावनीयम्। अन्यावतारधर्मवत्त्वमिति। लक्षयोजनायामत्वकिणचक्रवत्त्वादि कुतो न

रश्मिः।

बाधकै रहित एव, न तु सहितः, वेद्यानां गोपरूपरामनृकेसरिरूपाणां अभेद उपसंहारस्य प्रयोजकः। बाधकैः सहितोऽप्रयोजको यथातथा 'उपसंहारोऽर्थाभेदा'दितिसूत्रे वक्ष्यते। तत्र वेद्याभेदो रामोपासनायामेकत्रोक्तत्वेन। स च निरूपणबाधकसहितः। निरूपणमधिकारानुरोधि तत्रास्ति। भिन्नाधिकारानुरोधिनिरूपणं भिन्नाधिकारे बाधकं भवति। गुणा बाधकाः मत्स्योपासकस्य चापशरादिकाः, पुरुषोपासकस्य लक्षयोजनायामशृङ्गादिकाः। अधिकारो भिन्नो बाधकः। एवं बाधकसहितो वेद्याभेद उपसंहारस्याप्रयोजकः। अतो न मत्स्योपासकस्य चापशरादिका गुणा उपसंहार्याः। न पुरुषोपासकस्य लक्षयोजनायामशृङ्गादिका गुणा उपसंहार्याः इति। एतेषामिति। निरूपणप्रकारभेदाधिकाराणाम्। प्रकृतेपीत्यादीति। असाधारणधर्माः चापशरादयः लक्षयोजनायामशृङ्गादयश्च। नियामकेति। उपसंहारनियामकत्रयं निरूपणप्रकारभेदाधिकारभेदरूपं तस्य। साम्बन्धिकशब्दार्थोऽग्रे वाच्यः। उक्तमन्त्रेति। 'यो वै ये मत्स्ये'त्याद्युक्तमन्त्रलिङ्गं शब्दसामर्थ्यं यच्छब्दार्थे रामेण मत्स्यकूर्माद्यवताराणामभेदान्वयात् पुरुषमत्स्याद्यवतारत्वावच्छिन्ने। उक्तमन्त्रान्वयलिङ्गं वा तस्य विरोधात्। यो यदिति। यो निरूपणादिः यत्सम्बन्धी यद्विधिसम्बन्धी तेन निरूपणादिना हेतुना तत्सम्बन्धी तद्विधिसम्बन्धी, नत्वन्यसम्बन्धी, अधिकारिणा ग्राह्यम्। अनुपेति। उपसंहाराभावस्य नियमः। अत्रेति। एकत्रानेकोपासनास्थले। सत्यमित्यर्धाङ्गीकारे। इत्यत आहुः उपगम्येति। सूक्ष्मेक्षिकयेति। अङ्गीकृते प्रतिवचनं सूक्ष्मेक्षिका। अभावन[2] इति। अधिकार्याभावने। कार्येति। 'आत्मेत्येवोपासीते'ति

१. एवं कर्मणि प्रकृतेपीत्यादीत्यत्र एतेषामुपासनायामपि तुल्यत्वात्तत्रापि संगमयन्तीति पूर्वपाठः। २. अभावने इति पूर्वपाठः।

**तथाच तस्मिंस्तस्मिन्नवतारे तत्तद्धर्मवानिति श्रुत्या बोध्यते, न तु सर्वत्रेति। तत्र बाधकमुक्तमेव। प्राणाद्युपासनाखेतावान् विशेषः, यथा कर्मण्यतिरेके प्रायश्चित्त-श्रवणं बाधकम्, श्रीरामस्वरूपाद्युपासनासु च तेनावतारेणाकृतकर्मणस्तत्र भावनेऽपराधो बाधकः, 'योऽन्यथा सन्तमात्मान'मित्यादिवाक्यं च। न तथा प्राणाद्युपासनासु अधिकगुणस्येतरत्रोपसंहारे किञ्चिद्बाधकं दृश्यत इति स कर्तुं शक्यते इति।**

भाष्यप्रकाशः।

भावनीयमित्याकाङ्क्षायां तत्र हेतुमाहुः तथाचेत्यादि। यथा तत्तच्छाखायां ज्योतिष्टोमादिस्तत्तद्धर्मवान् बोध्यते, तथा तत्तत्तापनीयेषु तत्तदवतारे तत्तद्धर्मवानिति श्रुत्या बोध्यते, न तु सर्वत्र तद्वान्, अतस्तथा भावने शास्त्रातिक्रम इति तथा न भावनीयमित्यर्थः। नन्वाक्षेपे कथमतिक्रम इत्यत आहुः तत्र बाधकमुक्तमेवेति। आक्षेपे निरूपणप्रकारभेदादित्रयरूपं बाधकमुक्तमेव। तथाच तस्य यदि बाधकता नाङ्गीक्रियते, तदा शाखाकृतोऽग्निष्टोमाद्यङ्गनियमः सर्वेष्वप्याथर्वणिककार्यतानियमश्च भज्येत, अतस्तदभावायात्रापि तथा न भावनीयमित्यर्थः। ननु पूर्वसूत्रोक्तहेतुना सर्वैक्यसिद्धौ सर्वत्र सर्वगुणोपसंहारः प्राप्तः, तत्र समाचारसूत्रे निरूपणप्रकारभेदाधिकारभेदप्रायश्चित्तादिश्रवणसम्बन्धिभेदानामनुपसंहारनियामकत्वमादृतम्, तेन तत्तच्छाखिभिस्तत्तदधिकारिभिस्तत्तत्सम्बन्धिनियताः स्वाधिकारानुसारेण स्वशाखोक्ता गुणा उपसंहर्तव्याः, नेतर इति सिद्धम्। तथा सति प्राणाद्युपासनायां शाखान्तरोक्तगुणोपसंहारो न स्यादित्यत आहुः प्राणादीत्यादि। नच निरूपणप्रकारभेदरूपमुपसंहारबाधकमस्त्येवेति कथं बाधकाभाव इति वाच्यम्। कर्मणि न्यूनाधिक्ये प्रायश्चित्तवदुपासनायां तथाभावने प्रायश्चित्ताश्रवणान्निरूपणप्रकारभेदस्य प्रायश्चित्ताद्युन्नायकत्व एव बाधकत्वम्, नान्यथेति निश्चयात्। एवं प्रकारभेदेपि 'अधिकं तत्रानुप्रविष्ट'मिति न्यायेन दोषाभावात् तत्रत्यानां पदार्थानामबाधेनाधिकसंख्यायां न्यूनसंख्याया निवेशतस्तस्या अप्यबाधादधिकप्राणादिनिवेशेन पुरःस्फूर्त्या भेदप्रतीतावपि[1] प्राणाद्युपासनातोऽभिन्नतया तस्या बाधकत्वाभावात्। 'योऽन्यथा सन्तमात्मान'मितिवद्दोषबोधकवाक्याभावाच्च। अतः सुष्ठूक्तं **तत्रोपसंहारे न किञ्चिद्बाधकं दृश्यत इति**। एवं प्राणादिविद्यासूपसंहारबाधकाभावेन तस्मिन् साधितेपि

रश्मिः।

श्रुतेस्तथा। **मन्त्र** इति। मन्त्रे वैदिके। स्वविषयत्वादवताराणामेव, न तु ह्यधोक्षजस्य, तत्त्वविधानदर्शनात्। **तथेति**। अयमवतार्येव कृतवानिति विभावनीयमित्यर्थः। अवतार्यवतारयोरभेदमर्शनेनायमिति प्रत्यक्षगे रूपं यत्तदुक्तम्। **किणेति**। कूर्मचिह्नम्। आदिना करालवदनत्वादि। **तत्तदिति**। नृकेसरिरामगोपालतापिनीयेषु। **अत्रापीति**। एकत्रानेकोपासनास्थले। **निरूपणेति**। गुणनिरूपणम्। निरूपणं च प्रकारभेदश्चाधिकारभेदश्च प्रायश्चित्तश्रवणं च सम्बन्धिभेदश्च द्वन्द्वः तेषाम्। **अनुपसंहारेति**। उपसंहाराभावस्य नियामकत्वम्। **प्राणादीति**। इयं प्राणसंवादेऽस्ति। पूर्वसूत्रोक्तायाम्। **शाखान्तरेति**। वाजसनेयिशाखोक्तपञ्चमप्राणरूपगुणोपसंहारः। **प्राणादीत्यादीति**। **अधिकगुणस्य** पञ्चमप्राणरूपस्य। **इतरत्र** वाजसनेयीतरत्र शाखायाम्। **स इति**। अधिकगुणोपसंहारः। **नच नीति**। निरूपणं च प्रकारभेदरूपश्च तयोः समाहारः। 'स नपुंसक'मिति पाणिनीयेन नपुंसकत्वम्। **अस्त्येवेति**। बाधकायोगव्यवच्छेदकैवकारः। **एवमिति**। पूर्वसूत्रे वाजसनेय्युक्तपञ्चमप्राणरूपगुणनिरूपणेन प्रकारस्य गुणरूपस्य भेदेपि। **तत्रत्यानां** बृहदारण्यकोक्तानां वाक्चक्षुःश्रोत्र-

१. भेदेन प्रतीतावपीति पाठः।

ननु पुरुषाविरूपस्य विग्रहस्यैव शुद्धब्रह्मत्वादयमेवावतारान्तरेष्वपि लीलाकर्तेति ज्ञानमनुपपन्नमिति चेत्। मैवम्। धर्मिग्राहकमानेनैकस्यैव शुद्धस्यैवानन्तरूपत्वेन सिद्धत्वात्। वस्तुन एव तथात्वान्न काचिच्छङ्का। यथैकस्यैवान्योन्याभावस्यानन्तभावप्रतियोगिकतद्रूपत्वं तावत्प्रतियोगिकात्यन्ताभावरूपत्वं चाभा-

भाष्यप्रकाशः।

परविद्यासु रूपान्तरे पूर्वोक्तरीतिकरूपान्तरगुणोपसंहारानुपपत्तिं शङ्कते नन्वित्यादि, इति ज्ञानमनुपपन्नमिति। रूपान्तरविग्रहस्यापि शुद्धब्रह्मत्वादयमेव तथेत्यंशेऽनुपपन्नमित्यर्थः। तत्र समादधते मैवमित्यादि। धर्मिग्राहकं मानं हि 'यदेकमव्यक्तमनन्तरूप'मिति वक्ष्यमाणश्रुतिरूपं तेन। वस्तुन एव तथात्वात्। ब्रह्मण एकत्वादत्र प्रकरणिनः श्रीरामचन्द्रस्यैव भगवत्त्वेन श्रावणात् तस्य विरुद्धधर्माश्रयत्वेन सर्वाकारत्वात् तस्यैव रूपान्तरेण तत्करणसम्भवेन न कापि शङ्केत्यर्थः। एतस्य बुद्ध्यावारोहार्थं दृष्टान्तेनोपपादयन्ति यथेत्यादि। नियतपदार्थवादिमते भावभिन्नो निषेधमुखप्रतीतिगोचरो य एकोऽभावभेदरूपोऽन्योन्याभावपदार्थस्तस्यैव तादृशतादृश-

रश्मिः।

मनसां पदार्थानामबाधेनाधिकसंख्या पञ्चसंख्या तस्यां न्यूनसंख्या चतुःसंख्यायाः। अबाधेनेति। शते पञ्चाशदितिप्रतीत्या तथा। पुरःस्फूर्त्या शाखाभेदस्फूर्त्या विद्याभेदस्फूर्त्या। तस्येति। एवं प्रकारभेदस्येत्यर्थः। इतिवदिति। इत्यदोषबोधकवाक्यवत्। शाखान्तरोक्तगुणोपसंहारेण प्राणविद्यास्वरूपस्य प्राग्भिर्दर्शनात्। व्यतिरेके दृष्टान्तः। अत्रेति। अवयव्यनवयविपक्षयोरित्यर्थः। उद्भाव्येति। अनवयविपक्षमाश्रित्योद्भाव्य। नन्वित्यादीति। विग्रहस्यैवेति। एवकारः शुद्धब्रह्मरूपावयवियोगं व्यवच्छिनत्ति। अयं विग्रहः। एवकारः पूर्ववद्व्याख्येयः। शुद्धब्रह्मत्वादेवकारो वा। अनुपेति। देवदत्तोपि विष्णुमित्रे क्रीडाकर्ता स्यात्। अतोऽनुपपन्नम्। तथाचेत्यादि। अवयव्यनङ्गीकारेण शङ्कायाम्। आकाराणां परस्परं सन्निवेशविरोधेन। वाक्यमेवेति। आकाररूपेण प्रवेशाङ्गीकारेऽन्यथाकाररूपेणाप्रवेष्टृत्वेन सन्तमन्यथाकाररूपेण प्रवेष्टृत्वप्रतिपदनं निषिद्धं तस्य निषिद्धस्यार्थस्य बाधकम्। एवकारोऽन्ययोगव्यवच्छेदकः। समादधत इति। अवयविपक्षमाश्रित्य तथा। मैवमित्यादीति। एकस्यैवेति। अवयविन एव। एवकारोऽवयवमात्रयोगव्यवच्छेदकः। शुद्धस्यैवेति। अक्षरमात्रस्य। तेनेति। सिद्धेनानन्तरूपत्वेन। तथात्वादित्यस्य व्याख्यानं तस्यैवेत्यादि। तस्यैवेति। अवयविन एव। तत्करणेति। अवतारान्तरेष्वपि कर्तृत्वेन। कापीति। अवयवावयविनोरपि जन्मप्रकरणे द्विभुजे चतुर्भुजप्रवेशेपि शङ्का। एतस्येति। दार्ष्टान्तिकस्य। दृष्टान्तेनेति। तथाचोपक्रमस्य संजातविरोधित्वेन छान्दोग्यीयनवमोपदेशार्थे दार्ष्टान्तिके प्रसिद्धपञ्चमं 'न्यग्रोधफलमत आहरेती'त्याद्युक्तं 'यं वै सौम्यैतमणिमानं न निभालयसे, एतस्य वै सौम्यैषोऽणिमा, एवं महान्यग्रोधस्तिष्ठती'त्यनञ्प्रयोगादभावदृष्टान्तेनेत्यर्थः। यद्यप्यणिमत्वेनाभावो विशेषितो न भावयितुं शक्य इत्यभावपदार्थः, तथाप्यन्यापेक्षयायमेव दृष्टान्तो युक्त इत्याशयवन्त आहुः नियतेति। सप्तपदार्थवादिनैयायिकमते। निषेधेति। घटः पटो नेत्येवम्। तस्यैवेति। अत्र विशेषणविभक्तेः साधुत्वार्थत्वापेक्षया प्रतीयमानाभेदार्थकत्वस्य ज्यायस्त्वेन विशेषणैक्यादन्योन्याभावपदार्थविशेष्यान्वय्येवकारः कृतः। एकस्यैवेत्यर्थः। अभेदात्। तदुक्तं मुक्तावल्यां 'अन्योन्याभावस्यैकविधत्वात्तद्विभागाभावा'दिति। तादृशेति। वक्ष्यमाणेत्यर्थः। इत्याद्युक्तेति। इत्यादिभाष्योक्तेत्यर्थः। तद्यथा। भाष्ये। घटः पटो नेत्यत्र पटो घटो न, कुड्यं कुसूलं न, कुसूलं कुड्यं नेत्येवमनेन भावप्रतियोगिकान्योन्याभावरूपत्वम्। तावदिति। अयं भावः।

चाभावाभावरूपत्वेऽप्यभावरूपत्वमेव चाङ्गीक्रियते, तथेहाप्यस्तु । अभावत्वस्याप्रयोजकत्वात् । धर्मिग्राहकमानस्यैव तथात्वात् । तच्च तैत्तिरीयोपनिषत्सु 'अतः परं नान्यदणीयस५ हि परात् परं यन्महतो महान्तम् । यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्ता'दित्यादिश्रुतिरूपं प्रसिद्धमेव ।

अपरञ्च । सर्वासामुपासनानां हि ब्रह्मविज्ञानसाधनत्वेन श्रुतौ निरूपणं क्रियते । यत्प्रकारिकोपासना विज्ञानहेतुः, स प्रकारश्च निरूप्यते । एवं सत्येकस्यां

---

भाष्यप्रकाशः ।

प्रतीतिबलेन अनन्तभावप्रतियोगिकेत्याद्युक्तप्रकारकतावद्रूपत्वं स्वीक्रियते, न तु निरूपकभेदमादाय स्वरूपनानात्वम्, तद्वदत्र ब्रह्मण औपनिषदत्वेन तद्वाक्यस्यैव नियामकत्वात् स्वरूपैक्येऽप्यनन्तरूपतया तत्तल्लीलाकर्तृत्वज्ञानं स्वरूपैक्यं चोपपद्यत इत्यर्थः । ननु यद्येवं तत्तल्लीलाकर्तृत्वेन ज्ञानं

रश्मिः ।

अभावत्वेनैक्यादत्यन्ताभावस्य । तदुक्तं संसर्गाभावत्वमन्योन्याभावभिन्नाभावत्वमिति यत्किञ्चिद्भेदवत्त्वम् । तावत्प्रतियोगिकात्यन्ताभावेन रूप्यते व्यवह्रियत इति तावत्प्रतियोगिकात्यन्ताभावरूपत्वम् । अत्रापि भावः । नित्यसंसर्गाभावत्वमत्यन्ताभावत्वमिति ध्वंसादिकालावच्छेदेनात्यन्ताभावो वर्तत इति नव्यमतम् । ध्वंसप्रागभावाधिकरणेनात्यन्ताभाव इति प्राचां मतम् । श्यामे घटे रक्तं नास्ति, रक्ते घटे श्यामं नास्तीति प्रागभावं ध्वंसं चावगाहते, नतु तदत्यन्ताभावम् । अभावप्रतीति । घटः पटाभावो नेत्यादि । अभावाभावेति । अन्योन्याभावाभावाभाव इत्येवं द्वितीयाभावस्य प्रतियोगिस्वरूपत्वात् । अत एवाभावप्रतियोगिकान्योन्याभावत्वं नित्यत्वात्तद्भेदत्वाच्चाप्रतीयमानात्यन्ताभावरूपत्वं च । तथाचाभावप्रतियोगिकावन्योन्याभावात्यन्ताभावौ ताभ्यां रूप्यते व्यवह्रियत इत्यभावप्रतियोगिकान्योन्याभावात्यन्ताभावरूपत्वम् । अभावेति । अन्योन्याभावाभावाभाव इत्यत्रान्योन्याभावत्वं शक्यतावच्छेदकमुक्तप्रायम्, अभावत्वं शक्यतावच्छेदकमभिप्रेत्याहुः । अन्योन्याभावाभावाभावरूपत्वेऽभावरूपत्वमभावत्वं शक्यतावच्छेदकमित्यर्थः । निरूपकेति । प्रतियोगिभेदमादाय । तथेहाप्यस्त्विति भाष्यं विवृण्वन्ति स्म तद्वदित्यादि । तद्वाक्यस्येति । 'यदेकमव्यक्तमनन्तरूप'मित्यस्य महानारायणवाक्यस्य । उपपद्यत इति । इत्यस्त्वित्यर्थः । भाष्ये । ननु दृष्टान्तेनाभावत्वमपि स्यात्, तत्राहुः अभावत्वस्येति । अणिमत्वेनाभावस्य विशेषितत्वात्तथा । 'न केनापि भावयितुं शक्यमतोऽभावं वदन्त्येन'मिति व्युत्पत्तिः स्मार्ता । प्रागेवेति । गतपादे उभयलिङ्गाधिकरणे । अपरं चेत्यादीति । सर्वेषामिति । गोपरूपरामस्वरूपनृकेसरिरूपोरुक्रमादिरूपसर्वोपासनानां चित्तशुद्धिद्वारा भक्त्या शुद्धचित्ते । आविर्भूते उपासाविषयातिरिक्ते पुरुषोत्तमे ब्रह्मविशेषज्ञानं तत्साधनत्वेन श्रुतौ 'स वा एष पुरुषोऽन्नरसमयः, तस्येदमेव शिरः, अयं दक्षिणः पक्षः, अयमुत्तरः पक्षः, अयमात्मा, इदं पुच्छं प्रतिष्ठे'त्युक्त्वा 'अन्नं ब्रह्मेति व्यजाना'दित्यादिश्रुतौ निरूपणं क्रियते । यत्प्रकारिकेति । गोपरूपत्वादिप्रकारिकोपासना आदिपदार्थान्नरसमयत्वादिप्रकारिकोपासना गोपरूपाद्यन्नादिब्रह्मविज्ञानहेतुः । विशिष्टं ज्ञानं भक्तिफलरूपं ज्ञानम् । स प्रकार इति । 'एको वशी सर्वगः कृष्ण' इत्याद्युक्तैकत्वादिः प्रकारः । तथा रामरूपे 'सो विमुक्त उपास्यो य एषोऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठित' इत्युक्तानन्तत्वाव्यक्तत्वात्मत्वानि प्रकाराः । नृकेसरिरूपे 'ससागरां सप्तद्वीपां वसुन्धरां तत्साम्यं

शाखायां कतिपयगुणनिरूपणम्, तदितरस्यां शाखायां तदतिरिक्तानामपि गुणानामित्यत्र को हेतुरिति पृच्छामः। उपसंहारेण प्राप्तिमनिरूपणे हेतुं चेत् ब्रवीषि, तत्र वदामः। एवं सति न्यूनगुणनिरूपिका श्रुतिः स्वोक्तानपि गुणान्न वदेत्। तथाहि। उपासनानां ब्रह्मविज्ञानफलकत्वस्य निर्णीतत्वात् तस्य चैकजातीयत्वात्

---

भाष्यप्रकाशः।

स्वरूपैक्यं चोपपन्नम्, तर्हि रूपान्तरेणापि रूपान्तरलीलाकर्ता रूपान्तरेपि रूपान्तरधर्मवानिति भावने को दोषः, सर्वत्रोभयलिङ्गत्वाविरोधस्य प्रागेव निर्णीतत्वादित्याशङ्कायां तथाभावने श्रुतितात्पर्यविरोधरूपं दोषं स्फुटीकर्तुं प्रतिवादिनमनुयुङ्क्ते अपरं चेत्यादि। तत्रोत्तरमुद्भाव्य दूषयन्ति उपसंहारेत्यादि, तत्र वदाम इति। तादृश उत्तरे तवानिष्टापत्तिमुद्धाटयामः। 'न वदे'दित्यनेन गृहीतं विभजन्ते तथाहीत्यादि। तस्य चेत्यादि। तस्यैव ब्रह्मज्ञानस्य त्वन्मते

रश्मिः।

प्रथमं पादं जानीया'दित्याद्युक्तचतुष्पात्त्वम्। 'तस्मादिदं साङ्गं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छती'त्युक्तसाङ्गत्वं च प्रकारः। विष्णुसूक्ते 'विष्णोर्नु क'मित्याद्युक्तविष्णुत्वादिः प्रकारः। मन्त्रे च 'चरणं पवित्रं विततं पुराण'मिति मन्त्रोक्तचरणविततत्वपुराणत्वपावकत्वदुष्कृततारकत्वानि प्रकाराः। नारायणानुवाके महानारायणे 'सहस्रशीर्षं देव'मिति सद्विद्याब्रह्मास्तित्वात्। 'आत्मविद्या ह्येषा विश्वात्मानं परायण'मित्यत्र विश्वात्मत्वोक्तेः सहस्रशीर्षत्वादिः विश्वात्मत्वादिः प्रकारः। श्वेताश्वतरस्थादयोन्या उपनिषदः। तासु पूर्वा वासुदेवोपनिषत्। तत्र 'यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेपि वा। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित' इत्युक्तजगद्व्यापकत्वं प्रकारः। नारायणास्तित्वात्सत्। सज्जगत्तदात्मरूपं वा। कालाग्निरुद्रोपनिषदि शिवरूपम्। 'तिर्यक् तिस्रो रेखाः प्रकुर्वीते'त्युक्त्वा 'यास्य प्रथमा रेखा गार्हपत्यश्चाकारो रजोभूर्लोकश्चात्मा क्रियाशक्तिर्ऋग्वेदः प्रातःसवनं महेश्वरो यास्य द्वितीया रेखा सा दक्षिणाग्निरुकारः सत्त्वमन्तरिक्षमन्तरात्मा च शक्तिर्यजुर्वेदो माध्यंदिनं सवनं सदाशिवो यास्य तृतीया रेखा साहवनीयो मकारस्तमो द्यौः परमात्मा ज्ञानशक्तिः सामवेदस्तृतीयं सवनं शिवो देवते'त्युक्तमहेश्वरत्वसदाशिवत्वशिवत्वरेखात्रयदेवतात्वानि प्रकाराः। तथा यजुरुपनिषदि षडग्नित्वं प्रकारः। छान्दोग्ये पञ्चाग्नित्वम्। 'य एतान्पञ्चाग्नीन्वेदे'ति श्रुतेः। मण्डूके 'अद्वैतः सर्वभूताना'मित्युक्ताद्वैतत्वदेवत्वतुर्यत्वविभुत्वस्मृतत्वानि प्रकाराः। ओमित्येतदक्षरोपासनायामृग्वेदादिशरीरत्वान्युक्तानि प्रकाराः। चतुःशृङ्गत्वादिकं प्रकारः। तैत्तिरीयविभूत्युपासनेऽन्नमयत्वादिः प्रकारः। दुर्गासूर्यगणपत्युपनिषदुक्तविभूत्युपासनायां दुर्गात्वादिः प्रकारः। देव्या अथर्वशीर्षे देवैः पृष्टा 'साब्रवीदहं ब्रह्मस्वरूपिणी, ततः प्रकृतिपुरुषात्मकं जगच्छून्यं चाशून्यं च, अहमानन्दानानन्दौ, एवमुक्तसर्वत्वं प्रकारः। सूर्योपनिषदि 'षट्स्वरारूढं बीजेन षडङ्गं रक्ताम्बुजेन संस्थितं सप्ताश्वरथिनं हिरण्यवर्णं चतुर्भुजम्। पद्मद्वयाभयवरदहस्तं कालचक्रप्रणेतारं श्रीसूर्यनारायणं य एवं वेद स वै ब्राह्मण'इत्युक्तषट्स्वरारूढत्वानि प्रकाराः। गणपत्यथर्वशीर्षे 'नमस्ते गणपतये। त्वमेव प्रत्यक्षं तत्त्वमसि। त्वमेव केवलं कर्तासि। त्वमेव केवलं धर्तासी'त्युक्ततत्त्वत्वादिः प्रकारः। एवं स प्रकारश्च निरूप्यत इत्यर्थः। एकस्यामिति। छन्दोगशाखायां पञ्चाग्निविद्यायां तथा। तदितरस्यां वाजिशाखायाम्। गुणानामिति। षष्ठाग्निगुणानाम्। उद्धाटेति। उद्धाटनं कुर्मः वदनेन। गृहीतमिति। अर्थम्। तथाहीत्यादीति। निर्णीतत्वादिति। 'अपरं चे'त्यादिभाष्येण निर्णीतत्वात्। तस्यैवेति। भाष्ये च एवकारार्थ इति भावः।

घटवत् कृत्स्नाशेषसाधनसाध्यत्वादशेषतन्निरूपिकैव श्रुतिर्निरूपयेत् । अन्यातूपासनाया नामोक्त्वोपासीतेत्येतावदेव वदेत् । गुणानाक्षेपलभ्यत्वान्न वदेत्। उपसंहार्यानपि वा वदेत् । निरूपयति च गुणान्नोपसंहार्यान् । नच स्वस्वशाखामात्राध्येतॄणामुपासनासिद्ध्यर्थं सर्वशाखासूपासनप्रकारोक्तिरिति वाच्यम्। परशाखाऽज्ञानेन तदुक्तगुणोपसंहारस्याप्यसम्भवेनोपासनाया एवासम्भवापातात् । तस्मात् स्वस्वशाखोक्तप्रकारिकोपासनायामेव सर्वेषामधिकारात्तयैव ब्रह्मविज्ञानं भवति । तैत्तिरीयाणां वाजसनेयिप्रभृतीनां चाग्निष्टोमसम्पत्त्या स्वर्ग इव । प्रकृते ब्रह्मैक्यात्तत्तद्विज्ञानं ब्रह्मविज्ञानमेव । न हि रूपरसग-

भाष्यप्रकाशः ।

सर्वगुणोपसंहारेणैकजातीयत्वात् घटवत्कृत्स्नाशेषसाधनसाध्यत्वात् यथा हि घटः कारणसमुदायेनैव जन्यते, न त्वेकेन, तद्वत् तव मते उपासनाया अप्यशेषगुणानुसन्धानरूपसाधनसाध्यत्वादशेषगुणनिरूपिकैव श्रुतिस्तामुपासनां निरूपयेत्, अन्या तूक्तरीत्या वदेत्, गुणाँस्तु न वदेदेव । उपसंहार्यानपि वा वदेत् । तैर्विना उपासनाया असिद्धेः । निरूपयति च कतिपयानेव, न त्वशेषान् । तथाचोपासनाश्रुतौ कतिपयगुणकथनमन्यथानुपपद्यमानं सत् रूपान्तरे रूपान्तरीयगुणोपसंहारो दोषायेति कल्पयति, अतः श्रुतितात्पर्यविरोध एव दोष इत्यर्थः । तत्कथनस्य तात्पर्यान्तरमाशङ्क्य निषेधन्ति नचेत्यादि । तथाचोपासनाया नाममात्रोक्तौ प्रकाराज्ञानात् तत्तच्छाखिनामुपासनाया असिद्धेस्तदुपकाराय तथोक्तिरिति तु न वक्तुं शक्यमित्यर्थः । तत्र हेतुः परेत्यादि । तथाचैवं तात्पर्यकल्पनेपि तावन्मात्रकथनानर्थक्यस्य त्वन्मते तादवस्थ्यमपरिहार्यमेवेत्यर्थः । तर्हि किं तथा कथनस्य तात्पर्यमित्याकाङ्क्षायां मन्दाधिकारिणां तावतैव फलसिद्ध्यर्थं तथा वदतीत्याशयं हृदिकृत्य तेन विवक्षितं साधयन्ति तस्मादित्यादि । तस्मादिति । त्वदुक्तस्य तथाकथनाशयस्यानुपपन्नत्वात् । ब्रह्मविज्ञानं भवतीति । तावद्धर्मविशिष्टब्रह्मसाक्षात्कारो भवति । तत्र दृष्टान्तः तैत्तिरीयेत्यादि । तथाच ब्रह्मणि सर्वत्र सर्वधर्मसत्त्वेपि कतिपयगुणोक्तिबलेन तत्र तत्रोक्तैरेव गुणैरुपासनायाश्चारितार्थ्यनिश्चयान्न रूपान्तरे रूपान्तरधर्मोपसंहारो युक्त इत्यर्थः । ननु तादृशस्य स्वल्पधर्मवत्ताज्ञानस्य कथं ब्रह्मज्ञानत्वमित्यत आहुः प्रकृते इत्यादि । तथाच 'अविज्ञातं विजानता'मिति श्रुतेर्ज्ञानकृतपरिच्छेदो ब्रह्मणि नास्तीति यस्य भूयो धर्मवत्त्वेन ज्ञानम्, तस्यापि न

रश्मिः ।

उपासनरूपस्य ब्रह्मज्ञानस्य । उक्तरीत्येति । उपसंहारेणेत्यादिभाष्योक्तरीत्योद्देशेनोपासना वदेदित्यर्थः । उपसमितिभाष्यं विवृण्वन्ति स्म उपसमिति । तदुक्तेति । स्वशाखोक्तगुणोपसंहारस्य । एवं तात्पर्येति । तत्तदुपकाराय तथोक्तिरित्येवं तात्पर्यकल्पने । उपसंहारेण सिद्धौ तावन्मात्रकथनानर्थक्यस्येत्यर्थः । मन्देत्यादि । मीमांसाया मन्दमध्यमार्थत्वस्यारम्भे उक्तत्वादिति भावः । तत्र मध्यमस्य बुद्धिदोषात्सन्देहसम्भवेप्येतावता ग्रन्थेन बुद्धिदोषनिवृत्तिसम्भवान्नोक्तिः । त्वदुक्तस्येति । तत उपकाराय तथोक्तिरित्येवमुक्तस्य । मन्देऽभावादनुपपन्नत्वात् । भवतीति । मनसा भवति । 'यद्धियेति' वाक्यात् । शुद्धे चित्ते च भवति, 'स मानसीन आत्मा जनाना'मिति श्रुतेः । ज्ञानकृतेति । यथा घटादिकृत आकाशपरिच्छेदः, तथा तत्तदुपसंहृतधर्मवत्त्वेन सकलधर्मवत्त्वेन प्रसिद्धस्य ब्रह्मणः परिच्छेदः तन्मात्रज्ञानविषयत्वं न । 'उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पने'ति रामतापिनीयश्रुतेः कल्पितत्वात्तेषाम् । इमानि रूपाणि परिणतघटादिरूपव्यतिरिक्तानि । द्वाविति । स्वल्प-

१. आक्षेपलभ्यानिति पाठः ।

न्धादिमत्त्वां भुवि पुरुषभेदेनैकस्यैव वैकैकप्रकारकं यद्ब्रह्मज्ञानं न तद्ब्रह्मज्ञानम्। एतेनानन्तधर्मवत्त्वं ब्रह्मणि ज्ञापितम्। तदुक्तम्। 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे'ति। अत्र 'स्वाभाविकी'ति विशेषणादविद्याकल्पितत्वं शक्तीनां निरस्तम्।

केचित्त्वाथर्वणिकानां विद्यां प्रति शिरोव्रतापेक्षणादन्येषां तदनपेक्षणात्

भाष्यप्रकाशः।

पूर्णं ज्ञानम्, अतोऽस्मिञ्ज्ञाने द्वावपि तुल्यावित्यर्थः। तेन सिद्धमाहुः एतेनेत्यादि। एतेनेति। स्वल्पगुणज्ञानतोपि फलार्थं तत्र तत्र तत्तद्गुणकथनेन। अनन्तगुणवत्त्वे श्रुतिमपि प्रमाणयन्ति तदुक्तमित्यादि। तथाच ब्रह्मणोऽनन्तधर्मवत्त्वेपि तत्तद्रूपोपासनया तत्तत्फलदानार्थं तत्र तत्र तांस्तानेव धर्मान् प्रकटयतीति बोधनार्थं तथाकथनं युक्तमेवेत्यर्थः। ननु यदि स्वस्वशाखोक्तप्रकारिकायामेवोपासनायामधिकारः, न परशाखोक्तप्रकारिकायामिति चेत्, तदा तैत्तिरीयाणां गोपालाद्युपासने, आथर्वणिकानामानन्दमयाद्युपासने वाधिकाराभावात् ततः फलं न स्यात्, न चेष्टापत्तिः, अन्यशाखीयानामपि नृसिंहगोपालाद्युपासने भगवदनुभावप्रसादादेर्दर्शनादिति चेत्। मैवम्। अत्र मन्दानामर्थे स्वशाखोक्तकरणाधिकारस्य कथनात्। तत उत्तमानामधिकगुणोपसंहारे स्वस्वरुचिगोचररूपोपासने च बाधकाभावस्य ब्रह्मणः सर्ववेदान्तप्रत्ययत्वेनैव सिद्धत्वात् तैः स्वस्वशाखोक्तादधिकमपि कर्तव्यमिति बोधितम्। किञ्च। सर्वस्य स्वस्वशाखोक्तोपासनकरणे हि बीजं तत्तच्छाखायां तत्तदुपनिषन्निबन्धनम्। तच्च यादृशयागात्मकस्वरूपं यच्छिरो भवितुं युक्तम्, तत्र तादृशब्रह्मस्वरूपबोधनार्थं तन्निबन्धनमिति निबन्धे 'कर्मवत् ब्रह्मभेदाश्चे'त्यस्य प्रकाशे श्रीमदाचार्यैर्निरूपितम्। एवं सति यः स्वशाखाविहितकर्मप्राधान्येन स्वकामितफलसिद्धये उपास्ते, तस्य स्वशाखोक्तमेव कर्तव्यम्। कर्मणां कामाधिकारकत्वात्। यस्तूत्तरतन्त्रोक्तरीत्या नित्यकर्मणां सहकारित्वमवधार्य ब्रह्मप्राधान्येन तत्तद्रूपप्राधान्येन वोपास्ते, स तु तत्तदनुरूपं परशाखोक्तमुपसंहरताम्। इयमुपासनामार्गीया व्यवस्था। भक्तिमार्गे तु स्नेहस्यैव प्राधान्येन विहितत्वादेर्गौणत्वान्न चाशङ्का, नचोत्तरम्। एवञ्च मन्दाधिकारिणां स्वस्वशाखोक्तब्रह्मज्ञानसिद्धावपि तावज्ज्ञानस्याल्पत्वेन फले विलम्बः। अधिकज्ञानेनाधिकाधिकगुणोपसंहारेण विलम्बनिवृत्तिरिति सिध्यति।

ननु स्वाध्यायसूत्रस्य तथार्थवत्त्वे हि कर्मादिस्मरणेन तादृशोपसंहारानुपसंहारचिन्ता, तदेव दुर्घटम्, अन्यैस्तथा तदर्थानङ्गीकारादित्याकाङ्क्षायां स्वोक्तं सूत्रव्याख्यानं दृढीकर्तुं शङ्करभास्कररामानुजाचार्याद्युक्तमेतत्सूत्रव्याख्यानमप्यसमञ्जसमिति बोधनाय तदनुवदन्ति केचित्त्वित्यादि। यद्यपीदं तेषां सूत्रविवरणं शाखान्तराधिकरणस्थस्य 'विद्यायां धर्मशास्त्र'मिति

रश्मिः।

धर्मवानधिकधर्मवांश्च। तद्व्यवस्थेति। स्वल्पाधिकधर्मवत्त्वकृतोपासनाभेदेन धर्मव्यवस्थास्मरणम्। भाष्ये। स्वाभाविकीति। स्वभावस्य परिणामहेतुत्वरूपत्वात्स्वभावस्य श्रौतत्वात्परिणामवादसम्भवेऽविद्याकल्पितत्वं न युक्तमिति तथा। प्रकृते। तथेति। भाष्योक्तार्थवत्त्वे। तदर्थेति। सूत्रार्थानङ्गीकारात्। आदिना शैवाचार्यः। तदिति। तदीयं व्याख्यानम्। शाखेति। पूर्वतन्त्रे द्वितीयस्य चतुर्थचरणे द्वितीयाधिकरणम्। तस्यायमिति। अध्ययनस्यायं भूमौ भोजनाचरणादिः। सूत्रेति। अनुशयोऽनुबन्धः। 'स्यादनुशयो द्वेषे पश्चात्तापानुबन्धयो'रिति विश्वः। केचित्त्विस्या-

१. तद्व्यवस्थास्मरणं युक्तमिति पाठः।

विद्याभेद इति प्राप्ते, उच्यते, स्वाध्यायस्यैष धर्मः, न विद्यायाः, कथमिदमवगम्यते, यतस्तथात्वेन स्वाध्यायधर्मत्वेन समाचारे वेदव्रतोपदेशनपरे ग्रन्थे आथर्वणिका इदमपि वेदव्रतत्वेन समामनन्ति, 'नैतदचीर्णव्रतोऽधीते' इति चाधिकृतविषयादेतच्छब्दादध्ययनशब्दाच्च स्वोपनिषदध्ययनधर्म एवैष इति निर्धार्यते, तस्मादनवद्यं विद्यैकत्वमिति सूत्रार्थं वदन्ति ।

स चिन्त्यते । न ह्यस्य विद्याधर्मत्वं विद्याभेदकम् । उक्तन्यायेनान्यत्रापि तदुपसंहारस्य वक्तुं शक्यत्वात् । नचानुपसंहारार्थमेवातद्धर्मत्वं बोध्यत इति

भाष्यप्रकाशः ।

सूत्रस्य यच्छाबरभाष्यं तच्छायामनुसरति, तत्र हि कारीरीवाक्यान्यधीयानास्तैत्तिरीया भूमौ भोजनमाचरन्ति, नेतरे, तथैकेऽग्निमधीयाना उपाध्यायस्योदकुम्भमाहरन्ति, नेतरे, तथैकेऽश्वमेधमधीयाना अश्वस्य घासमाहरन्ति, नेतरे इति धर्मभेदात् कर्मभेद आशङ्किते, 'विद्यायां धर्मशास्त्र'मिति सूत्रेण विद्या वेदनमध्ययनमिति यावत्, तस्यायं धर्मः, न तु कर्मणः । तेनान्यधर्मस्यान्यभेदकत्वाभावान्न कर्मभेदकत्वमिति स्थितम्, तेन प्रामाणिकम् । तथापि सोऽर्थः सूत्रकारानुशयविरुद्ध इति तं स्फुटीकुर्वन्ति स चिन्त्यत इत्यादि । चिन्त्यत इति । युक्तोऽयुक्तो वेति विचार्यते । हि यतो हेतोः । अस्य शिरोव्रतस्य विद्याधर्मत्वं निवार्य यदध्ययनधर्मत्वं व्यवस्थाप्यते, तद्विद्याभेदकत्वाभावाय । तदस्य विद्याधर्मत्वं तु न विद्याभेदकम्, चोदनाद्यविशेषेण सिद्धे सर्वासां ब्रह्मविद्यानामैक्ये, प्राणाद्युपासनासु रेतःप्रभृतेरिव ब्रह्मविद्यास्वेतस्याधिकस्यानुप्रवेशेपि दोषो न भवतीत्युक्तन्यायेनान्यत्रापि तदुपसंहारस्य वक्तुं शक्यत्वात् । सिद्धे च तस्य तथात्वे विद्याभेदकत्वस्याभावात् । नचानुपसंहारार्थमेवास्य विद्याधर्मत्वाभावो

रश्मिः ।

दीति । अयमर्थः । विद्यां प्रति मुण्डकादारम्भान्मुण्डकोक्तब्रह्मविद्यां प्रति शिरस्यङ्गारपात्रधारणरूपं व्रतं कर्तव्यत्वेनोपदिश्यते । यथा गोदानं वेदाध्ययनाङ्गम् । इतरोपनिषदध्ययनकाले तु शिरोव्रतं नापेक्षते । तदाहुः शिरोव्रतेति । वेदव्रतापेक्षणात् । एष धर्म इति । शिरोव्रतलक्षणः । समामनन्तीति । 'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवत् यैस्तु चीर्ण'मित्येवम् । नैतदिति । ब्रह्म । ब्रह्मविद्यामित्यर्थः । अचीर्णव्रतः अननुष्ठितशिरोव्रतः । अधीति । अधिकृतश्चीर्णव्रतः । अधीत इत्यध्ययनशब्दः अध्ययनं कुरुत इत्यर्थात् । तस्मात् । स्वोपेति । चीर्णव्रतकर्तृकमध्ययनमित्यर्थात् । नीलो घट इत्यत्रेव अन्यैरङ्गीकारादेवकारः । तस्मादिति । शिरोव्रतस्य भेदकस्य स्वाध्यायधर्मत्वेन विद्याधर्मत्वाभावात् । नह्यस्येतिभाष्यं विवृण्वन्ति स तदस्येत्यादि । उक्तन्यायेनेत्यादिभाष्यं विवरीतुमाहुः चोदनादीत्यादि । सिद्ध इति । सर्ववेदान्तप्रत्ययसूत्रे सिद्धे । प्राणादीति । 'यो ह वै ज्येष्ठं चे'ति ब्राह्मणेस्ति प्राणाद्युपासना । आदिना वाक्चक्षुःश्रोत्रमनांसि । रेत इति । 'यो ह वै प्रजापतिं वेद, प्रजायते प्रजया पशुभी रेतो वै प्रजापतिः प्रजायते प्रजया पशुभिर्य एवं वेदे'ति वाक्चक्षुःश्रोत्रमनोन्तानि निरूप्योच्यत इति रेतःप्रवेशः । प्रभृतिशब्देन पूर्वसूत्रभाष्योक्तं वाजसनेयिनां पञ्चमं प्राणम् । एतस्येति । शिरोव्रतस्य । भाष्यं विवृण्वन्ति स्म उक्तेति । वाजसनेयिपञ्चमप्राणप्रवेशन्यायेन । अन्यत्रापि आथर्वणिकेभ्योऽन्यत्र याजुषादिष्वपि । तस्य शिरोव्रतस्योपसंहारस्य । तस्य तथात्व इति । शिरोव्रतस्योपसंहार्यत्वे । अभावादिति । विलक्षणविशेषणस्य भेदकत्वात्तथा । न चेति भाष्यं विवृण्वन्ति स्म नचेति । एवेति ।

वाच्यम् । उपक्रमोपसंहाराभ्यां विद्यैकत्वनिर्णयस्यैव दृश्यमानत्वादुपेक्ष्य इव भाति । ननु तदुक्तिर्यथा तथास्तु, अतद्धर्मत्वबोधनस्यानुपसंहारार्थकत्वे कानुपपत्तिरिति चेत् । उच्यते । सूत्रस्य तदुक्तार्थत्वे हि तत्तात्पर्यकल्पना । स एव च न साधीयान् । तथाहि । 'स्वाध्यायोऽध्येतव्य' इत्यादिषु स्वाध्यायशब्दस्य वेदवाचकत्वं प्रसिद्धम् । समाचारशब्दस्य विहितक्रियावाचकत्वं च । तत्रोभयोरपि मुख्योऽर्थो बाध्यते । तस्मिन् सम्भवति तद्बाधस्त्वयुक्तः । किञ्च, एवं 'नन्वग्निष्टोममेवोद्दिश्ये'त्यादिनोक्ताशङ्काया अनिवृत्तिरिति ।

---

भाष्यप्रकाशः ।

बोच्यत इति वाच्यम्, भवन्मतेऽधिकरणोपक्रमोपसंहाराभ्यां विद्यैकत्वनिर्णयस्यैव सूत्रकारानुशयगोचरतया दृश्यमानत्वादेतद्विचारस्याकस्मिकत्वापातात्, अतोऽस्य भेदकत्वमापाद्य ततोऽन्यधर्मत्वसाधनेन तदसाधकत्वकथनमनर्थकमिति तद्व्याख्यातः सूत्रार्थ उपेक्ष्य इव प्रतिभातीत्यर्थः । उक्तार्थस्य शाबरभाष्यानुसारित्वेन प्रामाणिकतया तस्योपेक्ष्यत्वमसहमानश्चोदयति नन्वित्यादि । अतद्धर्मत्वोक्तिः कथमप्यस्तु, तथापि तस्य तथात्वे कानुपपत्तिरित्यर्थः । तत्रोपेक्ष्यत्वबीजभूतामनुपपत्तिमुद्घाटयन्ति सूत्रस्येत्यादि । सूत्रस्य तदुक्तार्थत्वे हि शिरोव्रतोपदेशतात्पर्यकल्पना, सूत्रार्थ एव तदुक्तो न युक्तः । तदुपपादयन्ति तथाहीत्यादि । तस्मिन्निति । मुख्यार्थे । ननु सत्यमस्ति मुख्यार्थबाधः, तथापि फलमुखो न दोषायेत्यतो दूषणान्तरमाहुः किञ्चेत्यादि । तथाच तर्हि विद्यैकत्वसाधनायेदं सूत्रमेवं व्याख्यातम् । तथा सति शिरोव्रतस्य प्रकृतोपनिषद्विशेषसंयोगेनासङ्कीर्णतया पूर्वसूत्रोक्तहेतोर्दृढत्वे सम्पन्ने, 'तेषामेवैतां ब्रह्मविद्यां वदेते'त्येतच्छब्दो यथास्यान्यत्रोपसंहारबाधकः, तथा यत्रैतच्छब्दो नास्ति, यथा 'प्रागतिथिभ्योऽश्नीया'दित्यादौ,

रश्मिः ।

विद्याभेदविचारस्येत्यर्थः । ननु नाकस्मिकत्वापातः ब्रह्मविद्यानामैक्याय भेदावतरणस्याक्षेप्यसूत्रार्थत्वेन सूत्रकारानुशयगोचरताया इत्याशङ्क्य समाधानमाहुः अत इति । अस्येति । शिरोव्रतस्य । विशेषणविधया भेदकत्वमापाद्य ततोऽन्यस्य स्वाध्यायस्य धर्मत्वसाधनेन तदसाधकत्वं विद्याभेदासाधकत्वकथनं निरर्थकम् । तथाचाक्षेप्यसूत्रार्थत्वेन सूत्रकारानुशयगोचरता तदा स्याद्यदि विशेषणस्य वैलक्षण्येन भेदकत्वं स्यात्, नत्वेवमित्याक्षेप्यसूत्रार्थत्वेन सूत्रकारानुशयगोचरताया अभावात्तन्निषेधनिबन्धनस्तद्व्याख्यातः सूत्रार्थः उपेक्ष्य इव प्रतिभातीत्यर्थः । अतद्धर्मत्वेति । न तस्या विद्याया धर्मत्वोक्तिः । अतद्धर्मत्वोक्तिः शिरोव्रतस्य ज्ञेया । तदुक्तिरितिभाष्यस्यार्थः यथातथाप्रतिपादितोस्तु । तस्यार्थः कथमप्यस्त्विति । तस्य तथात्वे अतद्धर्मत्वबोधनस्यानुपसंहारार्थकत्वे । शिरोव्रतेति । शिरोव्रतस्याक्षेप्यसूत्रार्थत्वेन सूत्रकारानुशयगोचरतोपदेशे व्यासतात्पर्यकल्पना भवति । तत्प्रतीतीच्छयोच्चरितत्वं तात्पर्यम् । वक्तुरिति वा । स एवेति भाष्यविवरणं सूत्रार्थ एवेति । तथा चातः सूत्रस्य न तदुक्तार्थत्वमिति भावः । फलमुख इति । प्राचीनव्याख्याफलं तदुपायकः । प्रकृतेति । स्वाध्यायपदेन प्रकृता या उपनिषत् । वेदत्वात् । तद्विशेष आथर्वणत्वं तत्संयोगेनेत्यर्थः । सम्यग्योगः संयोगः स्वरूपसम्बन्धस्तेनेत्यर्थः । वेदत्रय्या आथर्वणसङ्कीर्णतया । पूर्वेति । चोदनाद्यविशेषादिति हेतोः । दृढत्व इति । एकत्र चोदनाद्यविशेषे आथर्वणे विशेषे वेदान्तप्रत्यये हेतुत्वेपि सर्ववेदान्तप्रत्ययहेतुत्वमदृढमित्याथर्वणासङ्कीर्णतया हेतुत्वे दृढत्वं तस्मिन्सम्पन्ने । एतच्छब्द इति । सदाचारादिविरोध उपसंहारे बाधक उक्तः, तद्वदेतच्छब्दोपि ब्रह्मविद्याविशेषणं इतरब्रह्मविद्याभेदकः उपसंहारबाधकः । उपसंहारे तेषां शिरोव्र-

नन्वाथर्वणोपनिषत्सु पठ्यते, 'स होवाचाब्जयोनिर्योऽवताराणां मध्ये श्रेष्ठोऽवतारः को भविता, येन लोकास्तुष्टा देवास्तुष्टा भवन्ति, यं स्मृत्वा मुक्ता अस्मात् संसाराद्भवन्ति, कथं चास्यावतारस्य ब्रह्मता भवति, स होवाच तं[१] हि नारायणो देव' इत्युपक्रम्य, मथुरास्वरूपं निरूप्य, निगद्यते 'यत्रासौ संस्थितः कृष्णः स्त्रीभिः शक्त्या समाहित' इति, तेनास्यावतारस्याशेषावताराणां मध्ये श्रैष्ठ्यं निरूप्यते, श्रीभागवतेपि च 'एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वय'मिति गीयते। पूर्वोक्तरीत्या तु सर्वतुल्यता प्रतीयत इति नैकतरनिर्धारः सम्भवति। किञ्च। ब्रह्मणो निरवयवत्वेनैकस्यांशित्वम्, अन्येषां तदंशत्वमित्यपि वक्तुमशक्यमिति प्राप्ते,

भाष्यप्रकाशः।

तादृशां धर्माणां त्वन्यत्रोपसंहारस्य प्राप्तावसरत्वाच्छाखान्तरीये कर्मणि विद्यायां च शाखान्तरीयतद्धर्मस्य रूपान्तरे रूपान्तरधर्मस्य च प्राप्तिरित्यस्या आशङ्काया अनिवृत्तिः, तस्मान्मतान्तरीयव्याख्यानमुपेक्ष्यमेवेत्यस्य सूत्रस्योक्तरीत्योपसंहारनियमबोधनेन विधेयकत्वबाधकनिरासार्थतयैव व्याख्यानमुचितमित्यर्थः।

एवं मतान्तरं परिहृत्य पूर्वं रूपान्तरे रूपान्तरगुणानुपसंहारे रूपभेदस्य नियामकताया उक्तत्वात् तं रूपभेदं स्फुटीकर्तुं चिन्तान्तरमारभन्ते नन्वाथर्वणेत्यादि। इयं श्रुतिरुत्तरतापनीयस्था। तत्र हि दुर्वासाः स्वस्य भगवज्ज्ञानं वक्तुं ब्रह्मनारायणसंवादमुपचिक्षेप। तत्र नाभिकमलाज्जातोऽब्जयोनिर्ब्रह्मा एवं प्रश्नमुक्तवान्। अत्र यत्तदोर्नित्यसम्बन्धात् 'स को भविते'ति तच्छब्दोध्याह्रियते। तत्र श्रेष्ठ्याभिज्ञापकं वाक्यं 'येने'त्यादि, 'ब्रह्मता भवती'त्यन्तम्। तथाच लोकानां देवानां तोषजनकः स्मरणेन मुक्तिदाता यः स एव श्रेष्ठः। तस्य ब्रह्मता च केन प्रकारेणेति प्रश्नद्वयं सिध्यति। 'तं होवाचे'त्यादिना नारायणेनोत्तरमुच्यते। तत्र मथुरास्वरूपनिरूपणं भूम्यामवतारज्ञापनार्थम्। 'कथं च ब्रह्मते'त्यस्योत्तरं 'यत्रासौ संस्थित'इत्यादिभिः शक्तिसहितचतुर्व्यूहरूपेणेति सिध्यति। तेनैवमस्य श्रीकृष्णावतारस्य पूर्वोक्तं श्रैष्ठ्यं निरूप्यत इति सिध्यति। श्रीभागवते तु पुरुषांशावतारमध्ये 'रामकृष्णाविति भुवो भगवानहरद्भर'मिति भूभारहारकयो रामकृष्णयोः पुरुषांशावतारत्वमुक्त्वा, 'एते चांशकलाः पुंस' इत्यनेन सर्वसाम्यं चोक्त्वा, 'कृष्णस्तु भगवान् स्वय'मिति केवलस्य कृष्णस्य परब्रह्मत्वमुच्यते। 'यदेकमव्यक्तमनन्तरूप'मिति श्रुत्युक्तप्रकारिकया पूर्वोक्तरीत्या तु तथा प्रतीयत इत्येकः सन्देहः। किञ्चेत्या-

रश्मिः।

तित्वे एतच्छब्दवाच्येतरविधाबाधापत्त्यास्येति शिरोव्रतस्यान्यत्राथर्वणिकादन्यत्र याजुषादौ उपसंहारस्य बाधकः। संनियोगशिष्टन्यायं प्रापयित्वेत्यर्थः। एतच्छब्द इति। संनियोगशिष्टन्यायप्रापकः। उक्तरीत्येति। भाष्योक्तरीत्या। मतान्तरमिति। शङ्करभास्कररामानुजाचार्याद्युक्तं मतान्तरम्। उक्तत्वादिति। 'भेदान्नेति चेन्ने'ति सूत्रे भाष्ये चोक्तत्वात्। भाष्ये। उक्तशङ्काया इति। सदाचारादिविरोधेनोपसंहाराभावे कर्मभेदशङ्कायाः। प्रकृते। शेषमिति। नैकतरेति। उक्तब्रह्मतासर्वतुल्यतयोरेकतरनिर्धारः।

१. इयमित्यारभ्य प्राप्तमित्यन्त इत्यत्र श्रीहस्ताक्षरेषु पाठोयम्-ब्रह्मतेति, मूलरूपता। तापनीयश्रुत्युपबृंहणाय निःसंदिग्धं श्रीभागवतवाक्यमुदाहृतम्। पूर्वोक्तरीत्येति। 'यदेकमव्यक्तमनन्तरूप'मिति श्रुत्युक्तप्रकारेण। शेषं विवदव्याख्यातम्-इति। २. प्रकाशे आशङ्का, रश्मौ शङ्केति भाष्यपाठः।

अभिधीयते । 'सत्त्वं यस्य प्रिया मूर्तिः' 'विशुद्धसत्त्वं तव धाम शान्त'मित्यादिवाक्यैरप्राकृतो भगवत्स्थानभूतः सत्त्वनामा भगवद्धर्मरूप एव कश्चनास्ति । यादृशेन रूपेण भगवान् कार्यं कर्तुमिच्छति, तादृग्रूपं तं प्रकटीकृत्य तस्मिन्

---

भाष्यप्रकाशः ।

दिनोक्तस्तु द्वितीयः । एवं प्राप्तम् । तथाच तापनीयानन्तरूपश्रुत्योरितरेतरविरोधान्निरवयवत्वबोधकनिष्कलश्रुतिविरोधाच्च श्रैष्ठ्यादिनिर्धारासम्भवे धर्माणां मायिकत्वस्यैव शरणीकरणीयत्वात् स्वरूपपराणां अवतारान्तरे अवतारान्तरधर्मोपसंहारानुपसंहारचिन्ताया अनुपयोगात् पूर्वोक्ताशङ्काया अनिवृत्तावप्यदोष इति मतान्तरीयव्याख्यानं साध्वेवेति पूर्वपक्षाशयः ।

तत्र समादधते अभिधीयत इत्यादि । अत्र 'सत्त्वं यस्ये'त्यादिवाक्यद्वये यथायथं 'प्रिये'ति 'विशुद्धे'ति विशेषणाभ्यां विवक्षितस्य सत्त्वस्य प्राकृतात् सत्त्वात् व्यावृत्तिः क्रियते, 'मां भजन्ति गुणाः सर्वे निर्गुणं निरपेक्षक'मिति, 'विलज्जमानया यस्य स्थातुमीक्षापथेऽमुये'ति वाक्याभ्यां तस्या गुणानामप्रियत्वस्याविशुद्धत्वस्य बोधनात् । नच प्राकृतगुणातिरिक्तसत्त्वस्याप्रसिद्धत्वं शङ्क्यम् । 'सत्त्वं रजस्तम इति निर्गुणस्य गुणास्त्रय' इति द्वितीयस्कन्धे प्राकृतव्यतिरिक्तानां गुणानां सिद्धत्वात् । 'यथा कार्पासे न हि सूत्रम्, तदेव पुनः पौर्वापर्यमापद्यमानं सूत्रतामापद्यते, तथा भगवान्निर्गुणस्ते पुनर्गुणा' इति तत्र विवरणात् । स च द्रव्यरूपः । अन्यथा तस्य मूर्तित्वधामत्वयोरनुपपत्तेः ।

रामानुजास्तु । शुद्धसत्त्वं नाम रजस्तमोमिश्रप्राकृतसत्त्वविलक्षणसत्त्वगुणाश्रयो द्रव्यविशेष इत्यङ्गीकृत्य, 'स्वसत्ताभासकं द्रव्यं त्रिगुणात्तद्विलक्षण'मिति वाक्यं च तस्मिन् प्रमाणत्वेनाहुः । तस्यातिरिक्तत्वमेव, न त्वेतद्रूपत्वम् ।

एवमेतस्योपाधित्वं साधयित्वा तेनांशान् साधयन्ति यादृशेनेत्यादि । स स इति । अव-

रश्मिः ।

एवं शेषं निगदव्याख्यातम् । संशयस्य पूर्वपक्षोक्त्या बोधात्पूर्वपक्षमाहुः तथाचेत्यादिना । इतरेतरेति । तापिनीये ब्रह्मता अनन्तरूपश्रुतौ सर्वतुल्यतेति तथा । अवतारे कोटिद्वयमुक्त्वावतारिण्यनन्तरूपश्रुतिकोट्या द्वितीयकोटिमाहुः निरवयवत्वेति । श्रैष्ठ्यादीति । श्रैष्ठ्यं ब्रह्मता आदिना सर्वतुल्यता तयोरेकतरस्य निर्धारासम्भवे । तथाचावतारस्य ब्रह्मता वा सर्वतुल्यता वेति सन्देहः, अवतारिणोऽनन्तरूपता वा निष्कलता निष्क्रियता वेति सन्देहः । इति पूर्वपक्षे सन्देहबोधः । स्वरूपेति । अवतारिपराणाम् । पूर्वोक्तेति । 'नन्वग्निष्टोममेवोद्दिश्ये'त्यादिना 'भेदान्नेतिचे'दिति सूत्रोक्तशङ्काया अवतारिपरायाः अवतारविषयेऽनिवृत्तावपि । अप्रियत्वस्येति । 'मां भजन्ति गुणा' इत्यत्र प्रियत्वार्थं भजनात् । 'विलज्जमानये'त्यत्र अविशुद्धत्वात्कापट्यात् विलज्जेति तथा । ते पुनर्गुणा इति । निषेधयोग्याः प्रतियोगिन इत्यर्थः । गुणप्राप्तिर्गुणनिषेधश्च पूर्वापरव्यवस्था । तत्रेति । द्वितीयसुबोधिन्याम् । स चेति । सत्त्वगुणः । अन्यथेति । नैयायिकगुणत्वे । मूर्तित्वं परिच्छिन्नपरिमाणवत्त्वम्, तस्यानुपपत्तिः, गुणे गुणानङ्गीकारात् । धामत्वमयोगोलकवत् । स्वसत्तेति । आत्मसत्ता जातिः, सत्त्वं न गुणः, तां भासयति तत्स्वसत्ताभासकम् । गुणकर्मान्यद्रव्यम् । विलक्षणं शुद्धत्वेन । ननु गुणविलक्षणत्वं गुणसलक्षणत्वप्राप्तौ भवति, गुणसलक्षणाभावत्वात् गुणविलक्षणत्वस्य, अतो न जातिः सत्त्वमितिचेत् । न । चतुर्थगुणकल्पने गौरवात् सतो भावः सत्त्वं सत्ता चेत्येकार्थात् । तस्मिन्निति । शुद्ध-

स्वयमाविर्भूयायःपिण्डे वह्निवत्तत्कार्याणि करोति, यस्मिन् यस्मिन्नवतारे, स सोंऽश इत्युच्यते । तत्र हि विग्रहस्तत्राविर्भूतं ब्रह्मस्वरूपं च प्रतीयते । विग्रहस्य सत्त्वात्मकत्वेन धर्मरूपत्वात् तत्राविर्भूतस्यैव ब्रह्मत्वात् समुदितस्यावतारत्वेन गणनात् तत्रैकस्यैवांशस्य तद्रूपत्वं यत् तदेवांशत्वम् । यत्राधिष्ठानमनपेक्ष्य स्वयमेव शुद्धं साकारं ब्रह्माविर्भवति भक्तार्थम्, स स्वयं पूर्णो भगवान् उच्यते । एतदेव च श्रैष्ठ्यम् । अत एव सर्वतः पाणिपादान्तत्वं स्वस्मिन् स्फुटं ज्ञापयितुं

---

तारः। नन्वयःपिण्ड आविर्भूतस्य वह्नेर्वह्नित्वमेवोच्यते, न त्वंशत्वम्, अतः कथमेवमित्याशङ्कायामाहुः तत्र हीत्यादि । एकस्यैवांशस्य तद्रूपत्वमिति । आविष्टस्यांशस्य ब्रह्मरूपत्वम् । तथाच विरुद्धधर्माश्रये ब्रह्मण्याकारानाकारत्वयोरुभयोः सत्त्वाद्यत्रानाकारेण तेजोरूपेण प्रविशति, सोंऽशावतारः । इदमेव निबन्धे प्रथमस्कन्धतृतीयाध्यायार्थविचारेपि 'सत्त्वात्मके शरीरे अलौकिकतेजसः सर्वदा संक्रमोऽवतारः, कार्यकाले संक्रम आवेश' इति तद्भेदकथनमुखेन बोधितम् । अतः परं श्रैष्ठ्यबोधनाय मूलस्वरूपं विवृण्वन्ति यत्राधिष्ठानेत्यादि । अधिष्ठानं सत्त्वाद्यात्मकं शरीरमनपेक्ष्य स्वयमेव शुद्धं साकारं ब्रह्म आविर्भवतीत्यादिप्रकारेण पूर्णो भगवानुच्यते । एतदेव पूर्णभगवत्त्वमेव श्रैष्ठ्यम् । तापनीयवाक्येषु रामादीनां त्रयाणां प्रणवमात्रात्रयप्रतिपाद्यत्वमुक्त्वा, तेन सत्त्वरजस्तमोधिष्ठानत्वं प्रतिपाद्य, अग्रे अहंग्रहोपासनायां 'ॐतत्सत् सोऽहं परं ब्रह्म कृष्णात्मको नित्यानन्दैकस्वरूप' इत्यादिना निरधिष्ठानस्य केवलनित्यानन्दैकस्वरूपस्य कृष्णात्मकस्यैव श्रावणादेतदेव श्रैष्ठ्यमित्यर्थः । यद्यप्येतादृशत्वं रामनृसिंहतापिन्योक्तत्तत्स्वरूपे उच्यते, कल्पभेदेन च तथा सिध्यति, तथाप्युरुक्रमावतारे देवमात्रकार्यार्थतायाः स्फुटत्वात् तेनावतारेण बलेरेव मुक्तेः स्फुटत्वाच्च स्वल्पं मोक्षदातृत्वम्, श्रीनृसिंहस्वरूपे तु 'यदिदं किञ्च जगत् सर्वं प्राण एजति निःसृत'मिति कम्पनाधिकरणविषयवाक्योक्तन्यायेन मुक्तिदातृत्वं नृसिंहराजमन्त्रे स्फुटति, न तु सौम्यरूपतया सुगमोपायेन वा । श्रीरामस्वरूपे तु बहूनां स्वल्पसाधनेनैव मोक्षदातृत्वेपि सौम्यरूपत्वेपि भूयान् मर्यादानुरोधः । पुष्टिकार्यं तु स्वल्पम् । श्रीकृष्णावतारे तु 'गोप्यः कामात् भयात् कंसो द्वेषाच्चैद्यादयो नृपाः । सम्बन्धाद्वृष्णयः स्नेहात् यूयं भक्त्या वयं विभो' इत्यादिवाक्याद्बहुभिः प्रकारैर्मोक्षदत्वम् । तेन मर्यादाननुरोधश्चेत्याद्यनुसंधाय

रश्मिः ।

सत्त्वस्य द्रव्यत्वे । आहुरित्यस्वरसस्तु ह्याश्चर्यरसाभावेपि बुद्ध्यारोहाज्ज्ञेयः । सिद्धमाहुः तस्येति । शुद्धसत्त्वस्य । प्राकृतगुणातिरिक्तत्वमेव, न तु प्राकृतगुणरूपत्वम् । एतस्येति । द्रव्यस्य । तेनेति । द्रव्यत्वेन । उच्यत इति । लोकदृष्ट्योच्यते । कथमेवमिति । केन प्रकारेण दृष्टान्तत्वम् । आहुरिति । शास्त्रदृष्ट्या समाधानमाहुरित्यर्थः । तत्र हीत्यादीति । तत्र शास्त्रदृष्ट्या सूर्येऽग्नौ दृष्टान्ते । दार्ष्टान्तिके भगवति । सर्वदेति । यथा वराहादौ । आवेश इति । यथा बलभद्रे । 'हलधर ईषदत्रस'दिति त्रासबोधनात् । यत्राधिष्ठानेत्यादीति । स्वयमेवेत्यादि । मायाजवनिकां दूरीकृत्य साकारमानन्दमयवैश्वानराधिकरणयोरुक्तम् । श्रीमद्भागवते मतेऽधोक्षजत्वेपि साकारत्वं साकारकार्यानुरोधात् । कारणगुणाः

---

१. अधिष्ठानमित्यारभ्य अत एवेत्यन्तमित्यत्र श्रीहस्ताक्षरेषु एवमाविर्भूतत्वे साकारब्रह्मत्वे गमकमाहुः अत एवेत्यादि ।

तोकादिभावेनाविर्बभूव । तेन यादृग्यादृग्लीलाविशिष्टं यद्यद्बाल्यपौगण्डाद्यवस्थाविशिष्टं तत्तद्रूपं नित्यमेवेति वयं जानीमः । नचैवं सच्चिदानन्दविग्रहोक्तिः सर्वत्र विरुद्धा भवेदिति वाच्यम् । सत्त्वस्यापि भगवद्धर्मत्वेन सच्चिदानन्दरूपत्वादविरोधात् । मन्त्राद्यधिष्ठातृरूपाणि तु विभूतिरूपाणि । एतच्च यथा तथा भक्तिहंसे प्रपञ्चितम्। तत्त्वं च 'प्रकाशाश्रयवद्वा तेजस्त्वा'दितिन्यायेन भगवद्धर्माणामपि सच्चिदानन्दरूपत्वाद्धीनाधिकारिणामप्युपासकानां फलप्रेप्सूनां तत्तत्फलदानार्थमैश्वर्यादिरूपेण तत्र तत्र स्थितत्वमेव ।

---

भाष्यप्रकाशः ।

विशेषान्तरमाहुः अत एवेत्यादि । एवमाविर्भूतशुद्धसाकारब्रह्मत्वादेव एवंरूपत्वं स्वस्मिन् स्फुटं ज्ञापयितुं वत्साहरणे रासे एकमौहूर्तिकनानास्त्रीविवाहे नारदपरीक्षायां यथायथं तोकप्रौढराजभावेन बहुधा प्रकटो जातः । यदि हि तथा न स्यात्, अवतारान्तर इवात्राप्येवं न ज्ञापयेत्, नाप्येवं प्रकटो भवेत्, अतस्तथा प्राकट्यमेव मूलरूपत्वमहामाहात्म्यादिगमकमित्यर्थः। तेन सिद्धमाहुः तेन यादृगित्यादि । तेनेति । तोकादिभावेपि जृम्भाव्यादानदामोदरलीलासु सर्वात्मकत्वव्यापकत्वविरुद्धधर्माश्रयत्वप्रदर्शनेन । तथाचैवं निरवयवत्वेऽप्युपाधौ प्रवेशतो वह्न्ययोगोलकघटाकाशादिवदंशांशिभावाविरोधान्न प्रमाणयोर्विरोधः, न वा कृष्णावतारश्रैष्ठ्यविरोध इत्यर्थः । पुनः किञ्चिदाशङ्क्य परिहरन्ति नचैवमित्यादि । एवमिति । सत्त्वस्याधिष्ठानत्वे । सर्वत्रेति । कल्पान्तरीयेष्ववतारेषु। एवं मूलरूपव्यवस्थामुक्त्वा विभूतिरूपव्यवस्थामाहुः मन्त्रेत्यादि। भक्तिहंसे प्रपञ्चितमिति । तद्यथा तथा भक्तिहंसविवरणे तदाशयो मया स्फुटीकृत इति ताभ्यामवगन्तव्यम् । विभूतिरूपस्वरूपमाहुः तत्त्वमित्यादि । तत्र तत्रेति । उद्गीथादिरूपेषु ।

रश्मिः ।

कार्यगुणानारभन्त इति । एवं रूपत्वमिति । आश्चर्यवत् सार्वविभक्तिकतसिलन्तसर्वतः पाणिपादान्तरूपत्वम् । व्यवस्थितावयवत्वबोधकतोकादिभावेनेति भाष्यविवरणम् । वत्साहरण इत्यादि । प्रक्षिप्तत्वेपि 'ततः कृष्णो मुदं कर्तुं तन्मातॄणां च कस्य च । उभयायितमात्मानं चक्रे विश्वकृदीश्वरः ॥ यावद्वत्सपवत्सकाल्पकवपुर्यावत्कराङ्घ्र्यादिकं यावद्यष्टिविषाणवेणुदलशिग्यावद्विभूषाम्बरम् । यावच्छीलगुणाभिधाकृतिवयो यावद्विहारादिकं सर्वं विष्णुमयं गिरोङ्गवदजः सर्वस्वरूपो बभा'विति विषयस्य स्पष्टत्वात्तदर्थ उक्तः, कृष्णक्रीडात्वाच्च । यावत्तावत्परिमाणे वत्साहरणे । रासे 'कृत्वा तावन्तमात्मान'मिति । एकेत्यादिरुत्तरार्धे । बहुधेति । तावतीं मायां दूरीकृत्य । तथेति । बहुधा । अत्राप्येवमिति । कृष्णावतारेप्येवमुक्तप्रकारेण स्वस्मिन्सर्वतः पाणिपादान्तत्वं न ज्ञापयेदित्यर्थः । प्रमाणयोरिति । 'यदेकमव्यक्तमनन्तरूप'मित्यस्य 'निष्कलं निष्क्रियं शान्त'मित्यस्य च विरोधः । तेन यादृगित्यादीति । तेनेत्यस्यार्थ उक्तः । आविरिति । 'अचलत्वं चापेक्ष्ये'ति सूत्राद्भक्तमनोरथेनाविर्बभूव । तेनेति । भक्तार्थं लीलाविर्भावनेन । नित्यमेवेति । नित्यानित्यसंयोगापत्तेरेवकारः । वयमिति । 'मुक्तानामपि सिद्धानां नारायणपरायणः । सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने' इति वाक्यात् । भाष्ये । सच्चिदानन्दरूपत्वादिति । 'प्रकाशाश्रयवद्वे'ति सूत्रेण तथा । प्रकृते । तत्त्वमित्यादीति । तत्त्वं विभूतित्वम् । उद्गीथादीति । छान्दोग्ये सन्ति । आदिना 'पृथिवी रसः आपो रसः ओषधयो रसः पुरुषो रसः वाग्रसः ऋग्रसः साम रसः उद्गीथो रसः । उद्गीथस्यादय उद्गीथादयः पृथिवीरसादयः । तेषु

**नन्वेकस्यैव शुद्धस्यैवानन्तरूपत्वं भवतैवोक्तम्, अतो मत्स्यादिरूपेष्वपि नाधिष्ठानत्वेन सत्त्वं वक्तुं शक्यम्, किञ्च, एवं निराकारस्वभावत्वं ब्रह्मणः सिध्यतीति सत्त्वाव्यवहितप्राकट्योक्तिरप्यनुपपन्नेति चेत्। मैवम्। सत्त्वाधिष्ठानत्वस्य प्रमाणसिद्धत्वेनानपनोद्यत्वात्। तच्चोक्तं 'यदेकमव्यक्तमनन्तरूप'मित्यादि। प्राकट्यं हि भक्तिनिमित्तिकम्। सा तु बहुविधेति तदनुरूपं प्राकट्यमपि तथा।**

भाष्यप्रकाशः।

एवं रूपत्रयविभागस्याप्रयोजकत्वं मन्वानश्चोदयति नन्वित्यादि। एवमिति। सत्त्वस्याधिष्ठानत्वेनाकारसमर्पकत्वे। तथाच न्यायसिद्धत्वाद्विभूतिरूपं तथास्तु। मूलावताररूपे तु न तथा। वदतो व्याघातादित्यर्थः। तत्र समादधते मैवमित्यादि। तच्चेति। स्वतोऽनन्तरूपत्वे प्रमाणं च। आदिपदेन 'क्षयन्तमस्य रजसः पराक' इत्यादीनां सङ्ग्रहः। तथाच 'यदेक'मित्यादिश्रुतिषु 'तमसः परस्ता'दित्यादिब्रह्मविशेषणाद्ब्रह्मसम्बन्धिरूपादौ प्रकृतिसंसर्गराहित्यसिद्ध्या 'आनन्दरूपममृतं यद्विभाति' 'आनन्दामृतरूपं प्रणवं षोडशान्ते' इत्यादिभिः सच्चिदानन्दरूपताया ब्रह्मणः स्वतोऽनन्तरूपतायाश्च प्रमाणसिद्धत्वात् प्रकारत्रयमपि प्रमाणसिद्धमिति न व्याघात इत्यर्थः। ननु भवतु त्रयाणां प्रामाणिकत्वम्, तथापि कुत्र कथं प्रकटीभवतीति न ज्ञातुं शक्यते इति विशेषानवधारणात् वृथैवायं विचार इत्याशङ्कायां तदवधारणहेतुबोधनेन तां निवारयन्ति प्राकट्यं हीत्यादि। प्राकट्यमपि तथेति। 'ये यथा मां प्रपद्यन्ते' इति भगवद्वाक्यात्तथा। तथाचैवं भक्तिभेदा-

रश्मिः।

रूपेषु। अष्टमस्य समष्टित्वात्। रसः सारः। गन्ध(पुष्प)चन्द्रपुष्पसोमवल्लीषु पुरुषत्वाग्निवायुविष्णुरूपः। गन्धः पृथिव्याः स्पष्टः। 'अपां पुष्पं वदे' त्यारणश्रुतेश्चन्द्रः। ओषधिरसः द्वौ स्पष्टौ। 'पुष्पमूर्ध्वमेव गृह्णन्ती'ति श्रुतेश्च। सोमवल्ली यज्ञाङ्गम्। पुरुषस्य पुरुषत्वमाकाशः। 'आकाशो ह वै नाम नामरूपयोर्निर्वहिते'ति श्रुतेः। वाचोऽग्निः ऋग्रूपः। ऋचामग्निप्रतिपादकत्वात्। 'अग्निर्वाग्भूत्वा मुखं प्राविश'दिति श्रुतेः। ऋचो वायुः सामरूपः। 'वायुः शब्दतामापद्यत' इति प्राचां प्रवादात्। साम्नो विष्णुरुद्गीथः। पूजाप्रतिपादकत्वात्साम्नः विष्णोश्चाधोक्षजसेवायाः स्वगुणद्वारा ज्ञापकत्वात् कार्यैक्यम्। एवं रूपत्रयेति। अवतारिणं विनावतारपूर्णविभूतिरूपत्रयविभागस्य। नन्वित्यादीति। एकस्यैवेति। द्वितीययोगव्यवच्छेदकः। शुद्धस्यैवेति। शुद्धसत्त्वयोगव्यवच्छेदकः। भवतैवेति। अस्मिन्नेव सूत्रे भवता सिद्धान्तिनैव। क्षयन्तमिति। अत्र विधेक्यार्थं वेद्यैक्योपदेशः। अस्य जगतः रजसः ब्रह्मकार्यस्य स्वल्पभेददर्शनं क्षयन्तं यो वेद सोऽमृतो भवति। केति चेन्न। पराके खङ्गे भेदद्रष्टुर्भयजनके सति। आदिना 'महद्भयं वज्रमुद्यन्तं य एतद्विदुरमृतास्ते भवन्ती'ति काठके। 'यस्त्वेवमेतं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्त' इति विधैक्यमुक्तमत्र। 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवती'ति तैत्तिरीयकभेददर्शननिन्दायै परामर्शो दृश्यतेत्र। 'तत्त्वेव भयं विदुषोऽमन्वानस्ये'ति श्रुतेरन्यत्राप्यभेदममन्वानस्य भयं संसाराभिनिवेशलक्षणं भवतीति। ब्रह्मसम्बन्धीत्यादि। आदिना मूलरूपम्। आनन्दरूपमिति। कृष्णावतारः। प्रणवम्। गायत्र्यर्थकारिकाभिर्विवृतम्। षोडशान्त इति। लिङ्गशरीरान्तः, आदिनानन्दमयस्य। 'को ह्येवान्या'दित्यादिश्रुतिः। स्वत इति। मूलरूपात् अनन्तावतारादयः, चकाराद्विभूतिरूपाणि अन्नमयादीनि। प्रमाणेति। प्रमाणपदेन 'यदेकमव्यक्तमनन्तरूप'मिति श्रुतिरपि। कुत्र कथमिति। त्रिषु पूर्णावतारविभूतिषु कुत्र सत्त्वाद्युपाधौ कथं केन प्रकारेण। प्रकारविशेषानवधारणात्। तदवेति। प्रकारावधारणहेतुभूतभक्तिबोधनेन तां शङ्काम्। प्राकट्यं हीत्यादीति।

**सर्गादिकार्येष्वधिकृतानां भक्तानामिनरासक्तिरप्यस्तीत्युपाध्यन्तरितस्नेहवत्त्वा-त्वानन्तरूपत्वेन मत्स्यादिरूपोपि तदर्थं तद्व्यवहित एव प्रकटीभवति । ये तु भगवत्स्वरूपमात्रासक्ताः, तदर्थं स्वयमेवातद्व्यवधानेन प्रादुर्भवति । एतेनैव निराकारत्वशङ्कापि निरस्ता । एतेन सोपधिस्नेहवदर्थमेव मत्स्यादिरूपप्राकट्यस्य प्रमाणसिद्धत्वान्निरुपधितद्वदर्थमेव श्रीव्रजनाथप्राकट्यस्यापि तथात्वात् सोपाधि-स्नेहवत्स्वपि पुरुषार्थदानस्यानुषङ्गिकत्वात् 'पुरुषविध' इति श्रुतेश्चैतदेव रूपं 'रसो वै**

भाष्यप्रकाशः ।

द्रूपभेदोपि सुखेनावधारयितुं शक्य इत्यर्थः । तर्हि भक्तिभेदस्य कथमवधारणमित्यत आहुः **सर्गेत्यादि प्रादुर्भवतीत्यन्तेन** ।

एवं प्राकट्यप्रकारव्यवस्थापनेन निराकारत्वशङ्काया अपि निवृत्तिमाहुः **एतेनैवेत्यादि** । भगवति प्रपञ्चवैलक्षण्यस्य पूर्वपादान्त एव प्रतिपादिततया लौकिकाकाररहित्यमेव तत्र निरा-करता, न तु यावदाकाररहित्यम् । उपाधिव्यवधानं तु शुद्धदर्शनयोग्यताभावेन हेतुभेदात्, अतः प्राकट्यप्रकारव्यवस्थापनेनैव यावदाकारशून्यत्वशङ्काप्यपास्तेत्यर्थः । एवं रूपविभागं रूपाणां स्वरूपं च विशदीकृत्य भगवति श्रीकृष्णरूपे यच्छ्रैष्ठ्यम्, अन्यत्र यत् तद्राहित्यम्, तदुभयं व्यक्तीकुर्वन्ति **एतेन सोपधीत्यादि** । एतेनेत्यस्याध्यवसीयत इत्यनेन सम्बन्धः । **तथात्वादिति** । गोपालतापनीयबृहद्वामनीयसन्दर्भे 'ता नाविद'न्नित्यादिप्रमाणसिद्धत्वात् । सोपाधिस्नेहवत्सु मथुराद्वार(का)वतीप्रभृतिस्थेष्वपि तत्तत्पुरुषार्थदानस्य तत्तद्व्यूहेन कृततया आनुष-ङ्गिकत्वात् । आनन्दमयनिरूपणे 'स वा एष पुरुषविध एवे'ति पुरुषविधश्रुतेश्च । एतदेवानन्दमयं

रश्मिः ।

'भक्त्या जानाति चाव्यय'मिति श्रुत्यां भक्तेः करणत्वं ज्ञाने ज्ञानं प्राकट्ये सति भवतीति भक्तः भक्त्या भगवतः प्राकट्यं कुर्वन् ज्ञानविषयं करोतीत्यर्थः । परेषां ज्ञानाश्रयो भक्तः । एवं प्राकट्यं भक्तिनिमि-त्तकम् । **बहुविधेति** । भक्तिजन्या 'श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिः प्रसाध्यते' इति तत्तत्कारणजन्या बहुविधेति तदनुरूपं भक्त्यनुरूपं स्वस्वकारणजभक्तियोग्यम् । **सर्गादीति** । **भक्तानामिति** । ब्रह्मा-दीनाम् । **इतरेति** । सर्गादिकारणासक्तिः । **इति** हेतौ । हेत्वन्तरं **उपाधीति** । सत्त्वान्तरेत्यर्थः । **एवेति** । 'सत्त्वमस्य प्रिया मूर्ति'रिति वाक्यादेवकारः । आधिभौतिकभक्त्या सत्त्वोपाधौ प्राकट्यप्रका-रमुक्त्वाध्यात्मिकभक्त्या निरावरण आकाशे प्राकट्यप्रकारमाहुः **ये त्विति** । आसक्तिराध्यात्मिकी भक्तिः । **स्वयमेवेति** । 'कृष्णो वै परमं दैवत'मिति श्रुतेरेवकारः । अतद्व्यवधानेन किन्तु आकाशव्यवधानेन । **तत्रेति** । अधोक्षजे । **हेतुभेदादिति** । भक्तिरूपहेतोः सोपाधिनिरुपाधिरूपभेदात् । **यावदिति** । सोपाधिके औपाधिकत्वेपि निरुपाधिके उपाध्यभावात्तथा । **अन्यत्रेति** । मत्स्यादिषु । **गोपालेति** । 'तदुहोवाच ब्राह्मणोसावनारतं मेध्यातः स्तुतः परार्धान्ते सोऽबुध्यत गोपवेषो मे पुरुषस्तदाविर्बभूवे'ति । बृहदिति । 'चिरं स्तुत्या ततस्तुष्टः परोक्षं प्राह तान् गिरे'ति । **ता नाविदन्निति** । अत्र वाक्ये 'मय्यनुषङ्गबद्धधिय' इत्यनेनात्मना भक्तवश्यत्वेनाविर्भूते मय्यनुषङ्गबद्धधिय इत्यर्थान्निरुपधितद्वदर्थत्वम् । सोपाधीति भाष्यं विवृण्वन्ति स्म **सोपाधीत्यादिना** । त्रयस्त्रिंशाध्याये 'पुत्रं त्वौपाधिकस्नेहवति वसुदेवे मथुरास्थे तस्य कंसेनाधर्षितत्वस्य पुरुषार्थस्य दानं तस्य तेन प्रद्युम्नव्यूहेन कृतता यथा तया । सम्बधो-

१. तद्व्यवधानेनेति पाठः । २. निरुपधितत्तदर्थमिति पाठः ।

**स' इत्यादिश्रुतिप्रतिपाद्यं निरुपधिस्नेहवतां विषयः । इदमेव च श्रैष्ठ्यम् । मत्स्यादिरूपं तु सोपाधिनद्गनामेव तथा । नात्रकनद्गनमर्थे एव प्राकट्यादित्यध्यवसीयते । एवं सति गुणभेदस्याप्रयोजकत्वात् सर्ववेदान्तप्रत्ययत्वं ब्रह्मणो निष्प्रत्यूहम् ॥३॥**

भाष्यप्रकाशः ।

रूपं 'रसो वै स'इत्याद्यानन्दश्लोकविवरणश्रुत्या प्रतिपाद्यं निरुपधिस्नेहवतां व्रजस्थानां विषयः । इदमेव अधिष्ठानाव्यवहितकेवलानन्दमयतया मुख्याधिकारिप्रमाविषयत्वमेव तस्मिन्नवतारे श्रैष्ठ्यम्, परमं निष्कृष्टम् । मत्स्यादिरूपं तु सोपधिस्नेहवतामेव विषयः । सोपधिस्नेहवतां कार्यायैव प्राकट्यात् । अतो न तेषु पूर्वोक्तरूपं श्रैष्ठ्यमित्येतत् मत्वं तत्तद्रूपभेदतत्तत्प्राकट्यहेतुभेदबोधकप्रमाणगणेनावधार्यते । अतो न कोपि शङ्कालेशः । तथाच यदि यावद्विशेषशून्यं ब्रह्म स्यात्, तदा तथा स्यादपि । तत्तु प्रागेव निरस्तम् । तथा सति विरुद्धधर्माधारत्वेनैवं स्वरूपनिर्धारसिद्धौ धर्माणाममायिकत्वेन वास्तवत्वात् तदुपसंहारादिचिन्ताया अप्यावश्यकत्वादुक्ताशङ्का निवर्तनीयैवेत्यतो मतान्तरीयमेतत्सूत्रव्याख्यानमुपेक्ष्यमेवेत्यर्थः । सिद्धमाहुः एवं सतीत्यादि । पूर्वोक्तरीत्या तत्तद्धेतुकस्य गुणानुपसंहारस्य रूपभेदस्य चाबाधकत्वेऽनेकरूपतायामपि स्वरूपैक्ये निर्बाधे सति तत्तद्रूपगुणभेदस्य वेद्यभेदाप्रयोजकत्वात् ब्रह्मणः सर्ववेदान्तप्रत्ययत्वं निष्प्रत्यूहम् । मायावादिमते तु धर्माणामौपाधिकत्वादुपाधीनां च भिन्नत्वादुपास्यरूपाणां चाब्रह्मरूपत्वान्न विद्यैक्यं स्वारस्येन प्रयोजयति, अत्र तु ब्रह्मणः सर्वरूपत्वात् स्वारस्येन, अतोपि तथेत्यर्थः ॥ ३ ॥

रश्मिः ।

पधिकस्नेहवत्सु द्वारवतीस्थेषु ज्ञातिबन्धुषु तत्रापि सुधर्मा[1] देवसभा तत्स्थेषु तस्य मर्त्यधर्मायोगस्य पुरुषार्थस्य दानं तस्य तेन प्रद्युम्नव्यूहेन कृततया । प्रभृतिशब्देन सुदाम्यवन्तीस्थे मैत्र्योपाधिकं स्नेहवति तस्य धैर्यस्य पुरुषार्थस्य दानं तस्य तेन प्रद्युम्नव्यूहेन कृततया । **पुरुषविध** इति भाष्यं विवृण्वन्तिस्म **आनन्दमयेति** । तैत्तिरीये । **रस** इति । रस आस्वादने । इदमेवेति भाष्यं विवृण्वन्ति स्म **इदमेवेति** । मत्स्यादीति भाष्यं विवृण्वन्ति स्म **मत्स्यादीति** । **एवेति** । स्वयंत्वाभावान्मुख्यभक्त्यविषयत्वमित्येवकारः । **सोपधीति** । श्राद्धदेवमनुरासुरहिरण्यगर्भप्रभृतीनां मनुत्वार्पणस्वार्थसृज्योपादानज्ञानोपाधिकस्नेहवताम् । मत्स्यकच्छपस्नेहोऽष्टमस्कन्धे, वराहस्नेहस्तृतीयस्कन्धे । एवकारव्यवच्छेद्या निरुपधिस्नेहवन्तः । तथेति भाष्यार्थमाहुः **सोपाधिस्नेहवतां कार्यायेति** । एवकारार्थः पूर्ववत् । **एतदिति** । कृष्णावतारविभूतिरूपं द्विविधभक्तिरूपं च । प्राकट्यहेतुर्भक्तिः । भेदबोधकत्वं संज्ञाशब्दार्थबोधकत्वेन । संज्ञाया भेदकत्वं पूर्वतन्त्रसिद्धम् । भक्तिभेदो विशेषणात् । सन्दर्भसिद्धनिरुपधिसोपधिविशेषणे । उपासनाभेदः संज्ञाभेदात् । **कोपीति** । दुरूहत्वेन साङ्कर्यरूपः । **तदा तथेति** । यावद्विशेष्यशून्यत्वकाले तथा निराकारत्वं स्यात् । **प्रागेवेति** । गतपादे 'अरूपव'त्सूत्रे । **उक्तेति** । 'किञ्चैवं निराकारे'त्यादिभाष्योक्ता शङ्का निवर्तनीया । अत इति शङ्काया निवर्तनीयत्वात् । **पूर्वोक्तरीत्येति** । 'नन्वग्निष्टोममेवोद्दिश्ये'त्यादिनोक्तरीत्या । तत्रापि 'मैवम्, धर्मिग्राहकमानेने'त्याद्युक्तरीत्या । **तत्तद्धेतुकस्येति** । शिष्टाचारप्रकरणहेतुकस्य । रूपभेदस्य वेद्यभेदस्य । **अनेकेति** । यथा घटानां नीलपीतरक्तशुक्लानां सतां नीलो घटो घटो नेत्यप्रत्ययादनेकनीलादिरूपतायामपि घटत्वेन घटस्वरूपैक्यस्य निराबाधो यथा तथा सति । **तत्तदिति** । **तत्तद्रूपेति** । यथा घटे नीलादितत्तद्रूपगुणभेदस्य घटाभेदाप्रयोजकत्ववत्तत्तद्रूपेत्यादिः । **स्वारस्येनेति** । उपासनाभावेन तदैक्यरूपविद्यैक्ये स्वारस्येन तथा । **तथेति** । सर्ववेदान्तप्रत्ययत्वं

[1] सुधार्थं ।

## दर्शयति च ॥ ४ ॥

वेद्यैकत्वेन विद्यानामेकत्वं श्रुतिर्दर्शयति 'सर्वे वेदा यत्पदमामनन्ती'त्यादिना। उपासनाप्रकारभेदेनोपास्यभेददर्शने दोषं च दर्शयति । 'यदा ह्येवैष एतस्मिन्नु-

भाष्यप्रकाशः ।

**दर्शयति च ॥ ४ ॥** अस्मिन्नधिकरणे सर्वफलदातुः परब्रह्मणो वेद्यस्य तद्विषयकतया सर्वासां विद्यानामैक्यमवान्तरविद्यानामवान्तरैक्यं च प्रतिपादितमिति निगमयितुं सूत्रं विवृण्वन्ति वेद्यैकत्वेनेत्यादि । इत्यादिनेति । आदिपदेन मुण्डके ब्रह्मविद्यां प्रक्रम्य, तस्यामेव परापरविभागमुक्त्वा, ऋग्वेदादिरूपा अपरा, 'अथ परा यया तदक्षरमधिगम्यत' इति तयोर्लक्षणकथनेन सर्वासां ब्रह्मविद्यात्वं यद्बोधितं तस्य सङ्ग्रहः । तथान्यैरुपन्यस्तानां 'एतमेव बह्वृचा महत्युक्थ्ये मीमांसत एतमग्रावध्वर्यव एतं महाव्रते छन्दोगा' इत्यादीनां च सङ्ग्रहः । तथाच श्रुतिरपि प्रत्यक्षा वेद्यैकत्वेन विद्यैकत्वं दर्शयति, उपास्यभेददर्शने च दोषम्, अतोपि निष्प्रत्यूहं ब्रह्मणस्तद्विद्यानां च सर्ववेदान्तप्रत्ययत्वमित्यर्थः । अत्र आद्या श्रुतिः काठकेऽस्ति । 'अन्यत्र धर्मादन्यत्राधर्मा'दिति प्रश्नमुपक्रम्य, तदुत्तरत्वेनोक्ता । तत्र च सर्ववेदबीजभूतो य ॐकारः, तस्य तथात्वमुक्तम् । स च 'स्वधाम्नो ब्रह्मणः साक्षाद्वाचक' इति प्रश्नोत्तरसिद्धिः । तथाचोङ्कारस्य सर्ववेदबीजत्वात् तदर्थस्यैव सर्वत्र प्रसृतत्वात् सर्वस्यापि वेदस्य तद्वाचकत्वमिति वेद्यैक्येन विद्यैक्यं सिद्धम् । द्वितीया तैत्तिरीयाणां ब्रह्मवित्प्रपाठकेऽस्ति । तत्र हि 'अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयने' इति विशेषणचतुष्टयविशिष्टं ब्रह्म 'एतस्मि'न्नितिपदेन परामृश्यते । तथाच यच्छास्त्रीयसाधनमन्तरेणादृश्यम्, यस्य चात्मान्यो नास्ति, किन्तु तदेव सर्वासामात्मभूतमित्यनात्म्यम् । यत् पुनरेतदग्रे 'तत्त्वेव भयं विदुषोऽमन्वानस्ये'त्यनेन यः पूर्वोक्तरूपं ब्रह्म युक्तिभिर्नानुचिन्तयति, तस्यापि

रश्मिः ।

ब्रह्मणो निष्प्रत्यूहमित्यर्थः । न च 'अनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्य'मिति काठके श्रावणान्न स्वारस्यं नेति वाच्यम् । 'नास्ति श्रुतिषु तद्वार्ते'ति मायानिषेधात् । 'स ईक्षां चक्र' इतीक्षामात्रश्रावणात् । न च 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वर'मिति 'मायया सन्निरुद्धः' 'विष्णुर्नाम महायोगी महामायो महातपाः' इत्यादिश्रुतिभिर्मायोक्तेति शङ्क्यम् । 'प्रणवत्वेन प्रकृतित्वं वदन्ति ब्रह्मवादिन' इति गोपालतापिनीयात् प्रकृतिः 'प्रकर्षेण नवीनभावजनक' इत्यादिगायत्र्यर्थविवरणकारिकोक्तलक्षणा इन्द्रियभावजनिका तया विशिष्टं मायिनं महेश्वरम् । महामायो महेन्द्रियावी विष्णुः । मायया संनिरुद्धो जीव इत्यर्थान्तराभावात् । गोविन्द इत्यर्थः ॥ ३ ॥

**दर्शयति च ॥ ४ ॥** पूर्वं चोदनाद्यविशेषहेतुं शोधयित्वा द्वितीयेन तृतीये शिष्टाचारप्रकरणे 'योऽन्यथा सन्त'मिति श्रुतीनामुपसंहारबाधकत्वमाशक्य समाहितम् । अर्थाभेदस्योपसंहारसाधकत्वं वक्ष्यते । एवंच साधकस्य विद्यमानत्वाद्वेद्यैकत्वेनेत्यादिर्भाष्ये। बाधकानि तु गुणभेदस्याप्रयोजनकत्वान्न सन्ति । आदिपदार्थमाहुः **आदिपदेनेति** । **परापरेति** । 'द्वे विद्ये वेदितव्ये इति ह स्म य इह ब्रह्मविदो वदन्ति । परा चैवापरा चे'ति श्रुत्या परापरविभागमुक्त्वा । **सङ्ग्रह** इति । श्रुत्यर्थस्तु एतं सर्ववेदान्तप्रत्ययत्वेन विहितम् । बह्वृचशाखिनः उक्थे शस्त्रविशेषे । विचारयन्ति । एवमग्रेपि । छन्दोगा सामशाखा । आदिना वैश्वानरविद्या । वाजसनेयके प्रादेशमात्रसम्पादितस्य वैश्वानरस्य छान्दोग्ये सिद्धवदुपादानम् । 'यस्त्वेवमेतं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्त' इति । **प्रत्यक्षा वेद्येति** ।

दरमन्तरं कुरुते, अथ तस्य भयं भवती'ति । 'उ'दित्यव्ययमप्यर्थकम् । तथाच, अरमल्पमप्यन्तरं कुरुत इत्यर्थः ॥ ४ ॥

भाष्यप्रकाशः ।

तद्भयमुक्तम् । तादृशत्वं च मूलरूप एवेति, तदवतारेषु यो भेदं कुरुते, तस्य भयं भवतीति सिध्यति । तेन सर्वासां विद्यानां सर्वेषामुपास्यानां चैक्यं सिद्धम् ।

अत्रेतद्बोध्यम् । अन्ये हि शाखान्तराधिकरणोक्तहेतुभिः तत्तदुपासनानामैक्यं साधयित्वा, तस्यैक्यस्य तेषु तेषु गुणोपसंहारप्रयोजकत्वं वदन्ति । तदप्रयोजकम् । यासूपासनासु न कश्चिद्विशेषः, तास्वैक्यसाधनमनर्थकम् । यथा ज्यैष्ठ्यश्रैष्ठ्यगुणकप्राणोपासनायाम् । यत्र च विशेषगुण उपसंहर्तव्यः, यथा पञ्चाग्निविद्यादिषु, तत्राधिकगुणोपसंहारप्रयोजकत्वात् सार्थकम् । गुणोपसंहारश्चेत् समाचारसूत्रोक्तहेतुभिरेव सिध्यति, तदा पूर्वसूत्रे तत्साधनमनर्थकम् । उक्तरीत्या सर्वासामैक्ये प्राप्ते सर्वत्र सर्वगुणोपसंहारप्राप्तेर्दुर्वारत्वात् । अतो ये ज्ञानमार्गीया ब्रह्मत्वप्राधान्येनोपासकाः, तेषामेव तथोपसंहार इति पूर्वसूत्रतात्पर्यबोधनार्थमिदं सूत्रम् । ये पुनः सर्वत्र ब्रह्मत्वमनुसन्दधाना अपि तत्तद्रूपप्रधानाः, तत्तत्फलाकाङ्क्षिणो वा, तेषां तु समाचारसूत्रोक्तैरुपसंहारनियमहेतुभिरवान्तरैक्यमवधार्य, तत्तदुपयोगिन एव गुणा उपसंहर्तव्या भवन्ति । एवं सति यदैक्यमन्यैः पूर्वसूत्रे विचार्यते, तदस्माकं समाचारसूत्रे सिध्यतीति भिन्नभिन्नाधिकारसूचनार्थमेतत्सूत्रचतुष्टयमिति ज्ञेयम् ।

शङ्कराचार्यास्तु । परस्य ब्रह्मणः पूर्वापरादिभेदरहितत्वात् सैन्धवघनवदेकरसत्वाद्विज्ञानानां न तद्विषयत्वम्, अतो ब्रह्मविज्ञानस्य प्रतिवेदान्तं भेदः शङ्कितुं न शक्यते, नापि ब्रह्मविज्ञानस्य चोदनाद्यविषयत्वादभेदः सिद्धान्तयितुम् । अविधिप्रधानैर्वस्तुपर्यवसायिभिर्हि वाक्यैर्ब्रह्मविज्ञानं जन्यत इति 'तत्तु समन्वया'दित्यत्र प्रतिपादितत्वात् । तत्कथमिमां भेदाभेदचिन्तामाचार्य आरभत इत्याशङ्क्य, सगुणब्रह्मविषया प्राणादिविषया वेद्यविज्ञानभेदाभेदचिन्तेत्यदोषः । सगुणे हि ब्रह्मणि कर्मवदुपासनानां भेदाभेदसम्भवात्, कर्मवदेव चोपासनानां दृष्टादृष्टफलार्थचोदनाया अपि सम्भवात्, सम्यग्ज्ञानोत्पत्तिद्वारेण केषाञ्चिदुपासनानां क्रममुक्तिफलत्वस्यापि सम्भवाच्च । तस्मात्तेष्वेवैषा चिन्तेत्याहुः ।

रश्मिः ।

'तं त्वौपनिषदं पुरुषं पृच्छामी'ति श्रुत्योपनिषन्मात्रवेद्यं विरुद्धधर्माश्रयत्वेन 'यदेक'मितिश्रुत्युक्तमेकत्वानेकत्वं भवति, एकत्वावच्छिन्नाभिन्नमनन्तरूपत्वावच्छिन्नमिति बोधः कार्यकारणवस्त्वैक्यमर्षणे सम्भवति । 'तमसः परस्ता'दितिविशेषणबलात्तु कारणकोटिराश्चर्यरस इति सिद्धं तद्दृढयितुमाहुः **शङ्कराचार्या** इति । पादारम्भे आहुरित्यन्वयः । **प्रतिवेदान्त**मिति । आथर्वणिकवेदान्तं लक्ष्यीकृत्य । **चोदनादी**ति । ज्ञानस्य कृत्यविषयत्वादिति भावः । न शक्यत इति सम्बन्धः । 'एकमेवाद्वितीय'मित्यादौ विधिः कल्प्यते । 'प्रज्ञां कुर्वीते'ति विधिर्वा । **तत्कथ**मिति । अभेदसिद्धान्तात्केन प्रकारेण हेतुना । **प्राणादी**ति । आदिना चतुर्वागादिप्राणविषया । **कर्मव**दिति । पूर्वतन्त्रे द्वितीयाध्याये 'संज्ञाभेदाद्यागभेदः दर्शपूर्णमासाख्यकर्म न भिद्यत' इत्युक्तं तद्वत् । **कर्मव**दिति । 'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यत्र दृष्टं स्वर्गः अदृष्टमात्मसुखं तत्फलार्थं चोदनाया उक्तायाः सम्भवात् तादृशकर्मवत् । तथाच ज्योतिष्टोमादिकर्मवत् । षष्ठ्यन्ताद्वतिः । 'आत्मेत्येवोपासीते'ति । अत्र चित्तशुद्धिरदृष्टं फलम् । बृहदारण्यके प्राणसंवादे प्राणादिविषया उपासनाः सन्ति । प्राणानां देहधारणं दृष्टं फलम् । **तेष्वेवे**ति ।

भाष्यप्रकाशः।

तदिदं प्रथमसूत्रपूर्वपक्षभाष्ये एव समन्वयविरोधापत्तेरित्यादिना निराकृतम्।

यत्पुनर्भामत्यां तद्भाष्यतात्पर्यमुक्तम्, सावयवस्य ह्यवयवानां भेदात्तत्तदवयवविशिष्टब्रह्मगोचराणि विज्ञानानि भिद्येरन्नित्यवयवा ब्रह्मणो निराकृताः 'पूर्वापरादी'त्यनेन। नच नानास्वभावं ब्रह्म यतः स्वभावभेदाद्विज्ञानानि भिद्येरन्नित्यत उक्त'मेकरस'मितीति।

तदप्युभयलिङ्गाद्यधिकरणविचारे 'अनुच्छित्तिधर्मा' 'य इह नानेव पश्यती'त्यादिश्रुतीनां विचारेण विरुद्धधर्माधारत्वसाधनादेव निरस्तं ज्ञेयम्।

भास्कराचार्यास्तु। यदि विज्ञेयं ब्रह्म सर्वत्रैकम्, तदा तद्विषयकं ज्ञानमुत्पद्यते, कथं भिद्येत, नच बहूनि ब्रह्माणि सन्ति, येन तज्ज्ञानानि भिद्येरन्, अतः प्रतिवेदान्तं विज्ञानभेद इत्याशङ्कानुपपन्ना, नापि 'चोदनाद्यविशेषा'दिति समर्थनं कर्तव्यम्, अचोदनालक्षणत्वाज्ज्ञानस्येत्याशङ्क्य, विज्ञानमिहोपासनमभिप्रेतम्, प्रथमं तावत् वाक्याद्ब्रह्मस्वरूपविषयकं ज्ञानमुत्पद्यते, तच्च प्रमेयरूपावच्छेदकम्, घटादिविषयकप्रत्यक्षादिज्ञानवत्, उपासनं तु निर्णीते वस्तुतत्त्वे पश्चात् क्रियते, यथा गुरुमुपास्ते, राजानमुपास्त इति ज्ञातस्वरूपस्य गुर्वादेरुपासनं भवति, तच्च विधिगम्यम्, यथा च तस्यावश्यकत्वम्, तथा चतुर्थस्याद्ये वक्ष्यते, तस्मादुपपन्नेयं चिन्तेत्याहुः।

इदं च सिद्धान्तेपि सम्मतम्।

माध्वा रामानुजास्तथोरश्चैतच्चिन्तायामुपपत्तिमविचारयन्तोऽवसरसङ्गत्या विद्याभेदाभेदावेव विचारयन्ति।

रश्मिः।

सगुणप्राणादिषु। **समन्वयेति**। सगुणे भिन्ने प्राणादौ च निर्गुणसमन्वयविरोधापत्तेः। **निराकृतमिति**। तेनाणुभाष्योक्तमेव साधीय इति भावः। 'नैषा तर्केण मतिरापनेये'ति काठकात्। 'अनन्यप्रोक्ते गतिरन्यत्र नास्त्यणीयान्ह्यतर्क्यमणुप्रमाणात्। नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठे'ति श्रुतिः। **सावयवस्येति**। एकस्य सगुणस्य। **पूर्वापरेति**। भाष्येण। **एकरसमिति**। एकरसत्वादित्यत्रत्यमेकरसमिति भाष्यीयं बोध्यम्। **अनुच्छित्तीति**। निराकृतावयवरूपसगुणधर्माः न विद्यते उच्छित्तिर्येषां तादृशाः अनुच्छित्तयो धर्मा यस्येत्यनुच्छित्तिधर्मा आत्मा। आत्माविनाशित्वस्य 'अविनाशी वारेऽयमात्मे'त्यविनाशिपदेन प्राप्तेः। **नाना पश्यति** अवयवभेदं पश्यति। **विरुद्धेति**। सावयवत्वनिरवयवत्वरूपविरुद्धेत्यर्थः। 'निष्कल'मिति निरवयवत्वम्। 'आत्मैवेदमग्र आसी'दिति सावयवत्वम्। **भास्कराचार्या** इति। आरम्भ इत्येव। **प्रतिवेदान्तमिति** पूर्ववत्। **कर्तव्यमिति**। 'न भेदा'दिति द्वितीयसूत्रेण कर्तव्यम्। **अचोदनेति**। चोदनालक्षणोऽर्थो हि धर्मः। कृत्यविषयत्वात् ज्ञानस्य तथा। **तच्चेति**। ज्ञानं ज्ञाताज्ञातप्रमेययोर्ज्ञातप्रमेयमवच्छिनत्तीति तथा। **घटादीति**। घटविषयकं ज्ञानं भिन्नं पटविषयकं भिन्नं पटविषयकाद्भिद्यते घटविषयकत्वात् इति प्रत्यक्षानुमाने। अयं घटविषयकज्ञानभिन्नपदवाच्यः इदं घटविषयकज्ञानभिन्नम्। **शाब्दोयमिति**। **तच्चेति**। वस्तुतत्त्वं स्वरूपरूपम्। **विधीति**। 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मण' इति निर्णीतवस्तुतत्त्वब्रह्मोपासनविधिः। 'स समित्पाणिर्गुरुमेवाभिगच्छेच्छ्रोत्रियं ब्रह्मनिष्ठ'मिति गुरूपासनविधिः। 'प्रियव्रतकृतं कर्म को नु कुर्याद्विनेश्वर'मिति राजोपासनम्। **तस्येति**। विधेः। चतुर्थस्य फलाध्यायस्याद्ये पादे। चतुर्थपादे आद्याधिकरणे वा। **तस्मादिति**। अभिन्नज्ञानस्य विषयभेदाद्भिन्नत्वाङ्गीकारात्। **इयमिति**। भेदाभेदसिद्धान्तविषयिणी। एकमभिन्नं ज्ञानं प्रमेयरूपावच्छेदकमिति भिन्नम्। **सम्मतमिति**। भेदांश इवार्थे

भाष्यप्रकाशः ।

तत्रापि माध्वमते, उपासना नाम ब्रह्मजिज्ञासा समस्तसच्छास्त्राभ्यासरूपा, श्रवणमनने इति यावत्, सा च भक्तिसाध्यत्वाज्ज्ञानसाधनत्वाद्भक्त्यनन्तरं ज्ञानात् पूर्वं विचार्यते, ध्यानाङ्गत्वात् । सैव प्रथमाधिकरणे विचार्यते, समस्तसच्छास्त्रश्रवणमननाभ्यां दूरोत्सारिताज्ञानसंशयविपर्ययस्य ध्यानाधिकारित्वादिति । तत्र वेदोदितं ब्रह्म विषयः । तत्किमेकैकेन सर्वशाखोक्तं ज्ञातव्यम्, स्वशाखोक्तं वेति सन्देहः । सर्वशाखोक्तं ज्ञातव्यमिति सिद्धान्तः । तेन वेद्याभेदाद्विद्याया अभेदसिद्धिः ।

तत्र सर्वशाखानामिदानीमप्रसिद्धत्वात् सर्वपदे सङ्कोचस्त्वावश्यकः । 'अविज्ञातं विजानता'मिति श्रुत्या ब्रह्मणो ज्ञानापरिच्छेद्यत्वं च श्राव्यते । अतो यथाधिकारं यत् सम्यक् ज्ञानम्, तदेव युक्तम् । अन्यथा अशक्योपदेशापत्तिरित्यवधेयम् ।

रामानुजास्त्वत्र वैश्वानरविद्यां विषयत्वेनोदाहरन्ति ।

शैवस्तु दहरविद्याम् । सा प्रतिशाखं भिन्ना, अभिन्ना वेति संशयः । शाखान्तराधिकरणन्यायेन पूर्वोत्तरौ पक्षावित्याह ।

भिक्षुस्तु । ब्रह्मणि निरूपितेऽर्थतस्तद्विद्यापि निरूपितैव, ज्ञानस्य विषयमात्राधीनविशेषत्वात्, तत् किमर्थं विद्यायाः पृथग्विचार इत्याशङ्क्य, गुणोपसंहारानुपसंहारादिभिरेकस्मिन्नपि ब्रह्मणि प्रकारतो विद्यायां संशयसम्भवाद्विचार इत्युक्त्वा, तत्रादौ ब्रह्मविद्याङ्गभूतानां गुणादीनां विचारार्थम्, तथा वेदविहितत्वं विना वक्ष्यमाणसर्वपापक्षयहेतुत्ववैधकर्माङ्गत्वादीनामनुपपत्तेश्च साक्षात्कारसाधारण्येन सकलब्रह्मविद्यासु विध्यादिकमस्तीति सर्ववेदान्तप्रत्ययसूत्रे विचार्यते, तथाच 'सर्वगृहमश्वा' इतिवदत्र व्याप्यकर्मणि द्वितीयाः, अतः सर्ववेदान्तस्थं प्रत्ययं विद्यां व्याप्य, चोदनादि, वक्ष्यमाणविधिफलादिकं प्रत्येतव्यम्, अथवा, सर्वे वेदान्तप्रत्ययाः विषयत्वेनास्य

रश्मिः ।

कृत्वा संमतम् । 'अविभक्तं च भूतेषु विभक्तमिव च स्थित'मिति गीतावाक्यात् । **उपपत्तिमिति ।** भेदसिद्धान्तेऽभेदोपपत्तिम् । इतरे तु विशिष्टाद्वैते शरीरशरीरिणोरभेदोपपत्तिम् । अन्तर्यामिब्राह्मणोक्तः शरीरशरीरिभावः । **उपासनेत्यादि ।** नामेत्यव्ययम् । **भक्त्यनन्तरमिति ।** 'यथा भक्त्येश्वरे मन' इति वाक्यात् । मनोव्यापारविशेष उपासना । **ज्ञानादिति ।** 'तं यथा यथोपासते' इत्यादिश्रुत्या । **ध्यानेति ।** श्रवणमननकालयोर्जायमानम् । **दूरेति ।** दूरोत्सारिता अज्ञानं संशयो विपर्ययो भ्रमश्च येन तस्य । **संदेह इति ।** पूर्वपक्षस्तु स्वशाखोक्तं ज्ञातव्यमिति । दूषणमाहुः **तत्रेत्यादि । सम्यगिति ।** उक्तश्रुत्युक्तत्वे सति विरुद्धधर्माधारत्वं सम्यक्त्वम् । **पूर्वोत्तरपक्षाविति ।** विद्याभेदः पूर्वपक्षः, विद्याऽभेदः सिद्धान्तः । शाखान्तराधिकरणे यथा कर्मभेदः पूर्वपक्षः, कर्मैक्यं सिद्धान्तः । न्यायस्तु पूर्वतन्त्रे द्वितीयाध्याये चतुर्थपादेस्तीत्युक्तम् । **पृथगिति ।** अविभागाद्वैते विषयपृथग्विचारेपि विद्याया अद्वैतरूपत्वात् । **गुणेति ।** आदिना अविभागाद्वैतेपि शास्त्रदृष्ट्या विभागदर्शनं गृह्यते । उपपादनं तत्काले विभागाङ्गीकारश्च तैः । **गुणादीनामिति ।** आदिना जातिधर्मौ । **तथेति ।** गुणत्वादिप्रकारैर्विद्याया वेदविहितत्वम् । **सर्वपापेति ।** आदिना शिष्टदृष्टत्वम् । **सर्वेति ।** 'सर्वगृहमश्वास्तिष्ठन्ती'त्यत्र सर्वगृहं कर्म चतुर्विधकर्मसु व्याप्यं सम्भवति । **अत्रेति ।** सूत्रे । **विद्यां** साक्षात्काररूपाम् । **व्याप्य** (व्याप्य)कर्मभूतां इति हेतोस्तां व्याप्य चोदनादि । अस्यार्थमाह भगवान् भिक्ष्वाचार्यः । **वक्ष्यमाणेत्यादि ।** चोदना विधिः । आदिना फलादिकम् । आदिना अपूर्वम् । साक्षात्कारमात्रप्रत्ययवाचकत्वापत्त्या

## उपसंहारोऽर्थाभेदाद्विधिशेषवत् समाने च ॥ ५ ॥

**ननु पूर्वसूत्रोक्तरीत्या गुणोपसंहारो न क्वचिदपि प्राप्तावसर इति सिद्धम्। दृश्यते चोपसंहारः। श्रीरामोपनिषत्सु 'यो वै ये मत्स्यकूर्माद्यवतारा' इत्यादिनोक्तावताररूपत्वस्य श्रीरामे, 'नमस्ते रघुवर्याय रावणान्तकराय चे'त्यादिषु 'ते'**

---

भाष्यप्रकाशः।

सन्तीति सर्ववेदान्तप्रत्ययम्, तथाच चोदनादिकं सर्ववेदान्तप्रत्ययविषयकमिति प्रतिज्ञा, यत्र यत्र विधिफलादिकं न श्रूयते, तत्रापि कल्पनीयमिति यावत्, कुत एतत्, अविशेषात्, चोदनादिमत्या वेदान्तान्तरोक्तविद्यायाः सकाशादवैलक्षण्यात्, सम्भवत्येकवाक्यत्वे वाक्यभेदानौचित्यादित्येवं व्याख्याय, सूत्रान्तराण्यप्येतस्मिन्नेवार्थे योजयित्वा, सर्वस्मिन् वेदान्ते चोदनादिसाधनार्थमिदमधिकरणमित्याह।

तत्र साक्षात्कारसाधारण्येन विध्यङ्गीकारस्तु न युक्तः। 'नायमात्मा प्रवचनेन' 'श्रवणायापि बहुभिर्यो न लभ्य' इत्यादिषु दर्शनात्मकस्य लाभस्य जीवकृतसाधनासाध्यताया वरणैकसाध्यतायाश्च श्रावणेन तच्छाब्दज्ञानस्यापि दुर्लभत्वश्रावणेन च तत्साक्षात्कारस्य विधिविषयताया वक्तुमशक्यत्वात्, दर्शनस्य प्रमाणवस्तुपरतन्त्रत्वाच्च। नच द्रष्टव्यश्रुतिविरोधः। दर्शनानुकूलव्यापारे दृशिधातोर्लक्षणया तत्र विधेश्चारितार्थ्येनाविरोधात्। सूत्रव्याख्यानमप्यत एवायुक्तम्। साक्षात्कारवाक्येषूक्तरीत्या विध्ययोगेन प्रतिज्ञाया बाधात्। विद्यासु वैलक्षण्यस्यापि तत्तद्दर्शेन स्फुटतया हेतोरप्यभावाच्चेति दिक् ॥ ४ ॥

**उपसंहारोऽर्थाभेदाद्विधिशेषवत् समाने च ॥ ५ ॥** एवमुपासनानां द्विविधमैक्यमधिकारभेदेनोपसंहारं च संक्षेपेणोक्त्वा तत् प्रपञ्चयितुमुपसंहारप्रयोजनं च वक्तुं सूत्रमवतारयन्ति नन्वित्यादि। ननु वेद्यैक्येन प्राप्ते सर्वत्र सर्वगुणानामुपसंहारे समाचारसूत्रोक्तैर्निरूपणप्रकारभेदाधिकारभेदासाधारणसम्बन्धिभेदैस्तन्निवारणं कर्मोपासनासाधारण्येन कृतम्, परन्त्वेतावान्

रश्मिः।

पक्षान्तरमाह अथवेति। अस्येति। विधेः। अधिकारवत्प्रतिज्ञा। उत्तरत्रानुवृत्तिमाह यत्र यत्रेति। वेदान्तान्तरेति। वेदान्तान्तरमाथर्वणं तदुक्तविद्यायाः। द्रष्टव्येति। विधौ तव्याङ्गीकारात्। तव्यतो वा। साक्षात्कारानुकूलव्यापारे विधिविषयत्वमित्याहुः दर्शनानुकूलेति। तत्र विधेरिति। दर्शनानुकूलव्यापारानुकूलव्यापार इत्यर्थात्। लक्षणाशब्दस्तु दर्शनार्थकधातुप्रयोगे फले धात्वर्थत्वान्मिश्रमतेन 'फलव्यापारयोर्धातोराश्रये तु तिङः स्मृत' इति भूषणे लाक्षणिकार्थात्। सूत्रेति। 'सर्ववेदान्तप्रत्ययं चोदनादि अविशेषा'दिति त्रिपदमिदं सूत्रमङ्गीकृत्य व्याख्यानम्। अत एवेति। साक्षात्कारे विध्यभावादेव। उक्तेति। अव्यवहितपूर्वोक्तरीत्या। तत्तद्दर्शेनेति। विद्यायां प्रकारतः संशयस्योक्तत्वात्तत्प्रकारांशेन। हेतोरिति। अविशेषरूपस्य ॥ ४ ॥

**उपसंहारोऽर्थाभेदाद्विधिशेषवत् समाने च ॥ ५ ॥** नन्वित्यादीति। न इतीति। तुल्यमित्यर्थः। वेद्यैक्येनेति। उपसंहारसाधकेन अर्थाभेदरूपेणेति नोक्तं वक्ष्यमाणत्वात्। निरूपणेत्यादि। निरूपणेन प्रकारः प्रकरणं देशकालौ प्रकरणं तस्य भेदस्याधिकारः शिरोव्रतकृतः तस्य भेदः असाधारणसम्बन्धी शिष्टः तस्य भेदः। शिष्टाचारो 'योऽन्यथासन्तमात्मान'मिति श्रुत्युक्तो भेदः तैः। कर्मोपेति। कर्म च उपासना च कर्मोपासना तत्साधारण्येन। निरूपणेति। 'नामरूपधर्मविशेष-

इति युष्मच्छब्दविषये श्रीव्रजनाथे रघुवर्यत्वादेरित्याशङ्क्य, तत्प्रयोजकं रूपमाह उपसंहार इत्यादिना । उक्तस्थलादिषु यः उपसंहारः, स त्वर्थस्य पदार्थस्य भगवल्लक्षणस्योभयत्राप्यभेदादित्यर्थः । नन्वेवं सति मत्स्ये शरचापादिकं पुरुषे च

भाष्यप्रकाशः ।

विशेषो यत् कर्मणि निरूपणप्रकारभेदो निवारकः, उपासनायां तु रूपप्रकारभेदः, तथा तत्र दैह्योऽधिकारः, इह त्वान्तरः, तत्र सम्बन्धी बाह्यः, इह तु ध्येयत्वेनेष्ट आन्तरः, तथापि तेषां गुणान्तरोपसंहारबाधकता त्वविशिष्टेति तद्रीत्या यस्य कस्यचन बाधकस्य यत्र क्वापि सम्भवाद्गुणोपसंहारो न क्वचिदपि प्राप्तावकाश इति सिद्धम्, तद्विरुद्धश्च श्रीरामतापनीयेऽवतारान्तरत्वस्य दशमस्कन्धीयाक्रूरस्तुतौ च रघुवर्यत्वादेरुपसंहारो दृश्यते, अतो न पूर्वसूत्रोक्तं साधीय इत्याशङ्क्य, तन्निवृत्त्यर्थमस्मिन् सूत्रे वेद्यैक्यनिरूपणप्रयोजनं सूचयन्नुपसंहारप्रयोजकं रूपमाहेत्यर्थः । सूत्रं व्याकुर्वन्ति उक्तस्थल इत्यादि । तत्तापनीये 'इति रामपदेनासौ परं ब्रह्माभिधीयते', 'तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते' इति श्रावणादक्रूरस्यापि भगवति परब्रह्मत्वज्ञानस्य तत्स्तुत्यारम्भे उक्तत्वात् तत्र योऽवतारान्तरत्वोपसंहारः, स भगवल्लक्षणस्य वस्तुन उभयत्राप्यभेदमनुसन्धाय । अन्यथा तत्र 'परं ब्रह्मे'ति न वदेत् । प्रयोजनाभावात् । तथाच येन ब्रह्माभेदस्तत्रानुसंहितः, तेनोपसंहारः कार्य इत्येतदर्थमित्यर्थः । अत्र पूर्वसूत्रोक्तनियमभङ्गं शङ्कते नन्वित्यादि । एवं सतीति । ब्रह्मत्वेऽनुसंहिते सति । तथाचैवं मत्स्यादिषु विरुद्धधर्मभावने प्राप्ते स्वाध्यायसूत्रोक्तनियमस्य भग्नत्वादग्निहोत्रादिष्वपि सर्वशाखोक्तधर्मकरणापत्तिः स्यादित्यर्थः । एतत् समाधातुं सूत्रांशं व्याकुर्वन्ति यथेत्यादि । विधिशेषाणामित्यत्र बहुव्रीहिः । आम्नायस्य क्रियार्थत्वात् । समान इति । तुल्ये । चोऽप्यर्थे । एवञ्च अर्थाभेदात् समानेऽप्युपसंहारो

रश्मिः ।

पुनरुक्तिनिन्दाशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनाच्छाखान्तरेषु कर्मभेदः स्या'दित्यत्र नामादयः कर्मभेदकाः श्रुताः । तत्र कर्मणि निरूपणप्रकारभेदः धर्मविशेषशब्दोक्तः । 'कारीरीवाक्यान्यधीयानास्तैत्तिरीया भूमौ भोजनमाचरन्ति । अपरे शाखिनो नाचरन्ति । तथाग्निमधीयानाः केचिदुपाध्यायस्योदकुम्भमाहरन्ति अपरे ने'त्येवम् । दैह्य इति । अशक्तिः अभेदे सर्वशाखाप्रत्ययमुपसंहर्तुमशक्तेर्न शक्नुवन्तीति दैह्यः । आन्तर इति । सद्धीरूपः । 'यद्धिये'तिवाक्यात् । बाह्य इति । रूपम् । एकस्यां शाखायामग्नीषोमीयमेकादशकपालमामनन्ति । एकस्यां द्वादशकपालम्, एवं भिन्नं रूपं कथमिव न कर्मभिन्नं भविष्यति । ध्येयत्वेनेति । 'योऽन्यथा सन्तमात्मान'मिति श्रुतेः । तद्रीत्येति । सूत्रोक्तरीत्या । यस्यकस्यचनेति । पूर्वपक्षत्वान्नामरूपसूत्रोक्तसमाहारद्वन्द्वार्थो न स्वीकृत इति भावः । गुणोपेति । तेन पूर्वसूत्रोक्तरीत्येत्यस्य न 'दर्शयति चे'ति सूत्रोक्तरीत्येत्यर्थः । किन्तूक्त एवार्थ इत्युक्तप्रायम् । दृश्यत इति भाष्यं विवृण्वन्तिस्म तद्विरुद्ध इति । उपसंहारेति । 'तत्प्रयोजकं रूपमाहे'ति भाष्यार्थ उक्तः । तत्तापिनीय इति । रामतापिनीये गोपालतापिनीये च । येनेति । अधिकारिणा । विधेः शेषाणामिति षष्ठीतत्पुरुषाशङ्कानिवृत्त्यर्थमाहुः विधीति । विधिराज्ञाप्रतिपादकः सद्धर्मत्वाच्छेषो येषामग्निहोत्रादीनाम्, 'यज्ञो वै विष्णु'रिति श्रुतेर्धर्मिणामिति बहुव्रीहिरित्यर्थः । आम्नायस्येति । वेदस्य विधिसहितस्य व्यतिरिक्तस्य । क्रिया यागादिः । चोप्यर्थ इति । तत्पुस्तके समाने चेति पाठे

१. चो नास्ति ।

शूद्रादिकं भावनीयं स्यादिति चेत्, तत्राह विधिशेषवदिति । यथा विधिशेषाणामग्निहोत्रादीनामग्निहोत्रत्वादिलक्षणे धर्मे समानेपि सति स्वस्वशाखोक्तप्रकारकस्यैव करणम्, नान्यशाखोक्तधर्मोपसंहारः, एवमिहापि तत्तदवतारोपासकस्य तत्तदसाधारणधर्मवत्त्वेनैवोपासनम्, नान्यावतारधर्मवत्त्वेनापीत्यर्थः ।

यद्वा । मत्वर्थीयो वत्प्रत्ययोऽत्र । तथाच विधिशेषोऽर्थवादः, तद्वत्[1] सत्समानं च भवति यत्, तत्र चोपसंहार इत्यर्थः ।

अत्रैवं ज्ञेयम् । एकस्यां श्रुतौ यस्य कर्मणो यत् फलमुच्यते, तदितरस्यां तस्यां तस्यैव कर्मणस्तदितरत् फलमुच्यते । एवं सति द्वितीयश्रुत्युक्तफलकामनयापि तदेव कर्म कर्तव्यं भवतीति तत्फलसाधकत्वस्योपसंहारः । यथा

भाष्यप्रकाशः ।

विधिशेषवदिति सूत्रयोजना । तथाचात्र श्रीरामादिष्ववतारान्तरत्वं तेन तेन रूपेण तत्तत्कर्मकर्तृत्वमित्येवमुपसंहृतम्, न तु अस्मिन् रूपे तद्रूपत्वमनेन रूपेण तत्तत्कर्मकर्तृत्वं वा, तदप्यधिकारभेदात्, ब्रह्मत्वानुसन्धानस्यैव मुख्यत्वेन तत्र ज्ञानमार्गीयाधिकारात् । भक्तिमार्गीयाधिकारे तु मत्स्यादिरूपस्यैव प्राधान्येन सम्बन्धिप्राधान्याच्चोपसंहारः । अतः पूर्वसूत्रोक्तनियमस्याभङ्गाच्च त्वदुक्तरीत्या तद्भावनप्राप्तिः, न वाग्निहोत्रादिषु शाखान्तरीयधर्मप्राप्तिरित्यर्थः ।

अस्मिन् पक्षे गुणोपसंहारप्रयोजनं न स्फुटं भवतीत्यतस्तदर्थं 'तस्मात् भारत सर्वात्मे'त्यस्य सुबोधिनीमनुसृत्य व्याख्यानान्तरमाहुः यद्वेत्यादि । मत्वर्थीयो वत्प्रत्ययोऽत्रेति । वत्सदृशः प्रत्ययो वत्प्रत्ययः । सोऽत्र मत्वर्थीय इत्यर्थः । अस्मिन् पक्षे विधिशेष इत्यत्र षष्ठीतत्पुरुषः । समानपदमेकार्थकम् । चः समुच्चये । एतमर्थं तथाचेत्यादिना गृहीत्वा विभजन्ते अत्रैवमित्यादि । तत्फलसाधकत्वस्येति । श्रुत्यन्तरोक्तफलान्तरसाधकत्वस्य । उदाहरणमाहुः यथा

रश्मिः ।

भविष्यति । समानेपि सतीति पाठः । अग्निहोत्रादीनामग्निहोत्रत्वादिलक्षणे धर्मे समानेपीत्यर्थः । अत इत्यादि । नामरूपसूत्रोक्तनामरूपधर्मविशेषपुनरुक्तिनिन्दाऽशक्त्यादीनां समाहारद्वन्द्वार्थस्योपसंहारप्रतिबन्धकस्यात्र सत्त्वात्पूर्वसूत्रेत्यादिः । यत्किञ्चिन्नामत्वादेः प्रतिबन्धकत्वस्यानङ्गीकारात् । त्वदुक्तरीत्येति । मत्स्यादिषु विरुद्धधर्मभावने प्राप्त इत्युक्तरीत्या । विरुद्धधर्मभावनस्याव्यवहितपूर्वोक्त 'तथाचे'त्यादिप्रकाशेनोक्तत्वात् । तद्भावनप्राप्तिर्विरुद्धधर्माधारत्वभावनप्राप्तिः । गुणोपेति । गुणोपसंहारः प्रयुज्यतेऽनेन । 'करणाधिकरणयोश्चे'ति ल्युट् । न स्फुटमिति । कर्मरूपे भगवति शाख्यधिकारैर्भिन्नभिन्नाग्निहोत्रेऽग्निहोत्रत्वस्य जातिरूपस्य सत्त्वादभेदेत्र नियामकेऽनिष्ट उपसंहारः प्राप्नोति, एवं दार्ष्टान्तिके रघुवर्यस्य मत्स्यादेश्चावतारत्वेनाभेदेऽनिष्ट उपसंहारः स्यादतो न स्फुटमतोऽभेदादुपसंहार इत्यन्वयमकृत्वाऽभेदात् समानत्वेऽर्थवादवत्त्वे च नियामके च सत्युपसंहार इत्येवं स्फुटगुणोपसंहारप्रयोजकार्थम् । सुबोधिनीमिति । (अतो धर्मचतुष्टययुक्तत्वेन गुणोपसंहारन्यायेन तादृशः श्रोतव्यः) । वत्सदृश इति । मतुपो मस्य वकारे कृते वतिसदृशो मतुर्भवति सौत्रः । मध्यमपदलोपी समासः । निरवकाशं बाहुलकं वा क्वचिदन्यदेवेति । षष्ठीति । विधेरर्थवादः शेष इति । 'विधिना त्वेकवाक्यत्वा'दिति जैमिनिसूत्रादिति भावः । समुच्चय इति । यथा 'यद्दैश्वदेवेने'-

1. तद्वत्समानमिति पाठः ।

**'यद्वैश्वदेवेन यजते, प्रजा एव तद्यजमानः सृजते' इत्येका श्रुतिरस्य यागस्य प्रजाफलकत्वमाह । 'यद्वैश्वदेवेन यजते, अग्निमेव तत्संवत्सरमाप्नोति, तस्माद्वैश्वदेवेन यजमानः संवत्सरीणाᳵस्वस्तिमाशास्त इत्याशासीते'ति द्वितीया श्रुतिराह । तत्रोक्तरीतिरिति ।**

भाष्यप्रकाशः ।

यदित्यादि । एते श्रुती तु तैत्तिरीयब्राह्मणप्रथमकाण्डस्थे चातुर्मास्यप्रथमपर्वभूतवैश्वदेवयागस्य फलद्वयबोधिके । तत्र प्रथमा स्फुटार्था । द्वितीयस्यां तु वैश्वदेवाख्यपर्वणः संवत्सराभिमान्यग्निप्राप्तिहेतुत्वात् तद्यागकाले तदीयसूक्तवाकमध्ये 'संवत्सरीणा'मितिमन्त्रसूक्तवाकाशीष्षु होता आशासीतेत्यर्थः । तत्रोक्तरीतिरिति । एकस्य कर्मणो वाक्यद्वयेन फलद्वयश्रावणात् फलद्वयसाधकत्वस्योपसंहारः । तथाच यथा तत्र, तथा यस्यामुपासनायां फलद्वयं श्रुतम्, यथा गोपालतापनीये 'यं मां स्मृत्वा निष्कामः सकामो भवति, अगाधा गाधा भवती'त्यादि, 'यो ध्यायति सोऽमृतो भवती'ति च, तत्र 'तं यथा यथोपासते तदेव भवति तद्धैतान् भूत्वावती'ति वाजसनेयिश्रुतेस्तत्तत्फलदत्वस्योपसंहारः, तेन 'फलं वा कर्मसन्निधा'विति पूर्वतन्त्रीयाधिकरण-

रश्मिः ।

त्यादिदृष्टान्तसमुच्चये । तथाचेत्यादिनेति । भाष्यार्थस्तु तद्वदिति । सूत्रे सप्तम्यालुक् । तत्रेति । तत्र अर्थवादवति चकारात्समाने । श्रुत्यन्तरेति । बृहदारण्यकस्थ 'तस्या आहुतेः पुरुषो भास्वरवर्णः सम्भवती'ति श्रुत्यन्तरोक्तं फलान्तरं छान्दोग्योक्तफलादन्यत् । तस्य साधकत्वं तस्य । उक्तेति । पूर्वोक्तदृष्टान्तोप्ययम् । तदा छान्दोग्यीयपञ्चाग्निविद्यास्थायामेकस्यां 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती'ति फलं बृहदारण्यके तदितरस्यां 'तस्या आहुतेः पुरुषो भास्वरवर्णः सम्भवती'त्यस्यां तस्यां षष्ठाग्निसमाप्तिस्थत्वे तत्सदृश्याम् । द्वितीयेति । बृहदारण्यकश्रुत्युक्तभास्वरवर्णफलकामनया । तदेवेति । छान्दोग्यीयदैवैर्होमकर्म कर्तव्यमित्येवमेकस्यां श्रुतावित्यादिभाष्यार्थः कर्तव्यः । चातुर्मास्येति । अस्य चत्वारि पर्वाणि, वैश्वदेव-साकमेध-वरुणप्रघास-शुनासीरसंज्ञानि । स्फुटार्थेति । तत्र तत्तस्याद्यागात् । स्वीयं किञ्चिदाहुः तथाचेति । 'उपसंहारोर्थाभेदा'दित्यत्र हेतोरुत्तरान्वयित्वेपि । यथा तत्र । यथा तत्रोत्तरान्वये तथा तेन प्रकारेण हेतोः पूर्वान्वयेपि यस्यामुपासनायामित्यादिः । स्मृत्वेति । उपासनेयम् । वेदनमुपासनमिति । अत्र उपासनान्तरं वा ब्रह्मविषयकं फलविषयकं वेतिसंदेहे उपासनाप्रकरणान्तराभावात्फलविषयकं प्रतीयमानत्वादिति प्राप्ते, 'फलं वा कर्मसंनिधा'विति न्यायेन निष्कामसकामत्वे फले । तयोरनित्यत्वान्नोपासनाविषयत्वम् । नित्यानित्यसंयोगप्रसङ्गात् । असन्निधेरुपासनान्तरम् । तस्मादुपासनान्तरम् । ब्रह्मविषयकं वेति उपासनभेदे प्राप्ते । निरूपणप्रकारभेदादिबाधकचतुष्टयनिवर्तकसूत्रम् । उपसंहार इति । अर्थयोर्ब्रह्मनिरूपणाभेदबाधकचतुष्टयनिवृत्त्योरभेदादभावस्याधिकरणात्मकत्वात् उपसंहारस्तत्तत्फलदत्वस्योपासनाविषये ब्रह्मणि । एवं 'अगाधा भवती'त्यत्र आदिना गाधा भवतीतिसंगृह्य फलद्वयं ज्ञेयम् । 'यं मां स्मृत्वे'त्यन्वेति तेन पूर्ववत् । तथा 'यो ध्यायती'त्यत्र ध्यानं फलममृतं च फलद्वयम् । एतदर्थं 'यो ध्यायति रसति भजति सोऽमृतो भवति सोऽमृतो भवती'त्यत्र वाक्यद्वयत्वेन तावती श्रुतिरुपात्ता । अत्रैतद्विषयकं शाब्दवेदनमुपासनम् । अन्यत्पूर्ववत् । तत्रेत्यादि । वाक्यत्रये उपासनाविषये च । तत्तत्फलेति । 'यं मा'मित्यर्थाभेदान्निष्कामसकामत्वफलदातारं अगाधागाधाफलदातृत्वभाजं उपसंहारेणार्थयेत् । एवं विपरीतम् । तथा 'यो ध्यायती'त्यत्र यत्तदोर्नित्यसम्बन्धादेकविभक्तिकत्वाच्चाभेदे आध्यात्मिकादित्रितयवेत्तरि ध्यातरि । अमृतत्वोप-

यत्तु विधिशेषाणामग्निहोत्रादिधर्माणां नदेवैकमग्निहोत्रादिकर्म सर्वत्रे-त्यर्थाभेदादुपसंहार इति। तन्न साधु। अग्निहोत्रादेस्तत्तच्छाखिनां स्वस्वशाखोक्त-प्रकारकस्यैव करणादतिरेके प्रायश्चित्तश्रवणादन्यशाखोक्तधर्मोपसंहारः शक्य-

भाष्यप्रकाशः।

सिद्धप्रयोगभेदबाधनार्थमेतत्कथनमिति मम प्रतिभाति। एवञ्चास्मिन् पक्षे 'उपसंहारोऽर्थाभे-दा'दिति भिन्नं वाक्यम्। तत्र च पूर्वोक्ताशङ्कानिरासाय अर्थयोरभेदोऽर्थाभेद इति विग्रहः। तथाच अर्थो ब्रह्मरूपं वस्तु, निरूपणप्रकारभेदादिरूपबाधकचतुष्टयनिवृत्तिश्च तयोरभेदमनुसन्धा-येत्यर्थः। तेन वस्त्वभेदेऽप्युक्तप्रकारातिरिक्तप्रकारेण भावने पूर्वोक्तबाधकचतुष्टयापत्तेरुक्तरीत्या भावने च तन्निवृत्तेः सुखेनोक्तशङ्कानिरास इत्यर्थः। नन्वत्र परोक्तव्याख्यानं कुतो नाद्रियत इत्याकाङ्क्षायां यत्त्वित्यादिना तदनूद्य दूषयन्ति तन्न साध्वित्यादि। तथाच शिष्टाचारविरो-धादिभ्यस्तन्नाद्रियत इत्यर्थः। नन्वयं दोषस्तत्रापि तुल्यः, प्राणादिविद्यासु पञ्चमस्य रेतसः

रश्मिः।

संहारः सन्तानुकूलव्यापारवत्त्वस्य भवतरर्थस्योपसंहारः। ध्यानविषयेऽमृतत्वसम्पादकत्वोपसंहारः। विपरीतं च। तेनेत्यादि। तेनेति। शाबरभाष्योक्तरीत्योदाहरणत्रयेणाभेदबाधकचतुष्टयनिवृत्त्या अभेदेनो-पसंहारहेतुभूतेन सिद्धेन। 'फलं च'त्येकसूत्रमधिकरणं द्वितीयस्य तृतीयचरणेऽस्ति। अर्थस्तु, अनारभ्य श्रूयते। 'आग्नेयमष्टाकपालं निर्वपेद्रुक्कामः। अग्नीपोमीयमेकादशकपालं निर्वपेद्ब्रह्मवर्चसकामः। ऐन्द्राग्न-मेकादशकपालं निर्वपेत्प्रजाकाम' इति। अत्र संदेहः, किं प्राकृतेष्वाग्नेयादिषु फलं विधीयते, उत प्राकृते-ऽन्यत्, कर्मान्तराण्येतानि। किं प्राप्तम्, प्राकृतेषु फलविधिरिति। कुतः। विहिताग्नेयादयः प्रत्यभि-ज्ञायन्ते। तस्मात्तेषामनुवादः फलसम्बन्धार्थ इति। एवं प्राप्ते ब्रूमः। फलं वा कर्मसन्निधौ। फलं च भेदककर्मसन्निधौ श्रूयमाणं कथं अनुवादे सति न शक्यते फलं विधातुम्। विधायकस्याभावात्। नह्यविधी-यमानोभ्युपायोनु(वादको)भवतीति गम्यते। अपिच। रुक्कामेत्र विधीयमाने कामस्यानित्यत्वादाग्नेयादीनां च नित्यत्वात्सम्बन्धो नावकल्पते। एवं सर्वत्र, कस्मान्न कर्मान्तराणीति। तथाचैवं पूर्वतन्त्रीयाधिकरणसिद्धः प्रयोगस्य भेदः। तद्बाधनार्थं एतस्य सूत्रस्य कथनम्। प्रतिभातीति। सन्देहसूचकार्थेनाभेदे दोषचतु-ष्टयवारकोर्थ इति निरूपणभेदादिदोषत्रयेपि 'योऽन्यथासन्तमात्मान'मित्युक्तो दोषश्चतुर्थो ज्ञेयः। रश्मौ नामरूपादिसमाहारो भेदसाधकः, चतुष्टयमात्रं नेत्युक्तम्। पूर्वतन्त्र एकसूत्र उक्ताधिकरणेऽसन्निधिर्भेदक उक्तः। एवं चेत्यादि। विषयवाक्यस्य दोषचतुष्टयवारकस्य त्रित्वे च। पूर्वोक्तेति। पूर्वतन्त्रीयप्रयोग-भेदरीत्या प्रयोगभेदशङ्कानिरासाय। अनुसमिति। निवृत्तिरभावोऽभावोधिकरणात्मेति परोक्तमभेदमा-श्रयेण ब्रह्मरूपवस्तुनानुसन्धायेति। ल्यब्लोपे पञ्चमीमाश्रित्य सूत्रीयोक्तवाक्यार्थः। पक्षान्तरप्रयोजनमाहुः तेनेति। पक्षान्तरेण। श्रीरामोपनिषत्सु 'यो वै ये मत्स्यकूर्माद्यवतारा' इत्याद्युदाहरणे वस्त्वभेदेऽर्थाभेदे हेतावपि। उक्तप्रकारः सकलसूत्रभाष्योक्तप्रकारस्तदतिरिक्तप्रकारेणोपसंहारं कृत्वा भावने। पूर्वोक्तस्य अत्रैव प्रकाशोक्तस्य बाधकचतुष्टयस्यापत्तेः। चतुष्टयत्वमुक्तप्रकारेण। उक्तरीत्येति। तथाचात्र श्रीरा-मादिष्वित्यादिप्रकाशोक्तरीत्या भावने दोषचतुष्टयनिवृत्तेः। सुखेन उक्तायाः पूर्वतन्त्रीयप्रयोगभेदरीत्या प्रयोगभेदशङ्कायाः निरास इत्यर्थ इति प्रयोजनम्। दोषचतुष्टयनिवृत्तिप्रकारस्तु श्रीरामादिषु मत्स्यावता-रत्वं मत्स्यरूपेण तत्कर्म, वैवस्वतमनो रक्षणं द्वादशस्कन्धोक्तं तत्कर्तृत्वम्, अष्टमस्कन्धे सत्यव्रतस्य तत्त्वोपदेशेन रक्षाकरणं वेदाहरणं च इत्येवमुपसंहारे न निरूपणप्रकारभेदः, नाप्यधिकारभेदः। एका-

१. प्रकारस्य।

**वचनः । प्राणाद्युपासनास्वधिकगुणस्येतरत्रोपसंहारे न किञ्चिद्बाधकं दृश्यते इति तत्र स कर्तुं शक्यत इति चकारेण तदादयः संगृह्यन्ते । वस्तुतस्तु पूर्वसमुच्चयार्थश्चकारः । शाखान्तरोक्तधर्मोपसंहारप्रयोजनाभावस्य 'स्वाध्यायस्य तथात्वेने'त्यत्र निरूपितत्वात् । उपसंहारबीजमनेन सूत्रेणोक्तम् ॥ ५ ॥**

**अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥**

**ननूपासनासूक्तन्यायेन गुणोपसंहारो ह्युपास्यानां ब्रह्मत्वेनैक्ये सति भवति । मिथोविरुद्धानां गुणानां शान्तत्वक्रूरत्वतपोभोगादीनामुपसंहारे क्रियमाणे स्वरूपाणामन्यथात्वमब्रह्मत्वं स्यादित्यर्थः । तत्र हेतुः । शब्दादिति । एकत्वैकरसत्वादिधर्मनिरूपकश्रुतेरित्यर्थः । समाधत्ते नाविशेषादिति । एकरसत्वं यथा**

---

भाष्यप्रकाशः ।

षष्ठस्याग्रेश्च भिन्नशाखीयत्वेनोपसंहारनिवृत्त्यापत्तेरित्यत आहुः प्राणादीत्यादि । तदादय इति । प्राणविद्यादयः । तथाच तत्र तदुपसंहारेऽधिकानुप्रवेशेन संख्याया अबाधे निरूपणप्रकारभेदस्याबाधकत्वात् कर्मवन्न्यूनातिरेके प्रायश्चित्तस्य तत्राश्रवणात् सम्बन्ध्यभेदाच्च न किञ्चिद्बाधकमिति ता विद्या अनुक्तसमुच्चायकेन चेन संगृह्यन्त इति नास्मन्मते स दोपः । वस्तुतस्त्वस्याः शङ्कायाः समाचारसूत्रविचारादेवानुदयात् पूर्वोक्तस्यार्थाभेदस्यैव समुच्चयार्थश्चकार इत्यर्थः । ननु ब्रह्माभेदस्यातीतपादे सिद्धत्वेऽप्यत्रारम्भे पुनस्तत्साधनप्रयोजनभूतस्योपसंहारस्यार्थादेव सिद्धेः प्राणादिविद्यासंग्रहस्यापि सिद्धेरेतत्सूत्रं व्यर्थमिति शङ्कायामाहुः शाखेत्यादि । उपसंहारबीजमिति । उपसंहारहेतोर्बाधकाभाववैशिष्ट्यरूपं तत्तत्फलार्थत्वरूपं च बीजम् । तथाच न वैयर्थ्यमिर्थः ॥ ५ ॥

**अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥** ज्ञानमार्गीयोपासनायां सर्वगुणोपसंहारे बाधकमाशङ्क्य परिहरतीत्याशयेनाहुः नन्वित्यादि । तथाच विरुद्धगुणोपसंहारे एकरसता-

रश्मिः ।

धिकारित्वात् । असाधारणसम्बन्धिभेदोपि नास्ति । शिष्टादतत्वात् । चतुर्थः श्रुतिविरोधरूपः । सोपि नास्ति । आश्चर्ये रसेऽन्यथारूपत्वस्य श्रुत्यमीमांसितरूपत्वादिति । एवं कूर्मावतारेपि बोध्यम् । प्रकृतमनुसरन्ति स्म नन्वत्रेति । प्राणविद्येति । आदिना वाक्चक्षुःश्रोत्रमनसां विद्याः । अग्निहोत्रादेरित्यादिभाष्यसिद्धार्थमाहुः तथाचेत्यादिना । तत्रेति । छान्दोग्यीयपञ्चाग्नौ वृहदाण्यकोक्तषष्ठाग्निरूपाधिकानुप्रवेशेन संख्याया अबाधः, न तु तद्धानिरिति न्यायांशेन तस्मिन् सति । अबाधकत्वादिति । अभेदाबाधकत्वात् । संख्याबाधस्योत्तेजकस्य सत्त्वादिति भावः । सम्बन्धीति शिष्टः । स इति । विद्याभेदरूपो दोषः । वस्तुतस्त्वित्यादिभाष्यार्थो वस्तुतस्त्वित्यादिः । अस्या इति । नन्वयं दोषस्तवापीत्यादिग्रन्थेनोक्तायाः । समाचारेति । समाचारसूत्रस्य विचारो येन भाष्येण तस्मात् । पूर्वोक्तस्येति । अतीतपादोक्तस्य ब्रह्माभेदस्य हेतुपञ्चमीलुप्तस्य । ब्रह्माभेदस्येति । केनेति चेत् । न । 'कार्येण स्वधर्मैश्चे'ति तत्रैव स्फुटम् । अतीतेति । 'न भेदादिति चेन्न प्रत्येकमतवचना'दित्यादिसूत्रेषु । शाखेत्यादीति । उत्तरत्राप्ययं हेतुरिति भावः । उपेति । अधिकाररूपस्य । भाष्य उपसंहारशब्दो लाक्षणिक इति भावः । यद्वा । उपसंहारः स्वाध्यायसूत्र उक्तः । तत्र हेतुरर्थादभेदरूपः । 'संसारमहीरुहस्य बीजाये'त्यत्र बीजपदं हेतुरिति व्याख्यानम् । सूत्रार्थस्तु एवं चेत्यादिना योजनेत्यन्तेनोक्तः ॥ ५ ॥

**अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥** भाष्ये । उक्तेति । उक्तसूत्रेणो-

श्रुतिबलान्निर्णीयते, तथा विरुद्धधर्मवत्त्वमपि तत एव तथेत्यर्थः । तेन वस्त्वेव तत्ताहब्रान्तव्यमिति भावः ॥ ६ ॥

## न वा प्रकरणभेदात् परोवरीयस्त्वादिवत् ॥ ७ ॥

पूर्वसूत्रोक्ताशङ्कानिराकरणं वा विकल्पेन पूर्वोक्तात् प्रकारान्तरेण कर्तव्यमित्याह न वेति । तमेवाह प्रकरणभेदादिति । अत्रायं भावः । श्रुतिप्रामाण्यात् यावत्तदुक्तधर्मवद्ब्रह्मेति मन्तव्यम् । एवं सति यादृशोऽधिकारिणो यादृग्वेद्यं रूपम्, तादृशस्य तस्य तादृक् तन्निरूपयति प्रकरणभेदेन । तथाच ज्ञानप्रकरणे ज्ञानाधिकारिणो यादृग्रूपं ज्ञेयम्, तादृक् तस्मै निरूपयति 'अदृश्यमग्राह्य'मित्यादिरूपा श्रुतिः । भक्तिप्रकरणे तु भक्तेर्बहुविधत्वात् यादृग्यादृग्भक्तानां यादृग्यादृक्तदनुभवविषयः, तादृक्तादृक् तन्निरूपयति अथर्वणोपनिषदिति । अत्र दृष्टान्तमाह परोवरीयस्त्वादिवदिति । 'अस्मिन् मे लोकेऽर्धुकं स्या'दिति कामवत आराग्रावान्तरदीक्षा पूर्वमुक्ता । तदग्रे 'परोवरीयसीमवान्तरदीक्षामु-

भाष्यप्रकाशः ।

निवृत्त्या अपेते ब्रह्मत्वेऽर्थाभेदरूपहेतोस्ततो निवृत्तत्वादुपसंहार एव न स्यादिति भावः । समाधिं व्याचक्षते एकेत्यादि । सिद्धमाहुः तेनेत्यादि । तथाच शब्दबलकृतनिर्णयस्योभयत्रापि तुल्यत्वात् सिद्धे ब्रह्मत्वेनाभेदे 'एकोऽहं बहु स्या'मिति श्रुत्या ब्रह्मैव स्वेच्छया 'विज्ञानमेकमुरुधेव विभाती'ति न्यायेन जीवप्रज्ञापराधात् तथा भातीति ब्रह्मत्वप्राधान्येनोपासनायां नोपसंहारबाध इत्यर्थः ॥ ६ ॥

न वा प्रकरणभेदात् परोवरीयस्त्वादिवत् ॥ ७ ॥ पूर्वसूत्रे 'अन्यथात्वं शब्दा'दित्यंशेन यदाशङ्कितम्, तस्यैवास्मिन् सूत्रे प्रकारान्तरेण परिहारमाहेत्याशयेन व्याकुर्वन्ति पूर्वसूत्रेत्यादि । विकल्पेनेत्यस्यैव विवरणं पूर्वोक्तादित्यादि । तथाच अन्यथात्वं प्रकरणभेदाद्वा नेति सूत्रयोजना । हेतुं विवृण्वन्ति अत्रायमित्यादि । उपनिषदितीत्यन्तम् । तथाच ब्रह्मणि सर्वत्र सर्वगुणसत्त्वेपि न सर्वत्र सर्वं प्रकटयतीति प्रकरणभेदेन तत्तद्रूपतदीयतत्तद्गुणकथनादवगम्यते, तथा सति तत्तदधिकारिणातत्तद्गुणा एव तत्र भावनीया इति स्वरूपाणामन्यथात्वाभावात् तस्मिंस्तस्मिन्नुपास्ये रूपे तदेकत्वतदेकरसत्वयोरनपायाभ्रान्ब्रह्मत्वम् । अत एव 'अपि संराधन'सूत्रे 'ज्ञानप्रसादेने'ति श्रुत्या ज्ञानाधिकारिणो निष्कलदर्शनम्, भक्त्यधिकारिणोऽर्जुनस्य 'अनेकबाहूदरे'ति स्मृत्या तद्दर्शनमुक्तमिति सङ्गच्छते । तस्मान्नात्र शङ्केत्यर्थः । अत्र दृष्टान्तमाहेति । एवं श्रुत्याशये विनिगमकं दृष्टान्तमाहेत्यर्थः । विषयवाक्योदाहरणेन दृष्टान्तं

रश्मिः ।

पसंहारबीजबोधकेन । मन्तव्यमिति । मननयोग्यमित्यर्थः ॥ ६ ॥

न वा प्रकरणभेदात् परोवरीयस्त्वादिवत् ॥ ७ ॥ इत्यन्तमिति । भाष्ये । बहुविधत्वादिति । ननु सगुणमार्गे 'भक्तिमार्गो बहुविध' इति वाक्यमिति चेत् । न । 'श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यत' इति वाक्याद्यदा भक्तिसाधनत्वम्, तदा सगुणभक्तिमार्गस्याप्यदुष्टत्वमिति ज्ञापनार्थत्वात् । नेति । क्रीडार्थं न प्रकटयतीत्यर्थः । अपीति । अतीतपादेस्ति

**पेयात्, यः कामयेतामुष्मिन् मे लोकेऽर्धुकः स्यादिति चतुरोऽग्रेऽथ त्रीनथ द्वावथैकमेषा वै परोवरीयस्यवान्तरदीक्षे'ति पठितम् । अस्य दीक्षाप्रकरणे पठितत्वात् दीक्षां विनोक्तरीत्या व्रते तु न परोवरीयस्त्वम्, एवं भक्तिप्रकरणीयानामथर्वणोपनिषदाद्युक्तरूपाणां न भक्तिरहितोपास्यत्वम् । ज्ञानसाधनत्वेन विष्णुस्मरणादावपि क्रियमाणे भक्तित्वं नेति ।**

भाष्यप्रकाशः ।

विवृण्वन्ति अस्मिन्नित्यादि । इदं वाक्यं तैत्तिरीयसंहिताषष्ठकाण्डद्वितीयाध्यायस्थम् । अर्थस्तु, अहीनाख्ये सोमयागे अहीनसत्रे च उपसद्दिनसंख्यां पूर्वं विधाय तेषु दिनेष्ववान्तरदीक्षाङ्गव्रतपानस्तनसंख्यां विधत्ते, तत्रावान्तरदीक्षा द्विविधा, योऽस्मिन् लोके समृद्धिशीलं फलं कामयते, तस्याराग्रावान्तरदीक्षा, सोमक्रयदिने सायमेकस्तनम्, अपरेद्युः प्रातर्द्वौ स्तनौ, सायं त्रीन् स्तनान्, परेद्युः प्रातश्चतुरः स्तनान्, एवं पाने आराग्रावान्तरदीक्षा सिध्यति । सा पूर्वमुक्ता । आरं बलीवर्दप्रतोदनलोहम्, तद्वदग्रं मुखं यस्याः सा आराग्रा । तदग्रे परोवरीयसीवाक्येऽन्या । तत्र विपरीतं व्रतम्, सोमक्रयणदिने चतुरः स्तनान् दुह्युः, अपरेद्युः प्रातस्त्रीन्, सायं द्वौ, परेद्युः प्रातरेकमित्येवं दिनत्रय इति । तेन सिद्धमाहुः अस्येत्यादि । तथाच तत्तद्भक्तिमतां तथा तथोपासनापरिपाके तत्र ब्रह्मत्वस्यानुभवाद्ब्रह्मत्वशङ्कोदयः । अभक्तशङ्कामात्रेण तु न तत्र तद्बाध इति तेषां ब्रह्मत्वं निर्विघ्नमित्यर्थः । ननु ज्ञानार्थमपि विष्णुस्मरणादेः क्रियमाणत्वात् कथं न तेषां रूपाणां भक्तिरहितोपास्यत्वमित्यत आहुः ज्ञानेत्यादि । इदं भक्तिहंसे प्रपञ्चितम्, अतो नात्र व्युत्पाद्यते ।

रश्मिः ।

सूत्रम् । **विषयेति** । परोवरीयस्त्वं विशेषेण सिनोति बध्नातीति विषयस्तत्प्रतिपादकवाक्यस्योदाहरणेन । **तैत्तिरीयेति** । क्वचिदध्यायशब्दः यथा मह्रीधर्यां शाखाभेदेन । **उपसद्दिनेति** ।............। **अवान्तरेति** । अवान्तरा दीक्षा तस्या अङ्गव्रते पाने स्तनानां संख्यां एकत्वद्वित्वत्रित्वचतुष्ट्वरूपां संख्याम् । **समृद्धीति** । अर्धुकपदार्थः । **सोमेति** । 'अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाति' तद्दिने । **यस्या इति** । दीक्षायाः । तेन दीक्षारूपदृष्टमिति ज्ञायते । **अस्येत्यादीति** । अस्य परोवरीयसः । परोवरीयो व्रतम्, दीक्षान्तःपातित्वात् । **उक्तरीत्येति** । स्तनपानोक्तरीत्या । **व्रते तु नेति** । यतः परोवरीयसी दीक्षेति भावः । **भक्तीति** । भक्तिप्रकरणं 'किं भजन'मिति प्रश्ने, 'भक्तिरस्य भजनं तदिहामुत्रफलभोगनैराश्येनामुष्मिन्मनःकल्पनमेतदेव च नैष्कर्म्य'मिति श्रुतेः । भक्तिप्रकरणीयानां गोपालकृष्णगोविन्दानाम् । आदिना यजुराद्युक्तरूपाणाम् । अथर्वणशब्दः स्वार्थेण्प्रत्ययान्तः । ह्रस्वश्छान्दसः । **न भक्तीति** । उपासनाशेषरूपा भक्तिः । श्रीभागवते 'यद्यनीशो धारयितु'मित्यादिनैकादशस्कन्ध एकादशेध्याये । एवमुपासनायाः विभूतिविषयकत्वं यत्तद्वारयन्ति, परिपक्वोपासनायाः मनःकल्पनरूपभक्तित्वोक्त्या । **तथाचेति** । भक्त्या मनोव्यापारविशेषोपासनापरिपाके मनःकल्पनरूपत्वाद्भक्तित्वमिति तत्र भक्तिविषये ब्रह्मत्वस्य पुरुषोत्तमत्वस्यानुभवाद्विषये न अब्रह्मत्वशङ्कोदयः ब्रह्माभिन्नविभूतित्वशङ्कोदयः । विषये ब्रह्मत्ववत् उपासकेपि भक्तत्वं प्राप्तमित्याशयेनाहुः **अभक्तेति** । **तत्र तदिति** । उपासनाविषयेऽब्रह्मत्वबोधः । उपासनाङ्गभक्तावुक्त्वा ज्ञानाङ्गभक्तावाहुः **नन्विति** । 'यथा यथात्मा परिमृज्यतेऽसौ मत्पुण्यगाथाश्रवणाभिधानैः । तथा तथा पश्यति वस्तु सूक्ष्मं चक्षुर्यथैवाञ्जनसंप्रयुक्त'मितिवाक्याज्ज्ञानार्थमित्यादिः । **तेषामिति** । ज्ञानविषयाणां रूपाणाम् । **ज्ञानेत्यादीति** । **भक्तित्वं नेति** । किन्तूपासनाशे-

अथवा। पूर्वसूत्रेण सर्वरूपेषु मिथः सर्वधर्माणामुपसंहारः प्राप्तः। स चैकान्तिकभक्तानुभवविरुद्ध इत्यत्र व्यवस्थितविकल्पमाह न वेत्यादिना। सर्वेष्ववतारेषु भगवद्वतारत्वेन साधारणी भक्तिर्यस्य, स सर्वत्रोपसंहारं करोतु नाम। यस्त्वेकान्ती, तस्य स्नेहोत्कर्षेणान्तःकरणमेकस्मिन्नेव रूपे पर्यवसितमिति रूपान्तरमन्तःकरणारूढं न भवत्येवेति नोपसंहारसम्भावनापीति। तदेतदुच्यते न वेत्यनेन। तत्र हेतुः। प्रकरणभेदादिति। श्रुत्यादिषु तत्तदधिकारिणमुद्दिश्य तत्तत्प्रकरणमुक्तम्। तेनात्र प्रकरणपदेन अधिकार उच्यते। एवं सत्युपासकादिभ्य उक्तरीत्योत्कृष्टाधिकारादित्यर्थः सम्पद्यते। परोवरीयस्त्वादिवदिति। परस्मात्परश्च, वराच्च वरीयानिति परोवरीयानुद्गीथः। तथाचाक्ष्यादित्यादिगतहिरण्यश्मश्रुत्वादिगुणविशिष्टोपासनाया अप्युद्गीथोपासनत्वेन साम्येपि सर्वोत्कृष्ट-

भाष्यप्रकाशः।

अथ पूर्वसूत्रेणैवोक्ताशङ्कानिवृत्तावस्य न तथावश्यकत्वमित्यरुच्या प्रकारान्तरेण सूत्रं व्याचक्षते अथवेत्यादि। पूर्वसूत्रेणेति। उपसंहारसूत्रेण। इत्यत्र व्यवस्थितविकल्पमाहेति। इति हेतोरस्मिन् सूत्रे तथाहेत्यर्थः। व्यवस्थास्वरूपं स्फुटीकुर्वन्ति सर्वेष्वित्यादि। तदेतदिति। व्यवस्थितं विकल्पनम्। तत्र हेतुरिति। व्यवस्थायां हेतुः। नन्वस्तु व्यवस्थायामधिकारभेदस्य हेतुत्वम्, तथाप्यनुपसंहार उत्कृष्टाधिकारो हेतुरिति कथं गम्यते इत्याकाङ्क्षायां दृष्टान्तेन गम्यते इति बोधनाय दृष्टान्तमुपन्यस्य व्याकुर्वन्ति परस्मादित्यादि। छान्दोग्ये प्रथमप्रपाठके प्रवाहणेनोद्गीथकुशलतमेनोद्गीथविद्यासमाप्तावुक्तम्। 'आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्, स एष परोवरीयानुद्गीथः, स एषोऽनन्त' इति तद्विद्यायामेवाक्ष्यादित्यादिप्रतीकोपा-

रश्मिः।

सनभक्तित्वम्। पूर्वसूत्रेणेति। उपसंहारसूत्रेण। उक्ताशङ्का अर्थाभेदे रघुवर्ये गृञ्जादिभावनाशङ्का तस्याः विरुद्धधर्माश्रयत्वमन्तरापि 'विधिशेषव'दितिदृष्टान्तबलेन निवृत्तौ। न तथेति। न मुख्यत्वेन प्रकारेण। दृष्टान्तबलेन शङ्कानिवृत्तावपि प्रकरणभेदस्य सत्त्वादिति भावः। नचाग्निहोत्रप्रकरणत्वेन भेदाभाव इति शङ्क्यम्। अस्तु, परन्तु तथावश्यकत्वं नेति। किञ्च, सौत्रादिशब्दार्थौ नेत्यरुच्यापि। उपसंहारेति। अन्यथात्वसूत्रेणेति नोक्तम्। तत्र विरुद्धधर्माश्रयत्वेन शङ्कानिवर्तनात्। ननु तत्र प्रकरणप्राप्तिर्यथाकथञ्चिदिति। तेनोपसंहारसूत्रेऽर्थाभेदेप्युक्ताशङ्का दृष्टान्तबलेन निवृत्ता। अन्यथात्वसूत्रे साशङ्का विरुद्धधर्माश्रयत्वेन निवृत्ता। अत्र प्रकरणभेदेन निवृत्ता। पक्षान्तरे दृष्टान्तबलेन निवृत्तिपक्षे यथाकथञ्चित्प्रकरणभेदेन निवृत्तिमाश्रित्याधिकारभेदेन शङ्का निवर्त्यत इति। पूर्वसूत्रे 'अन्यथात्वं शब्दा'दित्यंशेनेत्यादिप्रकाशस्त्वविरुद्धः। भाष्ये। ननु प्रकरणस्य उपसंहारसूत्रे 'स्वस्वशाखोक्तप्रकारकस्यैवे'त्यत्र सन्निवेशेन पुनरुक्तिरित्याशङ्क्याहुः श्रुत्यादिष्विति। उच्यत इति। हेतुतासम्बन्धरूपलक्षणयोच्यते। उद्गीथेति। इदं विशेषणमुद्गीथविद्यावक्तृत्वेन। 'शिलकः शालावत्यश्चैकितायनो दाल्भ्यः प्रवाहणो जैवलिः'। अत्रेतरे श्रोतार इति। तथाचेति भाष्यं विवृण्वन्ति स्म तद्विद्यायामिति। 'ओमित्येतदक्षरमुद्गीथमुपासीतोमिति ह्युद्गायती'त्यादिनोक्तोद्गीथविद्यायाम्। अक्ष्यादित्यादीति। आदित्यश्च अक्षि च अक्ष्या-

१. भेदेन।

त्वेनैवोद्गीथो भासत इति न हिरण्यश्मश्रुत्वादिगुणोपसंहारः परोवरीयस्त्वगुणविशिष्टोद्गीथोपासनायाम्, एवं प्रकृतेपीति ॥ ७ ॥

संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ८ ॥

एकान्त्यनेकान्तिनोरपि श्रीरामोपासकत्वादिसंज्ञा त्वविशिष्टेत्येकान्तिनोप्युपसंहारो युक्त इत्याशङ्कोत्तरं तु 'न वा प्रकरणभेदा'दित्यनेनैवोक्तम् । संज्ञा

भाष्यप्रकाशः ।

सनाप्युक्ता, अतस्तत्र हिरण्यश्मश्रुत्वादिगुणसत्त्वेपि सामगतिपरंपराविश्रान्तिस्थानभूतपरोवरीयस्त्वगुणविशिष्टोपासकस्य ते गुणा नैतस्मादुत्कृष्टत्वेन भान्तीति न तदुपसंहारः, तथा तत्तदेकान्तिन उपास्ये रूपे गुणान्तरसत्त्वेपि तेषामुत्कृष्टत्वेन भानाभावान्नोपसंहार इत्यर्थः ॥ ७ ॥

संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ८ ॥ पूर्वसूत्रेऽधिकारभेदेनोपसंहारानुपसंहारौ व्यवस्थापितौ, तां व्यवस्थामेव दृढयितुं किञ्चिदाशङ्क्य परिहरतीत्याशयेन पठित्वा व्याकुर्वन्ति एकान्तीत्यादि । उक्तमिति । रूपप्राधान्यवानेकान्ती, ब्रह्मत्वप्राधान्यवाननेकान्ती, तयोरुत्कर्ष-

रश्मिः ।

दित्यौ अक्ष्यादित्यौ आदी यस्य 'य एषोऽक्षिणि पुरुषो दृश्यत' इति श्रुत्युक्तस्याक्षिपुरुषस्य सोक्ष्यादित्यादिः सप्रतीकः तस्योपासनाः । प्युक्ता इत्यत्र 'वष्टिभागुरिरल्लोप'मित्यल्लोपः । अतस्तत्रेति । उक्तत्वात् तत्र आदित्यरूपप्रतीके । आदिना हिरण्यकेशत्वसर्वसुवर्णत्वोदितिनामत्वानि । सामगतीति । 'त्रयो होद्गीथे कुशला बभूवुः शिलकः शालावत्यश्चैकितायनो दाल्भ्यः प्रवाहणो जैवलिरिति, ते होचुरुद्गीथे वै कुशलाः स्मो, हन्तोद्गीथे कथां वदाम इति । तथेति ह समुपविविशुः । स ह प्रवाहणो जैवलिरुवाच, भगवन्तावग्रे वदेताम्, ब्राह्मणयोर्वदतोर्वाचं श्रोष्यामीति, स ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यं उवाच, हन्त त्वा पृच्छानीति, पृच्छेति होवाच, का साम्नो गतिरिति, स्वर इति होवाच, स्वरस्य का गतिरिति, प्राण इति होवाच, प्राणस्य का गतिरिति, अन्नमिति होवाच, अन्नस्य का गतिरिति, आप इति होवाच, अपां का गतिरिति, असौ लोक इति होवाच, अमुष्य लोकस्य का गतिरिति, न स्वर्गं लोकमतिनयेदिति होवाच, स्वर्गं वयं लोकꣳ सामाभिसꣳस्थापयाम' इति सामगतिपरम्परा तस्या विश्रान्तिस्थानभूतः । 'अस्य लोकस्य का गतिरिति, आकाश इति होवाच, सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त' इत्यादिनोक्ताकाशः । अग्रे गतिवचनाभावात् । स एव परोवरीयस्त्वविशिष्टः । 'स एष परोवरीयानुद्गीथ' इति श्रुतेः । तस्योपासकस्य । श्रुतौ शिलकः नामतः शालावत्यः शलावतोऽपत्यं छान्दसो ण्यः गर्गादिभ्यो यञ्च । चैकितायनः चिकितायनस्यापत्यं छान्दसः प्रत्ययोण् क्वचिदुत्सर्गोपि विशेषस्य बाधक इतीञं बाधित्वाण्वा । दाल्भ्यो नामतः गोत्रतो वा । प्रवाहणो नामतः । जिवलस्यापत्यं जैवलिः अत इञ् । वदतां वदेतामित्यर्थः । द्विवचनस्थाने एकवचनं छान्दसम् । गतिः कारणम् । प्राणो बलम् । असौ लोकः स्वर्लोकः । न सर्गं लोकमतिनयेदिति । स्वर्लोकमतीत्याश्रयान्तरं न प्रापयेत् । स्वर्गमित्यादि । अतो वयमपि स्वर्लोकं प्रति साम अभिसंस्थापयामः । स्वर्गलोकप्रतिष्ठितं साम जानीम इति । न इति । हिरण्यश्मश्रुत्वादयः । एतस्मात् परोवरीयस्त्वगुणात् । तदुपेति । तेषां अनधिकारोपाधिकानुत्कृष्टत्वेन भातानां धर्माणामुपसंहारः ॥ ७ ॥

संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ८ ॥ भाष्ये । श्रीरामोपासकत्वादिसंज्ञेति ।

१. अत्रोद्गीथ इति पाठः । २. उक्तमिति, अधिकारस्यानुपसंहारनियामकतासमर्थनादुक्तमिति श्रीहस्ताक्षरेषु पूर्वपाठः ।

तु लौकिकी, अधिकारस्त्वान्तरः । स एव बलीयानिति । संज्ञैकत्वस्य हेतोरन्वयव्यभिचारमाह अस्ति तु तदपीति । प्रमितभेदेष्वप्युपासनेषु परोवरीयस्त्वादिषु संज्ञैकत्वमुद्गीथोपासनेत्यस्तीत्यर्थः ॥ ८ ॥

भाष्यप्रकाशः ।

ज्ञैकत्वेनोपसंहारप्रयोजनकहेतुचतुष्टयसिद्धौ रूपप्राधान्यकृताधिकारमात्रस्याप्रयोजकत्वात्तथेत्याशङ्कोत्तरं त्वतिप्रसङ्गवारकतयावश्यकत्वेन अधिकारस्योपसंहारनियामकतासमर्थनादुक्तम् । संज्ञैकत्वस्येत्यादि । अधिकारस्यान्तरत्वेपि प्रमाणेष्वगणनात् संज्ञातो बलीयस्त्वमित्याशङ्क्य तस्य तथात्वमाहेत्यर्थः । प्रमितभेदेष्वित्यादि । छान्दोग्ये 'ॐमित्येतदक्षरमुद्गीथमुपासीते'त्युद्गीथावयवं प्रणवं प्रस्तुत्य, तस्य रसतमत्वादिगुणोपव्याख्यानपूर्वकं 'देवासुराः संयतिर' इत्यादिना, 'अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिर' इत्युद्गीथावयवप्रणवविषयमुपासनमुच्यते । तथा आदित्याक्षिपुरुषप्रतीककम्, तथा आकाशमुपक्रम्य परोवरीयस्त्वगुणकम् । वाजसनेयके तु 'हन्तासुरान् यज्ञ उद्गीथेनात्ययामे'ति कृत्स्नमुद्गीथं प्रस्तुत्य, 'अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गाये'त्यादिना कृत्स्नोद्गीथविषयमासन्योपासनमुच्यत इति प्रकरणभेदविषयभेदाभ्यां प्रमितभेदेष्वपि तेषु सा संज्ञास्ति, उपसंहारहेतुर्विद्यावेद्ययोरभेदस्तु नास्तीति न संज्ञामात्रेणोपसंहारः

रश्मिः ।

देवदत्तेतिसंज्ञा इत्यादिप्रयोगे योगे रूढौ च संज्ञाशब्ददर्शनात्समुदायशक्तिरवयवशक्तिर्वा संज्ञेति तथा । धर्माणां जात्यतिरिक्तानां स्वरूपत्वमतः संज्ञात्वमपीति । शब्देन्तर्भावोपि संज्ञाशब्द इति प्रयोगात् । प्रकृते संज्ञात इति । प्रमाणभूतशब्दरूपातः । तस्येत्यादि । अधिकारस्य बलीयस्त्वं सद्धेतुत्वेनाहुः । भाष्यार्थस्तु संज्ञास्त्वविशिष्टेत्युक्तभाष्यसिद्धस्य संज्ञैकत्वस्य हेतोः उपसंहारकर्ता व्यवस्थाभाववान् संज्ञैकत्वादस्योक्तरामोपासके साध्याभाववद्वृत्तित्वलक्षणं व्यभिचारमाहेति । भाष्ये । प्रमितेत्यादि । प्रमिताः प्रकारा येषामुपासनानां तेषु । यत्परोवरीयस्त्वं गुणः परोवरीयस्त्वादिगुणेषु । आदिनाक्ष्यादित्यप्रतीके गता हिरण्यश्मश्रुत्वादयो गुणाः । सौत्रत्वात्परोवरीयस्त्वस्यादित्वम् । तत्र साध्याभाववति हेतुः सञ्जैकत्वं किं साध्याभाववदित्यत आहुः उद्गीथेति । उद्गीथोपासने उद्गीथोपासकत्वरूपे साध्याभाववतीत्यर्थः । अत्यस्ति अत्यन्तमस्त्यन्यापेक्षया । अप्यस्तीति वा पाठः । तत् सूत्रीयं सिद्धं संज्ञैकत्वं हेत्वाभासरूपं तु अस्त्यपि । अपिरुद्गीथोपासनरूपपदार्थसम्भावने । प्रकृते । तदेतदाहुः छान्दोग्ये ॐमित्यादि । उद्गीथावयवमिति । उद्गीथोऽष्टमो रसतमः तस्यातिशयरसस्य रसा अवयवा इति । प्रणवपदं अष्टरूपाभिप्रायेण । अन्यथाष्टमपदं निरर्थकं स्यात् । पञ्चाध्याय्या'मष्टकृष्णा भवन्ती'ति सुबोधिन्यामिति प्रतिभाति । सर्वभावेपि सारसर्वभाव इत्यपि । तस्येत्यादि । तस्य प्रणवस्य । 'तस्योपव्याख्यानमेषां भूतानां पृथिवी रस' इत्यादिश्रुतेः रसतमत्वादिगुणैरुपव्याख्यानं तत्पूर्वकम् । अत्ययामेति । अतिपूर्वः अय गतौ पदव्यत्ययः । प्रमितेति । प्रमिता भेदाः प्रकारा येषामुपासनानां तेषु । तेष्विति उपासनेषु । परोवरीयस्त्वादिगुणेषु च । ते च ते च ते तेष्विति विग्रहात् । तत्रापि उद्गीथोपासन उक्तरूपे साध्याभाववति एकत्वमेकवचनलभ्यं संज्ञैकत्वस्येत्यत्रेत्याशयेनाहुः सा संज्ञेति । एकत्वं विवक्षितम् । प्रकृत्यर्थः प्रत्ययार्थे सामानाधिकरण्यसम्बन्धेनान्वेति । 'एकं रूपं रसात्पृथ'गित्यत्रेव । संज्ञाशब्दाधिकर-

१. मर्यादा ।

भाष्यप्रकाशः ।

प्रयोक्तुं शक्यते, अतो न पूर्वोक्तव्यवस्थाभङ्ग इत्यर्थः । एवमन्यथात्वसूत्रेण परोवरीयःसूत्रप्रथमवर्णकेन च वेद्यैक्यबाधकं परिहृतम्, तद्द्वितीयवर्णकेन संज्ञासूत्रेण च समाचारसूत्रोक्ता अधिकारस्योपसंहारनियमहेतुता प्रपञ्चितेति चतुःसूत्र्यां परापरविद्यासाधारण्येन तौ निर्णीतौ । एवमत्र स्वाध्यायसूत्रमारभ्य पञ्चिः सूत्रैरुपसंहारप्रकारो विचारितः । तेनात्र गुणोपसंहारो विषयः । स च सर्वैः सर्वेषूपास्येषु पुरुषेषु सर्वेषां गुणानां कर्तव्यः, उत तैस्तैस्तेषु तेषु तेषां तेषामिति संशयः । तत्राद्यः पूर्वः पक्षः । मार्गभेदेन यथाधिकारं कर्तव्य इति सिद्धान्तः फलति । एवञ्चात्र सामान्यतः स्वभावरूपा गुणास्तत्तत्कार्यकर्तृत्वादयश्च यथाधिकारमुपसंहार्यत्वेनानुपसंहार्यत्वेन विचारिताः ।

अन्ये तु, एतत्रिसूत्र्यां छान्दोग्यवाजसनेयकोक्तयोरुद्गीथविद्ययोरभेदो भेदो वेति संशयमापाद्य, पूर्वसूत्रे अभेदं पूर्वपक्षीकृत्य, सूत्रद्वयेन प्रक्रमभेदकृतरूपभेदात् संज्ञाया लौकिकत्वात् व्यभिचारित्वाच्च विद्याभेदं सिद्धान्तयन्ति ।

तत्तु तादृशसिद्धान्तस्य प्रथमसूत्रोक्तचोदनाद्यविशेषरूपहेत्वेकदेशभूतरूपाभावे पूर्वोक्तहेत्वभावादेव सिद्धत्वान्नात्यावश्यकमिति प्रतिभाति ॥ ८ ॥ २ ॥

रश्मिः ।

णवृत्तिरेकत्वम् । संज्ञैकत्वमिति यावत् । तथाच सा संज्ञैकत्वरूपा संज्ञास्तीत्यर्थः । हेतुत्वेनान्वये व्यभिचारमित्यर्थेन्वयशब्दो नातिप्रयोजनोऽतो यत्रयत्र संज्ञैकत्वम्, तत्रतत्र व्यवस्थाभाववत्त्वमित्यन्वयस्य व्यभिचारः । उपसंहारेति । उपासनेषु नास्ति । 'उपसंहारोर्थाभेदा'दिति सूत्रोक्तः । अत उद्गीथोपासन उक्तरूपेपि नास्तीति भावः । इनिर्हेतौ । स न पूर्वोक्तव्यवस्थाभङ्ग इत्यनेनान्वयी । संज्ञामात्रेण संज्ञैकत्वेतराकरणके सति संज्ञैकत्वकरणेन । पूर्वोक्तव्यवस्थाभङ्ग उक्तस्तं निवारयन्ति स्म **न संज्ञामात्रेणेति** । संज्ञामात्रेण उपसंहार उपसंहारानुपसंहारव्यवस्था न प्रयोक्तुं शक्यते, संज्ञया उपसंहारहेतुना विद्यावेद्ययोरभेदेन तु उक्तव्यवस्था प्रयोक्तुं शक्यतेऽतः हेतुद्वयाभावात् । संज्ञामात्रेण न पूर्वोक्तव्यवस्थाभङ्ग इत्यर्थः । पूर्वोक्ता व्यवस्था एकान्तिनोऽनुपसंहारो विरुद्धधर्माणामनेकान्तिन उपसंहार इति पूर्वोक्ता व्यवस्था तस्या भङ्ग इत्यर्थः । निष्कृष्टार्थमाहुः **एवमन्यथात्वेति । वेद्यैक्येति** । वेद्यैकत्वे बाधकमन्नत्वापादनं प्रकरणभेदश्च । **परापरेति** । परविद्याऽक्षराधिगमः तत्साधारण्येन तौ उपसंहारानुपसंहारौ वेद्यैक्यबाधकपरिहारेण निर्णीतौ । **वस्त्वेव तादृक्त्वन्तव्यमिति** भाष्येण 'इदं भक्तिहंसे प्रपञ्चितमतो नात्र व्युत्पाद्यत' इति प्रकाशेन च निर्णीतौ । अपरविद्या 'ऋग्वेदो यजुर्वेद' इत्याद्युक्तर्ग्वेदादिः तत्साधारण्येन तावुपसंहारानुपसंहारौ अधिकारस्यानुपसंहारहेतुताप्रपञ्चनेन निर्णीतौ । समाचारसूत्रे स्वाध्यायपदस्य वेदवाचकत्वेनापरविद्यात्र । **आपाद्येति** । अभेदापादनं यदि संज्ञैकत्वं न स्यात्, तदा विद्यैकत्वं न स्यादिति संज्ञात इति सूत्रे भेदापादनं यदि विद्यैकत्वं स्यात्, प्रक्रमभेदो न स्यादिति ग्रन्थपर्यालोचनेनापाद्य । प्रक्रमस्तु अन्यथा प्रक्रमन्ते वाजसनेयिनः । अन्यथा छन्दोगाः । 'त्वं न उद्गाये'ति वाजसनेयिनः । उद्गीथस्य कर्तृत्वेन प्राणमामनन्ति । छान्दोगा'स्तूद्गीथत्वेन तमुद्गीथमुपासांचक्रिर'इति । **संज्ञाया इति** । **संज्ञातश्चेदिति** सूत्रोक्तायाः । **व्यभिचारित्वादिति** । वाजसनेयिछान्दोगोक्तः विद्यैकत्ववान्, संज्ञैकत्वात्, रामतापिनीयोक्तार्थवदित्यत्र संज्ञैकत्वस्य हेतोः प्रकरणभिन्न उपासने साध्याभाववति उद्गीथविद्येत्युभयत्राप्येका संज्ञेति हेतुसत्त्वेन व्यभिचारित्वात् ॥ ८ ॥

१. मर्यादा ।

## व्याप्तेश्च समञ्जसम् ॥ ९ ॥

अथेदं विचार्यते । उपास्येषु रूपेषु बाल्यपौगण्डादिकमप्युच्यते । तथा सति विग्रहे न्यूनाधिकभाव आपततीति तत्रोक्तं सच्चिदानन्दत्वमनुपपन्नं स्यात् । तेषां सदैकरूपत्वात् । प्राकृतत्वे च सर्वमसमञ्जसं स्यादिति प्राप्ते, आह व्याप्तेरिति । 'सर्वतः पाणिपादान्त'मित्यादिश्रुतेः साकारमेव व्यापकमिति । चकारात् 'सर्वरस' इति श्रुत्या रसात्मकत्वेन भक्तानां यादृग्रूपेण लीलारसानुभवः,

भाष्यप्रकाशः ।

व्याप्तेश्च समञ्जसम् ॥ ९ ॥ अतः परं पुनर्ब्रह्मगतानेवान्यान् धर्मान् अवस्थारूपान् विचारयतीत्याशयेन सूत्रमवतारयन्ति अथेत्यादि । तथा सतीति । अवस्थावत्त्वे सति । तत्रोक्तमिति । तेषु रूपेषु श्रुत्योक्तम् । तेषामिति । ब्राह्मणां सच्चिदानन्दानाम् । सर्वमिति । उपास्यरूपेषु साधितं ब्रह्मत्वं तेषां ब्रह्मत्वेनोपासने श्रुतिविरोधपरिहारादिकं च । इति प्राप्ते, आहेति । एवमवतारेष्ववस्थाविशेषदर्शनेन पूर्वसाधितस्य वैयर्थ्ये तत्परिहारमाहेत्यर्थः । व्याकुर्वन्ति सर्वत इत्यादि । क्रमेणेति । कालोपाधिक्रमेण । तथाचासामञ्जस्यं तदा स्यात्, यदि विग्रहस्य प्राकृतत्वं तस्मिन् विग्रहे न्यूनाधिकपरिमाणवत्त्वं च कालोपाधिजन्यं स्यात्, तत्तु नास्ति, किन्त्वावरणापसारण आकाशस्येव व्यापकत्वसच्चिदानन्दविग्रहस्यावरणभूताया योगमायायाः

रश्मिः ।

व्याप्तेश्च समञ्जसम् ॥ ९ ॥ ब्रह्मगतानिति । 'श्रीकृष्णो ह वै परमं दैवत'मिति श्रुतेः । 'कृष्णस्तु भगवान् स्वय'मिति स्मृतेश्च । अथेत्यादीति । अवतारस्यावतार्यैक्येप्यवतारत्वेन भिन्नप्रक्रम आनन्तर्यं वाथशब्दार्थः । भाष्ये । उच्यत इति । श्रीभागवते कृष्णस्य 'कौमारं जहतुर्व्रजे' 'ततश्च पौगण्डवयःश्रितौ व्रजे' इत्यादिभिः । गोपालतापिनीये 'ते होचुरुपासनमेतस्य परमात्मनो गोविन्दस्याखिलधारिणो ब्रूही'ति मुनिपृष्टो ब्राह्मणः 'एतस्यैव यजनेन चन्द्रध्वज' इत्याद्याह । यजनमवतारस्य तन्मूर्तेर्वा । बाल्यपौगण्डाद्यवस्थावतो मूर्तेरयुक्तत्वमित्याशयः । अवतारभजनं नन्दादेर्वीयकस्य च । कृष्णमूर्तेर्भजनं मरुताम् । 'चतुर्थी मरुतो यजन्ती'ति श्रुतेः । श्रुत्योक्तमिति । श्रुतिस्तु 'सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकारिण' इति । रामरूपे वाल्मीकिरामायणे बाल्यपौगण्डादयोऽवस्थाः । श्रुतिस्तु 'यो वै श्रीरामचन्द्रः स भगवान्यः सच्चिदानन्दैकरसात्मा भूर्भुवःस्वस्तस्मै नमो नम' इति । तद्भजनं वृषध्वजस्य । तथाच श्रुतिः 'श्रीरामस्य मनुं काश्यां जजाप वृषभध्वजः । मन्वन्तरसहस्रैस्तु जपहोमार्चनादिभि'रिति । वामनरूपे वामनपुराणे बाल्यपौगण्डादयः । श्रुतिस्तु 'चरणं पवित्रं विततं पुराण'मिति । तद्भजनं बलेः श्रीभागवते प्रसिद्धम् । श्रीनृसिंहरूपे नृसिंहोपपुराणे नृसिंहतापिनीये 'ऋतं सत्यं परं ब्रह्म पुरुषं नृकेसरिविग्रह'मिति बाल्यपौगण्डाद्यवस्थाः । श्रुतिस्तु 'यो वै नृसिंहो देवो भगवान्यश्च ब्रह्मा तस्मै वै नमो नमः । ॐ योऽन्यश्च विष्णुस्तस्मै योऽन्यश्च महेश्वरस्तस्मै' इति । अणुविषयेऽन्या । 'सच्चिदानन्दपूर्णात्मानं परमात्मानं परमं ब्रह्म सम्भाव्याहमित्यात्मानमादाय मनसा ब्रह्मणैकीकुर्या'दिति । तद्भजनं पञ्चमस्कन्धेऽष्टादशे प्रह्लादः करोति । एवं श्रुत्योक्तमित्यर्थः । ब्राह्मणामिति । जीवीयव्यावृत्त्यर्थं विशेषणम् । साधितमिति । 'उपसंहारोऽर्थाभेदा'दित्यत्रार्थभेदरूपहेतुना साधितम् । श्रुतीति । 'योऽन्यथा सन्तमात्मान'मिति श्रुतिविरोधः, आदिनान्यथात्वसूत्रोक्तमब्रह्मत्वम् । पूर्वेति । पूर्वं उपसंहारसूत्रे साधितस्य ब्रह्मत्वस्य । तदिति । वैयर्थ्यपरिहारमाह कालोपाधीति । कालचेष्टा भगवत्क्रीडा स उपाधिर्यस्मिन् क्रमे स क्रमस्तु योगमायापसारणहेतुः । कालोपाधीति । यथा कालेन पच्यते सर्वं तथा

१. स्मृतेः ।

**तादृग्रूपं क्रमेण योगमायापसारणेन प्रकटीकरोतीति बाल्यादिभावोपपत्तेः सर्वमुपपन्नमित्यर्थः । तेन यावदुक्तधर्मवद्ब्रह्मेति सिद्धम् ॥ ९ ॥**

भाष्यप्रकाशः ।

क्रमादपसारणेन भक्तानां तल्लीलारसानुभावनार्थमिच्छया कृपया तादृशपरिमाणकं तद्रूपं प्रकटीकरोतीति यथा व्यापकस्याकाशस्य वृद्धिह्रासभाक्त्वमुपपन्नम्, तथा ब्रह्मणो रूपेष्वपि सर्वं बाल्यादिमानमुपपन्नमित्यर्थः । इदमत्र भगवता व्यासेन समञ्जसपदकथनाद्वृद्धिह्रासस्तत्रोक्तमुभयसामञ्जस्यं सारयता, चकारेण 'लोकवत्तु लीलाकैवल्य'मिति च सारयता बोधितं ज्ञेयम् । भगवतो योगमायावरणं च गीतायां 'नाहं प्रकाशः सर्वस्य योगमायासमावृतः । मूढोऽयं नाभिजानाति लोको मामजमव्यय'मिति स्वयमेवोक्तमिति नात्र शङ्कालेशः । सिद्धमाहुः तेनेत्यादि । एवं व्याप्त्यादिना सामञ्जस्यसाधनेन यावदुक्तधर्मयुक्तं तत्सदृशं वा शुद्धं केवलं ब्रह्मैवेति सिद्धम् । तथाचोपास्यरूपेषु प्रतीयमानानां नित्यानामेव बाल्यपौगण्डादिधर्माणां परिमाणानां तत्तल्लीलानां चावरणतद्भङ्गजन्यप्रतीतिविषयत्वेनाविरोधमवधार्य भक्तिमार्गीयेण तेऽप्युपसंहार्या इत्यर्थः । तथाच बाल्यादिभावो विषयः । उपपद्यते, न वेति संशयः । पूर्वपक्षसिद्धान्तौ स्फुटौ ।

रामानुजानां मते इदं पूर्वस्यैव शेषः ।

शाङ्करे भास्करे च मते तु 'ओमित्येतदक्षरमुद्गीथ'मित्यत्र श्रूयमाणे सामानाधिकरण्येऽध्यासापवादपर्यायविशेषणपक्षाणां मध्ये को वा युक्त इति संशये, अध्यासपक्ष एकस्मिन् शब्दे लक्षणापत्त्या, द्वितीये च एकस्य निवृत्तेरदृष्टायाः कल्पनापत्त्या, तृतीयस्य चाप्रसिद्ध्या असंगतत्वं त्रयाणाम् । अतो विशेषणपक्षो युक्त इति सिद्धान्तितम् ।

तदकाण्डताण्डवं प्रतिभाति । तन्मते प्राणादीनां यथायथमब्रह्मत्वेन ब्रह्मकार्यत्वेन च तत्र ब्रह्मदृष्टिवत् प्राणादिदृष्टेरप्यध्यस्तत्वेन ओङ्कारे उद्गीथदृष्टेरपि तथात्वे विशेषाभावादिति ॥ ९ ॥

रश्मिः ।

यादृग्यादृग्रूपं कालेन स्यादित्येवं कालोपाधिजन्यम् । उपपन्नमिति । करकादिप्रवेशादनुपपन्नम् । ब्रह्मण इति । व्यापकस्य रूपेषु प्रवेशादित्यर्थः । तत्सदृशमिति । यावदुक्तधर्मयुक्ताकाशसदृशं वेत्यर्थः । **इदं पूर्वस्येति** । इदं सूत्रं पूर्वस्य सर्ववेदान्तप्रत्ययाधिकरणस्य । **सामानाधीति** । अक्षरोद्गीथशब्दयोः । **लक्षणेति** । प्रतिमादिषु विष्ण्वादिबुद्ध्यध्यासः, एवमिहाप्यक्षरे उद्गीथबुद्धिरध्यस्यते, उद्गीथे वाक्षरबुद्धिरिति । तत्राध्यासे तावत् या बुद्धिरितरत्राध्यस्यते तच्छब्दस्य लक्षणावृत्तित्वं प्रसज्येतेत्येवं लक्षणापत्त्या । **द्वितीय इति** । अपवादपक्षेऽपवादो नाम यत्र कस्मिंश्चिद्वस्तुनि पूर्वनिविष्टायां मिथ्याबुद्धौ निश्चितायां पश्चादुपजायमाना यथार्था बुद्धिः पूर्वनिविष्टाया मिथ्याबुद्धेर्निवर्तिका भवति । यथा दिग्भ्रान्तिबुद्धिर्दिग्याथार्थ्यबुद्ध्या निवर्तते, एवमिहाक्षरबुद्ध्योद्गीथबुद्धिर्निवर्तते, उद्गीथबुद्ध्या वाक्षरबुद्धिरिति । अत्र फलाभावः । मिथ्याज्ञाननिवृत्तिः फलमिति चेत् । न । पुरुषार्थोपयोगानवगमात् । न कदाचिदप्योङ्कारादोङ्कारबुद्धिर्निवर्तेत, उद्गीथाचोद्गीथबुद्धिरित्येवमेकस्या बुद्धेर्निवृत्तेरदृष्टायाः अदृष्टप्रासाया बुद्धेः कल्पनापत्त्येत्यर्थः । **तृतीयस्येति** । पर्यायपक्षस्य अक्षरोद्गीथशब्दयोरेकत्वमनतिरिक्तार्थवृत्तित्वम् । यथा द्विजोत्तमो ब्राह्मणो भूदेव इति । तदा शब्दयोरुच्चारणं न स्यात् । एकेनैव विवक्षितार्थसमर्पणात् । नच हौत्रविषये चाध्वर्यवविषयेऽक्षरे ओङ्कारशब्दवाच्ये उद्गीथप्रसिद्धिरस्ति येनानतिरिक्तार्थं न स्यादित्येवमप्रसिद्ध्या । **विशेषणेति** । व्याप्तेरिति सूत्रोक्तहेतोः । सर्ववेदसाधारण्यात् ।

ननु ब्रह्मधर्मत्वेन ते सर्वे नित्या वाच्याः, ते च तत्तद्भक्तविशिष्टाः, तत्र चैकस्यैव भक्तस्य पौर्वापर्येणानेकलीलासम्बन्धित्वं श्रूयते, तथाच पूर्वलीलाया नित्यत्वेन तत्सम्बन्धिभक्तस्यापि तथात्वं वाच्यम्, एवं सति तस्यैवाग्रिमलीलासम्बन्धोऽशक्यवचनः, तथा वचने तु पूर्वलीलाया नित्यत्वं भज्येत, नित्यत्वे त्वग्रिमलीलासम्बन्धिनो भिन्नत्वं स्यात्, तच्चानुभवतद्‌बोधकमानविरुद्धमित्यत उत्तरं पठति ।

सर्वाभेदादन्यत्रेमे ॥ १० ॥

लीलामध्यपातिनां सर्वेषां पदार्थानां ब्रह्मणा सहाभेदात् ब्रह्मणश्चैकत्वात्

भाष्यप्रकाशः ।

अग्रिमसूत्रमवतारयन्ति नन्वित्यादि । 'अनुच्छित्तिधर्मे'तिश्रुत्या ब्रह्मधर्माणामनुच्छेदश्रावणाद्ब्रह्मधर्मत्वेन ते सर्वे बाल्यादयो नित्या ध्वंसाप्रतियोगिनो वाच्याः, ते च लीलानां तत्तद्भक्तानुभावनार्थत्वात्तत्तत्क्रीडोपयोगिभक्तविशिष्टाः, तत्र कृष्णोपनिषद्येकस्यैव भक्तस्य पौर्वापर्येणानेकलीलासम्बन्धित्वं 'यो नन्दः परमानन्दो यशोदा मुक्तिगेहिनी'त्यादिना श्रीनन्दादिषु स्वरूपकथनानन्तरं 'सोऽवतीर्णो महीतले, वने वृन्दावने क्रीडन् गोपगोपीसुरैः सहे'ति तैः सह क्रीडाकथनाच्छ्रूयते, लीलासम्बन्धित्वे चोक्तरीत्या भक्तस्यापि नित्यत्वं वाच्यम्, एवं पूर्वलीलातत्सम्बन्धिभक्तयोर्नित्यत्वेन पूर्वलीलावैशिष्ट्यस्यापि नित्यत्वे सति तस्यैवाग्रिमलीलासम्बन्धोऽशक्यवचनः । तस्यैवाग्रिमलीलासम्बन्धवचने त्वेकस्य युगपद्विरुद्धलीलाद्वयानुभवस्याशक्यवचनतयाग्रिमानुरोधे पूर्वलीलानित्यत्वं भज्येत, पूर्वनित्यत्वे चैकस्य युगपदनेकलीलासम्बन्धस्याशक्यवचनतया अग्रिमलीलासम्बन्धिनो भक्तस्य पूर्वलीलानुभवकर्तुः सकाशाद्भिन्नत्वं स्यात्, तच्च भिन्नत्वं लीलास्थानुभवविरुद्धम्, लीलानुभवितृभक्तैक्यावेदकप्रमाणभूता या कृष्णोपनिषत्स्थश्रुतिस्तद्विरुद्धं चेति लीलानित्यत्वे भक्तभेदप्रसङ्गादुक्तश्रुतिविरोधः, भक्ताभेदे च लीलानित्यत्वभङ्गादनुच्छित्तिधर्मश्रुतिविरोध इत्युभयतःपाशा रज्जुरित्याशङ्कायामुपसंहारदौर्घट्ये प्राप्ते तन्निवृत्त्यर्थमुत्तरं सूत्रं पठतीत्यर्थः ।

सर्वाभेदादन्यत्रेमे ॥ १० ॥ व्याकुर्वन्ति लीलेत्यादि । ब्रह्मणा सहाभेदादिति । 'तस्मान्न भिन्ना एतास्तु आभिर्भिन्नो न वै प्रभुः । भूमावुत्तारितं सर्वं वैकुण्ठं स्वर्गवासिन'मिति

रश्मिः ।

सर्ववेद्व्याप्यक्षरमिह मा प्रसञ्जीत्यत उद्गीथशब्देनाक्षरं विशेष्यते । अकाण्डेति । काण्डं रहः तद्भिन्नं ताण्डवं व्यापारविशेषः । विशेषेति । अध्यस्तत्वपक्षे विशेषणपक्षे च तथा ॥ ९ ॥

अनुच्छित्तीति । न उच्छित्तिर्येषां धर्माणां तेऽनुच्छित्तयः अनुच्छित्तयो धर्मा यस्येति विग्रहात्तथा । तथाचेति भाष्यं विवृण्वन्ति स्म लीलासम्बन्धित्व इति । एवं सतीति भाष्यं विवृण्वन्ति स्म एवं पूर्वेति । तथा वचन इति भाष्यं विवृण्वन्ति स्म तस्यैवेत्यादि । विरुद्धेति । अधिकारियोग्यायोग्यत्वाभ्यां विरुद्धा लीलास्तासां द्वयं तस्यानुभवस्तस्येत्यर्थः । नित्यत्व इति भाष्यं विवृण्वन्ति स्म पूर्वेत्यादि । तच्चेत्यादिभाष्यं विवण्वन्ति स्म तच्चेत्यादि । लीलास्थेति । भक्त्युपमर्ददशायामक्षरे लीनतयाऽभेदमनुभवितॄणां लीलास्थानामनुभवविरुद्धम् । कृष्णोपेति । सा पूर्वोक्ता । उक्तेति । साप्येषा ।

सर्वाभेदादन्यत्रेमे ॥ १० ॥ तस्मादिति । एता भक्ताः । तत्र श्रीराधाजित्स्वरूपम् ।

१. धर्मवत्त्वेन ।

पूर्वलीलातोऽन्यत्रोत्तरलीलायामपीमे पूर्वलीलासम्बन्धिन एव त इत्यर्थः ।

अत्रेदमाकूतम् । 'रसो वै स' इति श्रुत्या 'सर्वरस' इति श्रुत्या च सर्वरसात्म-

भाष्यप्रकाशः ।

कृष्णोपनिषच्छ्रुतौ सर्वासां ब्रह्माभेदश्रावणेन तन्न्यायेनान्येषामपि पदार्थानां तथात्वात् । नन्वस्तु भक्तानां ब्रह्माभेदः, तथापि पूर्वोक्ताशङ्कायाः कथं निवृत्तिरित्याकाङ्क्षायामभेदस्वरूपं व्याकुर्वन्ति अत्रेदमित्यादि । प्रकाशाश्रयाधिकरणे स्वरूपधर्माणां ब्रह्माभेदस्तादात्म्यरूपो भेदविरुद्धसम्पन्निर्णीतः, तत्र परिच्छिन्नकार्यकर्तृत्वस्य भेदनिर्णायकत्वेन सच्चिदानन्दरूपत्वस्य चाभेदनिर्णायकत्वेन भेदात्यन्ताभावरूपस्याभेदस्याभावात् । तस्यां च सम्पदि स्वाश्रयाविनाभूतत्वं प्रविष्टमिति ब्रह्माविनाभूता ब्रह्मात्मकाः सच्चिदानन्दरूपाः स्वरूपधर्मा इति सिद्धम् । 'असद्वा इदमग्र आसीत्, ततो वै सदजायत, तदात्मान९ स्वयमकुरुत, तस्मात् तत् सुकृतमुच्यत इति, यद्वैतत् सुकृतम्, रसो वै स' इति श्रुतौ च 'सोऽकामयते'त्यादिना पूर्वानुवाक उक्ता या सृष्टिस्तां 'असद्वे'त्यादिना असाधुत्वेन प्रदर्श्य, 'ततो वै सदजायते'त्यनेन विवक्षितस्य प्रकटितस्य साधुत्वमुक्त्वा, तत्र हेत्वाकाङ्क्षायां 'तदात्मान'मित्यादिना ततो विशेषमाह । तत्र हि 'प्रजायेये'ति द्वितीयाकारादुच्चनीचभावः, अत्र तु स्वयमेव परिणत इत्ययं परिणामः सुकृतरूप इति । ननु तत्रापि 'बहु स्या'मिति पूर्वाकारात् स्वस्यैव परिणामे कथमस्यैव सुकृतत्वम्, न तस्येत्याकाङ्क्षायामेतस्य सुकृतत्वहेतुमाह 'यद्वै तत् सुकृतम्, रसो वै स' इति । वैशब्द उक्तशङ्कानिवृत्त्यर्थः । एवकारार्थो वा । तथाच यदेतत्सुकृतं स वै निश्चयेन रसः सर्वसारभूत आनन्दः । तदेवाग्रे परिचाययति 'रस९

रश्मिः ।

श्रीयमुनाजित् तुरीयं तत्त्वम् । श्रुतिरूपाः आत्मत्वेन प्रतिपादकत्वेन च । ऋषिरूपाः सायुज्यमुक्त्येति चतुर्यूथविभागः । अक्षरविषय आहुः भूमाविति । वैकुण्ठं सच्चिदानन्दात्मकम् । भक्तानामिति । पूर्वोक्तयूथचतुष्टयवदक्षरस्यापि क्रीडायां भक्तत्वमिति । अक्षरानन्दो लक्ष्मीः । भक्तत्वेन सर्वोपादानम् । भक्तिमार्ग इति । ब्रह्माभेदः कार्यकारणवस्त्वैक्यमर्षणेन । पूर्वोक्तेति । आभासोक्ताशङ्कायाः । प्रकाशेति । गतपादे इदमधिकरणम् । भेदविरुद्धेति । तेनाभेद इत्यत्र विरोधे नञर्थ उक्तः । प्रत्ययोच्चजन्तोऽभेदशब्दः । भेदविरुद्धेत्यत्र भेदो विरुध्यते यया कर्म्यां । कर्मणि क्तः । नश्यत इति नञ् कर्मणि क्तोन्वयार्थः । तेन योगरूढः शब्दः । भेदविरुद्धा संपत् तादात्म्यमर्थः । स्वाश्रयेति । तादात्म्यरूपं रूढ्या प्रविष्टम् । ब्रह्मात्मका इति । अभेदो ब्रह्मणा भेदविरुद्धसम्पद्रूप इति ब्रह्मात्मकाः । असाधुत्वेनेति । असच्छब्दं समाकर्षाधिकरणोक्तरीत्या स्वार्थात्प्रच्याव्यासाधुजन्यां तामसाधुत्वेन प्रदर्श्य । तत इति । असाधुसृष्टेः । तत्रेति । असाधुसृष्टौ । द्वितीयेति । 'बहु स्या'मितीच्छाकाराद्द्वितीयाकारात् । उच्चेति प्रशब्दार्थः । तत्रापीति । असाधुसृष्टौ । भाष्यस्थां श्रुतिं व्याकुर्वन्ति स्म वैशब्द इति । 'रस शब्दे', 'रस आस्वादने' तयोरास्वादनार्थस्याग्रिमग्रन्थानुरोधाद्ग्रहणम् । तदाहुः सर्वसारेति । 'सर्वरस' इति द्वयमुक्तम् । द्वयं समुदितं दशरसरूपम् । रसो जलं 'ऊर्जे त्वे'त्युक्तम् । 'पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः' । रसः शुक्रम्, तदात्मकत्वेनेत्यर्थः । तदुक्तं 'रसो गन्धरसे स्वादे तिक्तादौ रसरागयोः । शृङ्गारादौ द्रवे वीर्ये देहधात्वम्बुपारदे' इति । रसः सारः । यथा छान्दोग्ये 'एषां भूतानां पृथिवी रसः । पृथिव्या आपो रसोऽपामोषधयो रस ओषधीनां पुरुषो

१. लीलायाः समीपे । २. सर्वेषाम् ।

कत्वं ब्रह्मणो निर्णीतम् । तथाच यस्य रसस्य ये विभावानुभावादिरूपाः, तैः स रसः सम्पद्यते । आतानवितानात्मकतन्तुभिः पट इव । अतस्तत्तादात्म्यं रसस्येति सर्वाभेदो निष्प्रत्यूह इति ।

ननु विरुद्धदिक्कयोरेकजातीयभाववतोर्भक्त्यतिशयेन युगपदेकजातीयलीलासहितभगवत्प्रादुर्भावे भगवतो व्यापकत्वेनैवं प्रादुर्भावस्योपपन्नत्वेपि लीलापदार्थानामव्यापकत्वाद्युगपदाविर्भावोऽनुपपन्नः । भक्तयोः समानत्वाद्भक्तिमार्ग-

भाष्यप्रकाशः ।

शेवाय'मित्यारभ्यानुवाकसमाप्तिपर्यन्तम् । तथाच पूर्वसृष्टौ संचितोरेव प्राधान्यम्, नानन्दस्य, इह त्वानन्द एव तत्तद्रूप इति तस्याः सकाशादस्मिन्नयं विशेष इत्यर्थः सिद्धः । एवं 'सर्वरस' इति श्रुतौ च सर्वरसात्मकत्वेन । तेनैताभ्यां ब्रह्मणो रसात्मकत्वं निर्णीतम् । तेन यत् सिद्धं तदाहुः तथाचेत्यादि । विभावानुभावरूपा इति । आलम्बनविभावरूपा भक्ताः, उद्दीपनविभावरूपा ऋत्वादयः, अनुभावाः कटाक्षवेणुवादनादयः, तेषां सर्वेषामेवं तादात्म्यरूपे अभेदे निर्विघ्ने लीलास्थानां भक्तानां ब्रह्मात्मकत्वेन नित्यत्वात् पूर्वोत्तरलीलासम्बन्धित्वं निर्विघ्नम्, लीलानां च ब्रह्मधर्मत्वान्नित्यत्वम्, एवं सर्वेषां नित्यत्वे युगपत्सर्वलीलानुभव आपतति, स च 'अङ्गसङ्गं करिष्यामी'त्यादिश्रौतप्रयोगान्यथानुपपत्त्यवगतभगवदिच्छामहिम्ना तत्सामर्थ्यमहिम्ना च निवारणीयः, न तु भक्तानुभवादेरनित्यत्वं स्वयं कल्पनीयम्, ब्रह्मणो मनोवागगोचरत्वस्यानिरुक्तादिश्रुतिसिद्धत्वात् । इदमत्र बोधसौकर्यार्थमुक्तम् । उत्पत्तिपक्षस्याप्येकदेशत्वेनादरणात् । वस्तुतस्तु यथा लीला सम्पद्यते, तत्प्रकारकं सर्वं ब्रह्मैव । तथैव लीलापि । 'यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्ता'दिति श्रुतेः । 'यथा सुवर्णं सुकृतं पुरस्तात् पश्चाच्च सर्वस्य हिरण्मयस्य । तदेव मध्ये व्यवहार्यमाणं नानापदेशैरहमस्य तद्व'दित्येकादशे भगवद्वाक्याच्च उपपत्तिपक्षस्यैव मुख्यत्वात् । तच्च प्रागेवोपपादितमिति न किञ्चिदनुपपन्नमित्यर्थः । अत्रैव किञ्चिदाशङ्क्य परिहरन्ति नन्वित्यादि । सामञ्जस्यादित्यन्तम् । प्रादुर्भाव इति । विचार्यमाण इति शेषः ।

रश्मिः ।

रसः पुरुषस्य वाग्रसो वाच ऋग्रसः ऋचः सामरसः साम्न उद्गीथो रसः स एष रसाना५ रसतमः परमः परार्घ्योऽष्टमोयमुद्गीथ' इति । तेनेत्यादि । सर्वरसत्वेन यत् उपष्टब्धं दशरसरूपं सिद्धम् । यत्तु 'सर्वरसः स्मृतो वाद्यभाण्डभेदेऽवधूलक' इति विश्वः । तत्तु लौकिकरूढिमात्रात् । सिद्धान्ते योगयोगरूढिमात्रसत्त्वात् । 'मल्लानामशनि'रिति वाक्योपष्टब्धो दशविधरसस्तदात्मात्मा । सर्वेषु रसेषु । वस्तुतस्तु दशविधरसातिरिक्तं न जगत्, किं तरामन्ये रसा इत्याशयेन व्याकुर्वन्ति स्म ये विभावेत्यादिना । अत्र स्वगतपरगतरसः पुष्टिमार्गे भक्तिसंवलितो भगवान्फलमिति अधोक्षजस्यालम्बनत्वेपि भक्ता आलम्बनविभावरूपत्वेनोक्ताः । तस्याविषयत्वात् । उद्दीपनेति । कारणरूपाः । ऋत्वादयः समानाः । आदिना चेष्टा देशश्च । अनुभावाः कार्यरूपाः । कटाक्षेति । आदिना युगलगीतोक्ता हारहासादयः । अङ्गसङ्गमिति । भविष्यत्प्रयोगोत्र । भाष्ये । निःप्रत्यूह इति । 'आविर्भावतिरोभावौ शक्ती वै मुरवैरिण' इति वाक्यं ब्रह्मस्वरूपनिविष्ट इवार्थाभेदेपि द्रष्टव्यम् । 'अविभक्तं च भूतेषु विभक्तमिव च स्थित'मिति-गीतावाक्यात् । विरुद्धदिक्कयोरिति । प्राचीप्रतीचीदक्षिणोत्तरा विरुद्धा दिक् सहानवस्थानात् ।

१. विभावानुभावरूपा इति प्रकाशपाठः ।

विरोधापाताद्विनिगमकाभावाच्चैकत्र मायया प्रदर्शयतीति च न वक्तुं युक्तमिति शङ्काप्येताभ्यां सूत्राभ्यां निरस्तेति ज्ञेयम् । ब्रह्मणो व्यापकत्वाल्लीलायाश्च तेन सहाभेदात्तथात्वादेकस्मै भक्ताय यथा ब्रह्मणा सह लीलापदार्था आविर्भवन्ति, तथैव तदैवान्यत्रापि भक्तसमानदेश आविर्भवन्तीति सर्वसामञ्जस्यात् ॥ १० ॥

ननु व्यापकत्ववत् पूर्णानन्दैश्वर्यवीर्यादयोपि धर्मास्तेषु प्रतीता भवेयुः, नचैवमस्ति, दुःखसम्भावनायां प्रभुमेव प्रार्थयन्ति यतः, एवं सति व्यापकत्वमपि न वक्तुं शक्यम्, तुल्यत्वात्, अत उत्तरं पठति ।

---

भाष्यप्रकाशः ।

इति शङ्केति । लीलासम्बन्धिपदार्थाव्यापकत्वकृता शङ्का । तथात्वादिति । व्यापकत्वात् । तथाच तेपि व्यापका एव । परिच्छिन्नत्वप्रतीतिस्तु तेन तेन प्रकारेण ततस्ततो मायापसारणाद्विरुद्धधर्माश्रयत्वस्य साधितत्वाच्चेति न किमप्यनुपपन्नमित्यर्थः । तेन स्वरूपप्रधानस्य भक्तिमार्गीयस्य तत्तल्लीलासम्बन्धिनां भक्तादयो गुणाः सर्वेऽप्युपसंहरणीया इति बोधितम् ।

अन्ये त्वत्र छान्दोग्यवाजसनेयिकौशीतकिनां ज्यैष्ठ्यश्रैष्ठ्यादिगुणका प्राणविद्यैका, भिन्ना वेति संशये, भिन्नेत्याशङ्क्य, छान्दोग्यवाजसनेयिनोर्गुणाधिक्येपि रूपाभेदाद्विद्यैक्ये कौशीतकिनामपि वशिष्ठत्वादिगुणोपसंहारं सिद्धान्तयन्ति ।

तदस्मन्मते समाचारसूत्रे निरूपणप्रकारभेदस्य प्रायश्चित्ताद्यनुमापकत्वे उपसंहारानुगुण्यस्थापनादुपसंहारसूत्रेऽर्थाभेदकथनाच्च सिध्यतीत्युपेक्षितं बोध्यम् ॥ १० ॥

रश्मिः ।

विरुद्धा दिक् ययोर्भक्तयोः । भक्तिमार्गेति । भगवति मायाङ्गीकारो न भक्तिमार्गे । 'प्रवर्तते यत्र रजस्तमस्तयोः सत्त्वं च मिश्रं न च कालविक्रम' इति द्वितीयस्कन्धनवमाध्यायवाक्यात्, मायाङ्गीकारे भक्तिमार्गविरोधापातात् उभयोरन्यतरस्य मायया प्रदर्शने विनिगमकस्य प्रमाणस्याभावाच्चैकत्र माययेत्यादि । ब्रह्मणो व्यापकत्वादिति । सूत्राभ्यामित्युक्तम् । तत्र प्रथमसूत्रीयो निरासप्रकारः । अभेदादिति द्वितीयसूत्रीयो निरासप्रकारः । प्रकृते । तेन तेनेति । देशत्वेन कालत्वेन । उपलक्षणमेतत् । ततस्तत इति । आश्रयात् । भाष्ये । आविरिति । देशे इति योजनीयम् । आधुनिकभक्ते तु देशेन सहाविर्भवन्तीति ज्ञेयम् । 'अक्षरात्मकत्वे हृदयस्य जात' इति 'लीला च हृदये सदे'तिवाक्याभ्याम् । सर्वेति । सर्वशब्दान्नित्यलीलावादसुवर्णसूत्रोक्ता अष्टाविंशतिदोषास्तत्परिहाराश्च मत्कृतभक्तिमार्तण्डफलप्रकरणे योजिता अत्र ज्ञेयाः । 'अनागत'मिति वाक्यात् । प्रकृते । ज्यैष्ठ्येति । 'यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति प्राणो वै ज्येष्ठश्च श्रेष्ठश्चे'त्येवं ज्यैष्ठ्यश्रैष्ठ्यादिगुणका प्राणविद्या । गुणेति । वशिष्ठत्वादिगुणाधिक्ये । वशिष्ठत्वादीति । वाजसनेयकानां 'यो ह वै वशिष्ठं वेद वशिष्ठः स्वानां भवति'इति श्रुतिरत्र । आदिना 'यो ह वै प्रतिष्ठां वेद प्रतितिष्ठति स मे प्रतितिष्ठति दुर्गे चक्षुर्वै प्रतिष्ठा । यो ह वै सम्पदं वेद स१स्मै पद्यते यं कामं कामयते श्रोत्रं वै सम्प'दिति । एवं वशिष्ठत्वादिगुणोपसंहारम् ॥ १० ॥

नन्वित्यादीति । तेषु भक्तेषु । प्रार्थयन्तीति । यथा श्रीगोवर्धनप्रसङ्गे आसारपीडिताः प्रार्थयन्ति स्म ।

---

१. नेति नास्ति ।

## आनन्दादयः प्रधानस्य ॥ ११ ॥

पूर्णानन्दैश्वर्यादयः प्रधानस्य धर्मिणो ब्रह्मण एव धर्माः । लीलापदार्थास्तु ब्रह्मधर्मत्वेन व्यापका उच्यन्ते । व्यापकस्य धर्मिणोऽनागन्तुकधर्मस्य व्यापकत्वनियमात् । न हि धर्मेषु पूर्णानन्दत्वादयः सम्भवन्ति । धर्मित्वापत्त्या धर्मत्वव्याहतेः । अत एवात्र प्रधानपदमुपात्तम्, गुणभावेन लीलापदार्थानामाविर्भाव इति ज्ञापयितुम् ॥ ११ ॥

---

भाष्यप्रकाशः ।

आनन्दादय प्रधानस्य ॥ ११ ॥ अग्रिमसूत्रमवतारयन्ति नन्वित्यादि । व्याकुर्वन्ति पूर्णेत्यादि । व्यापकत्वनियमादिति । अयं नियम आकाशपरिमाण आत्मचेतनायां च स्फुटः । नच पूर्णानन्दैश्वर्याद्यभावे तेषु ब्रह्मत्वस्यौपचारिकत्वापत्तिरिति शङ्क्यम् । तत्र तदनाविर्भावेनैवोपपत्तेः । नच तत्र को हेतुरिति शङ्क्यम्, लीलेच्छाया एव तथात्वात् । नच तर्हि विशेषतो निर्वाच्यमिति वाच्यम् । विदिताविदितान्यत्वानिरुक्तत्वादिश्रुतिभिरेव तन्निवारणात् । ननु तथापि संशयो न निवर्तते इति चेत्, न निवर्ततां नाम, तथापि 'भिद्यते हृदयग्रन्थि'रिति श्रुतेर्भगवद्दर्शनानन्तरमेव तन्निवृत्तेरिति यथाश्रुतमिति मन्तव्यमिति दिक् । स्वव्याख्यातस्यार्थस्य व्यासाशयगोचरत्वायाहुः अत एवेत्यादि । एतेन तेषु स्वरूपानन्दांशभूतजैवानन्दसत्त्वेपि भगवद्दानेन तद्धर्मांशभूतानां भजनानन्दैश्वर्यादीनां तेषु प्राकट्येपि न गुणभावनिवृत्तिरित्यपि ज्ञापितम् । अयमेवार्थः पुष्टिप्रवाहमर्यादायां 'स्वरूपेणावतारेणे'त्यादिकारिकासूक्त इति बोध्यम् । तेन भगवदसाधारणनिरङ्कुशजगत्कर्तृत्वादयः सर्वेशितृत्वादयश्च भक्तेषु नोपसंहर्तव्या इति बोधितम् । एवं त्रिसूत्र्या भक्तिप्रकरणीया भगवद्धर्मा विचारिताः ॥ ११ ॥

रश्मिः ।

आनन्दादयः प्रधानस्य ॥ ११ ॥ पूर्णेत्यादीति । धर्मिण इति । प्रधानादिशब्दाः परवाचकाः । प्रस्थानरत्नाकरे व्युत्पादितम् । अतो न योगरूढ्या त्रिगुणवाचकत्वम् । आकाशेति । आकाशो व्यापकः । अनागन्तुको धर्मः परममहत्परिमाणम् । एवं आत्मा व्यापकः । चेतनानागन्तुको धर्मः । 'सोऽश्नुत' इति श्रुतौ भक्तप्राधान्यमुक्तं तत्समाधानायाहुः एतेनेति । तेष्विति । भक्तेषु । स्वरूपेति । 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'ति श्रुतेः । जैवानन्दे सर्वात्मभावोपि निविष्ट इति तमनुसन्धायाहुः भगवद्दानेनेति । तद्धर्मेति । स्वानन्दधर्मांशभूतानाम् । सर्वात्मभावव्यापारकेण भगवद्दानेन प्रकटानां भजनानन्दैश्वर्यवीर्यादीनां तेषु प्राकट्येपि 'युक्तं भगैः स्वैरितरत्र चाध्रुवै'रिति वाक्यात्प्राकट्यम् । अपिशब्दात् 'सोऽश्नुत' इत्युक्तस्वातन्त्र्ये स्वाभाविकगौणभावनिवृत्तिर्नेत्यर्थः । भक्तीति । भक्तिमार्गस्य स्वप्राप्त्यर्थं कृतत्वात्तद्वैयर्थ्यपरिहाराय प्रकटितेषु बाल्यपौगण्डादिषु नवधाभक्तिसूपयोगिषु तिरोहितेषु च विश्वरूपप्रदर्शनाध्यायोक्तधर्मेषु । पूर्वसूत्रे सच्चिदानन्दत्वं समर्थितम् । द्वितीयसूत्रे लीलापदार्थानां व्यापकत्वसमर्थनेन 'नैभिन्त्यं वाचि पूर्वव'दिति सुबोधिनीकारिकाया माहात्म्यज्ञानप्राकट्यात्तृतीयसूत्रे लीलानां गौणभावेनाविर्भाव इति भक्तिप्रकरणीया इत्यर्थः । प्रकरणं तामसम् । तत्रापि प्रमाणप्रकरणे टिप्पण्यां 'रक्षां चक्रुः सशङ्कते'त्यस्य सुबोधिन्याः ॥ ११ ॥

## प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥

ननूपासकस्य प्रियत्वादिप्रकारकज्ञानक्रममादाय प्रियत्वादिधर्माणां शिरस्त्वादिरूपत्वमानन्दमयाधिकरणे निरूपितमिति लीलास्थानामपि प्रियत्वादिज्ञानस्य सत्त्वात्त्रापि स्वरूपोपासकस्य प्रियशिरस्त्वादिधर्माणामुपसंहारः कार्य इत्याशङ्क्य परिहरति प्रियशिरस्त्वाद्यप्राप्तिरिति । चित्तशुद्धितारतम्यहेतुकं प्रियत्वादिज्ञानं लीलास्थानां चित्तशुद्ध्यपेक्षाऽभावान्न सम्भवतीति न तेषामत्रोपसंहारः कार्य इत्यर्थः ।

भाष्यप्रकाशः ।

प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥ आनन्दमयविद्यायामानन्दादयो धर्मा ब्रह्मासाधारणा इति सिद्धम्, तत्प्रसङ्गेन तद्विशेषणानि विचारयतीत्याशयेन सूत्रमवतारयन्ति ननूपासकस्येत्यादि । उक्तत्रिसूत्र्यां साकारत्वव्यापकत्वादयो भक्तसाधारणाः, पूर्णानन्दैश्वर्यादयस्तु भगवदसाधारणा इति भगवद्धर्मरूपेषु भक्तेषु न त इति स्थितम् । तथा सत्यानन्दादय इव प्रियशिरस्त्वादयोपि तत्र पठितत्वात् तदसाधारणा इति प्रियादीनां शिरस्त्वादिरूपत्वमानन्दमयाधिकरणे अन्नमयादिषूपासनाकथनेनोपासकस्य ज्ञानक्रममादाय निरूपितम् । तेन लीलास्थानां भगवति प्रियत्वादिज्ञानस्य सत्त्वात्, भक्तिमार्गीयोपासने तेषां पुरुषविरुद्धत्वभानेऽप्यसाधारणत्वात् प्रियत्वादिषु शिरस्त्वादिके अधिके श्रौतत्वाद्भाविते दोषाभावात् तेषामुपसंहारः कार्य इत्याशङ्क्य परिहरतीत्यर्थः । सूत्रं तात्पर्यकथनमुखेन व्याकुर्वन्ति चित्तशुद्धीत्यादि । अत्र प्रधानस्येतिपदं पूर्वसूत्रादनुवर्तते । तथा च चित्तशुद्धितारतम्येन भासमाने प्रधानस्य भेदे, हि यस्माद्धेतोः, उपचयापचयौ प्रमोदमोदरूपावानन्दोपचयापचयावुपासकस्य भासेते, लीलास्थानां तु ब्रह्मतादात्म्यस्य पूर्वाधिकरण उक्तत्वात् तादृशां चित्ते तारतम्यभानस्य कुत्राप्यनुक्तत्वात्तदभावेन भगवति तदवयवेषु च यत् प्रियत्वादिज्ञानम्, तन्निरुपधिस्नेहहेतुकम्[1] । न चित्तशुद्धितारतम्यहेतुकम् । अत उपासकज्ञानक्रममादाय श्रुतौ निरूपितानां प्रियशिरस्त्वादीनामप्राप्तिः, प्राप्तिरेव न सम्भवतीति भक्तिमार्गे तदनुसारिणा स्वरूपोपासकेन तेषामुपसंहारो न कार्य इत्यर्थः ।

रश्मिः ।

प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥ भक्तेति । भक्तेष्वपीति भक्तसाधारणाः । भगवदिति । भक्तेष्वदानदशायामसत्त्वादसाधारणाः । सांकर्याभावायोक्तम् । तदसाधारणा भगवदसाधारणाः । प्रियत्वादीति । भाष्ये प्रियत्वादिप्रकारकज्ञानस्येत्यत्र ज्ञाने प्रियत्वादेः प्रकारस्य प्रियद्वारकत्वेन साक्षाज्ज्ञानं प्रियत्वादेरुक्तम् । आशङ्काग्रन्थत्वाद्वा । भक्तिमार्गीयेति । एकादशसुबोधिन्या'मुप समीपे स्थित्वा यथायोग्यकरणस्योपासनालक्षणत्वम्', अत्र तु मनोव्यापारविशेष उपासना । चित्तेति । उपासनानां चित्तशुद्धिहेतुत्वं पूर्वमुक्तम् । तारतम्यं संशयभ्रमप्रमाजनकत्वेन । प्रधानस्य स्वावयवैस्तामसचित्तेन भेदे भासमान इत्यर्थः । पूर्वेति । आनन्दमयाधिकरणे । तारतम्याभावेपि नित्यक्रीडास्थानां सात्त्विकतामसज्ञानं फलप्रकरणस्थानामिवाहुः भगवति तदवयवेषु चेति । भगवत्त्वेन ज्ञानं सात्त्विकम्, एकत्वेन ज्ञानात् । अवयवित्वेनावयवज्ञानं तामसम् । अस्यावयवा इति भेदवत्त्वेन ज्ञानात् । प्रियत्वादिज्ञानमिति । सिद्धान्त-

1. तेषामिति मूले पाठः ।

अथवा । नन्वानन्दमयोपासनामथर्वणोपनिषदुक्तपञ्चरात्राद्यागमोक्तप्रकारेण कुर्वतः पुरुषरूपे पक्षाद्युपसंहारस्यायुक्तत्वादानन्दमयाधिकरणे तद्रूपस्यैवोक्तत्वात् पुरुषरूपः कथमानन्दमयः । तथात्वे वा कथं नोक्तोपसंहारः । अपरं च । मोदप्रमोदयोरुपचितानुपचितानन्दरूपयोर्युगपत्सत्त्वेन देशभेदेनापि भिन्नत्वान्नित्यानन्दैकरसे ब्रह्मणि तादृशरूपकथनमनुपपन्नमित्याशङ्क्य परिहरति प्रियशिरस्त्वादीति । यद्यथर्वणोपास्यात् प्रियशिरस्त्वादिविशिष्टस्य भेदः स्यात्, तदा तदप्राप्तिः स्यात्, नच तथेति प्रियशिरस्त्वादिकमुपासनामार्गीयस्याथर्वणिकादेरुपसंहार्यमेवेत्यर्थः । चित्तशुद्धितारतम्यहेतुकं प्रियत्वादिज्ञानमिति पक्षे

भाष्यप्रकाशः ।

अस्मिन् पक्षे उपासनामार्गीयस्य तदुपसंहारपक्षोऽर्थादेवायाति, तथाप्यानन्दमयवाक्येऽथर्वणोपनिषदि च सदानन्दत्वस्योक्तत्वादुभयप्राधान्येनोपासकस्य निर्णयो न सिध्यतीत्यतः सूत्रं प्रकारान्तरेण व्याख्यातुमवतारयन्ति अथवेत्यादि । उक्तविधस्योपासकस्य पुरुषरूपविरुद्धपक्षाद्युपसंहारस्यायुक्तत्वादानन्दमयवाक्ये च पुरुषस्य विधामात्रमेव गृहीतम् । तच्च स्त्रीत्वव्यवच्छेदार्थत्वेनापि युज्यते इति पक्षिरूपस्यैवोक्तत्वात् पुरुषरूपः कथं सः । अतः सोपासना एतदुपनिषदुक्तरूपेण न युक्ता । अथ ब्रह्मत्वस्याविशिष्टत्वादेतदुपनिषदुक्तस्याप्यानन्दमयत्वेऽत्रापि पक्षिरूपस्य सत्त्वात् कथं न पक्षाद्युपसंहार इत्येका शङ्का । अपरं चेत्यादिनोक्ता मिथ्यावादिकृता द्वितीया । देशभेदेनेति । दक्षिणोत्तरभेदेन । तादृशरूपकथनमिति । भेदयुक्तरूपकथनमानन्दमयवाक्येऽनुपपन्नमित्यर्थः । सूत्रं व्याकुर्वन्ति यदीत्यादि । तथाचास्य सूत्रस्य तर्कगर्भत्वेनापि व्याख्यातुं शक्यत्वात्, वाक्यद्वयेप्युक्तस्य ब्रह्मण ऐक्येन विरुद्धधर्माश्रयत्वेन च पूर्वाशङ्कोक्तस्योभयरूपत्वस्य पक्षिरूपत्वस्य वा अदुष्टत्वादुपासकस्यात्र तदुपसंहारो न दुष्ट इति भावः । ननु

रश्मिः ।

रीत्यात्रैव पूर्वमुपपादितम् । उपासकेति । ज्ञानक्रममत्र प्रियत्वादिमात्रविषयकज्ञानक्रमम् । विभूतित्वादन्येषाम् । प्राप्तिरेवेति । प्राप्तिर्नैव संभवतीत्यन्वयः । भाष्ये एवकारार्थस्य प्रतियोगित्वाभावात् । निर्णय इति । नच निषेधमुखेन निर्णय इति शङ्क्यम् । पक्षिरूपेणोपासनामार्गीयो निर्णयो नेत्याशयात् । उक्तविधस्येति । नन्वित्यादिभाष्योक्तविधस्य । आनन्दमयाधिकरण इत्यादिभाष्यविवरणं आनन्दमयवाक्ये इति । सामान्यप्रकारकजिज्ञासाया विशेषप्रकारकजिज्ञासाजनकत्वाद्व्याख्यानम् । 'आत्मैवेदमग्र आसीत्पुरुषविध' इति वाक्ये 'को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्या'दिति विषयवाक्ये । विधा तु 'अन्वयं पुरुषविध' इति श्रुतौ । अयं प्रकाशः पक्षिरूपस्यैवेति भाष्यीयैवकारव्यवच्छेद्यार्थः । पक्षिरूपस्यैवेति तद्रूपस्यैवेतिभाष्यव्याख्यानम् । एतदिति । तैत्तिरीयोपनिषदुक्तानन्दमयरूपेण । अविशिष्टेति । अथर्वणोपनिषदि मुण्डके 'आनन्दरूपममृतं यद्विभाति' । पञ्चरात्रागमे 'आनन्दमात्रकरपादमुखोदरादिः' । आदिना मन्त्रशास्त्रागमः तत्रत्यानन्दः । अत्र स्तुत्या मयडर्थत्वं बोध्यम् । एवं तैत्तिरीयानन्दमयादवशिष्टत्वात् । अत्रोक्त इति । आथर्वणपञ्चरात्रोक्तः । अत्रापीति । आथर्वणपञ्चरात्राद्युक्तेषु पुरुषविधानन्दमयेषु पक्षिरूपस्य निषेधाभावेन सत्त्वात् । तर्केति । अन्यथाज्ञानं तर्कः । वाक्येति । आथर्वणे पञ्चरात्राद्युक्ते च । उक्तस्येति ।

१. यद्यपि । अथर्वणोक्तोपास्यात् । २. उपासनामार्गीयस्यापीतिपाठः ।

परोक्षवादपक्षेऽपि तत्र भेदाभावान्मोदप्रमोदयोर्न त्वदुक्तरूपत्वमित्यर्थः । ब्रह्मधर्मा एव भिन्ना इत्युपासनार्थं तानादाय शिरःपाण्यादि निरूप्यत इति तत्रैव निरूपितमस्माभिः । यत्रप्यानन्दमयाधिकरण एवास्यार्थस्योक्तत्वान्नेयं शङ्का सम्भवति,

भाष्यप्रकाशः ।

मोदप्रमोदयोरुक्तरूपत्वे भेदस्तु सिद्ध एवेति कथं तदभाव इत्यत आहुः चित्तेत्यादि । अपिः समुच्चये । तथाच मान्त्रवर्णिकसूत्रव्याख्याते मोदप्रमोदयोः परिनिष्ठितापरिनिष्ठितानन्दपक्षे । तयोस्तादृशत्वज्ञानस्य चित्तशुद्धितारतम्यहेतुकत्वेन स्वरूपाभेदकतया ब्रह्मणि भेदाभावात्तथा । 'वस्तुतस्तु परोक्षवादोऽय'मिति प्रतिज्ञाय, 'तत्र निरुपधिप्रीतिरेव मुख्ये'त्यादिना व्युत्पादिते परोक्षवादपक्षे च रसात्मके स्वरूपे तदात्मका एव भावा भक्तानां हृदि तथा स्फुरन्तीति तादृशप्रतीतेस्तद्भावहेतुकत्वेन रसरूपे ब्रह्मणि भेदाभावान्मोदप्रमोदयोर्नोपचयापचयरूपत्वमिति । अयं अर्थः सूत्रतात्पर्यम् । तथाच भेदाभावाद्यथा सङ्कर्षणस्वरूपोपवर्णने 'किरीटसाहस्रमणिप्रवेकप्रोद्योतितोद्दामफणासहस्र'मितिवदुचित उपासनामार्गीयस्य तदुपसंहारः, भक्तिमार्गीयस्य तु परोक्षवादोक्तरीत्या प्रियत्वादेरेवोपसंहार इति भावः । ननु मा भूतामानन्दोपचयापचयौ स्वरूपनिष्ठौ, तथापि प्रियादीनां शिरस्त्वादिभावनं तु विरुद्धमेवेति कथं तदुपसंहार्यमित्यत आहुः ब्रह्मेत्यादि । तत्रैव निरूपितमिति । तस्मिन्नेव वर्णके 'पुरश्चक्रे द्विपद' इति श्रुतिविचारे 'भक्तानामलौकिकदेहस्थित्यर्थमन्नमयादिरूपस्तत्र तत्र प्रविशति, जीवे त्वानन्दमय' इति निरूपितम् । तथाच जीवे पक्षिरूपेण प्रविशतोऽवयवा भिन्ना एव, ते जीवस्य यथाधिकारं प्रियादिरूपेण भासन्त इत्युपासनायां त

रश्मिः ।

तैत्तिरीयोक्तस्यान्वयपुरुषविधस्य पक्षिरूपस्य ब्रह्मणः पूर्वतन्त्रद्वितीयाध्यायोक्तदर्शपूर्णमासाभेदवदैक्येन । पूर्वेति । भाष्ये पूर्वाशङ्कोक्तस्य । तदभाव इति । भेदाभावो ब्रह्मण उभयत्र । परिनिष्ठितेति । ब्रह्म विपश्चित् । 'मान्त्रवर्णिकसूत्रव्याख्यात' इत्युक्तत्वात् । 'मोदः पक्षः प्रमोदः पक्षः' । अत्र विपश्चित्त्वं विविधभोगचतुरत्वम् । इत्थं च पुरुष आनन्दमय इति मोदप्रमोदाभ्यां भोगः । पक्षी आनन्दमयः । इति पक्षाभ्यां भोग इति उभयपक्षे । तयोरित्यादि । मोदप्रमोदयोः तादृशत्वं तौ पक्षाविवेमौ मोदप्रमोदौ पश्यन्ति जनाः इति व्युत्पत्त्या सिद्धं महाभाष्ये । रूढोयं शब्द इति मनोरमायाम् । तस्य ज्ञानं तस्य 'मनसैवानुद्रष्टव्य'मिति श्रुतेश्चित्तस्य शुद्धिः सात्त्विकत्वादिः तत्तारतम्यं तद्धेतुकत्वेन ब्रह्मणि सात्त्विकचित्तेन गृहीते भेदाभावात् । तदुक्तं गीतायामष्टादशाध्याये 'सर्वभूतेषु येनैकं भावमव्ययमीक्षते । अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विक'मिति । अधुना परोक्षवादे तत्रानन्दमये भेदाभावात् इति भाष्यं विवृण्वन्ति स्म वस्तुतस्त्विति । विपश्चित्सूर्यः सूर्यविपश्चित्त्वकारणं विपश्चित्त्वस्याधोक्षजेऽनिश्चयाद्वस्तुतः पक्षः । 'परोक्षवादो वेदोयं परोक्षं च मम प्रिय'मिति वाक्यात् । व्युत्पादित इति । आनन्दमयाधिकारणे व्युत्पादिते । परोक्षवादपक्षे चेत्यत्र चकाराध्याहारः, अपेः पूर्व व्याख्यानात् । रसात्मक इति । दशरसात्मके । उपबृंहणसिद्धत्वात् । तथेति । अभिन्नत्वेन । तदर्थ इति । परोक्षवादे च तत्र भेदाभावादिति भाष्यार्थः । सूत्रस्य तात्पर्यं तत्प्रतीतीच्छयोच्चरितत्वम् । तेनेति शेषः । अयमर्थ इति पाठः तदर्थ इत्यत्र मूलपुस्तके । सङ्कर्षणेति । तृतीयाष्टमाध्यायेस्ति । स्वरूपं 'यं वासुदेवाभिधमामनन्ती'त्युक्तम् । तदुपेति । पक्षिरूपत्वोपसंहारः । ब्रह्मेत्यादीति । एवकारोऽवयवयोगव्यवच्छेदकः । तानिति । भिन्नान् शिरस्त्वादिधर्मान् । तस्मिन्नेवेति । आनन्दमया-

तथापि गुणोपसंहारप्रसङ्गे मिथ्यावादिन आपाततः शङ्का सम्भवतीत्याचार्येणोक्त्वा निरस्ता ॥ १२ ॥

ननूपास्यरूपस्याविरुद्धा एव गुणा उपसंहर्तव्याः, न तु विरुद्धाः, तथाच पुरुषरूपे पक्षादि विरुद्धमिति न तदुपसंहार्यमित्याशङ्क्याह।

इतरे त्वर्थसामान्यात् ॥ १३ ॥

इतरे पुरुषरूपे विरुद्धत्वेन ये भासमाना धर्मास्तेऽप्युपसंहर्तव्याः, तत्र विरोधव्यवच्छेदज्ञापनाय तुशब्दः। तत्र हेतुरर्थसामान्यादिति। अर्थः पदार्थ आनन्दमयत्वलक्षणस्तस्य समानत्वादेकत्वादित्यर्थः ॥ १३ ॥

---

भाष्यप्रकाशः।

उपसंहार्याः। भक्तिमार्गीयस्य तु तेषु भेदभानात् तेन तत्र नोपसंहार्या इति पूर्वोक्ताधिकारनियता वर्णकद्वयसिद्धा व्यवस्थेत्यर्थः। ननु यद्यानन्दमयाधिकरणे अयमर्थः सूत्रकारेण सूचितः स्यात्, पुनरत्र किमिति वदेदित्याशङ्कायामाहुः यद्यपीत्यादि। इयमिति। मोदप्रमोदविषयिणी। तथाचैतदर्थं पुनः कथनम्। अतो न दोष इत्यर्थः ॥ १२ ॥

इतरे त्वर्थसामान्यात् ॥ १३ ॥ नन्वेवं पक्षद्वयस्वीकारे को हेतुरित्याकाङ्क्षायां इतरादिसूत्रत्रयप्रणयनमेव हेतुरिति सूचयन्तः पूर्वमुपसंहारपक्षे हेतुं वदतीत्याशयेनावतारयन्ति ननूपास्येत्यादि। व्याकुर्वन्ति इतर इत्यादि। ननूपसंहारसूत्रे एवायं हेतुः सिद्ध इति पुनः कथनस्य किं प्रयोजनमत आहुः तत्रेत्यादि। तत्रेति। परस्वरूपे। तत्रेति। उपसंहारे। तथाच ब्रह्मत्वप्राधान्येनोपासने सम्बन्धि ब्रह्मैव। सदानन्दप्राधान्येनोपासनेपि 'तयोरैक्यं परं ब्रह्मे'ति वाक्याद्भक्तेर्गौणत्वाच्च सम्बन्धि ब्रह्मैव, पुरुषत्वादिकं तु न प्रधानम्, अतस्तस्योपसंहारनियामकमित्येतत्स्मारणाय तदुक्तिरित्यर्थः ॥ १३ ॥

रश्मिः।

धिकरणे तस्मिन्नेव वर्णक इत्यर्थः। अवयवेति। अवयवाश्च तेऽभिन्नाः। एवकारः शिरस्त्वादिधर्मव्यवच्छेदकः। यथाधीति। सात्त्विकादिचित्तकत्वाद्यनतिक्रम्य। अव्ययीभावः। त इति। भिन्नाः शिरस्त्वादिधर्माः। भेदभानादिति। 'अन्तरा भूतग्रामव'दिति सूत्रे वक्ष्यमाणभेदभानात्। 'भक्त्या जानाति चाव्यय'मिति श्रुतेर्वार्थो भेदः। 'अविभक्तं च भूतेषु विभक्तमिव च स्थित'मिति ब्रह्मस्वरूपपरगीतायाः। तेनेति। तेन भक्तेन। तत्र पुरुषोत्तमे। पूर्वोक्तेति। 'नवे'ति सूत्रवर्णकोक्ताधिकारनियता। न दोष इति। पुनरुक्तिदोषो न ॥ १२ ॥

इतरे त्वर्थसामान्यात् ॥ १३ ॥ पक्षद्वयेति। पुरुषरूपे पक्षिरूपोपसंहारानुपसंहारपक्षद्वयस्वीकारे। 'स वयाऽस्सृजते'ति तृतीयाष्टके पुरुषविधान्वयस्य पक्षिस्रष्टृत्वोक्तेरेकरूपस्य हयग्रीवावतारवदविरुद्धत्वात्। अर्थाभेदस्य भेदप्रतिबध्यत्वादस्य हेतोर्भेदरूपप्रतिबन्धकप्रतिबन्धकत्वेनोत्तेजकत्वाद्धेत्वन्तरमित्याहुः। तथाचेति। अस्ति पुरुषान्वयपक्ष्यैकत्वम्, परन्तु तत्र पुरुषो ब्रह्मा तृतीयाष्टके 'प्रजापतिरकामयते'त्युपक्रम्य 'स वयाऽस्सृजते'त्युक्तेः। तथाच ब्रह्मस्वे ब्रह्मा स्वं आत्मा यस्य पक्षिणस्तस्मिन् पक्षिणि लीलानां गौणभावेन धर्मिणः प्राधान्येनोपासने सम्बन्धी अन्वयी ब्रह्मा प्रजापतिरेव, नतु अन्यः। पुरुषत्वादिकं लीलारूपमप्रधान'मानन्दादयः प्रधानस्ये'ति सूत्रभाष्यादतः ब्रह्मप्रजापत्योरभेदात्। 'ब्रह्मन्पुंसि चे'ति सूत्रात्। तत् अव्ययम्। सः अर्थाभेदो न उपसं-

अथानन्दमयाधिकरण उक्तप्रकारेण ये प्रियत्वादिधर्माः, तेषामेवोपसंहारः कार्यः, न तु पुरुषरूपे पक्षादीनामपीत्यग्रिमं पठति।

**आध्यानाय प्रयोजनाभावात्॥ १४॥**

आनन्दस्वरूपस्य यावन्तो धर्मा भक्तिमार्गीयाः परोक्षवादेन उच्यन्ते प्रियत्वप्राधान्यादयः, तेषां सर्वेषां ध्यानमासमन्तात् ध्यानम्, तदर्थं ये धर्मा उपयुक्ताः, त एवोपसंहर्तव्याः, नान्ये। तत्र हेतुः। प्रयोजनाभावादिति। ध्यानपदार्थस्य तावद्भिरेव सिद्धेरधिकोपसंहारे तथात्वादित्यर्थः॥ १४॥

---

भाष्यप्रकाशः।

आध्यानाय प्रयोजनाभावात्॥ १४॥ तर्हि भक्तिमार्गेपि परस्यैवोपास्यत्वात् तत्र कुतो नोपसंहार इत्याकाङ्क्षायामनुपसंहारपक्षे हेतुं वदतीत्याशयेनावतारयन्ति अथेत्यादि। उक्तप्रकारेणेति। परोक्षवादोक्तरीतिकरसात्मकतया। एतस्य पदस्य उपसंहारः कार्य इत्यनेनान्वयः। सूत्रं व्याकुर्वन्ति आनन्देत्यादि। ध्यानपदार्थस्येति। भक्तिमार्गीयस्य तस्य। शेषस्तु निगदव्याख्यातः॥ १४॥

रश्मिः।

हारनियामकः। अर्थाभेदस्य हेतोर्नामरूपसूत्रोक्तप्रकरणाधिकारकृतभेदप्रतिबध्यत्वादस्य हेतोर्भेदरूपप्रतिबन्धकस्य प्रतिबन्धकत्वेनोत्तेजकत्वात्। तदुक्तिरिति। अर्थाभेदभिन्नस्यार्थसामान्यरूपस्य हेतोरुक्तिः। यथा घटपटकुड्यकुसूलानि अर्थसामान्यहेतुशून्यानि तत्र द्रव्यत्वेनाभेदात् परस्परमुपसंहारः प्राप्तः नामरूपादिभेदेन प्रतिबद्धो न भवति। यत्र तु नीलो घटो द्रव्यमित्यत्राप्यर्थाभेदो-भेदप्रतिबध्योऽर्थसामान्यरूपोत्तेजकहेतुमति। परस्परमुपसंहारः नामरूपादिभेदकेन न प्रतिबद्धो भवति। तथा रामोपनिषदि राममत्स्यकच्छपा अर्थसामान्यरूपहेतुशून्यास्तत्र नामरूपादिभेदेन प्रतिबद्ध उपसंहारो न भवति। यत्र तु वासुदेवसङ्कर्षणपक्षिपुरुषहयग्रीवेष्वर्थसामान्यहेतुमत्सु अर्थाभेदः भेदप्रतिबध्यः उत्तेजकविशिष्ट इति सिद्धम्। भाष्ये। आनन्देति। पूर्वतन्त्रे आकृतौ शक्तेः॥ १३॥

आध्यानाय प्रयोजनाभावात्॥१४॥ तर्हीति। अन्यथात्वसूत्रे उपासनाप्रसङ्गे विरुद्धधर्माश्रयत्वस्योक्तत्वादुपासनाकाले। अथेत्यादीति। भिन्नप्रक्रमेऽथशब्दः पुरुषोत्तमविचारात्। तेन बाध्यबाधकभावोत्तेजकमपीयदवधि। कार्य इति। वेदत्वात्कार्यः। इत्यग्रिममिति। इति हेतोरनुपसंहारार्थमग्रिमं सूत्रं पठतीत्यर्थः। एतस्येति। नच वक्ष्यमाणभाष्यविरोधः। उपसंहारेपीदं करणमिति करणान्तरनिषेधपरत्वात्। आनन्देत्यादीति। 'आनन्दादयः प्रधानस्ये'ति सूत्रमनुवर्तते। आनन्दादय इत्यस्य विभक्तिविपरिणामेनान्वयः। आनन्दादीनामिति। प्रधानस्येत्यस्यार्थः आनन्दस्वरूपस्येति। रसरूपत्वस्य मोदप्रमोदाभ्यां सिद्धेः किमिति प्रश्नः। प्रियविषयकेत्यादीति। सर्वेषामित्यन्तेन भाष्येणानन्दादीनामित्यस्यार्थः। उपसंहर्तव्या इति। उपसंहारसूत्रादुपसंहारोप्यनुवर्तते इति भावः। यथासम्भवमन्वयः। भक्तिमार्गीयस्येति। ज्ञानमार्गे सर्वतः पाणिपादादीनां ध्याने प्रकृतोपयोगाभावेन विशेषणम्। अङ्गोपासनाप्रक्रमाद्ध्यानमुक्तम्। एकैकाङ्गेषु मनोनिवेशनस्य ध्यानत्वात्। द्वितीयस्कन्धेऽवताराणामप्यङ्गत्वोक्तेः। यथा हास्यं राम इति॥ १४॥

अन्येषामनुपसंहारे हेत्वन्तरमप्याह ।

आत्मशब्दाच्च ॥ १५ ॥

'प्रियमेवे'त्यादिना परोक्षवादेनोक्तानां प्रियप्राधान्यादीनामेव भावना कार्या, न तु यथाश्रुतानां शिरःपक्षादीनाम् । तेषामविवक्षितत्वात् । तत्र हेतुरात्मशब्दादिति । 'आनन्द आत्मे'त्यनेन पूर्वोक्तानां प्रियप्राधान्यादीनां रसात्मकानामात्मा स्वरूपमानन्द इत्युक्तम् । अग्रे 'रसो वै स' इति वक्ष्यमाणत्वात् तस्य च स्थायिभा-

भाष्यप्रकाशः ।

आत्मशब्दाच्च ॥ १५ ॥ सूत्रमवतारयन्ति अन्येषामित्यादि । ननु प्रयोजनाभावेपि ब्रह्मस्वरूपपरताया अविशिष्टत्वात् पक्षाद्युपसंहारे को दोष इत्याकाङ्क्षायां हेत्वन्तरमप्याहेत्यर्थः । व्याकुर्वन्ति प्रियमेवेत्यादि । तत्र हेतुरिति । अविवक्षितत्वे हेतुः इत्युक्तमिति । तस्मादिति शेषः । तथाच यथाश्मये इदमा परिदृश्यमानबोधनाल्लौकिकदृष्टौ पक्षादीनामविवक्षितत्वम्, तथात्र आनन्दपदसमभिव्याहृतेनात्मपदेन प्रियादिस्वरूपस्यानन्दत्वेन बोधनाद्भक्तिदृष्टौ पक्षादीनामविवक्षितत्वमेव दोष इत्यर्थः । न च समाचारसूत्रे अधिकारभेदस्यानुपसंहारनियामकत्वेन सिद्धत्वात् तेनैव तत्सिद्धावेतयोः सूत्रयोः किं प्रयोजनमिति शङ्क्यम् । समाचारसूत्रोक्तानां निरूपणप्रकाराधिकारसम्बन्धिनामानन्दमयविद्यायामैक्यात् तद्भेदकृतानुपसंहारस्य भक्तिमार्गीयोपासने वक्तुमशक्यत्वात् तदर्थमेतयोर्हेत्वोः सूत्रकृता निर्देशात् । नन्वाकारपूरकावयवप्रायपाठे प्रविष्ट आत्मशब्द आकारे तात्पर्यरहित इत्यत्र किं मानमित्यत आहुः अग्र इत्यादि । आनन्दमयविवरणे 'आत्मानं स्वयमकुरुते'त्यादिना आत्मन एव प्राकट्ये 'रसो वै स' इति रसरूपताया वक्ष्यमाणत्वात् रसस्य च निरुपधिप्रियात्मरूपस्थायिभावात्मकत्वात् तस्यैव परस्यात्मनो विवरणाय प्रपाठकप्रवृत्त्या

रश्मिः ।

आत्मशब्दाच्च ॥ १५ ॥ अप्याहेति । नामभेदादिः प्रतिबन्धकोपिपदार्थः । अधोक्षजत्वं च प्रतिबन्धकम् । उपासनाऽविषयत्वं च प्रतिबन्धकम् । प्रियमेवेत्यादीति । 'तस्य प्रियमेव शिर' इत्यत्र प्रियमेवेत्यादिः । आनन्दादय इत्यनुवर्तते । भावनेति । 'तस्माच्छ्रीकृष्णमार्गस्थो विमुक्तः सर्वलोकतः । आत्मानन्दसमुद्रस्थं कृष्णमेव विचिन्तये'दिति । 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मण' इति च । लौकिकेति । लौकिकपुरुषे वैराजत्वेन देवदत्तशिर एव शिरः द्यौरूपं दक्षिणोत्तरपक्षावन्तरिक्षरूपौ इदं चरणं पुच्छं परिदृश्यमानौ पादौ पृथिवीरूपाविति । दृष्टावित्यर्थः । भक्तिदृष्टाविति । प्रियमोदप्रमोदात्मब्रह्मसु प्रीतिः धर्मो भक्तिः मोदप्रमोदौ आनन्दविशेषौ भक्तेराधारौ (आनन्द) आनन्द आत्मा चाधारः ब्रह्म उद्दीपनं व्यभिचारि वा । ब्रह्मानन्दो भक्तेराधारः । एवं भक्तौ दृष्टौ । दोष इति । पक्षाद्युपसंहारे दोषः । अनेन रसात्मकानामिति प्रियप्राधान्यादीनां विशेषणं भाष्ये व्याख्यातम् । आत्मा स्वरूपमिति भाष्यमपि । आत्मा व्यापकः । स्वस्य रसस्य रूपमानन्द इत्यर्थकम् । आनन्देति । तैत्तिरीये तथा । रसरूपता दशरसरूपता । तस्य चेति भाष्यार्थमाहुः रसस्य चेति । निरुपधीति । फलदलाद्युपाधिशून्यः प्रिय आत्मा तेन विषयेण रूप्यते व्यवह्रियते या रतिस्तद्रूपस्थायिभावात्मकत्वात् । तस्यैवेति । रसस्यैव । शेषं पूरयन्त एवाभासोक्ताशङ्कां वारयन्ति स्म उपक्रमेति । उपक्रमोऽत्रात्मनो रसस्य च । आदिनानन्दमयत्वं तत् । तात्पर्ये । स्वेषां आकारपूरकावयवप्रायपाठे प्रविष्टत्वेप्यनाकारे तात्पर्ये लिङ्गं कारणं त्रिविधात्मप्रसिद्ध्या कारणम् । आत्मोप-

वात्मकत्वात्तस्यैवानन्दमयत्वाच्च । प्रियविषयकलीलामध्यपातिभक्तज्ञानप्रकाराणामपि रसात्मकत्वेनानन्दरूपत्वात् तेषामुपासना तूत्तमाधिकाराभावाच्छिरःपक्षादिरूपेण कार्येति भाववती श्रुतिस्तथा न्यरूपयत् । एतेन यत्परम्परासम्बन्धेऽप्युपास्यत्वं तदस्य महत्त्वं कियदवधि वाच्यमिति ज्ञाप्यते । एवं सत्युपासनामार्गीयोपास्यं विभूतिरूपम्, न तु मूलरूपम् । 'यन्न योगेने'ति वाक्यादिति ज्ञेयम् ॥ १९ ॥

इति तृतीयाध्याये तृतीयपादे प्रथमं सर्ववेदान्तप्रत्ययाधिकरणम् ॥ १ ॥

---

भाष्यप्रकाशः ।

तस्यैवानन्दमयत्वाच्चोपक्रमादिकं तात्पर्यलिङ्गमेव मानमित्यर्थः । नन्वेवं सति श्रुतौ पक्षादिरूपत्वं किमित्युक्तम्, अत आहुः प्रियविषयकेत्यादि । तथाच न सर्वथा तत्र निस्तात्पर्यः, अपि तु मुख्याधिकारिणः प्रति तथेत्यर्थः । ननूभयोः परस्वरूपपरत्वे तुल्ये कथमधिकारवैलक्षण्यावगतिरित्यत आहुः एतेनेत्यादि । आत्मपदस्यानन्दस्वरूप एव तात्पर्येण यत्परम्परासम्बन्धेपि पक्षादिविशिष्टानन्दमयस्योपास्यत्वम्, तस्य सम्बन्धिनो महत्त्वं कियदवधि वाच्यमिति तदग्रिमया 'यतो वाच' इति श्रुत्यापि ज्ञाप्यते । एवं तस्योत्कर्षे सति उपासनामार्गीयोपास्यं विभूतिरूपम्, न तु मूलरूपम् । 'यन्न योगेन सांख्येन दानव्रततपोऽध्वरैः । व्याख्यास्वाध्यायसंन्यासैः प्राप्नुयाद्यत्नवानपी'त्येकादशस्कन्धे भगवता केवलेन भावेन स्वप्राप्तिं प्रक्रम्येतरनिषेधकथनादग्रे च रसभाववतामेव प्रशंसाया उक्तत्वात् । तथाचैवंविधवाक्यैरेव वैलक्षण्यावगतिरित्यर्थः । एवं चतुःसूत्र्या प्रियशिरस्त्वादिधर्माणामुपसंहारानुपसंहारावधिकारभेदेन विचारितौ । एवञ्चात्र बोधसौकर्यार्थमवान्तराधिकरणव्यवस्था कृता । वस्तुतस्तु पञ्चदशसूत्रेणानेनाधिकरणेन विद्यैक्यवेद्यैक्ययोरुपसंहारहेतुप्रयोजनयोः परविद्यासु तद्बाधकपरिहारतद्व्यवस्थयोरानन्दादीनामसाधारणत्वेनानुप-

रश्मिः ।

निषद्युक्तरीत्याऽन्नमयो बाह्यात्मा, प्राणमयमनोमयावन्तरात्मा, विज्ञानमयानन्दमयौ परमात्मेति । तत्र स्वावयवरूपाकारेणापि विशिष्टः । ननु लिङ्गं कथं मानमिति चेत् । न । आत्मरसानन्दमयानां मानाधिदैविकत्वेन मानत्वात् । पक्षादिरूपत्वमिति । धर्मिणोऽक्षजत्वात् सोर्थो न कृतः । प्रियविषयकलीलामध्यपातिभक्तानां विज्ञानमयपदवाच्यानां विशब्देनोक्तानां विविधज्ञानरूपज्ञानप्रकाराणामपि मोदप्रमोदरूपपक्षात्मकरसात्मकत्वेनानन्दरूपत्वात् । उत्तमाधिकारः श्रीभागवतप्रथमस्कन्धे त्रयोदशाध्यायैरुक्तः । तथेति । पक्षादिरूपत्वेन । तृतीयाया लुक् । तत्रेति । पक्षादिरूपत्वे । निस्तात्पर्यो ग्रन्थः । तथेतीति । निस्तात्पर्यो ग्रन्थ इत्यर्थः । उभयोरिति । पुष्टिमार्गे विज्ञानमयानन्दमययोर्भक्तभगवतोः । परस्वरूपपरत्वे पुष्टिमार्गीयफलपरत्वे । यद्वा । स्वरूपपक्षादिविशिष्टयोः स्वरूपपरत्व आत्मपरत्वे इत्यर्थः । यत्परम्परेति । यदित्यव्ययं यस्येत्यर्थः । सम्बन्धिन इति । अध्याससम्बन्धिनोऽभेदसम्बन्धिनो वा । एवंसतीतिभाष्यं विवृण्वन्ति स्म एवं तस्येति । तस्येति । आनन्दमयस्य । उपासनामार्गीयेति । एतेन भक्तिमार्गीयं विज्ञानमयभक्तरूपोपास्यमपि ज्ञेयम् । तस्याध्यात्मिकादित्रितयविदाश्रयत्वात् । यन्नेति भाष्यं विवृण्वन्ति स्म यन्नेति । इतरेति । सत्सङ्गेतरस्याः स्वाध्यायो वेदस्तदुक्तोपासनाया निषेधकथनात् । रसभावेति । अधिकारिणाम् । एवंविधेति । उपास्यभजनीयप्रतिपादकैः । तथा चोपासना पक्षिविषया । भजनं रसरूपभगवद्विषयकम् । विद्यैक्येति । चतुःसूत्र्या प्रतिपादितयोः । उपसंहारेति । 'उपसंहारोऽर्थाभेदा'दित्यत्र । उपसंहारस्य हेतुः अर्थाभेदरूपः

---

१. तस्य ।

भाष्यप्रकाशः ।

संहारस्य प्रियशिरस्त्वादीनां व्यवस्थयोपसंहारस्य च निर्णयात्, सर्वप्रपञ्चातीतः सर्वमुपसंहृत्यैवमेकः कारणरूपश्च भवति, प्राणाख्यां च कलां सृजत इति बोधितम् ।

शङ्कराचार्यास्तु, अन्यथात्वादित्रिसूत्रेऽधिकरण उद्गीथविद्याम्, व्याप्तेश्चेत्येकसूत्रेऽधिकरणे च तदीयशेषम्, सर्वाभेदेत्येकसूत्रे च प्राणविद्याम्, आनन्दादय इति सूत्रे च ब्रह्मधर्माणामेवोपसंहारानुपसंहारौ विचार्य, आध्यानादिद्विसूत्रे 'इन्द्रियेभ्यः परा ह्यर्था' इत्यादिके, 'सा काष्ठा सा परा गति'रित्यन्ते काठकवाक्येऽर्थादीनां ततस्ततः परत्वप्रतिपादने प्रयोजनाभावात्, 'सा काष्ठा सा परा गति'रित्यनेन पुरुषविषयकादरप्रदर्शनाच्च तस्यैव परत्वं प्रतिपाद्यत इति सिद्धान्तमाहुः ।

भास्कराचार्या अप्येवमेव वदन्ति ।

तत्र परविद्याविचारं विहाय प्रथमत एवोद्गीथप्राणविद्याविचारे बीजं न पश्यामः । युक्तं तु परविद्यासु विचार्यमाणास्वानुषङ्गिकी तद्विचारस्यापि सिद्धिरिति । अतीतपादान्ते ब्रह्मण एव धर्माणां विचारात् । समन्वयेपि पूर्वमानन्दवाक्यान्येव विचार्य पश्चात् प्रतीकवाक्यविचारादिति । एवमाध्यानाधिकरणविषयवाक्येपि अर्थादीनामिन्द्रियादिभ्यः परत्वप्रतिपादनं न निष्प्रयोजनम् । तत्तद्बलिष्ठताप्रतिपादनस्यैव प्रयोजनत्वात् । अन्यथा विषयत्यागेन्द्रियनिग्रहयोरनास्थायां 'इन्द्रिये-

रश्मिः ।

समानं च । अन्यथात्वादित्रिसूत्र्योपसंहारस्य प्रयोजनं तादृक् तादृग्गुणविशिष्टत्वेनोपासनम् । एवमुपसंहारहेतुप्रयोजनयोरित्यर्थः । 'व्याप्तेश्चे'ति द्वाभ्यां सूत्राभ्यां परविद्यास्वक्षराधिगमयित्रीषु उपासनाबाधकं पौगण्डादिकम्, तस्य परिहारः 'सर्वतः पाणिपादान्त'मितिश्रुतेः 'साकारमेव व्यापक'मिति । तस्य । किंच द्वितीयसूत्रे तद्व्यवस्था तयोर्नित्यत्वभङ्गानुमततदावेदकमानविरोधयोर्व्यवस्था, सर्वाभेदाद्व्यवस्था । एवं तद्बाधकपरिहारतद्व्यवस्थयोरित्यर्थः । आनन्दादय इति सूत्रार्थ आनन्दादीनामिति । प्रियेति सूत्रार्थमाहुः प्रियशिरस्त्वेति । व्यवस्थयोपसंहारस्य चतुःसूत्र्या च निर्णयादित्यर्थः । अधिकरणसमाप्तावानन्दमयस्योक्तेः भक्तिविषयस्य जगत्कर्तृत्वमाहुः सर्वप्रपञ्चेति । 'असद्वा इदमग्र आसी'दित्यत्रेदमर्थो जगतस्तस्यासत्त्वेनोक्तेः । 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दं प्रयन्त्यभिसंविशन्ती'ति श्रुतेः । प्राणाख्यामिति । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चे'ति श्रुतेः । भाष्य आनन्दमयादीनां निरूपणात् उपासनाप्रकरणाच्चानन्दमयादिशिरःपुरस्कारेण निरूपणं प्रियशिरस्त्वादिसूत्रात्कृतम्, न त्वात्मपुरस्कारेण । उपासनायामात्मनोऽदृश्यत्वात् । तत्र प्रथमाधिकरणे प्रियकला तदादिसृज्यत्वेन प्राणकला प्राणमयशिरः । यद्यपि भाष्ये आनन्दमयादीनां निरूपणम्, न शिरोमात्रस्य निरूपणम्, तथापि प्रियशिरस्त्वादिसूत्रे शिरोमात्रग्रहणसूचितशिरआदिध्यानम् । एकैकाङ्गध्यानस्य 'आध्यानाये'ति सूत्रे सिद्धत्वात् । तेनान्नमयादिपञ्चापि ज्ञेयाः । अत्र पादार्थसंगमनाय आनन्दमयस्य प्राणधर्मो विचारितः, प्राणमय इति तैत्तिरीये उपसंहृत्यानन्दमयोपासना । वेदे 'वायुर्वै क्षेपिष्ठा देवते'त्युक्तेः । 'त्वमेव प्रत्यक्षं ब्रह्मासी'ति तैत्तिरीये । अतो वेदोक्तधर्मवत्त्वेनोपासना कार्या । कलापदान्मुक्त्वा प्राणकला स्मृतानन्दमयंप्रसङ्गेन प्राणमयः तत्प्रसङ्गेन प्राणकलेति । तदीयेति । 'ॐमित्येतदक्षरमुद्गीथमुपासीते'त्यत्राक्षरोद्गीथशब्दयोः सामानाधिकरण्ये श्रूयमाणे शेषं विशेषणपक्षम् । पुरुषेति । 'पुरुषान्न परं किञ्चित्सा काष्ठे'त्यादिना पुरुषविषयकेत्यादिः । ननु परस्य शाब्दापरोक्षविषयस्य विद्याविचार इत्यत आहुः अतीतेति । तथाच धर्मद्वारिकैव परविद्येति भावः । समन्वय इति । प्रथमाध्याये पञ्चमाधिकरण आनन्दवाक्यानि । पश्चादिति ।

आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥ ( ३-३-२. )

तैत्तिरीयकेऽन्नमयादिनिरूपणे पुरुषविधत्वं तेषां निरूप्य, 'तस्यैष एव शारीर आत्मा यः पूर्वस्ये'ति सर्वत्र निगद्यते । तत्रानन्दमयपर्यन्तं शारीरात्मत्वकथनाद्भवति संशयः । शरीराभिमानी जीव एव कश्चित्, उत ब्रह्मैव ।

तत्र शारीरपदाज्जीव एव भवितुमर्हति । तथा सत्यानन्दमयस्यापि ब्रह्मत्वं नोपपद्यते । उच्यते च भार्गव्यां विद्यायां 'अन्नं ब्रह्मेति व्यजाना'दित्यारभ्या-

भाष्यप्रकाशः ।

विषयाकृष्टै'रिति स्मृत्युक्तप्रणाड्या तैः प्रबलानर्थप्रसङ्गात् । ज्ञाते तु तत्तन्नियामकतया तेषां तत्तत्परत्वे तत्त्यागनिग्रहादिभिः पुरुषनिष्ठपरत्वप्रतिपत्तिसौकर्यमिति तस्यैव मुख्यप्रयोजनत्वादिति ।

रामानुजाचार्यास्तु, आध्यानादिसूत्रद्वयमग्रिमं च सूत्रद्वयमानन्दाद्यधिकरणस्यैव शेषत्वेनाहुः । तत्र प्रियशिरस्त्वादीनां ध्यानार्थत्वमेव, न तु सर्वदा आनन्दमयप्रतीतावनुवर्तन्त इत्याध्यानसूत्र आहुः । अग्रिमे तु 'अन्योऽन्तर आत्मानन्दमय' इत्यानन्दमयस्य आत्मशब्देन निर्देशादात्मनश्च शिरःपक्षपुच्छाद्यसम्भवात् प्रियशिरस्त्वादयस्त्वस्य सुखप्रतिपत्त्यर्थं निरूपणमात्रमित्याहुः । इह तु विभूतिरूपे तथा वर्तन्त इति मुख्याधिकाररहितानां आनन्दमये ध्येयाः, मुख्याधिकारिणां तु विभूतौ ध्येयाः, न तु पुरुषोत्तम इति विशेषः । आत्मगृहीत्यादिसूत्रद्वये तु 'अन्योऽन्तर आत्मानन्दमय' इत्यत्रात्मपदेन परमात्मैव गृह्यते । इतरवत् । 'आत्मा वा इदमेक एवाग्र आसीत्, स ऐक्षत लोकानुसृज' इत्यैतरेयवत् । कुतः । उत्तरात् । 'सोऽकामयत बहु स्या'मिति वाक्यात् । अवधारणं च 'तस्माद्वा एतस्मा'दिति पूर्ववाक्यस्थमाहुः । तदस्माकमपि संमतम् ॥ १५ ॥ इति प्रथमं सर्ववेदान्तप्रत्ययाधिकरणम् ॥ १ ॥

आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥ पूर्वाधिकरणे भक्तिमार्गीयाणां प्रियशिरस्त्वाद्यनुपसंहारे 'आनन्द आत्मे'त्यात्मशब्दप्रयोगो हेतुत्वेनोक्त इति तत्प्रसङ्गेनानन्दमयप्रकरणस्थमात्मशब्दयुक्तवाक्यान्तरं विचारयतीत्याशयेनैतदधिकरणविषयादिकमाहुः तैत्तिरीयक इत्यादि । भवति संशय इति । अस्मिन् वाक्ये भवति संशयः । पूर्वपक्षमाहुः तत्रेत्यादि । इदं हि वाक्यं प्राणमयमारभ्यानन्दमयपर्यन्तं पठ्यते, तत्र तस्य प्राणमयादेः, एष एव शारीरः शरीराभिमानी आत्मा इत्युक्ते, क एष इति शङ्कायां 'यः पूर्वस्ये'त्युच्यते । तत्रापि पूर्वपूर्वविचारे सर्वेभ्यः पूर्वोऽन्नमयोऽस्तीति तस्य यः शारीर आत्मा स सर्वस्येति सिध्यति, तदभिमानी च जीव एव लोके दृश्यते । तथा सति स एवानन्दमयस्याप्यभिमानित्वेनायातीति तस्यापि ब्रह्मत्वं

रश्मिः ।

'अन्तस्तद्धर्मा'द्यधिकरणेषु प्रतीकस्य सूर्यादेः 'अथ योन्तरादित्ये हिरण्मयः पुरुषो दृश्यते'इत्यादीनि वाक्यानि तेषां विचारात् । तत्तन्नियामकेति । तेषां तेषामिन्द्रियादीनां नियामकतया तेषामर्थादीनां तत्तत्परत्वे तत्तन्नियामकपरत्वे, तत्त्यागः प्रतिकूलस्य विसर्जनं अन्यविषयेभ्यो निग्रहः । आदिनानुकूलस्य सङ्कल्पः । पुरुषेति । पुरुषे निष्ठा भक्तिर्यस्य तत्परत्वस्य प्रतिपत्तिर्ज्ञानं तस्याः सौकर्यमिति । तस्यैव प्रतिपत्तिसौकर्यस्यैव । अस्येति । उपासकस्य । अवेति । द्वितीयसूत्रस्थम् । 'तस्माद्वा' इत्यत्र वै अवधारणे ॥ १५ ॥ इति प्रथमं सर्ववेदान्तप्रत्ययाधिकरणम् ॥ १ ॥

आत्मगृहीतिरितरवदुत्तरात् ॥१६॥ प्रसङ्गरूपामधिकरणसङ्गतिमाहुः पूर्वेति । उच्यते

नन्दमयपर्यन्तं 'आनन्दो ब्रह्मेति व्यजाना'दित्यन्तया श्रुत्या ब्रह्मत्वमित्युभयतःपाशा रज्जुरिति प्राप्ते, आह।

इतरवज्जीववदात्मगृहीतिरात्मग्रहणम्। 'तस्यैष एव शारीर आत्मे'ति यत्तदुत्तरात्। 'यः पूर्वस्ये'ति सर्वत्रोक्तत्वात् सर्वेभ्य उत्तर आनन्दमयस्तस्माद्धेतोरित्यर्थः। अन्नमयादिषु सर्वेष्वानन्दमयस्यैवोक्ततत्तच्छरीराभिमानित्वात् तथा। एतद्यथा तथानन्दमयाधिकरणे प्रपञ्चितमस्माभिः।

अथवा। 'अन्योऽन्तर आत्मे'त्यन्नमयादन्यत्र सर्वत्रोक्तत्वात् पूर्वपूर्वनिरूपितो यः, स इतर इत्युच्यते। तथा च, 'यः पूर्वस्ये'ति श्रुत्येतरवत् पूर्वनिरूपितवत् प्रकृतस्याप्यात्मग्रहणं कथनं यत्तदुत्तरादिति पूर्ववत्॥ १६॥

---

भाष्यप्रकाशः।

नोपपद्यते। नचाब्रह्मत्वमेवास्त्विति वाच्यम्। उच्यते च भार्गव्यां विद्यायामन्नाद्यानन्दान्तानां ब्रह्मत्वम्। अत उभयथापि श्रुतेर्विरोधादत्र निर्णयो दुर्घट एवेति पूर्वः पक्ष इत्यर्थः।

सिद्धान्तं व्याकुर्वन्ति इतरवदित्यादि। जीववदिति। शारीरपदसमभिव्याहाराज्जीववत्। तथाच 'यः पूर्वस्ये'ति सर्वत्र कथनात् सर्वेभ्यः पूर्वो योऽन्नमयस्तस्य पूर्वमाकाशादिसृष्टिजनकस्य परस्यैव ब्रह्मण उक्तत्वात्तत्स्वरूपबोधनार्थमेवानन्दमयस्योक्तत्वाच्छारीरपदसमभिव्याहारमात्रेण जीवशङ्का न कार्या, किन्तूपक्रमादिकं विचार्य ब्रह्मैव तत्रात्मत्वेन बोध्यमित्येतदर्थमुत्तरादित्युक्तमित्यर्थः। नचाभिमानित्वे जीवत्वं स्यादिति शङ्क्यम्। सर्वात्मकत्वात्। अन्यस्यान्यस्मिन्नभिमानस्यैवाध्यासरूपत्वेन जीवत्वापादकत्वात्। पुरुषविधब्राह्मणे उपक्रान्तस्यात्मनो 'ब्रह्म वा इदमग्र आसी'दिति ब्रह्मत्वं निगमयित्वा, 'तदात्मानमेवावेदहं ब्रह्मास्मी'ति श्रावणेन तथावसायादिति। तदेतत् स्मारयन्ति एतदित्यादि।

ननु तस्मिन्नेव प्रकरणे 'शारीर आत्मे'तिवत् 'अन्योऽन्तर आत्मे'त्यप्यात्मग्रहणमस्तीति कमात्मशब्दमत्र सूत्रकारोऽनुसन्धत्त इति न विनिगमनेत्यतो व्याख्यान्तरमाहुः अथवेत्यादि। य इति। प्राणमयादिविज्ञानमयान्तः। तेन यत् सिद्धं तदाहुः तथाचेत्यादि। 'यः पूर्वस्ये'ति 'असन्नेवे'त्यनुवाकस्थया श्रुत्या पूर्वनिरूपितानां प्राणमयादीनामिव यत् प्रकृतस्यानन्दमयस्यापि पूर्वसम्बन्ध्यात्मकथनम्, तत् उत्तरात् पूर्वव्युत्पादितरीत्या 'अन्योऽन्तर आत्मे'त्यनुक्त्या च आनन्दमयादित्यर्थः। एवमप्यन्तरात्ममानन्दमय एव परिसमाप्यत इति निर्व्याज आत्मा स एवेति 'शारीर आत्मे'त्यत्रापि स एव परामृश्यत इति वाक्यविनिगमनाभावेपि आनन्दमय एव सर्वत्र शारीर आत्मेत्यस्यार्थस्य न व्याहतिरित्यर्थः॥ १६॥

रश्मिः।

चेति भाष्यं विवरीतुमाहुः नचेति। उभयतःपाशा रज्ज्वर्थमाहुः उभयथापीति। जीवत्वे च ब्रह्मत्वे च। ब्रह्मत्वबोधकश्रुतिविरोधः। 'शारीर आत्मे'ति श्रुतिविरोधः। तस्मात्। भाष्ये। यत्तदिति। इति यत् तत् उत्तरादित्यर्थः। तथेति। आनन्दमयस्य ब्रह्मत्वात्। प्रकृते। एतत्सिद्धार्थमाहुः तथाचेत्यादि। एतदित्यादिभाष्यमवतारयितुमाहुः नचाभीति। कमिति। शारीरशब्दत्वेनान्तरशब्दत्वेन वा प्रकारेणेति प्रश्नः। श्रुत्येति। 'असन्नेव स भवति असद्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुरिति। तस्यैष एव शारीर आत्मा। यः पूर्वस्ये'ति श्रुत्या। 'असन्नेव' त्यस्या उपन्यासस्तु द्वितीयस्कन्धनवमाध्यायोक्त'तप तपे'ति वचनाज्ज्ञयाऽसत्त्वे प्राप्ते आनन्दमयस्य तन्निरासाय। वाक्येति। वाक्ययो'रन्योन्तर आत्मे'त्यस्य 'शारीर आत्मे'त्यस्य च विनिगमनाभावेपीत्यर्थः॥ १६॥

अन्वयादिति चेत् स्यादवधारणात् ॥ १७ ॥

ननु सर्वत्र 'अन्योऽन्तर आत्मे'ति श्रुत्या प्रत्येकमन्नमयादीनां भेदनिरूपणाच्छारीरपदाच्च भिन्नो भिन्नो जीव एवात्मा शरीराभिमानी सर्वत्रोच्यते, आनन्दमयेपि तथोक्तिर्या, सा त्वानन्दमयस्य ब्रह्मत्वेन व्यापकत्वेन सर्वत्रान्वयात् सर्वेषु शरीरेषु सम्बन्धादित्याशङ्क्य, तन्निरासायोक्तेऽर्थे उपपत्तिमाह स्यादित्यादिना । स्यात् । आनन्दमय एवोक्तसर्वशरीराभिमानी भवतीत्यर्थः । तत्र हेतुरवधारणादिति । 'एष एवे'त्येवकारेणेतरनिषेधपूर्वकमानन्दमयस्यैवात्मत्वनिर्धारणादित्यर्थः ॥ १७ ॥

इति तृतीयाध्याये तृतीयपादे द्वितीयमात्मगृहीत्यधिकरणम् ॥ २ ॥

---

भाष्यप्रकाशः ।

अन्वयादिति चेत् स्यादवधारणात् ॥ १७ ॥ अत्र भाष्यमतिरोहितार्थम् । तथाचान्नमयादीनां चतुर्णामाध्यात्मिकानां विभूतिरूपत्वात् तच्छरीरमप्राकृतसत्त्वात्मकम् । तत्र य आनन्दमयांशः प्रविष्टः, स तदभिमानी । तेन तदाधिभौतिकेष्वस्मदादिशरीरस्थेषु पञ्चकोशेष्वपि स एवाभिमानी । तेन 'आध्यात्मिकस्तु यः प्रोक्तः सोऽसावेवाधिदैविक' इति न्यायेनैकस्यैव कार्यद्वयकर्तृत्वाज्जीवोपि तदभिन्नत्वेन सिध्यति । एवमभेदे उपसंहृते सति 'सर्वं सहेत परुषं सर्वेषां कृष्णभावना'दित्युक्ता सेवाङ्गभूता शिक्षा सुखेन सिध्यति । तेन विचारदशायां 'सर्वभूतस्थितमेकमेव चिन्तये'दिति बोधितम् । श्रद्धाख्यकला च बोधिता ।

अन्ये तु, ऐतरेयवाक्ये परमात्मैवोच्यते, न तु हिरण्यगर्भ इत्याहुः । तदपि युक्तम् ॥ १७ ॥

इति द्वितीयमात्मगृहीत्यधिकरणम् ॥ २ ॥

रश्मिः ।

अन्वयादिति चेत् स्यादवधारणात् ॥ १७ ॥ अतिर इति । श्रुत्येत्यन्त एको हेतुः । स्यादिति । आनन्दमय एवोक्तसर्वशरीराभिमानी भवतीति स्यादित्यर्थ इत्यर्थः । आनन्दमयस्यैवेति । एवकारेणान्नमये 'अयमात्मे'त्यनेनानन्दमयस्य आत्मत्वम् । 'तस्माद्वा एतस्मा' दित्यस्यामात्मानन्दमय इति । आत्मन आनन्दमयत्वस्यानन्दमयाधिकरणेन सिद्धेः । प्रकरणान्न सत्यज्ञानात्मकत्वम् । तिरोहिते सत्यज्ञाने तु स्त एव । एवमतिरोहितार्थमित्यर्थः । एतेनेति । अन्वयपदात् व्यापकत्वेन । एकमेवेति । अवधारणव्याख्यानश्रुतावेकत्वस्य विवक्षितत्वादिति भावः । चिन्तयेदिति । 'आध्यानाये'ति सूत्रवासनायाः । उपासनाया वा । श्रद्धेति । श्रद्धाकला विज्ञानमयशिरः । छान्दोग्ये षष्ठे प्रपाठके तु 'द्यौः कला'इत्यादिषु द्रष्टव्या । दिवि जलदर्शनात् । 'श्रद्धा वा आप' इति श्रुतेः । 'समुद्रः कला' इति वा । सामुद्रं जलं सूर्यनिपीतं मिष्टं जातमिति । बोधितेति । इतरवत्सदेन व्यञ्जनया बोधिता । आनन्दमये प्राणधर्मस्येव तद्विधायिका आपोत्रानन्दमयधर्मत्वेन स्मृता अत्रिवृत्कृताः । तद्धर्मत्वेनानन्दमयोपासना । अन्नमय इत्यत्र 'आपो वा अन्न'मिति श्रुतेः । ऐतरेयेति । 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चन मिषत्स ऐक्षत लोकानसृजते'ति वाक्ये । युक्तमिति । आत्मनः परमात्मत्वाद्युक्तम् । 'विशिष्टं शुद्धान्नातिरिच्यत' इति नैयायिकोद्घोषात् । सूत्राणां सारवद्विश्वतोमुखत्वाच्च ॥ १७ ॥ इति द्वितीयमात्मगृहीत्यधिकरणम् ॥ २ ॥

कार्याख्यानादपूर्वम् ॥ १८ ॥ ( ३-३-३. )

तैत्तिरीयके पठ्यते । 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूत' इत्युपक्रम्य महाभूतसृष्टिमुक्त्वा, आम्नायते 'पृथिव्या ओषधयः, ओषधीभ्योऽन्नम्, अन्नात् पुरुषः,स वा एष पुरुषोऽन्नरसमय'इति । एतदग्रेऽन्नस्योत्पत्तिस्थितिलयहेतुत्वमुक्त्वा, 'येऽन्नं ब्रह्मोपासत'इत्युच्यते । भृगुवरुणसंवादे च 'अन्नं ब्रह्मेति व्यजाना'दित्युच्यते । तत्र 'स वा एष पुरुषोऽन्नरसमय' इत्यनेन पूर्वोक्त एव पुरुष उच्यते, उत तद्भिन्न इति भवति संशयः । किमत्र युक्तम् । पूर्वोक्त एवेति । यतः पूर्वोक्तस्यैव 'स वा एष' इत्यनेन प्रत्यभिज्ञानं प्रतीयते । तत्र ब्रह्मत्वेनोपासना कार्येत्यभिप्रायेण ब्रह्मत्वेन स्तूयत इति प्राप्ते, आह कार्याख्यानादपूर्वमिति । पूर्वस्यान्नकार्यस्य पुरुषस्याख्यानात्, 'स वा एष' इत्यनेनाग्रिमश्रुतिभिर्ब्रह्मत्वेन प्रतिपिपादयिषितमन्नरूपमेवोच्यते, न तु पूर्वमित्यर्थः । 'स वा एष' इति प्रत्यभिज्ञानमिति यदुक्तम्, तन्न । 'अन्नात् पुरुष'इत्यन्तेनाधिभौतिकतन्निरूपणात् । 'स वा एष'इत्यनेनाध्यात्मिकतन्निरूपणादुभयोश्च भेदात् । अत एव संशयाभावायाह । वै निश्चयेन एष वक्ष्यमाणः पुरुषः स आध्यात्मिकत्वेन प्रसिद्धोऽन्नरसमय इति । अन्यथा ब्रह्मात्मकतपोलक्षणसाधनेनाधिकारे सम्पन्ने 'अन्नं ब्रह्मेति व्यजाना'दिति न वदेत् । नचातदपि

भाष्यप्रकाशः ।

कार्याख्यानादपूर्वम् ॥ १८ ॥ अन्नमयादीनां कोशातिरिक्तत्वं बोधयितुमनुप्रसङ्गेन वदतीत्याशयेनाहुः तैत्तिरीयके इत्यादि । एतदग्र इति ।'अन्नाद्वै प्रजाः प्रजायन्त' इत्यग्रिमानुवाके । संशयमाहुः तत्र स वेत्यादि । तथाच 'अन्नात् पुरुष' इति हेतुहेतुमद्भावश्रावणात् पूर्वोक्त एव अन्नजन्य एव, उत अन्नस्य ब्रह्मत्वेनोपास्यतायास्तपसा ब्रह्मत्वेन ज्ञानस्य चाग्रे वक्ष्यमाणतया तादृशान्नरसमयत्वात् पूर्वोक्तपुरुषतो भिन्नो विभूतिरूप इति संशय इत्यर्थः । पूर्वोक्त एवेत्यादिपूर्वपक्षस्तु स्फुटः । सिद्धान्तं वक्तुं सूत्रं व्याकुर्वन्ति पूर्वस्येत्यादि । एतेन कार्यस्य आख्यानात् कथनात् । ल्यब्लोपे पञ्चमी । कार्यस्याकथनं कृत्वा अपूर्वं अग्रे उच्यमानं अतिरिक्तम्, न तु तदिति सूत्रयोजनात्र स्फुटीकृता ।

अत्रायमाशयः । अन्नमयश्लोके यदि कार्यभूतस्यान्नस्य ब्रह्मत्वेनोपासनाय ब्रह्मधर्माः स्तुत्यर्थमुच्येरन्, तदा 'अन्नाद्वा' इत्यादिना पूर्वं तानुक्त्वा अग्रे 'सर्वं वै तेऽन्नमाप्नुवन्ति येऽन्नं ब्रह्मोपासते' इति सफलमुपासनमात्रं वदेत् । ब्रह्मत्वेनोपासनस्य तावतैव सिद्धेः । न तु तदग्रे पुनरपि 'अन्न[१] हि भूतानां ज्येष्ठ'मित्यादिना भूतजनकत्वतद्वर्धकत्वाभ्यां धर्माभ्यां 'अत्ति

रश्मिः ।

कार्याख्यानादपूर्वम् ॥१८॥ कोशातीति । विभूतित्वम् । हेतुहेतुमदिति । अन्नं हेतुः, पुरुषो हेतुमान् । कार्यकारणभावश्रावणात् । प्रत्यभिज्ञानमिति । तत्ताइदन्ताप्रकारकं ज्ञानम् । अतिरिक्तमिति । अपूर्वत्वेन प्रसिद्धातिरिक्तम् । तस्य परमतत्वेन लौकिकभाषात्वेन सूत्रे विवक्षणात् । आत्मप्रकाशरूपम् । 'धर्मो यशसां मदात्मक' इति वाक्यात्, न तु पूर्वपुरुषरूपं प्रसिद्धं वा पूर्वमित्यर्थः । पूर्वपक्षोक्तमनुवदन्ति स्म अन्नमयश्लोक इति । निरस्यन्ति स्म पूर्वस्येति भाष्याशयात् । तदेति । तानिति । ब्रह्मधर्मान् ।

१. न च तदपि, नचा तदपि इति पाठौ । २. उपासकरूप इति यावत् ।

तत्तथात्वेन स्तूयत इति वाच्यम् । श्रुतेः प्रतारकत्वापत्तेः । आनन्दमयान्तमेवमेव निरूपणाच्च । अत एवास्याध्यात्माग्रे निरूपितो 'यः पूर्वस्ये'ति । स त्वाधिदैविक आनन्दमयः ।

भाष्यप्रकाशः ।

भूतानि सततं व्याप्नोती'त्यन्नमिति भूतव्याप्तिबोधकं निर्वचनं सूचयेत् । नापि 'अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यत' इति निरुच्यात् । प्रयोजनाभावात् । एवं सत्यपि यदेवं पुनर्निर्वक्ति, तेन पूर्वोक्तात् कार्यरूपादन्नादेतं व्यवच्छिनत्ति । अग्रिमप्रपाठके ब्रह्मात्मकेन तपोरूपेण साधनेन तस्मिन् ब्रह्मत्वेन ज्ञानं भृगोर्वक्ति, न तु साधनं विना । तेनास्यान्नस्य पूर्वस्माद्वैलक्षण्यमवश्यं वक्तव्यम् । मैत्रायणीये 'विश्वभृद्वै नामैषा तनूर्भगवतो विष्णो'रिति भगवत्तनुत्वश्रावणात् । बृहदारण्यकोपनिषदि चान्नमुपक्रम्य 'स वा एष पुरुषः पञ्चधा पञ्चात्मा येन सर्वमिदं प्रोतं पृथिवी चान्तरिक्षं चे'त्यादिना व्यापकत्वश्रावणाच्च । एवमन्नयो-र्वैलक्षण्ये सिद्धे 'अन्नात् पुरुष' इत्यत्र य उच्यते, स भौतिक एव, पूर्वं तस्यैव सिद्धत्वात् । यः पुनस्तदग्रे 'स वा एष पुरुषोऽन्नरसमय' इत्यनेनोच्यते, स आध्यात्मिक एव । अन्नसार-भूतत्वात् । अत एव मध्ये निश्चयार्थकस्य 'वै' इत्यस्य कथनम् । नच प्रत्यभिज्ञाबोधकयोः 'स एष' इत्यनयोर्विरोधः शङ्क्यः । 'स' इत्यस्य 'स राजा तोयनीव्या भुवः' 'कला च सा कान्तिमती कलावत' इत्यादाविव प्रसिद्धार्थकतया 'एष' इत्यस्य वक्ष्यमाणार्थकतया चोपपत्तेः प्रत्यभिज्ञाया निश्चेतुमशक्यत्वात् । नच तौल्यं शङ्क्यम् । तदेतत्पदाभ्यां प्रसिद्धवक्ष्यमाणपरामर्षे पूर्वोक्तनिरुक्ति-लिङ्गाभ्यासानां सामञ्जस्यस्यान्यथा तदनुपपत्तेश्च प्रमाणत्वेन तन्निरासात् । प्रत्यभिज्ञापक्षे तज्जनकस्यान्नस्य कार्यतया अन्नब्रह्मणो ब्रह्मत्वेन ज्ञानं तपसा वदन्त्याः श्रुतेः प्रतारकत्वापत्तिरिति दोषसम्भवात् । प्रशंसामात्रार्थतायास्तत्र वक्तुमशक्यत्वात् । आनन्दमयज्ञानपर्यन्तं तपोरूपसाध-ननिरूपणाच्चात्रैव तथा वक्तुमशक्यत्वात् । किञ्च । यदि भौतिक एवान्नमयः स्यात्, तदा

रश्मिः ।

निरुच्यादिति । निर्वचनं कुर्यात् । भाष्यीयहेत्वाशयपूर्वकं 'स वा एष' इत्यादिसाध्यभाष्याश-यमाहुः विश्वभृदिति । 'पृथिवी वा अन्न'मिति श्रुतेः । पञ्चात्मेति । पञ्चमहाभूतात्मा । अन्न-सारेति । 'पुरि शेत' इति पुरुषः कीटादिः सोऽन्नसारः, नत्वन्नम्, तथा दर्शनाभावात् । एवं भाष्योक्तहेत्वाशयमुक्त्वा साध्याशयमाहुः नचेति । देहलीदीपन्यायेनोभयहेत्वन्वयि । पूर्वोक्त-हेतुग्रन्थेन न शङ्क्य इत्यर्थः । स्वीयभाष्याशयमाहुः स इत्यस्येति । स प्रसिद्धः राजा दशरथः । तोयं नीवी मर्यादा यस्या भुवः । कान्तिमती सा प्रसिद्धा । कलावतश्चन्द्रस्य । वक्ष्यमाणेति । भाष्ये वक्ष्यमाणोऽर्थोऽन्नरसमयरूपः । अशक्येति । त्यदादीनां पूर्वपरामर्शकत्वमात्रत्वाभावात् । तौल्य-मिति । सुन्दोपसुन्दन्यायेनोभयत्र निश्चयाशक्त्या प्रसिद्धार्थस्यापि निश्चेतुमशक्त्या तथा । निरुक्तीति । 'अद्यतेऽत्ति च भूतानी'त्यन्ननिरुक्तिः । तपोरूपसाधनसाध्यत्वं ब्रह्मत्वेन ज्ञाने लिङ्गम् । अन्नाभ्यासः पूर्वोक्तः । प्रमाणत्वेनेति । अनुपलब्धेः प्रमाणत्वं प्राचां मते । तन्निरासस्तौल्यनिरासः तस्मात् । नचान्त्यरिति भाष्याशयमाहुः प्रत्यभिज्ञापक्ष इति । तज्जनकस्येति । विषयविधया प्रत्यभिज्ञा-जनकस्य । वदन्त्या इति । 'स तपस्तप्त्वा अन्नं ब्रह्मेति व्यजाना'दिति श्रुतेः । कार्यतयाऽब्रह्मत्वेपि प्रशंसान्नस्येत्यत आनन्दमयप्रशंसेत्यादिभाष्याशयमाहुः प्रशंसेति । तत्रेति । श्रुतौ अर्थवादत्वापत्त्या तथा । तदेवाहुः आनन्देति । अत्रैव तथेति । अन्नमये तत्प्रवाहपठिते प्रशंसामात्रार्थतायाः । तदेतत्-

अथवा। वाजसनेयिशाखायां 'आत्मेत्येवोपासीते'त्युपक्रम्य 'तदेतत्प्रेयः पुत्रात् प्रेयो वित्तात् प्रेयोऽन्यस्मात् सर्वस्मादन्तरतरं यदयमात्मे'ति। एतदग्रेऽन्यस्य प्रियत्वं

भाष्यप्रकाशः।

आनन्दमयस्य एतदात्मरूपत्वं न वदेत् । वदति तत् । अतः कार्यरूपाद्वैलक्षण्यमस्यावगन्तव्यम् । नचैवमपि आधिदैविकाद्भेदस्तु वर्तत एवेति किमनेन प्रयासेनेति शङ्क्यम् । 'आध्यात्मिकस्तु यः प्रोक्तः सोऽसावेवाधिदैविक'इति द्वितीयस्कन्धे आध्यात्मिकाधिदैविकयोः स्वरूपभेदनिवारणेन तदभावात् । अभिलापभेदस्य तु पाचकपाठकवत् कार्यभेदप्रयुक्तत्वेन स्वरूपाभेदकत्वात् । तस्मादाध्यात्मिकाधिदैविकयोरन्नमयानन्दमययोः कार्यभेदेन विभूतिविभूतिमद्भावादेव भेदः, न तु स्वरूपतः । धर्मधर्मिणोस्तादात्म्यरूपस्याभेदस्य पूर्वं साधितत्वात् । अयमेव न्यायः प्राणमयादिष्वपि द्रष्टव्यः । तेनानन्दमयविद्यायां पञ्चाप्यन्नमयादयः कोशातिरिक्ताः, तेषु चत्वारो विभूतित्वेनोपास्याः, आनन्दमयः पुरुषोत्तमस्तु तादृशविभूतिमत्त्वेनोपास्य इत्येतदर्थमिदमिति बोधितम् । तेन विशेषतो वैष्णवानां समीपे आसीनत्वं द्रष्टव्यमिति ज्ञापितम् ।

एतस्य विचारस्य पूर्वशेषत्वादर्थस्य प्रागपि व्युत्पादितत्वाच्च नात्यन्तमावश्यकतेत्यरुच्या प्रकारान्तरेणैतत् व्याकुर्वन्ति अथवेत्यादि । विषयादिकमाहुः वाजसनेयीत्यादि । वाजसने-

रश्मिः।

स्यात्वष्ठ्यालुक् । वैलक्षण्यार्थं पुनराहुः किञ्चेति । एतदात्मरूपत्वमिति । एतस्यान्नमयस्यात्मा इदंपदवाच्यस्तेन रूप्यते आत्मित्वेन व्यवह्रियत इत्येतदात्मरूपत्वम् । वदति तदिति । 'तस्यैष एव शारीर आत्मा यः पूर्वस्ये'ति श्रुतिर्वदति तत्, एतस्य अन्नमयस्य आत्मा इदंपदवाच्योऽन्नमयनिरूपण आत्मत्वेनोक्तः, तेन रूप्यते आत्मित्वेन व्यवह्रियते इत्येतदात्मरूपत्वम् । न च पूर्वभाष्यानन्दमयाधिकरणयोर्विरोधः । 'आनन्द आत्मे'ति श्रुत्युक्तात्माभेदेन 'तस्यैष' इत्यत्रात्मनो नेतुं युक्तत्वान्न विरोध इति । ननु 'तस्माद्वा एतस्मादात्मन' इति श्रुत्युक्त आत्मा, 'तस्यैष' इति श्रुतौ 'आनन्द आत्मे'ति श्रुतौ तु प्रतीकगतो यः कश्चिदिति चेत् । न । अप्रसिद्धेः । तथाचान्नमये मूलात्मान्यात्मा न प्रसिद्धः । प्राणमये आकाशस्यात्मनाध्यासाख्यसम्बन्धः । 'आकाशशरीरं ब्रह्मे'ति श्रुतेः । आकाशाभिन्नो ब्रह्मात्मेत्यर्थः । आत्मोपनिषदा नात्मपदे लक्षणा । मनोमये आदेशस्यात्मना प्रतिपाद्यतासम्बन्धः । आदेशप्रतिपाद्याभिन्न आत्मेत्यर्थः । सर्वस्यात्मत्वेनादेशस्याप्यात्मत्वान्न लक्षणादेशपदे । विज्ञानमये योगस्यात्मना साध्यसाधनभावसम्बन्धः । 'भक्त्या प्रसन्ने तु हरौ तं योगेनैव योजये'दिति निबन्धात् । भूमत्वेन साधनत्वात्तेन रूपेणाभेदः आत्मना । स्वस्वरूपसाधनाभिन्न आत्मेत्यर्थः । लिङ्गभूयस्त्वाधिकरणे सर्वात्मभावस्य भूमत्वं योगस्तदन्तर्गत इति सुष्ठु अभेदान्वयः । अस्येति । आध्यात्मिकस्य । अत एवेत्यादिभाष्याशयं विवरीतुमाहुः नचैवमित्यादि । भाष्यार्थस्तु अत एवेति । आध्यात्मिकत्वादेव । अस्यापीति । अन्तानन्दमयस्यापि । अग्रे अत्रैवाग्रे । स त्विति । 'यः पूर्वस्ये'ति निरूपितः । अत्राशङ्कते स नचैवमित्यादिना । वर्तत इति । आध्यात्मिकस्य ज्ञेयः । अनेनेति । आधिदैविकशून्येनोपासनाविचारप्रयासेन । तदभावादिति । वैयर्थ्यापादकस्य किमनेन प्रयासेनेति प्रश्नस्याभावात् । कार्यभेदेति । प्राणमयमनोमययोराध्यात्मिकयोः कार्यं शरीरधारणं सङ्कल्पादि च । आधिदैविकानन्दमयकार्यं प्रेरणम्, वेदान्तप्रसिद्धम् । तादृशभेदप्रयुक्तत्वेन । स्वरूपेति । पाचनकाले पाठनकाले एकस्य स्वरूपाभेदकत्ववदिति बोध्यम् । पूर्वमिति । प्रकाशाश्रयाधिकरणे । अयमिति । कार्याख्यानसूत्रन्यायः ।

निराकृत्य 'ईश्वरो हि तथा स्यादात्मानमेव प्रियमुपासीते'ति पठ्यते। अत्रात्मौपाधिकत्वात् सर्वत्र प्रियत्वस्यात्मपदेन जीवात्मन एव प्रियत्वेनोपासना विधीयते, उतेश्वरपदात् परमात्मन इति भवति संशयः। किमत्र युक्तम् । जीवात्मन एवेति । कुतः । यथा पुत्रादेरात्मौपाधिकप्रियत्वोक्त्या जीवात्मन एव प्रियत्वमुच्यतेऽन्यत्र श्रुतौ, तथेहापि 'प्रेयः पुत्रा'दित्यादिकथनाज्जीवात्मैव भवितुमर्हतीति प्राप्ते, आह कार्याख्यानादपूर्वमिति । इतः पूर्वमाम्नायते 'प्राणन्नेव प्राणो नाम भवति वदन् वाग् रूपं पश्यँश्चक्षुः शृण्वञ्छ्रोत्रं मन्वानो मनस्तान्यस्यैतानि कर्मनामान्येवे'ति । तथाच प्राणनवदनादिकार्यैः कृत्वा प्राणवागादित्वेनैकस्यैवात्मन आख्यानात् कथनादपूर्वम्, पूर्वं तु पुत्रवित्ताद्यभिमानदशायां 'न वा अरे पत्युः कामाय पतिः प्रियो भवती'त्यादिना यत्प्रियत्वेनोच्यते, तस्माद्भिन्नमात्मशब्दवा-

---

भाष्यप्रकाशः ।

च्यशाखायामिति । तस्यां बृहदारण्यके पुरुषविधब्राह्मणे । संशयं तद्बीजं चोक्त्वा पूर्वपक्षमाहुः जीवेत्यादि । अन्यत्रेति । मैत्रेयीब्राह्मणे । यद्यपि मैत्रेयीब्राह्मणेपि ब्रह्मैव प्रतिपाद्यत इति वाक्यान्वयाधिकरणे निर्णीतम्, तथाप्यापाततो निरुपधिप्रियत्वं जीवे भासते इति पूर्वपक्षे तदादृतम् । सिद्धान्तं वक्तुं सूत्रे कार्यैराख्यानं कार्याख्यानमिति तृतीयासमास इत्यभिप्रेत्य कर्मनामकथनादित्यर्थः सिध्यतीति तत् व्याकुर्वन्ति इत इत्यादि । अपूर्वमिति । पुत्राद्यभिमानदशायामभिमानित्वेन प्रतीयमानात् प्रतीचो भिन्नम् । तदेतद्विवृण्वन्ति पूर्वं त्वित्यादि । यदिति । जीवात्मरूपं वस्तु । आत्मशब्दवाच्यमत्रेति । 'आत्मानं प्रियमुपासीते'तिवाक्ये

रश्मिः ।

'यः पूर्वस्ये'ति सर्वत्र श्रावणात् । प्राणमयस्यादिः प्राणमयादिः अन्नमयः प्राणमय आदिर्ययोः मनोमयविज्ञानमययोः तौ प्राणमयादी, प्राणमयादिश्च प्राणमयादी च प्राणमयादयस्तेषु । सिद्धमाहुः तेनेत्यादि । पूर्वोक्तवेदनमुपासनं यद्यपि, तथाप्यात्मत्वात्सर्वेषां विशेषतः 'मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारदे'तिवाक्याद्वैष्णवाना'मेतमानन्दमयमात्मानमुपसंक्रम्ये'त्यत्रैतच्छब्दात्समीपतरवर्त्यानन्दमयः 'आसीनः संभवा'दिति सूत्रादासीनः इत्येवं विशेषमुपासनायामनुसन्धायाहुः तेनेति । भार्गवी वारुणी विद्येयम् । पूर्वेति । विषयवाक्यमुपनिषत् भाष्यादसन्दिग्धं मन्येतेति। विद्याद्युपाधिना। अतः पूर्वस्य जन्माद्यधिकरणस्य शेषत्वम् । पूर्वाधिकरणस्य वा । तेनाधिकरणान्तरत्वभञ्जकत्वमिति भावः । प्रागपीति । आनन्दमयाधिकरणेपीत्यर्थः । उपासनाप्रकरणे विचारस्यास्मारणान्नात्यन्तमिति । तद्बीजमिति । हेतुतृतीयान्तहेतुपञ्चम्यन्तपदाभ्यां संशयबीजम् । इत इत्यादीति । विषयवाक्यात्पूर्वं पुरुषविधब्राह्मणे । अस्येति। अकृत्स्नस्य । प्राणनादिक्रियाविशिष्टस्य। 'मेने सन्तमिवात्मान'मितिवाक्योक्तस्य। कर्मकृतानि नामानि कर्मनामानि । अभिधाविषयकर्मणो नामानि वा। 'कर्मणा जायते जन्तु'रितिवाक्योक्तस्य । एवकारेण रूपनामव्यवच्छेदः क्रियते । तथा च पुरःस्फूर्तिकस्य कार्याख्यानात्साध्यत्वेनाख्यानात् यागस्य स्वर्गपर्यन्तं स्थित्यर्थमपूर्वमित्यस्यार्थस्य विचारेपि वेदान्तीयकर्मविचारः । अन्तरात्मपरत्वे तूपलक्षणेन षोडशापि ज्ञेयाः । तथाचेति । पुराणे परमतलौकिकीभाषाभ्यां हेतुभ्यां पूर्वोत्तरसंदर्भसिद्धार्थे च अपूर्वमित्यन्तः सूत्रार्थ इत्यर्थः । आत्मन इति । कर्मविशिष्टात्मरूपस्य, नित्यस्याफलमनुवर्तमानस्य । वेदान्तीयकर्मानन्तरं तदीयापूर्वं वक्ष्यमाणभाष्योक्तमाहुः पुत्रादीति । अहं पुत्रीति पुत्राभिमानः ।

त्ययमग्रेत्यर्थः । लोके हि प्राणवायुवागिन्द्रियादीनामेव तत्तच्छब्दवाच्यता, न तु जीवस्य, अत एवाग्रे श्रुतिराह 'ईश्वरो हि तथा स्या'दिति । अत एव 'प्रेयोऽन्यस्मात् सर्वस्मादन्तरतरं यदयमात्मे'त्याह । अन्तरो जीवात्मा, ततोऽप्यतिशयेनान्तरमन्तरतरं पुरुषोत्तमस्वरूपमेव भवितुमर्हतीति । एतेन विग्रहस्यैवात्मरूपत्वं सिध्यति । तेनाविकृतत्वपरमानन्दत्वादयोपि धर्मा उपसंहर्तव्याः ॥ १८ ॥

ननु विग्रहे चक्षुःश्रोत्रादीनां वैलक्षण्यप्रतीतेरात्मनश्चैकरसत्वादुक्तकर्मनामवत्त्वं ब्रह्मण्यनुपपन्नमित्याशङ्क्योत्तरं पठति ।

---

भाष्यप्रकाशः ।

आत्मशब्दवाच्यम् । ननु प्राणनादिकार्ये जीवस्यापि प्रयोजकत्वात् कार्याख्यानमात्रेण प्रत्यगात्मातिरिक्त आत्मात्रोच्यत इति कथं निश्चेयमित्यत आहुः लोके हीत्यादि । अत एवेति । जीवभिन्नत्वादेव । अत एव प्रेय इत्यादि । ईश्वरत्वादेव प्रेयोऽन्यस्मादित्यादिकं श्रुतिराह । तदेव व्युत्पादयन्ति अन्तर इत्यादि । तथाचेश्वरत्वान्तरतरत्वाभ्यां लिङ्गाभ्यामुपष्टब्धेन तेन तथेत्यर्थः । ननु भवत्वेवम्, तथापीदानीं तद्विचारस्य किं प्रयोजनमत आहुः एतेनेत्यादि । एतेनेति । प्राणनादिकार्यमुक्त्वा 'ईश्वरो हि तथा स्या'दिति तत्तत्सर्वरूपताख्यानेन । एवमेतत्साधनस्यापि प्रयोजनमाहुः तेनेत्यादि । उपसंहर्तव्या इति । अवतीर्णे स्वरूपेऽनुसन्धेयाः । तथाचैतदर्थमिदमत्र विचारितमित्यर्थः । तेन पूर्वोक्ते अनावश्यकतामात्रं न वर्णकान्तरकथने बीजम्, किन्त्वेतदपीति बोधितम् ।

अन्ये तु इदमेकसूत्रमधिकरणमङ्गीकृत्य अत्र प्राणविद्याशेषं विचारयन्ति । भोजनारम्भसमाप्त्योराचमनीयास्वप्सु प्राणवासोदृष्टिः कर्तव्येति ।

तत्र नास्माकमादरः । तासामप्रमुख्यविद्यात्वेन तद्विचारस्य प्रासङ्गिकत्वात् । विद्यान्तरं मध्ये विचार्य दूरस्थितस्य पुनरत्र स्मृतौ बीजानुपलम्भाचेति ॥ १८ ॥

रश्मिः ।

प्रतीचो जीवात् । भिन्नमात्मशब्दवाच्यम् । न हि जीवो वदन् वाग्भवति अनुक्तेः, किन्तु छान्दोग्यीयाष्टमोपदेशविषयः । आत्मशब्देति । अपूर्वं प्रकाशाश्रयात्मशब्दवाच्यम् । 'धर्मो यस्यां मदात्मक' इति वाक्यात् । अभिधातात्पर्याभ्याम् । प्रयोजकेति । 'जीव प्राणधारण' इति धातुपाठात्प्राणनादिप्राणकार्ये परम्परया जीवस्य कारणत्वात् । तेन तथेति । आत्मपदेन अन्तरो जीवात्मेत्यादिः । प्राणनादीति । अन्तर्यामिब्राह्मणोक्तस्यात्मनो विग्रहत्वकथनेनेत्यप्येतेनेत्यस्यार्थो बोध्यः । एतदिति । नित्यविग्रहवत्त्वसाधनस्य । एतदपीति । विग्रहस्यैवात्मरूपत्वम् । प्राणविद्येति । प्राणवासो दृष्टिरूपम् । भोजनस्यारम्भसमाप्त्योः । प्राणवास इति । 'आपोमयः प्राण' इति श्रुतेरप्सु प्राणवासः । दूरेति । प्राणविद्यास्थितस्य ॥ १८ ॥

## समान एवं चाभेदात् ॥ १९ ॥

चोऽप्यर्थे । तथाचैवमपि सति श्रोत्रचक्षुरादिवैलक्षण्यप्रतीतावपि सति समान एकरूप एव, न तु विषमः । तत्र हेतुरभेदादिति । चक्षुरादीनां ब्रह्मत्वेन परस्परमभेदादित्यर्थः ।

अत्रेदमाकूतम् । 'तं त्वौपनिषदं पुरुषं पृच्छामी'ति श्रुतेरुपनिषद्वेद्यमेव ब्रह्मस्वरूपम् । ताश्च 'प्राणन्नेव प्राणो भवति वदन् वा'गित्यादिरूपाः प्रतिनियतेन्द्रियग्राह्यान् अर्थान् स्वरूपेणैव गृह्णत् ब्रह्म तत्तच्छब्दवाच्यं भवतीति वदन्ति । तद्वाच्यता च व्यवहार्यत्वे । स च 'तदेतत्प्रेयः पुत्रा'दित्यादिवाक्यैकवाक्यतया निरुपधिस्नेहवतामेव व्यवहार्य इति ज्ञाप्यते । स चाविर्भूतेऽवताररूप एव सम्भवति । एवं सति तत्र भक्तैर्भगवद्विग्रहे तत्तदवयवेषु भेदेन यथा यथा व्यवह्रियते, तथा तथैव तदेकमेवाखण्डसच्चिदानन्दरूपं ब्रह्मेत्यर्थः सम्पद्यते । एवंविधो लोके न प्रसिद्ध इत्यसम्भावना स्यात्, तदभावायाग्रे श्रुतिराह 'ईश्वरो हि तथा स्या'दिति । एतेनाविर्भूतरूपे व्यापकत्वैकरसत्वसच्चिदानन्दत्वादयो धर्मा उपसंहर्तव्याः, अनाविर्भूतेऽपीति स्थितम् । एवं सत्याविर्भावेऽनाविर्भावेऽपीश्वरः

---

### भाष्यप्रकाशः ।

समान एवं चाभेदात् ॥ १९ ॥ सूत्रमवतारयन्ति ननु विग्रह इत्यादि । तथाच तरुकुसुमयोरिव स्वगतद्वैतमापततीति तत्परिहारायोत्तरं पठतीत्यर्थः । व्याकुर्वन्ति चोऽप्यर्थ इत्यादि । ननु भिन्नप्रकारकप्रतीतौ विद्यमानायां कथमभेदसिद्धिरित्यतस्तद्युत्पादयन्ति अत्रेत्यादि । स चेति । औपनिषदः पुरुषश्च । स चेति । व्यवहारश्च । नच तस्य व्यवहारस्याप्रमाणिकत्वं शक्यशङ्कम् । वरणहेतुकतनुविवरणैकसाध्यत्वात् । 'प्रकाशवच्चावैयर्थ्यात्' 'आह च तन्मात्र'मिति सूत्रद्वयेनातीतपादेपि तस्योपपादनात् । तदेतदभिसन्धायाहुः एवं सतीत्यादि । अत्र लौकिकयुक्तेः कौण्ठ्यमेव श्रुत्यभिप्रेतमित्याशयेनाहुः एवंविध इत्यादि । सिद्धमाहुः एतेनेत्यादि । एतेनेति । ईश्वरस्य तथात्वश्रावणेन ।

एतामेव श्रुतिं हृदिकृत्य प्रकारान्तरेण सूत्रं योजयन्ति एवं सत्याविरित्यादि । तथाच, 'अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोपि सन् । प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायये'ति

### रश्मिः ।

समान एवं चाभेदात् ॥ १९ ॥ भाष्ये । परस्परमिति । धर्मिधर्मयोरिति बोध्यम् । प्रकृते । स चेतीति । अत्र निरुपधीत्यादिभाष्यं गताज्ञानानामिति बोध्यम् । तस्येत्यादि । औपनिषदः पुरुषश्चेत्याकारकस्य । शक्या शङ्का यस्मिन्निति शक्यशङ्कम् । वरणेत्यादि । पुष्टिमार्गीयम् । वरणस्य स्वीयत्वेनाङ्गीकारे रूढेः । वस्तुतस्तु वृङ् संभक्तौ । सर्वात्मभावो वरणम् । वेदान्ते योगात्, रूढेरभावात् । विवरणं प्रकाशनम् । तथा च निरुपधिस्नेहवतामितिभाष्येण गताज्ञानानामिति सूचनात्तमोभावेन विशुद्धसत्त्वजज्ञानविषयत्वेन स व्यवहारः प्रामाणिक इति भावः । एवं सतीत्यादि । भेदेनेति । इवार्थेन । गीतायां 'अविभक्तं च भूतेषु विभक्तमिव च स्थित'मिति ब्रह्मनिरूपणे वाक्यात् । एवं सत्याविरित्यादीति । आविर्भाव इत्यादिना सूत्रार्थः । एवं चेत्यत्र सूत्रेऽन्वयादिति सूत्रान्मण्डूकप्लुत्या-

समानः। न ह्याविर्भावे काँश्चनागन्तुकान् धर्मानादायाविर्भवतीति वक्तुं शक्यमनाविर्भूतस्यापि। एवमाविर्भूतप्रकारेणैवाभेदादित्यपि सूत्रार्थः सूत्रकाराभिमत इति ज्ञातव्यम्। चकारेण विरुद्धसर्वधर्माश्रयत्वं समुच्चीयते। एवं साक्षादाविर्भूते भगवद्रूपे पूर्णानन्तधर्मास्तदुपासकेनोपसंहर्तव्या इति सिद्धम्॥ १९॥

अथ यत्र कार्यचिकीर्षया जीवे स्वयमाविशति, तदावेशात्तद्धर्मा अपि केचित् तस्मिन्नाविर्भवन्ति। तत्रोपासकेनाखिलब्रह्मधर्मोपसंहारः कर्तव्यः, न वेति शङ्कासमाधानं विकल्पेनाह सूत्राभ्याम्। तत्रादौ विधिपक्षमाह।

सम्बन्धादेवमन्यत्रापि॥ २०॥

अन्यत्रापि जीवेऽप्येवं ब्रह्मणीवोपासना कार्या। तत्र हेतुः सम्बन्धादिति।

---

भाष्यप्रकाशः।

गीतावाक्येनास्यां श्रुतावुक्तस्येश्वरत्वस्य नैसर्गिकत्वेन तादृगाकारस्य सार्वदिकत्वात् तथेत्यर्थः। अत्र च 'विश्वतश्चक्षुः''यदेकमव्यक्तमनन्तरूप'मित्यादिश्रुतयोऽप्यनुसन्धेयाः। पूर्वं चोप्यर्थे व्याख्यात इत्यस्मिन् पक्षेऽर्थान्तरमाहुः चकारेणेत्यादि। सिद्धमाहुः एवं साक्षादित्यादि। साक्षादाविर्भूत इति। सत्त्वाद्यधिष्ठानमनपेक्ष्य स्वरूपेणाविर्भूते।

अन्ये त्विदमेकसूत्रमधिकरणमङ्गीकृत्य वाजिशाखीयाग्निरहस्यस्थबृहदारण्यकस्थयोः शाण्डिल्यविद्ययोरैकविद्यं परस्परगुणोपसंहारं च विचारयन्ति।

तदपि प्रथमाधिकरणीयपञ्चसूत्र्यैव सिध्यतीति बोध्यम्। रूपाभेदस्यैव प्रयोजकत्वादिति॥ १९॥

सम्बन्धादेवमन्यत्रापि॥ २०॥ एवमवतारोपासनादौ गुणोपसंहारं विचार्यावेशे तं विचारयतीत्याशयेनाग्रिमसूत्रमवतारयन्ति अथेत्यादि। 'य आत्मनि तिष्ठन् य आत्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीर'मिति श्रुत्या आत्ममात्रस्य ब्रह्मशरीरत्वेपि, 'योऽन्तर्बहिस्तनुभृतामशुभं विधुन्वन्नाचार्यचैत्यवपुषा स्वगतिं व्यनक्ती'त्येकादशस्कन्धे तनुभृदन्तर्बहिरशुभवि-

रश्मिः।

धारणादित्यनुवर्तते इत्याशयेन सूत्रशेषं व्याकुर्वन्ति स एवमित्यादि। एवेति। अनुवृत्ते स्थले। स्वामिति। उक्तरीत्या स्वाम्। आत्ममाया पञ्चाध्याय्युक्तयोगमाया। पुराणे, अत्र त्विच्छेति ज्ञेयम्। नैसर्गिकत्वेनेति। 'प्रकृतिं स्वा'मित्यनेन विशुद्धसत्त्वाधिष्ठानकत्वोक्तेः। वासुदेव इत्यर्थः। तथेति। एवंसत्याविरित्यादिरित्यर्थः। विश्वत इति। अत्र योगमाययौपनिषदः पुरुषश्च ज्ञेयः। आदिना 'एकं सद्विप्रा बहुधा वदन्ती'ति श्रुतिः। सत्त्वादीति। सत्त्वं वराहस्याधिष्ठानं रजो वामनस्य तमो मत्स्यकच्छपयोः। सात्विकादिपुराणोक्तत्वात्। तावतीं मायां दूरीकृत्य स्वरूपेण मूलरूपेणाविर्भूते। शाण्डिल्येति। पूर्वस्यां गुणाः श्रूयन्ते। 'स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपमि'त्येवमादयः। तस्यामेव शाखायां बृहदारण्यके पुनः पठ्यते 'मनोमयोऽयं पुरुषो भाः सत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एव सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किञ्चे'ति। तयोः। रूपाभेदस्येति उपसंहारहेतोरुपसंहारसूत्रोक्तस्य॥ १९॥

सम्बन्धादेवमन्यत्रापि॥ २०॥ अवतारेति। सर्वदा संक्रमणमवतारः (कार्य)कार्यकाले

अयोगोलके वह्नेरिव तस्मिन्नावेशलक्षणः सम्बन्धोऽस्तीति, तत्त्वेन व्यपदेशाच्च तयेत्यर्थः ।

अत्रैवं ज्ञेयम् । अयं तु जीवः, अत्राविष्टं भगवन्तमहमुपास इति जानाति चेत्, तदा न सा जीवगामिन्युपासना, किन्तु ब्रह्मगामिन्येव । तत्राखिलधर्मोपसंहारे न किञ्चित् बाधकम् । यत्र ब्रह्मत्वेनैव ज्ञात्वोपास्ते, तत्रापि 'तं

भाष्यप्रकाशः ।

धूननपूर्वकस्वगतिव्यञ्जनरूपविशेषकार्यस्मरणात् तदादिकार्यचिकीर्षया यत्र जीवे स्वयं भगवानाविशति, तदा भगवदावेशाद्भगवद्धर्मा अपि केचित्तस्मिन्नाविर्भवन्ति । यथा इन्द्रप्रतर्दनसंवादे इन्द्रे । अत्र जीव इत्युपलक्षणम् । तेन प्रतिमाया अपि सङ्ग्रहः । गोपालतापनीये मथुरासमीपस्थवनस्थिता द्वादशमूर्तीरुक्त्वा, 'ता हि ये यजन्ति ते मृत्युं तरन्ति मुक्तिं लभन्त' इति फलमुक्त्वा, अग्रे 'मथुरामण्डले यस्तु जम्बूद्वीपे स्थितोपि वा । योऽर्चयेत् प्रतिमां मां च स मे प्रियतरो भुवि । तस्यामधिष्ठितः कृष्णरूपः पूज्यस्त्वया सदे'त्यादिभिः प्रतिमोपासनं लक्षीकृत्य सर्वेषां स्वपूजनस्योक्तत्वात् प्रतिमायामधिष्ठानोक्त्या स्वावेशस्य चोक्तत्वात् । अतस्तादृशे जीवादावुपासकेनाखिलब्रह्मधर्मोपसंहारः कर्तव्यो न वेति शङ्कायाम्, 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन' इति श्वेताश्वतरश्रुत्या गुरुभक्तेर्देवभक्तिवदतिदिष्टत्वात्, भक्तिपारम्यस्य चाखिलगुणोपसंहार एव सिद्धेर्गुरौ स कार्यः । अन्यत्र प्रतिमादौ तु न कार्यः, तादृशवाक्याभावादिति प्राप्ते, तत्समाधानं मार्गभेदव्यवस्थितविकल्पेन सूत्राभ्यामाहेत्यर्थः । तत्रेति । गुरौ प्रतिमादौ च । सूत्रं व्याकुर्वन्ति अन्यत्रापीत्यादि । प्रतिमासंग्रहायाहुः तत्त्वेन व्यपदेशादिति । उक्तं च स्कान्दे पाण्डुरङ्गमाहात्म्ये 'शिलाबुद्धिर्न कार्या च तत्र नारद कर्हिचित् । ज्ञानानन्दात्मको विष्णुर्यत्र तिष्ठत्यचिन्त्यकृ'दिति । उपासनामार्गे व्यवस्थितस्य विधिपक्षस्य बीजं स्फुटीकुर्वन्ति अत्रैवमित्यादि । एवमिति । वक्ष्यमाणप्रकारा-

रश्मिः ।

त्वाक्रमणमावेशः । स्वगतिमिति । नूतनमार्गं प्रवर्तयतीत्यर्थः । तद्वादीति । आदिनोपनयनसाङ्गवेदाध्यापने । 'उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः । सरहस्यं तदङ्गं च तमाचार्यं प्रचक्षत' इति वाक्यात् । रहस्यं वेदान्ताः । तानि शिक्षादीनि अङ्गानि यस्य वेदस्य स तथोक्तस्तम् । अधिष्ठानेति । अधिकस्थितिः । 'यमादिभि'रिति श्रीभागवतवाक्यात् । तस्या उक्तत्येत्यर्थः । जीवादाविति । जीवगुरुप्रतिमासु । अतिदिष्टत्वादिति । देव उपसंहृतविरुद्धधर्माश्रयस्तद्भक्तिवत् उपसंहृतविरुद्धधर्माश्रयगुरुभक्तिर्भवतीत्यतिदेशस्तस्मात् । येनकेनापि गुणेन भक्तिदर्शनाद्भक्तिपारम्यस्येत्युक्तम् । तदिति । उक्तायां शङ्कायां समाधानम् । सप्तमीति योगविभागात्समासः । मार्गभेदेति । मार्गावुपासाभक्तिरूपौ तयोर्भेदेन व्यवस्थितः उपासामार्गे उपसंहारः भक्तिमार्गेऽनुपसंहार इत्येवं विकल्पस्तेनेत्यर्थः । आहेति । उत्तरस्याहेत्यस्याकर्षः । तत्रेतीति । विधिपक्षमिति । कर्तव्य इत्यत्र विधौ तव्य इति तं पक्षम् । अन्यत्रापीत्यादीति । आवेशलक्षण इति । अभेदसंसर्गात् आवेशलक्षण इत्युक्तम्, संयोगविशेष इत्यर्थः । सम्बन्धोस्तीत्यत्रेतिशब्दो हेतौ । हेत्वन्तरमाहुस्तत्त्वेनेत्यादिनेत्याशयेनाहुः प्रतिमेति । ननु प्रतिमायाः ऐतदात्म्येन व्यपदेशः, नतु तत्त्वेन महावाक्य इत्यत आहुः उक्तं चेति । यत्रेति । सति प्रतिमादौ । तथा च ज्ञानानन्तानन्दसद्रूपत्वं प्रतिमादौ । ब्रह्मलक्षणमुक्तम् । प्रतिमाया असंग्रहायाहुरिति वाभासार्थः । विधीति । उपसंहारः कर्तव्य इति पक्षस्य । एवमित्यस्मात्प्रकारवाचकात्ततीयाद्विवचन-

यथा यथोपासते तथैव भवति तद्वैतान् भूत्वाऽवती'ति श्रुतेर्गुर्वादौ जीवत्वबुद्धिनिषेधाच्च तथा । तत्र यादृगुपासकस्तदुपासनासिद्ध्यर्थं तत्फलदानार्थं च तादृग्रूपो भगवानाविशतीति च तथा ॥ २० ॥

यस्त्वन्तरङ्गं भगवद्भक्तं हृद्याविर्भूतभगवत्कं ज्ञात्वैतद्भजनेन अहं भगवन्तं प्राप्स्यामीति ज्ञात्वा तमेव भजते, स भक्तिमार्गीय इति भक्तहृद्याविर्भूते रूपे उपसंहारो धर्माणां तेन न कार्य इत्यग्रिमं पठति ।

न वाऽविशेषात् ॥ २१ ॥

अनुपसंहारे हेतुरविशेषादिति । अस्य भक्तभक्तत्वेन तद्भजनरसास्वादनेन विस्मृततदाविष्टभगवत्कत्वेन तन्निरपेक्षत्वेन वा तदाविष्टभगवति गुणोपसंहारेऽनु-

---

भाष्यप्रकाशः ।

भ्याम् । जीवत्वबुद्धिनिषेधादिति । 'आचार्यं मां विजानीयान्नावमन्येत कर्हिचि'दित्यादिवाक्योक्तात् तस्मात् । नचोक्तश्रुत्या गुरौ भक्तिरेवोक्ता, नोपासनेति तदुपासनप्रकारव्यवस्थात्र न सङ्गतेति शङ्क्यम् । एवं 'गुरूपासनयाशितेने'त्येकादशस्कन्धे तस्या अप्युक्तत्वादिति । अत्रैवं प्रकारद्वयेप्यभिसन्धिमात्रं न प्रयोजकम्, किन्तु ब्रह्मावेश इति बोधनायाहुः तत्र यादृगित्यादि । आवेशस्त्वनुभावादिनावधार्यत इति नात्र काचिच्छङ्का । एवमेव श्रीजगन्नाथादौ पूजाप्रवाहस्थलेप्यवगन्तव्यम् । तेन उपासनामार्गे उभयत्राप्युपसंहारः सर्वगुणानां युक्त इत्यर्थः ॥ २० ॥

न वाऽविशेषात् ॥ २१ ॥ निषेधपक्षो भक्तिमार्गे इति बोधयन्तः सूत्रमवतारयन्ति यस्त्वन्तरङ्गमित्यादि । स भक्तिमार्गीय इति । श्वेताश्वतरमन्त्रोक्तरीतिकप्रेमविश्वासयोरुत्कर्षात् स भक्तिमार्गीयः । सूत्रं व्याकुर्वन्ति अनुपसंहारे इत्यादि । कुतो वा, कुत्र वा अविशेष

रश्मिः ।

लुगित्याहुः वक्ष्यमाणेत्यादि । भाष्ये । महावाक्ये ऐतदात्म्येन तत्त्वेन च सच्चितोरभेद उक्तः, तत्र सच्चितोरुपासने स्तः, तत्र सत्युपासनं बाधकमित्यन्तेनोक्तम् । अत्रेति । प्रतिमादौ सति । ऐतदात्म्येऽभेदसम्बन्धेनाविष्टम् । ब्रह्मेति । ऐतदात्म्यरूपब्रह्मगामिनी । एवकारस्तु, पाण्डुरङ्गमहात्म्योक्तवाक्यात् । अधुना यत्रेत्यारभ्य तथेत्यन्तेन चित्युपासनमाहुः यत्रेत्यादिना । ज्ञात्वेति । 'तत्त्वमस्या'दिवाक्येन जीवं ज्ञात्वा । तथेति । अखिलधर्मोपसंहारे । 'तं यथायथे'ति श्रुत्यनुसारेण कृते न किञ्चिद्बाधकम् । इदमपि कश्चित्प्रकारः तथाशब्दनिविष्टः । प्रकृते । एवं प्रकारेति । सुबोधिन्यनुसारेण जीवविशेषं गृहीत्वोक्तप्रकारद्वये सद्विषये चिद्विषये च । अभिसन्धीति । भग्नानुसन्धानस्य संघट्टनमात्रम् । सन्धिर्भग्नसंघट्टनम् । तत्र यादृगित्यादीति । तथेति । पूर्ववत् । अनुभावेति । 'द्रौण्यस्त्रविप्लुष्ट'मित्यत्र द्वितीयस्कन्धेस्ति । आदिना विरुद्धधर्मप्रदर्शनं शैल्यां मूर्तौ निम्नत्वदर्शनं यथा । भक्तिमार्गं उक्त्वा शरणमार्गं आहुः एवमेवेति । यथाश्रुतं जगन्नाथबलभद्रयोरश्वावारुह्य भक्तकार्यकरणम् । प्रकारद्वये भक्तिमार्गभ्रमं वारयन्ति स्म तेनेति । उभयत्रेति । सति चिति च । 'तेन जीवो नोपास्य' इत्युक्तं सुबोधिन्यां तद्भक्तिमार्गीयमिति न तस्या विरोधः ॥ २० ॥

नवाऽविशेषात् ॥२१॥ श्वेतेति । तथा गुराविस्यत्रादिष्टा भक्तिः प्रेम । अविश्वासो बाधकः । बाधकाभावो विश्वासः, सोपि तात्पर्यविषयः, यथा देवस्तथा गुरुरिति विश्वासः 'यथा देवे तथा गुरा'वित्यत्र । तयोरुत्कर्षो भक्तिमार्गीयत्वम्, स पुष्टिभक्तिमार्गीय इत्यर्थः । पुष्टिमार्गे भक्तसहितो भगवान्

पसंहारे वा भक्तोपासनायां विशेषाभावादित्यर्थः। अनुपसंहारस्यात्र बाधकत्वाभावज्ञापनाय वाशब्दः।

विशेषादिति वा। पूर्वं विहितत्वेन भगवदाकारादिषु भजनं कुर्वन्नप्युक्तरूपभक्तसङ्गेन तद्भजनेन च पूर्वस्माद्विशिष्टं रसमनुभूतवानिति रसास्वादे विशेषाद्गुणोपसंहारं स न करोतीत्यनुवादः। विहितत्वेन गुणोपसंहारपूर्वकोपासनायां नीरसत्वेनानादरज्ञापनाय वाशब्दः। भगवदवताररूपोपि बादरायणः प्रासङ्गिकेऽपि भक्तिमार्गस्मरणे तदीयरसावेशपरवशस्तद्भावस्वभावमनूक्तवान् ॥ २१ ॥

अपिच। उपसंहारो हि तत्रानुक्तानामन्यत्रोक्तानां गुणानां तत्र सत्त्वेन ज्ञानमात्रम्। उक्तरूपभक्ताय तु तद्भजनीये भक्त एवालौकिकाननुभावान् भगवान् प्रत्यक्षं दर्शयतीति न तत्रोपसंहारापेक्षागन्धोऽपीत्यत्रोत्तरं पठति।

---

भाष्यप्रकाशः।

इत्याकाङ्क्षायां तद्युत्पादयन्ति अस्येत्यादि। तथाच नवमस्कन्धे 'तत्प्रसङ्गानुभावेन रन्तिदेवानुवर्तिनः। अभवन् योगिनः सर्वे नारायणपरायणा' इतिवत् तादृशस्य तथात्वेन तद्भजनरसास्वादनेन तदाविष्टभगवति गुणोपसंहारे वा 'विस्मृते'त्यादिहेतुद्वयेनानुपसंहारे वा तत्प्रसङ्गानुभावादेव भगवत्प्राप्तिरविशिष्टेति तादृशभक्तोपासनायां ताभ्यामुत्कर्षापकर्षाभावात्कोपसंहारस्य किमपि प्रयोजनमित्यर्थः। 'अविशेषा'दिति पदच्छेदं कश्चिन्न मन्येत, तदोक्तोऽर्थो न सिध्येदिति, तदापि तत्सिद्धये प्रकारान्तरे हेतुं व्याकुर्वन्ति विशेषादित्यारभ्य वाशब्द इत्यन्तम्। तद्भजनेनेति। भगवदाकृतिभजनेन। ननु तर्ह्यनुवादस्य किं प्रयोजनम्, अत आहुः भगवदवतारेत्यादि तथाच। तदुत्कर्षबोधनाय तत्स्वभावबोधनमेव प्रयोजनमित्यर्थः ॥ २१ ॥

रश्मिः।

फलतीति साधनेपि तथेति। भाष्ये। इत्यग्रिममिति। इति हेतोः कार्याकार्यसाधारणमग्रिमं सूत्रम्। प्रकृते। तद्व्युदिति। कुत इति प्रश्ने, भक्तभक्तत्वेनेत्यादिव्युत्पादनम्। कुत्रेति प्रश्ने, तदाविष्टभगवतीति व्युत्पादनम्। कुर्वन्तीत्यर्थः। तत्प्रसङ्गेति। रन्तिदेवप्रसङ्गस्य योऽनुभावः विसर्पियशोरूपः तेन तत्पुत्राः। तथात्वेन भक्तभक्तत्वेन। तत्प्रसङ्गेति। भगवद्भक्तप्रसङ्गस्यानुभावः स्वर्गपुनर्भवाधिकभगवत्सङ्गिसङ्गस्य स्वर्गपुनर्भवानादरः। 'तुलयाम लवेनापि' इति वाक्यात्। ताभ्यामिति। भगवत्युपसंहारानुपसंहाराभ्यां भक्तभक्तस्योत्कर्षापकर्षाभावात्। भाष्ये। वाशब्दोऽनादर इत्याहुः अनुपेति। अत्रेति। भक्तभक्तविषये भगवत्प्राप्तौ। प्रकृते। प्रकारान्तर इति। उक्तरूपभक्तसङ्गेन भगवद्भजने। विशेषादित्यारभ्येत्यादि। विहितत्वेनेति। 'तं भजे'दिति गोपालतापिनीये। विशिष्टमिति। भक्तपूजनेन समं भगवद्भजने पुष्टिमार्गो जात इति, 'ज्ञात्वाज्ञात्वा च कर्माणि जनोऽयमनुतिष्ठति। विदुषः कर्मसिद्धिः स्यात्तथा नाविदुषो भवे'दिति भक्तसङ्गेन भगवज्ज्ञानं जातमिति वा, विशिष्टम्। अनुवाद इति। अनुपसंहारे प्रकारानुवादः प्रकारान्तरे। विहितत्वेनेति। पूर्ववत्। नीरसत्वेनेति। सात्त्विकत्वात्तथा। 'मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः। सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते' इति गीताष्टादशाध्यायवाक्यात्। तर्हीति। प्रकारान्तरकाले। तदुत्कर्षेति। भक्तिमार्गोत्कर्षबोधनाय। तत्स्वभावेति। भक्तस्यानुपसंहारस्वभावबोधनम् ॥ २१ ॥

## दर्शयति च ॥ २२ ॥

ननु भक्तभक्तः स्वसेव्येऽत्यलौकिकं वीर्यं दृष्ट्वा तदाविष्टे भगवति तत्सम्भारकत्वस्येन्द्रादीनामपि तदाज्ञापेक्षित्वं दृष्ट्वा द्युलोकव्यापकत्वस्योपसंहारं करिष्यतीत्याशङ्क्याह।

## सम्भृतिद्युव्याप्त्यपि चातः ॥ २३ ॥

राणायनीयानां खिलेषु पठ्यते । 'ब्रह्मज्येष्ठा वीर्या सम्भृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान, ब्रह्म भूतानां प्रथमं तु जज्ञे, तेनार्हति ब्रह्मणा स्पर्धितुं कः' इति। अस्यार्थस्तु–अन्यैर्हि पुरुषैः सहायानपेक्ष्य विक्रमाः संभ्रियन्ते। तेन तत्पराक्रमाणां त एव नियतपूर्वभावित्वरूपकारणत्वेन ज्येष्ठाः । ब्रह्मधर्माणां तु.

भाष्यप्रकाशः।

दर्शयति च ॥ २२ ॥ सूत्रमवतारयन्ति अपिचेत्यादि। प्रकटार्थमत्र भाष्यम्।

अन्ये तु, 'सम्बन्धादेवे'त्यादित्रिसूत्रमधिकरणमङ्गीकृत्य, बृहदारण्यकोपान्ते 'सत्यं ब्रह्मे'त्युपक्रम्य, आदित्यमण्डलस्थस्य अक्षिस्थस्य च ये उपासने विहिते, तयोरुपनिषदौ रहस्यनामनी उपासनशेषतयाम्नायेते। 'तस्योपनिषदहरित्यधिदैवतम्, तस्योपनिषदहमित्यध्यात्म'मिति, ते किं सङ्कीर्येते, उत व्यवतिष्ठेते इति सन्देहे, सम्बन्धिभेदाद्व्यवतिष्ठेते इति सिद्धान्तयन्ति।

सोपि स्वाध्यायसूत्रस्थसवदृष्टान्तबोधितेन सम्बन्धिभेदेनैव व्यवस्थितिं लभमानो नाधिकरणान्तरमपेक्षत इति चिन्त्यम् ॥ २२ ॥

सम्भृतिद्युव्याप्त्यपि चातः ॥ २३ ॥ सूत्रमवतारयन्ति ननु भक्तेत्यादि । तत्सम्भारकत्वस्येति। वीर्यसम्भारकत्वस्य। उपसंहारं करिष्यतीति। 'तं यथा यथोपासत' इत्यत्र स्वामिसंहितरूपेणैव स्वावनस्योक्तत्वात् स्वैहिकपारलौकिकार्थं उपसंहारं करिष्यति। सूत्रं व्याकर्तुं विषयवाक्यमुपन्यस्य प्रथमं तत् व्याकुर्वन्ति राणायनीयेत्यादि। उक्तं भवतीत्यन्तम्।

रश्मिः।

दर्शयति च ॥२२॥ प्रकटार्थमिति। भक्त एवेति। आचार्ये कृष्णदासद्वारा शिलाधारणम्। रामानुजाचार्ये बदरिकाश्रमे पर्वतात्पातेप्यभङ्गः। मध्वविजये माध्वाचार्ये। व्यासे 'अपश्यत्पुरुषं पूर्ण'मित्यादि समाधिभाषायाम्। एवं प्रकाटार्थम्। दर्शयति भजनीये भक्त आचार्यादौ जनताऽलौकिकानुभावान् पश्यति, भगवान् तं अलौकिकानुभावान् दर्शयतीति सूत्रार्थः। चोऽनुक्तसमुच्चये। उपनिषदादाविति। शब्दोऽयं हलन्तः। अजन्तं पदं तदा शकन्ध्वादिषु पररूपम्। तस्योपेति। अर्थस्तु उपनिषदशब्देनोपनिषच्छब्देन वा देवताप्रकाशकं रहस्यं नाम। अहरिति नाम। अहःशब्दः प्रकाशवाची। आदित्यरूपस्योक्तरूपस्य नाम........। तस्येति। चाक्षुषपुरुषस्य सत्यस्य। अधिदैवतमिति। देवतैव दैवतं तस्मिन्नित्यधिदैवतं नाम। अभिव्यापकाधारे सप्तमी। तस्येति। मुक्ताविषस्य पुरुषस्य सत्यस्य। आत्मनीत्यध्यात्मं नाम। उपनिषदशब्देनोपनिषच्छब्देन वा देवताप्रकाशकं रहस्यं नाम। अहमिति नाम। अहंशब्दः प्रत्यगात्मवाची। चाक्षुषपुरुषस्योक्तरूपस्य। व्यवतिष्ठेते इति। व्यवस्थितिं कुर्वाते। सम्बन्धीति। उपसंहारात् संकीर्येते इति पूर्वपक्षे तथा ॥ २२ ॥

सम्भृतिद्युव्याप्त्यपि चातः ॥ २३ ॥ वीर्येति । नृसिंहतापिनीयेऽग्निपूतत्ववायुपूतत्वादित्यपूतत्वसोमपूतत्वविष्णुपूतत्वसर्वपूतत्वमृत्युतर्तृत्वपाप्मतर्तृत्वब्रह्महत्यातर्तृत्वभ्रूणहत्यातर्तृत्ववीरहत्यातर्तृत्वसर्वहत्यातर्तृत्वाग्निस्तम्भकत्ववायुस्तम्भकत्वादित्यस्तम्भकत्वसोमस्तम्भकत्वोदकस्तम्भकत्वसर्वदेवस्त-

ब्रह्मैव ज्येष्ठमनन्यापेक्षं सृष्ट्यादि करोतीत्यर्थः । एवं सति ब्रह्म ज्येष्ठं येषां तानि ब्रह्मज्येष्ठानि वीर्याणि । अत्र छन्दसि बहुवचनस्य डादेशः । किञ्च, अन्येषां वीर्याणां बलवद्भिर्मध्ये भङ्गोऽपि भवति । तेन ते स्ववीर्याणि न सम्बिभ्रति । ब्रह्मवीर्याणि तु ब्रह्मणा सम्भृतानि निष्प्रत्यूहं सम्भृतानीत्यर्थः । तच्च ज्येष्ठं ब्रह्माग्रे इन्द्रादिजन्मनः प्रागेव दिवं स्वर्गमाततान व्याप्तवन्नित्यमेव विश्वव्यापकमित्यर्थः । देशतोऽपरिच्छेदमुक्त्वा कालतोऽपि तमाह ब्रह्मेति । भूतानामाकाशादीनां पूर्वमेव जज्ञे । आविर्बभूवेत्यर्थः । एतेन वीर्यसम्भृतिद्युव्याप्तिप्रभृतिमाहात्म्यमुक्तं भवति ।

तथाच सम्भृतिश्च द्युव्याप्तिश्च तयोः समाहारस्तथा । एतावपि स तत्र नोपसंहरति । तत्र हेतुः 'न वाविशेषा'दिति सूत्रोक्त एवेत्यतिदिशति अत एवेति । एतत् यथा तथा तत्रैवोक्तम् ।

विषयवाक्योत्तरार्धोक्तधर्मानुद्देशेनैवं ज्ञायते भक्तस्यैहिकपारलौकिकोपयोगिधर्मोपलक्षणार्थं द्वयोरेवोद्देशः कृत इति । चकारेण दर्शनमप्युक्तं समुच्चीयते ।

भाष्यप्रकाशः ।

सूत्रं व्याकुर्वन्ति तथाचेत्यादि । तत्रैवोक्तमिति । 'अस्य भक्तभक्तत्वेने'त्याद्युक्तरीत्या उपासनायामविशेषात्, पूर्वं 'विहितत्वेने'त्याद्युक्तरीत्या च भजनरसास्वादने एतदपेक्षया विशेषाच्च न करिष्यतीति तस्मिन्नेव सूत्र उपपादितम् । अयमेव सूत्रकाराशय इत्यत्र गमकमाहुः विषयवाक्येत्यादि । तथाचोपसंहारं विनापि भक्तस्य लौकिकालौकिकसम्पादनादलौकिकानुभावदर्शनाच्च एतयोरपि नोपसंहारशङ्कात्रेति पूर्ववदत्रापि भक्तस्वभावस्यैवानुवादः, प्रथमाधिकारिणः शिक्षा वेति

रश्मिः ।

म्भकत्वसर्वग्रहस्तम्भकत्वादिवीर्यं यस्य सम्भारकत्वं तस्य । उपसंहारमित्यनेनान्वेति । भाष्ये । इन्द्रादीनामिति । आदिना महर्लोकादिस्थजनाः । तथा तत्रैव श्रुतयः 'सर्वेषां लोकं जयति स भुवर्लोकं जयति स स्वर्लोकं जयति स महर्लोकं जयती'त्यादयः । तथा च इन्द्रस्यादी इन्द्रादी इन्द्र आदिर्येषां ते इन्द्रादयः इन्द्रादी च इन्द्रादयश्च इन्द्रादयस्तेषाम् । भक्तभक्ताज्ञापेक्षित्वमेकादशवाक्येन विष्ण्वात्मकस्याक्षरात्मकहृदयस्य भक्तभक्तस्य सर्वगे मनोनिवेशेनाज्ञापकत्वशक्तेः प्राप्तत्वात् । वाक्यं तु 'विष्णौ त्र्यधीश्वरे चित्तं धारयेत्कालविग्रहे । स ईशित्वमवाप्नोति क्षेत्रक्षेत्रज्ञचोदना'मिति पञ्चदशाध्याये । प्रकृते । राणायणीयेत्यादीति । अस्यार्थ इति । वेदस्यार्थः । ब्रह्मज्येष्ठत्वं स्फुटयितुमन्यत्राज्येष्ठत्वं वीर्ये सम्पादनीय आहुः अन्यैरित्यादि । सहायानिति । यथा कौरवैः पाण्डवैश्च । सम्भ्रियन्ते सम्पाद्यन्ते । ज्येष्ठा मुख्याः । ब्रह्मज्येष्ठेति व्याकुर्वन्ति स्म ब्रह्मधर्माणामिति । धर्मा जगत्कर्तृत्वादयः । धर्माणां धर्म्यभेदान्निर्धारणे षष्ठी । सम्भृतानीति व्याकुर्वन्ति स्म किञ्चेति । बलवद्भिरिति । यथा यादवैर्जरासन्धवीर्यभङ्गः । न इति । अन्ये । समिति । शिशुपालस्तु बिभर्ति । ब्रह्मणेत्यसहायेन । ब्रह्माग्र इत्यादि व्याकुर्वन्ति स्म तच्चेति । विश्वेति । विश्वस्मिन्व्यापकम् । देशत इति । वीर्यदेशभिन्नदेश इति तथा । कालतः प्रथमकालम् । अत्यन्तसंयोगे द्वितीयेति तथा । तथाचेत्यादीति । तथेति । सम्भृतिद्युव्याप्ति । 'स नपुंसक'मिति नपुंसकत्वम् । एतावित्यर्थौ । अतिदिशति अन्यत्र हेतुसाध्यादिप्राप्तिं करोति । सौत्रचकारमेवकारार्थसमुच्चायकमाहुः अत एवेति । अनुपसंहारो विशेषाभावादेव । वक्ष्यमाणप्रकाशात्तु स्थानविशेषादेव । स्थानं दहरादिविद्यास्थं हृदयादि तत्र विशेष आध्यात्मिकत्वादिः तस्मात् । विषयवाक्येत्यादीति । धर्मः भूतप्रथमजत्वं तस्यानुद्देशेन

अन्यच्च। स्पर्धाकृतिसम्भावनायां हि तद्योग्यतानिषेधः सम्भवति। सा चाविर्भूत एव भगवति सम्भवतीत्यखिलशक्त्याविर्भावपूर्वकमाविर्भूतस्य तस्य एतया श्रुत्या माहात्म्यमुच्यत इति गम्यते। एवं सत्येतद्वाक्योक्तधर्मयोरेवानुपसंहार्य-

भाष्यप्रकाशः।

भावः। चकारेणोत्तरार्धोक्तधर्मसमुच्चयमाशङ्क्य तत्तात्पर्यमाहुः चकारेणेत्यादि। श्रुतेरनारभ्याधीतत्वेन भक्तहृदयाविष्टभगवद्धर्मकत्वस्य सन्दिग्धत्वात् पूर्वोक्ते व्यासाशयो न निश्चेतुं शक्यत इति शङ्कायां विषयवाक्यतात्पर्यकथनपूर्वकं तमुद्घाटयन्ति अन्यच्चेत्यादि। तथाच तुरीयपादेन श्रुतेराविर्भूतब्रह्मविषयकत्वे निश्चिते यत् द्वयोरेवानुपसंहारकथनम्, तेन तत्र व्यासाशयो निश्चीयत इत्यर्थः। तेनानारभ्याधीतानामप्यनुपयुक्तानां नोपसंहार इति सिद्धम्।

अन्ये तु, इदमेकसूत्रमधिकरणमङ्गीकृत्य, अनारभ्याधीतेऽस्मिन् वाक्ये उक्तानां गुणानां सर्वासु विद्यासूपसंहारः न वेति शङ्कायाम्, नोपसंहारः। कुतः। विशेषात्। दहरादिविद्यासु हृदयादिरूपस्थानविशेषादिति व्याख्याय, स्थानस्य तदनुपसंहारकत्वे आध्यात्मिकत्वं

रश्मिः।

सूत्रे। द्वयोरिति। सम्भृतिद्युव्याप्त्योः। कथमत्र भक्ते सूत्रकाराशय इत्यत आहुः तथाच्चेत्यादि। आभासोक्तरीत्या लौकिकः सम्भारः अलौकिकं द्युव्यापनेन भगवत इन्द्रादीनां भक्ताज्ञापेक्षित्वं तयोः सम्पादनं तस्मात्। नृसिंहतापिनीयोक्तस्याग्निपूतत्वादेरलौकिकानुभावस्य जीवत्वम्। तद्विरुद्धधर्मरूपस्य दर्शनात्। एतयोरितिं। सम्भृतिद्युव्याप्त्योरत्र भगवति तथा। पूर्ववदिति। रसास्वादे विशेषात्तस्य भक्तस्वभावत्वात्तथा। एवकारो विषयवाक्यस्य श्रुतित्वात्। अनुवाद इति। सिद्धस्य कथनम्। प्रथमेति। जिज्ञासुत्वामात्सर्यश्रवणादरवत्त्ववतः शिक्षा धर्मानुपसंहारशिक्षा। अस्पर्धाशिक्षा वा। तत्तात्पर्यमिति। चकारस्य तात्पर्यार्थमाहुरित्यर्थः। वैयाकरणमतम्। नैयायिकमतेन चकार एवकारार्थ इत्युक्तम्। सन्दिग्धेति। अनारभ्याधीतस्यात्र 'यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते यांश्च कामान्। तं तं लोकं जयते तांश्च कामांस्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः। स वेदैतत्परमं ब्रह्मधाम यत्र विश्वं निहितं भाति शुभ्रम्। उपासते पुरुषं ये ह्यकामास्ते शुक्रमतिवर्तन्ति धीरा' इति मुण्डकश्रुत्येकवाक्यतयार्थः कृतः। अन्यश्रुत्येकवाक्यतायां तु सन्दिग्धत्वादित्यर्थः। स इति। भूतिकामः। पुरुषमात्मज्ञं तत्स्थं वा। अतिवर्तन्ति पुंसो रेतःकणाश्रया न भवन्तीति भावः। तमिति। व्यासाशयम्। अन्यच्चेत्यादीति। स्पर्धा संघर्षः। संघर्षः पराभिभवेच्छा। सम्भवतीति। अभावस्य प्रतियोगिनिरूपणाधीननिरूपणकत्वात्। एवेति। नचानाविर्भूताय नास्तिकः स्पर्धते इति वाच्यम्। ॐ। एवेत्यस्याप्यर्थकत्वात्। माहात्म्यमिति। सम्भृतिद्युव्याप्तिरूपम्। एतद्वाक्येति। धर्मौ सम्भृतिद्युव्याप्त्याख्यौ। एवकारेण भूतप्रथमजत्वं व्यवच्छिद्यते। ननु कथं सर्वादित्वस्यानुपसंहार्यत्वम्। उपसंहार्यत्वस्यान्यत्र परस्परमसाधारणत्वेन स्थितधर्मनियम्यत्वात् सर्वसाधारण्येन प्रकारेणोपसंहारायोग्यत्वादनुपसंहार्यत्वम्, न तु प्रकृतमनुपसंहार्यत्वम्, व्यापकधर्मत्वात्। तथाच्चेति। तुरीयेति। उपसंहारेणार्थनिर्णायकेन। आविर्भूतेति। अग्रिमे योज्यः। तत्रेति। सम्भृतिद्युव्याप्तिसूत्रे भगवद्भक्ते उपसंहारस्तन्निष्ठभगवत्यनुपसंहारे। ब्रह्मभूतानामित्यत्र भूतानां प्रथमं ब्रह्म जज्ञ इत्यन्वयवत् ब्रह्मभूतानां 'ब्रह्मभूतः प्रसन्नात्मे'ति गीतोक्तानां प्रथमं जज्ञ इत्यन्वयस्यापि सम्भवात् स भगवतो ब्रह्मभूतस्य भक्तिमतो निरूपयन्त्याः श्रुतेः कीर्तनभक्तेः भक्तभक्तविषयत्वेन तद्बुद्धीकाणामप्येवं भवत्विति व्यासाशयः। तेनेति। सकलसाधारणधर्मभूतप्रथमजत्वस्योपसंहार्यानुपसंहार्यधर्मेष्वविचारेण। दहरादीति। आदिना शाण्डिल्यविद्यादहरविद्योपकोसल-

भाष्यप्रकाशः ।

केचन हेतुत्वेनाहुः । केचिदल्पत्वम् । अन्ये तु विद्याविशेषं हेत्वन्तरमाहुः । किञ्च । यद्यपि तासु 'यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' 'अतः परो दिवो ज्योतिर्दीप्यते' 'ज्यायान् पृथिव्या ज्यायानाकाशा'दित्यादिभिराधिदैविक्यो विभूतयोऽप्युच्यन्ते, तथापि ता माहात्म्यज्ञापनार्था इति ता एव तत्रोपसंहार्याः, प्राकरणिकत्वात्, न त्वितराः । अतो द्युव्याप्तिनिवृत्तौ तत्सहपठिताया वीर्यसम्भृतेरपि निवृत्तिरित्याहुः ।

तत्र रोचिष्णु । द्युव्याप्तिरूपाया महत्या आधिदैविक्या विभूतेर्ब्रह्मस्वरूपमादायैव स्थानस्य तदाध्यात्मिकतायास्तदन्यतायाश्च बाधकतामनादृत्योपदेशेन तस्मिन् स्थानविशेषे द्युव्याप्त्युपसंहार-बाधकत्वकथनस्यायुक्तत्वात् । नच सा दिक्कालादीनामिव भिन्नेति युक्तम् । ब्रह्मण उभयत्राप्यैक्येन व्याप्तौ भेदस्य वक्तुमशक्यत्वात् । नच शब्दान्तरनिर्देशाद्भेद इत्यपि युक्तम् । सौत्रहेतुविरोधात् । सूत्रे पूर्वसूत्रोक्तस्थानविशेषोपबन्धस्यैवातिदेशाङ्गीकारात् । एतेनैव विद्याविशेषस्याप्यनुपसंहा-रहेतुत्वं दत्तोत्तरम् ।

यत्तु भामत्याम्, या काचिदाधिदैविकी विभूतिः शाण्डिल्यविद्यायां श्रूयते, तस्यास्तत्प्र-करणाधीतत्वात् तन्मात्रं गृहीष्यते, नैतावता सम्भृत्यादीननुक्रष्टुमर्हति, तत्रैतत्प्रत्यभिज्ञानाभावात्, ब्रह्माश्रयत्वेन प्रत्यभिज्ञानमतिप्रसक्तम्, भूयसीनामैक्यप्रसङ्गादित्युक्तम् ।

रश्मिः ।

विद्या आधिदैविक्यः । तद्वनुपेति । अनारभ्याधीतस्योपसंहारकत्वविरोधित्वे । विरोधरूपे । विरोधो मत्वर्थ इति । 'आध्यात्मिकत्वमिति । स्थानस्येति बोध्यम् । केचनेति शंकराचार्याः भास्करा-चार्याश्च । केचिदिति रामानुजाचार्याः । अन्ये त्विति । माध्वादयः । तास्विति दहरादिविद्यासु । निवृत्तिरिति । सन्नियोगशिष्टानां सहैव प्रवृत्तिः सहैव निवृत्तिरिति न्यायेन । ता एवेति । नत्वना-रभ्याधीते सम्भृतिद्युव्याप्ती उपसंहार्ये । महत्या इति । व्यापकधर्मस्य व्यापकत्वनियमान्महत्याः । तस्या धर्मत्वेनाधारभूतं ब्रह्मस्वरूपम् । एवकारो विद्वन्मण्डनोक्तत्वात् । तदाध्यात्मिकेति । द्युव्याप्त्या-ध्यात्मिकायाः । बाधकता उपसंहारबाधकता या परैरादृता तामित्यर्थः । उपदेशेन सूत्रे सम्भृति-द्युव्याप्त्योरुपदेशेन । तस्मिन्निति । आध्यात्मिकेऽन्यस्मिंश्च । अयुक्तत्वादिति । भवता ब्रह्मस्वरूप-मादायानुक्तत्वेन तथा । तथाच स्थानविशेषस्यानुपसंहारहेतुत्वं न सम्भवतीतिभावः । अथ सौत्रसमा-हारविचारेणाहुः न च सेति । व्याप्तिः । दिग्देशरूपा कर्मणि प्रसिद्धा । आदिना मन्त्रः तेजः द्युत्वम् । भिन्नेति । व्याप्तिः सम्भृतिभिन्ना वा । ब्रह्मण इति । उक्तब्रह्मस्वरूपस्य उभयत्र सम्भृतिद्युव्याप्त्यो-रैक्यं समाहारद्वन्द्वात् तेनेत्यर्थः । भेदे सति उभयत्र एकहेतोरसम्भवाभिप्रायेणाहुः सौत्रेति । विरोधमाहुः सूत्र इति । एवकारोऽविशेषादित्यस्य व्यवच्छेदकः । तेन सम्भृतिद्युव्याप्त्योर्वीर्यत्वेपि स्वतन्त्रेच्छस्य मुनेर्वर्णनासक्तस्य पर्यनुयोगानर्हत्वमिति बोधितम् । एतेनैवेति । उक्तप्रकारेण । विद्याविशेषस्य स्थानघटितत्वात् । एवकारस्तु सौत्रार्थस्य व्यासाशयगोचरत्वोक्तेः । तन्मात्रमिति । सैवेति तन्मा-त्रम् । प्राकरणिकाधिदैविकविद्यामात्रम् । नत्वाधिदैविक्योरनारभ्याधीतयोः सम्भृतिद्युव्याप्त्योर्ग्रहणं करिष्यते । तत्रैतदिति । शाण्डिल्यविद्यायाम् । एतयोः सम्भृतिद्युव्याप्त्योः प्रत्यभिज्ञानाभावात् । दहरविद्योक्ताधिदैविक्यो विभूतयस्तु प्रत्यभिज्ञायन्ते । 'अतः परो दिव'इत्याद्युक्तश्रुत्योः शाण्डिल्यवि द्यास्थयोः दहरविद्यास्थस्य 'यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः, उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते'इति श्रुतिभ्यां तत्ताइदन्ताप्रकारकज्ञानसम्भवात् । दहरविद्योक्तोयं शाण्डिल्यविद्यास्थ

त्वेन यत् कथनम्, तत्तु भक्तहृद्याविर्भूतं ब्रह्माप्येवंभूतमेवेति ज्ञापनाय, अतो युक्त एवानुपसंहारः ॥ २३ ॥

इति तृतीयाध्याये तृतीयपादे तृतीयं कार्याख्यानादित्यधिकरणम् ॥ ३ ॥

---

भाष्यप्रकाशः ।

तदपि तथा । विधैक्ये संयोगरूपचोदनाख्यानां चतुर्णां हेतुतायाः पूर्वमुक्ततया केवलेन रूपैक्येन विधैक्यप्रसङ्गस्य वक्तुमशक्यत्वादिति । एवमन्यत्रापि ज्ञेयम् ।

सिद्धान्ते तूक्तरीत्या 'सर्वभूतस्थ एक' इत्येवं चिन्तिते, स आत्मत्वेन निरुपधिप्रियत्वेन पतित्वेन च साकारः पर्यवस्यति, सम्बन्धश्च तस्यावेशरूपो यत्राधिकः, तत्राप्यधिष्ठितं तमनुसन्धाय तद्गुणा अन्येप्युपसंहार्याः । यद्यधिष्ठान एव विशेषस्फूर्तिः, तदा तत एव फलसिद्धेरुपसंहारस्य न किञ्चित्प्रयोजनमिति सिद्धम् । एवं व्याप्त्या स्वरूपा कला च सिद्धेति ॥ २३ ॥ इति तृतीयं कार्याख्यानादित्यधिकरणम् ॥ ३ ॥

रश्मिः ।

आकाश इति । ब्रह्माश्रयत्वमाकाश इव संभृतिद्युव्याप्त्योरप्यस्तीति ब्रह्माश्रयत्वेन रूपेणाकाशशब्देन संभृतिद्युव्याप्त्योरपि प्रत्यभिज्ञानमुपकोसलविद्यास्थे 'य एषोऽक्षिणि पुरुषो दृश्यते' इत्यत्रातिप्रसक्तं सत् भूयसीनामौपमन्यवादिविधानामैक्यप्रसङ्गात् ऐक्यप्रसङ्गमालोच्यान्यत्रैक्यमापादयेत् । ल्यब्लोपपञ्चम्यान्ते शेषः पूरणीयः । तथेति । दत्तोत्तरम् । पूर्वमिति । सर्ववेदान्तप्रत्ययसूत्रे । अशक्येति । तथाच ब्रह्माश्रयत्वेन सम्भृत्यादेः प्रत्यभिज्ञानं प्राप्तमिति भावः । अन्यत्रेति । ब्रह्माश्रयत्वेनेत्याशङ्कायामशक्यत्वं ज्ञेयम्, शिथिलत्वात् । नैयायिकानां घटत्वेन वह्न्यभावमादाय साध्याभाववद्वृत्तित्वं धूमेस्तु, शाखान्तरत्वात् । उक्तरीत्येति । अधिकरणत्रयोक्तरीत्या । पुरुषविद्यायाः अग्रे स्पष्टत्वात्स्मृतया । सर्वभूतस्थः सर्ववेदान्तप्रत्ययो भवति । 'तृतीयं सर्वभूतस्थ'मिति वाक्यात् । 'सर्वं खल्विदं ब्रह्मे'ति सामान्यं ब्रह्मोपासनम् । 'सर्वभूतेषु मन्मति'रिति श्रीभागवतं चासन्दिग्धम् । 'व्याप्तेश्चे'तिसूत्रे पुरुषोत्तमः । 'प्रथमं महतः स्रष्टृ'ति वाक्यात् । 'पुरुषविद्या'सूत्रे 'द्वितीयं त्वण्डसंस्थितं' वक्ष्यते । चिन्तित इति । चिन्तितप्राये । स इति । पुरुषोत्तमः रसरूपः, दशरसात्मकं जगदिति । आत्मत्वेनानन्दमय इति सूत्रे । निरुपधीति । समानसूत्रे पतितत्वेनेत्यपि ज्ञेयम् । साकारोऽग्निमाधिकरणेनेति तत्कारणं साकारः । अत उक्तं पर्यवस्यतीति । सम्बन्धश्चेत्यादि । 'सम्बन्धा'दिति सूत्र उक्तम् । तत्रापीति । भक्तेपि । तमित्यावेशरूपं सम्बन्धम् । विशेषेति । पूर्वभजनाद्विशेषस्य रसे स्फूर्तिः । तत एव अधिष्ठानभक्तादेव । उपसंहारस्येति । भगवत्युपसंहारस्य । एवं व्याप्त्या स्वेति । 'समान' सूत्रोक्तरीत्या व्याप्त्याखकलान्नमयशिरोरूपा सिद्धेत्यर्थः । 'आकाशशरीरं ब्रह्मे'ति श्रुतेरीश्वरशिरः खम्, एवमवतारेपीति । किं पुनर्जीवेपि, 'छिद्रा व्योम्नीव चेतना' इति सिद्धान्तमुक्तावलीवाक्यात् । आकाशस्य छिद्रदातृत्वात् वृद्धिह्रासभाक्त्त्वाच । मनोमये 'आकाश आत्मे'ति मनोमये श्रावणम्, तस्य न ग्रहणम्, आत्मरूपस्याकाशस्योपासनानुपयोगात् । 'अन्तरिक्षं कले'ति छान्दोग्ये । 'श्रोत्रं कले'ति च । 'अन्तरिक्षमाकाशः' । श्रोत्रं कर्णशष्कुल्यवच्छिन्न आकाशः ॥ २३ ॥ इति तृतीयं कार्याख्यानादित्यधिकरणम् ॥ ३ ॥

---

१. प्रसङ्गरूपेति पूर्वः पाठः ।

## पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥ २४ ॥ (३-३-४.)

तैत्तिरीयके, 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्, स भूमिं विश्वतो वृत्वा अत्यतिष्ठत् दशाङ्गुलम्, पुरुष एवेद९ सर्वं यद्भूतं यच्च भाव्य'मित्यादिना पुरुषविद्या निरूप्यते । तत्रैव, 'ब्रह्मविदाप्नोति पर'मिति प्रश्ने, 'स वा एष पुरुषोऽन्नरसमय' इत्यारभ्य प्राणमयमनोमयविज्ञानमयानन्दमयात्मकं ब्रह्मस्वरूपं निरूप्यते । तत्र सर्वत्र 'स च पुरुषविध एवे'ति च पठ्यते ।

अत्रान्नमयादिषु पुरुषसूक्ते च पुरुषपदश्रवणादन्नमयादिषु सहस्रशीर्षत्वाद्युपसंहारः कर्तव्यो न वेति भवति संशयः । किमत्र युक्तम् । उपसंहर्तव्यमेवेति । कुतः । सर्वत्र ब्रह्मण एवोपास्यत्वादत्राप्युपासनोक्तेर्ब्रह्मत्वपुरुषत्वयोरविशेषाद्विद्यैक्यादिति प्राप्ते, उच्यते । पुरुषविद्यायामिवेति । अन्नमयादिषु सहस्रशीर्षत्वादिकं नोपसंहर्तव्यम् । कुतः । पुरुषविद्यायां यथा पुरुषस्वरूपं निरूप्यते, न तथेतरेषामन्नमयादीनां विज्ञानमयान्तानां स्वरूपं तत्प्रकरणे निरूप्यते । अत्र हि पुरुषत्वमुच्यते । सहस्रपदमनेकत्वोपलक्षकम् । अन्यथाक्ष्णां शिरोभ्यो द्वैगुण्यं वदेत् । तेन साकारव्यापकत्वमुक्तं भवति । तत्र पुरुषविधत्वम्, स चाध्यात्मिकरूपः, तच्छरीराभिमान्यात्मा चान्य आधिदैविक उच्यते, न तथात्र । किञ्च, 'पुरुष एवेद९ सर्व'मित्यादिना प्रपञ्चात्मकत्वं मुक्तिदातृत्वं चोक्त्वा, नैतावन्मात्रमस्य माहात्म्यम्, इतोऽपि महन्माहात्म्यमस्तीति वक्तुं प्रपञ्चरूपं तद्विभूतिरूपमिति 'एतावानस्य महिमे'त्यनेनोक्त्वा तत आधिक्यमाह 'अतो ज्यायाँश्च पूरुष' इति । एवमतिवैलक्षण्यात् पुरुषपदमात्रसाधर्म्येण

भाष्यप्रकाशः ।

पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥ २४ ॥ एवमनारभ्याधीतानां धर्माणां भक्तिमार्गेऽनुपसंहारमुक्त्वा उत्तमाधिकारिभिरशेषगुणपूर्णं परं ब्रह्मैवोपास्यम्, न तु विभूतिरूपमिति बोधनायोपासनामार्गे तेष्वशेषैरनुपसंहारमवसरसङ्गत्या वदतीत्याशयेनाधिकरणविषयादिकं दर्शयन्ति तैत्तिरीयक इत्यादि । प्रश्न इति । प्रपाठके । अविशेषादिति । भृगुविद्यायां ब्रह्मत्वस्यात्र च पुरुषविधत्वोक्त्या तदाकारत्वस्योक्तत्वेन तयोरविशेषात् । सूत्रं व्याकुर्वन्तोऽत्रापि नशब्दः पूर्वसूत्रादनुवर्तत इत्याशयेनाहुः अन्नमयादिष्वित्यादि । निरूप्यत इति । 'सहस्रशीर्षे'त्यादिना निरूप्यते । अत्र हीति । पुरुषविद्यायाम् । तेनेति । सहस्रशीर्षत्वादिश्रावणेन । वैलक्षण्यबोधनायाहुः तत्रेत्यादि । तत्रेति । अन्नमयाद्युपासनप्रकरणे । स चेति । अन्नमयादिः । वैलक्षण्यान्तरमाहुः किञ्चेत्यादि । सिद्धमाहुः एवमित्यादि । तथाच पुरुषविद्यायाममृतत्वस्य फलत्वेनोक्ततयान्नमयादिचतुष्टयविद्यासु यथायथमन्नायुर्भयाभावसर्वकामप्राप्तीनां फलत्वेनोक्ततया

रश्मिः ।

पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥ २४ ॥ उत्तमेति । दृढवैराग्यवत्त्वमुत्तमाधिकारः । दृढत्वं द्वादशाङ्गपुरुषोत्तमैकतानत्वरूपम् । हरेरपि हरित्वं वैराग्य उत्कर्षः । तादृशैः । विशेषेति । विभूतीनामशेषगुणपूर्णत्वार्थं तथा । प्रश्न इति । 'सर्वे सर्वार्थवाचका' इति तथा । तत्रेत्यादीति । द्वैगुण्यमिति । सहस्रशीर्षसु द्विगुणाक्षिसत्त्वात्तथा । द्विसहस्राक्ष इति पदं वदेत् ।

१. इत्यध्याये इति पाठः । २. सहस्रशीर्षत्वादिकमिति पाठः । ३. भक्तिमार्गेपि विशेषानुपसंहारमिति पूर्वः पाठः ।

नैकविधत्वं वक्तुं शक्यम्, नचोपसंहार इति। चकारात् 'अम्भस्यपारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीया'नित्यादिश्रुतयः, 'सर्वतः पाणिपादान्त'-मित्यादिस्मृतयश्च संगृह्यन्ते। एतेन यत्किञ्चिद्धर्मसाम्येपि न मूलभूतब्रह्मरूपत्वम्, अत एव न तत्रोपास्यता तथात्वेनेति ज्ञापितम्। अत एव भृगूपाख्यानेऽन्नमयादिब्रह्मज्ञानेपि जिज्ञासैवोक्ता। भृगोरानन्दरूपपरब्रह्मज्ञाने तु नोक्ता। तेनाशेषगुणपूर्णं ब्रह्मेत्युक्तं भवति। अत उत्तमाधिकारिभिस्तदेवोपासनीयम्, न

भाष्यप्रकाशः।

संयोगभेदात्, पुरुषविद्यायां पुरुषत्वस्यान्नमयादिषु पुरुषविधत्वस्य चोक्ततया रूपभेदादेस्तस्यास्तासां च चोदनाख्ययोर्भेदस्य स्पष्टत्वाच्च न विद्यैक्यमिति तथेत्यर्थः। वैलक्षण्यबोधनस्य तात्पर्यमाहुः एतेनेत्यादि। एतेनेति। विभूतिभ्योऽतिवैलक्षण्यबोधनेन। न तत्रोपास्यता तथात्वेनेति। ब्रह्मत्वेनोपास्यतायां सत्यामपि न मूलभूतब्रह्मरूपत्वेन। एतदधिकरणप्रयोजनस्य पूर्वमनुक्तत्वादिदानीमाहुः तेनेत्यादि। तेनेति। एवं महिमाधिक्यादतिवैलक्षण्यबोधनेन। उत्तमाधिकारिभिरिति। एतेन भक्ता अपि संगृहीता ज्ञेयाः। तेषामेव तथात्वादिति। अत्र समाचारसूत्रोक्तैर्हेतुभिरेवानुपसंहारप्राप्तावपि यत्पुनर्विशेषतस्तद्धेतुकथनम्, तद्विभूतिरूपेषु मूलरूपगुणानुपसंहारार्थम्। 'योऽन्यथा सन्तमात्मान'मिति वाक्योक्तबाधकस्य विद्यमानत्वात्। एवञ्चात्र पूर्वं पतित्वेन चिन्तिते चित्तस्य निवेशो यदाधिकः, तदा सोऽक्षरस्यापि पतिरित्येवं पर्यवस्यति। 'उतामृतत्वस्येशान' इति मोक्षेशनशीलत्वस्यात्र श्रावणात्। अनस्तमितत्वाद्वायुरूपा कलाप्यत्र बोधिता।

अन्ये तु, ताण्डिनां पैङ्गिनां च या 'पुरुषो वाव यज्ञ' इत्यादिनोक्ता षोडशशतवर्षजीवनफलिका पुरुषविद्या, या च तैत्तिरीयाणां 'तस्यैवं विदुषो यज्ञस्यात्मा यजमान' इत्यादिनोक्ता विद्या, तयोः पुरुषविद्येति समाख्यैक्यात् पुरुषावयवेषु यज्ञावयवकल्पनेन रूपैक्याच्च विद्यैक्ये, तैत्तिरीयोक्ता गुणास्तत्रोपसंहर्तव्या इति प्राप्ते, यथा पुरुषविद्यायां ताण्ड्यादिभिर्गुणा आम्नायन्ते, न तथा तैत्तिरीयक इति रूपभेदात्, तैत्तिरीयके च 'य एवं वेद ब्रह्मणो महिमानमाप्नोती'ति फलसंयोगभेदाच्च विद्याभेदे सति न तैत्तिरीयोक्तानां गुणानां तत्रोपसंहार इत्येवमाहुः।

तत्रेदमवधेयम्। व्यासचरणैर्हि जिज्ञासाशास्त्रं शीघ्रं मोक्षो भवतु जीवानामिति करुणया आरब्धम्। तेन याभिः शीघ्रं मुच्यन्ते, ता एव विद्या आदरेण विचारणीयाः, शेषाणां तु तत्रो-

रश्मिः।

नच द्विरूपवर्णलोपः। सहस्रपादित्यत्रापि तथापत्तेः। पूर्वमिति। 'ईशान' इति श्रुत्येशनशीलत्वस्य भावित्वात्तत्पूर्वं पतित्वेन 'दर्शयति'सूत्रभाष्योक्तरीत्या चिन्तिते 'स मानसीन आत्मा जनाना'मिति श्रुत्या चित्तस्य निवेशः स यदाधिकः मानससेवारूपः, तदा स भगवान् अक्षरस्यापि पतिः। 'मम योनिर्महद्ब्रह्मे'ति गीतावाक्यात्। अपिना स्वस्य पतिः। अतिगोप्यत्वात्स्पष्टं नोक्तम्। विभूत्युपासनानन्दमयभजनाभ्यामानन्दमयाधिकरणोक्तरीत्या पर्यवस्यति। तदेतद्भजनं गीतगोविन्दटीकायां श्रीगोस्वामिभिः कृतमिति निगर्वः। मोक्षेति। ज्ञानिप्राप्यभगवद्योन्यक्षरस्य ईशनशीलत्वं तस्य। 'यदन्नेनातिरोहती'ति श्रुतिविचारेणाहुः अनस्तमिति। तैत्तिरीये. 'स वा एषोऽन्नरसमय' इत्युक्तेरन्नेन स्वकारणेन अतिरोहतीति छान्दसो नलोपः। 'आविर्भावतिरोभावौ शक्ती वै मुरवैरिण' इति वाक्यात्षष्ठो भावविकारोऽस्तस्तदभावं इतत्वात् गतत्वात् वायुरूपा कलेति। 'सैषानस्तमिता देवते'ति श्रुतेः। इयं कलान्नमयादिनिरूपणानुवृत्त्यान्नमयस्य शिरोरूपापि प्रियशिरस्त्वादिसूत्रोक्तप्रियशिरस्त्वादिवासनयान्नमयशब्देन बोधिता। 'वायवस्थे'ति संहिताश्रुतेः। मनोमयस्य शिरो यजुःकला सा नोक्ता। प्रतिपादकत्वात्।

विभूतिरूपमिति ज्ञापितम् ॥ २४ ॥

इति तृतीयाध्याये तृतीयपादे चतुर्थं पुरुषविद्यायामित्यधिकरणम् ॥ ४ ॥

अथ निर्दोषत्वं ज्ञात्वा भजनीयमिति ज्ञापयितुमधिकरणान्तरमारभते ।

वेधाद्यर्थभेदात् ॥ २५ ॥ (३-३-५.)

वाजसनेयिशाखायां 'द्वया ह प्राजापत्या' इत्युपक्रम्य तेषां मिथः स्पर्धामुक्त्वोच्यते, 'ते ह देवा ऊचुर्हन्तासुरान् यज्ञ उद्गीथेनात्ययामेति, ते ह वाचमूचुस्त्वं न उद्गायेति, तथेति, तेभ्यो वागुदगायत्, यो वाचि भोगस्तं देवेभ्य आगायत्, यत् कल्याणं वदति तदात्मने, तेऽविदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य

भाष्यप्रकाशः ।

क्तैरेव न्यायैरानुषङ्गिको निर्णयो भविष्यति । अतः परविद्यां विहायैतद्विचारो युक्तो वा, परविद्याविचारो वा युक्त इति । ताण्डिप्रभृतीनां विद्यायामायुर्वृद्ध्यादिरूपं लौकिकं फलम्, 'तस्यैवं विदुष' इति तैत्तिरीयविद्यायामपि ब्रह्ममहिमप्राप्तिः फलम्, महिमा च विभूतिः, 'गोअश्वमिह महिमेत्याचक्षत' इति छान्दोग्ये सिद्धत्वात् । पुरुषसूक्ते तु 'तमेवं विद्वानमृत इह भवती'ति फलम् । अतो विद्यान्तरं विहायेदमत्र विचारितमिति । एवमन्यत्रापि बोध्यम् ॥ २४ ॥ इति चतुर्थं पुरुषविद्यायामित्यधिकरणम् ॥ ४ ॥

वेधाद्यर्थभेदात् ॥ २५ ॥ एककार्यत्वरूपां सङ्गतिमधिकरणप्रयोजनं च वदन्तोऽवतारयन्ति अथेत्यादि । सूत्रं व्याकर्तुं विषयादिकमाहुः वाजेत्यादि । वाजसनेयिशाखायामिति ।

रश्मिः ।

अत्रेत्यधिकरणे । करुणयेति । गुरुलक्षणे करुणानिवेशात्तथा । भविष्यतीति । सूत्राणां न्यायरूपत्वाद्भविष्यति । अन्यत्रापीति । भास्कराचार्यादिमतेष्वपि दूषणं बोध्यमित्यर्थः ॥ २४ ॥ इति चतुर्थं पुरुषविद्यायामित्यधिकरणम् ॥ ४ ॥

वेधाद्यर्थभेदात् ॥ २५ ॥ एककार्यत्वेति । एकस्य विचाररूपस्य कारणस्य कार्यत्वमशेषगुणपूर्णभजने पूर्वोक्ते निर्दोषभजने चेति तथा । नच पूर्वमुपासनीयमिति पदान्न भजनमिति शङ्क्यम् । उप समीपे स्थित्वा यथायोग्यकरणस्योपासनापदार्थत्वेन मनोनिवेशरूपोपासनाभावात् । अशेषगुणपूर्णपदसमभिव्याहारेणोपासनायास्तादृशत्वात् । तेन निर्दोषत्वज्ञानमधिकरणप्रयोजनम् । भजनीयत्वं पूर्वं सिद्धम् । वाजेत्यादीति । यज्ञेत्यादि । सोमे सप्तसंस्थे तत्राप्यग्निष्टोमे उद्गीथकर्मकर्तृप्राणस्वरूपाश्रयणेनासुरानभिभूय स्वं देवभावमत्ययामातिगच्छामह इत्यन्योन्यमुक्तवन्तः । उद्गीथकर्मकर्तृस्वरूपाश्रयणं च ज्ञानकर्मभ्यां भवति । तत्र कर्म 'तदेतानि यजे'दिति विधास्यमानं मन्त्रजपलक्षणम् । ज्ञानं त्विहाख्यायिकया परीक्ष्यमाणमशुद्धवादिप्रत्याख्यानेन विशुद्धप्राणोपादानरूपमित्यर्थः । तदुपास्यस्वरूपनिर्धारणाय परीक्षाप्रकारं दर्शयति स्म 'ते ह वाचमूचु'रिति कण्डिकाषट्केन । ते देवा ह उक्तप्रकारेण निश्चित्य वाचं वागभिमानिनीं देवतामग्निमेवोद्गानकर्त्रीं 'असतो मां सद्गमये'त्यादिमन्त्रप्रकाश्यां देवतां च मत्वा त्वं नोऽस्मभ्यमुद्गायौद्गात्रकर्म कुर्वित्यूचुरुक्तवन्तः । एवं देवैर्नियुक्ता वाग्देवताकृत्यमाह तथेत्यादीति । तथास्त्विति तन्नियोक्तॄन्प्रत्युज्य स्वसामर्थ्यमविचार्योद्गानकर्तृत्वं मन्त्रप्रकाश्यत्वं चात्मनोऽङ्गीकृत्य तेभ्योऽर्थिभ्य उदगायत् उद्गानं कृतवती । कः पुनरनेन कर्मणा कार्यविशेषः कृत इत्यपेक्षायां यथा प्रकृते ज्योतिष्टोम उद्गात्रा त्रिषु स्तोत्रेषु यजमानार्थमुद्गानं क्रियते, न च सुखार्थम्, तद्वदत्रापि द्विविधं तदिति कथयन्तं कार्यविशेषमाह य इति । यो वाचि निमित्तभूतायां सत्यां संघातस्य भोगः सुखविशेषस्तं देवेभ्योऽर्थिभ्य आगायदुद्गानेन प्रापितवती । यत्पुनः कल्याणं शोभनं वदति

पाप्मनाविध्यन्, स यः स पाप्मा यदेवेदमप्रतिरूपं वदति स एव, स पाप्मे'ति । एवमेव प्राणचक्षुःश्रोत्रप्रभृतिषु पापवेधमुक्त्वोच्यते । 'अथैनमासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उद्गायत्, ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाविव्यत्सन्, स यथाऽश्मानम् ऋत्वा लोष्ठो विध्वंसेतैवᳬ ह वै विध्वंसमाना विष्वञ्चो विनेशु'रिति । छान्दोग्येपि प्राणादिष्वेवमेव पाप्मवेधमुक्त्वासन्ये न तथेत्युच्यते । एतावान् परं विशेषः, वाजसनेयिनां गानकर्तृत्वम्, सामगानामुद्गीथत्वेनोपास्यत्वमुच्यते वाक्प्राणादीनामिति ।

अत्र देहसम्बन्धित्वगानकर्तृत्वयोरुपास्यत्वस्य चाविशेषेपि वागादिषु पाप्मवेधः, आसन्यप्राणे कुतो नेति भवति जिज्ञासा ।

नचासन्योपासनाया विधेयत्वात् तत्स्तुत्यर्थमन्येषु पाप्मवेध उच्यते,

भाष्यप्रकाशः ।

बृहदारण्यक उद्गीथब्राह्मणे । तथैव छान्दोग्येपि । न तथेति । न पाप्मवेधः ।

सन्देहमाहुः अत्रेत्यादि । इति भवति जिज्ञासेति । इति हेतोर्वागादीनां पाप्मवेधः सत्यः, काल्पनिको वेति संशय इत्यर्थः । सिद्धवत्तदुक्तिः सन्देहबीजम् । नन्वपार्थेयं चिन्ता, अन्येषु पाप्मवेधोक्तेर्विधेयासन्योपासनास्तुत्यर्थत्वेन 'अन्ये त्वपशव' इतिवदासन्यप्रशंसामात्रार्थतया वस्तुतः सर्वेषु

रश्मिः ।

यथाशास्त्रं वर्णानभिनिर्वर्तयति तदात्मने स्वार्थमेव । तद्ध्यसाधारणं वाग्देवतायाः कर्म यत्सम्यग्वर्णोच्चारणम् । एवं वाग्देवतायाः कल्याणवदनरूपासाधारणविषयाभिषङ्गलक्षणरन्ध्रं स्वावसरं प्रतिलभ्य तेऽसुराः स्वकार्यायोद्युक्ता इत्याह त इति । तेऽसुराः कामादिस्वाधिकाराद्देवैः शमादिना कृत्वा प्रच्याव्यमाना देवहृद्गतमविदुर्विदितवन्तः । किं तदित्यत आह अनेनेति । अनेनैवोद्गात्रा शास्त्रजनितकर्मज्ञानरूपेण नोऽस्मान् स्वाभाविककर्मज्ञानात्मकान् देवान् अत्येष्यन्तीति तमुद्गातारं वाग्रूपमभिद्रुत्य वेगेनागम्य स्वेनासङ्गलक्षणेन पाप्मनाऽविध्यंस्ताडितवन्तः स्वनिष्ठपापं संयोजितवन्त इति यावत् । अस्मानसुराननतिक्रम्य देवानेष्यन्तीत्यर्थः । एवमसुरैः प्रजापतेर्वाचि पाप्माक्षिप्त इति कुतोऽवगम्यत इत्याशङ्कायां प्रजास्वनुभूयमानपाप्मकार्यलक्षणलिङ्गेनानुमीयमानः पाप्मा प्रजाकारणप्रजापतावप्युपमेयादित्याह स य इति । यः स पाप्मा साधकावस्थस्य प्रजापतेर्वाचि प्रक्षिप्तः, स एषोऽनुमानेन प्रत्यक्षीक्रियते । कोसौ । यदेव येनैव प्रयुक्ता सतीयं वागिदमप्रतिरूपमननुरूपं शास्त्रप्रतिषिद्धं स्त्रीवर्णनादि वदति, स एव य एवं प्रजासु प्रतिकूलवदनहेतुत्वेनानुमितः, स एव पाप्मा स कारणभूतप्रजापतिवाचि गतः । कारणानुविधायि हि कार्यमित्यर्थः । अथैनमित्याद्युक्तार्थम् । वागादिषु नैराश्यानन्तरं अथेत्यस्यार्थः । अविव्यत्सन् वेद्धुमिच्छां कृतवन्तः संश्लिष्यमाणाः सन्तो विष्वञ्चो नानागतयो विनेशुरित्यन्वयः । तत्र स प्रसिद्धो दृष्टान्तो यथा लोके पाषाणचूर्णनाय प्रक्षिप्तो लोष्टः पांसुपिण्डः अश्मानं पाषाणं ऋत्वा प्राप्य स्वयं विध्वंसेन विचूर्णीभवेदेवं हैव एवमेव खलु विध्वंसमाना विशीर्यमाणा असुरा अपि नष्टा इत्यर्थः । छान्दोग्य इति भाष्यं विवृण्वन्ति स्म तथैवेति । उद्गीथब्राह्मण एव । इति हेतोरिति । प्राणस्यातिदेशाधिकरणेन ब्रह्मत्वानुसन्धानमकुर्वतो यतो जिज्ञासा भवतीति हेतोः प्रजापतेर्वागादीनां सप्राणानाम् । ननु प्रजापतेः स्रष्टुर्ब्रह्मत्वे पाप्मवेधो विरुद्धधर्मोपि न संभवति । ब्रह्मत्ववदपहतपाप्मत्वस्याप्यसाधारण्यात् । अन्येषां साधारणधर्माणां स्वविरुद्धधर्मसामानाधिकरण्येपि साधारणधर्माणां तदभावात् । अन्यथा ब्रह्मत्वविरुद्धाब्रह्मत्वस्याप्यापत्तेरिति सत्यत्वकोटिर्न संभवतीत्यनुसंधायाहुः सिद्धवदिति । 'तमभिद्रुत्य पाप्मनाविध्य'न्नित्यत्र तथा । तथाच द्वितीयकोटिसंभवा-

**अस्मिन्नेति वाच्यम् । न हि प्रयोजनायासन्तमप्यर्थं बोधयति श्रुतिरिति वक्तुं शक्यम् । प्रमाणत्वव्याहतिप्रसङ्गात् । एकत्र प्रतारकत्वे सर्वत्रापि तच्छङ्कया तदुक्ते कोपि न प्रवर्ततापि । साक्षात्क्रियार्थत्वाभावेपि**

भाष्यप्रकाशः ।

तदभावादिति पूर्वपक्षं हृदिकृत्याहुः नचेत्यादि । असद्वचने बाधकं व्युत्पादयन्ति न हीत्यादि ।

नन्वर्थवादाधिकरणे विधेयस्तावकत्वेनार्थवादानां प्रामाण्यं पूर्वतन्त्रे व्यवस्थापितम्, 'विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्यु'रिति, अतस्तदर्थ एव प्रामाण्यं तेषाम्, न तु स्वार्थ इत्याकाङ्क्षायामाहुः एकत्रेत्यादि । तथाच विचारकस्य हृदि श्रुतेः प्रकारांशे असत्यभाषित्वे भाते विधेयाद्यंशेपि तादृशशङ्कोदयस्य दुर्निवारतया तत्र प्रवृत्तिव्याघातेन विधेः प्रवर्तकत्वमेव कुण्ठीभवेत्, ततश्च वेदस्य वैयर्थ्यमेव स्यात्, 'अपशव' इत्यत्रापि पशुत्वपर्युदासोऽन्येषु पशुसादृश्यं ग्राहयति, न तु पशुत्वं निषेधति । यथा 'न कलञ्ज'मित्यत्र । तच्च गवादिसादृश्यं तु तेष्वस्त्येवेति तत्सादृश्यं तेषाममुख्यतां बोधयद्गवादिप्रशंसायां पर्यवस्यतीति नासदर्थबोधने स दृष्टान्तः । नच मध्वादिविद्यायां कल्पनोपदेशस्य व्यासपादैरप्यङ्गीकारादत्रापि तथास्त्विति वाच्यम् । 'अविध्य'न्निति भूतार्थकप्रयोगबाधापत्तेः । 'यदेवेदमप्रतिरूपं वदति, स एव पाप्मे'त्यादिभिः श्रावितस्य पाप्मस्वरूपस्येदानीमनुभूयमानस्याप्यननुभवापत्तेश्च । मध्वादिविद्यास्वपि कल्पनोपदेशाङ्गीकारः सांख्यप्रसिद्ध्या तद्बोधनार्थं इति तु तत्रैवोपपादितम् । अथ यदि स सिद्धान्तीयत्वेनाद्रियते, तदापि 'तस्य द्यौरेव तिरश्चीनवंशोऽन्तरिक्षमपूप' इत्याद्युद्देश्यरूपविशिष्टस्यैव

रश्मिः ।

त्संदेह इति भावः । अनेन विषयवाक्यस्यासंदिग्धत्वं विषयत्वविघटकं वारितम् । **विधेयेति** । विधेया यासन्योपासना तस्याः स्तुत्यर्थत्वेन । **इतिवदिति** । 'गो अश्वा एव पशवोऽन्ये त्वपशव' इतिवत् । **सर्वेषु** वागादिषु । **तदभावात्** सत्यपाप्मवेधाभावात् । **पूर्वपक्षं** पूर्वमीमांसकपूर्वपक्षम् । **तदर्थ** इति । स्तुत्यर्थे । **प्रकारांश** इति । स्तुत्यंशे । अर्थवादेन स्तुतो विधिरिति प्रकारत्वम् । गो अश्वा एवेत्यत्र गुणवाद उक्तः सोऽसदर्थबोधक इति तच्छुदसितुमाहुः **अपशव** इति । पशुत्वावच्छिन्नप्रतियोगिताकाभाव इत्यर्थोऽपशव इत्यत्र यदा, तदा पशुत्वपर्युदासो भवति । यदा तु पश्वभावोऽर्थः, तदा पशुप्रतियोगिकाभाव इत्यर्थो भवति । पर्युदासो नञर्थः । अन्येषु गवाश्वभिन्नेषु गवाश्वभिन्ना गवाश्वसदृशा इति सादृश्यमपशवो गृह्णन्ति तत्पशुत्वपर्युदासो ग्राहयति । पर्युदासः सदृग्ग्राही । **न कलञ्जमिति** । अत्र कलञ्जपर्युदासः पूर्वतन्त्रे नास्ति । आकृतौ शक्तेः । अतः कलञ्जत्वपर्युदासः । कलञ्जत्वभिन्नं कलञ्जत्वसदृशं आक्षेपलभ्यं कलञ्जं भक्षयेदित्यर्थः । कलञ्जभक्षणादेरनर्थहेतुत्वमाक्षिपन् पुरुषं ततो निवर्तयति निषेधः निषेधस्य निवर्तनाभिधायकत्वात् । निवर्तना पर्युदासरूपा, लिङर्थः प्रवर्तना । तेन सम्बध्यमानो नञ् प्रवर्तनाप्रतिपक्षभूतां निवर्तनां गमयति, विधिवाक्यश्रवणोत्तरं प्रवर्तयतीति प्रवर्तनाप्रतीतिवत् निषेधवाक्यश्रवणेऽयं मां निवर्तयतीति निवृत्त्यनुकूलव्यापारनिवर्तनायाः प्रतीतेरपि अर्थान्वयो नञ इति मीमांसार्थप्रदीपे । **तेष्विति** । गवादिभिन्नपशुषु । **तत्सादृश्यमिति** । गवादिसादृश्यं गवादीतरपशूनां पशुत्वांशेऽमुख्यताम् । प्रत्यक्षविरोधे कल्पना, नतु भूतेर्थ इत्याशयेन हेतुमाहुः **अविध्यन्निति** । व्यध ताडने लङ् । **तत्रैवेति** । प्रथमाध्याये तृतीयपादे एव । **साक्षादितिभाष्यं** विवरीतुमाहुः **अथेति** । **स इति** । संशयनिरूपण उक्तः कल्पनापक्षः । **आद्रियत इति** । असाधारणधर्मस्य विरुद्धधर्मानङ्गीकारात् । अन्यथा ब्रह्मत्वविरुद्धाब्रह्मत्वस्याप्यापत्तेः । **उद्देश्येति** । द्यामुद्दिश्य तिरश्चीनवंशत्वकल्पना । एवमन्तरिक्षमुद्दिश्यापूपत्वकल्पना । एवं च द्यौरूप-

नासन्निरूपकत्वमर्थवादानाम् । वस्तुतस्तु 'यदेव विद्यया करोति श्रद्धयोपनिषदा वा तदेव वीर्यवत्तरं भवती'ति श्रुतेः, 'ज्ञात्वाज्ञात्वा च कर्माणि जनोऽयमनुतिष्ठति । विदुषः कर्मसिद्धिः स्यात्तथा नाविदुषो भवे'दित्यादिवाक्यैः 'य एवं वेदे'ति वाक्यैश्चार्थवादोक्तस्वरूपं ज्ञात्वा कर्मकरणे पूर्णं फलम्, अन्यथा नेत्यर्थवादानां फलोपकार्यङ्गनिरूपकत्वान्नानर्थक्यम्, अत उक्तेऽर्थे हेतुं न पश्याम इति प्राप्ते, तमेवाह वेधादीति । वाक्प्राणादिषु यः पाप्मवेधः, आदिपदात् दुष्टविषयसम्बन्धश्च, तत्र हेतुरर्थभेदः । अर्थो भगवांस्तस्माद्भेदादित्यर्थः । आसन्यस्तु य एवायं मुख्यः प्राण'स्तमुद्गीथमुपासीते'ति छान्दोग्य उपास्यत्वेनोक्तः । 'सर्ववेदान्तप्रत्यय'मिति

भाष्यप्रकाशः ।

रूपान्तरविधानदर्शनेन रूपान्तरविधानमात्रस्यैव काल्पनिकत्वम्, न तु सर्वस्य, अन्यथा 'ता वा एता ऋच एतमृग्वेदमभ्यतप'न्नित्यादेरपि बाधापत्तेः । अतो भूतार्थवादस्य स्वार्थे प्रामाण्यमवश्यमभ्युपेयम् । नचार्थवादेषु सर्वत्र यथाश्रुतार्थग्रहणे 'आदित्यो यूपः' 'यजमानः प्रस्तर' इत्यादिषु गौण्युच्छेदः सूत्रविरोधश्च स्यादिति वाच्यम् । तत्र प्रत्यक्षविरोधेन गौणीस्वीकारात् । असति मानान्तरविरोधे तद्दृष्टान्तेन सर्वत्र प्रत्यवस्थातुमयुक्तत्वादित्यसकृदुक्तम् । तस्माद्यत्र प्रमाणान्तरविरोधः, तत्रैव कल्पनोपदेशादिः, न सर्वत्रेति निश्चयः । तदेतदभिसन्धायाहुः साक्षादित्यादि । एवं पूर्वतन्त्रविचारेण परम्परयार्थवादानां क्रियार्थत्वमुक्त्वा, उत्तरकाण्डविचारेण साक्षादेव तेषां क्रियार्थत्वमाहुः वस्तुत इत्यादि । य एवं वेदेति वाक्यैरिति । 'य एवं वेद स वीर्यैरेव छान्दोभिरर्चति', 'य एवं वेदोपैनं यज्ञो नमती'त्यादिजातीयैर्विद्वद्वाक्यैः । तथाच सत्ययैव प्रशंसया विधेयस्तुतेरुचितत्वात् सिद्धेऽन्येषां पाप्मवेधे आसन्यस्य कुतस्तदभाव इत्यत्र हेत्वनुपलम्भात् तेषां पाप्मवेधहेतोर्न निर्णयः कर्तुं शक्य इति पूर्वपक्षे प्राप्ते, तमेव निर्णयहेतुमाहेत्यर्थः । सौत्रं हेतुं व्याकुर्वन्ति वाक्प्राणेत्यादि । भेदादिति । भौतिकतया प्राकृतत्वेन भेदात् । तथाचास्माद्धेतोः पाप्मवेधः शक्यनिर्णय इत्यर्थः । नन्वयमासन्येपि तुल्य इति कथं तत्र तदभाव इत्यत आहुः आसन्य इत्यादि । उक्त इति । उत्कृष्टप्रणवादित्यैकत्वोद्गीथदृष्ट्यनन्तरं उक्तः ।

रश्मिः ।

विशिष्टस्य तिरश्चीनवंशस्य । सर्वस्येति । उद्देश्यरूपविशिष्टस्य । ता वा एता इति । ताः प्रसिद्धाः एताः सूर्यातपरूपाः समीपतराः । अभ्यतपन्नित्यार्षम् । भूतार्थवादत्वाद्बाधापत्तेः । गौणीति । वेदप्रतिपाद्यत्वगुणयोगात् सत्त्वगुणयोगात् । सूत्रेति । 'विधिना त्वेकवाक्य'सूत्रविरोधः । स्वार्थे प्रतिपाद्योपक्षीणशक्तित्वाद्वाक्यस्य । तत्रेति । वाक्ययोः । उक्तमिति । ग्रन्थान्तरेषूक्तप्रायम् । य एवमिति । 'स वीर्यै'रितिपदं 'उपनमती'ति च । उपशब्दं करोति उपवक्तीत्यर्थः । विद्वदिति । 'ज्ञात्वाज्ञात्वे'ति स्मृत्युत्तरं 'य एवं वेदे'ति । विद्वद्वाक्यं न तैत्तिरीयश्रुतिरिति भावः । माहात्म्यज्ञानस्य भक्तावुपयोगेन कर्मण्युपयोगाभावाच्च । अन्येषामिति । वाक्प्राणादीनाम् । तेषामिति । वागादीनाम् । आसन्येपीति । प्राणत्वेन पूर्वोक्तप्राणसाम्यात्तथा । तत्रेति । आसन्ये पाप्मवेधाभावः । उत्कृष्टमिति । छान्दोग्येऽथाधिदैवतमित्युपक्रमात्तदनन्तरमुत्कृष्टं त्रैगुण्यवेदोत्तरं तत्त्वमुत्कृष्टत्वम् । अधिदैवतस्य सात्त्विकत्वात् । एवं चात्राप्यधिदैवतत्वम् । अस्यास्तृतीयखण्डस्थत्वेपि चतुर्थपञ्चमखण्डयोरभावेपि षष्ठे इत्यधिदैवतमिति समाप्तिश्रुतेः । मैवम् । तृतीयखण्डत्वेन द्वितीयखण्डकृतवैलक्षण्यादरात् । तथाच प्रणवे उद्देश्ये आदित्यैकत्वं उद्गीथदृष्टिश्च तयोरनन्तरम् । तथाच श्रुतिः 'अथ खलु य उद्गीथः स

१. अधिदैवितस्येति मूले पाठः ।

न्यायाद्भेदान्तेषूपास्यं ब्रह्मातिरिक्तं नोच्यत इत्यासन्योऽपि ब्रह्माभिन्नः, अत एव 'अपहतपाप्मा ह्येष' इति सामगैः पठ्यते। अतस्तत्र न पाप्मवेध इति भावः। ब्रह्मणः स्वतन्त्रपुरुषार्थत्वज्ञापनायार्थपदेनोक्तिः। एतेन विभूतिरूपेऽपि यत्रैवम्, तत्र मूलभूतब्रह्मणि निर्दोषत्वं किं वाच्यमिति ज्ञापितम्। अथवा, अर्थः प्रयोजनं विषय इति यावत्। तद्भेदादित्यर्थः। अत्रेदमाकूतम्। देवा हि स्वस्यासुरजयाय गानार्थं वागादीनूचुः 'त्वं न उद्गाये'ति गानानन्तरं 'यो वाचि भोगस्तं देवेभ्य आगाय'दित्युच्यते। एवमेव प्राणादिष्वपि 'स्वस्वभोगं देवेभ्य आगाय'दिति। एवं सति

भाष्यप्रकाशः।

ब्रह्माभिन्न इति। उत्कृष्टतद्विभूतिरूपत्वात् तदात्मकतयोक्तः। उत्कर्षश्च पाप्मवेधाभावादेव गम्यते। एवञ्च 'मनो ब्रह्मेत्युपासीते'त्यादौ यत्तेषामुपास्यत्वेन विभूतित्वेपि नैतत्साम्यम्, तद्भगवता स्वसामर्थ्यस्य तत्र तारतम्येनैव स्थापितत्वादिति। यत् पुनर्वागादीनामुपास्यत्वं छान्दोग्ये प्रतीयते, तत्तु भ्रमप्राप्तानुवादरूपम्, न तु वास्तवम्। श्रुत्यनभिप्रेतत्वात्। उदवसानीयपश्वेककपालवत्। तत्र निषेधेनैवात्र पाप्मवेधादेव तथा निश्चयात्। अतो न चोद्यावकाशः। ननु यदि वागादीनां ब्रह्माभिन्नत्वमेवमभिप्रेतम्, तदा सूत्रे ब्रह्मभेदादित्येवोच्येतेत्यत आहुः ब्रह्मण इत्यादि। ननु भवत्वेवमासन्योत्कर्षः, तथापि पूर्वप्रतिज्ञातस्याधिकरणप्रयोजनस्य कथमवगतिरित्यत आहुः एतेनेत्यादि। तथाच कैमुतिकन्यायादवगतिरित्यर्थः। नन्वर्थपदस्य वस्त्वर्थकत्वे उक्तमेव सिध्यति,तदनङ्गीकारे कथमेतदवगन्तव्यमित्यत आहुः अथवेत्यादि। रायभिधेयनिवृत्तीनामत्र प्रसङ्गाभावात् प्रयोजनमत्रार्थो ग्राह्यः। स चात्र वागादीनां विषयरूपः। तस्यैव देवार्थत्वेनोक्तत्वात्। अतस्तद्भेदादित्यर्थः। तदेतदुपपादयन्ति अत्रेदमित्यादि। उच्यत इति। बृहदारण्यके

रश्मिः।

प्रणवो यः प्रणवः स उद्गीथ इत्यसौ वा आदित्य उद्गीथ एष प्रणव ॐमिति ह्येष स्वरन्नेती'ति। अग्रे 'अथाध्यात्मं य एवायं मुख्यः प्राणस्तमुद्गीथमुपासीतोमित्येष स्वरन्नेती'ति। प्रणवशब्दवाच्योपि कस्मात्, हि यस्मात् एष सविता ॐमिति स्वरन्नुच्चारयन् एति गच्छति। यद्वा। प्राणिनां प्रवृत्त्यर्थमोमिति स्वरन्ननुज्ञां कुर्वन्निव एति। स्पष्टमन्यत्। अत्र यद्यपि प्रणवोद्गीथयोरेकत्वोक्तिरिति व्याख्यातम्, तथापि भाविनीमाख्यां आदित्य उद्गीथरूपामादायोद्गीथस्थले आदित्यपदोक्तिः। एवमुद्गीथदृष्टिरित्यत्रादित्यदृष्टिरिति व्याख्यानं द्रष्टव्यम्। 'असौ वा आदित्य उद्गीथ' इति श्रुतेः। भाष्ये। ब्रह्मातिरिक्तमिति। ब्रह्म अतिरिक्तमिति छेदः। प्रकृते। उत्कृष्टेति। अन्येषामप्रत्यक्षत्वात् 'त्वमेव प्रत्यक्षं ब्रह्मासी'ति श्रुतेः प्रत्यक्षत्वादुत्कृष्टेति विशेषणम्। यद्यपि तथाप्यध्यात्मत्वात्पाप्मवेधाभाव उत्कर्षः। पाप्मावेध उत्कर्ष इत्याहुः उत्कर्ष इति। पूर्वेति। आभासे प्रतिज्ञातस्य। अधीति। निर्दोषत्वज्ञानस्य। वस्त्वर्थेति। 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिष्वि'ति कोशात्तथा। उक्तमिति। ब्रह्मैवार्थत्वेन सिध्यति। ब्रह्मातिरिक्तस्यावस्तुत्वात्। तदनङ्गीकार इति। सौत्रार्थशब्दस्य वस्त्वर्थकत्वानङ्गीकारे रायाद्यर्थानामङ्गीकारे केन प्रकारेण एतद्ब्रह्मणो निर्दोषत्वमधिकरणप्रयोजनमवगन्तव्यम्। प्रयोजनरूपार्थाभावादित्यर्थः। अरुचिर्नोक्ता। अस्याप्यर्थस्य विवक्षितत्वात्। रायभीति। रैश्च अभिधेयं च निवृत्तिश्च रायाभिधेयनिवृत्तयः तासाम्। अत्रेति। पूर्वव्याख्याने वस्तुरूपे। अत्रेति। द्वितीयार्थशब्दव्याख्याने। तस्येति। प्रयोजनरूपविषयस्यैव 'यो वाचि भोगस्तं देवेभ्य आगाय'दित्यादिश्रुतिषु देवार्थत्वेनेत्यादिः। तद्भेदात् विषयरूपप्रयोजनभेदात्। प्रयोजनं फलं तदत्र विषयभोगः।

देवार्थमेवैतज्ज्ञानम्, न तु भगवदर्थम् । यद्यप्यासन्येऽप्येवमुच्यते, 'तेभ्य एष प्राण उद्गाय'दिति, तथापि यथा वागादिषु स्वनिष्ठभोगं 'देवेभ्य आगाय'-दित्युक्तम्, तथा नासन्ये । तेनोक्तमानैर्ब्रह्मात्मकत्वेनासुरजयहेतुर्भगवत्सम्बन्ध एवेति ज्ञात्वा तथैवागायदासन्य इति ज्ञायते । अत एवान्यत्र वेध उक्तोऽत्र तत्करणेच्छायामप्यासुराणां नाश उक्तः । अग्रे च, 'भवत्यात्मना परास्य द्विषन् भ्रातृव्यो भवति य एवं वेदे'ति पठ्यते । तेन परब्रह्म निर्दोषमिति किमु वाच्यम् । यत्र तद्विभूतिरूपासन्यस्योक्तरूपतां यो वेत्ति, सोऽपि गुणयुक्तो दोषरहितश्च भवतीति कैमुतिकन्यायः सूचितो भवति । एतेन लोके दोषत्वेन ये धर्माः प्रतीयन्ते, त एव धर्मा भगवति निरूप्यमाणा न दोषत्वेन ज्ञेयाः, किन्तु

---

भाष्यप्रकाशः ।

उच्यते । उक्तमानैरिति । उपास्यत्वपाप्मवेधराहित्यासुरजयहेतुभूतार्थज्ञानैः । आसन्यस्यैवं-प्रकारकज्ञानसत्तायां गमकमाहुः अत एवेत्यादि । एवं व्याख्यानेपि पूर्वोक्तार्थसिद्धिमाहुः तेनेत्यादि । एतेनार्थान्तरस्यापि सिद्धिमाहुः एतेनेत्यादि । य इति । मोहव्रणपलायनादयः । न दोषत्वेन ज्ञेया इति । यथा सृष्टिस्थितिप्रलयकर्तृत्वस्य भगवल्लक्षणत्वान्मूलरूपे प्रलयकर्तृ-त्वमत्तृत्वादिकं च न दोषः, तथावतीर्णेपि भगवति मोहादयोप्यसुरमोहनार्थत्वात्तथा । 'अज्ञत्वं पारवश्यं च विधिभेदादिकं तथा । तथा प्राकृतदेहत्वं देहत्यागादिकं तथा । असुराणां विमोहार्थं दोषा विष्णोर्न हि क्वचि'दिति ब्रह्माण्डवाक्यात् । तथाच तेभ्यः सकाशाद्दोषत्वमुद्धाप्य भगवतो निर्दोषत्वं ज्ञात्वा भजनीयमिति सिद्धम् । तेन मुख्यविभूत्यतिरिक्तविभूतीनामपहतपाप्मत्वाभा-वात्तेषूत्कृष्टानुपसंहारोपि सिद्धो बोध्यः ।

अन्ये तु, इदमप्येकसूत्रमधिकरणं स्वीकृत्य, 'शुक्रं प्रविध्य' 'हृदयं प्रविध्ये'त्यादीन्याथर्व-णिकानामुपनिषदारम्भस्थानि वाक्यानि विषयत्वेनोदाहरन्ति ।

रश्मिः ।

उपास्यत्वेत्यादि । अत्रैवोक्तैः 'य एवायं मुख्यः प्राणस्तमुद्गीथमुपासीते'त्युपास्यत्वमानं प्रमाणं शब्दरूपं 'अपहतपाप्मा ह्येष' इति पाप्मवेधराहित्यमानं शब्दरूपम् । आसुरजयहेतुभूतोऽर्थ उद्गीथस्तस्य ज्ञानं येनोक्तशब्देन तैर्मानैरित्यर्थः । भाष्ये । भगवत्सम्बन्ध एवेति । विलक्षणोपास्यत्वापहतपाप्म-त्वं विशिष्टभगवतो व्याप्यव्यापकभावसम्बन्धः विभूतिविभूतिमद्भावः सम्बन्धो वा आसन्यस्येति ज्ञेयम् । व्यापकेनाप्यासुरजयसम्भवादेवकार आसन्यत्वस्यासुरजयहेतुत्वयोगव्यवच्छेदकः । प्रकृते । एवंप्रका-रकेति । आसुरनाशो ज्ञानसाध्य इत्याशयेनोक्तम् । अत एवेत्यादीति । एतादृशज्ञानवत्त्वादेव । भवतीति । भवति प्रजापतिरूपेण अस्योपासकस्य । द्विषन् पाप्मा । भ्रातृव्यः भ्रातुः 'व्यन्सपत्ने' इति सूत्रात्सपत्नः । भवति पराभवति । 'व्यवहिताश्चे'ति सूत्रम् । पूर्वोक्तेति । अत्रैव पूर्वोक्तार्थः कैमुति-कस्तस्य सिद्धिस्ताम् । 'शुक्रं प्रविध्ये'ति श्रुत्यर्थस्तु, अभिचारकर्मदेवतामभिचारकर्त्री प्रार्थयन्ते । हे देव, ते मद्रिपोः सर्वमङ्गं प्रविध्य विदारय । हृदयं च विदारय । धमनीः शिराः प्रवृज्य भिन्धि । तस्य शिरश्चामितो भिन्धि । एवं मद्रिपुस्त्रेधा विभक्तो विश्लिष्टो भवतीत्यर्थः । आदिना 'देव सवितः प्रसुव यज्ञ'मिति ताण्डिनां 'श्वेताश्वो हरितनीलोसी'त्यादिः शाठ्यायनानां श्रुती गृह्येते । सविता देवपत्नी सूर्यापरपर्यायत्वात् । निरुक्ते सूर्यो देवपत्नीनामसु पठित इति प्राणिगर्भविमोचने मरणकोस्तीत्यभिचारकर्म । हरित इन्द्रनीलस्तद्वन्नी-

गुणत्वेनैव, वस्तुन एव तथात्वादिति भावो ज्ञाप्यते ॥ २५ ॥

एवं भगवत्सम्बन्धाभावे दोषसम्बन्धमुक्त्वा तथा सति गुणहानिं च वदंस्तत्र विशेषमाह ।

## हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दःस्तुत्युपगानवत् तदुक्तम् ॥ २६ ॥

भाष्यप्रकाशः ।

तत्र केवलो वेधशब्दो नास्ति ।

माध्वास्तु, 'अग्ने त्वचं यातुधानस्य भिन्धी'ति वाक्यम् ।

तत्र तु वेधशब्द एव नास्तीति विषयवाक्यत्वं चिन्त्यम् । अथ वेधरूपार्थबलाद्विषयवाक्यत्वम्, तदापि सन्निधिना विद्याङ्गत्वपूर्वपक्षोत्थापनम् । लिङ्गस्य बलिष्ठत्वात्ताङ्गत्वमिति सिद्धान्तः । स च पूर्वतन्त्रादेव सिध्यन्नस्य सूत्रस्यानुवादकत्वमापादयतीत्यतोपि चिन्त्यम् ॥ २५ ॥

हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दःस्तुत्युपगानवत्तदुक्तम् ॥ २६ ॥ एवमुपास्यस्य निर्दोषत्वं व्युत्पाद्य पूर्वसूत्रस्य पुरःस्फूर्तिकमादाय जीवस्य ब्रह्मभावेपि ब्रह्मासाधारणगुणा नोपसंहार्या इति प्रसङ्गतो वक्तीत्याशयेन सूत्रमवतारयन्ति एवमित्यादि । भगवत्सम्बन्धाभावे सति गुणहानिमपि वदन् भगवत्सम्बन्धे गुणप्राप्तिरूपं विशेषमाहेत्यर्थः । सूत्रं व्याकर्तु

रश्मिः ।

लेऽसीतीन्द्रः सम्बोध्यते । केवल इति । किंतु प्रशब्दघटित इति । सति वेधादेः केवलस्य विषयवाक्ये सम्भवे प्रशब्दघटितमयुक्तमिति हृदयम् । सूत्रार्थस्तु प्रविध्यादयो मन्त्रा विद्यासूपसंह्रियेरन्, किंवा नोपसंह्रियेरन्निति संशयः । उपसंहार एवैषां विद्याप्रधानानामुपनिषद्ग्रन्थानां समीपे पाठादिति पूर्वपक्षे, सिद्धान्तः नैषामुपसंहारो विद्यास्विति । कस्मात्, वेधाद्यर्थभेदात् । 'हृदयं प्रविध्ये'त्यादिमन्त्राणां येऽर्था हृदयवेधादयो भिन्नाः अनभिसंबद्धाः ते उपनिषदुक्ताभिर्विद्याभिः, न तेषां ताभिः संगन्तुं सामर्थ्यमस्ति । अयमर्थः । पूर्वपक्षोक्तस्थानरूपप्रमाणस्य लिङ्गरूपप्रमाणापेक्षया दुर्बलत्वान्न पूर्वपक्ष इति । देशसामान्यं स्थानम् । तच्च द्वेधा पाठदेशसामान्यमनुष्ठानदेशसामान्यं च । तत्र पाठदेशसामान्यमपि द्वेधा । यथासंख्यरूपं सन्निधिरूपं च । तत्र प्रथमस्यानुक्तत्वाद्द्वितीयः सन्निधिपाठरूपदेशसामान्यसहकृतो 'यथाग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्वपे'दिति, 'सोत्र जुहोत्यग्नये स्वाहा' 'कृत्तिकाभ्यः स्वाहे'त्यादि च । अत्र 'सोत्र जुहोती'त्यादिवाक्यविहितोपहोमानां सन्निधिपाठरूपदेशसामान्येन 'अग्नये कृत्तिकाभ्यः पुरोडाश'मित्यादिवाक्यविहितनक्षत्रेष्ट्यङ्गत्वं बोध्यत इति । लिङ्गरूपप्रमाणं त्वर्थगतं शब्दगतं वा सामर्थ्यम्, तत्रार्थगतसामर्थ्यं रूपलिङ्गसहकृतो यथा 'स्रुवेणावद्यती'त्यादि । अत्र स्रुवादीनां सामर्थ्यमालोच्य 'द्रवं मांसं कठिन'मित्यभिधात्रीं श्रुतिं कल्पयित्वा स्रुवस्य द्रवावदानेऽङ्गत्वं बोधयतीत्येवं प्रकृतेपि विद्यासमीपे पाठे पूर्वोक्ते समीपपाठसामर्थ्यमालोच्य वेधादीनां विद्याभिर्भेदकत्वमभिधात्रीं श्रुतिं कल्पयित्वा वेधादिविद्यासु नोपसंहारेऽङ्गत्वं बोधयतीति ज्ञेयम् । अग्न इति । हे अग्ने, त्वं यातुधानस्य सत्त्वविशेषस्य श्रीभागवतप्रसिद्धस्य त्वचं भिन्धीति । लिङ्गस्येति । स्थानरूपसन्निध्यपेक्षया भिन्धीति विधिशब्दसामर्थ्यस्य । असन्दिग्धं न विषयवाक्यमित्याहुः स चेति । सिद्धान्तश्च । आपादयतीति । यदि सूत्रमनुवादकं न भवेत्पूर्वतन्त्रोक्तं नानुवदेदित्येवमापादयति । वेधादि विद्याङ्गं न वेति सन्देहे, विद्याङ्गमिति पूर्वपक्षेऽर्थस्य लिङ्गस्य स्थानाद्भेदेन भेदादिति सूत्रार्थः ॥ २५ ॥

हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दःस्तुत्युपगानवत् तदुक्तम् ॥ २६ ॥

'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैती'त्याथर्वणिके पठ्यते। परमपदेन ब्रह्मोच्यते। तथाच सकार्याविद्यारहितः परममुपैति। तदनन्तरं साम्यमुपैतीति योजना।

तत्रेदं विचार्यते। साम्यं हि समानजातीयधर्मवत्त्वम्। तच्च कतिपयधर्मैरशेषतन्निष्ठधर्मैर्वा भवति। तत्रान्त्यः पक्षो ब्रह्मणा समं न सम्भवति। 'न तत्समश्चाभ्यधिकश्च दृश्यत' इति श्रुतिविरोधात्। अत आद्य एव पक्षोऽनुसर्तव्यः। तत्र कैर्धर्मैः साम्यमिहोच्यत इत्याकाङ्क्षायामाह हानाविति। ब्रह्मणः सकाशाद्विभागो जीवस्य हानिशब्देन उच्यते। तथाच तस्यां सत्यां ये धर्मा जीवनिष्ठा आनन्दांशैश्वर्यादयो भगवदिच्छया तिरोहिताः, ते ब्रह्मसम्बन्धे सति पुनराविर्भूता इति तैरेव

भाष्यप्रकाशः।

भगवत्सम्बन्धे विशेषबोधिकां श्रुतिमाहुः तदेत्यादि। एतत्पूर्वार्धं तु 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनि'मिति। पठ्यते इति। मुण्डके पठ्यते। ननु क्वात्र भगवत्सम्बन्ध उच्यत इति शङ्कायां पूर्वार्धस्य स्फुटार्थत्वादुत्तरार्धं व्याकुर्वन्ति परमपदेनेत्यादि। विद्वान् भगवज्ज्ञानवान्, पुण्यपापे अविद्याकार्ये, ज्ञानेन विधूय निवार्य, निरञ्जनः अविद्यारहितः सन्, परमं ब्रह्म उपैति, तदनन्तरं साम्यमुपैतीत्येवमर्थः संक्षेपेण तथाचेत्यादिनोक्तः। एतेन यदन्यैरुक्तं 'परममत्युत्कृष्टं साम्यं समत्वं अद्वैतलक्षणं उपैति अवगच्छती'ति। तन्निरस्तम्। समशब्दस्य सर्वपर्यायत्वे साम्यं सर्वत्वम्, तुल्यपर्यायत्वे तौल्यम्, न पुनरद्वैतं निर्विशेषत्वलक्षणम्, लक्षणाप्रसङ्गात्। उभयनिरूपितधर्मरूपसाम्याङ्गीकारेपि यथा नाद्वैतहानिः, तथातीतपाद एवोपपादनात्। अन्यथा श्रुतिविरोधप्रसङ्गाच्च। अत उपैतिपदावृत्तिरेव युक्तेति। ननु भवत्वेवम्, तथापि किमत्र विचार्यमित्यत आहुः तत्रेदमित्यादि। इदमिति। साम्यम्। विचारमुपपादयन्ति साम्यं हीत्यादि। आहेति। यैर्धर्मैः साम्यं तानत्राहेत्यर्थः। सूत्रं व्याकुर्वन्ति ब्रह्मण इत्यादि। सूत्रे तुशब्देन श्रुत्यन्तरे समाभ्यधिकनिषेधादत्र साम्यपदं लक्षणया अद्वैतपरमिति पक्षो निरस्यते। ब्रह्मणः सकाशाद्विभागो जीवस्य, 'ओहाक् त्याग' इति धातुनिष्पन्नेन हानिशब्देनोच्यते। विभागस्य पूर्वस्थितित्यागरूपत्वात्। तथाच तस्यां सत्याम्, उपायनशब्दशेषत्वात्, उपायनं ब्रह्मप्राप्तिस्तद्वाचकः शब्द उपैतिशब्दस्तच्छेषत्वात् साम्यस्य ये धर्मास्तिरोहिताः, ते परमोपायने ब्रह्मसम्बन्धे सति पुनराविर्भूता इति तैरेव तथा तैरेव साम्यमित्यर्थः। नन्वेवं

रश्मिः।

तथा सतीतिभाष्यं विवृण्वन्ति स्म भगवदित्यादि। विशेषेति। साम्योपायनरूपविशेषबोधिकाम्। पश्य इति। पश्यतीति पश्यः। भगवज्ज्ञानेति। स्मार्तः प्रयोगः। उपैतीति। उप आ एतीति पदच्छेदः। तथाचेत्यादिना भाष्येणोक्तः। लक्षणेति। ब्रह्मवत् सर्वत्वे अभेदसम्बन्धो लक्षणा। तौल्येपि अभेदः। ब्रह्मतुल्यः ब्रह्माभिन्न इत्यर्थात्। सिद्धान्ते साम्येऽद्वैतमुपपादयन्ति स्म उभयेति। वक्ष्यमाणे इत्यर्थः। अतीतेति। तदनन्यत्वाधिकरणे। 'परमत' इत्यधिकरणे 'स्थानविशेष' सूत्रे 'अम्बुव'दधिकरणे वा। श्रुतीति। अद्वैतश्रुतिविरोधप्रसङ्गात्। लक्षणयेति। अभेदसम्बन्धरू-

तथेत्यर्थः । भगवदानन्दादीनां पूर्णत्वाज्जीवानन्दादीनामल्पत्वान्नात्रैव समैर्धर्मैः कृत्वा ब्रह्मसाम्यं जीव उपचर्यते । 'साम्यमुपैती'ति । वस्तुतस्तु नैतैरपि धर्मैः साम्यमिति भावः । अत एव, 'न तत्सम' इति श्रुतिरविरुद्धा । अत एव सूत्रकृता 'साम्यमुपैती'ति साम्योपायनशब्दमात्रम्, न तु साम्यपदार्थः स्वारसिकोऽत्रास्तीति भावप्रकटनाय शब्दशब्द उक्तः । ननु तैरेव धर्मैः साम्यम्, नेतरैरित्यत्र को हेतुरित्याकाङ्क्षायामाह उपायनशब्दशेषत्वादिति । 'परममुपैती'ति य उपायनशब्दः, तच्छेषत्वात् साम्योपायनस्येत्यर्थः । ब्रह्मसम्बन्धहेतुकत्वादानन्दांशाद्याविर्भावस्य, तदैव साम्योपायनकथनात्तैरेव धर्मैः साम्यमभिप्रेतमिति भावः । नन्वानन्दादीनां ब्रह्मधर्मत्वात् तैस्तत्साम्यकथनं तदभेदमेव गमयतीत्याशङ्क्य, तद्धर्मवत्त्वमात्रस्य न तदभेदसाधकत्वमित्यत्र दृष्टान्तमाह कुशेत्यादि । कुशा औदुम्बर्यः समिधस्ता अग्निष्टोमादियागेषु प्रस्तोत्रा स्थाप्यन्ते । तदा तत्सम्बन्धि यच्छन्दःस्तुत्युपगानं तद्वदित्यर्थः । तत्र 'अभि त्वा शूर नोनुमो दुग्धा इव धेनव'

भाष्यप्रकाशः ।

साम्येपि 'न तत्सम' इति श्रुतौ संकोचस्तु स्यादेवेत्यत आहुः भगवदित्यादि । जीवानन्दादीनामल्पत्वादिति । 'सर्वे जीवाः सर्वमयास्तथाप्यल्पा' इति नृसिंहोत्तरतापनीये जीवानामल्पताया उक्तत्वेन तदानन्दादीनामपि तथात्वात् । नन्वेवमेव सूत्राशय इति कथं ज्ञातव्यमित्यत आहुः अत एव सूत्रकृतेत्यादि । हेतुमवतारयन्ति नन्वित्यादि । तदैवेति । ब्रह्मसम्बन्ध एव । तथाचोपायनशब्दशेषत्वात् उक्तैरेव धर्मैः साम्यमिति सूत्रयोजनेत्यर्थः । दृष्टान्तमवतारयन्ति नन्वानन्देत्यादि । व्याकुर्वन्ति कुशा इत्यादि । उपगीयतेऽनेनेत्युपगानम् । करणे ल्युट् । तथाच कुशाभिः कृत्वा छन्दःस्तुत्युपगानसाधनभूतभकारवदिति सूत्रार्थ इत्यर्थः । एतदुत्पादयन्ति तत्रेत्यादि ।

रश्मिः ।

पया । तच्छेषत्वादिति । हानावुपायनशब्दशेषत्वात् । भगवदित्यादीति । उपचर्यते कतिपयधर्मैर्गौणं क्रियते । सूत्रयोजनेति । हानौ जीवस्य भगवत्सकाशाद्विभागे ये जीवनिष्ठा धर्मास्तिरोहिता भगवदिच्छया आनन्दैश्वर्यादयस्ते भगवत्सम्बन्धे सति पुनराविर्भूता भवन्तीति परमं तुकारात् 'न तत्समश्चाभ्यधिकश्च दृश्यत' इति श्रुतिनिषिद्धसाम्यपदं लाक्षणिकमद्वैतवाचकमिति पक्षनिरासकात् साम्यमुपैतीति योजना यद्यपि, तथापि दुरूहत्वममन्यमाना उपायनशब्दस्योपैतीत्यस्य साम्ये कर्मत्वाच्छेषत्वं विशेषणत्वं तस्मात् उक्तैरेवैश्वर्यादिधर्मैः साम्यमिति साम्यस्यैतादृशस्य योजनेत्यर्थः । नन्वानन्देत्यादीति । नेति । चन्द्रवन्मुखमित्यादौ तथा । अनेनेति । भकारेण । छन्द इत्यादि । छन्दोभिर्वेदैः स्तुतियुक्तमुपगानं तत्साधनभूतो भकारः तद्वत् । अत्रोपगानं भावल्युडन्तम् । ऋत्विजो गायन्तीत्यार्त्विज्यं गानस्य । अत्र भाष्ये । तत्सम्बन्धीति । स्तुतिरूपप्रतिपाद्यस्य प्रतिपादकत्वसम्बन्धि, छन्दसः स्तुतियुक्तमुपगानमित्यर्थः । प्रकृते । तत्रेत्यादीति । अभि त्वेति श्रुत्यर्थस्तु, हिरण्याक्षस्य वराहं प्रति वचः, ब्राह्मणे वाराहोक्तेः । कृष्णं प्रति भीष्मवचो वा । वेदान्ते कृष्णोक्तेः । यद्वा, हे शूर यातुधानादे, यज्ञाभिभावक, त्वामभि त्वा नोनुमः न रथन्तरेण साम्ना स्तुमः । तत्र दृष्टान्तः । अदुग्धाः न विद्यते दुग्धं यासु ताः धेनवो यथा न स्तुत्यास्तद्वत्, तवापि ब्रह्मत्वं परं

१. अभेदो लक्षणा ।

इत्यृचि ये वर्णाः, तेषामच एवोपसंहृत्य भकारेणैव गानं क्रियते । न हि तदार्चिकवर्णधर्माणामचामुपसंहारोऽस्तीति तद्दृगात्मकत्वं भकारस्य सम्भवति, एवं प्रकृतेऽपि ब्रह्मधर्मप्राकट्येन न तदात्मकत्वं जीवस्य सम्भवति। ननु तत्त्वमस्यादिवाक्यैरत्राभेदबोधनादस्तु तथेति चेत्, तत्राह तदुक्तमिति । जीवब्रह्माभेदबोधनतात्पर्यमुक्तमित्यर्थः। 'तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञव'दिति सूत्रेणेति शेषः।

अपिच । श्रुतौ ब्रह्मोपायनस्य साम्योपायनहेतुत्वोक्त्या तदनुपायनस्य साम्यानुपायने हेतुत्वमिति ज्ञाप्यते । तथाच, 'पराभिध्यानात् तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ'विति सूत्रे जीवस्य ब्रह्मांशत्वेनानन्दैश्वर्यादिब्रह्मधर्मवत्त्वात्

भाष्यप्रकाशः ।

तदात्मकत्वमिति । तदभेदः । अत्र किञ्चिदाशङ्क्य तत्समाधिं सारयतीत्याहुः ननु तत्त्वमित्यादि । अत्राभेदबोधनादिति । जीवे ब्रह्माभेदबोधनात् । तदुक्तपदं व्याकुर्वन्ति जीवेत्यादि । नच तद्गुणसारत्वसूत्रे संसारावस्थायामेव व्यपदेशपक्ष उच्यते, न तु मुक्त्यवस्थायाम्, 'यत्र त्वस्य सर्वमात्मैवाभूत्', 'सलिल एको द्रष्टाऽद्वितीयो भवती'त्यादिश्रुतिषु ब्रह्माभेदस्यैव श्रावणादिति वाच्यम् । अभेदेपि मुक्त्यवस्थायां जीवन्यूनताया 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति, एवं मुनेर्विजानत आत्मा भवति गौतमे'ति काठकश्रुत्या भेदसहिष्णोरभेदस्यैव निश्चायनात् । नच 'सलिल एक' इत्यादिविरोधः । तत्र तादृशाभेदप्रतीत्यापि तदुपपत्तेः । लोकेपि मिलिताङ्गुल्यादौ विभागाभाव एव एकशब्दप्रयोगाच्च । नचावान्तरमुक्तावेवंभाव इति वाच्यम् । मानाभावात् । परमतेपि 'अविभागेन दृष्टत्वा'दिति सूत्रेऽविभागस्यैव व्याख्यातत्वात् । ब्रह्मसूत्रेषु मुक्तिविचारे कुत्राप्यैक्यपदादर्शनाच्च । नचैवमपि शङ्कापिशाची न निवर्तत इति चेत् । 'भिद्यते हृदयग्रन्थि'रिति श्रुत्युक्तदर्शने एव निवर्त्स्यते इति किमतोऽधिकं वाच्यमिति दिक् । नच गतिसामान्यसूत्रभाष्यविरोधः । तत्रापि सामान्यपदस्य तुल्यपदेनैव व्याख्यानात् । सूत्रकारस्याप्येतदेव मतम् । अन्यथा तु 'गत्यैक्या'दित्येव वदेत् । नच तद्विषयवाक्यविरोधः। तत्रापि विज्ञाता विज्ञातृरूपेण न तिष्ठति, किन्तु ब्रह्मरूपेणेति भेदविरुद्धसंपदा अभेदेन स्थानस्याभिप्रेतत्वादिति न कोपि चोद्यावकाशः । तदुक्तपदसूचितमर्थान्तरमाहुः अपिचेत्यादि । एतेन गुणहानिर्व्याख्याता बोध्या । नन्वेतद्ब्रह्मा-

रश्मिः ।

दुष्टमिति भावः । पूर्वपक्षयोरदुग्धा दुग्धविरोधिन्यः । विरोधो नञर्थः । अच एवेति । द्वितीयाबहुवचनान्तमच इति पदम् । एवकारः स्पर्शाक्षरव्यवच्छेदकः । उपसंहृत्येति । 'त्वामिद्धि हवामह' इत्यस्यामुपसंहृत्य, सान्निध्यात् । सान्निध्यं पूर्वतन्त्रे द्वितीयाध्यायस्य तृतीयपादे प्रथमाधिकरणे । 'अभित्वा शूरे' त्येतस्यां योनावुत्पन्नं रथन्तरं साम । 'त्वामिद्धि हवामह' इत्येतस्यामुत्पन्नं बृहत्साम । अगतीछन्दस्कायामप्युत्पन्नं जगत् सामेत्युक्तेः । त्वां इत् हि इति छेदः । ञिमिदा स्नेहने त्वा त्वामिद्धि इति वा । भकारेणैवेति । 'अभि त्वे'ति श्रुते रथन्तरसामयोनित्वेनास्या उद्धृतभकारस्य रथन्तरसामत्वं प्रतिभाति । अस्याः श्रुतेर्लाघवम् । भकारशब्दः कोशादेकादशबलयुक्तशुक्रस्य वाचकः । नक्षत्रवाचको वा । तेनेत्यर्थः । लाघवादेवकारः शरीरगुर्वीं श्रुतिं व्यवच्छिनत्ति । आर्चिकेति । ऋक्सम्बन्धिनां ऋचि भवानाम् । 'तत्र भव' इति ठक् । चतुर्दशमाहेश्वरसूत्रोक्तत्वात्पाणिनीयानुक्तत्वादचां वर्णधर्मत्वम् । तद्दृगात्मकत्वमिति । अष्टादशाचः पञ्चाशद्वर्णास्तदजन्यात्मकर्क्तदात्मकत्वम् । गतीति । इदं सूत्रं प्रथमस्य प्रथमपादे । गुणहानिरिति । भाष्यीयाभासोक्ता ।

**ब्रह्मणः सकाशाद्विभागे सति तदिच्छया तद्धर्मतिरोधानस्य संसारित्वे हेतुत्वमुक्तं यत्, तदपि 'तदुक्त'मित्यनेन स्मार्यत इति न विस्मर्तव्यम्। यथान्यशाखोक्तधर्मा अप्येकस्यां विद्यायामुपसंह्रियन्ते, एवं ब्रह्मनिष्ठा धर्मा जीवेऽप्येतया श्रुत्या बोध्यन्त**

भाष्यप्रकाशः।

ख्यानमसङ्गतम्, उपसंहारप्रकरणे धर्मसाम्यविचारप्रसङ्गस्याभावादित्यत आहुः यथेत्यादि। यथा छान्दोग्यस्थपञ्चाग्निविद्यायां काण्वाद्युक्तः षष्ठोऽग्निः प्राणविद्यायां पञ्चमं रेतश्चोपसंह्रियते, विधैक्य-बलात्, तथात्र श्रुत्या परमसाम्यनिरूपणादैक्यभ्रमेणासाधारणा ब्रह्मनिष्ठा धर्मा अपि जीवे उपसंहार्या इति शङ्कानिरासायैतदुक्तमित्यर्थः। तस्मान्निर्दोषत्वे तिरोहितगुणप्राप्त्या साम्ये च सिद्धे ब्रह्मभूतस्य मुख्यं भजनं सिध्यतीति तदर्थे यतनीयम्, न तु विभूतिपरेण भवितव्यमिति बोधितम्। अत्रापहतपाप्मत्वस्य यज्ञे प्राकट्याद्यज्ञसम्बन्धे रुक्मवर्णत्वात् सौभाग्यस्य कर्तृत्वयो-

रश्मिः।

पञ्चममिति। सर्ववेदान्तप्रत्ययसूत्र एवोक्तम्। 'उपसंह्रियन्त' इत्यनुक्त्वा 'बोध्यन्त' इत्युक्तं तदर्थ-माहुः इति शङ्केति। उपसंहारशङ्कानिरासायैतत् 'बोध्यन्त' इति पदमुक्तमित्यर्थ इत्यर्थः। उपासनां प्राकरणिकीमाहुः तस्मादिति। ब्रह्मनिष्ठधर्माणां जीवे बोधनात्। दोषः पाप्मवेधः तस्मान्निर्गतत्वे प्रथमसूत्रोक्ते द्वितीयसूत्रोक्ते तिरोहितगुणानामानन्दादीनां प्राप्त्या साम्ये। 'ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति। समः सर्वेषु भूतेषु मद्भक्तिं लभते परा'मिति गीताया आहुः ब्रह्मभूतस्येति। जीवस्य। मुख्यं परं फलाविसंवादि एकादशैकोनविंशाध्यायोक्तम्। तदर्थे इति। मर्यादामार्गीयैं तदुक्ते। एतेन तत्पदार्थाशया भजनेऽयं पुष्टिमार्गो भवति। 'तत्त्वायामि ब्रह्मणे'ति सन्ध्याश्रुतेः। तत् महावाक्योक्तं त्वा त्वायामि पद्भ्यां सेवे। पादसेवोक्ता। ब्रह्मणा हिरण्यगर्भेण वन्द्यमानः वन्द्यमानम्। अमः सुः। 'ब्रह्मा मानसी सेवां प्रत्यहं करोती'ति सुबोधिन्याम्। वन्दनभक्तिः सेवापूर्त्यै एकादशस्कन्धसुबोधिन्यामुक्तम्। तत् पूर्वोक्तं यजमानो दैशिक आशास्ते आशां कुरुते। हविर्भिः बहुविधभक्तिमार्गीयैः समर्पणदानैः। स यजमानो न कृतात्मनिवेदी, किंतु श्रुतात्मनिवेदीत्याह अहेडमान इति। हेड अनादरे। हेडते कृतात्मनिवेदनत्वदशायां गुरुणा न हेडमानोऽहेडमानः, हे वरुण, इह लोके बोधी ज्ञानी उरु यथा भवति तथा शंसमानः कीर्तनभक्तिमान्। आयुः अन्नं प्रमोषीः प्रकर्षेण मोषीः। मुष स्तेये। जलदोषेण स्तेयं मा कार्षीः। अडभावश्छान्दसः। उरु शं यथा भवति तथा स यजमानोऽतो नोऽस्माकं आयुः त्वं प्रमोषीः। आनन्दमयादीनां प्रियशिरस्त्वसूत्रानुसारेण प्रियाद्युपासनमुक्त्वा तत्प्रसङ्गेन स्मृताय विरुद्धधर्माधारत्वाय निकेतत्वानिकेतत्वे श्रीवैराग्यरूपे आहुः पुरुषविधब्राह्मणोक्तपतिपत्नीभजनाय। तत्प्रसङ्गेन स्मृतायं च। अत्रापहतेति। श्रुतौ अपहतपाप्मा यज्ञ उक्तः, सोऽत्र शाखाभेदेन पुरुष-विधः। आनन्दमयाधिकरणे पुरुषविधब्राह्मणोक्तेरानन्दमयाद्युपासनप्रसङ्गेन पुरुषविध आनन्दमय इति स्मृतेः। पुरुषविधयज्ञो दंपतीत्वतः 'पतिः पत्नी चाभवता'मिति पुरुषविधब्राह्मणश्रुतेः। ततो यज्ञ आसन्येऽपहतपाप्मत्वं रुक्मवर्णत्वं पत्नीकृतमधोक्षजे। तस्याः क्रियात्वेन रुक्मवर्णत्वमिति। गोप्यत्वा'दजामेका'मिति श्रुत्युक्ताया अजायास्त्यक्ताया गुणहानिः तस्यां सत्यां ब्रह्मोपायनशेषत्वात्सा-म्यस्य। ब्रह्मप्राप्तिमुख्यनित्यक्रीडाप्रवेशोपयिकः प्रपञ्चः तस्य शेषत्वं पत्नीनिष्ठसाम्यस्येति परम्परया ब्रह्मोपायनशेषत्वं साम्यस्येत्याशयवन्त आहुः सौभाग्यस्येति। अलौकिककर्तृत्वयोनित्वाभ्यां सौभाग्यस्य साम्यरूपस्य। ब्रह्मवदभिन्न( निभिन्न )निमित्तोपादानत्वं तेन साम्यमित्युक्तम्। तस्याः कार्यकारणभावः प्रपञ्चसम्बन्धः इति त्रिधा सौभाग्यतज्जन्यकर्तृत्वयोनित्वैस्त्रिधा आधिदैविकादिभेदेन या श्रीर्लक्ष्मीः शोभा

भाष्यप्रकाशः ।

नित्याभ्यां प्रपञ्चस्य च सम्बन्ध इति त्रिधा श्रीनिकेतनत्वमुक्तम् ।

अन्ये तु इदमप्येकसूत्रमधिकरणमङ्गीकृत्य, 'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहुमुखात् प्रमुच्य, धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवानी'ति ताण्डिश्रुतिं 'तदा विद्वा'नित्याथर्वणश्रुतिं 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्या'मिति शाट्यायनिश्रुतिं 'तत्सुकृतदुष्कृते विधूनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्ति अप्रिया दुष्कृत'-मिति कौशीतकिश्रुतिं चोदाहृत्य, यत्रोभयं श्रूयते, तत्र न कश्चिद्विचारः, यत्राप्युपायनमेव श्रूयते, न हानम्, तत्राप्यर्थादेव हानं सन्निपतति, अन्यैरुपेयमानयोरात्मीयसुकृतदुष्कृतयोर्हानस्या-वश्यकत्वात्, यत्र पुनः केवलं हानमेव श्रूयते, तत्रोपायनं सन्निपतेन्न वेति संशये, अश्रवणा-द्विद्यान्तरगोचरत्वाच्च न सन्निपततीति पूर्वपक्षे, तत्रापि तत्सन्निपातं सिद्धान्तयितुं सूत्रमेवं व्याकुर्वते । हानौ केवलायामपि श्रूयमाणायामुपायनं सन्निपतति । कौशीतकिरहस्ये उपायनशब्दस्य हानशेषत्वेन समधिगतत्वादित्यादि ।

रश्मिः ।

तस्या निकेतत्वं निकेतनं धर्मो भक्तिविषयः । उक्तम् । सूत्रयोस्तात्पर्येण भजनीयतावच्छेदकपञ्चकेन सहोक्तश्रीनिकेतनमुक्तम् । प्रपञ्चस्तत्वं सम्बधयति प्रियाम् । श्रीनिकेतनत्वमुक्तमिति पाठे । उक्त-प्रपञ्चस्य स्वत्वमात्मत्वं सम्बन्धयति प्रियामिति णिजन्तत्वेन कर्मद्वयम्, प्रिया श्रीः तस्या निकेतत्वमुक्तम् । द्वितीयस्कन्धसुबोधिन्यां भाष्ये भजनीयमुक्तं तद्विषयतावच्छेदकं पञ्चकमुक्तं द्वितीयस्कन्धसुबोधिन्यां द्वितीयाध्याये तत्त्वध्यानप्रकरणे 'एवं स्वचित्ते स्वत एव सिद्धे' इति श्लोके 'आत्मत्वं प्रियत्वं अर्थत्वं भगवत्त्वमनन्तत्वं चे'ति । 'आध्यानाये'ति सूत्रेण तत्त्वध्यानप्रकरणस्मारणात् । सुबोधिन्यामुक्तपञ्चधर्मो-स्त्यनन्तरं भजने चैते धर्मा भजनीयविषयतावच्छेदकत्वेन गुणोपसंहारन्यायेन ग्राह्या इति । तेन 'नमामि हृदये शेषे लीलाक्षीराब्धिशायिनम् । लक्ष्मीसहस्रलीलाभिः सेव्यमानं कलानिधि'मित्यत्र सेवा प्रपञ्चिता । तेनानन्दमयस्य नित्यक्रीडास्थसाम्येपि श्रीवत्सकौस्तुभौ विना साम्यमिति केवल-स्वरूपभक्तिकामेन श्रीवत्समुपसंहार्याधोक्षजे जानातीच्छति यतत इति क्रमेण भक्तिः सम्पाद्येति साम्ये भजनव्यभिचारात् कथमानन्दमयस्य भजनीयत्वमिति कुचोद्यं निरस्तम् । श्रीवत्सेनेतरपार्थ-क्यात् । किंच तृतीयस्कन्धे 'अद्राक्षमेकमासीन'मित्यत्र सुबोधिनी 'तदा भगवतः ऐश्वर्यस्य प्रादुर्भूत-त्वात् षोडशापि कलाः तदा भगवति दृष्टाः संपूर्णो भवति । अतोत्र भगवतः षोडशविशेषणानि । एतान्येव गुणोपसंहारे षोडशाधिकरण्या प्रतिपादितानी'ति । अश्व इवेति । प्रत्येकं भाष्यकाराणा-मिमानि विषयवाक्यानि । श्रुत्यर्थस्तु, 'यथाऽश्वो जीर्णानि रोमाणि रजोभिः सह त्यक्त्वा स्वच्छो भवत्येवमहमपि पापं सर्वं विधूय निर्मलः सन् यथा वा चन्द्रो राहोर्मुखात्प्रमुच्य भास्वरो भवत्येव-मकृतं प्रवाहरूपेणानादिसिद्धं शरीरं धूत्वा त्यक्त्वातिस्वच्छः सन् कृतात्मा कृतकृत्यो ब्रह्मात्मकं लोक-मभिसंभवाम्याभिमुख्येन प्रसक्तेन प्राप्नोमीत्यर्थः । परमं साम्यमैक्यम् । तस्य मृतस्य विदुष इत्यर्थः । दायं भागमित्यर्थः । हानस्येति । उपायनशेषस्य । इत्याद्यीति । अमूर्तयोः पुण्यपापयोरन्यत्र संचारात्सकोपादानस्य मुख्यस्यायोगात् सूत्रे शब्दपदेन हानादुपायनोपसंहारस्य स्तुत्यर्थत्वं सूचितम् । शाखान्तरो विशेषः शाखान्तरे पापेक्षित उपसंहरणीय इत्यत्र दृष्टान्तमाह कुशाछन्द इत्यादिना । तत्र कुशादृष्टान्तो यथा—'कुशा वानस्पत्याः स्थे'त्यादौ भाल्लविनां श्रुतौ हे कुशाः समिद्रूपा यूयं वानस्पत्याः स्थामो यजमानं रक्षतेति यजमानप्रार्थने वनस्पतियोगित्वेन सामान्यसमित्श्रवणे 'औदुम्बरा' इति

भाष्यप्रकाशः ।

तच्चिन्त्यम् । आद्ये उपायनशब्दस्याभावेन अर्थग्रहणेपि तस्य फलबोधकत्वेन द्वितीयवाक्येपि तस्य तथात्वेन हानशेषत्वाभावाद्विषयत्वायोगात् । ताण्ड्याथर्वणकौशीतकिवाक्येषु कम्पनार्थकधातुनिष्पन्ने 'धूत्वे'त्यादिशब्दे हान्यर्थत्वं लक्षयित्वा उपायने तच्छेषताकल्पनस्य क्लिष्टत्वात् । चतुर्ष्वपि वाक्येषूपायनस्य सत्त्वात् क उपायनशब्दः सूत्रकाराभिसंहित इत्यनिश्चयेन कौशीतकिस्थशब्दस्यैव विषयत्वमित्यस्याप्यतिक्लिष्टत्वाच्च ।

यदप्यस्योपायनवादस्य स्तुत्यर्थत्वादन्यदीयपुण्यपापयोः कथमन्यत्र प्राप्तिरित्यत्र नाभिनिवेशः कार्य इत्युक्तम् ।

तदपि न रोचिष्णु । 'राज्ञि चामात्यजा दोषाः पत्नीदोषाश्च भर्तरी'त्यादिस्मृतावभिमान-

रश्मिः ।

शाखान्तरीयो विशेष आश्रितः 'औदुम्बराः कुशा' इति । छन्दोदृष्टान्तो यथा—'छन्दोभिः स्तुवीते'त्यत्र देवासुरच्छन्दसामविशेषेण पौर्वापर्यप्रसङ्गे 'देवच्छन्दांसि पूर्वाणी'ति पैङ्गिश्रुत्या निर्णयः । स्तुतिदृष्टान्तो यथा—षोडशिनः पात्रविशेषस्य ग्रहणे त्वङ्गभूतं स्तोत्रं कदा कर्तव्यमित्याकाङ्क्षायां छन्दोगानां कालाविशेषप्राप्तौ 'समयाध्युषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोती'ति तैत्तिरीयकवाक्यात् कालविशेषधीर्भवति । एवं (भूया अर्च्यानां श्रुते) वा कालविशेषधीरिति । उपगानदृष्टान्तो यथा—'ऋत्विज उपगायन्ती'ति सामान्यवाक्यं शाखान्तरीयं नाध्वर्युरुपगायन्तीति विशेषमपेक्ष्याध्वर्युवर्जिता ऋत्विज उपगायन्तीत्येतदर्थपरतया निश्चीयते । तथाच यथा कुशादिश्रुत्यन्तरगतविशेषान्वयास्तथा हानावुपायनान्वय इत्यर्थः इत्यादिशब्दार्थः । अभावेनेति । उपयन्तीति पदाभावात्तथा । अर्थेति । विधूयेत्यस्यार्थः विभागानुकूलो व्यापारः त्यक्त्वेत्यर्थात् । तत्र पूर्वक्षणे ईश्वरस्य निमित्तत्वात् पुण्यपापयोः कर्म, ततः देवदत्तात्, पुण्यपापयोर्विभागः, ततः पुण्यपापवैशिष्ट्येन साञ्जनत्वारम्भकवैशिष्ट्यनाशः, ततः पुण्यपापनाशः, तेन साञ्जनत्वनाश इति । ततस्तेनैव देवदत्तात्पुण्यपापयोर्विभागेन सकर्मणोः पुण्यपापयोराकाशादिविभागो जन्यते, ततः पूर्ववैशिष्ट्यनाशः, ततो विष्णुमित्रकृष्णदत्तयोर्वैशिष्ट्यम् । ततो विष्णुमित्रे कृष्णदत्ते चोपसंहृतयोः पुण्यपापयोर्हानम्, ततः कर्मनाश इति विभागस्यार्थस्तस्य ग्रहण इत्यर्थः । तस्येति । उपायनशब्दस्य फलं उपयन्तीत्यत्रोपायनं तस्य फलबोधकत्वेन । इदं हानशेषत्वाभावादित्यनेनान्वेति । तस्येति । उपायनशब्दस्य फलबोधकत्वेन । उपायनानुकूलव्यापार इति धात्वर्थात् । फलं वा धात्वर्थ इति मतम्, मण्डनमिश्राणामपि । हानशेषत्वेति । 'परार्थः शेषलक्षण'मिति जैमिनिसूत्रात् हानार्थत्वाभावात् । किन्तु व्यापारार्थत्वम् । फलं धात्वर्थ इति पक्षेपि लकारार्थव्यापारशेषत्वेन हानशेषत्वाभावात् । लक्षयित्वेति । जन्यजनकभावसम्बन्धो लक्षणा । सत्त्वादिति । प्रथमे धूत्वेत्यस्य त्यागार्थग्रहणे सत्त्वात् । द्वितीये विधूयेतिपदस्य त्यागार्थग्रहणे सत्त्वात् । तृतीये उपयन्तीत्युपायनस्य सत्त्वात् । तथा चतुर्थे सत्त्वात् । कौशीतकीति । उभयोक्तेरेवकार एकोक्तिविशिष्टव्यवच्छेदकः । अतीति । प्रथमविषयवाक्यत्यागे मानाभावान्मानस्थापन एकवाक्यताङ्गीकारादेकवाक्यतायाश्चतुर्षु प्रमाणेष्वन्तर्भावाभावात्परस्परमेकवाक्यतापन्नवाक्यचतुष्टयस्य शब्दत्वेन प्रामाण्यादतीति । स्तुत्यर्थत्वादिति । असदर्थबोधकत्वात् । 'नाभिनिवेशः कार्य' इत्यनेनान्वेति । अभिमानेति । अमात्येन निग्रहादिके कृते राजाभिमन्यते मया कृतमिति, पत्न्यां दुष्टायां

इत्येतावत्साम्यमस्तीत्युपसंहारप्रकरण एतस्य निरूपणं कृतम् ॥ २६ ॥

इति तृतीयाध्याये तृतीयपादे पञ्चमं वेधाद्यधिकरणम् ॥ ५ ॥

भाष्यप्रकाशः।

मात्रेण दोषसंक्रमकथनात्, भारतादौ माण्डव्यदत्तयमशापप्रसङ्गे बालकृतपापस्य जनकत्वोपाधिना पितृसंक्रमकथनात्, विश्वामित्रपुण्येन त्रिशङ्कोः स्वर्गप्राप्तिस्मरणाच्चापि तथा सम्भवेन स्तुतिमात्रत्वाङ्गीकारस्याप्रयोजकत्वात्, 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' 'ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथे'ति श्रुतिस्मृतिभ्यां ज्ञानस्य कर्मनाशकत्ववत् विद्याविशेषस्यान्यत्र कर्मसंक्रामकत्वेपि बाधकाभावात्। नच सुकृतदुष्कृतयोः कर्तृसामानाधिकरण्यस्यैव सर्वत्र दर्शनान्नान्यत्र साक्षात् संक्रमः, अपि तु फलस्य तत्र सम्बन्धात् तत्र स उपचर्यत इति वाच्यम्। हेतुव्यधिकरणस्य फलस्यैवाशक्यवचनत्वात्। नच वाक्यान्यथानुपपत्त्या तत्र तथा कल्प्यत इति वाच्यम्। तस्या अत्रापि तौल्यात्। किञ्च। आन्यत्रिकवाक्यस्य आन्यत्रिकवाक्यशेषत्वाय 'कुशाच्छन्दःस्तुत्युपगानव'-दित्यत्र दृष्टान्तत्रयं यत् स्वीकृतम्, तदपुष्टार्थम्। एकेनापि तत्सिद्धेरप्रत्यूहत्वेन बहूनां कथने प्रयोजनाभावादिति ॥ २६ ॥ इति पञ्चमं वेधाद्यधिकरणम् ॥ ५ ॥

रश्मिः।

पतिर्दुष्ट इति लोका वदन्ति। दोषसंक्रमेति। अन्यथा नाभिमन्येत। जनकत्वेति। अभिमानस्थलेऽयमुपाधिः। यथाभिमानोऽन्यदीयपुण्यपापयोरन्यत्र प्राप्तिरित्यत्राभिनिवेशे उपपत्तिसाधकः, तथात्र जनकत्व'मात्मा वै पुत्रनामासि स जीव शरदः शत'मिति श्रुत्युक्तपितृपुत्रयोरैक्यज्ञानसंजातवासनासमानाधिकरणमुपपत्तिसाधकं ज्ञेयम्। तथेति। अन्यदीयपुण्यपापयोरन्यत्र प्राप्तिरित्यत्राभिनिवेशे शब्दस्योपपत्तिसाधकत्वेन संभवस्तेन। एवं भगवन्माहात्म्यमुक्त्वा 'अनृतेन प्रत्यूढा' इति श्रुतेः पुण्यपापयोरविद्यया प्रतिकूलत्वेन प्रापितयोरन्यदीयपुण्यपापयोरन्यत्र प्राप्तिरित्यत्राभिनिवेशसाधकं विद्याविशेषमाहुः क्षीयन्त इति। कर्मनाशेति। कर्माविद्यारूपमत्र बोध्यम्। 'अविद्यायामन्तरे वर्तमाना' इति मुण्डकश्रुतेः। विद्येति। विद्याविशेषोऽत्र त्रय्या व्यतिरिक्त आथर्वणः। अन्येति। ऋतादन्यदनृतं कर्म। योगमायास्थले दशमे प्रसिद्धं यथा कथञ्चित्। कर्तृत्वेति। यो हि कर्ता तत्र सुकृतदुष्कृते इति। फलस्येति। सुकृतदुष्कृतफलस्य पुण्यपापरूपस्य। तत्रेति। तथा 'तस्य सुहृदः साधुकृत्यामुपयन्ति'। मृतस्य साधुकृत्यां मृतोऽयं सुहृद्वयं तत्कार्यरहितास्तत्सुकृतफलभागिन इत्युपयन्ति। 'द्विषन्तः पापकृत्यामुपयन्ति'। मृतस्य पापकृत्यां मृतोयं द्वेषेण वयं पापफलभागिन इति। सम्बन्धो दार्ष्टान्तिके। स इति। सुखदुःखोपसंहारः सुकृतदुष्कृतोपसंहारो वा। वाक्यान्यथेति। विषयवाक्यान्यथानुपपत्त्या। यद्विना यदनुपपत्तिरसम्भवस्तेन। तत्र तत्समाधानाय तथा उपायनवादः स्तुतित्वेन कल्प्यत इत्यर्थः। तस्या इति। स्तुतेरत्रास्मन्मतेपीत्यर्थः। दृष्टान्तत्रयमिति। पूर्वमुक्तं व्याख्यातं च। एकेनापीति। न च बहुभिः साध्यदार्ढ्यमिति वाच्यम्, हेतोः सदोषत्वापत्तेः ॥ २६ ॥ इति पञ्चमं वेधाद्यधिकरणम् ॥ ५ ॥

## सम्पराये तर्तव्याभावात् तथा ह्यन्ये ॥ २७ ॥ ( ३-३-६. )

वाजसनेयिशाखायां 'स एष नेति नेतीत्यात्मे'त्युपक्रम्य, 'न व्यथत' इत्यन्तेन ब्रह्मस्वरूपमुक्त्वा, यत एतादृग्ब्रह्मातस्तद्विदपि विवक्षितरूप इत्यभिप्रायेणाग्रे पठ्यते 'अतः पापमकरवमतः कल्याणमकरवमित्युभे ह्येष एते तरत्यमृत' इत्यादिना । अग्रिमया 'एष नित्यो महिमा ब्राह्मणस्ये'त्यृचा च ब्रह्मविदो माहात्म्यमुक्त्वा पठ्यते । 'तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः श्रद्धा-

भाष्यप्रकाशः ।

**सम्पराये तर्तव्याभावात् तथा ह्यन्ये ॥ २७ ॥** साम्पराय इति पाठे स्वार्थेऽण् बोध्यः । पूर्वाधिकरणे जीवस्य भगवत्सम्बन्धे विशेषमुक्त्वा तत्साधनयोर्ज्ञानभक्त्योर्मध्ये किं ज्याय इति विचारयितुमधिकरणमारभत इत्याशयेन सूत्रे तर्तव्याभावपदात्तल्लिङ्गिके श्रुती विषयत्वेनोदाहरन्ति वाजेत्यादि । अथर्वणेत्यादि च । एतयोराद्यं वाक्यं बृहदारण्यके शारीरब्राह्मणस्थम् । तत्र च पूर्वं 'मनसैवानुद्रष्टव्य'मित्यनेन तद्दर्शनसाधनमुक्त्वा, 'विरजः पर आकाशा'दित्यादिना विरजत्ववशित्वेशानत्वादीन् धर्मान् बोधयित्वा, ततोऽनिरुक्तत्वाय 'नेति नेती'त्यनेनैतावन्मात्रतां निषिध्य, 'अगृह्यो नहि गृह्यते, अशीर्यो नहि शीर्यते, असङ्गोऽसितो न सज्जते न व्यथत' इत्यनेन लौकिकप्रमाणाग्राह्यत्वमनाशित्वमसङ्गत्वम्, 'षिञ् बन्धने', अबद्धत्वं निर्दुःखत्वं चोक्त्वा, तेन जडविलक्षणं ब्रह्मस्वरूपं बोधयित्वा, ब्रह्मण एतादृशत्वात् तद्विदपि साध्वसाधुकर्मरहित इति बोधनायाग्रे पठ्यते 'अतः पापमकरवमतः पुण्यमकरवमित्युभे ह्येष एते तरत्यमृतः साध्वसाधुनी' इति । अत इदमभिसंधाय पापमकरवं कृतवानस्मि, अत इदमभिसन्धाय कल्याणं पुण्यं कृतवानस्मि, इति एवमभिसन्धिपूर्वकं कृते एते उभे साध्वसाधुनी हि निश्चयेन एष उक्तरीतिकब्रह्मवित् तरति अतिक्रामत्यभिभवति । अमृतो जीवन्नेव, नैनं कृताकृते तपतः, एनं ब्रह्मविदं निन्दितकरणकल्याणकरणे पश्चात्तापं न जनयतः, नास्य केनचन कर्मणा लोको मीयते, अस्य प्राप्तव्यो ब्रह्मलोकः केनापि कर्मणा नापयाति, प्राप्तव्यं प्राप्नोत्येवेत्यर्थः । तदेतदृचाभ्युक्तम् । ब्राह्मणोक्तोऽर्थो वक्ष्यमाणर्चाप्युक्त इत्यर्थः । ऋक् तु 'एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयान् तस्यैव स्यात् पदवित् तं विदित्वा न कर्मणा लिप्यते पापकेने'ति । 'एष' इति ब्राह्मणोक्तः । 'तं' पूर्वोक्तरूपमात्मानं विदित्वा तस्यैवात्मनः पदवित् पदं चरणं स्थानं वा 'तद्धाम परमं मम'ेति वाक्यादक्षरं तद्वित् स्यात् । ततः पापेन लिप्तो न भवतीत्येवमक्षरविदो माहात्म्यमुक्त्वा पठ्यते । तत्साधनमुच्यते 'तस्मादेवंवि'दित्यादिना । यस्मादेवं ज्ञातुर्माहात्म्यम्, तस्मादेवं शास्त्रतो ज्ञः, यः स्वरूपवित्, शान्तो दान्तः निगृहीतान्तर्बहिःकरण उपरतो निवृत्तसर्वेहस्तितिक्षुः दुःखसहिष्णुः श्रद्धावित्त आस्तिक्यबुद्धिमान् आत्मनि स्वशारीर एवात्मानमक्षरं पश्येत् । 'अर्हे कृत्यतृचश्चे'-

रश्मिः ।

**सम्पराये तर्तव्याभावात् तथा ह्यन्ये ॥ २७ ॥** अत इति । अभावस्य प्रतियोगिसापेक्षत्वात् । **साध्वसाधुनी** इति । द्वितीयाद्विवचनान्तं पदम् । **नापयातीति** । **मीयत** इति । माङ्माने शब्दे च । अपयातिशब्देन शब्द्यत इत्यर्थः । **पदवित्तमिति** । पदवित् तं इति छेदः । 'तस्यैवात्मा पदवित् तमिती'दानीन्तनपाठः । **स्वशारीर** इति । स्वजीवे । 'यस्यात्मा शरीर'मित्य-

चित्तो भूत्वात्मन्येवात्मानं पश्येत्, सर्वमेनं पश्यति, सर्वोऽस्यात्मा भवति, सर्वस्यात्मा भवति, सर्वं पाप्मानं तरति, नैनं पाप्मा तरती'त्याद्युक्त्वान्ते पठ्यते 'य एवं वेदे'ति। अत्र हि पाप्मतरणादिरूपं ब्रह्मज्ञानमाहात्म्यमुच्यते। ज्ञानस्य संसारमुक्तिहेतुत्वात्। अथर्वणोपनिषदादिषु तु भगवद्भक्तेर्मुक्तिहेतुत्वमुच्यते। 'परं ब्रह्मैतत् यो धारयती'त्युपक्रम्य 'भजति सोऽमृतो भवति सोऽमृतो भवती'ति। अग्रेपि 'मुक्तो भवति संसृते'रिति। एतद्विषयव्यवस्था तु पुरैवोक्तेति नात्रोच्यते।

एतावान् परं सन्देहः, 'य एवं वेद स पाप्मानं तरती'ति वचनाज्ज्ञानदशायामपि पापसत्त्वं वाच्यम्, अन्यथा तरणासम्भवापत्तेः। एवं सति भक्तिदशायामप्येवमेव, न वेति भवति संशयः।

---

भाष्यप्रकाशः।

त्यर्हार्थे लिङ्। दर्शनार्ह इत्यर्थः। एवं दर्शनार्हतामुक्त्वा स्वस्य द्रष्टृतानिश्चयार्थं द्रष्टृलिङ्गानि वदति 'सर्वमेनं पश्यती'त्यादिना। स्वज्ञानार्थं लिङ्गमुक्त्वा परज्ञानार्थं तदाह 'विपापो विजरो विजिघत्सोऽपिपासो ब्राह्मणो भवति, य एवं वेदे'ति। य उक्तप्रकारकब्रह्मद्रष्टा स विपापादिलिङ्गैर्निश्चेय इत्यर्थः। अत्र विपापत्वं पापरूपकार्याकर्तृत्वमेव। बाह्यानां जराद्यभावानां समभिव्याहारात्, न तु पूर्वपापराहित्यम्, तस्य तर्तव्यत्वेनात्रोक्तत्वात्। इदं चान्यमतेपि तुल्यम्। सर्वैरेव 'अश्व इव रोमाणि विधूय पापम्' 'स आगच्छति विरजां तत्सुकृतदुष्कृते विधूनुत' इत्यादिश्रुतीरुदाहृत्य विदुषोपि देहवियोगसमय एव तर्तव्याभावव्याख्यानात्। अन्यथोक्तश्रुतिविरोधादिति सर्वमभिसन्धायास्य वाक्यस्य निष्कृष्टार्थमाहुः अत्र हीत्यादि। तर्तव्यलिङ्गां श्रुतिमुक्त्वा तदभावलिङ्गामाहुः अथर्वणेत्यादि। 'परं ब्रह्मे'त्यादिवाक्यं गोपालतापनीयस्थम्। अर्थस्तु स्फुटः। आदिपदेन तदुपबृंहणभूतपुराणसङ्ग्रहः। अतः परं यदंशे संशयस्तं प्रकटयितुं पूर्वविचारितमंशं प्रथममाहुः एतदित्यादि। एतच्छ्रुतिद्वयविषयभूते ये ज्ञानभक्ती तयोर्या व्यवस्था, अधिकारिभेदेन रूपभेदकथनात् तेन तेन ते ते धर्मास्तत्र तत्रोपसंहार्याः, नोपसंहार्याश्चेति नियमरूपा, सा तु 'न वा प्रकरणभेदा'दिति सूत्र एवोक्तेति तदंशे संदेहाभावादत्र पुनर्नोच्यत इत्यर्थः। सन्दिग्धांशमाहुः एतावानित्यादि। एवं सतीति। मुक्तिकारणत्वेन भक्तिज्ञानयोस्तौल्ये सति। तयोस्तौल्यं भक्तौ पापसूचनाद्यभावश्च सन्देहबीजम्।

रश्मिः।

न्तर्यामिब्राह्मणात्। शरीरमेव शारीर इति वा। स्वज्ञानेति। स्वस्य ब्रह्मद्रष्टृत्वज्ञानार्थं लिङ्गं समीपतरवर्तिनमान्तरं सर्वं यथाश्रुतं वा पश्यतीति लिङ्गमुक्त्वा। विजर इति। विगता जरा यस्मात्। विगता जिघत्सा अदनेच्छा यस्मात्। अदेर्घस्लृ, सन् द्वित्वम्। एवेति। प्रायपाठादान्तरपापकर्तृत्वव्यवच्छेदकः। तस्येति। पूर्वपापस्य। सर्वैरिति। भाष्यकारैः। अश्वो रोमाणीव ब्रह्मवित्पापं पापशब्दान्तैक्यम्। विरजां विरजशब्दात्सोर्डो। अम् अव्ययम्। उक्तेति। 'सर्वं पाप्मानं तरती'ति घटितविषयवाक्यश्रुतिविरोधात्। इति सर्वमिति। पराभिप्रायप्रकारेण सर्वमभिसन्धाय। तदभावेति। तर्तव्यपापाभावलिङ्गाम्। तदुपबृंहणेति। 'भेजिरे मुनयोऽथाग्र' इति। 'भवपारप्लवो दृष्टो हरिचर्यानुवर्णन'मिति च। सन्देहबीजमिति। ज्ञानमार्गवत्पापसत्त्वे भक्तिमार्गे तयोस्तौल्यं बीजं प्रथमकोटौ। द्वितीयकोटौ भक्तौ पापसूचनमुक्तत्वसूचनाभावो बीजम्। उक्तगोपालतापिनीयश्रुतौ बोध्यम्। श्रुतौ पापशब्दाभावात् सूचनशब्द उक्तः। सूचकशब्दोपि नेति भावः। 'मुक्तो भवति संसृते'रित्यत्र

**तत्र श्रुतावविशेषेण पापनाशश्रवणान्मुक्तिपूर्वकाले पापनाशावश्यम्भावादेकत्र निर्णीतः शास्त्रार्थोऽपरत्रापि तथेति न्यायेन भक्त्या पापनाशादत्रापि तथैवेति प्राप्ते, आह सम्पराय इत्यादि। सम्परायः परलोकः, तस्मिन् प्राप्तव्ये सतीत्यर्थः। अथवा। परः पुरुषोत्तमस्तस्याऽयो ज्ञानम्। तथाच सम्यग्भूतं पुरुषोत्तमज्ञानं येन स सम्परायो भक्तिमार्ग इति यावत्। अथवा। परे पुरुषोत्तमे अयनमयो गमनं प्रवेश इति यावत्। तथाच सम्यक्परायो येन स तथा भक्तिमार्ग इत्यर्थः। ज्ञानमार्गेऽक्षरप्राप्त्या भक्तिमार्गे पुरुषोत्तमप्राप्त्या तस्माद्विशेषमत्र ज्ञापयितुमेवंकथनम्। अतो भक्तेः पूर्वमेव पापनाशो युक्त इति भावः। ब्रह्मभूतस्य भक्तिलाभानन्तरं 'भक्त्या मामभिजानाती'ति भगवद्वाक्यात् पुरुषोत्तमस्वरूपज्ञानस्य भक्त्येकसाध्यत्वात् तथा। एवं सति 'मुक्तानामपि सिद्धानां नारायण-**

भाष्यप्रकाशः।

पूर्वपक्षमाहुः **तत्र श्रुतावित्यादि। तथैवेति**। भक्तिदशायां पापसत्त्वमेव। सिद्धान्तं वक्तुं सूत्रं व्याकुर्वन्ति **सम्पराय इत्यादि**। भक्तिदशायामेव तर्तव्याभाव इति भावः। संपरायशब्दस्य प्रसिद्धार्थग्रहणे भक्तिमार्गबोधकपदाध्याहारापत्तिरिति तमर्थं विहाय यौगिकार्थं गृहीत्वा व्याकुर्वन्ति **अथवेत्यादि**। अत्र द्वेधा व्याख्यानेन पुरुषोत्तमज्ञानस्य तत्प्राप्तेश्च साधनं भक्तिमार्ग एवेति ज्ञापिते सन्देहो भवति। ननु 'रूढिर्योगमपहरती'ति न्यायेन योगस्य निर्बलत्वादिदं न युक्तम्, व्यासचरणैर्वा कुत एवं प्रयुक्तमिति, तद्वारणायाहुः **ज्ञानमार्ग इत्यादि। तस्मादिति**। ज्ञानमार्गात्। **एवंकथनमिति**। यौगिकपदकथनम्। तथाचैवं व्यासाशयादध्याहारापेक्षया यौगिकादरस्य लघुत्वाच्चैवमाशयकथनं युक्तमित्यर्थः। **भक्तेरिति**। मर्यादामार्गीयप्रेमात्मिकाया भक्तेः। नन्विदं तदा युज्येत, यदा ज्ञानमार्गाद्भक्तिमार्गोत्कर्षः स्यात्, स एव तु कथमित्यत आहुः **ब्रह्मेत्यादि। तथेति**। ज्ञानमार्गाद्भक्तिमार्गस्योत्कृष्टत्वम्। ज्ञानमार्गे साक्षात्कारोत्तरं पुण्यपापनिवृत्त्या सुखप्राप्तेः, भक्तेस्तु पापनाशोत्तरमेव भजनादादित एव सुखप्राप्तेश्चेत्यपि बोध्यम्। **किञ्च**। ननु भवत्वेवम्, तथापि कथं भक्तिमार्गे तर्तव्याभाव इत्यत आहुः **एवं सतीत्यादि**।

रश्मिः।

मुक्तो ज्ञानमार्गीयाद्भिन्नः। **तत्र श्रुतावित्यादीति**। **अत्रापीति**। भक्तिमार्गेपि। **प्रसिद्धेति**। 'कृत्वा तत्साम्परायिक'मित्यादौ परलोके सम्परायशब्दः प्रसिद्धः। **भक्तिमार्गेति**। भक्तिमार्गे यः सम्परायः परलोकस्तस्मिन् तर्तव्याभावात्। तथा ज्ञानानन्तरमपि पापवन्तोऽन्ये भक्तिमार्गीयेभ्योऽन्ये 'मुक्तानामपि सिद्धाना'मित्याद्युक्तवाक्येभ्य इति सूत्रार्थः स्यादत्र तथेत्यर्थः। ससम्यन्तभक्तिमार्गपदाध्याहारः। लाघवादर्थाध्याहारे पदजन्यपदार्थोपस्थितिहान्या घटपदात्पटबोधः स्यादिति भावः। **तत्प्राप्तेरिति**। **भाष्ये** प्रवेशः प्राप्तिरिति भावः। **भक्तिमार्ग एवेति**। प्रथमान्तं पदम्। तथाच तृतीयसुबोधिनी। 'भक्तिमार्ग एव मार्ग' इति। **सन्देह इति**। उक्तसन्देहः। **एवमिति**। यौगिकं पदम्। **ज्ञानमार्ग इत्यादीति**। इदमानुमानिकाधिकरणे 'त्रयाणामेव चैव'मिति सूत्ररश्मौ 'यस्मिन्निदं विचिकित्सन्ती'ति श्रुतिव्याख्याने स्पष्टम्। **युक्तमित्यर्थ इति**। तथाच पूर्वमीमांसाकारिकासु श्रीमदाचार्याः 'विचारो योगरूढित' इति। वेदे तथा। वेदान्ते योगमात्रं 'सर्वे सर्वार्थवाचकाः' 'सर्वं सर्वमय'मिति चेति। **अत्रेति**। भक्तिमार्गे। **ब्रह्मेत्यादीति। ब्रह्मभूतस्येति**। तर्तव्यपापरहितस्य। **भक्त्येकेति**। न तु पापाभावं द्वारीकृत्य भक्त्येकसाध्यत्वात्। **उत्कृष्टत्वमिति**। 'अभिजानाती'ति-

परायणः । सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने' 'मुक्तोपसृप्यव्यपदेशात्' 'जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः । नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते' 'जन्मान्तरसहस्रेषु समाराध्य वृषध्वजम् । वैष्णवत्वं लभेत् कश्चित् सर्वपापक्षयादिहे'त्यादिवाक्यैः पापनाशानन्तरमेव भक्तिसम्भवाद्भक्तस्य तर्तव्यपापादेरभावान्न ज्ञानमार्गीयतुल्यतेत्यर्थः ।

ननु 'य एवं वेदे'ति सामान्यवचनात् पुरुषोत्तमविदोऽप्येवमेवेति चेत्, तत्राह तथा ह्यन्ये । तथा ज्ञानानन्तरमपि पापवन्तोऽन्ये भक्तिमार्गीयेभ्योऽन्य इत्यर्थः । उक्तवचनरूपोपपत्तिर्हिशब्देन ज्ञाप्यते ॥ २७ ॥

ननु भक्तिमार्गीयाणामपि गोपस्त्रीणां 'दुःसहप्रेष्ठविरहतीव्रतापधुताशुभाः । ध्यानप्राप्ताच्युताश्लेषनिर्वृत्या क्षीणमङ्गला' इति वचनेन दुष्कृतसुकृतयोरपि हानिश्रवणात् पूर्वोक्तवचनैर्विरोध इत्याशङ्कायामुत्तरं पठति ।

छन्दत उभयाविरोधात् ॥ २८ ॥

छन्द इच्छा, तथाच भक्तिमार्गीयाणामपि पूर्वं पापनाशो यः, स भगव-

भाष्यप्रकाशः ।

'मुक्ताना'मिति वाक्यं तु षष्ठस्कन्धचतुर्दशाध्यायस्थम् । 'नराणां क्षीणपापाना'मिति तु पाण्डवगीतास्थम् । 'समाराध्य वृषध्वज'मिति तु वाराहपुराणीयप्रबोधिनीमाहात्म्यस्थम् । वैष्णवत्वमिति । भक्तिमार्गीयप्रेमवत्त्वम्² । एतदग्रे 'एतज्ज्ञात्वा तु विद्वद्भिः पूजनीयो जनार्दनः । वेदोक्तविधिना सम्यक् भक्तिमार्गानुसारत'³ इति गारुडवाक्यात् । 'स्निग्धास्ते वैष्णवाश्च त' इति गारुडाच्च । तथाचैतेभ्यो वाक्येभ्यो भक्तस्योत्कृष्टत्वात् तथेत्यर्थः । सूत्रशेषमवतारयन्ति ननु य इत्यादि । नन्विदं सूत्रे कुतो लभ्यत इत्यत आहुः उक्तेत्यादि । तथाच हिशब्दाल्लभ्यत इत्यर्थः ॥ २७ ॥

छन्दत उभयाविरोधात् ॥ २८ ॥ सूत्रमवतारयन्ति ननु भक्तीत्यादि । पूर्वोक्तवचनैरिति । पापाभावबोधकवचनैः । तथाच विरोधादनिश्चये पापसन्निपाताच्च भक्तिमार्गीयस्यो-

रश्मिः ।

पदोक्तं ज्ञानं तु फलात्मकमिति भावः । उत्कर्षापकर्षौ तु साधनभूतज्ञानभक्त्योः । इति त्विति । अत्र त्रुटिः 'अमुकस्य'मित्यस्य । एतेभ्य इति । भाष्ये आदिशब्देन 'दुःसहप्रेष्ठविरहतीव्रतापधुताशुभा' इति वाक्यं तदत्रापीति ज्ञेयम् । तथेति । तर्तव्याभावो भक्तिमार्ग इत्यर्थः । ननु य इत्यादीति । इयं 'वाजसनेयिशाखाया'मित्यादिभाष्योक्ता ज्ञेया । यः पूर्वोक्तप्रकारेण ब्रह्म वेदेत्यर्थे पुरुषोत्तमो वाग्विषयः सगुणं ब्रह्मेति पुरुषोत्तमविदोप्येवमेवेत्यर्थः । अन्य इत्यर्थ इति । तथाच ब्रह्मशब्देन न पुरुषोत्तमः, तस्य पुच्छत्वात्, 'ब्रह्म पुच्छं प्रतिष्ठे'ति श्रुतेः । पुरुषोत्तमस्तु भक्तैः सह निगूढभावं करोतीति ब्रह्म वेदेत्यत्र पुरुषोत्तमग्रहणाभावान्न ब्रह्मशब्दः पुरुषोत्तमसाधारणः । तथाच ब्रह्मविदो ज्ञानानन्तरमपि पापवन्तो पुरुषोत्तमविद्भ्यो भक्तिमार्गीयेभ्योऽन्य इत्यर्थः ॥ २७ ॥

छन्दत उभयाविरोधात् ॥ २८ ॥ विरोधेति । भक्तिमार्गे पापपापाययोर्विरोधः

१. असंभवादिति पाठः । २. मर्यादामार्गीयप्रमेयवत्त्वमिति पाठः । ३. वेदोक्तविधिना मंत्रे आगमोक्तेन वा क्षीणैरिति वाक्यादिति पाठः ।

दिच्छाविशेषतः, अतो भक्तेः पूर्वमेव पापनाशनिरूपकातन्नाशनिरूपकवचनयोरविरोधाद्धेतोर्भक्तेः पूर्वमेव पापनाश आवश्यक इत्यर्थः । एवं सति भक्तेः पूर्वमेव तन्नाश औत्सर्गिकः । स क्वचिदिच्छाविशेषेच्छयापनोद्यत इति भावो ज्ञापितो भवति । अत्रेच्छाविशेषे वक्तव्यबहुत्वेपि किञ्चिदुच्यते । चिकीर्षितलीलामध्यपातिभक्ता न सोपधिस्नेहवत्यः, न सगुणविग्रहाः, न वा सुकृतादियुक्ता इति ज्ञापयितुं कतिपयगोपीस्तद्विपरीतधर्मयुक्ताः कृत्वा, तस्यां दशायां स्वप्राप्तौ प्रतिबन्धं कारयित्वा, स्वयमेव तां दशां नाशयित्वा, स्वलीलामध्यपातिनीः कृतवानिति । न ह्येतावता सार्वदिक एवायं भावो भवति । न हि मन्त्रप्रतिबद्धशक्तिरग्निरदाहक इति तत्स्वभावत्वमेव तस्य सार्वदिकमिति वक्तुं शक्यम् । एतच्च श्रीभागवतद-

भाष्यप्रकाशः ।

त्कर्षसिद्धिरिति शङ्कायां विरोधनिवारणायोत्तरं पठतीत्यर्थः । सूत्रं व्याकुर्वन्ति छन्द इच्छेत्यादि । एवं सतीति । पापनाशस्य बहुवाक्यसिद्धत्वे सति । ज्ञापितो भवतीति । इच्छाया अविरोधकथनेन ज्ञापितो भवति । ननूपपादनमन्तरेणैवमिच्छा कथं ज्ञातुं शक्यत इत्यत आहुः अत्रेच्छेत्यादि । तथाच विस्तरभियात्रानुपपादनेपि सुबोधिनीतोऽवगन्तव्यमित्यर्थः । एवं चात्र तर्तव्यलिङ्गकश्रुतौ 'तमेतं वेदानुवचनेन विविदिषन्ती'ति पूर्वं श्रावणात् सामान्यतो वेदैकसमधिगम्यत्वं प्रतिपादितम् । सरस्वत्यां कृतकेतमिति । विशेषस्त्वग्रे वाच्य इति ।

रश्मिः ।

सहावस्थानाभावस्तस्य निवारणाय । इच्छाया इति । पञ्चम्यन्तम् । अत्रेच्छेत्यादीति । द्वितीयस्कन्धनवमाध्याये मूलेच्छा विशेषेच्छा चोक्ता, तत्रोक्तविशेषेच्छायां वक्तव्यं बहुत्वं यत्र विषयबहुत्वात्तस्मिन् सत्यपि । तद्विपरीतेति । चिकीर्षिताङ्गसङ्गलीलामध्यपातिभक्तधर्मा निर्गुणत्व-सोपाधिस्नेहवत्त्वाभाववत्त्व-सगुणविग्रहाभाववत्त्व-सुकृतदुष्कृतत्वयुक्तत्वाभाववत्त्वरूपाः । तद्विपरीतधर्माः सगुणत्वसोपाधिकस्नेहवत्त्व-सगुणविग्रहवत्त्व-सुकृतदुष्कृतत्वयुक्तत्वरूपाः । तैर्युक्ताः कृत्वा । तस्यामिति । शारीर्यां दशायाम् । गोपकृतं प्रतिबन्धं कारयित्वेति । गोपाः कुर्वन्ति तान् प्रतिबन्धं कारयित्वा । तां शारीरीम् । 'अङ्गसङ्गं करिष्यामी'ति श्रुतिविरोधोऽङ्गसङ्गाभावे मत्वा परिहरन्ति स्म नहीति । अयमिति । सगुणत्वादिभावः । तस्येति । अग्नेः । दशमेति । पञ्चाध्याय्याम् । सम्परायछन्दशब्दयोः गूढार्थं व्यञ्जयाथ वाहुः एवं चात्रेति । अत्रेति । अधिकरणे । श्रावणादिति । वेदस्य वेदान्ताङ्गत्वश्रावणात् सामान्यतः वेदवेदान्तसाधारण्येन वेदत्वेन यो वेदः तदेकसमधिगम्यत्वम् । सरस्वत्यां वेदवेदान्तरूपायां कृतं केतः स्थानं प्रतिपादकत्वं येन तत् । विशेषः सकलजीवनिकायकेतत्वम् । अग्रेऽग्रिमाधिकरणे । तेनोक्तश्रीनिकेतत्वधर्मे प्रमाणं सूत्रीयछन्दःशब्दो वेदवेदान्तार्थव्यञ्जक उक्तः । पश्चात् सकलजीवनिकायकेतत्वमग्रेतनाधिकरणे निरूपयिष्यत इति ज्ञेयम् । श्रीवत्सकौस्तुभौ भगवतोऽन्यवैलक्षण्यज्ञापकौ । तेन प्रसङ्गात्पूर्वोक्तश्रीवत्सवत्त्वोपसंहारो दृढीकृतः । भक्तिमार्गे पापानुपसंहारः क्वाचित्को विशेषेच्छापनोद्य उपसंहारश्रोक्तः । किञ्च, पादारम्भे 'इह तु ब्रह्मगता एव धर्मा विचार्यन्त' इति सावधारणभाष्याद्भक्तोऽत्राध्यात्मिकादित्रितयविदाश्रयभक्तो नित्यलीलास्थो भक्तत्वेन न ग्राह्यः, अपित्वाश्रयत्वेनेतिफलप्रकरणवाक्योक्त्या ज्ञायते । अन्यत्र तु 'जीवमुख्यप्राणलिङ्गा'दिति सूत्रन्यायेन परम्परया ब्रह्मगता धर्मा बोध्या इति ।

भाष्यप्रकाशः ।

नन्वन्यैर्यत् सूत्राणि व्याख्यायन्ते, तत्र पूर्वतन्त्रोक्तन्याया उपोद्घलकत्वेनोपन्यस्यन्ते, व्यासपादैस्तेषां तत्र तत्रादरणात्, अत्र तु पुराणेतिहासवाक्यानि, तत्र किं ज्याय इति चेत् । उच्यते । इदमेव ज्यायः । इतिहासपुराणयोर्वेदोपबृंहणत्वात् । तत्रापि 'वेदान्तकृद्वेदविदेव चाह'मिति 'मां विधत्तेऽभिधत्ते मा'मिति वाक्याद्गीतैव ज्यायसी। स्वयं समाधावनुभूयोक्तत्वाच्छ्रीभागवतं च । पूर्वतन्त्रे तु जैमिनये यत् स्वयं गुरुमुखादवगत्य पाठितं तदेव आद्रियते, नेतरदिति जैमिनिमतदूषणादवगम्यते, पुराणादिकं न क्वापि दूष्यते, प्रत्युतोपोद्घलकत्वेन चाद्रियते, अतो विचारय किं ज्याय इति । किञ्च, अस्मिन् सूत्रे छन्दःशब्देन कैश्चिद्विद्याभ्यासयमनियमजनिका विदुष इच्छा व्याख्याता, अन्यैस्तु तत्सुहृदां तद्द्विषामिच्छा, इतरैस्तु व्याख्यातुरिच्छा, यथाकथञ्चिच्छ्रुतिद्वयाविरोधः सम्पाद्य इति । एवमपि विचारे ईश्वरेच्छायाः सर्वत्र कारणत्वात् तत्तद्धि-

रश्मिः ।

**व्याख्यायन्त** इति । द्विसूत्रमिदमधिकरणमन्येषामपि । तैः सुकृतदुष्कृतहानिकालविचारः । तद्धानं किं देहवियोगकाले देहादनुत्क्रान्तस्याध्वनि च, उत देहवियोगकाल एवेति विशये । मार्गमध्ये परित्याग इति पूर्वपक्षे । मरणात्पूर्वमेवोपास्ये साक्षात्कृते तयोः परित्याग इति व्याख्यायन्ते । **उपन्यस्यन्त** इति । (यथा शंकरभाष्ये पर्यङ्कविद्यात्रोक्ता, तस्यां पूर्वतन्त्रोक्तन्यायाः पूर्वतन्त्रोक्तन्यायसिद्धार्थकविद्याः तासामुपोद्घलकत्वेनोक्तिः । यथा पर्यङ्कविद्यायां कौषीतकिनोध्वनि सुकृतदुष्कृतवियोगमामनन्ति, तथा ह्यन्येपि शाखिनः ताण्डिनः शाट्यायनिनश्च । देहवियोगकाले सुकृतदुष्कृतहानमामनन्तीति) व्याख्याकारैरुपन्यस्यन्ते । भाष्येष्वदर्शनात् । **तत्र तत्रे**ति । यथा 'आकाशस्तल्लिङ्गा'दित्यत्राकाशपदेन 'ब्रह्म वदे'दिति श्रुतिं कल्पयित्वाकाशादुत्पद्यन्त इत्याकाशादिशब्दा ब्रह्मवाचका इत्यत्र 'श्रुतिलिङ्गवाक्यप्रकरणे'ति पूर्वतन्त्रसूत्रात् । **अहमि**ति । गीतावक्ता । इदं गीतावाक्यम् । वेदवित्कर्तृकत्वाद्गीता ज्यायसी । 'मा'मित्यादिश्रीभागवतं गीताव्याख्यानत्वेन । व्याख्याता गीता ज्यायसी । **स्वयमि**ति । व्यासेन भगवता चेति ज्यायः । **जैमिनी**ति । इदं गुणत्रयविवरणाध्याये स्पष्टम् । **कैश्चि**दिति। शङ्कराचार्यैः । तथाच भाष्यं 'छन्दत' इति सूत्रस्य । 'यदि च देहादपसृप्तस्य देवयानेन पथा प्रस्थितस्यार्धपथे सुकृतदुष्कृतक्षयोभ्युपगम्येत, ततः पतिते देहे यमनियमविद्याभ्यासात्मकस्य सुकृतदुष्कृतक्षयहेतोः पुरुषप्रयत्नस्येच्छातोऽनुष्ठानानुपपत्तेरिति । यमादिकं विदुष इति तथा । पुरुषप्रयत्न इच्छानिमित्तक इत्युभयोर्निमित्तनैमित्तिकयोरिच्छा सुकृतदुष्कृतक्षययोरित्युभयाविरोधात् ।' **अन्यै**रिति । भास्कराचार्यैः । तथाच भाष्यं 'छन्दतः संकल्पतो यो हि विदुषः शुभं संकल्पयति, तस्य सुकृतापत्तिः । यस्तु द्वेषादहितमिच्छति, तस्य दुष्कृतापत्तिरिति । उभयोः कौषीतकिशाट्यायनिश्रुत्योरविरोधात् । 'तस्य प्रिया ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृत'मिति कौषीतकिश्रुतिः । 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्या'मिति शाट्यायनिश्रुतिः । 'प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम् । विसृज्य ध्यानयोगेन ब्रह्माप्येति सनातन'मिति स्मृतिः । **इतरै**रिति । रामानुजैः । तथाच तद्भाष्यं 'एवमस्वाभाव्यात्सुकृतदुष्कृतहानिकालेऽवधृते सत्युभयाविरोधेन श्रुतेरर्थस्वभावस्य चाविरोधेन, छन्दतो यथेष्टं पदानामन्वयो वर्णनीय इति । कौषीतकिवाक्ये 'तत्सुकृतदुष्कृते विधूनुत' इति चरमश्रुतो वाक्यावयव एव 'एतं देवयानं पन्थानमापद्ये'ति प्रथमश्रुतावयवात्प्रागनुगमयितव्य इत्यर्थ इति । श्रुत्यर्थस्वभावाविरोधेन छन्दत इत्युक्त्या व्याख्यातुरिच्छा ।' तदाहुः **यथाकथञ्चि**दिति । **एवमपी**ति । भगवदिच्छाविशेषत इति भाष्यैकवाक्यतायामपि दुष्कृतांशेऽसंदिग्धश्रुत्येकदेशे

१. चिह्नान्तर्गतं ग्रन्थकृद्भिः स्वयं लोपितमिति प्रतिभाति ।

**शमस्कन्धविवृतौ प्रपञ्चितमस्माभिः ॥ २८ ॥**

**इति तृतीयाध्याये तृतीयपादे षष्ठं सम्परायाधिकरणम् ॥ ६ ॥**

**गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः ॥२९॥ (३-३-७.)**

**ननु 'सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योम'न्निति 'तमेवं विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनाये'त्यादिश्रुतिभिरुक्तरू-**

भाष्यप्रकाशः ।

द्यावतस्तदा तदा तथा तथेति यथाश्रुताङ्गीकारेपि मुक्तिप्रतिबन्धाभावाच्छ्रुतिसङ्कोचाभावाच्च किं ज्याय इत्यपि विचारय । न हि क्रमेण मुक्तिं प्राप्नुवतो देहवियोगकाले वा किञ्चित्क्षणोत्तरं विरजानदीतरणे वा सुकृतादिक्षये पर्यङ्कोपासकस्य कश्चिद्विशेषो भवति । अतः काकदन्तविचार-प्रायमेतत् ॥ २८ ॥ इति षष्ठं सम्परायाधिकरणम् ॥ ६ ॥

**गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः ॥ २९ ॥** पूर्वाधिकरणे ज्ञानापेक्षया भक्ते-र्ज्ञान्यपेक्षया भक्तस्य चोत्कर्षः प्रतिपादितः । तदेव तद्धेतुबोधनेन दृढीकरोतीत्याशयेनाधिकरण-मवतारयन्ति नन्वित्यादि । अत्र 'तमेवं विद्वा'निति वाक्यमुत्तरनारायणस्थम् । तत्र 'वेदाहमेतं

रश्मिः ।

श्रुतेरक्षरमात्रान्यथाऽवक्रीत्वेन सुकृतदुष्कृतहानावान्तरविचारस्येच्छया स्पष्टत्वाद्विचारानपेक्षे सति । **तत्तद्विद्ये**ति । कौषीतकिनां पर्यङ्कविद्योपकोशलविद्या–पञ्चाग्निविद्या–दहरविद्या–मधुविद्या–शाण्डिल्य-विद्या–षोडशकलविद्या–वैश्वानरविद्यासु सा सा विद्या तत्तद्गतः । **तदा तदा** तत्तद्विद्याकाले । **तथा तथे**ति । तत्तद्विद्याप्रकारेणेत्येति । यथाश्रुतं देहत्यागकालेऽध्वनि वा सुकृतदुष्कृतक्षयं श्रुत्युक्तम-नतिक्रम्य यथाश्रुतम् । अव्ययीभावः । तस्याङ्गीकारे । **मुक्ती**ति । पर्यङ्कविद्यायामामनन्ति । 'स एतं देवयानं पन्थानमासाद्याग्निलोकमागच्छती'त्युपक्रम्य 'स आगच्छति विरजां नदीं तां मनसैवात्येति तत्सुकृतदुष्कृते विधुनुते' इति तदुक्तमुक्तेः श्रुत्युक्तत्वेन प्रतिबन्धकाभावात् । यथादृष्टमिति विरोधाभाव-श्रुत्योः । श्रुत्योः संकोचाभावो यथादृष्टवादित्वादेव, तथैव विषयवाक्यत्वविरोधासंदिग्धत्वाङ्गीकारादेव च । **किं ज्याय** इति । अयमर्थः । सम्परायसूत्रादारभ्य ज्ञानमार्गीयत्वेन व्याख्यातोपि गीतादिवाक्यै-रुपबृंह्य भक्तिमार्गो व्याख्यातः । स च ज्ञानकाण्डः कर्मकाण्ड इति समाख्यातो विरुद्धश्च । मैवम् । गतिप्रतिबन्धस्य श्रौतत्वेनैवाभावादसन्दिग्धत्वेन विषयत्वायोगाच्च । न्यूनताख्यनिग्रहस्थानस्यापत्तेश्चा-भावः । ननूक्तं समाख्याद्वयाद्भक्तिमार्गोऽप्रामाणिक इति । नैष दोषः । उक्तदुर्लभाधिकारात्काण्डद्वयस-माख्या, अन्यथा 'भगवान्ब्रह्मकार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया । तदध्यवस्यत्कूटस्थो रतिरात्मन्यथो भवे'दिति वाक्यं न स्यात् । तथाच प्रत्यक्षश्रुतिः 'अग्नये जुष्टं निर्वपामी'ति संहितायाम् । निरुक्ते च दुर्गाचार्याः 'सरस्वतीमाविवासेम धीतिभि'रिति । सरस्वती भगवल्लक्षणा । विवासतिः परिचरणकर्मा । धीतिभिरङ्गुलिभिः, उपलक्षणं विविधोपचारैरिति । तामसत्वं च 'यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम् । अतत्त्वार्थवदल्पं च तत्तामसमुदाहृत'मिति वाक्यात् । नच स्मार्ते पर्यवसानाद्विषयवाक्यमपि स्मार्तकं स्यादिति वाच्यम् । पूर्वतन्त्रे स्मृतिविषयवाक्यत्ववददोषात् । 'स्मृतेश्चे'ति 'स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्य-स्मृत्यनवकाशदोषप्रसङ्गा'दिति सूत्राभ्यां व्यासपादैस्तत्रतत्र स्मृतीनामुपष्टम्भकत्वोक्तेः । एतदिति । गतिप्रतिबन्धकसुकृतदुष्कृतविचारसूत्रेण कथनम् ॥२८॥ **इति षष्ठं सम्परायाधिकरणम् ॥ ६ ॥**

**गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः ॥ २९ ॥ तदेवे**ति । प्रतिपादनमेव उक्त-मेव वा । तद्धेतुः पुरुषोत्तमः यज्ज्ञानेनैव मोक्षः तद्बोधनेनेत्यर्थः । **उत्तरे**ति । टीकायां द्रष्टव्यम् ।

पञ्चब्रह्मज्ञाने सत्येव मोक्ष इत्युच्यते। 'यमेवैष वृणुते तेन लभ्य' इति श्रुत्या आत्मीयत्वेनाङ्गीकारात्मकवरणस्य भक्तिमार्गीयत्वात् तस्मिन् सति भक्तिमार्गे प्रवेशाद्भक्त्यैव स इत्युच्यते। किञ्च। 'भक्त्या मामभिजानाती'त्युक्त्वा, 'ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तर'मिति भगवतोक्तमिति भक्तिमार्गेपि पुरुषोत्तमज्ञानेनैव मोक्ष उच्यते, ज्ञानमार्गे त्वक्षरज्ञानेनेति विशेषः। 'तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः। न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिहे'ति वचनेन भक्तिमार्गीयस्य ज्ञाननैरपेक्ष्यमप्युच्यते। तथाचैवं मिथः श्रुत्योः स्मृत्योश्च विरो-

भाष्यप्रकाशः।

पुरुषं महान्तमादित्यवर्णं तमसः परस्ता'दिति पूर्वार्धे एतं जगत्कर्तृतया पूर्वमत्र उक्तं महान्तं पुरुषं अहं वेदेति श्रुतिः स्वस्य ज्ञातृत्वमुक्त्वा, तत्स्वरूपमाह, तमसः अज्ञानात्मकस्य परस्तात् परम्, आदित्यवर्णम्, आदित्यस्येव मण्डलान्तःश्यामावदातो वर्णो यस्य, 'श्यामाच्छबलं प्रपद्ये शबलाच्छ्याम'मिति छान्दोग्ये श्रुतत्वात्तादृशम्। तथाचैतादृशश्रुतिभिः सत्यादिलक्षणकोक्तरूपब्रह्मज्ञानेन मोक्ष उच्यते, 'यमेवे'ति श्रुतौ तूक्तप्रकारेण भक्त्यैव स आत्मलाभात्मको मोक्ष उच्यत इति मोक्षार्थं ज्ञानभक्ती समुच्चेतव्ये, किं वा विकल्पयितव्ये इत्येकः संशयः। किञ्च, 'भक्त्या मा'मिति गीतायां पुरुषोत्तमज्ञानस्य, 'ब्रह्मविदाप्नोति पर'मिति श्रुतावक्षरज्ञानस्य च मोक्षहेतुत्वमुच्यते इति भक्तेन तदर्थं ते समुच्चेये, विकल्पनीये वेत्यपरः। नच विकल्पस्याष्टदोषदुष्टत्वात् समुच्चय एव युक्त इति वाच्यम्। 'तस्मान्मद्भक्ती'त्येकादशस्कन्धीयभगवद्वाक्ये भक्तं प्रति ज्ञानस्यानुपयोगबोधनेन तत्समुच्चयस्य वैयर्थ्यात्। तथाचैवं प्रथमे कल्पे श्रुत्योर्द्वितीये च स्मृत्योर्विरोधात् समुच्चय-

रश्मिः।

श्यामावेति। अवदातो भास्वरशुक्लरूपः। शबलं मिलितम्। भास्वरशुक्लेनेति ज्ञेयम्। शबलादिति। भास्वरशबलश्यामात् श्यामं कदाचिज्ज्ञानिप्रत्यक्षविषयम्। 'सत्यं ज्ञानमनन्त'मित्यत्र व्यापारं विनैव हेतुतया निर्व्यापारया निर्वाहमाश्रित्य द्वितीयकोटित्वसमर्थनाद्वितीयकोट्या संशयमाहुः सत्यादीति। यमेवेति। मुण्डकश्रुतौ। भक्त्यैवेति। 'वृङ् संभक्ता'विति धातुपाठाद्वरणात्मकस्य भक्तिसाधनकरणव्युत्पत्तिलभ्यस्य। एतद्रूपाद्भक्तिमार्गीयत्वात्। तस्मिन्साधने सति। चरणपदार्थनिविष्टफलरूपभक्तिमार्गे प्रवेशात् फलरूपभक्त्यैवेत्यर्थः। 'भक्त्या जानाति चाव्यय' मितिश्रुतेरेवकारः। ज्ञानभक्ती इति। ज्ञानं ज्ञानमर्यादाभक्तिभेदेन द्विविधम्। भक्तिः पुष्टिभक्तिः। एवं साधनभूतज्ञानभक्ती उक्त्वा फलात्मकज्ञानमसिद्धवदावृतं परपदार्थनिविष्टं ब्रह्मज्ञानं तदुभयविषयकसंशयमुखेन किञ्चेत्यादिभाष्यं विवृण्वन्ति स्म किञ्चेत्यादि। ब्रह्मविदिति। 'क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसा'मिति तदर्थकस्मृतिः पाठ्या। भाष्ये स्मृत्योरित्युक्तेः। प्रथमकोटावक्षरज्ञानमसिद्धवादावृत्तं गृहीतमत्रापि तथा। 'ते प्राप्नुवन्ति मामेवे'ति वाक्यात्। अत एव 'क्लेशोऽधिकतर' इति स्मृतावक्षरमात्रविषयिण्यामक्षरज्ञानस्य च मोक्षहेतुत्वमुच्यत इति न कोपि दोषः। 'क्लेशोऽधिकतर' इति स्मृत्युपन्यास इति बोध्यम्। तदर्थमिति। मोक्षाय। समुच्चेये इति। 'भक्तिर्ज्ञानाय कल्पत' इति ज्ञानाभेदात्समुच्चेये। भेदे तु विकल्पनीये। स्नेहस्य ज्ञानाद्भेदात्। 'तस्मान्मद्भक्ती'त्यादिभाष्यं विवरीतुमाहुः नचेत्यादि। अष्टेति। एते पूर्वं व्याख्याताः। तथाचैवमिति भाष्यं विवृण्वन्ति स्म तथाचैवमिति। स्मृत्योरिति। 'ब्रह्मविदाप्नोति पर'मित्यस्य स्मृतित्वं 'वेदान्तकृद्वेदविदेव चाह'मित्यत्र गीतायां वेदवित् वेदान्तकृदिति

धानैकनरनिर्धारः सम्भवति । नच ज्ञानेनैव मोक्षः, उभयत्रापि तथोक्तेः, ज्ञाननैरपेक्ष्योक्तिस्तु भक्तिस्तुत्यभिप्रायेति वाच्यम् । विषयभेदेन ज्ञानभेदान्मुक्तिसाधनं कतमज्ज्ञानमित्यनिश्चयात् । नच श्रौतत्वाविशेषात् समुच्चय इति वाच्यम् । ज्ञानिनोऽक्षरे भक्तस्य पुरुषोत्तमे लयात् समुच्चयासम्भवात् । तर्ह्येवं विरोधाभावादुपपन्नं सर्वमिति चेत् । न । पूर्वं ज्ञानमार्गीयज्ञानवतः पश्चाद्भक्तिमार्गीयज्ञान-

भाष्यप्रकाशः ।

विकल्पयोरेकतरानिर्धाराद्वाक्यानामबोधकत्वं प्रसज्यते । नच ज्ञानेनैव मोक्षः, 'तमेव'मिति श्रुतौ 'भक्त्या मा'मिति स्मृतौ च तस्यैव मोक्षहेतुत्वेनोक्तेः, भक्तस्य ज्ञाननैरपेक्ष्योक्तिस्तु तत्त्वतो ज्ञानं भक्त्येति साधनान्तरसाधितं ज्ञानमतात्त्विकत्वान्न श्रेयः, अतो भक्तिरेव ज्ञानार्थं कार्येति तत्स्तुत्यभिप्रायेति न भक्तेः समुच्चयशङ्केति वाच्यम् । एवं भक्तित्यागेपि श्रुतौ 'ब्रह्मवि'दित्यत्र अक्षरस्य 'तमेव'मित्यत्र पुरुषोत्तमस्य च विषयत्वेनोक्ततया विषयभेदेन ज्ञानभेदान्मोक्षसाधकज्ञानविकल्पस्य दुर्वारत्वात् । नच श्रौतत्वाविशेषाज्ज्ञानयोरेव समुच्चयोऽस्त्विति वाच्यम् । 'अक्षरात् परतः परः' इति श्रुतेः 'अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् । यं प्राप्य न निवर्तन्ते तद्धाम परमं ममे'ति गीतावाक्याच्चाक्षरपुरुषोत्तमयोर्भेदादव्यक्तवाक्येऽक्षरस्य परमगतित्वकथनेन ज्ञानिनोऽक्षरे लयात्, 'भक्त्या मा'मिति वाक्ये स्वस्य विशतिकर्मत्वबोधनेन भक्तस्य पुरुषोत्तमे लयात् तत्स्थानभेदेन फलभेदे तयोरपि समुच्चयस्यासम्भवात् । ननु यद्येवं फलभेदः, तर्हि तस्य तस्य साधनस्य तत्र तत्र व्यवस्थित्या वाक्यानामितरेतरविरोधाभावात् सन्देहे निवृत्ते सर्वं श्रुत्युक्तं स्मृत्युक्तं चोपपन्नमिति व्यर्थमेवाधिकरणमिति चेत् । न । पूर्वं ज्ञानमार्गीयज्ञानवतः पश्चाद्भक्तिमार्गीयज्ञानवतः 'अन्ते या मतिः

रश्मिः ।

वेदार्थस्मरणप्राप्तेः । वस्तुतस्तु श्रुतिस्मृत्योरिति पाठः । 'स्मृतेश्चे'तिसूत्रभाष्ये वेदान्तानां वेदत्वोक्तेः । 'ब्रह्मवि'दितिश्रुतिस्थले 'क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसा'मिति स्मृतिः पठनीया । भाष्ये 'स्मृत्यो'रित्युक्तेन ज्ञानेनेति भाष्यं विवृण्वन्ति स्म नच ज्ञानेनेति । उभयत्रापीतिभाष्यविवरणं तमेवमितीति । नस्यचेति । ज्ञानस्यैव । 'भक्तिर्ज्ञानाय कल्पत'इत्यङ्गीकारात् । गीतायां 'मयि चानन्ययोगेन भक्तिरव्यभिचारिणी'त्युक्त्वा 'एतज्ज्ञानमिति प्रोक्त'मिति गीताया एवकारः । ज्ञाननैरपेक्ष्येति भाष्यं विवृण्वन्ति स्म भक्तस्येति । तत्त्वत इति । फलत्वेन ज्ञानम् । साधनान्तरेति । साधनं भक्तिः तदन्यत्साधनं साधनान्तरं तेन साधितमित्यर्थः । अतात्त्विकत्वादिति । अतत्त्वसम्बन्धित्वात् । अफलरूपत्वादिति यावत् । ज्ञानार्थमिति । फलात्मकज्ञानार्थम् । तत्स्तुतीति । भक्तिस्तुत्यभिप्राया । विषयेतिभाष्यं विवृण्वन्ति स्म एवं भक्तित्याग इति । नचेति भाष्यं विवृण्वन्ति स्म नचेति । ज्ञानिन इति भाष्यं हेतुं दत्वा विवृण्वन्ति स्म अक्षरादिति । तदिति । लयस्थानभेदेन । फले अक्षरपुरुषोत्तमौ तयोस्तज्ज्ञानयोः । तर्ह्येवमिति भाष्यं विवृण्वन्ति स्म नन्विति । वाक्यानामिति । अक्षरतत्प्राप्तिसाधनपुरुषोत्तमतत्प्राप्तिसाधनप्रतिपादकवाक्यानाम् । अक्षरमात्रप्राप्त्यसाधकत्वात्तथा । उपपन्नमिति । तत्तत्परत्वेनोपपन्नम् । तत्रापि 'भक्तिमार्ग एव मार्ग' इति सुबोधिन्या पुष्टिमर्यादाभक्तिसम्बन्धिनां वाक्यानाम् । उपपन्नमिति । पूर्ववत् । अधिकरणमिति । पुष्टिमर्यादाभेदेन वाक्यानामुपपत्तिकरम् । न पूर्वमिति भाष्यं विवृण्वन्ति स्म न पूर्वमिति ।

१. (न पूर्वमिति भाष्यं विवृण्वन्ति स्म नपूर्वमिति । भक्तीति । भक्तिमार्गीयशाब्दज्ञानवतः । ज्ञानमार्गीयज्ञानं तु शाब्दापरोक्षरूपं श्रवणादिभिः शुद्धान्तःकरणस्य सूक्ष्मपदार्थविषयकं 'यथा यथात्मेति' वाक्यादिति स्पष्टम्) इति चिह्नान्तर्गतमधिकम् ।

वतो लयस्थाननिर्धारासम्भवात् । अपरं च । 'ततो मां तत्त्वतो ज्ञात्वे'ति वचनाद्भक्तिमार्गे तत्त्वतो भगवज्ज्ञानमेव प्रवेशसाधनमिति मन्तव्यम् । तथाच 'मत्कामा रमणं जारं मत्स्वरूपाविदोऽबलाः । ब्रह्म मां परमं प्रापुः सङ्गाच्छतसहस्रश' इति वाक्याज्ज्ञानमार्गीयभक्तिमार्गीयज्ञानरहितानामपि भगवत्प्राप्तेस्त-

भाष्यप्रकाशः ।

सा गति'रित्यङ्गीकारे पूर्वज्ञानवैयर्थ्यप्रसक्तेर्दुर्वारतया तस्य न्यायस्याशक्यवचनत्वेन तादृशस्य लयस्थाननिर्धारासम्भवात् सन्देहेऽधिकरणप्रणयनस्यावश्यकत्वात् । अपरं च । यदि भक्तेरिवाक्षरज्ञानादपि परज्ञानमेव कयाचिद्विधया आद्रत्याधिकरणावश्यकत्वमुच्यते, तदा तु 'ततो मा'मित्याद्युक्तरीत्या भगवज्ज्ञानस्यैव प्रवेशसाधनत्वमधिकरणे मन्तव्यम् । तथाच 'तमेवे'ति श्रुतेः सावधारणत्ववत्, 'मत्कामा' इति स्मृतौ 'सङ्गाच्छतसहस्रश' इति कथनेन तदुपबृंहिताया वरणश्रुतेरपि सावधारणतुल्यत्वेन मार्गद्वयसिद्धज्ञानरहितानामपि भगवत्प्राप्तेर्ज्ञानसाधनत्वनिरूपकश्रुतिविरोध इति

रश्मिः ।

ज्ञानमार्गभक्तिमार्गौ विविच्य साधने वक्तव्येऽग्रे मिलितयोर्विचारः क्रियते । ज्ञानं सर्वभावः सर्वत्वं सर्वस्मिन्नात्मनो भावः स्मरणम् । स्वयमेवानुभूतनिजसुखानुभवश्च । सर्वश्चासावात्मनो भावश्चेति विग्रहवान् सर्वात्मभावोभिन्नः । मनोमात्रजन्यत्वसर्वेन्द्रियभवनत्वाभ्यामपि ज्ञानमार्गीयज्ञानसर्वात्मभावयोर्भेदः । मार्गभेदाच्च भेदः । सर्वात्मभावस्वरूपं भक्तिमार्तण्डे स्पष्टम् । सर्वभावः सर्वभूतेषु मन्मतिः । स्वयंप्रकाशः । सर्वभूतस्याक्षरत्वेन स्वयंप्रकाशत्वं तत्प्रकाश्यत्वेप्यक्षुण्णमक्षरे । भक्तिकारणं श्रीभागवत उक्तम् । ज्ञानं भगवद्धर्मः । सर्वभावसामानाधिकरण्यान्मार्गत्वम् । तदीयभावमेलनात् । ज्ञानमार्गीयज्ञानं सर्वभूतेषु मन्मतिरूपम् । 'यथा यथात्मा परिमृज्यते' इति ज्ञानं ज्ञानाङ्गभक्तिजन्यं पृथक् । 'सर्वं खल्विदं ब्रह्मे'ति श्रुत्युक्तं कार्यकारणवस्त्वैक्यमर्षणजन्यं ज्ञानं एतदन्तर्गतं हृदयस्याक्षरत्वेन ज्ञानम् । साधनेन सदानन्दतिरोभावपूर्वकं ज्ञानप्राधान्यात् । स्वरूपात्मकज्ञानं चतुर्विधं नित्यम्, षड्विधं जन्यम्, एवं दशविधम्, तत्रेदं ज्ञानं क्वचिन्नित्ये जीवधर्मे ज्ञाने निविशते । तज्ज्ञानवतो भक्तस्य पश्चात् उक्तसाधनात्पश्चात् भक्तिमार्गीयं ज्ञानं साध्यम् । भक्तिरनन्तानन्दधर्मः । तपो वैराग्ययोगे मार्गः । भक्तिमार्गीयं ज्ञानं फलात्मकं ज्ञानं तद्वतः । पूर्वज्ञानेति । अक्षरप्राप्तिसाधकस्य पूर्वज्ञानस्य यत्रोक्तसाध्यसाधनभावः तत्र वैयर्थ्यं तस्य प्रसक्तेर्दुर्वारत्वमेवेत्यर्थः । तस्येति । 'अन्ते या मति'रित्युक्तस्य मर्यादाभक्तस्याक्षरात्मकचरणयोर्लयः, पुष्टभक्तस्य पुरुषोत्तमे लय इत्यर्थविघटकस्य । तादृशस्येति । भक्तस्य । भक्तसंवलितो भगवांल्लयस्थानं चरणौ वा लयस्थानमिति निर्धारासंभवात् पुष्टभक्तो मार्यादिकभक्तो वेति सन्देहे सति । सन्देह इति । उक्तोभयविधसन्देहे उभयथेति सिद्धान्तान्निवृत्त इत्यर्थः । यद्वा । ज्ञानभक्ती समुच्चेतव्ये विकल्पयितव्ये वेति सन्देहः । अधिकरणेति । पुष्टमर्यादाभक्तोपासनार्थं पुष्टिमर्यादयोः पुष्टौ साधनोपसंहारो न वेति संदेहे नेति तात्पर्यकाधिकरणप्रणयनस्य तथात्वात् । क्वचिन्नोभयमुक्तिसाधनमिति प्रतिपादकं भाष्यमपरं चेति तद्विवृण्वन्ति स्म अपरं चेति । अक्षरज्ञानादिति । पादरूपाक्षरज्ञानं भगवज्ज्ञानं अवयवज्ञानस्यावयविज्ञाननिविष्टत्वात् । कयेति । पादत्वविधया । 'भक्त्या मामभी'त्यत्र ज्ञाने पादरूपाक्षरस्य सत्त्वात् । अधीति । पादसेवनमात्रभक्तेर्विवक्षितमोक्षसाधकत्वाभावात् भगवत्पादसेवनस्य शमलधूननसाधनत्वात् तन्निवारणायाधिकरणावश्यकत्वमुच्यत इत्यर्थः । उक्तरीत्येति । भाष्योक्तरीत्या । एवेति । पादत्वेन ज्ञानव्यवच्छेदकैवकारः । अवयवित्वेन तु ज्ञानमस्त्येव । सावधारणतुल्यत्वेनेति । 'बहूनामनुग्रहो न्याय्य' इति न्याया-

त्साधनत्वनिरूपकश्रुतिविरोधः । तथाच कचिज्ज्ञानं मुक्तिसाधनत्वेनोच्यते, कचिद्भक्तिः, कचिन्नोभयमपीत्येकनरसाधनानिश्चयान्मुक्तिसाधने मुमुक्षोः प्रवृत्त्यसम्भव इति प्राप्ते, आह गतेरर्थवत्त्वमित्यादि । गतेर्ज्ञानस्य अर्थवत्त्वं फलजनकत्वम्, उभयथा मर्यादापुष्टिभेदेनेत्यर्थः ।

अत्रायमाशयः । 'एष उ एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषती'त्यादिश्रुतिभ्यो भगवान् सृष्टिपूर्वकाल एवैनस्मै जीवायैतत्कर्म कारयित्वैतत्फलं दास्य इति विचारितवानिति तथैव भवति । तत्रोक्तरीत्या मुक्तिसाधनाननुगमे हेतुरवश्यं वाच्यः । एवं सति कृतिसाध्यं साधनं ज्ञानभक्तिरूपं

भाष्यप्रकाशः ।

तत्कृतसंशयादप्यधिकरणमावश्यकम् । अतः पूर्वोक्तौ विषयौ संशयौ च निर्बाधौ । तथा सति, तथाच कचिदित्याद्युक्तरीत्या मुमुक्षुप्रवृत्त्यसम्भवान्मोक्षेच्छां परित्यज्य स्वर्गसाधन एव प्रयतनीयम्, किञ्च, एवं मुमुक्षुप्रवृत्त्यसम्भवे प्राप्ते पूर्वोक्तं ज्ञानभक्त्योस्तारतम्यं भक्त्युत्कर्षो दोषस्य कादाचित्कत्वं च न निर्धारयितुं शक्यमिति च पूर्वपक्षे प्राप्ते श्रुतेर्बोधकताप्रकारं वदन् सिद्धान्तेन पूर्वोक्तं द्रढयितुं ज्ञानोत्कर्षबोधनतात्पर्यमाहेत्यर्थः । सूत्रं व्याकुर्वन्ति गतेरित्यादि । नन्विदं कथं बुद्धावारोहतीत्याकाङ्क्षायां व्युत्पादयन्ति अत्रायमित्यादि । कार्यमात्रे प्रतीश्वरेच्छायाः कारणत्वेन तस्याश्च नित्यत्वेन 'एष उ एवे'त्यादिश्रुत्युक्तापीच्छा तथेति भगवान् सृष्टिपूर्वकाल एव यद्यथा विचारितवांस्तत्तथैवेति, तत्र भगवद्विचारशरीरप्रविष्टोभयनकारणविमर्शे पूर्वोदाहृतवाक्योक्तरीत्या ज्ञान-भक्ति-वरण-भगवद्विषयककाम-रमण-जारादिबुद्धीनां शास्त्रे कथनेन मुक्तिसाधनाननुगमे सति शास्त्रद्वारा मुमुक्षुप्रवृत्तिसिद्धये तत्साधनाननुगमे हेतुरवश्यं वक्तव्यः । एवं तद्वदनावश्यकत्वे सति उक्तमार्गभेद एव हेतुः । तत्र कृतिसाध्यमित्याद्युक्तरूपा मर्यादा, सर्वसाधारणहेतुना साध्यसिद्धौ मर्यादापदप्रयोगस्य लोके दर्शनात्, यथैतावति कृत एतावद्दीयत इति राज्यमर्यादेति,

रश्मिः ।

पेक्षया तथा । 'शतशोऽथ सहस्रश' इति बहूनामनुग्रहः । तत्कृतेति । ज्ञानरहितानां भगवत्प्राप्तिः ज्ञानसहितानां वेति विरोधकृतसंशयात् । प्राप्तस्वर्गसाधने यतनीयमिति पूर्वपक्षवारकमधिकरणमावश्यकमित्यर्थः । निर्बाधाविति । बाधाः पूर्वोक्ताशङ्काः । पूर्वपक्षार्थं तथाचेति भाष्यार्थमाहुः तथासतीति । उक्तरीत्येति । भाष्योक्तरीत्या । श्रुतेरिति । ज्ञानसाधनत्वबोधकश्रुतेः । नित्यत्वेनेति । 'अविनाशी वा अर' इति श्रुतेः । इच्छेति । अवान्तरेच्छा । तथेति । नित्यत्वेन नित्या । तत्रेति भाष्यं विवृण्वन्ति स्म तत्र भगवदिति । ज्ञानेति । ज्ञानं च भक्तिश्च वरणं च भगवद्विषयककामश्च रमणं च जारब्रह्मबुद्धिश्च ताः तासाम् । शास्त्र इति । ज्ञानभक्तिवरणानि वेदान्तशास्त्रेऽन्यच्छ्रीभागवतशास्त्रे । 'इतिहासः पुराणं च वेदानां पञ्चमो वेद' इति छान्दोग्यश्रुतेः । वेदोपाङ्गत्वेन वेदशास्त्रनिवेशाच्च । उपाङ्गानि चरणव्यूहे प्रसिद्धानि । पूर्वपक्षग्रन्थोक्तरीत्याननुगमः । तदिति । तस्या मुक्तेः साधनानि शास्त्रोक्तान्युक्तानि तेषां मुक्त्यनुगमे मुक्त्यर्थं पार्थक्येन प्रापणे हेतुर्मार्गभेदः । एवं सतीतिभाष्यं विवृण्वन्ति स्म एवमिति । तद्वदनं हेतुवदनं तस्यावश्यकत्वे सति । उक्तानां मार्गाणां भेदः । कृतीति । मर्यादेत्यन्ता । सर्वेति । राजप्रजासाधारणेन हेतुना । साध्येति । साध्यं राज्यं तस्य सिद्धिर्मर्यादया भवतीति स्वकार्ये कार्यकारणभावसम्बन्धरूपलक्षणया मर्यादापदप्रयोगस्य । राज्यमर्या-

१. तत्साधनाननुगमे इति श्रीहस्ताक्षरेषु पाठः ।

शास्त्रेण बोध्यते । ताभ्यां विहिताभ्यां मुक्तिर्मर्यादा । तद्रहितानामपि स्वस्वरूपबलेन स्वप्रापणं पुष्टिरित्युच्यते । तथा च यं जीवं यस्मिन्मार्गेऽङ्गीकृतवान्, तं जीवं तत्र प्रवर्तयित्वा तत्फलं ददातीति सर्वं सुस्थम् । अत एव पुष्टिमार्गेऽङ्गीकृतस्य ज्ञानादिनैरपेक्ष्यम्, मर्यादायामङ्गीकृतस्य तदपेक्षित्वं च युक्तमेवेति भावः ।

---

भाष्यप्रकाशः ।

शास्त्रेऽपि 'स्वकृतसेतुपरीप्सये'ति सेतुर्मर्यादा । तद्रहितानामित्याद्युक्ता तु पुष्टिः अनुग्रह इति यावत् । 'पोषणं तदनुग्रह' इति द्वितीयस्कन्धात् । अनुग्रहश्च धर्मान्तरमेव, न तु फलदित्सा । 'यस्यानुग्रहमिच्छामी'ति वाक्यात् । कृपानुकम्पादिशब्दानां स एव वाच्यः । एवं सति 'लोकवत्तु लीला कैवल्य'मितिन्यायेन तथाच यं जीवमित्याद्युक्तरीत्या ददातीत्युदितानुदितहोमिवदधिकारिभेदाद्व्यवस्थितमिति सर्वं पूर्वोक्तं सुस्थम् । केवलमर्यादायां वृतस्य जीवस्याक्षरे पूर्वं ज्ञानमार्गीयज्ञानवतः पश्चाद्भक्तिमार्गीयज्ञानवतः क्रमेण मर्यादायां पुष्टौ चाङ्गीकारात्तस्य पूर्वमक्षरे ततः पुरुषोत्तमे लयस्य 'ते तु ब्रह्महदं नीता मग्नाः कृष्णेन चोद्धृता' इतिवत् सुखेन सम्भवाच्छ्रुतिद्वयोक्तमुपपन्नमित्यर्थः । एतेनैव स्मृत्योरपि विरोधः परिहृत इति बोधयन्ति अत एवेत्यादि । अत एवेति । मार्गभेदादेव । सूत्रशेषमवतार्य व्याकुर्वन्ति अत्रेत्यादि । तथेति । मुक्तिसाधने

रश्मिः ।

देति । राज्ये मर्यादा राज्यनिमित्तं तत्सिद्धिफलिका मर्यादा । परीप्सा इच्छा तया । एतेनोभयथापदविवरणभाष्यान्तर्गतमर्यादेत्यस्य विहितज्ञानभक्ती इत्याशयो विवृतः । अविहितज्ञानभक्ती तु 'आत्मा वा अरे द्रष्टव्यः श्रोतव्य' इति मैत्रेयब्राह्मणश्रुतौ । श्रवणस्य स्मरणकीर्तनभक्तिनिवर्त्यत्वेन तन्मात्राक्षेपेऽन्यासां प्रेमवशात्स्वयमेव भवनादविहितत्वम् । 'श्रवणकीर्तनस्मरणैः प्रेमे'ति सुबोधिन्यामेकादशस्कन्धस्य सुबोधिन्याम् । 'श्रोतव्य'इत्यत्र तव्यस्त्वावश्यकेपि प्रोक्त इत्यवैधत्वम् । तथाच श्रवणादिसरणिर्मर्यादाभक्तिः । सा च मत्कृतभक्तिरत्नतट्टीकयोः प्रपञ्चिता, ततो द्रष्टव्या । तद्रहितानामितिभाष्यं विवृण्वन्ति स्म तद्रहितानामिति । इतिवाक्यादिति । नचानुग्रहाभिन्नं फलं दातुमिच्छां करोमीत्यर्थ इति वाच्यम् । सनर्थेच्छानन्वयात् । कृपेति । आदिना दया । सः अनुग्रहः । एवकारः फलदित्साव्यवच्छेदकः । तथाचेति भाष्यं विवृण्वन्ति स्म एवं सतीति । उक्तरीत्येति । भाष्योक्तरीत्या । उदितानुदितकालिकौ होमौ ययोस्तः तौ उदितानुदितहोमिनौ तयोरिवेति षष्ठ्यन्ताद्वतिः । अधिकारिणौ तयोर्भेदादित्यर्थः । अपरं चेति भाष्योक्तमत्र नोक्तमिति न्यूनं पूरयन्ति स्म केवलेति । न्यूनताया निग्रहस्थानत्वे तूपलक्षणविधयाहुः केवलेति । मर्यादाशब्देन भगवद्धर्मरूपं ज्ञानं केवलशब्देन विद्याङ्गतपआदियोगो व्यावर्त्यते । केवलज्ञानेन तु ज्ञानमार्ग इत्यर्थः, केवलानां ज्ञानभक्तिकर्मणां भगवद्धर्मत्वम्, वैराग्यादिविद्याङ्गसाहित्ये मार्गत्वमित्येकादशसुबोधिन्याम् । अक्षर इति । आध्यात्मिके । केवलभक्तेस्तु स्वस्वरूपबले वर्णनीय उपयोगः । योगादिविद्याङ्गवैशिष्ट्ये तु तस्य मार्गत्वमित्याहुः पूर्वमिति । ज्ञानमार्गे योगयोगाद्विद्यापञ्चाङ्गेषु । मर्यादायामङ्गीकारादिति वक्ष्यमाणत्वात् । मर्यादा प्रेम्णीत्यर्थात् । 'योगयोगे तथा प्रेमे'ति निबन्धात् योगयोगः । भक्तिमार्गीयेति । अत्रापि योगयोगः । पुष्टावङ्गीकारादिति वक्ष्यमाणत्वात् । मर्यादायामिति । मर्यादाभक्तिमार्गे । पुष्टौ पुष्टिमार्गे । अक्षर इति । पादरूपे । श्रुतिद्वयेति । 'सत्यं ज्ञानमनन्त'मित्यनया 'यमेवैष' इत्यनया चोक्तम् । अत एवेत्यादीति । मर्यादायामिति । मर्यादाभक्तिर्ज्ञानं च तस्याम् । युक्तमिति । किञ्च, 'भक्त्या मा'मित्यादिभाष्योक्तस्मृत्योर्युक्तमित्यर्थः ।

**अत्र साधकत्वेन विपक्षे बाधकमाहुः अन्यथा हि विरोध इति। अन्यथा मर्यादापुष्टिभेदेन व्यवस्थाया अकथने विरोधाद्धेतोस्तथेत्यर्थः। विरोधस्तु पूर्वपक्ष-**

भाष्यप्रकाशः।

मुमुक्षुप्रवृत्तिप्रतिरोधः।

ननु सूत्रे को वा विरोधोऽभिप्रेतो योऽत्र साधकत्वेनाद्रियत इत्यत आहुः **विरोध** इत्यादि। अत्रेदं बोध्यम्। ब्रह्मनिरूपकेषु वेदान्तवाक्येषु क्वचित्सृष्टिकर्तृत्वप्रशासितृत्वादिरूपं ब्रह्ममाहात्म्यं जीवात्मनः परमात्माभेदस्तादृशज्ञानस्य मोक्षसाधनत्वं चोच्यते। क्वचिच्च वरणेन स्वतनुविवरणम्। क्वचिद्भक्त्यैव मोक्ष इत्युच्यते। तत्र प्रकरणभेदान्माहात्म्यज्ञानवतात्माभेदज्ञानेनाक्षरप्राप्तिः। वरणेन स्वतनुविवरणश्रावणात्तेन भगवत्स्वरूपे दर्शनगोचरे सति हृदयग्रन्थिभेदात् सुदृढस्नेहरूपायां भक्तौ जातायां पूर्वजातमुक्तविधज्ञानमपि तत्रैवोपकरोतीति पुरुषोत्तमप्राप्तिः। नच केवले ज्ञाने वरणमुपसंहर्तुं शक्यम्। विद्याधर्मत्वाभावात्, वरणश्रुतौ जीवकृतसर्वसाधनालभ्यत्वश्रावणेन परमात्मनः श्रवणादिविध्युक्तसाधनालभ्यतया तन्मात्रसाधनकायां विद्यायां

रश्मिः।

**अत्रेति**। मर्यादापुष्टिभेदेन व्यवस्थाकथने मुक्तिसाधने मुमुक्षुप्रवृत्तिसाधकत्वेन विपक्षे पुष्टिमर्यादाभेदेन व्यवस्थाया अकथने बाधकं मुमुक्षुप्रवृत्तिप्रतिरोधमाहेत्यर्थः। **मर्यादापुष्टी**ति। धर्मादिष्वनियम इति पूर्वप्रयोगार्हस्य पुष्टिशब्दस्य परप्रयोगः। **अत्रेद**मिति। भाष्ये श्रुतिविषयवाक्यत्वायेदं वक्ष्यमाणं बोध्यम्। **वेदान्ते**ति। 'यतो वा इमानि भूतानि जायन्ते', 'एतस्यैवाक्षरस्य प्रशासने गार्गि द्यावापृथिवी विधृते तिष्ठतः', 'तदात्मानꣳस्वयमकुरुत' 'तत्त्वमसी'त्यादिषु। **सृष्टी**ति। आदिना साक्षात्सृष्टिकर्तृत्वम्। **तादृशे**ति। भक्त्यङ्गज्ञानस्य। मोक्षसाधनत्वं भक्तिरूपव्यापारद्वारा चोच्यते। तदुक्तम् 'माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः। स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथे'ति पञ्चरात्रे। 'अनवगाह्यमाहात्म्ये' 'नृप स्वात्मैव वल्लभ' इति वाक्यद्वयं श्रीभागवते। भगवानात्मनोप्यात्मा। **क्वचि**दिति। वरणश्रुतौ। तनुविवरणं 'विवृणुते तनुं स्वा'मितिपाठे। **क्वचि**दिति। 'ब्रह्मविदाप्नोति पर'मित्यत्र 'ब्रह्मसंस्थोऽमृतत्वमे'तीति। संस्था भक्तिः। 'तत्संस्थस्यामृतत्वोपदेशा'दिति शाण्डिल्यसूत्रात्। पादस्थानभेदेनाक्षरस्य द्वैविध्याद्यादृशज्ञानेन पादरूपाक्षरप्राप्तिस्तदाहुः **तत्रे**ति। **प्रकरणे**ति। अक्षरप्रकरणपुरुषोत्तमप्रकरणयोर्भेदात्। माहत्म्यज्ञानं स्वमतोद्भवं तस्य त्वमसीति तत्त्वमसीत्यत्रार्थपक्षे जीवस्यांशत्वेन ज्ञान'मध्यात्मज्ञाननित्यत्व'मिति गीतोक्तम्, नत्वर्थवादरूपम्। तद्वतामात्माभेदज्ञानं तेनाक्षरस्य पादरूपस्य प्राप्तिः। एतस्य पश्चाद्भक्तिमार्गीयज्ञानोपयोगं वक्तुमाहुः **वरणेने**ति। 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वा'मित्यस्यां तेन वृतेनेत्यर्थे वरणे पर्यवसानाद्वरणेनेत्युक्तम्। स्वतनुविवरणं स्वस्य भगवतस्तनुस्तस्या विवरणं प्रकाशनं बाहुलकात् तस्य श्रावणात्। **तेने**ति। स्वतनुविवरणश्रावणेन। 'भिद्यते हृदयग्रन्थि'रिति श्रुतेराहुः **हृदये**त्यादि। हृदयग्रन्थिः दुष्टकामक्रोधादिः। **सुदृढे**ति। तत्त्वं च 'कामाद्द्वेष्या' इत्यादिवाक्योक्तं अदुष्टकामाद्यविहितभक्तिपूर्वकत्वम्। **पूर्वजात**मिति। अक्षरात्मकहृदये भगवत्स्वरूपे दर्शनगोचर सत्यक्षराज्ञानं पूर्वजात उक्तविधज्ञानं अक्षरप्रतिष्ठितत्वविषयकं सत्तत्र नाम भक्त्यंशमाहात्म्यज्ञानमुपकरोति तज्जनकत्वेन इत्येवं भक्त्या पुरुषोत्तमप्राप्तिः। उपसंहारपादत्वादाहुः **नचे**ति। **शक्य**मिति। तस्य ज्ञानवद्भृतधर्मत्वादिति भावः। न'न्वेकं रूपं रसात्पृथ'गित्यत्रैकत्वपृथक्त्वयो रूपधर्मवज्ज्ञानधर्मत्वं वरणस्येत्यत आहुः **वरणे**ति। **श्रवणादी**ति। 'श्रोतव्य' इत्यत्र विधौ तव्य इति भावः। **साधनानि** श्रवणादीनि। **तन्मात्रे**ति।

मश्च उपपादितः । एतेनैव 'ननु श्रवणादिरूपा प्रेमरूपा च भक्तिरविशेषेण पापक्षय एवोदेति, उत कश्चिद्विशेषोऽस्ति । तत्राधुनिकानामपि भक्तानां दुःखदर्शनाच्छ्रवणादेः पापनाशकत्वश्रवणाच्चाविशेषपक्षस्त्वसङ्गतः । अथ श्रवणादिरूपा पापे सत्यपि भवति, प्रेमरूपा तु तन्नाश एवेति विशेषो वाच्यः । सोऽपि प्रेमवतामपि अक्रूरादीनां मणिप्रसङ्गे भगवता समं कापट्यकृतिश्रवणान्न साधीया'नित्यपि शङ्का निरस्ता वेदितव्या ।

---

भाष्यप्रकाशः ।

वरणस्योपसंहर्तुमशक्यत्वाच्च । एवं साधनभेदेन फलभेदसिद्धौ पूर्वोक्तोभिनीषाश्रुतिसिद्धभगवद्विचारशरीरे श्रौतसाधनानां तदभावस्य तद्विरुद्धानां कामादीनामपि प्रवेशेन वरणे प्रकारभेदः सिध्यति । स च पुराणोक्तैरुपबृंहणैर्विशेषतोऽवगम्यत इति हृदिकृत्य सूत्रकृता इदमधिकरणं प्रणीतमित्याशयेन पुराणस्थविरोधपरिहारचिन्तनमत्र कृतम्, न तु मुख्यतया तेषां विषयवाक्यत्वमिति वैदिकम्मन्यबहिर्मुखबोधनाय वर्त्म । वस्तुतस्तु 'सर्ववेदेतिहासानां सारं सारं समुद्धृत'मितिवाक्याद्वेदत्वमेव श्रीभागवतस्य । 'इतिहासपुराणं वेदानां पञ्चमो वेद' इति बृहदारण्यकश्रुतेश्च । अतस्तद्वाक्यत्वेनापि विषयवाक्यत्वं युक्तमिति न शङ्कालेशः ।

प्रकृतमनुसरामः । एतस्याधिकरणस्य पूर्वाधिकरणोत्थशङ्कानिरासरूपं प्रयोजनान्तरमाहुः एतेनेत्यादि । एतेनेत्यस्य इत्यपि शङ्का निरस्ता वेदितव्येत्यनेनान्वयः । न साधीयानिति । पापं विना भगवति कापट्यकृत्यसम्भवान्न साधीयान् । तथाच सम्परायसूत्रसिद्धः सिद्धान्तो न

रश्मिः ।

वरणमात्रं साधनं यस्याः सा वरणमात्रसाधनिका तस्याम् । अशक्यत्वादिति । नहि साधनस्य वरणस्य साध्ये ज्ञाने उपसंहारो दृष्ट इति भावः । अन्यत्रादर्शनात् । तथा 'चैकं रूप'मिति दृष्टान्तो नेति भावः । एवमित्यादि । श्रवणादिविध्युक्तसाधनतन्मात्रसाधनयोर्भेदेन । फलयोः पुरुषोत्तमतदितरफलयोर्भेदसिद्धौ । पूर्वोक्तेति । अत्रैव पूर्वोक्तेत्यादिः । तदभावस्य वरणेतरसाधनाभावस्य । स चेति । अत्रैव 'यमेवैष'इत्यादिभाष्योक्तो वरणे प्रकारभेदश्च । उपेति । 'भगवान्ब्रह्म कार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया । तदध्यवस्यत्कूटस्था रतिरात्मन्यतो भवे'दित्यत्रोपबृंहणे यच्छब्दार्थं ऐक्यमाहात्म्ययोर्माहात्म्ये वरणस्यास्त्वर्मावाद्विशेषतः । तथे'तिहासपुराणाभ्यां वेदं समुपबृंहये'दित्युपबृंहणम् । तथा 'जन्माद्यस्य यतोऽन्वयादितरत' इत्युपबृंहणम् । जगज्जन्मादिकर्तृत्वस्य माहात्म्यात् । किंच 'भक्त्या मामभिजाना'तीति भाष्योक्तोपबृंहणे तैः । वैदिकमिति । वेद एव षडङ्गानीत्येवं वैदिकमात्मानं मन्यते स वैदिकंमन्यः, स च बहिर्मुखः, बहिः तर्का मुखान्युपाया यस्य तस्य बोधनाय उपबृंहणानां विशेषतोऽवगमांशे उपकारात् । ननु नेयं भाष्यकृतां शैली, यदि स्यात्, तदा पूर्वोक्तं स्यात्, नत्वेवम्, पूर्वमीमांसाभाष्ये शबरस्वामिशैल्याः षष्ठाध्याये द्वितीयपादे षष्ठाधिकरणे 'तस्मिंस्तु शिष्यमाणानि जननेन प्रवर्तेर'न्नित्यधिकरणे दर्शनादित्यत आहुः वस्तुतस्त्विति । ननु स्मृतीनामुत्सन्नप्रच्छन्नशाखामूलत्वादस्तु पूर्वमीमांसाविषयत्वम्, पुराणानां तु कथं मीमांसाविषयत्वमत आहुः सर्ववेदेति । तद्वाक्येति । पुराणवाक्यत्वेनापि एतेनेत्यादीति । भक्तानामिति । श्रवणादिमताम् । ननु कुतो न कारणसत्त्वे प्रेमेति चेत् । न प्रेमवन्मुक्तेरपि फलत्वात्, प्रेमादिकं प्रति श्रवणादीनां तृणारणिमणिन्यायेन कारणत्वात् । दुःखेति पापकार्यदुःखदर्शनात् । पापनाशकत्वेति । अन्योन्याश्रयापादकात्तस्मात् । श्रवणं तु 'केचित्केवलया भक्त्या वासुदेवपरायणाः । अघं धुन्वन्ति कार्त्स्न्येन नीहारमिव भास्कर' इति वाक्ये । कापट्येति ।

तथाहि । मर्यादापुष्टिभेदेनाङ्गीकारे वैलक्षण्याद्याथायामङ्गीकृतानां मुमुक्षयैव श्रवणादौ प्रवृत्तिः, तद्दातृत्वेनैव भगवति प्रेमापि, न तु निरुपधिः; कदाचिद्वस्तुस्वभावेन मुक्तीच्छानिवृत्तावपि तद्भक्तेः साधनमार्गीयत्वात् 'अनिच्छतो मे गतिमण्वीं प्रयुङ्क्ते' इति वाक्यादन्ते मुक्तिरेव भवित्री । अस्मिन् मार्गे श्रवणादिभिः पापक्षये प्रेमोत्पत्तिः, ततो मुक्तिः । पुष्टिमार्गेऽङ्गीकृतेस्त्वत्यनुग्रहसाध्यत्वात् तत्र च पापादेरप्रतिबन्धकत्वाच्छ्रवणादिरूपा प्रेमरूपा च युगपत्, पौर्वापर्येण वा, वैपरीत्येन वा भवत्येव । अत्र श्रवणादिकमपि फलरूपमेव । स्नेहेनैव क्रियमाणत्वान्न विधिविषयः । न ह्यविद्यादिमुक्त्यन्तरूपभजनानन्-

भाष्यप्रकाशः ।

युक्त इत्याशङ्काप्येतेन मार्गभेदेन समाधानाभिरस्ता वेदितव्येत्यर्थः । कथं निरस्तेत्याकाङ्क्षायां व्युत्पादयन्ति तथा हीत्यादि वक्तुं शक्येत्यन्तम् । तथाच सम्परायसूत्रसिद्धः सिद्धान्तो मर्यादामार्गविषयः । सत्यपि पापे भक्त्युदयपक्षस्तु पुष्टिमार्गे, तत्र वरणप्रकारभेदे नियामिका या इच्छा,

रश्मिः ।

कापथ्यं पापकार्यम् । तथाहीत्यादि वक्तुं शक्यमित्यन्तमिति । अस्मिन्निति । मर्यादायामङ्गीकारे मार्गे । 'यमेवैष वृणुत' इत्युक्तभाष्यरीत्या मार्गे । वैपरीत्येनेति । पूर्वं प्रेमरूपा पश्चाच्छ्रवणादिरूपेत्येवम् । अयोगव्यवच्छेदकैवकारः । 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इत्यत्र पाठक्रमे 'दृष्ट एव स्नेह' इति भाष्याद्दर्शनानन्तरं प्रेम तदनन्तरं श्रोतव्य इत्युक्तश्रवणादीत्येवं श्रुत्यर्थात् । अत्रेति । पाठक्रमेण श्रवणाद्यङ्गीकारे । फलरूपमेवेति । स्नेहस्य श्रवणादिफलत्वात्तथा । मुक्तिप्रतिपादकैकादशस्कन्धे 'श्रद्धामृतकथायां मे शश्वन्मदनुकीर्तन'मित्युपक्रम्य 'एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम् । मयि संजायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यत' इत्यन्तवाक्यैरेवकारः । मुक्तेः फलत्वात् । न कुलालकुविन्दादिफलघटपटादिवदवान्तरफलत्वम् । न विधीति । स्नेहेनैवेत्यत्रापि हेतुः । तथाच प्रेमपर्यन्तं विधेयत्वेन श्रवणादिकम्, प्रेमानन्तरं तु स्वव्यसनतः क्रियमाणमुत्तमभक्तिरूपं न विधिविषयम् । भाष्ये विषयशब्दो नियतलिङ्गः । पूर्वतत्रेप्येवम् । नहीति । अविद्या आदिर्यस्य मुक्तिः सायुज्यमन्ते यस्य भजनानन्दात्यन्तरायस्य । अत एवाविद्यादिमुक्त्यन्ताभ्यां रूपं यस्य भजनानन्दात्यन्तरायस्यान्तेन रूप्यन्ते उपमीयन्ते इत्यविद्यादिमुक्त्यन्तरूपभजनानन्दात्यन्तरायरूपाणि तानि अभ्रंकषाविरलविविधमहातरुगहनानि तेषाम् । यथानलोऽभ्रंकषम् । कष हिंसायां (भ्वा-प-सेट्) अभ्रमाकाशं कषति हिनस्तीत्यभ्रंकषं गहनं विपिनं दहति । स्वदेहहिंसकं वस्त्वित्युक्तम् । दाह्यत्वसमर्थकं विशेषणं अविरलविविधमहातरु इति । अविरला गह्वरा विविधा अनेकरूपा महान्तोत्युच्चाः तरवो यस्य । तथानुग्रहः अभ्रंकषं गहनं दुःखं दहति अविद्याऽज्ञानं आकाशं देहं हिनस्ति । यथाधुनिक आकाशं ब्रह्मदेहं न मनुत इति । अत्रापि दाह्यत्वसमर्थकं विशेषणं अविरलेत्यादि । अविरलानि विधानाद्यानि विविधानि विविधदुष्कृतजन्यानि महातरुरादिवृक्षस्तस्य दुःखानि गहनानि । आदिवृक्षस्य वेदार्थत्वेन कर्मरूपत्वात् । तस्य वेदार्थत्वं तु 'ऊर्ध्वमूलमधःशाख'मिति श्वेताश्वतरश्रुतेः । 'कर्मैके तत्र दर्शना'दिति जैमिनिसूत्रात् कर्मरूपत्वं तस्य । अतो महातर्वादिवृक्षसम्बन्धीनि दुःखानि मुक्त्यन्तरूपाणि । भगवदीयानां मुक्त्यनादरस्मरणात् गहने प्रवेशः । 'शुद्धाश्च सुखिनश्चैव ब्रह्मविद्याविशारदाः । भगवद्भजने योग्या नान्य इत्यर्थतः फल'मिति प्रथमसुबोधिनीकारिकायाः सुखिनो भजनानन्दाधिकारिण इति दुःखानां गहनानामत्यन्तरायत्वं भजनानन्दे । मुक्तेरप्यत्यन्तान्तरायरूपत्वम् ।

न्दात्यन्तरायरूपाभ्रङ्कषाविरलविविधमहातरुगहनानां दहने लोलुपस्यानुग्रहानलस्य तदान्तरालिकपापतूलं प्रतिबन्धकमिति वक्तुं शक्यम् ।

तदुक्तं श्रीभागवते 'स्वपादमूलं भजतः प्रियस्य त्यक्तान्यभावस्य हरिः परेशः । विकर्म यच्चोत्पतितं कथञ्चिद्धुनोति सर्वं हृदि संनिविष्ट' इति । विकर्म प्राक्तनम्, तत् दुःखदमिति, स्वयं च हरित्वेन दुःखहर्तेति धुनोति ।

भाष्यप्रकाशः ।

सा 'छन्दत उभयाविरोधा'दिति सूत्रे सूचिता, सैवात्रोभयथेति पदव्याख्याने व्युत्पादिता । तेन न चोद्यावकाशः । नापि तत्कृतश्रवणादीनां पापनाशार्थत्वं शङ्क्यम् । तेषां प्रेम्णा क्रियमाणत्वेन फलमध्यपातित्वात् । पापस्य त्वनुग्रहेणैव नाशसम्भवादित्यर्थः ।

नन्वेतादृशेऽर्थे किं मानमत आहुः तदुक्तमित्यादि । अत्र यद्विकर्म यच्च कथञ्चिदुत्पतितं तत्सर्वं धुनोतीत्यन्वयः । तत्र पूर्वं विवृण्वन्ति विकर्मेत्यादि । तत् दुःखदमित्यत्र तदिति भिन्नं पदम् । हरित्वेन दुःखहर्तेति । 'हराम्यघं यत्स्मर्तॄणां हविर्भागं क्रतुष्वहम् । वर्णश्च मे हरिश्चेष्टस्तस्माद्धरिरहं स्मृत'इति महाभारतवाक्यात्तथा । मध्ये निविष्टस्य कथञ्चित्पदस्य धुनोतिना सम्बन्धे धूननप्रकार इच्छाविषय एव वाच्यः । स चेच्छाविवरणादेव लभ्यत इति वैयर्थ्यात्

रश्मिः ।

भजनस्य भेदसाध्यत्वेन मुक्तेरभेदरूपायास्तथा । तदान्तरेति । अन्तरायान्तरालिकं मायारूपं पापतूलम् । भगवत्सृष्टं पापं तु प्रतिबन्धकं भवत्येव । 'अघं धुन्वन्ती'ति वाक्यात् । इति नहि वक्तुं शक्यमित्यन्वयः । ननु भजनानन्दः ज्ञानक्रियाकाण्डोक्तः स्यात्, तत्र तु न दृश्यत इति चेत् । न । ज्ञानक्रियापरिनिष्ठितानामत्यन्तानुग्रहे भक्तिदानस्य 'भगवान्भजतां मुकुन्दो मुक्तिं ददाति कर्हिचित्स्म न भक्तियोग'मिति वाक्ये सिद्धत्वाद्भक्तमनोरथेन भजनानन्ददानात् । 'अचलत्वं चापेक्ष्ये'ति व्याससूत्रात् । सूचितेति । भक्तेः पूर्वमेव पापनाशो यया भवति, सा छन्दपदवाच्या । वरणप्रकारभेदे नियामिका तु छन्दपदसूचितेत्यर्थः । व्युदिति । अत्रायमाशय इत्यादिभाष्येण व्युत्पादिता । न चोद्येति । सम्परायसूत्रसिद्धः सिद्धान्तो न युक्त इति चोद्यस्यावकाशः । अत्रेति भाष्यं विवरीतुमाहुः नापीति । तत्कृतेति । मर्यादाभक्तकृतश्रवणादीनाम् । पापेति । अविद्यया विद्योपमर्दं पापं तस्य नाशार्थत्वमविद्योपमर्दकाले शङ्क्यम् । विवृण्वन्ति स्म तेषामिति । व्याख्यातम् । अनुग्रहेणेति । मर्यादायामपि कारणमनुग्रह इति भक्तिहेतुग्रन्थेऽस्ति । एतादृशीति । पुष्टिमर्यादाभेदे नियामिका । यजमानस्य तदाशया कृतायां श्रवणादिसरणौ पुष्टिपदप्रयोगः । तदाशाभावे मर्यादा । 'मयि चानन्ययोगेन भक्तिरव्यभिचारिणी'ति गीतायां तदाशाभावे याऽव्यभिचारिणी भक्तिर्भवति तस्या उक्तेः । 'तद्रूपं तत्र च स्थितं साकारव्यापकत्वाच्चे'त्यव्यभिचारिणी । अत्रैकदेशविकृतन्यायेनाभेदमाश्रित्य प्रश्नः । अथवा । भाष्योक्तौ पुष्टिमर्यादामार्गौ प्रमाणप्रमेयबलरूपौ ग्राह्यौ । अस्मिन्पक्षे भेदे प्राप्ते किमिति प्रश्नः अभेदमुपपाद्य भेदाभावाभावरूपभेदविषयको ग्राह्यः । विकर्मेति । संचितम् । उत्पतितं विकर्म क्रियमाणम् । भाष्ये । स्वपादेति । उपकारं स्मृत्वा स्वस्य भगवतः पादयोर्मूलं ओघं समूहं 'प्रियतमकरपद्मस्पर्शभावेक्षणा'दिति स्वामिनीस्तोत्रोक्तम् । भजतः । अन्यस्मिन् भावः त्यक्तोऽन्यभावो येन तस्य । प्रकृते । पूर्वमिति । विकर्म । विकर्मेत्यादीति । प्राक्तनं संचितं कर्म । तथेति । हरित्वेन दुःखहर्तृत्वम् । धूननेनान्वयं निराकुर्वन्ति स्म मध्य इति । उत्पतितधुनोतिपदयोर्मध्ये । धूननेति । कथञ्चिदित्यत्र कथंशब्दार्थः धूनने प्रकारः केनापि प्रकारेण धूननं करोती-

१. भजनान्दात्यन्तरायेति पाठः ।

उक्तविशेषणविशिष्टस्य स्वतो विकर्मकृत्यसम्भवात् सांसर्गिकं मत्तो भूतम्, न तु मया कृतमितिवत् वा यत् कृतं विकर्म तत् 'कथञ्चिदुत्पतित'मित्युच्यते। त्यक्तान्यभावत्वेन भगवत्सेवाऽभ्यासङ्गेनेन्द्रद्युम्नाख्यपाण्ड्यराजवन्महदागमनाद्यज्ञानं वा। वक्ता उक्तरूपे भक्ते विकर्मोक्तावनुचितत्वज्ञापनाय वा 'कथञ्चि'दित्युक्तवान्। तेन तर्कितं विकर्मात्राभिप्रेतमिति ज्ञायते। एतादृशस्यापि यदि विकर्म भवेत्, तदा तन्निवृत्त्यर्थं न तेनान्यत् कर्तव्यम्। भगवानेव हृदि निविष्टस्तद्धुनोति यत इति। कदाचित् स्वभक्तिबलस्फूर्त्या सदोषमपि जनं कृतार्थीकरिष्यामीत्यङ्गीकुर्याच्चेद्भक्तः, तदैव तद्धृदिस्थ एव तत्संसर्गजं दोषमस्यैतदङ्गीकारेण तद्दोषमपि धुनोतीति सर्वपदेनोच्यते। चिरकालभोग्यमपि तत्क्षणेनैव नाशयति। तन्नाशने कालादेरप्रतिबन्धकत्वमित्यपि ज्ञापयितुं परस्य कालादेरीश-

भाष्यप्रकाशः।

पूर्वपदेनैव सम्बन्धो युक्त इत्याशयेन द्वितीयं विवृण्वन्ति उक्तेत्यादि। मत्तो भूतम्, न तु मया कृतमितिवदिति। अकामतः अबुद्धिपूर्वकं च कृतम्। एवञ्च सांसर्गिकेन सह त्रिविधं विकर्मोक्तम्। त्यक्तान्यभावस्यैतदपि न सम्भवतीत्यरुच्या ततोऽतिरिक्तमन्यदाहुः त्यक्तेत्यादि। अज्ञानं वेति। कथञ्चिदुत्पतितविकर्मस्थानीयमिति शेषः। गौण्यङ्गीकारे बीजं वक्तुमाहुः वक्तेत्यादि। तथाच तादृशस्य पापमेव नास्ति, किन्तु भगवदिच्छैव तादृशी सन्मार्गस्थापनार्थेत्याशयेनैतद्वाक्यवक्ता करभाजनो योगीश्वर एकादशस्कन्धे निमिं प्रति तथोक्तवानित्यर्थः। एवं कथनस्य तात्पर्यमाहुः तेनेत्यादि। सर्वपदतात्पर्यमाहुः कदाचिदित्यादि। इदमपि नवमस्कन्धे रन्तिदेवोपाख्याने सिद्धम्। 'तत्प्रसङ्गानुभावेन रन्तिदेवानुवर्तिनः। अभवन् योगिनः सर्वे नारायणपरायणा' इति, द्वितीयस्कन्धे शुकोक्तौ च 'किरातहूणान्ध्रपुलिन्दपुष्कसा आभीरकङ्का यवनाः खसादयः। येऽन्येऽपि पापा यदपाश्रयाश्रयाः शुध्यन्ति तस्मै प्रभविष्णवे नम' इति। चिरकालभोग्यस्य यत्र क्षणमात्रेण नाशनम्, तदुदाहरणं त्वन्तर्गृहगताः प्रागेवोक्ताः। सिद्धमाहुः

रश्मिः।

त्यर्थात्। अयमिच्छाविषयो वाच्यः पूर्वभाष्यात्। पूर्वभाष्य इच्छाविवरणम्। पूर्वेति। उत्पतितपदेन। द्वितीयमिति। कथञ्चिदुत्पतितम्। मत्त इति। इत्यत्रेतीतिवत्। सप्तम्यन्ताद्वतिः। मत्तो कामतः भूतं अबुद्धिपूर्वकं भूतं संसर्गतो भूतम्। अकामतः पञ्चमस्कन्धे बभ्रूहननं बभ्रूहनने इच्छाभावात्। अबुद्धिपूर्वकं यथा सेवा संसारसहितसंसारस्य नाशनं कृतम्। संसर्गतः कृतमक्रूरे। संसर्गः शतधन्वनः। सांसर्गिकमित्यत्र संसर्गेण निर्वृत्तमिति विग्रहे 'तेन निर्वृत्तमि'ति सूत्रेण 'अध्यात्मादेष्ठञिष्यत' इति वा भवार्थे 'तदस्य प्रयोजन,मिति वा ठञ्। एतदपीति। त्रिविधं विकर्म। तत इति। त्रिविधात्। गौणीति। एकस्थानीयत्वं गुणस्तद्योगाद्गौणी। वक्तेत्यादीति। उक्तरूप इति। पाण्ड्यराजवद्वर्तमाने। अनुचितत्वेति। अनुचितत्वसूचनाय। तादृशस्येति। पाण्ड्यराजवद्वर्तमानस्य। सन्मार्गेति। पाण्ड्यराजवद्वर्तमाने भक्ते विकर्मोक्तावनुचितत्वं यत्र मार्गे तादृशसन्मार्गस्थापनार्था। तथेति। कथञ्चिदित्युक्तवान्। तेनेत्यादीति। तर्कितं अन्यथाज्ञानविषयं विकर्मात्र वाक्येऽभिप्रेतम्। तत्प्रसङ्गेति। रन्तिदेवस्य यः

१. कृतमिति बुद्धयेति पाठः। २. अरुचिज्ञापनाय इति पाठः। ३. अत्राप्यमीत्यादिपाठः।

त्वमुक्तम्। अत्र भजनादिहृन्निवेशान्तानां स्पष्ट एव विकर्मणि सत्यपि सम्भव इति ॥ २९ ॥

इति तृतीयाध्याये तृतीयपादे सप्तमं गतेरर्थवत्त्वमित्यधिकरणम् ॥ ७ ॥

## उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥ ( ३-३-८. )

ननु मुक्तेरेव सर्वत्र फलत्वमुच्यते, युक्तं चैतत्, संसृतेर्दुःखात्मकत्वात्, तन्निवृत्तेः सर्वेषामिष्टत्वात्, पुष्टिमार्गीयभक्तानां तु तदनपेक्षित्वमुच्यते। तदुक्तमथर्वणोपनिषत्सु। अष्टादशार्णमन्त्रस्वरूपमुक्त्वा पठ्यते 'परब्रह्मैतद्यो धारयती'त्यादेरन्ते 'सोऽमृतो भवती'त्यादि। एतदग्रे 'किं तद्रूपं किं रसनं कथं हैतद्भजन'मित्यादिप्रश्नोत्तरं पठ्यते 'भक्तिरहस्यभजनं तदिहामुत्रोपाधिनैराश्येनैवामुष्यात्मनः

भाष्यप्रकाशः।

अत्रेत्यादि। तथाच मर्यादाभक्तिमार्गे तर्तव्याभावाज्ज्ञानमार्गत उत्कर्षः, पुष्टिभक्तिमार्गे तु क्वचित्पापसत्त्वेपि भगवतैव तन्नाशनेन कृपातिशयादुत्कर्ष इति सिद्धमित्यर्थः। तेन पूर्वाधिकरणोक्तो भक्त्युत्कर्षो हेतुबोधनेन दृढीकृतः। किञ्च, एतेन भगवतः फलत्वबोधनात् स्वरूपावस्थितस्यैव तथात्वादकेतनत्वरूपो धर्मोपि प्रतिपादितः ॥ २९ ॥ इति सप्तमं गतेरर्थवत्त्वमित्यधिकरणम् ॥ ७ ॥

उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥३०॥ पूर्वाधिकरणे भक्तिहेतुबोधनेन ज्ञानमार्गापेक्षया भक्तिमार्गस्योत्कर्षो दृढीकृतः। अत्र त्वनुग्रहजन्ययोर्मर्यादापुष्टिभक्त्योर्मध्ये मर्यादाभक्तेः पापनाशोत्तरमेव जायमानत्वात् पुष्टिभक्तौ च तादृशनियमाभावात् तत आधिक्यं न स्यादतस्तारतम्यं विचार्यते। वरणश्रुतिप्रपञ्चभूतमिति पूर्ववदेव विशयसंशयौ पूर्वपक्षे निक्षिप्य सूत्रमवतारयन्ति ननु मुक्तेरित्यादि। पुष्टिमार्गीयभक्तानां मुक्त्यनपेक्षत्वं कुत्राथर्वोपनिषत्सूच्यत इत्याकाङ्क्षायाम्, गोपालपूर्वतापनीय इत्याह अष्टादशार्णेत्यादि। भक्तिरहस्यभजनमिति। अत्र भक्तिशब्दाच्छान्दसः सोर्लुक्। रहस्यभजनमित्यस्य विवरणं तदिहेत्यादि। अर्थस्तु–तत् भजनम्, अमुष्यात्मनो

रश्मिः।

प्रसङ्गस्तस्य योऽनुभावो नारायणपरायणत्वं साधनाभावेपि तत्त्वं तेन। तर्तव्येति। तर्तव्यं पापम्। पुष्टीति। भाष्यीयात्रशब्दस्यार्थः। पूर्वाधिकरणसमाप्तौ विरुद्धधर्माधारत्वप्रतिज्ञानादुक्तकृतकेतनत्वविरुद्धधर्ममाहुः किञ्चेति। एतेनेति। हृदि सन्निवेशकथनेन। 'स मानसीन आत्मा जनाना'मिति श्रुतेः फलत्वम्। स्वरूपेति। फलत्वोक्तेर्मोक्षरूपत्वात् 'मुक्तिर्हित्वान्यथा रूपं स्वरूपेण व्यवस्थितिः' सा च भगवतः 'स आत्मा स्वाश्रय' इत्याश्रयलक्षणवाक्योक्तोऽतः स्वरूपावस्थितिराश्रयरूपता तदाधारस्य तथात्वात् फलत्वात्, 'दशमस्य विशुद्ध्यर्थं नवानामिह लक्षण'मिति वाक्यादेवकारः। तथात्वात् फलत्वात्। अपिना फलत्वम् ॥ २९ ॥ इति सप्तमं गतेरर्थवत्त्वमित्यधिकरणम् ॥ ७ ॥

उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥ भक्तिहेत्विति। कृपातिशयरूपभक्तिहेतुबोधनेन। ननु मुक्तेरित्यादीति। तदनपेक्षित्वं मुक्त्यनपेक्षित्वम्। आहेति। पूर्वपक्ष्याह। अष्टादशार्णेत्यादीति। पञ्चपदोष्टादशार्णमन्त्रः। 'कृष्णाय गोविन्दाय गोपीजनवल्लभाय स्वाहेति'। गोपीजनेति वल्लभायेति पदद्वयम्। अत्र दशार्णपदाभावेपि, अग्रे 'एतस्मादन्ये पञ्चपदाऽभूवन् गोविन्दस्य मनवो मानवानाम्। दशार्णाद्यास्तेपि संक्रन्दनाद्यैरभ्यस्यन्ते भूतिकामैर्यथावत्'। 'तदेतस्य स्वरूपार्थं वाचा वेदयती'ति श्रुतेरत्रापि दशार्णत्वं प्राप्यते। श्रुत्यर्थस्तु टीकायां द्रष्टव्यः, अत्र प्रयोजनाभावान्न लिख्यते।

कल्पनमेतदेव नैष्कर्म्य'मिति । एतदत्र विचार्यते । मन्त्रावृत्तितदधिष्ठातृरूपध्यानादेरमृतत्वं फलमुच्यते । भजनस्वरूपं च यावत्फलनैराश्येन भगवत्यात्मनः कल्पनमित्युच्यते । नच फलनैराश्येन भजनेऽप्यन्ते मुक्तिरेव भवित्रीति वाच्यम् । 'तं यथा यथोपासते तथैव भवति तद्धैतान् भूत्वावती'ति श्रुतेर्मुक्तिसाधनत्वेन ज्ञात्वा भजतः सैव फलम् । स्वरूपस्यैव स्वतन्त्रपुरुषार्थत्वमनुभवन् यो भजते, तस्य तदेव फलमिति यतो निर्णयः सम्पद्यते । 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यह'मिति

भाष्यप्रकाशः ।

वस्तुत एतदीयस्य जीवस्य इहामुत्रोपाधिनैराश्येनैव ऐहिकामुष्मिकयावत्फलेप्साराहित्येन कल्पनं तदीयत्वसमर्थनम् । अन्तर्बहिःसेवया तद्दृढीकरणम् । 'कृपू सामर्थ्ये' इति धात्वर्थात् । एतदेव स्वस्य तदीयत्वसमर्थनमेव, नैष्कर्म्यं संन्यास इति । अन्ये तु, 'भक्तिरस्य भजनं तदिहामुत्रोपाधिनैराश्येनामुष्मिन् मनःकल्पन'मिति पठन्ति । एवं पाठद्वयेऽपि यावत्फलनैराश्यस्य प्रविष्टत्वादामुत्रिकमध्ये मुक्तेरपि प्रवेशात् तदनपेक्षत्वं समानम् । एतदत्र विचार्यत इति । उक्तं तापनीयवाक्यद्वयमस्मिन् सूत्रे विचार्यते । सन्देहं वक्तुं विचारप्रकारमाह मन्त्रेत्यादि । 'अमुं पञ्चपदं मन्त्रमावर्तयेद्यः स यात्यनायासतः केवलं तत्' इति मन्त्रोक्ता या पञ्चपदस्याष्टादशार्णमन्त्रस्यावृत्तिः पुनः पुनः कथनम्, 'तस्मात् कृष्ण एव परो देवस्तं ध्यायेत्तं रसेत्तं भजे'दिति ब्राह्मणोक्तं यत्तदधिष्ठातृध्यानादि, तस्य सर्वस्य अमृतत्वं फलम्, उपक्रम एव 'यो ध्यायति रसति भजति सोऽमृतो

रश्मिः ।

एतस्य दशार्णमन्त्रस्य स्वरूपं पञ्चपदमुक्त्वा । 'भक्ती रहस्यभजन'मिति प्राप्त आहुः अत्र भक्तीति । 'सुपां सुलुगि'तिसूत्रेण लुक् । अमुष्येति । अमुष्य विप्रकृष्टस्य य आत्मा जीवस्तस्य । नैष्कर्म्यमिति । यावत्फलेप्साराहित्ये सति तदेककामत्वे तदीयत्वं भवतीति यावत्फलेप्साराहित्यं करणं तदीयत्वसमर्थने उक्तम्, तज्जन्यं तदीयत्वसमर्थनं नैष्कर्म्यम् । तदित्थम् । कर्मणा कर्मनिर्हारो नैष्कर्म्यं कर्मनिर्हारकं कर्म । अकामस्याप्तकामस्य यावत्फलेप्साराहित्यं भवति तदन्वाप्तकामस्याविहितं विहितं दास्यं भवति । 'आदरः परिचर्याया'मित्येकादशैकोनविंशे कथनात् । कर्मनिर्हारकं कर्म । भक्तित्वाच्च । 'केचित्केवलया भक्त्या वासुदेवपरायणाः । अघं धुन्वन्ती'ति वाक्यात् । तच्च नैष्कर्म्यं संन्यासः । कर्मसंन्यासयोगाध्याये 'त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः । कर्मण्यभिप्रवृत्तोपि नैव किंचित्करोति सः ॥ निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः । शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ यदृच्छालाभसंतुष्टो द्वन्द्वातीतो विमत्सरः । समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते ॥ गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः । यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥ ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् । ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म समाधिना' इति । नचाधः सेवनं संसारजनकं 'अधश्चोर्ध्वे'मिति वाक्यविषयत्वात् अस्मदादिविषयवत् इत्यनुमानेन संसारजनकं दास्यमिति वाच्यम् । आचार्यमार्गत्वस्योपाधित्वात् । 'कृत्वाऽतरन् वत्सपदं स्म यत्प्लवाः' इत्यस्य सुबोधिन्यनुगुणयत्किंचित्संसारवत्सेवनं साध्यव्यापकत्वस्थलम् । सेवनातिरिक्तविषयं साधनव्यापकत्वस्थलम् । एवं नैष्कर्म्यं संन्यास इत्यर्थः । उपबृंहितोयं संन्यास उपनिषत्सु तत्तदधिकारानुसारी ज्ञेयः । समानमिति । पुष्टभक्तानां समानम् । तन्मते पुष्टभक्ताभावेपि स्वमते तदविरुद्धमित्यर्थः । मनःकल्पनं मानसी सेवा । आहेति । पूर्वपक्षीति बोध्यम् । एवमग्रेपि । ब्राह्मणेति । ब्रह्म ब्राह्मणः ब्रह्म जानाति ब्राह्मण इति व्युत्पत्तेः । अधिष्ठाता दशार्णप्रतिपाद्यः ।

भगवद्वाक्याच्च। अत एव रहस्यभजनं लक्ष्यमुक्तम्। तथाच श्रौतत्वभगवत्सम्बन्धित्वयोरविशेषात् कतमो गरीयानिति संशये गूढाभिसन्धिः पठति।

मुमुक्षोः सकाशाद्रहस्यभजनकर्तैव उपपन्नः उपपत्तियुक्तः। तमेवोद्घाटयति तल्लक्षणार्थोपलब्धेरिति। तल्लक्षणो भगवत्स्वरूपात्मको योऽर्थः स्वतन्त्रपुरुषार्थरूपः, तदुपलब्धेः स्वाधीनत्वेन तत्प्राप्तेरित्यर्थः। यद्यपि पुरुषोत्तमे प्रवेशो तदानन्दानुभवो भवति, तथापि न प्रभोस्तदधीनत्वम्। भक्तितिरोभावात्। प्रत्युत वैपरीत्यम्। भजनानन्दस्य तत आधिक्यं तु 'मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगम्'

भाष्यप्रकाशः।

भवती'त्यनेनोच्यते। भजनस्वरूपमित्यारभ्य, भगवद्वाक्याच्चेत्यन्तग्रन्थस्तु स्फुटार्थः। एतन्निगमनायाह अत एवेत्यादि। अत एवेति। स्वरूपस्य फलत्वादेव। 'अस्य भजन'मिति पाठे तु निरुपधिभजनमेव लक्ष्यम्। उभयथापि 'तद्वैता'नित्यादिभिः सिद्धो निर्णयस्तुल्यः। अतो निरपेक्षभजनेपि मुक्तिरेव फलमिति निर्णयस्य कर्तुमशक्यत्वात् यत् सिद्धं तदाह तथाचेत्यादि। उक्तहेतुभ्यामुभयोर्भक्तयोः साम्यमेव युक्तमिति पूर्वपक्षरूपे संशये श्रुतिस्थगूढाभिप्रायं प्रकटयन् सूत्रं पठतीत्यर्थः। सूत्रं व्याकुर्वन्ति मुमुक्षोरित्यादि। रहस्यभजनकर्तेति। पाठान्तरे तु निरुपधिभजनकर्ता। तमेवेति। तादृशं भक्तम्। गूढाभिसन्धि वा। अग्रे उपपत्तेरेव कथनादिति। ननु पुरुषोत्तमे सायुज्येपि सूत्रोक्तस्य हेतोरुपपद्यमानत्वात् कथं रहस्यभजनकर्तुरेवाधिक्यस्य सिद्धिरित्यत आहुः यद्यपीत्यादि। ननु मास्तु प्रभोस्तदधीनत्वं सायुज्ये, तथापि स्वरूपानन्दापेक्षया भजनानन्दस्याधिक्ये किं मानम्, अत आहुः भजनानन्दस्येत्यादि। अत्र प्रथमवाक्यं पञ्चमस्कन्धषष्ठाध्याये श्रीशुकैः परीक्षितं प्रत्युक्तम्। 'राजन् पतिर्गुरुरलं भवतां यदूनां दैवं प्रियः कुलपतिः क्व च किङ्करो वः। अस्त्वेवमङ्ग भगवान् भजतां मुकुन्दो मुक्तिं ददाति कर्हिचित् स्म न भक्तियोग'मिति। अत्र मुक्तिदातुरप्यदेयत्वेन भक्तेराधिक्ये सिद्धे तदानन्दस्या-

रश्मिः।

एतन्निगमनायेति। तस्मात्तथेति निगमनं न्यायशास्त्रे। भाष्ये। रहस्येति। तत्प्राप्तिसाधनं लक्ष्यम्, 'तदिहामुत्रे'त्यादिलक्षणम्। लक्ष्यं निरुपधि बोध्यम्। प्रकृते। मुक्तिरेवेति। एवकारः स्वरूपस्य व्यवच्छेदकः। उक्तेति। श्रौतत्वभगवत्सम्बन्धित्वाभ्यां हेतुभ्यां उभयोर्मुक्तिभगवत्स्वरूपार्थं भजतोः। इति पूर्वपक्षेति। मुक्तिसाधनत्वेन भजन् गरीयानुत स्वरूपस्यैव स्वतन्त्रपुरुषार्थत्वमनुभवन् भजन् गरीयानिति संशये उक्तहेतुभ्यामित्यादिपूर्वपक्षे रूपं यस्य तादृशे संशये। उक्तायां 'यो ध्यायति रसति भजति सोऽमृतो भवती'ति श्रुतौ तिष्ठतीति श्रुतिस्थं गूढं मुमुक्षोः सकाशात् रहस्यभजनकर्तैवोपपन्न इत्यमृतपदगूढं अभिप्रायम्। गूढाभिसन्धिरितिपाठे उक्ताभिप्रायवान् व्यासो भगवान् गूढोभिसन्धिर्यस्येति बहुव्रीहिः। सूत्रमिति। बुद्धिस्थत्वात्सूत्रमपठित्वा व्याकुर्वन्तीत्यर्थः। गूढाभिसन्धिरूपे भाष्यीयार्थव्यतिरिक्ते। अत्र हेतुः अग्र इति। सूत्रेऽग्रे उपपत्तेः उपपन्नरूपतादृशभक्तधर्मस्य। यदि तल्लक्षणार्थो न स्यात्तदा तदुपलब्धिर्न स्यादित्येवमन्यथाज्ञानरूपायाः। ननु स्यादमृतपदगूढोभिप्रायः मुमुक्षोः सकाशाद्रहस्यभजनकर्तैव मुख्य इति उपपन्नरूपतादृशभक्तधर्मस्य तथापि तल्लक्षणार्थोपलब्धेरिति हेतुना कथं प्राप्तिरत उक्तं एवेति। अप्यर्थे आकृतौ शक्तेः तदाक्षेप्यव्यक्तेरुपपन्नरूपाया गौणार्थत्वात्। कथनात् तल्लक्षणार्थोपलब्धेरिति पदेन कथनात्। सायुज्य इति। उक्ततदीयत्वविलक्षणसायुज्ये। रहस्येति। तदीयस्य। तदानन्दस्येति। भजनानन्दस्य। ननु भजनेनानन्दो भजनानन्दः। अत्र

'दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः' 'नारायणपरा लोके' इत्युपक्रम्य 'स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिन' इत्यादिवाक्यैरध्यवसीयते । अत एव सामीप्यवाच्युपसर्ग उक्तः । तेन दासीत्वेन दासत्वेन लीलायां सुहृत्त्वेन प्रभुनिकटे स्थितिरुक्ता भवति । नच महत्पदार्थस्वरूपाज्ञानादल्प एवानन्दे यथा सर्वाधिक्यं मन्वानः पूर्वोक्तं न वाञ्छति, तथात्रापीति वाच्यम् । दीयमानानामर्थानां स्वरूपाज्ञानासम्भवात् । अनुभवविषयीक्रियमाणत्वस्यैवात्र दीयमानपदार्थत्वात् । तद-

भाष्यप्रकाशः ।

धिक्यम् । द्वितीयं तृतीयस्कन्धे कपिलवाक्यम् । तृतीयं षष्ठस्कन्धे सप्तदशाध्याये उमां प्रति शिववाक्यम् । नन्वयमर्थः सूत्राशयगोचरत्वेन कथं ज्ञेय इत्यत आहुः अत एवेत्यादि । तथाच यद्येवमर्थोऽभिप्रेतो न स्यात्, तदा 'तल्लक्षणार्थलब्धे'रित्येव सूत्रे वदेत् । भगवत्स्वरूपलाभस्योभयत्रापि तुल्यत्वेनोपोपसर्गप्रयोजनाभावात् । अत उपलब्धिपदाज्ज्ञेय इत्यर्थः । चतुर्विधमुक्त्यन्तर्गतत्वव्यावृत्त्यर्थं तादृशस्य सिद्धं स्वरूपमाहुः तेनेत्यादि । एतदेव भक्तेराधिक्यमूहापोहेन द्रढयन्ति नचेत्यादि । स्पष्टम् ।

इतोप्यत्युत्कटभक्तसूचनाय पक्षान्तरमाहुः अथवेत्यादि । स्पष्टम् । एवमत्र भक्तेः परमा

रश्मिः ।

फलसाधनयोरेकीकृत्य निरूपणात्कथं सायुज्यापेक्षयाधिक्यम् । किञ्च, किं शक्यतावच्छेदकमिति चेत् । सत्यम् । भजनेनेत्यत्र न करणे तृतीया, अपि तु 'प्रकृत्यादिभ्य उपसंख्यान'मिति वार्तिकेनाभेदे तृतीया । फलत्वेनाभेदः । ननु किं साधनं फलरूपमिति चेत् । न । एकादशे मुक्तिफलप्रतिपादकं सुबोधिन्यां फलात्मकं साधनमाहेति परस्परानुकथनमित्यस्याभासेन तदुक्तसाधनानां फलत्वात् । तेन साधनभूतभजनाभिन्नानन्दपदस्य भजनानन्दस्य भजनानन्दत्वमपि शक्यतावच्छेदकम् । 'साधनानामसिद्धवदावृत्तिः कर्तव्ये'ति सुबोधिन्या फलदशायामपि साधनावृत्तेः । यादृशं साधनं तदुक्तं भजनानन्दत्वं वा शक्यतावच्छेदकं भजनं तादृशानन्दे तात्पर्यग्राहकम् । लाघवात् । उभयत्रेति । उपोपसर्गे तदभावे च, सायुज्ये तदीयत्वे वा । ज्ञेय इति । तथाहि । उप समीपे लब्धिः तदीयत्वे । तस्य भेदघटितत्वात् । सायुज्ये लब्धिः, नतूपलब्धिः, सायुज्येऽभेदादिति । चतुर्विधेति । सामीप्यस्य वक्ष्यमाणभाष्यात्तदीयत्वेन तदतिरिक्तस्य सालोक्यवाक्योक्तसालोक्यादिचतुष्टयरूपचतुर्विधेत्यर्थः । तादृशस्येति । तदीयत्वरूपमुक्तिं प्राप्तस्य । तेनेत्यादीति । शरीरादिकं चतुर्थपादे वक्तव्यम् । ऊहेति । ऊहस्तर्कः । वाच्यमित्यत्रोहवचनविवक्षणात् । अपोहः तर्कापोहनं समाधानम्, तयोः समाहारः तेनैकवचनम् । स्पष्टमिति । तादृशं महतां पदार्थस्वरूपमक्षरज्ञानं तस्यान्यत्र वैराग्यजनकस्याज्ञानात् अल्पानन्दे भगवदीयसम्बन्धिनि सगुणे । उत्कटेति । तदीयत्वमुक्तिं गतस्य भेदोऽयमुत्कटभक्तस्तस्य सूचनाय । पूर्वोक्तमिति । पदार्थस्वरूपमज्ञातम् । तथात्रापीति । दृष्टान्तवत् अत्र भजनानन्दाधिक्यप्रतिपादकवाक्येषु । उत्कृष्टत्वेन सालोक्यादिसायुज्यान्तेषु ज्ञानाभाववतः सगुणे भजनानन्देऽल्पे आधिक्यज्ञानमिति भावः । वाच्यमिति । वचनमूहरूपं अपोहनम् । दीयमानानामिति । सालोक्यादीनाम् । उत्कृष्टत्वेन स्वरूपाज्ञानासंभवात् । दीयतेऽनुभवविषयीक्रियते तत् दीयमानमित्याशयवन्त आहुः अनुभवेति । दीयमानेति । आकृतौ शक्तिपक्ष इति भावः । भाष्यीयत्वादेवकारः । नन्व-

१ इतः पूर्वं ( यथा पूर्णा भगवदीयास्ते शेषव्यासामिमाहुताः ) ।

ज्ञाने स्वर्गादित्रये तुल्यदर्शित्वासम्भवश्च। 'मुक्तिं ददाति कर्हिचित् स्म न भक्तियोग'मिति वाक्ये भक्तेराधिक्यं स्पष्टमेवोच्यते। तस्मान्न्यूनार्थजिघृक्षोः सकाशात् पूर्णार्थवान् महानिति युक्तमेवास्योपपन्नत्वम्। इममेवार्थं दृष्टान्तेनाह लोकवदिति। यथा स्वाधीनभर्तृका नायिका तदवस्थाननुगुणगृहवित्तादिकं दीयमानमपि नोररीकरोति, तथेत्यर्थः।

अथवा। स भगवानेव लक्षणमसाधारणो धर्मो यस्य स तल्लक्षण उद्भटभक्तिभावः स एव अर्थः स्वतन्त्रपुरुषार्थरूप इति। अग्रे पूर्ववत्। भगवत्प्राकट्यवानेव हि भक्तो भक्तत्वेन ज्ञायत इति तथा। एतेन ज्ञाप्यं हि ज्ञापकादधिकं भवति। एवं सति यज्ज्ञापकं परमकाष्ठापन्नं वस्तु पुरुषोत्तमस्वरूपं सर्वफलरूपं तन्महित्वं[1] कथं वक्तुं शक्यमिति सूच्यते॥ ३०॥

इति तृतीयाध्याये तृतीयपादेऽष्टममनुपपन्नाधिकरणम्॥ ८॥

---

भाष्यप्रकाशः।

काष्ठा सूचिता। तेन फलभक्तौ मुक्तिर्न सन्निपततीति मर्यादाभक्तिफलभूतमुक्तिभाजोपि सकाशात् पुष्टिभक्तोऽधिक इति सिद्धम्। अत्र गोपालतापनीयोक्ते विषयवाक्ये भक्तिविषयतया पुरुषोत्तमस्वरूपस्य सिद्धत्वेन श्यामावदातत्वं प्रतिपादितम्।

रश्मिः।

(नु)भवविषयीक्रियमाणत्वं न जातिरिति कथं तस्य पदार्थत्वमिति चेत्। न। विशेष्यौदासीन्येन धर्मावच्छिन्ने शक्तेः। कलशपदस्य कलशत्वे शक्तस्य कलशत्वधर्मवाचकत्वेप्याकृतौ शक्तेरनिवार्यत्वात्। व्यक्तेरभेदस्य जातिबाधकस्य सत्त्वात्। तदज्ञान इति। तुल्यत्वनिरूपकलौकिकसगुणसुखत्वेनापवर्गाज्ञाने। अपवर्गस्य सात्त्विकत्वात्सगुणत्वम्। उत्कृष्टत्वेनापवर्गज्ञाने। पूर्णार्थेति। यथा 'पूर्णा भगवदीयास्ते शेषव्यासाग्निमारुता' इत्युक्ताः पूर्णार्थवन्तः। 'अत इतरज्याय' इति सूत्रादेवकारः। अस्य मुमुक्षोः सकाशाद्रहस्यभजनकर्तुः। तदवस्थेति। भर्त्रवस्थेत्यर्थः। एवं स्पष्टमित्यर्थः। स्पष्टमिति। यस्येति। भक्तस्य। उद्भटेति। भक्त इति वक्तव्ये भक्तत्वस्योद्भटभक्तिभावप्रयुक्तत्वात्प्रयोजकस्य मुख्यत्वात्तदेवोपात्तम्। अग्र इति। दृष्टान्तांशे। ज्ञाप्यमिति। अत्र भक्तो ज्ञाप्यः। सामान्ये नपुंसकम्। तन्महित्वमिति। भक्तमहित्वम्। सूच्यत इति। सूत्रेण सूच्यते। एवं स्पष्टमित्यर्थः। काष्ठेति। तदीयत्वरूपा। फलभक्ताविति। 'भक्तिरहस्यभजन'मिति श्रुत्युक्तायां मनःकल्पनं मानसीसेवारूपं तनुवित्तजसेवाफलमिति फलभक्तित्वम्। नेति। 'फलभोगनैराश्येने'त्यत्र मुक्तिरूपफलस्य सत्त्वान्न सन्निपततीत्यर्थः। यद्यपि तदीयत्वस्य सामीप्यमुक्तित्वम्, तथापि सामीप्ये दासत्वेन दासीत्वेन सुहृत्त्वेन स्थित्यभावान्न प्रायपाठपठितसामीप्यमुक्तित्वम्। तत्र सुहृत्त्वरूपभक्त्यभावात्। वस्तुतस्तु प्रायपाठपठितसामीप्ये दासत्वदासीत्वे सोपाधिके, न तु निरुपाधिके। आत्मकामस्य नोपाधित्वम्। 'अकाम आप्तकाम आत्मकाम' इति श्रुतावकामत्वानन्तरमात्मकामत्वश्रावणात्सकलोपाधिनैराश्यात्। विषयवाक्य इति। 'भक्तिरहस्यभजन'मित्यादिरूपे तदाक्षिप्त 'एतदत्र विचार्यत' इत्यादिभाष्योक्ते च। भजतीत्युक्त्या भजनविषयतयेत्यादिः। अक्षरस्य ज्ञानविषयत्वात्। श्यामेति। पूर्वमानन्दमय-

---

१. तन्महत्त्वमिति शोधितपाठः।

भाष्यप्रकाशः

**शंकराचार्यास्तु**, 'गतेरर्थवत्त्व'मिति द्विसूत्रमधिकरणमङ्गीकृत्य, क्वचित् पुण्यपापहानसन्निधौ देवयानः पन्था श्रूयते, क्वचिन्न । स किं सर्वत्र संनिपतेन्न वेति संशये, उपायनवत् सर्वत्रेति प्राप्तम् । तत्राह । गतेः देवयानस्य पथः, अर्थवत्त्वमुभयथा विभागेनेत्युक्त्वा क्वचिदर्थवती गतिः, क्वचिन्नेति विभागस्वरूपं व्याचक्रुः । तन्मन्दम् । एकस्य प्रकारस्य गतिसार्थक्यं प्रत्यहेतुतया सौत्रस्योभयथापदस्य विरोधात् ।

**भास्कराचार्यास्तु**, उभयथेत्यस्य सुकृतनिवृत्त्या दुष्कृतनिवृत्त्या चेत्यर्थमाहुः । पूर्वव्याख्यानादिदमेव समीचीनम् । सूत्रस्थपदसङ्गतेः ।

**वाचस्पतिमिश्रास्तु**, यदि पुण्यमपि निवर्तते, किमर्था तर्हि गतिरिति भास्कराचार्योक्तमवतारणं सूत्रव्याख्यानं चानूद्याहुः । तैरनाशङ्कनीयमेवाशङ्कितम्, विद्याक्षिप्तायां हि गतौ केयमाशङ्का, यदि क्षीणसुकृतः किमर्थमयं यातीति । न हीयं सुकृतनिबन्धना गतिः, अपि तु विद्यानिबन्धनेति । तस्माद्वृद्धोक्तमेवोपवर्णनं साध्विति । तन्मन्दम् । विद्याक्षिप्ताया एव गतेरर्थवत्त्वस्य सूत्रे प्रकारद्वयेन समर्थितत्वात् । तत्र प्रकाराकाङ्क्षायामर्थशब्दस्य पञ्चस्वर्थेषु निवृत्तेरप्युक्तत्वात् तदभिप्रेत्य द्वेधा निवृत्त्यार्थवत्त्वव्याख्याने दोषाभावात् । तद्व्याख्येयवृद्धोक्तौ त्वर्थशब्दस्य प्रयोजनार्थताया निवृत्त्यर्थताया वा उपगमेऽप्युभयथेति पदासामञ्जस्यं दुर्वारमेव, अतो वृथायमाडम्बरः । किञ्च । मतद्वयेपि देहवियोगकाल एव द्विविधकर्मक्षयस्याङ्गीकृतत्वात् ब्रह्मणश्च व्यापकत्वाद्गतिवैयर्थ्यं तु मतद्वयेपि नापैति ।

यत्पुनर्भास्कराचार्यैः पर्यङ्कस्थस्य ब्रह्मणः कार्यब्रह्मत्वमुपगतम् । तदपि मन्दम् । हेत्वदर्शनात् । नच साकारत्वमेव हेतुरिति वाच्यम् । तस्य कार्यासाधारणतायाः प्रागेव बहुधास्माभिर्निरस्तत्वेनाभिमानमात्रत्वात् । नच 'यजूदरः सामशिरा' इति श्लोकरूपया तत्स्वरूपसंग्राहकश्रु-

रश्मिः ।

निरूपणेन स्मृतविरुद्धधर्मौ निरूपितौ । तत्र श्रीनिकेतत्वेन लक्ष्मीसहस्रलीलाभिः सेव्यमान उक्तः, तस्य शृङ्गाररसरूपत्वाच्छ्यामावदातत्वं भक्त्यर्थं सौत्रदृष्टान्तेन प्रतिपादितम् । आध्यानाय द्वितीयस्कन्धे इदं रूपं द्रष्टव्यम् । **अर्थवत्त्वं** पुण्यपापहानवत्त्वम् । उभाववयवौ यस्येत्युभयं तस्मात्प्रकारे थाल् । एतदाह **विभागेनेति** । **एकस्येति** । क्वचिन्नेत्युक्तस्य । सूत्रव्याख्यानं पूर्वोक्तम् । **अनाशङ्कनीय**मिति । यदि पुण्यमपि निवर्तते, किमर्था तर्हि गतिरित्यनाशङ्कनीयम् । **विद्याक्षिप्तेति** । विद्याप्रेरितायाम् । **आशङ्केति** । पुण्यप्रेरितत्वाशङ्का । **यातीतीति** । आशङ्केति बोध्यम् । सुकृतेन निबध्यते साध्यसाधनभावसम्बन्धेनेति सुकृतनिबन्धना । 'शाङ्करव्याख्यानापेक्षयेदमेव समीचीन'मित्युक्तत्वादधोक्षजत्वं विस्मृत्य 'पुण्यः पुण्येन भवती'ति श्रुत्या पुण्यरूपभगवत्प्राप्तिः पुण्येन भवतीत्याशयेनाहुः **विद्याक्षिप्ताया** इति । सुकृतनिबन्धनाया व्यवच्छेदक एवकारः । **अर्थवत्त्वस्येति** । व्याख्यातमिदं पदम् । **तत्र प्रकारेति** । सुकृतदुष्कृतप्रकारद्वये । प्रकारः निवृत्तसुकृतो निवृत्तदुष्कृत इत्यत्र निवृत्तत्वं निवृत्तिः । **पञ्चस्विति** । 'अर्थोऽभिधेयरैवस्त्वि'त्युक्तेषु । **अर्थवत्त्वेति** । अर्थवत्त्वमर्थ एव निवृत्तिरित्यर्थस्तद्व्याख्याने । **दुर्वारमिति** । एतदुपपादितं पूर्वम् । **आडम्बरः** समारम्भः । **गतीति** । व्यापकस्य प्राप्तत्वात्तत्प्राप्त्यर्थकगतिवैयर्थ्यम् । **नापैतीति** । न आ अप एतीति छेदः । **पर्यङ्कस्थस्येति** । इयं प्रागुक्ता । पर्यङ्कविद्यायां कार्यब्रह्मप्राप्तिरित्यत्र तद्भाष्यम् । **तस्येति** । साकारत्वस्य । **प्रागेवेति** । सर्ववेदान्तप्रत्ययाधिकरण एव । **न चेति** । 'यजूदरः सामशिरा असावृङ्मूर्तिरव्ययः । स च ब्रह्मेति

भाष्यप्रकाशः ।

त्योक्तं वेदरूपत्वमेव हेतुरिति युक्तम् । तदा मनोमयत्वेन भगवद्धर्मरूपतयापि नित्यत्वानपायात् । नच द्वैतापत्तिः । तस्या अपि प्रागेवाभेदस्वरूपविचार एव निरस्तत्वात् । उपासकस्य लिङ्गशरीरवत्त्वं वेदात्मकस्थूलशरीरवत्त्वं च युक्तमिति बोध्यम् ।

रामानुजाचार्यास्तु, संपरायाधिकरणं पञ्चसूत्रमङ्गीकृत्य, तत्र देहपातसमय एव यावत्कर्मक्षयं सूत्रद्वयेन व्याख्याय, गतिसूत्रं पूर्वपक्षत्वेन व्याकुर्वन्ति । गतेर्देवयानगतिश्रुतेः । उभयथा अर्थवत्त्वं सुकृतदुष्कृतयोरेकदेशस्य देहवियोगकाले हानिः शेषस्य पश्चादित्युभयथा कर्मक्षये सत्येवार्थवत्त्वम्, अन्यथा हि विरोधः । देहत्यागसमय एव सर्वकर्मक्षये सूक्ष्मदेहस्यापि नाशात् केवलस्य गमनं तु विरुध्येतेति । एतस्योत्तरमुपपन्नसूत्रे । उपपन्न एवोत्क्रान्तिकाले सर्वकर्मक्षयः । कथम् । तल्लक्षणार्थोपलब्धेः । 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते, स तत्र पर्येति जक्षन् क्रीडन् रममाण' इत्यादिषु क्षीणकर्मण आविर्भूतस्वरूपस्यापि देहसम्बन्धाख्यस्यार्थस्योपलब्धेः । विद्या हि स्वयं सूक्ष्मशरीरस्यानारम्भिकापि सर्वकर्मणां निरवशेषक्षयेपि स्वफलभूतब्रह्मप्राप्तिप्रदानाय देवयानेन पथा गमयितुं सूक्ष्मशरीरं स्थापयति, यथा लोके केनचित् तडागादिके कृते, तस्य पुंसो नाशोत्तरमप्यन्ये तडागादिकमशिथिलं कृत्वा स्थापयन्ति, तद्वदित्येवं व्याकुर्वन्ति । अन्यापेक्षया इदमेवातिसुन्दरम् । अस्मन्मते तु यदेतत्र विचारितं तत् 'छन्दत' इति सूत्रे भगवदिच्छायाः कारणत्वोक्त्या यादृश्येच्छया यो यादृगधिकारी तस्य तस्य तदा तदा कर्मक्षयस्तया तया विधयेति न कुत्रापि कल्पना, न वा श्रुतिविरोध इत्यस्य निर्णयस्यार्थादेव सिद्धिरिति बोध्यम् ॥ ३० ॥ इत्यष्टममुपपन्नाधिकरणम् ॥ ८ ॥

रश्मिः ।

विज्ञेय ऋषिब्रह्मोभयोर्महा'निति श्लोकः । तदेति । पर्यङ्कस्थदशायाम् । नित्यत्वेति । वेदनित्यत्वानपायात् । प्रागेवेति । पादारम्भे 'न वा प्रकरणभेदादि'ति सूत्रभाष्यादौ, 'सर्वाभेदादन्यत्रेमे' इति सूत्रभाष्ये च । तर्हि 'यजूदर' इत्यस्य का व्यवस्थेत्यत आहुः उपासकस्येति । श्यामावदातत्वमुक्तं स चाकाशशरीरः आकाशस्य 'भूतानां छिद्रदातृत्वं बहिरन्तरमेव चे'ति लक्षणा 'छिद्रा व्योम्नीव चेतना' इति चेतनच्छिद्रकाः उपासका भवन्ति, तत्रैकस्योपासकस्य । 'स एष जीवो विवरप्रसूति'रिति श्लोकार्थमाहुः लिङ्गशरीरेति । युक्तमिति । अत्रैवं प्रतिभाति । 'तस्माद्वा एतस्मादात्मन आकाशः संभूत' इत्यादिश्रुत्याऽत्रिवृत्कृतभूतव'च्छिद्रा व्योम्नीव चेतना' इति श्याचार्योक्तेरात्माकाशरूपजीवाद्वायुः पञ्चधा प्राणात्मा वायोरग्निरौदर्यादिः । अग्नेरापः शरीरे दृश्यमानाः । ताभ्यः पृथिवी अस्थिरूपा । 'यत्कठिनं सा पृथिवी'ति श्रुतेः । तस्या ओषधयः केशाः तेभ्योऽन्नं लिक्षाः । तस्मात्पुरुषो यूका इति । पुरुषोऽन्नरसमय इति । सकलसाधारणं कर्मजन्यं युक्तम् । कारणे तथा दर्शनात् । नित्यलीलास्थानां तु शरीरे भक्तमनोरथेनात्मजन्ये, न तु कर्मजन्ये । श्रुतिरूपाणामिच्छा तु 'भद्रं कर्णेभिः शृणुयाम देवा' इति श्रुत्युक्तेन्द्रियैः शरीरेण चेति तदुभयविषयिणीति नित्यलीलास्थभक्तानां लिङ्गशरीरवत्त्वं वेदात्मकस्थूलशरीरवत्त्वं च युक्तमिति बोध्यमित्यर्थः । सूक्ष्मदेहस्येति । कर्मजन्यस्य । केवलस्येति । जीवस्य । स्वयमिति । कर्मपूर्वप्रज्ञारहिता । 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चे'ति बृहदारण्यकात् । तडागादिकमिति । केनचित्कृतमेव । श्रुतिविरोध इति । श्रुतीनां पुण्यपापसन्निधौ देवयानपथि श्रुतिः । 'पुण्यः पुण्येन भवती'ति श्रुतिः । 'यजूदर' इति श्रुतिः । 'परं ज्योतिरुपसम्पद्ये'ति श्रुतिः । एतासां विरोधः । सिद्धिरिति । असन्दिग्धत्वे पर्यवसानमिति भावः ॥ ३० ॥ इत्यष्टममुपपन्नाधिकरणम् ॥ ८ ॥

अनियमः सर्वासमाविरोधः शब्दानुमानाभ्याम् ॥ ३१ ॥ (३-३-९)

अथर्वणोपनिषत्सु पठ्यते 'परब्रह्मैतत् यो धारयति रसति भजति ध्यायते प्रेमति शृणोति श्रावयत्युपदिशत्याचरति सोऽमृतो भवति सोऽमृतो भवती'ति। तत्र धारणादीनां समुदितानामेवामृतसाधकत्वम्, उत प्रत्येकमपीति भवति संशयः। अत्र धारणादिसाधनकलापमुक्त्वा फलमुच्यत इति समुदितानामेव मुक्तिसाधकत्वम्। उपलक्षणं चैतत्। श्रवणादिनवविधभक्तीनामप्येवमेव तथात्वमिति पूर्वपक्षे, सिद्धान्तमाह अनियम इति। समुदितानामेव तेषां फलसाधकत्वमिति नियमो नास्तीत्यर्थः। अत्रोपपत्तिमाह सर्वासामविरोध इति। 'चिन्तयँश्चेतसा कृष्णं मुक्तो भवति संसृते'रिति श्रुत्या चिन्तनमात्रस्य तथात्व-

भाष्यप्रकाशः।

अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् ॥ ३१ ॥ एवं पुष्टिभक्तेः फलरूपत्वं तादृशभक्तस्य स्वरूपं च निरूप्य ततो न्यूनाया अपि मर्यादाभक्तेर्ज्ञानमार्गादुत्कर्षं विषयोत्कर्षात् बोधयितुं मर्यादाभक्तिसाध्यायां मुक्तौ सर्वा भक्तयः सन्निपतन्ति, किं वा प्रत्येकमेवेतरनिरपेक्षाः मुक्तिं साधयन्तीति विचारयितुमधिकरणमारभत इत्याशयेन विषयादिकमाहुः अथर्वणेत्यादि। अत्र सर्वाङ्गे मनोधारणं करोतीति धारयतिपदार्थः। रसति कीर्तयति जपतीत्यर्थः। भजति शारीरादिना सेवते। ध्यायते एकाङ्गं लीलां वा चिन्तयति। प्रेमति युधिष्ठिरादिवत् स्निह्यति। शृणोति श्रावयतीति प्रकटार्थम्। उपदिशति मन्त्रद्वारा बोधयति। आचरति भगवद्धर्मानिति शेषः। एवमत्र नवोक्ताः। अयं च शाखान्तरीयः पाठः। प्रसिद्धपाठे तु 'ध्यायति रसति भजती'ति त्रयमेवोच्यते, तदाप्युपलक्षणविधया अन्या अन्यत्रोक्ता अपि समायान्ति। संशयपूर्वपक्षौ स्पष्टौ। सिद्धान्तं वक्तुं सूत्रं व्याकुर्वन्ति समुदितानामित्यादि। अत्रेति। अनियमे।

रश्मिः।

अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् ॥ ३१ ॥ फलभक्तौ मुक्तिनैरपेक्ष्यमुक्तम्, तदग्रे मुक्तिविचारं विरुणद्धीत्यालोच्याहुः एवं पुष्टीति। गतिसूत्रे उक्तायाः उपपन्नसूत्रे फलरूपत्वम्। स्वरूपं दासदासीसुहृद्रूपम्। मर्यादेति। गतिसूत्रोक्ता या मर्यादाभक्तिस्तत्साध्यायाम्। इतरेति। स्वेतरभक्तिनिरपेक्षाः एकैकेत्यर्थः। धारयतीति। धारणां करोतीत्यर्थः। कीर्तयतीति। 'रस शब्द' इति धातुपाठात्। मानसं कीर्तनमित्याहुः जपतीति। 'जप मानसे'। सेवत इति। 'भज सेवायाम्'। एकाङ्गमिति। ध्यायतीत्यस्य ध्यानं करोतीत्यर्थाद्ध्यानस्वरूपमुक्तम्, 'वैकुण्ठलीलाभिध्यान'मिति तृतीयस्कन्धादाहुः लीलां वेति। 'ध्यै चिन्ताया'मिति धातुपाठादाहुः चिन्तयतीति। भगवदिति। मध्यमाधिकारे भगवद्धर्माचरणम्। अन्या इति। भक्तयः। अन्यत्रेति। श्रुत्यन्तरेषु। संशयेति। पूर्वपक्षस्तु अत्रेत्यादि। तथात्वं फलसाधकत्वम्। एवमेवेति। धारणादिकलापवदेव समुदितानां तथात्वं फलसाधकत्वम्। एवाहेति। केवलेति भावविशेषणादेवकारः। तथाच पुष्टि-

१ तथात्वम्। २ तत्र।
४० ब्र० सू० १०

मुच्यते । 'पञ्चपर्वीं जप'मित्याद्युक्त्वा 'ब्रह्म सम्पद्यते ब्रह्म सम्पद्यत' इति श्रुत्या कीर्तनमात्रस्य तथात्वमुच्यते । तथाच प्रत्येकपक्ष एव सर्वासां श्रुतीनामविरोधः स्यात् । एवं सति 'परब्रह्मैतत् यो धारयती'त्यादिषु 'सोऽमृतो भवती'ति पदं प्रत्येकं सम्बध्यत इति ज्ञेयम् ।

ननु यथा दण्डादीनां प्रत्येकं घटहेतुत्वोक्तावपि नैकस्यैव तज्जनकत्वम्, एवमत्राप्येकैकस्य चिन्तनादेस्तथात्वोक्तावपि फलसाधकत्वं समुदितानामेव तेषामिति चेत् । मैवम् । योऽर्थो यत्प्रमाणैकसमधिगम्यः, स तेन प्रमाणेन यथा सिध्यति, तथा मन्तव्यः । दण्डादेस्तथात्वं प्रत्यक्षेण गृह्यत इति तत्र तथास्तु, प्रकृते तु तेषां तथात्वमलौकिकशब्दैकसमधिगम्यम् । श्रुतिस्तूक्तैव । नचोक्तन्यायः श्रुतिष्वपि तात्पर्यनिर्णायको भवतीति वाच्यम् । अलौकिकेऽर्थे लौकिकस्यासामर्थ्यात् । अन्यथा ब्रह्मणा मनसैव प्रजाजनने निषेकादिकमपि कल्प्येत । स्मृतिरपि 'केवलेन हि भावेन गोप्यो गावः खगा मृगाः । येऽन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसा ।' 'एतावान् सांख्ययोगाभ्या'मित्युपक्रम्य, 'अन्ते नारायणस्मृति'रित्यादिरूपैवमेवाह । इममेवार्थं हृदि कृत्वाह सूत्रकारः शब्दानुमानाभ्यामिति । श्रुतिस्मृतिभ्यामित्यर्थः । ते चोक्ते ।

एतेन सूत्रकारस्यान्योऽप्यनुशयोऽस्तीति भाति । यत्रोक्तसाधनस्तोमसम्पत्तिरेकस्मिन् भक्तेऽस्ति, तत्रैकेनैव मुक्तावितरसाधनत्वबोधकश्रुतिविरोधाच्छ्रवणकीर्तनस्मरणानां मुक्त्यव्यवहितपूर्वक्षणे युगपदपि सम्भवादन्यथासिद्धिसम्भवे विनिगमकाभावादेकेनैव मुक्तिरिति न नियमः । अतः प्रत्येकसाधकत्वबोधिकानां

भाष्यप्रकाशः ।

किञ्चिदाशङ्क्य परिहरन्ति नन्वित्यादि । एवमेवाहेत्यन्तम् । एवमेवाहेति । प्रत्येकपक्षमेवाह । एवं प्रत्येकपक्षं निर्णीय यत्रासां समुदायस्तत्र कस्य कारणतेत्याकाङ्क्षायां तामप्येतेन पूरयतीत्याहुः एतेनेत्यादि । एतेनेति । अनियम इत्यादिकथनेन । तमेवानुशयं व्युत्पादयन्ति यत्रोक्तेत्यादि । युगपदपि सम्भवादित्ययं अन्यथासिद्धिसम्भवे हेतुः । विनिगमकाभावादिति । त्रयाणां मध्ये कस्यान्यथासिद्धिरित्यत्र विनिगमकाभावात् । अत इति । अनियमात् । ननु प्रत्येकपक्षे भक्तिकारणत्वश्रुतीनां मिथोविरोधाद्भक्तीनां न प्रत्येकं कारणत्वम्, तथा समुदितानामपि कारणत्वं मास्तु, ज्ञान एव तदुपक्षयस्य वक्तुं शक्यत्वात्, श्रुतीनां चोपचारेण नेतुं शक्यत्वादित्येवं तर्ह्येकेत्यादिना आशङ्क्य, तत्र भक्तीनां मुक्त्यकारणत्वे

रश्मिः ।

भावेन मर्यादाभावकैवल्यवदत्रापि प्रत्येकं कैवल्यमित्यर्थः । तामिति । आकाङ्क्षाम् । अनियम इत्यादीति । आदिना पदद्वयम् । अन्यथासिद्धीति । श्रवणजन्यमुक्तिं प्रति कारणतां ज्ञात्वैव समुदितजन्यमुक्तिं प्रति कार(ण)ताज्ञानादन्यथासिद्धिः । त्रयाणामिति । एकमुक्तिकारणानाम् । मिथ इति । तृणारणिमणिन्यायोऽत्र न, किन्तु 'विरोधे विकल्प' इति मनुस्मृतिरपि न, किन्तु मुक्तीच्छुभिः तदर्थं का भक्तिरिति विरोधो भक्तिसहानवस्थानलक्षणस्तस्मात् । न प्रतीति । सुन्दोपसुन्दन्यायेनाभावात् । ज्ञान एवेति । 'भक्त्या विमुच्यते'त्यत्र भक्त्येति करणतृतीयानिर्वाहाय तथा । 'भक्त्या जानाति चाव्यय'मिति श्रुतेरेवकारः । हेतुतृतीयाज्ञानं फलात्मकमिति श्रुतिविरोधमाशङ्क्याहुः श्रुतीनामिति । उप-

**सर्वासां श्रुतीनां मिथोऽविरोधः । तर्ह्येकत्र तथात्वे सर्वत्रैव तथास्त्वित्याशङ्क्य तत्र बाधकमाह शब्दानुमानाभ्यामिति । पूर्ववत् । तत्र प्रत्येकमपि मुक्तिहेतुत्वमुच्यत इति न तथेत्यर्थः । यत्र प्रत्येकमपि तथात्वम्, तत्र किमु वक्तव्यं समुदितानां तथात्व इति भावः । तेन श्लिष्टः प्रयोगोऽयमिति ज्ञेयम् ॥ ३१ ॥**

**इति तृतीयाध्याये तृतीयपादे नवममनियमाधिकरणम् ॥ ९ ॥**

**यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३२ ॥ (३-३-१०)**

**पूर्वं मुमुक्षुभिर्मुक्तिसाधनत्वेन क्रियमाणानां भगवद्धर्माणां मुक्तिसाधनप्रकारो विचारितः, अधुना तु भगवान् स्वविचारितकार्यं लौकिकैश्वर्याद्यशक्यं ज्ञात्वा, स्वैश्वर्यादिकं दत्वा, येन जीवेन तत् कारयति, स जीवस्तैर्धर्मैर्मुक्तो भवति, न वेति विचार्यते ।**

भाष्यप्रकाशः ।

बाधकमाहेत्यर्थः । तत्रेति । श्रुतौ स्मृतौ च । तथाच श्रुतेरुपचारसहिष्णुत्वेपि स्मृतौ 'केवलेन हि भावेने'ति केवलपदान्नोपचारसहिष्णुत्वम्, अतस्तदुपबृंहितश्रुतावपि यथाश्रुतमेवादरणीयमित्यर्थः । ननु तर्हि पूर्वं विकल्पितस्य दोषस्य कथं परिहार इत्यत आहुः यत्र प्रत्येकमित्यादि । तथाच तादृशस्थले सर्वासां भक्तीनां सन्निपातात् फलशैघ्र्यं बोध्यमित्यर्थः । श्लिष्ट इति । 'अनियम' इत्यनेन एकमेव कर्तव्यम्, न द्वयं त्रयमित्यस्याप्यनियमस्य संग्रहान्नानार्थसंश्रय इत्यर्थः । अत्र भगवदभिज्ञानद्वारा मुक्तिजनिकानां भक्तीनां विचारेण ताभिर्ज्ञेयस्य भगवतो निर्मलत्वबोधकं विरजमिति विशेषणं प्रतिपादितं बोध्यम् ।

अन्ये तु अर्चिरादिगतिः सर्वासु विद्यासु, उत यत्र श्रूयते तत्रेति संशये, सर्वत्रेति सिद्धान्तयन्ति । अस्मिन् सिद्धान्ते तु यत्रातिकृपा, तत्र सद्योमुक्तिः । इतरत्र त्वर्चिरादिगतिरिति विशेषो गतिसूत्रादेव सिध्यतीति बोध्यम् ॥ ३१ ॥ इति **नवममनियमाधिकरणम्** ॥ ९ ॥

**यावदधिकारमवस्थितिराधिकारिकाणाम्** ॥ ३२ ॥ पूर्वाधिकरणसङ्गतिं वदन्तोऽधिकरणप्रयोजनमाहुः पूर्वमित्यादि । मुक्तो भवति, न वेति । सायुज्यं प्राप्नोति, न वा । तथाच यदि तैः प्राप्नोति, तदा भक्तित्वम्, न मुक्तिजनकतावच्छेदकम् । तेषु भक्तित्वाभावात् ।

रश्मिः ।

चारेणेति । हेतुतृतीयायाः करणे उपचारः फलात्मकज्ञानस्य साधनज्ञान उपचारः तेन । पूर्वमिति । भाष्येऽन्यानुशयपक्षे विकल्पितस्य समुदिताभिर्मुक्तिः श्रुतीनां मिथो विरोध इत्येकैकस्या मुक्तिर्वेति विकल्पितप्रायस्य दोषस्य साधनाज्ञानस्य संशयग्रन्थोक्तस्य वा साधनाज्ञानस्य । **यत्र प्रत्येकमित्यादीति । तथात्वमिति** । तृणारणिमणिन्यायेन मुक्तिसाधकत्वम् । **भाव इति** । कैमुतिकन्याये भावः । **एकमेवेति** । भजनम् । **संग्रहात्** सूचनात् । अनियमादिपदद्वये नानार्थसंश्रय इत्यर्थः । 'भक्त्या मामभी'तिवाक्यादाहुः **अत्रेति** । **विरजमिति** । 'प्रवर्तते यत्र रजस्तम' इति द्वितीयस्कन्धनवमाध्यायवाक्यान्निर्मलपदसामानाधिकरण्यम् । **विशेषणमिति** । एकमित्यस्य विशेषणम् । 'अद्राक्षमेकमासीन'मिति तृतीयस्कन्धवाक्ये । **अस्मिन्निति** । प्रत्यक्षेऽस्मत्सिद्धान्ते । **गतिसूत्रादिति** । भक्तिमार्गस्य भगवद्वशीकारकत्वाद्भक्तेच्छया यत्रातिकृपारूपलीला, तत्र सद्योमुक्तिरित्यादि सिध्यतीत्यर्थः ॥ ३१ ॥ **इति नवममनियमाधिकरणम्** ॥ ९ ॥

**यावदधिकारमवस्थितिराधिकारिकाणाम्** ॥ ३२ ॥ **न मुक्तीति** । किंतु भगवद्धर्मत्वं

१ (ननु प्रत्येकपक्ष इत्यादिनोक्तस्योभयोः कारणत्वाभावस्य) इतः पूर्वमेव सिद्धान्तर्गतम् ।

तत्र जीवकृतभगवद्विषयकधर्माणां यत्र तत्साधकत्वम्, तत्र भगवदीयानां धर्माणां तत्साधकत्वं सुतरामेव । तेषां स्वकृत्यसाध्यत्वेनाविधेयत्वात्तत्साधनेष्व- प्रवेशोपीति सन्देहे निर्णयमाह यावदित्यादि ।

यस्मिन् जीवे यत्कार्यसाधनार्थमधिकारो भगवता दत्तः, तत्कार्यसाधनक्ष- मास्तस्मिन् ये स्वधर्मा भगवता स्थापिताः, त आधिकारिका इत्युच्यन्ते । तत्का- र्यसम्पत्तिरेव तदधिकारप्रयोजनमिति तावदेव तेषां तस्मिन् स्थितिरित्यर्थः । एवं सति तत्सम्पत्तौ सोऽपि निवर्तत इति तत्सम्बन्धिनो धर्मा अपि निवर्तन्त इति मुक्तिपर्यन्तं न तेषां व्यापारसम्भवः । भगवता तथैव विचारितत्वात् ।

भाष्यप्रकाशः ।

यदि न प्राप्नोति, तदा भगवद्धर्मत्वमपि न तथा । अत्राद्ये पूर्वोक्तश्रुतिस्मृतिविरोधः, द्वितीये भगवद्धर्माणां मुक्तिप्रतिबन्धकत्वप्रसङ्ग इत्यतो विचार्यत इत्यर्थः । एवञ्च ते भगवद्धर्मा विषयः । मुक्तिहेतवो न वेति संशयः । ते च 'यदादित्यगतं तेज' इत्यादिवाक्योक्ताः प्रतर्दनसंवाद इन्द्रेण स्वस्मिन्नुक्तास्तादृशा अन्यत्रापि ज्ञेयाः ।

पूर्वपक्षमाहुः तत्रेत्यादि । अत्र द्वौ पूर्वपक्षौ । तत्र भगवान् यदा स्वकार्यकर्तृत्वेन अङ्गी- करोति, तदा तान् धर्मान् ददातीति वरणहेतुकत्वात्तैरपि मुक्तिरित्येकः सुतरामित्यन्तेनोक्तः । तादर्थ्येन विहितत्वाभावान्नेत्यपरः अप्रवेशोपीत्यन्तेनोक्तः । एवं सत्युभयत्रापि युक्तिस- द्भावात् सन्देह एव पर्यवस्यतीत्यतः सन्देहे निर्णयमाहेत्युक्तम् ।

सिद्धान्तं वक्तुं सूत्रं व्याकुर्वन्ति यस्मिन्नित्यादि । भवत्वेवम्, तथाप्युक्तसन्देहस्य कथं निवृत्तिरित्यतस्तदर्थं सूत्रतात्पर्यं स्फुटीकुर्वन्ति एवं सतीत्यादि । कार्यसम्पादनाय भगवता द- त्तानां धर्माणां यावत्कार्यमवस्थाने सति कार्यसम्पत्तावधिकारोपि निवर्तत इति तन्निवृत्तौ ते धर्मा अपि निवर्तन्ते । 'लोकवत्तु लीले'ति न्यायात् । अतो निवृत्तत्वादेव न मुक्तिपर्यन्तं तेषां व्यापारस- म्भवः । नच तन्निवृत्तौ न्यायमात्रमेव मानम्, अपि तु 'स्थानं पुरन्दराद्धृत्वा बलये दास्यतीश्वर' इत्यादीनि वाक्यान्यपि । अतो भगवता तेषां कार्यार्थताया एव विचारितत्वाद्वरणहेतुकत्वेपि नै- तेषां मुक्तिहेतुत्वम् । अतो भक्त्यभावे तेषां प्रकृतौ लयः । यदि तेऽधिकारिणो भक्ताः, तदाधि-

रश्मिः ।

मुक्तिजनकतावच्छेदकम् । न तथेति । मुक्तिजनकतावच्छेदकम् । आद्य इति । प्राप्तिपक्षे । द्वितीय इति । अप्राप्तिपक्षे । स्वस्मिन्निति । 'मामुपास्स्वे'ति । अन्यत्रापीति । भगवान् शेषः भगवान् व्यासः भगवानग्निः भगवान्मारुत इत्यत्रापि । अङ्गीकरोतीति । 'यमेवैष वृणुत' इति श्रुतेः । ददातीति । 'तस्यैष आत्मा विवृणुते तनुं स्वा'मित्यत्र श्रुतावात्मनोप्यात्मा स्वां तनुं विवृणुते वृतभक्तात्मानं स्वां तनुं स्वतनुत्वेन प्रकाशयति । विशेषेणाङ्गीकुरुत इति वार्थः । 'आचार्यचैत्यवपुषा स्वगतिं व्यनक्ती'ति वाक्यात् । विहितत्वेति । भगवद्धर्माणां तथा । लोकवदिति । यथा लोके पाठको भक्तिवशाद्भगवद्गुणवान् तदा न स पाठकः, पाठकत्वस्य गतत्वात्, किंतु भक्त इत्युच्यते । भगवद्भावाच्च्युतौ तु पाठक इत्युच्यते तद्वत् । भगवतेति भाष्यं विवरीतुमाहुः नच तदिति । विवृण्वन्ति स्म भगवतेति । तेषामिति । भगवद्धर्माणां कार्यं भगवति व्यासे वेदशाखाविभागः, आचार्येषु मार्गप्रकटनम् । तदर्थतायाः । तावत्कार्यदर्शनादेवकारः । वरणहेतुकत्वं भगवद्धर्मेषु । प्रकाशाश्रयन्यायेन धर्माणां प्रमेयबलमाशङ्क्याहुः नैतेषामिति । प्रमाणाभावादिति भावः । प्रकृताविति ।

मुक्तिस्तु भक्त्यैवेति भावः । यत्र 'ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पद'मिति वाक्यम्, तत्त्वाकल्पान्तं येषामधिकारः सप्तर्षिप्रभृतीनां तद्विषयकमिति ज्ञेयम् । अन्यथा भगवद्दत्ताधिकारसामर्थ्यस्य भरतस्य स्वाधिकारसमाप्तौ मुक्तिं न वदेत् । 'कृतात्मानः' इति

भाष्यप्रकाशः ।

कारसमाप्त्यनन्तरं भक्तिः फलोन्मुखीभवतीति न भक्तित्वस्य मुक्तिजनकतावच्छेदकत्वहानिरिति मुक्तिस्तु भक्त्यैवेति भाव इत्यर्थः । ननु यद्याधिकारिकाणां न मुक्तिपर्यन्तो व्यापारः, तर्हि 'ब्रह्मणा सह ते सर्वे' इति वाक्ये अधिकारान्ते मुक्तिकथनं विरुद्धं स्यादित्यत आहुः यत्रेत्यादि । तथाच तद्भक्तेस्तदानीमेव फलोन्मुख्यस्य भगवता विचारितत्वात्तदापि तथैव तन्मुक्तिः, न त्वाधिकारिकैर्गुणैरित्यदोषः । अत्र गमकमाहुः अन्यथेत्यादि । तथाच यद्याधिकारिकैरेव गुणैर्मुक्तिः स्यात्, तदा 'स भुक्तभोगां त्यक्त्वेमां निर्गतस्तपसा हरिम् । उपासीनस्तत्पदवीं लेभे वै जन्मभिस्त्रिभि'रिति तादृशोपासनया तथा मुक्तिं न वदेत् । अत एतदनुरोधेन पूर्वोक्तवाक्येपि साधनान्तरेणैव मुक्तिर्बोध्येत्यर्थः । तत्रापि गमकमाहुः कृतेत्यादि । तथाचात्रापि तथेत्यर्थः । एतेन प्रशान्तारुणलोचनत्वं विचारितम् । प्रशान्तं ज्ञानम्, अरुणं क्रिया, रजोरूपत्वात् । तदुभयविचारात्मकं लोचनम् । तेषु तेष्वधिकारिषु ज्ञानक्रिययोः कार्यार्थं प्रदानादिति बोध्यम् ।

अन्ये त्वत्र अपान्तरतमवशिष्ठप्रभृतीनां पूर्णज्ञानवतां दृष्टपरतत्त्वानामपि व्यासमैत्रावरुणादिरूपजन्मान्तरदर्शनाद्विद्यया न मुक्तिहेतुत्वमित्याशङ्क्य, तन्निरासायाधिकारस्य प्रतिबन्धकत्वात्तत्समाप्तौ पूर्वया विद्ययैव मुक्तिमाहुः ।

रश्मिः ।

नात्र भगवद्धर्मेषु तेषां लय उक्तः । प्रकृतेः स्वरूपात्मिकायाः प्रणवत्वेन नवीनभावजनकत्वात्तत्र लयेपि भगवद्धर्मत्वाभावप्रसङ्गाभावात् । 'शब्दार्थरसरूपधृ'गिति द्वादशस्कन्धात् । ॐकारस्य शब्दत्वात् । यत्रेत्यादीति । सप्तर्षीति । प्रभृतिशब्देन चतुर्दशमन्वन्तराणि दिवाभिमानिदेवता(नि) च ग्राह्याणि । तदानीमिति । अधिकारसमाप्तिकाल एव । पूर्वोक्तेति । 'ब्रह्मणा सह ते सर्वे' इति वाक्ये 'स भुक्तभोगा'मित्यस्मिन्वाक्ये वा साधनान्तरेण भक्त्या । उपासनेन वा । तथेति । साधनान्तरेणैव व्यापिवैकुण्ठे प्रवेश उच्यते, नत्वाधिकारिकगुणैरित्यर्थः । प्रशान्तेति । सूत्रेऽधिकारशब्दात्साधनाध्याये साधनानां पादे भगवद्धर्माणां विचारादधिकार उत्तमोत्तमः साधनं भक्त्यादिरध्यायार्थः भगवद्धर्मा आनन्दमयादेः तत्र 'आनन्दादयः प्रधानस्यो'क्ताः अन्येऽधिकारशब्दात्तृतीयस्कन्धीयाधिकारप्रकरणस्मरणात्' आध्यानाये'ति सूत्रस्मारितध्यानादिविषयाणां तृतीयस्कन्धादाहुः प्रशान्तेति । तेन पूर्वत्रोत्तरत्र च तृतीयवाक्योक्तधर्माणामान्यत्रिकाणां भगवत्परत्वविचार इति पादार्थस्य नाव्याप्तिः । तृतीयवाक्यानि तु 'अद्राक्षमेकमासीनं विचिन्वन् दयितं पतिम् । श्रीनिकेतं सरस्वत्यां कृतकेतमकेतनम् । श्यामावदातं विरजं प्रशान्तारुणलोचनम्' इति षड्विशेषणानि विचारितानि । षष्ठी कला च । अन्यास्तत्रतत्र वक्ष्यन्ते । तेषु तेष्विति । भगवद्व्यासाचार्यादिषु ज्ञानकार्यार्थं प्रदानं ज्ञानस्य । एवं क्रियावतारेषु क्रियाकार्यं प्रथमसुबोधिन्यां स्पष्टम् । अपान्तरतमेति वेदाचार्यनाम । स व्यासो जातः । मैत्रावरुणौ वशिष्ठपितरौ । आदिना मनस्तो नारदः । व्यासमैत्रावरुणादिभी रूप्यते व्यवह्रियते तादृशं

पदात्तेषामपि भगवति कृतान्तःकरणानामेव परस्य भगवतः परपदे व्यापिवैकुण्ठे प्रवेश उच्यते, न त्वाधिकारिकगुणैः ॥ ३२ ॥

इति तृतीयाध्याये तृतीयपादे दशममाधिकारिकाधिकरणम् ॥ १० ॥

अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥३३॥ (३-३-११)

ननूक्ताथर्वणोपनिषद्वाक्यैर्भगवद्धर्माणां मुक्तिसाधनत्वमुच्यते, श्रुत्यन्तरेषु 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' 'ज्ञानादेव तु कैवल्यम्' 'तरति शोकमात्मवित्' 'ब्रह्म वेद ब्रह्मैव भवती'त्यादिषु ज्ञानस्यैव मुक्तिसाधनत्वमुच्यते, श्रुतित्वाविशेषादुभयोस्तथात्वे कारणवैजात्ये कार्यवैजात्यस्यावश्यक-

---

भाष्यप्रकाशः ।

सिद्धान्ते तु तादृशाधिकारस्य भगवद्दत्तत्वात्तादृशाज्ञापरिपालनस्याप्रमत्तत्वेन प्रकरणे तुष्टाद्भगवत एव कृतात्मत्वम्, ततो मुक्तिः, न तु तया विद्ययेति विशेषः । उचितं चैतत् । 'मोक्षमिच्छेज्जनार्दना'दिति वाक्याद्भगवतो मोक्षदातृत्वादिति । नच विद्ययेति युक्तम् । तस्याः सात्त्विकीत्वेन स्वप्नप्रबोधन्यायादविद्योपमर्दस्यापि सम्भवादिति । एवमेव ज्ञानपक्षेपि ज्ञेयम् । तेनात्र

भक्ताधिकारिणां मुक्तिरन्यथा प्रकृतौ लयः ।

पुनः सृष्टौ तथैश्वर्यं कर्मिणां पुनरागतिः ॥ १ ॥ इति सर्वोपि विषयः सूचितो ज्ञेयः ॥ ३२ ॥ इति दशममाधिकारिकाधिकरणम् ॥ १० ॥

अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३३ ॥ पूर्वाधिकरणे प्रासङ्गिकविचारेणापि भक्तेरेव मुक्तिकारणत्वे दृढीकृते तदर्थं भगवद्भक्तिरेवावश्यं कार्येति सिध्यति । तथा सति श्रुत्यन्तरे अक्षरज्ञानस्यापि मुक्तिकारणत्वश्रावणात् तस्य का गतिरित्याकाङ्क्षायां तत्प्रकारं विचारयितुमधिकरणमारभत इत्याशयेन विषयसंशयौ पूर्वपक्षकुक्षावेव निक्षिप्य सूत्रमवतारयन्ति नन्वित्यादि । भगवद्धर्माणामिति । भगवद्विषयाणां श्रवणादीनाम् । अत्र उच्यते इत्यन्तेन विषयसंशयतद्बीजान्युक्तानि । श्रुतित्वेत्यादिना पूर्वः पक्ष उच्यते । तथाचैवं वैजात्यस्यावश्यकत्वात्, 'भूयश्चान्ते विश्वमायानिवृत्ति'रिति श्वेताश्वतरश्रुत्या मुक्तेः

रश्मिः ।

जन्मान्तरं तस्य दर्शनात् । कृतात्मत्वमिति । 'ब्रह्मणा सह' इति वाक्योक्तमनूदितम् । स्वप्नप्रबोधेति । एतयोरुपमर्द्योपमर्दकभावः । उपमर्दस्येति । विद्यया सः । ज्ञानपक्ष इति । अज्ञानेन ज्ञानोपमर्दस्य सम्भवात् । अन्यथा भक्त्यभावे । प्रकृतौ स्वरूपे । ज्ञानित्वात् । अन्येषां तु प्रकृतौ । ज्ञानिनां सृष्टौ ज्ञानित्वेनैश्वर्यम् । सर्व इति । भक्तज्ञानिकर्मिविषयः । यावदधिस्थितिराधिकारिकाणां वाच्योर्थः । सूत्राणां विश्वतोमुखत्वात्सर्वो विषयः सूचितः ॥ ३२ ॥ इति दशममाधिकारिकाधिकरणम् ॥ १० ॥

अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३३ ॥ भक्तेरेवेति । पादार्थत्वाद्भगवद्धर्मत्वेन भक्त्युपादानमित्याशयेन भगवद्धर्माणामित्यस्यार्थोयम् । भगवान्भक्तिभक्तिमानि'तिवाक्याद्भगवद्धर्मो भक्तिः । 'तस्य प्रियमेव शिर' इति श्रुतेश्च । उच्यत इतीति । द्वितीयोच्यत इत्यन्तेन । पूर्वपक्षे विषयसंशयनिक्षेपपूर्वकं विषयसंशयतद्बीजानि वदन्त एव तावद्भाष्यं विवृण्वन्ति स्म तथाचेति । वैजात्यस्येति । आथर्वणोपनिषद्वाक्येषु श्रुत्यन्तरेतु मिलितेषु विषयेषु भक्ति-

त्वान्मुक्तौ च तदसम्भवात् 'भक्त्या मामभिजानाती'ति वाक्याद्भक्तौ ज्ञानस्यापि सम्भवाज्ज्ञानेनैव मुक्तिरिति पूर्वपक्षे, ज्ञानसाधनत्वनिरूपकश्रुतितात्पर्यं निरूपयन् पुरुषोत्तमप्राप्तेरेव मुक्तिपदवाच्यत्वात्तद्भजनस्यैव तत्प्रापकत्वमिति हृदि कृत्वाह अक्षरधियामित्यादि । तुशब्दः पूर्वपक्षनिरासे । वाजसनेयके श्रूयते

भाष्यप्रकाशः ।

सर्वमायानिवृत्त्यात्मकत्वेन तस्यां वैजात्यासम्भवात्, ज्ञानकारणत्वबोधकश्रुतेः सावधारणत्वेन भक्तिकारणत्वबोधिकायां च तदभावेन 'भक्त्या मामभी'ति गीतावाक्याद्भक्तौ ज्ञानस्य सम्भवात् 'गतेरर्थवत्त्व'मित्यतीताधिकरणे मर्यादामार्गे ज्ञानस्य मुक्तिसाधनताप्रतिपादनाच्च भक्तेः परम्परया कारणतामादाय भक्तिकारणतावाक्यानां समर्थनीयतया ज्ञानेनैव मुक्तिरिति पूर्वपक्षे, ज्ञानसाधनत्वनिरूपकश्रुतितात्पर्यं निरूपयन् उक्तं हृदि कृत्वा अक्षरज्ञानस्य तां प्रति स्वरूपयोग्यतासम्पादकत्वेन कारणत्वमाहेत्यर्थः । सूत्रं व्याकुर्वन्ति तुशब्दः पूर्वेत्यादि । पूर्वपक्षनिरास इति । पूर्वोक्तरीत्या सावधारणवाक्यसिद्धत्वाज्ज्ञानेनैव मुक्तिरिति पूर्वपक्षनिरासे । तं ज्ञानकारणत्वनिरूपकश्रुतितात्पर्यनिरूपणमुखेनोपपादयन्ति वाजेत्यादि ।

अयमर्थः । अस्थूलादिवाक्यस्योपसंहारे 'य एतद्विदित्वा प्रैति स ब्राह्मण' इत्यक्षरवेत्तुर्ब्रह्मत्वमुक्तम् । 'अथ परे'ति वाक्ये च परविद्याया अक्षरज्ञानजनकत्वमेवोक्तम् । तेन ज्ञानरूपे मार्गे इष्टप्राप्त्युपाये अस्थूलत्वादृश्यत्वादिगुणकं यदक्षरं तद्विषयकाण्येव ज्ञानानीष्टप्रापकतया निरूप्यन्ते, न तु पुरुषोत्तमविषयकाणीति ज्ञानविषयविशेषणबलान्निश्चीयते। तत्फलविचारे च 'ब्रह्मविदाप्नोति पर'मिति श्रुतावक्षरब्रह्मविदोऽक्षरात् परस्य प्राप्तिः फलत्वेनोच्यते । नचाक्षरमेव पुरुषोत्तम इति वाच्यम् । परपदप्रयोगवैयर्थ्यापत्तेः । 'दिव्यो ह्यमूर्त' इति मन्त्रे 'अक्षरात् परतः पर' इत्येतस्यापि विरोधापत्तेः । नच तत्राक्षरपदेन प्रकृतिर्वा, जीवात्मा वा ग्राह्य इति युक्तम् । प्रकृतविरोधात् । जगत्कारणभूतस्य चेतनस्यैव तत्राक्षरत्वेन प्रकृतत्वात् । अतस्तत्र 'अव्यक्तोऽक्षर इत्युक्तस्तमाहुः

रश्मिः ।

ज्ञानरूपसाधनवैजात्यस्य। ज्ञानं भक्तिर्वा साधनमिति संशयः। भक्तिज्ञानप्रतिपादकश्रुतिद्वयं संशयबीजम्। वैजात्येति । पूर्वपक्षत्वाद्वैजात्यासंभव उक्तः। अयं समर्थनीयतयेत्यस्य। भक्तौ ज्ञानस्येति । इदमपि पूर्वपक्षत्वात्। ज्ञानं तु फलात्मकम् । परम्परयेति । फलात्मकज्ञानद्वारा । तामिति । भक्तिं प्रति । ज्ञानेनैवेति। एवकारो भक्तिव्यवच्छेदकः। तमिति। पूर्वपक्षम् । ज्ञानविषयेति। विशेषणमस्थूलत्वादृश्यत्वादिगुणकत्वम्। ब्रह्मविदितिभाष्यं विवृण्वन्ति स्म तत्फलेति । भाष्यमुपबृंहणपरमिति मत्वोपबृंहं वक्तुमाहुः नचेत्यादि । सगुणगुणानां विशेषदर्शनोत्तरमभावात्तर्कः । वाच्यमित्यस्य तर्कितव्यमित्यर्थात् । परपदेति । परिणामाद्वैतत्वाद्विशेषदर्शनोत्तरमपि परत्वादिरूपपुरुषोत्तमगुणानां विशेषदर्शनोत्तरं भावात्। एवं परपदेत्यादिः । पुरुषोत्तमपदाभावादत्राहुः दिव्य इति । 'दिव्यो ह्यमूर्तः पुरुष' इत्यत्र नामैकदेशग्रहणादस्ति पुरुषोत्तमपदमिति । 'विष्णुर्नाम महायोगी महामायो महातपाः । तत्त्वमार्गे यथा दीपो दृश्यते पुरुषोत्तम' इति। यस्तु 'अर्धमात्रा तु निश्चले'त्युक्त्वा 'शुद्धस्फटिकसंकाशं किंचित्सूर्यमरीचिवत्। लभते योगयुक्तात्मा पुरुषोत्तमतत्पर' इति योगतत्त्वोपनिषदि । 'अर्धमात्रात्मकः कृष्णः' तस्य लाभसाधकत्वेनोक्तः पुरुषोत्तमः सोऽभेदाच्छब्दभेदेन साध्यसाधनभावः । ग्राह्य इति । एवमक्षरपरं परपदमिति भावः। प्रकृतेति। प्रकृतमक्षरं न प्रकृतिर्न जीवात्मेति भावः। तत्रेति। मुण्डके। प्रकृतत्वादिति। 'तथाक्षरात् विविधाः सौम्य भावाः प्रजायन्ते तत्र चैवापियन्ती'तिश्रुत्या तया। तत्रेति। मुण्डके।

'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूल'मित्यादि। तथाथर्वणे च 'अथ परा यया तदक्षरमधिगम्यत' इति। नेन ज्ञानमार्गेऽक्षरविषयकाण्येव ज्ञानानि निरूप्यन्ते, पुरुषोत्तमविषयकाणि नेति निश्चीयते। 'ब्रह्मविदाप्नोति पर'मिति श्रुतावक्षरब्रह्मविदोऽक्षरात् परस्य प्राप्तिरुच्यते। 'अक्षरादपि चोत्तम' इति भगवद्वाक्याच्चाक्षरातीतः पुरुषोत्तमः। 'भक्त्या मामभिजानाती'ति वाक्ये 'मा'मिति पदात् पुरुषोत्तमविषयकं ज्ञानमुच्यते, न त्वक्षरविषयकम्। किञ्च, ब्रह्मभूतस्य भक्तिलाभोक्तेस्तस्य चानन्दांशाविर्भावात्मकत्वात्तस्य चाविद्यानाशजन्यत्वात्तस्य चाक्षरज्ञानजन्यत्वात् पूर्वकक्षाविश्रान्तमेवाक्षरज्ञानम्। एवं सत्यक्षरविषयिणीनां

---

भाष्यप्रकाशः।

परमां गतिम्, यं प्राप्य न निवर्तन्ते तद्धाम परमं ममे'ति 'कूटस्थोऽक्षर उच्यत' इति गीतास्मृत्युपबृंहित एव ग्राह्यः। तस्माच्चाक्षरात् परः पुरुषोत्तम एवेति गीतास्थात् 'अक्षरादपि चोत्तम' इति भगवद्वाक्यतोऽक्षरातीततया निश्चितः, अतस्तत्प्राप्तिरेव फलत्वेन निश्चीयते। तत्कारणविचारे तु श्रुतौ 'ब्रह्मवि'दित्यनेन तद्विवरणर्चि 'ब्रह्म यो वदे'त्यनेन च ज्ञानं प्राप्तृविशेषणत्वेनोच्यत इति स्वरूपयोग्यतासम्पादकमेवाक्षरविषयकं ज्ञानम्। 'भक्त्या मामभी'ति गीतावाक्ये तृतीयया भक्तेः करणत्वं 'मा'मिति पदात् तद्व्यापारभूतं पुरुषोत्तमज्ञानं चोच्यते, न त्वक्षरविषयकम्। किञ्च। यद्यधिगम्यत इत्यस्य प्राप्त्यर्थकत्वमङ्गीक्रियते, तदा तेनाक्षरप्राप्तिर्भवति, सैव 'ब्रह्म वेद ब्रह्मैव भवती'ति श्रुत्यन्तरेणोच्यते। तदापि 'भक्त्या मा'मित्यस्मात् पूर्वं यत् 'ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति। समः सर्वेषु भूतेषु मद्भक्तिं लभते परा'मिति वाक्यम्, तस्मिन् ब्रह्मभूतस्य भक्तिलाभोक्तेर्ब्रह्मभावस्य च स्वरूपलाभरूपत्वेनानन्दाविर्भावात्मकत्वादानन्दाविर्भावस्य चाविद्यानाशजन्यत्वादविद्यानाशस्य चाक्षरज्ञानजन्यत्वात् परप्राप्तिपूर्वकक्षारूपो यो ब्रह्मभावस्तद्विश्रान्तमेवाक्षरज्ञानम्। तेनाक्षरप्राप्तेर्मुक्तित्वं यदुच्यते, तदक्षरस्य परमधामत्वेन पुरुषोत्तमाविनाभावा-

रश्मिः।

ग्राह्य इति। अमूर्तः पुरुषो ग्राह्यः। तस्माच्चेति। उक्तोपबृंह्यात्। चकारेण भाष्यीयोपबृंहणाद्वक्ष्यमाणात्। भाष्यं संयोज्य विवृण्वन्ति स्म अक्षरात्पर इति। इति निश्चीयत इति पूर्वान्वयिभाष्यमाहुः। 'अक्षरातीततया निश्चित' इति शब्दभेदेन पूर्वान्वयि। किञ्च। भाष्यं परस्य प्राप्तिरुच्यत इति पूर्वान्वयीत्याहुः अतस्तत्प्राप्तिरेवेति। शब्दाध्याहारेणार्थभेदेन च। भक्त्या मामभीत्यादिभाष्यं विवरीतुमाहुः तत्कारणेति। परप्राप्तिकारणत्वेन। ज्ञानं प्राप्त्विति। 'ब्रह्मवि'दित्यत्र 'वि'दित्यत्र प्राप्तुर्विशेषणं ज्ञानम्, 'यो वेदे'त्यत्र प्राप्तुर्विशेषणं ज्ञानम्। ब्रह्मविषयकज्ञानवान् ब्रह्मविषयकज्ञानानुकूलो व्यापारो देवदत्तनिष्ठ इति क्रमेण बोधात्। भाष्यं विवृण्वन्ति स्म भक्त्या मामभीति। मामिति पदादिति। 'अभिजानाती'त्यत्राभिज्ञानानुकूलव्यापार इति ज्ञानस्य विषयतासंबन्धेन 'मा'मित्यस्मत्पदार्थत्वाद्भक्तिव्यापारभूतं पुरुषोत्तमज्ञानं जातम्। तदनुकूलो व्यापारस्तु देवदत्तनिष्ठः। नत्त्विति। भक्तिव्यापारभूतमित्यर्थः। किञ्चेति भाष्यं विवरीतुमाहुः किञ्चेति। 'अथ यया तदक्षरमधिगम्यत' इति भाष्योक्तश्रुतेः अक्षरस्याधिगमो ज्ञानं यया साक्षरज्ञानजनिका तस्या भावोऽक्षरज्ञानजनिकात्वम्। टापो ह्रस्वे पुंवद्भावे वा इतोपि लोपः। 'निमित्तापाये नैमित्तिकस्याप्यपाय' इति न्यायादित्याशयेन (अ)क्षरज्ञानजनिकेत्युक्तम्। तत्र विद्या ज्ञानमित्येकस्य जन्यजनकभावो विरुद्ध इति प्रकारान्तरेण व्याख्यामाहुः यद्यधीति। ब्रह्म वेदेति। ब्रह्मविषयिणीं विद्यां चकार करोति वा। विवृण्वन्ति स्म ब्रह्मभूतस्येत्यादिना। पुरुषोत्तमाविनेति।

**धियां श्रुतौ मुक्तिसाधनेषु यः अवरोधः प्रवेशनं गणनेति यावत्, स सामान्यतद्भावाभ्यां हेतुभ्याम्। पुरुषोत्तमसम्बन्धिसम्बन्धे मुक्तिरिति सामान्यम्। मर्यादामार्गेऽङ्गीकृतानां 'ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति। समः सर्वेषु**

भाष्यप्रकाशः।

दुच्यते। तेनावधारणमपि जीवस्य पुनरावृत्त्यभावेन मृत्य्वतिक्रमेण कैवल्येनाक्षरप्राप्तेर्ब्रह्मभावात्मकत्वेन चोपपद्यमानं न विरुध्यत इति ज्ञानकारणत्वनिरूपकश्रुतिभिरुच्यत इत्यर्थः। तेन सिद्धमाहुः एवमित्यादि। एवं तदविरोधे सति अक्षरविषयिणीनां धियां तैत्तिरीयादिश्रुतौ योऽवरोधो मुक्तिसाधनेषु गणना, स सामान्यतद्भावाभ्यां हेतुभ्याम्।

तत्र किं सामान्यमित्यपेक्षायां पुरुषोत्तमसम्बन्धिसम्बन्धे मुक्तिरिति भक्तसङ्गे सिद्धम्। 'सत्सङ्गलब्धया भक्त्या मयि मां य उपासिता। स वै मे दर्शितं सद्भिरञ्जसा विन्दते पद'मित्येकादशस्कन्धे। स च पुरुषोत्तमसम्बन्धिसम्बन्धस्त(त्त)द्धामरूपाक्षरज्ञानेप्यस्तीति तदेव सामान्यम्। तथा, 'मर्यादामार्गे' इत्याद्युक्तरीत्या तद्भावो ब्रह्मभावः ताभ्यां हेतुभ्यां अक्षरज्ञानानां मुक्तिसाधनेषु प्रवेशः। मर्यादामार्गिणां पुरुषोत्तमप्राप्तौ स्वरूपयोग्यतासम्पादकत्वेन प्रवेश इत्यर्थः।

रश्मिः।

रसत्वेनातिसुन्दरत्वात्परमं धाम पीठं चरणौ पुच्छं वृन्दावनम्। तदविनाभावात्। भक्तैः सह निगूढभावकरणे पीठाद्यन्यतमापेक्षा। न तु युगपत्। 'तं पीठस्थं येऽनुयजन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषा'मिति श्रुतेः। 'अथ परे'त्यस्या अर्थकथने भाष्ये एवकाराच्छ्रुतौ 'ज्ञानादेव तु कैवल्य'मिति सावधारणोक्तेस्तदेकवाक्यतापन्नायामवधारणमित्याशयो ज्ञेयः। 'ब्रह्म वेद ब्रह्मैव भवती'त्यत्रोक्तश्रुतावेवकारविरोधमाशङ्क्याहुः तेनावेत्यादि। ब्रह्मभावेति। ब्रह्मभावो ब्रह्मत्वं 'बुद्ध्या विशुद्धया युक्त' इति गीतोक्त आत्मा स्वरूपं यस्याः। भावे त्वः। हलोपपुंवद्भावौ पूर्ववत्। तेन। ज्ञानेति। 'ज्ञानादेव तु कैवल्य'मित्याद्युक्ताभिः। तदविरोधेति। पुरुषोत्तमाक्षरज्ञानप्रतिपादिकयोः श्रुत्योर्विषयभेदादविरोधे सति। पुरुषोत्तमेतिभाष्यमुक्तसूत्रार्थभाष्यप्रपञ्चं विवरीतुमपेक्षामाहुः तत्र किमिति। विवृण्वन्ति स्म पुरुषोत्तमेति। सम्बन्धिनोऽक्षरभक्तप्रमेयबलानुग्रहाः। तेषां सम्बन्धोंऽशांशिभाव एकस्वामिकत्वमाधाराधेयभावौ। तन्निष्ठभगवद्भावब्रह्मभावयोर्जन्यजनकभावः सम्बन्धः। एकस्वामिकत्वं भगवद्वीर्यसंविजनकैकाधिकरण्यं सम्बन्ध इत्याशयेनाहुः भक्तसङ्ग इति। भक्तसङ्गे सिद्धं सामान्यम्। केत्यतो वाक्यं पठन्ति स्म सत्सङ्गेति। पदं मुक्तिः। स चेति। अस्यार्थः पुरुषोत्तमेति। पुरुषोत्तमसम्बन्धिभक्तः भगवद्वीर्यसंविजनकः (भगवद्भावजनकः) तस्य भगवद्भावस्य सम्बन्धोऽक्षरज्ञाने जन्यजनकभावः। अन्यत्राप्याहुः तद्धामेति। तद्धाम पुरुषोत्तमसम्बन्धि तद्रूपाक्षरं तस्य ज्ञाने। परममुक्तिजनके। मम पुरुषोत्तमाधिष्ठानं हृदयमक्षरमिति ज्ञानेऽप्यस्ति। अपिनोक्तोदाहरणं तस्मिन्। तदेवेति। विधेयलिङ्गम्। उक्तसम्बन्ध एव सामान्यमित्यर्थः। मर्यादेति भाष्यं विवृण्वन्ति स्म तथा मर्यादेति। इति वाक्यादिति ब्रह्मभावानन्तरं भगवद्भावसम्भवादित्यत्र हेतुः, न तु ब्रह्मभावानन्तरमित्यत्र। तेनेति वाक्याद्ब्रह्मभावस्तदनन्तरमिति नान्वेतव्यम्। परम्परोपयोगे तु प्रवेशादित्यन्तो हेतुः। साध्यार्थकभाष्येणैवं सत्यक्षरेत्याद्युक्तेन सह युवन्ति स्म अक्षरज्ञानानामिति। भाष्यीयप्रवेशनमित्यस्यार्थः। कार्यभूतहेतुना साध्यमुक्तं प्रवेशमाहुः मर्यादामार्गिणामिति। इदमुक्तं मर्यादामार्ग इत्यादिभाष्येण। स्वरूपेति। स्वरूपयोग्यतासम्पादनेन कार्येण हेतुना प्रवेशोऽक्षरज्ञानानां मुक्तिसाधनेषु

भूतेषु मद्भक्तिं लभते परा'मिति वाक्याद्ब्रह्मभावानन्तरमेव भगवद्भावसम्भवात्तेन पुरुषोत्तमे प्रवेशात्तत्र परम्परोपयोगो ब्रह्मभावस्येत्युभाभ्यां हेतुभ्यां तथेत्यर्थः। वस्तुतस्तु पुरुषोत्तमप्राप्तिरेव मुक्तिरिति भावः।

नन्वक्षरस्याविशिष्टत्वेन तदुपासकानामपि तथात्वात् केषाञ्चित् तत्रैव लयः, केषाञ्चिद्भक्तिलाभ इति कथमुपपद्यत इत्याशङ्क्य, तत्र हेतुं दृष्टान्तेनाह औपसदवदिति। उपसदाख्ये कर्मणि तानूनप्त्रस्पर्शाख्यमौपसदं कर्मास्ति। तत्रातिथ्यायां ध्रौव्यां स्रुचि चमसे वा यदाज्यं चतुरवत्तं पञ्चावत्तं वा समवद्यति, तत्तानूनप्त्रमित्युच्यते। 'अनाधृष्टमसी'ति मन्त्रेण षोडशाप्यृत्विजो यजमानेन सह तानूनप्त्रं

भाष्यप्रकाशः।

अत्र सामान्यादित्युक्ते करणतापि सम्भाव्येतेति तद्वारणाय द्वितीयो हेतुरिति बोध्यम्। अक्षरज्ञानस्य मुक्तिसाधनतावच्छेदकं यद्रूपं तज्ज्ञापनाय प्रथमः। यदि ह्यक्षरप्राप्तेः परममुक्तित्वं स्यात्, तदाथर्वणिकायामक्षरविद्यायां पुरुषस्याक्षरात् परत्वं न श्राव्येत। तत्तु श्राव्यते। अतोऽक्षरज्ञानानामक्षरप्रापकत्वेन तज्ज्ञापकत्वेन वा न परममुक्तिकारणता, किन्तूक्तरीत्या भगवद्धामताज्ञापकत्वेनेत्याशयेनाहुः वस्तुत इत्यादि। दृष्टान्तमवतारयन्ति नन्वक्षरस्येत्यादि। तत्रैव लय इति। 'ब्रह्मैव भवती'त्यवधारणादक्षर एव लयः। भक्तिलाभ इति। 'ब्रह्मविदाप्नोति पर'मिति

रश्मिः।

प्रवेश इति दृष्टान्तरहितसूत्रार्थ इत्यर्थः। करणतेति। ब्रह्मभावव्यापारो भगवद्भावः ब्रह्मभावजन्यत्वे सति ब्रह्मभावजन्यपुरुषोत्तमप्रवेशजनकत्वात्। द्वितीय इति। 'ते प्राप्नुवन्ति मामेवे'ति सावधारणवाक्याद्वितीयापेक्षा नास्ति, तथाप्यात्मक्लिष्टं न भगवति समर्पणीयमित्यक्षरभावस्य 'क्लेशोऽधिकतरस्तेषा'मिति वाक्यादतिक्लिष्टाक्षरभावस्य 'कृष्णायाक्लिष्टकारिणे' इति गोपालतापिनीयादभगवत्कृतत्वेन करणतापक्षस्योक्तश्रुतिविरुद्धत्वाद्वितीय इत्यर्थः। नचेतिहासबाधो न युक्तः श्रुत्येति वाच्यम्। 'भक्त्या जानाति चाव्यय'मिति श्रुत्युक्तफलात्मकज्ञाने भक्तिमात्रोपयोगाद्भक्तौ ब्रह्मभावस्योपयोगो हि चित्तशुद्धिद्वारा कर्मवत् पापाभाववत्। 'श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिः प्रसाध्यत' इति वाक्यादित्यनावश्यकत्वरूपबाधस्य सम्भवात्। एवमनेकेषु भक्तिसाधनेषु सत्सु ज्ञानकाण्डत्वादक्षरज्ञानस्य भक्तिकारणस्योक्तौ अक्षरज्ञानस्य फलत्वं अक्षरज्ञानस्य भगवद्भावसाधनत्ववत् मुक्तिसाधनत्वं चेति। पृथक्साधनतावच्छेदकं यद्रूपं तद्वक्तुमाहुः अक्षरेति। यद्रूपं पुरुषोत्तमसम्बन्धिसम्बन्धः, स चात्र तद्धामत्वेनाक्षरज्ञानेस्ति। भगवद्भाववान् भक्तः, भगवद्भाव आनन्दधर्मः, स चात्र पुरुषोत्तमधामत्वेनाक्षरज्ञानेनेति तथा। तेन परममुक्तिसाधनतावच्छेदकं पुरुषोत्तमधामत्वम्। पुरुषोत्तमधामत्वप्रकारकाक्षरविशेष्यकज्ञानत्वात्। मुक्तिजनकतावच्छेदकमक्षरत्वेनाक्षरज्ञानादक्षरत्वमिति विवेकः। परममुक्तिः पुरुषोत्तमप्राप्तिः। मुक्तिः स्वरूपलाभः। अयं यद्रूपप्रपञ्चः। प्रथम इति। हेतुः। तथाच ज्ञानकाण्डत्वाद्ब्रह्मभावपूर्वकभगवद्भाव इति हेतुद्वयमित्यर्थः। आथर्वणिकायामिति। मुण्डके। 'अव्यक्तात्पुरुषः परः। पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गति'रित्यस्याम्। नन्वक्षरज्ञानं ज्ञानविषयकं ज्ञानम्, तच्चाक्षरत्वेन शाब्दम्, तत्रैकज्ञाने साध्यसाधनभावविरोधादाहुः तज्ज्ञापकत्वेनेति। शाब्दं ज्ञानं तदक्षरत्वेनाक्षरज्ञापकं तु भवत्येवेत्यर्थः। उक्तेति। तत्र किं सामान्यमित्याद्युक्तरीत्या। इति श्रुत्युक्तेति। ब्रह्मवित् भक्त्या परमाप्नोतीति भाष्ये उक्तत्वात्तथा। व्याख्यानमिति। दृष्टान्तेन हेतुव्याख्यानम्। अतिथ्यायां चतुर्थ्याम्। ध्रौव्याम्। ध्रौव्येति पाठः। स्रुचेर्दा। ध्रुवमेव ध्रौवं

१. अतिथ्याया इति पाठः। २. प्र.वात्, ध्रौवाज्यादिति पाठौ।

समवमृशन्ति, 'अनु मे दीक्षा'मिति मन्त्रेण यजमानः 'तत् समवमृशन् यं ऋत्विजं कामयेत, अयं यज्ञयशसमृच्छेदिति तं प्रथममवमर्शये'दिति श्रूयते श्रुतौ कल्पे च । अत्र सर्वेषामृत्विजां तानूनप्त्रत्वाविशेषेपि यस्मिन् स्नेहातिशयेन तथेच्छा, तत्रैव तथा कृतिः, नेतरेषु । न हि तत्राविशिष्टेषु कथमेवं कृतिरिति पर्यनुयोगः सम्भवति, एवमिहापीत्यर्थः ।

ननु श्रवणादेर्यथा पुरुषोत्तमसम्बन्धित्वेन तत्प्राप्तिहेतुत्वम्, एवमक्षरस्याप्यस्त्वित्याशङ्का तु निखिलासुरजीवतमःपुञ्जनिरासकेन यदुवंशोदयाचलचूडामणिनैव निरस्तेति न स्वतो वक्तुमुचितेत्याशयेन आह तदुक्तमिति । भगवद्गीतास्विति शेषः । तत्र 'यदक्षरं वेदविदो वदन्ती'त्युपक्रम्य, 'स याति परमां गति'मित्यन्तेनाक्षरप्राप्त्युपायमुक्त्वा, 'अनन्यचेताः सतत'मित्यादिना स्वप्राप्त्युपायं वैलक्षण्यं चोक्त्वा, भक्त्येकलभ्यत्वं स्वस्य वक्तुं पूर्वं क्षराक्षरयोः स्वरूपमाह, 'सहस्रयुगपर्यन्त'मित्युपक्रम्य, 'प्रभवत्यहरागम' इत्यन्तेन क्षरस्वरूपमुक्त्वा, 'परस्तस्मात्तु भावोऽन्य' इत्युपक्रम्य, 'तद्धाम परमं ममे'त्यन्तेनाक्षरस्वरूपमुक्तम् ।

---

भाष्यप्रकाशः ।

श्रुत्युक्तपरप्राप्तिसाधनीभूतभक्तिलाभः । हेतुमिति । भगवदिच्छारूपम् । व्याख्यानं तूत्तानार्थम् । तथाच भगवदिच्छयैव विशेष इत्यर्थः । सूत्रोक्तां सम्मतिं व्याकर्तुमवतारयन्ति ननु श्रवणादेरित्यादि । व्याकुर्वन्ति तत्रेत्यादि । तत्रेति । गीताया अष्टमाध्याये । वैलक्षण्यमिति । साधनसौकर्यं स्वप्राप्तिरूपस्य फलस्योत्कर्षं च । स्वस्य वक्तुमिति । अत्राक्षरस्वरूपकथने अक्षरस्य परमगतित्वं स्वधामत्वं चोक्त्वा 'पुरुषः स परः पार्थे'त्यादिना परस्य यद्भक्त्येकलभ्यत्वं वक्ष्यति, तदक्षरादुत्तमत्वेन वाक्यान्तरे सिद्धे स्वस्मिन्नेव परत्वविश्रान्तेः स्वस्यैव वक्ष्यति, बाधकाभावे स इति

रश्मिः ।

आज्यस्थालीस्थमाज्यं तस्माद्ध्रौवाज्यात् । स्रुक् प्रसिद्धा । चमसः पात्रविशेषः । चतुरवत्तं चतुर्गृहीतम् । समवद्यति सम्यक् अवहीनं द्यति खण्डयति । 'दो अवखण्डने' । केनापि प्रकारेण । अनाधृष्टमिति । न आसमन्ताद्धृष्टम् । ञिधृषा प्रागल्भ्ये । 'प्रगल्भमसि अनाधृष्टमस्यनाधृष्य'मिति मन्त्रे हे तानूनप्त्र । असन्तत्वान्मन्त्रत्वम् । समवमृशन्तीति । स्पृशन्ति । अनु म इति । अनु पश्चात् मे मम दीक्षां अवमृशेति मध्यमपुरुषान्तत्वान्मन्त्रत्वम् । तत् तानूनप्त्रम् । यं ऋत्विजमिति च्छेदः । कामयेत इच्छेत् । 'कमु कान्तौ' । कान्तिरिच्छा । यज्ञयशसं यज्ञकीर्तिं ऋच्छेत् प्राप्नुयात् । अवमर्शयेदिति । स्पर्शयेत् । एवं व्याख्यानं तूत्तानार्थमित्यर्थः । विशेष इति । 'केषांचित्तत्रैव लयः, केषांचिद्भक्तिलाभ' इति भाष्योक्तो विशेषः । सम्मतिमिति । तदुक्तमितीतिहाससम्मतिम् । ननु श्रवणादेरित्यादीति । पुरुषोत्तमेति । पुरुषोत्तमाविर्भावस्य श्रवणादेश्च जन्यजनकभावसम्बन्धोऽतः पुरुषोत्तमसम्बन्धित्वं तेनेत्यर्थः । एवमिति । अवयवावयविभावसम्बन्धः स्वस्वामिभावसम्बन्धः । निखिलेति । निखिला येऽसुरा जीवाः तेषां तमसः पुञ्जस्तस्य निरासकेन । यदुवंश उदयाचलः तस्य चूडामणिना मुख्येन । उदयाचले चूडामणिः सूर्यस्तेन । निरस्तेति । 'क्रोधस्यान्तं फलोदया'दिति वाक्यात् फलं युद्धम् । अष्टमाध्याय इति । षडध्यायी कर्ममार्गे, षडध्यायी ज्ञानमार्गे, षडध्यायी भक्तिमार्गे इति ज्ञानमार्गीयत्वं प्रमेयस्य बोधयितुमुपात्तः । स इतीति । स पर इत्यत्र स इति तच्छब्देन सन्निहितस्य 'तद्धाम परमं

अत्र पूर्वं क्षरस्वरूपमुक्तमिति 'परस्तस्मात्त्वि'त्यत्र क्षरादेव परत्वमुच्यते । तच्छब्दस्य पूर्वपरामर्शित्वात्तस्यैव पूर्वमुक्तत्वात् । अत एवाक्षरव्यावर्तकस्तुशब्द उक्तः । एतेन नित्यत्वेन क्षरणाभावादक्षरशब्देन जीव एवोच्यते, न तु पुरुषोत्तमाधिष्ठानभूतो जीवातीत इति निरस्तम् । 'यं प्राप्य न निवर्तन्त' इति वाक्यात् जीवे तथात्वासम्भवात् । नित्यमुक्तत्वापत्त्या शास्त्रवैफल्यापत्तेश्च । इत एव ज्ञानमार्गिणां तत्प्राप्तिरेव मुक्तिरिति ज्ञेयम् । ततोऽनिवृत्तेः । 'पुरुषः स परः पार्थे'त्यनेनाक्षरात् परस्य स्वस्य भक्त्येकलभ्यत्वमुक्तम् । तेन ज्ञानमार्गीयाणां न पुरुषोत्तमप्राप्तिरिति सिद्धम् । 'यस्यान्तःस्थानी'त्यनेन परस्य लक्षणमुक्तम् । तच्च भूत्त्वादिप्रसङ्गे श्रीगोकुलेश्वरे स्पष्टमुच्यते । तेनाक्षरोपासकानां न पुरुषोत्तमोपासकत्वम् । तद्विषयकश्रवणादेरभावादिति भावः । 'अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गति'मिति वाक्यात् 'स याति परमां गति'मित्यत्राक्षरमेव यातीत्यर्थो ज्ञेयः ।

---

भाष्यप्रकाशः ।

तच्छब्देन संनिहितपरामर्शाच्च स्वस्य वक्तुम् । अत्रेति । 'सहस्रयुगे'त्यादिग्रन्थे । अत्र मतान्तरमुद्भाव्य परिहरन्ति एतेनेत्यादि । एतेनेति । 'क्षरः सर्वाणि भूतानी'ति वाक्यान्तरसिद्धं भूतग्रामं व्यक्तकोटौ निवेश्य ततः परत्वकथनेन । हेत्वन्तरमाहुः यमित्यादि । तथाच भूतग्रामपदेन जडान् गृहीत्वा अक्षरपदेन जीवग्रहणे एतौ दोषौ प्रसज्येयाताम्, अतस्तन्मतमयुक्तमित्यर्थः । अस्मादेव सन्दर्भादर्थचतुष्टयं यदन्यत् सिद्धं तदाहुः इत एवेत्यादि । ज्ञेय इत्यन्तम् । इत एवेति । अक्षरस्य भगवद्धामत्वादेव । इत्यर्थो ज्ञेय इति । ऐकशब्द्याज्ज्ञेयः । तथाचाक्षरस्य पुरुषोत्तमसम्बन्धित्वे सत्यपि पुरुषोत्तमप्राप्तिं प्रति न हेतुत्वम् । तद्धेतुतावच्छेदकस्यानन्यभक्तित्वस्य तत्राभावादित्येवमेतेन सन्दर्भेण सा शङ्का निवारितेत्यतो न कार्येत्यर्थः ।

रश्मिः ।

मभे'त्यस्मत्पदार्थस्य परामर्शाच्च स्वस्य वक्तुमन्यथा त्वक्षरस्य वक्तुम् । एतौविति । तथात्वासम्भवादिति भाष्योक्तं मुक्तित्वं शास्त्रवैफल्यापत्तिश्चेत्येतौ । अर्थचतुष्टयमिति । ज्ञानमार्गिणामक्षरप्राप्तिः १ । अक्षरात्परस्य स्वस्य भक्त्येकलभ्यत्वम् २ । 'समान एवं चाभेदा'दिति सूत्रोक्तावतारे श्रीगोकुलेश्वरेप्यक्षरोपासकानां न पुरुषोत्तमोपासकत्वम्, पुरुषोत्तमविषयकश्रवणादेरभावात् ३ । 'स याति परमां गति'मित्यत्राक्षरमेव यातीत्यर्थः ४ । इत्यर्थचतुष्टयम् । एकेति । उभयोर्वाक्ययोरेकः शब्दः परमामिति गतिमिति च ययोस्ते एकशब्दे वाक्ये तयोर्भाव ऐकशब्द्यं तस्मात् । ननु गणनादेवार्थचतुष्टये लब्धे तदुपादानस्य किं प्रयोजनमत आहुः तथाचेति । अनन्येति । नन्ववयवावयविभावसम्बन्धे मास्तु अनन्यभक्तित्वम्, स्वस्वामिभावसम्बन्धे तु स्यादिति चेत् । न । ज्ञानमार्गस्य भिन्नत्वात् । 'उत्तमः पुरुषस्त्वन्य' इति पुरुषोत्तमस्य भिन्नत्वे तत्प्रापकस्यापि भेदात् । नन्वेवं सति पुष्टिभक्तावप्यनन्यभक्तित्वं न स्यात्, प्रतिकृतिकसम्बन्धिन्याः मूलरूपातिरिक्तविषयत्वादिति । चेत् । न । अनन्यभक्तेर्मर्यादामार्गीयत्वात् । 'मयि चानन्ययोगेन भक्तिरव्यभिचारिणी'ति गीतावाक्यस्य 'अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जव'मित्यादिसाधनप्रायपाठपठितत्वेन साधनसाध्यत्वेन तथावसायात् । तत्रेति । अक्षरसम्बन्धे । एतेनेति । अर्थचतुष्टयप्रतिपादकेन । सेति । एतेन नित्यत्वेनेत्यादिभाष्योक्ताक्षरधीपदेन जीवधीर्ग्राह्या, न तु पुरुषोत्तमाधिष्ठानभूतजीवातीतोऽक्षरधीपदेन ग्राह्य इत्याशङ्का । निवारितेति । अक्षरत्वेन

किञ्च । तैत्तिरीयोपनिषत्सु पठ्यते 'यस्मिन्निदं सञ्च विचैति सर्वं यस्मिन् देवा अधि विश्वे निषेदुः । तदेव भूतं तदु भव्यमा इदं तदक्षरे परमे व्योमन् । येनावृतं खं च दिवं महीं च येनादित्यस्तपति तेजसा भ्राजसा च । यमन्तःसमुद्रे कवयोऽवयन्ति यदक्षरे परमे प्रजा' इति । अत्राक्षरात्मकत्वेन क्षरात्मकादाकाशात् परमे व्योम्नि भक्तानां हृदयाकाश इति यावत् । तत्र प्रकाशमानमित्यर्थात् । अत एव 'ब्रह्मविदाप्नोति पर'मित्युपक्रम्य, 'सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योम'न्नित्येतदुपनिषत्स्वेव पठ्यते । 'यदक्षरे परमे प्रजा' इति पदं 'अवयन्ती'त्यनेन सम्बध्यते । अत्र प्रजापदात् व्यापिवैकुण्ठात्मको लोकोऽक्षरपदेनोच्यते इत्यवगम्यते । अत एव 'न यत्र माये'त्यादिना श्रीभागवते तत्स्वरूपमुच्यते । एतेनाक्षरस्य पुरुषोत्तमाधिष्ठानत्वं निश्चीयते । इतोप्यक्षरातीतः पुरुषोत्तम इत्यवगम्यते । एवं सति सामान्यं भगवद्विभूतिरूपत्वम्, तद्भावस्तस्य

भाष्यप्रकाशः ।

ननु श्रुतावक्षरात् परत्वमेव पुरुषस्योक्तम्, न तु तत्र स्थितत्वम्, तथोक्तौ परस्य स्वप्रतिष्ठत्वं च हीयेतेति गीतास्मृतिवाक्यमन्यथा नेतव्यमित्याशङ्क्याहुः किञ्चेत्यादि । अस्यां श्रुतौ सर्वाधारत्वं सर्वदेवनिषदनस्थानत्वं सर्वात्मकत्वं च पादत्रयेणोच्यते, तुरीये तदाधार उच्यते, तस्यार्थमाहुः अत्रेत्यादि । भक्तहृदयाकाशमेवात्र परमव्योमपदे परामृश्यत इत्यत्र मानमाहुः अत एवेत्यादि । ननु भवतु भक्तहृदयाकाशे प्रकाशमानत्वमक्षरस्य, तथापि कथं लोकात्मकत्वम्, अत आहुः यदित्यादि । तथाच प्रजालिङ्गादक्षरस्य लोकात्मकत्वमित्यर्थः । एतमर्थं पुराणेनोपबृंहयन्ति अत एवेत्यादि । इतोपीति । शुकवाक्यादपि । तथाच श्रुतौ पुराणे च तथा सिद्धत्वाद्गीतावाक्यं नान्यथा नेतुं शक्यमित्यर्थः । स्वप्रतिष्ठताहानिं परिहरन्ति एवं सतीत्यादि । तथाच छान्दोग्ये 'स्वे महिम्नि प्रतिष्ठित' इति श्रावणात्, तैत्तिरीये 'ब्रह्म पुच्छं प्रतिष्ठे'ति श्रावणाच्चाक्षरब्रह्मणो भगवद्विभूतिरूपत्वेन चरणरूपतया स्वाभिन्नत्वेन च भक्तिसामान्याद्भगवतस्तत्र स्थितावपि न स्वप्रतिष्ठत्वहानिरित्यर्थः । एवमत्र मुक्तिस्वरूपमस्थूलत्वादयो धर्माश्च

रश्मिः ।

रूपेण पुरुषोत्तमभेदात् मार्गान्तरत्वात् । श्रुताविति । 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गति'रित्यादिश्रुतौ । गीतास्मृतिवाक्यमिति । ननु पुराणवन्नेतिहासः श्रुतिबाध्य इत्यत उक्तं स्मृतीति । इतिहासस्य स्मृतित्वपक्षे बाध्यत्वमिति भावः । आहुरिति । अक्षरस्य पुरुषोत्तमाधारत्वप्रतिपादिकां श्रुतिमाहुरित्यर्थः । सर्वाधारत्वमिति । यस्मिन् ब्रह्मणि इदं विश्वं समेति च व्येति चेति जगल्लयस्थानत्वं विरुद्धमेतीत्युत्पत्तिस्थानमित्युक्तेस्तथा । सर्वदेवेति । यस्मिन्ब्रह्मणि विश्वस्मिन् इति अधिविश्वं तत्र । सर्वेति । तृतीयपादे तत् ब्रह्म । स्पष्टमन्यत् । तस्यार्थमिति । सर्वाधारेऽक्षराधारत्वस्य बाधात्तुरीयस्यार्थमाहुरित्यर्थः । भक्तिसामान्यादिति । भक्त्या सामान्यं भगवद्विभूतित्वं भक्तिसामान्यं तस्मात् । भक्ताक्षरयोर्भक्तिसामान्यं तदत्रापीति ज्ञेयम् । स्वसमवाय्याधारसम्बन्धेन भक्तिरक्षरात्मकभक्तहृदय इति स्वं भक्तिस्तत्समवाय्यानन्दो भगवान् तदधिकरणं भक्तहृदयमक्षरात्मकमिति । चरणरूपतया स्वाभिन्नत्वेन च भगवतस्तत्राक्षरे भावः सत्ता उक्तरीत्या 'तद्धाम परमं मम'-त्युक्तरीत्या स्थितावपि । अपिना 'स आत्मा स्वाश्रयाश्रय' इत्युक्तस्वप्रतिष्ठत्वेन सह छान्दोग्योक्तस्वमहिमप्रतिष्ठत्वं समुच्चीयते । न स्वेति । योगिवदनेकरूपत्वाद्भक्तहृदयगामित्वं स्वप्रतिष्ठत्वमिति । तस्य हानिर्नेत्यर्थः । भाष्यं स्फुटार्थम् । पादाध्यायार्थौ सङ्गमयन्ति स्वाव्याप्तिवारणाय एवमत्रेति । अत्राधिकरणेऽक्षरधीरूपमपि न जन्यमुक्तिस्वरूपम्, विषयवाक्ये चास्थूलत्वादयो धर्माश्चाक्षरधर्मा अपि

पुरुषोत्तमस्य भावः सत्ता उक्तरीत्या तत्र स्थितिरिति यावत्, ताभ्यां हेतुभ्यां तथेत्यप्यर्थो ज्ञेयः ॥ ११ ॥

भाष्यप्रकाशः ।

सफला विचारिताः । एतान् धर्मानाचरणीयत्वेन बोधयन्तीत्यादिर्बोधकताप्रकारश्च । (तेन भगवत्प्राप्तिप्रेप्सुना भक्तिरेव कार्या, न तु पूर्वकक्षायामेव विश्रान्तव्यम्, द्वितीयस्कन्धे 'भगवान् ब्रह्मकार्त्स्न्येने'त्यत्र भगवता भक्तावेव श्रुतितात्पर्यस्य निर्धारितत्वात्, गीतायां द्वादशाध्यायेपि 'मय्यावेश्य मनो ये मा'मित्यादिना स्वोपासनयैव शीघ्रं सुखेन स्वप्राप्तिबोधनात्, अक्षरोपासनेन दुःखतः स्वप्राप्तेरुक्तत्वाच्च भक्तिरेवावश्यकीति सिद्धम् ।) अत्राक्षरस्य गणितानन्दत्वात् 'ब्रह्मविदाप्नोति पर'मित्यत्र पुरुषोत्तमज्ञानस्य 'भक्त्या मा'मिति गीतावाक्ये तदुक्तेः 'औपसदव'दिति दृष्टान्त इच्छाया एव प्राधान्यबोधनेन परम्परया कर्मणोपि क्वचित् प्रापकत्ववचनात् क्रियया भक्त्या ज्ञानेन च सायुज्यप्राप्तिबोधकं दोर्भिश्चतुर्भिर्विदितमिति विशेषणं च प्रतिपादितं ज्ञेयम् ।

अत्र भट्टभास्करशङ्कररामानुजभाष्येषु पूर्वोक्तवाजसनेयकाथर्वणोक्तवाक्यद्वयमेव

रश्मिः ।

भगवद्धर्माः तदभेदात् पादार्थः । सफला इति । मुक्तिस्वरूपफलं भगवद्भावः । अस्थूलत्वादि धर्मफलम् । किमन्यद्ब्रह्मभावनिर्वाहकमिति जिज्ञासया 'यतो वा इमानि भूतानि जायन्त' इत्यादिजगज्जन्मादिकर्तृत्वभगवद्धर्मबोधकश्रुतिभिर्विरुद्धधर्माधारत्वम् । पूर्वाधिकरणसङ्गतिप्राप्तमर्थमाहुः एतानिति । 'परब्रह्मैतयो धारयति रसती'त्याद्युक्तान् भगवद्धर्मान् । चरणीयत्वेन आचरणीयत्वेन बोधयन्ती अस्थूलादिश्रुतिः ।

अयमर्थः । अनियमाधिकरणे भगवद्धर्मा उक्ता धारणादयः, तेषामेव मुक्तिसाधनत्वम्, नैश्वर्यादीनां भगवद्धर्माणामिति यावदधिकाराधिकरण उक्तम्, तेषां धारणादीनां विषयो विरुद्धधर्माश्रयोऽत्राधिकरण उक्तः, सोऽधोक्षज इति दशविधलीलाः धारणारसनादिविषयिण्य इति बोध्यमित्येवं तात्पर्येणास्थूलादिश्रुतयो बोधयन्ति । आदिना सूचयन्तीत्यर्थः । बोधकताप्रकारोऽधिकरणस्येति बोध्यम् । 'विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् । सङ्गतिश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृत'मिति । ननु तद्भावो भगवद्भावो न भवति, वृत्तेर्द्वैविध्यात्, अतोऽक्षरधीमात्रमित्यतस्तेनेत्यादिः सिद्धमित्यन्तो ग्रन्थः[1] प्रवर्तते । यदि च तत्परब्रह्म 'ॐतत्स'दिति गीतायाः तद्भावः पुरुषोत्तमभावः, तदा तु मूलपुस्तकेऽयं ग्रन्थो नास्तीति न व्याख्येयः । मूलपुस्तकेऽभावात् ।

षोडशाधिकरण्यां षड्विशेषणान्युक्तानि, सप्तमं 'दोर्भिश्चतुर्भिर्विदित'मित्येकस्य विशेषणं वक्तुमाहुः अत्राक्षरस्येति । षष्ठ्यन्तत्रयं प्राधान्यबोधनेनेत्यनेनान्वेति । पुरुषोत्तमेति । गौणमुख्यन्यायप्राप्तस्यागणितानन्दज्ञानस्य परम्परयेतीच्छाया इत्यनेनान्वयि । क्वचिदिति । 'कर्मणैव तु संसिद्धिमास्थिता जनकादय' इत्यत्र 'कर्मणा ब्रह्मैवमुच्यत' इति सुबोधिन्याम् । चतुर्भिरिति । दोः कर्मेन्द्रियम् । तदत्र चत्वारि । पुरुषोत्तमज्ञानं क्रिया पञ्चरात्रात् । भक्तिः क्रिया स्पष्टम् । इच्छापि क्रिया । इच्छयत इतीच्छा । क्रियावाचि भ्वादित्वात् धातुत्वं धातुत्वाल्लडादय इति । कर्म क्रिया लोकप्रसिद्धा । कर्मेत्यत्र कर्तरि मन् । क्रियेत्यत्र भावेशः इयङ् । कथं सामानाधिकरण्यमिति । अतश्चतुर्भिर्ज्ञानभक्तीच्छाकर्मभिः । चतुर्भिः पादसेवनादिभिश्चतुर्भिर्विशेषेण ज्ञातम् ।

१. यद्यप्ययं ग्रन्थो मूलपुस्तके नास्ति, तथाप्यस्य प्रामाणिकत्वं तु नैव संदिग्धम् । मूलपुस्तकतो लिपीकृतेऽन्यपुस्तकेऽयं ग्रन्थः शोधत्वेन श्रीपुरुषोत्तमानां श्रीहस्ताक्षरैरुपलभ्यत एवेति ।

भाष्यप्रकाशः ।

विषयवाक्यत्वेनोपन्यस्य, किमासां विशेषप्रतिषेधबुद्धीनां सर्वत्र प्राप्तिः, उत व्यवस्थेति संशये, प्रकरणावरोधाच्छ्रुतिविभागात्, विद्यान्तररूपस्य विद्यान्तररूपत्वे प्रमाणाभावाभिषेधरूपाणां गुणा नामानन्दादिवत् स्वरूपावगमोपायत्वाभावाच्चेति हेतुभिर्नान्यत्र प्राप्तिरिति पूर्वः पक्षः। सिद्धान्तस्तु, प्रपञ्चपर्युदासस्य, विशेषनिराकरणरूपस्य ब्रह्मबोधनप्रकारस्य, सामान्यात्, तस्य प्रतिपाद्यस्य ब्रह्मणः सर्वत्र भावादैक्यात् सर्वत्रावरोधस्तासां निषेधबुद्धीनां परिग्रहः। तेन 'आनन्दादयः प्रधानस्ये' त्यत्र विधिमुखो विचारः, इह तु निषेधमुख इति तस्यैवायं प्रपञ्च इति भास्करं शाङ्करं च मतम्।

रामानुजभाष्ये तु, सर्वेषूपासनेषु ब्रह्मणः समानत्वात्, अस्थूलत्वादीनां तत्प्रतीतौ भावादन्तर्भावात् । अयमर्थः । केवलानन्दादेः प्रत्यगात्मनि विद्यमानत्वेन तेषामसाधारणाकारेण ब्रह्मोपस्थापकत्वाभावादसाधारणाकारनिश्चयार्थं हेयप्रत्यनीकताज्ञानस्यावश्यकत्वेन चिदचिदात्मकप्रपञ्चवैलक्षण्यबोधनमावश्यकम्। तत्रास्थूलत्वादिना अचिद्वैलक्षण्यम्, प्रशासनेन चिद्वैलक्षण्यं च वाजसनेयके उच्यते, एवमाथर्वणेऽप्यदृश्यत्वादिकथनाभिरङ्कुशकर्तृत्वसर्वज्ञत्वादिना ज्ञेयम्। तथाचास्थूलत्वादिविशेषितज्ञानानन्दाद्याकारस्य ब्रह्मणोऽनुसन्धेयत्वादस्थूलत्वादीनामानन्दादिवदस्ति ब्रह्मप्रतीतावन्तर्भाव इति तासामस्थूलत्वादिबुद्धीनां सर्वत्रावरोध इति सिद्धान्तः। तेनेदमधिकरणं तत्सहकारित्वादत्यन्तावश्यकमिति तन्मतापेक्षयेदं मतं युक्तम्। ननु तर्हि पूर्वपक्षोक्तहेतूनां का गतिरित्याकाङ्क्षायां गुणानां प्रधानानुवर्तित्वे दृष्टान्तं तत्र प्रमाणं चाह 'औपसदवत्तदुक्त'मिति। यथा चतूरात्रे जामदग्न्याहीने पुरोडाशिनीषूपसत्सूपसद्गुणभूतः सामवेदपठितोपि 'अग्नेर्वे

रश्मिः ।

विशेषेति। स्थूलत्वादीनां श्रौतानां विशेषाणां प्रतिषेधस्तद्विषयिणीनामस्थूलत्वादिप्रकारकास्थूलादिविशेष्यकबुद्धीनाम्। सर्वत्रेति। वाजसनेयकाथर्वणातिरिक्तेषु स्थलेष्वपि। विद्यान्तरेति। सगुणोपासनेषु सर्वत्र विशेषप्रतिषेधोपसंहारेण विद्यान्तरं सगुणोपासनरूपत्वे। प्रपञ्चेति। पर्युदासः सदृग्ग्राही। विशेषेति। प्रापञ्चिकस्थूलत्वादीनां निराकरणरूपस्य। सामान्यादिति। सर्वत्र सामान्यात्। सौत्रतद्भावशब्दव्याख्यानं तस्य प्रतीति। विधिमुखेति। विशेषाणामानन्दादीनां विधिस्तन्मुखस्तदुपायो विचारः। इहाधिकरणे तु स्थूलत्वादीनां निषेधोपायः। तस्यैवेति। 'आनन्दादयः प्रधानस्ये'त्यस्य। भास्करमिति। अत्र भेदोपि ज्ञेयः। शाङ्करं आरोपापवादः स्पष्टः। विशिष्टाद्वैतार्थं पृथगाहुः रामानुजेति। सामान्यहेतुं व्याकुर्वन्ति स्म सर्वेष्विति। तद्भावहेतुं व्याकुर्वन्ति स्म तत्प्रतीताविति। ब्रह्मप्रतीतौ। प्रत्यगात्मनीति। जीवे। असाधारणेति। चिदचिदात्मकप्रपञ्चवैलक्षण्याकारनिश्चयार्थम्। हेयेति। हेयः प्रपञ्चस्तस्य प्रत्यनीक आनन्दादिस्तत्ता वैलक्षण्यं तस्या ज्ञानस्य। अचिदिति। जडंशाद्वैलक्षण्यम्। स्वल्पार्थे नञ्। चिद्वैलक्षण्यमिति। नहि चिज्जीवः प्रशास्तीति भावः। अस्थूलत्वादीति। आदिना प्रशासितृत्वम्। तथाचास्थूलादिमज्ज्ञानानन्दाकारस्येत्यर्थः। अन्तर्भाव इति। विषयतयान्तर्भावः। तासामिति। सौत्रं पदम्। तत्सहेति। 'आनन्दादयः प्रधानस्ये'त्यस्य सहकारित्वात्। प्रधानेति। प्रधानविशेषणत्वे। तत्रेति। दृष्टान्ते प्रमाणं तदुक्तमिति। यथा चतूरात्र इति। तथाहि। यजुर्वेदे 'जमदग्निः पुष्टिकामश्चतूरात्रेणायजेते'त्युक्ते जामदग्न्याहीने जामदग्न्यं च तदहीनं जामदग्न्याहीनम्, तत्र पुरोडाशं 'पुरोडाशिन्युपसदो भवन्ती'ति,

१. प्रथमप्रतिरूपतिः ।

भाष्यप्रकाशः।

होत्रं वेत्वि'त्यादिकः पुरोडाशप्रदानमन्त्रो विनियोगविधेर्याजुषत्वेन यजुर्वेदिनाध्वर्युणा याजुर्वैदिकेनोपांशुस्वरेण पठ्यते, न तूद्गात्रा सामगेन सामस्वरेणोच्चैस्त्वेन, तद्वत्। तदुक्तं पूर्वकाण्डे शेषलक्षणे 'गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोग' इति। अर्थस्तु, गुणमुख्ययोर्व्यतिक्रमे विरोधे सति तदर्थत्वात् गुणस्योत्पत्तिविधेः प्रधानार्थत्वान्मुख्येन याजुर्वैदिकेन विनियोगविधिना वेदसंयोगो ग्राह्य इति। एतदृष्टान्तव्याख्यानं पूर्वोक्तभाष्यत्रयेपि समानम्।

शाबरभाष्ये त्वत्रान्यदुदाहृतम्। तथाहि। अस्त्याधानं यजुर्वेदविहितम्, 'य एवं विद्वानग्निमाधत्त' इति, तदङ्गत्वेन यजुर्वेद एव गानं च विहितम्, 'य एवं विद्वान् वारवन्तीयं गायति यज्ञायज्ञीयं गायति वामदेव्यं गायती'ति, एतानि च सामानि सामवेदे उत्पन्नानि, अतः केन स्वरेण पठनीयमिति सन्देहे, उत्पत्तिविधेर्विनियोगविध्यधीनतया यजुर्वेदस्वरो ग्राह्य इति।

एवञ्चात्र विचार्यमाणे पूर्वोक्तं मतद्वयं न रुचिरम्, 'अक्षरधिया'मित्यत्राक्षरस्य धीरिति षष्ठीसमासे अक्षरस्य विशेषनिषेधसम्बन्धितया निवेशेन गौरवात् प्रशासनादेरसंग्रहात् पूर्वोक्तानावश्यकत्व-

रश्मिः।

पुरोडाशयुक्तासूपसत्स्विष्टिषूपदिष्टासु पुरोडाशप्रधानकमन्त्राणामुद्गातृवेदोत्पन्नाना'मग्निर्वै होत्रं वेरध्वर'मित्यादीनामुद्गात्रा प्रयोग इति यथाध्वर्युकर्तृकपुरोडाशविशेषाणां मन्त्राणां यत्र क्वचिच्छ्रुतानामप्यध्वर्यूणां सम्बन्धः, एवमक्षरं प्रति शेषाणां निषेधानां यत्र क्वचिच्छ्रुतानामप्यक्षरेण सर्वत्र सम्बन्ध इत्यर्थः। रामानुजभाष्ये तु उद्गातृवेदोत्पन्नमन्त्राः 'अग्निर्वै होत्रं वेत्वि'त्यादयः। प्रकाशे ते उपात्ताः। वेः पक्षिणः वायोर्वाग्निर्होत्रं पुरोडाशं वेः पूर्वार्थस्याध्वरमित्यर्थः। अग्निः वै निश्चयेन होत्रं पुरोडाशं वेतु गच्छतु। 'वी प्रजननकान्तिगत्यवसादनेषु'। पुरोडाशप्रदानमन्त्रः पठ्यत इत्यनेनान्वेति। **विनियोगे**ति। श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपषट्प्रमाणान्यतमप्रमाणसहकृतो योऽङ्गसम्बन्धं बोधयति स विनियोगविधिः। यथा 'दध्ना जुहोती'त्यत्र दधिगुणवत् उपांशुस्वरो गुणो विधीयते उपसदाख्ये कर्मणि 'अग्निर्वै होत्रं वेत्वि'त्यादिमन्त्रेषु। विनियोगविधिस्तु यजुर्वेदे 'जमदग्निः पुष्टिकामश्चतूरात्रेणायजेते'त्यत्र लब्धलिङ्गर्य इति। श्रुतिस्तु अमृतवर्षिण्यां शङ्करभाष्यमतीयायाम्। 'अग्निर्वै होत्रं वेत्वि'त्यादिक इत्यत्रादिना भास्करभाष्यीया 'अग्निर्वै होत्रं वेरध्वरस्य पितरं वैश्वानरमवसेकं इन्द्राय देवेभ्यो जुहुतां हविः स्वाहे'ति ग्राह्या। अत्र जुहुतामिति विनियोगविधिर्वा। अत्र याजुषत्वं याजुषौपसदाङ्गत्वाद्बोध्यम्। याजुर्वैदिकेनेत्युपांशुस्वरविशेषणम्। **उत्पत्ती**ति। प्रथमज्ञप्तिरुत्पत्तिः। 'यदाग्नेयोऽष्टाकपालः पुरोडाश' इति। **समानमि**ति। श्रुतिपाठभेदस्तूक्तः। **वारवन्तीयमि**ति। वारवन्तपदयुक्तं साम वारवन्तीयम्। एवमग्रेपि। 'उच्चैः साम्नोपांशु यजुषे'ति सामयजुषोः स्वरभेदोस्ति। उत्पन्नानि प्रथमज्ञातानि। **पठनीयमि**ति। गानम्। **विनियोगे**ति। यथा 'दध्ना जुहोती'ति विनियोगविध्यधीनः 'अग्निहोत्रं जुहोती'त्युत्पत्तिविधिः। दधिद्रव्यज्ञानं विना विशिष्टाग्निहोत्रज्ञानाभावात्। अत्र दृष्टान्तेन पूर्वपक्षोक्तहेतूनां गतिरुक्ता। तथाहि। श्रुतिविभागादिति शङ्करभाष्यीयो हेतुः, अग्रे द्वयं रामानुजभाष्यीयम्। तेषां गतिश्चिन्त्या। अक्षरस्य धीरित्यत्र विशेषनिषेधविषयिणीत्वं सम्बन्धोऽक्षरस्य धिया सह। तदाहुः **अक्षरस्ये**ति। विशेषनिषेधसम्बन्धो विशेष्यविशेषणभावः सोस्यास्तीति विधिनिषेधसम्बन्ध्यक्षरः तत्तयाक्षरनिवेशेन शक्यतावच्छेदके गौरवात्। व्यावहारिकसत्त्वेनाङ्गीक्रियमाणस्य जीववैलक्षण्यार्थं सोपाधिके प्रशासनद्यावापृथिवीविधारकत्वादेरसंग्रहात्। हेयप्रपञ्चप्रत्यनीकतायाः सगुणेऽभावात् पूर्वं रामानुजाचार्यमतनिरूपणे

इयदामननात् ॥ ३४ ॥

ननु संसारनिवृत्त्यानन्दाविर्भावयोरविशेषादक्षरे ब्रह्मणि लये पुरुषोत्तमे प्रवेशात् न्यूनतोक्तौ को हेतुरित्याकाङ्क्षायामाह। इयदिति परिमाणवचनम्। तस्य श्रुतौ कथनादित्यर्थः।

अत्रेदं ज्ञेयम्। तैत्तिरीयोपनिषत्सु 'सैषानन्दस्य मीमांसा भवती'त्युपक्रम्य, मानुषमानन्दमेकं गणयित्वा, तस्मादुत्तरोत्तरं शतगुणमानन्दं गन्धर्वानारभ्य, प्रजापतिपर्यन्तस्योक्त्वा, उच्यते 'ते ये शतं प्रजापतेरानन्दाः, स एको ब्रह्मण आनन्द' इति। एवं सति इयत् एतावदित्यक्षरानन्दस्य सावधिकत्वेन श्रुतौ कथनादानन्दमयत्वेन निरवध्यानन्दात्मकत्वस्य पुरुषोत्तमे कथनात्तथोक्तिरिति ॥ ३४ ॥

इति तृतीयाध्याये तृतीयपादे एकादशमक्षरधियामित्यधिकरणम् ॥ ११ ॥

---

भाष्यप्रकाशः।

दोषापत्तेश्च। तृतीये त्वक्षरस्याक्षरत्वेन निवेशादुक्तदोषत्रयाभावात्तन्मतमुत्तमम्। तथाप्याथर्वणोदितस्य परस्मादपरत्वस्य तैत्तिरीयोक्तस्य लोकरूपत्वस्य या धीस्तदसंग्रहान्न पूर्णमित्यवधेयम् ॥ ३३ ॥

इयदामननात् ॥ ३४ ॥ सूत्रमवतारयन्ति नन्वित्यादि। व्याकुर्वन्तः परिमाणवचनं व्युत्पादयन्ति अत्रेत्यादि। आनन्दमयत्वेनेत्यादि। पूर्वानुवाकसमाप्तावानन्दमये जीवस्योपसंक्रमणमुक्त्वा, अग्रिमारम्भे 'तदप्येष श्लोको भवती'ति तच्छब्देनानन्दमेव लक्षीकृत्य, 'यतो वाचो निवर्तन्त' इति श्लोकेन वाङ्मनसागोचरत्वस्य ब्रह्मानन्दे कथनेन पुरुषोत्तमे तथा कथनादक्षरे सावधिकत्वोक्तिरित्यर्थः। ननु 'यतो वाच' इति श्लोकः 'कदाचने'ति पाठभेदेन मनोमयेपि पठ्यते, ब्रह्मोपनिषदि च 'आनन्दमेतज्जीवस्य यज्ज्ञात्वा मुच्यते बुध' इति श्लोकोत्तरार्धे पठ्यते, अतः कथमेतेन पुरुषोत्तमानन्दस्य तथात्वसिद्धिरिति चेत्। उच्यते। मनोमयस्य वेदात्मकताया यजुःशिरस्त्वादिना बोधितत्वाद्वेदस्य च शब्दब्रह्मात्मकत्वात् 'सर्वे वेदा' इति श्रुतेर्ब्रह्मबोधकत्वान्मनोमयश्लोके ब्रह्मण इति पञ्चम्या शब्दब्रह्मणो वेदान्मनोमयाद्वाङ्मनसगोचरमानन्दं विद्वान्

रश्मिः।

उक्तमनावश्यकत्वं सगुणत्वस्य विशेषस्य निषेधादनावश्यकत्वदोषापत्तेरित्यर्थः। द्वितीयभास्करमते भेदोपि कार्यात्मना ज्ञेयः। उक्तेति। गौरवादित्याद्युक्तदोषत्रयाभावात्। तन्मतं रामानुजमतमुत्तमम्। परस्मादिति। नन्वक्षरधियामित्यत्राक्षरशब्दशक्यतावच्छेदकमक्षरत्वम्, परस्मादपरत्वं तु 'ऋग्वेदो यजुर्वेद' इत्यादिश्रुत्युक्तं ऋगादाविति चेत्। न। अक्षरस्यापरविद्यात्वात्तत्राप्यपरत्वं प्राप्तमिति। 'द्वे विद्ये वेदितव्ये परा चैवापरा चे'ति श्रुतेः। तैत्तिरीयेति। किंचेतिभाष्ये महानारायणोक्तस्य। तदसंग्रहादिति। 'अक्षरधिया'मित्यत्राक्षरस्याक्षरत्वेन निवेशात्, विशेषनिषेधसम्बन्धितयाप्यनिवेशात् परस्मादपरत्वेन लोकरूपत्वेनाप्यनिवेशात् तस्या असंग्रहात्। अक्षरपदशक्यतावच्छेदके न पूर्णम्, किंतु न्यूनमिति न्यूनताख्यनिग्रहस्थानमित्यर्थः ॥ ३३ ॥

इयदामननात्। नन्वित्यादीति। अविशेषादिति। 'दुःखाभावः सुखं चेति पुरुषार्थद्वयं मत'मितिवाक्यादविशेषात्। तथात्वेति। निरवध्यानंदत्वसिद्धिः। पुरुषोत्तमेति। शब्दब्रह्मप्रति-

---

१. इयत इति पाठः।
४२ ब्र० सू० र०

भाष्यप्रकाशः ।

कदाचन न बिभेतीति पुरुषोत्तमानन्दज्ञानसाधनतया मनोमय एतस्योक्ततया, ब्रह्मोपनिषदि च 'यज्ज्ञात्वा मुच्यते बुध' इति तुरीयपादे कथनेन जीवाभिन्नमानन्दमेतदित्यर्थायोगात् यस्मिन् परमात्मनि जीवात्मा संधेयत्वेन पूर्वमन्त्रे उक्तः, एतत्परमात्मस्वरूपं आनन्दं आनन्दोऽस्यास्तीत्यानन्दं जीवस्य सन्धेयत्वेन सम्बन्धि, यज्ज्ञात्वा बुधः सन् मुच्यत इत्यर्थकतया तस्य भगवदीयत्वेन तथात्वसिद्धिरिति जानीहि । अतो न चोद्यावकाश इति दिक् ।

अन्ये तु, इदमेकसूत्रमधिकरणान्तरमङ्गीकृत्य, 'द्वासुपर्णेति' मन्त्रो मुण्डके श्वेताश्वतरे च ब्रह्मप्रकरणे पठ्यते, काठके तु 'ऋतं पिबन्ता'विति । तयोराद्ये भोक्त्रभोक्त्रोर्वेद्यता, द्वितीये तु भोक्त्रोरेवेति वेद्यभेदाद्विद्याभेदे प्राप्ते, विद्यैक्यं युक्तम् । इयत एतावन्मात्रस्य द्वित्वपरिच्छिन्नस्योभयत्रामननात् । 'पिबन्ता'वित्यस्य प्रयोगस्य छत्रिन्यायेन पिबदपिबत्समुदायेपि सम्भवात् । उपक्रमोपसंहाराभ्यामेतयोर्वाक्ययोः परविद्यात्वनिश्चयेन उभयत्रापि जीवसहितस्य ब्रह्मण एव प्रतिपाद्यत्वादित्याहुः ।

तन्मतेऽधिकरणवैयर्थ्यमेव । काठकवाक्यस्य जीवद्वयपरत्वं निवार्य जीवसहितब्रह्मपरत्वस्य 'गुहां प्रविष्टा'वित्यधिकरण एव प्रतिपादितत्वात्तदपेक्षयाधिक्यस्यात्रादर्शनाच्चेति ।

रामानुजाचार्यास्तु, इयत् अस्थूलत्वादिविशेषितमानन्दादिकमेव गुणजातं सर्वत्रानुसन्धेयत्वेन प्राप्तम् । कुतः । आमननात् । आभिमुख्येन मननं चिन्तनमामननं तस्माद्धेतोरित्येवमर्थमाहुः । तत्राप्युदासीना वयम् ॥३४॥ इत्येकादशमक्षरधियामित्यधिकरणम् ॥११॥

रश्मिः ।

पाद्यपुरुषोत्तमानन्दशाब्दं ज्ञानं तस्य साधनतया । साधनत्वमुक्तविधया । एतस्येति । निरवध्यानन्दस्य । इत्यर्थायोगादिति । कर्मकर्तृभेदौचित्यादितिभावः । पूर्वमन्त्र इति । 'महात्मा प्रज्ञयात्मत्वं संधत्ते परमात्मनि । तेन सन्ध्याध्यानमेव तस्मात्सन्ध्यामिवन्दन'मिति मन्त्रे । तस्येति । निरवध्यानन्दस्य । तथात्वेति । निरवध्यानन्दसिद्धिः । चोद्येति । पुरुषोत्तमजीवमनोमयानन्दश्रुत्या प्राप्तस्य चोद्यस्य दोषस्यावकाशः । तयोरिति । वाक्ययोः । भोक्त्रभोक्त्रोः ब्रह्मजीवयोः । भोक्त्रोरिति । छायातपयोः । छत्रीति । 'छत्रिणो यान्ती'तिन्यायेन छत्री राजा, अन्ये त्वच्छत्रिणः । उपक्रमेति । मुण्डके तृतीयमुण्डकारम्भस्यापि द्वितीयमुण्डकस्था 'दिव्यो ह्यमूर्तः पुरुष' इत्युपक्रमेण 'आनन्दरूपममृतं यद्विभाती'ति वोपक्रमेण संपन्ना। श्वेताश्वतरे 'य एको वर्णो बहुधा शक्तियोगा' दित्युपक्रम्य 'अजामेकां लोहितकृष्णरूपा'मित्युपक्रम्य वा 'द्वा सुपर्णे'त्यस्याः कथनात् । उपसंहारस्तु मुण्डके 'नायमात्मा बलहीनेन लभ्य' इति, श्वेताश्वतरे 'ऋचो अक्षरे परमे व्योम'न्निति । उभयत्रेति । वाक्ययोः । अत्रेति । अस्मिन्नधिकरणे । अतोस्य सूत्रस्य पूर्वशेषत्वमिति भावः । अस्थूलत्वादीति । अस्थूलत्वादिमदानन्दादिकमित्येवं विशेषितम् । इदं पूर्वशेषमस्मिन्मते । तत्रापीति । अपिना पूर्वमतसमुच्चयः । एकत्रावृत्तेरदूषकत्वादपरत्र विद्वन्मण्डने 'अभेदादनुपाधित्वा'दित्यनयोक्तत्वादुदासीनाः। मायागुणैः सर्वकर्मत्वादिभिश्चिन्तनीयमित्यन्ये। रामानुजास्तु मायागुणैरचिन्तनीयम्। अस्मन्मतेऽपि। 'प्रवर्तते यत्र रजस्तमस्तयोः सत्त्वं च मिश्र'मिति द्वितीयस्कन्धात् ॥३४॥ इत्येकादशमक्षरधियामित्यधिकरणम् ॥ ११ ॥

## अन्तरा भूतग्रामवत् स्वात्मनः ॥ ३५ ॥ (३-३-१२.)

**अथ ज्ञानमार्गे यथा स्वात्मत्वेन[1] ब्रह्मणो ज्ञानम्, तथा भक्तिमार्गेऽपि भक्त्या पुरुषोत्तमज्ञाने स्वात्मत्वेन पुरुषोत्तमज्ञानं भवति, न वेति विचार्यते। सर्वान्तरत्वेन श्रुतौ कथनात् तत् भवतीति पूर्वः पक्षः। तथात्वेऽपि 'सर्वस्य वशी सर्वस्येशान' इत्यादिश्रुतिभिरेवमेव ज्ञानम्, न तु तथेति सिद्धान्तः। अत्र तथा**

---

भाष्यप्रकाशः ।

**अन्तरा भूतग्रामवत् स्वात्मनः ॥ ३५ ॥** अधिकरणमवतारयन्ति अथेत्यादि । यथा ज्ञानमार्गेऽक्षरधियः स्तूयन्ते, तथाऽभेदोपासनापीति भक्तिमार्गे अक्षरधीविनियोगविचारोत्तरम[2]-भेदधीस्मरणाज्ज्ञानमार्गे पूर्णज्ञानसम्पत्तौ यथा स्वात्मब्रह्माभेदानुभवात्मिका वृत्तिर्भवति, तथा भक्तिमार्गे सिद्धायां भक्तौ 'भक्त्या मामभिजानाती'ति वाक्यावेदिते ज्ञाने स्वात्मपुरुषोत्तमाभेदानुभवात्मिका वृत्तिर्भवति, न वेति संशये विचार्यत इत्यर्थः ।

पूर्वपक्षमाहुः सर्वान्तरत्वेनेत्यादि । बृहदारण्यके कहोडप्रश्ने उषस्तप्रश्ने च 'यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वे'ति, तदुत्तरवाक्ये च 'एष त आत्मा सर्वान्तर' इति याज्ञवल्क्येन सर्वान्तरत्वेन कथनात्, अन्तर्यामिब्राह्मणे च 'यः पृथिव्यां तिष्ठन् यः पृथिवीमन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयती'त्यारभ्य, 'य आत्मनि तिष्ठ'न्नित्यन्तैर्वाक्यैः परमात्मा सर्वान्तरत्वेन श्रावितः । स च यदन्तस्तिष्ठति, तं स्वान्तः स्थापयति, वह्निरिवायोगोलकमित्यन्तर्यामिब्राह्मणे सिद्धम् । तथा सति श्रौतेन येन केनापि साधनेन तस्मिन्नभिज्ञायमाने स्वात्मनस्तद्व्याप्तत्वेन भेदास्फुरणात् स्वात्मत्वेन ज्ञानमदण्डवारितम्, अतस्तद्भवतीति पूर्वः पक्ष इत्यर्थः ।

सिद्धान्तमाहुः तथात्वेपीत्यादि । ब्रह्मणः सर्वान्तरतया एतदात्मनस्तदविभक्तत्वेपि 'सर्वस्य वशी'त्यादिश्रुतिभिः सर्वेशितृत्वादिरूपेणैव ज्ञानम्, उत्कटया भक्त्या तेषामेव स्फुरणात्, न तु स्वात्मत्वप्रकारकमित्येष सिद्धान्त इत्यर्थः । नन्वभिज्ञाने सर्वांशज्ञानदर्शनात्तदंशाज्ञाने को हेतुरित्याकाङ्क्षायां हेतुं गृह्णन्ति अत्र तथेत्यादि । विपरीत इति । स्वात्मत्वेन ज्ञाने । एतदेव

रश्मिः ।

**अन्तरा भूतग्रामवत् स्वात्मनः ॥ ३५ ॥** एष इति । समीपतरवर्ती । स्थापयतीति । स्वाश्रयाश्रयत्वार्थं तथा । तस्मिन्निति । पुरुषोत्तमे । अभीति । 'भक्त्या मामभिजानाती'ति वाक्यं स्मारितम् । अदण्डेति । यथा दण्डेन गामभ्याजेत्यत्र दुष्टायां गवि दण्डोपयोगः, तथाऽदुष्टे पूर्वपक्षज्ञानमदण्डेन वारितमित्यर्थः । एतदात्मनः समीपतरवर्तिजीवात्मनः । एवेति । श्रीगोस्वामिनां महाविष्णुत्वेन टिप्पण्युक्तदिक् परस्याप्यभिप्रेतेत्येवकारः । तेषामिति । सर्वेशितृत्वादीनाम् । अयमर्थः। टिप्पण्यां श्रीगोस्वामिभिः 'समुद्विजे भवद्धेतो'रित्यत्र ब्रह्मविद्यायां देवक्यां भक्तिमार्गीयसामग्र्या ज्ञानमार्गीयसामग्रीबाधोपपादनात्तेषामिति । अधुनापि तथैव भक्तप्रत्यक्षविषयत्वेनैवकारः । स्वात्मत्वेति । स्वात्मत्वप्रकारकपुरुषोत्तमविशेष्यकं ज्ञानमित्यर्थः । तदंशेति । ईक्षत्यधिकरणे यावद्धर्मत्वेनाज्ञानमुक्तमत्राभिज्ञाने तदंशाज्ञाने को हेतुरिति प्रश्नः। अत्र तथेत्यादीति। वृतभक्ते स्वात्मत्वेन पुरुषो-

---

१. आत्मत्वेनेति पाठः । २. अक्षरधीविचारेणाभेदज्ञानस्मरणानन्तरं ज्ञानमार्गे इति पूर्वः पाठः श्रीहस्ताक्षरेषु ।

ज्ञानाभावस्यावश्यकत्वार्थं विपरीते बाधकमाह । पूर्वस्मिन् सूत्रे ब्रह्मानन्दात् भजनानन्दस्याधिक्यं निरूपितम् । स तु भगवद्दत्तः । तद्व्यवधायकोऽर्थश्च प्रभुणा न सम्पाद्यते । स्वात्मत्वेन ज्ञानं च भजनानन्दान्तरायरूपम् । यद्येतत् सम्पादयेत्, तं न दद्यात्, अग्रेऽन्यथाभावात्, अतः स्वात्मत्वेन ज्ञानं भक्तिमार्गीयस्य न सम्भवतीत्याशयेनाह **अन्तरा स्वात्मन** इति । भगवता भक्तिमार्गे स्वीयत्वेनाङ्गीकृतो य आत्मा जीवस्तस्य यदात्मत्वेन ज्ञानम्, तत् भजनानन्दानुभवे **अन्तरा** व्यवधानरूपमिति भगवता तादृशे जीवे तन्न सम्पाद्यत इत्यर्थः । तत्सम्पादनस्य सर्वथैवासम्भावितत्वं हीनत्वं च ज्ञापयितुं दृष्टान्तमाह **भूतग्रामवदि**ति । उक्तभक्तस्य विग्रहोऽप्यलौकिक इति तत्र लौकिको भूतग्रामो न सम्भवति, हीनत्वात्त-

भाष्यप्रकाशः ।

विभजन्ते पूर्वस्मिन्नित्यादि । 'इयदामननात्'दिति सूत्रे अक्षरस्य गणितानन्दत्वबोधनेन ब्रह्मानन्दाद्भजनानन्दस्याधिक्यं निरूपितम् । स भजनानन्दस्तु कृपाधिक्येन भगवता दत्त इति तद्व्यवधायकोऽर्थो भगवता न सम्पाद्यते । 'स वै नैव रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छ'दित्यादिश्रुतिभ्यो मुख्यभक्तिमार्गस्य क्रीडार्थत्वावगमादभेदे च क्रीडाया असम्भवात् । स्वात्मत्वेन ज्ञानं हि 'यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्ये'दिति श्रुतेर्भेदविलायकत्वेन भजनानन्दान्तरायरूपं यदि स्वात्मत्वेन ज्ञानं सम्पादयेत्, भजनानन्दं न दद्यात्, अग्रे विलयेन तस्यान्यथाभावात्, अतः स्वात्मत्वेन ज्ञानं भक्तिमार्गीयस्य पूर्णदशायां न सम्भवतीत्याशयेन स्वात्मत्वेन ज्ञाने बाधकमनेन सूत्रेणाहेत्यर्थः । सूत्रं व्याकुर्वन्ति भगवतेत्यादि । अन्तरेति मध्यवाचकमव्ययम् । तथाच व्यवधायकमित्यर्थः । नन्वस्तु तस्यान्तरायत्वम्, तथापि तन्न सम्पादयतीति कथमवगन्तव्यमित्यत आहुः तत्सम्पादनस्येत्यादि । अलौकिक इति । साक्षात्सम्बन्धस्य हेये लौकिकविग्रहे असम्भवादलौकिकः । हीनत्वात्तथेत्यर्थ इति । तथाच चिकीर्षितलीलाप्रतिबन्धकत्वेन हीनत्वाद्भूतग्रामवदन्तरायत्वं दृष्टान्तेनावगन्तव्यमित्यर्थः । लौकि-

रश्मिः ।

त्मज्ञानाभावस्य । बाधकमिति । अन्तरायत्वरूपं बाधकं सूत्रकार आह दत्त इति । सर्वात्मभावो दत्त इति तत्फलं सोपि दत्तः । फलसाधने एकीकृत्य निरूपिते वा । अर्थ इति । अभेदः । नेति । भक्तवश्यत्वादिति भावः । भक्तभावस्तु 'भद्रं कर्णेभिः शृणुयाम देवा' इति श्रुत्युक्तः । एकाकीति । एतावत्पर्यन्तमेकाकी पुरुषविधः । अहंकारपाप्मदाहभयविशिष्टः । मुख्येति । भक्तिमार्गेऽहंकारादिसत्त्व एकाकित्वम्, ज्ञानमार्गे तु न, ब्रह्मातिरिक्ताहंकारादेर्लयात् । कर्ममार्गे तु कर्मरूपीश्वरः । अतोऽत्र भक्तिमार्गस्येत्युक्तम् । मुख्यत्वं त्रिषु मार्गेषु । स्वात्मत्वेनेत्यादिभाष्यं विवृण्वन्ति स्म स्वात्मत्वेनेति । भजनानन्देति । सर्वात्मभावजन्यभजनानन्दान्तरायरूपम् । ज्ञानमिति । पुरुषोत्तमज्ञानम् । भजनानन्दमिति । भाष्यीयस्य तमितिपदस्यार्थः । अग्र इति भाष्यार्थोऽग्र इति । तस्येति । भक्तैः सह निगूढभावकर्तुः श्रीपुरुषोत्तमस्येवार्थेन भेदेन लीला अनुभ(व)वतः अन्यथाभावोऽभेदेन भावः । बाधकमिति । विभाज्यस्यानुवृत्तिः । भगवतेत्यादीति । ननु जगद्व्यापारवर्जेऽधोक्षजे स्वात्मत्वेन ज्ञानमसम्भवीत्यत आहुः स्वीयत्वेनेति । तथाच 'नायमात्मा प्रवचनेन लभ्य' इति श्रुतिविषयभक्तविषयं पुरुषोत्तमस्य स्वात्मत्वेन ज्ञानं सम्भवीति भावः । तादृश इति । वृते । नेति । अन्यत्राप्राप्तं वृत प्राप्तं नेत्यर्थः । तत्सम्पादनस्य अभेदसम्पादनस्य । उक्तेति । वृतभक्तस्य पुरुषोत्तमशरीरत्वेन तस्य विग्रहोपि

थेत्यर्थः । अथवा । लौकिको भूतग्रामः स्त्रीपुत्रपश्वादिर्ब्रह्मानन्दानुभवे बाधकः, तथा भजनानन्दानुभवे स्वात्मत्वेन भगवज्ज्ञानमित्यर्थः ॥ ३५ ॥

अन्यथाऽभेदानुपपत्तिरितिचेन्नोपदेशान्तरवत् ॥ ३६ ॥

ननु भक्तेष्वप्युद्धवादिषु ज्ञानोपदेशः श्रूयते, स चात्मब्रह्माभेदज्ञानफलक इत्यात्मत्वेन ज्ञानाभावे तदभेदोपदेशानुपपत्तिः स्यादिति तन्मन्तव्यमेव, एवं सति भक्तिमार्गात् ज्ञानमार्गस्योत्कर्षश्च सिध्यतीत्याशङ्क्य, परिहरति उपदेशा-

भाष्यप्रकाशः ।

कशरीरस्य प्रतिबन्धकत्वं सन्दिग्धत्वादुपपादनसापेक्षमित्यरुच्या प्रकारान्तरेण दृष्टान्तं व्याकुर्वन्ति अथवेत्यादि । यत्तदोर्नित्यसम्बन्धाद्यथेति पदमर्थादेवायातीत्यतो नोक्तम् ॥ ३५ ॥

अन्यथाऽभेदानुपपत्तिरितिचेन्नोपदेशान्तरवत् ॥ ३६ ॥ स्वात्मत्वेन भगवज्ज्ञानस्य बाधकत्वे भक्तेषु तदुपदेशो नोपपद्येतेत्याशङ्क्य परिहरतीत्याशयेन व्याकुर्वन्ति नन्वित्यादि । श्रूयते इति । एकादशस्कन्धे उच्यते । आत्मत्वेन ज्ञानाभावे इत्यन्तोऽन्यथापदस्यार्थः । तदभेदोपदेशानुपपत्तिरित्यभेदानुपपत्तिरित्यस्यार्थः । इतीत्यारभ्य, परिहरतीत्यन्त इति चेन्नेत्यस्यार्थो व्याख्यातः ।

तत्रैवमभिसन्धिः । पूर्वं उपपन्नसूत्रे दासीदाससुहृद्भेदेन त्रिविधा लीलामध्यपातिनो भक्ता उक्ताः, तत्र 'नोद्धवोऽण्वपि मन्न्यून' इति वाक्यादुद्धवोऽत्यन्तरङ्गः । आदिपदेन व्रजस्थाः, तेपि 'रामेण सार्धं मथुरां प्रणीत' इत्यादिना विगाढभावा उक्ताः, तत्रोद्धवे साक्षादुपदेशः, व्रजस्थेषु सन्देशेन साक्षाच्च । तथा सतीतरेषु तदावश्यकत्वं किं वाच्यम् । किञ्च, तेषु चेदुपदेशो विफलः स्यात्, तदा अपार्थकार्यकर्तृत्वाज्जीवतुल्यत्वं चापद्येतेति तस्य तेषु फलमवश्यमभ्युपेयम् । एवं सति पूर्वोक्तं सर्वमयुक्तमिति सूत्रांशेनाशङ्क्य, दृष्टान्तेन परिहरतीति बोध्यः ।

रश्मिः ।

'ममास्तु तव सन्निधौ तनुनवत्वमेतावता न दुर्लभतमा रतिर्मुररिपौ मुकुन्दप्रिय' इति यमुनाष्टकोक्तोऽलौकिकः । साक्षात्सम्बन्धस्येति । भगवत्साक्षात्सम्बन्धस्य । चिकीर्षितेति । 'अथातोऽनुप्रश्नाः । उताविद्वानमुं लोकं प्रेत्य कश्चन गच्छति । आहो विद्वानमुं लोकं प्रेत्य कश्चित्समश्नुता उ ।' अग्रे 'अस्माल्लोकात्प्रेत्य एतमन्नमयमात्मानमुपसंक्रामती'त्यानन्दमयपर्यन्तमुपसंक्रमणमुक्तम् । तदनन्तरं चिकीर्षितलीलाप्रतिबन्धकत्वेन । सन्दिग्धत्वादिति । पुष्टिमार्गीयाणां भक्तानामलौकिकशरीरप्राप्तिं विनैव पुरुषोत्तमानुभव इति सन्दिग्धत्वात् । किञ्च, पुरुषोत्तमस्य स्वात्मत्वेनानुभवो लीलान्तःपात्यपि लीलान्तःपातिप्रतिबन्धकसहित इति स नोक्तः । इत्यर्थ इति । तथाच श्रुतिः 'गुहां प्रविष्टावात्माना'वित्यधिकरणे 'विशेषणाच्चे'तिसूत्रे माध्वभाष्ये 'सत्य आत्मा सत्यो जीवः सत्यं भिदा सत्यं भिदा सत्यं भिदा मैवारुणो मैवारुणो मैवारुण' इति पैङ्गिश्रुतिः । भेद इवशब्दार्थकः । गीतायां 'विभक्तमिवे'ति ब्रह्म(प्र)करणवाक्यात् ॥ ३५ ॥

अन्यथाऽभेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥ ३६ ॥ विगाढेति । विगाढत्वं नामांविहितभक्त्या निरन्तरपुष्टपरब्रह्मभक्तिकत्वं भावे । 'रामेण सार्धं'मितिश्लोके सिद्धम् । तस्य तेष्विति । उपदेशस्योद्धवादिभक्तेषु । फलं स्वात्मत्वेन पुरुषोत्तमाभेदज्ञानम् । पूर्वोक्तमिति । अभेदज्ञा-

न्तरवदिति। न ह्यत्राभेदज्ञानायोपदेशः, किन्तु यथाग्निमत्स्वर्गापवर्गाख्यपारलौकिकानन्दफलकालौकिके कर्मण्यधिकाररूपसंस्कारार्थं गायत्र्युपदेशः क्रियते, तत्संस्कारसंस्कृतं तच्छरीरादिकमपि भूतादिभिरपि नोपहतं भवति, यथा वा योगोपदेशसंस्कृतस्य वपुरग्न्यादिभिर्नोपहन्यते, तथा प्रकृते भक्तिभावस्य रसात्मकत्वेन संयोगविप्रयोगभावात्मकत्वात् द्वितीयस्य प्रलयानलादतिकरालत्वेन कदाचित्तद्भावोदये तेन भक्तवपुरादेस्तिरोधानेऽग्रिमभजनानन्दानुभवप्रतिबन्धः स्यादिति तन्निवृत्त्यर्थं ज्ञानोपदेशसंस्कारसंस्कृतं तद्वपुरादिकं भगवता क्रियते, न त्वात्माभेदज्ञानं भगवतोऽभिप्रेतमित्यर्थः। अन्यथोपदेशानन्तरं बदरीं गच्छन् विदुरं प्रति 'इहागतोऽहं विरहातुरात्मे'ति न वदेत्। एवमेवान्येष्वपि भक्तेषु ज्ञेयम्। अत्रोपदेशान्तरपदं प्रस्तुतोपदेशभिन्नमुपदेशान्तरमाहेति प्रस्तुतस्य

भाष्यप्रकाशः।

दृष्टान्तं व्याकुर्वन्ति न हीत्यादि। अत्र प्रथमार्थे वतिः। तथाच फलान्तरार्थं यथा गायत्र्युपदेशः, तथा भजनानन्दार्थमयमुपदेश इत्यर्थः। तस्यावान्तरफलं तत्संस्कारेत्यादिनोच्यते। तत्तथा न प्रसिद्धम्, अतः प्रकारान्तरमाहुः यथा वेत्यादि। एतच्चोक्तमेकादशे 'अग्न्यादिभिर्न हन्येत मुनेर्योगमयं वपु'रिति। अभिप्रेतमिति। मुख्यत्वेन अभिप्रेतम्। तथाचोक्तरीत्या उपदेशस्य फलान्तरसत्त्वेनात्मनि तदभेदज्ञानस्य साफल्ये सति न भगवतो जीवतुल्यत्वापत्तिः, नापि ज्ञानमार्गोत्कर्ष इत्यर्थः। नन्वत्रोक्तरीत्या भजनानन्दप्रतिबन्धाभाव एवोपदेशफलम्, न ब्रह्माभेदानुभव इत्यत्र किं गमकमित्याकाङ्क्षायामाहुः अन्यथेत्यादि। एवमन्येष्वपि भक्तेषु ज्ञेयमिति। कुरुक्षेत्रप्रसङ्गस्थोत्कण्ठावाक्यैः 'आहुश्च ते नलिननाभे'ति वाक्याच्च ज्ञेयम्। ननु भवत्वेवम्, तथापि सूत्रे 'अभेदानुपपत्ति'रित्युक्तम्, न त्वभेदोपदेशानुपपत्तिरिति, अतोऽत्रायमेव सूत्रकाराशय इति कथं ज्ञातव्यमित्यत आहुः अत्रेत्यादि। दृष्टान्तकोटिप्रविष्टमुपदेशान्तरपदं प्रस्तुतोपदेशभिन्नमुपदेशान्तरमाहेति प्रस्तुतस्य तस्योपदेशस्याभावादभेदानुपपत्तिपदमलग्नकं स्यात्,

रश्मिः।

नस्य प्रतिबन्धकत्वम्। बोध्य इति। अभिसन्धिर्बोध्य इत्यर्थः। अत्रेति। सौत्रदृष्टान्ते। अयमिति। सौत्रो भेदोपदेशः। मुख्यत्वेनेति। अन्यानङ्गत्वेन। उक्तविरोधादितिभावः। उक्तरीत्येति। यथा वेत्यादिभाष्योक्तरीत्या। नेति। अपार्थकार्यकर्तृत्वात्तथा। नापीति। एवं सति भक्तिमार्गाज्ज्ञानमार्गोत्कर्ष इत्यादिभाष्योक्तज्ञानमार्गोत्कर्षो नेत्यर्थः। उक्तरीत्येति। यथा वेत्यादिभाष्योक्तरीत्या। अन्यथेत्यादीति। न वदेदिति। उपदेशानन्तरं पुरुषोत्तमाभिन्नत्वादविरहात्मेति वदेत्। अन्येष्विति। देवकीवसुदेवार्जुनेषु। एकादशसमाप्तौ 'प्राणांश्च विजहुस्तत्र भगवद्विरहातुरा' इति वाक्यम्। अर्जुने तु 'कृष्णस्य विरहातुर' इति वाक्यम्। श्रीनन्दे तु वक्ष्यमाणम्। अत्र विरहोऽविद्यया विद्योपमर्दे इत्याशङ्क्याहुः कुरुक्षेत्रेति। एकोनाशीतितमाध्याय उत्तरार्धे 'अथैकदा द्वारिकाया'मित्यारम्भके उत्कण्ठावाक्यानि। तानि च 'का विस्मरेत वां मैत्री'मित्यादीनि। वां नन्दयशोदयोः मैत्रीम्। रोहिणी देवकी च वदति यशोदां प्रति। इतोप्युत्कण्ठावाक्यमाहुः आहुश्चेति। गोप्य आहुश्च। 'आहुश्च ते नलिननाभ पदारविन्दं योगेश्वरैर्हृदि विचिन्त्यम-

१. अपिर्नास्ति क्वचित्। २. प्रकाशे एवेति नास्ति। ३. उपदेशमाहेति पाठः।

तस्यान्यस्याभावादभेदपदेनाभेदोपदेश एवोच्यते । एतेन भगवान् स्वीयानां भक्तिभावप्रतिबन्धनिरासायैव सर्वं करोतीति ज्ञापितं भवति ।

अथवा। उपदेशान्तरवदित्यस्यायमर्थः । शरीराद्यध्यासवतस्तद्भिन्न आत्मा तत्त्वम्, न तु शरीरादिरित्युपदेशो ज्ञानमार्गे यथा क्रियते, तेन शरीरादावात्मबुद्ध्या यः स्नेहादिः, सोऽपगच्छति, तथात्र सर्वेषामात्मनो ह्यात्मा 'य आत्मनि तिष्ठ'न्नित्यादिश्रुतिसिद्धो जीवात्मनोऽप्यात्मा पुरुषोत्तम इति बोध्यते । तेन पुरुषोत्तमे निरुपधिः स्नेहस्तत्सम्बन्धित्वेनात्मनि स सिध्यति । यद्यप्येवंभावः पूर्वमप्यासीदेव, तथापि सहजस्य शास्त्रार्थत्वेन ज्ञाने सति प्रमोदो दार्ढ्यं च भवतीति तथा । नैतावता जीवाभेद आयाति । अग्रे जीवनसम्पत्तिरेवोपदेशकार्यम्, न तु तेन पूर्वभावोपमर्दः सम्भवतीति सारम् । तेन ज्ञाने सर्वाधिक्यं मन्वानाय भक्तिबलप्रदर्शनं च सिध्यति ॥ ३६ ॥

भाष्यप्रकाशः ।

अतोऽत्राभेदपदेनाभेदोपदेश एव लक्षणयोच्यत इत्यभेदपदान्वयापनुपत्त्या ज्ञातव्यमित्यर्थः । तेन सिद्धमाहुः एतेनेत्यादि । एतेनेति । उक्ताशङ्कानिरासेन ।

भक्तदेहस्थितेर्योगादेशादपि सम्भवेन तदर्थमात्मब्रह्माभेदोपदेशकथनं न युक्तमित्यरुच्या उपदेशान्तरपदस्यार्थान्तरमाहुः अथवेत्यादि । तथाच स ज्ञानोपदेश एतदर्थः, न त्वात्मब्रह्माभेदज्ञानफलक इति न तेन ज्ञानोत्कर्षसिद्धिरित्यर्थः । नन्वेवं सति ज्ञानोपदेशवैयर्थ्यं नापैतीत्याशङ्क्य परिहरन्ति यद्यपीत्यादि । तथेति । अवैयर्थ्यम् । नैतावतेत्यादि । तथाचैवं ज्ञानोपदेशस्य सार्थक्यादेतावता आत्मत्वोपदेशमात्रेण न जीवस्य ब्रह्माभेद आयातीत्यर्थः । तेन सिद्धमाहुः अग्र इत्यादि । तथाच यत्र किञ्चित्कार्यार्थं विप्रयोगसहनमावश्यकम्, तत्रैवैवं प्रभुः करोति, न तु सर्वत्र । अतः पूर्वोक्तं सर्वं सारमुपपन्नमित्यर्थः । एवंकरणस्य प्रासङ्गिकं फलमाहुः तेनेत्यादि ।

ननूद्धवादिषु ज्ञानोपदेशः पौराणः, स किमर्थमिह विचार्यत इति चेत् । उच्यते । 'विधिश्च प्रतिषेधश्च निगमो ही'त्यादिनोद्धवकृतप्रश्नेन 'मां विधत्तेऽभिधत्ते मा'मित्यादिना भगवदुक्तोत्तरेण

रश्मिः ।

गाधबोधैः । संसारकूपपतितोत्तरणावलम्बं गेहंजुषामपि मनस्युदियात्सदा नः' । लक्षणयेति । नामैकदेशत्वादैशिकसम्बन्धो लक्षणा तया । अभेदपदेति । यथा 'गङ्गायां घोष' इत्यत्र घोषपदान्वयानुपपत्त्या लक्षणाबीजभूतया ज्ञातव्यमित्यर्थः । उक्तेति । ननु भक्तेष्वित्याद्युक्तशङ्कानिरासेन । भक्तिभावेति । विरहेण वपुराद्यभावे भक्तिभावे विरहांशप्रतिबन्धः तन्निरासाय । भ्रमरगीतसुबोधिन्यैवकारः । अपैतीति । पूर्ववत् । यद्यपीत्यादीति । पूर्वमिति । (यथाहुस्ते (उद्धवादयः) उत्पत्त्यैव भक्ता इति । तथाच जन्मना ज्ञानवन्तो जडभरतादयो ज्ञेयाः । यद्वा । युगलगीते गोपीनां सिद्धेः ।) उपदेशात्पूर्वमित्यर्थः । अत्रीति । तेनोत्तमाधिकारोद्द्योति भाष्यारम्भकारिकायाः । अग्र इत्यादीति । देवकीवसुदेवार्जुननन्दगोपीषु । अग्रे एकादशसमासौ एकाशीतितमाध्याये भ्रमरगीते च । उपदेशकार्यमुक्तम् । अतः पूर्वोक्तमिति । भक्तविषयत्वात्पूर्वोक्तं भक्तिभावप्रतिबन्धनिराकरणाय ज्ञानोपदेशः, न तु पुरुषोत्तमस्य स्वात्मत्वेन ज्ञानायेत्युक्तम् । सारमिति । स्मार्तः प्रयोगः । 'सारं सारं समुद्धृत'मिति वाक्यात् । प्रासङ्गिकमिति । प्रसङ्गो ब्रह्माभेदज्ञानफलकज्ञानोपदेशपरिहारस्य तेन जन्यते भक्तिबलप्रदर्शनं प्रासङ्गिकम् ।

१. अतिप्रमोद इति पाठः ।

## व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३७ ॥

ननु 'तद्योऽहं सोऽसौ योऽसौ सोऽह'मित्यैतरेयके, तैत्तिरीयके च 'अहमस्मि ब्रह्माहमस्मी'ति पठ्यते। अत्र मध्यस्थं ब्रह्मपदमुभयत्र सम्बध्यते। तेनावृत्त्या व्यतिहारः। अतो ब्रह्माभेदः सिध्यति। तथा लीलामध्यपातिभक्तानामपि 'कृष्णोऽहमहं कृष्ण' इति भाव उल्लेखश्च श्रूयते। अतस्तदभेदज्ञानं भक्तिफलमिति पुम्फुल्यमानं[1] प्रतिवादिनं तत्स्वरूपं बोधयति। रसात्मकत्वाद्भक्तेः संयोगविप्रयोगात्मकत्वात्

भाष्यप्रकाशः ।

च तस्य श्रौतत्वस्फुटीकरणात्, सन्देशेपि 'एतदन्तः समाम्नाय' इति वाक्येन तथात्वाद्विचार्यत इति जानीहि ।

अत्र शाङ्करा द्विसूत्रमेतदधिकरणमङ्गीकृत्य बृहदारण्यकस्थोषस्तकहोडब्राह्मणयोर्भिन्नविद्यात्वमभ्यासादाशङ्क्य रूपाभेदादैकविद्यं साधयन्ति ।

भास्कराश्च सूत्रमेकीकृत्य उपदेशवदित्येवं पठित्वा पूर्ववदेव सिद्धान्तयन्ति ।

रामानुजास्तु व्यतिहारादिसूत्रद्वयमत्र निक्षिप्यैतदेव सिद्धान्तयन्ति ।

तदिदमुपसंहारस्वाध्यायसूत्राभ्यामेव सिध्यतीति तेनैव गतार्थम्, अतो न पृथक् चिन्तनीयम् ॥ ३६ ॥

व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३७ ॥ सूत्रमवतारयन्ति नन्वित्यादि । ऐतरेयके इदं वाक्यमादित्यपुरुषं प्रकृत्योक्तम् । तैत्तिरीयके तु जलस्थं ब्रह्म प्रकृत्य । अत्रेति । तैत्तिरीयके । तेनावृत्त्या व्यतिहार इत्यादि । ब्रह्मपदस्योभयत्र सम्बन्धेन तदावृत्त्या व्यतिहारः स्वात्मनो ब्रह्मत्वविधानेन ब्रह्मणः स्वात्मत्वविधानेन व्यत्ययः । अत उक्तरूपाद्व्यत्ययाज्जीवस्य ब्रह्माभेदः सिध्यति, तथा भक्तवाक्येपीति शङ्कायां व्यतिहारस्वरूपं सूत्रेण बोधयति । तथाच यद्यभेददर्शनस्य भक्तिफलत्वं न स्यात्, तदा लीलास्थानां ब्रह्माभेदो न स्फुरेत्, स तु स्फुरतीति दृश्यत इति पूर्वोक्तः सिद्धान्तो न युक्त इत्याशङ्कायां व्यतिहार-

रश्मिः ।

शैषिकः प्रत्ययः । भाष्यीयचकारार्थः । श्रौतविषयाग्रहिणः प्रत्याहुः नन्विति । श्रौतत्वेति । विधिप्रतिषेधार्थवादनामधेयमन्त्राणां श्रुतिषु दर्शनाच्छ्रौतत्वस्फुटीकरणात् । समाम्नायः श्रुतिः । 'वने वृन्दावने क्रीडन् गोपगोपीसुरैः सहे'ति श्रुतिः । प्रपञ्चोयमिति । बृहदिति । 'यत्साक्षादपरोक्षं ब्रह्म, य आत्मा सर्वान्तर' इत्येवं द्विरुषस्तकहोडप्रश्नयोर्नैरन्तर्येण वाजसनेयिनः समामनन्तीति । 'अभ्यासस्य भेदकत्वं पूर्वतन्त्रसिद्धम्' । एकीकृत्येति । तेन 'अन्तरा भूतग्रामवदात्मनोऽन्यथाभेदानुपपत्तिरितिचेन्नोपदेशव'दित्येवमेकीकृत्य ॥ ३६ ॥

व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३७ ॥ आदित्येति । अन्तस्तद्धर्माधिकरणोक्तमादित्यपुरुषम् । जलस्थमिति । 'अम्भस्यपारे' इत्यारम्भात् । अंम्भसि अपारे इति च्छेदः । अत एव 'नमामि हृदये' इति सुबोधिन्यारम्भे कारिका । व्यत्यय इति । विशेष्यविशेषणभावस्य ब्रह्मजीवयोर्व्यत्ययो वैपरीत्यम् । पूर्वोक्त इति । ज्ञानोपदेशस्य भक्त्यर्थं वपुरादिधारणार्थत्वमिति सिद्धान्तः ।

१. पम्फुल्यमानमिति पाठः ।

द्वितीयभावोद्रेके यथेतरेऽश्रुप्रलापाद्यो व्यभिचारिभावाः, तथातिविगाढभावेन तद्भेदस्फूर्तिरप्येकः, स च न सार्वदिकः, तदा स्वात्मानं तत्त्वेन विशिंषन्ति, तं च स्वात्मत्वेन । सोऽत्र व्यतिहारपदार्थ इत्यर्थः । अपरं च । उद्देश्यविधेयभावस्फूर्तौ न ह्यद्वैतज्ञानमस्ति, किन्तु भावनामात्रम्, भक्तानां तु विरहभावे तदात्मकत्व-मेवाखण्डं स्फुरति, येन तल्लीलां स्वतः कुर्वन्ति । एतद्यथा तथा श्रीभागवतदशम-

भाष्यप्रकाशः ।

स्वरूपमनेन बोधयतीत्यर्थः । सूत्रं व्याकुर्वन्ति रसात्मकत्वादित्यादीति । एकः स इति । एको व्यभिचारिभावः । तथाच विरहदशायां काश्चनात्मानं तत्त्वेन विशिंषन्ति, अन्याश्च तं स्वात्मत्वेन, अतो भिन्नवक्तृको व्यतिहारपदार्थः, न तु त्वदुक्तरीतिकः, अतः कादाचित्कत्वान्न तस्य भक्तिफल-त्वमित्यर्थः । सूत्रयोजना तु, इतरवत् अश्रुप्रलापादिवत्, भक्तानां 'अहं कृष्णः कृष्णोऽह'मिति व्यतिहारो विशेषणबुद्धिव्यत्ययो व्यभिचारिभावः, हि यतो हेतोः विशिंषन्ति । भगवद्दृष्टत्वेनाश्वत्थादीनिव । अनेन प्रकारेणानात्मानं कदाचिदेव विशिंषन्ति, न सर्वदा, अतस्तथेति । एतेनोदाहरणेन भक्त्युत्कर्षसिद्धिं स्फुटीकुर्वन्ति अपरं चेत्यादि । (तथाचात्र 'लीला भगवतस्तास्ता ह्यनुचक्रुस्तदात्मिका' इति पूर्वं कथनात्, 'रिङ्गयामास काप्यङ्घ्री कर्षती'त्यादाव-नुकरणे स्वात्मविस्मरणेन केवलभगवत्स्वस्फूर्तेरेव बोधनात्तथेत्यर्थः । एवञ्च 'मय्येव सकलं जात'मित्यत्रापि भावनामात्रम्, चतुर्थपादे 'तद्ब्रह्मास्म्यहमेव य' इत्यत्र 'ब्रह्माह'मिति पदाभ्यामद्व-यभावनामात्रस्यैव बोधनात् । एतद्यथा तथा अस्माभिः कैवल्योपनिषदर्थसंग्रहे स्फुटीकृतमिति ततोऽवधेयम् । अत्राभेदानुभवस्य विगाढभावदशास्थव्यभिचारिभावतया भक्तिमार्गे विनियोग-

रश्मिः ।

रसात्मकत्वादित्यादीति । अतिविगाढेति । अविहितभक्तिपूर्वकशास्त्रीयस्नेहवत्त्वं विगाढ-त्वम् । अतिशब्दस्तु अन्याभिनवगुप्तपादादिप्रौढदृष्टत्वेनात्यन्तत्वार्थं विगाढम् । तद्भेदेति । रामानुज-भाष्ये 'अम्भस्यपार' इत्यारम्भे 'महीया'निति पदेनानन्दवल्लीस्थो 'रसो वै स' इत्युक्तः परामृश्यतेऽतोऽत्र तदभेदस्फूर्तिः । तमिति । पुरुषोत्तमम् । भिन्नेति । ज्ञानिभिन्नभक्तवक्तृकः । त्वदिति । ज्ञानिवक्तृकः । 'अहं मनुरभवं सूर्यश्चे'तिवत् । अत इति । भक्तिमार्गीयत्वात् । तस्येति । पुरुषोत्तमाभेदज्ञानस्य । विशेषणेति । व्यत्ययो वैपरीत्यम् । व्यभीति । शान्तरसनिष्ठत्वे सति भक्तिरसनिष्ठत्वात् । तथे-तीति । भक्तिमार्गीयेति । अपरं चेत्यादीति । परेषामैतरेयतैत्तिरीयकयोरुद्देश्यविधेयभावेऽविद्याया अंगतत्वान्न ह्यद्वैतज्ञानमस्ति, किन्तु शास्त्रदृष्ट्या भावनाऽभेदस्मरणम् । एवकारार्थे मात्रच् । पूर्णज्ञानिनो वामदेवस्य 'अहं मनुरभवं सूर्यश्चे'त्येवमवयुत्य(।)निरूपणमद्वैतस्य । कर्ममार्गे संन्यासाभावाद्भक्तिमार्गं आहुः भक्तानामिति । संन्यासे विरहभावे । 'विरहानुभवार्थं तु सर्वत्यागः प्रशस्यत' इति वाक्यात् । अख-ण्डमित्यस्य भावाद्वैते विशेषणं तदात्मकत्वमेवेति । यथा 'सा सा सा सा जगति सकले कोऽयम-द्वैतवाद' इति । वक्ष्यन्ति चाग्रे लिङ्गभूयस्त्वाधिकरणे । येनेति । अनेनाखण्डस्फुरणस्य करणत्वमुक्तम् । निरोधलीलाकरणे 'पृच्छथेमा लता' इत्यत्राखण्डं तदात्मकत्वं लतासु स्फूर्तिः करणम् । यतो भगवदीय एव भगवद्गतिं जानातीति पृच्छया भवन्ति । 'स्वयमेवात्मनात्मानं जानासी'ति वाक्यात् । तत्रापि स्वतः स्फुरणं प्रत्यक्षात्मकमिति नान्यप्रश्नापेक्षा । भक्त्युत्कर्षस्त्वेवम् । सर्वभावः पुरुषोत्तमः । गीतायां पुरुषोत्तम-योगाध्याये तथोक्तेः । स चाक्षरद्वारा, स च पाद इति अखण्डांश इदमित्थतयाक्षर एव, पुरुषोत्तमस्या-

**स्कन्धविवृतौ प्रपञ्चितमस्माभिः । एवं सति मुख्यं यदद्वैतज्ञानं तत् भक्तिभावैकदेशव्यभिचारिभावेष्वेकतरदिति सर्षपस्वर्णाचलयोरिव ज्ञानभक्त्योस्तारतम्यं कथं वर्णनीयमितिभावः ॥ ३७ ॥**

**इति तृतीयाध्याये तृतीयपादे द्वादशमन्तरा भूतग्रामवदित्यधिकरणम् ॥ १२ ॥**

---

भाष्यप्रकाशः ।

विचारेण साधनदशायां सर्वभावेन भजने भेदोपासनवदभेदोपासनस्याप्येकदेशत्वं बोधितम् । सर्वभावेनैवाकृत्स्नत्वपरिहारे तत्र विशेषाभावादिति ।)

यत्तु शङ्करभास्कराचार्यौ पूर्वोक्तमैतरेयवाक्यं 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसी'ति जाबालवाक्यं चोदाहृत्य, किमिह व्यतिहारेणोभयरूपा मतिः कार्या, उतैकरूपेति संशये, उभयरूपमतिकरणे ईश्वरस्य निकर्षः, संसारिणश्चोत्कर्ष आपद्येतेत्येकरूपैव कार्येति पूर्वपक्षमुक्त्वा, उभयरूपैव कार्या, अन्यथा उभयाम्नानमनर्थकं स्यात् । नचोक्तदोषापत्तिः । अनेन प्रकारेणाप्यात्मैक्यस्यैवानुचिन्तनीयत्वात् । वचनप्रामाण्यात्त्वत्र द्विरूपा मतिः कर्तव्येत्युच्यते । फलतस्त्वेकत्वमेव दृढीभवति । यथा ध्यानार्थेपि सत्यकामादिगुणोपदेशे तद्गुण ईश्वरः प्रसिध्यति, तद्वदित्याहतुः ।

तदसङ्गतम् । तस्या मतेर्वचनमात्रजन्यत्वे विशेष्यविशेषणभावस्फुरणेन तादृशभावनामात्रं कार्यमिति सिध्यति, न तु तेन भेदोऽपैति, आहार्यज्ञानत्वात् । नचानेन फलत ऐकात्म्यसिद्धिरित्यपि युक्तम् । पूर्वोक्तैर्न्यायैस्तद्विषयश्रुतिभिश्च सिद्धे अंशांशिभावे तदपनोदेनैकात्म्यस्य वक्तुमशक्यत्वात् । 'यथा ध्यानार्थेऽपी'ति भवदुक्तन्यायेनापि वाक्यप्रामाण्यात्तद्गुणकेश्वरप्रसिद्धिवद्विशेषणविशेष्यभावबोधनबलात् तादात्म्यस्यैव सिद्धेश्च । लक्षणाग्रस्तं वाक्यैकदेशं 'तत्त्वमसी'त्यादाय

रश्मिः ।

धोक्षजत्वात् । तथाचेदमित्थतया चरणेऽखण्डत्वम्, न भक्तिलभ्ये पुरुषोत्तम इति ज्ञानाद्भक्त्युत्कर्षसिद्धिः । **अत्रेत्यारभ्येतीत्यन्तो** ग्रन्थो मूलपुस्तके नास्ति । व्याख्या तु **सर्वभावेनेति** । पुरुषोत्तमयोगाध्याये 'यो मामेवमसंमूढो जानाति पुरुषोत्तमम् । स सर्वविद्भजति मां सर्वभावेन भारते'तिवाक्यात्सर्वभावेनेत्यादिः । **एकदेशित्वं** वृक्षधर्मदेशित्वम्[१] । **तत्रेति** । अखण्डज्ञाने । **भाष्ये** । **एवं सतीत्यादि** । **मुख्यमिति** । लोकाश्रयणात् । अन्यमार्गत्वाद्वा । **भक्तिभावेति** । त्रयस्त्रिंशद्व्यभिचारिभावाः तेष्वेकतम इति प्राप्ते महाभाष्यप्रयोगात्तरप् । **ज्ञानभक्त्योरिति** । दृष्टान्तोऽखण्डस्फुरणेनेति अक्षरज्ञानपीतकौशेयवासोभक्त्योस्तारतम्यं कथं वर्णनीयमिति प्रश्नः । भक्तिमार्गेन्तराभेदासम्पादनाद्भक्त्युत्कर्ष इत्युत्तरम् । संसारिणश्चोत्कर्ष इति । एकेषां जीवब्रह्मवादादपरेषां व्यापकैकजीववादादुत्कर्षः ब्रह्मज्ञानात् । व्यापकैकजीवस्य ब्रह्मणा भेदाभेदौ । **एकरूपेति** । 'अहं वै त्व'मिति । **उक्तेति** । निकर्षोत्कर्षदोषयोरापत्तिः । **एकत्वमिति** । आवरणभङ्गजं बोध्यम् । **अपैतीति** । अप आ एति । बाधकालीनमिच्छाजन्यं ज्ञानमाहार्यज्ञानम् । वेदान्तविज्ञानेनावरणभङ्गे फलतस्त्वेकत्वे भूयसां साधनप्रतिपादकानां वेदभागानां वैयर्थ्यप्रसङ्गमालोच्याहुः **पूर्वोक्तैरिति** । द्वितीयाध्यायोक्तैः सूत्रैः । **वक्तुमिति** । साधनैर्विना वक्तुम् । **विशेषणेति** । 'त्वमहं अहं त्व'मिति **विशेषणविशेष्यभावः** । विशेषणस्य विशेष्यभावः । अन्यथा धर्मादित्वं स्यात् । तस्य बोधनबलात् । **तादात्म्यस्येति** । नीलो घट इत्यत्रेव गुणस्यांशस्य तदात्मनो भावत्वं तस्यैव सिद्धेः । घटो नील इति पक्षेपि तथा । **लक्षणेति** । अंशांशिभावे तादात्म्यम् ।

---

१. रश्मौ एकदेशित्वम् ।

## सैव हि सत्यादयः ॥ ३८ ॥ (३-३-१३.)

अथेदं विचार्यते । प्राप्तभक्तेः पुरुषस्य सत्यशमदमादयो विशीर्यन्ते, न

भाष्यप्रकाशः ।

सकलशास्त्रव्याकुलीकरणानौचित्यस्य प्रागेवोक्तत्वाच्चेति ।

रामानुजाचार्यास्तु । 'सर्वं खल्विदं ब्रह्म', 'ऐतदात्म्यमिदं सर्वं तत्त्वमसी'त्यवगतसर्वात्मभावविषयत्वादस्य वाक्यस्य नात्र प्रतिपादनार्थमपूर्वं किञ्चिदस्ति, तत्तु वक्ष्यति 'आत्मेति तूपगच्छन्ति ग्राहयन्ती'ति । नच सर्वात्मत्वानुसन्धानातिरेकेण परस्मिन् ब्रह्मणि जीवत्वानुसन्धानं जीवे च ब्रह्मत्वानुसन्धानं तथ्यं सम्भवति । तस्मादनादरणीयं तन्मतमित्याहुः । तदपि युक्तमेव ।

एतस्मिन्नधिकरणे वैराग्यतपःसमाधिपरिपाकसिद्धस्य ब्रह्मात्माभेदज्ञानस्य भक्तिमार्गीयव्यभिचारिभावतानिरूपणेन ब्रह्मभावप्राप्यत्वबोधकं पीतकौशाम्बरेण च विदितमिति विशेषणं प्रतिपादितं ज्ञेयम् । ज्ञानमार्गिणां तावतैव ब्रह्मभावात्मकफलसिद्धेरिति ॥ ३७ ॥ इति द्वादशामन्तराभूतग्रामवदित्यधिकरणम् ॥ १२ ॥

सैव हि सत्यादयः ॥ ३८ ॥ फलतो भक्त्युत्कर्षं साधयित्वा साधनतोऽपि तत्

रश्मिः ।

तदपेक्षया तदंशे तच्छब्दलक्षणेत्येवं एकदेशं तदिति अभेदसम्बन्धः । सकलशास्त्रेति । 'ऐतदात्म्यमिदं सर्व'मित्यादिवेदशास्त्रेत्यर्थः । तन्मूलान्यन्यशास्त्राणीति सकलशब्दः । प्रागेवेति । द्वितीयाध्याये तदनन्यत्वाद्यधिकरणे । सर्वात्मेति । सर्वस्मिन्नात्मभावः सर्वात्मभावः । तद्विषयत्वात् । अस्येति । उक्तैतरेयवाक्यस्य जाबालवाक्यस्य च । अपूर्वमिति । 'सर्वं खल्विद'मित्यादिप्रतिपादितं पूर्वं न भवतीत्यपूर्वम् । वक्ष्यतीति । फलाध्याये । तन्मतं पूर्वमतम् । षोडशाधिकरणीप्रतिपाद्यमाहुः एतस्मिन्निति । 'भक्त्या प्रसन्ने तु हरौ तं योगेनैव योजये'दिति भक्त्यनन्तरं योगसूत्रसिद्धमाहुः वैराग्येत्यादि । 'जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धय' इति । तेन साधनसिद्धमभेदज्ञानमुक्तम्, न तु शाब्दज्ञानेनापरोक्षम् । ब्रह्मभावेति । अक्षरज्ञानप्राप्यत्वबोधकं सात्त्विकत्वेन सगुणाक्षरज्ञानप्राप्यः पीतकौशाम्बरो भाति । पीतकौशाम्बरं माया । गोपालतापिनीये 'माया पीताम्बर'मित्युक्तम् । अत्र ब्रह्मभावानन्तरं भगवद्भावो ज्ञेयः 'अक्षरधिया'मिति सूत्रादनुवृत्तः । तेन पीतकौशेयाम्बरो विषयो नास्थूलादिमात्रश्रुतिविषयोऽक्षरः । ब्रह्मभावेत्यत्र ब्रह्मभावेन प्राप्यत्वं ब्रह्मभावप्राप्यत्वं तस्य बोधकमिति करणतृतीयासमासः । ननु क्वचिद्ब्रह्मभावविषयत्वमक्षरस्य क्वचित्पीतकौशेयाम्बरस्येत्यत्र व्यवस्थामाहुः ज्ञानमार्गिणामिति । मार्गभेदाद्व्यवस्थेति भावः । तावता अक्षरज्ञानमात्रेण । ब्रह्मभावत्वेनाक्षरात्मकत्वेन कार्यकारणभावादेवकारः । ब्रह्मभावस्य भगवद्भावद्वारत्वे तु पीतकौशेयाम्बरस्य ब्रह्मभावस्य सगुणत्वादितिभावः । अत्र सुबोधिनी । 'पीतं कौशं कौशेयं यदम्बरं तेन च विदितम् । अनेन ब्रह्मभावेपि ज्ञानमङ्गमिति तदेव विशेषणमाह पीतमिति । अहन्ताममताभावः । रूपत्रये शुक्ले पीतान्तर्भावात् । अहन्ताममता कृष्णा मायाकार्यत्वेन तमोरूपत्वात्तमसश्च नीलत्वात् । कौशमिति कुशसम्बन्धिनो यमनियमादयः । अम्बरमित्यवस्थापरित्यागेन निर्लेपता । एतानि ब्रह्मभावे ज्ञानसाधनानि । 'वैराग्यं च तपश्चैव समाधिरिति साधनम्' । एकमेवैतन्न प्रत्येकपर्यवसायि । चकारोऽनुक्तसमुच्चयार्थः । सर्वफलरूपो भगवानित्यर्थ' इति । अत्रालौकिकं व्याख्यानं भगवतोऽलौकिकत्वात् ॥ ३७ ॥ इति द्वादशमन्तरा भूतग्रामवदित्यधिकरणम् ॥ ११ ॥

सैव हि सत्यादयः ॥ ३८ ॥ फलत इति । ब्रह्मभावस्याक्षरं तद्भावस्य पुरुषोत्तम इति ।

वेति । फलोपकार्यन्तरङ्गसाधनत्वात् शुद्धौ सत्यामेव चित्ते भगवत्प्रादुर्भावसम्भवात् विधीयन्त इति पूर्वः पक्षः । तादृशस्य ते न विधीयन्त इति सिद्धान्तः । तत्र हेतुमाह । हि यस्माद्धेतोः, सैव भक्तिरेव सत्यादिसर्वसाधनरूपा । तस्यां सत्यां सत्यादयो ये ज्ञानमार्गे विहितत्वात् कष्टेन क्रियन्ते मुमुक्षुभिः, ते भक्तहृदि भगवत्प्रादुर्भावात् स्वत एव भवन्तीति न विधिमपेक्षन्त इत्यर्थः ॥ ३८ ॥

भाष्यप्रकाशः ।

साधयतीत्याशयेनाधिकरणं वदन्तोऽवतारयन्ति अथेत्यादि । यथा 'सत्यं परं पर१सत्य'मित्यादौ ज्ञानार्थम्, यथाच 'शान्तो दान्त' इत्यादौ ज्ञानोत्तरं सत्यशमदमादयो विधीयन्ते, तथा प्राप्तभक्तेः पुरुषस्य भक्त्युत्तरं ते विधीयन्ते, न वेति संशये, फलोपकार्यन्तरङ्गसाधनत्वात् फलस्य भगवत्प्राप्तेरुपकारी मुख्यं साधनं भगवदाविर्भावः, तस्यान्तरङ्गा चित्तशुद्धिः, तस्याः साधनानि सत्यादीनि, तस्मात् । एतदेव विवृणोति शुद्धौ सत्यामेव चित्ते भगवदाविर्भावसम्भवादिति । अतो यथा सम्परायाधिकरण उपन्यस्तैर्वाक्यैर्भक्तेः पूर्वं ते विधीयन्त इत्युन्नीयते, तथा भक्त्युत्तरमपि ते विधीयन्ते इति पूर्वपक्षः । तादृशस्य प्राप्तभक्तेस्ते सत्यादयो न विधीयन्ते, 'भक्त्या त्वनन्यये'ति वाक्ये अन्यसाधननिरपेक्षयैव भक्त्या ज्ञानदर्शनप्राप्तीनामुक्तत्वात् तयैव संसिद्धेरिति सिद्धान्तः । तत्र सिद्धान्ते युक्तिमाहेत्यर्थः । सूत्रं व्याकुर्वन्ति हीत्यादि । 'यत् कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् । योगेन दानधर्मेण श्रेयोभिरितरैरपि । सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसे'ति । 'धर्मः सत्यदयोपेतो विद्या वा तपसान्विता । मद्भक्त्यापेतमात्मानं न सम्यक्प्रपुनाति ही'ति च एकादशे भगवद्वाक्यात् सैव भक्तिरेव सर्वसाधनरूपा । अतस्तथेत्यर्थः ।

रश्मिः ।

साधनत इति । ज्ञानमार्गे साधनानि सत्यशमदमादीनि । ज्ञानानन्तरमनुवर्तनात् । वेदान्तशब्दस्तु प्रमाणं न साधनम् । प्रमाणावगतसाधने प्रवर्तते यतः । अतः सत्यशमदमादिभिः शाब्दापरोक्षं तद्वत्र भक्तिमार्गे, न सत्यशमदमादयो भगवद्रूपे फले साधनम्, किन्तु भक्तिरेवेति साधनतः सत्यशमदमादितोपि । तत् उत्कर्षम् । तदित्यव्ययम् । भक्त्युत्कर्षम् । तत्सर्वरूपत्वं भक्तेः, न तु भक्तिरूपत्वं सत्यशमदमादीनां ज्ञानसाधनत्वेप्यत्रेत्येवं साधनतोपि तत्साधयतीत्यर्थः । यथेत्यादि विचारो यथेत्यर्थः । भाष्यसूचितं विषयवाक्यमाहुः सत्यं परमिति । इदं विषयवाक्यम् । 'सदेव सौम्येदमग्र आसीत्' 'सत्यं परं धीमहि' 'सत्यव्रतं सत्यपरं त्रिसत्य' मित्यादिषु सत्यज्ञानानन्तेषु सत्योपादानात् । अन्ययोरुपलक्ष्यत्वात् । 'शान्तो दान्त' इति शारीरब्राह्मणेस्ति । 'अणुः पन्था विततः पुराणः' इति द्वितीयाध्याये भोक्त्रापत्तिसूत्रेऽणुः पठितः । महत उपासनमाह । तथा चोपक्रमः । 'विरजः पर आकाशात् अज आत्मा महान्ध्रुवः' । 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः' । 'नानुध्यायाद्बहूञ्छब्दान्वाचो विग्लापनं हि त'दिति । उपसंहारश्च 'स वा एष महानज आत्मा अजरोऽमरोऽभयोऽमृतो ब्रह्माभयं वै ब्रह्माभय९ ह वै ब्रह्म भवती'ति । ज्ञानोत्तरमिति । 'तस्मादेवंविच्छान्तो दान्त' इति पाठाविदो विशेषणीभूतज्ञानानन्तरम् । यतो वेत्तीति वित् ज्ञानानुकूलव्यापारवान् । ज्ञानं च साधनचतुष्टयसाध्यमिति विषयश्रुतौ सत्यशमदमादयः ज्ञानोत्तरं पूर्वं वा विधीयन्ते, तथा ज्ञानशब्दस्य भक्तिपरत्वे प्राप्तभक्तेर्भक्तेः पूर्वं स्वतःसिद्धसत्यशमदमादयो भक्त्युत्तरं विधीयन्ते न वेति संशय इत्यर्थः । फलेतिभाष्यं विवृण्वन्ति स्म फलेति । त इति । तर्तव्यपापादयः । त इति । सत्यशमदमादयः । तादृशस्येतिभाष्यं विवृण्वन्ति स्म तादृशस्येति । युक्तिमिति हेतुशब्दार्थः । अतस्तथेति । सैव भक्तिरेव सत्यादिसर्वसाधनरूपा ।

१. भगवदाविर्भाव इति प्रकाशपाठः ।

भाष्यप्रकाशः ।

अत्र शङ्करभास्कराचार्यौ, इदमेकसूत्रमधिकरणमङ्गीकृत्य, बृहदारण्यकोपान्ते, 'स यो हैतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मे'त्युपक्रम्य, 'जयतीमान् लोका'निति फलमुक्तम् । अग्रे च 'आप एवेदमग्र आसुस्ता आपः सत्यमसृजन्ते'ति प्रकृत्यानन्तरमुच्यते, 'तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषः, यश्चायं दक्षिणेऽक्षन् पुरुष' इत्यादि, ततो 'हन्ति पाप्मानं जहाति चे'ति फलमुच्यते, तत्र फलभेदाद्विद्याभेद इति प्राप्ते, सैव पूर्वोक्तैवेयं विद्या, हिर्हेतौ, सत्यादयः पूर्वप्रकृता एवात्र 'तद्यत्तत्सत्य'मित्यनेन परामृश्यन्ते । स्थानविशेषसम्बन्धाच्चैकविद्यम् । फलं तूपनिषदो'रहरित्यह'मिति चोक्तयोः, न तु विद्यायाः, तस्माददोष इत्याहतुः ।

तदयुक्तम् । सौत्रस्यादिपदस्यासङ्गतेः । उत्तरस्मिन् वाक्ये हि 'तद्यत्तत्सत्य'मिति तत्पदेन सत्यमात्रमाकृष्यते, न त्वन्यत्किञ्चिदादिपदबोधितं तस्मात् । नच पूर्ववाक्ये स्थानविशेषोक्तिर्येन तदैक्यादैक्यं सम्भाव्यम्, किञ्च, सर्ववेदान्तप्रत्ययाधिकरणे शाखान्तराधिकरणोक्तास्त्रयो हेतव ऐकविद्यार्थमादृतास्तत्कथं तत्रानुक्तात् स्थानविशेषात् तत्सिद्धिः । नापि केवलाद्रूपैक्यात्, 'चोदनाद्यविशेषा'दित्यस्य व्यभिचारित्वापत्तेः । किञ्च, इयं सत्यविद्या पूर्वमुपनिषदोः प्रसङ्गे विचार्यमाणा पूर्ववाक्योक्तया स्वैक्यमस्मारयन्ती कथमकस्मादत्र स्मारयेत् । अतः काल्पनिक एवायं विचार इत्युपेक्ष्यः ।

रामानुजाचार्यास्तु, 'न वा विशेषा'दित्यत्राक्ष्यादित्यस्थानभेदेन विद्याभेदस्योत्तरवाक्ये साधितत्वादत्र च वाक्यद्वये फलभेदस्य दृश्यमानत्वादवस्थाभेदेन रूपभेदस्यापि सत्त्वादुत्तरवाक्य उपासनभेदे सति कथं पूर्ववाक्योक्तेनास्याभेदः सम्भवति, किञ्च, एकविद्यात्वे फलभेदस्योपनिषद्गुणनिबन्धनत्वम्, तस्य तन्निबन्धनत्वेन बाधकनिवृत्तौ चैकविद्यात्वमित्यन्योन्याश्रय इति दूषणमाहुः ॥३८॥

रश्मिः ।

बृहदिति । बृहदारण्यकचतुर्थप्रपाठकोपान्ते यक्षपूज्यम् । फलभेदादिति । लोकजयपाप्महननभेदात् । स्थानेति । स्थानविशेषसम्बन्धैक्यप्राप्तमेकविद्यमित्यर्थः । फलभेदाद्विद्याभेदं वारयतः स्म त्रय इति । तृतीयान्त एकः । अधिकारादिति द्वितीयः । चकारोक्तस्तृतीयः । एवं त्रय आदृताः । पूर्वतत्र-द्वितीयाध्यायीयशाखान्तराधिकरणे संयोगादयश्च तस्य हेतव उक्तास्तेष्वेकं संयोगं विहाय त्रय आदृता इत्यर्थः । रूपैक्यादिति । विद्यारूपैक्यात् । प्रासङ्गिकोऽयं हेतुः । व्यभिचारित्वेति । सर्ववेदान्त-प्रत्ययत्वसाध्याभाववति सत्यत्वादिधर्मवति चोदनाद्यविशेषहेतोर्वृत्तित्वेनासाधारण्यात्तथा । फलं त्विल्याद्युक्तं प्रत्युत्तरयन्ति स्म किञ्चेयमिति । उपनिषदोः प्रसङ्गे सत्यविद्या पूर्वं विचार्यमाणेत्यन्वयः । पूर्ववाक्येति । हृदयब्राह्मणोक्तया हृदयब्रह्मणः सर्वत्वेन अक्षरत्वेनोपासनं सर्वात्मभावरूपं त्र्यक्षरं तद्विषयकम् । पूर्ववाक्यं 'य एवं वेदे'ति । तदुक्तया हृदयविद्यया । स्वैक्यमिति । स्वस्या हृदयविद्यायाः पूर्वायाः तदुत्तरसत्यब्राह्मणीयायाः 'तद्वैतदेतदेव तदा सत्यमेवे'ति श्रुतेः प्राप्तं स्वस्याः सत्यविद्याया ऐक्यम् । श्रुतेस्तु तत् हृदयं ब्रह्म । तदात्वेत्यत्र तत् ब्रह्मेत्यर्थः । अकस्मादिति । वाक्यं विना । अत्रेति । अग्रेतन 'आप एवेदमग्र आसु'रिति ब्राह्मणे । स्मारयेदिति । नच 'ता आपः सत्यमसृजन्ते'ति 'ते देवाः सत्यमित्युपासत' इति । 'तदेतत्र्यक्षरꣳसत्य'मितीति प्रत्यभिज्ञानमतो नाकस्मादिति वाच्यम् । पूर्ववाक्योक्तया स्वैक्यस्यास्मारणे प्रश्नपर्यवसानात् । उत्तरवाक्य इति । 'आप एवेदमग्र आसु'रिति महावाक्ये । अत्र चेति । अधिकरणेयम् । अवस्थेति । बाल्यतदितररूपावस्थाभेदेन । पूर्वेति । सत्योपासनेन । अस्य द्वितीयवाक्योक्तोपासनस्य अभेद इत्यर्थः । फलभेदो विद्यैक्ये बाधकः । तस्य एकविद्यात्वे निवृत्तिरुपनिषद्गुणे ऐक्येपि फलभेदसाधकः । अत एकविद्यात्वे फलभेदस्य तथा । तस्येति । उपनिषद्गुणस्य फलभेदनिबन्धनत्वं तेनं । बाधकेति । बाधकः फलभेदस्तस्य निवृत्तौ ॥ ३८ ॥

## कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३९ ॥

पूर्वसूत्रे शास्त्रोक्ताखिलसाधनरूपत्वं भक्तेरुक्तम्। तद्दार्ढ्यार्थमधुना मुक्तिप्रतिबन्धकत्वेन हेयत्वेनोक्तानां कामादीनामपि भगवत्सम्बन्धान्मुक्तिसाधकत्वमुच्यते। भक्तिस्तु विहिताविहिता चेति द्विविधा। माहात्म्यज्ञानयुतेश्वरत्वेन प्रभौ निरुपधिस्नेहात्मिका विहिता। अन्यतोऽप्राप्तत्वात् कामाद्युपाधिजा सा त्वविहिता। एवमुभयविधाया अपि तस्या मुक्तिसाधकत्वमित्याह। इतरत्र विहितभक्तेरिति शेषः। कामाद्युपाधिजस्नेहरूपायां कामाद्येव मुक्तिसाधनमित्यर्थः। भगवति चित्तप्रवेशहेतुत्वात्। आदिपदात् पुत्रत्वसम्बन्धित्वादयः। स्नेहत्वाभावेऽप्यविहितत्वभगवद्विषयकत्वयोरविशेषात् द्वेषादिरपि संगृह्यते। तेन भगवत्सम्बन्धमात्रस्य मोक्षसाधकत्वमुक्तं भवति। तत्र विहितभक्तावित्यर्थः। शास्त्रे सर्वथा हेयत्वेनोक्ता हि गृहाः। सर्वनिवेदनपूर्वकं गृहेषु भगवत्सेवां कुर्वतां तदुपयोगित्वेन तेभ्य एव मुक्तिर्भवतीत्यर्थः। एतादृशानां गृहा भगवद्गृहा एवेति ज्ञापनायायतनपदम्। तेषु तथा प्रयोगप्राचुर्यात्। आदिपदेन

---

भाष्यप्रकाशः।

कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३९ ॥ सूत्रप्रयोजनमाहुः पूर्वेत्यादि। तद्दार्ढ्यार्थमिति। कैमुतिकन्यायेन तदर्थम्। तेनास्य प्रासङ्गिकत्वं बोधितम्। सूत्रं व्याकर्तुं पूर्वोक्तं विभजन्ति भक्तिरित्यादि। अन्यतोऽप्राप्तत्वादिति। शास्त्रव्यतिरिक्तहेत्वन्तरादप्राप्तत्वात्। व्याकुर्वन्ति इतरत्रेत्यादि। कामादेः कथं मुक्तिसाधनत्वमित्यपेक्षायां 'कामं क्रोधं भयं स्नेहमैक्यं सौहृदमेव वा। नित्यं हरौ विदधतो यान्ति तन्मयतां हि ते' इति दशमस्कन्धवाक्यानुसारेण हेतुमादिपदस्यार्थं तत्कथनतात्पर्यं चाहुः भगवतीत्यादि। सूत्रशेषं व्याकुर्वन्ति तत्रेत्यादि। एतदग्रे, चकारार्थबोधिका माहात्म्यज्ञानेत्यादिका फक्किका उक्ता, सा लेखकप्रमादात् पश्चात्पतितास्तीति ज्ञेयम्। ननु कामादीनां कथं तथात्वमित्याकाङ्क्षायां सौत्रं हेतुं व्याकुर्वन्ति शास्त्र इत्यादि। इदं चाग्रे 'गृहिणोपसंहार'सूत्रे सेत्स्यतीति ज्ञेयम्। अत्रायमेवाशय इत्यत्र गमकमाहुः एतादृशानामित्यादि। प्रयोगप्राचुर्यादिति। 'अण्डमुत्पादयामासुर्ममाय-

रश्मिः।

कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३९ ॥ कैमुतिकेति। यत्सम्बन्धेन कामादीनां मुक्तिसाधनत्वं तत्सम्बन्धेन सत्यशमदमादीनां मुक्तिसाधनत्वे किमु वक्तव्यमित्येवं कैमुतिकन्यायेन। पूर्वोक्तमिति। सूत्रे पूर्वमुक्तं कामादि इतरत्रेति च। न च विभागोऽस्त्येवेति वाच्यम्। ग्रन्थप्रयोजनं प्रपञ्च्य विभागे इत्याशयात्। सौत्रकामादीतरत्रेत्यनयोः सप्रपञ्चं विभागं करे कुर्वन्तीत्यर्थः। विहितेति। विधिविषया। 'तं भजेदि'ति। विधिरपूर्व इति। भाष्ये। तदर्थमत्यन्ताप्राप्तिमाहुः शास्त्रेति। तत्कथनेति। तेन भगवदित्यादिभाष्येणादिशब्दकथनतात्पर्यम्। भाष्ये। भगवत्सम्बन्धमात्रस्येति। प्रमेयबलस्येति यावत्। उक्तेति। भाष्ये उक्ता। अत्र चकारोक्तेस्तत्सम्बन्धस्य युक्तत्वात्। शास्त्र इत्यादीति। 'गृहं सर्वात्मना त्याज्य'मित्यादिशास्त्रे। गृहा इति पुंस्त्वं स्मार्तम्। तेभ्य इति। आयतनादिभ्यः। 'मद्वार्तायातयामानां न बन्धाय गृहा मता' इति वाक्यात्। एतादृशानामित्यादीति। भगवद्गृहा इति। एतेनैतादृशाः महाराजोपचारेण भक्तार इत्युक्तम्। महाराजो यावत्पर्यन्तं तिष्ठति

---

१. रश्मौ उक्तेति पाठः।

स्त्रीपुत्रपश्वादयः संगृह्यन्ते । एतेन ज्ञानादिमार्गादुत्कर्ष उक्तो भवति । बाधकानामपि साधकत्वात् । माहात्म्यज्ञानपूर्वकस्नेहे सत्येव भर्तृत्वेन ज्ञाने कामोपि सम्भवतीति ज्ञापनाय चकारः ॥ ३९ ॥

इति तृतीयाध्याये तृतीयपादे त्रयोदशं भैव हि सत्यादय इत्यधिकरणम् ॥ १३ ॥

भाष्यप्रकाशः ।

तनमुत्तमम् ।' 'पञ्चायतनपूजे'त्यादौ तथात्वात् । पूर्वोक्तं प्रयोजनं निगमयन्ति एतेनेत्यादि । एतेनेति । पूर्वसूत्रे भगवद्भक्तिबलस्य, अत्र च 'गोप्यः कामा'दित्यादिसप्तमस्कन्धवाक्यात् कामादीनामविहितभक्तिहेतूनाम्, 'भक्तिरस्य भजन'मित्युक्त्वा, 'एतदेव च नैष्कर्म्य'मिति विहितभक्तेः संन्यासरूपतायास्तापनीये श्रावणात्, 'मद्वार्तायातयामानां न बन्धाय गृहा मता' इति वाक्यात् गृहादीनां च मुक्तिसाधनत्वस्य कथनेन । चकारसूचितमर्थमाहुः माहात्म्येत्यादि । इतिज्ञापनायेति । इतिहेतोर्विहितभक्तौ कामादपीति ज्ञापनाय । अत्रोभयोर्भक्त्योः स्वरूपबलसाधनयोर्विचारेण पुष्टिभक्त्याश्रितमर्यादाभक्तिबोधकं वाम ऊरावधिश्रित्य दक्षिणाङ्घ्रिसरोरुहं स्थितमिति विशेषणं प्रतिपादितं ज्ञातव्यम् ।

अन्ये तु, 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाश' इत्युपक्रम्य, 'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः

रश्मिः ।

तावत्पर्यन्तं तद्गृहमिति । स्त्रीपुत्रेति । प्रमेयबलविषया एव । निगमयन्तीति । तस्मात्तथेतिवत् । अविहितेति । अस्य मुक्तिसाधनत्वस्येत्यनेनान्वयः । विहितेति । भजनस्य 'तं भजे'दिति गोपालतापिनीये विहितत्वात् । संन्यासेति । नैष्कर्म्यं संन्यासो भवतीति तथा । निर्गतः कर्मणः निष्कर्मा संन्यासी तस्य भावो नैष्कर्म्यं संन्यासः । उपनिषद् आवर्तयेत् आरणं वेति सकलकर्मनिषेधात् । गृहा इति बहुवचनार्थमाहुः गृहादीनामिति । आदिपदेन स्त्रीपुत्रपश्वादयः संगृह्यन्ते । दम्पत्योः सहाधिकारात्स्त्रीः । भगवत्सेवार्थं वध्वानयनम् । 'पुत्रेण लोकं जयती'ति पुत्रः । 'पुत्रे कृष्णप्रिये रति'रिति । 'पयसाग्निहोत्रं जुहोती'ति । 'पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति । तदहं भक्त्युपहृतमश्नामि प्रयतात्मन' इति । अत्राप्यादिपदेनारामोपवनादिः । अव्ययानां द्योतकत्वमाश्रित्याहुः चकारेति । विहितेति । 'माहात्म्यज्ञानपूर्वस्तु सुदृढ' इति वाक्याद्विहितत्वम् । कामादपीति । तत्र चेति सूत्रांशात्कामादपीत्यर्थः । षोडशाधिकरण्या अर्थमाहुः अत्रोभयोरिति । विहिताविहितयोः । स्वरूपबलं साधनं च तयोः । स्वरूपबलं बाधकानां साधकत्वम् । पूर्वसूत्रे शास्त्रोक्ताखिलसाधनरूपत्वम् । पुष्टीति । अविहितभक्तिकामाद्याश्रिताया मर्यादाभक्तेर्विहितभक्तेर्बोधकम् । बोधकत्वं तु 'भवत्पदाम्भोरुहनावमत्रे'त्यत्र भगवत्पादयोर्भक्तित्वमुक्तम्, तत्र वाम ऊरुः पादसहित इति पुष्टिभक्त्याश्रितत्वस्य । 'दक्षिणाङ्घ्रिसरोरुह'मिति मर्यादाभक्तेः । अत्र पूर्ववाक्योक्तयेति भाष्यप्रकाश उक्तम्, तेन हृदयब्राह्मणोक्तभूमसर्वात्मभावयोरुपासनासूचि । तथाहि । 'एष प्रजापतिर्यद्धृदय'मित्युपक्रमः । अत्र हृदयस्य प्रजापतित्वं विधीयते । कथमेवं स्यात् हृदयं सर्वात्मभावत्वेन वक्ष्यमाणं प्रजापती रजोधिष्ठातेति । एवं तु स्यात् । हृदि अयं रजोधिष्ठाता । वेदान्तत्वात् योगे तु प्रजानां पतिर्भगवान् । भूमा प्रजापतिः सर्वात्मभावकरणेन सर्वात्मभावत्वाद्भूमा । 'एतद्ब्रह्मैतत्सर्व'मिति ब्रह्मलिङ्गम् । सर्वात्मभावरूपत्वमाह 'तदेतत्त्र्यक्षरꣳहृदयमिती'ति । 'हृ इत्येकमक्षरमभिहरन्त्यस्मै स्वाश्चान्ये च य एवं वेदे'ति । स्वाश्चेत्यत्र शसो डा । अन्ये चेति । हृ । सम्प्रदाने प्रत्ययः । हृञ् हरणे इत्यस्मात् । हृदः सान्निध्यात् । स्वाश्चानिन्द्रियाणि वसवोऽभिमुखाभिहरन्त्यन्ये तदनुसारिणः । सर्वेन्द्रियाणां भगवत्परत्वं सर्वात्मभावः निरोधलक्षण-

भाष्यप्रकाशः।

सत्यसङ्कल्प' इति छान्दोग्य आम्नायते। 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु,' 'य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशान' इति वाजसनेयके। तयोरेकविद्यं परस्परगुणोपसंहारो भवेन्न वेति सन्देहे, कामादिसूत्रेणैकविद्यमुपसंहारं च सिद्धान्ती-कुर्वन्ति। कामादीत्यत्र कामपदं 'देवदत्तो दत्तः' 'सत्यभामा भामे'तिवन्नामैकदेशरूपम्। तेन सत्यकामाद्या वाजसनेयके वशित्वाद्याश्छान्दोग्ये उपसंहार्याः। हृदयायतनस्य, वेद्यस्येश्वरस्य, लोकासम्भेदप्रयोजनकसेतुत्वरूपेश्वरधर्मस्य च समानत्वादिति चाहुः।

तच्चिन्त्यम्। श्रुतौ सत्यकामपदस्य यौगिकत्वेन नामत्वाभावात् तदेकदेशस्य कामादिपदस्य नामैकदेशताया वक्तुमशक्यत्वात्। अथ रूढत्वम्, तदापि तदेकदेशेन कामादिपदेन ब्रह्मैव समर्पणीयम्, न तु तद्गुणा अपि। दृष्टान्ते तथैव दर्शनात्। अथ योगरूढत्वम्, तदापि कामपदस्य सर्वकामादिपदैकदेशतायास्तुल्यत्वान्मनोमयादिवाक्योक्ता अपि धर्मा वाजसनेयके कुतो नोपसंह्रियेरन्, कुतो वा तस्यानेनैकविद्यात्वाभावः। हृदयस्यायतनस्य वेद्यस्येश्वरस्य सत्यसंकल्प-त्वाकाशात्मत्वस्य समानधर्मस्य सत्त्वात्। किञ्च। यद्यायतनादिकमेतदेकविद्यत्वादिसम्पादकत्वेन व्यासचरणानामभिप्रेतं स्यात्, तदा कामादीतरत्र वशित्वादि तत्रेति ब्रूयुः, न त्वेवं सन्दिग्धं वदेयुः। किञ्च। सर्ववेदान्तप्रत्ययाधिकरणे 'चोदनाद्यविशेषा'दित्यनेन शाखान्तराधिकरणोक्ता-श्चत्वारस्त्रयो वा हेतवो विद्यैक्यार्थं संगृहीताः। तत् यद्यायतनादिभिरङ्गीक्रियेत, तदा

रश्मिः।

ग्रन्थेपि। 'य एवं वेदे'त्युपासनम्। एवं 'द इत्येकमक्षरं ददत्यस्मै स्वाश्चान्ये च य एवं वेदे'त्यत्र। तथैव 'यमित्येकमक्षरमेति स्वर्गलोकं य एवं वेदे'त्यत्र। स्वर्गलोक आत्मसुखम्। व्युत्पत्तिस्तु एतीति यम्। एरच्। एकविधमित्यस्य कारणं परस्परेति। इति सन्देह इति। इति सन्देहो यस्मिन् ऐकविद्य-मिति पूर्वपक्षे स तथोक्तस्तस्मिन्। नैकविद्यं कार्यं न उपसंहारं कारणमस्ति। वाजसनेयक इति। उपसंहार्या इत्यन्वयः। सौत्रेतरत्र पदार्थः। छान्दोग्य इति। सौत्रतत्रपदार्थः। आयतनादिभ्य इत्यस्यार्थः। हृदयेति। हृदयमायतनं यस्येश्वरस्य। आदिपदार्थमाहुः लोकेति। 'अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाये'त्युक्तो लोकासम्भेदः प्रयोजनमस्य सेतुत्वस्य तत्तथोक्तम्। तेन रूप्यते व्यवह्रियते यः स ईश्वरधर्मस्तस्य। समानत्वं छान्दोग्यवाजसनेयकयोर्ज्ञेयम्। सूत्रे कामशब्दो न नामैकदेश इत्याहुः श्रुताविति। नामत्वेति। पाचकपाठकवत् नामत्वाभावात्। विशेषणत्वात्त-थेति नोक्तम्। विष्णुरातः परीक्षित् इत्यत्र न विशेषणत्वेपि नामत्वात्। एवं वेदान्ते योगमादायोक्तम्। बाहुलकाग्रहवादिनं प्रत्याहुः अथेति। स्वमते रूढ्यभावः। दृष्टान्ते इति। 'देवदत्तो दत्त' इत्युक्ते पूर्वस्मिन्। वेदान्ते 'स्मृतेश्चे'तिसूत्रभाष्यानुरोधेन वेदत्वाग्रहवादिनं प्रत्याहुः अथ योगेति। स्वमते योगरूढिर्वेद एव, न वेदान्ते। सर्वकामादीति। छान्दोग्ये पञ्चमप्रपाठके 'मनोमयः प्राणशरीरो भारूपः (सत्यकामः) सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्य-नादर एष म आत्मा हृदये' इत्यत्र सर्वकामादिपदानि तेषामेकदेशतायाः। मनोमयेति। वाक्यमव्य-वहितपूर्वमुक्तम्। तस्येति। मधुविद्यान्तर्गतस्योक्तवाक्यार्थस्य। अनेन वाजसनेयकार्थेन। एका विद्या एकविद्या तस्या भाव एकविद्यत्वं तस्याभावः। अत्र दहरविद्या निर्गुणविषया वाजसनेयकोक्ता सगुणविषया तयोर्भेद उपसंहारः परस्परं तत्र विद्याभेदो विरुध्यते 'अभेदादनुपाधित्वा'दित्यादिविद्वन्मण्डनेन तदवि-रोधाय सर्ववेदान्तप्रत्ययप्रपञ्चरूपत्वनिषेधमाहुः किञ्च सर्वेति। चत्वार इति। संयोगेन सह। त्रय इति। अत्रैव व्याख्यातम्। तद्यदीति। तत् विद्यैक्यम्। आयतनादिभिरिति। चोदनाद्यविशे-

## आदरादलोपः ॥ ४० ॥ ( ३-३-१४. )

ननु नित्यानां वर्णाश्रमधर्माणां भगवद्धर्माणां चैककाले प्राप्तौ युगपदुभयोः करणासम्भवादन्यतरबाधे प्राप्ते, कस्य स्यान्न कस्येति स्यात् संशयः। तत्र कर्मणां स्व-स्वकाले विहितानामकरणे प्रत्यवायश्रवणादितरत्रातथाश्रवणादन्यदापि तत्कृति-सम्भवात् सावकाशत्वेन तेषामेव बाधो युक्तः, न तु निरवकाशानामिति पूर्वः पक्षः।

भाष्यप्रकाशः।

तस्य हेतोर्व्यतिरेकव्यभिचारः प्रसज्येत, कतिपयैरङ्गीकारे यत्किञ्चिद्धेतुसत्त्वस्य यत्र क्वापि सौल-भ्याद्विद्याभेदश्चोच्छिद्येत । प्रकृते च चोदना भिद्यते, एकत्र 'अन्वेष्टव्यं विजिज्ञासितव्य'मिति वाक्यात्, अन्यत्र च 'य एवं वेदे'ति वाक्यात्। आख्या च भिद्यते, वाजसनेयके दहरविद्येत्या-ख्याया अप्रसिद्धत्वात्। तत्तद्गुणकस्येश्वरस्य वेद्यत्वे तु रूपमपि भिद्यते इति कथं विद्यैक्यम्। अथ यथाकथञ्चित् ते चत्वारस्त्रयो वा हेतव आनेयाः, तदा तत एव ऐकविद्यसिद्धेरेतत्सूत्र-सार्थक्यं दुरुपपादमित्यगतिकगतिकं तत्प्रपञ्चरूपत्वमसेत्यवधेयम् ॥ ३९ ॥ इति त्रयोदशं सैव हि सत्यादय इत्यधिकरणम् ॥ १३ ॥

आदरादलोपः ॥४०॥ पूर्वाधिकरणेषु सात्त्विकानां वृतानां ज्ञानासक्तिवारणाय ज्ञानमा-र्गाद्भक्तिमार्गस्य फलतः साधनतः स्वरूपतः सम्बन्धतश्चोत्कर्षः प्रतिपादितः। अतः परं ये वृता राजसा-स्तेषां ज्ञाने रुच्यभावेपि कर्मणि रुचेर्विद्यमानत्वात्तन्निरासार्थं कर्मकरणनिर्णयायाधिकरणमारभत इत्याशयेन सूत्रमवतारयन्ति नन्वित्यादि। कस्य स्यादिति। कस्य बाधः स्यात्। इतरत्रेति।

रश्मिः।

येन्तर्भूतैस्तैः। तस्य हेतोरिति । नोदनाद्यविशेषहेतोः । अत्र सर्ववेदान्तप्रत्ययत्वाभावो न वर्तते चोदनाद्यविशेषाभावोत्रास्तीति व्यतिरेकव्यभिचारप्रसङ्गः। ततश्च व्याप्तिग्रहप्रतिबन्धः फलम्। कति-पयैरिति। चोदनाद्यविशेषान्तर्भूतायतनेषु कतिपयैः। सर्वैस्तु विद्ययोर्भेद इत्यङ्गीकार इत्यर्थः। यत्किञ्चिदिति। अभेदसाधकयत्किञ्चिद्धेतुसत्त्वस्य। यत्र क्वापीति। पक्षे दृष्टान्ते च। च पुनः विद्याभेदो विद्वन्मण्डनेनोच्छिन्नः पुनरत्रोच्छिद्येत। एकत्रेति। छान्दोग्ये दहरविद्यायां विधातव्यः। अन्यत्रेति वाजसनेयके। अप्रसिद्धत्वादिति। किन्तु ब्राह्मणमिति प्रसिद्धिः। कथमिति। चोदना-द्यविशेषान्तर्भूतायतनादिभिः विद्यैक्यं कथमिति प्रश्नः। तत्प्रपञ्चेति। सर्ववेदान्तप्रत्ययाधिकरणप्रपञ्च-रूपत्वम् ॥ ३९ ॥ इति त्रयोदशं सैव हीत्यधिकरणम् ॥ १३ ॥

आदरादलोपः ॥४०॥ वृत्तानामिति। मुक्तावधिकारिणाम्। वृत्तपदं ख्याते व्याख्यातम्। 'वृत्तोऽतीते दृढे ख्याते वर्तुले विधृतेऽमृते। वाच्यवद्वर्तने वृत्तं चरित्रछन्दसोरपी'ति विश्वः। भवान्तस-म्भवत्वाज्ज्ञानासक्तिस्तस्या वारणाय। तेन 'सात्त्विका भगवद्भक्ता ये मुक्तावधिकारिणः। भवान्तसम्भवा दैवात्तेषामर्थे निरूप्यत' इति निबन्धः स्मारितः। फलत इति। 'अक्षरधिया'मित्यत्र। साधनतो गताधिकरणे। स्वरूपतोन्तराधिकरणे। सम्बन्धतोऽक्षरधियामित्यत्र 'सामान्यत' इति हेतुव्याख्याने। राजसा इति। 'राजसं कर्मबहुल'मितिवाक्यात्कर्मबहुलाः। रुचीति। 'सत्त्वात्सञ्जायते ज्ञान'मिति वाक्यात्सात्त्विकानां ज्ञाने रुचिः, न राजसानाम्। नन्वित्यादीति। प्रत्यवायेति। 'धर्मं चरे'ति विध्युल्लङ्घने। एकादशस्कन्धोक्तं 'वेदोक्तं नाचरेद्यस्त्वि' त्याद्युक्त्वा 'मृत्योर्मृत्युमुपैति स' इति प्रत्यवायः तस्य श्रवणात्। इतरत्रेति। भगवद्धर्माकरणे। अन्यदा अन्यस्मिन् काले। तत्कृतीति। भगवद्ध-र्मकृतिसम्भवात्। तेषामिति। भगवद्धर्माणाम्। निरवकाशानां वर्णाश्रमधर्माणाम्। उक्तरयेदिति-

तत्र सिद्धान्तमाह आदराविति। ब्रह्मयज्ञप्रकरणे तैत्तिरीयकैः पठ्यते 'ॐमिति प्रतिपद्यत एतद्वै यजुस्त्रयीं विद्यां प्रत्येषा वागेतत्परममक्षरं तदेतदृचाभ्युक्तमृचो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुर्यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासत' इति । अत्र ऋक्सम्बन्धित्वेन वर्णात्मके, वस्तुतस्तु परमव्योमात्मके अक्षरे ब्रह्मण्योङ्कारे वर्तमानं तल्लोकवेदप्रसिद्धं परं ब्रह्म यो न वेद, स किं ऋचा करिष्यतीत्यनेन तदज्ञाने वेदाध्ययनस्य निष्फलत्व-

---

भाष्यप्रकाशः ।

भगवद्धर्मेषु । सिद्धान्तं विशदयितुं सूत्रं विवृण्वन्ति ब्रह्मयज्ञेत्यादि । ब्रह्मयज्ञप्रकरण इति । तैत्तिरीयाणामारण्यके स्वाध्यायब्राह्मणे ।

श्रुत्यर्थस्तु, ब्रह्मयज्ञेन यक्ष्यमाण ॐमिति प्रतिपद्यते, प्रणवाक्षरं प्रथममुच्चारयेत् । प्रतिपद्यत इति पञ्चमो लकारः । पूर्वोच्चारणे हेतुः । एतद्वै यजुस्त्रयीं विद्यां प्रति, अयं यजूरूपः प्रणवमन्त्रस्त्रयीं विद्यां लक्षीकृत्य प्रतिनिधिरूपो यतोऽस्ति । तच्चाथर्वणे स्फुटम्, 'तस्य वै प्रणवस्य पूर्वा मात्रा पृथिव्यकारः स ऋग्भिर्ऋग्वेदोऽथ द्वितीयान्तरिक्षं स उकारः स यजुर्भिर्यजुर्वेदस्तृतीया द्यौः स मकारः स सामभिः सामवेद' इति सायणभाष्ये । वस्तुतस्तु आथर्वणानां गोपथब्राह्मणे इन्द्रप्रजापतिसंवादे प्रजापतिना वेदत्रये एकाक्षरोऽथर्ववेदे मात्राभिर्युक्त इति व्यवस्थापनात्, तैत्तिरीये बृहन्नारायणे 'ॐमित्येकाक्षरं ब्रह्मे'तिश्रावणादत्रामात्र एव । नच त्रयीप्रतिनिधित्वविरोधः । द्वादशस्कन्धे 'स सर्वमन्त्रोपनिषद्वेदबीजं सनातन'मिति बीजत्वबोधनात् यथा पुत्तकलिखनोत्तरं तन्मूलपुलस्तके प्रतित्वव्यवहारः, तथा त्रयीमूलत्वात् प्रतित्वम् । एकादशस्कन्धे 'वेदः प्रणव एवाग्रे' इति प्रथमकृतयुगे तन्मात्रबोधनात्तदा सर्वं कार्यं प्रणवेनैवेति वा तस्य त्रयीप्रतिनिधित्वमित्यदोषात् । 'एषा वा'गिति सर्ववाग्बीजत्वात् सर्ववाग्रूपम् । तथाच छन्दोगा आमनन्ति 'तद्यथा शङ्कुना सर्वाणि पर्णानि सन्तृण्णान्येवमोङ्कारेण सर्वा वाक् सन्तृण्णे'ति । 'अश्वत्थादिपत्रेषु दृश्यमानास्तन्तुसदृशा अवयवाः शङ्कवस्तैर्यथा कृत्स्नानि पर्णानि व्याप्तानि, तद्वदोङ्कारेण सर्वा वाग्व्याप्ते'ति सायणभाष्ये । 'एतत्परममक्षर'मिति । 'एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं पर'मिति काठकश्रुतेः । तदेतदृचाभ्युक्तमिति । तदेतत्परमं ब्रह्मरूपमक्षरं वक्ष्यमाणयर्चा स्पष्टमुक्तमित्येवं ज्ञेयः ।

ऋचं पठित्वा व्याकुर्वन्ति अत्रेत्यादि । ऋक्सम्बन्धित्वेन वर्णात्मके, वस्तुतस्तु 'एतद्ध्येवे'ति काठकश्रुत्या 'यो वेद निहितं गुहायां परमे व्योम'न्निति तैत्तिरीयश्रुतेश्च परमव्योमात्मके ॐकारे, 'यस्मिन् देवा अधि विश्वे निषेदु'रिति देवनिषदनस्थानत्वाल्लोकात्मके अक्षरे ब्रह्मणि,

रश्मिः ।

विधिव्याख्यानादाहुः प्रतिपद्यत इति । पञ्चम इति । लेट् । तच्चेति । प्रतिनिधिरूपत्वं च । आथर्वणमाहुः तस्य वा इति । अत्रेति । तैत्तिरीयके स्वाध्यायब्राह्मणे । एकाक्षरमिति । समष्टववित्कृतम् । एतदर्थं वस्तुतस्तुपक्षः । प्रतीति । प्रतिनिधिव्यवहारः । प्रतित्वं प्रतिनिधित्वम् । 'प्रतिप्रतिनिधिप्रतिदानयो'रिति सूत्रादर्थः । श्रुतौ ऋच इति षष्ठ्यन्तम् । ऋक्सम्बन्धिनि वर्णात्मके इत्यर्थः । तदाहुः ऋक्सम्बन्धित्वेनेति । अर्थपरत्वेन वस्तुतस्तु पक्षेणाक्षरे परम इति श्रुतिं व्याकुर्वन्तीत्याशयेनाहुः वस्तुतस्त्विति । एतद्ध्येवेति । 'एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम् । एतद्ध्येवाक्षरं ज्ञात्वा यो

मुच्यते । एवं सति तदुक्तकर्मणोपि तथात्वमायाति । एतेन 'भक्त्या मामभिजानाती'ति वाक्यात् परब्रह्मस्वरूपज्ञानं भक्त्यैवेति भक्ताः सन्तः पुरुषोत्तमविदो ये, तेषामेव वेदाध्ययनादिकं फलप्रदम्, नान्येषामित्युक्तं भवति । अत एव श्रीभागवतेप्युक्तं 'ऋषयोपि देव युष्मत्प्रसङ्गविमुखा इह सञ्चरन्ति,' 'संसरन्ती'ति वा । अन्वये निदर्शनम् । ये इत् ईश्वरत्वेन तत् पूर्वोक्तं परं ब्रह्म विदुः, त इमे भक्ताः सर्वापेक्षया सम्यक्प्रकारेण भगवन्निकटे श्रीगोकुलवैकुण्ठादिष्वासत इति । तेनान्येषां सम्यगसत्त्वमर्थाक्षिप्तं भवति । पुरःस्थितार्थवाचीदंशब्दप्रयोगेण चान्येषामसत्तुल्यत्वं श्रुतेरभिमतमिति ज्ञायते । ऋक्शाखायामपि 'तमु स्तोतारः पूर्व्यं यथाविद ऋतस्य गर्भं जनुषा पिपर्तन, आस्य जानन्तो नाम चिद्विवक्तन

भाष्यप्रकाशः ।

उक्तश्रुतौ निहितत्वेन श्रावणाद्गीतायां 'तद्धाम परमं ममे'ति वाक्याच्च तत्र प्रतिपाद्यत्वेन स्वरूपेण च वर्तमानम्, तं 'अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम' इति गीतावाक्याल्लोकवेदप्रसिद्धं परं ब्रह्म यो न वेद, स किं ऋचा, ऋगिति वेदमात्रोपलक्षकम्, वेदेन किं करिष्यतीति । शेषं स्फुटम् । 'ऋषय' इति वाक्यं तु तृतीयस्कन्धे नवमाध्याये । अन्वये निदर्शनमिति । तदज्ञातुर्वेदाध्ययनसद्भावेपि तन्मुख्यफलाभावादन्वयव्यभिचारे निदर्शनं श्रुतिः श्रीभागवतवाक्यं चाहेत्यर्थः ।

अथवा, इदमग्रिमेण सम्बध्यते । तथाच वक्ष्यमाणेन वाक्यशेषेण श्रुतिर्ज्ञानवतां भगवत्प्राप्तिलक्षणं निदर्शनमाहेत्यर्थः । तदेव श्रुतिशेषं व्याकुर्वन्ति ये इदित्यादि । इदित्यवधारणे । तथाच प्रणवार्थभूतस्य भगवतो यज्ज्ञानं तस्यावश्यकत्वं तदज्ञानेऽध्ययनादिनैष्फल्यं च बोधयन्त्यानयर्चा भगवज्ज्ञानसाधनीभूतायां वरणसाध्यायां भक्तावादरो दर्शितः । एवं श्रुत्यन्तरे साधनभक्तावप्यादरः श्राव्यते इत्याशयेनाहुः ऋगित्यादि । अर्थस्तु, हे स्तोतारो मदुत्कर्षवर्णनपराः । इयं वेदानामुक्तिः । तं लोकवेदप्रसिद्धम्, पूर्व्यं पूर्वस्य कारणस्य सम्बन्धि सर्वकारणकारणरूपम्, यथाविदः यथावत्तत्स्वरूपवेत्तारो भवन्तः, ऋतस्य सूनृतवाणीरूपस्य वेदस्य, गर्भं अन्तर्निहितम्, जनुषा स्वस्य सम्पूर्णजन्मना यावज्जीवमिति यावत्, पिपर्तन पूर्तियुक्तं सन्तुष्टं कुरुत, सन्तोषयत । अत्र यथाविदित्युक्त्या पूर्णज्ञानानां देहेन्द्रियप्राणान्तःकरणजीवविनियोगं भगवत्तोषार्थं दर्शयति श्रुतिरिति भगवद्धर्मेषु श्रुतेरादरः स्फुटति । अथ भगवत्तोषाभावे किमपि न सिध्यतीत्याशयेन पूर्वोक्तकरणाशक्तावनुकल्पमाहोत्तरार्धेन । आसमन्तात् अस्य परमपुरुषस्य नाम अखण्डशब्दब्रह्मरूपत्वेन जानन्तः, विवक्तन विशेषेण वदत । नाम्नः स्वरूपं

रश्मिः ।

यदिच्छति तस्य त'दिति श्रुत्या । उक्तश्रुताविति । तैत्तिरीयश्रुतौ । शेषमिति । एवं सतीत्यारभ्य वेत्यन्तं व्याख्येयम् । अत्र तदुक्तेति । वेदोक्तकर्मणः । 'पटोलपत्रं पित्तघ्नं नाडी तस्य कफापहे'त्यत्रेवात्रापि वेदाध्ययने वेदमात्रग्रहणम् । तथात्वं निष्फलत्वम् । एवं शेषं स्फुटम् । अन्वयेति । यत्र यत्र तदज्ञातुर्वेदाध्ययनसद्भावस्तत्रतत्र पुरुषोत्तमरूपमुख्यफलमित्यन्वयः, तस्य व्यभिचारे सति निदर्शनं दृष्टान्तम् । श्रीभागवतवाक्यं कर्तृ । निदर्शनमाहेत्यर्थः । निदर्शनं त्वेवम् । यत्र भक्ते संसाराभावस्तत्र पुरुषोत्तमप्रसङ्ग इति । निदर्शनं न दृष्टान्तः, किंतु भगवत्प्राप्तिः करणव्युत्पत्त्या तत्राहुः अथवेति । अग्रिमेणेति । श्रुतिशेषेण । वाक्यशेषोऽप्ययम् । श्रुतिः 'ऋचो अक्षरे परमे व्योम'न्निति । य इदित्यादीति । य एवेश्वरत्वेन तत्पूर्वोक्तमित्यादिः । इम इतीदमः प्रत्यक्षगे रूपमत आहुः श्रीगोकुलेति । वैकुण्ठस्थेषु गोकुलस्थत्व एवेम इति प्रयोगः । प्रणवार्थेति । अयमर्थो गायत्र्यर्थकारिकासु श्रीमद्गोस्वामिभिः स्पष्टी-

महस्ते विष्णो सुमतिं भजामहे' इत्यादृग्भिरन्येभ्यो धर्मेभ्यः सकाशाद्भगवद्धर्मेष्वादरः श्रूयते इति तेषां अलोप एवेत्यर्थः। एतेन 'अकरणे प्रत्यवायश्रवणा'दित्यादि यदुक्तम्, तदपि प्रत्युक्तं वेदितव्यम्। करणेपि वैयर्थ्यात्तदपरिहारात्। एवं सति यदकरणे प्रत्यवायकथनम्, तेन तस्मादवकाशं प्राप्य गौणकालेप्यकरणे तथेति तत्त्वाशय इति ज्ञायते ॥ ४० ॥

नन्वेवं तात्पर्यकत्वे श्रुतेरुपनयनादिवत् कर्मोपयोगित्वं भक्तितज्ज्ञानयोः स्यादिति कर्मण एव प्राधान्यम्, न तु भक्तेः सिध्यतीत्याशङ्क्य, भक्तितज्ज्ञानावश्यकत्वबोधकश्रुतितात्पर्यमाह ।

उपस्थितेऽतस्तद्वचनात् ॥ ४१ ॥

भाष्यप्रकाशः ।

विचार्य तदेव कीर्तयत । अनुकल्पेन कथं सन्तोष इत्यतो नामस्वरूपमाह चिदिति । उपलक्षणमेतत् । सच्चिदानन्दात्मकम् । तथाच नाम्नो ज्ञानरूपत्वात्तद्द्वारा भगवतोपि ज्ञानं भविष्यति, तेन तोषोपि भविष्यतीत्यर्थः । नामस्वरूपस्याप्यज्ञाने तदुपायं गुरूपसत्तिरूपमाह । हे विष्णो ते त्वत्सम्बन्धिनं महः तेजोरूपम्, समभिव्याहारात् त्वत्तेजोरूपम्, सुमतिं निर्दोषपूर्णगुणत्वेन भगवन्तं जानन्तम् । सुबुद्धिं भक्तमिति यावत्, तं भजामहे । तथाचान्यो भजतु, मा वा, वयं तु भजामह इति श्रुतयः स्वकृतिं दर्शयन्ति । अनेन तदुपायेप्यादरो दर्शितः । तेन भगवद्धर्माणामत्यादृतत्वं बोधितमिति ज्ञेयः । इत्यादृग्भिरित्यादिपदेन, 'प्रतत्ते अद्य शिपिविष्ट नामे'त्यादीनां संग्रहः । एवं श्रुतित्रयेण भगवद्धर्मेष्वादरे श्रुतेः सिद्धे तेषामेव मुख्यकाले करणं सिद्धमिति तेन पूर्वपक्षयुक्त्युत्तरसिद्धिं स्मारयन्ति एतेनेत्यादि । तर्हि प्रत्यवायश्रवणस्य का गतिरित्याकाङ्क्षायां तामाहुः एवं सतीत्यादि । तेनेति । कथनेन । तस्मादिति । भगवद्धर्मात् । तथेति । प्रत्यवायः ॥ ४० ॥

उपस्थितेऽतस्तद्वचनात् ॥ ४१ ॥ सूत्रमवतारयन्ति नन्वेवमित्यादि । उक्तश्रुतिभ्यां

रश्मिः ।

कुतस्ततोऽवसेयः । वरणेति । पुष्टिभक्तौ । अनुकल्पमिति । विध्यन्तरम् । कथमिति । मुख्यकल्पानाश्रयणजदुःखसत्त्वात्क(थ)मिति प्रश्नः । 'कल्पः स्यात्प्रलये न्याये शास्त्रे ब्रह्मदिने विधा'विति विश्वः । ज्ञेय इति । पूर्वेणार्थस्त्वित्यनेनान्वेति । प्रतत्त इति । प्रनाम पूर्णम् । प्रा पूरणे । तत् सच्चिदानन्दरूपं ते तव शिपिविष्टनामेति । यथावत् शिपिविष्टनामेति ज्ञेयम् । 'शिपिविष्टस्तु खलतौ शिवे दुश्चर्मणि स्मृत' इति विश्वः । आदिनर्ग्वेदोपनिषन्मण्डूकनाम्नी । भगवद्धर्मेष्विति । क्रिया वर्णाश्रमधर्मः । ज्ञानं भगवद्धर्मः । तच्च यथावत् भगवद्धर्मविषयकम् । 'ज्ञानशक्तिः क्रियाशक्तिः संदिश्येते परस्थिते' इति भाष्यकारिका । ते च ज्ञानावच्छेदका धर्माः 'मदन्यत्ते न जानन्ति नाहं तेभ्यो मनागपी'ति वाक्याद्भक्तिप्रधानाः । भक्तयो नवविधाः प्रेम सर्वात्मभावश्च । ऐश्वर्यादयः । पादार्थाव्याप्तिरपि स्मारिता । आदर इति । उक्तश्रीभागवतवाक्यादादरः । एतेनेत्यादीति । करणेपीति । 'वेदं कृत्वा वेदिं करोती'त्यत्र 'क्षुत आचामे'दित्यत्र पूर्वं वेदिकरणे क्षुतनिमित्ताभावेप्याचमने-कृते वेद्याचमनयोर्वैयर्थ्यं यथा, तथा भगवद्धर्मकाले वर्णाश्रमधर्मकरणे तस्य वैयर्थ्यं तस्मात् । तस्य प्रत्यवायश्रवणस्यापरीहारात् । परेर्दीर्घः । प्रत्यवायः 'मृत्योर्मृत्युमुपैति स' इत्येकादशोक्तः । भाष्ये । तस्येति । प्रत्यवायवाक्यस्य ॥ ४० ॥

उपस्थितेऽतस्तद्वचनात् ॥ ४१ ॥ उक्तेति । 'तमु स्तोतारः' 'प्रतत्ते' इति श्रुतिभ्याम् ।

१. रश्मौ तदपरिहारादिति पाठः ।

तयोर्युगपत्करणेऽनुपस्थितेपि यदि पूर्वं भगवद्धर्मकरणमुच्यते, तदा त्वदुक्तं स्यात्, नत्वेवम्, किन्तूभयोर्युगपत्करण उपस्थिते बलाबलविचारे क्रियमाणे,

भाष्यप्रकाशः ।

भगवद्धर्मादरे बोधिते भगवद्धर्मकरणे श्रुत्युक्तानां कर्मणां सार्थक्यं नान्यथेत्येवं श्रुतेस्तात्पर्येण उपनयनादिवद्भक्त्यादेस्तदङ्गत्वं कर्मणश्च प्राधान्यं सिध्यतीत्याशङ्क्य भक्त्याद्यावश्यकत्वबोधनतात्पर्यमाहेत्यर्थः । सूत्रं व्याकुर्वन्ति तयोर्युगपदित्यादि । यजुर्ब्राह्मणश्रुतौ भगवज्ज्ञानस्यावश्यकत्वं बोध्यते । तेन स्वाध्यायावर्तनदशायामपि तदावश्यकता आयाति । ऋक्संहिताश्रुतावपि 'यथाविद' इति 'जानन्त' इति च स्तोतृविशेषणाद्विधेयस्य भगवद्धर्मस्य करणे ज्ञानस्याधिकारप्रयोजकत्वं लभ्यते । मन्त्राणां विधायकत्वं तु 'वसन्ताय कपिञ्जलानालमेते'त्यत्र परैस्सदृतम् । 'वसन्ताये'त्यादीनां न मन्त्रत्वमिति स्वपक्षेपि मन्त्राणां स्वार्थे प्रामाण्यस्याङ्गीकाराद्विधिशक्तिकोष्ठ्याभावे विधायकत्वं न हीयते । अतो मुमुक्षूणां भगवद्धर्मा आवश्यकाः । कर्माणि तु 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति ब्रह्मचर्येण यज्ञेन तपसा श्रद्धया अनाशकेने'ति श्रुतेर्विविदिषायामेवोपक्षीणानि । ज्ञानपर्यन्तत्वपक्षेप्यारादुपकारकाणीति विविदिषोक्त्यैव लभ्यत इति दूरापास्तं तत्प्राधान्यम् । एवं ज्ञानोत्तरं यत्र कथञ्चिद्वर्णाश्रमधर्मा भगवद्धर्माश्च युगपत्प्राप्ताः, तत्र प्रत्यवा-

रश्मिः ।

सार्थक्यमिति । 'यदेव विद्यये'तिश्रुतेः पूर्वमीमांसकाशङ्का । श्रुतेरिति । यजुर्ब्राह्मणश्रुतेः 'ॐमिति प्रतिपद्यत' इत्यादेः । सिध्यतीति । 'त इमे समासत' इत्यत्र यज्ञायेति शेषं पूरयित्वा सिध्यति । भक्त्यादीति । भक्तितज्ज्ञानावश्यकत्वबोधनस्य तात्पर्यं ज्ञानकाण्डत्वा'त्तमेत'मिति श्रौतं ज्ञानकाण्डीयं तात्पर्यमाहेत्यर्थः । तयोरित्यस्यार्थ ऋक्संहितायजुर्ब्राह्मणश्रुत्योरित्याहुः यजुर्ब्राह्मणेति । बोध्यते इति । यज्ञे बोध्यते । आयातीति । ब्रह्मयज्ञत्वादायाति । स्तोत्रिति । ज्ञानस्याधिकारेत्यादौ हेतुः । विधेयस्येति । पिपर्तनेतिविधिविषयस्य भगवतोऽधोक्षजत्वाद्भगवद्धर्मस्य करणे ज्ञानस्य स्तोतृविशेषणस्य । पिपर्तनेतिमध्यमपुरुषान्मन्त्रत्वम् । पूर्वतन्त्रे मध्यमपुरुषान्तस्य मन्त्रत्वोक्तेः । तदाहुः मन्त्राणामिति । स्वपक्ष इति । भावार्थपादभाष्ये । एतावता तयोरित्यस्यार्थ उक्तः । अत इति । कर्मणा पूर्तियुक्तं कुरुतेति पिपर्तनेत्यस्यार्थेपि ज्ञानकाण्डत्वेन 'तमेतं वेदानुवचनेने'ति श्रुतिविषयत्वेन सेवाख्यकर्मणा पूर्तियुक्तं कुरुतेत्यर्थादित्यर्थः । भगवद्धर्मा उक्ता ज्ञानविषयाः । आभासे श्रुतेरुपनयनादिवदित्यादि यदुक्तं तत्राहुः कर्माणि त्विति । 'विविदिषन्ती'त्यत्र रामानुजाचार्यवत्सनर्थाविवक्षायामाहुः ज्ञानपर्यन्तत्वेति । आरात् समीप उपकारकाणि कर्माणीति । विविदिषोक्तिर्व्यञ्जनया । सनर्थाविवक्षोक्तेः । तत्प्राधान्यं कर्मप्राधान्यम् । भाष्यविवरणं तु अनुपस्थितेपीति । अपिनोपस्थिते । त्वदुक्तं कर्मणः प्राधान्यं स्यात्, शाखस्य प्राथम्यात्, नत्वेवम्, शाखप्राथम्यापेक्षया श्रुतिद्वयस्य प्राबल्यात् । 'तमेतं वेदानुवचनेने'ति 'यदेव विद्यये'ति श्रुतिद्वयम् । प्रकृते । किन्तूभयोरिति भाष्यविवरणमाहुः एवं ज्ञानेति । कर्माप्राधान्यज्ञानोत्तरम् । कथञ्चिदिति । कारणत्वेन प्रकारेण भवति लोकसंग्राहका वर्णाश्रमधर्माः क्रियाशक्तिरूपाः भगवद्धर्मा ज्ञानशक्तिविषयभक्तिरूपाः । 'भगवान्भक्तभक्तिमानि'तिवाक्यात् । ज्ञानशक्तेः सविषयत्वात् भगवान्विषय इति चेद्भक्ता अपि सन्तु, 'मदन्यत्ते न जानन्ति नाहं तेभ्यो मनागपी'ति वाक्यात् । प्राप्ता इति । भगवति प्राप्ताः । जीवे कथञ्चिन्मार्गाग्रहेण प्राप्ताः । प्रत्यवायेति । यथा बलदेवे सूतवधानन्तरम् । आदिना 'मृत्योर्मृत्युमवाप्नोति स' इति जीवविषये

**अत आदराद्धेतोस्तद्वचनाद्भगवद्धर्माणां बलवत्त्वेनालोपवचनात् न कर्माङ्गत्वमेतेषां सिध्यतीत्यर्थः ॥ ४१ ॥**

**इति तृतीयाध्याये तृतीयपादे चतुर्दशमादरादलोप इत्यधिकरणम् ॥ १४ ॥**

---

भाष्यप्रकाशः।

यादिबोधकवाक्यैः प्रबलदुर्बलभावे वैपरीत्येन भाते तदपवादायादरः प्रकाश्यते । ततश्च भगवद्धर्माणां बाधाभावः सिध्यति । तथा सतीतरेषामादराभावेपि प्रत्यवायश्रवणवैयर्थ्यपरिहाराय तेषां गौणकाले करणमर्धाधानवद्व्यवस्थाप्यते, अतो न भक्त्यादीनां कर्माङ्गत्वमित्यर्थः। अत्र कर्मणामनादरव्युत्पादनेन भगवद्धर्माविरुद्धरीत्या तत्करणस्य व्युत्पादनेन च निष्कामनित्यकर्मकृतिबोधकं अपाश्रिताभेकाश्वत्थमिति विशेषणं प्रतिपादितं ज्ञेयम् ।

रश्मिः।

एकादशवाक्योक्तमृत्युप्राप्तेर्निन्दा । वैपरीत्येनेति । बलाबलविचारे ज्ञानकाण्डत्वादुपनयनादिवदित्याभासोक्तं वैपरीत्यम्, तेन 'यदेव विद्यये'ति श्रुत्या भाते 'तमेत'मितिश्रुत्या ज्ञानकाण्डत्वेन च तस्य वैपरीत्यस्यापवादाय 'ऋषयोपि देव युष्मत्प्रसङ्गविमुखा इह सञ्चरन्ती'त्युपष्टम्भाद्भगवद्धर्मेष्वादरः प्रकाश्यते, नतु वर्णाश्रमधर्मे । इतरेषामिति । वर्णाश्रमधर्माणाम् । अर्धाधानेति । अर्धाधाने कृते कामनासमाप्तावपि विधिबलादर्धाधानं क्रियते तस्यैव । गौणकालोऽनधिकारकालो विधिलभ्यः । तदेतत्षष्ठस्य द्वितीयपादे तृतीयाधिकरणे स्पष्टम् । सूत्राणां न्यायरूपत्वात् । 'असमाप्यं समाप्यं वा काम्यं कामे निवर्तिते । आद्यः प्रयोजनाभावादन्त्यो निन्दादिसंश्रवा'दिति । अत्र 'चित्रया यजेत पशुकामः' 'कारीर्या यजेत वृष्टिकामः' इत्यादिषु कामप्रेरितेन पुरुषेण कर्मोपक्रान्तम्। तस्य च समाप्तेः प्रागेव केनापि निमित्तेन तत्तत्फलप्राप्तौ दोषदर्शनेन कामो निवर्तते । तदा कर्मानुष्ठाने प्रयोजनाभावात् न समापनीयमिति चेत् । मैवम् । प्रक्रान्तस्य कर्मणोऽसमाप्तौ निन्दाप्रायश्चित्तयोः श्रवणात् । 'देवताभ्यो वा एष प्रावृश्च्यते यो यक्ष्य इत्युक्त्वा न यजते' 'त्रैधातवीयेन यजेत न देवताभ्य आवृश्च्यते'ति तदुभयं श्रुतं तस्मात्समापनीयमित्यर्थः । ओ व्रश्चू छेदने । अत इति । वैपरीत्यापवादात् । तत्करणस्य कर्मकरणस्य । निष्कामेति । 'कर्माणि साधनत्वेन निरूपयती'ति सुबोधिन्याभासात् । 'अपाश्रितः आश्रितः अर्भकाश्वत्थो येन। आश्रितः पश्चादिति वा। अर्भाणां कं सुखं यस्मात् । बालकसुखदायी। अर्भकरूपः कोमलः अश्वत्थो वा । तस्यैवारणी भवतः । कर्माणि सर्वाणि तत्साधनान्येव । अपाश्रयपदेन च साधनत्वेनैव कर्मणामपेक्षा, नतु तद्गतं फलमप्यपेक्षत इति सूचितम्। अपाश्रिता अर्भका यस्मिन्निति बालाधिकारः कर्मणि सूचित' इति सुबोधिनी । आभासे साधननिरूपणं लोकसंग्रहार्थम् । पश्चादिति । मायाया निवृत्तेः पश्चात् । स चाश्वत्थो धर्मरूपोपि ह्यैश्वर्यधर्मरूपः अन्यथाकरणसमर्थः । अन्यथा ब्रह्मणा प्रार्थितोपि न स्वरूपमन्यथयेत् । वीर्यं तु नास्त्येयम् । 'नैच्छद्वपु'रितिवाक्यात् । ननु नित्यानन्दे प्रभासलीलानुपपन्नेत्यत आहुः अर्भानामिति । ऐश्वर्याविष्टोऽधोक्षजो बाल इति न नित्यानन्दत्वविरोधः । धर्मोऽश्वत्थः 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येक' इति । स एवैश्वर्यमित्यर्भकरूपः । अधुना लोकसंग्रहार्थं कर्माश्रयणरूपं तेन बृहदारण्यकोक्तोश्वत्थः कालात्मा भगवाञ्जातोऽश्वत्थादग्निरूपोपि, अश्वत्थे धर्मे तन्निष्ठाग्ने च तिरोभवतीत्यश्वत्थाश्रयणेच्छाया आहुः तस्यैवेति । महीधर्या वेदटीकायामश्वत्थगर्भशमीशाखाहरणोक्तेः । तत्साधनानीत्यरणिकाष्ठानयनसाधनानि साक्षात्परम्परयेति बोध्यम् । अपाश्रित आश्रित इत्यर्थ उक्तोऽपपरी अनर्थकाविति सूत्रात् । अधुनाऽपार्थं हीनं वदन्ति अपाश्रयेति । कर्मणा-

**तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ४२ ॥ (३-३-१५.)**

अथेदं विचार्यते । पुरुषोत्तमविदः कर्म कर्तव्यम्, न वेति ।

तत्र मार्गत्रयफलात्मके तस्मिन् सम्पन्ने पुनस्तस्य स्वतोऽपुरुषार्थस्य करणमप्रयोजकमिति न कर्तव्यमेवेति पूर्वपक्षः ।

तत्र सिद्धान्तमाह तन्निर्धारणेत्यादिना । अत्रेदमाकूतम् । भक्तिमार्गे हि मर्यादापुष्टिभेदेनास्ति द्वैविध्यम् । तत्र मर्यादायां पुष्टौ चैतादृशस्य न कर्मकरणं सम्भवति । अत एव तैत्तिरीयकोपनिषत्सु पठ्यते 'आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चने'ति । 'एतꣳ ह वा व न तपति किमहꣳ साधु नाकरवं किमहं पापमकरवमिती'ति । श्रूयते चोभयविधानामपि कर्मकरणमम्बरीषोद्धवपाण्डवा-

भाष्यप्रकाशः

शङ्करभास्कराचार्यौ तु वैश्वानरविद्योक्तस्य प्राणाग्निहोत्रस्य भोजनलोपे लोपो न वेति शङ्कायां लोपं सिद्धान्तयतः । तत्रोदासीना वयम् ।

रामानुजाचार्यास्तु, इदं सूत्रद्वयं कामादिसूत्रशेषत्वेनाङ्गीकृत्य तत्र मोक्षार्थिनां निर्विशेषोपासकानां सत्यकामत्वादिवद्वशित्वादिकमपि लुप्यते इति शङ्कानिवृत्तये आद्यम्, छान्दोग्योक्तं 'सर्वेषु लोकेषु कामचार' इति फलं सांसारिकमिति शङ्कानिरासाय द्वितीयमिति मन्यन्ते । अयं च परविषयो विचार इति पूर्वोक्तमतद्वयापेक्षयायमेव युक्तः ॥ ४१ ॥ इति चतुर्दशमादरादलोप इत्यधिकरणम् ॥ १४ ॥

तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ४२ ॥ ननु यद्येवं तर्हि गौणमुख्यन्यायेन कर्मणामप्रयोजकत्वात् परमहंसेष्विव भक्तेष्वपि तत्प्राप्तिरेव न सम्भवतीति व्यर्थः पूर्वोक्तो विचार इत्याकाङ्क्षायां पाक्षिकप्राप्तिं हृदिकृत्य तत्प्रयोजनबोधनायेदमधिकरणमित्याशयेन संशयपूर्वपक्षौ वदन्तस्तदवतारयन्ति अथेत्यादि । तस्मिन्निति । पुरुषोत्तमज्ञाने । सिद्धान्तं वदन्तः सूत्रं व्याकुर्वन्ति अत्रेदमित्यादि । एतादृशस्येति । पुरुषोत्तमविदः सर्वदा भगवदानन्दमनुभवतो वा । श्रूयते चेति । गोपालोत्तरतापनीयेऽतिथिपूजारूपो गृहस्थधर्मो

रश्मिः ।

मिति । अश्वत्थरूपधर्माश्रयणरूपकर्मात्र । बहुवचनमन्यापेक्षम् । हीनाश्रयणान्नतु तद्गतं फलमप्यपेक्षत इत्यर्थः । अपाश्रिता इति । मुख्यतया तु वैदिका आश्रिताः । अतो बालस्यैश्वर्याविष्टस्याधिकारः प्रभासलीलायां कर्मणि सूचित इत्यर्थः । वैश्वानरेति । प्राणाग्निहोत्रोपनिषदि स्फुटम् । उदासीना इति । पूर्वतन्त्रे द्वारलोपात्कार्यलोपस्य सिद्धत्वे तत एव सिद्धेरुदासीनाः । परविद्ययोरिति[1] । 'अथ परा यया तदक्षरमधिगम्यत' इति श्रुतेः पूर्वा परा । छान्दोग्यं तु नारदसनत्कुमारसंवादस्थं सर्वात्मभावविद्याविषयमिति परविद्या ॥ ४१ ॥ इति चतुर्दशमादरादलोप इत्यधिकरणम् ॥ १४ ॥

तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ४२ ॥ पाक्षिकेति । कर्मकरणे भगवदिच्छानिर्धारणपाक्षिकेत्यर्थः । तत्प्रयोजनेति । अग्रे स्फुटम् । भाष्ये । मार्गेति । कर्ममार्गेण चित्तशुद्धौ ज्ञानं ज्ञानिनो भक्तौ सत्यां 'भक्त्या जानाति चाव्यय'मितिश्रुत्युक्ते फलात्मके । आकूतमिति ।........। प्रकृते । 'अम्बरीषोद्धवपाण्डवादी'नामित्यत्रादिपदार्थत्वेन शुकजडादयो भाष्ये व्याकृतप्रायाः । गोपालेत्यादि । गान्धर्वीप्रभृतीनां पुष्टिमार्गीयत्वं स्फुटम् । 'अह्नयापृतं निशि शयान'-

1. परविषय इत्यत्र परविद्ययोरिति पाठः रश्मौ ।

वीनाम्। एवं सत्युभयविधानां मध्ये, मम कर्मकरणे प्रभोरिच्छास्तीति यो निर्धारयति, स करोति। य एतद्विपरीतम्, स न करोति। यथा शुकजडादिः। एतन्निर्धारश्च भगवदधीनः, अतो भक्तेष्वपि तन्निर्धारणानियमः, अतः कर्म कर्तव्यमेवातन्निर्धारणे त्वाधुनिकानाम्। एवं सतीच्छाज्ञानवता तत्सन्देहवता च कर्म कर्तव्यमिति सिद्धम्। तत्रोभयोः फलं वदन्नादावाद्यस्याह तद्दृष्टेः। तस्या भगवदिच्छाया दृष्टिर्ज्ञानं यस्य स तथा। तस्य जीवकृतकर्मफलात् पृथक् भिन्नमीश्वरकृतकर्मणो यत्फलं वेदमर्यादारक्षा लोकसंग्रहश्च तत्फलमित्यर्थः। हिशब्देन 'सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत। कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रह'मिति भगवद्वाक्यरूपोपपत्तिः सूचिता। द्वितीयस्य मध्यमाधिकारात् कालेसङ्गादिजनितचित्तमालिन्येन भगवत्सांनिध्ये प्रतिबन्धः स्यात्, तन्निवृत्तिस्तत्कृतकर्मणः फलमित्यर्थः।

---

भाष्यप्रकाशः।

गान्धर्वीप्रभृतीनाम्। चकारात् स्मृतौ। उभयविधानामिति। मर्यादायां पुष्टौ चाङ्गीकृतानां भक्तानाम्। एतद्विपरीतमित्यत्रापि निर्धारयतीति सम्बध्यते। तथाच निर्धारणानियमपदस्य हेतुगर्भतया एवं कर्मप्रसक्तेर्विद्यमानत्वान्न पूर्वाधिकरणोक्तविचारवैयर्थ्यमित्यर्थः। ननु भवत्वेवं पुरुषोत्तमविदः कर्मकरणम्, तथापि किं तस्य फलमिति विचारणीयम्, न तावल्लौकिकम्, तदनभीष्टत्वात्। नापि प्रत्यवायपरिहारादिः, 'स्वपादमूलं भजत' इति वाक्याद्भगवतैव तत्सिद्धेरित्याकाङ्क्षायां सूत्रशेषमवतारयन्ति तत्रेत्यादि। एवं सिद्धे कर्मकरणे ज्ञातेच्छतत्सन्देहवतोः फलं वदन्निश्चितेच्छस्य फलं तद्दृष्टेः पृथगित्यनेन पूर्वमाहेत्यर्थः। द्वितीयस्य विवृण्वन्ति द्वितीयस्येत्यादि। तथाच तादृशोरपि कर्मणः साफल्यस्य सत्त्वान्न पूर्वोक्तविचारवैयर्थ्यमित्यर्थः।

रश्मिः।

मितिवाक्यात्। तथाच पुष्टिमर्यादामार्गीया भक्ता अप्यादिपदार्थः। अत्र गान्धर्वीप्रभृतीनां श्रूयते चेत्यन्वयो न भवति। गोपालतापिनीये गान्धर्वीप्रभृतिष्वम्बरीषादीनामग्रहणात्। तथाच श्रूयते चेत्यस्य वेदोपाख्यानेष्वित्यर्थः। अन्वयान्तरमाहुः स्मृताविति। स्मृतौ श्रूयते श्रावणविषयीक्रियते। नच स्मर्यते चेति पठनीयमिति वाच्यम्। 'इतिहासः पुराणं वेदानां पञ्चमो वेद' इति श्रुत्या पुराणेष्वपि स्मर्यते चेत्यस्य बाधात्। स्मृतयस्तु नवमस्कन्धे 'स इत्थं भक्तियोगेन तपोयुक्तेन पार्थिवः। स्वधर्मेण हरिं प्रीणन्सङ्गान्सर्वान् शनैर्जहा'वित्यम्बरीषस्य कर्मकरणे। दशमस्कन्धे 'ऋतुराजेन गोविन्द राजसूयेन पावनीः। यक्ष्ये विभूतीर्भवत' इति पाण्डवानां कर्मकरणे। एकादशस्कन्धे 'यथोपदिष्टं जगदेकबन्धुना तपः समास्थाय हरेरगाद्गति'मित्युद्धवस्य कर्मकरणे एकोनत्रिंशाध्यायस्था। मर्यादायामिति। मर्यादायामम्बरीषादयः। पुष्टिमर्यादायां गान्धर्वीप्रभृतयः। पुष्टौ 'केवलेन हि भावेन गोप्यो गावः खगा मृगाः। येऽन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसे'तिवाक्योक्ता गोप्यादयः। 'स्वपादमूलं भजतः प्रियस्य त्यक्तान्यभावस्य हरिः परेशः। विकर्म यच्चोत्पतितं कथंचिद्धुनोति सर्वं हृदि सन्निविष्ट' इति। मर्यादेत्यादि। मर्यादायामम्बरीषादयः भक्तेः ससाधनत्वात्। पुष्टौ गोप्यादयः निःसाधनभक्तिमत्त्वात्। पुष्टिमर्यादायां गान्धर्वीप्रभृतयः गोपालतापिनीये ससाधनभक्तेः, 'अह्नयापृत'मिति निःसाधनभक्तेश्च कथनात्। शुकजडादयो ज्ञानिभक्ताः। प्रथमस्कन्धे शुकस्य पञ्चमस्कन्धे जडस्य ज्ञानित्वेन प्रसिद्धेः।

---

१. एतावन्निर्धारणमिति पाठः। २. कामसङ्गेति पाठः।

**अथवा । पूर्वसूत्राभ्यां भगवद्धर्मकृतेरावश्यकत्वमुक्तम् । सर्वात्मभाववतो**

भाष्यप्रकाशः ।

अत्र भगवत्स्वरूपविषयकपूर्णज्ञानवतामेव तदिच्छया वर्णाश्रमधर्मकरणतदकरणयोर्विभजनात् पूर्णज्ञानप्राप्यत्वबोधकं अकृशमिति विशेषणं प्रतिपादितं ज्ञेयम् । न कृशं यस्येति तदर्थादिति ।

एवमेतत्सूत्रव्याख्याने प्रत्यवायश्रवणादिना गौणकालेऽप्यवश्यकर्तव्यतया पूर्वाधिकरणे साधितानां कर्मणां वैयर्थ्यपरिजिहीर्षया फलस्य वक्तव्यत्वेन पृथग्घ्यप्रतिबन्धः फलमिति सूत्रभागसार्थक्यमायाति, न सम्पूर्णस्य सूत्रस्येत्यरुच्या व्याख्यानान्तरार्थं सूत्रमवतारयन्ति अथवेत्यादि । पूर्वसूत्राभ्यां भगवद्धर्माणां मोक्षफलानां श्रवणादीनां कृतेः करणस्यावश्यकत्वमुक्तम्, यः पुनः सर्वात्मभाववान्, तस्य तूक्तभगवद्वचनात्, तं प्रति मोक्षसाध-

रश्मिः ।

भगवदिति । इच्छाया भगवन्निष्ठत्वेन तन्निष्ठसत्ताया अपि परम्परया भगवन्निष्ठत्वेन विषयविधया भगवदधीनत्वम्, मुख्यत्वात्, इतरयोश्च विशेषणत्वात् । ननु प्रभोरिच्छास्तीत्यत्र प्रभुसम्बन्धीच्छानिष्ठः सत्तानुकूलो व्यापार इति वैयाकरणबोधोतः कथमितरयोर्विशेषणत्वमिति चेत् । न । अनौचित्याद्भगवतो विशेषणत्वे सखण्डब्रह्मवादेन । एतद्भगवदधीनपदेन सूच्यते । एतत्फलमाहुः अतो भक्तेष्विति । येषां पुनर्भगवान् साधनं फलं च तेष्वपीत्यर्थः । तादृशेष्विच्छासत्तयोरभावात् । तथा चैतन्निश्चयस्य ज्ञानरूपस्य सकलभक्तसाधारणं भगवदधीनत्वमुररीकार्यमिति भावः । नचान्योन्याश्रयः भगवदधीनो निर्धारः निर्धाराधीनो भगवान् साधनमिति ज्ञानमिति वाच्यम् । पूर्वं कर्मकरणनिर्धारेण कार्येणाधीनस्य भगवान्साधनमस्ति कारणं विना कार्याभावादिति भगवान्साधनमिति पश्चाज्ज्ञानस्य सम्भवेनान्योन्याश्रयाभावात् । भाष्ये । वेदेत्यादि । इदं गीतातृतीयाध्याये 'लोकसङ्ग्रहमेवापि संपश्यन्कर्तुमर्हसी'ति लोकसङ्ग्रहः । 'यद्यदाचरति श्रेष्ठ' इत्यारभ्य 'उपहन्यामिमाः प्रजा' इत्यन्तेन वेदमर्यादारक्षा । ननु 'न कुर्यां कर्म चेदह'मितीश्वरं प्रति व्यतिरेकमुखेन विधिरस्ति तत्र गीतायां अर्जुनं प्रति लोकसंग्रहकथनवद्वेदमर्यादारक्षाप्युक्ता न सर्वान्प्रत्याज्ञसेत्याकाङ्क्षायां हिकारस्यार्थमाहुः हीति । अत्र विद्वांसं प्रत्याज्ञास्तीति नोक्तदोष इत्यर्थः । भगवद्वाक्येन रूप्यते व्यवह्रियत इति भगवद्वाक्यरूपा उपपत्तिः युक्तिः । यदीदं भगवद्वाक्यं न स्यात्, उक्तदोषः स्यादिति अव्ययानां वैयाकरणमते द्योतकत्वात्सूच्येतेति । प्रकृते । भगेत्यादि । पूर्णेति । 'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यत' इति श्रुत्या पूर्वं पूर्णं भगवता भक्तमनोरथानुरूपं पूर्तिकर्मज्ञानं तद्वताम्, विभजनात् अम्बरीषाद्युदाहरणसमर्थितात् । अकृशमिति । (अकृशमिति ज्ञानम्, पूर्णत्वात्, अन्येषां परिच्छेदरूपत्वात् । अनेन पूर्णमेव ज्ञानं साधनमिति, न तु खण्डब्रह्मज्ञानानि शारीरकादीनि । सर्वेषां भक्तानामुपसंहृतत्वात् दौर्बल्यमाशङ्क्य निराकृतम् । भक्तानां तत्रैव प्रवेशात् । अनेनान्येपि दैहिका धर्मा निवारिताः । उत्पत्तिकार्यतपसादीनि चाक्षरसाम्यात् निवारितानि । 'अस् भुवि' 'डुकृञ् करणे' 'शम उपशमे' इति धात्वादयो गृहीताः । प्रपञ्चकर्मज्ञानानि वा ज्ञानसाधनानि, ततः ससाधनं ज्ञानमुक्तं भवति । ) तथाचाय सूत्रार्थः । मम कर्मकरणेऽकरणे वा भगवदिच्छास्तीति निर्धारणानियमादाधुनिकानाम्, अतस्तैर्निष्कामतया कर्म कर्तव्यमेव । तद्दृष्टेः । तस्या भगवदिच्छाया दृष्टिर्ज्ञानं यस्माम्बरीषोद्धवयुधिष्ठिरादेस्तस्य पृथक् जीवकृतकर्मणो यत्फलं तस्माद्भिन्नं सन्मार्गरक्षालोकसङ्ग्रहादिकं तदेव फलम्, न तु स्वर्गादिकम् । पूर्वोक्तनिष्कामकर्मकर्तुस्तु अप्रतिबन्धः कर्मजप्रतिबन्धाभावः फलं युक्तमिति । इदानीं मुख्यायाः एकादशसर्वस्वत्वेन सर्वनिर्णये उक्तायाः न्यूनताख्यनिग्रहस्थाननिवारिकायाः प्रसङ्गतः प्रस्तावनामाहुः य इति । उक्तेति । भाष्योक्तभग-

**'न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिहे'ति भगवद्वचनाद्विधेयाभावादसम्भवाच्च कर्मज्ञानयोर्विहितभक्तेश्च करणं न सम्भवतीति तस्य किं फलमित्याकाङ्क्षापूरणाय तदनुवदति तन्निर्धारणेत्यादिना। तस्मिन् धर्मिण्येव, न तु धर्मेष्वपि दृष्टिर्यस्य स तथा। दृष्टिपदेन ज्ञानमात्रमुच्यते। तेन अन्यविषयकदर्शनश्रवणादिज्ञानाभाव उक्तो भवति। एतादृशस्य प्रभुसङ्गममात्रमपेक्षितम्। तत्र भगवदुक्तस्वसङ्गमावधिकस्य भक्तस्य सङ्गमसमयनिर्धारो भवति। अतादृशस्य तस्य स नेति तन्निर्धारणानियमः। एतेन फलप्राप्तेः प्रागवस्थोक्ता भवति। फलस्वरूपमाह पृथक्फलमिति। अस्यानिर्वचनीयत्वादनुभवैकवेद्यत्वान्मोक्षान्तं यत्फलं शास्त्र उक्तं तस्माद्भिन्नमित्युक्तम्। अन्यत्र हि धर्माणां साधनत्वम्, यत्र फलमेव साधनम्,**

भाष्यप्रकाशः।

नानामविधानस्य सत्याद्यधिकरण उपपादितत्वेन विधेयानां तेषामभावात्, तद्भावस्वभावेन तेषां कर्तुमशक्यतया असम्भवाच्च कर्मज्ञानविहितभक्तीनां करणं सर्वात्मभाववतो न सम्भवति, तदभावे च न मोक्षोपीति तस्य किं फलमित्याकाङ्क्षायां तस्य यत्फलं तदनेन सूत्रेणानुवदतीत्यर्थः। व्याकुर्वन्ति तस्मिन्नित्यादि। एतेनेति। तन्निर्धारणानियमपदेन। अन्यत्रेति। मोक्षपर्यन्ते फलान्तरे। तथाच भगवत्सङ्गमाभिलाषौत्कट्येन तदेकतानस्य भगवतानुक्तस्वसङ्गमावधिकस्य 'यतो वाचो निवर्तन्त' इति श्रुत्युक्तमगणितानन्दरूपं फलम्, तत्प्राप्तिपूर्वदशायां तद्भावप्रति-

रश्मिः।

वद्वचनात्। **विहितभक्तीति**। तेन सर्वात्मभावेऽविहितभक्तेः कामाद्युपाधिना चिन्तनरूपायाः करणं सम्भवतीत्युक्तम्। **भाष्ये**। नन्वत्र पक्षे इदं सूत्रं नाधिकरणमिति वक्ष्यते। तथाच तस्याः श्रुतेर्दृष्टिदर्शनम्। तस्या इति षष्ठीतत्पुरुषोस्त्विति चेत्। सत्यम्। सर्वात्मभावे 'यत्र नान्यत्पश्यती'त्यादिश्रुतेर्दर्शनं वर्तते, तथापि यत्र यस्मिन्नधिकरणेऽन्यधर्मादिदर्शनादिनिषेधाद्धर्मिण्येव दृष्टिः सूच्यते इत्याशयेनाहुः **तस्मिन्निति**। श्रुतावन्यदर्शननिषेधाद्विग्रहवाक्ये एवकारः समासघटको न। **ज्ञानमात्रमिति**। मात्रं कार्त्स्न्ये। **प्रभ्विति**। प्रभोः सम्यक् गमः अपर्यालोचितोऽध्वा पुष्टिमार्गस्तन्मात्रम्। मात्रमवधारणे। 'मात्रं कार्त्स्न्येऽवधारण' इति कोशात्। **अपेक्षितमिति**। विप्रयोगभावोदय एव स भावो ज्ञातो भवतीति। तत्र प्रभुसङ्गमातिरिक्तमनपेक्षितम्। **स्वसङ्गमेत्यादि**। वैराग्यं न श्रेयो भवेदित्युक्ते विषयवैतृष्ण्यसंज्ञं वैराग्यं न श्रेयः विषयतृष्णा श्रेयः भगवदुक्तः स्वस्य सङ्गमस्यावधिः पूर्वावस्था विषयतृष्णारूपा यस्य भक्तस्य तादृशस्य अपर्यालोचिताध्वनः पुष्टिदास्ययुक्तप्रेम्णः समयः कालः तस्य निर्धारो निश्चयः भगवत्सङ्गकालनिश्चयो भवति। यदि भगवत्सङ्गकालनिश्चयो न स्यात्, 'सत्सङ्गान्मामुपागता' इत्येकादशे द्वादशाध्याये भगवान्न वदेत्। अतादृशस्य धर्मादिदृशेः सङ्गमसमयनिर्धारो न, सर्वात्मभावैकलभ्यत्वात्तस्य। **प्रागवस्थेति**। यथा 'वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगाद्यतयः शुद्धसत्त्वाः। ते ब्रह्मलोके तु परान्तकाले' इति प्रागवस्था, 'परामृतात्परिमुच्यन्ति सर्वे' इति फलस्य। **शास्त्र इति**। मर्यादाभक्तिशास्त्रेपीत्यर्थः। **फलमित्यादि**। ननु कथं फलमेव साधनं फलत्वसाधनत्वयोर्विरोधादितिचेन्न। फलं भगवान् स्वस्यानन्दावेशं तिरोभाव्य कृपावेशं कृतवानित्यविरोधात्। 'कृपाविष्टः साधनम्, आनन्दाविष्टः फल'मिति भाष्यात्। **प्रकृते**। **अगणितेत्यादि**। अगणितानन्देनागणित आनन्दो यत्र विषयतया सोऽगणितानन्दः पूर्वोक्तरसात्मकपुरुषोत्तमभजनानन्दानुभवस्तेन रूप्यते व्यवह्रियतेऽर्थादुत्तरकाले

**तत्फलस्यानिर्वाच्यता युक्तैवेति हिशब्देनाह। ज्ञानमोक्षादिना तद्भावाप्रतिबन्धश्च फलमित्यर्थः । प्रासङ्गिकमेतत्सूत्रम् ॥ ४२ ॥**

**इति तृतीयाध्याये तृतीयपादे पञ्चदशं तन्निर्धारणाधिकरणम् ॥ १५ ॥**

---

भाष्यप्रकाशः ।

**बन्धाभावश्च फलमिति भक्तिविचारे मुख्यभक्तेरपि स्मृत्या प्रसङ्गत उक्तमित्यर्थः । अस्मिन् इदं केवलं सूत्रमेव, न त्वधिकरणम् । एतज्ज्ञापनायोक्तमेतत्सूत्रमिति ।**

**अत्रान्ये तु, 'ओमित्येतदक्षरमुद्गीथमुपासीते'त्यादीनि कर्माङ्गान्युपासनानि तत्तत्कर्मसु जुहूपर्णतादिवन्नित्यं क्रतुसम्बन्धीनि न वेति शङ्कायां न नित्यानीति सिद्धान्तयन्ति । 'अङ्गेषु यथाश्रयभाव' इत्यन्तिमाधिकरणं चैतस्यैव प्रपञ्च इत्याहुः । तच्चैनैवास्य गतार्थत्वाद्वैयर्थ्यमस्य सूत्रस्य तन्मते दुर्वारमिति ज्ञेयम् ॥ ४२ ॥ इति पञ्चदशं तन्निर्धारणाधिकरणम् ॥ १५ ॥**

रश्मिः ।

ज्ञायते यदकुतोभयं तदगणितानन्दरूपं फलमित्यर्थः । भगवदुक्ताकुतोभयपदस्येत्याद्यग्रेतनसूत्रभाष्यात् । **तद्भावेति** । तद्भावे सर्वात्मभावे प्रतिबन्धो ज्ञानमोक्षादिना ज्ञानमैक्यज्ञानं मोक्षः सायुज्यं आदिना वैराग्यं पुरुषोत्तमज्ञानस्य तैरपकर्षवत्तया ज्ञानं तदभावरूपं च फलम् । **मुख्यभक्तेरिति** । मुख्यत्वं 'तस्मात्त्वमुद्धवोत्सृज्य नोदने' त्युपक्रम्य 'याहि सर्वात्मभावेने'त्युक्त्वा 'आत्मानं च स्वयं वेद तस्मादन्यवचो मृषे'ति निबन्धोक्तैकादशसर्वेस्त्वम् । **स्मृत्या** न्यूनताख्यनिग्रहस्थाननिवृत्त्यै स्मृत्या । तथाचैष सूत्रार्थः । तद्दृष्टेः पुरुषोत्तमदृष्टेः सर्वात्मभाववत इति यावत् । तन्निर्धारणानियमः सङ्गमसमयनिर्धारणानियमोऽतः पृथक्फलं अप्रतिबन्धश्च फलं हि फलस्यानिर्वाच्यता युक्तैवेति । 'उपस्थितेऽतस्तद्वचना'दिति सूत्रादत इत्यनुवर्तते । 'कामादीतरत्रे'ति सूत्राच्चकारः । ननु पुरुषोत्तमदृष्टेस्तन्निर्धारणानियमः कथं सङ्गमसमयनिर्धारो भवतीति भाष्यविरोधादिति चेत् । न । पुरुषोत्तमस्य सर्वात्मभावरूपत्वेन सर्वात्मभावे चाहङ्कारादेशस्य सत्त्वेन तद्दृष्टेरित्यत्राहङ्काररूपधर्मदृष्टेः कादाचित्क्या अपि सत्त्वेन तामादाय तन्निर्धारणाभावात्तन्निर्धारणानियमः, सार्वदिकस्तु तन्निर्धारात्तन्निर्धारणनियम इति भाष्याविरोधात् । अहङ्कारस्य दैन्यविरुद्धत्वेन दैन्यजपुरुषोत्तमात्मकसङ्गमसमयनिर्धाराविर्भावविरोधः । **एतत्सूत्रमितीति** । तेनात्र न षोडशकलाषोडशाधिकरणीप्राप्तं विशेषणमुक्तमिति भावः । नन्वत्रान्याद्दतः सूत्रार्थः कुतस्त्यक्त इत्याकाङ्क्षायामाहुः **अत्रान्ये त्विति** । विषयमाहुः **ॐमित्येतदिति** । छान्दोग्येऽस्ति । विशयमाहुः **तत्तदीति** । **जुह्वित्यादि** । यथा जुह्वां पर्णता पर्णमयीता । 'यस्य पर्णमयी जुहूर्भवती'ति श्रुतेः । आदिना गोदोहनम् । 'गोदोहनेन पशुकामस्ये'ति श्रुतेः । यथा गोदोहनं तथा नवेति योजना । नित्यानि अप्रकरणपठितानामपि जुह्वादिद्वारेण क्रतुप्रवेशात्प्रकरणपठितवन्नित्यतैवमुद्गीथाद्युपासनानामिति पूर्वपक्षः । सिद्धान्तमाहुः नेति । तन्निर्धारणानियमः । उद्गीथादिकर्मगुणयाथात्म्यनिर्धारणानि रसतमप्राप्तिः समृद्धिर्मुख्यप्राण इत्येवमादीनि नैतासां नित्यवत्कर्मसु नियमः । कुतस्तद्दृष्टेः । तस्या नियमस्य दर्शनात् । 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेदे'त्यविदुषोपि क्रियाभ्यनुज्ञानात् । अपिचैवञ्जातीयकस्य कर्मव्यपाश्रयस्य विज्ञानस्य पृथगेव कर्मणः फलमुपलभ्यते । कर्मफलसिद्ध्यप्रतिबन्धं तत्समृद्धिरतिशयविशेषः कश्चित् । 'तेनोभौ कुरुतः नाना तु विद्या चाविद्या च यदेव विद्यया करोती'ति । तत्र नाना त्विति विद्वदविद्वत्प्रयोगयोः पृथक्करणात् वीर्यवत्तरमिति च, तरप्प्रत्ययप्रयोगाद्विद्याविहीनमपि कर्म वीर्यवदिति गम्यत इत्येवं सिद्धान्तयन्तीत्यर्थः ॥ ४२ ॥ **इति पञ्चदशं तन्निर्धारणाधिकरणम् ॥ १५ ॥**

## प्रदानवदेव तदुक्तम् ॥ ४३ ॥ (३-३-१६.)

अथेदं विचार्यते। सर्वात्मभावो विहितकर्मज्ञानभक्तिसाध्यः, न वेति। तत्र पुराणे 'तस्मात् त्वमुद्धवोत्सृज्ये'त्युपक्रम्य, 'मामेकमेव शरणमात्मानं सर्वदेहिनाम्। याहि सर्वात्मभावेन यास्यसे ह्यकुतोभय'मिति वाक्ये मुक्त्यात्मकाकुतोभयसाधनरूपशरणगमने प्रकारत्वेन सर्वात्मभावस्य कथनेन स्वप्रयत्नसाध्यत्वं गम्यते। अतः साधनसाध्य इति पूर्वः पक्षः।

तत्र सिद्धान्तं वक्तुं तदुपदेशस्वरूपमाह प्रदानवदिति। यद्ययं साधनोपदेशः स्यात्, स्यात्तदा साधनत्वेन सर्वात्मभावेन शरणप्राप्तेः स्वकृतिसाध्यत्वम्, न त्वेवम्, किन्तु, तदुक्तं भगवदुक्तम्। प्रदानवत्। प्रकृष्टं दानं प्रदानं वरदानमिति यावत्, तद्वदेवेत्यर्थः। वरेण हि स्वकृत्यसाध्यमपि सिध्यतीति तथा। शत्रुसंहारभयादिनापि शरणाप्तिर्भवति, तत्र न तस्याः पुरुषार्थत्वम्, किन्तु तन्निवृत्तेरेव। प्रकृतेपि सर्वात्मभावे स्वरूपप्राप्तिविलम्बासहिष्णुत्वेनात्यार्तौ स्वरूपातिरिक्ता-

भाष्यप्रकाशः।

प्रदानवदेव तदुक्तम् ॥ ४३ ॥ एवं राजसानां कर्मासक्तिवारणायाधिकरणद्वयं प्रणीय मुख्यभक्त्युत्कर्षज्ञापनेन तदभिलाषोपजननाय तत्कृतकर्म फलं च[1] प्रदर्शितम्। अतः परं मुख्यभक्तिः केन भवतीत्याकाङ्क्षायामिदमधिकरणमारभत इत्याशयेनावतारयन्ति अथेत्यादि। व्याकुर्वन्ति यद्दीत्यादि। स्यात्तदा साधनत्वेनेत्यादि। सर्वात्मभावकरणकशरणप्राप्तिसाधनत्वेन रूपेण सर्वात्मभावस्य स्वकृतिसाध्यत्वं स्यात्। तन्निवृत्तेरिति। शत्र्वादिभयनिवृत्तेः। नन्वेतद्वाक्योक्तस्यार्थस्य कथं प्रदानतुल्यत्वमित्याकाङ्क्षायां तदुपपादयन्ति प्रकृतेपीत्यादि। एतच्चेति। एतादृशं शरणगमनम्। नन्वेवं स्वकृत्यसाध्यत्वेऽस्य भावस्य प्रदानत्वमेव सिध्यति, न तु

रश्मिः।

प्रदानवदेव तदुक्तम् ॥ ४३ ॥ एवमिति। पूर्वोक्ताधिकरणद्वयपरामर्शेनेत्यर्थः। चात्रेति। मुख्यभक्तिफलं चकारार्थः। अत्राधिकरणद्वये। प्रवृत्त्यर्थं दर्शितम्। प्रेक्षावत्प्रवृत्त्यर्थं विषयप्रयोजनसम्बन्धाधिकारिणां सर्वत्र प्रदर्शनात्। भाष्ये। तत्रेति। तादृशसंशये सतीत्यर्थः। विषयवाक्यं तु 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमे'ति छान्दोग्यस्थम्। तेन सर्वात्मभावोक्तेः। अत्र च 'सर्वात्मभावो विहिते'त्यादिभाष्येण तत्प्रतिपादकोक्तश्रुतिस्मारणात्। पुराणस्य श्रुत्युपबृंहकत्वेन पुराणेन श्रुतिमुपबृंहयन् पूर्वपक्षमाह पुराण इत्यादि। प्रकारत्वेनेति। सर्वदेहिनामेकमात्मानं मां सर्वात्मभावेनैव शरणं याहीत्येवं विशेषणत्वेन याहीति क्रियापदे गमनानुकूलव्यापारसाध्यत्वं गम्यत इत्यर्थः। ननु गमनं शरणनिष्ठं तदनुकूलव्यापारश्चोद्धवनिष्ठ इति कथं सर्वात्मभावस्य स्वप्रयत्नसाध्यत्वमिति चेत्। न। सर्वात्मभावेन शरणनिष्ठं गमनं तदनुकूलव्यापार इत्यर्थात्। अतएव गम्यत इत्युक्तम्, नतूच्यत इति। तदुपेति। तस्य सर्वात्मभावस्य उपदेशः कथनं तस्य स्वरूपम्। (याहीति लोटाज्ञा प्रतीयते तद्विषयत्वेन शरणगमनं प्रतीयते, तत्र प्रकारत्वेन सर्वात्मभावः। स च 'मुक्तिं ददाति कर्हिचित्स्म न भक्तियोग'मिति वाक्यात्कस्मैचिदेव दानेन सिद्ध इति तस्य स्वरूपमित्यर्थः। नच कदाप्यदाप्यदानमिति वाच्यम्। सर्वात्मभाववद्भक्तानां दर्शनात्। न चेदं सर्वात्मभावाविषयमिति वाच्यम्। मर्यादाभक्तेः साधनतोपि सिद्ध्या पुष्टेरनुग्रहेणैव सिद्धा दानानपेक्षणादस्य वाक्यस्य निर्विषयत्वापत्तेः।) तदुक्तमिति व्याख्येयम्। भगवतैकादशसर्वस्वत्वेन रूपेणोक्तम्। निबन्धे सर्वनिर्णये स्फुटम्। प्रदानवदिति व्याकुर्वन्ति

[1] चात्र दर्शितमिति रश्मौ पाठः।

**स्फूर्त्यां तद्भावस्वाभाव्येन गुणगानादिसाधनेषु कृतेष्वप्यप्राप्तौ स्वाशक्यत्वं ज्ञात्वा प्रभुमेव शरणं गच्छति, एतच्च न स्वकृतिसाध्यमिति सुष्ठूक्तं प्रदानवदिति। भक्तस्येप्सितोऽर्थो हि वरो भवति। सर्वात्मभावस्यानुभवैकवेद्यत्वेन**

भाष्यप्रकाशः।

तत्तुल्यत्वमित्याकाङ्क्षायामाहुः भक्तस्येत्यादि। स्पष्टम्। नन्वेवमपि शरणगतेरेव स्वकृत्यसाध्यत्वं

रश्मिः।

स्म प्रकृष्टमिति। अयं न विग्रहः एकादशसर्वस्वत्वेनोक्तार्थजातस्य प्रकृष्टदानकर्मत्वेन प्रकृष्टदानतुल्यत्वाभावादत आहुः वरेति। वरस्य सिद्धस्य न तु साधनसाध्यस्य दानं वरदानमिति षष्ठीतत्पुरुषः। तथाच वरस्य सिद्धस्य कथनरूपदानमिव तदुक्तं भगवदुक्तं भगवत्कथनमिति यावदित्यर्थः। नच प्रकृष्टस्य दानमिति भाष्यापत्तिरिति वाच्यम्। प्रकृष्टं दानं वरस्य दानमित्यनयोः पर्यायत्वात्। एवेति। 'आत्मानं च स्वयं वेद तस्मादन्यवचो मृषे'ति निबन्धात्। ननु वरदानं साधनमेव तेनापि फलवता वर्त्यत इति चेत्, तत्राहुः वरेणेति। स्वकृतिसाध्यसाधनत्वं साधनत्वम्। स्वकृत्यसाध्यसाधनत्वं तु न। अनुग्रहवद्वरदानस्यापि भगवद्धर्मत्वात्। सर्वात्मभावे स्वस्वत्वध्वंसपूर्वकपरस्वत्वोत्पादनं दानं न यतः। प्रकृष्टं अभीष्टमिति यावत्। भगवतोऽभीष्टम्। 'ईप्सितत्वासम्भवेपी'ति वक्ष्यमाणभाष्यात्। तथेति। साधनेतरत्वप्रकारेण वरकथनरूपं दानम्। 'युक्तं भगैः स्वैरितरत्र चाध्रुवै'रिति वाक्यात्। वरदानं भगवन्निष्ठं साधनं भक्तनिष्ठमिति विभेदः। प्रायस्तत्तत्फलं प्रति तत्तन्निष्ठस्यैव साधनत्वम्। क्वचिदेव पितृनिष्ठप्रायश्चित्तेन पुत्रनिष्ठा शुद्धिः। ननु मुख्यभक्तावपि दार्ढ्यार्थं 'कामादीतरत्र'सूत्रोक्तकामादीनां तेभ्य एव मुक्तिसाधकानां का गतिरिति चेत्, तत्राहुः शत्र्वित्यादि। शत्रुसंहाराभ्यां भयं तदादिना, आदिना द्वेषः। न पुरुषार्थत्वमिति। किन्तु क्रत्वर्थत्वम्, क्रतुपौष्कल्याय विधीयते, या प्रयाजादिवत् शरणाप्तिः, सा क्रत्वर्था भगवत्सम्बन्धरूपक्रत्वर्था। मुख्यभक्तिदार्ढ्यार्थत्वेन मुख्यभक्तिरूपक्रत्वर्था वा। ननु क्रतुर्धर्मो यज्ञ इति यावत्, तत् कथं मुख्यभक्तेः क्रतुत्वमिति चेत्, न, 'अप्रतीकालम्बन'सूत्रे तत्क्रतुपदस्य 'प्राचीनभगवद्भजनलक्षणक्रतुश्च नीयत' इति भाष्यात्। नहि भयादिना शरणाप्त्या पुरुषस्य कश्चित् प्रीतिविशेष उत्पद्यते, येन पुरुषार्था भवेत्। मुख्यभक्तिलक्षणक्रतुस्तु न क्रत्वर्थः, स्वस्यैव क्रतुत्वात्। पुरुषप्रीतये विधीयमानाः पुरुषार्थाः यथा मुख्यभक्त्यादयः। प्रकृते। शत्र्वादीति। पुरुषार्थत्वमित्यन्वयः। यथा गोदोहनादेः पुरुषार्थत्वम्, न क्रत्वर्थत्वम्, चमसेनापि क्रतुपौष्कल्यसिद्धेर्गोदोहनाभावेपि। एवं शत्र्वादिभयनिवृत्त्यभावेपि तद्भयेन मुख्यभक्तिलक्षणक्रतुपौष्कल्यसिद्धेः। एतच्च पूर्वमीमांसायां चतुर्थाध्याये स्फुटम्। अर्थस्येति। सर्वात्मभावेन मुक्त्यात्मकाकुतोभयसाधनरूपशरणप्राप्तिकथनरूपसुप्तिङ्चयरूपवाक्यस्योक्तं कथनं स एवार्थस्तस्य। एकतिङ्वाक्यमिति पक्षे वाक्यद्वयोक्तार्थस्य। प्रदानेति। वरस्य यद्दानं तत्तुल्यत्वम्। यथा वरस्य सिद्धस्य दानं कथनं 'मयेमा रंस्यथ क्षपाः' इति कथनम्। तथा तादृशशरणगमने प्रकारत्वेन सर्वात्मभावस्य कथनमिति प्रदानतुल्यत्वम्। एतादृशमिति। 'तानि पर' इति सूत्रभाष्योक्तं भगवन्मतसिद्धं च शरणगमनं सर्वात्मभावस्य स्वकृत्यसाध्यत्वेन तत्पूर्वकरीत्या, न स्वकृतिसाध्यमित्यर्थः। प्रदानवदित्यत्र। डुदाञ् दाने भावे घञ्। प्रथमान्ताद्वतिः। तेन सर्वात्मभावेन मुक्त्यात्मकाकुतोभयसाधनरूपशरणप्राप्तिकथनरूपवाक्यस्योक्तं कथनम्, स एवार्थो वरदानेन 'मयेमा रंस्यथ क्षपा' इति वरस्य कथनेन तुल्यः। अस्येति। भावस्यास्येति योजना। भावस्य सर्वात्मभावस्य सम्बन्धिनोऽस्य प्रत्यक्षस्य कथनस्येत्यर्थः। प्रदानत्वं वरस्य दानत्वं कथनत्वरूपम्। स्पष्टमिति। ईप्सितत्वासम्भवे भक्तेन मह्यं सर्वात्मभावं देहीति स्वानुम-

पूर्वमज्ञानेनेप्सितत्वासम्भवेपि स्वत एव कृपया दानमिति वदित्युक्तम् । अथवा । 'सर्वात्मभावेन मां याही'ति सम्बन्धः ।

यद्वा । प्रदानवदित्यस्य पूर्ववदेव व्याकृतिः । तत्र साधनासाध्यत्वे प्रमाणमाह तदुक्तमिति । 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्य' इति श्रुत्या वरणातिरिक्तसाधनाप्राप्यत्वमुच्यत इति तत्तथैवेत्यर्थः ।

भाष्यप्रकाशः ।

सिध्यति, न तु सर्वात्मभावस्येत्यतो वाक्यस्य योजनान्तरमाहुः अथवेत्यादि । शरणपदं मामित्यस्य विशेषणम् । तथाच सर्वात्मभावस्यैव प्रदानतुल्यत्वं निराबाधमित्यर्थः । यद्यपि 'गतेरर्थवत्त्व'मित्यारभ्य सर्वोपि वरणश्रुतेरेव प्रपञ्चः, तथाप्यत्र पुराणवाक्यमात्रस्य विषयत्वेनोपन्यासेनापाततः पौराणत्वशङ्का अस्य विचारस्य स्यादिति तन्निरासाय सूत्रांशं प्रकारान्तरेण व्याकुर्वन्ति यद्वेत्यादि । तत्तथैवेत्यर्थ इति । परमात्मनो लभ्यत्वं वरणजन्यसर्वात्मभावसाध्यमेवेति सर्वात्मभावो वरणैकलभ्यः, न त्वितरसाधनसाध्य इत्यर्थः । तथाच सर्वात्मभाव-

रश्मिः ।

त्वप्रकाशनात्तस्मै न दद्यादित्यदानम्, तथापि स्वानुमत्यप्रकाशनेऽपि कृपया दानं दानवद्भवत्येव । न च भाष्ये स्वानुमतिप्रकाशनं कुतो नोक्तमिति चेत्, न । भगवतो भक्तमनोरथपूरकत्वात्, भक्तस्य चेप्सीतत्वाभावात् । ईश्वरस्य नियमो नास्ति यद्भक्तेष्टव्यतिरिक्तं न देयमेवेति । एवं स्पष्टमित्यर्थः ।

एवमपीति । एवमिति तृतीयान्तम् । पूर्वोक्तविमर्शे एतद्वेत्यस्य शरणगमनमिति विमर्शेनेत्यर्थः । नन्वेतादृशमिति शरणगमनविशेषणम्, तत्र सर्वात्मभावस्यापि सर्वात्मभाव इत्यादिना सत्त्वेन कथं शरणागतेरेव स्वकृत्यसाध्यत्वमिति चेत्, न । सर्वात्मभावे सतीत्यर्थे सति सप्तम्या सामानाधिकरण्यबोधनात् तत्समानाधिकरणकान्यत्यार्तिस्वरूपातिरिक्तस्फूर्ति–गुणगानादिसाधनकरण–प्रभ्वप्राप्ति–स्वाशक्यत्वज्ञान–प्रभुशरणगमनानि, न तु सर्वात्मभावादिविशेष्यं शरणगमनमिति शरणागतेरेव स्वकृत्यसाध्यत्वात् । शरणपदमित्यादि । 'मुमुक्षुर्वै शरणमनुव्रजे'दिति श्रुतेर्वक्ष्यमाणरीत्याप्युपपत्तेरस्मत्पदार्थस्य विशेष्यत्वोपपत्तेश्च शरणपदं मामित्यस्य विशेषणमित्यर्थः । सर्वात्मभावदानं प्रकृष्टदानं न स्वानुमतिप्रकाशनाभावात्, किन्तु एकदेशविकृतत्वात् प्रदानतुल्यत्वं निराबाधमित्यर्थः । आपातत इति । शाबरभाष्याद्यनवलोकनकालत्वमासाद्य स्यादित्यर्थः । 'आपातस्तदात्व' इति विश्वात् । ल्यब्लोपे पञ्चमी । शाबरभाष्ये षष्ठाध्याये द्वितीयपादे 'तस्मिंस्तु शिष्यमाणानि जननेन प्रवर्तेरन्' इत्यधिकरणे प्राङ्मुखो भुञ्जीत, उदङ्मुखो मूत्रं कुर्यात्' इत्येवमादयः । तत् प्रभुरूपसर्वात्मभावः । तथैव वरणलभ्यत्वप्रकारेणैवेत्यर्थमाहुः परमात्मन इति[1] । परमात्मनः लभ्यत्वमितिप्रयोगोऽवैदिकः । दृशि चेत्यस्याप्राप्तिः । आहुण इत्यस्य च वाक्यत्वेन संविधाया विवक्षाभावात् । श्रुतौ सर्वात्मभावनिवेशो वाराहे भक्तिनिवेशस्य 'आत्मा वा अर' इति श्रुतौ कृतत्वात् क्रियते स वरणजन्यसर्वात्मभावेति । तथा च वाराहीयचातुर्मास्यमाहात्म्ये सप्तविंशाध्याये 'श्रवणानन्तरं कार्यं मननं भक्तिपूर्वकम्' इति । वरणं स्वीयत्वेन स्वीकारः । तस्याधिकारः स दानपात्रं तस्मै सर्वात्मभावादिकथनम्, प्रदानवत् वरस्य दानवत् । ननु वरकथनवदित्यनुक्त्वा यत् प्रदानवदित्युक्तम्, तेन दानस्य स्वस्वत्वेत्यादिपूर्वोक्तलक्षणमपि कचिदभिप्रेतमिति चेत् । न । यत्र महावाक्योपदेशादौ स्वस्वत्वध्वंसपूर्वकपरस्वत्वोत्पादनमनुभूयते, तादृशवरदा-

1. वरदानादौ ।

भाष्यप्रकाशः ।

साधनकस्वप्राप्तिबोधकमेकादशस्कन्धीयं भगवद्वाक्यं वरणलभ्यत्वबोधकश्रुत्यर्थनिर्णायकत्वादुपन्यस्तम्, अतो न विचारस्याश्रौतत्वमित्यर्थः । एवं चात्र सर्वात्मभावोक्तिसन्दर्भे 'रामेण सार्धं'मित्यत्र 'मय्यनुरक्तचित्ता' इति भक्तविशेषणादिभ्योऽनुरागात्मा भगवददर्शने तीव्रवियोगाधिप्रभृतिजनको विगाढभावः परमासक्तिरूपो य उक्तः, स सर्वात्मभावः शरणागतिकारणत्वे-

रश्मिः ।

नाभिप्रायकत्वात् । वरणेत्यादि । वरण(लभ्य)लभ्यत्वं मध्यमपदलोपी समासः । उक्तवाराहवाक्यात् । तद्बोधकश्रुत्यर्थनिर्णायकत्वादित्यर्थः । ननु 'याहि सर्वात्मभावेने'ति वाक्ये सर्वात्मभावपदेनैकादशसर्वस्वकथनान्तर्गतेनैकेन कथं श्रुतीनां बह्वीनां सर्वात्मभावपरत्वम्, सर्वात्मभावपदस्य समासान्तरैरन्यविधसर्वात्मभावपरत्वे प्रकृतसर्वात्मभावानुपोद्बलकत्वादित्याशङ्कायामेकादशद्वादशाध्यायसन्दर्भमाहुः एवं चेत्यादि । तथा च सर्वात्मभावोक्तिसन्दर्भो वर्तत इत्यदोषः । उपपादयांबभूवुः रामेणेति । अत्र समासनिश्चयोपि भविष्यति। परमासक्तिरूप इति । 'आसक्तिः प्रेम्णो भावकन्दलरूपादुत्तरं तादृशे प्रेम्णि तत्करणेन तदुत्कर्षावस्था रागादिरूपे'ति भक्तिवर्धिनीविवृतौ श्रीपुरुषोत्तमकृतायाम् । 'स्वविषये विविधमनोरथजनको भाव आसक्ति'रिति श्रीकल्याणरायाः । बद्धधीर्वा अत्र सन्दर्भ इति पदद्वये द्वादशाध्यायोक्तेः । अत्रातिव्याप्तिवारणाय परमेति । परमत्वं परज्ञानकरणत्वं अनुषङ्गत्वं वा 'अनुषङ्गबद्धधिय' इति द्वादशाध्यायवाक्यात् । एवमपि परज्ञानकरणाक्षरज्ञानासक्तावतिव्याप्तिः । द्वितीयपक्षे अतिव्याप्तिः स्फुटा । 'क्लेशोधिकतरस्तेषामव्यक्तासक्तचेतसा'मिति गीतायाः अक्षरासक्तिरस्ति । तद्वारणायानुरागात्मेति 'मय्यनुरक्तचित्ता' इति वाक्यविशेषणोक्तः । 'सा परानुरक्तिरीश्वर' इति शाण्डिल्यसूत्रात् । परेति न लक्षणघटकमिति श्रीगोकुलनाथजिट्टीकायां भक्तिवर्धिन्या एव । एवमपि संयोगभक्तावतिव्याप्तिस्तन्निराकरणाय भगवदित्यादि । अदर्शने तीव्रवियोगाधयो मनःपीडा विप्रयोगे । वैकुण्ठस्थाक्षरब्रह्मादर्शनेपि पूर्वोक्तं भवतीति । भगवददर्शन इति । विप्रयोग उक्तः । मे तीव्रवियोगाधय इति विशेषणात् । विप्रयोगेतिव्याप्तिस्तद्वारणाय विगाढभाव इति । विशेषेण गाढो दृढः कामादिभिः भावः प्रेमा । विगाढभावेनेत्युक्तेः । पुष्टिमार्गे उक्तः । भाष्यमत्र 'कामादी'ति सूत्रस्य 'माहात्म्यज्ञानपूर्वकस्नेहे सत्येव भर्तृत्वेन ज्ञाने कामोपि सम्भवतीति ज्ञापनाय चकार' इति । एवं पुष्टिमार्गस्य दृढविप्रयोगेऽतिव्याप्तिः । तद्वारणायार्तिं प्रापयेत् । अतिविगाढभाव इत्यर्थः । 'अतिविगाढभाव' इति लिङ्गभूयस्त्वसूत्रभाष्यात् । 'धारयन्त्यतिकृच्छ्रेण प्रायः प्राणान् कथञ्चने'ति भ्रमरगीतवाक्यात् । भ्रमरगीतेपि सर्वात्मभावोक्तेः सत्त्वात् । एवं चातिविगाढभाववत्यः अतिकृच्छ्रवतीत्वादित्यनुमेयमिति । एवमप्यतिव्याप्तिस्तदवस्थैवेति विशेष्यमाहुः स इति । 'न मे वियोगतीव्राधयोऽन्यं ददृशुः सुखाये'ति वाक्येऽन्यविषयकदर्शननिषेधेन 'स यत्र नान्यत्पश्यती'ति श्रुतिप्रसिद्धः स सर्वात्मभाव इत्यर्थः । अत्रातिविगाढभावव्याप्यत्वेन सर्वस्मिन्नात्मभाव आत्मत्वमात्मस्फूर्तिरिति यावत् । अस्य समासस्य विरोधं स्वयं परिहरिष्यन्ति तेनेत्याद्यग्रिमग्रन्थेन । श्रीधरोक्तसमासस्तु क्रियाकलापविशेषणत्वे । सर्व आत्मा सर्वात्मा तस्य भावस्तत्त्वात्वाच्यः । प्रकृतिजन्यबोधे प्रकारात्मा स सर्वात्मभावः प्रेमकारणमेकादशैकोनविंशे 'सर्वभूतेषु मन्मति'रित्युक्त्वा, 'एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम्, मयि सञ्जायते भक्ति'रिति वाक्यात् न प्रदानसाध्यः कारणात्मा, अयं तु फलकारणाभ्यां व्यतिरिक्तः । सर्वेषामात्मभाव इत्यस्य पूर्वोक्तसमासार्थाभेदेन पूर्वसमासपर्यायत्वात् । सर्व आत्मनां भाव इत्यपि वक्ष्यमाणसमासप्रायः । सर्वश्चात्मा च सर्वात्मानौ जडजीवौ तयोर्भाव आत्मरूप इति द्वन्द्वगर्भितषष्ठीतत्पुरुषे 'अभ्यर्हितं पूर्वम्'

भाष्यप्रकाशः ।

नोपदिष्ट इति सिध्यति । तत्र परमासक्तिश्चानन्दजन्यैव । लोके आनन्दजनक एवासक्तिदर्शनात् । एवं च यत् यज्जनकम्, तत्तद्गुणकं तत्तदात्मकं चेति व्याप्तेः पूर्वं सिद्धत्वात् । 'सर्वोपि आत्मनो भाव' इति सुबोधिन्यां व्याख्यानात् । श्रुतौ निरवध्यानन्दरूपत्वेन रसरूपत्वेन पुत्रादिभ्योपि प्रेयस्त्वेन च सिद्धस्यात्मनो यो भावो धर्मः प्रियत्वाख्य आनन्दात्मा, यन्मात्रां सर्वे उपजीवन्ति, स सर्वस्तदंशिभूतो भगवद्धर्म ऐश्वर्यादिवदतिरिक्त एव ज्ञेयः । तस्य दानं चानुभावनम् । युक्तं चैतत् । अन्यथा सर्वेषामेव तथा स्फुरेदिति । अतो विगाढभावेन

रश्मिः ।

इति सूत्रेण आत्मसर्वभाव इत्यापत्तिः । सर्वं च आत्मा च भावश्चेत्येतेषां समाहार इति समाहारद्वन्द्वोपि न । नपुंसकत्वापत्तेः । अव्ययीभावोपि न । अव्ययीभावश्चेत्यव्ययप्रसङ्गात् । द्विगुरपि न । सङ्ख्यापूर्वत्वाभावात् । शरणेति । पूर्वोक्तशरणेत्यर्थः । अधिभौतिकं नवमस्कन्धोक्तं भाष्ये वक्ष्यमाणं च सुबोधिन्युक्तं च सर्वात्मभावं प्रपञ्चयन्ति स्म तत्रेत्यादिना । दानलक्षणं सङ्घटयितुं स्वस्वत्वं ध्वंसप्रतियोगि व्युत्पादयाम्बभूवुः परमेति । अनुषङ्गबद्धधीरूपा परमासक्तिः । चकारात् श्रुतिप्रसिद्धो निरोधलक्षणोक्तः । उभयोपादानम् । निरोधस्कन्धे स श्रुतिप्रसिद्धः 'मनसो वृत्तयो नः स्युः कृष्णपादाम्बुजाश्रयाः' इति श्रीनन्दवाक्ये प्रसिद्धः प्रपञ्चविस्मृतिपूर्वकभगवदासक्तित्वेन रूप्यते व्यवह्रियते इति परमासक्तिरूप उपात्तः । श्रुतिप्रसिद्धश्च अपरिहेय इत्युभयमुपात्तम् । आनन्दजनके पुंसः स्त्रियां स्त्रियाः पुंसि । सर्वात्मभावान्तर्गतसर्वपदार्थनाहुः एवं चेत्यादि । यत्स्त्र्यादिकं यस्य सुखादेर्जनकं तत्स्त्र्यादिकं तत्सुखादयो गुणा यस्य तत्तत्तद्गुणकं च पुनस्तदात्मकं तत्सुखादिकमात्मा स्वरूपं यस्य तादृशम् । पूर्वमिति । समन्वयाधिकरणे । सुबोधिन्यां 'सर्वात्मभावोधिकृतो भवतीनामधोक्षज' इत्यस्य भ्रमरगीते । श्रुताविति । जात्यभिप्रायेणैकवचनम् । 'यतो वाच' इत्यस्यां 'रसो वै स'इत्यस्यां रसरूपत्वेन मैत्रेयीब्राह्मणे पुत्रादिभ्योपि प्रेयस्त्वेन धर्मस्तद्वृत्तिः । आनन्देति । आनन्दधर्मत्वादिति भावः । 'प्रकाशाश्रयवद्वा तेजस्त्वा'दिति व्याससूत्रात् । तदंशीति । मात्रारूपांशांशिभूतो भगवद्धर्म इत्यनेन शुद्धस्नेहस्तत्र स्वस्य भगवतः सत्त्वमिति दानलक्षणघटकं ध्वंसप्रतियोगि व्युत्पादितम् । अतिरिक्त इति । न च गौरवं शङ्क्यम् । 'परास्य शक्तिर्विविधैव श्रूयत' इति श्रुतौ धर्मासङ्कोचात् । सर्वपदार्थश्चोक्तः । व्युत्पादितस्य स्वस्वत्वस्य ध्वंसपूर्वकपरस्वत्वोत्पादनं संघटयितुमाहुः तस्येति । सर्वात्मभावस्यानुभावने स्फूर्त्याख्यानुभवस्य प्रेरणे हि स भक्तनिष्ठ इति स्वस्वत्वध्वंसपूर्वकपरस्य भक्तस्य स्वत्वोत्पादनाद्दानत्वमित्यर्थः । भक्तनिष्ठत्वे सर्वस्मिन् आत्मभावः सर्वात्मभाव इति प्रियत्वाख्यसर्वात्मभावस्य स्फूर्तौ समासः । वरकथनवत्सर्वात्मभावकथनरूपं दानं तु स्फूर्तिरहितस्य सर्वात्मभावस्य । युक्तिमाहु युक्तमिति । एतत् । स्फूर्तिमादाय दानसमर्थनम् । युक्तिमाहुरन्यथा ज्ञानरूपां अन्येति । अन्यथा अनुभावनस्य दानत्वाभावे प्रकारे सति । स्फुरेदिति । यतो न स्फुरति, अतोऽनुभावने दानत्वं प्रकार इत्यर्थः । एवं सर्वात्मभावपदस्य द्वेधा व्युत्पन्नस्य प्रथमव्युत्पन्नो भक्तनिष्ठो दानेन यदा भवति, तदा विगाढभावसंज्ञो भवति, तदाहुः अत इत्यादि । लिङ्गम्-यत्स्वाधिकरणभाष्याद्भगवन्निरोधात्मकसर्वात्मभावविरहेतिविगाढभावेन तत्स्फूर्तेर्निरोधादुत्तरकालिकत्वेन साधनमुख्यत्वात् प्रदर्शितात् । तादृशस्तत्सदृशोऽनुभवभिन्नत्वे सत्यनुभवगतभूयोधर्मवान् । प्रियत्वं भगवद्धर्मस्तदाविर्भावितविगाढभावाविर्भावितोऽनुभवः प्रियत्वानुभवः मध्यमपदलोपी समासः । तेन भग-

भगवदुक्ताकुतोभयपदस्य न मुक्तिरर्थः, किन्तु 'यतो वाच' इत्यादिनानन्दस्य स्वरूपमुक्त्वा 'आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चने'ति श्रुत्युक्तं यत्पूर्वोक्तं रसात्मकपुरुषोत्तमभजनानन्दानुभवोत्तरकालीनमकुतोभयं तदर्थः ॥ ४३ ॥

इति तृतीयध्याये तृतीयपादे षोडशं प्रदानवदित्यधिकरणम् ॥ १६ ॥

भाष्यप्रकाशः ।

सर्वत्र तथानुभवरूपं यत्कार्यं तादृशः प्रियत्वानुभवः सर्वात्मभाव इति फलति । तेन भगवद्धर्मविगाढभावतथास्फूर्तिषु सर्वात्मभावप्रयोग आधिदैविकादिभावो ज्ञेयः । ननु पूर्वोक्तवाक्ये अकुतोभयसाधनत्वेन शरणागतेर्वा सर्वात्मभावपूर्वकस्वप्राप्तेर्वोपदेशः । अकुतोभयं चाक्षरप्राप्तिरूपा मुक्तिरेव । 'अभयं वै जनक प्राप्तोऽसी'त्यादिश्रुत्या निश्चीयते । एवं सति सर्वात्मभावस्यापि मुक्तिसाधनत्वमेव पर्यवस्यति, वामदेवादिसार्वात्म्ये तथा दर्शनात्, पुरुषोत्तमप्राप्तेरपि साधनकोटिनिवेशेन तदपेक्षया मुक्तेरेवोत्कर्षश्च सिध्यतीति पूर्वोक्तं सर्वं द्रविडमण्डकन्यायमनुसरतीत्याशङ्कायामकुतोभयपदार्थमाहुः भगवदुक्तेत्यादि । तथाचास्याः श्रुतेरानन्दमीमांसायां ब्रह्मानन्दस्य गणितानन्दत्वकथनोत्तरमानन्दमयश्लोकेषूक्तत्वादानन्दमीमांसातः पूर्वानुवाके परस्य

रश्मिः ।

वद्धर्मविगाढभावानुभवेषु सर्वात्मभावपदमिति फलितम् । तदेवाहुः तेनेत्यादि । तेन भगवद्धर्मविगाढभावयोः सुबोधिन्युक्ता व्युत्पत्तिः, तथा भगवत्त्वेन स्फूर्तौ तु सर्वस्मिन्नात्मभावः सर्वात्मभाव इति । ननु विग्रहे भावपदं भक्तिवाचकं 'भक्तिः प्रवर्तिते'ति वाक्यात्, अत्र त्वनुभवपदमिति वैरूप्यमिति शङ्क्यम् । भावादीनां सर्वात्मभावे सत्यनुभूतानां भक्तिहंसोक्तदिशा भावत्वात् । ननु विरहे मुख्यलक्षणे तु भावपदं तदनुरोधेन तस्मिन्सति भक्तिहंसदिगवकाशोऽन्यत्र लक्षणगतभावपदाननुगमेऽसम्भव इति चेन्न । भक्तिमार्तण्डे विस्तरात्सर्वात्मभावनिरूपणे । परन्तु विगाढभावरूपसर्वात्मभावो विजातीययोगादिसंवलितो ज्ञेयो भक्तनिष्ठ एव । मार्गत्वात् । 'याहि सर्वात्मभावेने'ति वाक्यात् । एकादशस्कन्धसुबोधिन्यां शुद्धस्य भगवद्धर्मत्वं न मार्गत्वमित्युक्तेः । आधीति । स्तोभुनाश्नुरित्यस्याप्राप्तिः । स्मृतिष्वेतादृशप्रयोगबाहुल्यात् । तदनुकरणेन । एवं सुबोधिनीसमासो विगाढभावस्फूर्तौ व्याकृतो भ्रमरगीते विरहनिरूपणात् । यत्त्वग्रे भाष्ये तत्प्रकाशे च सर्वात्मभावस्य कार्यस्वरूपलक्षणे तत्रापीदं सुबोधिनीव्याख्यानं प्रकारान्तरेण योज्यम् । आत्मन इति श्लिष्टप्रयोगात् । 'स्वर्गकामो यजेते'त्यत्र स्वर्ग इति श्लिष्टप्रयोगवत् । यथा तत्र स्वर्गात्मसुखरूपमर्थद्वयमेवमत्रापि विगाढभावस्फूर्तिलिङ्गभूयस्त्वसूत्रोक्तयदर्शनादिकयदन्यादर्शनादिकरूपमर्थद्वयम् । तद्भक्तिमार्तण्डे स्फुटम् । अग्रे भाष्यप्रकाशे च स्फुटम् । सुबोधिनीस्थात्मन इत्यस्य मनस इत्यर्थात् । संयोगे । संयोगविप्रयोगभेदेन सुबोधिन्या द्वेधा व्याख्यानम् । नन्वनुभवो ज्ञानमिति सर्वात्मभावो ज्ञानं किं तस्मादिति चेन्न । भक्त्यन्तःपातित्वात् । यथापेक्षितसमर्पणं दर्शनं दास्यम् । एतच्च भक्तिहंसे स्फुटम् । विहितकर्मज्ञानभक्त्यसाध्योपि सर्वात्मभावो भक्तिरेव । भक्तिमुपक्रम्य भ्रमरगीते 'सर्वात्मभावोऽधिकृत' इति वाक्यात् । 'सर्वात्मभावरूपाया मुख्यभक्ते'रिति भाष्यप्रकाशाच्च । अन्यत् भक्तिमार्तण्डे स्पष्टम् । वामदेवेति । पुरुषविधब्राह्मणेऽस्ति । सर्वात्मभावनिरूपणे ज्ञानप्रकारविशेषनिरूपणाशङ्कायाः पूर्वविकल्पसूत्रे भाष्ये वक्ष्यमाणत्वा'दहं ब्रह्मास्मी'ति प्रकारस्य वामदेवसार्वात्म्ये दर्शनात्तद्वदत्रापि ज्ञानप्रकारविशेषनिरूपणे भवतु हीत्यर्थः । द्रविडेति । व्यर्थक्रमबोधकन्यायमित्यर्थः । द्रविडदेशे गोधूमाभावान्मण्डका न भवन्ति इति तद्देशीयास्तं भोक्तुं कर्तुं च न विदन्ति । मध्यदेशादावागतो द्रविडः कथं मण्डका भोज्या इति पृष्टे केनचिदुपहसितः पदयोर्मध्यात्पृष्ठाच्च हस्तपरिवर्तनं कृत्वा पश्चाद्र्व मुखं विधाय भोज्या इति । तृतीयसुबोधिन्यां षष्ठाध्यायेऽस्ति

भाष्यप्रकाशः ।

रसरूपतायाः प्रतिपादितत्वादस्याः श्रुतेरुक्तविध एवार्थ इति निश्चीयते । ततश्च तत्र योऽर्थो 'न बिभेति कुतश्चने'ति वाक्येनोक्तः, सोऽत्राकुतोभयपदेनोच्यत इति नात्र त्वदुक्तयुक्ति-गन्धोपि । किञ्च । भगवद्वाक्येपि 'अथैतत्परमं गुह्यं शृण्वतो यदुनन्दन । सुगोप्यमपि वक्ष्यामि त्वं मे भृत्यः सुहृत् सखे'ति तादृशेऽधिकारिणि परमगोप्यकथनं स्वत एव प्रतिज्ञाय, 'केवलेन हि भावेन गोप्यो गावः खगा मृगाः । येऽन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसे'ति श्लोके भावेन बहूनां स्वप्राप्तिमुक्त्वा, ततः को भाव इत्याकाङ्क्षायाम्, 'रामेण सार्धं मथुरां प्रणीत' इत्यादिश्लोकचतुष्टयेन भावस्य भक्तिरूपं स्वरूपं ज्ञापयितुं विगाढभावात्मिकां तत्काष्ठाम्, तया काष्ठया परब्रह्मरूपस्वप्राप्तिं स्वरूपज्ञानाद्यभाववतां बहूनामुक्त्वा, तदनन्तरं 'तस्मा'दित्यादिवाक्यद्वयेन स्वप्राप्त्यकुतोभयाप्ती अवदत् । तेनोक्तश्रुत्युक्तरसात्मकब्रह्मानुभवोत्तर-कालीनतैवाकुतोभयस्य स्फुटतीति न पूर्वोक्तार्थे द्रविडमण्डकमित्यर्थः । अत्र सर्वात्मभावस्य वरणातिरिक्तसाधनासाध्यत्वनिरूपणेन इतरत्र वैराग्यबोधकस्य त्यक्तपिप्पलमित्यस्य विशेषण-स्यार्थो बोधितो ज्ञेयः ।

अन्ये तु । वाजसनेयकादौ व्रतमीमांसादावध्यात्माधिदैवतयोः श्राविता प्राणवायू पृथगुपगन्तव्यावपृथग्वेति सन्देहे, तत्त्वाभेदादपृथगिति प्राप्तौ, आध्यानार्थादुपदेशभेदात् पृथगिति सिद्धान्तयन्ति । स च निरूपणप्रकारभेदेन 'नानाशब्दा'दिति सूत्रेण च सिध्यतीति नेदं सूत्रमाकाङ्क्षतीति दिक् ॥ ४३ ॥ इति षोडशं प्रदानवदित्यधिकरणम् ॥ १६ ॥

रश्मिः ।

तल्लेखे विवृतोऽयं न्यायः । रसरूपताया इति । 'रसो वै स' इति श्रुत्येत्यर्थः । 'रस आस्वादने' इत्यस्य रूपम् । व्याख्यानान्न तु 'रस शब्द' इत्यस्य । अस्तु । ईश्वरत्वात् । तादृशे भृत्यादिसदृशे । स्वत एवेति । उद्धवप्रश्नं विना प्रतिज्ञा कृपालुत्वं द्योतयति । तत्काष्ठामिति । भावप्रकर्षम् । 'काष्ठा दारुहरिद्रायां कालमानप्रकर्षयो'रिति विश्वात् । परब्रह्मेति । 'मत्स्वरूपाविदोबलाः । ब्रह्म मां परमं प्रापुः सङ्गाच्छतसहस्रश' इति वाक्याद्बहूनां शतसहस्राणामित्यर्थः । नेति । मुक्तिस्कन्ध-सर्वस्वत्वाच्च । वरणेत्यादि । वरणजसर्वात्मभावातिरिक्तानि साधनानि तैरसाध्यत्वनिरूपणेनेत्यर्थः । मध्यमपदलोपी समासः । इतरत्रेति । साधनेषु षोडशाधिकरण्या विशेषणमाहुः त्यक्तेति । त्यक्तं पिप्पलं कर्मफलं येन वैराग्यमेतत् । कर्मफलत्वं पिप्पलस्य सुबोधिन्यामुक्तम् । अन्ये त्विति । शङ्कराचार्यादयः । तत्त्वेति । 'यः प्राणः स वायु'रितिश्रुतेः । आध्यानेति । आध्यानार्थो ह्ययमाध्यात्मिकाधिदैवविभागोपदेश इति शङ्करभाष्यात् । ननु निरूपणं प्रकारभेदेपि 'यः प्राण' इत्युक्तश्रुतेः प्राणवाय्वोर्निरूपणप्रकाराभेदान्न सिध्यतीति पाक्षिकदोषशङ्कायामाहुः नानेति । इदं सूत्रं वक्ष्यमाणम् । न च नानाशब्दादिभेदादिति सूत्रे यः प्राणः स वायुरितिवदुपास्यभेदो नास्तीति शङ्क्यम् । तत्रोपास्याभेदेपीति भाष्यात् । सूत्रार्थस्तु प्राणवायू आध्यानार्थं पृथगुपगन्तव्यौ एकादशकपालप्रदानवत् । यथा 'इन्द्राय राज्ञे पुरोडाशमेकादशकपालमिन्द्रायाधिराजायेन्द्राय स्वराज्ञ' इत्यत्र पुरोडाशिन्यामिष्टौ राजादिगुणभेदात् यथान्यासमेव देवतापृथक्त्वात् प्रदानपृथक्त्वं भवति । एवं तत्त्वाभेदेपि आध्येयांशपृथक्त्वात् आध्यानपृथक्त्वम् । तदुक्तं संकर्षे 'नाना वा देवता पृथग्ज्ञाना'-दिति । संकर्षो देवताकाण्डं तत्रेत्यर्थः । वाकारोऽवधारणे ॥ ४३ ॥ इति षोडशं प्रदानवदित्यधि-करणम् ॥ १६ ॥

## लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४४ ॥ ( ३-३-१७. )

ननु प्रतिबन्धककालादृष्टादिसद्भावेपि वरणकार्यं स्यात्, उत तन्निवृत्ताविति संशये, प्रतिबन्धकाभावस्य सर्वत्र हेतुत्वात् तन्निवृत्तावेव तथेति पूर्वपक्षे, सिद्धान्तमाह लिङ्गेत्यादिना ।

सामोपनिषत्सु नवमे प्रपाठके सनत्कुमारनारदसंवादे प्रथमत एव मुख्या ब्रह्म-

---

भाष्यप्रकाशः ।

लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४४ ॥ पूर्वाधिकरणे सर्वात्मभावरूपाया मुख्यभक्तेर्वरणैकलभ्यत्वं स्थापितम्, वरणश्रुतौ तु परमात्मनो वरणैकलभ्यत्वमुच्यते, न तु सर्वात्मभावस्येति कथमस्य तत्प्रपञ्चत्वमिति शङ्कायां तस्य वरणैकलभ्यत्वं पुनर्दृढीकर्तुं तत्स्वरूपं च श्रुत्या विवेक्तुमधिकरणान्तरं प्रणयतीत्याशयेन तदवतारयन्ति नन्वित्यादि । प्रतिबन्धका ये कालादृष्टस्वभावाः तेषां विद्यमानत्वे वरणकार्यभूतः सर्वात्मभावो जीवस्य भवेत्, नवेति संशये, वरदानस्यापि तपआदिभिः साधनैस्तोपे सत्येव प्रसिद्धेः पूर्वाधिकरणोक्तरीत्या सर्वात्मभावस्य भगवता वरवद्दानेपि तत्कारणस्यावश्यवक्तव्यतया प्रतिबन्धकाभावस्य सर्वत्र कारणत्वदर्शनात् प्रतिबन्धकसत्तायां च कार्यादर्शनात्तन्निवृत्तिरवश्यं मृग्येति प्रतिबन्धकानां निवृत्तावेव वरणात् सर्वात्मभावो भवतीति तस्य वरणैकलभ्यत्वं न साधीय इति पूर्वपक्षे, सिद्धान्तमाहेत्यर्थः । सूत्रं व्याकर्तुं लिङ्गभूयस्त्वबोधिकां श्रुतिं प्रदर्शयन्तस्तदर्थं प्रकटयन्ति सामोपनिषत्स्वित्यादि । प्रसिद्धस्थलनिर्देशो विप्रतिपत्तिनिरासाय । स च संवादो 'अधीहि भगव इति होपससाद सनत्कुमारं नारद' इत्यारभ्यान्तं ज्ञेयः । तत्र 'अधीही'त्यन्तर्भावितण्यर्थः । अध्यापय । 'बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णे'रिति ण्यन्तादिङः परस्मैपदम् । णिजर्थेऽप्यत्र पदव्यत्ययः । अत्र सर्वात्मभावस्य वरणैकलभ्यत्वमुपपादयन्तः 'तं होवाचे'ति सनत्कुमारवाक्यस्य तात्पर्यमाहुः प्रथमत इत्यादि ।

रश्मिः ।

लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४४ ॥ कारणत्वेन कारणानां सर्वात्मभावे त्यक्थासिद्धत्वमुक्त्वा प्रतिबन्धकाभावत्वेन कारणानामन्यथासिद्धत्वमाहुः तथापि कारणत्वात् पूर्वाधिकरणेनैव प्रतिबन्धकाभावस्यापि विचारितप्रायत्वात् सर्वात्मभावस्वरूपं संयोगसामयिकमाहुः पूर्वेति । अस्येति । सर्वात्मभावप्रतिपादकस्यास्य लिङ्गभूयस्त्वाधिकरणस्य तस्या वरणश्रुतेः सर्वात्मभावाप्रतिपादिकायाः प्रपञ्चत्वं कथमिति प्रश्नः । तस्य सर्वात्मभावस्य । प्रसिद्धेरिति । कठवल्ल्यां 'तिस्रो रात्रीर्यदवात्सीत् गृहे मे अनश्नन् ब्रह्मन्नतिथिर्नमस्य' इति अनशनरूपतपसा तुष्टाग्नेः वरप्रसिद्धेः । वृकासुरप्रसङ्गे श्रीभागवते ब्रह्माण्डपुराणे उत्तरस्थाने खिले च स्तुतितुष्टं भगवन्तं प्रति । 'यदि देयो वरो हि न' इति वाक्यात् । आदिपदेन तपआदिभिरित्यत्र होमस्तुत्योर्ग्रहणात् । प्रसिद्धेति । प्रथमतृतीयपादस्थभूमाधिकरणप्रसिद्धस्थलनिर्देशो विप्रतिपत्तिः । प्रतिपत्तिः प्रबोधो भूमत्वेन सर्वात्मभावप्रबोधः तस्य विरुद्धोऽभावस्तन्निरासाय । अस्य विसदृशस्य प्रपाठकस्य उपनिबन्धो 'न सामान्यादप्युपलब्धेर्मृत्युवत् नहि लोकापत्ते'रिति वक्ष्यमाणसूत्रे अस्य प्रपाठकस्य लोकमृत्युवददर्शनात् । भगवद्रूपत्वात् सर्वात्मभावस्येति वक्ष्यमाणभाष्यात् । आन्तमिति । अन्तं चरमवर्णध्वंसं आ मर्यादीकृत्य आन्तम् । णिजर्थ इति । इङ् अध्ययने अदादिरात्मनेपदी अनिट् । उक्तसूत्रात् आत्मनेपदव्यत्ययः परस्मै-

विद्योपदेशार्हो न भवतीति ज्ञात्वा, सनत्कुमारो नारदाधिकारं च ज्ञातुं 'यद्वेत्थ तेन मोपसीदे' त्युक्तो नारदः स्वयं विदितमृग्वेदादिसर्पदेवजनविद्यान्तमुक्त्वा, 'सोऽहं भगवो मन्त्रविदेवास्मी'ति स्वाधिकारमुक्त्वा, आह 'नात्मविच्छ्रुतᳪ ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति, सोऽहं भगवः शोचामि तं

भाष्यप्रकाशः

'उपसीदे'ति श्रौतस्य पदस्य 'तं होवाचे'ति श्रौतेनैव पदेनान्वयः । 'यद्वेत्थ तेन मोपसीद ततस्त ऊर्ध्वं वक्ष्यामीति होवाच ।' यत्त्वं जानासि तत्कथनेन मदुपसन्नो भव, स्वाधीतं वद, ततोऽतिरिक्तं तुभ्यं कथयिष्यामीत्युक्तवान् । तदा इत्युक्तः सनत्कुमारेण नारदः स्वविदितं ऋग्वेदादिसर्पदेवजनविद्यान्तं आह । अत्र ऋग्वेदादिपुराणान्तं प्रसिद्धम्, अग्रे तु वेदानां वेदो व्याकरणम्, पित्र्यं श्राद्धकल्पः, राशिर्गणितम्, दैवं उत्पातज्ञानम्, निधिर्महाकालादिनिधिशास्त्रम्, वाकोवाक्यं तर्कशास्त्रम्, एकायनं नीतिशास्त्रम्, देवविद्या निरुक्तम्, ब्रह्मविद्या शिक्षाकल्पछन्दश्चितयः, भूतविद्या भूततन्त्रम्, क्षत्रविद्या धनुर्वेदः, नक्षत्रविद्या ज्योतिषम्, सर्पविद्या गारुडम्, देवजनविद्या गन्धर्वोक्तयुक्तिनृत्यगीतवाद्यशिल्पादिविज्ञानानि ज्ञातव्यानि । 'एतद्भगवोऽध्येमि' । एतत्पूर्वोक्तं हे भगवन् अध्येमि, स्मरामीत्युक्त्वा, 'सोऽहं भगवो मन्त्रविदेवास्मि', शब्दार्थमात्रविच्त्वादापाततः परोक्षज्ञानवानेवास्मीति स्वाधिकारमुक्त्वा, 'अनात्मवि'दित्यादि 'तारयत्वि'त्यन्तमाह, तथाचाप्तवाक्यप्रामाण्याच्छोकेन लिङ्गेन स्वस्यानात्मवित्त्वमनुमायात्मज्ञापनेन शोकतारणायोपसन्नोऽस्मीत्याशयवता नारदेनोक्तः सनत्कुमारस्तदधिकारमवगत्य, मुख्यब्रह्मविद्योपदेशयोग्यत्वसम्पादनाय 'यद्वै किञ्चाध्यगीष्ठा नामैवैत'दित्यादिना नारदोक्तानां सर्वेषां नामत्वबोधनपूर्वकं नाम्नो ब्रह्मत्वेनोपासनमुपदिश्य, 'यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवती'ति तत्फलं शोकतरणायोक्तवान्, तदा नारदः केवलं नामोपासने उक्तफलाभावम्, तस्य ब्रह्मत्वेनोपासने तूक्तं फलम्, तदपि नामगतिपरिच्छिन्नमिति विमृश्य, तेन शोकातरणं च निश्चित्य, ततोऽधिकं जिज्ञासमानः 'अस्ति भगवो नाम्नो भूय' इति पप्रच्छ, तत्र 'नाम्नो वाव भूयोऽस्ती'-त्युत्तरिते, 'तन्मे भगवान् ब्रवीत्वि'त्येवं नारदेन पूर्वस्मात् पूर्वस्मा'द्भूयो भूयो वदे'ति पृष्टः सनत्कुमारो 'वाग्वा नाम्नो भूयसी'त्यादिना नामरूपविज्ञापकत्वं वाङ्माहात्म्यमुक्त्वा, वाचो

रश्मिः ।

पदम् । उपेति । अन्वयमाहुः यद्वेत्थेति । 'ततस्ते ऊर्ध्वं वक्ष्यामी'ति वाक्यान्तरितोऽन्वयः । ब्रह्मविद्येत्यादि । चितिर्ज्ञानं शिक्षाकल्पच्छन्दसां ज्ञानानि । 'छन्दोविचित्ति वेदिमि'रित्यत्र वृत्तरत्नाकरे प्रस्तावे व्याख्यातम् । अध्येमि परस्मैपदकथनादिक्स्मरणे ईत् इत्यस्य अदादेः परस्मैपदिनो रूपमित्याहुः स्मरामीति । तथाचेति । आप्तवाक्यं 'तरति शोकमात्मवि'दितिश्रुतिः । अनुमायेति । अहं नात्मवित् शोकात्, शूद्रवत् इत्येवं प्रयोगः । अहमनात्मविदित्यनुमाय स्वार्थानुमानेन यत्र यत्र शोकः, तत्र तत्र अनात्मवित्त्वमिति व्याप्तिज्ञानात्मकेनानुमितिं विधाय । मुख्येत्यादि । मुख्यब्रह्मविद्योपदेशार्थम् । श्लिष्टप्रयोगेणाधिकजिज्ञासासंपादनाय 'यत् वै किञ्च अध्यगीष्ठा नाम एव एतत्' इति पदच्छेदः । उक्तफलं यथाकामचारस्तदभावम् । विमृश्येति । श्रुतिप्रामाण्याद्विमृश्य । निश्चित्येति । 'यावन्नाम्नो गतं तत्रास्य यथा कामचारो भवती'ति श्रुत्यामेवकाराभावेप्यश्रुतकल्पनस्य दोषत्वान्निश्चित्येत्यर्थः । नामेत्यादि । नामरूपयोः शब्दज्ञानविषयकारकत्वम् । 'वाग्वा ऋग्वेदं ज्ञाप-

मां भगवाञ्छोकस्य पारं तारयत्वि'ति नारदेनोक्तः सनत्कुमारः पूर्वस्मात्पूर्वस्मात् भूयो वदेति पृष्टः, भूयःपदमधिकार्थकम्, नामवाङ्मनःसङ्कल्पचित्तध्यानविज्ञान-बलान्नापस्तेजआकाशस्मराशाप्राणान् ब्रह्मत्वेनोपासनाविषयत्वेनोक्त्वा, प्राणो-

भाष्यप्रकाशः ।

ब्रह्मत्वेनोपासनं तत्फलं च पूर्ववदुवाच, तत्र भूयःपदं न बाहुल्यार्थकम्, नापि पुनरर्थकम्, किन्त्वाधिक्यार्थकम्, आधिक्यमुत्कर्षस्तदर्थकमिति तत्तन्माहात्म्यकथनादवसीयते, एवं नामवाङ्म-नःसङ्कल्पचित्तध्यानविज्ञानबलान्नापस्तेजआकाशस्मराशा उक्ताः । तत्र नामवाचौ प्रसिद्धौ, मनो मनस्तद्व्यापारविशिष्टमन्तःकरणम्, मनस्तद्व्यापारश्च विवक्षाद्यात्मकः । सङ्कल्पोपि कर्तव्या-कर्तव्ययोर्विषयसमर्थनरूपस्तादृशान्तःकरणस्यैव वृत्तिविशेषः । चित्तं चेतयितृत्वं प्राप्तकालानुस-न्धानवत्त्वम्, अतीतानागतविषयप्रयोजननिरूपणसामर्थ्यं च । ध्यानं शास्त्रोक्तदेवतालम्बनो विजातीयानन्तरितः प्रत्ययसन्तान एकाग्रतापरपर्यायः । चिरकालस्थायिज्ञानवादे तु तादृश एक एव प्रत्ययो बोध्यः । विज्ञानं शास्त्रार्थविषयकं विशिष्टज्ञानम् । बलं अन्नभक्षणजनितं मनसो विज्ञेयविभावनसामर्थ्यम् । अन्नमापस्तेज आकाशश्च प्रसिद्धाः । स्मरः स्मरणं अप्रयत्नश्चित्तव्यापारः । आशा अप्राप्तवस्त्वाकाङ्क्षा तृष्णाकामाद्यपरपर्याया । एवमेतेषां स्वरूपमुपनिषद्व्याख्यानादवग-न्तव्यम् । एतेषामत्र ब्रह्मत्वेनोपासनमुक्तम्, प्राणस्य त्वाशातो भूयस्त्वं माहात्म्यं चोक्त्वा, 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी'त्यनेन तद्दर्शनादिमतोऽतिवादित्वं यद्यप्युक्तम्, तथापि तत्र विद्याया अपर्यवसानादग्रे जन्यप्रायपाठे 'आत्मतः प्राण' इति श्रावणाच्च सोत्र परत्वेन नाभिप्रेतः, किन्त्वासन्नत्वेन । स चोक्तमाहात्म्यवत्त्वादपहतपाप्मत्वाच्चान्येभ्य उक्तेभ्य उत्कृष्ट इति तेभ्योऽस्योत्कृष्टवादित्वमेवातिवादित्वम्, न तु परमकाष्ठापन्नोत्कृष्टवादित्वरूपं तदिति सोऽपि ब्रह्मत्वेनोपास्यतयैवाभिप्रेतः । तदेतदभिसन्धाय भाष्ये प्राणोपि तथोपास्य-मध्ये गणितः प्राणान् ब्रह्मत्वेनोपासनाविषयत्वेनोक्त्वेति । श्रुतौ तथानुक्तिस्तु नारदस्य मुख्यविद्याग्रहणयोग्यता जाता न वेति परीक्षार्थम् । अत एवाग्रे 'तं चेत् ब्रूयुरतिवाद्यसीति, अतिवाद्यस्मीति ब्रूयान्नापह्नुवीते'त्युक्त्वा, 'एष तु वा अतिवदति, यः सत्येनातिवदती'ति

रश्मिः ।

यती'ति श्रुतेः । 'दिवं च पृथिवीं च वायुं चाकाशं चे'ति श्रुत्या रूपविज्ञापकत्वम् । वाङ्माहात्म्यं वाग्देवत्वम् । ब्रह्मत्वेनेति । 'तत्रास्य कामचारो भवति, यो वाचं ब्रह्मेत्युपास्ते' इति श्रुतेः । अत्र भूयःपदं 'भूयः पुनः पुनः स्यातं प्रभूतार्थे त्वनव्ययम् । निश्चये च निषेधे च साकल्यातीतयोरपी'ति विश्वादनेकार्थकमिति तदर्थं निश्चिक्युः तत्रेति । अथेति । तथा च श्रुत्या पूर्वोक्तार्थबाधात् नाम-नारायणादितो लक्षणया वोत्कर्षार्थकमिति भावः । विषयेति । विषयो यस्य यो ज्ञातः स तस्य प्रयोजनं फलम् । प्रत्ययसन्ताने स्वमतमाहुः चिरेति । बलमिति । विज्ञानानन्तरं स्नेहरूपबलस्यापि वक्तुं शक्यत्वेपि ह्यनुग्रहादीनां विशेषकारणानामनुक्तेः प्रसिद्धमेव बलमुरीकृतम् । तथा च भाष्यम् । ज्ञात एव स्नेह इति । बलं भक्तिरिति च । यद्वा । अन्नापतेजआकाशस्मरणाशाकाङ्क्षाणामग्र आधिक्येन वक्ष्यमाणत्वात् तेषां चानन्दमयाधिकरणोक्तरीत्या वक्तव्यत्वात् बलं भक्तिर्वा । जगति भक्तिः स्वांशब-लत्वेन भवति । च प्रसिद्धा इति । चकारेणानन्दमयाधिकरणे प्रसिद्धाः । न चाप्रयोजकत्वम् । शास्त्रार्थविषयकविशिष्टज्ञानाद्भूयस्त्वात् । माहात्म्यमिति । देवत्वम् । अतिवादित्वमिति । अग्रे स्पष्टम् । अपरीति । अग्रे ततोपि भूयः प्रश्नोत्तराभ्याम् । तथेति । ब्रह्मत्वेन । वदानीति लब्धे लोह

**पासकस्यातिवादित्वं सत्यवादित्वेनोक्त्वा, विजिज्ञासितव्यत्वेन सत्यविज्ञानमतिश्रद्धानिष्ठाकृतिसुखानि पूर्वपूर्वकारणत्वेनोत्तरोत्तराण्युक्त्वा, सुखस्वरूपजिज्ञासायामाह 'यो वै भूमा तत्सुख'मिति । भूम्नः स्वरूपजिज्ञासायामाह 'यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमे'ति ।**

भाष्यप्रकाशः ।

प्राणोपासकस्यातिवादित्वं सत्यवादित्वेनोक्तम् । यद्येवं श्लिष्टप्रयोगेऽस्याधिकजिज्ञासोत्पत्स्यते, तदा योग्यः, नो चेदयोग्य इत्येतदर्थमेवमुक्त्वा, ततो नारदेन प्राणस्य तत्त्वं न प्राणः, किन्त्वन्यदिति बुद्ध्वा, 'सोऽहं भगवः सत्येनातिवदानी'ति स्वाभिप्राय उक्तः, तत्र 'अतिवदानी'त्यन्तर्भावितसनर्थः । सत्येनातिविवक्षामीत्याशयात् । तदा सनत्कुमारः 'सत्यं त्वेव विजिज्ञासितव्य'मित्यादिना तस्य सत्यादिजिज्ञासामुत्पाद्य, विजिज्ञासितव्यत्वेन सत्यविज्ञानमतिनिष्ठाकृतिसुखानि पूर्वपूर्वकारणत्वेनोत्तरोत्तराण्युक्तवान् । तत्र सत्यं अर्थमनतिक्रम्य स्थितं वस्तुस्वरूपम्, विज्ञानं तद्विषयकं विशिष्टज्ञानम्, मतिस्तर्केण तदर्थस्वरूपविचारः, श्रद्धा आस्तिक्यबुद्धिः, निष्ठा तद्विषयक आदरस्तत्परत्वरूपः, कृतिस्तद्विषयसाधनानुकूल इन्द्रियव्यापारः, सुखं अनुकूलबुद्धिवेद्य आन्तरो धर्म इत्येवं लौकिकसमानाकारं तत्स्वरूपं ज्ञातव्यमिति सत्यादिषु कृत्यन्तेषु विशेषाकथनादायातीति तथोक्त्वा, ततः सुखे विशेषं वक्तुं सुखस्वरूपजिज्ञासायामाह । 'यो वै भूमा तत् सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य' इति भूम्नो विचार्यत्वमुक्तम् । तेन प्राणस्य सत्यवदनादीनां च स एव कारणं तत्त्वं च, अतस्तमेव कृत्यादिप्रणाड्या ज्ञात्वा, सत्यवदनेऽतिवादित्वम्, नान्यथेत्यवगत्य, किंस्वरूपो विचार्य इत्याकाङ्क्षायां पप्रच्छ 'भूमानं भगवो विजिज्ञास' इति । एवं नारदस्य भूमस्वरूपजिज्ञासायामाह 'यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमे'ति । इह यच्छब्दगतसप्तम्या अधिकरणार्थत्वे ब्रह्मणो व्यापकत्वेन सर्वेषां तदुपश्लिष्टतया तद्व्याप्यतया च सर्वेषां सर्वदान्यज्ञानाभावापत्तेः सप्तम्याः सत्यर्थत्वेपि ब्रह्मणः सर्वत्र सत्त्वेन सर्वस्य तथात्वापत्तेश्चात्र कश्चिद्विशेषो वाच्यः । तथाच यस्मिन् दृष्टे श्रुते विज्ञाते सति द्रष्टुः

रश्मिः ।

छान्दसः । विवक्षामीति व्याख्यानात् । उपनिषद्व्याख्यानाच्च । कृत्यादीति । कृतेरादिभूतया प्रणाड्या । ज्ञात्वेति । 'भूमा त्वेव विजिज्ञासितव्य' इत्यत्रैवकारः सर्वत्र, नत्वेवंकारः । अतः कृत्यादिप्रणाड्या तदुक्तिवैयर्थ्यपरिजिहीर्षया ज्ञात्वा विजिज्ञास इत्यत्रेच्छाविषयज्ञानं यत् तद्विषयीकरणं भूम्नः प्रतीयत इति । आहेति । भूमलक्षणमाह । औपश्लेषिकवैषयिकाभिव्यापकाधारेषु वैषयिकाधाराङ्गीकारो न सम्भवति, ह्यन्यपदार्थस्य विषयत्वादिति शङ्कायां यत्रेति सप्तम्याः सतिसप्तमीत्वं समर्थयाम्बभूवुः इहेत्यादिना । अन्यज्ञानाभावापत्तेरिति । न च ब्रह्मणो ह्युपश्लिष्टत्वेपि व्याप्यत्वेपि 'पश्यन् चक्षुर्भवती'त्यादिरीत्या चिक्रीडिषया वा पुराणमते मायया वा न सर्वेषां सर्वदान्यज्ञानाभावापत्तिरिति वाच्यम् । भूमाधिकरणे भूम्नो ब्रह्मत्वेन सिद्धस्यात्र ज्ञानप्रकारविशेषनिरूपणे ज्ञानेनाज्ञाननिवृत्त्या तथात्वापत्तिः जीवस्य ब्रह्माभेदात् । भेदे तु अचलत्वसूत्रोक्ताभासे भक्तमनोरथपूरकत्वात् भगवतश्चक्षुर्भवनादीनां नित्यलीलास्थाना'मात्मत आविर्भावतिरोभावा'विति श्रुतेर्भक्ताधीनात्मतो भवनाद्ब्रूसरूपस्यात्मनो लीलास्थसकलपदार्थरूपत्वेन लीलास्थानां सर्वेषां सर्वदान्यज्ञानाभावापत्तिः, न तु प्रपञ्चस्थानामपीत्यदोषात् । तथात्वे । पूर्वोक्तदिशा सर्वस्य निरविषयस्य नित्यलीलास्थस्य च तथात्वं सर्वदान्यज्ञानाभावापत्तिमत्त्वं तस्यापत्तेः । कश्चिद्विशेष इति । आशोक्तरणोपपादनं वाच्यः । तथा चेति । पूर्वोक्तप्रकारे सति । सतीति । न च 'फले सप्तमी यत्रे'त्यत्र यत्फलकोन्यदर्शनाभाव इति कर्मणोऽ-

भाष्यप्रकाशः ।

श्रोतुर्विज्ञातुरन्यविषयकदर्शनश्रवणविज्ञानाभावो भवति, स भूमेति लक्षणकथनेन नित्यनिरवधिसुखरूपं तत्स्वरूपं स्वेतरस्मिन् सुखत्वसुखसाधनत्वज्ञानाभावजननं तत्कार्यं चेति सिध्यति । तेनैवं स्वरूपकार्यलक्षणयुक्तं विचार्यमिति फलति । तत्र भूम्नि दृष्टे श्रुते विज्ञातेऽन्यदर्शनादिकं कुतो न भवति, किं विशेषदर्शने रजतादिकमिवान्यन्नश्यति, उत कारणे कार्यमिव भूम्न्यन्यल्लीयते, अथवा सूर्यतेजोनक्षत्रादिकमिव भूमा अन्यत्तिरस्करोतीति शङ्कायामाह 'अथ यत्रान्यत् पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम्, यो वै भूमा तदमृतम्, अथ यदल्पम् तन्मर्त्य'मित्यनेन । अनित्यत्वे सति सावधिसुखरूपत्वे सत्यन्यत्र सुखत्वसुखसाधनत्वज्ञानजनकत्वमल्पसुखत्वमिति सिध्यति । तथाच न पूर्वविकल्पितं किञ्चिद्भवति, अपि तु भूम्नि दृष्टे श्रुते विज्ञाते तदानन्दैकतानतया अन्यदल्पं न सुखत्वेन सुखसाधनत्वेन च पश्यति, न शृणोति न विजानातीत्यर्थः सिध्यति । तत्र ननु यदि भूम्नो दर्शनश्रवणविज्ञानेष्वन्यतमेनैवं भाव आनन्दैकतानत्वरूपः, तर्हि शृण्वतो मम कुतो नास्ति । अथ समुदितैस्तैस्तदा यत्र भूमा स्वरूपं स्वकार्यं च प्रकाशयँस्तिष्ठति, तस्यैव भावो नान्यस्येत्याशयः, तदा स आधारो वक्तव्य इत्याशयेन पृच्छति 'स भगवः कस्मिन् प्रतिष्ठित' इति, उक्तरीत्या कमभिव्याप्य स्थित इत्यर्थः । तत्रोत्तरमाह 'स्वे महिम्नी'ति । स्वविभूतौ । अत्रापि को महिमेत्याशङ्का भविष्यतीति तद्वारणाय स्वयमेवाह

रश्मिः ।

न्यस्य फलेन यच्छब्दार्थेन समवायादिति वाच्यम् । अन्यदर्शनाभावस्य सुषुप्तावपि सत्त्वेनात्मा फलं स्यादिति तत्फलं तु भक्त्येकसाध्यत्वात् । न च भक्तिप्रकरणादन्यदर्शनाभावो भक्तिरेवेति तस्यात्मा फलं कथं न भवतीति वाच्यम् । अत्रार्थेऽन्येषां रामानुजाचार्यादीनामसंमतेर्वक्ष्यमाणत्वात् । 'सर्वं हि पश्यः पश्यती'ति श्रुतिविरोधाच्च । न च सुषुप्तिलक्षणे दृष्टे विज्ञाते इति कुतो लब्धमिति वाच्यम् । एतादृशविशेषमन्तरा कस्मिन्नर्थे सप्तमीत्यपि वाच्यम् । सत्यर्थे सप्तमीति चेत् । सुषुप्तिर्व्याक्रियताम् । ननु सुषुप्तौ व्याक्रियमाणायां शङ्करभाष्यपूर्वपक्षस्य सिद्धान्तीकरणात् सम्प्रदायप्रदीपोक्ता भगवदाज्ञा सेत्स्यति शङ्कराचार्यमतस्था मन्मतं पूर्वपक्षयन्ति तत्त्वं सिद्धान्तयेत्याकारिकेति चेत्, न । अहङ्कारादेशात् । 'अथाहङ्कारादेश' इति वक्ष्यमाणश्रुतेः । तस्य तुरीयग्राहकत्वं प्रतिभाति । चित्तस्य सुषुप्तिग्राहकत्वात् । तथाच 'अशक्ये हरिरेवास्ति मोहं मा गाः कथञ्चन' इति वाक्याच्च दोषः । किञ्च । सर्वस्य तथात्वापत्तेश्चेत्युक्तदोषाच्च । तथाच श्रुतिः 'सर्वं हि पश्यः पश्यती'ति । अत्र रामानुजमाध्वभास्कराचार्या भिक्षुशैवौ च भगवन्तौ 'यत्र नान्यत् पश्यत्यादे'र्भूमातिरिक्तयावद्दर्शननिषेधो नार्थः, किन्तु निरवधिसुखरूपे ब्रह्मण्यनुभूयमाने ब्रह्मस्वरूपतद्विभूत्यन्तर्गतत्वात् कृत्स्नस्य वस्तुजातस्यैश्वर्यविशिष्टब्रह्माभिन्नत्वेन न पश्यतीति । एतदेवोपपादयति वाक्यशेषः । 'स वा एवं पश्यन्नेवं मन्वान' इत्यादिः । अग्रे 'न पश्यो मृत्युं पश्यति, न रोगं नोत दुःखताम्, सर्वं हि पश्यः पश्यति सर्वमाप्नोति सर्वश' इति मन्त्रश्चेति वदन्ति । पूर्वोक्ताविरुद्धमेतत् । भूमाधिकरणभाष्यप्रकाशे एतदुक्तम् । इत्नीति । इति स्वरूपलक्षणं कार्यलक्षणं च सिध्यतीत्यर्थः । किमित्यादि । विशेषदर्शनम् । नेदं रजतमित्याकारकं रजतादिकम्, शुक्ताविदं रजतमिति । आदिना रज्जौ सर्पोऽयमिति । नायं सर्पः, रज्जुरेवेति विशेषदर्शनम् । कारणे जले कार्यं पृथिवी । स्वेति । विभूत्यध्यायोक्तायाम् । अत्रापीति ।

१. संपद्यते । २. तदेकतानताख्यः ।

भाष्यप्रकाशः।

'यदि वा न महिम्नीति गो अश्वमिह महिमेत्याचक्षते हस्तिहिरण्यं दासभार्यं क्षेत्राण्यायतनानी'ति। तथाचैतेषु तत्प्रतिष्ठाया अदर्शनात्कथमेतदिति शङ्कां मा कृथाः। तत्र हेतुमाह 'नाहमेवं ब्रवीमी'ति। एतादृशे महिम्नि प्रतिष्ठित इत्यहं न ब्रवीमि। तर्हि क प्रतिष्ठित इत्यत आह 'ब्रवीमीति होवाच अन्यो ह्यन्यस्मिन् प्रतिष्ठित' इति। अत्र 'इति होवाचे'ति श्रुतिवाक्यम्, शेषं सनत्कुमारस्य। तथाच गोअश्वादिभ्योऽन्यो महिमा तस्मिन् प्रतिष्ठित इति। तथाच लौकिकमहिमभिन्नः स्वे आत्मीये वृते भक्ते योऽथवा स्वामिभ्नो यो महिमा तस्मिन्नुक्तरीत्या स्थित इत्यर्थः। अतस्तेनापि प्रकारेण विचार्य इत्यर्थतः सिध्यति। तर्हि स कीदृग् येन तत्रैव प्रतिष्ठित इत्याकाङ्क्षायां तं विवृणोति 'स एवाधस्तात् स उपरिष्टात् स पश्चात् स पुरस्तात् स दक्षिणतः स उत्तरतः स एवेदं सर्व'मित्यारभ्याग्रेऽहंकारादेशं तत आत्मादेशं च पूर्ववत् 'आत्मैवेदं सर्व'मितीत्यन्तम्। तथाच यस्य पूर्वं 'स एवाधस्ता'दित्याद्युक्तरीत्या सर्वदिक्षु भूमभानं सर्वं परिदृश्यमानं भूमेति च भानम्। अथ तदनन्तरम्, अत एतस्माद्भानाद्धेतोरहङ्कारादेश एव पूर्ववद्भूमाभिन्नस्वभानम्। अथ तदनन्तरम्, अतस्तादृशभानाद्धेतोरात्मादेश एव पूर्ववद्भूमाभिन्नात्मभानमिति। एवंप्रकारकभानवान् यः स पुरुषस्तत्र यो महिमा

रश्मिः।

विभूतिष्वपीत्यर्थः। अस्येति। नारदस्य। स्वयं सनत्कुमारः। यदि वा नेति। यदि वा परमार्थत आधारं पृच्छसि तर्हि ब्रूमः। महिम्नि गो अश्वं गवाश्वं तदादिरूपे महिम्नि। नेति। न प्रतिष्ठित इतीत्यर्थः। कथमेतदिति। कथं केन प्रकारेण। 'स्वे महिम्नी'ति श्रुतिवाक्यमित्यर्थः। न ब्रवीमीति। अन्ये ज्ञानिनस्तु ब्रुवन्तीत्यर्थः। अन्यज्ञानिनां परमार्थः गीताविभूत्यध्याये। 'धेनूनामस्मि कामधुक्' 'उच्चैःश्रवसमश्वानाम्' 'ऐरावतं गजेन्द्राणाम्' 'श्रीमदूर्जितमेव वा' 'रुद्राणां शङ्करश्चास्मि' 'देवर्षीणां च नारदः' 'सिद्धानां कपिलो मुनिः' 'कीर्तिः श्रीर्वाक् च नारीणां स्मृतिर्मेधा धृतिः क्षमा। विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इत्येतेषु वाक्येषु गवाश्वादीनां श्रीकृष्णजिदभेदः। अत एव 'ह्यन्यो ह्यन्यस्मिन् प्रतिष्ठित' इति श्रुतेर्ज्ञानिनो भूमा तु स्वतो न भिन्न इति भावं वदन्ति। सर्वात्मभावरूपमुख्यभक्तिप्रकरणाद्भक्तानामुक्तश्रुतिप्रतिपाद्यपरमार्थमाहुः तथा चेति। गवाश्वादिभ्योऽन्यो महिमा यस्तस्मिन् तद्रूपेऽन्यस्मिन् प्रतिष्ठित इति। हि युक्तश्चायमर्थः। ज्ञानमार्गीयादर्थाद्भिन्नः। ननु ज्ञानमार्गीयार्थो भक्तिमार्गीयो वेति चेत्। न। महाभाष्ये 'चत्वारि शृङ्गा त्रयोऽस्य पादा द्वे शीर्षे सप्त हस्तासो अस्ये'ति श्रुतेर्निरुक्तावाशुशुक्षणिपरत्वेन व्याख्यातापि शब्दपरत्वेन व्याकरणादत्रापि ज्ञानमार्गपरत्वेन व्याकृता भक्तिमार्गपरत्वेन व्याकृतेति। स्वाभिन्न इति। स्वं भगवान्। उक्तेति। उक्ता 'अन्यो ही'त्यादिश्रुत्योक्ता रीतिस्तया। श्रुतिप्रामाण्यात् स्वस्मिन्नपि (स्वयं) स्थित इत्यर्थः। अस्मिन् पक्षे 'अन्यो ही'त्यादिश्रुत्यर्थः स्पष्टः। भूमा तु स्वतो न भिन्न इति भावः। स इति। महिमा। श्रुतौ स इति भूमा। पूर्ववदिति। 'अहमेवाधस्ता'दित्यादिपूर्ववत्। 'आत्मैवाधस्ता'दित्यादि पूर्ववच्च। भूमेति। यथाधस्ताद् घट इत्यत्राधस्तनघटभानम्। इदम्पदार्थमाहुः परीति। इदमस्तु प्रत्यक्षगे रूपमिति। स्वेति। भूमाभिन्नानां स्वेषां भानम्, 'कृष्णोऽहं पश्यत गति'मित्यत्र यथा भूमा भगवान् तत्त्वेन स्वेषां भक्तानां भानम्। हेतोरिति। सञ्चारिभावरूपादित्यर्थः। आत्मपदं मुख्यात्मपरम्। अहङ्कारादेशस्य सञ्चारिभावत्वज्ञापनाय पुनर्भूमाभिन्नात्मज्ञानमित्यर्थः। एवमग्रे भाष्ये स्फुटम्। महिमेति। सत्स्फूर्तिसर्वात्मभावस्तस्मिन् प्रसिद्धे

एतेन सर्वात्मभावस्वरूपमेवोक्तं भवति । तत्र विरहभावेऽतिविगाढभावेन

भाष्यप्रकाशः ।

तस्मिन् भूमा प्रतिष्ठित इत्यर्थः सिध्यति । तस्य तत्र प्रतिष्ठितत्वे गमकमाह 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवती'ति । तथाचोक्तप्रकारकदर्शनमननविज्ञानवानुक्तप्रकारकरत्यादिमान् भवतीत्येते धर्मास्तत्र भूमप्रतिष्ठागमका इत्येतैर्लक्षणैर्भूममहिमाधारः पुमान् ज्ञातव्य इत्यर्थः । एतच्च महिमस्वरूपमग्रे अनुबन्धादिसूत्रभाष्ये स्फुटीभविष्यति । एवं तत्स्वरूपं निष्कृष्य तादृशस्य शोकतीर्णत्वं पूर्वपृष्टोत्तरत्वेनाह 'स स्वरा'डित्यादिना । सः भूमात्मरत्यादिमान् स्वस्मिन्नेव राजते, स्वस्मिन् भूमानं रञ्जयति वा, तस्य नामाद्याशाप्राणपर्यन्तलोकेषु कामचारः स्वातन्त्र्यं भवतीति सर्वप्राप्त्या शोकपारतीर्णो भवतीत्यर्थः । एवमेतं परिचाययित्वा तेनैव शोकतरणादितरोपायवतो निन्दति 'अथ येऽन्यथाऽतो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति, तेषां सर्वेषु लोकेष्वकामचारो भवती'ति । रञ्जयतीति राजा । अन्यो रञ्जयिता येषां तेऽन्यराजानः । तथाच ये इतोऽन्यथा विदुरन्यासक्तास्ते तथेतिसन्दर्भार्थः ।

एतस्य तात्पर्यं स्फुटीकर्तुं गृह्णन्ति एतेनेत्यादि । एतेन भूम्नः कार्यलक्षणवाक्ये-

रश्मिः ।

वृतभक्ते भूमा भूमाधिकरणोक्तो भगवान् प्रतिष्ठित इत्यर्थः । भगवतो भूमत्वेनोपादानं सुखरूपत्वाय । ननु भगवति सर्वात्मभावरूपा भक्तिः, भक्तौ तु न भगवानिति चेत् । न । महिम्नीति सप्तम्या अभिव्यापकाधारोऽर्थः । न त्वौपश्लेषिक आधारः । तथा च महिमानं सस्फूर्तिसर्वात्मभावमभिव्याप्य प्रतिष्ठित इत्यर्थात् । न च महिमपदं 'एतावानस्य महिमा' इत्यत्र विश्ववाचकमिति वाच्यम् । विश्वान्तर्गतसस्फूर्तिकैतादृशभावे विश्ववाचकस्य सङ्कोचात् । 'सर्वे ब्राह्मणा भोजयितव्या' इत्यत्र सर्वपदवत् । तथा चोक्तेति । 'अनुबन्धादिभ्य' इति सूत्रभाष्योक्तप्रकारकेत्यादिः । एत इति । उक्तप्रकारकरत्यादिरूपा धर्माः । उक्तप्रकारकदर्शनादिधर्मास्तु भूमगमकाः, न तु भूमप्रतिष्ठागमका इत्यनुबन्धादिभ्य इति सूत्रभाष्यात् । महिमेति । 'स एवाधस्ता'दित्युक्तम् । 'स वा' इत्युक्तं च । व्याकरणस्य वेदाङ्गत्वात् श्रीभागवतस्य वेदत्वात् तच्चतुर्थस्कन्धोक्तं लक्षणमाहुः स्वस्मिन्निति । 'रञ्जयतीति राजे'ति पृथुचरित्रे व्युत्पत्तिः । तेनैवेति । भूम्नैव । इत इति । श्रुत्यन्तर्गतस्मात् इत्यस्यार्थः । कार्यलक्षणेति । स्वरूपलक्षणं तु 'सत्यं ज्ञानमनन्तमानन्दं ब्रह्मे'ति ब्रह्मोपनिषदुक्तम् । सर्वात्मभावेति । ननु विगाढभावस्य विरह एव भाष्ये उक्तेः 'यस्मिन् दृष्टे श्रुते विज्ञाते' इति लक्षणश्रुतिविवरणे प्रकाश एवोक्तसंयोगे सर्वात्मभावपदस्यैकदेशविरह एव प्रवृत्तस्य कथं जीवेश्वरभेदेनाधिभौतिकादिभेदेन संयोगविप्रयोगभेदेन च द्वादशप्रकारेषु प्रवृत्तिरिति चेत् । न । भाष्येऽतिविगाढभावपदेति पदार्थस्य विवक्षितत्वात् । तथा च वि विशेषेण गाढो दृढः बलं बलपदवाच्यो भावः प्रेमा विगाढभावः । तस्य ज्ञापको निरोधलक्षणग्रन्थोक्तो निरोधः । तदुक्ते तु सर्वात्मभावे सर्वः सर्वेन्द्रियसम्बन्धी आत्मनोऽन्तःकरणस्य भाव इति । आत्मनो भाव इति षष्ठीतत्पुरुषं विधाय सर्व आत्मभाव इति कर्मधारयः । 'सर्वेन्द्रियाण्यन्तःकरणस्य वृत्तय' इति पञ्चमस्कन्धे निरूपितम् । 'एकादशामी मनसो हि वृत्तय आकूतयः पञ्चधियोऽभिमान' इति । तदुक्तमाचार्यैः 'सर्वात्मभावोऽधिकृतो भवतीनामधोक्षजे । विरहेण महाभागा महान् मेऽनुग्रहः कृत' इति श्लोके 'सर्वोप्यात्मनो भावो भगवत्येवाधिकृत उत्तरोत्तरं वृद्ध्यर्थं आरब्ध इवे'ति सुबोधिन्या । ननु विरहेणेत्युक्तौ पुष्टिमार्गीयत्यागवतीनां विरहसामयिकसर्वात्मभावपदनिर्वचनम्,

**सर्वत्र तदेव स्फुरतीति 'स एवाधस्ता'दित्यादिनोक्त्वा, कदाचित् स्वस्मिन्नेव भगवत्स्वस्फूर्तिरपि भवतीति 'अथाहङ्कारादेशा' इत्यादिना तामुक्त्वा, एतेषां व्यभिचारिभावत्वेनानियतत्वं ज्ञापयितुं पुनः सर्वत्र भगवत्स्फूर्तिमाह 'अथात**

---

भाष्यप्रकाशः ।

न यदुद्भवं प्रति सर्वात्मभावस्वरूपं स्वस्मिन् विगाढभावात्मकं भगवतोक्तं तदेवोक्तमित्यर्थः । कथमित्याकाङ्क्षायामेतदग्रिमोक्तकार्यान्यथानुपपत्त्यार्थादुक्तं भवतीति वक्तुमेतद्विभजन्ते तत्रेत्यादि ।

रश्मिः ।

न तु संयोगसामयिकसर्वात्मभावपदनिर्वचनमिति संयोगीयान्यन्निर्वचनमिति चेत् । न । संयोगविप्रयोगभेदेनैकस्या एव भक्तेर्द्वैविध्यात् । न च संयोगे मानाभाव इति वाच्यम् । विहितभक्त्यसाध्यत्वेन भक्तिपदं सर्वात्मभावेऽर्धदलवाचकं स्यादिति । न चास्त्वेवमिति वाच्यम् । विशिष्टे शक्तिवादिनां घट इत्युक्ते हि न घटत्वाविषयकप्रत्ययो भवतीति तथा वक्तुमशक्यत्वात् । तथा च प्रत्ययः । प्रतिमादिं पश्यतो भगवन्तं पश्यामीति चक्षुःसंयोगे । विप्रयागे तु दैहिकपारतन्त्र्यं देशैक्येपि । तदा न पश्यामीति प्रत्ययः । तथा च प्रयोगः । विगाढभाववान् निरोधादाचार्यवदिति । एवं सर्वस्मिन् भाव इति सर्वात्मभाव इति लालूभट्टकृतसर्वात्मभावविवेके । सा व्युत्पत्तिरतिविगाढभावेन वक्ष्यमाणस्फूर्तौ । तथा चैतादृशः सर्वे आत्मनो भावो यत्र विगाढभावे स विगाढभावः सर्वात्मभावः । द्वितीयदले त्वतिविगाढभावः अतिपदार्थोऽनुभवसाक्षिको विरहे संयोगापेक्षयातिशयरूपः । तत्र सर्वस्मिन्नात्मभावो यत्रातिविगाढभावे स सर्वात्मभावः । तदुक्तं **सर्वात्मभावस्वरूपं स्वस्मिन् विगाढभावात्मक**मिति । अन्यस्मिन् कामुकेऽयं भावः सर्वात्मभावः स्यात्, तद्व्यावृत्त्यर्थं **स्वस्मिन्निति** । विगाढभावात्मकसर्वात्मभावान्निरोधात्मकस्तस्मादतिविगाढात्मके स्फूर्त्यात्मकः सर्वात्मभावः । एवं संयोगे द्विविधोपि त्रिविधः आध्यात्मिकाधिदैविकयोरभेदात् । अतिविगाढभावतदुद्भवस्फूर्तिरूपो द्विविधोपि विरहे त्रिविधः । उक्ताभेदात् । एवं षड्विधो जीवे । ईश्वरेप्येवं षड्विधः कारणरूपः । तदुक्तं प्रदानवत्सूत्रभाष्यप्रकाशे 'तेन भगवद्धर्मे'त्यादिना । व्युत्पत्तिस्तु सुबोधिन्या एव 'सर्वोप्यात्मनो भावः' इत्यस्याः श्रुतौ निरवध्यानन्दरूपत्वेन रसरूपत्वेन पुत्रादिभ्योपि प्रेयस्त्वेन च सिद्धस्य आत्मनो यो भावो धर्मः प्रियत्वाख्य आनन्दात्मा यन्मात्रां सर्वे उपजीवन्ति स सर्वस्तदंशिभूतो भगवद्धर्म ऐश्वर्यादिवदतिरिक्तः । ननु स दत्तो जीवेष्वपि तादृश इति चेत् । न । 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'ति श्रुत्या प्रदानवत्सूत्रोक्तरीत्या भगवद्धर्मात्मकसर्वात्मभावदानेपि भगवद्धर्मसर्वात्मभावस्योक्तविधत्वमपि । मात्रारूपत्वेन परिणामात् । एतेन प्रदानवत्सूत्रोक्तभाष्यप्रकाशोक्तलक्षणकसर्वात्मभावनिर्वचनाभावात् तद्विरोध इत्यपास्तम् । तत्र भगवद्धर्मात्मकसर्वात्मभावनिर्वचनात् । आध्यात्मिकाधिभौतिकस्फूर्तिविगाढभावयोर्मात्रात्वादुक्तविधत्वम् । पुराणमतेन तु प्रदानवदेवेति सूत्रभाष्यप्रकाशेऽनुरागात्मेत्यादिविशेषणविशिष्टः सर्वात्मभावो ज्ञेयः । तथा चैतेन श्रुतिवाक्येन सर्वः सर्वेन्द्रियसम्बन्धी आत्मनोऽन्तःकरणस्य भावः 'कामः सङ्कल्प'इत्यादिश्रुत्युक्तस्तस्य विधारूपस्य स्वरूपं 'दर्शनाच्चे'ति वक्ष्यमाणसूत्रादुक्तमित्यर्थः । निरोधलक्षणोक्तविधारूपमिति यावत् । श्रीवल्लभजित्कृतसर्वात्मभावनिरूपणे सर्वात्मभावपदस्यायमर्थकः । भक्तिमार्तण्डे च । 'नन्दगोपव्रजस्त्रीणां' नन्दगोपसर्वात्मभावत्वेन 'मनसो वृत्तयो नः स्यु'रिति भ्रमरगीतीयवाक्योक्तेन सर्वात्मभावनिरूपणस्य युक्तत्वात् । उक्तश्रुतेश्चेति

भाष्यप्रकाशः ।

अयमर्थः । अत्र व्याख्यातरीत्या यो भूममहिमाधाररूपः पुमान् परिचाययिष्यते, तस्य या स्फूर्तिः, सा नाखण्डब्रह्मज्ञानरूपा, 'तत् केन कं पश्ये'दित्यादिवत्तदाकाराभावात्, किन्तु सखण्डतद्रूपा, षण्णां दिशां परिदृश्यमानस्य सर्वस्य चानुवादपूर्वकं तत्स्फूर्तिकथनात् । सापि न वामदेवादिस्फूर्तिव'न्मनुरभवमहं सूर्यश्चे'त्यादिसर्वत्राहङ्ग्रहरूपा, अहङ्कारादेशोत्तरं पुनरात्मादेशकथनेन तस्याः व्यभिचारबोधनात् । अतः सा द्विविधाया अपि ज्ञानिस्फूर्तेर्विलक्षणेति तद्वानपि तेभ्यो विलक्षणः । 'स यदि पितृलोककामो भवती'त्यादिवदस्य कामानामनुक्तत्वाद्दहराद्युपासकेभ्योपि विलक्षणः । मर्त्यसुखानभीप्सुत्वाल्लौकिकतोपि विलक्षणः । किन्तु सत्यवदनादिकारणभूतकृत्यादिजनकसुखलाभवत्त्वस्य भूमप्रतिष्ठाप्रश्नोत्तराभ्यां तन्महिमाधारत्वेनोक्तत्वात् पूर्वं भूमलाभवानुक्तः, तेन दृष्टश्रुतविज्ञातभगवत्कः परमभक्तस्तत्र ततोऽन्यदर्शनादिराहित्यस्योक्तत्वाद्विरहभावे प्रपञ्चविस्मारकपरमासक्तिरूपो योऽतिविगाढभावस्तेन सर्वत्र तदेव आसक्तिविषयं

रश्मिः ।

भाष्यार्थः । भाष्यीयैवकारव्यावर्त्यमाहुः अयमर्थ इति । 'सा सा सा सा जगति सकले कोऽयमद्वैतवाद' इत्यत्रायं भावः कामुकस्योपवर्णितः । क्वचित् तत्रापि संभोगविगाढभावनिरोधविप्रयोगातिविगाढभावस्फूर्तीनां सत्त्वात् लौकिकः सर्वात्मभावो रूपप्रपञ्चान्तर्गतो बन्धको रूपप्रपञ्चस्य बन्धकत्वात् 'सर्वग्रन्थीनां प्रविमोक्ष'इति श्रुतिविरोधाच्चेत्यत आहुः मर्त्येति । तथाच लौकिके सर्वात्मभावे मर्त्यसुखाभीप्सुरधिकारी, अलौकिके तु शुद्धाहारी । 'प्राणपोषको ह्याहारः, तस्य सदोषत्वे तु न किञ्चित् सिध्यती'ति भाष्यात् । 'न पश्यो मृत्युं पश्यती'ति मृत्स्वस्पृष्टसुखत्वात् सर्वात्मभावस्यामर्त्यसुखाभीप्सुरधिकारी । एतेन वैष्णवस्य स्वस्त्रियामेतादृशभाववतो भावेपि न क्षतिः । आत्मविषयत्वाच्च । न चायोग्ये भावकल्पनमिति वाच्यम् । 'यद्यदिष्टतम'मिति वाक्यात् । 'लोकवत्तु लीलाकैवल्य'मिति सूत्राच्च । आत्मविषयकः कैवल्यरूपः । स्त्र्यादिविषयकोऽकैवल्यरूपः । सत्येत्यादि । सत्यवदनविज्ञानमतिश्रद्धानिष्ठाः सुखादयः तासां कारणीभूता कृतिरादिः कृत्यादिसुखस्यादिः । तस्या जनकेत्यर्थः । ननु सत्यवदनादिजनकेत्येतावतैव चारितार्थ्ये कारणभूतकृत्यादीत्यधिकमिति चेत्, न । एतदनुक्तौ सत्यवदनादिसकलजनकेति भ्रमः स्यात्, तन्निवृत्तये कारणभूतायाः सुखस्यादिरूपायाः कृतेर्जनकत्वनिश्चयार्थं कारणभूतकृत्यादीत्यस्यानाधिक्यात् । उक्तत्वादिति । 'यदा वै सुखं लभतेऽथ करोती'ति श्रुतेरित्यर्थः । दृष्टेति । भूमलक्षणश्रुतिव्याख्याने विशेषरूपेण लब्धः । परमेति । दृष्टश्रुतविज्ञातभ(ग)वत्कत्वमेव परमभक्तत्वम् । संयोगविगाढभावयोस्तु प्राकृतयोरनुवादात् । संयोगविगाढभावनिरोधानां वक्ष्यमाणत्रयप्रतिपादकग्रन्थानुरोधेन वक्तव्यत्वात् । अत्र सत्यवदनादीनां संनिवेशप्रकारः । सर्वात्मभावे 'भक्तिः प्रवर्तिता दिष्ट्ये'ति वाक्यं भ्रमरगीते, भक्तिवर्धिन्यां च 'सेवायां वा कथायां वे'ति वाक्यं विविदिषोर्भक्तस्य सत्यवदनादिजनककृतिर्गुरूपसत्तिः । अस्य पुष्टित्वं सन्दर्भस्यैकादशद्वादशाध्यायोक्तस्यैतन्निबन्धे उक्तत्वात् स्फूर्तिनिरोधयोः सर्वात्मभावपदं भाष्ये श्रीभागवते चोक्तमिति । अनुग्रहमात्रेण कृतिः पुष्टित्वात् । ततो निष्ठा, ततः श्रद्धा, ततो मतिः, ततो विज्ञानम्, ततः सत्यं सत्यवदनं कथा कथनादिरूपमुक्तश्रुतिप्रामाण्याज्ज्ञेयम् । तत्र भूमलक्षणे । ततः दर्शनश्रवणविज्ञानाद्यनन्तरम् । उक्तेति । एतस्य विरहभावलिङ्गत्वम् । न च प्रेमलक्षणे संयोगे वियोगवर्तनं प्रेमेत्युक्तत्वात् वियोगवर्तनं संयोगेऽस्त्विति शङ्क्यम् । प्रेमलक्षणत्वात् । सर्वात्मभावस्य प्रदानमात्रसाध्यत्वात् । परमासक्तीति । परः सर्वोत्कृष्टो मीयते ज्ञानस्य स्फूर्त्यात्मकस्य विषयीक्रियते यस्यामेतादृश्यासक्तिरनुषङ्गवद्धीरूपा तया रूप्यते

भाष्यप्रकाशः।

भगवत्स्वरूपमेव सर्वत्र स्फुरतीति 'स एवाधस्तादित्या'दिनोक्त्वा, एतेषां विरहभावकृततत्तत्स्फूर्तिरूपाणां ज्ञानानां व्यभिचारिभावत्वेनानियतत्वं ज्ञापयितुं पुनरहङ्कारादेशात् पूर्वं निरूपित-

रश्मिः।

व्यवह्रियते ज्ञायते इति तद्रूपोऽतिविगाढभाव इत्यर्थः। 'मनसो वृत्तयो नः स्युः कृष्णपादाम्बुजाश्रया' इति भ्रमरगीतोक्तसर्वात्मभावे निरोधस्कन्धोक्ते निरोधस्य प्रपञ्चविस्मृतिपूर्वकभगवदासक्तिरूपस्य संनिवेशो भाष्यस्य आवश्यकः। तेनातिविगाढभावे वक्तव्येऽस्य विशेषणस्य किं प्रयोजनमिति कुचोद्यं निरस्तम्। व्यभिचारीति। विरहेत्यादितत्तत्स्फूर्तयोऽधःस्थत्वादिप्रकारकास्मद्विशेष्यका बोध्याः। ते तु त्रयस्त्रिंशत्। 'चिन्ता स्मृतिर्हर्ष औत्सुक्यमपस्मारो विबोधो मतिरुन्मादो मरण'मित्येतेषु मतिरत्र सम्भवति। तस्या लक्षणं शास्त्रोपदेशमन्त्राद्यैरर्थनिर्धारणं मतिरिति। 'तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यत' इति गीतातः व्यभिचारित्वमस्या भक्तिरसात् पूर्वभावित्वेनोत्तरभावित्वेन च, भक्तिमार्गे उन्मादो वा। तस्य लक्षणम्, 'सन्निपातग्रहादित उन्मादश्चित्तविभ्रमः।' तदुक्तं 'उत्तमानां विप्रलम्भो भवेत् प्रियवियोगतः। नीचानां विभवभ्रंशात् सर्वेषां सन्निपातत' इति। अत्रापि वाक्यं 'इत्युन्मत्तवचो गोप्यः कृष्णान्वेषणकातराः' इति। अत्र भक्तिपदवाच्यत्वात् षट्सु सर्वात्मभावपदव्युत्पत्तिः। संयोगः परस्परालिङ्गनपरिचुम्बनाद्यनन्तभेदत्वादपरिच्छेद्य इत्येक एव। सर्व आत्मनो भावः परम्परया यत्र संयोगे स तथोक्तः। संयोगे परम्परया निरोधकारणत्वात्। वि विशेषेण गाढो दृढः बलपदवाच्यो भावः प्रेमा। 'दृढः स्थूलबलयो'रिति पाणिनिसूत्रात्। न च भावपदार्थो रतिर्वाच्य इति वाच्यम्। रतेर्भगवद्ग्राहकत्वात्। 'वशे कुर्वन्ति मां भक्त्ये'ति वाक्यात्। 'तं भजे'दिति श्रुतेश्च। न च प्रेमपदोपसन्दाने विहितकर्मज्ञानभक्तिसाध्यो न वेति शङ्कित्वा प्रदानसाध्यत्वं सर्वात्मभावस्योक्तम्, तद्भङ्गः, प्रेमपदेन विहितभक्तिलाभो न, अन्यसाधनसाध्यत्वादिति वाच्यम्। भाष्ये विहितपदाच्चित्तशुद्ध्यादीनां मर्यादाभक्तिसाधकत्वे पुष्टौ प्रदानसाध्यत्वे बाधकाभावात्। न च प्रदानसाध्यत्वेऽनुग्रहासाध्यत्वापत्त्या भक्तिहेतुविरोध इति वाच्यम्। सर्वात्मभावोक्तिसन्दर्भरूपे द्वादशाध्याये पुष्टिमार्गकथनानन्तरं 'याहि सर्वात्मभावेने'ति वाक्यात् पुष्टिभक्तित्वेपि सुबोधिन्याः सर्वः सर्वेन्द्रियसम्बन्धी आत्मनोऽन्तःकरणस्य भावः, 'कामः सङ्कल्प' इतिश्रुत्युक्तो वा, 'एकादशामी मनसो हि वृत्तय' इति पञ्चमस्कन्धोक्तो वा भवनं भगवति सत्ता वर्तनं तत्परत्वेनावस्थापनं वेत्यर्थिकायाः सिद्धस्य वक्ष्यमाणस्य विद्यारूपस्य निरोधस्य दानेनाभ्युपगमात्। इतरस्याध्यात्मिकाधिभौतिकस्यानुग्रहसाध्यस्य पुष्टित्वादनुग्रहेणोपगमात्। श्रौतस्य प्रदानसाध्यता, पौराणस्य तु अनुग्रहसहकृतप्रदानसाध्यता सर्वात्मभावस्य निरोधात्मकस्य। वक्ष्यमाणनिरोधात्मकस्य। विगाढभावे सर्वे आत्मनोऽन्तःकरणस्य भाव उक्तो यत्रेतिव्युत्पत्तिः। 'नासतो विद्यते भावो नाभावो विद्यते सत' इति गीतायाः। निरोधे व्युत्पत्तिः। सर्वः सर्वेन्द्रियसम्बन्धी भावः 'कामः सङ्कल्प' इति श्रुत्युक्तः। भाष्ये भूमपदवाच्यो यः। 'एतेन सर्वात्मभावस्वरूपमेवोक्तं भवती'ति भाष्यात्। भाष्यमते इयं मुख्या व्युत्पत्तिः सर्वात्मभावस्य। भूमलक्षणश्रुतिसिद्धत्वात्। पञ्च तु सर्वात्मभावव्युत्पत्तिशून्याः सर्वात्मभावान्तःपातित्वात् सर्वात्मभावा इत्युच्यन्त इति भक्तिहंसदिशा ज्ञायते। अथापि व्युत्पत्तिर्विरहे। विशिष्टो रहो विरहः। अन्तःसंवेदनम्। विरहो, 'विरहे ये विविधा भक्तिभावा उत्पद्यन्ते, ते न सङ्गमेपी'ति वैशिष्ट्यम्। स च चक्षूरागः। प्रथममित्यवस्थाप्रकारेण विकलत्वास्वास्थ्यरूपः। नन्वन्तःसंवेदनेपि चक्षूराग इति चेत्। न। 'कश्चिद्धीरः प्रत्यगात्मानमैक्षदा-

भाष्यप्रकाशः।

स्वावृत्त्या सर्वत्र भगवत्स्फूर्तिमाह 'अथात आत्मादेश' इत्यादिना।

विधात्रयसमाप्तौ च 'स वा एष एवं पश्य'न्नित्यादि कथयति। तत्र 'स' इत्यनेन पूर्वोक्तं परामृश्य, 'एष' इत्यनेन महिमानं निगमयति। तत्रायमर्थः। पूर्वं विधात्रयस्योक्तत्वात्तासां प्रत्येकमहिमरूपत्वे, 'स वा एष' इत्यत्र बहुवचनापत्तिः। समुदितस्य तथात्वे पूर्वविधापरामृष्टस्य भूम्नोपि महिमत्वापत्तिः, अतस्तदुभयमत्र नाभिप्रेतम्, किन्त्वेवं पश्य'न्नित्यादिनोक्तासु दर्शनादिक्रियासु पूर्वोक्तविधात्रयं कर्मत्वेनैवाभिप्रेत्यैवंपदेन परामृशति, दर्शनादिमतश्चाग्रे फलं

रश्मिः।

वृत्तचक्षुरमृतत्वमिच्छ'न्निति श्रुत्यान्तःसंवेदने चक्षूरागोक्तेः। आत्मदर्शनं 'सा परानुरक्तिरीश्वरे' इति शाण्डिल्यसूत्रेण रागमन्तरासम्भवच्चक्षूरागरूपां भक्तिमाह। द्विषति चक्षुःस्वकारणनिर्वाहाय। न चास्तु चक्षूरागः संयोगवद्विरहेपि, रागस्य भक्तिलक्षणत्वात्, परन्तु सम्यक् ज्ञानं तस्य श्रुतौ न सम्भवति, प्रत्याशादिभिस्तिरस्कारादिति बोध्यम्। 'भवतीनां वियोगो मे न हि सर्वात्मना क्वचि'दित्यस्मात्। 'दुस्त्यजस्तत्कथार्थे' इत्यस्माच्च रागप्राप्तेः। लक्षणोक्तस्य भानावश्यकत्वाच्च। अन्यथा लक्षणत्वापलापप्रसङ्गः। ननु 'कामाद्गोप्यः', 'अलमन्यविचारेण, प्रेमेच्छेति स्थितं मत'मिति वाक्याभ्यां इच्छा ममेति चेत्। न। 'अनाविष्कुर्वन्नन्वया'दितिसूत्रे भक्तिरसस्य गुप्तस्यैवाभिवृद्धिस्वभावत्वेन कामादीनां गौणप्रेमत्वात्। अतः 'कामस्तस्य दिदृक्षैवे'ति 'नैव इच्छा तु साधारण्या'दिति कारिकाशाण्डिल्यसूत्रयोरिच्छायां विशेषस्य दूषणस्य चोक्तेः। अतः बहुविधोपि विरहोत्रैक एव गण्यते, संयोगवदिति सिद्धम्। ननु विप्रलम्भ इति वक्तव्ये तदेकदेशोपादानं भाष्ये कुत इति चेत्। न। विप्रयोगस्याभिलाषविरहेर्ष्याप्रवासशापहेतुकत्वेन पञ्चविधस्य सङ्गमप्रत्याशाकालीनास्तदनुत्पादो विप्रलम्भ इति लक्षणलक्षितस्याद्यावयवोऽभिलाष इच्छारूपः द्वितीयो विरहः। देशैक्येपि गुर्वादिपारतन्त्र्यम्। अन्यासङ्गिनि प्रिये कोप ईर्ष्या। प्रवासो वैदेश्यम्। उत्पादिकोपनियन्त्रणं शापः वाग्दण्डः। विप्रलम्भलक्षणे प्रत्याशा प्राप्तिनिश्चयः। तत्रोद्धवस्य 'अत्रागतोऽहं विरहातुरात्मे'ति वाक्याद्विरहेऽन्तर्भावि सर्वं भवतीति विरहस्य भागवतमते मुख्यत्वात्। अन्यथा प्रवासहेतुके विप्रलम्भे विरहहेतुकत्वं विरुद्धमुक्तं स्यात्। सर्वस्मिन्नात्मभावः परम्परया यत्र विरहे स सर्वात्मभावः। संयोगवद्विप्रयोगेपि सर्वात्मभावं वक्तुं तत्रेत्यारभ्य इत्यादिनेत्यन्तं भाष्यं ततः संयोगभाव इत्यादिभाष्येण सुखान्वितमपि ह्यग्रेतनश्रुत्या तदेव भाष्यं संयोज्य 'सर्वात्मभावस्वरूपमेवोक्तं भवती'ति भाष्यमावृत्त्या पुनर्योजयन्तिस्म विधेति। विधात्रयमात्मादेशाहङ्कारादेशात्मादेशरूपम्। अहङ्कारस्य पुरुषविधब्राह्मण आत्मतः प्रथममुत्पत्तिदर्शनात्। जीववाचकस्याहङ्कारस्य प्रयोगः, न तु सन्निपातलक्षणैकदेशस्यास्मत्पदवाच्यस्य हेयस्य। लक्षणं तु 'सन्निपातस्त्वहमिति ममेत्युद्भव या मति'रिति। न चोक्तोन्मादोत्पादकः सन्निपातोऽस्त्विति शङ्क्यम्। भेदांशे तस्याविरोधात्। भक्तानामन्तराभूतस्याभेदस्यादानादयं ब्रह्माभिप्रेतोऽहेय एव। तदुक्तं सुबोधिन्यां 'कृत्वाऽतरन् वत्सपदं स्म यत्प्लवा' इत्यस्य। भेदः संसारः। सुबोधिन्यां भूम्नोपीति। न च निरोधलक्षणोक्तनिरोधस्य भूमपदवाच्यत्वेन स्फूर्तिविषयस्य कथं भूमपदवाच्यत्वमितिशङ्क्यम्। भक्तिहंसोक्तदिशा सर्वात्मभावान्तःपातिनोपि स्फूर्तिविषयस्य भूमत्वात्। पूर्वोक्तेति। एवंपदेन पूर्वोक्तेत्यादिरित्यन्वयः। पूर्वपरामर्शार्थिक एवकारः। फलमिति। 'आत्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः, स स्वराड् भवती'ति श्रुत्या

आत्मादेश' इत्यादिना। ततः संयोगभावे सति पूर्वभावेन सर्वोपमर्दिना स्वप्राणादिसर्वतिरोधानेनाग्निमलीलानुपयोगित्वं न शङ्कनीयम्, यतो भगवत एव सर्वसम्पत्तिरित्याशयेन 'तस्य ह वा एतस्यैवं पश्यत' इत्युपक्रम्य 'आत्मत एवेदꣳ सर्व'मित्युक्तवान्। ततः श्लोकैस्तद्भावस्वरूपमुक्त्वैतस्य मूलकारणमाह 'आहारशु-

भाष्यप्रकाशः।

बदति, तेन 'कर्म फलार्थत्वा'दिति न्यायात्तादृशफलजनकं यद्विधात्रयकर्मकं ज्ञानं तदत्र महिमत्वेन फलति। तथाचात्राग्रे आत्मरत्यादिपदै रतिक्रीडामिथुनानन्दानां रसरूपं भगवन्तं भजत एव धर्माणामुक्तत्वात् दृष्टश्रुतविज्ञातभगवत्को रसस्य संयोगविप्रयोगाभ्यां द्विधानुभवविषयत्वाद्विरहभावेऽतिविगाढभावेनोक्तरीत्या सर्वत्र तत्स्फूर्तिमान् भक्तो भूममहिमाधारत्वेन सिद्ध इति तस्य या स्फूर्तिः सोक्तरीतिकसर्वात्मभावव्यभिचारिभावरूपैव, नान्यविधेति तेन भगवति विगाढभावरूपं तत्स्वरूपमेवात्रोक्तं भवतीत्यर्थः।

एतदेव फलतोपि निगमयितुं, 'तस्य ह वा एतस्ये'त्यादेर्ग्रन्थस्य तात्पर्यमाहुः तत इत्यादि। तथाच विरहभावानन्तरं संयोगभावे असति पूर्वभावेन विरहात्मकेन तथेति वृथैवेदं सर्वमिति शङ्कानिरासाय 'तस्य वा एतस्ये'त्यादिना भगवत एव सकाशात् सर्वस्थितिमुक्तवान्, अतो विरहेण सर्वोपमर्दाभावाल्लीलोपयोगसिद्धिरिति, सापि तादृशभक्ततद्भावयोर्गमिकेत्यर्थः। एतदेव सङ्ग्रहग्रन्थतात्पर्यकथनेन दृढीकुर्वन्ति ततः श्लोकैरित्यादि। श्लोकास्तु 'न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्। सर्वꣳ हि पश्यः पश्यति सर्वमाप्नोति सर्वश इति। स एकधा भवति त्रिधा भवति पञ्चधा। सप्तधा नवधा चैव पुनश्चैकादशः स्मृतः। शतं च दश चैकश्च सहस्राणि च विꣳशतिः। आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः। स्मृतिप्रतिलम्भे

रश्मिः।

फलमित्यर्थः। न्यायादिति। अयं न्यायः पूर्वमीमांसायां तृतीयाध्याये वर्तते 'कर्माण्यपि जैमिनिः फलार्थत्वा'दिति सूत्रसिद्धः। कर्माण्यपि शेषाणि फलार्थत्वात् पारार्थ्यस्य शेषलक्षणत्वादिति जैमिनिः सिद्धान्तवक्ता आहेति सूत्रार्थः। विधात्रयेति। 'एवं पश्य'न्नित्यस्य विधात्रयं पश्यन्नित्याद्यर्थात् विधात्रयेत्यादिः। ज्ञानं क्रिया कर्मेति यावत्। ननु कथं ज्ञानं कर्मेति चेत्। न। 'भूवादयो धातव' इत्यस्य सूत्रस्य 'क्रियावाचिनो भ्वादय' इत्यर्थात्। अत्रेति। विरहे। उक्तेति। भाष्योक्तरीतिकनिरोधात्मकसर्वात्मभावेत्यर्थः। तेनेत्यादि। विगाढभावस्यातिविगाढभावस्य रूपं व्यवहारो ज्ञानं येन सर्वात्मभावेनेति बहुव्रीहिः। विरहभावेपीत्याद्युक्तग्रन्थात्। विरहभावेऽतिविगाढभावेनेति पाठः। तत्र विरहभावेऽतिविगाढभावेनेति भाष्यात्। तत्स्वरूपं सर्वात्मभावस्वरूपम्। एवकारेण 'सर्वात्मभावं विदध'दिति नवमस्कन्धवाक्ये 'सर्वस्मिन्नात्मभावो यत्र क्रियाकलाप' इति श्रीधरीग्रन्थेन सर्वस्मिन्नात्मभाव इति समासावेदकश्रीभागवतेन चास्यार्थस्येतरार्थापेक्षया प्रामाणिकत्वादितरेऽर्था व्यावर्त्यन्ते। यथैतेनेत्यादिभाष्ये एवकारेण 'मनसो वृत्तयो नः स्युः कृष्णपादाम्बुजाश्रया' इत्यादिना भ्रमरगीतोक्तश्रीनन्दसर्वात्मभावस्य 'वन्दे नन्दव्रजस्त्रीणा'मित्यत्र नन्दव्रजस्त्रीत्वेन तासामपि वक्तुं शक्यत्वेन 'आत्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्ये'ति श्रुत्या च सर्वः सर्वेन्द्रियसम्बन्धी आत्मनोऽन्तःकरणस्य भाव इति षष्ठीतत्पुरुषगर्भितकर्मधारयार्थस्येतरार्थापेक्षया प्रामाणिकत्वादितरेऽर्था व्यावर्त्यन्ते, तद्वत्। अर्थ इति। तत्रायमर्थ इत्यत्रत्यार्थमुद्दिश्यैतादृशार्थत्वं विधीयत इति तत्रायमर्थ इति न वाक्यान्तरमिति न वाक्यभेदः। गमिकेति। तादृशभक्तभाववान् आत्मतः पुष्टिमार्गीयप्राणादिसर्वसम्पत्तेः।

द्धा'वित्यादिना । प्राणपोषको ह्याहारः, तस्य सदोषत्वे तु न किञ्चित् सिध्यति ।

भाष्यप्रकाशः

सर्वग्रन्थीनां प्रविमोक्ष' इति । अर्थस्तु, पश्यः उक्तविधया भूमदर्शनवान् मृत्युरोगौ न, दुःखभावं च न पश्यति, उतेति पादपूरणे, अथवा पक्षान्तरे, दुःखसत्तामेव न पश्यति, का वार्ता मृत्युरोगयोः । तत्र हेतुमाह । हि यतो हेतोः सर्वं भूमात्मकं पश्यो भूमद्रष्टा पश्यति । तेन दुःखादिकं न पश्यतीति । तस्य फलमाह । सर्वशः सर्वेण सर्वमाप्नोतीति न तस्य पुनः शोकः । प्राप्तौ, प्रकारमाह 'स एकधे'त्यादि । अनेन 'आत्मत आविर्भावतिरोभावा'विति यत्पूर्वमुक्तम्, तस्य प्रकार आविर्भावप्रकारोक्तिद्वारा विवृतः । स भूमैव उक्तप्रकारैः प्रकटो भवन् पश्यस्य सर्वं प्रापयतीति । अथवा । पश्य एव भगवतः सकाशात्तत्तदनुभवार्थं तथा प्रकटीभवतीति बोध्यः । मध्ये, द्विधा चतुर्धा षोढा अष्टधा दशधेत्यादिप्रकारत्यागस्तु तिरोभावप्रकारबोधनार्थः । विशेषतस्तु तादृशाधिकाराभावान्न विवेचितुं शक्य इति नोच्यते । तेन विरहसामयिकदशैव बोध्यत इति हृदयम् । एवमग्रेपि भगवत्कृपया बोध्यम् । एतस्य सर्वस्य मूलकारणमाहारशुद्धिः । सा च 'त्वयोपभुक्तस्रग्गन्धवासोऽलङ्कारचर्चिताः । उच्छिष्टभोजिनो दासास्तव मायां जयेमही'तिप्रकारेण भगवद्दत्तप्रसादेन भवन्ती सत्त्वं शोधयति । तच्छुद्धौ सत्यां ध्रुवा पूर्वावस्थास्मृतिः । तस्याः प्रतिलम्भे अविद्याकामकृतानां सर्वासां ग्रन्थीनां प्रकृष्टो ज्ञानितोऽप्यधिको विमोक्ष इति ज्ञेयः । अतः परं श्रुतिरेतस्य ज्ञानस्य यस्मैकस्मैचिददेयत्वायाह 'तस्मै मृदितकषायाय तमसस्पारं दर्शयति भगवान् सनत्कुमार' इति । तथाच सोपि दर्शयति, न

रश्मिः ।

आत्मसृष्टौ ह्यात्मतस्तादृशभक्तभावरहितानामप्यात्मतः प्राणादिसर्वसम्पत्तेर्हेतोः साधारण्यवारणाय पुष्टिमार्गीयेति । 'निपातः पादपूरणे' इति निरुक्तेनोतपदार्थमुक्त्वा ग्रन्थान्तरानुरोधेनाहुः अथवेति । भूमात्मकं सुखात्मकम् । सर्वेणेति । उपनिषद्व्याख्यानेपि 'बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्' इति पाणिनिसूत्रात् सर्वदाता सर्वशःपदार्थो बहुशःपदार्थ इति सर्वेणेत्यस्य सर्वदातृत्वेनापि प्रकारेणेत्यर्थः । तिरोभावेति । श्रुतार्थापत्त्या तिरोभावप्रकारबोधकः । पूर्वमाविर्भावादेकधा सत्यज्ञानानन्तानन्दरूपम् । इह तु 'सच्चिदानन्दता स्वत' इति निरोधलक्षणग्रन्थवाक्यादेकधा । पश्चाद्द्विधा सत्यानन्दत्वप्रकाराभ्यां तिरोभावः । ज्ञानमात्रप्रकाराभ्यां स्थितिः । एकधायां लीलाविशिष्टत्वविधाभक्तिविशिष्टविधयोः प्रवेशे त्रिधा । तेजोऽवन्नरूपेण वा । सर्वात्मभावे संयोगोपि वर्तत इति गौरत्वश्यामत्वातिश्यामत्वप्रकारैर्वाविर्भवति । एवमग्रेपि । न च 'स्वप्राणादिसर्वतिरोधानेने'ति भाष्यात् प्राणादिप्रकारो वक्तुं योग्य इति शङ्क्यम् । पूर्वं भक्तस्य सायुज्यादिदशायां तथात्वेन पञ्चधा भवनादौ तन्निवेशस्य सुकरत्वाददृष्टः कथं कल्प्येत । विवेचितुमिति । महाकविप्रयोगोऽयं काव्यप्रकाशे । अतो विवेक्तुमिति नोक्तम् । विगतं वं सुखं यस्मिन्निति विवः प्रपञ्चः तस्मिन् अचितुं पूजयितुमिति वा । नोच्यते इति । विशेषाकाङ्क्षायां 'सदा सर्वात्मभावेन भजनीयो व्रजाधिप'इति वदद्भिः प्रभुभिस्तथैव सेवित इति तद्ग्रन्थात् तर्कणीयो विशेषः । तेनेति । प्राणादिसर्वतिरोधायकप्रकारबोधनेन । पूर्वेति । 'जातिं स्मरति पौर्विकी'मिति मनुः । 'सोऽह' मित्याकारिका व्युच्चरणात् पश्चादविद्यासम्बन्धात् पूर्वेति प्रस्थानरत्नाकरे 'जीवस्यानुस्मृतिः सती'ति वाक्यात् । 'स्मृतिर्भक्ति'रिति रामानुजाचार्याः । ग्रन्थीनामविद्याजनितरागादिग्रन्थीनाम् । सर्वात्मभावफलत्वेन 'स स्वराड् भवती'ति श्रुत्युक्तोऽर्थो व्याख्यातः, पूर्वं 'सर्वग्रन्थीनां प्रविमोक्ष'स्तु सिद्धान्तमुक्तावल्यां 'ततः संसारदुःखस्य निवृत्ति' रित्यनेनोक्तः ।

एवं सति भगवदतिरिक्तस्य स्वतो निर्दोषत्वाभावाद्भगवानेव चेत्प्राणपोषको भवेत्, तदा सर्वं सम्पद्यते। स च सर्वात्मभावे सत्येव भवति। स च तथा तद्वरणं विना न भवति। तच्चोक्तकार्यानुमेयमिति वरणलिङ्गं सर्वात्मभावः, तस्यैव

भाष्यप्रकाशः।

तु दातुं शक्नोति, एतस्य भगवत्परमकृपाप्राप्यत्वात्। तर्हि कथनमपि कुत इत्याकाङ्क्षायां सनत्कुमारस्य कृपालुत्वमाह 'तं स्कन्द इत्याचक्षत' इति। योऽसौ वरदानेन शिवस्य पुत्रोपि जातस्तेन तथेत्यर्थः। द्विरुक्तिः समाप्त्यर्था। तदेतत् सर्वं हृदिकृत्य आहुः एवं सतीत्यादि। एवं श्रुतितात्पर्यमुक्त्वा सूत्रं व्याकर्तुमाहुः स चेत्यादि। स भगवाँश्च प्राणपोषकः सर्वात्मभावे सत्येव भवति। स सर्वात्मभावश्च तथा अत्यनुग्रहेण तस्य जीवस्य वरणं विना न भवति, तत् वरणं च भगवत्कृतप्राणपोषणानुमितसर्वात्मभावरूपकार्यानुमेयमिति वरणलिङ्गं सर्वात्मभावः

रश्मिः।

सोऽवान्तरफलमिति तट्टीकायाम्। परमेति। विरहसामयिकसर्वात्मभावदातृत्वं पारम्यं कृपायाम्। तथा च प्रदानवत्सूत्रभाष्यम्, 'सर्वात्मभावस्यानुभवैकवेद्यत्वेन पूर्वमज्ञानेनेति तत्त्वासम्भवेपि स्वत एव कृपया दान'मिति। वरदानेनेति। क्वचित् प्रसिद्धं पुत्रभवनम्। द्विरिति। 'वाक्यादेरामन्त्रितस्यासूयासंमतिकोपकुत्सनभर्त्सनेष्वि'ति सूत्रेण सम्मतौ द्विर्वचनं वाक्यादेरामन्त्रितस्य। 'स्कन्दिर् गतिशोषणयोः'। भ्वादिरनिट्। स्कन्दस्य शिवपुत्रत्वे। वरदातुः पितुर्वा शोकशोषकत्वम्। तद्योगरूढ्या। रूढ्यभावे तु नागयज्ञोपवीतिन्यपि स्कन्द इति प्रयोगापत्तिः पुराणमते, श्रौते तु मते वेदान्तत्वेन योगमात्रादरणात् स्कन्दति प्रकरणात् शोकम्, शोषकः 'तरति शोकमात्मवि'दिति श्रुतेः शोकस्य। इति न रूढ्यपेक्षा। इत्थं च द्विरुक्तिश्चरमवर्णध्वंसरूपसमाप्त्यर्था, श्रौतपौराणमतातिरिक्तमताप्रतिपाद्यत्वात्। श्रुतितात्पर्यमिति। यथाहुरुपनिषद्व्याख्यानकारा विश्वेश्वराः 'पूर्वप्रपाठके श्रेष्ठाधिकारिणं प्रत्येवं ब्रह्मात्मतत्त्वमुपदिष्टम्, अथोत्तरप्रपाठके मध्यमाधिकारिणः प्रति शाखाचन्द्रन्यायेन ब्रह्मणि बुद्धिस्थिरीकरणार्थं सोपानारोहणन्यायेन बोधनार्थं नामादिप्राणान्तसङ्कीर्तनद्वारा भूमाख्यं निरतिशयं तत्त्वं निरूप्यते' इति प्रपाठकाभासे। तद्भाष्ये पूर्वविकल्पसूत्रस्य निराक्रियते, तथापि 'अधीहि भगवो ब्रह्मे'त्यादिप्रपाठके नामादिप्राणान्तसङ्कीर्तनेन माहात्म्यज्ञानस्याक्षुण्णतया पूर्वप्रपाठकेनात्माभेदज्ञानस्य जातत्वेन सर्वात्मभावरूपमुख्यभक्तौ तात्पर्यम्। 'भगवान् ब्रह्म कार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया, तदध्यवसत् कूटस्थो रतिरात्मन्यतो भवे'दिति शास्त्रार्थनिरूपके द्वितीयस्कन्धे वाक्यात्। न च यत्र 'नान्यत् पश्यती'त्यादेस्तु श्रुतेर्मुख्यभक्तावभिधावृत्तिरस्तु, किं तात्पर्येणेति चेत्, न। उक्तश्रुत्यभिधावृत्तिप्रतिपाद्यसर्वात्मभावेऽन्यासां श्रुतीनां तात्पर्यमुक्त्वेत्यर्थात्। अत्तीति। सर्वात्मभावोक्तिसन्दर्भे पुष्टिभक्तेरपि सत्त्वात् पुष्टिभक्तिकारणं सर्वात्मभावस्यापीत्याशयेनोक्तं सामान्यतो विशेषाकाङ्क्षायाम्। परमकृपयेति बोध्यम्, 'स्वत एव कृपया दान'मित्युक्तभाष्यात्। क्वचिद्भाष्ये तेन प्रकारेणेत्यर्थ इति तथापदार्थोपि दृश्यते। विनेति। 'यमेवैष वृणुत' इति श्रुतेः। भगेत्यादि। सर्वात्मभाववान् भगवत्कृतप्राणपोषणात्। इत्येवमनुमितः भक्तः सर्वात्मभाववानित्यनुमितिविषयीकृतः सर्वात्मभावस्तद्रूपं कार्यं तेनानुमेयं वरणवान् सर्वात्मभावादित्येवमनुमातुं योग्यमिति हेतोस्तथा। तस्येत्यादिभाष्यं विवृण्वन्ति स्म। 'प्रभूतार्थे त्वनव्यय'मिति विश्वादाहुः सर्वत इत्यादिभाष्यार्थम्। भूयस्त्वादिति। पदेनानेन भूधातुघटितेन 'फलमत उपपत्ते'रिति सूत्रसंवाद्यर्थं एकादशसर्वस्वसर्वात्मभावमनुभवतां भूम-

भूयस्त्वात् सर्वतोऽधिकत्वात्तद्वरणमेव सर्वतः कालादेर्बलीय इत्यर्थः । यल्लिङ्ग-मेव सर्वतोऽधिकम्, तस्य तथात्वे किं वाच्यमिति कैमुतिकन्यायोपि सूचितः । ज्ञानमार्गीयज्ञानेन प्रतिबन्धशङ्कायामाह तदपीति । उक्तमिति शेषः। 'अन्तरा भूतग्रामवत्स्वात्मन' इति सूत्रेण । तत्रोपपादितमस्माभिः ॥ ४४ ॥

पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत् ॥ ४५ ॥

तत्राह, नात्र वरणलिङ्गभूयस्त्वं निरूप्यते, किन्त्वात्मज्ञानप्रकारविशेष एव । तथाहि । पूर्वप्रपाठक आत्मना सहाभेदः सर्वस्य निरूपितः श्वेतकेतूपाख्यानेन, अग्रिमे च 'सोऽहं भगवो मन्त्रविदेवास्मि नात्मवि'दित्यादिना नारदस्यात्मजिज्ञासैवोक्ता । एवं सत्युत्तरमपि तद्विषयकमेव भवितुमर्हति, अत आत्मप्रकरणत्वादुभयोः प्रपाठकयोः पूर्वस्मिन् यदभेद उक्तः, तस्यैव स्वरूपं 'आत्मत एवेद९ सर्व'-

भाष्यप्रकाशः ।

सर्वतोऽधिक इति तस्य वरणमेव कालादिभ्यो बलिष्ठम् । अतः कालादिरूपप्रतिबन्धकसद्भावेपि तत्कार्यं भवत्येवेत्यर्थः । एवमत्र प्रदानवत्सूत्रोक्तसर्वात्मभावस्वरूपं सफलं श्रुत्या विवेचितं बोध्यम् । हिशब्दसूचितमर्थमाहुः यल्लिङ्गेत्यादि । सूचित इति । निश्चयार्थकहिशब्दप्रयोगेण सूचितः । सूत्रशेषमवतारयन्ति ज्ञानमार्गीयेत्यादि । आत्मादेशे 'आत्मैवेदं सर्व'मिति सर्वस्यात्मत्वेन मानं श्रावितम् । तथा सति स्वात्मन्यपि तदभेदो भासत्येव । भाते च तस्मिन् विरहभावप्रतिबन्धादुक्तरूपः सर्वात्मभावो ज्ञानमार्गीयज्ञानप्रतिबद्धो नोदेष्यतीति शङ्कायामाहेत्यर्थः । समाधिं व्याकुर्वन्ति अन्तरेत्यादि । पूर्वं भजनानन्दरूपफलदित्सायां सत्यां हि भगवता विरहभावः सम्पाद्यत इति तत्प्रतिबन्धकं न क्रियत इति तस्मिन्नधिकरण एवोपपादितमिति सा शङ्का तदनुसन्धानेनैव निवार्येत्यर्थः ॥ ४४ ॥

पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत् ॥ ४५ ॥ पूर्वोक्तमर्थं दृढीकर्तुं सूत्रद्वयेनाशङ्कते इत्याशयेनावतारयन्ति तत्राहेत्यादि । उक्त इतीत्यन्तम् । तत्राहेति । उक्तेऽर्थे पूर्वपक्षी चोदयति निरूपित इति । 'ऐतदात्म्यमिदं सर्व'मिति महावाक्ये निरूपितः । उत्त-

रश्मिः ।

लक्षणं स्मार्यते । तेन विषयः प्रपाठको भवति । भूमपदस्य भूधातुघटितत्वात् । सर्वत इति । इतिहेतौ । तस्य भक्तस्य तत् वरणमेव वक्ष्यमाणकैमुतिकन्यायप्राप्तमेव । कालादिभ्य इत्यत्रादिपदेनादृष्टशीघ्रबोधोक्तसेवाचक्रादि संगृह्यते । भवत्येवेत्येवकारोऽन्यत्राहृष्टसिद्धान्तेऽयोगव्यवच्छेदकः । नीलं सरोजं भवत्येवेतिवत् । एवमित्यादि । विवेचितमिति । महाकविप्रयोगादिदृ । विवे अचितमिति वा । 'अञ्च गतिपूजनयोः ।' 'अच इत्येके' इत्यस्य सेट्त्वात् । हीति । ननु सर्वात्मभावनिरूपणस्योपक्रान्तत्वात् सर्वात्मभावस्य कालादिभ्यो बलिष्ठत्वेन तत् सर्वात्मभाव एव कालादेर्बलीय इति भाष्यपाठापत्तिः, सा च सर्वात्मभावस्य पुल्लिङ्गत्वादयुक्ता । तत्पदस्याव्ययत्वेन तदनुरोधेन बलीय इत्येव नपुंसकत्वसमर्थने बलीयःपदस्य विशेष्यनिघ्नत्वेन बलीयानिति भाष्यपाठापत्तिरिमामाशङ्कां परिजिहीर्षवो हीत्यादिः । सूचितमिति । वाच्यार्थं तु निश्चयात्मकं स्वयमेव वक्ष्यन्ति तस्मिन्निति । सायुज्यात्मकाभेदातिरिक्तेऽभेदे । ज्ञानमार्गीयेति । ज्ञानविशेषणाद्भाष्ये ॥ ४४ ॥

पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत् ॥ ४५ ॥ तत्राहेति । क्वचिद्भाष्येऽत्राहेति पाठः । अर्थस्त्वेक एव । चोदयतीति । स्मेति शेषः । भाष्ये आहेति लिडन्तप्रयोगात्

मित्यन्तेनोक्तमिति पूर्वोक्तप्रकारादन्येन प्रकारेणात्माभेद एव सर्वस्योक्तः । तदेवाह । पूर्वस्य पूर्वप्रपाठकोक्तात्माभेदज्ञानस्य विकल्पः प्रकारभेद एवाग्रेपि निरूप्यते । तत्रोपपत्तिमाह प्रकरणादिति । एतत्तूपपादितम् । अत्र सिद्धान्तिसम्मतमेव दृष्टान्तमाह तद्धृदयसंवादार्थं क्रियामानसवदिति । यथा पूजनप्रकरणे बाह्यं तत्क्रियारूपमुच्यते, आन्तरं तु मनोव्यापाररूपमुच्यते । न ह्येतावतान्यतरस्य तद्भिन्नत्वं वक्तुं शक्यम् । प्रकरणभेदात् । तथेहापीत्यर्थः ॥ ४५ ॥

अतिदेशाच्च ॥ ४६ ॥

नामरूपात्मकं हि जगत्, तत् पूर्वं सर्वशब्देनानूद्य तस्मिन् ब्रह्माभेदो निरूपितः, अग्रे तु ऋगादिविद्या अनूद्य नामात्मकब्रह्मत्वं तत्रातिदिश्यते ।

भाष्यप्रकाशः ।

रमिति । सनत्कुमारोक्तं प्रत्युत्तरम् । व्याकुर्वन्ति तदेवाहेत्यादि । अग्रेपीति । नवमेऽस्मिन् प्रपाठके । उपपादितमिति । अवतारणग्रन्थ उपपादितम् । बाह्यं तदिति । बाह्यं पूजनम् । तद्भिन्नत्वमिति । पूजनभिन्नत्वम् ॥ ४५ ॥

अतिदेशाच्च ॥ ४६ ॥ व्याकुर्वन्ति नामेत्यादि । नामरूपात्मकं हि जगत्, तत् पूर्वं पूर्वस्मिन् प्रपाठके 'ऐतदात्म्यमिदं सर्वं'मिति सर्वपदेनानूद्य, तस्मिन् ब्रह्माभेद ऐतदात्म्यपदेन निरूपितः । अग्रे अस्मिन् प्रपाठके तु, 'यद्वै किञ्चाध्यगीष्ठा' इत्यादिना नारदोक्ता ऋगादिविद्या

रश्मिः ।

अस्य च तद्व्याख्यानत्वात् । धातूनामनेकार्थत्वात् । भाष्ये । अन्येनेति । शाखासंदेशे चन्द्रशाखाशब्दवज्जीवान्तर्यामितया जीवसदेशे ब्रह्मणि त्वमिति व्यपदेशः । 'य आत्मनि तिष्ठ'न्नित्यादिश्रुतेरिति प्रकारेणेत्यर्थः । यद्वा । 'ब्राह्मणोऽस्य मुखमासी'दितिवत्ततो जातत्वात्तदिति व्यपदेशः । 'इग्यणः सम्प्रसारण'मित्यत्र 'काकात् जातः काकः, श्येनात् जातः श्येनः, एवं सम्प्रसारणात् जातो वर्णः सम्प्रसारण'मिति महाभाष्योक्तेः । 'सन्मूलाः सौम्येमाः सर्वाः प्रजाः' इति वाक्यशेषाच्च । 'ब्राह्मणो मुखमित्येवं मुखात् जातत्वहेतुतः । यथावदच्छ्रुतिस्तद्वज्जीवो ब्रह्मेति वा भवे'दितिस्मृतेश्चेति प्रकारेणेत्यर्थः । अन्येपि प्रकारा भक्तिमार्तण्डे सन्तीति ततोऽवधेयाः । परन्तु शाखाचन्द्रन्यायः शाङ्कराणां प्रसिद्धः । ततो जातत्वनिबन्धनं तदिति पक्षोपि 'आत्मत एवेद५ सर्वं'मिति श्रुतिमापातत उपजीवति । ततो द्वौ प्रकारौ युक्तौ ।

प्रकृते । नवम इति । नवमप्रपाठक इति वाक्यात् । अङ्कतः सप्तमः । अवेति । तत्राहेत्याद्यवतारणग्रन्थ इत्यर्थः । क्वचित्पुस्तके 'तथाचायमर्थ इत्याद्याहे'त्यन्तो ग्रन्थः, स उपेक्ष्यः, मूलपुस्तकेऽदर्शनात् । सर्वात्मभावप्रकरणानादरे बीजाभावात् । ज्ञानप्रकरणस्य पूर्वपक्षिसम्बन्धित्वेपि 'हि आत्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्ये'ति समासिस्थश्रुतेः 'एतज्ज्ञानमिति प्रोक्त'मित्यव्यभिचारिणीं भक्तिं मध्येकृत्य गीतावाक्याच्च 'यत्र नान्यत् पश्यती'त्यस्या असन्दिग्धत्वान्महाप्रकरणाविरोधात् सर्वात्मभावस्य गीतामते ज्ञानत्वेन । एतत्तदेवेति । महाप्रकरणत्वमेव । स्पष्टत्वान्न व्याक्रियते ॥ ४५ ॥

अतिदेशाच्च ॥ ४६ ॥ ऋगादिविद्येति । अत्र छान्दोग्ये विद्यापदाभावेपि मुण्डके 'द्वेविद्ये

१. 'तथाचायमर्थः । अत्र हि वरणलिङ्गं सर्वात्मभावो न भूमलक्षणवाक्यमात्रेण सिध्यति, येन प्रकरणमनादृत्य स गृह्येत, किन्तु तदारभ्य 'आत्मत एवेदं सर्वं'मित्यन्तेन सन्दर्भेण, अतः सन्दर्भो यथा सर्वात्मभावबोधकमवान्तरप्रकरणम्, तथा प्रपाठकद्वयात्मबोधकं महाप्रकरणम् । तदा भूमलक्षणवाक्यस्य सन्दिग्धत्वात् प्रपाठकद्वयरूपं महाप्रकरणमेवानुसर्तव्यमित्यर्थः । एतदेव दृढीकर्तुं हेत्वन्तरमाह ।' अयं भागः श्रीपुरुषोत्तमैः स्वयमेकवारं लिखित्वा पश्चात् लोपितो मूलपुस्तके दृश्यते ।

'नामैवैतन्नामोपास्वे'ति । इतोपि हेतोर्ज्ञानप्रकारभेद एवाग्रे निरूप्यत इत्यर्थः ॥४६॥

विद्यैव तु निर्धारणात् ॥ ४७ ॥

तुशब्दः पूर्वपक्षं व्यावर्तयति । यदुक्तं सनत्कुमारनारदसंवाद आत्मज्ञानप्रकारविशेष एव निरूप्यत इति, तन्न, किन्तु विद्यैव निरूप्यत इति ।

अत्रेदमाकूतम् । 'नायमात्मे'ति श्रुतिरितरसाधननिषेधपूर्वकं वरणस्य

---

भाष्यप्रकाशः ।

अनूद्य नामात्मकब्रह्मत्वं तत्रातिदिश्यते । तथैव मनःप्रभृतिरूपात्मकं जगत्तत्तच्छब्देनानूद्य तत्तदात्मकब्रह्मत्वं तत्रादिश्यते । अतो यथा कौण्डपायिनां सत्रे 'मासमग्निहोत्रं जुहोती'त्यग्निहोत्रनाम्ना प्राकृताग्निहोत्रधर्मास्तत्रादिश्यन्ते, तथात्र 'नामोपास्वेति स यो नाम ब्रह्मेत्युपास्त' इत्यादिवाक्यैर्नामादीञ्जगद्रूपाननूद्य नामादिशब्दैस्तत्तदात्मकब्रह्मत्वं तेष्वतिदिश्यत इत्यतिदेशादपि हेतोर्ज्ञानप्रकारविशेष एवाग्रेऽस्मिन् प्रपाठके निरूप्यत इत्यर्थः ॥ ४६ ॥

विद्यैव तु निर्धारणात् ॥ ४७ ॥ उक्तं पूर्वपक्षं सूत्रव्याख्यानेन निरस्यन्ति तुशब्द इत्यादि । ननु विद्याशब्दो ज्ञानसामान्ये प्रसिद्धः, सर्वात्मभावस्वरूपे ज्ञानविशेषे कथं नियम्यत इत्याकाङ्क्षायां तदुपपादनाय वरणादिश्रुत्येकवाक्यतया प्रकृतश्रुतितात्पर्यं वक्तुं पूर्वं वरणश्रुतिं व्याकुर्वन्ति अत्रेत्यादि । अस्यां उक्तायां श्रुतौ वरणश्रुत्यविरुद्धं तात्पर्यं तस्माद्वरणश्रुत्यर्थं उच्यत इत्यर्थः । वरणश्रुतिस्तु 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते

रश्मिः ।

वेदितव्ये' इत्युपक्रम्य, 'तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद' इति श्रुतेर्विद्यापदप्रयोगोऽस्ति । अतिदिश्यत इति । 'नामैवैतन्नामोपास्वे'ति श्रुत्यातिदिश्यत इत्यर्थः । नन्वत्र नामत्वमतिदिश्यते, न नामात्मकब्रह्मत्वमिति चेत् । न । 'स यो नामब्रह्मेत्युपास्त' इति पूर्वार्थानुवादकश्रुत्या नामोपासनस्य नामात्मकब्रह्मोपासनत्वात् । अतिदेशस्तु अन्यत्र । 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति प्रतिपाद्ये ब्रह्मणि प्रतीतस्य ब्रह्मत्वस्यान्यत्र नाम्नि कार्यत उपासनायाः प्राप्तिः । तदुक्तं पूर्वाचार्यैः । 'अन्यत्रैव प्रतीतायाः कृत्स्नाया धर्मसन्ततेः । अन्यत्र कार्यतः प्राप्तिरतिदेशोऽभिधीयत' इति । प्राकृताद्ब्रह्मोपासनाख्यात् तत्समानेषु नामोपासनकर्मसु धर्मप्रवेश आज्ञाविषयप्रवेशो 'नामैवैतन्नामोपास्वे'त्यनेन स्यात् स वेदो वातिदेशः । 'प्राकृतात् कर्मणो यस्मात् तत्समानेषु कर्मसु । धर्मप्रवेशो येन स्यात् सोतिदेश इति स्मृत' इति तैरेव । तत्तच्छब्देनेति । मनःप्रभृतिशब्देन तच्छब्दस्य द्विरुक्तावप्यर्थस्यैक्यात् । स च स चेति विग्रहे एकशेषापत्तिः । तत्तदिति । मनःप्रभृत्यात्मकब्रह्मत्वम् । अत इति । अतिदेशात् । मासमिति । अत्यन्तसंयोगे द्वितीया । अग्निहोत्रेति । द्वितीयलक्षणादेरणातिदेशरूपेण । तत्रेति । मासाग्निहोत्रे । अतिदिश्यन्त इति । प्रथमलक्षणेन पूर्वतन्त्रे सप्तमस्य तृतीये पादे उक्ताधिकरणेऽतिदेशा धर्मनिष्ठाः क्रियन्ते । सूत्रं तु उक्तम्, 'क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्या'दिति । चतुःसूत्रमिदमधिकरणं भाष्ये प्रसिद्धम् । भाष्ये 'सायमग्निहोत्रं जुहोती'ति पपाठ भाष्यकृत् । ज्ञानेत्यादि । ब्रह्मत्वप्रकारकनाममनःसङ्कल्पादिविशेष्यकज्ञानप्रकारविशेष इत्यर्थः ॥ ४६ ॥

विद्यैव तु निर्धारणात् ॥ ४७ ॥ इदम्पदार्थमाहुः वरणेति । आकूतपदार्थमाहुः तात्पर्यमिति । भिन्नवाक्यत्वार्थं शेषं पूरयन्ति स्म तस्मादिति । उक्तस्येति । श्रुतिरुक्त्वा वृत-

**साधनत्वमुक्त्वा वृतलभ्यत्वे हेतुं वदन् वरणविषयमप्याह 'तस्यैष आत्मा वृणुते तनुं स्वा'मिति। तस्य वृतस्यात्मन एष भगवानात्मा, अत एव तत्तनूरूपः स जीवात्मा। तद्वरणस्यावश्यकत्वज्ञापनाय स्वामिति। सर्वो हि स्वकीयां तनुमात्मी-**

भाष्यप्रकाशः।

तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वा'मिति मुण्डके कठवल्ल्यां चास्ति। विवृणुत इति पाठान्तरं चास्ति। उक्त्वेति पादत्रयेणोक्त्वा। अत एवेति। भगवतो वृतात्मात्मत्वादेव। तथाच तस्यैष आत्मा समर्थोत्तं स्वां तनुं वृणुत इत्यन्वयः। ननु माध्यन्दिनानामन्तर्यामिब्राह्मणे 'यस्यात्मा शरीर'मिति सामान्यत आत्ममात्रस्य ब्रह्मशरीरत्वश्रावणात् कथं वृतस्यैव तत्तनूरूपत्वमित्याकाङ्क्षायामाहुः तद्वरणस्येत्यादि। तथाच यद्यपि तत्र सामान्यत आत्ममात्रस्य शरीरत्वं श्रावितम्, तथापि 'य आत्मानमन्तरो यमयती'ति नियन्तव्यत्वायैव साधारण्येनैव श्रावितम्, न तु स्वकीयत्वकथनपूर्वकम्। अतः सर्वेषु शरीरत्वे साधारणेपि यं स्वीयत्वेनालोचितवाँस्तमेव वृणुत इत्यर्थः। विवृणुते इति पाठेपि विशेषेण वृणुत इत्यर्थः।

ननु विवरणपदस्य प्रकाशनार्थकत्वाद्विवृणुत इति पाठेऽयमर्थो न लभ्यते, किन्तु यं वृणुते तस्य स्वां तनुं प्रकाशयतीत्येवार्थो लभ्यत इति चेत्। मैवम्। तस्मिन्नपि पक्षे तनुविवरणलिङ्गेनोक्तस्यार्थस्य लाभात्। तथाहि। सर्वेषां जीवानां तौल्येऽप्यत्र 'यं वृणुत' इति विशेषकथनाद्वरणीये कश्चिद्विशेषो विवक्षितः। सोपि न जीवे साधारणशास्त्रीयसाधनजन्मा, पूर्वाधासङ्गत्यापत्तेः। नापि साधनाभावजन्मा, पामरपशुकीटमात्रेषु तदापत्तेः, साधनशास्त्रवैयर्थ्यापत्तेश्च। अतोन्यथानुपपत्त्या भगवदालोचनजन्मैव वाच्यः। सोपि न ज्ञानिभक्तसाधारणः। भावभेदानुपपत्तेः। 'स्वं विवृणुत' इत्येतावतैव चारितार्थ्येन तनुपदवैयर्थ्यापत्तेश्च। अतस्तनुपदानुरोधात् साकारस्यैव प्रकाशो वक्तव्यः। स तु प्रायो भक्तानामेवेति वरणविषयतया सुखेनैव भक्तो लभ्यते।

रश्मिः।

लभ्यत्वे हेतुं स्वात्मत्वम्, स्वात्मा ज्ञानिप्रभृतिभिर्लभ्यत इत्यलभ्यस्य लाभो वृतभक्तस्योक्तः। वदन्निति छान्दसं पुंस्त्वम्। श्रुतीनां वा सर्वात्मभावकरणात् भगवत्सेवानुकूल्यरूपं पुंस्त्वं जातमिति लीलायां प्रसादशक्तेः श्रुतिषु सत्त्वेन स्त्रीत्वविशिष्टशक्त्यवच्छिन्नश्रुतिः पुंस्त्वविशिष्टवदनकर्त्री समानाधिकरणेत्यर्थः। तादृशं पुंस्त्वं टिप्पण्यां तदादाय वेदाः प्रमाणम्, शतं ब्राह्मणा इतिवदुपपाद्यम्। सामानाधिकरण्यं च भिन्नप्रवृत्तिनिमित्तत्वे सत्येकार्थबोधकत्वम्। 'लटः शतृशानचावप्रथमासमानाधिकरणे' इति सूत्रेण वदन्नित्यत्र शता शाब्दबोधेपि सामानाधिकरण्यमुपपादयति। वरणविषयं तनुम्। द्वितीयाया विषयार्थकत्वात्। अत्रैव श्रुतिर्वदन्निति प्रयोगः साधुः। अन्यथा मर्यादाभङ्गप्रसङ्गात्। भाष्यप्रामाण्याद्वैतादृशः प्रयोगः। वृणुत इत्यर्थ इति। न च सिद्धान्तान्तर एकव्यापकजीवपक्षस्योक्तत्वादवृतानामप्यात्मनां शरीरत्वेन वृतलभ्यालभ्यलाभापत्तिरिति शङ्क्यम्। अरूपवत्सूत्रसिद्धसिद्धान्तान्तरेपि वृतत्वाच्छेदेनालभ्यलाभाङ्गीकारात्। स्वमिति। आत्मीयम्। स्वामित्युक्ते स्त्रीत्वविशिष्टस्य स्यात्, तनुविशेषणत्वे तु भिन्नलिङ्गस्यादर्शनेन स्वामित्येव। सामान्ये नपुंसकत्वस्या(स)गविकगतित्वात्। प्राय इति। सिद्धान्तमुक्तावलिटीकाप्रामाण्यात् 'ज्ञानिभक्तौ चेद्विशेषतोऽनुगृह्णाति पुष्टिमार्गीयां भक्तिं प्राप्नुतः। आदाविति भक्त्या व्यवधानम्, तथापि नलकूबरमणिग्रीववत् कदाचित् तयाऽव्यवधानेपि साकारप्रकाशः। कर्मठस्य सुरज्येष्ठस्यासुरव्यामोहलीलासामयिकसाकारप्रकाशः, अतः प्राय इत्युक्तम्। एवकारो 'नैषा

१. हेतुत्वम्।

यत्वेनात्मत्वेन च वृणुते, तद्विशिष्ट एव भोगान् भुङ्क्ते । अत एव तैत्तिरीयकोपनिषत्स्वपि 'ब्रह्मविदाप्नोति पर'मिति सामान्यतो ब्रह्मविदः परब्रह्मप्राप्तिमुक्त्वा, अग्रिमर्चा विशेषतोऽवदन् । 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति परब्रह्मस्वरूपमुक्त्वा, 'यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते'त्युक्तम् । एतद्यथा तथानन्दमयाधिकरणे प्रपञ्चितमस्माभिः ।

---

भाष्यप्रकाशः ।

यत्तु केचिदस्मिन् मन्त्रे 'यमेव परनात्मानमेष विद्वान् वृणुते प्राप्तुमिच्छति, तेन वरणेन एष परमात्मा लभ्यः, नान्येन साधनान्तरेण । नित्योपलब्धस्वभावत्वात् । कीदृशोऽसावात्मलाभ इति, उच्यते । तस्य एष आत्माऽविद्यासंछन्नः स्वां परां तनुमात्मतत्त्वस्वरूपं प्रकाशयति । प्रकाशे घटादिरिव विद्यायां सत्यामाविर्भवतीति मुण्डके व्याचक्रुः । यदपि काठके यमेव स्वमात्मानमेष साधको वृणुते प्रार्थयते तेनैवात्मना वरित्रा स्वयमात्मा लभ्यः ज्ञायते इत्येतत् । निष्कामश्चात्मानमेव प्रार्थयते । आत्मनैवात्मलाभ इत्यर्थः । कथं लभ्यत इति । उच्यते । तस्यात्मकामस्यैष आत्मा विवृणुते प्रकाशयति पारमार्थिकीं तनुं स्वां स्वकीयाम् । स्वं याथार्थ्यमित्यर्थ इति । तत्रापि तनुपदवैयर्थ्यस्य दुर्वारत्वात् वरणीयवरित्रोरभेदाङ्गीकाराच्च व्याख्येयविरोधः स्फुट एव । किञ्च । गीतायां 'एवं सततयुक्ता य' इत्यर्जुनप्रश्ने, भगवता 'मय्यावेश्य मनो ये मा'मित्युत्तरेण, 'चतुर्विधा भजन्ते मा'मिति भजनमुपक्रम्यैव, 'ज्ञानी त्वात्मैव मे मत'मिति ज्ञानिभक्तस्यैवात्मकत्वकथनेन, 'तपस्विभ्योऽधिको योगी'ति सन्दर्भे शुष्कज्ञान्यपेक्षया योगिन उत्कर्षमुक्त्वा, 'श्रद्धावान् भजते यो मां स मे युक्ततमो मत' इति भक्तोत्कर्षकथने चास्मदुक्तार्थस्यैवोपोद्बलनाच्च तदसङ्गतम् । अतो विवरणपदस्य प्रकाशनार्थकत्वपक्षेपि तनुप्रकाशलिङ्गेन भक्तस्यैव वरणविषयत्वं निश्चीयत इति तेष्वेव स्वीयत्वं सिध्यतीति पूर्वोक्तप्रकारे न कश्चिद्दोष इति हृदिकृत्योक्तार्थदार्ढ्याय श्रुत्यन्तरमाहुः अत एवेत्यादि । तथाच यदि लाभपदार्थः प्रकाशनरूपः श्रुत्यभिप्रेतः स्यात्, तदास्यामृचि प्राप्तिपदार्थः कामभोगरूपो नोच्येत । अतो न पूर्वोक्तेऽर्थे विप्रतिपत्तव्यमित्यर्थः । एतच्छ्रुतावपि विप्रतिपत्तिश्चेत्, तदा पूर्वग्रन्थमवलोक्य सा निरसनीयेत्याशयेन आहुः एतदित्यादि । आनन्दमयाधिकरणे अक्षरादुत्तमस्य रसरूपस्यैव

रश्मिः ।

तर्केण मतिरापनेये'ति विरोधकम् । 'आत्मा वा अरे द्रष्टव्यः श्रोतव्य' इत्यादिश्रुतौ वाराहवाक्याद्भक्तिप्रवेशवत् वरणश्रुतावपि भक्तिप्रवेशस्य न्याय्यत्वेन तर्काभावाद्भूते । 'वृङ् सम्भक्तौ' क्र्यादिः संविभजनार्थ इति स नोपात्तः । ननु परेषामयमर्थः, न तु वैयाकरणानाम्, सम्यक् सेवारूपसर्वात्मभावः सम्भक्तिपदार्थोऽस्तु, श्रुतौ विकरणव्यत्ययोऽस्त्विति चेत् । न । भक्तिमार्गे यद्वरणं स्वीयत्वेनाङ्गीकाररूपमिति भाष्ये विकरणव्यत्ययानङ्गीकारात् । न चेदमप्रयोजकमिति वाच्यम् । 'आचार्यवान् पुरुषो वेदे'ति श्रुतेः । इच्छतीति । ज्ञानवान् इच्छात इति ज्ञानमनुमेयम् । य इच्छति, स यतिष्यत एव । इतीति । इमं प्रश्नरूपं हेतुं विचार्य श्रुत्योच्यते इत्यर्थः । प्रकाश इति । सति सप्तमी । घटादिरिति । पूर्वं विद्यमान एवात्मतत्त्वं प्रकाशयति, तद्वत् । घटादेरुपादानविषमसत्ताकान्यथाभावरूपविवर्तत्वात् । अभेदेति । ननु भवतामप्यभेदाङ्गीकारोऽस्त्येवेति चेत् । न । भावाद्वैतेन पटस्तन्तव इत्यभेदप्रत्ययेपि तन्तवः पट इत्यप्रत्ययात् तादृशभेदमादायोपपत्तेः । नन्वभेदमादाय पाक्षिको दोष इति चेत् । न । उपष्टब्धत्वादित्याहुः किञ्चेति । रसरूपस्येति । एतेनानन्दमयाधिकरणोक्तः प्राप्तिपदार्थः, न

भाष्यप्रकाशः ।

परशब्दार्थत्वेन निर्णीतत्वात् परमव्योमत्वेन चाक्षरस्य तद्धाम्नो निर्णीतत्वाद्वरणेनैव तत्प्राप्तेरपि विचारितत्वात्तथेत्यर्थः ।

ननु वरणश्रुतिः काठके 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्, अन्यत्र भूताच्च भव्याच्च यत्तत् पश्यसि तद्वदे'ति प्रश्ने, 'सर्वे वेदा यत्पदमामनन्ती'त्यादिना, 'एतद्ध्येवाक्षरं ब्रह्मे'ति प्रकृत्य पठिता । मुण्डकेपि 'अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्य'मित्यक्षरमेवोपक्रम्य पठिता । एवं सति पुरुषोत्तमप्रसङ्गस्य कुत्राप्यदर्शनात् कथमत्रैवं भगवत्परत्वेन व्याख्यायत इति चेत् ।

अनवधाय वदसि । काठके सर्ववेदवेद्यत्वं परस्यैवोच्यते । तच्च वाच्यवाचकाभेदविवक्षया प्रणवे वक्तुमक्षरपदेन प्रणवं परामृश्य, तत्र ब्रह्मत्वमुपासनासाधनत्वाय विधीयते मन्त्रद्वयेन । ततो 'न जायते न म्रियते वे'ति मन्त्रद्वयेनोपासकस्वरूपमुक्त्वा, 'अणोरणीयान् महतो महीया'नित्यादिमन्त्रत्रयेण तस्य परस्यात्मनो विरुद्धधर्माश्रयत्वादिकमुक्त्वा, तस्य ज्ञानं कथमित्याकाङ्क्षायां 'नायमात्मे'ति पठ्यते । अतो नात्र तद्गन्धः । मुण्डकेपि प्रथमे मुण्डके 'यत्तदद्रेश्यमग्राह्य'मित्यादिना सर्वकारणत्वेनाक्षरं प्रस्तुतम्, द्वितीयेपि 'यथा सुदीप्तात् पावकाद्विस्फुलिङ्गा' इति मन्त्रेण तस्मात् सजातीयविजातीयसृष्टिमुक्त्वा, 'दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः पर' इति मन्त्रे पूर्वोक्तादक्षरात् परतः परोऽतिरिक्त उक्तः । तृतीयेपि 'द्वा सुपर्णे'त्यनेनान्तर्यामितया तमेव परामृश्य ततो 'जुष्टं यदा पश्यत्यन्यमीश'मित्यादिना तद्दर्शनफलमुक्त्वा, ततो 'ज्ञानप्रसादेने'त्यनेन निष्कलध्यानात्तद्दर्शनमुक्त्वा, ततो ज्ञानप्रसादेपि न स्वसा-

रश्मिः ।

तु व्यापनरूप इति ध्वन्यते । न च कामिनामालिङ्गने कामिन्यादिव्याप्तीच्छासत्त्वा'दश्नुत' इत्यत्र रसरूपत्वेपि व्याप्त्यर्थोऽस्त्विति वाच्यम् । 'लोकवत्तु लीलाकैवल्य'मिति सूत्रात् तावत्याः शरीरप्रतिबद्धाया व्याप्तेः स्वीकारात् । अनवेति । 'एतद्ध्येवाक्षरं ब्रह्म, एतद्ध्येवाक्षरं पर'मिति श्रुतौ ब्रह्मपरयोः शब्दवैलक्ष्याद्धितवैलक्षण्यमनवधाय । परस्यैवेति । अनिदमित्थतयेति शेषम् । ईक्षत्यधिकरण उपपादनादेवकारोऽवधारणे । न'न्वेतद्ध्येवाक्षरं ब्रह्मे'त्यनेन सर्ववेदवेद्यत्वमक्षरेपि श्रुत्योच्यते, तत्राहुः तच्चेत्यादि । प्रणव इति । 'नवीनभावजनक' इत्यादिगायत्र्यर्थकारिकातस्तादृशोऽर्थो ध्वन्यते । अकार उकारो मकारोऽर्धमात्रा चेत्येतच्चतुष्टयात्मके ब्रह्मरुद्रविष्णुकृष्णरूपे वाचक इत्यर्थः । विधीयते, नत्वारोप्यते । तथा च परस्येक्षत्यधिकरणे कृष्णस्य 'यतो वाचो निवर्तन्ते' इति श्रुतिप्राप्ताशब्दत्वं निषिध्यते तद्द्वारानिदमित्थतया सर्ववेदवेद्यत्वं इतरत्र तु वर्तत एवेदमित्थतया सर्ववेदवेद्यत्वम् । श्रुतिश्च 'ॐमित्येतत् । एतद्ध्येवाक्षरं ब्रह्म, एतद्ध्येवाक्षरं पर'मिति । परं कृष्णरूपम् । परपदार्थस्यानन्दमयाधिकरणे निरूपणात् । एतच्चादृश्यत्वाधिकरणे समन्वयाध्यायद्वितीयपादे निपुणतरमुपपादितम् । मन्त्रेति । 'एतद्ध्येवाक्षरं ब्रह्म, एतद्ध्येवाक्षरं परम् । एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छसि तस्य तत् । एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् । एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते' इति मन्त्रद्वयेन । तस्य प्रणवार्धमात्राप्रतिपाद्यस्य । ज्ञानमिति । फलात्मकम्, न तु साधनात्मकम् । सर्वेति । तथा च सर्वकारणे निरङ्कुशजगज्जन्मादिकर्तृत्वेन शास्त्रप्रतिपाद्यत्वरूपलक्षणसङ्गत्या परमे ब्रह्माक्षरात्मकं प्रस्तुतमित्यर्थः । अतिरिक्त इति । गोकुले नित्यलीलाकर्ता । 'तानि परे तथा ह्याहे'ति व्याससूत्रात् । इतीति । शङ्करभाष्ये प्रतिपाद्यान्तराभावादिति भावः । छान्दोग्ये सामशाखायां काठकं यजुःशाखायां मुण्डकं शाखान्तरम् ।

किञ्च । पुरुषोत्तमलाभे हेतुभूतं तु भक्तिमार्गे यद्वरणं स्वीयत्वेनाङ्गीकाररूपं

भाष्यप्रकाशः ।

मर्थ्येन पश्यति, किन्तु तत्सामर्थ्येनैवेत्याशयेन 'नायमात्मे'त्यादिकं पठ्यते । तेनोभयत्रापि पुरुषोत्तम एव प्रकृत इत्यनवद्यम् ।

एतदेव गीतायामुपबृंहितम् । 'द्वाविमौ पुरुषौ लोक' इत्यारभ्य, 'प्रथितः पुरुषोत्तम' इत्यन्तेन ।

ननु तथापि शाखान्तरस्थस्य वाक्यस्य कथमेतच्छेषत्वमिति चेत्, ऐकार्थ्यादिति ब्रूमः । 'हानौ तूपायने'ति सूत्रे, कुशाच्छन्दःस्तुत्युपगानदृष्टान्तेषु भाल्लविनां 'कुशा वानस्पत्या स्थिता मा पाते'ति निगमस्थवाक्यशेषत्व'मौदुम्बर्यः कुशा' इति शाट्यायनिवाक्ये सर्वैर्भाष्यकारैरादृतम् । जैमिनिना च बाधलक्षणे 'अपि तु वाक्यशेषः स्यादन्याय्यत्वात् विकल्पस्य विधीनामेकदेशः स्या'दिति सूत्रे 'नानुयाजेष्वि'ति वाक्यस्य 'आश्रावयाऽस्तु श्रौषट् यज ये यजामहे वष'डितिदूरस्थवाक्यशेषत्वमादृतम् । तस्मान्नात्र शङ्कालेशः ।

ननु तथापि तेषु तेषु भक्तेषु वरणमपि तत्तदनुरूपमनेकविधमिति रसमार्गीयमेवात्र कथं ग्रहीतुं शक्यत इत्याकाङ्क्षायामाहुः किञ्चेत्यादि । तथाचाग्रिमश्रुत्या तथावसीयत इत्यर्थः । श्रुतिस्तु

रश्मिः ।

कुशेति । 'कुशा च छन्दश्च स्तुतिश्चोपगानं च कुशाच्छन्दस्तुत्युपगानानि तेषु तद्वत् । सप्तम्यन्ताद्वतिः । अयं सूत्रैकदेशस्य भाष्यकाराणां समासः । भाल्लविनामिति । एतेषां क्वचित् प्रसिद्धा शाखा । कुशेति । 'भो कुशा यूयं वानस्पत्या वनस्पतियोनयः ख्याता इत्थंभूता यूयं मा मां पात रक्षते'त्यर्थः । शाट्येति । खाण्डिकेयानां पञ्चभेदा भवन्ति । कालेताः शाट्यायनी हिरण्यकेशी भारद्वाज्यापस्तम्बी चेति । शाट्यायनिनस्तैत्तिरीयशाखास्थाः । छन्द आदिषु तु श्रुत्यन्तरगतविशेषान्वयो वक्ष्यते । यथा 'नवाक्षराणि छन्दांस्यासुराणि, अन्यानि दैवतानि, तेषां कचित् छन्दोभिः स्तुवते' इत्यत्राविशेषप्राप्तौ 'देवछन्दांसि पूर्वाणी'तिपैङ्ग्याम्नानाद्विशेषग्रहः प्रतीयत इत्यर्थः । यथातिरात्रे षोडशिनो ग्रहस्याङ्गभूतं स्तोत्रं कदेति छान्दोगादीनामाकाङ्क्षायामुदयसमयाविष्टे सूर्ये षोडशिनः स्तोत्रमिति समयाध्युषिते सूर्ये इत्यार्चश्रुतेः कालविशेषग्रह इत्यर्थः । ऋचो धीयत इत्यार्चाः । 'यथार्त्विज उपगायन्ती'ति विशेषश्रुतेर्नाध्वर्युरुपगायतीति श्रुत्यन्तरादध्वर्युभिन्ना ऋत्विज उपगायन्तीत्यर्थविशेष इति भालविनः । ननु भवद्भिः किं विचारितमित्यत आहुः जैमिनिनेति । इदं सूत्रं दशमस्याष्टमे पादेऽस्ति । पर्युदासाधिकरणसिद्धान्तसूत्रम् । सूत्रार्थस्तु, यज्ञमात्रे ये यजामहे इति प्रयोक्तव्यमिति श्रुतम् । नानुयाजेषु ये यजामहं करोतीत्यपि श्रुतम् । तत्र नकारस्य निषेधार्थकत्वेऽतिरात्रे षोडशिग्रहणाग्रहणयोरिवानुयाजेषु यज्ञत्वाविशेषात् प्रयोक्तव्यम्, निषेधान्न प्रयोक्तव्यमिति विकल्पः स्यात्, तस्यान्याय्यत्वाद्ये यजामहविधेरेव नानुयाजवाक्यमेकदेशः स्यात्, पर्युदासवृत्त्या विधिवाक्यशेषः स्यादिति यावत् । तथा चानुयाजभिन्नेषु यागेषु 'ये यजामह' इति प्रयोक्तव्यमित्येकवाक्यतेति । ननु ये यजामहे वषडिति वाक्ये 'ये यजामहे' इति प्रयोक्तव्यमिति कथं श्रुतमिति चेत् । न । नानुयाजेष्विति निषेधस्य प्राप्तिपूर्वकत्वेनानुयाजसम्बद्धेन नेत्यनेन शब्देनानुयाजव्यतिरिक्तेषु 'ये यजामहः कर्तव्य' इति श्रुत्यर्थे ये यजामहस्य कर्तव्यत्वानुयाजेषु प्राप्तानुयाजव्यतिरिक्तयागेषु प्राप्यत इति ये यजामह इति प्रयोक्तव्यमित्यस्य लाभात् । न च नेत्यर्थशब्दः करोतिना सम्बध्नात्विति वाच्यम् । तदा ये यजामहं न करोतीत्येवं प्रतिषेधः स्यात्, तस्यानिष्टत्वात् । पर्युदासः सदृग्ग्राही तदर्थको नशब्दः । करोतीत्यस्याधिकरणमालायां कर्तव्य इति

तदेव, न त्वन्यादृशमपीति ज्ञापनायाग्रे वदति 'नायमात्मा बलहीनेन लभ्य' इति। बलकार्यं हि प्रभुवशीकरणम्। तच्च 'अहं भक्तपराधीनः' 'वशे कुर्वन्ति मां

भाष्यप्रकाशः।

मुण्डके 'नायमात्मा बलहीनेन लभ्यो न च प्रमादात्तपसो वाप्यलिङ्गा'दिति। ननु श्रुतौ बलशब्दो वर्तते, न तु भक्तिशब्द इति कथं तेन तन्निश्चय इत्याकाङ्क्षायां बलशब्देन तत्प्राप्तिमुपपादयन्ति बलकार्यमित्यादि। नच बलशब्दस्य शरीरसामर्थ्ये प्रयोगदर्शनाद्भक्तौ तस्य लाक्षणिकत्वं स्यादिति शङ्क्यम्। वशीकारके यस्य कस्यापि सामर्थ्ये तत्प्रयोगदर्शनात्। तृतीयस्कन्धे कपिलवाक्ये 'बलं मे पश्य मायायाः स्त्रीमय्या जयिनो दिशाम्। या करोति पदाक्रान्तान् भ्रूविजृम्भेण केवल'मिति भ्रूविजृम्भसामर्थ्येपि तत्प्रयोगात्। अतः कार्यादिशब्दवत्सापे-

रश्मिः।

विवरणात् लेडाश्रयणम्। तेषां तव्यदादीनां विधौ विधानात्। लेटोपि लिङर्थे विधानात्। आश्रावयेतिश्रुतौ श्रौषट् वषडिति हविर्धानार्थकाव्ययौ। अनेकेति। यथा 'तं काचिन्नेत्ररन्ध्रेण हृदिकृत्य निमील्य च। पुलकाङ्ग्युपगूह्यास्ते योगीवानन्दसम्प्लुते'ति फलप्रकरणे निर्गुणभक्तवरणं योगिवत् कामसम्बन्धव्यतिरेकेण। रसेति। विवादाभावाय काव्यप्रकाशादौ स्नेहमार्गैक्येन रसशास्त्रं प्रपञ्चितमित्युभयोरैक्याभिप्रायेण। तदुक्तं 'कामाद्द्वेष्य' इति। वस्तुतस्तु 'आत्मकाम' इति श्रुत्युक्तो वेदयोग्य एव कामो वाक्ये ग्रहीतुं शक्यः, भगवतः श्रीकृष्णस्यात्मत्वात्। तत्र काचित् श्रीकृष्णप्रेमवती काचिद्वेदान्तश्रुतिर्वैराग्योत्कर्षवती श्रीकृष्णे शृङ्गारवती। कोशे प्रेमशृङ्गारयोर्नाम्नां भेदात्। 'प्रेमा-नाप्रियताहार्द' मित्यादौ 'शृङ्गारः शुचिरुज्वल' इत्यत्र च। तथापि 'ओमित्येकाक्षरं ब्रह्म, अग्निर्देवता ब्रह्म' इत्यार्षं गायत्र्यं छन्दः परमात्मं स्वरूपं सायुज्यं विनियोगमायातु वरदा देवी, अक्षरं ब्रह्म सम्मितं गायत्र्यं छन्दसां मातेदं ब्रह्म जुषस्व म' इति सन्ध्याश्रुतेः 'स्त्रीद्वारा पुरुषे भवे'दिति स्त्रीणां कामावश्यकतया भेदो युक्त उभयेषाम्। अग्रे 'वशे कुर्वन्ति मां भक्त्ये'ति भाष्याच्च। तत्र 'सत्स्त्रियः सत्पतिं यथे'ति दृष्टान्तात्। यदि च 'आश्चर्यवत् पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्य' इति जीवप्रकरणगीतायाः श्रुत्यप्यकामुकीति प्रेमवत्याः कामाभावे शृङ्गारवतीतो भिन्ना, तदा तु भक्तिमार्ग इति भाष्यं पुष्टिभक्तिमार्ग इत्यर्थकम्, प्रकरणात् दर्शनाच्चेतिसूत्राच्च। तत्र पुष्टिमार्गीयभक्तोदाहरणात्। भ्रूवीति। भ्रूविजृम्भः सामर्थ्यं भ्रूविजृम्भसामर्थ्यमिति कर्मधारयः। कार्यादीति। यथा कस्य कार्यम्, कस्य शब्दः इत्यत्र कुंविदस्येत्याद्युक्तौ कार्यं पटत्वेन घटत्वेन कुड्यत्वेन कुसूलत्वेन गृह्यते, यथा वा किं कार्यम्, कः शब्दः, को घटः इत्यत्र पटः कार्यम्, घटः कार्यम्, कुड्यं कार्यम्, कुसूलं कार्यमित्युक्तौ कार्यत्वेन पटादीनां ग्रहणम्, पटः पृथ्वी ताम्रपटस्य पृथ्वीत्वेन ग्रहणवत्। आकाशस्येत्याद्युक्तौ आकाशतन्मात्रत्वेन पार्थिवत्वेन शब्दो गृह्यते, यथा वा ध्वनिः शब्दः 'श्रोत्रग्राह्यो गुणः शब्द' इत्यत्र शब्दत्वेन ध्वन्यादीनां ग्रहणम्। को घट इत्यत्र 'घटः पृथिवी'त्युक्तौ पृथिवीत्वेन घटस्य। एवं कस्य बलं किंबलमित्यत्र भक्तस्य मायाया इत्युक्तौ भक्तित्वेन भ्रूविजृम्भत्वेन बलं गृह्यते, एवं भक्तिर्बलम्, भ्रूविजृम्भो बलमित्युक्तौ बलत्वेन भक्तेर्भ्रूविजृम्भस्य ग्रहणमिति कुम्भपदेन घटग्रहणवद्बलपदेनाभिधया वृत्त्या भक्तिग्रहणमिति बलपदस्य भक्तमायाभक्तिभ्रूविजृम्भैः सापेक्षा वृत्तिरभिधाख्या यस्य तत्त्वात्। सामर्थ्यं भक्तिरूपं बलरूपं वा तद्रूपत्वं भक्तावादाय भक्तित्वेन बलत्वेन वा बलपदप्रयोगः। बलभक्तिविद्धं सामर्थ्यमेकमिति भक्तिस्थाने बलपदप्रयोग इति नार्थः, 'सिंहो माणवक' इतिवत् गौण्या-

'भक्त्ये'त्यादिवाक्यै भक्त्यैवेति बलशब्देन भक्तिरुच्यते । अन्यथा पूर्ववाक्य एवेतरनिषेधस्य कृतत्वात् पुनर्बलाभावनिषेधं न कुर्यात् । वरणमात्रस्य हेतुत्वमुक्त्वा

भाष्यप्रकाशः ।

क्षवृत्तिकत्वात् सामर्थ्यरूपत्वमादाय तथा प्रयोग इति न लाक्षणिकत्वगन्धोपि । नचैते वाक्ये गुणावतारस्य विष्णोः, न तु भगवत इति कथमेताभ्यां भक्तौ पुरुषोत्तमवशीकारकत्वसिद्धिरिति शङ्क्यम् । एकादशस्कन्धीयचतुर्दशाध्याये 'न साधयति मां योगो न सांख्यं धर्म उद्धव । न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिते'ति भगवद्वाक्येपि साधयतिना स्ववशीकारस्यैव बोधनादस्यैवार्थस्य सिद्धेः । तद्वाक्योपन्यासस्तु स्फुटार्थत्वात् गुणावतारेपि मूलधर्मसमानधर्मताबोधनार्थत्वाज्ज्ञेयः । ननु तथाप्यत्र भक्तिरूपमेव बलं विवक्षितम्, न इतरदात्मनिष्ठाजनितवीर्यादिरूपमित्यत्र किं गमकमित्यत आहुः अन्यथेत्यादि । तथाच पूर्ववाक्योक्तनिषेधेनैव साधनजनितबलस्याभावे प्राप्तेपि यः पुनर्बलाभावनिषेधः, तदन्यथानुपपत्तिरेवात्र भक्तेर्विवक्षितत्वगमिकेत्यर्थः । ननु पूर्ववाक्ये प्रवचनादीनां त्रयाणामेव निषेधः, नेतरेषामिति तत्प्राप्त्यर्थमत्र बलाभावनिषेधान्न तदनुपपत्तिरित्याकाङ्क्षायां तन्निवारणाय हेत्वन्तरमाहुः वरणेत्यादि । तथाच तत्रोत्तरार्धे एवकारेण वरणस्यैवात्मलाभहेतुतानिश्चायनात् पूर्वार्धोक्तानां प्रवचना-

रश्मिः ।

पत्त्या 'न लाक्षणिकत्वगन्धोपी'त्यस्याग्रेतनग्रन्थस्य विरोधात् । न च घटस्य कलशत्वेनोपादानवत् पर्यायभूतसामर्थ्यरूपत्वमादाय बलपदप्रयोग इति वाच्यम् । घटे वक्तव्ये कलशपदप्रयोगवत् सामर्थ्ये वक्तव्ये बलपदप्रयोग इत्यत्र गमकाभावात् । न च श्रुतिरेव गमिकेति वाच्यम् । उक्तस्थले घटस्य कलशत्वेनेव सामर्थ्यस्य बलत्वेन ग्रहणापत्तेः 'सामर्थ्यरूपत्वमादाये'ति ग्रन्थविरोधात् । अत एव 'बलशब्देन भक्तिरुच्यत' इति भाष्येण बलत्वेन भक्तिरुक्ता । घटः कलशत्वेन यथा । बलभक्त्योः पर्यायता भाष्ये उपपादिता । बलभक्तिसामर्थ्यानां भाष्यप्रकाशे । गुणेति । नवमस्य निबन्धे 'ब्रह्मण्योपि हरिस्तस्य व्रतार्थं न व्यमोचय'दित्यत्र हरिर्गुणावतारो विष्णुः । आवरणभङ्गे 'त्रिभिर्देवैररक्षणे हेतुमाहु'रित्याभासात् । 'विष्णुचक्रोपतापितः' 'विष्णुचक्रं सुदर्शन'मिति शुकवाक्याभ्यां च । 'ततो निराशो दुर्वासाः पदं भगवतो ययौ । वैकुण्ठाख्यं यदध्यास्ते श्रीनिवासः श्रिया सहे'ति वाक्यादक्षराधिष्ठातुः श्रीपुरुषोत्तमस्येति यदि विभाव्येत, तदा तु न शङ्कावकाशः । आत्मेति । उपनिषद्भाष्याद्युक्तम् । तदिति । तस्य बलाभावनिषेधस्यान्यथानुपपत्तिः, सा च अर्थान्तरकल्पनया समाधेयत्वेनोच्यमानप्रमाणसिद्धयोर्द्वयोरर्थयोः परस्परं प्रतिघातः । प्रस्थानरत्नाकरे द्वारमित्यादावेकस्यैव प्रमितत्वाद् द्वयोरर्थयोरिति द्वित्वं त्याज्यमिति स्थितम् । तथा च भक्तिरूपार्थान्तरकल्पनया समाधेयत्वेनोच्यमानप्रमाणसिद्धं बलाभावनिषेधस्तस्य पूर्ववाक्योक्तेतरनिषेधेन प्रतिघातः । तत्समाधानाय भक्तिरूपार्थान्तरकल्पनमर्थापत्तिः, एवं तदन्यथानुपपत्तिर्भक्तेर्विवक्षितत्वगमिकेत्यर्थः । नन्वन्यथानुपपत्तिः प्रमाणम्, अत्र बलं भक्तिरिति प्रमायां नार्थापत्तिरिति चेत् । न । प्रमाकरणत्वाभावादन्यथानुपपत्तेस्तादृशप्रमाकारणत्वेनाभ्युपगमात् । अर्थापत्तेः शब्दरूपप्रमाणानुग्राहकत्वेन 'नायमात्मा बलहीनेन लभ्य' इति शब्दप्रमितार्थो बलरूपः, तस्य ज्ञानं भक्तित्वेन तस्य दार्ढ्यहेतुत्वात् । अभ्यासादिवत् । न चार्थापत्तेः प्रमाणत्वविरोध इति वाच्यम् । शब्दलक्षणप्रमाणानुग्राहकत्वरूपप्रामाण्यात् । अभिहितानुपपत्तिरियम्, 'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यत्र वाक्यगतज्योतिष्टोमस्य परेषां क्षणिकतया स्वर्गसाधनतानुपपत्त्या मध्यवर्त्यपूर्वं कल्प्यत इति वेदान्तपरिभाषाकारोक्तेः । विशेषप्रपञ्चस्तु प्रस्थानरत्नाकरे वर्तत एव । वरणस्येति । न च 'यमेवैष'

बलस्य तथात्वं च न वदेत् । एतादृशस्य हृदि भगवत्प्राकट्यं भवतीत्याह 'एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधामे'ति । अस्यार्थस्त्वेष आत्मा आत्मनोऽप्यात्मा पुरुषोत्तमः ब्रह्म अक्षरब्रह्मात्मकं धाम विशते इति । धामपदं पुरुषोत्तमस्याक्षरं ब्रह्म सहजं स्थानमिति ज्ञापनार्थमुक्तम्, अन्यथा न वदेत् । तेन तद्धृदये स्वस्थानमाविर्भावयित्वा स्वयं तत्र प्रकटीभवतीति

भाष्यप्रकाशः ।

दीनां जीवकृतयावत्साधनोपलक्षकत्वे सिद्धे बलाभावानुपपत्तितादवस्थ्येऽस्मिन् बलाभावनिषेधमुखेन बलहेतुताबोधनात्तद्बलं लौकिकमार्यादिकबलाभ्यामतिरिक्तं भगवदनुग्रहजन्यं पुष्टिमार्गीयमेव ग्राह्यम् । तच्चोक्तरीत्या भक्तिरूपमेवेत्यतः सैवात्र गृह्यते । बलपदस्य सामर्थ्यसामान्ये शक्तत्वेऽप्युक्तयुक्त्या तद्विशेष एव पर्यवसानादित्यर्थः । एवञ्चैतदग्रे प्रमादस्यालिङ्गतपसश्च यो निषेधः, तेनाप्रमादस्य सलिङ्गतपसश्च सहकारिता बोध्यते । तत्राप्रमादो भगवदिच्छानुरूपसेवाकरणादिरूपः । सलिङ्गं तपश्च सर्वात्मभावसहितविरहभावरूपं ज्ञेयम् । एतदुत्तरार्धमवतार्य व्याकुर्वन्ति एतादृशस्येत्यादि । तद्धृदय इति । तस्यैवं यतमानस्य हृदये । ननु भवत्वेवं श्रुतिद्वयार्थः, तथापि पूर्वसूत्राभ्यां यदस्यात्मप्रकरणादिना जीवब्रह्माभेदपरत्वमाशङ्कितम्, तस्य कथं परिहार इत्याकाङ्क्षायां

रश्मिः ।

इत्यत्र यमेव वृणुते तेन लभ्य इत्यर्थः, तदुक्तम्, 'केवलेन हि भावेने'त्युपक्रम्य, 'येऽन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसे'ति, तस्मान्नायमवकारान्वय इति शङ्क्यम् । एवमन्वये पुष्टिभक्तिमात्रसङ्ग्रहे मार्यादिकानां भक्तानामसङ्ग्रहापत्तेः । नन्वेवमेव विवक्षितं सिद्धान्तमुक्तावलीटीकायाम्—'ज्ञानिभक्तौ चेद्विशेषतोऽनुगृह्णाति, तदा पुष्टिभक्तिं प्राप्नुतः आदा'विति ग्रन्थात्, वक्ष्यन्ति च 'फलमत उपपत्ते'रिति सूत्रभाष्ये इति चेत् । न । येन केनापि लभ्य इति प्राप्तौ तदर्थं वृणुत इत्यस्यावश्यवक्तव्यत्वेन तत्रान्वयौचित्यात् । न चैवमपि वरणकर्त्रन्वयोस्तु, तावतापि पुष्टिभक्तिप्राप्तेर्वृणुत इत्यस्य 'वरणं कुरुत' इत्यर्थाद्वरणरूपप्रकृत्येकदेशान्वयोऽनुचित इति शङ्क्यम् । यमेव वरणमेव वरणकर्तैवेति त्रेधान्वयेपि वरणस्यैव मुख्यत्वात् । 'वरणमात्रस्य हेतुत्वमुक्त्वे'ति भाष्यात् । अस्मिन्निति । 'नायमात्मा बलहीनेन लभ्य' इति वेदे । उक्तेति । अन्यथानुपपत्तिरूपकारणकजन्यावलम्बभक्तिरूपमेवेत्याकारकप्रमेत्युक्तरीत्येर्थः । उक्तेति । भाष्योक्तयुक्त्येत्यर्थः । 'पुनर्बलाभावनिषेधं न कुर्यात्', 'बलस्य तथात्वं न वदे'दित्यन्यथाज्ञानरूपयेत्यर्थः । 'स्वामिनः फलश्रुतेरित्यात्रेय' इति सूत्रे भाष्ये बलं सर्वात्मभाव इत्यात्रेयः । बोध्यते इति । 'भक्त्या जानाति चाव्यय'मित्यादौ भक्तौ कारणता, इतरयोः भक्त्या सहकारितेत्यर्थः । प्रमादोऽनवधानता, तदभावोऽप्रमादः स ईदृशो विवक्षित इत्याहुः तत्रेत्यादि । सेवाकरणकथास्वस्थित्यादिरपि प्रमादकः । भगवदिच्छानवधानात् । अतो विशेषणं भगवदिच्छेति । मतान्तरीयोऽर्थो लौकिकपुत्रपश्वादिविषयासङ्गनिमित्तात् प्रमादादिति 'शमदमाद्युपेतः स्या'दिति सूत्रे स ज्ञानमार्गीयः । भजनस्य द्वितीयदलमाहुः सलिङ्गमिति । 'भक्त्याहमेकया ग्राह्य' इति वाक्ये एकपदेन मुख्यभक्तेरुक्तेः । भाष्येऽप्यादिपदेनास्या अप्युक्तेः । अतो विशेषणं सर्वात्मभावेत्यादि । अत्र सर्वस्मिन्नात्मभाव इति समासः स्फूर्त्या विवक्षितत्वात् सा लिङ्गं भवति, तया तपोरूपविगाढभावानुमानात् । विगाढभाववान् स्फूर्तेरिति । इतरव्याख्यानं तपोत्र ज्ञानं लिङ्गं संन्यास इति । तत्तु ज्ञानस्य सञ्चारिभावत्वेनाःमलाभाहेतुत्वेन संन्यासस्य 'दर्शनाच्चे'ति सूत्रे व्रजसीमन्तिनीनामुदाहरणेन तासां त्यागोऽङ्गमिति सर्वात्मभावाङ्गत्वेन पूर्वं सिद्धत्वात् ज्ञानमार्गीयम् । 'सोऽध्यक्ष' इति सूत्रे भाष्येऽभ्युप-

ज्ञाप्यते । प्रकृते श्वेतकेतूपाख्याने परोक्षवादेन ब्रह्माभेदबोधनेन पुरुषोत्तमाधिष्ठानत्वयोग्यता ज्ञाप्यते । अग्रे तु न ह्येतावतैवाधिष्ठानात्मकाक्षराविर्भावो भवति, पुरुषोत्तमस्य वा। तथा सति ज्ञानिनां सर्वेषां परप्राप्तिः स्यात्, नत्वेवम्, 'भक्त्याहमेकया ग्राह्य' इत्यादिवाक्यैः, किन्तु भगवदनुग्रहेण भक्तसङ्गेन च भक्तौ सत्यामिति ज्ञापनाय भक्त एव तद्बोधाधिकारीत्यपि ज्ञापयितुं भक्तस्य नारदस्य भगवदावेशयुक्तस्य सनत्कुमारस्य च संवाद उक्तः। तत्रात्मशब्देन पुरुषोत्तम उच्यते। भक्तिमार्गे तु निरुपधिस्नेहविषयः स एव यतः । स तु सर्वात्मभावैकसमधिगम्य इति सर्वात्मभाव एव विद्याशब्देनोच्यते । परमकाष्ठापन्नं यद्वस्तु, तदेव

भाष्यप्रकाशः ।

पूर्वस्यास्य च तात्पर्यमाहुः प्रकृत इत्यादि । प्रकृते छान्दोग्यस्थ आत्मवाक्ये श्वेतकेतूपाख्याने, अन्यार्थमन्यकथनरूपो यः परोक्षवादस्तेन जीवस्याक्षरब्रह्माभेदबोधनेन पुरुषोत्तमाधिष्ठानत्वयोग्यता ज्ञाप्यते, अग्रे तदग्रिमप्रपाठके तु 'न ह्येतावते'त्युक्तरीत्या योग्यतामात्रेण न सः, किन्तु भगवदनुग्रहभक्तसङ्गाभ्यां जातायां भक्तौ स इति ज्ञापयितुं तयोः संवाद उक्तः, तस्य च संवादस्य भक्तिमार्गीयलिङ्गवत्तया तथात्वात् तत्रत्यात्मशब्देन तन्मार्गे निरुपधिप्रीतिविषयः पुरुषोत्तम एवोच्यते, न जीवात्मा, नाप्यक्षरब्रह्म, पुरुषोत्तमस्तु सर्वात्मभावैकप्राप्य इति स एव सर्वात्मभावो विद्याशब्देनोच्यते । किञ्च, 'परमकाष्ठापन्न'मित्याद्युक्तरीत्या वेदान्तस्यापि पुरुषोत्तम एव तात्प-

रश्मिः ।

गमादिभ्य' इत्यत्रादिपदात् भगवद्वशीकरणसमर्थः स्नेहः । प्रभ्वनिङ्गितार्थत्यागस्तदनुरूपं भजनं चाप्रमादसलिङ्गतपो बलपदार्थत्वेन व्याकृतम् । तत्र भगवद्वशीकरणसमर्थः स्नेहो बलं सर्वात्मभावपदवाच्यमुख्यभक्तिः । प्रभ्वनिङ्गितार्थत्यागस्तदनुरूपं भजनं च बलमप्रमादः । इङ्गितपदेन कोशे काल उक्तः, अत्र त्विच्छोक्ता। कोशे कियतां शब्दानां नामनारायणादिकोशेषु पाठात् । पूर्वस्येति । जीवब्रह्माभेदपरत्वस्य । परोक्षेति । आनन्दमयाधिकरणे विवृतः । पुरुषोत्तमेति । भक्तिरसत्वात् स्पष्टं नोक्तम् । भगवदित्यादि । भक्तिहेतौ स्पष्टम् । अग्रे त्वित्यादिभाष्यं विवृण्वन्ति स्म अग्रे तदिति । भक्तेति । ननूपासनामार्गीया भक्तिः 'सत्सङ्गलब्धया भक्त्या मयि मां य उपासिते' इति वाक्यादिति चेत् । न । उपासनामार्गस्य गोपालतापिनीय उक्तवात् गोपालतापिनीयस्य सर्ववेदान्तप्रत्ययाधिकरणादावुदाहृतत्वात् पाठक्रमस्य भक्तिनिरूपणोत्तरमुपासनानिरूपणात् तथात्वात् । यद्वा । मुख्यभक्तिप्रकरण उपासनाया अयुक्तत्वात् 'सत्सङ्गान्मामुपागता' इति पुष्टिप्राकरणिकवाक्योक्तसत्सङ्गो गृह्यते, अत एव सत्सङ्गपदं विहाय भक्तसङ्गपदम् । स त्वित्यादिभाष्यं विवृण्वन्ति स्म पुरुषोत्तम इति । तथेति । उक्तज्ञापकत्वात् । तयोरिति नारदसनत्कुमारयोः । तत्रेत्यादि भाष्यं विवृण्वन्ति स्म तस्य चेत्यादिना । यत इति भाष्यीयपदस्यार्थोऽयम् । विद्यापदमक्षराधिगमके मुण्डके उक्तं पुरुषोत्तमाधिगमके सर्वात्मभावपदे विद्यापदं कुत इत्यपेक्षायां परमेत्यादिभाष्यं विवृण्वन्ति स्म किञ्चेति । इत्यादिवक्ष्यमाणभाष्योक्तरीत्या । तात्पर्यमिति । 'सर्वे वेदा यत्पदमामनन्ती'ति श्रुतौ हीदमित्थतया निरूपणं 'यतो वाच' इति श्रुतिविरुद्धम्, अतोऽनिदमित्थतया 'सर्वे वेदा' इत्यादि । अतः परमकाष्ठापन्ने पुरुषोत्तमाख्ये वस्तुनि तात्पर्यवृत्तिः, अन्यत्राभिधा । तथा च प्रतिपाद्यमिति भाष्यं तात्पर्यवृत्त्येदमित्थतया प्रति-

हि वेदान्तेषु मुख्यत्वेन प्रतिपाद्यम् । अक्षरब्रह्मादिकं तु तद्विभूतिरूपत्वेन तदुपयोगित्वेन मध्यमाधिकारिफलत्वेन च प्रतिपाद्यते । तेन तत्र विद्याशब्दप्रयोग औपचारिकः, सर्वात्मभाव एव मुख्यः । युक्तं चैतत् । अक्षरविषयिण्या विद्यायाः सकाशात्तत उत्तमविषयिण्यास्तस्या उत्तमत्वम् । एवं सति पूर्वप्रपाठकस्याक्षरप्रकरणत्वादुत्तरस्य पुरुषोत्तमप्रकरणत्वात्त्वद्धेत्वसिद्धिश्च, अत उक्तन्यायेन विद्यैवाग्रिमप्रपाठके निरूप्यते, न तु पूर्वोक्तात्मज्ञानप्रकारविशेषः । अत्र हेतुमाह

भाष्यप्रकाशः ।

येम् । यद्यपि मुण्डके 'अथ परा यया तदक्षरमधिगम्यत' इत्यक्षरविद्यायाः परविद्यात्वमुक्तम्, तथाप्यग्रे 'अक्षरात् परतः पर' इति पुरुषस्य ततः परत्वश्रावणात्तद्विद्यायामेव परविद्यात्वं विश्राम्यतीत्यक्षरविद्यायां नान्तरीयकतया विद्याशब्दप्रयोगः परत्वोपचारादेवेति सर्वात्मभाव एव विद्यापदप्रयोगो मुख्यः । तस्या एव च विद्याया उत्तमत्वम् । एवं सत्युभयत्र प्रतिपाद्यभेदेन प्रकरणभेदात्त्वदुक्तस्य प्रकरणैक्यस्वरूपस्य भवदभिमतात्मविद्याप्रकारविशेषतासाधकस्य हेतोरसिद्धिरित्यस्मदभिप्रेत-

रश्मिः ।

पाद्यार्थकम् । पुरुषोत्तमे तात्पर्यवृत्तिः इति भक्ति(मार्तण्डे स्पष्टम्)........। तदुक्तं 'भगवान् ब्रह्म कार्त्स्न्येन'त्यत्रात्मपदं पुरुषोत्तमपरमिति। श्रावणादिति । न च शङ्करभाष्योक्तोऽर्थोऽस्त्विति शङ्क्यम् । गीतायामक्षरपदस्य तत्राशक्तेः । ननु पुराणमतं भवदुक्तार्थेऽक्षरात् परत्वं श्रीभागवते ततः परत्वं वाराहे इति चेत् । न । अदृश्यत्वाधिकरणोक्तश्रुत्या 'तानि परे तथा ह्याहे'तिसूत्रोक्तश्रुत्या चास्य विषयस्य श्रौतत्वात् । कियतामर्थानां पौराणिकसदृशत्वात् । अक्षरेत्यादिभाष्यं विवृण्वन्ति स्म यद्यपीति । अत्र भाष्ये तद्विभूतिरूपत्वेनेत्यादि । तत्र विभूतिरूपत्वमुत्कृष्टत्वे सत्यवरत्वरूपमुक्तश्रुतावेव विभूतिनिरूपणाध्याये 'अक्षराणामकारोऽस्मी'ति 'अकारो विष्णु'रित्यन्यत्र कोशादौ । अदृश्यत्वाधिकरणोक्त-(त)स्य साधिष्ठानत्व उपयोगित्वेन 'अक्षरधिया'मिति सूत्रोक्तरीत्या मध्य(म)ाधिकारी ज्ञानाधिकारी तस्य फलत्वेनेति त्रयाणां तृतीयान्तपदानामर्थान्वयः । विश्राम्यतीति । आधिदैविकादिभेदेन विश्राम्यति । युक्तमित्यादि । विषयिण्या इत्यन्तभाष्यार्थः । एतेन भाष्यीयाक्षरब्रह्मादिकमित्यादिपदं व्याकृतम् । नान्तरीयकेति । गौणतया । परत्वोपचारः सिंहो माणवक इतिवत् । उत्तमत्वमिति । विद्यानामनियतत्वादुत्तमविषयिण्या उत्तमत्वमुचिततरमेव । तेन तत्रेति भाष्यार्थमाहुः इत्यक्षरेति । इतीति तेन पदार्थकः । सर्वात्मभावसमासो लक्षणश्रुत्युक्तः प्रसिद्धः । 'नातः परतरा विद्ये'ति निरोधलक्षणवाक्यात् । तैत्तिरीयशीक्षायां 'अथाधिविद्य'मित्यादि आयुष्ये अव्ययं विभक्तीतिसूत्रेणाव्ययीभावः । विद्यास्विति विग्रहः । आचार्यः पूर्वरूपम् । आचार्यः सनत्कुमारः । अन्तेवास्युत्तररूपम् । अन्तेवासी नारदः । विद्या सन्धिः । विद्या सर्वात्मभावः । प्रवचन९सन्धानम् । प्रवचनं प्रपाठकः । विद्या प्रायपाठपठितत्वाच्च विद्या । एवं सतीत्यादिभाष्यमवतारयामासुः एवं सतीति । प्रतिपाद्येति । प्रतिपाद्येत्यादिकं पूर्वतन्त्रे द्वितीयाध्यायेऽस्ति । हेतोरिति । प्रपाठक आत्मविद्याप्रकारविशेषवान् प्रकरणैक्यात्, नात्मविद्याप्रकारविशेषवान् प्रकरणभेदादिति प्रत्यनुमानेन साध्यसाधकत्वेनासिद्धिः । न चासिद्धिरूपहेत्वाभासः इत्यर्थः शङ्क्यः । 'प्रकरणभेदा'दिति भाष्यप्रकाशेनास्य हेतोः सत्प्रतिपक्षत्वस्फोरणात् । अस्मदिति । अस्मदभिप्रेतः सर्वात्मभावो विद्योच्यते निरूप्यते उक्तन्यायेन प्रकृतसूत्रेण प्रमाणेन । एवकारेण 'ननु प्रसिद्धा ब्रह्मविद्योपनिषदुक्ता विद्याधिकरणविषयवाक्यमस्तु, स्पष्टत्वात्, किमनेन प्रपाठ-

**निर्धारणादिति । 'सुखं त्वेव विजिज्ञासितव्य'मित्युक्त्वा, सुखस्वरूपमाह 'यो वै भूमा तत्सुखम्, नाल्पे सुखमस्ति, भूमैव सुखम्, भूमा त्वेव विजिज्ञासितव्य' इति । अक्षरपर्यन्तं गणितानन्दत्वात् पुरुषोत्तमस्यैवानन्दमयत्वेन निरवधिसुखात्मकत्वात् स एव भूमा, तस्यैव विजिज्ञासितव्यत्वेन निर्धारणादित्यर्थः । भूम्नो**

भाष्यप्रकाशः ।

मेवात्रोच्यते, न तु त्वदुक्तमित्यर्थः । एवं प्रकरणभेदे सत्यतिदेशोऽप्यकिञ्चित्कर एव । अतिदेशमात्रेण तदवान्तरभेदत्वस्य क्वाप्यसिद्धत्वादिति । हेतुं व्याकुर्वन्ति सुखं त्वेवेत्यादि । तथाच पूर्वत्र 'सदेव सौम्ये'ति सद्रूपमात्मानं प्रकृत्य तदभेदज्ञानमुपदिष्टम् । इह तु भूमपदोक्तं निरवध्यानन्दरूपं जिज्ञास्यत्वेन निर्धारयति । यद्यत्र पूर्वप्रकृत आत्मा बोधनीयः स्यात्, तदात्रापूर्वं भूमशब्दं न वदेत्, वदति तु भूमपदम् । अतः शब्दान्तरेण पूर्वस्मादात्मनः सकाशाद्भूमपदोक्तस्य भेदे सिद्धे विषयभेदान्नात्र पूर्वोक्तं ज्ञानमुच्यते, किन्तु मुख्या सर्वात्मभावरूपैव विद्योच्यते । यद्यपि 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादिश्रावणात्त्रयाणामविनाभावः, तथापि सावधिनिरवधित्वाभ्यामानन्दस्य भेदात् पूर्वत्र गणनापरिच्छिन्नस्यैव तस्य सिद्धिः, न तु निरवधेः । अतो भूमपदेनात्र तस्यैव निर्धारणात् तथेत्यर्थः । ननु भूमात्र जिज्ञास्यत्वेनोच्यते, तावता सर्वात्मभावः कथं लभ्यत इत्याकाङ्क्षायामाहुः भूम्न इत्यादि । तथाच भूमलक्षणस्थेन 'यत्रे'तिपदेन पूर्वोक्तरीत्या भूमज्ञानसत्तासूच-

रश्मिः ।

केने'ति शङ्काव्यवच्छेदः । सन्दिग्धानामेव श्रुतिवाक्यानामधिकरणविषयवाक्यत्वात् । अतिदेशेति । 'अतिदेशाच्चे'ति सूत्रोक्तः । तदिति । ज्ञानप्रकारविशेषरूपस्य । भेदपदं विशेषवाचकम् । 'भेदो द्वैधे विशेषे स्या'दिति विश्वात् । प्रपाठको ज्ञानप्रकारविशेषप्रतिपादकोऽतिदेशादिति । ज्ञानप्रकारावान्तरभेदो विद्यतेऽस्य प्रतिपाद्यत्वेन स प्रपाठकः ज्ञानप्रकारावान्तरभेदस्तस्य भावस्तत्त्वम् । क्वाप्यसिद्धत्वादिति । ननु वैकृताङ्गेषु यत्रातिदेशो वर्तते, तत्र वैकृताङ्गत्वेन ज्ञानप्रकारविशेषो वर्तते एव, उक्तानुमाने च वर्तते, अतः कुत उच्यते क्वापीति चेत् । न । अतिदेशमात्रेणेत्युक्तेः । तथाहि । सर्वात्मभावनिरूपकत्वे प्रपाठकस्य सिद्धे प्रपाठको न ज्ञानप्रकारावान्तरभेदप्रतिपादकः, अतिदेशादिति पूर्वोक्तहेतोर्विरुद्धत्वात् साध्याभावसाधको हेतुर्विरुद्ध इति । तथा विकृतावतिदेशो वर्तते, तत्रातिदिष्टानामेव वैकृताङ्गत्वेन ज्ञानप्रकारविशेषाभावात् । विकृतावुद्दिष्टानामङ्गानामपि वैकृतत्वेन ज्ञानात् । तत्र चातिदेशाभावात् । हेतुमिति । अन्यहेतूक्तेः सौत्रं हेतुमित्यर्थः । तथा चेति । पूर्वत्रप्रपाठके । कृष्णस्य सदानन्दत्वादानन्दांशमाहुः सदंशस्योक्तत्वात् इहेति । पूर्वेति । 'स आत्मा तत्त्वमसि श्वेतकेतो' इत्येवं पूर्वप्रपाठके प्रकृत आत्मा । अपूर्वमिति । न पूर्वप्रपाठकेऽभिधायकत्वेनास्तीत्यपूर्वो भूमशब्दस्तम् । किन्त्विति । एवकारेणान्यविद्याव्युदासः । यथा 'कर्ण एव दाते'त्यत्र । न च विद्यापदं ज्ञानसामान्यवाचकमित्युक्तत्वात् ज्ञानकाण्डत्वाच्च कथं सर्वात्मभावो विद्येति चेत् । न । मुख्यभक्तेरपि सर्वात्मभावरूपायाः छान्दोग्ये विद्याप्रायपाठपठितत्वात् ज्ञानकाण्डपठितत्वाच्च विद्यात्वमविरुद्धम् । भक्तिप्रायपाठपठितत्वादर्चनस्य कर्मणो भक्तित्वमिव । अक्षरेत्यादिभाष्यमवतारयांबभूवुः यद्यपीति । तस्य आनन्दस्य । तस्यैव निरवध्यानन्दस्यैव । तथा तत्प्रापिका सर्वात्मभावत्वप्रकारिकैव विद्योच्यते, 'फलमत उपपत्ते'रिति सूत्रे सर्वात्मभावस्यैव तत्प्रापकत्वोक्तेः । भूमेति । 'आनन्दमयोऽभ्यासा'दितिसूत्रोक्तः । 'पुरुषोत्तमस्यैवे'त्याद्युक्तभाष्यात् । सर्वात्मेति । पूर्वोक्तः । पूर्वेति । लिङ्गभू-

**लक्षणमग्रे उच्यते 'यत्र नान्यत् पश्यती'त्यादिना। यस्मिन् ज्ञाते सति नान्यत् पश्यतीत्यर्थः। तथा सति सर्वात्मभाववतः प्रभुदर्शने सत्यपि लीलोपयोगिवस्तुदर्शनादिकमनुपपन्नमिति शङ्का तु 'तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः[1] प्राणा' इत्यादिना निरस्ता वेदितव्या। तैः सह लीलां चिकीर्षतः प्रभुत एव सर्वं सम्पद्यते, न तु भक्तसामर्थ्येनेति भावेन तदुक्तेः॥ ४७॥**

भाष्यप्रकाशः।

नात्तज्ज्ञानरूपस्य सर्वात्मभावस्य लाभ इत्यर्थः। ननु भूमलक्षणे तदितरदर्शनं निषिध्यते, सर्वात्मभाववतां तु तत् दृश्यते इति कथं तेन तल्लाभ इत्यत आहुः तथा सतीत्यादि। तथा सतीति। सर्वत्र भूमदर्शने सति। तैः सहेति। प्राणादिभिर्धर्मैः सह। तथाच तादृशलीलोपयोगिपदार्थदर्शनं प्रभुसामर्थ्यकारितम्, भगवदिच्छाया एव तथात्वात्, न तु स्वकृतम्, अतस्तेषां भगवदेकद्रष्टृत्वं निर्बाधम्, अतः सुखेन तल्लक्षणात्सर्वात्मभावलाभ इत्यर्थः॥ ४७॥

रश्मिः।

यस्त्वसूत्रोक्तरीत्या। भूमेति। यत्रेति सति सप्तम्या दर्शनादिविशेषे व्याख्याते भूम्नो ज्ञानं चाक्षुषादित्वस्य सत्तासूचनात्। तज्ज्ञानेति। तस्य भूम्नो ज्ञानं भूमा ज्ञायतेऽनेन तत् तद्रूपस्य। लाभ इति। यत्रेति भूमलक्षणश्रुतौ 'भगवद्रूपत्वात् सर्वात्मभावस्ये'ति भाष्यादेकरूपत्वाल्लाभ इत्यर्थः। ननु 'सत्यं ज्ञानमनन्तमानन्दं ब्रह्मे'ति श्रुतेर्ब्रह्मैतादृक्, स भूमा सर्वात्मभावस्तु सर्वोप्यात्मनो भावरूप आनन्दधर्म इति कथमुभयोरेकरूपतेति चेत्। न। प्रकाशाश्रयन्यायेनैक्यात्। तथा च भूमाधिकरणभाष्यं 'भावशब्दस्यापि सर्वत्वात् भगवति वृत्तेरदोष' इति। मन्प्रत्ययार्थस्य भावत्वेन भाववाचकशब्दस्यापीत्यर्थः। ननु लक्षणसङ्गमनं कथम्, इत्थम्। भूम्नि स्पष्टत्वात् सर्वात्मभाव उच्यते। यत्रेति यच्छब्दार्थस्य भूमत्वेप्यानन्दमयत्वात् तस्य स्वरूपात्मकात्मना ग्रहणम्, 'स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम' इति वाक्यादानन्दमयत्वे सर्वात्मभावस्य यच्छब्दार्थता। ननु पृथगेव लक्षणं कुतो न कृतमिति चेत्। न। 'उत्तमश्लोकजनेषु सख्य'मिति वाक्यात्। अत्र शास्त्रार्थरूपभगवान् भक्तसंवलित एव फलतीत्येकलक्षणलक्षितत्वम्। इदं पुष्टिमार्गीयमोक्षनिरूपणे उपपादितम्। ननु निरङ्कुशजगत्कर्तृत्वेन शास्त्रप्रतिपाद्यत्वरूपं ब्रह्मलक्षणं कथम्। एतस्यैव जिज्ञास्यत्वेन 'अथातो ब्रह्मजिज्ञासे'त्यत्राप्यस्यैव ब्रह्मपदार्थत्वात्। अरूपवत्सूत्रेप्येवं प्रतिपादितमिति विद्वन्मण्डने स्पष्टम्। 'यदेकमव्यक्तमनन्तरूपमि'तिश्रुतेः। सर्वात्मभावे यथायोग्य........... । तदितरेति। भूमेतरेत्यर्थः। सुषुप्ताविव। तत् भूमेतरत्। तेनेति। भूमपदेन सर्वात्मभावस्य लाभः दर्शनसहितस्य कथमित्यन्वयः। तथेति। एतस्यैव विवरणं 'प्रभ्वि'त्यादिभाष्ये भाष्यत्वात् स्वपदानि वर्णितानि। भाष्ये। अनुपपन्नमिति। 'नान्यत् पश्यती'तिश्रुतेः। प्रकृते। स्वकृतमिति। आत्मीयभक्तकृतम्। लीलाविष्करणमात्रं भक्तेच्छाकृतम्। 'अचलत्वं चापेक्ष्ये'ति सूत्राभासात्। यद्वा। 'न तु भक्तसामर्थ्येने'(ति)भाष्ये भक्तबलं निषिद्धम्, न तु भक्तेच्छा, तेन नाचलत्वसूत्राभासविरोधः। भगवदित्यादि। स्वेच्छाविर्भावितलीलोपयोगिपदार्थकभगवदेकद्रष्टृत्वमित्यर्थः। तथा च स्वेच्छाविर्भावितलीलोपयोगिपदार्थेऽन्तरदर्शनादिकं 'नान्यत् पश्यती'त्यादिना निषिध्यते इति भावः। तदित्यादि। तस्य भूम्नो लक्षणात् तदितरदर्शनरहितात् तदितरदर्शनरहितसर्वात्मभावलाभः सुखेनेत्यर्थः॥ ४७॥

---

१. आत्मनः।

## दर्शनाच्च ॥ ४८ ॥

दृश्यते च सर्वात्मभाववतां भक्तानां व्रजसीमन्तिनीप्रभृतीनां पूर्वमितरविस्मृतिर्भगवत्स्पर्शादिनाग्रे सर्वसामर्थ्यमिति व्यासः स्वानुभवं प्रमाणत्वेनाह । उक्तं च श्रीभागवते ताभिरेव 'चित्तं सुखेन भवतापहृतं गृहेषु यन्निर्विशत्युत करावपि गृह्यकृत्ये, पादौ पदं न चलतस्तव पादमूला'दित्यादिना । तेन ज्ञानशक्तिक्रियाशक्तितिरोधानमुक्तं भवति । अग्रे तदाविर्भावादिकं स्फुटमेव ॥ ४८ ॥

ननु सनत्कुमारनारदसंवादात्मकमान्तमेकं वाक्यम्, तत्रोपक्रमे 'मन्त्रविदेवास्मि नात्मविच्छ्रुत१ ह्येवं मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति, सोऽहं भगवः शोचामी'त्यादिना स्वात्मज्ञानस्यैवोपक्रमादुपसंहारोपि तमादायैवोचितः । अग्रे चेत् आत्मपदानामीश्वरपरत्वं स्यात्, वाक्यभेद उपक्रमविरोधश्च स्यात्, तस्माद्वाक्यानुरोधात् पूर्वज्ञानप्रकारविशेष एवायमिति मन्तव्यमित्यत उत्तरं पठति ।

## श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४९ ॥

भाष्यप्रकाशः ।

दर्शनाच्च ॥४८॥ शब्देनान्यादर्शनं साधयित्वा प्रत्यक्षेणापि साधयतीत्याशयेन व्याकुर्वन्ति दृश्यते इत्यादि । स्वानुभवमिति । स्वयं समाधावनुभूतम् । शेषं निगदव्याख्यातम् ॥ ४८ ॥

श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४९ ॥ सूत्रमवतारयन्ति नन्वित्यादि । ननु मास्त्वस्य पूर्वप्रकरणशेषत्वम्, तथाप्यस्य प्रपाठकस्यान्तमेकवाक्यत्वं तु निःसन्दिग्धम्, विषय-

रश्मिः ।

दर्शनाच्च ॥ ४८ ॥ शब्देनेति । 'नान्यत् पश्यती'त्यादिशब्देन । दृश्यत इत्यादि । सर्वात्मभावो व्रजसीमन्तिनीनां 'सर्वात्मभावोऽधिकृतो भवतीनामधोक्षज' इत्यत्र भ्रमरगीते 'गोपगोपाङ्गनावीत'मिति गोपालतापिनीये 'गोप्यो नाम विष्णुपत्न्यः स्यु'रिति गोपीचन्दनोपनिषदि । पुराणहृदयैरत्र सर्वेन्द्रियव्यापारा भगवत्परा उन्नेयाः । ननु दर्शनं शाब्दं व्यासानामस्त्विति चेत् । न । पुनरुक्त्यापत्तेः । समाधाविति । 'अनर्थोपशमं साक्षाद्भक्तियोगमधोक्षज' इति समाधिभाषोक्तभक्तिः समाधावनुभूता, तत्प्रपञ्चः 'चित्तं सुखेने'त्यादिस्तदात्मक एव । भाष्ये ज्ञानशक्तितिरोधानं चित्तहरणेन । न च 'मनसैवानुद्रष्टव्य' इति श्रुतेर्मनसः क(ा)रणत्वमिति शङ्क्यम् । 'नेह नानास्ति किञ्चने'त्यग्रेतनश्रुत्या तस्याभेदज्ञानकरणत्वात् । अतो ज्ञानमार्गीयं करणं विहाय चित्तं सुषुप्तिग्राहकं भूम्नः सुषुप्तित्वाद्भूमाधिकरणपूर्वपक्षे तद्ग्राहकं गृहीतम् । 'करावपी'त्यादिना क्रियाशक्तितिरोधानम् ॥ ४८ ॥

श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४९ ॥ व्यवहारे वयं भाट्टा इति वदतां वेदान्तिनां मायावादिनामाशङ्कामाहुरित्याशयेनाहुः नन्वित्यादि । आन्तमित्यादि । अन्तं आ अभिव्याप्य आन्तम् । एकवाक्यत्वं स्वार्थबोधे समाप्तानां 'नात्मवित्, तरति शोकमात्मवि'दित्यादीनां वाक्यानां 'यत्र नान्य'दिति भूमलक्षणवाक्यस्याङ्गाङ्गित्वाद्यपेक्षया पुनरेकवाक्यत्वं संहत्य जातं पूर्वतन्त्रिणं निःसन्दिग्धं तृतीये तृतीयपादे निःसन्दिग्धम् । विषयस्य श्रीपुरुषोत्तमस्य भेदौ क्षराक्षरात्मकौ, तयोरत्र निरूपणीयत्वेनाभावात् । विषयनिष्ठोऽक्षरस्य वा भेदस्तस्याभावात् । विषयोऽक्षरो नेत्यन्योन्याभावविषयिणी प्रतीतिः ।

१. एकमेव ।

भाष्यप्रकाशः।

भेदाभावात्, तत्र चोपक्रमे 'सोऽहं भगव' इत्यादिनात्मैव पृष्टः, उपक्रमश्चासञ्जातविरोधत्वादुपसंहारात् प्रबल इति पूर्वतन्त्रे स्थितम्, अत उपसंहारोऽप्युपक्रममादायैव नेतुमुचित इति तत्रत्या आत्मशब्दास्तत्परा एव युक्ताः, अग्रे चेत् 'अथात आत्मादेश' इत्यादीनामात्मपदानामीश्वरपरत्वं स्यात्, तदा ऐकार्थ्याभावात् 'अथात आत्मादेश' इत्यादिकं भिन्नं वाक्यं स्यात्, उपक्रमविरोधश्च स्यात्, अत उपक्रमगतात्मवाक्यानुरोधात् पूर्वप्रकरणोक्तात्मज्ञानस्य प्रकारविशेष एवायमिति।

आत्मैवेति। परमतप्रतिपन्नः। श्रीपुरुषोत्तमश्चात्मपदार्थः। आत्मशब्दा 'आत्मतः प्राण' इत्याद्याः। तत्परा निर्गुणब्रह्मपराः। अग्रे चेदिति भाष्यं विवरांचक्रुः अग्रे चेदिति। ईश्वरेति। न च कोशादीश्वरः शिव इति शङ्क्यम्। कोशस्य 'वेदाः श्रीकृष्णवाक्यानी'त्यत्र निबन्धे सर्वथा प्रामाण्याभावात्। भिन्नमिति। अर्थभेदात् प्रश्नविषयात्मभिन्नात्मप्रतिपादकमुत्तरवाक्यं भिन्नं स्यात्। शङ्करभाष्येऽस्य सूत्रस्याभासे प्रकरणात् लिङ्गमपास्य क्रियाशेषत्वमध्यवसायितम्। तत्र क्रियास्थले ज्ञानप्रकारविशेषं निवेशयाम्बभूवुः किन्त्वेति।

अत्रैवं ज्ञेयम्। भाष्ये वाक्यमात्रं वाक्यानामेकवाक्यतात्मकं जगृहुराचार्याः, तत्प्रसिद्धग्रन्थानुरोधेनोदाहरणमात्रम्, अन्यथा 'वाक्याद्बलीयस्त्वाच्च न बाध' इति सूत्रकरणापत्तेः। अतो वाक्यप्रकरणाभ्यां बलीयस्त्वं लिङ्गस्य बोध्यते इति। न च स्थानसमाख्ययोरग्रहणे 'वाक्यप्रकरणाभ्यां बलीयस्त्वाच्च न बाध' इति सूत्रकरणापत्तिरिति वाच्यम्। स्थानस्य देशसामान्यरूपस्यानुष्ठानदेशसामान्याभावात् पाठदेशसामान्यं भवति। पाठदेशसामान्येपि यथासंख्यरूपपाठदेशसामान्यं नास्ति। यथासङ्ख्यमनु(ष्ठान)देशः समानां(श)स्तस्याभावात्। सन्निधिपाठरूपपाठदेशसामान्यस्यानारभ्याधीतविषयत्वाभावात्। वाक्यस्यानारभ्याधीतकविषयत्वात्। एवं स्थानस्याग्रहणम्। समाख्याया यौगिकशब्दरूपायाः स्ववाच्यपदार्थानामङ्गाङ्गित्वबोधिकात्वाद्वाक्येऽनुपयुक्तत्वात्। एवं समाख्याया अग्रहणम्। उभयाकाङ्क्षाप्रकरणम्। तस्य तु 'नात्मवित्, तरति शोकमात्मवित्', 'यत्र नान्यत् पश्यति, नान्यत् शृणोती'त्यादीनामन्योन्याकांक्षा वर्तते एव, सर्वात्मभावस्योपकारकस्यात्मज्ञानस्योपकार्यस्य चाकांक्षा। परन्त्विदं क्रियामात्रविषयम्, न ज्ञानप्रकारविशेषविषयम्। तथा च भाट्टभास्करे राणकः तेन सिद्धस्य समिधादेः क्रियाद्वारेण ग्रहणेन तेन क्रियाया एव प्रकरणेन ग्रहणम्। तत्राप्यारादुपकारिकाया एव प्रयाजादिरूपायाः यस्याः श्रुतिलिङ्गवाक्यैर्नान्यसंयोगो यागार्थत्वात्। संनिपत्योपकारिकायास्त्ववघातादिरूपायाः द्रव्यदेवतार्थत्वेन श्रुतिलिङ्गवाक्यैर्विनियोगान्न प्रकरणग्रहणमिति। न च क्रियास्थाने ज्ञानं प्रक्षिप्य उक्तन्यायेन ज्ञानप्रकारविशेषविषयं प्रकरणमस्त्विति शङ्क्यम्। देवताविषयत्वेन प्रकरणाग्रहणात्। अवघातादिक्रियावत्। परन्तु वाक्याद्बलीयस्त्वादिसूत्रप्रसङ्गात् प्रकरणलुपात्तम्। न च वाक्यस्यानारभ्याधीतवाक्याङ्गाङ्गिभावोपयोगितयात्र प्रपाठके आरभ्याधीतत्वेन 'नात्मवित्, तरति शोकमात्मवि'दित्यादिवाक्यानां नाङ्गाङ्गिभावो भूमलक्षणवाक्येनेति वाच्यम्। नामादिप्राणपर्यन्तं ब्रह्मत्वेनोपासनाविषयत्वेनोक्त्वा जिज्ञासितव्यत्वेन सत्यादिसुखान्तमुक्तम्। 'यो वै भूमा तदमृतम्, अथ यदल्पं तन्मर्त्य'मिति श्रुतावथेति भिन्नप्रक्रमेणाल्पानां मर्त्यत्वविधानात् नामादीनामुपासनाप्रकरणेन शोकतरणमनुपलभमानः सत्यादीनां जिज्ञासाविषयाणां शोकतारकत्वं 'स स्वराड् भवती'त्यादि 'न पश्यो मृत्युं पश्यति, न रोगम्, नोत दुःखता'मित्यनयोक्तमिति सर्वात्मभावबोधकया 'यत्र नान्य'दिति श्रुत्याङ्गाङ्गिभावो 'नात्मवित्, तरति शोकमात्मवि'दित्यादिश्रुतीनां भवत्येव।

नैवं वाक्यानुरोधाद्वरणजसर्वात्मभावलिङ्गभूयस्त्वं बाधितव्यम् । वाक्यापेक्षया श्रुतिलिङ्गयोर्बलीयस्त्वात् । एतद्बलीयस्त्वं तु 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्य'मिति जैमिनीयसूत्रे सिद्धम् । प्रकृत इतरसाधननिषेधपूर्वकं 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वा'मिति श्रुतिर्वरणमात्रलभ्यत्वमाह । एतदग्रे च 'नायमात्मा बलहीनेन लभ्य' इत्युपक्रम्य, 'एतैरुपायैर्यतते यस्तु विद्वाँस्तस्यैष आत्मा विशते ब्रह्मधामे'ति श्रुतिः पठ्यते ।

भाष्यप्रकाशः ।

यमिति मन्तव्यम् । किञ्च, अत्र हि वरणलिङ्गं सर्वात्मभावो न भूमलक्षणवाक्यमात्रेण सिध्यति, येन प्रकरणमनादृत्य स गृह्येत, किन्तु तदारभ्य 'आत्मन एवेदं सर्व'मित्यन्तेन सन्दर्भेण । अतः सन्दर्भो यथा सर्वात्मभावबोधकमवान्तरप्रकरणम्, तथा प्रपाठकः सर्व आत्मबोधकं महाप्रकरणम्, मतो भूमलक्षणवाक्यस्य सन्दिग्धत्वात् प्रपाठकरूपं महाप्रकरणमेवानुसर्तव्यमित्यत उत्तरं सूत्रं पठतीत्यर्थः । सूत्रं व्याकुर्वन्ति नैवमित्यादि । भूयस्त्वमिति । परमोत्कर्षः । तत्र किं श्रुत्यादिकमित्यपेक्षायां पूर्वं श्रुतेरुक्तत्वात्तां स्मारयन्तो लिङ्गं स्फुटीकुर्वन्ति प्रकृते इत्यादि ।

रश्मिः ।

आत्मशब्दानां 'नात्मवि'दित्यादीनां 'आत्मैवाधस्ता'दित्यादिश्रुत्युक्तात्मविषयत्वात् । ननूक्तमनारभ्याधीतत्वमङ्गाङ्गिभावे तन्त्रमिति चेत् । न । अनारभ्याधीतत्ववदेकार्थविषयत्वस्यापि तन्त्रत्वात् । यथा चातुर्मास्यप्रकरणपठितस्य 'द्वयोः प्रणयति द्वाभ्यामग्निं प्रणयती'ति वाक्यस्य शाखान्तरीयस्य वा 'आहवनीयादध्वर्युप्रतिप्रस्थातारौ सहाग्नी प्रणयत' इति वाक्यस्यैकवाक्यतया चातुर्मास्यान्तर्गतयोर्वरुणप्रघाससाकमेधसंज्ञयोः पर्वणोरीदृशं प्रणयनमङ्गत्वेन ज्ञायते । 'सामर्थ्यमालोच्य प्रणयनेन पर्वद्वयं भावये'दिति । द्वयोरित्यस्यैतत्पर्वद्वयविषयत्वं तस्मात् । तदेतदेकवाक्यत्वमुक्तं तन्निर्धारणानियमाधिकरणे 'तस्मात् त्व'मित्युपक्रम्य, 'याहि सर्वात्मभावेने'त्यत्र, 'सर्वात्मभावेन मां पुरुषोत्तमं याहि, अभयं यास्यस' इति । पुरुषोत्तमप्राप्तिस्तु फलात्मकज्ञानद्वारा, तदुक्तं 'तरति शोकमात्मवि'दिति । तदेकवाक्यतयोपसंहारस्य 'स स्वराड् भवती'त्यस्य बलेन निर्णयाद्वाक्यविनियोगोऽयम् । अधिकरणमालायां जैमिनीयन्यायमालाविस्तरोपनामिकायां तु उक्ततन्त्रविशेषः कश्चिन्नोपगतः । तृतीयस्य तृतीयपादारम्भे उपक्रमोपसंहारैकवाक्यताबलेन निर्णयाद्वाक्यविनियोगो भवतीति विशेषातिरिक्तः । तेन वाक्यप्रकरणे उभे गृहीते । प्रसिद्धग्रन्थानुरोधात् ।

तदाहुः किञ्चेति । वरणेति । इदं भाष्ये स्पष्टीभविष्यति । सन्दिग्धत्वादिति । 'सर्वात्मभावोऽधिकृतो भवतीनामधोक्षज' इत्यस्य पुराणमतत्वात् । न च 'आत्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्ये'ति छान्दोग्यसमाप्तिस्थश्रुतिविचारेणासन्देह इति वाच्यम् । 'आत्मनि हार्दे ब्रह्मणि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्ये'त्यर्थेन 'कृष्णमूर्तिः सदा ध्येये'त्याद्यर्थाभावात् । उत्तरमिति सूत्रविशेषणम् । उत्तरसूत्रेण पठतीत्यस्य पर्यायत्वम् । यदि चैवं व्याख्यातपूर्वपक्षोत्थानमेव न सम्भवति, पूर्वतन्त्रिणां मायावादिनां च लिङ्गभूयस्त्वं श्रुत्वा वाक्यचिन्तास्फुरणात् श्रुतिचिन्ता तु स्यात्, तेषां लिङ्गाच्छ्रुतेः प्राबल्याद्वाक्यस्य तु लिङ्गात् दुर्बलत्वादिति विभाव्येत, तदा तु ह्युपनिषद्व्याख्यान्तर्गतस्य कस्यचित् तर्कितुः शङ्कया व्याख्यानमित्युन्नीयेत । भाष्ये । जैमिनीयसूत्र इति । तृतीयस्य तृतीयपादस्थे । पूर्वमिति । विधैवेति सूत्रे श्रुतेर्वेदरूपायाः लिङ्गं शब्दसामर्थ्यम् ।

१. किञ्चेत्यारभ्य, अनुसर्तव्यमित्यन्तः पाठः १७८ पृष्ठे टिप्पणे निवेशितस्तत उद्धृत्य श्रीपुरुषोत्तमैरत्र योजित इति ।

भाष्यप्रकाशः।

अयमर्थः। सत्यमिदमात्मबोधकमान्तमेकं वाक्यम्, उपक्रमश्च बलीयान्, तथापि स नाथप्रतिग्रहेष्टिवाक्य इव निःसन्दिग्धः। तत्रत्यात्मपदस्य जीवाक्षरपुरुषोत्तमसाधारण्यात्। तथा सति तत्र को वा ग्राह्य इति विमर्शे, नारदस्य शोकतारकात्मज्ञानार्थं प्रष्टुं प्रवृत्तत्वेन तादृश एवात्मा ग्राह्यः। स च निरवधिसुखरूपत्वात् पुरुषोत्तम एव, न जीवः, नाप्यक्षरम्। आद्यस्य दुःखित्वादन्यस्य गणितानन्दत्वात्। अतो निरवधिसुखरूपात्माभिधायिका या भूमश्रुतिः, सा वाक्यात् बलीयसी। बुभुत्सितात्मस्वरूपनिर्णायकत्वात्। किञ्च। 'आत्मलाभान्न परं विद्यत' इति श्रुत्यन्तरे आत्मलाभस्य परमलाभत्वश्रावणाच्छोकतारकोऽप्यात्मा लभ्यमान एव शोकं तारयति, न त्वलभ्यमानः। लाभश्च न ज्ञानमात्रम्, किन्तु स्वाधीनतापुरस्कृतम्। प्रकृते च 'यदा वै सुखं लभत' इत्यादिकथनाल्लभ्यमानस्यैव निरवधिसुखरूपस्य भूम्नः शोकतारकत्वमभिसंहितम्। तस्य च 'इतरनिषेधे'त्याद्युक्तरीत्या वरणश्रुतिस्तन्मात्रलभ्यत्वमाह। एतदग्रे च 'नायमात्मे'ति भक्तिलभ्यत्वबोधिका श्रुतिः पठ्यते। अत आत्मज्ञानस्य ज्ञायमानस्यात्मनो वा शोकतारकत्वसम्पादिका 'लभत' इति लाभश्रुतिश्च तादृशी। तथा 'यमेवैष' इति श्रुतिर्वरणमात्रलभ्यत्वमात्मन आह। तदग्रिमा च भक्त्यादिलभ्यत्वम्। तानि च वरणस्यैव व्यापारभूतानि। एत-

रश्मिः।

इतरेत्यादिभाष्ये कस्य इतरनिषेधेत्यादीत्यपेक्षायां भूम्नः सर्वात्मभावरूपस्येत्याहुः अयमर्थ इति। अश्वेति। इयं तृतीयस्य चतुर्थचरणे चतुर्दशाधिकरणेऽस्ति। भूमेति। 'नायमात्मे'त्यत्र बलं निरपेक्षरवरूपं भूमश्रुतिः 'तपसो वाप्यलिङ्गा'दित्यत्र निरपेक्षरवरूपं वा भूमश्रुतिः, प्रकृते तु 'स भूमे'ति भूमरूपा निरपेक्षरवरूपा श्रुतिः उपक्रमगतात्मवाक्याद्बलीयसी। न च विनियोगविधेरभावात् कारणाभावे सहकारिषण्णां कारणानां कथमुपयोग इति वाच्यम्। पूर्वतन्त्रवत् कारणत्वाभावात्। तत्रत्यबलाबलमात्रादरणात्। न च श्रुतिर्वेदः सूत्र इति शङ्क्यम्। जैमिनेर्व्यासशिष्यत्वेन फलाध्याये 'परं जैमिनिर्मुख्यत्वा'दित्यादिसूत्रे तन्नामग्रहणात्। अन्यथा वेदादिबलीयस्त्वादित्येव सूत्रयेत्। बुभुत्सितेति। बोद्धुमिष्टस्यात्मनः। 'सुखं भगवो विजिज्ञास' इति श्रुतेः। शोकमिति। ननु पञ्चम्या भाव्यम्, तरणेऽपादानत्वात्। मैवम्। जीवः शोकं तरति, तं जीवं शोकं तारयतीति प्रेरणायां णिच्। तारयतीत्यस्य हारयतीत्यर्थात्। 'दुह्याचपचदण्ड्रुधिप्रच्छिचिब्रूशासुजिमन्थ्मुषाम्। कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहा'मित्यत्र निआदीनां चतुर्णामर्थग्रहणात्। एवमपेक्षितोक्त्या सिद्धापेक्षितेन समं भाष्यान्वयमाहुः तस्य चेत्यादि। आत्मज्ञानस्यालाभत्वादाहुः ज्ञायमानस्येति। लाभेति। लाभप्रतिपादको निरपेक्षो रवः। तादृशी 'यदा वै सुखं लभत' इति वाक्याद्बलीयसी। भूमपदस्य सर्वात्मभावार्थकत्वपक्षमुक्त्वा तस्य भगवदर्थकत्वपक्षमाहुः तथेति। आत्मनो भगवतः 'भगवद्रूपत्वात् सर्वात्मभावस्ये'ति भाष्यात्। 'यमेवे'ति सावधारणश्रुत्या भक्त्यादीनामप्रयोजकत्वमाशङ्क्याहुः तानीति। प्रमादाभावसर्वात्मभावसहितविरहभावबलानि भक्त्यादीनि। एतदिति। वरणमात्रलभ्यत्वं सर्वात्मभावदानद्वारा लिङ्गं शब्दसामर्थ्यरूपम्, 'फलमत उपपत्ते'रित्यत्र तथा व्याख्यानात्। सर्वात्मभावस्य तु वरणमात्रलभ्यत्वं प्रधानवदधिकरणे सिद्धम्। अर्थद्वयं भगवत्सर्वात्मभावरूपं बहुषु स्थलेषु वर्तते। तत्रत्ये विचारे मात्रपदं

एतच्च 'विधैव तु निर्धारणा'दित्यत्र निरूपितम् ।

अपरं च, 'नात्मवित्, तरति शोकमात्मवि'दितिनारदवाक्यानुवादयो-

भाष्यप्रकाशः ।

दपि पुरुषोत्तमस्य लिङ्गम् । 'पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यये'ति गीतावाक्यात् । एतल्लिङ्गं चकारात् भूमादिश्रुतिः उभयमपि 'विधैवे'ति सूत्रे निरूपितम् । अत्र श्रुतिबोधको ग्रन्थः प्रायस्त्रुटित इति प्रतिभाति ।

पूर्वोक्तस्य लिङ्गस्य श्रुत्यन्तरस्थत्वात् प्रकृतसन्दर्भस्थं लिङ्गं दर्शयन्ति अपरं चेति । नारदवाक्यानुवादयोरिति । नारदवाक्ये तदनुवादे च । उत्तमप्रश्नात्मकेनेति । 'अस्ति

रश्मिः ।

कार्त्स्न्ये एकत्र, अन्यत्रावधारणे बोध्यम् । गीतेति । सर्वात्मभावस्य लिङ्गं तु 'भगवान् भजतां मुकुन्दो मुक्तिं ददाति कर्हिचित् स्म न भक्तियोग'मिति वाक्यात् । भूमेति । भूमरूपनिरपेक्षो रवः आदिना पुरुषोत्तमरूपनिरपेक्षो रवः । विधेतिसूत्रे पुरुषोत्तमरूपनिरपेक्षो रवो नास्ति । सर्वात्मभावरूपो रवश्चेत्याहुः अत्रेति । 'नायमात्मे'ति आत्मरवः पुरुषोत्तमवाची, 'तपसो वाप्यलिङ्गा'दिति सर्वात्मभाववाची । तथाप्युपपादनसापेक्ष इति प्राय इत्युक्तम् । श्रुत्यन्तरेति । मुण्डकश्रुत्यन्तरेत्यर्थः । काठकश्रुत्यन्तरेत्यर्थश्च । अत्र 'नायमात्मे'त्यादिवाक्यस्यात्मलाभसामर्थ्यं 'लभ्य' इति पदादालोचितम् । तनुविवरणसामर्थ्यं 'विवृणुत' इति शब्दादालोचितम् । द्वितीयस्य 'नायमात्मे'त्यादिवाक्यस्य धामवेशनसामर्थ्यं 'विशत' इति शब्दादालोचितम् । तयोः स्वार्थबोधे समासयोर्वाक्ययोः पुनराकाङ्क्षावशेनैकवाक्यतया वरणालिङ्गं सर्वात्मभावः 'वरणजसर्वात्मभावे'ति भाष्यात् । तथा च निःसाधनो यः कोप्युक्तभक्तेरङ्गम् । वरणमात्रस्य साधनत्वमुक्त्वा पुनर्बलाभावनिषेधेनात्मलाभवाक्यस्य बलाप्रमादयोर्वाक्यस्य च सामर्थ्यमालोच्य परस्पराकाङ्क्षयैकवाक्यतया 'श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यत' इति वाक्याद्विविधश्रेयोवानुक्तभक्तेरङ्गम् । 'एतैरुपायै'रिति श्रुतावुपायपदान्न पुष्टिमार्गीयः, अपि तु मर्यादामार्गीयः । भक्तिहंसे स्पष्ट एवायमर्थः । तथा च यः कोपि वरणेन सर्वात्मभावं लभेतेति श्रुतिं कल्पयति पूर्वं लिङ्गम् । द्वितीयं तु लिङ्गं विविधश्रेयोवान् बलाप्रमादाभ्यामात्मानं लभेतेति श्रुतिं कल्पयति । एवञ्च यत्पूर्वपक्षिणोक्तं वाक्यात् ज्ञानप्रकारविशेषः प्रकरणाल्लिङ्गस्य सन्दिग्धस्य बाध इति । तन्नोपपद्यते । लिङ्गस्यासन्दिग्धत्वात् तेन दुर्बलवाक्यान्न ज्ञानप्रकारविशेषः, प्रकरणं तु दुरापास्तम् । तथा च यथा तृतीयस्य तृतीयपादेऽष्टमाधिकरणे 'स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि । तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमान' इति । अस्य मन्त्रस्यार्थः । भोः पुरोडाश ते तव स्योनं समीचीनं सदनं स्थानं कृणोमि । विकरणव्यत्ययान्न तनादिकृञ्भ्य उः, किन्तु जुहोत्यादिभ्यः श्लुः शपोपवादः । करोमीत्यर्थः । तच्च स्थानं घृतस्य धारया सुष्ठु सेवितुं योग्यं सुशेवं कल्पयामि । भो व्रीहिसारभूत त्वं व्रीहीणां मेध सुमनस्यमानः समाहितमनस्कस्तस्मिन् समीचीने उपविश तत्र स्थिरो भवेत्यर्थः । तत्र 'तस्मिन्' इत्यनेन पूर्वोत्तरयोरेकवाक्यत्वे सति सर्वोप्ययं मन्त्रः स्थानकरणस्याङ्गम् । तत्र विनियोजिका श्रुतिरेवं कल्पनीया सर्वेणानेन मन्त्रेण स्थानं कर्तव्यमिति । तथा सर्वेण मन्त्रेण पुरोडाशः स्थापनीय इत्यपि कल्पनीया । सदनाङ्गत्ववत् प्रतिष्ठापनाङ्गत्वस्यापि तद्वाक्यबोधितत्वात् । तथा सति सदनस्थापनयोरस्य मन्त्रस्य विकल्पः समुच्चयो वा स्वेच्छया भविष्यतीति प्राप्ते, सिद्धान्तितम् । यदेतत्पूर्वोत्तरार्धयोः परस्परान्वयेन सम्पन्नमेकवाक्यं तदेतदुत्तरार्धस्य

रात्मपदमुत्तमप्रश्नात्मकेन लिङ्गेन पुरुषोत्तममपरमिनि ज्ञापयने । स हि सर्वेभ्य उत्तमोऽतो ब्रह्मेत्युपास्यत्वेन सनत्कुमारोक्तप्रतिरूपं ततस्ततो भूयोऽस्तीत्य-

---

भाष्यप्रकाशः ।

भगवो नाम्नो भूय' इत्यादिरूपाधिक्यप्रश्नात्मकेन । एतदेव विभजन्ते स हीत्यादि । स पुरुषोत्तमो हि निश्चयेन 'स उत्तमः पुरुष' इति श्रुतेः 'अतोऽस्मि लोके वेदे चे'ति स्मृतेः

रश्मिः ।

सदनकरणे शक्तिमकल्पयित्वा कृत्स्नं मन्त्रं सदने विनियोक्तुं नार्हति । तथा पूर्वार्धस्य स्थापने शक्तिमकल्पयित्वा न तत्र प्रभवति । तथा सति लिङ्गेन वाक्यबाधादर्धद्वयमुभयोर्व्यवस्थितमिति व्यवस्थापितम् । तद्वत् 'नायमात्मे'तिवाक्यद्वयं स्वार्थबोधसमासम् । तत्र पूर्वं वरणमात्रलभ्यत्वमाह श्रुतिः । भाष्ये भक्तिहेतुग्रन्थस्योद्देशात् तत्र चानुग्रहस्य वरणकारणत्वेन निवेशादनुग्रहेण वरणमात्रलभ्यत्वमाह भक्तिहेतुः । भाष्यत्वाद्वरणानुग्रहयोः कार्यकारणभावः । अत्रेतरसाधननिषेधपूर्वकवरणादिमात्रलभ्यत्वात् पुष्टिः । अत्रापि स्वरूपबलेन मुक्तिः, ज्ञानभक्त्यादि दत्वा मुक्तिः । तत्र द्वितीयपक्षे पुष्टावपि सर्वात्मभावप्रवेश इति सर्वात्मभावमपेक्षते । स द्वितीयश्रुतौ लिङ्गपदेन श्रुतोऽश्रुतापेक्षया प्रबलोऽनुकृष्यते । 'गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययात् ।' 'मुख्यभक्तिरि'ति सर्वात्मभावसमाख्या । 'याहि सर्वात्मभावेने'त्येकादशसर्वस्वं निबन्धोक्तं श्रीभागवते एकादशस्कन्धे द्वादशाध्याये पुष्टिमार्गनिरूपणे यतः । श्रुतयश्च 'भक्तिरहस्यभजन'मित्यादि । अत्र मनःपदादेकादश मनसो वृत्तयो ग्राह्याः । 'आत्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्ये'ति । 'यत्र नान्यत् पश्यती'ति । 'श्रुतेश्चे'तिसूत्रमत्रैव चतुर्थचरणे । द्वितीयस्यां मर्यादाभक्तिः । 'न च प्रमादा'दिति भक्त्युपायकथनात् । अप्रमादाद्बलं तपश्च । लिङ्गं तु प्रदानवत्सूत्रोक्तरीत्या प्राप्यते । अत्रापि वरणमनुग्रहश्च योज्यः । किञ्च, 'पुरुषोत्तमलाभहेतुभूतं तु भक्तिमार्ग' इत्यादि 'विधैवे'ति सूत्रभाष्यात् । भक्तिहेतुग्रन्थरीत्यानुग्रहोपि । श्रुतयोपि 'आत्मा वा अर' इत्यादि 'तं भजेत् तं रसेत्' 'भक्त्या जानाति चाव्ययम्' । तथा च दृष्टान्तानुरोधात् यथा 'स्रुवेणावद्यति स्वधितिनावद्यति हस्तेनावद्यती'त्यत्र स्रुवादीनां सामर्थ्यमालोच्य 'द्रवं मांसं कठिन'मिति श्रुतिं कल्पयित्वा स्रुवस्य द्रवावदाने स्वधितेर्मांसावदाने हस्तस्य कठिनावदानेऽङ्गत्वं विधिरर्थगतसामर्थ्यरूपलिङ्गमालोच्य बोधयति, तथा प्रकृते 'तदज्ञाने सर्वमौढ्यं तेन तद्धृदयं स्मृत'मिति निबन्धात् पुराणविदो विगतसर्वमोहा यावद्वाक्याभ्यामुभयश्रुतिभ्यां एकं मार्गमुपगच्छन्ति, तावत् 'मार्गास्त्रयो मया प्रोक्ताः' इति वाक्याद्वरणसामर्थ्यं तस्यात्मलाभहेतुत्वं ज्ञात्वात्मा लभ्यो भक्तिमार्गात्, सा भक्तिरपि पुष्टिः सर्वात्मभावरूपा, श्रुतौ वरणमात्रोपादानात् । अतः स्वेन वृतेन सर्वात्मभावेनात्मा लभ्य इति श्रुतिं प्रकल्प्य पुष्टिमार्गीयस्य पूर्वश्रुत्युक्तमार्गाङ्गत्वम् । द्वितीयश्रुतौ भक्त्यादेर्बलादिपदवाच्यस्य सामर्थ्यमालोच्य तस्य वरणमन्तराऽसम्भवं 'भगवान् भजतां मुकुन्दो मुक्तिं ददाति कर्हिचित् स्म न भक्तियोग'मिति वाक्यादालोच्य वरणेन बलादि भक्तिरिति श्रुतिं प्रकल्प्य मर्यादामार्गीयस्य द्वितीयश्रुत्युक्तमार्गाङ्गत्वं च बोधयतीति । लिङ्गस्येति । वरणसामर्थ्यस्य भक्त्यादेर्बलादिपदवाच्यस्य सामर्थ्यस्य च । लिङ्गमिति । आत्मपदस्य उत्तमप्रश्नात्मकत्वं लिङ्गम् । सर्वात्मभावस्य 'स एवाधस्ता'दित्यादिनोक्तो भावो लिङ्गम् । स भगवतो नारदस्योत्तमत्वं 'यो यच्छ्रद्धः स एव स' इति वाक्यात् पुरुषोत्तमप्रयुक्तं उपनिषदि, अन्यथा नित्ये वेदेऽस्तीति अनित्यस्य नारदस्य श्रीभागवते मध्यमाधिकारिण उत्तमत्वानवच्छिन्नस्य संयोगापत्त्या स नारद इत्यर्थमनादृत्य भाष्यं व्याकुर्वन्ति स स पुरुषोत्तम इत्यादि ।

पृच्छत् । अन्ते सर्वाधिकत्वेन सुखात्मकत्वेन भूमानं श्रुत्वा तथा नापृच्छत्, किन्तु तत्प्रास्थ्यर्थमत्यार्त्या 'कस्मिन् प्रतिष्ठित' इत्यपृच्छत् । तदा सर्वात्मभाववत्स्वेव प्रतिष्ठित इत्याशयेन सर्वात्मभावलिङ्गात्मकं भावं 'स एवाधस्ता'दित्यादिनोक्तवान् ॥ ४९ ॥

---

भाष्यप्रकाशः

सर्वेभ्यो नामादिप्राणपर्यन्तेभ्योऽक्षराच्चोत्तमः । अतो नामाद्याशान्तेषु ब्रह्मेत्युपास्यत्वेन कथनात् सनत्कुमारोक्तप्रतिरूपं सनत्कुमारेण 'नाम्नो वाव भूयोऽस्ती'त्याद्युक्ते 'तन्मे ब्रवीतु भगवा'-नित्येवं तल्लक्षितरूपं तत'स्ततो भूयोऽस्तीति'ति ज्ञात्वा अपृच्छत् । अन्ते पश्चात् सर्वाधिकं भूमानं श्रुत्वा, तथा 'अस्ति ततोऽपि भूय' इत्येवं नापृच्छत्, किन्तु तदधिष्ठानमपृच्छत् । तथाचैतत्प्रश्नद्वयसामर्थ्येनाप्युपक्रमगतमात्मपदं पुरुषोत्तमपरमिति निश्चीयते । वाक्याल्लिङ्गस्यापि बलीयस्त्वादित्यर्थः । नन्वस्त्वात्मपदं पुरुषोत्तमपरम्, तथापि विवक्षितसर्वात्मभावबोधकस्यात्रादर्शनात् कथं न तद्भूयस्त्वबाध इत्यत आहुः तदेत्यादि । तथाच द्वितीयप्रश्नोत्तरे सर्वात्मभावलिङ्गस्य दर्शनान्न तद्बाध इत्यर्थः । एतेनावश्यकोपपत्तिरत्र वाक्यतात्पर्यनिर्णायिकेत्युक्तम् ॥ ४९ ॥

रश्मिः ।

त्यदादीनामुत्सर्गतः प्रधानपरामर्शित्वेन स पुरुषोत्तमः, न तु नारदः । अपृच्छदित्यत्र तु नारदः कर्ता । ननु स नारदो हि निश्चयेन श्रौतत्वादुत्तमः, मध्यमाधिकारित्वस्य श्रीभागवतीयत्वेन भगवन्मतत्वात् । श्रौतत्वाभावात् । अतः सर्वोत्तमत्वात् । सनत्कुमारोक्तप्रतिकूलरूपम्, अन्यत् समानं व्याख्यानमिति व्याख्यानं कुतो नादृतम्, अन्यथा स हि सर्वेभ्य उत्तम इति भिन्नं वाक्यं स्यादिति चेत् । न । पूर्वोक्तदोषाणामवर्जनीयत्वेन वाक्यभेदस्यादोषत्वात् । तल्लक्षितेति । प्रति लक्षणे 'लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनव' इति पाणिनिसूत्रात् । नारदलक्षितं रूपम् । तथा चेति । पूर्वोक्तप्रकारेण च प्रश्नद्वयम्, ततो 'भूयोऽस्ती'ति ज्ञानेन प्रश्नः अधिष्ठानप्रश्नश्च । वाक्यात् 'सोऽहं भगवो मन्त्रविदेवास्मि, नात्मवि'दिति वाक्यात् लिङ्गस्य ततो भूयस्त्वेन ज्ञातस्य ज्ञानविषयिणीच्छारूपस्य तदधिष्ठानज्ञानविषयिणीच्छारूपस्य च अपिपदेनात्मरूपनिरपेक्षरवस्य बलीयस्त्वात् । तद्भूयस्त्वबाधो लिङ्गभूयस्त्वबाधः । ननु वाक्यार्थजीवात्मरूपस्य प्रतीतस्य बाधाद्वाक्याप्रामाण्यापत्तिरिति चेत्, तत्राहुः एतेनेति । उपपादनादावश्यिका युक्तिः, पुरुषोत्तमपर आत्मशब्दो न स्यात्, वाक्यप्रश्नसामर्थ्यश्रुतयो न स्युरित्येवंरूपा वाक्यस्य तात्पर्यं तस्य पुरुषोत्तमे निर्णायिकेत्येतेन भाष्येणोक्तम् । वक्तुरिच्छा तु तात्पर्यम् । तस्य शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतुत्वम्, 'संयोगो विप्रयोगश्च साहचर्यं विरोधिता । अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः । सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादय' इति काव्यप्रकाश आदिपदात् । यद्यप्यादिपदार्थोऽभिनयादयः, इदं च नाभिनयः । अभिनयादय इत्यत्रादिशब्देन हृदयनिहितहस्तो गृहीतः । 'यथा 'इतः स दैत्यः प्राप्तः श्रीर्नेत एवार्हति क्षय'मित्यत्रात्मनिर्देशो हृदयनिहितहस्तेन प्रतीयते । तथाप्यादिपदार्थत्वं तात्पर्यस्याप्यविरुद्धम् । जीवेऽभिधावृत्तिः, पुरुषोत्तमे तात्पर्यवृत्तिस्तस्या निर्णायिकेति वार्थः । परं त्वाकारोऽनादरे । तस्य वाक्यस्य सन्दिग्धत्वादिति वक्ष्यमाणभाष्यप्रकाशात् । सन्दिग्धेऽर्थे काव्यप्रकाशकारिकाप्रवृत्तेरुचितत्वात् ॥ ४९ ॥

नन्वेतया श्रुत्या न सर्वात्मभावलिङ्गात्मको भाव उच्यते, किन्तु व्यापकत्वेन सर्वरूपत्वेन स्वभिन्नाधिकरणाभावादन्यत्राप्रतिष्ठितत्वमेवोच्यत इत्यत उत्तरं पठति।

अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववत् दृष्टश्च तदुक्तम्॥ ५०॥

भूमस्वरूपं श्रुत्वा 'स भगवः कस्मिन् प्रतिष्ठित' इति प्रश्ने 'स्वे महिम्नी'त्युत्तरम्। तदर्थस्तु स्वीयत्वेन वृते भक्ते यो महिमरूपः सर्वात्मभावस्तस्मिन्निति। स्वरूपात्मके महिम्नीति वा। भगवदात्मकत्वात् सर्वात्मभावस्य। तदितरस्य साक्षात्पुरुषोत्तमाप्रापकत्वादस्यैव तत्प्रापकत्वात् परमकाष्ठापन्नमहित्वरूपोऽयमेव भाव इति महिमशब्देनोच्यते। स तु विप्रयोगभावोदये सत्येव सम्यक् ज्ञातो

भाष्यप्रकाशः।

अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववत् दृष्टश्च तदुक्तम्॥ ५०॥ सूत्रमवतारयन्ति नन्वित्यादि। तथाच पूर्वमुपक्रमगतवाक्यबलेन प्रत्यवस्थाने तस्य वाक्यस्य सन्दिग्धार्थकत्वादुपसंहारगतत्वेऽप्यसन्दिग्धाभ्यां ततः प्रबलाभ्यां श्रुतिलिङ्गाभ्यामेतद्वाक्यार्थनिर्णयेनात्र ताभ्यामात्मपदस्य पुरुषोत्तमपरत्वेऽप्येतया द्वितीयप्रश्नश्रुत्या यत् सर्वात्मभावसमर्थनम्, तन्न युक्तम्। तदुत्तरश्रुतौ पुरुषोत्तमस्य स्वप्रतिष्ठताया एव सिद्ध्या भवदुक्तसर्वात्मभाववद्भक्तस्याधिकरणताया असिद्धौ सर्वात्मभावस्यात्र प्रतिपत्तुमशक्यत्वादित्याशङ्कायामिदं सूत्रं पठतीत्यर्थः। उक्ताशङ्कानिवारकं सौत्रं हेतुमुक्तश्रुतिविचारमुखेन व्याकुर्वन्ति भूमेत्यादि। यदुक्तमत्र सर्वात्मभावलिङ्गात्मको भावो नोच्यत इति। तन्न। यतोऽत्र भूमस्वरूपश्रवणानन्तरं तदाधारप्रश्ने सनत्कुमारेण 'स्वे महिम्नी'त्युत्तरमुक्तम्। तत्र स्वपदस्यात्मीयवाचकत्वे स्वीयत्वेन वृतो यो भक्तस्तन्निष्ठो यो महिमा सर्वात्मभावरूप उत्कर्षस्तस्मिन्नित्यर्थो भवति। यदि च स्वपदमात्मवाचकम्, तदा स्वरूपात्मके महिम्नीत्यर्थो भवति। स च महिमा सर्वात्मभाव एवेत्युभयथापि तस्य महिम्नो भगवत्स्वरूपात्मकत्वात्स्वपदं न विरुध्यते। नच तस्य स्वरूपात्मकत्वे कथं महिमरूपत्वमिति शङ्कनीयम्। सेतुत्ववदुपपत्तेः। तदितरस्य पुरुषोत्तमभिन्नस्य तत्प्रापकत्वाभावादस्य तदात्मकभावस्यैव तत्प्रापकत्वादयमेव सर्वोत्कृष्ट इत्ययमेव महिमपदेनोच्यते। स तु विप्रयोगभावोदये सत्येव सम्यक् परमत्वेन रूपेण व्यभिचारिभावैर्ज्ञातो भवति। ते त्वनियतस्वभावा इति ज्ञापयितुं त्रिविधाः

रश्मिः।

अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववत् दृष्टश्च तदुक्तम्॥ ५०॥ उत्तरेति। तस्य प्रश्नस्य उत्तरश्रुतौ 'स्वे महिम्नी'ति श्रुतौ। सौत्रमिति। अनुबन्धरूपम्। सर्वात्मेति। वृतपदसमभिव्याहारात्तदुत्तरश्रुत्युक्तलिङ्गपदार्थरूपसर्वात्मभावरूप इत्यर्थः। सर्वेति। 'तपसो वाप्यलिङ्गा'दिति श्रुतेः। तदितरस्येत्यादिभाष्यं विवरीतुकुः न चेत्यादिना। तत्प्रापकस्येति। 'स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तमे'ति 'भक्त्या जानाति चाव्यय'मिति भक्तिपरमात्मनोः स्वज्ञानसाधनत्वादैक्योक्तेः पुरुषोत्तमभिन्नस्य तत्प्रापकत्वाभावात्। प्रवेशसाधनत्वात् द्वयोरैक्यं वा। 'ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तर'मिति वाक्यात्। भाष्ये साक्षात्पदं प्रत्यक्षे तुल्ये वा। 'साक्षात् प्रत्यक्षतुल्ययो'रिति विश्वात्। स त्विति भाष्यं विवरीतुमाहुः स त्विति। परेति। ननु सर्वात्मभावत्वेन सर्वात्मभावः कुतो न ज्ञातो भवतीति चेत्। न। परो मीयते ज्ञायते तेनाधिष्ठानेनेति परमस्तत्त्वेना-

भवति व्यभिचारिभावैः। ते त्वनियतस्वभावा इति ज्ञापयितुं त्रिविधाः। 'स एवाधस्ता'दित्यादिना, 'आत्मैवेद५ सर्व'मित्यन्तेन निरूप्य, भूमप्रतिष्ठाधिकरणप्रश्ने, यदुत्तरितं 'स्वे महिम्नी'ति, तमेवानुबध्नाति, 'स वा एष' इत्यनेन, तच्छब्दस्य पूर्वप-

भाष्यप्रकाशः ।

तदादेशाहङ्कारादेशात्मादेशरूपास्तिस्रो विधास्तस्य भावस्य ज्ञापकाः प्रकारास्तांस्त्रीन् प्रकारान् 'स एवाधस्ता'दित्यारभ्य 'आत्मैवेदं सर्व'मित्यन्तेन निरूप्य, भूमप्रतिष्ठाप्रश्ने यदुत्तरितं 'स्वे महिम्नी'ति, तं महिमपदोक्तं भावमेवानुबध्नाति, 'स वा एष' इति तच्छब्दस्योक्तमहिमपरामर्शित्वात् तस्मिन् भक्ते 'एवं पश्य'न्नित्यादिना तत्कर्मकदर्शनादिकर्तृताबोधनेन तद्भाववैशिष्ट्यं बोधयँस्तमेव भावं महिमपदेऽनुषञ्जयति । तथाच, अनुबध्नातीत्यनुबन्धः पचाद्यच् । पूर्वं स्वपदेनार्थबलेन वा उक्तं भावमनुलक्ष्यीकृत्य बध्नाति नियमयतीत्यनुबन्धः, 'स एष एवं पश्य'न्नितिवाक्यस्थः । स इति पूर्वपरामर्शः । आदिपदेन त्रिविधभावबोधकाः पश्यदादयो धर्माः । स च तदादयश्चेत्यनुबन्धादयः । द्वन्द्वः । तेभ्योऽनुबन्धादिभ्यश्चतुर्भ्यो हेतुभ्यः सर्वात्मभाव एव दृढीक्रियत इति

रश्मिः ।

धिष्ठानत्वेन ज्ञातो भवति, 'स्वे महिम्नी'ति श्रुतिसमाकलनवेलासत्त्वात् । अन्यत्र कालेपि श्रुतिसमाकलनजन्यसंस्कारोद्बोधे परमत्वेन न ज्ञातो भवति, अतो न सम्यक्, अधिष्ठानत्वेन, किन्तु सर्वात्मभावत्वेन, श्रुतिसन्दर्भाभावात् । तथा च 'महिम्नी'त्युक्ते सर्वात्मभावप्रतीतिर्यत्र, तत्र परमत्वेनाधिष्ठानत्वेन ज्ञानमहिम्नीत्यधिष्ठानसप्तम्याः । यत्र तु महिम्नीत्याद्यधिष्ठानप्रतीतिर्नास्ति, तत्र सर्वात्मभावत्वेन सर्वात्मभावः प्रतीयते । राजकीयपुरुष इत्यत्र राजकीयत्वेन पुरुषप्रतीतिवत् । अनुबध्नातीति । ननु तद्भावलिङ्गानुबन्धो दृश्यते, पूर्वं ब्रतीति भाष्येण, न तु सर्वात्मभावानुबन्ध इति चेत् । न । लिङ्गानुबन्धे तद्भावोऽनुबद्ध एव । लिङ्गेन सर्वात्मभावानुमानादित्याशयात् । अन्यथा महिमरूपः सर्वात्मभाव इति भाष्यविरोधः। 'यदुत्तरितं 'स्वे महिम्नी'ति तमेवानुबध्नाती'ति भाष्यविरोधश्चेति । तच्छब्दस्येति भाष्यं विवरामासुः स वा इति । दर्शनादीत्यादि । 'पश्य'न्नित्यत्र कर्तरि लटः शतृप्रत्ययः, मन्वान इत्यत्र शानच् । विजानन्नित्यत्र शता । एवं दर्शनादिकर्तृता । सा च दर्शनाद्यनुकूलव्यापारवत्ता । दर्शनाद्याश्रयतेति नैयायिकाः । तस्या बोधनेनेत्यर्थः । तद्भाववैशिष्ट्यं लिङ्गात्मकभाववैशिष्ट्यं बोधयन् तं लिङ्गात्मकं भावं महिमपदे सर्वात्मभाववाचकेऽनुषञ्जयति । षञ्ज सङ्गे भ्वादिः (प्रेरणा) णिजन्तः सर्वात्मभावस्य प्रतिपादकतासङ्गमनुपश्चाल्लिङ्गात्मको भावः सजति तत्वात् । तर्हि स कीदृक् येन तत्रैव प्रतिष्ठित इत्याकाङ्क्षायां तं विवृणोतीति लिङ्गभूयस्त्वसूत्रभाष्यप्रकाशात् तं भावं 'स एवाधस्ता'दित्यादिश्रुतिरनुषञ्जयति, महिमपदवाच्यसर्वात्मभावव्याख्यात्री यतः । ननु प्रतिपादकतासङ्गो व्याख्यात्र्या श्रुत्या, न तु महिमपदेन, अतः कथं महिमपदेन श्रुतिरनुषञ्जयतीति चेत् । न । अर्थाभेदात् । यथा कलशपदार्थो हि कम्बुग्रीवादिमान् घटपदेपि सजति, अर्थाभेदात् तं कलशपदमनुषञ्जयति । पचेति । 'नन्दिग्रहिपचादिभ्यो ल्युणि न्यच' इति सूत्रेण । स्वपदेनेति । 'स्वे महिम्नी'ति स्वपदेनार्थबलम्, तदितरेतिभाष्योपपादितं तेन वेत्यर्थः । बध्नातीति । 'स एवं पश्य'न्नित्यादिश्रुतिस्थं दर्शनादिकर्तारं श्रुतिः सैव बध्नातीत्यर्थः । स चेति । 'स एवाधस्ता'दित्यादिदर्शना'दिकर्ता तदादय आत्मादेशाहङ्कारादेशात्मादेशरूपास्तिस्रो विधाः । अतो वक्ष्यते चतुर्भ्यो हेतुभ्य इति । दृढीक्रियते इति । तदितरेत्यादिभाष्योपपादितो महिमरूपः सर्वात्मभाव एव श्रुत्यानुबन्धात् । ननु

१. करणक ।

भाष्यप्रकाशः ।

तस्य न बाध इति सूत्रे योजना । न बाध इति पूर्वसूत्रस्थमत्राप्यनुषज्यते । वस्तुतस्त्वत्र 'प्रज्ञान्तरपृथक्त्ववदि'ति दृष्टान्तबोधितं भावपृथक्त्वमेव साध्यम् । तथाच प्रज्ञान्तरस्य यथा पृथक्त्वमस्ति, तथास्य भावस्यापि पृथक्त्वम् । यदि हि 'स्वे महिम्नी'त्यत्रान्यत्राप्रतिष्ठितत्वादिकमभिप्रेतं स्यात्, न भावपृथक्त्वम्, तदानुबन्धादिकं न कुर्यात्, करोति च तत्, अतस्तथेत्यर्थः । पृथक्त्वप्रकारश्चाग्रे भाष्य एव 'मुमुक्षुभक्तस्ये'त्यादिरूपे तद्विवरणे स्फुटः । एवं स्वोक्तं व्यवस्थाप्य परोक्तं

रश्मिः ।

न नूनं सर्वात्मभावानुबन्धः 'स एवाधस्ता'दित्यादिश्रुत्युक्तसर्वात्मभावलिङ्गभावरूपं यद्दर्शनादि तत्कर्त्रनुबन्धादिति चेत् । न । नूनं सर्वात्मभावानुबन्धो लिङ्गेपि सर्वस्मिन्नात्मभावः सर्वात्मभावः इति व्युत्पत्तिनिरूपणात् । लिङ्गभूयस्त्वाधिकरणे भाष्यप्रकाशे 'तर्हि स कीदृक् येन तत्रैव प्रतिष्ठित इत्याकाङ्क्षायां तं विवृणोति । 'स एवाधस्ता'दित्यादि'रूपग्रन्थाल्लिङ्गलिङ्गिनोरभेदोक्तेश्च । कर्त्रनुबन्धस्य भावाधीनबन्धाच्च । भावं लक्ष्यीकृत्य कर्तुर्बन्धात् । अन्यथा बन्धादिभ्य इत्येव सूत्रयेत् । तथा च सर्वात्मभाववतोऽनुबन्धात् सर्वात्मभावबन्धात् महिमपदेन सर्वात्मभाव उच्यते इत्यनुबन्धहेतुना स भावो दृढीकृतः । ननु महिमशब्दस्य क्व शक्तिः, न तावज्जगति, 'एतावानस्य महिमे'ति श्रुतिनिरुक्तशक्तिः । 'गो अश्व महिमे'त्यादिना जगदेकदेशगवाश्वादिषु महिमपदशक्तिमनूद्य 'नाहमेवं ब्रवीमी'ति शक्तिनिषेधात् । किन्तु 'महिमानमीश'मिति श्रुतेः शिवे शक्तिः, स तु 'ज्ञानेन भक्ते'ति श्रुतेः सर्वात्मभाववान् । भक्तेत्यत्र भक्तेः सर्वात्मभावरूपमुख्यभक्तिरूपत्वसम्भवात् । अत्रापि महिमपदशक्तावपि सर्वात्मभावस्याप्रसिद्धेर्दर्शनाच्चेतिसूत्रे व्रजसीमन्तिन्य उदाहृताः । प्रहस्ते महिमपदस्य सामर्थ्यं शक्त्युक्तेः । श्रुतिपृद्धारकत्वरूपसामर्थ्यस्य महिमत्वात् । प्रकृत उद्धारकत्वस्य सर्वात्मभावरूपत्वात् । 'दर्शनाच्चे'ति सूत्रात् । अत्र महिमपदं वेदान्तविषयत्वेन योगाद्वर्तते । योगस्तावत् । 'महु वृद्धौ' भ्वादिरात्मनेपदी, 'मह पूजने' भ्वादिः परस्मैपदी, 'महु भासे' चुरादिः परस्मैपदी, मंहति वृद्धिं कुरुत इति महो भगवान् तस्य भावो वृद्धिर्जगद्रूपेति जगदेतावान् महिमा । मंहयति भासते यो भगवान्, स महः, तस्य भावो महिमा शिवो भासारूपो 'महिमानमीश'मिति श्रुत्युक्तः । महति पूजयति यः सत्याख्यो भगवान् स महः, तस्य भावो महिमा पूजनाख्या 'यत्र नान्यत् पश्यती'त्यादिश्रुत्युक्ता । तद्धितान्तः । इम निच् । टिलो पः सर्वत्र । नन्दीति सूत्रेणाच् सर्वत्र । उदित्त्वान्नुम् । उदितो नुम्धातोः । ननु 'सत्यं ज्ञान'मित्यादिस्वरूपलक्षणे सत्यनिष्ठा पूजा कथं स सर्वात्मभावरूपेति चेत् । न । भक्तेति श्रुतेः सत्याख्ये शिवादौ मुख्यभक्तिसर्वात्मभावरूपपूजाया युक्तत्वात् प्रकृतेऽन्यत्र तु यथावस्तुप्रपञ्चमित्येकेनानुबन्धरूपहेतुना स भावो दृढीकृतः । एवमात्मादेशाहङ्कारादेशात्मादेशैर्लिङ्गैः सर्वात्मभावोऽनुमितिविषयीकृतो दृढीकृतः । भक्तः सर्वात्मभाववान् आत्मादेशादहङ्कारादेशादात्मादेशाच्च । स स स स जगति सकले पश्यन्ती विरंहिणीवदित्यत्र भक्तः सर्वात्मभाववानित्यनुमितिः । एवं चतुर्भिर्हेतुभिर्दृढीकृतेन सर्वात्मभावेन पूजयतीत्यत्र सर्वात्मभावाभिन्नं पूजनं करोति, 'प्रकृत्यादिभ्य उपसंख्यान'मिति वार्तिकेन तृतीयाऽभेदे । हेतौ तृतीयायां तु सर्वात्मभावेन पूजां सत्कारं करोतीत्यर्थः । भक्तिवर्धिनीटीकायां श्रीगोकुलनाथजिद्भिः 'पूजया श्रवणादिभि'रित्यत्र पूजापदं 'पूजां दधुः सप्रणयावलोकै'रित्यत्रेव व्याकृतमिति । न चैवं महिमपदे क्लिष्टकल्पनेति वाच्यम् । मीमांसाशास्त्रस्य विचारशास्त्रत्वाद्विचारस्य चैवंविधत्वात् । तस्य न बाध इति ।

१. 'उदित्त्वान्नुमुदितोर्द्वयोर्धात्वोः' इति मूलपाठः । २. इदं लक्षणं समन्वयद्वितीयपादे विचारितम् । ३. लिङ्गात्मकभावः ।

रामर्शित्वात्। एवं सति त्वदुक्तमन्यत्राप्रतिष्ठितत्वं चेदिह प्रतिपाद्यं स्यात्, तदोक्तरीत्यानुबन्धं न कुर्यात्, अहङ्कारादेशादिकं च न कुर्यात्, उक्तप्रश्नोत्तरं स्वान्यवस्त्वभावात् 'न क्वापी'त्येव वदेत्। तस्मादस्मदुक्त एव मार्गोऽनुसर्तव्यः। आदिपदात् त्रिविधा ये भावा उक्ताः, तेषामपि स्वरूपं 'एवं पश्यन्नेवं मन्वान एवं विजान'न्निति क्रमेण यन्निरूपितं तदुच्यते। पूर्वं स्मृतिविगाढभावेन तदितरास्फूर्त्या तमेव सर्वत्र पश्यति। एतदेवोक्तं 'एवं पश्य'न्नित्यनेन। ततः किञ्चिद्बाह्यानुसन्धानेऽहङ्कारादेशो भवति। स त्वहमेव सर्वतः स्वकृतिसामर्थ्येन तं प्रकटीकरिष्य इति मनुते।

---

भाष्यप्रकाशः।

दूषयन्ति एवं सतीत्यादि। एवं सतीति। अनुबन्धादिस्वरूपविचारेणोक्तरीत्या श्रुतेः सामञ्जस्ये सति। एवं सतीत्यस्य तस्मादित्यनेन सम्बन्धः। तथाचैवं श्रुतिसामञ्जस्ये सति तस्मात्। अनुबन्धकरणाहङ्कारादेशादिकरण'न क्वापी'त्यवदनरूपाद्धेतुत्रयात् तथेत्यर्थः। ननूक्तहेतुत्रयात् यद्यपि पूर्वपक्ष्यभिमतं बाध्यते, तथापि त्रिविधभावैः सिद्धान्त्यभिमतं कथं सिध्यतीत्याकाङ्क्षायामादिपदोक्तानां स्वरूपं व्याख्यातुं प्रतिजानते आदीत्यादि। तदुच्यत इति। तत् व्याख्यायते। व्याकुर्वन्ति पूर्वमित्यादि। एतदेवेति। एतादृशं दर्शनमेव। स त्विति। अहङ्कारादेशवाँस्तु।

रश्मिः।

अनुबन्धादिभ्य आत्मरत्यादि भवत्यतस्तस्य सर्वात्मभावस्य न बाध इत्यर्थः। ननु 'ततोऽतिदैन्येने'त्यादिवक्ष्यमाणभाष्यादनुबन्धादिभ्य आत्मरत्यादि भवतीत्येव सूत्रमस्त्विति वाच्यम्। 'नन्वेतया श्रुत्या न सर्वात्मभावलिङ्गात्मको भाव उच्यते' इति प्रकृतसूत्राभासोक्तस्य कारणत्वात् सूत्रपठने। अतोऽनुबन्धादिभ्यः सर्वात्मभावलिङ्गात्मकभावस्य न बाध इति युक्तमेव। उक्तेति। कर्तृद्वारा सर्वात्मभावानुबन्धरीत्या सर्वात्मभावलिङ्गत्रयकथनरीत्या च श्रुतेः 'स्वे महिम्नी'त्यस्याः प्रतिपाद्यसामञ्जस्य इत्यर्थः। न चानुबन्धादिभ्योऽन्यत्राप्रतिष्ठितत्वं सिध्यति। तस्यार्थस्य ज्ञानमार्गीयत्वात्। आत्मादेशादेरसम्भवाच्च। श्रुत्यादिबलीयस्त्वादिति सूत्रे ज्ञानप्रकारविशेषदूषणाच्च। भक्तिमार्गीयव्याख्याने तु 'व्यतिहार' इति सूत्रोक्तसञ्चारिरूपस्य सुखेन सर्वात्मभावलिङ्गत्वसम्भवाच्च। तथेति। अस्मदुक्तमार्गोऽनुसर्तव्यत्वेन प्रकारेणेत्यर्थः। अतोऽस्मदुक्तोऽस्माभिः 'तन्निर्धारणानियम' इत्यधिकरण उक्तः, कृत्यविषयोपि मार्गो भक्तिमतां भक्तिमार्गमनु पश्चात् सर्तव्यः प्राप्तुं योग्यः। 'तयोरेव कृत्यक्तखलर्थाः' इति सूत्रेण उक्तमार्गोनुसर्यत इति वार्थः, कर्मणि तव्यस्वद्वा। भाष्य एवकारस्तु कर्ममार्गस्य हिरण्यगर्भातिरिक्तामोचकत्वेन ज्ञानमार्गस्याक्षरमात्रप्रापकत्वेन भक्तिमार्गस्यैव मार्गत्वात्। तदुक्तं तृतीयसुबोधिन्यां पञ्चविंशाध्याये सिद्धान्तान्तरनिरूपणोक्तिपुरस्कारेण चतुश्चत्वारिंशे श्लोके 'सर्वं शास्त्रार्थं निरूप्य परलोकार्थं यततां अस्मिन् लोके एतावानेव निःश्रेयसोदयः, तच्चेत् स्थिरीभवति, तदा कृतार्थता, तत्स्थिरीकरणार्थं भक्तिरेव, केनापि प्रकारेण भगवति स्थिरं मनः परमपुरुषार्थसाधकमिति योगसिद्धान्तः। तत्र भक्तिरेव स्थिरीकरणे हेतुरिति स्वसिद्धान्तानुसारेणापि भक्तिर्निरूपिता, भागवतानुसारेणापि। तस्माद्भक्तिः सर्ववादिसम्मतेति सैव कर्तव्ये'ति। इयं भक्तिमार्गस्य कृतिविषयस्य विषयीकुर्वाणा मुख्यभक्तिरूपसर्वात्मभावमपि सिद्धान्तविषयीकरोति। कैमुतिकन्यायेन 'इत्येकादशसर्वस्वं भगवान् स्वयमुक्त्वा'निति सर्वनिर्णयोपान्त्ये उक्तं कृत्यविषयमपि। 'तस्मादन्यवचो मृषे'ति सर्वनिर्णयात्। अनुभवाच्च। एतादृशमिति। एवंपदादिति भावः। न तु ज्ञानमार्गीयाभेददर्शनम्, एवंपदेन पूर्वविमर्शात्। पूर्वत्र

**करोति च तथा । अत एवान्वेषणगुणगाने कृते ताभिः। एतदेवोक्तं 'एवं मन्वान' इत्यनेन । ततो निरुपधिस्नेहविषयः पुरुषोत्तम आत्मशब्देनोच्यते इति तदादेशो भवति । तदा पूर्वकृतस्वसाधनवैफल्यज्ञानेनातिदैन्ययुक्तसहजस्नेहजविविधभाव-**

---

भाष्यप्रकाशः

**तथाचाहङ्कारादेशोक्तरीत्या स्वभाने स्वस्मिन् सामर्थ्यविशेषभानादहमेव सर्वैः प्रकारैः 'स्वसामर्थ्येन तं प्रकटीकरिष्य इति मनुत' इत्यादिकयानया फक्किकयाहङ्कारादेशफलमुक्तम्, प्रामाणिकत्वाय परिचायितं च । 'ततो निरुपधी'त्यादिना चात्मादेशभानफलमुक्तम् । एवं विधात्रयोक्तानां स्वरूपं**

रश्मिः ।

मम तत्स्वाम्युपरिष्टादित्यादिस्फूर्तौ षष्ठ्या भेदावगाहिन्या आक्षेपात् । 'अन्तरा भूतग्रामवत् स्वात्मन' इति सूत्रे भक्तानां भेदस्यादोषत्वोक्तेः । अत एवकारोपि । स्वभान इति । व्यापकत्वेन भाने । नन्वस्त्व-भिन्नानां भक्तानां व्यापकत्वम्, आधुनिकानामणूनां जीवानां तु व्यापकत्व'मानन्दादयः प्रधानस्ये'ति सूत्रविरुद्धमिति चेत् । न । सायुज्ये तदीयव्यापकत्वस्य जीवेष्वङ्गीकारात् । तमिति । व्यापकमपि । मनुत इति। 'मन्वान' इति श्रुतौ 'मनु अवबोधन' इत्यस्य तनोत्यादिगणस्थस्योपादानम् । न तु मन्यत इति दिवादिगणस्थस्य, 'मन ज्ञान' इत्यस्य नवा 'मानयत' इति चुरादिगणस्थ'मनि स्तम्भ' इत्यस्य मन्य-मान इति मानयान इति चाप्रयोगात् । अवबोधत इत्यर्थः । भाष्ये भागवतमतेनाहुः करोति चेति । अहं करिष्य इत्यत्र । ब्रह्महृदे नीतानां मग्नानां ब्रह्मभूतानामहमः प्राकट्यस्य 'ततोऽहं नामाभव'दिति पुरुष-विधब्राह्मणाद्व्यक्तव्यतया 'करोति च तथे'त्युक्तम् । ननु श्रौतं 'मनुत' इत्येतावदेव भणतीत्यलं भागवताय करोतीत्यस्यैपदायेति चेत्, तत्राहुः अत एवेति । कृष्णोपनिषदि 'तस्मान्न भिन्ना एतास्ता आभि-र्भिन्नो न वै विभु'रित्यभिन्नत्वेन तच्छब्दाभिहिताभिः कृते फलप्रकरणे इति श्रौते ते, मनुत इति श्रौते पूरणीये इत्यर्थः । एतदेवेति । एवकारेण 'मन ज्ञाने' इत्यस्यानिटो मन्तव्य इत्यस्य युक्तिभिरनुचि-न्तनरूपमननस्य व्यवच्छेदः। 'मनु अवबोधन' इति सेटस्तदर्थाभावात्। दर्शनसाधनत्वाच्च युक्तिभिरनु-चिन्तनरूपमननस्यास्य प्रकृतमननस्य दर्शनानन्तरभावित्वाच्च । एवंपदाच्च । प्रकृते । फलमिति । 'अहमेवाधस्ता'दित्यादिस्फूर्ते'रहमेव सर्वैः प्रकारै'रित्यादिफक्किकयोक्तं फलं 'अत एवे'त्यादिभाष्येण परि-चायितमित्यर्थः । तत इति । अन्वेषणस्य प्रकटीकरणार्थत्वेन गुणगानस्य दोषनाशार्थत्वेन दोषनाशान-न्तरं 'नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायत' इति वाक्योक्तन्यायान्निरुपधिस्नेहस्तद्विषयस्तु पुरुषोत्तमः । भक्तेः सर्वात्मभावत्वात् । 'इन्द्रियाणि जुहोती'तिश्रुतेः। न च तृतीयमार्गत्वमिति वाच्यम्। श्रुतीनां वैराग्यशमदमतितिक्षामुमुक्षुत्वानामवर्जनीयत्वात् । साधनचतुष्टयवतां भक्तानां तृतीयमार्ग-त्वं चिन्त्यम् । विरहकालेऽन्वेषणपूर्वकृतगुणगानसाधनानां भगवदप्राकट्ये वैफल्यं तस्य ज्ञानस्य दैन्य-कारणत्वम्, न तु वैफल्यस्य, अतो ज्ञानपदम् । तेनातिदैन्यं कातरत्वं आर्तिरूपाधिकारिरूपं रसनि-विष्टं स्नेहे विविधभावोत्पत्तौ कारणं भवतीति स्नेहे तद्युक्तत्वमुक्तम् । सहजपदेनानुग्रहजन्यत्वसूचनात् स्नेहे पुष्टिभक्तित्वम् । साधनजन्यत्वे स्नेहस्य सद्दाविर्भावो न स्यात् । स्नेहस्य तु स्वभाव एव यद्विवि-धभावजनकत्वम् । अतिरिक्तत्वेऽत्र गौरवम् । एतेन भाष्येण 'विजान'न्नितिश्रुतौ विविधभावप्रादुर्भाव उक्तः । 'जनी प्रादुर्भाव' इति धातोः । 'ज्ञा अवबोधन' इत्यस्य रूपं विजानन्निति, तदा तु विवि-धभावविषयकज्ञानवत्त्वेन विविधभाववान् ज्ञानद्वारेति भाष्यार्थः । तत इति । इदमेवात्मादेशभानफलं

वान् भवति । तदेतदुक्तं 'एवं विजान'न्नित्यनेन । अत एवोपसर्ग उक्तः । ततोऽतिदैन्येनाविर्भावे सति या अवस्थाः, ता निरूपिता 'आत्मरति'रित्यादिना । अत्रात्मशब्दाः पुरुषोत्तमवाचका ज्ञेयाः । अन्यथौपचारिकत्वं स्यात् । मुख्ये सम्भवति तस्यायुक्तत्वात् । ननु सर्वात्मभावस्यापि मुक्तौ पर्यवसानम्, उत नेति संशयनिरा-

भाष्यप्रकाशः ।

व्याख्यायाग्रिमग्रन्थं योजयन्ति ततोऽतिदैन्य इत्यादि ।

सूत्रांशमवतारयन्ति नन्वित्यादि । ननूक्तयुक्तिभिरत्र भवतु सर्वात्मभावः, तथाप्यत्र फलत्वेन सर्वग्रन्थिप्रविमोक्षस्यैवोक्तत्वात्तस्य च 'भिद्यते हृदयग्रन्थि'रिति श्रुत्यन्तरस्वारस्येन परावरदर्शनस्य यत्फलं तस्यैवात्र ग्राह्यत्वात्तस्य च 'तमेवं विद्वानमृत इह भवती'त्यादिश्रुत्यन्तरेषु मुक्तिरूपस्यैव सिद्धत्वादस्य भावस्यापि मुक्तावेव पर्यवसानमिति फलतो न कश्चिद्विशेषः । अथ, न, तदोक्तस्य फलवाक्यस्य विरोध इत्यस्यापि फलबलेन पूर्वज्ञानविशेषत्वमेवादर्तव्यमितिशङ्कानिरासाय दृष्टान्तमाहे-

रश्मिः ।

तदुक्तमित्यर्थः । अग्रिममिति । अनुबन्धादिभ्यः किं भवतीत्याकाङ्क्षायामात्मरत्यादि भवतीति सूत्रं योजयितुमग्रिममित्यादिः । तत इत्यादि । ननु 'भक्त्याहमेकया ग्राह्य' इति वाक्येन सर्वात्मभावस्य पुरुषोत्तमाविर्भावकारणत्वोक्तेरतिदैन्यस्याविर्भावकारणत्वं कथमिति चेत् । न । भक्तित्वेनेति वदामः । यतोत्र भाष्येऽतिदैन्यस्याविर्भावहेतुत्वोक्तिर्भक्त्यन्तःपातित्वेन भक्तित्वात् । अत एव भगवदाविर्भावे भक्तदुःखं 'भूमिर्माता तथा चान्ये दुःखभाजो हरिप्रिये'ति कारिकया हेतुत्वेनोक्तम् । सूत्रांशमिति । प्रसङ्गसङ्गत्या सूत्रांशेऽग्रेतनसूत्रेषु त्रिषु च फलं विचारयन्तः सूत्रांशमित्यर्थः । प्रदानवत्सूत्रे सर्वात्मभावसाधनं लिङ्गभूयस्त्वादिसूत्रे प्रमाणप्रमेये विचार्य फलं विचारयितुं सूत्रांशादारभ्य विचारः । चतुर्भिर्विचार एकादशस्कन्धसर्वस्वत्वात् सर्वात्मभावस्य । तथाचानुबन्धादिभ्य आत्मरत्यादि भवति, अतः सर्वात्मभावस्य न बाधः । आत्मरत्यादिना तज्जनकत्रिविधस्फूर्तेः सर्वात्मभावरत्यादिजनकत्रिविधस्फूर्त्यां सर्वात्मभावस्यानुमानात् । पुष्टिमार्गीयात्मरत्यादिजनकस्फूर्तिवारणाय सर्वात्मभावरत्यादिजनकेति विशेषणम् । अथ नेति । न मुक्तौ पर्यवसानमपि त्वतिदैन्येनाविर्भावे सति या अवस्था आत्मरत्यादयस्ता एवेत्युत नेति भाष्यं व्याकृतम् । विरोध इति । सन्देग्धुर्वचः । अत-'स्ततः श्लोकैस्तद्भावस्वरूपमुक्त्वैतस्य मूलकारणमाहाहारशुद्धा'वित्यादिनेति भाष्यस्य न विरोधः । पूर्वज्ञानेति । पूर्वप्रपाठकोक्ताभेदज्ञानेत्यर्थः । शङ्केति । ननु शङ्का तर्कः संशयो विरुद्धकोट्यवगाहि ज्ञानमिति भाष्यस्थसंशयपदविवरणं शङ्केत्यनुपपन्नमिति चेत् । न । एतादृशव्याख्याने शङ्कापदस्य संशयाविवरणत्वात् । संशयस्याथ नेत्यन्तग्रन्थे परिसमाप्तेः । दृष्टान्तमिति । मुक्त्यपर्यवसाने दृष्टान्तम् । नन्वात्मरत्यादिजनकसर्वात्मभावलिङ्गात्मकभावे दृष्टान्तमित्यर्थः कुतो न कृत इति चेत् । न । सूत्राणामल्पाक्षरत्वात् । 'अल्पाक्षरमसन्दिग्ध'मित्यादिवाक्यात् । स्फुटं सर्वनिरूपणे त्वल्पाक्षरत्वं भज्येत । संशयपदात् । 'आत्मरतिः आत्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवती'ति विषयः सूचितः । संशयस्तु सर्वात्मभावस्य मुक्तौ पर्यवसानम्, उतात्मरत्यादावेव, तथा च 'स स्वराड् मुक्तो वा स्वेन रूपेण राजत' इति भजनानन्दवान् वा । स्वेन भगवता राजत इति । कर्तरि क्विप् । तत्र पूर्वपक्षः स्वराड् मुक्त एव, कुत इत्यत उक्तं भाष्यप्रकाशे तदेत्यादि । तदा संशयकाल उक्तस्याहारशुद्धावित्यस्य फलवाक्यस्य विरोध इत्यस्यापि फलबलेन पूर्वज्ञानशेषत्वमेवादर्तव्यमिति । सिद्धान्तस्तु, न मुक्तौ पर्यवसानम्, किन्तु भजनानन्द इत्यवान्तराधिकरणकम् । तदाहुः दृष्टान्तमिति ।

साय दृष्टान्तमाह प्रज्ञान्तरपृथक्त्ववदिति। मुमुक्षुभक्तस्य स्वेष्टदातृत्वेन भगवद्विषयिणी या प्रज्ञा, सा सर्वात्मभाववद्भक्तप्रज्ञातः प्रज्ञान्तरमित्युच्यते। तच्च कर्मज्ञानतदितरभक्तप्रज्ञाभ्यः पार्थक्येन तदिष्टमेव साधयति यथा, तथा सर्वात्मभाववतो भक्तस्य यत्प्रकारिका भगवद्विषयिणी प्रज्ञा, तमेव प्रकारं स भावः साधयति, नान्यमिति न मुक्तौ पर्यवसानमित्यर्थः। अत्र व्यासः स्वानुभवं प्रमाणत्वेनाह दृष्टश्चेति। उक्तभाववतो भक्तस्य प्रभुस्वरूपदर्शनाद्यतिरिक्तफलाभावोऽस्माभिरेव दृष्ट इत्यर्थः। एतादृशा अनेके दृष्टा इति नैकस्य नाम गृहीतम्। अत्र शब्दमपि प्रमाणमाह तदुक्तमिति। भगवतेति शेषः। श्रीभागवते दुर्वाससं प्रति 'अहं भक्तपराधीन' इत्युपक्रम्य, 'वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथे'ति। यो हि यद्वशीकृतः, स तदिच्छानुरूपमेव करोति, अतो न सायुज्यादिदानम्, किन्तु भजनानन्ददानमेव। तेषां मुक्त्यनिच्छा तु 'मत्सेवया प्रतीतं च सालोक्यादिचतुष्टयम्'। नेच्छन्ति

भाष्यप्रकाशः।

त्यर्थः। दृष्टान्तं व्याकुर्वन्ति मुमुक्षुभक्तस्येत्यादि। तथाच अन्या प्रज्ञा प्रज्ञान्तरम्, तत्कृतं पृथक्त्वं प्रज्ञान्तरपृथक्त्वम्, षष्ठ्यर्थे वतिः। अतः प्रज्ञान्तरफलस्येवैतत्फलस्यापि पृथक्त्वमेवेति नैतस्य बाध इत्यर्थः। नच फलोक्तिविरोधः। दर्शनस्य प्रागेव जातत्वेन अविद्याकामकर्मजन्यहृदयग्रन्थिभेदस्य प्रागेव जातत्वादत्र ततोऽतिरिक्तस्यैव फलस्य सर्वेषां एकत्वपर्यन्ताशास्यत्वरूपाणां ग्रन्थीनां प्रकृष्टो विलक्षणो यो मोक्षः पुनस्तदनुद्भवरूपस्तस्याभिप्रेतत्वेनाविरोधात्। अग्रिमं शेषद्वयमवतारयन्ति अत्र व्यास इत्यादि। अत्र शब्दमित्यादि च। तादृशां मुक्तिपर्यन्तानिच्छां निगमयितुमाहुः तेषां मुक्त्यनिच्छेत्यादि। तथाच ज्ञानमार्गीयभगवद्दर्शने हृदयग्रन्थिभेदनं नानाविधवृत्त्यनुदयरूपम्,

रश्मिः।

प्रज्ञान्तरेति। अत्र पृथक्पदार्थः फलत्वेन गृहीतः। प्रज्ञान्तरकृतपृथक्पदार्थफलस्येवेत्यर्थः। न च प्रज्ञान्तरपृथक्त्वस्येवेति वक्तव्यमिति वाच्यम्। पृथक्फले तात्पर्यात्। कीदृशोद्भुतो घट इति वक्तव्ये कीदृशमद्भुतं घटत्वं येनेदृशो घट इति तात्पर्येण कीदृशमद्भुतं घटत्वमिति प्रयोगवत्। एतत्फलस्येति। सर्वात्मभावफलस्य। नैतस्येत्यत्र पूर्वसूत्रादनुवर्तितमत्राप्यनुषञ्जितम्। तेन प्रज्ञान्तरपृथक्त्ववन्न बाध इति वाक्यभेदः। वाक्यभेदस्य सूत्रेऽदोषत्वं अल्पाक्षरत्वसारवत्त्वाभ्याम्। भाष्ये। यत्प्रकारिका भजनानन्ददातृत्वप्रकारिका। तमेव भजनानन्ददातृत्वं भजनानन्द एव। तथा च भजनानन्दमेव। प्रकृते। फलेति। आहारशुद्धाविति श्रुत्युक्तफलोक्तीत्यर्थः। प्रागेवेति। 'मुक्तोपसृप्यव्यपदेशा'दिति व्याससूत्रात्तथा। तथा च पाठक्रममनादृत्यार्थक्रमेणाहारशुद्ध्यादिना मुक्तः सर्वात्मभाववानुपसर्पति भगवन्तमिति पाठक्रमानादरे हेतुरुक्तः। तथा च भाष्यं ततः श्लोकैरित्यादि लिङ्गभूयस्त्वसूत्रस्य। अत्रेति। भक्तिमार्ग इत्यर्थः। पुनरिति। 'भजते नैव तादृश'·इति निबन्धादविद्यानुद्गमेन तथा। अवीति। प्राग्जातत्वाविरोधात्। न च पूर्वापरभावविरोधः। पाठक्रममनादृत्यार्थक्रमादरार्थं 'अग्निहोत्रं जुहोति यवागूं पचती'तिवत् पूर्वापराविरोधात्। अत्र व्यास इति। दृष्टः समाधिभाषोक्तसमाधौ। अनेके जैमिन्यौडुलोमिप्रभृतयः सूत्रप्रसिद्धा अस्माभिर्दृष्टा इत्यर्थो भाष्यस्य दृष्टानेकदृष्टपदानाम्। प्रमाणमिति भाष्यं नैयायिकप्रसिद्ध्या, अन्येषां श्रौतप्रामाण्यात्। दर्शनेति। ज्ञानमार्गीयत्व-

सेवया पूर्णाः कुतोऽन्यत् कालविप्लुतम् । स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः। सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत। दीयमानं न गृह्णन्ति विना मत्सेवनं जना'इत्यादिवाक्यसहस्रैर्निर्णीयते ॥ ५० ॥

## न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ५१ ॥

ननु 'नान्यत् पश्यती'त्यारभ्य सर्वस्य प्रघट्टकस्य सर्वात्मभावनिरूपकत्वोक्तिरनुपपन्ना। अत एवात्मपदानां पुरुषोत्तमपरत्वोक्तिश्च। यतस्तस्य मुक्तावपि कामाभावः प्रतिपाद्यते। अत्र तु तस्य 'सर्वेषु लोकेषु कामचारो भवती'ति श्रुतिः पठ्यते। एवं सति न तन्निरूपणमत्रेति वा वाच्यम्, तद्भाववतोऽप्यन्यकामवत्त्वमिति वा। द्वितीयस्योक्तप्रमाणपराहतत्वेनाद्यपक्ष एवाश्रयणीय इति पूर्वपक्षं

भाष्यप्रकाशः।

अत्र तु सर्वग्रन्थीनां प्रविमोक्षो भगवद्विषयकनानावृत्त्युदयेपि एकत्वपर्यन्तानिच्छारूप इति दर्शनभेदात् फलभेदस्तत्क्रतुन्यायादप्युपपन्न इत्यर्थः ॥ ५० ॥

न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ५१ ॥ सूत्रमवतारयन्ति नन्वित्यादि। प्रतिपाद्यत इति। श्रीभागवते कपिलादिवाक्यैः प्रतिपाद्यते। अत्र त्विति। श्रौते सनत्कुमारवाक्ये तु। एवं सतीति। स्मृतिश्रुत्योर्विरोधे सति । उक्तप्रमाणपराह-

रश्मिः।

भक्तिमार्गीयत्वधर्माभ्यां 'तस्मिन् दृष्टे परावरे' इति श्रुत्युक्तदर्शनभेदात् फलस्य हृदयग्रन्थिभेदस्य लिङ्गदेहभेदस्य भेदः। तत्क्रतुन्यायः 'सर्वत्र प्रसिद्धोपदेशा'धिकरणसिद्धः। तत्र क्रतुभेदात् फलभेदः। भाष्ये। वाक्यसहस्रैरिति 'सहस्राणी'ति श्रुतेर्बहुवचनं विंशत्याद्याः सदैकत्व इत्यन्यत्र। योजनातः सहस्राणीति लोके तृतीयस्कन्धे। तथा चैष सूत्रार्थः। अनुबन्धादिभ्यश्चतुर्भ्यो हेतुभ्योऽत्र चकारो लुप्तषष्ठीकोऽनुक्तसमुच्चये वर्तते। चस्यार्थस्यात्मरत्यादिजनकसर्वात्मभावलिङ्गात्मकभावस्य सूत्रानुक्तरूपस्य न बाधोऽस्ति। प्रज्ञान्तरपृथक्त्ववत् सर्वात्मभावफलस्यापि न बाधोऽस्ति। भजनानन्दो व्यासपादैर्दृष्टो भवति समाधिभाषायाम्। भगवतोक्तं चास्ति। अथ चतुर्णां वाक्यानां दण्डान्वयः। तदुक्तं दृष्टः प्रज्ञान्तरपृक्त्ववन्मुक्त्यपर्यवसानार्थस्तद्युक्तोऽनुबन्धादिभ्यश्चकारार्थांश आत्मरत्यादिस्तज्जनकसर्वात्मभावलिङ्गात्मकभावस्य न बाध इति। चादीनां वाचकत्वमपि प्रस्थानरत्नाकरेऽस्ति। मुक्त्यपर्यवसानरूपोऽर्थोपि चकारार्थः ॥ ५० ॥

न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ५१ ॥ पूर्वपक्षं निरस्यन्तीति वक्ष्यमाणभाष्यत्रिसूत्राधिकरणसन्देहं वारयन्ति सूत्रमिति । त्रिसूत्रे अधिकरणे, सूत्रमिति वा। श्रौतीति। 'अकाम'इति श्रुत्या उपलक्षकः प्रकाशः । वाक्यानि तु 'सालोक्यसार्ष्टिसामीप्ये'त्यादि। 'मुक्तसङ्गस्ततो भूयानदोग्धा धर्ममात्मनः' । 'आत्मनो धर्ममदोग्धा निःकाम' इत्यर्थ इति श्रीधरी। 'सालोक्यसार्ष्टिसामीप्य'मिति। आदिपदेन 'मत्सेवया प्रतीतं चे'ति भगवद्वाक्यं सार्धम्। स्मृतीति। स्मृतिपदं श्रुतेरप्युपलक्षकम्। उक्तस्मृतीति । उक्तश्रुतिमुपलक्षयति। उक्तानि 'दर्शनाच्चे'तिसूत्रभाष्येण 'तदुक्त'मिति सूत्रांशेन चोक्तानि स्मृतिवाक्यानि तैः पराहतत्वम्, श्रीभागवतस्य वेदवेदान्तसारत्वात्। स्मृतीनां सर्वात्मभावप्रकरण उदाहृतत्वेन तद्विरुद्धश्रुत्यर्थः स्यात्, मन्त्रिकत्वद्योतनं वा

निरस्यति। नेति। तत्र हेतुमाह सामान्यादप्युपलब्धेरिति। तत्समानधर्मयोगादपि तत्प्रयोगः श्रुतावुपलभ्यतेऽनेकशो यतः। प्रकृतेपि विविधानां लोकानां विविधसुखप्रधानत्वाद्भगवत्सम्बन्धिषु सर्वेषु सुखेषु कामचारो भवतीति श्रुतेरर्थो ज्ञेयः। ननु यथाश्रुत एवार्थोऽस्तु, तत्राह न हि लोकापत्तिरिति। सर्वात्मभाववत इति प्रकरणात् 'नान्यत् पश्यती'त्यादिधर्मविशिष्टस्यात्मनः प्राणादिसर्ववतो

भाष्यप्रकाशः।

तत्त्वेनेति। उक्तस्मृतिवाक्यपराहतत्वेन। व्याकुर्वन्ति नेतीत्यादि। नेति। यदुक्तमत्र सर्वात्मभावो नोच्यत इति, तन्न युक्तमित्यर्थः। हेतुं विवृण्वन्ति तदित्यादि। अनेकश इति। यथा 'अजामेका'मित्यत्र, 'सृष्टीरुपदधाती'त्यादौ च। तथाच यत एवम्, अतः प्रकृते कामचारवाक्येपि विविधानां लोकानां विविधसुखप्रधानत्वाचेन साधर्म्येण भगवत्सम्बन्धिषु पूर्वोक्तेषु रतिक्रीडादिषु सुखरूपेषु पदार्थेषु लोकपदप्रयोग इति 'तेषु कामचारो भवती'ति श्रुतेरर्थो ज्ञेयः, न नामादिलोकपरः। भगवत्सम्बन्धिनस्तु सर्वात्मभाववत इष्टा एव, तद्भिन्नास्तु मुक्तिपर्यन्तं नेष्टा इति नैतेनात्र सर्वात्मभावाभावः शक्यशङ्क इत्यर्थः। यथाश्रुतार्थस्याग्रहणे युक्तिबोधनाय दृष्टान्तं

रश्मिः।

श्रुतिपराहतत्वम्। 'इतिहासपुराणैस्तु वेदं समुपबृंहये'दिति वाक्यात्। पूर्वपक्षमिति। इदं ध्वन्यते। 'तस्य सर्वेषु लोकेषु कामचारो भवती'ति विषयवाक्ये। अत्र न सर्वात्मभावनिरूपणं तद्भाववतोऽप्यन्यकामवत्त्वं वेत्यत्र संशये च पूर्वपक्षमित्यर्थकः। यदुक्तमिति। 'न तन्निरूपणमत्रे'ति भाष्येण यदुक्तम्। ननु न सर्वात्मभावलिङ्गात्मको भाव उच्यते इत्यनुबन्धादिभ्य इति सूत्राभासेन यदुक्तमिति चेत्। न। तस्य सूत्रस्य निवृत्तत्वात्। तदिति। 'गौण्यसम्भवा'दिति सूत्रे गौण्यङ्गीकारादाहुः यथेति। अनेकश इत्यत्र शस्। वहवो ह्यनेकाः प्रवृत्तीर्ददाति यः प्रयोग इत्यर्थः। 'अजा'मित्यादिश्रुतिः कल्पनोदेशसूत्रे विचारिता प्रथमस्य चतुर्थपादे। सृष्टीरित्यादिश्रुतिः पूर्वतन्त्रे प्रथमस्य चतुर्थपादे। अजाशब्देनाद्या सृष्टिः कल्पनयोच्यते। 'यथा ह्यजा वर्करसहिता सवत्सा स्वामिहिता, तथेय'मिति। सृष्टिशब्दोपेता मन्त्रा यासामिष्टकानामुपधाने विधन्ते ता इष्टकाः सृष्टय इत्युच्यन्ते। सृष्टिमानास्तामुपधाने मन्त्रे इति विगृह्य तद्वानासामुपधान इति व्याकरणसूत्रसिद्धप्रक्रियया तन्निष्पादनात्। 'प्रजासृज्यत', 'भूतान्यसृज्यन्ते'त्यादयः सृष्टिशब्दोपेता उपधानमन्त्राः। आदिना 'वाचो धेनुमुपासीते'ति, 'आदित्यो देवमधु'। द्युलोकादीनां चाग्नित्वं पञ्चाग्निविद्यायाम्। नेति। परमतेनोपनिषद्व्याख्यानेन सिद्धोऽर्थो नेत्यर्थः। 'लोकृ दर्शने विविधसुखज्ञानेष्वि'त्यर्थः। वेदान्ते योगरूढ्योर्योगादरणात्। न च योगादरे प्रकरणादात्मविषयकत्वेन लोकपदार्थदर्शनसिद्धेर्गौण्या किं प्रयोजनमिति शङ्क्यम्। वादिबुद्ध्यनुसारित्वादस्य सूत्रस्य। 'लोके शब्दार्थसम्बन्धो रूपं तेषां च यादृशम्। न विवादस्तत्र कार्यो लोकोच्छित्तिस्तथा भवेत्। ये धातुशब्दा यत्रार्थे उपदेशे प्रकीर्तिताः। तथैवार्थो वेदराशेः कर्तव्यो नान्यथा क्वचि'दिति पत्रावलम्बनात्। ननु 'छन्दोवत् सूत्राणि भवन्ती'ति महाभाष्यात् 'ये धातुशब्दाः' इति कारिकया योगमात्रमस्त्विति चेत्। न। सूत्रे लोकापत्तिदानेन लोकशब्दार्थौ योगरूढितः पूर्वकाण्डोक्तौ गृहीतौ, अनूदितौ वेत्यदोषात्। सर्वात्मभाववत इति भाष्यं प्रपञ्चयामासुः भगेत्यादि। सर्वात्मभाववत इति प्रकरणात् सम्बध्यते। तथाच सर्वात्मभाववतो लोकापत्तिर्नहीति योजना। 'भगवत्सेवोपयोगिदेहो वैकुण्ठादिष्वि'ति सेवाफलग्रन्थात् भगवत्सम्बन्धिनो लोकास्तु सर्वात्मभाववतः

लोकसम्बन्धो युक्तिसहोऽपि नेति ज्ञापनाय हिशब्दः । किञ्च । एतदग्रे, 'न पश्यो मृत्युं पश्यती'ति श्रुत्या यथा मृत्युनिषेधः क्रियते, तथा 'आत्मत एवेदꣳ सर्व'मितिश्रुत्यैवकारेणात्मातिरिक्तव्यवच्छेदः क्रियत इति मृत्युवल्लोकोपि न सम्बध्यत इत्याह मृत्युवदिति । तत्र रोगादीनामपि दर्शननिषेधे सत्यपि मृत्योरेव यन्निदर्शनमुक्तम्, तेन भक्तानां लोकान्तरसम्बन्धस्तत्तुल्य इति ज्ञाप्यते, अत एव 'नोत दुःख'मिति दुःखसामान्यनिषेधोऽग्रे कृतः ॥ ५१ ॥

**परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ५२ ॥**

अत्र हेत्वन्तरमाहास्मिन्नेव श्लोके, 'सर्वमाप्नोति सर्वश' इति परेण पादेन

भाष्यप्रकाशः ।

व्याकुर्वन्ति किञ्चेत्यादि । अतिरिक्तव्यवच्छेद इति । प्रापञ्चिकसर्वव्यवच्छेदः । सूत्रे मृत्युवदिति षष्ठ्यर्थे वतिः । तथाच मृत्योरिव लोकानामप्यापत्तिर्नेत्यर्थः । अन्यद्विहायैतस्यैव कथनेन यत् सूच्यते, तत् तत्र गमकं चाहुः तत्रेत्यादि ॥ ५१ ॥

परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ५२ ॥ एतत्सूत्रप्रयोजनमाहुः अत्रेत्यादि । लोकापत्त्यभावरूपस्यार्थस्य ग्राह्यत्वे 'न पश्य' इति श्लोकस्थं हेत्वन्तरमाहेत्यर्थः । तमेव हेतुं सूत्रव्याख्यानेन व्याकुर्वन्ति सर्वमित्यादि । एतच्छ्लोकस्थेन परेण तुरीयेण 'सर्वमाप्नोति सर्वश' इत्यनेन पादेन, शब्दस्य 'सर्वेषु लोकेषु कामचारो भवती'त्यस्य श्रुतिवाक्यस्य

रश्मिः ।

षष्ठ्यन्तम्, इष्टा एव । भगवत्सम्बन्धिभिन्ना लोका मुक्तिपर्यन्तं यथा भवति, तथा नेष्टाः, निषेधात् । एतेन 'तस्य सर्वेषु लोकेषु कामचारो भवती'ति वेदेन । अत्र यद्यपि 'लोका न लोका' इति श्रुतौ लोकानां निषेधः कृतः, तथापि भक्तमनोरथपूरकत्वेन सर्वात्मभाववद्भक्तेच्छा लोकनिरूपणे ज्ञेया । भक्तेच्छाभावे तु सर्वात्मभाववतो भगवत्सम्बन्धिनो भक्तेष्टा ज्ञेया लोकेतरे । प्रापञ्चिकेति । 'जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्चे'ति व्याससूत्रात् । तत्रेत्यादीति । अत एव लोकान्तरसम्बन्धाभावादेव दुःखस्य सामान्यं नित्यमेकमनेकानुगतमात्मरूपं वा । 'एतꣳह वाव न तपती'ति श्रुतेः 'यत्र त्वस्य सर्वमात्मैवाभूत्, तत् केने'त्यादिश्रुतेश्च । आत्मलोके कर्माभावात् । 'ध्यानप्राप्ताच्युताश्लेषनिर्वृत्त्या क्षीणमङ्गला' इति वाक्यात् । 'ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुने'ति वाक्याच्च । दुःखस्याज्ञानजन्यत्वाच्च । ननु दुःखं न पश्यतीति वक्तव्ये दुःखतामित्यत्र वर्णागमः कुतो नाङ्गीकृत इति चेत् । न । दुःखसत्तामेव न पश्यतीत्यत्र तात्पर्येणैतावतोऽर्थस्य विवक्षितत्वाद्वर्णागमाभावात् । असङ्गतौ वर्णागमस्वीकारात् । तथा च तद्भाववतोप्येतत्कामवत्त्वमिति सिद्धान्तः ॥ ५१ ॥

परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥५२॥ परेण चतुर्थपादेन 'सर्वमाप्नोती'त्यनेनोपसंहृतत्वादर्थनिर्णायकेन । सर्वदातृवाचकेन 'सर्वश' इति पदेन वा शब्दस्य 'तस्य सर्वेषु लोकेषु कामचारो भवती'तिश्रुतिवाक्यस्य ताद्विध्यं तस्य 'आत्मत एवेदं सर्व'मित्यस्य विधता समानार्थकत्वमुपलब्धं यद्यपि पूर्वसूत्रात् प्रत्ययविपरिणामेनोपलब्धेरित्यस्य रूपमन्वेति, तथापि प्रथमोत्पत्त्यर्थं प्रतीयत इत्यध्याहार्यम् । चकारात् तस्मात् न लोकापत्तिरित्यनुवृत्त्यार्थः । पुनश्चकारोऽनुक्तसमुच्चय इत्यनुक्तोऽर्थो 'नन्वात्मत एवेदं सर्व'मिति वाक्येनैवैतदर्थलाभे पुनः 'सर्वेषु लोकेषु कामचारो

शब्दस्य श्रुतिवाक्यस्य 'आत्मत एवेद९ सर्वं'मिति यत् पूर्वं श्रुतिवाक्यं तद्विधतैव प्रतीयते इति न लोकसम्बन्धो वक्तुं शक्य इत्यर्थः। ननु 'आत्मत एवेद९ सर्वं'मिति वाक्येनैवैतदर्थलाभे पुनस्तदुक्तिर्नोचितेत्याशङ्कायां तत्र हेतुमाह। तुशब्दः शङ्कानिरासे। भूयस्त्वाद्धेतोः। उक्तेऽर्थे हेतूनां बाहुल्ये तदार्ढ्यं भवतीत्याशयेनोक्तार्थस्यैव श्लोकेनानुबन्धः कृत इत्यर्थः। अथवा। भूयः-पदमाधिक्यार्थकम्। तथाच स्वकृतसाधनसाधितफलापेक्षया स्वयमुद्यम्य भगवता साधितफले निरवधिरुत्कर्ष इति ज्ञापनाय पुनः श्लोकेन तथेत्यर्थः॥ ५२॥

---

भाष्यप्रकाशः।

ताद्विध्यम्, 'आत्मन एवेद९ सर्वं'मित्येवं रूपं यत् श्लोकात् पूर्वं श्रुतिवाक्यं तद्विधता तत्समानार्थकत्वमेव प्रतीयते, एतस्य पद्यश्लोकस्य 'तदेष श्लोक' इत्यनेन पूर्वोक्तसर्वार्थसंग्राहकतयोक्तत्वात्, पूर्वं चात्मन एव सर्वस्य निगमितत्वात् सर्वैः प्रकारैरात्मन एव पूर्वोक्तं सर्वमाप्नोतीत्यर्थस्य सिद्धेर्न प्रापञ्चिकलोकसम्बन्धो वक्तुं शक्य इत्यर्थः। सूत्रशेषमवतार्य व्याकुर्वन्ति तुशब्द इत्यादि। अनुबन्धः कृत इति। अनु पूर्वोक्तं लक्ष्यीकृत्य बध्यते सम्बध्यत इत्यनुबन्धः स कृतः। समासव्यासधारणस्य लोके विदुषामिष्टत्वादनेन श्लोकेन कृत इत्यर्थः। उक्तरीत्या व्याख्याने अपुष्टार्थत्वमित्यरुच्यार्थान्तरमस्याहुः अथवेत्यादि। तथेति। अनुबन्धः॥ ५२॥

रश्मिः।

भवती'त्यत्रोक्तिर्नोचितेति। तुरस्याः शङ्काया निरासः। कुतः। भूयस्त्वात्। हेतूनां भूयस्त्वात्। उक्तार्थस्य हेत्वन्तररूपस्यानुबन्धः कृत आधिक्याद्वानुबन्धः कृत इति सूत्रार्थः। पादेनेति। तेन भाष्ये परेण पादेनेति पाठः। पद्येनेति प्रामादिकः पाठः। तदेष इति। तत् पूर्वोक्तमर्थं सङ्ग्रहेण प्रतिपाद्यत्वेनाभिमुखीकृत्यैष श्लोको भवतीत्यर्थः। तदित्यव्ययम्। सर्वैरिति। सर्वशः इत्यस्यार्थः। सर्वदातृभिः सर्वमाप्नोतीत्यर्थव्यक्तेः सर्वैः प्रकारैरिति पर्यवसितोऽर्थः। बहुभिः प्रकारैरित्यर्थः। 'बह्वल्पार्थेभ्य' इति शस्। न प्रेति। पूर्वसूत्रादनुवर्तितस्य न लोकापत्तिरित्यस्यार्थकथनम्। बध्यत इति। भावे प्रत्ययः। अनुबन्ध इति। भावे घञ्। ननु पूर्वं व्यासस्य विद्यमानत्वात् श्लोकोक्तसमासस्य किं प्रयोजनमिति चेत्, तत्राहुः समासेति। 'धर्मादिष्वनियम' इति समासशब्दस्य पूर्वनिपातः। इष्टत्वादिति। यथात्रैव 'साङ्गोऽध्येय' इति आरम्भे। अपुष्टार्थत्वमिति। ननु लिङ्गभूयस्त्वप्रतिज्ञानाल्लिङ्गभूयस्त्वसूत्र इति पुनरुक्तेऽर्थेऽप्यपुष्टत्वं नेति चेत्। न। अपुनरुक्तलिङ्गभूयस्त्वस्य सूत्राशयगोचरत्वात्। 'अनवद्य'मिति सूत्रलक्षणात्। भाष्ये। स्वकृतेति। मर्यादायामात्मसायुज्ये 'अचलत्वं चापेक्ष्ये'ति सूत्राभासोक्तभक्तेच्छा मार्यादिकसाधनयुक्ता स्वकृतं साधनं तत्साधितं फल'मात्मत एवेदं सर्व'मिति श्रुत्युक्तमपि तस्यापेक्षया प्रदानवत्सूत्रोक्तदिशा स्वयमुद्यम्य वरवदास्यता भगवता साधितं फलं पश्यस्य सर्वात्मभावस्तस्मिंश्चिन्नित्यर्थः। हेतावाधिक्यान्न पुनरुक्तिकृतमपुष्टत्वमिति भावः। अनुबन्ध इति प्रकारे वाल्। अनुबन्धत्वेन प्रकारेणानुबन्ध इत्यर्थः॥ ५२॥

## एक आत्मनः शरीरे भावात् ॥ ५३ ॥

उक्तेऽर्थे श्रुत्यन्तरसम्मतिमप्याह । एके शाखिनस्तैत्तिरीयाः, शरीरे भक्तशरीरे हृदयाकाश इति यावत्, तत्र आत्मनो भगवतो भावादाविर्भावात् तेन सह सर्वकामोपभोगं वदन्तीं श्रुतिं पठन्ति 'सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते'ति । अत्रोपक्रमे 'ब्रह्मविदाप्नोति पर'मिति श्रुतिरक्षरब्रह्मविदः परब्रह्मप्राप्तिं सामान्यत उक्त्वा, विशेषतः कथनार्थं 'तदेषाभ्युक्ते'तिवाक्यं तद्ब्रह्मप्रतिपाद्यत्वेनाभिमुखीकृत्यैषा वक्ष्यमाणा ऋक् परब्रह्मविद्भिरुक्तेत्युक्त्वैवमुक्तवती 'सत्यं ज्ञान'मिति । परब्रह्मस्वरूपमनुभवैकवेद्यम्, न शब्दादिभिर्वेद्यमिति ज्ञापनाय स्वयं तत्तत्स्वप्रतिपादिकाप्यन्यमुखेनोक्तवती । अत्र ब्रह्मणा सह सर्वकामोपभोग उक्त इत्येतदेकवाक्यतायै 'सर्वेषु लोकेषु कामचारो भवती'ति श्रुतेरप्युक्त एवार्थो

भाष्यप्रकाशः ।

एक आत्मनः शरीरे भावात् ॥ ५३ ॥ सूत्रप्रयोजनमुक्त्वा व्याकुर्वन्ति एके इत्यादि । भाष्यमत्र निगदव्याख्यातम् । एवमनेनाधिकरणेनाविहितभक्तिरूपस्य सर्वात्मभावस्य स्वरूपं तस्य सर्वेभ्यः साधनेभ्य उत्कृष्टत्वं तत्फलं च निर्धारितम् ।

शाङ्करे भास्करीये च भाष्ये इदं नवसूत्रमेकमधिकरणम् । तत्र चाग्निरहस्ये, 'नैव वा इदमग्रे सदासी'दित्यस्मिन् ब्राह्मणे मनोऽधिकृत्य, 'षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्म-

रश्मिः ।

एक आत्मनः शरीरे भावात् ॥ ५३ ॥ निगदेति । भक्तशरीर इति । ननु भक्तेति विशेषणं कुतो लब्धमिति चेत् । शृणु । 'ब्रह्मविदाप्नोति पर'मित्यत्र ब्रह्मविद्भक्त्या परमाप्नोतीति भाष्येऽर्थाद्भक्तलाभ इति । भक्तेर्ज्ञानव्यापारत्वात् । 'अकृश'मिति विशेषणं षोडशाधिकरण्या नोक्तं तथापि ज्ञेयम् । पूर्णसाधनत्वात् । तथा च सुबोधिनी—'अकृश'मिति ज्ञानम् । पूर्णत्वात् । अन्येषां परिच्छेदरूपत्वात् । अनेन पूर्णमेव ज्ञानं साधनमिती'ति । न चात्र नेदं विशेषणमिति वाच्यम् । प्रभासलीलायाम्'प्यपाश्रितार्भकाश्वत्थ'मिति विशेषणे पूर्वाधिकरणोपान्ते ऐश्वर्याविष्टस्य कर्तुमकर्तुमन्यथाकर्तुं समर्थत्वेनोपदेशकाभावादासुरव्यामोहलीलोपयोगात् । एवं निगदव्याख्यातमित्यर्थः । निर्धारितमिति । प्रमाणं 'तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फल'मित्यधिकरणे । साधनं प्रदानवत्सूत्र उक्तमिति सर्वं शुभम् । एवेति । उक्तोऽर्थ एव, नान्यः, विकल्पापत्तेरित्यर्थः । विकल्पस्त्वेकवाक्यत्वाभाव इति भावः । नन्वग्निरहस्योक्तसम्पादिकाग्नीनां क्रियामयत्वं प्रकरणाद्भविष्यति, न ज्ञानमयत्वमिति चेत् । तत्राहुः शाङ्कर इत्यादि । श्रुत्यर्थस्तु—नैव वा इदमुत्पत्तेः पूर्वमासीत् । नाप्यसदित्युपक्रम्य मनसः प्रादुर्भावमुक्त्वा 'तन्मन आत्मानमैक्षते'त्यात्मेक्षणपूर्वकमग्नीनपश्यदिति मनोऽधिकृत्य आत्मनः स्वस्य सम्बन्धित्वेन, अग्नीन् किंभूतान् पुरुषायुष्ट्वेन क्लृप्तशतवर्षान्तरगतैः षट्त्रिंशत्सहस्रैरहोरात्रैरवच्छिन्नतया एकस्मिन्नहोरात्रे उत्पन्नसर्वमनोवृत्तिष्वहोरात्रगतैकत्वारोपेण मनोवृत्तीनामसंख्येयानामपि षट्त्रिंशत्सहस्रत्वम् । इष्टिकात्वेन च सम्पाद्यन्ते । 'षट्त्रिंशत्सहस्राणी'त्यादिना । मन एव स्ववृत्तिरूपान् अग्नीन् अर्कान् ऋक्पूजायां अर्च्यान् । अत एव मनोविकारान् । मनश्चितः मनसा चीयन्ते सम्पाद्यन्ते इति

१. उक्त्वा तामिति पाठः । २. शब्दादिवेद्यम् । 1945

भाष्यप्रकाशः ।

नोमयान्मनश्चित' इति यद्वाक्यं तद्विचार्य, तेषामग्नीनां न क्रियामयत्वम्, किन्तु विद्यामयत्वमेवेति सिद्धान्तितम् ।

रामानुजाचार्यमते त्विदमेकसूत्रम् । तत्र, तैत्तिरीयमहानारायणोपनिषत्स्थः 'सहस्रशीर्षं देव'मिति सर्वोऽनुवाको विषयवाक्यम् । तत्र किं पूर्वानुवाके 'दहरं विपाप'मिति यद्दहरोपासनं विहितम्, तद्विषयो निर्धार्यते, उत सर्ववेदान्तोदितपरविद्योपासनानां विषय इति संशये, दहरोपास्यविशेष एव निर्धार्यते प्रकरणात् । पूर्वस्मिन्ननुवाके 'दहरं विपापं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसᳲस्थम् । तत्रापि दहरं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्य'मिति दहरविद्या प्रकृता । अस्मिंश्चानुवाके 'पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुख'मित्यादिना हृदयपुण्डरीकाभिधानम् । एतस्य नारायणानुवाकस्य दहरविद्योपास्यनिर्धारणार्थत्वमुपोद्बलयतीत्येवं प्राप्ते, उच्यते । लिङ्गभूयस्त्वादिति । अस्यानुवाकस्य निखिलपरविद्योपास्यविशेषनिर्धारणार्थत्वे बहूनि लिङ्गानि दृश्यन्ते । तथाहि । परविद्यासु अक्षरशिवशम्भुपरंब्रह्मपरंज्योतिःपरतत्त्वपरमात्मादिशब्दनिर्दिष्टमुपास्यं वस्त्विह तैरेव शब्दैरनूद्य, तस्य नारायणत्वं विधीयते, भूयसीषु विद्यासु श्रुतावनूद्य नारायणाभिधानभूयस्त्वं नारायण एव सर्वविद्यास्वास्यमस्थूलत्वादिविशेषितानन्दगुणकं परं ब्रह्मेति विशेषनिर्णये भूयो बहुतरं लिङ्गं भवति । लिङ्गशब्दश्चिह्नपर्यायः । चिह्नभूतं वाक्यं बहुतरमस्तीत्यर्थः । तद्धि प्रकरणाद्बलीय इति पूर्वतन्त्रे सिद्धम् । यत्पुनः 'पद्मकोशप्रतीकाश'मित्यादिवचनमस्य दहरविद्याशेषत्वमुपोद्बलयतीत्युक्तम् । तत्र । लिङ्गात्मकेन बलीयसा प्रमाणेन सर्वविद्योपास्यनिर्धारणार्थत्वेऽवधृते सति दहरविद्यायामपि तस्यैव नारायणस्योपास्यत्वमित्यर्थकतया तद्वचनोपपत्तेः । नच 'सहस्रशीर्ष'मित्यादिद्वितीयानिर्देशेन पूर्वानुवाकोदितोपासनासम्बन्धः शङ्कनीयः । तस्मिन् 'यदन्तस्तदुपासितव्य'मित्युपासिगतेन कृत्यप्रत्ययेन उपासिकर्मणोऽभिहितत्वात्तदुपास्ये द्वितीयानुपपत्तेः । 'विश्वमेवेदं पुरुषः' 'तत्त्वं नारायणः पर' इत्यादिप्रथमानिर्देशाच्च प्रथमार्थे द्वितीया वेदितव्या । 'अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः । तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः । स ब्रह्मा स शिवः स हरिः सेन्द्रः सोऽक्षरः परमः स्वरा'डिति निर्देशैः सर्वस्मात् परो नारायण एव सर्वत्रोपास्य इति निर्णीयमानत्वाच्च प्रथमार्थे द्वितीयेति निश्चीयत इत्युक्तम् ।

मम त्वत्रान्यदपि प्रतिभाति । सहस्रशीर्षादिषु त्रिषु मध्यममन्त्रे तुरीयपादे यत् 'उपजीवती'ति क्रियापदम्, तत्र कर्मत्वेन द्वितीयान्तपदान्यन्वयं प्राप्नुवन्ति, तन्मन्त्रारम्भे 'विश्वत' इत्यनेन यज्जगद्रूपं विश्वमुक्तम्, तदिदं विश्वमेव पुरुषः क्षरः परमं विश्वं नारायणं हरिमुपजीवतीत्येवं पदसम्बन्धे बाधाभावात् । एवमन्यान्यपि पदानि तत्रैव योजनीयानि । बाहुलकाश्र-

रश्मिः ।

मनंश्चितस्तान् मनोऽपश्यदिति । न क्रियेति । अग्निचयनप्रकरणवत् क्रियामयत्वं तत् न, किन्तु प्रकरणाल्लिङ्गस्य बलीयस्त्वाद्विद्यामयत्वमित्यर्थः । लिङ्गभूयस्त्वादग्नीनां ज्ञानमयत्वं तल्लिङ्गं प्रकरणाद्बलीयः । तदपि 'श्रुतिलिङ्गवाक्यप्रकरणे'त्यादिजैमिनिसूत्रे उक्तमिति सूत्रार्थः । पूर्वतन्त्र इति । उक्तसूत्रे सिद्धम् । द्वितीयेति । कर्तुरुपासनाक्रियेप्सिततमत्वात् । दहरविद्यायामभिहितकर्मणो द्वितीयानुपपत्तिमाहु रामानुजाचार्याः तस्मिन्नित्यादि । द्वितीयेति । 'सहस्रशीर्ष'मित्यादि । प्रथमार्थे इति ।

१. रामानुजभाष्येऽत्र क्वचित् क्वचित् पाठभेदः । 1946

भाष्यप्रकाशः ।

यापेक्षया व्यवहितान्वयपक्षस्य लघुत्वादिति । अग्रे तु तैरष्टसु सूत्रेषु शङ्कराचार्याद्युपन्यस्तैव विद्या विचारिता ।

तन्मतचोरः शैवस्तु, तद्वदेवैकसूत्रेऽस्मिन्नधिकरणे, महानारायणोपनिषत्स्थं 'सर्वो वै रुद्रस्तस्मै रुद्राय नमो अस्तु । पुरुषो वै रुद्रः सन्महो नमो नमः । विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत् । सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु' इति मन्त्रमुदाहृत्य, तदग्रिमं 'कद्रुद्राये'ति मन्त्रं त्यक्त्वा, 'नमो हिरण्यबाहवे हिरण्यपतयेऽम्बिकापतये उमापतये पशुपतये नमो नम' इति मन्त्रं चाग्र उदाहृत्य, अत्र किं सर्वात्मत्वादिभिरुमापतित्वेन च श्रूयमाणं परं ब्रह्म पूर्वप्रकृते सवितृमण्डलविद्यामात्र उपास्यम्, उत सर्वासु परविद्यास्विति सन्देहे, प्रकरणाद्यप्राप्तिमुद्भाव्य, परविद्यालिङ्गसम्बन्धवाक्यभूयस्त्वात् सर्वासु परविद्यास्विति सिद्धान्तयित्वा, 'सर्वो वै रुद्र' इति वाक्ये 'सर्वं खल्विदं ब्रह्मे'ति शाण्डिल्यविद्योपास्यलिङ्गम्, 'पुरुषो वै रुद्र' इत्यत्र पुरुषसूक्तोपकोसलविद्याद्युपास्यलिङ्गम्, 'स'दित्यत्र सद्विद्योपास्यस्य, 'मह' इत्यत्र 'मह इति तद्ब्रह्म अङ्गान्यन्या देवता' इति व्याहृतिविद्योपास्यस्य, कद्रुद्रमन्त्रे 'शंतमꣳ हृदे'ति हृदयद्योतनाद्दहरविद्योपास्यस्य,' हिरण्यबाहव' इति हिरण्यरूपत्वं सवितृमण्डलोपास्यस्य, 'उमापतय' इति सर्वपरविद्योपास्यस्येत्यूचिवान् ।

तन्मन्दम् । आद्यायां परविद्यालक्षणाभावात् । 'अथ परा यया तदक्षरमधिगम्यत' इत्यक्षरप्रापकत्वस्य तद्गमकत्वस्य वा तल्लक्षणत्वात् । अस्यास्तु सर्वप्रतीकतया तत्क्रतुन्यायात् क्षरप्रापकत्वेनाक्षराप्रापकत्वात्, सर्वस्य ब्रह्मकारणकत्वमात्रभावनेनादृश्यत्वादिलक्षणकाक्षराज्ञापकत्वाच्च । द्वितीयेपि वाक्ये पुरुषशब्दस्य गौणत्वात्, 'भगवानिति शब्दोऽयं तथा पुरुष इत्यपि । निरुपाधी च वर्तेते वासुदेवे सनातने' इति विष्णुपुराणवाक्येन 'स एव वासुदेवोऽयं साक्षात्पुरुष उच्यते । स्त्रीप्रायमितरत् सर्वं जगद्ब्रह्मपुरःसरम् । स एव वासुदेवोऽयं पुरुषः प्रोच्यते बुधैः । प्रकृतिस्पर्शराहित्यात् स्वातन्त्र्याद्वैभवादपी'ति नारसिंहवाक्याभ्यां च पुरुषशब्दस्य भगवत्येव मुख्यवृत्तत्वेन तदभिमते शिवे तथात्वस्य बाधितत्वात् । अत एव तृतीयवाक्येपि 'सन्मह' इत्येकं पदम्, सतो महस्तेजः सन्मह इति चैकपद्ये तदर्थः, तेन तयोरपि पदयोः सद्विद्याव्या-

रश्मिः ।

'छन्दसि बहुल'मिति सूत्रात् । तैरिति । रामानुजैः । सूत्रार्थस्तु । पूर्वेण इष्टिकचिताग्निना विकल्प्यन्ते मनश्चितादयोऽग्नय इति तेषां विकल्पः प्रकरणात् क्रियाप्रकरणात् क्रिया क्रियारूपाश्च ते चितरूपा तामग्निचितादीनामपि क्रियामयक्रत्वनुप्रवेशेन क्रियामयत्वं मानसग्रहवदुपपद्यते, यथा द्वादशाहेपि वाक्ये दशमेऽहनि मानसग्रहस्य मनोनिष्पाद्यग्रहस्य उत्पादनस्तोत्रशस्त्रप्रत्याहरणभक्षणत्वेन विद्यारूपस्यापि क्रियामयक्रत्वङ्गतया क्रियारूपत्वम्, तथेहापीति । शैव इति । भगवानिति शेषः । उमेति । परब्रह्मत्वस्यात्र पर्यवसितेः । विष्णुसमानशीलव्यसनवत्त्वं पर इति । तदुत्कर्षासहनं हृत्वा विष्णावुत्कर्षमाहुः तदिति । आद्यायामिति । श्रुतौ । अस्यास्तु 'सर्वो वै रुद्र' इत्यस्यास्तु सर्वेषां जगत्स्थपदार्थानां प्रतीकताङ्गता, 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जग'दिति गीतातस्तयाङ्गस्य क्षरत्वेन तत्क्रतुन्यायो यादृशः क्रतुस्तादृशं फलमिति क्रतोः सेवायाः सर्वस्य रुद्रत्वेन भावनारूपायाः क्षरविषयतया तत्त्वात् । सर्वस्येति । क्षरस्य । वाक्य इति । 'पुरुष' इत्यादिश्रुत्यन्तर्गतं वाक्यं पदसमूहः । साक्षादिति । साक्षात्प्रत्यक्षतुल्ययोः । वैभवात् विभुरेव वैभवस्तस्मात् । भावप्रधानो निर्देशः । अत इति । मुख्यपुरुषमहिमत्वादेव । सतो ब्रह्मणो महस्तेजः । ऐकपद्य इति । एकपदत्वेन सन्महः-

मन्तव्यः ॥ ५३ ॥

इति तृतीयाध्याये तृतीयपादे सप्तदशं लिङ्गभूयस्त्वाधिकरणम् ॥ १७ ॥

व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् ॥ ५४ ॥ (३-३-१८.)

ननु 'ब्रह्मविदाप्नोति पर'मिति श्रुत्या अक्षरब्रह्मविदः परब्रह्मप्राप्तिरुच्यते। तत्रेतरसाधनसापेक्षं ब्रह्मज्ञानं परं प्रापयति, उत तन्निरपेक्षमिति भवति संशयः। अत्र श्रुतौ तन्मात्रोक्तेरितरनिरपेक्षमेव तत्तथेति पूर्वः पक्षः। सिद्धान्तस्त्वेवं सति ज्ञानमार्गीयाणामपि परप्राप्तिः स्यात्। सा त्वनेकप्रमाणबाधितेति पूर्वमवोचाम।

भाष्यप्रकाशः।

इतिविद्योपास्यलिङ्गत्वाभावात्। 'हिरण्यबाहव' इत्यस्य सवितृमण्डलोपास्यत्वगमकताप्यक्षिद्वित्वलिङ्गविरुद्धेत्यस्य 'अन्तस्तद्धर्मो'धिकरण एवास्माभिरुपपादितत्वात्। उमापतिपदस्य कस्यामपि निःसन्दिग्धायां परविद्यायामदर्शनाच्च। इदं यथा तथा मया ब्रहस्ताख्ये वाद उपपादितत्वान्नात्र विशिष्योच्यते। दहरविद्योपास्यत्वं तु क्रममुक्तौ प्राप्यविभूतिमध्येपि शिवस्य सत्त्वादनुमोदामह इति दिक् ॥ ५३ ॥ इति सप्तदशं लिङ्गभूयस्त्वाधिकरणम् ॥ १७ ॥

व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् ॥ ५४ ॥ पूर्वाधिकरणान्तिमसूत्रे तैत्तिरीयश्रुतिः सम्मतित्वेन प्रदर्शितेति प्रसङ्गात्तदर्थविचारायाधिकरणान्तरमारभत इत्याशयेन तद्विषयादिकं वदन्तस्तदवतारयन्ति ननु ब्रह्मेत्यादि। प्रकृते सहकार्यनुक्तिः केवलाक्षरविदां तदप्राप्तिदर्शनं च सन्देहबीजम्। पूर्वपक्षसिद्धान्तौ तु स्फुटौ। सा त्वनेकेत्यादि। ज्ञानमार्गीयाणां परप्राप्तिस्तु 'यमेवैष वृणुते' 'नायमात्मा बलहीनेन' 'भक्त्या मामभिजानाति' 'भक्त्याहमे-

रश्मिः।

पदार्थः। अक्षीति। छान्दोग्यस्थे 'यथा कप्यासं पुण्डरीकमेवमक्षिणी' इति वेदे। अग्नीनां ज्ञानरूपत्वव्यवस्थापनम्, 'ब्रह्म तर्हि अग्नि'रित्युत्तरार्धसुबोधिन्युक्तश्रुत्याऽसन्दिग्धम्। प्रकरणस्याग्निश्रुतितत्पदसामर्थ्याभ्यां प्रकरणस्य नैर्बल्यान्नैर्बल्यम्। यद्वा। सूत्राणां न्यायरूपत्वेनाग्निरहस्येपि प्राप्तिः। न च भवन्नये यस्य भूयांसि लिङ्गानि तत्तच्छब्दवाच्यं यथा तत् वरणमेव बलीय इति, अन्यत्र तु तत् लिङ्गमेव बलीय इति तत्पदार्थाननुगम इति वाच्यम्। तत्पदार्थत्वेन वरणादीनां ग्रहणे तत्पदार्थत्वस्यानुगमात्। अन्यथा सूत्रेषु विश्वतोमुखत्वस्य लक्षणांशस्याव्याप्तेः।

माध्वास्तु। अनुव्याख्याने तु। तट्टीकायां न्यायसुधायाम्। 'विद्यैवे'ति सूत्रमुपन्यस्य यद्यपीदमधिकरणमनुबन्धादिभ्य इत्यतः पूर्वम्, तथाप्युपासनस्वरूपावगमे सत्येव तत्सार्थक्यसमर्थनस्यावसरः; नान्यथेति व्युत्क्रमेण व्याख्यानमित्युक्त्वोपपादितं तथाहीत्यादिग्रन्थेन। ते 'अनुबन्धादिभ्य' इत्यादौ उपासनास्वरूपं 'विद्यैव तु निर्धारणा'दित्यादौ तत्सार्थक्यमुच्यते।

भिक्षुभाष्येपीदं द्रष्टव्यम्।

तत्र रामानुजाचार्यमतमपि न्यायसञ्चारेण गतार्थतां भजते। माध्वभिक्षुभाष्ये सम्यगालोच्य तदधिकरणार्थपर्यवसानमालोच्यम् ॥ ५३ ॥ इति सप्तदशं लिङ्गभूयस्त्वाधिकरणम् ॥ १७ ॥

व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् ॥ ५४ ॥ प्रकृत इति। श्रुतौ। सन्देहबीजमिति। व्युत्क्रमेण सन्देहबीजम्। स्फुटाविति। ज्ञानमार्गीयाणामिति। साधना-

किञ्च । ज्ञानशेषभूतब्रह्मापेक्षया फलात्मकस्य परस्य मुख्यत्वात् 'तदेषाभ्युक्ते'ति श्रुतिस्तदेव प्रतिपाद्यत्वेनाभिमुखीकृत्य ऋगुक्तेत्याह । तेन तत्र ब्रह्मपदे पुरुषोत्तमपरे ज्ञायेते । तथाच । गुहायां यद्याविर्भूतं परमं व्योम पुरुषोत्तमगृहात्मकमक्षरात्मकं व्यापिवैकुण्ठं भवति, तदा तत्र भगवानाविर्भवतीति तत्प्राप्तिर्भवतीत्युच्यते 'यो वेद निहितं गुहायां परमे व्योम'न्नित्यनेन । तथाच । ज्ञानिनां गुहासु परमव्योम्नो व्यतिरेक एव, तत्र हेतुः, तद्भावाभावित्वादिति । 'यमेवैष वृणुत' इतिश्रुतेर्वरणाभावे भगवद्भावस्यासम्भवात्, ज्ञानिनां तथा वरणाभावाद्भगवद्विषयको भावो न भावीति तथेत्यर्थः । ननु ज्ञानविषयत्ववदाविर्भावोऽप्यस्तु, किञ्च, तदतिरिक्तमाविर्भावमपि न पश्याम इत्याशङ्कायामाह न तूपलब्धिवदिति । उपलब्धिर्ज्ञानम्, तद्वद्गुहायामाविर्भावो न भवतीत्यर्थः । यस्मै भक्ताय यल्लीलाविशिष्टं स्वस्वरूपमनुभावयिता प्रभुर्भवति, तद्गुहायां तल्लीलाश्रयभूतमक्षरस्वरूपं वैकुण्ठलोकवदाविर्भावयतीति नोक्तशङ्कालेशोपि । यत्र पुरुषोत्तमस्य

भाष्यप्रकाशः ।

कया ग्राह्य' इत्यादिप्रमाणबाधितेति इतः पूर्वाधिकरणेष्ववोचामेति नात्र सिद्धान्ते सन्देग्धव्यमित्यर्थः । ननु भवत्वेवम्, तथाप्ययमर्थः प्रकृतश्रुतेः सूत्राच्च कथं लभ्यत इत्याकाङ्क्षायां पूर्वं श्रुतेस्तल्लाभमाहुः किञ्चेत्यादि । तेन तत्रेति । तेनास्यामृचि । ज्ञायेते इति । आनन्दमयाधिकरणद्वितीयवर्णकस्थेन 'अथवा अक्षरे ब्रह्मण्यानन्दात्मके' इत्यादिव्याख्यानान्तरेण ज्ञायेते । ऋचि 'परमं व्योमे'ति पदद्वयं ज्ञानशेषभूतब्रह्मपरमित्याशयेन ऋक्सिद्धमर्थमाहुः तथाचेत्यादि । उच्यत इति । अस्यां ऋच्युच्यते । तथाचास्यां श्रुतौ गुहायां परमव्योमनि परप्राप्तिरुक्ता, परमव्योमाविर्भावस्तु न ज्ञानमार्गीयगुहायाम्, अतः परमव्योमपदादत्र सोऽर्थो लभ्यत इत्यर्थः । सूत्रात्तद्विवृण्वन्ति तथाचेत्यादि । व्यतिरेक इति । अभावः । सूत्रशेषमवतारयन्ति ननु ज्ञानेत्यादि । ज्ञानविषयत्ववदिति । अक्षरस्य ज्ञानविषयत्ववत् । तदतिरिक्तमिति । ज्ञानविषयत्वातिरिक्तम् । व्याकुर्वन्ति उपलब्धिरित्यादि । अनाविर्भावे हेतुं स्फुटीकुर्वन्ति यस्मा इत्यादि । लोकवदिति । लोकयुक्तम् । तथाच ज्ञानमार्गीयान् प्रति तादृशतदनुभावनेच्छाया अभावान्न परमव्योमात्मकाक्षरस्वरूपस्याविर्भावः । स चाविर्भावो दर्शनविषयत्वयोग्यतारूपः, न तु ज्ञानविषयत्वमात्रम् । अतो भगवतस्तथेच्छाभावेन केवलाक्षरज्ञानिनो वरणात्मकसहकारिशून्यत्वान्न परप्राप्तिरिति ज्ञानिभक्तस्यापि वरणात्मकसहकारिसापेक्षमेव ज्ञानं परप्राप्तिजनकमिति सिद्धान्तो निर्विचिकित्स इत्यर्थः । ननु श्रुतावक्षरस्यादृश्यत्वादिगुणकत्वस्योक्तत्वात् समन्वयाध्याये

रश्मिः ।

न्तरभक्तेरपेक्षाभावोक्तेः । एवं सिद्धान्तः स्पष्ट इत्यर्थः । किञ्चेत्यादीति । ज्ञानशेषेति । 'ब्रह्म वि'दित्यत्र ज्ञानविशेषणीभूतं यद्ब्रह्म तदपेक्षया । ब्रह्मपदे इति । 'ब्रह्मवि'दित्यत्रत्याद्ब्रह्मपदादग्रेतने ब्रह्मपदे । सोऽर्थ इति । इतरसाधनसापेक्षं ब्रह्मज्ञानं परं प्रापयतीत्यर्थः । भाष्ये । तथेत्यर्थ इति । तद्भावाभावित्वादित्यर्थ इत्यर्थः । वैकुण्ठलोकोऽस्त्यस्मिन्निति वैकुण्ठलोकवत् । द्वितीयान्ताद्वतिर्नोक्त इत्याशयेनाहुः लोकयुक्तमिति । दर्शनविषयत्वेति । आविर्भावतिरोभाववादे स्फुटः । नन्विति । उपेक्षाज्ञानविषये आविर्भूतेनाविर्भावप्रसङ्गात्तथा । ननु श्रुताविति ।

१. परं ।

चाक्षुषत्वम्, तत्र ततोऽधःकक्षस्य तस्य तथात्वे का शङ्का नाम। एतदुपपादितं पूर्वम्, विद्वन्मण्डने च। ननु ज्ञानिज्ञानविषयभक्तगुहाविर्भूताक्षरयोर्भेदोऽस्ति, न वा। नाद्यः। मानाभावादेकत्वेनैव सर्वत्रोक्तेः। न द्वितीयः। निरवयवस्य क्वचिल्लोकरूपत्वात्तद्रूपत्वाभ्यामेकत्वानुपपत्तेरिति चेत्। मैवम्। लोकरूपत्वस्य पश्चादाविर्त्वे हीयमनुपपत्तिः, न त्वेवम्, किन्त्वक्षरस्वरूपमेव तथेति श्रुतिराह। 'अम्भस्यपारे भुवनस्य मध्य' इत्युपक्रम्य 'तदेव भूतं तदु भाव्यमा इदं तदक्षरे परमे व्योमन्।' एतदग्रे च, 'यमन्तःसमुद्रे कवयोऽवयन्ति यदक्षरे परमे प्रजा' इत्यादिरूपा। स्मृतिरपि 'परस्तस्मात्तु भावोऽन्योऽव्यक्तो व्यक्तात् सनातनः। यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति। अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम्। यं प्राप्य न निवर्तन्ते तद्धाम परमं मम' इत्यादि तु गीतासु। श्रीभागवतेपि 'दर्शयामास लोकं स्वं गोपानां तमसः परम्। सत्यं ज्ञानमनन्तं यद्ब्रह्म ज्योतिः सनातनम्। यद्धि पश्यन्ति मुनयो गुणापाये समाहिता' इति दशमे। द्वितीये च 'तस्मै स्वलोकं भगवान् समाहितः सन्दर्शयामास'त्युपक्रम्य, कालत्रिगुणमायादिसम्बन्धराहित्यमुक्त्वा[2], भगवत्पार्षदानुक्त्वा, विमानप्रमदा उक्त्वा, श्रीरुक्ता। तथाच श्रुतिस्मृत्येकवाक्यतायां तादृक्स्वरूपमेवाक्षरमिति निर्णयो भवति। एवं सति सच्चिदानन्दत्वदेशकालापरिच्छेदस्वयम्प्रकाशत्वगुणातीतत्वादिधर्मवत्त्वेनैव ज्ञानिनामक्षरविज्ञानम्, भक्तानामेव पुरुषोत्तमाधिष्ठानत्वेन तथेति ज्ञेयम्। 'मल्लानामशनि'रिति श्लोकोक्तरीत्या पुरुषोत्तमस्येव। प्रभुणा ये

भाष्यप्रकाशः।

तथा निर्णीतत्वाच्च नेदं साधीय इति शङ्कायामाहुः यत्रेत्यादि। तथाच वरणेन पुरुषोत्तमस्वरूपस्य चाक्षुषत्वं वरणश्रुतौ 'भक्त्या त्वनन्यये'ति गीतास्मृतौ चोक्तम्, अक्षरस्यापि 'कश्चिद्धीर' इति श्रुतावुक्तम्, तच्च पुरुषोत्तमादधःकक्षम्, अतः साधनविशेषसम्पत्तौ कैमुतिकन्यायावतारात् सर्वादृश्यतायामपि दृश्यत्वे विरोधाभावान्न सन्देह इत्यर्थः। अत्राक्षरस्वरूपविचारेण चोदयति

रश्मिः।

अक्षरधियामित्यधिकरणे 'एतद्वै तदक्षर'मित्यादिश्रुतावुक्तत्वात्। समन्वयेति। 'अक्षरमम्बरान्तधृते'रित्यत्र निर्णीतत्वात्। इदमिति। सहकारिसापेक्षं ज्ञानं परप्राप्तिजनकमिति साधीयः। उक्तमिति। 'प्रत्यगात्मानमैक्ष'दिति प्रत्यगात्मरूपाक्षरज्ञानमुक्तम्। का शङ्का नामेतिभाष्यविवरणं कैमुतिकेतिं। भाष्ये। पूर्वमिति। 'न तूपलब्धिव'दित्यत्र। विद्वन्मण्डन इति। 'अभेदादनुपाधित्वा'दित्यत्र सगुणत्वेनाभिमताभेदोपपादनात्तथा। शब्दापेक्षयेति। पूर्वपक्षत्वाद्वादरमितमुक्तम्, तस्यार्थप्रधानत्वात्। भगवतो व्यासस्य शब्दप्राधान्यात्। उत्तानेति। 'अम्भसी'त्यत्र लोकत्रयनिरूपणमिति न साङ्कर्यम्। गीतास्विति। तन्माहात्म्यं भागवतापेक्षया बहुवचनम्। देशकालेति। परिच्छिन्नत्वं मध्यमपरिमाणवत्त्वम्। भक्तानां तु देशकालकृतपरिच्छेदो वर्तते। श्रीगोवर्धनदेशाद्यमुनादेशः परः, यमुनादेशाच्छ्रीगोवर्धनदेशोऽपरः। प्रातःकालीना लीला न मध्याह्न इत्येवं कालकृतपरिच्छेदः। लीलासु मध्यमपरिमाणरूपपरिच्छेदः, 'एकं रूपं रसात् पृथ'गितिवत्। तथेतीति। अक्षरज्ञानम्। एकस्यानेकत्वे दृष्टान्तमाहुः मल्लानामिति। पुरुषोत्तमस्यानेकत्वेन दर्श-

१. चोपपादितम्। २. मायासम्बन्धः।

यथा विचारिताः सन्ति, ते तथा भवन्तीति तद्विचार एव सर्वेषामधिकाररूप इति 'कृतप्रयत्नापेक्षस्त्वि'त्यत्र निर्णीतम् ॥ ५४ ॥

अस्मिन्नर्थे कैमुतिकन्यायकथनार्थं निदर्शनत्वेनोत्तरं पठति ।

अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५५ ॥

यागे तत्तदृत्विङ्नियनकर्तव्यान्यन्वाधानादीन्यङ्गानि । तत्रावबद्धाः सर्व एवर्त्विजो यजमानेन । अवबन्धनं नाम 'अध्वर्युं त्वां वृणे,' 'होतारं त्वां वृणे,' 'उद्गातारं त्वां वृण' इत्यादिरूपं वरणमेव, अन्यथा सर्वकर्मविदुषां तत्कृतिपटूनामेकत्राधिकारः, नान्यत्रेति नियमो न स्यात् । तस्य तस्य तथा वरणे तु यजमानेच्छैव हेतुः । ते च तदा न सर्वासु शाखासु विहितान्यङ्गानि कर्तुं सर्वेपि शक्ताः, किन्तु यजमानवरणनियमिता एव तथा । तत्र हेतुमाह । हि यतः कारणात् प्रतिवेदं नियमितान्यङ्गानि, 'हौत्रमृचा, आध्वर्यवादि यजुषा, उद्गात्रं साम्ने'ति । तथाचालौकिके वैदिके कर्मणि जीवेच्छापि नियामिका भवति यत्र, तत्र किमु वाच्यं प्रतिरोमकूपं सावकाशममितब्रह्माण्डस्थितिमतस्तदीशितुरिच्छैव नियामिका तत्तत्साधनफलसम्पत्ताविति ॥ ५५ ॥

---

भाष्यप्रकाशः ।

नन्वित्यादि । तथाच शब्दापेक्षयार्थस्य बलिष्ठत्वादर्थस्वरूपविचारे पूर्वोक्तमनुपपन्नमित्यर्थः । तत्र समादधते मैवमित्यादि । निर्णीतत्यमित्यन्तेन । इयमिति । उक्तविकल्परूपा । न त्वेवमिति । न तु रूपभेदः । शेषमुत्तानार्थम् । तथाच स्वरूपस्योक्तरूपत्वाद्भगवदिच्छयाधिकारभेदेन तस्य तस्य तथा भानान्न काप्यनुपपत्तिरित्यर्थः ॥ ५४ ॥

अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५५ ॥ सूत्रमवतारयन्ति अस्मिन्नित्यादि । व्याकुर्वन्ति याग इत्यादि । इत्यादिरूपं वरणमिति । तत्तत्कर्मकर्तृतानियमनरूपं सम्भजनं विभाग इति यावत् । शेषं स्फुटम् । तथाचाक्षरस्य तत्सर्वरूपत्वेपि ज्ञानिषु तथानाविर्भावे भक्तहृदये च तथाविर्भावे उक्तरीत्या कैमुतिकन्यायाद्भगवतस्तेषां तेषां तादृक्तादृक्फलदित्सैव नियामिकेत्यर्थः ॥ ५५ ॥

रश्मिः ।

नमधिकारभेदात् । यथेति । 'कामाद्गोप्यो भयात् कंस' इति षडुपाधिभिर्भिन्नत्वेन विचारिताः । तद्विचार इति । भगवद्विचारः । सर्वेषामधीति । विषयतासम्बन्धेन तथा । भगवति तु विचारः समवायसम्बन्धेन । सिद्धमाहुः तथा चेति । स्वरूपस्येति । अक्षरस्वरूपस्य । भाष्योक्तरूपत्वात् । तस्य तस्येति । ज्ञानिनो भक्तस्य च । कापीति । क्वचिल्लोकरूपातद्रूपाभ्यामेकत्वानुपपत्तिरूपा भाष्योक्ता । उपासनादिविषयभगवद्धर्मरूपषोडशकला निवृत्ताः । अग्रेऽष्टाधिकरण्यां षड्धर्मा धर्मी समष्टिश्चेति संख्यातात्पर्यम् ॥ ५४ ॥

अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५५ ॥ सम्भजनमिति । 'वृङ् संभक्ता'विति धातुपाठात् । शेषमिति । आध्वर्यवादीति । आदिना प्रतिप्रस्थातुः प्रतिप्रस्थात्रम् । एवं स्फुटं शेषम् ॥ ५५ ॥

## मन्त्रादिवद्वाऽविरोधः ॥ ५६ ॥

ननु पूर्वं कर्मज्ञाननिष्ठानामपि पुंसामग्रे भक्तिमार्गीयत्वं यत्र भवति, तत्र तथैव भगवद्वरणमिति हि सिद्धान्तः । ऋत्विजस्त्वेकस्मिन् याग एकत्र वृतस्य नापरत्रापि तथेति विरुद्धो दृष्टान्त इत्यरुच्या निदर्शनान्तरमाह । यथैक एव कश्चिन्मन्त्रो बहुषु कर्मसु सम्यध्यते, कश्चित् द्वयोः, कश्चिदेकत्रैव, तथैव विधा-

भाष्यप्रकाशः ।

मन्त्रादिवद्वाऽविरोधः ॥ ५६ ॥ सूत्रमवतारयन्ति नन्वित्यादि । तथैव भगवद्वरणमिति । तत्तदनन्तरमेतं भक्तिमार्गे प्रवेशयिष्यामीत्येवं विचारितत्वात्तत्तदनन्तरमेव भगवद्वरणम् । ऋत्विज इति षष्ठी । नापरत्रापि तथेति । नान्यकार्ये विनियोगः । सूत्रं व्याकुर्वन्ति यथैक एवेत्यादि । उदाहरणं त्वाद्यस्य 'देवस्य त्वा सवितुः प्रसव' इत्यादिरनुषङ्गमन्त्रः । द्वितीयस्य सूर्योपस्थाने मन्देहादिनिवारणे च गायत्रीमन्त्रः । तृतीयस्य 'तेजस्वी भूयास'मिति । एवमन्यदपि द्रष्टव्यम् । कर्मोदाहरणं ज्योतिष्टोमादि जयन्तीव्रतादि च द्रष्टव्यम् । कर्मोदाहरणमन्यदप्याहुः

रश्मिः ।

मन्त्रादिवद्वाऽविरोधः ॥ ५६ ॥ अनुषङ्गेति । उदाहरणमित्यनुषङ्गः । अनुषङ्गो वाक्यपरिसमाप्तिः । वाक्यस्य परिसमाप्तिर्येन । अनुषङ्गोपि मन्त्रभेदकः । अनुषज्यत इत्यनुषङ्गः । सम्बद्धमन्त्रः । 'देवस्य त्वा सवितुः प्रसव' इत्यसिदमादायेत्येकोऽनुषङ्गः । एवमितरावपि । यथाऽमृताभिषेके । भैषज्ये च 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।' भैषज्येनेति । द्वितीयस्येति । द्वयोः कर्मणोः सम्बद्धस्य । 'आ सत्येन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च । हिरण्मयेन सविता रथेन देवो याति भुवनानि पश्य'न्नित्यत्र । मन्देहेति । आरणे सह वै पन्नायाम् । 'तदु ह वा एते ब्रह्मवादिनः पूर्वाभिमुखाः सन्ध्यायां गायत्रियाभिमन्त्रिताम्भसो अप ऊर्ध्वं विक्षिपन्ति । ता एता आपो वज्रीभूत्वा तानि रक्षांसि मन्देहारुणे दीपे प्रक्षिपन्ती'तिश्रुत्या स्पष्टं मन्देहादिनिवारणम् । मन्देहद्वीपे निवारणं मन्देहादिनिवारणम् । तस्मिन् । गायत्रीव गायत्री । आसत्येन रजसेति । स्थानसाम्यं सम्बन्धो लक्षणा । मन्त्रत्वमभियुक्तप्रसिद्ध्या । अत्यन्तत्वान्तमध्यमपुरुषान्तत्वाभावेपि । सूत्रादिमावार्यपादभाष्ये । तृतीयस्येति । एकत्र कर्मणि सम्बद्धस्य मन्त्रः 'तेजस्वी भूयास'मिति होमे उदाहरणम् । अन्यदपीति । 'इषे त्वोर्जे त्वे'ति । शाखाच्छेदनेऽनुमार्जने । 'इषे त्वे'ति शाखायां 'छिनत्त्यूर्जस्वेत्यनुमार्ष्टि वे'ति कल्पसूत्रात् । तथा प्राणापानयोः प्रत्यगसने । 'प्राणमूर्ध्वमुन्नयत्यपानं प्रत्यगस्यती'ति काठकात् । वेदार्थे द्वितीयपर्याये । तथा क्षुत्पिपासाभिवृद्धिकर्त्र्यै शक्त्यै औषधिपालने विचारकारणभूतशक्त्यै च । 'इषे पीपिहि ऊर्जे पीपिही'त्यारणात् । 'हरिः ऊ'मिति च । बहुषु कर्मसु । द्वयोः कर्मणोः 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोती'त्युदाहरणम् । यागे पापश्लोकश्रवणाभावे च कर्मणोः । पापश्लोकश्रवणाभावस्यापि कर्मत्वम् । कर्मान्तःपातात् । एकत्र कर्मणि 'कारीर्या यजेत वृष्टिकामः' इत्युदाहरणम् । वृष्टिकामोपि कर्म, 'कर्ता कर्म च करणं चे'ति गीतावाक्यात् । आदिपदादिति भाष्यविवरणं कर्मोदाहरणमित्यादि । ज्योतिष्टोमादीति । 'ज्योतिष्टोमोऽग्निष्टोमः' । इदं कर्म तत्रैकत्र कर्मणि एको ब्रह्मा कर्तृकर्मरूप उपयुज्यते । 'परमेष्ठिनो वा एष यज्ञोऽग्रे आसीद्यदग्निष्टोम इति, तेन स परमां काष्ठामगच्छ'दिति । 'कर्मणा ब्रह्मैवमुच्यत' इति सुबोधिनी । आदिशब्दार्थोऽग्रे वक्तव्यः । स्मार्तोदाहरणं जयन्तीत्यादि । जयन्तीव्रतं सेवाकर्मार्थं भगवदावेशार्थं च । आदिना प्रायश्चित्तं कर्म शुद्ध्यर्थम् । एकं पितृकृतं प्रायश्चित्तं कर्मानेककालशुद्ध्यर्थम् ।

नात्, तथात्रापीत्यर्थः । आदिपदात् कर्मोच्यते । यत्र काम्येनैव नित्यकर्मनिर्वाहः, तत्र कामितार्थसाधकत्वे प्रत्यवायपरिहारेऽप्येकमेव तदुपयुज्यते । यथाच सर्वतोमुखेऽनेकहोतृप्रवरेऽध्वर्युप्रवरे च गृह्यमाणे 'देवाः पितर' इत्यादिना यजमानकर्तृकानुमन्त्रणमेकमेव सर्वत्र सम्बध्यते, तथैव विधेः, तथात्रापि तावद्विधं यदेकमेव वरणम्, तेन तत्तन्निष्ठानन्तरं भक्तिनिष्ठेति न दृष्टान्तविरोध इत्यर्थः ।

अथवा । ॐमित्युदाहृत्यैव मन्त्राणामुच्चारणान्मन्त्रादिरोङ्कारः । स यथा ब्रह्मात्मकत्वेनैक एव सर्वमन्त्रेषु सम्बध्यते, तथा वरणमपीति तथेत्यर्थः । यद्यपीतरनिष्ठानन्तरभूतभक्तिनिष्ठावतोपि वरणं तथाभूतमेकमेवेति नोक्तदोषः, तथाप्युत्कृष्टमार्गे वृतस्य नीचकक्षापादनमनुचितमिति मत्वा पक्षान्तरमुक्तम् । वस्तुतस्तु साधनमर्यादया यत्र भक्तिर्दित्सिता, तत्र तथेति नानुपपत्तिः काचित् ॥५६॥

इति तृतीयाध्याये तृतीयपादे अष्टादशं व्यतिरेकाधिकरणम् ॥ १८ ॥

भाष्यप्रकाशः ।

यथाचेत्यादि । सर्वतोमुखः कश्चिद्यागविशेषः । तावद्विधमिति । क्रमिकतत्तत्प्रकारकम् ।

मन्त्रादिपदं तद्गुणसंविज्ञानबहुव्रीहिणा व्याख्याय षष्ठीसमासपक्षेण प्रकारान्तरमाहुः अथवेत्यादि । ननु पूर्वव्याख्याने को दोषो येन व्याख्यानान्तरमत्रोक्तमित्याकाङ्क्षायां तदुक्तमङ्गीकृत्य सम्भावितं दोषमाहुः यद्यपीत्यादि । तथाभूतमिति । यादृशं केवलभक्तिमार्गीयस्य तादृशम् । पक्षान्तरमिति । ॐकारनिदर्शनपक्षः । तथाच ब्रह्मात्मकत्वेनोत्कृष्टस्याप्योङ्कारस्य तत्तन्मन्त्रसाङ्गत्वाय तत्तत्सम्बन्धो न दोषावहः, तथा वृतस्यापि तत्सम्बन्धो मर्यादामार्गरक्षार्थत्वान्न दोषावह इत्यर्थः । युक्त्या समाधाय सिद्धान्तेन समाधानमाहुः वस्तुत इत्यादि । तथाच भगवदिच्छाविचारादेवानुपपत्तिपरिहारः, निदर्शनं तु वादिनिग्रहायेति सूत्रकाराशय इत्यर्थः ॥ ५६ ॥

इत्यष्टादशं व्यतिरेकाधिकरणम् ॥ १८ ॥

रश्मिः ।

आदिपदार्थमाहुः कर्मोदेति । अन्यदिति । बह्वर्थकमेकं कर्म । द्व्यर्थमेकं कर्म तु यत्र काम्येनैवेत्यादिभाष्येणोक्तम् । काम्येन पशुकामनया कृतेन । एवकारो भगवत्प्रेरणया कृतकर्मव्यवच्छेदकः । नित्यकर्माग्निहोत्रादि । कामितार्थः पश्वादिः । प्रत्यवायेति । 'धर्मेण पापमपनुदती'ति श्रुतेस्तथा । तदिति काम्यं कर्मेति भाष्यार्थः । तथैव विधेरिति । विधिस्तत्रैव । क्रमिकेति । क्रमप्राप्तो यो होतृत्वाध्वर्युत्वरूपः प्रकारः यस्मिन् वरणे सम्भजने तत् क्रमिकतत्तत्प्रकारकं वरणम् । भाष्ये । तत्तन्निष्ठेति । कर्मज्ञाननिष्ठानन्तरम् । प्रकृते । मन्त्रादीति । सौत्रम् । तद्गुणेति । मन्त्र आदिर्यस्य कर्मण इति तद्गुणसंविज्ञानो बहुव्रीहिः । प्रथमान्ताद्वतिः । उपयुज्यत इत्येकक्रियान्वयेन विशेष्यान्वय्यन्वयित्वरूपतद्गुणसंविज्ञानबहुव्रीहिलक्षणसत्वात् । तेन तद्गुणसंविज्ञानबहुव्रीहिणा । षष्ठीति । मन्त्रस्यादिः मन्त्रादिरोंकारः । प्रथमान्ताद्वतिः । भाष्ये । तथेत्यर्थ इति । दृष्टान्ताविरोध इत्यर्थ इत्यर्थः । प्रकृते । दोषमिति । कर्मज्ञानसम्बन्धरूपम् । अनुचितमित्यन्तेन भाष्येणाहुः यद्यपीत्यादीति । नोक्तदोष इति । सम्भावितो दोषः । नन्वयं दोषो भाष्ये क्वोक्त इति चेत्, शृणु । यद्यपीत्यादिग्रन्थस्य दोषं हृदिकृत्वा तत्परिहाराय प्रवृत्तत्वादित्याक्षेप्यत्वेन व्यञ्जनावृत्त्योक्त इति जानीहि । ॐकारेति । निदर्शनं दृष्टान्तः । तत्सम्बन्धः कर्मज्ञानसम्बन्धः । वस्तुत इत्यादीति । तत्र तथेति । तत्र भक्ते तथा कर्मज्ञाननिष्ठानन्तरं भक्तिमार्गीयवरणमित्यर्थः । अनुपपत्तिरिति । कर्मज्ञानसम्बन्धः ॥ ५६ ॥ इत्यष्टादशं व्यतिरेकाधिकरणम् ॥ १८ ॥

१. अनेकत्र ।
५३ ब्र० सू० र०

## भूम्नः क्रतुवज्ज्यायस्त्वं तथाहि दर्शयति ॥ ५७ ॥ (३-३-१९.)

ननु सुखस्वरूपजिज्ञासायां 'यो वै भूमा तत् सुख'मित्युक्तम्, भूमस्वरूपजिज्ञासायां 'यत्र नान्यत् पश्यती'त्यादिना तन्निरूपितं तत्सर्वात्मभावस्वरूपमिति यदुक्तम्, तन्नोपपद्यते । भूम्नो हि सुखरूपनोच्यते । सर्वात्मभावे तु विरहभावे दुःसहदुःखानुभवः श्रूयते । तेन मोक्षसुखमेव 'यो वै भूमे'त्यादिनोच्यते। 'यो वै भूमा तदमृत'मिति वाक्याच्च । अग्रे च, 'स वा एष एवं पश्य'न्नित्याद्युक्त्वा, 'तस्य सर्वेषु लोकेषु कामचारो भवती'ति फलमुच्यते । तच्च मोक्षानन्तरमसम्भवि, अतः स भावो मोक्षो वात्रोच्यत इति संशयः ।

तत्र कामचारोक्तेर्मुक्तिपूर्वदशायां तन्माहात्म्यनिरूपणार्थत्वादमृतशब्दाच्च मुक्तिरेव भूमपदेनोच्यत इति पूर्वः पक्षः ।

तत्र भूमशब्देन स भाव एवोच्यत इति सिद्धान्तः । तत्र दुःखदर्शनानुपपत्त्या सर्वाधिकत्वलक्षणं भूमत्वमनुपपन्नमिति शङ्कां परिहरति । भूम्नः सर्वात्मभावस्य ज्यायस्त्वं सर्वस्मान्मन्तव्यम् । तत्रोक्तानुपपत्तिपरिहारार्थं दृष्टान्तमाह क्रतुवदिति । दर्शपूर्णमासप्रकरणे तैत्तिरीयके पठ्यते 'परमेष्ठिनो वा एष यज्ञोऽग्र आसीत्तेन स परमां काष्ठामगच्छ'दित्युपक्रम्य, 'य एवं विद्वान् दर्शपूर्णमासौ

---

भाष्यप्रकाशः ।

भूम्नः क्रतुवज्ज्यायस्त्वं तथाहि दर्शयति ॥ ५७ ॥ प्रासङ्गिकं विचार्य पुनः प्रकृतशेषमेव विचारयतीत्याशयेनाधिकरणमवतारयन्तः संशयं व्युत्पादयन्ति नन्वित्यादि । तद्यदिति । भूमस्वरूपम् । श्रूयते इति । पुराणवाक्येभ्यः श्रूयते । तेनेति । सुखस्य दुःखविलक्षणत्वेन । यो वै भूमा तदमृतमिति वाक्याच्चेति । इदमपि 'तन्नोपपद्यत' इत्यत्र 'मोक्षाङ्गीकारे' च हेत्वन्तरम् । तत्रानन्तरं दुःखसद्भावेन सुखस्यामृतत्वाभावात्, मोक्षे चानन्तरं दुःखाभावेन सुखस्यामृतत्वादिति । एवं मोक्षकोटिर्व्युत्पादिता । अग्रे चेत्यादिना असम्भवीत्यन्तेन सर्वात्मभावकोटिर्व्युत्पादनम् । अत उभयबीजसद्भावादेवं संशय इत्यर्थः ।

पूर्वपक्षमाहुः तत्रेत्यादि । कामचारोक्तेरिति षष्ठी ।

सिद्धान्तमाहुः तत्र भूमेत्यादि । सम्प्रसादाधिकरणे भूमशब्देन परमात्मनो निर्णीतत्वाच्छिन्नभूयस्त्वाधिकरणे सर्वात्मभावस्यापि निर्णीतत्वादत्र भूमलक्षणवाक्ये भूमपदेन स भावः सर्वात्मभावसहित एव परमात्मोच्यते । यथा 'घटेन जलमाहरे'त्यादौ घटादिपदेन छिद्रेतरत्वादिसहितो घटादिः, तद्वदिति सिद्धान्त इत्यर्थः । एवं सिद्धान्तं सामान्यत उक्त्वा तं व्युत्पादयितुं सूत्रमवतारयन्ति तत्र दुःखेत्यादि । व्याकुर्वन्ति भूम्न इत्यादि । सर्वात्मभावस्येति । इदं षष्ठ्यर्थस्य विवरणम् । भूमसम्बन्धिनः सर्वात्मभावस्येत्यर्थः । अत्र लौकिकतन्निरासायैव कथनमिति बोध्यम् । तत्रेति । ज्यायस्त्वप्रतिज्ञायाम् । दर्शपूर्णमासप्रकरण इति । संहिताप्रथमाष्टकषष्ठरश्मिः ।

भूम्नः क्रतुवज्ज्यायस्त्वं तथाहि दर्शयति ॥ ५७ ॥ प्रकृतेति । सर्वात्मभावशेषम् । पुराणेति । भ्रमरगीतोक्तेभ्यः । श्रुतिवाक्यं तु 'वने वृन्दावने क्रीडन् गोपगोपीसुरैः सहे'ति सामान्यम् । तत्रेति । सर्वात्मभावे । भाष्ये । उक्तानुपपत्तीति । दुःखदर्शनानुपपत्त्या सर्वाधिकत्वलक्षण-

यजते परमामेव काष्ठां गच्छती'ति । यथा व्रतादिदुःखात्मकत्वेपि परमकाष्ठालक्षणफलगमकत्वेन दर्शपूर्णमासयोः सर्वक्रतुभ्योऽधिकत्वं वक्तुं 'अग्र आसी'दिति स्तूयते, तथा दुःखहेतुत्वेप्यनन्यलभ्यसाक्षात्पुरुषोत्तमानन्दप्राप्तिहेतुत्वेन सुखरूपत्वमुच्यत इत्यन्येभ्यः सर्वेभ्यो ज्यायस्त्वं मन्तव्यमित्यर्थः । अत्रोपपत्तिमाह । तथाहि दर्शयति । श्रुतिस्तु 'स एवाधस्ता'दित्याद्युक्त्वा, 'अथाहङ्कारादेश' इत्याद्युक्त्वा, 'अथात्मादेश' इत्याद्युक्तवती, अग्रे चैतादृशस्य 'आत्मत एव प्राणाशाऽस्मरादिसर्व'मिति च दर्शयति । एतत्सर्वात्मभाववत्येव सर्वमुपपद्यते, न तु मुक्तस्य । वृत्तिभेदाभावात् प्राणाद्यभावाच्च । जीवन्मुक्तिदशायां प्राचीनानामेव सत्त्वात्, 'आत्मतः प्राणा' इत्यादि न वदेत् ।

भाष्यप्रकाशः ।

प्रपाठकनवमानुवाके । अग्र आसीदिति । 'परमेष्ठिनो वा एष यज्ञोऽग्र आसीत्' । उच्यत इति । भाविस्वरूपमादायोच्यते । तथाच परमकाष्ठाप्रापकत्वात्तथेत्यर्थः । ननु भाविस्वरूपमादायैवोच्यते, न विद्यमानं स्वरूपमादायेत्यत्र किं गमकमित्याकाङ्क्षायामाहुः अत्रोपपत्तीत्यारभ्य, न वदेदित्यन्तम् । तथाच भूमपदेन यदि मोक्षावस्थामभिप्रेयात्, तदैवं त्रिविधा वृत्तीर्न वदेत्, प्राणादीनां नामान्तानां तत्र सम्बन्धं च न वदेत्, तदानीं तदुभयाभावात्, अतस्तदन्यथानुपपत्त्या भूमलक्षणे सर्वात्मभावभाविस्वरूपमेवोच्यत इति सर्वात्मभावसहित एव भूमा, न तु मोक्षावस्था । नापि जीवन्मुक्तावस्थेति युक्तम् । तां चेदभिप्रेयात्, तदा 'आत्मतः प्राणा' इत्यादि न वदेत्, तस्यामवस्थायां प्रारब्धवशादेव पूर्वप्राणादीनां सत्तायाः सत्त्वात्, अतो द्विविधस्यापि मोक्षस्यात्रादातुमशक्यत्वात् सर्वात्मभावोत्र ग्राह्य इत्यर्थः ।

रश्मिः ।

भूमत्वानुपपत्तिपरिहारार्थम् । प्रकृते । भावीति । परमकाष्ठापन्नस्वरूपमादाय । तथेत्यर्थ इति । ज्यायस्त्वमित्यर्थ इत्यर्थः । विद्यमानमिति । दुःखरूपम् । त्रिविधेति । 'स एवाधस्ता'दित्युक्ता । अहङ्कारादेशरूपा । आत्मादेशरूपा च । एतच्च प्राणाद्यभावाच्चेति भाष्याग्रे न वदेदित्यस्य सम्बन्धं कृत्वा योजितं ज्ञेयम् । जीवन्मुक्तीत्यादिभाष्ययोजना प्राणादीनामित्यादि । प्राचीनानामित्यस्य विशेषणमपीदम् । च पुन'स्तस्य वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण आत्मत आशे'त्यादि । मध्ये 'आत्मत आविर्भावतिरोभावा'विति । उपान्ते 'आत्मतो नामे'ति । अन्ते 'आत्मतो मन्त्राः, आत्मतः कर्माणि, आत्मत एवेदं सर्व'मिति । अत्र नामान्तानां तत्र जीवन्मुक्ते तथा । तदानीमित्यादि । सर्वात्मभावेन भावि फलं तस्य स्वरूपं तस्य काले इत्यर्थः । तदुभयेति । निःसम्बोधमोक्षजीवन्मोक्षोभयं तदभावात् । तदन्यथेति । प्राणादिनामान्तसम्बन्धस्य सर्वात्मभावभाविस्वरूपकल्पनं विनानुपपत्त्या । एवकारस्तु ब्रह्मवित्प्रपाठके आनन्दमयान्तानि रूपाण्युक्त्वा श्राव्यते । 'अथातोऽनुप्रश्नाः । उता विद्वानमुं लोकं प्रेत्य कश्चित् समश्नुते ।' 'सोऽकामयते'त्याद्युक्त्वा तत्र दशरसात्मकजगदित्युक्तम् । मध्ये 'रसो वै स' इत्युक्त्वा 'स य एवंवित् । अस्माल्लोकात् प्रेत्य । एतमन्नमयमात्मानमुपसंक्रामती'त्याद्युक्त्वा 'एतमानन्दमयमात्मानमुपसंक्रामति, तदप्येष श्लोको भवति । यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चने'ति श्रुतेः । तामिति । मोक्षावस्थां जीवन्मुक्तावस्थां वा । तस्यामिति । जीवन्मुक्तावस्थायाम् । न वक्तुं शक्यमिति

यद्वा। ननु लोकेपि शृङ्गाररसभाववति पुंसि नार्यां च त्वदुक्तभावसम्बन्धिव्यभिचारिभावाः श्रूयन्ते। सैव सर्वत्र, स एव सर्वत्रेति। एवं सति लौकिकसधर्मवत्त्वान्न त्वदुक्तभावस्यालौकिकज्ञानादिभ्य आधिक्यं वक्तुं शक्यम्, अलौकिकविषयत्वाल्लौकिकत्वमपि न तथेति भवति संशयः। तत्र मनुजत्वरिपुत्वादिज्ञानानामिव कामादिभावेन स्नेहभावस्यापि सम्भवान्नास्यालौकिकत्वमिति पूर्वः पक्षः।

सिद्धान्तस्त्वस्य भावस्य लौकिकेभ्यो ज्यायस्त्वं मन्तव्यम्। ननूक्तं लोकसाधारण्यं बाधकमिति शङ्कानिरासाय निदर्शनमाह क्रतुवदिति। यथा दर्शादिषु दोहनाधिश्रयणातञ्चनव्रीह्यवघातादिपुरोडाशभक्षणादीनां लौकिकक्रियातुल्यत्वेन दर्शनेपि न लौकिकत्वम्, लौकिकप्रमाणाप्राप्तत्वादलौकिकतत्प्राप्तत्वात्, तथोक्तप्रमाणरूपवरणलभ्यत्वेन श्रुत्युक्तत्वान्न लौकिकत्वमस्य भावस्येति दिक्।

वस्तुतस्तु ग्रामसिंहस्य सिंहस्वरूपत्वेपि न ताद्रूप्यं वक्तुं शक्यम्। तथा लौकिकपुंसि नार्यां वा तदाभासो रसशास्त्रे निरूप्यते, तद्दृष्टान्तेन भगवद्भाववद्भक्तरीतिभावनार्थम्, न तु ऋषीणां लौकिके तात्पर्यं भवितुमर्हतीति। अत्रोपपत्ति-

---

भाष्यप्रकाशः।

एतस्यार्थस्य पूर्वाधिकरणस्थेन सामान्यसूत्रार्थविचारेणापि सिद्धप्रायत्वमित्यरुच्या वर्णकान्तरेण सूत्रं व्याकुर्वन्ति यद्वेत्यादि। श्रूयन्त इति। साहित्यग्रन्थेषु भरतसूत्रादौ चोच्यन्ते। अलौकिकज्ञानादिभ्य इति। लोकविलक्षणेभ्योऽक्षरज्ञानमुक्तिजीवन्मुक्तिभ्यः। न तथेति भवति संशय इति। न वक्तुं शक्य इति लौकिकसजातीयधर्मवत्त्वालौकिकविषयत्वाभ्यां हेतुभ्यां भवति संशय इत्यर्थः। पूर्वपक्षमाहुः तत्रेत्यादि। तत्रेति। भगवति। सिद्धान्तं वदन्तः सूत्रं व्याकुर्वन्ति सिद्धान्त इत्यादि। प्रतिज्ञायां हेतुं वक्तुं नन्वित्यादिना बाधकमाशङ्क्य दृष्टान्तं व्युत्पादयन्ति यथेत्यादि। उक्तप्रमाणरूपवरणलभ्यत्वेनेति। अलौकिकप्रमाणरूपतल्लभ्यत्वेन। तथाच सर्वात्मभावो लौकिकसदृशत्वेपि न लौकिकः, अलौकिकप्रमाणप्राप्तत्वात्, लौकिकप्रमाणाप्राप्तत्वाच्च, यागीयदोहनाधिश्रयणादिवत्, यन्नैवम्, तन्नैवम्, लौकिकवद्वदिति हेतुसिद्ध्या न प्रतिज्ञायां दोष इत्यर्थः। एतादृशश्च सादृश्यदर्शनजाः शङ्का अविचारकस्यैवोद्यन्ति, न तु विचारकस्येत्याशयेनाहुः वस्तुत इत्यादि। तथाच विचारकस्तु लोकेपि तथा तद्भावं पश्यन्नैवं शङ्कत इत्यर्थः। ननु यदि न सादृश्येन ताद्रूप्यम्, तदा ऋषिभिर्भरतादिभिरलौकिकभावधर्मसादृश्यं लौकिके रसे कुतो निरूप्यते, अतस्तद्दर्शनाद्विचारकस्यापि शङ्का तुदेत्येवेत्याकाङ्क्षायामृषीणां तथा तन्निरूपणस्य तात्पर्यमाहुः तथा लौकिकेत्यादि। भग-

रश्मिः।

तथेनीत्यस्यार्थः। सजातीयेति। सधर्मत्वादित्यस्यार्थः। तत्रेत्यादीति। कामादीति। आदिना भयादिपञ्चकम्। 'कामाद्द्वेष्य' इति वाक्योक्तम्। प्रतिज्ञायामिति। अस्य भावस्य लौकिकेभ्यो ज्यायस्त्वं मन्तव्यमित्यस्याम्। निरूप्यत इति। शास्त्रान्ते 'परमेण समाधिना' इत्यक्रमणोक्तेः। तथा तन्निरूपणस्येति। अलौकिकभावधर्मसादृश्येन लौकिकरसनिरूपणस्य।

माह तथाहीत्यादि । पूर्वोक्तभाववत आत्मतः प्राणादिकं सर्वं दर्शयति श्रुतिः 'तस्य ह वा एतस्यैवं पश्यत' इत्यादिना । इतः पूर्वमपि 'स वा एष एवं पश्य'न्नि-त्युपक्रम्य, 'आत्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवति, सर्वेषु लोकेषु कामचारो भवती'ति श्रुतिश्च । न हि लोके एवं सम्भवति, आत्म-पदानां भगवद्वाचकत्वादिति सर्वोत्तमविषयकभावस्यैव तथात्वं युक्तमिति चोप-पत्तिर्हिशब्देन सूच्यते ॥ १७ ॥

इति तृतीयाध्याये तृतीयपादे एकोनविंशं भूम्न इत्यधिकरणम् ॥ १९ ॥

---

भाष्यप्रकाशः ।

वद्भाववद्भक्तरीति भावनार्थमिति । भगवति विगाढभाववान् यो भक्तस्तद्रीतिभावनार्थम् । ननु ऋषीणां तथैव तात्पर्यमित्यत्र किं गमकम्, अत आहुः नस्वित्यादि । तदुक्तं कामसूत्रसमाप्तौ वात्स्यायनेन 'तदेतद्ब्रह्मचर्येण परमेण समाधिना । विहितं लोकयात्रार्थं न रागार्थोऽस्य संविधिः । रक्षन् धर्मार्थकामाँस्त्रीन् सम्पश्यन् लोकवर्तिनीम् । अस्य शास्त्रस्य तत्त्वज्ञो भवत्येव जितेन्द्रिय' इति । तथाच यदि लौकिके तात्पर्यं स्यात्, एतच्छास्त्रतत्त्वज्ञस्य जितेन्द्रियभवनरूपं फलं न वदेत् । एवं भरतोक्ते सङ्गीतशास्त्रेपि ज्ञातव्यम् । उपवेदत्वात् । अतः पूर्वोक्त एव निश्चयः । सूत्रशेषमव-तारयन्ति अत्रेत्यादि । उक्तस्यार्थस्य प्रकृतश्रुत्यभिप्रेतत्वे उपपत्तिमाहेत्यर्थः । उपपत्त्यन्तरं बोध-यितुं हिशब्दार्थमाहुः सर्वोत्तमेत्यादि । तथात्वमिति । सर्वसाधनज्यायस्त्वम् ।

अत्रान्ये, वैश्वानरविद्यामुदाहृत्य, किमिहोभयथाप्युपासनं स्यात् व्यस्तस्य समस्तस्य च, उत समस्तस्यैव वेति सन्देहे, व्यस्तस्यापि विहितत्वात् फलस्यापि कथनादुभयथेति प्राप्ते, समस्त-स्यैव न्याय्यम् । आन्त्यमेकवाक्यत्वात् । यथा 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जात' इत्यत्र । 'मूर्धा ते व्यपतिष्यन्मां नागमिष्य' इत्याद्यनर्थस्य व्यस्तोपासने दर्शितत्वाच्चेत्याहुः ।

रश्मिः ।

विगाढेति । बहुपाधिजन्यभाववान् । पूर्वोक्त इति । सर्वात्मभावविषयः । उक्तस्येति । ससम्बोध-मोक्षरूपस्य सर्वात्मभावस्य । प्रकृतश्रुतिः 'तस्य ह एवं पश्यत' इत्यादिः । भाष्ये । लोके एवमिति । इह लोके जीवन्मुक्तस्य सम्भवति । प्रकृते । सर्वोत्तमेत्यादीति । उपपत्तिरिति । युक्तमित्यस्य युक्तिरुपपत्तिस्तद्विषयमित्यर्थात् तद्विशेषणीभूतोपपत्तिः । सर्वात्मभावस्य भूमत्वेपि मुख्य-भक्तित्वमादाय पादार्थसङ्गतिर्धर्मत्वादिति बोध्यम् । वैश्वानरेति । 'प्राचीनशाल औपमन्यव' इत्यस्या-माख्यायिकायां व्यस्तस्य समस्तस्य वैश्वानरस्योपासनं श्रूयते । व्यस्तोपासनं तावत्, 'औपमन्यव कं त्वमात्मानमुपास्स' इत्यादि । 'दिवमेव भगवो राजन्निति होवाच, एष वैश्वतेजा आत्मा वैश्वानरोऽयं त्वमात्मानमुपास्स' इत्यादि । तथा समस्तोपासनमपि । 'तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलो बस्तिरेव रयिः पृथ्व्येव पादा'वित्यादि । एवं वैश्वानरविद्याम् । फलस्येति । 'तस्मात् तव सुतं प्रसुतमासुतं कुले दृश्यत' इति फलस्य । आन्त्य-मिति । अन्त्यं 'तस्य ह वा एतस्ये'ति समस्तोपासनवाक्यम्, तदभिव्याप्य आन्त्यं एकवाक्यत्वसमस्तस्य वाक्यत्वं तस्मात् । 'तस्य ह वा' इत्यत्र तच्छब्देन व्यस्तपरामर्शं कृत्वा एतस्येत्यनेनोक्तसमस्तस्याभेदोक्तेः । यथा वैश्वानरमिति । प्रथमस्य द्वादशाधिकरणे चतुर्थपादे । 'वैश्वानरं द्वादशकपालं निर्वपेत्, पुत्रे जाते यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाती'त्यादि इष्टिविधायके वाक्ये येयं द्वादशसङ्ख्या तस्यामष्टत्वादिसङ्ख्यानामन्तर्भाव उक्त इत्यान्त्यमेकं वाक्यम् । मां नागमिष्य इति । मां प्रति विशेषं

## नाना शब्दादिभेदात् ॥ ५८ ॥ (३-३-२०.)

पूर्वाधिकरणैः सर्वात्मभावस्वरूपादिनिर्णयं कृतवान्, अथ मत्स्यादिरूपाणां भगवदवतारत्वमविशिष्टमिति सर्वेषां समस्योपासना कार्या, उत पार्थक्येनेति विचारयति । अत्रोपास्याभेदेऽपि रूपभेदादेकत्रोपासकस्यान्यत्रानुपासनलक्षणाव-ज्ञासम्भवादस्या अप्यसिद्धिसम्भवादपि समस्यैव सा कार्येति प्राप्ते, सिद्धान्त-

भाष्यप्रकाशः ।

तथासाकं रोचते । पूर्वकाण्डे उदवसानीयाख्ये कर्मणि 'अप वै सोमेनेजानादेवताश्च यज्ञश्च क्रामन्ती'त्यादिना देवतायज्ञावरोधार्थं पूर्वं पञ्चकपालं विधाय, ततो 'गायत्रो वा अग्नि'रित्यादिना तद्दोषदर्शनेन दूषयित्वा 'अष्टाकपालमाग्नेयं पुरोडाशं पञ्चसञ्चाके याज्यानुवाक्ये चोपसंहारे विहिते' इति पूर्वविधानस्यानभिप्रेतत्वबुद्धेः शीघ्रमुदयेन न पूर्वप्रकारकरणशङ्कोदयः, तथात्रापि शङ्काया एव पराहत्यानुदयेन पूर्वपक्षानुदयादिति ॥ ५७ ॥ इत्येकोनविंशं भूमा इत्यधिकरणम् ॥ १९ ॥

नाना शब्दादिभेदात् ॥ ५८ ॥ सङ्गतिं बोधयन्तोऽधिकरणमवतारयन्ति पूर्वे-त्यादि । 'प्रदानव'दित्यादिभिः पूर्वाधिकरणैर्मुख्याधिकारिणामर्थे सर्वात्मभावस्वरूपस्य तदुत्क-र्षस्य तत्फलस्य तदधिकारिणां च निर्णयं कृतवान्, अथ तदनन्तरं पुराणोक्तानां मत्स्याद्युपा-सनानामपि नित्यानुमेयवेदमूलत्वादिदानीमपि केषाञ्चिद्वामनहयग्रीवाद्युपासकानां दर्शनात् ताद्-ज्ञानामर्थे उपासनान्तरनिर्णयस्यावश्यकत्वात्[1], मत्स्यादिरूपाणां भगवदवतारत्वमविशिष्टम्, यथा सुतेजःप्रभृतीनां वैश्वानरावयवत्वमिति तेषां सर्वेषां समस्य भगवतैकीकृत्योपासना कार्या, उत सुतेजःप्रभृतीनां व्यस्तोपासने दोषश्रवणवदत्र दोषस्याश्रवणाद्व्यस्ततया कार्येति शङ्कायां प्रस-ङ्गाद्विचारयतीत्यर्थः । पूर्वपक्षमाहुः अत्रेत्यादि । अस्या अप्यसिद्धिसम्भवादिति । रूपा-

रश्मिः ।

प्रष्टुं न आगमिष्य इत्यर्थः । दोषेति । 'अग्निर्गायत्रः, अष्टाक्षरा गायत्री, तत्सम्बन्धी, अतः पञ्चकपालत्वं दोषः । तद्दर्शनेन । आग्नेयं पुरोडाशमिति । अग्ने तस्येति शेषः । पञ्चसञ्चाक इति । पञ्चकपाले । 'उपसंहारस्तस्मिन् विहिते' इति 'उदवसानीयाख्ये कर्मणी'त्यनेन पूर्वेणान्वयः । कर्मणि विहित इति । सतिसप्तमी । इतिः समाप्तौ । तत्समानाधिकरणः पूर्वविधानस्य पञ्चकपालसम्बन्धिनोऽनभिप्रेतत्वबुद्धेः शीघ्रमुदयः तेनेत्यर्थः । अत्रापीति । अधिकरणेपि ॥ ५७ ॥ इत्येकोनविंशं भूमा इत्यधि-करणम् ॥ १९ ॥

नाना शब्दादिभेदात् ॥ ५८ ॥ सङ्गतिमिति । कृष्णावतारस्य 'समान एवं चाभेदा'-दित्यधिकरणे निरूपणात् मुख्याधिकारिणो वृताः, तेभ्यः सर्वात्मभावं ददातीति । सर्वात्मभावनिरूपणा-नन्तरं स्मृतावताराणां निरूपणं धर्मत्वात् । किं पुनर्ब्रह्माण्डान्तर्मायादूरीकरणे प्रकटे कृष्णेऽप्यवतार-व्यवहाराद्धर्मकत्वम् । इवार्थे कन् । अतो न पादार्थाव्याप्तिः । सर्वात्मभावस्वरूपस्य प्रदानवदेवाद्यधि-करणेषु, तदुत्कर्षस्य 'भूम्नः क्रतुव'दित्यधिकरणे, तत्फलस्य 'आत्मरतिरात्मक्रीड' इत्यादिभाष्येणात्रैवाधि-करणे तदधिकारिणां एतत्फलप्रेप्सूनामर्थात् प्राप्तानाम् । दोषेति । 'मूर्धा ते व्यपतिष्य'दित्याद्युक्तदोष-श्रवणवत् । अत्रेति । मत्स्यादिरूपाणां व्यस्तोपासने । प्रसङ्गादिति । स उक्तः । अत्रेत्यादीति । उपास्याभेदस्तु यथा रामो हास्यावतारः, वामनः कटिस्थावतारः, एवमलौकिकार्थत्वेनोपास्याभेदेपि ।

१. तद्व्यतिरिक्तानामर्थे उपासनान्तरनिर्णयस्यावश्यकत्वात् ।

माह। सर्वेष्ववतारेषु नानैवोपासना कार्या। तत्र हेतुः शब्दादिभेदादिति। तत्तत्स्वरूपवाचकशब्दानां मन्त्राणां चादिपदादाकारकर्मणां च भेदादित्यर्थः। एतेनैव मिथोविरुद्धानामाकारकर्मणामेकत्र भावनस्याशक्यत्वमयुक्तत्वं चेति भावः सूचितः ॥ ५८ ॥

इति तृतीयाध्याये तृतीयपादे विंशं नानाशब्दादिभेदादित्यधिकरणम् ॥ २० ॥

---

भाष्यप्रकाशः।

न्तरावज्ञारूपापराधकृतप्रतिबन्धेनासम्भवात्। तथाचात्र दोषाभवनेप्युक्तरीत्या दोषसम्भवान्न कार्येत्यर्थः। सिद्धान्तं बोधयितुं सूत्रं व्याकुर्वन्ति सर्वेष्वित्यादि। तर्ह्यवज्ञादोषस्य कथं निवृत्तिरित्यत आहुः एतेनेत्यादि। एतेनैवेति। उपासनभेदस्थापनेनैव। अयुक्तमिति। विरुद्धत्वादयुक्तम्। तथाच शक्यस्य युक्तस्याकरणे ह्यपराधः, न त्वशक्यस्यायुक्तस्याकरणे। अतोऽनुपासनस्य तत्रापराधाप्रसञ्जकत्वेन प्रतिबन्धाभावान्नासिद्धिरित्यर्थः। एतेन यत् पूर्वं 'न भेदादिति चे'दितिसूत्रेऽधिकगुणोपसंहारौचित्यमुक्तम्, तत्प्रकारोत्र दर्शितः। तत्तद्रूपप्राधान्येन ब्रह्मोपासकस्याधिका अपि गुणा अविरुद्धाः एवोपसंहार्याः, न त्वन्येपीति। तस्मात्तेषां व्यस्तोपासनमेव कर्तव्यमिति सिद्धम्।

अन्ये तु, अत्र यासु यासु विद्यासु श्रुतिनानात्वेऽप्यर्थैक्याद्वैक्यम्, यथा 'मनोमयः प्राणशरीरः', 'कं ब्रह्म', 'सत्यकामः सत्यसङ्कल्प' इत्यादौ। यथा च, 'प्राणो वा व संवर्गः', 'प्राणो वा व ज्येष्ठः श्रेष्ठः', 'प्राणो ह पिता प्राणो माते'त्यादौ च। तत्र श्रुतिनानात्वस्य गुणान्तरपरत्वात्, विद्याभेदेन विद्यैक्याच्च, स्वपरशाखोक्तं गुणजातं विद्याकात्स्र्न्यार्थमुपसंहार्यमिति पूर्वपक्षे, शब्दादिभेदाद्विद्याभेदं सिद्धान्तयन्ति। पूर्वतन्त्रे शब्दान्तरादीनां कर्मभेदकत्वेन सिद्धत्वात्, प्रकृते च 'वेद' 'उपासीत' 'क्रतुं कुर्वीते'त्यादिशब्दभेदात्। आदिपदेन यथासम्भवं गुणादीनामपि भेदस्य सङ्ग्रहाच्च। नच शब्दभेदेपि 'यजति' 'जुहोती'त्यादिवत् 'वेदोपासीते'त्यादावर्थभेदाभावान्न भेद इति वाच्यम्। तथाप्येकस्मिन्नेव वेद्ये प्रतिप्रकरणमितरेतरव्यावृत्तगुणोपदेशरूपानुबन्धभेदेन तस्यां तस्यां विद्यायां तादृक्तादृग्गुणविशिष्टस्यैवोपास्यतया विद्याभेदोपपत्तेः। एवं स्थितेपि 'सर्ववेदान्तप्रत्यये'त्यादि द्रष्टव्यमिति चाहुः।

रश्मिः।

सुबोधिन्यां संनिवेशोऽवताराणां स्पष्टः। उक्तरीत्येति। अव्यवहितपूर्वोक्तरीत्या। तत्प्रकार इति। व्यस्तोपासनायामपराधाभावजनकत्वमवतारेऽधिकगुणोपसंहारो दर्शितः। किञ्च, अविरुद्धेत्यादिः प्रकारः। तेषामिति। मत्स्यादीनाम्। आभरणादिरूपत्वे तत्तद्वाचकशब्दानां मन्त्राणां चादिपदादाकारकर्मणां च भेदादेवकारः। शब्दान्तरेति। आदिनाभ्याससंज्ञे। वेद इति। श्नमः सुः। वेदम्। गुणादीनामिति। वेदत्वादिगुणाः। आदिना संज्ञारूपे। वेदोपासीतेति। वेदशब्दादमोऽत्र। वेदमुपासीतेति। अर्थभेदेति। 'यज देवपूजासङ्गतिकरणदानेषु'। 'हु दानादनयोः'। अत्र दानरूपार्थभेदवत् 'वेदोपासनं कुर्वीत' 'क्रतुं कुर्वीते'त्यर्थभेदाभावात्। प्रतिकरणमिति। करणं करणं शब्दं शब्दम्। वीप्सायां प्रतिः। इतरेतरस्मिन् मनोमयादौ व्यावृत्ता ये गुणा मनोमयत्वादयः तेषामुपदेशरूपोऽनुबन्धः मुख्यानपायी तस्य भेदस्तेन। 'अनुबन्धः प्रकृत्यादेर्दोषोत्पादे विनश्वरे। मुख्यानपायिनि शिशौ प्रवृत्तस्यानवर्तन' इति विश्वः। स्थितेपीति। विद्याभेदे। सर्वेति। आविष्यकत्वाद्विशेषदर्शनेन

---

१. अयुक्तं प्रकाशे। २. रश्मौ प्रतिकरणम्।

विकल्पोऽविशिष्टफलत्वात् ॥ ५९ ॥ (३-३-२१.)

पार्थक्येनोपासनानि कर्तव्यानीति स्थिते विचार्यते । किमग्निहोत्रदर्शपूर्णमासादिवदेषां समुच्चयः, उत फलविकल्प इति । तत्र विधिफलयोः समानत्वात् समुच्चय इति प्राप्ते, निर्णयमाह । उपासनानां विकल्प एव । तत्र हेतुः । अविशिष्टफलत्वात् । मुक्तिफलकत्वं हि सर्वेषामुपासनानामविशिष्टम् । एवं सत्येकेनैव तत्सिद्धावपरस्याप्रयोजकत्वादग्निहोत्रादिवन्नित्यताबोधकश्रुत्यभावात्तदर्थिनो विकल्प एव ॥ ५९ ॥

इति तृतीयाध्याये तृतीयपादे एकविंशं विकल्पाधिकरणम् ॥ २१ ॥

---

भाष्यप्रकाशः ।

तदसङ्गतम् । सर्ववेदान्तप्रत्ययसूत्रोक्तचोदनाद्यविशेषरूपहेत्वभावादेवोक्तस्थलेषु विद्याभेदस्य सिद्धत्वेनैतत्सूत्रारम्भवैयर्थ्यप्रसङ्गात् । नचोपसंहारनिवृत्त्यर्थत्वान्नानर्थक्यमित्यपि युक्तम् । ऐक्यहेत्वभावादेव सिद्धे विद्याभेदे उपसंहारप्राप्तेरेवाभावात् विद्यासूचकनानापदविरोधाच्चेति ॥ ५८ ॥ इति विंशं नानाशब्दादिभेदाद्वित्यधिकरणम् ॥ २० ॥

विकल्पोऽविशिष्टफलत्वात् ॥ ५९ ॥ अधिकरणमवतारयन्ति पार्थक्येनेत्यादि । विचार्यत इति । उपोद्घातसङ्गत्या विचार्यते । संशयमाहुः किमित्यादि । तथाच विधिसामान्यात् क्रमेण कार्याणीत्येवं समुच्चयः, उत फलतौल्याद्विकल्प इत्यर्थः । पूर्वपक्षमाहुः तत्रेत्यादि । विधिः फलं च सर्वत्र तुल्यम् । यथाग्निहोत्रादीनाम् । तथा सति यदेव न क्रियते, तत्फलाभावेन न्यूनतापत्तेर्विकल्पस्य प्राप्तप्रामाण्यपरित्यागादिदोषवत्तया तदादरे तत्संसर्गाच्च समुच्चय एव ज्यायानित्यर्थः । सिद्धान्तमाहुः उपासनानामित्यादि । तथाचाग्निहोत्रादितौल्यस्याभावाच्चित्रोद्भिदादितौल्यस्य सत्त्वाद्विकल्पस्यादुष्टत्वेन स्वर्गादिवद्विश्वमायानिवृत्तिरूपायां तत्तदवतारसायुज्यरूपायां

रश्मिः ।

द्र(द्व)व्यम् । सर्ववेदान्तेति । चोदनाविशेषदर्शनात् तथा । नानेति । उपसंहारे वेद्यैक्येन विद्यैक्ये तथा । अत्र चकारेण हेत्वन्तरं सूचितम् । स हेतुः । उपसंहारोऽर्थाभेदादिति । यथा कथञ्चित् समस्तोपासना ॥ ५८ ॥ इति विंशं नानाशब्दादिभेदाद्वित्यधिकरणम् ॥ २० ॥

विकल्पोऽविशिष्टफलत्वात् ॥५९॥ उपोद्घातेति । प्रकृतं पार्थक्येनोपासनं तत्सिद्ध्यर्था फलविकल्पचिन्ता उपोद्घातः स सङ्गतिः तया । किमित्यादीति । अग्निहोत्रेति । अग्निहोत्रादिमतो दर्शपूर्णमासाधिकारात् समुच्चयः । विधीति । पञ्चमस्कन्धे 'ॐ नमो भगवते मुख्यतमाय नमः सत्त्वाय प्राणायौजसे सहसे बलाय महामत्स्याय नम' इतीत्यत्र 'अस्त्वि'ति विधेः कूर्माद्यवतारभक्तिविधिभ्यः सामान्यात् । क्रमेणेति । 'मत्स्यकूर्मवराहे'त्यादि पाठक्रमेण । फलतौल्यादिति । सामान्यतो विश्वजिन्न्यायेन मुक्तिः फलं तस्य तौल्यात् । सर्वत्रेति । मत्स्याद्यवतारभक्तिषु । यथाग्नीति । 'अग्निहोत्रं जुहुयात्' 'दर्शपूर्णमासाभ्यां यजेते'त्यादयो विधयः । प्रत्यवायपरिहारः फलम् । प्राप्तप्रामाण्येति । 'विकल्पोऽष्टदोषदुष्ट' इति पूर्वतन्त्रे परिसंख्याविधावस्ति । तदादर इति । विकल्पादरेऽष्टदोषसंसर्गाच्चेत्यर्थः । समुच्चय इति । पाठक्रमेण समुच्चयः । चित्रोद्भिदादीति । पूर्वतन्त्रप्रसिद्धम् । 'उद्भिदा यजेत पशुकामः' अन्यत्र 'चित्रया यजेत पशुकाम' इति प्रथमस्य चतुर्थपादे । स्वर्गादिवदिति । आदिना वृष्टिः ।

**काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ६० ॥ (३-३-२२.)**

येषु तूपासनेषु भिन्नानि भिन्नानि फलान्युच्यन्ते, तत्र त्वनेकफलार्थिनस्तत्तत्फलकोपासनानि समुच्चीयेरन्, अविशिष्टफलत्वाभावात् । यत्र त्वेकस्यैवोपासनस्य स्वकामितानेकफलत्वं श्रूयते, तत्र तथैव चेदुपासनं करोति, तदा न समुच्चीयेरन्नपि । स्वकामितेष्वेकतरस्य तदन्यफलवैशिष्ट्येनाविशिष्टफलत्वाभावादिति पूर्वहेत्वभावादितिश्लिष्टप्रयोगाभिप्रायेणोक्तमिति ज्ञेयम् ।

अथवा । कामैक्ये नियतफलकानि तानि न समुच्चीयेरन् । अत्र हेतुः स्पष्टः ॥ ६० ॥

इति तृतीयाध्याये तृतीयपादे द्वाविंशं काम्याधिकरणम् ॥ २२ ॥

भाष्यप्रकाशः ।

च मुक्तौ विशेषाभावेन च फलस्याविशिष्टत्वात् समुच्चये अप्रयोजकत्वदोषापत्तेश्च विकल्प एव ज्यायानित्यर्थः । एतेनैव ब्रह्मप्राप्तिफलानां सद्विद्यादहरविद्योपकोसलविद्याशाण्डिल्यविद्याऽक्षरविद्यादीनां एकफलानां प्राणादिविद्यानां च विकल्पोऽवगन्तव्य इत्यपि बोधितम् । अत्र सर्वेऽप्येवमेवाहुः ॥ ५९ ॥ इत्येकविंशं विकल्पाधिकरणम् ॥ २१ ॥

काम्यास्तु यथाकामं समुच्चीयरेन् न वा पूर्वहेत्वभावात् ॥ ६० ॥ 'अविशिष्टफलत्वा'दित्यस्य विकल्पहेतोः प्रत्युदाहरणमिदम् । एवं मुक्तिफलिका उपासना विचार्य, काम्यासु पक्षद्वयस्य सम्भवात् ताः पृथक् विचारयतीत्याशयेन सूत्रं पठित्वा व्याकुर्वन्तस्तत्र तत्तत्फलानां काम्यत्वादुपासनानां समुच्चयपक्षं व्याकुर्वन्ति येष्वित्यादि । येषु, 'स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य कामचारो भवति', 'सर्वं वै तेऽन्नमाप्नुवन्ति येऽन्नं ब्रह्मोपासत' इत्यादिषु तत्रेत्यर्थः । एवं समुच्चयपक्षं व्याख्याय 'न वा' इति पदाभ्यामुक्तमसमुच्चयपक्षं व्याकुर्वन्ति यत्र त्वित्यादि । श्रूयते इति । यथा भार्गव्यां विद्यायां 'य एवं वेद प्रतितिष्ठति, अन्नवानन्नादो भवति महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन महान् कीर्त्ये'ति श्रूयते । तत्र तथैव चेत् । तदुक्तस्वकामितसकलफलसाधकतया चेत्तदुपासनं करोति, तदा तत्फलकान्यन्यानि 'तत्प्रतिष्ठेत्युपासीत' 'तन्मह इत्युपासीते'त्यादीनि तत्तद्गुणकान्युपासनानि न समुच्चीयेरन्नपि । अत्रापि हेतुः पूर्वहेत्वभावादिति । तं विवृण्वन्ति स्वकामितेष्वित्यादि । स्वकामितफलेष्वेकतरस्य फलस्य तदन्यफलवैशिष्ट्येन अविशिष्टफलत्वाभावादिति । तथाच समुच्चये अविशिष्टफलत्वाभा-

रश्मिः ।

नित्यानां प्रत्यवायपरिहारः, ज्योतिष्टोमस्य स्वर्गः । कारीर्या वृष्टिः । तद्वदुपासनानां न, किन्तु मुक्तिफलकत्वं अविशिष्टत्वं सर्वासूपासनासु तस्मात् । अप्रयोजकत्वमपरोपासनायाः, अतोऽप्रयोजकत्वदोषापत्तेः ॥ ५९ ॥

काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ६० ॥ विकल्पहेतोरिति । पूर्वसूत्रोक्तस्य । प्रत्युदेति । नित्येषु कर्मसु विकल्प उक्तः । काम्येषु समुच्चय उच्यते । तत्र विधिफलयोः समानत्वहेतुः, अपरस्याप्रयोजकत्वदोषापादकत्वान्नाद्यतः । तत्राविशिष्टमुक्तिमात्रफलत्वात् । अत्र काम्येषु तु विशिष्टस्य मुक्तिमात्रस्य फलस्याभावरूपात् पूर्वहेत्वभावरूपहेतोः प्रतिकूलमुदाहरणम् । विधिफलयोः समानत्वेऽपरस्याप्रयोजकत्वम्, विधिफलयोरसमानत्वेऽपरस्य प्रयोजकत्वम्, परन्तु कामनानियतमिति । तत्रेति । काम्येषु । समुच्चयेति । यथा सेवायां न पुत्रेण नापि पशुना कार्यम्, किन्तु समुच्चितेन पुत्रादिना, अतः समुच्चयपक्षम् । स य इति । सः यः इतिच्छेदः । इत्यादीति ।

१. फलकत्वम् । २. ब्रह्मप्राप्तिफलानाम् ।

## अङ्गेषु यथाश्रयभावः ॥ ६१ ॥ (३-३-२३.)

प्रधानेषु निर्णयमुक्त्वाङ्गेषु तमाह । एकार्थसाधकानामुपासनानां भेदेनाङ्गभेदेऽप्येकतरोपासने फलैक्यादङ्गानि तत्र समुच्चीयेरन्न वेति संशये, निर्णयमाह । उपासनाङ्गानां तदेवाश्रयः, तथाच यदङ्गं यदुपासनाश्रितम्, तत्रैवास्य भाव इत्यर्थः ॥६१॥

भाष्यप्रकाशः ।

योऽनेकफलत्वात्, समुच्चयाभावे त्वविशिष्टफलत्वाभावस्तत्फलस्यान्यफलविशिष्टत्वादिति भेदेपि 'पूर्वहेत्वभावा'दिति यत्सूत्र उक्तम्, तथेत्यर्थः । अत्र व्याख्यानक्लेशात् पक्षान्तरमाहुः अथवेत्यादि । कामैक्ये इति । एकमात्रविषयत्वेन तदैक्ये । अत्र हेतुः स्पष्ट इति । अस्मिन् पक्षे तेषां फलभेदेन विशिष्टफलतया अविशिष्टफलत्वाभावरूपः पूर्वहेत्वभावः स्फुट इत्यर्थः ।

अत्रापि मध्वाचार्यभिक्षुव्यतिरिक्तानां सर्वेषामैकमत्यम् । अस्माकं त्वेतावान् विशेषः । अत्र सूत्रे काम्यपदादुद्गीथाद्युपासना अपि संग्रहीतुं शक्यन्ते । तास्वपि 'यदेव विद्यया करोती'त्यादिभिः फलश्रवणात् । कामपदाभावेपि रात्रिसत्रन्यायेन काम्यत्वस्य शक्यत्वादिति ॥ ६० ॥ इति द्वाविंशं काम्याधिकरणम् ॥ २२ ॥

अङ्गेषु यथाश्रयभावः ॥ ६१ ॥ कर्माङ्गत्वेपि स्वव्यापारेण फलसाधने उपासनान्तरानपेक्षत्वात् प्रधानानामुद्गीथाद्युपासनानामपि काम्यत्वेन यथाकामं समुच्चयविकल्पयोः पूर्वसूत्रेणैव सिद्धत्वादत्र विषयान्तरं बोधयन्तोऽधिकरणमवतारयन्ति प्रधानेत्यादि । अन्यानपेक्षतया स्वव्यापारद्वारा फलजनकानि प्रधानानि, तेषु समुच्चयादिनिर्णयमुक्त्वा, अन्यापेक्षतया तथा फलजनकेष्वङ्गेषु निर्णयमाहेत्यर्थः । ननु किं प्रयोजनं येन पृथगारम्भ इत्यत आहुः एकार्थेत्यादि । एकोऽर्थः एकं फलम्, तत्साधकानामनेकेषामुपासनानां रूपादिभेदेन भेदेपि तेषां मध्य एकतरोपासनेऽन्येषामस्य च फलैक्यात् तत्फलार्थं यान्यङ्गानि तत्र तत्रोक्तानि, तान्येकस्मिन्

रश्मिः ।

अन्यत्र द्रष्टव्यानि । तथेत्यर्थ इति । भिन्नानि भिन्नानि फलान्युच्यन्त इत्यर्थः । भाष्ये । अविशिष्टेति । सूत्रे पूर्वहेत्वभावादित्युक्तम्, अत एवेति चोक्तम् । 'अत एव प्राण' इत्यतिदेशाधिकरणवत् । अतोऽस्य प्रयोगस्याभिप्रायवर्णनं क्लिष्टप्रयोगत्वात् करिष्यन्ति । प्रकृते । असमुच्चयेति । 'न वा समुच्चीयेर'न्निति योजनासिद्धं पक्षम् । तदुक्तेति । यथा 'अकामः सर्वकामो वा मोक्षकाम उदारधीः । तीव्रेण भक्तियोगेन यजेत पुरुषं पर'मित्यत्र तीव्रभक्तियोगः । तत्र नान्यकर्मसमुच्चयः । तत्तथेति । क्लिष्टप्रयोगाभिप्रायेणोक्तमित्यर्थः ॥ ६० ॥ इत्येकविंशं विकल्पाधिकरणम् ॥२१॥

अङ्गेषु यथाश्रयभावः ॥ ६१ ॥ उपासनेति । अवयव्यतिरिक्तोपासनान्तरानपेक्षत्वात् अवयविनश्चावयवमात्रत्वादवयव्यनङ्गीकारेण । काम्यत्वेनेति । 'आपयिता ह वै कामानां भवति, य एतदेवं विद्वानक्षरमुद्गीथमुपास्त' इति श्रुतेस्तथा । फलसम्बन्धित्वं प्रधानत्वमङ्गेष्वपीति प्रधानलक्षणान्तरमाहुः अन्यानपेक्षेति । एकतरेति । महाभाष्यप्रयोगाद्बहूनां निर्धारणे डतरच् ।

१. तस्य । २. श्रीपुरुषोत्तमैर्भाष्यप्रकाशस्यान्तिमशोधे 'काम्यास्तु' इति सूत्रं पृथगधिकरणत्वेन निर्दिष्टम् । अतस्तदनुसारेण 'काम्यास्तु' इत्यादि द्वाविंशमधिकरणं भवति । श्रीकृष्णचन्द्रैः श्रीगोपेश्वरैश्च 'काम्यास्तु' इति पृथगधिकरणत्वेन न निर्दिष्टम् । तैश्च तस्यैकविंशे विकल्पाधिकरणेऽन्तर्भावः कृतः । श्रीपुरुषोत्तमैरपि पूर्वमेवमेव निर्दिष्टम् । वेदान्ताधिकरणमालायां त्वस्मिन् पादे पञ्चविंशत्यधिकरणानि, भावप्रकाशिकावृत्तौ चतुर्विंशत्यधिकरणानि । अतः प्रकाशे पञ्चविंशत्यधिकरणानि, रश्मौ च चतुर्विंशतिरित्यस्याभिप्रायेण योजितमिति ।

अत्र हेतुमाह ।

शिष्टेश्च ॥ ६२ ॥

तत्तदुपासनं तत्तदङ्गविशिष्टमेव वेदे शिष्यत इति तथेत्यर्थः । चकाराद्व्यतिरिक्तकरणे प्रायश्चित्तोक्तिरपि बाधिकेति सूच्यते ॥ ६२ ॥

इति तृतीयाध्याये तृतीयपादे त्रयोर्विंशमङ्गेषु यथाश्रयभावाधिकरणम् ॥ २३ ॥

भाष्यप्रकाशः

त्तुपासने समुच्चीयेरन्नवेति संशये, उपसंहारसूत्रेऽर्थाभेदपदस्य फलाभेदवाचकत्वे फलैक्यात् समुच्चयप्राप्तौ, वक्ष्यमाणहेतुभ्यां निर्णयमाहेत्यर्थः । सूत्रं व्याकुर्वन्ति उपासनाङ्गानामित्यादि । तद्वेति । उपासनमेव । तथाच आश्रयमनतिक्रम्य यथाश्रयम्, भावः सत्ता, यथाश्रयं भावो यथाश्रयभाव इति सूत्रयोजना । उदाहरणं तु छान्दोग्ये 'मनो हिङ्कारो वाक्प्रस्ताव' इत्यादिभिर्दशभिर्वाक्यैर्गायत्र-रथन्तर-वामदेव्य-बृहत्-वैरूप-वैराज-शक्वर्य-रैवत्य-यज्ञायज्ञीय राजननामग्रहणपूर्वकं विहितानि दश सामोपासनानि, तेषु ह्येकमेकमसाधारणं फलमुक्त्वा, तदुत्तरं 'सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्ये'ति सर्वोपासनेषु साधारणं फलमुक्त्वा, क्रमेण 'महामनाः स्यात् तद्व्रतम्, न प्रत्यङ्ङग्निमाचामेन्न ष्ठीवेत् तद्व्रतम्,' एवं 'न काञ्चन परिहरेत्', 'न तपन्तं निन्देत्, न वर्षन्तं निन्देत्', 'नर्तून्निन्देत्', 'न पशून्निन्देत्', 'संवत्सरमज्ज्ञो नाश्नीयात्', 'ब्राह्मणान्न निन्देत्' इति तत्तदुपासनाङ्गभूतानि व्रतान्युक्तानि । तथाच तस्य व्रतस्य तत्तदुपासन एव सम्बन्धः, नान्यत्रेति बोध्यम् । एवञ्जातीयमन्यदपि । न्यायस्य साधारणत्वात् । यथा भार्गव्या आनन्दविद्यया अङ्गभूतेषु त्रिष्वन्नप्रतिष्ठितत्वोपासनेषु प्रतिष्ठादीनां फलानामैक्यं तत्तदुपासनाङ्गभूतानां 'अन्नं न निन्द्यात् तद्व्रतम्, अन्नं न परिचक्षीत तद्व्रतम्, अन्नं बहु कुर्वीत तद्व्रत'मिति तत्तद्व्रतानां भेद इति ॥ ६१ ॥

शिष्टेश्च ॥ ६२ ॥ अत्र भाष्यं स्फुटम् ॥ ६२ ॥ इति त्रयोर्विंशमङ्गेषु यथाश्रयभावाधिकरणम् ॥ २३ ॥

रश्मिः ।

वक्ष्यमाणेति । शिष्टिप्रायश्चित्तोक्तिभ्याम् । उपासनमिति । अव्ययवि । यथाश्रयमित्यव्ययीभावः । ततः कर्मधारयः । भाष्ये । तत्रैवास्येति । उपासनेऽस्याङ्गस्य भावः सत्तेत्यर्थः । प्रकृते । सर्वमायुरिति । शतवर्षं आयुः । ज्योक् । टीकायां स्पष्टम् । अग्रेपि । आनन्देति । आनन्दब्रह्मज्ञानानन्तरं 'सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिते'त्यानन्दविद्या तस्याः । अङ्गेति । अङ्गभूतत्वं प्रतिष्ठावत्त्वानन्नादत्वादीनामानन्दविद्याफलानां 'पुनरन्नं न निन्द्यात्, तद्व्रत'मित्युपक्रम्योक्तेः साङ्गविद्यायाः पूर्वोक्तफलवत्त्वात् । 'एवमन्नं न परिचक्षीत तद्व्रत'मित्यत्र, 'अन्नं बहु कुर्वीत तद्व्रत'मित्यत्र चेत्येवमङ्गभूतेषु त्रिषु । अन्नेति । 'अन्नं न निन्द्यात् तद्व्रत'मित्यत्र 'स य एतदन्नमन्ने प्रतिष्ठितं वेदे'त्युक्तम् । तथा 'अन्नं न परिचक्षीत तद्व्रत'मित्यत्र 'स य एतदन्नमन्ने प्रतिष्ठितं वेदे'त्युक्तम् । तथैव 'अन्नं बहु कुर्वीत तद्व्रत'मित्यत्र 'स य एतदन्नमन्ने प्रतिष्ठितं वेदे'त्युक्तमित्यन्नप्रतिष्ठितत्वोपासनानि तेषु । तत्तदुपासनेति । अन्नप्रतिष्ठितत्वोपासनाङ्गभूतानाम् ॥ ६१ ॥

शिष्टेश्च ॥ ६२ ॥ उदाहरणं द्रष्टव्यम् । प्रायश्चित्तेति । यथा 'आश्विनं धूम्रललाममालभेत, यो दुर्ब्राह्मणः सोमं पिपासे'दिति । अत्र सर्वे षट्सूत्रमधिकरणमङ्गीकुर्वन्ति, तदग्रे स्पष्टीभविष्यति ॥ ६२ ॥ इतिद्वाविंशं यथाश्रयभावाधिकरणम् ॥ २२ ॥

**समाहारात् ॥ ६३ ॥ (३-३-२४.)**

कर्ममार्गीयोपासने निर्णयमुक्त्वा ज्ञानमार्गीयोपासने तमाह । अथर्वोपनिषत्सु नृसिंहोपासनादिषु मत्स्यकूर्मादिरूपत्वेनापि स्तुतिः श्रूयते । श्रीभागवते च, 'नमस्ते रघुवर्याये'त्यादिरूपा स्तुतिर्व्रजनाथे । एवं सति रूपभेदेपि भगवदवतारस्याविशिष्टत्वादेकस्मिन् रूपे रूपान्तरसमाहारो दृश्यत इति सर्वरूपत्वेनैकत्रोपासनमपि साध्वित्यर्थः ॥ ६३ ॥

**गुणसाधारण्यश्रुतेश्च ॥ ६४ ॥**

ऐश्वर्यवीर्यादिगुणानां सर्वेष्ववतारेषु साधारण्यं श्रूयते । तेन धर्मिधर्माणामैक्यात् पूर्वोक्तं साध्वित्यर्थः ॥ ६४ ॥

इति तृतीयाध्याये तृतीयपादे चतुर्विंशं समाहाराधिकरणम् ॥ २४ ॥

भाष्यप्रकाशः ।

**समाहारात् ॥ ६३ ॥** सूत्रप्रयोजनमाहुः कर्ममार्गीयेत्यादि । कर्माङ्गतया कर्ममार्गीयेषु सामाद्युपासनेषु अङ्गनिर्णयमुक्त्वा, ज्ञानाङ्गतया ज्ञानमार्गीयेषु तेष्वङ्गनिर्णयमाहेत्यर्थः । सूत्रं व्याकुर्वन्तो विषयमाहुः अथर्वेत्यादि । अत्र मत्स्यकूर्मादिपदात् पूर्वं ब्रह्मविष्ण्वादीतिपदस्य त्रुटिर्बोध्या । तथाच नृसिंहोपासनायां 'यो वै नृसिंहो देवो भगवान् यश्च ब्रह्मा तस्मै वै नमो नम' इति, श्रीरामोपासनायां च 'यो वै रामचन्द्रः स भगवान् ये च मत्स्यकूर्माद्यवतारास्तस्मै वै नमो नम' इत्येवं विभागेन स्तुतिः श्रूयत इत्यर्थः । द्वितीयं पौराणोदाहरणम् । एवं विषय उक्तः । तत्र तत्सर्वरूपत्वेनोपासना कार्या, उत तेषां रूपाणां विरुद्धधर्मवत्त्वात् तथा न कार्येति संशये, शब्दादिभेदेन नानोपासनस्य पूर्वमुक्तत्वात् सर्वरूपत्वेनोपासने च तद्विरोधाच्च कार्येति प्राप्तम् । तत्र सिद्धान्तं वक्तुं सूत्रं व्याकुर्वन्ति एवं सतीत्यादि । अत्र 'अङ्गेषु यथाश्रयभाव' इत्यनुवर्तते । समाहार इति । एकीभावः । तथाच ज्ञानमार्गीयोपासनाङ्गेष्वपि यथाश्रयभावे सति, 'रूपभेदेपी'त्यादिनोक्तरीत्या समाहारदर्शनात् तथेत्यर्थः । एतदेवाभिप्रेत्य 'भेदान्नेति चे'दिति सूत्रे 'उपासनाविषयेष्वि'त्यादिनावतारेष्वपि सर्वगुणोपसंहारौचित्यमुक्तम् ॥ ६३ ॥

अत्र हेत्वन्तरं सूत्रान्तरेणाह ।

**गुणसाधारण्यश्रुतेश्च ॥ ६४ ॥** अत्र चकारोऽधिकरणपूर्णत्वद्योतकः । शेषं प्रकटार्थम् । तथाच भगवत्त्वप्राधान्योपासने एवं सर्वरूपत्वेनोपासनं कार्यम्, तत्तद्रूपप्राधान्येनोपासने तथा न कार्यमिति विभागाच्च कोपि विरोध इत्यर्थः ॥६४॥ इति चतुर्विंशं समाहाराधिकरणम् ॥२४॥

रश्मिः ।

**समाहारात् ॥ ६३ ॥** पूर्वकाण्डव्यवच्छेदेन वेदान्तपरिच्छिन्नकर्ममार्गीयोपासन इत्यर्थं मत्वाहुः कर्माङ्गतयेति । 'यदेव विद्यये'ति श्रुतिविषयेषु सामोपनिषदुक्तोपासनेषु पूर्वाधिकरणे निर्णयमुक्त्वा, आदिना यजुः 'तमेतं वेदानुवचनेने'ति श्रुत्याहुः ज्ञानाङ्गतयेति । मत्स्यकूर्मश्रुत्यभावं नृसिंहोपासनेऽदृष्ट्वाहुः अत्र मत्स्येति । तथाचेति । त्रुटौ पूरितत्वे च । आदिना रामोपासनेत्याशयेनाहुः श्रीरामेति । नृसिंहोपासना आदिर्यासां रामोपासनादीनां ता नृसिंहोपासनादयः तासु । अत्रातद्गुणसंविज्ञाने नृसिंहोपासनानन्वयः श्रूयत इत्यनेनेत्याशयः । अनन्वयापेक्षायां तु न त्रुटेः प्रयोजनम् । यथाश्रयभाव इति । यथाश्रयभावो व्याकृतः । तथेत्यर्थ इति । सर्वरूपत्वेनैकत्रोपासनमपि साध्वित्यर्थः ॥ ६३ ॥

**गुणसाधारण्यश्रुतेश्च ॥६४॥** तत्तद्रूपेति । मत्स्यत्वादिरूपप्राधान्ये तु । मत्स्य इति प्रतीतिः, न तु मत्स्यो भगवानिति प्रतीतिरिति भावः ॥६४॥ इति त्रयोविंशं समाहाराधिकरणम् ॥२३॥

१. अवतारत्वस्य ।

न वा तत्सहभावाश्रुतेः ॥ ६५ ॥ (३-३-२५.)

नन्वेवमुपासनं नित्यम्, उत वैकल्पिकमिति संशये, उक्तरीत्या नित्यत्वे प्राप्ते, तन्निषेधमाह नेति । किन्तु वा, विकल्प एवैवमुपासन ऐच्छिकः, तत्र हेतुमाह सहभावाश्रुतेरिति । नियमतस्तेषां रूपाणां सहभावश्रवणं चेत् स्यात्, तदा स्यात्तथोपासनस्य नित्यता, न त्वेवम्, अतो विकल्प एवेत्यर्थः ॥ ६५ ॥

दर्शनाच्च ॥ ६६ ॥

योपि रूपान्तरसमाहारपूर्वकमुपास्ते, सोप्येकं रूपमुपास्यत्वेन मत्वा तत्तथोपास्त इति फलं तस्यैकस्यैव रूपस्य दर्शनं भवति, न तु सर्वेषाम्, इतोपि हेतोर्विकल्प एवेत्यर्थः । एतद्दृष्टान्तेन यस्मिन् रूपे यादृग्धर्मवत्त्वं श्रूयते, तादृग्धर्मविशिष्टमेवैकं रूपमुपास्यमिति व्यासहृदयमिति ज्ञायते । उपासनानिर्णयान्ते दर्शनात्मकहेतूक्त्या सर्वोपासनानां भगवत्साक्षात्कारः फलमिति ध्वन्यते । माहात्म्यज्ञापनार्थं परं सर्वावताररूपत्वं यथार्थमेव कैश्चिज्ज्ञाप्यते । यथार्थत्वात्त-

भाष्यप्रकाशः ।

न वा तत्सहभावाश्रुतेः ॥६५॥ अधिकरणमवतारयन्ति नन्वित्यादि । सर्वरूपत्वेनैकावतारोपासनं नित्यं अग्निहोत्रदर्शपूर्णमासादिवत् क्रमेण समुच्चेतव्यम्, उतैकमेव यावज्जीवं कर्तव्यमित्येवं वैकल्पिकमिति संशये, उक्तरीत्या सर्वेषां सर्वरूपत्वेनैश्वर्यादिगुणसाधारण्येन च क्रमिकसमुच्चये प्राप्ते, तस्य समुच्चयस्य निषेधमाहेत्यर्थः । व्याकुर्वन्ति नेतीत्यादि । चेत्स्यादिति । 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते'त्यादिवच्चेत् स्यात् । शेषं स्फुटम् । एतमेव विकल्पमभिसन्धाय स्वाध्यायसूत्रे सदृष्टान्तव्याख्यानोत्तरं 'प्रकृतेपी'त्यादिना तत्तद्रूपे तत्तदसाधारणधर्मोपसंहारो व्यवस्थापितः ॥६५

दर्शनाच्च ॥ ६६ ॥ पूर्वसूत्रात्तत्पदमत्राऽनुवर्तत इत्याशयेन सूत्रं व्याकुर्वन्ति योपीत्यादि । तत्तथोपास्त इति । तत् एकमवताररूपं सर्वरूपवत्तयोपास्ते । एतद्दृष्टान्तेनेति । दर्शनदृष्टान्तेन । एतेन पूर्वाधिकरणोक्तपक्षस्य गौणता सूचिता । तथा दर्शनाभावादिति । सर्वनिरूपणान्ते एवं कथनस्य तात्पर्यमाहुः उपासनेत्यादि । ननु यद्येकस्यैव रूपस्य दर्शनम्, तदा सर्वरूपोपसंहारबोधनस्य किं प्रयोजनम्, अत आहुः माहात्म्येत्यादि । कैश्चिदिति । स्मृतिपुराणादिवाक्यैः । तदपीति । सर्वरूपोपसंहरणम् । तथाचैकरूपदर्शनेपि सर्वरूपोपसंहारोऽप्येकदेशिनां न दुष्ट इति भावः ।

अन्ये तु इदं षट्सूत्रमेवाधिकरणमङ्गीकृत्य, कर्माङ्गभूतेषूद्गीथादिषु य आश्रिता वेदत्रयविहिताः प्रत्ययास्ते समुच्चीयेरन्, उत यथाकामं स्युरिति संशये, प्रत्ययाश्रयभूताः स्तोत्रादयो

रश्मिः ।

न वा तत्सहभावाश्रुतेः ॥ ६५ ॥ स्पष्टम् ॥ ६५ ॥

दर्शनाच्च ॥ ६६ ॥ सर्वरूपवत्तयेति । रामस्य हासरूपत्वं वामनस्य कटिभूषणरूपत्वमित्येवमादिप्रकारेण । भाष्ये । न तु सर्वेषामिति । रामादीनां हासादिरूपत्वादिति भावः । उपासनेत्यादीति । भगवदिति । चित्तशुद्धिद्वारेति ज्ञेयम् । माहात्म्येति । महात्मनो व्यापकस्य भावो मत्स्यादिः 'अरूपव'त्सूत्रसिद्धमाहात्म्यं तस्य ज्ञापनार्थम् कर्माङ्गेति । 'इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या । दृढत्वमेतद्विषयः प्रबोधः प्रयाति वेदान्तनिषेवणेने'ति पूर्वमीमांसाकारिका । प्रत्यया ज्ञानानि अङ्गविषया बोध्याः । प्रत्ययेति । प्रत्ययाश्रयाः ज्ञानविषयाः स्तोत्रादयः ।

दृप्यविरोधीति ज्ञेयम् ॥ ६६ ॥

इति तृतीयाध्याये तृतीयपादे पञ्चविंशं न वा तत्सहभावाश्रुतेरित्यधिकरणम् २५

## इति श्रीवेदव्यासमतवर्तिश्रीमद्वल्लभाचार्यविरचिते श्रीमद्ब्रह्मसूत्राणुभाष्ये तृतीयाध्यायस्य तृतीयः पादः समाप्तः ॥ ३ ॥ ३ ॥

भाष्यप्रकाशः ।

यथा समुच्चीयन्ते, एवं तदाश्रिताः प्रत्यया अपि । तत्रानुशिष्टत्वादिभ्यो हेतुभ्यः समुच्चीयेरन्निति पूर्वपक्षे, सहभावाश्रवणादिहेतुभ्यां यथाकामं स्युरिति सिद्धान्तयन्ति ।

तदस्माकं रोचते । यथाकामसूत्रोक्तहेतुनैव तादृशनिर्णयसम्भवेनैतद्वैयर्थ्यात् । गुणसाधारण्यसूत्रे पूर्वपक्षसमाप्त्या शिष्टिसूत्रस्थचकारवैयर्थ्यापत्तेश्चेति । तस्मात् पूर्वोक्तमेव युक्तमिति दिक् ।

अत्रायं संग्रहः । 'सर्वे वेदा यत्पदमामनन्ती'ति श्रुतेः सर्वस्य वेदस्य ब्रह्मविद्यात्वम्, 'इतिहासपुराणं च वेदानां पञ्चमं वेद'मितिश्रुतेर्वेदपदेन तयोरपि सङ्ग्रहात्तयोरपि तथात्वम् । 'द्वे विद्ये वेदितव्ये' इत्याद्याथर्वणश्रुतेर्ऋग्वेदादिरूपा अपरा, अक्षराधिगमिका परेति फलतो विभागः । परास्वपि 'ब्रह्मविदाप्नोति परम्', 'अक्षरात् परतः पर' इति श्रुतेः पुरुषोत्तमस्य तत आधिक्ये तद्विद्यानां विषयफलयोर्बलादक्षरविद्यातोऽप्याधिक्यम् । परास्वपरासु च तत्तद्वेदोक्तासु सर्ववेदान्तप्रत्ययसूत्रोक्तहेतुना फलसंयोगरूपचोदनानामविशिष्टत्वे विद्यैक्यनिर्णयः । तन्मध्ये अन्यतरस्याभावे तु विद्याभेदः । गुणोपसंहारस्तु प्रायशो रूपैक्यात् प्रयोजनैक्याद्वा, क्वचित्त्वर्थवादतौल्यादपि । स च स्वाध्यायसूत्रोक्तैर्निरूपणप्रकारभेदाधिकारिभेदसम्बन्धिभेदैः 'योऽन्यथा सन्त'मिति वाक्योक्तदोषापत्त्या च कासुचिदात्मविद्यासु बाध्यते, कर्मणि तु पूर्वोक्तैस्त्रिभिर्न्यूनातिरिक्तप्रायश्चित्तश्रवणाच्च बाध्यते । तदभावे तु भवति । परविद्या अपरविद्याश्च फलैक्ये

रश्मिः ।

वाचकत्वेनाङ्गत्वादित्वेन समुच्चीयन्ते । तदाश्रिताः कर्माङ्गभूतविषयाः प्रत्ययाः । अनुशिष्टेति । अग्रिमसूत्रोक्तेभ्यः । सहभावेति । 'नवे'ति 'दर्शना'दिति सूत्रोक्ताभ्याम् । चकारेति । सूत्रार्थस्तु शिष्टिः शासनं विधानमित्यर्थः । यथाङ्गानां प्रतिवेदं विधानं तथा तथा तदाश्रितोपास्तीनां विधानाविशेषादङ्गवत् समुच्चयनियम इति । एवं निरर्थकश्चकारवैयर्थ्यापत्तेरित्यर्थः ॥ इति चतुर्विंशं न वा तत्सहभावाश्रुतेरित्यधिकरणम् ॥ २४ ॥

'सर्ववेदान्तप्रत्यय'सूत्रार्थपुरःसरमाहुः सर्वे वेदा इत्यादि । तथात्वमिति । वेदत्वम् । फलत इति । कर्मज्ञानाक्षरज्ञाने फले ताभ्याम् । ननु 'अक्षरं ब्रह्म परमं वेदानां स्थानमुत्तम'मिति पुरुषोत्तमस्येदमित्थतया ज्ञानविषयेऽधोक्षजे कथं विद्येत्यतः प्रसङ्गादाहुः परास्विति । तथा च देशकृतपरत्वसम्बन्धेन यैः कैश्चिद्धर्मैरनधोक्षजस्यापि विद्येति भावः । विषयेति । विषयः पुरुषोत्तमः, परप्राप्तिः फलं तयोर्बलात् । 'सर्ववेदान्तप्रत्यये'त्यत्र सर्वपदं मुख्यवृत्तमित्याहुः परास्विति । अपरास्विति । धर्मकर्मरूपासु । फलेति । फलं संयोगश्च रूपं च चोदना च तासाम् । तन्मध्य इति । तेषां मध्ये । अन्यतरस्येति । तरप् महाभाष्यात् । 'उपसंहारोऽर्थाभेदा'दिति सूत्रार्थसङ्ग्रहः गुणोपेति । स चेति । गुणोपसंहारः । त्रिभिरिति । उक्तहेतुभिः । बाध्यत इति । उपसंहारो बाध्यते । भवतीत्युपसंहारः । 'विकल्पोऽविशिष्टफलत्वा'दित्यस्यार्थसङ्ग्रहः । परविद्या इति । 'काम्यास्त्वि'त्यस्य सङ्ग्रहः

भाष्यप्रकाशः ।

विकल्पन्ते, फलभेदे तु यथाकामं समुच्चीयन्ते, क्वचिदेकस्योपासनस्य स्वकामितानेकफलत्वे विकल्पन्ते च । कर्ममार्गीयविद्याङ्गानि तु बहूनां विद्यानां फलैक्येपि यथाश्रयं तत्रैव व्यवतिष्ठन्ते, ज्ञानमार्गीयविद्याङ्गानि तु यथाश्रयं क्वचित् समाह्रियन्ते, क्वचित्तु यथाश्रयं व्यवतिष्ठन्ते । अवतारोपासनं च यथाकाममेव भवति, सर्वासां परविद्यानामुपास्यरूपसाक्षात्कारः फलमिति च ॥ ६६ ॥

इति पञ्चविंशं न वा तत्सहभावाश्रुतेरित्यधिकरणम् ॥ २५ ॥

इति श्रीमद्वल्लभाचार्यचरणनखचन्द्रनिरस्तहृदयध्वान्तस्य पुरुषोत्तमस्य कृतौ भाष्यप्रकाशे तृतीयाध्यायस्य तृतीयः पादः ॥ ३ ॥ ३ ॥

रश्मिः ।

फलभेद इति । क्वचिदेकस्येति । यथा 'अकामः सर्वकामो वे'त्यत्र । 'अङ्गेषु यथाश्रयभाव' इत्यस्यार्थसङ्ग्रहः कर्ममार्गीयेत्यादिः । 'यथाश्रय'मिति सूत्रव्याख्याने व्याख्यातम् । तत्रैव अवयविन्येव । 'समाहार'सूत्रार्थसङ्ग्रहः ज्ञानमार्गीयेति । 'गुणसाधारण्ये'त्यादिसूत्रार्थसङ्ग्रहः अवतारेति । 'दर्शनाच्चे'ति सूत्रार्थसङ्ग्रहः सर्वासामित्यादि ।

इति श्रीविठ्ठलेश्वरैश्वर्यनिरस्तसमस्तान्तरायेण श्रीगोविन्दरायजित्पौत्रेण सम्पूर्णवेत्त्रा विठ्ठलरायजिद्भ्रात्रीयगोकुलोत्सवात्मजगोपेश्वरजिता कृते भाष्यप्रकाशस्य तृतीयाध्यायस्य रश्मौ तृतीयाध्यायस्य तृतीयः पादः सम्पूर्णतामगमत् ॥ ३ ॥ ३ ॥

इति श्रीमत्कृष्णद्वैपायनप्रणीतब्रह्मसूत्रेषु तृतीय उपनिषदां बोधकताप्रकारनिरूपके साधनाध्याये गुणोपसंहारो नाम तृतीयः पादः ॥ ३ ॥ ३ ॥





# प्रास्ताविकम् ।

भाष्यप्रकाश-रश्मि-परिबृंहित-श्रीमदणुभाष्यस्य तृतीयाध्यायस्याद्यपादद्वयस्य प्राकट्यानन्तरं यत्किमपि समुपलब्धं तन्निवेदनमावश्यकम् । आंग्लभाषायां यद्यप्येतत् सविस्तरं निरूपितम्, तथापि तद्भाषानभिज्ञानां प्रमोदाय सङ्क्षेपेणात्रानूद्यते । श्रीमन्नाथद्वाराधीशश्रीमद्गोस्वामिकुलतिलकश्रीमद्गोवर्धनलालजिमहाराजचरणानां तत्सूनुलालबावाश्रीदामोदरलालचरणानां परमोदारानुग्रहेण श्रीमत्प्रभुचरणश्रीमद्विठ्ठलेश्वराणां निजश्रीहस्ताक्षरलिखितस्य श्रीमदणुभाष्यस्य चतुर्थाध्यायस्य तृतीयाध्यायस्य चतुर्थपादस्यान्तिमपत्रत्रयस्य 'अनुष्ठेय'मिति सूत्रस्य वर्णकान्तरस्य च दर्शनसौभाग्यं सम्प्राप्तम् । तद्भागस्य श्रीमदणुभाष्यस्य पाठादि तदाधारेणैव योजयिष्यते । श्रीमत्प्रभुचरणश्रीहस्ताक्षरप्रतिकृतिमपि यथावकाशं प्रकटीकरिष्यामः । एतेनाणुभाष्यस्यान्तिमसार्धाध्यायस्य प्रणेतृत्वं श्रीमत्प्रभुचरणानामेवेति तन्मूलपुस्तकदर्शनेन सुष्ठु निश्चीयते । श्रीमदणुभाष्यस्यायं विभागः श्रीमत्प्रभुचरणैः श्रीगोकुल एव तत्र निवासाङ्गीकृत्यनन्तरं प्रणीत इत्यपि निर्णीतमस्माभिरांग्लटिप्पणे । कारणानि च सविस्तरं तत्रैव दर्शितानि ।

भाष्यप्रकाशश्च श्रीमत्पुरुषोत्तमानां श्रीहस्ताक्षरलिखितान्तिमशोधयुक्तो 'गुजराती' मुद्रणालयाधिपतिसन्मान्य 'नटवरलाल इच्छाराम देसाइ' इत्यस्य सौहार्देन प्राप्तः । एतेन प्रकाशमुद्रणमपि विदुषां हृदये सन्तोषं जनयिष्यतीति । अत्राप्यधिकजिज्ञासुभिरन्यत्रास्मिन्नेव पुस्तके द्रष्टव्यमिति ।

एतत्पादभाष्यस्य पाठादियोजनेऽस्माभिः श्रीमत्प्रभुचरणपौत्राणां श्रीमद्गिरिधनपितृचरणानां श्रीकल्याणरायाणां पुस्तकस्योपयोगः कृतः । श्रीकङ्करपल्लीस्थश्रीमद्द्वारकाधीश्वरप्रभोर्मन्दिरस्थप्राचीनचित्रसङ्ग्रहात् श्रीमत्पुरुषोत्तमानां प्राचीनं चित्रं श्रीमन्मातृचरणश्रीमद्गोस्वामिनीश्रीसौन्दर्यवतीनां निःसीमानुग्रहेणोपलब्धम् । तत्तादृशमेव सम्पाद्य 'श्रेष्ठिवर-वैष्णव-लालजीभाई' इत्येतेषां सम्मत्यात्र निवेशितमिति ।

श्रीपुरुषोत्तमचरणानां गुरुश्रीकृष्णचन्द्रचरणानामेतद्भाष्यविभागविवरणमस्माभिस्तन्मूलपुस्तकाधारेण संशोध्य परिशिष्टे निवेशितम् । एतन्मूलपुस्तकमस्माभिः 'परलोकनिवासित्रिपाठिमनःसुखरामसूनुविद्वद्रतनसुखरामभाई'सकाशात् सम्प्राप्तम् । एतदखिलं विवरणं ग्रन्थप्रणेतृणां श्रीहस्ताक्षरेष्वेव लिखितमिति तद्दर्शनेनास्माकं स्फुरति । एतदखिलं विवरणं श्रीपुरुषोत्तमैर्निजकृतौ प्रायः समग्रमेव समावेशितं दृश्यते । एते श्रीकृष्णचन्द्राः श्रीमत्प्रभुचरणानां तृतीयलालश्रीबालकृष्णानां द्वितीयसूनुश्रीव्रजनाथानां सूनवः संवत् १६५५ श्रावण-कृष्ण-सप्तम्यां प्रादुर्भूताः । निखिलोपलब्धब्रह्मसूत्रभाष्यसमीक्षापूर्वकमणुभाष्यमर्मोद्घाटनपद्धतिर्यास्माभिर्भाष्यप्रकाशे दृश्यते, सा पद्धतिः श्रीपुरुषोत्तमैः श्रीकृष्णचन्द्राणामेव प्रेरणया कृपया चोपलब्धेति प्रतिभाति । तृतीयाध्यायस्य तृतीयपादभाष्यप्रकाशस्यात्र मुद्रितपरिशिष्टेन सम्वादनेनास्मदभिप्रायः स्फुटिष्यतीति । साम्प्रदायिकविद्वत्सु प्रार्थनीयमिदं यच्छास्त्ररीत्या श्रीमदणुभाष्यस्यावगाहनं भवतामभीष्टं चेत्, एतेषां श्रीकृष्णचन्द्राणां श्रीमदणुभाष्यस्य प्राचीनतमैतद्विवरणस्यान्वेषणं कर्तव्यमिति । सम्प्रदाये तेषां तच्छिष्यश्रीपुरुषोत्तमानां च वंशस्योत्सन्नत्वात् नामावशेषा एव ते जाता इति विचिन्त्य चेतो दुनोत्यस्माकम् । कस्मिन् वर्षे तेषां प्रादुर्भावो जात इत्यपि सम्प्रदायवंशवृक्षे प्रायो न दृश्यते । निर्भयरामः सम्प्रदायकल्पद्रुमे 'इमे शास्त्रवित्तमा' इति वर्णयति । 'भद्रपुरनिवासिवैष्णवश्रेष्ठिवर-दि-ब-गोविन्ददास'सकाशादुपलब्धात् प्राचीनपुस्तकतस्तज्जन्मसमयोऽस्माभिर्ज्ञातः । एतेषां गोस्वामिनां पण्डितमुकुटमणीनामैतिह्यं सम्प्रदायगौरवमभिलषद्भिरवश्यमन्वेषणीयमिति विज्ञप्तिः ।

श्रीमदाचार्यश्रीमद्वल्लभाधीश्वर-
प्राकट्यमहोत्सवः ।
चैत्र-कृष्ण-११-१९८३ ।

मूलचन्द्र तेलीवाला ।

श्रीकृष्णाय नमः।

# परिशिष्टम्।

---

## गुणोपसंहारपादभाष्यविवरणम्[1]।

**सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्** ॥ १ ॥ तृतीयपादं व्याचिख्यासवः सङ्गतिबोधनाय पूर्वपादार्थमनुवदन्तः प्रस्तूयमानार्थमाहुः **पूर्वपादेत्यादि**। **विचार्यन्त** इति। धर्माः सर्वे सर्वत्र सन्ति, क्वचिदेव वा केचन सन्ति, केचन न सन्ति, सर्वत्रैव न सन्त्यौपाधिका वा सन्तीति सन्देहे विचार्यन्त इत्यर्थः। नन्वत्र सर्वैरेकदेशिभिर्विद्याभेदाभेदविचार एवाद्रियते, तत्कुतो धर्मा विचार्यन्त इत्युच्यत इति चेत्। उच्यते। आचार्यस्य ब्रह्मनिरूपणार्थमेव मुख्यतया प्रवृत्तत्वेन ब्रह्मशेषतयैव विद्याविचारस्यौचित्यात्पूर्वपादसङ्गतिसौकर्यात् पक्षवाचकविज्ञानोपासनादिपदाध्याहारापेक्षया पूर्वपादान्तपरामृष्टब्रह्मानुषङ्गस्यैव ज्यायस्त्वात्सर्ववेदान्तप्रत्ययमित्येकवचनस्यापि स्वारस्यात् विद्याविचारादर्तृभिरपि तद्भेदाभेदयोर्विषयभेदाभेदाभ्यामेव समर्थनेन तद्विचारस्यापि विषयविचारैकशरणत्वेन तत्सिद्धान्तितविद्यैक्यस्यैवमपि सिद्धेश्चेति बुध्यस्व। ननु सिद्धे विग्रहे धर्माः सिद्धप्राया एवेति पुनः किमिति विचार्यन्त इत्यत आहुः **ते चेदित्यादि भिन्ना इत्यन्तम्**। अतो विचार्यन्त इत्यर्थः। एवं सङ्गतिं प्रदर्श्य मतान्तरोक्तविषयस्यापि प्रस्तुतरीतिकविचारेण निर्णयसिद्धिबोधनाय तत्साधारणं विषयद्वयं पूर्वमाहुः **यथेत्यादि**। एतदाद्युदाहरणानां विभूतिविषयकत्वाद्विचारस्यैतादृग्विषयमात्रपरताव्यावर्तनायोदाहरणान्तरमाहुः **अपरं चेत्यादि**। एवं विषयं निर्दिश्य पूर्वपक्षाकारं विवेक्तुं पूर्वं मतान्तरीयाकारं वदन्तस्तेनाशङ्कान्तरमुत्थापयन्ति **तथा चेत्यादि**। अत्र दृष्टान्तोदाहरणं त्वामिक्षाधिकरणम्। तत्र हि 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिन'-वाक्ये तप्तदुग्धनिष्पन्नघनविरलद्रव्यद्वयरूपक एको यागो यागद्वयं वेति सन्देहे, द्रव्यदेवताविशिष्टयागान्तरविधौ गौरवप्रसङ्गादपूर्वान्तरकल्पनाप्रसङ्गाच्च न यागद्वयविधिः, किन्तु पूर्वस्मिन्नेव यागे वाजिनं गुणो विधीयते, वाजिभ्य इत्यनेन च वाजोन्नमामिक्षा तदेषामस्तीति व्युत्पत्त्या पूर्वोक्ता विश्वेदेवा एवोपलक्ष्यन्त इति पूर्वपक्षः, तत्रोत्पत्तिशिष्टामिक्षा द्रव्यावरुद्धे याग उत्पन्नशिष्टं वाजिनं गुणत्वेन प्रवेशं न लभते निर्बलत्वात्, ततश्च तत् द्रव्यं स्वसम्बन्धियागं पूर्वस्माद्भिनत्ति, वाजिपदं चाश्वे रूढत्वान्न योगेन विश्वान् देवानुपलक्षयिष्यति, तथा सति विध्यपूर्वान्तरकल्पनयोः प्रामाणिकत्वात्तत्कृतं गौरवं न दोषायेति द्रव्यदेवताभेदाद्यागभेद इति स्थितम्। तथा प्रकृते पञ्चाग्नयः षडग्नय इत्यादि। श्रीकृष्णः श्रीरामो नृकेसरीत्यादीतरपरिच्छेदकरूपभेदाद्ध्येयभेदः। किंच यथा कारीरीवाक्यान्यधीयानास्तैत्तिरीया भूमौ भोजनमाचरन्ति नेतर इति धर्मभेदः, तथात्र शिरोव्रतमाथर्वणिकानामेव नेतरेषामिति धर्मभेदः। विभूतिभेदश्च क्वचिद्रामस्वरूपं विभूतिमध्ये गण्यत इतरत्र वासुदेवस्वरूपम्, एवं मुरलीधरत्वं धनुर्धरत्वं चेति धर्माणामावापोद्वापौ। किञ्च दृष्टादृष्टफलभेदोपि। यथा राममन्त्राणां सर्वकामदत्वं मोक्षः। श्रीकृष्णस्मरणस्य भगवद्विषयककामजननं तन्मन्त्रस्यानायासतो भगवत्पदप्राप्तिरिति, रूपभेदेन धर्मभेदेन फलसंयोगभेदेन च वेद्यभेदप्राप्तौ दोषान्तरमापतितम्, तेन मतान्तरोक्त-

---

१. इदमखिलं विवरणं श्रीपुरुषोत्तमचरणैः स्वकृतप्रकाशे प्रायः शब्दश उद्धृत्य समावेशितम्। श्रीपुरुषोत्तमगुरुभिः श्रीमद्गोस्वामिश्रीकृष्णचन्द्रचरणानामियं कृतिरित्यत्र सयः।

पूर्वपक्षसमाधानाभ्यां धर्मभेदापादितदोषो नापैतीति कश्चिदधिक आकारो वक्तव्य इत्यर्थः । अत्रोपासनाविषयाणामब्रह्मत्वं सिद्धान्तत्वेनाभिमन्यमानः कश्चिदेकदेशी पूर्वोक्ताशङ्कामप्रयोजकां मनसि कृत्वा चोदयति नन्वित्यादि । तद्दूषयन्ति नैवमित्यादि । समन्वयविरोधापत्तेरिति । आचार्येण हि समन्वयः श्रुतीनां ब्रह्मनिरूपकत्वेन प्रतिपादितः, न तु तासामौपाधिकनिरूपकत्वेनातस्तथेत्यर्थः । अथ ब्रह्मित्वतया तथैव प्रतिपादित इत्युक्तौ युक्त्यन्तरमाहुः तासामित्यादि । ननु तासां यथाकथंचिद्ब्रह्मप्रतिपत्त्यर्थत्वान्न हानिरित्यत आहुः श्रुतेरित्यादि । अन्यथा सतोऽन्यथा कथनात्तथेत्यर्थः । अथ विषभोजनवद्वदतीति न प्रतारकत्वमित्यत एतन्न्यायस्याप्रवृत्तिं सूचयन्ति अपरं चेत्यादि । तत्तदुपासनामिति । अन्यथा ज्ञानरूपामित्यर्थः । तथा च न विषभोजनवदेषोक्तिरिति भावः । एतदार्ढ्याय युक्त्यन्तरमाहुः स्पष्टेत्यादि । तथा च यदि त्वदुक्तं व्यासोऽभिप्रेयात्, स्पष्टार्थानि रामादिपदान्यपि देवतावाचकानि ब्रह्मवाचकानि वेति सन्दिह्य तन्निर्णयमपि कुर्यादतस्तदभावान्न तथेत्यर्थः । एवमेकदेशिमतं निरस्य सर्वासां ब्रह्मनिरूपकत्वमेव व्यासाभिप्रेतमित्याशयेन सिद्धं पूर्वपक्षस्वरूपमाहुः एवं च सतीत्यादि । सर्वासां ब्रह्मनिरूपकत्वे सति धर्मभेदकृतधर्मिभेदाद्ब्रह्मानेकत्वापत्त्या 'नेह नानास्ती'त्यादिश्रुतिविरोधस्तासामौपाधिकपरत्वे बहूनां वाक्यानां ब्रह्मविधात्वहानिरित्ययमेव पूर्वपक्षाकार इत्यर्थः । अत्र सूत्रावयवमुपन्यस्य समादधते अभिधीयत इत्यादि । ननु नायं प्रतिज्ञार्थः । तथाहि । पूर्वकाण्डे यज्ञस्यानन्तरूपनिरूपणं यथा भगवन्मूर्तित्वसिद्ध्यर्थम्, तथा ब्रह्मनिरूपणाय प्रवृत्ते उत्तरकाण्डेऽनेकरूपनिरूपणप्रयोजनालाभाद्यथाकथंचित्प्रतिपत्त्यर्थत्वस्य सिद्धान्तिनानङ्गीकारादनन्तरूपश्रुतेरसङ्कुचितवृत्तित्वेन निरूपणस्याशक्यत्वाच्चेत्याशङ्कायामाहुः ब्रह्मण इत्यादि । तथा च 'फलमत उपपत्ते'रित्यत्र ब्रह्मणः फलदातृत्वस्य निश्चितत्वात्तत्तत्फलसाधकोपासनार्थं तत्तन्निरूपणमित्ययमेव प्रतिज्ञार्थ इत्यर्थः । ननूपासनार्थमेकमनेकरूपेण निरूप्यत इति कथमवगन्तव्यमित्यत आहुः तत्र हेतुरिति । तथाच सूत्रोक्तहेतोरवगन्तव्यमित्यर्थः । कथमित्याकाङ्क्षायां तमनूद्य विवृण्वन्ति चोदनेत्यादि । तथा च ब्रह्मत्वेनोपासनाविधानानथावसीयते, तेन यथाग्निहोत्रे द्रव्यभेदे उपांशुयाजे देवताभेदेपि एकदेशस्यैव भेदान्न यागभेदस्तथात्रापि किंचिद्रूपधर्मभेदान्न वेद्यभूतब्रह्मभेद इत्येवमित्यर्थः । ननु शाखान्तराधिकरणे केवलानां रूपादीनां व्यभिचारित्वं हृदिकृत्य 'एकं वा संयोगरूपचोदनाऽख्याऽविशेषा'दिति सूत्रेण संयोगादिहेतुचतुष्कसमुदायं हेतूकृत्याभेदः साधित इति प्रकृत एकेन हेतुना कथं सिद्धिरित्यत आहुः आदीत्यादि । तथा चात्रापि संयोगरूपचोदनात्मकहेतुत्रयसत्त्वादेकदेशरीतिकोदाहरणे आख्या अपि सत्त्वेनोक्तचतुष्कस्यापि सत्त्वान्न दोष इत्यर्थः । अत्र सर्ववेदान्तप्रत्ययमेकं चोदनाद्यविशेषात्, यत्र चोदनाद्यविशेषस्तत्र प्रतिपाद्याभेदः । सर्वशाखाप्रत्ययज्योतिष्टोमवदित्यनुमानमत्र सिद्धम् ।

तत्र दोषमाशङ्क्य सूत्रकारः समाधत्ते इत्याशयेन सूत्रं पठन्ति भेदादित्यादि । उक्तहेतुत्वसिद्धिमिति । धर्मभेदकृतमिथोभेदादिपदसंगृहीतरूपाभेदस्य पक्षे ब्रह्मण्यभावेन चोदनाद्यविशेषादित्यस्य हेतोः स्वरूपासिद्धिमित्यर्थः । तथा च ब्रह्मधर्मत्वेत्यादि, यथा षोडशिग्रहणाग्रहणयोः स्वरूपभेदेप्यतिरात्रधर्मत्वेनाभेदस्तथा तत्तद्धर्मवैशिष्ट्यावैशिष्ट्ययोर्ब्रह्मधर्मत्वेन तथात्वात् त्वदुक्तहेतोरेव स्वरूपासिद्धिरित्यर्थः, भेदेन हेतुना सिद्धान्तहेतुं दूषयता त्वया प्रतिवाक्यं प्रतिपाद्यं ब्रह्म भिन्नं धर्मभेदाद्यत्र धर्मभेदस्तत्र प्रतिपाद्यभेद आमिक्षावाजिनयागवदित्यनुमानं लक्षितम् । तत्र त्वदुक्तहेतोरतिरात्रदृष्टान्तेन व्याप्यत्वासिद्धिरित्यपि बोध्यम् । नन्वेवं ब्रह्मैक्यमत्राचार्यः किमित्याग्रहेण निरूपयतीत्याकाङ्क्षायामुपसंहारसूत्रविचारेण तदाशयमाहुः एवं सतीत्यादि । तत्रेति, न्यूनगुणके रूपे । उचित इति,

कर्मणि द्वयोरेकदा कर्तुमशक्यत्वात्पर्यायभेदेन विकल्पस्यापि प्रसक्तिः, प्रकृते तु तदपि नेत्यत उचित इत्यर्थः । नन्विदं सूत्रकारेण नोक्तमित्याशङ्कायामाहुः इति भाव इति । पूर्वसूत्रोक्तहेतोरत्र शोधनादग्रे कथनाच्च तथान्वयो लभ्यत इत्यर्थः । उपसंहारपदार्थश्च सामान्यतः प्रसक्तस्य विशेषे नियमनमित्यग्रिमसूत्रे स्फुटीभविष्यति । तथात्र तेषां तेषां गुणानां तत्रतत्र सत्त्वेन ज्ञानरूपमित्यग्रे वाच्यं 'न वा विशेषादि'ति सूत्रे । नन्वेवं सति यत्र ब्रह्मत्वेनोपासनं विधीयते तत्र तद्वाक्यनिर्णयो भवति, यत्र पुनर्ब्रह्मत्वेनोपासनं न विधीयते यथा प्राणसंवादे पञ्चाग्निविद्यायां च, तत्र ब्रह्मत्वेनोपासनाभावेनैक्या-भावात्कथं निर्णय इत्याशङ्कायां तत्रापि न्यायस्यास्य तौल्यादेतेनैव निर्णय इति हृदिकृत्य कंचिद्वि-शेषमाहुः अत्रेत्यादि । ओमित्येतदक्षरमिति, ॐकाराक्षरमित्यर्थः । तथा च विभूत्युपासनान्या-यस्तत्रापि बोध्य इत्यर्थः । अत्राचार्येणोपासनामात्रनिर्णयो न क्रियतेपि तु साधनमात्रस्य, तथा सति भक्तिमार्गस्यापि व्यवस्था वक्तव्यैवेत्याशयेनाहुः भक्तीत्यादि । अग्र इति, 'न वा प्रकरणभेदा'दिति सूत्रे । ननु भक्तेरप्रस्तुतत्वात्तद्व्यवस्थाकथनमनुपपन्नमिति चेत् । न । उपासनाया अपि तथात्वात् । न च तस्याः श्रौतत्वादस्ति प्रस्ताव इति वाच्यम् । तुल्यत्वात् । गोपालतापनीये इति 'सकलं परब्रह्मैतद्यो ध्यायति रसति भजति सोऽमृतो भवती'ति ध्यानाद्भिन्नतया तस्या अपि विधानात् । 'भक्ति-रस्य भजनं तदिहामुत्रोपाधिनैराश्येनैवामुष्मिन् मनःकल्पनमेतदेव च नैष्कर्म्य'मिति लक्षणभेदाच्च । न च यच्छब्दोपबन्धादयमनुवाद एव न विधिरिति वाच्यम् । 'यदाग्नेयोऽष्टाकपाल' इत्यादिवददोषात् । न च कर्तृसामानाधिकरण्यान्नेदं साम्प्रतमिति वाच्यम् । तथापि समाप्तौ 'कृष्ण एव परो देवस्तं ध्यायेत्तं रसेत्तं भजे'दिति दर्शनेनादोषात् एकस्मिन्नेव प्रकरणे सृष्टिकर्तृत्वादिना माहात्म्यस्य आत्मत्वेन निरुपाधिप्रियत्वस्य च बोधनात् श्रुतीनां भक्तावेव तात्पर्यावसायाच्च । नन्वत्र विहितभक्तिमार्गीया व्यवस्था वाच्या अविहितभक्तिमार्गीया वेति चेत् । उभयोरपीति ब्रूमः । किं मानमिति चेत् । श्रीभा-गवते श्रीनन्दादीनां फलकथनात्तद्बलेनाविहितभक्तेरपि प्रामाणिकत्वसिद्धौ तद्व्यवस्थाया अपि मन्दमध्यम-योरर्थे आवश्यकत्वात् । अतो नात्र चोद्यावसर इति दिक् ॥

ननु सूत्रकारेणेदं कुत्रोक्तमिति चेत् । अग्रिमसूत्रेऽधिकारस्य नियामकत्वं वदता सूचितमिति जानीहि ।

अग्रिमसूत्रमवतारयन्ति नन्वित्यादि । तथा च शिष्टाचारविरोधात्पूर्वत्र साधितोपासनावैक्यचि-न्तावैयर्थ्ये प्राप्ते प्रतिवदतीत्यर्थः । सूत्रस्थस्य तथात्वेनेत्यस्यार्थमाहुः स एकमित्यादि बोधयती-त्यन्तम् । यत एवं बोधयत्यतो हेतोः स्वाध्यायस्य वेदस्य तथात्वेन नानास्वरूपैककर्मबोधकत्वेने-त्यर्थः । तत्प्रयुक्त इति नियमविशेषणम् । तथा च बोधनप्रकारमर्यादाबलात्तावत्कर्मकरणनियम इत्यर्थः । अत्र बीजमाहुः तावद्भिरित्यादि । स्वाध्यायस्य तथात्वेनेत्यस्य हेतोर्यज्ञानां भगवन्मूर्तिता-साधकत्वेन चारितार्थ्यादनेन हेतुना दोषापरिहारं मन्वानः सूत्रकृद्धेत्वन्तराणि समुच्चिनोतीत्याशयेनाहुः नन्वित्यादि । उक्तहेतुप्रयुक्ते नियमे शिष्टाचारबीजभूतां सम्मतिमाहुः अत एवेत्यादि । अत एव, तत्तच्छाखावाक्यतत्तदधिकारन्यूनाधिकप्रायश्चित्तानां नियामकत्वादेव । परशाखोक्तमिति, यथा 'कुक्कुटोसीत्यश्मानमादत्ते कुटरुरसीति वे'त्यश्मादानमन्त्रो येषां कल्पे विकल्पितस्तैरेव तत्र पठ्यते, नेतरैः । विकल्पे तूभयस्याशाखार्थत्वमिति, यत्कल्प एवं विनियोगविधिर्नास्ति तेषां तादृशस्थले इच्छया करणे धर्माभासपरधर्मत्वापत्त्या तथेत्यर्थः । अतोपीति, कल्पोक्तनियमबलादपि । नियम्यन्त इति, लिङ्गाच्चियम्यन्ते । एवं सूत्रं व्याख्याय उपासनाया अपि समाचारत्वेन सङ्ग्रहात्तमेव नियमं तत्राप्याहुः प्रकृतेपीत्यादि । तथा सतीति, तद्बोधकप्रमाणमननुरुध्य रूपान्तरासाधारणधर्मोपसंहारेङ्गीकृते

सति । तथा चैवं भावने सवदृष्टान्तबोधिता लिङ्गस्य नियामकता मन्येतातस्तथा न भावनीयमित्यर्थः । अत्र वादी लैङ्गिकनियमस्याप्रयोजकत्वं शङ्कते नन्वित्यादि । तत्र समादधते सत्यमित्यादि । तत्रेति, आक्षेपे । कार्येति, मूलरूपोपासकेन कार्या । इति ज्ञेयं परमिति । मत्स्यावताराणामेव तत्त्वविधानदर्शनात्तथेत्यर्थः । ननु श्रुत्या त्वेतावद्बोध्यत इति सत्यम्, तथापि मूलरूपत्वाविशेषस्योपसंहारहेतोर्विद्यमानत्वादुपसंहारे किं बाधकमित्यत आहुः तत्रेत्यादि । उक्तमेवेति । लैङ्गिकनियमरूपं यत्कर्मण्युक्तं तदेव, अन्यथा तत्राप्यतिप्रसङ्गः स्यादिति भावः । ननु पूर्वसूत्रोक्तहेतुना सर्वत्र सर्वगुणोपसंहारप्राप्तौ समाचारसूत्रे निरूपणप्रकारभेदाधिकारभेदप्रायश्चित्तश्रवणासाधारणलिङ्गानां नियामकत्वमादृतम्, तेन तत्तच्छाखिभिस्तत्तदधिकारिभिस्तत्तल्लिङ्गनियताः स्वाधिकारानुसारेण स्वशाखोक्ता गुणा भावनीया इति सिद्धम् । तथा सति प्राणाद्युपासनायां शाखान्तरोक्तगुणोपसंहारो न स्यादित्यत आहुः प्राणादीत्यादि । न च निरूपणप्रकारभेदरूपं बाधकं दृश्यत एवेति वाच्यम्, तस्य मन्दमत्यनुग्रहार्थत्वेन बाधकत्वाभावात् । शाखाविभागात् पूर्वमिच्छयैवाधिकारमनुसृत्यर्षिभिः करणात् । आचार्येण मन्दमतेस्तावतैव फलसिद्धिबोधनार्थमेव तदुपन्यासात् । हेत्वन्तरकथनेन तथानिश्चयात् । तेनैकशाखाध्येतुस्तावतैव सिद्धिर्द्वित्र्याद्यध्येतुस्तूपसंहारेणोपासनापौष्कल्यात्फलश्रैष्ठ्यमिति फलति, तदेतदभिसन्धायोक्तं न किंचिद्बाधकमिति । लैङ्गिकनियमसमर्थनाय मत्स्यकूर्मादिरूपेणायमेव सर्वकर्म कृतवानिति यदुक्तं तत्र चोदयति नन्वित्यादि । तत्र समादधते नैवमित्यादि । धर्मिग्राहकमानतः सिद्धिं दृष्टान्तेनोपपादयन्ति यथेत्यादि । नियतपदार्थवादिमते भावभिन्नस्य निषेधमुखप्रतीतिगोचरस्यैकस्यैव पदार्थस्य तादृशप्रतीतिबलेन तावद्रूपत्वं स्वीक्रियते, न तु निरूपकभेदमादाय स्वरूपनानात्वम्, तद्वदत्र ब्रह्मण औपनिषदत्वात्तद्वाक्यबलेन तथेत्यर्थः । एवमुपपत्तिपरिहाराय श्रुतिरूपप्रमाणेन भगवतोऽनन्तरूपत्वं साधितम् । अतः परं श्रुतार्थापत्तिश्रुतिभ्यामनन्तधर्मवत्त्वं साधयितुं पूर्वं श्रुतितात्पर्यमनूद्य वादिनमनुयुञ्जन्ति अपरं चेत्यादि । तदाशयमनूद्य दूषयन्ति उपेत्यादि । वदाम इति, तवानिष्टापत्तिं वदामः । न वदेदिति ग्रहणकोक्तमवदनं व्याकुर्वन्ति तथाहीत्यादि । तस्येति, ब्रह्मज्ञानस्य । एकजातीयत्वे हेतुः । घटवस्त्वित्यादि । निरूपयेदिति, ब्रह्मविज्ञानफलं निरूपयेत् । अपि वा वदेदिति, अशेषगुणज्ञानाभावे फलाभावापत्त्या वदेदित्यर्थः । आशयान्तरमनुवदन्ति । न चेत्यादि । उपासनानाममात्रोक्तौ प्रकाराज्ञानादुपासनाया असिद्धेस्तथेत्यर्थः । तद्दूषयन्ति परेत्यादि । तथा चैवमाशयकल्पनपक्षे प्रकारोक्तिवैयर्थ्यं तदवस्थमित्यर्थः । तर्हि कस्तदाशय इत्याकाङ्क्षायां मन्दाधिकारिणामपि तावतैव फलसिद्ध्यर्थं वदतीत्याशयं हृदिकृत्य तेन विवक्षितं साधयन्ति तस्मादित्यादि । तस्मादिति, त्वदुक्ताशयस्यानुपपन्नत्वात्, एतेनेति, उक्तार्थापत्त्याधिकारव्यवस्थापनेन । उक्तोपष्टम्भाय श्रुतिमुपन्यस्यन्ति तदुक्तमित्यादि । स्वाभाविकीति विशेषणतात्पर्यकथनेनैकदेशिमते निरस्ते अनन्तधर्मवत्त्वं ब्रह्मणि वास्तवमिति सिद्धम् । तथा सति यस्य रूपस्य ये असाधारणा धर्मास्ते तस्मिन्नेव रूपे नियता इत्याक्षेपलभ्यत्वाभावान्नान्यत्रोपसंहर्तुं शक्या इत्यर्थः । एवं लैङ्गिकनियमं समर्थयित्वा स्वोक्तसूत्रव्याख्यानं दृढीकर्तुं मतान्तरीयमेतत्सूत्रव्याख्यानमप्यसमञ्जसमिति बोधनाय तमनुवदन्ति केचिदित्यादि । अयं मतान्तरग्रन्थः शाखान्तराधिकरणस्थस्य 'विद्यायां धर्मशास्त्र'मिति सूत्रीयशाबरभाष्यस्य छायामनुसरति, तत्र हि 'कारीरीवाक्यान्यधीयानास्तैत्तिरीया भूमौ भोजनमाचरन्ति नेतरे, तथैकेऽग्निमधीयाना उपाध्यायस्योदकुम्भमाहरन्ति नेतरे, तथैकेऽश्वमेधमधीयाना अश्वस्य घासमाहरन्ति नेतर' इति धर्मभेदात्कर्मभेद आशङ्किते, विद्यायां धर्मशास्त्रमिति सूत्रेण विद्या वेदनमध्ययनमिति यावत्, तस्यायं धर्मो, न तु कर्मण स्तेनान्यधर्मस्या-

न्यायभेदकत्वात्कर्मभेदः परिहृत इति स्थितम्। तेन प्रामाणिकः, परन्तु सूत्रकारानुभयविरुद्ध इति बोधनाय दूषयन्ति स चिन्त्यत इत्यादिना। चिन्ताहेतुमाहुः न हीत्यादि। हि यतो हेतोः। अस्य शिरोव्रतस्य विद्याधर्मत्वं विद्याभेदकं न भवति, उक्तन्यायेन चोदनाद्यविशेषरूपेणान्यत्रापि तथात्वेन सर्वविद्याधर्मत्वस्य सिद्ध्या तदभेदकत्वात्, तथा चास्य भेदकत्वमापाद्य ततोन्यधर्मसाधनेन तत्साधकत्वं काकदन्तविचारन्यायमनुसरतीत्युपेक्ष्य इत्यर्थः। इवपदं प्रकारस्य प्रामाणिकत्वबोधनार्थम्। प्रामाणिकस्येनोपेक्ष्यत्वमसहमानश्चोदयति नन्वित्यादि। तत्रोपेक्ष्यत्वे बीजभूतामनुपपत्तिं बोधयन्ति सूत्रस्येत्यादि। तत्तात्पर्यकल्पनेति, शिरोव्रतोपदेशतात्पर्यकल्पना। ननु मुख्यार्थबाधः फलमुखो न दोषायेत्यतो दूषणान्तरमाहुः किञ्चेत्यादि। तथा च भवता हि विद्यैकत्वसाधकत्वेनेदं सूत्रं व्याख्यातम्, तथा सति शिरोव्रतस्य प्रकृतग्रन्थविशेषसंयोगेनासङ्कीर्णत्वेपि पूर्वसूत्रोक्तहेतोर्दृढत्वे सम्पन्ने 'तेषामेवैतां ब्रह्मविद्यां वदेते'त्यत्र यथैतच्छन्दस्तथा सर्वत्र धर्मकथन एतच्छन्दादर्शनेन तद्धर्मोपसंहारस्य प्राप्तावसरत्वादुक्ताशङ्काया अनिवृत्तिस्तस्मादस्य सूत्रस्योक्तरीत्योपसंहारनियमबोधकतयैव व्याख्यानमुचितम्, एवं च नियमविशेषस्यैवोपसंहारपदार्थत्वात्तल्लक्षणस्यापि सौत्रत्वसिद्धिरिति गुणोपि। तस्मान्मतान्तरीयव्याख्यानमुपेक्ष्यमेवेत्यर्थः।

एवं मतान्तरनिरासेनैतत्सूत्रार्थं निष्कृष्य पुनः सिंहावलोकनेन स्थूणानिखननवत्पूर्वसूत्रार्थं दृढीकर्तुं चिन्तान्तरमारभन्ते नन्वित्यादि। पूर्वोक्तरीत्येति, अनन्तरूपत्वसमर्थनरीत्या। शेषग्रन्थस्तु निगदव्याख्यातः। तथा च निर्धारासम्भवे धर्माणां मायिकत्वमेव शरणीकरणीयम्। तथा सति स्वरूपपराणामेतच्चिन्ताया अनुपयोगात्पूर्वोक्तशङ्काया अनिवृत्तावप्यदोष इति मतान्तरीयव्याख्यानं साध्वेवेति भावः। तत्र तन्निर्धारणचिन्तासार्थक्याय समादधते अभिधीयत इति। तत्र पूर्वं निरवयवत्वेपि यथावतारेष्वंशस्तं प्रकारं बोधयितुं रामानुजादिमतस्याप्येकदेशत्वं बोधयन्तोशं च प्रयोजकं वदन्ति सत्त्वमित्यादि। अत्र वाक्ये सत्त्वविशेषणाभ्यां प्रियापदविशुद्धपदाभ्यां सत्त्वस्य प्राकृतत्वं व्यावर्त्यते। 'मां भजन्ति गुणाः सर्वे निर्गुणं निरपेक्षक'मिति, 'विलज्जमानया यस्य स्थातुमीक्षापथेऽमुये'ति वाक्याभ्यां तस्या गुणानामप्रियत्वेन तस्या अविशुद्धत्वेन च बोधनाय तद्गुणस्य सत्त्वस्य प्रियत्वशुद्धत्वयोरशक्यवचनात्। न चाप्रसिद्ध्या नैवमिति शङ्क्यम्, 'सत्त्वं रजस्तम इति निर्गुणस्य गुणास्त्रय' इति द्वितीयस्कन्धे त्रयाणां भगवद्गुणत्वोक्तेस्तत्र तेषां सिद्धत्वात्। 'कार्पासे न हि सूत्रं तदेव पुनः पौर्वापर्यमापद्यमानं सूत्रतामापद्यत इति भगवान्निर्गुणस्ते गुणा' इति तत्र विवरणात्तदेतदुक्तं भगवद्धर्मरूप एव कश्चनास्तीति। एतमेव रामानुजमते शुद्धसत्त्वं नाम रजस्तमोमिश्रप्राकृतसत्त्वविलक्षणसत्त्वगुणाश्रयो द्रव्यविशेष इत्याहुः 'स्वसत्ताभासकं द्रव्यं त्रिगुणात्तद्विलक्षण'मिति प्रमाणं चाहुः। सिद्धान्ते तु प्राकृतानामिव तस्यापि द्रव्यत्वस्याविरुद्धत्वात्तत्रैव विश्राम्यत इति विशेषः। एवं प्रयोजकमुक्त्वा तेन सिद्धमंशस्वरूपमाहुः याहशोनेत्यादि। अतो निरवयवत्वांशत्वबोधकप्रमाणयोर्न विरोध इत्यर्थः। अतः परं श्रेष्ठ्यबोधनाय मूलस्वरूपं विवृण्वन्ति यत्राधिष्ठानेत्यादि। प्रादुर्भूतस्य पूर्णत्वे गमकमाहुः अत एवेत्यादि। तेनेति, जृम्भाभ्यादानदामोदरलीलासु व्यापकत्वं प्रदर्शयितुस्तथात्वेनेत्यर्थः। एवमिति, सत्त्वस्याधिष्ठानत्वे। सर्वत्रेति, अवतारादौ। विभूतिस्वरूपमाहुः मत्स्येत्यादि। तत्त्वमिति, विभूतिरूपत्वम्। तत्र तत्रेति, नानाविधलौकिकशरीरेषु। एवं रूपत्रयविभागस्याप्रयोजकत्वं मन्यमानश्चोदयति नन्विति। न्यायसिद्धत्वाद्विभूतिरूपं तथास्तु, अवताररूपमूलरूपे तु न तथा, वदतो व्याघातादित्यर्थः। समादधते मैवमिति। तत्रेति, स्वतोनन्तरूपत्वे प्रमाणं च। आदिपदेन 'क्षयन्तमस्य रजसः पराक' इत्यादीनां

संग्रहः । एव सत्त्वाधिष्ठानतदनधिष्ठानयोः स्थिरीकरणेन तथा प्राकट्यमपि स्थिरमेवेति रूपविभागोपि स्थिर इति साधयित्वा तादृक्प्राकट्यप्रयोजकं तत्प्रयोजनं चाहुः **प्राकट्यं हीत्यादि । प्राकट्यमपि तथेति**, अत्रापि बीजं 'ये यथा मां प्रपद्यन्ते' इति प्रतिज्ञावाक्यं बोध्यम् । **एतेनैवेति**, प्राकट्यप्रकारव्यवस्थापनेनैव । एवं विभागमुपपाद्य सिद्धमाहुः **एतेनेत्याद्यध्यवसीयत** इत्यन्तम् । मथुराद्वारकादिस्थानां प्रायशः सोपाधिकस्नेहवत्त्वात्तदर्थं प्राकट्यविनियोगे वैरूप्यापत्तिं हृदिकृत्योक्तम् **आनुषङ्गिकत्वादिति** । व्यूहविशेषं द्वारीकृत्य तत्करणेन तेषां तद्दानात्तथेत्यर्थः । **एतदेव रूपमिति**, सत्त्वाव्यवहितं श्रीकृष्णस्वरूपम् । **इदमिति**, अधिष्ठानाव्यवधानम् । **तथेति**, विषयः । तथा च यदि निर्विशेषं ब्रह्म स्यात्तदा तथा स्यादपि, तत्तु प्रागेव निरस्तम्, तथा सति विरुद्धधर्माधारस्यैवं स्वरूपनिर्धारसिद्धेर्धर्माणाममायिकत्वेन वास्तवत्वात्तदुपसंहारचिन्ताया अप्युपयुक्तत्वादुक्तशङ्का निवर्तनीयैवेत्यतो मतान्तरीयव्याख्यानमुपेक्ष्यमेवेति भावः । एवं स्वरूपधर्मादिकं निर्द्धार्यानया चिन्तया सिद्धं गुणान्तरमाहुः **एवं सन्तीत्यादि । गुणभेदस्याप्रयोजकत्वादिति**, विद्यागुणभेदस्य वेद्यभेदाप्रयोजकत्वात् । **निःप्रत्यूहमिति**, निर्विशेषवादिमते धर्माणामुपाधिनिष्ठत्वादुपाधीनां भिन्नत्वादुपास्यानां रूपाणां चाब्रह्मत्वात्तेन रूपेण वेद्यैकत्वं सविघ्नम्, अत्र तु ब्रह्मणः सर्वरूपत्वात्प्राञ्जलमतस्तथेत्यर्थः ।

तेन वेद्यैक्यादेव विद्यैक्यमित्येतमेवार्थं सूत्रकारोभिप्रैतीति ज्ञापयन्तं सूत्रमेवाग्रिमं पठित्वा व्याकुर्वन्ति **दर्शयति चेत्यादि** । इत्यादिनेत्यादिपदेन रामानुजभाष्यमायावादिभाष्याद्युपन्यस्तश्रुतीनां संग्रहः । तथा च श्रुतिरपि वेद्यैकत्वेन विद्यैकत्वं दर्शयति, न तु स्वतः, दोषं च ब्रह्मभेददर्शने, अतोपि निःप्रत्यूहं ब्रह्मणः सर्ववेदान्तप्रत्ययत्वमित्यर्थः । एतेन श्रीरामादिविद्यानां ब्रह्मविद्यात्वेनैक्यम् विभूतिविद्यानां तु प्राणादिरूपतत्तद्विभूतिविद्यात्वेनैक्यमिति सिद्धम् ॥ १ ॥

अतः परं यदर्थमिदमैक्यं विवेचितं तत्प्रयोजनमुपसंहारसूत्र उच्यत इत्यन्य एकदेशिनो वदन्ति, तथा सत्युपसंहारहेतोरैक्यस्य पूर्वं सिद्धत्वादस्मिन् सूत्र उपसंहारस्तस्मादित्येव वक्तव्यं पदान्तराणां प्रयोजनाभावेन वैयर्थ्यादिति न सोर्थः, किन्तु श्रुतितात्पर्यबोधनाय पूर्वसूत्रोक्तनियमसमर्थनायोपसंहारप्रयोजकज्ञापनाय चैवं सूत्रप्रणयनमित्याशयेनाहुः **नन्वित्यादि । पूर्वसूत्रोक्तरीत्येति**, लैङ्गिकनियमेनेत्यर्थः । **क्वचिदिति**, रूपविशेषे । उक्तावताररूपत्वस्य श्रीराम इति, ब्रह्मधर्मस्य ब्रह्मरूपविशेषे । एवमग्रे रूपान्तरधर्मस्य रूपान्तर इति बोध्यम् । **इत्याशङ्क्येति** । इति अतो हेतोलिङ्गस्य नियामकत्वं यत्पूर्वसूत्र उक्तं तदसार्वत्रिकत्वाद्व्यभिचारीत्ययुक्तमित्याशङ्क्येत्यर्थः । **पदार्थस्येति**, अभिधेयस्य । 'इति रामपदेनासौ परं ब्रह्माभिधीयते', 'तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयत' इति श्रुतिः । तथा च परब्रह्मत्वे श्रुतेस्तात्पर्यं न तु रूपान्तरत्वे, यदि तथाभिप्रेयान्नोपसंहरेदित्यर्थः । अर्थाभेदपदकृत्यमुक्त्वा शेषाणां वक्तुमाहुः **नन्वित्यादि** । विधिशेषशब्दे बहुव्रीहिः । पूर्वं चोप्यर्थे । **समानेपीति**, अर्थाभेदे समानेपि । तथा च तस्य मत्स्यादिरूपत्वमेवोपसंहृतम्, न तु तद्धर्मवत्त्वम्, तेन तेषां तद्रूपधर्मलैङ्गिकनियमबाधो नेत्यर्थः । नन्वयमर्थस्तूपसंहारार्थाभेदादित्यनेनैव सिद्ध इति शेषवैयर्थ्यं दुर्वारमित्यतः पक्षान्तरमाहुः **यद्वेति** । मत्वर्थीयो वत्प्रत्यय इति, वदिति प्रत्ययो योत्र सूत्रे स मत्वर्थीयः । सर्वे सर्वपदादेशा इत्यभिप्रेत्यैवमुक्तम् । अस्मिन् पक्षे विधिशेष इत्यत्र षष्ठीतत्पुरुषः । अस्य यागस्येति चातुर्मास्यप्रथमपर्वणो वैश्वदेवयागस्य । **इत्याशासीतेति**, वैश्वदेवाख्यपर्वणः संवत्सराभिमान्यग्निप्राप्तिहेतुत्वात्तद्यागकाले तदीयसूक्तवाकमध्ये संवत्सरीणामिति मत्र सूक्तवाकाशीःषु

होता आशासीतेत्यर्थः । शेषं प्रकटार्थम् । **उक्तरीतिरिति**, अर्थवादबलात्फलान्तरसाधकत्वम् । तथा च यो मां स्मृत्वा निष्कामः सकामो भवति, यो ध्यायति सोऽमृतो भवतीत्युभयविधार्थवादबलाद्भगवत्स्मरणे उभयफलसाधकत्वमुपसंहरणीयमित्यर्थः । अस्मिन्पक्षे चकारार्थो नोक्त इति, तमाहुः **प्राणादीत्यादि** । **तदादय** इति, बाधका भावादयः । अयमर्थः पूर्वसूत्रेणैव सिद्ध एवेति पुनःसंग्रहे बीजं न पश्याम इत्यत आहुः **वस्तुत** इति, पूर्वसमुच्चयार्थ इति, अर्थाभेदादित्यस्य समुच्चयार्थः । अत्रापि चकारवैयर्थ्यमाशङ्क्य तत्तात्पर्यमाहुः **शास्त्रेत्यादि** । अतो न वैयर्थ्यमित्यर्थः । एवं चाधिकारः प्रायश्चित्तादिरूपबाधकार्थाभेदार्थवादविशेषैर्नियतो गुणोपसंहार इति सिद्धम् ।

पूर्वसूत्र उपसंहारप्रयोजको हेतुरर्थाभेदरूप उक्तस्तं समर्थयितुमिदं सूत्रद्वयमित्याशयेन सूत्रमुपन्यस्य सूत्रं व्याकुर्वन्ति **अन्यथात्वमित्यादि** । **उक्तन्यायेनेति**, अर्थाभेदादित्यनेन अब्रह्मत्वं स्यादिति, तथा चास्मिपक्षे उपसंहारस्यैवासिद्धिरिति भावः । **इति भाव** इति, तथा च शब्दबलकृतनिर्णयस्योभयत्रापि तुल्यत्वेन सिद्धो ब्रह्मत्वेनाभेद इति नोपसंहारासिद्धिरित्यर्थः । पूर्वसूत्रांशाशङ्कितमन्यथासूत्रे प्रकारान्तरेण परिहरतीत्याशयेन सूत्रं पठित्वा व्याकुर्वन्ति **न वेत्यादि** । विकल्पेनेत्यस्यैव त्वस्मिन् विवरणं **पूर्वोक्तादित्यादि** । **नवेति**, तथा च अन्यथा त्वप्रकरणभेदाद्वा नेति सूत्रयोजना । विषयवाक्यं तु तैत्तिरीयसंहिताषष्ठकाण्डद्वितीयाध्यायस्थम् । एवं च प्रकरणभेदेन तत्तदुपयोगिगुणकथनात्तत्र तावतैवार्थसिद्धेरेकरसत्वाग्राह्यत्वाद्यनपायाच्च नाब्रह्मत्वमित्यर्थः फलति । एवं सूत्रद्वयेनोपसंहारसूत्रोक्तो हेतुः समर्थितः । अतः परमस्मिन्नेतत्सूत्रव्याख्याने वक्ष्यमाणाशङ्कानिवृत्तिर्न भवतीत्यरुच्या प्रकारान्तरेण व्याचक्षते **अथवेत्यादि** । **पूर्वसूत्रेणेति**, उपसंहारसूत्रेण । **इत्यत्रेत्यादि**, इति हेतोः अत्रास्मिन् सूत्रे गुणोपसंहारस्य तथात्वमाहेत्यर्थः । **तदेतदुच्यत** इति, एकान्तिभक्तस्वभावतः प्राप्तोऽनुपसंहार एवानूद्यत इत्यर्थः । **एवं प्रकृतेपीति**, एकान्तिभक्तोपलभ्यमानगुणेभ्य इतरेषां सत्वेप्युपसंहारो नेत्यर्थः । अस्मिन् सूत्रेऽधिकारभेदादुपसंहारो व्यवस्थापितस्तां व्यवस्थामग्रिमसूत्रे हेत्वन्तरेण दूषयित्वा तस्मिन् हेतौ दोषप्रदर्शनेन तां पुनर्द्रढयतीत्याशयेनाग्रिमसूत्रं पठन्ति **संज्ञात इत्यादि** । नन्वधिकारस्यान्तरत्वेपि प्रमाणेष्वगणनान्न बलीयस्त्वमित्यत आहुः **संज्ञैकत्वस्येत्यादि** । **प्रमित भेदेष्विति**, छान्दोग्ये 'ओमित्येतदक्षरमुद्गीथमुपासीते'त्युद्गीथावयवं प्रणवं प्रस्तुत्य रसतमादिगुणोपन्याख्यानपूर्वकं देवासुराः संयेतिरे'त्यादिना अथ ह्य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिर इत्युद्गीथावयवप्रणवविषयमुपासनमुच्यते, वाजसनेयके तु 'हन्तासुरान्यज्ञ उद्गीथेनात्ययामे'ति कृत्स्नमुद्गीथं प्रस्तुत्य 'अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेती'त्यादिना कृत्स्नोद्गीथविषयमुच्यते, तेन प्रकरणभेदे विषयभेदाभ्यामुपासनभेदः प्रमीयत इति तथेत्यर्थः । न च नैर्बल्यमधिकारस्य, प्रकरणान्तःपातित्वेन समाख्यापेक्षया प्रबलत्वात् । एवं पूर्वसूत्रद्वितीयवर्णकेनानेन सूत्रेण चेत्येवं सूत्रद्वयेन समाचारसूत्रे याधिकारस्योपसंहारनियामकतोक्ता सा प्रपञ्चिता । पूर्वसूत्राभ्यामपि तदुपयोग्येवोक्तमिति । चतुःसूत्री तस्यैव शेष इति बोधितम् ॥ २ ॥

अतः परमधिकरणान्तरेण पुनर्धर्मानेव विचारयतीत्याशयेन सूत्रं पठन्ति **व्याप्तेरित्यादि** । ननु विरुद्धगुणाशङ्कितमब्रह्मत्वं पूर्वं परिहृतमेवेति किमनेनाधिकरणेन विचार्यत इत्याकाङ्क्षायां तद्विषयादिकमाहुः **बाल्येति**, **तथा सतीति**, प्राकृतत्व इति । **तत्रोक्तमिति**, श्रुत्युक्तम् । **सर्वमिति**, उपास्यरूपेषु साधितब्रह्मत्वं तत्त्वेनोपासनादिश्रुतिविरोधपरिहारश्चेत्यर्थः । सिद्धान्तग्रन्थस्तु निगदव्याख्यातः । **क्रमेणेत्यादि** । सर्वरसश्रुत्याक्षेपलभ्येन क्रमेण 'तस्यैष आत्मा विवृणुते तनूं

ख्ला'मिति श्रुतिलभ्येन वृतेष्वावरणात्मकयोगमायापसारणेन तथात्वात्सर्वभवस्थाप्रतीत्यादिकमुपपन्नमाक्षेपलभ्यत्वाच्छ्रौतमिति ब्रह्मणस्तादृशत्वान्न काप्यसामञ्जस्यमिति भावः ।

अन्ये तु । अन्यथात्वादिसूत्रत्रयात्मकमधिकरणान्तरं कल्पयन्ति । तत्रोद्गीथविद्यां विषयीकृत्यान्यथात्वसूत्रे मुख्यप्राणस्योपास्यत्वाङ्गीकारेणैक्यप्रतिज्ञासाधकहेतुना विद्यैक्यं पूर्वपक्षीकृत्य नवेत्यादिसूत्राभ्यामुद्गीथावयवप्रणवकृत्स्नोद्गीथयोर्वेद्ययोर्भिन्नत्वं संज्ञायाः साधारणत्वं च प्रदर्श्य, विद्याभेदं सिद्धान्तयन्ति । ततो व्याप्तिसूत्रेऽप्यधिकरणान्तरम् । 'तत्रोमित्येतदक्षरमुद्गीथमुपासीते'ति सामानाधिकरण्ये प्रतीयमानेऽध्यासापवादैकत्वविशेषपक्षाः सम्भवन्ति । तत्राध्यासपक्षे लक्षणाप्रसङ्गादपवादपक्षे फलाभावप्रसङ्गात्पर्यायताविरहेणैकत्वस्याप्यभावात्परिशिष्टो विशेषणपक्षः सिद्धयति । व्यावर्तकं हि विशेषणं यथा नीलं यदुत्पलं तदानयेति, तथोद्गीथो य ॐकारस्तमुपासीतेति सर्ववेदव्यापिन ॐकारस्य ग्रहणप्रसङ्गे उद्गातृविषयस्य समर्पणमिति । तत्र भेदस्योच्चारणगतत्वेनोत्पलानामिवौङ्कारस्य नानात्वाभावात्प्रत्यनुवाकर्ग्रुपक्रमसमास्यादिष्विव सामभक्तावुद्गीथावयवत्वेनापि सर्ववेदव्यापिनस्तस्यैव सत्वादुद्गीथपदेन कस्य व्यावृत्तिरिति निर्वचनाशक्त्या सामञ्जस्यासम्भवात्सूत्रविरोधः स्फुटति । एतदपेक्षया ये सूत्रचतुष्टयात्मकमधिकरणं वदन्तोऽनेनापि विद्यानानात्वं साधयन्ति, त एव युक्तं वदन्ति ।

प्रकृतमनुसरामः । एवमवस्थास्वरूपनिरूपणेनासामञ्जस्यं परिहृत्य तासां तथा स्वरूपाङ्गीकारे प्राप्तदोषस्य परिहारायोत्तरं पठन्तीत्याशयेनाहुः नन्वित्यादि । तत्तद्भक्तविशिष्टा इति, तत्तद्भावक्रीडोपयोगिभक्तविशिष्टाः । श्रूयत इति । कृष्णोपनिषदि देवप्रार्थितदानोत्तरं 'यो नन्दः परमानन्दो यशोदा मुक्तिगेहिनी'त्यादिना श्रीनन्दादिवृन्दापर्यन्तानां स्वरूपश्रावणात् 'सोऽवतीर्णो महीतले', 'वने वृन्दावने क्रीडन् गोपगोपीसुरैः सहे'ति तैः सह क्रीडाश्रावणाच्च तथेत्यर्थः । तथा सति यो दोषस्तमाहुः तथा चेत्यादि । नित्यत्वेनेति, ब्रह्मधर्मत्वाविशेषान्नित्यत्वेन । एवं सतीति, पूर्वलीलाभक्तयोर्नित्यत्वेन तल्लीलावैशिष्ट्यस्यापि नित्यत्वे सति । भिन्नत्वं स्यादिति, एकस्यैकदाऽनेकलीलासम्बन्धस्याशक्यवचनत्वात्तथात्वं स्यात् । अनुभवेत्यादि, अनुभवो लीलास्थानाम्, तदावेदकमानमुक्तश्रुतिः । भिन्नत्वं तदुभयविरुद्धम्, तथा च लीलानित्यत्वे भक्तभेदप्रसङ्गो भक्ताभेदे च लीलानित्यत्वभङ्ग इत्युभयतःपाशारज्जुरित्यर्थः । एतत्परिहाराय सूत्रं पठित्वा व्याचक्षते लीलेत्यादि । ब्रह्मणा सहाभेदादिति, 'तस्मान्न भिन्ना एतास्ता आभिर्भिन्नो न वै प्रभु'रिति कृष्णोपनिषन्मन्त्रे अभेदश्रावणात्तथेत्यर्थः । नन्वस्तु ब्रह्माभेदो भक्तस्वरूपस्य, परं लीलायाः कथं नित्यत्वसिद्धिरित्याकाङ्क्षायां तदर्थमभेदप्रकारं व्याकुर्वन्ति अत्रेत्यादि । तत्तादात्म्यं रसस्येति, अनेन प्रपञ्चस्य यद्ब्रह्मतादात्म्यं तस्मादिदं विलक्षणमिति बोधितम् । तथा च सच्चिदानन्दात्मकमपि ब्रह्म यदा भक्तहृदयेष्वाविर्भवति, तदा स्वस्य रसत्वं रसशास्त्रोक्तप्रनाड्या प्रकटयतीति श्रुत्युक्तलीलाप्रकारान्यथानुपपत्त्याऽवसीयते, सोप्याविर्भावप्रकारस्तेन प्रकारेण मायापसारणहेतुक इति ते स्वज्ञानानुसारेण तत्तत्कालिकत्वं लीलानां मन्यन्त इति न लीलास्वरूपनित्यत्वभङ्गः । इयं कल्पना श्रुतार्थापत्तिसिद्धेति सर्वाभेदो निःप्रत्यूहः लीलानित्यभङ्गात्मकविघ्नरहित इत्यर्थः । करुणादीनां त्वनुक्रियमाणानामेव रसत्वमिति न काप्यनुपपत्तिः । अत्र किंचिदाशङ्क्य परिहरन्ति नन्वित्यादि । सामंजस्यादित्यन्तम् । प्रादुर्भाव इति, विचार्यमाण इति शेषः । प्रकटार्थमन्यत् ।

अभेदे प्राप्तस्य दोषस्य परिहारायाग्रिमं सूत्रमित्याशयेनाहुः नन्वित्यादि । नियमादिति, अयं नियम आकाशपरिमाणे आत्मचेतनायां च स्फुटः ॥ ३ ॥

एवं त्रिसूत्र्या भक्तिप्रकरणीया ब्रह्मधर्मा विचारिताः । अतः परमुपासनामार्गे भक्तिमार्गे च तदुपसंहारानुपसंहारौ चिन्तयतीत्याशयेन सूत्रं पठन्ति ।

प्रियेत्यादि । प्रमेयपरस्य प्रमाणमनुसृत्य भक्तिमार्गे प्रवृत्तस्य प्रियशिरस्त्वादयो भावनीया न वेति संशयं हृदिकृत्य तन्निवृत्तये पूर्वपक्षं परिहरतीत्याशयेनाहुः नन्वित्यादि । अत्रापीति, भक्तिमार्गे । चित्तशुद्धीत्यादि । अत्र सूत्रार्थ एवं व्याकृतो बोध्यः । भेदे, चित्तशुद्धितारतम्ये सति, हि यस्माद्धेतोः उपचयापचयौ प्रमोदमोदरूपावानन्दोपचयापचयौ स्वबुद्ध्या भासेते इति शेषः । न तु तारतम्याभावे, अतः प्रियशिरस्त्वाद्यप्राप्तिस्तदनुपसंहार इति । यद्वा, यतो भेदे ब्रह्मणः सकाशाद्भेदे तौ लीलास्थानां तु ब्रह्माभेदस्य पूर्वमुक्तत्वाच्चित्ते तारतम्याभावेन नोपचयापचयभानं सम्भवतीति तदनुसारिणः स्वरूपपरस्य न तदुपसंहार इत्यर्थः । अस्मिन् वर्णके उपासनामार्गीयनिर्णयो नोक्त इति, वक्ष्यमाणां शङ्कां चैवं नापैतीति मनसिकृत्य पक्षान्तरमाहुः अथवेत्यादि । अयुक्तत्वादिति, लिङ्गस्य नियामकत्वेनायुक्तत्वात् । तद्रूपस्येति । पक्षिरूपस्य । पुरुषरूप इति, अथर्वणोपनिषदुक्तपुरुषरूपः । तथात्व इति, आनन्दमयत्वे । देशभेदेनेति, दक्षिणोत्तरपार्श्वस्थत्वेन । पक्षेपीति, अपिः समुच्चयार्थः । तत्रेति । ब्रह्मणि । न त्वनुक्तरूपत्वमिति, नोपचयापचयरूपत्वम् । निरूपितमिति, 'पुरश्चक्र' इति श्रुतिविचारे निरूपितम् । तथा च तत्रालौकिकशरीरे भक्तानां देहादिस्थित्यर्थमन्नमयादिरूपस्तत्र तत्र प्रविशतीत्युक्तम्, तेन जीवे पक्षिरूपेण प्रविशतोऽवयवा भिन्ना एव, ते जीवस्य यथाधिकारं प्रियादिरूपेण भासन्ते, न तु तेषां तथात्वं नित्यत्वादतो दोषाभावादुपासनामार्गेऽत उपसंहार्याः, भक्तिमार्गे तद्भानाभावात्तन्मार्गीयैर्नोपसंहार्या इति पूर्वोक्ताधिकारनियता वर्णकद्वयसिद्धा व्यवस्था । यत्तु, कोशधर्मानेतान्ब्रह्मधर्मत्वेन परिकल्प्य न्यायमात्रमाचार्येण दर्शितमिति वदन्ति, तदप्येतेन परास्तं ज्ञेयम् । आनन्दमयाधिकरणे तत्प्रपञ्चनाच्च । पौनरुक्त्यपरिहारायाहुः यद्यपीत्यादि । इयमिति, अब्रह्मधर्मत्वविषयिणी ।

अत्र वर्णकद्वयेन या व्यवस्थोक्ता, सैवाग्रे सूत्रत्रयेण दृढीक्रियत इत्याशयेन पूर्वत्र हेतुं विवरीतुं सूत्रमवतारयन्ति नन्वित्यादि । सूत्रयोजना तु पूर्वसूत्रस्थाप्राप्तिशब्दात् नञमपसार्य धातुं कृत्यप्रत्ययान्तं कृत्वा प्राप्यपदेन कार्या । तस्यैवार्थ उपसंहार्या इति । नन्वयमर्थ उपसंहारसूत्र एव सिद्ध इति पुनः किमित्युच्यत इत्याकाङ्क्षायां कश्चिद्विशेषमाहुः तत्रेत्यादि । तथा चाविरोधबोधनाय पुनः प्रपञ्च इत्यपुनरुक्तिरित्यर्थः । अनेन सूत्रेण ब्रह्मत्वेनोपासने लिङ्गं न नियामकमिति निगमितम् ।

उत्तरत्र हेतुं विवरीतुमग्रिमसूत्रमवतारयन्ति अथेत्यादि । सूत्रयोजना तु इतरपदाप्राप्यपदानुषङ्गेन बोध्या । ननु प्रयोजनाभावेप्यधिकस्याधिकं फलमिति तदुपसंहारे को दोष इत्यत आहुः अन्येषामनुपसंहार इत्यादि । अविवक्षितत्वादिति । तथा चाविवक्षितसङ्ग्रह एव दोष इत्यर्थः । तत्रेति, अविवक्षितत्वे । तथा 'चानन्द आत्मे'त्यात्मशब्दो मध्यं वदन्नथानन्दपदसामानाधिकरण्यात्प्रियादीनां स्वरूपमेव संगृह्णाति, न त्वाकारमपीति पक्षादयो न विवक्षिता इत्यर्थः । नन्वाकारपूरणार्थः पठित आत्मशब्द आकारे तात्पर्यरहित इत्यत्र किं मानम्, तथात्वे वा तन्निरूपणस्य किं प्रयोजनमतमाहुः अग्र इत्यादि । तथा चोक्तानन्दमयविवरणे तस्य रसात्मकत्वश्रावणेन च तथावगम्यत इत्यर्थः । तेन सिद्धमन्यत्फलद्वयमाहुः एतेनेत्यादि ज्ञेयमित्येतेन । केचित्तु द्विसूत्रमाध्यानाधिकर(णं)भिन्नं परिकल्प्य, 'इन्द्रियेभ्यः परा ह्यर्था' इत्यादि 'सा काष्ठा सा परा गति'रित्यन्ते विषयवाक्येऽर्थादीनां ततस्ततः परत्वप्रतिपादने प्रयोजनाभावा काष्ठेत्यादिना पुरुषविषयका-

दरप्रदर्शनाच्च तस्यैव परत्वं प्रतिपाद्यत इति सिद्धान्तयित्वा, आध्यानशब्द आध्यानपूर्वकसम्यग्दर्शनार्थत्वेन विवृतः । तन्न । आध्यानपदे लक्षणापेक्षया विषयवाक्यान्तरोपन्यासस्यैव ज्यायस्त्वात् । अस्मिन्सूत्रे साध्यानिर्देशेन प्रियशिरस्त्वाधिकरणशेषत्वस्य स्फुटत्वात् । विषयवाक्येप्यर्थादौ परत्वप्रतिपादनस्य तद्बलिष्ठताबोधनार्थत्वेन सप्रयोजनकत्वात् । अन्यथा तत्त्यागनिग्रहाद्यनास्थाया'मिन्द्रियैर्विषयाकृष्टै'रिति स्मृत्युक्तप्रणाड्या तैः प्रबलानर्थप्रसङ्गात् । ज्ञाते तु तत्तन्नियामकतया तत्तत्परत्वे तत्त्यागनिग्रहादिभिः पुरुषनिष्ठपरत्वप्रतिपत्तिसौकर्यमिति तदर्थमिदं नानावाक्यघटितं महावाक्यं तत्तत्परत्वप्रतिपादनपूर्वकपुरुषपरत्वप्रतिपादनपरं तद्विरोधाच्चेति दिक् ॥ ४ ॥

एवं चतुःसूत्रेणानेनाधिकरणेनोपसंहारो व्यवस्थापितः । अतः परं तत्प्रसङ्गेनानन्दमयाधिकरणशेषमेव चिन्तयतीत्याशयेन सूत्रं पठित्वाधिकरणं रचयन्ति आत्मेत्यादि । **तथा सतीति**, एष इत्यनेन पूर्वस्यान्नमयस्यात्मा परामृश्यते, अभिमानी च लोके जीवो दृश्यत इति जीवत्वे सतीत्यर्थः । ननु तस्मिन्प्रकरणे शारीर आत्मेतिवदन्तर आत्मेत्यप्यात्मग्रहणमस्तीति कथमस्यैव ग्रहणं विनिगम्यत इत्यतः पक्षान्तरमाहुः **अथवेत्यादि** । य इति, प्राणमयादिः । तथा च तयापि अन्तरात्मत्वमानन्दमय एव समाप्यते, तेन निर्व्याज आत्मा स एवेति 'शारीर आत्मे'त्यत्रापि स एव परामृश्यत इति मास्तु विनिगमना, तथापि नोक्तार्थव्याहतिरित्यर्थः । अग्रिमसूत्रार्थस्तु स्फुट एव ॥ ५ ॥

एतस्यैव दार्ढ्यायाग्रिमं पठतीत्याशयेन सूत्रं पठित्वाधिकरणमारचयन्ति **कार्येति** । **पूर्वोक्त** इति, अन्नजन्यः । **पूर्वस्येत्यादि** । अयमर्थः । अन्नमयश्लोके अन्नस्य ब्रह्मत्वेनोपासनाय यदि ब्रह्मधर्माः स्तुत्यर्थमुच्येरंस्तदा 'अन्नाद्वा' इत्यादिना पूर्वमुक्त्वा ततः 'सर्वं वै तेऽन्नमाप्नुवन्ति येऽन्नं ब्रह्मोपासत' इति सफलमुपासनमात्रं वदेन्न तु पुनरपि 'अन्नं हि भूतानां ज्येष्ठ'मित्यादिना भूतजनकत्ववर्द्धकाभ्यां धर्माभ्यां भूतव्याप्तिबाधकमतति सततं व्याप्नोतीत्यन्नमिति निर्वचनं सूचयेन्ना'प्यद्यते च भूतानि तस्मादन्नं तदुच्यत' इति च निरुच्यात्, प्रयोजनाभावात्, उपासनायाः पूर्वस्तुत्यैव सिद्धेः । एवं सत्यपि यदेवं निर्वक्ति, तेन कार्यरूपादन्नादेतं व्यवच्छिनत्ति, प्रपाठकान्तरेपि तस्मिन्ब्रह्मत्वविज्ञानं ब्रह्मात्मकतपोरूपसाधनेन वक्ति, न तु यथाकथंचित्, तेनान्नस्य पूर्वविलक्षणत्वमवश्यं वक्तव्यम्, 'विश्वभृद्वैनामैषा तनूर्भगवतो विष्णोर्यदिदमन्न'मिति 'स वा एष पुरुषः पञ्चधा पञ्चात्मा येन सर्वमिदं प्रोतं पृथिवी चान्तरिक्षं चे'ति श्रुत्यन्तरे भगवत्तनुत्वव्यापकत्वादिश्रावणाच्च, एवं सिद्धे वैलक्षण्ये 'स वा एष पुरुषोऽन्नरसमय' इत्यत्र तदेतच्छब्दाभ्यां वक्ष्यमाणपरामर्श एव युक्तो न प्रकृतस्य निरुक्तलिङ्गाभ्यासादिविरोधात् । तदेतदुक्तम् । **न वा तदपीत्यादि** । **एवमेवेति** । तपोरूपसाधनस्येत्यर्थः । तेन सिद्धमाहुः **अत एवेत्यादि** । कार्यपुरुषवैलक्षण्येनाध्यात्मिकत्वादेवेत्यर्थः । एवं पूर्वाधिकरणेनानेन वर्णकेन चानन्दमयविद्यायामात्मपदं परब्रह्मपरमित्यापाततो मायावादिनो निरासायान्नमयादिपुरुषास्तद्विभूतय इति तेषां विभूतिरूपेणोपासनाय च तद्विद्याशेषो विचारितः । अस्मिन् पक्ष एकसूत्रमेवेदमधिकरणम् । अतःपरमुपासनबोधके श्रुत्यन्तरेप्यात्मशब्दः परब्रह्मपर एवेति बोधयितुं प्रकारान्तरेणैतद्व्याकुर्वन्ति **अथवेत्यादि** । **वाजसनेयिशाखाया**मिति, तस्यां बृहदारण्यके पुरुषविधब्राह्मणे । **अन्यत्रेति**, मैत्रेयीब्राह्मणे । **अपूर्व**मिति, पुत्राद्यभिमानिदशायां वेद्यात्प्रतीचो भिन्नम् । तदेव विवृण्वन्ति **पूर्वं त्वित्यादिना** । ननु प्राणनादिकथनात्प्रत्यगात्मातिरिक्त आत्मा कथं निश्चेय इत्यत आहुः **लोके हीत्यादि** । **अत एवेति**, जीवभिन्नत्वादेव । लिङ्गान्तरमाहुः **अत एवेति** । जीवभिन्नत्वेनेश्वरत्वादेव । **एतेनेति**, प्राणनादिकार्याख्यानेनेश्वरो हि तथा स्यादिति तत्तद्रूपताख्यानेन चेत्यर्थः । अधिकरणप्रयोजनमाहुः **तेनेत्यादि** । **उपसंहर्तव्या इति**, अवतीर्णे स्वरूपेऽनुसन्धेया इत्यर्थः । अग्रिमसूत्रस्यैतच्छेषत्वं बोध-

यितुमवतारयन्ति **नन्वित्यादि** । तथा च तरुकुसुमयोरिव स्वगतद्वैतमापततीति तत्परिहारायोत्तरं पठतीत्यर्थः । ननु भिन्नप्रकारकप्रतीतौ विद्यमानायां कथमभेदसिद्धिरित्यत आहुः **अत्रेत्यादि** । **स** इति, औपनिषदः पुरुषः । **स चेति**, व्यवहारश्च । न च तस्य व्यवहारस्याप्रामाणिकत्वं शक्यशङ्कम् । वरणकृतस्वतनुविवरणैकसाध्यत्वात् । पूर्वपादे 'प्रकाशवच्चावैयर्थ्या'दित्यादिसूत्रद्वये तदुपपादनात् । तदेतत् हृदिकृत्याहुः **एवं सतीत्यादि** । अत्र लौकिकयुक्तेः कौण्ठ्यमेव श्रुत्याशयगोचर इत्याशयेनाहुः **एवंविध इत्यादि** । सिद्धमाहुः **एतेनेति**, ईश्वरस्य तथात्वश्रावणेनेत्यर्थः । इमामेव श्रुतिं हृदि (कृत्य) प्रकारान्तरेण सूत्रं योजयन्ति **एवं सत्याविरित्यादि** । अस्यां श्रुतावुक्तस्येश्वरत्वस्य साहजिकत्वेन तादृगाकारस्य सार्वदिकत्वे सति तथेत्यर्थः । अत्र च 'विश्वतश्चक्षु'रित्यादिश्रुतयोऽनुसन्धेयाः । पूर्वं चोप्यर्थे उक्त इत्यस्मिन्पक्षेऽर्थान्तरमाहुः **चकार इत्यादि** । **साक्षादाविर्भूत इति** । सत्वाद्यधिष्ठानमनपेक्ष्यस्वरूपेणाविर्भूत इत्यर्थः ॥ ६ ॥

एवमवतारोपासनादौ गुणोपसंहारं विचार्यविशेषे तं विचारयतीत्याशयेनाग्रिमाधिकरणमवतारयन्ति **अथेत्यादि** । श्वेताश्वतरोपनिषदि 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ, तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन' इति गुरुभक्तेर्देवभक्तिवदतिदिष्टत्वात्, 'योन्तर्बहिस्तनुभृतामशुभं विधुन्वन्नाचार्यचैत्यवपुषा स्वगतिं व्यनक्ती'ति स्मृतावाचार्यचैत्यस्य वपुष्ट्वकथनेन तत्र भगवदावेशस्योक्तत्वात् लोकोद्दिधीर्षया तत्राविशति, तथा गोपालतापनीये मथुरासमीपस्थवनस्थिता द्वादशमूर्तीरुक्त्वा 'ता हि ये यजन्ति ते मृत्युं तरन्ति मुक्तिं लभन्त' इत्यादिफलमुक्त्वाऽग्रे 'मथुरामण्डले यस्तु जम्बूद्वीपे स्थितोपि वा, योर्चयेत्प्रतिमां मां च स मे प्रियतरो भुवि, तस्यामधिष्ठितः कृष्णरूपः पूज्यस्त्वया सदे'त्यादिभिः प्रतिमां लक्ष्यीकृत्य स्वपूजनं सर्वेषामुक्तम्, प्रतिमायामधिष्ठानकथनेन स्वावेशश्चोक्तः । तदेतदुक्तं 'कार्यचिकीर्षया जीवे स्वयमाविशतीति जीव इत्युपलक्षणम्' । **विकल्पेनेति**, मार्गभेदव्यवस्थितविकल्पेनेत्यर्थः । प्रतिमासङ्ग्रहार्थमाहुः **तत्त्वेन व्यपदेशादिति** । **अत्रैवं ज्ञेयमिति**, उपासनामार्गे व्यवस्थितस्य पक्षस्य बीजं वक्ष्यमाणप्रकाराभ्यां बोध्यमित्यर्थः । प्रकारद्वयेप्यभिसन्धिमात्रं नोपसंहारप्रयोजकं किन्त्वावेश इत्याहुः **तत्रेत्यादि** । न च गुरौ भक्तिरेवोक्ता न तूपासनेति तद्व्यवस्था न सङ्गतेति शङ्क्यम् । तैत्तिरीये 'वेदमनूच्याचार्योन्तवासिनमनुशास्ती'त्युपक्रम्य 'यान्यस्माक९ सुचरितानि, तानि त्वयोपास्यानी'ति गुरुसुचरितोपासनस्योक्तत्वात्, न चोपासनपदं कर्तव्यार्थकम् । 'यान्यनवद्यानि कर्माणि, तानि सेवितव्यानी'ति पूर्वमुक्तत्वात्तेनैव सिद्धेः । 'एवं गुरूपासनयाशितेने'त्येकादशस्कन्धे स्मरणाच्चेति दिक् । निषेधपक्षो भक्तिमार्गीय इति बोधयितुं द्वितीयसूत्रमवतारयन्ति **यस्त्वित्यादि** । **भक्तिमार्गीय इति**, प्रेमोत्कर्षोत्तथेत्यर्थः । नन्वेवं तस्य विस्मृतभगवत्कत्वे उपसंहारप्राप्तेरेवाभावान्निषेधार्थस्य नञोसङ्गतिरित्यत आहुः **भगवदवतारेत्यादि** । तथा च प्रियशिरस्त्वसूत्रे या अप्राप्तिरुक्ता, तामत्रान्यधर्मविषयिणीमनुवदतीति नासङ्गतिर्नञ इत्यर्थः । अयमेवाशय इत्यत्र गमकं वदन्त उत्तरसूत्रमवतारयन्ति **अपि चेत्यादि** ॥

तृतीयसूत्रमवतारयन्ति **नन्वित्यादि** । **तत्सम्भारकस्येति**, वीर्यसम्भारकत्वस्य । **उपसंहारं करिष्यतीति**, 'तं यथा यथोपासत' इति श्रुतौ स्वाभिसंहितरूपेणैवावनस्योक्तत्वात्स्वैहिकपारलौकिकार्थमुपसंहारं करिष्यतीत्यर्थः । **तत्रैवोक्तमिति**, भजनरसास्वादने एतदपेक्षया विशेषादिति पूर्वसूत्र एवोक्तमित्यर्थः । अयमेव सूत्रकाराशय इत्यत्र गमकमाहुः **विषयेत्यादि** । तथा च विनाप्युपसंहारं तल्लौकिकालौकिकसम्पादनादलौकिकानुभावप्रदर्शनाच्च नोपसंहारशङ्कात्रेति पूर्ववदत्रापि भक्तस्वभावस्यै-

वानुवादः । श्रुतेरनारभ्याधीतत्वेन भक्तहृद्याविष्टभगवद्भक्तत्वाभावात्पूर्वोक्तो व्यासाशयो न निर्णेतुं शक्यत इति विषयवाक्यं तात्पर्यकथनपूर्वकं तमुद्घाटयन्ति अन्यथेत्यादि । तथा च तुरीयपादेनाविर्भूतब्रह्मविषयकत्वे श्रुतेर्निश्चिते यद्द्वयोरेवानुपसंहारकथनं तेन तथेत्यर्थः ॥ ७ ॥

एवमनारभ्याधीतानां धर्माणां भक्तिमार्गेऽनुपसंहारमुक्त्वा उत्तमाधिकारिभिरशेषगुणपूर्णं परब्रह्मैवोपास्यं न तु विभूतिरूपमिति बोधयितुमुपासनामार्गेऽपि विशेषेणुपसंहारं वदतीत्याशयेन सूत्रं पठित्वाधिकरणं रचयन्ति पुरुषेत्यादि । अत्र हीति, पुरुषविद्यायाम् । अनेकत्वोपलक्षणतात्पर्यमाहुः तेनेनेत्यादि । तत्रेति, अन्नमयाद्युपासनाप्रकरणे । स इति, अन्नमयादिः । वैलक्षण्यान्तरमाहुः किञ्चेत्यादि । तथात्वेनेति, मूलभूतब्रह्मत्वेन । एतदधिकरणसिद्धमर्थमाहुः तेनेत्यादि । एतेनेदं बोधितं व्यासचरणानां परब्रह्मपरत्वभवन एव तात्पर्यादस्माभिरेवमधिकरणानि व्याख्यायन्ते । उत्तमाधिकारिणां तावतैवार्थसिद्धेः । इतरैस्तु साधारणाधिकारिणामर्थे उच्यन्ते । न हि शत्रुञ्जयः षोडशवर्षशतजीवनं श्रीकीर्त्यादिकमुत्तमस्याभिलषितं भवति । तेन नात्र (चोद्य)चोद्यावसर इति ॥ ८ ॥

अग्रिमाधिकरणमवतारयन्ति अथेत्यादि । कुतो न वाच्यमित्यत आहुः न हीत्यादि । उपासनार्थमितरेषां पाप्मवेधः सञ्चुच्यत उतासञ्चुच्यते, यद्याद्यः पक्षस्तदा न संशयापायः । यदि द्वितीयस्तदोक्तदोषापत्तिरित्यर्थः । नन्वर्थवादाधिकरणे विधेयस्तावकत्वेनार्थवादानां प्रामाण्यं पूर्वतन्त्रे व्यवस्थापितम्, 'विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्यु'रिति, एवं च यथाकथञ्चन स्तुत्याप्युपासनरुचिसिद्धेर्नाप्रामाण्यमिति चेत्तत्राहुः एकत्रेत्यादि । स्तुत्यंशे असन्तमर्थं वदतीति निश्चिनुयात्तदा विचारकस्य विध्यंशेऽपि तथात्वसन्देहोद्भवे तत्र प्रवृत्तिव्याघातेन विधेः प्रवर्तकत्वसिद्धान्तो व्याहन्येत, वैयर्थ्यं च वेदस्य स्यात्, न च मध्वादिविद्यासु कल्पनोपदेशस्य व्यासपादैरङ्गीकारादत्रापि तथास्त्विति वाच्यम् । भूतार्थकप्रयोगविरोधापत्तेः । मध्वादिविद्यास्वपि 'तस्य द्यौरेव तिरश्चीनवꣳशोन्तरिक्षमपूर्वम्' इत्याद्युद्देश्यं रूपंविशिष्टस्यैव रूपान्तरविधानदर्शनेन तावन्मात्रस्यैव काल्पनिकत्वात् । अन्यथा तत्रापि 'ता एता ऋच एतमृग्वेदमभ्यतप'न्नित्यादिबाधापत्तेः । न चार्थवादेषु सर्वत्र यथाश्रुतार्थग्रहण 'आदित्यो यूपः यजमानः प्रस्तरः । गो अश्वा एव पशवोऽन्ये त्वपशव' इत्यादिगौणीव्युच्छेद इति वाच्यम् । तत्र प्रत्यक्षविरोधेन गौणीस्वीकारात्तदनुच्छेदात् । असति प्रमाणान्तरविरोधे तद्दृष्टान्तेनान्यत्र तथा वक्तुमशक्यत्वात्, तथासति 'प्रतितिष्ठन्ति ह वै य एता रात्रीरुपयन्ती'त्यादावार्थवादिकफलस्याप्यनङ्गीकारापत्तेः । तस्माद्यत्र प्रमाणान्तरविरोधस्तत्रैव कल्पनोपदेशाद्धिः, नान्यत्रेति निश्चयः । तदेतद्धृदिकृत्वाहुः साक्षादित्यादि । पूर्वतन्त्रविचारेणैवं परम्पराक्रियार्थत्वमुक्त्वा उत्तरकाण्डविचारेण साक्षात्क्रियार्थत्वमेवेत्याहुः वस्तुत इत्यादि । य एवं वेदेति । वाक्यैरिति, 'एतद्वै छन्दसां वीर्यमाश्रावयास्तु श्रौषड्यज ये यजामहे वषट्कारो य एवं वेद स वीर्यैरेव छन्दोभिरर्चति, इन्द्रस्य वा एषा यज्ञिया तनूर्यद्यज्ञस्तामेव तद्यजन्ति य एवं वेदोपैनं यज्ञो नमती'त्या(दि)जातीयैर्ज्ञानफलबोधकवाक्यैरित्यर्थः । तमेवेति हेतुमेव । तर्ह्यासन्यस्य कथं ब्रह्माभेद इत्यत आहुः आसन्यस्त्वित्यादि । अर्थशब्दस्यार्थान्तरग्रहणेऽप्ययमर्थः सिध्यतीत्याशयेन पक्षान्तरमाहुः अथवेत्यादि । उच्यमानैरिति, उपास्यत्वादिलिङ्गैः ॥ ९ ॥

अग्रिमाधिकरणमवतारयन्ति एवमित्यादि । तत्रेति, भगवत्सम्बन्धे । पठ्यत इति, मुण्डके पठ्यते । एतत्पूर्वार्द्धं तु 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनि'मिति । इति योजनेति, अनेन परममुत्कृष्टं साम्यं समत्वमद्वैतलक्षणं उपैति अवगच्छतीति योजना निरस्ता । अद्वैतस्य वैलक्षण्याभावरूपत्वेन लक्षणाप्राप्तात्, साम्यस्य द्वयधर्मत्वेन तदभावरूपतायां श्रुतिविरोधप्रसङ्गाच्च

तदपेक्षया पदावृत्त्यार्थान्तरग्रहणस्यैवौचित्यात् । हानाविति । सूत्रे तुशब्देन श्रुत्यन्तरे समाभ्यधिकनिषेधाद्त्र साम्यपदं लक्षणयाऽद्वैतपरमितिपक्षो निरस्यते, तथा चेह साम्यशब्दो नाद्वैतपरः, किन्तु हानौ ओहाक् त्यागे । ब्रह्मणा सृष्टीच्छया स्वरूपात्यागे विभागस्य पूर्वस्थितित्यागात्मकत्वादविभागे इति यावत्, तस्यां सत्यां ये धर्मास्तिरोहितास्ते परमोपायने आविर्भूतास्तत्प्रयुक्तसाम्यपरः । तत्र हेतुः उपायनेत्यादि । दृष्टान्तः कुशेत्यादि । 'कुशाछन्दःस्तुत्युपगानवत्' प्रस्तोतृस्थापितकुशाछन्दःस्तुत्युपगानसाधनभकारवदिति योजना । हानिशब्देनोच्यत इति, त्यागात्मकत्वात्क्षयात्मकत्वाद्वोच्यत इत्यर्थः । तद्वेति, ब्रह्मसम्बन्ध एव । अत्राभेदबोधनादिति । जीवे ब्रह्माभेदबोधनात् । तदुक्तपदसूचितमर्थान्तरमाहुः अपि चेत्यादि । ब्रह्मधर्मवदिति, अत्र तत्सूचनवदित्यर्थः । उपसंहारप्रकरणे धर्मसाम्यविचारस्यासङ्गतत्वान्नायमधिकरणार्थ इत्याशङ्कायामाहुः यथेत्यादि । तथा चोपसंहारसादृश्यात्प्रासङ्गिकमेतन्निरूपणम्, फलविचारे उपयोक्ष्यमाणत्वाच्च प्रसङ्ग इत्ययमेवाधिकरणार्थ इत्यर्थः । यत्तु उपायनशब्दस्य हानशब्दशेषत्वं कैश्चिद्व्याख्यातम् । तच्चिन्त्यम् । आथर्वणिकश्रुतोपायनशब्दस्य फलबोधकत्वेन हानशेषत्वाभावेन, तस्य विषयवाक्यत्वाभावप्रसञ्जकत्वात् । 'तदा विद्वान् पुण्यपापे विधूये'त्येतावन्मात्रस्यैव विषयवाक्यत्वेप्याथर्वणताण्डिकौषीतकिश्रुतिषु कम्पनार्थकविधूननशब्देन हान्यर्थलाभात्तस्य हानशेषतायाः क्लिष्टत्वात् । यदप्यस्योपायनवादस्य स्तुत्यर्थत्वादन्यदीयपुण्यपापयोः कथमन्यत्र प्राप्तिरित्यत्र नाभिनिवेशः कार्य इत्युक्तम् । तदपि न रोचिष्णु । 'राज्ञि चामात्यजा दोषाः पत्नीदोषाश्च भर्तरी'त्यादिस्मृतावभिमानमात्रेण दोषसंक्रमकथनात्, भारतादौ यमस्य माण्डव्यशापप्रसङ्गे बालकृतपापस्य जनकत्वोपाधिना पितृसंक्रान्तिस्मरणाद्विश्वामित्रपुण्येन त्रिशङ्कोः स्वर्गप्राप्तिस्मरणाच्चात्रापि तथा सम्भवेन स्तुतिमात्रत्वाङ्गीकारस्याप्रयोजकत्वात् । 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे, ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथे'त्यादिश्रुतिस्मृतिभिर्ज्ञानस्य कर्मनाशकत्ववद्विद्याविशेषस्यान्यत्र कर्मसंक्रामकत्वेपि बाधकाभावात् । ननु सुकृतदुष्कृतयोः कर्तृसामानाधिकरण्यस्यैव सर्वत्र दर्शनात्साक्षादन्यस्मिन् सम्भवो न शक्यवचन इति चेत् । न । 'राज्ञि चामात्ये'त्याद्युक्तस्मृतिविरोधापरिहारात् । न च तत्र न साक्षात्संक्रमोऽपि तु फलस्य तत्र सम्बन्धात्तत्र तदुपचर्यत इति वाच्यम् । हेतुव्यधिकरणस्य फलस्यैवाशक्यवचनत्वात् । वाक्यबलात्तु सुकृतदुःकृताङ्गीकारस्यापि शक्यकल्पनत्वात् । न च तत्राद्रव्यत्वं बाधकमिति वाच्यम् । गन्धवदुपपत्तेः । अवयवगमनस्य युक्तिविरुद्धत्वात् । सूत्रकृताप्यनङ्गीकाराच्च । तस्मात्पूर्वोक्त एव प्रकारः साधीयानिति दिक् ॥ १० ॥

प्रसङ्गाद्भक्तिपूर्वदशां विचारयतीत्याशयेन सूत्रं पठन्ति सम्पराय इत्यादि । साम्पराय इति पाठे स्वार्थेण् बोध्यः । ननु सम्परायशब्दः परलोकवाचकत्वेन प्रसिद्धस्तत्कथं भक्तिपूर्वदशाविचारोत्रेतीत्याशङ्कायां सूत्रे तर्त्तव्याभावपदात्तथेति हृदिकृत्य तर्त्तव्यलिङ्ग विषयवाक्यमुपन्यस्यन्ति वाजेत्यादि । इदं वाक्यं शारीरब्राह्मणस्थम्, तत्र पूर्वं 'मनसैवानुद्रष्टव्य'मित्यनेन तद्दर्शनसाधनमुक्त्वा 'विरजः पर आकाशा'दित्यादिना विरजत्ववशित्वेशानत्वादीन् धर्मान् बोधयित्वा ततोऽनिरुक्तत्वाय 'नेति नेती'त्यनेनैतावन्मात्रत्वं निषिध्य, 'अगृह्यो नहि गृह्यते अशीर्यो नहि शीर्यतेऽसङ्गोऽसितो न सज्जते न व्यथते' इत्यनेन लौकिकप्रमाणाग्राह्यत्वमनाशित्वमसङ्गत्वं षिञ् बन्धने अबद्धत्वेन निर्दुःखत्वं चोक्त्वा तेन जडजीवविलक्षणं ब्रह्मस्वरूपं बोधयित्वा ब्रह्मण एतादृशत्वात्तद्विदपि साध्वसाधुकर्मरहित इति बोधयितुं पठ्यते- 'अतः पापमकरवमतः कल्याणमकरवमित्युभे ह्येष एते तरत्यमृतः साध्वसाधुनी'ति, अत इदमभिसन्धाय पापमकरवं कृतवानस्मि अत इदमभिसन्धाय कल्याणं पुण्यं कृतवानस्मि इति

एवमभिसन्धिपूर्वकं कृते एते उभे साध्वसाधुनी हि निश्चयेन एष उक्तरीतिकब्रह्मवित् तरति अतिक्रामति अभिभवति अमृतः जीवन्नेव, नैनं कृताकृते तपतः एनं ब्रह्मविदं निन्दितकरणं च कल्याणाकरणं च न पश्चात्तापं जनयतः । नास्य केनचन कर्मणा लोको मीयते अस्य प्राप्तव्यो ब्रह्मलोकः केनापि नापयाति, प्राप्तव्यं प्राप्नोत्येवेत्यर्थः । तदेतदृचाभ्युक्तम् । ब्राह्मणोक्तोर्थो वक्ष्यमाणया ऋचाप्युक्त इत्यर्थः । ऋचमाह, 'एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्द्धते नो कनीयान्, तस्यैव स्यात् पदवित्तं विदित्वा न कर्मणा लिप्यते पापकेने'ति । एष इति ब्राह्मणोक्तः । तं पूर्वोक्तरूपमात्मानं विदित्वा तस्यैवात्मनः पदवित् स्यात्, पदं चरणं स्थानं च, 'तद्धाम परमं ममे'ति वाक्यादक्षरवित्स्यात्, ततः पापेन लिप्तो न भवतीत्येवमक्षरब्रह्मविदो माहात्म्यमुत्कर्षमुक्त्वा, पठ्यते तत्साधनमुच्यते तस्मादित्यादिना, यस्मादेवं ज्ञातुर्माहात्म्यं तस्मादेवं शाक्षतो ज्ञेयस्वरूपवित् शान्तो दान्तः निगृहीतान्तर्बहिःकरण उपरतो निवृत्तसर्वेहस्तितिक्षुर्दुःखसहिष्णुः श्रद्धाचित्त आस्तिक्यबुद्धिमानात्मन्येवात्मानं पश्येत्स्वात्मनि शारीरे पूर्वोक्तमात्मानमक्षरं पश्येत् । अर्हे कृत्यतृचश्चेति लिङ् । दर्शनार्ह इत्यर्थः । एवं दर्शनार्हतामुक्त्वा स्वस्य द्रष्टृत्वनिश्चयार्थं द्रष्टृलिङ्गानि वदति, सर्वमेनं पश्यतीत्यादिना, स्वाज्ञानार्थं लिङ्गान्युक्त्वा परज्ञानार्थमाह, विपापो विजरो विजिघत्सोऽपिपासो ब्राह्मणो भवति य एवं वेदेति । यदुक्तप्रकारकब्रह्मद्रष्टा स विपापादिलिङ्गैर्निश्चेय इत्यर्थः । एतस्य वाक्यस्य निष्कृष्टमर्थमाहुः अत्रेत्यादि । तत्तव्यलिङ्गां श्रुतिमुक्त्वा तदभावलिङ्गामाहुः अथर्वणेत्यादि । आदिपदेन तदुपबृंहणपुराणसङ्ग्रहः । अतः परं यदंशे संशयस्तं बोधयितुं पूर्वविचारितमंशं पूर्वमाहुः अत्तदित्यादि । अधिकारिभेदेन साधनभेदो वेद्यधर्मभेदश्चेत्येतत्पुरा 'न वा प्रकरणभेदा'दिति सूत्र एवोक्तेति तदंशे सन्देहाभावात्सात्र पुनर्नोच्यत इत्यर्थः । सन्दिग्धांशं विवरीतुमाहुः एतावानित्यादि । एवं सति मुक्तिकारणत्वसाम्याद्भक्तिज्ञानयोस्तौल्ये सति । व्याकुर्वन्ति सम्पराय इत्यादि । सम्परायशब्दस्य प्रसिद्धार्थग्रहणे भक्तिमार्गस्य बोधकस्याध्याहारापत्तिरिति तमर्थं विहाय यौगिकार्थं गृहीतुं पक्षान्तरमाहुः अथवेत्यादि । अत्र द्वेधा व्याख्यानेन पुरुषोत्तमज्ञानप्राप्त्योः साधनं भक्तिमार्ग एवेति बोधितम् । तस्मादिति, ज्ञानमार्गात् । एवं कथनमिति, यौगिकपदेन कथनम् । भक्तेरेव पुरुषोत्तमज्ञानसाधनत्वं न ज्ञानस्येत्यत्र गीतावाक्यं प्रमाणत्वेनाहुः ब्रह्मभूतस्येत्यादि । तथेति, भक्तेर्ज्ञानमार्गादुत्कृष्टत्वम् । तत्र तत्तव्याभावे प्रमाणमाहुः एवं सतीत्यादि । ननु सूत्र इदं कुतो लभ्यते इत्याकाङ्क्षायामाहुः उक्तेत्यादि । तेन धर्वितव्यलिङ्गाः कौषीतक्यादिश्रुतीरुपन्यस्य यत्सूत्रं व्याख्यायते तच्चिन्त्यमिति बोधितम् । उत्तरसूत्रमवतारयन्ति ननु भक्तीत्यादि । व्याख्यानं तु स्फुटार्थम् । तेन पापतरणं न सन्निपततीति सिद्धम् ॥ ११ ॥

एवमनेनाधिकरणेन ज्ञानापेक्षया भक्तेरुत्कर्षः साधितः । अतः परं 'तमेव विदित्वे'ति श्रुतौ साधनान्तरनिषेधश्रावणाद्भक्तेर्ज्ञानकारणत्वेन मोक्षकारणत्वं न तु साक्षादिति शङ्कामपाकर्तुमधिकरणान्तरमारभत इत्याशयेन सूत्रं पठन्ति गतेरित्यादि । संशयं विवरीतुं विषयवाक्यान्याहुः नन्वित्यादिना । इत्युच्यत इति, तथा च ज्ञानभक्त्योः समुच्चयो विकल्पो वेत्येकः संशयः । संशयान्तरमाहुः किञ्चेत्यादिना । उभयत्रेति, उक्तश्रुतौ स्मृतौ च । तथा च नात्र स्मृतिविरोधकृतः संशय इत्यर्थः । तत्र तमेव संशयाकारं स्थापयितुं तद्दूषकहेतुकथनमुखेन संशयानपायमाहुः विषयेत्यादि । तथा चैकतरज्ञानवतो मोक्षाभावप्रसक्त्या तद्बोधकश्रुत्यादिबाधप्रसक्तेरित्यर्थः । समुच्चय इति, ज्ञानभक्तिसमुच्चयः । विरोधाभावदूषणमुखेन संशयान्तरमाहुः पूर्वमित्यादि । पुनः संशयान्तरमाहुः अपरं चेत्यादि । तत्साधनत्वेति ज्ञानसाधनत्वेत्यर्थः । पूर्वपक्षमाहुः तथा चेत्यादि । ननु ज्ञानस्य पुष्टिमर्यादाभे-

देनैव फलवत्त्वमिति कथं बोध्यमित्यतस्तदाशयमाहुः अत्रेत्यादि। सृष्टिपूर्वकाल इत्यादि, कार्यमात्रं प्रति भगवदिच्छायाः कारणत्वेनेच्छायाश्च नित्यत्वेन तदैव तथेत्यर्थः । तत्रेत्यादि । विचारशरीरप्रविष्टो-न्नयनकारणाकाङ्क्षया उक्तरीत्या ज्ञानभक्तिवरणज्ञानाभावरमणादिबुद्धीनां शास्त्रे कथनेन मुक्तिसाधनान-नुगमे शास्त्रद्वारा मुमुक्षोः प्रवृत्तये हेतुरनुगमहेतुरवश्यं वाच्य इत्यर्थः । उभयोर्मर्यादापुष्ट्योः स्वरूपमुक्त्वा व्यवस्थामाहुः तथा चेत्यादि । सर्वं सुस्थमिति । उदितानुदितहोमिवदधिकारिभेदाद्व्यवस्थित-मित्यर्थः । एतेनैव पूर्वं ज्ञानमार्गीयज्ञानवतः पश्चाद्भक्तिमार्गीयज्ञानवतो लयस्थानानिश्चयोपि परि-हृतो बोध्यः । क्रमेणाङ्गीकृतस्याक्षरे लयोत्तरं तत उद्धृत्य पुरुषोत्तमलयस्य शक्यवचनत्वात् । 'ते तु ब्रह्महृदं नीता मग्नाः कृष्णेन चोद्धृता' इत्यत्राक्षरे लीनानां तत उद्धारस्य कथनात् । एतेनैव स्मृत्योरपि विरोधः परिहृत इति बोधयन्ति अत एवेति । मार्गभेदेन व्यवस्थासौकर्यादेवेत्यर्थः । तथेत्यर्थ इति, मुक्तिसाधने मुमुक्षोः प्रवृत्तिप्रतिरोध इत्यर्थः । अत्रेदं बोध्यम् । ब्रह्मबोधकेषु वेदान्तवाक्येषु सृष्टिकर्तृत्वप्रशासितृत्वादिकमात्माभेदश्च प्रतिपाद्यते, ज्ञानस्य मोक्षसाधनत्वं वरणेनात्मविवरणं च । तत्र प्रकरणभेदादेवं ज्ञायते, केवलेन माहात्म्यसहितात्माभेदज्ञानेनाक्षरप्राप्तिर्वरणसहितेन त्वात्मस्व-रूपदर्शनस्य विचारितत्वात्सुदृढस्नेहरूपायां भक्तौ पुरुषोत्तमप्राप्तिरिति, न च वरणमश्रुतमपि तत्रोपसं-हार्यमिति वाच्यम् । विद्याधर्मत्वाभावात् । 'नायमात्मा प्रवचनेन लभ्य' इत्यादिना वरणश्रुतौ साधना-लभ्यत्वश्रावणस्य श्रवणादिविधिविरुद्धत्वेनोपसंहारस्याशक्यत्वाच्च । एवं साधनभेदेन ज्ञानविषयफलयो-र्भेदसिद्धौ पूर्वोक्तोन्निनीषा श्रुतिसिद्धविचारशरीरे श्रौतसाधनतदभावतद्विरुद्धकामादीनामपि प्रवेशेन वरणेपि प्रकारभेदसिद्धौ तस्य पुराणोक्तोपबृंहणैर्विशेषावगतिं हृदिकृत्य सूत्रकृता इदमधिकरणं प्रणीत-मिति पुराणस्थविरोधपरिहारचिन्तनमत्र कृतम्, न तु मुख्यतया तेषां विषयवाक्यत्वमिति वैदिकं-मन्यबहिर्मुखबोधनाय वर्त्म, वस्तुतस्तु 'सर्ववेदेतिहासानां सारं सारं समुद्धृत'मिति वाक्याद्वेदत्वमेव, 'इतिहासपुराणं पञ्चमो वेद' इति श्रुतेश्च, तेन तद्वाक्यत्वेनापि विषयवाक्यत्वमिति । प्रकृतमनुसरामः । एतस्याधिकरणस्य पूर्वाधिकरणोत्थशङ्कानिरासरूपं प्रयोजनान्तरमाहुः एतेनेत्यादि । नन्विति, पूर्वाधि-करणे सर्वपापक्षये भक्तिरुदेतीत्युक्तं तत्रेदमाशङ्क्यत इत्यर्थः । न साधीयानिति, तथा च पापं विना भगवति कापट्यासम्भवात्तथेत्यर्थः । एतेन सम्परायाधिकरणसिद्धान्त आक्षिप्तो ज्ञेयः । तमप्यत्र मार्गभेदेन समादधते तथा हीत्यादि । वक्तुं शक्यमित्यन्तम्, तथा च पूर्वाधिकरणसिद्धः सिद्धान्तो मर्यादामार्गविषयः । सत्यपि पापे भक्त्युदयस्तु पुष्टिमार्गे तेन न चोद्यावकाशः । नापि श्रवणादिदर्श-नात्तेषां पापनाशनाय क्रियमाणत्वं शङ्क्यम् । तेषां फलमध्यपातित्वात् । नचैवं सति पश्चात्पापस-त्तायां तदर्थं यत्नान्तरकृतिवैयग्र्यादिकं शङ्क्यम्, भगवतैव तन्नाशादिसम्भवेन सर्वसौस्थ्यादित्यर्थः । भगवतैव तत्पापनाशे प्रमाणमाहुः तदुक्तमित्यादिना । एतद्व्याख्याने, तद्दुःखदमित्यत्र तदिति भिन्नं पदम् । ननु तदाधुनिकविकर्मणः का गतिरित्यपेक्षायामाहुः उक्तेत्यादि । मत्तो भूतं न तु मया कृतमितिवद्वेति, अकामतः कृतमबुद्धिपूर्वकं च कृतम् । तथा च सांसर्गिकं वा अकामादबुद्धिपूर्वं कृतं वेत्यर्थः । तृतीयमकृतमप्यज्ञानात्मकमन्यदाहुः त्यक्तेत्यादि । एतादृशस्थले तस्य पापमेव न, किन्तु भगवदिच्छैव तादृशी सन्मार्गस्थापनार्थेत्याशयेनाहुः वक्तेत्यादि । किन्तु बहुना, भक्तहृदयस्थः स्वभक्तभक्तस्यापि दूरीकरोतीत्याशयः सर्वपदेनोच्यत इत्याहुः कदाचिदित्यादि । सिद्धमाहुः अत्रे-त्यादि । अत्रेति, पुष्टिमार्गे । अत्रेदं सिद्धम् । मर्यादाभक्तिमार्गे तर्त्तव्याभावात् ज्ञानमार्गत उत्कर्षः । पुष्टिभक्तिमार्गे तु कचित्पापसत्त्वेपि भगवता तन्नाशात्कृपाविशेषादुत्कर्ष इति ॥ १२ ॥

अग्रिमाधिकरणमपि भक्ततारतम्यबोधनद्वारा वरणश्रुतिविचारस्य प्रपञ्च इत्याशयेन सूत्रं पठन्ति उपपन्न इत्यादि । अत्र पूर्वाधिकरणसिद्धपुष्टिभक्तयुत्कर्षासहिष्णुमर्यादाभक्तरूपपूर्वपक्षवादिमुखेन विषयवाक्यं संशयं च वदन्तः सूत्रं व्याकुर्वन्ति नन्वित्यादि । तत्र मुक्तेस्तदनपेक्षत्वस्य श्रौत(त्व)बोधनायाह तदुक्तमिति । कुत्रेत्याकाङ्क्षायामाह अष्टादशार्णेत्यादि । भक्तिरहस्यभजनमिति । भक्तिशब्दाच्छान्दसः सोर्लुक् । रहस्यभजनमित्यस्यैव विवरणं तद्विहेत्यादि । अमुष्य वस्तुत एतदीयस्यात्मनो जीवस्येहामुत्रोपाधिनैराश्येनैव ऐहिकसुखमुक्तिपर्यन्तामुष्मिकसुखविषयकेप्साराहित्येनैव कल्पनं तदीयत्वसमर्थनं अन्तर्बहिःसेवया तद्दृढीकरणमित्यर्थः । अयं पाठः शाखान्तरीयः । उक्तवाक्यद्वयस्य तात्पर्यं विचार्यत्वेनाह एतदत्र विचार्यत इति । कथमित्याकाङ्क्षायामाह मन्त्रेत्यादि । अत एवेति, स्वरूपस्य फलत्वादेव । इति संशय इति, उक्तहेतुभ्यामुभयसाम्यमेव युक्तमिति पूर्वपक्षगर्भे संशय इत्यर्थः । ननु पुरुषोत्तमे सायुज्येपि सौत्रहेतोः सत्त्वात्कथं रहस्यभजनकर्तुराधिक्यसिद्धिरित्यत आहुः यद्यपीत्यादि । अयमेवार्थः सूत्रकारानुशयगोचर इत्याहुः अत एवेति । उक्तस्यार्थस्याभिप्रेतत्वादेव । तथा च रहस्यभजनकर्त्ता उप समीपे पन्नो गत इति हेतोरुपपन्न इत्यर्थः । रहस्यभजनकृत उपपन्नताया विषयवाक्यादेव लाभादर्थस्य गोप्यत्वाच्च न वारद्वयं तत्प्रयोगः । चतुर्विधमुक्तव्यावृत्त्यर्थं तादृशस्य सिद्धं स्वरूपमाहुः तेनेत्यादि । एतदेवोहापोहेन द्रढयन्ति न चेत्यादि । इतोप्युत्कटभक्तसूचनाय पक्षान्तरमाहुः अथचेत्यादि । एवं परमा भक्तिकाष्ठा सूचिता । तेन फलभक्तौ मुक्तिर्न सन्निपततीति सिद्धम् ॥ १३ ॥

अतःपरं भक्तिसाध्यायां मुक्तौ सर्वा भक्तयः सन्निपतन्ति न वेति विचारयितुमधिकरणान्तरमारभत इत्याशयेन सूत्रं पठन्ति अनियम इत्यादि । विषयवाक्यपाठः शाखान्तरस्थः । सवाङ्गे मनोनिवेदनं धारयतिपदार्थः । रसति, कीर्त्तयति जपतीत्यर्थः । भजति, शरीरादिना सेवते । ध्यायते, एकदेशं लीलां वा चिन्तयति । प्रेमति, स्निह्यति युधिष्ठिरादिवत् । उपदिशति, भगवन्तं मन्त्रद्वारा बोधयति कथयति वा । आचरति, भगवद्धर्मानिति शेषः । प्रत्येकपक्षे लोकविरोधमाशङ्क्य परिहरन्ति नन्वित्यादि । एवमेवाहेति, प्रत्येकपक्षमेवाहेत्यर्थः । एवमनेन वर्णकेन प्रत्येकपक्षं व्याख्याय समुच्चये लोकन्यायेन फलशैघ्र्यं बोधयितुं वर्णकान्तरमाहुः एतेनेत्यादि । श्लिष्ट इति, अनियम इत्यनेन एकमेव कर्तव्यं न द्वयं त्रयमित्यस्याप्यनियमस्य सङ्ग्रहात्तथेत्यर्थः ॥ १४ ॥

पूर्वोक्तानां भगवद्धर्माणां फलव्यभिचारं परिहर्तुं प्रसङ्गादधिकरणान्तरमारभत इत्याशयेन सूत्रं पठन्ति यावदिति । मुक्तो भवति न वेति विचार्यत इति । मुक्तिं प्राप्नोति न वा, यदि प्राप्नोति, तदा भक्तित्वं न मुक्तिजनकतावच्छेदकं, यदि न प्राप्नोति तदा भगवद्धर्मत्वमपि न तथा, तथा चाद्ये पूर्वोक्तश्रुतिविरोधो द्वितीये भगवद्धर्माणां प्रतिबन्धकत्वप्रसङ्ग इत्यतो विचार्यत इत्यर्थः । अत्र भगवद्धर्माणां वरणहेतुकत्वात्तैरपि मुक्तिरित्येकः पूर्वपक्षवादी, विहितत्वाभावान्नेत्यपरस्तत्रोभयत्र युक्तिसङ्गावात्सन्देह एव पर्यवस्यतीत्याशयेनाहुः तत्रेत्यादि । सिद्धान्तमाहुः यस्मिन्नित्यादि । तत्सम्पत्ताविति, कार्यसम्पत्तौ । तथैव विचारितत्वादिति, अधिकारसमाप्त्यनन्तरमेव भक्तेः फलोन्मुखत्वस्य विचारितत्वात् । तथा च सामग्र्यभावेन विलम्ब इति न भगवद्धर्माणां मुक्तिप्रतिबन्धकत्वं न वा भक्तित्वस्य मुक्तिजनकतावच्छेदकत्वहानिरित्यर्थः । अधिकारिणां मुक्तिश्च न ब्रह्मणा सहैव नियता, किन्त्वधिकारसमाप्तौ नियतेति बोधयितुं ब्रह्मणा सहेति वाक्यविषयमाहुः यद्वेत्यादि । अनेनाधिकरणेन 'भक्ताधिकारिणां मुक्तिरन्यथा प्रकृतौ लयः । पुनः सृष्टौ तथैश्वर्यं कर्मिणां पुनरागति'रिति सर्वोपि विषयः सूचितो बोध्यः । अत्र भक्तपदं ज्ञानिनामप्युपलक्षकम् ॥ १५ ॥

मुक्तिस्वरूपविचारायाग्रिममधिकरणमित्याशयेन सूत्रं पठन्ति **अक्षरेत्यादि**। विषयसंशयौ पूर्वपक्षकुक्षावेव निक्षिप्याहुः **नन्वित्यादि**। **मुक्तौ च तदसम्भवादिति**, 'भूयश्चान्ते विश्वमायानिवृत्ति'रिति श्रुत्या वैजात्यासम्भवात्। श्रुत्योर्विरोधे स्मृतेर्निर्णायकत्वमभिप्रेत्याहुः **भक्त्येत्यादि**। **भक्तौ ज्ञानस्यापि सम्भवादिति**, ज्ञानकारणत्वबोधकश्रुतेः सावधारणत्वाद्भक्तिकारणत्वबोधिकायां तदभावादुक्तार्थस्य गीतास्मृत्योपबृंहितत्वाच्चेत्यर्थः। तथा च 'गतेरर्थवत्त्व'मित्यधिकरणे मर्यादामार्गे ज्ञानस्य मुक्तिसाधनतायाः प्रतिपादनाद्भक्तेः परम्परया कारणतामादाय भक्तिकारणतावाक्यानि समर्थनीयानीति भावः। **आहेति**, विषयभेदव्यवस्थया मुक्तौ वैजात्यं वारयन्ज्ञानस्य परम्परया कारणत्वमाहेत्यर्थः। तदुपपादयन्ति **तुः पूर्वपक्षनिरास** इत्यादिना, भक्तिः परम्परया कारणमिति शङ्कैव न कार्येत्यर्थः। तत्र हेतुं व्याकर्तुं श्रुतितात्पर्यं विशदयन्ति **वाजेत्यादि**। तथा च श्रुतावक्षरज्ञानस्य फलद्वयकथनादियं शङ्का न कार्येत्यर्थः। ननु तावता सा कथं निवर्तेत इत्यत आहुः **भक्त्येत्यादि**। तथा च भक्तेरक्षरज्ञानाजनकत्वाद्यतो न परम्परितत्वमतस्तथेत्यर्थः। नन्वेवं सति कारणवैजात्यान्मुक्तौ वैजात्ये श्रुतिर्विरुद्ध्येतेत्यत आहुः **किञ्चेत्यादि**। **तस्येति**, ब्रह्मभावस्य। **पूर्वकक्षाविश्रान्तमिति**, तेन 'ब्रह्म वेद ब्रह्मैव भवती'त्यादितत्फलवाक्यानामपि तत्रैव विश्रान्तिर्न तु पुरुषोत्तमप्राप्तिपर्यन्तत्वम्, तेनाक्षरप्राप्तेर्मुक्तित्वं यदुच्यते, तदक्षरस्य पुरुषोत्तमाविनाभावेन तत्सामीप्यादुच्यते, न तावता परमुक्तित्वम्, तेनावधारणमपि पुनरावृत्त्यभावेन मृत्य्वतिक्रमेण कैवल्येनाक्षरप्राप्तेः ब्रह्मभावात्मकत्वेन चोपपद्यमानं न विरुध्यते। ननु यद्यक्षरप्राप्तेर्न परमुक्तित्वं तज्ज्ञानं च पूर्वकक्षाविश्रान्तम्, तर्हि तैत्तिरीयश्रुतौ मुक्तिसाधनत्वेन कथं तदुच्यत इति चेत्तत्राहुः **एवं सतीत्यादि**। पुरुषोत्तमसम्बन्धिसम्बन्धे मुक्तिरिति सामान्यमिति। श्रवणादीनामिवाक्षरस्यापि पुरुषोत्तमसम्बन्धित्वात् तथेत्यर्थः। **यद्वा**। यथा भक्तस्य पुरुषोत्तमसम्बन्धित्वं तथा पुरुषोत्तमधाम्नोऽक्षरस्यापीति भक्तभक्तिवदक्षरधीरपि परम्परया मुक्तिसाधनं तेनैवं सामान्यमित्यर्थः। तद्भावं व्याकुर्वन्त एव हेतू योजयन्ति **मर्यादेत्यादि**। ननु भवत्वेवं पुरुषोत्तमप्राप्तेर्मुक्तित्वम्, परन्तु पूर्वोक्तश्रुत्योर्विरोधस्तु परिहार्य इत्याशयेन सूत्रोक्तं दृष्टान्तं व्याकर्तुमवतारयन्ति **नन्वित्यादि**। **हेतुम्**, भगवदिच्छारूपम्। तथा चौपसदे यथा यजमानस्नेहेन यज्ञयशःप्रापणेच्छया तानूनप्त्रप्रथमावमर्शनं तथा भगवत्कृपया स्वप्रापणेच्छया भक्तिसहितमक्षरवेदनमिति तथा तथेत्यर्थः। सूत्रोक्तां सम्मतिं व्याख्यातुमवतारयन्ति **नन्वित्यादि**। एतानि वाक्यान्यष्टमाध्यायस्थानि। **वैलक्षण्यमिति**, साधनसौकर्यं स्वप्राप्तिरूपफलोत्कर्षं च। अत्राक्षरस्वरूपकथने तस्य परमगतित्वं स्वधामत्वं चोक्त्वा परस्य यद्भक्त्येकलभ्यत्वं वक्ष्यति तदक्षरादुत्तमत्वेन वाक्यान्तरे सिद्धे स्वस्मिन्नेव परत्वविश्रान्तेः स्वस्यैव वक्ष्यति। बाधकाभावे तच्छब्देन सन्निहितपरामर्शाच्च। तदेतदुक्तं **स्वस्य वक्तुमिति**। **एतेनेति**, 'क्षरः सर्वाणि भूतानी'ति वाक्यान्तरसिद्धं भूतग्रामं व्यक्तकोटौ निवेश्य ततः परत्वकथनेनेत्यर्थः। **यमित्यादि**। भूतग्रामपदेन जडान् गृहीत्वा अक्षरपदेन जीवग्रहण एतौ दोषौ प्रसज्येयातामित्यर्थः। स्फुटमन्यत्। उक्तस्यार्थस्य श्रौतत्वं बोधयितुं तैत्तिरीयश्रुत्यर्थं प्रकाशयन्तः सामान्यतद्भावाभ्यामित्यस्यार्थान्तरं सङ्गृह्णन्ति **किञ्चेत्यादिना**। अग्रिममन्त्रे लोकाक्षरस्य वक्ष्यमाणत्वादत्रत्यस्य तस्यार्थमाहुः **अत्रेत्यादि**। एतमुपष्टम्भन्ति **अत एवेत्यादि**। द्वितीयमन्त्रस्थाक्षरपदस्यार्थं लिङ्गबलेन लोकात्म(कत्व)माहुः **यदित्यादि**। यदर्थमिदं निरूपितं तदाहुः **एवं सतीत्यादि**। अत्र भट्टभास्करशङ्करामानुजभाष्येषु पूर्वोक्तवाजसनेयकाथर्वणोक्ताक्षरवाक्यद्वयमेव विषयवाक्यत्वेनोदाहृत्य किमेषां विशेषप्रतिषेधबुद्धीनां सर्वत्र प्राप्तिरुत व्यवस्थेति संशये, यथायथं प्रकरणावरोधात्, श्रुति-

विभागात्, विधान्तररूपस्य विधान्तररूपत्वे प्रमाणाभावान्निषेधरूपाणां गुणानामानन्दादिवत्स्व-रूपावगमोपायत्वाभावाच्चेति हेतुभिर्नान्यत्र प्राप्तिरिति पूर्वपक्षः । सिद्धान्तस्तु, यथायथम्, प्रपञ्चपर्युदासस्य, विशेषनिराकरणरूपस्य ब्रह्मबोधनप्रकारस्य, सामान्यात्, तस्य प्रतिपाद्यस्य ब्रह्मणः सर्वत्र भावादैक्यात्सर्वत्रावरोध इति भट्टभास्करशङ्करमते । ते'नानन्दादयः प्रधानस्ये'त्यत्र विधिमुखो विचारोत्र तु निषेधमुख इति तस्यैवायं प्रपञ्चः । तेनैतदधिकरणं नात्यन्तावश्यकम् । रामानुजभाष्ये तु, सर्वेषूपासनेषु ब्रह्मणः समानत्वात्, अस्थूलत्वादीनां तत्प्रतीतौ भावात् अन्तर्भावात् । अयमर्थः । केवलानन्दादेः प्रत्यगात्मनि विद्यमानत्वेन तेषामसाधारणाकारेण ब्रह्मोपस्थापकत्वाभावादसाधारणाकारनिश्चयार्थं हेयप्रत्यनीकताज्ञानस्यावश्यकत्वेन चिदचिदात्मकप्रपञ्चवैलक्षण्यबोधनमावश्यकम् । तत्रास्थूलत्वादिना अचिद्वैलक्षण्यं प्रशासनेन चिद्वैलक्षण्यं च वाजसनेयके उच्यते, एवमाथर्वणेपि अदृश्यत्वादिकथनान्निरङ्कुशकर्तृत्वसर्वज्ञत्वादिना ज्ञेयम् । तथा चास्थूलत्वादिविशेषितज्ञानानन्दाद्याकारस्य ब्रह्मणोनुसन्धेयत्वादस्थूलत्वादीनामानन्दादिवदखिल ब्रह्मप्रतीतावन्तर्भाव इति तासामस्थूलत्वादिबुद्धीनां सर्वत्रावरोध इति सिद्धान्तः । तेनेदमधिकरणं तत्सहकारित्वादत्यन्तावश्यकमिति तदपेक्षयेदं मतं युक्तम् । ननु तर्हि पूर्वपक्षोक्तहेतूनां का गतिरित्याकाङ्क्षायां गुणानां प्रधानावर्तित्वे दृष्टान्तं तत्र प्रमाणं चाहौपसदवत्तदुक्तमिति । यथा चतूरात्रे जामदग्न्याहीने पुरोडाशिनीसूपसत्सूपसद्गुणभूतः सामवेदपठितोप्यग्निर्वै होत्रं वेत्वित्यादिकः पुरोडाशप्रदानमन्त्रो विनियोगविधेर्याजुषत्वेन यजुर्वेदिनाध्वर्युणा याजुर्वैदिकेनोपांशुस्वरेण पठ्यते न तूद्गात्रा सामगेन सामस्वरेणोच्चैस्त्वेन तद्वत् । तदुक्तं पूर्वकाण्डे शेषलक्षणे । 'गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोग' इति । अर्थस्तु, गुणमुख्ययोर्व्यतिक्रमे विरोधे सति तदर्थत्वात् गुणस्य उत्पत्तिविधेस्तदर्थत्वात्प्रधानार्थत्वात् मुख्येन याजुर्वैदिकेन विनियोगविधिना वेदसंयोगो ग्राह्य इति । पूर्वोक्तभाष्यत्रयेपि समानम् । शाबरे भाष्ये त्वत्रान्यदुदाहृतम् । तथाहि । अस्त्याधानं यजुर्वेदविहितं 'य एवं विद्वानग्निमाधत्त' इति, तदङ्गत्वेन यजुर्वेद एव गानं च विहितं 'य एवं विद्वान्वारवन्तीयं गायति, यज्ञायज्ञीयं गायति । वामदेव्यं गायती'ति । एतानि सामानि च सामवेद उत्पन्नानि । अतः केन स्वरेण पठनीयानीति सन्देहे उत्पत्तिविधेर्विनियोगविध्यधीनतया यजुर्वेदस्वरो ग्राह्य इति । एवं चात्र विचारे क्रियमाणे पूर्वोक्तमतद्वयं न रुचिरम् । अक्षरस्य धीरित्यत्राक्षरस्येति षष्ठ्यां अक्षरस्य विशेषनिषेधस्य सम्बन्धितया निवेशेन गौरवात् प्रशासनादेरसङ्ग्रहाच्च पूर्वोक्तानावश्यकत्वदोषाच्च । तृतीयं तु त्रितयाभावादुत्तमम् ॥ १६ ॥

अक्षरानन्दपुरुषोत्तमानन्दयोस्तरतमभावस्य बोधनायाग्रिममधिकरणमित्याशयेन सूत्रं पठन्ति इयदामननादिति । अत्राक्षरपुरुषोत्तमानन्दयोस्तारतम्यमस्ति न वेति संशयः । अविशेषान्नास्तीति पूर्वपक्षश्च ज्ञेयः । आनन्दमयस्येनेत्यादि । आनन्दमये उपसङ्क्रममुक्त्वाऽऽनन्दमयं लक्षीकृत्य 'यतो वाचो निवर्तन्त' इति श्लोकेन वाङ्मनसागोचरत्वकथनात्पूर्वाधिकरणे पुरुषोत्तमानन्दस्याधिक्यनिर्धारणमित्यर्थः । ननु 'यतो वाच' इति श्लोको मनोमये कदाचनेति पाठभेदेन पठ्यते, ब्रह्मोपनिषदि चैतदुत्तरार्धे'मानन्दमेतज्जीवस्य यज्ज्ञात्वाऽमृतमश्नुत' इति पठ्यतेऽतो नैतेन पुरुषोत्तमानन्दाधिक्यसिद्धिरिति चेत् । न । मनोमयस्य यजुःशिरस्त्वादिना वेदात्मकत्वनिश्चायनाद्वेदस्य च शब्दब्रह्मात्मकस्य 'सर्वे वेदा यत्पदमामनन्ती'तिश्रुत्या ब्रह्मबोधकत्वेन ब्रह्मणः वेदात्मकान्मनोमयाद्वाङ्मनसगोचरमानन्दं विद्वान् कदाचन न बिभेतीत्येवं पुरुषोत्तमानन्दज्ञानसाधनत्वेन मनोमयश्लोकार्थस्य बोद्धव्यत्वात् । ब्रह्मोपनिषद्यपि ज्ञेयत्वेन तस्य जीवसम्बन्धित्वबोधनस्याभिप्रेतत्वात्, 'यज्ज्ञात्वाऽमृतमश्नुत' इति तुरीयपादेन तथा निश्चयात् । अतो न चोद्यावसर इति दिक् ॥ १७ ॥

सिद्धेषु ज्ञानसाधनेषु वृत्तिरात्मनो ब्रह्माभेदसाक्षात्कारात्मिका भवतीति 'ब्रह्म वेद ब्रह्मैव भवती'त्यत्र श्रुतम्। सा भक्तावपि सिद्धायां 'भक्त्या मामभिजानाती'त्यभिज्ञावाक्यावेदिते ज्ञाने निवेशं लभते नवेत्येतद्विचारायाधिकरणान्तरमारभत इत्याशयेन सूत्रं पठन्तो विचारयन्ति **अन्तरेत्यादि**। **भक्तिमार्गे** इति, फलभक्तिमार्गे। **सर्वान्तरत्वादित्यादि**, 'अन्योन्तर आत्मा आनन्दमयः पृथिव्यां तिष्ठ'न्नित्यारभ्य 'य आत्मनि तिष्ठन्नात्मनोन्तर' इत्यादौ परमात्मा सर्वान्तरत्वेन श्रावितः, स च यदन्तस्तिष्ठति तमन्तरयति वह्निरिवायोगोलकम्। तथा सति श्रौतेन येन केनापि साधनेन तस्मिन्नभिज्ञायमाने स्वात्मनस्तद्व्याप्तत्वेन भेदास्फुरणात् स्वात्मत्वेनास्य तज्ज्ञानमदण्डवारितमतस्तद्भवतीत्यर्थः। **तथात्वेपीत्यादि**। सर्वान्तरतयैतदात्मनस्तदविभक्तत्वेपि 'सर्वस्य वशी'त्यादिश्रुत्युक्तसर्वेश्वरत्वादिधर्माणामेवोत्कटभक्त्या स्फुरणादेतत्पुरस्कृतमेव ज्ञानं भवति, न तु स्वात्मत्वप्रकारकमित्यर्थः। नन्वभिज्ञाने सर्वांशज्ञानदर्शनात्तदंशाज्ञाने हेतुं न पश्याम इत्याकाङ्क्षायामाहुः **अत्र तथेत्यादि**। **विपरीते**, स्वात्मत्वेन ज्ञाने। एतदेव व्याकुर्वन्ति **पूर्वस्मिन्नित्यादि**। **स** इति, भजनानन्दः। **न सम्पाद्यत** इति, क्रीडार्थो मुख्यो भक्तिमार्गः क्रीडा च भेदादेव सिध्यतीति 'स वै नैव रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छ'दित्यादिश्रुतिभ्योऽवसीयतेऽभेदश्च तद्व्यवधायक इति तथेत्यर्थः। **अन्यथाभावा**दिति, अभेदज्ञानस्य विलायकस्वभावत्वेन तद्वतो विलयादित्यर्थः। नन्वस्तु तस्यां तथात्वं तथापि न सम्पादयतीति कथमवगन्तव्यमित्यत आहुः **तत्सम्पादनस्येत्यादि**। **अलौकिक** इति, साक्षात्सम्बन्धस्य हेये लौकिकशरीरे असम्भवात्तथेत्यर्थः। **तथेति**, चिकीर्षितलीलाप्रतिबन्धकत्वमेवास्य हीनत्वं तस्मादिदं न सम्भवतीत्यर्थः। प्रतिबन्धकस्यासम्भवो ज्ञानमार्गे तुल्य इति तद्दृष्टान्तेन तं बोधयितुं दृष्टान्तं प्रकारान्तरेणाहुः **अथवेत्यादि**। आत्मत्वेन ज्ञानाभावस्यायुक्तत्वमाशङ्क्य परिहरतीत्याशयेन सूत्रं पठन्ति **अन्यथेत्यादि**। **नन्वित्यादि**। 'उपपन्न' इति सूत्रे दासीदाससुहृद्भेदेन त्रिविधा लीलामध्यपातिभक्ता उक्तास्तत्र 'नोद्धवोण्वपि मन्न्यून' इति वाक्यादत्यन्तरङ्गः आदिपदेन व्रजस्थास्तेपि 'रामेण सार्द्धं मथुरां प्रणीत' इत्यादिना विगाढभावा उक्ता इति तेष्वपि चेत्साक्षात्सन्देशद्वारा चोपदेशस्तदेतरेषु किं वाच्यम्, किञ्च, तेषु चेदुपदेशो विफलस्तदाऽपार्थकार्यकर्तृत्वाज्जीवतुल्यत्वापत्तिरिति तस्य तत्र फलमवश्यमभ्युपेयम्, तथा सति पूर्वोक्तमिति सूत्रांशेनाशङ्क्य परिहरतीत्यर्थः। परिहारं व्याकुर्वन्ति **नहीत्यारभ्येत्यर्थ** इत्यन्तम्। तथा चोक्तरीत्या फलान्तरसत्त्वेनावैफल्ये सति न जीवतुल्यत्वापत्तिर्नापि ज्ञानमार्गोत्कर्ष इत्यर्थः। ननूक्तरीत्या भजनानन्दप्रतिबन्धाभाव एव, न ब्रह्माभेदानुभव इत्यत्र किं गमकमित्याकाङ्क्षायामाहुः **अन्यथेत्यादि**। **ज्ञेयमिति**, कुरुक्षेत्रप्रसङ्गस्थोत्कण्ठावाक्यैर्ज्ञेयमित्यर्थः। अयमेव सूत्रकाराशय इति ज्ञापनायाहुः **अत्रेत्यादि**। **उपदेशान्तरपदमिति**, दृष्टान्तकोटिप्रविष्टं तत्पदम्। **तस्याभावादिति**, अभेदोपदेशस्य दार्ष्टान्तिकत्वेन दृष्टान्ते प्रवेशाभावादित्यर्थः। सिद्धमाहुः **एतेनेत्यादि**। मार्गभेदेन प्रकारभेदेन चैकस्यैवात्मोपदेशस्य दृष्टान्तदार्ष्टान्तिकभावेनोक्तार्थसिद्धौ सम्भवत्यां किमित्युपदेशान्तरं ग्राह्यमित्याशयेन पक्षान्तरमाहुः **अथवेत्यादि**। **क्रियत** इति, मैत्रेयीब्राह्मणादौ क्रियते। **अत्रेति**, भक्तिमार्गे। **बोध्यत** इति, आत्मोपदेशेन बोध्यते। गतार्थत्वमाशङ्क्य परिहरन्ति **यद्यपीत्यादि**। **एतावतेति**, आत्मबोधनमात्रेण। **आयातीति**, फलत्वेन नायातीत्यर्थः। निदर्शनस्य पूर्वमेवोक्तत्वात्सिद्धमाहुः **अत्र** इति। तथाच यत्र किञ्चित्कार्यार्थं विप्रयोगतापसहनमावश्यकं तत्रैवं प्रभुः करोति, न तु सर्वत्र, अतः पूर्वोक्तं सारमुपपन्नमित्यर्थः। एवं करणस्य प्रासङ्गिकं फलमाहुः **तेनेत्यादि**।

अत्रोद्धवादिषूपदेशस्य स्मार्तत्वं न शङ्कनीयम् । 'विधिश्च प्रतिषेधश्च'त्यादिप्रश्नेन, 'मां विधत्तेभिधत्ते मा'मित्याद्युत्तरेण च श्रौतत्वस्य स्फुटीकरणेन श्रुतिभिरेवोपदेशनिश्चयात् । शूद्रादीनां श्रवणाधिकारायैव व्यासपादैः स्वश्लोकैरुक्तत्वात् । 'सर्ववेदेतिहासानां सारं सारं समुद्धृत'मिति वाक्यात् । एवं सन्देशेपि 'एतदन्तः समाम्नाय' इति वाक्यात् ज्ञेयम्, तेन न चोद्यावकाशः ॥ १८ ॥

ननु यद्यभेददर्शनस्य भक्तिफलत्वं न स्यात्तदा लीलास्थानां स्वस्मिन् ब्रह्माभेदो न स्फुरेत्, दृश्यते च स इति पूर्वाधिकरणसिद्धान्तोऽयुक्त इति शङ्कायामुत्तरमधिकरणमित्याशयेन सूत्रं पठन्ति **व्यतिहार** इत्यादि । एतरेय इव तैत्तिरीये आवृत्त्यभावात्कथं व्यतिहारलाभ इत्यत आहुः **अत्रे**त्यादि । व्यतिहारेणाभेदबुद्धौ तात्पर्यं श्रुतेरिति वदतां तेन तदसिद्धिं बोधयन्तो दूषयन्ति **अपरं चे**त्यादि । शेषं तूत्तानार्थम् ॥ १९ ॥

फलमुखेन भक्त्युत्कर्षं साधयित्वा साधनमुखेन तं साधयितुमग्रिममधिकरणमित्याशयेन सूत्रं पठन्ति **सैव ही**ति । शेषमतिरोहितार्थम् ॥ २० ॥

ननु भक्तेः कथमेवमसहायशूरत्वमित्याकाङ्क्षायां तत्र हेतुं बोधयितुं कैमुतिकेन स्वरूपत उत्कर्षं च बोधयितुमग्रिमाधिकरणं प्रणयतीत्याशयेन सूत्रं पठन्ति **कामादी**ति । तदेतद्विशदयन्ति **पूर्वसूत्र** इत्यादि । सूत्रं व्याकर्तुं तदुपयोगित्वेन भक्तिविभागं विभाजकोपाधिस्वरूपं च पूर्वमाहुः **भक्ति**रित्यादि । **अन्यत्र** इति, शास्त्रव्यतिरिक्तात्स्वभावादितः । **इतरत्रे**त्यस्यार्थः कामाद्युपाधिजस्नेहरूपायामिति । **इत्यर्थ** इति, इत्येषोर्थः शेषभूत इत्यर्थः । कथमेवमित्याकाङ्क्षायां तत्र प्रयोजकमाहुः **भगवती**त्यादि । **भवती**त्यन्तम् । सूत्रशेषं व्याकुर्वन्ति **तत्रे**त्यादि । तेषु तथा प्रयोगप्राचुर्यादिति । **यथा पञ्चायतनपूजे**ति । **एतेने**ति । कामादीनां गृहादीनां च मुक्तिसाधकत्वकथनेन । **इति ज्ञापनाये**ति, तेन विहिताविहितोभयरूपापि संगृहीतेति भावः । **इतरे** तु । 'अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोस्मिन्नन्तर आकाश' इत्युपक्रम्य 'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्प' इति छान्दोग्ये आम्नायते । 'स वा एष महानज आत्मा योयं विज्ञानमयः प्राणेषु, य एषोन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी'त्यादि वाजसनेयके आम्नायते । तयोरैकविद्यं न वा परस्परगुणोपसंहारो न वेति सन्देहद्वये, कामादीति सूत्रेणैकविद्यमुपसंहारश्च सिद्धान्तीक्रियते। कामादीत्यत्र, कामपदं देवदत्तो दत्तः सत्यभामा भामेतिवन्नामैकदेशरूपम्। तेन सत्यकामाद्या वाजसनेयके वशित्वाद्याश्छान्दोग्य उपसंहार्याः । हृदयस्यायतनस्य वेद्यस्येश्वरस्य लोकासम्भेदप्रयोजनसेतुत्वरूपेश्वरधर्मस्यापि समानत्वाद्विद्यैक्यं परस्परोपसंहारश्चेत्याहुः । तच्चिन्त्यम् । सत्यकामादिपदानां नामत्वाभावेन दृष्टान्तवैषम्यात् । आयतनादीनां केषाञ्चिदेव समानत्वे विद्यैक्याङ्गीकारे 'चोदनाद्यविशेषा'दित्यस्य व्यभिचारित्वप्रसक्तेश्च ॥ २१ ॥

एवमधिकरणत्रयेण सात्विकानां वृतानां ज्ञानासक्तिनिवारणाय ज्ञानमार्गाद्भक्तिमार्गस्य फलतः साधनतः स्वरूपतः सम्बन्धतश्चोत्कर्षः प्रतिपादितः । अतः परं ये वृता राजसास्तेषां ज्ञाने रुच्यभावेपि कर्मणि रुचेर्विद्यमानत्वात्तन्निर्णयायाधिकरणान्तरमारभत इत्याशयेन सूत्रं पठन्ति **आदरादलोप** इति । संशयादिकमाहुः **नन्वि**त्यादि । **इतरत्रे**ति, भगवद्धर्मेषु । **ब्रह्मयज्ञप्रकरण** इति, आरण्यके स्वाध्यायब्राह्मणे । 'ॐमिति प्रतिपद्यते एतद्वै यजुस्त्रयीं विद्यां प्रत्येषा वागेतत्परममक्षरं तदेतदृचाभ्युक्त'मिति प्रणवाक्षरं प्रतिपद्यते पञ्चमो लकारः । ब्रह्मयज्ञेन यक्ष्यमाणः पूर्वमुच्चारयेत्, कुत इत्याकाङ्क्षायामाह । एतद्वै यजुस्त्रयीं विद्यां प्रति अयं यजूरूपः प्रणवमन्त्रस्त्रयीं विद्यां लक्षीकृत्य प्रति-

निधिरूपो यतोस्ति, तथाथर्वणे स्फुटम्, तस्य वै प्रणवस्य पूर्वामात्रापृथिव्यकारः स ऋग्भिर्ऋग्वेदोथ द्वितीयान्तरिक्षं स उकारः स यजुर्भिर्यजुर्वेदस्तृतीया द्यौः स मकारः स सामभिः सामवेद इति सायनभाष्ये। वस्तुतस्तु गोपथब्राह्मणे इन्द्रप्रजापतिसंवादे प्रजापतिना वेदत्रये एकाक्षरोथर्ववेदे मात्राभिर्युक्त इति व्यवस्थापितम्, तैत्तिरीये बृहन्नारायणे 'ॐमित्येकाक्षरं ब्रह्मे'ति श्रावितं च। तेनात्रामात्र एव। न चैवं त्रयीप्रतिनिधित्वविरोधः। द्वादशे स्कन्धे, 'सर्वमन्त्रोपनिषद्वेदबीजं सनातन'मिति बीजत्वबोधनाद्यथा पुस्तकलिखनोत्तरं तन्मूलपुस्तके प्रतिपुस्तके व्यवहारस्तथा त्रयीमूलत्वात्प्रतित्वमेकादशे 'वेदः प्रणव एवाग्र' इति कृतयुगे तन्मात्रवेदबोधनाच्च तदा सर्वं कार्यं प्रणवेनैवेति तस्य त्रयीप्रतिनिधित्वं वा। एषा वागिति, सर्ववाग्बीजत्वात्सर्ववाग्रूपम्। तथाच छन्दोगा आमनन्ति, 'तद्यथा शङ्कुना सर्वाणि पर्णानि सन्तृणान्येवमोंकारेण सर्वा वाक् सन्तृणेति। 'अश्वत्थादिपत्रे दृश्यमानास्तन्तुसदृशा अवयवाः शङ्कवस्तैर्यथा कृत्स्नानि पर्णानि व्याप्तानि तद्वदोंकारेण सर्वा वाग्व्याप्ते'तिभाष्ये। एतत्परममक्षरम्, 'एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं पर'मिति काठकश्रुतेः। तदेतदृचाभ्युक्तम्, तदेतत्परब्रह्मरूपं प्रणवाक्षरं वक्ष्यमाणर्चा स्पष्टमुक्तमित्यर्थः। ऋचं व्याकुर्वन्ति अत्रेत्यादि। 'यो वेद निहितं गुहायां परमे व्योम'न्नित्यत्राक्षरे परस्थितेर्व्याख्यातत्वा'त्तद्धाम परमं ममे'ति वाक्याच्चाहुः वर्तमानमिति, प्रतिपाद्यत्वेन स्वरूपेण च वर्तमानम्। लोकवेदप्रसिद्धमिति, यस्मिन् परब्रह्मणि देवा अग्न्यादयोवयवरूपा अध्युपरि निषेदुः स्थितवन्त इति श्रुतिपुराणयोर्दृश्यते, 'अतोस्मि लोके वेदे च प्रथितः पुरुषोत्तम' इति च गीतावाक्यं तेन तथेत्यर्थः। ऋचेति, ऋचपदं वेदमात्रोपलक्षकम्। अन्वये निदर्शनमिति, अन्वयव्यभिचारे निदर्शनं श्रुतिराहेत्यर्थः। शेषं प्रकटार्थम्। प्रणवार्थभूतभगवज्ज्ञानस्यावश्यकत्वं तदज्ञानेऽध्ययनादिनैष्फल्यं बोधयन्त्यानयर्चा भगवज्ज्ञानसाधनीभूतायां वरणसाध्यायां भक्तावादरो दर्शितः। एवं श्रुत्यन्तरे साधनभक्तावप्यादरः श्राव्यत इत्याशयेनाहुः ऋगित्यादि। अर्थस्तु, हे स्तोतारो मदुत्कर्षवर्णनपराः। इयं वेदानामुक्तिः। पूर्व्यं सर्वकारणकारणरूपम्, तं लोकवेदप्रसिद्धं पुरुषोत्तमम्, यथाविदः भवन्तो यथावद्विदन्ति तत्स्वरूपमिति तथाभूताः ऋतस्य सूनृतवाणीरूपस्य वेदस्य गर्भं अन्तर्निहितम्, जनुषा, स्वस्य सम्पूर्णजन्मना, यावज्जीवमिति यावत्, पिपर्तन पूर्तियुक्तं सन्तुष्टं कुरुत सन्तोषयत, अत्र यथावित्त्वोक्त्या पूर्णज्ञानानां देहेन्द्रियप्राणान्तःकरणजीवविनियोगं भगवत्तोषार्थं दर्शयति श्रुतिरित्यादरो भगवद्धर्मेषु श्रुतेः स्फुटति। भगवत्तोषाभावे किमपि न सिद्ध्यतीत्याशयेन पूर्वोक्तकरणशक्त्यभावेनुकल्पमाह। आसमन्तात् अस्य परमपुरुषस्य नाम जानन्तः अखण्डशब्दब्रह्मरूपत्वेन जानन्तः विवक्तन विशेषेण वदत, नामस्वरूपं वित्त्वा तदेव कीर्तयत, अनुकल्पेन कथं सन्तोष इत्यतो नामस्वरूपमाह चिदिति, चित्स्वरूपं उपलक्षणमेतत्, सच्चिदानन्दात्मकम्। तथा च नाम्नो ज्ञानरूपत्वेन तद्द्वारा भगवतोपि ज्ञानं भविष्यति, तेन तोषोपि भविष्यतीत्यर्थः। नामस्वरूपस्याप्यज्ञाने तदुपायमाह गुरूपसत्तिरूपम्। हे विष्णो ते त्वत्सम्बन्धिनं महस्तेजोरूपम्। समभिव्याहारात्त्वत्तेजोरूपं सुमतिम्, निर्दोषपूर्णगुणत्वेन भगवन्तं जानन्तं सुबुद्धिं भक्तमिति यावत्तं भजामहे, तथा चान्यो भजतु मा वा वयं तु भजामहे इति श्रुतयः स्वकृतिं दर्शयन्ति। अनेन तदुपायेप्यादरो दर्शितस्तेन भगवद्धर्माणामत्यादृतत्वं बोधितम्। तेनेति, कथनेन। तथेति, प्रत्यवायः।

अग्रिमसूत्रमवतारयन्ति नन्वित्यादि। श्रुतेरिति, प्रत्यवायश्रवणस्यैवं तात्पर्यकत्व इत्यर्थः। तयोर्युगपदित्यादि। दाशतयीश्रुतौ यथाविद इति स्तोतृविशेषणाद्विधेयस्य करणे ज्ञानस्याधिकारप्रयोजकत्वं लभ्यते तेन ज्ञानोत्तरं करणमायाति। कर्माणि तु 'तमेतं वेदानुवचनेन ब्राह्मणा

विविदिषन्ति यज्ञेन दानेन तपसा श्रद्धयाऽनाशकेने’ति श्रुतेर्विविदिषायामेवोपक्षीणानि ज्ञानसम्पादनेपि नालं भवितुमर्हन्तीति दूरतरापास्तं कर्मप्राधान्यम्। एवं सति ज्ञानोत्तरं यत्र कथञ्चिद्वर्णाश्रमा भगवद्धर्माश्च युगपत्प्राप्तास्तत्र प्रबलदुर्बलभावस्य प्रत्यवायादिबोधकवाक्यैर्वैपरीत्ये भाते तदपवादायादरः प्रकाश्यते ततश्च भगवद्धर्माणां बाधाभावः सिध्यति ततश्च इतरेषामादराभावेपि प्रत्यवायश्रवणवैय्यर्थ्यपरिहाराय तेषां गौणकाले करणमद्धोधानवच्यवस्थाप्यतेऽतो न तेषां कर्माङ्गत्वमित्यर्थः ॥ २२ ॥

ननु यद्येवं तर्हि गौणमुख्यन्यायेन तेषां कर्मणामप्रयोजकत्वात्परमहंसेष्विव भक्तेष्वपि प्राप्तिरेव न सम्भवतीति व्यर्थोयं विचार इत्याकाङ्क्षायामग्रिमाधिकरणं पाक्षिकप्राप्तिं हृदिकृत्य तत्प्रयोजनबोधनाय प्रणयतीत्याशयेन सूत्रं पठन्ति तन्निर्धारणेत्यादि । एतादृशस्येति, वक्ष्यमाणश्रुत्या सर्वदानन्दानुभवकर्तुः, श्रूयत इति, तापनीयेऽतिथिपूजारूपो गृहस्थधर्मो गान्धर्वीप्रभृतीनाम्, पूर्वकाण्डे च ‘प्रह्लादो ह वै कायाधव’ इत्यादिना प्रह्लादस्य श्रयते इत्यर्थः । चकारात्स्मृतिसङ्ग्रहः । उभयविधानामिति । मर्यादायां पुष्टौ चाङ्गीकृतानां भक्तानां सिद्धमिति । तथा चैवं कर्मप्रसक्तेर्विद्यमानत्वान्न पूर्वाधिकरणोक्तविचारवैयर्थ्यमित्यर्थः । ननु निर्धारणानियमात्कर्म कर्तव्यमिति यदुक्तम्, तन्न युज्यते, ‘योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सये’त्युपक्रम्य ‘निर्विण्णानां ज्ञानयोगः कर्मयोगस्तु कामिनाम्, न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिद’ इत्याधिकारिभेदेन व्यवस्थापनात्तावतैव फलसिद्धेः कथनाच्च भक्तियोगात्मकभगवद्धर्मकारणमात्र एव भगवदिच्छाया निर्धारयितुं शक्यत्वादितरकरणस्य वैयर्थ्याचेत्याशङ्कायां नैवमिच्छा निर्धारयितुं शक्येत्याशयेन सूत्रशेषं व्याकर्तुमवतारयन्ति तत्रेत्यादि । अत्रेति, पूर्वोक्तरीतिकाशङ्कायाम् । स्फुटमन्यत् ॥ ॥

पूर्वाधिकरणे आदरात् भगवद्धर्माबाधस्य व्यवस्थापनेनैवानादृतानां गौणकालिकता प्राप्ता, प्रत्यवायश्रवणाधिकारिभेदाभ्यां च तदबाधबाधाविति नास्याधिकरणस्यावश्यकतेति हृदिकृत्य पश्चान्तरमाहुः अथवेत्यादि । आवश्यकत्वमुक्तमिति, तथा राति ते विहितभक्त्यन्तःपातितया सिद्धा इत्यर्थः । किं तेनेत्यत आहुः सर्वेत्यादि । असम्भवादिति, तद्भावस्वभावेनासम्भवात् । किं फलमिति, श्रौतस्य फलस्य विहितसाधनसाध्यत्वात्तेषामकरणे किं फलमित्यर्थः । तदिति, मुख्यं फलम् । तन्निश्चित्यादि भवतीत्यन्तम् । तथा च तदृष्टिपदं भगवत्सङ्गमाभिलाषौत्कट्येन तदेकज्ञानवत्परमित्यर्थः । एतेनेति, तन्निर्धारणानियमपदेन । शेषं स्फुटम् । एवमेतैः प्रथमान्तपदैः फलपूर्वावस्था मुख्यमनिर्वाच्यफलमानुषङ्गिकफलं चेति त्रयमुक्तं भवति । इदं कया सङ्गत्योक्तमित्याकाङ्क्षायामाहुः प्रासङ्गिकमिति । सूत्रपदेनानधिकरणत्वमुक्तम् ॥ २३ ॥

एवं राजसानामन्यासक्तिवारणायाधिकरणद्वयप्रणीतं मुख्यभक्त्यभिलाषोपजननाय च तत्फलमत्र प्रदर्शितम् । अतःपरं मुख्यभक्तिः केन भवतीत्याकाङ्क्षायामधिकरणान्तरं वदतीत्याशयेन सूत्रं पठन्ति प्रदानवदेव तदुक्तमिति । साधनत्वेनेत्यादि । सर्वात्मभावकरणकशरणप्राप्तिसाधनत्वेन रूपेण सर्वात्मभावस्य स्वकृतिसाध्यत्वं स्यादित्यर्थः । तन्निवृत्तेरिति, शम्यादिनिवृत्तेः । कथमस्य वाक्योक्तार्थस्य प्रदानतुल्यतेत्याकाङ्क्षायां तदुपपादयन्ति प्रकृतेपीत्यादि । तदिति, उक्तविधं शरणगमनम् । नन्वेवं स्वकृत्यसाध्यत्वे प्रदानत्वमेवास्य सिद्ध्यति, न तु तत्तुल्यत्वमित्याकाङ्क्षायामाहुः भक्तस्येत्यादि । नन्वेवमपि शरणागतेरेव स्वकृत्यसाध्यत्वं सिद्ध्यति, न तु सर्वात्मभावस्येत्यतो वाक्यस्य योजनान्तरमाहुः अथवेत्यादि । शरणपदं मामित्यस्य विशेषणं तथा सति सर्वात्मभावस्यैव प्रदानतुल्यत्वं

निराबाधत्वमित्यर्थः । अस्मिन् पक्षे विचारस्य स्मार्तत्वमेव पुरःस्फूर्तिमारोहतीत्यतः पक्षान्तरमाहुः यद्वेत्यादि । तत्तथैवेति, परमात्मनो लभ्यत्वं वरणजन्यसर्वात्मभावसाध्यमेव, तेन सर्वात्मभावो वरणैकलभ्यो न त्वितरसाधनसाध्य इत्यर्थः । एतेन सर्वात्मभावसाधनकत्वप्राप्तिबोधकं पूर्ववाक्यं वरणलभ्यत्वबोधकश्रुत्यर्थनिर्णायकमिति न तस्य पक्षस्य स्मार्तविचारत्वमिति बोधितम् । ननु पूर्वोक्तवाक्ये अकुतोभयसाधनतया शरणागतेः सर्वात्मभावपूर्वकस्वप्राप्तेर्वोपदेशः । अकुतोभयं च मुक्तिरेवाक्षरप्राप्तिरूपा, 'अभयं वै जनक प्राप्तोसी'त्यादिश्रुत्या तथा निश्चयात् । एवं सति सर्वात्मभावस्य मुक्तिसाधनत्वमेव सिद्ध्यति, न पुरुषोत्तमप्राप्तिसाधनत्वम्, पुरुषोत्तमप्राप्तेः साधनकोटिप्रवेशेन तदपेक्षया मुक्तेरेवोत्कर्षश्च सिद्ध्यतीति पूर्वोक्तं सर्वं द्रविडमण्डकन्यायमनुसरतीत्याशङ्कायामकुतोभयपदतात्पर्यमाहुः भगवदुक्तेत्यादि । तथा चास्याः श्रुतेः 'रसो वै स' इत्यादिना रसरूपताप्रतिपादनोत्तरमानन्दमीमांसया ब्रह्मानन्दस्य गणितानन्दत्वसमर्पणोत्तरमुक्तत्वादस्या उक्त एवार्थो निश्चीयते, भगवद्वाक्ये'प्यथैतत्परमं गुह्यं शृण्वतो यदुनन्दन । सुगोप्यमपि वक्ष्यामि त्वं मे भृत्यः सुहृत्सखे'ति ताद्दशेतिगोप्यकथनं प्रतिज्ञाय 'केवलेन हि भावेन गोप्यो गावः खगा मृगाः । येन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसे'ति भावेन बहूनां प्राप्तिमुक्त्वा, को भाव इत्याकाङ्क्षायां 'रामेण सार्द्धं मथुरां प्रणीत' इत्यादिश्लोकचतुष्टयेन विगाढभावात्मकं तत्स्वरूपं स्वरूपज्ञानाभावेपि तेन भावेनैव परब्रह्मरूपस्य प्राप्तिमुक्त्वा, 'तस्मा'दित्यादिवाक्यद्वयेन सर्वात्मसाधनकस्वप्राप्त्यकुतोभयप्राप्ती उच्येते, तेनोक्तश्रुत्युक्तरसात्मकब्रह्मानुभवोत्तरकालीनतैवाकुतोभयस्य स्फुटतीति न पूर्वोक्तार्थो द्रविडमण्डकमित्यर्थः ॥ २४ ॥

एवमनेनाधिकरणेन सर्वात्मभावरूपाया मुख्यभक्तेर्वरणैकलभ्यत्वं निर्द्धारितम्, तत्र वरणश्रुतौ परमात्मनो वरणैकलभ्यत्वमुच्यते, न सर्वात्मभावस्येत्याकाङ्क्षायां तत्स्वरूपं वक्तुं तस्य वरणैकलभ्यत्वं च पुनर्दृढीकर्तुमधिकरणान्तरं प्रणयतीत्याशयेन सूत्रं पठन्ति लिङ्गेत्यादि ।

प्रतिबन्धकाभावस्येत्यादि । एतेन पूर्वाधिकरणसिद्धान्त आक्षिप्तः । वरदानमपि हि तपआदिसाधनैस्तोषे सति भवतीति सर्वत्र प्रसिद्धम्, तथा सति प्रतिबन्धकनिवृत्तेरागतैव कारणतेति वरणैकलभ्यत्वं न साधीय इति । सिद्धान्तं व्याख्यातुं लिङ्गभूयस्त्वबोधिकां श्रुतिं प्रदर्शयन्तस्तदर्थं प्रकटयन्ति सामोपनिषत्स्वित्यादिना । प्रसिद्धस्थलनिर्देशो विप्रतिपत्तिनिरासाय, स च संवादः 'अधीहि भगव इति होपससाद सनत्कुमारं नारद' इत्यारभ्यान्तं ज्ञेयः । तत्र अधीहीत्यन्तर्भावितण्यर्थः । अध्यापय । 'बुधयुधनशजनेङ्प्रुद्रुस्रुभ्योणे'रितीको ण्यतात्परस्मैपदम् । ताद्दर्थ्येपि तेन पदव्यत्ययः । अत्र सर्वात्मभावस्य वरणैकलभ्यत्वं बोधयितुमतिदुरापत्वमुपपादयन्त'स्तं होवाचे'ति सनत्कुमारवाक्यस्य तात्पर्यमाहुः प्रथमत इत्यादि । 'उपसीदेती'त्यस्य 'तं होवाचे'ति श्रौतेन पदेनान्वयः । 'यद्वेत्थ तेन मोपसीद ततस्ते ऊर्ध्वं वक्ष्यामीति होवाच', यत्त्वं जानासि तत्प्रकथनेन मदुपसन्नो भव स्वाधीतं वद ततोतिरिक्तं तुभ्यं कथयिष्यामीत्युक्तवान् । विद्यान्तमिति । 'वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्पदेवजनविद्या'मिति, वेदानां वेदो व्याकरणम् । पित्र्यं श्राद्धकल्पः । राशिर्गणितम् । दैवमुत्पातज्ञानम् । निधिर्महाकालादिनिधिशास्त्रम् । वाकोवाक्यं तर्कशास्त्रम् । एकायनं नीतिशास्त्रम् । देवविद्या निरुक्तम् । ब्रह्मविद्या शिक्षाकल्पच्छन्दश्चितयः । भूतविद्या भूततन्त्रम् । क्षत्रविद्या धनुर्वेदः । नक्षत्रविद्या ज्योतिषम् । सर्पविद्या गारुडम् । देवजनविद्या गन्धर्वोक्तयुक्तिनृत्यगीतवाद्यशिल्पादिविज्ञानानि । एतद्भगवोऽध्येमि ।

एतत्पूर्वोक्तं हे भगवन् अध्येमि स्मरामि । सोऽहं भगवो मन्त्रविदेवास्मि । शब्दार्थविदस्मि, परोक्ष-शाब्दानुभवमात्रं मेऽस्तीति स्वाधिकारमुक्तवान् । तर्हि किमवशिष्टमित्याकाङ्क्षायां 'नात्मवि'दित्यादि 'तारयत्वि'त्यन्तमाह । तथा चाप्तवाक्यप्रामाण्याच्छोकेन लिङ्गेन स्वस्यानात्मवित्त्वमनुमाय तज्ज्ञानेन शोकं तर्तुमुपसन्नोऽस्मीति नारदाशयः । तदा शोकतारणाय नारदेन विज्ञापितः सनत्कुमारः 'यद्वै किं चाध्य-गीष्ठा नामैवैतन्नाम वा ऋग्वेद' इत्यादिना नारदोक्तानां सर्वेषां नामत्वबोधनपूर्वकं नाम्नो ब्रह्मत्वेनोपासन-मुपदिश्य, 'यावन्नाम्नो गतं तत्रास्य यथा कामचारो भवती'ति तत्फलं शोकतारणायोक्तवान्, तदा नारदः केवलनामत्वेनोपासने उक्तफलाभावं ब्रह्मत्वेनोपासने उक्तं फलं तदपि यावन्नाम्नो गतमित्यनेन नामगति-परिच्छिन्नमिति विमृश्य तेन शोकातरणं निश्चित्य ततोऽधिकं जिज्ञासमानोऽ'स्ति भगवो नाम्नो भूय' इति पप्रच्छ, इदं भूयःपदं न बाहुल्यार्थकमपि तूत्कर्षार्थकमित्याशयेनाहुः भूय इत्यादि । आधिक्यमुत्कर्षः । तत्र 'नाम्नो वाव भूयोऽस्ती'त्युत्तरिते'तन्मे भगवान्ब्रवीत्वि'ति विज्ञापयामास । तदा सनत्कुमारो 'वाग्वा नाम्नो भूयसी'त्यादिना नामरूपविज्ञापकत्वरूपं तन्माहात्म्यमुक्त्वा वाचो ब्रह्मत्वेनोपासनं तत्फलं च पूर्ववदुवाच । एवमग्रेऽपि । तत्र मन इति मननव्यापारविशिष्टमन्तःकरणम्, मननव्यापारश्च विचारात्मकः । एवं सङ्कल्पोऽपि कर्तव्याकर्तव्ययोर्विषयविभागेन समर्थनरूपस्तादृशान्तःकरणस्यैव वृत्ति-विशेषः । चित्तं चेतयितृत्वं प्राप्तकालानुसन्धानवत्त्वम्, अतीतानागतविषयप्रयोजननिरूपणसामर्थ्यं च । ध्यानं शास्त्रोक्तदेवतालम्बनो विजातीयानन्तरितः प्रत्ययसन्तान एकाग्रतापरपर्यायः । विज्ञानं शास्त्रार्थ-विषयकं विशिष्टज्ञानम् । बलमन्नभक्षणजनितं मनसो विज्ञेयविभावनसामर्थ्यम् । अन्नमापस्तेज आकाशः प्रसिद्धाः । स्मरः स्मरणमप्रयत्नश्चित्तव्यापारः । आशा अप्राप्तवस्त्वाकाङ्क्षा, तृष्णा कामाद्यपरपर्याया, प्राणः सूत्रं आसन्यः सर्वसङ्घातनियामकः । एतस्य दर्शनमननविज्ञानैः सत्येनातिवादित्वं फलमुक्तं 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवती'ति, न तु पूर्वोक्तोपासनानामिवोपास्यगतिपरिच्छिन्नम् । अतिवादित्वं च पूर्वोक्तनामाद्यतितवादित्वं एतदति-रिक्तनिकर्षवादित्वमिति यावत् । तत्र 'नापह्नुवीते'त्यनेन सङ्कोचवारणादुत्कर्षं उक्तोऽतिवादित्वे पूर्वोक्तो-पासनाफलानामिवोपास्यगतिपरिच्छिन्नत्वं नोक्तमिति प्राण एवात्मेति भ्रमो नारदस्य मा भूदित्येतदर्थ-माह, 'एष तु वा अतिवदति यः सत्येनातिवदती'ति । एवमुक्ते नारदेन प्राणस्य तत्त्वं न प्राणः, किन्तु सत्यमित्यवगतम्, ततः 'सोऽहं भगवः सत्येनातिवदानी'ति स्वाभिप्राये निवेदितेऽप्यपृष्टस्यावक्तव्यत्वात्तस्य प्रश्नकरणायाह 'सत्यं त्वेव विजिज्ञासितव्य'मिति । तदा 'सत्यं भगवो विजिज्ञास' इति प्रश्ने 'यदा वै विजानात्यथ सत्यं वदती'त्यादिना तत्कारणत्वेन विज्ञानं विज्ञानकारणत्वेन मतिमित्येवं श्रद्धानिष्ठा-कृतिसुखान्तान्युक्तवान् । अत्र षट्सु प्रश्नोत्तरयोर्वैयधिकरण्यम्, सत्यादिविषयकायां जिज्ञासायां तत्कारणानां कथनात् । ततः सुखस्वरूपजिज्ञासायां 'यो वै भूमा तत्सुख'मित्यादिना भूमानं सुख-त्वेनोक्तवान्, तेन ज्ञायतेऽन्योक्तानां सत्यादीनां कारणभूतभूमाभिन्नत्वं तज्ज्ञानगम्यत्वं च, 'प्राणा वै सत्यं तेषामेष सत्यम्, नित्यं विज्ञानमानन्दं ब्रह्मे'त्यादौ तथा सिद्धत्वात् सन्दंशपतितत्वान्मत्यादयोऽप्येवं ज्ञेयाः । ततो भूमस्वरूपजिज्ञासायां 'यत्र नान्यत्पश्यती'त्यादिना यस्मिन् रसरूपे ज्ञाते इतरविषयक-दर्शनश्रवणविज्ञानाभावः स भूमेति भूमस्वरूपमुक्तवान्, सुखसंस्थान्तरेष्वभिव्यक्तेर्भूमरूपस्यापि तस्य तत्रैवाभिव्यक्त्याऽऽनन्दत्वान्तर्वर्तित्वाभ्यां रसरूपत्वेन भूम्नः सर्वात्मभावरूपत्वं सिद्ध्यति, तदेतद्बुद्धि-कृत्याहुः एतेनेत्यादि । एतादृक्त्वं लौकिकेऽपि रसे भवतीति तद्वारणायाल्पे सुखं निराकृतं 'नाल्पे सुखमस्ती'ति, तत्राल्पे कथं न सुखमित्याकाङ्क्षायामल्पस्वरूपकथनपूर्वकं भूम्नोऽल्पस्य च यथायथममृतत्वं मर्त्यत्वं चाह 'यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्य'मिति । तथा च शोकपर्यवसानादल्पे सुखमित्यर्थः ।

अत्र भूम्नोऽमृतत्वकथनात्कालापरिच्छिन्नत्वं बोधितम् । तथा सत्युत्पत्तियोगात्स्थितिस्तस्य जिज्ञास्येत्यतो नारदः पृच्छति 'स भगवः कस्मिन् प्रतिष्ठित' इति, तत्रोत्तरमाह 'स्वे महिम्नि यदि वा न महिम्नी'ति, अत्र पक्षद्वयकथनान्नारदस्य पुनः सन्देहो भविष्यतीत्याशङ्क्य निषेधवाक्यं व्याकरोति 'गो अश्वमिह महिमेत्याचक्षते हस्तिहिरण्यं दासभार्यं क्षेत्राण्यायतनानीति नाहमेवं ब्रवीमी'ति, गोअश्वादिरूपे महिम्नि न प्रतिष्ठित इत्येवमहं ब्रवीमीत्यर्थः । तर्हि स को वा महिमा यत्र प्रतिष्ठित इत्याकाङ्क्षायां 'अन्यो ह्यन्यस्मिन् प्रतिष्ठित इति ब्रवीमीति होवाचे'ति श्रुतिराह । गोअश्वादिभ्योऽन्यो यो महिमा स्वे भक्ते य उत्कर्षरूपो भावस्तस्मिन्प्रतिष्ठित इत्यर्थः । (तेनेदं सर्वात्मभावरूपं भूमाख्यं सुखमत्यन्तैकान्तभक्त एवेति निश्चीयते ।) ततः स कीदृक् महिमा येन तत्रैव प्रतिष्ठित इत्याकाङ्क्षायां तं विवृणोति 'स एवाधस्तात्स उपरिष्टात्स पश्चात्स पुरस्तात्स दक्षिणतः स उत्तरतः स एवेदं सर्वमित्यथात अहङ्कारादेश' इत्यादि । तथा च यस्य सर्वत्र तद्भानं सर्वस्मिंश्च तदभेदभानं इति एवंप्रकारेण अथ एवंभानोत्तरं अतः अस्मात् भानादहङ्कारादेश एव भगवत्प्रतिरूढतया स्वस्मिन् भूमत्वप्रतिसन्धाने स्वस्यैव पूर्ववत्सर्वत्र भानं सर्वस्मिन् स्वाभेदभानं च तादृशो यः तस्मिन् प्रतिष्ठित इत्यर्थः । एतेन स्वे आत्मीये परमैकान्तिकभक्ते महिम्नि तन्निष्ठे भावे स्वविभूतिरूपे प्रतिष्ठितो नेतरत्रेति भावो बोधितः । तर्ह्यात्मादेश इत्यादिकं किमित्युच्यत इत्यत आहुः तत्र विरहभावेत्यादि । एतेषामिति, विरहभावकृततत्तत्स्फूर्तिरूपाणां ज्ञानानाम् । तथा च पूर्वोक्तभाववद्भक्तस्वरूपनिश्चायनार्थमेवेदमप्युच्यत इत्यर्थः । अ-नाहङ्कारादेशात्मादेशयोः कथनाद्वामदेववत् ज्ञानिभावस्यैव विभूतिरूपत्वमिहाभिसंहितं न तु भक्तभावस्येति शङ्का भविष्यतीति ज्ञानिनः सकाशाद्विवेक्तुमाह 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्द' इति । उक्तप्रकारकदर्शनमननविज्ञानवानुक्तप्रकारकरत्यादिरूपसंयोगभाववान् भवति, न तु शुष्काद्वैती वाकर्मा कूटस्थवद्वा भवतीति भक्त एवायं बोद्धव्य इत्यर्थः । एवं तत्स्वरूपं निष्कृष्य पूर्वं शोकपारतारणार्थं चोदितत्वात्तत्तारणोपायत्वमेतस्यैव भावस्य नेतरस्येति बोधयन्नुक्तप्रकारकभक्तस्य फलमाह 'स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवती'ति । सः भूमात्मरत्यादिमान् स्वस्मिन् भूम्न्यात्मन्येव राजमानो भवति, तस्य नामाद्याशापर्यन्तलोकेषु स्वातन्त्र्यं भवति, ततः सर्वप्राप्त्या शोकपारतीर्णो भवतीत्यर्थः । एवं शोकतारणोपायमुपदिश्य उपायान्तरं निराकर्तुमन्यथा ज्ञानवतो निन्दति 'अथ येऽन्यथातो विदुरन्यराजानस्ते-क्षय्यलोका भवन्ती'त्यादि । अन्यस्मिन् भूमातिरिक्ते राजमाना भवन्तीत्यर्थः । नन्वत्र जीवन्मुक्त एव वक्तव्यः, 'सर्वेषु लोकेषु कामचारो भवती'ति गतिस्थित्योर्बोधनात् । नतु भक्तः । तादृशस्य भक्तस्य पूर्वोक्तरीतिकविरहभावे दशमावस्थाया एव सम्भवेन गतेः सुतरां बाधितत्वादित्याकाङ्क्षायामाहुः ततः संयोगेत्याद्युक्तवानित्यन्तम् । ततः पूर्वोक्तसर्वात्मभावोत्तरं संयोगभावे असतीति पदच्छेदः । श्लोकार्थमाहुः तत्र इत्यादि । श्लोकार्थस्तु, पश्य उक्तदर्शनवान् मृत्युरोगौ दुःखमावं न कस्यापि पश्यति, उतेति पादपूरणे पक्षान्तरे वा । दुःखतां दुःखसत्तामेव न पश्यति तथा च मृत्युरोगयोः (का)वार्तेत्यर्थः । दर्शनविषयमाह सर्वमिति, सर्वं भूमात्मकमेव पश्यतीत्यर्थः । फलमाह 'सर्वशः सर्वमाप्नोती'ति । तथा सति न पुनः शोक इत्यर्थः । प्राप्तौ प्रकारमाह 'स एकधे'त्यादिना । सः भूमा पश्यार्थमेवं प्राणादिरूपो भवति, तेन सर्वं पश्यः प्राप्नोति, पश्यो वैवं भूत्वा भूम्नः सर्वं प्राप्नोतीत्यर्थः । स एकधेति श्लोकेन 'आत्मत आविर्भावतिरोभावा'विति श्रुत्युक्तयोस्तयोः प्रकार आविर्भावमुखेन विवृतः । एवं फलपर्यन्तं भावस्वरूपमुक्तस्य, तेनापि भक्त एवात्रोच्यत इति दृढीकृतम् । अयमुपदेशो न यस्मै कस्मैचिद्विदुषे कर्तव्योऽपि तु उत्तमाधिकारिण एवेति बोधनाय श्रुतिराह 'तस्मै मृदि-

तकषायाय तमसस्पारं दर्शयति भगवान् सनत्कुमार' इति । सनत्कुमारस्य कृपालुतामाह 'तं स्कन्द इत्याचक्षत' इति । स वरदानेन शिवस्य पुत्रोपि जातस्तेन तथेत्यर्थः । अतःपरं परं सूत्रं व्याकर्तुमाहुः स चेत्यादि । स इति भगवान् प्राणपोषकः । स इति, सर्वात्मभावः । तथेति, अत्यनुग्रहप्रकारेण । तथेति, वरणं चेत्यर्थः । नन्वात्मादेशे 'आत्मैवेदं सर्व'मिति सर्वस्यात्मत्वभानं श्रावितं तथा सति स्वात्मन्यपि तदभेदो भासत्येव, भाते च तस्मिन् पूर्वोक्तरूपः सर्वात्मभावस्तेन प्रतिमन्यते, न हि स्वात्मत्वेन ज्ञाते ब्रह्मणि विरहभावे वक्तुं शक्यो विरोधादिति इदिकृत्याहुः ज्ञानमार्गीयेत्यादि । उपपादितमिति, फलदित्सया पूर्वमेव सत्वात्तत्प्रतिबन्धकं भगवता न क्रियते एवेतीदमपि न क्रियत इत्येवं विविच्योक्तमित्यर्थः ।

पूर्वोक्तमर्थं दृढीकर्तुं सूत्रद्वयेन शङ्कत इत्याशयेन सूत्रं पठन्ति पूर्वेति । निरूपित इति, ऐतदात्म्येति महावाक्ये निरूपित इत्यर्थः । उत्तरमिति, सनत्कुमारोक्तं प्रत्युत्तरम् । बाह्यं तदिति, बाह्यपूजनम् । द्वितीयं पठन्ति अतिदेशाच्चेति । तत्पूर्वमिति, पदद्वयमिदम् । तत् जगत् पूर्वे पूर्वप्रपाठके इत्यर्थः । अनूद्येत्यादि । 'यद्वै किं चाध्यगीष्ठा' इत्यनेनानूद्य नामात्मकब्रह्मत्वं तत्रातिदिश्यते, यथा कौण्डपायिनां सत्रे 'मासमग्निहोत्रं जुहोती'त्यग्निहोत्रनाम्ना प्राकृताग्निहोत्रधर्मा अतिदिश्यन्ते तथात्र तेषु नामत्वविधानेन नामात्मकब्रह्मणि प्रतीतं ब्रह्मत्वमृगादावतिदिश्यत इत्यर्थः । इत्त इति, ब्रह्मधर्मातिदेशेनर्गादीनां ब्रह्माभेदबोधनादित्यर्थः ।

एवं सूत्रद्वयेनाशङ्काग्रिमेण परिहरतीत्याशयेन सूत्रमाहुः विद्यैवेत्यादि । ननु विद्याशब्दो ज्ञानसामान्ये प्रसिद्धः सर्वात्मभावरूपे विशेषे कथं नियन्तुं शक्यत इत्याकाङ्क्षायां तदुपपादयितुं वरणादिश्रुत्येकवाक्यतया प्रकृतश्रुतितात्पर्यमाहुः अत्रेत्यादि । तदुद्घाटयितुं वरणश्रुतिं व्याकुर्वन्ति नायमित्यादि । 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन, यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वा'मिति तु मुण्डकस्था । अत एवेति, पुरुषोत्तमस्य वृणुतात्मात्मत्वादेव । तस्यैष आत्मा सन्नर्थात्तं स्वां तनुं वृणुत इत्यन्वयो बोध्यः । ननु माध्यन्दिनानामन्तर्यामिब्राह्मणे 'यस्यात्मा शरीर'मिति सामान्यत आत्ममात्रस्य शरीरत्वेन श्रावणात्कथं वृतस्यैतत्तनुरूपत्वमित्याकाङ्क्षायामाहुः तद्वरणेत्यादि । तथा च तत्र यद्यपि शरीरत्व-मात्मनः श्रावितं तथापि 'य आत्मानमन्तरो यमयती'ति नियन्तव्यत्वायैव साधारण्येन श्रावितं न तु स्वकीयत्वकथनपूर्वकम् । अतः शरीरत्वसाधारण्येपि यं स्वीयत्वेनालोचितवान् तमेव वृणुत इत्यर्थः । विवृणुत(इति)पाठेप्ययमेवार्थः । ननु विवृणुत इति पाठेऽयमर्थो न स्फुटति, विवरणपदस्य प्रकाशार्थ-त्वात् । तथा च यं वृणुते तस्य स्वां तनुं पश्यतीत्येवार्थो युक्त इति चेत्, सत्यम्, तथापि सर्वेषां जीवानां तुल्यत्वाद्वरणीये कश्चिद्विशेषो वाच्य एव । स यदि साधनकृतो विवक्षितस्तदा पूर्वार्धासङ्गतिः । यदि साधनाभावकृतस्तदा पामरपशुकीटमात्रे तदापत्तिः । अतोन्यथानुपपत्त्याऽऽलोचनकृत एव वाच्यः । सोपि ज्ञानिभक्तयोः साधारणश्चेद्भावभेदात्तनुपदवैयर्थ्यापत्तिश्च, स्वं विवृणुत इत्येतावतैव चारितार्थ्यात् । अतस्तनुपदानुरोधात्साकारस्यैव प्रकाशो वक्तव्यः । स तु प्रायो भक्तानामेव । यत्तु, 'यमेवैष वृणुते तेन लभ्य' इत्यस्य यः प्रार्थयते तेन प्रार्थने लभ्य आत्मकामनयैवात्मा ज्ञेय' इति व्याख्यातं कैश्चित् । तत्र व्याख्येयविरोधः स्फुट एव । किञ्च । गीतायां 'एवं सततयुक्ता य' इत्यर्जुनप्रश्ने भगवता 'मय्यावेश्य मनो ये मा'मिति तथैवोत्तरदानात्, 'ज्ञानी त्वात्मैव मे मत'मिति भजनमुपक्रम्यैव तस्या-त्मत्वकथनात्, मुमुक्षुज्ञान्यपेक्षया योगिन उत्कर्षमुक्त्वा ततोपि भक्तोत्कर्षस्यैव 'तपस्विभ्योधिक' इति

सन्दर्भे कथनात्, भक्तस्यैव प्रियत्वकथनाच्चोक्त एवार्थः। अतस्तस्मिन्नपि पक्षे तनुप्रकाश्यलिङ्गेन भक्तस्यैव वरणविषयत्वं निश्चीयते, तथा सति स्वीयत्वं तेष्वेव सिद्धमिति पूर्वोक्तप्रकारेपि न कश्चिद्दोष इति हृदि-कृत्योक्तार्थदार्ढ्याय श्रुत्यन्तरमाहुः अत एवेत्यादि । तथा च यदि लाभपदार्थः प्रकाशात्मक एव स्यात्तदास्यामपि प्राप्तिपदार्थः काममोगरूपो नोच्येत, अतो न पूर्वोक्तेर्थे विप्रतिपत्तव्यमित्यर्थः। एतच्छ्रुतौ विप्रतिपत्तिश्चेत्तदा पूर्वग्रन्थमवलोक्य निरसनीयेत्याशयेनाहुः एतदित्यादि । नन्वियं श्रुतिः काठके मुण्डके चास्ति। तत्र काठके 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्, अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वदे'ति प्रश्ने। 'सर्वे वेदा यत्पदमामनन्ती'त्यादिना 'एतद्ध्येवाक्षरं ब्रह्मे'ति प्रकृत्य 'नायमात्मे'ति पठितम्। मुण्डकेपि 'अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्य'मित्यक्षरमेवोपक्रान्तम्, एवं सति पुरुषोत्तमप्रसङ्गस्य कुत्राप्यदर्शनात्कथमत्रैवं व्याख्यायत इति चेत्। अनवधाय वदसि । काठके सर्ववेदवेद्यत्वं परस्यैवोच्यते, तच्च वाच्यवाचकाभेदविवक्षया प्रणवे वक्तुमक्षरपदेन प्रणवं परामृश्य तत्र ब्रह्मत्वमुपासनासाधनत्वाय विधीयते मन्त्रद्वयेन, ततो 'न जायते न म्रियते वे'ति मन्त्रद्वयेनोपासकस्वरूपमुक्त्वा 'अणोरणीयान्महतो महीया'नित्यादिमन्त्रत्रयेण तस्य परस्यात्मनो विरुद्धधर्माश्रयत्वादिकमुक्त्वा तस्य ज्ञानं कथमित्याकाङ्क्षायां 'नायमात्मे'ति पठ्यतेऽतो नात्र तद्गन्धः। मुण्डकेपि, प्रथमे 'यत्तदद्रेश्यमग्राह्य'मित्यादिना सर्वकारणत्वेन प्रस्तुतं द्वितीयेपि 'सुदीप्तात्पावकाद्विस्फुलिङ्गा' इति मन्त्रेण तस्मात्सजातीयविजातीयसृष्टिमुक्त्वा 'दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रोऽक्षरात्परतः पर' इति मन्त्रे पूर्वोक्तादक्षरात्परतः परोतिरिक्त उक्तः । तृतीयेपि 'द्वासुपर्णे'त्यनेनान्तर्यामितया तमेव परामृश्य ततो 'जुष्टं यदा पश्यत्यन्यमीश'मित्यादिना तद्दर्शनफलमुक्त्वा, ततो 'ज्ञानप्रसादेने'त्यनेन निष्कलज्ञानात्तद्दर्शनमुक्त्वा ततो ज्ञानप्रसादेपि न स्वसामर्थ्येन पश्यति किन्तु तत्कृतसामर्थ्येनैवेत्याशयेन 'नायमात्मे'त्यादिकं पठ्यते, तेनोभयत्रापि पुरुषोत्तम एव प्रकृत इत्यनवद्यम्। एतदेव गीतायामुपबृंहितम्। द्वाविमौ पुरुषौ लोक इत्यारभ्य प्रथितः पुरुषोत्तम इत्यन्तेन। तस्मान्नात्र शङ्कालेशः। तदेतदभिसन्धायोक्तं एतच्चयेत्यादि । आनन्दमयाधिकरणेऽक्षरादुत्तमस्य रसरूपस्यैव परशब्देन निश्चितत्वात्परमव्योमपदेन निश्चितत्वाद्ब्रह्मयादीनां तद्विभूतित्वेन निश्चितत्वाद्वरणेनैव तत्प्राप्तेश्चोक्तत्वात्तथेत्यर्थः । ननु तथापि तेषु तेषु भक्तेषु वरणमप्यनेकविधमिति कथं रसमार्गीयमेवात्र ग्रहीतुं शक्यत इत्याकाङ्क्षायामाहुः क्रियेत्यादि । तथा चाग्रिमश्रुत्या तथावसीयत इत्यर्थः । श्रुतिस्तु मुण्डके, 'नायमात्मा बलहीनेन लभ्यो न च प्रमादात्तपसो वाप्यलिङ्गा'दिति । ननु श्रुतौ बलशब्दो वर्तते न भक्तिशब्द इति कथं तन्निश्चय इत्याकाङ्क्षायां बलशब्दस्य भक्तिवाचकत्वमुपपादयन्ति बलकार्यमित्यादिना । उच्यत इति, परोक्षवादेनोच्यते । ननु बलशब्दः शरीरसामर्थ्ये प्रसिद्धस्तत्परित्यज्य कथं भक्तिपर इत्यत आहुः अन्यथेत्यादि । तथाच पूर्ववाक्योक्तार्थानुपपत्त्या बलपदस्यमनोव्यापाररूपभक्तिलक्षकत्वेनाद्रियत इत्यर्थः । ननु पूर्ववाक्ये प्रवचनादीनामेव निषेधो नत्वितरेषामिति नानुपपत्तिरित्यत आहुः वरणेत्यादि । तथा च उत्तरार्धे एवकारेण वरणस्यैव हेतुतानिश्चायनात् प्रवचनादीनां जीवबलकृततयावत्साधनोपलक्षकत्वे अनुपपत्तेः सिद्धौ प्रमाणासहायस्य शारीरबलस्य सुतरां ग्रहीतुमशक्यत्वादस्मिन् वाक्ये बलाभावनिषेधमुखेन बलस्य हेतुताबोधनाल्लौकिकप्रामाणिकबलाभ्यामतिरिक्तमेव बलमत्र बलपदेन ग्राह्यं तच्चोक्तरीत्या भक्तिरेवेत्यतः सैव गृह्यते, वस्तुतस्तु 'बलं मे पश्य मायायाः स्त्रीमय्या जयिनो दिशाम्, या करोति पदाक्रान्तान् भ्रूविजृम्भेण केवल' इत्यादौ प्रभुवशीकारकसामर्थ्येपि बलपदप्रयोगदर्शनात्सामर्थ्ये एव शक्तं बलपदं प्रकरणादिना तद्विशेषे पर्यवस्यति, तेन न कोपि शङ्कालेश इति भावः । श्रुतौ बलपदेन भक्तिमुक्त्वाग्रेण च

'प्रमादा'दित्यादि यदुच्यते, तेन भक्तस्याप्यप्रमादः सलिङ्गं तपश्च सहकारित्वेनोच्यते, तत्राप्रमादो भगवदिच्छानुरूपाचरणादिः। सलिङ्गं तपः सर्वात्मभावसहितो विरहभावो ज्ञेयः। उत्तरार्धं व्याकुर्वन्ति **एतादृशस्येत्यादि**। **तद्भूदय** इति, श्रौतस्य षष्ठ्यन्ततत्पदस्य तात्पर्यकथनायेदम्। एवं श्रुतिद्वयार्थं निश्चित्य सौत्रस्य विद्यापदस्य सर्वात्मभावबोधकत्वमुपपादयितुं विषयवाक्यतात्पर्यं पूर्वसङ्गतिं च विशदीकुर्वन्ति **प्रकृत** इत्यादि। **ब्रह्माभेदबोधनेनेति**, अक्षराभेदबोधनेन। **तत्रेति**, सनत्कुमार-नारदयोर्भक्तयोः संवादे। **तद्भेत्वसिद्धिरिति**, पूर्वपक्षनिरूपितप्रकरणैक्यरूपस्य हेतोरसिद्धिरित्यर्थः। एवं प्रकरणे भिन्ने सत्यतिदेशोऽप्यकिञ्चित्कर एव, नह्यतिदेशमात्रेण तदवान्तरभेदत्वसिद्धिः क्वापि सिद्धा। निर्धारणं दर्शयन्ति **सुखं त्वित्यादि**। पूर्वत्र 'सदेव सौम्ये'ति सद्रूपं आत्मानं प्रकृत्य तदभेदज्ञानमुपदिष्टम्। इह तु निरवध्यानन्दरूपं जिज्ञास्यत्वेन निर्धारयतीति विषयभेदान्न पूर्वं ज्ञानं किन्तु मुख्या सर्वात्मभावरूपैव विद्योच्यत इत्यर्थः। ननु भूमात्र जिज्ञास्यत्वेनोच्यते, तावता सर्वात्मभावः कथं सिध्यतीत्याकाङ्क्षायां भूमलक्षणवाक्ये सिध्यतीत्याशयेनाहुः **भूम्न** इत्यादि। ननु सर्वात्मभाववतां लीलोपयोगिपदार्थदर्शनं दृश्यते, भूमलक्षणे तु तदितरदर्शनं निषिध्यत इति भूमलक्षणे सर्वात्मभावो नोच्यत इत्याकाङ्क्षायामाहुः **तथा सतीत्यादि**। निरासप्रकारमाहुः **तैरित्यादि**। तथा च तद्दर्शनं प्रभुकृतं न भक्तकृतमतो भक्तेषु न सर्वात्मभावसम्भवाभाव इत्यर्थः।

इममेवार्थमग्रिमसूत्रे स्फुटीकरोतीत्याशयेन सूत्रं पठित्वा व्याचक्षते **दर्शनाच्चेत्यादि**। पुनरा-शङ्क्य सूत्रान्तरमवतारयन्ति **नन्वित्यादि**। **तमाद्यायेति**। पूर्वतन्त्रे असंजातविरोधत्वेनोक्तक्रम-प्राबल्यस्य स्थापितत्वात्तदनुरोधेनैवोपसंहारगताः शब्दा नेया इत्यर्थः। **आत्मपदानामिति**, 'अथात आत्मादेश' इत्यारभ्य पठितानां तेषाम्। **वाक्यभेद** इति, अर्थैकत्वाभावात्स इत्यर्थः। सूत्रं पठित्वा समादधते **श्रुत्यादीति**। श्रुतिं दर्शयन्ति **प्रकृत** इत्यादि। न केवलमुदासीनतया ज्ञायमानः शोकं तारयति, अपि तु लभ्यमानः, अन्यथा 'आत्मलाभान्न परं विद्यत' इति श्रुत्यन्तरात्तदलाभे परमफलाभावाच्छोको नापेयात्। लाभश्च न ज्ञानमात्रं किन्तु स्वाधीनतापुरस्कृतमाकाङ्क्षापूर्त्या विलक्षणानन्दजनकं ज्ञानम्। स च लाभो वरणाधीन इति शोकतारणश्रुतिसार्थक्यसम्पा-दिका वरणश्रुतिरेव बलीयसी। आदिपदसूचितं हेत्वन्तरं दर्शयितुं **अपरं चेत्यादि** विभ-जन्ति **सहीत्यादि**। **सनत्कुमारोक्तरूपमिति**, सनत्कुमारोक्ते वाक्ये रूपे किं नामादिरूपं लक्षीकृत्येत्यर्थः। तथा चैतेन प्रश्नद्वयेनाप्युपक्रमगतमात्मपदं पुरुषोत्तमपरमेवेत्यर्थः। नन्वेवमात्मपदस्य पुरुषोत्तमपरत्वेपि सर्वात्मभावलिङ्गस्याभावात्तस्य कथं सिद्धिरित्यत आहुः **तदेत्यादि**। तथा च द्वितीये प्रश्नोत्तरे सर्वात्मभावलिङ्गदर्शनादेव सिद्धिरित्यर्थः। एतेनावश्यकोपपत्तिरप्येतत्तात्पर्यनिर्णायकेत्युक्तम्। उक्तमर्थं दृढीकर्तुमाशङ्क्य सूत्रान्तरमवतारयन्ति **नन्वेतयेत्यादि**। **अनुबन्धादिभ्यः प्रज्ञान्तर-पृथक्त्ववद्दृष्टश्च तदुक्तमिति**, अत्र न बाध इत्यनुषज्यते। तथा चानुबन्धादिभ्यो हेतुभ्यः सर्वात्मभावलिङ्गात्मकभावस्य निश्चायनात्तद्बाधोऽत्र न वक्तुं शक्य इत्यर्थः। इममर्थं व्याकर्तुं पूर्वं श्रुतिं व्याचक्षाणा आहुः **भूमेत्यादि**। तथा च यदि तथाभिप्रेया'त्स्व' इत्येकमेव पदं वदेत्, 'अन्यो ह्यन्यस्मिन्प्रतिष्ठित' इति च न व्याकुर्यादतस्तथेत्यर्थः। नन्वत्र 'स्वे महिम्नी'ति कथनोत्तरं 'यदि वा न महिम्नी'त्याशङ्क्य 'गो अश्वमिह महिमेत्याचक्षते हस्तिहिरण्यं दासभार्यं क्षेत्राण्यायतनानी'त्यनेन महिमस्वरूपं निरूप्य, 'नाहमेवं ब्रवीमी'त्यनेन तत्र भूमप्रतिष्ठां निषिध्य 'ब्रवीमीति हे'त्यनेन स्वस्मिन् प्रतिष्ठां निगमयित्वा पूर्वोक्तमहिमनि प्रतिष्ठानिषेधे हेतुरुच्यते 'अन्यो ह्यन्यस्मिन्प्रतिष्ठित' इति, एवं सति

'स्वे महिम्नी'त्यस्य स्वस्वरूपे व्यापक इत्यर्थः सेत्यतीत्यस्वरसमुद्भाव्य पक्षान्तरमाहुः स्वरूपात्मके महिम्नीति चेति। अनेनापि प्रकारेण व्याख्याने तत्प्राप्तिरित्यर्थः। तथात्वं व्याकुर्वते भगवदित्यादि। सर्वभावस्य रसात्मकत्वाद्भगवदभेदः प्रागेव विवृत इति महिमरूपत्वं विवृण्वन्ति तदितरेत्यादि। तथा च भावस्याधिकरणसापेक्षत्वादर्थादेव तत्प्राप्तिरिति सोपि पक्षो न दुष्ट इत्यर्थः। एवं सर्वात्मभाव एवात्रोच्यत इति व्याख्याय पूर्वोक्तशङ्कामपाकर्तुं सर्वात्मभावलिङ्गानि स्फुटीकुर्वन्तः सूत्रस्थं हेतुं व्याकुर्वन्ति सत्स्वित्यादि। त्रिविधा इति द्वितीया निरूप्येत्यनेनान्वेति। तमेवानुबध्नाति, वृतमक्तं वृतभक्तनिष्ठं भावमेव वा गोचरयतीत्यर्थः। तत्र हेतुः। तच्छब्देस्यत्यादि। 'स वा एष' इत्यनेन पुरुष उच्यते, 'एवं पश्य'न्नित्यादिना दर्शनमननादिकर्तृताबोधनेन भाववैशिष्ट्यं च स्फोर्यत इति पूर्वोक्तानुबन्धदर्शनात्तादृशभक्तनिष्ठसर्वात्मभावरूप एव महिमा तत्राभिप्रेत इत्यर्थः। एवं सतीति भिन्नं वाक्यम्। उक्तरूपे महिम्नि विद्यमान एव श्रुतिसङ्गतिरित्यर्थः। लिङ्गं व्याकर्तुमादिपदार्थमाहुः आदिपदादित्यादि। तत्स्वरूपं विवृण्वन्ति पूर्वमित्यादिना। स्फुटमग्रे। ननूक्तयुक्तिभिरत्र भवतु सर्वात्मभावस्तथाप्यत्र फलत्वेन सर्वग्रन्थिमोक्षस्यैवोक्तत्वात्तस्य च 'भिद्यते हृदयग्रन्थि'रिति श्रुत्यन्तरस्वारस्येन परावरदर्शनफलरूपस्यैव ग्राह्यत्वात्तस्य च 'तमेवंविद्वानमृत इह भवती'त्यादिश्रुत्यन्तरे मुक्तिरूपत्वेनैवोक्तत्वादस्यापि मुक्तावेव यदि पर्यवसानं तदा फलतो न कश्चिद्विशेषः। अथ न, तदा प्रकृते फलोक्तिविरोध इत्यस्यापि फलबलेन पूर्वविकल्पत्वमेवेत्याशङ्कां हृदिकृत्वा सूत्रांशमवतारयन्ति ननु सर्वेत्यादि। प्रज्ञान्तरपृथक्त्ववदिति, प्रज्ञानन्तरकृतं पृथक्त्वं प्रज्ञान्तरपृथक्त्वं तद्वत् न बाध इत्यन्वयः। एतमेवार्थं व्याकुर्वन्ति मुमुक्षुभक्तेत्यादि। शेषं प्रकटार्थम्। दृष्टश्च तदुक्तमित्यत्रापि न बाध इत्यन्वयो बोध्यः। एवं च दर्शनान्तरे हृदयग्रन्थिभेदनं नानाविधवृत्त्यनुत्पत्तिरूपम्, अत्र तु सर्वग्रन्थीनां प्रविमोक्षो नानावित्त्युदयेपि तासामबन्धकत्वरूपमिति दर्शनभेदात्फलभेदस्तत्क्रतुन्यायादप्युपपन्न इति भावः।

लिङ्गविरोधपरिहारायाग्रिमं पठतीत्याशयेन सूत्रं पठन्ति न सामान्यादिति। विरोधं व्युत्पादयन्ति नन्वित्यादि। प्रतिपाद्यत इति। 'सालोक्यसार्ष्टी'ति वाक्ये उच्यते। एवं सतीति, श्रुतिस्मृत्योर्विरोधे सतीत्यर्थः। उक्तप्रमाणं सालोक्यम्। अनेकधा इति, 'आदित्यो यूपः यजमानः प्रस्तरः स एष एव मृत्युर्य एष एतस्मिन्मण्डले पुरुष' इत्यादावित्यर्थः। प्रकरणादिति, लभ्यत इति शेषः। अत एवेति, लोकान्तरस्य मृत्युतुल्यत्वादेवेत्यर्थः।

परेणेति सूत्रे॥ श्रुतिवाक्यपदेन, 'न पश्य' इति श्लोको बोध्यः। अनुबन्ध इति, अनुपश्चाद्बध्यते सम्बध्यत इत्यनुबन्धः। उक्तार्थे अपुष्टार्थत्वं विभाव्यार्थान्तरमाहुः अथवेत्यादि।

अग्रिमसूत्रभाष्यं तु प्रकटार्थम्। अन्ये त्वेतत्सूत्रमग्रिमाधिकरणे योजयन्ति। तदग्रे विचारणीयम्॥ २५॥

एवमनेनाधिकरणेनाविहितभक्तिरूपसर्वात्मभावस्वरूपं तस्य सर्वसाधनोत्कृष्टत्वं तत्फलं च निर्धारितम्। अतःपरम्।

---

१. एतावदेवोपलब्धमिति।

# EDITOR'S NOTE.

After the publication of the first two Pādas of the Adhyāya III of the Aṇu Bhāshya with Bhashya–Prakās'a and Ras'mi, we have been fortunate in the further acquisition of manuscripts by the Grace of Lord Kṛishṇa. In the introduction to Pāda I we stated that the Bhāshya Prakās'a the original of which in the author's own hand is in our possession missed the final revision made by the author himself, and the additional portions found in some copies of of the Prakās'a were of the authorship of S'rī Purushottamajī himself even though not found in the original manuscript. This inference was based merely on our familiarity with the style of Purushottamaji, which was apparent in those passages. Our diffidence was the more because the learned author of Ras'mi had not chosen to write his commentary on those passages. Gopes'varaji has based his Ras'mi on the original manuscript of Prakās'a which came in his possession through his father Gokulotsavaji who was adopted in the Purushottamaji's house by Mahārāṇi Vahuji at Surat. Gopes'varaji would seem to look upon the passages of Prakās'a not found in the above original with an eye of suspicion, and we find him in the Pāda III throwing doubt on those passages of Prakās'a on the ground of their not being found in the original in his possession. In his Ras'mi also he omits commenting on those passages. This decision of Gopes'varaji was rather unfortunate. As will be presently seen these passages of Prakās'a are Purushottamaji's own, and Gopes'varaji's omission to comment on them has increased our difficulties in approaching those passages for a thorough understanding.

It was rather a happy coincidence that in basing the text of the Prakās'a for our edition we did not follow Gopes'varaji's view. We always felt that those additional passages of the Prakās'a, though not found in the original, were of the authorship of Purushottamaji. Our surmise was that Purushottamaji's original must have been got copied fair, and a final revision on the same must have been made by Purushottamaji himself. Thus these additional passages were due to a final revision and as such ought to be included in the authentic text of the Prakās'a. Hence we have acted accordingly from the very beginning. Our conjecture as to the final revision has happily turned out to be true. Through the kindness of Mr. Natavaralal Iccharam Desai B. A. of the famous Gujarati Press we have been able to secure that very copy of the Prakās'a in which Purushottamaji has made additions and revisions in his own hand and which are not found in the original wholly written in his own hand. Except these additions and revisions the rest of this manuscript is written in neat handwriting by a scribe. This neatly written portion contains the whole of Purushottamaji's Prakās'a original, while the additions and revisions seem to have been made by Purushottamaji himself in his own hand when he finally revised his Bhashya–Prakās'a. The text of the Prakās'a of the present Pāda is based on the original so far as its text was common with the above-mentioned fair copy and for portions not found in the above-mentioned original, it is based on the

additions in Purushottamaji's hand in the fair copy. Thus the whole text of the Prakās'a is based on the most authentic basis. The same lines will be followed in the edition of the subsequent portions.

Another thing to note is this. The last Adhyāya and a half, though the authorship of the same is attributed to Vallabhacharya, is actually from the pen of Vitthales'vara, his second son. Scholars like Krishṇachandraji and Purushottamaji have mentioned this fact in their works Vritti and Prakās'a respectively III. 2-34. B. S. The Sāmpradayika Gatha also states that the last two Adhyāyas of Aṇu-Bhashya were composed by Vitthales'vara under the directions of his father. But we did not learn from the above the materials on which their suggestion was based. The statement of Purushottamaji that the second Varṇaka of the Anandamayādhikaraṇa and the Aṇu-Bhāshya from III. 2-33 was Vitthales'vara's, appeared to be perfectly correct from the style and views expressed there in. Any one familiar with the language of Vallabhacharya could without doubt say that the passage 'कपित् गोकुल' etc in III. 3-1 was not of the authorship of Vallabhacharya. This difficulty has been now solved beyond any doubt. In search of MSS. of the missing portions of Ras'mi, we again went on a tour to Nathadwara. Through very great kindness of H. H. Tiket S'ri Govardhanalalji Maharaja and his son Lalbava Saheb S'ri Damodaralalji we got access to the original MSS. carefully preserved there. To our great delight and satisfaction we found an almost complete Manuscript of the Aṇu-Bhāshya Adhyāya IV and three last pages of Adhyāya III Pāda IV and second interpretation of III, 4-19. 'अनुष्ठेयं' in the handwriting of Vitthales'vara himself. This unexpected discovery of the original Manuscript of the Anu-Bhāshya has been fruitful of many far-reaching results. It has put beyond the shadow of doubt the authorship of the last two Adhyāyas of the Anu-Bhashya. Purushottamaji's statement in Prakās'a III. 2-24. 'इत आरभ्य प्रभूणामिति' is based on a firm and reliable basis. He, it seems, had access to the above original of the Aṇu-Bhashya. On the leaves of this original MSS. there are fine paper-slips. On these paper-slips there are remarks pointing out the portions of the Aṇu-Bhāshya to which those pages belonged. These remarks, it appears to us, are in Purushottamaji's own handwriting. This fact has led us to prefer Prakās'a's readings of the Aṇu-Bhāshya in preference to others. This original Manuscript with all its additions and revisions taken into consideration proves beyond doubt that Vitthales'vara is the author of the last Adhyāya and a half of Aṇu-Bhāshya, though the 'इतिश्री' in the name of Vallabhacharya in Vitthales'vara's own hand would suggest that he himself desired to allow the public to know that Vallabhacharya was also the author of the same. The ambiguous verse 'भाष्यपुष्पाञ्जलिः श्रीमदाचार्यचरणाम्बुजे । निवेदिता तेन तुष्टा भवन्तु मयि ते सदा' is consistent both with the authorship of Vallabhacharya and Vitthales'vara. In one case we have to understand the word Acharya as referring to Badarayaṇa and in the other to Vallabhacharya. This fact explains the references to Vitthales'vara's Vidvanmaṇḍana and Bhakti-Hansa in this portion of the Aṇu-Bhāshya. References to the Adhyāyas III and IV in Subodhini and Nibandha would go to show that Vallabhacharya himself wrote complete Bhashyas on both the Mimānsās. But it seems Vittha-

les'vara got Vallabhacharya's Bhashya on the Brahma-Sūtras upto III-2-33. It seems this was the only portion in his possession when he composed his Vidvanmandana. It was at a late stage, after he adopted Gokula near Muttra as his permanent residence, and when he seems to have lost all hopes of securing a complete manuscript of his father's Brahma-Sūtra-Bhashya, that he undertook to complete the Bhashya fragment of his father on the Brahma-Sūtras. In order to distinguish this Bhashya from that of his father, he seems to have named it Aṇu-Bhāshya. In Subodhini Vallabhacharya does not refer to his commentary on Brahma-Sūtra as *Aṇu* Bhashya, but only as *Bhashya* without the word Aṇu. The absence of any pungent expressions, which we find in the Vidvanmaṇḍana, against opponents in the Aṇu-Bhāshya portion of Vitthales'vara would clearly show that the portion of the Aṇu-Bhāshya by Vitthales'vara is the work of his mature age.

We express our heartfelt obligations to H. H. S'rī Govardhanalalji Maharaja of Nathadwara and his son S'rī Damodaralalji for allowing us the use of the said original manuscript of the Aṇu-Bhāshya, and for giving us photographs of some of its pages. In due course photo-blocks of the same will be ready, when the Vaishṇava public will be in a position to know Vitthales'vara's handwriting.

A picture of Purushottamaji is placed in this volume. The original was obtained by us from S'rī Dwarkanathaji's Mandira at Kankroli in Mewar, through the kindness of H. H. S'rīmad Goswamini S'rī Saundaryavati Vahuji, the mother of S'rī Vraja Bhushaṇaji, the present occupant of the seat. We also thank Seth Lalji Naranji J. P. for having given his consent on behalf of the trustees for defraying the cost of getting the blocks made and printed.

One of the manuscripts utilised in basing the text of this Pāda-Bhashya has turned out to be of S'rī Kalyāṇarayaji, the frther of the Great S'rī Harirayaji. This Kalyaṇarayaji is the first grandson of Vitthales'vara. We beg to draw the attention of the scholars of the Sampradāya as well as others to the Paris'ishta printed here. It is almost a complete commentary on the Guṇopasanhāra Pāda of the Aṇu-Bhashya. It was made available to us by the late Mr. Tansukhram M. Tripathi B. A., the veteran scholar of Gujarat. On a comparison of the same with the Prakās'a, we find that almost the whole of it is incorporated in the Prakās'a. It seems possible from the style of expression and method of writing that Purushottamaji owes much to this. Its style resembles that of Krishṇachandraji's Vṛitti. If so, the comparative method of exposition followed by him in Prakās'a owes its origin to the genius of Krishṇachandraji. This Krishnachandraji was born on the 7th day of Dark half of S'ravaṇa 1655 Samvat. He was the guru of Purushottamaji both in name and fact. It is possible that Krishṇachandraji wrote his commentary from the very beginning, and the same is incorporated in the Prakās'a as here. We request scholars to make a search for the same. If found, it will be the oldest commentary on the Aṇu-Bhāshya. The copy of the Guṇopasanhāra-Pāda-Vivaraṇa printed in the Paris'ishta seems to be the original in Krishṇachandraji's own hand.

*Bombay,* } 2000 **M. T. Telivala.**
*27-4-27.* }

श्रीकृष्णाय नमः ।

# श्रीमद्ब्रह्मसूत्राणुभाष्यम् ।

शुद्धाद्वैतब्रह्मवादनिर्गुणभक्तिमार्गप्रवर्तकाचार्यचक्रचूडामणि-
श्रीमद्वल्लभाचार्यचरणप्रणीतम् ।

दशदिगन्तविजयिश्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणप्रणीत-
भाष्यप्रकाशसम्पूर्णवेत्तृश्रीमद्गोस्वामिश्रीगोपेश्वरजि-
चरणप्रणीतभाष्यप्रकाशरश्मिपरिबृंहितम् ।

## तृतीयाध्यायस्य चतुर्थः पादः ।

'भगवद्धर्मपरायण सद्गत श्रेष्ठि गोवर्धनदास सुन्दरदास' इत्यस्य पुष्टिमार्गीय-
संस्कृतसाहित्यसमुद्धारार्थं निर्दिष्टद्रव्यसङ्ग्रहतः 'प्राप्तभगवत्पद
मूलचन्द्र तुलसीदास तेलीवाला, बी. ए., एल्एल्. बी.,
वकील, हाइ कोर्ट' इत्येतेषां सुहृद्भिः
संशोध्य 'निर्णयसागर' मुद्रणालये
मुद्रयित्वा प्रकटीकृतम् ।

श्रीवल्लभाब्दाः ४४९. संवत् १९८४.

मूल्यमेकमुद्रिका ।

# S'ri Vitthales'vara and Anu Bhāshya.

S'rī Vitthales'vara Dikshita, the author of the last Adhyāya and a half of the Aṇu Bhāshya was the second son of S'rī Vallabhāchārya. He was born at Charaṇāta near Allahabad on the 9th day of the dark half of Margas'irsha, 1572, Samvat. Vallabhāchārya in his later life adopted Adel as his permanent residence, and therefore Vitthales'vara passed his childhood there. When Vallabhāchārya took up Tridanda-Sannyāsa in 1587, Vitthales'vara was a boy, fifteen years old. His elder brother S'rī Gopīnātha was senior to him by five years. His Upanayana ceremony was performed by Vallabhāchārya, but his early education seems to have been of a desultory character. A Gāthā current in Sampradāya states that Vitthales'vara in his childhood was given to playfulness. He did not seem to realise the heavy responsibility that lay on his shoulders, so Dāmodaradāsa, the chief among Vaishṇavas, is said to have remonstrated with young Vitthales'vara and persuaded him to study, and thus be fit to bear the responsibility of the Sampradāya as the worthy son of a worthy father. There is no doubt that Dāmodaradāsa had his share in turning Vitthales'vara from worldly playfulness to the meditation of Krishṇa–Leelā. Chāchā Harivams'ajī was another personality who influenced Vitthales'vara in the successful discharge of his duties as Āchārya. Chāchā Harivams'aji's proselytizing tendencies were great. It was he who generally visited a place in advance and prepared it for the acceptance of Vitthales'vara's teachings. It is not known from whom Vitthales'vara got direct help in the profound learning which is manifest in his works which are available now. A Gāthā says that Vitthales'vara was sent by Vallabhāchārya to Mādhava Sarasvati for his studies, but instead of studying anything at his place, he devoted his time to reading S'rimad Bhāgavata. Whatever may be the truth in the above Gāthā, it is an undisputed fact that like his father, Vitthales'vara had a very great hold on and absorbing attachment to S'rimad Bhāgavata. After Vallabhāchārya passed away in 1587, Gopīnātha and Vitthales'vara lived together at Adel. Except perhaps two small works named *Sādhanadīpaka* and *Sevāpaddhati*, we are not aware of any important work of S'ri Gopīnātha, and so we have not got materials to decide how far Vitthales'vara was indebted to his elder brother S'rī Gopīnātha, for his future literary activities. S'rī Gopīnātha and his son Purushottama seem to have passed away between 1590 and 1600. After this, Vitthales'vara became the recognised representative of his father, and thereafter he seems to have planned various tours, and thought of writing works for the propagation of the Sampradāya.

Unlike S'ankara, Rāmānuja, Mādhva, Chaitanya, and a host of others, Vallabhāchārya preferred to follow the *Aupanishada* traditions, and like Yājnyavalkya and others, became a Grihastha Acharya. After him, his

elder son too, became a Grihastha Āchārya. S'rī Gopīnatha got Vitthales'vra married to S'rī Rukmiṇī, a daughter of Vis'vanātha Bhatta and Bhawāni of his own caste. The relations of the two brothers were of a very cordial nature. A letter* addressed by Vitthales'vara to his elder brother reveals the high regard which he had for him.

When Gopīnātha and his son Purushottama passed away, Vitthales'vara seems to have begun his tours. His first visit was from Adel to Gujarāt in the year 1600, and his second visit to Gujarāt was also from Adel in 1613. In Gujarāt his activities were chiefly confined to Ahmedabad, Cambay and Godhra. In Godhra, one Nāgaji Bhatta was initiated in the Sampradāya by him. This Nāgaji Bhatta was, it is said, a state-officer, and the name Pancha Mahals owes its origin to his activities. He was a Sāthodrā Brahmin. Mr. Kes'havalāl Harshadraya Dhruva, the veteran Gujarāti scholar, is said to be a descendant of this Nāgaji Bhatta. Whenever Vitthales'vara visited Gujarāt, Nāgaji Bhatta always took advantage of his company. A few of the original letters addressed by Vitthales'vara to Nāgaji Bhatta are preserved even to this day at Nāthadwara in Mewar. Nāgaji Bhatta seems to have been a very intelligent follower. Various questions seem to have been put by him to Vitthales'vara. He seems to have been a very active agent in spreading the doctrines of Vallabhāchārya in his country. After having read *Subodhinī*, *Nibandha* etc., he wanted to know as to what was the kernel of Vallabhāchārya's teachings. In answer to this query, Vitthales'vara sent to him a beautiful couplet which summarises the doctrine in the choicest words. It runs as follows:—

श्रीवल्लभाचार्यमते फलं तत्प्राकट्यमव्यभिचारिहेतुः ।
प्रेमैव तत्सिद्धयपरोपयोगोऽखिलसाधनानाम् ॥

According to the view of Vallabhāchārya, भगवत्प्राकट्य is the फल, and the unfailing remedy for it is love for Him, while all other Sādhanas are useful in generating this love. Nāgaji Bhatta remained in company of Vitthales'vara not only in Gujarat, but he often visited Adel to pay his respects to him. He is said also to have visited the shrine of S'rī Nāthaji–Govardhanadhara–at Jatipura on the Govardhana Hill, and stayed there for a couple of months. Thus it would seem that Nāgaji Bhatta was familiar both with the practice and theory of the Sampradāya, and he was instrumental in the rapid spread of the Sampradāya from Samvat 1600 onwards in Gujarāt.

Another personality who helped in the spread of Sampradāya was

---

*The letter runs as follows:—

स्वस्ति श्रीमज्ज्येष्ठभ्रातृचरणकमलेषु यवीयसो विठ्ठलस्य प्रणामकोटिनिवेदनोयं पत्रप्रसूतः । शमिह, भवत्कुशलमाशासे । अहं भगवदाज्ञया रासोत्सवपर्यन्तं श्रीगोवर्धनधरणचरणारविन्दनिकटे स्थितोऽस्मि । हरिद्वारं प्रस्थातुं न जानेति न मतम् । अत्र ममास्वास्थ्यं बहु जातमासीत् । उपवासद्वयकं कृतम् । अधुना भगवत्कृपया च नैरुज्यं जातमस्ति । कापि चिन्ता न कार्या । अक्का–अम्मा–भ्रातृचरणेषु नतयः । अक्का यथा दुःखं न करोति ममास्वास्थ्यं श्रुत्वा तादृक् कर्तव्यम् । भवतापि कापि चिन्ता न कार्या मम, भव्यमिति सर्वत्र । वाद्देवेन्द्रपुरीषु प्रज्ञावत्सु दीक्षितेषु हरिहरनामकाद्यभ्यागतेषु प्रणतयः । सिद्धान्तादिन्यासविदः । अम्मचैत्यानां नतयः ।

Bhāilā Kothāri of As'arvā near Ahmedabad. When Vitthales'vara visited Dwarka or Gujarat, he used to put up with him for a couple of months. Bhāilā's son-in-law Gopāladāsa has given the Sampradāya a charming and unique poem in Navākhyāna. The Sampradāyika Gāthā relates that this Gopāladāsa was Narsinha Mehtā in his preceding birth. Whatever that may be, it helps one in furnishing the latest date of Narsinha Mehtā. Vitthales'vara's first visit to Gujarāt was in 1600 St, and Gopāladāsa was then nine years old. The poem of Gopāladāsa (Navā Khyāna) has been the most popular and revered among Vaishnavas. Every Vaishnava, male and female, recites it. Commentaries in Sanskrit and Vraja Bhāshā are written on it. The commercial people of Gujarāt have been fascinated by it. This poem, it seems, has been instrumental in shaping Vaishnava attitude towards the Mahārājas. The intensely tender feelings with which the Mahārājās are looked upon have their genesis in the spread of this lyric. It speaks of Vitthales'vara as Goswāmiji. He assumed the surname of Goswāmi in 1634, after he was granted permission by Emperor Akabar to graze his cattle on all lands including the Royal ones. From this it would seem that this poem of Gopāladāsa could not have been composed before 1634. The Sāmpradāyika Gāthā informs us that the inspiration of this poem came to Gopāladāsa from Vitthales'vara himself. It is said that Gopāladāsa, who was dumb, miraculously got his powers of speech as a result of the chewing of the betelleaf offered by Vitthales'vara. When he visited Bhāilā's house, numerous persons came to see him and joined his Sāmpradāya.

In Cambay, Jivā Pārekh, a celebrated Baniā merchant was instrumental in the early spread of Vaishnavism. On the whole the spread of Vaishnavism in Gujarāt was not only rapid but complete. Numerous castes and sub-castes wholly embraced the Vaishnava Cult. This continued in increasing proportions during the times of the succeeding generations of Vitthales'vara.

Vitthales'vara himself visited Gujarāt not less than six times. His first visit was in 1600 from Adel. The second one was also from Adel in 1613. The third one was from Gaḍā in 1619. The fourth one was from Mathurā in 1623. The fifth one was in 1631 from Gokula. And his sixth and last visit was also from Gokula in 1638. This would show that for nearly forty years Vitthales'vara exercised his influence over Gujarāt and Kathiāwād. The visits to Gujarāt were incidental to his visit to the shrine of Dwārkānāthajī at Dwārkā. His desire for and interest in Dwārakā and Gujarāt were created by the early reception of his father and his elder brother S'rī Gopīnātha. Rānā Vyāsa, a learned pupil of Vallabhāchārya, was an active worker at Siddhapura. So also there was one Gopāladāsa of Narodā. Vallabhāchārya himself had visited Dwārakā not less than three times, his last visit being in 1585. He is said to have stayed at Dwārakā for over six months. The Swarūpa of Dwārkānāthaji at Bet-Dwārkā was installed there by Vallabhāchārya.

भावेनैवेति ज्ञापनाय फलपदमनुक्त्वा पुरुषार्थपदमुक्तम्। एवं सत्यस्य सूत्रस्यार्थान्तरमपि व्यासाभिमतमिति ज्ञायते। तथा सत्ययं श्लिष्टः प्रयोगः। तथाहि। पुरुषार्थो भगवानेव। कुतः। अतःशब्दात्। अतःपदविशिष्टश्रुतिवाक्यादित्यर्थः। तैत्तिरीयोपनिषत्सु पठ्यते 'अतः परं नान्यदणीयस९ हि परात् परं यन्महतो महान्तम्, यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्ता'दिति ॥ १ ॥

अथात्र प्रत्यवतिष्ठते।

शेषत्वात् पुरुषार्थवादो यथान्येष्विति जैमिनिः ॥ २ ॥

विष्णोरिज्यत्वेन कर्मशेषत्वात् तत्स्वरूपज्ञानपूर्वको यागः फलातिशयहेतुरिति तन्माहात्म्यमुच्यत इत्यर्थवादरूपं तत्। अत्र दृष्टान्तमाह यथान्येष्विति।

---

भाष्यप्रकाशः।

नेनानुपाधित्वबोधनात् स्वतो विरुद्धधर्माधारत्वं बोध्यते। 'परात् पर'मित्यनेनाक्षरादुत्तमत्वम्। तथाचाक्षरात् परो यः, स एव परमपुरुषार्थ इति सिध्यति। एवं व्याख्यानद्वयेन केवलविद्याया एव पुरुषार्थपर्यवसायित्वम्, पुरुषोत्तमस्यैव च परमपुरुषार्थत्वं बोधितम् ॥ १ ॥

शेषत्वात् पुरुषार्थवादो यथान्येष्विति जैमिनिः ॥ २ ॥ सूत्रमवतारयन्ति अथेत्यादि। सिद्धान्तसूत्रे सर्वात्मभावस्य स्वतन्त्रतया पुरुषार्थपर्यवसायित्वे परब्रह्मण एव च परमपुरुषार्थत्वे दर्शितेपि हेतुव्यपदेशविषयश्रुतौ फलदित्सया कारयितृत्वस्योक्तत्वात् क्रिययैव फलम्, छान्दोग्ये कर्माङ्गोपासनानामेव पूर्वमुपक्रान्तत्वादन्यासामपि कर्मशेषत्वेन फलवत्त्वम्, ईश्वरस्य च तच्छेषतयैव फलदत्वमित्याशयेन पूर्वमीमांसक उक्तेर्थे प्रतिकूलतयावस्थितो भवतीत्यर्थः। सूत्रं व्याकुर्वन्ति विष्णोरित्यादि।

अयमर्थः। पूर्वपादे कर्माङ्गोपासनानां निर्णये तु न पूर्वकाण्डविरोधः। यत्पुनरात्मज्ञानादेः सर्वात्मभावस्य च स्वातन्त्र्येण पुरुषार्थपर्यवसायित्वं परब्रह्मणः परमपुरुषार्थत्वं चेत्युक्तम्।

रश्मिः।

सतीत्यादीति। फलपदमनुक्त्वा पुरुषार्थपदे दत्ते सति। अयमिति। पुरुषार्थ इत्ययम्। भगवानिति। जिज्ञासासूत्राद्ब्रह्मेत्यनुवर्तत इति भावः। एवकारस्तु 'शिष्टेश्चे'ति सूत्रान्मण्डूकप्लुत्या चकारमनुवर्त्यावधारणार्थे प्रयुक्तः। अनुपाधीति। तमो माया उपाधिः। तदुक्तं ब्रह्मविद्योपनिषदि 'ब्रह्मविद्यां प्रवक्ष्यामि सर्वज्ञानमनुत्तमाम्। यत्रोत्पत्तिं लयं चैव ब्रह्मविष्णुमहेश्वरा'दिति। तम उपाधिर्महेश्वरत्वे ॥ १ ॥

शेषत्वात् पुरुषार्थवादो यथान्येष्विति जैमिनिः ॥ २ ॥ हेतुव्यपदेशेति। द्वितीयपादसमाप्तिस्थस्य 'पूर्वं तु बादरायणो हेतुव्यपदेशा'दिति सूत्रस्य शेषः। विषयश्रुतिस्तु 'एष उ एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष उ एवासाधु कर्म कारयति यमधो निनीषत' इति। परस्यैपद्यपि। न पूर्वेति। चित्तशोधकत्वेन ज्ञानोपयोगवत् वेदान्तोपासनाभिश्चित्तशोधे कर्मोपयोगात् दृढत्वम्। 'इत्याह नास्तिक्यनिराकरिष्णु'रिति वाक्यात्। न पूर्वकाण्डविरोधः। आत्मज्ञानादेरिति। 'तरति शोकमात्मवि'दिति सर्वात्मभावप्राकरणिकश्रुत्युक्तमात्मज्ञानम्। चरम-

अन्येषु द्रव्यसंस्कारकर्मसु । 'यस्य पर्णमयी जुहूर्भवति, न स पापश्लोकश्शृणोति,' 'यदङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते, यत्प्रयाजानुयाजा इज्यन्ते, वर्म वा एतत यज्ञस्य क्रियते, वर्म यजमानस्य भ्रातृव्याभिभूत्या' इत्येवंजातीयका फलश्रुतिरर्थवादस्तद्वदित्यर्थः ॥ २ ॥

ननु 'तमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमीप्सन्तः प्रव्रजन्ति,' एतदग्रे च 'ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ती'ति श्रुतिर्भगवज्ज्ञानवतः सर्वत्यागं वदतीति न त्वदुक्तं साधीय इत्यत उत्तरं पठति ।

आचारदर्शनात् ॥ ३ ॥

ब्रह्मविदामपि वसिष्ठादीनामग्निहोत्रादिकरणं जैमिनिः पश्यतीति तदाचारं

भाष्यप्रकाशः ।

तत्र युक्तम् । कुतः । शेषत्वात् । शेषलक्षणे 'पुरुषः कर्मार्थत्वा'दिति पुरुषस्य कर्मार्थत्वमुक्तम् । तत्र चोदनाविचारे कर्तृतया सिध्यतीत्यात्मज्ञापकानि वाक्यानि कर्तृस्वरूपबोधकानि । एवं ब्रह्मवाक्यानि ब्रह्मणोऽनन्तरूपैरिज्यत्वात् 'यो देवानां नामधा एक एवे'त्यादिमन्त्रवर्णेन तत्तन्नामकत्वाच्च कर्मशेषत्वम्, तस्मात् । 'तत्स्वरूपज्ञाने'त्यादिवक्ष्यमाणभाष्योक्तरीत्या तत्ताद्दशम्, अतस्तत्र पुरुषार्थत्ववाद इत्यर्थः । विष्णोरिज्यत्वं ब्रह्मत्वं च शतदूषणीकारोपन्यस्तात् सङ्कर्षणकाण्डसमाप्तिस्यात् 'स विष्णुराह हि' 'तत् ब्रह्मेत्याचक्षते' इति सूत्रद्वयात् सिध्यतीति मुख्यतया तस्यैव शेषत्वमत्र व्याख्यातम् । अन्येषां च शेषत्वात् तत्फलस्यार्थवादत्वं जैमिनिना चतुर्थस्य तृतीयपादे उक्तं 'द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्या'दिति । तदुदाहरणं च 'यस्य पर्णमयी'त्यादिनोक्तम् ॥ २ ॥

रश्मिः ।

वृत्तिरूपमादिपदार्थः । शेषेति । पूर्वमीमांसातृतीयाध्यायारम्भसूत्रं 'अथातः शेषलक्षणम्' । तस्मिन् प्रपञ्चनीये । 'पुरुषः कर्मार्थत्वा'दिति सूत्रम् । 'चोदना पुनरारम्भ' इत्यत्र भावार्थपादे चोदनाविचारस्तस्मिन् । नामधा इति । नाम दधातीति नामधाः विश्वपावत् । कर्मशेषत्वमिति । 'इन्द्राय स्वाहे'त्यत्र सम्प्रदानत्वेन कर्मशेषत्वं यथा । तस्मादिति । 'विष्णोरिज्यत्वेन कर्मशेषत्वा'दिति भाष्यं विवृतम् । तत्ताद्दशमिति । माहात्म्यं ताद्दशम् । पुरुषस्य विराजः प्रजापतेरर्थवादरूपम् । पुरुषार्थस्य पूर्वसूत्रोक्तस्य । जैमिनिमतेऽभावात् । अतस्तत्र माहात्म्ये पुरुषस्य प्रजापतेरर्थत्ववादः । शतदूषणीकारो ग्रन्थकर्ता । सङ्कर्षणेति । सङ्कर्षणकाण्डसमाप्तिं यथा स्यात् तथेति क्रियाविशेषणम् । स्यादिति । स प्रसिद्ध इज्यः विष्णुः स्यात् । आह हि । कर्तृ । तस्यैवेति । विष्णोरेव । विष्णुः फलम्, तस्य शेषत्वं जैमिनिमते स्वमतरीत्या । तथा च गुरुमतेन कर्तृफलस्यार्थवादत्वमित्युक्तम् । स्वर्गादिफलमिति प्रसिद्धिः । अस्य फलस्य नार्थवादत्वमनुक्तेः, अन्येषां त्वाहुः अन्येषां चेति । द्रव्यसंस्कारकर्मणाम् । बादरिमतमिदम् । तथा च तृतीयाध्यायसूत्राणि । तृतीयाधिकरणे । 'द्रव्यगुणसंस्कारेषु बादरिः' 'कर्माण्यपि जैमिनिः फलार्थत्वात्' 'फलं च पुरुषार्थत्वात्' 'पुरुषश्च कर्मार्थत्वात्' इति । शेषाधिकाराशेषत्वं शेषाणि शेषं शेष इति चतुर्षु ज्ञेयम् । 'यस्य पर्णमयी'ति । जुहूर्द्रव्यम् । संस्कारोदाहरणम् । यदङ्क्ते इति । अङ्क्ते चक्षुरङ्क्ते अञ्जयति संस्कुरुते । भ्रातृव्यस्य । भ्रातुः पुत्रस्य । 'व्यन्सपत्ने' । सपत्नस्य शत्रोश्चक्षुरेव वृङ्क्ते । ओ वृश्चू छेदने छिनत्तीत्यर्थः । कर्मोदाहरणम् । यत्प्रयाजेति । पञ्च प्रयाजाः पञ्चानुयाजाः । वर्म उपकञ्चुकम् ॥२॥

१. जुहुः । २. यदाङ्क्ते । ३. पश्यति । ४. समाप्ति स्यादिति रश्मिपाठश्चिन्त्यः ।

प्रामाणिकं च मनुत इति तन्मतमनुवदन्निममप्यनूक्तवान् व्यासः। ब्रह्मविदां त्यागावश्यकत्वे गार्हस्थ्यमेतेषां न स्यादिति भावः। उक्तश्रुतिस्तु कर्मण्यशक्तानां तेषां त्यागमनुवदति। 'लोकैषणायाश्च व्युत्थाये'ति श्रुतेर्लोकसंग्रहार्थं तत्करणमिति न वक्तुं शक्यम् ॥ ३ ॥

तच्छ्रुतेः ॥ ४ ॥

ब्रह्मविदः कर्माचारनिरूपकश्रुतेरित्यर्थः। सा च 'जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे' इत्यादिरूपा। तथाच ज्ञानेनैवार्थसिद्धिश्चेत् स्यात्, तदा तद्वत आयाससाध्ये कर्मणि प्रवृत्तिर्न स्यादिति भावः ॥ ४ ॥

समन्वारम्भणात् ॥ ५ ॥

'तं विद्याकर्मणी समन्वारभेते' इति श्रुतिः फलारम्भे विद्याकर्मणोः साहित्यं दर्शयतीति न स्वातन्त्र्यं विद्यायाम् ॥ ५ ॥

तद्वतो विधानात् ॥ ६ ॥

'ब्रह्मिष्ठो ब्रह्मा दर्शपूर्णमासयोस्तं वृणीत' इति कल्पश्रुत्या ब्रह्मविदो ब्रह्मत्वेन वरणं विधीयत इति ब्रह्मज्ञानस्यार्त्विज्याधिकारसम्पादकत्वात् कर्मशेषत्वमेवेत्यर्थः ॥ ६ ॥

---

भाष्यप्रकाशः।

आचारदर्शनात् ॥ ३ ॥ सूत्रचतुष्टयमवतारयन्ति ननु तमित्यादि। उत्तरं पठतीति। उक्ताशङ्कायां विद्यायाः पुरुषार्थत्वं वारयितुमग्रिमसूत्राणि वक्तीत्यर्थः। सूत्रं व्याकुर्वन्तः प्रथमत आचारमेव कुतो वदतीत्यत आहुः ब्रह्मविदामित्यादि। प्रामाणिकं च मनुत इति। 'यदेव विद्यये'तिश्रुत्युपोद्बलकत्वेन तथा मनुते। तर्हि 'तमेव विदित्वे'त्यादिश्रुतेः का गतिरित्यत आह उक्तेत्यादि। ननु 'प्रव्राज'श्रुतेरशक्ताधिकारकत्ववत् कर्मकरणश्रुतेर्लोकसंग्रहार्थत्वस्यापि शक्यवचनत्वान्नेदं साधीय इत्यत आह लोकेत्यादि। तथाच, आचारदर्शनान्यथानुपपत्त्या तथा कल्प्यत इत्यर्थः।

अन्ये त्वाचारदर्शनसूत्रे 'जनको ह वा' इति श्रुतिम्, द्वितीये च 'यदेव विद्यये'त्युदाहरन्ति। तच्चिन्त्यम्। द्वितीयसूत्रवैयर्थ्यापत्तेः ॥ ३ ॥

तच्छ्रुतेः ॥ ४ ॥ समन्वारम्भणात् ॥ ५ ॥

तद्वतो विधानात् ॥ ६ ॥ एतद्भाष्यं सुगमम् ॥ ६ ॥

रश्मिः।

आचारदर्शनात् ॥ ३ ॥ अग्रिमेति। चत्वारि। यदेवेति। आचारस्येति बोध्यम्। भाष्ये। तन्मतमिति। जैमिनिमतम्। व्यासः स्वमतमनुवदन् इमं जैमिन्याद्याचारमप्यनूक्तवान्। एतेषामिति। जैमिनिजनकप्रभृतीनाम्। द्वितीयेति। तदर्थस्याचारे निवेशादिति भावः ॥ ३ ॥

तच्छ्रुतेः। समन्वारम्भणात्। तद्वतो विधानात् ॥ ४ ॥ ५ ॥ ६ ॥ सुगममिति। जनको ह वा इति। ब्रह्मवित्त्वं याज्ञवल्क्यादिति बृहदारण्यके। फलारम्भ इति। तमित्यनेन देहत्वावच्छिन्नोपादानम्। न स्वातन्त्र्यमिति। किन्तु कर्मसाहित्यम्। कल्पश्रुत्येति। अङ्गकल्पश्रुत्या। अन्यया वा। एवं सुगमम् ॥ ६ ॥

---

१. तदाचारं च प्रामाणिकं मनुत इति, तदाचारं प्रामाणिकमिति च मनुत इति पाठौ।

ननु 'यदहरेव विरजेत्, तदहरेव प्रव्रजेत्, गृहाद्वा प्रव्रजेद्वनाद्वे'त्यादिश्रुतिभ्यो विहितत्वाविशेषात् कर्मतत्त्यागयोरैच्छिको विकल्पोऽङ्गीकार्यः, अतो न शेषिशेषभाव इत्यत उत्तरं पठति ।

नियमाच्च ॥ ७ ॥

'आश्विनं धूम्रललाममालभेत, यो दुर्ब्राह्मणः सोमं पिपासेत्', 'ऐन्द्राग्नं पुनरुत्सृष्टमालभेत, य आतृतीयात् पुरुषात् सोमं न पिबेत्, विच्छिन्नो वा एतस्य सोमपीथो यो ब्राह्मणः सन्नातृतीयात् पुरुषात् सोमं न पिबति, 'यावज्जीवमग्निहोत्रं जुहुया'दित्यादिश्रुतिभ्यो यथा कर्मकरणे नियमः श्रूयते, न तथा तत्त्याग इति नोक्तपक्षः साधुरित्यर्थः । चकारात् 'नियतस्य तु संन्यासः कर्मणो नोपपद्यते । मोहात् तस्य परित्यागस्तामसः परिकीर्तित' इत्यादिरूपा स्मृतिः समुच्चीयते । त्यागविधिरशक्तविषय इत्युक्तमिति प्राप्ते ॥ ७ ॥

प्रतिवदति ।

अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥

तुशब्दः पूर्वपक्षं व्यवच्छिनत्ति । यदुक्तं 'शेषत्वात् पुरुषार्थवाद' इति,

---

भाष्यप्रकाशः ।

नियमाच्च ॥ ७ ॥ सूत्रमवतारयन्ति नन्वित्यादि । व्याकुर्वन्ति आश्विनमित्यादि । अत्र 'दुर्ब्राह्मण' इति 'विच्छिन्न' इति पदाभ्यामकरणे निन्दा बोध्यते, तेन च नियमेन नित्यत्वं कर्मणो व्यक्तीभवति, तथाग्रे यावज्जीवाधिकारेण । सूत्रपञ्चकोक्तं निगमयन्ति त्यागेत्यादि । इति प्राप्ते इति । एवंप्रकारेण ब्रह्मणस्तद्विद्यायाः कैमुतिकेन जीवविद्यायाश्च कर्मशेषत्वे प्राप्ते ।

अन्ये तु 'तच्छ्रुते'रित्यत्र विद्यायाः कर्मशेषत्वाय 'यदेव विद्यये'ति श्रुतिमुदाहरन्ति, 'तद्वतो विधाना'दित्यत्र 'आचार्यकुलाद्वेदमधीत्ये'ति छान्दोग्यसमाप्तिस्थश्रुत्या वेदार्थज्ञानवतः कर्माधिकारं व्याकुर्वन्ति, 'नियमा'च्चेत्यत्र 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः । एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नर' इतीशावास्यश्रुतिं जरामर्यसत्रश्रुतिं चोदाहरन्ति ।

तन्मते विद्यायाः कर्मशेषत्वमिति पूर्वपक्षः ॥ ७ ॥

अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥ परिहारं व्याकुर्वन्ति तुशब्द इत्यादि । पूर्वपक्षमिति । ईश्वर इज्यत्वात् कर्मशेष इति पक्षम् । कर्मसाम्यमिति ।

रश्मिः ।

नियमाच्च ॥ ७ ॥ आश्विनमित्यादीति । इन्द्राग्नी देवतेस्य । सास्य देवतेत्यण् । सोमस्य पीथः पानं सोमपीथः । सोमस्य पीथः पानं यस्य मूर्ध्नः स सोमपीथो मूर्धा । कैमुतिकेनेति । ब्रह्मणस्तद्विद्यायाः कर्मशेषत्वे, किं वाच्यं जीवविद्यायाः कर्मशेषत्व इति न्यायप्राप्तम् । एवमिति । एवं त्वयि न, अन्यथा इतः अस्ति । न, कर्म, लिप्यते नरे इति छेदः । लिप उपदेहे । तु—उ—अनिट् मुचादित्वात् नुम् । लिम्पति । लिप्यत इति कर्मकर्तरिप्रयोगः । विद्याया इति । न ब्रह्मणः ॥ ७ ॥

अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥ कर्मणो ब्रह्मसाम्यमिति । ननु सामर्थ्याभावात् कथं कर्मसाम्ययोः समास इति चेत्, न । साम्यपदस्य ब्रह्मसाम्ये लाक्षणिकत्वात् ।

तन्नोपपद्यते। कुतः। अधिकोपदेशात्। कर्मसाम्यमपि न वक्तुं शक्यं यत्र, तत्र तच्छेषत्वं दूरापास्तम्। यत ईश्वरः कर्मणः सकाशादधिक उपदिश्यते। तथाहि। 'स वा अयमात्मा सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किञ्च, स न साधुना कर्मणा भूयान्नो एवासाधुना कनीया'नित्युपक्रम्य, अग्रे पठ्यते 'तमेतं वेदानुवचनेन विविदिषन्ति ब्राह्मणा यज्ञेन दानेन तपसाऽनाशकेन चैतमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमभीप्सन्तः प्रव्रजन्ती'त्यादि। एवं सति यज्ज्ञानसाधनत्वं यज्ञे, तस्य यज्ञशेषत्वं कथं स्यात्, किन्तु यज्ञस्य तद्वेदनशेषत्वम्। एतेनेज्यत्वेन तच्छेषत्वं प्रत्युक्तं वेदितव्यम्। तज्ज्ञानस्य यागपूर्वाङ्गत्वात् तद्विशिष्टस्य तस्य ब्रह्मज्ञानसाधनत्वात्। नच पूर्वं सामान्यत इज्यज्ञानमासीत्, यज्ञेन विशेषतो ज्ञाने सति पुनर्यज्ञकरणे पूर्णं कर्मफलं भवतीति न तदशेषत्वमिति वाच्यम्। 'तमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमभीप्सतः प्रव्रजन्ती'ति श्रुतेस्तद्वेदनस्य गार्हस्थ्यविरोधित्वेन तदसम्भवात्।

भाष्यप्रकाशः।

कर्मणो ब्रह्मसाम्यम्। 'स वा अयम्' इति श्रुतिस्तु बृहदारण्यके शारीरब्राह्मणे। एवं सतीत्यादि। उक्तश्रुतौ 'वेदानुवचनेने'त्यादिभिस्तृतीयाश्रुतिभिर्भगवज्ज्ञानशेषत्वे कर्मणामुक्ते सति। तस्येति। यज्ञशेषिणोपि शेषिभूतस्य। अधिकोपदेशेन हेतुना यत् सिद्धं तदाहुः एतेनेत्यादि। उक्तहेतुना तत्प्रत्युक्तमित्यर्थः। तत् व्युत्पादयन्ति तज्ज्ञानस्येत्यादि। इज्यत्वेन ज्ञानस्य यागपूर्वाङ्गत्वात् पूर्वं सत्त्वेपि तादृशज्ञानपूर्वकं यागकरणे तादृशज्ञानविशिष्टस्य यागस्य ब्रह्मज्ञानसाधनत्वात् तत्फलस्य ज्ञानस्य यः शेषी तस्यैकदेशज्ञानशेषत्वापादने यस्य ज्ञानं यागपूर्वाङ्गं स यागशेष इति नियमो हेतुत्वेन वक्तव्यः। स तु स्वर्गादौ व्यभिचरति। स्वर्गादेः फलत्वज्ञानं विना तदर्थके यागे प्रवृत्त्यभावेन तज्ज्ञानस्य यागपूर्वाङ्गत्वेपि स्वर्गादेः फलत्वेन यागशेषत्वानङ्गीकारात्। अतस्तदप्रयोजकमित्यर्थः। पुनः शेषत्वमाशङ्क्य निषेधन्ति नचेत्यादि। पूर्वं गुरुमुखादध्ययने ततस्तस्यावर्तनेन स्वाध्यायतन्त्रसम्पादने ब्रह्मण इज्यत्वेन सामान्यतो ज्ञानमासीत्, ततस्तदुद्देश्यकस्य ब्रह्मयज्ञस्य द्रव्ययज्ञस्य च करणे विशेषतो ज्ञाने सति पुनर्यज्ञकरणे 'यदेव विद्यये'ति श्रुत्या यागस्य वीर्यवत्तायां पूर्णं फलं भवतीति तात्पर्यात् 'तमेतं वेदानुवचनेने'ति श्रुत्या न ब्रह्मणो यागशेष-

रश्मिः।

यज्ञेति। यज्ञशेषि भगवज्ज्ञानं तस्य शेषी विषयो भगवान् तस्येत्यर्थः। भाष्ये। तद्वेदनशेषत्वं भगवद्वेदनशेषत्वम्। प्रकृते। उक्तहेतुनेति। आभासोक्तहेतुना तत् इज्यत्वेन कर्मशेषत्वं विष्णोः। इज्यत्वेनेति। विष्णोर्ज्ञानस्य। यागपूर्वाङ्गत्वं जानातीच्छति यतत इति प्रणाड्या। यागस्य यत्नत्वात्। फलत्वेन यागपूर्वाङ्गज्ञानम्। तत्फलस्येति। कर्मफलस्य। शेषीति। भगवान् विषयः। तस्येति। ज्ञानरूपस्य शेषिणः एकदेशज्ञानम्, 'श्रुतेस्तु शब्दमूलत्वात्' निरवयवत्वेपि तद्धर्मात्मकं ज्ञानं कर्म तेन। शेषिणः कर्मशेषत्वापादने। यदि ज्ञानविषयो न स्यात्, ज्ञानशेषो न स्यादित्येवं शेषत्वापादने। नियममाहुः यस्येति। विष्णोः। स इति। विष्णुः। तदिति। परम्पराकर्मशेषत्वम्। ब्रह्मण इज्यत्वेनेति। वराहरूपस्य विष्णोरिज्यत्वेन ज्ञानं वेदब्राह्मणात्। ब्रह्मयज्ञः श्रावण्यां प्रसिद्धः।

१. भावीतिपाठः।

यश्च साध्वसाधुकर्मफलसम्बन्धरहितः, तस्य कर्तृत्वेन तथात्वमनुपपन्नम्, अतो जीवात्मन एव तथात्वम्, न तु परस्य। नचैतयोर्वास्तवाभेदान्नैवमिति वाच्यम्। वास्तवाभेदाज्जीवेऽप्युक्तश्रुतिभ्यस्तथात्वस्य सुवचत्वात्। वास्तवाभेदस्य पूर्वमेव निरस्तत्वात्तमादाय ये पूर्वपक्षास्ते पूर्वपक्षा एवेत्यलमुक्त्या। 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः। परेण नाकं निहितं गुहायां विभ्राजते तत् यतयो विशन्ती'ति श्रुत्या कर्मप्रजाधनैर्मोक्षाप्राप्तिमुक्त्वा त्यागेन तत्प्राप्तिरुच्यते। त्यागविषयस्यान्यस्यानुक्त्या सान्निध्यात् कर्मादीनामेव त्यागोऽभिप्रेतः। तथाच मुक्तोपसृप्यत्वाद्भगवत उक्तसाधनेन मुक्ताः सन्तो नाकं परेण

भाष्यप्रकाशः।

त्वनिवृत्तिरित्येवं न वाच्यम्। 'एतमेवे'त्यादितदग्रिमश्रुतेस्तादृग्ब्रह्मज्ञानस्य गार्हस्थ्यविरोधित्वेन यज्ञासम्भवात्। तदसम्भवे तथा फलोत्पत्त्यापादनस्यापि कर्तुमशक्यत्वात् ब्रह्मणः कर्मशेषत्वं नापादयितुं शक्यमित्यर्थः। नन्वीश्वरस्य कर्तृत्वाद्विश्वसृङ्न्यायेन यज्ञकर्तृत्वे सुखेन तच्छेषत्वसम्भव इत्याशङ्क्य परिहरन्ति यश्चेत्यादि। तथात्वमिति। कर्मशेषत्वम्। एकदेशिप्रतिपन्नम्। जीवब्रह्मैक्यमादाय पुनः शेषत्वाशङ्कायां तदुपगम्य परिहरन्ति नचैतयोरित्यादि। तथात्वस्येति। ईश्वरवत् कर्मशेषित्वस्य। ननु यदि जीवेश्वरयोर्वास्तवाभेद उपगतः, तर्ह्येकतरपक्षपातस्य कर्तुमयुक्तत्वादुभयमप्यस्त्विति शङ्कायां सिद्धान्ते तदनुपगमेनाहुः वास्तवाभेदस्येत्यादि। जीवब्रह्मणोर्हि घटाकाशमहाकाशयोरिवोपाधितो भेदः, वस्तुतस्त्वभेदः। एतादृशाभेदस्य द्वितीयाध्यायतृतीयपादे 'अंशो नाने'त्यत्रांशत्वव्यवस्थापनेन निरस्तत्वात् तमादाय ये पूर्वपक्षास्ते जीवस्वरूपाज्ञानात् पूर्वपक्षा एव न भवन्तीति तथेत्यर्थः। श्रुत्यन्तरेणापि कर्मशेषत्वं परिहरन्ति न कर्मणेत्यादि। श्रुतिस्तु बृहन्नारायणे 'अणोरणीया'नित्यनुवाकस्था। अत्रानुवाकारम्भमन्त्रे

रश्मिः।

पूर्णमिति। वीर्यं शुक्रमेकादशबलं ज्योतिःशास्त्रप्रसिद्धं फलमिति शुक्रब्रह्मवादिनः। यज्ञासंभवादिति तदसंभवादिति भाष्यस्यार्थः। तथा फलेति। यदि फलज्ञानाभावे यागप्रवृत्तिर्न स्यात्, 'इज्यत्वेन ज्ञानस्ये'त्याद्युक्तरीत्या फलोत्पत्तिर्न स्यात्। प्रवृत्तिः ज्ञानसाध्या, प्रवृत्तित्वात् घटप्रवृत्तिवदित्यनुमानम्। तथा 'फलज्ञाने यागप्रवृत्तिः इज्यत्वेन ज्ञानस्ये'त्याद्युक्तरीत्या फलोत्पत्तेः। पटप्रवृत्तिवदित्यनुमानम्। एवं तथा फलोत्पत्त्यापादनस्येत्यर्थः। विश्वसृगिति। तच्छेषत्वेति। कर्मशेषत्वम्। निरस्तत्वादिति। ननु श्रीभागवतद्वादशस्कन्धीयप्रमाणनिरूपणाध्यायस्थत्वान्न निरासः साधीयानिति वाच्यम्। परमतत्वेन तस्य शुकेष्टगतिरूपत्वात्। 'तत्त्वं च यथा यथाश्रुतं यथामति तदहं तेऽभिधास्यामी'ति शुकवाक्ये कथनात्। अत एव 'अंशो नानाव्यपदेशा'दिति व्याससूत्रमुक्तम्। करणत्वेन तद्विषयवाक्येन सहितं पुराणमतबाधकं भवतीति। अतः पूर्वपक्षाः पूर्वपक्षाः, न तु सिद्धान्ताः अस्मन्मते, श्रौतजीवस्वरूपाज्ञानादिति पूर्वपक्षा एव न भवन्तीति वाक्यशेषः। पूर्वपक्षाः पूर्वपक्षा इति प्रयोगस्तु न भवति, उद्देश्यतावच्छेदकविधेययोरैक्यात्। अतो न भवन्तीति वाक्यशेषः। पूर्वपक्षा निरस्ता न पूर्वपक्षा इति। एवमप्यपदार्थोपदार्थ इत्युद्देश्यतावच्छेदकविधेययोरैक्यमिति चेत्। भाष्यप्रामाण्यादस्तु प्रयोगः। तथेति। इत्यलमुक्त्येत्यर्थः। न कर्मणेत्यादीति। त्यागेन तत्प्राप्तिरिति। अत्र नञः प्रयोगाभावादिति। कर्मादीनामिति। त्यागविषयाणाम्। उक्तसाधनेनेति।

विद्यमानमपि भक्त्या गुहायां विभ्राजते, तत्, 'यस्मात् परं नापरमस्ती'त्यादिनोपक्रान्तत्वात् पुरुषोत्तमस्वरूपं यतयो विरहभावेन तद्विना स्थातुमशक्तास्तत्प्राप्त्यर्थं यतमाना विशन्तीति भक्तिमार्गीयाणां फलमुक्तम् । अग्रे 'वेदान्तविज्ञाने'-त्यृचा ज्ञानमार्गीयाणां फलमुक्तम्, अन्यथा पौनरुक्त्यं स्यात् । एवं कर्मज्ञानाभ्यामधिको भक्तिमार्गः, तत्प्राप्यः पुरुषोत्तमश्च श्रुतावुपदिश्यत इति तदेकप्रमाणवादिनो बादरायणस्य मतमप्येवं जैमिनिमतादधिकमित्यर्थः । एवं श्रुत्या परमतं निरस्य शिष्यविश्वासार्थं स्वानुभवमपि प्रमाणयति तद्दर्शनादिति । उक्ताधिक्यवत्त्वेनैव भगवतो भक्तिमार्गस्य चानुभवादित्यर्थः । 'श्रुतयोऽधिकमात्मानं दर्शयन्ती'ति न व्याख्यानम् । उपदेशपदेन पौनरुक्त्यापत्तेः । तन्मतमनिरस्य तस्मात् स्वमत आधिक्यमात्रोक्त्या निष्कामकर्मणश्चित्तशुद्धिहेतुत्वेन परम्पराज्ञानमार्गोपयोगाङ्गीकारोऽत्र सूच्यते । पुष्टिभक्तिमार्गे तु सोपि न । 'यन्न योगेने'ति वाक्यात् । एवं सति क्व कर्मशेषत्वगन्धोपि ब्रह्मणीति भावः ॥ ८ ॥

---

भाष्यप्रकाशः ।

'महिमानमीश'मित्यनेनेशपदवाच्यस्य शिवस्य विभूतित्वकथनात्, 'यस्मात् पर'मिति मन्त्रस्य श्वेताश्वतरेपि श्रवणाच्छिवपरत्वभ्रमो मा भूदित्येतदर्थं भाष्ये पुरुषोत्तमस्वरूपपदमुक्तम् । एतस्यानुवाकस्य यथा पुरुषोत्तमपरत्वम्, तथा प्रहस्ताख्ये वादे मया सम्यगुपपादितमिति विशेषतो नोच्यते । अत्रैतन्मन्त्रद्वयोक्तयोः प्रवेशपरिमोक्षयोर्भक्तिज्ञानफलयोरनावृत्तिरूपत्वात् दुःखसाहचर्याभावेन कर्मफलादाधिक्यं बोधितमिति तौ कर्ममार्गादुत्कृष्टाविति सिद्धम् । दर्शनव्याख्याने भक्तिमार्गस्य चेति चकारो ज्ञानमार्गसमुच्चायकः । श्रुतिसूत्रशेषयोर्व्याख्यानं तूत्तानार्थम् । मतान्तरीये एतद्व्याख्याने अयुक्तत्वं बोधयन्ति श्रुतय इत्यादि । शारीरादधिकं परमात्मानं दर्शयन्तीति यत् व्याख्यानम्, तत्पौनरुक्त्यापादकत्वादयुक्तमित्यर्थः । एवं स्वोक्तं व्याख्यानं समर्थयित्वा बादरायणपदेन स्वमतबोधनस्य तात्पर्यमाहुः तन्मतमित्यादि । तन्मतमिति । जैमिनीयं मतम् । अर्थस्तु स्फुटः । एवमेतेन सूत्रेण जैमिन्युक्तस्य शेषत्वस्य हेतोर्बाधितत्वं स्फुटीकृतम् ॥८॥

रश्मिः ।

श्रुत्युक्तत्यागेन । नाकमिति । नाकस्य स्वर्गस्य परेण । ङसः सुः । भक्त्येति । राजा प्रसन्नः सन्नागच्छति, तद्वद्गुहायां भक्त्या आगच्छतीति भक्तिनिवेशः करणत्वेन । भ्राजृ दीप्तौ । यस्मात् परमिति भाष्यं विवृण्वन्ति स्म श्रुतिस्त्विति । भक्तिमार्गीयाणामिति । 'तद्यतयो विशन्ती'त्यत्र त्यागिनो विशन्तीत्यनुक्त्वा यत् यतिपदमुक्तम्, तदर्थे उक्त इति तथा । सूत्रार्थमाहुः एवं कर्मेति । 'अधिकोपदेशात्तु बादरायणस्य एव'मिति पदचतुष्टयं व्याख्येयम् । स्वानुभवमिति । व्यासः स्वस्यानुभवम् । एतदुक्तं श्रुतिसूत्रेत्यादिना । तत्पौनरिति । उक्तहेतुना तथा । स्फुट इति । तन्मतनिरासे ज्ञानोपयोगो झटिति न भासते युक्तिं विनेति तन्मतमनिरस्येत्येवं स्फुटः । बाधितत्वमिति । पुरुषार्थवादः शेषत्वात् । न पुरुषार्थवादः शेषत्वादिति बाधितत्वम् । अर्थवादत्वे शेषत्वं नोपपद्यते । स्वार्थेऽप्रामाण्येन घटोऽस्तीति वाक्यादपि चित्तशुद्धिः स्यादिति ॥ ८ ॥

---

१. अत्रेति नास्ति ।

तुल्यं दर्शनम् ॥ ९ ॥

यदुक्तं 'आचारदर्शनात् कर्मशेषत्वं ब्रह्मण' इति, तदपि न साधीयः । तुल्यं यतो दर्शनम् । ब्रह्मविदां शुकतृतीयजन्मवदार्षभादीनां त्यागदर्शनात् । एतेन यद्विदां कर्मत्यागः, तस्य कर्मशेषत्वं कथं शङ्कितुमपि शक्यमिति भावः सूच्यते । एतेन 'कर्मण्यशक्तान् प्रति त्यागविधि'रिति निरस्तम् । शुकादीनामतथात्वात् ॥९॥

ननु 'जनको ह वैदेह' इति श्रुतिसाहाय्यादाचारदर्शनं त्यागदर्शनादधिकबलमित्यत उत्तरं पठति ।

असार्वत्रिकी ॥ १० ॥

ब्रह्मविदां सर्वेषामेतदाचारं चेन्निरूपयेच्छ्रुतिः, तदा त्वदुक्तं स्यात्, न त्वेवम् । यत एतादृशी श्रुतिर्ब्रह्मवित्सु सर्वेषु न श्रूयते । तथाहि । 'एतद्ध स्म वै तद्विद्वांस आहुर्ऋषयः कावषेयाः । किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे । एतद्ध स्म वै तत्पूर्वे विद्वांसोऽग्निहोत्रं न जुहवाञ्चक्रिरे, एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' 'एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यः प्रवव्राजे'त्यादिश्रुतयो बहुधा तद्विदां कर्मत्यागमेवानुवदन्ति, अतस्त्यागपक्ष एव बलवान् ॥ १० ॥

---

भाष्यप्रकाशः ।

एवं ब्रह्मणः कर्मशेषत्वं निराकृत्य विद्यायाः कर्मशेषत्वं वारयतीत्याशयेनाहुः ।

तुल्यं दर्शनम् ॥ ९ ॥ भाष्यमत्र प्रकटार्थम् । तथाच य आचारदर्शनमिति हेतुर्विद्यायाः कर्माङ्गत्व उक्तः, सोपि साधारणत्वाद्धेत्वाभास इति बोध्यते, ब्रह्मणः कर्माङ्गत्वं च कैमुतिकान्निरस्यते, जैमिनीयकृता त्यागव्यवस्था च निरस्यत इति तत्र बोधितम् ॥ ९ ॥

असार्वत्रिकी ॥ १० ॥ सूत्रमवतारयन्ति नन्वित्यादि । सदाचारस्य तुल्यत्वेपि केवलस्य परमुखनिरीक्षकत्वेन श्रुत्युपष्टम्भस्यैव बलवत्त्वम्, अतस्तुल्यत्वं न हेतोः साधारणत्वापादकमित्याशङ्कायां श्रुतेरपि साधारण्यं बोधयितुं सूत्रान्तरं पठतीत्यर्थः । सूत्रं व्याकुर्वन्ति ब्रह्मविदामित्यादि । अत्र प्रथमा श्रुतिर्बृहदारण्यके शारीरब्राह्मणे, द्वितीया मैत्रेयीब्राह्मणे । तथाच श्रुतेरपि साधारणत्वात् तद्बहुत्वानुगृहीतस्त्यागपक्ष एव बलवान्, न तु तत्करणपक्ष इत्यर्थः ।

अन्ये तु 'यदेव विद्यये'ति श्रुतिरुद्गीथविद्यापठितेति तस्या एव कर्माङ्गतां बोधयतीति विद्यायाः कर्माङ्गता असार्वत्रिकीत्यर्थमाहुः ॥ १० ॥

रश्मिः ।

तुल्यं दर्शनम् ॥ ९ ॥ प्रकटेति । शुकेति । शुकः तृतीयजन्मवद्भरतः ऋषभः आचार्याः तेषाम् । त्यागेति । कर्मत्यागदर्शनात् । एवं प्रकटार्थम् । साधारणत्वादिति । कर्माङ्गत्वाभाववति विष्णौ आचारदर्शनं हेतुरिति साध्याभाववद्वृत्तित्वात् तथा । कैमुतिकादिति । ब्रह्मविद्यायाः कर्माङ्गत्वाभावे किमु वक्तव्यं ब्रह्मणः कर्माङ्गत्वाभाव इति कैमुतिकात् । एतेन एतेन यद्विदामित्यादिभाष्यविवरणं कृतम् । एतेन कर्मणीत्यादिभाष्यविवरणं जैमिनीयेति । सा च भाष्योक्ता । तत्रेति । सूत्रे तुल्यत्वोक्त्या वितण्डया बोधितम् ॥ ९ ॥

असार्वत्रिकी ॥ १० ॥ त्यागपक्ष इति । कर्मत्यागपक्षः । तत्करणपक्ष इति । कर्मकरणपक्षः । तस्या एवेति । उद्गीथविद्याया एव । एवकार इतरविद्यायोगव्यवच्छेदकः ॥ १० ॥

ननु ब्रह्मवित्त्वाविशेषेऽप्येकेषां कर्मकृतिः, एकेषां तत्त्याग इति विभागः कुत इत्याशङ्क्य तत्र हेतुमाह ।

विभागः शतवत् ॥ ११ ॥

'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'ति श्रुतेर्मानुषानन्दमारभ्य ब्रह्मानन्दपर्यन्तं ये गणिता आनन्दास्ते सर्वे पुरुषोत्तमानन्दात्मका एव । एवं सति येषु यावानानन्दो दत्तोऽस्ति, तावन्तं तं निरूपयन्त्यधिकारतारतम्येन तद्दानमिति ज्ञापनाय शतोत्तरं शतोत्तरमानन्दं श्रुतिर्न्यरूपयत् । अत एव पुरुषायुःसंख्यासमानसंख्ययैवोत्कर्ष उक्तः, तेन पुरुषधर्मस्याधिकारस्यैवोत्कर्षः सूच्यते । एवं प्रकृतेऽप्यन्यभावराहित्यतारतम्येन भगवद्भावतारतम्यम्, अत्र त्वनुग्रह एवाधिकाररूप इति तदुत्कर्षे त्यागः, तदनुत्कर्षे नेत्यर्थः ॥ ११ ॥

यच्चोक्तं 'तद्वतो विधाना'दिति, तत्राह ।

अध्ययनमात्रवतः ॥ १२ ॥

यदुक्तं 'ब्रह्मिष्ठो ब्रह्मे'त्यादि, तत्र ब्रह्मशब्देन वेद एवोच्यते, न तु परः, तथाच तं ब्रह्मत्वेनाविकृतशब्दरूपत्वं ज्ञात्वा सततं तदध्ययनमात्रं यः करोति, न तु तेन किञ्चित् कामयते, तस्याधिकारो ब्रह्मत्वार्त्विज्य इत्युच्यत इति न ब्रह्म-

---

भाष्यप्रकाशः ।

विभागः शतवत् ॥ ११ ॥ सूत्रमवतारयन्ति नन्वित्यादि । यदि बहुप्रमाणप्रमितत्वात् कर्मत्यागपक्ष एव ज्यायान्, तदोक्तरूपो विभागः किंहेतुक इति वक्तव्यम्, तदवचने तु ब्रह्मवित्त्वपि ये कर्मण्यधिकारशून्याः, तेषामेव कर्मत्यक्तृत्वं सेत्स्यतीति न विद्याया वेद्यस्य वा आधिक्यसिद्धिरित्याशङ्कायां कर्मत्यागात्यागविभागे हेतुमाहेत्यर्थः । एतस्येत्यादि । निरूपयन्तीति सुब्विभक्तिर्बोध्या । अत एवेति । अधिकाराभिप्रायादेव । प्रकृत इति । कर्मत्यागात्यागविभागे ब्रह्मविदाचारविभागे वा । अत्र त्विति । भगवद्भावतारतम्ये तु । तथाच कर्मत्यागात्यागविभागे एवमुत्कर्षस्तदभावश्च बीजम्, न तु त्वदुक्तमित्यर्थः ।

अन्ये तु इदं सूत्रं समन्वारम्भणसूत्रोत्तरत्वेनाङ्गीकृत्यैवं व्याकुर्वन्ति । यथा 'शतमाभ्यां दीयता'मित्युक्तेऽर्धमेकस्मै, अर्धमन्यस्मै दीयते, तथा विद्यान्यमारभते, कर्मान्यमिति विभागो द्रष्टव्य इति ।

तच्चिन्त्यम् । तत्र उपसंहारे 'इति तु कामयमान' इति कथनात् कर्माङ्गभूतविद्याया एव विवक्षितत्वावगमेन समन्वारम्भणस्य हेतुत्वाशङ्काया भ्रान्तिमूलत्वेन तदुपेक्षाया एव युक्तत्वादिति ॥ ११ ॥

अध्ययनमात्रवतः ॥ १२ ॥ सूत्रमवतारयन्ति यच्चेत्यादि । व्याकुर्वन्ति यदुक्तमि-

रश्मिः ।

विभागः शतवत् ॥ ११ ॥ उक्तरूप इति । कर्मत्यागात्यागरूपः । सुब्विभक्तिरिति । प्रत्ययग्रहणे तदन्तग्रहणमिति तदन्तं पदं ग्राह्यम् । सुबन्तं बोध्यमित्यर्थः । भाष्ये । पुरुषायुरिति । 'शतायुर्वै पुरुष' इति तथा । प्रकृते । त्वदुक्तमिति । कर्माशक्तिरूपम् । एवेति । शरीरारम्भकविद्याव्यवच्छेदकः । हेतुत्वेति । विद्याकर्मसाहित्ये हेतुत्वाशङ्कायाः । तदुत्कर्षेति । सूत्रप्रत्याख्यानस्य ॥ ११ ॥

अध्ययनमात्रवतः ॥ १२ ॥ यदुक्तमित्यादीति । ब्रह्मत्वार्त्विज्य इति । ब्रह्मतायाः-

ज्ञानस्य कर्मशेषत्वम् । प्रत्ययस्यातिशायनार्थकत्वादतिशयेन ब्रह्मरूपस्तदैव भवतीति युक्तं तस्य तदार्त्विज्यम् । एवं सति ब्रह्मपदं ब्राह्मण्यपरमपि सङ्गच्छते ।

अथवा । वेदाध्ययनमात्रवतः कर्मण्यधिकारः, न तु ब्रह्मविदोऽपीत्यर्थः । नच तदन्तःपातित्वेन वेदान्तानामप्यध्ययनस्यावश्यकत्वे तत्प्रतिपाद्यब्रह्मज्ञानस्याप्यवर्जनीयत्वात्तद्वत एव तत्राधिकार इति वाच्यम् । शाब्दपरोक्षज्ञानस्य ब्रह्मज्ञानत्वाभावात् । न हि 'सिता मधुरे'तिशाब्दज्ञानमात्रवांस्तन्माधुर्यज्ञो भवति । तथा सति पित्तोपशमादिकं तत्कार्यमपि स्यात्, न त्वेवम् । अत एव छान्दोग्ये सनत्कुमारेण 'यद्वेत्थ तेन मोपसीदे'त्युक्तो नारद ऋग्वेदमारभ्य सर्पदेवजनविद्यापर्यन्तं स्वाधीतमुक्त्वाह 'सोऽहं मन्त्रविदेवास्मि, नात्मवि'दिति । अतोऽपरोक्षब्रह्मज्ञानमेव ब्रह्मज्ञानमुच्यते । अत एव तैत्तिरीयोपनिषत्सु 'वेदान्त-

भाष्यप्रकाशः ।

त्यादि । इष्ठन्प्रत्ययसूचितमर्थमाहुः प्रत्ययस्येत्यादि । एतादृशस्य दुर्लभत्वाद्दर्शपूर्णमासयोश्च प्रतिपक्षान्तं कर्तव्यत्वात् तादृशाभावे तल्लोपप्रसङ्ग इत्यरुच्या पक्षान्तरमाहुः अथवेत्यादि । 'आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य शुचौ देशे स्वाध्यायमधीयान' इति श्रुतावध्ययनमात्रश्रवणात्तावन्मात्रवत एवेति तथेत्यर्थः । नन्वध्ययनस्याक्षरग्रहणरूपत्वेऽविद्वत्त्वात् कर्मानधिकारप्रसक्तिः, अथार्थज्ञानस्याप्यपेक्षितत्वम्, तदा तु वेदान्तेभ्यो ब्रह्मज्ञानस्यापि सम्भवात् ब्रह्मिष्ठस्यापि कर्मशेषत्वमनिवार्यमित्याशङ्कामनूद्य परिहरन्ति नचेत्यादि । ब्रह्मज्ञानत्वाभावादिति । अत्र शाब्दज्ञानस्य तथात्वेन विवक्षितत्वाभावात् । तदुपपादयन्ति न हीत्यादि । तथा सतीत्यादि । तावतैव तन्माधुर्यज्ञत्वे सति तस्यापरोक्षज्ञानस्य रासनरूपत्वात् तत्कार्यं स्यात्, तत्तु न दृश्यते, एवं प्रकृतेपि यदि तत् तथा स्यात्, तदा शुकादिवदेव चरेत्, न त्वार्त्विज्यं कुर्यात्, अतस्तदिवैतदपि नापरोक्षमित्यर्थः । अत्र श्रुतिसम्मतिमाहुः अत एवेत्यादि । लिङ्गेन तस्यापरोक्षज्ञानत्वं निवार्य श्रुत्यापि वारणायाहुः तैत्तिरीयेत्यादि । ननु

रश्मिः ।

र्त्विज्यम् । 'तं दर्शपूर्णमासयोर्वृणीत' इति वरणविधानादार्त्विज्यम् । सह सुपेतिसमासः । प्रत्ययस्येत्यादीति । अतिशयेनेति । अतिशयेन ब्रह्मा ब्रह्मिष्ठः । एवं सतीति । अतिशयस्य ब्रह्मविशेषणत्वे सति । ब्रह्मण्यतिशयासम्भवात् मीमांसकरीत्या आकृतौ शक्त्या ब्राह्मण्यपरम् । प्रतिपक्षान्तमिति । दर्शपूर्णमाससंज्ञाभ्यां पक्षयोरन्तं लक्ष्यीकृत्य । तादृशेति । अतिशयितब्राह्मण्यवदृत्विगभावे । तल्लोपेति । दर्शपूर्णमासलोपप्रसङ्गात् । तथेत्यर्थ इति । कर्मण्यधिकारः, न तु ब्रह्मविदोपीत्यर्थः । भाष्ये । तद्वत इति । ब्रह्मज्ञानवतः । तत्र कर्मणि । प्रकृते । प्रकृते योजयन्ति स एवं प्रकृत इति । तत्तथेति । अपरोक्षं ज्ञानं कर्माङ्गं स्यात् । चरेदिति । ब्रह्मिष्ठः । नत्विति । यजमानफलसाधकमार्त्विज्यं स्वं प्रति निष्फलम् । ब्रह्मफलं त्यक्त्वा न कुर्यादित्यर्थः । अत इति । अत आर्त्विज्यकरणात् तदिव आर्त्विज्यमिव तदपि कर्माङ्गज्ञानमपि नापरोक्षम्, किन्तु शाब्दमित्यर्थः । लिङ्गेनेति । लिङ्गं शब्दस्य सामर्थ्यमिति 'मन्त्रवित् नात्मवि'दिति शब्दयोः सामर्थ्येन । तद्यथा । मन्त्रविदिति शाब्दं ज्ञानं नात्मविदित्यात्मापरोक्षनिषेध इति । तेन लिङ्गेन । श्रुतिः कल्प्यते । कर्माङ्गत्वेन शाब्दं ज्ञानं भवतु, मा भूदपरोक्षज्ञानमिति । एतच्छ्रुत्वा कर्मणि शाब्दं ज्ञानमङ्गमिति लिङ्गेन विनियुज्यते । श्रुत्येति । निरपेक्षो रवः श्रुतिः । विज्ञानं निरपेक्षो रवः । तयेत्यर्थः ।

विज्ञानसुनिश्चितार्था' इति पठ्यते। विज्ञानमनुभव एव, न तु ज्ञानमात्रम्, अतो दूरापास्तं कर्मशेषत्वं ब्रह्मणः। 'तं विद्याकर्मणी' इत्यादिस्तु संसार्यात्मनः पूर्वदेहत्यागसामयिकं वृत्तान्तं निरूपयति, न तु ब्रह्मविद इति 'समन्वारम्भणा'दिति सूत्रमुपेक्षितमाचार्येण ॥ १२ ॥

यथोक्तं 'नियमाद्वे'ति, तत्राह।

नाविशेषात् ॥ १३ ॥

'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' इति श्रुतिभ्यः कर्मकृतौ यथा नियमः श्रूयते, न तथा त्याग इति यदुक्तम्, तन्न। कुतः। अविशेषात्। 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशु'रिति श्रुतिः कर्मादिना अमृतत्वाप्राप्तिमुक्त्वा तत्त्यागेन तां वदन्ती कर्मत्यागस्यावश्यकत्वं वदतीति तस्मान्न विशेषो यत इत्यर्थः। तथाच 'अमृतत्वमानशु'रिति पदात् मुमुक्षोः कर्मत्यागनियमः, अमुमुक्षोस्तत्कृतिनियम इतिव्यवस्थेति भावः।

---

भाष्यप्रकाशः।

भवत्वेवम्, तथापि समन्वारम्भणस्यापरिहृतत्वात् विद्यायाः कर्मसाहित्येनैव फलजनकताङ्गीकार्येति विद्यायाः कर्मशेषत्वं त्वनिवार्यमित्याशङ्कायामाहुः तं विद्येत्यादि। यतः सा संसारिवृत्तान्तं शारीरब्राह्मणे निरूपयति, अतस्तत्र विद्यापदेन विहिताक्योक्ता कर्माङ्गभूतैव विद्याभिप्रेयते, अत एव तत्र विद्याकर्मभ्यां 'दैवं वा पित्र्यं वा गान्धर्वं वे'ति तादृशशरीरमेव फलत्वेन वक्ति, न मोक्षम्, अतस्तस्मिन् वाक्ये ब्रह्मवित्संसर्गस्याप्यभावात् तदुपेक्षितम्, अतो न वेदान्तोदितविद्याया अपि कर्मशेषत्वमित्यर्थः। एतेन यदन्यैरत्र व्याख्यातम्, औपनिषदमात्मज्ञानं स्वातन्त्र्येणैव प्रयोजनवत् प्रतीयमानं न कर्माधिकारकारणतां प्रतिपद्यत इति प्रतिपादयाम इति, तत्र बीजमिदमेव वक्तव्यम्, न तु क्रत्वन्तरज्ञानं क्रत्वन्तराधिकारेणापेक्ष्यत इति दृष्टान्तबोधितमिति सूचितम्। तथा सत्यपि ब्रह्मिष्ठपदबोधितशेषताया अनपायादिति ॥ १२ ॥

नाविशेषात् ॥ १३ ॥ अवतारयन्ति यथोक्तमित्यादि। सौत्रं हेतुं व्याकुर्वन्ति न कर्मणेत्यादि। तथाच यथा कर्मश्रुतावकरणनिन्दादिना तदावश्यकतया कर्मकरणनियमोऽवगतः,

रश्मिः।

विद्यायाः कर्मशेषत्वमिति। कर्मविशेषणत्वम्। विद्यासहितं कर्मेति। न च द्वन्द्वानुपपत्तिः। उभयप्राधान्येपि व्याख्यानप्राप्तं कर्मशेषत्वमित्यर्थात्। तत्रेति। शारीरब्राह्मणे। तदुपेति। तत्सूत्रं प्रत्याख्यातमित्यर्थः। इदमेवेति। उक्तोपपादनम्। क्रत्वन्तरेति। दर्शपूर्णमासक्रत्वन्तराधिकारेण। क्रत्वन्तरं दर्शपूर्णमासक्रतोरन्यः क्रतुः प्राकृतिकः क्रतुस्तस्य ज्ञानं नापेक्ष्यत इत्यर्थः। दृष्टान्तेति। 'सिता मधुरे'त्यादिदृष्टान्तः भाष्योक्तः। तेन बोधितम्। तद्यथा [ शाब्दं ज्ञानं तदपि दर्शपूर्णमासाय प्रकृत्वात्लिङ्ग्ये, न तु सर्वक्रत्वात्लिङ्ग्ये। दूषणमाहुः तथा सतीति। ब्रह्मिष्ठो ब्रह्मेत्यत्र। शेषता विशेषणता गौणता। स्वमते ज्ञानकर्मणोः परस्परमङ्गाङ्गिभावः पूर्वाधिकरणे जिज्ञासाधिकरणे स्पष्टः ॥ १२ ॥

नाविशेषात् ॥ १३ ॥ तथेत्यर्थ इति। यतः कर्मनियमान्न कर्मकृतौ विशेष इत्यर्थः।

अथवा । ननु क्रमप्राप्ते तुरीयाश्रमे हि कर्मत्यागः, द्वितीये तस्मिन् कर्मकरण-नियमः, तत्र च कर्तुरङ्गत्वेन तत्स्वरूपज्ञानमावश्यकम्, तच्च वेदान्तैरेवेति कथं न

भाष्यप्रकाशः ।

म्यते, तथा त्यागश्रुतावपि कर्मादिभिर्मोक्षाप्राप्तिकथनपूर्वकं त्यागेन तत्प्राप्त्युक्त्या तदावश्यकतया त्यागस्यापि नियमोऽवगम्यत इति तथेत्यर्थः । तेन सिद्धमाहुः तथाचेत्यादि ।

एवं ब्रह्मज्ञानस्य कर्माङ्गत्वाभावेपि जीवस्वरूपज्ञानस्य कर्माङ्गत्वं न वारयितुं शक्यमित्याशङ्काप्यनेनैव निरस्ता भवतीत्याशयेन पक्षान्तरमाहुः अथवेत्यादि । तत्र चेति । कर्मणि च । अविशेषपदस्य व्याख्यानं 'आश्रमविशेषे विशेषाभावा'दिति ।

अयमर्थः । भाट्टा हि अध्ययनविधिगृहीतानां वेदान्तानां वेदशेषत्वायैवमुपवर्णयन्ति । तथाहि । यत्तावत् 'अविनाशी वा अरे अयमात्मे'त्यादिना जायमानं शरीराद्यतिरिक्तनित्यात्मस्वरूपसद्भावज्ञानम्, तत् पारलौकिकफलककर्मानुष्ठानौपयिकत्वात् कर्मज्ञानवदेव सामर्थ्यतः क्रतुसंयोगात् क्रत्वर्थम् । यथा ज्योतिष्टोमादिवाक्याध्ययनं दृष्टेनैव द्वारेणानुष्ठानौपयिकं ज्ञानं जनयतीति तदर्थतयैवाध्ययनं विधीयते, तथा 'अविनाशी'त्यादिवाक्यानामप्यध्ययनविधिरेव कर्मानुष्ठानोपयोग्यात्मज्ञानार्थतां विधत्ते, तद्यदि प्रमाणान्तरेणात्मनः शरीरादिविवेको नैकान्ततः सिध्यति, ततो दृढविवेकप्रतिपादकानामुपनिषद्वाक्यानां विस्पष्टज्ञानमेव फलम् । तदुक्तं 'इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या । दृढत्वमेतद्विषयः प्रबोधः प्रयाति वेदान्तनिषेवणेन' इति । यदि च शरीरादिव्यतिरिक्तात्मज्ञानमन्यतोपि सिध्यति, ततो यथैवान्यतः क्रतुज्ञानसम्भवेऽप्यध्ययनोपात्तवेदवाक्यावगतकर्मरूपाणामेव पुंसां कर्मस्वधिकारः, तथैवाध्ययनोपात्तोपनिषद्वाक्यावगतात्मतत्त्वानामेवाधिकार इत्यध्ययनविधिबलादेव कल्प्यते । यस्त्वात्मसद्भावप्रतिपादनोपक्रमे 'आत्मा वा अरे द्रष्टव्य' इत्यादिकं विधिरूपं वाक्यम्, तत्तु

रश्मिः ।

भाष्ये । तस्मादित्यन्तं सौत्रो हेतुर्विवृतः । ( भाष्ये । वैराग्यस्यैवेति । एवकारो वेदान्तैर्जीवस्वरूपज्ञानव्यवच्छेदकः । आश्रमविशेषे संन्यासाश्रमे जीवे वेदान्तैः स्वरूपज्ञानरूपविशेषाभावादिति द्वितीयोऽत्र सूत्रार्थः । ) अध्ययनेति । 'षडङ्गो वेदोऽध्येय' इत्यत्राध्ययनविधिना विषयविधया वेदा गृहीता इति हेतोः वेदपदार्था वेदान्ता अपि गृहीतास्तेषाम् । चित्तशुद्धिद्वारा भक्तिज्ञानजननेन पारलौकिकेत्यादिः । सामर्थ्यतः तच्छन्दसामर्थ्यतः शरीराद्यतिरिक्तनित्यात्मस्वरूपसद्भावज्ञानं वक्ष्यमाणदिशा क्रतुसंयोगात् क्रत्वर्थम् । कर्मज्ञानवत् । दृष्टेनैवेति । पदार्थधीः शक्तिधीश्च द्वारं दृष्टम् । एवकारोऽदृष्टं द्वारं व्यवच्छिनत्ति । तेन । तदर्थतयेति । अनुष्ठानौपयिकज्ञानार्थतया । एवकारेण पदार्थधीः शक्तिधीश्च व्यवच्छिद्यते । अध्ययनविधिरिति । उक्त एव वेदशब्देन वेदान्तग्रहणात् तत्र लाघवादेवकारः । विधत्त इति । वक्ष्यमाणरीत्या विधत्ते । प्रमाणान्तरेणेति । वेदान्तातिरिक्तप्रमाणेन । नैकान्ततः । न मुख्यतः । एव फलमिति । ज्ञानस्य सिद्धत्वेपि विस्पष्टांशे साध्यत्वेन साध्यवेदार्थसत्त्वादित्यर्थः । एवकारः साध्यकर्मान्तरं व्यवच्छिनत्ति । एतद्विषय इति । कर्मणः साध्यत्वेनादृढत्वेप्यात्मनः सिद्धस्यास्तितया कर्मविषयः प्रबोधो दृढत्वं प्रयातीत्यर्थः । अन्यत इति । 'ज्योतिष्टोमेन स्वर्गकामो यजेत'इत्यादिभ्यः । अधिकार इति । विधेयत्वज्ञानवत्त्वात् । वक्ष्यमाणेति । स्वकर्मरूपार्थस्य । 'कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः । अकर्मणश्च बोद्धव्यं गहना कर्मणो गति'रिति वाक्यात् । महेति ।

भाष्यप्रकाशः ।

वक्ष्यमाणार्थस्यातिगहनत्वान्महोपयोगित्वाच्चालस्यं निवार्य श्रद्धाविशेषेण कृत्वा वक्ष्यमाणार्थप्रतिपत्तिमात्रार्थम् । तस्मादेतज्ज्ञानं दृष्टोपयोगित्वात् क्रत्वर्थम् । यानि पुनरितिकर्तव्यताविशेषे उपासनात्मकानि ज्ञानानि विधीयन्ते, तेषां क्रतौ दृष्टोपयोगाभावाददृष्टफलत्वम् । अदृष्टं च फलं वाक्यशेषात् द्विविधम्, अभ्युदयरूपं निःश्रेयरूपं च । 'सर्वांश्च कामानाप्नोति' 'सोऽश्नुते सर्वान् कामा'नित्याद्युक्तमभ्युदयफलम् । 'न स पुनरावर्तत' इत्याद्युक्तं निःश्रेयसफलमिति विवेकः ।

यत्तु 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति, न प्रेत्य संज्ञास्ती'ति ब्राह्मणेन भूतचैतन्यमुक्तमित्याशङ्क्यते । तन्न । स्वयमेव ब्राह्मणेन अत्रैव 'मा भगवानमूमुहं न प्रेत्य संज्ञास्ती'त्यनेन पूर्वोक्ताजरामृतत्वस्य विनाशित्वाभिधानतो बाधात् पूर्वपक्षं चोद्याख्यमुत्थाप्य, 'न वा अरे मोहमहं ब्रवीम्यविनाशी वा अरेऽयमात्मानुच्छित्तिधर्मे'त्युक्त्वा, 'मात्रासंसर्गस्त्वस्य भवती'ति कथनेन मात्राशब्दवाच्यानां भूतेन्द्रियधर्माधर्माणां विकाराणां सम्बन्धबोधनात् विज्ञानघनशब्दोक्तो ज्ञानशक्तिस्वभाव आत्मा एतेभ्यो भूतेभ्यः समुत्थाय व्यक्तो भूत्वा तान्येवानुविनश्यति । भूतविनाशाद्विनष्ट इव भवति । भूतसंस्थो ह्यसौ स्वयं प्रत्यक्षेण गृह्यते । परैश्च शरीरचेष्टादिलिङ्गकानुमानेन । मुक्तस्तु प्रमाणपथातिवर्तनाद्विनष्ट इव भवतीति प्रकारेण मात्राणामेव नाश उच्यते, नात्मन इत्यविरोधात् । तदुक्तं 'अविनाशी स्वरूपेण पुरुषो याति नाशिताम् । मात्राणां सविकाराणां भूतादीनामसंज्ञिते'ति । अत्र हि मुक्तस्य ज्ञानाभावो बोध्यते । भूतेन्द्रिन्द्रियादिवियोगे करणाभावेन ज्ञानोपायाभावात् । 'तत्केन कं पश्ये'दित्यारभ्य 'विज्ञातारमरे केन विजानीया'दित्यन्तेन विज्ञानाभावोपपादनात् । वस्तुतस्तु प्रकरणार्थोपसंहारोऽयम् । यत एवं पूर्वोक्तन्यायेन भूतचैतन्यं न सम्भवति, तस्मात् भूतेन्द्रियाणामसंज्ञित्वम् । अचैतन्यम् । अन्यस्तु तेभ्यो नित्यश्चेतनस्तस्य स्वर्गगमनसम्भवाच्च स्वर्गं लोकं यातीत्यस्य प्रत्यक्षस्य विरोध इत्येवं भट्टकारिकाया अर्थादिति पार्थसारथिमिश्राः । तथाच यथा प्रोक्षणसंस्कृता एव

रश्मिः ।

साध्यार्थकर्मोपयोगित्वात् । वक्ष्यमाणेति । मैत्रेयीब्राह्मणे वक्ष्यमाणोऽर्थ आत्मरूपः तस्य प्रतिपत्तिर्ज्ञानं तन्मात्रार्थम् । यद्वा । कर्मरूपार्थप्रतिमात्रार्थम् । मात्रचा स्वर्गादिफलोपयोगव्यवच्छेदः । दृष्टेति । दृष्टस्य कर्मण उपयोगित्वात् । क्रत्वर्थं ज्ञानस्य बह्वायाससाध्यत्वेन पुरुषप्रीत्यजननात् क्रत्वर्थत्वम् । यैरङ्गैः पुरुषप्रीतिर्न जन्यते, तानि क्रत्वर्थानि । नन्वितिकर्तव्यता कर्मणि प्रसिद्धा, 'आत्मेत्येवोपासीते'त्याद्युपासनाविधीनां किं प्रयोजनमत आहुः इतिकर्तव्यताविशेष इति । आत्मनोपासना कार्येत्येवं कर्माङ्गात्मोपासनाज्ञानं सम्पाद्य कर्म भावयेदित्येवमुपासनाविधिविषयाः क्रियन्ते । अदृष्टेति । धर्मफलत्वम् । भूतचैतन्यमिति । नत्वात्मचैतन्यम् । अत्रेति । अत्र 'न प्रेत्य संज्ञास्ती'त्यत्र । भगवन् याज्ञवल्क्य माहं मूमुहम्, किन्तु मूमुहम् । चोद्याख्यममिति । वक्तृप्रेरणार्हत्यम् । अरे इति । मैत्रेयि । अहं याज्ञवल्क्यः । शरीरेति । भूतादिः आत्मवान् प्रेक्षायाः देवदत्तवत् । आदिना ज्ञानवत्त्वादिच्छावत्त्वाच्च । देवदत्तवदेव । मात्राणामिति । भूतेन्द्रियधर्माणाम् । एवकारेणात्मव्यवच्छेदः । तदाहुः नात्मन इति । मिश्रव्याख्यानमाहुः अत्र हीति । कारिकायाम् । तेन नाशितं ज्ञानाभावम् । मुक्तमात्रविषयत्वापत्त्या वस्तुतः पक्षमाहुः वस्तुत इति । प्रकरणेति । आत्मप्रकरणम् । पूर्वोक्तेति । 'विज्ञानघनशब्दोक्त' इत्याद्युक्तव्याख्यानरीत्या । अर्थादिति । अयं हेतुः मात्राणामेव नाशः, नात्मन इत्यत्र । प्रोक्षणेति । 'व्रीहीन् प्रोक्षती'ति श्रुतिः । 'लौकिकं नैव

भाष्यप्रकाशः ।

व्रीहयो याग उपयुज्यन्ते, एवमौपनिषदज्ञानसंस्कृत एव कर्ता उपयुज्यत इति तत्स्वरूपनिरूपकत्वेन वेदशेषा वेदान्ता इत्याहुः । तत्र भाष्योक्तं दूषणं पश्चात् व्युत्पाद्यम् । पूर्वं तु तदुक्तेऽस्यात्मवाक्यतात्पर्यत्वासङ्गतिः प्रकाश्यते । शरीरादिव्यतिरिक्तात्मसत्तामात्रसाधनाया-विनाशीत्यादिश्रुतिरिति यदुक्तम् । तन्मदम् । शाबरभाष्ये नैयायिकाद्युक्तयुक्तिभिरेव तत्सिद्ध्या तत एव नास्तिक्यनिराकरणसिद्धौ 'अविनाशी वा अर' इत्यादिश्रुतिसन्दर्भस्य तदर्थताया वक्तुमयुक्तत्वात् । एतदुपक्रमे 'येनाहं नामृता स्यां किमहं तेन कुर्या'मिति मोक्षार्थत्वस्य श्रावणान्निरुपधिप्रियत्वबोधनस्याप्यन्यत्र वैराग्योत्पादनार्थत्वेन संसारिलिङ्गत्वाभावात् । 'ब्रह्म तं परादाद्योन्यत्रात्मनो ब्रह्म वेदे'त्यादिनिन्दाश्रुत्या आत्मज्ञानेन सर्वज्ञानश्रावणस्यापि स्तुत्यर्थताया वक्तुमशक्यत्वात् । अध्ययनवाक्ये तु न विधिः, किन्त्वावश्यकार्थे तव्य इति जिज्ञासासूत्र एवोपपादितम् । अर्थज्ञानं तु सामान्यतो गुरुकृतात् ज्ञापनात् । विशेषस्तु तपआदिभ्यः साधनेभ्यो मीमांसाद्वयसहकृतेभ्य इत्यपि । अर्थज्ञानं च न द्रव्ययज्ञमात्रानुष्ठानोपयोगि । चातुराश्रम्यधर्मार्थत्वात् । अन्यथा तद्वाक्यवैयर्थ्यापत्तेः । धर्मोपि न धर्मत्वेन रूपेण वेदार्थः, किन्तु ब्रह्मात्मकत्वेन । 'यज्ञो वै विष्णु'रिति 'धर्मो यस्यां मदात्मक' इति श्रुतिस्मृतिभ्याम्, 'सर्वे वेदा यत्पदमामनन्ती'ति 'वेदैश्च सर्वैरहमेव वेद्य' इत्यादिश्रुतिस्मृतिभ्यश्च । एवं च विधिपक्षेपि 'आत्मा वारे द्रष्टव्य' इति दर्शनविधानं ब्राह्मणोपक्रममारभ्यान्तं प्रोक्तस्यार्थस्यातिगहनत्वात् तदर्थम्, न तु क्रत्वर्थम् । 'सोऽश्नुते सर्वा'नित्यस्य यदभ्युदयरूपत्वमुक्तम् ।

रश्मिः ।

मनुत' इति वाक्यात् । अनधिगतार्थगन्तृत्वरूपप्रमाणाच्च । लोकेऽधिगतार्थगन्तृत्वम् । उपयुज्यत इति । कर्मण्युपयुज्यते । तत्स्वरूपेति । कर्तृस्वरूपनिरूपकत्वेन । भाष्योक्तमिति । यद्वहरेवेत्यादिभाष्योक्तम् । अस्येति । मैत्रेयीब्राह्मणस्य । 'भाष्यकृदत्र युक्त्ये'त्यस्यार्थमाहुः शाबरेति । नैयायिकादीत्यादिना वैदिकः । उक्तयुक्तिभिरिति । नैयायिकयुक्तयः शरीरचेष्टाज्ञानेच्छाभिरनुमानानि । तत्र व्याप्तिशोधिकाः । वैदिकयुक्तयो 'न्यग्रोधफलमत आहरे'त्यादयः । अत एवकारोऽ'विनाशी वा अरे' इत्यादिश्रुतिसन्दर्भव्यवच्छेदकः । मोक्षार्थत्वस्येति । सन्दर्भस्य मोक्षार्थत्वं तस्य । निरुपधीति । भगवत इति बोध्यम् । अन्यत्रेति । जीवादौ । लिङ्गं हेतुः । किन्तु वाक्यान्वयाधिकरणोक्तात्मलिङ्गत्वात् । स्तुत्यर्थताया इति । किन्तु वास्तवार्थपरताया वक्तुमुचितत्वात् । एवेति । पत्रावलम्बनादेवकारः । ज्ञापनादिति । 'साङ्गो वेदोऽध्येयोज्ञेयश्चे'त्यत्रार्थज्ञापनात् । 'तपसा ब्रह्म विजिज्ञासस्वे'त्यत्राहुः । 'अलौकिको हि वेदार्थ' इति श्रुत्याहुः तपआदिभ्य इति । 'वेदयुक्त्या तु प्रसादात् परमात्मन' इति श्रुत्यंशोक्तवेदयुक्तिपरमात्मप्रसादावादिपदेन गृह्येते । इत्यपीति । जिज्ञासासूत्र एवोपपादितमित्यर्थः । 'अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीते'त्यत्राहुः अर्थज्ञानं चेति । द्रव्येति । इदं गृहस्थमात्राधिकारकम् । तद्वाक्येति । द्रव्ययज्ञातिरिक्तज्ञानयज्ञादिबोधकगीतावाक्यवैयर्थ्यापत्तेः । मीमांसकं प्रत्यन्यदप्याहुः धर्मोपीति । भावकर्मविध्यनुवादप्रासकालापर्येषु तव्यविधायकसूत्रेण विधिपक्षो मास्तु, नियमविधिपक्षस्तु स्यादित्यत आहुः एवं चेति । आन्तमिति । आ अन्तं अन्तमभिव्याप्य । अतीति । 'आश्चर्यो वक्ता कुशलोऽस्य लब्धे'ति काठकात् । इदं दूषणं वितण्डया तस्या उक्त्यभिप्रायः जिज्ञासाधिकरणभाष्ये परस्परमङ्गाङ्गिभावस्य ज्ञानकर्मणोरुक्तेरेकतरस्यादृष्यत्वविषयः । न त्विति । वेदान्तत्वेन 'तमेत'मितिश्रुतिप्रसक्तेः, न तु 'यदेव

कर्मशेषत्वमित्युत्सूत्रमाशङ्क्य निषेधति नेति । 'यदहरेव विरजे'दिति श्रुतेः 'तावत् कर्माणि कुर्वीत न निर्विद्येत यावते'ति भगवद्वाक्याच्च त्यागे वैराग्यस्यैव प्रयोजकत्वादाश्रमविशेषे विशेषाभावादप्रयोजकत्वादित्यर्थः । यत्रापि कश्चित्क्रम-

भाष्यप्रकाशः ।

तदप्यबुद्धा । परप्राप्तिविवरणरूपत्वेन तस्य निःश्रेयसरूपत्वात् । इदं च प्रागुपपादितम् । यदपि 'न प्रेत्य संज्ञास्ती'त्यनेन मोक्षदशायामात्मनः करणाभावाज्ज्ञानशून्यत्वमुच्यत इत्युक्तम् । तदपि तथा । 'अनुच्छित्तिधर्मे'त्यनेन तत्रैव धर्मानुच्छित्तिं श्रावयित्वा 'यद्वैतन्न पश्यति पश्यन् वै तत् द्रष्टव्यं न पश्यती'त्यादिना करणाभावेपि स्वत एव दर्शनस्य विभक्ताभावेनान्यादर्शनस्य चोक्त्या स्वतोऽविभक्तदर्शनस्यैव व्युत्पादनादिति । वस्तुतस्त्विदमपि ब्रह्मप्रकरणमिति वाक्यान्वयाधिकरणे व्युत्पादितमिति न तत्र जीवात्मसत्तासाधनार्थत्वगन्धोपि । तस्मान्न कर्तृशेषा वेदान्ताः ।

अतः परं भाष्यं विव्रियते यदहरेवेत्यादि । यदुक्तं कर्तृस्वरूपनिरूपकत्वात् कर्मशेषत्वं वेदान्तानामिति । तन्न युक्तम् । कर्तुः कर्मशेषत्वाभावात् । 'यदहरेवे'त्यादिश्रुतेः 'तावत् कर्माणी'ति भगवद्वाक्याच्च त्यागे वैराग्यस्यैव प्रयोजकत्वाद्वैराग्योत्पत्तिपर्यन्तमेव कर्मकरणप्राप्तेराश्रमविशेषस्याप्रयोजकत्वाद्वेदानां पूर्वोक्तरीत्या 'कर्ममोक्षाय कर्माणि विधत्ते ह्यगदं यथे'ति स्मृत्या च कर्मत्याग एव तात्पर्याद्वेदानां वेदान्तशेषत्वाज्जीवस्वरूपनिरूपकवेदान्तभागस्यापि त्यागकर्तृनिरूपकत्वमेव मुख्यम्, कर्मकर्तृनिरूपणं तु प्रासङ्गिकम् । अत एव तद्वाक्येषु 'इति तु कामयमान' इति 'अथाकामयमान' इत्युभयविधं तत्स्वरूपं निरूप्यते । अत आश्रमविशेषमादाय वेदान्तानां कर्मशेषत्वस्थापनमयुक्तमेवेत्यर्थः । ननु त्यागस्य फलार्थत्वेपि ज्ञानाङ्गत्वात् ज्ञानस्य च वेदान्तसिद्धस्य कर्माङ्गतायाः प्रागेवोक्तत्वात् प्रव्राजेपि चातुराश्रम्यपक्षकथनेनाध्ययनोपात्तवेदान्तभागजन्यस्य ज्ञानस्य कर्मशेषत्वमनिवार्यमेवेत्याशङ्कायां तस्याः पूर्वमेवोत्तरं दत्तमित्याहुः यत्रापी-

रश्मिः ।

विषये'ति श्रुतेः प्रसक्तेरिति भावः । ननु न निःश्रेयसरूपम्, 'सोऽश्नुत' इत्याद्युक्ताभ्युदयस्य सगुणप्राप्तिरूपत्वात्, अत आहुः इदं चेति । प्रागिति । पूर्वपादे । निर्गुण(स)गुणयोरभेदप्रतिपादन उपपादितम् । तथेत्यबुद्धा । मुक्तस्त्वित्यादिनोक्तं दूषयन्ति स्म यदपीति । तत्रैवेति । ईश्वर एव । न उच्छित्तिर्येषां तेऽनुच्छित्तयः, अनुच्छित्तयो धर्मा यस्येत्येवं श्रावयित्वा । यत् करणदृश्यं न पश्यति, किन्तु करणाभावेपि पश्यति, अतः स्वतः एतद्दर्शनस्य । तथा तद्द्रष्टव्यं अन्यत् द्रष्टव्यम् । तदेवोच्यते करणाभाव इति । एवेति । ज्ञानशून्यत्वयोगव्यवच्छेदकः । वाक्यान्वयेति । प्रथमस्य तुरीयपादे । तस्मादिति । कर्मशेषकर्तृप्रतिपादकत्वात् । वैराग्यस्येति । एवकारो वेदान्तैर्जीवस्वरूपज्ञानव्यवच्छेदकः । आश्रमविशेषे संन्यासाश्रमे जीवे वेदान्तैः स्वरूपज्ञानरूपविशेषाभावादिति द्वितीयोत्र सूत्रार्थः । अन्योपि प्रयोजकत्वादाश्रमेत्यादिभाष्यार्थमाहुः प्रकरणेति । जीवप्रकरणप्रयोजकत्वात् । उपक्रमाभावाच्च जीवप्रकरणत्वमिति भावः । कर्मकर्त्रिति । कर्मणि कर्ता गृहस्थाश्रमे स्थितः, तस्य निरूपणं तु । तद्वाक्येष्विति । शारीरब्राह्मणीयकर्तृवाक्येषु । तत्स्वरूपमिति । कर्तृस्वरूपम् । आश्रमविशेषमिति । गृहस्थाश्रमम् । एवकारस्तु 'तमेत'मिति श्रुतिविरोधात् । ज्ञानाङ्गत्वादिति । 'वेदान्तविज्ञानसुनिश्चितार्था' इति श्रुतेस्तथा विशुद्धसत्त्वानन्तरं ज्ञानोदयनियमात् । प्रागेवेति । 'तद्वतो विधाना'दित्यत्र विस्मृतकण्ठमणिन्यायेन । चातुराश्रम्येति । क्रमेण संन्यासे । ज्ञानस्येति । शाब्द-

१. कश्चित् । २. रश्मिकाराणां प्रकाशपुस्तकस्थः 'प्रकरणप्रयोजकत्वादिति पाठः मूलप्रकाशेऽन्तिमे चाभावाजात्र' स्वीकृतः ।

प्राप्तिः, तत्रापि न तज्ज्ञानं ब्रह्मज्ञानमिति पूर्वसूत्र एवोक्तमिति भावः । एतेन वेदाध्ययनादिकमप्यप्रयोजकमिति ज्ञापितम् । अत एव शुकस्य वैराग्यातिशयादुपनयनादेरप्यनपेक्षोच्यते । एवं सूत्रद्वयेन कर्माधिकारसम्पादकत्वेन ब्रह्मज्ञानस्य तच्छेषत्वं निरस्तम् ॥ १३ ॥

---

भाष्यप्रकाशः ।

त्यादि । यत्रापि कस्मिंश्चित् पुरुषविशेषे क्रमेण त्यागप्राप्तिः, तत्रापि शाब्दज्ञानस्य मुक्तिसाधकत्वाभावान्न विवक्षितब्रह्मज्ञानत्वमिति पूर्वस्मिन् 'अध्ययनमात्रवत' इति सूत्र एव व्युत्पादितम्, अतो न ब्रह्मज्ञाने कर्मशेषत्वगन्धोपीत्यर्थः । ननु तथापि 'ब्राह्मणेन निष्कारणः षडङ्गो वेदोऽध्येयो ज्ञेयश्चे'त्यादिश्रुतिभिर्वेदाध्ययनादिकं त्वावश्यकम्, तदपि कर्मैवेति तदङ्गत्वं त्वात्मज्ञानस्य भविष्यत्येवेति कथं न कर्माङ्गत्वमित्यत आहुः एतेनेत्यादि । अप्रयोजकमिति । ज्ञानस्य कर्माङ्गत्वाप्रयोजकम् । अत्र निदर्शनमाहुः अत एवेत्यादि । सिद्धमाहुः एवमित्यादि । एवमधिकोपदेशसूत्रेण स्वोक्तमुपष्टभ्य शेषैः पञ्चभिः सूत्रैर्जैमिन्युक्ता हेतव आभासीकृताः ।

अन्ये तु 'कुर्वन्नेव ही'त्यत्र 'न विदुष' इति विशेषेण नियमविधानमित्येवं सूत्रार्थमाहुः । तथाचाविद्वद्विषयत्वेपि वाक्यसामञ्जस्यान्न तेन विद्यायाः कर्माङ्गत्वसिद्धिरिति तदाशयः ।

रामानुजास्तु, उक्तवाक्ये कर्मणां करणनियमेपि कर्मसु विशेषो नोच्यते । यज्ञाद्येव कार्यम्, नान्यदिति । अतो यथा अविदुषां स्वतन्त्रफलसाधकं नियतम्, एवं विदुषां विद्याङ्गभूतम्, अत एवमपि वाक्यसामञ्जस्यान्नानेन विद्यायाः कर्माङ्गत्वप्राप्तिरित्याहुः । तदप्यविरुद्धम् ॥ १३ ॥

रश्मिः ।

ज्ञानस्य । कर्मशेषत्वमिति । 'यं यं क्रतुमधीते, तेनास्येष्टं भवती'ति श्रुत्युक्तकर्मशेषत्वम् । पूर्वमिति । 'अध्ययनमात्रवत' इत्यत्र । क्रमेणेति । 'आश्रमादाश्रमं गच्छेन्नान्यथा मत्परश्चरे'दिति वाक्याद्ब्रह्मचर्याद्गृहस्थाश्रमः, ततो वानप्रस्थाश्रमः, त(तः)संन्यासाश्रम इति क्रमेण । मुक्तीति । 'तमेव विदित्वे'त्यत्र शाब्दाविवक्षणात् । तदङ्गत्वमिति । 'ब्राह्मणेने'त्यत्र ब्रह्म जानाति ब्राह्मणस्तेनेत्यर्थात् कर्माङ्गत्वम् । ज्ञानस्येति । वेदाध्ययनादिकमिति भाष्येऽध्ययनज्ञानस्यादिपदार्थस्य । कर्माङ्गत्वे अप्रयोजकं अन्यथासिद्धं अन्यथासिद्धिस्तु पञ्चमीक्षसभादिर्यथा घटं प्रति । भाष्ये । वैराग्येति । न तु वेदान्तैर्जीवस्वरूपज्ञानात् । उपेति । अध्ययनतज्ज्ञानयोरधिकारसम्पादकस्य । आदिना विवाहवनवासयोः संग्रहः । एवमित्यादीति । निरस्तमिति । यत् तन्निरस्तम् । न विदुष इति । उभयान्वयि । 'कुर्वन्नेव ही'त्यत्र न नियमो न । विदुष इति विशेषेण नियमविधानं नेति । विद्याया इति । विद्वानित्यत्र विदितिशब्देनोक्तायाः । तदाशय इति । तदप्यविरुद्धम्, सूत्राणां न्यायरूपत्वात् । एवमग्रेपि । करणेति । नियम एवकारार्थः । तथाच करणानियमेति पाठः । करणनियमो यो वर्तते, स न, कुतः, अविशेषात् । तद्व्याकुर्वन्ति स्म कर्मसु विशेषो नोच्यत इति । स्वतन्त्रेति । स्वतन्त्रं फलं अज्ञातत्वेपि कर्मस्वभावादेव फलम् । तस्य साधकम् । नियतं दर्शनात् । विद्याङ्गभूतं कर्म १३

अथ प्रश्लिततया 'ब्रह्मिष्ठ' इत्यत्र ब्रह्मपदेन पर एवोच्यत इति वदसि, तत्रापि वदामः ।

स्तुतयेऽनुमतिर्वा ॥ १४ ॥

दर्शपूर्णमासावेतादृशौ यत्र ब्रह्मविदार्त्विज्याधिकारीति तत्स्तुत्यर्थं 'ब्रह्मिष्ठो ब्रह्मे'त्यनेन ब्रह्मविदोऽप्यार्त्विज्येऽनुमितिः क्रियते, न तु तस्याधिकारत्वमभिप्रेतम् । उक्तानुपपत्तिभिरित्यर्थः ॥ १४ ॥

भाष्यप्रकाशः ।

स्तुतयेऽनुमतिर्वा ॥ १४ ॥ एवं षड्भिः सूत्रैर्जैमिनीयोक्तं निराकृत्य पुनरुत्सूत्रं किञ्चिदाशङ्क्य निराकरोतीत्याशयेन सूत्रमवतारयन्ति अथेत्यादि । व्याकुर्वन्ति दर्शेत्यादि । तस्येति । ब्रह्मज्ञानस्य । तथाचोक्तवाक्ये ब्रह्मिष्ठपदमतिशयेन ब्रह्मवानित्यर्थकम् । अतिशयश्च श्रद्धया साक्षात्कारेण वेति 'यो यच्छ्रद्धः स एव सः' 'ज्ञानी त्वात्मैव मे मत'मिति गीतास्मृत्यावसीयते । तादृशश्चेत् ब्रह्मा कृताकृतावेक्षकतया यागे तिष्ठति, तदा परमकाष्ठाप्रापकौ दर्शपूर्णमासौ साङ्गौ भवतः । 'यत्तत्कर्मसु वैषम्यं ब्रह्मदृष्टं समं भवे'दित्यष्टमस्कन्धे शुक्राचार्यं प्रति भगवद्वाक्यात् । अतो 'ब्रह्मिष्ठो ब्रह्मे'ति पदसमभिव्याहाररूपस्यानुग्रहबीजस्य वाक्ये विद्यमानत्वात्, शुकाद्याचारकावषेयश्रुतिविरोधत्यागनियमरूपाणामार्त्विज्यबाधकानामनुपपत्तीनां सत्त्वाच्च तस्या अनुज्ञायाः यागस्तुत्यर्थत्वमेवेत्यर्थः । सूत्रे वाशब्दोऽनादरे । तेन ब्रह्मणि श्रद्धावतः सर्वत्र ब्रह्मद्रष्टुश्च तदार्त्विज्यं प्रासङ्गिकमिति बोधितम् । स्तुतिप्रयोजनं त्वविद्वत्प्ररोचनम् । अधिकाराभावेपि त्यागकरणेऽनिष्टं स्यादिति तन्निवृत्त्यर्थमिति बोध्यम् ।

अन्ये तु, 'कुर्व'न्निति श्रुतौ प्रकरणसामर्थ्याद्विद्वानेव संबोध्यत इत्युच्यते । तदापि विद्यास्तुतये कर्मानुष्ठानं द्रष्टव्यम् । 'न कर्म लिप्यते नर' इति वाक्यशेषात् । यावज्जीवं कर्म

रश्मिः ।

स्तुतयेऽनुमतिर्वा ॥ १४ ॥ उत्सूत्रमिति । सूत्रादूर्ध्वं अधिकम् । कृताकृतेति । तथा वदन्ति कर्मण्युपाध्यायाः कृताकृतावेक्षत्वेन त्वं ब्रह्मा भवेति पूगीफलस्थापने । परमेति । यागे पञ्चमस्कन्धादौ प्रसिद्धौ । न च कुतो वैषम्यं समं भवेदिति शङ्क्यम् । ब्रह्मानुभावात् । स्तुतिस्सद्धर्मारोप उत्कर्षाधायकगुणवर्णनरूपः । तत्र हेत्वाकाङ्क्षायामाहुः अतो ब्रह्मिष्ठ इति । पदस्येति । पदस्य ब्रह्मिष्ठपदस्य समभिव्याहारो ब्रह्मपदे वर्तते, अतः ब्रह्मपदधर्मस्य समभिव्याहारस्य विषमे समत्वानुग्राहकरूपस्यानुग्रहबीजस्य वाक्ये 'ब्रह्मिष्ठो ब्रह्मे'त्यस्मिन् विद्यमानत्वादनुज्ञाया 'ब्रह्मिष्ठो ब्रह्मा दर्शपूर्णमासयोस्त्वं वृणीते'त्यत्रामन्त्रणे लिङ्गोक्तायाः स्तुत्यर्थत्वमित्यन्वयः । हेत्वन्तरमाहुः शुकादीति । शुकनारदाद्याचारः पर्यटनम्, न तु ज्ञानित्वे सम्पन्ने ऋत्विक्त्वमिति । कावषेयश्रुतिः 'तद्धतो विधाना'दिति सूत्रोक्ता कल्पश्रुतिस्तस्या विरोधस्तस्य त्यागः । नियम 'आश्विनं धूम्रललाम'मिति श्रुत्युक्तो 'नियमाच्चे'ति सूत्रीयः । एतेषां द्वन्द्वः । एतद्रूपाणामार्त्विज्यबाधकानाम् । एतद्विशेषणं पूर्वपदस्य । तेषां या अनुपपत्तयस्तासां सत्त्वाच्चेति । एवेति । 'तमेतमि'ति श्रुति(श्रुति)र्यतः । ननु वेदवेदान्तयोरङ्गाङ्गिभावो जिज्ञासाधिकरणे उक्त एवेति केनापि प्रकारेण ज्ञानस्य वेदाङ्गत्वमस्त्विति चेत्, तत्राहुः सूत्रे वाशब्द इति । ब्रह्मणीत्यादिः । ब्रह्मिष्ठपदार्थः । भक्तिपूर्वकक्षा सर्वत्रेति । भक्तिकारणं 'सर्वभूतेषु मन्मति'रिति वाक्योक्तः सर्वत्र ब्रह्मद्रष्टा तस्य । तदार्त्विज्यं ऋत्विजः कर्मार्त्विज्यम् । प्रासङ्गिकं दर्शपूर्णमासप्रसङ्गजातम् । दर्शपूर्णमासमात्रेपि 'ब्रह्मिष्ठो ब्रह्मे'त्युक्तम् । तन्निवृत्तीति । त्यागनिवृत्त्य-

१. अन्यापि ।

## कामकारेण चैके ॥ १५ ॥

ननु 'एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीया'निति श्रुत्या ब्रह्मविदः कर्मकृतगुणदोषौ निषिध्येते, स च प्राप्तिपूर्वक इति ब्रह्मविदः कर्मकरणमावश्यकमिति प्राप्ते, उच्यते । कामकारेणेति । करणं कारः । कामेनेच्छया करणं कामकारः । तथाच परानुग्रहार्थमिच्छामात्रेण, न तु विधिवशात्, यत् करणम्, तत् कामकार इत्युच्यते । तथाचैवं कृते कर्मणि तत्कृतगुणदोषप्रसक्तौ तत्प्रतिषेधमेके शाखिन 'एष नित्य' इत्यादिना पठन्ति । न ह्येतावता कर्मकृत्यधिकारप्राप्तिरिति भावः ।

अथवा । कामेन कारो यस्य स तथा । तादृशेन कर्मणा प्राप्तवृद्धिह्रासयोः

भाष्यप्रकाशः ।

कुर्वत्यपि विदुषि विद्यासामर्थ्यात् कर्म न लेपाय भवतीति तत्रार्थादित्याहुः । तदप्यविरुद्धम् ॥ १४ ॥

कामकारेण चैके ॥ १५ ॥ नन्वनुज्ञयाप्यार्त्विज्यकरणे विध्यधीनत्वं तु निर्बाधम्, अतो भवतु कर्माङ्गत्वं विद्यायास्तद्द्वारेत्याशयेन सूत्रमवतारयन्ति नन्वित्यादि । स चेति । निषेधः । सूत्रं व्याकुर्वन्ति करणमित्यादि । इच्छामात्रेणेति । स्वेच्छामात्रेण । एतस्यैव विवरणं न तु विधिवशादिति । (तेन 'शौचमाचमनं स्नानं न तु चोदनया चरेत् । अन्यांश्च नियमान् ज्ञानी यथाहं लीलयेश्वर' इत्येकादशीयभगवद्वाक्यानुरूपया स्वेच्छयेति फलितं बोध्यम् ।) एतावतेति । गुणदोषनिषेधमात्रेण ।

एवं व्याख्याने स्वकृत्या दोषाद्यप्रसक्तिरायाति, न तु तदभिव्यञ्जककर्मकृतगुणदोषाप्रसक्तिरपीत्यतः प्रकारान्तरमाहुः अथवेत्यादि । स इति । ब्रह्मवित् । तथाच श्रुता'वेष' इत्यनेन

रश्मिः ।

र्थम् । कर्मप्रवृत्त्यर्थम् । प्रकरणेति । वाक्यशेषादिति । 'सन्दिग्धेषु वाक्यशेषा'दिति जैमिनिसूत्रम् । ज्ञानिकृतकर्म लेपाय भवति न वेति सन्देहोऽत्र । अविरुद्धमिति । सूत्राणां न्यायरूपत्वादित्युक्तम् ॥ १४ ॥

कामकारेण चैके ॥१५॥ अनुज्ञयेति । 'तं वृणीते'त्यामन्त्रणेन । तद्द्वारेति । अनुज्ञाद्वारा । आमन्त्रणं कामचारानुज्ञेति वैयाकरणप्रसिद्धेः । काम इच्छेत्यपि । कमु कान्तौ कान्तिरिच्छेति । तिङन्ते । 'न तु विधिवशा'दिति भाष्यप्रविष्टनिषेधप्रतियोगिविधिवशविशेषणविधिप्रतिपादक एव प्रकाशः न तु विधिवशादिति । तथा च काठकीयां 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्, अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वदे'ति प्रश्ने 'सर्वे वेदा यत्पदमामनन्ती'त्युत्तरे 'ब्रा अभ्यास' इत्यस्य प्रयोगात् गीतायां 'ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विता' इत्यत्र भक्तिरूपश्रद्धोक्तेश्च 'सात्त्विकीश्रद्धाभ्यास' इत्यायाति । सा तु 'अफलाकाङ्क्षिभिर्युक्तो विधिदृष्टो य इज्यते । यष्टव्यमेवेति मनः समाधाय स सात्त्विक' इति वाक्या'न्मनसैवानुद्रष्टव्यमेतदप्रमेयं ध्रुव'मिति बृहदारण्यका'न्महतामन्तःकरणं प्रमाण'मित्युद्धवादिवदिति तथा । तदभिव्यञ्जकेति । स्वकृत्यभिव्यञ्जकापूर्वस्थानीयं स्वसिद्धान्तेन भावार्थपादभाष्यीयं नित्यं कर्म । तत्कृतगुणदोषाप्रसक्तिरित्यर्थः । ब्रह्मविदिति । महानपि ब्राह्मः । यतस्तु-

१. इत्यादि ।

सम्बन्धाभावं ब्रह्मविदि एके पठन्तीत्यर्थः । चकारेणेश्वराज्ञया लोकसंग्रहार्थं कृतं कर्म समुच्चीयते । 'सर्वस्य वशी सर्वस्येशान' इति श्रुतेस्तथा ॥ १५ ॥

## उपमर्दं च ॥ १६ ॥

अनेन कर्माधिकाराभावे हेत्वन्तरमुच्यते । द्वैतभाने हि यथाकथञ्चित् कर्मकृतिसम्भावनापि । यस्य त्वखण्डब्रह्माद्वैतभानं 'ब्रह्मे'त्येव, न 'त्विदं ब्रह्मे'ति सखण्डम् । अत्रोद्देश्यत्वेन प्रपञ्चस्यापि भानात् सखण्डत्वम् । तथाचाखण्डतज्ज्ञाने कर्मतदधिकारादेरुपमर्दं चैके शाखिनः पठन्तीति न ब्रह्मज्ञानस्य कर्मशेषत्वस-

---

भाष्यप्रकाशः ।

कृताकृतजन्यतापाभावरूपं पूर्वोक्तमहिमानं परामृश्य तस्य नित्यत्वोक्तिस्तस्यैकरसत्वोक्तिश्च कामकारलिङ्गम् । तेन तादृशपुरुषस्यापि चेत्कर्मशेषत्वनिवृत्तिः, तदा विद्यायाः कर्मशेषत्वं शङ्कितुमप्यशक्यमित्यर्थः । ईश्वरेच्छायां गमकमाहुः सर्वस्येत्यादि । तथाच सर्ववशकरणार्थं कर्मणामावश्यकत्वात् भगवतः सर्वेशनशीलत्वेन ज्ञानिनामपि भगवदीशितव्यतया तानाज्ञापयति लोकसंग्रहार्थमित्ययमर्थोऽनया श्रुत्यैव ज्ञायत इत्यर्थः । (यद्यपि पूर्वपादे 'तन्निर्धारणानियम'सूत्रेऽयमर्थस्तत्फलार्थमुक्तः, तथाप्यत्र स एव वादिनिराकरणार्थमुच्यत इति न पुनरुक्तिदोषः ।) एवं ब्रह्मविदः कामकारबोधनादार्त्विज्यमपि तस्य न विधिनियतमिति च समर्थितम् ।

अन्ये तु, कामकार इच्छेति व्याख्याय, 'तद्ध स्म वै तत्पूर्वे विद्वांसः प्रजां न कामयन्ते, किं प्रजया करिष्यामो येषां नो एवायमात्मा नायं लोक' इति वाजसनेयिश्रुतौ कर्मत्याग इच्छयैव बोध्यत इति प्रत्यक्षीकृतविद्याफलानां तदवष्टम्भेन प्रजादिषु कामाभावकथनात् । अतो विद्याफलस्य प्रत्यक्षतया तत्फलश्रुतेरयथार्थताया वक्तुमशक्यत्वान्न विद्यायाः कर्मशेषत्वमाश्रयितुं शक्यमित्येवं व्याकुर्वन्ति । तत्र कामपदस्येच्छावाचकत्वेपि कामकारपदस्य तद्वाचकत्वं चिन्त्यम् ॥ १५ ॥

उपमर्दं च ॥ १६ ॥ उक्तोपष्टम्भाय सूत्रान्तरं पठतीत्याशयेन सूत्रमवतारयन्ति अनेनेत्यादि । व्याकुर्वन्ति द्वैतेत्यादि । अनेनापि पूर्वोक्तं समर्थितं ज्ञेयम् । शाङ्करग्रन्थेऽप्येवम् ।

रश्मिः ।

तीयस्कन्धे 'नोद्धवोण्वपि मन्न्यूनो यद्गुणैर्नार्दितः प्रभु'रिति । तदन्तःकरणं प्रमाणम् । 'बालक्रीडनकैः कृष्णक्रीडां य आदद' इति । ननु बालक्रीडा शास्त्रज्ञानवत इति कुतोन्तःकरणं प्रमाणमिति चेत् । न । सकलशास्त्रसंवादात् । इदं यथा तथोपपादितं भक्तिरत्नटीकायां मदीयायाम् । तदुक्तं 'अफलाकाङ्क्षिभि'रिति वाक्येन गीतायाम् । 'भक्त्याहमेकया ग्राह्य' इति समर्थितं ज्ञेयम् । तस्येति । महिम्नः । तस्येति । ब्रह्मविदः । कामकारेति । कामकारपदसामर्थ्यम् । विद्याया इति । पुरुषरूपकर्तृप्रतिपादिकायाः । ईश्वरेति । ब्रह्मवित्कामकारमूलभूतायाम् । तानाज्ञापयतीति । 'ब्रह्मज्ञो ब्रह्मे'ति श्रुत्या तथा । अनयेति । उक्तया काषपेयश्रुत्या 'ब्रह्मिष्ठो ब्रह्मे'त्यादिरूपया । न विधीति । किन्तु कामकारेण । प्रत्यक्षीति । 'अयमात्मे'ति प्रत्यक्षगेदमः प्रयोगात् । तदवष्टम्भेन फलावष्टम्भेन । विद्याफलस्येत्यात्मनः । फलश्रुतेरिति । 'अयमात्मे'ति फलश्रुतेः । तद्वाचकत्वं इच्छावाचकत्वम् ॥ १५ ॥

उपमर्दं च ॥ १६ ॥ उक्तोपेति । अखण्डब्रह्मविदः कर्मकृतगुणदोषनिषेधोपष्टम्भाय ।

न्भावनापीत्यर्थः । श्रुतिस्तु 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्ये'दि-त्यादिरूपा ॥ १६ ॥

## ऊर्ध्वरेतस्सु च शब्दे हि ॥ १७ ॥

अत्रेदं विचार्यते । ब्रह्मचर्यानन्तरं गार्हस्थ्यमपि श्रुत्या बोध्यते, 'ब्रह्मचर्यादेव प्रव्रजे'दित्यादिश्रुतिभिर्ब्रह्मचारिण एव प्रव्रजनमपि बोध्यते, एवं सत्यविरोधाय 'यदहरेवे'ति श्रुतेश्च रागितद्रहितभेदेन विषयभेदो वाच्यः । तत्र ब्रह्मचर्याविशेषेऽपि भगवदनुग्रहविशेषजचित्तशुद्धिविशेषजवेदान्तार्थपरिज्ञानमेव

भाष्यप्रकाशः ।

रामानुजास्तु 'भिद्यते हृदयग्रन्थि'रिति श्रुतिमुपन्यस्यात्र विद्यया कर्मक्षयकथनाद्विद्यया तदुपमर्द इति न तस्याः कर्माङ्गत्वमित्याहुः ॥ १६ ॥

ऊर्ध्वरेतस्सु च शब्दे हि ॥ १७ ॥ ननु पूर्वसूत्रैर्विद्यायाः कर्मशेषत्वं बहुधा निराकृतम्, फले स्वातन्त्र्यं च स्थापितमिति किमनेन सूत्रेणेत्याशङ्कायां तत्प्रयोजनं वदन्तः पूर्वं त्रिभिः सूत्रैर्ग्रहिलवाद एकस्मिन्निराकृतेपि श्रुतौ ब्रह्मचर्यगार्हस्थ्यावेवाभिप्रेतौ, चातुराश्रम्यपक्षस्तु स्मार्तत्वान्निर्बल इति तमादाय कर्मत्यागादरो न युक्त इति ग्रहिलवादान्तरं निराकरोतीत्याशयेन सूत्रं व्याकुर्वन्ति अत्रेत्यादि ।

अयमर्थः । जाबालश्रुतौ हि 'संन्यासमनुब्रूही'ति जनकप्रश्ने याज्ञवल्क्यो 'ब्रह्मचर्यं समाप्य गृही भवेत् गृहाद्वनी भूत्वा प्रव्रजे'दिति क्रमेण चातुराश्रम्यपक्षं पूर्वमुक्तवान् । तत्रायुर्भागक्रमेण तथाकरणे आयुस्तुरीयभागे आन्ध्यादिकमपि क्वचित् सम्भवतीति तदा कर्मानधिकारे संन्यास इति शङ्का स्यादिति तदभावाय पक्षान्तरमाह 'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वाथ पुनरव्रती वा व्रती वा स्नातको वास्नातको वोत्सन्नाग्निरनग्निको वा यदहरेव विरजेत्तदहरेव

भाष्यप्रकाशरश्मिः ।

पूर्वोक्तमिति । ब्रह्मविदः कर्मकृतगुणदोषनिषेधनम् । विद्ययेति । 'दृष्टे परावर' इति विद्या तया । तदुपमर्दः कर्मोपमर्दः । 'भिद्यते हृदयग्रन्थिःश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावर' इति श्रुतिः । कर्माणीति कर्म । तस्या इति । विद्यायाः । 'अप्रतिषिद्धमनुमतं भवती'ति बहुधेति वक्ष्यमाणोपयोगि भवतीति ज्ञापितम् ॥ १६ ॥

ऊर्ध्वरेतस्सु च शब्दे हि ॥ १७ ॥ बहुधेति । अन्यमतान्यपि दूषितानि संगृहीतानि । फल इति । पुरुषोत्तमज्ञाने स्वातन्त्र्यं कर्माशेषत्वेन तथा । ग्रहिलवाद इति । सप्तम्यन्तम् । श्रुताविति । 'यदहरेव विरजेत्, तदहरेव प्रव्रजे'दिति श्रुतौ । एवेति । ग्रहिलवादात् । स्मार्तत्वादिति । सप्तदशाष्टादशाध्याययोरेकादशे चत्वार आश्रमाः । अतः स्मार्तत्वात् । तमिति । चातुराश्रम्यपक्षम् । ('यदि वेतरथे'त्यस्य प्रपञ्चः 'ब्रह्मचर्यादेवे'त्यादिः । स्नातक इति । 'वेदमधीत्य स्नाया'दिति वाक्यादधीतवेदः स्नातः । स्वार्थे कन् । उत्सन्न उच्छिन्नोऽग्निर्यस्य) श्रुत्या बोध्यत इति भाष्यीयश्रुतिं बोधयितुं प्रक्रम्यते ग्रन्थकृद्भिः । अयमर्थ इति । आयुस्तुरीयभाग इति । सप्तम्यन्तं पदम् । क्वचिदिति । पुरुषे । पक्षान्तरमिति । आश्रमद्वयपक्षम् । 'यदि वे'त्यादिनाह श्रुतिः । 'यदि वे'त्यादि । यदि वेति पक्षान्तरे । इतरथेति । भाष्यीयपक्षेण इतरथेत्यस्य प्रपञ्चः । एवकारः क्रमयोगव्यवच्छेदकः । गृहाद्वेति । ब्रह्मचर्यादित्यन्वेति । ब्रह्मचर्याद्गृहीत्यतो गृहाद्वा प्रव्रजेत् । वाकारोऽनादरे । तथा वनाद्वेत्यत्रापि ।

**हेतुर्वाच्यः। 'वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगात् यतयः शुद्धसत्त्वा' इति श्रुतिरिममेवार्थमाह। तथाचैतादृशा एवोर्ध्वरेतस इत्युच्यन्ते। एवं सत्यूर्ध्वरेतस्सु कर्माभाव उक्तरीत्या त्वयाप्यूरीकार्य इति ज्ञानरहितानां कर्मण्यधिकारः, तद्भूतां सन्न्यास इति त्वदुक्ताद्विपरीतोऽर्थः सिध्यतीति क्व कर्मशेषत्वसम्भावना ज्ञाने।**

**ननु सन्न्यासेऽपि तदाश्रमीणं कर्मास्तीति वैराग्यसहकृतं ज्ञानमेतच्छेषभूतम्, तदसहकृतं तदग्निहोत्रादिशेषभूतमिति न वैपरीत्यमिति प्राप्ते, आह**

---

भाष्यप्रकाशः।

प्रव्रजे'दिति। तेन कर्मानधिकारो न सन्न्यासप्रयोजकः, किन्तु वैराग्यमेव तत्प्रयोजकम्। तथा सति यावज्जीवाग्निहोत्रादिश्रुतीनामपि रागाधिकारकत्वान्न विरोध इति सिध्यति। तथापि ब्रह्मचर्यस्य तद्धर्मस्य च सर्वसाधारणत्वेपि कथं कस्यचिदेव विरागः, न सर्वस्येत्यपेक्षायां भगवदनुग्रहजनितचित्तशुद्धिरेव हेतुत्वेन वाच्या। भगवदनुग्रहे च व्यापारत्वेन वेदान्तार्थविज्ञानं तत्सहकारी सन्न्यासश्च वाच्य इति 'वेदान्तविज्ञाने'ति तैत्तिरीयश्रुत्यावसीयते। तथाचैवं भगवदनुगृहीता ऊर्ध्वरेतस इत्युच्यन्ते। तेषु च कर्माभाव उक्तरीत्या हेतुभेदकृतविषयभेदेन सन्न्यासयोगास्त्वयापि श्रौतवादिनाङ्गीकार्यः। अन्यथा श्रुतीनां सामञ्जस्यासम्भवात्। एवं सति 'परिव्राड् विवर्णवासा मुण्डोऽपरिग्रहः शुद्धिरद्रोही भैक्षाण' इत्यादिरूपं तदग्रिमवाक्यमपि सङ्गतं भवेत्। तस्मान्न ज्ञानस्य कर्मशेषत्वं शक्यवचनमपि।

**सूत्रशेषमवतारयन्ति नन्वित्यादि। तदाश्रमीणमिति।** शौचाचमनस्नानाष्टग्रासभक्षण-

रश्मिः।

अन्यथोक्तक्रमपक्षेण पुनरुक्तिः स्यादिति। **अथेत्यादि** स्पष्टम्। **स्नातक** इति। 'वेदमधीत्य स्नाया'दिति वाक्यादधीतवेदः स्नातः। स्वार्थे कन्। उत्सन्न उच्छिन्नोऽग्निर्यस्य स उत्सन्नाग्निः। **एवं सती**त्यादि भाष्यतात्पर्यवर्णनम्। **तेने**ति। प्रव्रजने ब्रह्मचर्याद्यनेकानन्तर्यश्रावणात् कारणतावच्छेदकगौरवेण तृणारणिमणिन्यायत्यागाल्लाघवेनैकप्रयोजनान्वेषणेन। **वैराग्यमेवे**ति। 'यदहरेव विरजेत्, तदहरेव प्रव्रजे'दिति श्रुत्युक्तं वैराग्यम्। एव कर्मानधिकारव्यवच्छेदकः। कर्मानधिकार आरुण्युपनिषदि। 'आरुणिः प्रजापतेर्लोकं जगाम, तं गत्वोवाच, भगवन्, केन कर्माण्यशेषतो विसृजानीति। तं होवाच प्रजापतिस्तव पुत्रान् भ्रातॄन् बन्ध्वादीन् शिखां यज्ञोपवीतं यागं सूत्रं च'त्याद्युक्त्वा, 'विसृजे'दित्युक्तत्वात्। **एवं सती**तिभाष्यतात्पर्यं **तथा सती**त्यादि। **तत्रे**त्यादिभाष्यविवरणं **तथापी**त्यादि। विषयभेदेपि। भाष्यीयतत्रेतिपदस्याप्ययमर्थः। **तद्धर्मस्ये**ति। एकयज्ञोपवीतभोजनमौनादर्शादर्शनानि ब्रह्मचर्यधर्माः। एकत्वमविवक्षितम्। **व्यापारत्वेने**ति। भगवदनुग्रहेण वेदान्तार्थविज्ञानतत्सहकारिसन्न्यासाभ्यां चित्तशुद्धिरित्यत्र व्यापारत्वेन। **तथा चे**ति भाष्यं विवृण्वन्ति स्म **तथा चे**ति। **एव**मिति 'वेदान्तविज्ञाने'ति श्रुत्युक्तप्रकारेण। अन्ये तूर्ध्वमूत्रिण इति वक्तव्याः, अप्राप्तयोषितो वा वाच्या इति भावः। नपुंसका एते। एवं सतीति भाष्यं विवृण्वन्ति स्म **तेषु चे**ति। ऊर्ध्वरेतस्सु च। **हेतुभेदे**ति। रागितद्रहितौ भावप्रधानो निर्देशः। रागितद्रहितत्वे हेतू तयोर्भेदेन कृतो यो गृहस्थतुरीयाश्रमीणरूपविषयौ तयोर्भेदः तेन। **श्रौतेने**ति। पूर्वमीमांसकेन। **तदग्रिमे**ति। उक्तजाबालाग्रिमवाक्यम्। **सङ्गत**मिति। हेतुभेदभिन्नसन्न्यासानां बहुविधत्वात्

१. इति नास्ति, उच्यत इत्यपि पाठः। २. प्रजापतिम्।

शब्दे हीति। ज्ञानस्वरूपं तत्फलं च न युक्तिसिद्धम्, किन्तु शब्दमात्रसिद्धम्। तत्र तु 'तमेवं विद्वानमृत इह भवति' 'ब्रह्मविदाप्नोति परम्' 'य एतं विदुरमृतास्ते भवन्ती'त्यादिवाक्यैर्ब्रह्मज्ञानस्य मोक्ष एव फलं श्रूयते। सर्वसाधनानां साक्षात्परम्पराभेदेन तत्रैव पर्यवसानात्। अतो धर्मिग्राहकमानविरोधात्संन्यासाश्रमीणकर्मशेषत्वमपि न वक्तुं शक्यमित्यर्थः। नन्वेवं संन्यासवैयर्थ्यमिति चेत्। न। ब्रह्मविदतिरिक्तसङ्गस्य भगवद्विस्मारकत्वेनावश्यत्याज्यत्वेन श्रुत्या कथनात्, अत एव 'वेदान्तविज्ञानसुनिश्चितार्था' इत्युक्त्वा, 'संन्यासयोगात् यतयः शुद्धसत्त्वा' इत्युक्तम्। अत्र पञ्चम्यान्तःकरणे संस्कारविशेषाधायकत्वं च प्रतीयते संन्यासस्य। स च संस्कारः फलोपकार्यङ्गमित्यावश्यकः संन्यासो मर्यादा-

भाष्यप्रकाशः।

योगाभ्यासादि। व्याकुर्वन्ति ज्ञानस्वरूपमित्यादि। धर्मिग्राहकमानविरोधादिति। धर्मि कर्मशेषत्वेन मुख्यत्वेन च सन्दिह्यमानं ज्ञानम्। तद्ग्राहकं मानं तत्स्वरूपज्ञापिका श्रुतिः। सा तु ज्ञानस्य मोक्षपूर्वकालीनत्वं प्राप्तृविशेषणतां च कर्मनैरपेक्ष्येण वदन्ती मोक्षरूपं फलं प्रति साक्षादेव कारणतां बोधयतीति कर्मशेषत्वाङ्गीकारे तद्विरोधात्। तथाच ज्ञानस्य संन्यासाश्रमीणकर्मशेषत्वनिवारणाय मर्यादामार्गे संन्यासस्यावश्यकत्वबोधनाय चेदं सूत्रमित्यर्थः। अत्रैव किञ्चिदाशङ्क्य परिहरन्ति नन्वेवमित्यादि। एवमिति। ज्ञानस्य केवलस्य कारणत्वे। तथाच मर्यादामार्गे प्रतिबन्धनिवृत्तेरावश्यकतया श्रुतौ सन्न्यासस्य सत्त्वशोधकत्वकथनेन ज्ञानस्वरूपोपकारकत्वेपि फलानुभवप्रतिबन्धनिवारकत्वात् तत्राप्यपेक्षासत्त्वेन न वैयर्थ्यमित्यर्थः। क्वचित् व्यभिचारदर्शनेनावश्यकत्वशङ्का स्यादिति तन्निवृत्त्यर्थमाहुः पुष्टीत्यादि। तथाच मार्गभेदान्न दोष इत्यर्थः। एवमेतैश्चतुर्भिः सूत्रैराग्रहवादनिराकरणेन विद्यायाः स्वातन्त्र्येण मोक्षसाधकत्वं दृढीकृतम्।

रश्मिः।

सङ्गतम्। भेदास्तु विवेच्याः। ज्ञानस्वरूपमित्यादीति। शब्दे हीत्यस्य व्याख्यानं तत्र त्विति। प्राप्तृविशेषणतामिति। विद्वान् प्राप्ता प्रथमश्रुतौ, ब्रह्मवित्प्राप्ता, विदुरिति यच्छब्दार्थनिष्ठो वेदनानुकूलो व्यापार इति वेदनानुकूलव्यापारवान् यच्छब्दार्थ इति प्राप्तृविशेषणता। वदन्तीति। विद्वानित्यादौ ह्येकार्थीभावेपि विग्रहदशायां वदन्ती। ननु विग्रहदशा न श्रुतिघटिकेति चेत्। न। व्यपेक्षायाः संहितापदक्रमेषु सत्त्वात्। तद्विरोधादिति। कर्मव्यवहितत्वेन साक्षात्कारणताबोधनविरोधात्। तथा चेति संन्यासाश्रमीणेतिभाष्यमपि विवृण्वन्ति स्म संन्यासेत्यादि। संन्यासाश्रमीणकर्माणि शौचाचमनस्नानाष्टग्रासभक्षणयोगाभ्यासादीनि। तानीच्छाद्वारा ज्ञानकार्याणि जानातीच्छति यतत इति ज्ञानस्य कर्मशेषत्वम्। सूत्रमिति। एक इत्यनुवर्तते। ऊर्ध्वरेतस्सु च शब्दे श्रुतिरूपे तु एके संन्यासाश्रमीणकर्माशेषत्वं पठन्तीति सूत्रार्थः। भाष्ये आर्थिकार्थः। प्रतिबन्धेति। पापं प्रतिबन्धः। फलानुभवेति। प्रतिबन्धः कः, भक्त्यभावः, भक्तौ प्रतिबन्धः पापम्। मर्यादाभक्तिव्यवस्थेयम्। पुष्टिव्यवस्थात्रैवाग्रे वाच्या। अपेक्षेति। संन्यासापेक्षासत्त्वेन। भाष्ये। ब्रह्मवित् संन्यास्यपि। संस्कार इति। शुद्धसत्त्वरूपः। प्रकृते। क्वचिदिति। संन्यासवति ज्ञानाभाववति। यथा व्रजभक्तेषु। 'संन्यस्य सर्वविषयांस्तव पादमूल'मिति 'ते नाधीतश्रुतिगणा नोपासितमहत्तमाः। अब-

मार्गे। पुष्टिमार्गे त्वन्यैव व्यवस्था। 'न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिहे'ति वाक्यात् ॥ १७ ॥

परामर्शं जैमिनिरचोदना चापवदति हि ॥ १८ ॥

ऊर्ध्वरेतस्सु च ज्ञानोक्तेस्तस्य मुक्तिफलकत्वोक्तेः 'किं प्रजया करिष्यामो

भाष्यप्रकाशः।

अन्ये तु, 'त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति, प्रथमस्तप एव, द्वितीयो ब्रह्मचर्याचार्यकुलवासी, तृतीयो योऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्, सर्वे एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेती'ति छान्दोग्यश्रुतिम्, 'ये चेमेऽरण्ये श्रद्धातप इत्युपासत' इति पञ्चाग्निविद्याश्रुतिम्, 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ती'ति काण्वश्रुतिं चोपन्यस्य एतेषु शब्देषूर्ध्वरेतसामाश्रमाणां कथनात्तेषां चाग्निहोत्रादिकर्मासम्भवाच्च विद्यायाः कर्माङ्गत्वमिति व्याकुर्वन्ति ॥ १७ ॥

परामर्शं जैमिनिरचोदना चापवदति हि ॥ १८ ॥ अत्रान्ये पूर्वोक्ता एव श्रुतीरुपन्यस्य एतेषु शब्देष्वाश्रमान्तराणां परामर्शं अनुवादं जैमिनिराचार्यो मन्यते, न विधिम्। अत्र लिङाद्यन्यतमस्य चोदनाशब्दस्याभावात्, अर्थान्तरपरत्वस्यैतेषु शब्देषु प्रत्येकमुपलम्भाच्च। 'त्रयो धर्मस्कन्धा' इत्यत्र त्रयाणां परामर्शपूर्वकपुण्यलोकप्राप्तिरूपमनात्यन्तिकं फलं सङ्कीर्त्य ब्रह्मसंस्थस्यामृतफलतायाः कथनेन, पञ्चाग्निविद्यास्थद्वितीयश्रुतौ च देवयानोपदेशप्रत्ययेनाश्रमा-

रश्मिः।

तातस्तपसः सैत्सङ्गान्मामुपागताः' इति वाक्याभ्याम्। ज्ञानस्य व्यभिचारदर्शनेन ज्ञानस्यानावश्यकत्वशङ्का मोक्षं प्रति स्यात्। धर्मस्कन्धाः धर्मशाखाः धर्मांशाः। यज्ञादिपदानि तद्वति लाक्षणिकानीत्याहुः प्रथम इति। प्रथमो यज्ञस्कन्धः ते विद्वांस एव यज्ञवत्त्वात्। द्वितीयोध्ययनवान्। तृतीयो दानवान्। भोजनदानवान्। पुण्यलोका इति। पुण्या लोका येषाम्। ब्रह्मसंस्थ इति। ब्रह्मणि संस्था भक्तिर्यस्येति तथोक्तः। 'तत्संस्थस्यामृतत्वोपदेशा'दिति शाण्डिल्यसूत्रात्। ब्रह्मसंस्थो गृहस्थः पत्न्यादिसाहाय्यात्। 'ये च इमे अरण्य' इति वानप्रस्थाः। प्रव्राजिनः संन्यासिनः। ऊर्ध्वरेतसामिति। पारिभाषिकब्रह्मचर्यादाश्रमिणोरूर्ध्वरेतस्त्वम्। यद्वा। गौण ऊर्ध्वरेतस्त्वम्। अग्निहोत्रादीति। गृहस्थधर्मोऽग्निहोत्रम्। आदिना वन्यपुरोडाशयागो वानप्रस्थधर्मः। यतिधर्मश्च न विद्याया इति। किन्तु कर्मणां विद्याङ्गत्वम्। बहुधेत्युक्ते प्रकाशे उपयुज्यत इति न दूषणम् ॥ १७ ॥

परामर्शं जैमिनिरचोदना चापवदति हि ॥ १८ ॥ मृश तितिक्षायामितिवत् मृष तितिक्षायामित्यपीति मूर्धन्यान्तं पदं परामर्षमिति। यथालिखितपाठकस्याधमत्वेन तालव्यान्तं पाठकाले कुर्यात्। भाष्ये तु तालव्यान्तम्। एतेष्विति। एत्युपासते प्रव्रजन्तीत्येतेषु। न विधिमिति। त्रिषु लेडाश्रयणे न विधिः प्राप्तः। सूत्रे अचोदना नाम चोदनाभावः। नञः पञ्चम्या लुक्, चोदनाभावात्, इत्यर्थमाहुः अत्रेति। लिङादीति। लिङ् लेट् लोट् तव्यानामन्यतमस्य। चोदनावाचकशब्दश्चोदनाशब्दस्तस्य। अर्थान्तरेति। वर्तमानार्थपरत्वस्य। अनात्यन्तिकमिति। क्षयिष्णु। न आत्यन्तिकं मोक्षरूपं तद्भिन्नम्। ब्रह्मसंस्थस्येति। व्याख्यातोऽयंशब्दः। देवयानेति। देवयानपथ्युपदेशज्ञानेन। 'ये चेमेऽरण्ये श्रद्धातप इत्युपासते, तेऽर्चिषमभिसंभवन्ती'ति श्रुतेः। आश्रमान्तरस्येति। 'योषा वाव गौतमाग्निः तस्या उपस्थ एव समि'दित्यादिश्रुत्या गृहस्थाश्र-

१. श्रीहस्ताक्षरेषु परामर्षमिति। २. मत्सङ्गात्।

येषां नोऽयमात्मा नायं लोक' इत्यादिश्रुतेश्च ब्रह्मप्राप्तावेव सर्वस्याः श्रुतेस्तात्पर्यमिति सिध्यति, तस्या एव सर्वक्लेशापायपूर्वकपरमानन्दरूपत्वात्, न तु कर्मणि, दुःखात्मकसंसारहेतुत्वात् तस्य । जीवश्रेयोनिमित्तमेव श्रुतिप्राकट्यात् । अन्यथा निषेधविधिर्न स्यात् । तथाच कर्मविधिनापि परम्परामोक्ष एव फलत्वेन परामृश्यत इति सिद्धम् । तं परामर्शं कर्मस्वातन्त्र्यवादी जैमिनिरपवदति बाधत इत्यर्थः । मोहकशास्त्रप्रवर्तकः स इतीश्वरमेव न मनुते यतः, अतस्तत्प्राप्तिस्तस्य मते दूरापास्ता । कर्मानधिकारिणामन्धादीनां संन्यासविधिविषयत्वम् । अन्यथा

---

भाष्यप्रकाशः ।

न्तरस्य सन्दिग्धतया तृतीयस्यां काण्वश्रुतौ च लोकपदतो लोकसंस्तवप्रतीत्या च तथावसायात् । अपि चापवदति । 'वीरहा वा एष देवानामि'ति, 'आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सी' रिति, 'नापुत्रस्य लोकोऽस्ती'ति प्रत्यक्षा श्रुतिरेवाश्रमान्तरमपवदतीति व्याख्याय 'ब्रह्मचर्यादेव प्रव्रजे'दिति जाबालश्रुतिमनपेक्ष्यायं विचार इत्याहुः ।

तत्र जाबालश्रुत्यनपेक्षायां बीजं नोपलभ्यते । परामर्शशब्दश्च ग्रहणे प्रसिद्धः, न त्वनुवाद इत्यतो न सूत्रे तदुक्तोऽर्थोऽभिप्रेतः, किन्तु पूर्वोक्तमेव सिद्धान्तं स्थूणाखननवत् दृढीकर्तुं पुनर्जैमिनिमतमुत्थापयतीत्याशयेन पूर्वसिद्धमनुवदन्तः सूत्रं व्याकुर्वन्ति ऊर्ध्वेत्यादि । तस्येति । ज्ञानस्य । इत्यादिश्रुतेश्चेति । 'नापुत्रस्य लोकोऽस्ती'त्यादिश्रुतिविरुद्धायाः 'किं प्रजया करिष्यामः, न कर्मणा न प्रजये'त्यादिश्रुतेश्च । तस्या इति । ब्रह्मप्राप्तेः । न तु कर्मणीति । कर्मकरणे तु न तात्पर्यम् । तस्येति । कर्मणः । तथाच कर्मविधिनापि 'तमेतं वेदानुवचनेने'ति श्रुत्यादिभिर्ज्ञानजननद्वारा कर्मणां फलत्वेन मोक्ष एव तात्पर्यगोचरीक्रियते इति श्रुतिसन्दर्भविचारात् सिद्धम् । तमेतं परामर्शं निश्चयं कर्मस्वातन्त्र्यवादी जैमिनिर्बाधत इति सूत्रभागस्यार्थो युक्त इत्यर्थः । पुनर्जैमिनिपदकथनतात्पर्यमत्राहुः मोहकेत्यादि । तदुक्तं पाद्मोत्तरखण्डे मोहक-

रश्मिः ।

मादन्याश्रमस्य वानप्रस्थस्य । लोकेति । प्रव्राजिनां क्षयिष्णुलोकासम्भवाल्लोकस्य संस्तवः एतादृशो लोको यः प्रव्राजिनां फलमिति । एवं लोकसंस्तवप्रतीतिस्तया । तथेति । अर्थान्तरपरत्वावसायात् । एष इति । आश्रमान्तरस्थः । आश्रमान्तरमिति । गृहस्थाश्रमादन्यमाश्रमम् । पूर्वोक्तमेवेति । ज्ञाननिरपेक्षं मोक्षरूपम् । एवकारो जैमिनिमतीयं कर्मण एव मोक्ष इति पक्षयोगं व्यवच्छिनत्ति । स्थूणेति । 'असन्दिग्धो हि वेदार्थः स्थूणाखननवन्मत' इति जिज्ञासाधिकरण एवोक्तम् । भाष्ये । जीवश्रेय इत्यादि । जिज्ञासाधिकरण उक्तम् । निषेधेति । 'न कलञ्जं भक्षयेत्', 'नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचने'ति निषेधविधी । यथा विधयः प्रेरणामभिदधतः स्वप्रवर्तकत्वनिर्वाहार्थं विधेयस्य यागादेः श्रेयःसाधनतामाक्षिपन्तः पुरुषं तत्र प्रवर्तयन्ति । एवं 'न कलञ्जं भक्षये'दित्यादयो निषेधा अपि निवर्तनामभिदधतः स्वनिवर्तकत्वनिर्वाहार्थं निषेध्यस्य कलञ्जभक्षणादेरनर्थहेतुत्वमाक्षिपन्तः पुरुषं ततो निवर्तयन्तीति । अन्यत् मीमांसार्थप्रदीपे स्पष्टम् । प्रकृते । तथा चेति भाष्यं विवृण्वन्ति स्म तथा च कर्मेति । श्रुत्यादिभिरिति । आदिना 'ज्ञानी त्वात्मैव मे मत' इति गीता, 'कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म यदप्यकारण'मिति श्रीभागवतं च । तमिति भाष्यं विवृण्वन्ति स्म तमेतमिति । निश्चयमिति । ज्ञानग्रहणम् । पूर्वं परामर्शो ग्रहण-

'वीरहा वा एष देवानां योऽग्निमुद्वासयत' इति श्रुतिर्न स्यात्, अतो 'ब्रह्मचर्यं समाप्य गृही भवेत्, गृहाद्वनी भूत्वा प्रव्रजेत्, यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वनाद्वे'तिश्रुतेरप्यङ्गहीन एव स विषयः, यत आयुर्भागविभागेनाश्रमाणां विधानम् । तुरीये तस्मिन् देहेन्द्रियादिवैकल्यं नियतम्, अतः कर्मण्येव श्रुतेस्तात्पर्यम् । अपिच, ज्ञानकर्मणोरलौकिकफलसाधकत्वे तत्त्वेन विहितत्वमेव प्रयोजकम् । अपरोक्षब्रह्मज्ञानं च न विधेयम् । साक्षात्स्वकृत्यसाध्यत्वात् । चोदनाबोधकलिङ्गाद्यभावाच ज्ञानस्य न मुक्तिसाधकत्वं वक्तुं शक्यम् । 'य एवं विदु'रित्यादिस्तु यागेष्विज्यविष्णुस्तुतिपरेत्याशयेनाह अचोदना चेति । जैमिनिवत्तत्सहायभूतेयमचोदना च परामर्शमपवदतीति सम्बन्धः । तथाच विधिसम्बन्धात् कर्मैवानुष्ठेयम्, न तु मुक्तिसाधनमपि, अतथात्वादिति स्थितम् ॥ १८ ॥

अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥

बादरायण आचार्यो जैमिनेरपि गुरुस्तदेव कर्तव्यमिति शिष्यसंमतमनुष्ठेयं कर्मापवदतीति पूर्वेण सम्बन्धः । तत्र हेतुः । साम्यश्रुतेः । यथा 'वीरहा वा एष देवाना'मिति श्रुत्या कर्मत्यागकर्तुर्निन्दा श्रूयते, एवमेव भगवज्ज्ञानरहितस्यापि सा श्रूयते यतः । तथाहि । 'असुर्या नाम ते लोका अन्धेन तमसावृताः । तांस्ते प्रेत्यापि गच्छन्त्यविद्वांसोऽबुधा जनाः ।' एतदग्रे च, 'ये तद्विदु-

---

भाष्यप्रकाशः ।

शास्त्रकथनप्रस्तावे 'द्विजन्मना जैमिनिना पूर्वं वेदमयार्थतः । निरीश्वरेण वादेन कृतं शास्त्रं महत्तर'मिति । पराशरोपपुराणेपि 'अक्षपादप्रणीते च काणादे सांख्ययोगयोः । त्याज्यः श्रुतिविरुद्धोंऽशः श्रुत्येकशरणैर्नृभिः । जैमिनीये चे'त्युक्तम् । तन्मतेन सन्यासविधितात्पर्यमाहुः कर्मेत्यादि । अङ्गहीन एव स इति । अङ्गहीनः पुरुषः । अत्र गमकं यत इत्यादिनोच्यते । तदुपपादनं तुरीय इत्यादिना । एतेन सिद्धमाहुः अत इत्यादि । अचोदनेत्याद्यंशमवतारयन्ति अपि चेत्यादि । शेषं स्फुटम् ॥ १८ ॥

अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥ पूर्वसूत्रे जैमिनिमतमनूद्येदानीं तत्परिहरतीत्याशयेन सूत्रं व्याकुर्वन्ति बादरायण इत्यादि । 'असुर्या' इति मन्त्रे 'अविद्वांस' इत्यनेन कर्माङ्गभूतविद्वद्वाक्योक्तज्ञानशून्या एव निन्द्यन्त इति शङ्कानिरासायाहुः एतदग्र इत्यादि । श्रुती तु बृहदारण्यके शारीरब्राह्मणस्थे । तथाच यथा कर्माकरणनिन्दया कर्मनित्यत्वम्, तथा अविद्वन्निन्दया ब्रह्मज्ञाननित्यत्वं प्राप्यते, अतो निन्दामात्रेण कृत्वा कर्मकरणे श्रुतितात्पर्यसाधनमयु-

रश्मिः ।

मित्युक्तत्वात् । पुनरिति । शेषत्वादितिसूत्रीयजैमिनिशब्देनैव चारितार्थ्ये पुनरित्यर्थः । जैमिनीये चेति । 'जैमिनीये च वैयासे न विरोधोऽस्ति कश्चने'ति । अपि चेत्यादिनेति । तत्त्वेनेति । अलौकिकफलसाधकत्वेन । तत्सहायेति । जैमिनिमतसहायभूता । परामर्शं ज्ञानपरामर्शम् । अतथात्वादिति । विधिसम्बन्धाभावात् ॥ १८ ॥

अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥ तथोक्तमिति । आपाततो नाम

रमृतास्ते भवन्त्यथेतरे दुःखमेवोपयन्ती'त्यादिरूपा । एतच्च निन्दामात्रेण साम्यमुक्तमापाततः । वस्तुतस्तु 'तमेतं वेदानुवचनेन विविदिषन्ति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनानाशकेन चैतमेव विदित्वा मुनिर्भवत्येनमेव प्रव्राजिनो लोकमीप्सन्तः प्रव्रजन्ती'ति श्रुत्या ज्ञानसाधनत्वेनैवाश्रमकर्मकरणोक्तेश्च न स्वातन्त्र्यं कर्मणो वक्तुं शक्यम् । अत एव शुकस्य न ब्रह्मचर्यादिकमपि । फलस्य जातत्वेन तत्साधनानपेक्षणात् । नच स्वर्गकामपदश्रवणान्नैवमिति वाच्यम् । त्वदभिमतलोकात्मकस्वर्गे 'यन्न दुःखेन सम्भिन्न'मिति वाक्यशेषोक्तस्वर्गपदप्रवृत्तिनिमित्तधर्माभावादात्मसुखस्यैव तादृशत्वात्तस्यैव तत्रोक्तेः । एवं सति 'तमेतं वेदानुवचनेने'तिश्रुत्यैकवाक्यतापि सम्पद्यते । अन्यथा तु विरोध एव ।

भाष्यप्रकाशः ।

क्तमित्यर्थः । ननु साम्यश्रुत्या ज्ञानसाप्यावश्यकत्वं प्राप्यते, न तु कर्मापवादः, तथा सति विद्वद्वाक्योक्तज्ञानवद्वेदान्तोक्तब्रह्मज्ञानस्यापि कर्माङ्गत्वमवर्जनीयमित्याशङ्क्य तन्निवारणायाहुः एतदित्यादि । उक्तमापातत इति । भगवता व्यासेन तथोक्तम् । तथोक्तौ गमकमाहुः वस्तुत इत्यादि । न ब्रह्मचर्यादिकमिति । उपनयनाभावादाश्रमरूपं तन्न । तथाच श्रुत्यर्थसन्देहवारणायाचार्यस्य प्रवृत्तत्वादुक्तश्रुतिदर्शनेपि यदेवं निन्दामात्रेण साम्यकथनं तदापातत एव । नचोक्तश्रुतिदर्शनेपि साम्यकथनात् कर्मणां मुख्यत्वमेवाभिप्रेतमिति शङ्क्यम् । शुकादिषु तथा दर्शनस्य विरोधप्रसङ्गात् । नच तत्तद्वाक्येषु स्वर्गकामादिपदश्रवणाज्ज्ञानसाधनत्वोक्तेश्च भिन्नवाक्यगोचर-

रश्मिः ।

वितण्डयोक्तम् । तथोक्ताविति । आपतत उक्तौ । वस्तुत इत्यादीति । ज्ञानसाधनत्वेनेति । विविदिषन्तीत्यत्र रामानुजाचार्यैः सनर्थाविवक्षणात् । भाष्येण स्वमतेपि तत् सूच्यते, अन्यथा ज्ञानेच्छासाधनत्वेनेत्युक्तं स्यात् । ज्ञानपदं ज्ञानेच्छायां लाक्षणिकं वा । 'वेदोऽक्षरमात्रमपि नान्यथा वदती'ति भाष्यात् । आश्रमेति । ब्रह्मचर्यं प्रथमाश्रमीणस्य, तपस्तृतीयाश्रमीणस्य, श्रद्धा तुरीयाश्रमीणस्य । 'विरहानुभवार्थं तु सर्वत्यागः प्रशस्यत' इति संन्यासनिर्णयवाक्यात् । यज्ञो गृहस्थस्येति तथा । चकार आपाततः साम्यहेतोरुक्तस्य समुच्चायकः । न स्वातन्त्र्यमिति । फलजनने ज्ञानस्य कर्मापेक्षत्वेन स्वातन्त्र्यं ज्ञानवत् स्वातन्त्र्यम् । उक्तश्रुतीति । 'वीरहा वा एष' इति श्रुतिदर्शने । दूषणरहितश्रुतिदर्शने । स्वपक्षदोषमनुद्धार्य परपक्षदोषाविष्करणस्य वितण्डात्वात् । फलस्येति भाष्यं विवरीतुमाहुः न चोक्तेति । साम्येति । न तु स्वपक्षदोषोद्धारपूर्वकपरपक्षदोषाविष्करणात् । मुख्यत्वमिति । प्रथमशास्त्रत्वात् । ज्ञानवत् फलजनने स्वातन्त्र्यम् । विवृण्वन्ति स्म शुकादिष्विति । तथा दर्शनस्येति । अखण्डब्रह्मज्ञानरूपफलस्य जातत्वेनाखण्डब्रह्मज्ञानसाधनकर्मानपेक्षत्वदर्शनस्य । अपेक्षत्वमपेक्षणम् । कर्मणां मुख्यत्वे ज्ञानवत् तत्सहकृतं दर्शपूर्णमासयोर्ब्रह्मार्त्विज्यं श्रुतं स्यात्, कर्मणां मुख्यत्वात् । फलजनने ज्ञानवत् स्वातन्त्र्यात् । अतो विरोधस्यैकाङ्गसहानवस्थानस्य प्रसङ्गात् । न चेतिभाष्यं विवृण्वन्ति स्म न चेति । उपलक्षणविधया स्वर्गकामपदव्याख्यानं स्वर्गकामादीति । तेन स्वर्गकामश्च स्वर्गकामश्च स्वर्गकामौ आदी यस्य वृष्टिकामपदस्य तत् स्वर्गकामादिपदं तस्य श्रवणादित्यर्थः । 'ज्योतिष्टोमेन स्वर्गकामो यजेत' 'विश्वजिता यजेत' 'चित्रया यजेत वृष्टिकामः' इति । ज्ञानसाधनत्वोक्तिः 'तमेत'मिति श्रुतौ तस्याः । ताभ्यां हेतुभ्यां ज्ञानकर्मणोर्भिन्नवाक्य-

१. लोकमभीप्सन्तः । २ अपि नास्ति ।

ननु दृष्टफलका अपि कारीरीचित्रादियागाः श्रूयन्त इति नैवं निर्णय इति चेत्। उच्यते। नित्यकर्मणो हि ज्ञानसाधनत्वमुच्यते। व्रीहिपश्वादीनां तन्निर्वा-

भाष्यप्रकाशः।

त्वेन दुर्बलत्वान्नोक्तं साधीय इति शङ्क्यम्। स्वर्गकामपदावयवभूतस्वर्गपदस्यात्मसुखे लोके च शक्तेः किमत्राभिप्रेतमिति सन्देहे प्रसिद्ध्यपेक्षया वाक्यशेषस्य बलिष्ठत्वात् त्वदभिमतस्य वाक्यशेषेऽनुपपत्तावात्मसुखस्यैव वाक्यशेषे सिद्धेस्तदभिप्रायेणैव तेषु वाक्येषु स्वर्गकामपदस्योक्तेः। नचात्र किं गमकमिति शङ्क्यम्। एवमात्मसुखस्य तत्रोक्तत्वे सति तस्यात्मज्ञानसापेक्षतयोक्तश्रुत्येकवाक्यता सिध्येत्, अन्यथा तु विरोध एव। स च सम्भवत्येकवाक्यत्वेऽयुक्त इति सर्वसामञ्जस्यस्यैव गमकत्वात्। अतो वाक्यशेषोक्तमेवाङ्गीकार्यमित्यर्थः।

अत्र किञ्चिदाशङ्कते नन्वित्यादि। तथाच श्रुत्यन्तरे तथादर्शनात् स्वर्गपदस्य प्रसिद्धार्थाङ्गीकार एव युक्तः, न तु वाक्यशेषोक्तार्थाङ्गीकारः। तथा सति 'सुवर्गाय वा एतानि लोकाय हूयन्त' इत्यादिकं युज्येत। अन्यथा तद्विरोधापत्तेरित्यर्थः।

अत्राभिदधते नित्येत्यादि। उक्तश्रुतौ हि नित्यस्य कर्मणस्तथात्वमुच्यते। नित्यं च कर्म तदैव साङ्गं भवति, यदा शुद्धैर्द्रव्यादिभिरुपसम्पद्यते। अन्यथा 'चाण्डालो जायते यज्ञकरणा-

रश्मिः।

गोचरत्वेन तादृशविरोधस्यैकाङ्गसहानवस्थानरूपस्य दुर्बलत्वादित्यर्थः। नोक्तमिति। एकवाक्यानुक्तत्वेन कर्मणाममुख्यत्वम्। शङ्क्यमिति। तेन भाष्ये वाच्यमित्यत्र तर्कवाग्विवक्षा बोध्या। त्वदभिमतेति भाष्यं विवृण्वन्ति स्म स्वर्गकामपदेति। वाक्यशेषस्येति। 'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं च तत्सुखं स्वःपदास्पद'मिति वाक्यशेषस्य। अभीति। ज्ञानप्रकरणात् त्वदभिमतस्येत्यपि। प्रसिद्ध्याभिमतस्य। एवकारेण लोकव्यवच्छेदः। तदभीति। आत्मसुखाभिप्रायेणैव। ज्ञानप्रकरणादेवकारः। तेष्विति। स्वर्गविषयेषु कामेषु सत्सु। सति सप्तम्यन्तम्। एवं सतीति भाष्यं विवरीतुमाहुः न चात्रेति। विवृण्वन्ति स्म एवमात्मेति। तत्रेति। वाक्यशेषे। तस्यात्मेति। आत्मसुखस्य स्वानुभवात्मज्ञानसापेक्षतया। उक्तेति। भाष्योक्त'तमेतं वेदानुवचनेने'ति श्रुत्येकवाक्यता। सा चेत्थम्। स्वर्गपदघटितवाक्ये आत्मसुखं स्वर्गपदेन ज्ञानप्रकरणात्, तत्र वेदानुवचनं साधनम्, न तु ज्ञानवत् फलजनने स्वतन्त्रमिति। एवं सिध्येदित्यर्थः। अन्यथेति। उभयसमुच्चये तु शुकादिषु कर्माभावात् सहानवस्थानविरोध एव। सर्वेति। अधिकारानुसारेण श्रुतिसामञ्जस्यं जिज्ञासासूत्रभाष्योक्ते ज्ञानकर्मणोः परस्पराङ्गाङ्गित्वे, श्रुत्योर्विरोधे विकल्प इति मनुस्मृते च सामञ्जस्यम्। तस्येत्यर्थः। अत इति। गमकसत्त्वात् ज्ञानप्रकरणाच्च, आभ्याम्। नन्वित्यादीति। कारीरीति। 'कारीर्या यजेत वृष्टिकामः' 'चित्रया यजेत वृष्टिकामः' इति श्रुती। आदिना 'विश्वजिता यजेते'ति। अत्र स्वर्गः फलम्। 'स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वा'दिति जैमिनिसूत्रात्। फलं स स्वर्गः स्यादिति विधेयलिङ्गम्। सर्वान् यागान् प्रति। अविशिष्टत्वादिति सूत्रार्थः। नैवमिति। न वाक्यशेषेण निर्णयः, प्रसिद्धिप्रायपाठाभ्यां प्रसिद्ध्या निर्णयः। श्रुत्यन्तरेणेति। प्रायपाठावेदककारीर्यादिश्रुत्यन्तरेण। तथेति। दृष्टफलत्वस्य फले दर्शनात्। [1]युज्यत इति। लोकपदघटिता युज्यते। तद्विरोधेति। लोकपदविरोधापत्तेः। अभिदधत इति। सिद्धान्तमभिदधते। उक्तेति। 'तमेतं वेदानुवचनेने'ति श्रुतौ। कर्मण इति साङ्गस्य। निबन्धेपि 'यथा कथञ्चिन्नित्यस्य सिद्धिर्वेदेन बोध्यते'

१. प्रकाशे युज्येत, रश्मौ युज्यते।

हकत्वात्तच्छेषत्वेन तेषां विधानम् । एवं सति 'वीरहे'ति श्रुतिः साग्निकस्य गृहिण आलस्यादिदोषेण तदुद्वासने दोषमाह, न त्वाश्रमान्तरपरिग्रह इति मन्तव्यम् । अन्यथा तदुच्छेदस्तद्विधिवैयर्थ्यं च स्यात् । नचानधिकृतमादाय तत्समाहितिरिति वाच्यम् । अत्र पृच्छामः । अन्धपङ्ग्वादिभिः प्रव्रजनं कार्यमिति विधिरस्ति, आहोस्वित् यावज्जीवमग्निहोत्रविधायकप्रव्रजनविधायकवाक्ययोर्विरोधाभावाय विषयो भिन्नः कल्प्यते । नाद्यः । अश्रुतेः । न द्वितीयः । 'यदहरेव विरजे'-दिति श्रुत्या वैराग्यवतः प्रव्रजनविधानात्तेनैव विषयभेदसिद्धौ तत्कल्पनानवका-

भाष्यप्रकाशः ।

च्छूद्रभिक्षिता'दित्यादिनिन्दावाक्यानि न स्युः । अतस्तादृशद्रव्याद्यर्थं चित्रादियागानां नित्यशेषतया विधानम् । एवमेकफलकेषु नानायागेष्वपि कश्चिदभिप्रायोऽस्तीत्यवगन्तव्यम् । अन्यथा तद्वैयर्थ्यापत्तेः । एवमतिविमुखस्य सन्मार्गश्रद्धाजननार्थं दृष्टफलाः कारीर्यादयो विधीयन्ते । इदमप्यश्वमूत्रणादिनिदर्शनादवगम्यते । एवं सति काम्यैस्तत्तद्यागैः समीचीनादृष्ट उत्पन्ने तभिष्पन्नैरुपकरणैर्यदा साङ्गनित्यकर्मसिद्धिः, तदा ज्ञानं भवति । तेन चात्मसुखम् । लोकस्त्वङ्गवाक्येषु फलतयोच्यते । यदि प्राचीनदुरदृष्टवशात् यष्टुर्लोककामना भवति, तदा साङ्गात् कर्मणस्तद्भवतीति । अतो न तत्र तात्पर्यम्, किन्तु वाक्यशेषोक्त एवेति कर्मणां ज्ञान एव तात्पर्यमित्यर्थः । ननु यदि ज्ञानमेव मुख्यम्, तदा त्यागावश्यकत्वे 'वीरहे'त्यादिनिन्दावाक्यविरोधो दुर्वार इत्यत आहुः एवं सतीत्यादि । ननु निन्दावचनद्वयाञ्जस्यार्थमधिकारिभेदकल्पनमावश्यकम्, तत्र 'वीरहे'त्यादिविषयसङ्कोचापेक्षया 'असूर्ये'त्यादिविषयसङ्कोच एव युक्तः, 'आज्यमवेक्षते, विष्णुक्रमान् क्रामती'त्यादिस्वारस्यात् । तत्रानधिकारे तु कर्मानधिकाराचत्र त्यागादिविधिसार्थक्ये सर्वसामञ्जस्यादित्याशङ्क्य विकल्पपूर्वकं तत् परिहरन्ति नचानधिकृतेत्यादि । तत्समाहितिरिति । संन्यासोच्छेदतद्विधिवैयर्थ्ययोः समाधानम् । तथाच यदि प्रव्राजवाक्ये

रश्मिः ।

इति । तथात्वं ज्ञानसाधनत्वम् । शुद्धैर्वेदोक्तैः संस्कृतैः द्रव्यादिभिरित्यत्रादिना तपोयोगज्ञानानि गीतोक्तानि । शूद्रेति । शूद्रभिक्षितात् द्रव्यात् यज्ञकरणं तस्मात् । चण्डालो जन्मान्तरे जायते, फलस्योत्तरजन्मीनत्वात् । तद्भवतीति । स्वर्गलोकरूपं फलं भवतीति । तत्रेति । लोके । तात्पर्यशब्दादभिधास्ति । वाक्यशेषेति तात्पर्यमित्यनुषज्यते । कर्मणामित्यादि । 'तमेत'मिति श्रुतेरित्यर्थः । मुख्यमिति । फलजनने स्वतन्त्रम्, न तु कर्म । वीरेति । गार्हस्थ्यबोधकमिदम् । परामर्शसूत्र उक्तम् । एवं सतीत्यादीति । तदुद्वासन इति । अग्न्युद्वासने । आश्रमेति । आश्रमो गृहस्थाश्रमः । तदन्यश्चतुर्थाश्रमः तस्य परिग्रहे । अन्यथेति । आश्रमान्तरपरिग्रहे श्रुतेर्दोषबोधकत्वे । संन्यासोच्छेदः संन्यासविधेः 'यदहरेव विरजेत्, तदहरेव प्रव्रजे'दित्यस्य वैयर्थ्यं चेत्यर्थः । निन्देति । वचनद्वयेति । तत्तु 'वीरहे'ति 'असुर्या नाम ते लोका' इति च । वीरहेत्यादीति । अस्य विषयसङ्कोचः साग्निकस्य गृहिण आलस्यादिदोषेणाग्न्युद्वासने दोषमाह श्रुतिः, न त्वाश्रमान्तरपरिग्रह इति । तस्यापेक्षया । 'असुर्ये'त्यादिविषयसङ्कोचमेवाहुः आज्यमवेति । इत्यादीति । 'यस्य पर्णमयी जुहूर्भवति, न स पाप५ श्लोक५ शृणोती'त्यादिपदार्थः । तत्तत्त्यागादीति । अवेक्षणादित्यागः, आदिना संन्यासः । सर्वेति । वेदवेदान्तशास्त्रस्य सर्वशास्त्ररूपस्य सामञ्जस्यात् किं पुनस्तदन्तर्गतस्य निन्दाद्वयस्य । तदिति ।

१. तत्कथनानवकाशादिति रश्मिपाठः । २. प्रकाशे तत्र त्यागादीति, रश्मौ तत्तत्त्यागादीति ।

शात् । तेन 'नापुत्रस्य लोकोऽस्ती'ति श्रुतिरप्यविद्वद्विषयिणीति न विरोधः । 'विद्वांसः प्रजां न कामयन्त' इति श्रुतेः । एतेनर्णत्रयापाकरणमपि प्रत्युक्तं वेदितव्यम् । अविद्वद्विषयत्वात् । यदप्युक्तं 'अचोदना चे'ति सूत्रावयवेन 'चोदनाबोधकलिङ्गाद्यभावो बाधक' इति । तदपि न साधीयः । श्रुतिसाम्यादेव । श्रूयते हि 'तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्ये'दिति । नच प्रमाणवस्तुपरतन्त्रत्वान्न ज्ञानस्य विधेयतेति वाच्यम् । इतरज्ञानस्य तथात्वेपि जीवात्मलक्षणेऽधिष्ठाने परमात्मनो भगवतो दर्शनस्यान्यतोऽप्राप्तत्वाच्छ्रद्धान्तसाधनैस्तद्दर्शने स्वरूपयोग्यतासम्पत्तावात्मन्यधिष्ठाने परमात्मदर्शना-

---

भाष्यप्रकाशः ।

'विरजे'दित्यधिकारबोधकं पदं न भवेत्, तदा तथा कल्पयितुं शक्येतापि, न तु तत्सद्भाव इति तदप्रयोजकमित्यर्थः । श्रुत्यन्तरविरोधपरिहारायाहुः तेनेत्यादि । एतेनेति । 'विद्वांस' इति कथनेन ।

ननु साम्यश्रुतिरूपेण हेतुना भवदुक्तदोषपरिहारः, तथापि ज्ञानस्य प्रमाणवस्तुपरतन्त्रत्वेन चोदनाविषयत्वाभावादचोदनाकृतापवादस्य कथं परिहार इत्यत आहुः यदपीत्यादि । तथाच चोदनाश्रुतिसाम्यात् तस्यापि परिहार इत्यर्थः । अत्र 'पश्ये'दित्यस्य प्रमाणान्तरजन्यदर्शनानुवादत्वमाशङ्क्य निषेधन्ति नचेत्यादि । तथाचात्र 'एवंवि'दित्यादिभिर्निर्विचिकित्सशाब्दज्ञानवत्त्वशमदमवैराग्यदुःखसहिष्णुत्वश्रद्धावित्तत्वपूर्वकं जीवात्माधिकरणकपरमात्मदर्शनप्रयत्नस्य प्रमाणान्तरेणाप्राप्तत्वात् तद्विधानस्य सुखेन सम्भवान्नानुवादत्वमित्यर्थः । ननु तथापि कर्मचोदनासु

रश्मिः ।

सर्वसामञ्जस्यम् । भाष्यीयविकल्पेन सह सिद्धान्तप्रघट्टकार्थमाहुः तथा च यदीति । विरजेदिति । इदं कामवतो भिन्नस्य वैराग्यवतोऽधिकारबोधकम् । तथेति । तदतिरिक्तो यावज्जीवमग्निहोत्रविधायकप्रव्रजनविधायकवाक्ययोर्विरोधाभावायान्धपंग्वादिभिः प्रव्रजनं कार्यमिति भिन्नविषय इत्यर्थः । तत्सद्भाव इति । विरजेदिति । वाक्ययोर्विरोधाभावसाधकपदसद्भावे । तस्य विरजेदिति पदस्य । अतिरिक्तं अन्धपंग्वादिभिः प्रव्रजनं कार्यमिति यत्तदप्रयोजकम् । तेन भाष्ये तेनैवेत्यस्य वैराग्येनैव । विषयभेदेत्यादेर्गृहस्थतुरीयाश्रमभेदसिद्धौ अयं विषयो भिन्नः कल्प्यते इत्यस्य कथनानवकाशादित्यर्थः । श्रुत्यन्तरेति । 'नापुत्रस्य लोकोऽस्ती'त्यस्याः विरोधपरिहाराय । तेनेत्यादीति । अविद्वदिति । तेन संन्यासे पुत्राभावेपि लोकस्याक्षरात्मकस्य सिद्धिः विद्वदधिकारात् । भाष्ये । ऋणत्रयेति । देवर्णपित्रर्णमनुष्यर्णाः । 'ऋणत्रयमपाकृत्य मनो मोक्षे निवेशये'दिति तुरीयेर्णत्रयापाकरणाभावान्मोक्षानधिकारसम्पादकर्णत्रयापाकरणम् । उक्तदोषेति । 'वीरहा वा एष' इति श्रुत्युक्ताग्न्युद्वासनकृतनिन्दादोषपरिहारः । प्रमाणान्तरेति । प्रमाणं 'तस्मादेवंवित्', तदन्यत् 'आत्मा वा अरे द्रष्टव्यः श्रोतव्य' इति प्रमाणान्तरम्, तज्जन्यदर्शनानुवादत्वम् । तथा चेति । भाष्ये । भगवतो दर्शनस्येत्यस्यान्तर्यामिब्राह्मणोक्तदर्शनमात्रम्, न तूपासनम्, जीवे तन्निषेधात् । एवं तस्य दर्शनस्य विधिविषयत्वेनान्यतोऽप्राप्तत्वात् । 'आत्मा वा अरे द्रष्टव्य' इत्यत्रावश्यकार्थेष्वपि तव्यस्य सम्भवात् श्रद्धान्तसाधनैस्तद्दर्शने आत्मोपासनात्मके स्वरूपयोग्यतासम्पत्तौ दर्शनसाधनं तु भक्तिरेव ।

नुकूलप्रयत्नविधानसम्भवात्, श्रवणविधिना श्रुतिवाक्यजशाब्दज्ञानानुकूलप्रयत्नविधानवत् । एवमेव हि यागविधिनापि क्रियारूपयागस्य स्वानुकूलप्रयत्नाधीनत्वेन स प्रयत्न एव विधीयते । अन्याप्राप्तत्वात् । न तु क्रिया । तत्प्रयत्ने सति तस्याः स्वत एव सम्भवात् ।

अथवा । ननु यथा 'वीरहे'ति श्रुत्या कर्मत्यागो निन्द्यते, तथैव 'असुर्या नाम ते लोका अन्धेन तमसा वृताः । तांस्ते प्रेत्यापि गच्छन्त्यविद्वांसोऽबुधा जनाः । ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवोपयन्ती'त्यादिश्रुत्या भगवज्ज्ञानाभावो निन्द्यते । एवं सति कर्मज्ञानानुकूलप्रयत्नयोर्विधेयत्वे मिथो विरोधादधिकारिभेदेन विधेयत्वं वाच्यम् । न च 'तावत् कर्माणि कुर्वीत न निर्विद्येत यावते'ति भगवद्वाक्याद्रागिणः कर्म विधीयते, तद्रहितस्य ज्ञानमिति वाच्यम् । 'जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे' इति श्रुतेर्नीरागत्वेन प्रसिद्धस्यापि तस्य कर्मणि प्रवृत्तिर्या, सा न स्यात्, अधिकाराभावात् । अथ जनकदृष्टान्तेन कर्मणोऽङ्गित्वं ज्ञानस्य तदङ्गत्वं वाच्यम् । तथा च ज्ञानवता कर्मानुष्ठेयमिति प्राप्तं प्रतिवदति । **अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥** ज्ञानमङ्गं तदङ्गित्वेनानुष्ठेयं कर्मेति मतं बादरायणोऽपवदतीति पूर्वेण सम्बन्धः । तत्र हेतुमाह **साम्यश्रुते-**

भाष्यप्रकाशः ।

कर्मण एव विधेयतेति तस्य फलवत्त्वमुचितम्, इह तु ज्ञानानुकूलप्रयत्नस्येति ज्ञानस्याविधेयत्वं दुर्वारमित्याशङ्कायां कर्मचोदनास्पष्टेतत्तुल्यत्वं बोधयन्ति एवमेवेत्यादि । स इति । यागाभिव्यञ्जकः । न तु क्रियेति । 'यज्ञो वै विष्णुः' 'सुप्तं कर्म प्रबोधय'मित्यादिश्रुतिस्मृतिभिरलौकिकस्य कर्मणो नित्यत्वात् सा न विधेया । इदं यथा तथा समन्वयसूत्र एव व्युत्पादितं कारिकाभिः । भावार्थपादभाष्ये चाचार्यैः । तथा चोभयत्रापि तत्तदभिव्यञ्जकप्रयत्नस्यैव विधेयत्वात्तेनाभिव्यक्ताभ्यां ज्ञानकर्मभ्यां सुखेन फलसम्भवान्न कोपि दोष इत्यर्थः । अस्मिन् व्याख्याने ज्ञानाङ्गत्वेन कर्म कर्तव्यमिति सिद्धम् ।

इदमेव च 'विधिर्वा धारणव'दितिसूत्रे प्रतिपादनीयमित्येकतरवैयर्थ्यमापद्येतेत्यरुच्या प्रकारान्तरेण व्याकर्तुमवतारयन्ति अथवेत्यादि । मिथो विरोधादिति । कर्माङ्गस्य कामस्य ज्ञानाङ्गस्य शान्त्यादेश्चेतरेतरविरोधेन तयोर्विरोधात् । व्याकुर्वन्तो हेतुं विशदीकुर्वन्ति स्वत

रश्मिः ।

**आत्मनीत्यादि ।** मनसि अधिष्ठाने परमात्मनो दर्शनमुपासनम्, **तदनुकूलप्रयत्नविधानसम्भवात् ।** अनुभवातिरिक्तज्ञानं विधिविषयमपि 'तस्मादेव'मित्यत्रापूर्वविधिविघटकत्वाभाव इत्याशयेनाहुः **श्रवणविधिनेति ।** अत्र **प्रयत्नः** पूर्वापरीभावापन्नो विधिपुरुषोभयनिष्ठः । तस्य विधानवदित्यर्थे चेत्यर्थः । **जीवात्माधीति ।** जीव इव जीवः मनोऽधिष्ठानत्वात् । **दर्शनमुपासनम् । नानुवादत्वमिति ।** 'तस्मादेवंवि'दित्यत्र 'पश्ये'दित्यस्य 'द्रष्टव्य' इति विधिदर्शनानुवादत्वम् । सिद्धत्वेनाविधेयत्वेन तस्याफलवत्त्वात् । **एतत्तुल्यत्वम् ।** ज्ञानचोदनातुल्यत्वम् । **भाष्ये । भर्जनस्येवेति ।** भर्जनस्य यथा नाङ्गता,

रिति । अतोऽपुरुषार्थं कर्म फलार्थिनैवानुष्ठेयम् । तथा च 'एष नित्यो महिमे'ति श्रुत्या ज्ञानवति विहितनिषिद्धयोः कर्मणोः फलाजनकत्वेन साम्यं श्रूयत इति फलार्थिप्रवृत्त्यसम्भवेन ज्ञानिनस्तथात्वाभावेन कर्मोच्छेदप्रसक्त्या न ज्ञानस्याङ्गत्वं वक्तुं शक्यम् । कृषीवलस्य व्रीहीणां वपने भर्जनस्येव । तथा च ज्ञानिनः प्रवृत्त्यसम्भवेनान्येषां च 'अथेतरे दुःखमेवोपयन्ती'ति निन्दाश्रवणेन तथात्वात् सर्वार्थतत्त्वज्ञा श्रुतिर्ज्ञानबहिर्भूतं कर्म कथं विदध्यादिति ज्ञानस्य पुरुषार्थासाधकत्वोक्तिमसहमानेनाचार्येण प्रौढ्या निरूपितम् ॥ १९ ॥

---

भाष्यप्रकाशः ।

इत्यादि । तथात्वाभावेनेति । कर्मकर्तृत्वाभावेन । ननु ज्ञानिप्रवृत्त्यभावेपि न कर्मोच्छेदः फलार्थिनां प्रवृत्तेः सम्भवात् । न चासुर्यवाक्याभिवृत्तिः, तत्र 'अविद्वांस' इत्यनेन विद्वद्वाक्योक्तज्ञानशून्यनिन्दाया अपि शक्यवचनत्वादित्याशङ्कायां स्वोक्तं विभजन्ते तथा चेत्यादि । अन्येषामिति । ब्रह्मज्ञानशून्यानाम् । तथात्वादिति । कर्मकरणासम्भवात् । ज्ञानबहिर्भूतमिति । तत्सम्बन्धशून्यम् । एवं निरूपणस्य तात्पर्यमाहुर्ज्ञानस्येत्यादि ।

अन्ये तु, अनुष्ठेयमाश्रमान्तरम् । कुतः साम्यश्रुतेः । 'त्रयो धर्मस्कन्धा' इत्यादौ गार्हस्थ्येन सममेवाश्रमान्तरपरामर्शश्रुतिदर्शनादित्याद्याहुः ।

तत्तु जाबालश्रुतिचोदितत्वादेवाश्रमान्तराणां तद्विहायैवं व्याख्यानं न समञ्जसमिति प्रागेव दत्तोत्तरमित्यवधेयम् ॥ १९ ॥

रश्मिः ।

तथा ज्ञानस्य कर्मभर्जकस्य न कर्माङ्गतेत्यर्थः । 'ज्ञानभर्जितकर्माणम्' । प्रकृते विद्वद्वाक्येति । विद्वद्वाक्योक्तकर्मज्ञानशून्यनिन्दायाः, अपिना कर्मनिन्दायाः । स्वोक्तमिति । कर्मनिन्दनं विभजन्ते विशेषेण भजन्ते स्मरन्ति स्वेत्यर्थः । ज्ञानस्येत्याद्वीति । प्रौढ्येति । गौरवेण ज्ञानकाण्डत्वान्निरूपितम् । वस्तुतस्तु परस्परं ज्ञानकर्मणोरङ्गाङ्गिभावो वर्तते एव, 'तमेत'मिति 'यदेव विद्यये'ति श्रुतिभ्याम् । इत्याद्वीति । आदिना यथा शाखान्तरप्राप्तयोरेव निवीतप्राचीनावीतयोः परामर्श उपवीतविधिपरे वाक्ये तस्मात् तुल्यमनुष्ठेयत्वं गार्हस्थ्येनाश्रमान्तरस्येति भाष्यम् । तत्त्वित्यादि । तत्तु न समञ्जसमित्यन्वयः । किं तदित्यत आहुः आश्रमान्तराणामिति । ब्रह्मचर्यवानप्रस्थगृहस्थतुरीयाश्रमाणाम् । द्वयोराश्रमयोरन्येषाम् । द्वयप्रतियोगिको भेदः । तद्विहायानुष्ठेयत्वं विहाय । एवं गृहस्थतुरीयाश्रमपरव्याख्यानम् । एवं व्याख्यानं कस्मादसमञ्जसमित्यत आहुः जाबालचोदितत्वादेवेति । आश्रमाणां व्याख्यानस्येति बोध्यम् । ननु परामर्शसूत्रे'ऽत्रान्य' इति प्रक्रम्य 'ब्रह्मचर्यादेव प्रव्रजे'दिति जाबालश्रुतिमनपेक्ष्यायं विचार इत्याहुरित्युक्तेः कुतस्तदपेक्ष्यासामञ्जस्यदानमिति चेत्, तत्राहुः प्रागेवेत्यादि । परामर्शसूत्र एवासामञ्जस्यदानं दत्तोत्तरम् । तत्र 'जाबालश्रुत्यनपेक्षायां बीजं नोपलभ्यत' इत्यादिनेत्यवधेयम् ॥ १९ ॥

एवं सति पूर्वकाण्डवैयर्थ्यमापततीति तत्तात्पर्यमाह ।

विधिर्वा धारणवत् ॥ २० ॥

यथा योगशास्त्रे मनःसमाधेरेव साध्यत्वात् तत्साधनत्वेनैव मानस्याः मूर्तेर्धारणं विधीयते, न तु स्वतन्त्रतया फलसाधकत्वेन, मनःसमाधौ तत्त्यागात्, 'ततः किञ्चन न स्मरेत्', 'तत्रापि चित्तबडिशं शनकैर्वियुङ्क्ते' इत्यादिवाक्येभ्यस्तथा, तथा भक्तिसाधनत्वेनैवानुष्ठेयमिति तात्पर्येण कर्मविधिरुच्यते, न तु स्वतन्त्रतया फलसाधकत्वेन । ननु तत्र समाधिमधिकृत्य यमादीन्युक्तानीति तन्मध्यपातित्वेन धारणस्य तथात्वमुच्यते, प्रकृते ज्ञानं भक्तिं वाधिकृत्य न कर्म विहितमिति दृष्टान्तवैषम्यमिति चेत् । न। उक्तानुपपत्त्या त्वानिन्द्यमेव कर्म श्रुतिर्विदधातीत्यवश्यं वाच्यम् । निन्दायां चेतरपदाज्ज्ञानमध्यपातिन एव तद्विषयस्य प्राप्तेरावश्यकत्वात् । तथा च भगवज्ज्ञानस्येतरनिरपेक्षत्वेन स्वरूपो-

भाष्यप्रकाशः ।

विधिर्वा धारणवत् ॥ २० ॥ सूत्रमवतारयन्ति एवं सतीत्यादि । एवं सतीति । उक्तश्रुतिवेत्तुः कर्माकरणे प्राप्ते सति । व्याकुर्वन्ति यथेत्यादि । अत्र 'ततः किञ्चने'ति वाक्यमेकादशस्कन्धीयम् । द्वितीयं तृतीयस्कन्धीयम् । तथेति । त्याज्यत्वम् । तथा भक्तीत्यत्र भक्तिपदं ज्ञानस्याप्युपलक्षकम् । अत्र दृष्टान्तबलेन कर्मणोऽस्वातन्त्र्यसाधनमसहमानो दृष्टान्तवैषम्यमाशङ्कते नन्वित्यादि । वैषम्यं समादधते नेत्यादि । 'एष नित्य' इति श्रुतौ ज्ञानिनि कर्मणां फलाजनकत्वकथनात्तेषां कर्मण्यप्रवृत्त्या ज्ञाने कर्माङ्गतायामप्युक्तदोषतौल्येन उक्तश्रुतौ ब्रह्मज्ञानशून्यानां दुःखप्राप्तिकथनेन चान्येषामपि प्रवृत्त्यसम्भवे पूर्वकाण्डवैयर्थ्यप्रसक्तिरूपयानुपपत्त्या त्वानिन्द्यमेव कर्म पूर्वकाण्डीयश्रुतिर्विदधातीत्यवश्यं वाच्यम् । 'अथेतर' इत्यविद्वन्निन्दावाक्य 'इतर'पदात् ज्ञानशून्येषु निन्दितेषु ज्ञानवान् वा तद्योग्यो वा ज्ञानमार्गमध्यपात्येव कर्माधिकारी वाच्यः । तत्र जातज्ञानस्यापि 'न कर्मणे'त्युक्तश्रुत्या निवृत्तौ तद्योग्यस्यैव विषयत्वेन प्राप्तेरावश्यकत्वात् । तथा च काम्यानां कर्मणां मूढविश्वासजनकतया परम्परातः सार्थक्यम् । नित्यानां त्वात्मसुखफलकानां विद्यासाहाय्यमन्तरेण तादृशफलोपधायकत्वस्यादृष्टत्वाज्जनकादिष्वपि विद्यासाहाय्यस्यैव दर्शनात् केवलभगवज्ज्ञानस्य च शुकारुणिभरतादिषु फलोपधायकत्वदर्शनात्तस्येतर-

रश्मिः ।

विधिर्वा धारणवत् ॥२०॥ श्रुतीति । 'असुर्या नाम ते लोका' इति श्रुतिवेत्तुः, भाष्ये तत्तात्पर्यमिति । एकादशसप्तदशाध्याये युधिष्ठिरवाक्यम् । 'यथानुष्ठीयमानेन त्वयि भक्तिर्नृणां भवे'दित्यादिवाक्यैस्तत्तात्पर्यं सर्वोत्तममार्गविषयमाह । प्रकृते । तृतीयेति । वृद्धत्वाभावाच्छप्रत्ययो मृग्यः। भाष्यं विवरीतुमाहुः एष नित्य इति । उक्तदोषेति। कर्मण्यप्रवृत्त्याख्यदोषतौल्येन । उक्तेति । 'ये तद्विदु'रिति श्रुतौ । अत्रान्येषामिति । कर्मकाण्डे कर्मठानां ज्ञानिभिन्नानामपि । विवृण्वन्ति स्म पूर्वकाण्डेति। विदधातीति। वाक्यं विदधाति । तेन 'ब्राह्मणो न हन्तव्य' इत्यत्र 'हन्तव्य' इति मात्रे निन्द्यविधानेपि न दोषः । वाक्यं त्वनिन्द्यकर्म विदधात्येव । निन्दायामिति भाष्यं विवृण्वन्ति स्म । तद्विषयस्येति भाष्यस्य 'ज्ञानाधिकारिणः' इत्यर्थात् तत्र निकल्पेपि ज्ञानयोग्यस्येत्याहुः तत्र जातेति। तथा चेति भाष्यं विवृण्वन्ति स्म, तथा चेति । जनकादिष्विति । आदिना ज्ञानिनः कर्मसिद्धाः श्रीभागवतप्रसिद्धाः यथा आविर्होत्रः । शुकेति । आरुणिरारण्युपनिषदि । तस्येति ।

पकारित्वमस्य कर्मणो वाच्यम् । तथा चोक्तं दानव्रततपोहोमजपस्वाध्याय-संयमैः । श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते' इति । 'एष नित्यो महिमे'ति श्रुतिरपि यज्ज्ञाने सति विहितनिषिद्धकर्मफलासम्बन्धः 'तद्वित् स्या'दित्यनुक्त्वा 'तस्यैव पदवित् स्या'दिति यदुक्तवती, तेन पदयोर्भक्तिमार्गरूपत्वात् तत्र च पदयोरेव सेव्यत्वेन मुख्यत्वात्तज्ज्ञानानुकूलप्रयत्नमेव पूर्वं विदधे । तेन 'शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः स्मरन्ति नन्दन्ति तवेहितं जनाः । त एव पश्यन्त्यचिरेण तावकं भवप्रवाहोपरमं पदाम्बुज'मिति वाक्याच्च वर्णाश्रमधर्मा आत्मधर्माश्च पदज्ञानसाधनत्वेन कर्तव्या इति सिद्धम् । 'तस्यैव'

भाष्यप्रकाशः ।

निरपेक्षकत्वेन नित्यकर्मविधिवैयर्थ्यपरिहाराय 'तमेतं वेदानुवचनेने'त्यादितृतीयाश्रुत्या ज्ञानभक्ती प्रति स्वरूपोपकारित्वं नित्यस्य कर्मणो वाच्यमिति तात्पर्येण नित्यविधीनां तदुपयोगित्वेन काम्यविधीनां च सामञ्जस्यान्न पूर्वकाण्डवैयर्थ्यमित्यर्थः । ननु भवत्वेवं कर्मणां ज्ञानाङ्गत्वम्, तथापि भक्त्यङ्गत्वे किं मानम्? अत आहुः तथा चोक्तमित्यादि । ननु तथापि ह्यन्तरितत्वात् भक्त्यङ्गत्वापेक्षया ज्ञानाङ्गत्वमेव साधीय इति शङ्कायां भक्त्यङ्गत्वस्य श्रौतत्वं विशदयन्ति एष इत्यादि । सिद्धमाहुः तेनेत्यादि । उक्तेन स्वल्पोपपादनेनापरितुष्यन्तो विशेषतः श्रुत्यर्थं वदन्ति तस्यैवेत्यादि । सर्वत्रेति । पदविच्छब्देपि । पूर्वमिति । पूर्वार्धे । तथा च पूर्वोक्तं युक्तमित्यर्थः । वस्तुतस्तु, तेनेत्यादिसिद्धार्थकथनात् पूर्वस्तस्यैवेत्यादिग्रन्थो लेखकभ्रमात् पश्चात् पतित इति प्रतिभाति ।

रश्मिः ।

शुकादिज्ञानस्य । ज्ञानभक्ती इति । विविदिषन्तीत्यत्र विद् ज्ञाने, सन्निच्छायाम्, 'इच्छा प्रेमे'ति विश्वनाथमतं गौणं, 'नैवेच्छा तु साधारण्या'दिति शाण्डिल्यर्षिणा निषेधात्, अतश्चित्तशुद्धिद्वारा ज्ञानभक्ती प्रतीत्यर्थः । तदुपेति । ज्ञानोपयोगित्वेन । काम्यविधीनां च परम्परया ज्ञानोपयोगित्वेन । किमिति । ज्ञाने ज्ञानकाण्डोक्तवाक्यशक्तिः भक्तिकाण्डाभावात् किमिति प्रश्नः । तथा चोक्तमित्यादीति । 'विविध'पदेनान्यविशेषणेनापि 'ज्ञानी चेद्भजते कृष्ण'मिति वाक्येन कर्मणो ज्ञानभक्तिह्यन्तरितत्वात् । एष इत्यादीति । तस्यैवेत्यादि । यज्ज्ञाने सति विहितनिषिद्धकर्मफलासम्बन्धः । तस्यैव । पुष्टिस्थस्यैव । भक्तीति । 'भवत्पदाम्भोरुहनाव'मित्यत्र सुबोधिन्यामस्ति । तत्र चेति । प्रत्येकभक्तिमार्गे च । पदयोरिति । पादसेवनभक्तिरुक्ता ताभ्यामेव मुक्तिरिति । तज्ज्ञानेति । पदे वेत्तीति पदवित् । कर्तरि क्विप् । पदनिष्ठज्ञानानुकूलप्रयत्नवान् स्यादिति लिङा विदधे । उक्तप्रयत्नवत्त्वं प्रयत्न एव तम् । तद्दानानुकूलप्रयत्नमेवेति पाठे पादसेवनभक्तेर्जीवस्य पद्भ्यां सेवनमित्यपि तृतीयसुबोधिन्यामस्ति । तदा तेन पदयोरित्यादिभाष्यं न सम्भवति । अतस्तद्दानेति । विरहे पदयोर्दानं पञ्चाध्याय्यां स्पष्टम् । 'भगवान् भजतां मुकुन्दो मुक्तिं ददाति कर्हिचित् स्म न भक्तियोग'मिति दुर्लभाधिकारीयं पादसेवनमुक्तम् । तदा पदवित् पददानानुकूलप्रयत्नवान् । तर्हि धात्वर्थज्ञानमेतद् दानम् । ज्ञानसमवायिकत्वात् । छान्दोग्ये नारदसनत्कुमारसंवादे 'आत्मतः स्मरः' 'आत्मतो विज्ञान'मिति श्रुतिभ्याम् । अन्यत् पूर्ववत् । तेनेत्यादीति । वर्णाश्रमेति । तेन वर्णाश्रमधर्मवत्सु आत्मधर्मवत्सु ये 'शृण्वन्ती'त्यादिकर्तारः त एव पश्यन्तीत्यन्वयः । आत्मधर्मा भगवदैश्वर्यादिमन्तः । कर्तव्या इति । 'दानव्रततपोहोमे'ति वाक्यात् कर्तव्याः । वदन्तीति ।

तच्छब्दस्य प्रसिद्धार्थकत्वाल्लोकवेदप्रसिद्धस्य पुरुषोत्तमस्यैव, तत्रापि, 'पदवि'देव, दीनभावेन भक्तिमार्गीयज्ञानवानेव, स्यादेवेत्येवकारः सर्वत्रानुषज्यते। तथा सति भक्तौ जातायां स्वत एव भगवज्ज्ञानं भवतीति ज्ञापयितुं 'तं विदित्वे'ति पश्चादुक्तवतीति तदाशयो ज्ञायते। अत एव पूर्वं कर्म निरूपितम्। साधनत्वात्।

स्यादेतत्। भक्तिसाधनत्वमेव चेत् कर्मणः श्रुतेरभिप्रेतम्, तदा भगवद्विदि तत्फलासम्बन्ध इत्यनुपपन्नमिति चेत्। मैवम्। कर्मणां हि भक्त्युत्पत्तौ स्वरूपयोग्यतासम्पादकत्वमेव। 'नायमात्मे'ति श्रुतेः कर्मज्ञानाभ्यामलभ्यत्वाद्भगवतः स्वरूपयोग्यतापेक्षापि मार्यादिकस्य, न तु पौष्टिकस्य, अत एव वाशब्द उक्तोऽनियमवाची। तथा सति भगवदनुग्रहश्चेत्, तदा भक्तिः, तया पुरुषोत्तमज्ञानम्, तदा कर्मतत्फलसम्बन्धगन्धोऽपि नेति किमनुपपन्नम्। एतेन, 'तमेव विदित्वा मुनिर्भवति' 'अग्राह्यो न हि गृह्यते' इत्यादिश्रुतीनां मिथो विरोधः परिहृतः,

भाष्यप्रकाशः।

अत्र पुनश्चोदयति स्यादित्यादि। अनुपपन्नमिति। साक्षाद्वैदिककर्मणः फलावश्यम्भावनियमेन ततो भक्त्युत्पत्तिसम्भवादनुपपन्नमित्यर्थः। तत् समादधते मैवमित्यादि। उक्त इति। ज्ञानस्य कर्मसापेक्षत्वात् पूर्वकाण्डे नित्यविधिर्ज्ञानमार्गीयस्येति कर्मणस्तदङ्गत्वबोधनाय सूत्रे उक्त इत्यर्थः। उक्तार्थोपष्टम्भार्थमेवंतात्पर्याङ्गीकारे गुणान्तरमाहुः एतेनेत्यादि। अत

रश्मिः।

प्रेमविवशा वदन्ति। भ्रमरगीतटिप्पण्यां विरहे प्रेम प्रसिद्धम्। निरोधलक्षणे च 'अहं निरुद्धो रोधेन निरोधपदवीं गत' इति। दीनेति। अहङ्कारविरुद्धं पादसेवनानुकूलं दैन्यं, तेन। भावपदेन भक्त्यन्तःपातिना। भक्तिमार्गीयेति। भक्तिमार्गीयपदज्ञानवान्। पदविच्छब्द इति। श्रुतिप्रामाण्यादिति भावः। भाष्ये। तथा सतीत्यादि। मुक्तिसाधनपादसेवने सति। तज्जन्यप्रेमभक्तौ। स्वत इति। आत्मीयभक्तेः प्रेम्णः। भगवज्ज्ञानं फलात्मकं 'भक्त्या मामभिजानाती'ति वाक्योक्तम्। 'तं विदित्वे'ति। शारीरब्राह्मणे 'एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयान्। तस्यैव स्यात् पदवित् तं विदित्वा न कर्मणा लिप्यते पापकेने'ति। अग्रे 'तस्मादेवंविच्छान्तो दान्तः' इति श्रुतिः। तदिति। फलात्मकं ज्ञानम्। तदाशयः श्रुत्याशयः। प्रकृते। पूर्वार्धं इति। 'एष नित्यो महिमे'त्यस्मिन्। पूर्वोक्तमिति। पादसेवनप्रपञ्चनमै। प्रतिभातीति। प्रेम्णा वैवश्यदशायां पश्चादपि सम्भवात् प्रतिभातीत्युक्तम्। मैवमित्यादीति। स्वरूपेति। शुद्धचित्तस्य भक्तिरिति चित्तशुद्धिसम्पादकत्वम्। स्वरूपस्य भक्तिस्वरूपस्य चित्तशुद्धिर्योग्यता स्वरूपयोग्यता, तत्सम्पादकत्वम्। श्रीभागवतवाक्यादेवकारः। भाष्ये। कर्मतत्फलेति। कर्म चित्तशुद्धिसम्पादकं तत्फलं चित्तशुद्धिः। ननु कुतो न चित्तशुद्धिसम्बन्धो मानसीनत्वादिति चेत्। न। मर्यादाभक्तस्य यदानुग्रहेण पुष्टिभक्तिः तदा पुरुषोत्तमज्ञानमिति पुष्टौ पापाभावस्यैव चित्तशुद्धेरप्रयोजकत्वात्। ननु 'स मानसीन आत्मा जनाना'मिति श्रुतेः 'शुद्ध एव रमत' इत्याचार्योक्तेश्च कथं चित्तशुद्धिरूपकर्मफलसम्बन्धाभाव इति चेत्। न। 'जगद्व्यापारवर्ज'मित्यधिकरणे जगद्व्यापाराहित्यात्तत्र। 'प्रवर्तते यत्र रजस्तमस्तयोः सत्त्वं च मिश्रं न च कालविक्रम' इत्यत्र मिश्रसत्त्वनिषेधात्। विशुद्धसत्त्वाभावश्चित्त इति। कालविक्रमरहितसत्त्वत्वं विशुद्धसत्त्वत्वम्। उक्तार्थोपेति। उक्तार्थः कर्मणो ज्ञानाङ्गत्वबोधनं स्यादेतदिति ग्रन्थात् पूर्वग्रन्थोक्तः तदुपष्टम्भार्थं स्यादेतदित्यादिना ग्रन्थेन, एवं पुष्टिमार्गीयत्वेन कर्मविधेस्तात्पर्यम्, अभिधेयं तु

भक्त्या प्राप्यत्वात् तदितरसाधनाप्राप्यत्वात् । अत एव 'विविदिषन्ति', न तु विदन्त्यपीत्याशयवती 'तमेतं वेदानुवचनेने'ति श्रुतिः पठ्यते ।

न चानुपदमेव, 'तमेव विदित्वा मुनिर्भवती'त्युक्तेः साविध्यादुक्तसाधनैरेव वेदनमभिप्रेतमिति वाच्यम् । वेदानुवचनादीनां सर्वेषां वेदनसाधनत्वे सर्वेषां तत्कर्तॄणां वेदनसम्भवेन 'मुनिर्भवती'त्येकत्वं तच्छ्रुति न वदेत्, अतो ज्ञानं कस्यचिदेकस्य भवतीति ज्ञानस्य दुर्लभत्वं ज्ञाप्यते । 'मनुष्याणां सहस्रेषु कश्चिद् यतति सिद्धये । यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वत' इति भगवद्वाक्याच्च । तर्हि वेदानुवचनादिषु निःशङ्का प्रवृत्तिः कथम्? इत्थम् । 'स वा अय-

भाष्यप्रकाशः ।

एवेति । साधनबलेनाप्राप्यत्वादेव । इत्याशयवतीति । यद्यपि 'रथेन जिगमिषती'त्यादाविच्छामात्रस्यापुरुषार्थत्वात् फलपर्यन्तत्वमिष्यत इति प्रकृतेप्येवं वक्तुं शक्यम्, तथापि लोके फलपर्यन्ततायाः प्रायो दर्शनेन प्रतिबन्धाभावे तथा कल्पयितुं शक्यम् । प्रकृते तु 'नायमात्मे'ति श्रुत्या वरणाभावे ज्ञानाभावस्य निश्चितत्वात् केवलेन वेदानुवचनादिना ज्ञानरूपं फलं न वक्तुं शक्यते । अतं इच्छायास्तदर्थकयत्नकारणत्वेनेच्छाकारणानां यज्ञादीनां ज्ञानं प्रति स्वरूपयोग्यतासम्पादकत्वमेवेत्याशयवतीत्यर्थः । अग्रिमवाक्यविरोधमाशङ्क्य परिहरन्ति न चानुपदेत्यादि । उक्तसाधनैरिति । वेदानुवचनादिभिः । तथा च 'मुनि'रित्येकवचनश्रुत्यानेनापि तदुपोद्बलनमेव क्रियत इति न तद्विरोध इत्यर्थः । ज्ञानं कस्यचिदेवेति यदुक्तम्, तत्राशङ्कते तर्हीत्यादि । नित्यकर्मणां वेदानुवचनादीनां ज्ञान उत्कटेच्छाजननेन वा सत्त्वशोधनेन वा स्वरूपयोग्य-

रश्मिः ।

कर्मैव, तस्याङ्गीकारे सर्वोत्तममार्गे गुणान्तरं विरुद्धधर्माश्रयत्वेन साधितेपि श्रुत्यविरोधेऽर्थान्तररूपं गुणान्तरम् । एतेनेत्यादीति । श्रुतीनामिति । शारीरब्राह्मणस्थानाम् । साधनेति । भक्तीतरसाधनबलेन । प्रकृते इति । 'वेदानुवचनेन विविदिषन्ती'त्यत्र । फलेति । फलमुत्तरदेशसंयोगो ग्रामसंयोगश्च । प्रायो दर्शनमिच्छायास्तेन । प्रतिबन्धेति । निम्नोन्नभूमिकृतप्रतिबन्धः कार्यविघटनम्, तदभावे । तथेति । फलपर्यन्तं कल्पयितुं शक्यम् । जानातीच्छति यतत इति क्रमेणाहुः तदर्थकेति । यज्ञादीनामिति । ज्ञानजनकत्वात् पञ्चरात्रशास्त्राच्च ज्ञानरूपाणाम् । ज्ञानं प्रतीति । भक्तिं प्रति । गीतायां भक्तौ शक्तिर्ज्ञानशब्दस्य । स्वरूपेति । चित्तशुद्धिद्वारा । स्वरूपं भक्तेः । योग्यता चित्तशुद्धिरित्युक्तमेव । तस्याः सम्पादकत्वम् । यद्वा । इच्छाकारणानामित्यादेर्ग्रन्थस्यायमर्थः । 'तमेत'मितिश्रुतौ भक्त्यप्रतीतेः । इत्थं च इच्छा कारणं येषां यत्नरूपाणां यज्ञादीनाम् । न तु विदन्त्यपीतिमाष्यात् ज्ञानं प्रति स्वरूपेत्यादिः । स्वरूपं ज्ञानस्वरूपम् । योग्यता चित्तशुद्धिः । तस्याः सम्पादकत्वम् । अग्रिमेत्यादि । अयमनुपदम् । पदं विविदिषन्तीति । न तु विदन्त्यपीत्यनेन विरोधः 'तमेव विदित्वे'त्यस्य । तं विरोधं परिहरन्ति न चानुपदेत्यादीति । पदं विविदिषन्तीति तल्लक्षीकृत्येत्यनुपदम् । भागे वा । उक्तपदं अग्रिमवाक्यभाग इत्यर्थः । एवेति । एवकारोऽन्ययोगव्यवच्छेदकः । कस्यचिदिति । शुद्धचित्तस्य । मुनिरित्येकेति । कश्चिदेवेत्यत्र हेतुः । तदुपोद्बलनमिति । न तु विदन्त्यपीत्यस्योपोद्बलनम् । तर्हीति । एकदेशविकृतन्यायात् न तु विदन्त्यपीत्यनेन तमेव विदित्वेत्यस्य विरोध इत्यर्थः । वेदानुवचनादीनामिति । वेदानुवचनमपि याग इति सामानाधिकरण्यम् । ज्ञान इति । चित्तस्य शुद्धत्वादिति भावः । अन्यथा कर्मविषयकज्ञाना-

मात्मे'त्यादिकया पूर्वश्रुत्या भगवन्माहात्म्यं श्रुत्वा यथाकथञ्चित् तद्वेदनौत्सुक्ये सति सत्सङ्गाभावेन भक्तिमार्गापरिचयात् कर्ममार्गमाश्रमाश्रमधर्मत्वेनालौकिकार्थसाधकत्वेनापि पूर्वं ज्ञातमस्तीति तदेव भगवद्वेदनेपि साधनमिति मन्यमानास्तदेव कुर्वन्ति । ननु वैदिकसाधनानां वैयर्थ्यं कथमिति चेत् । न । भ्रमकृतत्वेऽपि जन्मान्तरीयाक्षरज्ञानोपयोगिसंस्काराधायकत्वेनावैयर्थ्यात् ॥ २० ॥

भाष्यप्रकाशः ।

तासम्पादन एव पर्यवसानम्, तदा ज्ञानमूलकारणस्य वरणस्य स्वविषयतानिश्चयस्याभावेन वेदानुवचनादिषु निःशङ्का प्रवृत्तिर्या दृश्यते, सा कथमित्यर्थः । तत्परिहाराय प्रवृत्तिमुपपादयन्ति इत्थमित्यादि । 'स वा अयमात्मा सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किञ्च । स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयानेष भूताधिपतिरेष लोकेश्वर एष लोकपालः स सेतुर्विधरण एषां लोकानामसम्भेदाये'ति माहात्म्यश्रवणेन वेदनौत्सुक्ये सति तेन तेषु तत्साधनत्वभ्रमात् प्रवृत्तिरित्यर्थः । ननु भ्रमात् करणे पापभ्रमेण कृतस्य प्रायश्चित्तस्येव तेषां वैयर्थ्यं स्यादित्याशयेनाशङ्कते नन्वित्यादि । तत्र समादधते नेत्यादि । तथा च तत्र कर्मफलनिषेधस्य 'नान्तरिक्षे न दिवी'त्यादिवन्नित्यानुवादरूपत्वादेते पदज्ञानसाधनत्वेन कर्तव्या इति विदित्वा ते कुर्वन्ति । तत्र भक्तिमार्गात्मकपदज्ञानाभावेप्यक्षरात्मकपदज्ञानस्य जन्मान्तरे भवनार्थं मनसि तत्संस्कारमाश्रमधर्मा आदधत इति पूर्वोक्तमक्षुण्णमित्यर्थः । न च पापभ्रमप्रायश्चित्तस्येवास्य वैयर्थ्येपि दोषाभावात् सार्थकत्वसाधनमप्रयोजकमिति शङ्क्यम् । 'न हि कल्याणकृत् कश्चि'दिति न्यायेन पापभ्रमप्रायश्चित्तस्यापि जन्मान्तरे तादृशपापविषयकमनःप्रवृत्त्यभावस्य फलत्वेन वक्तुं शक्यतया किञ्चिदंशेन तत्रापि सार्थक्यस्यैव युक्तत्वात् । तेन पूर्वोत्तरकाण्डयोरैकशास्त्र्यानुरोधादेवं श्रुतितात्पर्यनिश्चयेनैकवाक्यतायां पूर्वस्योत्तरशेषत्वमिति सिद्धम् ॥२०॥

रश्मिः ।

दीनां कर्मविषयिणीच्छेति कर्मविषयिण्युत्कटेच्छा स्यात् तज्जननेन । स्वरूपेति । व्याख्यातम् । ज्ञानमूलेति । ज्ञानकरणं कर्म चित्तशुद्धिद्वारा । मूलकारणं वरणं यथा कर्मणि यथा भक्तौ तथा ज्ञानेपि कल्प्यं तस्य कृतस्य । स्वेति । अयं ज्ञानमार्गीयं वरणं प्राप्य ज्ञानेन मां प्राप्नोत्विति वरणस्य स्वविषयतानिश्चयः । तस्याभावेन । अवान्तरप्रवर्तकाभावेन । निःशङ्केति । कस्यचिदेव ज्ञानमिति शङ्काकारणसत्त्वात् । तेनेति । औत्सुक्येन । तेषु । वेदानुवचनादिषु । तत्साधनत्वेति । ज्ञानसाधनत्वभ्रमात् । तेषामिति । वैदिकसाधनानाम् । वैयर्थ्यं कथं स्यादित्यर्थः । तत्रेति । भ्रमात्करणे । कर्मेति । अप्राप्तप्रतियोगिकस्य । नान्तरिक्ष इति । अग्निश्चेतव्य इति सम्बन्धः । नित्येति । प्रत्यक्षसिद्धार्थानुवादाद्यथा 'अग्निर्हिमस्य भेषज'मिति । एत इति । आश्रमधर्माः । 'तस्यैव पदवित् स्या'दिति श्रुत्युक्तपदज्ञानसाधनत्वेन । पूर्वोक्तमिति । वैदिकसाधनानां वैयर्थ्यं भ्रमकृतानां संस्कारफलानामक्षुण्णम् । ऐकशास्त्र्येति । 'संहतमेतच्छास्त्रं जैमिनीयेन षोडशलक्षणेने'तिवृत्त्या तथा । सर्वोत्तममार्गे तु 'तमेत'मिति श्रुत्यैकवाक्यता वृत्तेरानुगुण्याद् भक्तिपर्यन्तम् । वेदानुवचनेनापि दैविकशुद्ध्या भक्तिरिति । 'यथानुष्ठीयमानेन त्वयि भक्तिर्यथा भवे'दिति युधिष्ठिरवाक्यात् । न तु विदन्त्यपीति भाष्यमनुग्रहरहितकर्तृपरम् । एवमिति । उक्तप्रकारेण । श्रुतीनां पूर्वोत्तरकाण्डस्थानां तात्पर्यनिश्चयेन ॥ २० ॥

## स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥

ननु साम्यश्रुतेर्हेतोः कर्मशेषत्वं ज्ञानस्य यदपास्तम्, तन्नोपपद्यते। साम्योक्तेर्ज्ञानस्तुतिरूपत्वात्। अपि च। तथा ज्ञानिनोपि कर्मोपादानात् कर्मकृतिस्वीकारादिति यावत्। अन्यथा ज्ञानिनां कर्मकृत्यभावेन तत्कृतगुणदोषाप्रसक्त्या तन्निषेधानुपपत्तिः स्यात्। तेषामपि तत्कृतगुणदोषसम्बन्धोऽस्त्येवेति ज्ञापनाय मात्रपदम्। निषेधेनेतरसाधारण्यं परिह्रियते। तथा च ज्ञानिनोपि कर्मकरणात् कर्मशेषत्वं ज्ञानस्य निष्प्रत्यूहमिति चेत्, नैवं वक्तुं युक्तम्। पदज्ञानस्य कर्मफलासम्बन्धफलकत्वस्यापूर्वत्वाद्विधेयत्वमेव। न हि यस्य कर्मणो ज्ञानस्य वा यत्फलं तदुक्तिरपि स्तुतिरेवेति युक्तम्। तयोरुच्छेदापत्तेः। विधिर्हि प्रवर्तकः। तस्य

भाष्यप्रकाशः।

स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥ अत्रैव किञ्चिदाशङ्क्य परिहरतीत्याशयेन सूत्रं विवृण्वन्तः पूर्वपक्षभागं व्याकुर्वन्ति नन्वित्यादि। ननु यदि साम्यश्रुत्या कर्मोपादानमापाद्यते, तदा निषेधश्रवणं बाधितमेव स्यादित्यत आह निषेधेनेत्यादि। इतरसाधारण्यमिति। अज्ञानिनां यथा कर्मजगुणदोषः, तथा ज्ञानिनो नेति तथेत्यर्थः। कर्मशेषत्वमिति। सन्न्यासाश्रमीणकर्मशेषत्वम्। परिहारभागं व्याकुर्वन्ति नैवमित्यादि। अपूर्वत्वाद्विधेयत्वमिति। यथा 'प्रतितिष्ठन्ति ह वै य एता रात्रीरुपयन्ती'त्यत्र रात्रिसत्रीयप्रतिष्ठाफलकत्वस्यापूर्वत्वाद् विधेयत्वमेव, न तु स्तुतिमात्रत्वं तथेत्यर्थः। तदेतदुपपादयन्ति न हीत्यादि। यस्येति पदं 'यत् फल'मित्यनेन सम्बध्यते। हिर्हेतौ। विधिर्हीत्यत्रापि तथा। एवमिति।

रश्मिः।

स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥ परिहरतीति। सूत्रकारः। नन्वित्यादीति। यदपास्तमिति। 'असुर्या नामे'ति श्रुत्या कर्मनिन्दाया वितण्डयापास्तम्। स्तुतीति। असदुत्कर्षाधायकगुणवर्णनरूपत्वात्। यथा 'सौधाग्राणि स्पृशन्ति विधुमण्डल'मिति सौधस्तुतिः। मात्रच्प्रत्ययान्तस्याव्ययत्वेन पञ्चम्यन्तत्वम्। सौत्रो वा लुक् पञ्चम्याः। स्तुत्योपादानादिति स्तुतिपदानुवृत्त्या हेत्वन्तरमन्यच्चेत्यर्थोपि चेत्यस्य। तयेति[1]। स्तुत्या। आप्तस्य ज्ञानिनोपि। तन्निषेधेति। कामकारसूत्रोक्तायां 'एष नित्यो महिमा ब्राह्मणस्ये'ति श्रुतौ कर्मकृत्यभावकृतगुणदोषनिषेधानुपपत्तिः। तेषामित्यादि। ज्ञानिनामपि कर्मकृत्यभावकृतगुणदोषसम्बन्धः। मात्रपदमिति। स्तुतिरेव स्तुतिमात्रमित्यवधारणार्थकमात्रपदम्। स्तुतज्ञानमात्रस्थितौ कर्मकृत्यभावकृतगुणदोषसम्बन्ध इति भावः। आपाद्यत इति। साम्यश्रुतेः स्तुतिमात्रपरायाः ज्ञानस्य क्रमसाम्यं स्यात्, तदा ज्ञानिनां कर्मोपादानं न स्यात्, वर्तते तु विपरीतम्, अतो ज्ञानिनां कर्मोपादानापत्तिः एवमापाद्यते। बाधितमिति। 'मम माता वन्ध्ये'तिवन्निर्विषयं स्यात्। ज्ञानिनो नेति। तेनेतरैरज्ञानिभिः साधारण्यं परिह्रियत इति भाष्यार्थः। अयमेव तथेत्यस्यार्थः। सन्न्यासाश्रमीणेति। सन्न्यासाश्रमे कर्माणि सप्तागारभिक्षुचर्यादि तच्छेषत्वं कर्मज्ञाने। 'ज्ञात्वा कर्म कुर्या'दिति। तथेत्यर्थ इति। 'तस्यैव पदवित् स्यात्' इत्यत्र पदज्ञानस्य 'एष नित्यो महिमा ब्राह्मणस्ये' तिश्रुत्युक्तो यः गुणदोषफलासम्बन्धः तत्फलकत्वस्य। 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुत' इति। 'स्यादि'ति विधिस्तद्विषयत्वं विधेयत्वं तथेत्यस्यार्थः। पदज्ञानवानेवेति भाष्य एवकारेण ज्ञानप्रतिबन्धकगुणदोषफलसम्बन्धव्यवच्छेदः क्रियत

1. तयेतिरश्मिपाठः।

पुरुषप्रवृत्त्युपयोग्यर्थकथनेनैव चारितार्थ्यादन्यार्थकथनस्य स्तुतित्वमस्तु नाम । न ह्येवं प्रकृते । मुमुक्षोः कर्मबन्धाभावप्रेप्सोस्तत्साधनत्वज्ञान एव प्रवृत्तिसम्भवात् । यच्च कर्मफलसम्बन्धनिषेधानुपपत्त्या कर्मसम्बन्ध इत्युक्तम्, तन्न साधीयः । न हि तरणौ तमःकार्याभाव इत्युक्ते तत्प्राप्तिरपि सम्भवति । अथवा । पुरुषोत्तमज्ञानमुख्यफलस्यातिमहत्त्वेन साक्षाद्वक्तुमशक्यत्वं ज्ञापयन्ती कैमुतिकन्यायेन परम्परया तदाहनयर्चा 'तं विदित्वा ब्राह्मणो भवती'ति श्रुतेर्ब्राह्मणपदेन ब्रह्मविदुच्यते । तथा चाद्यपदेन बुद्धिस्थब्राह्मणमाहात्म्योद्देशे कृते, स क इत्याकाङ्क्षायामाह, तं ब्राह्मणं विदित्वा विहितनिषिद्धफलासम्बन्धी भवतीतिलक्षण इत्यर्थः । साक्षाद्भगवद्विदः किमु वाच्यमिति भावः । अतस्तस्यैव तच्छब्दस्य पूर्वपरामर्शित्वात् ब्राह्मणस्यैव भगवद्विदो भक्तस्यैव पदवित् स्यात्, तज्ज्ञानानुकूलप्रयत्नवान् स्यात्, तद्भजेतेति यावत् । तथा च यत्र भक्तविद्विषयकज्ञानस्याप्युक्तरीत्या न कर्मशेषत्वं वक्तुं शक्यम्, तत्र भगवज्ज्ञानस्य तथात्वं दूरदूरतरमिति सर्वं सुस्थम् ॥ २१ ॥

भाष्यप्रकाशः

अन्यार्थकथनम् । पूर्वोक्तमाशङ्कान्तरमनूद्य परिहरन्ति यच्चेत्यादि । 'यतो वाचो निवर्तन्त' इत्यत्राकुतोभयस्य भगवज्ज्ञानफलत्वश्रवणात् । ततो न्यूनं कर्मफलसम्बन्धाभावमात्रस्य फलत्वकथनमप्रयोजकमित्यरुच्या 'एष नित्य' इति ऋगुत्तरार्धं प्रकारान्तरेणाहुः अथवेत्यादि । तदाहेति । महत्त्वमाह । तद्विशदयन्ति तमित्यादि । 'तं विदित्वे'ति व्याख्येयप्रतीकम् । श्रुतेरिति । विपापादिपदोत्तरं पठितान्निरपेक्षाच्छब्दात् । आद्यपदेनेति । एष इति पदेन । स क इति । ब्राह्मणः कः । विहितनिषिद्धफलासम्बन्धीति । पापकपदे पापं कं सुखं यस्मादित्यस्याप्यर्थस्य सङ्ग्रहीतुं शक्यत्वात् तथेत्यर्थः । तद्भजेतेति । पदं भजेत । सुस्थमिति । कर्मफलासम्बन्धस्य विधेयत्वेन स्तुतिरूपताया आदतुमशक्यत्वाज्ज्ञानस्य न सन्न्यासाश्रमीणकर्मशेषत्वमिति यदुक्तं तदक्षुण्णमित्यर्थः ।

रश्मिः ।

इति कर्मफलासम्बन्धफलकत्वस्य विधेयत्वम् । पूर्वोक्तमिति । अत्रैव पूर्वोक्तम् । भगवदिति । 'आनन्दं ब्रह्मणो विद्वा'नित्यनेनानन्दात्मकभगवज्ज्ञानफलत्वश्रावणात् । न्यूनेति । न्यूनञ्च तत् कर्मफलसम्बन्धाभावमात्रं तस्य । कर्मफले गुणदोषौ तयोः सम्बन्धस्तस्याभावः स एव तन्मात्रं तस्येति व्याख्यातम् । अथवेत्यादीति । पुरुषोत्तमज्ञानफलं प्रवेशः मुख्यं फलं पदवित्त्वं तस्य । महत्त्वमिति । उपकारस्मृत्या पूज्यत्वम् । अनया ऋचा वेद आह । एष इति पदेनेति । 'एष नित्यो महिमा ब्राह्मणस्ये'ति श्रुतिस्थपदेन । भाष्ये । बुद्धिस्थेति । एष बुद्धौ सन्निहितः इच्छाद्वारा ज्ञानकार्यस्य उद्देशकृतिरूपयत्नस्याग्रे दर्शनात् । नित्यो महिमेति । तथा च बुद्धिस्थं ब्राह्मणस्य महिमरूपमाहात्म्यं तस्योद्देश इत्यर्थः । प्रकृते । पापकेति । 'तस्यैव स्यात् पदवित् तं विदित्वा न कर्मणा लिप्यते पापकेने'त्यत्रपापकपदे । तथेति । विहितनिषिद्धफलासम्बन्धीत्यर्थः । पुष्टिमार्गे पापस्य प्रतिबन्धकत्वमाशङ्क्य श्रुत्योक्तम् । भाष्ये । इतिलक्षण इति । एष इति पूर्वोक्तवि-

१. भगवद्विद्विषयक इति पाठः । २. रश्मौ न्यून कर्मफलेति समस्तं पदम् ।

## पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २२ ॥

अथ प्रकारान्तरेण शङ्कते । 'भृगुर्वै वारुणिर्वरुणं पितरमुपससार' 'अधीहि भगव' 'इति होपससाद सनत्कुमारं नारदः' 'प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं

---

भाष्यप्रकाशः ।

एतदग्रे भावशब्दाच्चेति सूत्रं पठ्यते । तत्र च भावशब्दादित्यस्य विधिशब्दादित्यर्थः । तथा चापूर्वत्वादेव न पदज्ञानस्य विधेयत्वकल्पनम्, किन्तु 'पदवित् स्या'दिति विधिशब्दादपीत्यर्थो वक्तव्यः । 'कुर्यात् क्रियेत कर्तव्यं भवेत् स्यादिति पञ्चमम् । एतत् स्यात् सर्ववेदेषु नियतं विधिलक्षणम्' इति वाचस्पतिलिखितात् न्यायविदां स्मरणात् ।

तच्च 'विधिर्वा धारण'वदित्यत्रैतस्यैव 'स्यात् पदवि'दिति श्रुतिव्याख्यानेनैव व्युत्पादितम्, अतः प्रयोजनाभावादुपेक्षितमिति प्रतिभाति । लेखकदोषात् त्रुटितं वेति ज्ञेयम् ।

अन्ये तु, 'स्तुतिमात्र'मित्यादिद्विसूत्रमधिकरणान्तरमङ्गीकृत्य, 'स एष रसानां रसतमः परमः परार्ध्योऽष्टमोयं उद्गीथ' इत्याद्याः श्रुतयः किमुद्गीथादिस्तुत्यर्थाः, उतोपासनविध्यर्था इति संशये, उद्गीथादिकर्माङ्गान्युपादाय श्रावणात् स्तुत्यर्था इति शङ्कायाम्, अपूर्वत्वाद्विध्यर्थाः 'उद्गीथमुपासीते'ति विधिशब्दाच्च तथेत्याहुः । ततः पारिप्लवादिसूत्रत्रयमप्यधिकरणान्तरत्वेनोक्त्वा, अग्नीन्धनसूत्रं, 'पुरुषार्थोऽतः शब्दा'दित्याद्यधिकरणस्य फलोपसंहारार्थमिति चाहुः ।

तन्नास्माकं रोचते । विद्यायाः स्वतः पुरुषार्थत्वसाधनाय सन्न्यासस्य तदङ्गत्वसाधनाय चाचार्यस्य प्रवृत्तत्वान्मध्ये उद्गीथादिविचारे प्रसङ्गस्यादर्शनादिति दिक् ॥ २१ ॥

पारिप्लवार्था इतिचेन्न विशेषितत्वात् ॥ २२ ॥ अत्राशङ्कान्तरं परिहर्तुमेषा

रश्मिः ।

हितनिषिद्धफलासम्बन्धीतिलक्षणः । प्रकृते । पदं भजेत । पादसेवनं चतुर्थं भजनं कुर्वीत । तदुक्तं 'निवृत्ततर्षैरुपगीयमाना'दिति । उपगानं समीपमागत्य गानम्, समीपागमनं पद्भ्यामिति पदयोरुपकारं स्मृत्वा भजेत । पादुकाद्वारा । 'त्वत्पादुकामविरतं परि ये चरन्ती'ति वेदस्तुतौ । पादसंवाहनं वा तदुक्तं 'तस्मादात्मज्ञं ह्यर्चयेद्भूतिकाम' इति । भाष्ये । उक्तरीत्येति । द्वितीयव्याख्यानोक्तरीत्या । दूरेति । दूरात् तद्विषयकज्ञानात् दूरतरं भगवज्ज्ञानस्य तथात्वं कर्मशेषत्वम् । प्रकृते । कर्मफलेति । भक्तिमार्गीयज्ञानवानेव स्यादिति पदवित्पदव्याख्यानभाष्य एवकारार्थविवरणेन विवृतम् । 'विधिर्वा धारणव'दिति सूत्रे । स्तुतीति । व्याख्यातम् । पठ्यत इति । शङ्कराचार्यादिभिः स्वभाष्येषु पठ्यते । कर्माङ्गानीति । सावयवत्वापादकानि । भावशब्दाच्चेति सूत्रार्थमाहुः उद्गीथमिति । तथेति । उपासनविध्यर्थाः । फलोपेति । फलं अग्नीन्धनाद्यपेक्षाभावः तस्योपसंहारार्थम् । अस्माकमिति । अस्मभ्यमिति वक्तव्ये समबुद्धित्वाय सर्वत्र 'रुच्यर्थानां प्रीयमाण' इति सूत्रात् स्वस्य प्रीयमाणत्वाभावाद्वा षष्ठी । विद्याया इति । 'पुरुषार्थोऽत' इति सूत्रीयातःशब्दार्थः । उद्गीथादीति । आदिनोद्गीथाद्यङ्गानि ॥ २१ ॥

पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २२ ॥ आशङ्कान्तरमिति । पारिप्ल-

धामोपजगामे'त्याद्युपाख्यानैर्हि ब्रह्मविद्या निरूप्यते । 'सर्वाण्याख्यानानि' पारिप्लवे शंसती'ति श्रुत्या शंसनशेषत्वं तेषामवगम्यते । शंसने शब्दमात्रस्य प्राधान्येनार्थज्ञानस्यातथात्वादुपदेशान्ताख्यानप्रतिपाद्यं ज्ञानं मन्त्रार्थवदप्रयोजकमिति कर्मशेषत्वमपि न वक्तुं शक्यम् । प्राधान्यं तु दूरापास्तम् । धर्मिण एवासिद्धिरित्याह । पारिप्लवार्था इति । उक्तरीत्या सर्वा उपाख्यानश्रुतयः कर्मशेषभूता इत्यर्थः अत्राचार्य एवमपि कर्मशेषत्वं ज्ञानस्य न सम्भवतीत्याह नेति । कुतः । विशेषितत्वात् । कर्मणः सकाशाज्ज्ञानं विशेषितमधिकधर्मविशिष्टत्वेनोक्तमिति न ज्ञानस्य कर्मशेषत्वमित्यर्थः । ननु विशेषितत्वमाख्यानेष्वेवेत्यप्रयोजको हेतुरिति चेत् । मैवम् । आचार्याशयानवगमात् । तथाहि । पूर्वं 'तुष्यतु दुर्जन' इति न्यायेनाख्यानानां शंसनशेषत्वमुपेक्षित्वोच्यते । न ह्याख्यानेष्वेव ज्ञानं निरूप्यते, किन्त्वन्यत्रापि । तथा हि । तैत्तिरीयके पठ्यते । 'ब्रह्मविदाप्नोति परम्, तदेषाभ्युक्ता, सत्यं ज्ञानमनन्तं ब्रह्मे'त्युपक्रम्य, माहात्म्यविशेषज्ञानार्थमाकाशादिकर्तृत्वमुक्त्वा, आनन्दमयत्वं रसरूपत्वमुक्त्वा, 'भीषास्मा'दित्यादिना सर्वनियामकत्वं चोक्त्वा, भगवानेव पूर्णानन्द इति ज्ञापनायानन्दगणनां कृत्वा, आनन्दमयं पुरुषोत्तमं प्राप्तेनानुभूयमानानन्दस्वरूपं, 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सहे'त्यादिनोक्त्वा, तद्विदो माहात्म्यमुच्यते 'एतꣳ ह वा व न तपति किमहं साधु नाकरवं किमहं पापमकरव'मिति । अत्र ज्ञानवान् सच्चिद्रूपदेशकालापरिच्छिन्नं सर्वकर्तारं निरवध्यानन्दात्मकं सर्वनियामकं मनोवागगोचरं पुरुषोत्तमं प्राप्नोति, कर्म तु स्वयं क्लेशात्मकम्, तद्वांश्च 'अस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'ति श्रुतेः क्षुद्रतरानन्दजनकस्वर्गपश्वादिफलमाप्नोतीति विहितनिषिद्धकर्मणोश्चाप्रयोजकत्वं तस्मिन्नुच्यत इति कर्मणः सकाशाज्ज्ञानस्य निरवधिरेव विशेष उच्यत इति न धर्म्यसिद्धिः, न वा कर्मशेषत्वं ज्ञानस्य सिध्यति ॥ २२ ॥

---

भाष्यप्रकाशः ।

त्रिसूत्रीत्याशयेनैतस्य पूर्वपक्षांशमवतारयन्ति अथेत्यादि । तेषामिति । उपाख्यानानाम् । धर्मिण एवासिद्धेरिति । धर्मिणो ज्ञानस्यैव अप्रयोजकत्वादसिद्धेः । परिहारांशमवतारयन्तो व्याकुर्वन्ति अत्रेत्यादि । विशेषितमिति । विशेषः सञ्जातोऽस्येति विशेषितम् । अधिकधर्मविशिष्टत्वं च परमानन्दरूपफलजनकत्वं ज्ञेयम् । तदेवाग्रे व्युत्पाद्यम् । शेषं स्फुटम् ॥ २२ ॥

रश्मिः ।

चकर्मशेषत्वं ज्ञानस्येत्याशङ्कान्तरम् । भाष्ये । उपदेशान्तेति । 'मामुपास्स्वे'ति प्रतर्दनं प्रतीन्द्रोपदेशान्ताख्यानप्रतिपाद्यम् । प्रकृते । विशेषितमिति । 'तारकादिभ्य इतच्' । शेषमिति । ज्ञानं कर्मशेषत्वाभाववत्, विशेषितत्वात्, यन्नैवं तन्नैवं लौकिकघटवत् । इत्यत्राख्यानेषु हेतोः साध्याभाववद्वृत्तित्वात् साधारण्यमाहुः ननु विशेषितत्वमिति । अप्रयोजक इति । साधारणो हेतुः विशेषितत्वरूपः । उपेक्षित्वेति । क्त्वो ल्यबभावश्छान्दसः । अत्रेति । भृगुप्रपाठके । तस्मिन्नुच्यते इति । भृगुप्रपाठके ब्रह्मवित्प्रपाठके 'एतꣳह वा व न तपती'ति श्रुत्योच्यते इत्यर्थः । एवं शेषं स्फुटम् ॥२२॥

तथाप्याख्यानप्रतिपादितविद्यानामसिद्धिरेवेति चेत्, तत्राह ।

तथा चैकवाक्यतोपबन्धात् ॥ २३ ॥

यथा केवलश्रुतेर्विद्याप्राधान्यम्, तथैवोपाख्यानश्रुतीनामित्यर्थः । चकारेण प्रश्नोत्तरैर्निर्णीतार्थप्रतिपादनम् । महतामेवात्र प्रवृत्तिः । सापि बह्वायासपूर्विकेति विद्यामाहात्म्यज्ञापनं प्ररोचनं चाधिकमुपाख्यानानामुपाख्यानं विनैव विद्यानिरूपिकायाः श्रुतेः सकाशादित्युच्यते । तत्र हेतुरेकवाक्यतोपबन्धादिति । 'आचार्यवान् पुरुषो वेदे'ति श्रुत्यैकवाक्यताज्ञानमाख्यानं विना न भवतीति तदर्थमुपबन्धात् गुरुशिष्यकथोपबन्धादित्यर्थः ।

अथवा । उपाख्यानरहितायां श्रुतौ यथा ज्ञानं निरूप्यते, तथैव 'अधीहि भगव इति होपससाद सनत्कुमारं नारद' इत्याद्याख्यानेष्वपि निरूप्यत इत्यनाख्यानश्रुत्यैकवाक्यतयैवाख्याने ज्ञानस्वरूपोपबन्धात् प्रतिपादनादित्यर्थः ।

---

भाष्यप्रकाशः ।

तथा चैकवाक्यतोपबन्धात् ॥ २३ ॥ सूत्रप्रयोजनमाहुः तथापीत्यादि । असिद्धिरिति । कर्मशेषत्वाभावस्यासिद्धिः । तथा चाशङ्कान्तरस्य निवृत्तत्वेऽप्युक्ताशङ्काया अनिवृत्तत्वादेकदेशदोषपरिहारायेदं सूत्रमित्यर्थः । व्याकुर्वन्ति यथेत्यादि । प्ररोचनं चाधिकमिति । इदमवान्तरफलमधिकम् । कथमेकवाक्यतोपबन्ध इत्याकाङ्क्षायां तामुपपाद्याहुः आचार्येत्यादि । सर्वासां परविद्यानां परब्रह्मैवार्थः, तत्प्राप्तिरेव च प्रयोजनम् । 'आचार्यवान् पुरुषो वेदे'ति श्रुतिश्छान्दोग्ये श्वेतकेतूपाख्याने 'यथा सौम्य पुरुषं गन्धारेभ्योऽभिनिबद्धाक्ष'मित्युपक्रम्य पठिता । तत्र तद्दृष्टान्तेन आचार्याच्छिष्यस्य ब्रह्मज्ञानादिकं श्राव्यते । अतः सर्वा एव विद्या गुरुशिष्यसाकाङ्क्षाः । तदेतच्छ्रुत्युक्तमेकवाक्यताज्ञानमाख्यानं विना न भवतीति तदर्थं तदुपबन्धात् । तथा च केवलानां यथा न शंसनशेषत्वम्, तथा आख्यानोक्तानामपि नेत्यर्थः ।

अन्ये तु सूत्रे 'एकवाक्योपबन्धा'दिति पाठमङ्गीकृत्य एकवाक्यतयोपबन्धं व्याकुर्वन्त, एकवाक्यपदं भावप्रधानं बोधयन्तीति न कश्चिद्विशेषः ।

रश्मिः ।

तथा चैकवाक्यतोपबन्धात् ॥ २३ ॥ तथापीत्यादीति । यद्यपि 'एतस्ह वा व न तपती'ति श्रुत्या विहितप्रतिषिद्धकर्मणोरप्रयोजकत्वम्, तथापि 'सर्वाण्याख्यानानि पारिप्लवे शंसती'ति श्रुत्या आख्यानप्रतिपादितेत्यादि । उक्तेति । आभासोक्ताशङ्कायाः । एकदेशेति । शङ्कैकदेशः । शङ्का धर्म्यसिद्धिविषया ज्ञानस्य कर्मशेषत्वविषया च शङ्कान्तरपदेनोक्ता, तत्रैकदेशः ज्ञानस्य कर्मशेषत्वं तस्य दोषस्य परिहारायेत्यर्थः । यथेत्यादीति । तथा चेति सूत्रांशार्थः । तथा चकारार्थमाहुः चकारेणेति । गुरुशिष्येति । 'अर्थैकत्वात् एकं वाक्यं साकाङ्क्षं चेत्, विभागे स्या'दित्यत्र द्वितीयाध्याये । परस्पराकाङ्क्षयैकवाक्यत्वमुक्तम् । अत्र विद्यानां केवलज्ञानानां गुरुशिष्यघटितोपाख्यानापेक्षा तयार्थैकत्वादेकं वाक्यमित्युक्तम् । तदर्थमिति । तेन त्रिपदमिदं सूत्रं एकवाक्यतया उपनिबन्धात् तृतीयासमासः । अपि नेति । विशिष्टं शुद्धान्नातिरिच्यत इति भावः । ननु तथापि 'सर्वाण्याख्यानानी'ति श्रुतिविरोधस्तु स्यादिति चेत् । न । सर्वाण्युपाख्यानानि शंसत्येव,

नैकठ्यवाचिनोपपदेन वस्तुसती' या तत्तद्वस्तुतत्तच्छिद्रयकथा तत्सामीप्यमत्रोच्यते अन्यथा सामीप्यासम्भवादतः कल्पितत्वशङ्कानिरासः ।

नन्वेवमपि पारिप्लवार्थत्वे न बाधकं पश्याम इति चेत् । उच्यते । अश्वमेधप्रकरणे, 'मनुर्वैवस्वतो राजे'त्यादीन्याख्यानानि यत्र पठितानि, तत्र सामान्यतस्तेषां विनियोगः, 'सर्वाण्याख्यानानि पारिप्लवे शंसती'त्यनेनोक्त इति सर्वशब्दस्तदा-

भाष्यप्रकाशः ।

नन्वेवमाख्यानरहितानामप्याख्यानोक्तार्थाकाङ्क्षत्वात्तासामेवैतच्छेषत्वम् न त्वाख्यानवतीनां तच्छेषत्वमिति नोक्तदोषनिवृत्तिरित्यपेक्षायां पक्षान्तरमाहुः अथवेत्यादि । तथा च यदि तत्रान्यदेवोच्येत तत्परत्वमेव स्यात्, न ज्ञानपरत्वम् । निरूपिते तु ज्ञानस्वरूप एतासामपि केवलविद्याशेषत्वम्, अतो न दोष इत्यर्थः । सूत्र उपोपसर्गकथनस्य तात्पर्यमाहुः नैकठ्येत्यादि ।

अत्र पुनराशङ्कते नन्वित्यादि । एवं पूर्वव्याख्याने तासामुपाख्यानाकाङ्क्षा, द्वितीये चोपाख्यानानां तदाकाङ्क्षेति परस्पराकाङ्क्षयैकवाक्यत्वे उभयविधवाक्यानां पारिप्लवशेषता अदण्डवारितेति तथेत्यर्थः । अत्र समादधते उच्यत इत्यादि । तथा च प्रकरणेन सर्वशब्दार्थसङ्कोचावगमादनेन वाक्येन विद्यानां न कर्मशेषत्वसिद्धिरित्यर्थः । उक्तेऽर्थे लिङ्गमप्युपोद्बलकमाहुः एवं सतीत्यादि ।

रश्मिः ।

न तूपाख्यानानां पारिप्लवाङ्गत्वमित्याशयात् । एवमिति । तेन द्विपदमिदं सूत्रं एकवाक्यताया उपनिबन्धात् । शेषत्वं निषेधे । आख्यानेति केवलज्ञानानाम् । आख्यानेति । विज्ञानां विधेयत्वनिर्वाहायोपाख्यानोक्तार्थस्य विधेयस्तावकस्य आकाङ्क्षत्वादित्यर्थः । यः स्तूयते, स विधीयते इति पूर्वमीमांसकोक्तेः । किञ्च 'केवलानां यथा न पारिप्लवशंसनशेषत्वं तथाख्यानोक्तानामपि विद्यानां पारिप्लवशंसने उक्तार्थेति तु केवलभारहारकत्वनिवृत्त्यै । 'केवलभारहारः स्यादधीत्य वेदं यो न जानात्यर्थमिति' । एवमप्येकवाक्यतोपपन्नत्वात् । तासामिति । आक्षिप्ताख्यायिकानां केवलानाम् । एतच्छेषत्वम्, पारिप्लवशेषत्वम् । 'सर्वाण्याख्यानानी'ति श्रुतावाख्याने विशेषाश्रवणात् । तच्छेषत्वमिति पारिप्लवशेषत्वम् । उक्तेति । भाष्यीयामासोक्तदोषनिवृत्तिः । अथवेत्यादीति । श्रुतावित्यस्य 'साङ्गो वेदोऽध्येयो ज्ञेयश्चे'त्यस्याम् । अनारभ्याधीतत्वादस्याः । निरूप्यत इत्यस्य 'तरति शोकमात्मविद्' इति श्रुत्या निरूप्यत इत्यर्थः । एकवाक्यतेत्यस्यैकत्वेन तथेत्यर्थः । आख्यान इत्यस्य भृगूपाख्यान इत्यर्थः । तत्रेति । आख्यानरहितविद्यासु । अन्यदेव ज्ञानाद्भिन्नमेव । एतासामपीति पारिप्लवशेषभूतानाम् । अतो नेति । विद्याशेषत्वात् न भाष्यीयामासोक्तो दोषः आख्यानप्रतिपादितविद्यानां कर्मशेषत्वाभावस्यासिद्धिरूपः । नैकठ्येत्यादीति । वस्तुसजातीयेति समानसंवित्संवेद्या ज्ञानादिवस्त्वाकाङ्क्षिता । यथा ज्ञानं कथावस्त्वाकाङ्क्षितमित्याकाङ्क्षितत्वेन सजातीयत्वं वा । अन्यथेति । आकाङ्क्षितत्वाभावे । कल्पितत्वस्य अर्थवादत्वस्य शङ्कानिरासः वस्तुसजातीयत्वात् । तासामिति । केवलानां विद्यानां तदाकाङ्क्षेति केवलविद्याकाङ्क्षा । उभयेति । केवलश्रुत्युपाख्यानश्रुत्योरिव उभये केवलोपाख्याने विधेयेषु तानि वाक्यानि उभयविधवाक्यानि तेषाम् । पारिप्लवेति । 'सर्वाण्याख्यानानि पारिप्लवे शंसती'ति श्रुत्या पारिप्लवशेषिता एतयैव श्रुत्याऽदुष्टा सा न दण्डेन युक्त्यन्तरेण वारितेत्यर्थः । यथा दण्डेन ग्राममभ्याजेत्यत्र दुष्टां गां तथेत्येवं प्रकृते नेत्यदण्डवारिता । तथेत्तीति । एवमपि पारिप्लवार्थत्वे बाधकं न पश्याम इत्यर्थः । अनेनेति । पारिप्लवेन वाक्येन । लिङ्गमिति 'पारिप्लवमा-

१ वस्तुसजातीयेतिरश्मिपाठः व्याख्यातश्च तथा । २ पारिप्लवशेषितेति रश्मिपाठः ।

ख्यानपर एव, न त्वाख्यानान्तरपरोऽपि। प्रकरणस्य नियामकत्वात्। एवं सति, यदा पारिप्लवाख्यकर्मप्रस्तावः, तदा विशेषविनियोग उक्तः। 'पारिप्लवमाचक्षीते'ति। तत्र प्रथमेऽहनि 'मनुर्वैवस्वतो राजे'ति। द्वितीयेऽहनि 'इन्द्रो वैवस्वत' इति। तृतीयेऽहनि 'यमो वैवस्वतो राजे'त्याद्याख्यानविशेषा वाक्यशेषे विनियुज्यन्ते। आख्यानसामान्यपरत्वे त्वहोविशेष उपाख्यानविशेषविधानं न स्यात्। अत एव पारिप्लवमित्येकवचनम्, अतो नाख्यानान्तरगन्धसम्बन्धोऽपि। प्रापकाभावात्॥ २३॥

## अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २४॥

एवं 'पुरुषार्थोऽतः शब्दा'दित्युपक्रम्य ज्ञानस्य फलसाधने कर्मोऽनपेक्षत्वमुपपाद्य तत्रैवोपपत्त्यन्तरमाह। यतो ज्ञानी ज्ञानेन स्वयमेव यज्ञात्मको जातः, अत एव जरामर्याग्निहोत्रेऽग्निस्तदिन्धनं समिदादि, तदादय आज्यादयस्तेषामनपेक्षोक्ता। श्रुतौ तैत्तिरीयके पठ्यते। 'तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा

---

भाष्यप्रकाशः।

एवं सतीति प्रकरणसन्निधिभ्यां सर्वशब्दार्थसङ्कोचे सति। तथा चेदं लिङ्गमपि सङ्कोचे मानमित्यर्थः। ननु 'मनुर्वैवस्वत' इत्यादीनि तत्तदहनि पूर्वमाख्यातव्यानीत्यभिप्रायेण विशेषविधानमित्याशङ्कावारणाय गमकान्तरमाहुः अत एवेत्यादि। तथा च यदि तथाभिप्रायः स्यात्, तदा बहुवचनमादिपदं वा प्रयुक्तं स्यात्, अतस्तदभावाञ्च तथेत्यर्थः। एवञ्च पारिप्लवसूत्रे यो विशेषितत्वरूपो हेतुरुक्तः, स एव प्रकृतेतराण्याख्यानानि व्यावर्तयन् सर्वशब्दार्थसङ्कोचं बोधयतीति न काऽपि शङ्केति तात्पर्यम्॥ २३॥

अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २४॥ सूत्रप्रयोजनमाहुः एवमित्यादि। व्याकुर्वन्ति

रश्मिः।

चक्षीते'ति श्रुतिसामर्थ्यम्। प्रकरणेति। सन्निधिः। पारिप्लवसन्निधिः। भाष्ये विशेषेति सङ्कुचितसर्वशब्दार्थोपाख्यानस्य विनियोगः। वाक्येति सर्वाण्युपाख्यानानि शंसति कर्माणि, उतैकं सङ्कुचितोपाख्यानं कर्मेति सन्देहे प्रवृत्तं 'पारिप्लवमाचक्षीते'ति वाक्यशेषस्तेन वाक्यशेष इति पाठे न वर्णलोपः, किन्तु विवक्षातः कारकाणि भवन्तीत्यधिकरणत्वविवक्षा वाक्यशेषे। अहोविशेष इति सप्तम्यन्तम्। प्रकृते। पूर्वमिति। पारिप्लवकर्मणः पूर्वम्। बहुवचनमिति। 'पारिप्लवाण्याचक्षीते'ति। पारिप्लवमादावाचक्षीतेति। तदभावादिति। आदिबहुवचनयोरभावात्। तथेति। नाख्यानान्तरगन्धसम्बन्धोपीत्यर्थः। पूर्वमाख्यातव्यानीति नेति वार्थः। एवं चेति। सूत्रे तथेत्यनेन दृष्टान्तार्थं पूर्वसूत्रीयार्थानुवादसूचने च। इतराणि। अधिकधर्मविशिष्टानि। न कापीति। सूत्रे सङ्कोचकपदाभावात् व्याख्यानं प्रासङ्गिकं कुत इति शङ्का न॥ २३॥

अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २४॥ स्फुटमिति। सूत्रं व्याकुर्वन्ति स्म जरामर्येति। महानारायणसमासावस्ति। जरा पञ्चसप्तत्यनन्तरं मरणं मरस्तयोः साधु जरामर्याग्निहोत्रं तत्र। तथा च श्रुतिः 'एतद्वै जरामर्याग्निहोत्रं सत्र'मिति। तैत्तिरीयक इति। महानारायणे। विदुषो यज्ञस्येति। विद्वत्कर्तृकयज्ञस्य। यद्वा। यज्ञस्येति। ज्ञानेन यज्ञात्मकस्य। 'गोपालोऽहमिति भावये'दिति गोपालतापनीयात्। यजमान इति। फलभाक्त्वात्। पत्नीति। फलेऽनुकूलत्वात्।

**पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिर्वेदः शिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोऽग्नि'रित्यादि । एतेन यदन्यस्य यज्ञतासम्पादकम्, तस्य स्वकार्यसाधने कथं यज्ञापेक्षा भवेदिति भावः सूच्यते ॥ २४ ॥**

**इति तृतीयाध्याये चतुर्थपादे प्रथमं पुरुषार्थोऽतः शब्दादित्यधिकरणम् ॥ १ ॥**

---

भाष्यप्रकाशः ।

**यत इत्यादि । शेषं स्फुटम् ॥ २४ ॥**

**इति प्रथमं पुरुषार्थोऽतः शब्दादित्यधिकरणम् ॥ १ ॥**

रश्मिः ।

**शरीरमिध्ममिति ।** इध्मं समिधः, ता यथाग्नौ हूयन्ते, तथा शरीरं तपसि, द्वितीयस्कन्धनवमाध्यायोक्ते । **उरः** प्रसिद्धम् । **वेदिः** संस्कृता भूः स्थण्डिलम् । **बर्हिरिति** । विराड्लोमानि । तत्साम्यात् । **वेद इति** । 'वेदं कृत्वा वेदिं करोती'ति श्रुत्युक्तो वेदः । वेदो धननामसु निरुक्त उक्तम् । **हृदयं यूप इति** । यथा उरोऽधो हृदयं तथा वेद्यधो यूप इत्यधस्त्वसाम्यात् । **काम आज्यमिति** । आज्ये घृतं यथाग्नौ तथा कामस्तपसि तपः कामः । विरहताप एव सर्वात्मभावव्यक्तेः सर्वात्मभावकामः स्यात् । **मन्युः पशुरिति** । पशुवन्मन्युः क्रोधः राजसादिभावे विशसनीय इत्यर्थः । जरामर्याग्निहोत्रस्य सत्रत्वमुक्तं तदर्थं कर्तृनाह **दमः शमयितेत्यादि** । बहुकर्तृको यागः सत्रम् । तत्र **दम** इन्द्रियसंयमरूपोपि कर्ता । कर्तृभूतदमाभावे अन्यत्र मनस्सत्त्वे सर्वात्मभावसत्रं न निर्वहेत् । **शमयिता** मनसो बोध्यः । **दक्षिणावाग्घोतेति** । दक्षिणा दैवी वाक् होता होतृकर्मकर्त्री होतर्ग्वित् । जुहोतीति होता । नेष्टृत्वष्टृहोतृपोत्रिति साधुः । **प्राण उद्गातेति** । उद्गातृकर्मकर्ता । **प्राण** आसन्यः । सोपि कर्ता । यतः सन्देशसदृशसामगानकर्ता । सादृश्यं च प्राणरक्षकत्वेनापहतपाप्मत्वेन । सर्वात्मभाववत्यः दास्यभक्तिमत्यः 'भवाम दास्य' इति वाक्यात् । साम्नि च भगवतः परिचर्योक्तेति युक्तं सामगातुः प्राणस्य कर्तृत्वम् । **उद्गाता** सामवित् । उद्गायतीत्युद्गाता । तृन् तृच् वा । **चक्षुरध्वर्युरिति** । इन्द्रियवतीनां सर्वात्मभावाध्वरे साध्वीत्वात् चक्षुरध्वर्युः । अध्वर्युर्यजुर्वित् । अध्वरमिच्छतीत्यध्वर्युः । सुप इति क्यच्, कव्यध्वरपृतनस्येति लोपः क्याच्छन्दसीत्युः । **ब्रह्मेति** । ब्रह्मन्मन्मानां मनोपि बृहदिति ब्रह्मा कृताकृतावेक्षकः । **श्रोत्रं अग्नीदिति** अग्नीन् इन्धे इत्यग्नीत् । ञि इन्धि दीप्तौ क्विप् । न लोपः अग्नीदृत्विक् । **या अवध्रियते सा दीक्षेति** । दीक्ष मौण्ड्येज्योपनयननियमव्रतादेशेषु । भ्वा. आ. से. अवार्था बहवः नवाध्र्यामुक्ताः तदर्थं ध्रियते वैकुण्ठलीला सा **दीक्षा** नियम इत्यर्थः । **साधारणविषयेति** प्रतिज्ञेत्यर्थः । नियमः प्रतिज्ञा । **यदश्नाति तद्धविरिति** प्रसिद्धमग्नौ विरहतापे । **यत्पिबति तदस्य सोमपानमिति** । स्पष्टम् । **यद्रमते तदुपसद इति** । उपसीदन्त्यासु उपसदः । रमणेऽनेकेषु सीदन्तीति साम्यम् । 'आत्मक्रीड' इति श्रुतेः । **यत्सञ्चरत्युपविशत्युत्तिष्ठते च स प्रवर्ग्य इति** । प्रवर्ग्यो वायुः । आदित्यो वा चेष्टारूपः । कालश्चेष्टेति यागे प्रवर्ग्यो द्रष्टव्यः । स्वाहाकारे । **यन्मुखं तदाहवनीय इति** । मुख्यतो मुखे जुहोतीति । आहवनीयोग्निः कुण्डश्च । **या व्याहृतिराहुतिरिति** । तिस्रो व्याहृतयो नोक्ताः आत्मयजमानस्य आधिभौतिकत्वात् । व्याहृतिर्भूस्तस्याः सत्ता मुखे । 'अग्निर्वाग्भूत्वा मुखं प्राविश'दिति श्रुतेः । आहुतिराहवनीयमुखे । **यदस्य विज्ञानं तज्जुहोतीति** । अस्य आत्मयजमानस्य यद्विज्ञानं व्याहृत्याहुतिविषयकम् । विशिष्टं वैदिकं ज्ञानम् । **तज्जुहोति** । मुखयोर्ददातीत्यर्थः । **यत्सायं प्रातरत्ति तत् समिधमिति** ।

## सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २५ ॥ ( ३-४-२. )

उक्तन्यायेन ज्ञानं प्रति कर्मणः फलोपकारित्वाभावेपि स्वरूपोपकारित्वमस्ति न वेति चिन्त्यते । तत्र नेति पूर्वः पक्षः । गुरूपसत्तितदुपदेशैरेव तत्सम्भवात् । 'आचार्यवान् पुरुषो वेदे'ति श्रुतेः । अत्र सिद्धान्तमाह सर्वापेक्षेति । सर्वेषां

भाष्यप्रकाशः ।

सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २५ ॥ अधिकरणमवतारयन्ति उक्तन्यायेने-त्यादि । पूर्वाधिकरणे पुरुषोत्तम एव पुरुषार्थः, तत्प्राप्तिश्च केवलाज्ज्ञानादेवेति प्रतिज्ञाय शब्दाद्धेतो-स्तत् साधयित्वा शब्दस्य तत्साधकत्वं व्युत्पादितम् । अत उक्तेन न्यायेन शब्देन ज्ञानं प्रति कर्मणः फलोपकारित्वाभावेपि कर्मणां सार्थक्याय स्वरूपोपकारित्वं यदुक्तम्, तद्युक्तत्वादस्ति, उतायुक्तत्वान्नास्तीत्येतदस्मिन्नधिकरणे विचार्यत इत्यर्थः । सिद्धान्तं व्याकुर्वन्ति सर्वेषामित्या-

रश्मिः ।

अग्निविरहतापाविन्धे समिति सम्यक् । पचाद्यच् । 'यदेव असृजत तत्तदत्तुमध्रियते'ति बृहदारण्यकादा-स्मात्ति । यजमानोप्यत्ति । सुखुप्तावानन्दमपि । 'आनन्दभुक्' इति नृसिंहतापिन्याः । नन्वौषधिरग्निविर-हतापाविन्धे न त्वन्नमिति चेत्, न । 'औषधवदशनमाचरे'दित्यारुणिश्रुतेः । पाच्यान्नाशनमाचरेदित्यर्थः । यथा 'अत्यम्बुपानात् न विपच्यतेन्नं निरम्बुपानाच्च स एव दोषः । तस्मान्नरो वह्निविवर्धनाय मुहुर्मुहु-र्वारि पिबेदभूरी'ति । पाच्यात्म्बुपानम् । यत्प्रातर्मध्यन्दिनं सायञ्च तानि सवनानीति । सोमलता-कण्डनकालाः प्रातर्मध्यन्दिनसायंरूपाणि सवनानि सर्वात्मभावे षुञ् अभिषवे स्वा. उभय, अ-सुन्वन्ति सोमं भगवन्मन इति सवनानि । नन्द्यादित्वात् ल्युः । ल्युट् वा । ये अहोरात्रे ते दर्श-पूर्णमासाविति । विरहकालरूपौ त्वत्र । ये अर्धमासाश्च मासाश्च ते चातुर्मास्यानीति । षट्कचतुष्टयत्रिकचतुष्टयसाम्यात् । य ऋतवस्ते पशुबन्धा इति । मन्युं पशुं हृदये यूपे ऋतुभिः षड्भिः प्रतिबन्धकृतं कुर्यादिति ऋतवो मन्युं बध्नन्तीति पशुबन्धाः । मन्युपदात् नित्यलीलायां सर्वात्मभावेपि । मन ज्ञाने दि. आ. अ. मनिजनिद् सिञ्योरिति युः । 'मन्युर्दैन्ये क्रतौ क्रोधे क्रुधी'ति हैमकोशः । ये संवत्सराश्च परिवत्सराश्च तेऽहर्गणा इति । देवदेवत्वाद्भगवतः । देवदिनं संवत्सरः । सर्ववेदसं वा एतत्सत्रमिति । सर्वस्वदाननामकं सत्रम् । सर्ववेदसशब्दः काठ-कभाष्ये सर्वस्वदाने व्याख्यातः । सत्रं बहुकर्तृकयागः । यन्मरणं तदवभृथ इति । अवभृथस्नानं मन्त्रात्मकम् । 'विभुरसी'त्यादि महानारायणे मन्त्रः असन्तत्वेन मन्त्रत्वात् । सन्न्यासमन्त्रोयम् । विस्मरणजनकत्वादन्त्ये अत्यन्तविस्मरणरूपत्वं मन्त्रस्य । 'मृत्युरत्यन्तविस्मृति'रितिवाक्यादत्यन्त-विस्मृतेर्मृत्युत्वात् । 'एतद्वै जरामर्यमग्निहोत्रं सत्र'मिति । जरा मरणं मरः तयोः साधु जरामर्यम् । तत्र साधुरिति यत् । सत्रं व्याख्यातम् । इति दमः शमयितेत्यादि श्रुत्यर्थः । यदन्यस्येति । यत् ज्ञानं अन्यस्य जरामर्यस्य । अत्रेदं ज्ञानं सर्वात्मभावरूपं जरामर्यात्मकयागविषयकम् । 'यज्ञो वै विष्णु'रिति श्रुतेः । कृष्णोपि यज्ञधर्मकः यज्ञः, 'धर्मो यस्यां मदात्मक' इति वाक्यात् । स्वकार्येति । सर्वात्मभावकार्यं पुरुषोत्तमप्राप्तिः तस्य साधने । भाष्ये सर्ववेदससत्रे जरामर्याग्निहोत्रसत्रत्वोक्तिः सर्ववेदससत्रपदं विहाय जरामर्याग्निहोत्रपदमुपात्तम् । इत्यादीति । आदिना दमः शमयितेत्यादि । एवं स्फुटम् ॥ २४ ॥

इति प्रथमं पुरुषार्थोत इत्यधिकरणम् ॥ १ ॥

सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २५ ॥ उक्तन्यायेनेति । सूत्रे सर्वशब्दो

कर्मज्ञानभक्तीनां पुरुषोत्तमज्ञानोत्पत्तावस्त्यपेक्षा। अत्र प्रमाणमाह यज्ञादिश्रुतेरिति। यज्ञादिनिरूपिका श्रुतिरेव प्रमाणं यत इत्यर्थः।

इदमत्राकूतम्। पुरुषोत्तम एव स्वतन्त्रपुरुषार्थरूपः, तत्प्राप्तिरेव फलम्। तत्र प्रेमभक्तिजं तज्ज्ञानमेव साधनमिति 'ब्रह्मविदाप्नोति पर'मित्यादिना 'एतद्विदुरमृतास्ते भवन्ती'त्यादिश्रुतिसहस्रैश्च प्रतिपाद्यते। 'अथेतरे दुःखमेवोपयन्ती'ति श्रुत्या ज्ञानरहितानां दुःखमात्रप्राप्तिरुच्यते। एवं सति स्वतोऽपुरुषार्थरूपं यज्ञादिकं सर्वार्थतत्त्वप्रतिपादिका श्रुतिर्यन्निरूपयति, तत्सर्वथा पुरुषार्थसाधनत्वेनैवेति मन्तव्यम्। तच्च निष्कामतयैव कृतं तथा। अत एव वाजसनेयिशाखायां 'यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवती'त्युपक्रम्य पठ्यते 'तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मण' इति तु कामयमानोऽथाऽकामयमानो योऽकामो निष्काम आत्मकाम आप्तकामो भवति, न तस्मात् प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते ब्रह्मैव सन् ब्रह्माऽप्येती'त्यादि। अत्र 'अथाकामयमानः' कर्ता निरूप्यत इति शेषः। यः पुमान् कर्मकृतावकामस्ततो निष्कामः सन्नात्मकामो निरुपधिस्नेहवान् प्रभौ, ततो भगवत्प्राप्त्या आप्तकामो भवतीत्यर्थः। अत्र

---

भाष्यप्रकाशः।

दि। तथा च मार्गत्रयापेक्षाकथनात्तत्तन्मार्गोक्तानां कर्मणामपेक्षास्तीत्यर्थो बोधितः। यज्ञादिपदे आदिशब्देन शमदमादीनां कर्मणां भगवद्धर्मरूपाणां शरणगमनादिकर्मणां च सङ्ग्रहः। यज्ञादिकर्मणां विद्यास्वरूपोपकारकत्वे कथं यज्ञादिश्रुतेः प्रमाणत्वमित्याकाङ्क्षायां तदुपपादयन्ति इदमत्रेत्यादि। एवं सतीति। अनेन प्रकारेण ज्ञानशून्यकर्मणां दुःखप्रापकत्वे सति। मन्तव्यमिति निरूपणान्यथानुपपत्त्या मन्तव्यम्। तथेति। पुरुषोत्तमज्ञानसाधकम्। 'अथा-

रश्मिः।

मार्गांशेऽसङ्कुचितवृत्तिरित्याशयेनाहुः कर्मज्ञानभक्तीनामिति। 'मार्गास्त्रयो मया प्रोक्ता' इति वाक्यात्। ननु ज्ञानकाण्डं कर्मकाण्डमिति काण्डद्वयात् कर्मज्ञानयोः पुरुषोत्तमज्ञानोत्पत्तावस्त्यपेक्षेति युक्तम्, भक्तिनिवेशः कुत इत्यत आहुः इदमत्रेति। तत्र प्रेमेति। ज्ञानकाण्डकर्मकाण्डयोरभिधेये ज्ञानकर्मणी भवतः। 'सर्वेषामेव शब्दानां व्यञ्जकत्वमपीष्यत' इति शब्दानामपि व्यञ्जकत्वात् तात्पर्यार्थाकाङ्क्षायां भक्तिरस्तु। 'अग्नये जुष्टं निर्वपामी'ति प्रथमाष्टकात्। 'भगवान् ब्रह्म कार्त्स्न्येने'तिवाक्याच्च। एवं च 'भक्त्या मामभी'तिवाक्योपष्टब्धं प्रेम भक्तिजमित्यर्थः। अन्यथेति। सर्वथा पुरुषार्थसाधनत्वकल्पनं समाधेयस्वतोऽपुरुषार्थरूपयज्ञादिनिरूपणस्यानुपपद्यमानस्योपपत्तये। इदमर्थापत्तिलक्षणम्। अन्यथानुपपत्तिलक्षणं तु अर्थान्तरकल्पनया समाधेयत्वेनोच्यमानः प्रमाणसिद्धयोरर्थयोः परस्परप्रतिघातः। प्रस्थानरत्नाकरे प्रमाणपरिच्छेदसमाप्तौ सम्यग् द्रष्टव्यो विचारः। अथेत्यादीति। कर्मकृताविति। काम्यानां कर्मणां कृतौ। निष्काम इति। सन्न्यासी। 'काम्यानां कर्मणां न्यासं सन्न्यासं कवयो विदु'रिति गीता। आत्मकाम इति। आत्मनि कामो यस्य पुंसः। कामोत्र इच्छा 'अलमन्यविचारेण प्रेमेच्छेति स्थितं मत'मिति विश्वेश्वरमतेनाहुः निरुपधिस्नेहवानिति। एवं मर्यादामर्क्ति निरूप्य कर्मभिर्ज्ञानं निष्कामसकामयोश्च निरूपयन्ति स्म अत्र

'यथाकारी'त्यादिना कर्मकर्तुरेवोपक्रमात् 'अथाकामयमान' इत्यनेनापि तथाभूतः स एवोच्यते । एवं सति सत्कर्मणि प्रवृत्त्यर्थं विविधफलानि स्वयमेवोक्त्वा जनान् भ्रामितवानिति स्वोक्तकरणात् चिरेण दयया निष्कामं करोति, सकामतयापि क्रियमाणेन वैदिककर्मणाऽनेकजन्मभिः संस्कारविशेषप्रचयेनापि तथा । 'कषाये पक्वे ततो ज्ञानं प्रवर्तते' इत्यादिस्मृतिभ्यश्च ज्ञानोत्पत्तौ कर्मापेक्षास्तीति । चकारेण पुष्ट्यावङ्गीकृतस्य सर्वानपेक्षेति सा समुच्चीयते । अत एव, 'नायमात्मे'-त्यादिश्रुतिर्न विरुध्यते ।

---

भाष्यप्रकाशः ।

कामयमान' इति श्रुतिभागं व्याकुर्वन्ति अथेत्यादि । तथाभूतः स इति । 'एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलं तथे' ति गीतावाक्यादकामः कर्मकृतौ, निष्कामः फले । एवं द्विविधकर्तृनिरूपणेन यत् सिध्यति तदाहुः एवं सति सदित्यादि । उक्तमर्थं स्मृत्योपष्टम्भन्ति कषाय इत्यादि । एवं मर्यादामार्गे कर्मापेक्षैव यद्यपि भगवत्साक्षात्कारे व्युत्पादिता, तथापि हेतुबोधके यज्ञादिश्रुतिपदे आदिशब्देन तैत्तिरीयाद्युक्तानामानन्दमयाद्युपासनानामन्यत्रोक्तानां शमादीनां ज्ञानोपकारिणाम्, तथा भक्त्युपयोगिनां गोपालतापनीयाद्युक्तानां शरणगमनध्यान-रसनभजनादीनां च सङ्ग्रहात्तदपेक्षापि बोध्या । साप्यग्रिमसूत्रेषु व्युत्पादयिष्यते । चकारार्थमाहुः चकारेणेत्यादि । सेति । अत्रानुक्तापि । सौत्रस्य चकारस्यार्थं श्रौतार्थापत्त्योपष्टम्भन्ति अत एवेत्यादि । अत एवेति । मार्गभेदादेव । तथा च साधनदशायामेव कर्मापेक्षा, न तु सिद्धद-शायामिति भावः ।

अत्रेवं बोध्यम् । पुरुषोत्तमज्ञानं हि मार्गभेदेन सामान्यतश्चतुर्विधं वा । तत्र कर्ममार्गे

रश्मिः ।

यथेति । अकाम इति 'अकामयमान' इत्यनेनाकामः 'यथाकारी'त्यादिना कर्मकर्ता । भाष्य-स्थेनापिना पूर्वोक्तनिःकामः केति चेत् फले । अपिः पदार्थसम्भावनायाम् । स्वयमिति वेदः भ्रामित-वानिति । अविहितकरणात् लौकिकात् वैदिके भ्रामितवान् । चिरेणेत्यादि । 'भगवान् भजतां मुकुन्दो मुक्तिं ददाति कर्हिचित् स्म न भक्तियोग'मिति वाक्यात्तथा । निष्कामः सन्न्यासीत्युक्तं 'आश्रमाणां तुरीयोस्मी'ति । अतो मुक्तः । तथेति निष्कामं करोति । कषाय इति कामक्रोधादौ पक्वे शास्त्ररीत्या परिणते । एवमिति सर्वशब्देन मार्गत्रये प्रमेये सति यज्ञादिपदेन भक्तिज्ञानसङ्ग्रहवत् । गोपालेति । आदिना श्रीभागवतमुपष्टम्भकम् । अन्यदप्युपयुक्तम् । शरणेति 'मुमुक्षुर्वै शरणमनुव्रजे'दिति शरणगमनम् । मुमुक्षुत्वस्य साधनचतुष्टयप्रवेशात् । शरणगमनस्य मुमुक्षत्वज्ञापकत्वात् । ध्यानं श्रीभागवतेपि साधनस्कन्धीयत्वात् उपात्तम् । रसनभजनयोः स्वरूपं गोपालतापनीय एवोक्तम् । हेतुबोधकं सूत्रे यज्ञादिश्रुतिपदम् । पञ्चम्यन्तत्वात् । तत्र यज्ञादीत्यत्रादि-पदेन षष्ठ्यन्तोक्तानां सङ्ग्रहात् । चकारेति । एवं मर्यादाभक्तिं कर्मभिर्ज्ञानं निष्कामसकामयोश्च निरूप्य पुष्टिभक्तिर्निरूप्येत्याशयेन चकारार्थम् । श्रौतार्थापत्त्येति लक्षणमुक्तम् । पुष्टिकल्पनं समाधेयनायमात्मेतिश्रुतार्थस्यानुपपद्यमानस्योपपत्तय इति लक्षणसमन्वयोत्र । दृष्टार्थापत्तिस्तु, जीवन् देवदत्तो गृहे नास्तीत्यत्र जीवनसंसृष्टगृहाभावस्यानुपपद्यमानस्योपपत्तये बहिर्भावकल्पना । मार्गेति । 'भक्तिमार्गस्य कथनात् पुष्टिरस्तीति निश्चय' इति पुष्टिमार्गभेदात् । पुरुषोत्तमज्ञानमिति । ननु

ननु ज्ञानद्वारा कर्मादीनामेव फलसाधकत्वमस्त्विति शङ्कानिरासाय दृष्टान्तमाह अश्ववदिति । यथा स्वेष्टफलसाधकदेशव्यवधानात्मकदेशातिक्रमेऽश्वस्य साधनत्वम्, न तु तत्तत्फलसिद्धावपि, तथाधिभौतिकाध्यात्मिकाधिदैविकप्रतिबन्धनिवृत्तावेव तेषां साधनत्वम्, न तु भगवत्प्राप्तावपीत्यर्थः । इदं च मुमुक्षुभक्तविषयकमिति ज्ञेयम् । आत्यन्तिकभक्तिमतां भक्तीतरानपेक्षणात् ॥ २५ ॥

---

भाष्यप्रकाशः ।

यदाविर्भवति, तत् सत्त्वगुणमाधारीकृत्य तत्रान्तर्यामिन्यायेन प्रविश्य सत्त्वं स्वान्तर्भूतं कृत्वा तेन तेन रूपेणाविर्भवतीति नामिदक्षादियज्ञेषु तत्तद्रूपेणाविर्भावादवगम्यते । ज्ञानमार्गे त्वक्षररूपेणैवाविर्भवतीति, 'ये त्वक्षरमनिर्देश्य'मिति गीतावाक्यसन्दर्भादवगम्यते । ज्ञानभक्तिसाहित्ये तु यद् बलिष्ठं तदनुसारेणाविर्भवति । एवं केवलेपि विहितभक्तिमार्गेपि तत्तदुपासनावाक्यैस्तत्क्रतुन्यायादवसीयते । अविहितभक्तिमार्गे तु वरणानुसारेणाविर्भवतीति वरणश्रुत्यादिभिरवसीयते । तत्र विहितमार्गत्रयसम्बन्धित्वान्मर्यादामार्गीयसाक्षात्कारे साधनापेक्षा । पुष्टिमार्गे तु वरणमात्रैकसाध्यत्वान्न तदपेक्षेत्युभयमप्युपपन्नमिति ।

ननु सर्वापेक्षापदे कर्मज्ञानभक्तीनां पुरुषोत्तमज्ञानेऽपेक्षां व्याख्याय यज्ञादिश्रुतेरित्यस्यार्थव्युत्पादने द्विविधं कर्मकर्तारं व्याख्याय निष्कामकर्तुः कर्मापेक्षामात्रं व्युत्पादितम् । ततश्च ज्ञाने कर्मापेक्षा सिद्धा, न तु ज्ञानभक्त्यपेक्षेति तत्कथनस्य किं प्रयोजनमित्याकाङ्क्षायामाहुः इदं चेत्यादि । इदमिति । कर्मापेक्षणम् । भक्तीतरानपेक्षणादिति । अतीतपादे, 'सैव हि सत्यादय' इत्यत्र निर्णीतत्वेन तथात्वात् । तथा चैकादशस्कन्धे 'योगास्त्रयो मया प्रोक्ता' इत्यत्र कर्मज्ञानभक्तीरुक्त्वा, । 'निर्विण्णानां ज्ञानयोगः कर्मयोगस्तु कामिनाम् । न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिद' इति कथनेन तस्य तस्य तत एव सिद्धिरिति मुमुक्षुभक्तस्य सोपाधिकस्नेहवत्त्वात्तस्य कर्मापेक्षणं युक्तम् । अत्र वाक्यसन्दर्भे योगशब्देन पुरुषार्थप्राप्त्युपाय उच्यते । ज्ञानशब्देन, 'सर्वभूतेषु येनैकम्' 'कैवल्यं सात्त्विकं ज्ञान'मित्यादिवाक्योक्तं ब्रह्मैव सर्वम्, 'वासुदेवः सर्व'मित्यत्र पर्यवसितं सात्त्विकं ज्ञानमुच्यते । कर्मशब्देन च पूर्वकाण्डाद्युक्तमग्निहोत्रादिलक्षणं विहितं कर्मोच्यते । भक्तिशब्देन च तापनीयगीताश्रीभागवताद्युक्तो भगवद्विषयकः स्नेह उच्यते । अत एव त्रयः स्वस्वप्रकरणोक्तसाधनसहिता मार्गशब्देन व्यवह्रियन्त इति सोपाधिभक्तस्य तदपेक्षणं युक्तमेवेत्यर्थः । तस्मादस्ति ज्ञानस्वरूपे सर्वापेक्षेति सिद्धम् ॥ २५ ॥

रश्मिः ।

चित्तशुद्धिद्वारा पुरुषोत्तमज्ञाने यज्ञस्य कारणत्वं वक्तव्यम्, तथा च सर्वोत्तममार्गस्य कुतः शङ्काया मुक्तिरिति चेत् न । भक्त्यजनकत्वात् । तत्कथनस्येति ज्ञानभक्तिकथनस्य । भाष्ये । आत्यन्तिकेति 'सैवात्यन्तिकी या स्वतो रसभावं प्राप्ता सैव नान्यत्फलमङ्गीकारयति । अत्यन्तप्रेमोत्पत्तावेवं भवती'ति तृतीयस्यैकोनत्रिंशाध्याये 'सालोक्ये'ति श्लोकव्याख्याने । तथा चेति मुमुक्षुभक्तेतरभक्तसत्त्वे च । तस्य तस्येति । ज्ञानाधिकारिणः कर्माधिकारिणः भक्त्यधिकारिणश्च । तत एवेति ज्ञानात् कर्मणो भक्तेश्च साधनात् तयेति सर्वापेक्षेत्यर्थः । ज्ञानेति क्षराक्षरपुरुषोत्तमज्ञाने ॥ २५ ॥

**शमदमाद्युपेतः स्यात् तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात्॥२६॥**

ननु 'तस्मादेवंविच्छान्तो दान्त' इत्यादिना शमादेरेव ज्ञानसाधनत्वमुच्यते, न तु यज्ञादेरिति चेत्, तत्राह शमदमाद्युपेतो भक्तिमार्गेऽपि स्यादेव यद्यपि, तथापि तदङ्गतया 'आत्मन्येवात्मानं पश्ये'दिति ज्ञानमार्गीयज्ञानाङ्गतयैव शमादिविधेर्हेतोर्ज्ञानमार्गे तेषामवश्यानुष्ठेयत्वात् तथा विधिरित्यर्थः। भक्तिमार्गे स्वत एव शमादीनां सम्भवेऽप्यावश्यकत्वं न तेषामिति भावः॥ २६॥

---

भाष्यप्रकाशः।

**शमदमाद्युपेतः स्यात् तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात्॥ २६॥** सूत्रमवतारयन्ति नन्वित्यादि। 'तमेतं वेदानुवचनेने'ति श्रुतिलिङ्गाद्यभावेन विद्यास्तुत्यर्थं, यज्ञाद्यनुवादस्य शक्यवचनत्वात्। विद्यार्थिनः 'शान्तो दान्त' इति श्रुत्या शमादीनां साधनानां विशेषतो विधानात्, भक्तिमार्गेपि, 'ॐकारेणान्तरितं कृत्वा यो जपति गोविन्दस्य पञ्चपदं मनुं तस्यैवासौ दर्शयेदात्मरूप'मित्यादिश्रुतीनां तापिनीयेषु दर्शनाच्च तत्करणमेव युक्तम्, न तु यज्ञादिकरणमिति पूर्वोक्तहेतोर्बाधितत्वमित्याशङ्क्य तत्परिहारमाहेत्यर्थः। सूत्रं व्याकुर्वन्ति शमदमेत्यादि। तथा विधिरिति। साधनत्वेन विधानम्। तथा चानया श्रुत्या ज्ञानमार्गीयस्य साधनान्तरमधिकं विधीयते इति तेषामवश्यानुष्ठेयत्वम्। तत्र च न यज्ञादिकं निषिध्यत इति तेषामप्यनुष्ठेयत्वम्। यद्यपि तत्र लिङाद्यभावः, तथापि 'विविदिषन्ती'ति फलसंयोगस्यापूर्वत्वात्तत्र रात्रिसत्रवत् दिष्टाग्निहोत्रस्थे, 'उपरि हि देवेभ्यो धारयन्ती'ति वाक्ये समिद्धारणवच्च विधिः कल्पयितुं शक्यत इति तेषामपि हेतुत्वमदण्डवारितमिति न पूर्वोक्तहेतोर्बाधितत्वमित्यर्थः। एतेन भक्तिमार्गव्यवस्थाप्यर्थात् सिद्धेत्याहुः भक्तीत्यादि। 'भक्तिरस्य भजनं तदिहामुत्रोपाधिनैराश्ये-

रश्मिः।

**शमदमाद्युपेतः स्यात् तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात्॥ २६॥** लिङ्गादीति। (यद्यपि वेदानुवचनेनेत्यादितृतीयाश्रुतिर्वर्तते, तथापि स्तुतावप्यविरुद्धेति लिङ्गादीत्युक्तम्। आदिना वाक्यप्रकरणस्थानसमाख्याः। लिङ्गादिकं विविदिषावेदानुवचनादीनां कार्यकारणभावे बोध्यम्।) आदिना लेट् लोट् तव्यादिः। तत्प्रतिपाद्यविध्यभावे 'विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्यु'रिति सूत्रविषयत्वात् यत्र कुत्रत्यविद्यास्तुत्यर्थमित्यादिः। पञ्चपदमिति कृष्णायेत्येकं पदम्, गोविन्दायेति द्वितीयम्, गोपीजनेति तृतीयम्, वल्लभायेति तुरीयम्, स्वाहेति पञ्चममिति श्रुत्युक्तम्। ॐकारेणान्तरितम्, ॐ कृष्णाय ॐ गोविन्दाय ॐ गोपीजन ॐ वल्लभाय ॐ स्वाहेत्येवं कृत्वा। मनुं अवताररूपम्। तापिनीयं च तापिनीयं च तापिनीयं च तापिनीयानि तेषु। रामतापिनीयं नृसिंहतापिनीयं च। तत्करणं शमदमादिकरणं पूर्वोक्तहेतोरिति ज्ञानोत्पत्तिः सर्वापेक्षावती, यज्ञादिश्रुतेरित्यस्य बाधितत्वं पक्षेऽभावः। तत्परिहारमिति शमदमादेः परम्परया कारणत्वव्यवस्थापनात् यज्ञादिश्रुतेः पक्षे सद्भावस्थापनात् परिहारम्। अनयेति तस्मादेवंविदित्यनया। साधनान्तरं शमदमादिरूपम्। तत्र चेति 'तस्मादेवंवि'दिति श्रुतौ। फलेति। फलं ज्ञानेच्छा। विधिरिति। उपयन्तीत्यत्र लेडाश्रयणात् धारयन्तीत्यत्र च तथा। तेषामपीति वेदानुवचनादीनामपि। दण्डः श्रुतिविरोधः तेन वारितं दण्डवारितं न भवतीत्यर्थः। पूर्वोक्तेति। यज्ञादिश्रुतेरित्यस्य

## सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २७ ॥

ननु सत्त्वशोधकत्वेन यज्ञशमदमादेर्विधानमिति मतं नोपपद्यते। 'आहारशुद्धौ सत्त्वशुद्धि'रिति श्रुतेस्तद्विरुद्धा सर्वान्नभक्षणानुमतिरपि यतः श्रूयते छन्दोगानाम्। 'न ह वा एवंविदि किञ्चनानन्नं भवति'। तथा वाजसनेयिनां, 'न ह वा अस्यानन्नं जग्धं भवती'त्यादि। तस्मात् सत्त्वशुद्ध्यर्थं यज्ञादेर्न विधानमिति प्राप्ते विषयव्यवस्थामाह। आहारदौर्लभ्येन प्राणात्यय उपस्थिते प्राणधारणस्य ज्ञानाऽन्तरङ्गतमसाधनत्वेनाहारस्य देहपोषकत्वेन ततो बहिरङ्गत्वात् तदनुमतिः क्रियत इत्यर्थः। अत्र प्रमाणमाह तद्दर्शनादिति। 'चाक्रायणः किलर्षिरापद्गत इभ्येन सामिखादितान् कुल्माषांश्चखादे'त्यादिश्रुतिदर्शनादित्यर्थः।

भाष्यप्रकाशः।

नैवामुष्मिन् मनःकल्पन'मिति भक्तिलक्षणात्तादृश्यां सत्यां तन्मार्गे स्वत एव शमदमादीनां सम्भवान्न तेषामावश्यकतया विशेषतो विधानम्। अत एव तत्र 'एतदेव च नैष्कर्म्य'मिति सन्यासरूपत्वं श्रावितम्। तथा च ज्ञानेऽन्तरङ्गाणां शमादीनां बहिरङ्गाणां यज्ञादीनां चास्त्यपेक्षा। भक्तौ तु तेषामर्थात् सिद्धिरिति भेद इत्यर्थः ॥ २६ ॥

सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २७ ॥ अत्रैव किञ्चिदाशङ्क्य परिहरतीत्याशयेन सूत्रमवतारयन्ति नन्वित्यादि। तथा च यथा प्राणसंवादस्थश्रुतिभ्यामाहारशोधकश्रुत्युक्तमपोद्यते, तथा ताभ्यां शमयज्ञाद्यपवादोपि वक्तुं शक्यते। तस्मात् सत्त्वशुद्ध्यर्थं यज्ञशमदमादेर्न विधानम्, किन्त्वेतानि वाक्यानि विद्यास्तावकान्येवेति प्राप्ते, तानि न स्तावकानि, अपि तु विशेषविधानार्थान्येवेति हृदिकृत्य, अन्नभक्षणवाक्यव्यवस्थामाहेत्यर्थः। सूत्रं व्याकुर्वन्ति आहारेत्यादि। क्रियते इति। प्राणधारणार्थं क्रियते। तथा च सर्वान्नानुमतेर्ज्ञानान्तरङ्गसाधनार्थं

रश्मिः।

हेतोः। तत्रेति भक्तिमार्गे। सन्यासेति। 'काम्यानां कर्मणां न्यासं सन्न्यासं कवयो विदु'रिति गीतावाक्यात्। अन्तरिति लिङ्गदेहधर्मत्वात्तथा। बहिरिति यज्ञादीनां क्रियात्वेन देहधर्मत्वात्तथा। तेषामिति। शमदमादीनाम् ॥ २६ ॥

सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २७ ॥ परीति व्यासः परिहरति नन्वित्यादीति। छन्दोगानामिति। एवंविदीति ज्ञानिनि प्राणविदि। अनन्नमिति। अप्रशस्तम्। प्राणोपासकस्य यज्जन्तुमात्रस्य जग्धं भक्ष्यं तत्सर्वमनन्नं भवति, इह अदनीयमेव भवतीत्यर्थ इति भाष्यामृतवर्षणीकारः। विशेषेति। बहिरङ्गसाधनानुमतिरूपविशेषविधानार्थानि। तथान्तरङ्गशमदमादिविधानार्थानि। आहारेत्यादीति। ज्ञानान्तरिति। अन्तरङ्गतमसाधनत्वं मर्यादाभक्तेः भ्रमरगीतसुबोधिन्यामुक्तम्। तत इति प्राणधारणात्। चाक्रायण इति मटचीहतेषु कुरुष्वित्येतस्मिन् ब्राह्मणे चाक्रायणो नामतः किल ऋषिः कुरुदेशे दुर्भिक्षे जाते क्षुत्पीडितो देशान्तरमायतः कदाचिद्धस्तिपालकदेशं निविष्टः, तेन हस्तिपालकेन इभ्यपदवाच्येन सामि अर्धं भक्षितान् कुत्सितान्

यद्यपि ज्ञानसाधनत्वेन सत्त्वशुद्धेरपेक्षितत्वात् जाते ज्ञाने तत्साधनापेक्षणात् 'एवंविदी'ति वचनात् तादृशो सार्वदिक्यपि तदनुमतिर्नानुचिता। 'अपि स्मर्यते' इत्यनेनाविदुषोऽप्यनुमतेर्वक्ष्यमाणत्वाच्च। तथाप्याचार्येणावस्थाविशेषविषयकत्व-मुक्तं यत्, तेन ज्ञानिनोऽप्यनापदि विहितत्यागोऽविहितकरणं च चित्तमालिन्य-जननेन ज्ञानतिरोधायकमिति श्रुत्यभिमतमिति ज्ञाप्यते। अत एव श्रीभागवते द्वितीयस्कन्धे "विशुद्धं केवलं ज्ञानं प्रत्यक्सम्यगवस्थितम्। सत्यं पूर्णमनाद्यन्तं निर्गुणं नित्यमद्वयम्। ऋषे विदन्ति मुनयः प्रशान्तात्मेन्द्रियाशयाः। यदा तदेवासत्तर्कैस्तिरोभूयेत विप्लुत'मिति ब्रह्मणोक्तम्। 'ज्ञानिनामपि चेतांसि देवी भगवती हि सा। बलादाकृष्य मोहाय महामाया प्रयच्छति' इति मार्कण्डेयेनाप्यु-क्तम्। एषा ज्ञानमार्गीयज्ञानवतो व्यवस्थेति ज्ञेयम्। भक्तिमार्गीयस्यैवमापद्-सम्भवात्। 'अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते। तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यह'मिति भगवद्वाक्यात्। 'मामेव ये प्रपद्यन्ते मायामेतान्तरन्ति ते' इत्यत्रैवकारेण पुरुषोत्तमज्ञानवत एव मायातरणोक्तेरक्षरमात्रज्ञानवतां तथात्वमुचितम्॥ २७॥

---

भाष्यप्रकाशः।

व्यवस्थितत्वेनासार्वदिकत्वाच्च तया सार्वदिकानां सत्त्वशोधकसाधनानां ज्ञानमार्गे बाधः शक्यवचन इत्यर्थः। अत्र किञ्चिदाशङ्क्य परिहरन्ति यद्यपीत्यादि तथापीत्यादि च। ननु भवत्वेवं ज्ञानमार्गे, तथापि भक्तिमार्गे शमदमादीनां सत्त्वशोधकानां स्वभावतः प्राप्तत्वेन तदर्थकनिर्बन्धा-भावात्तस्यापदुपस्थितौ पूर्वोक्तानुमतेरपि तत्र वक्तुमशक्यत्वात्तस्य का गतिरित्यत आहुः भक्ति-मार्गीयस्यैवमिति। ननु यद्येवम्, तदा ज्ञानमार्गीयस्य कथमापत्तिरित्यत आहुः मामेवेत्यादि। तथा च मायातरणाभावादापत्तिमत्त्वमित्यर्थः॥ २७॥

रश्मिः।

माषान् भक्षितवान्। तेनोदपानं गृहाणेत्युक्ते सति, उच्छिष्टं न पीतं स्यादिति प्रतिषिध्य स्थिते चाक्रायणे, किमेते माषा उच्छिष्टा नेति हस्तिपकेनोक्ते सति, नेत्यत्र हेतुमाह चाक्रायणः। कुल्माष-भक्षणं चेदहं न कुर्याम्, तर्हि मे जीवनं न स्यात्, उदपानं तु तटाकादिषु स्वेच्छातो भविष्यतीति। एवमिभ्योच्छिष्टान् माषान् खादित्वा शिष्टान् जायायै ददौ, तया च भर्तुः स्वभावज्ञया निहितानु-त्तरादनेपि भक्षितवानिति श्रुतम्। ज्ञानान्तरङ्गेति। न च बहिरङ्गत्वमुक्तमिति कुतोऽन्तरङ्गत्वमिति वाच्यम्। अन्तरङ्गतमाद्बहिरङ्गमन्तरङ्गमित्यदोषात्। अत्रान्तरङ्गतमादीनां क्षराक्षरपुरुषोत्तमज्ञानैर्विवेको ज्ञेयः। भाष्ये चित्तमालिन्येति। 'यथा यथात्मा परिमृज्यत' इति वाक्यमनुसन्धेयम्। ऋष इति हे नारद। प्रयच्छतीति। चित्तमालिन्यजननेन ज्ञानतिरोधायको मोह इति। तमोरूपमायाकार्य-त्वात्। प्रकृतेति। तदर्थकेति। भक्त्यर्थकशमादिनिर्बन्धाभावात्। तस्य आपदुपस्थिताविति च्छेदः। तत्रेति। भक्तिमार्गे। तस्येति। भक्तिमार्गीयस्य। आपत्तिमत्त्वमिति। भाष्यीयस्य तथात्वमिति पदस्य विवरणमिदम्॥ २७॥

अबाधाच्च ॥ २८ ॥

आपदि तथान्नभक्षणेन चित्ताशुद्ध्यसम्भवेन तज्जनितप्रतिबन्धाभावाच्च न दोष इत्यर्थः ॥ २८ ॥

अपि स्मर्यते ॥ २९ ॥

आपद्यविदुषोपि दुष्टान्नभक्षणे पापाभावो यत्र स्मर्यते, तत्र विदुषि श्रुत्यनुमते का शङ्केत्यर्थः । स्मृतिस्तु 'जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा' इति । अथवा । विदुषो दुष्टकर्मासम्बन्धः, 'ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथे'ति स्मर्यतेऽपीत्यर्थः ॥ २९ ॥

शब्दश्चातोऽकामकारे ॥ ३० ॥

यतो ज्ञानाग्निरेव सर्वकर्मदहनसमर्थ इति फलदशायां कामकारेऽपि न दोषः, अत एव साधनदशायां तदभावेन 'तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षु'-रित्यादिरूपः शब्दः कामकारनिवर्तकः श्रूयत इत्यर्थः ॥ ३० ॥

इति तृतीयाध्याये चतुर्थपादे द्वितीयं सर्वापेक्षेत्यधिकरणम् ॥ २ ॥

विहितत्वाच्चाश्रमकर्मापि ॥ ३१ ॥ ( ३-४-३. )

एवं ज्ञानस्य कर्मनाशकत्वे सिद्धे जातज्ञानस्याश्रमकर्म कर्तव्यं न वेति चिन्त्यते । तत्र फलस्य जातत्वात् कृतस्यापि नाश्यत्वेनाप्रयोजकत्वान्न कर्तव्यमिति पूर्वः पक्षः । तत्र सिद्धान्तमाह ।

यथा ज्ञानिनामप्यनापदि शिष्टानामेवान्नं भक्षणीयम्, विहितत्वात्, तथा

---

भाष्यप्रकाशः ।

अबाधाच्च ॥ २८ ॥ अपि स्मर्यते ॥ २९ ॥ शब्दश्चातोऽकामकारे ॥ ३० ॥

एतत्सूत्रत्रयभाष्यमतिरोहितार्थम् ।

अन्ये तु, 'सर्वान्नानुमति'रित्यादिसूत्रचतुष्टयात्मकमधिकरणान्तरमङ्गीकृत्य, किमत्र विद्यावतः सर्वान्नभक्षणं विधीयते, उत विद्यास्तुत्यर्थं कीर्त्यत इति संशये, न द्वयमपि, किन्तु प्राणरक्षार्थमनुज्ञामात्रम् । अतोऽर्थवाद एवेति सिद्धान्तयन्ति । तदप्यविरुद्धम् ॥ ३० ॥

इति द्वितीयं सर्वापेक्षेत्यधिकरणम् ॥ २ ॥

विहितत्वाच्चाश्रमकर्मापि ॥ ३१ ॥ अधिकरणप्रयोजनं पूर्वपक्षादिकं चाहुः एवं ज्ञानस्येत्यादि । सूत्रव्याख्यानं तु स्फुटम् ॥ ३१ ॥

रश्मिः ।

अबाधाच्च ॥ २८ ॥ अपि स्मर्यते ॥ २९ ॥ शब्दश्चातोऽकामकारे ॥ ३० ॥ तदभावेनेति ज्ञानाग्न्यभावेन । अतिर इति । एवमतिरोहितार्थमित्यर्थः ॥ ३० ॥

इति द्वितीयं सर्वापेक्षेत्यधिकरणम् ॥ २ ॥

विहितत्वाच्चाश्रमकर्मापि ॥३१॥ एवं ज्ञानस्येत्यादीति । 'ज्ञानाग्निः सर्वकर्माणी'त्युक्तदिशा । 'अविद्यायामन्तरे वर्तमाना' इति मुण्डके कर्माविद्येत्यन्ये व्याकुर्वन्ति स्म । कृतस्येति कर्मणः । विहितत्वेति 'ब्रह्मचर्यं समाप्य गृही भवेत्, गृहाद्वनी भूत्वा प्रव्रजे'दित्यनया एकादशे

आश्रमकर्मापि कर्तव्यमेव, नित्यं विहितत्वादित्यर्थः। यथाऽनापद्यशिष्टान्नभक्षणं दोषाय, निषिद्धत्वात्, एतच्चोपपादितं 'सर्वान्नानुमति'रित्यत्र, तथा नित्यत्यागोऽपि प्रत्यवायजनक इति तत् कर्तव्यमेवेति भावः॥ ३१॥

यच्चोक्तं कृतस्यापि नाश्यत्वेनाप्रयोजकत्वान्न कर्तव्यमिति तत्राह।

सहकारित्वेन च॥ ३२॥

शमदमादीनामन्तरङ्गसाधनानां सहकारीण्याश्रमकर्माणीत्येतद्रहितैः शमादिभिरपि ज्ञानं न स्थिरीकर्तुं शक्यमिति तानि कर्तव्यान्येवेत्यर्थः। संसारवासनाजनकत्वस्वभावो यः कर्मणां स ज्ञानेन नाश्यत इति न सहकारित्वेऽनुपपत्तिः काचिदिति भावः॥ ३२॥

एवं ज्ञानमार्गीयज्ञानस्थैर्यसाधनमुक्त्वा भक्तिमार्गीयसाधनानां भगवच्छ्रवणादीनामित आधिक्यमावश्यकतां चाह।

सर्वथापि त एवोभयलिङ्गात्॥ ३३॥

भगवच्छ्रवणकीर्तनादयः साधनान्तरवद्विहितत्वेन कर्तव्या एव यद्यपि, तथापि सर्वथापि अन्येषां युगपदुपस्थितौ तदनुरोधमकृत्वापि त एव भगवद्धर्मा

---

भाष्यप्रकाशः।

सहकारित्वेन च॥ ३२॥ ननु गीतास्मृतौ ज्ञानस्य सर्वकर्मनाशकत्वमुक्तम्, जातज्ञानस्य च ज्ञानं वर्तत इति तेन कर्मनाशे कथं तेषां सहकारित्वं युज्यत इत्याशङ्कायामाहुः संसारेत्यादि। तथा च स्मृतावेधोऽग्निदृष्टान्तस्योक्तत्वात् यथाग्निरेधांसि दहँस्तेषां धूमादिजनकं स्वभावं नाशयति, स्वस्थितिपर्यन्तमङ्गाररूपेण स्थापयति च तत्स्वरूपम्, तद्वदत्रापि स्वान्तर्गतमेव कर्मस्वरूपं कृत्वा स्थापयतीति न सहकारित्वेऽनुपपत्तिरित्यर्थः॥ ३२॥

सर्वथापि त एवोभयलिङ्गात्॥ ३३॥ पूर्वं सर्वापेक्षासूत्रे सर्वपदेन कर्मज्ञानभक्तीनां सङ्गृहीतत्वात्तेषु कर्मणामङ्गाङ्गतयैव सङ्ग्रहः, मुख्यतया तु ज्ञानभक्त्योरिति पूर्वं प्रथमकक्षाविश्रान्तज्ञानमार्गीयज्ञानस्थैर्यप्रकारं दर्शयित्वा अधुना भक्तिमार्गीयाणां तं दर्शयतीत्याशयेन सूत्रमवतारयन्ति एवमित्यादि। आहेति। शारीरब्राह्मणस्थश्रुतिविचारेण श्रीभागवतगीतावाक्यविचारेण चाहेत्यर्थः। सूत्रं व्याकुर्वन्ति भगवदित्यादि। अन्येषामिति। आश्रमधर्माणाम्। ननु तच्छब्दस्य पूर्वपरामर्शित्वात् पूर्वं चाश्रमधर्माणां शमादीनां चोक्तत्वात्तान् विहायात्र तच्छब्देन भगवद्धर्मा एव कथं

रश्मिः।

सप्तदशाष्टादशाध्यायीयाभ्यां च विहितत्वात्। प्रत्यवायेति। 'सप्तहात् शूद्रतां व्रजे'दिति सप्तदिनानि सन्ध्यावन्दने अकृते प्रत्यवायो यथा। एवं स्फुटमित्यर्थः॥ ३१॥

सहकारित्वेन च॥ ३२॥ तेषामिति। एधसां काष्ठानाम्। तद्वदिति ज्ञानं कर्मणां संसारवासनाजनकत्वस्वभावं नाशयित्वा ज्ञानस्थितिपर्यन्तं स्वस्य ज्ञानस्यान्तर्गतं कृत्वा॥ ३२॥

सर्वथापि त एवोभयलिङ्गात्॥ ३३॥ शारीरेति। भाष्य एवाग्रे वक्तव्यानि।

एव कर्तव्या इत्यर्थः । कुतः । श्रुतिलिङ्गात् स्मृतिलिङ्गाच्च । श्रुतिलिङ्गं तु 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः । नानुध्यायाद् बहून् शब्दान् वाचो विग्लापनं हि त'दिति । 'तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतु'रित्यपि । अत्रैवकारेण भगवदतिरिक्तं प्रतिषिद्ध्य तद्विषयकज्ञानानुकूलं प्रयत्नं श्रवणात्मकं विज्ञायेति विधाय स्मरणमपि तन्मात्रविषयकमेव 'प्रज्ञां कुर्वीते'ति वचनेन विधाय तदेकनिष्ठताहेतुभूतानामेव शब्दानामावर्तनमर्थानुसन्धानमपि कर्तव्यम्, नान्येषामिति 'नानुध्यायाद् बहू'नित्यनेनोक्तवती । अत्र 'अन्वि'त्युपसर्गेण ध्यानस्य पश्चाद्भावित्वमुच्यते । तेन योग्यतया श्रवणकीर्तने एव तत्पूर्वभाविनी प्राप्येते । स्मृतिस्तु 'शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः स्मरन्ति नन्दन्ति तवेहितं जनाः । त एव पश्यन्त्यचिरेण तावकं भवप्रवा-

भाष्यप्रकाशः ।

गृह्यन्त इत्याशङ्कायां हेतुव्याख्यानेन तामपि निरस्यन्ति श्रुतिलिङ्गं तु 'तमेव धीर' इत्यादि । तथा च पूर्वं सूत्रेषु शमादीनां यज्ञादीनां च शारीरब्राह्मणस्थानामेव परामृष्टत्वादत्रापि तत्रत्यमेव साधनं परामृश्यते । तत्र च पूर्वं 'तमेव धीर' इति वाक्यमेवोक्तम् । ततो वेदानुवचनवाक्यम् । ततः शान्तदान्तवाक्यम् । अतः सूत्रस्थेन तच्छब्देन श्रुतिस्थं यत्पूर्वम्, तदेव परामृश्यते । श्रुतावेषां पूर्वमुक्तत्वेपि यदेषां पश्चाद्विचारणम्, तदेकादशस्कन्धे भगवता 'ज्ञानं कर्म च भक्तिश्चे'ति पश्चादुक्तत्वात् । 'तमेवैक'मिति मुण्डकश्रुतिश्चासन्दिग्धतया सम्यङ् माहात्म्यस्फोरणाय पठ्यते । केन लिङ्गेनात्र भगवद्धर्मप्राप्तिरित्याकाङ्क्षायां इतरानुध्याननिषेधकवाक्यगतानूपसर्गस्य पश्चाद्भावित्वप्रकाशकत्वलिङ्गेन तत्पूर्वभाविनी श्रवणकीर्तने प्राप्येते । तेन तदनन्तरं तत्सारभूतशब्दार्थानुसन्धानमेव कार्यम्, न त्वन्येषां तदर्थमन्यानुवादकानामपीति बोध्यत इति न कोपि शङ्कालेशः । स्मृतिलिङ्गं वक्तुमाहुः स्मृतिस्त्वित्यादि । अत्रापि प्रथमवाक्ये फलश्रुतिलिङ्गेन तेषां करणं लभ्यते । एवं

रश्मिः ।

तामिति आशङ्काम् । पश्चाद्वीति अस्मिन्सूत्रे । पश्चादिति ज्ञानकर्मणी पूर्वसूत्रविचारिते इति ताभ्यां पश्चात् भक्तेरुक्तत्वात् । भाष्ये 'तमेवैक'मित्यत्राभिप्रायानुक्त्या । शारीरेत्यादि पूर्वमुक्तं साधयन्ति स्म तमेवैकमिति । माहात्म्येति । 'महात्मानस्तु मां पार्थे'ति वक्ष्यमाणवाक्ये महात्म्यावच्छिन्नोक्तेरुपष्टम्भ श्रुतावपि त एव सम्बोध्या इति भावः । यद्वा । आत्मानमिति पदादतनशीलस्य माहात्म्यं क्षराक्षरज्ञानेपि तत् ज्ञानमेवेति माहात्म्यं देवत्वम् । माहात्म्यं तमेवेत्यत्रैवोक्तमित्यतोऽग्रेतनभाष्यमित्याशयेन अत्रान्वित्युपसर्गेत्यादिभाष्यार्थमाहुः केनेति लिङ्गं शब्दस्य सामर्थ्यं तेन । भगवद्धर्मेति माहात्म्यप्राप्तिः । पश्चादिति । तच्छब्दार्थध्यानस्य स्मरणस्य भावनस्य कृष्णचिन्तनस्येति यावत् । 'तस्माच्छ्रीकृष्णमार्गस्थो विमुक्तः सर्वलोकतः । आत्मानन्दसमुद्रस्थं कृष्णमेव विचिन्तये'दिति वाक्यात् । तत्पूर्वेति निर्वाहकत्वेन भावेनापूर्वभाविनी । श्रवणादित्रिकस्य परस्परनिर्वाहकत्वमेकादशस्कन्धसुबोधिन्यां वर्तते । तेनेत्यादि भक्तेः कर्मज्ञानाभ्यां पश्चादस्मिन् सूत्र उक्तत्वेन । तदनन्तरमिति श्रवणकीर्तनानन्तरम् । शब्देति । अनुसंधानं भावना । न त्वन्येषामिति । 'वने वृन्दावने क्रीडन् गोपगोपीसुरैः सहे'ति उपनिषदुक्तोऽर्थः । तदर्थम् तदुपष्टम्भार्थम् । अन्येषां काव्यादीनां तत्राप्यन्येषां राज्ञामनुवादकानाम् । 'सर्वाः शरत्काव्यकथारसाश्रया' इति वाक्यात् । फलश्रुतीति पदाम्बुजदर्शनविषयिणीफलश्रुतिसामर्थ्येन । तेषामिति ।

होपरमं पदाऽम्बुज'मिति । 'महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः । भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् । सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः । नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासत' इति । एतेन भगवद्धर्माणामात्मधर्मत्वेनान्तरङ्गत्वादाश्रमकर्मणो देहधर्मत्वेन बहिरङ्गत्वात्तदविरोधेनैव तत् कर्तव्यमिति स्थितम् । अत एव भगवद्धर्मान्यधर्मं प्रतिषिद्ध्य तेषां सर्वेभ्य आधिक्यं ज्ञापयितुं 'स वा अयमात्मा सर्वस्य वशी'त्यादिना भगवन्माहात्म्यमुक्तम् ॥ ३३ ॥

## अनभिभवं च दर्शयति ॥ ३४ ॥

प्राधान्येन भगवद्धर्मा एव कर्तव्या इत्यत्रोपोद्बलकान्तरमनेन उच्यते । 'सर्वं पाप्मानं तरति, नैनं पाप्मा तरति, सर्वं पाप्मानं तपति, नैनं पाप्मा तपती'त्यादिना भगवद्धर्मानुरोधेनाश्रमकर्माकरणजदोषैरनभिभवं च श्रुतिर्दर्शयति, अतो भगवद्धर्मा एव सर्वेभ्य उत्तमानि साधनानीत्यर्थः ॥ ३४ ॥

## अन्तरा चापि तु तद्दृष्टेः ॥ ३५ ॥

भगवद्धर्मेभ्य आश्रमधर्मा हीना इत्यप्यल्पमुच्यते । अपि तु तस्मिन् पुरुषोत्तमे धर्मिण्येव दृष्टिस्तात्पर्यं यस्य पुंसस्तस्याश्रमधर्मा अन्तरा च फलसिद्धौ व्यवधानरूपाश्चेति श्रुतिर्दर्शयतीति पूर्वेण सम्बन्धः। अन्तराशब्दोऽत्राव्ययात्मको व्यवधानवाचकः । तथा च श्रुतिः 'एतद्ध स्म वै तत्पूर्वे ब्राह्मणा अनूचाना विद्वांसः

भाष्यप्रकाशः ।

गीतावाक्येपि ज्ञेयम् । सिद्धमाहुः एतेनेत्यादि । एतदुपष्टम्भाय प्रकृतश्रुतिस्थमेव लिङ्गं दर्शयन्ति अत एवेत्यादि। तथा चान्ते भगवन्माहात्म्योक्तिरपि भगवद्धर्माणामाधिक्ये तेषामवश्यकर्तव्यत्वे च लिङ्गमित्यर्थः । एतेन अस्मिन् सूत्रे त एवेत्यवधारणेन त्रयाणां युगपदुपस्थितौ भगवद्धर्मातिरिक्तान् आचार्यो निवर्तयतीति बोधितम् । एतदुपष्टम्भायैवाग्रिमा पञ्चसूत्रीति ॥ ३३ ॥

अनभिभवं च दर्शयति ॥ ३४ ॥ अत्र भाष्यमतिरोहितार्थम् । 'सर्वं पाप्मानं तरती'ति श्रुतिस्तु शारीरब्राह्मणस्था ॥ ३४ ॥

अन्तरा चापि तु तद्दृष्टेः ॥ ३५ ॥ व्यवधानवाचक इति । 'अन्तरेऽन्तरा, अन्तरेण च

रश्मिः ।

श्रवणकीर्तनादीनाम् ।एवं गीतेति । नवमाध्यायस्थं वाक्यम्, अत्रापि पदाम्बुजदर्शनं फलश्रुतिः । श्रीभागवतस्य गीताव्याख्यानत्वात् । यद्वा । नवमाध्यायस्थं व्यवहितम्, 'यान्ति मद्याजिनोपि मा'मिति वाक्योक्तं श्रीभागवतोक्तरूपम् । एतेनेत्यादीति । तदविरोधेनेति । अन्तरङ्गाविरोधेन । तत्कर्तव्यम् बहिरङ्गकर्तव्यम् । प्रकृतेति । 'तमेव धीर' इति श्रुतिस्थम् । अत एवेत्यादीति । अन्तरङ्गानुरोधेन बहिरङ्गस्य कर्तव्यत्वादेव । 'नानुध्याया'दित्यादिना भगवद्धर्मेभ्योऽन्यं बहूनां धर्मं निषिद्ध्य । माहात्म्यमुक्तमिति । देवत्वमुक्तम् । आचार्य इति व्यासः । आश्रमे आश्रमान्तरधर्मनिवर्तनवत् निवर्तयति ॥ ३३ ॥

अनभिभवं च दर्शयति ॥ ३४ ॥ सर्वमिति । अस्यां श्रुतौ । नैनमिति । पुरुषोत्तमविदमपीति तात्पर्यार्थः ॥ ३४ ॥

प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक' इति ऋणापाकरणहेतुत्वेन लौकिकोत्कर्षहेतुत्वेनापि प्रजाया अभीष्टत्वेपि तदुत्पादनव्यासङ्गेन भगवदानन्दानुभवेऽन्तरायो भविष्यतीति तद्दृष्ट्या तत्रोपेक्षां दर्शयति ॥ ३५ ॥

अपि स्मर्यते ॥ ३६ ॥

अपिशब्देनाश्रमधर्माणां तथात्वं किमु वाच्यम्, यतो ज्ञानतत्साधनवैराग्यादीनामप्यन्तरायरूपत्वं स्मर्यते । 'तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः । न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिहे'ति भगवद्वाक्यम् ॥ ३६ ॥

विशेषानुग्रहश्च ॥ ३७ ॥

स्मर्यत इति पूर्वेण सम्बन्धः । ज्ञानादेः सकाशाद्भक्तिमार्गे फलतोऽप्युत्कर्षमाह । ज्ञानादिसाधनवत्स्वनुग्रहो मुक्तिपर्यन्त एव, भक्तिमार्गे तु, 'अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विजे'त्यादिवाक्यैर्विशेषरूपो मुक्तादिभ्योपि भक्तानां व्यावर्तको भगवदनुग्रहः स्मर्यत इत्यर्थः ॥ ३७ ॥

गूढाभिसन्धिमुद्घाटयन् फलितमर्थमाह ।

अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३८ ॥

अत इति पूर्वोक्तश्रुतिस्मृतिपरामर्शः । तथा चेतरस्या मुक्तेरपि भक्तिमार्गीयतदीयत्वमेव ज्याय इत्यर्थः । अत्र हेत्वन्तरमाह लिङ्गाच्चेति । मुक्तानां तु मायाविनिर्मुक्तमात्मस्वरूपमेव, न तु देहेन्द्रियादिकमप्यस्ति, येन भजनानन्दानुभवः स्यात् । भक्तानां तु देहेन्द्रियादिकमपि मायातत्कार्यरहितत्वेनानन्दरूपत्वेन च भगवदुपयोग्यतोपि तत्तथेत्यर्थः । न हि मुक्तात्मनां कश्चन भगवदुपयोगोऽस्तीति

भाष्यप्रकाशः ।

मध्ये स्यु'रिति कोशात् । मध्यस्थितस्य च व्यवधायकत्वाद् व्यवधानवाचक इत्यर्थः । आश्रमकर्मणां कथं व्यवधायकत्वमित्याकाङ्क्षायां श्रुत्या तदुपपादयन्ति तथा चेत्यादि । इयमपि श्रुतिस्तत्रत्यैव ॥ ३५ ॥

अपि स्मर्यते ॥ ३६ ॥ विशेषानुग्रहश्च ॥ ३७ ॥ एतद्भाष्यमप्यतिरोहितार्थम् । अनुग्रहस्तु धर्मान्तरं कृपादयाद्यपरपर्यायम्, न तु फलदित्सा । 'यस्यानुग्रहमिच्छामी'ति वाक्यात् । अयमेव च पुष्टिशब्देनोच्यते । 'पोषणं तदनुग्रह' इति वाक्यात् । एतत् सर्वं मत्पितृचरणविरचिते पुष्टिप्रवाहमर्यादाख्यग्रन्थविवरणे प्रपञ्चितमिति नात्रोच्यते ॥ ३७ ॥

अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३८ ॥ मुक्तेरिति पञ्चमी अत्रेति । भक्तिमार्गीयभगवदीयत्वस्य मुक्तितोपि ज्यायस्त्वे । स्वरूपमेवेति । तिष्ठतीति शेषः । अतोपीति भगवदुपयोगिलिङ्गस्थूलशरीरद्वयात्मिकाया भजनानन्दानुभावकसामग्र्या आधिक्यादिति । एतेन 'सर्वेन्द्रियैस्तथा चान्तःकरणैरात्मनापि हि । ब्रह्मभावात्तु भक्तानां गृह एव विशिष्यत' इति निबन्धोक्तं

रश्मिः ।

अन्तरा चापि तु तद्दृष्टेः ॥ ३५ ॥ तत्रत्यैवेति । शारीरब्राह्मणस्यैव ॥ ३५ ॥

अपि स्मर्यते ॥ ३६ ॥ विशेषानुग्रहश्च ॥ ३७ ॥ अतस्त्वितरज्ज्यायो लिङ्गाच्च

भावः। तदुक्तं श्रीभागवते, 'न यत्र माया किमुताऽपरे हरेरनुव्रता यत्र सुरासुरार्चिता' इत्यादि, मुक्तोपसृप्यत्वं चोच्यते । अत एव सप्तमस्कन्धे 'देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिना'मित्युक्तम्। पुरवासित्वे देहादेरावश्यकत्वान्निषेधो जडात्मकानामेवेत्यवगम्यते। इतरज्याय इति पाठे तु पूर्वोक्ताश्रमकर्मपरामर्शोऽत इत्यनेन उक्तयोरेव वा । एतेन, 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते'तिश्रुत्युक्तफलवत्त्वं तस्य सूच्यते ॥ ३८ ॥

इति तृतीयाध्याये चतुर्थपादे तृतीयं विहितत्वाच्चाश्रमकर्मेत्यधिकरणम् ॥

---

भाष्यप्रकाशः।

सारितम्। ननु भगवदुपयोगित्वस्य कथं मुक्त्यपेक्षया भक्ताधिक्यलिङ्गत्वमित्यपेक्षायां तत्र प्रमाणमाहुः तदुक्तमित्यादि। एतद्वाक्ये मायासंसर्गरहिते स्थाने भगवदनुव्रतानां कथनाद्भगवतो मुक्तसेव्यत्वस्य पूर्वं भगवता सूत्रकारेण मुक्तोपसृप्यसूत्रे उक्तत्वाच्च तदेव प्रमाणमित्यर्थः। एतदुपोद्बलनाय निषेधमुखेनालौकिकदेहबोधकं वाक्यान्तरमाहुः अत एवेत्यादि। एवमेकपाठं व्याख्याय पाठान्तरं व्याकुर्वन्ति इतरदित्यादि। उक्तयोरिति। श्रुतिस्मृत्योः। अस्मिन् पक्षे इतरदितिपदेन भक्तिमार्गीयभगवदीयत्वं बोध्यम्। सिद्धमाहुः एतेनेत्यादि। तस्येति तादृशभगवदीयत्वस्य। एवं ज्ञानिधर्माणां शमादीनामाश्रमधर्माणां च विहितत्वेन तौल्यादवश्यकर्तव्यत्वे प्राप्तेऽप्यनभिभवादिपञ्चसूत्र्या भगवद्धर्माणामुत्कर्षप्रदर्शनेन, अन्येषामेतेषां च युगपदुपस्थितौ भक्तिमार्गीयेण पूर्वमेत एव कर्तव्या, गौणकाले त्वन्य इति निर्णीतम्। यद्यप्यतीतपादे, 'आदरादलोप' इत्यधिकरणे राजसभक्तानां कर्मासक्तिनिवृत्तयेऽयमर्थ उक्तः, तथाप्यत्र कर्मोपसंहारप्राकारदार्ढ्यार्थं पुनर्विशेषतो युक्तिपूर्वकं बोधित इति न पुनरुक्तिदोष इति ज्ञेयम्।

अन्ये तु 'सर्वथाऽपी'ति सूत्रद्वयमाश्रमकर्माधिकरणशेषत्वेनाङ्गीकृत्य त एवेत्यवधारणेनाश्रमरश्मिः।

॥ ३८ ॥ स्वरूपमेवेति। तेनात्मस्वरूपमित्यत्रात्मनः स्वरूपमित्यपि पाठः। आधिक्यादितीति आधिक्यादपि। 'इति प्रकरणे हेतौ प्रकारादिसमाप्तिष्वि'ति विश्वात्। भक्ताधिक्येति। ननु मुक्तिः फलम्, भक्तो फलभक्तिविशिष्ट इति मुक्त्यपेक्षया भक्ताधिक्यासिद्ध्या दूरं तल्लिङ्गत्वप्रश्न इति चेत्, न। 'अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तम' इत्यात्यन्तिकभक्तिलक्षणमुक्त्वा कार्यमाह 'सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत। दीयमानं न गृह्णन्ति विना मत्सेवनं जना' इत्यत्रैकत्वापेक्षया भगवत्सेवनस्याधिक्योक्तेः। पूर्वमिति द्वितीयाध्याये। निषेधेति 'देहेन्द्रियासुहीनाना' मित्येवं पूर्वोक्तस्य, भक्तानां तु देहेन्द्रियादिकमपीत्यस्य निषेधमुखेन निषेधोपायेन भगवदीयत्वस्य। तेन भगवदीयत्वं फलवदिति निष्पन्नम्। फलं किमित्युक्ते। साधनफलैकीकारेण। प्रकटसदंशसेवायां प्रकटानन्दांशत्वे भवति। सेवाविषयभगवद्रूपानन्देन वा। तदुक्तं 'तस्मात् सर्वं परित्यज्य निरुद्धैः सर्वदा गुणाः। सदानन्दपरैर्ज्ञेया सच्चिदानन्दता स्वत'इति निरोधलक्षणग्रन्थे। निरुद्धस्य जीवस्य सच्चिदानन्दता स्वत इति बोध्यम्। निरोधस्त्वात्यन्तिकभक्त्यात्मको भवत्येव। एतच्चेतः प्रेत्य फलम्। 'अस्माल्लोकात् प्रेत्ये'ति ब्रह्मवित्प्रपाठकश्रुतेः। भक्तिमार्गीयेणेति। पुंसा। आश्रमकर्मेति। इदमधिकरणं सूत्रचतुष्टयात्मकम्। तेनाश्रमकर्माधिकरणे शेषत्वेनाश्रमकर्माधिकरणशेषत्वेन। सप्तमी शौण्डैरित्यत्र सप्तमीति योगविभागात् समासः। त एवेति। सर्वथापि त एवेत्यत्र त एवेत्यवधारणेन। आश्रमेति। आश्रमधर्मातिरिक्तानि धर्मान्तराण्यमिहो-

भाष्यप्रकाशः ।

धर्मातिरिक्तधर्मान्तरनिवृत्तिमङ्गीकुर्वन्ति । यथा हि, 'मासमग्निहोत्रं जुहुती'ति कर्मान्तरमुपदिश्यते, तथा नात्र, किन्तु तान्येव वेदानुवचनादिपदैरनूद्य पृथक्संयोगो विधीयते तस्मादिति । तत्रैवं व्याख्याने सर्वथेति पदानर्थक्यम् । आश्रमधर्मपक्षे भेदशङ्काया एवानुदयादिति । अनभिभवसूत्रवैयर्थ्यं च ।

तथा, 'अन्तरा चापी'ति सूत्रचतुष्टयात्मकमधिकरणान्तरमङ्गीकृत्य तत्र विधुरादीनां द्रव्यादिसम्पद्रहितानां चान्यतमाश्रमप्रतिपत्तिहीनानां च विद्यायामधिकारोऽस्ति, न वेति संशये, रयिक्वाचक्नवीप्रभृतीनामपि ब्रह्मविस्वश्रुत्युपलब्धेः । संवर्तप्रभृतीनां च नग्नचर्यादियोगादनपेक्षिताश्रमकर्मणामपि महायोगित्वस्मरणात् । विधुरादीनामविरुद्धैः पुरुषमात्रसम्बन्धिभिर्धर्मविशेषैर्विद्यानुग्र-

रश्मिः ।

ग्रादीनि न भवन्ति । किन्तु सर्वथाप्याश्रमकर्मत्वपक्षे विद्यासहकारित्वपक्षे च त एवाग्निहोत्रादयोऽनुष्ठेयाः । त एवेत्यवधारयन् आचार्यः किं निवर्तयति । कर्मभेदाशङ्कामिति ब्रूमः । यथा कुण्डपायिनामयने'मासमग्निहोत्रं जुहोती'त्यत्र नित्याग्निहोत्रात् कर्मान्तरमुपदिश्यते नैवमिह कर्मभेदोस्तीत्यर्थः । कुतः । श्रुतिलिङ्गात्, स्मृतिलिङ्गाच्च । श्रुतिलिङ्गं तावत् 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ती'ति सिद्धवदुत्पन्नरूपाण्येव यज्ञादीनि विविदिषायां विनियुङ्क्ते । जुहुतीत्यादिवत् नापूर्वमेषां रूपमुत्पादयतीति । स्मृतिलिङ्गमपि 'अनाश्रितः कर्मफलं कार्यं कर्म करोति य' इति । एवं आश्रमधर्मातिरिक्तधर्मान्तरनिवृत्तिमङ्गीकुर्वन्तीत्यर्थः । कर्मान्तरमिति । पूर्वतन्त्रे चिन्तितं द्वितीयेऽध्याये । अत्र हि जुहुतीत्याख्यातस्य विधायकस्य प्रकृतिभूतस्य जुहोतेरर्थः अग्निहोत्रमिति युक्तः तस्य प्रसिद्धाग्निहोत्राद्भेदः । जुहोतेः साध्यहोमव्यक्तिवचनत्वेन सिद्धाग्निहोत्रपरामर्शानुपपत्तेः । अत एव तदेकार्थकाग्निहोत्रशब्दस्य न नित्याग्निहोत्रानुवादकत्वं व्यक्तिवचनादेव । एवं कर्मान्तरमुपदिश्यते । तथा नात्रेति अत्र प्रकृते तथा न यज्ञादेर्विधायकाख्यातः प्रकृत्यर्थः । विविदिषाया एव तदर्थत्वात् किन्तु तानीति । अग्निहोत्रादीनि । विविदिषन्तीति पृथग्विद्यासंयोगः । तस्मादाख्यातप्रकृत्यर्थमात्रार्थकैर्यज्ञादिशब्दैः प्रसिद्धस्य यज्ञादेरनुवादेन 'तमेत'मित्यत्र विद्यासंयोगमात्रमपूर्वं विधीयते इति न कर्मभेदः । तस्मादिति उभयलिङ्गात् । एवमिति सर्वथाप्याश्रमकर्मत्वपक्षे विद्यासहकारित्वपक्षे चेति । सर्वथापदव्याख्याने । अनुदयादिति अग्निहोत्रादेर्गृहस्थाश्रमधर्मत्वात् विद्यासहकारित्वमात्रपक्षे सर्वपदासङ्गतेः । अनभिभवेति । रागादिभिः क्लेशैरेष ह्यात्मानं न पश्यति यं ब्रह्मचर्येणानुविद्याश्रुतिर्ब्रह्मचर्यादेराश्रमकर्मणो मनःशुद्धिद्वारा ज्ञानसाधनत्वे आत्मानभिभवं लिङ्गं दर्शयतीति सूत्रार्थः । अत्राश्रमधर्मविचारः पूर्वसिद्ध इति तथा । विधुरेति अन्तराले वर्तमानो विधुरः । एतस्यैव प्रपञ्चः द्रव्यादीति । रयिक्केति । छान्दोग्ये 'जानश्रुतिर्ह पौत्रायण' इत्यारम्भके प्रपाठकेऽस्ति । वाचक्नवीति । वचक्नोरपत्यं स्त्री वा वाचक्नवी । वाचक्नवीत्यपि पठ्यते । ब्रह्मवित्त्वेति । 'रयिक्वेमानि षट्शतानि गवामयं निष्को अयं अश्वतरीरथोऽनु म एतां भगवोदेवताꣳशाधि वां देवतामुपास्सः' इति ब्रह्मवित्त्वश्रुतेरुपलब्धेः । वाचक्नवी स्त्रीत्वादनाश्रमी । अपि स्मर्यत इति सूत्रार्थमनुवदन्ति संवर्तेति । प्रभृतिशब्देनर्षभादयः । महेति इतिहासे तथा । विशेषानुग्रहश्चेति सूत्रार्थमनुवदन्ति स्म विधुरादीनामिति । अविरुद्धैरिति अविधुरादिभ्योऽविरुद्धैः । धर्मेति जपोपवासदेवताराधनादिभिः । तथा च स्मृतिः 'जप्येनैव तु संसिद्ध्येद् ब्राह्मणो नात्र संशयः । कुर्यादन्यन्न वाऽकुर्यात् मैत्रो ब्राह्मण उच्यते' इति । संशयद्वितीयकोटेः पूर्वपक्षत्वं

**तद्भूतस्य तु नाऽतद्भावो जैमिनिरपि नियमातद्रूपाभावेभ्यः ॥ ३९ ॥ (३-४-४)**

अथेदं विचार्यते । तदीयानामपि कदाचित् सायुज्यमस्ति, न वेति । तत्र भक्तिमार्गस्यापि साधनरूपत्वात् तस्य च मुक्तावेव पर्यवसानात् तदीयत्वस्य साधनावस्थायामुत्कृष्टावस्थारूपत्वात् तेषामपि मुक्तिरावश्यकी । तथा च फलतो न कश्चित् विशेष इति प्राप्ते, उच्यते तद्भूतस्येत्यादि । तुशब्देन मर्यादामार्गीयव्यवच्छेदः । अत्र विश्वासदार्ढ्यायाह । अन्यस्य का वार्ता, कर्ममात्रनिरूपकस्य जैमिनेरपि यदि कदाचिद्भगवत्कृपयायं भावो भवेत्, तदा तद्भूतस्य पुष्टिमार्गीयभगवद्भावं प्राप्तस्य तस्यापि नातद्भाव उक्तभावतिरोधानं न कदाचिदपीत्यर्थः । अत्र हेतूनाह नियमादीन् । तैत्तिरीयके, 'ते ते धामान्युष्मसी'ति मन्त्रे 'यत्र भूरिशृङ्गा अयासस्तदुरुगायस्य परमं पद'मित्युक्त्वा, तदनन्तरं तत्र कृतानि कर्माण्यपि, 'विष्णोः कर्माणि पश्यते'ति मन्त्रेण निरूप्य, पुनः पूर्वोक्तलीलास्थानं, 'तद्विष्णोः परमं पद'मिति पदेनानूद्य, तस्य नित्यत्वनिरू-

भाष्यप्रकाशः ।

हसरणाच्च । तेषामप्यस्त्यधिकार इति निर्णयमाहुः । अन्तरालवर्तित्वापेक्षया आश्रमित्वं ज्यायो विद्यासाधनमिति चाहुः । तत्रोदासीना वयम् ॥ ३८ ॥

इति तृतीयं विहितत्वाचाश्रमकर्मेत्यधिकरणम् ॥ ३ ॥

**तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः ॥ ३९ ॥** अधिकरणमवतारयन्ति अथेत्यादि । कदाचित् सायुज्यमस्ति, न वेति साधनभक्तिपरिपाकदशायामक्षरसायुज्यमस्ति न वेत्यर्थः । तस्य चेति । साधनस्य । सिद्धान्तं वक्तुं सूत्रं व्याकुर्वन्ति तुशब्देनेत्यादि । तेन 'नैकात्मतां मे स्पृहयन्ती'त्यादीनां भक्तमुक्तिबोधकानां वाक्यानां न विरोध इति बोधितम् । मर्यादासहितपुष्टौ फलस्य पुरुषोत्तमसायुज्य एव पर्यवसानादिति । यदि कदाचिदिति । अनेकजन्मसु विहितकर्मकरणेन भगवत्तोषे जाते । तन्नियम इति । सार्वदिकदर्शननियमः । पुष्टिमार्गीयभगवदीयत्वस्य मुक्तिफलरूपत्वे श्रुतिं दर्शयन्ति यदा सर्वे इत्यादि । इयं शारीरब्राह्मणस्था । तत्र अकामयमानं कर्तारमुपक्रम्य तादृशस्य प्राणानुत्क्रमणं 'ब्रह्मैव सन् ब्रह्माप्येती'ति ब्रह्मणि लयं चोक्त्वा लयस्वरूपं विवेक्तुं 'तदेष श्लोको भवती'ति प्रतिज्ञाय, 'यदा सर्वे' इति पठ्यते । तत्र सर्वकामप्रमोके अस्यामृतत्वभवनमुक्त्वा, 'अत्र' एतल्लोक एव, 'ब्रह्म समश्नुते' इत्यनेन 'सोऽश्नुते' इत्यत्रेव 'अश भोजने' इति धातोरेव विकरणपदव्यत्ययाभ्यां प्रयोगात्तस्यैवार्थो गृह्यत इति मुक्तस्य

रश्मिः ।

सूचयन्तो अन्येषामिति । इतरदिति सूत्रार्थमनुवदन्ति स्म । अन्तराल इति आश्रमाणामन्तराले । वर्तित्वापेक्षया आश्रमरहिततायां वर्तित्वापेक्षया । उदासीना इति । सारवद्विश्वतोमुखत्वात् सूत्राणामिति भावः ॥ ३८ ॥ इति तृतीयं विहितत्वाचाश्रमकर्मेत्यधिकरणम् ॥ ३ ॥

**तद्भूतस्य तु नाऽतद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः ॥ ३९ ॥** तेनेति ज्ञानमार्गीयमुक्तिनिषेधेन । न विरोध इति । भक्तिमार्गीयत्वादिति भावः । नैकात्मतामित्यत्रैकात्मताप्राप्तौ निषेध इति । भाष्ये । सूरिपदेनेति । पुरुषोत्तमज्ञानवद्वाचकपश्यतिपदसमभिव्याहृतेन । प्रकृते । उक्तेति आत्मकामेनोक्ता । विकरणेति अश्नातीत्यत्र तथा । स चेति भाष्यं

पणायोच्यते, 'सदा पश्यन्ति सूरय' इति । सूरयो विद्वांसः पुरुषोत्तमज्ञानवन्त इति यावत् । तच्च भक्तैवेति ग़रिपदेन भक्ता उच्यन्ते । तथा च भक्तानां सार्वदिकदर्शनं नियम्यते, 'सदे'ति पदेन । एवं सति पुष्टिमार्गीयभगवद्भावं प्राप्तस्य मुक्तावुच्यमानायां तन्नियमो भज्येतेत्यर्थः । यच्चोक्तं साधनावस्थायामुक्तमावस्थारूपत्वम्, परं तदीयत्वस्य फलं मुक्तिरेवेति तत्राह । अतद्रूपेति । उक्तभगवदीयत्वं न साधनरूपमपि तु मुक्तेरपि फलरूपम् । 'मुक्तानामपि सिद्धानां नारायणपरायणः । सुदुर्लभः प्रशान्तात्मा' इति वाक्यात् । 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत' इति श्रुत्या अमृतस्य मुक्तस्य ब्रह्मस्वरूपभोग उच्यते । स च, 'यमेवैष वृणुत' इति श्रुतेर्भगवदीयत्वसाध्य एवेति स्पष्टं फलत्वमस्यातोऽतद्रूपत्वम् । किञ्च । फलं हि साधनादुत्तमं भवति । भगवदीयत्वादुत्तमस्यार्थस्याभावादपि न मुक्तिर्वक्तुमुचिता । तदुक्तं श्रीभागवते पञ्चमस्कन्धे पूर्वं भक्तिस्वरूपं निरूप्य, 'तयैव परया निर्वृत्या ह्यपवर्गमात्यन्तिकं परमपुरुषार्थमपि स्वयमासादितं नो एवाद्रियन्ते भगवदीयत्वेनैव परिसमाप्तसर्वार्था' इति ॥ ३९ ॥

इति तृतीयाध्याये चतुर्थपादे चतुर्थं तद्भूतस्येत्यधिकरणम् ॥ ४ ॥

भाष्यप्रकाशः ।

ब्रह्मस्वरूपभोग एवात्रोच्यते । स च, 'यमेवे'ति श्रुत्यन्तरैकवाक्यतया तथावधार्यते इति मुक्तिफलरूपत्वान्न तस्य मुक्तिसाधनरूपत्वमित्यर्थः । तेन अतद्रूप इति भावप्रधानो निर्देश इति बोधितम् । न च 'सुषुप्त्युत्क्रान्त्योर्भेदेने'त्यत्रेयं वाजसनेयिश्रुतिः । 'अकामयमानस्ये'त्यारभ्या'त्र ब्रह्म समश्नुत' इत्यन्तं सुषुप्तिपरत्वेन भाष्य एव व्याख्यातेति कथमत्रैवमुच्यत इति शङ्क्यम् । याज्ञवल्क्येन श्लिष्टतया तत्र सुषुप्तिमोक्षावस्थे बोधिते इति बोधनार्थं तत्र तथा व्याख्यानम्, न तु सिद्धान्तबोधनायेति तत्रैव मया व्युत्पादितत्वादिति । शेषं स्फुटम् । यद्यप्यतीतपादे लिङ्गभूयस्त्वाधिकरणस्थे 'अनुबन्धादि'सूत्रेऽयमर्थो निर्णीतः, तथापि सर्वात्मभाववत एव निर्णीतः न तु पुष्टिमर्यादामार्गीयभगवद्भक्तस्यापीति न पुनरुक्तिरिति ज्ञेयम् ।

अन्ये तु, अत्र ऊर्ध्वरेत आश्रमात् कथमपि पुनराश्रमान्तरं भवति न वेति संशयेऽनेन सूत्रेण तद्भावः साध्यत इत्याहुः । तदस्माकमपि सम्मतम् ।

यत्तु जैमिनिपदमैकमत्यबोधनायेत्याहुः तत् तद्दर्शने तद्विचारादर्शनाच्छिष्यत्वेन तत्सम्मतिप्रदर्शनप्रयोजनाभावाच्चेति न रोचिष्णु ॥ ३९ ॥ इति चतुर्थं तद्भूतस्येत्यधिकरणम् ॥४॥

रश्मिः ।

विवृण्वन्ति स्म । स च यमेवेति । तथेति भाष्योक्तप्रकारेण । तस्येति । तदीयत्वस्य । तेनेति । अतद्रूपत्वमिति भाष्येण । अत्रैवमिति अस्मिन्नधिकरणे । एवं पुष्टिफलदत्वेन । श्लिष्टतयेति । मोक्षसुषुप्तिसुखयोः श्लिष्टं ब्रह्मपदं तया । बोधिते इति । स्फुटमिति । उत्तमस्येति । भगवदीयत्वफले वैराग्यजनकस्य । आत्यन्तिकमिति एतल्लक्षणमुक्तम् । एवं स्फुटमित्यर्थः । ऐकमत्ये विशेषावधानमाशङ्क्याहुः शिष्यत्वेनेति । नेति । विशेषावधानाभावान्न रोचिष्णु ॥ ३९ ॥

इति चतुर्थं तद्भूतस्येत्यधिकरणम् ॥ ४ ॥

न चाधिकारिकमपि पतनानुमानात् तदयोगात् ॥ ४० ॥ (३-४-५)

अथेदं विचार्यते । ध्रुवायेव ब्रह्मादिलोकाधिकारं दत्वा तत्सम्बन्धिफलं ददाति, न वेति । तत्र नेत्याह न चेति । तत्र हेतुः । पतनानुमानादिति । 'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुने'ति स्मृतेरित्यर्थः । फलस्य सावधित्वादिति भावः । किञ्च । तादृशे भगवदीये पतनायोगादपि न तथा । अथवा । तादृशस्य सदा भक्तिरसानुभवात्तदतिरिक्तस्यानपेक्षणादन्येषां फलानां सम्बन्धाभावादित्यर्थः ॥ ४० ॥

---

भाष्यप्रकाशः ।

न चाधिकारिकमपि पतनानुमानात् तदयोगात् ॥ ४० ॥ अधिकरणमवतारयन्ति अथेत्यादि । अथेदं विचार्यत इति पुष्टिमर्यादामार्गीयफलविचारोत्तरं मर्यादापुष्टस्य फलं विचार्यत इत्यर्थः । तत्सम्बन्धीति अधिकारसम्बन्धि । सिद्धान्तमाहुः तत्र नेत्यादि । ईदृशे सन्देहे 'ध्रुवायेव ददाती'ति पूर्वपक्षे नेत्याहेत्यर्थः । हेतुं व्याकुर्वन्ति आब्रह्मेत्यादि । सूत्रयोजना तु, आधिकारिकं फलम् चकारादधिकारमपि न, पुष्टिमार्गीयेभ्यो न ददात्येव । कुतः । पतनानुमानात् । अनुमीयते श्रुतिरनेनेत्यनुमानं स्मृतिः, पतनबोधकमनुमानं पतनानुमानं तस्मात् । शेषा तु स्फुटा । तर्हि, ध्रुवाय कथं दत्तवानिति तु न शङ्क्यम् । द्वितीयस्कन्धे, 'ते वै विदन्त्यतितरन्ति च योगमाया'मिति भगवद्योगमायाज्ञानरूपसाधनान्तरस्य ध्रुवे उक्तत्वेन, 'नैच्छन्मुक्तिपतेर्मुक्तिं पश्चात्तापमुपेयिवा'निति वाक्येन च तस्य मुमुक्षुतया मर्यादामार्गीयत्वावगमात् । ये पुनः पुष्टावङ्गीकृताः, तेषां तु मुक्तावप्याकाङ्क्षाराहित्यात्तामेव न ददातीति दूरापेतमाधिकारिकमित्यर्थः । किञ्च । तस्यापि तत्र मुक्तिरेव मायातरणरूपा फलत्वेनोच्यते, न तु भक्तिफलम्, अतो न दोषः । भक्तस्वरूपविचारेणार्थान्तरं तदयोगपदस्याहुः । अथवेत्यादि ॥ ४० ॥

रश्मिः ।

न चाधिकारिकमपि पतनानुमानात् तदयोगात् ॥ ४० ॥ तत्सम्बन्धीति । ततोऽपुनरावृत्त्यादि यावदधिकारम् । नेत्यस्यार्थः पुष्टिमार्गीयेभ्य इत्यादिः सम्प्रदानक्रियावधारणैः सह । श्रुतिरनेनेति । ऋषीणां श्रुत्युक्ताचारस्मरणात् स्मृतिरिति व्युत्पत्त्या स्मृतिमूलश्रुतिरनेनानुमानेन ज्ञाप्यतेऽनुमीयते वा । 'आब्रह्मे'ति स्मृतिः एतत्समानार्थकश्रुतिमूला, स्मृतित्वात् । 'आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः । प्रायश्चित्तं न पश्यामि येन शुध्येत् स आत्महे'ति स्मृतिवदिति । मध्यमपदलोपी समास इत्याहुः पतनेति । देवपूजको ब्राह्मणो देवब्राह्मण इतिवत् । शेषेति । तदयोगादित्यस्य योजना भाष्ये स्फुटेत्यर्थः । दत्तवानिति । अपुनरावृत्त्यादि यावदधिकारं दत्तवान् । उक्तत्वेनेति । ज्ञानवत्त्वात् । मुमुक्षुतायां हेतुः नैच्छन्निति । ध्रुवः मुक्तिपतेर्मुक्तिं नैच्छदित्यर्थः । तस्मात् सपत्न्या वा वाक्स्मरणात् । पश्चादितिपाठे स्मरणात् पश्चात् । तस्येति । ध्रुवस्य । तामिति । मुक्तिम् । तस्यापीति । ध्रुवस्यापि । न दोष इति । ध्रुवायापुनरावृत्त्यादिदानदोषो न । भाष्ये । पतनायोगादिति । भगवद्भावाच्युतिः पतनम् । अग्रिमसूत्रे वक्ष्यन्ति । फलानामिति । अधिकारसम्बन्धिफलानामपुनरावृत्त्यादीनाम् ॥ ४० ॥

उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम् ॥ ४१ ॥

एके भक्ता आधिकारिके फले पतनमात्रं न हेयत्वप्रयोजकमिति वदन्ति, अपि तु उपपूर्वं पतनमेव तदिति वदन्ति, भक्तिभावाच्युतेः । अधिकारसमाप्तौ भगवदनुग्रहाशापि कदाचित् सम्भवतीत्युपपतनं तत् । मुक्तौ त्वपुनरावृत्तेर्भक्तिरसाशापि नेति महापतनमेव सेति भावः । तेन निषिद्धकर्मफलतुल्यत्वं ज्ञापितं भवति । अत एव श्रीभागवते 'नारायणपरा लोके न कुतश्चन बिभ्यति । स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिन' इति गीयते । भक्तिमार्गे तु साक्षात्सङ्गाभावेपि तदीयं भावमात्रमप्यशनवत् साक्षाद्भगवत्स्वरूपभोगवदेव मन्यन्ते । तदुक्तं श्रीभागवते, 'अथ ह वा व तवे'त्यादिना । साक्षाद्भगवद्भोगो जीवस्यासम्भावित इति शङ्कानिरासायाह, तदुक्तमिति । 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते'ति, 'अत्र ब्रह्म समश्नुत' इत्यादिश्रुतिषु साक्षाद् ब्रह्मस्वरूपरसाशनमुक्तमित्यर्थः ॥ ४१ ॥

इति तृतीयाध्याये चतुर्थपादे पञ्चमं न चाधिकारिकमित्यधिकरणम् ॥ ५ ॥

बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४२ ॥ (३-४-६)

अथेदं चिन्त्यते । प्रचुरभगवद्भावमात्रवतः साक्षात् स्वरूपभोगवतो वा गृह-

---

भाष्यप्रकाशः ।

उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम् ॥ ४१ ॥ उक्तेऽर्थे हेत्वन्तरमाहेत्याशयेन सूत्रं व्याकुर्वन्ति, एक इत्यादि । 'अथ ह वा वे'ति । इदं गद्यं षष्ठस्कन्धे नवमाध्याये 'अथ ह वा व तव महिमामृतरससमुद्रविप्रुषा सकृदवलीढया स्वमनसि निष्यन्दमानानवरतसुखेन विस्मृतदृष्टश्रुतविषयसुखलेशाभासाः परमभागवता एकान्तिनो भगवति सर्वभूतसुहृदि सर्वात्मनि नितरां निरन्तरनिर्वृतमनसः कथमु ह वा एते मधुमथन पुनः स्वार्थकुशला ह्यात्मप्रियसुहृदः साधवस्त्वच्चरणाम्बुजानुसेवां विसृजन्ति, न यत्र पुनरयं संसारपर्यावर्त' इति । तथा च पूर्णानुग्रहभाजनानामेव भगवत्परायणत्वात् तेषामाधिकारिकं फलमधिकारं च तुच्छत्वान्न ददाति, किन्तु भगवल्लोकेषु नित्यमक्षरात्मकं सेवानुरूपं देहमन्तर्भजनानन्दानुभवं च ददातीत्येतादृशं मर्यादापुष्टानां फलमिति सिद्धम् । एतेन भक्तिमार्गे मध्यमजघन्याधिकारिणोरपि ज्ञानफलतः फलोत्कर्षाद्भक्तिमार्ग उत्कृष्ट इत्यपि सिद्धम् ॥ ४१ ॥

इति पञ्चमं न चाधिकारिकमित्यधिकरणम् ॥ ५ ॥

बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४२ ॥ अधिकरणप्रयोजनमाहुः अथेदमि-

रश्मिः ।

उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम् ॥ ४१ ॥ उक्तेऽर्थे इति लोकाधिकारसम्बन्धिफलं न ददातीत्युक्तेऽर्थे । भाष्ये । सोऽश्नुत इति श्रुत्योरर्थः पूर्वमुक्तः ॥ ४१ ॥

इति पञ्चमं न चाधिकारिकमित्यधिकरणम् ॥ ५ ॥

बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४२ ॥ ननु सन्न्यासस्य प्रसिद्धत्वात् किमनेनाधिकरणेनेत्यत आहुः अधिकरणेति । प्रयोजनमिति आरुण्युपनिषदि 'आरुणिः प्रजापतेर्लोकं

त्यागः कर्तव्यो न वेति, फलस्य सिद्धत्वान्नेति पक्षव्यवच्छेदाय, 'मद्वार्तायातयामानां न बन्धाय गृहा मता' इति वाक्याद् बन्धकत्वेन त्याज्य इति पक्षव्यवच्छेदाय च तुशब्दः भावमात्रे साक्षात्प्रभुसम्बन्धे वा, उभयथापि गृहाद्बहिर्गमनं गृहत्याग इति यावत्। स आवश्यकः। तत्र प्रमाणमाह स्मृतेरित्यादि। 'त्वं तु सर्वं परित्यज्य स्नेहं स्वजनबन्धुषु। मय्यावेश्य मनः सम्यक् समदृग्विचरस्व गा'मित्यादिस्मृतिर्भगवद्भावतस्तत्सङ्गविशिष्टस्यापि बहिर्गमनमाह। तदाचारोपि तथैव श्रूयते, अतस्तथा।

अत्रायमाशयः। आश्रमधर्मत्वेन गृहत्यागो 'यदहरेवे'त्यादिश्रुतिभ्यः पूर्वमुपपादितोपि यदधुना पुनरुच्यते, तेन तदतिरिक्तोऽयमिति ज्ञायते। तथा चोक्तवाक्यान्मुमुक्षुमुक्तिप्रतिबन्धकत्वाभावेपि व्यासङ्गस्य तत्रावश्यकत्वादुक्तोभयोरप्यनवरतं प्रभुरसास्वादे प्रतिबन्धकत्वेन तस्य तत्त्यागस्य विप्रयोगरसानुभावकत्वेन च स कर्तव्यः। यद्यपि स्वेष्टान्तरायत्वेन स्वत एव तत्त्यागो भावी, तथापि'आश्रमादाश्रमं गच्छे'दितिवाक्यादत्राश्रमान्तरत्वाभावेन त्यागस्याविहितत्वशङ्काभावायेयमुक्तिरिति ॥ ४२ ॥

---

भाष्यप्रकाशः।

त्यादि। अथ भक्तिमार्गीयमध्यमजघन्ययोः फलविचारोत्तरं मध्यमस्य त्यागरूपं साधनं चिन्त्यत इत्यर्थः। मध्यमत्वं विशदयन्तः संशयादिकमाहुः प्रभुरित्यादि। अत्राधिकारिद्वयस्योक्तत्वाद्विविधपूर्वपक्षव्यवच्छेदार्थस्तुशब्द इत्याशयेनाहुः फलस्येत्यादि मद्वार्तेत्यादि च।

अतस्तथेति उक्तप्रमाणप्राप्तत्वात्त्यागः कर्तव्य इत्यर्थः। उद्धवस्य मध्यमाधिकारित्वं तु 'उद्धवादिमध्यमभावबोधकाय नम' इति नामावल्यां स्फुटम्। पुनरुक्तिपरिहाराय तदाशयमाहुः, अत्रेत्यादि। पूर्वमिति ऊर्ध्वरेतःसूत्रे। उक्तवाक्यादिति। 'मद्वार्तायातयामाना'मिति वाक्यात्। तस्येति गृहस्य। इयमुक्तिरिति अनेन सूत्रेणानुज्ञा। तथा चाश्रमान्तररूपत्वाभावेन स्मृत्यन्तरोक्तत्वाभावेपि एकादशस्कन्धेऽष्टादशाध्याये 'यदा कर्मविपाकेषु लोकेषु निरयात्मसु। विरागो जायते सम्यङ् न्यस्ताग्निः प्रव्रजेत्तत' इत्यादिषोडशभिः श्लोकैस्त्रिदण्डं सन्यासमुक्त्वा, ततो, 'ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वानपेक्षकः। सलिङ्गानाश्रमांस्त्यक्त्वा

रश्मिः।

चरेदविधिगोचरः' इत्यादिना अलिङ्गं निष्ठासंन्यासमुक्तम्। उद्धवस्यापि पुरा 'अहं त्वां सर्वतो वक्ष्ये' इत्यादिना 'ज्ञानविज्ञाननिष्ठस्य' इत्यादिषु सुव्यक्तमेव। मुक्तिरीयं मुक्त्वा त्रिदण्डीभूत्वा, तां त्यक्त्वा बदरिकाश्रमं जगाम, तं गत्वोवाच भगवन् केन कर्माण्यशेषतो विसृजानी'ति प्रश्ने 'दण्डमाच्छादनं कौपीनं परिग्रहेत् शेषं विसृजेच्छेषं विसृजेदि'त्युत्तरम्। सन्यासोपनिषदि च, 'गर्भवासभयाद् भीतः शीतोष्णाभ्यां तथैव च। गुहां प्रवेष्टुमिच्छामि परं पदमनामय'मिति'सन्यासाग्नीन् न पुनरावर्तये'दित्युक्तम्। तज्ज्ञानमार्गे ज्ञानकाण्डत्वात्। भक्तिमार्गे तु तन्मध्ये भगवतोक्तं नारदं प्रति। नारदस्य भक्तत्वात्। तदुक्तं 'यच्चित्तं तत्सदा मय्येवावतिष्ठते तस्मादहं च तस्मिन्नेवावस्थीय' इति भगवता नारदं प्रत्युक्तं परमहंसोपनिषदि। तथा च ज्ञानमार्गीयसन्यासस्य प्रसिद्धत्वेपि भक्तिमार्गीयमोक्षसन्यासनिरूपणं प्रयोजनमित्यर्थः। यद्यपि गीतोक्तचतुर्थपञ्चमाध्याययोरप्येवं निरूपयितुं शक्यम्, तथापि ज्ञानमार्गीयत्वात् तद्विहायाष्टादशाध्यायोक्तः सङ्गृहीतः, भक्तिमार्गीयत्वात्। अधिकारद्वयस्येति प्रभुरित्यादिभाष्यो-

## स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४३ ॥

पुष्टिमार्गीयभक्तस्य विहितत्वादिज्ञानमप्रयोजकम् । तत्र हेतुः । तस्य भक्तिमार्गस्वामिनः श्रीगोकुलेशादेव फलस्य श्रुतेः । अतो बहिर्गमनं न साधनत्वेनात्र कार्यमिति भावः । अत्र, 'यमेवैष वृणुत' इति श्रुतिरनुसन्धेया । एतदनुपदमेव पठ्यते 'नायमात्मा बलहीनेन लभ्य' इति । अत्र भगवद्वरणानन्तरमपि जीवबलं कतमं, यदपेक्ष्य भगवल्लाभ इति जिज्ञासायां सर्वात्मभाव एव बलमिति निर्णीयते । तस्यैव मर्यादाबलोपमर्दकत्वाद्भगवद्वशीकारहेतुत्वाच्च । व्रजसीमन्तिनीनां प्रभुवचनातिक्रममपि कृत्वा स्वरूपपरिग्रहस्तद्बलेनैव यत इत्यात्रेय आचार्यो मनुते ।

---

भाष्यप्रकाशः ।

चरेदविधिगोचर' इत्यादिभिरेकादशभिर्ज्ञाननिष्ठस्य भक्तस्य च तदतिरिक्तः सन्न्यास उक्तः । तद्बोधनायेदं कथनमित्यर्थः । एतस्य प्रपञ्चः सन्न्यासनिर्णयग्रन्थादवगन्तव्यः ॥ ४२ ॥

स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४३ ॥ ननु भक्तिमार्गीयत्यागो मध्यमस्य कर्तव्यत्वेनोक्त इत्याकाङ्क्षायामिदं सूत्रं प्रवृत्त इत्याशयेन व्याकुर्वन्ति पुष्टीत्यादि । विहितत्वादिति विहितत्वेन ज्ञानम् । तथात्वेन फलसाधकत्वज्ञानं च । साधनत्वेनेति फलप्राप्तिसाधनत्वेन । अत्रेति 'स्वामिन एव फल'मित्यस्मिन्नर्थे 'नायमात्मा बलहीनेने'ति वाक्यार्थस्य गुणोपसंहारपाद एव विचारितत्वात्तद्विचारोऽत्र न क्रियते । तस्यैव मर्यादेत्यादि । 'धर्मः सत्यदयोपेतो विद्या वा तपसान्विता । मद्भक्त्यापेतमात्मानं न सम्यक् प्रपुनाति ही'ति । 'न साधयति मां योगो न साङ्ख्यं धर्म उद्धव। न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिते'त्येका-

रश्मिः ।

क्तस्य गताधिकरणान्त्योक्तश्रुतिद्वयार्थस्य । विविधपूर्वेति भाष्योक्तविविधपूर्वपक्षव्यवच्छेदार्थः । भाष्ये । त्वं त्विति हे उद्धव त्वम् । तदाचार इति उद्धवाचारः । श्रूयत इति एकादशस्कन्धे श्रूयते । तथेति बहिर्गमनम् । पुनरुक्तीति ऊर्ध्वरेतःसूत्र उक्तो गृहत्यागः पुनरत्रोच्यते इति पुनरुक्तिः, तस्याः परिहाराय । अत्रेत्यादीति । उक्तोभयोरिति । साक्षात् स्वरूपभोगवत्प्रचुरभगवद्भावमात्रवतोः । प्रभुरसास्वादे प्रतिबन्धकत्वेनेति । तत्तु क्व भगवान् मिलिष्यतीति पर्यटनोक्तेः, 'क इत्था वेद यत्र स' इति श्रुत्या स्थानज्ञानाभावोक्तेश्च । किञ्च, 'भक्त्याहमेकया ग्राह्य' इति वाक्याद्भक्त्यैकग्राह्ये पूर्णभक्तिग्राह्यत्वाद्विप्रयोगरसानुभावकत्वेन । तदतिरिक्तेति । तदुक्तं परमहंसोपनिषदि चतुर्थाश्रमधर्मत्वेन गृहत्यागमुक्त्वोच्यते, अयं न मुख्योऽस्ति, कोऽयं मुख्य इति चेत्, अयं मुख्यः 'न दण्डं न शिखां न यज्ञोपवीतं नाच्छादनं चरति परमहंसः न शीतं न चोष्णं न सुखं न दुःखं न मानापमाने चे'ति । चरत्याचरति । 'न दण्डमाचरति दण्डाभावनिष्ठाचारानुकूलव्यापारवानिति बोधः । यज्ञोपवीताभावः दण्डवेष्टनाभावस्तन्निष्ठाचारानुकूलव्यापारवानिति बोधः । एवमन्यत्र ॥ ४२ ॥

स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४३ ॥ प्रकटार्थमिति । एतदनुपदमिति एतत्पदं स्वामितिपदम् । 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वा'मिति श्रुतिः । कतममिति । बल इति पुंस्त्वस्मरणादिति भावः । उभयलिङ्गं बलपदम्, न क्लीलिङ्गम् ।

इदमत्राभिप्रेतम् । सर्वात्मभावस्य यद् बलम्, तत्तदात्मकस्य प्रभोरेव, तस्य चायं स्वभावो यदन्यन्न रोचते । अत एव व्रजपरिवृढवदनेन्दुवचनकिरणप्रचारप्रोच्छलत्केवलभावाम्भोधिवचनवीचयो गीयन्ते 'यर्ह्यम्बुजाक्ष तव पादतलमस्पृक्ष्म तत्प्रभृति नान्यसमक्षं स्थातुं पारयाम' इत्यादयः । अतस्त्यागः पृष्ठलग्न एवायातीति न तदर्थं यतनीयमिति । विष्ण्ववतारत्वेन पुरुषोत्तमभावस्वरूपज्ञोऽयमिति तथा ॥ ४३ ॥

आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥ ४४ ॥

सर्वत्यागपूर्वकं यद् बहिः प्रभुसमीपगमनं भक्तस्य तद् आर्त्विज्यमृत्विक्कर्मैवेत्यौडुलोमिराचार्यो मन्यते ।

---

भाष्यप्रकाशः ।

दशमस्कन्धीयवाक्याभ्यां तथात्वादित्यर्थः । तदात्मकस्येति सर्वात्मभावात्मकस्य । अन्यदिति भगवदतिरिक्तम् । सिद्धमाहुरत इत्यादि । तथा चोत्तमस्य स्वत एव गृहत्यागः सम्भवतीत्यतो नोक्त इत्यर्थः । नन्वात्रेयस्य कथमेवं भक्तिमार्गीयभावस्वरूपज्ञानं येन गृहत्यागयत्नं निषेधतीत्यत आहुः विष्ण्ववतारेत्यादि । 'अत्रेरपत्यमभिकाङ्क्षत आह तुष्टो दत्तो मयाहमिति यद्भगवान् स दत्त' इति द्वितीयस्कन्धवाक्यादवतारत्वेन तथेत्यर्थः ॥ ४३ ॥

रश्मिः ।

सर्वात्मभाव एव बलमिति बलं भक्तिरिति भाष्ये, भक्तिः सर्वात्मभाव इति भावः । तथा च श्रुतौ बलहीनेन सर्वात्मभावहीनेन । मुख्ये कार्यप्रत्ययात् । सर्वात्मभावलिङ्गं च 'तपसो वाप्यलिङ्गा'दिति । तपो विरहतापः, विरह एव सर्वात्मभावस्य सम्यग् ज्ञानात् सर्वात्मभावलिङ्गमिन्नात् । प्रभुवचनेति । अत्रायं भावः । गुरुवाक्योल्लङ्घनं महापराध इति प्रभुवचनातिक्रमत्वेन स्वरूपपरिग्रहत्वेन कार्यकारणभाव उक्तः, स न मुख्यः, किं तु तद्बलेनैवेति भाष्येण प्रभुवचनातिक्रमयोगव्यवच्छेदपूर्वकसर्वात्मभावबलेनेत्युक्तत्वात् सर्वात्मभावत्वेन स्वरूपपरिग्रहत्वेन कार्यकारणभाव इति । एवं च प्रभुवचनातिक्रमस्य स्वरूपपरिग्रहकारणत्वं सर्वात्मभाववत्कृतस्यैव । तथापि कथमिति चेत् । न । 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणे'त्यत्र तासां स्वातन्त्र्यम्, ब्रह्मणो गौणत्वमिति । ब्रह्मणो गौणत्वेप्यतिक्रमः कथमिति चेत्, 'दुर्लभो दुर्घटश्चैव युष्माकं सुमनोरथ' इति भगवद्वाक्यगतदुःखांशत्वात् । तेन स्वरूपं विद्वन्मण्डननित्यलीलावादस्थबृहद्वामनपुराणोक्तं गोपीजनवल्लभं तस्य परिग्रह एतादृगतो न गुर्विच्छया कृतो गुरुवाक्यातिक्रमो नापराधः लीलान्तःपातात् । भाष्ये । व्रजेति व्रजस्य परिवृढः प्रभुः । प्रभौ परिवृढः इति पाणिनीयसूत्रात् । तस्य वदनं परमैश्वर्ययुक्तं तस्य वचनानि 'स्वागतं वो महाभागा' इत्यादीनि तेषां किरणाः वचनानां वीचित्वात्, तेषां प्रचारः प्रचरणं तत्र पुष्टिमार्गीयाणामनुग्रहजन्यमिति अनुग्रहजप्रचारेण तद्व्यापारभूतेन प्रोच्छलन् श्रुतिरूपाणां सुधाजन्यज्ञानाधिकभावं कुर्वन् केवलभावाम्भोधिः साधनरहितपुष्टिभावाम्भोधिर्यासां ता व्रजपरिवृढवदनेन्दुवचनकिरणप्रचारप्रोच्छलत्केवलभावाम्भोधयः । तासां वचनानि 'मैवं विभोर्हति भवान् गदितुं नृशंसं सन्त्यज्य सर्वविषयांस्तव पादमूलं प्राप्ता' इत्यादीनि । तान्येव वीचयस्तरङ्गाः । पृष्ठलग्न इति पृष्ठे प्रस्वेदादिना लग्नः पदार्थः । तदर्थं त्यागार्थम् । प्रकृते तथेति भगवद्भावज्ञ आत्रेयः । विष्णोः पुराणे ब्रह्मसमानधर्मवत्त्वोक्तेः ॥ ४३ ॥

तस्यायमभिसन्धिः । यजमानो हि स्वेष्टसिद्ध्यर्थमृत्विज आदौ वृणुते । प्रकृते च, 'यमेवैष वृणुत' इति श्रुतेः 'तस्मादेकाकी न रमत' इति श्रुतेश्च स्वक्रीडार्थं भगवान् स्वचिकीर्षिततत्तल्लीलानुरूपान् जीवान् वृणुते । 'यूनः स्थविरान् वे'ति विकल्पादेकरूपाणां यथा सोमादिषु वरणम्, तथा सर्वात्मभाववत्त्वेनैकरूपाणामेवात्र वरणम् । तत्र यथा स्वीयस्वीयतदङ्गमात्रकरणं तेषाम्, तथेतरसम्बन्धनिवर्तनपूर्वकं तद्भोग्यसमर्पकत्वमत्र । तदुक्तं भगवता 'यदा पुमाँस्त्यक्तसमस्तकर्मा निवेदितात्मा विचिकीर्षितो म' इति । अत्र पूर्वपदेनेतरसम्बन्धनिवर्तनोक्त्या सर्वात्मभाव उक्तो भवति । तदनन्तरमात्मनिवेदने सति तद्विषयकलीलाकरणेच्छाविषयः सम्भवति । अन्तरङ्गलीलाप्रवेशनमिच्छायां विशेषः । तस्मात् सुष्ठूक्तमार्त्विज्यमिति । एतेन, 'न ददाति न पचती'त्यादिश्रुतेर्यथा सोमादौ दीक्षितस्य तद्यागेतरधर्मनिवृत्तिः, स एव परमो धर्मो यतः, तथा पुरुषोत्तमस्योक्तभक्तैः सह रमणमेव सार्वदिकम्, एतदेव च महन्महत्त्वमिति सूचितं भवति । प्रकृते भक्ता-

भाष्यप्रकाशः ।

आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥ ४४ ॥ औडुलोम्याशयमाहुः तस्यायमित्यादि । यूनः स्थविरान् वेति । सर्वान् यूनः सर्वान् स्थविरान् वा । तत्रेति सोमादियागे । अत्रेति भक्तिमार्गीयलीलायाम् । तत्र सम्मतिमाहुः । तदुक्तमित्यादि 'यदा पुमा'निति वाक्यमेकादशस्कन्धे ऊनत्रिंशाध्यायेऽस्ति । तद् व्याकुर्वन्ति अत्रेत्यादि । पूर्वपदेनेति 'त्यक्तसमस्तकर्मे'तिपदेनेतरसम्बन्धनिवर्तनोक्त्या भक्तिमार्गीयो विगाढभावैकदेशः सर्वात्मभाव उक्तो भवति । न चायं ज्ञानमार्गीय इति वक्तुं शक्यः । अग्रे निवेदितात्मपदात् । तदनन्तरमात्मनिवेदने सति विचिकीर्षितो, निवेदितात्मजीवविषयकलीलाकरणेच्छाविषयः, स निवेदितात्मा जीवो भवति, विचिकीर्षितपदे व्युपसर्गेण अन्तरङ्गलीलाप्रवेशनरूपो विशेष, इच्छायां बोध्यते । एतदुत्तरार्धे तु 'तदामृतत्वं प्रतिपद्यमानो मयात्मभूयाय च कल्पते वै' इत्यस्ति । तदर्थस्तु, यदैवं भवति, तदा अमृतत्वं ब्रह्मभावं वह्नययोगोलकन्यायेन प्रतिपद्यमानः सन् मया सह कल्पते, कामाशनसमर्थो भवति च पुनः आत्मभूयाय 'स्वरूपेणावतारेणे'ति न्यायेन मदात्मत्वाय कल्पत इति । क्वचित्तु, 'यदा पुमा'नित्यत्र 'मर्त्यो यदे'ति मूले पाठः, तदाऽप्यर्थे न कोपि विशेषः ।
तदेतत्सूत्रार्थत्वेन निगमयन्ति तस्मादित्यादि । आर्त्विज्यपदमेवं व्याख्याय तत्सूचितमर्थमाहुः एतेनेत्यादि । एतदेव च महत्त्वमिति । रमणे सार्वदिकत्वमेव च भक्तिमार्गे उत्कर्षः ।

रश्मिः ।

आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥ ४४ ॥ त्यक्तसमस्तेति । अभिधेयेति ज्ञेयम् । भक्तीति । कामशास्त्रीयसर्वात्मभावव्यावर्तकं विशेषणम् । विगाढेति । विगाढभावः 'ता नाविद'न्नितिश्लोकोक्तः तदेकदेशस्तच्चरमवृत्तिरूपः । उक्त इति तात्पर्यवृत्त्योक्तः । आत्मनिवेदन इति 'श्रवणं कीर्तनं विष्णो'रित्यस्मिन् श्लोके पाठक्रमेण कृतात्मनिवेदने । अन्तरङ्गेति भाष्यं विवृण्वन्ति स्म विचिकीर्षितपद इति । इच्छायामिति विषयसप्तम्या इच्छाविषय इत्यर्थः । स्वरूपेणेति अयं न्यायः । निगमयन्तीति । तस्मात्पर्वतो वह्निमान् इति निगमनं यथा तथा निगमयन्ति । आर्त्विज्यपदमिति । वेदान्ते लीलाधर्म आर्त्विज्यम् । ऋतौ यजतीति ऋत्विगिति सूत्रेण साधुः । भाष्ये । सोमादाविति । यागे तद्यागेतरधर्मा दानपचनादयः तेषां निवृत्तिः । एतदेव च महत्त्वमिति भाष्यप्रतीकम् । अत्र महन्महत्त्वमिति भाष्यपाठः । तत्र

मावृत्त्विक्त्वेन निरूपणे हेतुत्वेन तात्पर्यान्तरमप्याह। तस्मै यजमानारब्धकर्मसाङ्गत्वाय ऋत्विक् परिक्रीयते वरणेन स्वकार्यमात्रोपयोगित्वाय स्वीयः क्रियते, तथा प्रकृतेपि। न च 'कश्चित् कल्याण्यो दक्षिणा' इति प्रश्नवचनात्तदर्थैव तत्प्रवृत्तिः, अत्र तु स्वतः पुरुषार्थत्वेन भगवदर्था प्रवृत्तिः, अतो वैषम्यमिति वाच्यम्। नीरागस्यापि वरणसमये तत्प्रश्नस्यावश्यकत्वात्, तथैव दक्षिणादानमपि, अन्यथा निरङ्गत्वापत्तेः। प्रकृतेपि भक्तानां स्नेहादेव प्रवृत्तिर्भगवान् स्वानुभवार्थमेवताननुभावयतीति न वैषम्यम् ॥ ४४ ॥

## श्रुतेश्च ॥ ४५ ॥

आथर्वणोपनिषत्सु पठ्यते 'भक्तिरस्य भजनं तदिहामुत्रोपाधिनैराश्येनैवामुष्मिन् मनःकल्पनमेतदेव च नैष्कर्म्य'मिति।

भक्तिमार्गप्रचारैकहृदयो बादरायणः।
मानं भागवतं तत्र तेनैवं ज्ञेयमुत्तमैः ॥ ४५ ॥

इति तृतीयाध्याये चतुर्थपादे षष्ठं बहिस्तूभयथेत्यधिकरणम् ॥ ६ ॥

---

भाष्यप्रकाशः।

अवशेषं व्याकुर्वन्ति प्रकृत इत्यादि। तथा प्रकृत इति। चिकीर्षितलीलासाङ्गत्वाय तत्तद्भक्तवरणमित्यर्थः। स्मृतिषु याजनस्य वृत्तिमध्ये गणनादार्त्विज्ये स्वार्थमेव प्रवृत्तेर्भजनस्य च भगवद्धर्मत्वेन तदभावात् तद्वैषम्यमाशङ्क्य परिहरन्ति न चेत्यादि। नीरागस्येति याजनेन वृत्तिमनिच्छतः। आवश्यकत्वादिति वैधत्वेनावश्यकत्वात्। तथैवेति वैधत्वेन। अनुभावयतीति लीला अनुभावयति। तथा च यथा तत्र वैधत्वमेव तादृशप्रश्नादिप्रवृत्तिप्रयोजकम्, एवमत्र निरुपधिस्नेहः, यथा तत्र तद्दानेन कर्मसाङ्गता, तथात्र स्वलीलानुभावनमतो न वैषम्यमित्यर्थः। तथा च भगवदिच्छायां सत्यामुत्तमस्य गृहत्यागः कर्तव्यः, अन्यथा तु न कर्तव्यः, यजमानाधीनर्त्विक्तुल्यस्य तादृशस्य केवलं प्रभ्वधीनत्वादिच्छा चानियता, अतो नोक्त इत्यौडुलोमेराशय इति बोध्यम् ॥ ४४ ॥

रश्मिः।

महत्त्वे महत्त्वपरिमाणं नास्तीति महत्पदं बाहुलकमित्याशयः। महतो महत्त्वं पूजकत्वं सन्माननमिति षष्ठीतत्पुरुषे तु न बाहुलकम्। वृत्तिमध्य इति अध्ययनाध्यापनदानप्रतिग्रहयजनयाजनब्राह्मणवृत्तय इति वृत्तिमध्य इत्युक्तम्। स्वार्थमेवेति। न च यजमानकर्मार्था प्रवृत्तिरिति वाच्यम्। याजनाय स्ववृत्तये प्रवृत्त्यङ्गीकारेण यजमानकर्मार्थत्वाभावात्। तदभावादिति स्वार्थत्वाभावात्। तद्वैषम्यं दृष्टान्तवैषम्यम्। न चेत्यादीति। कश्चित् 'कल्याण्यो दक्षिणा' इति याजने प्रश्नवचनात्। स्वार्थदक्षिणार्थैव तत्प्रवृत्तिः ऋत्विक्प्रवृत्तिः। अत्र तु दार्ष्टान्तिके तु। वैषम्यं दृष्टान्तवैषम्यम्। भाष्ये तत्प्रश्नस्येति। कल्याणदक्षिणाविषयकप्रश्नस्य। निरङ्गत्वेति यागस्येति बोध्यम्। प्रकृते। अनुभावयतीति ते लीला अनुभवन्ति तान् लीला अनुभावयतीति हेतुमण्णिच्। स्वलीलेति सप्रतियोगिनिःप्रतियोगिलीलयोर्मध्ये सप्रतियोगिस्वलीलानुभावनं तेन सप्रतियोगिलीलासाङ्गतेत्यर्थः। न वैषम्यं न दृष्टान्तवैषम्यम् ॥ ४४ ॥

भाष्यप्रकाशः।

श्रुतेश्च ॥ ४५ ॥ व्याकुर्वन्ति अथर्वणेत्यादि। तथा चात्र विहिताया भक्तेः सन्यासरूपताया उक्तत्वात् बुद्धिपूर्वकं तत्करणमावश्यकम्, न तु त्यागस्यापि, श्रुतौ तावन्मात्रस्यैव कथनादिति व्यासमतमित्यर्थः। तेनात्र भक्तिमार्गे साधनपरिपाकदशायां द्विविधः सन्यासः अत्यन्तसिद्धानां विगाढभावस्याभाव्यादेव प्राप्तः, यथा व्रजभक्तानामतः सोऽवैधः। तत्र ईषन्न्यूनानां तु विरहानुभवार्थं कर्तव्यः, यथा श्रीमदुद्धवानाम्। स वैधः। 'त्वं तु सर्वं परित्यज्ये'ति, 'मद्भक्तो वाऽनपेक्षकः, सलिङ्गानाश्रमाँस्त्यक्त्वा चरेदविधिगोचर' इत्यादिवाक्यतः प्राप्तत्वात्। द्वावप्येतौ नाश्रमरूपाविति तूपपादितम्, अतो न कोपि सन्देहः।

नन्वत्रान्यैः 'परामर्शो'दि सूत्रेष्वाश्रमरूपं सन्यासं विचार्य, 'अन्तरा चापी'ति सूत्रे विधुरादीनामपि तस्य कर्तव्यता विचारिता, महायोगिनां नग्नचर्यादिकं च। 'तद्भूताधिकरणे' च ऊर्ध्वरेतोभ्य आश्रमेभ्यः प्रच्युतभावश्च विचारितः, तन्मते चाश्रमात्मक एव सन्यासो विविदिषाविद्वद्दशाभेदेनेति तदेवात्र कुतो नाद्रियत इत्याकाङ्क्षायामाहुः भक्तीत्यादि। "अनर्थोपशमं साक्षाद् भक्तियोगमधोक्षजे। लोकस्याजानतो व्यासश्चक्रे सात्वतसंहिता'मिति श्रीभागवतवाक्याद्भागवतं पुराणमेव सर्वं तत्र व्यासस्य तादृशत्वे मानं प्रमितिजनकम्। तेन हेतुना उत्तमैर्भक्तावधिकारिभिरेवं ज्ञेयम्। यद्यपि प्रकारान्तरेण व्याख्यातृभिरुक्तैः सूत्रवर्णकैर्ज्ञानमार्गीयो द्विविधोपि सन्यासो व्याख्यातः, तथापि विविदिषायां कालदोषेणापचारदोषस्य तैरेव दर्शितत्वात्। आन्तरवैराग्याभावे बहिर्लिङ्गमात्रस्थापने च 'गृहस्थस्य क्रियात्यागो व्रतत्यागो बटोरपि। तपस्विनो ग्रामवासो भिक्षोरिन्द्रियलौल्यता। आश्रमापसदा ह्येते खल्वाश्रमविडम्बकाः। देवमायाविमूढाँस्तानुपेक्षेतानुकम्पये'ति सप्तमस्कन्धीयनारदवाक्ये 'मौनानीहानिलायामा दण्डा वाग्देहचेतसाम्। यस्यैते न भवन्त्यङ्ग वेणुभिर्न भवेद्यति'रित्येकादशीयभगवद्वाक्ये च तादृशस्य निन्दितत्वात्। विद्वद्दशायां चेदानीं दुर्घटत्वात् तदनादृत्य भक्तिमार्गीय एव साधनपरिपाकदशायां कर्तव्यो, न त्वन्यथापीत्यर्थः।

अन्ये तु, 'आत्रेया'दिसूत्रत्रये अङ्गोपासनानां यजमानकर्मत्वं वार्त्विककर्मत्वं वेति संशये, आत्रेयमते यजमानकर्मत्वम्, औडुलोमिमते ऋत्विक्कर्मत्वम्, तदेव च युक्तमिति व्यवस्थापयन्ति। तत्रोदासीना वयम्। अप्रासङ्गिकत्वेनारुच्यत्वादिति ॥ ४५ ॥

इति षष्ठं बहिस्तूभयथेत्यधिकरणम् ॥ ६ ॥

रश्मिः।

श्रुतेश्च ॥ ४५ ॥ भक्तिमार्गीयं दार्ष्टान्तिकमार्त्विज्यं श्रुतेश्च इत्यर्थः। उक्तत्वादिति नैष्कर्म्यपदेनोक्तत्वात्। निष्कर्मणः पुंसो भावो नैष्कर्म्यमिति व्युत्पत्तेः। बुद्धीति इहामुत्र फलभोगवैराग्यविषयिणी या बुद्धिस्तत्पूर्वकम्। तत्करणं सन्यासपूर्वकभक्तिकरणम्, न तु सन्यासमात्रकरणम्। 'कृष्णसेवा सदा कार्ये'त्यस्य व्याख्याने आवश्यकार्थयत्प्रत्ययोक्त्या तत्स्मारणायावश्यकमित्युक्तम्। प्रत्ययस्तु नैष्कर्म्यमित्यत्र भावे। साधनेति सा तु विपक्वकषायाणां व्यसनदशा, तस्याम्। विगाढेति 'ता नाविद'न्निति वाक्योक्तभावस्याभाव्यात्। अवैध इति स्वभावजे विधेरप्रयोजकत्वात्। पूर्वतन्त्रेप्येवम्। ईषदिति। मर्यादास्थानाम्। विरहानुभवार्थमिति। तेन पुष्टौ विरहोपि न तथा प्रयोजकः, स्वरूपबलेनैव मोचकत्वात्। विधी आहुः त्वं त्विति, मद्भक्तो वेति च। आद्ये विचरस्वेति विधिः। लोटा। द्वितीये चरेदिति। उपपादितमिति बहिस्तूभयथेति सूत्रभाष्यप्रकाश उपपादितम्। अपचार इति। क्रोधादिके ॥ ४५ ॥

इति षष्ठं बहिस्तूभयथेत्यधिकरणम् ॥ ६ ॥

**सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४६ ॥ (३-४-७)**

ननु 'यमेवे'ति श्रुतिः साधनान्तरनिषेधपूर्वकं वरणस्यैव साधनत्वमाह, 'तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वाऽऽत्मन्येवात्मानं पश्ये'दिति श्रुतिः साधनान्तरमप्याह। एवं विरोधे श्रुतित्वाविशेषात् किमादरणीयम्, किं नेति संशये, साधनान्तरविधिरेवादरणीयः, अन्यथा शास्त्रवैयर्थ्यं स्यादिति प्राप्ते, उच्यते सहकार्यन्तरविधिरिति। मर्यादापुष्टिभेदेन वरणं द्विधोच्यते। तत्र सहकार्यन्तरविधिस्तु मर्यादापक्षेणोच्यते। पुष्टौ तु नान्यापेक्षेति न विरोधगन्धोपि। अपरं च। साधनं हि कायिकं वाचिकं मानसिकं च विधीयते, तत्र 'मनसैवाप्तव्य'मिति श्रुतेस्तृतीयं मुख्यम्। तदपि तावदेव मार्यादिकस्यापि विधेयत्वेन कर्तव्यम्, यावत्स्नेहो न भवति। यतस्तद्वतः स्नेहवतस्तूक्तं तृतीयं साधनमपि विध्यादिवत्। यथा तद्वतो विधिरर्थवादो वा प्रवृत्तावप्रयोजकः, तस्य स्वत एव सम्भवात्, तथा भगवत्प्राप्ताविदमित्यर्थः। कैमुतिकन्यायेन पूर्वयोरप्रयोजकत्वमेतच्छेषत्वादेवायास्यतीति तृतीयमेवोक्तम् ॥ ४६ ॥

इति तृतीयाध्याये चतुर्थपादे सप्तमं सहकार्यन्तराधिकरणम् ॥ ७ ॥

---

भाष्यप्रकाशः।

सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥४६॥ एवं भक्तिमार्गीयस्य गृहत्यागावश्यकत्वे साधिते तद्वत्साधनान्तरं शमादिरूपमप्यायातीति तद्व्यवस्थां बोधयितुमिदमधिकरणमित्याशयेन तदवतारयन्ति ननु यमेवेत्यादि। व्याकुर्वन्ति मर्यादेत्यादि। नान्यापेक्षेति 'नायमात्मा बलहीनेन लभ्य' इति श्रुत्युक्तादन्यस्यानपेक्षा। नन्वेतानि शमादीन्यन्तरङ्गाणि मानसानि साधनानि किमिति पाक्षिकाणि क्रियन्त इत्यत आहुः अपरं चेत्यादि। विधीयन्त इति 'तमेतं वेदानुवचनेन', 'शान्तो दान्त' इत्यादिवाक्यैर्विधीयन्ते। तृतीयमिति शान्तादिवाक्योक्तम्। विध्यादिवदिति विधिश्च तदादिश्च विध्यादी तद्वत्। प्रथमार्थे वतिः। तथा च पित्रादौ सहजस्नेहवतो यथा तत्सेवाविधिस्तत्फलबोधकोऽर्थवादो वा न तत्प्रवृत्तिप्रयोजकः, तस्य तत्र स्वत एव प्रवृत्तिसम्भवात्, तथा भगवत्प्राप्त्यर्थमिदं शमादिकं स्वभावादेव सम्भवतीति न तदर्थं वाक्यापेक्षा। अतो भक्तिदार्ढ्येच्छुं प्रत्येवेदं विधेयम्, न तु दृढभक्तिमन्तं प्रतीति तथेत्यर्थः। तेन पुष्टिमार्गे वरणमात्रमेव साधनम्, मर्यादामार्ग एव त्वन्याकाङ्क्षेति सिद्धम् ॥ ४६ ॥

इति सप्तमं सहकार्यन्तराधिकरणम् ॥ ७ ॥

रश्मिः।

सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४६ ॥ तदिति। अधिकरणम्। ननु'यमेवे'त्यादीति। विधिरेवादरणीय इति। पुंस्त्वं स्मार्तं। 'समाधिनानुस्मर तद्विचेष्टित'मिति। मर्यादेत्यादीति। सहकार्यन्तरेति भक्तावनुग्रहः कारणम्, सहकारीणि श्रवणादीनि। अन्यत्सहकारि सहकार्यन्तरं शमादि। अत्र सहकारिणां श्रवणादीनामपि मर्यादापक्षेण विधिः। सिद्धमाहुः अत इति पुष्टिमर्यादाभ्याम्। भक्तिबीजदार्ढ्येच्छवो मार्यादिकाः। भक्तिवर्धिन्यां भक्तिबीजमुक्तम्। इदमिति साधनजातम्। दृढभक्तीति। दृढबीजा भक्तिः तद्वन्तम्। तथेति। सहकार्यन्तरविधिस्तु मर्यादापक्षेणोच्यते। पुष्टौ तु नान्यापेक्षेति न विरोधगन्ध इत्यर्थः ॥ ४६ ॥

इति सप्तमं सहकार्यन्तराधिकरणम् ॥ ७ ॥

## कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४७ ॥ ( ३-४-८ )

ननु 'बहिस्तूभयथे'त्यादिना भगवदीयस्य गृहत्याग आवश्यक इति निरूपितम् ।

छान्दोग्ये तु 'आचार्यकुला'दित्युपक्रम्य, छान्दोग्योपनिषदन्ते 'आचार्यकुलाद्वेदमधीत्य गुरोः कर्मातिशेषेणातिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधदात्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्य अहिंसन् सर्वाणि

भाष्यप्रकाशः ।

कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४७ ॥ पूर्वाधिकरणोक्तं दृढीकर्तुं किञ्चिदाक्षिप्य समाधत्ते, इत्याशयेन सूत्रमवतारयन्ति ननु बहिरित्यादि । तात्पर्यमाहेति । उक्तश्रुतेस्तात्पर्यमाहेत्यर्थः ।

श्रुत्यर्थस्तु, आचार्यकुलाद् गुरुगृहाद्, गुर्वभावे तत्पत्न्यां तत्पुत्रे तद्गोत्रे वा ब्रह्मचर्यमिति ज्ञापयितुं कुलपदम् । वेदमधीत्य गुरोः कर्मातिशेषेण गुरोः सेवारूपं यत्कर्म तत् कृत्वा, ततोऽतिशेषोऽवशेषो यः कालस्तेन कालेन वेदाध्ययनं साङ्गं सरहस्यार्थज्ञानपुरःसरं कृत्वा, अभिसमावृत्य जिज्ञासाद्वयसमापनोत्तरमाचार्यकुलान्निवृत्य दारानाहृत्य कुटुम्बे स्थित्वा, गार्हस्थ्यविहिते कर्मणि तिष्ठन्, शुचौ देशे स्वाध्यायमधीयानो विविक्ते स्वाध्यायब्राह्मणोदितप्रकारे पवित्रे देशे यथावदासीन आवृत्तिमधीतस्य कुर्वन्, धार्मिकान् विदधत् पुत्रान् शिष्यांश्च शिक्षणेन धर्मशीलान् कुर्वन्, आत्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्य हार्देऽन्तर्यामिणि परे ब्रह्मणि बाह्याभ्यन्तरेन्द्रियाणि सम्यक् स्थापयित्वा, 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठती'ति न्यायेन तमेव शरणत्वेन ज्ञात्वा कर्माणि तत्र सन्न्यस्येति यावत् । अहिं-

रश्मिः ।

कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४७ ॥ पूर्वेति । बहिस्तूभयथेत्यधिकरणोक्तम् । साङ्गमित्यादि । 'साङ्गो वेदोऽध्येयो ज्ञेयश्चे'ति श्रुतेरुक्तम् । यद्वा । आचार्यपदादाचार्यलक्षणनिविष्टरहस्यतदङ्गेऽधीत्येतिशब्देनोपलक्ष्येते । जिज्ञासाद्वयार्थगमनरहितं समावर्तनमभिसमावर्तनम् । गार्हस्थ्यविहित इति कुटुम्बविशेषणम् । सम्प्रतिष्ठाप्येत्यत्र समुपसर्गार्थमाहुः हार्दे इति । जीव उपासनानिषेधान् मानसीन इत्युक्तम् । हार्दपदेन 'यो मनसि तिष्ठन् मनसोऽन्तरो यं मनो न वेद यस्य मनः शरीरं यो मनोऽन्तरो यमयति स त आत्मान्तर्याम्यमृत'इतिश्रुत्युक्तेऽन्तर्यामिणि । तत्रापि प्रत्येकपर्यवसितरूपव्यावृत्त्यर्थं ब्रह्मणीति तद्व्यावृत्त्यर्थं पर इति । अत्र हार्दे इति विशेष्यम् । इदं हार्दं प्रकटं बोध्यम् 'धार्मिकान् विदध'दित्युक्तत्वात् धर्मेण चित्तशुद्धौ भक्त्याविर्भावात् । सम्यगिति । निरोधलक्षणग्रन्थोक्तरीत्या । अनिरुद्धैस्तु सिद्धान्तमुक्तावल्युक्तरीत्या । तथा च श्रुतिः 'इन्द्रियाणि जुहोती'ति । गीतापि । यद्यप्येव मुख्यत्वात् तथापि निरोधस्य दानसाध्यत्वादाचार्यसन्दर्शितागमप्रकारेत्याहुः । ईश्वर इति । शरणत्वेनेति । 'शुद्धाश्च सुखिनश्चैव ब्रह्मविद्याविशारदाः । भगवद्भजने योग्या नान्य इत्यर्थतः फल'मिति प्रथमसुबोधिनीकारिकायां 'ब्रह्मविद्याविशारदा' इत्युक्तेरुक्तशमदमादिसूत्रोक्तशमदममुमुक्षावैराग्यप्राप्त्या मुमुक्षुकार्यं शरणगमनं श्रुतत्वादत्र

१. छान्दोग्य इत्यारभ्य इदं विषयवाक्यमिलन्तं श्रीहस्ताक्षरलिखितमूलपुस्तके नास्ति, तथापि प्रकाशकारैर्व्याख्यातत्वात्तुमकक्षेप्यावश्यं दृश्यमानत्वादत्र निवेशितम् ।

भूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते। न स पुनरावर्त्तते न स पुनरावर्त्तते'। इदं विषयवाक्यम्।

'ब्रह्मलोकमभिसम्पद्यत' इति गृहिणोपसंहारः कृतः। वाजसनेयिशाखायां चै 'तद्ध स्म वै तत्पूर्वे ब्राह्मणा अनूचाना विद्वांसः प्रजां न कामयन्त' इत्युपक्रम्य 'अथ भिक्षाचर्यं चरन्ती'ति पठ्यते। एवं सति विकल्पे सम्भवत्युपसंहृतस्य तात्पर्यग्राहकत्वाद् गृहिण एव यथोक्तकर्तुर्ब्रह्मसम्पत्तिरिति श्रुतेस्तात्पर्यम्। त्यागोक्तिस्तु ब्रह्मैतादृशं यदर्थं सर्वं त्यज्यत इति स्तुतिपरेति प्राप्ते, गृहिणोपसंहारे हेतुत्वेन तात्पर्यमाह कृत्स्नेति। त्यागे वाङ्मनसोरेव भगवति विनियोगः, न सर्वेन्द्रियाणाम्। गृहिणस्तु सर्वैः प्रकारैर्भजनं भवतीति, परिजनश्च कृतार्थो भवतीति च भजने

भाष्यप्रकाशः।

स्तन् सर्वाणि भूतान्यन्यत्र तीर्थेभ्यः, तीर्थानि शास्त्रादिष्टा भिक्षाद्युपायास्तेषु परपीडापि सम्भवति, यथा याज्ञवल्क्यस्य कुरुपाञ्चालस्थब्राह्मणैः सह चर्चायाम्, तदादिभ्यो भिक्षाटनाद्युपायेभ्योऽतिरिक्तस्थले हिंसां परपीडामकुर्वन्, स खल्वेवं वर्तयन् सोऽधिकारी उक्तेन प्रकारेण वर्तमानः पुत्रादिपरिजनमप्येवं वर्तयन् यावदायुषं यावज्जीवम्, ब्रह्मलोकमभिसम्पद्यते देहान्ते भगवल्लोकं प्राप्नोति। न च पुनरावर्तते। प्राप्तेर्जन्यत्वेन पुनरावृत्तिः शङ्क्येत। जन्यभावत्वेन नश्वरत्वेन लोके व्याप्तेः। तदभावायात्रावृत्तिर्निषिध्यते तेन लोकवैलक्षण्यं बोधितम्। पुनः कथनं समाप्तिद्योतनायेति बोध्यम्।

सूत्रं व्याकुर्वन्तः श्रुतितात्पर्यमाहुः त्याग इत्यादि। कृत्स्नेति। सर्वेषामान्तराणां बाह्यानां

रश्मिः।

प्राप्नोति। गोपालतापनीये 'मुमुक्षुर्वै शरणमनुव्रजे'दिति श्रुतिः। शमदमादिष्वेकस्य कार्यमुक्तम्। एकादशे 'मच्छरणो मुनि'रित्युपबृंहणात्। एवं श्रीमदाचार्यमार्गरीत्या ज्ञात्वा, कर्माणि सर्वेन्द्रियाण्यपि तत्र सन्न्यस्येति। भगवति सन्न्यस्य, तत्पराणि कृत्वा इति यावत्। द्वितीयविवरणे यावत्प्रयुक्तं कर्मणां तत्परत्वकरणमेकादशैकोनविंशाध्याये। षट्शास्त्रातिरिक्तस्य मुख्यत्वं यथा तथोक्तादितं भक्तिरत्नटीकायां मया। एवं चैकोनविंशे 'श्रद्धामृतकथायां म' इत्यादिना श्रद्धामन इति मनसस्तत्परकरणम्। एवमन्यदपि। परन्त्वेत'देवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम्। मयि सञ्जायते भक्ति'रिति तत्र वाक्यादार्थक्रमेण श्रुतात्मनिवेदनं शरणगमनानन्तरं प्राप्नोति। तत्तु 'श्रद्धामृतकथायां म' इत्यारभ्योक्तनवधाभक्त्यरतत्र सकलेन्द्रियपरता तद्द्वारा भगवति सर्वेन्द्रियाणि सम्प्रतिष्ठाप्य सन्न्यस्येति यावत्। सन्न्यस्येत्युक्त्या सन्न्यासो नैष्कर्म्यं 'इहामुत्रफलभोगनैराश्यं' कृत्वेत्युक्तम्। अत्र नैष्कर्म्यपदं इहामुत्रफलभोगनैराश्यकरणकमनःकल्पने उक्तम्। तदुक्तं भक्तिहंसे 'भक्तिमार्गः श्रवणादिसरनिरूप' इति। अन्यदूह्यम्। भिक्षादीति। आदिना निरोधलक्षणग्रन्थोक्तो निरोधः। 'तीर्थं नातः परात् पर'मिति तद्ग्रन्थवाक्यात्। वर्तयन्निति णिचं समर्थयन्ति स स इति। उक्तेनेत्यस्यार्थेन श्रुतानुक्तेन। पुत्रादीति। पुत्रादिपरिजनो वर्तमानस्तं पुत्रादिपरिजनं वर्तयन्। जन्यभावत्वेनेति। जन्यत्वेन नश्वरत्वेन व्याप्तौ घटोन्मज्जनापत्तिः। ध्वंसस्य जन्यत्वेन नश्वरत्वात्। इष्टे तु भावपदे ध्वंसस्याभावत्वेन नश्वरत्वाभावान्नोन्मज्जनापत्तिरिति। तदभावायेति। पुनरावृत्त्यभावाय। तेनेति। व्याप्तेर्लौकिकत्वेनापुनरावृत्तौ लोकवैलक्षण्यं बोधितम्, व्याप्तिविषयत्वात्। पुनः कथनमिति। 'न

कृतार्थता भवतीति तेनोपसंहारः कृत इत्यर्थः । अत एव 'आत्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्ये'त्युच्यते । अत्र, आत्मपदं भगवत्परमिति ज्ञेयम् । कर्ममार्गीयगृहि-व्यवच्छेदाय तुशब्दः ।

अत्रेदमाकूतम् । 'भक्तिमार्गो बहुविध' इति कपिलदेववाक्यात् केचन भक्ताः स्वगृहेष्वेव स्नेहेन भगवदाकारे विविधोपचारैः सेवां कुर्वन्तस्तयैव निर्वृत्या मुक्ति-मपि तुच्छां मन्यन्ते । तदुक्तं 'मधुद्विट्सेवानुरक्तमनसामभवोऽपि फल्गु'रिति । तेन भगवद्भजन एव, तत्रापि पुष्टिमार्ग एव, श्रुतेर्भर इति ज्ञायते । पूर्वमुत्कटभग-वद्भाववतां तदर्थं त्यागं निरूप्य, गृहिणोपसंहारतात्पर्यं पश्चाद् यन्निरूपितवान्, तेन तादृग्भाववतैव त्यागः कार्यः, तद्रहितेन तु गृह एवोक्तरीत्या प्रभुभजनं कार्यम्, तेनैव तल्लाभ इति व्यासहृदयमिति ज्ञायते । उक्तभावाभावे त्यागधर्मानिर्वाहा-दिति । केचन भक्ता भाषणादिलीलादर्शनं विना स्थातुमशक्ताः प्रचुरभावविव-शाशया गृहाँस्त्यक्त्वा वनं गच्छन्ति । आत्रेयौडुलोमिभ्यां तु भगवदवतारसाम-

भाष्यप्रकाशः ।

च सार्थक्यम् । तेनेति । गृहिणा । एवं तात्पर्ये गमकमाहुः अत एवेत्यादि । कर्ममार्गी-येति । जैमिनीयतन्त्रविचारितेत्यर्थः ।

ननु पूर्वाधिकरणे त्यागं निरूप्य, यदत्र गार्हस्थ्यं प्रशंसति, तत्किमित्याकाङ्क्षायामाहुः अत्रेदमित्यादि । भक्तिमार्गो बहुविध इति कपिलदेववाक्यादिति । 'भक्तियोगो बहु-विधो मार्गैर्भामिनि भाव्यते । स्वभावगुणमेदेन पुंसां भावो विभिद्यत' इति कपिलदेववाक्याद् - भक्तिमार्गो बहुविध इत्यन्वयः । तदुक्तमिति 'यो दुस्त्यजान् क्षितिसुतस्वजनार्थदारान् प्रार्थ्यां श्रियं सुरवरैः सदयावलोकाम् । नैच्छन्नृपस्तदुचितं महतां मधुद्विट्सेवानुरक्तमनसामभवोपि फल्गु'रिति पञ्चमस्कन्धे भवाटवीसमाप्तौ शुकेनोक्तम् । तथा च भरतस्य राजदशायां तथाभावस्योक्त-त्वादन्यस्यापि गृहिणस्तथाविधत्वे तथात्वमित्यर्थः । तेनेति गृहिणोपसंहारे आत्मनि सर्वे-न्द्रियसम्प्रतिष्ठापनादिकथनेन । श्रुतितात्पर्यं निरूप्य व्यासतात्पर्यं निरूपयन्ति पूर्वमित्यादि । तल्लाभ इति । भगवत्प्राप्तिः । उक्तभावाभावे त्यागधर्मानिर्वाहादिति । विगाढभावाभावे 'स द्रवावस्ता'दित्यादिनोक्तस्य सर्वत्र तद्भानरूपस्य त्यागधर्मस्य मध्ये विच्छेदेन सर्वदा स्थैर्या-

रश्मिः ।

च पुनरावर्तेत' इत्यस्य । जैमिनीयेति । पूर्वतन्त्रविचारितगृहिव्यवच्छेदाय । यथाहुः षष्ठाध्याये 'दम्पत्योः सहाधिकार' इति । पाठान्तरमाहुः भक्तियोगो बहुविध इति । भगवदाकार इति । भगवत्स्मरणं श्रेधा भवति, 'यमादिभिर्योगपथैरान्वीक्षिक्या च विद्यया । मदर्चोपासनाभिर्वा नान्यैर्योग्यं स्मरेन्मन' इत्येकादशे विंशाध्यायवाक्यात् । अत्र 'शङ्खचक्रे मृदा यस्तु कुर्यात् तप्तायसेन वा । स शूद्रवद्बहिष्कार्यः सर्वस्माद्द्विजकर्मण' इत्यत्र शङ्खचक्रनिषेधस्य तप्तायसे पर्यवसानवद् भगवत्स्म-रणस्य भगवदर्चोपासनायां पर्यवसानात् । तथात्वमिति । उक्तभाववत्त्वम् । गृहिणोपसंहार इति । गृहिणा विद्योपसंहारे । पूर्वमित्यादीति । बहिस्तूभयथेत्यधिकरणे । तदर्थमिति । भगवद-र्थम् । मर्यादां स्पष्टत्वात् त्यक्त्वा पुष्टिमाहुः । विप्लावेति । इदं लिङ्गभूयस्त्वाधिकरणे स्पष्टम् । त्यागधर्मस्येति । त्यागः सर्वात्मभाव इति श्रीहरिरायजितः । तस्य धर्मश्चरमवृत्तिस्तस्य ।

यिकभक्तदशोक्ता। एते सर्वे फलमार्गीयाः। वाजसनेय्युक्तास्तु साधनमार्गीया इति नानुपपत्तिः काचित्॥ ४७॥

मौनवदितरेषामप्युपदेशात्॥ ४८॥

किञ्च। सन्यासिन आवश्यका ये धर्मास्ततोऽधिकास्ते गृहिणः सिध्यन्ती-

भाष्यप्रकाशः।

भावात्। ननु यद्येवं दौर्लभ्यम्, तदा तत्कथनमशक्योपदेशरूपत्वादप्रयोजनकं, अतो न वक्तव्यमेवेति किमित्युक्तमत आहुः केचनेत्यादि। तथा च दौर्लभ्येपि तत्सत्तात्तीत्यतस्तदनुदितम्। अतस्तादृशाधिकारे भगवत्कृपया सम्पन्ने तत्कर्तव्यताबोधनार्थं तत्कथनमित्यर्थः। नन्वात्रेयौडुलोमिभ्यामेतादृशदशासम्पत्तौ गृहत्याग उच्यते, वाजसनेयके तु 'किं प्रजया करिष्यामो येषां नो एवायमात्मा नायं लोक' इति श्रावणादात्मलोककामनामात्रे बोध्येते इति ताभ्यामुक्तं श्रुतिविरुद्धम्, किञ्च, ये लीलादर्शनार्थं वनं गच्छन्ति, ते भगवदागमने पुनरायान्ति, न तु वन एव स्थित्वा सन्यासिधर्मानातिष्ठन्तीत्यतोपि तच्छ्रुतिविरुद्धम्, अतः कथं श्रौते विचार एवं तन्मतोपन्यास इत्यत आहुः। आत्रेयेत्यादि। एते सर्वे यदीया दशा ताभ्यामुक्ता, ते सर्वे भक्ताः फलमार्गीयाः, मार्ग उपायः। फलमेव मार्गो यत्रासौ मार्गः फलमार्गस्तत्सम्बन्धिनः। यथा गोपालतापनीयोक्ता गान्धर्वीप्रभृतयः। तथा च फलरूपो भगवानेव स्वस्वरूपं ताननुभावयतीति भगवत्कृपाविशिष्टयैवेच्छया तेषां सर्वेन्द्रियव्यापाराः। वाजसनेयिनां कहोडब्राह्मण उक्तास्तु साधनमार्गीयाः। साधनं शमादिविशिष्टं ज्ञानमेव मार्ग उपायः फलप्राप्तौ यत्रासौ साधनमार्गस्तत्सम्बन्धिन इति तत्तदधिकारिभेदेन तथा तथा कथनान्न पूर्वोक्ता श्रुतिविरोधरूपा काप्यनुपपत्तिरित्यर्थः॥ ४७॥

मौनवदितरेषामप्युपदेशात्॥ ४८॥ सूत्रमवतारयन्ति किञ्चेत्यादि। व्याकुर्वन्ति मौनपदमित्यादि। यद्यपि मुनेर्भावो मौनमिति योगेन विचारात्मकं ज्ञानमप्यादातुं शक्यते,

रश्मिः।

अतोऽवक्तव्यमिति। अतः अवक्तव्यमिति च्छेदः। आत्मेति। आत्मा च लोककामना चात्मलोककामने ते एवात्मलोककामनामात्रे बोध्येते। तन्मतेति। आत्रेयौडुलोमिमतोपन्यासः। फलसाधनयोः सामानाधिकरण्यमाहुः मार्ग उपाय इति। फलमार्ग इति। प्रमेयबलमिति यावत्। गान्धर्वीति। प्रभृतिपदेन व्रजस्त्रियः। 'तासां मध्ये श्रेष्ठा गान्धर्वी ह्युवाचे'ति श्रुतेः। एते प्रमेयबलेन मुक्ता इति प्रमेयबलरूपफलमार्गसम्बन्धिनः, तदाहुः तथा चेति। भगवानेवेति। फलमेव, एवकारेण तदतिरिक्तसाधनव्यवच्छेदः। भगवत्कृपेति। भगवदभिन्ना, फले साधनांश इति शेषः। कृपाविष्टः साधनमित्याचार्योक्तेः। भगवत्कृपाविशिष्टयेच्छयेति न समस्तं पदम्। इच्छायां कृपाविशिष्टत्वाभावात्। विशिष्टयेति। ब्रह्महृदं नीतानामपि सर्वेन्द्रियव्यापारा भवन्त्विति विशिष्टेच्छा तया। एवकारेण साधारणेच्छायोगव्यवच्छेदः क्रियते। भक्तमनोरथपूरकत्वेन रूपभेदात्। वाजसनेयीति भाष्यं विवृण्वन्ति स्म वाजसनेयिनामिति। साधनमित्यादि। 'ब्रह्मविदाप्नोति पर'मित्यत्र ब्रह्मविदित्यत्र ज्ञानम्। तत्सम्बन्धिन इति। प्रमाणबलिनः। पूर्वोक्तेति। सूत्रारम्भोक्ता। श्रुतिस्तु 'एतद्ध स्म वा' इति॥ ४७॥

मौनवदितरेषामप्युपदेशात्॥ ४८॥ रूढमिति। यौगिकमित्युक्ते विचारात्मकज्ञान-

त्यपि हेतोस्तेनोपसंहारः कृत इत्याशयेनाह मौनवदित्यादि । मौनपदमनीहानिलायामादित्रिदण्डिधर्मोपलक्षकम् । यथा वागिन्द्रियमात्रदेहमात्रचित्तमात्रनियामकास्ते धर्मा उक्ता न्यासिनः, तथेतरेषामपीन्द्रियनियामकानां धर्माणां 'आत्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्ये'ति श्रुत्या गृहिण उपदिश्यन्त इति युक्तो गृहिणोपसंहार इत्यर्थः । तत्र नियमनमात्रम्, अत्र तु भगवति विनियोगात् आधिक्यमिति भावः । वस्तुतस्तु केवलनियमनस्याप्रयोजकत्वात् तत्रापि भगवति विनियोग एव तात्पर्यमिति ज्ञेयम् ॥ ४८ ॥

अनाविष्कुर्वन्नन्वयात् ॥ ४९ ॥

ननु भगवति सर्वेन्द्रियविनियोगात् गृहिणोपसंहार इति न युज्यते, 'शुचौ देशे स्वाध्यायमधीयान' इत्यादिकर्ममार्गीयसाधनश्रुतेरित्याशङ्क्य, तत्तात्पर्यमाह अनाविष्कुर्वन्निति । भगवद्भावस्य रसात्मकत्वेन गुप्तस्यैवाभिवृद्धिस्वभावकत्वादाश्रमधर्मैरेव लोके स्वं भगवद्भावमनाविष्कुर्वन् भजेतेत्येतदाशयेन ते धर्मा उक्ताः । गोपने मुख्यं हेतुमाह अन्वयादिति । यतो भगवता सममन्वयं सम्बन्धं प्राप्य वर्तते, अतो हेतोस्तथा । अत्र ल्यब्लोपे पञ्चमी । एतेन यावद् अन्तःकरणे साक्षात् प्रभोः प्राकट्यं नास्ति, तावदेव बहिराविःकरणं भवति, प्राकट्ये तु न तथा सम्भवतीति ज्ञापितम् ॥ ४९ ॥

---

भाष्यप्रकाशः ।

तथापि भगवता 'मौनानीहानिलायामा दण्डा वाग्देहचेतसा'मिति वाक्ये त्रयाणां समभिव्याहृतत्वाद्वाग्दण्डरूपं मौनं रूढं गृहीतं ज्ञेयम् । शेषं स्फुटम् ॥ ४८ ॥

अनाविष्कुर्वन्नन्वयात् ॥ ४९ ॥ सूत्रमवतार्य व्याकुर्वन्ति नन्वित्यादि । भाष्यमत्रातिरोहितार्थम् ॥ ४९ ॥

रश्मिः ।

बोधापत्तिरतो रूढमित्युक्तम्, योगरूढमित्यर्थः । नामैकदेशग्रहणात् ॥ ४८ ॥

अनाविष्कुर्वन्नन्वयात् ॥ ४९ ॥ अतिरोहितार्थमिति । तत्तात्पर्यमिति । कर्ममार्गीयसाधनश्रुतितात्पर्यम् । भगवद्भावस्येति । अत्राश्नुत इति श्रुतावशनमनाविष्कृतमश्नुत इत्यश्नातिस्थाने प्रयोगात् । अतः सूत्रमप्यनाविष्कुर्वन्नशनमित्याशयेन व्याकृतम् । न चान्योन्याश्रयः । अश्नातीत्यस्य पदव्यत्ययविकरणव्यत्ययाभ्यां वक्ष्यमाणसूत्रव्याख्यानं सूत्रव्याख्यानेनाश्नुत इत्यत्र पदव्यत्ययविकरणव्यत्ययौ यत इति वाच्यम् । आनन्दमयाधिकरणोक्तयुक्तिभिरनाविष्कुर्वन्निति योगविभागाच्चानाविष्कुर्वन् श्रुतौ ह्यश्नातीति प्रथमसूत्रार्थः ततश्चाश्नुत इत्यादावुभयसिद्धौ योगविभागस्येष्टसिद्ध्यर्थत्वादन्वयादिति द्वितीयसूत्रे पूर्वसूत्रमनुवर्त्य प्रकृतं सूत्रं सिद्धमित्यन्योन्याश्रयाभावात् । आश्रमेति । सर्वाश्रमधर्मैरित्यर्थः । भजने प्रकाराकाङ्क्षायां स्वधर्ममाहेति सुबोधिन्यां यतः । उक्ता इति । स्वाध्यायब्राह्मण उक्ताः । अतस्तथेति । ल्यब्लोपे पञ्चमीत्यतः शेष उक्तः । अतोऽत्यन्तस्नेहाद्भगवत्सुखकरं गोपनमित्यर्थः । नास्तीति । विरहे नास्ति । बहिराविष्करणं गुप्तान्वयस्याश्रमधर्मद्वारा भवति । प्राकट्य इति । अन्तःकरणे प्राकट्ये तु तथा नाम, बहिराविष्करणं न सम्भवति,

---

१. देहमात्र चित्तमात्रेतिद्वयं प्राचीनतमादर्शे हरितालिकया दूरीकृतं दृश्यते ।

ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५० ॥

वैदिककर्मकरणे तात्पर्यमुक्त्वा लौकिकस्याभावश्यकत्वेपि तत्साधकमाह । प्रस्तुतं प्रभुभजनं तत्प्रतिबन्धासम्भवे एवैहिकं कार्यम् । नन्वैहिकं करोतु, मा वा, अतस्तत्समयोक्तिर्व्यर्थेत्याशङ्कयाह । तद्दर्शनादिति । 'आचार्यकुला'-दित्युपक्रम्याग्रे पठ्यते, 'धार्मिकान् विदध'दिति । अतो धार्मिकपुत्रविधान-मैहिकं कर्म श्रुतौ दृश्यते, अतस्तत्समयोक्तिरावश्यकी। अन्यथा श्रुतावुक्तमस्तीति प्रस्तुतबाधेपि तत्करणे फलप्रतिबन्धः स्यादिति भावः ॥ ५० ॥

इति तृतीयाध्याये चतुर्थपादेऽष्टमं गृहिणोपसंहाराधिकरणम् ॥ ८ ॥

भाष्यप्रकाशः

ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५० ॥ अत्रापि भाष्यं प्रकटार्थम् । एवञ्च यस्य मर्यादायां वरणं वर्तते, तेन साधनापरिपाकदशायां 'आचार्यकुला'दिति श्रुत्युक्तरीत्या गृह एव स्थित्वा भगवद्भजनं कर्तव्यम्, स्वधर्मरहस्यं च गोपनीयमिति सिद्धम् ॥

शङ्कराचार्यास्तु, सहकार्यन्तराधिकरणं त्रिसूत्रमङ्गीकृत्य, तस्मात् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मण' इति बृहदारण्यकीयकहोडब्राह्मणे किं मौनं विधीयत उत नेति संशये, मौनं विधीयते । यद्यप्यत्र न विधिः, तथाप्यपूर्वत्वाद्विधिराश्रयणीयः । मौनं च पाण्डित्यमतिरिक्तं ज्ञानसातिशय-रूपम् । 'मुनीनामप्यहं व्यास' इति प्रयोगदर्शनात् । अतो मननान्मुनिस्तद्भावो मौनम् । अतो-

रश्मिः ।

विरहे विविधभावोत्पत्त्या नवधाभक्तिभक्तधर्मैराश्रमधर्माणां ताद्दशे बाधात् । ज्ञापितं तात्पर्यवृत्त्योक्तम् । एवमतिरोहितार्थमित्यर्थः ॥ ४९ ॥

ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५० ॥ प्रकटार्थमिति । प्रकटोऽर्थो यस्य, तथाहि । अप्रस्तुतेत्यत्र प्रस्तुतस्य प्रतिबन्धः प्रस्तुतप्रतिबन्धः, न प्रस्तुतप्रतिबन्धोऽप्रस्तुतप्रतिबन्धस्त-स्मिन्नित्यर्थं मत्वाहुः प्रस्तुतमिति । कार्यमिति । गृहमेधिना कार्यम् । एकादशे योगीश्वरवाक्ये 'वेदोक्तं नाचरेद्यस्तु मृत्योर्मृत्युमुपैति स' इति दर्शनात् । श्रुतावुक्तमिति । स्वाध्यायब्राह्मणश्रुता-वुक्तम् । अधुना प्रस्तुतपदे नञन्वयं कृत्वाहुः प्रस्तुतबाध इति । नञर्थबाधः । तत्करण ऐहिककरणे । फलेति । प्रस्तुतभजनरूपसाधनाभावात्तथा । एवं प्रकटार्थम् । साधनेति । शमदमादिमुमुक्षुत्ववैराग्यबोधका( भा )वपरिपाकः अस्वाधीनता । रहस्यमिति । यथा त्रिभङ्गललि-तस्तोत्रोक्तम् । 'अहं तदीय इत्येषा तद्वार्ता रूपिता पर'मिति तदीयाधिकारोक्तेः । तस्माद्ब्राह्मण इति । यस्मात् पूर्वे ब्राह्मणा आत्मानं विदित्वा पुत्राद्येषणाभ्यो व्युत्थाय भिक्षाचर्यं चरन्ति, तस्मादधुनातनो ब्राह्मणः पञ्चाध्ययनजा आपाततो ब्रह्मधीस्तद्वान् पण्डितस्तस्य कृत्यं पाण्डित्यं श्रवणं तन्निर्विद्य निश्चयेन लब्ध्वा बाल्येन ज्ञानबलभावेन मननेन, शुद्धान्तःकरणत्वेन वा स्थातुमिच्छेत् तद्द्वयं लब्ध्वा, अथ श्रवणमननानन्तरं मुनिर्मननशीलो निदिध्यासनपरः स्यादमौनं श्रवणमनने च मौनं च निदिध्यासनं लब्ध्वोक्तत्रयस्य ब्रह्मसाक्षात्कारहेतुत्वात् तत्त्रयानन्तरं ब्रह्मावगच्छतीति ब्राह्मणः साक्षा-त्कृतब्रह्मा भवतीति श्रुत्यर्थः । मौनमिति । निदिध्यासनम् । ज्ञानातीति । निदिध्यासनमित्यर्थः । ब्रह्मामृतवर्षिण्यां तथा व्याख्यानात् । तद्भावो मौनमिति । भावे घञ् । भावोत्र प्रकृतिजन्यबोधे

भाष्यप्रकाशः ।

'ऽथ मुनि'रित्यत्र मुनिः स्यादित्येवं विधिराश्रयणीयः । यद्यपि 'गार्हस्थ्यमाचार्यकुलम्' 'मौनं वानप्रस्थ्य'मित्यत्र मुनिशब्द उत्तमाश्रमेपि श्रुतः, तथापि, 'वाल्मीकिं मुनिपुङ्गव'मित्यत्र व्यभिचारदर्शनान्न नियमतोऽन्यत्र तदर्थको ग्रहीतुमुचितः । उक्तश्रुतौ त्वाश्रमान्तरसन्निधानादुक्तं तद्ग्रहणम् । ज्ञानप्रधानत्वादुत्तमाश्रमस्य तस्माद् बाल्यपाण्डित्याऽपेक्षया तृतीयं मौनमत्र विधीयते । निर्वेदनीयत्वनिर्देशादपि मौनस्य बाल्यपाण्डित्यवद् विधेयत्वाश्रयणम् । 'तद्वत' इति विद्यावतः सन्न्यासिनो ग्रहणम् । कहोडब्राह्मणे तस्यैव प्रस्तुतत्वात् । ननु विद्यावत्त्वे तत एवा-तिशयप्राप्तेः किं मौनविधिनेत्यत आह 'पक्षेणे'ति । यस्मिन् पक्षे भेददर्शनप्राबल्यान्न प्राप्नोति तस्मिन् पक्षे विधिरिति विध्यादिवदिति । यथा दर्शपूर्णमासादौ सहकारित्वेनाऽप्राधान्यादप्रयाजादिविधिः, एवमविधिप्रधानेऽस्मिन् विद्यावाक्येपि मौनविधिरित्याहुः ।

तेन तन्मते 'तद्वतः पक्षेण सहकार्यन्तरविधि'रिति प्रतिज्ञा, तृतीयं विध्यादिवदिति हेतु-वाक्यमिति सिध्यति ।

भास्कराचार्यास्तु पूर्ववदेवाङ्गीकृत्य सूत्रमेवं योजयन्ति । विधीयत इति विधिः । तद्वतो विद्यावतस्तृतीयं मौनं ज्ञानप्रकर्षपक्षेण सहकार्यन्तरविधिः । तथा च ज्ञानातिशयमापादयेज्ज्ञा-नपरिपाकाय योगाभ्यासं कुर्यादित्यर्थः । विध्यादिवत् । यथा अग्निहोत्रादिकमविदुषः फला-तिशयार्थिनो विधीयते, तथा विदुषो व्युत्थायिनो ज्ञानप्रकर्षरूपं मौनं कर्तव्यत्वेन विधीयत इति वदन्ति ।

रामानुजाचार्यास्तु सूत्रयोजनां भास्कराचार्यवदेवाङ्गीकृत्य तदर्थमेवमाहुः । विधिश-ब्देन यज्ञादिः, सर्वाश्रमधर्मः शमदमादिश्च विधिशब्देनोच्यते । आदिपदेन श्रवणमनने गृह्येते । सहकार्यन्तरं विधीयत इति सहकार्यन्तरविधिः । तथा च यथा, 'तमेतं वेदानुवचनेने'त्यादिना, 'शान्तो दान्त' इत्यादिना च यज्ञादिः शमादिश्च सहकारित्वेन विद्यावतो विधीयते । तथा च,

रश्मिः ।

प्रकारः । प्लुतो लोपो वा । मुनिशब्द इति । भावप्रधानोऽयम्, व्यवहारे भावत्वाद्वा मुनित्वे शक्तिः । मुनित्वस्य विधेयत्वमाश्रीयत इति भाष्यात् । उत्तमेति । तुरीयाश्रमे । आश्रमप्रायपाठात् । व्यभिचारेति । मुनिषु मध्ये पुङ्गवं श्रेष्ठं न निर्धारण इति षष्ठीसमासनिषेधः । आश्रमवाचकत्व-व्यभिचारदर्शनात् । अन्यत्रेति । आश्रमप्रायपाठादन्यत्र । तदर्थकः आश्रमार्थकः । उक्ते । 'गार्हस्थ्यमाचार्यकुल'मित्यादिश्रुतौ । तद्ग्रहणमिति । मौनशब्दस्य चतुर्थाश्रमवाचकस्य ग्रहणम् । निर्वेदनीयत्वेति । विधयेन वेदनीयत्वनिर्देशात् । प्रस्तुतत्वादिति । 'एतं वै तमात्मानं विदित्वे'त्युपक्रम्य, 'अथ भिक्षाचर्यं चरन्ती'तिश्रुत्या प्रस्तुतत्वात् । मौनविधिनेति । अतिशय-र्थम् । न प्राप्नोतीति । भेददृग्विद्यावत्त्वं न प्राप्नोति । अविधीति । कृत्यविषयत्वेन ज्ञानप्रा-प्तिविधिप्रधाने विद्यावाक्ये । अत्राप्ययेरिति । तर्कप्रधाना एते । यदि ज्ञानातिशयो न स्याद्, ज्ञानपरिपाकाय योगाभ्यासं न कुर्यादिति । अतो योगाभ्यासं कुर्यादिति सहकार्यन्तरविधिः । अवि-दुष इति । अपरज्ञानरहितस्य । वेदज्ञानवतः । व्युत्थायिन इति । व्युत् स्थायिनः । उद्-ग्राहाभ्यां पूर्वस्य । व्युद् अधिकं स्थायिनः पूर्वज्ञानादेव तदधिकज्ञाने स्थायिनः । इत्तीति । इत्येतं बोधयन्तीति पूर्वेणान्वयः । तदर्थमिति । सूत्रार्थम् । अर्थप्राप्त इति । शमदमादिप्रबोधात् प्राप्ते ।

भाष्यप्रकाशः ।

'श्रोतव्यो मन्तव्य' इत्यादिश्रवणमनने स्वार्थप्राप्ते विद्यासहकारित्वेन गृह्येते, तथा । तस्मात् ब्राह्मणः पाण्डित्यमित्यादिना पाण्डित्यं बाल्यं मौनमिति त्रयं विद्यायाः सहकार्यन्तरं विधीयत इत्युक्तं भवति । मौनं च पाण्डित्यादर्थान्तरमित्याह 'पक्षेणे'ति । इदं च मननं श्रवणप्रतिष्ठार्था-न्मननादप्यर्थान्तरम् । उपासनालम्बनस्य पुनः संशीलनं तद्भावनारूपम् । अतोऽपूर्वत्वादत्र विध्यश्रवणेपि तदाश्रयणम् । मुनिः स्यादिति । तस्मादेवं वाक्यार्थः । ब्राह्मणो विद्यावान् पाण्डित्यं निर्विद्य उपास्यं ब्रह्मतत्त्वं परिशुद्धं परिपूर्णं च विदित्वा श्रवणमननाभ्यां प्राप्तं वेदनेन प्रतिल-भ्येति यावत् । तच्च भगवद्भक्तिभूतं सत्त्वशुद्धिकृतम् । 'नाहं वेदै'रित्यारभ्य, 'भक्त्या त्वनन्यया शक्यो ज्ञातु'मिति गीतायामुक्तत्वात्, 'यस्य देवे परा भक्ति'रिति, 'नायमात्मा प्रवचनेन लभ्य' इति श्रुतावप्युक्तत्वाच्च । बाल्येन तिष्ठासेदिति । बालस्य यत्स्वभावानाविष्काररूपं कर्म तेन स्थातु-मिच्छेत् । बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः स्यात्, बाल्यपाण्डित्ये यथावदुपादाय परि-शुद्धे परिपूर्णे ब्रह्मणि निदिध्यासनरूपप्राप्तये मननशीलो भवेत् । एवं त्रितयोपादानेन लब्ध-विद्यो भवेदित्याह । 'अमौनं च मौनं च निर्विद्याथ ब्राह्मण' इति । अमौनं मौनेतरसहका-रिकलापस्तच्च मौनं च यथावदुपाददानस्तदेकनिष्ठायां विद्याकाष्ठां लभत इत्येवं विषयवाक्यं व्याख्यातवन्तः ।

बृहदारण्यकमिताक्षरायां तु, पण्डा वेदाध्ययनजन्या बुद्धिस्तद्वान् पण्डितस्तस्य कर्म वेदा-

रश्मिः ।

श्रवणेति । श्रवणस्य प्रतिष्ठा मननं एतदर्थात् । उपासनालम्बनस्तद्विषयस्तस्य । वाक्यार्थ इति विषयवाक्यार्थः । वेदनेन इति । उपासनेन । तच्चेति वेदनं च 'सत्त्वात्सञ्जायते ज्ञान'मिति वाक्यात् सत्त्वकृतं भक्तिरूपं सत्त्वशुद्धिकृतम् । तदेकेति । सत्याम् । सती सप्तमी । श्रवणेति श्रवणलक्षणं ज्ञेयम्, यथाचार्यमते 'भगवद्वाचकपदवाक्यानां भगवति शक्तितात्पर्यनिर्धार' इति द्वितीयसुबोधिन्याम् । अतः श्रवणापरपर्यायम् । निःशेषमिति । शेषान्निष्क्रान्तं कृत्वा । निरादयः क्रान्ताद्यर्थे पञ्चम्येति समासः । श्रवणेति । श्रवणज्ञानेनोत्पन्नमद्दोषानात्मदृष्टेस्तिरस्करणं तस्य सामर्थ्यम् । तिष्ठासेदिति स्थातुमिच्छेत् । व्युत्थायिनमिति । विद्वांसम् । तद्विधिः सहकार्यन्तरविधिः । रामा-नुज इति मते । तद्विधिः सहकार्यन्तरविधिः । नातीति नातिक्रम्य गच्छन्ति । इत्यत्र इति । इति हेतोः विद्याया भक्तित्वे ज्ञानपदप्रवृत्तेर्भक्तौ सत्त्वादतो भक्तेर्ज्ञानत्वेन ज्ञानपक्षानतिरेकादित्यर्थः । तेन परोक्तपक्षोत्र सम्मतः सूत्राणां विश्वतोमुखत्वोदाहरणार्थः । एतदिति । व्युत्थाप्यपरिपक्वौ विहाय स एव मर्यादापक्ष एवाहृतः । व्युत्थाप्यपरिपक्वत्वयोर्मार्यादिकधर्मत्वात् । ननु पुष्टिमर्यादापक्षयोर्गतेरर्थवत्त्व-सूत्र उक्तत्वात् तद्धर्मभूतोत्थाप्यपरिपक्वत्वे पुरस्कृत्यायं विचारोत्र युक्त इति चेत्, तत्राहुरेवेति । धर्मौ स्वाश्रयितेवकारस्त्वयोगव्यवच्छेदकः । गतेरर्थवत्त्वसूत्रे पुष्टिमर्यादे ससाधनासाधनत्वाभ्यां विचारिते, अत्र तु तृतीयस्याप्रयोजकत्वं विचारितमिति विशेषः । कहोडब्राह्मणार्थस्तु मिताक्षरोक्तः तत्रापि विशेषस्तु । श्रवणापरपर्यायं स्वमार्गीयश्रवणलक्षणात् । बाल्येन भक्तित्वेन बलं भक्तिरिति भाष्यात् । स्वार्थे ष्यञ् वा । भक्तिरूपो भवेयमिति स्थातुमिच्छेत् । मुनिः मौनवान् सन्न्यासिधर्ममौनानीहानिलायामवान्, अनिला-यामः प्राणायामः । तिष्ठासेत् । 'विरहानुभवार्थं तु सर्वत्यागः प्रशस्यत' इति वाक्यात् विरहानुभवार्थं

एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ५१ ॥ (३-४-९)

ननु 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये' इति श्रुतौ मुक्त्यनन्तरं ब्रह्मसम्पत्तिः श्रूयते, सा तु पुरुषोत्तमसङ्गे लीलारसानुभवातिरिक्ता वक्तुमशक्या, मुक्तोपसृप्यव्यपदेशात्, 'मुक्तानामपि सिद्धानां नारायणपरायणः । सुदु-

भाष्यप्रकाशः ।

न्तविचारलक्षणं श्रवणापरपर्यायं पाण्डित्यं निर्विद्य निःशेषं कृत्वा अनन्तरं बाल्येन तिष्ठासेत् । श्रवणज्ञानोत्पन्नाशेषानात्मदृष्टितिरस्करणसामर्थ्यं बलं तस्य भावो बाल्यम्, तेन बाल्येन विद्यानाकृष्टस्तिष्ठासेन्मननं कुर्यादिति यावत् । बाल्यं च पाण्डित्यं च निःशेषं कृत्वा अथ मुनिर्मौनवान् धारावाहिकात्मप्रत्ययप्रवाहवान् तिष्ठासेदित्यनुषज्यते । निदिध्यासने कुर्यादिति यावत् । एवममौनशब्दवाच्यं श्रवणमननाख्यं मौनशब्दवाच्यं निदिध्यासनं निर्विद्य अथ ब्राह्मणो निरुपचरितब्राह्मण्यवान् ब्रह्मैव स्यात् कृतकृत्यो भवेदित्येवं व्याख्यातम् ।

तत्र मतभेदेन वाक्यव्याख्यानस्य भिन्नार्थत्वेपि मौनस्य प्रकृष्टज्ञानरूपस्यैवाङ्गीकारादर्थस्तुल्यप्रायः । सूत्रव्याख्याने तु शाङ्करे भास्करे च मते व्युत्थायिनं प्रति तद्विधिः । रामानुजे तु अपरिपक्वं प्रत्यावश्यकतया विद्यापरिपाकार्थं तद्विधिरिति फलति । सिद्धान्ते तु यावन्त्येतानि साधनानि तानि सर्वाणि मर्यादापक्षं नातिचरन्तीत्यत एतद्विहाय स एवादृत इति बोध्यम् । अग्रे तु न तथा विरुद्धम् । 'गृहिणोपसंहारे' तु बहुकर्मोपदेशं बीजमाहुः । बहुकर्मोपदेशे तु न किञ्चिदपीति तत्साकाङ्क्षत्वादरुच्यम् । 'मौनव'त्सूत्रे तु विद्यायाः सर्वाश्रमसाधारण्यं व्याकुर्वन्ति । 'अनाविष्कुर्व'न्नित्यत्र च बाल्यरूपं निश्चिन्वन्ति । तदविरुद्धमित्युपरम्यते ॥ ५० ॥

इत्यष्टमं गृहिणोपसंहाराधिकरणम् ॥ ८ ॥

एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ५१ ॥ सूत्रमवतारयन्ति

रश्मिः ।

सर्वत्यागं कुर्यात् । अथ ब्राह्मणो गोपालतापिनीये यः सः पुरुषोत्तमवित् स्यात् ततः कृतकृत्यो भवेत् । बहुकर्मेति । कृत्स्नभावः सन्न्यासिनो विशिष्यते । बहुलायासानि हि बहून्याश्रमकर्माणि यज्ञादीनि तं प्रति कर्तव्यतयोपदिष्टानि आश्रमान्तरकर्माणि च यथासम्भवं अहिंसेन्द्रियसंयमादीनि अस्य विद्यन्ते, तस्मात् गृहमेधिनोपसंहारो न विरुध्यत इति भाष्येण तथा । साकाङ्क्षत्वादिति बहुकर्मोपदेशबीजसाकाङ्क्षत्वात् । व्याकुर्वन्तीति । इतरेषां चतुर्णामाश्रमाणामुपदेशाविशेषात् । मौनवदिति व्याकुर्वन्ति । तेन विद्यायाः सकलाश्रमसाधारण्यं गौणसाधनव्युदासार्थम् । निश्चिन्वन्तीति । बाल्येन तिष्ठासेदित्यत्र यथोपपादमूत्रपुरीषत्वादिबालचरितं, अन्तर्गता वा भावशुद्धिः, दम्भदर्पप्ररूढेन्द्रियत्वादिरहितत्वंबाल्यं स्यादिति संशये, यथोपपादमूत्रपुरीषत्वं च प्रसिद्धतरं बाल्यमिति पूर्वपक्षे आन्तरो भावविशेषो बालस्याप्रकटेन्द्रियत्वादिरिह बाल्यमाश्रीयत इति सिद्धान्त इत्येवं निश्चिन्वन्ति । तदविरुद्धमिति । 'शुद्धभावप्रसादित' इति वाक्यात् प्रसादहेतुत्वेन स्नेहान्तर्गतत्वात् ॥ ५० ॥

अष्टमं गृहिणोपसंहाराधिकरणम् ॥ ८ ॥

एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ५१ ॥ सूत्रमिति । अविक-

लैभः प्राशान्तात्मा कोटिष्वपि महामुन' इति स्मृतेश्च, मुक्तेः फलं भक्तिरसानुभव एव, एवं सत्युक्तगृहिणस्तत्फलं भवति, न वेति संशये, निर्णयमाह । एवंभूतस्योक्तरूपस्य मुक्तस्य मुक्तेर्यत्फलं भक्तिरसानुभवः, तस्य अनियमः तस्य भगवदिच्छाधीनत्वात् । साधनाप्राप्यत्वात् । अत एव 'मुक्तिं ददाति कर्हिचित् स न भक्तियोग'मिति शुकवाक्यम् । अत्रौत्सर्गिकं हेतुमाह तदवस्थेति । 'न स पुनरावर्तत' इत्यस्यावृत्त्या मुक्त्यवस्थाया एव सार्वदिकत्वेन निर्धारः क्रियते । यद्यप्येवं मुक्तिफलाभावनियम एवायाति, न तु तदनियमः, तथापि 'तस्य तावदेव चिर'मित्यादिप्रमाणैः 'न स पुनरावर्तत' इति श्रुत्या समं विरोधा-

भाष्यप्रकाशः ।

ननु तस्येत्यादि । सेति । ब्रह्मसम्पत्तिः । तस्या उक्तरूपत्वे मानं मुक्तेत्यादि । एवं सतीति । लीलारसानुभवस्य मुक्तिफलत्वे सति । एवं संशये व्युत्पादिते पूर्वपक्षः स्वत एव भासत इत्याशयेन निर्णयमेव सूत्रे आहेत्यर्थः । व्याकुर्वन्ति एवमित्यादि । उक्तरूपस्य मुक्तस्येति गृहिणो मुक्तस्य । अत एवेति साधनाप्राप्यत्वादेव । औत्सर्गिकमिति अधिकारसामान्यात् प्राप्तम् । नन्वनया श्रुत्या पुनरावृत्तिकथनेन मुक्तावस्थाया एव नित्यत्वनिर्धारे लीलारसानुभावकब्रह्मसम्पत्तिरूपस्य मुक्तिफलस्य भेदसाध्यत्वात्तदभावेन मुक्तिफलाभावनियम एवायाति, न त्वनियम इत्याशङ्क्य तत्परिहरन्ति यद्यपीत्यादि । सत्यं यद्यपि, 'न स पुनरावर्तत' इति तदवस्थावधारणश्रुत्या उक्तानियमो नायाति, तथापि 'तस्य तावदेव

रश्मिः ।

रणात्मकम् । ननु तस्येत्यादीति । श्रुत्यर्थस्तु तस्य आचार्यवतः पुरुषस्य पण्डितस्य मुक्ताविद्याबन्धनस्य मेधाविनः तावदेव कालं चिरं विलम्बः सत्सम्पत्ताविति शेषः । तावत्कियदित्यत आह यावदिति । यावत्कालपर्यन्तं न विमोक्ष्ये, नञर्थः स्वल्पः विमोक्षो भूमा, मोक्षोऽक्षरः, स्वल्पो विमोक्षो भूमा सर्वात्मभावः साधनत्वात्, लिङ्गभूयस्त्वाधिकरणे भूमपदं सर्वात्मभावे, यथा भूमाधिकरणे ब्रह्मणि तथा चाहं भूमा न विमोक्ष्ये सर्वात्मभावं करिष्ये । अथ तदनन्तरं सम्पत्स्ये, देहपातानन्तरमहं सम्पत्स्ये विभूतिसहित आनन्दमयः पत्स्ये भक्ततनुं प्राप्स्यामि । 'तस्यैष आत्मा वृणुते तनुं स्वा'मिति श्रुतौ तस्य वृतभक्तस्य तनुं चतुरात्मकं स्वां स्वकीयां स्वकीयत्वेन वृणुते सम्भजते इत्यर्थात् । एषा श्रुतिश्छान्दोग्ये श्वेतकेतूपाख्याने वर्तते, तत्र व्याख्यानेऽग्रे मुक्तिरियमपि । यद्वा न विमोक्ष्य इत्यस्य न विमुक्तिं मुक्तिम्, वर्णागमं करिष्ये इत्यर्थः अतो नाग्रेतनभाष्यविरोधः । अशक्येति । वक्ष्यमाणभक्तिमार्गीयैर्वै अशक्या । उक्तरूपत्वे लीलारसानुभवरूपत्वे । मुक्तेत्यादीति । गृहिण इति । पुष्टिमार्गीयस्य सर्वस्यानुगृहीतस्य प्राप्त्यत्यन्तानुगृहीतस्य वा तस्येत्यपि संशयो ज्ञेयः । तत्फलं तु कस्यचिदत्यनुग्रहेण पुष्टौ प्रवेशने भवतीति वक्ष्यमाणभाष्यात् । मुक्तिफलत्व इति मुक्तस्य मुक्तेः फलत्वे साधनेति । लीलारसानुभवस्य मार्यादिकस्य पुष्टिभक्तिद्वारा कथनात्तथा । प्राप्तमिति । तत आगत इति ठक् । यद्यपि सौत्रे इत्यणन्तमुदाहरणं तथापि सूत्रे विशेषात् ठगपि उत्सर्गश्च उत्पत्त्यादिशून्यकालिकत्वं तत् प्राप्तम् । जीवानामधिकारसामान्यं मुक्त्यवस्था । 'यया सम्मोहितो जीव आत्मानं त्रिगुणात्मकं । परोपि मनुतेऽनर्थं तत्कृतं चाभिपद्यते । अनर्थोपशमं साक्षाद्भक्तियोगमधोक्षज' इति वाक्यात् । भाष्ये । तदवस्था । कृत्स्नभावाधिकरणविषयवाक्येनाधिकरणसङ्गत्यर्थमाहुः न स पुनरित्यादि ।

भावार्यौत्सर्गिकी तदवस्था । तत्फलं तु कस्यचिदत्यनुग्रहेण पुष्टौ प्रवेशने भवतीति स्वाभिप्रायं प्रकटीकुर्वता बादरायणेन अनियम इत्युक्तम् । एवं सति

---

भाष्यप्रकाशः ।

चिर'मिति श्वेतकेतूपाख्यानश्रुतावाचार्यवतः पुरुषस्य ब्रह्मज्ञानोत्तरं मोक्षानाप्तिपर्यन्तमेव ब्रह्मसम्पत्तिविलम्बः, न तु तदुत्तरमिति श्राव्यते । ब्रह्मसम्पत्तिश्च 'सता सोम्य तदा सम्पन्नो भवती'ति 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते, स उत्तमः पुरुष' इत्यादौ सम्परिष्वङ्गरूपैव सिद्धेत्यैकीभावदशाविरुद्धा । अतस्तदविरोधार्थमेतयोः श्रुत्योर्विशेषौत्सर्गिकभाव आदर्तव्यः । वरणेन पुष्टौ प्रवेशने मुक्त्यनन्तरं ब्रह्मसम्पत्तिरूपं फलम्, तदभावे तु मुक्त्यवस्थैवेति । तथा च वरणस्य भगवदिच्छामात्राधीनत्वात् तस्याश्च पूर्वं ज्ञातुमशक्यत्वाद्भगवता सूत्रकृता एवम्भूतस्वाभिप्रायस्य बोधनार्थमनियम इत्युक्तमित्यर्थः । नन्वेवं सति वृतस्य भेद आयाति, स च तस्या-

रश्मिः ।

वृत्त्येति । स इत्यस्य तत्त्वावच्छिन्ने वृत्तिः । तत्त्वं च मुक्त्यवस्था ब्रह्मांशत्वात् । तथा च चैतन्यं अपुनरावृतत्वेनोपस्थितं मुक्त्यवस्था । क्रियत इति । तस्या इति शेषः । मुक्त्यवस्थावधृतेरित्यर्थः । प्रकृते । तथा चायं सूत्रार्थः । एवं गृहिणोपसंहारे विद्यानां कृते । मुक्तेः फलं पुरुषोत्तमलीलानुभवः तस्यानियमः तुरीयाश्रमानन्तरमेवेति नियमः, पुष्टिस्थानां सर्वेषामिति च, तस्याभावः, कुतः, मुक्त्यवस्थावधृतेर्गृहिण आद्दताया इति । तदभावेनेति । भेदाभावेन । तदवस्थेति । गृहस्थाश्रमे । मुक्त्यवस्थायाः अनावृत्तिरूपायाः अवधारणश्रुत्या । ननु कुतो 'न स पुन'रित्यस्या गृहस्थाश्रमे मुक्त्यवस्थावधारकत्वमिति चेत्, तत्प्रकरणादिति जानीहि । उक्तानियमः सूत्रोक्तमुक्तिफलानियमः । तदनियम इत्यन्तभाष्यार्थमुक्त्वा, तथापीत्यादिभाष्यार्थमाहुः प्रपञ्चेन तथापीत्यादिना । इयमपि पूर्वाधिकरणसङ्गत्यर्था, सङ्गतिस्तु सामान्यविशेषभावरूपा । भाष्यार्थस्तु, 'तस्य तावदेव चिर'मित्यत्र । आदिना मुक्तोपसृप्येत्यादिप्रमाणानि । षष्ठ्यन्तप्रयोगे कर्तव्ये तृतीयान्तश्छान्दसः प्रयोगः । विरोधेति । 'न स पुनरावर्तत' इत्यैक्यम् । 'तस्य तावदेव चिर'मित्यत्र लीलारसानुभवः कर्मकर्तृभावादिति वार्यभेदेनेति भेदाभेदयोर्विरोधः तदभावाय । 'न स पुनरावर्तत' इत्यत्रैत्सर्गिकी दशा'तस्य तावदेव चिर'मित्यत्र विशेषावस्थेति विरोधाभावः तस्मै । सामान्यविशेषयोर्न विरोधः कालभेदादित्यर्थः । औत्सर्गिकीति । 'न स पुनरावर्तत' इति श्रुतौ औत्सर्गिकी । तदवस्थेति । मुक्त्यवस्था । आचार्यवत इति । छान्दोग्ये'आचार्यवान् पुरुषो वेद तस्य तावदेव चिर'मित्याद्युक्तेस्तथा । ब्रह्मज्ञानोत्तरमित्यावश्यकत्वात् साधनमाक्षिप्तम् । मोक्षानाप्तिः भगवदिच्छाज्ञानपरिपाकरूपकारणाभावात् । तत्पर्यन्तमेव । ब्रह्मसम्पत्तीति । ननु ब्रह्मसम्पत्तिरेव मोक्ष इत्यभेदान्वयोऽस्तु, न भेदान्वयः साध्यसाधकभावसम्बन्धकृत इति चेत् । न । अभेदस्य ज्ञानपर्यन्तत्वेन भक्तावभेदादानान्नाभेदान्वय इति । अभेदादान'मथ सम्पत्स्य' इत्युक्तदशायाम् । विरोधाभावायेति भाष्ये उक्तम्, तत्रैकीभावदशाविरुद्धेत्यन्तेन विरोधं व्युत्पाधाहुः ब्रह्मसम्पत्तिश्चेति । यद्यप्यत्रेतिशब्दपर्यन्तं ब्रह्मसम्पत्तिः सत्सम्पत्तिरिति लक्ष्यमुक्तम्, लक्षणवाक्ये परं ज्योतिः कर्म, ज्योतिर्जीव उपसम्पद्य, उपेत्यनर्थकम् । स्वेन चिन्मात्रेण रूपेण । सम्परिष्वङ्गः सायुज्यमैक्यमिति लक्षणार्थं उक्त इति वक्तुं शक्यम्, तथापि तस्य ज्ञानमार्गीयत्वादुपोपसर्गत्वा'दुत्तमः पुरुषः' इति पदाभ्यां च 'परं ज्योति'रित्युपलक्षणं सदनन्तानन्दयोः । यथा 'सत्यं परं धीमही'त्यत्र चिदनन्तानन्दयोरुपलक्षकं सत्यपदम् । उप समीपे सम्पद्य सालोक्यादिमुक्तीनामे-

'न स पुनरावर्तते' इति श्रुतिः प्रपञ्चे पुनरावृत्तिं निषेधति, न तु तदतीतेपीति ज्ञेयम् । समाप्तिज्ञापनायावृत्तिः ।

अथवा । श्रुतौ तदवस्थावधृतेर्हेतोरस्माकमपि तदवस्थावधृतिर्यतोऽतः फलानियमनिश्चयोपीत्यर्थः । एवं सति मुक्तिपर्यन्तं साधनं भगवद्भाव इति निर्णयः सम्पन्नः ॥ ५१ ॥

इति तृतीयाध्याये चतुर्थपादे नवमं मुक्तिफलानियम इत्यधिकरणम् ॥ ९ ॥

इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये तृतीयाध्यायस्य चतुर्थः पादः ॥ ३ ॥ ४ ॥

समाप्तोयं तृतीयोऽध्यायः ।

---

भाष्यप्रकाशः ।

वृत्तिमापादयत्युक्तां श्रुतिं विरुणद्धीति शङ्कायामाहुः एवं सतीत्यादि । श्रुतिद्वयस्याविरोधे कर्तव्ये सत्यनावृत्तिश्रुतिः प्रपञ्चे पुनरावृत्तिं निषेधति । उपकोसलब्राह्मणे 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्त' इति विशेषनिर्देशात् । न तु तदतीतेपि । एतेनैवावृत्तिनिषेधस्य सामान्यत्वनिवारणादिति ज्ञेयमित्यर्थः ।

सूत्रस्यपदावृत्तेः समाप्तिमात्रबोधकत्वेऽर्थवत्ता न स्यादित्यतः पक्षान्तरमाहुः अथवेत्यादि । अत इति । श्रुत्यन्तराविरोधात् । सिद्धमाहुः एवमित्यादि । भगवद्भाव इति सप्तमी । तथा च परप्राप्तौ भगवद्भाव एव परमा साधनकाष्ठेत्यत्र सिद्धमित्यर्थः ।

रश्मिः ।

कतमां सम्यक् प्राप्य स्वेन रूपेण तत्तन्मुक्त्युचितेन । अभीति । ञिभी भय इत्यादीनां प्रत्ययान्तानां तदुचितं रूपम् । उत्तमः पुरुषोत्र पुरुषोत्तमलीलाप्रवेशात् तत्तल्लीलारसानुभविता । अत्यनुग्रहवांश्चेत्, उत्तमश्चासौ पुरुषः पुरुषोत्तम इति पुरुषोत्तमपदं कर्मधारयसमासेन निष्पन्नम् । सम्परिष्वक्तो भेदघटित इति भक्तिमार्गीयः । इवार्थो भेद इत्युक्तम् । एकीभावो 'न स पुनरावर्तते' इत्यत्र, इयं दशा मुक्तावस्था नित्यत्वरूपा अनावृत्तिरूपत्वात् । लीलारसानुभवितृत्वरूपा च विरुद्धानेकीभावरूपत्वात् । एकीभावेति । पूर्वाधिकरणविषयवाक्योक्ता पुनरावृत्तचैतन्यैकीभावदशाविरुद्धा । तद्विरोधार्थमिति । विरोधाभावायेति भाष्यविवरणम् । श्रुत्योरिति । 'तस्य तावदेव चिर'मित्यस्याः 'न स पुनरावर्तते' इत्यस्याश्च । विशेषेति विशेषभावः 'यदेकमव्यक्तमनन्तरूप'मिति श्रुत्युक्त-'तमसःपरस्ता'दित्युक्त्या पुरुषोत्तमः श्रुतिद्वयस्येति मानवमावर्तं नावर्तन्त इति श्रुत्युक्तनित्यलीलाया अपुनरावृत्तनित्यत्वरूपः औत्सर्गिकभावो अपुनरावृत्तनित्यत्वरूपः । पुनरावृत्तिर्मायिकानाम् । अमायिकानां पुरुषे विराजि दोधूयमानानां विशेषपदार्थवद् अपुनरावृत्तिः । पुष्टाविति अत्यनुग्रहसाध्यायाम् । तदभाव इति । वरणेन पुष्टिप्रवेशस्याभावे इत्यर्थः । मुक्त्यवस्थेति । पुष्टानामपि इत्यन्तभाष्यविवरणम् । अनियम इत्युक्तमिति । उभयोराश्रमयोः । इतरयोस्तदङ्गत्वात् । अत एवैकादशे सप्तदशाध्याये ब्रह्मचर्यगृहस्थाश्रमयोर्निरूपणम् । मिन्नेऽष्टादशाध्याये तुरीयवानप्रस्थाश्रमयोर्निरूपणम् । तस्य तावदेव चिरमित्यस्या न स पुनरित्यस्याश्च । अनावृत्तिश्रुतिरिति । 'इमं मानवमावर्त'मिति श्रुत्येकवाक्यताप्राप्ता । एतेनेति साधनेन । तदतीत इति मानवावर्तातीते जगव्द्यापारवर्जे, आत्मबोधोपनिषत्प्रसिद्धे, 'सत्यं ज्ञानमनन्तं यत् ब्रह्मज्योतिः सनातन'मित्युपबृंहणे । एतेनेति उक्तनिर्देशस्य सामान्यान्तर्गतत्वेन । आवृत्तिनिषेधो विषयवाक्येन तस्य, सामान्य-

भाष्यप्रकाशः ।

अन्ये तु 'ऐहिक'सूत्रे साधकस्यैतज्जन्मनि विद्योत्पत्तिस्त, जन्मान्तरे इति सन्देहे, मम जन्मान्तरे विद्या भवत्वित्यभिसन्ध्यभावादिभिरस्मिन्नेव जन्मनीति प्राप्ते, प्रतिबन्धकाभावस्य कारणतायाः सर्वत्र सिद्धत्वादत्र वा परत्र वा यदैव प्रतिबन्धककर्मादिनिवृत्तिः, तदैव तत्र विद्योत्पत्तिरिति सिद्धान्तयन्ति ।

'एवं मुक्तिफलानियम' इति सूत्रे तु यथा साधनवीर्यविशेषाद्विद्याया ऐहिकामुष्मिकत्वकृतो विशेषः, तथा विद्याफलभूताया मुक्तेरप्युत्कर्षापकर्षरूपो विशेषो भवेदित्येवं प्राप्ते । उच्यते । एवं मुक्तिरूपे विशेषनियमो नास्ति । कुतः । तदवस्थावधृतेः । सर्वेषु ब्रह्मरूपत्वावधारणात्, 'अस्थूलमनणु,' 'स एष नेति नेत्यात्मा', 'यत्र नान्यत् पश्यति' इत्यादिश्रुतिभ्यो ब्रह्मण एकलिङ्गत्वस्यैव सिद्धत्वादित्याहुः ।

तद्धन्मते पूर्वकक्षारूपमिति लिङ्गभूयस्त्वाधिकरणे निर्णीतम् । तदवगमिका विद्या च तत्रैव विश्रान्तेति निर्णीतं 'अक्षरधिया'मित्यधिकरणे । अतो नास्मभिस्तत्राधिकं किञ्चिद्विचार्यत इति बोध्यम् ॥ ५१ ॥

इति नवमं मुक्तिफलानियम इत्यधिकरणम् ॥ ९ ॥

इति श्रीमद्वल्लभाचार्यचरणनखचन्द्रनिरस्तहृदयध्वान्तस्य पुरुषोत्तमस्य कृतौ भाष्यप्रकाशे तृतीयाध्यायस्य चतुर्थः पादः ॥ ३ ॥ ४ ॥

समाप्तस्तृतीयोऽध्यायः ।

रश्मिः ।

त्वस्य निर्धारणादिति पाठः । सामान्यस्येति समानपदात् स्वार्थे ष्यञ् । सूत्रस्थपदेति । तदवस्थावधृतिपदस्यावृत्तिः समास्तीति । व्यञ्जनया बोधकत्वे शक्त्यभावात् । अतः तदवस्थावधृतिपदस्यार्थवत्ता नेत्यर्थः । अथवेत्यादीति । श्रुतौ ज्ञानिनां तदवस्थावधृतेरस्माकं भक्तानामपि तदवस्थावधृतेः । यद्वा श्रुतौ प्रमाणभूतायाम् । अस्माकं प्रामाणिकानाम् । श्रुत्यन्तरेति । 'इमं मानवं आवर्तं नावर्तन्त' इति श्रुत्यन्तराविरोधात् । भाष्ये फलानियम इति । तुरीयाश्रम एवेति नियमो न । यद्वा गृहस्थस्यानुग्रहभाजः स सर्वस्य न लीलानुभवः, कस्यचिदेवात्यन्तानुग्रहेण पुष्टिप्रविष्टस्य । अभिसन्धिः सङ्कल्पः । आविर्भावयतौ । भवेदिति । तथा च मुक्तेरेकरसत्वभङ्ग इति भावः । एकलिङ्गत्वस्येति । विधिनिषेधयोर्निषेधलिङ्गत्वस्य निषेधो लिङ्गं हेतुः प्रमाणं यस्य तत्त्वस्य । आरोपापवादात् । पूर्वकक्षेति । 'अरूपवदेव हि तत्प्रधानत्वा' दित्यत्र स्फुटम् । विद्येति परा विद्या । 'अथ परा यया तदक्षरमधिगम्यत' इति मुण्डकात् ॥ ५१ ॥

इति नवमं मुक्तिफलानियम इत्यधिकरणम् ॥ ९ ॥

इति श्रीविट्ठलेश्वरैश्वर्यनिरस्तसमस्तान्तरायेण श्रीगोविन्दरायजित्पौत्रेण सम्पूर्णवेत्ता विट्ठलरायजिद्भ्रात्रीयगोकुलोत्सवात्मजगोपेश्वरजिता कृते भाष्यप्रकाशस्य तृतीयाध्यायस्य रश्मौ तृतीयाध्यायस्य चतुर्थपादः सम्पूर्णतामगमत् ॥ ४ ॥

समाप्तस्तृतीयाध्यायः ॥ ३ ॥

१. एतावतो ग्रन्थस्य श्लोकानां संख्या ८८१७ अष्टसहस्राष्टशतसप्तदश । अध्यायत्रयस्य श्लोकसंख्या १४२४२ चतुर्दशसहस्रद्विशतद्विचत्वारिंशत् । श्रीहस्ताक्षरमूलग्रन्थे इदं श्रीगोपेश्वरैः स्वयमेव लिखितम् ।

# श्रीमद्ब्रह्मसूत्राणुभाष्यम्

श्रीमद्वल्लभाचार्यचरणप्रणीतम्

# AṆUBHĀṢYA
# ON
# THE BRAHMASŪTRA

WITH THE COMMENTARY
BHĀṢYAPRAKĀŚA
AND
THE SUPER- COMMENTARY
RAŚMI ON THE BHĀṢYAPRAKĀŚA

VOLUME 4

ADHYAYA 4

EDITED WITH INTRODUCTION BY
MULCHANDRA TULSIDAS TELIWALA

WITH A NEW INTRODUCTION BY
GOSWAMI SRI SHYAM MANOHARJI MAHARAJ

Ācārya Śrī Vallabha, the founder of the *Śuddhādvaita* school of *Vedānta* tradition is said to be of a divine origin imbued with spiritual insight. His philosophy is called pure-non-dualism undefiled by *Māyā*. He was born in *Vikram Saṁvat* 1535 (1479 A.D.), to Śrī Lakṣmaṇa Bhaṭṭa, a Telugu Brahmin and Illammāgāru, a family which had learning towards Vedic rituals and the worship of Gopālakṛṣṇa. He travelled extensively to the religious places such as Vijyanagar, Kāśī and Aḍail (near Prayāga). At these places, he developed his literary and religious activities. His firm faith in lord Kṛṣṇa's commandment led him to devote to the task of a faithful interpretation of the sacred texts like the *Upaniṣad, Gītā* and *Brahmasūtra*. He found that the essential reality is *Śuddha* (pure) unalloyed with *māyā,* and non-dualism (*Advaya*). He advocated the *Puṣṭi* (divine grace), as the most powerful and unfailing method for attaining Supreme Bliss. His *Siddhānta* is known as *Śuddhādvaita-Brahmavāda-Nirguṇa-Puṣtibhakti Mārga*.

Ācārya Vallabha has written a commentary on the *Brahmasūtra,* known as *Aṇubhaṣya* which is available only in the summary form upto III.2.33, the remaining part was supplemented by his second son Śri Viṭṭhalanātha.

Ācārya differs from the earlier Ācāryas viz. Śaṁkara, Rāmānuja, Madhva, and Nimbārka with regard to the interpretation of the nature of Reality. According to Vallabha, Reality is *Brahman* which is *Sat* (existence), *Cit* (conscious), *Ānanda* (bliss)

***Continued on back flap***

**ISBN 81-88643-11-4 (Vol.4)**
**ISBN 81-88643-07-6 (Set)**

**Rs. 3700**
**(Set of 4 Vols.)**

*continued from front flap*

which is denominated as *Rasa* (sentiment). He is *Pūrṇa Puruṣottama*. Among his divine characteristics *Jñāna* and *Kriyā* are important. He is *Kartā* (doer) and *Bhoktā* (enjoyer). For *Līlā*, He creates the universe out of Himself. Vallabha propagates the path of *Puṣṭi Bhakti* (Divine grace) in order to enjoy the union with the Supreme. The *Puṣṭi* can be realised as in the case of gopi's of Vṛndāvan who, in fact, opened the gateway to realize everything with lord Kṛṣṇa. He is for *Svarūpānanda,* instead of *Brahmānanda*. Lord is full of *Rasa* in which love is most important. This brings enjoyment of the Bliss of the Union with Divine.

The present commentaries on *Aṇubhāṣya* known as *Prakāśa* written by Śrī Puruṣottama Caraṇa, a descendent of Śrī Vallabhācārya and another on the same known as *Raśmi* by Śrī Yogi Gopeśvara, of the same lineage, provide excellent and appropriate interpretation of the tradition. In fact, *Aṇubhaṣya* of Vallabhācārya with these two commentaries given by Śrī Puruṣottamacaraṇa and Gopeśvarajī is the most authentic text for providing illuminating interpretation of the *Brahmasūtra*.

This edition was originally printed by Nirnaysagar Press, Bombay, an institution known for publishing and printing the authentic editions. This work was published some eighty years ago, now printed again with a new Introduction by one of the greatest scholars of modern times in the tradition.

MAHĀPRABHU ŚRĪ VALLABHĀCHĀRYA'S

# AṆUBHĀṢYA

ON

# THE BRAHMASŪTRA

WITH THE COMMENTARY

## BHĀṢYAPRAKĀŚA

OF

## GOSVĀMI ŚRĪ PURUṢOTTAMAJI

AND

THE SUPER- COMMENTARY

## RAŚMI ON THE BHĀṢYAPRAKĀŚA

OF

## GOSVĀMI ŚRĪ GOPEŚVARJI

EDITED WITH INTRODUCTION AND APPENDICES ETC. BY
MULCHANDRA TULSIDAS TELIWALA

WITH A NEW INTRODUCTION BY
GOSWAMI SRI SHYAM MANOHARJI MAHARAJ

ṢAṢṬHAPĪṬHĀDHĪŚVARA,
MANDIRA ŚRĪ MUKUNDARĀYAJĪ ŚRĪ GOPĀLALĀLAJĪ, KĀŚĪ.

VOLUME FOUR

ADHYĀYA 4

AKSHAYA PRAKASHAN
DELHI

श्रीकृष्णाय नमः

# श्रीमद्ब्रह्मसूत्राणुभाष्यम्

शुद्धाद्वैतब्रह्मवादनिर्गुणभक्तिमार्गप्रवर्तकाचार्यचक्रचूडामणि-

## श्रीमद्वल्लभाचार्यचरणप्रणीतम्

दशदिगन्तविजयिश्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणप्रणीत-

## भाष्यप्रकाशेन

सम्पूर्णवेत्तृश्रीमद्गोस्वामिश्रीगोपेश्वरजिचरणप्रणीत-

## भाष्यप्रकाशरश्मिना

च परिबृंहितम्

मूलचन्द्रतुलसीदासतेलीवाला

इत्यनेन संशोधितम्

काशीस्थ-श्रीमुकुन्दरायजी-श्रीगोपाललालजीमन्दिराधिष्ठित-

षष्ठपीठाधीश्वर-गोस्वामिश्रीश्याममनोहरपाद-

विरचितया नवीनभूमिकया समुल्लसितम्

चतुर्थो भागः

चतुर्थोऽध्यायः

देहलीस्थ-

अक्षयप्रकाशनेन

प्रकाशितम्

श्रीकृष्णाय नमः ।

# श्रीमद्ब्रह्मसूत्राणुभाष्यम् ।

शुद्धाद्वैतब्रह्मवादनिर्गुणभक्तिमार्गप्रवर्तकाचार्यचक्रचूडामणि-
श्रीमद्वल्लभाचार्यचरणप्रणीतम् ।

दशदिगन्तविजयिश्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणप्रणीत-
भाष्यप्रकाशसम्पूर्णवेतृश्रीमद्गोस्वामिश्रीगोपेश्वर-
जिच्चरणप्रणीतभाष्यप्रकाशरश्मिपरिबृंहितम् ।

## चतुर्थाध्यायस्य प्रथमद्वितीयौ पादौ ।

'भगवद्धर्मपरायण सद्गत श्रेष्ठि गोवर्धनदास सुन्दरदास' इत्यस्य पुष्टिमार्गीय-
संस्कृतसाहित्यसमुद्धारार्थं निर्दिष्टद्रव्यसङ्ग्रहतः 'प्राप्तभगवत्पद-
मूलचन्द्र तुळसीदास तेलीवाला, बी. ए., एल्एल्. बी.,
वकील, हाइ कोर्ट' इत्येतेषां सुहृद्भिः
संशोध्य 'निर्णयसागर' मुद्रणालये
मुद्रयित्वा प्रकटीकृतम् ।

श्रीवल्लभाब्दाः ४५०. संवत् १९८४.

मूल्यं सार्धमुद्रिका ।

श्रीकृष्णाय नमः ।
श्रीगोपीजनवल्लभाय नमः ।
श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# श्रीमद्ब्रह्मसूत्राणुभाष्यम् ।

## भाष्यप्रकाश-रश्मि-परिबृंहितम् ।



## अथ चतुर्थोऽध्यायः ।

### प्रथमः पादः ।

समन्वयेनाविरोधात् साधनैर्ब्रह्मविद् यदि ।
तस्याग्रिमव्यवस्था या सा चतुर्थे विविच्यते ॥ १ ॥
जीवतो म्रियमाणस्य गच्छतः सफलस्य च ।

---

भाष्यप्रकाशः ।

अथ चतुर्थाध्यायं विवरिषवो यथा पूर्वाध्यायारम्भे कारिकाभिरध्यायार्थः पादार्थश्च सङ्गृहीतः, तथात्राध्यायार्थं पादार्थांश्च सङ्गृह्णानाः पूर्वाध्यायसङ्गतिं निरूपणप्रकारं च बोधयितुं पूर्वाध्यायार्थान् स्मारयन्तः प्रस्तुताध्यायार्थं सार्धेनाहुः समन्वयेनेत्यादि । श्रुतीनां परस्पराविरोधाद् यो ब्रह्मणि सम्यगबाधितोऽन्वयः सम्यग्बोधनरूपस्तेनानुष्ठितैः साधनैर्यदि ब्रह्मविद् विरुद्धसर्वधर्माधारभूतब्रह्मविषयकनिर्विचिकित्सशाब्दज्ञानवान् भवति, तस्य जीवतो म्रियमाणस्य गच्छतः सफलस्य च याग्रिमव्यवस्था ज्ञानानुकूलप्रकारेण फलपर्यन्ता स्थितिः सा चतुर्थे फलाध्याये विविच्यते फलस्वरूपप्रकारबलानां निष्कर्षेणासङ्कीर्णतया

रश्मिः ।

निःसाधनजनोद्धारः ससाधनजनप्रियः ।
फलात्मा कृष्णपरमानन्दान् प्रादुश्चकार ह ॥ १ ॥

'आत्मा वा अरे' इति श्रुत्युक्तदर्शनमत्र ज्ञेयम् । भक्तिमार्गीयभाष्यत्वात् । फलाध्यायं व्याकरिष्यमाणा मङ्गलमाचरन्ति स्म अथेत्यादिना । श्रवणमात्रेण मङ्गलसिद्धेः साधनाध्यायानन्तरमित्यर्थः । सङ्गृह्णाना इति । उभयपदी ञ्यादिस्तेन स्वाधिकारः सूचितः । सङ्गतिमिति । हेतुतारूपाम् । निरूपणेति । जीवत इत्यादिना निरूपणप्रकारम् । सम्यगिति । 'यतो वाचो निवर्तन्त' इति श्रुतिप्राप्ताशब्दत्वनिराकरणपूर्वकबोधनरूपो बोध्यतेनेन शब्देनेति बोधनः शब्दः । बोध्यत इति बोधनं ज्ञानम् । ताभ्यां रूप्यते व्यवह्रियते यः सम्बन्धः स सम्यग्बोधनरूपः । केचिद्वाक्यार्थमन्वयमाहुः । तेनेति । सम्बन्धेन वाक्यार्थैर्वानुष्ठितैः पूर्वं सर्वोत्तममार्गेणानुष्ठानं कर्ममार्गस्य । 'यथानुष्ठीयमानेन त्वयि भक्तिर्नृणां भवे'दित्येकादशस्कन्धात् । तदनु नवधाभक्तिरेकादशकोनविंशाध्यायोक्ता । तदनुष्ठानम् । पश्चाद् गीतोक्ता ज्ञानयज्ञादीनां विधानमनुष्ठानं तयानुष्ठितैः साधनैः । सफलस्येति । भुक्त्या सह वर्तमानस्य । ज्ञानेति । सफलस्य पुरुषोत्तमज्ञानानुकूलप्रकारेण पुरुषोत्तमलीलानुभवः फलपर्यन्ता स्थितिः । विशेषात् पूर्वाधिकरणोक्तं स्मारितम् । फलेति । पूर्वपादे जीवतः फलादिकानां निष्कर्षेण, द्वितीये

अतो ब्रह्मविदा कार्यमेवमेव, न चान्यथा ॥ २ ॥
तामसीं बुद्धिमाश्रित्य ये मूढाः सर्वविप्लवम्।
वदन्ति शास्त्रनाशाय सद्भिः शोच्याश्च येऽनु तान् ॥ ३ ॥

---

भाष्यप्रकाशः।

प्रकाश्यते। तथा च यथा समन्वयाविरोधाभ्यामुपनिषद्वाक्यानामामासत्वनिराकरणेन तेषां ब्रह्मण्येव प्रमाणत्वम्, तेषु च ब्रह्मण एव प्रमेयत्वं व्यक्तीकृतम्, यथा च श्रुतीनां बोधकताप्रकारनिरूपणेनोपासनात्मकसाधनप्रकारनिर्णयाद् ब्रह्मवित्त्वं व्यक्तीकृतम्, तथात्रोपासनादिसाधनवतो ब्रह्मविदोवस्थानिरूपणात् क्रमेण साक्षाच्च प्राप्यस्य ब्रह्मणः फलत्वमुपपत्तिपूर्वकं निरूप्यत इत्ययं निरूपणप्रकारः, कार्यकारणभावोवसरश्च सङ्गतिरित्यर्थः ॥ १½ ॥

पूर्वाध्याये यावज्जीवं ज्ञानानुकूलसाधनानुष्ठानरूपं जीवतो ब्रह्मविदः कार्यं निरूपितमिति पुनरत्र तत्कथनस्य किं प्रयोजनमित्याकाङ्क्षायामाहुः अत इत्यादि। यतोयं सिद्धसाधनः, न तु प्राप्तफलः, अत ईदृशेन प्रथमपादोक्तरीत्यैव कार्यम्, न तु तूष्णीं स्थेयम्। 'तत्वेव भयं विदुषोऽमन्वानस्ये'ति प्रतिबन्धबोधकश्रुतेः। अतः सिद्धज्ञानस्याप्येतत्कर्तव्यताबोधनमेव प्रयोजनमित्यर्थः ॥ २ ॥

नन्वत्रान्ये 'किं प्रजया करिष्याम' इति श्रुत्या 'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः। आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यत' इति गीतास्मृत्या च ब्रह्मविदः कार्यमात्रनिषेधमङ्गीकुर्वन्ति, तत्कथमत्र ब्रह्मविदः कार्यकरणशिक्षेत्याशङ्कायां तन्मतं दूषयितुमाहुः तामसीमित्यादि। 'अधर्मं धर्ममिति या मन्यते तमसावृता। सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी' इति गीतोक्तलक्षणका सर्वार्थवैपरीत्यबोधिका भ्रान्ता बुद्धिस्तामसी। तामाश्रित्य ये मूढा वैयासशास्त्रनाशाय सर्वविप्लवं सगुणब्रह्मविद्याविषयस्य ब्रह्मस्वरूपस्य वेदोक्तसाधनगुरूपदेशप्रभृतीनां मायिकत्वादिरूपं वदन्ति, ये चताननु तदनुसारिणस्ते सद्भिः शोच्याः पूर्वोक्तश्रुतिस्मृत्युक्तस्य कार्यकरणनिषेधस्य बहिरङ्गसाधनविषयतयान्तरङ्गतद्विषयत्वाभावादबोध-

रश्मिः।

म्रियमाणस्य फलादिकानाम्, तृतीये क्रममुक्तिः फलं तदादिकानाम्, तुरीये पुष्टिमर्यादाभेदेन फलं तदादिकानां निष्कर्षेणेत्यर्थः। समन्वयेति। प्रथमाध्यायार्थः समन्वयः, अविरोधो द्वितीयाध्यायार्थः ताभ्याम्। अत्रेति। तुरीयेध्याये। तृतीयाध्यायोक्तोपासनादिसाधनवतः। अवसर इति। शाब्दापरोक्षे भूयसामुपनिषद्भागानां तृतीयाध्यायसङ्गृहीतानां सन्दिग्धानां च साधननिरूपकाणां वैय्यर्थ्यप्रसङ्गात् प्रतिबन्धकीभूतसाधनजिज्ञासानिवृत्तौ सत्यामवश्यवक्तव्यत्वमग्रिमावस्थाया इति पूर्वपादयोरस्य चावसर इत्यर्थः। साधनफलयोः कार्यकारणभावः सङ्गतिः स्पष्टा ॥ १ ॥ निरूपितमिति। सफलोपासनानां सफलभक्तीनां च निरूपणान्निरूपितम्। अयमिति। ब्रह्मवित्। तत्वेवेति। तत् वा इव विदुषोऽमन्वानस्य भयमित्युक्त्या युक्तिभिरनुचिन्तनस्य मननत्वेन यदि साधनाध्यायेन ब्रह्मविदेव फली स्यात् फलाध्यायं न वदेदित्यादियुक्तिभिरनुचिन्तनस्य तत्वावेव मन्वानस्य भयं प्रतिबन्धकम्। 'उद्वेगः प्रतिबन्धो वा भोगो वा स्यात्तु बाधक'मिति भयरूपप्रतिबन्धकश्रुतेः। सिद्धज्ञानस्य साधकस्यैतत्कर्तव्यताबोधनं फलाध्यायोक्तकर्तव्यताबोधनम् ॥ २ ॥ मायिकत्वादीति। आदिना सगुणं कार्यं स्वतन्त्रत्वानि। शोच्यत्वमाहुः पूर्वोक्तेति। अव्यवहितपूर्वाशङ्काग्रन्थोक्तश्रुतिस्मृत्युक्तस्येत्यर्थः। कार्यकरणेति। कार्यकृतिनिषेधस्य। अन्तरङ्गसाधनविषयत्वाभावाय 'यस्त्वात्मरति' श्लोकोत्तरश्लोकमाहुः

ब्रह्मविद्गमनाभावः शतांशेनापि चेद् भवेत् ।
शास्त्रमेतद् वृथा जातं सर्वसूत्रविनाशतः ॥ ४ ॥
स्वाप्ययस्य च सम्पत्तेरत्र ब्रह्मगतिश्रुती ।

भाष्यप्रकाशः ।

ग्रस्ता इत्यतः शोकविषयीकार्या एव, न तूपादेयवाक्याः । गीतायां 'यस्त्वात्मरति'रित्यादि-वाक्यानन्तरं, 'तस्मादसक्तः सततं कार्यं कर्म समाचर । असक्तो ह्याचरन् कर्म परमाप्नोति पूरुष' इति तथा कर्मकरणावश्यकत्वकथनात् । अतः शिक्षाकथनमेवात्र युक्तम्, न तु साधननिरूपणस्य प्रासङ्गिकत्वकथनम् । साधनसिद्ध्यनन्तरमपि कर्तव्यतया फलविषयकपरोक्षानुभवरूपतया चावान्तरफलरूपत्वादित्यर्थः ॥ ३ ॥

नन्विदमप्रयोजकम्, 'तस्य तावदेव चिर'मिति श्रुतेर्ब्रह्मज्ञानोत्तरं सद्योमुक्तेरेव श्रावणात्, अतो ब्रह्मविदो न किञ्चित् कार्यम्, यत्पुनरत्रोक्तम्, तत्तु जघन्याधिकारिणां सगुणविद्यावतां फलसिद्ध्यर्थम्, अत एवाग्रे द्वितीयतृतीययोरुत्क्रान्तिगमनादिविचारोपि युज्यते, तस्मान्नोक्तं साधीय इत्यत आहुः ब्रह्मविदित्यादि । परब्रह्मविदो गमनाभावोर्चिरादिना क्रममुक्तिमार्गेण गमनस्य राहित्यं चेत्, शतांशेनापि प्रकारेण भवेत्, तदा एतत् तृतीयपादरूपं शास्त्रम्, सर्वेषां 'अर्चिरादि'सूत्रमारभ्य, 'विशेषं च दर्शयती'त्यन्तानां सूत्राणां विनाशतोऽब्रह्मप्राप्तिपरतया वैयर्थ्याद् वृथा जातम्, कार्यात्यये परप्राप्तेः साधनं विनापि सम्भवादिति॥४॥

नन्वत्र कोपपत्तिर्ययैतेषां सूत्रार्थानां परब्रह्मपरत्वं स्थाप्यत इत्यत आहुः स्वाप्ययस्येत्यादि । अत्र दहरविद्यारूपे ब्रह्मविद्गतिप्रकरणे स्वाप्ययस्य सुषुप्तेः सम्पत्तेर्ब्रह्मप्राप्तेश्च सम्बन्धिन्यौ ब्रह्मगतिश्रुती, 'अथ या एता हृदयस्य नाड्य' इत्यारभ्य, 'तेजसा हि तदा सम्पन्नो भवती'त्यन्ता, 'अथ यत्रैतदस्माच्छरीरादुत्क्रामती'त्यारभ्य, 'शतं चैका च पुरुषस्य नाड्य' इति श्लोकान्ता च ब्रह्मणि गमनबोधिके श्रुती पूर्वं वर्तेते । अतो भगवदुपन्यस्ते प्रजापतिवाक्येपि ते आदर्तव्ये ।

रश्मिः ।

गीतायामिति । शिक्षेति । कार्यकरणशिक्षाकथनम् । साधनेति । तृतीयाध्याये । प्रासङ्गिकत्वं शाब्दापरोक्षोपपादने साधनानां स्मृतत्वात् । कर्तव्यतयेति । 'साधनानामसिद्धवदावृत्तिः कर्तव्ये'ति सुबोधिन्याम् । फलेति । परोक्षानुभवः शाब्दानुभवः । अवान्तरेति । शाब्दापरोक्षं परमफलम् ॥३॥ अत्रोक्तमिति । पूर्वकारिकयोरुक्तम् । द्वितीयेति । अध्याययोः । 'उत्क्रान्तिगत्यागती'त्यादिसूत्रैर्द्वितीये । 'तदन्तरप्रतिपत्तौ रंहती'त्यादिभिस्तृतीये च विचारोपि युज्यते । परेति । गौणमुख्यन्यायेनोक्तम् । ब्रह्मविदोपि बोध्यम् ॥ ४ ॥ एतेषामिति । तृतीयपादस्थानाम् । परब्रह्मेति । अधोक्षजपरब्रह्मरूपफलपरत्वम् । अत्रेति । व्याख्येयम् । फलाध्याये दहरविद्यारूपे ब्रह्मविद्गतिप्रकरणे इति व्याख्यानम् । ब्रह्मविदिति । 'यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्समाहित'मिति श्रुतौ नास्ति यत्तस्यापि समाहित्युक्तेः कतिपयगुणैरधोक्षजपरब्रह्मविदपि । प्रजापतीति । प्रजापतेर्वाक्यं प्रजापतिवाक्यम् । 'एतद्ध स्म वैतत्पूर्वे ब्राह्मणा अनूचाना विद्वाँसः प्रजां न कामयन्ते किं प्रजया करिष्याम' इत्यादिशारीरब्राह्मणे तस्मिन् । अत्र ब्राह्मणा इत्यत्र ब्राह्मणः प्रजापतिः । गोपालतापनीये 'तꣳहोवाच ब्राह्मण' इति श्रुतौ पर्यायतादर्शनात् ।

अन्यथा न श्रुतेरर्थः स्याचेद् व्यासो वदेन्न किम् ॥ ५ ॥
तामसीं बुद्धिमाश्रित्य या मुक्तिः कैश्चिदुच्यते ।
सा सुषुप्तिश्रुतेरर्थो मोहादेवान्यथामतिः ॥ ६ ॥

भाष्यप्रकाशः ।

ब्रेयत्वात्मन उभयत्राप्यैक्यात् । यतः प्रजापतिवाक्यरूपश्रुतेरर्थः अन्यथा न, पूर्ववाक्यविरुद्धो न । यदि स्यात्, तदा व्यासः सर्वस्य ब्राह्मपदार्थस्य निर्णयार्थं प्रवृत्तः फलविवेचनावसरे तमर्थं किं न वदेत्, अपि तु वदेदेव । तथा चानयोपपत्त्या तेषां ब्रह्मपरत्वं स्थाप्यत इत्यर्थः ॥५॥

ननु, 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते, अविनाशित्वान्न तु द्वितीयमस्ति, ततोन्यद्विभक्तं यत् पश्ये'दित्यादिना मुक्तौ भेददर्शनाभावश्रावणात्तत्र कथं ब्रह्मविदो गत्युपपत्तिरित्यत आहुः तामसीमित्यादि । पूर्वोक्तां बुद्धिमाश्रित्यास्यां श्रुतौ या निःसम्बोधा मुक्तिः साङ्ख्यमतवदिष्यते, सा निःसम्बोधा मुक्तिः सुषुप्तिश्रुतेरर्थः, शारीरब्राह्मणे तत्सजातीयवाक्यैस्तथा सिद्धत्वात् । अतः प्रजापतिवाक्यसिद्धायां मुक्तौ या तथा मतिः सा मोहादेव । तस्मात्

रश्मिः ।

शिष्याभिप्रायेण बहुवचनम् । उभयत्रेति । दहरविद्यायां शारीरब्राह्मणे च । पञ्चम्या उत्तरार्धं विवृण्वन्ति स्म यत इति । पूर्ववाक्येति । पूर्वे पूर्वत्वेनाङ्गीकृते वाक्ये दहरोक्ते । ताभ्यां विरुद्धो न । तदित्थम्, पूर्ववाक्ययोर्दहरविद्यास्थयोः प्रथमे सुषुप्तेः प्रतिपादनादकामो भगवान् सुषुप्तिरूप उक्तः, स गीतोक्ते कर्तर्यसक्ते प्रपञ्चाऽसक्तेऽवस्थारूपः, स एव 'किं प्रजया करिष्यामो येषां नायमात्मा नायं लोक'इति पूर्वं भवदुपन्यस्ते प्रजापतिवाक्येप्यसक्तः गीतोक्तः कर्ता, तत्राकामरूपो भगवान् सुषुप्त्यभिन्नः, अनुगमात् । द्वितीये सम्पत्तेः प्रतिपादनादोङ्काररूपजीवो मनःक्षेपं कुर्यात्, तदन्वादित्यद्वारा विदुषः प्रपदनं निरोधो नाशोन्येषां जीवानाम् । निरोधपदतात्पर्यार्थः प्रपञ्चविस्मृतिपूर्वकभगवदासक्तिरूपः, स भगवद्दत्तो जीवधर्मः । सोप्यन्येषामविदुषां विद्वद्भिन्नानां भक्तानाम्, अन्यथा न्यूनताख्यनिग्रहस्थानापत्तेः । भूमत्वेन रूपेण निरोधस्य सम्पत्तित्वम् । 'स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तमे'तिवाक्यात् । एषोक्ता सम्पत्तिरूपब्रह्मप्राप्तिः । सैव भवदुपन्यस्तप्रजापतिवाक्याग्रे 'स एष नेति नेत्यात्मे'ति श्रुतिः । अस्या 'अथात आदेशो नेति नेती'तिवदर्थः । अत्र पूर्वोक्तसम्पत्तेः ब्रह्मप्राप्तिरूपायाः स्वीकारः । अग्रे 'तस्यैव स्यात्पदवि'दिति पादसेवनभक्तिमुक्त्वा 'ब्राह्मणो भवती'त्युक्तम् ततोपि 'ब्रह्माभयं वै ब्रह्माभय९हि वै ब्रह्म भवति य एवं वेदे'ति पठ्यते । एवं पूर्ववाक्याभ्यां विरुद्धो न । विरुद्धस्तु 'किं प्रजया करिष्याम' इत्यादेः । 'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः । आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते' इतिवाक्यमात्रविषयो ब्रह्मविदः कार्यमात्रनिषेधपरोर्थः । तमर्थमिति । ब्रह्मविदः कार्यमात्रनिषेधपरमर्थं सूत्रैः किं न वदेत् । अनयेति । अर्थो विरुद्धः स्यात्तं सूत्रैर्वेददेवेत्यनया तृतीयपादस्थानां सूत्रार्थानां परब्रह्मपरत्वं 'यस्त्वात्मरति'रितिवाक्याग्रेतने'तस्मादसक्त' इति वाक्ये 'परमाप्नोति पूरुष' इति कथनात् स्थाप्यत इत्यर्थः ॥ ५ ॥ गत्युपपत्तिरिति । द्वितीयस्मिन् गत्युपपत्तिः । पूर्वोक्तामिति । द्वितीयकारिकाव्याख्यानोक्ताम् । निःसम्बोधेति । 'किं प्रजया करिष्याम' इत्यस्या अग्रे सम्पत्तिबोधिका 'स एष नेति नेत्यात्मे'ति श्रुतिः तया निःसम्बोधा मुक्तिरुच्यते । 'स एष नेति नेती'त्यस्याः तामसीं बुद्धिमाश्रित्य स्वमतरीत्या निःसम्बोधेति । सम्यग् बोधः सम्बोधः सविषयस्तस्मान्निर्गता निःसम्बोधा । 'देवस्तुर्यो विभुः स्मृत' इति माण्डूकोपनिषदि श्रावणात् तुर्यः तुरीयः विभुत्वमपि स्मृतम्, न तु वस्तुत इति निःसम्बोधा । प्रजापतीति । 'किं प्रजया करिष्याम' इति

अतो ब्रह्मविदः कार्यं जीवतः पूर्वमुच्यते ।
आवृत्तिः श्रवणादीनां नवकृत्वोपदेशतः ॥ ७ ॥
दर्शनार्थत्वतो लिङ्गादपि व्रीह्यवघातवत् ।
आवृत्तौ श्रवणादीनामात्मेति स्याद् दृढा मतिः ॥ ८ ॥
आपाततो दर्शनं तद्भेदेनापि बोध्यते ।
प्रतीकोपासनादीनां [1]नैवं भावो हि जायते ॥ ९ ॥

भाष्यप्रकाशः ।

प्रथमे पादे यदुक्तम्, तत् ब्रह्मविदः शिक्षार्थमेव न तु साधनशेषतयेत्येव मन्तव्यम् । 'तत्वेव भय'मिति श्रुतेर्ज्ञानोत्तरमपि मननस्यावश्यकत्वादित्यर्थः ॥ ६ ॥

एवं पादप्रयोजनं निश्चित्य तदर्थमाहुः अत इत्यादि । यस्माद् ब्रह्मविदोपि जीवदशायां फलानुकूलं कार्यमावश्यकम्, अतः पूर्वं प्रथमपादे तदुच्यते । किं तदित्याकाङ्क्षायामाहुः आवृत्तिः श्रवणादीनामिति । तत्र गमकं हेतुत्रयम् । नवकृत्वोपदेशतः नवसङ्ख्यां कृत्वा य उपदेशः, नवकृत्वउपदेश इति यावत् । तस्मात् ॥ ७ ॥ लिङ्गात् स्मृतिरूपात् । व्रीह्यवघातवच्छ्रवणादीनां दर्शनार्थत्वतोपीति । सा आवृत्तिः प्रथमेधिकरणे उच्यते । तत्फलं द्वितीयमाहुः आवृत्तावित्यादि । आत्मेति । भगवानात्मा । तथा चेदं तस्यावान्तरफलमित्यर्थः ॥८॥ अवान्तरत्वं साधयन्ति आपातत इत्यादि । भगवतः सर्वात्मकत्वात् सर्वरूपत्वादात्मात्मत्वाच्च तस्य यद् आत्मसूत्रप्रथमवर्णकोक्तरीत्या आत्माभेदेन दर्शनम्, तद् आपाततो दर्शनमिति बोध्यते । अपिशब्दाद्यथाधिकारमात्मोपदेशरूपं द्वितीयं ब्रह्मविदः कार्यं च । प्रतीकमुपासनं येषां ते प्रतीकोपासनाः । आदिपदात् कर्ममार्गीयाश्च । तेषां हि यतो हेतोर्भावो ज्ञानित्वं भक्तिर्वा नैव जायते ॥९॥ अत आलम्बनार्थं ध्यानविषयतया ग्रहणार्थम्, तत्रापि अन्यैः प्रतीक-

रश्मिः ।

वाक्यसिद्धायां ससम्बोधायां मुक्तौ तथा निःसम्बोधत्वेन मतिः सा मोहाज् ज्ञानावरकतमोधर्मात् । ससम्बोधत्वं तु मण्डूके 'स्मृत' इत्यनेन स्मृतिविषयः, स्मृतौ तु श्रीभागवतरूपायामधोक्षजत्वेपि 'कृष्णस्तु भगवान् स्वयम्' इति तुरीय इत्युक्त्वा व्रजे क्रीडितोक्तः । विद्वन्मण्डनेपि बृहद्वामनपुराणवचनैर्वृन्दावनादिस्थगोपीजनवल्लभ उक्तः । एवं च कतिपयगुणैः स्मार्तैरधोक्षजः स्मृतः ससम्बोध इति । तुरीयः ससम्बोधमोक्षरूप इति । साङ्ख्यमते विशेषतो वदिष्यते । साधनशेषेति । ब्रह्मविदः कार्यमात्रनिषेधशेषतया 'तत्वेव भयं विदुषोऽमन्वानस्येति' श्रुतिः । तदुच्यत इति । जीवतः कार्यमुच्यते । यतो द्वितीयस्कन्धसुबोधिन्यां जीवतो म्रियमाणस्य च 'तस्माद्भारत सर्वात्मा भगवान् हरिरीश्वरः । श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताभयम्' इतिवाक्येन कार्यकर्मसमाचरणमुक्तम् । तद् द्वयमत्र गृहीतम् । तदित्तीति । कार्यं कर्म । द्वितीय इति । आत्माधिकरणे । इदमिति । इदं मननम् । तच्च वस्तुविशेषविषयकम् । तस्येति । श्रवणाद्यावर्तनस्येत्यर्थः । यथाधिकारमिति । भेदाधिकारे भेदोपदेशोपि । प्रतीकमङ्गमुपासनकरणमुपासनविषयं येषामुपासकानाम् । नैवेति । कर्मसु देशादिषण्णामशुद्धयोपासनासु श्रद्धाभावादिप्रतिबन्धकेन चित्तशुद्ध्यभावान्नैव जायते । कर्मोपासनाभ्यां देहवतामदर्शनादेवकारः ॥९॥ ग्रहणार्थमिति । आत्मनो ग्रहणार्थम् । तत्रापीति । व्याख्येयम् ।

१. नैवेति प्रकाशः ।

**आलम्बनार्थं तत्रापि ब्रह्मदृष्टिर्विशिष्यते।**
**आदित्यादिब्रह्मदृष्टेरङ्गत्वं न स्वतन्त्रता ॥ १० ॥**
**मनने च निदिध्यासे विशेषश्चोच्यतेऽधुना।**
**आसनादिषडङ्गैस्तु चित्तं श्रौतार्थ एव हि ॥ ११ ॥**

---

भाष्यप्रकाशः।

त्वेनोच्यमाने विषयेपि, **ब्रह्मदृष्टिर्विशिष्यते** विशेषबोधिका भवति। सापि तदीयं कार्यम् ॥९३॥

तृतीयाधिकरणस्यार्थमाहुः **आदित्ये**त्यादि। स्पष्टम्। **मनने च**त्यादि। अधुना आदित्यादिमत्या आदित्याद्युपासनेन आदित्यादिभिः फलदानद्वारा माहात्म्यप्रतिपादनेन भक्तिद्वारा **मनने, निदिध्यासे**, भावे घञ्, निदिध्यासने च **विशेषो** भगवतो बहिरन्तःप्राकट्यरूप**श्चोच्यते**। तेन फलस्यापाततोऽनुभवप्रकारो मनननिदिध्यासनरूपं तृतीयं कार्यम्। तेन फलमाहुः **आसनादी**ति। आसनं भगवतो बहिःप्रकटस्य उपवेशनम्। आदिपदेनान्तरुपवेशनं लीलाप्राकट्यं च, तेषां यानि षडङ्गानि श्रवणाद्यावृत्तिः, आत्माभेददृष्टिः, तथा ग्राहणम्, अप्रतीकोपासनम्, सर्वत्र ब्रह्मदृष्टिः, आदित्यादिष्वङ्गबुद्धिश्च, **तैश्चित्तं श्रौतार्थे** भगवति

रश्मिः।

**अन्यै**रिति व्याख्यानम्। **विशेषे**ति। ब्रह्मेत्युपास्ते सर्वत्रब्रह्मदृष्टिरधिकारिणि **विशेष**स्योत्कर्षस्य **बोधिका** भवति। **सापी**ति। ब्रह्मदृष्टिरपि। **तदीयं** विद्वज्जीवीयम्। **स्पष्ट**मिति। मधुब्राह्मणे 'य एतमेवं विद्वानादित्यं ब्रह्मेत्युपास्त'इति श्रुत्युक्ताया आदित्यादिषु ब्रह्मदृष्टेः। **अङ्गत्व**मिति। नत्वादित्यो ब्रह्माङ्गमिति न ब्रह्मेति। **स्वतन्त्रे**ति। ब्रह्मवत् स्वतन्त्रता। कर्तृत्वम्। एवं स्पष्टमित्यर्थः। **अधुने**ति। व्याख्येयं पूर्वार्थानुसन्धाने। श्रवणानुसन्धानेन मनननिदिध्यासयोर्वक्तव्ययोः सतोः। **आदित्याद्युपासनेन** चित्तशुद्धिः। इदं श्रवणादिकमुपासनाङ्गम्। अतो भक्तौ कारणं माहात्म्यमाहुः। **आदित्यादिभि**रिति। **माहात्म्ये**ति। यतो यदङ्गं फलं ददातीति देवनं माहात्म्यम्, तस्य भक्तिकारणस्य **प्रतिपादनेन** कारणरूपेण। **भक्ती**ति। उक्तचित्तशुद्धिराधिदैविकीति भक्तिः, सा प्रेमलक्षणा, तद्द्वारा। 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति मैत्रेयीब्राह्मणश्रुत्या **मनने** इत्यर्थः। **भावे घञि**ति। निदिध्यास्यते **निदिध्यासः**, इति निदिध्यासनं समाधिस्तस्मिन्। **भगवतो बहि**रिति। तेन मनने ध्यानमेकैकाङ्गेमनोनिवेशनरूपं बहिरन्तःप्राकट्यकारणं बोध्यम्। **फलस्ये**ति। अध्यायार्थस्याव्याप्तिः परिहृता। तैत्तिरिशाखारूपस्य द्वादशस्कन्धोक्तस्य आदित्यादिभिर्दत्तफलस्य यथाकथञ्चित् फलस्यात्राध्याये सत्त्वात्। **आपाततः** आत्माभेदेन दर्शनात्। **तेने**ति। उक्तसाधनेन। **सूत्रैरधुनोच्यत इति** पूर्वकारिकायां करणोपलब्धेराहुः **आसनं भगवत** इति। यद्यपि 'भक्त्या प्रसन्ने तु हरौ तं योगेनैव योजये'दितितृतीयस्कन्धकारिकया श्रौतः षडङ्गयोगः प्राकट्यानन्तरं वक्तुमुचितः, 'ततः सिद्धिमवाप्स्यती'त्यपि सम्भवः। एकादशे सेवानन्तरं सिद्धिनिरूपणात्। किञ्च मनने ध्याननिवेशाद्धारणोपस्थितिर्भवति। अधिकारस्कन्धानन्तरं साधनस्कन्धे ध्यानधारणयोर्निरूपणात्। तथापि यावत् पर्यन्तमासीनसूत्रस्य धर्मिपरत्वं सम्भवति, तावत्पर्यन्तं न दैशिकत्वम्, सूत्राणां सारवद्विश्वतोमुखत्वेप्यत आहुः, **आसनं भगवत** इति। **प्रकटस्ये**ति। अव्यवहितपूर्वोक्तप्राकट्यवत इत्यर्थः। आसीनसूत्रे। **अन्तरुपे**ति। ध्यानाच्चेतिसूत्रे उक्तम्। **लीलाप्राकट्य**मिति। अचलत्वं चेति सूत्रे। **श्रवणाद्यावृत्ति**रिति। लिङ्गाच्चेति सूत्रे श्रवणाद्यावृत्त्यङ्गम्, अतः आत्मेतिसूत्रार्थमाहुः **आत्माभेददृष्टिः। तथा ग्राहण**मिति। न प्रतीकेनेति सूत्रार्थमाहुः **'अप्रतीके'**ति। ब्रह्मदृष्टिसूत्रार्थमाहुः **सर्वत्रे**ति। आदित्यादिमतिसूत्रार्थमाहुः

धारयेदामतेरेवं ततः सिद्धिमवाप्स्यति।
धर्माधर्मभयं तस्य नास्त्येवेति विनिश्चयः ॥ १२ ॥
अग्निहोत्रादिकं कार्यं सन्न्यासः फल एव हि।
षोढा चेत् पुरुषो व्यक्तः प्रारब्धान्ते फलं भवेत् ॥ १३ ॥
एतावान् प्रथमे पादे निर्णयः सूत्रकृत्कृतः।
द्वितीये म्रियमाणस्य सर्वेन्द्रियलयः पुरा ॥ १४ ॥
लिङ्गस्यापि शरीरस्य नाड्योत्क्रान्तिरिहोच्यते।
विनायनकृतो नास्य विशेषोस्तीति चोच्यते ॥ १५ ॥
तृतीये क्रममुक्तौ यो मार्गो यस्य श्रुतेर्मतः।
तन्निर्द्धारोन्यमार्गीयाणामप्राप्यत्वं च वर्ण्यते ॥ १६ ॥
गन्तव्यं च परं ब्रह्म कार्यो लोकस्तु नेति च।
तुरीये पुष्टिमर्यादाभेदेन फलमुच्यते ॥ १७ ॥
प्रभोरेव फलत्वं तन्निर्दोषत्वं च वर्ण्यते।
लीलानित्यत्वतः पूर्णगुणत्वं च ततोखिलम् ॥ १८ ॥

---

भाष्यप्रकाशः।

धारयेत्। तदपि, आमतेः, मननमारभ्य, एवं उक्तप्रकारेण, ततः तदुत्तरम्, सिद्धिं भगवदासनादिसम्पादकोत्कटस्नेहसम्भवरूपामवाप्स्यति। एवं आप्रायणसूत्रान्तस्यार्थ उक्तः।

तदधिगमादिसूत्रार्थमाहुः धर्मेत्यादि। अग्निहोत्रादिसूत्रार्थमाहुः अग्निहोत्रेत्यादि। फल इति। फलनान्तरीयकदशायाम्। तदावश्यकत्वाय फलप्राप्तिप्रकारमाहुः षोढेत्यादि। प्रथमपादार्थमुक्त्वोपसंहरन्ति एतावानित्यादि ॥ १३½ ॥

द्वितीयस्याहुः द्वितीय इत्यादि। सर्वेन्द्रियलय इति। पुष्टिमार्गीयस्य भगवति, मर्यादामार्गीयस्य भूतेषु। इहेति। जघन्याधिकारिणि उत्क्रान्तिरित्यर्थः। तृतीयस्याहुः। तृतीय इत्यादि। यस्येति। अधिकारिणः। अन्यमार्गाणामिति[1]। अन्ये मार्गा उपाया येषां ते तथा, तेषाम् ॥ १६½ ॥

रश्मिः।

आदित्यादिष्विति। उक्तप्रकारेणेति। षडङ्गैः। भगवदासनादीति। आदिना ध्यानाच्चेत्यादि-सूत्रोक्तम्। अनेन 'स्मरन्ति चे'ति सूत्रार्थ उक्तः। यत्रैकाग्रतासूत्रार्थः पूर्वशेषः। अनुव्यवसाय-निर्णायकाप्रायणसूत्रार्थोपि पूर्वशेषः। आप्रायणेति। भाष्यस्य। धर्मेत्यादीति। तत्रैव स्पष्टम्। अग्नि-होत्रादीति। ननु इतरस्याप्येवमित्यादिसूत्रद्वयस्य कावर्थाविति चेत्। न। सूत्रद्वयार्थयोः पूर्वशेषत्वेन तदधिगमादिसूत्रार्थमित्यत्रादिपदार्थत्वात् तदधिगमादिसूत्राणामर्थमिति षष्ठीतत्पुरुषात्। फलनान्त-रीयकेति। फलदशायामित्युक्ते भोगेन त्वितरे इति सूत्रे सन्न्यासः फलायाक्षेप्यः तद्वदात्मेति तूप-गच्छन्तीत्यत्रामुख्येपि स्यादतो नान्तरीयकेति दशाविशेषणम्। न अन्तरीयके मध्ये भवा दशा नान्त-रीयकदशा, फलस्य नान्तरीयकदशा फलनान्तरीयकदशा तस्याम्। तदावश्यकेति। सन्न्यासावश्य-कत्वाय। षोढेत्यादीति। उक्तैः षडङ्गैः। प्रारब्धान्त इति। भोगेन त्वितरे इति सूत्रे स्फुटम् ॥ १३ ॥

द्वितीयस्येति। पादस्यार्थमाहुः। जघन्याधिकारिणीति। जघन्यानामधिकारोस्यास्तीत्य-

---

[1] मार्गाणामिति प्रकाशकाराभिमतः पाठः।

अस्य फलप्रकरणत्वेपि साधनरूपस्यापि श्रवणस्यान्तरङ्गत्वं ज्ञापयितुं तन्निर्धारमभ्याह ।

आवृत्तिरसकृदुपदेशात् ॥ १ ॥ ( ४-१-१ )

'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इत्यादि-वाक्यैर्विहितं श्रवणादिकं किं सकृदेव कर्तव्यम्, उतासकृदिति भवति संशयः । किं तावत् प्राप्तम्, सकृदेवेति । तावतैव शास्त्रार्थस्य सम्पत्तेः । नच तण्डुल-निष्पत्तिफलकावघातस्येव दर्शनफलकानां श्रवणादीनां तत्सिद्धिपर्यन्तमावृत्ति-र्न्यायप्राप्तेति वाच्यम् । अवघातस्य वितुषीकरणात्मकदृष्टद्वारकत्वेन तथात्व-मस्तु नाम, प्रकृते त्वदृष्टद्वारकत्वात् सकृत्कृतेनैवादृष्टद्वारा फलसम्पादनसम्भवा-दावृत्तिरप्रयोजिकेति प्राप्ते, उच्यते । आवृत्तिरेव श्रवणादीनां श्रुत्यभिमता । कुतः ? असकृदुपदेशात् । छान्दोग्ये श्वेतकेतूपाख्याने 'ऐतदात्म्यमिद५ँसर्वम्,

भाष्यप्रकाशः ।

तुरीयार्थमाहुः तुरीय इत्यादि । सामान्यत उक्त्वा तत्र विशेषमाहुः प्रभोरित्यादि । अत्र प्रभोः फलत्वं 'आत्मा प्रकरणा'दित्यादिसूत्रद्वये, तन्निर्दोषत्वं च 'तत्त्वभावे संभव'दित्यादि-सूत्रद्वये, शेषं 'जगद्व्यापारवर्जा'दिसूत्रेषु । तत्तोखिलमिति । ततः तादृशनिरूपणाद्धेतोः । अखिलं लीलाविशिष्टं स्वरूपं फलमित्यर्थः ॥ १८ ॥

एवं पादार्थनिरूपणमुखेनाध्यायार्थं निरूप्य सूत्राणि व्याचिकीर्षन्तोत्र फलप्रकरणे साधन-निरूपणस्य किं प्रयोजनमित्याकाङ्क्षायां तत्प्रयोजनं वक्तुं सूत्रमवतारयन्ति अस्येत्यादि । अन्त-रङ्गत्वमिति । फलपूर्वकक्षारूपतया फलमध्यपातित्वेन तदुपकारकत्वम् ॥

आवृत्तिरसकृदुपदेशात् ॥ १ ॥ अस्याधिकरणत्वाय विषयादिकमाहुः आत्मेत्यादि । इति प्राप्त इति । द्वारविचारेणावृत्त्यानर्थक्ये प्राप्ते । हेतुं व्याकुर्वन्ति छान्दोग्य इत्यादि ।

रश्मिः ।

विकारि योनिशरीरादि तस्मिन् । भाष्ये । लिङ्गस्येति । नाड्येति । तदोकोग्रज्वलनसूत्रादिषु । अस्येति । विदुषः । तथेति । अन्यमार्गास्तेषाम् । शेषमिति । भोगे लौकिकव्यापारयुतत्वाभावादि । अध्या-यार्थमिति । अनावृत्तिःफलमध्यायार्थः उपक्रमापेक्षयोपसंहारस्य 'अनावृत्तिः शब्दादनावृत्तिः शब्दा'दिति-सूत्रीयस्यासञ्जातविरोधित्वात् । अनावृत्तत्वेन फलं गृह्यते । तच्च सपरिकरं बोध्यम् । तेन साधनादि-निरूपणे नाव्याप्तिः ॥ १८ ॥

फलप्रकरण इति । देशकालौ प्रकरणम्, निबन्धे स्पष्टम् । तथा च देशकालयो-रित्यर्थः । तत्प्रयोजनमिति । साधननिरूपणस्य प्रयोजनं फलसाधनयोरेकीकारः तस्यापि प्रयोजनं 'स्वयमेवात्मनात्मान'मिति वाक्यानुकूलत्वम् । फलपूर्वेति । स्वरूपस्य साधनत्वेनाङ्गीकारात् तथा । अत्र भूमत्वेनैक्येपि सर्वात्मभावस्य दानसाध्यत्वाद्विलम्बोपस्थितिकत्वादप्रसिद्धत्वाच्च, ज्ञानमात्रं परं प्रघोक्तज्ञानशक्तिरूपं साधनं तदनतिरिक्तत्वेन श्रवणं गृहीतम्, तच्च न श्रोत्रेण शब्दसाक्षात्कार-रूपम् । अगत्साधारणत्वात् । किन्तु भगवद्वाचकपदवाक्यानां भगवति शक्तितात्पर्यनिर्धारणरूपम् । भक्तिरत्नटीकायां स्पष्टीकृतम् । फलमध्येति । यद्यपि सर्वात्मभावः फलमध्यपाती भूमत्वात्तथापि ज्ञानकाण्डे श्रवणरूपं ज्ञानं फलमध्यपाति । 'आत्मा वा अरे द्रष्टव्यः श्रोतव्य' इति श्रुतौ दर्शनरूप-ज्ञानसाधनज्ञानत्वेन ज्ञानत्वेनैक्यात्, ज्ञानं फलं साधनं च । तदुपकारकत्वं फलाविर्भावकत्वम् ।

आवृत्तिरसकृदुपदेशात् ॥ १ ॥ द्वारेति । दृष्टादृष्टद्वारविचारेण । स्यादिति । पुरुषार्थ-

तत्सत्यम्, स आत्मा तत्त्वमसि श्वेतकेतो' इतिवाक्येन जडजीवयोर्ब्रह्मात्मत्वं नवकृत्व उपदिष्टवान् । तथा च सकृदुपदेशेनैव चेदर्थसिद्धिः स्यात्, तदैकमेवार्थमेकस्मा एकदैवासकृन्नोपदिशेत् । प्रयोजनाभावात् । एतेनावघातवदन्तःकरणदोषनिवर्तनं दृष्टं द्वारमन्येषामुपदेशानाम्, चरमस्य तस्य ज्ञानसाधकत्वमिति मन्तव्यम् ॥ १ ॥

अत्रैव हेत्वन्तरमाह ।

लिङ्गाच्च ॥ २ ॥

श्रुत्यनुमापकत्वेन स्मृतिर्लिङ्गमित्युच्यते । सा च, "यथा यथात्मा परिमृज्यतेऽसौ मत्पुण्यगाथाश्रवणाभिधानैः । तथा तथा पश्यति तत्त्वसूक्ष्मं चक्षुर्यथैवाञ्जनसम्प्रयुक्तम्' इत्यादिरूपा, तदावृत्तिमेव फलसाधकत्वेनाह । अत्र दृष्टान्तेनापि दृष्टद्वारकत्वं श्रवणादीनां सूच्यते । 'आत्मा वाअरे द्रष्टव्य' इतिपदेन

---

भाष्यप्रकाशः ।

अर्थसिद्धिः स्यादिति । अदृष्टद्वारा स्यात् । अवघातवदिति । सप्तम्यर्थे वतिः । तेन तत्र यथा वैतुष्यमेवमत्रान्तःकरणदोषनिवर्तनम्, अतो नादृष्टमत्र द्वारम्, किन्तु दृष्टमेवात आवृत्तिरावश्यकी । तत्र यथान्येषामवघातानां वैतुष्यजनकत्वम्, चरमावघातस्य तण्डुलनिष्पादकत्वम्, एवमत्रान्येषामुपदेशानामन्तःकरणदोषनिवर्तनम्, चरमस्योपदेशस्य तु मनसा साक्षात्कारे जनयितव्ये तत्सहकारितया ज्ञानसाधकत्वम् । शब्दादपरोक्षमितिवादस्य प्रागेव निरस्तत्वात् । न च चरमोपदेशस्य करणत्वमेवास्त्विति शङ्क्यम् । तथा सति प्रत्यक्षसामग्रीवैकल्येपि तत् स्यात् । तथा सत्यसकृदुपदेशो मननादिविधयश्च मुधैव स्युः । सामग्रीप्राबल्यार्थमेव तदुपयोगात् । प्रबलायां च तस्यां शब्दस्य सहकारित्वमेव । लोके तथा दर्शनादिति । तस्मादावृत्तिरावश्यक्येवेत्यर्थः ॥ १ ॥

लिङ्गाच्च ॥ २ ॥ सूत्रमवतारयन्ति अत्रैवेत्यादि । अत्रैवेति । आवृत्तावेव । किं लिङ्गमित्यपेक्षायां व्याकुर्वन्ति श्रुतीत्यादि । स्मृतावात्मपदमन्तःकरणपरम् । दृष्टान्तेनेति ।

रश्मिः ।

सिद्धिः स्यात् । भाष्ये । अर्थमुपदेशरूपम् । एकस्मै श्वेतकेतवे । एकदा एककाले । प्रकृते । तत्रेति । अवघाते । अत्रेति । श्रवणे । प्रागेवेति ।..........। तत्स्यादिति । शाब्दापरोक्षं स्यात् । मननादीति । आदिना निदिध्यासनं 'मनसैवानुद्रष्टव्य'मिति च । तदुपेति । तेषामसकृदुपदेशादीनामुपयोगात् । तस्यामिति । प्रत्यक्षसामग्र्याम् । शब्दस्य उपदेशस्य । लोक इति । 'दशमस्त्वमसी'त्यादौ ।

लिङ्गाच्च ॥ २ ॥ श्रुतीत्यादीति । आहेति । व्यञ्जनयाहेत्यर्थः । यथा यथेत्यत्र वीप्सा । अत्र व्यञ्जना, तयार्थः आवृत्तिरूपः प्रतीयते । दृष्टान्तेनेति । अत्र चक्षुषोञ्जनपरिमृष्टता दृष्टं द्वारम् । दृष्टद्वारकत्वमिति । आत्मपरिमृष्टता दृष्टं द्वारम् । एतावत्पर्यन्तमयमशुद्धान्तःकरणः, अधुना श्रवणाभिधानैः शुद्धान्तःकरण इति प्रतीतेः । एवं च दृष्टं द्वारमनुमितं द्वारम् । यद्वा । योगिभिर्दृष्टं 'अनागत-

---

१ अत्राक्षररहितपङ्क्तिवर्णनाद्वैक्यमवशिष्टं दृश्यते तेन तृतीयाध्यायचतुर्थपादस्य द्वादशे सूत्रे शाब्दपरोक्षज्ञानस्य ब्रह्मज्ञानत्वाभावादित्यादिभावोत्रापि ग्रन्थकृदभिमतो भवेदिति ज्ञेयम् ।

**श्रवणादीनां फलात्मकं दर्शनं पूर्वमुक्त्वा, 'श्रोतव्यो मन्तव्य' इत्यादिना तत्साधनानि यश्चाप्यवदाह तेनात्मनः परोक्षमपि ज्ञानमवान्तरफलरूपमिति भक्तिमार्गे परमफलरूपतत्सजातीयत्वेन च फलमध्यपात्येवेति श्रुत्यभिमतमिति ज्ञायते । तेन सूत्रकृदपि फलप्रकरणेपि साधनविचारं चकारेति निगूढाशयः ।**

भाष्यप्रकाशः ।

चक्षुर्दृष्टान्तेन । एवञ्च पूर्वाध्याये कर्मोपसंहारे 'सर्वथापि त एवोभयलिङ्गा'दित्यनेन श्रवणादीनां भगवद्धर्माणां यदवश्यकर्तव्यत्वमुक्तम्, तस्यावान्तरफलत्वाय तत्प्रकारोत्र फलाध्याये प्रथमत एव सूत्रद्वयेन दर्शितः । तेषां कथमवान्तरफलत्वमित्याकाङ्क्षायां श्रवणादीनामवान्तरफलत्वे बीजमाहुः 'आत्मा वाअर' इत्यादि । तत्सजातीयत्वेनेति । एकविषयतया साक्षात्कारसजातीयत्वेन । तथा च भक्तिमार्गेपि 'सतामयं सारभृतां निसर्गो यदर्थवाणीश्रुतिचेतसामपि । प्रतिक्षणं नव्यवदच्युतस्य यत् स्त्रिया विटानामिव साधुवार्ता' इति न्यायेनाभीष्टरूपत्वादवान्तरफलत्वं बोध्यम् । 'या प्रीतिरविवेकानां विषयेष्वनपायिनी । त्वामनुस्मरतः सा मे हृदयान्मापसर्पत्वि'ति वैष्णवे प्रह्लादवाक्यादपि तथेत्यर्थः । अत्र गमकमाहुः तेनेत्यादि ॥ २ ॥

एवमेकेन प्रकारेण सूत्रं व्याख्याय तत्र दोषाभावेपि श्रुतौ कर्मज्ञानभक्तीनां मार्गाणामुक्तत्वेपि ज्ञानभक्त्योरेव फलत उत्कृष्टत्वम्, न तु कर्ममार्गस्यापीति श्रुत्याशयं स्फुटीकर्तुमत्र कर्ममार्गस्य फलजाघन्यमपि बोधयतीति हृदिकृत्वा प्रकारान्तरेण व्याख्यातुं तद्बीजमाहुः तथापीत्यादि । अस्मिन् दर्शने शब्दस्यैव प्राधान्याद् यद्यपि शाब्द एव क्रमो मुख्यः, तथापि तत्र-

रश्मिः ।

मतीतं चे'ति वाक्यात् । अवान्तरफलत्व इति । तदित्थम् । श्रवणस्य शब्दपरोक्षज्ञानत्वम् । उक्तलक्षणाभ्याम् । आदिना कीर्तनस्मरणे । परोक्षज्ञानरूपे । कीर्तनं शब्दोच्चारणं तच्छाब्दज्ञानपर्यन्तमिति परोक्षज्ञानरूपम् । एकविषयकतयावान्तरफलत्वम् । तत्र बीजमाहुः बीजमिति । 'द्रष्टव्य' इति फलोक्तरोक्तिरूपम् । 'आत्मा वाअर' इत्यादीति । 'भक्त्या जानाति चाव्यय'मिति श्रुतिः, 'भक्त्या मामभिजानाती'ति स्मृतिः । फलात्मकमिति । भक्तिफलात्मकम् । परोक्षमिति । शाब्दं ज्ञानम् । अवान्तरेति । भगवद्विषयकज्ञानस्य फलत्ववदर्थाभेदात्तद्वाचकशब्दजन्यतज्ज्ञानस्यापि फलत्वमिति अवान्तरफलरूपमित्यर्थः । शब्दार्थयोरौत्पत्तिकसम्बन्धात् । एकविषयतयेति । परमफलेन रूप्यते व्यवह्रियत इति परमफलरूपं ज्ञानम्, विषयेण व्यवहारात् । परमफलरूपं च शब्दार्थयोरौत्पत्तिकसम्बन्धात् । तत्तत्सजातीयं परमफलरूपतत्सजातीयम् । तस्य भावः परमफलरूपतत्सजातीयत्वं तेनेत्यर्थः । ज्ञायत इति । एकस्यैव पाठार्थक्रमभेदेन श्रवणादिभ्यः पूर्वमार्थक्रमेणोत्तरं च द्रष्टव्य इत्यस्यान्वयात् । तथा चैको भगवान् विषयो ययोः शाब्दापरोक्षयोर्ज्ञानयोः ते एकविषये तयोर्भावः एकविषयता तया । इयं परोक्षज्ञानस्य । नव्यवदिति । प्रथमान्ताद्वतिः । विटानां स्त्रियाः साधुवार्तेव । बोध्यमिति । शाब्दपरोक्षस्य बोध्यम् । वैष्णव इति । विष्णुपुराणे । तथेति । अवान्तरफलत्वम् । अत्रेति । साधनरूपेऽवान्तरफले । गमकं प्रमाणं व्याससूत्रात्मकम् । निगूढेति । निगूढश्चासावाशयो निगूढाशयः, आशयोभिप्रायः स निगूढोशब्दार्थः । किन्तु तात्पर्यार्थः । न तु कर्मेति । ज्ञानकाण्डत्वात् 'तमेतं वेदानुवचनेने'ति श्रुतिप्रवृत्त्या तथा । तद्बीजमिति । व्याख्यानबीजं फलप्रकरणासङ्गतत्वापातरूपम् । अस्मिन्निति ।

तथापि 'शाब्दक्रमादार्थक्रमो बलीया'निति न्यायात् 'द्रष्टव्य' इति पदस्य पश्चात्सम्बन्धे तूक्तरीतिर्नावसरं प्राप्नोतीति प्रकृतविचारस्य फलप्रकरणासङ्गतत्वमापततीति प्रकारान्तरेण सूत्रार्थ उच्यते आवृत्तिरसकृदुपदेशात् । श्रुतिर्हि कर्मज्ञानभक्तीः साक्षात्परम्पराभेदेन पुरुषार्थसाधनत्वेन हीनमध्यमोत्तमाधिकारिणः प्रति कर्तव्यत्वेन प्रतिपादयति । तत्र तेषां स्वरूपं तृतीयेऽध्याये बादरायणेन प्रतिपादितम् । अथ तुरीयेऽध्याये तेषां फलं चिन्त्यते । तत्रादौ कर्ममार्गस्य फलमुच्यते । ज्ञानभक्त्योरेव क्रमेणोत्तमात्युत्तमफलकत्वम्, अतस्तत्साधनत्वेनैव तत् कर्तव्यम्, न तु स्वातन्त्र्येणेति ज्ञापयितुम् । आवृत्तिरिति । कर्ममार्गस्या-

भाष्यप्रकाशः ।

द्वयस्यैकशास्त्र्यात् पूर्वतन्त्रस्याप्यादरणीयत्वम् । तत्र च क्रमलक्षणे 'क्रमकोपोऽर्थशब्दाभ्यां श्रुतिविशेषादर्थपरत्वाच्चे'त्यत्र 'अग्निहोत्रं जुहोति यवागूं पचती'त्यादौ शाब्दक्रमादरे यवाग्वाः पाकस्य च वैयर्थ्यप्रसङ्गाददृष्टार्थत्वादरे च गौरवात्तमनादृत्य यवाग्वा होमसम्भवेन पूर्वोक्तदोषासम्भवादर्थक्रम एव युक्त इति निर्णीतम् । तन्न्यायाद् द्रष्टव्यादिवाक्येऽपि दर्शनानन्तरं श्रवणादीनां वैयर्थ्यप्रसङ्गः फलसिद्ध्या मोक्षस्यैव सम्भवेनादृष्टस्यापि कल्पनायोग इति शाब्दं तमनादृत्य तेषां साधनतया पूर्वमेव सम्बन्धो युक्त इति कश्चिदुद्भावयेत्, तदोक्तरीतिरनवसरपराहता स्यादतस्तथोच्यत इत्यर्थः । एवं प्रकारान्तरं प्रतिज्ञाय तस्मिन् पूर्वाध्यायसङ्गतिं वदन्तः प्रस्तुतार्थमाहुः श्रुतिर्हीत्यादि । तत्र तेषां स्वरूपमिति । तत्र साधनविचारे तेषां कर्मज्ञानभक्तिरूपाणां पुरुषार्थसाधनानां स्वरूपं स्वं प्रति नियतं फलोपयोगि रूपम् । अध्यायार्थमुक्त्वा सूत्रमवतारयन्ति तत्रादावित्यादि । तत्कर्तव्यमिति । कर्म कर्तव्यम् । तथा च मार्गान्तरप्रवेश एव कर्मण उत्तमफलत्वम्, स्वतो मार्गत्वे तु जघन्यफलत्वमिति ज्ञापनाय कर्ममार्गफलमुच्यत इत्यर्थः । व्याकुर्वन्ति कर्ममार्गस्येत्यादि । फलमिति । साध्यान्तरसाधनव्यापारोपरमजनकं कार्यम् ।

रश्मिः ।

वैयासे । बादरिमतेर्यस्य । क्रमलक्षण इति । पञ्चमाध्याये । उक्तदोषेति । गौरववैयर्थ्यप्रसङ्गयोरसम्भवात् । तमिति । क्रमम् । तेषामिति । श्रवणादीनाम् । पूर्वं 'द्रष्टव्य' इत्यस्मात्पूर्वम्, उक्तरीतिरिति । शाब्दक्रमरीतिः । तथेति । प्रकारान्तरेण श्रुत्यर्थ उच्यत इत्यर्थः । पूर्वाध्यायेति । हेतुतासङ्गतिं वदन्तः । प्रस्तुतेति । प्रस्तुतं फलं तद्रूपमर्थमाहुरित्यर्थः । श्रुतिर्हीत्यादीति । हीनमध्यमेति । उत्तरकाण्डे साधनत्वं हीनत्वम् । तेषामिति । ज्ञानभक्तिकर्मणामिति सुवचम् । 'बहुल्वनियम' इति सूत्रात्तथापि त्यदादीनामुत्सर्गतः पूर्वपरामर्शकत्वान्न कर्मान्तपरामर्श इति कर्मज्ञानभक्तिरूपाणामितिरूपपर्यन्तमनुधावनम् । अध्यायार्थमिति । सपरिकरं फलरूपम् । भाष्ये । तत्साधनत्वेनेति । ज्ञानभक्त्योः साधनत्वेन । आधिदैविक्याध्यात्मिकचित्तशुद्ध्या । प्रकृते । जघन्येति । तदुक्तं 'न शोभते ज्ञानमलं निरञ्जनं कुतः पुनः शश्वदभद्रमीश्वरे । न चार्पितं कर्म यदप्यकारण'मित्यनेन । कर्ममार्गफल इति । कर्ममार्गफलनिमित्तमुच्यते । कर्ममार्गफलस्मारणमत्राचार्याणां कृपालुत्वं द्योतयति । आचार्यश्चाचार्याश्चाचार्यास्तेषाम् । साध्यान्तरेति । साध्यं स्वर्गादि तदन्यद्ब्रह्म तस्य साधनं ज्ञानं तस्य व्यापारः स्नेहः तस्योपरमस्तस्य जनकं स्वर्गादिकार्यम् ।

१. प्रधानपरामर्शकत्वादित्यर्थः । २. सूत्रकारः । ३. भाष्यकाराः ।

वृत्तिः पुनर्जन्म फलं तदपि असकृत् । इदं पदमावृत्त्योभयत्रापि सम्बध्यते । तथा चात्र प्रमाणापेक्षायां तदाह हेतुत्वेन असकृदुपदेशादिति । श्रुतौ कर्ममार्गे पुनर्जन्मासकृदुपदिश्यते यतः । अन्यथा सकृदुपदेशेनैव तदवगमेप्यसकृदुपदेशो व्यर्थः स्यात्, अतस्तथेत्यर्थः । वाजसनेयिशाखायां पठ्यते, 'एवमेवाय९ शारीर आत्मैभ्योऽङ्गेभ्यः सम्प्रमुच्य पुनः प्रतिन्यायं प्रतियोन्याद्रवति प्राणायैवे'ति तत्रैव पुन'स्तेन प्रद्योतेनैष आत्मा निष्कामती'त्युपक्रम्य, पठ्यते 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चे'ति । तत्रैवैतदनुपदमेव 'तद्यथा तृणजलायुके'त्युपक्रम्य, पठ्यते 'एवमेवायं पुरुष इद९ शरीरं निहत्याविद्यां गमयित्वान्यन्नवतरं कल्याणतर९ रूपं तनुते पित्र्यं वा गान्धर्वं वा ब्राह्मं वा प्राजापत्यं वा दैवं वा मानुषं वान्येभ्यो वा भूतेभ्य' इति । तत्रैवाग्रे पठ्यते, 'प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम् । तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मण' इति ।

---

भाष्यप्रकाशः ।

उभयत्रेति । साध्ये हेतौ च । उभयत्र सम्बन्धस्य प्रयोजनमुच्यते । तथा चेत्यादिना । तथेत्यर्थ इति । पुनर्जन्मैव फलमित्यर्थः । तेन कर्मवाक्येषु यत् स्वर्गादिरूपं फलमुच्यते, तत् प्रतिपत्तिरूपमेवेति श्रुतितात्पर्यं बोधितम् । वाजसनेयिशाखायामिति । बृहदारण्यके शारीरब्राह्मणे । तथा चाखां श्रुतावावृत्तावुपसंहार आवृत्तावेव पूर्वकर्मव्यापारोपरमश्रावणात् कर्ममार्गस्य तदेव फलमित्यर्थः ।

रश्मिः ।

भगवदिच्छापर्यन्तं भोगः स्वर्गादौ पश्चादावृत्तिः, स्नेहे त्वनावृत्तिरतस्तस्योपरम उक्तः । हिरण्यगर्भमोक्षे तु स्वर्ग आत्मसुखम् । तस्य कर्ममात्रं साधनम् । नन्वेतदेव हि देवा गायन्ति । 'अहो अमीषां किमकारी'ति वाक्ये देवानां स्नेहः स्मर्यते इति चेत् । सत्यम् । परन्तु चित्तशुद्धौ तु कर्मणा स्नेहद्वारा मोक्षः, 'माहात्म्यज्ञानपूर्वस्त्वि'तिवाक्याच्छ्रीभागवतवाक्याच्च । अत्र तु स्वर्गस्तेषां स्वर्गिणां स्नेहस्तु भोगशेषः, न तु निरुपधिरिति स्पृहायाः सोपधित्वम्, न तु निरुपधित्वमिति । अत्र कर्ममार्गस्येति पूर्वाध्यायसङ्गत्या लभ्यते । फलं ब्रह्मेत्यनुवृत्त्या । भोगेन त्वितरे इति सूत्रस्थः सम्पद्यत इत्युपसंहारेण ब्रह्मसम्पत्तिरूपफलोक्तेरावृत्तमानन्दविशिष्टमिति ज्ञाप्यतेऽतः फललाभः । उपक्रमस्य सञ्जातविरोधित्वान्न निर्णायकत्वम् । साध्ये हेतौ चेति । साध्ये त्वावृत्तिरसकृदिति । हेतौ त्वसकृदुपदेशादिति । तथा चेत्यादिनेति । अत्र साध्येप्यन्वये हेतुत्वेन तत्प्रमाणमाहेत्यर्थः । यत इत्यन्तभाष्येण साध्येन्वय उक्तः । अन्यथेत्यादिभाष्येण हेतावन्वय उक्तः । कर्मवाक्येष्विति । 'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यादिषु । प्रतिपत्तिरूपमिति । भक्तिहंसोक्तरीत्या स्वर्गलोकमध्यपातादावृत्तिरपि लोक इति प्रतिपत्तिस्तद्रूपमेव । भाष्यविरोधादेवकारः । तथा च विश्वः 'प्रतिपत्तिः पदप्राप्तौ प्रवृत्तौ गौरवेपि च, प्रागल्भ्ये च प्रबोधे च प्रतिपत्तिः प्रयुज्यते' इति । प्रागल्भ्येत्र । श्रुतीति । कर्मवाक्यरूपा । तथा चेति । आवृत्तिपर्यन्तश्रुत्युपन्यासे च । पूर्वकर्मव्यापारेति । देहारम्भात्पूर्वस्य कर्मणो व्यापारः सुकृतदुःकृतभोगजनकः तस्योपरमः 'प्राप्यान्तं कर्मणस्तस्ये'तिश्रुत्या श्रावणात् । तदेवेति । स्वर्गरूपमावृत्त्यादिसहितम् । भाष्यविरोधापत्तेरेवकारः ।

अत्र हेत्वन्तरमाह लिङ्गाच्च । वेदानुमापकत्वेन स्मृतिर्लिङ्गमित्युच्यते । सा च भगवद्गीतासु 'त्रैविद्या मा'मित्युपक्रम्य पठ्यते 'एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्त' इति । 'आब्रह्मभवनाल्लोकाः पुनरावर्तिनोऽर्जुने'ति च ।

अथवा 'यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्मणा भवति पापः पापेने'ति श्रुतिर्वर्तमानजन्मकर्मणोः पूर्वजन्मसम्बन्धिकर्मानुमापकत्वं वदतीति कर्मिणः पुनर्जन्मावश्यकमिति ज्ञायते । एवं सति लिङ्गत्वेन निरूपणादित्यर्थः सम्पद्यते । निवृत्तिमार्गीयस्यापि तस्य ज्ञानोपकर्तृत्वमात्रम्, न तु जन्मनिवर्तकत्वम्, मानाभावात् ॥ २ ॥

इति चतुर्थाध्याये प्रथमपादे प्रथममावृत्त्यधिकरणम् ॥ १ ॥

एवं कर्मफलं विचार्य ज्ञानफलं विचारयति ।

**आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥ ( ४।१।२ )**

पूर्वार्थनिरूपणव्यवच्छेदाय तुशब्दः । ज्ञानिनो हि भगवन्तमात्मत्वेनै-

भाष्यप्रकाशः ।

लिङ्गाच्च ॥ २ ॥ लिङ्गपदस्य स्मृतौ प्रयोगप्राचुर्याभावान्नेदं युक्तमित्यतः पक्षान्तरेण व्याकुर्वन्ति अथवेत्यादि । 'यथाकारी'त्यारभ्य 'पापो भवती'त्यन्तेन पूर्वकृतकर्मणः फलमुक्त्वा 'पुण्यः पुण्येने'त्यादि यद् वदति, तदेतज्जन्मीनकर्मणः पूर्वकर्मानुमापकत्वायैव वदति । अन्यथा पुनरुक्तं स्यादतस्तथेत्यर्थः । सूत्रार्थमाहुः एवं सतीत्यादि । ननु तर्हि निवृत्तस्य कर्मणोपि तथात्वापातो 'निवृत्तं कर्म सेवेते'त्याद्यनुज्ञावैयर्थ्यं च स्यादित्यत आहुः निवृत्तीत्यादि । तथा चाङ्गत्वदशायां तस्य प्रधानोपकारातिरिक्तफलाभावात् प्रधानेन ज्ञानेनैव जन्मनिवृत्तेर्न तद्वैयर्थ्यमित्यर्थः । अस्मिन् पक्ष इदं सूत्रद्वयं नाधिकरणरूपमिति बोध्यम् । अन्ये त्वत्र पूर्ववर्णकोक्तरीत्या जघन्याधिकारिणः श्रवणादिप्रत्ययावृत्तिमात्रं साधयन्ति । अस्य साधनाश्रयविचारस्यात्र प्रवर्तने बीजं तु न किञ्चिदपि वदन्तीति तच्चिन्त्यम् ॥२॥ इति प्रथममावृत्त्यधिकरणम् ॥१॥

आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥ सूत्रमवतार्य व्याकुर्वन्ति पूर्वेत्यादि । नन्वात्मशब्दः सन्मात्रादिप्रत्यग्रसान्तद्वादशलक्षणविशिष्टवस्तुबोधकः । इतिशब्दः प्रकारवाची । तस्य च विस्मृतकण्ठमणिज्ञानवज्ज्ञानं मोक्षसाधनमित्येवार्थोऽत्राङ्गीकार्यः । यत उपगच्छतीत्यस्य ज्ञानार्थतैव प्रसिद्धेति साधनाश्रय एवात्र विचारः प्रतीयते इति कथमस्य फलाश्रयत्वमित्यतस्तदुपपादयन्ति ज्ञानिनो हीत्यादि । ज्ञानिनो ज्ञानमार्गीयाः, ते हि 'आत्मेत्येवोपासीत' 'स

रश्मिः ।

लिङ्गाच्च ॥२॥ नेदमिति । 'लिङ्गं स्मृति'रितिव्याख्यानं न । तथेति । कर्मिणः पुनर्जन्मावश्यकमिति ज्ञायत इत्यर्थः । एवं सतीत्यादीति । एवं सति पुनरुक्त्यभावाय एतज्जन्मीनकर्मणः पूर्वकर्मानुमापकत्वे सिद्धे सति । आवृत्तौ श्रुतेर्लिङ्गत्वेन हेतुत्वेन प्रमाणत्वेन निरूपणात् । अत्रावृत्तौ श्रुतिलिङ्गादिति हेतुः । भाष्ये तु सूत्रार्थ उक्तः । एतज्जन्मीनकर्मणः पूर्वकर्मानुमापकत्वं वैद्यके तु कर्मविपाके स्पष्टम् । तथात्वेति । आवृत्तिसाधकत्वापातः । निवृत्तं कर्म मोक्षसाधकं हिरण्यगर्भस्य । इत्यादीति । आदिना 'किं प्रजया करिष्यामः' इति श्रुतिः । तस्येति । कर्मणः । तद्वैयर्थ्यमिति । प्रधानाङ्गं कर्म निवृत्तं तस्य वैयर्थ्यम् । नाधीति । संशयाद्यभावात्तथा । श्रवणादीति । प्रत्ययो ज्ञानम् । साधनेति । साधनं श्रवणाद्याश्रयतीति एरच् साधनाश्रयः । तस्य ॥२॥ इति प्रथममावृत्त्यधिकरणम् ॥१॥

चोपासते। तस्या नैरन्तर्येनैकजन्मभिस्तथैव तेषां हृदि भगवान् स्फुरति। तदा स्वानन्दांशस्याप्याविर्भावात् 'ब्रह्मभूतः' सन्नात्मत्वेनैव ब्रह्म स्फुरितमिति तदानन्दात्मकः संस्तमनुभवति। एवं स्थितः प्रारब्धसमाप्तौ देहापगमे तत्रैव प्रविष्टो भवति। एतादृशः सर्वोपकारीति परार्थमपि तस्मै भगवता ज्ञानं दत्तमिति प्रवचनमपि तस्य फलान्तःपातीत्यधिकारिण्युपस्थिते तथैवोपदिशति च। एतदेवाह आत्मेत्यादिना। उप समीपे गमनं प्रवेश इति यावत्।

---

भाष्यप्रकाशः

म आत्मेति विद्या'दित्यादिवाक्येभ्य आत्मत्वेनैव भगवन्तमुपासते। तस्या उपासनाया नैरन्तर्ये, 'बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते' इति स्मृतेरनेकजन्मभिरात्मत्वेनैव भगवान् हृदि स्फुरतीति 'त्वं वै अहं भगवो देवते अहं वै त्वं भगवो देवते' इति व्यतिहारादवसीयते। तदा बह्वभ्यासे जीवानन्दस्याप्याविर्भावात् सच्चिदानन्दानां त्रयाणां प्राकट्ये 'ब्रह्मैव सन् ब्रह्माप्येती'ति श्रुतेर्ब्रह्मभूतः सन्, आत्मत्वेनैवेत्याद्युक्तरीत्या ब्रह्मानन्दात्मकः सन्नात्मानं साक्षात्करोति। ततः प्रारब्धसमाप्तौ ब्रह्मण्येव प्रविष्टो भवतीति मुख्यं ज्ञानिनः फलमुपगच्छन्तीत्यनेनोक्तम्। ग्राहयन्तीत्यनेनावान्तरं तदुच्यत इत्याशयेन तदुपपादयन्ति एतादृश इत्यादि। फलान्तःपातीति। भगवत्कृपाकार्यत्वात् फलान्तःपाति। तथा चायं सूत्रार्थः। इतिशब्दः प्रकारे। पूर्वसूत्रद्वये श्रवणाद्यावृत्तेरुक्तत्वाच्छ्रवणादौ च ब्रह्मण एव विषयत्वात्तत्प्रकारं ब्रह्म आत्मा स्वात्मा इति एवंप्रकारेण उपगच्छन्त्यनुभवन्ति। तत्क्रतुन्यायेन तत् प्राप्नुवन्ति, अन्यानप्यधिकारिणो ग्राहयन्ति, उपदिशन्ति चेति बोध्यः। ननु भवत्विदमेवम्, तथापि आत्मत्वेन ग्राहणस्य तादृग्ग्रहणानन्तरभावित्वात् 'उपगच्छन्ती'त्यस्य ज्ञानमेवार्थत्वेन प्रतीयते, न तु प्रवेश इत्यत आहुः उपेत्यादि। तथा चोपगच्छन्तीत्यत्र कर्त्रपेक्षायां साधक-

रश्मिः।

आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥ पूर्वेत्यादीति। कर्ममार्गफलरूपार्थनिरूपणव्यवच्छेदाय। सन्मात्रादीति। आदिना........। इत्येवेत्यत्रैवकारः पुरुषोत्तमज्ञानव्यवच्छेदकः। तदुपपादयन्तीति। फलाश्रयत्वमुपपादयन्ति। उक्तमिति। उपोपसर्गविशिष्टत्वादिति भावः। तदुच्यत इति। फलमुच्यते। तदिति। अवान्तरत्वं, शाब्दरूपं ग्रहणमवान्तरम्। तथा च 'ग्राहयन्ती'त्यस्य ग्राहणमुपदेशं करोतीत्यर्थः। भगवदिति। स भगवान् शुक इव तदानीं गुरुत्वमिति तल्लक्षणं कृपालुत्वमिति कृपोपस्थितिः। तन्मुख्यं कार्यं 'आत्मेति तूपगच्छन्ती'त्युक्तम्। तद्वदुपदेशः प्रवचनं पूर्वकक्षारूपत्वादवान्तरं भगवत्कृपाकार्यं तत्त्वात्। फलेति। नवधाभक्त्यन्तःपात्यर्चनवत्। ज्ञानमेवेति। ग्रहणरूपं ज्ञानम्, 'यो गच्छति, तं गमयती'त्यत्र णिचस्स्थले तथा दर्शनादेवकारः। न तु प्रवेश इति। वादी 'अनुभवती'त्यत्र सूत्रांशसमाप्तिं मन्यत इति भावः। धातूनामनेकार्थत्वात्। तथा चोपेति। उपगच्छन्तीत्यस्योपासते प्रविशन्तीत्यर्थद्वयम्। यद्वा। उपासते नाम प्रविशन्तीत्यर्थः। मनोमात्रमिदं ज्ञात्वेतिपक्षे मनोनिवेशनरूपव्यापारस्य देहापगमे 'तत्रैव प्रविष्टो भवती'त्यत्र प्रवेशरूपत्वेपि बाधकाभावात्। नन्वाकाशशरीरस्याणोर्जीवस्य प्रवेश इति नोपासनेनैकवाक्यतेति चेत्। न। तर्ह्युपासनमुप समीपे स्थित्वा यथायोग्यकरणमस्तु इति। तथा चोपासन उपविशन्तीत्येकार्थके क्रियापदे। एकादशस्कन्धोक्तलक्षणात्। ज्ञानिन उप समीपे स्थित्वा यथायोग्यं कुर्वन्ति

**अथवा। ननु ज्ञानभक्त्योरनावृत्तिः फलम्, अत उत्तमे ते, न तु कर्मेत्याशयेन कर्मणः फलमावृत्तिरिति यन्निरूपितम्, तत्रेदं चिन्त्यते। 'न स पुनरावर्तत' इतिश्रुतिः सर्वथानावृत्तिमाह, उत सावधिकीं ताममरशब्देन तन्निवृत्तिमिव। किमत्र युक्तम्। सावधिकीमेवेति। तथाहि। पूर्वं कर्मनैयत्यस्य त्वयाप्यङ्गीकार्यत्वात् तस्य प्ररोहैकस्वभावत्वात्तस्य दुरतिक्रमत्वात्तत्फलानुभवस्यावश्यकत्वात्। अपि च, 'य एनं विदु'रिति श्रुतेः सति ज्ञाने हि सा। 'यतो वाचः,' 'अगृह्यो न**

भाष्यप्रकाशः।

मात्रस्य ग्रहीतुमशक्यत्वाज्ज्ञानिन एव कर्तृत्वेन वाच्याः। तथा सति कर्तृविशेषणत्वेनैव तत्प्राप्त्यास्यार्थद्वयसङ्ग्राहकत्वाद्योगान्तरेण तस्य फलबोधकत्वं नायुक्तम्। अत्र फलस्यैव प्रकरणादिति। तथा चात्मनि प्राप्ते पुनरावृत्त्यभावाज्ज्ञानस्यानावृत्तिरेव फलमित्यर्थः। अस्मिन् पक्ष एतस्यापि सूत्रस्य नाधिकरणत्वम्। पूर्वशेषत्वात्।

एवमत्र ज्ञानफलस्य कथनात् कैमुतिकेन भक्तिफलस्य सूचितत्वेप्यविवेचितत्वात् तद्विवेचनाय पूर्वसूत्रयोर्द्वितीयवर्णके यदुक्तम्, तदुपष्टम्भाय चेदमप्यधिकरणान्तरमेवेत्याशयेनाहुः अथवेत्यादि। तत्रेति। अनावृत्तौ। विषयमुक्त्वा संशयमाहुः न स इत्यादि। उक्तवाक्येन 'गृहिणोपसंहार'स्थले कर्मकरणमुक्तम्। सन्न्यासिनो ज्ञाने स्वरूपोपकाराय कर्मकरणं सर्वापेक्षासूत्रेपि स्थापितम्। कर्मणां प्ररोहैकस्वभावत्वं च संयमनाधिकरणे पूर्वसूत्रयोर्द्वितीयवर्णके च व्यवस्थापितम्। एवञ्च ज्ञानवता कर्मकरणेऽपुनरावृत्तिश्रुत्यावृत्तिश्रुत्योर्विरोध आपततीति तत्सन्देहबीजं बोध्यम्। पूर्वपक्षमुपपादयन्ति तथाहीत्यादि। अनावृत्तिश्रुतेः पूर्वं 'यावदायुषमेवं वर्तय'न्निति श्रावणादनावृत्तेः पूर्वं जीवद्दशायां कर्मनैयत्यस्य त्वया सिद्धान्तिनाप्यङ्गीकार्यत्वात् कर्मणां च प्ररोहैकस्वभावत्वात् स्वभावस्य च दुरतिक्रमत्वाज्जन्मान्तरे पूर्वकर्मफलानुभवस्यावश्यकत्वादनावृत्तिश्रुतिः पूर्वानुरोधेन सावधिकीमेव तां वदतीत्यर्थः। एवमावृत्तौ साधकमुक्त्वानावृत्तौ बाधकमाह। अपि

रश्मिः।

नाम देहापगमे तत्रैव प्रविष्टा भवन्ति यथायोग्यं सत्तां कुर्वन्तीत्यर्थः। तत्प्राप्त्येति। ज्ञानिन इति विशेषणाज्ज्ञानप्राप्त्या। अस्येत्यादि। कर्तृवाचकपदस्यार्थद्वयं ज्ञानस्वरूपं तस्य सङ्ग्राहकत्वात्। ज्ञानिकर्तृपदे योगः करणव्युत्पन्नज्ञानयुक्तः परतन्त्रत्वेन करोतीति कर्ता। तदन्यो योगः भावव्युत्पन्नज्ञानरूपफलयुक्तः स्वतन्त्रत्वेन करोतीति कर्तेति। तस्येति। अर्थद्वयवाचकजातिकर्तृपदस्य। ज्ञानस्येति। करणव्युत्पन्नसाधनस्य। एवेति। अप्यर्थे। ज्ञानफलान्तःपातिन्यनावृत्तिरपि फलमित्यर्थः। नाधीति। विशयाद्यभावात् तथा। अथवेत्यादीति। न तु कर्मेति। न तु कर्मोत्तममित्यर्थः। यन्निरूपितमिति। पूर्वसङ्गत्यर्थम्। अनावृत्ताविति। तत्रोभयोरावृत्त्यनावृत्त्योरावृत्तेर्निरूपणादवशिष्टायामनावृत्तावित्यर्थः। विषयमुक्त्वेति। 'आत्मेत्येवोपासीत स म आत्मेति विद्या'दित्यादिविषयमपुनरावृत्तिवाक्यघटितम्। अनधिकरणत्वपक्ष एवोक्तार्थः। अपुनरावृत्तिघटितवाक्यार्थाधिकारिणो गृहस्थाः सन्न्यासिनश्चेत्युक्तेन विषयवाक्येनाधिकारिद्वयमाहुः। न स इत्यादीति। तामिति। अनावृत्तिम्। तन्निवृत्तिमिति। सावधिकीं मरनिवृत्तिम्। उक्तवाक्येनेति। गृहिणेति। कृत्स्नभावसूत्रेत्यर्थः। कर्मकरणमिति। 'आत्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्ये'ति श्रुत्या। ज्ञानवतेति। जनकेन। तत्सन्देहेति। तदिति विधेयलिङ्गम्, विरोध इत्यर्थः। श्रावणादिति। छान्दोग्येऽन्ते श्रावणात्। पूर्वेति। अमरशब्दान्तानुरोधेन। तामिति। अनावृत्तिम्। साधकमिति।

हि गृह्यत' इत्यादिश्रुतिभ्यो ब्रह्मज्ञानासम्भवात् । इत एव भक्तिरपि प्रत्युक्ता वेदितव्या । ज्ञानाविषये स्नेहासम्भवात् । किञ्च । 'सर्वस्य वशी सर्वस्येशान' इत्यादिश्रुतिभ्यो 'यस्यावतारकर्माणि गायन्ति ह्यस्मदादयः, न यं विदन्ति तत्त्वेने'त्यादिस्मृतिभ्यश्च का प्रत्याशा जीवस्यातिहीनस्य तत्प्राप्तौ । अत एवोपदेशासम्भवोऽपीति प्राप्ते प्रत्याह आत्मेतीत्यादिना । तुशब्दः पूर्वपक्षनिरासकः ।

अत्रायमाशयः । सत्यमुक्तं भवता । तत्रोच्यते । यथाऽगृह्यत्वातिमहत्त्वादिधर्मा भगवति सन्ति, तथा सर्वात्मत्वमपि । 'य आत्मनि तिष्ठ'न्नित्यादिश्रुतिष्वात्मत्वेनैवोक्तेः । सर्वधर्माश्रयत्वेपि यदा यं धर्मं पुरस्कृत्य लीलां करोति, तत्कार्यमेव तदा सम्पद्यते । हितकारित्वस्वभावत्वात् तस्य । एवं सति यस्मिन् पुरुषे यदात्मत्वेन लीलां करोति, तदा स्वप्राप्त्यनुकूलप्रयत्नवन्तं विधायास्मानं प्रापयति । ननूक्तं दुरतिक्रमः कर्मस्वभाव इति । नैष दोषः । न ह्यजरसपाकाय

---

भाष्यप्रकाशः ।

श्चेत्यादि । स्नेति । अनावृत्तिः । तथा च ज्ञानाभावे तत्कार्यभूता अनावृत्तिरपि न वक्तुं शक्या । न च भक्त्या सेत्यत आह इत इत्यादि । तथा च भक्तेर्माहात्म्यज्ञानपूर्वकस्नेहरूपत्वात् स्नेहस्य च ज्ञानोत्तरमेव सम्भवेन तदविषये स्नेहस्याशक्यवचनत्वेन भक्तेरप्यसम्भवादित्यर्थः । एवं प्रमाणबलेन साधनदौर्घट्यरूपं बाधकमुक्त्वा फलविचारेणापि तदाह किञ्चेत्यादि । अत्र श्रुत्या प्राप्तिदौर्घट्यं स्मृत्या च तत्साधनभूतज्ञानदौर्घट्यमुक्तम् । न च केवलकरणबलेन ज्ञानासम्भवेपि शब्दसहकृतेन ज्ञानसम्भवमाशङ्क्य निराचष्टे अत एवेत्यादि । शब्दो हि श्रुतः सहकरोति । श्रवणं चोपदेशादुपदेशश्च ज्ञानादतो गुरुरेव, ज्ञानदौर्घट्यादुपदेशस्याप्यसम्भव इत्यर्थः । तथा च सर्वथानावृत्तौ साधकस्याभावाद् बाधकानां च बहूनां सत्त्वादनावृत्तिः सावधिकयेवाङ्गीकार्येति कर्मज्ञानभक्तीनां फलतो न कश्चिद्विशेषः । वस्तुतस्तु तयोः सम्भव एव दुर्घट इति कर्मफलमेव फलम्, नान्यदिति पूर्वः पक्ष इत्यर्थः । सिद्धान्तं वक्तुं सूत्रं व्याकुर्वन्तः पूर्वं ज्ञानदौर्घट्यमप्राप्यत्वं च परिहरन्ति ।

रश्मिः ।

कर्म । आवृत्तित्वेन कर्मत्वेन कार्यकारणभावात् । न च हिरण्यगर्भमोक्षे कर्मणामनावृत्तिरिति अन्वयव्यभिचार इति वाच्यम् । सृष्टीच्छयावृत्तिरित्यङ्गीकारात् । बाधकमिति । ज्ञानाभावम् । यत इत्यारभ्य असम्भवादित्यन्तभाष्यार्थमाहुः न च भक्त्येत्यादिना । प्रमाणेति । 'यतो वाच' इत्याद्युक्तप्रमाणबलेनेत्यर्थः । साधनेति । ज्ञानदौर्घट्यरूपम् । तदाहेति । बाधकमाह । केवलेति । केवलशब्दज्ञानबलेनानुभवात्मकज्ञानासम्भवेपि । श्रुत इति । न तु तूष्णीम् । श्रवणमिति । श्रुत इत्यत्र विशेषणं यत्तत् । गुरुरेव । उपदेशो गौरवग्रस्त एव । भाष्यविवरणं ज्ञानदौर्घट्यादित्यादि । ज्ञानदौर्घट्यादेवोपदेशस्यासम्भवोपीति योजना । भाष्यात् । साधकस्येति । ज्ञानस्य । बहूनामिति । कर्माद्यष्टाज्ञानानाममरदृष्टान्तानाम् । फलत इति । अनावृत्तितः । दुर्घट इति । 'बहूनां जन्मनामन्ते ज्ञानवा'न्निति वाक्यात्, 'मुक्तानामपि सिद्धाना'मिति वाक्यात् । कर्मफलं स्वर्गादि । भाष्ये । सन्तीति । 'न यं विदन्ती'त्यत्र ज्ञानाभावसाधकाः । सर्वात्मत्वमिति । ब्रह्मत्वेन ज्ञानसाधकम् । 'अयमात्मा ब्रह्मे'ति श्रुतेः । आत्मत्वेनैवेति । एवकारेण ब्रह्मत्वेनात्मज्ञानयोगो व्यवच्छिद्यते । तत्कार्यमिति । यथा गोवर्द्धनोद्धरणलीलां भक्तमनोरथपूरकत्वधर्मं पुरस्कृत्य करोति, तत्कार्यं भक्तरक्षैव सम्पद्यते । प्रकृते । कर्मस्वभावेति । षष्ठ्यन्ताद्वतिः । कर्मस्वभावो नावृत्तिप्रतिबन्धको

जग्धमौषधमपि गौरवाय भवति, तेन न तन्निवृत्तिर्वा । व्यापादनैकस्वभावमपि विषमाशीविषं तदपगमपटुतरनिगमसङ्गमो नापगमयति वा । तथा भगवदर्पितं तदर्थं च कृतं कर्म न कर्मनाशाय भवतीति न वक्तुं शक्यम् । 'कर्ममोक्षाय

भाष्यप्रकाशः ।

तुशब्द इत्यादि । प्रापयतीत्यन्तम् । सत्यमुक्तमिति । 'यतो वाच' इत्यादिना, किञ्चेत्यादिना च यदुक्तम्, तत्सत्यमुक्तम् । आत्मत्वेनेति । शरीरभूतस्यात्मनो नियामकत्वेन । तस्येति । आत्मनः । तथा च कर्मस्वभाववदात्मस्वभावस्यापि तथात्वात् स्वयमेव भगवान् स्वलीलानुसारेण ज्ञानप्रणाड्या भक्तिप्रणाड्या वा यथाधिकारं स्वात्मानं प्रापयतीति न ज्ञानभक्त्यात्मप्राप्तीनां दौर्घल्यमित्यर्थः । अत्र शङ्कते नन्वित्यादि । तथा चात्मकर्मणोरुभयोरपि स्वभावस्य तथात्वादनावृत्तिसावधिकत्वानवधिकत्वयोः संशय एव पर्यवसतीत्यर्थः । एतत् समाधातुं कर्मस्वभावातिक्रमप्रकारं व्युत्पादयन्ति । न हीत्यादि । तथा च यथान्नौषधयोर्द्रव्यत्वेन भक्ष्यत्वेन च तौल्येपि तयोर्नैकस्वभावत्वम्, अपि तु स्वभावभेदः, यथा च निगमस्य विषादिस्वभावनाशकत्वेपि तत्कार्यप्रतिबन्धकत्वम्, तथात्र 'आत्मनि सर्वेन्द्रियाणी'त्यादिबोधितस्य भगवदर्पितस्य तदर्थं कृतस्य च कर्मणः कर्मत्वे तुल्येपि स्वभावभेदो वा, भगवदर्पणादेस्तत्स्वभावनिवर्तकत्वं वेत्यदोषः । उक्तं च मार्कण्डेये रौच्यमन्वन्तरे 'अविद्याप्युपकाराय विषवज्जायते नृणाम् । अनुष्ठिताभ्युपायेन बन्धायान्या यतो हि सा' इति । अविद्येति विद्याभिन्नं कर्म, भावरूपमज्ञानं चेत्युभयमपि सङ्गृह्यते । एतदेव श्रुतितात्पर्यमित्यत्र गमकमाहुः कर्मनाशायेत्यादि । एतदेकादशस्कन्धे योगेश्वरवाक्यं 'परोक्षवादो वेदोयं बालानामनुशासनम् । कर्मनाशाय कर्माणि विधत्ते ह्यगदं यथे'ति । कचित्तु कर्ममोक्षायेतिपाठः, तदाप्यर्थतौल्यम् । आत्मस्वभावस्य तु न नाशादिशङ्का । 'अनुच्छित्तिधर्मे'ति श्रुतेः, 'सर्वस्य वशी'त्यादिश्रुतेश्च । ततोधिकबलस्यान्यस्याभावात् ।

रश्मिः ।

ह्यावृत्तिपरिणामकः । आत्मस्वभावः आवृत्तिप्रतिबन्धकोनावृत्तिपरिणामकः । तथात्वादनावृत्तिपरिणामकत्वात् । प्रमेयबलमाहुः स्वयमेवेति । कर्मादीनामप्रतिबन्धकत्वायायमेव मार्गः । तथा चेति । उक्तपदं भावव्युत्पन्नं केन प्रकारेणेत्यत्र आहुः । स्फुरतीति । इतिप्रकारेण तत्रात्मप्रवेश उत्तरे सति चेत्यर्थः । तथात्वादिति । दुरतिक्रमत्वात् । संशय एवेति । अनावृत्तिसावधिकत्वे कर्मस्वभावो बीजम् । अनावृत्त्यनवधिकत्वे आत्मस्वभावो बीजमित्येवकारः । नैकेति । रसपरिणामहेतुत्वम् । स्वभावभेद इति । अन्नस्यापटुतरजग्धस्य रसपरिणामहेतुत्वम् । औषधस्य रसनिवृत्तिपरिणामहेतुत्वमिति स्वभावभेदः । निगमस्येति । वणिजस्यौषधिदानद्वारा । यद्वा । निगमस्याभ्यस्तवेदस्य । तदुक्तं 'अनभ्यासाच्च वेदानां मृत्युर्विप्रान् जिघांसती'ति निबन्धे । तत्कार्येति । मरणप्रतिबन्धकत्वम् । अत्रेति । दार्ष्टान्तिके । 'आत्मनी'ति श्रुतिश्छान्दोग्यसमाप्तौ । तुल्य इति । अन्यकर्मणा तुल्ये । स्वभावभेद इति । भगवदर्पितस्येत्यादिकर्मणः कर्मनाशपरिणामहेतुत्वमन्यस्य कर्मण आवृत्तिपरिणामहेतुत्वं स्वभाव इति स्वभावभेदः । तत्स्वभावेति । कर्मस्वभावनिवर्तकत्वम् । इत्यदोष इति । एवं कर्मस्वभावातिरिक्तप्रकारेण दुरतिक्रमकर्मस्वभावरूपो दोषो न । संगृह्यत इति । अन्यापि योजना । उपकाराय नाशे प्रतियोगित्वेनोपकाराय । विषवदिति । प्रथमान्ताद्वतिः । अनुष्ठितेनाभ्युपायेन कर्मनाशकज्ञानकर्मभ्याम् । अन्यानुष्ठिताभ्युपाययुक्तान्यावधिका बन्धाय मता यतः साऽविद्येत्यर्थः । अनुच्छित्तीति । न उच्छित्तिर्येषां ते अनुच्छित्तयः ते धर्मा यस्येत्यनुच्छित्तिधर्मा

कर्माणि विधत्ते ह्यगदं यथे'ति वाक्यात्। अगृह्यत्वगृह्यत्वविरोधापहारस्तु जीवसामर्थ्येश्वरेच्छाभ्यां पुरैव कृत इति नाधिकमत्र निरूप्यम्। इतिशब्दो हेत्वर्थे। तथा च भगवानात्मा भवति सर्वेषां जीवानामतो हेतोरुक्तरीत्या तदनुग्रहेण तमुपगच्छन्ति। ज्ञानमार्गेऽङ्गीकृतास्त्वात्मत्वेनैव ज्ञानादुप समीप एव गच्छन्ति, उक्तरीत्याक्षरात्मके तत्रैव प्रविष्टा भवन्तीत्यर्थः। भक्तिमार्गेऽङ्गीकृतास्तु साक्षात् प्रकटे पुरुषोत्तमे सति तद्भजनार्थमुप समीपं गच्छन्तीत्यर्थः।

---

भाष्यप्रकाशः।

ननु विरुद्धधर्माधारत्वाद्धर्मा एव स्वभावबाधका भवन्त्वित्याशङ्क्य तेषामप्यबाधकत्वमाहुः अग्राह्येत्यादि। एतेन ज्ञानादिदौर्घट्यमपि परिहृतम्। एवं बाधकं परिहृत्य सूत्रं व्याकुर्वन्ति। इतिशब्द इत्यादि। आत्मशब्दार्थस्तु सर्वान्तर्यामित्वादिरूपः पूर्वोक्त एव। एतावान् परं विशेषो यज्ज्ञानिनां प्रत्यग्रसत्वप्राधान्येन तत्स्फूर्तिर्भक्तानां तु सर्वात्मत्वपरमप्रियत्वानन्दप्राधान्येनेति। अत उक्तरीत्या यस्य मार्गस्य या रीतिः क्रमाक्रमादिना व्युत्पादिता, तया रीत्या तं प्राप्नुवन्तीत्यर्थः। उपगमनं विभजन्ते। ज्ञानमार्ग इत्यादि। भजनार्थमुप समीपे गच्छन्तीति।

रश्मिः।

इति व्युत्पत्तिः। एतेनेति। विरुद्धधर्माधारत्वेन। परिहृतमिति। ईक्षतेर्नाशब्दमित्यत्र यावद्धर्मवत्त्वेन ज्ञानस्नेहदौर्घट्यम्। बाधकमिति। आत्मोपगमने आत्मग्राहणे च बाधकमगृह्यत्वादिकम्। भाष्ये। पुरैवेति। उभयव्यपदेशाधिकरणे। प्रकृते। सर्वान्तरिति। सर्वान्तर्यामित्वमादिर्यस्या व्यक्तेः सा सर्वान्तर्यामित्वादिः, जातिव्यक्तिभ्यां रूप्यत इति तथा। पूर्वोक्त इति। अत्रैव पूर्वमन्तर्यामिब्राह्मणोपन्यासे 'नायं सुखापो भगवान् देहिनां गोपिकासुतः। ज्ञानिनां चात्मपोतानां यथा भक्तिमतामिहे'त्यनेनोक्तं तारतम्यं सर्वेषां जीवानामिति भाष्य आहुः एतावानिति। प्रत्यग्रसत्वं यद्यपि प्रतिदेहमात्मा तत्त्वं तथापि ज्ञानिनां ज्ञानकृते विशेषे प्रतीचो रसत्वं कारणदृष्ट्या शान्तरसत्वं तत्प्राधान्येनेत्युक्तम्। न तु प्रत्यगात्मत्वेन, 'मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थिति'रितिवाक्यात्। प्रत्यग्रस एवात्मपोतः। संसारसागरे प्रत्यग्रसत्वे तरणमिति 'शान्तो दान्त उपरतस्तितिक्षु'रित्युक्त्वा- 'त्मन्येवात्मानं पश्ये'दिति श्रुतेः। 'ज्ञानी चेद्भजते कृष्णं तस्मान्नास्त्यधिकः परः,' 'तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते' इति वाक्याभ्यां सर्वात्मत्वं ज्ञानिविषयः। भक्तत्वेऽभेदस्य प्रतिबन्धकत्वेन परमप्रियत्वेन स्फूर्तौ कर्मकर्तृव्यपदेशादत एव फलत्वेन सच्चिदानन्देष्वानन्दप्राधान्येनेति। एतावत्पर्यन्तं ज्ञानमार्गे ज्ञानादित्यन्तं भक्तिमार्गे सत्यन्तं भाष्यमपि विवृतम्। उभयोः फक्किकयोरग्रेतनभाष्यार्थमपि वदन्तः प्रकृतस्यातो हेतोरिति भाष्यस्यार्थमाहुः अत उक्तरीत्येति। व्याख्येये इमे, यस्येति व्याख्यानम्। क्रमाक्रमेति। क्रमः पापाभावानन्तरं मर्यादाभक्तिरक्रमः पापसत्त्वेपि पुष्टिभक्तिरिति। व्युत्पादितेति। तत्रोच्यत इत्यादिभाष्येण। यं धर्मं पुरस्कृत्येत्यस्यानुग्रहं पुरस्कृत्य भक्तिमार्गे उभयविधे ज्ञानमार्गे तु प्रतिजीवं विचारितफलसाधनेच्छां पुरस्कृत्येत्यर्थात्। विभजन्त इति। भक्तिज्ञानभेदेनेत्यर्थः। ज्ञानमार्ग इत्यादीति। अर्थौ तूभयोः फक्किकयोरुक्तौ पूर्वफक्किकार्थकथनावसरे। उप समीप एवेति भाष्यार्थो नोक्तः स उच्यते। ज्ञानेन स्वरूपस्थित्या वास्तविकाणवः महत्त्वार्थमुपसमीप एव गच्छन्ति, यतोऽक्षरात्मके स्वमहद्रूपे विभूत्यात्मके प्रतिमादावेव प्रविष्टा भवन्ति, 'अणोरणीयान् महतो महीया'निति श्रुतेः। उक्तरीत्यात्रैव ज्ञानमार्गे त्वित्याद्युक्तरीत्या।

एवं श्लेषोक्तिरियमिति ज्ञायते । सम्प्रदायानुवृत्तिरपि भगवदिङ्गितेत्येतादृशाः स्वयं येन मार्गेण फलं प्राप्ताः, तं मार्गमन्यानपि ग्राहयन्त्युपदेशैः, अत्रोभयत्राप्यात्मत्वमेव हेतुः, अन्यथा आत्मारामस्य सर्वनिरपेक्षस्यैवंकरणासम्भवेन मोक्षमार्गाप्रसिद्धिरेव स्यात् । तस्मात् सर्वथानावृत्तिरेव श्रुत्यभिमतेति ज्ञेयम् ॥३॥

भाष्यप्रकाशः ।

मुक्तोपसृप्यत्वस्य पूर्वमुक्तत्वात् 'ब्रह्मविदाप्नोति पर'मित्युक्तायाः परप्राप्तेः, 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते'त्यत्र ब्रह्मसाहित्येन श्रावणाद्भूमविद्यायामात्ममिथुनत्वस्य श्रावणाच्च तथेत्यर्थः ।

अत्रेदं सम्पद्यते । भक्ता हि 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेन अमृतत्वमेती'ति श्वेताश्वतरश्रुत्या, 'आत्मेत्येवोपासीते'त्युक्त्वाग्रे, 'आत्मानं प्रियमुपासीत ईश्वरो हि तथा स्यात्, आत्मानं लोकमुपासीत'इत्येकस्मिन् प्रकरणे त्रिधोपासनश्रावणात् 'ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते, एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुख'मिति गीतास्मृतेश्च स्वात्मतया स्वात्मात्मतया च प्रियतया देहमारभ्य यावन्तो भजनीयाः प्रियास्तदात्मत्वेन चोपासत इति तत्क्रतुन्यायात् पृथगेव समीपे तिष्ठन्ति । ज्ञानमार्गीयास्तु 'त्वं वै अहं भगवो देवते अहं वै त्वं भगवो देवते' इति व्यतिहारेण स्वात्मतयैवोपासते इति तत्क्रतुन्यायात्तत्रैव प्रविशन्ति । अतो ज्ञानिभक्तयोरुभयोरप्यात्मत्वेनोपासनस्य तुल्यत्वेपि उपासनाप्रकारभेदादेवं फलभेद इति । उभयसङ्ग्रहस्य सूत्राभिप्रेतत्वं स्फुटीकुर्वन्ति एवमिति । एतादृशशब्दप्रयोगेण । अन्यथा चेदभिप्रेयात्, गृह्णन्तीत्येवं ब्रूयादतस्तथेत्यर्थः । एवं मार्गद्वयस्य मुख्यं फलं निरूपितम् । अवान्तरफलं वक्तुं शेषं व्याकुर्वन्ति । सम्प्रदायेत्यादि । इतिशब्दो हेतौ व्याख्यातस्तत्रात्मत्वस्य प्राप्तौ हेतुत्वं युक्तम्, तस्या भगवत्सम्बन्धित्वात् । ग्राहणं तु ज्ञानिधर्मः । तत्रात्मत्वस्य कथं हेतुत्वमित्याशङ्कायां तत्रापि तस्य हेतुत्वं व्युत्पादयितुं मार्गद्वयग्राहणेपि तस्य हेतुत्वं व्यक्तीकुर्वन्ति उभयत्रेत्यादि । उभयत्रेति । मार्गद्वयोपदेशे । सिद्धमाहुः तस्मादित्यादि । यस्माद्भगवतः सर्ववशित्वं सर्वेशानत्वं चेति न तत्स्वभावस्य पर्यावृत्तिः, किन्तु कर्मण एव स्वभावपर्यावृत्तिरतस्तथेति तात्पर्यभ्रमेण

रश्मिः ।

भाष्यार्थत्वात् । पूर्वमिति । प्रथमाध्याये तृतीयपादे । तथेत्यर्थ इति । तद्भजनार्थमुप समीपे गच्छन्तीत्यर्थः । उभयेति । भक्तिज्ञानसम्बन्धिनोः सङ्ग्रहस्य । एतादृशेति । उपगच्छन्तीति श्लिष्टशब्दप्रयोगेण । तथेति । श्लेषोयमिति ज्ञायते इत्यर्थः । शेषमिति । ग्राहयन्ति चेति सूत्रशेषम् । सम्प्रदायेत्यादीति । सम्प्रदायाश्चत्वारः श्रीविष्णुस्वामिरामानुजमाध्वनिम्बार्कनामानः । इङ्गिता प्रापिता । 'इङ्गितं गतिचेष्टयो'रिति विश्वः । एतादृशा इति । सम्प्रदायिनां ज्ञानिन आचार्याः । प्राप्ताविति । उपगच्छन्तीत्यस्य प्राप्नुवन्तीत्यर्थ उक्तः । तत्र प्राप्तौ । तस्या इति । प्राप्तेः । भगवत्प्राप्तिरित्येवं भगवत्सम्बन्धित्वात् । शेषं व्याकुर्वन्ति स्म । ग्राहणमिति । ज्ञानीति एतादृश इत्यादिभाष्ये ज्ञानं दत्तमित्युक्तेः । अत्र ज्ञानिधर्मः । तत्रापीति । ज्ञानिधर्मेपि । तस्यात्मत्वस्य । तस्येत्यात्मत्वस्य । अतस्तथेतीति । तस्मात्सर्वथानावृत्तिरेव श्रुत्यभिमतेति ज्ञेयमित्यर्थः । तात्पर्येति । कर्ममोक्षाय कर्मणः स्वर्गादिफलसाधकत्वे तात्पर्यभ्रमस्तेन । तात्पर्यं तु आत्मसुखे, कर्ममोक्षे च । एतद्विषयक-

१. एतेन 'अर्चायामेव हरये' इति भागवतपद्यं व्याख्यातम्, 'मैव्याद्ब्रह्मन्येव जुहोति स' इति च । एवं च पृथक्त्वेनापि विधानात् ।

नन्वात्मत्वेनोक्तिरुपासनार्थेति नोक्तं साधीय इत्यत उत्तरं पठति ।

न प्रतीकेन हि सः ॥ ४ ॥

अतद्रूपे तत्त्वेनोपासनं हि प्रतीकमित्युच्यते । तथा च तादृशेन तेन स मोक्षो न भवतीत्यर्थः । श्रुतिसिद्धत्वान्नास्ति मोक्ष इति न वक्तुं शक्यमिति भावः ।

---

भाष्यप्रकाशः ।

क्रियमाणकर्ममार्ग एवावृत्तिः, फलम्, न तु तात्पर्यज्ञानपूर्वकं भक्तिमार्गीयत्वेन ज्ञानमार्गीयत्वेन वा क्रियमाणे निवृत्तिरूपे कर्मणीत्यनावृत्तिफलकत्वाज्ज्ञानभक्ती उत्तमे इत्यर्थः ॥ ३ ॥

न प्रतीकेन हि सः ॥ ४ ॥ सूत्रमवतारयन्ति नन्वित्यादि । अयमर्थः । आत्मत्वेन ज्ञानस्याभेदे तादात्म्ये वा पर्यवसन्नत्वात्तत्तन्मार्गरीत्या आत्मत्वेन ज्ञानात्तत्तन्मार्गीयो मोक्षोनावृत्तिरूपः फलमित्युक्तम् । तदयुक्तम् । 'पादोस्य विश्वा भूतानि', 'ममैवांशो जीवलोक' इत्यादिष्वात्मा ब्रह्मांशत्वेन सिद्धः । 'अहमात्मा गुडाकेशे'त्यत्र विभूतिरूपत्वेन च। एवं सति यथा 'सर्वं खल्विदं ब्रह्मे'त्यादौ सर्वादिर्ब्रह्मत्वेनोपासनार्थं स्तूयते, तथा 'आत्मेत्येवोपासीते'त्यादौ स्वात्मा परमात्मत्वेनोपासनार्थं स्तूयते । एवं सति तत्र यथा ब्रह्मत्वेनोक्तिरुपासनार्था, तथा स्वात्मन्यपि परमात्मोक्तिरिति न पूर्वोक्तं साधीय इत्यर्थः ।

व्याकुर्वन्ति । अतद्रूप इत्यादि । सत्यमात्मत्वेनोक्तिरुपासनार्था, परन्तु तया श्रुत्या आत्मत्वमवगत्योपासितव्यमिति बोध्यते, न त्वात्मत्वज्ञानस्य फलं निषिध्यते । तस्या अकृत्स्नत्ववारणार्थत्वात् । पूर्वं 'प्राणन्नेव प्राणो भवती'त्याद्युक्त्वा 'तान्येतान्यस्य कर्मनामान्येव स योत

रश्मिः ।

तात्पर्यज्ञानपूर्वकं भक्तिमार्गीयत्वेनाधिदैविकचित्तशुद्ध्यर्थम् । ज्ञानमार्गीयत्वेनाध्यात्मिकचित्तशुद्ध्यर्थं वा क्रियमाण इत्यर्थः । इत्यर्थ इति । इतिभाव इत्यर्थः । अत्रार्थशब्दो भाववाचकः ॥ ३ ॥

न प्रतीकेन हि सः ॥ ४ ॥ अभेद इति । अज्ञानोपाधिनिवृत्तिद्वाराऽभेदे पर्यवसन्नत्वम् । स्वमते तु 'तत्त्वमसी'त्यत्र तस्य भावस्तत्त्वमसीतिपक्षे तादात्म्ये तदात्मनो भावस्तादात्म्यं तस्मिन्पर्यवसन्नत्वं तस्मात् । 'ऐतदात्म्यमिदं सर्वं स आत्मा तत्त्वमसी'त्यत्र पूर्वं ऐतदात्म्यपदात् । तत्तन्मार्गरीत्येति । मायावादिमार्गब्रह्मवादिमार्गरीत्या । मोक्ष इति । निःसम्बोधो मोक्षः ससम्बोधो मोक्षः । अहमित्यादि । व्यापकात्मवादिमतयोरिमौ प्रकारौ । अण्वात्मवादिमते प्रकारोंशत्वं तदुक्तम् । अहमस्मत्प्रत्ययगोचरः स्वात्मा शङ्कराचार्यमते । स्वात्मत्वेन जीवब्रह्मवादेन । भास्कराचार्यमते विभूतिरूपत्वेन, जीवानामपि व्यापकत्वात् । कार्यरूपत्वेनेति । सर्वमिदं ब्रह्मेति न प्रयोगः, सर्वमिदं तज्जलानिति प्रयोगोत आहुः । सर्वं कार्यरूपत्वेनेति । घटः पृथिवीत्यत्र यथा पृथिवीत्वेन घटस्य बोधः, न तु घटत्वेन । स्तूयत इति । शङ्कराचार्यमते सोपाधिकः स्तूयते । फलार्थताया इति । अनावृत्त्यर्थतायाः । नन्वित्यादीति । नोक्तमिति । स्तुतेरनावृत्तिफलमित्युक्तं न । बोधा सृष्टिषु मायिकीमाहत्याहुः । सत्यमित्यादिना । फलमनावृत्तिः । तस्या इति । अनावृत्तेः । आवृत्तौ तु फलाकृत्स्नता स्यात् । 'न स पुनरावर्तत' इति श्रुतौ फलं भगवान् । पूर्वमिति । आत्मेत्येवोपासीतेत्यस्याः पूर्वम् । इत्याद्वीति । आदिना 'वदन् वाक् पश्यन् चक्षु'रित्यादि । अस्येति । अव्याकृतस्याकृत्स्नस्य । कर्मनामानीति । प्राणनादिकर्मकृतानि । न इत्यस्माकं वागादीनां मध्ये । योत इति पाठे यः अतः कृत्स्नतापादकत्वात् । वागादीनां मध्ये एकैकमुपास्ते । एकैके कृत्स्नो न

**अथवा आत्मत्वेनोक्तिरुपासनार्थेति वदन् वादी वक्तव्यः। फलार्थमेव तत्। फलं च श्रुत्युक्तस्तत्प्रवेश एवेति त्वयापि वाच्यम्। एवं सत्यादौ ज्ञानमार्गेनुप-**

---

भाष्यप्रकाशः ।

एकैकमुपास्ते न स वेदाकृत्स्नो ह्येषोन्त एकैकेन भवती'त्युक्त्वा अकृत्स्नत्ववारणार्थम्, 'आत्मेत्येवोपासीते'ति वदन्नग्रे, 'अत्र ह्येते सर्वे एकं भवन्ती'त्याह। तेनात्मत्वात् सर्वरूपस्य प्राणादिनैकदेशरूपेण यदुपासनं तत्प्रतीकरूपम्, तादृशेन तेन मोक्षो न भवतीति सिध्यति, न त्वात्मत्वेन ज्ञानान्मोक्षो न भवतीति। 'अत्र ह्येते सर्वे एकं भवन्ती'त्यनेन कृत्स्नत्वरूपस्य फलस्यात्मोपासने बोधितत्वात्। कृत्स्नत्वं सर्वभावपूर्वकक्षा, सर्वभावश्च मोक्षपूर्वकक्षेति तत्रैव पुरुषविधब्राह्मणे 'तद्धैतत् पश्यन्नृषिर्वामदेवः प्रतिपदे' इत्यत्र सिद्धम्। अतो मोक्षपूर्वकक्षाया अत्र बोधनादात्मनः परमात्मत्वेनोपासनायां मोक्ष एव फलमिति सिध्यति। तथा च फलस्यापि वाक्यतात्पर्यनिर्णायकत्वान्मोक्षरूपेण फलेनात्मोपासनबोधकश्रुतितात्पर्यं निर्णीयते। अतः **श्रुतिसिद्धत्वान्न मोक्ष इति न वक्तुं शक्यमिति भावोनेन सूत्रेण बोध्यते।** अत आत्मनः परमात्मत्वेनोपासनं प्रतीकोपासनमिति तवाभिमतमसङ्गतमित्यर्थः।

अस्मिन् पक्षे आत्मत्वेनोपासनस्याप्रतीकोपासनत्वाज्ज्ञानभक्त्योः फलवत्ता यद्यप्यायाति, तथापि न हीति पदद्वयं सूत्रे व्यर्थं स्यादित्यतः प्रकारान्तरेण सूत्रं व्याकुर्वन्तोवतारयन्ति। अथवेत्यादि। तदिति। उपासनम्। उपासनस्य फलं च 'ब्रह्मैव सन् ब्रह्माप्येती'ति श्रुत्युक्तस्तस्मिन् ब्रह्मण्युपासकस्य जीवस्य **प्रवेश इति त्वयापि वाच्यम्।** अन्यथा उपासनविधानस्य वैय-

रश्मिः ।

भवति प्रविष्टोपि। यद्वा। **एकैकेनेति** तृतीयान्तम्। एकैकेन प्रतीकेन वेदनं न भवतीत्यर्थः। **सर्वभावेति**। कृत्स्नत्वे सर्वभावः सर्वत्वमात्मोपासने भवतीति कृत्स्नत्वं सर्वभावस्य पूर्वकक्षा। भावपदेन सर्वत्वेन भावो भक्तिर्भवतीत्युक्तम्। **पूर्वकक्षेति**। सर्वात्मकब्रह्मभवनस्य पूर्वकक्षा। 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणा'मिति श्रुतेः। **तत्** तस्मात् **प्रत्यबुध्यत** आत्मानं यथावत् प्रबोधितवान्। **तदभवत्** सर्वात्मकं ब्रह्माभवत्। अग्रे 'तद्धै तत्पश्यन्नि'ति श्रुतिः बृहदारण्यके पुरुषविधब्राह्मणे। **शाण्डिल्येति**। छान्दोग्ये 'असौ वा आदित्यो देवमध्वि'त्यारम्भके प्रपाठकेस्ति। **ब्रह्मभावरूपमिति**। **एतमित** इति श्रुतावेतमात्मानं इतः प्रपञ्चात् प्रेत्य मृत्वेत्यभिसम्भवितास्मीति श्रुत्यर्थात्। अभिसम्भविता प्राप्ता। अभितः सम्बन्धानवगाहि ज्ञानं ब्रह्म तदपि प्राप्ता। समिति सम्यक्त्वं सर्वरूपत्वेन, विपरीतं वा। अत उक्तं **ब्रह्मभावरूपमिति**। ब्रह्मात्मनोब्रह्मणो मुख्यत्वप्रसिद्धेः। **श्रुतिसिद्धत्वादिति** भाष्यं विवृण्वन्तिस्म। **अत इति**। आरोपितत्वात् मिथ्यात्वेन मोक्षासाधकत्वात्। **परमात्मत्वेनेति**। आरोपितेन। **असङ्गतं** मोक्षाजनकत्वात्। न चा'सत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहत' इति मोक्षोपपत्तिरिति शङ्क्यम्। 'स्वयमेवात्मनात्मानं वेत्थे'ति स्मृतिविरोधात्। अतोसत्ये वर्त्मनीत्यप्येकः पक्षो न सर्वथा। **अप्रतीकोपासनयेति**। चित्तशुद्धिद्वारेति ज्ञेयम्। षष्ठयन्तपाठे तु ज्ञानविशेषणम्। **फलं चेति** भाष्यं विवृण्वन्ति स्म। **उपासनस्येति**। 'ब्रह्मैव स'न्निति श्रुतिः शारीरब्राह्मणेस्ति। **त्वयापीति**। आवरणभङ्गातिरिक्तमनङ्गीकुर्वन्नप्योऽमिन्नेन। यद्वा। त्वयाप्यस्मदाग्रहेण वाच्यम्। **उपासनेति**। अर्थवादत्वेपि उक्तयुक्तियुक्तवेदाः प्रमाणमिति। उपपत्तिमिति पाठो व्याकृतः। अनुपपत्तिमितिपाठे तु इति शेष इति भाष्ये

पत्तिमाह । न प्रतीकेनात्मभूते ज्ञानिन उपगमः पूर्वोक्तः प्रवेशः सम्भवतीति शेषः । भक्तिमार्गेपि तामाह न हि स इति । न हि प्रतीकोपासने स लोकवेदप्रसिद्धः पुरुषोत्तमोस्त्युपास्यत्वेन, येन तत्प्राकट्यं स्यात्, तदुपगमनं चेत्यर्थः । एवं ज्ञानभक्त्योः फलसत्ता साधिता ॥ ४ ॥

ननु 'सर्वं खल्विदं ब्रह्म,' 'आत्मैवेद९ सर्व'मित्यादिश्रुतयः सर्वत्र ब्रह्मदृष्टिं मुक्तिसाधनत्वेनोपदिशन्ति, सा च प्रतीकात्मिकैवेति कथं प्रतीकोपासनस्य न मोक्षसाधकत्वमिति प्राप्त उत्तरमाह ।

---

भाष्यप्रकाशः ।

ध्यर्यापत्तेः। एवमात्मोपासनस्य फलवत्त्वे सति आदौ पूर्वं ज्ञानमार्गेनुपपत्तिम्, एकदेशोपासनेन फलाभावबोधिकां युक्तिमाहेत्यर्थः । उपगच्छन्तीति पूर्वसूत्रादनुवृत्य न प्रतीक इति सूत्रभागस्यार्थमाहुः । न प्रतीक इत्यादि । प्रतीक इति । अनात्मभूते मनआदौ ब्रह्मत्वेनोपासिते प्रतीकत्वान्न ब्रह्मणि प्रवेशः फलम्, किन्तु मनआद्युपासनासूक्तमेव । अत्र तु ब्रह्मणि प्रवेशस्योपपादितत्वान्न प्रतीकत्वमित्यर्थः । शेषमवतार्य व्याकुर्वन्ति भक्तीत्यादि। तथा च यदीदं प्रतीकोपासनं न स्यात्, अत्रोपास्यः पुरुषोत्तमो न स्यात् । यतोत्र पुरुषोत्तम एवात्मत्वेनोपास्यः, न त्वात्मा पुरुषोत्तमत्वेन । उपक्रमे सृष्टिकर्तृत्वरूपब्रह्मलिङ्गेन, अग्रे च 'आत्मानं प्रियमुपासीते'ति विशेषकथनेन, ईश्वरत्वकथनादिना च तथा निश्चयात् । अतो नेदं प्रतीकोपासनमित्यर्थः । सिद्धमाहुः एवमित्यादि । तथा च मोक्षफलकं ज्ञानिनामात्मत्वेनोपासनं न प्रतीकम् । अकृत्स्नत्ववारणार्थत्वात् । भक्तानां चात्मत्वेनोपासनं पुरुषोत्तमपर्यवसायीत्यतोपि न प्रतीकम् ।

अतः पूर्वोक्तं तवाभिमतमसङ्गतमित्यर्थः । एवमप्रतीकोपासनेन ज्ञानभक्त्योः फलवत्त्वे सिद्धे तयोरनावृत्तिफलकत्वेन तदङ्गभूतकर्मणोप्यनावृत्तावेव पर्यवसानमित्यपि बोध्यम् ॥ ४ ॥

ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥ सूत्रमवतारयन्ति नन्वित्यादि । मुक्तिसाधनत्वेनेति । परम्परया साक्षाच्च तत्साधनत्वेन । सा च प्रतीकात्मिकैवेति । ब्रह्मकार्ये ब्रह्मांशे च ब्रह्मदृष्टिरूपत्वात्तथा । तथा चेदं वाक्यद्वयं छान्दोग्यस्थम् । तत्र प्रथमं शाण्डिल्यविद्यास्थम् । तेन शुद्धान्तःकरणस्याग्रे 'यस्य स्यादद्धे'त्यनेन भगवत्प्राप्तिरूपं फलमुक्तम् । द्वितीयं सनत्कुमारनारदसंवादस्थम् । तत्रापि, 'न पश्यो मृत्युं पश्यती'त्यादिना 'तमसस्पारं दर्शयती'त्यन्तेन मुक्ति-

रश्मिः ।

अपि तु न सम्भवतीति काकुर्बोध्या। अनुवृत्त्येति । अत्र क्त्वो ल्यपः स्थानिवद्भावेन कित्त्वं स्वीकृतम्, अतो न गुणः । न प्रतीक इत्यादीति। न प्रतीक इत्येकं पदमित्याशयेनाहुः। अनात्मभूत इति । शेषमिति । न हि स इति तत्र शेषम् । भक्तीत्यादीति । तामित्युपपत्तिं, अनुपपत्तिं च पाठान्तरे । न हीति। भक्तिहंसे स्पष्टम्। पुरुषोत्तमस्य भक्त्येकविषयत्वेनोपास्यत्वाभावात्। उपगमनं पूर्वसूत्रादनुवृत्तोपगच्छन्तिपदप्रकृत्यर्थः । पर्यवसानमिति । उद्देश्यभेदेन चित्तशुद्ध्यर्थं कृतेन कर्मणा ज्ञानभक्तिद्वारानावृत्तिरिति तथा ॥ ४ ॥

ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥ तेनेत्यादीति । 'सर्वं खल्विदं ब्रह्मे'त्युपासनेन ब्रह्मदृष्टिरूपेण । अग्रे श्रुत्यग्रे । भक्तिफलं 'यस्य स्यादद्धा प्रत्यक्ष'मितिवाक्येन प्रत्यक्षे लयनियमात्, भगवत्प्राप्तिरू''मित्यर्थः । अतिमुक्तिः मुक्तिरूपमिति । सर्वात्मभावप्रकरणादतिमुक्तिरूपम् । आत्मबोधोपनि-

## ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥

सर्वत्र ब्रह्मदृष्टिर्न प्रतीकात्मिका । सर्वस्य वस्तुतो ब्रह्मात्मकत्वात् । सा च नोपदेशसाध्या, अतो नोपदिश्यते, किन्त्वनूद्यते । सा त्वधिकारोत्कर्षात्

भाष्यप्रकाशः ।

रूपमेव फलमुक्तम् । तच्चोपासनद्वयमपि प्रतीकरूपम् । सर्वरूप आत्मनि प्राणाद्येकदेशदृष्टिवद् ब्रह्मकार्यरूपे जगति ब्रह्मांश आत्मनि च ब्रह्मदृष्टिरूपतयातद्रूपे तत्त्वेनोपासनरूपत्वात् । तस्माच्च मुक्तिरुक्तेति प्रतीकेनापि मुक्तिसिद्धौ फलेन विषयेण च निर्णयाभावादात्मत्वेनोक्तेर्मोक्षफलकत्वोक्तेश्च तादृशप्रतीकनिवारकत्वकथनं न साधीय इत्याशङ्कायामुत्तरमाहेत्यर्थः । सूत्रं व्याकुर्वन्ति सर्वत्रेत्यादि । सर्वस्मिन् प्रपञ्चे या ब्रह्मदृष्टिः, सा न प्रतीकात्मिका । कार्यस्य कारणात्मकत्वेन प्रपञ्चस्य ब्रह्मात्मकतया वस्तुतो ब्रह्मात्मकत्वस्य श्रुत्यभिप्रेतत्वात् । अन्यथा 'सर्वं खल्वि'ति वाक्ये 'तज्जला'निति सर्वविशेषणमुपासनाहेतुत्वेन न वदेत् । 'खल्वि'त्यव्ययं च न वदेत् । तद्विनापि प्रतीकोपासनाया वाचो धेनुत्वोपासनवत्सुखेन सिद्धेः । अत इयं मननात्मिका । अत एवाग्रिमवाक्ये, 'स क्रतुं कुर्वीते'ति शब्दान्तरेण मननमुपदिश्यते, भेददृष्टिजनितभयाभावार्थम् । अन्यथा 'तत्वेव भयं विदुषोमन्वानस्ये'ति श्रुत्यन्तराद्भयापत्तेः । श्वेतकेतुविद्यायामप्यावृत्त्या मननमेव बोध्यते । मैत्रेयीब्राह्मणसनत्कुमारविद्यादिषु त्वनूद्यते, यतः साधिकारोत्कर्षादेव सेत्स्य-

रश्मिः ।

षदि प्रसिद्धा । श्रुत्यर्थस्तु लिङ्गभूयस्त्वाधिकरणेस्ति । प्राणादीति । प्रथमान्ताद्वतिः । आत्मत्वेनेति । उक्ते परमात्मत्वारोपेणोक्ते जीवे आत्मत्वेन तादृशप्रतीकोपासनस्य निवारकत्वकथनं पूर्वसूत्रे न साधीय इत्यर्थः । तज्जलानिति । तज्जायत इति जं, लीयत इति लं, अनितीत्यन्, उभयत्र तस्मिन्निति ज्ञेयम् । तजं च लं च अन् च तज्जलान्, तज्जलान् सर्वम् । अव्ययमिति । निश्चयार्थकम् । तद्विनेति । विशेषणान्वयद्वयं विना । वाच इति । 'वाचं धेनुमुपासीते'तिश्रुतिः । षष्ठ्यन्ताद्वतिः । आवृत्त्येति । नवकृत्व उपदेशान्नवावृत्तिभिः । तथा च श्रीभागवते 'सर्वभूतेषु मन्मति'रित्युक्तसाधनेन प्रेम लभत इत्युपासनाव्यतिरेकः । मुक्तीनामनेकविधत्वात् । अतो न ब्रह्मदृष्टिं मुक्तिसाधनत्वेनोपदिशन्तीति भाष्यविरोधः । सा चेति भाष्यं विवृण्वन्ति स्म । मैत्रेयीति । आदिना प्राणविद्या । सा च छान्दोग्ये उपकोसलजाबालविद्या । जाबाल आचार्यः । सा च प्राणं च ह असौ तदाकाशं चोचुः । अस्मा उपकोसलाय । अनूद्यत इति । न तूपदिश्यते । भक्तिविद्यायाः पुराणादिष्वपि दर्शनात्, वेदेपि 'अग्नये जुष्टं निर्वपामी'ति भक्तिरुपदिश्यते इति । सिद्धस्य कथनमनुवाद इति । सा त्विति भाष्यविवरणम् । यतः सेति । अधिकारेति । दैव्यां सम्पदि जातस्य शरणगमने श्रुतात्मनिवेदित्वे च जिज्ञासुत्वामात्सर्यश्रवणादरवत्त्वं श्रोतुरधिकारः । श्रुतभागवतत्वचातुर्यगुरुब्रह्मज्ञानवत्त्वं वक्तुरधिकारः । अयं हीनाधिकारः, अस्मादुत्कर्षः मध्यमेधिकारे, भगवत्कृपाभगवदीयत्वभगवदेकत्वरूपवक्तृश्रोतृगुणरूपे । ततोप्युत्कर्षः उत्तमेधिकारे, पारंपर्यकृतदोषाभावो भगवत्कृपया ॥ १ ॥ भगवत्कृपया श्रीपारंपर्यकृतदोषाभावः ॥ २ ॥ जीवाज्ञाननिवृत्त्या परमकृपा तया पोषकान्नशुद्धिः ॥ ३ ॥ सम्बन्धिनां भगवत्परतापुरःसरं सामान्यतः सुखप्राप्त्या भगवतः परमकृपा तया सांसर्गिकदोषाभावः ॥ ४ ॥ भगवतः कार्यसमाप्त्या सुखस्थित्यान्येष्वपि भगवत्सुखेन सुखप्राप्त्या आगन्तुकदोषाभावः ॥ ५ ॥ भगवद्रक्षितपुत्रादिसम्पत्त्या विशेषेण सुखप्राप्त्याधिकारिणि परमकृपा ॥ ६ ॥ बीजमुक्तिः ॥ ७ ॥ बीजमुक्तिकार्यसूतक-

स्वत एव भवतीति प्रतीकोपासनस्य न मुक्तिसाधनत्वमिति साधूक्तम् । एतदेवोक्तमनेन सूत्रेण ॥ ५ ॥ २ ॥

इति चतुर्थाध्याये प्रथमपादे द्वितीयमात्माधिकरणम् ॥ २ ॥

भाष्यप्रकाशः ।

तीत्यभिप्रायेण । एवं 'मनो ब्रह्मेत्युपासीते'त्यादावपि मनो ब्रह्म इति हेतोस्तत्रोक्तफलार्थमुपासीतेत्येवमुपासनाहेतुत्वेनानूद्यते, न तु विषयत्वेनोपदिश्यते । सा त्वेवं ज्ञात्वोपासने क्रियमाणेविकारोत्कर्षात् स्वत एव भवति । अतस्तत्र मुक्तिफलकथनेन त्वदुक्तेषु प्रतीकेषूपासनेषु न मुक्तिफलकत्वसिद्धिः, अतः पूर्वोक्तं साध्वेवेत्यर्थः । तथा चोपासनावाक्यगतस्यात्मशब्दस्य प्रतीकोपासननिवृत्त्यर्थत्वात् सर्वत्रात्मदृष्टेरप्रतीकत्वादात्मशब्दब्रह्मशब्दयोरैकार्थ्यात् सर्वत्र ब्रह्मदृष्टौ साक्षात्परम्परया च मोक्ष एव फलमिति ज्ञानभक्त्योरनावृत्तिफलकत्वमप्रत्यूहमिति सिद्धम् । न च यदि ब्रह्मदृष्टिर्न कुत्रापि प्रतीकात्मिका, तर्ह्यात्मनोप्यन्यतुल्यत्वात् पूर्वसूत्रे आत्मत्वेन ग्राहणमेव कुत उक्तम्, विशेषाभावादिति वाच्यम् । सर्वत्र जडे सदंशमात्रस्य प्राकट्येन जीवात्मनि चिदंशस्यापि प्राकट्येन, 'द्वा सुपर्णा', 'ऋतं पिबन्ता'विति श्रुतिभ्यां सखित्वैककार्यकारित्वयोः श्रावणेन, 'सरूपा' इति साजात्यश्रावणेन, 'त्वं वै अहं भगवो देवते अहं वै त्व'मिति व्यतिहारश्रावणेन च, 'अहं भवान्न चान्यस्त्वं त्वमेवाहं विचक्ष्व भोः । न नौ पश्यन्ति कवयश्छिद्रं जातु मनागपी'ति छिद्राभावस्मरणेन च विशेषबाहुल्यात् । एतन्निगमयन्ति एतदेवेत्यादि । तथा च ब्रह्मदृष्ट्युपदेशबोधनार्थं नेदं सूत्रम्, किन्तु ब्रह्मत्वस्य फलदाने हेतुत्वेन बोधनार्थमित्यर्थः ।

अन्ये तु 'आत्मेती'त्यादिसूत्रत्रयं प्रत्येकमधिकरणत्वेनोपगच्छन्त आद्येधिकरणे शास्त्रोक्तलक्षणः परमात्माहमस्मीति ग्रहीतव्यः, किं वा मदन्य इति संशये मदन्य इति प्राप्तम् । परमात्मनोपहतपाप्मादिगुणकस्य तद्विपरीततया ग्रहणस्यायुक्तत्वात् । तथाग्रहणे चेश्वराभावप्रसङ्गात् । स्वस्येश्वरतया ग्रहणेन साधकाभावशास्त्रानर्थक्यप्रत्यक्षविरोधानां प्रसङ्गाच्चेति । अतः

रश्मिः ।

हिर्निगमनहेतुभूतवैराग्यम् ॥ ८ ॥ वैराग्यनिर्गमफलीभूतमुक्तिः, पूर्वजकृतप्रतिबन्धाभावाय पूर्वजमुक्तिः ॥ ९ ॥ लौकिकसामर्थ्यं परीक्षिद्वत् ॥ १० ॥ अलौकिकसामर्थ्यम् ॥ ११ ॥ त्यागकारणीभूतवैराग्यहेतुशापादिना धर्मोन्नतिः ॥ १२ ॥ त्यागसत्सङ्गौ ॥ १३ ॥ एवं क्रमिके इति । एवमधिकारोत्कर्षादित्यर्थः । एवमधिकारोत्कर्षं प्राप्य सा ब्रह्मदृष्टिः । स्वत एवेति सत्त्वाविर्भावोत्र द्रष्टव्यः । 'रजसा तु तमो हन्याद्रजः सत्त्वेन चैव हि,' 'सत्त्वं सत्त्वेन हन्या'दिति गीतायाम् । एवं ब्रह्मदृष्टिः 'श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यत' इति वाक्योक्तश्रेयस्सु निविष्टा 'सर्वभूतेषु मन्मति'रिति श्रीभागवतीया प्रेमलक्षणा भक्तिः कारणभूता । प्रेमद्वारा मुक्तिः । ब्रह्मदृष्टाविति । तस्यां सत्यां प्रेमद्वारा मोक्ष इत्यर्थः । निगमयन्तीति । तस्मात्तथेति पञ्चावयवेषु निगमनवत्परप्रतिपत्त्यर्थं सिद्धं निगमयन्ति । अपहतपाप्मेति । भावप्रधानः । अपहतपाप्मत्वादिगुणकस्य । अपहतपाप्मादिगुणविपरीततयास्मत्त्वेन ग्रहणस्य । ईश्वरेति । ईश्वरस्यास्मत्प्रत्ययगोचरत्वे जडत्वापत्त्येश्वराभावप्रसङ्गात् । साधकेति । ईश्वरस्याधिकारिरूपसाधकबोधकानां 'कर्मकर्तृव्यपदेशा'च्चेत्यादीनामभावस्य प्रसङ्गात् । तथाशास्त्रस्य प्रयोजनमुद्दिश्य प्रवृत्तस्यानर्थक्यस्य प्रसङ्गात् । प्रयोजनाभावात् । तथा प्रत्यक्षस्य मदन्यविषयकस्य विरोधस्य प्रसङ्गात् । स्वेति । जीवात्मनस्तस्य तदभिन्नस्य तस्यात्मनोपा-

भाष्यप्रकाशः ।

शास्त्रात् प्रतिमासु विष्णुदृष्टिवत् स्वात्मनस्तत्तादात्म्यदृष्टिः कर्तव्या, न तु संसारिणो मुख्य आत्मा परमेश्वर एवेति प्रापयितव्यम् । एवं प्राप्ते, उच्यते । आत्मेत्येव परमेश्वरः प्रतिपत्तव्यः । यतः परमेश्वरप्रक्रियायां जाबाला आत्मत्वेनैवैनमुपगच्छन्ति, 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते' इति ।

तथा अन्येपि 'अहं ब्रह्मास्मी'त्येवमादाय आत्मत्वोपगमा द्रष्टव्याः । ग्राहयन्ति चात्मत्वेनैवेश्वरं वेदवाक्यानि । 'एष त आत्मा सर्वान्तरः', 'एष त आत्मान्तर्याम्यमृतः', 'तत् सत्यं स आत्मा तत्त्वमसी'त्येवमादीनि । यदुक्तं प्रतिमान्यायेन प्रतीकं भविष्यतीति । तदयुक्तम् । गौणत्वप्रसङ्गात् । 'मनो ब्रह्मेत्यादित्यो ब्रह्मे'त्यादौ सकृदेव तद्वचनेन, इह चाहं त्वं त्वमहमित्यसकृद्वचनेन प्रतीकश्रुतिवैरूप्याच्च । 'अथ योन्यां देवतामुपास्तेन्योसावन्योहमिति न स वेद, मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यती'ति, 'सर्वं तं परादाद्योन्यत्रात्मनः सर्वं वेदे'त्यादिषु भेददर्शनापवादाच्च । न च विरुद्धगुणयोरन्योन्यात्मत्वासम्भवः शङ्क्यः । विरुद्धगुणत्वस्य मिथ्यात्वोपपत्तेः । नापीश्वराभावः शङ्क्यः । शास्त्रप्रामाण्येनास्माभिरीश्वरस्य संसारित्वाप्रतिपादनेन संसार्यात्मनः संसारित्वापोहेनेश्वरात्मत्वप्रतिपादनस्य क्रियमाणत्वेन तदभावात् । नाप्यधिकार्यभावः, प्रत्यक्षविरोधो वा । प्राक्प्रबोधाद् व्यवहारे संसारित्वस्य तद्विषयकप्रत्यक्षस्य चाङ्गीकारेण विरोधाभावात् । 'यत्र त्वस्य सर्वमात्मैवाभूत्तत् केन कं पश्ये'दित्यादिना प्रबोधदशायामेव श्रुत्या प्रत्यक्षाद्यभावबोधनात्तदानीं च श्रुत्यभावस्यापि, 'अत्र पिता अपिता भवती'त्युपक्रम्य, अग्रे 'वेदा अवेदा' इति वचनेन वेदाभावस्यापीष्टत्वात् । यदपि कैश्चिदविद्याया ब्रह्मणः सद्वितीयत्वादद्वैतानुपपत्तिरिति शङ्क्यते, तदप्येतेनैव प्रत्युक्तम् । तस्मादात्मेत्येवेश्वरे मनो दधीतेति शाङ्करा आहुः ।

तन्न रुचिरम् । परमात्मन्यहङ्ग्रहोपासने साध्ये प्रमाणत्वेनात्मत्वोपगमस्य वक्तुमयुक्तत्वात् । परमात्मनि मुख्यवृत्तस्यात्मपदस्य 'सर्वं खल्विदं ब्रह्म,' 'इदं सर्वं यदयमात्मा आत्मैवेदं सर्व'मित्यादिश्रुतिभिः सर्वस्य ब्रह्मत्वे बोधिते सर्वसङ्ग्राहकतया स्वप्रत्यग्वित्तिवेद्यवाचकाहम्पदतो

रश्मिः ।

वस्तुतत्तादात्म्यं तस्य दृष्टिः । मुख्य इति । सोपाधिको गौणो मुख्यत्वनिरूपकः । विरुद्धेति । अहतपाप्मत्वापहतपाप्मत्वयोः । तदभावादिति । ईश्वराभावशङ्काभावात् । प्रबोधाज् ज्ञानात् । तद्विषयकेति । संसारिविषयकप्रत्यक्षस्य । प्रत्यक्षादीति । आदिनाधिकारी । एतेनेति । मिथ्यात्वोपपादनेन । परमात्मनीति । जीवे ब्रह्मोपासनानिषेधात् परमात्मनोधिष्ठानत्वमुक्तम् । परमते परमात्मविषयके, 'अहमस्मि ब्रह्माहमस्मि' इत्यादावर्थवादत्वानङ्गीकारादहङ्ग्रहोपासनं तस्मिन् । तत्रापि 'ब्रह्माहमस्मी'ति । ब्रह्मणः प्रसिद्धेः । 'अहं ब्रह्मास्मी'त्यत्र भवन्नये ब्रह्मज्ञानाधीनविद्यासम्बन्धाधीनत्वादस्मच्छब्दप्रयोगस्य 'ब्रह्माहमस्मी'ति प्रबोधे सुकरत्वात् । प्रमाणत्वेनेति । अहङ्ग्रहोपासनश्रुतौ ह्यनधिगतार्थगन्तृत्वं प्रमाणम् । जीवस्यात्मत्वेनोपगमस्तयेति, आत्मोपगमस्य प्रमाणत्वं शब्दार्थयोरौत्पत्तिकसम्बन्धात् । सर्वेति । आत्मपदस्यात्मत्वेन सर्वसङ्ग्राहकतया । स्वप्रत्यगिति । स्वमात्मा प्रत्यक् जीवस्तस्य वित्तिर्ज्ञानं तद्वेद्यः प्रादेशिकः, 'अङ्गुष्ठमात्रो रवितुल्यरूपः कामाहङ्कारसमन्वितो यः, बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यपरोपि दृष्टः', इति श्रुतेर्बुद्ध्यादिगुणेषु प्रदेशेषु भवः प्रादेशिको जीवः ।

१. श्रुतौ पश्यतिपदादिति शेषः ।

भाष्यप्रकाशः ।

भिन्नार्थत्वेऽहम्पदार्थमात्रत्वप्रमित्यजनकत्वात् । अथ 'आत्मैवेदमग्र आसी'दित्युपक्रम्य 'सोहमस्मी'त्यग्रे व्याहरत्ततोहंनामा अभव'दिति श्रुतेः पर्यायत्वान्न दोष इत्युच्यताम् । तथा सति तेन तदहंवित्तिवेद्यत्वगुणकोपासनं सेत्स्यति, न तु तस्य स्वाभेदपर्यवसायित्वाहंवित्तिवेद्यत्वगुणकम् । ततश्च किमहमिति ग्रहीतव्यः, किं वा मदन्य इति संशयाकारासङ्गतिः । तत्रास्मत्पदाभ्यां प्रतिशरीरं भिन्नस्य स्वाहंवित्तिवेद्यस्यैव बोध्यमानत्वात् । न चोपाधेर्मिथ्यात्वात् तदनादरेण घटाकाशमहाकाशन्यायात्तयोरभेदस्यैव सिद्धेर्न दोष इति वाच्यम् । मिथ्यात्वेपि यावद्व्यवहारं तत्सत्तायां भेदाभावस्योपगन्तुमशक्यत्वात् । न च जाबालवाक्यादभेदोपगमनं शक्यम् । तत्रापि 'देवते' इति द्विवचनेन देवतापदस्य सम्बुद्धित्वपक्षेपि स्वप्रत्यक्पराग्वित्तिवेद्यत्वाभ्यां च भेदस्यैव बोधनात् । न च व्यतिहारानुरोधादभेदः शक्यः । तस्य भेदविरुद्धस्वभावे तादात्म्यरूपे अभेदेप्युपपन्नत्वेनाभेदोपासनास्तुत्यर्थतया भेदाभावरूपतदगमकत्वात् । 'त्वं तु भागवतेष्वहम्,' 'आयुधानामहं वज्र'मित्यादावहम्पदस्य विभूतावपि प्रयोगेण 'त्वं वाहमस्मी'त्यहम्पदस्य त्वद्विभूत्यात्मकोस्मीत्यर्थस्य, 'अहं वै त्वमसी'त्यत्र विभूत्यात्मनाभेदस्य शक्यवचनत्वाच्च । नापि 'अहं ब्रह्मास्मि,' 'तत्त्वमसी'त्यादिविरोधः । तत्रापि सुवर्णशकले सुवर्णबुद्धिवद् ब्रह्मांशे ब्रह्मबुद्धेरुपपन्नत्वेन तदविरोधात् । 'मामेव विजानीही'त्यादिवदाविष्टवाक्यादिरूपत्वेनाप्युपपत्तेश्च ।

रश्मिः ।

तस्य वाचकादहम्पदत एकात् सर्वसङ्ग्राहकात्मपदाद्भिन्नार्थत्वे अहम्पदार्थेति । आत्मत्वस्यापि सर्वान्तर्गतत्वात् ग्राह्य । न दोष इति । 'सोह'मित्यनयोरात्माहमिति पर्यायत्वेनात्मपदवदहम्पदस्यापि सर्वसङ्ग्राहकतयाहम्पदस्याहंपदार्थमात्रत्वप्रकारिका, अहम्पदार्थमात्रविशेष्यिका प्रमितिस्तज्जनकत्वरूपो दोषो न । तेन तदहमिति । 'सोहमस्मी'त्युपासनेनात्माहंवित्त्या वेद्यत्वं गुणो यस्मिन्नुपासने तत् । तस्येति । 'सोहमस्मी'त्युपासनस्य स्वस्यात्मनो जीवेनाभेदपर्यवसायोस्यास्तीति स्वाभेदपर्यवसायि स्वं तेन सहाहंवित्तिवेद्यत्वं जीवनिष्ठं गुणो यस्मिन्नुपासने तत् । ग्रहीतव्य इति । तव्यस्याकित्वान्न सम्प्रसारणं कृतम् । गृहीतव्यइति सम्प्रसारणं चिन्त्यम् । असङ्गतिरिति । अभेदान्वयासम्भवादसङ्गतिः । तत्रास्मदिति । 'सोहमस्मि' 'ब्रह्माहमस्मि' इत्यहङ्ग्रहोपासनयोः । स्वाहंवित्तीति । स्वेनात्मना सहाहंवित्तिस्तया वेद्यस्य । तयोरिति । आत्मजीवयोः । न दोष इति । संशयाकारासङ्गतिदोषो न । मिथ्यात्व इति उपाधेर्मिथ्यात्वेपि खपुष्पवन् मिथ्यात्वाभावः यतो यावद्व्यवहारं सत्ता व्यावहारिकीति श्रीभागवतप्रसिद्धा तस्याम् । जाबालेति । 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते' इतिवाक्यात् । भगवो भगवन् । स्वप्रत्यगिति । स्वमात्मा प्रत्यक् पूर्वं पराक् पश्चात्, एवं च स्वं च तौ प्रत्यक्पराञ्चौ स्वप्रत्यक्पराञ्चौ तयोर्वित्ती ताभ्यां वेद्यत्वे ताभ्यामित्यर्थः । पूर्ववाक्ये युष्मदर्थस्य प्रत्यग्वेद्यत्वम् । द्वितीये पराग्वेद्यत्वम् । भेदस्यैवेति । त्वमहं अहं त्वमितिप्रतीयमाननिराकार्यभेदस्य । एवकारोप्यर्थे । तथा च देवदत्तो ममात्मेतिप्रतीतौ निराकार्यभेदस्यैव देवदत्तपदस्यात्मपरत्वम्, न तु देहपरत्वमिति । अत्रापि प्रतिदेहं गच्छतीति प्रत्यग्जीव इति व्युत्पत्तिः । पूर्वत्वं तस्य । व्यतिहारेति । 'त्वमहं अहं त्वमिति व्यतिहारः । तस्येति । व्यतिहारस्य । तादात्म्यरूपे स्वप्रतियोग्यसम्बन्धरूपे । स्वमभेदः । यथा घटानामभेदस्तादात्म्यरूपः । नाभेदेति । न अभेदेनोपासना नामेदोपासना तत्स्तुत्यर्थताऽभेदारोपेण तयेत्यर्थः । भेदाभावरूपाभेदागमकत्वात् । त्वं त्विति । उद्धवः, मामेवेतीन्द्रप्रतर्दनसंवादे । अत्र भगवदाविष्ट इन्द्रः । आविष्टेति । भगवदाविष्टजीवश्चेत-

भाष्यप्रकाशः ।

अत एव, 'एष त आत्मे'त्यादिषु ग्राहणवाक्येष्वप्यात्मपदमेवोक्तम्, न तु, त्वम्पदमहम्पदं वेति युज्यते । किञ्च । आत्मनः स्वप्रत्यग्वित्तिवेद्यस्य च सर्वथा भेदाभावे, 'अथातोहङ्कारादेश'-इत्यनन्तरं 'अथात आत्मादेश' इति पुनर्नोपदिश्येत । तस्मात् स्वात्मेश्वरयोर्भेदविरुद्धस्वभावाभेदे-नैवोपासना युक्ता, न तु भेदाभावरूपेणाभेदेन । एवमेव श्रीभागवतेप्युच्यते । 'आत्मानं चिन्तयेदेकमभेदेन मया मुनि'रिति, न तु स्वाभेदेन मामिति । 'अथ योन्यां देवतामुपास्तेन्यो-सावन्योहमिति न स वेद यथा पशुरेवं हि स देवाना'मिति भेदोपासननिन्दापि, न हि निन्दान्यायेन पूर्वोक्ताभेदोपासनास्तुत्यर्थत्वादुपपन्ना । एवमन्यान्यपि वाक्यानि बोध्यानि । एवञ्च प्रतिमादौ विष्णुबुद्धेः प्रतीकत्वं यदुक्तम्, तदपि तथा । सर्वस्य ब्रह्मात्मकत्वेन तत्र विष्णु-बुद्धेः प्रतीकत्वाभावात् । अतद्रूपे तत्त्वेनोपासनस्यैव भवद्भिः प्रतीकत्वोपगमात्, यदपि, वेदाना-मप्यभावः प्रबोधे इत्युक्तम् । तदपि तथा । 'यत्र त्वस्य सर्वमात्मैवाभू'दित्यत्र सर्वस्य नाशा-कथनेनात्मभावस्य च कथनेन, 'वेदा अवेदा' इत्यत्रापि ज्ञानाद्विकल्पबुद्धिमात्रबाधेन वस्तुस्वरूपा-बाधात् स्वरूपतो वेदाभावस्य वक्तुमशक्यत्वादिति । यदपि, न प्रतीकसूत्रे प्रतीकोपासने आत्म-

रश्मिः ।

केतू प्रति वाक्यादिरूपत्वेन । आदिना 'श्रद्धत्स्व सौम्ये'तिश्रद्धावाक्यं श्वेतकेतुं प्रति । व्यतिहारवाक्य-मन्यान् प्रति । तेनाविष्टानां वाक्यादि, आविष्टवाक्यादि तत्स्वरूपत्वम् । सम्बन्धश्च षष्ठ्यर्थो न कर्मसम्बन्धो विषयविषयिभावोऽतो न द्वितीयापत्तिः । अत इति । आविष्टवाक्यादिरूपत्वात् । आत्मपदमिति । असन्देहायात्मपदम् । एवकारार्थमाहुः न त्विति । आत्मानं चिन्तयेदिति । अभेदस्तादात्म्यरूपस्तेन । न तु स्वेति । स्वस्य जीवस्याभेदो भेदाभावरूपस्तेन । न हि निन्देति । 'न हि निन्दा निन्दितुं प्रवर्तते, अपि तु विधेयं स्तोतु'मितिन्यायेन । पूर्वोक्तेति । तादात्म्यरूपा-भेदोपासना स्तुत्यर्थत्वात् । अन्यानीति । 'मद्धियार्चये'त्यादीनि । 'ज्ञानी त्वात्मैव मे मत' इति गीतावाक्यात्तादात्म्यरूपाभेदः । एवं चेति । 'दृष्टमात्रा मत्प्रतिमाहमेवेति मन्तव्ये'ति विष्णुस्वामिनं प्रति भगवद्वाक्ये 'शिलाबुद्धिर्न कार्या च तत्र नारद कर्हिचित् । ज्ञानानन्दात्मको विष्णुर्यत्र तिष्ठत्य-चिन्त्यकृत् । तीर्थक्षेत्रस्थिते विष्णौ शिलाबुद्धिं करोति यः । स याति नरकं घोरं पुनरावृत्तिवर्जितम् ॥ अत्र सामान्यतो मूढा हैतुकाः पापबुद्धयः । प्रतिमेति विकल्पन्ते दृष्ट्वानन्दात्मकं वपुरि'ति स्कान्दसह्या-द्रिखण्डोत्तरसंहितास्थपाण्डुरङ्गमाहात्म्यवचने च । अत्र पूर्वत्र प्रतिमाहमिति प्रयोगः । प्रतिमा सती अस्मत्पदार्थः सच्चिदानन्दरूपः, एनयोरभेदस्तादात्म्यरूपः । घटयोरिव । यदि तु विष्णुस्वामी दैशिको भगवत्सान्निध्यं चेति प्रतिमा सच्चिदानन्दरूपा तदापि तादात्म्यरूपोऽभेदः, परन्तु 'आश्चर्यो वक्ता कुशलोस्य लब्धे'तिकाठकादाश्चर्याभिनिवेशिनां भेदाभावरूपोऽभेदोऽस्तु भेदप्रतीतावपि । तदुक्तं 'आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः' इति । परत्र । प्रतिमायां शिलाबुद्धिनिषेधा-च्छिलात्वेन बुद्धिः प्रतिमाविषयिणी । एवं च सच्चिदानन्दबुद्धिः शिलायां प्राप्ता । दृष्ट्वाभ्यामन्य-स्या बुद्धेरभावात् । तत्रेत्यस्यानन्दात्मकवपुषि । उपलक्षणमेतत् सच्चितोः । यत्र त्वस्येत्याप्ययमर्थः । तीर्थे सर्वात्मभावोपि । 'नातः परतरं स्तोत्रं नातः परतरः स्तवः, नातः परतरा विद्या तीर्थं नातः परात्पर'मिति निरोधलक्षणग्रन्थवाक्यात् । एतदेवोक्तं सर्वस्य ब्रह्मत्वेत्यादिप्रकाशेन । तथेति । अनुपपन्नम् । प्रबोध इति ज्ञाने । तथेत्यनुपपन्नम् । उपपादयन्ति स्म । यत्र त्वस्येत्यादिना । ज्ञानादिति । आत्मत्वप्रकारकसर्वविशेष्यकज्ञानात् । विकल्पेति । 'आत्मैवाभू'दित्यात्मरूपवेदा-

भाष्यप्रकाशः।

दृष्टिर्न कार्येत्युक्तम्। तत्रापि मनआद्युपासनस्य प्रतीकत्वमेवायुक्तम्। 'सर्वं तं परादाद्योन्यत्रात्मनः सर्वं वेदे'ति सर्वत्राभेददृष्ट्यर्थं भेददृष्टिनिन्दाङ्गीकारेण भवतामपि सिद्धे सर्वस्य ब्रह्मात्मकत्वे मनआदीनामपि तथात्वात्पुरुषाङ्गे पुरुषबुद्धिवत् प्रतीकत्वाभावात्। अथ, 'अङ्गं प्रतीकोवयव' इति कोशादङ्गोपासनैव प्रतीकोपासनेतीष्यते, तदा तु ॐमिति ब्रूमः।

रामानुजाचार्यास्तु, तुशब्दोवधारणे। उपासितुरात्मत्वेवोपास्यम्। उपासिता प्रत्यगात्मा स्वशरीरस्य स्वयं यथात्मा तथा स्वात्मनोपि परं ब्रह्मात्मेत्येवोपासीत। कुतः। एवं ह्युपगच्छन्त्युपासितारः। 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसी'ति। उपासितुरर्थान्तरभूतं ब्रह्म उपासितारः कथमित्युपगच्छतीत्यत्राह। ग्राहयन्ति चेति। इति इममर्थमविदूरोपासितॄन् ग्राहयन्ति। शास्त्राणि तान् प्रत्युपपादयन्ति। 'य आत्मनि तिष्ठन्नात्मनोन्तरः'। 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः', 'ऐतदात्म्यमिदं सर्वम्', 'सर्वं खल्विदं ब्रह्म तज्जला'निति च सर्वस्य चिदचिद्वस्तुनस्तज्जत्वात्तल्लत्वात्तदन्त्वात्तन्नियम्यत्वात्तच्छरीरत्वाच्च सर्वस्यायमात्मा, अतः स त आत्मा। अतो यथा प्रत्यगात्मनः स्वशरीरं प्रत्यात्मत्वाद्देवोहं मनुष्योहमित्यनुसन्धानम्, तथा परमात्मनः प्रत्यगात्मनोप्यात्मत्वात्प्रत्यगात्मानं प्रत्यप्यहमित्यनुसन्धानं युक्तमित्युपपादनात्। सर्वबुद्धीनां ब्रह्मैकनिष्ठत्वेन सर्वशब्दानां ब्रह्मैकनिष्ठत्वमभ्युपगच्छत'स्त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसी'ति व्यतिहारेणोक्तवन्तः। एवं च 'अथ योन्यां देवतामुपास्तेन्योसावन्योहमिति, अकृत्स्नो ह्येषः, आत्मेत्येवोपासीत, सर्वं तं परादाद्योन्यत्रात्मनः सर्वं वेदे'ति आत्मत्वाननुसन्धाननिषेधः। तेन, 'पृथगात्मानं प्रेरितारं च मत्वे'ति पृथगात्मानुसन्धानं चाविरुद्धम्। अहमिति स्वात्मतयानुसन्धानादन्यत्वानुसन्धाननिषेधो रक्षितः। स्वशरीरात्स्वात्मनोधिकत्वानुसन्धानवत् स्वात्मनोपि परात्मनोधिकत्वानुसन्धानात् पृथक्त्वानुसन्धानविधानं च रक्षितम्। अधिकस्य ब्रह्मणस्तदात्मकत्वात् तस्य च ब्रह्मशरीरत्वाभिधेयवाक्येकृत्स्नो ह्येष इत्युक्तम्। अत उपासितुरात्मत्वेन ब्रह्मोपास्यमिति स्थितमित्याहुः। तदपि शाङ्करादिमतापेक्षयोपपन्नम्॥ ५॥

इति द्वितीयमात्माधिकरणम्॥ २॥

रश्मिः।

त्मकत्वस्यापि सम्भवादकारो नञो वा विष्णुवाचको वेति विकल्पस्तद्विषयिणी बुद्धिस्तन्मात्रबाधेनेत्यर्थः। किन्तु अकारो विष्णुः चासौ वेद इतिसमासः। अत एव न वेदा इत्यस्य निरुक्ते कृतिनो न वेदा इत्यस्यार्थ उक्तः। अभेदेति। तादात्म्यादिरूपाभेददृष्ट्यर्थम्। तथात्वात् ब्रह्मात्मकत्वात्। ॐमिति। अग्रिमाधिकरणात्तथा। विशिष्टाद्वैतार्थं 'यस्यात्माशरीर'मित्यन्तर्यामिब्राह्मणेनाहुः उपासितेति। अत्र शरीरमचित्, आत्मा चित्, परमात्मा चिदचिद्विशिष्टः। 'अहमस्मी'ति जाबालश्रुतिः। भगवो भगवन्। त्वं विशिष्टः अहं चिदचित उपलक्षणम्। उपासितुरिति पञ्चम्यन्तम्। इतीति। आत्मैवेत्यवधारणेन। तन्नियम्यत्वादित्याद्यन्तर्यामिब्राह्मणस्थम्। अद्वैतानुरोधेनाहुः सर्वबुद्धीनामिति। अन्योहं भिन्नोहम्। अकृत्स्न इति। अभेदे कृत्स्नत्वमिति भावः। आत्मत्वानन्विति। भिन्नेसच्छब्दवाच्ये। तेनेति। विशिष्टाद्वैतेन। स्वात्मनोपीति। पञ्चम्यन्तम्। अकृत्स्न इति। शरीरं विनाऽकृत्स्नः। उपपन्नमिति। भेदस्येवार्थत्वमङ्गीकृतं गीतायामित्यस्मिन्मते विशेषाभावाच्छाङ्करादिमतापेक्षयोपपन्नम्॥ ५॥ इति द्वितीयमात्माधिकरणम्॥ २॥

## आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥ ( ४-१-३. )

छान्दोग्ये 'अथ होवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्य कं त्वमात्मानमुपास्स इति, आदित्यमेव भगवो राजन्निति होवाचे'ति। 'अथ होवाचेन्द्रद्युम्न'मित्युपक्रम्य, 'कं त्वमात्मानमुपास्स इति, वायुमेव भगवो राजन्निति होवाचे'ति । एवमेवाग्रे प्रश्नभेदेन वक्तृभेदेनाकाशापःप्रभृतय आत्मत्वेन उपासनाविषया उक्ताः । तत्रैव 'असौ वा आदित्यो देवमध्वि'त्युपक्रम्यान्ते पठ्यते 'य एतमेवं विद्वानादित्यं ब्रह्मेत्युपास्त' इति ।

अत्रेदं चिन्त्यते। अत्र प्रतीकोपासनत्वमस्ति, न वेति। अस्तीति पूर्वः पक्षः। तथाहि । 'सर्वं खल्विदं ब्रह्मे'ति श्रुतौ सर्वमनूद्य ब्रह्मत्वं तत्र बोध्यत इति न कचित् प्रतीकोपासनमस्तीति हि पूर्वं निरूपितम् । तच्चोक्तश्रुतिभिः प्रत्येकं तत्त्वेनोपास्यत्वेनोक्त्या नोपपद्यते । ब्रह्मण एकत्वादेकप्रकारकेणैवोपासनेन

---

भाष्यप्रकाशः ।

आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥ एवं प्रधानभूतानां ज्ञानभक्तिसम्बन्धिनीनामुपासनानां फलमुक्त्वा, अङ्गोपासनानां तदुक्तप्रतीकत्वं वारयितुमङ्गोपासनानां फलं विचारयतीत्याशयेनाधिकरणविषयमाहुः छान्दोग्य इत्यादि । छान्दोग्य इति । तत्र वैश्वानरविद्यायाम् । अत्र प्रश्नप्रत्युत्तरे 'चक्षुष्ट्वेतदात्मन' इत्यादिकथनाद् आदित्यस्याङ्गत्वेपीतः पूर्वं प्रश्ने 'दिवमेव भगवो राज'न्नित्यादिना द्युमतेरुक्तत्वेनादित्यमतेरादित्वाभावात्पूर्वं द्युमतेरुक्तत्वेन तत्त्यागे बीजाभावादत्राङ्गोपासनाफलस्योत्कृष्टत्वाभावाद्भक्तिमार्गीयस्य नेदं युज्यत इत्यरुच्या विषयवाक्यमन्यदाहुः तत्रैवेति । छान्दोग्ये मधुविद्यायाम् । संशयमाहुः अत्रेत्यादि । अत्रात्माङ्गेष्वादित्यादिष्वात्मबुद्धित्वबोधनादतद्रूपे तद्बुद्धिरूपतया प्रतीकत्वस्य पुरुषैकदेशे पुरुषबुद्धिवदत्र ब्रह्माङ्गे ब्रह्मबुद्धेरपि मननसिद्धत्वादप्रतीकत्वस्य सम्भवः सन्देहबीजम् । पूर्वपक्षं व्युत्पादयन्ति तथाहीत्यादि । पूर्वं निरूपितमिति । पूर्वाधिकरणीयसूत्रद्वये व्युत्पादितम् । तत्त्वेनेति । ब्रह्मतया । एकप्रकारकेणेति । 'सर्वं खल्विद'मिति श्रुत्युक्तप्रकारकेण ।

रश्मिः ।

आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥ ज्ञानभक्तीत्यादि । ज्ञानफलं आत्मेति ज्ञानम् । 'उपगच्छन्ती'ति श्लिष्टप्रयोगेण भक्तिमार्गफलं पुरुषोत्तमसमीपगमनम् । ज्ञानभक्त्युपासनानां चित्तशुद्धिद्वारा जन्यजनकभावः । फलमिति । उपगच्छन्तीतिपदाभिहितम् । तदुक्तेति । न प्रतीकसूत्रोक्तं प्रतीकत्वम् । तेन सायुज्यालौकिकसामर्थ्यभगवत्सेवोपयोगिदेहो वैकुण्ठादिष्विति फलत्रयं मुख्यत्वेन निरूप्यते । 'सालोक्यसार्ष्टिसामीप्ये'त्याद्युक्तं यथायथमत्रैवान्तर्भूतम् । फलमिति । 'उपगच्छन्ती'-तिपदेनोक्तं फलम् विचारयतीति । प्रतीकोपासनात्वनिवर्तनेन ज्ञानभक्तिद्वारा फलं विचारयति । चक्षुष्ट्वेतदात्मन इति। चक्षुः तु एतत् आत्मन इतिपदच्छेदः । इत्यादीति । आदिना 'प्राणस्त्वेष आत्मन' इत्यादि । इत्यरुच्येति । यद्यप्यादित्यस्यादिरादित्यादिः, आदित्यः आदिर्यासां ता आदित्यादयः, आदित्यादिश्चादित्यादयश्चादित्यादयः तेषां मतयः आदित्यादिमतय इति समासः सम्भवति, तथापि भाष्यानादृतत्वादरुचिस्तया । अत्रात्माङ्गेष्विति । स्यान्तयोः सम्भवपदेनान्वयः । भाष्ये कमलयः स्वार्थ इत्याशयेनाहुः सर्वं खल्विदमिति । प्रयोजनेति । स्वोक्तप्रयोजनविशेषाभावे

सर्वेषां फलसिद्धेः, पृथक्पृथगुक्तौ गौरवात्, प्रयोजनविशेषाभावाच्च । तादृशाधिकाराभावात् पृथक् तदुक्तिरिति चेत् । न । सर्वत्र सदा तद्भावनायां तथानुभवस्यापि सम्भवात् । एवं सति वस्तुतः सर्वस्य ब्रह्मत्वं नाभिमतम्, किन्तु यथा-दित्यादीनां तत्तथा, तथा सर्वस्यापीति प्रतीकोपासनत्वमेव सर्वत्र । तेनैव फलमिति प्राप्ते प्रतिवदति ।

आदित्यादौ या ब्रह्मत्वमतय उच्यन्ते, तास्तु साकारस्यैव ब्रह्मणो व्यापकत्वात् तस्य प्रत्येकमप्यङ्गमुपासितं फलदमित्येकैकाङ्गविषयिण्यस्ता विधीयन्ते । उपपन्नं चैतत् । न हि साकारव्यापकब्रह्मणोऽङ्गं न ब्रह्म, अतो न प्रतीकोपासनत्वं तत्र ।

---

भाष्यप्रकाशः ।

प्रयोजनविशेषसत्तामाशङ्कते तादृशेत्यादि । तादृशाधिकाराभावादिति । उत्कृष्टाधिकाराभावात् । तथा च येषां न सर्वत्र ब्रह्मत्वेन स्फूर्तिः, तदर्थं पृथगादित्याद्युपासनोक्तिरित्यर्थः । समाधत्ते नेत्यादि । सर्वत्र तद्भावनायां तया उपनयेनोपनीतभानरूपस्य ब्रह्मानुभवस्यापि सम्भवात् । एवं सतीति । अधिकाराभावेऽप्युक्तरीत्या सर्वत्र ब्रह्मदर्शनसम्भवेऽप्येवं पृथगुपासनोपदेशे सति । वस्तुत इत्याद्युक्तरीत्या तत्तथा उपासनं प्रतीकम्, तथा सर्वस्यापि ब्रह्मत्वेनोपासनमपि प्रतीकम् । तेनैव चित्तशुद्धिद्वारा मुक्तिरूपं फलं सम्भवतीति पूर्वसूत्रद्वयोक्तमयुक्तमिति प्राप्ते प्रतिवदति । आदित्याद्युपासनानामङ्गोपासनत्वेन फलवत्त्वं वदन् तासु तदुक्तप्रतीकरूपत्वं परिहरतीत्यर्थः । सिद्धान्तं वक्तुं सूत्रं व्याचक्षते । आदित्येत्यादि । एकैकाङ्गविषयिण्य

रश्मिः ।

प्रतियोगिज्ञानरूपप्रयोजनविशेषसत्ताम् । उत्कृष्टेति । ब्रह्मत्वदृष्ट्यधिकारः द्यवादित्यवायुघटपटप्रतिमादिषु तस्याभावादेकप्रकारेणोपासनस्य पृथगुक्तिः । तेन द्यवादित्यवायुघटपटादिरूपौपमन्यवसत्ययज्ञेन्द्रद्युम्नकुलालकुविन्दफलानां तूष्णीकं विचारो ज्ञानमार्गोपयोगी । भक्तिमार्गे तु घटपटादिकार्यस्य ब्रह्मत्वमात्मकृत्स्नतासम्पादकम् । कृत्स्नोपासनया तादृशाधिकारे प्रेम, 'श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यत' इतिवाक्यात् । तदर्थमिति । औपमन्यवसत्ययज्ञेन्द्रद्युम्नाद्यर्थम्, न तु वामदेवाद्यर्थम् । उपनयेनेति । उपनयः समीपनयनं यथा शाब्दं ह्युपनीतं मन्तव्यमितिशङ्कायां श्रोत्रसमीपे शब्देनार्थनयनं श्रावणं प्रत्यक्षमिति । तेनेत्यर्थः । उपनीतस्य ब्रह्मणो भानं तद्रूपस्य । उक्तरीत्येति । उपनीतमानरूपत्वेन ब्रह्मदर्शनमिति रीत्या । आदित्यादीनां पृथक् तदनन्तर्गतत्वेनोपासनोपदेशे सति । तत्तथेति व्याख्येयम् । उपासनं प्रतीकम् । तथा सर्वस्येतिभाष्यार्थमाहुः तथा सर्वस्येति । पूर्वसूत्रेति । 'न प्रतीक' 'ब्रह्मदृष्टि'सूत्रद्वयोक्तं प्रतीकोपासनस्यामुक्तिजनकत्वम् । तास्विति । अङ्गोपासनासु । पूर्वपक्ष्युक्तप्रतीकरूपत्वम् । आदित्येत्यादीति । उच्यन्त इति । छान्दोग्ये उच्यन्ते इति । साकारस्येति । विराजः । 'सर्वं खल्विदं ब्रह्मे'ति विषयवाक्ये भाष्ये विराज उक्तेः 'सर्वत्र प्रसिद्धोपदेशा'दित्यत्र । ननु 'न हि स' इति भागे भक्तिमार्गे पुरुषोत्तमोक्तेः 'साकारब्रह्मवादैकस्थापक' इति श्रीसर्वोत्तमग्रन्थोक्तेर्विराट्स्तु साकारत्वं कथमिति चेत् । न । अधोक्षजत्वेपि 'यतो वाच' इतिश्रुत्येदमित्थतया यावद्धर्मैरप्रतिपाद्यत्वेपि परब्रह्मणो जगदभिन्ननिमित्तोपादानत्वेन साकारजगत्समवायिनः साकारत्वात् । साकाराद्देवदत्ताज्जायमानस्य तत्पुत्रस्य साकारत्वदर्शनात् ।

अपरश्च । 'असौ वा आदित्यो देवमध्वि'त्युक्त्वा तस्य प्रतिदिक्करश्मीनां कृपावलोकनरूपाणां मधुत्वं निरूप्य, 'तद् यत् प्रथमममृतं तद्वसव उपजीवन्त्यग्निना मुखेन, न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति । त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ती'ति पठ्यते । तथा च दर्शनमात्रेण

---

भाष्यप्रकाशः ।

इति । सूत्रेऽङ्ग इति सप्तम्या वैषयिकाधिकरणबोधनात्तथा । हेतुं व्याकुर्वन्ति उपपन्नमित्यादि । तथा च, 'अङ्गं प्रतीकोऽवयव'इति कोशादङ्गमेव प्रतीकं तदुपासनं चाङ्गोपासनमेव, न तु त्वदुक्तरीतिकप्रतीकोपासनम् । अतस्त्वदुक्तरीतिकात्तस्मान्न फलम् । अस्मदुक्तरीतिकात्तु तस्मात्फलम् । भगवदङ्गमाहात्म्यप्रतिपादने ज्ञानाङ्गभक्तिद्वारा भगवज्ज्ञाने ज्ञानमार्गीयस्योपकरोतीति भावः । अङ्गत्वेन प्रतीकत्वाच्च तावन्मात्रस्यात्मत्वेनोपासनेऽकृत्स्नत्वादन्धत्वदोषकथनमपि युज्यते । न च यद्येवम्, तदा 'अत्त्यन्नं पश्यति प्रिय'मित्यादिफलकथनमपि कथमिति शङ्क्यम् । भगवदङ्गमप्युपासितं फलायेतिभगवन्माहात्म्यज्ञापनेन तत्र भक्तिसिद्ध्यर्थमिति जानीहि । एतासां भक्तिमार्गोपकारार्थम् । द्वितीयवाक्यस्यार्थं परोक्षवादेनाहुः । अपरं चेत्यादि । आदित्यो भगवच्चक्षूरूपः ।

रश्मिः ।

त्रिगुणतन्तुभिर्जायमानस्य पटस्य चित्रपटत्वदर्शनाच्च । वैषयिकेति । मोक्षे इच्छास्ति इत्यत्र यथा । तथेति । एकैकाङ्गविषयिण्यः । उपपन्नमिति । उपपत्तेरित्यत्र भावे क्तिन् । उपपन्नमित्यत्र कर्मणि क्तः इति प्रयोगशुद्धिः कथमितिचेदुच्यते । भावप्रत्ययान्तस्य हेतोः पक्षभिन्ने देवदत्तस्य चक्षुरित्यादौ निश्चितसाध्ये विशिष्टाभिधानं यत्र तत्र कर्मप्रत्ययान्तत्वमिति । तथा चादित्यादिमतयोऽङ्गविषयिण्य उपपत्तेर्दृष्टान्ते देवदत्तचक्षुरादिवदित्यनुमानं फलितम् । तत्रेति । औपमन्यवाद्युपासनेषु । त्वदुक्तेति । लक्षणपुरःसरप्रतीकोपासनम् । तस्मादिति । प्रतीकोपासनात् । अस्मदिति । कोशोक्तलक्षणकात् । अन्धत्वेति । कृत्स्नादर्शित्वादन्धत्वम् । 'अन्धो भविष्यत्यस्मान्नागमिष्य' इति श्रुतिः । श्रुतौ युज्यते । अत्तीति । 'अन्नमत्ति प्रियं पश्यती'ति एतत्फलकथनं 'य एतमेवमात्मानं वैश्वानरमुपास्त' इति श्रुत्या वक्ष्यमाणोपासनायाः मुक्त्यतिरिक्तफलकथनम् । द्वितीयेति । द्वितीयविषयवाक्यस्य । परोक्षवादेनेति । 'परोक्षवादो वेदोय'मितिवाक्यात्तथा । अथवा । तत्तदुपासकानामादित्यादीनां फलत्वेन फलांशे परोक्षवादात्तथा । आदित्यस्य फलत्वात्तत्र परोक्षवादं वक्तुमादित्यस्वरूपमाहुः आदित्य इति । चक्षूरूप इति । विष्णोस्तृतीयरूपशरीरेषु चक्षुषामेवं रूपत्वात् । मधुत्वमिति । 'मनेर्धश्छन्दसी'तिसूत्रेण ज्ञानार्थकस्य मनेर्धप्रत्यय औणादिकः । देवस्य 'अन्तस्तद्धर्मो'पदेशाधिकरणोक्तस्यादित्यान्तःस्थस्य नारायणस्य मधु ज्ञानकर्तृ द्वादशस्कन्धप्रसिद्धम् । त्रयीरूपत्वाद्वा । अतो मधुनः नारायणस्य नाड्यादित्यः । नाडीछिद्रम् । अतो मधुशब्दे लक्षणा । लक्षणायां प्रमाणमाहुः प्राच्य इत्यादि । श्रुतौ लक्षणामाहुः तासामिति । नाडीनाम् । तेन कर्मधारयः । एतस्याः पूर्वश्रुत्यर्थस्तु, आदित्ये मधुनाडीत्वसम्पादनाय ज्ञात्रादिपदान्यपहाय मधुपददानेन प्रसिद्धमधुसाम्यं दर्शयितुमुपक्रमते तस्य द्यौरिति । तिरश्चीनवंशः सामान्यस्थानं मधुकृतः तद्वद्द्यौः । अत्र मधुकृत ऋच इत्यृचां सामान्यस्थानमवयव्यादित्यद्वारा । अवयव्यनङ्गीकारे साक्षादपि । 'अन्तरिक्षमपूप' इति । अपूपः पिष्टस्य विकारः आश्रयो मधुकृतस्तद्वदन्तरिक्षम् । अत्र मधुकृत ऋचः तासामाश्रयः । ननु मधुकृतामाश्रयः सरसा वृक्षाः, अपूपः कथमिति चेत् । न । अपूपेषु स्थित्वा तद्रसपायिनां मधुकराणां

भाष्यप्रकाशः।

मधुत्वं मधुनाडीत्वम्। 'प्राच्यो मधुनाड्य' इत्यादिश्रुतेः। तासां मधुप्रधानत्वान्मधुत्वम्। ऋचां मधुकृत्त्वम्, ऋग्वेदस्य पुष्पत्वम्। तासामेव ऋचाममृतता ब्रह्मरूपत्वम्, ताभिर्ऋग्वेदतापम्,

रश्मिः।

विवक्षितत्वात्। पूङ्पवने, सम्पदादि क्विप्, अपुवं पाति पिबति वा। आतोनुपेति कः। पिष्टस्य विकारः। संज्ञायामिति कन्। 'पिष्टको घृतपूपादौ नेत्ररोगान्तरेपि चे'ति विश्वः। 'पिष्टको नेत्ररोगे स्याद्धान्यादिचमसेपि चे'ति पाठान्तरम्। धान्यादिपानपात्रं नानावृक्षा रसाश्रया अप्यपूपः। तेन 'यथा मधु-मधुकृतो निस्तिष्ठन्ती'त्यत्रोक्तनानावृक्षरसात्तृत्वं मधुकृतां न विरुद्धम्। तद्वदन्तरिक्षं तत्रादित्यत्रयीरूपोन्तरिक्षस्याध्यक्षे वायौ स्वसमवायिनि समवायेन स्थित्वा 'वायव्या वै पशव'इत्युक्तेः पशून् अश्वान् रथद्वारा भुङ्क्ते। ऋचोपि भुञ्जते आदित्यद्वारा। 'वायुः शब्दतामापद्यत' इति प्राचां प्रवादात्।

अत्रेदं प्रतिभाति। अवयवा ऋगादयः न तूष्णीमादित्यमवयविनमारभन्तेपि तु मधुत्वम्। आदित्यस्य सिद्धत्वात्। मधुत्वान्तर्गतज्ञानं च किंविषयकमित्यपेक्षायामन्तरिक्षे ये वायव्याः पशवः राधाकृष्णवराहाः। पञ्चमाष्टके 'आदित्यः पशुरासीत्तेनायजन्त, अग्निः पशुरासीत्तेनायजन्त, वायुः पशुरासीत्तेनायजन्ते'ति श्रुतावुक्तेः। आदित्यः कृष्णः पशुः पश्यतीति पशुः द्रष्टा अग्निः, निरुक्ते देवपत्नीनामसु सूर्यपाठाद् राधा। वराहः वायुः। हिरण्यगर्भनस्तो 'वराहतोको निरगा'दिति श्रीभागवते। तथा च मधुत्वान्तर्गतज्ञानं पशुविषयकमिति भावोत्र। अधिकारस्कन्धानन्तरं ज्ञानस्कन्धः। तादृशज्ञानविषयत्वेन तृतीयस्कन्धे वराहपशुसर्गपुरःसरं सर्ग उक्तः। ततो राधाकृष्णपशुनिरोधपुरःसरं सामान्यतो निरोधः प्रपञ्चविस्मृतिपूर्वकभगवदासक्तिलक्षणकनिरोधो व्याख्यात इति। स्कन्धचतुष्टयव्याख्याशयः। मरीचयः पुत्रा इति। मधुकृतां पुत्रा अपि मधुकृतस्तद्वन्मरीचयः किरणाः दीप्तयोपि आदित्यमधुकृतः। तथाहि। आदित्योपां पुष्पं तेजस्तु भगवदीयं पुत्रवत् किरणदीप्तिरूपम्। 'अजायमानो बहुधा विजायत' इति श्रुतेरधिकारिणं 'पुन्नाम्नो नरकात् त्रायत' इति पुत्रपदव्युत्पत्तेः पालकम्। अन्यथा बन्धप्राप्त्या नाधिकारं कुर्यात्। 'देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण' इति संहितोक्तम्, तस्य ये प्राञ्चो रश्मयस्ता एवास्य प्राच्यो मधुनाड्यः। अत्रत्यं प्रतीकमाहुः। प्राच्य इत्यादि। तस्यादित्यस्यावयवत्रयीपरसाश्रयस्य सवितुर्ये प्राञ्चः पूर्वदिग्गता रश्मयः। ता एवास्यादित्यस्य प्राच्यो मधुनाड्यः। प्रसिद्धमधुरूपार्णवादित्यमधुरूपच्छिद्राणि। ऋचामिति। ऋच एव मधुकृत इति श्रुत्यर्थः। भ्रमरा इवर्चः समवायित्वं मधुनि भ्रमराणां आदित्ये ऋचाम्। 'एषा त्रय्येव विद्या तपती'तिश्रुतेः। 'ऋग्वेद एव पुष्प'मितिश्रुत्यर्थमाहुः ऋग्वेदस्येति। नारायणविशिष्टादित्यस्य पुष्टिद्वारोपासनफलत्वं सूचितमित्यादित्यमधुनर्त्रयीरूपेण वेद ऋग्वेदः पुष्पं अर्थरूपफलसत्ताविशिष्टम्। वेदयति साधनफले अलौकिके इति वेदः। 'ता अमृता आप' इति श्रुत्यर्थमाहुः तासामेवेति। प्रसिद्धमधुनः द्रव्यभूयस्करत्वरूपापां लक्षणवत्त्वात् प्रकृते आप उक्ताः। ता इति विधेयलिङ्गम्। पुष्पं फलसत्ताकमिति। आदित्यमधुपीता आपः अमृताः अमृतपदवाच्या मुख्यफलजनकत्वात्। एवं च तासामपामेव या रुचो दीप्तयः तासाममृता आपः इतीति शेषः। इति हेतोर्ब्रह्मरूपत्वम्। ऋग्वेदस्य शब्दस्यार्थरूपत्वम्। 'ब्रह्म वेद' इति शब्दरूपत्वं वा। 'ता वा एता ऋच एतमृग्वेदमभ्यतप'न्निति श्रुत्यर्थमाहुः ताभिरिति। ता वै मधुकृतः वै निश्चयेन एताः पुष्परूपाः कार्यकारणाभेदात्। ऋग्वेदं स्वं रूपं गहनार्थवत्त्वेन तापयुक्तमकरोत्। आधिदैविके तापः सम्भवति। 'मृदब्रवी'दितिवत्। 'तस्याभितप्तस्य यशस्तेज

भाष्यप्रकाशः ।

ताभिस्तप्तस्यर्ग्वेदस्य यशआदिरसजननं तत्क्षरणम्, तस्य रसस्यादित्यमभितः श्रयणम्, तस्यादित्यरोहितरूपत्वमित्येवं प्रतिदिक्करश्मीनां ये रसास्तेषाममृतत्वं च निरूप्य, तदग्रे 'तद्यत्प्रथममृत'मित्यादि पठ्यते । अत्र कल्पनोपदेशात्परोक्षवादता । तेन यदत्र सिद्धं तद्विशदयन्ति ।

रश्मिः ।

इन्द्रियं वीर्यमन्नाद्यं रसोऽजायते'त्यस्यार्थमाहुः **ताभिस्तप्तस्येति** । अभितस्तप्तशब्दो लोकप्रसिद्धः । कः शब्दः इत्यपेक्षायामाहुः **यश** इत्यादि । यशः रसः, यशोजनकशब्दः 'रस शब्दे' इतिधातुपाठात् । स च शब्दः 'अलौकिको हि शब्दार्थो न युक्त्या प्रतिपद्यते, तपसा वेदयुक्त्या तु प्रसादात् परमात्मन' इति । 'आचार्यवान् पुरुषो वेदे'ति । तेजो रसः, आधिदैविके सन्तापस्तेजः तत्प्रतिपादकः शब्दः 'मद्भयाद्वाति वातोयं सूर्यस्तपति मद्भयाद्'इति । 'यदादित्यगतं तेजो जगद्भासयतेखिलम्, यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामक'मिति च । इन्द्रियं रसः, इन्द्रियप्रतिपादकः शब्दः 'इन्द्रियाणि जुहोती'तिगीतोक्त इन्द्रियहोमश्च । वीर्यं रसः, तत्प्रतिपादकः शब्दः, 'यदेव विद्यया करोति श्रद्धयोपनिषदा वा तदेवास्य वीर्यवत्तरं भवती'ति । दशमस्कन्धे वीर्यवाक्यानि । अन्नाद्यं रसः, अन्नाद्यप्रतिपादकशब्दः । 'अग्नये जुष्टं निर्वपामी'ति । प्राणाग्निहोत्रोपनिषद्रूपश्च । आद्यपदेन 'अस्या देवतायाः सालोक्यं सार्ष्टितां सायुज्यतामाप्नोती'ति । 'सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत, दीयमानं न गृह्णन्ति विना मत्सेवनं जना' इति फलप्रतिपादकः शब्दः । तद्व्यक्षरदित्यस्या अर्थमाहुः **तत्क्षरणमिति** । तस्य यशआदेरन्नाद्यान्तस्य क्षरणं विशेषेण तद्यशआद्यन्नाद्यान्तं विशेषेणोर्ध्वमक्षरदगमत् । 'तदादित्यमभितोश्रय'दित्यस्याः श्रुतेरर्थमाहुः **तस्य रसस्येति** । स्पष्टा । 'तद्वा एतद्यदेतदादित्यस्य रोहितं रूप'मित्यस्या अर्थमाहुः **तस्यादित्येति** । तद्वैतदेव पूर्वोक्तमेवैतत्प्रत्यक्षं मधु, किं तत्, यत् एतत् उद्यत आदित्यस्य रोहितं रक्तरूपमप्पुष्पादित्यशुक्लरूपातिरिक्तं दृश्यत इत्यर्थः । **इत्येवमित्यादि** । पूर्वोक्तप्रकारेण दिशं दिशं प्रतीति प्रतिदिक् येषां रश्मीनां ते इत्येवं प्रतिदिक्कास्ते च रश्मयः इत्येवं प्रतिदिक्करश्मयस्तेषाम् । ये रसाः पुष्पाणि तेषां वेदत्वेनात्मत्वादमृतत्वम्, ता अमृता आप इत्येतया निरूप्य । **अत्र कल्पनेति** । भक्तिरसपरोक्षस्य भाष्य उपदेशात् । अक्ष्णः परमिति परोक्षं तस्य वादस्तत्ता । **विशदयन्तीति** । परोक्षार्थस्याधिकस्योक्त्या विशदं कुर्वन्तीत्यर्थः । **तथा चेत्यादीति** । तत् तस्मात् यत् प्रथमममृतमृग्वेदरूपं तद् वसवोष्टौ नन्दाद्याः उपजीवन्ति । समीपस्थादाचार्यादुपसमीपाय जीवन्ति कारणं कुर्वन्ति । अग्निस्त्वाचार्यः स्वयमुपजीवति । केनोपायेनेत्यत आहुः **अग्निना मुखेनाग्न्याचार्येण** । आचार्याः सर्वात्मभाववन्त इति सर्वात्मभाववन्तो नन्दाद्याष्टवसव उपजीवन्ति ब्रह्मज्ञानकारणं कुर्वन्ति । परोक्षार्थस्तु कृपावलोकनेन प्रथमममृतमृग्वेदरूपमग्न्याचार्यस्नेहेन तात्पर्यार्थं कृत्वा व्रजभक्तभावेन नित्यक्रीडाप्रवेशार्थं कारणं कुर्वन्तीति । एतस्य संक्षेपः **दर्शनमात्रेण** ऋग्वेददर्शनमात्रेण शाब्दज्ञानेन तात्पर्यार्थविषयेण । कारणान्तरव्यवच्छेदको मात्रच् । 'न वै देवा' इत्यस्याः परोक्षापरोक्षार्थयोः परोक्षार्थमाहुः **प्राणादिति** । 'धारयन्त्यतिकृच्छ्रेणे'तिवाक्ये प्राणधारणमुक्तम्, तस्माद्धेतोरिन्द्रियरूपाणां चक्षुरादीनां निवृत्तिवैकल्यमिति परोक्षार्थः । अपरोक्षस्तु 'न वै देवा' इत्यस्य स्पष्टः । ननु देवानां भोगो विग्रहवत्त्वात् सिद्धोपलभ्यते कुत इति चेत् । न । प्रमेयबलात् । वस्तुतस्तु परोक्षवाद इति । तत्रात्मेतराभावादात्मेतरन्नाश्नन्ति न पिबन्तीति

अन्यधर्मनिवृत्तिः, तस्यैव स्वतन्त्रपुरुषार्थत्वेन ज्ञानमतिशयितस्नेहजविगाढभावेन तत्रैव लयः, पुनस्तद्दर्शनानन्दानुभवार्थं भगवानेव कृपया पुनः पूर्वभावं सम्पादयतीति तस्माद्रूपादुदयश्च । एतत्सर्वं भगवदङ्गत्वे एवोपपद्यत इत्यपि हेत्वभिप्रेतोर्थो ज्ञेयः । न हि प्रतीकत्व इदं सर्वं सम्भवति । भक्तिमार्गीयत्वादस्यार्थस्येति भावः । अङ्गानां भगवत्स्वरूपात्मकत्वेनैक्यमिति ज्ञापनायैकवचनम् । एतेन स्वरूपस्यैव फलत्वमुक्तं भवतीति मुख्यः सिद्धान्तः सूचितो भवति ॥ ६ ॥

भाष्यप्रकाशः ।

तथा चेत्यादि । अन्यधर्मनिवृत्तिरिति । प्राणधर्मरूपक्षुदादिनिवृत्तिः । हेत्वभिप्रेतोर्थ इति । हेतुबोधके उपपत्तिपदेभिप्रायगोचरोर्थः । तदुपपादयन्ति न हीत्यादि । ज्ञानमार्ग एवान्धत्वादिदोषः, न भक्तिमार्ग इत्यपि सूचितम् । शेषं स्फुटम् । किञ्च, अस्मिन् सूत्र आदित्यादिमतीनामङ्गविषयकत्वकथनेन पूर्वं, 'अन्तस्तद्धर्मो'दिसूत्रेषूक्तानां हिरण्मयपुरुषाकाशप्राणादीनामप्यङ्गत्वं बोध्यते । तेन तदुपासना अपि तथेत्यपि बोधितमिति ज्ञेयम् ॥ ६ ॥

रश्मिः ।

सूपपन्नम् । भाष्ये । तस्यैवेत्यादि । तात्पर्यार्थस्यैव । ज्ञाते स्नेह इति नियमार्थमुक्तम् । तत्कार्यमाहुः । अतिशयितेति । विगाढत्वं शास्त्रार्थोत्थत्वम्, शास्त्रार्थसंवादित्वं वा । लयोभिसंवेशः परोक्षार्थः । कृपयेति । ब्रह्मानन्दात्समुद्धृत्य भजनानन्दयोजनं कृपाकार्यमिति । प्रकृते । हेत्विति । गोचरः प्रत्ययार्थः । न हीत्यादीति । प्रतीकत्वमत्र पूर्वोक्तमतद्रूपे तत्त्वेनोपासनत्वं तस्मिन् । भक्तीति । भक्तिमार्गीयार्थेऽतत्त्वे तत्त्वेनोपासनं नास्ति 'सर्वं खल्विदं ब्रह्मे'तिश्रुतेर्जगन्नित्यत्वात् । 'सद्बुद्ध्या सर्वथा सद्भिर्न सेव्यमखिलं जगत्, भ्रान्त्या सद्बुद्धिरत्रेति सन्तं कृष्णं भजेद्बुध' इति तु ज्ञानमार्गीयार्थपरमिति सूच्यते । अस्ति समन्वितसत् कृष्णभजनपरं वा, समन्वयाधिकरणात् । ननु भगवदङ्गत्वे सकलाङ्गोपासना माभूत्, तत्रैवाङ्गे मनोव्यापाररूपोपासनासम्भवात्, तथापि सर्वाङ्गेषु मनोव्यापारस्यावर्जनीयत्वादेकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमितिन्यायादन्तस्तद्धर्माधिकरणोक्तादित्यान्तःस्थनारायणस्मरणाच्च भक्तिमार्गे उप समीपे स्थित्वा यथायोग्यकरणरूपोपासनासत्त्वात्, 'चक्षुष्ट्वेतदात्मन इति होवाचान्धो भविष्यद्यन्मां नागमिष्य' इति श्रुतिविरोध इति चेत्, तत्राहुः ज्ञानमार्ग इति । उपासनयाध्यात्मिकचित्तशुद्धौ ज्ञानमित्यस्मिन्मार्गे एव, न भक्तिमार्गे इत्येवकारार्थो वक्ष्यते । अन्धत्वादिदोषस्याभिधेयार्थे सम्भवः । आदिपदेन 'मूर्धा ते व्यपतिष्यद्यन्मां नागमिष्य' इति द्युमतिकरणवाक्यं 'प्राणस्ते उदक्रमिष्यद्यन्मां नागमिष्य' इति वायुमतिकरणादिवाक्यानि सङ्गृह्यन्ते । सूचितार्थे तु न । तथा च 'यथा एष द्युलोकाख्यः आत्मनो वैश्वानरस्य मूर्धा, नायं समग्रो वैश्वानरोतः समग्रबुद्ध्यास्योपासनाद् विपरीतग्राहिणस्ते मूर्धा पतितोभविष्यत्, यद्यदि मां प्रति नागमिष्य इत्यभिधेयार्थलङ्विचारेण तथा भक्तिमार्गे लङ्विचारेण क्रियाया अनिष्पत्तौ गम्यमानायां नान्धत्वादिदोषः । तथा च मूर्धा त्वेष आत्मन इति होवाच मूर्धा ते व्यपतिष्यद्यन्मां नागमिष्य' इत्यस्यामात्मन इत्यभेदे षष्ठी राहोः शिर इतिवत् । व्यतीतपतनयुक्तमभविष्यदिति व्यपतिष्यदित्यस्येति सूचितार्थः । एवं 'चक्षुष्ट्वेतदात्मन इति होवाचान्धो व्यभविष्यद्यन्मां नागमिष्य' इत्यादिषु । स्फुटमिति । एकवचनमिति । सूत्रेङ्ग इत्येकवचनम् । एतेनेति । गौणमुख्यन्यायोक्त्या चेति भाष्येणेत्यर्थः । सूचित इति । वाच्यस्तु प्रतीतोर्थः । एवं शेषं स्फुटमित्यर्थः ॥ ६ ॥

## आसीनः सम्भवात् ॥ ७ ॥

पूर्वसूत्रेण धर्ममात्रस्य फलत्वमुक्त्वा, अधुना धर्मिणः फलत्वं तत्साधनं चाह सम्भवात् । उत्कटस्नेहात्मकसाधनस्य सम्भवात् तदधीनः सस्तदग्रं आसीनो भगवान् भवति। एतेन भक्तवश्यतोक्ता ॥ ७॥

एवं बहिःप्राकट्यमुक्त्वा आन्तरं तदाह।

## ध्यानाच्च ॥ ८ ॥

भावानौत्कट्यदशायां व्यभिचारिभावात्मकसततस्मृतिरूपध्यानादपि हृदि प्रकटः सन्नासीनो भवतीत्यर्थः। तेन स्थैर्यमुक्तं भवति ॥ ८ ॥

एवं भक्तेच्छयैव स्वरूपप्राकट्यमित्युक्त्वा लीलानाविष्करणमाविष्करणं चापि तदिच्छयैवेत्याह।

## अचलत्वं चापेक्ष्य ॥ ९ ॥

भक्तेच्छामपेक्ष्याचलत्वम्, चकाराचलत्वमपीत्यर्थः ॥ ९ ॥

---

भाष्यप्रकाशः।

आसीनः सम्भवात् ॥ ७ ॥ सूत्रमवतारयन्ति पूर्वसूत्र इत्यादि। पूर्वसूत्रे चक्षुरादिरूपस्यादित्यादेर्धर्मस्य प्राप्यत्वेन फलत्वमुक्त्वास्मिन् सूत्रे धर्मिणो भगवत एव तदुपासनफलत्वं तत्प्राप्तिसाधनं चाहेत्यर्थः। व्याकुर्वन्ति सम्भवादित्यादि। भगवदङ्गत्वज्ञानपूर्विकयादित्याद्युपासनया उत्कटस्नेहसम्भवात् तथा, न तु तदभावेपीत्यर्थः। एतेन ज्ञानमार्गिणामीदृशस्नेहाभावान्नासीनो भवति, किन्तु परोक्षज्ञानविषयो भवतीत्यपि बोधितम्। सिद्धमाहुरेतेनेत्यादि ॥ ७ ॥

ध्यानाच्च ॥ ८ ॥ सूत्रमवतारयन्ति एवमित्यादि। तदिति। प्राकट्यम्। व्याकुर्वन्ति भावेत्यादि। स्थैर्यमुक्तं भवतीति। एतेन ज्ञानमार्गे एतादृशस्यापि भावस्याभावादस्थैर्यमित्यपि बोधितम् ॥ ८ ॥

अचलत्वं चापेक्ष्य ॥ ९ ॥ सूत्रमवतारयन्ति एवं भक्तेत्यादि। अस्मिन्नपि सूत्रे अपेक्ष्येति कथनाज्ज्ञानमार्गीयस्योपासनामपेक्ष्य वाऽचलत्वादिकं बोध्यम् ॥ ९ ॥

रश्मिः।

आसीनः सम्भवात् ॥ ७ ॥ उक्त्वेति। अभिधयोक्त्वा, व्यञ्जनया तु धर्म्यप्युक्त एव। आहेति। अभिधयाहेत्यर्थः। परोक्षेति। 'भक्त्याहमेकया ग्राह्य' इतिवाक्यात् तथा ॥ ७ ॥

ध्यानाच्च ॥ ८ ॥ भावेत्यादीति। भावना न सन्न्यासनिर्णयोक्तत्वाद्विप्रयोग एव, संयोगव्यभिचारिभावसततस्मृतिरूपत्वस्य वक्ष्यमाणत्वात्। एकैकाङ्गे मनोनिवेशस्य ध्यानस्य साधनदशायां सत्त्वम्। फले त्वत्र निविष्टम्। अत एव सततपदम्। एतादृशस्येति। भक्तिरसे व्यभिचारिभावात्मकसान्तर्बहिःस्थित्या स्थैर्ययुक्तस्य। किन्त्वक्षरविषयकं ज्ञानं सोहमिति तस्य 'कृष्णोहं पश्यत गति'-मित्यत्रोक्तसदृशस्य। अस्थैर्यमिति। तादृशे स्थैर्यभिन्नो धर्म उक्तः, आन्तरमात्रत्वात् ॥ ८ ॥

अचलत्वं चापेक्ष्य ॥ ९ ॥ उपासनामपेक्ष्येति। यावदुपासनं तावदित्यर्थः। अचलस्येति। आदिना चलत्वम् ॥ ९ ॥

## स्मरन्ति च ॥ १० ॥

केचन भक्ताः स्वरूपनिरपेक्षास्तत्स्मरणजनितानन्देनैव विस्मृतापवर्गान्तफला भवन्ति । चकाराच्छ्रवणकीर्तनादयोपि समुच्चीयन्ते । तदुक्तं 'अथ ह वा व तव महिमामृतसमुद्रविप्रुषा सकृल्लीढया स्वमनसि निष्यन्दमानानवरतसुखेन विस्मारितदृष्टश्रुतसुखलेशाभासाः परमभागवता' इति । अथवा । 'अहं भक्तपराधीन' इत्यादिस्मृतिः पूर्वोक्ते प्रमाणत्वेनोक्ता ॥ १० ॥

इति चतुर्थाध्याये प्रथमपादे तृतीयमादित्याद्यधिकरणम् ॥ ३ ॥

भाष्यप्रकाशः

स्मरन्ति च ॥ १० ॥ अनेन साधनान्तरमुक्तमित्याहुः केचनेत्यादि । अत्र भाष्यमतिरोहितार्थम् ।

एवञ्चात्रादित्यसूत्रोक्ते मनने आसीनसूत्रेण विशेष उक्तः, ध्यानसूत्रोक्तनिदिध्यासने चाचलत्वसूत्रेणेति ज्ञेयम् । अनेनाधिकरणेन आदित्याद्यङ्गविषयिणीनामुपासनानां जघन्याधिकारिषु फलदानद्वारा भगवन्माहात्म्यप्रतिपादनेन तत्र भक्तिजननद्वारा सर्वात्मभावरूपज्ञानाङ्गत्वमपि प्रतिपादितम् । तेन तासामपि परम्परया तदेव फलमिति सिद्धम् ।

अन्ये तु, आदित्यादिमतिसूत्रमधिकरणान्तरत्वेनोक्त्वा तत्र 'य एवासौ तपति तमुद्गीथमुपासीते'त्यादिषु कर्माङ्गोपासनेषु किमादित्यादिषूद्गीथदृष्टिः कार्या, किं वोद्गीथादिष्वादित्यादिदृष्टिः, दृष्टेरनियमो वेति संशये, उद्गीथादिष्वङ्गेष्वेवादित्यादिदृष्टयः कार्या इति सिद्धान्तयन्ति। आसीन इत्यादिकं चतुःसूत्रमधिकरणान्तरमुक्त्वा तेष्वेवासननियमोस्ति न वेति संशये, आसीन एवोपासीतेति नियमं सिद्धान्तयन्ति । तत्रोदासीना वयम् ॥ १० ॥

इति तृतीयमादित्याद्यधिकरणम् ॥ ३ ॥

रश्मिः ।

स्मरन्ति च ॥ १० ॥ अनेनेत्यादि सूत्रेण । साधनं भक्तेच्छालीलाविष्करणे तदन्यत् साधनं 'अहं भक्तपराधीन' इति भगवत्सङ्कल्पस्तद्रूपं साधनान्तरम् । आदित्येति । मतिपदेनादित्यसूत्रोक्ते । विशेष इति । आसीनत्वविषयकमनने विशेषः । निदिध्यासन इति । सततस्मृतिरूपे । ध्यानधारणयोः स्मृतौ सातत्याभावात् । अचलत्वेति । भक्तेच्छापेक्षत्वरूपो विशेषो भगवत्युक्तः । लीलाः पूर्वं नित्यलीलास्थानामनूदितास्तत्र प्रवेशस्तु व्रजभक्तभावेन भजने भवति, तत्र तु सर्वात्मभावोपीति तमाहुरत्रानेनेति । फलदानेति । तत्तद्देवतासायुज्यफलदानद्वारा । तत्रेति । भगवति । सर्वात्मभावेति । प्रदानसिद्धसर्वात्मभावेत्यादि । ज्ञानत्वं तु । सर्वात्मभावरूपं ज्ञानमिति 'लिङ्गभूयस्त्वा'धिकरणग्रन्थात् । न च 'प्रदानवदेवे'तिसूत्रात् प्रदानमात्रसाध्यत्वं सर्वात्मभावस्येति शङ्क्यम् । पूर्वसाधनवते दानस्याविरुद्धत्वात् । तदेवेति । सर्वात्मभाव एव फलम् । तदिति विधेयलिङ्गात् । कर्माङ्गेति । 'यदेव विद्यया करोति' इतिश्रुतेर्विद्योपासनकृतिं करोति । कृतिः कर्म । तेषु कर्माङ्गोपासनेषु । अभियम इति । अभितः पक्षद्वयेपि यमो नियमः । इति संशये त्रिकोटिकसंशये । अङ्गेष्वेवेति । उद्गीथाद्यङ्गेषु । 'रसाना५ रसतमः परमः परार्ध्योऽष्टमोयमुद्गीथ' इत्यादिष्वङ्गिनः । तेष्वेवेति । उपासनेष्वेव, एवकारेण योगयोगव्यवच्छेदः । उदासीना इति । योगं विनासनविचाराप्रसङ्गादसङ्गतो विचार इति तथेत्यर्थः ॥१०॥ इति तृतीयमादित्याद्यधिकरणम् ॥३॥

१. अभियम इति रश्मिपाठः ।

यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥ (४-१-४.)

अथेदं विचार्यते । बहिराविर्भावो येभ्यो, येभ्यश्चान्तस्तेषां तेषां च मिथस्तारतम्यमस्ति, न वेति । तत्र निर्णयमाह । यत्र भक्तेषु एकाग्रता भगवत्स्वरूपे प्रकट एवैकस्मिन् ग्राहकचित्तधारा, न त्वन्तर्बहिर्विज्ञानम्, तत्रोभयोरन्तःपश्यतो बहिःपश्यतश्च भावे भगवत्स्वरूपे च विशेषाभावान्न तारतम्यमस्तीत्यर्थः ॥ ११ ॥

इति चतुर्थाध्याये प्रथमपादे चतुर्थं यत्रैकाग्रताधिकरणम् ॥ ४ ॥

आप्रायणात्तत्रापि हि दृष्टम् ॥ १२ ॥ (४-१-५.)

उक्तेऽर्थ एवायं संशयः । अन्तःप्राकट्यवतो यदा बहिःसंवेदने सत्यपि पूर्वानुभूतभगवत्स्वरूपानुभवः, तदा पूर्वमन्तरन्वभूवम्, अधुना बहिरनुभवामीत्यनुव्यवसायो भवति, न वेति । तत्र वैलक्षण्याद्भवितुमर्हतीति पूर्वः पक्षः । तत्र सिद्धान्तमाह आप्रायणादिति । श्रीभागवते, 'प्रायणं हि सतामह'मिति

---

भाष्यप्रकाशः ।

यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥ एतस्य सूत्रस्याधिकरणत्वं बोधयन्तोवतारयन्ति अथेत्यादि । अथेति । पूर्वाधिकरण आदित्यादिरूपाणामङ्गानामुपासनाभिः साधनभूतभक्त्युत्कर्षात् पुरुषोत्तमस्य बहिरन्तःप्राकट्यविचारानन्तरम् । येभ्य इति । चतुर्थी तादर्थ्ये । तत्रेति । उक्तसंशयोत्तरं प्राकट्यप्रकारभेदाद् भक्तयोस्तारतम्यमिति प्राप्ते । न त्वन्तर्बहिर्विज्ञानमिति । करणभेदानुसन्धानकृतमन्तर्बहिर्विज्ञानम् । शेषः सिद्धान्तग्रन्थस्तु स्फुटः । तथाचैकाग्र्याभावे भावतारतम्यम् । तेन च तयोस्तारतम्यम्, न तु प्राकट्यप्रकारभेदादिति भावः ॥ ११ ॥

इति चतुर्थं यत्रैकाग्रताधिकरणम् ॥ ४ ॥

आप्रायणात्तत्रापि हि दृष्टम् ॥ १२ ॥ एतस्याप्यधिकरणान्तरत्वं बोधयन्त आहुः । उक्तेऽर्थ इत्यादि । तेनानुप्रसङ्गः सङ्गतिरित्यर्थः । सत्यपीत्यपिशब्दोऽनुभवशब्दानन्तरमन्वेति । पूर्वपक्षमाहुः तत्रेत्यादि । वैलक्षण्यादिति । भूतकालवर्तमानकालरूपविशेषणभेदकृताद्वैलक्षण्यात् । सिद्धान्तं वक्तुं सूत्रं विवृण्वन्ति श्रीभागवत इत्यादि । तत्रैकादशस्कन्ध एकादशा-

रश्मिः ।

यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥ अथशब्दस्यानन्तर्यमर्थमाहुः पूर्वेति । साधनेति । पुरुषोत्तमप्राप्तिसाधनभूतप्रेमसर्वात्मभावरूपेण श्रवणाद्युत्कर्षात् । करणेति । करणं मनः तस्य भेदयोरनुसन्धानमन्तर्बहिर्विषयानुसन्धानकृतम् । तयोरिति । अधिकारिणोः । प्राकट्येति । अन्तर्बहिःप्रकारौ तयोर्भेदात् ॥ ११ ॥ इति चतुर्थं यत्रैकाग्रताधिकरणम् ॥ ४ ॥

आप्रायणात् तत्रापि हि दृष्टम् ॥ १२ ॥ अनुप्रसङ्ग इति । पूर्वाधिकरणयोः प्रसङ्गः उक्तेनाधिकरणेनास्य पश्चात् प्रसङ्गोधिकरणयोः सङ्गतिरित्यर्थः । अन्वेतीति । तेनान्वेति । भाष्ये । अनुव्यवसाय इति । अयं घट इति ज्ञानानन्तरं घटमहं जानामीति ज्ञानवत् । तत्तेदन्ताप्रकारकज्ञानत्वाभावान्न प्रत्यभिज्ञा, सेयं दीपमालिकेतिवत् । प्रकृते । भूतेति । अन्वभूवमिति

भगवद्वाक्यात् प्रायणशब्देन स्वतःपुरुषार्थत्वेन प्राप्यं परमं पारलौकिकं फलमुच्यते । तथा च तन्मर्यादीकृत्य तस्य सैवावस्था सार्वदिकी, न तु बहिःप्राकट्येपि बहिष्ट्वानुसन्धानमित्यर्थः । ततस्तस्य तत्र सायुज्यं भवति, न वेति संशये निर्णयमाह । तत्रापि प्रायणेपि प्राप्ते तस्य पूर्ववत् प्रभुणा सममालापावलोकनश्रीचरणनलिनस्पर्शादिकं दृष्टमेव फलम्, न त्वदृष्टं सायुज्यमित्यर्थः । यतः शुद्धपुष्टिमार्गेङ्गीकृतः, अन्यथा पूर्वोक्तभावसम्पत्तिः कथं स्यादित्युपपत्तिर्हिशब्देन सूच्यते । एतच्च 'तद्भूतस्य तु नातद्भाव' इत्यत्र निरूपितम् ॥ १२ ॥

इति चतुर्थाध्याये प्रथमपादे पञ्चममाप्रायणाधिकरणम् ॥ ५ ॥

भाष्यप्रकाशः ।

ध्यायोपान्ते ज्ञानमार्गाद् भक्तिमार्गोत्कर्षं वदता भगवतोक्तं 'प्रायेण भक्तियोगेन सत्सङ्गेन विनोद्धव । नोपायो विद्यते सम्यक् प्रायणं हि सतामह'मिति । प्रकृष्टमयनं प्रायणमिति योगात्तादृशं फलमुच्यते । तथा च तादृशं फलं मर्यादीकृत्य तस्य भक्तस्य सैवावस्थैकाग्रतारूपा सार्वदिक्यतस्तथेति नानुव्यवसायवैलक्षण्यमित्यर्थः । तर्हि प्रायणे तु फले वैलक्षण्यं भविष्यतीति शङ्कायां सूत्रशेषमवतारयन्ति ततस्तस्येत्यादि । निर्णयमाहेति । तत्क्रतुन्यायात्, 'यं यं वापी'ति स्मृतेश्च भवतीति प्राप्ते निर्णयमाहेत्यर्थः । व्याकुर्वन्ति । तत्रापीत्यादि । सूच्यत इति । हेतुतया सूच्यते । तथा च पूर्वपक्षोक्तन्यायादिर्ह्युपासने प्रवर्तते । अत्र तु साक्षात्कार इति तस्य भावस्य सार्वदिकत्वं निष्प्रत्यूहमित्यर्थः ।

रश्मिः ।

भूते लुङ्, अत्र भूतकालो व्यापारस्य विशेषणमस्मत्पदार्थनिष्ठ एकः भूतकालीनोनुभवानुकूलो व्यापार इतिबोधात् । तथानुभवामीत्यत्र वर्तमाने लट् । अत्र वर्तमानकालो व्यापारस्य विशेषणम् । अस्मत्पदार्थनिष्ठ एकः वर्तमानकालिकोनुभवानुकूलो व्यापार इति बोधात् । एवं विशेषणकृताद्भेदाद्व्यवसायानुव्यवसाययोर्ज्ञानयोर्वैलक्षण्यात् । तादृशमिति । अयनं प्राप्यं प्रकृष्टं परमं पारलौकिकं सर्वात्मभावलभ्यम् । भाष्ये । सैवेति । अन्तःप्रकटैकाग्रतारूपा । न त्विति । अत्र बहिष्ट्वमिदं पदार्थान्तर्गतं बोध्यम् । तथा च वाक्यं 'ता नाविदन्मय्यनुषङ्गबद्धधियः स्वमात्मानमदस्तथेद'मिति । तत्र दृष्टान्त उत्तरार्धेन । 'यथा समाधौ मुनयोब्धितोये नद्यः प्रविष्टा इव नामरूपे' इति । दृष्टान्तद्वयं ज्ञानभक्तिभेदेन । नामरूपे विहाय । प्रकृते । फलितमाहुः तथा चेति । अतस्तथेति । न तु बहिरित्यादिभाष्योक्तम् । भाष्यार्थस्तु ह्युक्तः । नान्येति । अनुव्यवसायादन्यस्य व्यवसायस्य वैलक्षण्यं नेत्यर्थः । बहिष्ट्वेनानुसन्धानाभावाद्विषयभेदाभावादिति भावः । वैलक्षण्यमिति । प्रायणे भगवति फले बहिष्ट्वेन व्यवसायस्य सद्योमुक्तये आवश्यकत्वादन्तर्व्यवसायाद्वैलक्षण्यम् । सूत्रशेषमिति । अधिकरणकत्वेन सूत्रशेषम् । ततस्तस्येत्यादीति । तत्रेति । बहिःप्रकटे । सायुज्यं सद्योमुक्तौ । तत्क्रतुन्यायादिति । अयं तृतीयचरणे 'अप्रतीकालम्बन'सूत्रशेष इति तत्रैव स्फुटिष्यति । 'भगवद्भजनलक्षणक्रतुश्च नीयत' इत्यर्थः । यमिति । 'यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम्, तत्तदेवैति कौन्तेय सदा तद्भावभावितः' इति स्मृतेश्च । भवतीति । सायुज्यं भवति । तत्रापीत्यादीति तत्रापीति । व्याख्येयम् । प्रायणेपीति व्याख्या । प्राप्त इति, सायुज्ये प्राप्ते । हेतुतयेति । पुष्टिमार्गेङ्गीकारो हेतुः पूर्वोक्तभावसम्पत्तिः कार्यम् । हेतुताग्राहिकोपपत्तिस्तर्को हिशब्दार्थः तेन

## तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥ (४-१-६.)

पुष्टिमार्गीयभक्तस्य फलं निरूप्य मर्यादामार्गीयस्य तस्य फलं चिन्त्यते। तत्र तु ज्ञानपूर्वकत्वं भक्तेरावश्यकम्। कर्ममर्यादाया अपि स्वकृतत्वात्तामनुल्लङ्घ्यैव भगवता फलं दीयते। तच्च, नाऽभुक्तं क्षीयते। तद्भोगानुकूलकर्मणा स्वसजातीयतत्सन्तानजननादनिर्मोक्ष एव सर्वस्य सम्पद्यते। न च प्रायश्चित्तवज्ज्ञानस्य कर्मनाशकत्वं वक्तुं शक्यम्। तद्वत्तस्य तदुद्देशेनाविहितत्वात्। तथा कथने चान्योन्याश्रयः। दुरितस्य चित्ताशुद्धिहेतुत्वेन तन्नाशे ज्ञानोदयो यतः, अतो मर्यादामार्गे मुक्तिरनुक्तिविषयेति प्राप्ते, उच्यते। तदधिगमे ब्रह्मज्ञाने सति तज्ज्ञानस्वभावादेवोत्तराघस्याश्लेषोऽसम्बन्धः, पूर्वस्य तस्य विनाशो भवतीत्यर्थः। अत्रोत्तरस्योत्पन्नस्याश्लेष इति नार्थः, तस्यात्मन्येवोत्पत्तेस्तदतिरिक्तस्य श्लेषस्या-

---

भाष्यप्रकाशः।

अन्ये तु, पूर्वसूत्रे उपासनासु एकाग्रताप्रयोजकं यद्भवति, तदेव दिगादिकं नियतम्, न तु प्राच्यादिनियम इति सिद्धान्तयन्ति। अस्मिंस्त्वभ्युदयफलास्वुपासनास्वपि प्रयाणकालपर्यन्तं प्रत्ययावृत्तिं सिद्धान्तयन्ति। प्रायणपदेन च प्रयाणकालं व्याकुर्वन्ति। तदा प्रायणशब्दो यौगिक एव। अयनपदस्य गमनवाचकत्वादिति। तत्राप्युदासीना वयम् ॥ १२ ॥

इति पञ्चममाप्रायणाधिकरणम् ॥ ५ ॥

तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥ अधिकरणप्रयोजनमाहुः पुष्टीत्यादि। पुष्टिमार्गीयभक्तस्य फलमिति। लौकिकदेहे भगवत्साक्षात्कारादिकं फलं 'आसीनः सम्भवा'दित्यादिभिर्निरूप्य प्रायणप्राप्तावलौकिकदेहेऽस्य भगवत्संसेवनरूपं फलं चिन्त्यत इति। कथं भवतीति विचार्यते। कुतश्चिन्त्यत इत्याकाङ्क्षायां संशयं तद्बीजं च सूचयन्तः पूर्वपक्षमाहुः तत्र त्वित्यादि। ज्ञानपूर्वकत्वं भक्तेरावश्यकमिति। 'तस्माज्ज्ञानेन सहितं ज्ञात्वा स्वात्मानमुद्धव। ज्ञानविज्ञानसहितो भज मां भक्तिभावत' इति भगवद्वाक्यात् तथा। दीयत इति। मर्यादामार्गे दीयते। तच्चेति। कर्म च। तद्वदिति प्रायश्चित्तवत्। ज्ञानस्य पापनाशकत्वाङ्गीकारे दूषणान्तरमाह तथेत्यादि। अन्योन्याश्रयं व्युत्पादयति दुरितस्येत्यादि। तथा च ज्ञानोदये दुरितक्षयो, दुरितक्षये च ज्ञानोदय इत्यन्योन्याश्रय इत्यर्थः। अनुक्तिविषयेति। तूष्णीम्भावविषया, अशक्यवचनेति यावत्। तथा च मर्यादामार्गे सर्वमर्यादारक्षणात्

रश्मिः।

सूच्यते तात्पर्यवृत्त्योच्यते। अव्ययानां द्योतकत्वम्। भाष्ये। तन्नूतस्येति। गतपादेस्ति तत्र। प्रकृते। न्यायादिरिति। 'यं यं वापी'तिस्मृतिरादिना गृह्यते। अत्र त्विति। भक्तिमार्गे तु अन्तर्व्यवसायः साक्षात्कार इति न वैलक्षण्यमित्यर्थः। उपासनोक्तेः साधनाविष्करणात् सद्योमुक्त्यर्थं बहिःप्राकट्यं बहिष्ठानुसन्धानयोरभावात्, फलसम्बन्धित्वात्। अभ्युदयेति। षोडशकर्मफलमभ्युदयः। निःश्रेयसफलव्यतिरिक्तस्तत्तदुपासना फलं च। यौगिक इति। प्रकर्षेणायनं गमनं यत्र काल इति प्रायणम्। समासोयं न योग इति चेत्, तत्राहुः। अयनेति। अय्यत इत्ययनमितियोगाद्यौगिकः। उदासीना इति। फलविचाराभावात् फलाध्यायेऽसङ्गतो विचार इति तथा ॥१२॥ इति पञ्चममाप्रायणाधिकरणम् ॥ ५ ॥

भावात्। अतोनुत्पत्तिरेवार्थः। न चैवं मर्यादामार्गीयत्वभङ्गः। साधनं विना स्वस्वरूपबलेनैव कार्यकारणे हि पुष्टिः, इह तु नियतकर्मविरोधित्वस्वभावेन ज्ञानेनैव तथा सम्पत्तेः। अत एव, 'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य

भाष्यप्रकाशः।

कर्ममर्यादाया अपि रक्षणीयतयोक्तप्रकारेण ज्ञानानुदये भक्त्यभावान्मोक्षरूपफलाभावः, उत 'यतो वाचो निवर्तन्त' इति ज्ञानिनमुपक्रम्य, 'एतꣳ ह वा व न तपति किमहꣳ साधु नाकरवं किमहं पापमकरव'मिति ज्ञानस्य बलवत्ताश्रावणात्तेन तन्नाशे भक्त्युदयात् फलं भवतीति संशये उक्तरीत्या मर्यादारक्षणावश्यकतया तूष्णीम्भाव एव शरणमिति प्राप्त इत्यर्थः। सिद्धान्तं वदन्तः सूत्रं व्याचक्षते तदधिगम इत्यादि। अत्राश्लेषपदार्थोऽसम्बन्धपदेन विवृतः, तं निर्णेतुं व्युत्पादयन्ति अत्रेत्यादि। एतत्सूत्रार्थविचारेनुत्पन्नस्याश्लेष इति नार्थः। 'श्लिष आलिङ्गन' इति धातोः संयोगविशेषार्थकतया गुणरूपस्य पापस्यात्मनि समवेतत्वेन संयोगस्य मूलत एवाभावाद-नश्यति च पापे समवायाभावस्य वक्तुमशक्यत्वादुत्पन्नस्य पापस्याश्लेष इति नार्थः, किन्तु तस्य पापस्यात्मनि लिङ्गविशिष्टे जीव एवोत्पत्तेरुत्पन्नकार्यसमवायातिरिक्तस्य श्लेषस्याभावात्। अत उक्तानुपपत्तिरूपाद्धेतोरनुत्पत्तिरेवार्थः। 'यथा पुष्करपलाश आपो न श्लिष्यन्त' इति श्रुता-वपि पापानुत्पत्तिरेवार्थ इत्यर्थः। न च श्रौतदृष्टान्तानुरोधाल्लिङ्गशरीरे उत्पन्नस्य जीवेऽसम्बन्ध इत्येवार्थो युक्तः, न पूर्वोक्त इति शङ्क्यम्। तेन 'भवत्यसङ्गो ह्ययं पुरुष' इति श्रुतेस्तस्य सदैवासङ्ग-

रश्मिः।

तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्॥ १३॥ उक्त इति। अन्योन्याश्रयप्रकारेण। तेन तन्नाश इति। ज्ञानेन पापनाशे। उक्तरीत्येति। आसूत्रादुक्तरीत्या। उत्पन्नस्येति। सौत्रोत्तरपदार्थस्य भाष्ये विवृतस्य। मूलत इति। द्रव्ययोरेव संयोग इति नियमा-देवाभावात्। अनीति। न विश्यदविश्यत् शता तस्मिन्। नार्थ इति। गुणगुणिनोः समवायेन श्लेषरूपसंयोगाभावादश्लेषाभावात्। तस्यात्मन्येवेति भाष्यं विवृण्वन्ति स्म, किन्त्विति। जीवे पापाभावोपहतपाप्मांशत्वात्, अतो विशेषणं लिङ्गविशिष्ट इति तदाहुः लिङ्गविशिष्ट इति। श्लेष-स्येति। संयोगरूपस्य गुणगुणिनोरभावात्। अत इति। व्याख्येयम्। उक्तेति। किन्त्वित्यादि-नाऽव्यवहितपूर्वोक्तानुपपत्तिरूपात् क्वचित्प्रत्यये रुशब्दस्य दीर्घाभावश्छान्दसः। अर्थ इति। अश्लेष-पदार्थः। आद्यक्षणसम्बन्धः उत्पत्तिः सा संयोगसम्बन्धः न कालिकः, द्रव्यस्य कालस्यात्मनि द्रव्ये कालिकविशेषसंयोगस्य वक्तुं शक्यत्वात्। यथा पुष्करेति। श्रुत्यर्थः स्पष्टः। श्रुताविति। 'न ह वा एवंविदि किञ्चनानन्नं भवती'त्यस्याम्। 'सर्वान्नानुमति'सूत्रे व्याकृता। एवंविदि ज्ञानिनि प्राण-विधनन्नमप्रशस्तमन्नम्। जन्तुमात्रस्य जग्धं भक्ष्यं तत्सर्वमिहानन्नं भवति, अदनीयमित्यन्ये। भवतीत्यस्योत्पद्यत इत्यर्थे। अप्रशस्तं पापजनकम्। अत्र पापस्य समवाय इति पूर्वश्रुत्यैकवाक्यत्वे पापानुत्पत्तिरसंश्लेषः। पूर्वोक्त इति। जीव एवानुत्पत्तिरसंश्लेष इति। श्रौतेति। अग्नेरुत्पन्नास्त-दाश्रया आपः तत्संयुक्ताः पुष्करपत्रे संयोगाभाववत इति श्रौतदृष्टान्तानुरोधात्। तस्येति। जीवस्ये-त्यर्थः। लिङ्ग एवेति। अभावप्रतियोगिनोरैकाधिकरण्यनियमादेवकारः। असंबन्धेति। अनुत्पत्ति-

१. रश्मौ अविश्यति इति सप्तम्यन्तपाठः।

सर्वे पाप्मानः प्रदूयन्त' इति श्रुतिरग्निदृष्टान्तमाह । स्मृतिरपि 'यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन । ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा' इति । 'सर्वं पाप्मानं तरति, तरति ब्रह्महत्यां योऽश्वमेधेन यजत' इत्यादिश्रुतिभ्यस्त्वयापि न तद्भोगनियमो वक्तुं शक्यः । एतेनाभुक्तस्याक्षयाद्भोगे च कर्मान्तरजननान्मोक्षासम्भव इति निरस्तं वेदितव्यम् । नचान्योन्याश्रयः । अनाद्यविद्याजनितसंसारवासनात्मिका हि सा । सा च गुरूपसत्तिश्रवणमननविष्णूपासनादिरूपया ज्ञानसामग्र्यैव नाश्यते । अविद्या परं ज्ञानेन नाश्यत इति

भाष्यप्रकाशः ।

त्वेनैवंविदीतिविशेषणवैयर्थ्यप्रसङ्गात् । न च लिङ्ग उत्पन्नं लिङ्गे एव न श्लिष्यत इत्यपि युक्तम् । दृष्टान्तवैषम्यस्यात्रापि तुल्यत्वात् । अतः पापस्यासम्बन्धमात्रमेव श्रुतौ विवक्षितम्, न तु तस्य पूर्वं सत्तापीति पूर्वोक्तमनवद्यम् । मर्यादाभङ्गमाशङ्क्य समादधते । न चैवमित्यादि । एवमिति । दुष्कर्मणो दुरदृष्टानुत्पादकत्वे । तथा सम्पत्तेरिति । कर्मासम्बन्धसम्पत्तेः । तथा चेयमपि मर्यादैवेति न तद्भङ्ग इत्यर्थः । अत एवेति । मर्यादाभङ्गाभावादेव । 'तद् यथेषीकातूल'मिति श्रुतिस्तु छान्दोग्ये वैश्वानरविद्यायां द्रष्टव्या । 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि । अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभ'मिति नियमवादे श्रुतिविरोधरूपं दूषणान्तरमाहुः सर्वमित्यादि । एतेनेति । अश्वमेधरूपनिर्वेशादभुक्तस्यापि दुष्कर्मणः क्षयश्रावणेन । अन्योन्याश्रयं परिहरन्ति न चान्येत्यादि । सेति । चित्ताशुद्धिः । क तत्प्रसङ्ग इति । अन्योन्याधीनोत्पत्तिकत्वे ह्यन्योन्याश्रयः । इह तु श्रवणादिरूपसामग्र्या ज्ञानोदयस्तयैव च चित्ताशुद्धिनाश इति नान्योन्याधीनोत्पत्तिकत्वम् । अतः कान्योन्याश्रयप्रसङ्गः । ननु तथा-

रश्मिः ।

मात्रम् । तस्येति । पापस्याभावप्रतियोगिनी सत्तापीत्यर्थः । पूर्वोक्तमिति । अश्लेषोनुत्पत्तिरिति पूर्वोक्तम् । एवमित्यादीति । सम्भ्रमात् । छान्दोग्य इति सप्तमस्यार्धप्रपाठकानन्तरं 'प्राचीनशाल औपमन्यव' इत्यारम्भकेस्ति । श्रुत्यर्थस्तु 'यथा लोके इषीकायाः मुञ्जमध्यवर्तिनालस्य तूलमग्रं अग्नौ प्रोतं प्रक्षिप्तं प्रदूयेत दह्येत एवमेवेहास्य विदुषः सर्वे पाप्मानः धर्माधर्माख्याः प्रदूयन्ते दह्यन्ते दह्येरन्निति । प्रसिद्धार्थस्तु इषीका दुर्गमनस्थानम्, 'इषीकाटवीं निर्विविशु'रिति वाक्यात् । तूलं ब्रह्मदारु, 'तूलं वा रूई'इति लोके, प्रोतं तन्तुषु पट इव प्रोतम् । प्रदूयेत दुष्यते । अग्रे समानोर्थः । अत्र भोगाभावेपि ज्ञानिनो ज्ञानेन कर्मदूषणमुक्तम् । अग्रे भाष्ये ज्ञानेन कर्मनाश उक्तः । एवं भोगेन कर्मनाशे नियमभङ्गः, भोगेनैव कर्मनाश इति नियमभङ्गः । दूषणान्तरमिति । उक्तदूषणादन्यद्दूषणम् । सर्वमित्यादीति । अत्र तरणोक्त्या पाप्मनि जलदृष्टिः कर्तव्या । 'आपमापामपः सर्वा' इत्यारणेनाप्रूपत्वात् । एवं ब्रह्महत्यायामपि स्वकारणादृष्टिः कर्तव्या । अश्वमेधेति । 'निर्वेशो मूर्च्छने भोगे' इति विश्वादश्वमेधरूपाद्भोगात् । अन्योन्याश्रयमिति । ज्ञानोदये दुरितक्षयो दुरितक्षये ज्ञानोदयः इत्यन्योन्याश्रयम् । न चान्योन्येत्यादीति । अनादीति । अनादिर्याऽविद्या तया जनितो यः संसारोऽहंताममतात्मकः तेन वासना संस्काररूपा, पूर्वापरानुसन्धानरहितपदार्थादानं वा तदात्मिकेत्यर्थः । चित्ताशुद्धिरिति । दुरितजन्या । अन्योन्येति । ज्ञानोदयदुरितक्षययोस्तया । ज्ञानोदय इति । ज्ञानाङ्गभक्तित्वादिति भावः । 'आत्मा वा अरे द्रष्टव्यः श्रोतव्य' इति श्रुतेः, न तु दुरितक्षयेण । तयैवेति । श्रवणादिरूपसामग्र्या स्वव्यापाररूपचित्ताशुद्धिनाशः । तन्नत्वे सति

१. अश्वमेधेन यजते यः स ब्रह्महत्यां तरति । ६ म० सू० र०

क तत्प्रसङ्गः । ज्ञानसामग्र्या बलिष्ठत्वात्कर्मणो दुर्बलत्वान्न तत्प्रतिबन्धकत्वमिति ज्ञाननाश्यत्वबोधकश्रुतिस्मृतिमता त्वयाप्युरीकार्यम् । इममेव हेतुमाहाचार्यस्तद्व्यपदेशादिति ॥ १३ ॥

इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥

पापस्य शास्त्रविरोधित्वेन शास्त्रीयज्ञानेन समं विरोधो भवतु नाम,

भाष्यप्रकाशः ।

प्यभुक्तेन कर्मणा ज्ञानसामग्रीबन्धो भवत्विति चेत्, तत्राहुः ज्ञानसामग्र्या इत्यादि । यदि हि कर्ममात्रमभुक्तं न क्षीयेत, तदा प्रायश्चित्तविधिरनर्थकः स्यात् । यदि चाक्षीयमाणं स्वसजातीयसन्तानमुत्पादयेत्, तदा ज्ञानसाधने प्रवृत्त्यनुपपत्त्या ज्ञानसामग्रीविधिरानर्थक्यमापद्यते । अतस्तदभावाय प्रारब्धस्यैवाभुक्तस्याक्षयः, क्रियमाणसंचितयोस्तु प्रायश्चित्तादिना क्षय इत्यवश्यमङ्गीकार्यम् । एवं सति प्रारब्धं भुञ्जानस्यापि क्रियमाणसञ्चितयोः क्षये ज्ञानसामग्र्या बलिष्ठत्वात्तथैव चित्ताशुद्धिनिवृत्तौ तत्पोषकस्य कर्मणो निरालम्बनतया दुर्बलत्वान्न सामग्रीप्रतिबन्धकत्वमिति त्वयापि श्रौतवादिनाङ्गीकार्यम् । इममेव हेतुं पूर्वपक्षिबोधनाय तद्व्यपदेशादिति पदेनाह । तस्मान्न कोपि दोष इत्यर्थः । अश्लेषश्रुतिस्तु, 'यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत' इति छान्दोग्य उपकोसलविद्यास्था बोध्या । सात्र न लिखिता । सहकारित्वसूत्रे ज्ञानस्य कर्मस्वभावनाशकतया व्युत्पादिततया तत एव निर्वाहादिति ॥ १३ ॥

इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥ सूत्रमवतारयन्ति पापस्येत्यादि । इत्या-

रश्मिः ।

तज्जन्यजनको हि व्यापार इति व्यापारलक्षणात् । न तु ज्ञानोदयेन । चित्ताशुद्धिनाशस्य कर्मोपासनाजन्यत्वादित्येवकारः । **कर्मणेति** । दुष्कर्मणा । सूत्रेऽघपदेनाघत्वेनाघग्रहणादघविवेचनेनार्थमाहुः **यदि हीत्यादि** । **कर्ममात्रमिति** । प्रारब्धक्रियमाणसञ्चिताघमात्रम् । **अनर्थक इति** । प्रायश्चित्तस्य भोगातिरिक्तस्य भोगनाश्याघनाशेऽकारणत्वात् तथा । **स्वसजातीयेति** । अघत्वेन सजातीयत्वम् । स्वसजातीयसन्तानज्ञानप्रतिबन्धकम् । **आनर्थक्यमिति** । शमदमादीनां ज्ञानोत्पादे कौण्ठ्यात्तथा । **तदभावायेति** । द्वयोर्विध्योरानर्थक्याभावाय । **अभुक्तस्येति** । भोगेन क्षयः । **प्रायश्चित्तादिनेति** । आदिना ज्ञानेन । **चित्ताशुद्धीति** । ज्ञानसामग्रीव्यापारभूतायाम् । **तत्पोषकस्येति** । चित्ताशुद्धिहेतोर्दुष्कर्मणः । आलम्बनं दुष्कर्मणश्चित्ताशुद्धिः, तस्याः निष्क्रान्ततया । **सामग्रीति** । ज्ञानसामग्रीप्रतिबन्धकत्वम् । **श्रौतेति** । श्रुतिभिः श्रूयत इति श्रौतम् । शैषिकोण् । श्रुतिः श्रवणं तस्य वादिना श्रुतिश्रुतिमता श्रुतिश्रवणवतेति यावत् । **इममेवेति** भाष्यविवरणं **इममेवेति** । **तद्व्यपदेशादिति** । तस्य हेतोर्व्यपदेशात् । **न लिखितेति** । अघनाशविचारेऽभावप्रतियोगिनोर्व्यधिकरणयोरिति बोध्यमित्येवंबोधिका न लिखिता । **कर्मस्वभावेति** । व्यधिकरणज्ञानस्य कर्मस्वभावनाशकत्वम् । समानाधिकरणस्य कर्मनाशकत्वमिति बोधनाय स्वभावशब्दः । श्रुतौ व्यधिकरणयोर्जलतदभावयोः समानाधिकरणयोः जलसंयोगतदभावयोर्ग्रहणं बोध्यम् । **तत इति** । सहकारित्वसूत्रात् ॥ १३ ॥

**इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥ पापस्येत्यादीति** । विरोधः सहानव-

धर्मस्यातथात्वेनाविरोध एवेत्याशङ्कानिरासाय पूर्वन्यायातिदेशमाह । इतरस्य पुण्यस्याप्येवम्, पूर्वस्य नाश उत्तरस्याश्लेष इत्यर्थः । अतिदेशाद्धेतुरपि स एव ज्ञेयः । तथाहि । 'उभे उ हैवैष एते तरति', 'क्षीयन्ते चास्य कर्माणी'ति सामान्यवचनाज् 'ज्ञानाग्निः सर्वकर्माणी'ति स्मृतौ सर्वशब्दाच्च तथा ।

अथेदं शङ्क्यते । मर्यादामार्गीयत्वाज्ज्ञानानन्तरं भरतवत् सङ्गदोषेण भगवद्भावाच्युतौ सङ्गजदोषोत्पत्तिवदग्रे विहितनिषिद्धकर्मणोरप्युत्पत्तिर्वक्तुं शक्येति ज्ञानस्य न सर्वात्मना कर्मविरोधित्वमिति । तत्र निर्णयमाह । पाते । भक्तिमार्गे भगवद्भावाच्युतिः पात इत्युच्यते । तुरप्यर्थे । अपिशब्दे वाच्ये व्यवच्छेदार्थकतुशब्दोक्त्यास्मिन्मार्गे पातस्य व्यवच्छेद एव । 'न कर्हिचिन्मत्पराः' इति वाक्यात् । परन्तु मर्यादामार्गीयत्वात् प्रारब्धभोगार्थं प्रभुश्चेत्तथा करोति, तद्भावे पूर्णे सति तद्भोगोसम्भावित इति तदैवं भवतीति व्यासाभिप्रायो ज्ञायते ।

तथा च तस्मिन् सत्यप्युत्तरस्य कर्मणोसंश्लेष एवेत्यर्थः । पूर्वसूत्र एवमेवा-

---

भाष्यप्रकाशः ।

शङ्कानिरासायेति । इति हेतोः पूर्वपुण्यस्यानाश उत्तरस्य च संश्लेषो भवत्विति शङ्कानिरासाय । ननु हेतोरकथनात् कथं पुण्यस्य तथात्वं ज्ञेयमित्यत आहुः अतिदेशादित्यादि । 'उभे ह्येवैष' इति श्रुतिस्तु शारीरब्राह्मणस्था । 'उभे ह्येवैष एते तरत्यमृतः साध्वसाधुनी' इत्यादि । द्वितीया तु मुण्डकस्था । सूत्रशेषमवतारयन्ति । अथेदमित्यादि सङ्गजदोषोत्पत्तिवदिति । ज्ञानानन्तरं यथा सङ्गजदोषोत्पत्तिस्तथेत्यर्थः । अग्र इति । ज्ञानानन्तरम् । व्याकुर्वन्ति भक्तीत्यादि । वाक्यं तु तृतीयस्कन्धे कापिलेये 'न कर्हिचिन्मत्पराः शान्तरूपे नङ्क्ष्यन्ति नोऽनिमिषो लेढि हेतिः । येषामहं प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवमिष्ट'मिति । अत्र 'मत्परा न नङ्क्ष्यन्ती'ति कथनात् पातव्यवच्छेदलाभः । तथा करोतीति । भक्तिभावं प्रतिबध्नाति । तदर्थं प्रतिबन्धकरणे हेतुः तद्भाव इत्यादि । तदैवं भवतीति । यदा भक्तिभावप्रतिबन्धः, तदा भरतवदन्यासक्त्यादिर्भवति । असंश्लेष एवेति । तदुपाख्याने, 'स च तदा पितृसन्निधावेवा-

रश्मिः ।

स्थानम् । अतथात्वेनेति । अशास्त्रविरोधित्वेन । सूत्रशेषमिति । पाते त्वितिसूत्रशेषम् । ज्ञानानन्तरमिति । हरिणशरीरे ज्ञानानन्तरं पञ्चमस्कन्धेस्ति । व्याकुर्वन्तीति । सूत्रशेषं व्याकुर्वन्ति भक्तीत्यादीति । अपिशब्दं विहाय तोरुपादाने तात्पर्यमाहुः अपिशब्द इति । पातस्येति । सुकृतदुष्कृताभ्यां कर्मभ्यां पातस्य व्यवच्छेद एव तोः प्रयोजनम्, न त्वन्यत्तात्पर्यप्रयोजनम् । न कर्हिचिदिति । शान्तरूपे हे मातः नङ्क्ष्यन्ति नाशं पातं वा प्राप्नुवन्ति । अनिमिषः हेतिः कालः । लेढि । 'लिह आस्वादने' तिपि तस्य रूपम् । अत्रेति । मत्पराः सुकृतदुःकृतकर्मनिर्हारकाः न नङ्क्ष्यन्ति । 'प्राप्तिपूर्वको निषेध' इति नाशः पातः प्राप्तः । सोन्यनिष्ठसुकृतदुःकृतकर्मभ्यां भगवत्परनिष्ठः व्यवच्छेदयुक्तः । सुकृतदुःकृतकर्मणोर्भगवत्परभक्तेऽभावात् । एवं पातव्यवच्छेदलाभः । तद्भाव इत्यादीति । भगवद्भजने पूर्णे सति । तद्भोगः प्रारब्धभोगः । अन्यासक्त्यादिरिति । प्रारब्धभोजकः । तदुपाख्यान इति । भरतोपाख्याने । तादृशेति ।

श्लेषशब्दस्य व्युत्पत्तेः। अतिदेशस्यैवंपदेनैव प्राप्तेः सर्वं सूत्रं तत्परत्वेन न व्याख्येयम्। पातशब्दस्य देहपातं तुशब्दस्यावधारणमर्थमुक्त्वा देहपाते मुक्तेरावश्यकत्वावधारणं वाक्यार्थ इति चोक्तिर्न साधीयसी। मुक्तिप्रापकपदाभावात् 'भोगेन त्वितरे क्षपयित्वाथ सम्पद्यत' इत्यग्रे वक्तव्यत्वाच्च॥ १४॥

## अनारब्धकार्ये एव तु पूर्वे तदवधेः॥ १५॥

ननु देहस्य कर्मजन्यत्वात्तन्नाशे तन्नाशस्यावश्यकत्वाद् ब्रह्मविदः प्रवचनानुपपत्तिः। एवं सति ब्रह्मजिज्ञासोर्गुरूपसत्त्यादिसाधनासम्भवः। 'आचार्यवान् पुरुषो वेदे'ति श्रुतेस्तदभावेन ज्ञानमार्गोच्छेदेन मुक्त्युच्छेदप्रसङ्ग इत्याशङ्क्य समाधत्ते। पूर्वे पूर्वसूत्राभ्यां ज्ञाननाश्यत्वेन ये प्रोक्ते पापपुण्ये ते नाशेषे,

भाष्यप्रकाशः।

सध्रीचीनमिव स करोती'तिवाक्येन तादृशकर्मबोधनादग्रे च जीवन्मुक्तत्वबोधनादसंश्लेषः। एवमेवेति। अनुत्पत्तिरूपतया। ननु सर्वस्य सूत्रस्यातिदेशपरत्वे को दोषः, येन एवं विभज्य व्याख्यायत इत्यत आहुः अतिदेशस्येत्यादि। तत्परत्वेनेति, अतिदेशपरत्वेन। तथा च शेषवैयर्थ्यमेव दोष इत्यर्थः। एवं मर्यादामार्गेपि ब्रह्मज्ञानोत्तरं भक्तौ यदा प्रतिबन्धः, तदापि प्रारब्धमात्रस्यैव भोगो, न तु क्रियमाणसञ्चिताभ्यां दुरदृष्टोत्पत्तिरित्यर्थः सिद्धः। अत्रान्येषां व्याख्यानं पातशब्दस्येत्यादिनानूद्य दूषयन्ति उक्तिर्न साधीयसीत्यादि। ननु सूत्रे मुक्तिप्रापकपदाभावेपि फलप्रकरणत्वात्तदनुरोधेन तथा कल्पने को दोष इत्यत आहुः भोगेनेत्यादि। तथा च तैः 'सम्पद्यत' इत्यस्य 'मुच्यत' इति व्याख्यानात्तस्या मुक्तेरत्र सिद्धौ तन्मतेग्रिमसूत्रान्तरे भोगेन कर्मक्षपणानन्तरं ब्रह्मसम्पत्तिरूपमुक्तेरेव व्याख्यानात्तद्वैयर्थ्यमेव दोष इत्यर्थः॥ १४॥

अनारब्धकार्ये एव तु पूर्वे तदवधेः॥ १५॥ सूत्रमवतारयन्ति नन्वित्यादि। तन्नाशे तन्नाशस्येति। कर्मनाशे देहनाशस्य। एवं सतीति, ब्रह्मविदो देहनाशे सति। तदभावेनेति। आचार्याभावेन। भक्त्युच्छेदप्रसङ्ग इति। निरुपधिस्नेहात्मिका हि भक्तिरात्मत्वेन ज्ञाने सति भवति। आत्मत्वेन ज्ञानं च परम्परया आचार्याधीनमतस्तदभावे तत्प्रसङ्ग इत्यर्थः। मुक्त्युच्छेदप्रसङ्ग इति वा पाठः। व्याकुर्वन्ति पूर्वेत्यादि। नाशेषे इति।

रश्मिः।

असंश्लिष्टकर्मबोधनात्। अग्रे चेति। नित्यनिवृत्तनिमित्तस्वसिद्धविशुद्धानुभवानन्दस्वात्मलाभाधिगम इत्यत्र। असंश्लेष इति अनुत्पत्तिः। एवं विभज्येति। इतरस्याप्येवमसंश्लेष इत्यस्यातिदेशकत्वं 'पाते त्वि'त्यस्य भिन्नप्रक्रमेण ज्ञानस्य न सर्वात्मना कर्मविरोधित्वमिति शङ्कानिवर्तकत्वमिति विभागं कृत्वा। शेषेति। 'पाते त्वि'तिसूत्रशेषस्य वैयर्थ्यम्। तैरिति। लीलोपयोगिपदार्थैः। तद्वैयर्थ्यमिति। 'भोगेने'ति सूत्रवैयर्थ्यम्॥ १४॥

अनारब्धकार्ये एव तु पूर्वे तदवधेः॥ १५॥ भक्त्युच्छेदेति। भाष्ये क्वचित्पुस्तके मुक्त्युच्छेदप्रसङ्ग इति। भक्त्युच्छेदप्रसङ्ग इति पाठं व्याकुर्वन्ति स्म निरुपधीति। अयमेव प्रेमा। सर्वात्मभावस्तु प्रदानसाध्य इति नोक्तः। भवतीति। तथा च भाष्यम्। ज्ञात एव स्नेह इति। परम्परयेति। आचार्याभावे तद्वत्ताभाव इत्याचार्याधीना तद्वत्ता तद्वत्ताधीनमधिकारद्वारात्मत्वेन ज्ञानमिति परम्परा तथा। तदभाव इति। आचार्याभावे, आत्मत्वेन ज्ञानाभावप्रसङ्ग इत्यर्थः।

१. श्रीविट्ठलेश्वरहस्ताक्षरलिखितादर्शे मुक्त्युच्छेद इति पाठः।

किन्त्वनारब्धं भोगायतनलक्षणं कार्यं याभ्यां ते एवेत्यर्थः । नन्वितरनिरपेक्षं हि ज्ञानं स्वशक्त्यैवाग्निरेध इव कर्माणि दहतीति पूर्वमुक्तम्, तथा सत्यशेषमेव तद्दहतीति वक्तुं युक्तम्, न तु सशेषम् । शक्तेरविशिष्टत्वात् । न च कर्मनाशेपि संस्कारवशात् कुलालचक्रभ्रमिवत्तद्वासनावशाद्देहादिसत्तया प्रवचनाद्युपपत्तिरिति वाच्यम् । ज्ञानस्य सर्वतो बलवत्त्वात् सवासनस्य तस्य नाशनात् । न हि महाशिलानिपाते चक्रभ्रमिरनुवर्तितुं शक्नोतीत्याशङ्क्यारब्धकार्यादहने हेतुमाह । तदवधेः । तज्ज्ञानेनारब्धकार्यादहनं यत् तदखिलकारणकारणत्वेनाखिलस्य पूर्वावधिरूपभगवदिच्छालक्षणाद्धेतोरित्यर्थः । यत्र तस्यापि दहनेच्छा तत्र तथैवेति निगूढाशयः । अत एवाग्रे तथा वक्ष्यते । अत एव श्रीभागवते 'मृगदारकाभासेन स्वारब्धकर्मणा योगारम्भणतो विभ्रंशित' इति, 'उपभोगेन कर्मारब्धं व्यपनय'न्निति च भरतं प्रति वचनं गीयते । एवं सति मणिमन्त्रादिप्रतिबद्धशक्तेरग्नेरिव ज्ञानस्याप्यदाहकत्वे न काचिद्धानिरिति सर्वमनवद्यम् । इच्छाप्रतिबद्धतादशायां न प्राचीना दशास्तीति तद्व्यवच्छेदज्ञापनाय तुशब्दः । एतेन भगवद्भावस्य सर्वतो बलवत्त्वात् कथं तस्य पात इति शङ्का निरस्ता । भगवदिच्छाया मूलकारणत्वेनोक्तेस्तस्याः सर्वतो बलिष्ठत्वात् । तथेच्छा च स्वकृतमर्यादापालनाय पुष्टावङ्गीकृते न तथेति सर्वमनवद्यम् ॥ १५ ॥

---

भाष्यप्रकाशः ।

न यावत्तावच्छिन्ने नश्येते इति शेषः । ते एवेति । दह्येते इति शेषः । तथा चापरोक्षेणापि ज्ञानेनारब्धकार्यमेव कर्म दह्यत इति शरीरारम्भकस्य कर्मणः सत्त्वेन शरीरस्यापि सत्त्वाच्च प्रवचनाद्युपपत्तिरित्यर्थः । हेतुं व्याख्यातुं सूत्रशेषमवतारयन्ति नन्वित्यादि । न तु सशेषमिति । न तु प्रारब्धकर्मरूपं शेषं स्थापयित्वा । हेतुं व्याकुर्वन्ति तदित्यादि । तत्र तथैवेति । तादृशस्थले प्रारब्धकर्मणोपि दाह एव । अत्र गमकमाहुः अत एवाग्रे तथा वक्ष्यत इति । 'अतोन्यापी'ति सूत्रे वक्ष्यत इत्यर्थः । मर्यादामार्गे प्रारब्धकर्मसत्तायां मानमाहुः अत एवेत्यादि । भरतं प्रतीति । प्रतिर्लक्षणे । भरतं लक्षीकृत्य । अदाहकत्व इति मिश्रं पदम् । तथेच्छेति । प्रारब्धस्य भोगेनापनयनेच्छा । न तथेति । न तस्य भोगेनापनयेच्छा ।

रश्मिः ।

भाष्ये । शक्तेरिति । दृष्टान्ते दाहकशक्तेः । शेषशेषिणी प्रति कारणताया विशेषशून्यत्वात् । निर्विशेषाया एकस्या एव कारणत्वात् । महाशिलेति । तद्वत्प्रकृते ज्ञानप्राप्तिः । तदवधेरितिहेतोस्तस्य तच्छब्दार्थस्य ब्रह्मणः अवधेरिच्छाया इत्यर्थं हृदिकृत्याहुः तज्ज्ञानेनेति । ज्ञानेनेतिव्याख्यानं तदित्यन्तम् । अग्रे षष्ठीतत्पुरुषः । तस्याखिलकारणत्वेनाखिलस्यावधेर्नाम पूर्वावधिरूपाद्भगवदिच्छालक्षणात् । पूर्वत्वं कार्यापेक्षया । इच्छाशक्त्यधीनत्वात्सर्वशक्तीनामिति । गूढाशय इति । तात्पर्यन्तःकरणम् । अदाहकत्व इति । सप्तम्यन्तम् । सौत्रतुशब्दार्थमाहुः इच्छेति । प्रारब्धकार्यादहने इच्छाप्रतिबद्धता या दशा, तस्याम् । प्राचीनेति । सर्वकर्मनाशिका दशा । तद्व्यवच्छेदेति । प्राचीनदशाव्यवच्छेदज्ञापनाय । तथा च तदवधेस्त्वित्यन्वयः । प्राचीनदशा-

## अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥

ननु प्रारब्धं हि प्राचीनम् तन्नाशाय तद्भोग एव कर्तव्यो ब्रह्मविदा, न तु विहितमन्यदप्यग्निहोत्रादि, प्रयोजनाभावात्, दृश्यते च तादृशानां तत्करणम्, अत उत्तरस्य कर्मणः संश्लेष आवश्यक इत्याशङ्क्य तत्प्रयोजनमाह । तुशब्दः शङ्काव्युदासकः । अग्निहोत्रादिविहितकर्मकरणं तत्कार्यायैव, भोगकार्याय प्रारब्धनाशायैवेत्यर्थः । येषामग्निहोत्रादिकारकं प्रारब्धमस्ति, तैरेव तन्नाशाय भोगवत्तदपि क्रियते, न त्वतादृशैः, अत एव न सनकादीनां तथात्वम् । कुत एतत् । तद्दर्शनात् । 'यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्मणा भवति पापः पापेने'ति श्रुतिः पूर्वकर्मणोऽग्रिमकर्महेतुत्वं दर्शयतीति नानुपपत्तिः काचित् ।

केचित्तु ज्ञानस्य यत्कार्यं तदेवाग्निहोत्रादेरिति तत्कार्यायेति पदस्यार्थं वदन्ति । स न साधुः । तदधिगम इत्युपक्रमात् ब्रह्मविदः प्रारब्धात्मकप्रतिबन्धनाशे मोक्षस्य पूर्वज्ञानेनैव सम्पत्तेः कर्मणो वैयर्थ्यापातात् । 'तमेतं वेदानुवचनेने'त्यादिश्रुतिदर्शनं दर्शनपदार्थ इत्यपि पूर्वविरोधादुपेक्ष्यः ॥ १६ ॥

इति षष्ठं चतुर्थाध्याये प्रथमपादे तदधिगमाधिकरणम् ॥ ६ ॥

---

भाष्यप्रकाशः ।

अन्ये तु, 'तदवधे'रित्यस्य, 'तस्य तावदेव चिरं यावन्न विमोक्ष्येथ सम्पत्स्य' इति प्रारब्धस्य शरीरपातावधिश्रुतेरित्यर्थमाहुः । तत्रापि प्रवृत्तफलस्य कर्मणोऽनाशे हेतुस्तु मृग्यः । सोत्र सिद्धान्ते विवृत इति तन्मतेऽपि नातो विशेष इति बोध्यम् ॥ १५ ॥

अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥ सूत्रमवतार्य विवृण्वन्ति तुशब्द इत्यादि । केचिदित्यादिना परमतमुपक्षिप्य दूषयन्ति स नेत्यादि । प्रारब्धात्मकप्रतिबन्धनाशे इति । 'तस्य तावदेव चिर'मिति श्रुतेस्तस्य नाशे । पूर्वविरोधादिति । एतस्माद्वाक्यात् पूर्वं 'मनसैवाप्तव्यम्, मनसैवानुद्रष्टव्य'मित्यवधारणश्रावणेन सूत्रकृतापि तदधिगमसूत्रे ज्ञानादेव कर्मनिवृत्तिकथनेन उक्तश्रुतौ च यज्ञादेर्विविदिषाफलकत्वस्य ज्ञानपर्यन्तत्वस्य

रश्मिः ।

व्यवच्छेदादिति तोरर्थः । तुरिति । लुप्तपञ्चम्यन्तम् । तस्येति । भक्तस्य । तथेच्छेति । पातेच्छा । स्वकृतेति । एवं 'जीवेनैतदेतत्कर्म कारयित्वैतदेतत्फलं दास्यामी'ति विद्वन्मण्डनोक्तदिशा स्वकृतामर्यादा तस्याः पालनाय । न तथेति । न भक्तस्य पातेच्छा । मर्यादाकारणस्य पापाद्यभावस्य पुष्टौ कारणताभावात् । प्रकृते । प्रवृत्तं प्रवृत्तिः फलं यस्येति विग्रहः, न तु निवृत्तं फलं तस्य, प्रारब्धकर्मण इत्यर्थः । अनाश इति । शरीरपातात्पूर्वमनाशे । स इति । भगवदिच्छारूपः ॥ १५ ॥

अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥ अवतार्येति । नन्वित्यादिभावतार्य । भाष्यार्थस्तु, प्राचीनमिति । ननु सञ्चितमपि प्राचीनमिति चेन्न । स्वतन्त्रेच्छस्य मुनेः पर्यनुयोगानर्हत्वात् । प्रारब्धं भोगेन नश्यति । क्रियमाणमकरणेन सञ्चितं देहमुत्पाद्य नश्यतीति । आवश्यक इति । कर्मणां प्ररोहैकस्वभावत्वात् तथा । तुशब्द इत्यादीति । अग्निहोत्रादीति ।

## अतोऽन्यापि ह्येकेषामुभयोः ॥ १७ ॥ ( ४-१-७. )

तदेवं पूर्वसूत्रचतुष्टयेन मर्यादामार्गीयभक्तस्य मर्यादयैव मुक्तिप्रतिबन्धसम्भवस्तयैव तन्नाशश्चेति निरूपितम्। अथ पुष्टिमार्गीयस्य विनैव भोगं प्रारब्धं नश्यति न वेति विचार्यते । तत्र भोगैकनाश्यस्वभावत्वात्तस्य न तं विनास्यापि तन्नश्यतीति प्राप्ते निर्णयमाह। एकेषां पुष्टिमार्गीयाणां भक्तानामुभयोः प्रारब्धाप्रारब्धयोर्भोगं विनैव नाशो भवति । कुत एतत्? तत्राह। अतः । श्रुतेः कर्मणो ज्ञाननाश्यत्वनिरूपिकायाः । ब्रह्मविद एव प्रवचनादिनिरूपणेन तदनाश्यप्रारब्धाख्यकर्माक्षेपकश्रुतेश्च । अन्यापि श्रुतिः पठ्यते 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां, द्विषन्तः पापकृत्या'मिति । ज्ञानभोगाभ्यां कर्म-

भाष्यप्रकाशः।

वा बोधनेन तद्विरोधात्। न च सहकारित्वसूत्रविरोधः। प्रारब्धनाशकत्वेनापि तदुपपत्तेरविरोधात् ॥ १६ ॥ इति षष्ठं तदधिगमाधिकरणम् ॥ ६ ॥

अतोऽन्यापि ह्येकेषामुभयोः ॥ १७ ॥ एतस्याधिकरणस्य न पूर्वशेषत्वमिति बोधनाय पूर्वोक्तमनुवदन्त एतदवतारयन्ति तदेवमित्यादि। अथेत्यादि च। पूर्वपक्षमाहुः तत्रेत्यादि। तस्येति। प्रारब्धस्य। तं विनेति। भोगं विना। अस्यापीति। पुष्टिमार्गीयस्यापि। व्याकुर्वन्ति एकेषामित्यादि । तदनाश्येति। ज्ञानानाश्येत्यर्थः । 'तस्य पुत्रा' इतिश्रुतिस्तु शाट्यायनिनामस्ति । ननु सूत्रे, एकेषामिति पदेन पुष्टिमार्गीया एव विवक्ष्यन्त इत्यत्र किं गमकमित्याकाङ्क्षायामन्यथानुपपत्तिं तथात्वेनोपपादयन्ति ज्ञानभोगाभ्यामित्यादि। अर्थस्तु प्रकटः।

रश्मिः।

अत्रादिना विहितकर्म तत्करणं च गृह्यते। अताहशैरिति। अग्निहोत्रादिकारकप्रारब्धशून्यैः। अत एवेति। अतादृशत्वादेव। तथात्वं अग्निहोत्रादिकर्तृत्वम्। एतदिति। प्रारब्धतदभावाभ्यामग्निहोत्रादिकरणाकरणम्। सहकारित्वेति। तृतीयस्य चतुर्थचरणेस्ति । अत्राश्रमधर्माणां ज्ञानाय सहकारित्वमुक्तमिति तथा। तदुपपत्तेरिति। आश्रमधर्मोपपत्तेः ॥ १६ ॥ इति षष्ठं तदधिगमाधिकरणम् ॥ ६ ॥

अतोन्यापि ह्येकेषामुभयोः ॥ १७ ॥ तदेवमित्यादीति। मर्यादयेति। एतस्मै जीवायैतदेतत्कर्म कारयित्वैतदेतत्फलं दास्यामीति सृष्ट्यादौ इच्छाविषया मर्यादा तस्याम्। मर्यादायामग्निहोत्रादिकारकं प्रारब्धं निवेश्य मुक्तिप्रतिबन्धसम्भवोस्ति। अग्निहोत्रादिनैव प्रारब्धनाशाय भोगवदग्निहोत्राद्यपि क्रियत इति कर्मणा मुक्तिप्रतिबन्धसम्भवः। तयैवेति। मर्यादयैव मुक्तेः प्रतिबन्धोनुत्पादस्तस्य नाशश्च सनकादीनामिव। मुक्तिप्रतिबन्धकं कर्मेत्युक्तम्। नश्यतीति। अग्निहोत्रादिना नश्यति। अत्र संशये पूर्वकोटौ 'कर्मणा कर्मनिर्हार' इतिवाक्यं बीजं, द्वितीयस्यां कोटौ, 'ते नाधीतश्रुतिगणा नोपासितमहत्तमा' इतिवाक्यं बीजम्। भाष्ये तन्नश्यति, प्रारब्धं नश्यति। ज्ञाननाश्यत्वेति। श्रुतिस्तूक्ता। हेत्वन्तरमाहुः ब्रह्मविद इति। श्रुतिस्तु 'धर्मान्न प्रमदितव्य'मिति शिक्षायाम्। 'आचार्यवान् पुरुषो वेदे'ति छान्दोग्ये। 'आचार्यः पूर्वरूपं अन्तेवास्युत्तररूपं विद्या सन्धिः प्रवचनꣳसंधान'मिति तैत्तिरीये। प्रवचनं प्रारब्धं विना नेति प्रारब्धाख्यकर्माक्षेपकं प्रवचनादि। 'येन विना यदनुपपन्नं तत्तेनाक्षिप्यत' इतिन्यायात्। तस्येति। पुष्टिमार्गीयस्येत्यर्थः।

भाष्यप्रकाशः।

अन्ये तु, अतोग्निहोत्रादेर्नित्यात्मकर्मणोन्याप्यस्ति साधुकृत्या या फलमभिसन्धाय क्रियते। तस्या एव विनियोग उक्त इति व्याकुर्वन्ति। तथा सत्येवं नित्यकाम्यकर्मभेदेन श्रुत्योर्विषयभेदे सिद्धे विरोधाभावात् सूत्रे 'चैकेषा'मिति पदेन शाखिनां परामर्शादुभयोरित्यनेन जैमिनिबादरायणयोराचार्ययोः परामर्शाच्छ्रुतौ सूत्रे चानुपपत्त्यभावात् कथमधिकारिकृतविषयभेदावगमः, कथं च प्रारब्धकर्मणोत्र विषयत्वावगम इत्याकाङ्क्षायां तद् दूषयितुमाहुः न चेत्यादि। तथा चैवं नित्याग्निहोत्रादेरस्या विषये भेदितेपि, 'तदधिगमा'दिसूत्राद्विषयो न भिद्यत इति, 'तद्यथेषीकातूलं' 'यथा पुष्करपलाश आपः', 'उभे ह्येवैष एते' इत्येताभ्यो विषयभेदाभावात्तासां विरोधो दुष्परिहरः। न च येषामश्लेषो व्याख्यातः, तेषां विद्यमानत्वादयं तेषां विनियोग इति विषयभेदात् सुपरिहर इति वाच्यम्। विद्यमानाश्लेषस्य प्रागेव दूषितत्वात्। ज्ञानोत्तरं स्वर्गादिलौकिककामनोत्पत्त्यसम्भवेन काम्यायाः साधुकृत्याया उत्पत्तेर्वक्तुमशक्यत्वाच्च श्रुतौ पापकृत्याविनियोगस्याप्युक्तत्वेन तस्यां च फलाभिसन्धानासम्भवेन काम्यत्वासम्भवाच्च

रश्मिः।

साधुकृत्यापापकृत्यासहितत्वात्। न ब्रह्मविद इत्यर्थे ज्ञाने न कृत्ययोर्नाशात्। मर्यादाभक्तस्येत्यर्थे भक्तेः पूर्वमेव तन्नाशात्। साधारणस्येत्यर्थे प्रायपाठविरोधः। अतः पुष्टिमार्गीयसम्बन्धिनीं साधुकृत्यां भगवदनुग्रहेण सुहृत्सु गच्छन्तीं ते गृह्णन्ति, तथा पापकृत्यां द्विषन्तो गृह्णन्तीत्यर्थः। प्रकृते। अन्यथानुपपत्तिमिति। विषयभेदकल्पनमन्तरोक्तरीत्या श्रुत्यर्थासम्भवे 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावर' इति, 'नाभुक्तं क्षीयते कर्मे'ति च श्रुत्यास्याः 'तस्य पुत्रा दायमुपयन्ती'त्यस्या विरोध इत्यर्थापत्तिः। अन्यथानुपपत्तिस्तु जीवन् देवदत्तो गृहे नास्तीत्यत्र जीवनसंसृष्टगृहीभावबहिर्भावयोः प्रमेययोः संसृष्टबुद्धिरूपप्रमेयं तस्याः कारणमित्यन्यथानुपपत्तिरत्र ताम्, तथा च ज्ञानभोगाभ्यामिति भाष्ये विरोधेत्यन्तभाष्येणान्यथानुपपत्तिनिरूपणं, परिहारायेत्यादिभाष्येणार्थापत्तिनिरूपणमिति ज्ञेयम्। तथा च प्रस्थानरत्नाकरेऽन्यथानुपपत्तिस्त्वर्थान्तरकल्पनया समाधेयत्वेनोच्यमानप्रमाणसिद्धयोर्द्वयोरर्थयोः परस्परप्रतिघातः, तत्समाधानायार्थान्तरकल्पनमर्थापत्तिरिति। तथात्वेनेति। गमकत्वेन। प्रकट इति। विषयभेद इति। पुष्टिमार्गरूपविषयस्य भेदः। अन्यस्तु अन्यथानुपपत्तिसमर्थने प्रकट इत्यर्थः। तस्या इति। साधुकृत्यायाः काम्यकर्मरूपायाः। व्याकुर्वन्तीति। सूत्रं व्याकुर्वन्ति। श्रुत्योरिति। अग्निहोत्रादिनित्यकर्मप्रतिपादिका, 'तस्य पुत्रा' इत्यस्याः काम्यकर्मप्रतिपादिका, तयोः। अधीति। पौष्टिकमार्यादिकाभ्यामधिकारिभ्यां कृतो यो विषयस्य पुष्टिमार्गरूपस्य भेदावगमः। अत्रेति। सूत्रे। तदिति। मतं दूषयितुम्। अस्या इति। काम्यकर्मप्रतिपादिकायाः 'तस्य पुत्रा' इति श्रुतेः। नित्यत्वकाम्यत्वाभ्यां भेदिते। तदधिगम इत्यादि–भाष्यफलितार्थमाहुः। तदधिगमादीति। तदधिगमादिसूत्रं प्राप्य यः काम्यकर्मविषयः स न भिद्यत इत्यर्थः। एताभ्य इति। भाष्यतत्प्रकाशभेदेन तदधिगमसूत्रोक्ताभ्यां द्वाभ्यां 'इतरस्ये'तिसूत्रोक्ता तृतीया एताभ्यः। विरोध इति। एताभिरेवैतस्य पुत्रा इति श्रुतेः सहावस्थानसम्भवेपि पृथक् चिन्तने तथा। येषामिति। पुण्यपापानां, अश्लेषो ब्रह्मविदि। अयमिति। तेभ्यः काम्यकर्मभ्यः पृथगयं तस्य पुत्रा इति श्रुत्युक्तः। तेषां पुण्यपापानाम्। प्रागेवेति। तदधिगमसूत्र एव, 'अत्रोत्तरस्योत्पन्नस्याश्लेष इति नार्थ' इत्यादिभाष्येण दूषितत्वात्। पापकृत्यायामिति भाष्यं प्रपञ्चयन्ति स्म। श्रुतौ पापेति। फलाभीति। कृष्णेच्छाविषयस्य बलवदनिष्टाननुबन्धीष्टसाधनताज्ञानस्य प्रवर्त-

नाशनिरूपकश्रुत्या अस्याः श्रुतेर्विरोधपरिहारायावश्यं विषयभेदो वाच्यः । न च काम्यकर्मविषयेयं श्रुतिरिति वाच्यम् । 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ' वितिसूत्रेण 'इतरस्याप्येव'मितिसूत्रावयवेन चाविशेषेणारब्धातिरिक्तकर्मणोरखिलयोर्नाशनिरूपणात् । पापकृत्यायां काम्यत्वासम्भवाच्च । तस्मात्स्वानुग्रहभाजनस्य भक्तस्य स्वप्राप्तिविलम्बमसहिष्णुर्भगवान् अस्य प्रारब्धमेतत्सम्बन्धिगतं कृत्वा तस्य तेन भोगं कारयति । प्रारब्धं भोगैकनाश्यमिति स्वकृतमर्यादापालनाय न नाशयति । न च तयोरमूर्तत्वेनाकृताभ्यागमप्रसङ्गेन च नैवं वक्तुमुचितमिति वाच्यम् । ईश्वरत्वेनान्यथापि करणसम्भवात् । मर्यादाविपरीतस्वरूपत्वात् पुष्टिमार्गस्य न काचनात्रानुपपत्तिर्भावनीया । तस्या अत्र भूषणत्वात् । अत एवैकेषामिति दुर्लभाधिकारः सूचितः ॥ १७ ॥

---

भाष्यप्रकाशः ।

विषयश्रुतिविरोधोपि दुष्परिहरः । अतस्तदभावायावश्यमधिकारिभेदः प्रारब्धात्मककर्मविनियोगश्चात्राभ्युपेयः । उभयपदे आचार्यद्वयग्रहणमप्यसङ्गतम् । सन्निधौ जैमिनेरश्रुतत्वात् । सामान्यशब्दस्य चोपस्थितार्थकृत्वनियमेन बाधकं विना तत्त्यागायोगात् । अत उक्तरीत्यैव मन्तव्यमित्यर्थः । तदेतच्चतुर्थस्कन्धीये तत्त्वदीपप्रकाशे सम्यग् व्युत्पादितमिति प्रभुचरणैर्नात्रोक्तम् । सिद्धमाहुः तस्मादित्यादि । पुनः किञ्चिदाशङ्क्य परिहरन्ति न च तयोरित्यादि । तथा चेदं तवापि तुल्यमतः परिहारसाम्यान्न पर्यनुयोग उचित इत्यर्थः ॥ १७ ॥

रश्मिः ।

कत्वात् । बलवत् यदनिष्टं तस्याननुबन्ध्यजनकं यदिष्टसाधनताज्ञानं तस्येत्यर्थः । विषयश्रुतिस्तस्य पुत्रा इति । तस्या निरोधः काम्यकर्मविषये सूत्रविषयश्रुतित्वप्रलयो नाशः । विषयश्रुतिविरोध इति पाठो वा । विषयश्रुतिसहानवस्थानं तस्य पुत्रा इत्यस्या इत्यर्थः । तथा च तदधिगम इत्यत्र सहावस्थानमित्यर्थः । तदभावायेति । तदधिगमाधिकरणे विषयत्वेन प्रवेशाभावाय । अधिकारीति । पुष्ट्यधिकारिभेदः । अप्रारब्धेति । सञ्चितक्रियमाणकर्मविनियोगः पुष्टिमार्गरीत्योक्तः । सामान्येति । एकेषामिति शाखिपरत्वेन सामान्यशब्दस्य चोपस्थितार्थो विशेषार्थः पुष्टिमार्गीयाणामिति, तदर्थकत्वनियमेन । तत्त्यागेति । पुष्टिमार्गीयाणामित्यर्थत्यागस्य योगाभावात् सामान्यतो विशेषो बलीयानिति । मन्तव्यमिति । मननं कर्तव्यम् । तदेतदिति । तदधिगम इत्यादिभाष्येणोक्तम् । तस्मादित्यादीति । एतत्सम्बन्धीति । यथा पूर्णभगवदीयानां शेषव्यासाग्निमारुतानामाचार्याणां तत्सम्बन्धिगतकरणम् । तस्य प्रारब्धस्य । तेन सम्बन्धिना भोगं कारयति । यतः सम्बन्धिनो विरक्तानामग्रेसराः । तत्कार्याणि कुर्वन्तीति णिच् । प्रारब्धमिति । मर्यादास्वरूपं पुष्टिगतम् । न च तयोरित्यादीति । तयोः पुण्यपापयोः । अकृतेति । सुहृद्द्विषत्सु अकृतस्य कर्मणोभ्यागमस्तस्य प्रसङ्गेन, कृतनाशाभावात् कृतनाशो नोक्तः । नैवं वक्तुमिति । पुष्टिमार्गीयस्य साधुपापयोः सुहृदादिषु प्रापणं वक्तुं नोचितम् । अन्यथापीति । अमूर्तयोः प्रापणमकृताभ्यागमप्रसङ्गनाशनं च । अत्रेति । पुष्टिमार्गे इत्यर्थः । तस्या इति । मर्यादामार्गीयानुपपत्तेः । दुर्लभेति । 'मुक्तानामपि सर्वेषां नारायणपरायणः । सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने' इति वाक्यात् तथा । सूचित इति । वाच्यार्थस्तु पुष्टिमार्गीया इत्युक्तम् । तवापीति । तयोरमूर्तत्वेनेत्याद्याशङ्कितुरपि । परि-

---

१. विषयश्रुतिनिरोध इति रश्मिपाठः । २. अप्रारब्धेति रश्मिपाठः ।

## यदेव विद्ययेति हि ॥ १८ ॥

ननु 'यदेव विद्यया करोती'ति श्रुत्या विद्यापूर्वकं कर्मकरणे वीर्यातिशयः फलं श्रूयते। अतो ब्रह्मविद्यावतोपि तथात्वस्योचितत्वा'दुत्तरस्याश्लेष' इति यदुक्तम्, तन्नोपपद्यत इति प्राप्ते, आह यदेवेति। हि यस्माद्धेतोस्त्वया 'यदेव विद्यया करोति श्रद्धयोपनिषदे'ति श्रुतिरेव ब्रह्मविदोपि कर्मोत्पत्तिप्रसञ्जिकात्वेनोदाहृता। सा तु न तत्समर्था। तथाहि। 'ओमित्येतदक्षरमुद्गीथमुपासीते'त्युपक्रम्य तस्य रसतमत्वं मिथुनरूपत्वमनुज्ञाक्षरत्वं त्रयीप्रवृत्तिहेतुत्वं च निरूप्य, एतदग्रे 'यदेव विद्यये'त्याद्युक्त्वा, 'इति खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवती'त्युपसंहारादुद्गीथोपासनाविषयमेव 'यदेव विद्यये'ति वाक्यमिति ज्ञायते। तेनोक्तरसतमत्वादिप्रकारकोपासनानां मध्ये यदेव विद्यया करोति, तदेव वीर्यवत्तरं भवतीति तदर्थ इति न ब्रह्मविद्यागन्धोऽपीति न सा शङ्कात्र सम्भवतीत्यर्थः।

---

### भाष्यप्रकाशः।

यदेव विद्ययेति हि ॥ १८ ॥ सूत्रमवतारयन्ति नन्वित्यादि। तथात्वस्येति। कर्मणो वीर्यवत्त्वस्य। तथा च यदि ब्रह्मविद्यावतः कर्मसंसर्गो न स्यात्, तदेयं श्रुतिर्विद्यया वीर्यवत्तां कर्मणो न श्रावयेत्। अतस्तदन्यथानुपपत्त्याऽश्लेषादिवाक्यानां विद्यास्तावकत्वमेवाङ्गीकार्यमिति पूर्वोक्तं नोपपद्यत इत्यर्थः। परिहारं वक्तुं सूत्रं व्याकुर्वन्ति हीत्यादि। तेनेति। वाक्यस्य प्रकरणावरुद्धत्वेन। तथा चानुपपत्त्यभावादेतेषां स्तावकत्वं शक्यवचनमतः पूर्वोक्तं साध्वेवेत्यर्थः। अस्मिन् पक्षे सूत्रयोजना तु, यदेव विद्ययेति वाक्यं हि यतो हेतोः इति प्रकरणावरुद्धम्, तथा च न ब्रह्मविद्यावतः कर्मप्रसञ्जिकेत्यर्थः।

### रश्मिः।

हारेति। इदं परिहारसाम्यं ग्रहिलतया पुष्टिमार्गानङ्गीकर्तारं प्रत्युक्तं बोध्यम्। स्वमार्गे पुष्टिमार्गाङ्गीकारेण परिहारस्य कृतत्वात्। पर्यनुयोग इति। नैवं वक्तुं युक्तमित्यनेनोक्तः पुष्टिमार्गीयस्य साधुपापयोः सुहृदादिषु प्रापणं वक्तुं नोचितमित्येवंरूपो नोचित इत्यर्थः। 'यत्रोभयोः समो दोषः परिहारश्च तत्समः, नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारण' इति वाक्यात् ॥ १७ ॥

यदेव विद्ययेति हि ॥ १८ ॥ तदन्यथेति। अन्यथानुपपत्तिः पूर्वसूत्र उक्ता। अत्रार्थान्तरस्य यदेवेतिवाक्यस्य प्रकरणावरुद्धत्वस्य कल्पना तथा समाधेयत्वेनोच्यमानप्रमाणसिद्धयोर्द्वयोर्ब्रह्मविद्यावत्कर्मसंसर्गाभावविद्याकर्मवीर्यवत्तयोरर्थयोः परस्परप्रतिघातोन्यथानुपपत्तिः। पूर्वोक्तमिति। अश्लेषादिवाक्योक्तं ब्रह्मविद्यावतः कर्मसंसर्गाप्रसञ्जनम्। नोपपद्यत इति। परस्परप्रतिघातरूपान्यथानुपपत्तिरुक्ता। अग्रे भाष्ये। इति प्राप्ते नामान्यथानुपपत्तिप्राप्ते। आह अर्थापत्तिरूपं सूत्रमाहेत्यर्थः। अर्थापत्तिस्तूक्तपरस्परप्रतिघातसमाधानायार्थान्तरस्य यदेवेति वाक्यस्य प्रकरणावरुद्धत्वस्य कल्पना। हीत्यादीति। त्वयेति। कर्मवादिना। तत्समर्थेति। ब्रह्मविदः कर्मोत्पत्तिप्रसञ्जनसमर्था। विषयश्रुतेश्छान्दोग्यीयप्रथमप्रपाठकोपसंहारस्थत्वेन प्रकरणद्योतनार्थं प्रपाठकार्थं स्मारयन्ति स्म तथाहीत्यादिना। तदर्थ इति। विषयश्रुत्यर्थः। इत्यक्षरविद्यायाः कर्माङ्गत्वप्रतिपादकविषयवाक्ये न ब्रह्मविद्यागन्धोपीति, सा, अनया श्रुत्या ब्रह्मविद्यावतोपि कर्मणो वीर्यवत्त्वस्योचितत्व-

यद्वा । उक्ताशङ्कानिरासायैवाह यदेवेति । ब्रह्मविद्धि प्रारब्धक्षयायैव कर्म कुरुते, तत्त्वन्यकृतात् कर्मणः सकाशात् सवासनतन्नाशनाद् वीर्यवत्तरं भवत्येवेति नानुपपत्तिः काचिदित्यर्थः ।

यद्वा । ननु पुष्टिमार्गीयस्य प्रारब्धस्यापि भोगं विनैव नाश इति श्रुत्वाऽसम्भावनां कुर्वाणं प्रति कैमुतिकन्यायेन तत्परिहारमाह यदेवेत्यादि । जीवनिष्ठा विद्या हि भगवज्ज्ञानशक्तेरंशभूता । एवं सति यत्र धर्मसम्बन्धिसम्बन्धादन्येभ्योऽतिशयं कर्मणि वदति श्रुतिः, तत्र साक्षाद्धर्मिसम्बन्धेऽतिशयितकार्यसम्पत्तौ कथमसम्भावना कर्तुमुचितेति निगूढाशयः । अत एव हेतुवाची हिशब्दः ॥ १८ ॥

भोगेन त्वितरे क्षपयित्वाथ सम्पद्यते ॥ १९ ॥

पुष्टिमार्गीयफलप्राप्तौ प्रतिबन्धाभावं सोपपत्तिकमुक्त्वा तत्प्राप्तिप्रकारमाह ।

---

भाष्यप्रकाशः ।

श्रद्धोपनिषदोः साधारणत्वात् तत्समभिव्याहृताया विद्याया अपि साधारण्यमेवोचितम्, न तु सङ्कोचनमिति कश्चिच्छङ्केत, तदर्थं प्रकारान्तरेणार्थमाहुः । यद्वा । उक्ताशङ्केत्यादि । सवासनतन्नाशनादिति । सवासनप्रारब्धनाशनात् । तथा च सङ्कोचाभावेपि पूर्वोक्तार्थसिद्धिरप्रत्यूहेति न तेषां स्तावकत्वमित्यर्थः । एतेन जन्मादिसूत्रभाष्ये व्युत्पादितं पूर्वोत्तरकाण्डयोः परस्पराङ्गत्वमपि समर्थितं ज्ञेयम् ।

पूर्वोक्तमर्थं सगृह्णन्त एतत्सूत्रस्य तात्पर्यान्तरमाहुः । यद्वा नन्वित्यादि ॥ १८ ॥

भोगेन त्वितरे क्षपयित्वाथ सम्पद्यते ॥ १९ ॥ भाष्यमत्रातिरोहितार्थम् । अत्र

रश्मिः ।

रूपा शङ्केत्यर्थः । एतेषामिति । अश्लेषादिवाक्यानाम् । पूर्वोक्तमिति । पूर्ववत् । श्रद्धेति । 'यदेव विद्यया करोति श्रद्धयोपनिषदा वे'ति श्रुतावुक्तयोः । साधारणत्वादिति । सकलविद्यासाधारणत्वात् । तत्समभिव्येति । श्रद्धोपनिषत्समभिव्याहृतायाः 'यदेव विद्यये'त्युक्ताया विद्याया अप्युद्गीथानुद्गीथसाधारण्यमेवेत्यर्थः । सङ्कोचनमिति । उद्गीथविद्यामात्रपरत्वेन सङ्कोचनम् । तेषामिति । अश्लेषादिवाक्यानाम् । जन्मादीति । जन्मपदादादिसूत्रं जिज्ञासासूत्रम् । तस्य भाष्ये इत्यर्थः कर्तव्यः । व्युत्पादितं जिज्ञासासूत्रभाष्य इति । भाष्ये । नानुपपत्तिरिति । अनुपपत्तिर्ब्रह्मविदः कर्मणो वीर्यवत्तरत्वस्य । प्रकृते । तात्पर्यान्तरमिति । पूर्वार्थोभिधेयो द्वितीयार्थस्तात्पर्यरूपः, वक्ष्यमाणस्तृतीयोर्थस्तात्पर्यान्तररूपस्तमाहुरित्यर्थः । यद्वा नन्वित्यादीति । तत्परीति । असम्भावनापरिहारम् । अंशभूतेति । अस्तिभातिप्रियत्वेन समन्वयाधिकरणे समन्वयोक्तेस्तथा । कैमुतिकन्यायं विवृण्वन्ति स्म । यत्र धर्मेति । धर्मो ज्ञानं तस्य सम्बन्धोऽस्यास्तीति धर्मसम्बन्धिन आचार्यास्तत्सम्बन्धादित्यर्थः । निगूढेति । संवृततात्पर्यसम्बन्ध्यन्तःकरणम् । अत एवेति । उक्ताशङ्कानां सत्त्वादेव, तन्निरासक'यदेव विद्ययेतिही'तिहेतुप्रतिपादकं सूत्रम् ॥ १८ ॥

भोगेन त्वितरे क्षपयित्वाथ सम्पद्यते ॥ १९ ॥ अतिरोहितार्थमिति ।

इतरे अग्रे प्राप्यालौकिकदेहान्निमे स्थूललिङ्गशरीरे क्षपयित्वा दूरीकृत्य, अथ भगवल्लीलोपयोगिदेहप्राप्त्यनन्तरं भोगेन सम्पद्यते । 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते'ति श्रुत्युक्तेन भोगेन सम्पद्यत इत्यर्थः । श्रुत्यर्थस्त्वानन्दमयाधिकरणे निरूपितः । अलौकिकत्वं विनोक्तदेहं विना चोक्तफलप्राप्तेर्व्यवच्छेदकस्तुशब्दः ॥ १९ ॥

इति सप्तममतोन्याधिकरणम् ॥ ७ ॥

इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते श्रीमद्ब्रह्मसूत्राणुभाष्ये चतुर्थाध्यायस्य प्रथमः पादः ॥ ४ ॥ १ ॥

---

भाष्यप्रकाशः ।

क्षपणं च कुरुक्षेत्रप्रसङ्गे व्रजभक्तानां जीवकोशध्वंसरूपम् । भोगश्च तदनन्तरदर्शनादिरूपो जीवदशायामेव भवतीत्यवान्तरफलपरिसमाप्तिरिति मम प्रतिभाति । अत्यन्तानुग्रहे तु स्थूलस्य लोकवत् क्षपणम्, सूक्ष्मस्य, 'वाङ्मनसी'ति वक्ष्यमाणरीत्या ततस्तद्व्यवहितमेवालौकिकदेहप्राप्त्या भोगसम्पत्तिरिति ज्ञेयम् ।

अत्र मतान्तरीयव्याख्यानस्यादूषणात् तदपि ज्ञानमार्गीयमर्यादाभक्तिमार्गीयपरतया सङ्ग्राह्यमिति सूचितं ज्ञेयम् ॥ १९ ॥

रश्मिः ।

प्रतीति । प्रारब्धनाशकमर्यादां पुष्टौ निवेश्य प्रारब्धादिप्रतिबन्धानामभावमुपपत्तिः कैमुतिकन्यायस्तया सहितम् । इतरे इति । भोगस्य पौष्टिकप्रारब्धादिनाशेऽकरणत्वात् । सम्पद्यत इत्यत्र करणत्वात् तेनान्वयः । अलौकिकत्वमिति । इतरे क्षपयित्वाऽलौकिकत्वम् । अथ भगवल्लीलोपयोगिदेहप्राप्त्यनन्तरमित्यत्राथशब्दार्थघटकमुक्तदेहं प्राप्य तु भोगेन सम्पद्यते न तु तौ विनेत्येव व्यवच्छेदकस्तुशब्द इत्यर्थः । एवमतिरोहितार्थम् ।

अत्रेदमुच्यते । अवसाने भोगेन सम्पद्यत इति फलोक्त्या प्रथमसूत्रादारभ्य 'सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत, दीयमानं न गृह्णन्ति विना मत्सेवनं जना'इत्यस्मिन् श्रुत्युक्तफलविस्तारके मुख्यफलमुक्तं सन्दिग्धत्वाद् अन्येषां फलानां प्रसङ्गं विना नोक्तिरतोसन्दिग्धफलप्रतिपादकानां न विषयवाक्यत्वम् । फलेभ्यः पातस्तु वर्तत इति, फलावृत्तिः सन्दिग्धोक्ता, अनावृत्तिश्च, न फलविचारः कृतः । फलानां सर्वत्रासन्दिग्धत्वात् । भोगेन सम्पत्तिर्भगवत्सेवनमिति ।

प्रकृतमनुसरामः । षष्ठाधिकरणे मतान्तरमविरुद्धतया नीतं, तत्रापि परेषामग्निहोत्राद्यधिकरणमेकसूत्रात्मकं प्रविष्टम् । तत्राग्निहोत्रादिकर्म नश्येन्नो वेति संशयेनुष्ठितं यदग्निहोत्रादिकर्म तस्यापि काम्यकर्मवदकर्त्रात्मबोधवस्तुमहिम्ना नाशोभ्युपेयत इति पूर्वपक्षे द्वावंशौ नित्यकर्मण एकोंशः प्राधान्येन चित्तशुद्धिप्रदोपरोंशोनुषङ्गेण्यस्वर्गादिफलप्रदस्तस्य नाशोस्तु नाम, चित्तशुद्धिप्रदस्य तु विद्यायामुपयुक्तत्वान्न नाशो वक्तुं शक्यः । न हि लोके भोगेनोपक्षीणं व्रीह्यादिकं नष्टं मन्यन्ते । यत्तु ज्ञानादूर्ध्वं नित्यं कर्म तस्य काम्यवदश्लेष इति व्याख्यानस्य । अग्राधिकरणे तु मतान्तरनामापि नास्तीत्यत्राहुः । अत्रेत्यादि । सप्तमाधिकरणे । मतान्तरीयव्याख्यानस्येति सूत्रत्रये प्रत्येकमधिकरणद्वयम् ।

भाष्यप्रकाशः ।

**इति सप्तममतोन्याधिकरणम् ॥ ७ ॥**

**इति श्रीमद्वल्लभाचार्यचरणनखचन्द्रनिरस्तहृदयध्वान्तस्य श्रीपीताम्बरात्मजस्य पुरुषोत्तमस्य कृतौ भाष्यप्रकाशे चतुर्थाध्यायस्य प्रथमः पादः ॥ ४ ॥**

**समाप्तः प्रथमः पादः ॥ १ ॥**

रश्मिः ।

तत्रातोन्यापीत्येकं सूत्रं विनियोगवाक्यं परेषां तद्विषये तत्रैव प्रकाशे किञ्चिदुक्तम् । 'यदेव विद्यये'-त्यधिकरणे विद्यासाधनं नित्यं कर्म द्विविधम् । अङ्गावबोधोपास्तिसहितम्, तद्रहितं च । विद्यासाधनमङ्गावबोधोपास्तिसहितं तद्रहितं वेति संशये सोपासनस्य कर्मणः प्रशस्तत्वात् तदेव विद्यासाधनं न तूपास्तिरहितमिति पूर्वपक्षे, सोपासननिरुपासनयोस्तारतम्येन विद्यासाधनत्वं 'यदेव विद्यये'ति श्रुतेः सिद्धान्त इति व्याख्यानस्य । तथा 'भोगेने'त्यधिकरणे अधिकारिपुरुषाणां मुक्तिरस्ति न वेति सन्देहेधिकारिपुरुषाणां नास्ति मुक्तिः, प्रारब्धभोगाय बहुषु जन्मसु स्वीकृतेषु तत्र पूर्वार्जितविद्यायां तु लुप्तायां यत्कर्म क्रियते तस्य फलप्रदत्वे सत्युत्तरोत्तरजन्मपरम्पराया अवश्यम्भावित्वादिति पूर्वपक्षे, आरब्धकर्म स्वफले सुखदुःखे भोजयेत्, तदर्थमेव प्रवृत्तत्वात् । न हि विद्याविलोपार्थं किञ्चित्कर्म पूर्वमनुष्ठितम्, येन कर्मवशाद्विद्यालोप आशङ्क्येत । न मरणव्यवधानमात्रेण विद्याविद्याविलोपः, सुषुप्तिव्यवधानेन तल्लोपादर्शनात् । अतो विद्यायामवस्थितायां बहुभिरपि क्रियमाणैः कर्मभिरश्लेषादस्त्यधिकारिणां मुक्तिः । यद्यप्येतद्गुणोपसंहारपादे निर्णीतं, तथापि तस्यैवाक्षेपसमाधाने इत्यनवद्यमिति व्याख्यानस्येत्यर्थः । शङ्कराचार्यमतेधिकरणानि चतुर्दश । 'अतोन्यापि ह्येकेषा'मित्यस्य विनियोगवाक्यत्वात् । ज्ञानमार्गीयेति । 'यदेव विद्यये'त्यत्रोक्तसिद्धान्तस्य स्वमते कर्मणाध्यात्मिकचित्तशुद्धौ ज्ञानमिति साधनकर्मपरतया सङ्ग्राह्यत्वम् । 'भोगेने'त्यत्रोक्तसिद्धान्तस्तु मर्यादाभक्तिमार्गीयाधिकारिमुक्तिपरतयेति बोध्यम् । सूचितमिति । सूत्रयोरधिकरणात्मकयोः सर्वतोमुखत्वाद् व्यञ्जनया वृत्त्यार्पितमित्यर्थः ॥ १९ ॥

**इति सप्तममतोन्याधिकरणम् ॥ ७ ॥**

**इति श्रीविट्ठलेश्वरैश्वर्यनिरस्तसमस्तान्तरायेण श्रीगोविन्दरायजित्पौत्रेण सम्पूर्णवेत्रा विट्ठलरायजिन्नात्रीयगोकुलोत्सवात्मजगोपेश्वरजिता कृते भाष्यप्रकाशस्य रश्मौ चतुर्थाध्यायस्य प्रथमपादः सम्पूर्णतामगमत् ॥ ४ ॥**

**समाप्तः प्रथमः पादः ॥ १ ॥**

श्रीकृष्णाय नमः।

श्रीगोपीजनवल्लभाय नमः।

श्रीमदाचार्यचरणकमलेभ्यो नमः।

# श्रीमद्ब्रह्मसूत्राणुभाष्यम्।

## भाष्यप्रकाश-रश्मि-परिबृंहितम्।



## अथ चतुर्थोऽध्यायः।

### द्वितीयः पादः।

**वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥ ( ४-२-१ ).**

पूर्वपादे लौकिकशरीरे क्षपयित्वा अलौकिकं तत्प्राप्य फलेन सम्पद्यत इति निरूपितम्।

अथात्रेवं चिन्त्यते भक्तस्य सूक्ष्मशरीरस्य क्षपणं नाम किं तत्स्वरूपनाशनम्, उत मणिस्पर्शादयसश्चामीकरत्वमिव तस्यैवालौकिकत्वसम्पादनं भगवदनुग्रहादिति।

---

भाष्यप्रकाशः।

वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥ अथ द्वितीयपादं व्याचिख्यासवः पादार्थानां तत्सङ्गतेश्च पूर्वं कारिकाभिर्निरूपितत्वादिहाधिकरणसङ्गतिं वक्तुं अतीतपादान्ते यन्निरूपितं तदनुवदन्ति पूर्वपाद इत्यादि। अलौकिकं तत् प्राप्येति। अलौकिकं देहं लब्ध्वा। अलौकिकदेहस्वरूपं त्वग्रे वक्तव्यम्, 'ब्राह्मेण जैमिनि'रित्यादिभिः। प्रकृतं वक्तुमाहुः। अथेत्यादि। तदनन्तरमवसरसङ्गत्या एतत्पादारम्भे प्रकृतं वक्तुं तदुपोद्घाततया इदं वक्ष्यमाणं विचार्यत इत्यर्थः। तदाहुः भक्तेत्यादि। एवं संशयमुक्त्वा पूर्वपक्षमाहुः। अत्रेत्यादि। तथात्रापि वक्तुमुचितत्वादिति। सूक्ष्मलिङ्गशरीरात्मकं प्राणेन्द्रियादिष्वपि द्वितीयस्य चतुर्थपादे 'तथा प्राण' इत्यत्र

रश्मिः।

वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥ पादार्थानामिति। पादार्थस्तु म्रियमाणस्याग्रिमावस्थोक्ता। अनुवदन्तीति। सिद्धस्य कथनमनुवादः। भाष्ये। निरूपितमिति। सन्दिग्धत्वात् फलत्वात् फलप्रसङ्गायातत्वाच्च निरूपितम्, परमतनिराकरणेन स्वमतं स्थापितम्। प्रकृते। प्रकृतमिति। पादार्थम्। तदिति। वक्ष्यमाणम्। भक्तस्येत्यादीति। भक्तस्येत्यपि पाठः। अयस इति। लोहस्य सुवर्णत्वमिव। तेनाधिकरणसङ्गतिः सामान्यविशेषभावरूपोक्ता। क्षपणसामान्यविशेषयोरुभयोरधिकरणयोः सत्त्वात्। पादार्थसङ्गतिस्तु जीवतोऽग्रिमावस्थानिरूपणानन्तरं म्रियमाणस्यावस्थाया अधीतश्रीभागवतस्य स्मरणात् काग्रिमावस्था म्रियमाणस्येति जिज्ञासया पादनिरूपणा-

तत्रोत्तर एव पक्षः साधीयानिति भाति । तथाहि । यथा पूर्वं संसारिण एव जीवस्य तदनुग्रहात् पूर्वावस्थापगमो मुक्त्यवस्था चोच्यते, तथात्रापि वक्तुमुचितत्वात् । 'न तस्मात् प्राणा उत्क्रामन्त्यत्रैव समवनीयन्त' इति श्रुतिस्तु जीवस्य सायुज्यमुक्तिकाले तत्प्राणादीनामपि तथैवाह, अत एवाग्रे 'ब्रह्मैव सन् ब्रह्माप्येती'त्युच्यते । पुष्टिमार्गीयस्योक्तमुक्त्यभावान्नेयं तद्विषयिणीति प्राप्ते प्रतिवदामः । ब्रह्मांशत्वेन जीवस्यानन्दात्मकत्वान्निर्दोषस्वरूपत्वान्नित्यत्वाच्च दोषाणां चागन्तुकत्वात्तदपगमे तस्य तथात्वमुचितम् । प्राणादयस्तु न तादृशा इति तद्दृष्टान्तेनात्रापि तथात्वं न वक्तुं शक्यम् । 'देहेन्द्रियासुहीनानां वैकुण्ठ-

---

भाष्यप्रकाशः ।

जीवातिदेशेन जीववन्नित्यत्वाद्यङ्गीकाराल्लौकिकावस्थापगमस्यालौकिकावस्थाप्राप्तेश्च वक्तुमुचितत्वात् । तथैवाहेति । कारणभूते सति लयमाह । तथा च पुष्टिमार्गे तेषामलौकिकत्वापादनपक्ष एव साधीयानित्यर्थः । सिद्धान्तमाहुः ब्रह्मांशत्वेनेत्यादि ।

अयमर्थः । श्रुतौ हि त्रिविधा सृष्टिरभिप्रेतेति ज्ञायते । ब्रह्मवित्प्रपाठके आनन्दमयस्य ब्रह्मत्वपरिचायनार्थं 'तस्माद्वा एतस्मा'दित्यादिना 'सोकामयते'त्यादिना 'स आत्मानꣳ स्वयमकुरुते'ति वारत्रयं कथनात् । श्वेतकेतूपाख्याने च कार्यस्य कारणानन्यत्वं मृत्पिण्डनखनिकृन्तनलोहमण्यात्मकदृष्टान्तत्रयकथनाच्च । तासु विधासूच्चनीचभावोपि मृदपेक्षया अयसः, तदपेक्षया लोहस्योत्कृष्टतायाः सर्वजनीनत्वात् । ब्रह्मवित्प्रपाठकेपि 'सोऽकामयते'त्यादिना पूर्वमुक्तायाः सृष्टेः 'असद्वा इदमग्र आसी'दित्यनेनासत्त्वकथनपूर्वकं 'तदात्मानꣳ स्वयमकुरुते'ति सृष्टेः सुकृतत्वश्रावणाच्च । तदेतत्सृष्टित्रयं तदुत्कर्षादिकं च पुष्टिप्रवाहमर्यादाग्रन्थे आचार्यचरणैः 'इच्छामात्रेण मनसे'त्यत्र सूचितम् । तत्प्रपञ्चोऽस्मत्पितृचरणकृतात्तद्विवरणादवगन्तव्यः । एवं सति यत्र पुष्टिमार्गीया जीवा मार्यादिकसृष्टिपातिनः, तत्र ब्रह्मांशत्वेन जीवस्यातिरोहितानन्दत्वं तत्र तस्यानन्दात्मकत्वान्निर्दोषस्वरूपत्वाच्च जीवस्य तथात्वं युक्तम् । प्राणादयस्तु सृष्ट्यन्तरस्थाः 'असद्वा इदमग्र आसीत्तदाहुः किं तदसदा-

रश्मिः ।

न्निर्वाहकसङ्गतिः । अत्रेत्यादीति । तत्रेत्यपि पाठः । सायुज्येति । सह युनक्तीति सयुक् सयुजो भावः सायुज्यम् । पूर्वपक्षे तु सायुज्यपदमैक्ये रूढम् । तच्चासौ मुक्तिः सायुज्यमुक्तिः तस्याः काले । सतीति । विशेष्यम् । न तु सप्तम्यर्थः । भाष्ये । अत एवाग्र इति । बृहदारण्यके शारीरब्राह्मणेग्रे । प्रकृते । तेषामिति । प्राणादीनाम् । भाष्ये । उक्तमुक्तीति । सायुज्यमुक्त्यभावात् । तद्विषयिणीति । पुष्टिमार्गविषयिणी । प्रकृते । त्रिविधेति परम्परात्वविधा, इच्छाद्वाराविधा, आत्मरूपाविधेति त्रिविधा । लोहस्येति । सुवर्णस्य । पुष्टिमार्गीया इति । जयविजयवत्पाते भगवद्भावाच्युतौ मार्यादिकसृष्टिपातिनः । जयविजययोः क्रोधादीश्वरे मन आवेशनं मानसी । अतिर इति । मर्यादामार्गीयस्य यदृच्छया प्राप्तस्याम्बरीषवत्तत्र सत्त्वात् । मार्यादिकसर्वात्मभावे तु तत्र फलं निरोधलक्षणग्रन्थोक्तं 'सच्चिदानन्दता तत' इतिवाक्योक्तमिति । तत्र मर्यादायाम् । तस्य जीवस्य । तथात्वमिति । पुष्टौ भगवदनुग्रहेण दोषाणामुद्वेगप्रतिबन्धभोगानामवैराग्यामुमुक्षुत्वाशमदमादीनां चापगमे तथात्वमानन्दात्मकत्वम् । प्राणादय इति भाष्यं विवृण्वन्ति स्म प्राणादय इति । सृष्ट्यन्तरेति । पुष्टिसृष्टिरन्यस्यां सृष्टौ । श्रुताविति । अर्थस्तु स्पष्टः । न तादृशा इत्यस्य

पुरवासिना'मिति श्रीभागवतवाक्याच्च । न च लौकिकत्वविशिष्टदेहादिरत्र निषिध्यत इति वाच्यम् । सामान्यनिषेधे बाधकाभावात् । नच तदनुभव एव बाधक इति वाच्यम् । भगवत इव तदीयानामपि तेषां तथात्वे बाधकाभावात् । नन्वागन्तुकत्वमेव बाधकमिति चेत् । मैवम् । यथा व्यापिवैकुण्ठस्याक्षरात्मकत्वेनानागन्तुकत्वेन नैसर्गिकतद्गताखिलवस्तुरूपत्वेन सामीप्यादिमुक्तिं प्राप्नुवतां भक्तानां देहेन्द्रियादिरूपमप्यनागन्तुकमेव वैकुण्ठप्राप्तिमात्रेण शुद्धजीवानां सम्पद्यते, तदीयत्वेन तत् फलतीति यावत्, तथा पुरुषोत्तमलीलाया अपि पुरुषोत्तमात्मकत्वात्तत्राङ्गीकारमात्रेण प्राचीनाशेषप्रावाहिकधर्मनिवृत्तौ शुद्धजीवस्य पुरुषोत्तमलीलात्मकदेहादिरपि तदीयत्वेन सम्पद्यत इति नानुपपन्नं किञ्चिदित्यवहितोऽवेहि ।

अयमेवार्थो वाजसनेयिशाखायां 'अथाकामयमान' इत्युपक्रम्य, 'आत्मकाम

भाष्यप्रकाशः ।

सीदित्यृषयो वा व तेऽग्रे असदासीत्तदाहुः के ते ऋषय इति प्राणा वा ऋषय' इति वाजिनां श्रुतौ प्राणा असत्पदेनासाधुतया श्राविता इति पुष्टिसृष्टिस्थत्वाभावान्न तादृशाः । धर्मान्तरैर्जीवतौल्येपि स्वरूपतो न जीववन्निर्दुष्टा इति जीवदृष्टान्तेन प्राणादिरूपे सूक्ष्मशरीरे लौकिकत्वापगमेनालौकिकत्वं न वक्तुं शक्यम् । अयं च पक्षो,'देहेन्द्रियासुहीनाना'मिति सप्तमस्कन्धवाक्येनोपष्टभ्यते । अतस्त्यागपक्ष एव साधीयानित्यर्थः । उक्तवाक्य एव किञ्चिदाशङ्क्य परिहरन्ति न च लौकिकेत्यादि । अत्रेति । एतद्वाक्ये । तदनुभव इति । देहाद्यनुभवः । तथात्व इति । ब्रह्मात्मकत्वे । पुनः किञ्चिदाशङ्क्य परिहरन्ति नन्वित्यादि । मैवमित्याद्यवेहीत्यन्तं च । अनागन्तुकमेवेति । यथा लौकिकेषु देहादिषु प्रकृतिर्मूलकारणतयाऽनुसीव्यति, एवं जीवेऽक्षरमन्वेति । 'यथा प्रदीप्तात् पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपा' इति, 'यदक्षरे परमे प्रजा' इति च श्रुतेः । तच्च सर्वत्र सर्वात्मकमिति जीवांशिभूतस्य तस्य आकारो जीवरूपेंऽशे नैसर्गिक एवेत्यनागन्तुकम् । तदीयत्वेन तत्फलतीति । अग्रे 'ब्राह्मेण जैमिनि'रित्यत्राङ्गीकरिष्यमाणत्वादावरणभूतलौकिकापगमे भगवद्दत्तस्तदीयत्वेन फलतीत्यर्थः । दार्ष्टान्तिके तु बादरायणसूत्रोक्तः पुरुषोत्तमात्मकस्तदीयत्वेन सम्पद्यत इति ज्ञेयम् । एतं पक्षं श्रुत्योपष्टभ्नन्ति । अयमेवेत्यादि । श्रुतिं

रश्मिः ।

विवरणं धर्मान्तरैरित्यादि । शरीरादिभिः । निर्दुष्टा इति । असत्पदेन श्रुतौ मृत्युत्वस्य नास्तिकत्वस्योक्त्या सर्वमारकत्ववेददूषकत्वदोषवन्त इति न निर्दुष्टाः । सूक्ष्मेति । प्राणर्षीणां सूक्ष्मशरीरे । तथात्वमित्यस्य व्याख्यानमलौकिकत्वमिति । देहेन्द्रियेति । भाष्यं विवृण्वन्तिस्म । अयं चेति । सूक्ष्मशरीरस्य क्षपणपक्षः । तत्त्यागेति । प्राणादीनां त्यागपक्षः । प्रकृतिरिति । पुराणमतमिदम् । मायाद्वारा सृष्टौ ब्रह्मकर्तृ माया समवायिकारणमिति । श्रुतेरिति । दृष्टान्तश्रुतेः । पूर्वश्रुत्येकवाक्यतया 'यदक्षर' इत्यत्रापि अक्षरे समवायिनीत्यर्थः । कपालयोर्घट इतिवत् । दार्ष्टान्तिकश्रुतिस्तु 'तथाक्षराद्विविधाः सौम्य भावाः प्रजायन्त' इति मुण्डकस्था । यद्वा, महानारायणस्थं 'यदक्षर'इतिदार्ष्टान्तिकम् । तच्चेत्यक्षरम् । 'द्विरूपं तद्धि सर्वं स्या'दिति सिद्धान्तमुक्तावलीवाक्यम् । आकार इति। निराकारस्याकारः सर्वात्मभाववतां नित्यलीलाप्रविष्टानां च । छान्दोग्ये नारदसनत्कुमारसंवादे 'तस्य वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानतः आत्मतः प्राण आत्मतः आशात्मतः स्मर आत्मत आकाश आत्म-

आप्तकामो भवति, न तस्मात् प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते ब्रह्मैव सन् ब्रह्माप्येती'त्यन्तेन वाक्येन निगद्यते । अत्र प्राणशब्देन प्राणाः सर्वेन्द्रियाणि बोध्यन्ते । आत्मकामशब्दे भगवद्वाचकात्मपदग्रहणेन भक्तस्य स्नेहातिशयजनितप्रभुदिदृक्षार्त्यतिशयस्तादृशो येन मरणमेव सम्पद्येत, यदि प्रभुप्राकट्ये क्षणमपि विलम्बः स्यात् । अतो भगवत्प्राकट्येनैवात्मस्थितिरिति ध्वन्यते । भक्तिमार्गे प्राकट्यस्यैव परमफलत्वेन तद्दर्शनेनाप्तकामो भवति । ततः साक्षादाश्लेषादिकामनायां प्राचीनदेहप्राणादेस्तद्योग्यत्वात्ते तत्रैव लीना भवन्ति ।

भाष्यप्रकाशः ।

व्याकुर्वन्ति अत्र प्राणेत्यादि । ध्वन्यत इति । तात्पर्यवृत्त्या बोध्यते । तात्पर्यवृत्तिस्तु मया प्रस्थानरत्नाकरे व्युत्पादिता ततो ज्ञेया । अत्रैव लीना भवन्तीति । अन्तःप्रकटे पुरुषोत्तमस्वरूप एव लीना भवन्ति । ननु पुरुषोत्तमात्मकलीलोपयोगिदेहप्राप्त्या ब्रह्मभाव एव श्रुत्यर्थ इमः ।

तस्तेज आत्मत आप आत्मत आविर्भावतिरोभावा'वित्यादि । अत्र तस्येति पूर्वं सर्वात्मभावनिरूपणात् सर्वात्मभाववत इत्यर्थात् । नलकूबरादेरिति, आदिर्गजेन्द्रः । 'सच्चिदानन्दता तत' इत्यानन्दस्य साकारत्वात् । नलकूबरमणिग्रीवगजेन्द्रादिमुक्तीनामौडुलोमिमतसिद्धत्वादानन्दाकारस्य श्यामत्वाद्यदि विभाव्येत तदा तु तदीयत्वेन तत्फलतीति प्रतीकसहितग्रन्थो हेयः। तत्रत्योग्रे भावेण जैमिनिरित्यत्राङ्गीकरिष्यमाणत्वाच्चेति चकारं पूरयित्वा हेतुर्ग्राह्यः । उपष्टभ्नन्तीति । श्यादिरयं प्रयुक्तः । स्वरवर्णानुक्रमहैमधातुपाठे तु ष्टभुङ् स्तम्भे, भ्वा. आ. सेट्, उदिदन्तमिति भ्वादिरयं तदनुसारेण शब्विकरणम् । अत्र प्राणेत्यादीति । भक्तस्येति । आत्मकामशब्दे काम इच्छा सा च 'अलमन्यविचारेण प्रेमेच्छेति स्थितं मत'मिति विश्वनाथः प्रेमरसायनकारः ततश्चात्मस्नेह इत्यर्थो भवति, अत उक्तं भक्तस्येति । मुख्यवाचकात्मशब्दग्रहणेन तत्र कामरूपप्रेम्णा गोपालतापिनीयोक्तरीत्याविष्कुर्वन् कामप्रेमविनियोगात् । स्नेहातिशयेत्यादिः परानुरक्तिभक्तिधर्मानाहुः स्नेहातिशयेति । आर्तिशब्दादार्तत्वं चतुर्ष्वधिकारेष्वासां व्रजस्त्रीप्रभृतीनामुक्तम् । भ्रमरगीते स्फुटं यत्तदाहुः । येन मरणमित्यादि । ननु वृत्तेर्द्वैविध्यमत आहुः भगवत्प्राकट्येनेति । इदं त्रिचत्वारिंशाध्याये 'आगमिष्यत्यदीर्घेण कालेने'तिश्लोकव्याख्याने 'नन्दं द्रष्टुं समागत एव भगवा'निति सुबोधिन्योक्तम् । नन्दोद्धवसंवादसमये भगवतस्तिरोहितत्वेप्येवमुक्तेः । ननु वृत्तेर्द्वैविध्यमत आहुः तात्पर्यवृत्तिरिति । भाष्ये । प्राकट्यस्येति । निबन्धोक्तप्रणाड्या प्राकट्यं तस्य । 'भगवानेव हि फलं स यथाविर्भवेद्भुवी'ति निरोधलक्षणग्रन्थात्परमफलत्वं तेन । आप्ताः कामा येनेत्याप्तकामः । काम्यन्त इति कामा अनन्तकल्याणगुणास्तत्रात्मदर्शनस्यापि सत्त्वात् । 'एकदा हि व्रजस्त्रियः सकामाः शर्वरीमुषित्वा सर्वेश्वरं गोपालं कृष्णं हि ता ऊचिरे' इति गोपालतापिनीयारम्भः 'गान्धर्वी गच्छ त्वं स्वालयान्तिक'मित्युपसंहारस्ताभ्यामाप्तकामत्वं व्रजस्त्रीणाम् । 'आत्मा वा अरे द्रष्टव्यः श्रोतव्य' इति श्रुतेश्च । पूर्वपादान्ते सूत्रोक्तरीत्या मननं प्रभुचरणैर्नात्रोक्तम् । चतुर्थस्कन्धीये तत्त्वदीपप्रकाशे सम्यग्व्युत्पादितत्वादित्युक्तमतः ऋषिरूपाणां स्वेषां चानुरोधेन सायुज्यकामनामाहुः ततः साक्षादिति । भ्रमरगीते लौकिकभाषया श्रुतिरूपाणामपि कामनिरूपणात् सायुज्यकामना बोध्या । सर्वदा तु भक्तौ तात्पर्याद्भक्ता एव व्रजस्त्रियः ।

१. अत्रेति प्रकाशे । २. पुष्टिप्रवाहमर्यादाग्रन्थाविति स्यात् ।

बहिःप्रकटस्यैवान्तरपि प्राकट्यादुत्क्रमणाभाव उच्यते । आत्मातिरिक्तस्य गति-मुक्त्वा तस्य तामाह 'ब्रह्मैव सन् ब्रह्माप्येती'त्यनेन । उक्तरीत्या पुरुषोत्तमात्मक-तल्लीलोपयोगिदेहेन्द्रियादिसम्पत्त्या ब्रह्मैव सन्, न तु ब्रह्मातिरिक्तदेहादिमानपि, तादृशः सन्, ब्रह्म बृहत्त्वात् बृंहणवत्त्वात् पुरुषोत्तमस्वरूपं प्राप्तो भवतीत्यर्थः । अन्यथा जीवस्य ब्रह्मांशत्वेनानन्दांशाविर्भावेन च ब्रह्मत्वे प्राणादिलयोक्त्या तदितरव्यवच्छेदे चानुक्तसिद्धे सति 'ब्रह्मैव स'न्निति न वदेत् । अत एवैतदग्रे श्लोकोक्तिः 'अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत' इति । मृतिधर्म-वच्छरीरं हि मर्त्यम्, तद्वत्त्वेन जीवोपि तथोच्यते । तथाचायं पूर्वं तादृश एव, अथ पुष्टिलीलाप्रवेशानन्तरममृत उक्तरूपशरीरवान् भवति, ततोत्र अस्मिन्नेव शरीरेब्रह्म सम्यगश्नुते । भगवता क्रियमाणलीलारसमनुभवतीत्यर्थः ।

---

भाष्यप्रकाशः ।

भिप्रेत इत्यत्र किं गमकमित्यत आहुः अन्यथेत्यादि । तथाच 'ब्रह्मैव स'न्नित्यस्यान्यथावैयर्थ्यापत्तिरेव गमिकेत्यर्थः । उक्तोपष्टम्भाय गमकान्तरमाहुः अत एवेत्यादि । तथा चात्र 'ब्रह्मभूतः प्रसन्नात्मे'त्युक्तरीतिको ब्रह्मभावो यदि 'ब्रह्मैव स'न्नित्यत्राभिप्रेतः स्यात्, तदास्मिन् श्लोके 'अथ मर्त्योऽमृतो भवती'त्येतावदेव वदेत्, न तु तुरीयं पादम् । अतो यथोक्त एव श्रुत्यर्थ इत्यर्थः । एवमुपोद्घातेन पुष्टिमार्गीयस्य लौकिकदेहक्षपणं नाम प्राणादीनां ब्रह्मणि लय इति सिद्धम् । तदेतत्पूर्वपादान्तसूत्रे एव विचारणीयम् । तथाप्येतत्सूत्रप्रणयनं प्रति तस्य हेतुत्वं न स्फुटं भवेदिति तत्रानुक्त्वा अत्र विचारितमिति ज्ञेयम् । तदेतत् हृदि कृत्वाचार्यः प्रकृतं विचा-

रश्मिः ।

बहिरिति । सद्योमुक्त्यर्थं, आत्मस्थित्यर्थं वा बहिःप्रकटस्य । उत्क्रमणेति । छान्दोग्यीयाष्टमोपदेशोक्तरीत्या प्राणेन्द्रियादीनां लयस्थानेन्तःप्रकटे लयादुत्क्रमणाभाव उच्यत इत्यर्थः । आत्मातिरिक्तस्येति । सूक्ष्मदेहस्य । तस्येति । भक्तस्य । तां गतिं, ननु विरहं विना पूर्णभक्त्यभावाद्विरहे च ब्रह्मणश्चान्तरत्वेन बहिःप्राकट्याभावात् कथं पुरुषोत्तमप्राप्तिरत आहुः । ब्रह्म बृहत्त्वादिति । अत एव बृहत्त्वात् बृंहणत्वाच्च ब्रह्मेति लक्षणमादृतं न स्वरूपलक्षणं नापि कार्यलक्षणमिति बोध्यम् । तदितरेति । ब्रह्मातिरिक्तयोगव्यवच्छेदे । तद्वत्त्वेनेति । मर्त्यशरीरवत्त्वेन । तथोच्यत इति । मर्त्यत्वेनोच्यते । तादृश इति । मर्त्यः । ब्रह्मसम्यगिति । सायुज्ये परमात्मन एव ब्रह्माशनम् । सन्दिग्धमुक्तौ तु निर्णीतायां सम्यगन्तरात्मबाह्यात्मनोरपि ब्रह्माशनमिति सम्यगश्नुत इत्यर्थः । अश्नुत इत्यस्य न व्याप्नोतीत्यर्थ आनन्दमयाधिकरणे दूषणात्, नाप्यश्नातीत्यर्थः । द्वितीयत्वाभावात् । अतो धातूनामनेकार्थत्वादर्थान्तरमाहुः भगवतेति । आविर्भूतभगवताष्टमोपदेशोक्तेनैक्यं गतेन । म्रियमाणस्याग्रिमावस्थानिरूपणे पादार्थसङ्गतेः । तेन नासम्भवः । अनुभवतीति । पूर्णा भगवदीयाः सदा, अन्ये तु कदाचिदितिविवेकः । प्रकृते । उपोद्घातेनेति । म्रियमाणस्यास्याग्रिमावस्थानिरूपणोपोद्घातेन । 'चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधा' इत्युपोद्घातलक्षणम् । तदेतदिति । क्षपणम् । एवेति । 'भोगेन त्वितरे क्षपयित्वे'ति क्षपणोक्तेरेवकारः । हेतुत्वार्थमिति । तथा च हेतुहेतुमद्भावः पूर्वोत्तरपादयोः सङ्गतिरिति

---

१. बृंहणत्वाचेतिरङ्गमौ । २. प्राप्नोतीति पाठः । 2177

भगवान् बादरायण इमामेव श्रुतिं विषयीकृत्य तत्रोक्तप्राणानां लय एकदैव, उत क्रमनियमोऽस्तीति संशये निर्णयमाह वाङ्मनसीति । तत्र हेतु-र्दर्शनादिति ।

एतदुक्तं भवति । भक्तेः स्नेहात्मकत्वात्तस्य प्रभुप्राकट्यफलकत्वात्तदौत्कट्ये तस्यावश्यकत्वात् 'अयं मां पश्यत्वि'ति प्रभ्विच्छया तस्मिन् सम्पन्ने, चक्षुर्भ्यां मनसा च तद्रूपामृतमनुभवतः स कोप्युत्कटो भावः समजनि, येन प्रभुणा सह

भाष्यप्रकाशः ।

रयतीत्याशयेन सूत्रमवतारयन्ति भगवानित्यादि । निर्णयमाहेति । उक्तश्रुतौ सामान्यतो लयश्रावणाल्लयो युगपदेव युक्त इति पूर्वपक्षनिरासाय निर्णयमाहेत्यर्थः । सूत्रं व्याकुर्वन्तः क्रमनियमे दर्शनस्य कथं हेतुत्वमित्यतो व्युत्पादयन्ति एतदित्यादि । तदौत्कण्ठ्य इति । भक्तस्योत्कण्ठायाम् । तदौत्कट्य इति पाठे तु स्नेहौत्कट्य इत्यर्थो बोध्यः । तत्रैव सङ्गता इति । मनसैव सर्वे प्राणाः समागताः । शेषं स्फुटम् ॥ १ ॥

रश्मिः ।

न स्फुटं भवेदित्यपि बोध्यम् । प्रकृतमिति । म्रियमाणस्याग्रिमावस्थानम् । क्रमनियम इति । एतेन तत्रेतिभाष्यस्योक्तस्य क्रम इत्यर्थो बोधितः । एतदित्यादीति । अकामयमानप्रकरणाद् ब्रह्मसमश्नकथनाद्विषयवाक्ये एतद्वक्ष्यमाणमुक्तं भवति । न च प्रकरणानुरोधेपि 'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः । आत्मनैव च सन्तुष्टस्तस्य कार्यं न विद्यते' इतिवाक्योक्ताकामयमानस्य छान्दोग्यीयाष्टमोपदेशोक्तब्रह्मसमश्नस्य सर्वसाधारण्यस्य सम्भवः 'तद्यथा हि निर्ल्वयिनी वल्मीके मृता प्रत्यस्ता शयीतैव मेवेद९शरीर९शेत' इति श्रुतेरत एव 'धारयन्त्यतिकृच्छ्रेण प्रायः प्राणान् कथञ्चने'ति वाक्याविषयत्वमिति वाच्यम् । गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्यय इति न्यायेन वक्ष्यमाणस्य निरुक्तेः । एतेनैव सर्वसाधारणब्रह्मसमश्नस्यापि सिद्धेः । किञ्च 'तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथ धर्मस्यैष सेतु'रिति श्रुत्यन्तरोक्तो गुणः । अत उक्तमेतदुक्तं भवतीति । अत एव 'गूढं ब्रह्मणि वाङ्मय' इति तृतीयस्कन्धवाक्यम् । वाङ्मये वेदे गूढम् । गुहू संवरणे । संवरणं भक्तिस्तद्विषय इत्यर्थः । स्वार्थे ष्यञमभिप्रेत्याहुः उत्कण्ठायामिति । भाष्ये । तस्येति । प्रभुप्राकट्यस्य । न विषयसन्निधिमात्रेण पुरुषोत्तमप्रत्यक्षमलौकिकत्वव्याहतेरत आहुः अयं मामिति । तस्मिन्निति । दर्शने । चक्षुर्भ्यामिति प्रभ्विच्छयेत्यन्वेति तया विशेषाधानं, एवमग्रेपि । स विशेषः क इति चेत् ? शृणु । सप्तान्नब्राह्मणे बृहदारण्यके आत्मने त्रीण्यकुरुतेति मनो वाचं प्राणं तान्यात्मने कुरुतेति व्याख्यायाग्र आह । 'विज्ञातं विजिज्ञास्यमविज्ञातमेत एव यत् किञ्च विज्ञातं वाचस्तद्रूपं, वाग्घि विज्ञाता वागेनं तद्भूत्वावती'त्युक्तम् । अत्रात्मने स्वस्मै । एत इति वाङ्मनःप्राणाः । एनमित्यादि । एनं वाग्विदं भगवदिच्छया कृतवाग्विशेषविदं तद्भूत्वा विज्ञातस्वरूपं भूत्वावतीति । अवार्था उक्ता अस्माभिर्ग्रन्थान्तरेतस्ततोवसेयाः । एवमग्रेपि, यत् किञ्च विजिज्ञास्यम् । मनसस्तद्रूपं मनो हि विजिज्ञास्यं मन एनं तद्भूत्वावति । यत् किञ्चाविज्ञातम् । प्राणस्य तद्रूपं प्राणो ह्यविज्ञातः प्राण एनं तद्भूत्वावतीत्यनयोरर्थो ज्ञेयः । अत उक्तं तद्रूपामृतमनुभवत इति । तद्रूपं चक्षुर्विषयं अमृतमानन्दरूपम् । 'आनन्दरूपममृतं यद्विभाती'ति श्रुतेः । ननु विरहे सर्वोपमर्दे कथमानन्दानुभव इति चेत् ? न । विरहे ये भावा रसस्वभावादानन्दरूपास्तेषामनुभवे बाधकाभावात् । 'भवतीनां वियोगो मे नहि सर्वात्मना

१. 'स्फुटोके संमला' इति हस्ताक्षरादर्शे; 'स्फुटोकेस्तंमला' इत्यन्यादर्शेषु; 'स्फुटोकेस्तं मत्वा' इति रश्मौ ।

सर्वेन्द्रियव्यापारकृतीच्छा समभूत्। तत्र तेषामसामर्थ्यात् भगवदानन्दसम्बन्धिमनःसम्बन्धेन तं प्राप्स्याम इति तत्रैव सङ्गताः तेनानन्देन सम्पन्ना जाताः। अयमेवार्थोऽनेन सूत्रेणाग्रिमेण च 'अत एव सर्वाण्यनु'इति सूत्रेण निरूप्यते। दर्शनानन्तरमादौ सह सम्भाषणेच्छैव जन्यत इति, 'वाङ्मनसि सम्पद्यत' इति छान्दोग्ये स्फुटोक्ते संमत्या वादौ सैवोक्ता। एवं सति वाङ्मनसि सङ्गता सती भगवदानन्देन सम्पद्यत इति सूत्रार्थः सम्पद्यते। 'दर्शनाभावेपि वेण्वादिशब्दादपि तथा सम्पद्यत इति हेत्वन्तरमाह शब्दाच्चेति॥ १॥

अत एव सर्वाण्यनु॥ २॥

अत एव दर्शनाच्छब्दाच्च हेतोः सर्वाणीन्द्रियाणि, अनु सान्निध्यात् वाचः पश्चात् मनसि सङ्गतानि भगवदानन्देन सम्पद्यन्त इत्यर्थः।

---

भाष्यप्रकाशः।

अत एव सर्वाण्यनु॥ २॥ एतेन श्रुतौ वाक्पदमिन्द्रियान्तराणामप्युपलक्षकमिति बोधितम्। भाष्यमत्र स्फुटार्थम्।

रश्मिः।

क्वचित्, आत्मत्वाद्भक्तवश्यत्वात् सत्यवाक्त्वात् स्वभावत'इति वाक्यं चेति। सर्वेन्द्रियेति। ऋषिरूपाणां सायुज्यादरात्तथान्येषां, श्रुतिरूपाणां भक्त्यादराच्चिरोधलक्षणग्रन्थोक्तरीत्या सर्वात्मभावरूपसर्वेन्द्रियव्यापारकृतीच्छाभेदेन बोध्या। तत्र तेषामिति। पूर्णभगवदीयानां सामर्थ्यं तत्र पूर्णविरहानुभवे फलकेन्येषां तु अलौकिकसामर्थ्यरूपे सेवाफले जात एवेति तदभावेनासामर्थ्यात्। 'मन आनन्द'मिति श्रुतेराहुः। भगवदानन्दसम्बन्धिमनःसम्बन्धेनेति तमानन्दं प्राप्स्यामः। उपलक्षणमेतत्। मनस ओजः प्राप्स्याम इत्यलौकिकसामर्थ्यं प्राप्तम्। भगवत्सेवायाः सत्त्वात्। तेनेति। मानसीनानन्देन वागादयः सामानाधिकरण्यं प्राप्यानन्दसम्पन्ना जाता इति तेपि जाताः। जानातीच्छति यतत इति कार्यकारणभावादाहुः दर्शनानन्तरमिति। एवेति। स्वानुभवादेवकारः। छान्दोग्य इति। श्वेतकेतूपाख्याने। तं मत्वेति। अर्थं मत्वार्थस्य मननं कृत्वा। सैवेति। वागेव। भगवदिति। छान्दोग्येष्टमोपदेशेप्यधोक्षजानन्दो वर्तत इति तथा। 'मुक्तानामपि सिद्धानां नारायणपरायणः, सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने' इति षष्ठस्कन्धादाहुः दर्शनेति। विरहे वेण्वादिसम्बन्धात्। आदिना सिद्धान्तरहस्यीयभगवत्सम्बन्धात्। प्रकृते। समागता इति। सम्पद्यत इति गत्यर्थकधातुप्रयोगात्॥ १॥

अत एव सर्वाण्यनु॥ २॥ सूत्रप्रयोजनं वाक्पदस्योपलक्षकत्वबोधनमित्याहुरेतेनेति। सूत्रेणेत्यर्थः। स्फुटार्थमिति। स्फुटोर्थो यस्येति स्फुटार्थम्। भगवदानन्देनेति। पूर्वसूत्र उक्तम्। अभीति। अभितः परमार्थत्वेन सम्यग्घितत्वम्। तेषामिति। दूषणत्रयेण विषयत्वं बोधयितुम्। केचिदित्यादीति। वाग्वृत्तीति, वाग्व्यापारो 'वृथालापक्रियाध्यानं सर्वथैव परित्यजे'दित्यत्र त्यागविषयस्तत्परत्वम्। तन्नाशं वाग्वृत्तिनाशं वदन्तीत्यर्थः। तन्नेत्यादीति। तत्स्वरूपमिति। वाग्वृत्तेः समानं रूपं स्वभावसौन्दर्यं यस्य वाक्यस्य सूत्रस्य। वाग्घटितत्वेपि न वाग्वृत्तिसरूपं सूत्रम्। वाक्यमित्यत्र वाक्पदमिति पाठो वा बाहुलकात्। तन्निर्णयेति। वाग्वृत्तिनिर्णयार्थम्। एवं वाग्वृत्तिर्मनसि सम्पद्यत इति पाठभेदापत्तिरूप एको दोष उक्तः। दोषद्वयमन्यदाहुः मुख्यार्थेति। मुख्यार्थो

केचित्त्वत्र छान्दोग्यस्थं 'वाङ्मनसि सम्पद्यते, मनः प्राणे, प्राणस्तेजसि, तेजः परस्यां देवताया'मिति वाक्यं विषयत्वेन उक्त्वा, सूत्रे वाक्पदस्य तद्वृत्तिपरत्वं वदन्ति, सम्पत्तिं तन्नाशं च ।

तन्न साधीयः । तथाहि । वाक्पदस्य वृत्तिपरत्वं चेच्छ्रुत्यभिमतं स्यात्, सूत्रकारस्तदा तथैव वदेत्, न तु तत्सरूपमेव वाक्यम् । तन्निर्णयार्थमेव प्रवृत्तेः । मुख्यार्थत्यागो लक्षणापत्तिश्च । किञ्च, एवं 'मनसी'ति पदवैयर्थ्यं स्यात्, विषयवाक्योक्तक्रमत्यागानुपपत्तिश्चेति ॥ २ ॥

भाष्यप्रकाशः ।

ननु या छान्दोग्यश्रुतिरत्र सम्मतित्वेन दर्शिता, सैवात्र सर्वादत्तत्वाद्विषयवाक्यत्वेनादरणीया, ततश्च कथं भवदुक्तस्यार्थस्याभिसंहितत्वमित्याकाङ्क्षायामन्यमते तेषां बोधयितुं मतान्तरमनुवदन्ति केचिदित्यादि । ते हि हिरण्यगर्भादिविद्यास्वपरासु च विद्यासु फलप्राप्तये देवयानं पन्थानमवतारयिष्यन्तो यथाशास्त्रमुत्क्रान्तिक्रमकथनं विद्वदविदुषोरुत्क्रान्तौ प्रकारसाम्यं च व्यासाभिमतमङ्गीकुर्वन्त उक्तरीत्या वदन्तीत्यर्थः । तन्न तथेति बोधनाय दूषयन्ति तन्नेत्यादि । ननु सत्यमस्तीदं दूषणत्रयम्, तथाप्यग्रे 'अविभागो वचना'दित्यनेन तत्त्वप्रलयस्य वक्ष्यमाणत्वादत्र वृत्तिप्रलय आद्रियत इति व्यासाशयस्य तैर्बोधनाददोष इत्यत आहुः किञ्चेत्यादि । यद्यपि तत्सूत्रमन्यार्थम्, तथापि स्वोक्तसमर्थनाय तथार्थादरेपि सम्पत्तिपदस्य वृत्त्युपसंहारार्थकतया वृत्तिनाशनार्थत्वमेवाभिप्रेतम्, यथाङ्गिरस्रेः । तथा सति निरन्वयो वृत्तिध्वंस इति ध्वंसकसंसर्गमात्रस्यैवापेक्षणेन ध्वंसकस्य तत्राधिकरणतानपेक्षणान्मनसीत्यधिकरणबोधकपदवैयर्थ्यम् । नन्वधिकरणत्वेऽनपेक्षितेऽप्यग्नेरप्सु प्रक्षेपे वृत्तिनाशस्य दर्शनान्न मनसीत्यस्य वैयर्थ्यमित्यतो दूषणान्तरमाहुः विषयेत्यादि । स्यादवैयर्थ्यम्, यदि विषयवाक्यत्वमस्य स्यात् । तदेव तु न । यत एतस्य विषयवाक्यत्वे सूत्रकृता तेजस्त्यागेन प्राणस्य करणाध्यक्षे जीवे लयकथनाद्यः क्रमत्यागस्तदनुपपत्तिश्चेत्यतो व्यासानभिप्रेतत्वावगमादनेकदोषग्रस्तं तथा व्याख्यानमयुक्तमित्यर्थः।

यत्तु दर्शनादित्यस्य व्याख्यानम् । दृश्यते हि वाग्वृत्तेर्मनोवृत्ताववस्थितायां पूर्वोपसंहार इति । तदपि न युक्तम् । परमनोवृत्तेर्वाग्वृत्तिद्वारैव गोचरतायाः प्रत्यक्षसिद्धत्वेन वाग्वृत्त्यभावे तदवस्थित्यवगतेरशक्यवचनत्वात् । तथा विद्वदविदुषोरुत्क्रान्तिप्रकारसाम्याङ्गीकारेऽपीन्द्रियवृत्त्युपसंहारो न युक्तः । प्रश्नोपनिषदि 'इन्द्रियैर्मनसि सम्पद्यमानै'रित्यत्रापि लक्षणापत्त्या सम्पत्तिपदस्य नाशार्थाङ्गीकारे च बृहदारण्यकीयशारीरकब्राह्मणस्थायां 'एकीभवति न पश्यतीत्या-

रश्मिः ।

वाक्पदस्य शब्दस्तस्य त्यागः लक्षणा वाचस्तद्वृत्तीनां च जन्यजनकभावः सम्बन्धः । तेन स्ववृत्तौ लक्षणा वाक्पदस्य । अनेनेति सूत्रेण । अत्रेत्यस्मिन् सूत्रद्वयके । वृत्तीति । वाग्वृत्तिप्रलयः । व्यासेति । व्यासाभिप्रायस्य । तैरिति । कैश्चित् । दूषणत्रयेप्यदोषः । तत्सूत्रमिति । अविभागसूत्रम् । निरन्वय इति । नास्तिकप्रसिद्धो द्वितीयाध्याये तन्मतखण्डनप्रसङ्ग उक्तार्थः । ध्वंसकेति । मनःसंसर्गमात्रस्य मनस्येवमागच्छति केनापि न सम्भाषणं कार्यं भगवन्नामैव ग्राह्यमिति लोके मनःसङ्कल्पवृत्तिः । ध्वंसकस्येति । मनसः । न मनसीति । वाग्वृत्तीनामुक्तरीत्या मनसि प्रक्षेपेऽधिकरणबोधकमनसीत्यस्य न वैयर्थ्यमित्यर्थः । मनोवृत्ताविति । सङ्कल्परूपायाम् । पूर्ववाचां मनस्युपसंहारः । तदवस्थितीति । मनोवृत्त्यवस्थित्यवगतेः । लक्षणेति । श्रुताविन्द्रियैरित्यस्येन्द्रियवृत्तिभिरित्यर्थाज-

## तन्मनः प्राण उत्तरात् ॥ ३ ॥

पूर्वोक्तसर्वेन्द्रियवैशिष्ट्यवन्मनः प्राणे सम्पद्यते, न तु केवलम् । तत्र हेतुः । उत्तरादिति । 'स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वान्यत्रायतनमलब्ध्वा बन्धनमेवोपश्रयते, एवमेव खलु सौम्य तन्मनो दिशं दिशं पतित्वान्यत्रायतनमलब्ध्वा प्राणमेवोपश्रयत' इत्युक्त्वा, तत्र हेतुमुत्तरेण वाक्येनाह 'प्राणबन्धनं हि सौम्य मन' इति । तस्माद्धेतोस्तथेत्यर्थः ॥ ३ ॥

## सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥

सर्वेन्द्रियविशिष्टमनोविशिष्टः प्राणोऽध्यक्षे पुरो हृदि वा प्रकटे भगवति

भाष्यप्रकाशः ।

हु'रित्यादिरूपायां च श्रुतौ लक्षणापत्त्या श्रुतिपीडाया दुर्वारत्वापत्तेः । अत एतेषु सूत्रेषूत्क्रमिष्यद्व्यवस्थामात्रकथनमयुक्तम्, किन्तु मुख्यतया सद्योमुच्यमानव्यवस्थायामिन्द्रियलयक्रमः, प्रासङ्गिकस्तूत्क्रमिष्यद्वृत्तान्तः । 'ओकोग्रज्वलन'सूत्रादिभिस्तस्यापि वक्ष्यमाणत्वादिति ।

यदपि भामतीनिबन्धे, वाचस्तूपसंहारमदृष्टं नागमोपि गमयितुमर्हति । आगमप्रभवयुक्तिविरोधात् । आगमो हि दृष्टानुसारतः प्रकृतौ विकाराणां लयमाहेत्युक्तम् ।

तदपि व्याख्येयग्रन्थपूजामात्रम् । आगमस्य सर्वत्र दृष्टानुसारित्वादर्शनेन युक्तेः शिथिलत्वादिति । तस्मादेतस्य विषयवाक्यत्वमयुक्तमेवेति पूर्वोक्तमेव विषयवाक्यम्, तथैवार्थश्चाभिप्रेत इति ध्येयम् ॥ २ ॥

तन्मनः प्राण उत्तरात् ॥ ३ ॥ अत्र भाष्यमुत्तानार्थम् । श्रुतिस्तु छान्दोग्ये श्वेतकेतूपाख्यानस्था ॥ ३ ॥

सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥ अत्रापि भाष्यमुत्तानार्थम् ।

अत्रेदमर्थात् सम्पद्यते । अत्यनुग्रहभाजनस्य पुष्टिमार्गीयस्योक्तप्रकारेण वागादिप्राणान्तानां

रश्मिः ।

न्यजनकभावरूपलक्षणापत्त्या । नाशार्थेति । निरन्वयध्वंसार्थाङ्गीकारे च । बृहदिति । 'न तस्मात् प्राणा उत्क्रामन्त्यत्रैव समवनीयन्त' इत्यस्याम् । लक्षणेति । समवनयस्यैकीभावस्य च निरन्वयध्वंसत्वाभावेन सान्वयध्वंसवाचकयोर्निरन्वयध्वंसे लक्षणा विपरीतलक्षणा, तस्या आपत्त्या । तस्यापीति । उत्क्रमिष्यद्वृत्तान्तस्यापि । उपसंहारमिति । मनस्युपसंहारम् । आगमः पञ्चरात्रम् । इत्युक्तमिति । भामतीनिबन्ध इत्यनेनान्वेति ॥ २ ॥

तन्मनः प्राण उत्तरात् ॥ ३ ॥ उत्तानेति । पूर्वोक्तेति । मतुबन्तम् । तथेति । मनः प्राणे सम्पद्यते । एवमुत्तानार्थम् ॥ ३ ॥

सोध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥ उत्तानेति । मुण्डकोपनिषदनुरोधेनाहुः । उपगम इति । मर्यादामार्गस्यासन्दिग्धत्वादाहुः । पुष्टीति । 'यमेवैष वृणुत' इति श्रुतेः । प्रवचनादिनिषेधा-

सम्पद्यत इत्यर्थः । अत्र हेतुः । उपगमादिभ्य इति । उपगमोऽभ्युपगमः पुष्टिमार्गेऽङ्गीकार इति यावत् । ततस्तथेत्यर्थः । आदिपदात् भगवद्वशीकरणसमर्थः स्नेहः प्रभ्वनिङ्गितार्थत्यागस्तदनुरूपं भजनं च । अभ्युपगमे सिद्धे स्नेहादयोऽवश्यं भवन्त्येवेत्याशयेन, तदादित्वमुक्तम्, नोद्देशः कृतः । मर्यादामार्गेऽङ्गीकृतानां तु मुक्तिपर्यवसायित्वेन मुमुक्षुत्वादुत्कटस्नेहासम्भवेन प्रभुप्राकट्यासम्भवात् स्वस्वप्रकृतौ सङ्घातलये शुद्धजीवस्य भगवदनुग्रहेण श्रवणादिरूपया तथाविधस्नेहरूपया च भक्त्या मुक्तिः सम्पद्यत इति बहेव तारतम्यमिति निगू-

भाष्यप्रकाशः ।

लये तदानीमेव पुरुषोत्तमात्मकदेहप्राप्त्या लीलात्मकभोगसम्पत्तिः । ततो न्यूनस्य तस्य तु पुरुषोत्तमे लयः, ततः सम्पद्याविर्भावाधिकरणोक्तरीत्या भगवता तस्य स्वरूपाविष्कासने पुरुषोत्तमात्मकदेहसम्पत्त्या लीलानुभव इति बोध्यम् ।

अन्ये तु, अध्यक्षपदे करणाध्यक्षं जीवम्, उपगमादिपदे च ज्योतिर्ब्राह्मणे 'एवमेवेममा-

रश्मिः ।

दस्याः पुष्टिमार्गीयत्वम् । तथेति । प्राणो भगवति सम्पद्यते । भगवद्वशीनि । 'नायमात्मा बलहीनेन लभ्यः' इति श्रुतेः । बलं भक्तिरिति भाष्यम् । भक्तौ बलपदप्रयोगेन तात्पर्यार्थः वशीकरणसमर्थ इति विशेषणम् । प्रभ्विति । 'इङ्गितं गतिचेष्टयो'रिति विश्वात्, भगवतः सेवायामकालत्यागः, अर्थस्य त्यागो व्ययः । तनुवित्तजे उक्ते । 'न च प्रमादादि'ति श्रुतेः । उभयमप्यप्रमादरूपम् । तदनुरूपं भगवदनुरूपभजनं महाराजोपचारकरणरूपम् । 'एतैरुपायैर्यतते यस्तु विद्वानि'तिश्रुतेः । नोद्देश इति । पुष्टिमार्गेऽङ्गीकारादीनामुद्देशो नाम्ना पदार्थसङ्कीर्तनम् । अत्र पुष्टिमार्गाङ्गीकारे बीजं वक्तुं मर्यादायां स्पष्टत्वं मुक्तिपर्यवसायिनीत्वं न तु नित्यलीलाभावे पर्यवसायिनीत्वम् । स तु मर्यादास्थेनात्यन्तानुग्रहवता लब्धपुष्टिना लभ्य इति तारतम्यमाहुः । मर्यादेति । मुक्तीति । 'मार्गास्त्रयो मया प्रोक्ता' इति 'भजतां भगवान् मुकुन्दो मुक्तिं ददाति कर्हिचित्स्म न भक्तियोग'मिति मुक्तिपर्यवसायित्वं भक्तेः । साधनचतुष्टयसम्पत्त्यन्तर्गतं मुमुक्षुत्वम् । तस्मात् । तथा च श्रुतिर्गोपालतापनीये 'मुमुक्षुर्वै शरणमनुव्रजे'दिति । तदुक्तं 'शुद्धाश्च सुखिनश्चैव ब्रह्मविद्याविशारदाः । भगवद्भजने योग्या नान्य इत्यर्थतः फल'मिति सुबोधिन्याम् । उत्कटेति । मर्यादामार्गाङ्गीकारस्वभावात्, स्नेहासम्भवो नास्त्यत उत्कटेति विशेषणम् । स्नेहत्वेन सायुज्यत्वेन कार्यकारणभावात् प्रभुप्राकट्यसम्भवाभावरूपफलाभाव उक्तः । न च भगवदाविर्भावाभावेन न सद्योमुक्तिः, किन्तु ज्ञानिविलक्षणचरणमुक्तिस्तु स्यादिति वाच्यम् । सङ्घातस्य प्रतिबन्धकत्वात् । अतस्तल्लयं विदुष आहुः । स्वप्रकृताविति । स्वयोनौ । श्रुतिस्तु, अग्निमाधिकरणेऽस्ति । शुद्धेति । शुद्धबुद्धमुक्तस्वभावनिराकारजीवस्य । 'मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थिति'रित्येकादशस्कन्धात् । ननु सङ्घातद्वयरहितस्य करणादिः कुत इत्यत आहुः । भगवदनुग्रहेणेति । तथा च भगवत्सन्निधानस्यावर्जनीयत्वान्मर्यादायां महापुरुषाङ्गीकाराच्च 'सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जित'मिति गीतायां ब्रह्मलक्षणनिविष्टवाक्याद् भगवदनुग्रहेण सर्वेन्द्रियासफलनात् । अत आहुः । श्रवणादिरूपयेति । नापि पुष्टिमार्गीयप्रमेयबलेन सर्वेन्द्रियगुणाभासत्वम् । भाष्ये भगवदनुग्रहेणेत्यत्रात्यन्तानुग्रहपदाभावात् । अत्यन्तानुग्रहत्वेन पुष्टित्वेन कार्यकारणभावात् । 'आश्चर्यो वक्ता कुशलोऽस्य लब्धे'ति काठकादाश्चर्यं च । तदुक्तं 'आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्य'इति गीतायाम् । तथाविधेति । श्रवणादिजन्यस्नेहरूपया । भक्त्येति । मर्यादाभक्त्या ।

ढाशयेनेदमुक्तम् । अभ्युपगमादयस्तु मुण्डकोपनिषत्सु पठ्यन्ते । 'नायमात्मे'त्युपक्रम्य, 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वाम् । नायमात्मा बलहीनेन लभ्यो न च प्रमादात्तपसो वाथ लिङ्गात् । एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधामे'ति ॥ ४ ॥

इति चतुर्थाध्याये द्वितीयपादे प्रथमं वाङ्मनोधिकरणम् ॥ १ ॥

उक्तं निगूढमाशयं प्रकटयति ।

भूतेषु तच्छ्रुतेः ॥ ५ ॥ ( ४-२-२. )

ननु मर्यादामार्गीयाणामप्येवमेव वागादिलयः, उतान्यथेति संशये निर्णयमाह । तेषां ते भूतेषु लीयन्ते, न तूक्तरीत्या भगवति । अत्र प्रमाण-

भाष्यप्रकाशः ।

त्मानमन्तकाले सर्वे प्राणा अभिसमायन्ती'त्यनेनोक्तमुपगमनम्, शारीरब्राह्मणे 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामती'त्युक्तमनुगमनम्, 'सविज्ञानो भवती'त्यनेनोक्तमवस्थानं च व्याकुर्वन्ति । तदा छान्दोग्यस्थस्य कस्याप्यर्थस्यानङ्गीकारात् कथं तस्य विषयवाक्यत्वमित्यपि ध्येयम् ॥ ४ ॥

इति प्रथमं वाङ्मनोधिकरणम् ॥ १ ॥

भूतेषु तच्छ्रुतेः ॥५॥ अधिकरणमवतारयन्ति नन्वित्यादि । इति संशये निर्णयमाहेति । एवं संशये भगवन्मार्गत्वस्याविशिष्टत्वेनात्रापि पूर्ववदेव वागादिलय इति पूर्वपक्षावताराभिर्णयमाहेत्यर्थः । सूत्रं व्याकुर्वन्ति तेषामित्यादि । हेतुबोधिकां श्रुतिमुदाहरन्ति

रश्मिः ।

तदुक्तं भक्तिहंसे 'भक्तिमार्गः श्रवणादिसरणिरूप' इति । स चैकादशैकोनविंशाध्यायोक्तो ग्राह्यः । 'पुनश्च कथयिष्यामि मद्भक्तेः कारणं पर'मितिवाक्ये परपदात् परं फलाविसंवादि तेन शरणगमनानन्तरमात्मनिवेदनमपि श्रोतव्यं भगवत्सन्निधापन इति बोधितम् । सप्तदशाष्टादशाध्यायोक्ता भक्तिः सर्वोत्तममार्गीया, तथापि तया भक्त्यजननदर्शनान्न गृहीता । मुक्तिरिति । पुरुषोत्तमचरणसायुज्यम् । चरणस्य वैकुण्ठादिरूपत्वाद्विहगादिरूपत्वं बोध्यम् । 'प्रायो बताम्ब विहगा मुनयो वनेस्मिन्नि'ति वाक्यात् । पुष्टिमार्गोप्ययमुच्यते 'तत्त्वा यामि ब्रह्मणा वन्दमान' इति सन्ध्याश्रुतेः । अस्यां तदाश्रया प्रतिकृतिभजने फलसाधनविषययोर्भिन्नत्वेन व्यभिचारिणी भक्तिरिति । निगूढाशयेनेति । भक्तिविषयाभिप्रायेण । मुण्डकेति । बहुत्वमान्यत्वात् । तनुं स्वामिति । स्वीयतनुत्वेन वृणुते । अलिङ्गादिति । सर्वात्मभावलिङ्गशून्यात् । आत्मनोप्यात्मा । धाम अक्षरं अक्षरात्मकं हृदयम् । एवमुत्तानार्थमित्यर्थः । प्रकृतमुच्यते सविज्ञान इति । विज्ञायतेऽनेनेति विज्ञानम् । इन्द्रियजालं प्राणसहितं तेन सह वर्तमानो भवति । अवस्थानमिति । सप्राणस्येन्द्रियजालस्य प्राप्तव्यकर्मफलज्ञानवति जीवेऽवस्थानम् । तदेत्यादिविषयवाक्योक्तार्थस्य सौत्रसइतिपूर्वपरामर्शकतच्छन्दस्य छान्दोग्यीयार्थपरामर्शकस्य सत्त्वेपि कस्यार्थस्येत्यादिः । तस्येति । ज्योतिर्ब्राह्मणादेः । विषयेति । तृतीयमेकसूत्रमधिकरणमिदं परेषाम् । इत्यपीति । अपिना सन्दिग्धत्वविषयवाक्यस्य व्याख्यानेन । नन्वस्त्वेवं परन्तु ग्रन्थान्तरेधिकरणमालायां प्राणश्छान्दोग्योक्तोत्रत्यविषयवाक्यैकवाक्यतया प्राणसहितो जीवस्तेजसि लीनो भवतीत्युक्तेः कथं छान्दोग्यस्थस्य कस्याप्यर्थस्यानङ्गीकार इति चेन्न । एतद्ग्रन्थमात्रविषयत्वेन दोषस्य ग्रन्थान्तरसम्मेलनेऽभावात् ॥ ४ ॥ इति प्रथमं वाङ्मनोधिकरणम् ॥ १ ॥

१. वाप्यलिङ्गादिति रश्मिपाठः ।
९ ब्र० सू० ९०

माह । तच्छ्रुतेः । 'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवी१ शरीरमाकाशमात्मौषधीर्लोमानि वनस्पतीन् केशा अप्सु लोहितं च रेतश्च निधीयत' इति श्रुतेः ।

न चाविद्वद्विषयिणीयं श्रुतिरिति वाच्यम् । 'याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियत उदस्मात् प्राणाः क्रामन्त्याहो नेति, नेति होवाच याज्ञवल्क्योऽत्रैव समवनीयन्ते स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेत' इति पूर्ववाक्यात् । न ह्यविदुषः प्राणानामनुत्क्रमः । 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामती'त्यादिश्रुतेः । ननु 'यत्रास्य पुरुषस्ये'त्युपक्रम्य 'रेतश्च निधीयत' इत्यन्ता श्रुतिरविद्वद्विषयिणीति मन्तव्यम् । यत एतदग्रे, 'क्वायं तदा पुरुषो भवती'ति प्रश्ने याज्ञवल्क्यार्तभागाभ्यां विचारितमुत्तरमुच्यते । 'तौ ह यदूचतुः कर्म हैव तदूचतुरथ ह यत् प्रशशंसतुः कर्म हैव तत् प्रशशंसतुः पुण्यो वै पुण्येन कर्मणा भवति पापः पापेने'ति । एतेन कर्माश्रयस्तिष्ठतीति निर्णयः सम्पद्यते । एवं सति प्राणानुत्क्रमणोक्त्या सङ्घातलयोक्त्या च विद्वद्विषयत्वमत्रावसीयते, यतस्तस्यैवोक्तं द्वयं सम्भवति । अग्रिमश्रुत्युक्तकर्माश्रयत्वं च तस्मिन् विरुद्धम्, अतः पूर्वोत्तरविरोधाद्विषयानिश्चये प्राप्ते प्रतिवदामः । मर्यादामार्गीयविद्वद्विषयिण्येवेयं श्रुतिरिति । अत एव प्रश्ने, 'क्व तदा पुरुषो भवती'त्येतावतैव चारितार्थ्येपि

भाष्यप्रकाशः ।

यत्रास्येत्यादि । एतेन सूत्रस्थं 'भूतेष्वि'ति पदं देवताया अप्युपलक्षकमिति बोधितम् । श्रुतिस्तु बृहदारण्यक आर्तभागब्राह्मणेऽस्ति । इयं श्रुतिरन्यैरविद्वद्विषयत्वेन व्याख्यातेति तन्निषेधन्ति न चेत्यादि । तथा चेतः पूर्वस्मिन् ग्रन्थे प्राणानुत्क्रमणरूपस्य मुक्तिलिङ्गभावनाया विद्वद्विषयत्वं तस्या वक्तुं शक्यमित्यर्थः । एवमस्याः श्रुतेरविद्वद्विषयतायां बाधके दर्शिते पुनरविद्वद्विषयतां साधयितुं पूर्वोत्तरश्रुत्योर्विरोधेन सन्देहमुत्थापयन् विद्वद्विषयतां प्रतिक्षिपति नन्वित्यादि । एतेनेति । विचारितनिर्धारकवाक्येन । एवं सतीति । उक्तप्रकारके विरुद्धवाक्यद्वये एकस्मिन् प्रकरणे श्रूयमाणे सति । विरुद्धमिति । अवसीयत इति शेषः । एवं

रश्मिः ।

भूतेषु तच्छ्रुतेः ॥ ५ ॥ बोधितमिति । स्वदेवतासहितायां प्रकृतौ योनौ निधानकथनाद्बोधितम् । न चेत्यादीति । याज्ञवल्क्यो नेति होवाचेत्यन्वयः । उच्छ्वयतीति । उच्छूनतां प्राप्नोति शोथेन । आध्मायतीतिवद्बहिष्ठेन वायुना पूर्यत इत्यर्थः । मुक्तिलिङ्गस्येति । वक्ष्यमाणादमुक्तलिङ्गाद्विपरीतं मुक्तिलिङ्गं तस्य । बाधक इति । प्राणानुत्क्रमणरूपे बाधके । पूर्वोत्तरेति । यत्रायं पुरुषो म्रियतेति पूर्वा, यत्रास्य पुरुषस्येत्युत्तरा, तयोः श्रुत्योः । नन्वित्यादीति । उच्यत इति । भगवतोच्यते श्रुत्या । उक्तेति । आर्तभागब्राह्मणप्रकारके । आर्तभागब्राह्मणे वाक्यद्वयमित्युक्तप्रकारकता । ऋतभागस्यापत्यमार्तभागः । विरुद्धेति । संघातलयप्राणानुक्रमणबोधकवाक्यद्वये । एकस्मिन्निति । एकविद्वन्मात्रविषये देशकालरूपे प्रकरणे । विरुद्धमितीति । विद्वन्निष्ठज्ञानविरुद्धं, सहानवस्थायित्वं

१. उच्छूयतीति प्राचीनादर्शेषु, उच्छ्वयतीति रश्मौ ।

साधारणपुरुषव्यावृत्त्या मर्यादामार्गीयतत्प्रापकं 'अथ'मिति पदम्। तस्यैवोपक्रान्तत्वात् तथा। अग्रिमविचारितोर्थोपि तद्विषयक एवेति बुध्यस्व। ननूक्तं बाधकमिति चेत्। हन्त श्रुतिशिरःसमाकलितमाकलय। मर्यादामार्गे हि विधिप्राधान्यम्, तथैव तन्निर्माणात्। तत्र ह्येवं कृत एवं फलं दास्ये, न त्वकृतेपीति भगवदिच्छा, अतः कर्म प्रधानम्।

एवं सत्यार्तभागस्यायमाशयः। वागादेरेतोऽन्तलयेन प्रारब्धस्यापि तदा नाशाच्छुद्धं जीवं विध्यविषयं कदाचित् पुष्टौ प्रवेशयति, न वेति संशयेन तदायं क्व मर्यादामार्ग एवोत पुष्टावपि प्रवेशितो भवतीति प्रश्नः। तदास्यार्थ-

भाष्यप्रकाशः।

पूर्वपक्षमुत्थाप्य समादधते प्रतिवदाम इत्यादि। तस्यैवोपक्रान्तत्वादिति। प्राणानुत्क्रमलिङ्गेन विषय एवोपक्रान्तत्वात्। तदग्रिमविचारितोर्थ इति। उपक्रमानुरोधिप्रश्नोत्तररूपत्वात् 'तौ ह यदूचतु'रित्यादिना विचारितोऽर्थः। अग्रिमविचारितार्थे पुनः शङ्कते नन्वित्यादि। उक्तं बाधकमिति। कर्माश्रयेणावस्थानरूपं विद्वत्ताबाधकम्। तथा च विद्वद्विषयत्वे बाधकस्य विद्यमानत्वादविद्वद्विषयैवेयं श्रुतिरित्यर्थः। अत्र समादधानाः पूर्वपक्षिणो भ्रान्तत्वं बोधयितुमुपालभन्ते हन्तेत्यादि। श्रुतिशिरःसमाकलितमिति। वेदान्ततात्पर्यबोधितम्। एवं सतीत्यादि। उक्तरीत्या मर्यादामार्गे कर्मप्राधान्ये सति आर्तभागस्य वक्ष्यमाण आशयः। वक्ष्यमाणरीतिकसंशयेन तदा क्व शुद्धत्वदशायाम्, अयं विधिनियतो जीवः, क्व वैषयिकाधिकरणे सप्तमी। कस्मिन् मार्गे, किं मर्यादामार्ग एव तिष्ठत्युत पुष्टौ प्रविष्टो भवतीति

रश्मिः।

निरोधः। तदग्रिमे विचारितार्थ इतीति। भाष्येऽग्रिमेत्याद्यपि पाठः। भाष्ये। तद्विषयक इति। मर्यादामार्गीयविषयकः। विद्वानित्यत्र विच्छन्देन ज्ञानमिव भक्तेरपि वक्तुं शक्यत्वात्। गीतायां 'भक्तिरव्यभिचारिणी'त्युक्त्वा 'एतज्ज्ञानमिति प्रोक्त'मित्युक्तेः। प्रकृते। कर्माश्रयेणेति। ननु नेदमुक्तं बाधकं किन्तु प्राणानुत्क्रमणरूपं बाधकमिति चेन्न। पूर्वोक्तबाधकस्य तथाविधत्वेपि नास्य तथाविधत्वं कर्मावस्थानश्रुतेः पूर्वमुक्तत्वात्। तत्त्यागेन पूर्वमनुधावने दूरान्वयदोषात्। वेदान्तेति। श्रुतिशिरो वेदान्तम्। कल अव्यक्ते शब्दे तात्पर्येण बोधनेऽव्यक्तः शब्दो भवति। आकलय विचारय। मर्यादामार्ग इति। यद्यपि मर्यादामार्गः श्रवणादिसरणिरूपस्तथापि साधनत्वमिश्रफलरूपमिति विचारितत्वाच्च फलाध्याय इतिसमाख्यया वक्ष्यमाणेच्छाशरीरनिविष्टफलानि सर्वाण्येवोद्देष्टव्यानि। प्रथमसूत्रभाष्ये सामीप्यादिमुक्तिं प्राप्तवतां भक्तानामिति भाष्येऽसन्दिग्धानां सामीप्यादीनामुद्देशादित्याशयेनाहुर्विधिप्राधान्यमिति। विधेः प्राधान्यं विधिप्राधान्यम्। कर्मप्रधानमिति। विधिविषयं कर्मैव प्रधानं न तु विधिः साक्षात्फलकारणत्वाभावात्। उक्तरीत्येति। तथैव तन्निर्माणादित्याद्युक्तरीत्या। कर्मप्राधान्य इति। कर्मप्राधान्यमत्र न विद्यया कृते कर्मणि। अङ्गित्वात्, यदेव विद्ययेति हीत्यत्र व्याख्यातत्वाच्च। किन्तूक्तरीत्येति करणोक्तेः मर्यादामार्गे कर्मणः फलजनकत्वं कर्मप्राधान्यम्। यथा वाक्यं 'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यत्र प्राधान्यं फलसम्बन्धात्तथा। विधिनियत इति। 'आश्रमादाश्रमं गच्छेन्नान्यथा मत्परश्चरेत्' इति विधिनियतः। पूर्वसूत्रे शुद्धस्य जीवस्य भगवदनुग्रहेण श्रवणादिरूपयेत्युक्तेः। कस्मिन्निति। किंमार्गविषयो जीव इत्यर्थः। यद्वा। 'ज्ञाननिष्ठो विरक्तो

**स्येश्वरेच्छारीतिमविदुषो दुर्ज्ञेयत्वं जानन्तौ स्वयमेव यदवधारितवन्तौ, तदपि रहस्यमिति स्फुटमनुक्त्वा, श्रुतिः पर्यवसितमर्थमुक्तवती 'तौ हे'त्यादिना। अत्र कर्मपदं मर्यादामार्गपरम्। तथा च मर्यादामार्ग एव तस्य स्थितिरित्यर्थः सम्पद्यते, मुक्त एव भवतीति यावत्। अत एव तत्प्रशंसापि। यत ईश्वरत्वेन सर्वकरण-समर्थोपि तद्दाने तदपेक्षते। अत्र हेतुत्वेन मर्यादामार्गस्वरूपमुक्तं 'पुण्यो वा' इत्यादिना॥ ५॥**

**ननु मर्यादामार्गीयौ भक्तो ज्ञानी च भवतः, उक्तनिर्णयस्तु ज्ञानमार्गीयविषय एव, भक्तं तु तादृशमपि कदाचित् पुष्टावपि प्रवेशयतीत्याशङ्क्य तन्निर्णयमाह।**

भाष्यप्रकाशः।

प्रश्न इत्यर्थः। एवं प्रश्नस्य विद्वद्विषयत्वं प्रतिपाद्योत्तरस्य प्रतिपादयन्ति तदेत्यादि। ईश्वरे-च्छारीतिमविदुषः पुंसः प्रति अस्यार्थस्य दुर्ज्ञेयत्वमिति योजना। अत्रेत्यादि। श्रुतिवाक्ये कर्मपदं मत्वर्थलक्षणया तन्मार्गपरम्। ननु मर्यादामार्गस्य विद्वदविद्वत्साधारणत्वादत्र विद्वद्व्यवस्थैवोच्यत इत्यत्र किं गमकमित्यपेक्षायामाहुः अत एवेत्यादि। तथा च निवृत्तिमार्गीयकर्मणोपि तत्र विद्यमानत्वात्तदादाय तत्प्रशंसात्र मुख्यं विद्वद्विषयत्वगमकमित्यर्थः। प्रशंसायां बीजमाहुः यत इत्यादि। तद्दाने तदपेक्षत इति। मुक्तिदाने ज्ञानसमुच्चितं कर्मापेक्षते। ननु यद्यस्य विद्वद्विषयत्वं स्यात्, तदात्र 'पुण्यो वा पुण्येने'त्यादि न वदेदित्यत आहुः अत्रेत्यादि। अत्र हेतुत्वेनेति। फलदाने हेतुत्वेन। तथा च, 'एष उ वे'ति श्रुतेः फलदाने कर्मकारणमेव हेतु-र्मर्यादामार्गे इति बोधनाय 'पुण्यो वाइ'त्यादिना तत्स्वरूपमुक्तम्। तावता न अविद्वद्विषयकत्वं वक्तुं शक्यमिति विद्वद्व्यवस्थैवात्रोच्यत इत्यर्थः॥ ५॥

रश्मिः।

वा मद्भक्तो वाऽनपेक्षकः, सलिङ्गानाश्रमांस्त्यक्त्वा चरेदविधिगोचर' इति नियतः। शुद्धं जीवं विध्यवि-षयमित्युक्तभाष्यात्। प्रविष्ट इति। भगवतात्यन्तानुग्रहेण प्रवेशितः प्रविष्टो भवतीत्यर्थः। विद्व-दिति। विद्वन्तौ विषयौ भक्तज्ञानिनौ यस्य प्रश्नस्य तत्त्वम्। उत्तरस्येति। प्रश्नोत्तरस्य विद्वद्विषय-त्वम्। ईश्वरेति। ईश्वरेच्छया मर्यादामार्गे प्रवेशितः तयैव पुष्टिमार्गे प्रवेशित इत्यत्र न विचार इत्युक्तरीतिम्। अविदुषः पुंस इति। द्वितीयाबहुवचनान्ते पदे। भाष्ये। यदवेति। ज्ञानकर्म-भक्तिमार्गानवधारितवन्तौ निश्चितवन्तौ षट्शास्त्रैः। तदपि रहस्यं मार्गत्रयं षट्शास्त्ररहस्यरूपमित्यर्थः। रहस्यपदेन अत्रैव समनीयन्त इति पुष्टजीवपुरुषोत्तमसायुज्यम्। इन्द्रियसमर्पणेन साधनेन जीवोपि समवनयनं प्राप्स्यतीति रहस्यम्। एवं अग्निं वागप्येतीत्यादिषु स्त्रीपुंनपुंसकमिथुनोक्ते रहस्यं बोध्यम्। पर्यवसितमिति। रहस्यं न वक्तव्यं खलत्वं च निवर्तनीयमिति उभयसामञ्जस्याय मार्गत्रयकथन-पर्यवसितं मार्गत्रये कथिते तदीयं रहस्यमपि ज्ञास्यन्तीत्यभिप्रायेण।

प्रकृते। तन्मार्गेति। मर्यादामार्गपरम्॥ चित्तशुद्धिद्वारा कर्मवन्तौ भक्तिज्ञानमार्गौ। मर्यादामार्गस्येति। भाष्ये स्वीकृतस्य कर्मप्रधानरूपस्य। निवृत्तीति। ज्ञानभक्तिमार्गीयकर्म-णोऽपि। ज्ञानसमुच्चितमिति। ज्ञानेन स्वकारणचित्तशुद्धिजनकत्वेन कर्मसमुच्चितमिति तथा। वीर्यवत्तरं फलमन्यथा तु न कर्मसमुच्चय इति ध्येयम्। न वदेदिति। विद्वान्नापुण्यः। अपुण्यवत्त्वज्ञानानन्तरमपुण्यनाशकज्ञानेतरकर्मसत्त्वे विद्वत्त्वं न स्यादिति। तथा चाविद्वानपुण्यः पुण्येन कर्मणा भवतीत्यर्थः। तत्स्वरूपमिति। हेतुस्वरूपम्॥ ५॥

## नैकस्मिन् दर्शयतो हि ॥ ६ ॥

एकस्मिन् ज्ञानिनि भक्ते वा मर्यादानियमो न, किन्तूभयोरपि । तत्र हेतुः दर्शयत इति । यतो याज्ञवल्क्यार्तभागौ ज्ञानिभक्तसाधारण्येन मर्यादानियमं दर्शयत उक्तरीत्या, 'तौ हे'त्यादिना । अन्यथा प्राक् कृताङ्गीकृतिरन्यथा भवेदित्युपपत्तिर्हिशब्देन सूच्यते । पूर्वोक्तपूर्वोत्तरश्रुतिविरोधपरिहारान्यथानुपपत्तिरत्र मूलमिति ज्ञेयम् ।

केचित्तूपसंहृतेषु वागादिषु शरीरान्तरप्रेप्सासामयिको जीवः 'क्वायं तदा पुरुष' इति प्रश्नविषय इति वदन्ति । तन्न साधीयः । 'तमुत्क्रामन्तं

---

भाष्यप्रकाशः ।

नैकस्मिन् दर्शयतो हि ॥ ६ ॥ सूत्रमवतारयन्ति नन्वित्यादि । भक्तं तु तादृशमपि कदाचित् पुष्टौ प्रवेशयतीति । तृतीयस्कन्धे, 'जीवाः श्रेष्ठा ह्यजीवाना'मित्यादिना शेषपूजायामुत्कृष्टबोधने, 'मय्यर्पितात्मनः पुंसो मयि सन्यस्तकर्मणः । न पश्यामि परं भूतमकर्तुः समदर्शना'दिति कपिलदेववाक्ये मर्यादाभक्ते उत्कर्षविश्रान्तेः कथनेन तादृशं पुष्टौ प्रवेशयतीत्येवं सम्भावयितुं शक्यत्वात्तं प्रवेशयति । व्याकुर्वन्ति एकस्मिन्नित्यादि । ज्ञानिभक्तसाधारण्येनेति । विशेषानिर्देशात्, 'अयं पुरुष' इति सामान्यनिर्देशात्, कर्मोक्तिकर्मप्रशंसाभ्यां मर्यादामार्गस्यैव विषयीकरणाच्च । तथा च यद्यवान्तरो ज्ञानभक्तिकृतो विशेषो विवक्षितः स्यात्, तदा सामान्येन न वदेताम्, अतस्तथेत्यर्थः । ननु पुष्टिमर्यादाभक्तयोर्भक्तिमत्त्वे तुल्येपि कुतोऽयं विशेषो यन्मर्यादामार्गीयवागादीनां भूतेष्वेव लयः, न भगवतीत्याकाङ्क्षायां गूढाभिसन्धिमाहुः अन्यथेत्यादि । यदि तद्वागादिलयो भगवत्यङ्गीक्रियेत, तदा अप्राकृतानां सर्वभावप्रपत्त्या प्रकृतिसम्बन्धरहितानां या अङ्गीकृतिः स्वीयत्वेन वरणम्, सा अन्यथा भवेत्, इतरतुल्यतां प्राप्नुवन्ती वरणश्रुत्युक्तमसाधारण्यं विरुन्ध्यादित्यर्थोपपत्तिर्हिशब्देन सूच्यते । तथा च ताभ्यां ज्ञानिभक्तसाधारण्येन यन्निरूपितं तत्रेदं बीजमित्यर्थः । नन्वस्याः श्रुतेरेवं तात्पर्यकल्पने किं बीजमत आहुः पूर्वोक्तेत्यादि । पूर्वोत्तरश्रुतिस्तु 'न तस्मात् प्राणा उत्क्रामन्ती'त्यादिरूपा बोध्या। तथा चैतद् बीजमित्यर्थः ।

एतदेव दृढीकर्तुं, दूषणाय मतान्तरमुपक्षिपन्ति केचिदित्यादि । दूषयन्ति तन्नेत्यादि ।

रश्मिः ।

नैकस्मिन् दर्शयतो हि ॥ ६ ॥ अकर्तुरिति । वाक्योक्तान्यस्याकर्तुः । पञ्चम्यन्तम् । मर्यादाभक्तेरिति । मय्यर्पितात्मन अत्रात्मपदं मनःपरम् । पञ्चम्यन्तं पदम् । मानसीसेवा । संन्यस्तानि कर्माणि । 'कुर्यात्सर्वाणि कर्माणि मदर्थं शनकैः स्मरन्नि'त्युक्तानि । अतस्तथा । पुष्टाविति । कदाचिदिति बोध्यम् । अत्यन्तानुग्रहकाल इति तदर्थः । मर्यादामार्गस्येति । विधिविषयस्य कर्मणः । तथेति । ज्ञानिभक्तसाधारण्येनेत्यर्थः । गूढाभिसन्धिमिति । वरणश्रुत्युक्तासाधारण्यभङ्गरूपम् । ताभ्यामिति । याज्ञवल्क्यार्तभागाभ्याम् । एतदिति वरणश्रुत्युक्तासाधारण्यभञ्जनम् । अस्या इति । वरणश्रुतेः । पूर्वोक्तेत्यादीति । 'भूतेष्वि'ति । सूत्रभाष्योक्तस्य पूर्वा यत्रायं पुरुष इति, उत्तरा यत्रास्य पुरुषस्येति तयोः श्रुत्योर्विरोधस्य यः परिहारः परिहारान्तरं तस्यान्यथानुप-

प्राणोनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ती'ति श्रुतिर्भावि-

भाष्यप्रकाशः।

अत्रायमर्थः। 'अत्रैव समवनीयन्त' इति वाक्येन प्राणानुत्क्रमणमुभयत्रोक्तम्। तत्र शारीरब्राह्मणे 'अथाकामयमान' इति निष्कामं पुरुषमुपक्रम्योक्तम्। अन्ते च 'ब्रह्मैव सन् ब्रह्माप्येती'ति तस्य ब्रह्मप्राप्तिरुक्ता। आर्तभागब्राह्मणे तु 'यत्रायं पुरुषो म्रियत' इति सामान्यतो म्रियमाणमुपक्रम्योक्तम्। अन्ते च 'स उत्श्वयत्याध्मायत्याध्मातो मृतः शेत' इत्येतावदुक्तम्। तत्र सामान्यस्य विशेषेण निर्णय इति ब्रह्माप्ययवाक्यस्यात्र निर्णायकत्वादस्य मुक्तिलिङ्गत्वमेवोचितम्। तथापि 'आध्मातो मृतः शेत' इत्यनेनोक्तावस्था ब्रह्मविच्छरीरस्यानुचिता। लौकिकस्य पुण्यकृतोपि प्रायस्तादृशावस्थाया अदर्शनात्। अतः पुनः प्रश्नः 'यत्रास्य पुरुषस्ये'त्यारभ्य, 'क्वायं तदा पुरुषो भवती'त्यन्तः। अमुच्यमानस्य हि प्राणोत्क्रमः 'तमुत्क्रामन्त'मित्यादिश्रुत्योक्तः। अयं शरीरदुरवस्थावानुक्तस्तस्य चेद् 'अग्निं वागप्येती'त्युक्तप्रकारेणेन्द्रियाणामनुत्क्रान्तानां तत्तद्योग्येषु भूतेषु इन्द्रियाधिष्ठातृदेवतायां च लय'स्तदा तस्य साधनाभावान्न मुक्तिर्वक्तुं शक्या। इन्द्रियाणां लये मनसोपि चन्द्रे लयात्। 'तदेव स तत्सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्ये'ति श्रावितस्य जीवगमनस्यापि वक्तुमशक्यतया शरीरान्तरप्राप्त्यावश्यकत्वे वागादिलयवैयर्थ्यापत्त्या, देहस्य मृतत्वात्तत्र स्थितेर्वक्तुमशक्यतया तस्य जीवस्य कुत्र स्थितिरिति तत्राशयो भाति। एतदुत्तरे तु कर्माश्रयस्तिष्ठतीति। यथा बाणो वा पाषाणशकलो वा चेतनेन क्षिप्त आकाशे गच्छति, तस्य गमनक्रियैवाश्रयः, न त्वन्यः, तथा जीवोपि, 'एष उ' इति श्रुत्युक्तकर्माश्रयस्तिष्ठतीति सिध्यति। तत्र जीवस्य स्वतः क्रियाराहित्याल्लिङ्गस्य च लीनत्वान्न्यायादिमतवददृष्टस्यात्मधर्मताया अत्रानङ्गीकाराज्जीवाधिष्ठानभूतं कर्म किमीयमिति शङ्का नापैति। तेन शरीरान्तरप्रेप्सासामयिको जीवः 'क्वायं तदे'ति प्रश्नविषय इत्यसङ्गतम्। लीनकरणग्रामस्य प्रेप्साया व्यापारस्य च वक्तुमशक्यत्वात्। प्रेप्साङ्गीकारे च 'तमुत्क्रामन्त'मिति श्रुत्या लिङ्गसाहित्यस्यावश्यकत्वाद्वागादिलयोऽप्यसम्भवदुक्तिकः। 'अत्रैवे'ति मुक्तिलिङ्गश्रुतिविरोधाच्च।

रश्मिः।

पत्तिरर्थापत्तिरूपा। द्वितीया वान्यथानुपपत्तिसमर्पितप्रमेयार्थापत्तिः। प्रस्थानरत्नाकरे स्पष्टा पूर्वमुक्ता च। अत्रेति। श्रुतौ पुष्टिकल्पने। एतद्विति। अर्थापत्तिः। विधेयलिङ्गमेतदिति। उभयत्रेति। आर्तभागब्राह्मणे शारीरकब्राह्मणे च। सामान्यस्येति। 'मृतः शेत' इति सामान्यं, 'ब्रह्मैव सन् ब्रह्माप्येती'ति विशेषः। अस्येति। मृतः शेत इत्यस्य। मनसश्चन्द्रे लये मुक्त्यभावं वदन्ति स्म। तदेवेति। यत्र गन्तव्ये मनः लिङ्गं निषक्तं निश्चयेन सक्तं भवति तत्र स आसक्तः सन् फलारम्भकीभूतकर्मणा सह तदेव गन्तव्यं फलमेति गच्छतीति श्रुत्यर्थः। वक्तुमिति। मनोसक्तायां मुक्तौ वक्तुम्। वागादीति। मुक्त्यभावे तथापत्त्या। स्थितेरिति। जीवस्य स्थितेः। तत्रेति। यत्रास्येत्यादि पुनः प्रश्नश्रुतौ। भातीति। भात्ययमर्थ इति पूर्वेण सम्बन्धः। जीव इति। बाणवद्वा पाषाणशकलवद्वा ऊर्ध्वगन्ताऽधोगन्ता वा। किमीयमिति अदृष्टधर्ममिश्रम्। अपैतीति। अप आ एतीति पदच्छेदः। पूर्वं वृद्धौ ऐतीति जाते एङि पररूपमित्यस्य अविषयत्वाद्वृद्धिरेचि। प्रेप्सेति। मनोधर्मः प्रेप्सा। 'कामः सङ्कल्प' इति श्रुतेः। व्यापाराश्चक्षुरादेः। एवमुपोद्घातमुक्त्वा तमुत्क्रामन्तमिति भाष्यं विवृण्वन्ति स्म प्रेप्साङ्गीकार इति। तत्रासम्भवादित्यन्तभाष्यविवरणम्।

देहान्तरजीवस्य प्राणानामिन्द्रियाणां च सहैवोत्क्रमणं भवतीति वागादिलयस्य तत्रासम्भवान्नोक्तस्य प्रश्नविषयत्वं वक्तुं शक्यम्। पूर्ववाक्ये 'अत्रैव समवनीयन्त' इत्युक्तत्वाच्च, अतोऽस्मदुक्त एव मार्गोऽनुसर्तव्यः। एतेन नायं परविद्यावान्

भाष्यप्रकाशः।

अतो देहान्तरप्रेप्सावतः प्रश्नविषयताया वक्तुमशक्यत्वादसदुक्त एव मार्गः, सदसत्कर्मप्रधानो मर्यादामार्ग एव कर्मपद आदर्तव्यः। अन्यथा केवलकर्मणः संसारजनकत्वात् प्रशंसावैयर्थ्यापत्तेः। मार्गादरे तु तस्य प्रवृत्तिनिवृत्तिकर्मात्मकत्वाभिवृत्तं कर्मादाय प्रशंसोपपत्तेः। दुष्टं कर्मादाय शरीराध्मानाद्युपपत्तेश्च। एतद्बोधनायैव 'पुण्यो वा पुण्येने'ति मार्गस्वरूपमुक्तम्।

एवं सतीदमत्र सिध्यति। यः सद्यो मुच्यते, तस्य प्राणानामत्रैव समवनयनम्। यश्चान्धन्तमो विशति, तस्यापि प्राणानामत्रैव समवनयनम्। शरीरदुरवस्थालिङ्गात्। अन्यथा तदुक्तिवैयर्थ्यापत्तेः। ये पुनः क्रममुक्तिगामिनः, तत्प्राणानां सहोत्क्रमः। 'अणुः पन्था विततः पुराण' इत्यादिश्रुतेः। 'यदि प्रयास्यन्नृप पारमेष्ठ्य'मित्यादिस्मृतेश्च। ऊर्ध्वगामिनां च तथा। 'तदेव तत्सह कर्मणैती'त्यादिश्रुतेः, 'मनः कर्ममयं नृणा'मित्यादिस्मृतेश्च। सुबोधिन्यां तु धृतराष्ट्रं प्रत्यक्रूरवाक्ये 'अकृतार्थं प्रहिण्वन्ति प्राणाराय' इत्युक्त्वा, उपसंहारे 'मृतोऽन्धं

रश्मिः।

तत्रेत्यस्य भाष्यस्य 'इहैव समवनीयन्त' इति श्रुत्युक्ताश्रये भगवतीत्यर्थः। नोक्तस्येति भाष्यविवरणम्। अतो देहान्तरेति। नोक्तस्येत्यत्र उक्तस्येत्यस्यार्थः देहान्तरप्रेप्सावत इति। प्रश्नविषयत्वं वक्तुं न शक्यमित्यत्र भाष्यान्वये इतिशब्दं हेत्वर्थकमध्याहृत्य विवरणं प्रश्नविषयतेत्यादि। सदसदिति। सन्मार्गद्वयरूपं कर्ममार्गरूपं चासत् तदतिरिक्तं सर्वम्। कर्मपद इति। औपश्लेषिकाधारे सप्तमी। प्रशंसेति। 'यत्प्रशश९सतुः कर्म हैव तत्प्रशश९सतु'रिति श्रुत्युक्तप्रशंसावैयर्थ्यापत्तेः। यश्चेति। पुष्टोपि। समवनयनमिति। अष्टमोपदेशस्य समत्वात्। तत्र समवनाश्रयस्य भगवत्त्वात्। तत्रायं विवेकः। भक्तिमार्गीया आनन्दे लीना भवन्ति अनुग्रहात्यन्तानुग्रहयोः पुष्टिमर्यादाकारणयोः सत्त्वात्, ये संभूत्यां रताः आसुरीसंपज्जाताश्च तेषामानन्दधर्मे तमसि लयः अनुग्रहाभावादिति। तदुक्तीति। शरीरदुरवस्थोक्तिवैयर्थ्यापत्तेः। तत्प्राणानां तेषां प्राणानाम्। अणुः पन्था इति। शारीरब्राह्मणेस्ति। मोक्षः। अणुः स्थूलादिसकलविशेषातीतत्वात्। विततः विस्तीर्णः सत्यासत्यावगाहित्वात्। पुराणश्चिरंतनो नित्यः श्रुतिप्रकाशितत्वात्। एवंभूतः पन्था अभेदान्वयः फलसाधनयोरतो भक्तिज्ञानमार्गः। मोक्षाभिन्नः 'प्रकाशाश्रयवद्वा तेजस्त्वा'दिति सूत्रेण धर्मधर्मिणोरभेदात्। आदिना 'मा९स्पृष्टोनुवित्तो मयैव। तेन धीरा अपियन्ति ब्रह्मविद उत्क्रम्य स्वर्गं लोकमितो विमुक्ता' इति पादत्रयम्। अर्थस्तु मां याज्ञवल्क्यं स्पृष्टः शाखाचार्यादेर्मामनुप्राप्तः मया प्राप्त इति वा। किञ्च मयैवानुवित्त इत्यत्रैवकारोन्ययोगव्यवच्छेदको न भवतीत्यभिप्रेत्याह तेनेति। जीवन्त एव विमुक्ताः सन्त इतोस्माच्छरीरपाताऊर्ध्वमनन्तरमेव तेन ब्रह्मविद्यामार्गेण स्वर्गं परमानन्दलक्षणं प्रकरणाल्लोकं स्वप्रकाशं यन्ति गच्छन्तीति। यदि प्रयास्यन्निति। क्रममुक्तिप्रतिपादिका द्वितीयस्कन्धस्मृतिः तस्याः। अकृतार्थमिति। पूर्वार्धसमाप्तौ 'पुष्णाति यानधर्मेण स्वबुद्ध्या तमपण्डितम्। तेऽकृतार्थं प्रहिण्वन्ति प्राणारायः सुतादय' इति वाक्यम्, कृतः अर्थो येन स कृतार्थः। न कृतार्थोऽकृतार्थस्तम्। हि गतौ स्वादिः प्रपूर्वकः। प्राणा इन्द्रियाण्यपि ते आसमन्ताद्रायो येषां ते प्राणारायः। तेऽकृतार्थं प्रहिण्वन्ति त्यजन्ति। मृत इति। अत्र विशेष्यम्। स्वयं पिता।

यतः, अमृतत्वमेव तत्फलमिति । तच्च देशान्तरानायत्तमित्युत्क्रमणापेक्षा कर्माश्रयत्वं च न स्यात्, किन्त्वपरविद्यावान् । तस्यास्तु ब्रह्मलोकावधि फलमिति कर्माश्रयस्योत्क्रमणादिकं सम्भवतीत्यपि निरस्तं वेदितव्यम् ॥ ६ ॥

इति चतुर्थाध्याये द्वितीयपादे द्वितीयं भूताधिकरणम् ॥ २ ॥

भाष्यप्रकाशः ।

विशते तम' इति कथनादन्धन्तम एव प्रकृतमिति श्रौतं मुक्तिलिङ्गं न विचारितम् । इह तु मुक्तेरेव फलत्वेन प्रकृतत्वात् तमोलिङ्गं न विचारितम् । अतोऽन्धतमसोऽप्यासुरमुक्तित्वाच्च भाष्यसुबोधिन्योर्विरोध इति ज्ञेयम् । उभयथापि शरीरान्तरप्रेप्साया अलाभान्मतान्तरदूषणं तूभयथापि निष्प्रत्यूहमिति च ।

एवं परोक्तं प्रश्नाशयं दूषयित्वा तदुक्तं सिद्धान्ताशयं दूषयन्ति एतेनेत्यादि । एतेनेति । जीवस्यात्र देहान्तरप्रेप्सासामयिकत्वासङ्गतिव्युत्पादनेन । इत्यपि निरस्तमिति । इति एवमर्थकं यद्, 'भूतेषु तच्छ्रुते'रित्यत्र, 'भूतेष्वतः श्रुते'रिति पाठमङ्गीकृत्य स प्राणोऽध्यक्षस्तेजःसहचरितेषु देहबीजभूतेषु सूक्ष्मेष्ववतिष्ठते । कुतः । अतः श्रुतेः प्राणस्तेजसीत्यतः श्रुतेरिति व्याख्यानम्, 'नैकस्मि'न्निति सूत्रे च शरीरान्तरप्रेप्सावेलायां नैकस्मिन्नेव तेजसि जीवोऽवतिष्ठते । कार्यस्य 'शरीरस्य पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमय' इति श्रुतिः, 'अण्व्यो मात्राऽविनाशिन्य' इत्यादिस्मृतिश्चैतमर्थं दर्शयत इति व्याख्यानमुक्तम्, तदपि निरस्तम् । तद्रीत्योत्क्रमाङ्गीकारे पूर्वेन्द्रियलयप्राणानुत्क्रमणवैयर्थ्यप्रसङ्गेन आर्तभागब्राह्मणेऽनुक्तायाः शरीरान्तरप्रेप्साया नूतनेन्द्रियापेक्षायाश्च कल्पनापत्त्या लक्षणाप्रसङ्गेन श्रुतिसूत्रव्याकुलीभावापत्त्या च निरस्तमित्यर्थः ।

अत्रावसरगर्भः प्रसङ्गोऽधिकरणसङ्गतिः ॥ ६ ॥ इति द्वितीयं भूताधिकरणम् ॥ २ ॥

रश्मिः ।

प्रकृतमिति । 'असिद्धार्थो विशत्यन्धं स्वधर्मविमुखस्तम' इति वाक्यार्थेनोक्तेन प्रकृतं मुक्तिष्वेतत्स्वीकृतम् । श्रौतमिति । अत्रैव समवनीयन्त इति श्रुत्युक्तं मुक्तिलिङ्गम् । इहत्विति । भाष्ये तु । मुक्तेरिति । सद्योमुक्तेः । तमोलिङ्गमिति । शरीरदुरवस्थालिङ्गम् । नेति । पूर्वत्रैकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति प्रवादाच्छ्रौतमुक्तिलिङ्गविचारः स्थानसाम्यात्पूर्वमीमांसोक्ताद्वा । उत्तरत्र तत एव तमोलिङ्गमीमांसेत्यर्थभेदाभावान्न विरोध इत्यन्वयः । उभयथेति । उभे भाष्यसुबोधिन्यौ अवयवौ प्रतिपादकौ यस्य मुक्तिरूपप्रकारस्य तेन प्रकारेण । प्रश्नाशयं प्रश्नाभिप्रायम् । अत्रेति । भाष्ये । सूक्ष्मेष्विति । रेतःकणेषु अण्वी मात्रारूपेषु वा । व्याख्यानमिति । अन्याचार्यव्याख्यानम् । तद्रीत्येति । अपरविद्यावतः उत्क्रमाङ्गीकारे । पूर्वेन्द्रियेति । अग्निं वागप्येतीत्याद्युक्तो लयः अत्रैव समवनीयन्त इति प्राणानुत्क्रमणं तयोः वैयर्थ्यम् । बुद्धेर्गुणैरङ्गुष्ठमात्रो जीव इति तल्लये परविद्यावतो या मुक्तिरावरणभङ्गरूपा सा स्यादिति पूर्वेन्द्रियलयवैयर्थ्यम् । परविद्यावतः फलं देशान्तरानायत्तं देशान्तरं बुद्धिगुणकृतजीवदेशादन्यद् देशान्तरं तस्यानायत्तमनधीनमिति प्राणानुत्क्रमणं प्राणोत्क्रमरूपप्रतियोगिकवैयर्थ्यं च तस्य प्रसङ्गेन । लक्षणेति । अत्रैव समवनीयन्त इति वाक्यं शरीरान्तरप्रेप्सा । नूतनेन्द्रियापेक्षावतोऽत्रैव समवनीयन्त इत्येवं कल्पयित्वा तदर्थे लक्षणाप्रसङ्गेनेत्यर्थः । शक्यार्थस्य षष्ठ्यर्थेन सम्बन्धो लक्षणा । श्रुतीति । पूर्वेन्द्रियलयप्राणानुत्क्रमणानङ्गीकारेण श्रुतिपीडापत्तिः, पाठान्तरेण सूत्रव्याकुलीभावापत्तिः तथा ॥ ६ ॥ इति द्वितीयं भूताधिकरणम् ॥ २ ॥

**समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥ ( ४-२-३. )**

मर्यादापुष्ट्योर्न कदाचिदन्यथाभाव इति यदुक्तम्, तत्र हेत्वपेक्षायां वस्तुस्वरूपमेव तथेति बोधयितुमाह समानेत्यादि ।

अत्रायमाशयः । साधनक्रमेण मोचनेच्छा हि मर्यादामार्गीया मर्यादा, विहितसाधनं विनैव मोचनेच्छा पुष्टिमार्गमर्यादा । तथा सति सदैकरूपत्वं तयोर्युक्तमिति ।

एतदेवाह । सृतिः संसृतिः । जीवानां स्वस्मात् पृथक्कृतानामविद्यया अहन्ताममतास्पदीकरणम् । तदुपक्रम आरम्भस्तं मर्यादीकृत्य मुक्तिपर्यन्तमुक्तरूपा मर्यादा समाना सदैकरूपा, मध्ये नान्यथा भवतीत्यर्थः । एवमेव अनुपोष्य, व्रतमकृत्वा, अमृतत्वमपि पुष्टिमार्गे समानमित्यर्थः । अत्रोपोषणपदमशेषमुक्तिसाधनोपलक्षकम् ॥ ७ ॥

भाष्यप्रकाशः ।

समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥ एवमधिकरणद्वयेन पुष्टिमर्यादास्थयोः क्रमेण वागादिलयं व्युत्पाद्य पुष्टिमर्यादास्थयोः कुत एवं विशेष इत्याकाङ्क्षायां मार्गस्वरूपविशेषादेव विशेष इति वक्तुम्, इत आरभ्य नवभिः सूत्रैरुपोद्घातेन तदाढ्यार्थं तास्ता आशङ्का निवारयतीत्याशयेन काञ्चिदाशङ्कामनुवदन्तः सूत्रमवतारयन्ति मर्यादेत्यादि । व्याकुर्वन्ति साधनेत्यादि । अविद्यया अहन्ताममतास्पदीकरणमिति । 'विद्याऽविद्ये'तिश्लोकोक्तया स्वीयया मूलशक्त्या अहंममेत्यसद्ग्राहात्मकजीवाविद्याश्रयत्वसम्पादनम् । मुक्तिपर्यन्तमिति । इदमुत्तरावधिकथनमार्थिकं ज्ञेयम् । संसारस्य तदधीनत्वादिति । मध्ये नान्यथा भवतीति । 'एष उ वे'ति श्रुत्युक्ताया इच्छाया इव

रश्मिः ।

समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥ साधनेत्यादीति । मर्यादेति ज्ञानभक्तिमर्यादा । एतदेवाहासृतिरिति भाष्यपाठः । आसृतिरित्यस्य संसृतिरिति विवरणम् । विद्ययेति । इदं दशमस्कन्धेऽक्रूरदर्शनेस्ति । 'विद्ययाऽविद्यया शक्त्या मायया च निषेवित'मिति । एतत्कथनं भक्तिमार्गे भक्तिसाधननाश्यसंसृतेरभावादत्यन्तानुग्रहे तेनैव तदभावाच्चायुक्तं संसृतिकथनं मत्वोक्तम् । तदुक्तं 'कृत्वाऽतरन्वत्सपदं स्म यत्प्लवा' इत्यस्य सुबोधिन्याम् । एवं च पुष्टिमार्गेत्यन्तानुग्रहनाश्यत्वेनाहन्ताममते तयोरास्पदीकरणम् । मर्यादाभक्तिमार्गे साधननाश्यत्वेन ते तयोरास्पदीकरणम् । ज्ञानमार्गे ज्ञाननाश्यत्वेन ते तयोरास्पदीकरणं बोध्यम् । विद्ययाऽविद्ययेति वाक्यात् । भाष्ये । मुक्तीति । सद्योमुक्तिक्रममुक्तिपर्यन्तम् । उक्तरूपेति । अहन्ताममतास्पदीकरणं ज्ञानेन न सम्भवति तथापि अन्तराभूतग्रामसूत्रादिवाऽर्थभेददाने भवतीति भक्तिमार्गेऽहन्ताममतास्पदीकरणारम्भे तया उक्ता श्रवणादिसरणिरूपा मर्यादा सा समाना । ज्ञानभक्तिभ्यामविद्योपमर्देपि भक्तिज्ञानरूपविद्याया अविद्योपमर्दादहन्ताममतास्पदीकरणं ज्ञानमार्गीयश्रवणादिसरणिरूपा मर्यादा, सा समाना । 'यथा यथात्मा परिमृज्यतेसौ मत्पुण्यगाथाश्रवणाभिधानै'रित्यत्र ज्ञानाङ्गभक्त्युक्तेः । ज्ञानमार्गीयश्रवणादिभिः सूक्ष्मवस्तुदर्शनम् । भक्तिमार्गीयश्रवणादिभिः प्रेमेति विवेकः । 'तथा तथा पश्यति वस्तुसूक्ष्म'मित्युत्तरार्धात्,

एवं प्रासङ्गिकमुक्त्वा प्रकृतं परामृश्यते । 'सोऽध्यक्ष' इति सूत्रेण पुष्टिमार्गीयभक्तसङ्घातस्य भगवत्येव लय इत्युक्तम् । अग्रिमेण तेन मर्यादामार्गीयभक्तसङ्घातस्य भूतेषु लयमुक्त्वा, प्रश्नानन्तरं शुद्धजीवस्य तस्य मुक्तिरेव भवतीति वक्तव्ये सति, 'आहर सौम्य हस्त'मित्यादिना स्वाशयमन्येष्वप्रकटयन्तौ कर्म यन्निरूपितवन्तौ, तत्कुत इत्याशङ्क्य तयोराशयं निगूढं प्रकटयति ।

## तदापीतेः संसारव्यपदेशात् ॥ ८ ॥

तदा नित्यलीलान्तःपातलक्षणपुष्टिमार्गीयमुक्तिदशायां मर्यादामार्गीयाया अपीतेर्मुक्तेः संसारत्वाभावेपि पुरुषोत्तमभजनानन्दानुभवाभावात् संसार इत्येव पुष्टिमार्गे व्यपदेशो यतः क्रियते, अतस्तदभिसन्धाय तया रीत्या

---

भाष्यप्रकाशः ।

मुमोचयिषाया अप्यप्रतिहतविषयत्वस्य न्याय्यत्वात् तथा । पुष्टिमार्गे समानमिति । 'ते नाधीतश्रुतिगणा' इत्यादिभगवद्वाक्यात् तथा । सूत्रे तु प्रथमश्चकारोऽवधारणे, द्वितीयश्चोऽप्यर्थे बोध्यः । 'भूतेष्वि'त्यतीताधिकरणे मार्यादिकव्यवस्थाया उक्तत्वादव्यवधानेनात्र मर्यादास्मृतेर्मर्यादोल्लेखः । व्यवहितत्वेन पश्चात् पुष्टेरित्यपि ज्ञेयम् । तादृशतादृशेच्छायां लीलाया लोकतुल्यत्वस्यैव हेतुत्वादिति ॥ ७ ॥

तदापीतेः संसारव्यपदेशात् ॥ ८ ॥ सूत्रमवतारयन्ति एवं प्रासङ्गिकमित्यादि । यथा एकनगरप्रापकयोर्मार्गयोस्तत्प्रापकत्वे मार्गत्वे च समानेपि कस्यचित्केवलपान्थप्रापकत्वम्, कस्यचित् सपरिकरपान्थप्रापकत्वमिति तन्मार्गस्वरूपकृत एव भेदः, तथा मर्यादापुष्ट्योरपीत्येतत्प्रासङ्गिकं तत्तन्मार्गस्वरूपबोधनायोक्त्वा, प्रकृतं आर्तभागब्राह्मणस्थं प्रमेयं परामृश्यते विचार्यत इत्यर्थः । ननु तत्र किमवशिष्टं येन पुनर्विचार्यत इत्याकाङ्क्षायामाहुः सोऽध्यक्ष इत्यादि । अग्रिमेणेति । 'भूतेषु तच्छ्रुते'रिति सूत्रेण ।

फक्किकायोजना तु एवं लयमुक्त्वा प्रश्नानन्तरमित्याद्युक्तरीत्या निरूपणं कुत इत्याशङ्क्य तथा प्रकटयतीति बोध्या । तथा च यदि न तत्तन्मार्गीयमुक्तौ तारतम्यम्, तदा वागादिलयस्य भिन्नप्रकारकत्वविचारः काकदन्तविचारतुल्यः स्यादिति तन्निवृत्त्यर्थं तयोरेकान्तगमनाद्याशयं वक्तीत्यर्थः । सूत्रं व्याकुर्वन्ति तदेत्यादि । तया रीत्या निरूपणमिति ।

रश्मिः ।

'एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिना'मित्येकादशैकोनविंशाध्यायवाक्याच्च । तथेति । ज्ञानमार्गेण समानम् । ज्ञानमार्गेण श्रवणादीनां पुष्टिमार्गे समानत्वेपि उपोषणाद्यकरणमपि समानं ज्ञानमार्गेण । ज्ञानमार्गे उपोषणाद्यकरणजपापस्य ज्ञानेन नाशः । पुष्टिमार्गेऽत्यन्तानुग्रहेण पापस्य नाशः । एवं फलप्रकरणे सन्दिग्धे अहन्तास्पदत्वमसम्भवद्विचारितम् । अवधारण इति । तथा च समानैवेत्यर्थः । अप्यर्थ इति । अमृतत्वमपीति भाष्यात् ॥ ७ ॥

तदापीतेः संसारव्यपदेशात् ॥ ८ ॥ केवलेति । पदातिमार्गत्वम् । सपरिकरेति । राजमार्गत्वम् । मर्यादेति । मर्यादापदेन भक्तिज्ञाने । एवमिति । पूर्वोक्तप्रकारम् । तदित्यस्यार्थमाहुः । निरूपणमिति । तथेति । तयोराशयं निगूढम् । 'गूढं ब्रह्मणि वाङ्मय' इति वाक्यात् । तयोरिति ।

निरूपणम् । अत एव श्रीभागवते श्रीशिववचनं गीयते । "नारायणपराः सर्वे न कुतश्चन बिभ्यति । स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिन' इति । श्रीभगवद्गीतास्वपि । 'देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपी'ति वाक्येन मर्यादामार्गीयभक्तमुक्तेरितरसाधारण्यमुच्यते ॥ ८ ॥

ननु संसारवन्मुक्तेरपि हेयत्वं यत्र, तादृशं चेत् पुष्टिमार्गीयं तत्त्वम्, तदा मुक्तेः पुरुषार्थत्वबोधिकायाः श्रुतेः प्रतारकत्वमापततीति तद्बोधकप्रमाणानां तत्स्तुतिमात्रपरत्वमेवेति प्राप्त आह ।

सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥

पुष्टिमार्गीयं तत्त्वं सूक्ष्मं दुर्ज्ञेयमित्यर्थः ।

अत्रायमाशयः । पुष्टिमर्यादामप्यतिक्रम्य पुष्टिपुष्टौ प्रवेशे तत्तत्त्वमनुभवविषयो भवति, नान्यथा । तत्र प्रवेशस्त्वतिदुरापोऽतिशयितानुग्रहेतरासाध्यत्वात्, अत उक्तेतराज्ञेयमेव तद्भवति । तेषां तु मुक्तिरेव फलम् । तस्या एवेष्टत्वात् ।

---

भाष्यप्रकाशः

पुष्टिमार्गीयमुक्त्यपेक्षया मर्यादामार्गीयमुक्तेः साधनसाध्याया न्यूनत्वबोधनाय मुक्तिहेतुत्वेन प्रशंसनीयस्यापि मार्गरूपस्य कर्मण एकान्ते गत्वा जीवाश्रयत्वेन निरूपणम् । तथा च तस्य सद्योमुक्तिप्रकारत्वदृढीकरणार्थं पुष्टिमार्गीयापेक्षया न्यूनत्वज्ञापनार्थं च पुनर्विचार इत्यर्थः । इदं चोपबृंहणाभावे मनसि न विशतीत्यतस्तदाहुः अत एवेत्यादि । तथा चात्र मुक्तेरितरसाधारण्यकथनात्तथेत्यर्थः ॥ ८ ॥

सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥ सूत्रमवतारयन्ति नन्वित्यादि । तद्बोधकप्रमाणानामिति । भजनानन्दोत्कर्षप्रमाणानाम् । सूत्रं व्याकुर्वन्ति पुष्टीत्यादि । ननु पुष्टितत्त्वस्य दुर्ज्ञेयत्वे श्रुतेः प्रतारकत्वं कथं निवर्ततामित्यतस्तदाशयमाहुः अत्रायमित्यादि । तत्त्वमिति । पुष्टिमार्गीयतत्त्वम् । उक्तेतराज्ञेयमिति । अतिशयितानुग्रहभाजनातिरिक्ताज्ञेयम् ।

रश्मिः ।

याज्ञवल्क्यार्तभागयोः । एकान्तेति । आदिनाऽऽहर सौम्य हस्तम् । आर्तभागेति होवाच तौ होत्क्रम्य मन्त्रयांचक्रतुः तौ ह यदूचतुः कर्मैव तदूचतुरित्यत्रोत्क्रम्येत्युत्क्रम्य सतीवत् 'मुक्तोपसृप्यव्यपदेशादि'ति सूत्रात् । तथा च तावित्यस्य जीवावित्यर्थः । इत्युत्क्रम्यपदाशयः । तथेत्यादीति । नित्येति । व्रजभक्तसजातीयभावः कारणं पुष्टिमुक्तौ । एकान्त इति । एतस्य शरीरे संस्थाप्योत्क्रमणेनैकान्त इत्यप्यर्थो भगवन्माहात्म्यस्थापकः । जीवाश्रयत्वं जीवस्याश्रयत्वं बाणस्याश्रयत्वं यथा कर्मणः । तेन । पुनरिति । फलत्वेन पुनर्विचारः । यथा एकनगरेत्याद्युक्तरीत्या मार्गत्वेन निरूपणाद्गतेरर्थवत्त्वसूत्रादिविचारितस्य पुनर्विचारः ॥ ८ ॥

सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥ श्रुतेरिति । मुक्तेः पुरुषार्थत्वबोधिकायाः 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत' इति श्रुतेः । पुष्टिमार्गीयतत्त्वमिति । ननु ज्ञानकाण्डत्वात् ज्ञानमार्गीयं तत्त्वं तत्र तदुक्तं 'तथा तथा पश्यति

रागिणां स्वर्गादिवत् । इष्टफलाप्राप्तौ हि प्रतारकत्वम्, अन्यथा प्रवृत्तिमार्गीय-फलबोधिकाया अपि श्रुतेः प्रतारकत्वं स्यात् । इच्छा चाधिकारानुसारिणीति नानुपपन्नं किञ्चिदिति ।

नन्वेवंविधार्थास्तित्वे किं मानमित्याकाङ्क्षायामाह प्रमाणत इत्यादि । प्रमाणं श्रुतिः । सा तु, 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह, आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चने'ति । 'एतꣳ ह वा व न तपति किमहं साधु नाकरवं किमहं पापमकरव'मिति ।

अत्र पूर्वार्धेन दुर्ज्ञेयत्वम्, उत्तरार्धेन तत्सत्ता च बोध्यते । अन्यथा मनसोऽप्यप्राप्यस्य वेदनकथनं विरुद्धं स्यात्, अतो दुर्ज्ञेयत्वेनैव धर्मिग्राहकमानसिद्धं तदित्यर्थः । चकारात्तादृशानामनुभवः परिगृह्यते ॥ ९ ॥

---

भाष्यप्रकाशः ।

तेषामिति । अतिशयितानुग्रहभाजनातिरिक्तानां भक्तानां शुष्कज्ञानिनां च । इच्छेति । स्वर्गादिविषयिणी मोक्षविषयिणी च । इति नानुपपन्नं किञ्चिदिति । इति हेतोः, यथा स्वर्गादिकामिनः प्रति निवृत्तिमार्गतत्त्वं दुर्ज्ञेयमधिकारराहित्यादेवं मोक्षकामिनः प्रति पुष्टिमार्गतत्त्वमपीति तत्तच्छ्रुतीनां तं तं प्रति फलबोधकत्वान्न प्रतारकत्वमतो हेतोर्ये उत्कृष्टाधिकारिणस्तान् प्रति भजनानन्दोत्कर्षबोधकतया न स्तुतिमात्रत्वमतः पूर्वोक्तं सूपपन्नमित्यर्थः । सूत्रशेषमवतारयन्ति नन्वेवमित्यादि । एवंविधार्थास्तित्व इति । अतादृशसर्वदुर्ज्ञेयार्थसद्भावे । शेषं स्फुटम् ॥ ९ ॥

रश्मिः ।

वस्तुसूक्ष्ममि'ति वाक्येनेति चेन्न । असन्दिग्धमिदं ज्ञानकाण्डेऽविचार्यमिति । पुष्टिप्राप्ये सूक्ष्मपदं गीतायां त्रयोदशे 'ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते । अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते । सर्वतः पाणिपादं तत्सर्वतोक्षिशिरोमुखं । सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति । सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् । असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च । बहिरन्तश्च भूतानामचरं चरमेव च । सूक्ष्मत्वात्तद्विज्ञेयं दूरस्थं चान्तिके च तत् । अविभक्तं च भूतेषु विभक्तमिव च स्थितम् । भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च । ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते । ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य धिष्ठितम् । इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः । मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते' इत्यत्र । 'यतो वाच' इति श्रुत्या सह निर्णयः । तथाहि । गीतायाम् । अहं परो यस्येति मत्परः । अग्रे विरुद्धधर्माश्रयः । अग्रे सूक्ष्मत्वात्तदविज्ञेयमुक्तम् । तत्र कर्ममार्गीयगीताया उपनिषत्त्वात् । नापि ज्ञानमार्गीयम् । ज्ञानगम्यत्वात् । नापि मर्यादाभक्तिमार्गीयम् । 'भक्त्या जानाति चाव्यय'मिति श्रुतेः । नापि पुष्टिमर्यादायाम् । मर्यादांशेन ज्ञेयत्वात् । अतः पुष्टिपुष्टावेव सूक्ष्मत्वात्तदविज्ञेयम् । 'यतो वाच' इति श्रुतेः । तर्हि वस्त्वभावसिद्धिः । नेत्युच्यते । 'मुक्तानामपि सिद्धानां नारायणपरायणः । सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने' इति वाक्यात्, 'पूर्णा भगवदीयास्ते शेषव्यासाग्निमारुता' इति वाक्याच्च वस्तुसिद्धेरिति । अग्रे दूरस्थमित्यादिसमानम् । अग्रे भक्ते विशेषः 'मद्भक्त एतद्विज्ञाये'ति । अतिशयितेति । 'भगवान्भजतां मुकुन्दो मुक्तिं ददाति कर्हिचित्स्म न भक्तियोग'मिति वाक्यात् । न च भक्तियोगो मर्यादादिभक्तिरपि । भजतामित्यनेन तत्सङ्ग्रहात् । प्रवृत्तीति । अकामयमानस्य प्रवृत्तिर्बोध्या । अतादृशेति । अनधिकारिणः सर्वे तेषां दुर्ज्ञेयार्थसद्भावे ॥ ९ ॥

तर्हि ब्रह्मविदामिव तादृशानां भक्तानामपि स्वमार्गोपदेशनं क्वचिच्छ्रूयेत, न चैवम्, अतः पूर्वोक्तं न साधीय इति भातीत्युत्सूत्रमाशङ्क्य तत्र हेतुमाह।

नोपमर्देनातः ॥ १० ॥

उपदेशनं तदा स्यात्, यदि ब्रह्मविदामिव तेषां स्वास्थ्यं स्यात्, यतस्तेषां विरहिदशा प्रियसङ्गमदशा चेति दशाद्वयमेव भवति, नान्या। पूर्वस्यास्तस्यास्त्वतिदुःसहत्वेन सर्वेषां भावानामुपमर्देन तिरोधानेनोपदेशो न भवतीत्यर्थः। सङ्गमे तु, अतः, पुरःप्रकटपरमानन्दस्वरूपाद्भगवत एव हेतोरुपदेशोऽन्यस्मै न भवतीत्यर्थः। न हि भगवदग्रे स सम्भवतीति भावः ॥ १० ॥

ननु 'रसो वै सः रसᳵ ह्येवायं लब्ध्वानन्दी भवती'त्युपक्रम्य 'एष ह्येवानन्दयाती'ति श्रुतेरुक्तरूपानन्दप्राप्तौ दुःसहविरहतापोऽशक्यवचनः। आनन्दतिरोधान एव तत्सम्भवात्। तद्धेतोरसम्भवात्, सम्भवे तु तत्प्राप्तिरेव न स्यादिति प्राप्ते, उत्तरं पठति।

अस्यैव चोपपत्तेरूष्मा ॥ ११ ॥

आनन्दात्मकरसात्मकस्यास्यैव भगवत एव धर्म ऊष्मा विरहताप इत्यर्थः। विरोधपरिहारायाह उपपत्तेरिति।

इदमुक्तं भवति। भगवद्विरहस्य सर्वसाधारणत्वेपि स्थायिभावात्मकरसरूपभगवत्प्रादुर्भावो यस्य हृदि भवति, तस्यैव तदप्राप्तिजस्तापः, तदनन्तरं

---

भाष्यप्रकाशः।

नोपमर्देनातः ॥ १० ॥ सूत्रमवतारयन्ति तर्हीत्यादि। तत्रेति। तादृशमार्गानुपदेशे। सूत्रं व्याकुर्वन्ति उपदेशनमित्यादि। अर्थस्तु स्फुटः ॥ १० ॥

अस्यैव चोपपत्तेरूष्मा ॥ ११ ॥ उपमर्दे प्रत्यवस्थानं वारयितुमग्रिमसूत्रमवतारयन्ति ननु रस इत्यादि। तद्धेतोरित्यादि। तद्धेतोरानन्दतिरोधायकहेतोरविद्याकामकर्मरूपस्य उत्कटभक्तिभावे सत्यसम्भवात् उत्कटभक्तिदशायामप्यविद्यादिसम्भवे तु तत्प्राप्तिर्भगवत्प्राप्तिरेव न स्यात्। सा च तेषामस्ति। अत उपमर्दासम्भवादनुपदेशोऽसङ्गत इति प्राप्ते। सूत्रं व्याकुर्वन्ति आनन्देत्यादि। तथा चान्तःप्राप्तिबाह्याप्राप्तिभ्यामानन्दानुभवविरहतापाविति द्वयमप्युपपद्यत इत्यर्थः ॥ ११ ॥

रश्मिः।

नोपमर्देनातः ॥ १० ॥ स्फुट इति। अत इति सौत्रं व्याख्येयम्। पुर इत्यादि व्याख्यानम्। सम्भवतीति। दासानामाज्ञां विना सम्भवतीति। एवं स्फुटः ॥ १० ॥

अस्यैव चोपपत्तेरूष्मा ॥ ११ ॥ प्रत्यवेति। आनन्दरूपत्वाद्ब्रह्मणः सन्देशादिभिर्नोपमर्द इति प्रत्यवस्थानम्। सम्भवे त्वित्यादिभाष्यं विवृण्वन्ति स उत्कटेति। अनुपदेशः असङ्गत इति। एङः पदान्तादतीति न भवति, वाक्ये विवक्षाभावेन संहिताभावात्। आनन्दे-

नियमतस्तत्प्राप्तिश्च भवति, न त्वतथाभूतस्येत्यन्वयव्यतिरेकाभ्यामुक्तरसस्यैवैष धर्म इति निश्चीयते। तस्य वस्तुन एव तथात्वात् स तापोपि रसात्मक एव॥ ११॥

प्रतिषेधादिति चेन्न शारीरात्॥ १२॥

ननु 'न पश्यो मृत्युं पश्यति न रोगं नोत दुःख'मितिश्रुत्या दुःखप्रतिषेधस्तादृशे भक्ते क्रियत इति तस्य दुःखित्वं न वक्तुं शक्यमित्याशङ्क्य प्रतिषेधति नेति। कुतः। शारीरात्। शरीरसम्बन्धिनो हेतोर्यद् दुःखं कर्मजनितमिति यावत्, तस्यैव श्रुतौ प्रतिषेधान्नात्रानुपपत्तिरित्यर्थः। एतेन दुःखत्वेन कर्मजन्य-

---

भाष्यप्रकाशः।

प्रतिषेधादिति चेन्न शारीरात्॥ १२॥ अत्र पूर्वपक्षसिद्धान्तयोर्दुरूहत्वात् पूर्वपक्षे, उपमर्दसूत्रान्नशब्दं, तस्यैवेतिसूत्रात्तस्यैवोष्मेति पदत्रयं चानुवर्त्य, सिद्धान्ते चोपपत्तेरिति पदमनुवर्त्येदं व्याख्यायत इत्याशयेन पूर्वभागं व्याकुर्वन्ति नन्वित्यादि। तस्य दुःखित्वं न वक्तुं शक्यमिति। तस्य भगवत्स्वरूपलाभवतो भक्तस्य दुःखित्वं तस्यैवोष्मेत्यनेनोक्तो विरहतापो न वक्तुं शक्यः। प्रतिषेधतीति। प्रतिषेधस्य कर्मजन्यत्वं बोधयंस्तत्कथनाशक्यत्वं प्रतिषेधति। सिद्धान्तभागं व्याकुर्वन्ति नेत्यादि। तस्यैवेति। शरीरसम्बन्धिनोर्मृत्युरोगयोरनन्तरं तत्प्रायपाठे पठितस्य तादृशस्यैव दुःखभावस्य पूर्वसूत्रोक्तहेतोः संग्रहं सूचयन्ति एतेनेत्यादि। एतेनेति। सिद्धान्तभागेन। तथा च भगवद्विरहदुःखं कर्मजन्यं दुःखत्वाद् दुःखा-

रश्मिः।

त्वादीति। विरोधेति। आनन्दानुभवविरहतापयोर्विरोधपरिहाराय। अन्वयेति। स्थायिभावात्मकरसरूपभगवत्प्रादुर्भावसत्त्वे विरहतापः, उक्तप्रादुर्भावाभावे विरहतापाभाव इत्यन्वयव्यतिरेकौ ताभ्याम्। यत्सत्त्वे यत्सत्त्वमन्वयः, यदभावे यदभावो व्यतिरेक इति॥ ११॥

प्रतिषेधादिति चेन्न शारीरात्॥ १२॥ दुरूहत्वादिति। अनुवर्तनीयपदाज्ञानात् पूर्वपक्षस्य, स्वरूपतः सिद्धान्तस्य दुरूहत्वं बोध्यम्। तेनायं सूत्रार्थः। अस्य भक्तस्यैव ऊष्मा दुःखित्वं न, प्रतिषेधात्। इति चेन्न। शारीरात्। शरीरसम्बन्धिनः कर्मजनितदुःखात् हेतोः, तं हेतुं प्रकृत्योपपत्तेरिति। उपपत्तिस्तु कर्मजनितदुःखस्यैव प्रतिषेधादिति। नन्वित्यादीति। दुःखतां दुःखसत्ताम्। तस्यैवेति। अत्रास्यैवेति सूत्रादस्यैवोष्मेतिपदत्रयमिति पाठः। तस्यैवोष्मेति। तस्यैव तदप्राप्तिजस्ताप इति भाष्येण। लाघवादूष्मपदोपादानम्। प्रतीति। दुःखस्य। बोधयन्निति। व्यासः। तत्कथनेति। भक्तस्योष्मकथनाशक्यत्वम्। 'न पश्य' इति श्रुतिमनुसन्धायाहुः शरीरसम्बन्धिनोरिति। तथा चायं भाष्यार्थः। शरीरसम्बन्धिनो हेतोरिति। शरीरसम्बन्धिनः यस्य दुःखस्य हेतोः कर्मणः इत्यर्थः। एतदेवाहुः यद्दुःखमिति। प्रतिषेधादिति। आवृत्त्योपपत्तिहेतुत्वेनोक्तः। अनुवृत्तस्योपपत्तिपदस्यार्थमाहुः नात्रेति। अत्र भक्तस्योष्मणि। दुःखत्वेनेति भाष्यं विवृण्वन्ति स्म तथेत्यादि। यथा सिद्धान्तभागेन पूर्वसूत्रो-

त्वानुमानमपि निरस्तं वेदितव्यम् । लौकिक एव दुःखे तज्जन्यत्वनियमात् ॥ १२॥

स्पष्टो ह्येकेषाम् ॥ १३ ॥

एकेषां शाखिनां भगवत्स्वरूपलाभानन्तरं दुःखतन्निवर्तनलक्षणोऽर्थः स्पष्टः पठ्यते ।

तथाहि । 'रसो वै सः, रसᳲ ह्येवायं लब्ध्वानन्दीभवति, को ह्येवान्यात्, कः प्राण्यात्, यदेष आकाश आनन्दो न स्यात्, एष ह्येवानन्दयाति' । अत्र रसात्मकभगवत्स्वरूपलाभे सत्यानन्दवत्त्वमुक्त्वा, तस्यैव जीवनहेतुत्वं परमानन्दहेतुत्वं चोच्यते । मरणहेतूपस्थित्यभावे जीवनहेतुत्वं न वदेत् । स रसस्तु संयोगविप्रयोगभावाभ्यामेव पूर्णो भवत्यनुभूतः, नैकतरेण । तत्र विरहतापस्यात्युपमर्दित्वेन तदा प्राणस्थितिरपि न स्यात्, यदि रसात्मको भगवान् हृदि न स्यादित्याशयेनाह, 'को ह्येवान्या'दिति । यत् यदि एष हृदि स्फुरद्रूप आकाशो भगवान्न स्यात्, कस्तदाऽन्याद्, अन प्राणने, को वा जीव-

भाष्यप्रकाशः ।

न्तरवदिति साधने, सुखत्वेन हेतुना मोक्षसुखस्यापि तथात्वापत्तेस्तत्परिहाराय तत्र लौकिकत्वस्योपाधित्वं वाच्यम् । तच्चात्रापि तुल्यमिति लौकिक एव दुःखे कर्मजन्यत्वनियमाद् उपपत्तेरेव निरस्तमित्यर्थः ॥ १२ ॥

स्पष्टो ह्येकेषाम् ॥ १३ ॥ पुष्टिमार्गीयस्य भगवद्विरहजं यद्दुःखं तत्र कर्मजन्यमित्यत्र प्रमाणापेक्षायां तद्बोधनायेदं सूत्रमित्याशयेन सूत्रं पठित्वा व्याचक्षते एकेषामित्यादि । शाखिनामिति । तैत्तिरीयाणाम् । श्रुतिमुपन्यस्य तदर्थं व्याख्यातुं गृह्णन्ति अत्रेत्यादि । विभजन्ते स रस

रश्मिः ।

त्तहेतोः सङ्ग्रहसूचनम्, तथा दुःखत्वेनेत्यादिभाष्येण भगवद्विरहेत्याद्युक्तम् । सुखत्वेनेत्यादि । मोक्षसुखं कर्मजन्यम्, सुखत्वात् सुखान्तरवदित्यनुमानेन सुखत्वेन हेतुना मोक्षसुखस्यापि तथात्वापत्तेः कर्मजन्यत्वापत्तेः । तत्परीति । मोक्षसुखस्य कर्मजन्यत्वपरिहाराय । अत्रापीति । दुःखत्वलिङ्गकानुमानेपि । लौकिक इति भाष्यं विवृण्वन्ति स्म लौकिक इति । एवेति । अयमलौकिकसुखदुःखयोगव्यवच्छेदकः । उपेति सूत्रेऽनुवृत्तोपपत्तेरेव न तूक्तसूत्रयुक्तेरित्यर्थः । उपाधित्वं तु साध्यव्यापकत्वे सति साधनाव्यापकत्वम् । तत्र साध्यसमानाधिकरणः कर्मजन्यत्वसमानाधिकरणो यो लौकिकत्वात्यन्ताभावो दुःखान्तरे नास्ति, किन्तु घटाभावस्तादृशाभावप्रतियोगित्वं घटे अप्रतियोगित्वं लौकिकत्व इति साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं साध्यव्यापकत्वमिति लक्षणसमन्वयः एवं साध्यव्यापकत्वे सति साधनाव्यापकत्वमित्थम् । साधनवद् दुःखत्ववद् अलौकिकदुःखम् । तन्निष्ठो योऽत्यन्ताभावः लौकिकत्वात्यन्ताभावः तादृशाभावप्रतियोगित्वं लौकिकत्वेन त्ववधृते घटाभावे प्रतियोगी घट इति साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वं साधनाव्यापकत्वमिति लक्षणसमन्वयः ॥ १२ ॥

स्पष्टो ह्येकेषाम् ॥ १३ ॥ अलौकिकदुःखसत्त्वे पुनः प्रमाणमत्र । विभजन्त इति । विभागं व्याख्यानं कुर्वते । स रस इत्यादीति । एवकारव्यवच्छेद्यमाहुः नैकतरेणेति । संयोगेन विप्रयोगेण वा । साधनैकदेशत्वात् । क इति । कर्तृसामान्यपदम् । भाष्ये ।

येत्, न कोपीत्यर्थः। तादृशस्य भगवत्स्वरूपातिरिक्तान्न जीवनमिति ज्ञापनाय सामान्यपदम्। अक्षरानन्दाधिकपूर्णानन्दविरहासन्नमरणनिवारणासामर्थ्यम-तादृशस्योचितमेवेति ज्ञापनाय हिशब्दः। तादृशस्य जीवनसम्पादनं प्रभो-रावश्यकमिति ज्ञापनाय एवकारः। तापात्मकस्याप्यानन्दात्मकत्वमेवेति ज्ञाप-नायानन्दपदम्। तदा प्रलापगुणगानादयो ये भवन्ति, तेपि तद्धर्मा एव। नीला-म्बुदश्यामोऽतिक्लेशवशाद् हृदयादपगच्छत्विति भावेपि हृदयान्नापसारयितुं शक्य इति ज्ञापनाय चाकाशत्वमुक्तम्। तदनन्तरं प्रकटीभूय, तदन्यः को वा प्रकर्षेण दर्शनस्पर्शाश्लेषभाषणादिभिः स्वरूपानन्ददानेन अन्यात्, पूर्वतापनि-वृत्तिपूर्वकमानन्दपूर्णं कुर्यादित्यर्थः। 'रसᳫ ह्येवायं लब्ध्वानन्दी भवती'ति पूर्ववाक्येनैवान्यव्यवच्छेदपूर्वकं भगवत्प्राप्तेरानन्दहेतुत्वप्राप्तावपि यत्पुनराह, तत्रापि व्यतिरेकमुखेन, तत्रापि जीवनहेतुत्वम्, तदपि सामान्यविशेषाभ्यां वारद्वयम्, तेन विरहसामयिकोक्तरूप एवार्थः श्रुतेरभिप्रेत इति निश्चीयते।

भाष्यप्रकाशः।

इत्यादि। तत्रेति। पूर्णरसानुभावनेच्छया भगवतानुभाव्यमाने विप्रयोगे। सामा-न्यपदमिति। क इति पदम्। अक्षरानन्दाधिकपूर्णानन्दविरहासन्नमरणनिवारणा-सामर्थ्यमिति। अक्षरानन्दादधिको यः पूर्णानन्दो भगवाँस्तद्विरहेणासन्नं यन्मरणं तन्निवारणे असामर्थ्यम्। तद्धर्मा इति। विप्रयोगरसात्मकस्य भगवत एव धर्माः। आकाशपदस्य ब्रह्म-वाचकत्वेपि व्यापकत्वरूपं धर्ममादाय तस्य तात्पर्यान्तरमाहुः नीलाम्बुदेत्यादि। अति-क्लेशवशादित्यस्य, इति भावेपीत्यनेन सम्बन्धः। प्राण्यादिति पदस्यार्थमाहुः तदनन्तर-मित्यादि। अस्याः श्रुतेरयमेवार्थ इत्यत्र किं गमकमित्यपेक्षायां तदाहुः रसमित्यादि। यत्पु-नराहेति। 'को ह्येवान्या'दित्यादिना आनन्दनं यत्पुनराह। अन्यथेति। विरहावस्थाया अन-भिप्रेतत्वे। अत्र 'अन्यात्' 'प्राण्या'दित्यत्रान्यतरेणैव जीवनसम्पादनसिद्धौ सामान्यविशेषभावो नातीवोपयुज्यत इत्यरुच्या 'प्राण्या'दित्यस्य व्याख्यानान्तरमाहुः तदवस्थेत्यादि। तथा च मास्तु सामान्यविशेषभावः, तथाप्युक्तव्याख्यानेन दोषनिवृत्तेर्भगवद्विप्रयोगदुःखस्य कर्माजन्यत्वे उक्त-

रश्मिः।

हिशब्द इति। श्रुतौ हिशब्दः। एवकारोऽवधारणार्थ इत्याहुः तादृशस्येति। तापात्मकस्येति। टिप्पण्यामेतत्स्पष्टम्। वागवर्णनीय आनन्दे भक्तविरहदुःखं कियत् यद् स्वस्वरूपं सुखमतिक्रम्य प्रभवेत्, किन्तु सुखाय तत्स्वरूपोपज्ञापकत्वात्। दुःखमिन्नं सुखमिति। एवकारो दुःखमनु तन्निव-र्तकौषधप्रयोगे सुखविशेष इत्यनुभवात्। प्रलापेति। 'मधुप कितवबन्धो' इति प्रलापः। प्रकृते। ब्रह्मवाचकस्य इति। आकाशस्तल्लिङ्गादित्यधिकरणात्। तात्पर्यान्तरमिति। आकाशत्वावच्छिन्ने आकाशपदशक्तिः। नीलाम्बुदश्यामे तात्पर्यम्। हृदयादपसारणाशक्येर्थे तात्पर्यान्तरम्। एतच्च ज्ञापनाय चेति भाष्यीयचकारार्थः। तदाहुरिति। गमकमाहुः। अत्रान्यादिति। अयं सामा-न्यविशेषाभ्यां वारद्वयमिति भाष्यार्थोपि। यन्नुज्यत इति। यस्मान्न युज्यत इति नञ्विशिष्टोर्थोत्र भाति। तदवस्थेत्यादीति। अन्यात् स्त्रीः प्राण्यात् पुरुषः, 'स्त्रियो वा पुरुषा वापि भर्तृभावेन केशवम्। हृदि कृत्वा गतिं यान्ति श्रुतीनां नात्र संशय' इति वाक्यात्। उक्तेति। भाष्योक्तव्याख्या-नान्तरेण पुनरुक्तिदोषस्य अन्यात् प्राण्यादित्यत्र निवृत्तेः। कर्माजन्यत्व इत्यस्य प्रमाणमित्यनेनान्वयः।

अन्यथा मरणहेत्वनुपस्थितौ जीवनहेतुत्वं न वदेदित्युक्तम् । तदवस्थापन्नः को वा पुरुषो जीवेदिति वार्थः ॥ १३ ॥

स्मर्यते च ॥ १४ ॥

भगवद्भावस्य मरणहेतुत्वम्, तेनैव च जीवनं तस्य ब्रह्मादिदुरापत्वं च श्रीभागवते स्मर्यते । 'ता मन्मनस्का मत्प्राणा मदर्थे त्यक्तदैहिकाः । ये त्यक्तलोकधर्माश्च मदर्थे तान् विभर्म्यह'मित्युपक्रम्य, 'धारयन्त्यतिकृच्छ्रेण प्रायः प्राणान् कथञ्चने'त्यादिश्रीप्रभुवचनम् । श्रीमदुद्धववचनं च 'एताः परं तनुभृतो भुवि गोपवध्वो गोविन्द एव निखिलात्मनि रूढभावाः । वाञ्छन्ति यं भवभियो मुनयो वयं च किं ब्रह्मजन्मभिरनन्तकथारसस्य' इत्यादि । तेन भगवत एव जीवनहेतुत्वं भावस्य च परमपुरुषार्थत्वं दुरापत्वं च स्फुटमवगम्यते ॥ १४ ॥

तानि परे तथा ह्याह ॥ १५ ॥

ननु हृदि बहिश्च रसात्मकभगवत्प्राकट्यम्, तददर्शनजनितो विरहभावः, तज्जनितस्तापः, तेन मरणोपस्थितिः, तन्निवर्तनं तदौत्कट्यं, तदा प्राकट्यं, ततः पूर्णस्वरूपानन्ददानादिकं लोके क्वचिदपि न दृष्टं श्रुतं वा वैकुण्ठेपीति कुत इत्याशङ्कायामाह । तानि । उक्तानि वस्तूनि परे प्रकृतिकालाद्यतीते वैकुण्ठादप्युत्कृष्टे श्रीगोकुल एव सन्तीति शेषः । तत्र प्रमाणमाह । तथाह्याह

---

भाष्यप्रकाशः ।

श्रुतिबोधितं भगवत्कर्तृकजीवनसम्पादनरूपमासन्नमरणलिङ्गमेव प्रमाणमित्यर्थः । अस्मिन् सूत्रे 'एकेषां स्पष्ट' इत्युक्त्या शाखान्तरेऽस्पष्ट इति बोधितम् । तेन भूमविद्यायां 'आत्मतः प्राण' इत्यादिकथने 'आत्मत एवाविर्भावतिरोभावा'वित्यपि कथनेन व्यापारतया विरहदुःखस्यापि स्मारणादिति । एतेनापि, 'न पश्यो मृत्युं पश्यती'ति श्लोकोक्तस्य दुःखस्य कर्मजन्यत्वं दृढीभवति । अदर्शनकथनेन तस्यैवाप्राप्तस्य बाधबोधनादिति बोध्यम् ॥ १३ ॥

स्मर्यते च ॥ १४ ॥ यद्यपि रसात्मकमेव ब्रह्म प्रकृत्येयं श्रुतिः प्रवृत्तेति नास्मिन्नर्थे सन्देहः, तथापि कश्चिदेतदर्थं सामान्यजीवपरतया शङ्केतेति तद्वारणायैतमर्थं स्मृत्योपष्टम्भयतीत्याशयेन सूत्रं पठित्वा व्याचक्षते भगवद्भावस्येत्यादि ॥ १४ ॥

तानि परे तथा ह्याह ॥ १५ ॥ सूत्रमवतारयन्ति नन्वित्यादि । न दृष्टं श्रुतं वेति । फलकोटौ न दृष्टं श्रुतं वा । इति कुत इति । इति हेतोः कुत एवमुच्यत

रश्मिः ।

उक्तेति । कः प्राण्यादिरस्याः पूर्वा उक्तश्रुतिस्तया बोधितम् । व्यापारतयेति । आत्मत इत्यत्र तसिलर्थः सव्यापारो हेतुरिति भावः । विरहेति । आत्मनः सव्यापारहेतोः विरहदुःखस्याविर्भाव इति स्मारणात् । एतेनेति । शाखान्तरीयेणापि । अदर्शनेति । न पश्यतीति योजनया अदर्शनकथनेन । तस्यैवेति । कर्मजन्यस्यैव दुःखस्य ॥ १३ ॥

स्मर्यते च ॥ १४ ॥ भाष्ये । जीवनेति 'तान् बिभर्म्यह'मिति जीवनहेतुत्वम् । 'वाञ्छन्ति य'मित्यादिना परमपुरुषार्थत्वादि ॥ १४ ॥ 2199

श्रुतिः । ऋग्वेदे पठ्यते 'ता वाँ वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः । अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि' । ता तानि वां भगवत्तदन्तरङ्गभक्तयोः सम्बन्धीनि वास्तूनि वस्तूनि गमध्यै प्राप्तुमुश्मसि कामयामहे । तानि कानीत्याकाङ्क्षायां गूढाभिसन्धिमुद्घाटयति । यत्र श्रीगोकुले गावो भूरिशृङ्गा बहुशृङ्गा रुरुप्रभृतयो मृगाश्च वसन्तीति शेषः । अयासः शुभावहाः । तत् उक्तगुणविशिष्टं उरु गीयत इत्युरुगायस्तस्य । गोप्यो हि सततं तं गायन्ति । अत एव तद्विधभक्तेषु कामान् वर्षतीति वृषा । तस्य परमं प्रकृतिकालाद्यतीतं पदं स्थानं भगवतो वैकुण्ठं भवति । तत्रैतादृशलीलाऽभावेन तस्मादपि परममुत्कृष्टम् । अत्र भूमाववभाति प्रकाशत इत्यर्थः । तथापि स्वदृग्गोचरो न भवतीति खेदेन अहेत्याह श्रुतिः । उरु गीयते परं सर्वत्र कामवर्षणं भक्तेष्वत्रैवेति तात्पर्येण वा विशेषणद्वयमुक्तम् । यमुनापुलिनतदुपवननिकुञ्जगह्वरप्रदेशाद्रिसान्वाद्यात्मकत्वेन भूरि बहुरूपम् । तथा चैतादृशं यत् परमं पदमवभाति तत्सम्बन्धीनि वास्तूनि कामयामह इति वाक्यार्थः सम्पद्यते । 'ते पदार्थो' इति वक्तव्ये सति 'तानी'त्युक्तिर्या, सा विषयवाक्यानुरोधादिति ज्ञेयम् ।

पुरुषोत्तमसम्बन्ध्यर्थानां तत्प्राकट्यस्थान एव प्राकट्यं युक्तमिति हिशब्देनाह ॥ १५ ॥

## अविभागो वचनात् ॥ १६ ॥ (४-२-४)

ननु लीलाया नित्यत्वेन तन्मध्यपातिनां तद्दर्शनं यथा नित्यम्, तथा तादृक्साधनाभावेपि निजानुकम्पया कदाचित् कमपि भक्तं तत्र नयति

---

भाष्यप्रकाशः ।

इत्यर्थः । आहेति । तस्य स्थानं, तत्र प्रमाणं चाह । सूत्रस्य श्रुतेश्च व्याख्यानमतिरोहितार्थम् ॥ १५ ॥ इति तृतीयं समानाधिकरणम् ॥ ३ ॥

अविभागो वचनात् ॥ १६ ॥ एवं नवमिः सूत्रैस्तत्तदाशङ्कानिराकरणेन वागादिलयप्रकारभेदावश्यकत्वं दृढीकृत्य पुष्टिमार्गविषय एव किञ्चिद्विचारयतीत्याशयेनाधिकरणमवतारयन्ति ननु लीलाया इत्यादि । अत्र यदि वियोजयति, तदापि कृपाविषयत्वात् संसारे न पातयति, किन्तु मुक्तिमेव ददातीति प्रथमकोटेराशयः । द्वितीयकोटिस्तु कादाचित्कत्वादनुपपन्नेति सन्देहबीजम् । शेषं भाष्यमतिरोहितार्थम् ।

रश्मि

तानि परे तथा ह्याह ॥ १५ ॥ अतिरोहितार्थमिति । उत्कृष्ट इति । वाराहेस्ति 'वैकुण्ठादप्युत्कृष्टं गोकुल'मिति चातुर्मास्यमाहात्म्ये । 'वेदार्थौ रामकृष्णयो'रिति कृष्णोपनिषच्छ्रुतेरर्थमाहुः श्रीगोकुल इत्यादि । एतादृशलीलाऽभावेनेति समत्वादेवम् । अहेति खेदे । अधोक्षजत्वाद् विरुद्धधर्माश्रयत्वाद्वाहुः पुरुषोत्तमसम्बन्ध्यर्थानामिति । औचित्यैवकारः । एवमतिरोहितार्थम् ॥ १५ ॥ इति तृतीयं समानाधिकरणम् ॥ ३ ॥

अविभागो वचनात् ॥ १६ ॥ अतिरोहितार्थमिति । निजेति । प्रमेयबलेन ।

चेत् तदा कञ्चित्कालं स्थापयित्वा, ततस्तं वियोजयति, न वेति संशयः। तोषस्य कादाचित्कत्वात् तत्साध्या तत्र स्थितिरपि तथैवेति वियोजयतीति पूर्वः पक्षः। तत्र सिद्धान्तमाह। तत्र प्रवेशितस्य तस्मादविभाग एव। कुतः। वचनात्। तैत्तिरीयक उक्तर्गनन्तरमेव, 'विष्णोः कर्माणि पश्यते'त्यृचा तत्र कृतानि कर्माण्युक्त्वा, तदग्रे वदति 'तद्विष्णोः परमं पद९सदा पश्यन्ति सूरय' इति। पुरुषोत्तमस्वरूपवित्त्वं सूरित्वम्। तच्च भक्त्यैवेति सूरयो भक्ता एव। तेषां सदा दर्शनमुच्यते। अन्यथा लीलानित्यत्वेनैव पूर्वगर्भ्यां तत्र स्थितगवादीनां प्रभुकर्मविषयाणां च भक्तानां सदा तद्दर्शनस्य प्राप्तत्वादिदं न वदेत्। तस्मादविभाग एव। एतेनापि लीलानित्यत्वं सिध्यति। एतद् यथा तथा विद्वन्मण्डने प्रपञ्चितम्॥ १६॥

इति चतुर्थाध्याये द्वितीयपादे चतुर्थमविभागाधिकरणम्॥ ४॥

---

भाष्यप्रकाशः।

अयं च विचारः प्रासङ्गिक इति बोध्यम्। तस्य स्थानस्य परिच्छिन्नत्वाद् भक्तानां च नानादेशत्वेन तत्र तत्र मरणे ततो निर्गत्यात्रागमनस्यावश्यकत्वात् सद्योमुक्तिप्रसङ्ग एतद्विचारो न युक्त इति शङ्क्यम्। दहराधिकरणन्यायेन तन्नित्यत्वस्य परिच्छिन्नत्वेपि व्यापकत्वस्य, एतस्य

रश्मिः।

उक्तर्गिति। 'ता वां वास्तूनी'त्याद्यृगनन्तरम्। तच्चेति फलात्मकपुरुषोत्तमज्ञानवत्त्वं च भक्त्यैव, 'भक्त्या मामभिजानाती'ति वाक्यात्। प्रभ्विति। निजानुकम्पया नित्यक्रीडायां निवेशितानाम्। तथा च प्रभुनिवेशनकर्मविषयाणाम्। इदम्। 'सदा पश्यन्ति सूरय' इत्युक्तं दर्शनम्। अविभाग एवेति। तेन 'अविभक्तं च भूतेषु विभक्तमिव च स्थित'मिति गीतायां विरुद्धधर्माश्रयत्वं नोक्तम्, किन्तु ब्रह्मस्वरूपमेवेति द्योतितम्। तेन भेदाभेदावित्यत्रापि भेद इवार्थः स्वरूपनिविष्टः, न तु विरुद्धधर्माश्रयत्वार्थम्। यथा 'प्रवर्तते यत्र रजस्तम' इत्यत्र, 'विद्ययाविद्यया शक्त्या मायया च निषेवित'मित्यत्र मायाविद्याविद्याभ्यां न विरुद्धधर्माश्रयत्वम्। मायाया अवस्थितमतेऽनङ्गीकारेण तया विरुद्धधर्माश्रयत्वासिद्धिः। विद्याविद्ययोस्तु ज्ञानस्वरूपत्वात् प्रभोरविद्यया तन्नाश्यया न विरुद्धधर्माश्रयत्वम्, तथा। नन्वविद्यायाः सर्वथा नाशे 'कृत्वातरन् वत्सपदं स्म यत्प्लवाः' इत्यस्य सुबोधिन्युक्तदिशाहन्ताममतयोरपि भेदनिबन्धनत्वात् तन्नाशे सुबोधिन्यादिविरोध इति चेत्। न। जगतो बन्धकत्वेन मोचकभक्तिमार्गाविषयत्वात्तदीयाहन्ताममतयोर्बन्धकत्वेपि भक्तिमार्गेऽहन्ताममतयोर्भक्तित्वेन मोचकत्वात्। इवार्थभेदनिबन्धनत्वेपि बन्धदोषाभावात् स्वरूपतो ब्रह्मत्वात्। एतेनापीति। 'पश्यन्ती'ति वर्तमानप्रयोगेण। ननु 'वर्तमानसामीप्ये वर्तमानवद्वे'ति सामीप्ये वर्तमानप्रयोगेपि 'पश्यन्ती'ति लडुपपत्तेर्न लीलानित्यत्वं सिध्यतीत्यत आहुः एतद्यथातथेति। 'जयति जननिवासो देवकीजन्मवाद' इत्यत्र निरोधलीलोपसंहारश्लोके 'जयती'त्यादिवर्तमानप्रयोगेण लीलानित्यत्वसाधने प्रपञ्चितम्। अत्राप्यष्टाविंशतिदोषास्ते सुवर्णसूत्रे विविच्य परिहृताः। भक्तिमार्तण्डेपि मया लिखिताः। एवमतिरोहितार्थमित्यर्थः।

प्रकृतमनुसरामः। तस्येति। श्रीगोकुलीयस्य (व्रजभवस्य) भक्तस्थानस्य। अत्रेति। भगव-

भाष्यप्रकाशः।

व्रजस्य तद्वृत्तिलाभस्थानतायाश्च व्युत्पादितत्वात् तादृशभक्तस्य यत्र क्वचन मरणेपि तदानीं लीलादिसहितस्य भगवतो हृदि वा बहिर्वा प्राकट्ये तत्स्थानादेरपि तत्रैव प्राकट्येन तत्रैव तस्य तत्प्राप्तेर्विद्वन्मण्डन एवोपपादितत्वेन सद्योमुक्तिविचार एतद्विचारस्य युक्तत्वादिति।

अन्ये तु, 'समाना चासृत्युपक्रमा'दित्यादिषु दशसु सूत्रेष्वपि प्रथमे मूर्धन्यनाडीद्वारा देवयानमार्गे गमनात् पूर्वं विद्वदविदुषोरुत्क्रान्तिसाम्यं व्याख्यातम्, तदोकोग्रसूत्रोक्त-ज्वलनादेव स्मर्यमाणतया गतार्थम्। यत्पुनरग्रेविद्यादिक्लेशानदग्ध्वा आपेक्षिकममृतत्वं व्याख्यातम्, तत्त्वग्रिमपादे गमनस्य प्रारब्धभोगार्थत्वाद्यदैव प्रारब्धनिवृत्तिस्तदैव मोक्ष इति व्युत्पादनेन दूषयिष्यते। यत्पुनर्द्वितीये 'तेजः परस्यां देवताया'मित्युक्तायाः साध्यक्षसप्राणसकरण-ग्रामसभूतान्तरस्य तेजसः परदेवतायां सम्पत्तेः सौषुप्तिकसम्पत्तिवत् संसारबीजभावयुक्तत्वं व्याख्यातम्, तसूत्क्रान्तिसामर्थ्यादेवार्थात् सिध्यतीत्यविचार्यम्। यत् तृतीये पूर्वोक्ततेजसो निष्क्रमणवेलायां दुर्ज्ञेयत्वम्, चतुर्थे च स्थूलशरीरदाहादिना लिङ्गशरीरस्य सूक्ष्मत्वादनुपमर्दम्, पञ्चमे च देहौष्ण्यरूपस्योष्मणः सूक्ष्मशरीरधर्मत्वं व्याख्यातम्, तत्प्रयोजनाभावादनर्थकम्। षष्ठे च 'न तस्य प्राणा उत्क्रामन्ती'ति शारीरब्राह्मणीयवाक्ये या षष्ठी, सा आर्तभागब्राह्मणीये 'न तस्मात् प्राणा उत्क्रामन्ती'ति वाक्ये या पञ्चमी तया सम्बन्धसामान्ये व्यवस्थाप्यमाना पञ्चम्य-र्थमेवाभिधत्ते इति परविद्यावतोपि जीवात्म प्राणानामुत्क्रमः, किन्तु सहैव प्राणैः स्थितिरिति

रश्मिः।

त्स्थाने। तद्वृत्तीति। भगवद्वृत्तिलाभस्थानतायाः। व्युत्पादितत्वादिति। 'सर्वोपेता चे'त्यधिकरणे 'लोकवत्तु लीला कैवल्य'मितिसूत्रे तथा। यद्वा। प्रथमाध्यायस्य द्वितीयपादे 'अन्तर उपपत्ते'रित्य-धिकरणे। तथाप्युपपादितत्वादित्यर्थापत्त्या पूर्वं व्युत्पादितत्वादित्यर्थः। पूर्वं तृतीयाध्याये उपसंहारपादे 'सर्वाभेदादन्यत्रेमे' इत्यादिसूत्रभाष्ये। तत्स्थानादेरिति। भगवतः स्थानम्, आदिना यद्धिया भावितं रूपं तत् तस्य। तत्रैवेति। व्रज एव। तस्य भक्तस्य। तत्प्राप्तेः भगवत्प्राप्तेः। दूषयन्ति स्म तद् ओकोग्रेति। वक्ष्यमाणाधिकरणेऽस्ति। गतार्थमिति। सूत्राणां न्यायरूपत्वादिति भावः। अग्र इति। 'अमृतत्वं चानुपोष्ये'ति सूत्रांशे। अनुपोष्येत्यस्यार्थो विद्यादिक्लेशानदग्ध्वेति। द्वितीय इति। 'तदापीते'रिति सूत्रे। तत् तेज आदिभूतं सूक्ष्मं आपीतेरासंसारमोक्षात् सम्यग् ज्ञाननिमित्ता-दवतिष्ठतः पुंसः। 'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुत'-मिति सूत्रार्थः। साध्यक्षं सजीवं तेजः। अत्र सूक्ष्मशरीरस्य लयः। संसारबीजेति। संसारबीजं कर्म, तदभावयुक्तत्वम्। 'संसारव्यपदेशा'दिति सूत्रांशव्याख्यानम्। संसारस्य संसारबीजस्य व्यप-देशादभावात्। तथात्र भाष्यं 'बीजभावावशेषैवैषा सत्सम्पत्ति'रिति। तत्तु क्रममुक्तिकथकाच्छ्रीभागवता-देवासन्दिग्धमित्याशयेन दूषयन्ति स्म तस्त्विति। तृतीय इति। 'सूक्ष्म'मिति सूत्रे। दुर्ज्ञेयत्व-मिति। सूक्ष्ममित्यस्यार्थः। 'प्रमाणतश्चे'त्यस्य सूत्रांशस्य नाडीनिष्क्रमणश्रुतेः। 'तथोपलब्धे'रित्यस्य सूत्रांशस्य तनुत्वात् सञ्चारोपपत्तिः, स्वच्छत्वाच्चाप्रतिघातोपपत्तिः, अत एव देहान्निर्गच्छन् पार्श्व-स्थैर्नोपलभ्यत इत्यर्थः। चतुर्थ इति। 'नोपमर्देने'ति सूत्रे। नोपमर्देनेत्यस्यार्थः स्थूलशरीरेत्यादिः। सूक्ष्मत्वादिति। सौत्रस्य अत इत्यस्यार्थः। पञ्चम इति। 'अस्यैवे'ति सूत्रे। षष्ठ इति। प्रतिषे-धादिति सूत्रे। आर्तभागेति। सप्तम्यन्तम्। तस्मादिति श्रुतिः। परविद्यावत इति। पञ्चम्य-

एवं पुष्टिमार्गीयभक्तवृत्तान्तमुक्त्वा ज्ञानमार्गीयस्य तमाह ।

**तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ १७ ॥ (४-२-५)**

पूर्वं, 'भूतेषु तच्छ्रुते'रित्यादिना मर्यादामार्गीयस्य वागादिलय उक्तोऽधुना तस्य जीवात्मन उत्क्रमणप्रकार उच्यते । 'स एतास्तेजोमात्राः समभ्याददानो

भाष्यप्रकाशः ।

पूर्वपक्षः । सप्तमाष्टमयोस्तु परविद्यावतः शरीरादेव प्राणाननुत्क्रम इति परविद्यावान् केवल एव मुच्यत इति सिद्धान्तः । नवमे च परविद्यावतः प्राणशब्दोदितानीन्द्रियाणि भूतानि च परे ब्रह्मण्येव सम्पद्यन्त इति । दशमे च, परविद्यावतो यः प्राणादीनां परब्रह्मणि लयः स नान्यप्राणलयवत् सविशेषः किन्त्वात्यन्तिक इति सिद्धान्तयन्ति । तत्र षष्ठं 'प्रतिषेधा'दिसूत्रमारभ्य सूत्रपञ्चके यत् प्रतिपादितम्, तदत्र पूर्वपक्षांशं विहाय, शेषं 'वाङ् मनसी'ति प्रथमाधिकरण एव हेतूक्तिपूर्वकं पुष्टिमार्गीयभक्तेन्द्रियाणां प्रतिपादितम् । ततो मर्यादामार्गीयाणां भक्तानां ज्ञानिनां च यत्ततो वैलक्षण्यम्, तदपि 'भूतेषु तच्छ्रुते'रिति द्वितीये प्रतिपादितम् । तावता सद्योमुक्तिप्रकारः सर्वोऽपि विचारित इति तेनैव गतार्थम् । यानि पुनस्तैरपरविद्यावदविद्वत्साधारण्येन तत्परतया व्याख्यायन्ते, तान्यत्र विरोधाभावात् पूर्वोक्तदूषणेनैव विरुद्धांशदूषणस्य जातत्वादुपेक्षितानि ॥ १६ ॥ ४ ॥ इति चतुर्थमविभागाधिकरणम् ॥ ४ ॥

अतः परं क्रममुक्तिप्रकारः पितृयानेन भ्रमतां च प्रकारो विचारणीय इति तं वक्तुं सूत्रमवतारयन्ति एवमित्यादि ।

**तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ १७ ॥** तत्र को वृत्तान्त इत्याकाङ्क्षायामाहुः पूर्वमित्यादि ।

रश्मिः ।

न्तम् । जीवादिति शारीरादिसूत्रांशार्थः । नेति । श्रुतिविरोधान्न प्राणानामुत्क्रम इति विरोधादिति सूत्रांशार्थः । तथा च शारीरादुत्क्रान्तिप्रतिषेधाद् इति चेद् इत्यन्तः पूर्वपक्षः । नेति सिद्धान्ते योज्यं सूत्रे । सप्तमेति । 'स्पष्टो ह्येकेषाम्' 'स्मर्यते चे'त्येतयोः । प्राणाननुत्क्रमः । 'अत्रैव समवनीयन्त' इति श्रुतेरत्रैव लयः । इत्नीति । इत्येवम् । 'सर्वभूतात्मभूतस्य सम्यग्भूतानि पश्यतः । देवा अपि मार्गे मुह्यन्त्यपदस्य पदैषिण' इति 'स्मर्यते चे'ति सूत्रस्य स्मृतिसहायं सिद्धान्तमाहुरित्यर्थः । नवम इति । 'तानि परे' इति सूत्रे । 'तथा ह्याहे'त्यस्यार्थस्तु 'एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ती'ति छान्दोग्यश्रुतिस्तथा ह्याहेति । दृष्टान्तोऽपि । 'यथा नद्यः समुद्रं प्राप्यास्तं गच्छन्ती'ति । षोडश कलाः सूक्ष्मदेहरूपाः । दशम इति । 'अविभाग' इति सूत्रे । 'वचना'दित्यस्य तु कलानां लयोक्त्यनन्तरं 'भिद्येते चासां नामरूपे' इति वचनादित्यर्थः । पूर्वोक्तेति । 'समाना चासृत्युपक्रमा'दित्यादिसूत्रभाष्योक्तदूषणेनैव । विरुद्धांशेति । यथा 'अथातो ब्रह्मजिज्ञासे'त्युक्ते विरुद्धस्य 'अथातो धर्मजिज्ञासे'त्यस्य धर्मांशस्य दूषणमप्राकरणिकत्वं तस्य जातत्वात्तदुपेक्षा तद्वत् ॥ १६ ॥

इति चतुर्थमविभाग इत्यधिकरणम् ॥ ४ ॥

**तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ १७ ॥** अतः परमिति । सद्योमुक्तिविचारानन्तरम् ।

हृदयमेवान्ववक्रामती'ति श्रुतेस्तस्यात्मन ओक आयतनं हृदयं तदग्रं पूर्वं प्रज्वलति, पूर्वं तथा अप्रकाशमानमपि तदा प्रकाशत इति यावत्। तदा तत्प्रकाशितं द्वारं निर्गमनमार्गो यस्य तादृश उत्क्रामति। यतः श्रुतिस्तथाह 'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वे'त्यादि।

भाष्यप्रकाशः।

मर्यादामार्गीयाणां सद्योमुक्तिर्द्विधा, हृदय एव साधनप्राबल्ये ब्रह्म प्राप्नोतीत्येकः, तदभावे ब्रह्माण्डमध्ये दशमद्वाराद्विनिर्गतस्य तत्रैवेत्यन्यः। क्रममुक्तिब्रह्माण्डभेदनोत्तरं ततो बहिः। तत्राद्यायां जीवस्य नोत्क्रमणम्। द्वितीयतृतीययोस्तदपेक्षासत्त्वात् तत्प्रकार उच्यत इत्यर्थः। एवं वृत्तान्तस्वरूपमुक्त्वा सूत्रं व्याकुर्वन्ति स इत्यादि। प्रकाशत इति। इन्द्रियरूपाभिस्तेजोमात्राभिः प्रकाशते। सूत्रशेषं पूरयन्ति तादृश उत्क्रामतीति। श्रुतिस्तु बृहदारण्यके शारीरब्राह्मणे। 'स वा अयमात्मा अबल्यं नीत्य संमोहमिव न्येत्यथैनमेते प्राणा अभिसमायन्ति, स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति यत्रैष चाक्षुषः पुरुषः पराङ् पर्यावर्ततेऽथारूपज्ञो भवत्येकीभवति न पश्यतीत्याहुः। एवं न जिघ्रति, न वदति न शृणोति, न मनुते, न विजानातीत्याहुरित्युक्तम्। ततः, 'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ती'त्यादिना 'इति तु कामयमान' इत्यन्तम्। अर्थस्तु, यः पूर्वब्राह्मणे 'एभ्योऽङ्गेभ्यः सम्प्रमुच्ये'त्यादिना म्रियमाणावस्थ उक्तः, सोऽयं शारीर आत्मा जीवो यत्र यस्यां म्रियमाणावस्थायां अबल्यं नीत्य अबलभावं नितरां प्राप्य, संमोहमिव न्येति सम्मोहः संमूढता विवेकराहित्यं तन्नितरां प्राप्नोति, अथ तदा एनं करणस्वामिनम्, एते प्राणा वागादयोऽभिसमायन्ति आभिमुख्येन निकट आयान्ति। स एतास्तेजोमात्रा विषयप्रकाशकानीन्द्रियाणि चक्षुरादीनि समभ्याददानः सम्यगाभिमुख्येन गृह्णान उपसंहरमाणो हृदयं स्वायतनमेवान्ववक्रामति तल्लक्षीकृत्य आयाति, स यत्र वर्तते, तत्र एष चाक्षुषः पुरुष आदित्यांशश्चक्षुर्देवतारूपः पराङ् पर्यावर्तते स्वकार्याद्विमुखो भवति। अथ तदा 'स एष' इत्यनेनोक्तश्चक्षुरधिष्ठाता अरूपज्ञो भवत्येकीभवति करणग्रामेण। तदा न पश्यतीत्याहुः। पार्श्वस्था न पश्यतीत्याहुः। एवमग्रेपि। तदुत्तरावस्थामाह तस्येत्यादि। तस्य लिङ्गोपाधिकस्य ह एतस्य मुमूर्षोर्हृदयस्य एतत्स्थानस्य अग्रं नाडीमुखं प्रद्योतते पूर्वमप्रकाशमपि तदानीं प्रकाशते। तेन प्रद्योतेन एष आत्मा शरीरान्निष्क्रामति

रश्मिः।

को वृत्तान्त इति। सङ्गतिबोधको वृत्तान्तः कथा। साधनेति। प्रमेयबलमपि द्रष्टव्यम्। तदभावे साधनप्राबल्याभावे। दशमेति। नवद्वाराणि देहे। दशमद्वारं (नाडीद्वारं) हृदयाग्रद्वारम् तस्मात्। तत्रैवेति। हृदय एव। इति सद्योमुक्तिः। तदपेक्षेति। जीवोत्क्रमणापेक्षासत्त्वात्। स इत्यादीति। तेजोमात्रा इन्द्रियाणि। प्रकाशत इति। तेन प्रकाशमानं हृदयाग्रं भवति। मांसपिण्डं हृदयं आकाशरूपम्। 'काशृ दीप्ता'विति धातुपाठात् तत्सूक्ष्मत्वात् तेजोमात्राभिः प्रकाशत इत्यर्थः। पूर्वं तथा अप्रकाशमानमपीति भाष्यात्। पूर्वेति। ज्योतिर्ब्राह्मणे। इत्यादिनेति। 'प्रतिन्यायं प्रतियोन्याद्रवति प्राणायैवे'ति। स्पष्टोऽर्थः। उपसंहारेति। उपसंहारं कुर्वाणः। अप्रकाशमानमिति। परिलोक्तम्। स्वमते तथा अप्रकाशमानं यतः। यमगतीति। यमकृता

यद्यप्येतावत् सर्वजीवसाधारणम्, तथापि विद्वांस्तु नेतरवदितरनाड्या निष्क्रामति, किन्तु, शताधिकया एकशततम्या नाड्या मूर्धन्या निष्क्रामति। 'शतं चैका हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका। तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ती'ति यतः श्रुतिराह। अत्र हेतुमाह। हार्दानुगृहीत इति। हेत्वन्तर्गर्भं विशेषणम्। 'गुहां प्रविष्टौ परमे परार्धे' इति श्रुतेर्हृदयाकाशसम्बन्धी यः परमात्मा तदनुग्रहात् तथैव भवतीत्यर्थः। अनुग्रहे हेतुः विद्यासामर्थ्यादिति। तस्या विद्यायाः शेषभूताङ्गभूता या गतिः प्रव्रजनरूपा, तच्छेषभूतैव या भगवत्स्मृतिपरम्परा च ताभ्यां च यो भगवदनुग्रहस्तेन तथेत्यर्थः॥ १७॥ इति चतुर्थाध्याये द्वितीयपादे पञ्चमं तदोकोधिकरणम्॥ ५॥

---

भाष्यप्रकाशः।

निर्गच्छति। चक्षुराद्यन्यतमेभ्यः शरीरदेशेभ्यः। तदुत्तरव्यवस्थामाह तमुत्क्रामन्तमित्यादि। तं जीवात्मानम्। प्राण आसन्यः। प्राणा इन्द्रियाणि। अयं च निष्क्रमणप्रकारो यमगतिरहितानाम्। यमगतीनां तु, 'अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बला'दित्यादिवाक्यात् पिण्डितकरणग्रामस्य जीवस्य बलान्निष्क्रामणम्। एवं सति यद्यप्येतावदू ओकोग्रज्वलनादिकं यमगतिरहितचर्षणीजीवानां विदुषां च साधारणम्, तथापि, विद्वांस्तु नेतरवदितरनाड्या निष्क्रामति, किन्तु शताधिकयेत्याद्युक्तमार्गेण। श्रुतिस्तु छान्दोग्ये दहरविद्यास्था। शेषं स्फुटम्।

तथा च 'स यदास्माच्छरीरान्निष्क्रामती'ति श्रुत्युक्तो निष्क्रमणप्रकारो विद्वदविदुषोस्तुल्यो वा विशेषवान् वेति सन्देहे, कामयमानतया उभयोस्तुल्यत्वेन शारीरब्राह्मणोक्तरीत्या तुल्य एवेति प्राप्ते। हृदयाग्रप्रद्योतनपर्यन्तं विद्वदविदुषोस्तुल्यो निर्गमनमार्गः प्रकारश्च विदुषोऽतिरिक्त इति सिद्धान्तो बोधितो ज्ञेयः। एवमेतेन क्रममुक्तिप्राप्सूनां जीवस्य शरीरान्निर्गमनप्रकार उक्तः। तत्र ये मूर्ध्नो निष्क्रामन्ति, ते दशमद्वारं भित्त्वा तत्रैव सद्यो ब्रह्मणि लीयन्ते। तथा सति करणग्रामो भूतेष्वेव लीयत इत्यर्थादायाति॥ १७॥ इति पञ्चमं तदोकोधिकरणम्॥ ५॥

रश्मिः।

गतिर्यमगतिस्तद्रहितानाम्। पिण्डितेति। पिण्डितः पिण्डीभावो विद्यते यत्र। तारकादिभ्य इतच्। करणानामिन्द्रियाणां ग्रामः। यमगतीति। चृष प्रजननैश्वर्ययोः। चर्षण्यो भ्रमणशक्तयः तद्युक्तानां जीवानाम्। इत्याद्युक्तमार्गेणेति। इत्यादिभाष्योक्तमार्गेण। शेषमिति। मूर्धानमिति। मूर्धानं लक्ष्यीकृत्य। हेत्वन्तर्गर्भेति। हेतुरन्तर्गर्भो यस्य विशेषणस्य। हार्दानुगृहीतत्वादित्यर्थः। हार्दानुग्रहमाहुः गुहामिति। तथैवेति। हार्दानुगृहीत एव। तच्छेषेति सूत्रांशं विवृण्वन्ति स्म तस्या इति। गतिर्गमनं तत्प्रव्रजने प्रधानमिति तुरीयत्वाच्च गतिः प्रव्रजनम्। मुख्याधिकारत्वाच्च। संन्यासनिर्णयग्रन्थोक्तम्। तत्तु आयुष उत्तरभागेऽवशिष्टे पञ्चविंशतिवर्षे भवति। पारिभाषिकं प्रव्रजनं तु गृहस्थाश्रमेप्यस्ति। काम्यकर्मसर्वकर्मफलत्यागात्। तदुक्तं गीतायां 'काम्यानां कर्मणां त्यागं संन्यासं कवयो विदुः। सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणा' इति। अनुस्मृतेरर्थमाहुः तच्छेषेति। उक्तभक्त्यादिविद्याशेषभूता भगवत्स्मृतिपरम्परायां अनुस्मृतिर्भवति। सा चानुस्मृतिर्ग्रन्थोक्तरीत्या ग्राह्या। श्रवणादीत्यनुक्त्वा स्मरणपरम्परोक्तेरयं भावः। तुरीयाश्रमसाहचर्याद् भक्त्या प्रसन्ने हरौ योगप्रयुक्तेः। सैकादशचतुर्दशाध्याये। 'नान्यानि चिन्तयेद्भूयः सुस्मितं भावयेन्मुखम्। तत्र

## रश्म्यनुसारि ॥ १८ ॥ ( ४-२-६ )

'अथ या एता हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति, शुक्लस्य नीलस्य पीतस्य लोहितस्येत्यसौ वा आदित्यः पिङ्गल' इत्युपक्रम्य, अग्रे पठ्यते 'तमभित आसीना आहुर्जानासि मां जानासि मामिति। स यावदस्माच्छरीरादनुत्क्रान्तो भवति तावज्जानात्यथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभि-

भाष्यप्रकाशः।

रश्म्यनुसारी ॥ १८ ॥ एवं ब्रह्माण्डमध्ये सद्योमुक्तस्य व्यवस्थामुक्त्वा क्रमेण मुच्यमानस्य व्यवस्थां वदतीत्याशयेन प्रासङ्गिकमेतस्याधिकरणस्य विषयादिकमाहुः अथ या एता इत्यादि। श्रुतिस्तु छान्दोग्यस्थदहरविद्यायाम्।

अर्थस्तु, यो हृदयपुण्डरीकगतयथोक्तगुणविशिष्टब्रह्मोपासकः स या एता हृदयस्य पुण्डरीकाकारस्य ब्रह्मोपासनस्थानस्य सम्बन्धिन्यो नाड्यो हृदयमांसपिण्डात् सर्वतो विनिःसृता आदित्यमण्डलाद्रश्मय इव ता एताः पिङ्गलस्य वर्णविशिष्टस्याणिम्नः सूक्ष्मरसस्य पूर्णा इति सर्वत्राध्याहारः। तिष्ठन्ति। शुक्लस्य नीलस्य पीतस्य लोहितस्य सौरं तेज एव शरीरे पित्तं तत्पार्थिवेन कफेन न्यूनाधिकभेदादनुविद्धं सत् शरीरस्थं रसं पाचयत्तत्तद्वर्णं करोति। तत्रादित्यसम्बन्ध एव कारणम्। पित्तरूपेण तेजसा आदित्यस्य तत्र सत्त्वात्। तदाह श्रुतिः 'असौ वा आदित्यः पिङ्गल एष शुक्ल' इत्यादि। तथा चादित्यमण्डलस्य पञ्चवर्णत्वात्तदंशभूतं पित्तमपि तादृशमपि स्वपाचितं शारीरं रसमुपरञ्जयति, तदा तत्तन्नाडीस्थो रसस्तथा भवतीत्यर्थः। तदेतदुपक्रम्य ततो महापथदृष्टान्तेन आदित्यरश्मीनामुभयलोकसंसर्गित्वमुक्त्वा,

रश्मिः।

लब्धपदं चित्तमाकृष्य व्योम्नि धारयेत्। तच्च त्यक्त्वा मदारोहो न किञ्चिदपि चिन्तये'दिति सार्धश्लोके उक्ता। तथेति। हार्दानुगृहीतः। एवं शेषं स्फुटम्। अधिकरणत्वायाहुः तथा चेति ॥ १७ ॥

इति पञ्चमं तद्योकोधिकरणम् ॥ ५ ॥

रश्म्यनुसारी ॥ १८ ॥ प्रासङ्गिकमिति। स्मार्तम्। तथा चारणे। 'स्मृतिः प्रत्यक्षमैतिह्यमनुमानचतुष्टयम्। एतैः सर्वैरादित्यमण्डलमेव विधास्यत' इति। एतन्मूलभूता श्रुतिः। 'सूर्य आत्मा जगतस्तस्थुषश्च'। जगतः जङ्गमस्य। तस्थुषः स्थावरस्य। हृदयेति। हृदयपुण्डरीकगतं यथोक्तगुणविशिष्टं ब्रह्म। तस्योपासक इत्यर्थः। हृदयमांसेति। स्मार्तपक्षे हृदयरूपमांसे आकाशे सूर्य आत्मा। आकाशो मांस' इत्यत्र संहिता। उपासनवशाद् अणोः सूर्यजीवस्याप्रत्यक्षेण हृदयमांसपिण्डादित्युक्तम्। सूक्ष्मेति। अपां पुष्पत्वादादित्यरसत्वमुक्तम्, पिङ्गलस्य हृदयद्वारा सूर्यस्य पिङ्गले सत्त्वात्। एवमित्यन्तां श्रुतिं व्याकृत्य 'असावा' इत्यादिश्रुतिं व्याकर्तुमाहुः सौरं तेज इति। पित्तमित्यौचित्यात्। कफस्य पार्थिवत्वं कठिनत्वात् शुष्कस्य। न्यूनाधिकेति। न्यूनं पित्तम्, कफोऽधिकः। अधिकं पित्तम्, कफो न्यून इति। एवं न्यूनाधिकप्रकारात्। करोतीति। पञ्चवर्णत्वादादित्यस्य मूलस्य रसं तत्तद्वर्णं करोति। उपरञ्जयतीति। रञ्ज रागे। इत्यर्थोऽर्थ इति पूर्वेणान्वयः। उद्देश्यतावच्छेदकविधेययोरैक्यं बाधकं न भवति। घटो घटो न पट इति प्रयोगदर्शनात्। इत्युपक्रम्येत्यादिभाष्यं विवृण्वन्ति स्म तदेतदिति। महापथेति। 'तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमं चामुं चैवमेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुं चामु-

रूर्ध्व आक्रमत' इति । अत्र 'तमभित' इत्याद्युक्तेः सर्वसाधारण्युत्क्रान्तिः प्राप्यते । पूर्वमादित्यत्वेनोक्तस्य पिङ्गलस्य रश्मिभिरूर्ध्वाक्रमणं च तथा । अत्र संशयः । ओकोग्रज्वलनादेरितरसाधारण्येपि यथा हार्दानुग्रहाद्विलक्षणा गतिर्विदुष उक्ता, तथा रश्म्यनुसारित्वमपीतरसाधारणम्, उतास्मिन्नेवेति । तत्रावधारणमाह । **रश्म्यनुसारी** । निष्क्रामत्ययमेवेति ॥ १८ ॥

**इति चतुर्थाध्याये द्वितीयपादे षष्ठं रश्म्यधिकरणम् ॥ ६ ॥**

---

भाष्यप्रकाशः ।

तासां नाडीनामादित्यरश्मिसंसृष्टत्वं चोक्त्वा, तासु नाडीषु सुप्तस्य सुषुप्तिं चोक्त्वा, ततो मरणावस्थां बोधयन्ती श्रुतिः पठ्यते तमभित इत्यादि । तदर्थस्तु स्फुटः ।

एवं श्रुतिमुपन्यस्यात्र संशयजनकं विषयमाहुः अत्रेत्यादि । उत्क्रान्तिः शरीराभिर्गमनम् । पिङ्गलस्येति । वर्णविशिष्टस्यादित्यांशभूतस्य पित्तस्य । संशयस्तु स्फुटः । पूर्वपक्षस्तु, ओकोग्रज्वलनादीनां साधारण्याद्रश्म्यनुसारित्वमपि तत्प्रवाहपातात्साधारणमिति । सिद्धान्तमाहुः तत्रेत्यादि । अत्र प्रमाणं तु, 'अथैतैरेव रश्मिभिरूर्ध्व आक्रमत' इत्येतदनन्तरं, 'स ॐमिति चाहोद्वा मीयते स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छत्येतद्वै खलु लोकद्वारं विदुषां प्रपदनं निरोधोऽविदुषा'मिति तदग्रिमा श्रुतिः । तत्र हि स विद्वान् ॐकारेण परमात्मानं ध्यायन् ॐमिति चाह, यथापूर्वं वदति, उत् ऊर्ध्वं वा मीयते गच्छति । स विद्वान् यावन्मनः क्षिप्येत् यावता कालेन मनोव्यापारं कुर्यात्तावता कालेनादित्यं गच्छति प्राप्नोति । एतद्वै आदित्यरूपं खलु निश्चितं लोकद्वारं ब्रह्मलोकप्रवेशमार्गः । विदुषां प्रपदनं प्राप्तिकरणभूतम्, निरोधोऽविदुषाम्, ये अविद्वांसस्तेषां तेजसा निरोधजनकमिति तस्या अर्थात् । अतो विदुष एव रश्म्यनुसारित्वावधारणमित्यर्थः । अयं च करणग्रामसहितो गच्छति । 'यदि प्रयास्यनृप पारमेष्ठ्यं वैहायसानामुत यद्विहारम् । अष्टाधिपत्यं गुणसन्निवाये सहैव गच्छेन्मनसेन्द्रियैश्च' इति श्रीभागवतोक्तन्यायस्यात्रापि शक्यवचनत्वात् । एतस्य करणग्रामलयस्तु प्रारब्धसमाप्तौ मुक्तिदशायां भूतेष्वेव बोध्यः । तथैवोपक्रान्तत्वादिति ॥ १८ ॥ इति षष्ठं रश्म्यधिकरणम् ॥६॥

रश्मिः ।

ष्मादादित्यात् प्रतायन्त' इत्यनयोक्त्वा । महापथशब्दः सप्तम्यन्तः । आतत इति च ससम्यन्तम् । प्रतायन्त इति । तनु विस्तारे इत्यस्य रूपम् । तासामिति । ता आसु नाडीषु सृप्ताः आभ्यो नाडीभ्यः प्रतायन्तेऽमुष्मिन्नादित्ये सृप्ता इत्यनयोक्त्वा । ता रश्मयः । तास्विति । 'तद्यत्रैतत् सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सृप्तो भवति तन्न कश्च पाप्मा स्पृशति, तेजसा हि तदा सम्पन्नो भवती'त्यनयोक्त्वा । श्रुतिः पठ्यते इति । 'अथ यत्रैतदवलिमानं नीतो भवती'त्यनन्तरं 'तमभित' इत्यादिश्रुतिः पठ्यते । अवलिमानं अवलभावम् । स्फुट इति । अस्मिन्नेवेति । विदुष्येव । एवं स्फुटः । तत्रेत्यादीति । अयमेवेति । विद्वानेवेत्यवधारणमित्यर्थः । चाहेति । श्रुतौ पूर्वो चाकारः समुच्चयार्थक इति भावः । केन सह समुच्चय इत्याकाङ्क्षा तु 'ॐकारेणे'त्यादिग्रन्थेनोपशान्ता । यथापूर्वमिति । पूर्वं ध्यानविषयः तमनतिक्रम्य । आहेत्यस्यार्थो वदतीति । वा आह उद् वा मीयते इति श्रुतौ पदच्छेदः । येऽविद्वांस इति । य इति सामान्योक्त्या पुष्टा अपि । नाशपदं विहाय निरोधपदोपादानादविदुषां नाशः पुष्टानामधिकार्यादित्यप्रेरणया निरोधो निरोधलक्षणग्रन्थोक्तः । भगवतोऽत्यन्तानुग्रहात् ॥ १८ ॥ इति षष्ठं रश्म्यधिकरणम् ॥ ६ ॥

निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥१९॥ (४।२।७).

विदुष उत्क्रमणे हार्दानुग्रहकृतो यथा विशेषः, तथा कालविशेषकृतोपि विशेषो भविष्यतीत्याशङ्क्य तन्निरासमाह। तत्राहोरात्रकृतोऽयनकृतो वा स भवेत्। तत्राद्यकृतो नास्तीत्याह नेति। तत्र हेतुः। सम्बन्धस्येत्यादि। अनुग्रहहेतुभूतो यः पूर्वोक्तो गत्यनुस्मृतिसम्बन्धस्तस्य यावद्देहभावित्वात् तत्कार्यस्यानुग्रहस्यापि तथात्वात् कालस्याप्रयोजकत्वमित्यर्थः। अत्र प्रमाणमाह। दर्शयति यतः श्रुतिः। 'तमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमीप्सन्तः प्रव्रजन्ती'ति ॥ १९ ॥

हार्दानुग्रहस्य मुक्तिहेतोर्विद्यमानत्वादयनविशेषोप्यप्रयोजक इत्याह।

---

भाष्यप्रकाशः।

निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥ १९ ॥ इत्याशङ्क्येति। एवं निशि नेत्यनेनाशङ्क्य। तथा च निशीतिपदं मुक्तिप्रतिबन्धककालविशेषोपलक्षकम्। तत्र न आदित्यद्वारेण गमनम्। अतो ज्ञानिना मुक्त्यर्थं योगादिना कालः प्रतीक्षणीय इत्याशङ्केत्यर्थः। सिद्धान्तं व्याकुर्वन्ति अत्रेत्यादि। अर्थस्तु स्फुटः।

अन्ये तु, सम्बन्धस्य 'यावद्देहभावित्वा'दित्यत्र नाडीसम्बन्धस्य तथात्वं व्याकुर्वन्ति। 'दर्शयती'त्यत्र, 'अमुष्मादादित्यात् प्रतायन्ते ता आसु नाडीषु सृप्ता'इति छन्दोगश्रुतिं दर्शयति। तत्र यद्यपि पूर्वसूत्रोक्तं रश्म्यनुसारित्वमेव, 'निशि ने'त्यनेनाक्षिप्यत इति प्रतीयते, न तु कालविशेषनिषेधः, कालान्तरस्य सहकारित्वापादनं वा, तथाप्ययनसूत्रे रश्म्यभावशङ्कानुदयेन तत्रैतत्सूत्रोक्तस्य तत्परिहारहेतोरसङ्गत्या, 'अतश्चे'त्यतिदेशासङ्गतिरिति तत्र उदीक्षानुपपत्तेर्विद्याया अपाक्षिकफलत्वस्य मृत्योरनियतकालत्वस्य चेति कल्पितहेत्वन्तराध्याहारापेक्षया अतिदेशसामञ्जस्याय सम्बन्धपदे हार्दानुग्रहजनकगत्यनुस्मृतिसम्बन्धग्रहणस्यैव युक्तत्वाच्चिन्त्यम्। तथा च, 'रश्म्यनुसारि'सूत्रेपि स हेतुर्बोध्यः ॥ १९ ॥

रश्मिः।

निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वात् दर्शयति च ॥ १९ ॥ अत्रेत्यादीति। तत्राहोरात्रकृत इत्यपि भाष्ये पाठः। स्फुट इति। पूर्वोक्त इति। तदोकोग्रसूत्रोक्तः। यावदिति। साकल्ये। देहानां साकल्यं यावद्देहम्। अव्ययीभावः। यावद्देहं भावी यावद्देहभावी-तत्त्वात्। 'को नु राजन्निन्द्रियवान् मुकुन्दचरणाम्बुजम्। न भजेत् सर्वतोमृत्युरुपास्यममरोत्तमै'रिति वाक्यात्। एवं स्फुटः। ता आस्विति। ता रश्मयः। आक्षिप्यते इति। नन्वर्थनिषेधप्रतियोगित्वेनाक्षिप्यते। रश्म्यभावेति। रश्म्यनुसारित्वनिषेधशङ्कानुदयेन। असङ्गत्येति। अर्थद्वारासङ्गतिस्तया। अतिदेशेति। हेत्वतिदेशासङ्गतिः। तत्र उदीक्षेति। अयनसूत्रे वक्ष्यमाणे 'अथापि रात्रावुपरतोऽहरागममुदीक्षेते'त्युक्तोदीक्षाऽहरागमोदीक्षा तस्या अनुपपत्तेः उत्तरायणोदीक्षासत्त्वात्। तथा विद्याया पक्ष उत्तरायणस्तत्सम्बन्धिपाक्षिकः, न पाक्षिकं फलं यस्याः सा अपाक्षिकफला तत्त्वस्य। तत्सम्बन्धि तदभिन्नं यत् हेतोः नाडीसम्बन्धस्य यावद्देहसम्बन्धित्वादित्यस्माद् अन्यत् तद्धेत्वन्तरं हेत्वन्तरद्वयम्। तदपेक्षया। अतिदेशेति। तथा च शङ्करभाष्यम्। अतश्चायन इत्यत्र। 'अत एव उदीक्षानुपपत्तेः अपाक्षिकफलत्वाच्च विद्याया' इति। तस्यातिदेशस्य साम-

## अतश्चायनेपि दक्षिणे ॥ २० ॥

स्पष्टार्थमिदम् ॥ २० ॥

---

भाष्यप्रकाशः ।

अतश्चायनेपि दक्षिणे ॥ २० ॥ स्पष्टार्थमिति । चोऽवधारणे 'नेति चेन्ने'ति पूर्वसूत्रादनुवर्तते । तथा च 'दक्षिणेऽयने ने'ति चेन्नेति पूर्वपक्षस्य, 'अतश्चे'त्यनेनातिदिष्टस्य तत्परिहारहेतोश्च स्फुटत्वात्तथेत्यर्थः ॥ २० ॥

रश्मिः ।

अस्याय अत इति सौत्रातिदेशस्य वा सामञ्जस्याय । स इति । हार्दानुग्रहजनकगत्यनुस्मृतिसम्बन्धः । रश्म्यनुसारी विद्वानेव निष्क्रामति हार्दानुग्रहजनकगत्यनुस्मृतिसम्बन्धात् । अपरेषां तदोकोग्रज्वलनमेकसूत्रमधिकरणम् । अर्थस्तु न विरुद्धः । रश्म्यनुसारीत्यधिकरणं द्विसूत्रम् । अतश्चायनाधिकरणं द्विसूत्रमिति । 'अथैतैरेव रश्मिभिरूर्ध्वमुत्क्रामती'त्यत्र रश्म्यनुसारित्वमुक्तम्, तत्किमविशेषेणैवाह्नि रात्रौ वा म्रियमाणस्य रश्म्यनुसारित्वम्, आहोस्विदह्न्येवेति संशये, अविशेषश्रवणादविशेषेणैव रश्म्यनुसारीति प्रज्ञायते इति रश्म्यनुसारिसूत्र उक्तम् । 'निशि नेति'सूत्रे अस्त्यहनि नाडीरश्मिसम्बन्ध इति । अहनि मृतस्य स्याद् रश्म्यनुसारित्वम्, रात्रौ तु प्रेतस्य न स्यात्, नाडीरश्मिसम्बन्धविच्छेदादिति चेत्, न, नाडीरश्मिसम्बन्धस्य यावद्देहभावीति । शिराकिरणसम्पर्कः । दर्शयति चैतमर्थं श्रुतिः । 'अमुष्मादादित्यात् प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते, अतोऽमुष्मिन्नादित्ये सृप्ता' इति । तस्मादविशेषेणैवेदं रात्रिन्दिवं रश्म्यनुसारित्वमित्युक्तम् । अतश्चायनाधिकरणे द्विसूत्रे प्रथमे अत एव उदीक्षानुपपत्तेरपाक्षिकफलत्वाच्च विद्याया अनियतकालत्वाच्च मृत्योर्दक्षिणायनेपि म्रियमाणो विद्वान् प्राप्नोत्येव विद्याफलमित्युक्तम् । द्वितीये 'यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः । प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभे'ति कालप्राधान्येनोपक्रम्याहरादिकालविशेषः स्मृतावपुनरावृत्तये नियमितः । कथं रात्रौ दक्षिणायने वा मृतोनावृत्तिं यायादिति । अत्रोच्यते । 'योगिनः प्रती'ति । योगिनः प्रति चायमहरादिकालविनियोगोऽनावृत्तये स्मर्यते । स्मार्ते चैते योगसाङ्ख्ये । न श्रौते । अतो विषयभेदात् प्रमाणविशेषाच्च नास्त्यस्मार्तस्य कालनियोगस्य श्रौतेषु विज्ञानेष्ववतार इत्युक्तम् ॥ १९ ॥

अतश्चायनेपि दक्षिणे ॥ २० ॥ चोऽवधारण इति । अन्यभाष्याभिमतोयमर्थः । इदमधिकरणान्तरमिति शाङ्कराः, अतः 'पूर्वपक्षस्ये'ति वक्ष्यन्ति । भास्कररामानुजाचार्याणां तु नाधिकरणान्तरम् । अतो नात्राधिकरणसमाप्तिः कृता । अतः सन्दिग्धमधिकरणमिदम् । ब्रह्मविदो ब्रह्मप्राप्तिर्दक्षिणेऽयने भवति, उत हार्दानुग्रहमात्रेणेति सन्देहे पूर्वपक्षः दक्षिणेऽयनेपि न, किन्तु वेदान्तविज्ञानेनावरणभङ्गमात्रमिति चेत्, न । अतश्च अत एव । हार्दानुग्रहजनकगत्यनुस्मृतिसम्बन्धात् । अतो हार्दानुग्रहान्मुक्तिहेतोः पुष्टिस्थस्य मुक्तिः, दक्षिणायनादिकालोप्यप्रयोजक इत्यर्थः । ब्रह्मविद् यद्यपि ज्ञानमार्गी, तथापि भक्तावपि ज्ञानपदस्य गीतायां प्रयोगात् सुष्ठु । नारायणपरायणस्य दुर्लभत्वादेवयुक्तम् । एतदेवोक्तं तथा चेत्यादिना, अतश्चेत्यनेनेत्यादिना च । अनधिकरणत्वे तु, अतश्च अत एव निशि मृतस्यापि विदुषो दक्षिणेऽप्ययने मृतस्य ब्रह्मप्राप्तिः सिद्धा । विद्याकर्मसम्बन्धस्य यावद्देहभावित्वादिति रामानुजभाष्ये । किञ्च, अधिकाशङ्का तु, 'अथ यो दक्षिणे प्रमीयते पितॄणामेव महिमानं गत्वा चन्द्रमसः सायुज्यं गच्छती'ति दक्षिणायने मृतस्य चन्द्रप्राप्ति-

ननु 'यत्र काले त्वनावृत्ति'मिति कालप्राधान्येनोपक्रम्य 'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्। तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जना' इति भगवद्वाक्याद् ब्रह्मविदोऽप्युक्तकालापेक्षास्तीत्याशङ्क्य विषयभेदेन समाधत्ते।

**योगिनः प्रति स्मर्यते स्मार्ते चैते ॥ २१ ॥**

ज्ञानमार्गाद् योगमार्गो हि भिन्नः। तथा च योगिनमुद्दिश्यैव कालविशेषस्य गतिविशेषहेतुत्वं स्मर्यते, न तु ज्ञानमार्गीयस्य श्रौतस्य। इतरनिरपेक्षत्वात्। नच योगसाङ्ख्ये अपि श्रौते एवेति वाच्यम्। यतः स्मार्ते एते। चो हेत्वर्थे। एते योगसाङ्ख्ये, 'अग्निर्ज्योतिर्धूमो रात्रि'रिति वाक्यद्वयोक्तगती वा। इदं तु

---

भाष्यप्रकाशः।

**योगिनः प्रति स्मर्यते स्मार्ते चैते ॥ २१ ॥** व्याकुर्वन्ति ज्ञानमार्गादित्यादि। तथा च मार्गभेदान्न कालविशेषापेक्षेत्यर्थः। साङ्ख्यस्य स्मृत्युक्तत्वेऽपि योगस्य न तथात्वम्। योगतत्त्वोपनिषदादौ तस्योक्तत्वात्। सूत्रे च योगिपदमात्रम्। अत एते इति पदे साङ्ख्यनिवेशनं न युक्तमित्यरुच्या पक्षान्तरमाहुः अग्निरित्यादि।

नन्वेतयोर्गत्योरपि स्मार्तत्वं न युक्तम्, किञ्चिच्छब्दभेदेपि छान्दोग्योक्तदेवयानपितृयानयोरेव प्रत्यभिज्ञानात्, अतः कथमिदं समाधानमित्यत आहुः इदं त्वित्यादि। न विरोध इति। तस्मिन् कालद्वारा तत्तदभिमानिन्य आतिवाहिक्यो वा देवता मार्गद्वयगता उच्यन्ते, न तु काल इति तस्यात्राकथनाच्छ्रुतिस्मृत्योर्न विरोधः। तथा च यदि तत्र काल उच्यते, तदा तत्र

रश्मिः।

श्रवणाच्चन्द्रमसं प्राप्तानां च तेषां 'तत्पर्यवैत्यथैतमेवाध्वानं पुनर्निवर्तन्त' इति पुनरावृत्तिश्रवणात् भीष्मादीनां च ब्रह्मविद्यानिष्ठानामुत्तरायणप्रतीक्षादर्शनात्तद्दक्षिणायने मृतस्य ब्रह्मप्राप्तिर्न संभवतीति। परिहारस्तु, अविदुषां पितृयानेन यथा चन्द्रमसं प्राप्तानामेव पुनरावृत्तिः विदुषस्तु चन्द्रं प्राप्तस्यापि, 'तस्माद्ब्रह्मणो महिमानमाप्नोती'ति वाक्यशेषात्तस्य दक्षिणायनमृतस्य चन्द्रप्राप्तिर्ब्रह्मप्रपित्सतो विश्रामहेतुमात्रमिति गम्यते। वाक्यशेषाभावेपि पूर्वोक्तादेव बन्धहेत्वभावाद्विदुषश्चन्द्रं प्राप्तस्यापि ब्रह्मप्राप्तिरनिवार्या। भीष्मादीनां योगप्रभावात् स्वच्छन्दमरणानां धर्मप्रवर्तनायोत्तरायणप्राशस्त्यप्रदर्शनार्थः, तथाविधाचार इति रामानुजभाष्ये। भास्करभाष्ये तु, अतश्चेत्यनेन नाडीरश्मिसम्बन्धस्य यावच्छरीरभावित्वादिति पूर्वसूत्रोक्तहेतुर्गृहीतः ॥ २० ॥

**योगिनः प्रति स्मर्यते स्मार्ते चैते ॥ २१ ॥** भाष्ये। विषयभेदेनेति। योगमार्गरूपविषयभेदेन। प्रकाशे। योगतत्त्वेति। आदिना योगशिखा। अग्निरित्यादीति। 'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्। तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः। धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्। तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते। शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते। एकया यात्यनावृत्तिमन्ययावर्तते पुन'रिति वाक्यानि। प्रत्यभिज्ञानादिति। छान्दोग्योक्ते एते गती इति प्रत्यभिज्ञानात्। तत्त्वेदन्ताप्रकारकं ज्ञानं प्रत्यभिज्ञा। सेयं दीपमालिकेतिवत्। इदं त्वित्यादीति। इदं ब्रह्मविदोऽप्युक्तकालापेक्षणम्। श्रुत्युक्तेति। योगमार्गमभिप्रेत्य। तस्मिन्निति। गीताग्रन्थे स्मृतौ। कालद्वारेति। दक्षिणायनोत्तरायणकालद्वारा

श्रुत्युक्तदेवयानपितृयानातिरिक्तमार्गमभिप्रेत्य समाहितम्। ते एव चेदत्राप्युच्येते शब्दभेदेन, तदा न विरोधः ॥ २१ ॥

इति चतुर्थाध्याये द्वितीयपादे सप्तममतोन्याधिकरणम् ॥ ७ ॥

इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते श्रीब्रह्मसूत्राणुभाष्ये
चतुर्थाध्यायस्य द्वितीयः पादः ॥ ४ ॥ २ ॥

---

भाष्यप्रकाशः।

योगिन उपक्रान्तत्वाद् विषयभेदेनाविरोधः, यदि चैकविषयत्वम्, तदा अर्चिरादिश्रुताविवात्राप्यग्न्यादिशब्दैस्तत्तद्देवतालोकविशिष्टौ तावेव मार्गावुच्येते इत्युभयथापि न श्रुतिस्मृत्योर्विरोध इत्यर्थः। तेन विद्यावतो नान्यापेक्षेति सिद्धम् ॥२१॥ इति सप्तममतोन्याधिकरणम् ॥७॥

इति श्रीमद्वल्लभाचार्यचरणनखचन्द्रनिरस्तहृदयध्वान्तस्य श्रीपीताम्बरात्मजस्य
पुरुषोत्तमस्य कृतौ भाष्यप्रकाशे चतुर्थाध्यायस्य द्वितीयः पादः ॥ ४ ॥ २ ॥
समाप्तो द्वितीयः पादः ॥ २ ॥

रश्मिः।

तस्यात्रेति। कालस्य अत्र छान्दोग्येऽकथनाद्विषयभेदाद् गतिस्मृत्योर्न विरोधः। तत्रेति। गीतास्मृत्योः। तत्रेति। पूर्ववदर्थः। विषयेति। ज्ञानयोगमार्गभेदेन। एकेति। प्रत्यभिज्ञयैकविषयत्वम्। अत्रापीति। गीतास्मृतावपि। ताविति। अर्चिरादिधूमादिमार्गौ। उभयथेति। विषयभेदविषयैक्यप्रकाराभ्याम् ॥ २१ ॥ ७ ॥ इति सप्तममतोन्याधिकरणम् ॥ ७ ॥

इति श्रीविठ्ठलेश्वरैश्वर्यनिरस्तसमस्तान्तरायेण श्रीगोविन्दरायजित्पौत्रेण
सम्पूर्णवेत्ता विठ्ठलरायजिद्भ्रात्रीयगोकुलोत्सवात्मजगोपेश्वरजिता
कृते भाष्यप्रकाशस्य रश्मौ चतुर्थाध्यायस्य
द्वितीयः पादः सम्पूर्णतामगमत् ॥ ४ ॥
समाप्तो द्वितीयः पादः ॥ २ ॥

---

# Editors' Note.

We are glad to be able to put before the public this fifth volume of भाष्य-प्रकाश-रश्मि containing the प्रथम and द्वितीय पाद of चतुर्थाध्याय. श्रीपुरुषोत्तमजी states in प्रकाश on ३. ३. ३४ 'इत आरभ्य प्रभूणामिति प्रतिभाति.' The internal evidence of the difference in language is sufficient by itself to convince the reader that the author of this portion is different from the author of the previous portion. Again, the interpretation of जगद्व्यापारवर्जम् ( ४. ४. १७ ) given here is different from the one suggested in सुबोधिनी on ३. ४. १२. which is as follows:—'उत्सृजन्तमित्यनेन सृजन्तमूर्ध्वं सृजन्तं चेत्यर्थद्वयं विवक्षितम्। तेन यागप्रयोजनं मद्भावश्च एकरूपो भवति। मद्भावेप्येतद् द्वयं कर्तव्यम्, गुप्ततया स्थित्वा विश्वजननं सर्वलोकपरित्यागश्च। तज्जन्मनश्चरमत्वादेव परित्यागः सिद्धः। मद्भावेन जगज्जननमवशिष्यते। तत्र मत्सायुज्ये जगज्जननमन्यथासिद्धं भवति, एकीभावश्रुतेः। यथा सर्वासामपां समुद्र एकायनम्, इति। भिन्नतया ब्रह्मभावे जगद्व्यापारवर्जमितिन्यायाच्च जगत्कर्तृत्वम्। अतः सर्वाविरोधेन मद्भावेन जगज्जननं यथा सिध्यति तथा वक्ष्यामि।'. Here जगद्व्यापार is clearly used in the sense of जगत्कर्तृत्व. In भाष्य ४. ४. १७. we find as under:—ब्रह्मणा सह भोगकरणं लौकिकव्यापारयुतमुत नेतिसंशये तद्युतमिति पूर्वः पक्षः। तथा सति मुक्तित्वभङ्गात् पूर्वोक्तमनुपपन्नम्, इति प्राप्ते, आह जगदित्यादि। पूर्वोक्तस्य जगत्सम्बन्धी लौकिको यो व्यापारः कायवाङ्मनसां तद्वर्जं तद्रहितं भोगकरणम्। तत्र हेतू आह प्रकरणादसन्निहितत्वाच्चेति। ब्रह्मविदाप्नोति परमित्युपक्रमेण मुक्तिप्रकरणात् तत्र लौकिकव्यापारोऽसम्भावितः। लीलायाः कालमायाद्यतीतत्वेन प्राकृतं जगद्दूरतरम्, इतोपि हेतोर्न तत्संभवः। Here the question discussed is whether the भोगकरण mentioned in the श्रुति 'सोश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' is लौकिक, and प्राकृत, or जगद्व्यापारवर्जम्, *viz.* अलौकिक. If the author were one and the same, he would have at least given both the meanings.

If there is any doubt still left in the mind of any one, it is set at rest by the हस्ताक्षर copy of the भाष्य of श्रीविठ्ठलेश्वर now at श्रीनाथद्वार. It contains a few pages of तृतीय अध्याय, and the whole of चतुर्थाध्याय with some breaks. When our late Editor Mr. Mulchandra went to श्रीनाथद्वार, he compared a copy of the Calcutta Edition of the अणुभाष्य with it, and brought the corrected copy with him to Bombay. But at the time of printing, we compared it with five old copies of भाष्य, and many doubts were raised, and hence we requested तिलकायित श्रीगोवर्धनलालजी and श्रीदामोदरलालजी, and they were kind enough to arrange to send the हस्ताक्षर copy to Bombay for a fresh comparison. Thus we got one more opportunity of comparison and some more corrections were made. We have thus got an unique opportunity of publishing all the three works भाष्य, प्रकाश and रश्मि with the help of original manuscripts, and we have done our work with utmost delight, as well as greatest care and devotion

The हस्ताक्षर copy had to be returned, but we find that it is necessary to have it here for ready reference. We have again requested श्रीदामोदरलालजी, and he has promised to send it.

Now, what are the facts found on a careful examination of the हस्ताक्षर copy? We find that the leaves of the manuscript are divided into separate groups. A slip of paper is attached round each group, and on each of these slips are mentioned the portions of भाष्य which they contain. The hand-writing on these slips we find to be of श्रीपुरुषोत्तमजी, and we immediately perceive that 'इत आरम्भ प्रभृति' was written by him after a careful examination of the हस्ताक्षर manuscript itself, and our soul does homage to his genius, faculty for research, his carefulness and service to साम्प्रदायिक literature. We know that besides this भाष्य, he has also found and preserved the पाण्डुलेख of श्रीटिप्पणी, and he has traced one leaf of पत्रावलम्बन in श्रीवल्लभाचार्य's हस्ताक्षर. Let us now remove the slips of paper, and turn to चतुर्थाध्याय. The first page is written on both the sides as usual, and let us put it aside for a moment and take the second page. It is peculiar and immediately draws our attention. It was originally numbered १, which is subsequently changed into २. On one side only a few lines are written as under:—

श्रीगोपीजनवल्लभाय नमः ॥ आवृत्तिरसकृदुपदेशात् ॥ श्रुतिर्हि कर्मज्ञानभक्तीः हीनमध्यमोत्तमाधिकारिणः प्रति क्रमेण कर्तव्यत्वेन निरूपितवती । तत्रावस्था (चित्तशोधकत्वेन ज्ञानस्य पुरुषोत्तमप्राप्तौ स्वरूपयोग्यतासंपादकत्वेन भक्तेः) (साक्षात् पुरुषोत्तमप्रापकत्वेन साधनत्वमिति तृतीयेध्याये व्यवस्थापनेन तत्तात्पर्यं निर्णीतं । अथ तुरीयेध्याये तत्तत्फलस्वरूपं निर्णीय) (ते । तत्र कर्मसामान्यं चित्तशोधकमुत तद्विशेष इति संशये विहितत्वाविशेषात्तत्सामान्यं त) दो फलमुच्यते । आवृत्तिरसकृदिति । जन्मप्रवाहः कर्ममार्गस्य फलं । तत्र हेतुरसकृदुपदेशादिति । आवृत्याऽसकृत्पदमुभयत्रापि संबध्यते ।

This is the beginning of the चतुर्थाध्याय, and we find that the author's thoughts were not quite settled, so he made changes again and again and then left it, and he turned over to the other side of the page and began writing and he wrote as under:—

आवृत्तिरसकृदुपदेशात् । श्रुतिर्हि कर्मज्ञानभक्तीः साक्षात्परंपराभेदेन पुरुषार्थसाधनत्वेन हीनमध्यमोत्तमाधिकारिणः प्रति कर्तव्यत्वेन प्रतिपादयति । तत्र &c. The reader will find that this is from the beginning of the second interpretation of the first two सूत्रs of चतुर्थाध्याय. He began here and went on till the end. So, what is second interpretation (प्रकारान्तरेण सूत्रार्थ उच्यते) was the only interpretation when first written.

Now let us look at the first page. It begins as under:—'श्रीकृष्णाय नमः ॥ समन्वयेनाविरोधात् साधनैर्ब्रह्मविषयि । तस्याग्रिमव्यवस्था या' &c. All the कारिकाs are written in running lines. After the कारिकाs are over, we find 'अस्य फलप्रकरणत्वेपि साधनरूपस्यापि श्रवणस्यांतरंगत्वं ज्ञापयितुं तन्निर्धारमप्याह ॥ ॥ आवृत्तिरसकृदुपदेशात् ॥ आत्मा वारे' &c. The last lines

on the first page are as under:—'तथापि शाब्दक्रमादार्थक्रमो बलीयानिति न्यायाद्ब्रह्म इति प्रश्नस्य पश्चात्संबंधे सूत्ररीतिर्नावसरं प्राप्नोतीति प्रकृतविचारस्य फलप्रकरणासंगतत्वमापततीति प्रकारान्तरेण सूत्रार्थ उच्यते ॥' Here ends the first page. The reader will find that all this is exactly as we find in the present manuscripts, and we cannot but come to the conclusion that the whole of the first page containing the कारिकाs and the first interpretation of the two सूत्रs is subsequently added.

This leads us to the further question as to whose these कारिकाs are? Whether they were composed by श्रीवल्लभाचार्य, and श्रीविट्ठलेश्वर having found them subsequently, incorporated them in his own work, or whether they are the composition of श्रीविट्ठलेश्वर himself? In सुबोधिनी on ३. २५. ३३. we find as under:—पञ्चाग्निविद्यायां ज्ञानोपयिकदेहसिद्धिर्निरूपिता, तस्मिन् देहे ज्ञाने जाते मुक्तिर्भवतीति तस्य च ब्रह्मविदो 'जीवतो म्रियमाणस्य गच्छतः सङ्गतस्य च' व्यापारा निरूपिताः। सद्योमुक्तावपि सायुज्यं निरूपितम्। The words जीवतो म्रियमाणस्य गच्छतः च are repeated in the second कारिका, and hence the doubt. Our opinion is that the words as well as the thought expressed therein are both very common, and at the most, they may have acted as मार्गदर्शक, but the language of the कारिकाs is quite different from that of the कारिकाs of श्रीवल्लभाचार्य, which are very concise. We therefore think that the whole is the composition of श्रीविट्ठलेश्वर himself. In श्रीटिप्पणी also we have seen that the मङ्गलाचरण is added subsequently.

This is फलाध्याय, and the फल that is realised by ब्रह्मविद्, while he is living, is described in प्रथमपाद, his state while dying is described in द्वितीयपाद, his state in the journey is described in तृतीयपाद, and the final condition is described in चतुर्थपाद. The फल varies in मर्यादामार्ग and पुष्टिमार्ग, as well as in कर्म, ज्ञान and भक्तिमार्ग. A very lucid analysis of the whole is given by श्रीपुरुषोत्तमजी in वेदान्ताधिकरणमाला, and hence we refrain from repeating the same here.

We tender our heart-felt thanks to all those who have helped us in our work, and with feelings of joy we offer this fruit of our labour of love at the Lotus Feet of Lord S'rī Krishṇa.

2214

Dhirajlal Varajdas Sankalia.
Jamnadas Kanji Morparia.
Hiralal Mulji.
Govardhandas Pragji.
Purshottam Kanji Morparia.

श्रीकृष्णाय नमः ।

# श्रीमद्ब्रह्मसूत्राणुभाष्यम् ।

शुद्धाद्वैतब्रह्मवादनिर्गुणभक्तिमार्गप्रवर्तकाचार्यचक्रचूडामणि-
श्रीमद्वल्लभाचार्यचरणप्रणीतम् ।

दृशदिगन्तविजयिश्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणप्रणीत-
भाष्यप्रकाशसम्पूर्णवेत्तृश्रीमद्गोस्वामिश्रीगोपेश्वर-
जिचरणप्रणीतभाष्यप्रकाशरश्मिपरिबृंहितम् ।

## चतुर्थाध्यायस्य तृतीयचतुर्थपादौ ।

'भगवद्धर्मपरायण सद्गत श्रेष्ठि गोवर्धनदास सुन्दरदास' इत्यस्य पुष्टिमार्गीय-
संस्कृतसाहित्यसमुद्धारार्थं निर्दिष्टद्रव्यसद्व्ययतः 'प्राप्तभगवत्पद
मूलचन्द्र तुलसीदास तेलीवाला, बी. ए., एल्‌एल्. बी.,
वकील, हाइ कोर्ट' इत्येतेषां सुहृद्भिः
संशोध्य 'निर्णयसागर' मुद्रणालये
मुद्रयित्वा प्रकटीकृतम् ।

श्रीवल्लभाब्दाः ४५१. संवत् १९८५.

मूल्यं मुद्रिकात्रयम् ।

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# श्रीमद्ब्रह्मसूत्राणुभाष्यम् ।

## भाष्यप्रकाश-रश्मि-परिबृंहितम् ।



## अथ चतुर्थोऽध्यायः ।

### तृतीयः पादः ।

### अर्चिरादिना तत्प्रथितेः ॥ १ ॥ ( ४-३-१ )

ननु ज्ञानमार्गीयस्येव मर्यादामार्गीयभक्तस्याप्यर्चिरादिमार्गेणैव गमनम्, उत सद्योमुक्तिरेव [1]भवति संशयः । तत्र यथा ज्ञानिनो नियमाभावः, तथात्रापीति प्राप्ते आह । अर्चिरादिमार्गेण तस्य ज्ञानमार्गीयस्यैवोत्कर्षकथनात् स एव तेन मार्गेण गच्छति, न तु भक्तोपीत्यर्थः ।

---

भाष्यप्रकाशः ।

अर्चिरादिना तत्प्रथितेः ॥ १ ॥ पूर्वस्मिन् पादे प्रथमतः पुष्टिमार्गीयस्य ततो मर्यादामार्गीयस्य सद्योमुक्तिप्रकारो दर्शितः, तदनु क्रममुक्तौ निर्गमनद्वारादिकं च दर्शितम्, इह तु ततो निर्गतस्य यो ब्रह्मप्राप्तिमार्गो ब्रह्मलोकस्तत्प्रकारश्च प्रदर्श्यते, तत्राधिकरणमवतारयितुं संशयादिकमाहुः नन्वित्यादि । अत्र मर्यादायाः स्वकृतत्वात् तत्पालनं भक्तेर्ज्ञानादुत्कृष्टत्वं च सन्देहबीजम् । नियमाभाव इति । साधनसामर्थ्यतारतम्यनियमाभावः । सिद्धान्तं वक्तुं सूत्रं विवृण्वन्ति अर्चिरादीति । तस्येत्यादि । 'प्रथ प्रख्याने', प्रथनं प्रथितिः प्रसिद्धिः । सा श्रुतिषु तस्यैव ज्ञानमार्गीयस्यैवेति तस्यैव तथेत्यर्थः । ज्ञानिन एव प्रसिद्धिरिति यदुक्तम्, तद् व्युत्पादयन्ति

रश्मिः ।

अर्चिरादिना तत्प्रथितेः ॥ १ ॥ पूर्वस्मिन् पादे इति । द्वितीयपादे । निर्गमनेति । तदोकोग्रज्वलनाधिकरणे निर्गमनद्वारादिकम्, आदिना रश्म्यनुसारित्वादिकम् । ब्रह्मलोक इति । 'वेदान्तविज्ञानसुनिश्चितार्था' इति श्रुतेर्ब्रह्मविदो विश्रामस्थानम् । संशयादिकमिति । आदिना पूर्वपक्षोत्तरे सङ्गतिश्च । भाष्ये । तत्र यथेति । संशये यथा । नियमाभावः सद्योमुक्त्यर्चिरादिमार्गयोः तथा । तथात्र सद्योमुक्त्यर्चिरादिमार्गयोः भक्तस्य नियमाभावः । प्रकृते । साधनसामर्थ्येति । अत्र साधनतारतम्यादित्येतावतैव चारितार्थ्ये सामर्थ्यपदं ज्ञापयति । सद्योमुक्तिक्रममुक्त्योः सायुज्यं सह युनक्तीति सयुक् सयुजो भावः सायुज्यमित्येवं यौगिकपदार्थं जीवब्रह्मणोः प्रथमपादे निरूपितम् । द्वितीयपादे तत्प्रकारादिर्दर्शित इति प्रकाश उक्तम् । तत्र भक्तिमार्गीयसायुज्या-

---

१ भवतीति पाठः ।

तथाहि । पञ्चाग्निविद्याप्रकरणे 'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्ष'मित्यत्र उपक्रमे भक्तातिरिक्तानेव अधिकृत्य तथा गतिरुच्यते । स्मृतावपि 'अग्निर्ज्योतिरहः शुक्ल'इत्यत्र 'ब्रह्मविदो जना' इति वचनेन ज्ञानमार्गीयस्यैव स पन्था इत्युच्यते ।

अथेदं चिन्त्यते । सामोपनिषत्सु पठ्यते 'अथ या एता हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्येत्यसौ वा आदित्यः पिङ्गल' इत्युपक्रम्यादित्यरूपस्य पिङ्गलस्य रश्मिरूपत्वं नाडीनामुक्त्वा, अग्रे वदति 'अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्व आक्रमत' इति नाडीरश्मिसम्बन्धेनैका परलोकगतिः श्रूयते । अर्चिरादिका चाऽन्या, 'तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽह'रित्यादिश्रुत्युक्ता । 'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छती'ति चापरा । 'स यदा वै पुरुषोऽस्माल्लोकात् प्रैति स वायुमागच्छ-

भाष्यप्रकाशः ।

तथाहीत्यादि । भक्तातिरिक्तानेवाधिकृत्येति । 'इत्थं विदु'रित्यादिना क्रियाविषयस्य क्रियायाश्च श्रावणात् 'ये' इत्यनेन तानेवाधिकृत्य । तथा च मर्यादामार्गीयाणामपि भक्तानां प्रायशः सद्योमुक्तिरेव । ज्ञानमार्गीयस्यैवानियम इत्यर्थः ।

ननु भवत्वर्चिरादिमार्गेण ज्ञानमार्गीयस्य गतिः, तथापि मर्यादाभक्तस्य प्रायशः सद्योमुक्तिरेवेति न नियन्तुं शक्यते, श्रुतावर्चिरादिमार्गातिरिक्तानामपि मुक्तिमार्गाणां श्रावणात्, तथा बहूनां सत्त्वेपि सूत्रकृतार्चिरादिमार्ग एव कस्मादुक्त इति चाशङ्कायामाहुः अथेदमित्यादि । तान् मार्गान् विषयीकृत्य तेषां भेदोऽस्ति परस्परम्, उत नेति चिन्त्यत इत्यर्थः । एवं प्रतिज्ञाय मार्गबोधिकाः श्रुतीरुदाहरन्ति सामेत्यादि । पठ्यत इति । विद्याभेदेन गतिभेदः पठ्यते । श्रूयत इति । दहरविद्यायां श्रूयते । अन्येति । पञ्चाग्निविद्यास्था । अपरेति । कौशीतकि-

रश्मिः ।

दिषु सेवाफलोक्तेषु सायुज्यं गतपादयोर्निरूपितम्, अलौकिकसामर्थ्यमत्र निरूप्यत इति । तदातिवाहिकाधिकरणभाष्ये 'ब्रह्म अमानवः पुरुषः प्रापयती'ति वक्ष्यते तथा चामानवपुरुषस्य भक्तिमत्त्वं वक्तव्यम्, भक्ताधीनत्वाद्भगवतः । भक्तिभावे तु अलौकिकं सामर्थ्यं वक्तव्यम्, शूरत्वलक्षणं 'अशूरेणापि कर्तव्यं स्वस्यासामर्थ्यभावना'दित्याचार्यवाक्यात् । चतुर्थपादेऽलौकिकदेहो वैकुण्ठादिषु निरूपयिष्यते । सेवाफलानां त्रयाणां सगुणत्वापादकानां सन्दिग्धत्वात् । एवञ्च, सालोक्यादिवाक्ये प्रतिलोमक्रमेणैकत्वं प्रथमद्वितीयपादयोर्निरूप्य तृतीये सारूप्यस्य स्पष्टत्वात् सार्ष्टिरूपालौकिकसामर्थ्यं निरूप्यते । तदनु चतुर्थपादे सालोक्यं निरूपयिष्यते । सामीप्यं सालोक्यभेदः । सार्ष्टिः 'ऋष गतौ' । तु. । प. । से. । क्त्वाप्रत्यये नेट्, क्तिनि नेट् । समाना ऋष्टिः गतिः सार्ष्टिः । समानस्य सः । प्रथप्रख्याने भाष्ये प्रथमकथने ज्ञानिनि । तथेति । उत्कर्षकथनादित्यादिः । तथाहीत्यादीति । अह्न इति पञ्चम्यन्तम् । आपूर्यते किरणैश्चन्द्र इत्यापूर्यमाणपक्षः शुक्लः पक्षः तम् । क्रियाविषयस्येति । प्रेतस्य क्रियायाः श्रद्धातपउपासनक्रियायाश्च श्रावणात्, 'इत्थं विदु'रित्यत्र ज्ञानविषयत्वेन क्रियाविषयस्य प्रेतस्य 'ये चेमेऽरण्य' इत्यत्र क्रियायाः श्रावणात् । तानेवेति । 'इम' इति प्रत्यक्षविषयाणामुक्तेरेवकारः । भक्तानामुक्तोभयाभावात् प्राधान्येन । भाष्ये । ब्रह्मविद इति । क्वचिदेव कार्यवशाज् ज्ञानं भक्तिरिति व्याक्रियत इति भावः । प्रकृते । सामे-

ती'ति चेतरा । 'सूर्यद्वारेण ते विरजाः प्रयान्ती'ति चान्या । एवमनेकेषु मार्गेषु सत्स्वर्चिरादेरेवोक्तिः कुत इति । तत्र सर्वेषां पारिभाषिकमर्चिरादित्वम्, अत एव 'अथैतयोः पथोर्न कतरेण च ने'ति मार्गद्वयभ्रष्टानामतिकष्टं 'जायस्व म्रियस्वेति तृतीयं स्थान'मित्युक्तम्, अन्यथानेकेषां मार्गाणामुक्तानां श्रूयमाणत्वादस्य तृतीयत्वं नोच्येत, अतः प्रकरणभेदाद्भिन्नोपासनशेषत्वान्मिथोऽनपेक्षा भिन्ना एवैते मार्गा ब्रह्मप्रापका इति मन्तव्यमिति चेत् ।

तत्रोच्यते । न हीयं परिभाषा सर्वेषु श्रुतास्ति, यतस्तथोच्येत । अतो लाघवादनेकपर्वविशिष्ट एक एव मार्ग इति मन्तव्यम्, न तु पर्वभेदेन मार्गभेद इति । गौरवप्रसङ्गात् । न चैवम् 'अथैतैरेव रश्मिभि'रित्यवधारणानुपपत्तिरिति वाच्यम् ।

---

भाष्यप्रकाशः ।

ब्राह्मणे पर्यङ्कविद्यास्था । इतरेति । बृहदारण्यकेऽनात्मोपासनगतिफलकथने । एवमन्यापि पञ्चमी प्रथममुण्डकसमाप्तौ द्रष्टव्या । एवं मार्गभेदबोधिकाः श्रुतीरुपन्यस्य सूत्रेऽर्चिरादेरेवोक्तौ हेतुं निश्चेतुं पृच्छति एवमित्यादि । स्वयं हेतुं कल्पयित्वा वास्तवैकत्वस्य हेतुत्वं दूषयति । तत्रेत्यादि । अर्चिराद्युक्तिहेतुविचारे । सर्वेषां मार्गाणामर्चिरादित्वं पारिभाषिकम्, मुक्तिमार्गा अर्चिरादिपदेन व्यवहर्तव्या इति साङ्केतिकनियमसिद्धम्, न तु वास्तवम् । अतः पारिभाषिकत्वादेव हेतोः 'अथैतयोः पथो'रिति द्वित्वम्, 'जायस्वे'त्यस्य तृतीयस्थानत्वं च श्रुतावुक्तम् । अन्यथा वास्तवेऽर्चिरादित्वे बहूनामुक्तानां मार्गाणां ब्रह्मप्रापकतया श्रूयमाणत्वादस्य तृतीयत्वं पथोरिति द्वित्वं च नोच्येत । अतस्तृतीयत्वादिपीडारूपाद्धेतोस्तेष्वर्चिरादित्वं पारिभाषिकमङ्गीकृत्योक्तहेतुद्वयाद् ब्रह्मप्रापका मार्गा बहव एवेति मन्तव्यमित्यर्थः ।

एवं पूर्वपक्षी स्वमतमुक्त्वा तत्रैकदेशिकृतं समाधिं प्रतिक्षेप्तुमुपक्षिपति तत्रोच्यत इत्यादि । तथोच्येतेति । पारिभाषिकत्वमुच्येत । अतो लाघवादिति । पारिभाषिकत्वेनार्चिरादित्वस्य वक्तुमशक्यत्वात् पर्वप्रत्यभिज्ञानलिङ्गेन मार्गैक्याङ्गीकारे लाघवात् । गौरवप्रसङ्गादिति । मार्गाणामनेकत्वे तेषु पर्वन्यूनाधिक्येन कस्यचिन्निकटत्वम्, कस्यचित् दूरत्वम्, निकटमार्गत्यागेन दूरमार्गगमने उपपत्तिकल्पनम्, निकटत्यागे चोपपत्तिकल्पनमित्येवं तथात्वादित्यर्थः । पुनर्मार्गानेकत्वमाशङ्क्य निषेधति न चैवमित्यादि । एवमिति । मुक्तिमार्गस्यैकत्वे ।

रश्मिः ।

स्यादीति । बहुवचनं स्मार्तम् । यथाहुः 'इति श्रीभगवद्गीतासूपनिषत्सु' इति । अत एवेति भाष्यविवरणम् । अत इति । श्रुताविति । पञ्चाग्निविद्याप्रकरणे छान्दोग्ये 'अथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति । जायस्व म्रियस्वेत्येतत्तृतीयꣳस्थान'मिति श्रुतौ । श्रुत्यर्थस्तु कतरेण चेति प्रश्नः । नकारद्वयस्य न यान्त्यपि नेति शेषेण योजना । यद्वा एतयोः पथोः न कतरेण नेति प्रश्नः । उत्तरम् । तानीमानीति तृतीयस्थानमिति । अन्यथेति भाष्यविवरणे । अन्यथेति । उक्तेति । 'अर्चिरादिने'ति सौत्रपदोक्तहेतुद्वयात् । वास्तवपारिभाषिकहेतुद्वयात् । पारीति । पारिभाषिकत्वमुच्येतेति पाठः । न तूच्यत इति पाठः । पर्वप्रतीति । तानि पर्वाणीति प्रत्यभिज्ञानलिङ्गेन । पर्वन्यूनेति । पर्वन्यूनत्वे कस्यचित्फलस्य निकटत्वं पर्वाधिक्ये फलस्य दूरत्वम् । उपपत्तीति । अधिकाररूपोपपत्तिकल्पनम् । तथात्वादिति । गौरवप्रसङ्गात् । एकत्व इति । एतैरेव रश्मिभिरन्यमार्गेष्पूर्ध्व आक्रमत

तस्याः श्रुतेरुत्क्रमणमात्रमार्गनिरूपकत्वात् । तथाहि । तत्रोपक्रमे हि 'अथ यत्रै-तदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्व आक्रमत' इत्युच्यते । एतस्मात् पुरस्तात् 'अथ या एता हृदयस्य नाड्य' इत्युपक्रम्य पिङ्गलस्यादित्यत्वमुक्त्वा, 'तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमं चामुं चैवमेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुं चामुष्मादादित्यात् प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ता' इत्यन्तेन वाक्येन नाडीषु रश्मिप्रचारमुक्त्वा, अग्रे 'अथ यत्रैतदस्मा'दित्याद्युक्तम् । उपसंहारे च 'शतं चैका हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका, तयोर्ध्व-मायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ती'ति । एवमुपक्रमोपसंहाराभ्या-मुत्क्रमणमात्रमार्गनिरूपकत्वम्, न तु ब्रह्मप्रापकमार्गस्य, अतस्तदनुपपत्तिपरि-हारोऽनर्थकः । नन्वनेकपर्वविशिष्टत्वेन मार्गस्यैकत्वे तं निरूपयन्ती श्रुतिः क्वचित् किञ्चित् पर्व निरूपयति, क्वचिन्नेति कथम् । उपसंहारेण प्राप्स्यन्त इति तात्पर्येण तथेति चेद् ब्रवीषि, तदा शाखान्तरमविदुषस्तदसम्भवेन तं प्रति श्रुतेर्न्यूनता-पातः । न हि सर्वशाखाविदं प्रत्येव कथनमिति वक्तुमुचितम् । तस्यासम्भवात् । अतः स्वस्वशाखाज्ञानवन्तं प्रत्येव तथा । अध्ययनविधेरपि तावन्मात्रपरत्वात् ।

---

भाष्यप्रकाशः ।

निषेधे हेतुः । तस्या इत्यादि । तत्रेति । रश्मिवाक्ये । हिर्हेतौ । इत्युच्यत इति । शरीरादुत्क्रम उच्यते । नन्वेतस्मात् पूर्वं रश्मिनाडीप्रचारकथने महापथदृष्टान्तेन तासां मार्गत्वमपि बोध्यत इति नैवं वक्तुं युक्तमित्याशङ्कायामाह एतस्मात् पुरस्तादित्यादि । तथा च महापथदृष्टान्तेऽप्यन्ते, 'एत-स्मा'दित्यादिनोत्क्रान्तिरेवोक्तेति तन्मार्गत्वमेव तासां युक्तमित्यर्थः । युक्त्यन्तरमाह उपसंहारे चेत्यादि । एतदेव निगमयति एवमुपक्रमेत्यादि । तदनुपपत्तिपरिहार इति । ब्रह्मप्रापक-मार्गत्वानुपपत्तिपरिहारः । एवमेकमार्गत्वे साधिते तद् दूषयितुं पर्वोक्तिप्रकारे पृच्छति नन्वि-त्यादि । समाधिमुद्भाव्य दूषयति उपसंहारेणेत्यादि । तस्यासम्भवादिति । वेदानाम-नन्तत्वेनेदानीं कलिकृतबुद्धिह्रासेन च सर्वशाखाविश्वस्यासम्भवात् । एतदुपष्टम्भायाह अध्ययने-त्यादि । स्वस्वासाधारणत्वेन पितृपितामहादिपरम्पराप्राप्ता शाखा स्वाध्याय इति योगस्य सर्वै-

रश्मिः ।

इत्यवधारणानुपपत्तिरित्यन्वयः । निषेध इति । न च वाच्यमिति निषेधे । हिर्हेताविति । यस्मादित्यर्थः । श्रुतिस्त्वथ यत्रेत्यादिः । नैवमिति । मुक्तिमार्गस्यैकत्वं न । महापथेति । श्रुतिस्तु पूर्वं व्याख्याता । तन्मार्गत्वमुत्क्रमणमार्गत्वम् । पर्वोक्तीति । विषयसप्तमी । पर्वोक्तप्रकारविषयकः प्रश्नानुकूलो व्यापारः । तथा च पर्वोक्तिप्रकार इति प्रश्नस्य विषयपूरक इति नैकदेशान्वयः । अनन्तत्वे-नेति । 'अनन्ता वै वेदा' इति श्रुतेः । कलिकृतेति । द्वादशस्कन्धे कालेनाग्रहणं दृष्टेति । भाष्ये । तथेति । निरूपणम् । प्रकृते । स्वस्यासाधारणत्वेनेति । 'स्वाध्यायोध्येतव्य' इत्यध्ययनविधौ स्वाध्यायपदार्थः सायणीयानुसारेणोक्तः । अत उक्तं सर्वैरिति । सुष्ठु आसमन्ताद्ध्यायः स्वाध्याय

शाखान्तरसंवादिपर्वकथनानुपपत्तिश्च। उपसंहारेणैव तस्यापि प्राप्तिसम्भवात्। अतो विरुद्धदिक्कानां स्वस्वमार्गेणैकग्रामप्राप्तिवदिहापि भवितुमर्हति स्वातन्त्र्येण सर्वैर्मार्गैर्ब्रह्मप्राप्तिः। न चैवम् 'अथैतयोः पथो'रिति द्विवचनानुपपत्तिः, 'जायस्व म्रियस्वे'त्यस्य तृतीयत्वं चानुपपन्नमिति वाच्यम्। अर्चिरादिकमुक्त्वा 'उपसंहरति 'एष देवयानः पन्था' इति, श्रुत्यन्तरे च, 'स एनं देवयानं पन्थानमापद्याग्निलोकमागच्छती'ति। तथा च ब्रह्मप्रापकाः सर्वे मार्गा देवयाना इत्युच्यन्ते। 'दैवी सम्पद्विमोक्षाये'ति भगवद्वाक्याद्दैव्यां सम्पदि ये जाताः, ते देवा इत्युच्यन्ते तेषां यानं गमनं यत्रेति ते सर्वेपि मार्गा देवयानशब्देनोच्यन्ते। द्वितीयस्त्वविशिष्टः। एवं द्वित्वं त्रित्वं चोपपद्यते। न चोक्तरीत्या लाघवादेक एव स मन्तव्यः। स्वतःप्रमाणभूता हि श्रुतिः। सा येन यदा या श्रुता, तदर्थावधारणे द्वितीयस्या अनुपस्थितत्वान्न लाघवगौरवतद्विचारावसरः। क्वचिदुपस्थितौ चोक्तबाधकैरुपसंहारानवकाशः।

अपरं च। ब्रह्मविदः क्रममुक्तौ गन्तव्यो मार्गो स्वयमुपदिश्यते। तत्तल्लोके तदानन्दानुभवश्चावश्यकः। तथा चोपासनभेदात् फलभेदस्यावश्यकत्वान्मार्गभेदोपि तथेति सर्वेष्वेकरूपफलप्रसञ्जक उपसंहारो न युक्तः। किञ्च। उपासने

भाष्यप्रकाशः।

रादृतत्वेन शाखाप्रणयनस्य च तदर्थत्वेन तथात्वात्। उपसंहारेणैव तस्यापि प्राप्तिसम्भवादिति। उपसंहारे हि प्रयोजको वस्त्वभेदः, प्रयोजनाभेदश्च। तस्योभयसत्तया कृते उपसंहारे तेनैवानुक्तपर्वप्राप्तिसम्भवात्। एवं तदुक्तं दूषयित्वा स्वमतं स्थापयति अतो विरुद्धदिक्केत्यादि। द्विवचनाद्यनुपपत्तिं परिहरति न चेत्यादि। उपपद्यत इत्यन्तम्। लाघवं दूषयति न चोक्तेत्यादि। येनेति। यच्छाखाध्यायिना। बहुशाखाध्यायिनोऽनेकमार्गोपस्थितौ दोषतादवस्थ्यमाशङ्क्य परिहरति क्वचिदित्यादि। उक्तबाधकैरिति। अध्ययनविधेः स्वशाखाध्ययनमात्रपरत्वम्, तदध्येतुस्तावन्मात्रकरणे सर्वशाखार्थकरणपूर्तिः, शाखान्तरसंवादिपर्वकथनानुपपत्तिश्चेत्येवंरूपैः।

एवं परोक्तं परिहृत्य स्वोक्तौ युक्तिमाह अपरं चेत्यादि। आवश्यक इति। तदर्थमेव तत्कथनात् पुराणे तथा प्रसिद्धेश्चावश्यकः। तथेति। आवश्यकः। एवं स्वमतं स्थापयित्वा उपसंहारपक्षे बाधकमप्याह किञ्चेत्यादि। ननूपासने फलभेदजनकः प्रकारभेद उपसंहारप्रयोजकः

रश्मिः।

इति स्वमते पत्रावलम्बने प्रकाशे च जिज्ञासाधिकरणे। तदर्थत्वेनेति स्वाध्यायार्थत्वेन। तथात्वादिति। तावन्मात्रपरत्वात् स्वशाखाध्ययनमात्रपरत्वात्। उपसंहार इति। एकवस्तुप्रतिपादकचरमवर्णध्वंस उपसंहारस्तस्मिन्। प्रयोजनेति प्रयोजनमर्थनिर्णयः, तस्य संजातविरोधिन उपक्रमाद् भेदः, असंजातविरोधित्वेनापि भेदः। तस्येति अभिन्नवस्तुनः। उभयसत्तया वस्त्वभेदसत्तया अर्थनिर्णयसत्तया च। तेनैवेति उपसंहारेणैव, न तु शाखान्तराध्ययनेन। विरुद्धदिक्कानामिति। यथा पूर्वादिदिक्कानां एकस्य श्रीगोवर्धननाथद्वारस्य प्राप्तिः। न चेत्यादीति। द्वितीय इति धूममार्गः। अविशिष्टो मार्गान्तराविशिष्टः। पुराण इति। द्वितीयस्कन्धे क्रममुक्तौ। तथा चेति। द्वितीयार्थबोधकचकारघटितत्वे सति। किञ्चेत्यादीति। उपासने उपसंहारपादे धर्मोप-

कर्मणि चोपसंहारः सम्मतः। मार्गस्तु नान्यतररूपः, अतो यस्योपासकस्य येन मार्गेण गमनम्, स मार्ग उपदिश्यत इति नोपसंहारो युक्तः। अविधेयत्वादपि तथा। एतद् यथा तथा पुरस्तान्निरूपितम् 'उपसंहारोऽर्थाभेदाद्विधिशेषवत् समाने च'त्यत्र। एवं सत्यर्चिःशब्देनार्चिरुपलक्षितो मार्ग उच्यते। आदिपदेनान्ये सर्वे मार्गाः संगृह्यन्ते इति नानुपपत्तिः काचिदिति चेत्।

अत्र वदामः। 'अर्चिरादिभ्य' इत्युक्तं भवेत्, त्वद्रीतिरेव चेदभिप्रेता भवेत्, तस्मान्नैवमित्यवधार्यते। अर्चिरादिनेत्येकवचनान्यथानुपपत्त्या मार्गस्यैकत्वमवश्यमूरीकार्यम्। एवं सति श्रुतिषु यावन्ति पर्वाण्युक्तानि तानि सर्वाण्येकस्मिन्नेवार्चिरादिमार्गे वर्तमानान्यपि यस्योपासकस्य यावत्पर्वभोगो भावी, तं प्रति तावत्पर्वोक्तिः, यस्य यावतां तेषां स न भावी तं प्रति न तदुक्तिः, तद्भोगाभावादिति नानुपपन्नं किञ्चित्। ननु त्वयाप्यनुक्तानां पर्वणां तत्र स्थितिं वदतोपसंहार एवोक्तो भवति प्रापकत्वेनेति चेत्। स्यादेतदेवम्, यदि तस्यैव गन्तुर्भोगाय तदपि पर्व तत्रोच्येत, न त्वेवम्, किन्त्वेकवचनानुरोधान्मार्गैक्ये निश्चिते यं प्रति यत् पर्वोच्यते, तत्तत्र कण्ठोक्तमेवेति नोपसंहारापेक्षा। अग्रेऽ-

---

भाष्यप्रकाशः।

कर्मणि च वाक्यसार्थक्यम्, न तूपासनत्वं कर्मत्वं वा, अतो मार्गस्य तदन्यतररूपत्वाभावेपि ब्रह्मप्राप्तिरूपप्रयोजनैक्यात् कुतो न युक्त उपसंहार इत्यत आह अविधेयत्वादपि तथेति। नन्वविधेयत्वस्योपसंहारबाधकत्वं क्व सिद्धमित्यतः पूर्वोक्तं स्मारयति एतद्यथेत्यादि। तत्र हि समाने योऽर्थाभेदादुपसंहारः स विधिशेषः, येऽग्निहोत्रादयस्तद्वदित्युक्तम्। तेऽग्निहोत्रादयः सर्वेषां समाना अपि येषां शाखिनां यथोक्ताः, तेषामेव ते तथा विधेया नेतरेषाम्। तथाऽविधेयत्वात्। एवमत्रापि यदुपासनशेषे यत्पर्वको मार्ग उक्तः, तं प्रति स एव विधेयः, न त्वन्यान् प्रति। अतोऽन्यान् प्रत्यविधेयत्वादपि न मार्गोपसंहारो युक्त इत्यर्थः। एवमुपपाद्य सिद्धमाह एवं सतीत्यादि।

एवं पूर्वपक्षमुपपाद्य सिद्धान्तमाहुः अत्र वदाम इत्यादि। तथा च नानाग्रामयुक्तमार्गैक्येऽपि कस्यचित् कस्मिंश्चित् ग्रामेऽवान्तरनिवासः, अन्यस्यान्यत्र, तथेहापीत्यर्थः। अत्रोपसंहारस्य पर्वप्रापकत्वमाशङ्कते नन्वित्यादि। तत्परिहरन्ति स्यादेतदित्यादि। नोपसं-

रश्मिः।

संहारः। कर्मणि प्रयाजोपसंहारः। येनेति। अधिकारानुसारेण येन मार्गेण गमनम्। वाक्येति। प्रयाजानुयाजवाक्यसार्थक्यम्। अङ्गानां अर्थः फलं तदभावेऽनुपसंहृतानामानर्थक्यं स्यात्। मार्गस्त्विति। भाष्यं विवृण्वन्ति स्म अतो मार्गस्येति। अर्चिरादिमार्गस्य प्रकारभेदवाक्यसार्थक्ययोरन्यतररूपत्वाभावेपि। अस्येति। अविधेयत्वस्य। तथाविधेयत्वादिति। तथा अविधेयत्वादिति पदच्छेदः। यदुपासनशेष इति। यस्योपासनस्य शेषे कर्तरि। तमिति। उपासनकर्तारं प्रति। तथेति। भाष्यार्थमाहुः न मार्गोपसंहार इति। सिद्धमाहुः तथा चेति। तथा च यथा व्रजं गच्छतः शकटवाहनत्वे क्रोशपञ्चकग्रामे क्रोशषट्कग्रामे वावान्तरनिवासः। रथवाहनत्वे क्रोशाष्टकग्रामेवान्तरनिवासः। अश्ववाहनत्वे क्रोशदशकग्रामेऽवान्तरनिवासः। तथैव शिबिकावाहनत्वे। उष्ट्रवाहनत्वे क्रोशद्वादशके क्रोशचतुर्दशके वा ग्रामे निवासः। सुखेन। इहापीति। इह यावत्पर्वभोगस्तं प्रति तावत्पर्वोक्तिः। नन्वित्यादीति। तत्रेति। अर्चिरादिमार्गे। प्रापकत्वेनेति। पर्वप्रापकत्वेन

न्यत्रोक्तानां पर्वणामुक्तस्थले सन्निवेशोक्त्यापि सूत्रकाराभिमत एक एव मार्ग इति ज्ञायते । श्रुतौ सर्वत्र पूर्वपरामर्शादपि तथा ॥ १ ॥

## वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥

छान्दोग्ये वायुर्न पठ्यते । कौशीतकिश्रुतौ तु 'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोक'मिति वाय्वादयः श्रूयन्ते । तत्रार्चिषोऽग्नेश्चाभेदान्न विचारणीयमस्ति । वायुलोकं कस्माल्लोकात् गच्छतीत्याकाङ्क्षायामाह वायुमब्दादिति । 'अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद् यान् षडुदङ्ङेति मासाँस्तान्मासेभ्यः संवत्सरं संवत्सरादादित्य'मित्यत्र संवत्सरलोकात् परस्ताद्वायुलोको निवेशयितव्यः, तथा च संवत्सरलोकाद्वायुलोकं गच्छतीत्यर्थः । तत्र विनिगमकमाह अविशेषविशेषाभ्यामिति ।

अत्रेदं ज्ञेयम् । अग्निहोत्रादिकर्मभिश्चित्तशुद्धावुपासनाभिर्ज्ञानोदये क्रममुक्त्यधिकारी हि तत्तल्लोकं गत्वा भुक्त्वा अन्ते ब्रह्म प्राप्नोति । कर्म त्वग्निसाध्यम्

---

भाष्यप्रकाशः ।

हारापेक्षेति । अन्यभोगाभावान्नोपसंहारापेक्षा । ननु मार्गभेदे को दोषो येन क्लिष्टादरः क्रियत इत्यत आहुः अग्र इत्यादि । अग्र इति । अग्निमसूत्रेषु । पूर्वपरामर्शादिति । 'अर्चिषोऽहरह्नः पूर्वपक्ष' इत्यादिरूपात्तस्मात् । तथा च मार्गान्तरस्याभावादेतस्य च ज्ञानिनः प्रत्येवोक्तत्वाज्ज्ञानिनामेव क्रममुक्तिः । मर्यादाभक्तानां तु पूर्वोक्तरीत्या सद्योमुक्तिरेवेति सिद्धम् ॥ १ ॥

वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥ ननु मार्गैक्यं न युक्तम्, अनुक्तपर्वस्थलस्य वक्तुमशक्यत्वादित्याशङ्क्य तद्विनिगमनायाग्रिमं पठतीत्याशयेन सूत्रमवतारयन्ति छान्दोग्य इत्यादि । आहेति । 'संवत्सरलोकाद्वायुलोकं गच्छती'ति विनिगमकपूर्वकमाहेत्यर्थः ।

अविशेषौ कतरावित्यपेक्षायां हेतुं व्याकुर्वन्ति अत्रेदमित्यादि । तथाचार्चिरादिसंवत्सरान्तानां भूसम्बन्धित्वमविशेषः । वाय्वादित्ययोर्नीचोच्चलोकाधिपत्येन तथात्वात्तयोः पौर्वा-

रश्मिः ।

रूपेण । पूर्वपक्ष इति । अह्नः आपूर्यमाणपक्षः । इत्यादिरूपादिति । 'आपूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासा९स्तान् मासेभ्यः संवत्सर९संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयत्येष देवयानः पन्था' इति श्रुतिरादिपदार्थः । सिद्धं वदन्तः तथेति । भाष्यार्थमाहुः तथा चेति । पूर्वोक्तेति । पूर्वपादोक्तरीत्या ॥ १ ॥

वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥ संवत्सरलोकादिति । सौत्राब्दशब्दार्थः । कतराविति । अविशेषविशेषयोः साधारणयोर्विशेषाविशेषौ कतराविति प्रश्नः । हेतुमिति । अविशेषविशेषरूपम् । अत्रेदमित्यादीति । अग्निहोत्रादीति । अग्निहोत्रादिभिराध्यात्मिकचित्तशुद्धौ

भूलोक एव च भवति, अत आदौ तत्रत्यो भोगः, ततस्तदुपरितनलोकानाम्। 'पृथिवी दीक्षा तयाऽग्निर्दीक्षया दीक्षितः'। 'यथा पृथिव्यग्निगर्भे'त्यादिश्रुतिभ्यो भूरग्निप्रधाना भवति, अतोऽर्चिराख्यमग्निलोकमादौ गच्छति। ततः कर्मोपासनयोरहरादिसंवत्सरान्ते काले विहितत्वात्तत्र तत्र गत्वा भुङ्क्ते। तथा च संवत्सरान्तानां भूसम्बन्धित्वेनाविशेषात् तन्मध्ये वायोर्न प्रवेशः। भूलोकादुपर्यन्तरिक्षलोकस्तदुपरि द्युलोकः, तथा च 'वायुरन्तरिक्षस्याधिपति'रिति श्रुतेः, 'सूर्यो दिवोऽधिपति'रिति श्रुतेस्तयोः पौर्वापर्ये विशेषो हेतुरस्तीत्यादित्यलोकात् पूर्वमुक्तरीत्या भूलोकमध्यपातिसंवत्सरस्य परस्ताच्च वायुर्निवेशयितव्य इत्यर्थः। ननु 'तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽह'रित्यादिश्रुतिरुक्तमुक्तमनूद्यानूद्यापादानत्वं वदन्ती पूर्वोत्तरयोरव्यवधानं सूचयतीति नोक्तमादरणीयमिति चेत्। सत्यम्। यस्योपासकस्य न वायुलोकभोगः, तं प्रति सोक्तिः, यस्य तु तद्भोगः, तस्योक्तरीतिर्मार्गैक्यादिति नानुपपत्तिः काचित्।

केचित्तु, 'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति, स वायुलोकं स वरुणलोक'मित्यविशेषेण वायुरुपदिश्यते। मिथःपौर्वापर्यप्रापकपदाभावात्।

---

भाष्यप्रकाशः।

पर्ये विशेष इति ताभ्यां तथेत्यर्थः। अत्र 'नन्वि'त्यादिना छान्दोग्यश्रुतिविरोधमाशङ्क्य समादधते सत्यमित्यादि। सोक्तिरिति। छान्दोग्योक्ता अव्यवधानोक्तिः। उक्तरीतिरिति। व्यासोक्तरीतिः। तथा च भोक्तृविशेषेणाव्यवधानव्यवधानसम्भवान्न श्रुतिविरोधरूपानुपपत्तिरित्यर्थः।

एवं स्वमतेन व्याख्यायात्र शाङ्करादिमतमुपक्षिपन्ति केचित्त्वित्यादि। मिथःपौर्वापर्यप्रापकपदाभावादिति। तादृशपञ्चम्यन्तपदाभावात्। तथा च सोऽत्राविशेषपदार्थः। 'यदा

रश्मिः।

ज्ञानम्, आधिदैविकचित्तशुद्धौ भक्तिरिति सुबोधिन्यां अस्य पक्षस्य 'नैतादृशा भक्ता' इति निबन्धेऽनङ्गीकारात् तन्न्यायेनोपासनाः निवेश्योक्तम्। एवेति। मनुष्याणां न तु देवानामिति न 'तदुपर्यपी'त्यधिकरणविरोधः। यदि पृथिव्यग्निगर्भा स्यात्, तदा पृथिवीदीक्षयाग्निर्दीक्षितो भवेदित्याशयेनाहुः यथा पृथिव्यग्निगर्भेति। तथा च पृथिव्या दीक्षा तया दीक्षया पृथिवीगर्भोऽग्निर्दीक्षित इत्यर्थः। दीक्षां इतो दीक्षितः। अहरादीति। 'अहरहः सन्ध्यामुपासीत'। 'प्रातर्मध्यन्दिने सायं विष्णुपूजा स्मृता बुधैः। यथा सन्ध्या तथा विष्णुपूजा नित्ये'ति नारदीये। 'नियतस्य तु संन्यासः कर्मणो नोपपद्यते। मोहात्तस्य परित्यागस्तामसः परिकीर्तितः' इति गीता। 'मल्लिङ्गमद्भक्तजनदर्शनस्पर्शनार्चन'मित्युपक्रम्य 'मज्जन्मकर्मकथनं मम पर्वानुमोदनम्। गीतताण्डववादित्रगोष्ठीभिर्मद्गृहोत्सवः। यात्राबलिविधानं च सर्ववार्षिकपर्वस्वि'ति श्रीभागवते। सर्वेषु वार्षिकेषु पर्वसु च। एवमहरादिसंवत्सरान्ते काले विहितत्वात् तत्र तत्रेति। जगन्नाथादौ। श्रीगोवर्धननाथादौ भक्तिशरणमार्गाभ्याम्। एवं चादित्यमित्यनेन पदेन विश्रामस्थानमपि। 'स तत्र विजिहीत' इति बृहदारण्यकात्। स सूर्यः तत्र आगमनस्थले विजिहीते छिद्रं कुरुते। उक्तरीत्येति। छान्दोग्ये पञ्चाग्निविद्योक्ता'र्चिष' इत्यादिश्रुतिक्रमेण। तथात्वादिति पौर्वापर्यात्। तथेति वायुमब्दान्निवेशयेत्। अत्रेति सूत्रार्थे। छान्दोग्येति उक्तश्रुतिविरोधम्। अव्यवेति। वायुतो न तथा। न श्रुतीति। उपा-

'यदा वै पुरुषोऽस्माल्लोकात् प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्व आक्रमते स आदित्यमागच्छती'ति श्रुत्वा आदित्यात् पूर्वो वायुर्विशेषेणोपदिश्यत इत्यब्दादित्ययोरन्तराले निवेशयितव्य इत्यर्थं वदन्ति।

स चिन्त्यते । यथा तेन 'स ऊर्ध्व आक्रमते स आदित्यमागच्छती'ति विशेषोपदेश इत्युच्यते, तथा 'स वरुणलोक'मित्यत्रापि वक्तुं शक्यम् । न च, 'स आदित्यमागच्छती'त्यत्र तच्छब्दस्य पूर्वपरामर्शित्वाद्वायुलोकगतस्यैव पूर्वत्वात् तथेति वाच्यम् । 'अग्निलोकमागच्छति स वायुलोकं स वरुणलोक'मित्यत्रापि

भाष्यप्रकाशः।

वै पुरुष' इत्युक्तं तेनोर्ध्वाक्रमणमादित्ये गमनं च यदुच्यते, स विशेषपदार्थः । ताभ्यामब्दादित्ययोरन्तराले वायुनिवेशं वदन्तीत्यर्थः । श्रुत्यर्थस्तु यदा यस्मिन् वै निश्चयेन पुरुषो ब्रह्मविद् अस्माल्लोकाच्छरीरात् प्रैति लोकान्तरं गच्छति, तदा स पुरुषो वायुमागच्छति प्राप्नोति । तस्मै आगताय, स वायुः तत्र तदागमनस्थले विजिहीते पूर्वं स्तिमितोऽपि तदानीं स्वावयवान् विगमयति तस्य गमनार्थम् । विगमनस्थलपरिमाणमाह, यथा रथचक्रस्य खम् यावत्परिमाणं रथचक्रस्य छिद्रम् । तेन मार्गेण स पुरुष ऊर्ध्व आक्रमते, स आदित्यमागच्छति प्राप्नोतीति ।

एवं तद्व्याख्यातमर्थमनूद्य तदुक्तस्य विशेषस्य विशेषत्वं युज्यते, न वेति विचारयन्ति स चिन्त्यत इत्यादि । इत्यत्रापि वक्तुं शक्यमिति । ऊर्ध्वाक्रमणस्यार्थसिद्धत्वात्तच्छब्दस्य तत्रापि सत्त्वाद्वक्तुं शक्यम् । तथाचोर्ध्वाक्रमणतच्छब्दोक्तपूर्वपरामर्शयोर्विशेषपदार्थत्वाङ्गीकारे वाजसनेयिभिर्वाय्वनन्तरमादित्यवत्कौशीतकिभिर्वायुलोकानन्तरं वरुणलोकस्य पठ्यमानत्वेन भवदुक्तविशेषस्य तत्रापि शक्यवचनत्वादुक्तहेतोरर्थान्तरसाधकतया प्रकृतासिद्धिरित्यर्थः । तर्हि वायुलोकगतपुरुषीयं पूर्ववर्तित्वं परामृशतस्तच्छब्दस्य तथात्वमस्त्वित्यत आहुः न चेत्यादि । तथा चाद्ये पक्षे व्याख्येयसूत्रविरोधः, द्वितीये च वरुणसूत्रस्येत्युभयमप्ययुक्तमित्यर्थः । दूषणान्तर-

रश्मिः।

दानविरोधकृतश्रुतिविरोधरूपा । अब्दादित्ययोरन्तराल । इति नन्वब्दः क्वोक्त इति चेन्न । छान्दोग्यैकवाक्यतया प्राप्तेः । स्तिमित इति विगमनस्थलरहितोपि । विगमयतीति विगमनस्थलं कुर्वन्त्यवयवास्तान् विगमनस्थलं कारयति वायुः । तच्छब्दस्येति । स वरुणलोकं इत्यत्र स इति तच्छब्दस्य । तत्रेति वरुणवाक्ये । तत्रापीति कौशीतकिब्राह्मणेपि । उक्तहेतोरिति अविशेषविशेषहेतोः । अर्थान्तरम् । 'संवत्सराद् वायुलोकं वायुलोकाद् वरुणलोकं वरुणलोकादादित्यं' इत्यर्थान्तरम् । अर्थः 'अग्निलोकात्संवत्सरं संवत्सराद्वायुलोकं वायुलोकाद्वरुणलोकं वरुणलोकादादित्यलोकम् । स आदित्यमागच्छती'त्युक्तश्रुतेरिति । तदन्योर्थ उक्त इत्यर्थान्तरम् । तस्य साधकतया प्रकृतं यदब्दाद्वायुलोकं वायुलोकादादित्यमिति । यद्वा परमते प्रकृतोग्निलोकात्संवत्सरं इत्यादिरुक्तोर्थः । तस्यार्थस्यासिद्धिः । अनुमानं तु छान्दोग्ये वायुमब्दात् अविशेषविशेषाभ्याम् । 'अग्निलोकमागच्छति स वायुलोकं स वरुणलोक'मिति वाक्यवदिति । एवं दृष्टान्तः । तच्छब्दस्येति स वरुणलोकमिति तच्छब्दस्य । तथात्वमिति । पौर्वापर्यवाचकत्वमस्त्विति । न चेत्यादीति । तथेति । स वरुणलोकमागच्छतीति न निवेश्यम् । तडितोधिवरुण इतिसूत्रात् । एवं च तथा

तुल्यत्वात् । किञ्च, एवमग्निलोकानन्तरं वायुलोक इत्यपि वक्तुं शक्यम्, अतो विद्वन्निरुपेक्ष्योऽयम् । वाजसनेयिनस्तु, 'मासेभ्यो देवलोकं देवलोकादादित्य'मिति पठन्ति । तत्राप्यादित्यात् पूर्वो देवलोकात् परो वायुर्ज्ञेयः । एकत्रादित्यात् पूर्वत्वे सिद्धे मार्गैक्यादन्यत्रापि तथात्वस्य न्यायप्राप्तत्वात् । सूत्रकारेण तु छन्दोगश्रुत्यपेक्षयोक्तम्, वायुमब्दादिति । एवं सति मासेभ्यः परस्तादब्दनिवेशनं कार्यम् ।

नच 'वायुमब्दा'दिति सूत्रान्मार्गभेदापत्तिः । देवलोकस्यादित्याधिष्ठेयत्वेनादित्यमध्यपातित्वमभिप्रेत्य छन्दोगश्रुतिस्तथोक्तवती । तदनुसारेण व्यासोपि । अतो नानुपपत्तिः ॥ २ ॥

---

भाष्यप्रकाशः ।

माहुः । किञ्चेत्यादि । एवमिति । ऊर्ध्वाक्रमणपूर्ववर्तित्वयोर्विशेषपदार्थत्वे । तथा चाब्दानन्तर्यमपि न सिध्येदित्यर्थः । एवं सूत्रव्याख्यानांशे तन्मतमपास्य बृहदारण्यकश्रुतिविरोधांशेपि तन्मतं परिहर्तुमाहुः वाजसनेयिन इत्यारभ्याब्दादितीत्यन्तम् । परिहरन्ति एवं सतीत्यादि । एवं सतीति । देवलोकनिवेशेऽवश्यं कर्तव्ये सति । तथोक्तवतीति । संवत्सराब्दादादित्यमित्युक्तवती । तथाच स्थानापेक्षया 'सूर्यो दिवोऽधिपति'रित्युक्तलिङ्गस्य बलिष्ठत्वाद् देवलोकात् पूर्वमेव वायुनिवेशो युक्तः, न तु ततः परमित्यर्थः ।

रामानुजाचार्यास्तु, देवलोकशब्दं वायुलोकपरमेवाङ्गीकुर्वन्ति । यद्देवलोकशब्दे अविशेषेणोक्तम्, तदेव वायुलोकशब्दे विशेषेणोच्यत इत्यविशेषविशेषाभ्यामित्येव तत्रापि हेतुः । वाजसनेयिनां 'स वायुमागच्छती'ति श्रावणात् कौशीतकिनां वायुलोकशब्दे वायुश्चासौ लोकश्चेति कर्मधारयमङ्गीकुर्वन्तो वायोर्देवलोकत्वाय, 'योऽयं पवत एष देवानां ग्रहा' इति श्रुतिं चाहुः । तत्राप्येकत्र कर्मधारयाङ्गीकारे प्रायपाठविरोधः । सर्वत्र तदङ्गीकारे तु लोकपदप्रयोगवैयर्थ्यम् । 'स वायुमागच्छती'त्यत्र केवलवायुप्रयोगस्तु द्वारत्वाभिप्रायेण । आदित्यसन्निधानात् । आदित्ये लोकद्वारत्वस्य, 'एतद्वै खलु लोकद्वार'मिति छान्दोग्ये श्रावणादिति । अतश्चिन्त्यम् ॥ २ ॥

रश्मिः ।

नाम स आदित्यमागच्छतीत्यत्र अविशेषविशेषहेतुर्न वरुणलोकमित्यत्रापीति न च वाच्यमित्यर्थः । तुल्यत्वादिति वायुलोकानन्तरमादित्यलोकं गच्छतीत्यस्य तुल्यत्वात् । तथा च न स वरुणलोकमागच्छतीत्यनिवेश्यम् श्रुतत्वात्, अन्यपौर्वापर्यं तु निवेश्यमिति भावः । आद्य इति अर्थान्तरपक्षे । व्याख्येयेति वायुमब्दाद्वायोरादित्यमिति व्याख्यानाद् व्याख्येयसूत्रविरोधः । द्वितीय इति । अर्थपक्षे सोप्युक्त एव । उभयमिति अर्थोर्थान्तरं च । दूषणेति । उक्तानुमाने अग्निलोकमागच्छतीत्यादेरदृष्टान्तत्वार्थं तथा । बृहदारण्यकेति माते व्याख्येयसूत्रविरोधांशे । तन्मतमिति । वाजसनेयिनस्तु 'मासेभ्यो देवलोकं देवलोकादादित्य'मिति समामनन्ति । तत्र आदित्यानन्तर्याय देवलोकाद् वायुमभिसंभवेयुः । वायुमब्दादिति तु छन्दोगश्रुत्यपेक्षयेति परभाष्यादनूदितं तन्मतम् । इत्यन्तमिति । इत्यन्तं तन्मतमाहुरित्यन्वयः । एवं सतीत्यादीति । मार्गभेद इति वायुलोकाद्देवलोकं देवलोकादादित्यमित्यस्मान्मार्गाद्भेदस्यापत्तिः । इत्युक्तस्येति । अत्रैव भाष्योक्तस्य लिङ्गस्य । तत इति देवलोकात् । ग्रहा इति । छत्रिणो यान्तीत्यत्र छत्रित्ववत् वायौ ग्रहत्वम् । बहुवचनं छान्दसम् । ग्रहा इत्यत्र अचो रेफो वा । प्रायपाठेति । अग्नेर्लोकोग्निलोकस्तमित्येव षष्ठीतत्पुरुषप्रायपाठस्तस्य विरोधः । सर्वत्रेति । वायुलोकपदेपि । लोकेति वायुश्चासौ लोकः वायुलोक इत्यत्र वायुलोकलोक इत्यर्थापत्त्या तथा । वायुपदस्य वायुलोकवाचकत्वम् । 'योऽयं पवत एष देवानां ग्रहा' इति श्रुतेः ॥२॥

तडितोऽधि वरुणः सम्बन्धात् ॥ ३ ॥

'आदित्याच्चन्द्रमसं चन्द्रमसो विद्युत'मित्यत्र पठितविद्युल्लोकात् परतो वरुणलोको निवेशनीयः । तत्र हेतुः । सम्बन्धात् । तडितोऽप्सम्बन्धित्वाद्वरुणस्य तत्पतित्वात् तथा ॥ ३ ॥

वरुणाच्चाधीन्द्रप्रजापती ॥ ४ ॥

स्पष्टमिदम् । अर्चिरादिपाठे विद्युदनन्तरं 'तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयती'ति पठ्यते । तत्तु यस्योपासकस्य वरुणादिलोकगमनापेक्षा नास्ति, तमपेक्ष्येति ज्ञेयम् । मार्गैक्यनियममभिप्रेत्य सूत्रकारोऽन्यत्रोक्तानामन्येषामपि लोकानां तत्रैव निवेशनमाह ॥ ४ ॥

॥ इति चतुर्थाध्याये तृतीयपादे प्रथममर्चिराद्यधिकरणम् ॥ १ ॥

---

भाष्यप्रकाशः ।

तडितोऽधि वरुणः सम्बन्धात् ॥ ३ ॥ ननु भवतु संवत्सरादुपरि देवलोकादर्वाग्वायुलोकनिवेशस्तथापि वरुणलोकः क्व निवेशनीयः, न हि तत्र विशेषादिरूपं किमपि नियामकमन्तराले निवेशने लभ्यते, अतो मार्गभेदपक्ष एव युक्त इत्याशङ्कानिरासायेदमित्याशयेन व्याकुर्वन्ति आदित्यादित्यादि । तडितोऽप्सम्बन्धित्वादिति । 'विशाला हि विद्युतो नृत्यन्ति तीव्रस्तनितनिर्घोषो जीमूतोदरेषु नृत्यन्ति अथापः प्रपतन्ति विद्योतते स्तनयति वर्षिष्यति वे'ति ब्राह्मणात् तथा । तथा चाप्सम्बन्धरूपस्य नियामकस्य विद्यमानत्वात् तन्निवेशसिद्धेन मार्गैक्यबाध इत्यर्थः ॥ ३ ॥

वरुणाच्चाधीन्द्रप्रजापती ॥ ४ ॥ स्पष्टमिति । पाठसामर्थ्यादेव तन्निवेशस्थानं स्पष्टमिति न पूर्ववदाशङ्कावकाश इत्यर्थः । तडिदनन्तरं वरुणादिलोकनिवेशेऽर्चिरादिश्रुतिविरोधमाशङ्क्य परिहरन्ति अर्चिरादीत्यादि । तमपेक्ष्येति पर्यङ्कविद्युदुपासकमपेक्ष्य । मार्गैक्यनियममभिप्रेत्येति । अक्षिपुरुषविद्यापञ्चाग्निविद्ययोरिव पर्यङ्कविद्यायामपि देवयानमार्गस्य प्रत्यभिज्ञानात् तयोरिवास्यामपि वैद्युतस्यातिवाहिकस्यावश्यकत्वात्

रश्मिः ।

तडितोऽधि वरुणः सम्बन्धात् ॥ ३ ॥ तत्रेत्यादि । 'अग्निलोकमागच्छति स वायुलोकं स वरुणलोक'मित्यत्र विशेषः स इति द्वये । आदिना क्रमः सम्बन्धश्च । अन्तराले इन्द्रादित्यलोकयोरन्तराले । इदमिति । सूत्रम् । नृत्यन्तीतीति । नृत्यन्ति इति इ इति छेदः । इ आश्चर्ये । ब्रह्मेति । ब्रह्मेवाचरति । नृत्यसूक्ष्मत्वादिना । तेति वर्णागमः । तन्निर्घोषो वा तकारलोपः । तस्याः विद्युतः निर्घोषः आकाशे जीमूतोदरेष्वाकाशे शब्दः । 'आकाशे कः शब्दं करोती'ति प्रश्ने 'आरणे विद्यु'दित्युत्तरात् । जीमूतो मेघः इन्द्रस्यात्ममूर्तिः । अथ तदनन्तरं आपः सेचनकर्म्यः । विद्योतते विद्युत् । स्तनयति जीमूतः । वर्षिष्यति वा जीमूतः । तथेति । भाष्यीयतथेत्यस्यानुवादः । तडितोऽप्सम्बन्धित्वम् । तन्निवेशेति । वरुणलोकनिवेशसिद्धेः ॥ ३ ॥

वरुणाच्चाधीन्द्रप्रजापती ॥ ४ ॥ पाठे इति । 'स एवं देवयानं पन्थानमापद्याग्निलोकमागच्छति, स वायुलोकम्, स वरुणलोकम्, स इन्द्रलोकम्, स प्रजापतिलोकम्, स ब्रह्मलोक'मिति कौषीतकिश्रुतिपाठसामर्थ्यात् । पूर्ववदिति । तडित्सूत्रवत् । आशङ्केति । लोकनिवेशस्याशङ्कावकाशः । मार्गैक्यनियममभिप्रेत्येतीति । अर्चिरादिमार्गैक्यनियमम् । तयोरिवास्यामिति ।

---

१ नृत्यन्तीति रश्मिपाठः ।

## आतिवाहिकास्तल्लिङ्गात् ॥ ५ ॥ (४-३-२)

विद्युदनन्तरं 'तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयती'त्यत्र भवति संशयः। उक्तश्रुतेर्गमयित्रैव ब्रह्मप्राप्तिरिति निश्चीयते। स च विद्युदनन्तरमेव पठ्यते। एवं सति यस्य वरुणादिलोकगमनम्, तस्य वचनाभावेन गमयित्रप्राप्ते-र्ब्रह्मप्राप्तिर्भवति, न वेति। तत्र वाचनिकस्य यावद्वचनत्वात्तदभावेन सा न भवतीति प्राप्त आह आतिवाहिका इति।

एतदुक्तं भवति। यस्योपासकस्य यावत्फलभोगानन्तरं ब्रह्मप्राप्तिर्भाविनी, तस्य तावत्तद्भोगानन्तरं ब्रह्मप्राप्तिर्भवति, अत एव कौशीतकिश्रुतौ प्रजापति-लोकानन्तरं ब्रह्मलोकः पठ्यते। अन्यथा कृतसाधनवैयर्थ्यम्, तेषां ब्रह्मप्राप्तिसाधन-त्वबोधकश्रुतिविरोधश्च स्यात्। तथा च यत्रातिवाहिकश्रुतिर्नास्ति, तत्राप्याति-वाहिको भगवदीय एव ब्रह्म प्रापयतीति ज्ञेयम्। वस्तुतस्तु बहव एव तादृशाः

---

भाष्यप्रकाशः।

तथाभिप्रेत्य। तथाचैतन्न्यायेन सर्वासु क्रमप्राप्तिबोधिकासु ब्रह्मविद्यासु वैद्युतं पुरुषं विना न ब्रह्मप्राप्तिरिति बोधनार्थं मार्गैक्यनिरूपणमित्यर्थः॥ ४॥ इति प्रथममर्चिराद्यधिकरणम् ॥१॥

आतिवाहिकास्तल्लिङ्गात् ॥ ५ ॥ एतस्याधिकरणत्वाय विषयं संशयं चाहुः विद्यु दित्यादि। सङ्गतिस्त्ववसरः। पूर्वपक्षमाहुः तत्रेत्यादि। सिद्धान्तं व्युत्पादयन्ति एतदि-त्यादि। अन्यथा कृतसाधनवैयर्थ्यमिति। तेनोपासनेन ब्रह्मप्राप्त्यभावे तदर्थं कृतं यदुपासनरूपं साधनं तस्य वैयर्थ्यम्। तेषामिति। उपासनानाम्। आतिवाहिकश्रु-तिरिति। अतिवहनं अतिक्रामयित्वा प्रापणं अतिवाहः। भावे घञ्। तत्सबन्धी आति-वाहिकस्तद्बोधिका श्रुतिरातिवाहिकश्रुतिः। ननु यद्येवमातिवाहिकप्राप्त्यर्थमिदं सूत्रं स्यात्, तदैकवचनमेव प्रयुज्येत, श्रुतौ 'अमानवः पुरुष' इत्येकवचनात्, अतो नैवमित्यत आहुः वस्तुत इत्यादि। तथा च यत्रातिवाहिको न पठितः, तस्यामपि विद्यायां ब्रह्मप्राप्तेरुक्त-

रश्मिः।

अक्षिपुरुषविद्यापञ्चाग्निविद्ययोरिवास्यां पर्यङ्कविद्यायाम्। तथाभिप्रेत्येति। मार्गैक्यनियममभिप्रेत्य। एतदिति। समीपतरवर्तिसूत्रेण ॥ ४ ॥ इति प्रथममर्चिराद्यधिकरणम् ॥ १ ॥

आतिवाहिकास्तल्लिङ्गात् ॥ ५ ॥ विद्युदित्यादीति। उक्तेति। अव्यवहितपूर्वमुक्त-श्रुतेः। गमयित्रप्राप्तेरिति। भोगभूमिषु भोगानन्तरं अन्यस्य कर्मादेर्गमयितुरभावादपेक्षितगमयित्र-प्राप्तेरित्यर्थः। अवसर इति। क्रममुक्तौ ज्ञानिसम्बन्धिन्यां ब्रह्मप्राप्तौ प्रतिबन्धकीभूता मार्गनिवेशन-जिज्ञासा तस्या निवृत्तौ सत्यां अवश्यवक्तव्यत्वं सर्वत्र ब्रह्मपुरुषस्य अमानवस्य निवेशे इत्यवसरसङ्गति-लक्षणसमन्वयः। प्रतिबन्धकीभूतजिज्ञासानिवृत्ताववश्यवक्तव्यत्वमवसर इति लक्षणम्। तत्रेत्यादीति। वाचनिकस्य तत्पुरुषस्य अमानवस्य। यावद्वचनं वचनमनतिक्रम्येति यावद्वचनम्। अव्ययी-भावः। अन्यत्र वचनाभावेन। सेति ब्रह्मप्राप्तिः। तदर्थं ब्रह्मप्राप्त्यर्थम्। भास्करभाष्ये तु भवार्थे ठगुक्तः तत्र भव इति सूत्रात्। तथा चातिवाहे भव आतिवाहिकः। आतिवाहिक इति। औणादिकष्ठक्। भाष्ये। तथा चेत्यादि। विद्यासामर्थ्याद्गमयित्रभावेपि ब्रह्मप्राप्तौ सत्याम्। भगवदीय एवेति।

सन्तीति ज्ञापनाय बहुवचनमत्रोक्तम्। तन्मध्ये कश्चनागत्यैक एव नयतीति ज्ञापनाय श्रुतावेकवचनम्। तत्र हेतुः तल्लिङ्गात्। 'तत्पुरुषोऽमानव' इत्यत्र ब्रह्मसम्बन्धित्वं लिङ्गमुच्यते। तेनेदं ज्ञाप्यते, यथा विद्याबलात् तत्तल्लोकप्राप्तिः, तथैव ब्रह्मप्राप्तिरपीति न, किन्तु भगवदीयपुरुषानुग्रहेणैवेति।

न च पूर्वपूर्वलोकाधिष्ठातृदेवा उत्तरोत्तरलोकं प्रत्यातिवाहिका यथा, तथा ब्रह्मप्राप्त्यव्यवहितपूर्वलोकदेवा एव ब्रह्मप्रापका इति तत्पदेन स लोक एवोच्यत इति वाच्यम्। तदेतरलोकेषु तदकथनं यथा, तथात्रापि न कथयेत्। लोका-

भाष्यप्रकाशः।

त्वात् तदन्यथानुपपत्त्या स कल्प्यः, अतः प्राप्यबहुत्वात् प्रापकबहुत्वबोधाय तद्वचनमित्यर्थः। श्रौतस्यैकवचनस्य तात्पर्यमाहुः तन्मध्य इत्यादि। तत्र हेतुरिति। बहुत्वे हेतुः। एतमर्थं हेतुव्याख्यानमुखेन स्फुटीकुर्वन्ति तत्पुरुष इत्यादि। उच्यत इति। 'अमानव' इत्यादिना वाक्येनोच्यते। तेनेति। श्रौतेन लिङ्गेन। तथा चैतल्लिङ्गेनैव तेषां बहुत्वसिद्धिरित्यर्थः।

अत्रान्ये एवं व्याकुर्वन्ति। 'अर्चिषोहरह्न आपूर्यमाणपक्ष'मित्यादौ किमेतेऽर्चिरादयो देवयानमार्गस्य चिह्नानि, यथा अमुकं नगरं प्रति गच्छतोऽमुकः पर्वतोऽमुका नदी, एते ग्रामा इति, अथवा अवान्तरभोगभूमयः यथा दूरतरं नगरं गच्छतोऽवान्तरनिवासग्रामाः, उतातिवाहिका देवताविशेषा इति सन्देहे। आतिवाहिका एवैते। कुतः। तल्लिङ्गात्। 'आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयतीति सिद्धवद्गमयितृत्वदर्शनरूपाल्लिङ्गात्। 'अमानव' इति विशेषणं तु पूर्वोक्तमानवत्वनिवृत्त्यर्थमिति।

तदेतन्निषेधन्ति न चेत्यादि। तत्पदेनेति। श्रौतेन लुप्तापादानपञ्चमीकेन। तन्निषेधहेतुं व्युत्पादयन्ति तदेतरेत्यादि। यदि तत्पदेन विद्युल्लोकः परामृश्येत, तदान्येषु लोकेषु यथा गमयितुरकथनम्, तथात्रापि गमयितारं न कथयेत्। देवानामातिवाहिकत्वस्य लोकसम्बन्धादेव प्राप्तत्वात्। नन्वत्र तत्पदस्य लोकबोधकत्वेपि देवानां लोकस्थत्वात्रातिवाहिकत्व-

रश्मिः।

अयं कर्मस्थानीयः, न तु ज्ञानावभर्जितकर्मणां ज्ञानिनामुत्क्रमणादि कर्म। ननु विद्या प्रापयतीत्युक्तमिति चेत्। न। विद्याफलस्य ब्रह्मप्राप्तेरवान्तरमार्गगततत्तल्लोकदेवताऽसाहित्ये सामिफलं भवेदिति विद्यासाफल्यायातिवाहिकोक्तेः। नैवमिति। यत्रातिवाहिकश्रुतिर्नास्तीत्याद्युक्तं न, किन्तु वाचनिकस्यामानवपुरुषस्य यावद्वचनत्वम्। तदन्यथानुपपत्त्येति। अत्र शास्त्रान्तरवत् नान्यथानुपपत्तिरर्थापत्तेरविषयत्वपरिजिहीर्षयापि त्वर्थापत्तिरेवान्यथानुपपत्तिः करणत्वोक्तेस्तृतीययेति। स इति आतिवाहिकः। तद्वचनमिति सूत्रे बहुवचनम्। एनमित्यन्वादेशः। प्रतीकार्थमुपात्तस्य हेतोः स्फुटीकारार्थं पुनरुपादानात्। किञ्चित्कार्यार्थमुपात्तस्य पुनरुपादानमन्वादेशः तत्पुरुषो लोकपुरुषः अतोऽमानवो ब्रह्मसम्बन्धिलिङ्गमित्याशयेनाहुः अमानव इति। श्रौतेन इति। अमानवरूपेण। तेषामिति। आतिवाहिकानाम्। यथा अमुकमिति। यथा अमुकं नगरं प्रति गच्छतः अमुकः पर्वतः अमुका नदी य एते ग्रामा इति पाठः। सन्देह इति त्रिकोटिकसन्देहे। पूर्वपक्षस्तु अवान्तरभोगभूमय आतिवाहिका इति। आतिवाहिका एवेति। देवताविशेषा एव तु देवयानमार्गस्य चिह्नानि नाप्यवान्तरभोगभूमय

१. अमुकः, अमुका इति रश्मिपाठौ।

विद्युल्लोकादूर्ध्वं देवानामातिवाहिकत्वोक्त्यार्वाचीनलोकप्रापकातिवाहिकस्याभावात् तत्प्राप्तिर्न स्यात् । तथा सति देवयानमार्ग एवोच्छिद्येत । अतो यथा विद्याबलेनैवार्चिषः प्राप्तिः, तथेतरेषामपीति बुध्यस्व । कस्यचिदल्पलोकगत्यनन्तरमेव ब्रह्मप्राप्तिः । कस्यचित् बहुलोकगत्यनन्तरं सोच्यत इति भोगभूमित्वमेव तेषामवगन्तव्यम् । सर्वेषां सर्वत्र गमने देवयानं पन्थानं वदन्त्याः श्रुतेः साम्नि तत्कथनमनुपपन्नं स्यात् । अत उपासनाभेदेन फलभेदं ज्ञापयन्ती तथा वदतीति युक्तमुत्पश्यामः ॥ ५ ॥

---

भाष्यप्रकाशः ।

कल्पनम्, किन्तूपसंहारस्थं सिद्धवत् गमयितृत्वदर्शनमेव देवानामातिवाहिकत्वे लिङ्गम्, अतस्तत्प्रापणार्थं तत्कथनमिति चेत्, तत्राहुः लोकेत्यादि । तथा चात्र यद् गमयितृकथनम्, तद्विद्युल्लोकात् पूर्वेषु लोकेषु गमयित्रपेक्षाभावं बोधयति, न तु गमयितारं प्रापयतीत्यर्थः । ननु यदि विद्याबलेनैव विद्युदन्तलोकप्राप्तिः स्यात्, तदा सर्वासु विद्यासु सर्वे लोका उच्येरन्, तत्तु नोच्यते, अतो न विद्याबलेन तत्प्राप्तिः, किन्तु गमयित्रैवेति श्रुतेस्तात्पर्यमिति चेत्, तत्राहुः कस्यचिदित्यादि । तथा च देवयाने मार्गेऽप्याद्युत्तरं सर्वत्र लोकशब्दोपबन्धात्तस्य च श्रुतिरूपतया लिङ्गापेक्षया बलीयस्त्वाच्चेषां भोगभूमित्वमेव युक्तम्, न त्वातिवाहिकत्वम् । किञ्च । कस्यचित् प्रापणार्थमर्चिरादिदेवतायां गतायां तस्मिन्नवसरेऽन्यस्यार्चिःप्राप्तिर्न स्यात् । तथाच 'तेऽर्चिषमभिसम्भवन्ती'तिश्रुतिबाधप्रसङ्गः । अतस्तदभावाय तेषां लोकत्वमवश्यमङ्गीकार्यम् । किञ्च । विद्याया अर्चिषः पूर्वमुक्तत्वेपि तस्या गम्रा सहानुवर्तमानत्वात्तयैव तत्तल्लोकप्राप्तिरित्येव युक्तम् ।

रश्मिः ।

इत्यर्थः । सिद्धवदिति । न तु पूर्वकोटिद्वयमुपन्यस्य तत्पुरुष इत्यादि साध्यवत् । पूर्वोक्तेति । तत्पुरुष इत्यनेनोक्तमानवत्वनिवृत्त्यर्थम् । तत्पदेन तस्य लोकस्य पुरुषा इति व्याख्यानं तद्वत् तत् तस्मादित्यपि व्याख्यानमित्याशयेनाहुः श्रौतेन लुप्तापादनपञ्चमीकेनेति । तन्निषेधहेतुमिति । भोगभूमिरूपार्थरहिततत्पुरुषरूपार्थस्य निषेधे हेतुं व्युत्पादयन्ति विद्युल्लोक इति । तस्माल्लोकादित्यर्थात्तथा । परामृश्येतेति । अधीष्टे लिङ् । कथयेदिति । स्वार्थे णिच् । उपसंहारस्थमिति । देवयानपथि संप्राप्तिस्थमित्यर्थः । तत्प्रापणार्थमिति । लोकप्रापणार्थम् । तत्कथनमिति आतिवाहिककथनम् । तत्त्विति । लोकन्यूनाधिकभावापेक्षया सामान्ये नपुंसकम् । लोकन्यूनत्वं लोकाधिकत्वं नोच्यत इत्यर्थः । तत्प्राप्तिः लोकप्राप्तिः । अप्यादीति । वायुवरुणेन्द्रप्रजापतिब्रह्माणि गृह्यन्ते आदिना । श्रुतीति । निरपेक्षो रवः श्रुतिः पूर्वतन्त्रोक्तलक्षणा । लिङ्गेति आतिवाहिकलिङ्गापेक्षया । बलीयस्त्वं 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्य'मिति जैमिनिसूत्रात् । तेषां अर्चिरादिमार्गगतावान्तरविश्रामस्थानानाम् । आतिवाहिकत्वमिति । तत्तल्लोकदेवताविशेषत्वम् । तेषामिति । आतिवाहिकानाम् । सर्वेषामित्यारभ्योत्पश्याम इत्यन्तभाष्यतात्पर्यार्थं वदन्तो विद्यासाफल्यायातिवाहिका इत्याहुः किञ्च विद्याया इति । तयैवेति । तया विद्ययापि । अपिनातिवाहिकाः । एवकारोप्यर्थे । लोकदेवता विना विद्या साम्नि स्यादिति भावः । लोकदेवतास्तात्पर्यार्थः । भाष्यार्थस्तु सर्वेषां विद्यावतां सर्वत्र लोकेषु । साम्नि तत्तल्लोकदेवता विनार्थम् । तत्कथनं देवयानपथकथनम् । फलभेदं तत्तल्लोकदेवतासाहित्यरूपं फलप्रकारम् । तथा वदतीति । युक्तितात्पर्याभ्यामातिवाहिकपदार्थं वदतीति ।

ननु 'तेषामिह न पुनरावृत्तिरस्ती'त्यादिश्रुतिभ्यो देवयानं पन्थानं प्राप्तानां पुंसां ब्रह्मवित्त्वमवश्यं वाच्यम्। तेन सद्योमुक्तौ सम्भवन्त्यां सत्यां क्षयिष्णुत्वेन क्षुद्रानन्दत्वेन च हेयानां परमफलप्राप्तिविलम्बहेतूनामर्चिरादिलोकानां कामना कुतः यतस्तद्धेतुभूतोपासनाः सम्भवन्ति। किञ्च। 'अर्चिरादिना तत्प्रथिते'रित्यत्र यदुक्तं ज्ञानमार्गीयस्यैवार्चिरादिप्राप्तिः, न भक्तिमार्गीयस्येति, तदप्यनुपपन्नम्। 'यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च य'दित्युपक्रम्य, 'सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा, स्वर्गापवर्गं मद्धाम कथञ्चिद्यदि वाञ्छती'ति भगवद्वाक्याद्भक्तस्याप्येतद्वाञ्छाफले सम्भवतः। अन्यथा प्रभुर्न वदेत्। एवं सति भक्तिसुखं हित्वान्यत्र कामनायां हेतुर्वाच्य इत्याकाङ्क्षायां तमाह।

उभयव्यामोहात् तत्सिद्धेः ॥ ६ ॥

अत्रेदं ज्ञेयम्। देवयानः पन्था अपि भगवतैव सृष्टोऽस्ति। तथाचोक्तहेतुभिस्तत्र कस्यापि कामाभावे तत्सृष्टिर्व्यर्था स्यात्, अतो भगवानेव काँश्च व्यामोहयति ज्ञानिनो मर्यादामार्गीयभक्ताँश्च, अतस्तत्कामनासिद्धेस्तत्फलभोग इति।

यत्त्वर्चिरादिमार्गगन्तॄणां देहवियोगेन सम्पिण्डितकरणग्रामत्वेनास्वातन्त्र्यं व्यामोहः। अर्चिरादीनां चाचेतनत्वेनास्वातन्त्र्यं व्यामोहः। कार्यकरणासामर्थ्यमिति यावत्। तेनार्चिराद्यधिष्ठातृदेवैरतिवाह्यन्त इति सिद्धमिति व्याख्यानम्।

---

भाष्यप्रकाशः।

अतो यथैकदेशीयानेकग्रामवासिनामेकस्मिन् देशे गन्तव्ये तन्मार्गेणैकेन तं प्रति गच्छतां मध्येमार्गमनेकनगरग्रामादिसद्भावेपि यस्य यत्र किञ्चित्कार्यम्, स एव तत्र विरम्याग्रे गच्छति, अन्यस्त्वन्यत्र, न तु सर्वः सर्वत्र तथेत्यर्थः ॥ ५ ॥

उभयव्यामोहात्तत्सिद्धेः ॥ ६ ॥ सूत्रमवतारयन्ति ननु तेषामित्यादि। अर्थस्त्ववतारणस्य सूत्रव्याख्यानस्य च स्फुटः। तथाच, 'स वै नैव रेमे' इत्यादिश्रुतेः 'कृतप्रयत्नापेक्ष' इति न्यायाच्च काँश्चन व्यामोहयन् लीलां करोतीति तदर्थं तथेत्यर्थः।

पूर्वसूत्रोक्तं हेतुमर्चिरादिदेवानामातिवाहिकत्वसिद्धावपर्याप्तं मन्वानैस्तदर्थं यदत्रान्यैर्व्या-

रश्मिः।

गन्तव्य इति। देशस्वास्थ्ययुक्त एको देशः गन्तुमर्हस्तस्मिन्। तन्मार्गेणेति गन्तव्यदेशमार्गेण। तमिति। गन्तव्यदेशं प्रति। अग्रेपि गच्छतीति। सुहृद्भिः सह गच्छतीति बोध्यम्। दार्ष्टान्तिकानुरोधात् ॥ ५ ॥

उभयव्यामोहात्तत्सिद्धेः ॥ ६ ॥ स्फुट इति। तमाहेत्यस्य हेतुमाहेत्यर्थः। एवमवतारणस्यार्थः स्फुटः। सूत्रव्याख्यानस्यार्थस्तु ज्ञानिन इत्यारभ्य सूत्रार्थः। उभयेषां ज्ञानिमर्यादामार्गीयभक्तानां व्यामोहात् कामनासिद्धेस्तत्तल्लोकफलभोग इत्येवं स्फुटः। कृतप्रयत्नेति। 'कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्य' इति सूत्रात् द्वितीयाध्यायतृतीयपादस्थात्। तथेत्यर्थ इति। उभयव्यामोहात् तत्सिद्धेरित्यर्थः। अपर्याप्तमिति। अग्निवायुवरुणाद्युत्तरं लोकसम्बन्धान्निरपेक्षस्वरूपश्रुतिः भोगायतनत्वहेतुभूता पूर्वसूत्रोक्तलिङ्गादिति हेतोर्बलीयसी आतिवाहिकत्वहेतुभूतात्। अतोऽपर्याप्तम्। अपरिपूर्णम्। तदर्थमिति। आतिवाहिकत्वसिद्ध्यर्थम्। ननूक्तमर्चिराद्यधिष्ठातृदेवैरति-

तत्र साधीयः । व्यामोहशब्दस्यान्यथाज्ञानवाचकत्वेन असामर्थ्यावाचकत्वात् । तथा सत्यर्चिर्लोकमपि न प्राप्नुयात् । प्रापकाभावादित्युक्तम् ॥ ६ ॥

---

भाष्यप्रकाशः ।

ख्यातं तद्दूषणायोपक्षिपन्ति दूषयन्ति च यत्त्वित्यादि । तन्नेत्यादि च ।

तथा सतीति । गन्तॄणां पिण्डितकरणग्रामत्वेनाख्यातत्वे सति । तथा चानया रीत्या व्यामोहे-नार्चिरादीनामातिवाहिकत्वसाधनमसङ्गतमेवेत्यर्थः । किञ्च । यदनवस्थितत्वादर्चिरादीनां न मार्ग-लक्षणत्वमिति । तदपि तथा । तेषां लोकत्वस्य स्वयमप्यङ्गीकृतत्वेनाप्रलयं तत्स्थितेस्तदभावात् । नापि रात्रौ प्रेतस्याहःसम्बन्धानुपपत्तिः । तेषां लोकतया स्थिरत्वेन विद्ययैव तत्प्राप्त्युपपत्तेः । 'अहोरात्रेषु ते लोकेषु सज्जन्त' इति ब्राह्मणस्य स्वयमेव पूर्वं लिखनात् । तेनाहोरात्रन्यायात् समा-नप्रकरणे लोकपदोपबन्धाच्च गन्तृविशेषभोगभूमित्वमेव युक्तम् । अतः पूर्वसूत्रव्याख्याने श्रौता-नामर्चिरादिपदानां स्वार्थत्यागः । अन्यगतलिङ्गेनान्येषामातिवाहिकत्वसाधनम् । लोकपदोपबन्ध-वैयर्थ्यम् । अत्र सौत्रपदस्य स्वार्थत्याग इति तदुभयव्याख्यानमप्यसङ्गतमित्यर्थः ॥ ६ ॥

रश्मिः ।

वाह्यन्त इति चेत्, तत्राहुः प्रापकाभावादिति । अर्चिषः प्राप्तावातिवाहिकाभावादन्यत्रापि तथा-त्वादित्यर्थः । अर्चिषः प्राप्तौ कल्प्यत आतिवाहिक इति चेत्, तत्राहुः इत्युक्तमिति । लोकाधिष्ठाने-त्यादिभाष्येण पूर्वसूत्र उक्तम् । तथा च त्रिवृत्करणे पञ्चीकरणाप्राप्तिवदर्चिष्यातिवाहिकाप्राप्तिरिति भावः । असङ्गतमिति । निरपेक्षस्वरूपाग्निलोकादिश्रुत्यपेक्षयातिवाहिकलिङ्गस्य दुर्बलत्वादिति पूर्वसूत्र उक्तत्वादेवकारः । शाङ्करभाष्यीयमन्यदपि दूषयन्ति स्म किञ्चेति । न मार्गेति । न मार्गचिह्नत्वं संशयप्रथमकोट्युक्तम् । तथेति । असङ्गतम् । आप्रलयमिति । प्रलयं मर्यादीकृत्येत्यर्थः । तदभावा-दिति । अनवस्थितत्वाभावात् । प्रलयात् पूर्वमेकदेशविकृतावप्येकदेशविकृतमनन्यवदितिन्यायस्य 'अन्ये तु' इत्येवं शाङ्करादिमतोपन्यासेन सूचनात् । अहः सम्बन्धेति । लोकदेवता विना । अहः-सम्बन्धावश्यकत्वं 'निशि ने'ति सूत्र उक्तम् । तेषामिति । आतिवाहिकानाम् । विद्ययैवेति । विद्ययापि । अपिना तात्पर्यविषया लोकदेवताविशेषाः । पूर्वमिति । आतिवाहिकसूत्रे । सिद्धमाहुः तेनेति । अहोरात्रन्यायो गन्तॄणां विशेषत्वे हेतुः । विशेषो विद्वत्त्वम् । रात्रौ मृतस्य विदुषोऽहः-सम्बन्धावश्यकत्वात् । समानेति तेषां भोगभूमित्वे हेतुः । समानप्रकरणत्वं तु कौशीतकिनां समान-प्रकरणीयत्वकथनात् । एवेति । न तु देवताविशेषत्वम् । इदमातिवाहिकाधिकरणं परेषां मतेपि त्रिसूत्रम् । तत्र प्रथमसूत्रे किञ्चिदाहुः अतः पूर्वेति । व्याख्यानं तु तल्लिङ्गादातिवाहिकाः लोकदेवताविशेषाः । द्वितीयार्थस्तु उभयव्यपदेशात् आतिवाहिकत्वसिद्धेरिति । तृतीयसूत्रार्थस्तु अमानवो विद्युल्लोकमागतो वैद्युतः । तेनैव ततो विद्युल्लोके प्राप्तेरूर्ध्वं नीयमाना विद्वांसः कार्यं ब्रह्म प्राप्नुवन्ति । तच्छ्रुतेः विद्युल्लोक-स्थनित्यमानवस्यैव गमयितृत्वश्रावणादिति । तस्मिन् । स्वार्थेति । लोकरूपस्वार्थस्तस्य त्यागः । अन्यगतेति । संपिण्डितकर्णग्रामजीवगतत्वेन अर्चिरादिमार्गगतत्वेन च लिङ्गेन उभयव्यामोहेन च । अन्येषामिति । लोकदेवानाम् । लोकपदेति । अग्निलोकवायुलोकेत्यादिषु लोकपदेत्यादिः । अग्न्यादिपदैरेव देवताविशेषोपस्थितेः 'अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशा'दिति न्यायात् । अत्रेति उभयव्यामोहसूत्रे । सौत्रपदस्य व्यामोहपदस्य । स्वार्थोन्यथाज्ञानम् । तस्य त्यागः । तदुभ-येति । सूत्रयोरुभयोर्व्याख्यानम् । तृतीयं त्वागन्तुकमित्युपेक्षितम् ॥ ६ ॥

ननु विद्युतो वरुणादिलोकप्राप्त्यनन्तरं यस्य ब्रह्मप्राप्तिः, तस्य तल्लोकसम्बन्धी ब्रह्मप्रापकः पुरुषोस्ति, उत स स्वत एव तत्प्राप्नोतीति संशय उत्तरं पठति।

वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ७ ॥

न हि ब्रह्मप्राप्तिर्विद्युल्लोकसम्बन्धिपुरुषसामर्थ्येनोच्यते, किन्तु ब्रह्मसम्बन्धितत्सामर्थ्येन। तथा च यत एव लोकात् तत्प्राप्तिः, ततो ब्रह्मसम्बन्धिपुरुषादेव। एवं सति विद्युल्लोकात्तत्प्राप्तौ यो ब्रह्मसम्बन्धी पुरुषः प्रापक उक्तः, तेनैव ततो वरुणादिलोकेभ्योपि ब्रह्मप्राप्तिः। तत्र हेतुमाह तच्छ्रुतेः। 'तान् वैद्युतात् पुरुषो मानस एत्य ब्रह्मलोकान्गमयती'ति श्रुतेः। अत्र 'एत्ये'ति वचनाद्यत एव लोकाद् ब्रह्मप्राप्तिर्भविष्यत्री, तत्रैवागत्य ब्रह्म प्रापयतीति गम्यते। श्रुतौ 'वैद्युतं लोकमागत्य तस्माद् ब्रह्मलोकान्गमयती'त्युक्तमिति स पुरुषो वैद्युत इत्युच्यते, न तु तल्लोकवासित्वेन। तथा सति 'एत्ये'ति न वदेत् तत एव ब्रह्मप्रापणे।

अत एव 'मानस' इत्युक्तः। यदैव भगवन्मनसि भवति 'अथैनं मां प्रापयत्वि'ति, तदैव प्रापयतीति तथा।

छान्दोग्ये तु 'अमानव' इति पठ्यते। तत्रालौकिकत्वम्, तदप्युक्तरूपमेवेति न कश्चिद्विशेषः। वाजसनेयके 'ब्रह्मलोकान्गमयती'ति पठ्यते। छान्दोग्ये तु 'ब्रह्मे'ति। तत्रायं भावः। भक्तं तु वैकुण्ठलोकं नयति, ते बहुविधा इति

---

भाष्यप्रकाशः।

वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ७ ॥ सूत्रमवतारयन्ति ननु विद्युत इत्यादि। तल्लोकसम्बन्धीति। विद्युल्लोकसम्बन्धी। तत्प्राप्नोतीति। ब्रह्म प्राप्नोति। सूत्रं व्याकुर्वन्ति न हीत्यादि। इति श्रुतेरिति। पञ्चाग्निविद्यास्थवाजसनेयिश्रुतेः। श्रुतौ 'वैद्युता'दित्यस्य 'गमयती'त्यनेन सम्बन्धाद्योऽर्थः सिध्यति, तमाहुः अत्रेत्यादि। तथा सत्येत्येति न वदेदिति। तस्य विद्युल्लोक-

रश्मिः।

वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ७ ॥ न हीत्यादीति। ब्रह्मसम्बन्धीति। ब्रह्मसम्बन्धः स्वस्वामिभावलक्षणस्तद्वान् ब्रह्मसम्बन्धी। ब्रह्मसम्बन्धी चासौ सः ब्रह्मसम्बन्धिसः तस्य सामर्थ्येन। तत्प्राप्तिरिति ब्रह्मप्राप्तिः। तत इति लोकाद् अवधिभूतात्। ब्रह्मसम्बन्धिपुरुषाद्वैद्युतादेव। उक्त इति। वक्ष्यमाणश्रुतावुक्तः। तत इति। सौत्रं पदं व्याख्येयम्। गमयतीत्यनेनेति। न त्वेत्येत्यनेनेति भावः। भाष्ये। तत इति विद्युल्लोकवासिन एव ब्रह्मप्रापणे सति। प्रकृते। तदेति। विद्युल्लोक आगमनपूर्वकाले ब्रह्मलोकवासित्वादेव। स्फुटमिति। तथेति मानसः। बहुविधा इति। चत्वारः पञ्च वा। व्यापिवैकुण्ठः रमावैकुण्ठः श्वेतद्वीपः अन्यश्च। आत्मयोगोक्तमिति

'ब्रह्मलोका'नित्युक्तम्। ज्ञानमार्गीयं त्वक्षरं ब्रह्म प्रापयतीति 'ब्रह्मे'त्युक्तम्। अत एवोभयव्यामोह उक्त आचार्येण ॥ ७ ॥

इति चतुर्थाध्याये तृतीयपादे द्वितीयमातिवाहिकाधिकरणम् ॥ २ ॥

अत्र सिद्धान्तदार्ढ्यार्थमुक्तमर्थं हस्तपिहितमिव कृत्वा बादरिमतं पूर्वपक्षत्वेनाह।

## कार्यं बादरिरस्य गत्युपपत्तेः ॥ ८ ॥ ( ४-३-३ )

'स एतान् ब्रह्म गमयती'त्यत्र ब्रह्मपदेनाविकृतं परमेव ब्रह्मोच्यते, उत कार्यरूपो ब्रह्मलोक इति भवति संशयः। परस्य व्यापकत्वेन देशविशेषगमयित्रोरनपेक्षितयोरुक्तेः कार्यरूप एव स ब्रह्मपदेनोच्यत इति बादरिराचार्यो मन्यते। कुतः। अस्य गत्युपपत्तेः। तस्य परिच्छिन्नत्वेन तत्स्थितिदेशं प्रत्यस्य गन्तुर्गतेरुपपत्तेरित्यर्थः ॥ ८ ॥

---

भाष्यप्रकाशः।

वासित्वे सति विद्युताद् ब्रह्मलोकान् गमयतीत्येतावतैव विवक्षितार्थसिद्धेरेत्येति न वदेदित्यर्थः। अत एवेति। तदवासित्वादेव। शेषं स्फुटम् ॥ ७ ॥

इति द्वितीयमातिवाहिकाधिकरणम् ॥ २ ॥

कार्यं बादरिरस्य गत्युपपत्तेः ॥ ८ ॥ क्रममुक्तौ मार्गं विचार्य तत्फलं विचारयतीत्याशयेन सूत्रमवतारयन्ति अत्र सिद्धान्तेत्यादि। क्रममुक्तौ परब्रह्मैव प्राप्यमिति सिद्धान्तस्य दार्ढ्यार्थमुक्तमर्थमर्चिरादिमार्गो जघन्याधिकारिणां परप्राप्तिसाधनमित्येतमर्थं हस्तपिहितमिव कृत्वा अग्रे स्थापनीयत्वादिदानीमनुक्त्वा तथेत्यर्थः। सूत्रं व्याख्यातुमधिकरणत्वाय विषयसंशयावाहुः स एतानित्यादि। तथा च ब्रह्मपदश्रुतेर्गतिश्रुतेश्च संशय इत्यर्थः। पूर्वपक्षमाहुः परस्येत्यादि। स इति। ब्रह्मलोकः। तस्येति। कार्यस्य ब्रह्मलोकस्य ॥ ८ ॥

रश्मिः।

वाराहपुराणीयचातुर्मास्यमाहात्म्ये श्रीभूः। अत एवेति। फलाभोगादेव। क्रममुक्तौ ज्ञानिनोपि फलभोगः। उभयेषां ज्ञानिनां मर्यादाभक्तानां व्यामोहोऽन्यथाज्ञानम्। परप्राप्तित्वाभाववति ज्ञानिमर्यादाभक्तमोक्षे परप्राप्तित्वप्रकारकज्ञानत्वाल् लक्षणसमन्वयः। तदभाववति तत्प्रकारकं ज्ञानमन्यथाज्ञानमिति लक्षणम्। पुष्टिमार्गीयपरप्राप्तिव्यतिरिक्ते फले व्यामोह इत्युक्तम्। तदुक्तं तृतीयसुबोधिन्यां 'भक्तिमार्ग एव मार्ग' इति। मुख्ये पुष्टिमार्गे कार्यसम्प्रत्ययो बोध्यः। एवं स्फुटम्। अत्र वृत्तौ ब्रह्मप्राप्तेः प्रापकपुरुषाधीनत्वाद् विद्युल्लोकस्य चातिक्रान्तत्वाद् वरुणादिलोकस्थस्यैव ग्राह्यत्वाद् अस्तीति पूर्वपक्षं निक्षिप्याधिकरणान्तरत्वं सूचितम्। संशय आभास उक्तः। विषयसिद्धान्तौ व्याख्यान एव स्फुटाविति ॥ ७ ॥ इति द्वितीयमातिवाहिकाधिकरणम् ॥ २ ॥

कार्यं बादरिरस्य गत्युपपत्तेः ॥ ८ ॥ तत्फलमिति। उभयव्यामोहोनुसन्धेयः। परब्रह्मैवेति। ज्ञानिभक्तौ विशेषतश्चेदनुगृह्णाति तदा पुष्टिभक्तिं प्राप्नुत आदाविति सिद्धान्तमुक्तावलीटिप्पणे श्रीगोस्वामिनः। तेन परब्रह्मापीत्यर्थः। एवकारोप्यर्थे। तथेति। बादरिमतं पूर्वपक्षत्वेनाहेत्यर्थः। गतिश्रुतेरिति। 'गमयती'ति गतिश्रुतेः। ब्रह्मणः सायुज्यात्तत्र गमनाभावाद्ब्रह्मलोको ब्रह्मपदवाच्य इति ॥ ८ ॥

विशेषितत्वाच्च ॥ ९ ॥

'ब्रह्मलोकान्गमयति ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ती'ति श्रुतौ बहुत्वेन वासाधिकरणत्वेन च विशेषिता लोकाः । गन्तारश्च दूरदेशगत्या विशेषिता इति न परं ब्रह्म तत्, किन्तु कार्यमेवेत्यर्थः । लोकपदं तज्जन्यभोगपरम् । तेन तस्यैकत्वेपि विविधभोगज्ञापनाय बहुवचनं घटते ॥ ९ ॥

तत्र ब्रह्मशब्दप्रयोगहेतुमाह ।

सामीप्यात्तु तद्व्यपदेशः ॥ १० ॥

तल्लोकस्थितानां नान्यलोकव्यवधानं परप्राप्तौ, किन्तु तत एवेति परब्रह्मसामीप्याद् ब्रह्मत्वेन व्यपदेशः कृतः । तुशब्दस्तु वस्तुतो ब्रह्मत्वं व्यवच्छिनत्ति ॥ १० ॥

---

भाष्यप्रकाशः ।

विशेषितत्वाच्च ॥ ९ ॥ तस्य कार्यत्वाय हेत्वन्तरं दर्शयतीत्याशयेन सूत्रं व्याकुर्वन्ति ब्रह्मलोकानित्यादि । विशेषिता इति । अत्र श्रुतौ पूर्वं तानिति गन्तृविशेषणे दूरदेशगन्तारः परामृश्यन्ते, बहुत्वं चोच्यत इति गन्तारस्तथा विशेषिताः । 'पराः परावतो वसन्ती'ति प्रकृष्टा गन्तारः प्रकृष्टान् ब्रह्ममानमितान् संवत्सरान् वसन्तीति श्रावणाच्च ब्रह्मलोका विशेषिताः । तदिति 'ब्रह्म गमयती'त्यत्र प्राप्यत्वेनोक्तम् । ननु ब्रह्मपदस्य कार्यब्रह्मपरत्वे श्रुत्यन्तरोक्तलोकपदविरोध इत्यत आह लोकपदमित्यादि ॥ ९ ॥

सामीप्यात्तु तद्व्यपदेशः ॥ १० ॥ भाष्यमत्रातिरोहितार्थम् ॥ १० ॥

रश्मिः ।

विशेषितत्वाच्च ॥ ९ ॥ तस्येति । स एतान्ब्रह्म गमयतीत्यत्र ब्रह्मणः । दूरदेशेति । लोकाल्लोकान्तरगमनेऽवधिभूतदेशस्थास्तानिति तच्छब्दार्थः दूरदेशगन्तारः तानिति । बहुत्वं च । तथा विशेषिताः बहुत्वेन साधिकरणत्वेन च विशेषिताः । परपदार्थमाहुः । प्रकृष्टाः । 'परोपि मनुतेऽनर्थं तत्कृतं चाभिपद्यत' इत्यत्र । परावत इत्यास्यार्थमाहुः ब्राह्ममानेति । ब्राह्ममानेन मितान्परिमितान् । परा विद्यन्तेऽस्येति परावान् तान् परावतः । पराशब्दोत्र धर्षणे । 'परादि मोक्षप्राधान्यप्रातिलोम्येषु धर्षण' इति विश्वात् तद्वतः संवत्सरान् कालो धर्षयतीति तथा । ब्रह्मलोका इति । तेन ब्रह्मलोकान् गमयति ते तेषु कार्यरूपेषु ब्रह्मलोकेषु पराः परावतः वसन्तीति पदच्छेदः । पराः परावतो ब्रह्मलोकान् वसन्तीत्यन्वयः । केष्वित्याकाङ्क्षायामाह । तेषु ब्रह्मलोकेषु ये ब्रह्मलोकास्तान् । श्रुत्यन्तरेति । 'अग्निलोकमागच्छति स वायुलोक'मित्यादिश्रुत्यन्तरेत्यर्थः । लोकः कार्यमिति । स ब्रह्मपदार्थ इति तथा । आहेति पूर्वपक्ष्याह लोकपदमित्यादीति । तज्जन्येति लोकजन्यभोगपरम् । तस्येति । कार्यब्रह्मणः । विविधेति 'सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिते'त्यत्र विविधं पश्यंश्चित्स्वमर्थः तेन तद्वद्विविधभोगचतुरेणेत्यप्यर्थात् । घटत इति । अन्यथा तु ब्रह्म गमयतीत्यत्र शुद्धबुद्धमुक्तस्वभावे एकस्मिन्नद्वितीये उक्तब्रह्मलोकानिति बहुवचनं न घटत इति युक्त्या वेदार्थोऽन्यथा नीतः ॥ ९ ॥

सामीप्यात्तु तद्व्यपदेशः ॥ १० ॥ अतिरोहितार्थमिति । तत्रेति । ब्रह्मलोके कार्ये । एवमतिरोहितार्थम् ॥ १० ॥

ननु 'आब्रह्मभवनाल्लोकाः पुनरावर्तिनोऽर्जुने'ति वाक्यात्ततः पुनरावर्तते । अत्र तेषामिह न पुनरावृत्तिरस्तीति पठ्यत इति परमेवात्र ब्रह्मशब्देनोच्यत इति प्राप्ते, उत्तरं पठति ।

## कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ ११ ॥

कल्पसमाप्तौ कार्यस्य ब्रह्मलोकस्य नाशे सति तदध्यक्षेण चतुर्मुखेन ब्रह्मणा सह अतो ब्रह्मणः सकाशात् परमीश्वरं प्राप्नोत्यतोऽपुनरावृत्तिश्रुतिर्न विरुध्यते । अत्र प्रमाणमाह अभिधानादिति । श्रुतौ तथाभिधानादित्यर्थः । सा तु 'वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद् यतयः शुद्धसत्त्वाः ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे' इति । 'परान्तकाल' इत्यत्र परशब्देन ब्रह्मणः पूर्णमायुरुच्यते ॥ ११ ॥

उक्तेऽर्थे श्रुतिं प्रमाणत्वेनोक्त्वा स्मृतिमप्याह ।

## स्मृतेश्च ॥ १२ ॥

'ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पद'मिति स्मृत्यापि स एवार्थः प्रतिपाद्यते ॥ १२ ॥

---

### भाष्यप्रकाशः ।

कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ ११ ॥ प्राप्यस्य ब्रह्मसामीप्याद् ब्रह्मत्ववाद इत्यङ्गीकारे विषयश्रुतिविरोधमाशङ्क्य समाधत्त इत्याशयेन सूत्रमवतारयन्ति नन्वित्यादि । व्याकुर्वन्ति कल्पेत्यादि । ब्रह्मण इति । चतुर्मुखात् ॥ ११ ॥

स्मृतेश्च ॥ १२ ॥ उत्तानार्थम् ॥ १२ ॥

### रश्मिः ।

कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ ११ ॥ प्राप्यस्येति । ब्रह्मलोकस्य न तु ब्रह्मणः, तस्य नित्यप्राप्तत्वात् । समाधत्त इति पूर्वपक्ष्येव । नन्वित्यादीति । अत्रेति । प्रकृतविषये । पञ्चाग्निविद्यायां श्वेतकेतुब्राह्मणे 'तेषामिह न पुनरावृत्तिरस्ती'ति श्रुतिः । अत्रेति 'स एतान्ब्रह्म गमयती'त्यत्र । कल्पेत्यादीति । परशब्देनेति । तथा च ब्रह्मणश्चतुर्मुखस्य पूर्णायुषोऽन्तकाले आयुषश्चरमावयवे इति परान्तकाल इत्यस्यार्थः ॥ ११ ॥

स्मृतेश्च ॥ १२ ॥ उत्तानेति सम्प्राप्ते प्रतिसञ्चरे कल्पसमाप्तौ कार्यस्य ब्रह्मलोकस्य नाशे सति नाशः सृष्टेः प्रतिकूलसञ्चरः तद्रूपे ब्रह्मणा चतुर्मुखेन सह ते सर्वे कृतात्मानः प्राप्तज्ञानाः । परस्यान्ते परान्तकाले । परं पदं पदनीयं ब्रह्म । एवमुत्तानार्थम् ।

वृत्तौ त्वत्राधिकरणसमाप्तिः सूचिता, वक्ष्यमाणसूत्रे अत्रापि 'स एतान्ब्रह्म गमयती'त्येव विषयवाक्यम् । पूर्ववदेव संशयः, तद्बीजं च पूर्वपक्षस्तु बादरिमतेनेति पुनरुक्तेः । तन्न, भाष्यविरुद्धत्वात् । अत एव अग्रे सूत्रमवतारयन्तीत्युक्तम्, न त्वधिकरणमवतारयन्तीत्युक्तम् ॥ १२ ॥

अत्र सिद्धान्तमाह ।

परं जैमिनिर्मुख्यत्वात् ॥ १३ ॥

'स एतान् ब्रह्म गमयती'त्यत्र ब्रह्मपदेन परमेव ब्रह्मोच्यत इति जैमिनिराचार्यो मनुते । कुतः । मुख्यत्वात् । बृहत्त्वादिधर्मविशिष्टं हि ब्रह्मपदेनोच्यते । तादृक् परमेव ब्रह्म भवतीति मुख्या वृत्तिर्ब्रह्मपदस्य परस्मिन्नेव, अन्यत्र गौणी । तथा च मुख्यगौणयोर्मध्ये मुख्यस्यैव बलिष्ठत्वात् तथा ॥ १३ ॥

दर्शनाच्च ॥ १४ ॥

'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोक'मिति कौशीतकिश्रुतिरग्न्यादिलोकप्राप्तिवद्विशेषेणैव प्रजापतिलोकप्राप्त्यनन्तरं ब्रह्मलोकप्राप्तिं दर्शयति । न हि तत्र ब्रह्मलोकशब्देन कार्यः स उच्यत इति वक्तुं शक्यम् । पार्थक्येन प्रजापतिलोकस्योक्तत्वात् ।

---

भाष्यप्रकाशः ।

परं जैमिनिर्मुख्यत्वात् ॥ १३ ॥ सूत्रमवतारयन्ति अत्रेत्यादि । पञ्चभिः सूत्रैर्बादरिमतोपक्षेपमुखेन पूर्वपक्षमुक्त्वा, अस्मिन् सूत्रे जैमिनिमतोपन्यासमुखेन स्वसिद्धान्तमाहेत्यर्थः । सूत्रव्याख्यानं तूत्तानार्थम् ॥ १३ ॥

दर्शनाच्च ॥ १४ ॥ अविद्यादिदोषाणामभावेपि कामनायाः सत्त्वात्तन्मात्रेणाधिकारजाघन्याद् गत्युपपत्तौ लोकाङ्गीकारेण विशेषितत्वस्य चोपपत्तौ सामीप्यनिबन्धनाया गौण्या अप्रयोजकत्वान्निवृत्तिरिति पूर्वसूत्रे मुख्यत्वेन हेतुनैव सिद्धमिति कार्यात्ययादिसूत्रद्वयोत्तरमवशिष्यते । तदनेन वदतीत्याशयेन सूत्रं व्याकुर्वन्ति स एतं देवयानमित्यादि ।

रश्मिः ।

परं जैमिनिर्मुख्यत्वात् ॥ १३ ॥ बादरीति । मुखमुपायः । उत्तानेति । अत्रेति । पूर्वपक्षे । बृहत्त्वादीति । आदिना बृहत्त्वाद् बृंहणत्वाच्च ब्रह्मेत्यत्रोक्तं बृंहणत्वम् । अन्यत्रेति ब्रह्मलोके । गौणमुख्यन्यायमाहुः तथा चेति । तथेति । ब्रह्मपदेन परमेव ब्रह्मोच्यत इत्यर्थः ॥ १३ ॥

दर्शनाच्च ॥ १४ ॥ सूत्रावतरणाय पञ्चभिः सूत्रैर्बादरिमतोपक्षेपः कृतः तस्य परिहारे विवेचयन्ति स्म अविद्यादीति । कामनाया इति । द्वितीयस्कन्धोक्तलोकदिदृक्षायाः । गतीति कार्ये ब्रह्मणि गत्युपपत्तौ । द्वितीयसूत्रे अक्षरलोकपरब्रह्माङ्गीकारेण परावद्विशेषणस्य चोपपत्तेः । परावत इत्यस्य मोक्षवतो ब्रह्मलोकान् । प्राधान्यवतो वा । उक्तविश्वासात् । तृतीयसूत्रे सामीप्येत्यादिः । मुख्यत्वेनेति । कार्यं ब्रह्म न मुख्यम्, परावत इत्यस्य धर्षणवत इत्यर्थो न मुख्यः प्रथमत्यागे मानाभावात् । गौणी न मुख्येति प्रसिद्धमिति पूर्वोक्तं मुख्यत्वेन हेतुनोत्तरं सिद्धमित्यर्थः । अनेनेति । दर्शनाच्चेति सूत्रेण । जैमिनिमतेन समाधाने धर्मोपस्थित्या तत्प्रतिपादकपूर्वकाण्डे प्रजापतिलोकोपरि ब्रह्मलोकस्य असम्भवदुक्तिकत्वात् तृतीयाष्टके 'प्रजापतिरकामयत प्रजाः सृजेये'तीक्षाश्रावणात् ।

भाष्यप्रकाशः ।

ननु तैत्तिरीयभाष्ये आनन्दमीमांसायां 'विराट् त्रैलोक्यशरीरो ब्रह्मा समष्टिव्यष्टिरूपः संसारमण्डलस्थायी प्रजापतिशब्देनोच्यते । यत्रैते शतं प्रजापत्यानन्दा एकतां गच्छन्ति धर्मश्च तन्निमित्तं ज्ञानं चैतद्विषयम् अकामहतत्वं च निरतिशयं यत्र स एष हिरण्यगर्भ' इति शङ्कराचार्यैर्व्याख्यातत्वात्तस्य हिरण्यगर्भस्य यो लोकः स कौशीतकिवाक्ये ब्रह्मलोकपदेन पठ्यते, हिरण्यगर्भश्च जन्यः । 'हिरण्यगर्भं जनयामास पूर्व'मिति श्वेताश्वतरे 'हिरण्यगर्भं पश्यत जायमान'मिति तैत्तिरीये च श्रावणात् । अतस्तस्यात्र परामर्शे कार्यता कुतो न वक्तुं शक्येति चेत् । उच्यते । प्रजापत्यतिरिक्तस्य हिरण्यगर्भस्य वक्तुमशक्यत्वात् । 'वेदात्मनाय विद्महे, हिरण्यगर्भाय धीमहि, तन्नो ब्रह्म प्रचोदया'दिति तैत्तिरीयमन्त्रे 'हिरण्यगर्भो वेदाना'मित्येकादशीयविभूत्यध्यायवाक्ये च तस्य वेदात्मकतयैव सिद्धत्वात् । वेदात्मकत्वं च प्रजापतावेवं सिद्धम् । 'शब्दब्रह्मात्मनस्तस्य व्यक्ताव्यक्तात्मनः परः । ब्रह्मावभाति विततो नानाशक्त्युपबृंहित' इति तृतीयस्कन्धे प्रजापतिं प्रकृत्यैव वाक्यात् । पर्यङ्कस्थे ब्रह्मणि हिरण्यगर्भपदस्य वेदात्मकत्वादिबोधकस्य वाक्यस्य चाभावात् । न च 'यजूदरः सामशिरा असावृङ्मूर्तिरव्ययः । स ब्रह्मेति विज्ञेय ऋषिर्ब्रह्ममयो महा'निति मन्त्रे तस्य वेदात्मकत्वमुक्तमेवेति शङ्क्यम् । तत्र 'एतावदिदं सर्व'मित्यनेन सत्यपदार्थे निगमिते इदं सर्वमसीत्येवैनं तदाहेत्यनेन एनं उपासकं तत् पर्यङ्कस्थं ब्रह्म इत्येवाहेति तदुक्तस्य याथार्थ्यं बोधयित्वा, तदेतच्छ्लोकेनाभ्युक्तमिति वाक्यं श्रुतिरुक्त्वा श्लोकमाह 'यजूदर' इति । तत्र यजूदरादिविशिष्टोऽसौ ब्रह्ममयो महानृषिः स ब्रह्मा ब्रह्मसहितो

रश्मि

प्रजापतिलोकपर्यन्तवस्तुस्थितिर्ब्रह्मलोकेऽर्थवाद इत्याशङ्कते ननु तैत्तिरीयेति । विराट् कीदृशः, त्रैलोक्यं शरीरं यस्य स त्रैलोक्यशरीरः । समष्टीति । यथा देवदत्त इति । समष्टिदेहेन व्यष्ट्यवयवै रूप्यते व्यवह्रियते आत्मा स समष्टिव्यष्टिरूपः । संसारेति । प्रपञ्चस्य मण्डलं कदम्बकः तत्र स्थायी । तन्निमित्तमिति । धर्मस्य निमित्तम्, ज्ञात्वा कुरुते सर्व इति । यद्वा । तन्निमित्तं धर्मस्य निमित्तं फलं चित्तशुद्धिद्वारा ज्ञानम्, तन्निर्विषयं नास्तीति एतद्विषयमकामहतत्वम् । 'ते ये शतं बृहस्पतेरानन्दाः स एको ब्रह्मण आनन्दः श्रोत्रियस्याकामहतस्ये'ति ब्रह्मवित्प्रपाठकश्रुतेः । हिरण्यगर्भ इति । प्रजापतिः संसारमण्डलस्थायिनोतिरिक्तः आनन्दादिमान् । पठ्यते इति । अभेदान्वयात् पठ्यते । अर्थवादत्वात् सम्भवति । पूर्वमिति । सृष्टेः पूर्वम् । पश्यतेति । यूयं पश्यत दूर्वादयो रुद्रान्ताः पूर्वोक्ताः । महानारायणे श्रुतिराह तस्येति । ब्रह्मलोकाभिन्नप्रजापतिलोकस्य परामर्शे कार्यता कार्यब्रह्मता । एवं जैमिनिपदसूचिताशङ्कां समादधते स्म उच्यते इति । सत्यं परन्तु औत्पत्तिकसूत्रे जैमिनिना बादरायणग्रहणेन गुरुमतप्राधान्यपूर्वकेऽर्थे विवक्षिते यत् सिध्यति तदुच्यत इत्यर्थः । तन्नो ब्रह्मेति । तन्नोऽस्मान् ब्रह्म, प्रजापतिरित्यर्थात् । वेदानां हिरण्यगर्भोऽसीत्यर्थः । तस्येति । प्रजापतेः । शब्देति । शब्दब्रह्मात्मनः वेदात्मनः तस्य प्रजापतेः । व्यक्ताव्यक्तात्मनः पञ्चम्यन्तम् । जगत्प्रकृतिभ्यां परः ब्रह्मावभाति । सुबोधिन्यां द्वादशाध्याये प्रपञ्चोऽस्य । वेदात्मकत्वादीति । आदिना व्यक्ताव्यक्तात्मनः परत्वं नानाशक्त्युपबृंहितत्वं च । यजूदर इति । सकारलोपश्छान्दसः ततोऽकः सवर्णे दीर्घः । एतावदिति । सत्यम् । निगमित इति । पर्वतो वह्निमानितिवत् निगमिते । तदुक्तस्येति । उपासकस्य । वाक्यश्रुतिरुक्तेति[1] । वक्ष्यमाणवाक्यसम्बन्धिनी श्रुतिरुक्तेत्यर्थः ।

१. वाक्यश्रुतिरुक्तेति रश्मौ ।

अपरं च, 'ये चेमेऽरण्ये श्रद्धातप इत्युपासते तेऽर्चिषमभिसम्भवन्ती'ति छान्दोग्यश्रुतिं विषयीकृत्य, 'अर्चिरादिना तत्प्रथिते'रित्युपक्रम आचार्येण कृतः, अन्यत्रार्चिःशब्दस्याभावात्, तत्र चान्ते 'ब्रह्म गमयती'त्युच्यते। तथा च छान्दोग्येऽनुक्तानामन्यत्रोक्तानां लोकानां मार्गैक्यसिद्ध्यर्थं तत्रैव सन्निवेशो, 'वायुमब्दात्', 'तडितोऽधिवरुणः,' 'वरुणाच्चाधीन्द्रप्रजापती' इत्यन्तेनोक्तः। एवं सत्याद्यावर्चिषम्, ततोऽहः, ततः सितपक्षम्, तत उदगयनम्, ततः संवत्सरम्, ततो वायुम्, ततो देवलोकम्, तत आदित्यम्, ततश्चन्द्रमसम्, ततो विद्युतम्, ततो वरुणम्, तत इन्द्रम्, ततः प्रजापतिम्, ततश्चामानवेन पुरुषेण ब्रह्मप्राप्तिरिति निर्णयः सम्पद्यते। एवं सति प्रजापतिलोकादन्यस्य कार्यब्रह्मलोकस्यासम्भवात् तच्छङ्कापि भवितुं नार्हति यद्यपि, तथापि व्यासोक्तमार्गैक्यममन्वानस्तथाऽवददिति ज्ञायते। परन्तु वेदार्थनिर्णयार्थमेव प्रवृत्तत्वाद् भगवदवतार-

भाष्यप्रकाशः।

विज्ञेय इति वचनव्यक्त्या ब्रह्मविद एव वेदात्मकत्वबोधनात्। न चेतः पूर्ववाक्ये 'तं ब्रह्मापृच्छती'ति पुँल्लिङ्गस्य प्रष्टरि ब्रह्मणि निर्देशादत्र यजूदरत्वादिकं प्रष्टृपरमेवेति शङ्क्यम्। तत्र ब्रह्म आपृच्छतीति पदच्छेदात्। न चात्रैवं पदच्छेदे किं मानमिति शङ्क्यम्। ततः पूर्ववाक्ये 'स ब्रह्मालङ्कारेणालङ्कृतो ब्रह्म विद्वान् ब्रह्माभिप्रैती'ति 'विसुकृतो विदुष्कृतो ब्रह्म विद्वान् ब्रह्मैवाभिप्रैती'ति अभिप्रायकर्मणि ब्रह्मणि नपुंसकप्रयोगस्यैव मानत्वात्। तस्मादत्र ब्रह्मलोकपदेन नित्य एव लोको ग्राह्यः। तथा च पूर्वोक्तश्रुतिस्मृत्योः प्रलयविषयत्वेन विषयभेदान्न ताभ्यामत्र निर्णयो युज्यत इति तन्मतमयुक्तमित्यर्थः।

ननु यदीदं स्वस्याभिप्रेतम्, तदाचार्येण स्वनामैव गृहीतं स्यात्, न तु जैमिनेः, अतो नैवं सिद्धान्त इति शङ्कायां तन्नामोक्तितात्पर्यमाहुः अपरं चेत्यादि ज्ञायते इत्यन्तेन। तथावददिति। जैमिनिरवदत्। तथा च फलांशे सिद्धान्तभेदाभावेपि मार्गांशे भेद इति ज्ञापनार्थं तदुक्तिरित्यर्थः। तर्हि मार्गभेद एव कुतो नाद्रियत इत्यत आहुः परं त्वित्यादि। ननु व्यासेन स्वनाम्नः कुत्राप्यनुक्तत्वान्मतद्वयमपि पारक्यमित्येव प्रतीयते, तथा सति जैमिनिमतस्यादरणीयत्वे किं

रश्मिः।

विशेषेण सुकृतं यस्य स विसुकृतः। एवं विदुष्कृतः। पुंस्त्वे तु ब्रह्माणमिति स्यादिलेवकारः। तस्मादिति। जैमिनिना गुरुमतस्य भृगुणा मानववदुक्तत्वात्। अत्रेति। कौशीतकिश्रुतौ। पूर्वोक्तेति। कार्यात्ययसूत्रस्मृतेश्चेतिसूत्रोक्तयोः श्रुतिस्मृत्योः। ताभ्यामिति। श्रुतिस्मृतिभ्याम्। अत्र व्यासमते। तन्मतमिति। बादरिमतम्। आचार्येण व्यासेन। तन्नाम जैमिनिनामोक्तितात्पर्यम्। सिद्धान्त इति। मन्त्रमयीं देव पठन्तीति फलांशे चितः सदानन्दयोश्च शास्त्रद्वये भेदेपि सिद्धान्तस्याधुना बादरायणगुरोर्मतेऽवस्थितेः सिद्धान्तभेदाभावेपीत्यर्थः। मार्गांशे भेद इति। यद्यपि क्रियाज्ञानमिति पञ्चरात्रशास्त्रे इति ज्ञानकर्ममार्गैक्यम्, तथापि प्रसिद्ध्या परस्परं साध्यसाधनभावान्मार्गांशे भेद इत्युक्तम्। तदुक्तिरिति। जैमिनिनामोक्तिः। एवेति। न तु क्रियाज्ञानयोरैक्यम्। परन्त्वित्यादीति। प्रवृत्तत्वादिति। व्यासस्य 'जिज्ञासितमधीतं च यत्तद्ब्रह्म सनातन'मिति प्रथमस्कन्धे व्यासवाक्यात्। मन्तव्यमिति। पञ्चरात्रशास्त्रप्राधान्यात् क्रियाज्ञानमार्गैक्यमत्र मन्तव्यम्, मीमांसितव्यम्। कुत्रापीति। कुत्राप्यत्र पादत्रये। मतद्वयमिति। बादरिजैमिनिमतद्वयम्।

त्वाच्च तदुक्त एव शास्त्रार्थ इति मन्तव्यम् । किञ्च । 'स प्रजापतिलोकं स ब्रह्मलोक'मित्यत्र ब्रह्मपदस्य परवाचकत्वं तेनापि वाच्यं चेत्, तद्दृष्टान्तेनान्यत्रापि तथैव वाच्यं बाधकाभावात् ।

---

भाष्यप्रकाशः ।

बीजमित्यत आहुः किञ्चेत्यादि । तेनेति । बादरिणा । अन्यत्रेति । अक्षिपुरुषविद्यायां पञ्चाग्निविद्यायां च । बाधकाभावादिति । गत्युपपत्त्यादिदूषणानां परिहृतत्वेनान्येषां चाभावेन तथात्वात् । तथा च श्रुतिसामञ्जस्यमेव बीजमित्यर्थः ।

अत्र बादरिमतमुपपन्नं मन्वानाः शङ्कराचार्या एवमाहुः । 'आकाशवत् सर्वतगतश्च नित्य' इति श्रुतेः परस्य ब्रह्मणो व्यापकत्वम्, 'य आत्मा सर्वान्तर' इति श्रुतेः सर्वान्तरत्वम्, 'आत्मैवेदं सर्वम्,' 'ब्रह्मैवेदं विश्वमिदं वरिष्ठ'मिति श्रुतेः सर्वात्मकत्वं च निर्धारितम् । तत्र व्यापकस्य ब्रह्मणो गन्तृदेशे विद्यमानत्वेन गन्तृतैवेति तस्य गन्तव्यता नोपपद्यते । न च भूमिष्ठं प्रति गताया एव पृथिव्या देशान्तरद्वारेण गन्तव्यतावदत्राप्युपपद्यत इति वाच्यम् । सर्वात्मकत्वस्यापि गन्तव्यताबाधकत्वात् । अन्य एव ह्यन्यद् गच्छतीति लोके दर्शनात् । न च बालस्य वार्धकवदनन्यत्वेपि गन्तव्यतोपपद्यत इति वाच्यम् । 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्', 'अस्थूलमनणु', 'स एष नेति नेत्यात्मे'त्यादिश्रुतिस्मृतिन्यायेभ्यो ब्रह्मणः सर्वविशेषशून्यतया सिद्धत्वेन तत्र देशकालविशेषयोगस्याशक्यवचनतया दृष्टान्तविरोधेन तन्न्यायस्य

रश्मिः ।

बादरिणेति । विपरीतलक्षणा जैमिनिना निरीश्वरवादिनेत्यर्थः । यथापकारिणि 'बहूपकृतं त्वये'ति बहूपकारित्वप्रयोगः । अक्षिपुरुष इति । 'जानश्रुतिर्ह पौत्रायण'इत्यारम्भकेऽस्ति । 'उ ह वै ज्येष्ठश्च श्रेष्ठश्चे'त्यारम्भके पञ्चाग्निविद्यास्ति छान्दोग्ये । 'स एतान् ब्रह्म गमयती'त्यक्षिपुरुषविद्यायाम् । 'स एतान् ब्रह्म गमयती'ति पञ्चाग्निविद्यायाम् । उभयत्रापि ब्रह्मपदेन परमेवोच्यते, न तु कार्यं ब्रह्मेति । पञ्चाग्निविद्यायां चेति । चकारोऽथवा सेश्वरजैमिनिमते इत्यनुक्तसमुच्चायकः । यद्वाथवेत्याद्युक्तशेषो वा पूरणीयः । एतेन व्यासेन सूत्रे मन्त्रमयी देवता जैमिनिमुख्यत्वादित्यनुक्त्वा 'परं जैमिनिर्मुख्यत्वा'दित्युक्तं तत्सारस्यमसूचि । परिहृतत्वेनेति । सूत्रव्याख्यानारम्भ एव परिहृतत्वेन । श्रुतिसामञ्जस्यमिति । 'स एतान् ब्रह्म गमयती'ति श्रुतिसामञ्जस्यं ब्रह्मपदे गौणीनिवृत्तिः, सा मतद्वयस्य पारक्ये परमते स्यात्, न तु स्वमत इति । तुरीयपादे बादरायणग्रहणात् तस्य बुद्धिस्थत्वेन जैमिनिसेश्वरवादिस्वशिष्यस्य स्वमतसिद्धस्य सूत्रे ग्रहणं बीजमित्यर्थः । तेन 'परं जैमिनिर्दर्शना'दिति सूत्रान्वयः । 'स एतान् ब्रह्म गमयती'त्यत्र ब्रह्मपदेन परमेव ब्रह्मोच्यते, दर्शनाच्छास्त्ररूपादिति जैमिनिराचार्यो मनुत इति सूत्रार्थः । अत्रेति । वक्ष्यमाणसूत्रेण सहास्मिन् सूत्रे । वक्ष्यमाणविचारस्य द्वितीयसूत्रे करणात् । अपिचेतिप्रभृति द्वितीयभाष्यादत्रैव तद्विचार उपक्षिप्तः । 'कार्यं बादरिरस्ये'त्यधिकरणीयत्वात् सूत्रयोरेकविषयत्वम् । अग्रे 'अप्रतीकालम्बनाधिकरणम्' ।

देशान्तरद्वारेण । यद्वा यथा पृथिवीस्थ एव पृथिवीं देशान्तरद्वारेण गच्छति । शारीरब्राह्मणे 'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते, तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्य' इति देशान्तरवद्वा । अत्रापीति । व्यापके ब्रह्मण्यपि । तत्रेति । ब्रह्मणि । देशकालरूपविशेषयोगस्य । दृष्टान्तेति । बालवार्धक्यदृष्टान्तविरोधेन । तन्न्यायस्य

भाष्यप्रकाशः ।

अत्र वक्तुमशक्यत्वात् । नच जगदुत्पत्तिप्रलयहेतुत्वश्रुतेर्ब्रह्मणोऽनेकशक्तित्वान्न दोष इति वाच्यम् । विशेषनिषेधकश्रुतीनामनन्यार्थत्वात् । नचोत्पत्त्यादिहेतुत्वबोधकश्रुतीनामपि ब्रह्मपरत्वात् समानमनन्यार्थत्वमिति वाच्यम् । तासामेकत्वप्रतिपादनपरत्वात् । तत्र मृदादिदृष्टान्तवाक्येषु 'मृत्तिकेत्येव सत्य'मित्युपसंहारे एकस्य कारणस्यैव सत्यत्वकथनेन विकारानृतत्वप्रतिपादने तद्धर्माणामुत्पत्त्यादीनामपि तथात्वेन शास्त्रस्य तत्परताया वक्तुमर्हतया तासां विशेषनिराकरणश्रुतिशेषताया एव युक्तत्वात् । न चोत्पत्त्यादिश्रुतिशेषत्वं निर्विशेषश्रुतीनामेवास्त्विति शङ्क्यम् । विशेषनिषेधश्रुतीनां निराकाङ्क्षार्थत्वात् । आत्मन एकत्वनित्यत्वशुद्धत्वाद्यवगतौ सत्यां भूयः कदाचिदप्याकाङ्क्षान्तरानुदयेन तत्र पुरुषार्थसमाप्तिबुद्ध्युत्पत्तेः । न चात्र मानाभावः शङ्क्यः । 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' 'अभयं वै जनक प्राप्तोऽसि', 'विद्वान्न बिभेति कुतश्चन', 'एतꣳ ह वा व न तपति किमहꣳ साधु नाकरव'मित्यादिश्रुतिभ्यस्तथैव विदुषस्तुष्ट्यनुभवादिदर्शनस्य च मानत्वात् । तथा विकारानृताभिसन्ध्यपवादाच्च । 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यती'ति भेददृष्ट्यपवादाच्च । न विशेषनिषेधश्रुतीनामन्यार्थत्वं शक्यवचनम् । उत्पत्त्यादिश्रुतीनां तु नैवं निराकाङ्क्षार्थप्रतिपादनसामर्थ्यमस्ति, येन तच्छेषत्वं विशेषनिषेधश्रुतीनां वक्तुं शक्येत । तत्र हि, 'यत्रैतच्छुङ्गमुत्पतितं तं सोम्य विजानीहि नेदममूलं

रश्मिः ।

बालवार्धक्यन्यायस्य । अत्रेति । व्यापकस्य गन्तव्यतोपपत्तौ । अनेकेति । जगत्कर्तृत्वजगत्पालकत्वजगत्संहारकत्वरूपानेकशक्तित्वाद्विशेषसत्त्वेपि न दोषः, कार्यलक्षणत्वेन ब्रह्मप्रतिपिपादयिषा विषयार्थत्वाद्विशेषाणामिति वाच्यमित्यर्थः । विशेषनिषेधकेति । ताश्च 'निष्कलं निष्क्रिय'मित्याद्युक्ताः तासाम् । अनन्यार्थत्वादिति । निर्वाहकसङ्गत्या ब्रह्मनिरूपणपरत्वात् । न तु आरोपापवादसङ्गत्या ब्रह्मनिरूपणपरत्वं तासाम् । आरोपापवादलक्षणसङ्गतेर्निर्वाहकसङ्गतिरन्योऽर्थो भवत्येवम् । अन्योऽर्थः ब्रह्माप्रतिपादकत्वलक्षणः प्रयोजनम् । न अन्योऽर्थो यासां ता अनन्यार्थाः तासां भावः अनन्यार्थत्वम् तस्मात् । यथा विशेषप्रतिपादिकानां ब्रह्मलक्षणत्वम्, तथा विशेषनिषेधिकानामपि ब्रह्मलक्षणत्वम् । कार्यलक्षणत्वं स्वरूपलक्षणत्वमिति विशेषः । ब्रह्मपरत्वादिति । यथारोपापवादन्यायेन विशेषनिषेधिकानां ब्रह्मपरत्वम्, तथा निर्वाहकसङ्गत्या विशेषप्रतिपादिकानां ब्रह्मपरत्वम् । यथा 'अथात आदेशो नेति नेति', तथा 'तदेजति तन्नैजती'ति । यथा शाखारुन्धतीन्यायः, तथा किमन्यद्ब्रह्मज्ञाननिर्वाहकमिति जिज्ञासा । तया जगज्जन्मादिकर्तृत्वं कार्यलक्षणमुक्तम् । अतः समानमनन्यार्थत्वम् । तासामिति । निर्विशेषप्रतिपादिकानामस्थूलादिश्रुतीनाम् । तत्रेत्यादीति एकत्वप्रतिपादने छान्दोग्ये मृदादिदृष्टान्तवाक्येषु । एतच्च द्वितीयाध्याये तदनन्यत्वाधिकरण उक्तम् । तद्धर्माणां ब्रह्मधर्माणाम् । तथात्वेनेति । विकारानृतत्वेन । तत्परेति । धर्मपरताया वक्तुमर्हतया । ब्रह्मणो वागविषयत्वेनोत्पत्त्यादीनामर्हता तया । तासामिति । सविशेषप्रतिपादिकानां 'यतो वा इमानि भूतानी'त्यादीनाम् । अस्त्विति । यतो निरूपणं हि लक्षणैः । तानि चासाधारणधर्मरूपाणि जगज्जन्मादिकर्तृत्वादीनि । तैर्निर्विशेषश्रुतिप्रतिपाद्यज्ञानमिति तथा । अन्तरङ्गत्वं बहिरङ्गाद्बलीय इत्याहुः विशेषनिषेधेति । तत्रेति । एकत्वाद्युक्त आत्मनि । तुष्ट्यनुभवेति । आदिना संक्षोभोऽक्षरजुषाम् । तथा विकारेति । छान्दोग्ये मृदादिवाक्येषु । भेददृष्टीति । न च नाना इव पश्यति स मृत्युमाप्नोति, किं पुनरभेदमित्यर्थेन भेददृष्ट्यपवाद इति शङ्क्यम् । अस्यार्थस्य नैयायिकमते शोभनात् । अन्यार्थत्वं शून्योत्तरार्थकत्वम् । तच्छेषत्वमुत्पत्त्यादिश्रुतिशेषत्वम् । तत्र हीति ।

भाष्यप्रकाशः।

भविष्यती'त्युपन्यस्य तदुदर्के सत एवैकस्य जगन्मूलस्य विज्ञेयत्वदर्शनात्। एवं, 'यतो वा इमानी'त्यादिश्रुतावपि ज्ञेयम्। अतस्तासां सर्वासामैकात्म्यावगमपरत्वान्नानेकशक्तियोगो ब्रह्मण इति।

अत्र च ब्रह्मणो व्यापकत्वं निर्विशेषत्वं च गन्तव्यताबाधकत्वेन सिद्धमिति सङ्ग्रहेण तदनुवदन्ति ननु परस्येत्यादि उपपद्यत इत्यन्तम्।

अथ यत्तैर्जीवस्वरूपविचारेणागन्तव्यत्वं साधितम्, जीवो नाम किं ब्रह्मणोऽवयवो वा, विकारो वा, अन्यो वा। नाद्यः। एकदेशत्वे एकदेशिनो नित्यप्राप्तत्वाद्गन्तव्यत्वानुपपत्तेर्ब्रह्मणो निरवयवत्वप्रसिद्धेरेकदेशित्वकल्पनस्यानुपपन्नत्वाच्च। न द्वितीयः। विकारेणापि विकारिणो नित्यप्राप्तत्वात्। परित्यागेऽभावप्राप्तेः। पक्षद्वयेपि ब्रह्मणः स्थिरत्वेन जीवस्य संसाराभावप्रसक्तेश्च। अथ तृतीयः पक्षश्चेत्, तदापि किं जीवोऽणुर्व्यापको मध्यमपरिमाणो वा। आद्ये सर्वशरीरवेदनोपलम्भानुपपत्तिः। द्वितीये गमनानुपपत्तिः। तृतीये अनित्यत्वप्रसङ्गः। अन्यत्वे, तत्त्वमस्यादिशास्त्रबाधप्रसङ्गः। विकारावयवपक्षयोरपि मुख्यैकत्वानुपपत्तिः। सर्वेषु चैतेषु पक्षेषु संसारित्वानतिवृत्तेरनिर्मोक्षप्रसङ्गः। अतिवृत्तौ वा स्वरूपनाशप्रसङ्गो ब्रह्मात्मत्वानभ्युपगमादित्येवं जीवविषये मतत्रयं निराकृत्य, ततो भिन्नजीवपक्षे काम्यनिषिद्धकर्मपरिहारपूर्वकं नित्यनैमित्तिककर्मणां करणमात्रेणैव स्वरूपावस्थानरूपो मोक्षोपि भविष्यतीति मतमुपक्षिप्य, तद् दूषयित्वा संसार्यात्मनः कर्तृत्वभोक्तृत्वभावस्य विद्यागम्यब्रह्मात्मत्वावगतिमन्तरेण मोक्ष-

रश्मिः।

छान्दोग्ये श्वेतकेतूपाख्याने हि। यत्राप्सु शुङ्गं अन्नरूपं शुङ्गं कार्यम्। तदुदर्के तस्य शुङ्गस्योत्तरोत्तरप्रतिभायाम्। 'उदर्क ईषत्कालीयफले मदनकण्टक' इति विश्वात् फलाध्याये परोक्षवादान् मूलकारणे फलाध्यायोपयोगिनीति वार्थः। उदक इति पाठः। 'तदप आचक्षतेऽशनायेति तत्रैतच्छुङ्गमुत्पतित'मिति श्रुतेः। विज्ञेयत्वेति। 'सदेव सौम्येदमग्र आसी'दिति श्रुतेः। ज्ञेयमिति। मूलं ज्ञेयम्। सर्वासामिति। सविशेषनिर्विशेषप्रतिपादिकानाम्। ऐकात्म्येति। एक एव ऐक्यः, स्वार्थे ष्यञ् एकात्मत्वावगमपरत्वात्। नानेकशक्तियोग इति। सविशेषश्रुतिप्रतिपादितः सः। अनुवदन्तीति। सिद्धस्य कथनमनुवादः तं कुर्वन्ति उपपद्यत इत्यन्तेनेति। आद्योपपद्यत इत्यन्तेन। अथेति। ईश्वरस्वरूपविचाराद्भिन्नप्रक्रमेण। न गन्तव्यत्वमगन्तव्यत्वम्। नित्यप्राप्तत्वे सदा विकारित्वापत्तिरत आहुः परित्याग इति। विकारपरित्यागे। अभावेति। अत्यन्ताभावप्राप्तेः। पक्षद्वये इति। नित्यप्राप्तत्वाभावप्राप्तत्वपक्षद्वये। स्थिरत्वेनेति। असङ्गत्वे तथा। तृतीय इति। ब्रह्मान्यत्वपक्षः। विकारावयवयोर्मध्यमपरिणामत्वादाहुः विकारावयवपक्षयोरिति। मुख्यैकत्वेति। 'तत्त्वमसी'त्यादिवाक्ये बोध्या। संसारित्वेति। तृतीयपक्षोक्तेषु सर्वेष्वेतेषु पक्षेषु। संसारित्वेति। संसारित्वस्य आसमन्तान्न निवृत्तेः। स्वरूपत्वेन केनाप्यंशेन विकारादीनां सत्त्वात्। अतिवृत्ताविति। विकारादीनां स्वरूपत्वे तदतिवृत्तौ तु स्वरूपनाशप्रसङ्गः। विकारादीनां ब्रह्म आत्मा येषां तत्त्वानभ्युपगमात्। काम्यनिषिद्धेति। स्वर्गनरकानवाप्तये तथा। नित्यनैमित्तिकेति। प्रत्यवायानुत्पत्तये। स्वरूपावस्थानेति। साम्प्रतं देहोपभोग्यानि च कर्माण्युपभोगेनैव क्षीयन्त इत्यतो देहपातादूर्ध्वं देहान्तरप्रतिसन्धानकारणाभावात्। स्वरूपावस्थानलक्षणो मोक्षो विनापि ब्रह्मतया एवंवृत्तस्य सेत्स्यतीति मतम्। तद् दूषयित्वेति। 'तदस'दित्यादिना भाष्येण दूषयित्वा। तथाहि। तदसत्। प्रमाणाभावात्। न ह्येतत् शास्त्रेण केनचित् प्रतिपादितम्। 'मोक्षार्थीत्थं समाचरे'-

**ननु परस्य व्यापकत्वान्निर्विशेषत्वाच्च न गन्तव्यतोपपद्यते । जीवस्याप्य-विद्योपाध्यवच्छिन्नतादशायां परब्रह्मणि गन्तृत्वासम्भवात् तन्नाशे च वस्तुतोऽ-भिन्नत्वात् स्वरूपेणावस्थानमेव भवतीति न गन्तृत्वमप्युपपद्यते । तस्यैवाभावात् ।**

भाष्यप्रकाशः

प्रत्याशाभावात्, 'नान्यः पन्था विद्यतेऽयनाये'ति श्रुत्या मोक्षे ज्ञानातिरिक्तसाधननिषेधाच्च तस्य मतस्यासङ्गतत्वं स्थापयित्वा, जीवस्य परस्मादन्यत्वे संव्यवहारलोपप्रसङ्गः, प्रत्यक्षादिप्रमाणा-प्रवृत्तिश्चेत्याशङ्क्य, प्राक् प्रबोधात् स्वप्नव्यवहारवत् तदुभयोपपत्तिमुक्त्वा, 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यती'त्यादिश्रुत्या अप्रबुद्धविषये प्रत्यक्षादिव्यवहारश्रावणात् प्रबुद्धविषये च 'यत्र त्वस्य सर्वमात्मैवाभूत्तत् केन कं पश्ये'दित्यादिना तदभावश्रावणात् । परब्रह्मविदो गन्तव्य-त्वादिविज्ञानस्य बाधितत्वेन न कथमपि गतिरुपपादयितुं शक्येत्यन्तेन ।

तदेतत् संगृह्यानुवदन्ति **जीवस्योपाध्यवच्छिन्नत्वदशायामित्यादि । तस्यैवाभावा-**दिति । जीवस्यैवाभावात् ।

एवं परब्रह्मविदो गत्यभावमुपपाद्य गतिविषये यत्तैरुक्तम्—गतिविषयाः श्रुतयः सगुण-ब्रह्मविषया भविष्यन्ति । तथाहि । क्वचित् पञ्चाग्निविद्यां प्रस्तुत्य गतिरुच्यते, क्वचित् पर्यङ्क-विद्याम्, क्वचिद्वैश्वानरविद्याम् । यत्रापि ब्रह्मविद्यां प्रस्तुत्य गतिरुच्यते, 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म,' 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्मे'त्यादौ, तत्रापि वामनीत्वादिभिः सत्यकामत्वादिभिर्गुणैः सगुणस्योपास्यत्वात् सम्भवति गतिः । न क्वचित् परब्रह्मविषया गतिः श्राव्यते । गतिप्रतिषेधस्तु 'न तस्मात् प्राणा उत्क्रामन्ती'ति श्राव्यते । यः पुनः 'ब्रह्मविदाप्नोति पर'मित्यत्र गत्यर्थ आप्नोतिः, तत्रापि पूर्वोक्तेन न्यायेन देशान्तरप्राप्त्यसम्भवात् स्वरूपप्रति-

रश्मिः ।

दिति । 'स्वमनीषया त्वेतत् तर्कित'मित्यादिना दूषयित्वा । जीवस्य परस्मादनन्यत्वे सर्वव्यवहार-लोपप्रसङ्ग इति पाठः । **प्रबोधादि**ति । ज्ञानात् प्राक् दीर्घस्वप्नव्यवहारवत् । **तदुभये**ति । जीवस्य परस्मादनन्यत्वसर्वव्यवहारलोपप्रसङ्गाभावयोरुभयोरुपपत्तिमुक्त्वा । **तदभावे**ति । प्रत्यक्षा-दिव्यवहाराभावश्रावणात् । **इत्यन्तेने**ति । भाष्येण । **परब्रह्मविद** इत्यारभ्य तु तद्भाष्यफक्किकैव । **कथमपी**त्यत्र **कथञ्चने**ति भाष्ये पाठात् तावन्मात्रभेदः । **जीवस्योपाध्यवच्छिन्नत्वदशाया-**मित्यादीति । क्वचित् पुस्तके तु जीवस्याप्युपाध्यवच्छिन्नतादशायामिति भाष्ये पाठः । **गन्तृत्वा-सम्भवा**दिति । अज्ञानस्योपाधेर्विद्यमानत्वाद् गन्तृत्वस्यैक्यस्यासम्भवात् । **आविद्यकरूपे**ति । आधुनिकास्तु मायाविद्ययोर्भेदमङ्गीकृत्य मायोपाधिरीश्वरः, अविद्योपाधिर्जीव इत्याहुः तत्त्वानुसन्धा-नाख्यग्रन्थादौ । **गन्तृत्वे**ति । नात्र गन्तृत्वमैक्यम्, किन्तु विद्यावतो विद्ययावरणभङ्गाद्ग-न्तृत्वस्यासम्भवो ज्ञेयः । **क्वचि**दिति । श्वेतकेतूपाख्याने । **यत्रापी**ति । छान्दोग्ये 'जान-श्रुतिर्ह पौत्रायण' इत्यारम्भके प्रपाठकेपि । तथा दशमप्रपाठके दहरविद्यायामपि । **तत्रा-पी**ति । आप्नोतावपि । **पूर्वोक्तेने**ति । भाष्यप्रकाशे 'अथ यत्तैर्जीवस्वरूपविचारेणेत्याद्युक्ते य आद्यपक्षदूषण एकदेशत्व इत्यादिनोक्तन्यायेन । **स्वरूपे**ति । स्वरूपपदप्राप्तिः स्वरूपप्रबोधो वा ।

भाष्यप्रकाशः।

प्तिरेवेयम्, अविद्याऽध्यारोपितं नामरूपप्रविलयापेक्षयाऽभिधीयते। 'ब्रह्मैव सन् ब्रह्माप्येती'तिवदिति द्रष्टव्यम्। किञ्च। परब्रह्मविषया गतिः किं ब्रह्मविदः प्ररोचनाय, किं वानुचिन्तनाय। नाद्यः। स्वसंवेद्येनैवाव्यवहितेन विद्यासमर्पितेन स्वास्थ्येन तत्सिद्धेः। न द्वितीयः। नित्यसिद्धनिःश्रेयसे वेदनस्यासाध्यफलस्य विज्ञानस्य गत्यनुचिन्तनापेक्षाया अभावात्। तस्मादपरब्रह्मविषयैव गतिः। सा परस्मिन् ब्रह्मणि नोपपद्यत इति परापरब्रह्मविवेकानवधारणेनापरस्मिन् ब्रह्मणि वर्तमाना गतिश्रुतयः परस्मिन्नध्यारोप्यन्ते। न च परापरभावेन द्वे ब्रह्मणी न स्त इति शङ्क्यम्। 'एतद्वै सत्यकाम परञ्चापरञ्च ब्रह्म यदोङ्कार' इत्यादिश्रुतिदर्शनात्। किं पुनः परं ब्रह्म, किमपरमिति चेत्। उच्यते। यत्राविद्याकृतनामरूपनिषेधेनास्थूलादिशब्दैर्ब्रह्मोपदिश्यते तत्परम्। तदेव यत्र नामरूपादिविशेषाणां केनचिद्विशिष्टमुपासनायोपदिश्यते, 'मनोमयः प्राणशरीरो भारूप' इत्यादिशब्दैः, तदपरम्। नचैवमद्वितीयश्रुत्युपरोधः शङ्क्यः। अविद्याकृतनामरूपतया परिहृतत्वात्। तस्य चापरब्रह्मोपासनस्य तत्सन्निधौ श्रूयमाणं 'स यदि पितृलोककामो भवती'त्यादिजगदैश्वर्यलक्षणं संसारगोचरमेव फलं भवति। अनिवर्तितत्वादविद्यायाः। तस्य फलस्य देशविशेषावबद्धत्वात् तत्प्राप्त्यर्थं गमनमविरुद्धम्। आत्मनः सर्वगतत्वेऽप्याकाशस्य घटादिगमनेनेव बुद्ध्याद्युपाधिगमनेन गमनप्रसिद्धिरित्यवादिष्म, 'तद्गुणसारत्वा'दित्यत्र। तस्मात् 'कार्यं बादरि'रित्येव स्थितः पक्षः। 'परं जैमिनि'रिति तु पक्षान्तरप्रतिभानमात्रप्रदर्शनं बुद्धिविकासनायेति द्रष्टव्यमिति।

रश्मिः।

इयं प्राप्तिः। अविद्ययाध्यारोपिते ये नामरूपे तयोः प्रविलयस्यापेक्षया। ब्रह्माप्येतीति। गत्यर्थास्ते प्राप्त्यर्था इति ब्रह्म अप्येति स्वरूपं प्रतिपद्यते प्रबोध्यते वेत्यर्थः। प्ररोचनायेति। 'रोचनार्था फलश्रुति'रिति वाक्यादपि। अव्यवहितेनेति। परब्रह्मणा। विद्या तत्त्वमस्यादिरूपया समर्थितेन। स्वास्थ्येनेति। 'अस्य महिमानमिति वीतशोक' इति श्रुतिः स्वास्थ्येन स्वरूपस्थित्या। तत्सिद्धेः प्ररोचनसिद्धेः। वेदनस्येति। विज्ञानस्य कृत्यसाध्यं फलं यस्य। गत्यनुचिन्तनस्य कृतिरूपस्य अपेक्षायाः। अपरेति। मुण्डके यद्यपि ऋग्वेदादिरूपा अपरविद्या, तथापि तत्प्रतिपाद्यग्न्याम्यादिविद्या तादृशापरविद्यैव गतिः। ब्रह्मणीति। अक्षरब्रह्मणि। अध्यारोप्यन्त इति। परत्र परावभासन्ते। एतद्वा इति। परं ब्रह्म च यदोङ्कारः अपरविद्यारूप इति योजनया प्रतिपाद्यप्रतिपादकरूपपरापररूपे द्वे ब्रह्मणी उक्ते। नामरूपादीति। आदिना क्रिया, 'नाम रूपं क्रिया चे'ति बृहदारण्यकात्। एतेषां मध्ये केनचिन् नाम्ना रूपेण क्रियया वा तदेव विशिष्टम्। परीति। अद्वितीयश्रुत्युपरोधस्य। श्रूयमाणमिति। छान्दोग्ये दहरविद्यायाम्। जगदैश्वर्येति। जगति ऐश्वर्यं पित्रादिसमुत्थानकर्तृत्वं सङ्कल्पद्वारा। 'स यदि पितृलोककामो भवति, सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ती'त्यादिश्रुतेः। एवं 'स यदि मातृलोककामः, भ्रातृलोककामः, स यदि स्वसृलोककामः, स यदि सखिलोककामः, स यदि गन्धमाल्यलोककाम' इत्यपि द्रष्टव्यम्। संसारः प्रपञ्चः।

जीवत्वदशायां तूपाध्यवच्छेदाद् गन्तृत्वं जीवस्यापरस्य ब्रह्मणश्चाविद्यकरूप-नामवत्त्वेन गन्तव्यता चोपपद्यते । उपासनाफलत्वादस्य गमनस्य उपास्यस्य च सगुणत्वेन तत्प्राप्तेरेवोचितत्वाच्च । निर्गुणब्रह्मविद्यावतो गन्तृत्वासम्भव इत्युक्तम्, अतो बादरिमतमेव साधीयः । न च ब्रह्मपदस्य मुख्यार्थत्वमुक्तरीत्यात्र सम्भवति, अतोऽत्रामुख्यार्थत्वमेवानुसर्तव्यमिति चेत् । स्यादेतदेवम्, यद्यौपाधिकमुपास्यरूपं जीवत्वं वा स्यात्, न त्वेवम् । 'प्रकृतैतावत्त्वं हि प्रतिषेधती'त्यादिभि'स्तद्गुण-सारत्वाच्च तद्व्यपदेश' इत्याद्यधिकरणैः श्रुत्यर्थनिर्णयेन ब्रह्मणि विशेषाणा-मौपाधिकत्वस्य जीवपुरुषोत्तमाभेदस्य च पुरस्तादेव निरस्तत्वात् । न च व्यापकत्वं गन्तव्यत्वे बाधकम् । प्रारब्धभोगं विना तत्प्राप्त्यसम्भवाद् यदा यत्र तद्भोगसमाप्तिः, तदा तत्र तत्प्राप्तेर्निःप्रत्यूहत्वात् ।

भाष्यप्रकाशः ।

तदनुवदन्ति जीवत्वेत्यादिना चेदित्यन्तेन । एवं सर्वं तन्मतं सङ्ग्रहेणानूद्य, यत्तैर्गतिश्रुत्यु-पपादनार्थं पश्चादुक्तम्, तदेव प्रथमतो दूषयन्ति स्यादेतदेवमित्यारभ्य निरस्तत्वादित्यन्तम् ।

अत्रायमर्थः । यत्तावत् परब्रह्मणो निर्विशेषमात्रत्वोपपादनाय, 'सदेव सोम्ये'ति, 'यतो वा इमानी'त्यादीनां जगदुत्पत्त्यादिबोधकश्रुतीनामेकत्वप्रतिपादनपरत्वमुक्तम्, तत्किमुपादानतयै-कत्व प्रतिपादनार्थम्, उत तटस्थतयैकत्वप्रतिपादनार्थम् । आद्ये तासामुपादानतादिबोधकत्वेन स्वार्थेऽपि तात्पर्यात् सिद्धमनेकशक्तित्वम् । द्वितीये तु, न प्रमाणमुपलभामहे, तत्र ताट-स्थ्यबोधकपदाभावात् । न च मृदादिदृष्टान्तवाक्ये विकारस्य वाचारम्भणमात्रत्वकथनेन तन्मिथ्यात्वस्य 'मृत्तिकेत्येव सत्य'मिति कारणसत्यत्वस्य च बोधनात् तदेव मानमिति वाच्यम् । तत्र तथार्थाभावात् । तत्र विकारस्य वाचारम्भणत्वोक्त्या तस्य कारणानन्यताया एव सिद्धेस्तावता तटस्थैक्यस्य साधयितुमशक्यत्वात् । वाचारम्भणस्य नामधेयत्वविधानेन

रश्मिः ।

जीवत्वेत्यादिना चेदित्यन्तेनेति । परब्रह्मण इति । ननु तन्मतेऽक्षरातिरिक्तब्रह्माभावात् किं परं ब्रह्मेति चेदुच्यते । न च कार्ये प्रतिपत्त्यभिसन्धिरिति सूत्रभाष्ये तथोक्तेरस्ति परब्रह्मेति । परन्त्वक्षरमेव परब्रह्म । ब्रह्मपदस्येति । उक्तरीत्येति । बादरिमतोक्तरीत्या । अत्रेति । 'स एतान् ब्रह्म गमयती'-तिश्रुतौ । अत्रेति । उक्तश्रुतौ । अमुख्यार्थत्वं कार्यब्रह्मार्थत्वम् । पश्चादिति । जीवविचारेण पश्चादुक्तम् । व्यापकत्वविचारात् पश्चात् । जगदुत्पत्त्यादीति । एतेन यद्यौपाधिकमुपास्यरूपमित्यत्र मायोपाधिरुक्तः धर्माणामाविद्यकत्वात् । उपास्यं मायोपाधिकमिति । एकत्वेति । आरोपापवादसङ्गत्या तथा । जीवविषये तु जीवब्रह्मैकत्वप्रतिपादनपरत्वमित्यर्थः । जीवोऽविद्योपाधिकः । तत्राप्यारोपापवादः । भागत्यागलक्षणयैकत्वम् । तत्त्वमस्यादिवाक्ये । उक्तमिति । न च कार्ये प्रतिपत्त्यभिसन्धिरिति सूत्रे उक्तम् । तथा च यदि मायोपाधिकमुपास्यरूपम्, अविद्योपाधिकं जीवत्वं वा स्यादिति भाष्यार्थो दिङ्मात्रेणासूचि । अनूद्य दूषयन्तः न त्वेवमित्यादिभाष्यं प्रपञ्चयन्ति स्म विचारेति[1] । विचारेण विकारो विचारविकारः तस्य । मृदादिदृष्टान्तवाक्यविचारे इति पाठः सुवचाः । तत्रेति । वाचार-म्भणश्रुतौ । कारणानन्यतेति । 'कार्यकारणवस्त्वैक्यमर्षणं पटतन्तुव'दिति वाक्यात् । साधयितु-मिति । आरोपापवादसङ्गत्या साधयितुम् । नामधेयत्वेति । 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य'मित्यत्र वाचारम्भणं विकारः कार्यम् । तथा सत्युक्तसङ्गत्या मिथ्यात्वं प्राप्तं तद्वारणाय वाचारम्भणं

१. विचारविकार इति रश्मौ ।

भाष्यप्रकाशः।

तथा निश्चयात्। अन्यथा, वाचारम्भणनामधेयपदयोरन्यतरप्रयोगमात्रेण विकारमिथ्यात्वसिद्धावन्यतरवैयर्थ्यापत्तेर्दुर्वारत्वात्। अतो घटशरावादयो यथा मृद एव नामान्तरम्, तथा प्रपञ्चरूपो विकारोपि ब्रह्मण एव नामान्तरमिति तत्र कारणानन्यतायामेव तात्पर्यात्। भगवता सूत्रकारेणापि तथैव सूत्रितत्वात्। अन्यथा 'तन्मिथ्यात्वमारम्भणशब्दादिभ्य' इत्येव वदेत्। 'यथा सुवर्णं सुकृतं पुरस्तात् पश्चाच्च सर्वस्य हिरण्मयस्य। तदेव मध्ये व्यवहार्यमाणं नानापदेशैरहमस्य तद्व'दित्येकादशस्कन्धीयभगवद्वाक्याच्च। अतस्तासां कारणैक्ये एव तात्पर्यम्, न तु तटस्थैक्ये। एवं कारणसत्यत्वावधारणादपि न तटस्थैक्यसिद्धिः, कारणत्वेनैव सत्यत्वावधारणात्। न च कारणत्वेनापि कारणसत्यत्वावधारणे कार्यस्य मिथ्यात्वसिद्धौ ताटस्थ्येनैव कारणतेति तटस्थैक्यस्यैव सिद्धिरिति वाच्यम्। 'आत्मैवेदं सर्वम्', 'ब्रह्मैवेदं विश्वमिदं वरिष्ठ'मित्यादिभिस्तदुक्तश्रुतिभिरेव कार्यस्य ब्रह्मत्वावधारणे तन्मिथ्यात्वस्यैव वक्तुमशक्यत्वात् तटस्थकारणताया एवासिद्धेः। अतः, 'सन्मूलाः सौम्येमा' इत्यादिश्रुतेः सूत्रकृता कार्यलक्षणमुखेनैव ब्रह्मजिज्ञासाप्रतिज्ञानादन्यथा जगदप्रतीत्यादिदोषप्रसङ्गाच्च उपादानत्वेनैवैकत्वसिद्धिरित्युत्पत्त्यादिहेतुत्वबोधकश्रुतीनां स्वार्थेपि तात्पर्यस्य दुरपोहत्वात् तासां विशेषनिराकरणश्रुतिशेषताया एवायुक्तत्वात्। अनन्तशक्तित्वेनैव ब्रह्मणः सिद्धिरिति न विशेषनिषेधश्रुतीनां निराकाङ्क्षार्थत्वम्। तावता ब्रह्मज्ञानस्यापूर्तेः। नाप्यात्मन एकत्वनित्यत्वशुद्धत्वाद्यवगत्या पुरुषार्थसमाप्त्यवगतिः। भूमविद्यायां 'भूमैव विजिज्ञासितव्य' इत्यादिना नित्यनिरवधिसुखात्मकब्रह्मज्ञानादेव पुरुषार्थबुद्धिसमाप्तिबोधनात्। जीवब्रह्मैक्यस्यापि तादात्म्यरूपत्वमेव,

रश्मिः।

नामधेयमित्युक्तम्। तथेति। तटस्थसाधनाशक्यत्वनिश्चयात्। मृद इति। षष्ठ्यन्तम्। तथैवेति। कारणानन्यत्वबोधकत्वेन 'तदनन्यत्वमारम्भणशब्दादिभ्य' इति। वदेदिति। सूत्रकारः। तासामिति। सविशेषप्रतिपादिकानां श्रुतीनाम्। तटस्थैक्यमारोपापवादेन तस्मिन्। तदुक्तेति। 'न च कार्ये प्रतिपत्त्यभिसन्धि'रितिसूत्रभाष्ये शङ्कराचार्यैरुक्ताभिः श्रुतिभिः। अन्यथा जगदिति। विद्वन्मण्डने 'उपजीव्यत्वतः श्रौतवाक्यैश्चान्यपरत्वतः अन्तरङ्गत्वतश्चापि निर्विशेषं निरूप्यत' इत्यनया निर्विशेषनिरूपणे प्रतिज्ञाते सिद्धान्तोक्तिः 'अभेदादनुपाधित्वाज् जगदप्रत्ययाश्रितः, सर्वाधारत्वतस्तावच्छक्तित्वान्नास्य बाधन'मित्यनया। इमे जगदप्रतीत्यादिदोषास्तेषां प्रसङ्गात्। अर्थस्तु सुवर्णसूत्रे प्रसिद्धः। तथा चान्यथेत्यस्य तटस्थकारणत्वे च। न च व्यावहारिकसत्तया मिथ्यात्वेपि न जगदप्रतीतिप्रसङ्ग इति वाच्यम्। तथाप्यनृतप्रतीतेर्दुर्वारत्वात्। व्यावहारिकसत्तायाः सत्कृष्णत्वात्। वेदस्तुतौ 'सन्तं कृष्णं भजेद्बुध' इत्युक्तत्वात्। स्वार्थेपीति। अन्यथा तु व्यवहारे वयं भाट्टा इति वदतां शाङ्कराणां 'विधिना त्वेकवाक्यत्वे स्तुत्यर्थेन विधीनां स्यु'रिति जैमिनिसूत्रेण विध्यर्थस्तावकत्वेन स्वार्थे तात्पर्यस्यापोह्यत्वात्। तासामिति। उत्पत्त्यादिहेतुत्वबोधकश्रुतीनाम्। अयुक्तत्वादिति। स्वार्थे तात्पर्यविधुराणामेव अर्थवादानां विधिना त्वेकवाक्यत्वात्स्तुत्यर्थत्वम्। तासां तु स्वार्थे तात्पर्योक्तेर्नार्थवादत्वमित्ययुक्तत्वं तस्मात्। निराकाङ्क्षेति। ब्रह्मज्ञानपूर्तौ तथा। तावतेति। विशेषनिषेधमात्रेण। ब्रह्मज्ञानस्य विषयतावच्छेदकं विरुद्धधर्माधारत्वम्। दशविधलीलाविशिष्टत्वं वा। अन्यथा मायाकार्यत्वेन जगतो मिथ्यात्वादप्रतीतिप्रसङ्गः। पुरुषार्थेति। मोक्षपुरुषार्थसमाप्त्यवगतिः। ननु 'प्रकृतैतावत्त्वं हि प्रतिषेधती'त्यादौ तृतीयाध्यायद्वितीयपादस्थे विशेषतो अक्षरजीवविषय इति फलाध्याये किं प्रयोजनमत आहुः भूमेति। छान्दोग्ये नारदसनत्कुमारसंवादेस्ति। मार्गत्रये भक्तिमार्गगणनादधिकारिभेदादाहुः जीवब्रह्मेति। अपिना ब्रह्म परं ब्रह्म तेनैक्यस्य तादात्म्यरूपत्वं

भाष्यप्रकाशः ।

न तु सर्वात्मनाऽभेदरूपत्वम् । 'तत्त्वमसी'त्यादौ तस्य भावस्तत्त्वमिति व्युत्पत्त्या तथैव सिद्धत्वात् । सर्वात्मनाऽभेदस्य भागत्यागलक्षणादोषग्रस्तत्वेनाग्रहमात्रत्वात् । एतच्च, 'तद्गुणसारत्वात्तु तद्व्यपदेश' इत्यत्र व्युत्पादितम् । तदनन्यत्वाधिकरणे च । 'तत्र को मोहः कः शोक एकत्वमनुपश्यत' इति ईशावास्यवाक्येपि, 'यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानत' इति पूर्वार्धेन ज्ञानिनः सर्वात्मभावो वामदेववत्तस्यामवस्थायामुच्यते इति तादृशीनां[1] श्रुतीनामपि पूर्वकक्षाविश्रान्तत्वमेव ।

रश्मिः ।

गौणाद्वैतरूपत्वम् । तथा च तन्न्यायस्य फलाध्यायेपि तौल्यं सूचितम् । ब्रह्मपदस्याक्षरे पुरुषोत्तमे च प्रयोगात् । गौणमद्वैतं फलप्रकरणे पुरुषोत्तमस्याधोक्षजत्वात् । 'अन्तरा भूतग्रामवत्स्वात्मन' इति सूत्रविषयत्वाच्च । एवकारव्यावर्त्यमाहुः **न त्विति** । मुख्याद्वैतस्याक्षरविषयत्वात् । फलाध्याये पुरुषोत्तमस्य मुख्यत्वात् । **सर्वात्मना अभेदो** भेदाभावः यथा सैन्धवखिल्यस्य सिन्धुना अभेदो मुख्यः । यथा घटस्य घटान्तरेणाभेदस्तादात्म्यरूपो अभेदो गौण इति । **तत्त्वमसीत्यादाविति** । आदिना ब्रह्माहमस्मीति । अन्यान्यष्टपदानि च । तत्त्वमसीत्येकादशपदात्मक उपदेश इति । तस्य भावस्तत्त्वमिति । तत् त्वमित्युपादानकार्ययोरभेदः सोक्षरेण अतस्तं विहाय कर्तृकारकघटितत्वाच्च । तस्य त्वमिति शेषषष्ठीघटिततादात्म्यरूपोऽभेदः पुरुषोत्तमविषये फलाध्यायत्वादुक्तः । षष्ठ्या अकारकत्वात् । द्वितीयसप्तमाध्याये 'शश्वत्प्रशान्तमभयं प्रतिबोधमात्रं शुद्धं समं सदसतः परमात्मतत्त्वम् । शब्दो न यत्र पुरुकारकवान्क्रियार्थो मायापरैत्यभिमुखे च विलज्जमाने'त्यत्र पुरुषोत्तमे कारकत्वाभावोक्तिः । **तथैवेति** । जीवपरब्रह्मैक्यस्य तादात्म्यरूपत्वस्यैव सिद्धत्वात् । जीवपरब्रह्मणो मुख्याभेदे दोषमाहुः **सर्वात्मनेति** । तथा च मुख्याभेदे स्वीकृते लीलावैचित्र्यं न स्यादिति दृष्टवैचित्र्यापलापो दोषः । नन्वधोक्षजे लीलावैचित्र्यदर्शनं केन करणेनेति चेन्न । महतामन्तःकरणस्य करणत्वात् । महत्त्वं भगवत्सम्बन्धादेव । तदुक्तं बृहदारण्यके 'मनसैवानु द्रष्टव्यमेतदप्रमेयं ध्रुव'मिति । अनु महत्वमनु भक्तिमनु वा । अप्रमेयमधोक्षजरूपम् । तथा च सप्तमस्कन्धे सप्तमाध्याये सद्वासनाप्रकरणे 'हरिः सर्वेषु भूतेषु भगवानास्त ईश्वरः । इति भूतानि मनसा कामैस्तैः साधु मानये'दित्युक्त्वा 'यदा ग्रहग्रस्त इव क्वचिद्धसत्याक्रन्दते ध्यायति वन्दते जनम् । मुहुः श्वसन्वक्ति हरे जगत्पते नारायणेत्यात्ममतिर्गतत्रपः । तदा पुमान्मुक्तसमस्तबन्धनस्तद्भावभावानुकृताशयाकृतिः । निर्दग्धबीजानुशयो महीयसा भक्तिप्रयोगेण समेत्यधोक्षजम् । अधोक्षजालम्भमिहाशुभात्मनः शरीरिणः संसृतिचक्रशातनम् । तद्ब्रह्मनिर्वाणसुखं विदुर्बुधास्ततो भजध्वं हृदये हृदीश्वर'मिति । तस्य भावश्चेष्टादिः तस्य भावो भावना तेनानुकृते आशयानुकृती मनःशरीरे यस्य । निर्दग्धं बीजमज्ञानमनुशयो वासना च यस्य सः । सम्यगेति प्राप्नोति । ततः किमत आह । अधोक्षजस्यालम्भं मनसा स्पर्शम् । अधोक्षजालम्बमिति पाठेऽधोक्षजस्याश्रयणम् । अशुभः रागादियुक्त आत्मा मनो यस्य । शातनं निवर्तकम् । ब्रह्मणि निर्वाणं लयो मोक्षस्तदात्मकं सुखम् । हृदीश्वरमन्तर्यामिणम् । उक्तरीत्या पूर्वकक्षाविश्रान्तत्वादेव । **तद्गुणेति** । द्वितीयाध्यायस्य तृतीयपादेऽस्ति । **तदनन्यत्वेति** । द्वितीयाध्यायस्य प्रथमपादेऽस्ति । भाष्यस्य दिङ्मात्रत्वात्तत्सिद्धयेप्रपञ्चमाहुः **तत्र को मोह** इति । **एकत्वमिति** । तादात्म्यं वक्ष्यमाणदृष्टान्तात्, फलाध्यायाच्च । **सर्वात्मभाव** इति । सर्वस्मिन्नात्मभावः सर्वात्मभावः 'सर्वात्मभावोऽधिकृतः' इत्यस्य सुबोधिनीटिप्पण्युक्तः । **वामदेववदिति** । पुरुषविधब्राह्मणेऽस्ति । तत्रापि टिप्पण्युक्तो विग्रहः । **तस्यामिति** । तस्य ज्ञानिनः अवस्थायां साधनावस्थायाम् । 'सर्वभूतेषु मन्मति'-

[1] एतादृशीनामिति रश्मौ ।

भाष्यप्रकाशः ।

अत एव 'आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चने'ति श्रुतावपि मनोवागगोचरनिरवध्यानन्दज्ञानादेव भयाभावकथनं युज्यते । एतेनैव विदुषस्तुष्ट्यनुभवादिदर्शनमपि व्याख्यातम् । तस्य यथाधिकारत्वात् विकारानृताभिसन्ध्यपवादस्तु विकारसत्यत्वमेव बोधयति । अन्यथा तेनात्मान्तर्धानानुपपत्तेः । आत्मान्तर्धानानन्तर्धानयोर्वस्तुधर्मत्वात् । अन्यथा 'अनृतेनात्मानमन्तर्धाये'ति श्रुतिविरोधापत्तेः । 'मृत्योः स मृत्युमाप्नोती'ति भेददृष्ट्यपवादस्तु परब्रह्मस्वरूपगतभेददृष्टिविषयः । काठके 'पराञ्चि खानी'त्यादिना परमात्मन एवोपक्रान्तत्वात् । उपसंहारेपि 'अङ्गुष्ठमात्रः पुरुष' इति मन्त्रद्वये तस्यैवोक्तत्वात् । अग्रे च, 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा

रश्मिः ।

रिति वाक्यात् । तथा च सर्वात्मभावः लिङ्गभूमविद्यायां पुष्टिमार्गीयः । तच्चरमवृत्तौ टिप्पण्युक्तः । मर्यादायां निरोधलक्षणग्रन्थोक्तः । अम्बरीषस्येव 'सर्वात्मभावं विदधन्महीमिमां तन्निष्ठविप्राभिहितः शशास हे'ति नवमस्कन्धे । वामदेवस्य महादेवस्य सर्वात्मभावः भक्त्यङ्गं ज्ञानित्वात् । 'ज्ञानेन भक्ते'ति श्रुतेः । भक्त्यङ्गं सर्वात्मभावः । 'सर्वभूतेषु मन्मति'रिति वाक्योक्तः । टिप्पण्युक्तो नित्यलीलायामपि । तत्र ज्ञानस्यावर्जनीयत्वेन राजसादिज्ञानानां चाभावात् । 'प्रवर्तते यत्र रजस्तमस्तयोः सत्त्वं च मिश्रं न च कालविक्रम' इति वाक्यात् । एतादृशीनामिति । 'ज्ञानेन भक्ता', 'तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदे, अहं मनुरभवम्, सूर्यश्च', 'यस्मिन् सर्वाणि भूतानी'त्येतादृशीनाम् । पूर्वकक्षेति । भयाभावसाधनं यदानन्दज्ञानं तत्साधनं भक्तिः तस्याः पूर्वकक्षा ज्ञानिनां ज्ञानं तत्र विश्रान्तत्वमित्यर्थः । वाक्यशृङ्खलयैवकारः । अत एवेति । उक्तरीत्या पूर्वकक्षाविश्रान्तत्वादेव । एवेति । पूर्वकक्षाव्यवच्छेदकः । एतेनेति । मनोवागगोचरनिरवध्यानन्दज्ञानादेवाभयकथनेन । विदुषः पूर्वकक्षाविश्रान्तज्ञानवतः भक्त्यङ्गसर्वात्मभावेन तुष्टेरनुभवः स्वस्य परस्य । आदिना स्थितिः । व्याख्यातमिति । ज्ञानिपरत्वेन व्याख्यातम् । तदेवाहुः तस्येति । दर्शनस्य भक्ताधिकारकसर्वात्मभावातिरिक्तसर्वात्मभावमनतिक्रम्य यथाधिकारं तस्य भावो यथाधिकारत्वं तस्मात् । विकारेति । विकारानृताभिसन्धिर्मृदादिदृष्टान्तेन छान्दोग्ये तस्यापवादः 'वाचारम्भणं विकार' इत्येतावतैव चारितार्थ्ये नामधेयपदेन व्यर्थतां गतेन विकारवाचारम्भणाभिसन्धेरपवादः क्रियते । एवं नामधेयपदसार्थक्यम् । यद्यपि नामरूपरूपस्य जगतो विकारत्वप्रतिपादनेन वाचारम्भणनामधेयपदयोरुभयोः सार्थक्यम्, तथापि नाम्नां शब्दात्मकानां शब्दनित्यत्वेन विकारसत्यत्वप्रतिपादकत्वमपीत्याहुः विकारसत्यत्वमेवेति । 'वाचा विरूपनित्यये'ति श्रुतेरेवकारः । छान्दोग्ये श्वेतकेतूपाख्यानस्थश्रुतिसिद्धमर्थं श्रुतिं चोपष्टम्भकत्वेनाहुः अन्यथेत्यादि । नामधेयपदेन विकारसत्यत्वाबोधने । तेन अनृतेन । अनृतेनेत्यादिश्रुतिः । परब्रह्मस्वरूपेति । 'सजातीयविजातीयस्वगतद्वैतवर्जित'मिति निबन्धात् । पराञ्चीति । द्वितीयाध्यायारम्भे । अनया मध्ये 'मृत्योः स मृत्यु'मिति श्रुतिः । तत्र 'पराञ्चि खानि व्यतृणत् स्वयंभूस्तस्मात् पराङ्पश्यति नान्तरात्मन्नि'त्यत्र द्रष्टृत्वेन अन्तरात्मसमवायित्वेन तदभिन्नस्य परमात्मन एव । यद्वा । प्रथमाध्याये 'स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्य'मित्युपक्रान्ताग्नित्वेनान्तरात्मन एव । मन्त्रद्वयेनेति । 'अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ईशानो भूतभव्यस्य स एवाद्य स उ श्वः एतद्वैतत् । यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति एवं धर्मान् पृथक् पश्यंस्तानेवानुविधावति । 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति एवं मुनेर्विजानत आत्मा भवति गौतमे'त्यत्र तृतीयश्रुतिं परित्यज्य मन्त्रद्वये । तस्यैवेति ईश्वरस्य सधर्मकस्य परात्मन एवोक्तत्वात् । विजानत इत्यस्याक्षर

१. 'उ श्वः' इति श्रुतितोपनिषदि ।

भाष्यप्रकाशः ।

भवति गौतमे'ति मुक्तिदशायामपि साम्यमात्रबोधनाच्च । तेन 'चक्षुषश्चक्षु'रित्यादिना परस्य ब्रह्मण एवोपक्रान्तत्वाद्यथा बृहदारण्यकेऽर्थः, तथात्रापीति न तेनापि विकारस्य मिथ्यात्वसिद्धिः । 'यत्रैतच्छुङ्गमुत्पतित'मिति श्रुत्यापि जगन्मूलत्वेनैवैकत्वमुदर्के प्रतिपादितम्, न तु ताटस्थ्येन । एवं, 'यतो वे'त्यादावपि ज्ञेयम् । अतः सर्वासां श्रुतीनामुपादानकारणैकात्म्यावगमपरत्वाद् विशेषनिषेधश्रुतीनां च लौकिकविशेषनिषेधपरत्वात् तासां परस्परसाकाङ्क्षतैव । शेषशेषिभावस्तु यथाधिकारं प्रकरणबलादनियत इति ब्रह्मण्येकशक्तियोगो निराबाध एव ।

तेन यत्तैः प्रश्नोपनिषद्वाक्यात् परापरे द्वे ब्रह्मणी अङ्गीकृत्य, यदविद्याकृतनामरूपादि-विशेषप्रतिषेधेनास्थूलादिशब्दैर्ब्रह्मोपदिश्यते, तत् परम्; यत्पुनर्नामरूपविशेषाणां केनचिद्-विशिष्टमुपासनायोपदिश्यते 'मनोमयः प्राणशरीर' इत्यादिशब्दैस्तदवरमिति प्रतिपादितम्; तत्र किं मानम्? न तावदस्थूलादिवाक्यम्, मनोमयादिवाक्यं च । तत्र परापरशब्दयोरश्रवणात् । आद्ये अक्षरशब्देनैव लक्ष्यनिर्देशात् । यदि च मुण्डके, 'अथ परा यया तदक्षरमधिगम्यत' इत्य-क्षरविद्यायाः परत्वश्रावणात् तद्वेद्यस्याक्षरस्य परत्वमिष्यते । बाढम् । तदा पुरुषस्य ततोपि परत्वमेव द्रष्टव्यम् । 'दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रो

रश्मिः ।

विद्यया विजानत इत्यर्थादाहुः मुक्तीति । जीवन्मुक्तिदशायाम् । काठक उपक्रमस्य परमात्मपरत्वं क्लिष्टं मत्वा भाष्यस्य दिङ्मात्रत्वाय बृहदारण्यकेन एतत्प्रपञ्चयति स्म तेन चक्षुष इति । शारीरब्राह्मणे अर्धप्रपाठकसमाप्तौ 'प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुः, ते निचिक्युः ब्रह्मपुराणमग्र्यं मनसैवावाप्तव्यं नेह नानास्ति किंचने'ति, अग्रे 'मृत्योः स मृत्युमाप्नोति य इहे'त्यादि-श्रुतिः । चक्षुषश्चक्षुरित्यस्यादिः चक्षुषश्चक्षुरित्यादिः तया । अत एव प्राण इत्यातिदेशाधिकरणे प्राणस्य परब्रह्मतोक्तेः । बृहदारण्यकेऽर्थ इति । भेददृष्ट्यपवादः परब्रह्मस्वरूपगतभेददृष्टिविषय इत्यर्थः । तथात्रापीति । काठकेऽपि उक्तोऽर्थ इति । न तेन काठकेन । विकारस्येति । नाना पश्यति विकारैः कृत्वा नाना पश्यति इति विकारस्य मिथ्यात्वे मृत्योर्मृत्य्वाप्तिर्नेत्येवं न विकारस्य मिथ्यात्वसिद्धिः । यत्रैतदिति । तत्रैतदित्यपि पाठः, तत्रेत्यप्सु । अन्नरूपं शुङ्गं कार्यम्, उत्पतितं जातम् । जगदिति जगत्समवायित्वेनैवैकत्वं कार्यकारणैकत्वम्, न तु विकारमिथ्यात्वेनैकत्वम् । नाप्युदकविकारयोरैक्ये नैकत्वम् । श्रौतत्वेऽपि जलस्य मूलकारणत्वाभावेन जन्माद्यधिकरणविरोधापत्तेः । उदर्के ईषत्कालीय-फले मदनकण्टके वा । उदक इति वा पाठः । तदपः आचक्षते अशनायेति तत्रैतच्छुङ्गमुत्पतितमिति श्रुतेः । तथापि फलाध्याये परोक्षवादादुदर्क इति । एवं कार्यलक्षणोक्तधर्मेणैक्यमुक्तम्, तटस्थलक्ष-णोक्तसत्यत्वादिधर्मैरित्याहुः न त्विति । 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्युक्तं तटस्थलक्षणम् । 'यतो वा इमानि भूतानि जायन्त' इत्युक्तं कार्यलक्षणं तदेवाहुः एवं यतो वेति । सिद्धमाहुः सर्वासामिति । सगुणनिर्गुणप्रतिपादिकानां श्रुतीनां फलाध्यायत्वाज् जगदुपादानमक्षरं लोकरूपं तत्रत्यो भगवान् रसात्मकजगदुपादानं तत्र कार्यकारणयोरैकात्म्यावगमः तस्माद्विरुद्धधर्माधारत्वादाहुः तासामिति । धर्मिप्रतिपादिकानां स्वलक्षणधर्माकाङ्क्षा, धर्मप्रतिपादिकानां च स्वाश्रयाकाङ्क्षेति परस्परसाकाङ्क्षता । शेषशेषीति धर्मप्रतिपादिकानां प्रतियोगिप्रतिपादकत्वाच्छेषभावः । धर्मनिषेधिकानां तु शेषिभावः । शेषः प्रतियोगी यस्यास्तीति शेषी निषेधः । तयोर्भावः शेषशेषिभावः । ज्ञानरूपमधिकारमनतिक्रम्य यथाधिकारम् । ज्ञानकर्मभक्तिप्रकरणबलात् । अनेकेति । जगज्जन्मादिकर्तृत्वादिसत्यत्वादिरूपानेक-शक्तियोगः । उभयव्यपदेशाद्यधिकरणसत्त्वादेवकारः । आद्य इति । परस्मिन् । एवकारः पुरुषोत्तमयोगं

भाष्यप्रकाशः ।

क्षरात् परतः पर' इति तत्रैव श्रावणात् । न च तस्य यावद्विशेषशून्यत्वम् । तदग्रे, 'एतस्माज्जायते प्राण' इति मन्त्रेण तत एव सृष्टेः श्रावणात् । 'अग्निर्मूर्धे'त्यादिभिस्तद्रूपोपन्यासाच्च । नाप्यक्षरस्य तथात्वम् । अस्थूलादिश्रावणोत्तरं प्रशासनस्य वेद्यत्वद्रष्टृत्वादीनामाकाशोपादानत्वस्य च श्रावणेन, मुण्डकेपि, 'यत्तदद्रश्य'मित्याद्युक्त्वा, 'यद्भूतयोनिं परिपश्यन्ती'त्यादिजगदुपादानत्वसर्वज्ञत्वादीनां श्रावणेन 'यावद्विशेषशून्यतया वक्तुमशक्यत्वात् । एवं वाक्यान्तरेष्वपि द्रष्टव्यम् । सर्वत्र एकस्यैव ब्रह्मणः प्रतिपाद्यत्वात् । अत एव श्वेताश्वतरेपि 'प्रधानक्षेत्रज्ञपतिर्गुणेशः', 'यो ब्रह्माणं विदधाति पूर्वं'मित्यादीन् नानाधर्मबोधकानेव मन्त्रानुक्त्वा 'निष्कलं निष्क्रिय'मित्युक्तम् । 'स वा एष महानज आत्मे'त्यत्रापि शारीरब्राह्मणे, 'अन्नादो वसुदान' इति 'सर्वस्य वशी सर्वस्येशान' इत्यादयो धर्मा उक्ताः । 'स वा एष नेति ने'त्युक्त्वा, 'अगृह्यो न हि गृह्यते, अशीर्यो न हि शीर्यते असङ्गोऽसितो न सज्जते न व्यथत' इत्येवं निषेधो विवृतो न तु यावद्धर्मपरत्वेनेति द्रष्टव्यम् । अतो यत्रोत्कर्षस्य विश्रान्तिः, अक्षराद्वा यदुत्कृष्टम्, तदेव परमिति मन्तव्यम्, उक्तमुण्डकश्रुतेः । 'अव्यक्तात् पुरुषः परः, पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गति'रिति काठकश्रुतेः । 'अम्भस्यपारे' इत्युपक्रम्य, 'अतः परं नान्यदणीयसꣳ हि परात् परं यन्महतो महान्त'मिति तैत्तिरीयश्रुतेश्च । पुरुषस्य च विरुद्धधर्माश्रयत्वमेतास्वेव प्रतिपादितम् । एतदेव परत्वम् । गीतासु च 'अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् । यं प्राप्य न निवर्तन्ते तद्धाम परमं मम । पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यये'ति । 'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते । उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः । यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम' इति तदुपबृंहणात् । अत एव, 'न तत्समश्चाभ्यधिकश्च दृश्यते' इत्यादिषु तस्य समाभ्यधिकनिषेधोपि युज्यते । न च पुरुषोत्तमाक्षरयोः परापरभावाङ्गीकारे अद्वैतश्रुतिविरोधः । गणितागणितानन्दत्वधर्मभेदेपि वस्त्वभेदेन द्वैताभावे तदभावात्, अमित्रादिवदद्वैतविरुद्धसम्पद्रूपत्वेनाभेदस्य तादात्म्यात्मकत्वात् । अथवा । शब्दब्रह्मवेद्यं परम्, शब्दब्रह्मैवापरम् । षष्ठस्कन्धे चित्रकेतुं प्रति, 'शब्दब्रह्म परं ब्रह्म ममोभे शाश्वती तनू' इति भगव-

रश्मिः ।

व्यवच्छिनत्ति । लक्ष्यनिर्देशो बृहदारण्यकेऽक्षरब्राह्मणेऽस्ति । वाक्यान्तरेष्विति । यथा प्रश्नोपनिषदि । 'यो ह वैतदच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते यस्तु सौम्य सर्वज्ञः सर्वो भवती'ति । पर्युदासार्थको नञ् । अतो यावद्विशेषशून्यता न । परत्वमिति । पुरुषोत्तमत्वम् । तत्रैवेति । मुण्डक एव । तस्येति । पुरुषोत्तमस्य । सृष्टेरिति । आत्मसृष्टेः । अक्षरसृष्टेरन्यत्वात् । श्रावणेनेति । अक्षरब्राह्मणे श्रावणेन । अशक्यत्वादिति । न च प्रशासनत्वादिकं प्रशासत्वाद्यभावाभावात्मकं अभावोऽधिकरणात्मकमिति कथमशक्यत्वमिति शङ्क्यम् । अभावस्याधिकरणात्मकताया अप्रसिद्धेः यावदिति । तथा च यावद्धर्मनिषेधे 'स वा एष नेति नेती'त्यत्र विवक्षिते न विवृणुयादिति भावः । अत एवेति । विरुद्धधर्माधारत्वादेव । युज्यत इति । तादृशविरुद्धधर्माधारत्वाभावादिति भावः । तदभावादिति । अद्वैतश्रुतिविरोधाभावात् । नन्वक्षरत्वेन पुरुषोत्तमत्वेन रूपेण भेदो वर्तत इति कुतो वस्त्वभेद इति चेत्, तत्राहुः अमित्रादीति । तादात्म्येति । फलाध्यायत्वात् तादात्म्यात्मकत्वम्, न तु भेदाभावात्मकत्वम् । 'अन्तरा भूतग्रामव'दिति सूत्रे भेदाभावरूपाभेदस्य फले निषेधात् । शब्दब्रह्मवेद्यमिति । वाच्यं परम्, वाचकमपरमित्यर्थः । ममेति भगवतः । इति

भाष्यप्रकाशः ।

द्वाक्यस्य 'द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् । शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छती'त्यादिवाक्यस्य च स्वारस्यात् । 'एतद्वै सत्यकाम परं च ब्रह्मे'ति वाक्यविचारेऽप्योङ्कारस्य, 'एतद्वै यजुस्त्रयीं विद्यां प्रती'ति श्रुतेः सर्ववेदमूलत्वेन वाच्याभिन्नत्वेन चोभयरूपत्वं प्रतिज्ञाय, तदभिध्यानफलकथने एकद्वित्रिमात्राध्यानेनर्ग्यजुःसामभिर्मनुष्यलोकसोमलोकसूर्यलोकेषु यथायथं महिमानुभवं फलमुक्त्वा, अर्धचतुर्थमात्रेणोङ्कारेण ध्याने, अथर्वभिर्ब्रह्मलोकप्राप्तिं चोक्त्वा, 'स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षत' इति फलमुक्तम् । शङ्कराचार्यमतेत्र त्रिमात्र एवोङ्कारोऽङ्गीकृतः । स पाठो यद्यपीदानीन्तनेभ्यः पुस्तकेभ्यः पाठिभिः पठ्यमानात् पाठाच्च विरुध्यते, तथापि त्रिमात्रध्यानेपि, 'ओमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत, स तेजसि परे सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यते, एवं ह वै स पाप्मना विनिर्मुक्त' इत्येतावतो ग्रन्थस्य 'स एतस्माज्जीवघनात् परात् परं पुरिशयं पुरुषमीक्षत' इति ग्रन्थस्याग्रिमश्लोकद्वयस्य च वर्तमानत्वेन शब्दब्रह्म अपरम्, मृत्युमन्मात्राप्रतिपाद्यं वाऽपरम्, जीवघनरूपो यो हिरण्यगर्भः क्षरः पुरुषस्तस्मात् परमक्षरं ब्रह्म । परं ततोपि यः परः पुरिशयोऽन्तर्याम्युक्तः, श्लोकेपि 'तमोङ्कारेणैवायनेनान्वेति विद्वान्यत्तच्छान्तमजरममृतमभयं परं परायणं चे'त्युक्तः

रश्मिः ।

वाक्येति । प्रश्नोपनिषत्स्थवाक्यमीमांसायामपि 'एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कार' इति श्रुतेरोङ्कारस्य । एतदिति । ओङ्कारः यजुः मूलकारणं कां प्रतीत्यत आहुः । त्रयीं विद्यां प्रतीति श्रुत्यर्थः । मूलं शब्दरूपम् । सर्ववेदेति । त्रयीविद्यामूलत्वेन वाच्यं परं ब्रह्म तदभिन्नत्वेन । उभयरूपत्वं वाच्यवाचकरूपत्वम् । प्रतिज्ञायेति । उक्तश्रुत्या । तदभीति । 'स यद्येकमात्रमभिध्यायीते'त्यादिना तदभिध्यानफलस्य लोकजयस्य कथने । एकद्वीति । 'स यद्येकमात्रमभिध्यायीत स तेनैव संवेदितस्तूर्णमेव तस्यामभिसम्पद्यते किञ्चिदुक्त्वाग्रे द्विमात्रेण मनसि सम्पद्यते पुनः किञ्चिदुक्त्वा यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये इत्येवमेकद्वित्रिमात्राध्यानेन । उक्त्वेति । अभिसम्पद्यत इत्यस्या अग्रे 'तमृचो मनुष्यलोकमुपनयन्ते स तत्र तपसा ब्रह्मचर्येण श्रद्धया सम्पद्यते स तत्र तपसा ब्रह्मचर्येण श्रद्धया सम्पन्नो महिमानमनुभवती'त्यनयोक्त्वा । 'तथा द्विमात्रेण मनसि सम्पद्यत' इत्यस्या अग्रे 'सोऽन्तरिक्षं यजुर्भिरुन्नीयते सोमलोकं स सोमलोके विभूतिमनुभूय पुनरावर्तते' इत्यनयोक्त्वा । यः पुनरित्यस्या उक्ताया अग्रे सामभिरुन्नीयते सूर्यलोकं स सूर्यलोके विभूतिमनुभूय पुनरावर्तत इत्यनयोक्त्वेत्यर्थः । अर्धचतुर्थेति । उक्तोङ्कारचतुर्थमात्रेण । पुस्तकेभ्य इति । पञ्चम्यन्तमेको हेतुः । पाठिभिरित्यपरः । ओमित्येतेनेति । यः पुनरर्धचतुर्थमात्रेणोमित्येतेनेत्यादिः । एवं ह वा इति श्रुतिस्तु 'एवं ह वै स पाप्मना विनिर्मुक्तः सोथर्वभिरुन्नीयते ब्रह्मलोक'मिति । एतस्या अग्रे 'स एतस्माज्जीवघना'दिति श्रुतिः । अग्रिमेति । 'तदेतौ श्लोकौ भवतः । तिस्रो मात्रा मृत्युमत्यः प्रयुक्ता अन्योन्यसक्ता अनुविप्रयुक्ताः । क्रियासु बाह्याभ्यन्तरमध्यमासु सम्यक् प्रयुक्तासु न कम्पते ज्ञः । ऋग्भिरेतं यजुर्भिरन्तरिक्षं स सामभिर्यत्तत्कवयो वेदयन्ते । तमोंकारेणैवायतनेनान्वेति विद्वान्यत्तच्छान्तमजरममृतमभयं परं परायणं चे'त्यग्रिमश्लोकद्वयस्य । तस्मात्परमक्षरं ब्रह्म, ततोऽपि यः पर इति पाठः । श्लोकेऽपि तमिति । परपुरुषम् ।

किञ्च। उपास्यरूपाणां सर्वेषां निर्गुणत्वमेव, उपासकस्य परं सगुणत्वेन

भाष्यप्रकाशः।

स एव पर इति सिध्यति। तथा चात्र 'परायणं चे'ति चकारादक्षरात् परः पुरुषोऽपि परं परायणं यस्येति योगादक्षरधामवासी बोधितः। तेन मुण्डकवदेवात्राप्यर्थः। अपरं तु ब्रह्म वेदात्मकम्, हिरण्यगर्भस्य शब्दब्रह्मात्मकत्वात्। किञ्च। नृसिंहोत्तरतापनीये, 'सैषाऽविद्या जगत् सर्व'मिति सर्वस्य जगतोऽविद्यात्वश्रावणेपि न सर्वस्य जगतस्तथात्वम्। उपसंहारे, 'तस्मादात्मन एव त्रैविध्यं योनित्वमपी'ति निगमनात्। इदं यथातथोपपादितं द्वितीयस्य प्रथमे पादे, 'दृश्यते त्वि'ति सूत्रे। मुण्डके, 'यथोर्णनाभिः सृजते गृह्णते चे'त्यादिना अक्षरात् सृष्टिमुपक्रम्य, 'तस्मादेतद् ब्रह्म नामरूपमन्नं च जायते तदेतत्सत्य'मिति निगमनात्। 'तदेतदृषिः पश्यन् वामदेवः प्रतिपेद' इत्यादिश्रुत्युक्ताबाधितब्रह्मवित्प्रत्यक्षविषयत्वात्। व्यावहारिको नामरूपप्रपञ्चः, स्वोत्कृष्टसत्ताकतत्प्रपञ्चपूर्वकः, मायिकप्रपञ्चत्वादैन्द्रजालिकादिप्रपञ्चवदित्यत्र साध्यविशेषणत्वेनानुमितिविषयत्वाच्च। अतो नामरूपादीनामपि न सर्वेषामाविद्यकत्वमिति सिद्ध्यति। एवं सति 'मनोमयः प्राणशरीरो भारूपः।' 'अयमात्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्प' इत्यादिषु शाण्डिल्यदहरभूमविद्याप्रभृतिवाक्येष्वपहतपाप्मसत्यकामादिशब्दैस्तत्तद्विशेषणविशिष्टं यदुपासनायोपदिश्यते, तस्याविद्याकृतनामरूपविशेषविशिष्टत्वं कुतोऽवधारितं येन तस्यापरब्रह्मत्वमुच्यते, न तावदुपासनाविषयत्वात्, उपासनाविषये तथात्वनियमस्य क्वाप्यसिद्धत्वेन प्रमाणशून्यत्वात्। न च, 'यन्मनसा न मनुते येनाहुर्मनो मतं तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत' इत्यादितलवकारश्रुतेरिति युक्तम्। तत्र तथार्थाभावात्। नेदमित्यनेन मनोवागादिनिषेधोत्तरम्, 'इदं ब्रह्म विद्धि यदुपासत' इत्यर्थात्।

रश्मिः।

परं अयनं यस्येति। परमक्षरम्। मुण्डकवदिति। 'अक्षरात्परतः पर' इति मुण्डकमुक्तम्। परतोऽक्षरात् पर इत्यर्थः। वेदात्मकमिति। 'तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद' इत्यादि मुण्डकात्। तत्र परापरयोः। आत्मन एवेति। आत्मनः, न त्वविद्यायाः। त्रैविध्यं गुणैः स्वीयैः। योनित्वमुपादानत्वम्। निगमनं तस्मात् पर्वतो वह्निमानितिवत्। तदेतदिति। अबाधितत्वं भ्रमप्रतिबाधवद् बाधाविषयत्वम्। ऐन्द्रजालिकादीति। आदिना हिरण्यगर्भसृष्टिः कुलालादिपुत्रकर्तृकसृष्टिश्च। व्यावहारिको नामरूपप्रपञ्चः स्वोत्कृष्टसत्ताकतत्प्रपञ्चपूर्वकत्ववानित्यनुमितिः, अत्र साध्यं स्वोत्कृष्टेत्यादि। तद्विशेषणं पक्षः तत्त्वेन व्यावहारिकप्रपञ्चस्यानुमितिविषयत्वादित्यर्थः। अत इति। आविद्यकान्तरालिकसृष्टिवदात्मयोनेः सत्त्वाद्ब्रह्मसृष्टेः। सर्वेषां ब्राह्मानामाविद्यकानां च। मनोमय इति शाण्डिल्यविद्यास्थं वाक्यम्। अयमात्मेति दहरविद्यास्थं वाक्यमादिना भूमविद्यास्थं वाक्यं तत्तु 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमे'ति। भूमैव सुखमिति वा। सुखत्वेन भूम्नि मनोनिवेशनं मनसा ज्ञानमुपासनम्। प्रभृतिपदेनोपकोसलविद्यास्थं वाक्यम्। तत्तु 'य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्मे'ति। अपहतपाप्मेति। दहरविद्यास्थौ शब्दौ। अतः शाण्डिल्यविद्यास्थशब्दाग्रहणं तदर्थम्, अपहतपाप्मसत्यकामयोरादयः अपहतपाप्मसत्यकामादयः। मनोमयप्राणशरीरभारूपाः। तथापहतपाप्मसत्यकामावादी येषां ते विजरादिसुखामृताभयब्रह्मरूपाः अपहतपाप्मसत्यकामादयः ते च ते चापहतपाप्मसत्यकामादयस्ते च ते शब्दाः अपहतपाप्मसत्यकामादिशब्दास्तैः। मनोवागादीति।

भाष्यप्रकाशः ।

अन्यथा द्वितीयेदङ्कारप्रयोगवैयर्थ्यप्रसङ्गादित्येवं प्रागेवोपपादितत्वात् । 'तदेव ब्रह्म त्वं विद्धी'ति विधीयमानज्ञानविषयस्य ब्रह्मणः पूर्वं, 'न तत्र चक्षुर्गच्छती'त्यादिना यावत्करणागम्यताया उक्तत्वात्तस्य ज्ञानस्य प्रत्यक्षादिरूपताया वक्तुमशक्यत्वादुपासनारूपत्व एव पर्यवसानेन तद्विषयस्य परस्याप्यपरत्वापत्तेश्च । नाप्युपशान्तत्वाभावात् । सर्वत्र परस्य ब्रह्मण एकत्वेन तस्य च विरुद्धधर्माधारताया उपपादितत्वेन तदभावस्यैवाभावात् । एतेनैव, 'अवचनेनैव प्रोवाचे'त्यनेनापि प्रत्यवस्थानमयुक्तम् । तत्राप्युपशान्तत्वस्यैवोक्तत्वात् । लौकिकयावद्धर्मराहित्येनैव तत्सिद्धेश्च । एवं 'इन्द्रो मायाभि'रित्यादिवाक्यानामप्युभयलिङ्गाद्यधिकरणविचार एव विचारितत्वान्न तैरपि प्रत्यवस्थानावकाशः । अतः परविद्यायुक्तानामन्यत्राप्युक्तानां परब्रह्मधर्माणामनाविद्यकत्वादलौकिकैर्नानागुणैर्युक्तमप्युपास्यरूपं नापरब्रह्मरूपमिति नौपाधिकम् ।

एवं जीवत्वमपि नौपाधिकम् । 'अंशो नानाव्यपदेशा'दित्यत्र जीवस्यांशत्वेनैव निर्धारितत्वात् । श्वेताश्वतरे, 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्, अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जग'दिति कण्ठतोऽवयवत्वोक्तेश्च । 'घटसंवृतमाकाशं लीयमाने घटे यथा । घटो लीयेत नाकाशं तद्वज्जीवो नभोपम' इति बिन्दुस्तोकश्रुतौ नभोपम इति दृष्टान्तोपि लयाभाव एव, न त्वनंशत्वे । इतः पूर्वस्मिन्, 'एक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रव'दिति मन्त्रे जलचन्द्रदृष्टान्तेनांशप्रवेशद्वारिकायाः सर्वभूताधिकरणकस्थितेर्बोधितत्वात् । निष्कलश्रुतेस्तु नांशत्वबाधकत्वम् । 'स विश्वकृद्विश्वविदात्मयोनि'रित्यादिभिः पूर्वमन्त्रैर्नानाधर्माणां क्रियाणां च बोधनेन जीवानामवयवरूपतायाश्च पूर्वमुक्तत्वेन, 'नित्यो नित्यानां चेतनश्चेतनाना'मिति भेदस्य बोधनेन ब्रह्मणो विरुद्धधर्माधारत्व एव तत्तात्पर्यावगमात् । अविद्यया विस्मृतस्वस्वरूपं ब्रह्मैव जीव इति पक्षस्यापि, 'तत्त्वमसी'ति वाक्यविचारे लक्षणादोषग्रासेनैव

रश्मिः ।

मनोवागादीनां करणत्वनिषेधोत्तरम् । **प्रागेवेति** । **विधीयमानेति** विद्धीति लोटा विधीयमानज्ञानविषयस्य **तद्विषयस्येति** । यदिदमुपासत इति श्रुत्युक्तोपासनाविषयस्य । ननु यथोपासनाविषयत्वेन परस्य अपरत्वम्, तथोपशान्तत्वाभावादपरत्वं भविष्यति तत्राहुः **नापीति** । **उपशान्तत्वाभावादपरत्वापत्तिर्न** । **सर्वत्रेति** । निर्गुणसगुणप्रतिपादिकासु एकत्वं निर्वाहकसङ्गत्या, न त्वारोपापवादसङ्गत्या । **उपपादितत्वेनेति** । तृतीयाध्याये उभयव्यपदेशाद्यधिकरणेषु । **तदभावस्येति** । उपशान्तत्वाभावस्य । एतेन तस्य चापरब्रह्मोपासनस्य तत्सन्निधौ श्रूयमाणं 'स यदि पितृलोककामो भवती'त्यादिजगदैश्वर्यलक्षणं संसारगोचरमेव फलं भवति, अनिवर्तित्वादविद्याया इति पूर्वं प्रकाशे यदुक्तं तदाक्षिप्तम् । **एतेनेति** विरुद्धधर्माधारत्वेन उपशान्तत्वेन वा । **प्रत्यवेति** । अवचनेनाविद्यकेनेति प्रतिकूलस्थितिः । **तत्सिद्धेरिति** । उपशान्तत्वसिद्धेः । विरुद्धधर्मासिद्धेः । **प्रत्यवेति** । आरोपापवादीयधर्माणामाविद्यकत्वमित्येवं प्रतिकूलावस्थानं तस्यावकाशः । **अवयवभूतैरिति** जीवैः । अवयवत्वे दृष्टान्ताभावमाहुः **घटसंवृतमिति** । **लयाभाव इति** । स्वांशयक्षरातिरिक्तलयाभाव एव न त्वनंशत्वे । **नानेति** अंशत्वसमर्पकाणाम् । **पूर्वमिति** । अत्रैव पूर्वं श्वेताश्वतरश्रुत्युपन्यासेन । **भेदस्येति** । षष्ठ्या भेदस्य । भेदोत्र इवार्थो बोध्यः फलाध्यायत्वात् । भाष्योक्तनिरस्तत्वपदपुरस्कारेणाहुः **अविद्ययेति** । **पक्षस्येति** सोपाधिजीवपक्षस्य । अपिना भाष्योक्तजीवपुरुषोत्तमाभेदस्य सङ्ग्रहः । **लक्षणेति** अविद्यारूपभागत्यागलक्षणादोषग्रासेन ।

भाष्यप्रकाशः।

निरस्तत्वात्। ब्रह्मणि प्रदेशानङ्गीकारेण निष्प्रदेशे तस्मिन्नविद्यासम्बन्धाङ्गीकारे सर्वस्य जीवतापत्तेश्च तस्याप्यप्रयोजकत्वात्। विकारप्रतिबिम्बाभासपक्षाणामपि, 'नात्माऽश्रुते'रित्यादिसूत्रविचारे एव निरस्तत्वात्। जीवे ब्रह्मत्वव्यपदेशस्य सुषुप्तिसाक्षिभूतप्राज्ञदृष्टान्तेन गौणतायास्तद्गुणसारत्वाधिकरण एव साधितत्वाच्च। तस्माज्जीवेशत्वमपि दुरपोहम्। तदेतदुक्तं, स्यादित्यारभ्य निरस्तत्वादित्यन्तेन। तथा च अपरस्य ब्रह्मणो गन्तव्यत्वमविद्यावतश्च गन्तृत्वं विद्याकृतं तदा स्याद्यदि भवदुपदर्शितो ब्रह्मणः परापरविभागो वा जीवस्य सर्वात्मना ब्रह्माभेदो वा श्रुतिस्मृतिसूत्रतात्पर्यगोचरः स्यात्, स एव तु नास्तीति वृथा बादरिमताग्रहाडम्बर इत्यर्थः। ननु न वृथा, ब्रह्मणो व्यापकत्वरूपस्य गन्तव्यताबाधकस्यापरिहृतत्वादित्यत आहुः न चेत्यादि। तथा च प्रतिबन्धकाभावस्य सहकारितायास्त्वयाप्युपगतत्वाद् यत्रैव प्रारब्धरूपस्य प्रतिबन्धकस्य यथा यदाभावः, तत्रैव ब्रह्मप्राप्तिरितिगमनस्य प्रारब्धनिवारणार्थत्वाद् ब्रह्मणो गतत्वेऽपि न गन्तव्यत्वानुपपत्तिरित्यर्थः। ननु भवत्वेवं परब्रह्मणो गन्तव्यत्वानुपपत्तिपरिहारः, तथापि गतिश्रुतीनां पञ्चाग्न्यादिविद्यास्वपि दर्शनात्तासां परविद्याङ्गत्वं नासाधारणम्, अपरविद्यासु च विषयः सगुण एव, अतस्तदुपासने तत्क्रतुन्यायात् सगुणमेव फलं युक्तम्, तथा सति तत्र गन्तव्ये प्रयुक्तं ब्रह्मपदं सामीप्य एव नेतव्यम्, एवं यत्र लोकपदसमभिव्याहृतं ब्रह्मपदम्, तत्रापि लोकविशेषणभूतम्, लोकत्वं च कार्यत्वनियतमिति तत्रापि कार्यस्यैव गन्तव्यता, एवं बहुषु स्थलेषु कार्यत्वे गन्तव्यस्य सिद्धे परविद्यास्वपि तथाङ्गीकार्यमित्याशयेन यत्तैः 'कचित् पञ्चाग्निविद्या'-मित्यादिनोक्तम्, तत्रोत्तरमाहुः किञ्चेत्यादि। पञ्चाग्निविद्यादिष्वप्युपास्यरूपाणां प्राकृतगुणरहितत्वमेव। 'शब्द इति चेन्नातः प्रभवा'दित्यत्र वैदिकपदार्थानां सर्वेषामाधिदैविकत्वेन भगवदवयवरूपत्वस्थापनात्। तत एव लोकेष्वपि नित्यत्वम्। एवमन्येष्वप्युपास्यरूपेषु द्रष्टव्यम्। न चापरासु पुरुषयज्ञादिविद्यासु जघन्यफलोक्तिविरोधः। उपासकस्य सगुणत्वेन तस्य जघन्य-

रश्मिः।

तस्यापीति अविद्यासम्बन्धस्यापि। जीवत्वव्यवहारे अप्रयोजकत्वात्। तादात्म्यरूपाभेदातिरिक्तभेदाभावरूपभेदस्य अयमात्मा ब्रह्मेत्यादौ फले विरुद्धत्वमाहुः जीवे ब्रह्मत्वेति। अपरस्येति सविशेषस्य। परीति। सविशेषब्रह्माङ्गीकारेण परिहृतत्वात्। एवमिति। प्रारब्धाभावे सायुज्यमुपाधिनाशे सायुज्यवत्। साधनप्राबल्ये सार्ष्टिरलौकिकसामर्थ्यपदवाच्या। भगवत्सेवोपयोगिदेहो वैकुण्ठादिषु च। गतीति। स एतान्ब्रह्म गमयतीत्येवंविधानाम्। पञ्चाग्न्यादीति। आदिना वैश्वानरविद्या। पर्यङ्कविद्या। परविद्येति। चित्तशुद्धिद्वाराङ्गत्वम्। असाधारणमिति। किन्तु परेषां शब्द इवास्माकमावृत्तचक्षुराद्यसाधारणम्। वेदान्तविज्ञानेतिश्रुतिः 'कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छ'न्निति श्रुतिश्चोभयत्र। तत्क्रतुन्यायोऽग्रिमाधिकरणेस्ति। ब्रह्मपदमिति। 'स एतान्ब्रह्म गमयती'-त्यत्र ब्रह्मपदम्। सामीप्य इति स्वार्थे ष्यञ्। ब्रह्मसमीपब्रह्मकार्ये। कचित्पञ्चाग्निविद्यामित्यादीति। शङ्कराचार्यमतोपन्यासे उक्तम्। पञ्चाग्नीति। आदिना पर्यङ्कविद्या वैश्वानरविद्या च। प्राकृतगुणेति। तेन विभूतिरूपाणामप्राकृतत्वं बोधितम्। अत एव 'यदेकमव्यक्तमनन्तरूप'-मित्युक्त्वा, 'तमसः परस्ता'दित्यनेनांशेन तमोरूपप्रकृतिपरत्वमुक्तम्। अत एव 'सर्वे जीवाः सर्वे आत्मानो व्युच्चरन्ती'ति पृथगात्मव्युच्चरणोक्तिरुपनिषदि। लोकेष्विति। पर्यङ्कस्थे वैश्वानरे च यद्वा तत्तदाविष्टेषु। अन्येष्विति। प्रतिमादिषु प्राकृतगुणरहितत्वं द्रष्टव्यम्। पुरुषयज्ञादीति। पुरुषविद्या सहस्रशीर्षेति प्रसिद्धा। यज्ञविद्या प्राणाग्निहोत्रोपनिषदि। बहुवचनेन स्मार्तविद्याः पौराणविद्याश्च। जघन्येति।

**तत्तारतम्यात् फलतारतम्यम् । यस्तु भगवदनुग्रहेण प्राकृतगुणरहितोऽभूत्, स निर्गुणब्रह्मविद्यावानित्युच्यते । तादृशस्यैव मुक्तिप्रकारद्वयमुक्तम्, सद्योमुक्ति-**

भाष्यप्रकाशः ।

फलमेव कामितमिति तदर्थं तत्र तत्कथनात् । एवं परविद्यास्वपि बोध्यम् । अत उपासकाधिकारतारतम्यादेव फलतारतम्यं फलविलम्बश्च । न चोपास्यरूपाणां सर्वेषां निर्गुणत्वे विद्यानामपि तथात्वात् सगुणब्रह्मविद्यावान्निर्गुणब्रह्मविद्यावानिति व्यवहारभेदलोपप्रसङ्गः शङ्कनीयः । **यस्तु भगवदनुग्रहेण प्राकृतगुणरहितोऽभूत्, स निर्गुणब्रह्मविद्यावानित्युच्यते ।** यस्तद्भिन्नः, स सगुणविद्यावानित्युपपत्तेः । एवं सति य आद्यः, तादृशस्यैव सद्योमुक्तिक्रममुक्तिभेदभिन्नं प्रकारद्वयम् । तत्र प्रारब्धरहितस्य सद्योमुक्तिप्रकारो 'न तस्मात्प्राणा उत्क्रामन्ती'त्यादिनोच्यते । तद्वतः क्रममुक्तिप्रकारस्तु 'शतं चैका च पुरुषस्य नाड्यः,' 'तेऽर्चिरभिसम्भवन्ती'त्यादिभिः । न च निर्गुणब्रह्मविद्यावतः सर्वस्य प्रारब्धशून्यत्वमिति वक्तुं शक्यम् । तथा सति तस्य शरीरराहित्यप्रसङ्गेन प्रवचनाद्यनुपपत्त्या ज्ञानमार्गोच्छेदापत्तेः । न च चरमवृत्त्यभावाच्छरीरस्थितिरिति युक्तम् । शब्दादपरोक्षवादिनः साक्षात्कारोत्तरं प्रारब्धातिरिक्तस्य वृत्तिचारम्यहेतोर्वक्तुमशक्यत्वात् । अतस्तेनैव गत्युपपत्तिस्तद्भिवृत्तिप्रकारबोधनार्थमेव गतिश्रुतिः । अतः परविद्यासु सा प्ररोचनार्था वा, अनुचिन्तनार्था वेति विकल्प्य तद्दूषणमप्यसङ्गतमेव । न च, 'ते ब्रह्मलोके त्वि'ति श्रुति-

रश्मिः ।

यथा अपरब्रह्मोपासनस्य तत्सन्निधौ श्रूयमाणं 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ती'ति तथा जघन्यमेव फलं कामितम्, छान्दोग्ये मधुप्रपाठके 'एतावानस्य महिमाऽतो ज्यायांश्च पूरुषः पादोस्य विश्वा भूतानी'ति पुरुषविद्यायां 'पूर्णामप्रवर्त्तिनीं श्रियं लभते य एवं वेदे'ति जघन्यफलोक्तिः तस्या विरोधः । प्राणाग्निहोत्रोक्तयज्ञविद्याफलं 'यदि एकेनैव जन्मना जन्तुर्मोक्षं प्राप्नुयादिति मोक्षं च प्राप्नुयादिति मोक्षं च प्राप्नुयादिति मार्गत्रये मोक्षो न जघन्य इति विभाव्यते, तदा मधुप्रपाठक एव 'पुरुषो वा व यज्ञस्तस्य यानि चतुर्विंशतिवर्षाणि तत्प्रातःसवनमि'त्याद्युक्त्वा 'स ह षोडशं वर्षशतं जीवति य एवं वेदेति य एवं वेदे'ति जघन्यफलोक्तिर्ज्ञेया । **तत्रेति** । अपरासु पुरुषयज्ञादिविद्यासु । **तत्कथनाज्** जघन्यफलकथनात् । **परविद्यास्विति** । ब्रह्मविद्यासु 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' 'अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीक'मित्यादिषु प्राणाग्निहोत्रोक्तायां च । **फलविलम्ब** इति । 'वेदान्तविज्ञानसुनिश्चितार्था' इति श्रुत्युक्तः ब्रह्मलोकवासकृतः । **यस्त्विति** भाष्यं विवरीतुमाहुः **न चोपास्येति** विवृण्वन्ति स्म **यस्त्विति** । **भगवदनुग्रहेणेति** । व्यापारोऽत्र भक्तिस्तया ज्ञानरूपया प्राकृतगुणास्तमोरूपास्तै रहितोऽभूत् । **निर्गुणेति** । बृहदारण्यके अक्षरब्रह्मणोक्तनिर्गुणब्रह्मविद्यावान् । **तद्भिन्न** इति । अनुग्रहेण प्राकृतगुणरहितो भक्तिमानभूत्, स गुणैर्विरुद्धैः सह विद्यमानस्तस्य विद्या सर्वात्मभावादिः तद्वान् । ज्ञानिमात्रप्रकरणं वृत्तम् । **तादृशेति** भाष्यं विवृण्वन्ति स्म **एवं सतीति** । **न तस्मादिति** भाष्यं विवृण्वन्ति स्म **तत्रेति.** । **प्रारब्धरहितस्येति** । सद्योमुक्तिप्रागभावक्षणे ध्वस्तप्रारब्धस्य । **निर्गुणेति** भाष्यं विवृण्वन्ति स्म **न च निर्गुणेति** । **चरमेति** । प्रारब्धचरमवृत्तिप्रागभावात् । **शब्दादिति** । शाङ्करस्य । **तेनैवेति** प्रारब्धेनैव । **गत्युपपत्तीति** । आश्चर्येणेति बोध्यम् । **श्रुतिरिति** । 'स एतान्ब्रह्म गमयती'ति श्रुतिः । **अत** इत्यादि । आश्चर्यात् । **सेति** । परब्रह्मविषया गतिः । **प्ररोचनार्थेति** । ब्रह्मविदः प्ररोचनार्था । **एवेति** आश्चर्यविघटकत्वात् 'आश्चर्यो वक्ता कुशलोस्य लब्धे'ति काठकविरोधापत्तेरेवकारः । **ते ब्रह्मेति** भाष्यं विवरीतुमाहुः **न च त** इति । **श्रुति-**

**क्रममुक्तिभेदेन । 'न तस्मात् प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते ब्रह्मैव सन् ब्रह्माप्येती'त्यादिश्रुतिस्तु प्रारब्धरहितविषया । निर्गुणब्रह्मविद्यावतोपि प्रारब्धभोगस्तु त्वयापि वाच्यः, अन्यथा प्रवचनासम्भवेन ज्ञानमार्ग एवोच्छिद्येत । 'ते ब्रह्मलोके तु परान्तकाल' इति श्रुतिरपि परान्तकाल एव येषां प्रारब्धभोगसमाप्तिस्तद्विषयिणीति मन्तव्यम् । अन्यथा 'वेदान्तविज्ञाने'त्याद्युक्तधर्मविशिष्टानां मुक्तौ विलम्बो नोपपद्येतेति दिक् ॥ १४ ॥**

---

भाष्यप्रकाशः ।

**व्याकोपः** । येषां परान्तकाल एव प्रारब्धभोगसमाप्तिस्तेषामेव तत्र सर्वपदेन परामर्शात् । तत्र सगुणविद्यावत्परामर्शाङ्गीकारे तु तेषां वेदान्तार्थानभिज्ञत्वाद् विद्यावत्त्वेनाशुद्धसत्त्वत्वाच्च न पूर्वाधोक्तस्य 'वेदान्तविज्ञाने'त्यादिविशेषणद्वयस्य बाधः स्यात् । अतो यदत्र तैः प्रतिपादितम्, तत् सर्वं श्रुतिविरुद्धत्वादसङ्गतम् । किञ्च । तैरपि क्वचिद्गौणः शब्दो दृष्ट इति नैतावता शब्दप्रमाणकेऽर्थे गौणी कल्पना न्याय्या । सर्वत्रानाश्वासप्रसङ्गादिति । 'तन्निष्ठस्य मोक्षोपदेशा'दिति सूत्रव्याख्याने यदुक्तम्, तदपि विस्मृतम् । अथवा । ईक्षतिसूत्रावतारणे वेदान्तवाक्येभ्य एव युक्त्याभासवाक्याभासावष्टम्भाः सांख्यादिवादिन उत्तिष्ठन्ते । तत्र पदवाक्यप्रमाणज्ञेनाचार्येण वेदान्तवाक्यानां ब्रह्मावगतिपरत्वप्रदर्शनाय वाक्याभासयुक्त्याभासप्रतिपत्तयः पूर्वपक्षीकृत्य निराक्रियन्त' इति कथनाल्लक्षणां विरहय्य वेदान्तव्याख्यानमाचार्यस्यैव संमतम्, नास्माकमिति बोधितमिति प्रभुचरणैर्दिक्पदप्रयोगेण ज्ञापितम् ॥ १४ ॥

रश्मिः ।

**व्याकोप** इति । फलविलम्ब उपपत्त्यर्थं प्ररोचनार्था वा अनुचिन्तनार्था वा गतिरित्यत्र दूषणं स्वास्थ्यस्य स्वस्थचित्तताया विद्यासमर्पितेनैवाव्यवहितेन स्वसंवेद्येन सिद्धेर्न प्ररोचनार्था स्वास्थ्यसहितपरब्रह्मविषयगतिः । नाप्यनुचिन्तनार्था । नित्यसिद्धज्ञानस्य कृत्यजन्यत्वात्कृतिरूपानुचिन्तनस्यापेक्षाया अभावादिति । तद्दूषणं ते ब्रह्मलोके त्वित्यंशस्यार्थवादत्वेन स्वार्थे अप्रामाण्यादुक्तम् । इति मन्वानैः श्रुतिव्याकोप उक्तः । कार्यात्ययसूत्रे तु क्रममुक्तौ विलम्ब्य गतिरविलम्ब्य गतिरित्युभया गती विवृण्वन्ति स्म **येषां परेति** । **तत्रेति** वेदान्तविज्ञानश्रुतौ । **सगुणेति** । अत्र सगुणपदं मायोपाधिकब्रह्मपरम् । न तु विरुद्धधर्माधारपरम् । **वेदान्तार्थानभीति** । वेदान्तार्थ आचार्यप्रतिपन्नो ग्राह्यः । **अत** इति । पूर्वोक्तरीतेः । **अत्रेति** 'न कार्ये प्रतिपत्त्यभिसन्धि'रिति सूत्रेण सह दर्शनसूत्रे । **तैः** शङ्कराचार्यैः । दिक्पदोपसन्धानेन गच्छतोग्रिमावस्थानिरूपणे परब्रह्मविषया गतिर्या तत्र सर्वत्र गौणीति स्वोक्तं विस्मृतमिति गौण्या व्याख्यानेऽस्मदुक्तं दिङ्मात्रमित्याशयेनाहुः **किञ्चेति** । **तैरपि** शङ्कराचार्यैरपि । यदुक्तमित्यनेन संबध्यते । **क्वचिदिति** । सोमेन यजेतेत्यादौ **गौणः शब्दः** सोमेनेति । सोमवतेत्यर्थाद् **दृष्टः** । **गौणीति** । 'तस्माद्वा एतस्मादात्मन आकाशः संभूत' इत्यत्र 'यतो वा इमानि भूता'नीत्यत्रात्मशब्दे गौणी यत इति शब्दे च गौणी तस्याः कल्पना अन्याय्या । **विस्मृतमिति** । 'तन्निष्ठ'स्येतिसूत्रोक्ते मुख्ये फल आत्मनि गतिर्गौणीति वदद्भिर्विस्मृतमित्यर्थः । अतो दिङ्मात्रमत्रोक्तं दूषणमिति भावः । **आचार्येणेति** । भगवता व्यासेन । **वाक्याभासेति** । निराक्रियन्त इति मुख्यक्रियापेक्षया प्रथमान्तं पदम् । कर्मण उक्तत्वात्प्रथमाबहुवचनम् । **आचार्यस्य** व्यासस्य **नास्माकं** शाङ्कराणाम् । तेन गच्छतः अग्रिमावस्था गौणीति परब्रह्मणा सर्वकामभोगेच्छवः कान्दिशीकाः तान्प्रति दिगेषा । अनया दिशा नित्यसर्वकामभोगः ब्रह्मप्राप्तेरग्रिमावस्थारूपायाः गच्छतो मुख्येति । तेन

'तस्मादस्माभिरेवोक्तपद्धत्या श्रुतिसिद्धया ।
ज्ञात्वा ब्रह्मस्वरूपं तत्रास्थै तद्भजताखिलाः' ॥ १ ॥ इति सिद्धम् ॥ १४ ॥

## न च कार्ये प्रतिपत्त्यभिसन्धिः ॥ १५ ॥

अपि च । 'ब्रह्मविदाप्नोति पर'मिति सङ्क्षेपेणोक्त्वा, 'तदेषाभ्युक्तेति' तद्विवरिकां ऋचं प्रस्तुत्य, सोक्ता, 'सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां

भाष्यप्रकाशः ।

**न च कार्ये प्रतिपत्त्यभिसन्धिः ॥ १५ ॥** एवं प्रासङ्गिकमतान्तरपरिहारेण जैमिनिमतस्यैव सिद्धान्तत्वमिति दृढीकृत्य प्रकृतं सूत्रं पठित्वा व्याचक्षते अपि चेत्यादि। सोक्तेति। ऋगुक्ता । उपक्रमानुरोधेनेति । 'आप्नोति पर'मित्युपक्रमानुरोधेन । तथा च 'ब्रह्म गमयती'त्यत्र परब्रह्म प्रापयतीत्येवार्थः । यतः परब्रह्मप्राप्तिमेव परमफलत्वेन 'ब्रह्मविदाप्नोति पर'मित्यत्र श्रावयित्वा, 'सत्यं ज्ञान'मिति तद्विवरणर्चि परेण ब्रह्मणा सह सर्वकामभोगलक्षणा प्रतिपत्तिरुच्यते इति । अतो हेतोः कार्यरूपे वस्तुमात्रे प्रतिपत्तिः । 'पद् गतौ', पदनं पत्तिः, संसारगतिप्रतिकूलापत्तिः । गतिर्न क्वापि कार्ये श्रुतेरभिप्रेता, 'प्रजापतेः सभां वेश्म प्रपद्य' इत्यत्रापि पूर्वं 'अश्व इवे'ति मन्त्रे ब्रह्मलोकस्याकृतत्वं श्रावयित्वा, 'आकाशो वै नामे'त्यत्र 'तद् ब्रह्म तदमृतं स आत्मे'ति नित्यस्यैव ब्रह्मणः श्रावणात् । पूर्वकाण्डेपि, 'यन्न दुःखेन सम्भिन्न'मित्यत्रात्मसुखस्यैव स्वर्गत्वेन श्रावणात् । अतोत्रापि ब्रह्मपदेनाक्षरं परब्रह्मैव गन्तव्यत्वेनोच्यत इत्यर्थः । इदमेव च मतं व्यासचरणानां सिद्धान्तीयत्वेनाभिप्रेतम् । एतदव्यवहितमेवाप्रतीकालम्बननयनविचारात् । अन्यथा तु वैपरीत्येन मतद्वयमुक्त्वा तत्र नयनं विचारयेदिति ।

अन्ये तु । 'प्रजापतेः सभां वेश्म प्रपद्ये, यशोऽहं भवामि ब्राह्मणानां यशो राज्ञा'मिति छान्दोग्यसमाप्तिस्थां श्रुतिमुदाहृत्य, नायं कार्यविषयः प्रतिपत्त्यभिसन्धिः सम्प्राप्तिसङ्कल्पः, 'आकाशो ह वै नामरूपयोर्निर्वहिते'ति परब्रह्मण एव प्रकृतत्वात्, 'यशोहं भवामी'ति सर्वात्मत्वानुक्रमणात्, 'न तस्य प्रतिमा अस्ति यस्य नाम महद्यश' इति ब्रह्मनामनिर्देशाच्चेति व्याकुर्वन्ति ।

भास्कराचार्यास्तु 'सगुणब्रह्मविद्याविषयैव गतिर्निर्गुणब्रह्मविदो गतिर्नोपपद्यते, परस्य सर्वगतत्वेन प्राप्तत्वात्; न हि गतविषया गतिरुपपद्यत' इत्येवं शाङ्करं मतमनूद्य, तदेवं दूषयन्ति । तथाहि । यदि निर्गुणविद्यासु गतिरनुपपन्ना, तर्हि सगुणास्वप्यनुपपत्तिस्तुल्या । तत्रापि सर्वगतस्यैव ब्रह्मण उपास्यत्वात् सर्वगतगुणानामाकाशीयपरममहत्परिमाणपृथक्त्वादिवत् सर्वगतत्वात् । किञ्च, अपहतपाप्मत्वादयः संसारविनिवृत्तिहेतवो यस्य गुणाः, स परमात्मेत्युच्यते, यस्यैते न सन्ति स संसारीति तद्भिन्नस्य परमात्मनः पराभिन्नत्वात् । अथ सत्त्वादिगुण-

रश्मिः ।

**न च कार्ये प्रतिपत्त्यभिसन्धिः ॥ १५ ॥** प्रतिपत्तिरिति । सर्वकामभोगलक्षणा । योगमाहुः पद गताविति धातुपाठे । संसारगतिप्रतिकूलापत्तिर्गतिर्ब्रह्मणा सह सर्वकामभोगलक्षणा । अत्रापीति । 'ब्रह्मविदाप्नोति पर'मित्यत्रेवात्र 'स एतान्ब्रह्म गमयती'त्यत्रापि । अन्ये त्विति । एकदेशविकृतन्यायेनान्यपदेन अन्याचार्योपादानम् । एवमन्यत्रापि । यशोहमिति । अशुङ् व्याप्तौ । अश्रुत इति यशः । अशे युड्वेति युट् असुन्प्रत्ययश्च । व्यापकोहं भवामीति सर्वात्मभावः । एवं राज्ञां च मध्ये यशो भवामीति । ब्रह्मक्षत्रविशां सर्वात्मभावः । सम्प्राप्तिसङ्कल्प इति । सङ्कल्पेन लेडादिप्रयोगो नियतः, आधुनिकसङ्कल्पे तथा दर्शनादिति । परब्रह्मण इति । आकाशस्तल्लिङ्गादिति सूत्रे आकाशपदस्य ब्रह्मणि शक्त्युक्तेः । महद्यश इति यशो व्यापकम् । भास्कराचार्यमते अत्रैकदेशविकृतत्वाभावात्पृथक् तन्मतमनुवदन्ति स्म भास्कराचार्यास्त्विति । भेदाभेदवादिनः । तद्भि-

परमे व्योमन्। सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते'ति। अत्रोपक्रमानुरोधेन परेणैव ब्रह्मणा सह सर्वकामभोगलक्षणा प्रतिपत्तिरुच्यत इति

---

भाष्यप्रकाशः।

योगादमी गुणा आरोपिताः, न तु स्वाभाविकाः, तदापि तद्वत्तयोपास्यमानं सगुणं ब्रह्म तु नाब्रह्म भवति। न ह्यारोपितलौहित्यगुणयोगे स्फटिकोऽस्फटिको भवति। न वा स्वाभाविकस्य प्रकाशस्य प्रत्याख्यानेऽग्निरनग्निर्भवति। न वा द्रव्यप्रत्याख्याने गुणो नास्ति। वस्तुन उभयात्मकत्वात्। 'विज्ञानमानन्दं ब्रह्म,' 'आनन्दो ब्रह्मे'ति श्रुतेः। शतगुणितोत्तरक्रमेणानन्दप्रतिपादनात्। यदि चैतन्यमात्रं ब्रह्म, तदा आनन्दगुणोपदेशोनर्थकः स्यात्। न चाकस्मादर्थवादत्वकल्पना युक्ता। यथाश्रुतग्रहणेनुपपत्त्यभावात्। अस्थूलादिश्रुतिस्तु प्रपञ्चनिराकरणपरा। 'स एको ब्रह्मण आनन्द' इति त्वसाधारणो गुणोत्कर्षापकर्षरहितो व्यपदिष्ट इति। यदि च श्रुतं नाद्रियते, तदा अपवर्गोप्यर्थवादः किं न भवति। अत एव सर्वशक्तित्वं स्रष्टृत्वमित्यादयः परस्यासाधारणा गुणा न केनचित् प्रतिषेद्धुं शक्यन्ते। गुणकृतं कार्यकृतं च नानात्वं यद्दर्शितम्, तदस्माकं न दोषाय, प्रत्युतालङ्काराय। भिन्नाभिन्नात्मकवस्तुरूपोपगमात्। अतः सगुणनिर्गुणयोर्भेदस्यानुपपन्नत्वात् ब्रह्मैकमेवेति सगुणविद्यावतोपि गतिरनुपपन्ना। तस्यापि तद्भावापत्तेः। न हि प्राप्तमेव प्राप्तव्यं भवतीति त्वदुक्तेनैव हेतुना गतिश्रुतयो रूपे प्रवेशयितव्याः। किञ्च। संसारिणोपि स्वरूपतो गतिर्नोपपद्यते। तस्यापि लिङ्गशरीरगमनादेव गमनात्।

ननु संसारी जीवो नाम परमात्मन आभास इति तस्य परिच्छिन्नत्वात् गतिरुपपद्यत इति चेत्। कोयमाभासो नाम। किं वस्तुभूतोऽथावस्तुभूतः। यदि तावदवस्तुभूतः, तदा तस्य स्वर्गापवर्गयोरधिकाराभावः, शशविषाणवत्। अथ वस्तुभूतः सर्वगतश्चेत्यभावः। अणुपरिमाणत्वं मध्यमपरिमाणत्वं च भवता नेष्यते। यच्चाणुत्वं तदौपचारिकमिति लिङ्गगमनादेव गमनं पूर्वोक्तमभ्युपगन्तव्यम्। नचास्माभिरियं गतिः कल्पिता। श्रुतयोत्र प्रमाणम्। परविद्यासु च गतयो लभ्यन्ते। 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्त' इति। 'तद्येह वै तदिष्टापूर्ते कृतमित्युपासते ते चान्द्रमसमेव लोकमभिजयन्ते। त एव पुनरावर्तन्ते तथोत्तरेण

रश्मिः।

तस्येति संसारिभिन्नस्य। तद्वत्तयेति। आरोपितगुणवत्तया। प्रत्याख्यान इति। भस्मादिना प्रतिकूलाख्याने। नास्तिकमतेनाहुः न वेति। ते हि गुणातिरिक्तं द्रव्यं नेच्छन्ति। तदपि प्रतिषेधन्ति स्म वस्तुन इति। उभयगुणद्रव्यं तदात्मकत्वात्। विज्ञानमिति। विज्ञानमानन्दौ गुणौ तद्वती द्रव्ये। 'विज्ञानमानन्द'मित्यत्रार्श आद्यच्। तस्यापीति। सगुणविद्यावतोपि सगुणभावापत्तेः, आपत्तिः प्रतिपत्तिः। त्वदुक्तेनेति। व्यापकत्वेन। किं वस्त्विति। अयथाभूत इति पदच्छेदः। तस्येति। जीवस्य। अभाव इति। अत्यन्ताभावः। भवतेति। शाङ्करेण। औपचारिकमिति। 'बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यपरोपि दृष्ट' इति। पूर्वोक्तमिति। जीवगमनम्। भवतां भास्कराणां जीवव्यापकत्वादयं दोष इति तत्राहुः न चास्माभिरिति। श्रुतिप्रमाणवादिभिः। श्रुतय इति। एकप्रमाणत्वावच्छिन्नाभिन्नबहुत्वावच्छिन्नाः श्रुतय इत्यर्थः। उत्तरेणेति। उत्तरायणेन।

**कार्यरूपे वस्तुमात्रे प्रतिपत्तिर्न क्वापि श्रुतेरभिप्रेता, अतोत्रापि परमेव ब्रह्म-पदेनोच्यते । क्रगर्थस्त्वानन्दमयाधिकरणे प्रपञ्चित इति नात्रोक्तः ॥ १५ ॥**

**॥ इति चतुर्थोध्याये तृतीयपादे तृतीयं कार्यं बादरिरित्यधिकरणम् ॥ ३ ॥**

भाष्यप्रकाशः ।

तपसा ब्रह्मचर्येण श्रद्धया विद्ययात्मानमन्विष्यादित्यमभिजयन्ते, एतद्वै प्राणानामायतनमेतदमृतमभयमेतत् परायणमेतस्मान्न पुनर्वर्तन्त' इति प्रश्ने, मुण्डके च, 'सूर्यद्वारेण ते विरजाः प्रयान्ती'ति । कठवल्लीषु च परविद्याप्रकरणे, 'शतं चैका च हृदयस्य नाड्य' इति । परविद्यायामेव चैतरेयके श्रूयते 'अस्माल्लोकादुत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः समभव'दिति । एवं तत्र तत्र गीतासु चावृत्त्यनावृत्ती विभागेनोक्ते । 'अमृतत्वं हि भेजिर' इति पुराणेषु च । ननु गतिश्रुतौ वाजसनेयके 'इहे'ति विशेषणादिह कल्पेनावृत्तिः कल्पान्तरेस्यावृत्तिरिति चेत् । न । 'श्वोभूत' इतिवदनुवादात् । 'यथा राजसूये ब्रह्मणो ग्रहे महिष्या ग्रह' इत्येवमादिना 'द्वादश हवींषि प्रत्येकं कर्तव्यानीति विधाय श्वोभूते निर्वपे'दित्युक्तम् । तत्रैकस्मिन् कृते पुनरपि श्वोभूत इत्युपतिष्ठते तद्वत् । 'इह कल्प इह कल्प' इति सर्वकल्पव्याप्तिराकृतिनिर्देशात् । अपि चेह युगेवान्तरे कल्पे अन्यस्मिन् वेत्यनध्यवसानाद् आकृतिवादो युक्तः । अर्थवादसमाम्नातानां ग्रहैकत्ववद् वाक्यभेदात् पदानावृत्तिर्विधीयते, युगपत् सर्वकल्पानावृत्तिरेवावतिष्ठते । तत्रास्मिन्नेव कल्पे न कल्पान्तर इति अपरस्मिन्नर्थे विधीयमाने वाक्यभेदो दुर्निवारः । यथा ग्रहं सम्मार्ष्टीति सम्मार्गे विधीयमाने सर्वग्रहेषु प्राप्तिः । तत्रैकस्येति पुनर्विधीयमाने वाक्यभेदः, तद्वदत्रापि अनावृत्तिर्न विधीयते । तदानीमिहेति पदं किंविशेषणं स्यात् । तस्मादिहपदमनुवादः । अत एव काण्वानामिहपदं न पठ्यते । तस्मादर्चिरादिना गत्वा परमात्मनि लिङ्गप्रलयो न प्रागिति श्रुतिसामर्थ्यान्निश्चीयते । विद्याकर्माक्षिप्ता च गतिः संसारतरणी युज्यते । सत्यलोकमतिक्रम्य कारणे ब्रह्मणि सूक्ष्मशरीरस्य कारणात्मना विलयः । तथा

रश्मिः ।

अर्चिरादिमार्गेणेति वा । **अन्विष्येति** ल्यबन्तम् । **प्रश्न** इति । प्रश्नोपनिषदि । **विभागेनेति** । धूममार्गार्चिरादिमार्गविभागेन । **अस्येति** । जीवस्य । भाष्यत्वाच्छ्वोभूत इतिवत् पदं व्याख्यायते । **यथा राजेति** । **ग्रह इति** । पात्रविशेषे । **तत्रेति** । निर्वपेदित्युक्ते । **तद्वदिति** । **कल्पान्तरेऽस्या**-नावृत्तिरित्यनुवादेनोपस्थितिः, न तु कल्पान्तरेऽस्यावृत्तिरित्यननुवादेन । **आकृतीति** । आकृतौ शक्तेः इहेत्यस्य श्रौतस्यैकत्र शक्तेरनुवादः, नत्वननूदितस्य कल्पान्तरेऽस्यानावृत्तिरित्यस्य समर्पकत्वम् । **आकृतिवाद इति** । एकत्राकृतौ शक्तिं गृहीत्वान्यत्रानुवाद इति वादः । **अर्थवादसमाम्नायेति** । अर्थवादसम्भवादिति भास्करभाष्ये पाठः । अर्थवादभूतवेदेन ग्रहैकत्वं यथा । **पदानावृत्ति**-रिति । कल्पान्तरेऽस्यावृत्तिरित्यत्र । **सर्वकल्पेति** । सर्वकल्पेष्वनावृत्तिः सर्वकल्पानावृत्तिः । **वाक्यभेद** इति । इह कल्पेऽनावृत्तिर्भवति, कल्पान्तरेऽस्यावृत्तिर्भवतीति वाक्ययोर्भेदः 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्या'दिति मीमांसकोक्तवाक्यभेदः । 'एकतिङ्वाक्य'मिति वैयाकरणाः । **सम्मार्ग** इति । सम्मार्गे सम्मार्जने परसवर्णः । **तत्रेति** । सर्वेषु ग्रहेषु । **अनुवाद** इति अनुवादार्थम् । **विद्या**-

१. विधीयमाने हविरन्तरे । २. अन्यस्मिन्नपि कल्पे विधीयमानावृत्तौ सोपि कल्पोवतिष्ठत इत्यर्थः । ३. कल्पस्य-रूपजातिनिर्देशादित्यर्थः । ४. विधेयविशेषणत्वाभावेन तव मतेनूद्य विशेषणं स्यात् । तथा चानूद्य गतसङ्ख्यायाः प्रविवक्षितत्वेन सर्वकल्पा नामेव प्राप्तिरित्यर्थः ।

## अप्रतीकालम्बनान्नयतीति बादरायण उभयथा दोषात् तत्क्रतुश्च ॥ १६ ॥ ( ४-३-४ )

क्रममुक्त्यधिकारिणः प्रारब्धं भुक्त्वाऽमानवेन पुरुषेण प्रापिताः परमेव ब्रह्म प्राप्नुवन्तीति सिद्धम् । तत्रेदं सन्दिह्यते अर्चिरादिलोकप्राप्तिरुपासनाविशेषफलम् । एवं सत्यमानवः पुरुषस्तान् सर्वान् ब्रह्म प्रापयति, उत कांश्चिदेवेति । किमत्र युक्तम्, सर्वानेवेति । यतोर्चिरादिमार्गगतानामन्ते ब्रह्मप्रापणार्थमेव स नियुक्तः, ततोऽन्यथाकरणे हेत्वभावात्तथैव स कर्तेति प्राप्ते, उच्यते । श्रुतौ ब्रह्मत्वेनैव सर्वत्रोपासनाया उक्तत्वादुपास्येषु भगवद्विभूतिरूपत्वेन शुद्धब्रह्मरूपेष्वप्यतथात्वं ज्ञात्वा श्रुतिर्ब्रह्मत्वनोपासनायाः फलसाधनत्वं वदति, न तूपास्ये ब्रह्मतामपीति मन्वाना य उपासते, ते प्रतीकालम्बना इत्युच्यन्ते । तथा च

भाष्यप्रकाशः ।

चाह, 'परेऽव्यये सर्व एकीभवन्ती'ति । 'पुरुषायणाः पुरुषं प्राप्यास्तं यन्ती'ति । यदुक्तं ब्रह्मलोकेष्विति बहुवचनं नावकल्पत इति । तच्चोद्यं ब्रह्मणि सङ्ख्याभावान्न । एकत्वे बहुत्वं च पाशबहुत्ववदेव द्रष्टव्यम् । 'अदितिः पाशान् प्रमुमोक्ते ता'निति । तत्रैकस्मिन् पाशे बहुवचनं साधुत्वार्थं प्रयुज्यते । विभक्तेर्हि द्वावर्थौ, सङ्ख्या कर्मादयश्च । तत्राविवक्षितायामपि सङ्ख्यायां सप्तमी निमित्तमात्रविवक्षयावकल्पते । ब्रह्म सर्वभोगनिमित्तं सर्वप्रपञ्चनिमित्तमिति निमित्तसप्तम्येवेत्यदोष इति ।

एवं भास्कराचार्यमतेपि भोगजनकप्रारब्धेनैव गमनम् । ब्रह्मणि भोगस्तु ब्रह्मेच्छयैवेति फलति । तेन सिद्धान्तवदेवार्थः । गन्तृविचारे तु तन्मते जीवस्य व्यापकत्वादुपाधिगमनादेव गमनमिति भेदः ॥ १५ ॥ इति तृतीयं कार्यं बादरिरित्यधिकरणम् ॥ ३ ॥

अप्रतीकालम्बनान्नयतीति बादरायण उभयथा दोषात् तत्क्रतुश्च ॥ १६ ॥ पूर्वाधिकरणसिद्धमनुवदन्तः प्रस्तूयमानमवतारयन्ति क्रमेत्यादि । तत्रेति । सिद्धे परप्राप्तिरूपेर्थे । सर्वानिति । तदुपासनावतः । पूर्वपक्षग्रन्थः स्पष्टः । सिद्धान्तं व्युत्पादयन्तः सूत्रं व्याकुर्वन्ति उच्यत इत्यादि । अतथात्वं ज्ञात्वेत्यस्यैवार्थः श्रुतिर्ब्रह्मत्वेनेत्यारभ्य, मन्वाना इत्यन्तम् । तथा चातस्मिंस्तत्त्वेनोपासनं प्रतीकमिति पूर्वं 'न प्रतीक' इति सूत्रे उक्तम्, अतो ये तथोपासते ते तथा, तथा च सत्यपीति, प्रतीकालम्बनत्वे तेषां सत्यपि । तथा च यथा

रश्मिः ।

कर्मेति । पूर्वकाण्डेपि ग्रन्थकरणात्कर्मेति । आहेति श्रुतिराह । पाशबहुत्ववदिति । अदितिः पाशानिति वक्ष्यमाणपाशबहुत्वं तद्वत् । विभक्तेरिति । स्वादेः जातिव्यक्ती इति द्वावर्थौ । सङ्ख्येति । पञ्चकं प्रातिपदिकार्थः । द्रव्यजातिसङ्ख्यापरिमाणकारकाणि । तत्रेति । ब्रह्मलोकेष्वित्यत्र । अदोष इति । लोकेष्विति बहुवचनप्रयोगादोषः । ब्रह्मेच्छयैवेति । तन्मते भास्कराचार्यमते । भेद इति सिद्धान्ताद्भेदः ॥ १५ ॥ इति तृतीयं कार्यं बादरिरित्यधिकरणम् ॥ ३ ॥

अप्रतीकालम्बनान्नयतीति बादरायण उभयथा दोषात् तत्क्रतुश्च ॥ १६ ॥ मन्वाना इत्यन्तमिति । ननु ज्ञात्वेति भावप्रत्ययान्तं मन्वाना इति कर्तृप्रत्ययान्तमिति कथमतथात्वं ज्ञात्वेत्यस्यैवार्थ इति चेत्प्रकृत्यर्थपर्यन्तमिति अर्थपदात्पूर्वं पूरणीयम् । मन्वाना इत्यत्र ज्ञानानुकूलव्यापारवन्त इति प्रकृत्यर्थो ज्ञानम् । तथा चेत्यादि । षडङ्गवेदस्य ज्ञेयत्वेन छन्दोवत्सूत्राणि

सत्यपि वेदविहितत्वेनोपासनायाः कृतत्वेन सफलत्वात् तत्फलत्वेनोपासकाना-मर्चिरादिलोकप्राप्तावपि तान् अमानवः पुरुषो ब्रह्म न प्रापयति, किन्तु शुद्धब्रह्मत्वं ज्ञात्वा य उपासते, तानेव ब्रह्म प्रापयतीति बादरायण आचार्यो मन्यते । तत्र हेतुमाह उभयथा दोषादिति । वस्तुतो यद् ब्रह्मरूपम्, तत्राब्रह्मत्वनिश्चयः, उपासनार्थं च ब्रह्मत्वेन भावनम्, एवमुभयथाकरणे दोषः सम्पद्यत इति तस्य न ब्रह्मप्राप्तावधिकारोस्तीति युक्तं तदनयनमित्यर्थः । तथा च श्रुतिः । 'असन्नेव स भवति, असद् ब्रह्मेति वेद चे'दिति, 'योन्यथा सन्तमात्मानमन्यथा प्रति-पद्यते, किं तेन न कृतं पापं चोरेणात्मापहारिणे'ति । एवं ज्ञानमार्गीयव्यवस्था-

---

भाष्यप्रकाशः ।

पूर्वकाण्डतात्पर्यं ब्रह्मणीत्यज्ञात्वा कर्मण्येव तात्पर्यमवधार्य तात्पर्यभ्रमेण यजतां स्वर्गाद्यनन्तरं पुनरावृत्तिः, तथा अत्रापि प्रतीकालम्बनानां तात्पर्यभ्रमेण तथोपासनात्तत्तल्लोकभोगोत्तरमावृत्तिः, अथवा कार्यात्ययावधि तत्र वासः, न तु विद्याबलात् ततः पूर्वं मुक्तिरिति भगवत आचार्यस्याशय इत्यर्थः । हेतुं व्याकुर्वन्ति वस्तुत इत्यादि । एतयोर्दोषत्वे मानत्वेन यथायथं श्रुतिद्वयमुदाहरन्ति तथा चेत्यादि । तेनात्रैतावेव दोषावभिप्रेतावित्यर्थः । सूत्रशेषं व्याकर्तुमव-तारयन्ति एवं ज्ञानेत्यादि । व्याकुर्वन्ति सर्वमित्यादि । अस्मिन् पक्षे लकारार्थव्यत्यय

रश्मिः ।

भवन्तीत्यभियुक्तोक्तेः सूत्रेष्वपि षडङ्गैरभिधेयनिर्णयादप्रतिकूलस्मरणालम्बनानित्यर्थो भवति । इक्कि-वध्युपसर्गं न व्यभिचरत इत्यस्य छन्दसि विकल्पः । पुराणमते तु वक्ष्यमाणगारुडवाक्याद्देवतादीनित्यर्थो भवति । तथा च श्रौते मते प्रतिकूलत्वं भ्रमविषयत्वमतस्मिंस्तत्त्वेनोप समीपे स्थित्वा यथायोग्यान्त-र्गतस्मरणस्य करणमित्यर्थः । एकादशसुबोधिन्यां 'उप समीपे स्थित्वा यथायोग्यकरणमुपासन'मि-त्युक्तम् । तथेति । अप्रतीकालम्बना इत्युच्यन्त इत्यर्थः । तेषामिति । उपासकानाम् । पूर्वकाण्डे-त्यादि । ब्रह्मणीति हरौ । अक्षर इति यावत् । 'वेदे रामायणे चैवे'त्युपक्रम्य 'हरिः सर्वत्र गीयत' इति वाक्यात् । 'अक्षरं ब्रह्म परमं वेदानां स्थानमुत्तम'मिति वाक्याच्च । महानारायणे 'वह्निशिखाया मध्ये परमात्मा व्यवस्थितः स हरिः सेन्द्रः सोक्षरः परमः स्वरा'डिति श्रुतेः । तथाप्यत्राभिधा-वृत्तिः, न तात्पर्यमिति ब्रह्मणीत्यस्य स्वःपदास्पदे आत्मसुख इत्यर्थः । स्वर्गपदस्य लोके शक्तिः । स्वःपदास्पदे तात्पर्यमिति । तेन हिरण्यगर्भमोक्षरूपे ब्रह्मणीति जैमिनिमते मोक्षः फलं स्मारितम् । किं च । भक्तेस्तात्पर्यविषयत्वस्य पुरस्तादुक्तत्वेन तद्विषयस्यापि तात्पर्यविषयत्वम् । 'धर्मो यस्यां मदात्मक' इत्येकादशस्कन्धात् । अभिधा तु हीदमित्थतया धर्मेषु यागस्रष्ट्यादिकर्तृत्वेषु न मदात्मके धर्मे इति । कर्मण्येवेति 'कर्मैके तत्र दर्शना'दिति जैमिनिसूत्रे एक इति पदात् कर्मण्येव यागादौ साध्ये तत्प्रतीतीच्छयोच्चरितत्वरूपं तात्पर्यमवधार्येत्यर्थः । कर्मपदं स्वसाध्ये स्वर्गे लाक्षणिकम्, फलभ्रमेण । स्वर्गादीत्यादिना वृष्टिप्रतिष्ठादि । तथोपासनादिति । प्रतीकत्वेनोपासनात् । तत्रेति । ब्रह्मलोके । तत इति । ब्रह्मलोकवासात्पूर्वम् । आचार्यस्येति । व्यासस्य । तेनेति । श्रुतिबलेन श्रुतिद्वयेन वा । अवतारयन्तीति । न्यूनतारूपनिग्रहस्थानरूपदोषाभावाय तथेत्यर्थः । तेन तत्क्रतुर्विद्या च नयतीति योजना नोक्ता । सर्वमित्यादीति । तस्येति भक्तस्य । एतदिति ।

शुक्त्वा भक्तिमार्गीयस्यापि तामाह तत्क्रतुश्चेति। 'सर्वं मन्त्रक्रियोगेने'ति वाक्यान्न तस्योपासनापेक्षेति न प्रतीकादिसम्भावना। तत्र 'कथञ्चित् यदि वाञ्छती'ति वाक्यादिच्छामात्रेण तद्भोगकरणानन्तरं प्राचीनभगवद्भजनलक्षणक्रतुश्च नीयत इत्यर्थः। वस्तुतस्तु भक्तस्यामानवपुमपेक्षाभावात् स्वयमेव ब्रह्मलोकान् प्राप्नोतीति ज्ञापनाय प्रथमान्त उक्तः। ननु ब्रह्मणोधिकं न किञ्चिदस्ति। 'न तत्समश्चाभ्यधिकश्च दृश्यत' इति श्रुतेः। एवं सति छान्दोग्ये सनत्कुमारनारदसंवादे 'स यो नाम ब्रह्मेत्युपास्ते' इत्यादिना नामवाङ्मनःसङ्कल्पचित्तध्यानविज्ञानादीनां ब्रह्मत्वेनोपासनमुत्तरोत्तरं पूर्वस्मात् पूर्वस्माद् भूयस्त्वं चोच्यते। अतो न ब्रह्मत्वं सर्वेषामुपास्यानां वक्तुं शक्यमिति चेत्। मैवम्। विभूतिरूपाणां नियतफलदातृत्वाद् येन रूपेणाल्पफलदानम्, तत्राधिकगुणप्राकट्ये प्रयोजनाभावात् तावन्मात्रगुणप्रकटनम्, येन रूपेण ततोधिकफलदानम्, तत्र ततोधिकगुण-

---

भाष्यप्रकाशः।

इत्यरुच्या प्रकारान्तरमाहुः वस्तुत इत्यादि। तथा च सूत्रे नयतीति कर्तरि लट्प्रयोगात् तत्क्रतुरिति प्रथमान्तप्रयोगाच्चैवं ज्ञायते। यो ब्रह्मत्वेनाङ्गोपासनकर्ता, स तत्क्रतुर्भक्तः सन् स्वयमेव स्वात्मानं भक्तिबलेन नयतीति न प्रयोगव्यत्ययोपीति। एतेन निबन्धे, 'सूर्यादिरूपधृग्ब्रह्मे'त्यस्य प्रकाशे भक्तिद्वारा ज्ञानाङ्गत्वं यदङ्गोपासनस्योक्तम्, तत्समर्थितं ज्ञेयम्। उपास्यरूपाणामसत्त्वेन ज्ञानस्य तेष्वब्रह्मज्ञानस्य च यद्दोषत्वमुक्तम्, तत्र शङ्कते ननु ब्रह्मण इत्यादि। अतो न ब्रह्मत्वं सर्वेषामुपास्यानामिति। न्यूनत्वरूपाद् बाधकाद् न ब्रह्मत्वं भूमव्यतिरिक्तानामुपास्यानाम्। तथा च तेषां ब्रह्मत्वस्य बाधितत्वात्तेष्वसत्त्वाब्रह्मत्वज्ञानयोर्न दोषत्वमिति पूर्वोक्तः सूत्रार्थोऽसङ्गत इत्यर्थः। तत्र समादधते मैवमित्यादि। तथा च 'यदेकमव्यक्तमनन्तरूप'मिति श्रुत्या ब्रह्मणोनन्तरूपत्वान्नामादिषु रूपेषु लीलार्थमिच्छया न्यूनाधिकगुणप्राकट्येन न्यूनाधिकभावेपि ब्रह्माभिन्नत्वाद् ब्रह्मणश्चैकत्वाच्चै रूपैर्न ब्रह्मणः समाभ्यधिकराहित्यहानिः, यथा विस्फुलिङ्गानां न्यूनाधिकभावेन नाग्नेः, यथा च विस्फुलिङ्गानां तथात्वेपि तेषां नाग्नित्वहानिः, तथेति तेषां ब्रह्मत्वानपायात्तेष्वतथात्वज्ञानयोर्दोषत्वमक्षुण्णमिति पूर्वोक्तं सूत्रव्याख्यानं साध्वेवेत्यर्थः। ननु तेषु किमिति ब्रह्मरूपत्वाग्रहः क्रियते, यथा प्रतिमायां शालग्रामे गुरौ च देवबुद्धिमात्रेण पूजया फलसिद्धिः, शास्त्रप्रामाण्यात्, तथोपास्यरूपेष्विति कुतो नाद्रियत इत्यत

रश्मिः।

एतस्य समीपतरवाक्योक्तस्य भोगस्य करणानन्तरम्। प्राचीनेत्यादि। भक्त इत्यर्थः। लकारार्थे इति। कर्तरि लकार इति लकारार्थः कर्ता, नयतीत्यत्र तस्य व्यत्ययो नाशः कर्मणि लकारेण नीयत इत्यनेन। भूमव्यतीति। 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमे'ति परब्रह्मैकलक्षणात् तद्व्यतिरेक उक्तः। तथात्व इति न्यूनाधिकभावे। तथेत्तीति। दार्ष्टान्तिकेपि तथेति। तेषां उपास्यानाम्। शालग्राम इति। शालिग्राम शब्दोपि। 'सूर्योग्नि'रित्येकादशे वाक्यम्। संग्रह इति। किं च द्वितीयाध्याये तर्कपादे कापालिकमतम्। आत्मानो मुक्तिदशायामश्मानो भवन्ति शैली प्रतिमात्मा। 'शिलाबुद्धिर्न कर्तव्ये'तिवाक्यात्। प्रतिमा सच्चिदानन्दरूपत्वप्रतिपादकवाक्याच्च। 'तदश्मसारं हृदय'मिति श्रीभागवते। हृदि अयं हृदयमिति छान्दोग्ये। सप्तम्या

प्रकटनमिति पूर्वस्मादाधिक्यमुच्यते । एवमेव सर्वत्र । नियतफलदानं तु स्वतन्त्रे-च्छत्वाल्लीलारूपमिति नानुपपन्नं किञ्चित् । प्रतिमादिष्वावाहनेन सन्निहिते विभूतिरूपे तद्भावनं पूजामार्गे । भक्तिमार्गे तु भक्त्या तत्र प्रकटे तथा । गुरौ तु, 'शाब्दे परे च निष्णातं ब्रह्मणी'ति विशेषणवत्त्वेन भगवदावेशात् तत्र तद्भावन-मिति सर्वमवदातम् । अपि च बादरिजैमिनिमतोक्त्यनन्तरं स्वमतोक्त्या तत्समानविषयत्वमत्रापीत्यवगम्यते । तत्र च कार्यब्रह्मलोकप्राप्तिपरब्रह्मप्राप्ति-विषयत्वमुक्तं पूर्वोत्तरपक्षभेदेन । बादरिमते सविशेषस्यैवोपास्यत्वाद्विशेषाणां चाविधकत्वादुपासनानां सर्वासां प्रतीकतद्रूपत्वमेव सिध्यति । एवं सति 'अप्रती-कालम्बनान्नयती'ति वदता व्यासेन बादरिमतानुसारिण उपासकस्य न कस्यापि ब्रह्मप्राप्तिरिति ज्ञाप्यते । वस्तुतस्तूपासनायामुपास्यस्वरूपज्ञानस्याप्यङ्गत्वात्त-न्मतीयानामुक्तरीत्या तदभावेन निरङ्गत्वादर्चिरादिप्राप्तिरपि न सम्भवति, किं पुन-र्ब्रह्मण इति निगूढाशयो व्यासस्य । एवं सति परप्राप्तावेवोपोद्बलकमुक्तं भवतीति सैव व्यासाभिमतेति सिद्धम् । ये तु प्रतीकेष्वब्रह्मक्रतुत्वं वदन्तः पञ्चाग्निविद्या-यास्तथात्वेपि वचनबलात्तद्वतो ब्रह्मप्राप्तिरिति वदन्ति, तत्रेदमुच्यते । वचनं तु वस्तुसतः पदार्थस्य बोधकम्, न तु कारकम्, अतस्तथैव बोधयति तदा

भाष्यप्रकाशः ।

आहुः प्रतिमादिष्वित्यादि । अत्रादिपदेन 'सूर्योऽग्निर्ब्राह्मणा गाव' इत्याद्युक्तानां पूजापदानां सङ्ग्रहः । आवाहनेन सन्निधानं च 'अप्स्वग्नौ हृदये सूर्ये' इत्याद्युक्तस्य नित्यसन्निधानस्याप्युप-लक्षकम् । तथा च प्रतिमादिष्वपि शास्त्रप्रामाण्यात् कथञ्चन तत्तद्रूपसन्निधानमेव तत्तत्फल-दानादिप्रयोजकम्, न तु बुद्धिमात्रम्, अतः शास्त्रादेव तथा आग्रह इत्यर्थः । अत्रर्षिद्वय-मतोक्त्यनन्तरं स्वमतकथनस्य तात्पर्यं स्फुटीकुर्वन्ति अपि चेत्यादि । प्रतीकतद्रूपत्वमिति । प्रतीकोपासनरूपत्वम् । एवं सतीत्यादि । ब्रह्मणः प्रतीकालम्बनाप्राप्यत्वे अङ्गरूपालम्बनप्राप्यत्वे च सति । अप्रतीकालम्बननयनकथनं परप्राप्तावेवोपोद्बलकत्वेन सिद्ध्यतीति सैव तथेत्यर्थः ।

अत्र शाङ्करमतमनुवदन्ति ये त्वित्यादि । तद्वत इति पञ्चाग्न्युपासकस्य । तद्दूषयन्ति तत्रे-त्यादि । तस्मिन् मते वक्ष्यमाणं दूषणमुच्यते । विधिभिन्नं वचनं वस्तुसतः पदार्थस्य बोध-

रश्मिः ।

लुक् । अयमात्मा । अप्स्वग्नाविति । इदं धर्मशास्त्रग्रन्थे कस्मिंश्चिल्लिखितं द्रष्टव्यम् । तत्तद्रू-पेत्यादि । भाष्ये । ननु विभूतिरूपत्वेपि नियतफलदाने अनियतफलदानोपरोधजानन्द-स्वरूपैकरसत्वविरोधस्तु स्यात्, अत आहुः सर्वत्र । नियतेति । तद्भावनमिति स्वेष्टभावनस्य । भक्त्येति । 'भक्त्याहमेकया ग्राह्य' इति वाक्याद्भक्त्या प्रकटे । तरतमभावो भक्तौ द्रष्टव्यः । भक्तिमार्गस्य बहुविधत्वेन भावभेदात् । शाब्द इति । शाब्दे परे च ब्रह्मणि निष्णातं गुरुमित्येवं विशेषणवत्त्वेनेत्यर्थः । तद्भावनं भगवद्भावनम् । 'तस्मादात्मज्ञं ह्यर्चयेद्भूतिकाम' इति श्रुतेः । बुद्धिमात्रमिति । अब्रह्मरूपप्रतिमादौ तत्तत्फलदानादिप्रयोजकम् । तथाग्रह इति ब्रह्मरूपत्वा-ग्रहः । ऋषिद्वयेति जैमिनिबादरिरूपर्षिद्वयमित्यर्थः । स्वमतेति बादरायण इति सौत्रपदाद् बादरा-यणमतकथनस्य । अपि चेत्यादीति । निगूढेति नितरां गूढा वासना । सैवेति परप्राप्तिरेव ।

१. अत्र परिशिष्टे मुद्रितः शोधो द्रष्टव्यः ।

'अप्रतीकालम्बनान्नयती'ति व्यासोक्त्यविरोधाय तत्राप्यप्रतीकत्वमूरीकार्यम्, अन्यथा पञ्चाग्निविद्यानिरूपिकां श्रुतिं पश्यन्नेवं स न वदेत् । न चौत्सर्गिकं पक्षमाश्रित्य तथोक्तमिति वाच्यम् । तस्य बाधकापनोद्यत्वाद्वचनस्य चोक्तन्यायेनाबाधकत्वात् । यत्र वचनस्य बाधकत्वमुच्यते, तत्र बाधबोधकत्वमेव, न तु तथात्वमित्युपेक्षणीयास्ते । ननु मनःप्रभृतीनां शुद्धब्रह्मत्वे मनो ब्रह्मोपास्त इति वदेत्, न तु प्रकारवाचीतिशब्दशिरस्कं ब्रह्मपदम्, अत उपासनाप्रकारावच्छेदकत्वमेव ब्रह्मपदस्य, न तु स्वरूपनिरूपकत्वमिति चेत्, हन्तेदं शब्दार्थानवगम-

भाष्यप्रकाशः ।

कम् । यथा 'ब्रह्मविदाप्नोति पर'मित्यादिवाक्यम् । न तु कारकम् । यथा ज्योतिष्टोमादिवाक्यम् । अतस्तत्पञ्चाग्निविद्यास्थमातिवाहिकवाक्यं चेद् ब्रह्मप्राप्तिं बोधयति, तदेतद् व्यासोक्त्यविरोधाय पञ्चाग्निविद्यायामपि, 'मूर्धैव सुतेजा' इत्यादिश्रुतेर्लोकादीनां ब्रह्माङ्गत्वादादित्यादिमति सूत्रव्याख्यातरीत्याङ्गविद्यात्वेनाप्रतीकत्वमूरीकार्यम् । अन्यथैतां श्रुतिं पश्यन् व्यास एवं

रश्मिः ।

तथेति । परप्राप्तावेवोपोद्वलकमुक्तं भवतीत्यर्थः । व्यवहारे वयं भाट्टा इति वदतां शांकराणां मतेनाहुः विधिभिन्नमित्यादि । विधिभिन्नमर्थवादवचनं न स्वार्थे प्रमाणमिति वस्तुसतः पदार्थस्याबोधकमित्यर्थः । परं त्वग्रे अन्वयाभावाद् भाष्ये वस्तुसतः पदार्थस्य बोधकमिति भाष्ये पाठः, वस्तुसतः पदार्थस्य बोधकमिति भाष्यप्रकाशेपि पाठः । तथा चार्थवादवचनं विधिभिन्नं ब्राह्मणवद्बोधकमिति स्वमतेऽर्थः । शब्दात्सृष्टिरिति कारकत्वं वाक्यस्य प्राप्तं तन्निषेधन्ति स्म न त्विति । अदर्शनादिति भावः । विध्यर्थवादयोरविशेषात्स्वमतेनाहुः यथा ज्योतिरिति । अतस्तच्चेदिति भाष्यं विवृण्वन्ति स्म अतस्तत्पञ्चाग्नीति । आतिवाहिकेति । 'तत्पुरुषो अमानवः स एनान् ब्रह्म गमयती'ति वाक्यम् । तदेति भाष्यं विवृण्वन्ति स्म तदेतद्व्यासोक्तीति । अप्रतीकालम्बनान्नयतीति व्यासोक्त्यविरोधाय । तत्रापीत्यस्यार्थः पञ्चाग्निविद्यायामपीति । मूर्धैवेति । छान्दोग्ये प्राचीनशाल औपमन्यव इत्यारम्भके प्रपाठकेऽस्ति । वैश्वानरविद्यायामस्ति 'तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलो बस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोन्वाहार्यपचन आस्यमाहवनीय' इति । अर्थस्तु प्राचीनशालो नामतः उपमन्योरपत्यं औपमन्यवः । सुतेजाः शोभनतेजाः द्यौः शुक्लनीलादिसर्वरूपत्वाद्विश्वरूप आदित्यः । पृथग्वर्त्मात्मेति पृथग्नानाविधानि अभिमुखागमनऊर्ध्ववहनानि वर्त्मानि यस्य स एवात्मा स्वभावो यस्य । पृथग्वर्त्मा धूमादिवर्त्मा वह्निः स आत्मनि यस्य तयोरिति वा । सर्वगतत्वाद्बहुल आकाशः स सन् देहः आत्मनः शोभनो देहः । रयिः आपः बस्तिः नाभेरधस्तादलाबुसदृशमधोनालमनेकच्छिद्रं मूत्रभाजनं बस्तिरित्युच्यते । सन्देहः शरीरमध्यभाग इति । पृथिव्येव पादाविति स्पष्टम् । अथ भूमिकापूर्वकमग्निहोत्रं सम्पादयिष्यन्नङ्गविद्यामाह । उर एव वेदिरिति तस्य वैश्वानरस्य भोक्तुरुर एव वेदिराकारसाम्यात् । लोमानि बर्हिर्वेद्यामिवास्तीर्णत्वात् । हृदयं गार्हपत्यः मनोग्निप्रणयनहेतुत्वसाम्यात् । हृदयाद्धि मनः प्रणीतमिवानन्तरं भवति । मनोन्वाहार्यपचनो दक्षिणाग्निः पचनहेतुत्वसाम्यात् । आस्यमाहवनीयोग्निः हूयतेऽस्मिन्नन्नमित्याहवनीयः । मुखेऽप्यन्नं हूयत इति साम्यादिति । तदुक्तेति अन्योक्तप्रतीकलक्षणाभावात् । अन्यथेति भाष्यं विवृण्वन्ति स्म अन्यथैतामिति । एतामिति वैश्वानरविद्यानिरूपिकां साधारणनयनसम्बन्धिनीम् । एवमिति । अप्रतीक-

भाष्यप्रकाशः ।

न वदेत् । न च बाधकापनोद्यस्य नियमस्योत्सर्गत्वेन तत्क्रतुन्याये तं पक्षमाश्रित्य व्यासेनाप्रतीकालम्बननयनमुक्तमित्यपोद्य पक्षबोधकत्वान्न तद्विरोध इति वाच्यम् । औत्सर्गिकपक्षस्य बाधकापनोद्यत्वात् । प्रकृते च तत्क्रतुवाक्यस्य सामान्यतः क्रतुप्रकारफलप्रकारतौल्यनियमबोधकतया पञ्चाग्निवचनस्यापि ब्रह्माङ्गद्वारा ब्रह्मणो ब्रह्मप्राप्तेश्च बोधकत्वाद् विधिभिन्नवचनान्तरन्यायेन तत्क्रतुविशेषरूपतया ब्राह्मणश्रमणन्यायेनाबाधकत्वात् । न च विधिभिन्नवाक्यस्थले बाध्यबाधकभावानादरणे वाक्ययोर्बाध्यबाधकभावप्रसिद्धिविरोधप्रसङ्ग इति शङ्क्यम् । यत्र वचनस्य बाधकत्वमुच्यते, तत्र बाधबोधकत्वमेव, न तु बाधकत्वम् । विधिभिन्नवाक्यस्य कारकत्वाभावात् । न चानिवृत्त्यप्रसङ्गः । बाधबोधादेव तत्सिद्धेः । तस्मात्तन्मते तत्क्रतुश्रुतिबाधकल्पनम्, तत्क्रतु-

रश्मिः ।

विशेषनयनं न वदेत् । न चौत्सर्गिकमिति भाष्यं विवृण्वन्ति स्म न चेत्यादि । श्रुत्योर्विरोधे विकल्प इति मनूक्तेः । पञ्चाग्निविद्याश्रुतौ साधारणत्वेनैनान् गमयतीति सकलगतिप्रतिपादिकायामुत्सर्गतः । सामान्यतो विशेषो बलीयानिति बाधकापनोद्यस्य नियमस्योत्सर्गत्वं सामान्यन्यायत्वं तेनेत्यर्थः । तेन भाष्ये औत्सर्गिकमित्यत्र स्वार्थे औणादिः प्रत्ययः उत्सर्गेण न भिद्यते इत्यौत्सर्गिकं तं पक्षं तत्क्रतुन्याये आश्रित्य । अप्रतीकालम्बननयनं विशेषबलीयोरूपमुक्तम् । अपोद्येति पञ्चाग्निविद्यास्थगतिवाक्य अपोद्यस्य उत्सर्गपक्षस्य बोधनात् । न तद्विरोध इति पञ्चाग्निविद्यावाक्यात्सामान्यतः प्रतिपादकान्न विशेषबलीयसो व्यासवाक्यस्याप्रतीकालम्बननयनस्य विरोधः । औत्सर्गिकपक्षस्येत्यादि । भाष्यीयस्य तस्येत्यस्यार्थः । बाधको बलीयान्विशेषस्तदपनोद्यत्वात् त्वदुक्तरीत्या । तत्क्रतुवाक्यस्येति । तत्क्रतुः स्वयमेव ब्रह्मलोकान्नयतीति वाक्यस्य । सामान्यत इति विशेषालोचनरहितदशायाम् । फलप्रकारः ब्रह्मलोकानित्युक्तः । सूत्रस्य छन्दस्कत्वान्नियमपदम् । वचनस्येति भाष्यं विवृण्वन्ति स्म पञ्चाग्नीत्यादि । सामान्यतो बलीयो विशेषो निरूप्यते । चकारोनुक्तसमुच्चय इत्याशयेनोक्तसामान्यतो विशेषमाहुः ब्रह्माङ्गेति । ब्रह्मलोकानित्यत्र गोकुलाष्टकोक्तरीत्या ब्रह्मलोकगोकुलस्याङ्गस्य द्वारा ब्रह्मण इत्यर्थः । उक्तन्यायेनेति भाष्यविवरणं विधिभिन्नेत्यादि । अयं न्यायोत्रैव पूर्वमुक्तः प्रकाशे । तत्क्रत्विति 'स एनान्ब्रह्म गमयती'ति ब्रह्मणः अधोक्षजत्वेन ब्रह्माङ्गद्वारा ब्रह्मणः तथा ब्रह्मप्राप्तेश्च तत्क्रतुविशेषरूपतया ब्राह्मणश्चेच्छ्रमणः श्रमशीलः अनेन न्यायेन तत्क्रतौ सामान्ये विशेषस्य ब्रह्माङ्गद्वारा ब्रह्मसम्बन्धित्वस्य ब्रह्मप्राप्तिसम्बन्धित्वस्य च बोधनेनाबाधकत्वात् । न हि दध्ना जुहोतीति यद्दधि गुणं विदधत् यागे यागबाधकं भवति तद्वत् । यत्र वचनस्येति भाष्यं विवरीतुमाहुः न च विधीति । अर्थवादस्थले 'श्रुत्योर्विरोधे विकल्प' इति मनूक्तेर्विकल्पादरणेन बाध्यबाधकभावानादरणे । विवृण्वन्ति स्म यत्र वचनस्येति । मनूक्तेपि यत्र वचनस्य बाधकत्वमुच्यते, वचनं बाधकमुच्यते । तत्रेति पयोव्रते न वृतयतीत्यत्र बाधकं वचनमुच्यते पूर्वमीमांसायां अजीर्णिसम्भवे न वृतयेदिति । बाधकत्वमिति तथात्वमित्यस्य भाष्यस्यार्थः । विधिभिन्नस्येति । विधिवाक्यस्य तु कारकत्वम्, विधिप्रयुक्तो अहं करोमीति प्रत्ययात् । न चेत्यादि । कारकत्वाभावेपि बाधबोधानन्तरमजीर्णिसंभवेपि पयोव्रताच्छ्रुतादनिवृत्तेरप्रसङ्गः । अनिवृत्तिप्रसङ्गस्य प्रतियोगित्वस्य विवक्षणान्नञ्द्वयम् । तत्सिद्धेरिति पयोव्रतान्निवृत्तिप्रसङ्गसिद्धेः । उपेक्षणीयत्वे हेतून् वदन्तः सिद्धमाहुः तस्मादिति । बाध्यबाधकभावप्रसिद्धिविरोधप्रसङ्गाभावात् । तत्क्रत्विति । तत्क्रतुश्रुतेः तृतीयतत्क्रतुश्रवणस्य निरपेक्षस्वरूपस्याब्रह्मक्रतौ पञ्चाग्निविद्यायां बाधकल्पनम् । तत्क्रत्विति । तत्क्रतु-

भाष्यप्रकाशः ।

पञ्चाग्निवाक्ययोर्बाध्यबाधकभावकल्पनम्, व्यासे तच्छ्रुत्यविचारापादनम्, पुनरौत्सर्गिकपक्षबोधकतया तद्विचारकल्पनमिति चतस्रः कल्पनाः । अस्मन्मते तु तत्क्रतुपञ्चाग्निवाक्ययोः सामान्यविशेषभावेन समानविषयत्वमात्रं कल्पनीयमिति लाघवम्, अतस्तन्मतं गुरुत्वादुपेक्षणीयमित्यर्थः । पञ्चाग्न्यादिविद्यानां ब्रह्मविद्यात्वे शङ्कते ननु मन इत्यादि । तद्दूषयन्ति हन्तेः त्वमित्यादि । पूर्वमुक्तमिति । इतिशब्दशिरस्कवाक्यकथनात् पूर्वमुक्तम् । सर्वत्रेति । अत्रत्यवाक्यान्तरे प्रकरणान्तरीयवाक्ये च । तथा च तैत्तिरीये, 'येऽन्नं ब्रह्मोपासते', 'ये प्राणं ब्रह्मोपासते', 'आनन्दं ब्रह्मणो विद्वान्', 'विज्ञानं ब्रह्म चेद्वेदे'ति वाक्येषु इतिशब्दशिरस्कताया अदर्शनात् 'मनो ब्रह्मेत्युपासीते'त्यादावितिशब्दस्य हेत्वर्थतैव युक्तेत्यर्थः । ननु मनआद्युपासनासु ब्रह्मक्रतुत्वमसङ्गतम्, बृहदारण्यकोपान्तभागे 'अन्नं ब्रह्मेत्येक आहुः तन्न तथा पूयति वा अन्नम्, ऋते प्राणात् प्राणो ब्रह्मेत्येक आहुः, तन्न तथा शुष्यति वै प्राण ऋतेऽन्नादेते ह वै देवते एकधा भूयं भूत्वा परमतां गच्छत' इति तयोर्ब्रह्मत्वनिराकरणात्, पञ्चाग्निविद्यायामपि पुरुषयोषयोर्लौकिकयोरेवाग्नित्वकल्पनात्, एवं छान्दोग्ये मनसोऽप्यन्नमयत्वश्रावणात् तेषु भगवद्विभूतित्वस्य वक्तुमशक्यत्वादिति चेत् । मैवम् । बृहदारण्यकवाक्ये भौतिकयोरेवान्नप्राणयोः

रश्मिः ।

वाक्यं सामान्यं बाध्यम्, पञ्चाग्निविद्यावाक्यं विशेषरूपं बाधकम्, न तु विशेषबोधकम्, अतः पञ्चाग्निवचनेन विशेषणबाध्यबाधकभावकल्पनम् । स्वमते तु पञ्चाग्निवचनस्य तत्क्रतुविशेषरूपत्वम् । व्यास इति । तच्छ्रुत्याः पञ्चाग्निविद्यायां 'स एनान्ब्रह्म गमयती'त्यस्याः विचारापत्तिः, प्रसङ्गेऽविचारितत्वात् । पुनरितिं । तथा च तद्भाष्यम् 'तदभावे त्वौत्सर्गिकेण तत्क्रतुन्यायेन ब्रह्मक्रतूनामेव तथाग्निर्नेतरेषा'मिति । ब्रह्मक्रतुत्वाभावे त्विति तदभावे त्वित्यस्यार्थः । तथा च पुनरुत्तरसूत्रे । तद्विचारेति । प्रासङ्गिकं विशेषविचारं त्यक्त्वौत्सर्गिकविचारकल्पनम् । अग्रिमसूत्रे शङ्करभाष्ये यत्तदत्रैव चिन्तयन्ति स्म, अग्रिमे विषयान्तरसत्त्वात् । प्रासङ्गिकपञ्चाग्न्यादीनां पुरुषोत्तमाप्रापकत्वेपि ब्रह्मलोकप्रापकत्वात् । पञ्चाग्न्यादीति । ब्रह्मविद्यात्व इति ब्रह्मविद्यात्वार्थम् । न त्विति । छान्दोग्ये नारदसनत्कुमारसंवादे नवमप्रपाठके 'मनो ब्रह्मेत्युपास्ते' इति प्रकारवाचीतिशब्दशिरस्कं इतिशब्दप्रधानं न तु वदेदित्यर्थः । ननु शङ्करभाष्ये नामादिषु च प्रतीकोपासनेषु पूर्वस्मात् पूर्वस्मात्फलविशेषमुत्तरस्मिन्नुत्तरस्मिन्नुपासने दर्शयतीत्युक्तम्, अत्र तु नामवाचौ विहायार्थमनःप्रभृतीनामित्युक्तं तत्कुत इति चेन्न नामवाचोर्नित्यत्वेन शब्दब्रह्मत्वाच्चार्थविषये तयोरुपयोगाभावात्, स्पष्टत्वाच्च । भाष्ये उपासनाप्रकारेति उपासनाप्रकारेषु अवच्छेदकत्वम् । सप्तमी शौण्डैरित्यत्र सप्तमीति योगविभागात्समासः । अर्थादुपासनाप्रकारे विषयतयावच्छेदकत्वम् । मनस्त्वब्रह्मणि ब्रह्मेति । मनो ब्रह्मेति । प्रकृते हन्तेत्यादीति । हन्त इति खेदे । अत्रत्येति छान्दोग्यीयनवमप्रपाठकस्थे 'सङ्कल्पो वा व मनसो भूया'नित्यादौ 'चित्तं वा सङ्कल्पाद्भूय' इत्यादौ । 'ध्यानं वा व चित्ताद्भूय' इत्यादिषु च । प्रकरणान्तरीयवाक्यमुदाहरन्ति स्म तथा च तैत्तिरीय इति । तन्न तथेति । तत्तथा न ग्रहीतव्यम् । अन्नं पूयति क्लिद्यते वै प्राणादृते, प्राणो न क्लिद्यते इति प्राणो ब्रह्मेत्येक आहुः । तदपि न तथा न ग्राह्यम्, अन्नादृते प्राणः शुष्यति । ब्रह्म तु क्लेदशोषवर्जितम् । एवमेवैकस्य ब्रह्मत्वानुपपत्तेर्हि एते एव तु देवते अन्नप्राणलक्षणे एकधाभूयं एकभावं भूत्वा गत्वा परमतां परमत्वं गच्छतो ब्रह्मत्वं प्राप्नुतः । तयोरिति पृथग्भूतयोः । अन्नमयत्वेति । 'अन्नमयं हि सोम्य मन' इति

विजृम्भितमेव, यतो 'मन उपास्वे'त्युक्त्वा तदुपासनाफलं 'यावन्मनोगतं तत्रास्य कामचारो भवती'ति वदिष्यँस्तदुपासनाया एतत्फलसाधकत्वे प्रयोजकरूपाकाङ्क्षायामाह 'मनो ब्रह्मे'ति। इतिशब्दोत्र हेतुत्ववाची। तथा च यतो मनो ब्रह्म, अतो हेतोस्तदुपासनं तादृक्फलसाधकमित्यर्थः। अत एव, 'मनो हि ब्रह्म मन उपास्वे'ति पूर्वमुक्तम्। सर्वत्रैवमेव ज्ञेयम् ॥ १६ ॥

॥ इति चतुर्थाध्याये तृतीयपादे चतुर्थमप्रतीकालम्बनाधिकरणम् ॥ ४ ॥

भाष्यप्रकाशः।

पूयीभावशोषणात्मकदोषदर्शनेन ब्रह्मता निराक्रियते, न तु श्रुत्योपास्यत्वेनोक्तयोः। तत्रैतयोर्दोषयोः काप्यसिद्धत्वात्। प्रत्युत तैत्तिरीयके, 'अद्यतेत्ति च भूतानी'त्यन्नप्रशंसाश्लोके प्रसिद्धविरुद्धस्यात्तृत्वस्य प्राणश्लोके, 'तस्मात् सर्वायुपमुच्यत' इति सर्वायुष्ट्वस्य, मनःश्लोके, 'आनन्दं ब्रह्मणो विद्वा'निति ब्रह्मानन्दरूपत्वस्य च धर्मस्य श्रावणेन, बृहदारण्यकीये, 'तत्त तथे'ति वाक्ये तद्वदन्नप्राणयोर्ब्रह्मत्वं न तथा, न तदुक्तप्रकारेण, किन्तु श्रुत्युक्तप्रकारेणेत्यर्थस्य लभ्यमानत्वाच्च। एवं पञ्चाग्निविद्यास्थयोषापुरुषयोरपि भगवद्विभूतिरूपयोरेवोपास्यत्वं ज्ञेयम्। 'सर्वयोनिषु कौन्तेय मूर्तयः प्रभवन्ति याः। तासां ब्रह्म महद्योनिरहं बीजप्रदः पिते'ति गीतावाक्ये तासां तत्तदनुरूपाणां मूर्तीनां तत्तत्कारणभावापन्नयोः प्रकृतिपुरुषयोर्मातापितृभावेन कथनात्। देवकृतरेतोमहोमस्य तत्रैव युक्तत्वाच्च। 'तदभिध्यानादेव तु तल्लिङ्गात् सः' इति सूत्रे तथैव सिद्धत्वात्। अन्तर्यामिब्राह्मणे, 'यः सर्वेषु भूतेषु तिष्ठ'न्नित्यादिश्रावणाच्चेति। तस्मान्नासङ्गतिलेश इति दिक्। तेन यत्रोपास्यविशेषणतया ब्रह्मपदमुच्यते, यत्र वा ब्रह्मप्राप्तिरूपं फलम्, अन्यद्वा ब्रह्मत्वगमकं तात्पर्यलिङ्गं लभ्यते, तत्र तस्या उपासनाया अप्रतीकत्वमिति बोध्यम्।

एवमत्र चतुर्भिरधिकरणैः सप्रकारा गच्छद्ब्रह्मविद्व्यवस्थोक्ता। अग्रे तु प्रासङ्गिकमुच्यते। ज्ञानिभक्तयोर्गमने प्रकारविशेषदर्शनेनाकाङ्क्षाविशेषोदयादिति ॥ १६ ॥

इति चतुर्थमप्रतीकालम्बनाधिकरणम् ॥ ४ ॥

रश्मिः।

श्रुतेः। श्रुत्येति बृहदारण्यकश्रुत्या। उक्तयोरिति तैत्तिरीयोक्तयोः। तत्रेति तैत्तिरीये। दोषयोरिति शोषक्लेदनयोः। प्रशंसेति। 'अन्नाद्भूतानि जायन्ते जातान्यन्नेन वर्धन्ते अद्यतेत्ति च भूतानि तस्मादन्नं तदुच्यत' इति श्लोके। असदुत्कर्षाधायकं गुणवर्णनं प्रशंसा। पूर्वार्धे स्फुटा। उत्तरार्धेन्नपदनिर्वचनम्। भूतैरद्यते अदन्ति च भूतानीति। यद्वा उत्पत्तिस्थितिसमभिव्याहारादन्नेन भूतानि अद्यन्ते अन्नं भूतान्यत्तीति लय उक्तः। तस्माज्जगज्जन्मादिकर्तृत्वात्। अत एव आहुः प्रसिद्धेति। प्राणश्लोक इति। 'प्राणं देवा अनुप्राणन्ति, मनुष्याः पशवश्च ये, प्राणो हि भूतानामायुः, तस्मात्सर्वायुषमुच्यते' इति प्रशंसाश्लोके। मनःश्लोके 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह आनन्दं ब्रह्मणो विद्वान् न बिभेति कदाचने'ति प्रशंसाश्लोके। तदुक्तेति मायावाद्युक्तेन प्रकारेण। ननु मायावादिश्रुतिविचारे केति चेन्न। 'अनागतमतीतं चे'ति वाक्यात्। असङ्गतीति। मनआद्युपासनासु ब्रह्मक्रतुत्वासङ्गतिः तस्या लेशः। उपास्यविशेषणेति। ब्रह्माहमस्मीत्यत्र यथा। ब्रह्मप्राप्तिरूपमिति। 'ब्रह्मविदाप्नोति पर'मित्यत्र। ब्रह्मत्वगमकमिति। 'सर्वाणि ह वा भूतानि आकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ती'त्यत्र ब्रह्मत्वगमकं जगज्जन्मादिकर्तृत्वं आकाशपदस्य ब्रह्मणि तात्पर्ये लिङ्गम्। अप्रतीकत्वमिति। एतेषां शुद्धब्रह्म ज्ञात्वोपासकत्वेन अप्रतीकालम्बनत्वात्तेषामुपासनाया अप्रतीकत्वम् ॥ १६ ॥ इति चतुर्थमप्रतीकालम्बनाधिकरणम् ॥ ४ ॥

## विशेषं च दर्शयति ॥ १७ ॥ ( ४-३-५ )

सर्वाण्युपास्यानि रूपाणि ब्रह्मरूपाण्येवेति तदुपासकानां परप्राप्तिरेवेति सिद्धम्। तत्रेदं चिन्त्यते। ज्ञानमार्गीयाणां भक्तिमार्गीयाणां चाविशेषेणैव परप्राप्तिः, उत कश्चिद्विशेषोस्तीति। तत्र उभयोरपि ब्रह्मोपासकत्वेनाविशेषेणैव फलं भवतीति प्राप्ते, प्रत्याह **विशेषं च** श्रुतिर्**दर्शयति**। तैत्तिरीयके पठ्यते। 'ब्रह्मविदाप्नोति पर'मिति गूढाभिसन्धिना सामान्यत एतावदुक्त्वा, गूढं तदुद्घाटयन्त्यतिगोप्यत्वमस्मिन्नर्थेनुभवैकवेद्यत्वं च ज्ञापयन्त्याह 'तदेषाभ्युक्ता सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते'ति। तत् पूर्वोक्तं प्रतिपाद्यत्वेनाभिमुखीकृत्यैषर्गुक्ता, तदनुभवकर्तृभिरिति शेषः। ब्रह्मविदक्षरब्रह्मविदाप्नोति, सान्निध्यादक्षरमेवाप्नोति। एतावान् अर्थो 'यो वेदे'त्यन्तयर्चोक्तः। अथ 'परमाप्नोती'त्यस्यार्थ उच्यते 'निहित'मित्यादिना। अत एव मध्ये क्रियापदमुभयसम्बन्धित्वज्ञापकमुक्तम्। तत्प्राप्तिश्च मर्यादापुष्टिभेदेन द्वेधा। तत्रादौ मर्यादायामुच्यते।

---

भाष्यप्रकाशः।

विशेषं च दर्शयति ॥ १७ ॥ पूर्वाधिकरणसिद्धमनुवदन्तः प्रस्तुतमवतारयन्ति सर्वाणीत्यादि। सर्वाणीति। मनआदीनि विभूतिरूपाणि। परप्राप्तिरिति। यया कयाचित्परम्परया परप्राप्तिः। तत्रेति। परप्राप्तौ। पूर्वपक्षार्थस्तु स्फुटः। सिद्धान्तं व्याकर्तुं विशेषदर्शिकां श्रुतिमुपन्यस्य व्याकुर्वन्ति तैत्तिरीयक इत्यादि। सान्निध्यादिति। वेदनसान्निध्यात्। यद् वेद तदेव प्राप्नोति। वेदनशेषं च 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यनेनोक्तम्। यस्तादृशमक्षरं ब्रह्म वेद, सान्निध्यात् तदाप्नोतीत्यर्थः। ननु पूर्वोक्तरीत्यार्थोक्तौ परमिति द्वितीयान्तस्य कुत्रान्वय इत्यत आहुः अथेत्यादि। तथा च मध्ये उक्ताया आप्नोतीति क्रियायाः कर्मणाप्यन्वयात् तस्याप्यर्थ उच्यते। नन्वेवं व्याख्याने किं बीजमत आहुः अत एवेत्यादि। यत आप्नोतीति क्रियापदं मध्ये उक्तमतो देहलीदीपन्यायेन तस्योभयसम्बन्धित्वमेव बीजमित्यर्थः।

नन्वेवं व्याख्याने आकाङ्क्षाया अपूरणात् भिन्नवाक्यत्वापत्तेः, आप्नोतीति पदावृत्तेश्चापत्त्या क्लिष्टं किमित्याद्रियत इत्यत आहुः तत्प्राप्तिरित्यादि। आदाविति। ब्रह्मविदित्यनेन मर्यादामार्गीयस्योपक्रान्तत्वादादौ मर्यादायामङ्गीकृतस्य 'यो वेदे'त्यनेन ग्रन्थेन व्यवस्थोच्यते।

रश्मि।

विशेषं च दर्शयति ॥ १७ ॥ यया कयाचिदिति। उपासनामिश्रितशुद्धिः, तया भक्तिः, तद्द्वारेति प्रसिद्धा परम्परा। अमानवपुरुषं भक्त्यनन्तरं निवेश्यापरा परम्परा। आतिवाहिकसूत्रे यथा विद्याबलात् तत्तल्लोकप्राप्तिः, तथैव ब्रह्मप्राप्तिरपीति न, किन्तु भगवदीयपुरुषानुग्रहेणैवेत्युक्तेः पुरुषानन्तरं तदनुग्रहं निवेश्यापरा ज्ञापिता। उपासनाविषयप्राप्त्युद्देशेन कृतयोपासनयादित्याद्यङ्गप्राप्तिः। अङ्गानां भगवत्स्वरूपात्मकत्वेनैक्यमिति स्वरूपस्यैव फलत्वमुक्तं भवतीत्यपरा'दित्यादिमति' सूत्र उक्ता। तैत्तिरीयक इत्यादीति। मध्य इति परप्राप्त्यक्षरप्राप्त्योर्मध्ये। वेदेति क्रियापदम्। उभयेति। गुहायां परमे व्योम्नि, सप्तम्या लुक्। निहितं नितरां हितं स्थापितं यो वेदेत्युभयसम्बन्धित्वज्ञापकम्। तत्प्राप्तिरिति। परप्राप्तिः। विचिकित्सितमिति सन्दिहानं प्रति।

इहायमाशयो ज्ञेयः । 'नायमात्मा प्रवचनेने'ति श्रुत्या भगवद्वरणातिरिक्त-साधननिरासः क्रियते पुरुषोत्तमप्राप्तौ । एवं सत्यक्षरब्रह्मज्ञानस्य तत्साधनत्वे उच्यमाने तद्विरोधः स्यात् । तेनैवमेतदर्थो निरूप्यते । ज्ञानमार्गीयाणामक्षरज्ञाने नाक्षरप्राप्तिः, तेषां तदेकपर्यवसायित्वात्, भक्तानामेव पुरुषोत्तमपर्यवसायित्वात् । तदुक्तं भगवद्गीतासु 'एवं सततयुक्ता य' इति प्रश्ने, 'मय्यावेश्य मनो ये माम्,' 'ये त्वक्षरमनिर्देश्यम्', श्रीभागवते च 'भक्त्याहमेकया ग्राह्यः,' 'तस्मान्मद्भक्तियुक्तस्ये'त्युपक्रम्य, 'न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिहे'-त्यादिना । तथा च ब्रह्मविदं चेद् भगवान् वृणुते, तदा भक्तिरुदेति । तत्प्रचुरभावे सति स्वयं तद्धृदि प्रकटीभविष्णुः स्वस्थानभूतं व्यापिवैकुण्ठं तद्गुहायां हृदयाकाशे प्रकटीकरोति, तत् परमव्योमशब्देनोच्यते । अलौकिकप्रयोगेण तस्यालौकिकत्वं ज्ञाप्यते । यथा स्वस्थापितं वस्त्ववश्यं स्वदर्शनयोग्यं भवति, तथात्र भगवानपीति ज्ञापनाय 'निहित'मित्युक्तम् । तथा च 'परमाप्नोती'ति पदविवृतिरूपत्वादस्य

---

भाष्यप्रकाशः ।

तदेव विवृण्वन्ति इहायमाशय इत्यादि । इहेति । अस्मिन् व्याख्यानपक्षे । नायमात्मे-त्यादि । अत्र प्रवचनपदं वेदे रूढम्, तदत्र वाच्यतासम्बन्धेन तदुक्तसाधनान्युपलक्षयति । मेधा धारणावती बुद्धिः, सा च पुरुषनिष्ठस्वाभाविकसाधनानि श्रुतं चागन्तुकानि । एवं भगवद्वरणा-तिरिक्तसाधननिरासः क्रियत इत्यर्थः । एवं सतीति । पुरुषोत्तमप्राप्तेर्वरणैकलभ्यत्वे सति । उच्यमान इति । प्राञ्जलतयोच्यमाने । तद्विरोधः स्यादिति । 'नायमात्मे'ति श्रुतिविरोधः स्यात् । नन्वस्त्वेवं निरूपणम्, तथापि पूर्वोक्तदोषाणां तु न परिहार इत्यत आहुः ज्ञानेत्यादि । तदेकपर्यवसायित्वादिति । मुण्डके 'धनुर्गृहीत्वे'ति मन्त्रे, 'लक्ष्यं तदेवाक्षरं सोम्य विद्धी'ति श्रावणात् तत्क्रतुन्यायेन तेषां तदेकपर्यवसानात् । तथा च वाक्यभेदपदावृत्तिश्च नात्र दूषण-मित्यर्थः । नन्वेवमक्षरप्राप्तावपि अक्षरस्य पुरुषोत्तमप्रत्यासन्नत्वात् तत्प्राप्तिरपि कुतो नाद्रियत इत्यत आहुः भक्तानामित्यादि । ननु भवत्वेवम्, तथापि कर्त्रपेक्षादोषः कथं परिहार्य इत्यत आहुः तथा चेत्यादि । तस्येति । परमव्योमरूपस्याक्षरस्य । अस्येति । निहितमित्यादि-

रश्मिः ।

इहायमाशय इत्यादीति । इह व्याख्यानक्लेशे अयं व्याख्यानक्लेशनिवर्तकः । तद्विरोधो वरणश्रुतिविरोधः । एवमेतदर्थ इति । क्लिष्टो ब्रह्मविदाप्नोति परमिति श्रुत्यर्थः । 'ज्ञानी चेद्भजते कृष्णं तस्मान्नास्त्यधिकः पर' इत्यादिविरोधं परिहर्तुं हेतुमाहुः तत्क्रत्स्त्विति । अयमप्रतीकालम्बन-सूत्रैकदेशः । यदाक्षरप्राप्तिमुद्दिश्य ज्ञानी, तदा तत्क्रतुरक्षरैकपर्यवसायी भवति । यदा तु ज्ञानी चेद्भजते कृष्णम्, तदा तत्क्रतुः पुरुषोत्तमैकपर्यवसायीत्येवं तथात्वादक्षरैकपर्यवसायित्वात्तत्क्रतुरित्यत्र प्रसिद्धवाचकसामान्यतच्छब्दोपादानादित्यर्थः । शेषमिति । एवं सततेति 'एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते, ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमा' इति प्रश्ने, 'मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते, श्रद्धया परयोपेतास्ते मे युक्ततमा मताः' इति भिन्नं पद्यम्, 'ये त्वक्षरमनिर्देश्य-मव्यक्तं पर्युपासत' इति भिन्नम् । श्रीभागवत इति एकादशस्कन्धे । अलौकिकेति । लुप्तसप्तम्य-न्तस्य व्योमन्निति शब्दस्य प्रयोगेण । तस्येति व्योम्नः । यस्येति द्वितीयभागस्य । तस्य सद्यो

गुहायां परमे व्योम्नि निहितं यो वेद, स 'नास्य प्राणा उत्क्रामन्तीहैव समव-नीयन्ते ब्रह्मैव सन् ब्रह्माप्येती'ति श्रुत्युक्तरीत्या परमाप्नोतीत्यर्थः सम्पद्यते। अथ शुद्धपुष्टिमार्गेऽङ्गीकृतस्य व्यवस्थामाह, 'सोऽश्नुत' इत्यादिना। अत्रायमभि-सन्धिः। यथा स्वयं प्रकटीभूय लोके लीलां करोति, तथात्यनुग्रहवशात् स्वान्तः-स्थितमपि भक्तं प्रकटीकृत्य तत्स्नेहातिशयेन तद्वशः सन् स्वलीलारसानुभवं कारयतीति स भक्तो ब्रह्मणा परब्रह्मणा पुरुषोत्तमेन सह सर्वान् कामानश्नुत इति। चकारादुक्ता श्रुतिः स्मृतयश्च संगृह्यन्ते। एवं सति ज्ञानमार्गीयाणामक्षर-प्राप्तिरेव, भक्तानामेव पुरुषोत्तमप्राप्तिरिति सिद्धम्॥ १७॥

इति चतुर्थाध्याये तृतीयपादे पञ्चमं विशेषाधिकरणम्॥ ५॥

## इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते श्रीमद्ब्रह्मसूत्राणुभाष्ये चतुर्थाध्यायस्य तृतीयः पादः समाप्तः॥ ४॥ ३॥

---

भाष्यप्रकाशः।

वाक्यस्य। तथा च यः पूर्वकर्ता उक्तः, तस्यैव वरणेन भक्तिप्राप्तौ भगवद्धामत्वेनाक्षराविर्भावे पुरुषोत्तमप्राप्तिर्भवतीति तेनैव कर्त्राकाङ्क्षापूर्तिरिति न कोपि दोष इत्यर्थः। तथा चैवं विहितं यो वेद, सोऽश्नुते, अर्थात्तमेवाश्नुते प्राप्नोति। नन्वेतावता व्याख्येयस्य यजुषो विवरणे सिद्धे 'सर्वान् कामा'निति शेषस्य किं प्रयोजनमित्यत आहुः अथेत्यादि। तथा चास्मिन् पक्षे 'सोऽश्नुत' इति क्रियापदस्य सम्बन्ध इति बोधनार्थमवतारणे 'सोऽश्नुत' इत्यपि संगृहीतम्। तथा चायं शेषः पुष्टिमार्गीयफलबोधनार्थः। तथा सत्येवं श्रुतियोजना। अत्राश्नुते इति क्रियापदं संयोग-पृथक्त्वेन त्रिधा सम्बध्यते। सत्यं ज्ञानमनन्तं ब्रह्म यो वेद, सोऽश्नुते। सान्निध्यात्तादृशमक्षरं ब्रह्मैव प्राप्नोतीत्यर्थः। यः पुनर्वरणसहकृतो गुहायां परमे व्योमन् निहितं परं ब्रह्म पुरुषोत्तमं वेद, सोऽश्नुते, अर्थात्तं पुरुषोत्तममेवाश्नुते। 'ब्रह्मैव सन् ब्रह्माप्येती'ति श्रुतिबलात् पुरुषोत्तम-सायुज्यं प्राप्नोतीत्यर्थः। यः पुनः पूर्वमक्षरब्रह्मवित् ततस्तन्निहितपुरुषोत्तमवित् पुरुषोत्तमे लीनोऽ-सम्भावितलीलारसानुभवः स चेदतिकृपया शुद्धपुष्टिमार्गे वृतः सन् विपश्चिता ब्रह्मणा पुरुषोत्तमेन सह सर्वान् कामानश्नुते। तथा चात्र ब्रह्मविदस्ततो वरणसहकृतस्य ततो भक्तिसहकृतस्य क्रमिकैव व्यवस्था बोध्यते। सौत्रस्य चकारस्य प्रयोजनमाहुः चकारादित्यादि। अतो ज्ञानभक्तिमार्गीय-योरुक्तविशेषस्य श्रुत्यैव दर्शनान्नैका व्यवस्था, किन्तूक्तरीतिकविशेषदर्शनाद् विशेषवत्येव सेत्यर्थः सिद्धः। एतेनाहंग्रहोपासकानां सायुज्यम्, पृथग्ग्रहोपासकानां भक्तानामेव परप्राप्तिस्तत्क्रतु-न्यायादिति सिद्धं ज्ञेयम्।

रश्मिः।

मुक्तिमाहुः नास्य प्राणेति। इहैव पुरः प्रकटे ब्रह्मणि। हृदि प्रकटे ब्रह्मणि सति तत्प्रभावाद् ब्रह्मैव सन् पुरः प्रकटं ब्रह्माप्येतीति। अश्नुत इति अश्नातीत्यर्थः। उक्तेति अस्याः पूर्वमुक्ता श्रुतिः। निहितं गुहायामित्याद्या श्रुतिः, नायमात्मेति श्रुतिर्वा। स्मृतय इति 'एवं सतत युक्ता' इत्याद्याः, 'वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथे'ति, 'निवेदितात्मा विचिकीर्षितो मे' इति च। एवं शेषं स्फुटमित्यर्थः। एतेनेति। ज्ञानिभक्तयोः परप्राप्तौ विशेषविचारेण। ब्रह्माहमस्मीत्यहं-ग्रहोपासना। ब्रह्मण आत्मत्वेन ग्रहः तेनोपासना तत्कर्तृणाम्, जीवब्रह्मवादेपि भवति। पृथगिति।

भाष्यप्रकाशः ।

अन्ये तु अप्रतीकालम्बनसूत्रशेषत्वेनेदं सूत्रमङ्गीकुर्वन्ति । अप्रतीकालम्बनसूत्रस्य चैवमर्थमाहुः । तत्र प्रतीकालम्बनान् वर्जयित्वा ब्रह्मक्रतूनब्रह्मक्रतूँश्च सर्वानन्यान् विकारालम्बनान्नयतीति बादरायण आचार्यो मन्यते । उभयथा अदोषात् । अनियमः सर्वेषामिति तार्तीयीके सूत्रे श्रुतिस्मृतिभ्यां सर्वेषामेव ब्रह्मलोकगत्युपपादनात् । तत्क्रतुश्च । अस्योभयथाभावस्य समर्थको हेतुर्द्रष्टव्यः । 'यो हि ब्रह्मक्रतुः स ब्रह्मैश्वर्यमासीदेदितीष्यते तं यथायथोपासते तदेव भवती'ति श्रुतेः । पञ्चाग्निविद्यायां ब्रह्मप्राप्तिश्रावणं त्वाहत्य वादत्वाद् उत्सर्गबाधकम् । अतस्तदभावे औत्सर्गिकेन तत्क्रतुन्यायेन ब्रह्मक्रतूनामेव तत्प्राप्तिर्नेतरेषामिति शाङ्करमतम् । तदसङ्गतमिति प्रागेवोक्तम् ।

भास्कराचार्यास्तु, मनआद्युपासनानां प्रतीकत्वमेवाङ्गीकृत्य तदालम्बनव्यतिरिक्तान् कार्यब्रह्मणो हिरण्यगर्भस्योपासकान् परब्रह्मोपासकांश्च नयति । तत्र हेतुः । उभयथा दोषात् । तत्रापि हेतुः । तत्क्रतुश्चेति । तथाचैकत्वभावनया आत्मक्रतुः परमात्मानं प्रति । द्वैतक्रतुश्च कार्यं ब्रह्मेति । न च द्वैतोपासकानां कथं कार्यब्रह्मप्राप्तिरिति शङ्क्यम् । पञ्चाग्निविद्यायां 'शुद्धः पूतः पुण्यलोको भवती'ति श्रुतेः । न च 'परं जैमिनि'रिति सूत्रे परब्रह्मण एव ब्रह्मपदार्थत्वेन निश्चितत्वाद् द्वैतोपासनायां तदनङ्गीकारे पूर्वापरविरोध इति शङ्क्यम् । क्रममुक्तिसद्योमुक्तिभेदेन मुक्तेर्द्वैविध्याद् द्वैतोपासकानां हिरण्यगर्भप्राप्त्यनन्तरं बहुकालेनोदये परप्राप्तिः, साक्षाद्ब्रह्मोपासकानां तु शीघ्रं

रश्मिः ।

श्रीकृष्णः शरणं ममेति शरणमार्गे ममेति भेदे षष्ठ्याः । एवं भक्तिमार्गेऽपि दासवद्दासीवद्वा प्रभुनिकटे स्थितौ सत्यां पृथग्ग्रहोपासना भवति तत्कर्तॄणाम् । तत्क्रतुन्यायो विवृतः भक्तज्ञानिसाधारण्येन । अप्रतीकेति द्विसूत्रमधिकरणम् । उभयथेति ब्रह्मक्रत्वब्रह्मक्रतुभेदेन नयनाभ्युपगमेऽदोषात् । गत्यनुपपत्त्यादिदोषाभावात् । सर्वेषामिति ब्रह्मक्रत्वब्रह्मक्रतूनाम् । उभयथाभावस्येति । ब्रह्मक्रत्वब्रह्मक्रतुनयनलक्षणभावस्य । हेतुरिति तत्क्रतुर्ब्रह्मक्रतुरेवेति हेतुगर्भं विशेषणम्, तत्क्रतुत्वाद्यो हि ब्रह्मक्रतुः स ब्रह्मैश्वर्यमासीदितीष्यत इत्यर्थः । ब्रह्मक्रतोर्नीतस्य प्रापणे श्लेषमाहुः यो हीति । ब्रह्मात्मैश्वर्यं आसीदासादेदिति श्लेषे इष्टिः । यो हि ब्रह्मक्रतुः स ब्रह्मात्मैश्वर्यमासादेदिति शङ्कराचार्यभाष्यात् । ब्रह्मात्मैश्वर्यमित्यत्र श्रुतिविरोधं परिहरन्ति स्म पञ्चाग्नीति । 'स एनान्ब्रह्म गमयतीत्यनया ब्रह्मप्राप्तिः श्रावणम् । आहत्येति उक्तवचनबलाद्वादात् । उत्सर्गस्य ब्रह्मात्मैश्वर्यासादनलक्षणस्य बाधकम् । आहत्य वादाभाव इति तदभाव इत्यस्यार्थः तत्प्राप्तिरिति । ब्रह्मात्मैश्वर्यप्राप्तिः इतरेषां अब्रह्मक्रतूनाम् । प्रागेवेति । अत्रैव ये तु प्रतीकेष्वब्रह्मक्रतुत्वमित्यादि भाष्ये तत्प्रकाशे च ।

प्रतीकत्वमेवेति । कार्यत्वेन भेदे प्रतीकत्वमवलम्बनवत्त्वमेव । तदालम्बनेति । प्रतीकालम्बनेत्यर्थः । उभयथेति । कार्यब्रह्मपरब्रह्मोपासकभेदेनादोषात् । तत्रापीति । दोषाभावेऽपि हेतुः । तत्क्रतुरात्मक्रतुः परमात्मानं प्रतिपद्यते । द्वैतोपासकानामिति । द्वैतेनोपासकानाम् । कथमिति । भेदेनाभेदेन वेति प्रश्नः । कार्यजब्रह्मक्रतुः कार्ये द्वैतैकत्वभावनया हिरण्यगर्भो भविष्यामीत्येवं प्रवृत्तस्तद्भावमेकत्वे एति द्वैते तत्प्राप्त्यर्थस्य अर्चिर्मार्गः पठ्यते । तदाहुः पञ्चाग्नीति । शुद्धः पूतो व्यापकजीवः कारणात्मना अभेदात् पुण्यलोको हिरण्यगर्भः भवति उत्पद्यते । कार्यात्मनाऽभेदात् । ब्रह्मपदार्थत्वेनेति । कार्यब्रह्मपदार्थत्वेन । तदनङ्गीकार इति । कार्यब्रह्मप्राप्तौ परब्रह्मप्राप्त्यनङ्गीकारे । पूर्वस्य 'परं जैमिनि'रिति सूत्रभाष्यस्य अपरस्य 'अप्रतीकालम्बन'सूत्रभाष्यस्य विरोधः । परप्राप्तिरिति । क्रममुक्तिः । साक्षादिति । परब्रह्मोपासकानाम् । शीघ्रमिति । सद्यः

भाष्यप्रकाशः ।

तत्प्राप्तिरित्यविरोधादित्याहुः । अत्र मनआद्युपासनानां प्रतीकत्वमनुपादेयम् ।

**रामानुजाचार्यास्तु**, इतः पूर्वसूत्रे 'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहुमुखात् प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवानी'ति श्रुत्या सम्भाव्यब्रह्मलोकस्य अकृतत्वश्रावणात् सर्वबन्धविनिर्मोकस्य च साक्षाच्छ्रावणात् परब्रह्मलोकस्य नित्यत्वमङ्गीकृत्य, अस्मिन् सूत्रे 'उभयथा चे'ति पाठमङ्गीकृत्य मनआद्युपासनानां पूर्ववदेव प्रतीकत्वं चाङ्गीकृत्य, अप्रतीकालम्बननयनप्रतिज्ञायां हेतुमुभयथादोषमेवं व्याकुर्वते । कार्यब्रह्मोपासकनयनमात्रनियमे 'अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्ये'त्यादिकाः श्रुतयः कुप्येयुः । परब्रह्मोपासकनयनमात्रनियमे च पञ्चाग्निविदो नयनश्रुतिः कुप्येदित्युभयस्मिन् पक्षे दोषः स्यात् । तस्मादुभयविधान्नयतीति, तत्क्रतुश्चेति भागस्य च, तत्क्रतुस्तथोपासीनस्तथैव प्राप्नोतीत्यर्थ इत्याहुः । तेन तन्मतेपि मनआद्युपासनानां प्रतीकत्वमात्रमेवानुपादेयम् ।

**तन्मतचौरस्तु** तद्वदेव सूत्रं व्याख्याय, विष्णुद्वेषाद् 'ऋतं सत्यं परं ब्रह्मे'ति महानारायणोपनिषन्मन्त्रम् 'परात् परतरो ब्रह्मा तत्परात् परतरो हरिः । तत्परात् परतरो हीश' इति शिवसङ्कल्पसूक्तमन्त्रं 'नारायणं परं ब्रह्मे'ति च महोपनिषन्मन्त्रं, 'विश्वाधिको रुद्र' इति श्वेताश्वतरमन्त्रं चोपन्यस्य, त्रिलोचननीलकण्ठादिविशिष्टमुमया शबलितमेव परमेश्वररूपमुवाद ।

तदसङ्गतम् । महानारायणोपनिषदि अणोरणीयानित्यनुवाके महिमानमीशमित्युक्त्या ईशस्य परमेश्वरविभूतित्वेनैव सिद्धत्वात् । 'ऋतं सत्य'मिति मन्त्रस्य नारायणानुवाकोक्तोपासनप्रकारबोधनाय रासलीलास्थभगवत्स्वरूपनिरूपकत्वेन 'नारायणपरं ब्रह्मे'ति मन्त्रस्य च प्रथमान्त-

रश्मिः ।

तत्प्राप्तिर्मुक्तिः, सद्योमुक्तिरित्यर्थः । **प्रतीकत्वमिति** । भाष्योक्तलक्षणम् । जगतो ब्रह्मत्वात् । **इतः पूर्वसूत्र इति** । द्विसूत्रादधिकरणात्पूर्वस्मिन् 'न च कार्ये प्रतिपत्त्यभिसन्धि'रिति सूत्रे । अर्थस्तु कार्ये हिरण्यगर्भे न चायं प्रत्यभिसन्धिः 'प्रजापतेः सभां वेश्म प्रपद्य' इत्यर्चिरादिना गतस्यानुसन्धानमपि तु परस्मिन्नेव ब्रह्मणि यथाहं भवामि ब्राह्मणानामिति तस्याभिसन्धातुः सर्वाविद्याविमोकपूर्वकसर्वात्मभावाभिसन्धानादिति । अग्रे सर्वाविद्याविमोकपूर्वकसर्वात्मभावबोधकग्रन्थे अश्व इव रोमाणीत्यादिः, तदाहुः **अश्व इव रोमाणीत्यादि** । अश्वो रोमाणीवाप्रतीकालम्बनः पापमित्यर्थः । **विधूय राहुमुखाच्चन्द्र इव** पापमुखादप्रतीकालम्बनः । **प्रमुच्य शरीरं धूत्वा** अश्व इवेत्येव । **कृतात्मा** कृतः पापशरीराभ्यां रहितः कृत आत्मस्वरूपं येन । स **अकृतं** कृतभिन्नं नित्यं **ब्रह्मलोकं अभिसंभवानि** अभितः सम्यगसानि । इति प्रत्यभिसन्धिरित्यर्थः । एवं नित्यत्वमङ्गीकृत्येत्यर्थः । **अस्मिन्निति** । अप्रतीकालम्बनरूपे । **पूर्ववदेवेति** । अस्मद्भाष्यवत् । तथा च रामानुजाचार्यभाष्यम् । 'ये तु ब्रह्मकार्यान्तरभूतं नामादिकं वस्तु देवदत्तादिषु सिंहादिदृष्टिवद् ब्रह्मदृष्ट्या केवलं वा तत्तद्वस्तूपासते, न तान्नयति । अतः परं ब्रह्मोपासीनानात्मानं च प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनान्नयती'ति । तत्तद्वस्तु विशिष्टाद्वैतसिद्धम् । **अनुपादेयमिति** । ब्रह्मात्मकत्वाज्जगतः । **तन्मतेति** भगवान्स्चैवः । **तद्वदेवेति** । रामानुजाचार्यवत् । **विष्णुवेति** । आचार्यत्वेपि तामसत्वात्तथा । **ऋतं सत्यमिति** । शिवलिङ्गमन्त्राग्रेवाच्यम् । **रासलीलेति** । परब्रह्मत्वं 'सोश्नुते सर्वान् कामा'निति श्रुत्युक्ते इति भावः । किं च । परं ब्रह्म कृष्णः, तस्य महिमा रुद्र इति पदशक्तिरपि न शिवे । तृतीयान्तानां पदानां तदभिमतेत्यादिनान्वयः । **प्रथमान्तेति** । तथा च पुंनपुंसकत्व-

भाष्यप्रकाशः ।

नारायणपदप्रायपाठसंदृष्टत्वेन, 'परात्परतर' इति मन्त्रस्य च सूक्तारम्भे 'येनेदं भूतं भुवनं भविष्यत्परिगृहीतममृते सर्वम्, येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसङ्कल्पमस्त्वि'ति मनसस्तथात्वं प्रक्रम्य पठिततया तन्माहात्म्यबोधकत्वेन मनसश्चानन्दवल्ल्यां ब्रह्मानन्दात्मकत्वेन सिद्धतया तत्र शिवमाहात्म्यबोधकताया अशक्यवचनत्वेन, 'विश्वाधिक' इति श्वेताश्वतरतृतीयाध्यायमन्त्रस्य च केवलब्रह्मस्वरूपमुपक्रम्य पठितत्वेन त्रिलोचनादिवैशिष्ट्यस्यानुक्तत्वेन तदभिमतरूपाबोधकत्वेन तदुक्तानां सर्वेषामेव मन्त्राणां तदुक्तार्थानुपष्टम्भकत्वात् । इदं यथा तथा प्रहस्तेऽस्माभिर्निपुणतरमुपपादितमिति नात्र प्रपञ्च्यते ।

माध्वास्तु,

'प्रतीकं देह उद्दिष्टो येषां तत्रैव दर्शनम् । न तु व्याप्ततया क्वापि प्रतीकालम्बनास्तु ते ॥
अप्रतीका देवतास्तु ऋषीणां शतमेव च । राज्ञां च शतमुद्दिष्टं गन्धर्वादिशतं तथा ॥
एतेऽधिकारिणो व्याप्तिदर्शनेऽन्ये न तु क्वचित् । अयोग्यदर्शने यत्नाद्भ्रंशः पूर्वस्य चापि तु ॥
अप्रतीकाश्रया ये हि ते यान्ति परमेव तु । स्वदेहे ब्रह्मदृष्ट्यैव गच्छेद् ब्रह्मसलोकताम् ॥

ब्रह्मणा सह सम्प्राप्ते संहारे परमं पदम्' इति गारुडवाक्यान्युपन्यस्य कांश्चित् कार्यं कांश्चित् परं नयति । उभयपक्षोक्तदोषात् । परप्राप्तिपक्षे गत्यनुपपत्त्यादिदोषस्योक्तत्वात् । कार्यप्राप्तिपक्षे च ब्रह्मशब्दामुख्यत्वादिदोषाणामुक्तत्वादित्येवमाहुः ।

तत्र गत्यनुपपत्त्यादिदोषाणामदृष्टादिना भाष्ये एव परिहृतत्वादुदासीना वयम् ।

रश्मिः ।

रूपविरुद्धधर्माधारत्वं परब्रह्मलिङ्गमिति । न शिवपरत्वमिति भावः । सूचीकटाहन्यायेनाहुः **परात्पर** इति । अन्यथा 'नारायणं परं ब्रह्मे'ति मन्त्रात् पूर्वमेव विचारितः स्यात् । **येनेद**मिति । मनसा वेदशरीरेण जीवपरिगृहीतेन । 'स एष जीव' इति वाक्यात् । आनन्दसृष्टिः । **येनेति** । वेदशरीरेण । **यज्ञस्तायते** इति । 'विज्ञानं यज्ञं तनुत' इति श्रुतिः । **सप्तहोतेति** । सप्तभिश्छन्दोभिरग्निजिह्वाभिर्वा जुहोतीति होता नप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोत्रिति साधुः । **शिवेति** । शिवः सङ्कल्पो मनोवृत्तिर्यस्य मनसः । **तथात्वमिति** । भूतादिकर्तृत्वम् । **तन्माहात्म्येति** । मनोमाहात्म्यं देवत्वं तस्य बोधकत्वेन । **ब्रह्मानन्देति** । 'यतो वाचो निवर्तन्त' इत्यादिना 'न बिभेति कदाचने'त्यन्तया श्रुत्या । **प्रहस्त** इति तस्य तृतीयवादे । **तत्रैवेति** । देह एव । **एत** इति । ऋषिराजगन्धर्वाः । ननु देहे परमात्मदर्शिनामपि यत्नेन व्याप्ततया दर्शने अप्रतीकालम्बनत्वे सूत्रोक्तोभयथापदविरोध इति चेत्, तत्राहुः **अयोग्येति** । व्याप्ततया दर्शने । **पूर्वस्येति** । देहे दर्शनवतः । **ब्रह्मसलोकतामिति** । हिरण्यगर्भसमानलोकताम् । **कार्यमिति** । कार्यब्रह्म । **उभयपक्षेति** । उभययोः पक्षयोः उक्तयोरदोषात् । **गत्यनुपपत्त्यादीति** । आदिना गतेर्गौणत्वम् । **ब्रह्मशब्देति** । 'स एनान् ब्रह्म गमयती'त्यत्र कार्यं ब्रह्म ब्रह्मशब्दार्थ इति ब्रह्मशब्दस्यामुख्यत्वं गौणत्वम्, आदिना गत्यमुख्यत्वमित्युक्ता दोषाः तेषामभावात् । एवं स्वमते उभयथा अदोषादिति पदच्छेदे सिद्धान्तभाष्यविरोधः स्यात्, तदर्थं उभयथा दोषादित्यस्यैवं व्याख्यातस्य प्रयोजनाभावमाहुः **तत्र गत्यनुपेति** । **अदृष्टादिनेति** । आदिना इच्छा । **भाष्ये**

भाष्यप्रकाशः ।

विशेषदर्शनसूत्रे च, 'यावन्नाम्नो गतं तत्रास्य कामचारो भवती'त्यादिश्रुतिर्नामादिप्राणपर्यन्तेषु प्रतीकोपासनेषु फलविशेषं च दर्शयतीति प्रतीकालम्बनान् वर्जयित्वा नयतीति सिद्धमिति शाङ्करभास्कररामानुजाचार्या आहुः । तत्तु मनोनामाद्युपासनानां प्रतीकतानिराकरणेन फलविशेषभवनस्य च भगवदिच्छया भगवद्विभूतित्वात् साधनेनैव निरस्तम् ।

यत्तु शैवो विष्णुलोकापेक्षया शिवलोके विशेषं दर्शयतीत्याह । तदपि प्रहस्ते निपुणतया दूषितमिति ततोवधेयम् ।

माध्वास्तु, 'अन्तःप्रकाशाः बहिःप्रकाशाः सर्वप्रकाशाः देवा वा सर्वप्रकाशा ऋषयोऽन्तःप्रकाशा मानुषा एव बहिःप्रकाशा' इति काचिच्चतुर्वेदशिखाश्रुतिर्विशेषं दर्शयतीत्याहुः । तत्रापि श्रुतेरप्रसिद्धत्वादुदासीना वयम् ॥ १७ ॥ इति पञ्चमं विशेषाधिकरणम् ॥ ५ ॥

इति श्रीमद्वल्लभाचार्यचरणनखचन्द्रनिरस्तहृदयध्वान्तस्य श्रीपीताम्बरात्मजस्य पुरुषोत्तमस्य कृतौ भाष्यप्रकाशे चतुर्थाध्यायस्य तृतीयः पादः ॥ ४ ॥ ३ ॥

रश्मिः ।

अणुभाष्ये पूर्वाधिकरणे भाष्यप्रकाशे चाधिकरणसमाप्तौ । साधनेनेति । अप्रतीकालम्बनसूत्रे साधनेन । विशेषमिति । अन्तःप्रकाशादिषु देवाद्यधिकारिविशेषम् ॥ १७ ॥ इति पञ्चमं विशेषाधिकरणम् ॥ ५ ॥

इति श्रीविट्ठलेश्वरैश्वर्यनिरस्तसमस्तान्तरायेण श्रीगोविन्दरायजित्पौत्रेण सम्पूर्णवेत्ता विट्ठलरायजिद्भ्रात्रीयगोकुलोत्सवात्मजगोपेश्वरजिता कृते भाष्यप्रकाशस्य रश्मौ चतुर्थाध्यायस्य तृतीयः पादः सम्पूर्णतामगमत् ॥ ३ ॥

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# श्रीमद्ब्रह्मसूत्राणुभाष्यम् ।

## भाष्यप्रकाश-रश्मि-परिबृंहितम् ।



## अथ चतुर्थोऽध्यायः ।

### चतुर्थः पादः ।

**सम्पद्याविर्भावः स्वेन शब्दात् ॥ १ ॥ ( ४-४-१ )**

'ब्रह्मविदाप्नोति पर'मित्युपक्रम्य 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते'ति तैत्तिरीयके पठ्यते । तत्रेदं सन्दिह्यते किमन्तःस्थित एवाश्नुते, उत पुनर्जन्म प्राप्येति । तत्रान्त्यस्त्वनुपपन्नः । 'न स पुनरावर्तते' 'तेषामिह न पुनरावृत्तिरस्ती'त्यादिश्रुतिविरोधात् कर्माभावाच्चेति प्राप्ते,

---

भाष्यप्रकाशः ।

सम्पद्याविर्भावः स्वेन शब्दात् ॥ १ ॥ द्वितीये पादे सद्योमुक्तिक्रममुक्त्योः प्रकारो दर्शितः, तदनु तृतीये क्रममुक्तौ प्राप्यस्वरूपं प्राप्तिप्रकारं च दर्शयित्वा समाप्तौ ज्ञानमार्गीय-भक्तिमार्गीययोः सद्योमुक्तावप्यक्षरप्राप्तिपुरुषोत्तमप्राप्तिरूपः फले विशेषोस्तीति दर्शितम् । इदानीं तत्पुरुषोत्तमप्राप्तिरूपं फलं कथमनुभवतीत्यतस्तत्प्रकारः, कीदृशं च पुरुषोत्तमस्य स्वरूपमित्य-तस्तत्प्रकारश्चेत्येतदस्मिन् पादे विचार्यत इत्याशयेन सूत्रमुपन्यस्य विचारमारभन्ते ब्रह्मविदि-त्यादि । तत्रेदं सन्दिह्यत इति । यद्यन्तःस्थितोश्नुते, तदा 'स' इति भोगस्वातन्त्र्यबोधकप्रथमा-विभक्त्यनुपपत्तिः । ब्रह्मणि लये भेदाभावाद् । यदि बहिर्भूत्वा तदा आवृत्त्यापत्त्या परप्राप्ते-र्मुक्तित्वभङ्ग इत्युभयथापि दोषात् 'अश्नुत' इति विवरणं सन्दिह्यत इत्यर्थः ।

पूर्वपक्षमाहुः तत्रेत्यादि । तथा च ब्रह्मलोकसम्पत्तौ यत्र पुनरावृत्त्यभावः, तत्र साक्षा-द्ब्रह्मप्राप्तानां कुतस्तत्सम्भावनेत्यपुनरावृत्तिश्रुतिविरोधापेक्षया विभक्त्यर्थमात्रबाधस्य स्वल्पदोषत्वा-

रश्मिः ।

सम्पद्याविर्भावः स्वेन शब्दात् ॥ १ ॥ कथमनुभवतीति । सफलस्याग्रिमावस्थायां पादार्थरूपायां फलतावच्छेदकं पुरुषोत्तमत्वं कथं केन प्रकारेणानन्दाविष्टपुरुषोत्तमत्वप्रकारेणोतस्वरूपस्यैव फलत्वात्पुरुषोत्तमत्वेन फलं पुरुषोत्तममुत 'न तदश्नोति कश्चन, न तदश्नोति कश्चने'ति श्रुत्वा तद्भोगनिषेधात्सुधासंवलितत्वेन रूपेण तमनुभवतीत्यर्थः । भेदाभावादिति । फलप्रकरणेऽपि तादात्म्या-ुक्त्या 'ते तु ब्रह्महृदं नीता मग्नाः कृष्णेन चोद्धृता' इति प्रकारः सूचितः । तथेति । प्रतिवदतीत्यर्थः ।

प्रतिवदति। सम्पद्य ब्रह्म सम्पद्यापि स्थितस्य जीवस्य प्रभोरत्यनुग्रहवशात् स्वरूपात्मकभजनानन्ददित्सायां तत्कृत आविर्भावो भवत्येव। आविर्भावस्य भगवदधीनत्वज्ञापनायास्य तत्र कर्तृत्वं नोक्तम्। ननूक्तं 'न स पुनरावर्तत' इत्यादिश्रुतिविरोधः कर्माभावश्च बाधक इत्यत आह स्वेनेति। स्वशब्दोऽत्र भगवद्वाची। तथा च भगवत्स्वरूपबलेनैवाविर्भावइत्यर्थः।एवं सत्युक्तश्रुतिर्मर्यादामार्गविषयिणीतिनविरोध इति भावः। तेषामिह प्रपञ्चे न पुनरावृत्तिरस्तीति हि श्रुतिराह। लीलायाःप्रपञ्चा-

भाष्यप्रकाशः।

दन्तरित्येव युक्तमिति प्राप्ते तथेत्यर्थः। सिद्धान्तं व्याकुर्वन्ति सम्पद्येत्यादि। ब्रह्म सम्पद्येति। द्वितीयपादोक्तरीत्या वागादीनां प्राणानां ब्रह्मणि लयोत्तरं, 'ब्रह्मवेद ब्रह्मैव भवति', 'ब्रह्मैव सन् ब्रह्माप्येती'ति श्रुत्या ब्रह्मणा सहैकीभावं प्राप्य । आविर्भाव इति। स्वस्य ब्रह्मभिन्नतयानुभवविषयत्वयोग्यता। अस्य तत्र कर्तृत्वं नोक्तमिति। जीवस्याविर्भावे कर्तृत्वं नोक्तम्। स्वेनेति पदमवतार्य व्याकुर्वन्ति नन्वित्यादि । भगवत्स्वरूपबलेनैवाविर्भाव इति। छान्दोग्ये भूमविद्यायां 'तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण' इत्याद्युपक्रम्य, 'आत्मत आविर्भावतिरोभावावात्मतोऽन्न'मित्यादिश्रावणात्तस्य ब्रह्मसम्पन्नस्यापि ब्रह्मस्वरूपबलेनैवाविर्भावः । एवं हेत्वन्तरकथनेन कर्माभावात्मकमाविर्भावबाधकं परिहृतम्। एतेनैवापुनरावृत्तिश्रुतिविरोधोपि परिहृत इत्याहुः एवं सतीत्यादि । न विरोध इति । विषयभेदान्न विरोधः । ननु तर्हि पुष्टिमार्गस्य मर्यादामार्गापेक्षया जघन्यत्वापत्तिरित्यत आहुः तेषामिहेत्यादि । यद्यपि 'न स पुनरावर्तत' इति श्रुताविह नेति विशेषो न श्रूयते, तथापि पञ्चाग्निविद्यायामक्षिपुरुषविद्यायां च 'तेषामिह न पुनरावृत्तिरस्ती'ति, 'इमं मानवमावर्तं नावर्तन्त' इति च यथायथं श्रावणादस्मिन् लौकिके प्रपञ्चे पुनरावृत्त्यभावमाह, न तु नित्यायां भगवल्लीलायामपीति श्रुतिविरोधाभावाच्च पुष्टिमार्गे कथमनावृत्तिसिद्धिरित्यतो हेतुं वदती-

रश्मिः।

ब्रह्मवेदेति। आरण्ये सह वै पन्नायामस्ति। ब्रह्मैवेति। शारीरकब्राह्मणेस्ति। ब्रह्मवेद अक्षरब्रह्मवित्। ब्रह्म परं ब्रह्म भक्त्या भवति तदैक्यं प्राप्नोति। मतान्तरे आवरणभङ्गद्वारा ब्रह्माक्षरमेव भवति। आत्मकामः आत्मभक्तिमान् ब्रह्मैव सन् साधनैर्जीवन्मुक्तः सन् 'नैव किञ्चित्करोमीति युक्तो मन्येत तत्त्ववि'दित्युक्त्वा 'इन्द्रियाणीन्द्रियार्थेषु वर्तन्त' इति भाष्योक्तगीतायाः 'मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थिति'रित्येकादशे मुक्तिलक्षणम्, तल्लक्षितः । मतान्तरे वेदान्तविज्ञानेन । अकामो निष्कामः आप्तकाम आत्मकाम इत्युक्तरूप ब्रह्मैव सन् ब्रह्माप्येति प्राप्नोति। देहाद्यावरणविच्छेदापेक्षयाप्येतीवेत्युपचर्यते। नित्यप्राप्तत्वादेवेत्यर्थः । ब्रह्मणेति । परब्रह्मणा । भाष्ये प्रभोरत्यनुग्रहेति। अनुग्रहेण भक्त्या पुरुषोत्तमप्राप्तिर्जातैव, पुनरनुग्रहो व्यर्थ इत्यतिशब्दः। 'भजतां भगवान्मुकुन्दो मुक्तिं ददाति कर्हिचित्स्म न भक्तियोग'मित्यदेयभक्तिकारणमुक्तम्। स्वरूपेत्यादिनाऽदेयभक्तिरूपमानन्दफलसहितमुक्तम्। इच्छाधीनत्वज्ञापनाय दित्साशब्दः। ब्रह्मभिन्नतयेति। भेदेपि तादात्म्यरूपाभेदोस्त्येवेति न स्वगतं द्वैतम्। लक्षणन्तु विद्वन्मण्डने प्रपञ्चितमेव। हेत्वन्तरेति। हेतुः शब्दादिति। तदन्यो हेतुः स्वेनेति। हेतौ तृतीयेति । तस्य कथनेन। परिहृतमिति । वेदे कर्मणो जगज्जन्मादिकर्तृत्वं गुरुत्वमीश्वरत्वं चेति, 'आत्मतः प्राण' इत्यत्रात्मपदवाच्यत्वात्तस्य चोक्तत्वात्परिहृतम्। एतेनैवेति। स्वेन पदेनैव। एवं सतीत्यादीति। उक्तेति। 'न स पुनरावर्तत' इति श्रुतिः। विषयभेदादिति। पुष्टिमर्यादाविषयभेदात्। तर्हीति। पुष्टिमार्गस्यावृत्तिविशिष्टत्वकाले । मर्यादेति । अनावृत्ति-

तीतत्वात् तत्राविर्भावस्यनिषेधाविषयत्वादपि न विरोधः।अत्र प्रमाणाकाङ्क्षायामाह शब्दादिति । 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते'ति श्रुतिः पुरुषोत्तमेन सह सर्वकामभोगं वदति। स च न विग्रहं विना सम्भवतीति श्रुतिबलादेव तथा मन्तव्यमित्यर्थः ॥ १ ॥

हेत्वन्तरमाह ।

## मुक्तः प्रतिज्ञानात् ॥ २ ॥

अत्रोपक्रमे 'ब्रह्मविदाप्नोति पर'मिति वाक्येन परप्राप्तिलक्षणां मुक्तिं प्रतिज्ञाय हि तद्विवृतिरेव 'सोऽश्नुत' इत्यादिना क्रियते। तेन पुष्टिमार्गीयमुक्तिरूपत्वमेव तस्याशनस्य सिध्यति, अतोऽपि हेतोस्तदाविर्भावस्य न लौकिकत्वम्, न चावृत्तिरूपत्वमित्यर्थः ॥ २ ॥

---

भाष्यप्रकाशः ।

त्याशयेन अवतारयन्ति अत्रेत्यादि । व्याकुर्वन्ति सोऽश्नुत इत्यादि । तथा च पुरुषोत्तमे अक्षरापेक्षया परत्वस्य मुण्डके श्रावितत्वादक्षरे भगवद्धामत्वस्यापि तत्र श्रावणात् तैत्तिरीये प्रजारूपत्वस्यापि श्रावणात्तस्य लीलास्थानतायामत्रोक्तौ भोगोऽक्षरे सिध्यति । भोगश्च विग्रहमन्तरेणानुपपद्यमानो विग्रहमाक्षिपतीति भोगबोधकवाक्यरूपः शब्द एवात्र तदाविर्भावे प्रमाणमित्यर्थः ॥ १ ॥

मुक्तः प्रतिज्ञानात् ॥ २ ॥ सूत्रमवतारयन्ति हेत्वन्तरमाहेति । ननु ब्रह्मसम्पत्तिरेव मुक्तिरिति सम्पन्नो मुक्तः, आविर्भावस्तु विभागे सति व्युच्चारणाद् भवति । तथा सति सृष्ट्यादाविव बन्ध एव सम्भावित इति कथमाविर्भावस्य मुक्तिकोटौ प्रवेश इत्याकाङ्क्षायां अत्र भगवतः सकाशाद्विभज्य यो जीवस्याविर्भावस्तस्यालौकिकत्वेऽनावृत्तिरूपत्वे चैतत्प्रकरणोक्तं हेत्वन्तरमाहेत्यर्थः । व्याकुर्वन्ति अत्रेत्यादि । परप्राप्तिलक्षणामिति । ब्रह्मविदः परप्राप्तिलक्षणाम् । तथा च प्रतिज्ञानादुक्तवाक्ये मुक्तेः प्रतिज्ञानाद् यस्याविर्भावः प्रतिपिपादयिषितः, स मुक्त इति सूत्रयोजना । तथा सति तस्याविर्भावस्य न लौकिकत्वम्, न चावृत्तिरूपत्वमित्यर्थः ॥ २ ॥

रश्मिः ।

साधकमर्यादामार्गापेक्षया । अत्रेति । इह लोके एवानावृत्तिसिद्धिरित्यर्थः । मुण्डक इति । 'स वेदैतत्परमं ब्रह्म धाम यत्र विश्वं निहितं भाति शुभ्रम् उपासते यत्र पुरुषं ये ह्यकामास्ते शुक्रमतिवर्तन्ति धीराः ॥' इत्यत्र यत्रेत्यस्य परमे ब्रह्मणि धाम्नीत्यर्थात् । 'दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः पर' इत्यत्र वा । परपदघटितत्वात् । पूर्वाधामत्वश्रावणे । तैत्तिरीय इति । महानारायणोपनिषदि । 'अजायमानो बहुधा विजायत' इति श्रुतेः । पूर्वैकवाक्यतया प्रजारूपः पुरुषः ॥ १ ॥

मुक्तः प्रतिज्ञानात् ॥ २ ॥ हेत्वन्तरमिति । शब्दाद्धेतोरन्यत् । आप्नोति परमिति प्रतिज्ञारूपं हेतुम् ॥ २ ॥

ब्राह्मेण ब्रह्मसम्बन्धिना ब्रह्मणा भगवतैव स्वभोगानुरूपतया सम्पादितेन सत्यज्ञानानन्दात्मकेन शरीरेण पूर्वोक्तानश्नुत इति जैमिनिराचार्यो मनुते । तत्र हेतुः, उपन्यासादिभ्य इति । 'ब्रह्मविदाप्नोति पर'मिति ब्रह्मविदः परप्राप्तिं प्रतिज्ञाय तदर्थस्यैवोपन्यासोऽग्रिमयर्चा क्रियते, 'सोऽश्नुत' इत्यादिना । तथा च परप्राप्तेर्मुक्तिरूपत्वात् पुष्टिमार्गीयायास्तस्या एवंरूपत्वादक्षरब्रह्मणः पुरुषोत्तमायतनरूपत्वात्तदात्मकमेव शरीरं तस्य वक्तुमुचितम्, न तु प्राकृतम् । एतद्बोधनायैवाग्रेऽन्नमयादीनि विभूतिरूपाण्युक्तानि । भक्तशरीरे प्रतीयमानानामर्थानां

---

भाष्यप्रकाशः ।

वक्ष्यमाणविचार आरभ्यते इत्यर्थः । पूर्वपक्षार्थः स्फुटः । सिद्धान्तं व्याकुर्वन्ति ब्राह्मेणेत्यादि । ब्रह्मसम्बन्धिनेत्यस्य विवरणं ब्रह्मणेत्यादि शरीरेणेत्यन्तम् । उपन्यासादिभ्य इति । उप समीपे न्यासः कथनं विवरणमिति यावत् स आदिर्येषाम्, तद्गुणसंविज्ञानः, ते उपन्यासादयस्तेभ्यः । तदेतद्विवृण्वन्ति ब्रह्मविदित्यादि । एवंरूपत्वादिति । सर्वकामाशनरूपत्वात् । ननु ब्रह्मभावं विना मुक्त्यभावाज्जाते च तस्मिन् व्यापकत्वादिवदानन्दाविर्भाववच्च पूर्वसिद्धाकारस्याप्याविर्भाव उपन्यासश्रुतेरप्युपपत्तौ भोगार्थं ब्राह्मशरीरस्याङ्गीकारो न प्रामाणिक इत्यत आहुः एतदित्यादि । शरीरस्याक्षरात्मकत्वबोधनायैव ऋगुक्तोपन्यासानन्तरमन्नमयादीनि विभूतिरूपाणि पुरुषविधत्वेन ब्रह्मत्वेनोपास्यत्वेन चोक्तानि । तस्य फलं भक्तशरीरे प्रतीयमानानामर्थानां पृथिव्यादीनां गन्धादीनां च विभूतिरूपत्वेन ब्रह्मात्मकत्वं तेन कथनेन

रश्मिः ।

सम्पादयतीति ब्राह्मं शरीरम् । अन्येभ्योपीति डः । यावदिति । नितरां क्षेपः विवरणस्यैवेतिभावः । तद्गुणेति । उपन्यासादिभ्य आक्षिप्तेन ब्राह्मेण शरीरेण पुरुषोत्तमेनैव सर्वान्कामानश्नुत इति सूत्रार्थादाक्षेपे विशेष्यान्वयिन्युपन्यासस्याप्यन्वयाद्धेतुत्वेन विशेष्यान्वय्यन्वयित्वरूपतद्गुणसंविज्ञानलक्षणादिना तद्गुणसंविज्ञानो बहुव्रीहिः । त इति । विवरणार्चि परप्राप्तिलक्षणार्थस्योपन्यासः । आदिपदोक्तं ब्रह्मणो निर्गुणत्वं विवर्यविवरकर्ग्विभागश्च उपन्यासप्रतिपादक 'मुक्त' इति सूत्रादग्रिमसूत्रद्वयाच्चोक्तास्ते उपन्यासब्रह्मनिर्गुणत्वविवर्यविवरकर्ग्विभागा इत्यर्थः । यद्वात्रायमुपलक्षितोर्थः ते उपन्यासाऽन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया इत्यर्थः । ब्रह्मविदितीति । ब्रह्मविदित्यादीति वक्तव्ये तत्पर्यायोपन्यासोऽयम् । तेन शरीरप्राप्तेरित्यादिभाष्यस्य आक्षेपलभ्यत्वेपि शरीरप्राप्तेः मुक्तौ रूपं यस्या इत्येवं मुक्तिरूपत्वं तस्मादित्यर्थः । पूर्वसिद्धेति । 'अविप्रणाशः सर्वेषां कर्मणामिति निश्चयः । कर्मजानि शरीराणि तथैवाकृतयो नृपे'ति वाक्यात् सूक्ष्मस्य । उपन्यासश्रुतेर्ब्रह्मविदाप्नोतीति श्रुतेः । ब्राह्मशरीरस्येति । सच्चिदानन्दात्मकस्य । उक्तानीति । ब्रह्मवित्प्रपाठके । भक्तशरीरइत्यादिभाष्यं विवृण्वन्ति स्म तस्य फलमिति । ब्रह्मात्मकत्वमिति । जगतो ब्रह्मात्मकत्वेपि पुनर्ब्रह्मात्मकत्वविधानमलौकिकेपि देहे 'आश्चर्यो वक्ते'ति काठकात्पृथिव्यादीनां तन्मात्राणां गन्धादीनां कथनम् । आश्चर्य आश्चर्यवान् आश्चर्यशब्दादर्शआद्यच् । 'आश्चर्यवत्पश्यति

विभूतिरूपत्वेन ब्रह्मात्मकत्वं तेन साधितं भवति । इदमेवादिपदेन बहुवचनेन च ज्ञाप्यते एतदानन्दमयाधिकरणे प्रपञ्चितम्, अतो नात्र पुनरुच्यते । यत्र कर्मवादी जैमिनिरेवं मनुते, तत्रान्येषामेवमङ्गीकारे किमाश्चर्यमिति ज्ञापनाय तन्मतोपन्यासः कृतः ॥ ५ ॥

भाष्यप्रकाशः ।

साधितं भवति । इदं श्रौतमुपपादनमेव आदिपदबहुवचनाभ्यां ज्ञाप्यत इत्यर्थः । प्रपञ्चितमिति । 'तन्निरूपकस्यापि तत्तुल्यफलत्व'मित्यनेन वर्णकान्तरेण च प्रपञ्चितम् । तथा चाग्रेऽन्नमयादिनिरूपणबलादेवमुच्यते, अतः सृष्ट्यादौ यो भगवदाकारस्तिरोहितः, तस्यैवैवमाविर्भावेपि दित्सितफलानुभवयोग्यरूपेणाविर्भावादुक्तप्रकारकस्थूलरूपस्यैवाविर्भावान्नाप्रामाणिक इति भावः । इदमेव 'स्वरूपेणावतारेणे'ति सार्धेन पुष्टिप्रवाहमर्यादाग्रन्थ उक्तम् । एवञ्च जीवस्य व्यापकत्वादिषु भगवद्धर्मेष्वानन्दे चाविर्भूते सच्चिदानन्दात्मके देहेऽक्षरात्मके सम्पन्ने यो लीलारसानुभवः, स निरुपम इति, स एव सेवाफले, 'महान् भोगः प्रथमे विशते सदे'त्यनेनोक्त इति ज्ञेयम् । ननु मात्रवर्णिकसूत्रेऽन्नमयप्राणमययोर्बाह्याभ्यन्तरलौकिकव्यवहारकारणत्वेन लोकत्वं मनोमयस्य च वेदत्वं तद्भाष्ये प्रत्यपादीति विभूतित्वादिकथनं तद्विरुद्धमिति चेत् । न । श्रुतौ परस्मादानन्दरूपात् सृष्टिः प्रक्रान्तेति सा सृष्टिरतिरोहितानन्दा भवति । कारणस्य समन्वयात् । कार्यत्वाच्चेषत्तिरोभावोपि । अन्यथा व्यवहारभङ्गेन लीलाया असिद्धेः । एवं सति तादृश्यां सृष्टौ तत्तद्व्यवहारकारणीभूतस्य विभूतिरूपस्यैवौचित्येन तल्लौकिकवैदिकव्यवहारे कारणपदेन तस्यैव सूचनाविरोधात् । मतकथनप्रयोजनमाहुर्यत्रेत्यादि ॥ ५ ॥

रश्मिः ।

कश्चिदेनमाश्चर्यवद्वदति तथैव चान्य' इति गीता । इदमेवेति भाष्यविवरणम् । इदं श्रौतमिति । आदिपदेति । सौत्राभ्याम् । एवमुच्यत इति । अन्नशरीरं स्थूलमुच्यते । भगवदाकारेति । मुक्तस्य भगवता दत्त आकारः तिरोहितः । उक्तप्रकारकेति । भक्तशरीर इत्यादिभाष्योक्तप्रकारकस्थूलरूपस्य । आश्चर्यमुक्तमेव । पुष्टिप्रवाहेति । ननु पुष्टिप्रवाहमर्यादाग्रन्थस्य बादरायणमतानुसारित्वाज्जैमिनिमतानुसन्धानं कुत इति चेन्न । वेदाविरुद्धमतत्वात् । 'जैमिनीये च वैयासे न विरोधोस्ति कश्चने'ति वाक्यात् । वेदविरोधो नास्तीत्यर्थः । सच्चिदिति । आनन्दोऽत्र गणितानन्दः अक्षरात्मक इति विशेषणात् । सेवाफल इति । आशङ्कासमाधाने पुष्टिप्रवाहमर्यादाग्रन्थवत् । प्रक्रान्तेति । 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त' इति । कारणस्येति । अतिरोहितानन्दस्य सच्चिद्भ्यामतिरोहितानन्दस्य । आनन्दमीमांसानुकारकलीलानुरोधात्फलेप्याहुः कार्यत्वादिति । ईषत्तिरोभावेऽपि समन्वयादिति पूर्वेण सम्बन्धः । व्यवहारेति । कार्यकारणव्यवहारभङ्गेनेत्यर्थः । तादृश्यामिति । नित्यलीलास्थायां शब्दसृष्टौ । लौकिकेति । मात्रवर्णिकसूत्रोक्तलौकिकवैदिकव्यवहारे । कारणेति । अन्नेणेत्यत्र हेतौ तृतीयया अन्नेणेतिपदेन । यद्वा मात्रवर्णिकसूत्रीयकारणपदेन । तस्यैवेति । विभूतिरूपस्यैव कार्यत्वेन सूचनेनाविरोधस्तस्मात् । यत्रेत्यादि । अन्येषामिति । बादरिकाशकृत्स्नादीनाम् ॥ ५ ॥

## चिति तन्मात्रेण तदात्मत्वादित्यौडुलोमिः ॥ ६ ॥

'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवं वा अरे अयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघनं' इति श्रुतौ घनपदेन ज्ञानात्मकविग्रहात्मत्वं ब्रह्मणो बोध्यते, अन्यथा न वदेत्, प्रयोजनाभावात् । तथा च तादृशेन सह भोगकर्त्रा तादृशेनैव भाव्यमिति, चिति चिद्रूपे ब्रह्मणि, तन्मात्रेण चिन्मात्रेण रूपेण कामान् भुङ्क्ते, न तु विग्रहेण । श्रुतौ जीवस्य तथात्वस्यानुक्तेः । पूर्णानन्दत्वाद्भगवतस्तत्सम्बन्धेन तदानन्दाननुभवतीत्यर्थः सम्पद्यते । चिदात्मत्वं जीवस्य यतो नैसर्गिकमित्यौडुलोमिराचार्यो मनुते 'अशरीरं वा वे'तिश्रुतिरेतादृशान्यविषयिणीति ज्ञेयम् । मुक्तिदशायां तदनुभवस्य भगवदिच्छाविषयत्वाभावान्न तथा । तथा चैतद्देतज्जातीयकानन्दानुभवोऽस्य भवत्विति भगवदिच्छैव श्रुतौ कामशब्देनोच्यते ॥ ६ ॥

---

### भाष्यप्रकाशः ।

चिति तन्मात्रेण तदात्मत्वादित्यौडुलोमिः ॥ ६ ॥ व्याकुर्वन्ति स इत्यादि । न वदेदिति । घनपदं न वदेत् । तथात्वस्येति । विग्रहवत्त्वस्य ।

अन्ये तु चितितन्मात्रेणेत्येकं पदमङ्गीकुर्वन्तश्चिन्मात्रेणाविर्भवतीत्यर्थमाहुः । तन्मते इक्प्रत्ययान्तस्य चितिपदस्य धातौ शक्तेस्तदर्थे लाक्षणिकत्वं तत्पदव्यर्थता च ।

भास्कराचार्यास्तु चैतन्यसन्मात्रेणेत्यर्थमाहुः । तन्मते तत्पदवैयर्थ्यं न भवतीति पूर्वापेक्षया तत्सम्यगिति बोध्यम् ।

नन्वशरीरस्य प्रियाप्रियभोगः श्रुत्या निषिध्यते, न तु सशरीरस्य, 'न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ती'ति श्रुतेस्तस्य का गतिरित्यत आहुः अशरीरमित्यादि । 'अशरीरं वा व सन्तं प्रियाप्रिये न स्पृशत' इति श्रुतिस्तु प्रियपदस्याप्रियपदसमभिव्याहाराद्देतादृशान्यविषयिणी एतादृशाद्भगवदानन्दादन्यो यो दुःखसम्भिन्न आनन्दस्तद्विषयिणीति न तद्विरोध इत्यर्थः । तत्र हेतुमाहुः मुक्तीत्यादि । तदनुभवस्येति । दुःखसम्भिन्नसुखानुभवस्य । तर्हि सुखे वैजात्याभावात् 'कामानि'ति बहुवचनस्य का गतिरित्यत आहुः तथा चेत्यादि । तथा च तादृगिच्छानुभवे तदिच्छाविषयस्यानन्दस्याप्यनुभवश्चिन्मात्रेणैव रूपेण, न तु तत्र विग्रहस्याप्यपेक्षेति औडुलोमेर्मतमित्यर्थः । एतेन 'चैत्यस्य तत्त्वममलं मणिमस्य कण्ठ'इत्यादि व्याख्यातं ज्ञेयम् ॥६॥

### रश्मिः ।

चिति तन्मात्रेण तदात्मत्वादित्यौडुलोमिः ॥ ६ ॥ इक्प्रत्ययान्तस्येति । इक्श्तिपौ धातुनिर्देश इति सूत्रविहितेक्प्रत्ययान्तस्य । तदर्थे इति । धात्वर्थे संज्ञाने । चिती संज्ञाने संज्ञानं धात्वर्थः । दुःखसम्भिन्नेति । दुःखमिश्रः । भाष्ये । तथेति । एतादृशान्यविषयिणी । कामानिति । 'सोश्नुते सर्वान्कामा'निति श्रुतौ । तादृगिति । कर्मपदवाच्येच्छानुभवे । इच्छावानहमित्याकारके । इच्छायाः सविषयत्वनियमादाहुः तदिच्छेति । अनुभव इति आनन्दविषयकेच्छावानहमिति । चिन्मात्रेणेति । एवकारोप्यर्थे । अपरिगर्ह्यायाम् । सच्चिदानन्दत्वाद्ब्रह्मणः अंशद्वयत्यागाद् गर्हा । व्यासगृहीतत्वाद्गर्हितस्य प्रयोजनमाहुः एतेन चैत्यस्येति । प्रकृते द्वादशस्कन्धीयम् । तथा च भगवत्स्मारकैकदेशे तन्मतमिति भावः ॥ ६ ॥

## एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ॥ ७ ॥

परमाचार्यो बादरायणस्तु नैवं मनुते । 'ब्रह्मविदाप्नोति पर'मित्यस्योपन्यास एवमपि विग्रहवत्त्वेनापि कृतो यतः । तथाहि । 'यो वेद निहितं गुहाया'मित्यत्र गुहाया उक्तत्वात्तस्या विग्रह एव सम्भवात् । किञ्च । प्रथमान्तोपस्थितत्वेन 'प्राप्नोती'त्युक्त्या च ब्रह्मविदः परप्राप्तौ स्वातन्त्र्यं ज्ञाप्यते । तदेव 'ब्रह्मणा सहे'ति

---

भाष्यप्रकाशः ।

एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ॥ ७ ॥ सिद्धान्तं व्याकुर्वन्ति परमेत्यादि । एवमिति । औडुलोम्युक्तरीत्या । उपन्यासादिति हेतुं व्याकुर्वन्ति ब्रह्मेत्यादि । तथा च यदि तन्मात्रेणैव भोगः श्रुत्यभिप्रेतः स्यात्, तदा विग्रहवत्त्वेनोपन्यासो न क्रियेत । यत एवमतो न चिन्मात्रमतं साधीय इत्यर्थः । नन्वत्र विग्रहाश्रवणात् कथं तथोपन्यासोऽङ्गीक्रियत इत्यतस्तदुपपादयन्ति तथाहीत्यादि । तस्या इति । गुहायाः । तथा चात्र ब्रह्मवित्पदेनापरोक्षब्रह्मज्ञानवानुच्यते, तस्याशरीरत्वे तद्व्याख्यानभूतर्क्पूर्वार्धे गुहापदं न वदेत् । न च तत्र साधनदशापन्नस्यैव विग्रह उच्यत इति वाच्यम् । 'यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्येव भवती'तिवदवस्थाभेदगमकपदाद्यभावात् । 'वेदे'ति 'अश्नुत' इति च समानकालबोधकपदविरोधापातात् कामभोगस्य विग्रहतन्त्रत्वात्तदभावे, 'सोऽश्नुत' इत्यादिनोक्तस्य फलस्य विरोधापत्तेश्च । अतो गुहापदव्याकोपात्तदुक्तो भक्तविग्रहाभावपक्षोऽसङ्गत इत्यर्थः । उत्तरार्धमादाय युक्त्यन्तरमाहुः किञ्च प्रथमेत्यादि । तथा चौडुलोमिमते कामपदव्याकोपाऽ-

रश्मिः ।

एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ॥ ७ ॥ ब्रह्मेत्यादीति । यत इति । यत्तदोर्नित्यसम्बन्धात्तस्मादुपन्यासादित्यर्थः । विग्रहवत्त्वस्याक्षेपलभ्यस्यास्पष्टत्वात्स्पष्टयन्ति स्म तथाहीत्यादि । अतो विग्रहवत्त्वमाक्षिप्यत इति भावः । तथा चात्रेति । अत्र श्रुतौ । ब्रह्मवित्पद इति सप्तम्यन्तम् । अपरोक्षब्रह्मज्ञानवान्नोच्यत इति नशब्दान्वयः । तस्य शरीरत्व इति । तस्य ब्रह्मविदः । 'तस्यैष आत्मा वृणुते तनुं स्वा'मिति पाठे वृणुतेः प्रकाशार्थत्वाभावात्तस्य वृतभक्तस्य एष आत्मनोप्यात्मा तं स्वां स्वीयां तनुं तनुत्वेन वृणुते सम्भजते इत्यर्थाच्छरीरत्वे । न वदेदिति । शरीरे नित्यलीलायां निहितत्वादधिकरणान्तरं न वदेत् । तस्याशरीरत्व इति पाठे अतो ब्रह्मवित्पदेऽपरोक्षज्ञानवान्नोच्यत इति भावः । तत्रेति । 'ब्रह्मविदाप्नोति पर' मित्यादिश्रुतौ । एवेति । फलदशायोगव्यवच्छेदक एवकारः । अवस्थाभेदेति । जीवदवस्थामरणावस्थाभेदगमके भवति प्रेत्यपदे दृष्टान्ते तद्दार्ष्टान्तिके साधनदशाफलदशाभेदबोधकपदाद्यभावात् । आदिना वाक्यम् । समानकालेति । वर्तमानकालत्वेन समानकालस्तस्य बोधकपदयोर्विरोधस्यापातात् । विरोधापातस्तु साधनदशापन्नस्यैव ब्रह्मविदो ग्रहणे भवति । तदुक्त इति । औडुलोम्युक्तः । उत्तरार्धमिति । ऋगुत्तरार्धं सोऽश्नुत इत्यादि । युक्त्यन्तरमिति । युक्तिर्विग्रहवत्त्वे । यदि विग्रहो न स्याद्बहोक्तिर्न स्यादिति । अन्या युक्तिः । यदि विग्रहो न स्यात्कामा न स्युरिति । इदं युक्त्यन्तरम् । किञ्च । प्रथमेत्यादीति । प्रथमान्तं ब्रह्मवित्पदं तेनोपस्थितत्वम् । ब्रह्मविदोर्थस्य तेनेत्यर्थः । स्वातन्त्र्यमिति । स्वतन्त्रः कर्तेति सूत्रात् । तदेवेति । स्वातन्त्र्यमेव ब्रह्मणा सह स कर्ता स्वतन्त्रः । पूर्वोक्त इति विवरणच्युपन्यस्तम् । तेनेत्यादि । नेन सहार्थकतृतीयान्तब्रह्मपदेन स इत्युक्तभक्तवाचकपदान्वशन-

पदेनोपन्यस्तम्। तेन ब्रह्मणोपि तत्समानक्रियावत्त्वं ज्ञाप्यते, परन्त्वप्राधान्येन। तथा च भक्तस्यैव कामा वक्तुमुचिताः, ते च न विग्रहं विना सम्भवन्ति। किञ्च। 'विपश्चिते'ति विशेषणेन विविधं पश्यचिद्रूपत्वमुच्यते। कामभोगोक्तिप्रस्ताव एतदुक्त्या तदुपयोग्येव सर्वं वाच्यम्। एवं सति भक्तविविधभावान् पश्यति, स्वयं भोगचतुरश्चेत्युक्तं भवति। एतेनापि भक्तविग्रहः सिध्यति। ननु विग्रहस्यागन्तुकत्वेन लौकिकत्वादलौकिकेन ब्रह्मणा भोगो विरुद्ध इत्यत आह पूर्वभावादिति। भक्तप्राप्तेः पूर्वमेव भगवदिप्सितभोगानुरूपविग्रहाणां सत्त्वान्न विरोधः। किञ्च। उक्तश्रुतिसूत्रैः पुरुषोत्तमेन सह भक्तस्य कामभोगो निरूपितः। स यावताऽर्थेन विना नोपपद्यते, तावान् स श्रुत्यभिमत इति मन्तव्यम्। तथा च ब्रह्मसम्बन्धयोग्यानि शरीराणि नित्यानि सन्त्येव। यथानुग्रहो यस्मिन् जीवे, स तादृशं तदाविश्य भगवदानन्दमश्नुत इति सर्वमवदातम्॥ ७॥

---

भाष्यप्रकाशः।

निवृत्तेस्तदयुक्तमित्यर्थः। विपश्चित्पदेनापि तत् साधयन्ति किञ्चेत्यादि। एतेनेति। भक्तविग्रहाभावेऽनुपपद्यमानेन भोगचातुर्यबोधकविपश्चित्पदेन। हेत्वन्तरमवतारयन्ति नन्वित्यादि। व्याकुर्वन्ति भक्तेत्यादि। भक्तप्राप्तेरिति। भक्तस्य भगवत्प्राप्तेः। न विरोध इति। आगन्तुकत्वलौकिकत्वाभ्यां कृतोपि चिन्मात्रत्वब्राह्मशरीरवत्त्वयोर्विरोधो न। तथा चैतैर्हेतुभिर्विग्रहवत्त्वस्याविरोधं मन्यत इत्यर्थः। सिद्धमाहुः किञ्चेत्यादि। सन्त्येवेति। पुत्तलिकावद्भगवन्मन्दिरे भगवद्धर्मात्मकानि सन्त्येव। आविश्येति। अयं मम देह इत्यभिमानं कृत्वा। तथा च श्रुतार्थापत्तिसिद्धत्वान्नात्र सन्देह इत्यर्थः।

ननु सूत्र एतद्बोधकपदाभावादेतस्यैतद्विषयवाक्यत्वं कथमवगन्तुं शक्यत इति चेत्।

रश्मिः।

क्रियान्वयिना ब्रह्मणोऽपि भक्तसमानाशनक्रियावत्त्वं ज्ञाप्यते। अप्राधान्येनेति। 'सहयुक्तेऽप्रधान' इति पाणिनिसूत्रात्। सिद्धमाहुस्तथा चेति। औडुलोमिमतेऽयुक्ते योग्यं तमाहुः तथा चेति। विग्रहं विना कामपदव्याकोपानिवृत्तेरौडुलोमिमतमयुक्तम्। तत्साधयन्तीति। शरीरं साधयन्ति। किञ्चेत्यादीति। स्वयमिति। तेन 'सूर्यो विपश्चिन्मनसा पुना'त्वित्यत्र सूर्ये विपश्चित्त्वं भगवदीयं बोध्यम्। हेत्वन्तरमिति। हेतुरुपन्यासः हेत्वन्तरं पूर्वभावः। भक्तस्येति। रसान्तःपाती भक्तोऽपि भगवानिति सामर्थ्यसत्त्वान्न समासानुपपत्तिः। विरोधो नेति। आगन्तुकत्वेन चिन्मात्रत्वस्य लौकिकत्वेन ब्राह्मशरीरवत्त्वस्य यः सहानवस्थानलक्षणो विरोधः स न। तथा चैतैरिति। एते जैमिनिप्रभृतयः बादरायणश्च हेतुभिरुपन्यासादियुक्त्युपन्यासपूर्वभावैः। मन्यत इति। बादरायणो मन्यतेऽन्ये मन्यन्त इति वचनविपरिणामेनान्वयः। किञ्चेत्यादीति। स इति। सोऽर्थः। तदिति। शरीरम्। अश्नुते अश्नातीत्यर्थः। सर्वमिति। सगुणत्वेपि निर्गुणत्वम्। लीलायामात्मगुणाः सत्त्वादय इति सर्वं पूर्वोक्तं निर्दोषमित्यर्थः। सिद्धमाहुः तथा चेति। आक्षेप्यविग्रहे सिद्धे सति। ब्रह्मविच्छ्रुतौ श्रुतो यः कामभोगो गुहा चार्थस्तस्यापत्तिरापादनम्। यदि विग्रहा न स्युः कामभोगो गुहा च श्रुतो न स्याद् यतः श्रूयतेतो विग्रहा इति श्रुतार्थापत्तिसिद्धत्वान्नात्राप्राकृतशरीरे सन्देहः। प्राकृतेन शरीरेण युक्तः उताप्राकृतेनेति सन्देहो नेत्यर्थः। श्रुतार्थापत्तिरुक्ता पूर्वम्। एतद्बोधकेति।

भाष्यप्रकाशः

अर्थबलादिति वदामः । तथाहि । अस्मिन् चरणे मुक्तस्य फलानुभवप्रकार उच्यते । मुक्तिस्तु न यावद्दुःखात्यन्ताभावमात्ररूपा, अपि तु निरवधिसुखात्मकब्रह्मप्राप्तिरूपा, तल्लोकादिप्राप्तिरूपा च । तैत्तिरीयोपनिषदि 'ब्रह्मणः सायुज्यꣳ सलोकतामाप्नोती'ति श्रुतौ द्वयोः श्रावणात् । पुराणेपि 'सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युते'ति प्रकारभेदकथनाच्च । सा च यथाधिकारं सद्यः, क्रमेण वा भवति । तत्र सद्योमुक्तावात्मकाम एवाधिकारी । 'अथाकामयमानो योऽकामो निष्काम आत्मकाम आप्तकामो भवति न तस्मात् प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते ब्रह्मैव सन् ब्रह्माप्येती'ति श्रुतेः । तादृशस्य ब्रह्मानुभवप्रकारश्चाग्रे । 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत' इति श्लोक उक्तः । स्वप्रतिज्ञानुरोधाद्याज्ञवल्क्येन सम्यङ्न विवृतः । सोऽत्र 'ब्रह्मविदाप्नोती'त्यस्य विवरणर्चि व्यक्तीक्रियते । अशनप्रकारस्य विवरणात् । अतः स चेदत्र न विचार्येत, तदा शास्त्रे न्यूनतैवापद्येत । विचारिते च तस्मिन् मुक्तौ निःसम्बोधताया निवृत्तेः सर्वास्वपि तादृशत्वमर्थादेव सेत्स्यतीति बुध्यस्व ।

रश्मिः ।

ब्रह्मविदाप्नोति परमित्यादिवाक्यबोधकपदाभावात् । एतस्योक्तश्रुतिवाक्यस्य एतदधिकरणविषयवाक्यत्वम् । **यावदिति** । एकविंशतिदुःखध्वंसो मोक्ष इति नैयायिकाः । **निरवधीति** । गणितानन्दनिवृत्त्यर्थं निरवधीति सुखविशेषणम् । सुखं च ब्रह्मविशेषणम् । ब्रह्मप्राप्तिर्मोक्ष इति 'ब्रह्मविदाप्नोति पर'मित्यत्र स्पष्टा । **सायुज्यमित्यादि** । सायुज्यं ब्रह्मप्राप्तिः संयोगरूपा ब्रह्मजीवयोर्द्रव्यत्वात् । ज्ञानरूपगुणत्वे तूभयोर्योगमात्रम् । **सलोकतामिति** । ब्रह्मलोकप्राप्त्या भवति ब्रह्मसमानलोकता । इत्यतस्तल्लोकताप्रकारभेदः । एवं स्वरूपेण व्यवस्थितिर्मुक्तिरित्येकादशस्कन्धे । **सायुज्यं सलोकतेति** । आत्मलाभवत्स्वरूपेण व्यवस्थिती भवतः । तल्लोकादीत्यत्रादिशब्दार्थमाहुः **पुराणेपीति** । **प्रकारेति** । सालोक्यं तल्लोकप्राप्तिप्रकारेषु भेदः प्रकारः । एवं सामीप्यसारूप्ये अपि तल्लोकप्राप्तिप्रकारेषु भेदौ प्रकारौ । **सार्ष्टिरलौकिकसामर्थ्यं** परिशेषात् । **एकत्वं** सायुज्यप्रकारेषु ऐक्यमोक्षब्रह्मप्राप्तिरूपेषु भेदः प्रकारस्तेषां कथनाच्च । **आत्मकाम** इति । उपनिषदि शारीरकब्राह्मणे आप्तकाम आत्मकाम इति पाठः । **सोश्नुत** इति । सम्यगश्नाति ब्रह्मानुभवं करोति । ब्रह्म गौणीभावेन कर्मीभूतं बृहत्त्वादिगुणविशिष्टं सुखदुःखसाक्षात्कारविषयं करोतीत्यर्थः । **स्वप्रतिज्ञेति** । याज्ञवल्क्यप्रतिज्ञाऽथाकामयमान इति तदनुरोधात् । **व्यक्तीति** । सामान्यप्रकारस्य विशेषप्रकाराकाङ्क्षत्वात्तथा । **अशनप्रकारस्य** विशेषस्य विवरणात् । **स चेदिति** । **समश्नुत** इति सामान्यसमशनप्रकारस्योक्तत्वात् सविशेषप्रकारश्चेद् **अत्र** फलाध्याये । **शास्त्रे** मीमांसारूपोपाङ्गशास्त्रे सन्दिग्धश्रुतिसन्देहवारके । **तस्मिन्** विशेषे प्रकारे । **निःसम्बोधताया** इति । निष्क्रान्ता सम्बोधान्निःसम्बोधा तत्ताया निवृत्तेः ब्रह्मणा सहाहं सर्वकामानश्नामीति सम्बोधात् । किम्पुनः स्थूलान् जाग्रति सूक्ष्मान् स्वप्ने सुषुप्तौ आनन्दमात्रान् कामानश्नातीति । 'लोकवत्तु लीलाकैवल्यमि'ति सूत्रात् । **सर्वास्वपीति** । मुक्तिष्वपि । **तादृशत्वमिति** । ससम्बोधत्वम् । **इति बुध्यस्वेति** । इति हेतोरेतस्यैतद् विषयवाक्यत्वं बुध्यस्व । तेनैतद्भिन्ना निःसम्बोधा । अत्र मण्डूकोपनिषद्विरोधमाशङ्क्य निषेधन्ति स्म **न च निःस्वमिति** । तथा च श्रुतिः ।

प्रज्ञानांशुप्रतानैः स्थिरचरनिकरैर्व्यापिभिर्व्याप्य लोकान् ।
भुक्त्वा भोगान्स्थविष्ठान् पुनरपि धिषणोद्भासितान् कामजन्यान् ॥

भाष्यप्रकाशः ।

न च निःसम्बोधा मुक्तिरिति युक्तम् । 'ब्रह्मैव सन् ब्रह्माप्येती'त्यत्र ब्रह्मभावोत्तरमेव मुक्तेः श्रावणात् । ब्रह्मणश्च विरुद्धधर्माश्रयतायाः उभयलिङ्गाद्यधिकरणेष्वेव निर्णयेन निर्विशेषवादस्य प्रागेव निरस्तत्वात् । ये पुनः प्रजापतिवाक्यस्थां 'एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत' इति श्रुतिं विषयवाक्यत्वेन आद्रियन्ते, तेषामपि तस्यास्तथात्वं सन्दिग्धमेव । सूत्र उपसम्पत्तिपदाभावात्, `केवलस्य सम्पद्येति पदस्य 'सता सौम्य तदा सम्पन्नो भवति सति सम्पद्य न विदुः सति सम्पद्यामह' इति सुषुप्तिविषये श्रावणात् । अत उपसम्पत्तिवाक्यस्य विषयत्वेनादरणमर्थबलादेवेति वक्तव्यम् । तथा सति तौल्यान्न पर्यनुयोगावकाशः । किञ्च 'स्वेने'ति पदस्यापि ब्रह्मवाचकत्वमेव मुख्यम् । 'स्वमपीतो भवती'-त्यादौ तथा सिद्धत्वात् । अतस्तत्रापि तथा । किञ्च । नायं नियमो यद्विषयवाक्यं सौत्र-

रश्मिः ।

पीत्वा सर्वान् विशेषान् स्वपिति मधुरभुग्मायया मोहयन्नो ।
मायासङ्ख्यातुरीयं परममृतमजं ब्रह्म यत्तन्नतोस्मि ॥ इति

उपक्रमाज्ज्ञानमार्गीयेयम् । पुनरपीत्यादिना जाग्रदवस्थामनु स्वाप्निकीं तामाहुर्माण्डूकाः । धिषणा बुद्धिः । स्वापावस्थामाहुः पीत्वेति । स्वपिति स्वापं करोति । मधुरभुक्-आनन्दभुक् । तुरीयावस्थामाहुः माययेति । नोस्मान् मण्डूकान् । मायया त्रिगुणरूपया सङ्ख्यायते सम्प्रकथ्यते तन् मायासङ्ख्यम् । न तु स्वयम् । सोऽहं । नत इति । जात्यपेक्षयैकवचनम् । ज्ञानैकत्वादेकवचनं वा । ब्रह्मैव सन् ब्रह्मभावं गतः सन् । **ब्रह्मभावोत्तरमेवेति** । न तु तूष्णीम् । एवमप्यनुवादेन मुक्तिर्निस्सम्बोधेति चेत्तत्राहुः **ब्रह्मणश्चेति** । **निर्विशेषेति** । निःसम्बोधमुक्तिसमर्पकस्य । **प्रागेवेति** । उभयलिङ्गाद्यधिकरणेष्वेव । श्रुत्यविरोधस्तु अग्रेतनश्रुत्यन्तरात् । श्रुत्यन्तरं तु ।

यो विश्वात्मा विविधविषयान्प्राप्य भोगान् स्थविष्ठान् ।
पश्चात्स्वान्यान् स्वमतिविभवान् ज्योतिषा स्वेन सूक्ष्मान् ॥
सर्वानेतान् पुनरपि शनैः स्वात्मनि स्थापयित्वा ।
हित्वा सर्वान् विशेषान् विगतगुणगणः पात्वसौ नस्तुरीयः ॥ इति

भक्तिमार्गीयेयम् । मायाऽश्रवणेन विश्वादीनां नित्यत्वस्फोरणात् । विश्वात्मना स्थविष्ठभोग-भुक्त्वा जाग्रति स्वप्ने 'अत्रात्मा स्वयंज्योतिर्भवती'ति श्रुतेः । स्वेन ज्योतिषा स्वाप्निकान् पश्चात्स्वान्यान् पश्चात्स्वान् यान् पश्चात्स्वानन्यान् प्राप्य भोगान् । सुषुप्तौ सर्वानेतानिति । स्थापयित्वा प्राज्ञः न किञ्चन संवेत्तीत्युत्तरेणान्वयः । न इति । मण्डूकान् । मण्डूकोपनिषत्त्वादन्येषामलाभाच्च । अत्र मायाऽश्रावणाच्छ्रुत्य-न्तरत्वम् । अत्रापि निःसम्बोधमुक्त्यभाव उक्तः । 'नात्मानं नापरञ्चैव न सत्यं चापि नानृतम् । प्राज्ञः किञ्चन संवेत्ति तुर्यं तत् सर्वदृक् सदा ॥ निवृत्तेः सर्वदुःखानामीशानः प्रभुरव्ययः । अद्वैतः सर्वभूतानां देवस्तुर्यो विभुः स्मृत' इति ॥ तत्सर्वदृक्पदेन सर्वविषयकज्ञानोक्तेः । भक्तिमार्गस्य काचित्कत्वादग्रे 'मायामात्रमिदं विश्वमद्वैतं परमार्थत' इति विश्वस्य मायामात्रत्वमुक्तम् । भक्तावाग्रहे तु । मायामात्रं-इन्द्रियमात्रम् । वैराग्यार्थमनृतं वेत्यर्थः । ये पुनरिति । शाङ्करादयः । श्रुतिस्तु छान्दोग्यसमाप्तावस्ति । **तथात्वमिति** । विषयवाक्यत्वम् । **उपसम्पत्तीति** । भावप्रत्ययान्तत्वेन पर्यायत्वम् । **श्रावणादिति** । छान्दोग्ये तथा । **ब्रह्मेति** । हेतुभूतब्रह्मवाचकत्वम् । **तत्रापि तथेति** ।

भाष्यप्रकाशः ।

पदानुरूपमेव ग्राह्यमिति । 'अत्ता चराचरग्रहणा'दित्यादौ तथा दर्शनाभावात् । अतोऽर्थमादाय विषयवाक्यग्रहणं नानुचितमिति दिक् ॥

यत्तु शङ्कराचार्याः, सम्पद्याविर्भावाधिकरणं त्रिसूत्रमङ्गीकृत्य, प्रथमसूत्रे 'एवमेवैष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत' इति छान्दोग्ये इन्द्रप्रजापतिसंवादस्थां श्रुतिं विषयवाक्यत्वेनोपन्यस्य, किं देवलोकाद्युपभोगस्थानेष्विवागन्तुकेन केनचिद्विशेषेण अभिनिष्पद्यते, उतात्ममात्रेणेति संशये, मोक्षस्याफलत्वप्रसिद्धेः 'अभिनिष्पद्यत' इत्युत्पत्तिपर्यायभूतशब्दप्रयोगादात्मनश्च सर्वदा विद्यमानत्वेनाभिनिष्पत्तेर्वक्तुमशक्यत्वाच्चागन्तुकेनेति पूर्वपक्षमुक्त्वा, केवलेनैवात्मना आविर्भवति, न धर्मान्तरेण । कुतः । स्वेन रूपेणाभिनिष्पद्यत इति स्वशब्दात् । अन्यथा 'स्वेने'ति विशेषणस्य वैयर्थ्यप्रसङ्गात् । न चात्मीयवाची स्वशब्द इति युक्तम् । तस्य रूपान्तरेपि तुल्यत्वेनात्र विशेषतस्तत्कथनस्य वैयर्थ्यानपायात् । अतः 'स्वेने'ति विशेषणसार्थक्यार्थं केवलेनावतिष्ठत इति सिद्धान्तं व्याख्याय, पूर्वावस्थास्विह च स्वरूपानपायसाम्ये सत्यत्र को विशेष इति शङ्कायां द्वितीये सूत्रे सर्वबन्धविनिर्मुक्तत्वरूपो विशेषः । पूर्वं जाग्रदाद्यवस्थासु, 'अन्धो भवती'ति, 'रोदितीवे'ति, 'विनाशमेवापीतो भवती'-त्यवस्थात्रयकालुष्यकथनेन बन्धाविमोकबोधनात् । तस्य मुक्तत्वं च 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामी'त्यवस्थात्रयविहीनस्यात्मनो व्याख्येयत्वेन प्रतिज्ञातस्याशरीरत्वाद्युपन्यासपूर्वकं 'स्वेन रूपेणाभिनिष्पद्यत' इत्युपसंहारात् । आख्यायिकोपक्रमे चापहतपाप्मेत्यादिमुक्तात्मविषयप्रतिज्ञानादिति व्याख्याय, तृतीयसूत्रे 'परं ज्योतिरुपसम्पद्ये'त्यनेन ज्योतिःसम्पत्तेरुक्तत्वाज्ज्योतिषश्च प्राकृतत्वात् सम्पत्तौ कथमस्य मुक्तत्वमिति शङ्कायां 'परं' 'ज्योति'रिति पदाभ्यां 'तद्देवा ज्योतिषां ज्योति'रिति श्रुत्यन्तराज्ज्योतिःशब्देन परं ब्रह्मैवोच्यते, न तु प्राकृतमतस्तत्सम्पत्तौ न मुक्तत्वभङ्गः । आत्मन एव प्रकरणदर्शनादित्याहुः । ततोऽविभागेन दृष्टत्वा'-दित्येकसूत्रमधिकरणान्तरमङ्गीकृत्य, किं मुक्तः परमेश्वराद्भेदेनावतिष्ठते, उताभेदेनेति शङ्कायामविभक्त एवावतिष्ठत इति सिद्धान्तयन्ति । ततो 'ब्राह्मेणे'त्यादित्रिसूत्रमधिकरणमङ्गीकृत्य, पूर्वाधिकरणे यदात्मरूपेण स्वेनाऽनागन्तुकेनावतिष्ठत इत्युक्तम्, तत् कीदृशमिति चिन्तायां जैमिनिस्तावद् यद् ब्राह्मं रूपम्, 'अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्प'इत्यनेन प्रागुक्तम्, तथा सर्वेश्वरत्वं सर्वज्ञत्वं च तेन रूपेणाभिनिष्पद्यत

रश्मिः ।

स्वेनेति पदेऽपि तौल्यम् । तथेति । 'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः मृत्युर्यस्योपसेचनं क इत्था वेद यत्र स' इति काठकस्थस्य विषयवाक्यस्य सौत्रपदानुरूपत्वदर्शनाभावात् । न चात्मीयेति । तदा आत्मीयेन केनचिद्विशेषेणेति स्वेन रूपेणेत्यस्यार्थः । तस्येत्यादि । तस्यात्मीयत्वस्य रूपान्तरेषु मोक्षेऽविवक्षितेषु तत्कथनस्येति । आत्मीयवाचिनः स्वेनेत्यस्य कथनस्य । इह चेति । मोक्षावस्थायां च । अपायो नाशः । अत्रेति । मुक्तौ । रोदितीवेति । स्वप्ने रोदितीव देवदत्तो न तु रोदितीति । स्वापे नाशमेवापीतोपि गतः । कालुष्यमशुद्धत्वम् । एतमिति । अवस्थात्रयविहीनम् । तत्सम्पत्तौ ज्योतिःसम्पत्तौ । तदिति । रूपम् । प्रागुक्तमिति । दहरविद्यायां प्रजापतिवाक्याद्विषयात्पूर्वमुक्तं छान्दोग्ये । तथेति । यथा प्रागुक्तं ब्राह्मं रूपम् । तथा

भाष्यप्रकाशः।

इति मन्यते। तत्र हेतुरपहतपाप्मेत्यादिनोक्त उपन्यासः, आदिपदसङ्गृहीतं 'स तत्र पर्येती'-त्यादिनोक्तं च। औडुलोमिस्तु—यद्यप्यपहतपाप्मादयः, अभेदेनैव धर्मा निर्दिश्यन्ते, तथापि शब्दविकल्पजा एवैते इति पाप्मादिनिवृत्तिमात्रं तत्र गम्यते। चैतन्यमेव तस्यात्मनः स्वरूप-मिति तन्मात्रेणैव रूपेणाभिनिष्पत्तिर्युक्ता। 'एवं वा अरे अयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवे'त्यादिश्रुत्यनुग्रहात्। सत्यकामत्वादयस्तु यद्यपि वस्तुरूपेणैव धर्मा उच्यन्ते, सत्याः कामा अस्येति, तथाप्युपाधिसम्बन्धाधीनत्वात्तेषां न चैतन्यवत् स्वरूपत्वसम्भवः। अनेकाकारत्वप्रतिषेधात्। प्रतिषिद्धं हि ब्रह्मणोऽनेकाकारत्वं, 'न स्थानतोऽपि परस्यो-भयलिङ्ग'मित्यत्र। अत एव जक्षणादिसङ्कीर्तनमपि दुःखाभावमात्राभिप्रायं स्तुत्यर्थम्। आत्म-रतिरित्यादिवत्। न हि मुख्यान्येव रतिक्रीडामिथुनान्यात्मनिमित्तानि शक्यन्ते वर्णयितुम्। द्वितीयविषयत्वात्तेषाम्। तस्मान्निरस्ताशेषप्रपञ्चेन प्रसन्नेनाव्यपदेश्येन बोधात्मनाभिनिष्पद्यत इति बादरायणस्त्वाचार्य एवमपि पारमार्थिके चैतन्यमात्रस्वरूपाभ्युपगमे व्यवहारापेक्षया पूर्वस्य पूर्व-स्याप्युपन्यासादिभ्योऽवगतस्य ब्राह्मस्यैश्वर्यरूपस्याप्रत्याख्यानादविरोधं मन्यते इत्येवं व्याचख्युः।

तत्रेदमवधेयम्। छान्दोग्य इन्द्रप्रजापतिसंवादे, य आत्मा वेद्यत्वेन प्रकृतः, स दहर-विद्योपास्य एव, देवासुरैरनुबुध्यमाने प्रजापतिवाक्ये तस्यैवापहतपाप्मत्वादिगुणकस्य प्रत्यभि-ज्ञानात्। इन्द्रविरोचनाभ्यामपि तस्यैव विवित्सया तथानुवादात्। अतः प्रजापतिरपि तमेव सर्वेषु पर्यायेषु बोधयति 'य एषोऽक्षिणि पुरुषो दृश्यत' इत्यादिना। परं त्विन्द्रविरोचनौ

रश्मिः।

सर्वेश्वरत्वमित्यादि द्रष्टव्यम्। अभेदेनेति। विशेष्यविशेषणयोरभेदान्वयो नीलो रूपमित्यादौ दृष्टमिति भावः। शब्दविकल्पेति। दर्शनेन देवदत्ते पाप्मवति पाप्मवच्छब्दवाच्येऽपहतपाप्मशब्द-प्रवृत्तौ अपहतशब्दवाच्यत्वमिति। पाप्मवच्छब्दे विकल्पो जातोऽत एतादृशशब्दविकल्पजा एवैते शब्दाः। तत्रेति देवदत्तादौ। द्वितीयेति। सप्रपञ्चविषयत्वात्। निरस्तोऽशेषप्रपञ्चो यस्मिन्। पूर्वस्य पूर्वस्येति। पूर्वभावादिति सौत्रपदार्थोऽयम्। अप्रत्याख्यानादिति, भावात्। ब्रह्मणो मुक्तात्मनः सप्रपञ्चत्वनिःप्रपञ्चत्वयोरविरोधं मन्यते। य आत्मेति। 'य आत्मापहतपाप्मा विजर' इत्यादिना। 'सोऽन्वेष्टव्यः स विजिज्ञासितव्य' इति श्रुतेर्वेद्यत्वेन प्रकृतः। देवासुरैरिति। 'तद्धोभये देवा अनुबुबुधिर' इत्यादिना। प्रजापतिवाक्ये इति। 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वा४श्च लोकानाप्नोति सर्वान्कामान्यस्तमनुविद्य विजानातीतीह प्रजापतिरुवाचे'ति वाक्ये। तस्यैवेति। दहरविद्योपास्यस्यैव। अष्टमप्रपाठकस्थत्वाद्दहरविद्योपास्येत्येवकारः। इन्द्रप्रजापति-संवादस्यापि अष्टमप्रपाठकस्थत्वम्। तत्तेदन्ताप्रकारकं ज्ञानं प्रत्यभिज्ञानं, तस्यैव दहरोपास्यस्यैव विवित्सयेति। वेत्तुमिच्छा विवित्सा तया। तथेति। तेन प्रकारेण। 'तौ होचतुर्य आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यवतो वाचो वेदयन्ते तमिच्छन्ताववास्त'मित्यनुवादात्सिद्धस्य कथनात्। टीकायां सत्यवतो वचो वचनं वेदयन्ते शिष्टा इति वाच इत्यत्र वच इति पाठः शिष्टा इति कर्तुरध्याहारः। अवास्तमिति। आवां अवास्वेति लङुत्तम-पुरुषे वक्तव्येऽवास्तमिति मध्यमपुरुषाभिधानं युवां वचनप्रजापती अवास्तमिति प्रजापतिवचना-नुकर्षणमात्रम्। वस् निवासे। भ्वा. प. अनि. विकरणव्यत्ययः, शपः लुक्। लङ्। तमेवेति।

भाष्यप्रकाशः ।

परप्राप्तिं पुरुषार्थत्वेनावगत्य तदर्थं न प्रष्टुं प्रवृत्तौ, किन्त्वपहतपाप्मादिगुणकात्मज्ञानेन सर्वकामप्राप्त्याद्यर्थम्, अतस्तदधिकारं हीनमवगत्य चित्तशुद्ध्यर्थं तप उपदिदेश, श्लिष्टप्रयोगेण चोक्तवान् । तत्र प्रथमे पर्याये 'दृश्यत' इत्यनेनार्षमेव दर्शनमभिप्रेतम् । तदेवोपपादितं 'अन्तर उपपत्ते'रित्यत्र । परमिन्द्रेण न बुद्धमिति देहमात्मानं बुद्ध्वा भयं ददर्श, 'अस्मिन्नन्धेऽन्धो भवती'त्यादि । एवं दृश्यस्याज्ञाने पुनस्तप उपदिश्य, द्वितीयेऽपि पर्याये स्वप्नसृष्टिकर्तारमुपदिदेश, 'य एष स्वप्ने महीयमानश्चरती'ति । अत्रापि 'एतं त्वेवं भूयोऽनुव्याख्यास्यामी'त्येतच्छब्देन स्वबुद्धिस्थस्यैव परामर्शात् । न त्विन्द्रबुद्धिस्थस्य । इन्द्रेण देहस्यैव पूर्वं बुद्धत्वादिति । परं त्विन्द्रेण द्वितीयेपि पर्याये स न बुद्धः, किन्तु देहाद्भिन्नो जीव एव स्वप्नद्रष्टोपदिश्यत इति बुद्धम् । स यद्यपि बाह्योपाधिदोषान्न दुष्यति, तथाप्यान्तरदोषाद् दुष्यतीति पुनस्तृतीये पर्याये समागत्य भयमुक्तवान् । तदा सुषुप्त्यधिकरणभूतं तमेव 'यत्रैतत् सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न

रश्मिः ।

दहरविद्योपास्यमेव । अन्यथा प्रक्रान्तविरोध इत्येवकारः । अवगत्येति । स सर्वांश्च लोकानाप्नोतीति श्रुतेरवगत्य । अपहतपाप्मेत्यादीति । आप्नोति सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानातीति श्रुतेस्तथा । तप उपेति । वसापराणि द्वात्रिंशतं वर्षाणि इति स हापराणि द्वात्रिंशतं वर्षाण्युवासेति । श्लिष्टेति । निवासार्थकवसतेः प्रयोगः श्लिष्टः इड्याकरणेन निवासे सन्तापः श्लिष्यते इति तेन तप उक्तवान् । लौकिकं दर्शनं कुतो नेत्यत आहुः तदेवेति यदि स्वचक्षुरधिकरणमनार्षं विवक्षितं न स्यात्तदान्तरपदं सूत्रे न ब्रूयात् । आर्षज्ञानविषयत्वादन्तरस्येति भावः । देहमात्मानमिति । 'तौ होचतुः सर्वमेवेदमावां भगव आत्मानं पश्याव' इति श्रुतेर्बुध्वा । तौ इन्द्रविरोचनौ । भगवः भगवन् हिरण्यगर्भः आत्मानं देहम् । भयं ददर्शेति । अथ 'हेन्द्रोऽप्राप्यैव देवानेतद्भयं ददर्श यथैव खल्वयमस्मिञ्छरीरे साध्वलङ्कृते साध्वलङ्कृतः' इत्याद्युक्त्वा 'एवमेवायमस्मिन्नन्धेन्धो भवती'त्यादि अग्रे 'अस्यैव शरीरस्य नाशमन्वेष नश्यति नाहमत्र भोग्यं पश्यामीति स समित्पाणिः पुनरेयाये'ति श्रुतिः । अयमिति । उदशरावे देहदर्शनानन्तरं साध्वलङ्कृतसुवसनदेहस्योदशरावे दर्शनानन्तरं शरीरान्तर्बुद्ध आत्मा । अस्मिन्नन्ध इति शरीरेन्धे आत्मान्धः । अनु एष आत्मा । अत्र भोग्यमिति । छायात्मदर्शने भोग्यं फलम् । समित्पाणिरिन्द्रः ब्रह्मचर्यं वस्तुं पुनरेयाय आगतवान् । एवं दृश्यस्येति । भोग्यत्वेन दृश्यस्यात्मनोऽज्ञाने । 'वसापराणि द्वात्रिंशतं वर्षाणी'ति श्रुतः पुनस्तप उपदिश्य । द्वितीयेति । 'य एष स्वप्ने महीयमानश्चरत्येष आत्मेति होवाचैतदमृतमभयं ब्रह्मे'ति द्वितीये पर्याये । अत्रापीति । अत्रापीत्यस्य बुद्धिस्थस्येत्यनेनान्वयः । स्वबुद्धिस्थस्येति । अन्तर्विद्यमानस्य । इन्द्रबुद्धिस्थस्य परप्राप्तिपुरुषार्थस्य । बाह्योपाधीति । देहस्यान्धस्रामवृक्णरूपदोषेभ्यः एकत्वमविवक्षितम् । आन्तरेति । अविपक्वकामक्रोधादिदोषात् । अत्राप्येकत्वमविवक्षितम् । पुनस्तृतीय इति । पुनः समागत्य भयमुक्तवान् इत्यन्वयः । द्वितीयपर्याय एव सहाप्राप्यैव देवानेतद्भयं ददर्शेत्यादिना समागत्य भयमुक्तवानित्यर्थः । तृतीयपर्याये तदापसुषुप्त्यधिकरणभूतमित्यादिरन्वयः । सुषुप्तिश्चापश्चाप्सुषुप्ती । अल्पाच्तरं पूर्वमित्यप्शब्दस्य पूर्वनिपातः । अयमस्मिन् शरीरे प्राणो युक्त इति श्रुतावप्यधिकरणभूतमत्र उक्तम् । प्राण आपोमयः 'आपोमयः प्राण' इतिश्रुतेः । तेन लिङ्गशरीरोपादानमत्र । तेन प्राणस्य जीवाधेयत्वेपि लिङ्गरूपस्याधारत्वेन सूचितमप्सु आधारत्वमत्र ज्ञेयम् । अब्रूपत्वाल्लिङ्गस्याधारत्वेनापामाधारत्वं वा । तदा सुषुप्त्यधिकरणभूतमित्येव वा पाठः । तमेवेति

भाष्यप्रकाशः ।

विजानाती'त्येवमुपदिदेश । तत्रापि सुषुप्त्यधिकरणभूतं परमात्मानं न ज्ञातवान्, किन्तु सुषुप्त्यवस्थाकं शरीरमेव ज्ञात्वा, तत्राप्यज्ञानरूपं भयं 'विनाशमेवापीतो भवती'त्यन्तेन प्रदर्श्येन्द्रः पुनरुपससाद । तदा प्रजापतिस्तमेव स्वबुद्धिस्थमुपदेष्टव्यत्वेनोपक्षिप्य इन्द्रेणावगतस्य जीवस्य सर्वकामभोगयोग्यं स्वरूपं तत्सम्पत्त्या भवतीति वक्तुं 'मघवन् मर्त्यं वा इदं शरीर'मित्यादिना शरीरस्य दुःखदत्वम्, अशरीराणां वाय्वादीनां परं ज्योतिरुपसम्पन्नानां स्वरूपप्राप्ति-

रश्मिः ।

स्वबुद्धिस्थमेव । यत्र एतत्सुप्त इति तृतीयपर्यायारम्भः । क्वचित्पुस्तके तद्यत्रैतत्सुप्त इत्यादि पाठः । समस्तः सम्यगस्तः स्वरूपे । समस्तमिति पाठे प्रागुक्तार्थ स्वप्नविशेषणम् । सम्प्रसन्नः आनन्दभुक् । सुषुप्त्यधिकरणभूतमिति । सुषुप्तिस्तु अकामो भगवान् । एवमकामरूपसुषुप्त्यधिकरणभूतं परमात्मानमित्यर्थः । अत्र श्रुतिः । 'स शान्तहृदयः प्रवव्राज । सहाप्राप्यैव देवानेतद्भयं ददर्श नाहं खल्वयमेवꣳसम्प्रत्यात्मानं जानाम्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवती'ति ॥ स इन्द्रः । भयमेवाहुः । नाहमित्यादिना । नो एवेमानि भूतानि जानन्ति । विनाशमेवेति । एवकार इवार्थे । अ इवेति पदच्छेदात् । विनाशमिव अपीतः प्राप्तो भवति । सुषुप्तौ ज्ञानाभावादात्मा नष्ट इवेति भावः । उपक्षिप्येति । 'नाहमत्र भोग्यं पश्यामीति स समित्पाणिः पुनरेयाय तꣳह प्रजापतिरुवाच मघवञ्छान्तहृदयः प्राव्राजीः किमिच्छन्पुनरागम इति स होवाच नाहं खल्वयं भगव एवꣳसम्प्रत्यात्मानं जानाम्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीत्येवमेव मघवन्निति होवाचैतं त्वेव ते भूयोनुव्याख्यास्यामि नो एवान्यत्रैतस्माद्वसापराणि पञ्चवर्षाणीति स हापराणि पञ्चवर्षाण्युवास तान्येकशतꣳ सम्पेदुरेतत्तद्यदाहुरेकशतꣳ ह वै वर्षाणि मघवान्प्रजापतौ ब्रह्मचर्यमुवास तस्मै होवाचे'त्यनयोपक्षिप्य । स इन्द्रः । नो एवान्यत्रेति । एतस्यैव भूयोनुव्याख्याने हेतुरयम् । एतस्मादन्यत्र परमात्मनि नो एव स्वबुद्धिस्थत्वम् । एकशतमिति । तानि इन्द्रब्रह्मचर्यवर्षाणि एकीकृतानि एकाधिकशतं सम्पेदुः प्राप्तानि । द्वात्रिंशतसङ्ख्या त्रिगुणीकृता षण्णवतिः पञ्चसङ्ख्या तत्र चेदेकाधिकशतं भवति। अस्याः सङ्ख्यायाः श्रुतिः। स्वमुखेनैवेतिह्यत्वं विद्यास्तुत्यर्थमाहुः । एतत्तद्यदाहुरिति । यदेतद्वृत्तं तदेतदाहुः शिष्टाः । इन्द्रेणावगतस्येति । परमात्मरूपस्य । मामेवोपास्स्वेति परमात्मनः स्वात्मरूपस्येन्द्रप्रतर्दनसंवाद उपदेशात् । तत्स्वरूपस्येति । शरीरसम्पत्त्या । इत्यादिनेति। मघवन्मर्त्यं वा इदꣳ शरीरमात्रं मृत्युनात्तं तदस्यामृतस्य शरीरस्याशरीरस्यात्मनोधिष्ठानमात्तो वै सशरीरः प्रियाप्रियाभ्यामित्यादिशब्दार्थः । अधिष्ठानं भोगाधिष्ठानम् । अशरीर आत्मा आत्तः । काभ्यामित्यत आह प्रियाप्रियाभ्यामिति । प्रियाप्रियाभ्यां आत्तो व्याप्तः । असशरीरस्य प्रियाप्रिये सम्भवतः । प्रियः प्रीतिविषयः संयोगे, अप्रीतिविषयो विप्रयोगे । एवं चासशरीर आत्मविशेषः । अकारो विष्णुः सशरीरः सन् प्रियाप्रियाभ्यां सुखदुःखाभ्यां आप्तो व्याप्तो वै प्रसिद्धम् । तथा च इत्यादिना शरीरस्य दुःखदत्वमित्यस्य प्रकाशस्य सुखदत्वोपलक्षकत्वादात्मविशेषमादायोक्तरीत्या शरीरस्य सुखदुःखदत्वम् । तदपि आत्मविशेषाय संयोगविप्रयोगदत्वम् । न च शरीरस्य दुःखदत्वमेवेति भाष्यविरोधः । श्रुत्या भाष्येप्युपलक्षणादुःखदत्वमित्यंशे । अशरीराणामिति । 'न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्त्यशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतोऽशरीरो वायुरभ्रं विद्युत्स्तनयित्नुरशरीराण्येतानि तद्यथैतान्यमुष्मादाकाशात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यन्त एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन

भाष्यप्रकाशः।

दृष्टान्तेनास्यापि स्वव्याख्यातं परं ज्योतिरुपसम्पन्नस्य स्वरूपाभिनिष्पत्तिम्, 'एवमेवैष सम्प्रसाद' इत्यादिनोक्त्वा परस्य ज्योतिषः स्वरूपमाह 'स उत्तमः पुरुष' इति। योऽयं गीतायां 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत' इत्यादिश्लोकद्वयेन कृतनिर्वचनः। अतः परमुपसम्पन्नस्य तल्लोके भोगं वक्तुं तत्र परमात्मनो भोगमाह 'स तत्र पर्येती'त्यादिना। तथा च 'देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिना'मिति सप्तमस्कन्धात्तादृशानां सालोक्यादिचतुष्टयं प्राप्तानां भगवत्प्रसादरूपस्तद्दत्तो भोगो निराबाधः। अत्र विद्योपक्रमे तेषां तदर्थमेवोपासना प्रवृत्तेरुक्तत्वात्। नन्वेवं स्वरूपं प्राप्तस्य तत्र भोगोपि मनसस्तु पूर्वस्यैव तत्र सत्त्वात्तेन प्राक्तनदेहस्मरणे तदीयदुःखस्यापि स्मरणात् सुखभोगोऽपि दुःखसम्भिन्न एव स्यादित्यतस्तदभावायाह 'नोपजन९स्मरन्निद९ शरीर'मिति। उप आत्मसमीपे अविद्याकामकर्मभिर्जायते इत्युपजनं इदं प्राक्तनं शरीरं न स्मरति, अतस्तदस्मरणान्न दुःखसम्भेद इत्यर्थः। नन्वस्मरणं शरीरस्य कुतः, स्वरूप आकारसद्भावेपि भोगसाधनभूतानामिन्द्रियाणामभावाद्भोगेपि कथमित्याशङ्काद्वयनिवृत्त्यर्थमाह 'स यथा प्रयोग्य' इत्यादि। 'अथ यत्रैतदाकाश'मित्यादि च। यथा प्रकर्षेण योग्योऽश्वादिराचरणे आसमन्ताच्चरणसाधने रथादौ तस्य गमनादिसाधनाय युक्तः, एवमयं पञ्चवृत्तिर्मुख्यः प्राणोऽस्मिन् शरीरे तद्यात्रासाधनाय युक्तः। तथा च मुक्तौ तस्य लये तद्वियुक्तस्य शरीरस्याप्रयोजकत्वादस्मरणमित्यर्थः। इन्द्रियाभावेपि भोगमुपपादयति 'अथ यत्रे'त्यादि। यत्र शरीरदेशे एतदाकाशमनुविषण्णं नेत्रकनीनिकोपलक्षितमाकाशमनुगतं चक्षुःशब्दवाच्यम्। तत्र स चाक्षु-

रश्मिः।

रूपेणाभिनिष्पद्यते स उत्तमः पुरुष इति। सम्प्रसादः जीवः। अस्यापि स्वव्याख्यातमिति। सम्प्रसादस्यापि स्वेन श्रुत्या व्याख्यातं परं ज्योतिरित्यर्थः। सम्पद्यान्तं व्याख्येयं स्वेन रूपेणेत्यादि व्याख्यानम्। परं ज्योतिःस्वरूपमिति। परांशत्वात्परत्वं ज्योतिश्चित्। परस्येति। अंशिनः परस्य। परममिति। परो मीयते ज्ञायतेनेनेति परममक्षरम्। इत्यादिनेति। 'स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजन९ स्मरतीद९ शरीर९ स यथा प्रयोग्य आचरणे युक्तः एवमेवायमस्मिञ्छरीरे प्राणो युक्त' इति श्रुतिः। जक्षन् भक्षन् नोपजनमिति स्थूल शरीरं न स्मरति। स्त्रीपुंसयोरन्योन्यसमागमाज्जायत इत्युपजनम्। यद्वा उप आत्मसामीप्येन जायत इत्युपजनम्। प्रयुज्यत इति प्रयोग्यः अश्वादिः। यथा आचरणे आचरति गच्छत्यनेनेत्याचरणो रथादिस्तस्मिन्युक्तः। एवं यथादृष्टान्तमेव। अस्मिन् स्थूलशरीरेऽयं प्राणो लिङ्गात्मा। तदुपाधिकः प्राज्ञः रथित्वेन युक्तः ईश्वरेण नियुक्तो वर्तत इत्यर्थः। भगवत्प्रसादेति। 'त्वयोपभुक्तस्रग्गन्धवासोलङ्कारचर्चिताः उच्छिष्टभोजिनो दासास्तव मायां जयेमही'ति वाक्यात्। गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययोत्र। अत्र विद्येति। छान्दोग्येऽक्षिपुरुषविद्यायां क्रमे तेषां देवासुराणाम्। तदर्थं भोगार्थम्। उक्तत्वादिति। तद्धोभये देवा असुरा इत्यादिनोक्तत्वात्। पूर्वस्यैवेति। 'तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्ये'ति शारीर इति वाक्यात्। तद्यात्रेति। शरीरयात्रासाधनाय। 'अहमेतद्बाणमवष्टभ्य विधारयामी'त्युक्तेः प्राणस्य। तस्येति। मुख्यप्राणस्य लये। अप्रयोजकत्वात्। दर्शनाविषयत्वात्। अनुभवे न संस्कारः तदुद्बोधे स्मरणात्। आहार्यज्ञानमविवक्षितं कादाचित्कम्। अथ यत्रेत्यादीति। अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरिति श्रुतिः। नेत्रकनीनिकेति। नेत्रस्य कनीनिका कृष्णतारा तयोप समीपे छिद्रेणाकाशकार्येण लक्षितं ज्ञातं कारण-

भाष्यप्रकाशः ।

यश्चक्षुषि विद्यमान आत्मा दर्शनाय रूपग्रहणार्थं चक्षुश्चक्षुरिन्द्रियरूपम्, एवं यो जिघ्राणीति गन्धग्रहणाय स घ्राणम्, एवं व्याहरणाय वाक्, श्रवणाय श्रोत्रं, मननाय मन' इति । एतेषु अस्य जीवात्मनो दैवं चक्षुर्मनः सर्वकार्यप्रयोजकम् । तथा च मुक्तस्य देहेन्द्रियाद्यभावेपि मनसः सत्त्वात् तस्य दैवत्वेनापूर्वत्वात्तेन दैवेन चक्षुषा मनोरूपेण ब्रह्मलोकस्थान् कामान् पश्यन् रमत इति सुखेन भोगसम्पत्तिरित्यर्थः । एवं सर्वमुपपाद्यैतदुपासनाफलं निगमयन्नुपसंहरति 'तं वा एतं देवा आत्मानमुपासत' इत्यारभ्य 'प्रजापतिरुवाचे'त्यन्तेन । तथा चात्र परमात्मन एव प्रकृतत्वात् 'एवं त्वेव ते भूयोऽनुव्याख्यास्यामी'ति प्रतिज्ञाया अपि परमात्मपरतया तद्विरुद्धमिन्द्रज्ञानमनुसृत्य जीवपरमात्मनोर्भेदाभावेन व्याख्यानमनुचितम् । जीवात्मनः परमात्माभेदस्य तादात्म्यरूपत्वेनैव पूर्वं सिद्धतयाभ्युपगमैकशरणत्वाच्च । तेनाख्यायिकोपक्रमेऽप्यपहतपाप्मत्वादिरूपेण परस्यैव प्रतिज्ञानम्, जीवस्तु मुक्तौ प्राप्तस्वरूपस्तथा भवतीति ब्राह्मलौकिककाम-

रश्मिः ।

माकाशं अनु पश्चाल्लक्षीकृत्य गतं उपलब्धम्, कृष्णताराप्रवर्ति चक्षुःशब्दवाच्यम् । आत्मेति । केनोपनिषदुक्तः । 'यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यन्ति तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत' इति श्रुतिः । स चाक्षुषः स प्रकृतः शारीरः चक्षुषि भवतीति चाक्षुष इति टीकायां तदा वेदान्तपरिभाषाप्रक्रिया । पूर्वोक्तार्थोत्र ग्राह्यः । दर्शनायेत्युक्तेराधिदैविकमात्रविवक्षणात् । न तु भोगाश्रयपुरुषापेक्षा । एवं य इति । पूर्वोक्तरीत्या 'अथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणमि'ति श्रुतिः । एवं व्येति । 'अथ यो वेदेदमभिव्याहराणीति स आत्माभिव्याहाराय वा'गिति श्रुतिः । श्रवणायेति । 'अथ यो वेदेद५ शृण्वानीति स आत्मा श्रवणाय श्रोत्र'मिति श्रुतिः । शृणवानीति टीकायाम् । मननायेति । अथ यो वेदेदं मन्वानीति स आत्मा मन इति श्रुतिः । 'अस्य दैवं चक्षुः स वा एष तेन दैवेन चक्षुषा मनसैतान् कामानाप्नोति सर्वा५श्च कामा'निति श्रुतिः । अस्या अर्थमाहुः । एतेष्विति । सर्वकार्य इति ज्ञानरूपे प्रयोजकम् । आत्मा मनसा संयुज्यते मन इन्द्रियेण इन्द्रियमर्थेन ततः प्रत्यक्षमिति नैयायिकप्रक्रिया । किं पुन'र्माया मनः सृजती'ति सप्तमस्कन्धे सद्वासनाप्रकरणे । एतदुपासनेति । अक्षिपुरुषोपासनाफलम् । सर्वलोकाप्तिः सर्वकामाप्तिः । तं वा एतमिति । 'तं वा एतं देवा आत्मानमुपासते । तस्मादेषां सर्वे लोका आत्ताः सर्वे च कामाः स सर्वांश्च लोकान् सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाचे'ति श्रुतिः । एवं सर्वमुपपाद्य सम्पाद्याविर्भावसूत्रे य एष सम्प्रसाद इत्यादौ विषयवाक्ये केवलेनैवात्मनाविर्भवतीत्युक्तम् । तद्व्याख्यानमुपक्रमविरुद्धमनुचितमित्याहुः । तथा चेति । उपक्रमोक्तापहतपाप्मत्वादेरपि सत्यकामत्वादिवत्स्वरूपेणैव धर्मत्वे न तु शब्दविकल्पजत्वे च धर्मान्तरेणाविर्भावे च । इन्द्रज्ञानमिति । मामेवात्मानं जानीहीतीन्द्रप्रतर्दनसंवादस्थमनुसृत्य ब्रह्मप्राप्त्यवगममैन्द्रमननुसृत्य । हेत्वन्तरमाहुः जीवात्मन इति । जीवस्येन्द्रस्य । परमात्मन अभेदो यो वर्तते स नभेदाभावरूपः निःसम्बोधमुक्तेरभावात् । किन्तु ससम्बोधरूपमुक्तेरुपपादनात्तादात्म्यरूपत्वेनेत्यर्थः । पूर्वमिति । अत्रैव । अभ्युपगमेति । भेदाभावरूपाभेदस्य । आख्यायिकेति । तद्धोभये देवा इत्यारभ्याख्यायिका तस्या उपक्रमे य आत्मापहतपाप्मेत्यादिरूपे । ननु अपहतपाप्मपदेन जीवोपक्रमोस्तु अभेदात् । पाप्मरूपप्रतियोगिनो ब्रह्मण्यभावाच्चेत्यत आहुः जीवस्त्विति । अपहतपाप्मत्वं ब्रह्मणि

१. कामानाप्नोति यत्किमिति पाठान्तरम् ।

भाष्यप्रकाशः ।

भोगयोग्यत्वात्तथोच्यते । एवं सति 'अविभागेन दृष्टत्वा'दिति सूत्रेऽविभागः सोऽप्यविभक्तः, भ्रातॄणामिव भोगमात्रसाम्यादेव, न त्वभेदात् । अत एव काठके 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति एवं मुनेर्विजानत आत्मा भवति गौतमे'ति मुक्तस्वरूपनिरूपणपरे वाक्ये तादृगिति पदेन साम्यमेवोक्तम्, न त्वभेदः, तथा सति तदेवेति ब्रूयात् । एवं नदीसमुद्रनिदर्शनेपि भेदस्यान्याज्ञेयत्वाय नदीनां नामरूपत्यागकथनं द्रष्टव्यम् । एवं 'तत्त्वमसि' 'अहं ब्रह्मास्मी'त्यादावपि ब्रह्मणः सर्वरूपत्वादंशांशिभावेनैव तादात्म्यमभिप्रेत्य जीवस्यापि ब्रह्माभेद उच्यते, न त्वभेद इत्यभिप्रायेणेत्यवगन्तव्यम् । एवं 'यत्र नान्यत् पश्यती'त्यनेनोक्तो भूमान्यदर्शनाभावोऽप्यंशांशिभावावगमादेवोपपन्नतरः । 'न तु द्वितीयमस्ति ततोऽन्यद्विभक्त'मित्यत्रापि विभागाभावादेव द्वितीयदर्शनाभावो द्रष्टव्यः । इदं च तत्र तत्र बहुधोपपादितमिति नात्राधिकमुच्यते । अतो यदुक्तं भेदनिर्देशस्त्वभेदेऽप्युपचर्यते, 'स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नी'ति । 'आत्मरतिरात्मक्रीड' इत्यादिदर्शनादित्युक्तम्, तदप्यप्रयोजकम् । भेद-

रश्मिः ।

न प्रतियोगिसापेक्षाभावरूपम् । अखण्डशब्दार्थत्वात् । मुक्तात्मा जीवस्तु मुक्तौ आवरणभङ्गेन साधनैर्वा स पाप्मानं निहत्य प्राप्तस्वरूपः तथानामापहतपाप्मा भवतीति ब्राह्मेण देहेन लौकिकैः कामैः रक्षरात्मकत्वेन जीवस्य भोग्यत्वाच्चोपक्रमेऽपहतपाप्मत्वेनोच्यत इत्यर्थः । योऽविभागः अविभक्त एवावतिष्ठत इति सिद्धान्तीयः । न त्विति । निःसम्बोधमोक्षरूपफलाभावेन ससम्बोधमोक्षे भेदाभावरूपमोक्षाभावात् । तादृगिति । तमेवेमं पश्यन्ति जना इति तादृक् । तदेवेति तादृगेव भवतीत्यत्र तदेव भवतीति ब्रूयात् । पूर्वोक्तं दूषयित्वान्यदपि भाष्यीयं दूषयन्ति स्म एवं नदीति । नदी यमुनागङ्गादिरूपा समुद्रः क्षीरोदादिरूपः । तयोर्भेदः प्रसिद्धः नदीनामरूपत्यागः । न तु प्रवाहरूपस्वरूपत्यागस्तस्य कथनम् । 'ता नाविदन्मय्यनुषङ्गबद्धधियः स्वमात्मानमदस्तथेदम् । यथा समाधौ मुनयोब्धितोये नद्यः प्रविष्टा इव नामरूपे' इत्यादौ द्रष्टव्यम् । तादात्म्यमिति । ब्रह्मत्वेन तादात्म्यम् । घटत्वेन घटतादात्म्यवत् । घटो नेति न प्रतीतिः । न त्विति । ननु तर्हि तत्त्वमिति व्युत्पत्तिभङ्ग इति चेन्न । फलाध्याये तस्या अमुख्यत्वात् । अत्र श्रुतिं प्रमाणयन्ति स्म । एवमिति । भूमान्येति । भूम्नोन्यस्य दर्शनस्याभावः । अंशांशिभावो भेदप्रत्ययप्रयोजकः । तादृशाभेदो यत्र नान्यत्पश्यतीत्युक्तो न भेदाभावरूपोऽपि तु तादात्म्यरूपः । उपपन्नेति । तमप्प्रत्ययान्तं नोक्तम् । 'युक्तयः सन्ति सर्वत्रे'ति वाक्यात् । इत्यत्रापीति । बृहदारण्यकेपि ज्योतिर्ब्राह्मणे तत्र तत्रेति । प्रथमाध्याये तृतीयपादे सुषुप्त्यधिकरणे द्विसूत्रे । लिङ्गभूयस्त्वाधिकरणे तृतीयाध्यायस्य तृतीयपादे । बहुधेति । स्वपरनयैर्बहुधा । भेद इति । ज्योतिरुपसम्पद्ये भेदनिर्देश इति । ज्योतिरुपसम्पद्येति कर्तृकर्मनिर्देशाद्भेदनिर्देशः । विपरीतलक्षणयाऽभेदेप्युपचर्यत इत्यर्थः । स्वे महिम्नीत्यत्राधाराधेयनिर्देशाद्भेदनिर्देशः । आत्मनि रतिर्यस्य, आत्मनि क्रीडा यस्यात्मना मिथुनं यस्येत्यत्रापि भेदनिर्देशः । तथा च स्वे महिम्नीति भेदनिर्देशस्याभेदोपचारकस्य दर्शनात् । तथात्मरतिरित्यादेर्भेदनिर्देशस्याभेदोपचारकस्य दर्शनादित्यर्थः । भेदविरुद्धेति । अभेद इत्यत्र विरोधो नञर्थः षट्सु नञर्थेषु । भावप्रधानो भेदविरुद्धशब्दः । भेदविरुद्धत्वं भेदविरोधः भेदविरुद्धा सम्पत् भेदविरुद्धसम्पत् तस्याः तादात्म्येन तदात्मनो भावेन ब्रह्मत्वादिना रूप्यते व्यवह्रियत इति तादात्म्यरूपस्तस्य अभेदस्य ।

१. सादृश्यम् ।

भाष्यप्रकाशः।

विरुद्धसम्पदस्तादात्म्यरूपस्याभेदस्याङ्गीकारेणैव दोषनिवृत्तौ उपचारेण तत्र व्याख्यानस्यानुचितत्वात्। न चांशांशिभावेन नानात्वापत्त्या, 'नेह नानास्ती'ति विरोधः शङ्क्यः। ऐच्छिकनानात्वस्य स्वरूपैक्याद्यबाधकत्वादिति प्रागेवोक्तत्वादिति। एवमौडुलोमिसूत्रव्याख्यानेऽप्यसङ्गतत्वं द्रष्टव्यम्। औडुलोमिना अपहतपाप्मत्वादीनां धर्माणां शब्दविकल्पजत्वस्य कुत्राप्यनुक्तत्वेन तथापादयितुमयुक्तत्वात्। न च चैतन्यमात्रत्वकथनादेव धर्मनिवृत्तिरिति वाच्यम्। स्वरूपमात्रकथनेपि धर्मानिवृत्तेर्मध्यन्दिने नभोमण्डले सूर्य एवास्तीत्यादिलौकिकवाक्येपि प्रभाकरादिमत एव प्रतिपादनेनादर्शनात्। श्रुतावपि 'एवं वा अरे अयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवे'त्यत्रापि अकृत्स्नत्वबुद्ध्युत्पादकधर्माकारसत्तामास्थायैव तेषां धर्म्यनतिरिक्तत्वबोधनाय तस्य प्रज्ञानघनत्वकृत्स्नत्वयोर्बोधनात्। अन्यथा तयोः पदयोः सैन्धवदृष्टान्तस्य च वैयर्थ्यापत्तेर्दुर्वारत्वात्। अत एव सत्यकामादयोऽपि वास्तवा एव, नौपाधिकाः। न चानेकाकारत्वसम्भवो दोषः। 'न स्थानतोऽपी'त्यधिकरणे ब्रह्मणो विरुद्धधर्माधारत्वस्यैव प्रतिपादनात्। अतो न स्वकृततद्व्याख्यानुसरणेनौडुलोमिसूत्रव्याख्यानं युक्तम्। तस्य व्यासमतत्वाच्चेति। एवं बादरायणसूत्रेऽपि व्यवहारापेक्षया पूर्वस्य पूर्वस्याप्युपन्यासादिभ्योऽवगतस्य ब्राह्मस्यैश्वर्यरूपस्याप्रत्याख्यानादविरोधं मन्यते बादरायण इति व्याख्यातम्। तत्रापि व्यवहारापेक्षयेति यदुक्तम्, तदभ्युपगमैकशरणमेव। सूत्रे पूर्वभावपदेन प्राक्कालिकसत्तामात्रस्यैव बोधनेन व्यवहारापेक्षाया

रश्मिः।

दोषेति। ज्योतिरुपसम्पद्येति कर्तृकर्मव्यपदेशाद्भेदनिर्देशरूपो यो दोषस्तस्य निवृत्तौ। कर्तृकर्मणोर्ज्योतिःसम्प्रसादयोर्भेदनिर्देशो दोषो त्वैक्यलक्षणसायुज्ये वक्तव्ये। स तु ऐक्यलक्षणसायुज्ये वक्तव्ये तस्य तादात्म्यरूपत्वेङ्गीकृते नास्तीति व्यर्थो भेदस्याभेद उपचार इत्येवम्। निवृत्तौ स्वरूपैक्यादिति। आदिनैकरसत्वम्। प्रागेवेति। जन्मादिसूत्रे। औडुलोमिनेति। तथापादयितुमित्यनेन आपादयितुमित्यनेनान्वयः। धर्मानिवृत्तेरिति अदर्शनादित्यनेनान्वेति। केत्यत आहुः मध्यन्दिन इत्यादि। आदिना मध्यरात्रौ चन्द्र एवास्तीति। ननु मेघादीनामपि सत्त्वात्कथमेवकारो दीयत इत्यतः कारणमाहुः प्रभाकरादीति। आदिना भट्टभास्करमतेऽपि कथमित्यत आहुः प्रतिपादनेनेति। प्रतिपादनं तु साध्यपरवेदातिरिक्तस्यार्थवादत्वात्। चाक्षुषज्ञानस्यापि प्रातिपदिकार्थे मन्त्रमय्यां देवतायां चक्षुरादिप्रवृत्तेरभावात्। अकृत्स्नत्वेति। अकृत्स्नत्वबुद्ध्युत्पादका धर्माः अनन्तरत्वाबाह्यत्वे तत्प्रतियोगिनी अन्तरत्वबाह्यत्वे च। साकारत्वाद्ब्रह्मणो धर्माणामाकारसत्ता। तेषामिति। धर्माणाम्। तस्येति। आत्मनः। विरुद्धधर्मेति। एवकारेण 'न स्थानतोऽपि परस्योभयलिङ्ग'मित्यत्रानेकाकारत्वप्रतिषेधपरोक्तस्य योगस्तस्य व्यवच्छेदः क्रियते। न स्वकृतेति। चैतन्यमात्रेणैव रूपेणाभिनिष्पत्तियुक्तेति कृता औडुलोमिसूत्रव्याख्या। तस्या अनुसरणेनेत्यर्थः। व्यासमतेति। अरूपवत्सूत्रोक्तव्यासैकदेशिमतत्वात्। यद्वा भवदुक्तव्यासमतत्वात्। पूर्वस्य पूर्वस्येति। य आत्माऽपहतपाप्मेत्यादिना सत्यकामः सत्यसङ्कल्प इत्येवमन्तेनोपन्यासेन पूर्वस्यापहतपाप्मत्वस्य विजरत्वव्यवहारापेक्षया तथा विमृत्युत्वव्यवहारापेक्षया पूर्वस्य विजरत्वस्येत्येवं पूर्वस्य पूर्वस्येत्यर्थः। उपन्यासेति। आदिना स तत्र पर्येति जक्षन् क्रीडन् रममाण इति श्रुत्युक्तधर्मसङ्ग्रहः। इदमेव ब्राह्ममैश्वर्यं रूपं तस्य। अविरोधमिति। ब्रह्मणो मुक्तात्मनः सप्रपञ्चत्वनिःप्रपञ्चत्वयो रविरोधम्। अग्र इति। स उत्तमः पुरुष इत्यस्याग्रे। प्राक्कालिकेति। प्राक्कालपूर्वशब्दार्थः सम्बन्धविशिष्टः

भाष्यप्रकाशः ।

अनुपलम्भादिति । एवं सति यदौडुलोमिमतमनुसृत्य मुक्तस्य मनसा सर्वान् ब्राह्मलौकिकान् कामान् पश्यतोपि विभागेनादर्शनात् सुषुप्ताविवापश्यत्त्वं सर्वैकत्वात् द्वितीयाभावेन व्याख्यातं छान्दोग्यभाष्ये, तदपि प्रकृतविरुद्धम् । 'रमत' इति रमणस्याग्रे कथनात् । न च तत्र 'रमत' इत्यस्य मुख्यार्थो नाभिप्रेत इति वाच्यम् । मानाभावात् । उपक्रमे इन्द्रादेः सर्वलोकसर्वकामप्राप्त्योरेवाभिसंहितत्वकथनेन तद्विरोधाच्च । अतोऽविभागेन दर्शनं शारीरब्राह्मणोक्तायाः सुषुप्तिश्रुतेरेवार्थः, न तु क्रममुक्तिमार्गप्राप्तब्रह्मलोकसुखप्राप्तिबोधिकाया एतच्छ्रुतेरित्यवधेयम् । न च द्वितीये मैत्रेयीब्राह्मणेपि 'न हि द्रष्टुर्दृष्टे'रित्याद्यविभक्तदर्शनश्रुतेर्विद्यमानत्वात्तस्याश्च मुक्तविषयत्वादत्र तथाङ्गीकारे को दोष इति वाच्यम् । विषयभेदात् । तत्र हि, 'प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ती'ति ब्रह्मणि जीवस्य लयनिरूपणेन तथा निश्चयात् । अत एव शारीरब्राह्मणे, 'अथाकामयमान' इत्युपक्रम्य, 'अत्र ब्रह्म समश्नुत' इत्यन्तेनाकामयमानस्यात्मनो ब्रह्मणि लय उक्त इति सायुज्यविषयं मैत्रेयीब्राह्मणवाक्यम् । अतस्तदादायात्र कामवत्प्रकरणे तथापादनं प्रकृतविरुद्धमेवेति दिक् ।

भास्कराचार्यास्तु, सम्पद्याविर्भावसूत्रे इन्द्रप्रजापतिसंवादस्थामेव श्रुतिं विषयत्वेनोपन्यस्य, सर्वाणि सूत्राणि पूर्ववदेव व्याख्याय, जीवब्रह्मणोरौपाधिकभेदः, पारमार्थिकं त्वैक्यमिति स्वीयं सिद्धान्तं चोक्त्वा, जीवस्य ब्रह्माविभागेन स्थितिं चाङ्गीकृत्य, जैमिनीयमतं च पूर्ववदेव व्याख्याय, औडुलोमिसूत्रे एवमाहुः । तथाहि । चैतन्यसन्मात्रेणाभिनिष्पद्यत इत्यौडुलोमिर्मन्यते स्म । कुतः । तदात्मकत्वात् । चैतन्यात्मकं सत्तात्मकं च ब्रह्म । तथा च श्रुतिः, 'एवं वा अरे अयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवे'ति । तथा, 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति सत्यकामादीनां तु विकल्पमात्रत्वादतत्स्वरूपतेति मन्यते । 'सुषुप्तवन्निःसम्बोधो मोक्ष'

रश्मिः ।

प्राक्कालिका सत्ता भावपदार्थः भू सत्तायामिति धातुपाठात् तन्मात्रस्य । एवकारेण व्यवहारापेक्षायोगव्यवच्छेदः क्रियते । रमत इतीति । रमत इति रममाण इति शब्देन रमणस्याग्रे कथनादित्यर्थः प्रतिभाति । पुस्तके रमत इति पदाभावात् । तत्र रमत इति । रममाण इति श्रौतशब्दस्य रमत इत्यस्य विग्रहस्य । नाभिप्रेत इति । ब्राह्मस्यैश्वर्यरूपस्य धर्मत्वात् । किन्तु गौणोर्थः उत्तमः पुरुष इत्यत्र सर्वकामान्पश्यतोऽपि विभागेनादर्शनात्सुषुप्ताविवापश्यत्वरूपः । अविभागेन दर्शनं वा गौणोर्थः । एतच्छ्रुतेरिति । स तत्र पर्येतीत्यादिश्रुतेः । द्वितीय इति । उभयत्रार्थभेदाभावाय विशेषणम् । कामवदिति । परप्राप्तिप्रकरणे । तथापादनमिति । उत्तमः पुरुष इत्युक्त्यनन्तरं स तत्र पर्येतीत्यत्र रमणस्य मुख्यार्थः स्याद्ब्राह्मस्यैश्वर्यस्य धर्मः स्यादतो गौणोर्थ इत्यापादनम् । प्रकृतेति । उपक्रान्तार्थविरुद्धम् । मनसैतान्कामानाप्नोति सर्वाँश्च कामान्यस्तमात्मानमनुविद्य विजानातीत्युपसंहारादेवकारः । औपाधिकेति । मायोपाधिः । तत्कृतो भेदः प्रातीतिकः ब्रह्म जीवो नेति प्रतीतिः । स्वीयं भेदाभेदरूपम् एवं वा अर इति । प्रज्ञानघनोस्तीति क्रियापदं विभक्त्युत्पत्त्यर्थमावश्यकमिति चैतन्यात्मकं सत्तात्मकं च । सत्यं ज्ञानमिति अनन्तत्वादानन्दविशेषणं सद्धर्मरूपम् । सत्यकामादीनामिति सत्यकामस्यादय अपहतपाप्मादयोपि यासां ताः । सत्यकामआदिर्यस्य सत्यसंकल्पस्य स सत्यकादिः सत्यकामादयश्च सत्यकादिश्च सत्यकामादयस्तेषाम् । सुषुप्तवदिति षष्ठ्यन्ताद्वतिः । विकल्पमात्रत्वादिति कदाचित्सत्यकामादयः कदाचिदसत्यकामत्वादयः । साङ्ख्येति

भाष्यप्रकाशः।

इत्यौडुलोमेरभिप्रायः साङ्ख्यवैशेषिकादीनामिव । इदानीन्तना अपि केचिदेतदेवं दर्शनं प्रतिपन्ना इति । बादरायणसूत्रं त्वेवं व्याकुर्वन्ति । तथाहि । एवमपि चैतन्यमात्रत्वेपि पूर्वस्याप्यैश्वर्यरूपस्य भावात् । कथम् । उपन्यासात् पूर्वोक्तेन जैमिनीयेन हेतुना उभयेषां वेदवाक्यानां प्रामाण्याविशेषात् । असाधारणत्वाच्चापहतपाप्मादिगुणानां व्यतिरिक्ताव्यतिरिक्तस्वभावत्वादविरोधं भगवान् बादरायणः परिनिश्चिकाय । न च गुणगुणिनोरेकत्वानेकत्वविरोधः । यथाग्निरेकः सप्तजिह्वः प्रकाशवानूर्ध्वज्वलन उष्ण इति न नानात्वम्, यथा च उद्यद्दिनकर एकं किरणजालमवनिमण्डले प्रथयन्नानेको भवतीति ।

अत्र वैशेषिकाः प्राहुः ससम्बोधो मोक्षो नोपपद्यते सर्वज्ञत्वादिगुणयुक्तः । दुःखनिवृत्तिमात्रं मोक्षः । आनन्दादिशब्दाश्च दुःखनिवृत्तिमात्रावलम्बनाः । यदि च सुखे रागेण प्रवर्तेत, ततो बन्ध एव स्यात् । गुणस्य बन्धहेतुत्वात् । शरीरेन्द्रियमनसां निवृत्तौ विज्ञानोत्पत्तिहेत्वभावात् । मुक्तो निःसंज्ञः पाषाणकल्पोऽवतिष्ठते ।

साङ्ख्याः पुनश्चैतन्यस्वभाव आत्मा, तस्य द्रष्टुः स्वरूपे चैतन्यमात्रेऽवस्थानमसम्प्रज्ञातयोगनिष्पत्तौ मोक्ष इति मन्यन्ते ।

तत्राऽभिधीयते । यत्तावदुक्तं रागो बन्धहेतुरिति । तदयुक्तम् । शास्त्रादयं विभागो गम्यते । यथा स्वदारगमनं नाधर्माय, तथा विषयविषयो रागो बन्धहेतुः, निरतिशयानन्दब्रह्मविषयो मुक्तये । न चानन्दशब्दो दुःखाभाववचनः । शतगुणोत्तरोत्तरक्रमेण उत्कर्षापकर्षौ प्रतिपाद्य निरतिशयस्य ब्रह्मानन्दस्योपदेशात् । न चाभावस्य निरुपाख्यस्योत्कर्षापकर्षौ । लोकेपि दुःखतारतम्यं सुखतारतम्यं च परस्परविलक्षणं प्रत्यक्षेणानुभूयते । तस्मान्मुक्तः कारणात्मानमाप्तस्तद्वदेव सर्वज्ञः सर्वशक्तिः सर्वात्मापि भवतीति जैमिनिबादरायणयोरभिप्रायः । ततो ये वेदबाह्या वैशेषिकाः साङ्ख्यास्तत्पक्षाऽवलम्बिनश्च, ते सर्वेऽपसिद्धान्तिनः, तर्कमात्राशरणत्वादिति । यदि च विज्ञानमात्रं ब्रह्म, तदानन्दपदमनर्थकम् । न हि चैतन्यमात्रमानन्दः । दुःखावस्थायामपि चैतन्यानुवृत्तिदर्शनात् । न च दुःखनिवृत्तिमात्रमानन्दशब्दार्थ इति युक्तम् । तस्मात् स्वयं संविदितमेव सुखं सर्वदा मुक्तस्याभ्युपेयमिति ।

रश्मिः।

वैशेषिका नैयायिकविशेषाः । आदिना मायावादिनः तदनुसारिणः दर्शनं शास्त्रं ज्ञानं वा । आभावादितिपदच्छेदः । ऐश्वर्यरूपस्याभावादित्यत्र । हेतुनेति । ब्राह्मेणेत्यनेन सधर्मप्रतिपादकेन । व्यतिरिक्तेति । 'प्रकाशाश्रयवद्वा तेजस्त्वा'दिति सूत्रात् । परिनिश्चिकायेति । चिञ् चयने परिनिःपूर्वकः, लिट् । एकस्येति । धर्माणां धर्म्यभेदपक्षे । सप्तजिह्व इति । 'सप्त ते अग्ने समिधः सप्त जिह्वाः' इति श्रुतेः । रागेणेति । अपहतपाप्मत्वादिधर्मैं रागेण । एवेति । लोके तथादर्शनादेवकारः । तस्येति । जीवात्मनः । असम्प्रज्ञातेति । असम्प्रज्ञातसमाधिनिष्पत्तौ । न संप्रज्ञातं स्वरूपं यत्र योगसूत्रमत्र । 'देशबन्धश्चित्तस्य धारणा । तत्र प्रत्ययैकतानता ध्यानम् । तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधि'रिति सूत्रत्रयम् । निरतिशयेति । निरतिशयानन्दो ब्रह्म यदि भक्तिविषयः । प्रतिपाद्येति । तैत्तिरीये आनन्दमीमांसायां प्रतिपाद्यः उपदेशादिति । 'ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्द' इत्यत्र 'यतो वाचो निवर्तन्त' इति श्रुत्येकवाक्यतयोपदेशात् । निरुपाख्यस्येति । द्वितीयाध्यायतर्कपादे नास्तिकमतोक्तौ । लोकेपीति । परविलक्षणं चेत्यन्वयः । इति युक्तमिति । 'दुःखाभावं सुखं चैव पुरुषार्थद्वयं मत'मिति वाक्यविरोधात् । स्वयं संविदि-

भाष्यप्रकाशः ।

अत्र पूर्वेषां सूत्राणां शङ्कराचार्यवदेतैर्योऽर्थ उक्तः, स तु तदुत्तरेणैव दत्तोत्तरः । शेषं त्वविरुद्धत्वादनुमन्यामहे ।

**रामानुजाचार्यास्तु**—परं ब्रह्मोपासीनानामात्मानं च प्रकृतिवियुक्तब्रह्मात्मकमुपासीनानामर्चिरादिमार्गेणापुनरावृत्तिलक्षणा गतिरुक्ता । इदानीं मुक्तानामैश्वर्यप्रकारं चिन्तयितुमारभत इति पादद्वयार्थमुक्त्वा, सम्पद्याविर्भावसूत्रे छान्दोग्यस्थप्रजापतिवाक्यगां तामेव श्रुतिं विषयत्वेनोपन्यस्य, पूर्वोक्तवदेव सर्वं सिद्धान्तपर्यन्तमुक्त्वा, अविभागेन दृष्टत्वादिति द्वितीयेऽधिकरणे, किमयं प्रत्यगात्मा स्वात्मानं परमात्मनः पृथग्भूतमनुभवति, उत तत्प्रकारतया तदविभक्तमिति संशये, 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्, तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति,' 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागता' इत्यादिश्रुतिस्मृतिभ्यां मुक्तस्य परेण साहित्यसाम्यसाधर्म्यप्रतिपादनात् पृथग्भूतमेवानुभवतीति प्राप्ते, अनेन सूत्रेण परस्माद् ब्रह्मणोऽविभागेन स्वात्मानं मुक्तोऽनुभवतीति प्रतिपाद्यते । तत्र हेतुर्दृष्टत्वादिति । 'परं ज्योतिरुपसम्पद्य निवृत्ताविद्यातिरोधानस्य याथातथ्येन स्वात्मनो दृष्टत्वात् । स्वात्मनः स्वरूपं हि, 'तत्त्वमसि,' 'अयमात्मा ब्रह्म,' 'ऐतदात्म्यमिदं सर्वम्,' 'सर्वं खल्विदं ब्रह्मे'त्यादिसामानाधिकरण्यनिर्देशैः 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरम्', 'अन्तःप्रविष्टः शास्ता जनाना'मित्यादिश्रुतिभिः परमात्मात्मकं तच्छरीरतया तत्प्रकारभूतमिति काशकृत्स्नसूत्रे सिद्धम् । अतोऽविभागेन 'अहं ब्रह्माऽस्मी'त्येवानुभवाच्चैर्वाक्यैः साम्यसाधर्म्यव्यपदेशो ब्रह्मप्रकारभूतस्यैव प्रत्यगात्मनः स्वरूपं 'तत्सम'मिति श्रुतिः प्रतिपादयति । सहश्रुतिस्त्वेवंभूतस्य प्रत्यगात्मनः प्रकारिणा ब्रह्मणा सह तद्गुणानुभवं प्रतिपादयतीति न कश्चिद्विरोधः । 'सङ्कल्पादेव तच्छ्रुतेः,' 'अधिकं तु भेदनिर्देशा'दित्यादेश्च न विरोध इति ब्राह्मदेहेन जीवस्य तत्र भोगं परमात्मसङ्कल्पात् कर्मानधीनत्वभगवत्सृष्टपदार्थैरेव तद्भोगं स्वसृष्टपदार्थैश्च लीलारसभोगादिकमङ्गीकुर्वन्ति । तत् सिद्धान्तादविरुद्धमित्युपादेयम् ।

रश्मिः ।

तमिति । इदं पाषाणकल्पस्य मुक्तस्यापि ज्ञेयम् । सतः पाषाणकल्पस्यानन्दजनकत्वात् । अत्रेति **भास्कराचार्यमते ।**

**परं ब्रह्मेति** परं ब्रह्म मायारूपाचिद्विशिष्टं तस्योपासीनानां विशिष्टत्वनिरूपकाणां चिताम् । आत्मानं विशिष्टं प्रकृतिरचित्तद्वियुक्तम् । **उपासीनानामिति** चिताम् । विशिष्टाद्वैतं मतम् । **ऐश्वर्येति ।** ईश्वरत्वं यज्जातं तस्य प्रकारम् । **तत्प्रकारेति ।** ईश्वरत्वप्रकारतया **श्रुतिस्मृतिभ्यामिति ।** द्वित्वमविवक्षितम् । श्रुतिस्मृतिभ्य इत्यर्थः । रामानुजभाष्ये तु इत्यादिश्रुतिस्मृतिभ्य इति पाठः । तथा च लेखकदोषाद् द्विवचनमत्र । **साहित्येति ।** यथाक्रमं त्रिषु वाक्येषु बोध्यम् । **इत्यादि सामानाधिकरण्येति ।** सामानाधिकरण्यं, भिन्नप्रवृत्तिनिमित्तत्वे सत्येकार्थप्रतिपादकत्वम् । तत् तत्त्वमित्यत्र 'अयमात्मेत्यत्र' 'ऐतदात्म्यमिदं सर्वं'मित्यत्र सर्वमिदं ब्रह्मेत्यत्र सामानाधिकरण्यनिर्देशास्तैः । अन्तर्यामिब्राह्मणे परमात्मशरीरतया परमात्मप्रकारभूतम् । आत्मशरीरः परमात्मेति । तत्सममिति साम्यश्रुतिः । **न विरोध इति ।** अधिकसूत्रोक्ते ब्रह्मणो जगत आधिक्येपि सङ्कल्पसूत्रोक्तपरमात्मसङ्कल्पाद्भोग इति न विरोध इति हेतोः । **तत्रेति ।** चिदचिद्विशिष्टे । **कर्मानधीति ।** कर्मानधीनत्वेन रूपेण यो भगवान् जीवीयकर्माननुरोधी भगवानित्युक्तम् । तेन सृष्टैः पदार्थैः तद्भोगं जीवकर्मकं भोगम् । **स्वसृष्टेति ।** आत्मसृष्टपदार्थैः । **ली-**

## सङ्कल्पादेव च तच्छ्रुतेः ॥ ८ ॥

एवं परमाप्तिः केषाञ्चिदेव भवति । तत्र हेत्वपेक्षायामाह । भजनानन्दं दातुं यमेव सङ्कल्पविषयीकरोति, स एवैवं प्राप्नोतीति भगवत्सङ्कल्प एव तत्र हेतुः । तत्र प्रमाणमाह । तच्छ्रुतेः 'नायमात्मे' त्युपक्रम्य, 'यमेवैष वृणुते तेन लभ्य' इति श्रुतिः श्रूयते, अतः स एवात्र हेतुः । श्रुतौ प्रवचनादिनिषेधः कृत इत्यत्राप्येवकार उक्तः । चकारात्तज्जनितैवैतदनुरूपा परमार्तिः संगृह्यते ॥ ८ ॥

भाष्यप्रकाशः ।

शैवस्तु–तन्मतस्यैव चौरः शैवीः श्रुतिस्मृतीरुपन्यस्य स्वं मतं ततो भिनत्ति । तत्र शिवपदस्य नारायणादिपदवत् परब्रह्मवाचकताया वाराहपुराणे उक्तत्वात् स्वरूपभेदकत्वाभावे कोपि न विरोधः । रूपभेदकत्वे तु नृसिंहपूर्वतापिनीयोक्तादिरीत्या तत्रोत्कर्षविश्रान्त्यभावस्य प्रहस्ताख्ये वादे निपुणतरमुपपादितत्वान्न तस्मिन् परत्वमिति न तदर्थमधिकं किञ्चिदुच्यते ।

माध्वास्तु—कर्मनाशाख्यं फलं प्रथमपादे, देवानां मोक्ष उत्क्रान्तिश्च द्वितीयपादे फलम्, मार्गो गम्यं च तृतीये पादे फलम् । एवं त्रयं पूर्वमुक्त्वा चतुर्मुखेन सह परं ब्रह्म प्राप्तानां यस्तत्र भोगः क्रमप्राप्तः, तमत्र पादे वदतीति पादार्थमुक्त्वा, 'सम्पद्याविर्भाव' इत्यत्र 'सम्पद्याविहाये'ति पाठमङ्गीकुर्वन्तोऽविभागसूत्रपर्यन्तं प्रतिसूत्रमधिकरणभेदमङ्गीकुर्वन्तः प्रथमे मुक्तस्य ब्रह्मानतिक्रमेण भोगम्, द्वितीये ब्रह्मप्राप्तस्य मुक्तत्वम्, तृतीये मुक्तप्राप्यस्य परस्य ज्योतिषः परमात्मत्वम्, चतुर्थे च ब्रह्मप्राप्तिं सायुज्यादिरूपामुक्त्वा, तेषां ब्रह्ममुक्तवहिष्ठभोगभोक्तृत्वं प्रतिपादयन्ति । 'ब्राह्मेणे'ति त्रिसूत्रेऽधिकरणे च चिन्मात्रदेहानां भगवत्सायुज्यं प्राप्तानां ब्रह्माङ्गानुगृहीतैः स्वाङ्गैर्भोगं प्रतिपादयन्ति । तत्रोदासीना वयम् ॥ ७ ॥

सङ्कल्पादेव च तच्छ्रुतेः ॥ ८ ॥ सूत्रमवतारयन्ति एवं परेत्यादि । व्याकुर्वन्ति भजनेत्यादि । स एवेति । वरणरूपः सङ्कल्पः । अत्रापीति । सूत्रेपि ॥ ८ ॥

रश्मिः ।

स्वारस्येति । आदिना ससम्बोधो मोक्षस्तम् । शैव इति । भगवान् शैवः । नृसिंहेति । आदिनाथर्वशिर आदिस्तत्र ज्ञानेन भक्तेति शिवविशेषणात्तदुक्तरीत्या । भजनीये उत्कर्षविश्रान्त्या । तत्र शिवे । वाद इति द्वितीये वादे । तस्मिन्निति शिवे । तदर्थमिति शिवमतनिवृत्तये । अनतिक्रमेणेत्यविहायेत्यस्यार्थः । तेषामिति । मुक्तानाम् । ब्रह्माङ्गेति । ब्रह्माङ्गं कारणं कारणमनु पश्चात् कार्याणीव गृहीतैः स्वाङ्गैः मुक्तानामङ्गैः । उदासीना इति । पूर्ववद्व्याख्यानम् ॥ ७ ॥

सङ्कल्पादेव च तच्छ्रुतेः ॥ ८ ॥ भाष्ये । वरणं सङ्कल्पः । वृङ् सम्भक्तौ । तथा च । प्रमेयबलं सङ्कल्पः । क्लृप् सामर्थ्ये । बलं सामर्थ्यम् । सामर्थ्येन वरणमिति सङ्कल्पकार्ये सङ्कल्पपदं लाक्षणिकम् । बलं भक्तिरिति भाष्यम् । सङ्कल्पविषयो भक्तः विषयविषयिभावः । फलकर्मणोः सम्बन्धः तदनुकूलो व्यापारो भगवन्निष्ठः । एतद्यमेव सङ्कल्पविषयं करोतीति भाष्येणोक्तम् । एवं च पुष्टिभक्तिजभगवदावेशे पूर्वसूत्रोक्ते सङ्कल्पो हेतुः । तत्र चतुर्षु आद्य आर्तोऽधिकारी । तदुक्तं 'विरहातुरात्मे'त्युद्धववाक्यं तृतीयस्कन्धे । 'ममार्तायाः सखे दर्शय सन्निधि'मिति पञ्चाध्याय्याम् । तदेतदाहुः । चकारादिति । अनुक्तसमुच्चयार्थकात् । वरणजनितैव । एवकारेण लौकिकविषयालब्धिजनितत्वयोगव्यवच्छेदः क्रियते । तदनुरूपेति । भगवदानन्दाशनानुरूपा न तु तूष्णीं दुःखरूपा तस्या निषेधात् । 'नोत दुःखता'मिति श्रुतौ । दुःखतां दुःखसत्तां पश्यतीत्यन्वयः । परमार्तिरधिकारः ॥ ८ ॥

## अत एव चानन्याधिपतिः ॥ ९ ॥

यतो हेतोः साधनं फलं चोक्तरीत्या स्वयमेव, नान्योऽतो हेतोस्तेषां हृदि साधनत्वेन फलत्वेन प्रभुरेव स्फुरति, नान्यः, तेनानन्यास्ते । तेषामेवाधिपतिः पुरुषोत्तमः । अन्यत्राधिपत्यं विभूतिरूपैः करोति, अतः 'सर्वस्याधिपति'रिति-श्रुतिरपि तदभिप्रायेणैवेति भावः। चकारात्, 'मदन्यत् ते न जानन्ति नाहं तेभ्यो मनागपी'ति भगवद्वाक्यं सङ्गृह्यते । अन्यथा सर्वज्ञस्याकुण्ठितज्ञानशक्तेरेवं कथनमयुक्तं स्यात् । अतः पुष्टिमार्गोऽनुग्रहैकसाध्यः प्रमाणमार्गाद्विलक्षणः, तत्र विश्वासश्च तथेति सिद्धम् ॥ ९ ॥

---

भाष्यप्रकाशः ।

अत एव चानन्याधिपतिः॥९॥ व्याकुर्वन्ति यत इत्यादि । यतो हेतोः पुष्टिमार्गीयाणां वरणादिरूपं साधनं स्वस्वरूपात्मकं फलं च स्वयमेवातस्तथेत्यर्थः । 'सर्वस्य वशी'त्यादि-श्रुतिविरोधपरिहारायाहुः अन्यत्रेत्यादि । शेषं स्फुटम् । विश्वासस्तथेति । अनुग्रहैकसाध्यः ।

अत्रान्ये मुक्तसङ्कल्पं व्याकुर्वन्ति । 'अनन्याधिपति'रित्यत्र च जीवस्य स्वाधीनताम् । तद्यदि, 'सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपति'रिति श्रुतिं नोपरुन्ध्यात्तदोपादेयम्, अन्यथा तूपेक्ष्यम् ॥ ९ ॥

रश्मिः ।

अत एव चानन्याधिपतिः ॥ ९ ॥ साधनमिति । आदिना सङ्कल्पो वरणजनकः । स्वस्वरूपेति । वृतस्य भक्तस्य शरीरात्मनोरभेदा'त्तस्यैष आत्मा वृणुते तनुं स्वा'मित्यत्र लभ्यविवरणे वृतनिवेशात् स्वस्वरूपं स्वं आत्मा तस्य स्वरूपं वृतभक्तनिष्ठं वरणादि तत् आत्मनि शरीरे लभ्यविवरण-शरीरे यस्य साधनस्य तत्स्वस्वरूपात्मकम् । फलं लभ्यपदोक्तम् । तथेति । पूर्वसूत्रोक्तरीत्या स्वयमेवेत्यादिः । अनन्या इति । न अन्यत् फलभिन्नं साधनादि हृदि येषां ते अनन्याः । तादात्म्याधिपत्यमुक्तम् । भेद आधिपत्यमाहुरित्याशयेनाहुः सर्वस्येति । विरोधस्तु मुक्तौ भेदाभावात् प्रशासनस्य भेदाधीनत्वात् । अन्यत्रेत्यादीति । मायाभेदविशिष्टे जगति । विभूतीति । ब्रह्मादिभिः । तद्भीति । विभूत्यभिप्रायेण । पुरुषोत्तमस्य भक्तैः सह निगूढभावकरणातिरिक्तस्वक्रीडाभावादेवकारस्तद्योगं व्यवच्छिनत्ति । अनुग्रहेति । विश्वासस्य पुष्ट्यन्तर्गतत्वात्तथा । मुक्तसङ्कल्पेति । दहरविद्यायां 'अथ य इहात्मानमनुविद्य व्रजन्त्येतां५श्च सत्यान् कामा५स्तेषा५सर्वेषु कामचारो भवती'ति । आत्मानुवेदिनो मुक्तास्तेषां सङ्कल्पा अव्यवहितोत्तरश्रुतिषु 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ती'त्यादिषु । एकत्वमविवक्षितम् । स्वाधीनतामिति । नान्योधिपतिर्यस्येति । अत एवेत्यस्यावन्ध्यसङ्कल्पादेवेत्यर्थः ॥ ९ ॥

अभावं बादरिराह ह्येवम्॥ १०॥

मुक्तोऽपि जीवः पुष्टिमार्गेऽङ्गीकृतो भगवद्दत्तं विग्रहं प्राप्य भजनानन्दं प्राप्नोतीति सिद्धम्। अत्र प्रत्यवतिष्ठते। बादरिराचार्यो मुक्तस्य देहाद्यभावं मनुते। तत्र हेतुराह ह्येवमिति। ब्रह्मविदो हि मुक्तिरुच्यते। 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यती'त्याद्युक्त्वा, 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्ये' दित्यादिना द्वितीयज्ञाननिषेधमाह ब्रह्मविदः श्रुतिः। तथा च तस्य कामभोगवार्ता दूरतरेति, तदाक्षेप्यदेहोपि तथा॥ १०॥

भावं जैमिनिर्विकल्पामननात्॥ ११॥

जैमिनिराचार्यस्तु मुक्तस्य पुंसो देहादेर्भावं सत्तां मन्यते। तत्र हेतुः विकल्पेत्यादि। 'ब्रह्मविदाप्नोति पर'मिति श्रुत्या ब्रह्मज्ञानस्य तत्प्राप्तिसाधनत्वमुच्यते। 'नायमात्मे'ति श्रुत्या तु वरणमात्रप्राप्यत्वम्। 'सोऽश्नुत' इत्यादिना च परप्राप्त्युपन्यासः क्रियते। 'इहैव समवनीयन्ते' 'ब्रह्मैव सन् ब्रह्माऽप्येती'ति च पठ्यते। एवं सति मिथो विरोधे तदभावायोक्तव्याख्यानरीत्या ज्ञानमार्गीयस्य ब्रह्मज्ञानेनाक्षरब्रह्मप्राप्तिः, पुष्टिमार्गीयभक्तस्य तु 'सोऽश्नुत' इत्यनेनोक्ता परप्राप्तिरिति व्यवस्थितविकल्प एव श्रुत्यभिमत इति ज्ञायते। तेन, 'नायमात्मे'ति

---

भाष्यप्रकाशः।

अभावं बादरिराह ह्येवम्॥ १०॥ अत्रेत्यादि। अस्मिन्नर्थे निःसम्बोधनिरानन्दमुक्तिवादी प्रत्यवतिष्ठत इत्यर्थः। तत्र हेतुः। बादरिरित्यादि। शेषं स्फुटम्॥ १०॥

एतन्मते कामाशनबोधकश्रुत्यादयः पूर्वकक्षाविश्रान्ताः जैमिनिस्तु पूर्वकक्षाविश्रान्तौ मानाभावात् ब्रह्मविद्वृत्तान्तकथनस्योभयत्र तुल्यत्वान्मार्गभेदेनाधिकारिभेदमङ्गीकृत्योभयव्यवस्थामाह।

भावं जैमिनिर्विकल्पामननात्॥ ११॥ विकल्पामननादिति। विरुद्धाः कल्पाः पक्षाः विकल्पाः श्रुतिषूच्यमानाः, तेषां आमननात् आसमन्तान्मननाद् विचारात्। तथा च ज्ञानप्राप्यत्वविरुद्धं वरणैकलभ्यत्वं कामाशनविरुद्धश्चाप्यय इति साधनयोः फलस्वरूपयोश्च मिथो विरुद्धत्वे सति तदभावायाधिकारिभेद आस्थेय इति ज्ञानमात्रात् साधनात् ब्रह्मभावे तत्र लयः,

रश्मिः।

अभावं बादरिराह ह्येवम्॥ १०॥ निःसम्बोधेति। अर्थबलाच्छब्दोप्यन्यथा नेय इति मतेदृशो भवति। भाष्ये। तथेति दूरतरः॥ १०॥

भावं जैमिनिर्विकल्पामननात्॥ ११॥ एवं सतीति भाष्यं विवृण्वन्ति। इति

श्रुतिः परप्राप्तिविषयिणी । 'इहैवे' त्यादिश्रुतिस्तु मर्यादामार्गीयविषयिणीति मन्तव्यम् । एवं सति पुष्टिमार्गीयस्य भोगसाधनात्मकविग्रहवत्त्वं निष्प्रत्यूहं सिध्यति । 'तत् केन कं पश्ये' दित्यादिना तु ब्रह्मज्ञानसामयिकीं व्यवस्थामाह, न तु तदुत्तरकालीनपरप्राप्तिसामयिकीमिति किमनुपपन्नम् ॥ ११ ॥

द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥

ब्रह्मणा सह सर्वकामाशनप्रयोजकं शरीरं शरीरत्वस्य भूतजन्यत्वव्याप्यत्वात्तदभावेनाशरीररूपम्, तद्भोगायतनत्वेन शरीररूपमपीति बादरायण आचार्यो मन्यते । अत्र हेतुः, अत इति । तथाविधश्रुतेरित्यर्थः । तथाहि । 'भूमैव विजिज्ञासितव्य'इत्युक्त्वा, तत्स्वरूपमाह 'यो वै भूमा तत्सुख'मित्युपक्रम्य,

भाष्यप्रकाशः ।

वरणसहकृतात्तु तल्लाभः स्वाधीनतया स्वरूपानुभावात्मक इति श्रुत्यभिप्रेतस्य व्यवस्थितविकल्पस्य सम्यग्विचारात् तथेत्यर्थः । शेषं स्फुटम् ॥ ११ ॥

द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥ भगवान् व्यासस्तु जैमिन्युक्तव्यवस्थां बादर्युक्तं द्वैतदर्शननिषेधं चाङ्गीकृत्य जैमिन्युक्तात् कश्चिद्विशेषमाहेत्याशयेन सूत्रं व्याकुर्वन्ति ब्रह्मणा सहेत्यादि । एवमधिकारिभेदमार्गभेदाभ्यां मुक्तस्य देहसत्तायास्तदभावस्य च प्राप्तौ यस्य शरीरं प्राप्तम्, तत् कीदृशमित्यपेक्षायां तच्छरीरं उभयविधम्, केनचिद्धर्मेण शरीररूपम्, केनचिद्धर्मान्तरेण अशरीररूपमित्येवं द्विविधमिति बादरायण आचार्यो मन्यत इत्यर्थः । हेतुबोधिका श्रुतिः कुत्रास्तीत्याकाङ्क्षायामाहुः तथाहीत्यादि । तथा तत्प्रकारकं हि यतो हेतोः, 'भूमैव विजिज्ञासितव्य' इत्याद्युक्त्वा तस्य शरीरस्य स्वरूपमाह । तथा च छान्दोग्ये भूमविद्यायामस्तीत्यर्थः । ननु तत्र भूम्नः स्वरूपमुच्यते, न शरीरस्येत्यत आहुः यो वा इत्यादि । सत्यं भूम्नः स्वरूपमुच्यते, तथापि तस्य सुखरूपत्वमुपक्रम्याग्रे सुखरूपतया तदुच्यते, इत्येवं

रश्मिः ।

साधनयोरित्यादि । वरणसहकृतादिति । अनुग्रहजपुष्टिभक्तिरूपात्साधनात् । 'वशे कुर्वन्ति मां भक्त्ये'ति वाक्यादाहुः । स्वाधीनतयेति । तथा च एवमपि उपन्यासादिति सूत्रभाष्यं भगवदानन्दमश्रुत इति । तथेति । ज्ञायत इत्यर्थः । शेषमिति । तेन नायमात्मेत्यादि भाष्यं स्फुटम् । तथाहि । मर्यादामार्गीयविषयिणीति । मर्यादामार्गीयसद्योमुक्तिविषयिणी । ब्रह्मज्ञानसामयिकीमिति । गीताष्टादशाध्यायोक्तसात्त्विकज्ञानसामयिकीमिति ॥ ११ ॥

द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥ ब्रह्मणा सहेत्यादीति । भूतजन्यत्वेति । भूतजन्यं शरीरत्वात् । देवदत्तशरीरवत् । तदभावेन भूतजन्यत्वाभावेन । तदिति भिन्नं पदम् । एवमपीति । बादरिरर्थार्थी अधिकारी । जैमिनिरार्त्तोऽधिकारी त्यधिकारिभेदः । अधिकारभेदे तत्कृतो मार्गभेदः ताभ्याम् । केनचिदिति । भोगायतनत्वेन धर्मेणेत्यर्थः । केनचिदिति । भूतजन्यत्वाभावेन धर्मान्तरेण । अशरीररूपमित्यत्राभावज्ञानं शरीररूपंप्रतियोगिज्ञानाधीनमिति भाष्यविपरीतक्रमः । भाष्यं तु सूत्रे अनुरुणद्धीत्यदोषः । सूत्रयोरतु शरीराभावः । द्वितीये तु शरीराभावाभावरूपं शरीरमित्यदोषः । तदुच्यते । भूमस्वरूपमुच्यते इत्येवं

अत्र उच्यते 'यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमे'त्यनेन केवलभावविषयत्वं पुरुषोत्तमलक्षणमुक्त्वा केवलभाववतो भक्तस्य विप्रयोगसामयिकीं व्यवस्थामाह 'स एवाधस्तात् स उपरिष्टात् स पश्चात् स पुरस्ता'दित्यादिना। ततः, 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजान'न्निति पूर्वावस्थामनूद्य, संयोगावस्थामाह 'आत्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्द' इति वाक्येन, 'सोऽश्नुत' इति श्रुतिसंवादिनमर्थमुक्त्वा, भक्तस्वरूपमाह 'तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण' इत्युपक्रम्य, 'आत्मत एवेदꣳ सर्व'मिति। तेनाशरीरत्वं सिध्यति। अन्ययप्रयोगेणाविकृतादेव पुरुषोत्तमात् प्राणाद्याविर्भाव उच्यते। अत्र ल्यब्लोपे पञ्चमी। पूर्वं विरहदशायां प्राणादयो भगवत्येव लीना आसन्, ततस्तत्प्राकट्ये तत एव प्राणादयोपि सम्पन्ना इति तत्प्राप्तेर्निमित्तत्वम् यतो, विभूतिरूपाणामपि पुरुषोत्तमे लयो नानुपपन्नः।

---

भाष्यप्रकाशः।

गृहीत्वा विभजन्ते। यत्र नान्यदित्यादि, सर्वमितीत्यन्तम्। तथा चात्र नित्यनिरवधिसुखात्मकं भूमानमुपक्रम्य तस्माद् भूम्न आत्मनः सकाशात् प्राणादिसर्वान्तानां देहान्तःस्थानामाविर्भाव उक्तः। तेन तस्य भूताजन्यत्वादशरीरत्वम्। 'आत्मरति'रित्यादिना भोगस्योक्तत्वात्तदायतनत्वेन शरीरत्वमतस्तथेत्यर्थः। ननु ब्रह्मणः सकाशादेव तैत्तिरीयादावपि सृष्टेरुक्तत्वात् कोऽत्र विशेष इत्यत आहुः अव्ययेत्यादि। अत्रेति। 'आत्मत' इति शब्दे। तथा च तत्राकाशवाय्वादिभावापन्नात् सोच्यते, अत्र तु भूमरूपादेवेति विशेष इत्यर्थः। नन्वत्र भक्तस्यैव व्यवस्थोच्यत इत्यत्र किं गमकमत आहुः पूर्वमित्यादि। तथा च यत इदमवस्थाद्वयं क्रमेणोक्त्वा भगवद्दर्शनोत्तरं प्राणाद्याविर्भावं वदतीति भगवत्प्राप्त्यनन्तरभावित्वकथनमेव तद्गमकमित्यर्थः। नन्वानन्दमयाधिकरणे विषयश्रुतौ एवंविदो भक्तस्य एतल्लोकत्यागः, 'अस्मा-

रश्मिः।

गृहीत्वेति। इत्येवं शरीरपर्यन्तं गृहीत्वा। विभजन्त इति विभागं कुर्वते। शब्दार्थान्। तस्येति। वृतभक्तस्य। तथेत्यर्थ इति। शरीरस्य स्वरूपमुच्यत इत्यर्थः। तेनाशरीरत्वं सिध्यतीति भाष्ये शरीरत्वमप्युपलक्षणविधया ज्ञेयम्। आत्मरतिरित्यादि वक्ष्यमाणभाष्यं त्वनुवादकमिति भावः। तैत्तिरीयादाविति। छान्दोग्यमादिशब्देन। 'सदेव सौम्येदमग्र आसी'दिति। आत्मत इति शब्द इति। आत्मानं प्राप्य प्राणादयो भवन्तीत्यर्थः। भूमरूपादिति। तेन सदेवेत्यत्राप्यानन्दानुक्तेस्ततोऽपि विशेषः। पूर्वमित्यादीति। भगवति लीत्वा प्राणादयः प्रकटन्तीत्यर्थः। ततस्तत्प्राकट्य इति। भक्तेच्छातः। आत्मनः प्राकट्ये सति। तत एव आत्मत एव प्राणादयोऽपि शरीरे सम्पन्ना आक्षिप्ते। तत्प्राप्तेः भगवति लयरूपायाः। निमित्तत्वमिति। 'नासतो विद्यते भावो नाभावो विद्यते सत' इति गीतायास्तया। ततः किमित्यत आहुः। तथा चेत्यादि। यस्य भगवतो विरहेण लयास्यप्राप्त्यनन्तरभावित्वकथनं मुक्तस्य तदेव भक्तस्य व्यवस्थाया गमकमित्यर्थः। तथा च छान्दोग्यश्रुतिः मधुब्राह्मणे। 'तद्यत्प्रथमममृतं तद्वसव उपजीवन्त्यग्निना मुखेन न वै देवा अश्नन्ति न पिबन्ति तदेवामृतं दृष्ट्वा तृप्यन्ति त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ती'ति। वसवः सर्वात्मभाववन्तः अग्निरूपाः मुखं आचार्याः सर्वात्मभाववन्त इति। तथा चोक्तभाष्येपि भक्त इत्यर्थः। विषय-

भाष्यप्रकाशः ।

लोकात् प्रेत्ये'त्यनेनोक्तः, सोऽत्र 'वाङ्मनसी'त्यादिना, 'सोऽध्यक्षे तदुपगमादिभ्य' इत्यन्तेन व्युत्पादितः । या पुनस्तदग्र 'एतमन्नमयमात्मानमुपसङ्क्रामती'त्यादिना विभूतिरूपाणां प्राप्ति-रुक्ता फलानुभवोपयोगिनी, सात्र सम्पद्याविर्भावादिसूत्राभ्यामुक्त्वा, 'ब्राह्मेणे'त्यादि'द्वादशा-ह'सूत्रान्तैर्व्युत्पाद्यते । फलानुभवस्त्वतिविगाढभावेन सर्वात्मभावे सत्येव भवतीति तद्बोध-नार्थं या पूर्वं विरहदशा, सा तत्र ब्रह्मवित्प्रपाठकश्रुतौ 'यतो वाचो निवर्तन्त' इत्यारभ्य, 'उभे ह्येवैष एते आत्मान१ स्पृणुत' इत्यन्तेन भृगुप्रपाठके च, 'हा३वु हा३वु' इत्यारभ्य, 'अहं विश्वं

रश्मिः ।

श्रुताविति । 'को ह्येवान्यात्कः प्राण्या'दितिश्रुतौ । इत्यन्तेन सूत्रग्रन्थेन व्युत्पादितः । तदग्र इति । विषयश्रुत्यग्रे तैत्तिरीये । फलानुभवेति । 'अलौकिको महान् भोगः प्रथमे विशते सदे'ति सेवा-फलग्रन्थोक्तं फलं तदनुभवोपयोगिनी । अतिविगाढेति । विरहे भवति । 'धारयन्त्यतिकृच्छ्रेण प्रायः प्राणान्कथंचने'त्यत्रातिकृच्छ्रशब्दाद्विगाढः 'ता नाविदन्नि'ति वाक्योक्तो भावो विरहः रसैकदेशः अव्य-वहितोत्तरप्राप्तिसाधनत्वात् । सर्वात्मभावः सर्वोप्यात्मनो भावः । या पूर्वमिति । भाष्ये पूर्वं विरहदशायामित्यादिनोक्ता । सा तत्रेति । तैत्तिरीये उपसंहारे अर्थनिर्णायके'अस्माल्लोकात्प्रेत्य एत-मन्नमयमात्मानमुपसंक्रामती'त्यादिविभूतिप्राप्त्यनन्तरं तत्सङ्ग्रहश्लोकं तदप्येष श्लोको भवतीत्यनयोक्त्वा ब्रह्मवित्प्रपाठकश्रुतावुच्यते । 'उभे ह्येवैष एते' इति । भक्तिमार्गीयज्ञानमार्गीयौ भक्तज्ञानिनौ विशेष-तोनुग्रहवन्तौ । सामान्ये नपुंसकं श्रुतौ । स्पृणुते प्रीणीतः । एकवचनं छान्दसम् । ज्ञानी भक्तः स्पृणुत इत्येकवचनम् । स्पृ प्रीतौ । ननु सर्वात्मभावो भक्तिमार्ग इति उभे इति कथमिति चेन्न । ज्ञानेन भक्तेति श्रुतेः शिवे ज्ञानिनि 'अहं मनुरभवं सूर्यश्चे'ति श्रुतेः सर्वात्मभावदर्शनात् । ननु ज्ञानी तैत्तिरीये कुत्रेति चेन्न । उभे ह्येवैष इत्यस्याः पूर्वश्रुतौ 'एत१ह वा व न तपति किमह१साधु नाकरवं किमहं पापमकरव'मिति । 'स एवं विद्वानेते आत्मान१स्पृणुत' इत्यस्यां विद्वानित्यनेन ज्ञान्युक्तेः । एते तात्पर्यार्थभक्तोऽपि विद्वानित्यस्यार्थः अतो द्विवचनम् । स्पृणुते स्पृणाते । भृगुप्रपाठके चेत्यादीति । पूर्वम् 'एतत्साम गायन्नास्ते' इत्यत्र किमेतत्साम समत्वाद्ब्रह्मैव साम सर्वानन्यरूपं गायन् । कथम् । हा ३वु३ अहो इत्यस्मिन्नर्थेऽत्यन्तविस्मयख्यापनार्थाः । मार्गत्रय आश्चर्यमिति वारत्रयम् । कथमद्वैत आत्मा निरञ्जनः रज उपाधिः ब्रह्मा भक्त्युपाधिः मार्गत्रयेऽपि सन् । अहमेवान्नम् । मार्गत्रये भक्ति-मार्गप्राधान्यायान्नस्य त्रिरुक्तिः । 'पृथिवी वा अन्न'मिति श्रुतेः । पृथ्वी भार्या स्त्रीभावे तदभेदः उक्तः । अहमेवान्नमिति । तत एव ज्ञानमार्गेप्यन्यद्विहायान्नाभेदः । कर्ममार्गे हिरण्यगर्भमुक्तौ पृथिव्यभेदः जगदाश्रयत्वादुभयोर्गौणः । 'कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः । अकर्मणश्च बोद्धव्यं गहना कर्मणो गति'रिति कर्मज्ञो ब्रह्मा उच्यते नान्यः । यद्वा कर्मणा चित्तशुद्धौ भक्त्या मोक्षो ब्रह्मणः । पुनर्विस्मयः । भक्तिमार्गी सर्वात्मभाववान् नान्नमत्ति । उक्तमधुब्राह्मणश्रुतेः । ज्ञानी तु सर्वं ब्रह्मात्मकं पश्यन्नात्ति किन्त्वानन्दो भुनक्तीति मन्यते । कर्ममार्गी तु न भुनक्ति । 'पयोव्रतेन व्रतयतीति' श्रुतेः । ज्ञानं क्रियेति पञ्चरात्र इति पूर्ववन्नात्तीति वा । किञ्चाहमेव श्लोककृत् । अन्नान्नादयोः सङ्घातकर्ता त्रिरुक्तिर्विस्मयख्यापनार्था । श्लोकसङ्घाते । 'अहमस्मि प्रथमजा ऋतस्येत्यादि' । अहमस्मि भवामि प्रथमजा सोऽहं।प्रथमोत्पन्नः नित्यक्रीडास्थः । नित्यक्रीडास्था द्विविधाः । सनातनाः कृत्रि-माश्च तत्र नित्यक्रीडास्थाः कृत्रिमा इमे इत्याह । ऋतस्येति । ऋतस्य सत्यस्य मूर्तामूर्तस्यास्य जगतः

'आत्मरति'रित्यादिना, 'सोऽश्नुत' इत्यनेन च शरीरत्वम्। जैमिनिरप्यत एवं 'ब्राह्मेणे'ति मनुते। एकस्य विरुद्धोभयधर्मवत्त्वममन्वानं प्रति वैदिकं दृष्टान्तमाह द्वादशाहवदिति। 'यः कामयेत प्रजायेयेति स द्वादशरात्रेण यजेते'ति चोदनया 'द्विरात्रेण यजेते' त्यादिवन्नियतकर्तृकत्वेनाहीनत्वं गम्यते द्वादशाहस्य। 'द्वादशाहमृद्धिकामा उपेयुः। य एवं विद्वांसः सत्रमुपयन्ती'ति श्रुत्या च सत्रत्वं बहुकर्तृकस्य गम्यते। एवमेव द्वादशाङ्गशरीरेन्द्रियप्राणान्तःकरणात्मभिरश्नुत इति सत्रतुल्यत्वम्। वस्तुतो भगवद्विभूतिरूपत्वेन ब्रह्मात्मत्वेनैकरूपत्वम्, अतो द्वादशाहवदुभयविधम्। सत्रे प्रत्येकं चेतनानां यजमानानां फलभागित्ववदत्रापि तादृग्भक्तदेहादीनामपि ब्रह्मात्मकत्वात्। चेतनत्वमेवेत्यप्यनेन

भाष्यप्रकाशः।

भुवनमभ्यभवां सुवर्णज्योती'रित्यन्तेनोक्ता। तथा सति यस्तादृशः स आनन्दमयं ब्रह्मस्वरूपमात्मादेशोक्तप्रकारेणाहङ्कारादेशोक्तप्रकारेण वानुभवतीति सिध्यति, अतो विभूतिरूपाणां प्राणादीनां लयाङ्गीकारोऽनुपपन्न इत्यत आहुः विभूतीत्यादि। अहङ्कारादेशे आत्मादेशे च सर्वस्मिन् स्वाभेदस्यात्माभेदस्य च भानोक्त्या लयस्यार्थादेव बोधितत्वात्। अथ तत्र तेषां भक्तानां पार्थक्येन प्राणाद्यभावनमेवाभिप्रेतम्, न सर्वात्मना लय इत्युच्यते, तदापि तस्यां दशायां ब्रह्मणा सह सर्वकामाशनरूपस्य 'आत्मरति'रित्यादिनोक्तस्यानुभवस्याभावात् फलतः-

रश्मिः।

देवेभ्यश्च पूर्वम्। तेन नित्यलीलानुकूलजगत्कर्तृत्वः कृत्रिमः। ऋता३स्येत्यत्र प्लुतोकारः। अमृतस्य नाभा इति। नाभौ मध्ये मुख्ये वा तत्संस्थम्। अमृतत्वं प्राशानां 'ई' आश्चर्ये। यद्वा नाभा ई नाभिमध्यं तत्संस्थममृतत्वं प्राशानाम्। रासस्थसुधाप्राशानाम्। समानवायुप्राशानां वा। समानस्य नाभिसंस्थितत्वात्। 'समानो नाभिसंस्थित' इति वाक्यात्। आचार्यपूजनं नित्यक्रीडायामाह। यो मा ददाति स इदेव मा३वा हेति। यः कश्चिदाचार्यः मां अन्नं अर्थार्थिभ्यो ददाति। अन्नात्मना ब्रवीति कथाद्वारा। यथा 'आत्मना प्रथमा क्रीडे'ति पञ्चाध्याय्याम्। स इत् इत्थं एवमविनष्टं यथाभूतं मा मां वाह अचतीत्यर्थः। अञ्चुगतिपूजनयोः 'अच' इत्येके। अहमन्नमन्नमदन्तमाद्मीति। यः पुनरन्यो मामदत्वार्थिभ्यः काले प्राप्तेन्नमभितोऽदन्तं अहमन्नमेव सम्प्रत्यद्मि। अहं विश्वं भुवनमभ्यभवां सुवर्णज्योतीरिति। अहं विश्वं समस्तं भुवनमभ्यभवाम्। अभिपरेणेश्वरेण। सुवर्णम् सुवरादित्यो नकार उपमार्थः। आदित्य इव सकृद्विभातमस्मदीयज्योतिःप्रकाशः। प्रकृतमनुसरामः। तादृश इति। विरहदशायां प्राप्तभूमः। भगवति लीनः पुनः प्रकटः सम्भ्रमचरमवृत्त्यानुभवतीत्याहुः। आत्मादेशोक्तेति। आत्मा ब्रह्म तत्पदवाच्यः। अयं व्यष्टिप्रकारः सपुष्टिप्रकारमाहुः। अहङ्कारादेशोक्तेति। भक्तसंवलित आत्मेति पुष्टिफलम्। चकारोऽनुक्तसमुच्चये। आत्मादेशोक्तप्रकारेण च। लयाङ्गीकार इति। प्राणादयो भगवत्येव लीना इत्युक्तभाष्योक्तलयाङ्गीकारः। स्वाभेदस्येति जीवाभेदस्य। अथातोहङ्कारादेश इत्युपक्रमादात्मधर्माणामुपरिष्टात्वादीनामहङ्कारेणाध्यासक इति। अत्र बोध्यम्। तादात्म्यरूपाद्वैतात्। लयस्यार्थादेवेति। लयमन्तराऽभेदमानासम्भवात्तथा। फलाध्याये तादात्म्यरूपाभेदविवक्षणादाहुः। अथ तत्रेति। तस्यामिति। पूर्वोक्तायां दशायां विरहदशायामिति यावत्। अभावादिति। प्राणादीनां लयेनाभावात्। तौल्यमिति। सर्वात्मना लयेन तौल्यम्। 'आन्तरन्तु परं फल'मिति सुबो-

भाष्यप्रकाशः ।

तौल्यमेव। वस्तुतस्तु तदग्रे 'तस्य ह वा एतस्ये'त्यादिना आत्मतः प्राणादीनामाविर्भावश्रावणात्तद्न्यथानुपपत्त्यैव लयाङ्गीकारः, अतो नानुपपन्न इत्यर्थः। एवमशरीरत्वबोधिकां श्रुतिं व्याख्याय शरीरत्वसाधिकां श्रुतिमाहुः आत्मरतिरित्यादि। तेन तैत्तिरीयसमाप्तौ या दशोक्ता, सा फलानुभवस्य प्रथमावस्थेति बोधितम्। स्वोक्ते पूर्वसूत्रसम्मतिमाहुः जैमिनिरित्यादि। एवं हेतुं व्युत्पाद्य दृष्टान्तं व्युत्पादयन्ति एकस्येत्यादि। दार्ष्टान्तिके योजयन्ति एवमेवेत्यादि। तेन, 'ब्रह्मभावात्तु भक्तानां गृह एव विशिष्यत' इति साधितम्। तथा च भक्तानामेव भोगरूपकार्यबलेन सत्रतुल्यत्वम्, अन्येषां तु तदभावादहीनतुल्यत्वमिति भक्ताभक्तव्यवस्थाबोधनादभक्तस्य बादरेः पूर्वकक्षाविश्रान्तत्वात्तदुक्तमपि युक्तम्। जैमिनेस्तु सर्वत्र दृष्ट्या उत्तरकक्षाविश्रान्तत्वात्तदुक्तमपि युक्तमिति तस्य तस्य तथात्वबोधनायैव स्वमतकथनमित्यर्थः। मर्यादामार्गीया अपि भगवल्लोक एतादृशदेहेनैव यथाधिकारं चतुर्विधमुक्तिभाजस्तिष्ठन्ति। ज्ञापनेनापि पूर्वोक्तं साध-

रश्मिः ।

धिन्याम्। तस्यां दशायां ब्रह्मणा सह सर्वकामाशनस्यात्मरतिरित्यादिनोक्तस्यानुभवस्य सूक्ष्मरूपैर्भावात्तौल्यं नेत्यरुच्या वस्तुतस्तु पक्षमाहुः। वस्तुतस्त्विति। तदग्र इति। अहङ्कारादेशस्याग्रे। तदन्यथेति। आविर्भावो लीनस्येत्याविर्भावान्यथानुपपत्त्या। अन्यथानुपपत्तिरत्र पूर्वमीमांसोक्ता प्रस्थानरत्नाकरेऽङ्गीकृता ग्राह्या। अनुपपन्न इति। लयाङ्गीकारो नानुपपन्नः। तैत्तिरीयेति। सामगायनेन। यादृशोक्तेति[1]। यादृश्युक्तेत्यपि। प्रथमावस्थेति। भूमविद्यारूपा। स्वोक्त इति। गोस्वाम्युक्ते आचार्योक्ते वा भाष्ये ब्राह्मेणेति पूर्वसूत्रसम्मतिमाहुः। हेतुमिति। अत इति सौत्रं हेतुम्। तथा च बादरायण उभयविधं शरीरमतः भाष्योपपादनादिति सूत्रार्थः। एकस्येत्यादीति। विहितोभयधर्मौ शरीराशरीरत्वे। आहेति। व्यासो भगवान्। नियतेति। एककर्तृकत्वेन। एकत्वविवक्षणात्। उपेयुरिति। उप समीपे ईयुः गच्छेयुः कुर्युः आधिदैविकं प्रकटमीयुः। आधिभौतिकं कुर्युः। उपयन्ति उपगच्छन्ति कुर्वन्ति। सत्रत्वमिति सत्रत्वमुक्तमिति। बहुकर्तृकस्य द्वादशाहीनस्य। बहुकर्तृकत्वं सत्रत्वमिति सत्रलक्षणात्। एवमेवेत्यादीति। पादौ गुल्फौ जङ्घे स्तनौ करौ शिरः हृदिति द्वादशाङ्गशरीरे। आत्मा जीवः। एकरूपत्वमिति। तादात्म्यरूपाभेदादेकरूपत्वम्। उभयेति। शरीराशरीरत्वे विधेयस्य शरीरस्य तदुभयविधं शरीरम्। तेनेति। श्रीभागवते एकादशे सप्तदशेऽध्याये ब्रह्मचर्यगृहस्थाश्रमाभ्यामध्यायं समाप्याष्टादशाध्याये आश्रमद्वयमुक्तम्। तस्मादाश्रमद्वयं गार्हस्थ्यं सन्न्यासश्च मुख्याावितरौ गौणौ। एवं च तेनेत्यस्य द्वयोराश्रमयोर्मुख्यत्वेन तत्रापि ज्ञानिनो भक्तत्वेन ब्रह्मभावाद्भक्तविशेषत्वेनेत्यर्थः। ब्रह्मभावाद् भूमविद्याविद्यानन्दानुभवात्पूर्वोक्तात् साधनरूपात् तिरोहितस्याविर्भावे ब्रह्मभावः। सन्न्यासाश्रमाद्वा। गृहाणां बन्धकत्वाद्भक्तानामिति विशेषणम्। 'मद्वार्तायातयामानां न बन्धाय गृहा मता' इति वाक्याद्गृहस्य पुंस्त्वं स्मार्तम्। विशिष्यत इति। यथानुग्रहो यस्मिन् जीवे स तादृशं तदाविश्य भगवदानन्दमश्नुत इति। एवमभ्युपन्याससूत्रभाष्यात्। एवं पुष्टिमार्गीयाणां फलकथनेन स्मृतेर्मर्यादामार्गीयशरीरस्य शरीराशरीरत्वे आहुः। मर्यादेति। एतादृशेनेति। अक्षरात्मकेन। परंत्वेष विशेषः। ज्ञानिनो लोके मर्यादाभक्तास्तु चरणात्मकेऽक्षर इति। कृत्स्नभावात्तु गृहिणोपसंहार इत्यत्राप्युक्तम्। अत एव गीतायां मुक्तौ पारिभाषिकत्यागसन्न्यासौ गृहस्थस्यापि सम्भवतः ब्रह्मचर्यं च। चतुर्विधेति। सालोक्यसार्ष्टिसामीप्यसारूप्यरूपचतुर्विधमुक्तिभाजः। सायुज्यसार्ष्टिसामीप्यानि

[1] यादृशोक्तेति रश्मौ।

दृष्टान्तेन ज्ञाप्यते । अत एव श्रीभागवते 'देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिना'मिति गीयते ॥ १२ ॥

इति चतुर्थोध्याये चतुर्थपादे द्वितीयं ब्राह्मेणेत्यधिकरणम् ॥ २ ॥

तत्त्वभावे सन्ध्यवदुपपत्तेः ॥ १३ ॥ (४-४-३)

अथेदं चिन्त्यते । भगवत्स्वरूपे प्राकृतशरीर इवावस्था दृश्यन्ते तत्कालीनैः

---

भाष्यप्रकाशः ।

पितुमाहुः अत एवेत्यादि । तथा च यत्र जयविजयादीनामप्येवम्, तत्र पुष्टिमार्गीयस्य का वार्तेत्यर्थः । एवं प्रसङ्गेन भगवल्लोकप्राप्तिरूपं फलमुक्तमिति ज्ञेयम् ।

अन्ये तु बादरिसूत्रे, 'मनसैतान् कामान् पश्यन् रमत' इति श्रुतौ 'मनसे'ति विशेषनिर्देशबलान्मुक्तस्य देहेन्द्रियाद्यभावम्, जैमिनिसूत्रे च 'स एकधा भवती'त्यादिविकल्पामननाद्देहेन्द्रियसद्भावम्, बादरायणसूत्रे, उभयश्रुत्यनुरोधान्मुक्तस्य सङ्कल्पेन कदाचित्तदभावं कदाचित्तत्सद्भावं च व्याकुर्वन्ति । तत्र मुक्तसङ्कल्पो यदि परमेश्वरसङ्कल्पानुसारी, तदा तद्व्यापारभूतः, यदि तद्विरुद्धः, तदा अकिञ्चित्करत्वादप्रयोजक इति ध्येयम् ॥ १२ ॥ इति द्वितीयं ब्राह्मेणेत्यधिकरणम् ॥ २ ॥

तत्त्वभावे सन्ध्यवदुपपत्तेः ॥ १३ ॥ एवमत्र फलानुभवप्रकारमध्ये देहरूपः प्रकारो विचारितः । अथ 'आत्मा प्रकरणा'दित्यादिसूत्रद्वयोक्तस्य फलस्य प्रकारं विचारयतीत्याशयेनाधिकरणमवतारयन्ति अथेत्यादि । एवमष्टसूत्र्या पूर्वसूत्रद्वयोक्तदेहस्वरूपनिरूपणोत्तरं इदमग्रिमसूत्रद्वयोक्तं भगवत्स्वरूपमनेन प्रकारेण विचार्यते । यद्यपि गुणोपसंहारे भगवतो निर्दोषत्वम्,

रश्मिः ।

सेवाफलत्वे नित्यलीलायामप्याविर्भवन्ति सेवाफलग्रन्थोक्तानि । अत एवेत्यादीति । शरीरस्योभयविधत्वादेव । 'देहेन्द्रियासुहीनाना'मित्यशरीरत्वं शरीरस्य पुरवासिनामिति शरीरत्वम् । जयेति । आदिनाऽऽनन्दादयः । एवमिति । शरीराणां शरीरत्वाशरीरत्वे । जयविजययोर्वैकुण्ठात्पातस्तु प्रश्नोपनिषद्यस्ति । पितृयाणेन याताः पुनरावर्तन्त इति सुबोधिन्यां तृतीयस्य स्पष्टम् । प्रसङ्गेनेति । ब्रह्मप्राप्तिनिरूपणेन स्मृतं भगवल्लोकप्राप्तिरूपं फलं उपेक्षानर्हमिति स्मृतस्योपेक्षानर्हत्वं प्रसङ्गत्वेन । स एकधेति । छान्दोग्ये भूमविद्यायाम् । तदभावं शरीराभावम् । तत्सद्भावं शरीरसद्भावम् । परमेश्वरेति । मायोपाधिकसङ्कल्पानुसारी तद्व्यापारभूतः सगुणव्यापारः सगुणो न तु मुक्तनिर्गुणस्य । अकिञ्चित्कर इति । आविद्यकत्वादिति भावः । मुक्तनिष्ठाविद्ययोपमर्द्योपमर्दकभावो न परेषाम् । विद्ययाऽविद्यानाशात् । मुक्तसङ्कल्पो मायिकोऽन्येषामाचार्याणामिति न न्यूनता ग्रन्थे । भास्करभाष्ये मनसैतानिति श्रुतिरस्ति, रामानुजभाष्ये तु नास्ति । 'न ह वा सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ती'त्यस्ति । सैतच्छ्रुतेरुपलक्षिकेति ज्ञेयम् । एवमन्यभाष्येषूह्यम् ॥ १२ ॥

इति द्वितीयं ब्राह्मेणेत्यधिकरणम् ॥ २ ॥

तत्त्वभावे सन्ध्यवदुपपत्तेः ॥ १३ ॥ फलस्येति । ब्रह्मणा विपश्चितेत्युक्तस्य गुणातीतस्य ब्रह्मरूपस्य । अष्टसूत्र्येति । ब्राह्मेणेत्याद्यष्टसूत्र्या । पूर्वसूत्रेति । 'सम्पद्याविर्भावः स्वेन शब्दात्' 'मुक्तः प्रतिज्ञाना'दिति पूर्वसूत्रद्वयेत्यर्थः । अग्रिमेति । 'आत्मा प्रकरणात्' । 'अविभागेन दृष्टत्वा'दित्य-

पुम्भिररिति कथमप्राकृतत्वमुपपद्यत इति तत्रोपपत्तिमाह । तद्दर्शनस्य वास्तववस्तुविषयकत्वव्यवच्छेदेन पूर्वपक्षव्युदासाय तुशब्दः । तत् प्राकृततुल्यताद्दर्शनं अभावे तथात्वस्याभाव एव भवति, न तु तत्र प्राकृता धर्माः सन्ति । नन्वविद्यमानानामर्थानां कथं दर्शनमुपपद्यत इत्यत आह सन्ध्यवदिति । स्वप्ने यथा वासनावशादविद्यमानानामप्यर्थानां दर्शनं भवति, तथा भगवदिच्छावशात् तत्रापि प्राकृततुल्यत्वदर्शनस्योपपत्तेर्न प्राकृतत्वं तत्र ज्ञेयमित्यर्थः । तथा च श्रुतिः । 'सन्ध्यं तृतीयꣳ स्वप्नस्थानं तस्मिन् सन्ध्ये स्थाने तिष्ठन्नुभे स्थाने पश्यतीदं च

भाष्यप्रकाशः ।

वेधाद्यधिकरणे, अनन्तगुणपूर्णत्वादिकं च, 'व्याप्तेश्च समञ्जस'मित्यवान्तराधिकरणे विचारितम्, तथापि तदेव स्वरूपं फलरूपमिति तत्र न विचारितम् । साधनप्रकरणत्वात् । अतः फलरूपमन्यद्भविष्यतीत्याशङ्कानिरासाय तदेवात्र फलमिति बोधनार्थमवसरसङ्गत्या पुनः परामृश्यते । तथा चात्र फलत्वेन प्रतिपाद्यमानं भगवत्स्वरूपं प्रकृतिसम्बन्धविशिष्टम्, न वेति संशयः । अवस्थादर्शनादाद्यमिति पूर्वपक्षः । तद्दर्शनस्य भ्रान्तत्वान्नेति सिद्धान्त इत्याशयेन सूत्रमवतारयन्ति भग-

रश्मिः ।

ग्रिमसूत्रद्वयोक्तम् । अवस्थेति । कृष्णावतारे भीष्मप्रसङ्गे रुधिरक्षतादिप्राकृतबाल्यपौगण्डाद्यवस्थादर्शनात् ।। भाष्ये । आहेति । छान्दोग्यीयश्वेतकेतूपाख्यानस्य द्वितीयोपदेशप्रकारेण व्यास आहेत्यर्थः ।। प्रकृते ।। तद्दर्शनस्येत्यादीति । उक्तप्राकृतधर्माणां दर्शनस्य । तथात्वस्येति । प्राकृतत्वस्य । सन्ध्यं तृतीयमिति । 'तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत इदं च परलोकस्थानं चेति सन्ध्यं तृतीय'मित्यादिः पूर्वश्रुतिः । अर्थस्तु तस्य वै प्रसिद्धस्यैतस्य प्रकृतस्य पुरुषस्य द्वे एव स्थाने भवतो न न्यूने । के ते इदं च प्रत्यक्षतोनुभूयमानं जन्मैकं द्वितीयं तु परलोक एव स्थानम् । परलोकस्थानं भावि जन्म । एतयोः सन्धौ भवं सन्ध्यं तृतीयं त्रयाणां पूरणं स्वप्नस्थानम् । तस्मिन् सन्ध्ये स्वप्नस्थाने तिष्ठन् वर्तमानः सन्निदं च परलोकस्थानं चेत्येते उभे स्थाने पश्यति । किमाश्रितः केन विधिना परलोकं पश्यतीत्यत आह । अथेति । यथाक्रमः आक्रमत्यनेनेत्याक्रमः, आश्रयोऽवष्टम्भः विद्याकर्मपूर्वप्रज्ञालक्षणः । यादृश आक्रमो यस्य सोयं यथाक्रमोयं पुरुषः परलोकस्थाने प्रतिपत्तव्ये निमित्ते यादृशेनाक्रमेण संयुक्तो भवति । तमाक्रमं बीजभूतमाक्रम्यावष्टभ्योभयान्पाप्मनः पापफलानि दुःखानि आनन्दांश्च धर्मफलभूतान् सुखविशेषान् पश्यत्येवंप्रकारेण । धर्माद्देवताप्रसादाद्वान्त्ये वयसि यदिहासम्भाव्यमानं पश्यति स्वप्ने तत्पारलौकिकमेवेत्यर्थः । स खल्वात्मा बाह्यैर्ज्योतिर्भिरसंसृष्टः स्वयमेव यथा ज्योतिर्भवति, तथेदं स्वयंज्योतिष्ट्वं साक्षादवष्टम्भेनाह स इति । स प्रकृत आत्मा यत्र यस्मिन् काले प्रस्वपिति प्रकर्षेण स्वप्नमनुभवति तदा किमाश्रयः केन प्रकारेण च स्वयं प्रतिपद्यते इत्याकाङ्क्षायामाह । अस्येति । दृष्टस्य जागरितलक्षणस्य देहस्य । कथम्भूतस्य । सर्वा भूतभौतिकमात्रा अध्यात्मादिविभागयुक्ताः अस्य संसर्गकारणभूता विद्यन्त इति सर्वावान् तस्य सर्वावतो मात्रामंशं वासनात्मकमुपादाय गृहीत्वा स्वयमात्मैव अनादित्यादिर्जाग्रद्देहं विहत्य निःसम्बोधमापाद्य स्वयमेव स्वकर्मानुसारि स्वज्योतिषाऽलुप्तदृक् स्वभावेन निर्मितं वस्तु विषयीकुर्वन् प्रस्वपिति । अत्रास्यां स्वापावस्थायामयं पुरुष आत्मा स्वयमेव ज्योतिर्भवति । तदादित्यादेरभावादिन्द्रियाणां चोपसंहृतत्वान्मनसश्च विषयाकारेणैवोपक्षयात् । यद्वा परलोकदर्शनार्थं करणत्वेन सङ्ग्रहादिति परिशेषादित्यर्थः । ननु स्वप्नेपि

परलोकस्थानं च । अथ यथाक्रमोऽयं परलोकस्थाने भवति तमाक्रममाक्रम्योभयान् पाप्मन आनन्दांश्च पश्यति । स यत्रायं प्रस्वपिती'त्युपक्रम्य, 'स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपित्यत्रायं पुरुषः स्वयंज्योतिर्भवति, न तत्र रथा न रथयोगा न पन्थानो भवन्ती'त्यादिरूपा । एवमेव भगवानासुराणां प्राकृतगुणे तमस्येव दुःखात्मके लयं चिकीर्षुः स्वस्मिन् प्राकृतत्वबुद्धिसंपादनाय तादृशीमिव लीलां दर्शयति, अतो न प्राकृतत्वशङ्कागन्धोऽप्यत्र । अत एव भगवतोक्तं, 'मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयका' इत्युपक्रम्य, 'ततो यान्त्यधमां गति'मिति । तेषामासुरत्वेन मुक्त्यनधिकारित्वात् तथाकरणम् । अतः सुष्ठूक्तं सन्ध्यवदुपपत्तेरिति ॥ १३ ॥

## भावे जाग्रद्वत् ॥ १४ ॥

लौकिकवद्भासमाने लीलापदार्थे यद्दर्शनं भक्तानाम्, तत् तु भावे विषये विद्यमाने सति भवति । अत्र दृष्टान्तमाह । जाग्रद्वत् । यथा मोहाभाववतः पुंसः सत एवार्थस्य दर्शनं तथेति ।

---

भाष्यप्रकाशः ।

वदित्यादि । तत्रेति । प्राकृतावस्थादर्शने । व्याकुर्वन्ति तद्दर्शनस्येत्यादि । श्रुतिस्तु बृहदारण्यके ज्योतिर्ब्राह्मणे । दार्ष्टान्तिके योजयन्ति एवमित्यादि । अभ्यसूयका इति । गुणेषु दोषारोपकाः । इयमेवोपपत्तिर्ब्रह्माण्डपुराणेऽप्युक्ता, शिवतत्त्वविवेकेऽनूदिता । तथाहि । 'निर्दोषश्चेत् कथं विष्णुर्मनुष्येषु प्रजायते । चिन्ताश्रमव्रणाज्ञानदुःखयुग्दृश्यते कथम् । एवं मे संशयो ब्रह्मन् हृदि शल्य इवार्पित' इति नारदप्रश्ने 'स्त्रीपुंमलानुषङ्गात्मा देहो नास्य विजायते । किन्तु निर्दोषचैतन्यसुखनित्यां स्वकां तनुम् । प्रकाशयति सैवेयं जनिर्विष्णोर्न चापरा । तथाप्यसुरमोहार्थं परेषां च क्वचित् क्वचित् । दुःखाज्ञानश्रमादींश्च दर्शयेच्छुद्धसद्गुणः । क्व व्रणादि क्व चाज्ञानं स्वतन्त्राचिन्त्यसद्गुणे । दौर्लभ्याचैव मोक्षस्य दर्शयेत्तानजो हरिः । कृष्णो ह्यत्यक्तदेहोपि त्यक्तदेहस्य देहवत् । लोकानां दर्शयामास स्वरूपसदृशाकृतिम्' इति ब्रह्मणोक्तम् ॥ १३ ॥

भावे जाग्रद्वत् ॥ १४ ॥ एवं दोषदर्शने उपपत्तिमुक्त्वा गुणदर्शने उपपत्तिमाहेत्याशयेन सूत्रमुपन्यस्य व्याकुर्वन्ति लौकिकवदित्यादि । अत्र पूर्वसूत्रात् 'उपपत्ते'रिति पदमनुवर्तते । अर्थस्तु स्पष्टः । तथा च गुणोपसंहारपादे, 'व्याप्तेश्च समञ्जसम्', 'सर्वाभेदादन्यत्रेमे' इति सूत्रद्वये

रश्मिः ।

सर्वस्यादित्यादेर्दृश्यमानत्वात्कथं परिशेषात्स्वयंज्योतिष्ट्वसिद्धिरित्याशङ्कायां तस्य सर्वस्य वासनानिर्मितत्वादित्याह । नेति । तत्र स्वप्ने रथाः प्रसिद्धाः रथैर्युज्यन्त इति रथयोगाः अश्वादयः पन्थानो मार्गा न भवन्तीति प्रत्येकं नञाभिसम्बध्यते न सन्ति । अथो अपि रथान् रथयोगान्पथः सृजते वासनात्मकान् मायिकान् । तादृशीमिति । व्रणक्षतादिभिर्लौकिकीमिव लीलां छान्दोग्ये द्वितीयोपदेशोक्तां मधुरूपदशविधधर्मरूपाम् । प्रकृतमनुसरामः । तथाकरणमिति । असत्त्वेन व्रणादीनां करणम् । स्वरूपेति । स्वरूपसदृशीमाकृतिं त्यक्तदेहस्य देहवद्दर्शयामास ॥ १३ ॥

भावे जाग्रद्वत् ॥ १४ ॥ गुणोपसंहारेति । तृतीयाध्याये तृतीये पादे । दोषेति । व्रणादिदर्शने । गुणेति । 'यावानर्थ उदपाने सर्वतः सम्प्लुतोदके । तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानत'

एताभ्यां सूत्राभ्यामेतदुक्तं भवति। 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते'ति श्रुत्या भक्तकामपूरणाय भगवाँल्लीलां करोतीति गम्यते। यद्दर्शन-श्रवणस्मरणैर्भक्तानां दुःखं भवति, तादृशीमपि तां करोतीति श्रूयते। यथा सौभयुद्धे मोहवचनानि, हस्तादायुधच्युतिः, प्रभासीयलीला च। उक्तरीत्या, 'सोऽश्नुत' इति श्रुत्या परब्रह्मत्वमवगम्यते। उक्तलीलया तद्वैपरीत्यं च। एवं सत्येकस्या वास्तवत्वम्, अन्यस्या अवास्तवत्वं वाच्यम्। 'ते ते धामान्युश्मसि' 'विष्णोः कर्माणि पश्यत', 'तद्विष्णोः परमं पदम्', 'तद्विप्रासो विपन्यव' इत्यादि-श्रुतिभिः, 'सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम्। विश्वं नारायणं देवमक्षरं परमं

भाष्यप्रकाशः।

'व्यापकस्य रसरूपस्यैव भगवतो भक्तानां तत्तद्रसानुभावनाय तथा तथा मायापसारणेन तत्तत्-परिमाणादिप्राकट्येन बाल्यपौगण्डाद्यनुभावनात् तेषां विद्यमानानामेवार्थानामनुभव' इत्युपपादना-त्तथोपपत्तेरित्यर्थः।

एवं सूत्रद्वयं व्याख्याय सूत्रद्वयोक्तिप्रयोजनमाहुः एताभ्यामित्यादि।

रश्मिः।

इति गीतावाक्यात्कृष्णाश्रये मधुनीव पृथगग्राह्याः दृष्टानुसारिणः सर्वत आकृष्टाः गुणास्तेषां दर्शने। यथा-काशशरीरं ब्रह्मेत्युक्तस्य कृष्णाश्रये यावन्तो धर्माः दृष्टानुसारिणः तज्जन्यत्वेनापृथग्भूताः सर्वतः शास्त्रेभ्य आकृष्टाः मया दृष्टाः योगेश्वरे कृपया प्रकटास्तेन दर्शिताः। पित्तलघण्टागोलकः निर्दण्डः सच्छिद्रः छिद्रे कृष्णा दोरकाः सूक्ष्मा बहवः। तत्र मन्त्रौ। ॐसच्चिदालिङ्गनप्रसू ॐसच्चिदालिङ्गनप्रसो इति। ताभ्यां घण्टागोलके दण्डभ्रामणेन गोलकः घोषवान् सूत्रे प्रोतमणिगणशब्दवाँश्च। समस्तया तदभाववान् घण्टागोलकः। अत्र गीतावाक्यात्सर्वेषु वेदेषु ब्रह्मोपनिषदि घण्टागोलकः। तैत्तिरीये आकाशशरीरं ब्रह्मेत्यतो घोषः। 'मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इवे'त्यत्र सूत्रे प्रोतमणिगणशब्दः समस्या आचार्यशास्त्रे 'आत्मा यावत्प्रपन्नोभूत्तावद्वै रमते हरिः। सोन्तःकरणसम्बन्धी तिरोधत्ते हरिश्च स' इत्यत्र प्रपत्तितदभावौ। 'मन्त्रस्यापि विधानत' इति शक्तिमार्गे मन्त्रावपि। दण्ड औषधिविद्यारूपः कालकर्मस्वभावाः सत्त्वरजस्तमांसि च योज्यानि तृतीयस्कन्धे प्रसिद्धानि ॥१॥ वेदे शास्त्रे 'कृष्णाजिनं ब्रह्मे'ति संहिता। 'स सर्पानसृजते'ति संहिता, आत्मनेति ज्ञेयम्। कृष्णाजिनं ब्रह्म भवतीत्यर्थः। कालकर्मादिकं योज्यम् ॥२॥ 'स वयांस्यसृजते'ति संहिता। वंशपात्रे इत्यत्र वेदे वंशपात्रमत्र योज्यम् ॥३॥ औषधिविद्या तत्र 'तासां मे पौरुषी प्रिये'ति श्रीभागवते स देहो योज्यः क्रियाधर्मो योज्यः। रामेण बाणेन हतो मृग इति दृष्टं मया ॥ ४ ॥ लौकिकवदित्यादीति। अत्रापि 'यावानर्थ उदपाने' इति द्रष्टव्यम्। तेन 'जयति जननिवासो देवकीजन्मवादो यदुवरपरिषत्स्वैर्दोर्भिरस्यन्नधर्म'मिति दशमस्कन्ध-लीलोपसंहारश्लोकोक्तो यावानर्थोत्र लौकिकवत्सिध्यति। बाल्येति। बाल्यपौगण्डादिलोकवद्ब्रह्माणि। न तु प्राकृतानि। तस्यानुभावनात्। तथोपपत्तेरिति। स्वाभाविकधर्मोपपत्तेः। भाष्ये। भक्त-कामेति। स इति प्रथमया स्वातन्त्र्याद्भक्तस्येति भावः। तां करोतीति। स्वस्मिन्ननुवृत्तिवृत्तये। 'विपदः सन्तु नः शश्वत्' इति पृथावाक्यात्। उक्तरीत्येति। 'समान एवं चाभेदा'दिति सूत्रादारभ्ये-यदवध्यवतारकविषयरीत्येत्यर्थः। उक्तेति। अत्रैवोक्तया भक्तदुःखदया। तद्वैपरीत्यं प्राकृतत्वम्।

१. सत एव धर्मस्योपपत्तेः।

पदम्। विश्वतः परमं नित्यं विश्वं नारायणं हरिम्। विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युत'मित्यादिभिश्च शुद्धब्रह्मणस्तद्विपरीत-दर्शनेऽवश्यं हेतुर्वाच्यः। स त्वासुरव्यामोहनमेवेति पूर्वसूत्रेणोपपादितः। भक्तेभ्यः स्वरूपानन्ददानाय 'लोकवत्तु लीलाकैवल्य'मिति न्यायेन या लीलाः करोति, यथा रिङ्गणादिलीला भगवतो नैसर्गिकधर्मरूपानन्दात्मकत्वेन विद्यमाना एव, ता भक्ताः पश्यन्तीति द्वितीयसूत्रेणोक्तम्। अत एव लीलाया अनेकरूपत्वाद् ब्रह्मणश्च श्रुतौ सैन्धवदृष्टान्तेनैकरसत्वनिरूपणाच्छुद्धब्रह्मधर्मत्वं न सम्भवतीति शङ्कानिरासाय 'कैवल्य'मित्युक्तम्। 'साक्षी चेता केवलो निर्गुणश्चे'त्यादिश्रुतिषु याऽन्यधर्मराहित्यलक्षणा केवलतोक्ता, सा लीलात्मिकैव, लीलाविशिष्टमेव शुद्धं परं ब्रह्म, न कदाचित् तद्रहितमित्यर्थः पर्यवस्यति। तेन स्वरूपात्मकत्वं लीलायाः पर्यवस्यति तेन च नित्यत्वम्। एतद् विद्वन्मण्डने प्रपञ्चितम्। अथवा। लीलैव कैवल्यम्, जीवानां मुक्तिरूपम्। तत्र प्रवेशः परमा मुक्तिरिति यावदित्यर्थः॥ १४॥

इति चतुर्थाध्याये चतुर्थपादे तृतीयं तत्त्वभावाधिकरणम्॥ ३॥

---

भाष्यप्रकाशः।

इत्यादिभिश्चेति। लीलानां भगवतश्च नित्यत्वं शुद्धब्रह्मत्वं चावगम्यत इति शेषः। अत्र, 'ते त' इतिश्रुतिरग्रे व्याख्येया। 'विष्णोः कर्माणी'त्यादयस्तु विद्वन्मण्डने सम्य-ग्व्याख्याताः। ताश्च पूर्वकाण्डस्था इत्यतः 'सहस्रशीर्ष'मिति तैत्तिरीयाणां महानारायणोपनिषत्स्था-नुवाकीया उक्ताः। एवं द्विविधा लीलास्तासां नित्यत्वं च प्रामाणिकमिति प्रतिपाद्य पूर्वसूत्र-प्रयोजनं स्फुटीकुर्वन्ति। शुद्धेत्यादि। तथा च तदर्थानां लीलानां आसुरव्यामोहकत्वेनैव रूपेण नित्यत्वम्, न तु प्रतीयमानन रूपेणेत्यर्थः। द्वितीयस्यार्थमाहुः भक्तेभ्य इत्यादि। एवं द्विती-यस्य तात्पर्यमुक्त्वा लीलानां स्वरूपात्मकत्वं निगमयितुं लीलाकैवल्यसूत्रार्थं स्फुटमनुवदन्ति अत एवेत्यादि। एतस्य सूत्रार्थस्योपपादनसापेक्षत्वात् प्रकारान्तरेणार्थमाहुः। अथवेत्यादि। एवं फलरूपस्य भगवतः स्वरूपं सूत्रद्वयेन विचारितम्।

रश्मिः।

एवं द्विधेति। आरोपितानारोपितभेदेन द्विधापि सप्रतियोगिनीत्वाप्रतियोगिनीत्वाभ्यां चतुर्धा। प्रामाणिकमिति। फलाध्याये फलश्रुत्या प्रमाणेन प्रतिपाद्यत इति प्रामाणिकम्। शैषिकप्रत्ययः। अत एवेत्यादीति। सैन्धवेति। सैन्धवदृष्टान्तेन ब्रह्मण एकरसत्वं मैत्रेयीब्राह्मणे तेन श्वेत-केतूपाख्यानेप्येकरसत्वस्थापनाय षष्ठोपदेशः। विद्वन्मण्डन इति। नित्यक्रीडावादे। 'रसो वै स' इति श्रुतेर्देशरससामग्री यावती तावत्प्रत्येकरसरूपमेकमिति तथा। भक्तिमार्तण्डे सुवर्णसूत्रेण सह नित्यलीलावादः सङ्गृहीतः। उपपादनेति। तथाहि। शुद्धब्रह्मेत्यादि पूर्वभाष्ये। शुद्धब्रह्मेति। धर्मरहितं ब्रह्म। तद्धर्मलीला इति न सम्भवति। तदर्थे लीलासु कैवल्यविधिः। धर्मसहितः केवल इति शास्त्रदृष्टिः कार्या। अग्रे या केवलतोक्ता सा लीलात्मिकैवेत्युक्तम्। तत्र केवलता सत्यत्वाद्या-त्मिका नेत्यत्रोपपत्तिः केति। तेनेत्यादि। तेन केवलतारूपत्वेन। तस्याः स्वरूपसम्बन्धविशेषरूपत्वेन स्वरूपात्मकत्वं लीलायाः पर्यवस्यतीति प्रकाशाश्रयवत्सूत्रं प्रवर्तते न वेति सन्देहः। अत्रोपपादनम्। उपपत्तिः केत्यत्र विनिगमनाविरहात्केवलतायाः सत्यत्वाद्यात्मकत्ववल्लीलात्मकत्वं किं न स्यादिति। सूत्रप्रवृत्तिसन्देहे त्वधिकं तत्रानुप्रविष्टं न तु तद्धानिरिति न्यायात्तत्सन्देहनिवृत्तिः। एवमुपपादनसापेक्षत्वात्। अथवेत्यादीति। मुक्तिरूपमिति। न त्वीश्वरो मुक्तिरूपो न तद्धर्म-

भाष्यप्रकाशः ।

अत्र सर्वेपि पूर्वसूत्रे, तन्वभाव इति पाठमङ्गीकृत्यैवं व्याकुर्वन्ति । 'सङ्कल्पादेवे'ति सूत्रे पित्रादिसमुत्थानमुक्तसङ्कल्पादुक्तम् । स एव सङ्कल्पो द्वादशाहसूत्रेऽतःशब्देन परामृश्यते । तेन मुक्तो द्वादशाहवदशरीरः सशरीरश्च सिध्यति । तत्राशरीरस्य यो भोगः, स तन्वभावेपि ब्रह्मसृष्टैरेव पदार्थैः सन्ध्यवत् स्वाप्निकपदार्थभोगवत् सिध्यति । तनुसद्भावपक्षे तु लीलार्थमीश्वरेण सृष्टैर्मुक्तेन वा स्वसङ्कल्पादेव सृष्टैर्जाग्रद्वत् बहिर्भुङ्क्ते इति ।

तन्नास्माकं रोचते । 'एवमप्युपन्यासा'दिति सूत्रेऽपहतपाप्मादिसत्यसङ्कल्पान्तानां धर्माणां मुक्तेऽभ्यङ्गीकारेण तत्सङ्कल्पादेव तदनुरूपभोगोपपत्तेर्विशेषतस्तदुपपादनप्रयोजनाभावेनैतत्सूत्रद्वयस्यानतिप्रयोजनत्वप्रसङ्गात् । अथ सूत्रे तथा पाठ इति तदनुरोधेन तथा व्याख्यानमित्युच्यते, तदा तु सूत्रे 'तन्वभाव' इत्यत्र तनुशब्दस्याभावशब्देन समासेऽनचि चेति वैकल्पिकं नकारस्य द्वित्वं, तथा तत् नु अभाव इति पदच्छेदेपि, यरोऽनुनासिकेऽनुनासिको वेति नकारद्वित्वमिति तत्त्वभावपदस्य सैद्धान्तिकोऽर्थ एव युक्तः । द्वित्वाभावश्चेत्, तदा 'तन्वभाव' इत्यत्र सप्तमीसमासमङ्गीकृत्य भगवत्तनौ तदभाव इत्यर्थो वक्तव्यः । भगवता स्वस्वरूप आसुराणामन्यथाभानस्य कारणेन तद्भानस्यावश्यमुपपादनीयत्वात् । अन्यथा आसुरदृष्टेषु सत्यत्वबुद्धौ दैवानां मोक्षप्रतिबन्धापत्तेरिति । तदेतत् प्रागेव ब्रह्माण्डवाक्योपन्यासपूर्वकं विचारितमित्युपरम्यते ।

ये मायावादिनो मोक्षे भोगं नाङ्गीकुर्वन्ति, तान् प्रति भास्कराचार्यैरेवं दूषणमुच्यते । ससम्बोधं मोक्षं श्रुतिसिद्धमाश्रित्याचार्येणायं विभागो दर्शितः श्रोतृणामनुग्रहाय, न नास्तिक्यमवलम्ब्य भ्रान्त्या वा सूत्राणामन्यथार्थत्वं कल्पनीयम् । श्रुतीनां नार्थवादत्वम् । सर्वत्रार्थवादत्वप्रसङ्गात् । निःसम्बोधे तु मोक्षे न प्रेक्षापूर्वकारी प्रवर्तते । संसारावस्थायां तावद्देवलोकादिषु पर्यायेण सुखतारतम्यं लभते, मुक्तः पुनः सुषुप्तवन्न किञ्चित् । स्वरूपचैतन्यं तु विद्यमानमप्यसत्समेव । न हि तच्चैतन्यान्तरेण संवेद्यते । तस्यैवाभावात् । न च स्वचैतन्यतः संविदस्तु चैतन्यव्यतिरिक्तसंविस्यनभ्युपगमात् । अभ्युपगमे च भेदप्रसङ्गान्मायावादहानिः स्यादेव । ससंबोधे

रश्मिः ।

रूपलीला इति चेन्न । ईश्वरस्याधोक्षजत्वेनेदमित्थतया मुक्तिशब्दाभिधाप्रवृत्तेर्भाष्ये लीलैव कैवल्यं मुक्तिरूपमित्युक्तम् । 'भक्त्या मामभिजानाती'ति वाक्यादधोक्षजत्वेपि मोक्षत्वमिदमित्थतया भवति ज्ञातम् । तथाप्यन्यशिष्याधिकारेणोक्तं लीलानां मुक्तिरूपत्वम् । मुक्तिलीलावैचित्र्यमाहुः । **तत्र प्रवेश इति** । व्रजभक्तभावेन सेवायाः फलं नित्यलीलाप्रवेशः इत्यर्थः । **समशरीर इति**[1] । पित्रादिसमशरीरः । तथा पाठ इति । तन्वभाव इति पाठे । सैद्धान्तिकेति । नापि तत्त्वत्वे तत्त्वभाव इत्यस्यार्थः । पूर्वापरभाष्यासङ्गत्यापत्तेः । त्वान्तात्त्वप्रत्ययाभाववत् तत्त्वभाव इति विग्रहवाक्यं न स्यात् । **तदभाव इति** । मुक्ततन्वभावः । **तद्भानस्येति** । शुद्धबुद्धमुक्तस्वभावे तत्स्वरूपगोपनाय शुद्धमुक्तदेहभानस्य । **असुरेति** । देहादिषु । **मोक्षप्रतिबन्धेति** । 'योन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते, किं तेन न कृतं पाप'मिति श्रुतेः । पापसम्भवान् मोक्षप्रतिबन्धापत्तेः । पापाभावस्य मोक्षकारणत्वात् । **प्रागेवेति** । तत्त्वभावसूत्रे । **प्रेक्षेति** । बुद्धिः । बुद्धिः पूर्वा यस्येति बुद्धिपूर्वः कारः करणमस्यास्तीति बुद्धिपूर्वकारी । **लभत इति** । आनन्दमीमांसया लभते । **चैतन्यव्यतिरिक्तेति** ।

1. समशरीर इति प्रतपुस्तके रश्मौ न पाठः ।

## प्रदीपवदावेशस्तथाहि दर्शयति ॥ १५ ॥ (४-४-४)

ननु पूर्णज्ञानक्रियाशक्तिमता ब्रह्मणा तुल्यभावेन तत्रापि प्रधानभावं प्राप्य कामभोगकरणमपूर्णज्ञानक्रियावतो भक्तस्यानुपपन्नमित्याशङ्कायां तत्रोपपत्तिमाह। न हि तदा नैसर्गिकज्ञानक्रियाभ्यां तथा भोक्तुं शक्तो भवति, किन्तु भगवाँस्तस्मिन्नाविशति यदा, तदायमपि तथैव भवतीति सर्वमुपपद्यते। एतदेवाह प्रदीपवदिति। यथा प्राचीनः प्रकृष्टो दीपः स्नेहयुक्तायां वर्त्यामर्वाचीनायामाविष्टः स्वसमानकार्यक्षमां तां करोति, स्नेहाधीनस्थितिश्च भवति स्वयम्, तथात्रापीत्यर्थः। अत्र प्रमाणमाह। तथाहि दर्शयति श्रुतिः। 'भर्ता सन् भ्रियमाणो बिभर्ति, एको देवो बहुधा निविष्ट' इति। 'सर्वान् कामा'नित्युक्तत्वात् यस्य कामस्य भोगो यथा निवेशे सति भवति तत्र तथा तदा निवेश इति बहुधा निवेश उक्तः। अयं निवेशो नान्तर्यामित्वेन, तस्यैकधैव प्रवेशात्। निसर्गतः सर्वेषां जीवानां भगवान् भवत्येव प्रभुर्यद्यपि, तथापि यं स्वीयत्वेन वृणुते, तस्य विवाहितः पतिरिव भर्ता सन्, वरणजस्नेहातिशयेन भक्तेनापि भ्रियमाणः सन्, स इव स्वयमपि तं स्वस्मिन् बिभर्ति। अत एव स्नेहराहित्येनायोगोलकादिकं विहाय प्रदीपं दृष्टान्त-

---

भाष्यप्रकाशः।

पुनर्मोक्षे सर्वज्ञत्वमं सल्लक्षणं बोधस्य रूपम्। मनः सर्वज्ञं सर्वशक्तिभिन्नाभिन्नरूपं हि। तेनास्तु तदवगतिर्नातोऽन्यथेति ॥ १४ ॥

इति तृतीयं तत्त्वभावाधिकरणम् ॥ ३ ॥

प्रदीपवदावेशस्तथाहि दर्शयति ॥ १५ ॥ एवमधिकरणत्रयेण फलप्राप्त्युपकरणं फलस्वरूपं च विचार्य फलानुभवोपकरणं विचारयति। तत्र भगवद्भोगरूपोऽनुभवो जीवस्य सम्भवति, न वेति संशयः। भक्तस्य स्वतोऽसामर्थ्यं भोगश्रुतिश्च संशयबीजम्। तदेतन्मनसिकृत्य सूत्रमवतारयन्ति नन्वित्यादि। व्याकुर्वन्ति नहीत्यादि। नैसर्गिकज्ञानक्रियाभ्यामिति। मुक्तौ भगवत्कृपयाभिव्यक्ताभ्यां 'हानौ तूपायने'ति सूत्रे व्युत्पादिताभ्यां जैवाभ्यां ताभ्याम्। 'भर्ता स'मितिश्रुतिस्तु तैत्तिरीयारण्यके पुरुषसूक्तोत्तरनारायणानन्तरं भर्तृसूक्तारम्भेऽस्ति। एवं तां विवृण्वन्ति। सर्वान् कामानित्यारभ्य गतिष्विनीत्यन्तम्। ननु भर्तृसूक्ते

---

रश्मिः।

चैतन्यव्यतिरिक्तायाः संवित्तेरनभ्युपगमात्। रूपमिति। विषयः। भिन्नाभिन्नेति। कारणात्मनाऽभिन्नं कार्यात्मना भिन्नम्। यथा सुवर्णं कटकं न। कटकं सुवर्णमिति प्रतीतिः। तेनास्त्विति। मनसा बोधविषया गतिरस्तु न मनसोऽन्यथाऽन्यप्रकारेणेत्यर्थः। तेनैतेषां मते न निःसम्बोधो मोक्षः स्वमते त्वधिकारिभेदे नास्तीति बोध्यम् ॥ १४ ॥

इति तृतीयं तत्त्वभावाधिकरणम् ॥ ३ ॥

प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥ फलप्राप्त्युपकरणमिति। देहादिकम्। सम्पद्याविर्भावभावेनेत्यधिकरणयोः। तत्त्वभावाधिकरणे। फलस्वरूपं भगवान् तत्प्राप्तिः, नित्यलीलाप्रवेशश्च। फलानुभवोपकरणम्, अलौकिकसामर्थ्यम्। संशयेति। प्रथमकोटौ प्रथमं बीजं द्वितीयस्यां द्वितीयम्। नन्वित्यादीति। पूर्णज्ञानेति। सोऽश्नुत इत्यत्र विपश्चितेति पदार्थः। प्रधानेति। सह ब्रह्मणेत्यप्रधानतृतीयया भक्तस्य प्रधानभावं प्राप्येत्यर्थः। प्राचीन इति। प्राचीनायां

मुक्तवान् व्यासः । अत एव देवपदमुक्तम् । स्वरूपानन्ददानाद्भावोद्दीपनात् पूतनाविमुक्तिदानेन स्वमाहात्म्यद्योतनाद्वैकुण्ठादिस्थितेश्च । तदुक्तं निरुक्ते 'दिवो दानाद्वा, दीपनाद्वा, द्योतनाद्वा, द्युस्थानो भवतीति वा यो देव' इति । किञ्च । भक्तानां कामभोजनार्थं क्रीडाकरणात्, क्रीडायामेव जयेच्छाकरणात्, भक्तैः सह व्यवहारकरणात्, भक्तेषु स्वमाहात्म्येच्छादिद्योतनात्, 'न पारयेऽहम्', 'न त्वादृशीं प्रणयिनी'मित्यादिभिः स्तुतिकरणात्, भक्तप्रपत्तिदर्शनेन कालीयदमनादौ मोदकरणात्, तेष्वेव भक्तिमदकरणात्, ते स्वप्नेपि प्रियमेव पश्यन्तीति स्वप्नकरणात्, तेषां कान्तिकरणादिच्छाकरणाद्वा, तन्निकटे गमनादपि देवः । तदुक्तं धातुपाठे 'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषिव'ति । एवं सति युक्तमेव तेषां तथात्वमिति हिशब्देनाह ॥ १५ ॥

भाष्यप्रकाशः।

तदग्रिमानुवाकेषु च प्रभासीयलीलैव प्रायशः प्रतीयते, किं बहुना, एतद्युत्तरार्धेपि 'यदा भारं तन्द्रयते, स भर्तुं निधाय भारं पुनरस्तमेती'ति भारवहनालस्यं भारस्त्यागोऽस्तगमनं चोच्यते । अग्रे च, 'तमेव मृत्युममृतमाहु'रित्यादि । तत् कथमत्रैवं व्याख्यातमिति चेत् । उच्यते । पूर्वं हि पुरुषसूक्ते सृष्टिलीलोक्ता । तत उत्तरनारायणे स्थितिलीलोक्ता । तत्र, 'ह्रीश्च ते लक्ष्मीश्च पत्न्या'वित्यनेन भोगलीलां सूचयित्वा 'इष्टं मनिषाण, अमुं मनिषाण, सर्वं मनिषाणे'तिवाक्यत्रये ऐहिकामुष्मिकमिष्टं ब्रह्मविद्भिः प्रार्थितम् । ततो भर्तृसूक्तारम्भे इयमृगिति पूर्वग्रन्थे उत्तरग्रन्थे चेयमुपयुज्यते इति पूर्वसम्बद्धार्थोत्र व्याख्यातः । तृतीयस्कन्धे तु 'भर्तुः पादावनुस्मर'न्नित्यत्रोक्ता । अतस्तत्रोत्तरग्रन्थसम्बद्धोऽर्थ इति मया विद्वन्मण्डनव्याख्याने प्रभासलीलाप्रसङ्गे उत्तरग्रन्थानुसारेण व्याख्यातेति न दोषः । नन्वत्र मुक्तस्य यानि 'त्रिधा भवति पञ्चधे'त्यादिनोक्तानि शरीराणि सृजन्ते, तानि सात्मकानि निरात्मकानि वेति संशये, निरात्मकानि सृष्ट्वा, यथा प्रदीप एकोऽनेकभावं विकारशक्तियोगादापद्यते, तथा मुक्त एकोऽप्यनेकशरीरा-ण्यैश्वर्ययोगादाविशतीत्युच्यते, न तु पूर्वोक्तोऽर्थ इति शङ्कायामाहुः अत एवेत्यादि । यतं

रश्मिः।

वर्त्यां प्रविश्योर्ध्वज्वलनोपेक्षितः । गतिष्विवतीत्यन्तमिति । समस्तात्पदादुद्धृतम् । एवं सतीत्यादीति । श्रुत्या बहुधा निवेशे सति । तेषामिति भक्तानाम् । तथात्वमिति । स्वरूपानन्दादिदानादिभिः क्रीडाकरणादिभिश्च हेतुभिः, बहुधा भगवत्प्रविष्टत्वम् । भारवहनेति । स यदा भारं भर्तु तन्द्रयत इति भारवहनालस्यं भारञ्च निधाय भारमित्यत्र भारं निधायेति । भारत्यागः । अस्तमेतीत्यस्तगमनम् । तमेवेति । प्रभासीयलीलाकर्तारम् । एवमिति । भोगलीलापरत्वेन । पुरुषसूक्त इति । द्वितीयस्कन्धसुबोधिन्यां स्फुटमिदम् । प्रार्थितमिति । मनिषाणेत्यत्र मनसः ईषा मनीषा तामिवाचरतीति मनीषति प्रार्थनायां लोट् मध्यमपुरुषः । इष्टविषयिणीं मनीषां कुरु । इष्टमैहिकम् । अमुं आमुष्मिकम् । सर्वमिष्टं प्रार्थितम् । न दोष इति । अत्रेति ।

ननु 'अस्थूलमनण्वह्रस्व'मित्याद्यनन्तरं पठ्यते 'न तदश्नोति कश्चन न तदश्नोति कश्चने'ति उक्तश्रुतौ च ब्रह्मणा सह जीवस्य भोग उच्यते । तथा च सगुणनिर्गुणभेदेन विषयभेदोऽवश्यं वाच्यो विरोधपरिहारायेत्यत उत्तरं पठति ।

स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥

इहायमाशयः । 'प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूय' इत्याद्यधिकरणैः 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे'त्यादिश्रुतिभिश्च प्राकृता एव धर्मा निषिध्यन्ते, ब्रह्मण्यप्राकृता एव बोध्यन्ते, अन्यथा तद्बोधनमेव न स्यान्निषेधकवाक्य एव तद्बोधनमपि न स्यात्, 'एतस्यैवाक्षरस्य प्रशासन' इत्यादिरूपम्, अतोऽचिन्त्यानन्तशक्तेर्भगवतः का वा कार्याऽक्षमता,

---

भाष्यप्रकाशः ।

उक्त एवार्थोऽभिप्रेतः, अत एवायं दृष्टान्त उक्तः, नायोगोलकादेरतस्तथेत्यर्थः । मदुक्तश्रुतावयमेवार्थोऽभिप्रेत इत्यत्र गमकमाहुः अत एव देवेत्यादि । तथा च देवपदार्थाञ्जस्यमेवात्र गमकमित्यर्थः । सौत्रस्य हिशब्दस्यार्थमाहुः एवं सतीत्यादि । तेन यदा भगवान् जीवस्य स्वदत्ते देहे स्वेन सह सर्वभोगकामभोगं कारयितुमिच्छति, तदा स्वयमपि तदनुगुणप्रकारेण तस्मिन् देहे आविशतीति तादृश आवेश एव भोगोपकरणम् । गुणगानगृहकार्यादिदशायां तु यथासम्भवं या रामानुजभास्कराचार्याभ्यामुक्तव्यवस्थोक्ता, सैवाभिमतेत्यर्थात् बोधितम् ॥ १५ ॥

स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥ सूत्रमवतारयन्ति नन्वस्थूलेत्यादि । श्रुतावश्नोतीत्यस्य विकरणव्यत्ययेन अशनमेवार्थ इति पूर्वं व्याख्यातम् । अतोत्र भोग उच्यत इत्यर्थः । व्याकुर्वन्ति इहायमित्यादि । निषेधिका श्रुतिरिति । भोगनिषेधिका, 'न तदश्नोती'ति श्रुतिः । अन्यतरापेक्षमित्येतदग्रे, आविष्कृतमाविष्करणं भगवत्प्राकट्यमिति यावत् । हि यतो हेतोरतो युक्तम् एतावती त्रुटिर्बोध्या । दहराधिकरणे एतत्सूत्रोपन्यासे आविष्कृतपदस्य भगवदाविर्भावार्थकताया अङ्गीकृतत्वात् ।

रश्मिः ।

छान्दोग्ये भूमविद्यायाम् भाष्यीयायां । अतस्तथेति । दृष्टान्तानुरोधात्पूर्वोक्तोर्थ इत्यर्थः । देवपदेति । देवपदार्थस्याञ्जस्यं सामञ्जस्यम् । अत्रेति । अस्मिन्सैद्धान्तिकेर्थे ॥ १५ ॥

स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥ श्रुताविति । न तदश्नोतीत्यादिश्रुतौ तदिति कर्तृ अग्रे तदिति कर्म । विकरणेति । 'श्ना' विकरणे 'श्नु' विकरणमिति श्ना विकरणव्यत्ययेन । पूर्वमिति । आनन्दमयाधिकरणे । भाष्ये । उक्तश्रुताविति । सोश्नुत इति श्रुतौ ॥ प्रकृते ॥ अत्रेति । सोश्नुत इति श्रुतौ ॥ भाष्ये ॥ ज्ञानबलेति । प्रायपाठाद्बलं भक्तिः । तथा च भाष्ये बलं भक्तिरिति । अन्यथेति । अप्राकृतानां बाधेऽप्राकृतबोधनमेव 'यतो वा इमानि भूतानि जायन्त' इत्यादिश्रुतिभिर्न स्यात् । निषेधिकेति । अस्थूलमनण्वित्यादिनिषेधकवाक्यसन्निधावेवाक्षरब्राह्मणेऽक्षरे प्रशासनबोधनमपि न स्यादित्यर्थः । तथा । 'अथात आदेशो नेति नेती'ति निषेधवाक्ये तद्बोधनं मूर्तामूर्तबोधनं न ह्येतस्मादिति नेत्यन्यत्परमिति प्राणा वै सत्यं तेषामेष सत्यमिति श्रुत्या न स्यादित्यर्थः । श्रुत्यर्थस्तु । नहि एतस्मात् इति न इति अन्यत् परं इति प्राणा वै सत्यं तेषां एष

यथा प्राकृतान् गुणानूरीकुर्यात्, अतो निर्गुणमेव सदा सर्वत्र भगवद्रूपमिति मन्तव्यम् । एवं सति, 'तद्यथापि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति' इति छान्दोग्यश्रुतेः प्रस्वापदशायां न कश्चित् ब्रह्माश्नाति, तच्च न कश्चनेति तद्विषयिणी निषेधिका श्रुतिः, 'ब्रह्मविदाप्नोति पर'मिति श्रुत्युक्तपरब्रह्मप्राप्तिदशाविषयिणी भोगबोधिका सेति न विरोधगन्धोपि । एतदेवाह । स्वाप्ययः प्रस्वापः, 'स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षत' इति श्रुतेः । सम्पत्तिः ब्रह्मसम्पत्तिरुक्तरीत्या पुष्टिमार्गीयो मोक्षः । एतयोरन्यतरापेक्षमुभयश्रुत्युक्तमित्यर्थः । भगवत्कर्तृकभोगस्य लीलारूपत्वात् तस्याश्च, 'लोकवत्तु लीलाकैवल्य'मित्यत्र मुक्तित्वेन निरूपणात् तत्प्राप्तेः सम्पद्रूपत्वं युक्ततरमिति हिशब्दार्थः ॥ १६ ॥

इति चतुर्थाध्याये चतुर्थपादे चतुर्थं प्रदीपवदित्यधिकरणम् ॥ ४ ॥

भाष्यप्रकाशः ।

तथा चात्रेदं सम्पद्यते । आद्ये प्रकारे यद्यपि, 'तद्यथा प्रियया स्त्रिये'त्यादिना सम्परिष्वक्तो ब्रह्मकृतो जीवस्योक्तः, तथापि, 'न बाह्यं किञ्चन वेद नान्तर'मिति ज्ञानाभावशेषत्वेनोक्त इत्यस्थूलादिश्रुतौ सकलप्रापञ्चिकधर्माभावकथने प्रापञ्चिकभोगाभावोऽप्युक्तः । द्वितीयप्रकारे तु ज्ञानसद्भावाद् भोग इति विरोधाभावात् स्वरूपे सगुणनिर्गुणभेदकल्पनमसङ्गतमित्यर्थः । तदेतदभिगमयितुं हिशब्दस्यार्थमाहुः भगवत्कर्तृकेत्यादि । एवमनेनापि प्रकारेण फलस्वरूपमेव विचारितं भवति ।

रश्मिः ।

सत्यम् । इति पदानि । एतस्माद्ब्रह्मणो नहि उक्तो भावो व्यतिरिक्तो नहि इति न । मूर्तत्वामूर्तत्वाभाव एतस्मादन्य इत्युक्तम् । अन्यत्, निषिद्धान्मूर्तामूर्तात् अन्यत् त्यमिति । अधिकं त्यत्, इत्यर्थः । अधिकं तु भेदनिर्देशादिति सूत्रात् । किं तत्त्वं नामैकदेश इत्यत आहुः । प्राणा वै सत्यमिति तेषां प्राणानां सम्बन्धि एष गूढ आत्मा सत्यमिति । प्राकृतानिति । तामसप्रकरणादौ तु द्वितीयस्कन्धोक्तात्मगुणानूरीकृत्य सुबोधिनीति ज्ञेयम् । निर्गुणमेवेति । एवकारेण सगुणव्यवच्छेदः क्रियते । मायया दर्शितानां मिथ्यात्वादन्येषां धर्माणामभेदात् । सर्वत्रेति । अन्तर्यामिब्राह्मणेऽपि । आभासोक्तं विरोधं परिहरन्ति स्म । एवं सतीति । गुणोरीकारं विनापि कार्यक्षमत्वे सति । छान्दोग्येति । दहरविद्यायाः । अर्थस्तु, तत् तत्र विद्यमानानामेवालाभे दृष्टान्तः । यथा हिरण्यनिधिं निहितं भूमेरधस्तान्निक्षिप्तमक्षेत्रज्ञाः निधिक्षेत्रानभिज्ञाः निधेरुपरि उपरि सञ्चरन्तोऽपि निधिं न विन्देयुः । दार्ष्टान्तिकमाह । एवमेव यथा दृष्टान्तमेव । सर्वा अविद्यावत्यः अहरहः प्रत्यहम् सुषुप्तिकाले, एतद् हार्दाकाशाख्यं ब्रह्मैव लोकं ब्रह्मणो लोकं वा 'अक्षरं ब्रह्म परमं वेदानां स्थानमुत्तम'मिति वाक्यात् यन्त्योपि प्राप्नुवन्त्योपि न विन्दन्ति न लभन्ते इति । विन्दन्तीत्यत्र परस्मैपदं छान्दसम् । प्रकृते अस्थूलेति । अक्षरब्राह्मणेऽस्ति । भाष्ये । स्वमपीतो भवतीति । स्वं अपि गतो भवतीत्यर्थः । सम्पत्तेर्मार्गत्रयसाधारण्यात्तां व्यवच्छिन्दन्ति । उक्तरीत्येति । द्वादशाहसूत्रभाष्योक्तरीत्या । प्रकृते । भवतीति । आविष्कृतं भवति । आद्य इति । सुषुप्तौ । द्वितीय इति । सम्पत्तौ भगवत्कर्तृकेत्यादीति । युक्ततरमिति । 'आत्मा वा अरे द्रष्टव्यः श्रोतव्य' इति श्रुतेः । 'भिद्यते हृदय-

भाष्यप्रकाशः ।

शाङ्करास्तु, मुक्तस्यानेकशरीरावेशलक्षणैश्वर्याभ्युपगमे, 'तत् केन कं विजानीया'दित्यादिश्रुतिविरोधशङ्कायां, 'तत्केन कम्', 'सलिल एक'इत्यादौ यद्विशेषविज्ञानवारणं तत् सुषुप्तिकैवल्यावस्थयोरन्यतरापेक्षम् । कुतः । आविष्कृतं हि यतो हेतोस्तत्रैव तदधिकारवशादाविष्कृतम्, 'यत्र सुप्तो न कञ्चन कामं कामयते, न कञ्चन स्वप्नं पश्यती'त्यनेन । 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति । यत्र त्वस्य सर्वमात्मैवाभू'दित्यनेन च प्रकटीकृतः । इदं तु सगुणविद्याविपाकस्थानं स्वर्गादिवदवस्थान्तरम्, यत्रैतदैश्वर्यमुपवर्ण्यते, अतो न दोष इत्येवं सूत्रार्थमाहुः । तेषामियं सम्पत्त्यवस्थातो हीनावस्थेत्यभिप्रायः ।

तदेतदन्ये न क्षमन्ते । तथाहुर्भास्कराचार्या रामानुजाचार्याश्च अत्र सम्पत्तिपदेन 'वाङ् मनसि सम्पद्यत' इत्यादिनोक्ता मरणावस्था परामृश्यते । अतः सुषुप्तौ मरणावस्थायां च विशेषविज्ञानवारणम् । 'यत्र सुप्तः', 'एतेभ्यो भूतेभ्य' इति श्रुतिभ्यां यतस्तत्रैव तदधिकारवशादाविष्कृतम् । तेन शरीरेन्द्रियविषयनिबन्धनं यद्विशेषविज्ञानं तदेव वार्यते, न तु परं भावं प्राप्तस्य विद्याकर्मसामर्थ्यात् सर्वविषयं सामान्यज्ञानमाविर्भूतं तत्र वार्यत इत्यदोषः । यत इन्द्रप्रजापतिसंवादे एव सुषुप्तौ निःसम्बोधत्वमुक्त्वा, अग्रे मुक्तमधिकृत्य, स वा एष एतेन दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोक' इति सर्वज्ञत्वकथनादिति । अस्मन्मते

रश्मिः ।

ग्रन्थिश्छिद्यन्ते सर्वसंशया' इति श्रुतेश्च भगवदीयत्वेपि युक्तशब्दात्तमप् न कृतः । लीलानां मुक्तित्वेऽपि विविधभावाभावात् । स्वाप्ययसाम्योक्तभोगाभावमालोच्याहुः । एवमनेनेति । स्वाप्ययसाम्यद्योतकप्रकारेणापि । 'अरूपवदेव ही'तिसूत्रोक्तैकदेशिमते मुक्तिफलस्वरूपं विचारितं भवति । न्यूनताख्यनिग्रहस्थानप्रहाणादेवकारः । न तु तदतिरिक्तं विचारितमिति । केन कमिति । केनेन्द्रियेण कं विषयं पश्येदिति केन कं पश्येदित्यस्यार्थः । 'सलिल एको द्रष्टेति' श्रुतिः । विशेषेणेन्द्रियविषयरूपेण यद्विज्ञानं तस्य वारणम् । हिर्हेतावित्याशयेनाहुः । यतो हेतोरिति । तत्रैवेति । स्वाप्ययसम्पत्त्योरन्यतरस्मिन्नेव । न त्वन्यत्र । यत्र सुप्त इति यस्यामवस्थायां सुप्तः । यत्र त्वस्येति । यत्र सम्पत्तौ त्वस्य भूतसमुत्थितस्य । सगुणविपाकेति । अनेकशरीरावेशे ऐश्वर्यधर्मे सति निर्गुणत्वं भविष्यतीति निर्गुणत्वप्रागभावविषयिप्रतीतिर्भवतीति सगुणविपाकस्थानम् । वृद्धिस्थानमपक्षयस्थानम् । तदनु । न दोष इति । मुक्तस्यानेकशरीरावेशप्रतिपादिकायाः स एकधेत्यादिश्रुतेस्तत्केन कमित्यादिश्रुतेश्च न विरोधरूपो दोष इत्यर्थः । तेषामियमिति । शाङ्कराणामियं सगुणविपाकावस्था । तत्रैवेति । स्वाप्ययसम्पत्त्योरन्यतरस्मिन्नेव । न तु परमिति । शरीरेन्द्रियविषयनिबन्धनकरहितकं विशेषविज्ञानं सर्वज्ञत्वलक्षणं भावम् । वार्यत इति । तत्केन कमित्यादिश्रुत्या । अदोष इति । श्रुतिविरोधरूपो दोषो न । यदिति । अव्ययम् । यत इत्यर्थः । इन्द्रेति । छान्दोग्येऽन्ते वर्तते । स वा एष इति मुक्तः । चक्षुषेति । करणत्वे कामानिति कर्मत्वेन भेद उक्तः । य एते इति ये एते कामा ब्रह्मलोके सङ्कल्पमात्रेण लभ्यास्तान् सर्वान्कामान्पश्यन्निति सर्वज्ञत्वकथनम् । शाङ्करोक्तेति 'ते तु ब्रह्महृदे नीता मग्नाः कृष्णेन चोद्धृता' इति पञ्चाध्याय्यां सुबोधिनी । एताभ्यां श्रुतिभ्यां 'न तदश्नाती'ति

जगद्व्यापारवर्जं प्रकरणादसंनिंहितत्वाच्च ॥ १७ ॥ ( ४-४-५ )

ब्रह्मणा सह भोगकरणं लौकिकव्यापारयुतम्, उत नेति संशये, तद्युतमिति पूर्वः पक्षः, तथा सति मुक्तित्वभङ्गात् पूर्वोक्तमनुपपन्नमिति प्राप्ते, आह जगदित्यादि। पूर्वोक्तस्य जगत्सम्बन्धी लौकिको यो व्यापारः कायवाङ्मनसां तद्वर्जं तद्रहितं भोगकरणम् । तत्र हेतू आह प्रकरणादसंनिहितत्वाच्चेति । 'ब्रह्मविदाप्नोति पर'मित्युपक्रमेण मुक्तिप्रकरणात् तत्र लौकिकव्यापारोऽसम्भावितः । किञ्च,

भाष्यप्रकाशः ।

त्वेतावान् विशेषः । शाङ्करोक्तमुक्तावस्था प्रथमा कक्षा । एताभ्यामुक्तावस्था तु मध्यमकक्षा । भोगे भगवत्साहित्याभावादिति ॥ १६ ॥

इति चतुर्थं प्रदीपवदित्यधिकरणम् ॥ ४ ॥

जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥ १७ ॥ एवं भोगोपकरणं विचार्य भोगप्रकारं विचारयितुमधिकरणान्तरमारभत इत्याशयेन विषयसंशयपूर्वपक्षान् वदन्तोऽधिकरणमवतारयन्ति ब्रह्मणा सहेत्यादि । संशयबीजं तु भोगे लौकिकव्यापारयुक्तत्वस्य लोके दर्शनम् । एतस्य भोगस्य सायुज्यमुक्त्युत्तरभावित्वं च ज्ञेयम् । सिद्धान्तं वक्तुं सूत्रं व्याकुर्वन्ति पूर्वोक्तस्येत्यादि । पूर्वोक्तस्येति । प्राप्तसायुज्यस्य पुष्टिभक्तकायवाङ्मनसामित्यत्र टजभावः समासान्तस्यानित्यत्वेन वैकल्पिकत्वाज्ज्ञेयः । असन्निहितत्वं व्याकुर्वन्ति किञ्चेत्यादि ।

रश्मिः ।

'तत्केन कं पश्ये'दिति च श्रुतौ । मध्यमावस्था । सर्वात्मभावावस्था । भोग इति । अन्तर्भोगस्य विरहे सत्त्वेपि बहिर्भोगे भगवत्साहित्याभावात् । सोश्रुत इति मुख्या कक्षा ॥ १६ ॥

इति चतुर्थं प्रदीपाधिकरणम् ॥ ४ ॥

जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥ १७ ॥ भोगोपकरणमिति । प्रदीपवदावेशरूपं स्वाप्ययरूपं च । भोगप्रकारं भोगे लौकिकव्यापाराराहित्यम् । ज्ञेयमिति यथाक्रमं ज्ञेयम् । टजभाव इति सूत्राट्टच् न प्राप्तस्तथापि द्वन्द्वाच्चुदषहान्तादित्यत्र समाहारे बाहुलकात्प्राप्तस्य टचोऽभावः । अन्यथा वा द्रष्टव्यः । भाष्ये । वर्जमिति । णमुलन्तम् । प्रकृते । किञ्चेत्यादीति । द्वितीयस्कन्धे नवमाध्याये 'एतन्मतं ममातिष्ठ परमेण समाधिने'ति वाक्यस्य भगवदाज्ञयैतन्मतेऽवस्थितिः कर्तव्येति सुबोधिन्यां तन्मतवाक्यानि । तदीयानि भवन्त्यत्र । 'न यत्र कालोऽनिमिषां परः प्रभुरि'ति 'प्रवर्तते यत्र रजस्तमस्तयोः सत्त्वं च मिश्रं न च कालविक्रम' इति । आदिना मृत्युः । 'मृत्युरस्मादपैती'ति वाक्यात् । एतन्मतीयश्रुतयः । 'कालस्वभावो नियतिर्यदृच्छे'त्युक्तौ तेषां चिन्त्यत्वं श्वेताश्वतरे उक्तम् । 'स ईक्षाञ्चक्र' इति श्रुतौ मायास्थल ईक्षाश्रावणात्तत्र मायाभावः । बृहदारण्यके 'ते होचुः क नु सोभूद्यो न इत्थमसक्तेत्ययमास्येन्तरिति । सोऽयास्य आङ्गिरसोङ्गानां हि रसः । सा वा एषा देवता दूर्नाम दूरं ह्यस्या मृत्युर्भवति य एवं वेदे'त्यत्रासन्यंदेवताया दूरं मृत्युरुक्तोतस्तत्र तदभावः । श्रुत्यर्थस्तु ते देवाः ह ऊचुः । असक्तेति प्रजापतिरूपेण भवनं पाप्मशत्रुपराभवं च असक्त संयोजितवान् । आस्येन्तः आस्ये मुखे य आकाशस्तस्मिन्नन्तरे वर्तते । इत्यध्यवसितवन्तो वागादयः परस्परं वदन्तः अनयाख्यायिकया गुणद्वयं सिद्धमित्याह । सोयास्येति । यस्मादेवं वागादयः

लीलायाः कालमायाद्यतीतत्वेन प्राकृत जगत् दूरतरमितोपि हेतोर्न तत्सम्भवः । कदाचिल्लोके लीलाप्रकटनेच्छायां तदधिष्ठानत्वयोग्ये मथुरादिदेशेऽतिशुद्धे गोलके चक्षुरिन्द्रियमिव स्थापयित्वा लीलां करोति । तदापि लीलामध्यपातिनां न लौकिकव्यापारसम्भवः । न हि चक्षुरिन्द्रियं गोलककार्यं करोति । न वा तन्नाशे नश्यति । एतत्सर्वं, 'दिवीव चक्षुराततमि'ति श्रुतिव्याख्याने विद्वन्मण्डने प्रपञ्चितम् । किञ्च । छान्दोग्ये, 'भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य' इत्युक्त्वा, भूम्नो लक्षणमाह 'यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यत् विजानाति स भूमे'ति । अत्र 'नान्यद्विजानाती'त्येतावतैव चारितार्थ्येपि यदिन्द्रियव्यापारो

---

भाष्यप्रकाशः ।

एतेनाक्षरब्रह्मण्येव सम्भोगो बोधितः । 'निरस्तसाम्यातिशयेन राधसा स्वधामनि ब्रह्मणि रंस्यते नम' इति द्वितीयस्कन्धे तथा सिद्धत्वात् । तर्हि, 'ते ते धामानी'त्यादिश्रुतिषु भूमौ भोगः कथमुच्यत इत्यत आहुः कदाचिदित्यादि । कदाचिदिति । जगदुद्दिधीर्षाऽवसरे । स्थापयित्वेति । अक्षरं स्थापयित्वा । तथा च तस्मात्तथोच्यत इत्यर्थः । नन्वेवमक्षरस्य भूमौ प्रकटने तत्र स्थितानां भक्तानां भूमिसम्बन्धजगुणदोषसंसर्गाल्लौकिकव्यापारप्रसङ्गो दुर्वार इत्यत आहुः तदापीत्यादि । ननु प्रमाणाभावे दृष्टान्तमात्रस्याकिञ्चित्करत्वान्न भक्तानां लौकिकव्यापार-राहित्यसिद्धिरित्यत आहुः एतदित्यादि । प्रपञ्चितमिति । 'चक्षु'रिति द्वितीयैकवचनान्तं पदमित्यादिना प्रपञ्चितम् । तस्मिन् व्याख्याने आग्रहवाद इति शङ्का स्यादिति तदर्थं भूमविद्याश्रुतिमुदाहरन्ति किञ्च, छान्दोग्य इत्यादि । इन्द्रियव्यापार इति । पश्यतिशृणोति-

रश्मिः ।

प्राणमास्येन्तरिति व्याजह्रुः तस्मात्स आसन्यः अयास्य आङ्गिरसः । आस्ये इत्ययास्यः अव्ययीभावः पुंस्त्वं छान्दसम् । आङ्गिरसः अङ्गिरा ऋषिः तत्सम्बन्धी । यद्वा अङ्गानि यस्य सन्ति स अङ्गी । आ अङ्गी आङ्गी । आङ्गी चासौ रसः आङ्गिरसः । कार्यकरणानामात्मा । तत्र हेतुर्हि यस्मात्कार्यकरणानां रसस्तस्मादाङ्गिरसः इत्यर्थः । सा वेति । प्राणरूपा । अस्या इति पञ्चम्यन्तम् । देवतायाः इति । एवं लीलायाः कालमायाद्यतीतत्वेनेत्यर्थः । न तत्सम्भव इति । जगद्व्यापारसंभवो न । उच्यत इति । 'यत्र गावो भूरिशृङ्गा' इतिपदैरुच्यते । जगदिति । भक्तियोगवितानेन जगदुद्धारार्थम् । इच्छाकाले । 'भक्तियोगवितानार्थ'मिति पृथावाक्यात् । 'यदा यदा हि धर्मस्ये'ति गीताप्रपञ्चः । भक्तियोगवितानस्य धर्मत्वात् । भाष्ये तदधीति । तच्छब्दो ब्रह्मवाची न तु परामर्शकः । तथा च रसरूपाधिष्ठानत्वयोग्ये गोलके चक्षुरिन्द्रियमिवेति दृष्टान्तः । अक्षरं स्थापयित्वेत्यर्थः स्थापयित्वेत्यस्यार्थः । ननु मथुरादिदेशानामक्षरात्मकत्वं स्वभावत एवेति पुनरक्षरस्थापनस्य किं प्रयोजनमिति चेन्न । अक्षरानन्दात्मकलक्ष्मीं स्थापयित्वेत्यर्थात् । नन्दयशोदादौ स्वस्यानन्दैर्लक्ष्म्यानन्दाः प्रतिबध्यन्ते । अन्यथा सोश्नुत इत्यत्र विपश्चित्पदविरोधापत्तेः । प्रकृते । तस्मादिति । लक्ष्मीरूपाक्षरस्थापनात् । तथोच्यत इति । भूमौ भोग उच्यते । तदापीत्यादीति । चक्षुरिन्द्रियमिति । कृष्णताराग्रवर्ति । केनोपनिषदधिकारिणे व्यक्तव्येति द्योतितम् । तन्नाश इति । गोलकनाशे नश्यतीन्द्रियम् । किंतु पश्यत्यचक्षुरिति श्रुतेस्तत्र गच्छति । प्रपञ्चितमिति । गोस्वामिभिः । प्रपञ्चितमित्याचार्यार्षज्ञानमुक्तम् । गोस्वामिभाष्यमिदमिति पक्षे स्पष्टम् ।

निषिद्धः, तत्राप्यन्यविषयकः, तेन भगवद्विषयकः स सिद्धो भवतीति जगद्व्यापारराहित्यं सिद्धम् । तत्र तेन भगवत एव स्वतन्त्रफलत्वमुक्तं भवति । नहि सुखस्यान्यत् प्रयोजनमस्ति ॥ १७ ॥

प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥

नन्वेतत्प्रकरण एव छान्दोग्ये पठ्यते 'सर्वꣳ ह पश्यती'ति सर्वविषयक-

---

भाष्यप्रकाशः ।

म्यामुक्तः सः । तथा चास्यां श्रुतौ लौकिकव्यापारराहित्यस्य सिद्धत्वात्तत्र तथा व्याख्याने नाग्रहवाद इत्यर्थः । अत्र यत्पारिशेष्यात्सिद्धं तस्य फलमाहुः तेनेत्यादि । तत्र हेतुः न हीत्यादि । न हि भूमविद्यायां प्रतिपाद्यमानस्य भूमरूपस्य सुखस्य फलत्वातिरिक्तमन्यत् प्रयोजनं कथनस्यास्ति तस्मात् तथेत्यर्थः ।

यत्तु भाष्यान्तरेऽस्मिन् सूत्रे ब्रह्मसायुज्यं ब्रह्मसाम्यं वा प्राप्तस्य जीवस्यैश्वर्यादिकं जगत्सृष्टिव्यापाररहितमेव भवतीति विचारितम् । तदस्माकं मतम्, 'नेतरोऽनुपपत्ते'रित्यानन्दमयाधिकरण एव साधितमिति न काचिन्न्यूनतेति बोधितम् ।

यत्तु निरङ्कुशजगत्कर्तृत्वस्यैव ब्रह्मलक्षणत्वाद् 'ब्रह्म वेद ब्रह्मैव भवती'ति श्रुत्या जीवस्य ब्रह्मभावे बोधिते तस्यापि तदभेदाज्जगद्व्यापारोऽस्तु, तथा सतीदं सूत्रमवान्तरमुक्तिविषयमिति कश्चित् । तदसङ्गतम् । वेदस्तुतौ 'सममनुजानतां यदमतं मतदुष्टतये'ति जीवे तादृशनियन्तृत्वभावस्य ब्रह्मविदसम्मतत्वकथनेन तादृशजगत्कर्तृत्वादेरपि निरासबोधनादतः सायुज्येपि तदभावः सूत्रकाराभिमत इति ज्ञेयम् । तथा च यथा भूमिसम्बन्धिनो मथुरादिदेशस्य लौकिकत्वम्, तत्र स्थापितस्य चालौकिकत्वम्, तथा तत्र स्थितानां लौकिकदेहे निविष्टत्वाल्लौकिकत्वम्, तदन्तःस्थापितानां सदेहानामेव लीलास्थानामलौकिकत्वम् । तेन लौकिकालौकिकोभयकार्यकरणं तादृशतादृशतत्तज्ज्ञानविषयत्वं नानुपपन्नम्, नापि लीलासाङ्कर्यप्रसङ्गः । चक्षुरिन्द्रियदृष्टान्तेनैवोपपादितत्वादित्यर्थः ॥ १७ ॥

प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥१८॥ सूत्रं व्याकुर्वन्ति । नन्वि-

रश्मिः ।

तथा च गोस्वामिभिः प्रपञ्चितमित्यर्थः । तत्र तथेति । विद्वन्मण्डने । 'दिवीव चक्षुरातत'मिति श्रुतेस्तथावर्णकभेदेन व्याख्यानम् । भाष्ये । तत्रेत्यस्य नित्यक्रीडायामित्यर्थः । प्रकृते । अत्र यदिति । पूर्वसन्दर्भे गौणमुख्यन्यायेन यत्सिद्धं कस्माद्धेतोरित्यत आहुः । पारिशेष्यादिति । अक्षरप्राप्तिपरप्राप्तिनित्यलीलाप्रवेशभगवद्भोगभगवत्सुरसत्वेनैकोपि भगवत एव मुख्यत्वेन पारिशेष्यादित्यर्थः । तेनेत्यादीति । पूर्वसन्दर्भेण । सर्वात्मभावकथनेनेति वा । भगवत एवेति । भूम्नोपि भूमत्वेन भगवत्येव शक्तिः सर्वात्मभावे तु सर्वात्मभावत्वेनेति सर्वात्मभावस्थायियोगव्यवच्छेदक एवकारः । ननु भूम्न एकलक्षणत्वेन कथमेवकार इति चेत्तत्राहुः । तत्र हेतुरिति । सर्वात्मभावस्थायिव्यवच्छेदहेतुः । फलत्वातिरिक्तमिति । साधनत्वेपि 'स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तमे'ति वाक्यसाफल्याय स्वयंप्रकाशत्वाय च फलत्वातिरिक्तमन्यत् स्तुत्यादिप्रयोजनमित्यर्थः । तस्मात्तथेति । भगवत एव स्वतन्त्रफलत्वमित्यर्थः ॥ १७ ॥

प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥ नान्यत्पश्यतीति ।

प्रत्यक्षमुपदिश्यत इत्यन्यविषयकव्यापाररहित्यं नोपपद्यत इत्याशङ्क्य, समाधत्ते आधिकारिकेत्यादिना ।

अत्रेदमुच्यते । 'सोऽश्नुते', 'लोकवत्तु लीलाकैवल्य'मित्यादिभिर्नित्यलीलामध्यपातित्वं तस्योच्यते । 'नान्यत् पश्यती'त्यादिश्रुतिवशाज् जगद्व्यापारवर्जं भोगकरणं पूर्वसूत्रेणोक्तम् ।

अथेदं विचार्यते । 'नान्यत् पश्यती'ति प्रकरण एव 'सर्वं ह पश्यती'ति सर्वविषयकं दर्शनमुच्यते, तत् कथं पूर्वोक्तमुपपद्यत इति । किञ्च । एकस्यैव

---

भाष्यप्रकाशः ।

त्यादि । ननु भूमविद्यास्थस्य, 'नान्यत् पश्यती'त्यादिवाक्यस्य बलेन भक्तस्याक्षरे ब्रह्मणि जगद्व्यापाररहितो भोग इति यदुक्तम्, तन्नोपपद्यते । यत एतत्प्रकरण एव छान्दोग्ये भक्तस्य जगद्व्यापारः पठ्यते । स को वेत्यत आहुः 'सर्वं ह पश्यः पश्यती'ति । जगद्विषयकप्रत्यक्षरूपः स इत्यतस्तथेत्याशङ्क्य समाधत्त इत्यर्थः ।

समाधानांशव्याख्यानाय हेत्वंशस्फुरणे तेनाशङ्कान्तरस्यापि निवृत्तिमालोच्य तमप्यर्थं संग्रहीतुं प्रकारान्तरेणावतारयन्ति अत्रेदमित्यादि । अत्र अवतरणग्रन्थे, इदं वक्ष्यमाणमधिकमुच्यते, न तु तावन्मात्रमित्यर्थः । किं तदित्याकाङ्क्षायां आक्षेप्यं विषयमाहुः सोऽश्नुत इत्यादि । तस्येति । भक्तस्य । एवं विषयमनूद्य तत्र विचारः क्रियत इत्याहुः अत्रेत्यादि । अत्रास्मिन् सूत्रे इदमुक्ताभ्यां श्रुतिभ्यां सूत्राभ्यां च यदुक्तम्, तद्विचार्यत इत्यर्थः । विचारमाहुः नान्यदित्यादि । अत्र, नान्यदित्यारभ्य पूर्वोक्तमुपपद्यत इत्यन्तेन पूर्वोक्तैवाशङ्कानूदिता । सोऽश्नुत इत्यादिविषयिणीं द्वितीयामाहुः किञ्चेत्यादि । 'सोऽश्नुते', 'स वा एष

रश्मिः ।

तेन नान्यच्छृणोति नान्यत्पश्यतीत्युक्तभाष्येण यथालिखितपाठो न कर्तव्य इति सूचितं तदत्र स्फुटीकृतम् । आहुरिति । मान्यत्वाद्बहुवचनम् । तेन 'अधीहि भगव इति होपससाद सनत्कुमारं नारद' इति । श्रुतिविरोधो न । सर्वं हेति । अनेनापि प्रकाशेन यथालिखितपाठो व्यावर्तितः । शिष्याभिप्रायं वा । सनत्कुमारा नारदं प्रत्याहुरित्यर्थः । ग्रन्थकर्तुर्भक्तिं सूचयति । तथेति । अन्यविषयकव्यापाराहित्यं नोपपद्यत इति आशङ्क्येत्यर्थः । हेत्वंशेति । आधिकारिकमण्डलस्थोक्तेरिति हेत्वंशस्फुरणे । तेनेति । हेत्वंशेन । आशङ्कान्तरस्य । आशङ्का सर्वविषयकदर्शनवचनेन जगद्व्यापारवर्जं कथमिति तस्याः शङ्कायाः अन्यत् स एकधेत्यादौ जीवानेकत्वं न सम्भवतीति तत्र लीलायां नित्यत्वासिद्धिरूपमाशङ्कान्तरं तस्य । तमर्थमिति । शङ्कान्तरविषयमर्थम् । प्रकारान्तरेणेति । प्रकारः सङ्क्षेपेणोक्तसूत्रार्थः तस्मादन्यद् विस्तरेण सूत्रव्याख्यानं तेन । अवतारयन्तीति । भाष्यत्वायावतारयन्तीति । स्वपदवर्णनात् । 'सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदु'रिति भाष्यलक्षणात् । अवतरणग्रन्थ इति । विस्तरेण सूत्रे व्याख्यातव्य इति शेषः । उच्यत इति । विस्तरायोच्यते । तावन्मात्रं उक्तमात्रमवतरणम् । किं तदिति । वक्ष्यमाणमधिकम् । आक्षेप्तुं योग्यं पूर्वपक्षिणा । विषयमिति । उक्ताभ्यां श्रुतिभ्यां सूत्राभ्यां च यदुक्तं तत् । यदुक्तमिति । विषयम् । पूर्वोक्तैवेति । सङ्क्षेपेण सूत्रव्याख्यानायोक्ता । द्वितीयामिति । पूर्वोक्तायां सङ्क्षेपेण सूत्रव्याख्यानायोक्तायामाशङ्कायां विस्तरायाधिकशङ्काम् ।

भक्तस्य देशकालभेदेन क्रियमाणानेकलीलासम्बन्धित्वं भवति। तच लीलानित्यतायां न घटते। यतस्तत्तद्देशतत्तत्कालसम्बन्धिनी सा नित्या। एवं सत्येकस्यानेकरूपत्वं जीवस्य न सम्भवतीति तन्नित्यत्वमपि न सिध्यतीति ।

भाष्यप्रकाशः ।

एवं पश्यन्' 'सर्वं ह पश्यः पश्यती'त्यादिश्रुतौ श्रीभागवतादिषु च एकत्वकथनेन भक्तानामेकस्यैव रूपस्य प्रत्यक्षोपदेशादेकस्यैव भक्तस्य देशकालभेदेन क्रियमाणानेकलीलासम्बन्धित्वमुक्तं भवति । तच लीलानित्यतायां न घटते । यतस्तद्देशकालसम्बन्धिनी तत्तद्विशेषणविशिष्टैव नित्या ध्वंसाद्यप्रतियोगिनी। एवं देशकालभक्तविशिष्टाया लीलाया

रश्मिः ।

प्रत्यक्षोपदेशादिति । प्रत्यक्षश्चासावुपदेशस्तस्मादिति कर्मधारयः । सर्वविषयकप्रत्यक्षे रूपस्य विषयतयान्वयासम्भवात्। श्रीभागवतादिष्विति । 'निवेदितात्मा विचिकीर्षितो मे' इत्यत्र भक्तस्य एकत्वकथनेन । आदिना गीतायां 'ज्ञानिनामपि सर्वेषां मद्गतेनान्तरात्मना । श्रद्धावान्भजते यो मां स मे युक्ततमो मत' इति 'अभये ज्रुष्टं निर्वपामी'ति संहिता । यद्वा 'भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः' इत्यत्र भक्तस्यैकत्वकथनेन एकस्यैव रूपस्य यत्सर्वविषयकं प्रत्यक्षं तस्योपदेशात् । आदिना गीतायां 'स सर्वविद्भजति मां सर्वभावेन भारते'त्यत्र तथा। एवमन्यत्र। 'सोश्नुत' इत्यत्र सर्वकामान् जानातीच्छति यततेऽश्नातीति एकस्यैव रूपस्य सर्वकामविषयकं प्रत्यक्षं तस्योपदेशात् । 'स वा एवं पश्य'न्नित्यत्र एवमात्मादेशमहङ्कारादेशं पश्यन्नित्यर्थादात्मविषयकमहङ्कारविषयकं यत्प्रत्यक्षं तस्योपदेशात्। 'सर्वं ह पश्यः पश्यती'त्यत्र सर्वविषयकं प्रत्यक्षं तस्योपदेशादित्यर्थो यद्यपि सम्भवति तथापि, रूपस्य प्रत्यक्षोपदेशादित्यत्र रूपस्य विषयितया प्रत्यक्षरूपैकदेशे रूपान्वयो भाति स विरुद्धः रूपस्याऽप्रत्यक्षात्किन्तु सर्वकामादीनामतः प्रत्यक्षश्चासौ उपदेशस्तस्मादिति कर्मधारयोत्र व्याख्येयः। एवं विस्तरपक्षे सौत्राशङ्काग्रन्थं व्याख्याय हेतुभाष्यं व्याकुर्वन्ति स्म। एकस्यैव भक्तस्येति। 'तदेजति तन्नैजती'ति निःप्रतियोगिनी क्रीडा स्फुटा। ब्रह्मणो विरुद्धधर्माश्रयत्वात्। सप्रतियोगिनी तु क्रीडा भक्तसम्बन्धिनीति तत्राशङ्कते । एकस्यैव भक्तस्येति । पुष्टिफले भक्तस्यावश्यकत्वं भक्तसंवलितो भगवान्पुष्टिमार्गे फलति यतः। देशो वृन्दावनादिः। कालः श्वस्त्वद्य आयास्य इत्यादिवाक्येषु श्वः ह्यः वर्तमानश्च । क्रियमाणानेकेति । दशमस्कन्धप्रसिद्धाः क्रियमाणानेकलीलास्तासाम् । क्रियमाणा अनेकलीलासम्बन्धित्वं इति पाठे संहिताया अविवक्षणान्न समासे 'अकः सवर्णे दीर्घ' इत्यस्य प्राप्तिः । आलस्याद्वाऽसन्धिः । रभसाद्वा । उक्तं भवतीति । सोश्नुत इत्यादिश्रुतिषु भागवतादिवाक्येषु चोक्तं भवति । तच्चेति । भाष्यविवरणम् । तच्चेत्यादि । तच्चेति क्रियमाणानेकलीलासम्बन्धित्वम् । न घटत इति । भक्तं प्रत्येकस्या लीलायास्त्रिक्षणावस्थायिन्या अनुवृत्तेरनित्यत्वादिति भावः । भक्तोऽनेकलीलामनोरथः । अथ'मात्मत आविर्भावतिरोभावा'विति श्रुतावाविर्भावाद्यर्थं उत्पत्तिविनाशौ मन्यते । यत इत्यादि भाष्यं विवृण्वन्ति स्म । यत इत्यादि । तत्तद्देशकालेति । यथाचार्येषु वृन्दावनादिदेशे, एकादश्यां महानिशि काले, साक्षाद्भगवत्प्रवचनलीला निरोधरूपा तत्तत्सम्बन्धिन्याचार्यसम्बन्धिनी । सम्बन्धश्च स्वस्वामिभावः । 'इति श्रीकृष्णदासस्य वल्लभस्य हितं वचः । चित्तं प्रति यदाकर्ण्य भक्तो निश्चिन्ततां व्रजे'दिति वाक्यात् तत्तद्विशेषेणविशिष्टा विशेषणं यथा । लीला त्रिक्षणावस्थायिन्यनित्या सती यथासम्भवं कर्तुरनित्यत्वं सम्पादयेत्तत्र प्रम्वाचार्यसम्बन्धिनीक्रीडाविशेषणं, वर्तमानप्रम्वाचार्यसम्बन्धिनी क्रीडा । वर्तमानत्वं 'आचार्यं मां विजानीया'दिति वाक्यात् । 'नित्यो नित्याना'मिति

तत्रोच्यते। श्रुतौ सर्वपदेन न जगदुच्यते, किन्तु यस्यां यस्यां लीलायां

भाष्यप्रकाशः।

नित्यत्वे सति देशकालयोरन्यान्यत्ववद्भक्तस्याप्यनेकरूपत्वं वाच्यम्। तच्चानुक्तत्वाज्जीवस्य न सम्भवतीति। एवं विशेषणविघटने तस्या लीलाया नित्यत्वमपि न सिध्यतीत्यतो न घटत इत्यर्थः। प्रत्यक्षोपदेशादित्यत्र प्रथमपक्षे षष्ठीतत्पुरुषो द्वितीयपक्षे च कर्मधारयो ज्ञेयः।

एवमाशङ्कांशं द्वेधा व्याख्याय समाधानांशं व्याकुर्वन्ति तत्रोच्यत इत्यादि। तथा-

रश्मिः।

च। स्वरूपतः सम्बन्ध्यनित्यत्वमप्येतेन विशेषणेनापास्तम्। प्रमाणाभावस्तु प्रमाणसिद्धवर्तमानप्रभ्वाचार्यसम्बन्धिनीक्रीडेति विशेषणात्। अन्यानि विशेषणानि विद्वन्मण्डनसुवर्णसूत्रमिश्रीभावेन कर्तव्यानि। भक्तिमार्तण्डे तु स्पष्टीकृतानि मत्कृते। एवं गोपालतापिनीये 'वेणुवादनशीलाये'ति श्रुतेर्गोपीमाधवसम्बन्धिनीक्रीडाविशेषणम्। वर्तमानगोपीमाधवसम्बन्धिनी क्रीडा। वर्तमानत्वं निरोधस्कन्धलीलासमाप्तिश्लोकात् स च 'जयति जननिवासो देवकीजन्मवादो यदुवरपरिषत्स्वैर्दोर्भिरस्यन्नधर्मम्। स्थिरचरवृजिनघ्नः सुस्मितश्रीमुखेन व्रजपुरवनितानां वर्धयन् कामदेव'मित्यत्र जयतीति वर्तमानप्रयोगात्तथा। अस्यन् वर्धयन्निति च। लीला त्रिक्षणावस्थायिन्यनित्या सती यथासंभवं कर्तुरनित्यत्वं सम्पादयेदिति दोषे विशेषणमुक्तम्। गोपीमाधवयोर्विशेषणं वर्तमानेति विशेषणम्। स्वरूपतः सम्बन्ध्यनित्यत्वदोषोप्येतेन विशेषणेनापास्तः। प्रमाणाभावरूपस्तृतीयदोषस्तु प्रमाणसिद्धवर्तमानगोपीमाधवसम्बन्धिनी क्रीडेति विशेषणादपास्तः। शेषं पूर्ववत्। नित्येति। पूर्वं दोषत्रयं वारितं 'जयति जननिवास' इति श्लोकोपन्यासेन। अन्ये पञ्चविंशतिर्दोषाः विद्वन्मण्डनसुवर्णसूत्रभक्तिमार्तण्डेषु वारितास्तेभ्योवधेया वारणीयाश्च विस्तरभिया न लिख्यन्ते। ध्वंसादीति। आत्मनि लीला ध्वस्ताः आत्मनि लीला भविष्यन्ति आत्मनि लीला न सन्तीति संसर्गाभावास्तेषामप्रतियोगिनीत्वाद् ध्वंसाद्यप्रतियोगिनीत्वेन ध्वंसाद्यप्रतियोगिनी। अन्योन्याभावस्तु भेदाभावरूपाद्वैताभावादस्ति। परन्तु इवार्थः स गीतायां स्वरूपे निवेशोक्तेस्तस्य भेदस्य स्वरूपे निवेशादुक्तेः। तादात्म्याद्वैतसत्त्वाच्च। एवं सतीत्यादिभाष्यविवरणम्। एवं देशकालेति। अन्यान्यत्ववदिति। वीप्सा। देशोन्यः कालोन्य इति। अनेकरूपत्वमिति। अयमन्योयमन्य इति। 'स एकधा भवति त्रिधा भवति पञ्चधे'त्यादिश्रुतेः। अनुक्तत्वादिति। जन्यत्वापत्त्या बादरिमतेन शब्दान्यथानयनेनानुक्तप्रायत्वात्। अर्थवादकः शब्द इति। यद्वा सोश्नुत इत्यादिष्वेकस्यैव भक्तस्योक्त्यानुक्तत्वात्। इतीति व्याख्येयम्। तस्य व्याख्यानं एवं विशेषणविघटन इति। बादरिमतेन जीवस्यानेकरूपत्वविशेषणविघटने। तस्या इति। अनेकजीवकर्तृकाया इत्यर्थः। अपिना भगवत्सम्बन्धित्वम्। न सिध्यतीति। क्रियायास्त्रिक्षणावस्थायित्वेनानित्यत्वान्न सिध्यतीत्यर्थः। न घटत इति। क्रियमाणानेकलीलासम्बन्धित्वं न घटते। एकभक्तसम्बन्धिनी लीला एका। कर्मधारय इति। सर्वविषयकं दर्शनं न पश्यविषयकमिति न पश्यस्य प्रत्यक्षविषयतयान्वयः सूत्रे सम्भवत्यतः प्रत्यक्षश्चासौ विषय इति कर्मधारय इत्यर्थ उक्तः। आशङ्कांशमिति। 'प्रत्यक्षोपदेशादिति चे'दिति सौत्रमाशङ्कांशम्। द्वेधेति। सङ्क्षेपविस्तरप्रकारेण षष्ठीतत्पुरुषकर्मधारयप्रकारेण च। तत्रोच्यत इत्यादीति। सर्वपदेनेति। सङ्क्षेपपक्षे 'सर्वं ह पश्यः पश्यती'त्यत्र सर्वपदेन। विस्तरपक्षे सोश्नुत इत्यत्र 'सोश्नुते सर्वान् कामा'नित्यत्र सर्वपदेन। 'स वा एष एवं पश्य'न्नित्यत्र सर्वपदं नास्ति तथाप्येवमित्यस्यात्मादेशप्रकारेणेत्यर्थादधस्तादादिदेशप्रभेदभिन्नात्मा सर्वोपि ग्राह्य इति सर्वपदेनार्थिकेन। 'सर्वं हि पश्यः पश्यती'त्यत्र सर्वपदेन एकत्वस्य श्रुतौ भक्ते-

देशकालभेदेन क्रियमाणायामधिकृतो य एको भक्तः, तस्यैव तावन्ति रूपाणि सन्ति तान्याधिकारिकाणीत्युच्यन्ते। तेषां मण्डलं समूहस्तत्र स्थितवस्तुमात्रमुच्यत इति नानुपपन्नं किञ्चित्। अत एवाग्रे पठ्यते 'सर्वमाप्नोति सर्वश' इति, 'स एकधा भवति त्रिधा भवति पञ्चधा भवति। सप्तधा नवधा चैव पुनश्चैकादशः स्मृतः। शतं च दश चैकश्च सहस्राणि च विंशति'रिति। यथा मण्डलवर्तिषु पुंसु नैकस्य प्राथम्येन प्राधान्यं वक्तुं शक्यम्, तथैतेष्वपि रूपेष्विति ज्ञापनाय मण्डलपदमुक्तम् ॥ १८ ॥

---

भाष्यप्रकाशः।

चाधिकारोऽत्र भक्तानां लीलानुभवयोग्यतासम्बन्धाधिकारिकं तेषां मण्डलं समूहस्तत्र यत्तिष्ठति तस्योक्तेः कथनाच्छ्रुतौ तथोच्यत इति नानुपपन्नं किञ्चित्। श्रौतस्य दर्शनविषयवाचकस्य सर्वपदस्य सङ्कुचितवृत्तिकत्वात्तद्विषयकदर्शनेऽपि भोगस्य जगद्व्यापाररहितत्वं नानुपपन्नम्। तथा, 'सोऽश्नुत' इत्यादावेकवचनस्य भक्तस्वरूपविषयकत्वात् स भक्तस्तत्तद्देशतत्तत्कालभेदेन क्रियमाणा लीलाः आधिकारिकदेहसमूहस्थः पश्यतीति तत्तद्विशेषणविशिष्टानां लीलानां तदनुभवितुर्भक्तस्य च नित्यत्वं नानुपपन्नमित्यर्थः। ननु सर्वपदार्थसङ्कोचे भक्तरूपबाहुल्ये च किं मानमित्यत आहुः अत एवेत्यादि। अग्र इति। 'सर्वꣳह पश्यः पश्यती'त्यस्याग्रे। तथा च 'सर्वमाप्नोती'ति वाक्ये सर्वैः प्रकारैः सर्वप्राप्तिश्रावणात् 'एवं पश्यती'ति वाक्यस्थसर्वपदेन विवक्षितग्रहणस्यैव युक्तत्वात्। तथा 'स एकधे'ति वाक्ये भक्तस्य बहुधाभवनश्रावणात्, 'सोऽश्नुत' इत्यादावपि बहुभी रूपैर्भोगरूपस्य लीलानुभवस्य युक्तत्वादिति। ननु मण्डलपदेन चक्राकारेण परिणतः समूह उच्यते, न तु सामान्यसमूहः, अतः कथमेवमुच्यत इत्यतो मण्डलपदस्य तात्पर्यमाहुः यथेत्यादि। तथा चैतज्ज्ञापनाय मण्डलपदम्, न तु समूहस्य चक्राकारेण परिणतेर्ज्ञापनायेत्यर्थः ॥ १८ ॥

रश्मिः।

र्विवक्षणादाहुः। एको भक्त इति। तावन्तीति। फलसाधनयोरैकाधिकरण्यनियमात्। तत्सम्बन्ध्याधिकारिकमिति[1]। तत्सम्बन्धि आधाराधेयभावसम्बन्धोस्यास्तीति तत्सम्बन्धि। णिनिः। तथा च 'तत्र भव' इति सूत्राट्ठक्। कथनादिति। सङ्क्षेपपक्षे। 'सर्वꣳह पश्यः पश्यती'ति श्रुतौ। विस्तरपक्षे 'सोश्नुते', 'स वा एवं पश्यन्', 'सर्वꣳह पश्यः पश्यती'ति श्रुतिषु भागवतादिषु च 'भक्त्या मामभिजानाती'त्यादिषु कथनात्। उच्यत इति। नानुपपन्नं किञ्चिदिति भाष्यविवरणम्। श्रुतौ तथोच्यत इत्यादि। श्रुताविति। 'सर्वꣳह पश्यः पश्यती'ति श्रुतौ। उपलक्षणमेतत् सोश्नुत इत्यादिश्रुतीनाम्। विवृतं व्याकुर्वन्ति स्म। श्रौतस्य दर्शनेति। सङ्कुचितेति आधिकारिकमण्डलस्थे तथा। तद्विषयेति सर्वविषयस्य दर्शनेऽपि। उक्तोपलक्षणविषय आहुः। तथा सोऽश्नुत इत्यादाविति। विस्तरपक्षे श्रुतय इति पृथग्विचारः। आधिकारिकदेहसमूहस्थ इति। उदाहरणं तु बहुकीकत्वानन्तरं नारददर्शितस्य रूपस्य कार्यम्। यथा विश्वामित्रस्य गौः। तत्तद्विशेषणेति। अष्टाविंशविशेषणेषु तत्तद्विशेषणविशिष्टानां लीलानाम्। पश्यतीत्यस्याग्र इति इतिशब्दः प्रकारवाची षष्ठ्या लुक् पश्यतीति प्रकारो विशेषणं सर्वमाप्नोति सर्वश इत्यत्र तस्य प्रकारस्याग्रे। पश्यतीत्यस्या अग्र इति पाठो वा। कथमेवमिति केन प्रकारेण तत्स्थो जीवभक्त उच्यते ॥ १८ ॥

---

१. तत्सम्बन्ध्याधिकारिकमिति रश्मौ।

## विकारावर्ति च तथाहि स्थितिमाह ॥ १९ ॥

नन्वेवं सति 'श्वस्त्वद्गेहमायास्य' इति प्रभुणोक्ते तदाशया तत्स्थितिर्नोपपद्यते। नित्यत्वाल्लीलायास्तस्य कालस्य तदागमनस्य च तदापि वर्तमानत्वात्। तथा प्रभूक्तिरपि नोपपद्यत इत्याशङ्क्य समाधत्ते। इह भगवल्लीला प्रकृतिः, तद्विरुद्धोऽर्थो विकार इत्युच्यते। तत्र न वर्तते तज्ज्ञानं तादृशं च भवति।

---

भाष्यप्रकाशः।

विकारावर्ति च तथाहि स्थितिमाह ॥ १९ ॥ एवं श्रुतिविरोधं परिहृत्य लौकिकविरोधं परिहरतीत्याशयेन सूत्रमवतारयन्ति नन्वेवं सतीत्यादि । एवं सतीति तत्तल्लीलातत्तद्देशतत्तत्कालतत्तद्भक्तदेहानां नित्यत्वे सति व्याकुर्वन्ति इहेत्यादि । इहेति भगवत्सम्बन्ध्यर्थविचारे, भगवल्लीला प्रकृतिः, रसात्मकत्वगुणवत्त्वात्, अनुकृत्यधिकरणसिद्धकारणत्वाद्वा । तद्विरुद्धोऽर्थो लौकिकः, स हि विकार इत्युच्यते तत्प्रतिकृतिभूतयत्किञ्चित्तद्गुणवत्त्वात्। कार्यत्वाद्वा। तत्र लौकिके विकारभूतेऽर्थे न वर्तते, तत् ब्रह्मणा सह भोगकरणमत आधिकारिकमण्डलस्थं सर्वं तदन्तःपातिज्ञानं च विकारावर्ति तादृशं तत्समानाकारं च भवति अत एवेतः पूर्वं 'आत्मत आशा आत्मत आविर्भावतिरोभावा' वित्यादि श्रावितमन्यथा तन्न वदेत्। तदेतदत्र सर्वं चकारेण सूच्यते। तथा च, 'स एकधा भवती'ति श्रुतिबलेनैकस्य भक्तस्य यान्यनेकानि रूपाण्यङ्गीकृतानि, तानि योगिकायव्यूहवन्न नानादेशवर्तीनि, किन्तु यथैकस्मिन्नेव भगवत्स्वरूपे विद्यमानानि प्रद्युम्नादिव्यूहरूपाणि तत्कार्ये

रश्मिः।

विकारावर्ति च तथाहि स्थितिमाह ॥ १९ ॥ लौकिकेति 'लोकवत्तु लीलाकैवल्यमि'ति सूत्राल्लौकिकवत्प्रतीयमानधर्मविरोधं परिहरतीत्यर्थः। तत्तल्लीलेति। पूर्वसूत्र उपपादितम्। पूर्वतन्त्रे यत्र सकलाङ्गोपदेशः सा प्रकृतिरिति प्रकृतिलक्षणादाहुः । रसात्मकेति । उत्तरतन्त्रविचारेण प्रकृतिलक्षणमाहुः । अनुकृतीति । सर्वानुकरणार्थं कारणं तेजसः । 'न तद्भासयते सूर्यो न शशाङ्को न पावकः' 'यदादित्यगतं तेजो जगद्भासयतेखिलम्। यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामक'मिति च सार्धवाक्ये। तत्त्वाद्वेत्यर्थः। तथा च प्रकृतिः स्वरूपम्। 'प्रकृतिमगन् किल यस्य गोपवध्व' इत्यत्र तथाव्याख्यानात्। तद्विरुद्ध इति भाष्यविवरणम्। तद्विरुद्ध इत्यादि। लौकिक इति लौकिकवत्। विकारत्वस्य त्रिषु सत्त्वात्सामान्ये नपुंसकम्। विकारजातमाहुः। तत्प्रतिकृतीति तस्याः प्रकृतेः प्रतिकृतिभूतम्। तद्गुणवत्त्वात् प्रकृतिगुणवत्त्वात्। कार्यत्वाद्वेति प्रकृतेरेव। तत्र न वर्तेत इति भाष्यं विवृण्वन्ति स्म। तत्र लौकिकेति। किं न वर्तेत इत्याकाङ्क्षायां तज्ज्ञानमित्यादिभाष्यं विवृण्वन्ति स्म। तद्ब्रह्मणेति। तज्ज्ञानमित्यतस्तत्पदानुवृत्तिरत्र ज्ञेया। तदन्तःपातीति तस्याधिकारिकमण्डलस्थस्य सर्वस्यान्तःपाति तदन्तःपाति। तादृशमित्यस्यार्थः। तत्समानाकारमिति लौकिकविकारसमानाकारं लोकवदित्यर्थः। अत एवेति लौकिकविकारसमानाकारत्वादेव। इतः पूर्वमिति। 'सर्वं ह पश्यः पश्यती'त्यादि श्रुतेः पूर्वम्। श्रावितमिति। लौकिकविकारसमानाकारमाशादिकं श्रावितम्। अन्यथेति। आधिकारिकमण्डलस्थज्ञानाशादेर्लौकिकविकारसमानाकारत्वाभावे लौकिकत्वे च नित्यलीलायां तज्ज्ञानाशादिकम्। तदेतदिति। तज्ज्ञानं तादृशमित्यादि भाष्योक्तम्। यत्स्वरूपमित्यादि भाष्यं विवृण्वन्ति स्म। तथा चेत्यादि तादात्म्या-

यत्स्वरूपं प्रति तथा वदति, तस्य स्वगेहे तदा भगवत्स्थितिज्ञानं न भवतीत्यर्थः। उपलक्षणं चैतत्, अतो यद्देशकालविशिष्टा यादृशी या लीला, तस्यास्तादृश्या एव तल्लीलामध्यपातिनो भक्तस्य ज्ञानं, नान्यविषयकमिति ज्ञेयम्। अत एव द्वितीयस्यापि, 'मद्यं पूर्वमुक्तमासीत्तेनागत' इत्येव ज्ञानं भवति। तदेव हि रसोदयः, अतो रसस्वरूपमध्यपातित्वाल्लीलाया रसस्य च भगवदात्मकत्वाद्भगवद्रूपत्वेन सर्वमुपपद्यते लीलायाम्। अत्र प्रमाणमाह तथाहि स्थितिमाहेति। 'सर्वमाप्नोति सर्वश' इति श्रुतिरेकस्यैव भक्तस्य सर्वशः सर्वैः प्रकारैः सर्वलीलारसमाप्नोतीति वदन्त्युक्तरीत्यैव लीलायां स्थितिमाहेत्यर्थः। अतो वस्त्वेवेदमलौकिकमीदृशमिति मन्तव्यं वैदिकैरिति भावः। अलौकिकेऽर्थे लौकिकरीत्यनुसरणं न युक्तम्, किन्त्वलौकिकरीत्यनुसरणमेव युक्तमिति हिशब्देन द्योत्यते। एतेन 'रसो वै स' इति श्रुतेर्लीलाविशिष्ट एव प्रभुस्तथेति तादृश एव परमफलमिति ज्ञापितं भवति ॥ १९ ॥

भाष्यप्रकाशः।

प्रकटीभवन्त्यपि न स्वरूपाद्भिन्नतया प्रतीयन्ते तथा भक्तशरीराण्यप्येकस्मिन्नेव वर्तमानानि तत्तत्कार्ये बहिर्भवन्ति। एवं सति यत्स्वरूपं प्रति, 'श्वस्त्वद्गृहमायास्य' इति वदति, तस्य स्वगेहे प्रथमदिने भगवत्स्थितिज्ञानं न भवति, तस्य विरहानुभवयितृ रूपं बहिर्भवति, पूर्वोक्तं चान्तः। ततो द्वितीयदिने पूर्वोक्तं बहिर्भवति विरहानुभवयितृ चान्तस्तयोरन्तर्भावबहिर्भावौ तेन न ज्ञायेते, एकमेव स्वमनुभवतीत्येवं लीलारसालत्वार्थं दिङ्मात्रेण प्रदर्श्यते। वस्तुतस्तु यथा नित्यव्यापकशब्दवादिजैमिनीयमते व्यञ्जकस्य वायोर्ध्वनेर्वा अभावेन न वर्णात्मकशब्दस्य सर्वत्र सदा ज्ञानम्, यथा च नित्यव्यापकात्मवादिकाणादादिमते स्वदेहादन्यत्र तद्वृत्तिलाभस्थानभूतदेहाभावेन न स्वात्मज्ञानम्, तथात्र लीलादिव्यञ्जकभगवदिच्छाभावेन न भगवत्स्थित्यादिज्ञानं भवतीत्यर्थः। एवं सूत्रैकदेशं व्याख्याय तेनानुक्तस्यान्यस्यापि तथा सिद्धिमाहुः उपलक्षणमित्यादि। तथा च 'अचिन्त्याः खलु ये भावास्तांस्तर्केण प्रसाधयेत्। प्रकृतिभ्यः परं यच्च तदचिन्त्यस्य लक्षण'मिति मत्स्यपुराणवाक्यात्। अत एव श्रुतिमूलकतर्कादपि सर्वं मुख्यमित्यर्थः। उपपादनप्रकारस्य प्रामाणिकत्वाय सूत्रशेषमवतारयन्ति अत्रेत्यादि। सिद्धमाहुः अत इत्यादि। तथा च 'नैषा तर्केणे'ति श्रुतेः, 'अलौकिकास्तु ये भावा न तांस्तर्केण योजये'दिति स्मृतेश्च श्रुत्यनुसारेणैव निर्णयमिति सिद्धेस्तथेत्यर्थः ॥ १९ ॥

रश्मिः।

क्वचित्के स्वस्वरूपपदमाहुः। यत्स्वरूपं प्रतीति। अन्यत्रेति अन्यदेहादौ। तद्वृत्तीति जीववृत्तिलाभस्थानेत्यादिः। नेति स्वगृहादौ न। तेनेति। सौत्रचकारेण। तथा सिद्धिमिति। चकारेण यथासिद्धिस्तथा तामाहुः। अत एवेति। तर्केणेत्यस्य मीमांसायुततर्केणेत्यर्थादेव। अत्रेत्यादीति। सर्वैः प्रकारैरिति। अलौकिकेर्थे लौकिकी व्युत्पत्तिर्न कृता सर्वान्ददातीति किन्तु सर्वे प्रकाराः सर्वश इति व्युत्पत्तिः कृता। तथा चोक्तम्। 'इत्थं लौकिकशब्दानां प्रक्रिया इह दर्शिते'ति सिद्धान्तकौमुदीसमाप्तौ। उक्तरीत्येति अस्मिन् सूत्रे उक्तरीत्या। तथेत्यर्थ इति। वस्त्वेवेदमलौकिकमीदृशमिति मन्तव्यं वैदिकैरित्यर्थः। ननु तथापि युक्तिस्तु काचिद्वक्तव्येति चेदग्रे वक्ष्यते। भाष्ये। प्रभुस्तथेति प्रभुः प्रकृतः ॥ १९ ॥

दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥

न च लौकिकयुक्तिविरोधोऽत्र बाधकत्वेन मन्तव्यः, किन्तु साधकत्वेन यतः प्रत्यक्षानुमाने श्रुतिस्मृती अपि लौकिकयुक्त्यप्रसारेणालौकिके भगवत्सम्बन्धिन्यर्थेऽन्यथाभावनं निषेधति, 'नैषा तर्केण मतिरापनेया'। 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च'। 'अलौकिकास्तु ये भावा न तांस्तर्केण योजयेत्'। श्रीभागवते च 'न हि विरोध उभयं भगवत्यपरिगणितगुणगण ईश्वरेऽनवगाह्यमाहात्म्येऽर्वाचीनविकल्पवितर्कविचारप्रमाणाभासकुतर्कशास्त्रकलिलान्तःकरणाशयदुरवग्रहवादिनां विवादानवसर' इत्यादिवाक्यैरचिन्त्यानन्तशक्तिमत्त्वेन भगवत्स्वरूपस्यैव परमफलत्वं प्रदर्श्यते। किञ्च। 'ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः। अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरी'ति ऋग्वेदे पठ्यते। किञ्चित्पाठभेदेन यजुःशाखायामपि। ता तानि वास्तूनि वां गोपीमाधवयोः सम्बन्धीनि गमध्यै प्रसाद-

भाष्यप्रकाशः।

दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥ भगवत्सम्बन्धिपदार्थानां युक्त्यगम्यत्वरूपं पूर्वोक्तमर्थमेव दृढीकर्तुं सूत्रान्तरं पठतीत्याशयेन सूत्रं व्याकुर्वन्ति न चेत्यादि। भाष्यमत्र निगदव्याख्यातम्। अत्र 'नैषा तर्केणे'ति काठकश्रुतेर्जीवप्रश्नोत्तरवर्तित्वेन तया भगवत्सम्बन्धिनामर्थानां तर्कागोचरत्वसाधनं न युक्तमित्याशङ्क्य, ब्रह्मप्रकरणस्थायाः 'परास्य शक्ति'रिति द्वितीयस्याः श्वेताश्वतरश्रुतेरुपन्यासः। 'अलौकिकास्त्वि'त्यस्याः स्मृतेः प्रसिद्धत्वेन विषयान्तरे चारितार्थ्यमाशङ्क्य, श्रीभागवतषष्ठस्कन्धीयस्य 'न हि विरोध'इति वाक्यस्योपन्यासः। एवमेतैः प्रमाणैर्लीलाया अलौकिकत्वं निगमयित्वा तन्मुखेनापि भगवतः फलत्वनिगमनाय किञ्चेत्यादिना शाखाद्वयस्थश्रुत्युपन्यासः। ऋक्शाखास्थश्रुतेर्यास्केन सूर्यकिरणपरताया निर्वचनात् तदर्थभ्रमनिरासाय यजुःशाखापाठस्मारणम्। तेन यास्कोक्तस्य शृङ्गादिपदनिरुक्तमात्रार्थत्वम्, न तु

रश्मिः।

दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥ निगदेति। श्रुतिस्मृती इति। 'तं त्वौपनिषद'मिति श्रुत्याधोक्षजे प्रत्यक्षादेरसङ्गमादेवं व्याख्यातम्। ननु तर्हि स्मृतेरप्यौपनिषदत्वाभावात्स्मृतिर्न व्याख्यानमिति चेन्न। गीतास्मृतिषु इति श्रीमद्भगवद्गीतासूपनिषत्स्विति उपनिषत्पदप्रयोगादुपनिषत्त्वात्। ब्रह्मण आर्षमिति प्रत्यक्षमूलत्वाज्जन्यजनकभावसम्बन्धो लक्षणा प्रत्यक्षपदस्य श्रुतौ। अनुमीयते उत्सन्नप्रच्छन्नवेदशाखा येन तदनुमानं स्मृतिरिति वेदान्ते योगमात्रादरणात्। एवं निगदेन भाष्यव्यक्तवचनेन व्याख्यातं व्याख्यातप्रायम्। बहुवाक्योपन्यासे गौरवं मन्यमानास्तत्स्वारस्यमाहुः। अत्र नैषेति। विषयान्तरेति विषयोऽधोक्षजः। ततोन्यद् विषयो नटादौ प्रसिद्धं तद्विषयान्तरं तस्मिन्। शाखाद्वयेति। ऋग्वेद आश्वलायनशाखा। एवं यजुःशाखापि। यास्केनेति निरुक्तकर्मणा। सूर्येति। गावः किरणा उच्यन्त इत्येवं व्याख्याताः। तदर्थेति सूर्यकिरणार्थभ्रमनिरासाय। यजुःशाखेति किञ्चित्पाठभेदेनेत्यादि भाष्येण तथा। पाठभेदस्तु भूरीत्यृग्वेदे। भूरेरिति यजुःशाखायाम्। यास्कोक्तस्येति निर्वचनस्य। शृङ्गादीति। शृङ्गादि।

त्वेन प्राप्तुमुश्मसि कामयामहे । तानि कानीत्याकाङ्क्षायां गूढाभिसन्धिमुद्घाटयति, यत्र श्रीगोकुले गावो भूरिशृङ्गा बहुशृङ्गा रुरुप्रभृतयो वसन्तीति शेषः । ग्राम्यारण्यपशूपलक्षणार्थमुभयोरेव ग्रहणम् । अत्राह भूमावेव तदुरुगायस्य बहुगीयमानस्य वृष्णः भक्तेषु कामान् वर्षतीति वृषा तस्य पदं स्थानं वैकुण्ठम्, ततोऽपि परममधिकम्, अत्र विचित्रलीलाकरणात् । भूरि यमुनापुलिननिकुञ्जगोवर्धनादिरूपत्वेन बहुरूपम् । तथा च तत्रत्यानि तानि कामयामह इति वाक्यार्थः सम्पद्यते । एतेन लीलासम्बन्धिवस्तूनां यत्र फलत्वेन प्रार्थनम्, तत्र तल्लीलाकर्तुः परमफलत्वे किं वाच्यमित्याशयो ज्ञाप्यते । 'अथ ह वा व तव महिमाऽमृतसमुद्रविप्रुषा सकृल्लीढया स्वमनसि निष्यन्दमानानवरतसुखेन विस्मारितदृष्टश्रुतसुखलेशाभासाः परमभागवता' इति श्रीभागवते । एतेनापि कैमुतिकन्यायेन प्रभोरेव स्वतः पुरुषार्थत्वं ज्ञाप्यते । फलप्रकरणत्वात्तदेवाचार्यतात्पर्यविषय इति ज्ञायते ॥ २० ॥

## भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

इतोपि हेतोः पुरुषोत्तमस्वरूपमेव परमं फलमिति ज्ञायते । यतः, 'सोऽ-

भाष्यप्रकाशः ।

तत्तात्पर्यकत्वम् । ऋचो विष्णुसूक्तस्थत्वात्, तैत्तिरीयपाठे च विष्णुपदादग्रेपि 'विष्णोः कर्माणि पश्यते'त्यादिमन्त्रदर्शनाच्च । एतदुपष्टम्भायैव, 'अथ ह वा वे'ति श्रीभागवतवचनोपन्यास इति । शेषं स्फुटम् ॥ २० ॥

**भोगमात्रसाम्यलिङ्गाच्च** ॥ २१ ॥ सूत्रमवतारयन्ति इतोपीत्यादि । इतोपीति ।

रश्मिः ।

निरुक्तमात्रोर्थो यस्य तत्त्वम् । तत्तात्पर्येति । निरुक्ततात्पर्यकत्वम् । सूर्येभिधावृत्तिसत्त्वेन तात्पर्यवृत्त्यभावात् । विष्णुपदादिति । वृष्ण इति पदस्थले तथा । एतदिति । उक्तकैमुतिकन्यायोपष्टम्भाय स्फुटमिति । गूढाभिसन्धिमिति गोकुलेन गूढस्य संवृतस्य वैकुण्ठस्याभिसन्धिं अभितः सन्धिं भग्नसङ्घट्टनमुद्घाटयतीत्यर्थः । अयमर्थः । मर्यादामार्गीयस्य हृदि व्यापिवैकुण्ठे प्रकटस्य बहिराविर्भावे तत्र प्रवेशः सद्योमुक्तिः । तदुक्तम् । 'भूमावुत्तारितं सर्वं वैकुण्ठं स्वर्गवासिनम् । वैकुण्ठं स्वर्गवासिनमिति' वीप्सा, मार्गद्वयग्रहणार्थम् । कर्ममार्गेण हिरण्यगर्भातिरिक्तस्य मुक्त्यभावात् । एवं च भूमावित्यनेन श्रीगोकुलमपि प्राप्नोति । पुष्टौ तु मर्यादातो विपरीता गतिः यतः प्रमेयबलेनैव पुष्टिस्थानां सर्वं तत्र 'अह्नधाप्तं निशि शयानमतिश्रमेणे'त्युक्त्वा 'लोके विकुण्ठमुपनेष्यति गोकुलं स्व'मिति विकुण्ठे श्रीगोकुलनयनम् । एवं च पुष्टिमार्गानुसारेण वैकुण्ठे गोकुलमिति गूढस्य पुष्टिमार्गीयप्राप्यगोकुलस्य अभितः सन्धिं भग्नस्य अत्यन्तानुग्रहं विना आमर्दितस्य सन्धिं सङ्घट्टनमनधिकारेपि कश्चिदुद्दिश्योद्घाटयन्तीति । उभयोरिति गोभूरिशृङ्गयोः । भूमाविति । मर्यादामार्गे श्रीगोकुलमपि । 'भूमावुत्तारितं सर्वं वैकुण्ठं स्वर्गवासिनं वैकुण्ठं स्वर्गवासिनम्' इति श्रुतेः । पुष्टिप्रकरणादाहुः । ततोपि परममिति । कैमुतिकन्यायेनेति पाठः । तदेवेति । प्रभोरेव परं लीलाकर्तृ । एवं शेषं स्फुटमित्यर्थः ॥ २० ॥

**भोगमात्रसाम्यलिङ्गाच्च** ॥ २१ ॥ भाष्ये । पुरुषोत्तमस्वरूपमिति रसात्मकमिति

श्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते'ति श्रुतौ भक्तसाम्यमुच्यते । तत्र पुरुषोत्तम एव सम्भवति । यतः सख्यं दत्त्वा तत्कृतात्मनिवेदनमङ्गीकुर्वन्नति-करुणः स्वस्वरूपानन्दमनुभावयँस्तं प्रधानीकरोति। अन्यथा भक्तोऽनुभवितुं न शक्नुयात् युक्तं चैतत्। प्राप्तं फलं स्वाधीनं भवत्येव, अन्यथा फलत्वमेव न स्यात्। तथा चास्माल्लिङ्गादपि प्रभोरेव परमफलत्वं सिध्यति । 'न तत्समश्चाभ्याधिकश्च दृश्यत' इति श्रुतिविरोधपरिहाराय मात्रपदम्। न चात्र कामभोगस्य फलत्वं शङ्कनीयम् । 'आप्नोति पर'मित्येतद्व्याकृतिरूपत्वात् स्वरूपानुभवरूपत्वात् भोगस्य। अनुभूयमानस्यैव हि सुखस्य लोके पुरुषार्थत्वोक्तेः ॥ २१ ॥

भाष्यप्रकाशः ।

'मात्रं कार्त्स्न्येऽवधारणे'। भोगमात्रे भोगे एव यत् साम्यम्, भक्तेन सह तौल्यम्, अस्यां श्रुतौ सहपदेन श्राव्यते, तस्माल्लिङ्गादपि। तद् व्याकुर्वन्ति यत इत्यादि। पुरुषोत्तम एवेत्येवकारेणा-क्षरं व्यावर्त्यते। तत्र हेतुः यतः सख्यमित्यादि। नन्वत्र कामानामेव प्राप्तेरुक्तत्वात्तद्भोगस्यैव फलत्वमस्त्विति चेत् तत्राहुः न चेत्यादि । 'आप्नोति पर'मित्येतद्व्याकृतिरूपत्वादिति। 'आप्नोति पर'मिति यद्वाक्यं तद्व्याख्यानरूपत्वात्। ननु यदि भगवत एव फलत्वम्, तदा कामानामशनं किमिति विवरणत्वेनोच्यत इत्यत आहुः स्वरूपेत्यादि। तत्र युक्तिमाहुः अनु-भूयमानस्येत्यादि। तथा च फलत्वव्युत्पादनार्थं तत्, न तु फलत्वार्थमित्यर्थः। एवमनया पञ्चसूत्र्या भोगप्रकारविचारोपि भगवतः परमफलत्वबोधनायैवेति ज्ञापितम्। इदमेवाचार्यैः पुष्टि-

रश्मिः ।

ज्ञेयम्। प्रकृते। अस्यामिति 'सोऽश्नुत' इत्यस्याम्। तौल्यमिति। ब्रह्मणो गौणत्वेऽपि कियद्गौण्यं किन्तु साम्यमिति भावः। तद्व्याकुर्वन्तीति तत् तस्मात् तमुक्तमर्थं हृदिकृत्य सूत्रं व्याकुर्वन्ती-त्यर्थः। व्यावर्त्यत इति ब्रह्माहमस्मीत्यक्षरसाम्यस्य जीवन्मुक्ते सिद्धत्वेन फले तदनुपयोगा-द्व्यावर्त्यत इत्यर्थः। तत्र हेतुरिति साम्ये हेतुः। अक्षरव्यावर्तनापेक्षया समग्रस्य प्रधानत्वात्। यतः सख्यमित्यादीति। सख्यं दत्त्वेति सम्पद्याविर्भावाधिकरणेन सम्पद्याविर्भावात्समानशील-व्यसनवत्स्वरूपं सख्यं सिद्ध्यति । रासेष्टधाविर्भावात्। अत्र षड्धर्मैः क्रियमाणलीलासु षड्धर्मा यक्ता अविकारिण इति सख्यं नानुपपन्नम् । सख्यात्मनिवेदने पुष्टिश्रुतीनां नाभिप्रेते इति भ्रमरगीते 'मृगयुरिव कपीन्द्र'मित्यस्य सुबोधिन्यामस्तीति न तदर्थं भक्तसाधनमत उक्तं दत्त्वेति । ब्राह्मणे-त्यधिकरणेन देहा उक्ताः तेषां निवेदनं श्रुतिरूपाणामङ्गीकुर्वन्, आत्मानो देहाः तेषां निवेदनम्। आत्मीयानां तत्राभावात् । सालोक्यमुक्तिश्चैतसा तु उक्तभक्तिद्वये श्रुतेस्तात्पर्याभावेपि ददात्यङ्गी-करोत्यतोतिकरुणः । स्वस्वरूपेति । प्रदीपाधिकरणे सामर्थ्यमुक्तमतः स्वरूपानन्दमनुभावयन्नि-त्यादिः। स्वस्य स्वरूपं भक्तदेहित्वेनाङ्गीकृत्य तदानन्दमित्यादिः। अत्र 'तस्यैष आत्मा वृणुते तनुं स्वा'मिति श्रुतिरनुसन्धेया । भवत्येवेति । साधनानां जीवाधीनत्वादिति भावः। 'भक्त्या त्वाद्यो द्वितीयस्तु तदभावाद्धरौ सदे'ति भक्तिभावास्तदभावाः साधनानि । भगवतः सर्ववशित्वादत्यन्तायोगं मत्वाऽत्यन्तायोगव्यवच्छेदकैवकार उक्तः । क्रियासङ्गतैवकारोत्यन्तायोगव्यवच्छेदकः । नीलं सरोजं भवत्येवेत्यत्रेव । तद्भोगस्येति कामभोगस्य । फलस्येति रसात्मकस्य । तदिति ब्रह्मणा सह

१. तौल्यम्।

एवं भगवतः स्वतः पुरुषार्थरूपत्वमुक्त्वा कर्मफलभोगानन्तरमावृत्तिवदत्रा-प्यावृत्तिर्भविष्यतीत्याशङ्कानिरासायोत्तरं पठति ।

अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥

भाष्यप्रकाशः ।

प्रवाहमर्यादायां पुष्टिफलविचारे 'भगवानेव हि फलं स यथाविर्भवेद्भुवि । गुणस्वरूपभेदेन तथा तेषां फलं भवे'दित्यनेनोक्तं ज्ञेयम् ॥ २१ ॥

अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥ सूत्रमवतारयन्ति एवमित्यादि ।

रश्मिः ।

भोगकरणम् । तदित्यव्ययं वा तत्कामभोगः । न चानुभूयमानसुखस्य पुरुषार्थत्वे सुषुप्तिस्वरूपसुख-साक्षात्कारादिना ईश्वरादेः पुरुषार्थत्वप्रसङ्ग इति वाच्यम् । इष्टापत्तेः । तत्तदुपासकान्प्रति तत्त-द्भक्तान्प्रति तत्तदीश्वरादेः पुरुषार्थत्वादिति । 'स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तमे'ति वाक्याद्भक्तः सर्वात्मभावरूपस्य पुरुषार्थत्वं भक्तिमार्तण्डे उपसमाह्युक्तमेवेति शुभम् । गुणस्वरूपेति । गुणाः ऐश्वर्यादयः स्वरूपं साक्षान्मन्मथरूपं पञ्चाध्याय्याम् । एवंप्रकारेण स्वरूपान्तरेणापि तेषां वैदिकानां अत्र कायिकानां पौष्टिकानां फलं भवेदित्यर्थः ॥ २१ ॥

अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥ एवमित्यादीति । स्वत इति साध्यत्वभिन्नसिद्धत्वतः । स्वशब्द आत्मीयवाची । आत्मवाचकत्वेऽपि न क्षतिः । तादात्म्याभेदात् । उक्त्वेति । ननु विकारावर्तिसूत्रभाष्ये 'अतो वस्त्वेवेदमलौकिकमीदृशमिति मन्तव्य'मित्युक्तम् । इयदवधि तदेवोक्तम् । परन्तु युक्तिस्तु काचन वक्तव्येति चेदुच्यते । उक्तरूपे तादात्म्यरूप-मद्वैतम् । भेदाभावरूपस्याद्वैतस्य स्वरूपेऽभावाद् 'अविभक्तं च भूतेषु विभक्तमिव च स्थित'मित्यस्य स्वरूपनिरूपणे उक्तत्वाद् गीतायां तदत्रावतार्यते फलस्य स्वरूपत्वात् । ननु लीला हि द्वेधा । सप्रतियोगिनी निःप्रतियोगिनी च तत्र निःप्रतियोगिनी 'तदेजति तन्नैजती'त्यनया श्रुत्योक्ता विरुद्धधर्माश्रये स्पष्टा भगवति, सप्रतियोगिनी तु अद्वैते कथं सम्भवेद् यतस्तत्र नन्दयशोदा-गोपीगोपाः प्रतियोगिनस्ते कथं ज्ञानस्वरूप एकीभवेयुरिति चेदुच्यते । 'आत्ममायामृते राजन् परस्यानुभवात्मनः । न घटेतार्थसम्बन्धः स्वप्नद्रष्टुरिवाञ्जसे'ति सिद्धान्तवाक्ये द्वितीयस्कन्धे माया-सम्बन्धः प्रतियोग्यात्मदेहार्थमुक्तस्तन्न्यायेन श्रुतौ भक्तेच्छया नित्यलीलायां देहसम्बन्धः, 'स ईक्षाञ्चक्र' इति श्रुतौ मायास्थले ईक्षाश्रावणात् । न चेयं भगवदीयेच्छा न भक्तेच्छेति वाच्यम् । भक्तभगवतोरैक्याद् ब्रह्महृदनीतत्वेन ब्रह्मत्वात् सर्वस्य लीलास्थपदार्थस्य । एवं चावस्था-त्रयपक्षे सुषुप्तिस्त्वकामरूपो भगवानतस्तद्भक्तेच्छा न सम्भवति किन्तु 'मेनेऽसन्तमिवात्मानं सुप्तशक्तिरसुप्तदृगि'त्युक्तदृगपि निर्विषया । नैयायिकास्तु ज्ञानं सविषयकमेवेति सुषुप्तौ स्वरूपस्य विषयत्ववत्तुरीये त्रिषु सन्तते सायुज्ये प्राप्तजीवमनोरथकेनाविर्भूतानां नन्दादिप्रतियोगिनामात्मत्वेन तादृग्दृग्विषयत्वेन दृशो न निर्विषयत्वम् । तथा च यथा घटानां न परस्परं भेदः तादात्म्यात्त-त्सम्बन्धावच्छिन्नप्रतियोगिताया अभावात्तथा भगवन्नन्दयशोदादीनामपि न परस्परं भेदः तादात्म्या-त्तत्सम्बन्धावच्छिन्नप्रतियोगिताया अभावात् । शास्त्रदृष्ट्यात्मत्वेन तादात्म्याद्वैतसम्भवात् । सा चाद्वैते 'एकमेवाद्वितीय'मिति श्रुतिविषयत्वेन तर्कसम्भवाद्युक्तिः । तथा चोक्तरीतिर्न स्यात्तदा वस्त्वेवेद-मलौकिकमीदृशं न स्यादिति युक्तिः सिद्धा । मेन इति वाक्यीयदृग्विषयनन्दादीनां तादात्म्यान्न स्वयंप्रकाशत्वहानिरिति । प्रकृतमनुसरामः । अत्राप्यावृत्तिरिति स्वर्गसुखवन्निरूपितफलेऽपि ।

अनावृत्तिर्भक्तानां ज्ञानिनां चोच्यते । तत्र मानं शब्दः । स च 'तयोर्ध्वमायन्नमृतत्वमेति','न तेषां पुनरावृत्तिः', 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते', 'ब्रह्मलोकमभिसम्पद्यते'; 'न च पुनरावर्तते' इत्यादिरूपस्तु ज्ञानिनां तामाह । न हि भक्तानां नाड्यादिप्रयुक्तममृतत्वम् । 'तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः । न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह', इत्यादिवाक्येभ्यः । किन्तु 'यमेवे'ति श्रुतेर्वरणमात्रलभ्यः पुरुषोत्तमः । एवं सति 'ब्रह्मविदाप्नोति पर'मिति श्रुतेर्विरोधपरिहारपूर्वकोक्तव्याख्यानरीत्या भक्तस्य परं

---

भाष्यप्रकाशः ।

व्याकुर्वन्ति अनावृत्तिरित्यादि । ननूक्तः शब्दो ज्ञानिनामेव तामाहेत्यत्र गमकमाहुः न हीत्यादि । काठके ज्ञानं प्रस्तुत्य, 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः' इति वैराग्यं चोक्त्वा, ततः 'शतं चैका च हृदयस्य नाड्य' इत्यनेनोत्क्रमस्योक्तत्वात्, बृहदारण्यके शारीरब्राह्मणेपि तथात्वादन्यत्रापि तथैवेति नाड्योर्ध्वगतिहेतुभूतयोर्ज्ञानवैराग्ययोर्भक्तस्य श्रेयस्करत्वाभावेऽप्योक्तं तत्कार्यभूतनाडीगतिप्रयुक्तममृतं न शक्यं वक्तुम्, अतो ज्ञानिनामेव तेन शब्देन तदुच्यत इत्यर्थः । तर्हि भक्तस्यानावृत्तिः कुतोऽवगन्तव्येत्यत आहुः किन्त्वित्यादि । किन्तु 'यमेवे'ति श्रुतेर्वरणलभ्यः पुरुषोत्तमो भक्तानाममृतत्वम् । स च 'अक्षरात् परतः पर' इति श्रुतेः 'यस्मात् क्षरमतीतोऽह'मिति गीतावाक्याच्चाक्षरात् परः । एवं वरणलभ्यस्यात्मनोऽक्षरात् परत्वे सति 'ब्रह्मविदाप्नोति पर'मिति श्रुतेर्विरोधपरिहारपूर्वकं यद्व्याख्यानं वरणसाहित्ये सर्वकामाशनरूपो ब्रह्मस्वरूपानन्दानुभवः वरणसाहित्याभावे तु लोकत्वेनाक्षरप्राप्तौ तदानन्दानुभवोऽक्षरसायुज्यं वा यथाऽधिकारमिति पूर्वमुक्तम्, तद्रीत्या अक्षराधिष्ठातारं पुरुषोत्तमं परं ब्रह्म वरणेन प्राप्तस्य भक्तस्य निर्दोषत्वादावृत्तिहेतूनामविद्याकामकर्मणामभावात् प्रपञ्चेऽनावृत्तिः सम्भवति । तथा चात्र परशब्दे प्राप्यस्याक्षरात् परत्वप्रकाशनसामर्थ्याल्लिङ्गादनावृत्तिर्भक्तानामव-

रश्मिः ।

अनावृत्तिरित्यादीति । तयोर्ध्वमिति तया नाड्या । एतेन प्रतिपद्यमाना इति एतेनार्चिरादिमार्गेण । ननूक्त इति ननुराशङ्कायाम् । उक्तः शब्दो ज्ञानिनामेव तामाहेत्यत्र अस्यां ननु आशङ्कायाम् । गमकमाहुरिति योजना । यद्वा । ननूक्तः शब्दो ज्ञानिनामेव तामाहेत्यत्र किं गमकमतो गमकमाहुरिति शेषपूरणम् । शेषस्तु किं गमकमत इति । तत्कार्येति ज्ञानवैराग्यकार्यभूतनाडीगतिप्रयुक्तममृतत्वम् । नन्वमृतमित्येवास्त्वस्य किं प्रयोजनमिति चेन्न । तादात्म्याद्भगवन्निष्ठामृतत्ववद्भक्तानाममृतत्वमविरुद्धम् । तदुच्यत इति अमृतत्वमुच्यते । तामाहेत्युक्तां तां तु अग्रे विचारयिष्यन्ति । यद्वा तदित्यव्ययम् । सोच्यत इत्यर्थः । पुरुषोत्तम इति कस्याश्चिल्लीलायां भक्तगौण एव सः । आश्चर्यमुक्तम् । स चेति परतः परस्मादक्षरात्परतः । अक्षरात्पर इति । परतोऽक्षरात्परः । एवं सतीति भाष्यं विवृण्वन्ति स्म । एवं वरणेति तूष्णीकम् । भाष्येऽनावृत्तौ हेत्वभाव उक्तः । प्रमाणपुरःसरं तमाहुः तथा चात्रेति । अत्र 'ब्रह्मविदाप्नोति परमि'ति श्रुतौ शब्दादिति हेतोः स्वाक्षिप्तनिर्दोषत्वहेतुता निर्दोषत्वस्यानावृत्तौ हेतुत्वमुक्तम् । शब्दादिति हेतोरविशेषान्न साक्षादनावृत्तौ हेतुत्वं किन्तु परम्परयेत्याशयेन तदपि हेतुत्वं शब्दसामर्थ्याभावे न भवतीति पूर्वसूत्रवासनया लिङ्गहेतौ निवेशितः । शब्दादिति सौत्रं हेतुं ल्यबन्तं हृदिकृत्याहुः परशब्द

ब्रह्म प्राप्तस्य निर्दोषत्वादावृत्तिहेत्वभावात् प्रपञ्चेऽनावृत्तिः सम्भवति । तादृशं प्रतीश्वरेच्छापि न तथा भवितुमर्हति । 'ये दारागारपुत्राप्तप्राणान् वित्तमिमं परम् । हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे' इति भगवद्वाक्यात् परप्राप्तिरूपत्वाच्च भोगस्य न नाशसम्भावना । किञ्च यत्रैकस्यैव भक्तस्य देशकालभेदेनानेकविधलीलासम्बन्धित्वेपि तत्तल्लीलासम्बन्धित्वमनश्वरमुच्यते, तत्र सर्वथा तदभावः कथं वक्तुं शक्यो ब्रह्मणापि । अपरञ्च । कालसाध्यो हि नश्वरः स्यात् । न हि पुरुषोत्तमे कालः प्रभवितुं शक्नोति । 'न यत्र कालोऽनिमिषां परः प्रभु'रित्यादिवाक्येभ्यः । तथा च ज्ञानमार्गीयभक्तिमार्गीययोरनावृत्तौ तुल्यत्वेपि फलप्राप्तौ वैलक्षण्यात् पूर्ववाक्येन भक्तानामाहानावृत्तिम्, उत्तरवाक्येन ज्ञानिनामिति ज्ञायते । न च फलप्रकरणान्तेऽनावृत्त्युक्तेः संसाराभाव एव जीवस्य परमं फलमित्याचार्याभिप्रायो ज्ञायत इति वाच्यम् । ब्रह्मविदः परप्राप्तिं फलत्वेनोक्त्वा तत्स्वरूपस्य सर्वकामभोगत्वेन श्रुत्या निरूपणात् । स च स्वस्वाधिकारानुसारेण निवेदितार्थाङ्गीकाररूप एवेति ज्ञेयम् । तेन स एव परमं फलम् । अनावृत्तिस्त्वार्थिकी, परन्त्वावृत्तौ सम्भवत्यां परमफलत्वं नोपपद्यत इति ज्ञानदुर्बलशङ्कानिरासायेयमुक्ता ।

---

भाष्यप्रकाशः ।

गन्तव्येत्यर्थः । ननूभयव्यामोहसूत्रे भक्तव्यामोहस्यापि क्वचिदुक्तत्वात्तादृशेच्छया कदाचिदावृत्तिः स्यादिति शङ्कायामाहुः तादृशं प्रतीत्यादि । तथा च ये सर्वात्मभावप्रपत्तिरहिता उक्तभोगात्मकस्वरूपानुभवरहिताश्च तान् प्रत्येव तथेच्छेति, नात्र तत्सम्भावनापीत्यर्थः । समूलकाषमावृत्तिशङ्कानिवृत्त्यर्थं कैमुतिकेनापि तदभावं साधयन्ति किञ्चेत्यादि । ननु लीलायां देशकालसम्बन्धस्य पूर्वमुक्तत्वाल्लीलानित्यत्वोपपादनमात्रेण कथं शङ्कायाः समूलकाषं निवृत्तिरित्यतस्तत्र कालस्यासामर्थ्ये प्रमाणमाहुः अपरं चेत्यादि । एवं लीलायाः स्वरूपानुभवस्य च नित्यत्वमुपपाद्य सिद्धमाहुः तथा चेत्यादि । ज्ञानमार्गीयफलस्योत्कर्षमाशङ्क्य समादधते न चेत्यादि, इयमुक्तेत्यन्तम् । स चेति भोगश्च । स एवेति उक्तरीत्यानुभूयमानः पुरुषोत्तम एव । आर्थिकीति । परप्रकाशनसामर्थ्याल्लिङ्गात्परप्राप्तिरूपवाक्यार्थबलेन प्राप्ता । तथा च श्रुत्या समर्पितायाः परप्राप्तेरेव मुख्यत्वात्तत्रैवाचार्याभिप्रायः न तु लिङ्गिक्यामनावृत्तावित्यर्थः । यद्यपि द्विरुक्तिः समाप्ति-

रश्मिः ।

इत्यादि । लिङ्गं शब्दस्य सामर्थ्यमिति पूर्वतन्त्रे । तादृशेति भक्तव्यामोहेच्छया । सर्वात्मभावेति । सर्वात्मभावेन शरणरहिताः । तथेच्छा व्यामोहेच्छा । नात्र तदिति नात्र भक्तिमार्गे तस्या आवृत्तेः सम्भावना । तथा च भाष्ये । तांस्त्यक्तुमुत्सहे इत्यस्य तान् भक्तान् त्यक्तुं आवर्तितुं उत्सहे इत्यर्थः । अपि तु नेति काकुः । समूलकाषमिति, मूर्धन्यषकारान्तम्, कष हिंसायाम् । भ्वा. प. से. 'निमूलसमूलयोः कष' इति सूत्रेण णमुल्, समूलकाषं कषति, कर्मणीत्येव, कर्मणीत्युपपद इत्यर्थः, द्वीपिनं समूलकषभावं हिनस्तीत्यर्थः । प्रकृते तु समूलकाषमावृत्तिशङ्कानिवृत्त्यर्थम् । भाष्ये । तदभाव इति अनश्वरं लीलाभावः । प्रकृते । तदभावमिति आवृत्त्यभावम् । तथा चेत्यादि । पूर्ववाक्येनेति अनावृत्तिः शब्दादिति पूर्ववाक्येन । उत्तरेणेति द्वितीयेन तेन । ज्ञायत इति कर्ममार्गेण ब्रह्ममुक्तावप्येकदेशविकृतन्यायेनावृत्तिरेवेति ज्ञायत इत्युक्तम् । उक्तरीत्येति प्रदीपाधिकरणोक्तरीत्या । लिङ्गिक्यामिति लिङ्गिन्याम्, परप्रकाशनसामर्थ्य

पुष्टिमार्गीयभक्तविशेषप्रवर्तकनिवर्तकवेणुशब्दाद्भगवन्निकटगतावऽनावृत्तिः पूर्वेणोक्ता, मर्यादामार्गीयाणां वेदरूपाच्छब्दात्तदुक्तसाधनादनावृत्तिं द्वितीयेनेत्यपि तात्पर्यविषयः श्लिष्टोऽर्थो ज्ञेयः। तथा सति परमफलमग्रे स्वत एव भावीति भाव इत्यलं विस्तरेण ॥ २२ ॥

इति चतुर्थाध्याये चतुर्थपादे पञ्चमं जगद्व्यापाराधिकरणम् ॥ ५ ॥

---

भाष्यप्रकाशः।

बोधनार्थो, तथापि तत्र श्लेषेणार्थान्तरमपि बोध्यत इत्याहुः पुष्टीत्यादि। 'वाङ्मनसि दर्शनाच्छब्दाच्चे'ति सूत्रे तथा साधितत्वात्तथेत्यर्थः। एवमाचार्याशयः पुष्टिमार्गीयफलस्यैव मुख्यत्वमत्र इति साधितम्। एवमत्र पादे 'ब्रह्मविदाप्नोति पर'मिति श्रुत्युक्तं 'ब्रह्मैव सन् ब्रह्माप्येती'ति श्रुत्युक्तं च फलं सपरिकरं विचारितम्।

शङ्कराचार्यास्तु, सगुणब्रह्मोपासनात् सहैव मनसेश्वरसायुज्यं प्राप्तानां किं सावग्रहमैश्वर्यं भवति, उत निरवग्रहमिति संशये, 'आप्नोति स्वाराज्य'मिति 'सर्वेऽस्मै देवा बलिमावहन्ती'ति 'तेषां सर्वेषु लोकेषु कामचारो भवती'त्यादिश्रुतिभ्यो निरङ्कुशमेवैश्वर्यं भवतीति प्राप्तम्। तत्र जगदुत्पत्त्यादिव्यापारं वर्जयित्वैवाणिमाद्यैश्वर्यं भवतीति साङ्कुशमेव तत्। जगद्व्यापारस्तु

रश्मिः।

लिङ्गं यद्यपि शब्दे तथापि कार्यतासम्बन्धेनानावृत्तावपीति लिङ्गिन्यामनावृत्तावित्युक्तम्। द्विरुक्तिः समाप्त्यर्थेति। विरहसामयिकी परमतभाषाप्येकदेशिमते पुष्टौ न प्रतिबन्धिकेति भ्रमरगीतवत्ताहुः पुष्टीति। भक्तविशेषोत्र 'अरूपवदेव हि तत्प्रधानत्वात्' इत्येकदेशिमतश्रद्धालुः श्रुतिरूपान्तर्गतवेणुशब्दोत्र साधारणो ज्ञेयो न त्वसाधारणः। एकदेशिमतश्रुतिरूपत्वात्। भगवन्निकटगताविति सामीप्यसप्तमी भगवन्निकटगतिसमीपे ब्रह्मलोकेऽवान्तरस्थितिरनावृत्तिः। भाष्य उक्तं तदविरोधायाहुः यद्यपीति। श्लेषेणेति तात्पर्येण। पुष्टीत्यादीति। अनावृत्तिरिति आवृत्तिहेत्वभावादनावृत्तिः। यतो भगवानेवैवं सम्पादयति। 'नाहं तु सख्यो भजतोऽपि जन्तून्भजाम्यमीषामनुवृत्तिवृत्तय' इति भगवद्वाक्यात्। अनुवृत्तिः सेवा सा चानेकधा धातूनामनेकार्थत्वे षिवु सेवायामिति धातुपाठे मानमतः प्रेमपूर्वकानुवृत्तिरत्र। पूर्वेणेति अनावृत्तिः शब्दादित्यनेन। द्वितीयेनेति द्वितीयेनानावृत्तिः शब्दादित्यनेन भगवान्व्यास आहेत्यर्थः। श्लिष्ट इति अभिधेयार्थेनालिङ्गितस्तात्पर्यार्थः। परमफलमिति। 'ज्ञात्वात्मानमधोक्षज'मिति भ्रमरगीतवाक्यात्। 'आन्तरं तु परं फल'मिति सुबोधिन्याम्। 'तदध्यासोऽपि सिध्यती'ति निरोधलक्षणग्रन्थे। 'सच्चिदानन्दता तत' इति च तत्रैव। अत्रावतारावतारिसाङ्कर्यं न दोषाय। 'समान एवं चाभेदा'दिति सूत्रात्। सुबोधिन्यां च 'नैश्चिन्त्यं वाचि पूर्वव'दिति। अलं विस्तरेणेति विस्तरः अष्टाविंशद्दोषास्तदुद्धारश्च तेनालम्। निषेधेऽलम्। विस्तरेण कथनस्य निषेधः गौरवप्रसङ्गादित्यर्थः। ब्रह्मैवेति। हृदि प्रकटे ब्रह्मणि जीवो ब्रह्मैव सन् बहिःप्रकटेऽपि गतो भवति सद्योमुक्तो भवतीत्यर्थः। विचारितमिति। सन्दिग्धत्वादिति भावः। यद्यपि 'आचार्यं मां विजानीयान्नावमन्येत कर्हिचि'दिति मतान्तराक्षेपो न युक्तस्तथापि ब्राह्मणगत्यभिधानादाहुः शङ्कराचार्यास्त्विति। तथा चैकादशे वाक्यम् 'नैतदेवं यथात्थ त्वं यदहं वच्मि तत्तथा। एवं विवदतां हेतुः शक्तयो मे दुरत्ययाः' इति। सावग्रहमिति साङ्कुशम्। निरवग्रहं निरङ्कुशम्। तदित्यैश्वर्यं

भाष्यप्रकाशः ।

नित्यसिद्धस्यैवेश्वरस्येति सिद्धान्तीक्रियते । तत्र हेतुः प्रकरणमितरेषामसन्निहितत्वं च । यत्र हि 'सदेव सोम्येदमग्र' इत्यादौ जगद्व्यापारः श्रूयते, तत्र परमेश्वर एव प्रकृतः, नेतरेषां सन्निधानम्, तस्मात् । न च 'आप्नोति स्वाराज्य'मिति प्रत्यक्षोपदेशविरोधः । एतदग्रे 'आप्नोति मनसस्पति'मित्यनेन आधिकारिको यः सवितृमण्डलादिषु विशेषायतनेष्ववस्थित ईश्वरः पूर्वसिद्धः सर्वमनसां पतिस्तत्प्राप्तिश्रावणात्तदायत्तैव स्वाराज्यप्राप्तिरिति बोधनात् तदग्रे, 'वाक्पतिश्चक्षुष्पतिः श्रोत्रपतिर्विज्ञानपतिः एतत्ततो भवती'ति फलस्य तत एव श्रावणाच्च । एवं सूत्रद्वयं व्याख्याय विकारावर्तिसूत्रे त्वेवं वदन्ति । परमेश्वररूपं विकारावर्ति च । 'तावानस्य महिमा ततो ज्यायांश्च पूरुष'इत्याम्नायो यतस्तस्य परमेश्वरस्य द्विरूपां स्थितिमाह । तच्च निर्विकारं रूपं विकारालम्बना न प्राप्नुवन्ति । अतत्क्रतुत्वात् । अतो यथा द्विरूपे परमेश्वरे निर्गुणं रूपमनवाप्य सगुण एवावतिष्ठन्ते । एवं सगुणेपि निरवग्रहमैश्वर्यमनवाप्य सावग्रहाय एवावतिष्ठन्त इति । अग्रिमसूत्रे च 'न तत्र सूर्यो भाती'ति प्रत्यक्षा श्रुतिः 'न तद्भासयते सूर्य' इति गीतास्मृतिश्च परमेश्वरस्य विकारावर्तित्वं दर्शयतः । तदेवं विकारावर्तित्वं परस्य ज्योतिषः प्रसिद्धमित्यभिप्राय इति। अग्रे तु भोगमात्रसाम्येनैश्वर्यस्य सावग्रहत्वं व्याख्याय, तेन सातिशयत्वे प्राप्ते शब्दादनावृत्तिं व्याहृत्य, सम्यग्दर्शनानां विध्वस्ततमसां तु नित्यसिद्धनिर्वाणपरायणानां सिद्धैवानावृत्तिः, तदाश्रयणेनैव सगुणशरीराणामनावृत्तिसिद्धेरिति कैमुतिकमुक्त्वा समापयन्ति ।

तन्मते विकारावर्त्यादिसूत्रद्वयमनतिप्रयोजनम् । जीवस्य सावग्रहैश्वर्यसाधने रूपद्वयबोधकयोस्तयोरनुपयोगात् । न च दृष्टान्तार्थमुपयोगः । विकारावर्तिनोऽप्राप्तौ अतत्क्रतुत्वस्य हेतोरिवात्र सावग्रहैश्वर्ये हेतोरकथनेन दृष्टान्तमात्रस्याप्रयोजकत्वात् । न च वाचस्पतिना निरव-

रश्मिः ।

वदन्तीति क्रियापदम् । **सिद्धान्तीयत** इति सिद्धान्त इवाचर्यते शङ्कराचार्यैरित्यर्थः । सिद्धान्तीक्रियत इति वा पाठः । **इतरेषामिति** प्रकृत्यादीनाम् । प्रत्यक्षोपदेशसूत्रार्थमाहुः । **स्वाराज्यमिति** निरङ्कुशं स्वाराज्यं परमेश्वरवत् । **पूर्वसिद्ध** इति अन्तस्तद्धर्मोपदेशाद्यधिकरणसिद्धः । **तत** इति विशेषायतनस्थितेश्वरात् । **अतत्क्रत्विति** । अतत्क्रतुत्वात्तेषाम् । **अतत्क्रतुबाधा**दिति पाठश्च । तेषां विकारालम्बनानां विकारोपासकानां तत्क्रतुत्वस्य निर्विकारक्रतुत्वस्याभावात् । द्वितीयपाठे तस्य विकारस्य क्रतुः तत्क्रतुः तत्क्रतोर्बाधः तत्क्रतुबाधः न तत्क्रतुबाधः अतत्क्रतुबाधः तस्मादित्यर्थः तत्क्रतुबाधाभावात् । **एवं सगुण** इति यथा सगुणे स्थितं निर्गुणं विकारालम्बना **अनवाप्य** विकारालम्बना **एवावतिष्ठन्ते** एवं सगुण इत्यादि। **तच्चेति** सगुणे ब्रह्मणि विकारावर्ति च निर्गुणं स्वरूपमस्ति तत् । **समापयन्तीत्य**धिकरणं समापयन्ति । **जीवस्येति** । जीवस्य सगुणोपासनात् सहैव मनसेश्वरसायुज्यं प्राप्तस्य । निरङ्कुशैश्वर्यासाधनेन सावग्रहस्यास्वतन्त्रस्याणिमाद्यैश्वर्यसाधने रूपद्वयं सगुणे ब्रह्मणि निर्गुणं ब्रह्मेति रूपद्वयम् । तस्य बोधकयोर्यथा सगुणब्रह्मस्थनिर्गुणब्रह्माप्राप्तिः सगुणब्रह्मोपासकस्येति दृष्टान्तः । दार्ष्टान्तिकस्तु, तथा सगुणोपासकस्य सगुणब्रह्मस्थनिरवग्रहजगद्व्यापारसहिताणिमाद्यैश्वर्याप्राप्तिरिति सावग्रहाणिमाद्यैश्वर्यसाधनार्थम् । **तयोरिति** सूत्रयोः । **दृष्टान्तार्थमिति** उक्तरीत्या । **विकारावर्तिन** इति विकारः कार्यं तदवर्तिनो निर्गुणस्य । न विकारावर्तिनः क्रतुत्वं निश्चयत्वमध्यवसायित्वं यस्मिन् सगुणब्रह्मोपासने तस्मात् । **अत्र सावग्रहैश्वर्य** इति निरवग्रहैश्वर्यप्राप्तौ हेतोरकथनेनेत्युक्तौ निरवग्रहैश्वर्यप्राप्तिप्रसङ्ग इति सावग्रहै-

भाष्यप्रकाशः ।

ग्रहत्वस्योपासनविध्यगोचरत्वादुपासके तदक्रतुत्वस्य समर्थिततया अतत्क्रतुत्वस्यैव तत्रापि हेतुत्वमुक्तप्रायमेवेति वाच्यम् । 'मनोमयः प्राणशरीर' इति हार्दोपासनवाक्ये 'सर्वकर्मे'ति विशेषणस्य सर्वं विश्वं तेनेश्वरेण क्रियत इति जगत्सर्वं कर्मास्य 'स सर्वकर्मा स हि सर्वस्य कर्ते'तिश्रुतेरित्येवं शङ्कराचार्यैरेव व्याख्याततया निरवग्रहत्वस्य विध्यगोचरतया वक्तुमशक्यत्वात् । न चोपासनानुपुरुषस्य विध्यधीनत्वेनास्वातन्त्र्यात् फलदशायां तथात्वमिति युक्तम् । पूर्वावस्थाधर्मस्य तदानीमुपगमे बद्धत्वस्यापि तदा प्राप्त्यापत्त्या मुक्तिविप्लवस्यैवापत्तेः । यच्च स्वातन्त्र्ये प्रातिभत्वप्रसङ्गादित्युक्तम्, तत्र नवनवोल्लासशालिनी बुद्धिः प्रतिभा, तत्सम्बन्धित्वमिति यदि, तदा तु 'स यदि पितृलोककामो भवती'त्यादिना नवनवबुद्धीनां श्रुत्यैव सूचनात्तत्प्रातिभत्वे स्वातन्त्र्यस्य दुरपोहताया एव सिद्धेः । तथा च

युक्तिभिरतिशिथिलाभिः समादधानो दृढान् दोषान् ।
वाचस्पतिरपि भाष्यव्याख्याव्याजेन दूषणं वक्ति । इत्येव सिद्धम् ।

न चैवं सिद्धान्तेपि मनोमयवाक्योक्तोपासकस्य तथात्वापत्त्या जगद्व्यापारापत्तिरिति शङ्क-

रश्मिः ।

श्वर्यं इत्युक्तम् । **दृष्टान्तमात्रस्येति** । यथा निर्गुणब्रह्मप्राप्तिस्तथा न स्वतन्त्राणिमाद्यैश्वर्यप्राप्तिरिति दृष्टान्तमात्रस्याप्रयोजकत्वम् । श्यामे मित्रातनयदृष्टान्तेन मित्रातनयान्तरे श्यामत्वप्रसाधने यथा तथेत्यर्थः । **निरवग्रहत्वस्येति** सगुणब्रह्मधर्मस्य । सगुणब्रह्मोपासने तद्धर्ममन्तरा कथमुपासके तत्क्रतुत्वाभावस्य सोऽक्रतुर्यस्येति तदक्रतुरुपासकः तस्य भावस्तदक्रतुत्वं तस्य सिद्धिरत आहुः । **समर्थिततयेति** । **तत्रापीति** सावग्रहैश्वर्येपि । **सर्वमिति** । **विश्वमिति** व्याख्यानम् । **क्रियत** इति । **तेन क्रियत** इति कर्मेतिप्रत्यय इति बोधितम् । **स सर्वकर्मेति** स निरङ्कुशसर्वकर्मेति ज्ञातव्यम् । एवं निरवग्रहत्वनिरङ्कुशत्वमेतदुपासनविधिगोचरम् । तथा **सर्वस्य कर्तेत्यत्र** निरङ्कुशकर्तृत्वविशिष्टः कर्ता । **व्याख्याततयेति** निरवग्रहत्वस्योपासनविधिगोचरतया व्याख्याततया । **निरवग्रहत्वस्येति** निरङ्कुशत्वस्य । 'स क्रतुं कुर्वीत मनोमयः प्राणशरीर' इति छान्दोग्यीयविधेरगोचरतायाः । नन्वगोचरतायाः वक्तुं शक्यत्वं क्रतोर्विधिविषयत्वेन निरङ्कुशत्वस्याविषयत्वादिति चेन्न । **हार्दोपासनवाक्य** इति कथनान्न लिङ्गमात्रार्थं विवक्षणं किन्तु विधिवाक्यार्थविवक्षणात् । तथा च गीता 'करणं कर्म कर्तेति त्रिविधः कर्मसङ्ग्रह' इति । 'ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वानपेक्षकः । सलिङ्गानाश्रमांस्त्यक्त्वा चरेदविधिगोचर' इति श्रीभागवते । अनपेक्षकस्य विधिगोचरत्व एव तन्निषेध इति । विध्यधीनत्वं विधिं विनाऽप्रवृत्तेः पुरुषस्य । **फलदशायामिति** अविधिगोचरजीवन्मुक्तदशायाम् । **तथात्वमविध्यगोचरत्वम्** । **पूर्वावस्थेति** मुक्तिपूर्वावस्था जीवन्मुक्तावस्था तस्याः धर्मो विध्यगोचरत्वं तस्य । **तदानीमिति** जीवन्मुक्तिकाले । **मुक्तिविप्लवस्येति** बद्धत्वभोजककर्मान्तरानबद्धत्वमिति मुक्तिप्रतिबन्धककर्मापत्त्या तथा । **स्वातन्त्र्य** इति जीवस्याणिमाद्यैश्वर्ये स्वातन्त्र्ये निरवग्रहत्वे । **सूचनादिति** । स इत्यादीनां स सोमिधेयार्थः । **दूषणं वक्तीति** सावग्रहैश्वर्ये हेतोः कथनेन दूषणमिव वक्तीत्यर्थः । एतावत्पर्यन्तं साधारणं जगज्जन्मादिकर्तृत्वमादाय जगद्व्यापाराराहित्यं विचारितम् । अधुना छान्दोग्यीयवाक्ये जगज्जन्मादिकं जगद्व्यापाराराहित्येन सहैव विद्यमानं विचारयन्ति स्म **न चैवमित्यादिना** । **मनोमयवाक्य** इति छान्दोग्ये 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इत्येकं वाक्यम् । एकतिङ् वाक्यमिति वैयाकरणाः । 'अर्थैकत्वा-

भाष्यप्रकाशः ।

नीयम् । 'न तत्समश्चाभ्यधिकश्च दृश्यत' इति श्रुत्या तादृशस्य फलस्य ततो व्यभिचारणात् । 'यथा क्रतु'रिति पुरुषविशेषणबोधके पदे प्रकारांशे पुरुषाधिकारस्यापि निविष्टत्वात् समत्वाद्याकाङ्क्षायाश्च, 'तेनार्हति ब्रह्मणा स्पर्धितुं क' इति, 'उषति ह वै स तं योऽस्मात् पूर्वो बुभूषती'ति श्रुतिभ्यां निषिद्धत्वेन तादृशोपासनेऽधिकारस्य निवृत्तेश्च । न चायमेव समाधिः शाङ्करेपि मतेऽस्त्विति वाच्यम् । तन्मते निर्गुणस्य रूपस्य सर्वाभ्यधिकत्वेन सगुणेऽभ्यधिकराहित्याभावेनाधिकसाहित्ये प्राप्ते उक्तरीत्या समसाहित्यस्यापि वक्तुं शक्यतया तद्राहित्यस्यापि दुरुपपादत्वेनैतच्छ्रुतिविषयतायास्तत्र वक्तुमशक्यत्वात् । समाभ्यधिकनिषेधावधिकतया निर्गुणबोधकत्वे च सगुणे समसाहित्यस्यै-

रश्मिः ।

देकं वाक्यं साकाङ्क्षं चेद्विभागे स्या'दिति द्वितीयाध्यायसूत्रे पूर्वमीमांसायां वाक्यलक्षणम् । 'अथ खलु क्रतुमयः पुरुषो यथा क्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवती'ति द्वितीयं वाक्यम् । 'स क्रतुं कुर्वीते'ति तृतीयम् । अग्रे 'मनोमयः प्राणशरीर' इत्यादि क्रतुस्वरूपम् । तत्र मनोमयवाक्योक्तोपासकस्येत्यर्थः । **तथात्वापत्त्येति** ब्रह्मणो मननोपदेशे मननरूपोपासनायां सर्वकर्मेतिविशेषणस्यापि सत्त्वेन जीवन्मुक्तदशायां संशयाभावरूपे फले स्वातन्त्र्यापत्त्या इत्यर्थः । **जगद्व्यापारेति** जगद्व्यापारो जगज्जन्मादिकर्तृत्वलक्षणस्तस्यापत्तिः । स्वातन्त्र्ये निरङ्कुशजगत्कर्तृत्वस्य नियतत्वात् । 'स्वतन्त्रः कर्ते'ति पाणिनीयसूत्रादित्यर्थः । **तादृशस्येति** जगद्व्यापाररहितस्य 'यस्य स्यादद्धा न विचिकित्सास्ति' इति तत्रोक्तश्रुत्युक्तसंशयाभावरूपस्य फलस्य । **तत** इति समाभ्यधिकजगद्व्यापारसहितप्रपञ्चाद्व्यभिचारणात् । व्यभिचारोत्र समाभ्यधिकफलवत्त्वाभावाभावस्य । जगद्व्यापारसहितप्रपञ्चत्वासमानाधिकरण्यं व्यभिचारस्तादृशफले । 'यथा क्रतुरस्मिंलोके पुरुषो भवति तथेतः प्रेत्ये'ति छान्दोग्ये । **प्रकारांश** इति थाल् प्रत्ययार्थः प्रकारस्तदंशे । अधिकारस्यापि प्रकारत्वान् निविष्टत्वं तस्मात् । **समत्वादीति** । आदिनाधिकत्वम् । **स्पर्धितुमिति** स्पर्ध सङ्घर्षे । सङ्घर्षः पराभिभवेच्छा पराभवेष्टुम् । **क इति** न कोपीति । समत्वाकाङ्क्षाया निषिद्धत्वम् । **उषति** उष् दाहे दहति । **स** आत्मा । **बुभूषतीति** भवितुमिच्छतीति बुभूषति भू सत्तायामिच्छार्थे सन् सनि द्वित्वम् । अनयाधिक्याकाङ्क्षाया निषिद्धत्वम् । आधिक्यं पूर्वत्वम् । 'मद्भक्तपूजाभ्यधिके'त्यत्राधिक्यं प्राथम्यमिति व्याख्यानात् । **तादृशेति** मनोमयवाक्योक्ते ब्रह्मणो मननोपदेशे मननरूपोपासने । **अधिकारस्येति** 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीते'त्युक्ते सर्वजगतो ब्रह्मत्वेनोपासने स्पष्टनिरवग्रहोपासनाधिकारस्य । **अयमेव समाधिरिति** यथाक्रतुरिति पुरुषविशेषणबोधके पदे प्रकारांशे पुरुषाधिकारस्यापि निविष्टत्वान्निर्गुणफलाप्राप्तिः सगुणोपासकस्य सावग्रहाणिमाद्यैश्वर्यप्राप्तिश्च न निरवग्रहैश्वर्यप्राप्तिरिति समाधिरेव । **शाङ्करेपि मते** सगुणोपासकस्य न निर्गुणप्राप्तिः, सगुणप्राप्तावपि न निरवग्रहाणिमाद्यैश्वर्यप्राप्तिः किन्तु सावग्रहाणिमाद्यैश्वर्यप्राप्तिरित्यस्मिन्मते । **उक्तरीत्येति** अव्यवहितोक्तरीत्या । तथाहि । निर्गुणस्य रूपस्य सर्वासाम्येन सगुणे साम्यराहित्याभावेन समसाहित्ये प्राप्ते इति रीत्या । **तद्राहित्यस्येति** समाभ्यधिकराहित्यस्य । **एतच्छ्रुतीति** 'न तत्समश्चाभ्यधिकश्चे'ति श्रुतिविषयतायाः । **तत्र** शाङ्करे मते । **समाभ्यधिकेति** समाभ्यधिकयोर्निषेधस्तस्यावधिकतया श्रुतेर्निर्गुणस्य बोधकत्वे च । **समसाहित्यस्येति** श्रुतौ तदित्यव्ययं लुप्तपञ्चमीकम्, निर्गुणाद् अवधेः समाभ्यधिकनिषेधेऽधिकधर्मादेर्मायिकत्वेनाधिक्यसाहित्याप्राप्त्या समसाहित्यस्यैवेत्यर्थः । विशिष्टं शुद्धान्नातिरिच्यत इति नैया-

भाष्यप्रकाशः।

वापत्तेश्च। अधिकारविचारेणातत्क्रतुत्वसाधने च निरवग्रहतायाः प्राप्तेरेवाभावेन स्वातन्त्र्यशङ्काया एवानुदयात् स्वातन्त्र्ये प्रातिभत्वप्रसङ्गस्यैवाभावादिति दिक्।

भास्कराचार्यास्तु, सिद्धान्ते 'अविभागेन दृष्टत्वा'दित्यारभ्य परमकारणे सायुज्यं गतानां निरवधिकमैश्वर्यमिति स्थितम्। ये पुनर्वेदान्ते द्वैतवादिनो मन्यन्ते, मुक्ताः पृथगवतिष्ठन्त इति, तन्मतमभ्युपगम्य, सावधिकमैश्वर्यं तेषामपि प्रतिपादयितुं जगद्व्यापारवर्जाधिकरणमारभत इत्युक्त्वा, जगद्व्यापारादिसूत्रं पूर्ववदेव व्याख्याय, विकारावर्तिसूत्रे, पारमेश्वरं पुनरैश्वर्यं नित्यसिद्धं विकारावर्ति,स्वमहिमप्रतिष्ठत्वात्, 'तावानस्य महिमे'ति श्रुतेः। कार्यब्रह्मलोकवर्तिनां मुक्तानां 'सङ्कल्पादेवे'ति श्रुतेः। 'तदैरम्मदीय९ सरस्तदश्वत्थः सोमसवन' इति बहुविधमैश्वर्यं प्रकीर्त्य तत्रेश्वरायत्तमित्युपपन्नम्। 'दर्शयत' इति सूत्रे, परस्य ज्योतिषो विकारावर्तित्वं विकारानुग्राहकत्वं च 'न तत्र सूर्यो भाती'त्यादिश्रुतिस्मृती दर्शयत इत्युक्तवन्तः।

तन्मते विकारावर्त्यादिसूत्रयोर्यद्यपि न वैयर्थ्यम्, तथापि दहरविद्योक्तब्रह्मलोकस्य कार्यत्वं यदङ्गीकृतमेतैरन्यैश्च तच्चिन्त्यम्। तत्कार्यत्वबोधकप्रमाणानुपलम्भात्। न च प्रभुविमितं हिरण्मयमिति वेश्मविशेषणे विमितमितिपदे निर्मितत्वकथनादेकदेशस्य कार्यत्वे सर्वस्य तथात्वं शङ्क्यम्। विमितपदस्य विशेषेण मितं ज्ञातमित्यर्थकतयापि नेतुं शक्यत्वेन ततो निर्णयाभावात्। नापि, 'तृतीयस्यामितो दिवी'ति ब्रह्माण्डान्तर्वर्तित्वश्रावणात्तन्नाशे एतन्नाशात्कार्यत्वमिति वाच्यम्। 'नास्य जरयैतज्जीर्यती'त्यादिना आत्मरूपताबोधनेनास्याः शङ्कायाः प्रागेव निरस्तत्वात्। न च तदन्यदेव, नेदमिति वाच्यम्। एकप्रकरणगतत्वेन पूर्वं 'एतत्सत्यं ब्रह्मपुर'-

रश्मिः।

यिकोद्घोषात्। आपत्तिस्तु न तत्सम इति निषेधाद्बोध्या। अधिकारेति यत्र यस्याधिकारस्तस्य तत्क्रतुत्वं अन्यस्यातत्क्रतुत्वस्य साधने। निरवग्रहताया इति निरङ्कुशतायाः। स्वातन्त्र्येति निरङ्कुशतायाः। इत्युक्त्वेति भेदाभेदवादादित्युक्त्वा। सङ्कल्पादिति छान्दोग्ये 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ती'ति दहरविद्यायाम्। ऐरमिति इराया वारिणः सम्बन्धि न शुष्कम्। 'इरा वारिसुराभूमिभारतीषु प्रयुज्यत' इति विश्वः। इरान्नं तन्मय ऐरः मण्डस्तेन पूर्णमैरं सरः मदीयं तदुपयोगिनां हर्षोत्पादकमिति टीकायाम्। सोमसवन इति सोमं सूत इति सोमसवनः। नन्द्यादित्वाल्ल्युः। सोमं स्रवतीति सोमसवन इति टीकायाम्। 'सवनं यजने स्नाने सोमनिर्दलनेऽपि चे'ति विश्वः। तेन स्रवतीत्यस्य निर्दलतीत्यर्थः। दल विशरणे भ्वा. प. से.। तत्रेति छान्दोग्ये। ईश्वरायत्तमिति ऐश्वर्यम्। 'आत्मानमनुविद्य व्रजन्ती'ति पूर्वश्रुत्या स यदीत्यत्र स इत्यस्यात्मानुविदित्यर्थात्। न वैयर्थ्यमिति दृष्टान्तार्थत्वाभावान्न वैयर्थ्यमित्यर्थः। एकदेशस्येति हिरण्मयस्य। तथात्वं कार्यत्वम्। तृतीयस्यामिति छान्दोग्ये 'अथ यदिद'मित्यारम्भके प्रपाठकेऽस्ति। इतो भूलोकादारभ्यान्तरिक्षं चापेक्ष्य तृतीयस्यां तृतीयत्वेन व्यवस्थितायां दिवि द्युलोकाख्ये ब्रह्मलोके अरश्चेत्यादिरस्ति। प्रागेवेति दहराधिकरणे। 'जगद्व्यापारवर्जा'धिकरणे। तृतीयचरणे 'कार्यं बादरि'रित्यधिकरणे च। न च तदिति छान्दोग्यीयं दहरविद्योक्तम्। नेदमिति न 'तृतीयस्यामितो दिवी'त्यनया श्रुत्योक्तम्। तथा च 'नास्य जरये'त्यादिहेतुना तृतीयस्यामित्युक्ते नाशनिवृत्तिरिति भावः। एकप्रकरणेति मन्दाधिकारिप्रकरणगतत्वेन टीकायां स्पष्टम्।

भाष्यप्रकाशः ।

मित्यनेनोक्तस्य ब्रह्मपुरस्य, 'तदरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोक' इत्यादिना परिकरपूर्वकं तत्प्रपञ्चनस्यैव भासमानतया भेदस्य वक्तुमशक्यत्वात्। उपबृंहितं चैतद् वाराहे चातुर्मास्यमाहात्म्ये चतुर्दशाध्याये क्षीरसमुद्रं प्रकृत्य ।

'तन्मध्ये मम लोकस्तु परितो वलयाकृतिः ।
योजनानां तु लक्षाणि विंशतिस्तस्य विस्तृतिः ।
श्वेतद्वीप इति ख्यातः प्रलयेपि न नश्यति' ॥

इत्युक्त्वा, तत्र श्रीभूदुर्गात्मकभागत्रयं तत्परिमाणं संस्थां चोक्त्वा, तत्र भूदुर्गाभागयो-स्तत्स्थानां चावान्तरप्रलये नाशाभावमुक्त्वा,

'तस्मिन् स्थाने लयं याते प्रविशन्त्युदरे मम' ।

इति ब्रह्मणो लये भूदुर्गाभागस्थानां स्वोदरे स्थितिमुक्त्वा

'श्रीभागे संस्थिता ये तु न तेषां प्रलये भयम् ।
शाश्वतः स तु मे लोको न नश्येद् ब्रह्मणो लये ॥
मुक्ता एव तु मां तत्र वीक्षन्ते सर्वदैव तु ।
कल्पान्तप्रभवो वह्निर्जलं वा भूमिदुर्गयोः ॥
भागौ न स्पृशते तौ हि चक्रेण परिरक्षितौ ।
तत्रस्थास्तु जनाः सर्वे मोदन्ते सर्वदैव तु ॥
कल्पान्तप्रभवां बाधां न ते जानन्ति जातुचित् ।
श्वेतद्वीपादधस्तात्तु पृथ्वी तिष्ठति पीठवत् ॥
सृष्टौ स्पृशति तद्वीपं प्रलये तु वियुज्यते ।
मम शक्त्यैव स द्वीपः सदा तिष्ठति शाश्वतः ॥
भूमिश्रीभागयोर्मध्ये लक्षयोजनविस्तृतः ।
अरनामा सुधाम्भोधिर्मुक्तामुक्तनिषेवितः ॥
अर्धं तस्य तु भूमागः श्रीभागस्यार्धमेव च ।
लक्षयोजनमध्ये तु द्वीपाकारोऽस्ति तत्तटम् ॥
दशयोजनसाहस्रं विस्तृतिस्तस्य कीर्तिता ।
अर्धनाशो भवेत्तस्य प्रलये च पुनः पुनः ॥
अर्वो भागस्तु मुक्तानां क्रीडास्थानं न नश्यति ।
दुर्गाश्रीभागयोर्मध्ये ण्यनामामृतसागरः ॥

तदर इति अरश्च ण्यश्च ह वै प्रसिद्धौ अर्णवौ समुद्रौ वर्तेते इत्यर्थः । तदिति पूर्वान्वयि । ब्रह्मचर्यमेव तदित्यर्थः । इत्यादिनेति आदिना 'तृतीयस्यामितो दिवि' 'तदैरम्मदीय९सर' इत्यादि । तत्प्रपञ्चनस्येति 'एतत्सत्यं ब्रह्मपुर'मित्यनयोक्तब्रह्मपुरप्रपञ्चनस्य । भेदस्येति 'तृतीयस्यामितो दिवी'त्युक्तस्य ब्रह्माण्डान्तर्वर्तिनो 'नास्य जरये'त्यनयोक्तस्य सत्यब्रह्मपुरस्य च भेदस्य । तन्मध्य इति क्षीरसमुद्रमध्ये । वलयेति वलयवद्वर्तुलाकृतिः । योजनं चतुःक्रोशी । 'योजनं तु चतुःक्रोश्यां योगे च परमात्मनी'ति विश्वः । विंशतिर्लक्षाणि अशीतिलक्षक्रोशपरिमिता विस्तृतिः । कल्पान्तः ब्रह्मदिनान्तः । दशेति चत्वारिंशत्सहस्रक्रोशपरिमिता ।

भाष्यप्रकाशः ।

तत्राप्येवं विभागोऽस्ति नित्यानित्यविभेदतः ।
अरण्याख्यौ सुधासिन्धू धूमलोकत्रयेपि च ॥
वर्तेते मम भक्तानां क्रीडार्थं सर्वकामदौ' ।

इति लोकत्रयं तु वैकुण्ठानन्तासनश्वेतद्वीपभेदेन तत्रैवोक्तम् ।

तेषु छान्दोग्योक्तो वैकुण्ठाख्यो ज्ञेयः । 'तृतीयस्यामितो दिवी'ति विशेषणेन उच्चस्थत्व-बोधनादिति । अतः स लोको न कार्यः, किन्तु नित्य एवेति निश्चयः । लोकस्य ब्रह्मरूपत्वादेव च न तत्प्रभोरपि स्वप्रतिष्ठत्वहानिरिति सर्वमनवद्यम् ।

रामानुजाचार्यास्तु, मुक्तस्यैश्वर्यं जगत्सृष्ट्यादिपरमपुरुषासाधारणम्, उत तद्रहितं केवलपरमपुरुषानुभवविषयमिति संशये, जगदीश्वरत्वमपीति पूर्वः पक्षः । 'निरञ्जनः परमं साम्यमुपैती'ति श्रुतेर्मुक्तस्य सङ्कल्पत्वश्रुतेश्च । तत्र सिद्धान्तस्तु जगद्व्यापारवर्जं मुक्तैश्वर्यं निरस्त-निखिलतिरोधानस्य मुक्तस्य निर्व्याजब्रह्मानुभवरूपमैश्वर्यम् । तत्र हेतुः 'प्रकरणा'दित्यादि । अर्थस्तु पूर्ववदेव । श्रुतयः परं बह्वय उपन्यस्ताः । अग्रिमसूत्रे च, 'स स्वराड् भवती'-त्यादिभिर्जगन्नियमनरूपं व्यापारमाशङ्क्य, 'आधिकारिकमण्डलस्थोक्ते'रित्यस्य अधिकारे नियुक्ता ये हिरण्यगर्भादयो मण्डलं तेषां लोकाः तत्स्था भोगा मुक्तस्याकर्मवश्यस्य भवन्तीत्ययमर्थः 'तस्य सर्वेषु लोकेषु कामचारो भवती'त्यादिनोच्यते । तथा च कर्माप्रतिहतज्ञानो मुक्तो विकारिलोकान् ब्रह्मभूताननुभवतीत्यनेन वाक्येनोच्यते, न जगद्व्यापार इत्युक्त्वा, अग्रिमसूत्रेषु मुक्तस्य सत्यसङ्कल्पत्वं परमपुरुषसाम्यं च परमपुरुषासाधारणनिखिलजगन्नियमनश्रुत्यानुगुण्येन वर्णनीयमिति साधयन्ति । तेन तन्मतं सिद्धान्ताद् अविरुद्धमित्युपरम्यते ।

तन्मतस्थास्तु, रामानुजाचार्यवदेव सूत्राणि व्याख्याय शिवलोकस्य सर्वतः परत्वं पर-ब्रह्मणः शिवाकारत्वं चोक्तवान् । तत्तु तदुपन्यस्तेन्द्रप्रजापतिसंवादश्रुतेरपि विरुध्यते । तत्र 'स उत्तमः पुरुष' इत्यनेन परज्योतिषः पुरुषोत्तमत्वेन प्रतिपादनात् । अग्रे च 'श्यामाच्छबलं

रश्मिः ।

**धूमेति** धूमादिमार्गप्राप्यलोकत्रयेपि । जगत्सृष्ट्यादीति ऐश्वर्यविशेषणम् । **परमपुरुषेति** सर्वेश्वरत्वम् । **तद्रहितमिति** परमपुरुषासाधारण्यरहितं सर्वेश्वरत्वरहितमित्यर्थः । **केवलं** परमपुरुषसंसर्गजम् । **परम-पुरुषेति** साधारणमित्यर्थः । केवलपरमपुरुषेत्यादिसमस्तपाठोऽपि । **सङ्कल्पत्वेति** सत्यसङ्कल्पत्वश्रुते-रित्यर्थः । सत्यसङ्कल्पत्वश्रुतेश्चेति रामानुजभाष्यात् । **अग्रिमेति** प्रत्यक्षोपदेशसूत्रे । **व्यापारमिति** प्रत्यक्षोपदेशादित्यनेनोक्तप्रत्यक्षोपदिष्टम् । **मण्डलं तेषामिति** तेषां मण्डलं लोका इत्यर्थः । **अनेन वाक्येनेति** 'स स्वराड् भवती'ति वाक्येन । **जगद्व्यापार** इति जगज्जन्मादिकर्तृत्वलक्षणः । **अग्रिमसूत्रेष्विति** चतुर्षु । **मुक्तस्येति** तदीयं भाष्यकमिदम् । त्रिसूत्र्यन्ते परमपुरुषसाम्यं सत्यसङ्कल्पत्वमिति पाठो भाष्येऽत्र तु विपरीत इति प्रकाशो भाष्यमिवेतीदं व्याख्यानं भाष्यकमित्युक्तम् । अग्रेनावृत्तिसूत्रम् । **परमेति** कतिपयगुणैर्बोध्यम् । तेन जगद्व्यापारवर्जमेव मुक्तैश्वर्यमीश्वरायत्तं च । **साधयन्तीति** त्रिसूत्र्यामेव साधयन्ति । चतुर्थे तु सूत्रे ईश्वरस्य स्वातन्त्र्येपि न तत्सङ्कल्पाद्भक्तावृत्तिमाहुः **सिद्धान्तादविरुद्धमिति** । तथा च तैरेवोक्तम् 'ब्रह्माभेदोपासनाज्ज्ञानतो वा ब्रह्मात्मैक्येप्यज्ञता-मत्यजन्तः । यस्यैश्वर्यादासते यन्नियम्यास्तं श्रीकृष्णं देवदेवं नमामी'ति भेदाभेदवादे भेद इव मुख्यार्थोऽत्र । **तन्मतेति** भगवान्शैवाचार्यः । **इन्द्रप्रजापतीति** छान्दोग्ये समाप्तिकेस्ति । **अग्रे**

भाष्यप्रकाशः ।

प्रपद्ये' इत्यादिना श्यामवर्णश्रावणाच्च । लोकोपि ततः पूर्वं दहरविद्योक्त एव सन्निहितः । स चारण्याख्यार्णवद्वयव्याप्तो वाराहपुराणवाक्यैर्भगवल्लोकत्वेन निश्चितः । अथर्वशिरःशिखाद्याश्च विद्याः भगवद्विद्यानां न तुल्याः । 'अथर्वशिरःशिखाध्यायिशतमेकमेकेन मन्त्रराजजापकेन तत् सम'मिति नृसिंहपूर्वतापनीये श्रावणात् । अतस्तत्प्रतिपाद्यस्य रूपस्य न भगवत्तुल्यत्वम् । वेद्योत्कर्षत एव विद्योत्कर्षसिद्धेरिति । एतत् सर्वं पूर्वमपि किञ्चिदुक्तं प्रहस्ताख्ये वादे च मया निपुणतरमुपपादितमिति न पुनः प्रपञ्च्यते ।

माध्वास्तु, जगद्व्यापारसूत्रे, 'सर्वान् कामानाप्त्वा अमृतः समभव'दिति काञ्चन श्रुतिं लिखित्वा, तस्या जीवप्रकरणगतत्वाज्जीवानां जगज्जननादिसामर्थ्यविदूरत्वाच्च सृष्ट्यादिभ्योऽन्यानेव कामानाप्नोतीत्युक्त्वा, 'स्वाधिकानन्दसम्प्राप्तौ सृष्ट्यादिव्याप्रतिष्वपि । मुक्तानां नैव कामः स्यादन्यान् कामाँस्तु भुञ्जते । तद्योग्यता नैव तेषां कदाचित् क्वापि विद्यते । न चायोग्यं विमुक्तोपि प्राप्नुयान्न च कामये'दिति वाराहवचनं लिखन्ति । अग्रिमसूत्रे च, 'सर्वेऽस्मै देवा बलिमावहन्ती'ति श्रुत्या ब्रह्मविदि जगदैश्वर्यमस्तीत्याशङ्क्य, तत्र आधिकारिकमण्डलस्थ आधिकारिकसमूहाधिपतिर्ब्रह्मा, तत्रोच्यत इत्युक्त्वा, 'आत्मेत्येवं परं देवमुपास्य हरिमव्ययम् । केचिदत्रैव मुच्यन्ते नोत्क्रामन्ति कदाचन । अत्रैव च स्थितिस्तेषामन्तरिक्षे च केचन । केचित् स्वर्गे महर्लोके जने तपसि चापरे । केचित् सत्ये महाज्ञाना गच्छन्ति क्षीरसागरम् । तत्रापि क्रमयोगेन ज्ञानाधिक्यात् समीपगाः । सालोक्यं स्वस्वरूपत्वं सामीप्यं योग एव च । इमामारभ्य

रश्मिः ।

चेति छान्दोग्ये दहरादिविद्याङ्गभूतजपादिविधानार्थं मन्त्रोयम् । श्यामाच्छृङ्गाराच्छबलं आकाशशबलमाकाशशरीरं ब्रह्मलोकं प्रपद्ये गच्छामि । शबलाच्छ्याममिति व्यतिहारः । इत्यादिनेत्यादिना 'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवाम्यभिसम्भवामीती'ति । अर्थस्तु तत्प्राप्तिमनेकदृष्टान्तेनाह अश्व इवेति । यथा अश्वो रोमाणि विधूय कम्पनेन श्रमं पार्श्वादि च रोमतोपनीय निर्मलो भवति तथा हार्दब्रह्मज्ञानेनोपासको ह शरीरं धूत्वा पापं धर्माधर्माख्यं विधूयापनीय निर्मलः सन्, चन्द्र इवेति यथा राहुग्रस्तश्चन्द्रो राहोर्मुखात्प्रमुच्य भास्वरो भवति विद्यमानस्वस्वरूपो भवत्येवमुपासको ह शरीरं धूत्वा इहैव ध्यानेन कृतात्मा कृतकृत्यः सन् अहमकृतं ब्रह्मलोकं नित्यं अभि अभितः मार्गभेदेन सम्भवामि प्राप्नोमि । द्विरुक्तिः कर्माभिप्राया । ज्ञानिनामक्षरे लयान्न नित्यब्रह्मलोकप्राप्तिः । इतिशब्दो ध्यातुर्ध्यानसमाप्त्यर्थः । अभ्यासो मन्त्रसमाप्त्यर्थोपि । आकाशशरीरं कथं ब्रह्मलोक इत्याकाङ्क्षायामग्र आह छान्दोग्य एव 'आकाशो ह वै नामरूपयोर्निर्वहिते'त्यादिना लोकप्रयोजकत्वमाकाशस्योक्तम् । अरण्याख्येति अरश्च ण्यश्च अरण्यौ, अल्पाक्षरं पूर्वमित्यस्य छन्दसि विकल्पः, तौ आख्या यस्यार्णवद्वयस्य तेन व्याप्तः । विद्या इति शिवविद्याः । भगवद्विद्यानामिति भगवद्विद्याभिरित्यर्थः । कर्मादीनामपि सम्बन्धसामान्यविवक्षायां षष्ठ्येवेति । पूर्वमिति द्वितीयाधिकरणे 'एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायण' इति सूत्रभाष्ये । समभवदिति उपासको भक्तो वा । तद्योग्यतेति सृष्ट्यादिव्याप्रतियोग्यता । सर्वेऽस्मा इति अस्मै नित्यक्रीडायुक्ताय ब्रह्मणे । इत्याशङ्क्येति 'प्रत्यक्षोपदेशा'दिति सूत्रांशेनाशङ्क्य । तपसीति तपोलोके । मुच्यन्त इति सद्योमुक्तिं कुर्वते । नोत्क्रामन्तीति देहेभ्यो नोत्क्रामन्ति । अत्रेति भूलोके । क्रमयोगेनेति क्रममानेनेत्यपि पाठः । योग एवेति 'भक्त्या प्रसन्ने तु हरौ तं योगेनैव योजये'दित्युक्तम् । इमामिति

भाष्यप्रकाशः ।

सर्वत्र यावत्तु क्षीरसागरम् । पुरुषोऽनन्तशयनः श्रीमन्नारायणाभिधः । मानुषा वर्णभेदेन तथैवाश्रमभेदतः । क्षितिपा मनुष्यगन्धर्वा देवाश्च पितरश्चराः । आजानजाः कर्मजाश्च तात्त्विकाश्च शचीपतिः । रुद्रो ब्रह्मेति क्रमशस्तेषु चैवोत्तमोत्तमाः । नित्यानन्दे च भोगे च ज्ञाने-श्वर्यगुणेषु च । सर्वे शतगुणोद्रिक्ताः पूर्वस्मादुत्तरोत्तरम् । पूज्यन्ते चावरैस्ते तु सर्वपूज्यश्चतु-र्मुखः । स्वजगद्व्यापृतिस्तेषां पूर्ववत् समुदीरिता । सयुजः परमात्मानं प्रविश्य च बहिर्गताः । चिद्रूपान् प्राकृतांश्चापि विना भोगांस्तु कांश्चन । भुञ्जते मुक्तिरेवं ते विस्पष्टं समुदाहृते'ति गारुडवाक्यानि लिखन्ति ।

तेन तन्मते मुक्तानां मुक्तेश्च तारतम्यं सिध्यति ।

विकारावर्तिसूत्रे च 'स्वाधिकारेण वर्तन्ते देवा मुक्तावपि स्फुटम् । बलिं हरन्ति मुक्ताय विरञ्चाय च पूर्ववत् । सम्राजकास्तु ते देवा विष्णवेऽत्र विशेषतः । न विका-राधिकारास्तु मुक्तानामन्य एव तु । विकाराधिकृता ज्ञेया ये नियुक्तास्तु विष्णुने'ति वाराह-वचनं लिखन्ति ।

तेन तन्मते मनुष्यादीनां चतुर्मुखान्तानां स्वस्वव्यापारकरणं तत्राधिकारश्च सिध्यति ।

कश्चित्तु, मुक्तौ तारतम्यमस्ति, न वेति सन्देहे तारतम्ये प्रमाणाभावात्तदङ्गीकरणे च 'निरञ्जनः परमं साम्यमुपैती'ति श्रुतिविरोधान्मुक्तेः स्वर्गसंसारसाम्यापत्तेर्मुक्तानां स्वसमाभ्य-धिकदर्शने दुःखेर्ष्यादिप्रसङ्गाच्च न मुक्तेस्तारतम्यमिति पूर्वपक्षः । सिद्धान्तस्तु तैत्तिरीये, 'सैषा-नन्दस्य मीमांसा भवति ते ये शतं मानुषा आनन्दाः स एको मनुष्यगन्धर्वाणामानन्दः श्रोत्रियस्य चाऽकामहतस्ये'त्यादिश्रुत्या मनुष्यगन्धर्वप्रभृतिब्रह्मान्तानां श्रोत्रियत्वमकामहतत्वं च श्रावितम् । वाजसनेयके च, 'अथ ये शतं कर्मदेवानामानन्दाः स एक आजानजानां देवा-नामानन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहत' इत्यादिश्रुत्याजानजानारभ्य ब्रह्मलोकस्यानन्दपर्यन्त-मकामहतत्वमवृजिनत्वं च श्रावितम् । अकामहतत्वं च कामकृतोपद्रवरहितत्वम्, न त्वका-मत्वं हतशब्दवैयर्थ्यात् । अवृजिनत्वं च पापरहितत्वं दुःखरहितत्वं वा । अवृजिनत्वाकामहत-

रश्मिः ।

भूमिम् । यावत्तु वस्तुषु । क्षीरसागरं लक्ष्मीकृत्य । चिरा[1]ः पुराणाः । शचीपतिरिन्द्रः । स्वजग-दिति तृणारणिमणिन्यायेन तत्तद्ब्रह्माण्डान्तरेष्वियं बोध्या । पूर्ववदिति ब्रह्मवत् । ते समुदीरिताः । सयुज इति सह युनक्तीति सयुक् जसि सयुजः । चिद्रूपान् रौद्रान् । 'वेदः शिवः शिवो वेद' इति श्रुतेः । सदानन्दः कृष्णः चिच्छब्दः 'नामचिद्दिवक्तने'त्यृग्वेदश्रुतेः । प्राकृतान्मायि-कान् मानसान् 'माया मनः सृजती'ति श्रीभागवतात् । विनायोगे द्वितीया मानसान्प्राकृतान् भोगान् विना । त्व इति । अर्थो गरुडपुराणाज्ज्ञातव्यः । पूर्ववदिति चतुर्थ्यन्ताद्वतिः । ब्रह्मवत् । 'विकारावर्ति चे'ति सूत्रार्थः । न विकाराधीति ते न विकारावर्तिनः किन्तु मुक्तानां मध्येऽन्ये तरतममुक्तिं प्राप्ता एवेत्यर्थः । 'तथाहि स्थितिमाहे'ति सूत्रांशार्थः विकाराधीति । नियुक्ता इति आज्ञाद्वारा वैधे नियुक्ताः । कश्चित्त्विति माध्वा इत्येव । सिद्धान्तस्त्विति वदन्तीत्यग्रेन्वयः । श्रोत्रियत्वमिति श्रोत्रियश्छन्दोधीते यः सः । अवृजिनत्वेति मुक्तलिङ्गत्वमित्यनेनान्वयः ।

[1] चरा इति प्रकाशपाठः ।

भाष्यप्रकाशः ।

त्वयोश्च 'यत्राप्ताः कामास्तत्र माममृतं कृधी'ति श्रुत्या, 'स हि मुक्तोऽकामहत' इति ब्रह्माण्ड-वाक्येन च मुक्तलिङ्गत्वम् । न चैतयोरपरोक्षज्ञानिलिङ्गत्वमिति शङ्क्यम् । प्रारब्धपापतत्कार्य-दुःखयोस्तस्मिन्नपि सत्त्वात् । श्रोत्रियत्वमपि मुक्तस्यैव मुख्यम् । 'प्राप्तश्रुतिफलत्वात्तु श्रोत्रियाः प्राप्तमोक्षिणः । ते एव चाप्तकामत्वात् तथाऽकामहता मता' इति भारतोक्तेः । एवं सत्येतेषां मुक्तलिङ्गत्वम् । एवं सत्येतयोः श्रुत्योरुत्तरोत्तरमानन्दाधिक्यकथनं मुक्तितारतम्ये पर्यवस्यति । किञ्च 'अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वऽसमा बभूवु'रित्यादितैत्तिरीयश्रुतौ मनोवेगे सर्वेषामसाम्यकथनात्, 'मुक्तानामपि सिद्धानां नारायणपरायणः स दुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने' इति श्रीभागवतवाक्ये, 'मुमुक्षोर्मुमुक्षुस्तु परो ह्येकान्तभक्तिमा'निति पुराणान्तरवाक्ये, 'अन्ये त्वेवमजानन्त' इति, 'स्त्रियो वैश्यास्तथा शूद्रा' इति गीतावाक्ये च साधनतारतम्येन फलतारतम्यप्रतिपादनात्, 'अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी'ति वाक्ये चाल्पभक्तिसाध्यमुक्तितोऽधिकभक्तिसाध्यमुक्तेराधिक्यप्रतिपादनात्, अस्मदादिमुक्तभोगो, मुक्तचतुर्मुखभोगान्निकृष्टः, अस्मदादिभोगत्वात्, संसारस्थास्मदादिभोगवदित्यनुमानादपि मुक्तौ तारतम्यमेव पर्यवस्यतीति प्रमाणाभावरूपो हेतुरसिद्धः । दुःखाभावसत्यकामत्वादिना सरः-सागरयोरिव स्वयोग्यानन्दपूर्त्या च मुक्तानां ब्रह्मसाम्ये साम्यश्रुत्युपपत्तेस्तद्विरोधरूपो हेतुरप्यसिद्धः । बहुजन्मनिर्गतदोषत्वे ब्रह्मापरोक्षाद् द्वेषेर्ष्यादिसम्भावनाया एवाभाव इति सोऽप्यसिद्धः । अतो मुक्तितारतम्यं निष्प्रत्यूहमिति वदन्ति ।

तत्र यदि मुक्तेस्तारतम्यम्, तदापि मुक्तिं प्रति तत्तदुपासनाया भक्तेर्वा तदनुरूपाया एव कारणत्वमिति तत्क्रतुन्यायादेव तारतम्यक्रमादिसिद्धिरिति किमनेन विचारेणेति प्रकृतानुपयोगा-सदनुचिन्तनप्रयोजनस्याप्यनुपलब्धेश्च तत्र वयमुदासीनाः ।

प्रकृतमनुसरामः । अत्रैतत् सिद्धम् । ज्ञानमार्गीयाणां तद्रीत्याऽदृश्यत्वादिगुणका-क्षरोपासने तत्क्रतुन्यायेन तादृशेऽक्षरे 'ब्रह्मैव सन् ब्रह्माऽप्येती'तिश्रुत्युक्तो लयः । अक्षरस्य,

रश्मिः ।

एतयोरिति अवृजिनत्वाकामहतत्वयोः । तस्मिन्निति ज्ञानिनि । प्राप्तमोक्षिणो मुक्ताः । एतेषा-मिति श्रोत्रियत्वाकामहतत्वावृजिनत्वानाम् । एतयोरिति तैत्तिरीयवाजसनेयकयोः । सर्वेषामिति अक्षण्वतां कर्णवतां सखीनाम् । अन्ये त्वेवमिति 'ज्ञात्वान्येभ्य उपासत' इति द्वितीयचरणः । प्रमाणाभावेति इमे हेतवः क्वचित्त्वित्यादिनोक्ताः । असिद्ध इति मुक्तिः तारतम्याभाववती तारतम्ये प्रमाणाभावाच्छ्रुतिविरोधाद्दुःखेर्ष्यादिप्रसङ्गाज् जनकवद् व्यतिरेके जयविजयवत् । मुक्ति-स्तारतम्यवती प्रमाणसत्त्वाच्छ्रुतिविरोधाभावाद् दुःखेर्ष्यादिप्रसङ्गाभावादुक्तभक्तवद् व्यतिरेके ज्ञानिवद् इति सत्प्रतिपक्षत्वेऽपि स्वरूपासिद्धः । सिद्धान्तवाक्यैः झटिति स्वरूपासिद्धिबोधात् । द्वितीये हेतुसम्बन्धिविचारमाहुः दुःखाभावेति । सोपीति दुःखेर्ष्यादिप्रसङ्गरूपो हेतुरपि ।

तत्क्रतुन्यायेनेति अप्रतीकालम्बनसूत्रोक्तेन । तादृश इति ज्ञानिनामक्षरत्वेनोपस्थितेऽक्षरे । ब्रह्मैव सन्निति सामीप्यमुक्त्या ब्रह्मैव सन् बहिःप्रकटे निर्विशति सद्योमुक्तिं प्राप्नोतीत्यर्थे भक्तिमार्गे, ज्ञानेनाविद्यानिवृत्तौ सायुज्याद्ब्रह्मैव सन् ब्रह्माप्येतीत्युपचर्यते । यद्वा । मुक्तः सन् भक्तिलाभे ब्रह्माप्येति परब्रह्मसामीप्यमप्येति गच्छति ज्ञानीत्यर्थः । अक्षरत्वेनोपस्थितिमुक्त्वा

१. श्रुत्वा ।

भाष्यप्रकाशः ।

'तद्धाम परमं ममे'ति वाक्योक्तभगवद्धामत्वज्ञानपूर्वकं नित्यभगवल्लोकत्वेन भगवदभिन्नत्वेन दहराद्युक्तरीत्योपासने यथाधिकारं सालोक्यादिचतुष्टयप्राप्तिः । आदित्याद्युपासनानामङ्गोपासनात्वात् पञ्चाग्न्युपासनाया अपि तत्रैव प्रवेशस्योपपादितत्वादर्चिरादिक्रमेण गत्वाऽमानवेन पुरुषेण भगवल्लोकप्राप्तिरैश्वर्यादिभोगश्च । उपासनायां मर्यादाभक्तिसाहित्ये तु वैकुण्ठादिलोकेषु भगवत्सेवकत्वमधिकम् । तदा रामानुजभाष्योक्तरीत्या भगवदनुभवः । तत्रापि भक्तेरुत्कर्षे तु भगवच्चरणे कौस्तुभादौ वा प्रवेशेन भगवत्सायुज्यम् । अनुग्रहविशेषेण पुष्टिभक्तौ तु, 'भक्त्या मामभिजानाती'त्युक्तरीत्या स्वस्मिन् प्रवेश्य भूमविद्योक्तरीत्या पुनः प्रथममाविर्भाव्य भजनानन्दानुभावने 'सोऽश्नुत' इति श्रुत्युक्तरीतिकं भोगं कारयतीति ॥ २२ ॥

इति पञ्चमं जगद्व्यापाराधिकरणम् ॥ ५ ॥

रश्मिः ।

भक्तिमार्गेऽक्षरस्य भगवद्धामत्वेनोपस्थितौ या मुक्तिस्तामाहुः । अक्षरस्येति । नित्यभगवल्लोकत्वेनेति न त्वक्षरत्वेन । दहरादीति तत्रापि पूर्वोक्तरीत्या । आदिनात्मबोधोपनिषत् । तट्टीका मयापि कृता । सालोक्यादीति सालोक्यानन्तरमक्षरात्मकदेहे सार्ष्टिः भगवत्समाना ऋष्टिः गतिरलौकिकसामर्थ्यम्, तया सामीप्यम्, ततः सारूप्यमलकादिषु लयः । सालोक्यमुक्तिविशेषत्वात् । एतच्चानावृत्तिः शब्दादनावृत्तिः शब्दादिति सौत्रवीप्सया स्मृतम् । चतुर्णां पादानां विचारितार्थानाहुः आदित्याद्युपासनानामिति । उपपादितत्वादिति तत्रैव भाष्यप्रकाश उपपादितत्वात् । एवं प्रथमपादविचारितार्थमुक्त्वा द्वितीयपादविचारितार्थमाहुः अर्चिरादिक्रमेणेति । तृतीयपादविचारितार्थमाहुः अमानवेनेति । चतुर्थपादविचारितार्थमाहुः उपासनायामिति । उपासनयाधिदैविकचित्तशुद्ध्या जाताया मर्यादायाः साहित्ये तु सा च वेदोक्तातिविस्तरे तु स्कन्दपुराणीयचातुर्मास्यमाहात्म्योक्ता विस्तृता । विस्तृतायामप्यनधिकारे श्रीभागवतैकादशस्कन्धैकोनविंशोक्ता श्रुतात्मनिवेदने श्रवणादिसरणिरूपा । 'श्रीकृष्णः शरणं मम' इति शरणमन्त्रस्तु ज्ञानमार्गे सकामे, ब्रह्माहमस्मीति मन्त्रवत् । भक्तिमार्गेऽभेदाभावादक्षरस्य धामावात् सच्चिदानन्दः श्रीकृष्णः ममाक्षरात्मकस्य सेवकस्य स्वामी शरणं रक्षिता इत्यनुसन्धानं कर्तव्यम् । तदुक्तम् 'तस्मात्सर्वात्मना नित्यं श्रीकृष्णः शरणं मम । वदद्भिरेवं सततं स्थेयमित्येव मे मति'रिति परमार्थविदाचार्यैः । तत्रापीत्यादि मर्यादाभक्तावपि । उत्कर्षे व्यसनात्मकत्वे । भगवच्चरणे इति मर्यादापुरुषोत्तमचरण इति साधनभक्तिविचारेणोक्तं भक्त्यात्मकचरणप्रवेशेनेति । जीवविचारेण त्वाहुः कौस्तुभादाविति 'जीवस्य तत्त्वममलं मणिमस्य कण्ठ' इति वाक्यात् । आदिना चैद्यज्योतिषो मुक्तिस्थलम् । 'वृत्रदेहोत्थितं ज्योतिर्वासुदेवमुपाविश'दिति वृत्रमुक्तिस्थानं च । 'यतो वाच' इति श्रुत्या पुष्टिस्थस्याविषयत्वाद् वाग्विषयो व्याख्यातः । 'अक्षरं ब्रह्म परमं वेदानां स्थानमुत्तमम्' इति वाक्यात् । वासुदेवस्याक्षरत्वं वेदप्रतिपाद्यत्वात् । 'वासुदेवः परं ब्रह्म एष छन्दसि पठ्यत' इति ज्योतिर्ग्रन्थवाक्यात् । पुरुषोत्तमस्तु भक्तैः सह निगूढभावकरणं करोति । तस्य स्वरूपात्मकहास्यचरणादौ वा । पुरुषोत्तमविचारेण त्वाहुः अनुग्रहेति । स्वस्मिन्निति चरणे कौस्तुभादौ वा प्रवेश्य । भूमविद्येति छान्दोग्ये नारदसनत्कुमारसंवादेऽस्ति । पुनरिति । 'तस्य वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण आत्मत आशे'त्यादिना तथा । भोगाक्षेप्याविर्भावादिरिति चेत्तर्हि पुनःपदेनाक्षेप्याविर्भावतिरोभावापेक्षया पुनः पृथगाविर्भाव उच्यत इत्यदोषः ॥ २२ ॥ इति पञ्चमं जगद्व्यापाराधिकरणम् ॥ ५ ॥

जानीत परमं तत्त्वं यशोदोत्सङ्गलालितम् ।
तदन्यदिति ये प्राहुरासुराँस्तानहो बुधाः ॥ १ ॥
नानामतध्वान्तविनाशनक्षमो
वेदान्तहृत्पद्मविकासने पटुः ।
आविष्कृतोऽयं भुवि भाष्यभास्करो
मुधा बुधा धावत नान्यवर्त्मसु ॥ २ ॥
पुरन्दरमदोद्भवप्रचुरवृष्टिसम्पीडित-
स्वकीयवरगोकुलावनपरायणो लीलया ।
स्मितामृतसुवृष्टिभिः परिपुपोष तान् यो गिरिं
दधार च स एव हि श्रुतिशिरस्सु संराजते ॥ ३ ॥

---

भाष्यप्रकाशः ।

एवं सर्वं शास्त्रं व्याख्याय स्वीयशिक्षार्थं सङ्क्षेपेण तदर्थमुपदिशन्ति जानीतेत्यादि । तदन्यदिति । तत् परमं तत्त्वम् । अन्यत् यावद्धर्मशून्यम् ॥ १ ॥

भाष्यविभावनार्थमुपदिशन्ति नानेत्यादि ॥ २ ॥

अत्रोक्तस्य फलस्य भगवत्कृपाधीनत्वाद्भगवतः कृपालुत्वं स्वीयरक्षकत्वेन स्फुटीकुर्वन्ति पुरन्दरेत्यादि । हिर्हेतौ ॥ ३ ॥

रश्मिः ।

शास्त्रमिति उपाङ्गमीमांसाशास्त्रम् । अवयवेष्वपि शास्त्रत्वमविरुद्धम् । षट् शास्त्राणि । सङ्क्षेपेणेति सन्दिग्धवाक्यानां मीमांसाविषयत्वाद्विस्तरे बुद्ध्यनिवेशाच्च सङ्क्षेपेण शास्त्रार्थम् । जानीतेत्यादीति । फलाध्याये प्रतिपादितं सन्दिग्धफलमुपदिशन्ति आज्ञापयन्ति यथा स्वमार्गीयः स्वार्थान्न नश्येत् । आचार्याज्ञोल्लङ्घनं महापराध इति । तत् परमं तत्त्वम् । अन्यत् यशोदोत्सङ्गलालितादन्यत् भिन्नं यावद्धर्मशून्यम् । हे बुधा आसुरान् तामसान् अभिन्ने भिन्नत्वबुद्धीन् तान् जानीतेत्युपदेशः ॥१॥ नानेत्यादीति । नानामतानि अन्यभाष्यीयाणि ज्ञेयानि । नानामतैर्ध्वान्तः सूत्रार्थाप्रकाशस्तस्य विनाशने क्षमः समर्थः । भावे ल्युट् विनाशन इत्यत्र, क्षम इत्यत्र पचाद्यच् । वेदान्तेति । उपनिषत्सिद्धान्तविकाशने । भाष्येति अणुभाष्यभास्करः । नामैकदेशग्रहणम् । भास्करपदेन ब्रह्मज्ञानेऽधिकारि अणुभाष्यमिति द्योतितम् । धावतेति । भाष्यविभावनार्थमुपदेशः आज्ञा । फलानन्तरं भाष्यविभावनोक्त्या ज्ञापयन्ति । आत्मानन्दसमुद्रस्थं कृष्णमेव भाष्येण विचिन्तयेदिति । तदुक्तं सिद्धान्तमुक्तावल्यां 'तस्माच्छ्रीकृष्णमार्गस्थो विमुक्तः सर्वलोकतः । आत्मानन्द समुद्रस्थं कृष्णमेव विचिन्तये'दिति ॥ २ ॥ भगवत्कृपेति । कृपा प्रथमचतुर्थचरणे 'सूक्ष्मं तु तदर्हत्वा'दिति सूत्रभाष्ये महतः परं निवेशिता । 'कृपाविष्टः साधनं' भगवान् तत्कृपा 'तदन्तरप्रतिपत्ता'वित्याद्युक्तसाधने ब्रह्मात्मके परम्परया वर्तत इत्याशयेन कृपालुत्वम् । भगवत्कृपया भाष्यं कृतमिति । 'इति भारतमाख्यानं कृपया मुनिना कृत'मिति न्यायेन । 'दत्त्वाज्ञां च कृपावलोकनपटु'रिति प्रथमसुबोधिन्याम् । पुष्टिमार्गीयत्वेन स्वेषामाहुः स्वीयरक्षकत्वेनेति । गिरिं दधारेति पदतात्पर्यार्थः । पदद्वयार्थानुसन्धाने बीजमग्रे वाच्यम् । पुरन्दरेत्यादीति । स्मितामृतेति स्मितं श्रीरामचन्द्रः हास्यरूपत्वात्, अमृतमानन्दः तयोः सुवृष्टिभिः दानेन । तान् पुष्टभक्तान् । गिरिं दधारेति । ननु गोपाल-

श्रीकृष्णकृपयैवायं सिद्धान्तो हृदि भासते ।
तेनाधिकं वरीवर्ति न वक्तव्यं हरेर्नृणाम् ॥ ४ ॥
भाष्यपुष्पाञ्जलिः श्रीमदाचार्यचरणाम्बुजे ।
निवेदितस्तेन तुष्टा भवन्तु मयि ते सदा ॥ ५ ॥

## इति श्रीमद्वेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते श्रीमद्ब्रह्मसूत्राणुभाष्ये चतुर्थाध्यायस्य चतुर्थः पादः समाप्तः ॥ ४ ॥

## समाप्तश्चतुर्थोऽध्यायः ॥ ४ ॥

---

भाष्यप्रकाशः ।

भाष्यविभावनयार्थस्फुरणेपि भगवत्कृपाया एव कारणत्वम्, न पाण्डित्यादेरित्याशयेनाहुः श्रीकृष्णेत्यादि ॥ ४ ॥

गुणोपसंहारपादमारभ्य सार्धाध्यायस्य स्वयं करणाचदाचार्येषु निवेदयन्तः समाप्तौ मङ्गलं कर्तव्यमिति शिष्टाचारं च शिक्षयन्त आचार्याणां प्रसादमाशासते भाष्येत्यादि । अर्थस्तु श्लोकानां स्फुट इति शुभम् ॥ ५ ॥

क्रीडन् श्रीबालकृष्णः परमकरुणया मन्मनः प्रेरयित्वा
भाष्यार्थं योऽतिगूढं प्रकटितमकरोत् सम्प्रदाये निवृत्ते ।
तं नित्याकुण्ठशक्तिं हृतनिखिलनिजाज्ञानसंसारहारं
स्मृत्वा स्मृत्वोपकारं प्रमुदितमुदितः सप्रश्रं सन्नमामि ॥ १ ॥

रश्मिः ।

तापिनीये 'गोपिकानयनाम्भोजमालिने नृत्यशालिने' इति नमनं फलात्मकस्योक्त्वा यद्यपि गिरिधराय चेति साधनरूपमुक्तम् । तथापि 'नमः प्रणतपालाये'त्यस्यानुक्तौ बीजं स्वरूपमर्यादां परित्यज्य भक्तमनोरथपूरकत्वेनोपकारस्मरणम् । पादसेवनवत् । श्रुतिशिरःस्विति वेदान्तेषु । 'ऋचां मूर्धानं यजुषामुत्तमाङ्गं साम्नां शिरोथर्वणां मुण्डमुण्ड'मिति वाक्यात् । संराजत इत्यपि श्रद्धाविशेषात् । प्रथमं पादसेवनं पश्चादन्याङ्गसेवनमिति ॥३॥ श्रीकृष्णेत्यादीति । तेन सिद्धान्तेनाधिकं वरीवर्ति तथापि हरेर्नृणां नृभिर्न वक्तव्यम् । यत एतावतैव परमार्थसिद्धेऽधिकवचने गौरवादिति भावः ॥४॥ निवेदयन्त इति यत्करोषीति स्मृतेः । कर्तव्यमिति ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते कृतमङ्गलानि शास्त्राणि प्रथन्त इति सदाचारात्कर्तव्यम् । प्रसादमिति तोषम् तेन 'अलौकिको हि वेदार्थो न युक्त्या प्रतिपद्यते । तपसा वेदयुक्त्या च प्रसादात्परमात्मन' इति श्रुत्युक्तसाधनसम्पत्तिम् । स्फुट इति । श्रीमदाचार्येति श्रीमन्त आचार्याः श्रीमदाचार्याः व्यासचरणाः । आचार्यभाष्यपक्षे । श्रीमद्गोस्वामिभाष्यपक्षे श्रीमदाचार्याः श्रीवल्लभाचार्या इति सर्वं शुभम् ॥ ५ ॥

स्वयं मङ्गलश्लोकान्निबध्नन्ति स्म क्रीडन्नित्यादिना । प्रकृतिजातिः । 'म्रभ्नैर्यानां त्रयेण त्रिमुनियति-युता स्रग्धराकीर्तितेयम्' । बालश्चासौ कृष्णः सदानन्दः 'नैभिन्त्यं वाचि पूर्वव'दिति सुबोधिन्या 'समान एवं चाभेदा'दिति सूत्रेणावतारावदवतारेपि मङ्गलघटकत्वेपि स्वसेव्यस्वरूपनमनात्मकमपि मङ्गलमिदम् ।

भाष्यप्रकाशः ।

मायावादादिवादैर्व्यवहितमिव तं ब्रह्मवादं प्रकाश्य
श्रीमत्कृष्णाज्ञया तद्रतिपथ उदितो दैवजीवावनार्थम् ।
यैस्तान् श्रीकृष्णरूपान् प्रथितगुणगणान् श्रीमदाचार्यवर्यान्
ध्यायं ध्यायं नमामि स्वहितमवहितस्तत्कृपादृष्टिवृष्ट्या ॥ २ ॥
श्रीविठ्ठलेशाङ्घ्रिसरोजयुग्मं नमामि यैर्दासजनावनाय ।
पुष्टिप्रकारः श्रुतिगूढ आविष्कृतो निरस्तोन्मदमायिवादः ॥ ३ ॥

रश्मिः ।

भाष्योक्तबालत्वात् तस्य तुरीयत्वात् सोभिमेदिति श्रुतिलिङ्गात् । तदुक्तम् 'व्रजे स बालको भूत्वा क्रीडते पुरुषोत्तम' इति श्रुतेः । किञ्च एकादशस्कन्धविंशाध्याये 'यमादिभिर्योगपथैरान्वीक्षिक्या च विद्यया । मदर्चोपासनाभिर्वा नान्यैर्योग्यं स्मरेन्मन' इति वाक्य ईश्वरवाक्ये मदर्चोपासनायां योग्यस्मारकत्व-पर्यवसानात् । यथा 'शङ्खचक्रं मृदा यस्तु कुर्यात्तप्तायसेन वा । स शूद्रवद्बहिष्कार्यः सर्वस्माद्द्विज-कर्मण' इत्यत्र तप्तायसे निषेधपर्यवसानं तद्वत् । न च तप्तायसेन शङ्खचक्रादिकृतौ निषेधपर्य-वसानमिति वाच्यम् । निषेधोस्तु तत्पर्यवसानं तु दुर्घटमिति । एवं स्वसेव्यस्वरूपेन्यत्रापि बोध्यम् । अतिगूढमिति 'गूढं ब्रह्मणि वाङ्मय' इति तृतीयस्कन्धात् सोश्नुते सर्वान्कामानित्यतिगूढम् । निवृत्त इति ननु 'तदुक्तमपि दुर्बोधं सुबोधं स्याद्यथा तथा । तन्नामाष्टोत्तरशतं प्रवक्ष्याम्यखिलाघ-हृ'दिति तच्छरणानां कथं सम्प्रदायनिवृत्तिरिति चेन्न, श्रवणादिसरणिरूपसाधनसत्त्वेपि निःसन्देह-साधननिवृत्तेः निःसन्देहसाधनसहिते सम्प्रदाये निवृत्त इत्यर्थः । विशेषणनिवृत्तिरत्र शिखी ध्वस्त इत्यत्र शिखामात्रध्वंसे शिखिनि ध्वस्त इति प्रयोगवत् । समन्वयोपदेशेन नित्याकुण्ठशक्तित्वं सिध्यति । अविरोधोपदेशेन वृतानां निखिलानां निजानामज्ञानेन, अत्र सेवासंसाराऽज्ञानमपि निविष्टम् । यः संसारोऽहन्ताममतात्मकः सेवासम्बन्धशून्यः तस्य हरमेव हारम् । साधनोपदेशेन उपकारं स्मृत्वा । फलोपदेशेन प्रमुदितमुदितः स्वप्रभुमात्मसहितं श्रीमदाचार्यं सप्तस्वरूपिणम् ॥१॥ इत्ये-केन श्लोकेन मङ्गलासिद्धौ प्रचुरतरविघ्ननिवारणाय श्लोकान्तराण्याहुः । मायावादादीति । आदिना सप्तवादा अन्ये । शङ्करभास्करमाध्वविज्ञानेन्द्रभिक्षुरामानुजशैवनिम्बार्काचार्यप्रणीताः । इवेति । इव वर्तमानम् । प्रकाश्येति भगवदाज्ञया सृष्ट्यर्थं भगवत्सङ्गोपने शङ्कराचार्यादिभिः कृते भगवदाज्ञया यदा रामानुजमाध्वाभ्यां भगवत्सङ्गोपनेऽवृते स्वयं मुखारविन्दरूप आविर्भूय 'नृप स्वात्मैव वल्लभ' इति वल्लभाचार्यः, भगवत्सङ्गोपननिवारकं ब्रह्मवादं प्रकाश्येत्यर्थः । रतिपथमिति भक्तिमार्गे 'श्रद्धा रतिर्भक्तिरनुक्रमिष्यती'ति वाक्ये भक्तिरुक्ता सा त्वानन्दधर्मो न मार्गः । मार्गत्वार्थमन्यसम्मेलने प्राप्ते भूमौ श्रद्धा तस्यां प्रेमलक्षणभक्तिसम्बन्धे आध्यात्मिकरतिपथं यथा भवति तथोदितः स्वहितं अभि-रूपम् । 'नास्ति वह्निसमं मित्रं' इति वाक्यात् । तत्कृपादृष्टिर्ज्ञानेन्द्रियं तद्वृष्ट्या तत्सम्पादितज्ञानैः । प्रकृतिजातिः । स्रग्धराछन्दः ॥२॥ 'आत्मा वै पुत्रनामासी'ति प्रभुनमनेनैव श्रीगोपीनाथजिन्नमनसिद्धौ श्रीगोस्वामिनो नमन्ति श्रीविठ्ठलेशेति । उपजातिः । शार्दूलविक्रीडितं छन्दः । पुष्टिप्रकार इति । यद्यपि विद्वन्मण्डने मर्यादायामेव श्रेयमित्युक्तम् । भक्तिहंसे च भक्तिमार्गः श्रवणादिसरणिरूप इत्युक्तम् । तथापि गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्यय इति ज्ञापितम् । श्रुतिगूढ इति । 'तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणेह बोध्युरुश९स मा न आयुः प्रमो-

१. रश्मावेकत्र रतिपथमिति क्रियाविशेषणमन्यत्र रतिपथ उदित इति पाठद्वयमादृतम् ।

भाष्यप्रकाशः।

श्रीविठ्ठलेशपादाब्जप्रसादवरलाभतः।
प्रकाशमणुभाष्यस्य वितन्वन् पुरुषोत्तमः ॥ ४ ॥
तदीयचरणद्वन्द्वे निवेद्य कुसुमाञ्जलिम्।
तदीयदास्यलाभाय प्रसादमभिवाञ्छति ॥ ५ ॥
यदत्र सदसद्वापि जीवबुद्ध्या मयोदितम्।
तत् क्षमन्त्वपराधं मे कृपया दीनवत्सलाः ॥ ६ ॥
प्रलयजलदवृष्टेर्गोव्रजस्यावनाय
स्वमृदुकरनखाग्रन्यस्तगोवर्धनाद्रिः।
वदनविधुमयूखैर्नेत्रतापं निजाना-
मपनयतु हृदीशः स्थापयन् पादपद्मम् ॥ ७ ॥

**इति श्रीमद्वल्लभाचार्यचरणनखचन्द्रनिरस्तहृदयध्वान्तस्य श्रीपीताम्बरात्मजस्य पुरुषोत्तमस्य कृतौ भाष्यप्रकाशे चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४ ॥ ४ ॥**

**समाप्तोऽयमध्यायः सम्पूर्णश्चायं भाष्यप्रकाशः।**

रश्मिः।

षी'रित्यत्र गूढः। श्रुत्यर्थस्तु तत् तस्मात् त्वा त्वां यामि पद्भ्यां सेवे ब्रह्मणा हिरण्यगर्भेण वन्द्यमानः अमः सुः, वन्द्यमानम्। मानसीसेवापूर्त्यै। मानसीसेवां ब्रह्मा प्रत्यहं करोतीति यजमानो दैशिकस्तत् तच्छन्दार्थमाशास्ते हविर्भिः मदर्चोपासनासम्बन्धिभिः अहेडमानोऽनादरकर्ता न छान्दसः अनात्मनिवेदीति। न अनादरकारयिता। आत्मनिवेदनं गुरुणानादरेण कार्यत इति। हे वरुण इह भूमौ बोधी ज्ञानी उरु बहु शंसमानः कथकः आयुरन्नं प्रमोषीः चोरय। मा क्लेदय। वर्णलोपः। यद्वा शंस त्वं कथय नोऽस्माकं आयुर्मा प्रमोषीरिति। 'नायमात्मा प्रवचनेने'ति श्रुतौ गूढः। **येन आविष्कृतः। निरस्तेति निरस्त उन्मदमायिवादः येन स निरस्तोन्मदमायिवादो** भवतीत्येव ॥ ३ ॥ **श्रीविठ्ठलेशेति**। अनुष्टुप्जातिश्छन्दस्तु वितानं वितानमाभ्यां यदन्यत्पदाभ्यां समानिकाप्रमाणिकाभ्यां अन्यत् तद्वृत्तं वितानं नाम, स्तुतो विद्युन्मालादिभ्योखिलेभ्यो यदतिरिक्तमनुष्टुप् वृत्तं तदेव वितानं वृत्तं बोध्यम्। पितृदेवो भवेति श्रुतेर्गोस्वामिमात्रो विषयः। यद्वा श्रीविठ्ठलेशाश्च पादा आचार्यपादाश्च अब्जश्चन्द्रः तुरीयश्च श्रीविठ्ठलेशपादाब्जाः तयोस्तेषां वा प्रसादवरः ग्रन्थकरणप्रतिभा तस्य लाभतः ॥ ४ ॥ **तदीयेति**। **तदीयदास्येति**। कीर्तनभक्तेः श्रेष्ठत्वेपि रतिपथ उदित इति कथनात्पथि स्थित्यर्थमुक्तम्। 'भवाम दास' इति पञ्चाध्यायीवाक्यात्। **प्रसादमिति**। प्रसादं दास्यफलम्। 'भक्त्या तुतोष भगवान् गजयूथपाये'ति वाक्यात्। 'भक्तिं लब्धवतः साधोः किमन्यदवशिष्यत' इति। तेषु प्रसादे स्ववाञ्छोक्ता। वाछि इच्छायां भ्वा. प. से. अनुष्टुप्जातिः छन्दस्तु वितानम्। उक्तलक्षणम् ॥ ५ ॥ **यदत्रेति**। अत्रेति भाष्यप्रकाशे। **जीवबुद्ध्येति** जीवन्मुक्तजीवबुद्ध्या। **क्षमन्त्विति**। आचार्यादयः बालास्तद्वंशीया वा। ग्रहणधारणापटुर्बालः न तु स्वनन्वयः ॥ ६ ॥ **प्रलयजलदेति**। अतिशक्करीजातिः। छन्दस्तु मालिनी। 'ननमयययुतेयं मालिनी भोगिलोकैः'। **स्वमृदुकरेति**। विद्वन्मण्डनानुसारेण। यत्तु 'इत्युक्त्वैकेन हस्तेन कृत्वा गोवर्धनाचलम्। दधार लीलया कृष्णश्छत्राकमिव बालक' इति वाक्ये स्वमृदुकराग्रन्यस्तगोवर्धना-

रश्मिः ।

द्विरुक्तस्तत्र नखगुणो विहितः । वदनं विधुश्चन्द्रः तस्य मयूखैः किरणैः । नेत्रतापं नेत्राभ्यां दृष्टानामन्यथाकरणेन शब्दबलविचारकाणामस्माकं यो नेत्राभ्यां तापः तमीशः हृदि पादपद्मं स्थापयन्नपनयत्वित्यर्थः । उपकारस्मरणेन पादसेवार्थमुक्तम् ॥ ७ ॥ इति

श्रीविठ्ठलेशपादाब्जप्रसादवरलाभतः ।
रश्मिं प्रकाशे व्यतनोत्सचमत्कृतिमीश्वरः ॥ १ ॥
पौनःपुन्यं च रभसो प्रमादिः क्रीडया कृतः ।
सोढव्यः कृपया सद्भिर्गूढत्वात्सेश्वरादपि ॥ २ ॥
भक्तज्ञः कृतकृत्यश्च हृदीश्वरज्ञ एव च ।
कृतार्थश्च प्रमाणज्ञस्तत्कृतिं ज्ञातुर्पश्यत[1] ॥ ३ ॥
एतेनास्मत्कुलपतिः श्रीगोपीजनवल्लभः ।
श्रीमदाचार्यवर्यश्च नित्यलीलास्थतज्जनः ॥ ४ ॥
प्रीतो भवतु ज्ञात्वा मामाचार्यकुलसम्भवम् ।
श्रीदामोदरजित्पुत्रौ द्वौ श्रीविठ्ठलरायजित् ॥ ५ ॥
श्रीगिरिधारिजिच्चैव तत्पुत्रो (श्री)रघुनाथजित् ।
श्रीगोविन्दरायजित् तत्पुत्रो (श्री)विठ्ठलरायजित् ॥ ६ ॥
श्रीगोकुलोत्सवो भ्राता श्रीगोपेश्वरजिदहम् ।
तत्पुत्रस्तु प्रकाशेस्मिन्नश्मिं तु वितनोमि ह ॥ ७ ॥

**इति श्रीविठ्ठलेश्वरैश्वर्यनिरस्तसमस्तान्तरायेण श्रीदामोदरजिद्भ्रात्रीयेण श्रीगोविन्दरायजित्पौत्रेण सम्पूर्णवेत्ता विठ्ठलरायजिद्भ्रात्रीय-गोकुलोत्सवात्मजगोपेश्वरजिता कृते भाष्यप्रकाशस्य रश्मौ चतुर्थाध्याये चतुर्थः पादः सम्पूर्णतामगमत् ॥ ४ ॥ ४ ॥**

समाप्तोयमध्यायः । समाप्तश्च रश्मिः । सेवानवसरे दैवीजीववाचनार्थमयं ग्रन्थः स्वयं गोपेश्वरेण लिखितः श्रीगोवर्धननाथद्वारे । श्रीरस्तु । मिति चैत्रशुक्लत्रयोदशी । संवत् १८९७ । मङ्गलवारे । लेखकपाठकयोर्दीर्घायुः । मङ्गलमस्तु । एतावतो ग्रन्थस्य श्लोकसङ्ख्या ८४२४ अष्टसहस्रचतुःशतचतुर्विंशा । अध्यायचतुष्टयस्य श्लोकसङ्ख्या ४२६६६ द्विचत्वारिंशत्सहस्रषट्शतषट्षष्टिः ।

श्रीकृष्णार्पणमस्तु.

---

1. ज्ञातुपश्यत इति पूर्वमासीत्, पश्चादेवं संस्कृतं हस्ताक्षरेषु ।

# INTRODUCTION.

By the Grace of God we are able to put before the public the third and the fourth pādas of the Fourth Adhyâya, together with the charming रश्मिपरिशिष्ट of भक्तिमार्गीय रूपसन्निधान and फलदानादि on 3. 3. 16, revealing how God (रसो वै सः) becomes manifest before His भक्त in पुष्टिमार्ग, and what sort of फल the भक्त gets. Unfortunately seven pages of the manuscript are missing, and hence we have lost the description of some of the subjects mentioned in the contents.

The delay in the publication of this Volume is chiefly due to the extreme difficulty of deciphering the परिशिष्ट, in which additions and interlineations have been made by the author on almost all the pages and on all the sides of the margin so closely, that it is almost impossible to read them and to put them in their proper places; and in spite of our devoting as much labour as we could, we had unavoidably to leave out some words which could not be deciphered.

Shastri Kalyanji Kanji has rendered us very valuable assistance in carrying this edition through the press and has often solved knotty points for which our hearty thanks are due to him. We have also to thank Prof. Maganlal Ganpatiram Shastri, M. A., of the Deccan College, Poona for the willing co-operation and help in the solution of difficulties.

---

Both the साधन and the फल अध्यायs are now before the public, and in order that the reader may get a clear view of both, he must acquaint himself with some of the षोडश ग्रन्थाः of श्रीवल्लभाचार्य, such as सिद्धान्तमुक्तावली, भक्तिवर्धिनी, निरोधलक्षण, सेवाफल, and पुष्टिप्रवाहमर्यादा. He will get very valuable help in understanding the subject by a clear grasp of these small works. As श्रीपुरुषोत्तमजी's अधिकरणमाला gives a beautiful summary of all the अधिकरणs, we refrain from repeating the same.

Attention of the reader has already been drawn in our note to the previous volume (४ अ. १. २. पा.) to the difference in the interpretation of some सूत्रs as between श्रीमद्वल्लभाचार्य and श्रीविट्ठलेश्वर. This difference will be found in विद्वन्मण्डन also, where the interpretation of the सूत्रs quoted differs from that of श्रीवल्लभाचार्य. This may perhaps be due to the आधिभौतिक standpoint taken up by श्रीवल्लभाचार्य following वेदव्यास, and आधिदैविक standpoint taken up by श्रीविट्ठलेश्वर. This idea is suggested to us by the very lengthy and beautiful addition to the आनन्दमयाधिकरण made by श्रीविट्ठलेश्वर, giving the आधिदैविक interpretation. The रश्मिकार श्रीगोपेश्वरजी states in 2-3-50 as under:—

अत्र श्रुतेर्थं यत् प्रतीयेतेति भागवतोक्तमायापक्षो नास्ति, तस्य लक्ष्मणभट्टात्मजवल्लभविरचितत्वेन आधिदैविकमतत्वात्। अस्य वेदव्यासमतवर्तिवल्लभाचार्यमतत्वेन आधिभौतिकत्वात्। एतेन अपरितोषे श्रीभागवतकरणात्। निबन्धे आध्यात्मिकमतम्, विष्णुस्वामिमतवर्तिवल्लभाचार्यविरचितत्वात्। यमुनाष्टकादि तु स्वमतम्, निर्गुणम्, युज्या परमार्थः तत्प्रतिपादकम्, मुख्यं च। स्वनाम्ना तु मुख्यत्वमित्यभियुक्तोक्तेः। 'इति श्रीवल्लभाचार्यविरचितं यमुनाष्टकं सम्पूर्ण'मितीतिश्रीकथनात्। रश्मि २-३-५०.

We invite the scholars of the सम्प्रदाय as well as others to study these works with devotion, and with a view to approach the Presence of God, for which they have been intended. The generality of people go in the wrong direction because पराञ्चि खानि व्यतृणत् स्वयंभूः, तस्मात् पराङ् पश्यति नान्तरात्मन्, and because मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये. It is only in this भारतवर्ष that people were engrossed so much in religion, for which men like Emerson, Carlyle, Max Muller and many others have lavished praises over it; but here also काल has been rapidly doing its work, and the contact with materialism and आसुरत्व of the West has hastened this change. We have therefore to be very careful, and in all our religious studies we should never miss the goal viz. the Presence of God. We are thankful to many Western Oriental Scholars for the vast amount of labour devoted by them to the study of Sanskrit literature, Vedic and modern. They have approached the subject also very sympathetically, but partly on account of their being strangers unacquainted with our manners and customs with their roots buried in the hoary past, partly on account of partiality for their own Christian religion, partly due to the Doctrine of Evolution which looks upon ancient things in quite a different light, partly on account of want of श्रद्धा, and finally on account of a difference in the idea of civilisation,—the west being generally engrossed in finding fresh means of material comforts and gratification of the senses, and not caring for the vision of God, Who lies deeply buried in the heart,-we have to be very cautious in accepting their premises and their conclusions. Even a sympathetic man like Prof. Max Muller, after his lifelong study of Sanskrit literature opined that writing was unknown to Vedic ऋषिs. Again वेद means knowledge from विद् to know and ऋषि means a seer, from ऋष् to see. Do they implicitly believe that वेद contains true knowledge and that ऋषिs were Seers ? If not, it can well be questioned whether the true meaning underlying these writings will ever be revealed to them. They only see the worship of the Sun and the Moon and elements such as Fire, Water etc. in these writings, and they imagine terror to be the root cause of this worship. We are inclined to ask them as to how many Saints and Sages of भारतवर्ष they believe to have got a vision of God, from Vedic Revelation up to the modern times.

One writer after another has written about श्रीवल्लभाचार्य and his System, and has condemned outright the sect of Maharajas. But both श्रीवल्लभाचार्य and श्रीविट्ठलेश्वर were so holy and learned that they were worshipped, as gods upon the Earth. At that very time another divine personage श्रीकृष्णचैतन्य was similarly worshipped in Bengal. They were all called महाप्रभुs, because they had साक्षात्कार of God, their mind was in tune with the Infinite and they were able to lead their followers into the Presence of God. Millions of men in Gujarat, Kathiawar, Sind, Rajputana, Muttra and Madras, including several princes, are followers of श्रीवल्लभाचार्य, and millions in Bengal and elsewhere are followers of श्रीकृष्णचैतन्य. Many of the descendents of श्रीवल्लभाचार्य have been great devotees and inspired authors, who have kept the torch of Hinduism burning for these four dark centuries. The latest of them पंडित गट्टूलाल—

blind from infancy, was the greatest scholar in वेदान्त of his age, had a wonderful mastery over मीमांसा, न्याय, व्याकरण, अलंकार and all kindred important subjects, was an extempore poet, a शतावधानी, and was the recipient of the title of भारतमार्तण्ड in the holy city of Benares, only about 40 years ago. The reader of these volumes can easily find out for himself the vastness and depth of learning of गोस्वामी श्रीगोपेश्वरजी who lived about a hundred years ago, in all branches of learning—वेद, वेदान्त, पूर्वमीमांसा, व्याकरण, न्याय, अलंकार, etc., who was deeply reverential to his ancestors, and calls himself पूर्णेश, कुलिकृत्य and हरीश्वरज्ञ. None of the critics of the सम्प्रदाय ever read सुबोधिनी or निबन्ध, अणुभाष्य or विद्वन्मण्डन; भाष्यप्रकाश–that balanced criticism of all the available भाष्यs–they never heard of; and of the wonderful रश्मि they never dreamt. They never cared to inquire as to how the best among these महाराजs spent their lives in निरोध (प्रपञ्चविस्मृतिपूर्वकभगवदासक्ति i. e. forgetfulness of the world and devotion to God only), and what their divine experiences were. They denounced one and all in the same strain, attributing to them all concievable vices and no virtue.

Now what is the फल in श्रीवल्लभाचार्य's doctrine ? It is in a nutshell भगवत्प्राकट्य. In पुष्टिप्रवाहमर्यादा he says "भगवानेव हि फलं, स यथाविर्भवेद्भुवि." In निरोधलक्षण he says "क्लिश्यमानान् जनान् दृष्ट्वा कृपायुक्तो यदा भवेत्, तदा सर्वं सदानन्दं हृदिस्थं निर्गतं बहिः". In सन्यासनिर्णय he says "बहिर्चेत् प्रकटः स्वात्मा वह्निवत् प्रविशेद्यदि, तदैव सकलो बन्धो नाशमेति न चान्यथा." His son श्रीविट्ठलेश्वर says

श्रीवल्लभाचार्यमते फलं तत्प्राकट्यं, अत्राव्यभिचारिहेतुः ।
प्रेमैव तस्मिन् नवधोक्तभक्तिः, तत्रोपयोगोऽखिलसाधनानाम् ॥

Not to talk of सूक्तs which are prayers to various manifestations of God, the उपनिषद्s also clearly speak about दर्शन of God in आत्मा वा अरे द्रष्टव्यः, कश्चिद्धीरः प्रत्यगात्मानं ऐक्षत्, यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनुं स्वाम्, सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायाम् परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता. ब्रह्मसूत्रs also are very clear on this point. In आसीनः संभवात् (4-1-7) it is stated उत्कटस्नेहात्मकसाधनस्य संभवात् तदधीनः संसद्मे आसीनो भगवान् भवति. In ध्यानाच्च (4-1-8)...ध्यानादपि हृदि प्रकटः सन्नासीनो भवति. प्रदीपवदावेशाधिकरणे (4-4-4) 'भगवानपि स्वदत्ते मुक्तदेहे जीवेन सह प्रविश्य तं देहं स्वभोगरूपकार्यक्षमं करोति । यतो भर्ता सन्निति भर्तृसूत्रारम्भमत्र भगवतः क्रीडार्थं बहुधा आवेश उक्तः । तेन एवं ज्ञायते क्रीडोपयोगिभगवदावेश एव फलानुभवोपकरणमिति (अधिकरणमाला). गीता also clearly mentions भगवत्प्राकट्यं, *e. g.*, संभवामि युगे युगे, दर्शयामास परमं रूपं, आत्मानं सृजाम्यहम्. And भागवत is the invaluable treasure-house of भगवदवतारs. In this holy land of भरत, there have been so many भक्तs at various times and places with varied experiences about प्रभुप्राकट्य, that for a genuine seeker after truth, the evidence is simply overwhelming. नृसिंहमेहता and मीराबाई in the West, ज्ञानदेव, तुकाराम and रामदास in the South, कृष्णचैतन्य in the East and many others had all experienced प्रभुप्राकट्य in one form or another. The reader may refer to भक्तमाल and such other works in this respect. There are many anecdotes in this पुष्टिसम्प्रदाय about भगवत्साक्षात्कार, and the large mass of कीर्तन literature, yet unpublished, and the lives of भक्तs like सूरदास, कुंभनदास, चतुर्भुजदास, परमानन्ददास and others leave no doubt about भगवत्प्राकट्य right up to the modern times.

That this प्राकट्य is of रसो वै सः and it is not simply an emotion of the mind is clear from the following :—

श्रुतौ हि 'असद्वा इदमग्र आसीत्, ततो वै सदजायत, तदात्मानं स्वयमकुरुत, तस्मात्तत्सुकृतमुच्यत इति यद्वै तत्सुकृतम्, रसो वै सः, रसं ह्येवायं लब्ध्वानन्दी भवती'त्येवं पूर्वसृष्टेरसाधुत्वं, ततः सृष्टयन्तरस्य साधुत्वम्, साधुत्वे स्वात्मरूपत्वरूपं हेतुः, तस्य सुकृतत्वं, सुकृतस्य रसत्वं, रसस्यानन्दरूपता च बोधिता। तत्र यद्युद्बोधकादिप्रनाडी न विवक्षिता स्यात्, आत्मकरणं न वदेत्, यदि वा सर्वसामान्या स्यात्, पूर्वसृष्टेरसाधुत्वमनेवंरूपतां च न वदेत्। यदि च रसस्य मनोविकारत्वं लौकिकत्वं वा विवक्षितं स्यात्, तदाप्यात्मकरणं आनन्दरूपत्वं च न वदेत्। अत उद्बोधकादिवैशिष्ट्यं श्रुतिसिद्धम्। तदेतदुक्तं तत्स्वरूपस्यैव तथात्वादित्यन्तेन। तथा च प्रनाड्यङ्गीकारेपि न भगवद्रूपत्वहानिरित्यर्थः। किञ्च, अनुकृत्यधिकरणे सर्वस्य भगवदनुकारित्वं 'तमेव भान्तमनु भाति विश्व'मिति विषयवाक्येन प्रतिपादितम्, अतः प्रकृतेपि यदि लौकिको रसः प्रतिपाद्यते, तदापि मूलरसानुकारितयैव तत्स्वरूपं सिध्यतीत्येतद्दृष्टान्तेन सोपि रसोनुमीयताम्। अयं लौकिकः परिच्छिन्नो, मात्रोपजीवनश्रुतेः, स त्वपरिच्छिन्नो, भूमत्वात्। तथा च लोकेऽनुकरणमात्रेण तदाभासस्यैव प्राकट्यम्, न तु तस्येति न जीवस्य तत्करणेपि न तद्रससम्बन्धलेशः। शास्त्रप्रणयनं तु दूरतस्तस्यैव परिचायनायेति तत्रैव स्फुटम्। वस्तुतस्तु पाद्मे पातालखण्डे रामाश्वमेधे शेषवात्स्यायनसंवादाद्देवैर्वैष्णवत्वमवगम्यते। एवं भरतस्यापि, नाट्यशास्त्रज्ञातुर्मोक्षकथनात्। किञ्च, आञ्जनेयोपि प्रणेता नाट्यशास्त्रस्य। स च परमभक्तो जनकतनयाप्राणनाथस्य। अतस्तादृशां य एतावान् प्रयासः स न त्रिवर्गोपयोगितया जीवार्थः, अपि तूक्तरीत्या मोक्षसाधनतापर्यन्ततया। किञ्च, वात्स्यायनेन सांप्रयोगिकाधिकरणे 'ऋचां दशतयीनां चतुःषष्टिसंज्ञितत्वादिहापि तदर्थसम्बन्धात्पाञ्चालसम्बन्धाच्च बहुचैरेषा पूजार्थं संज्ञा प्रवर्तितेत्येक' इति सूत्रयता संप्रयोगाङ्गचुम्बनादीनामृगर्थत्वं प्रदर्शितम्। 'सर्वे वेदा यत्पदमामनन्ति' 'वेदैश्च सर्वैरहमेव वेद्य' इति श्रुतिस्मृतिभ्यां वेदस्य भगवत्परत्वं सिद्धम्। एवं सत्यस्य शास्त्रस्य तत्सामानाधिकरण्ये वेदवत् परोक्षवादेन लीलासहितभगवत्प्रतिपादकत्वं युक्तमेव। गान्धर्वस्य सामवेदोपवेदतया च। अत एवमर्थाज्ञातॄणां जीवानां भ्रान्तिरित्येतदाद्यभिसन्धायोक्तं तच्चेत्यादि, बुद्ध्यस्वेत्यन्तम्। तस्मान्न कोपि शङ्कालेश इति दिक्।

(प्रकाश on भा. १०. १०.१)

That this प्राकट्य is of परब्रह्म in पुष्टिमार्ग is clear from the three लीलाs, viz, जृम्भालीला, मृद्भक्षणलीला and दामोदरलीला. We may study various systems of religions from a historical point of view, we may try to fix exact dates of the various teachers and their systems, we may try to penetrate into the mysteries of various rites and ceremonies of differant religions, but what is the use of all these things if they do not lead us into the Presence of God? भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः, क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे. (मुण्डक.)

What are the साधनs for this भगवत्प्राकट्य? It is clear from पराञ्चि खानि that इन्द्रियs are of no use; on the contrary they are a hindrance. Giving up the world and concentration—कीटभ्रमरन्याय—has been generally considered the best method. But it too lacks प्रेम. In सन्यासनिर्णय श्रीवल्लभाचार्य says भावो भावनया सिद्धः साधनं नान्यदिष्यते; in शिक्षाश्लोकs he says भावस्तत्राप्यस्मदीयः सर्वस्वं वैहिकश्च सः, परलोकश्च. In भक्तिवर्धिनी he mentions प्रेम, आसक्ति

and व्यसन. In सिद्धान्तमुक्तावली he says कृष्णसेवा सदा कार्या. सेवा is defined as चेतस्तत्प्रवणं सेवा. This reminds us of मन्मना भव मद्भक्तः in गीता. In Aṇu-Bhâshya तृतीयाध्याय तृतीयपाद, this question is discussed 'यथा साक्षात्कारो भवति, तथा साधनमुपासनारूपं वक्तव्यम् । उपासनायां च क्रियमाणायां धारणाविद्धौ मानसी मूर्तिरभिव्यक्ता भवति । तत उपासनापरिपाके साक्षात्कारः.' In this connection प्रदानवदधिकरण 3.3.16–17, and लिङ्गभूयस्त्वाधिकरण 3.3.43-47, will be specially useful to understand श्रीवल्लभाचार्य's and श्रीविट्ठलेश्वर's view. When once God does become प्रकट, all the इन्द्रियs also get their highest फल, as is clear from अक्षण्वतां फलमिदम् etc. (वेणुगीतसु.)

That ब्रह्म and कृष्ण are not different is clear from the derivation of the word कृष्णः—'कृषिर्भूवाचकः शब्दः णश्च निर्वृतिवाचकः, तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते.' ब्रह्म comes from बृंह् to grow or increase, and the whole जगत् which has grown out of ब्रह्म is nothing but ब्रह्म itself, 'सर्वं खल्विदं ब्रह्म.' It is also called आत्मा from अत् to spread, अहिकुण्डलवत्. ब्रह्म is निःप्रकारकम्, while आत्मा signifies प्रकार. In either sense it is रस, रसो वै सः, and when रस becomes प्रकट, it is फलरूपकृष्ण. All the three words bear the same meaning from different points of view. All the three words ब्रह्म, आत्मा and रस etymologically imply परिणाम and that too in स्वरूप and not of शक्ति or शरीर or माया; therefore it cannot but be अविकृतपरिणाम. परिणाम can only be of something which is साकार, and this आकार is आनन्दमात्रकरपादमुखोदरादि. How this आकार becomes manifest is mentioned in रसनिष्पत्तिप्रकार in वेणुगीत ( भागवत १०. १८. ८ ). That the reader may be able to connect it with the परिशिष्ट of श्रीगोपेश्वरजी, and have a faint vision of his meaning, this is quoted here in full.

चूतप्रवालबर्हस्तबकोत्पलाब्जमालानुपृक्तपरिधानविचित्रवेषौ ।
मध्ये विरेजतुरलं पशुपालगोष्ठ्यां रङ्गे यथा नटवरौ क्व च गायमानौ ॥८॥

केवलं रसरूपमाह चूतेति ।

सु०—चूतानामाम्राणां प्रवालाः कर्णयोः, बर्हस्तबकाः बर्हगुच्छानि शिरसि, उत्पलाब्जानां माला कण्ठे, तैरनुपृक्तं मिलितं परिधानं पीताम्बरादिवस्त्राणि तैर्विचित्रो वेषो ययोः । एतादृशावुभावपि पशुपालगोष्ठ्यां मध्ये विरेजतुः । रसाभिनयेवतारवदेवावेशस्याप्युपयोगाद् द्विवचनम् ।

गुणा माया च वेषार्थमुपयुक्ता भवन्ति हि । अतो रसस्याभिनये चत्वारोर्था निरूपिताः ॥ १ ॥
रसरूपसुगन्धानां प्रतिष्ठा त्रिषु निश्चिता । धर्म्योच्छादनबोधाय मायाप्यत्र निरूप्यते ॥ २ ॥
वस्तुनिर्देशमात्रेण श्रोतॄणां काव्यवद् रसः । रसवत्फलबोधाय प्रथमं पल्लवो मतः ॥ ३ ॥
शास्त्रार्थस्य परिज्ञानाद् भावस्य कलिका भवेत् । ततस्तस्य च वैचित्र्यं पुष्पस्थानमिहोच्यते ॥ ४ ॥
अहोरात्रं वासना स्यात् तत आच्छादनं स्मृतम् । रसोत्पत्त्यर्थमेतावन्निरूपितमितिस्थितिः ॥ ५ ॥
आविर्भावे रसास्वादान् नृत्यं शोभा ततो भवेत् । अतोतिगुप्तो भगवान् रसत्वं प्रतिपद्यते ॥ ६ ॥

विचित्रवेषाविति सर्वरसाभिनिवेशनार्थम् । त्रयाणामन्योन्यगुणप्रधानभावे नव रसा भवन्ति । एवं रसरूपं भगवन्तं निरूप्य तद्रसपोषकौ समाजे वाद्यगीतविशेषौ निरूपयति

मध्ये विरेजतुरिति । पशुपालानां गोष्ठी नात्यन्तं गूढा । तेन रसस्य सुलभत्वं निरूपितम् । मध्ये गीतवाद्ययोः । त्रयाणां समानतैव सर्वोत्तमा । नृत्यस्य तु विशेषः प्रायिक एवेति तदेवोक्तम् । कादाचित्कनिषेधार्थमलमिति । शास्त्रमत्र नियामकं न भविष्यतीत्याशङ्क्याह दृष्टान्तं रङ्गे यथा नटवराविति । रङ्गः शास्त्राधारभूतं स्थानम् । रङ्गमण्डपे यथा नटौ शास्त्रार्थानुसारिणौ भवतः । अलौकिकनाट्यार्थं वरपदम् । एवं राजसभावनृत्यमुक्त्वा सात्त्विकभावनृत्यमाह क्व च गायमानाविति । देशविशेषे हस्ताभिनयमात्रपूर्वकं श्रमरहितं गानं कुरुतः । एतदपि लोकप्रसिद्धम् ॥८॥

टि०—चूतप्रवालेत्यत्र—त्रयाणामन्योन्यगुणप्रधानभाव इति । स्थायिभावव्यभिचारिभावविगाढभावानामित्यर्थः ॥ ८ ॥

प्र०—चूतप्रवालेत्यत्र—वरपदातिरिक्तं पूर्वार्धमनेन विधियत इत्याशयेनाहुश्चूतानामित्यादि । तेन कर्णिकारोपरि पल्लवा अपि स्थापिताः सन्तीति बोध्यम् । वैजयन्ती च कमलानां बोध्या । ननु केवले रसे निरूपणीये 'बर्हापीडं नटवरवपु'रितिश्लोकोक्तवरपदातिरिक्तस्यैकत्वादुभयबोधकद्विवचनस्य किं प्रयोजनमित्यत आह रसाभिनय इत्यादि । अवतारवदिति । यथावतारे भूभारहरणादिना भगवत्प्रियकर्तृत्वेनोपयोगस्तथा रसाभिनये सहस्थितिप्रशंसादिभिः प्रियकर्तृत्वादुपयोग इति तथेत्यर्थः । पल्लवादिनिरूपणप्रयोजनं कारिकाभिराहुर्गुणा माया चेत्यादि । अत्रैवं ज्ञेयम् । 'नाट्यशब्दो रसे मुख्यो रसाभिव्यक्तिकारणम् । चतुर्धाभिनयोपेतं लक्षणावृत्तितो बुधैः । नर्तनं नाट्यमित्युक्त'मिति सङ्गीतरत्नाकरे नाट्यशब्दार्थकथनात् तन्मूलभूतार्षग्रन्थेष्वप्ययमेवार्थ इति ज्ञायते । अत्र रसे योगोप्यस्ति नटितुमभिनेतुं योग्यं नाट्यमिति । अर्हे कृत्यस्य यतो भवनात् । तेन योगरूढः । एवञ्च 'न्यायश्चानेकशब्दत्व'मिति जैमिनीयस्मृत्यैकस्यार्थस्यैकशब्दवाच्यत्वनियमावधारणाद् धर्मविशेषपर्यवसानस्यैव ज्यायस्त्वेन नर्तनाभिव्यङ्ग्यत्ववदङ्ग्यापन्नत्वविशिष्टरसवाचकत्वमिति सिध्यति । नर्तनेपि यदा नटस्य भावः कर्म वा नाट्यमिति योगो विचार्यते तदापि ष्यञो भावे कर्मणि च विधानाद् योगतौल्यं तथापि रससत्तां विना तथा कर्मणः प्रयोक्तुमयुक्तत्वात् तत्प्रयोजको भाव एव मुख्यः । कर्मणि तु सामान्यतः प्रवृत्तः प्रत्ययो योगविशेषवत्तया रसाभिव्यञ्जके तस्मिन् कर्मणि सङ्कोच्यत इति नर्तनेऽर्थे नाट्यशब्दो लक्षणागर्भ एव । एवमुभयथापि नाट्यशब्दविचारे रसस्य नृत्याभिव्यङ्ग्यत्वं सिद्धम् । किञ्च 'नटकथितवाक्यार्थपदार्थाभिनयात्मकं नाट्य'माङ्गिकाभिनयैरेव भावानेव व्यनक्ति यत् तत् नृत्यं मार्गशब्देन प्रसिद्धं नृत्यवेदिनां 'गात्रविक्षेपमात्रं तु सर्वाभिनयवर्जितम् । आङ्गिकोक्तप्रकारेण नृत्तं नृत्तविदो विदु'रिति नर्तनस्य भेदत्रयं तत्रोक्तं तथा 'स त्वत्राभिनयो भवे'दित्युपक्रम्य 'काव्यबद्धं विभावादि व्यञ्जन् योऽर्थो नटे स्थितः । सामाजिकानां जनयन् निर्विघ्नरससंविद'मित्यभिनयं लक्षयित्वा'ङ्गिको वाचिकस्तद्वदाहार्यः सात्त्विकोपरः चतुर्धाभिनयस्तत्राङ्गिकोऽङ्गैः सम्प्रदर्शितः । वाचा विरचितः काव्यनाटकादिस्तु वाचिकः । आहार्यो हारकेयूरकटकादिविभूषणम् । सात्त्विकः सात्त्विकैर्भावैर्भावुकेन विभावित' इति च तत्रोक्तम् । एवं चतुर्धाभिनयमध्ये य आहार्याभिनयो वेषात्मा तदर्थं गुणा रसरूपसुगन्धा माया परिधानस्था 'कनककपिशता' च हि यतो हेतोरुपयुक्ता भवन्त्यतो हेतो रसस्याहार्येऽभिनये निरूपणीये चत्वारः पल्लवादयः परिधानान्ताः पदार्था निरूपिताः । यत एवंप्रयोगे रसस्याभिव्यक्तिः । रसश्च विभावादिभिः प्रकृष्यमाणः स्थायिभावात्मा मूर्तो नालम्बनविभावमन्तरेणाभिव्यक्तुमर्हति । एवं सति तस्मिन् धर्माविर्भावेणैव कैवल्यं त्यजन् नाट्यरूपतां जहातीत्युभयसामञ्जस्याय नटवेषात्मकैराहार्याभिनयैरालम्बनत्वारोपणेनाङ्गिकादिभिस्त्रिभिः सामाजिकानां रससंविज्जननम् । यत्र पुनरालम्बनस्यैव नटत्वं तत्रापि नाट्यदशायां मुख्यानां रसधर्माणामनाविष्कारेण न्यग्भूतैवालम्बनता । तादृशत्वमजानतः प्रत्यारोपिता च । एवं प्रकृते ब्रह्मात्मकस्य रसस्य पूर्वोक्तरीत्या स्वप्रतिष्ठत्वालम्बनत्वयोरविरोधेपि यथा रसत्वं न्यग्भाव्यालम्बनताया एव क्वचित्प्रकटनं तथात्र तां न्यग्भाव्य तामप्रकटीकृत्य नटत्वं प्रकटीकृत्य "रसो वै स" इतिश्रुत्युक्तं हि स्वस्वरूपात्मकं रसं सङ्गीतशास्त्रोक्तप्रणाड्याभिनयतीति तत्र गुणाद्युपयोगस्तेनैते पल्लवादयोऽर्था उक्ता इत्यर्थः । तर्हि गुणा एव निरूप्या न गुणिन इत्यत आहू रसेत्यादि धर्म्याच्छादनबोधायेति । धर्मी रसस्तस्य गुप्ततावोधनाय । तथा च पल्लवादिषु तेषां प्रतिष्ठा निश्चितेति ते निरूपिताः । केवलगुणनिरूपणे तेषामागन्तुकता स्यादिति तथा । उक्तार्थबोधनाय मायापि निरूप्यत इत्यर्थः । ननु रसप्रतिष्ठा चूतस्य फले न तु पल्लव इति नास्योपयोगः कथञ्चिदुपयोगे वा हस्तकेन पल्लवादिरप्यभिनेयो न तु वेषेपि स्थाप्य इत्यत आहुर्वस्तुनिर्देशेत्यादि । नाट्ये हि न रासन आस्वादः किन्तु काव्येन शब्दद्वारैवात्र पल्लवादिवस्तूनां हस्तकनिर्देशेन चाक्षुषद्वारा मानस आस्वादो न तु तदभिव्यञ्जकस्यार्थस्य बोधनमतस्तेन रसवत्फलबोधार्थं प्रथमं पल्लवो मतो विचारितः । तथा च चूतपल्लवेन रसवत्फलकं भावीति चक्षुर्द्वारा बोध्यत इति तेन मानसिकास्वादसिद्धिरिति रसप्रतिष्ठा तत्रापि न दुर्घटेति पल्लव उचित

एव । तथा हृदीत्यस्मिन्नपि टीकाकृता भावसमाधं न तु रसत्वरूपपर्यवसायित्वबोधनमपीत्यसंगतत्वापत्तिरित्यर्थः । भगवान् हि स्वरूपात्मकमेव हि रसमभिनयाश्रिना यत्र स्थापयति, ततः कदापि न गच्छति, किन्तु बीजत्वात् फलं प्रयच्छतीति वस्तुस्थितिः । तथा च भाववतां नाट्यप्रणाल्या प्राप्तरसानामग्रे फलप्राप्तेरवश्यंभावाय प्रथमं पद्यस्यास्योक्तिरिति भावः । ननु भवत्वेतदेवं तथापि रसशास्त्रे हृद्दर्शनादिभिरलक्षहेतुभिर्जनितः प्रमोदात्मा स स्थायिभावस्तत्तद्रसानुकूलदेशकालकलावेषभोगादिसेवनप्रभृतिभिस्तत्तद्धेतुभिः प्रकृष्यमाणः स रस इत्युच्यते, स च मनोविकार एवान्तरस्यानेकरूपश्चानियतश्च, भगवांस्तु न तथा, किञ्च पूर्वश्लोके चरत्वमुपपादितमत्र च नटदृष्टान्ते-नाभिनेतृत्वं तथैव विधियमानश्लोकेऽपि । एवं चालम्बनत्वमभिनेतृत्वं च स्फुटति न तु सर्वरसत्वमतः कथं प्रतिज्ञापूर्तिरित्याकाङ्क्षायामाहुः कारिकायां शास्त्रार्थस्येत्यादि । अयमर्थः । 'रसो वै स' इतिश्रुत्या 'असद्वा इदमग्र आसीदि'त्यादिनोपक्रान्तस्य ब्रह्मण एव रसत्वं बोध्यते । रसशब्दश्च रसनाग्राह्ये गुणे द्रवद्रव्ये सारभूतेऽर्थे आस्वाद्यानन्दजनके च तत्र तत्र प्रसिद्धः । तेषु प्रकृते कोऽर्थो विवक्षित इत्याकाङ्क्षायां 'रस ५ ह्येवायं लब्ध्वानन्दी भवति, को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यादेष ह्येवानन्दयाती'त्यनेन रसस्यानन्दत्वं प्राणधारणप्रयोजकत्वं हृदयाकाशस्थत्वमानन्दजनकत्वं च तत्रैवोच्यते । तेन हृदयस्थः प्राणिनामानन्दजनको य आनन्दः स रस इति सिध्यति । तत्र यद्यप्यानन्दोत्पत्तिरूपस्य कार्यस्य तत्तदवयवेष्वनुभूयमानत्वेनानन्दस्य सर्वशरीरव्यापित्वं तथाप्युक्तश्रुत्या 'स मानसीन आत्मा जनाना' मितिश्रुत्यन्तरेण च मनस्येव तस्य विशेषतः स्थितिरिति निर्णीयते । एवं सति रसशास्त्रप्रणाल्या जायमानो यो मानसो विकारः प्रमोदात्मा स रसात्मनो भगवत एव कार्यभूत 'एष ह्येवानन्दयाती'तिसावधारणश्रुतेस्तथा तदंशभूतश्च 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती-तिश्रुतेः । अत एव च प्रकृष्यमाणे तस्मिन् रसत्वप्रतीतिर्लौकिकानां तथाप्रयोगश्च ब्रह्मादिषु पुरुषपदप्रयोगवद् भाक्तः । न चैवं ब्रह्मानन्दमात्रस्यैव तथात्वात् प्रणाल्यामेव कुतो विशेष इति शङ्क्यम् । रसस्वरूपस्यैव तथात्वात् । न च माना-भावः । लौकिकस्य प्रणाल्यभिव्यङ्ग्यत्वे सिद्धे तद्दृष्टान्तेनालौकिकेऽपि तथानुमातुं शक्यत्वात् । कारणतद्धर्माणामेव कार्येऽभिव्यक्तेः सन्देहनिरासाच्च । न चानित्यत्वापत्तिः । ब्रह्मत्वादेव तन्निरासात् । अत एव न मनोविकारत्वमपि । नाप्यनेकरूपत्वं दोषाय । तस्य प्रणालीकृतत्वेन वास्तविकरूपाबाधकत्वा'दनन्तरूप'मितिश्रुत्या वास्तविकत्वाच्च । तेनेदं सिद्धम् । परं ब्रह्मैव रसशास्त्रोक्तप्रणाल्या हृद्याविर्भूतं सत् स रस इति । तत्र च चिदंशो न्यग्भूत एव । अत एव 'हृविर्भूतापक' इतिश्रुतौ सदानन्दत्वमेवोक्तम् । न च भूसत्तायाः सत्तावाचकत्वात् सत्तानन्द इति भवति न तु सदानन्द इति शङ्क्यम् । तत्सत्ताया आत्मरूपत्वेन धर्मत्वाभावस्य व्याकरणमते सिद्धत्वात् सत एव सिद्धेः । अतः परब्रह्मणस्तथात्वेन प्रणाल्याविर्भूतेऽपि तथात्वमेव ।

ननु भवत्वेवं तथाप्युक्तश्रुतौ ब्रह्मणो रसत्वमुच्यते न तु रसस्य ब्रह्मत्वं, तथा सति बहिराविर्भूतस्य भगवतो रस-त्वाभावात् कथं प्रतिज्ञायाः पूर्तिरिति चेदित्थम् । यत्रेदं वर्ण्यते न तत्र भगवान् बहिःप्रकटः किन्तु हृद्येवेत्युपपादितं 'बर्हापीडे'त्यस्य व्याख्याने । यद्यपि बहिरुदाप्यासक्तिक्रमव्याजेन 'मानसीन' एवेति तत्पूर्तेः । नन्वेवं सति तृप्तिविशेष-रूपत्वाद भगवानिति चेन्न । लोके दूरस्था प्राप्तस्य देशकालपरिच्छिन्नत्वेन तत्र तदभावेऽपि विरहादौ संस्कारप्राब-ल्यादिना तृप्तिनिगमात् व्याप्तिः स्वीक्रियते न तथा प्रकृते । देशकालापरिच्छिन्नत्वात् । किन्त्वनन्यभक्तिजन्यत्वाद् यादृशी सा तथा तत्राविर्भवति । सा च मनोधर्म इति तदभिव्यङ्ग्यत्वेन बहिराविर्भूतस्य मानसीनत्वेन तृप्तित्वाभा-वव्याप्यत्वादिमते तृप्त्यवच्छिन्नविषयावच्छिन्नयोरैक्यव्ययोरेकत्वाभावे बहिःस्थस्य तृप्त्यवच्छिन्नत्वेऽपि तृप्तित्वाभाववत् । नन्वस्त्वेवं तथापि प्रकृतानुरोधाच्छृङ्गारात्मकत्वमेवात्र वक्तव्यं तत्र च परस्परसाकाङ्क्षस्त्रीपुंव्यक्त्यात्मकालम्बनद्वयाधीन-स्थितिकत्वादत्रापि तथात्वमङ्गीकर्तव्यं तच्च भगवतो रसत्वे विरुध्येतैकालम्बनत्वेन रसाभासत्वप्रसञ्जकत्वादिति चेन्न । आलम्बनत्वस्यापि रसत्वात् । 'कामिनां दर्शयन् दैन्य'मित्यस्य टिप्पण्यां 'रसात्मको रसवांश्च भगवा'निति कण्ठरवेणोक्त-त्वात् । न च विरोधः । स्वप्रतिष्ठत्वस्य श्रौतत्वेन सर्वसम्मतत्वात् । यथान्येषां कामेन कामवत्त्वं कामस्य तु स्वत एव तथान्येषां रसेन रसवत्त्वं रसस्य तु स्वत इत्यस्यापि सुवचत्वाच्च तदप्रसङ्गात् । तस्माद् बहिराविर्भूतस्यापि भगवतो रसत्वमबाधितमेव । तथा चैवम्प्रकारस्य शास्त्रार्थस्य श्रुत्यर्थस्य परिज्ञानात् विचारपूर्वकाविष्कारात् भावस्य कलिका स्थायिभावात्मिका विचारवती भवेत् । बीजाङ्कुरादिकं तु पूर्वमनुग्रहात्मकं सिद्धमेवासीदिति भावः । ततस्तस्य स्थायि-भावस्य वैचित्र्यं भावादि-व्यभिचारिभावादि-कृतं भवेत् । तदिहास्मिन् श्लोके पुष्पस्थानमुच्यते । 'विचित्रवेषा'-मित्यनेन कथ्यते । ततोऽहोरात्रं वासना तज्ज्ञानरूपा स्यात् । तथा सति प्रसिद्धस्य रसत्वादीनेतत्याच्छादनं विवरणे । अन्यथा प्रयोजनाभावात् परिकरं न कुर्युः । इममर्थं संगृह्य साधकशिक्षार्थमाहू रसेत्यादि । एतावदर्ध-श्लोकोक्तम् । सिद्धदशायां फलाद्युदयप्रकारमुत्तरार्धेन बोधयन्तीत्याशयेनाहुरताविरित्यादि । तथा च तदा मानसीनस्य तद्भक्तिर्योऽसौ स्वधर्ममात्रकं करोतीत्यर्थः । सिद्धमाहुरत इत्यादि । तथा चोक्तप्रणाल्याऽन्तराविर्भूतो रसो बहिराविर्भू-

तस्तु धर्मसाहित्यात् तदुद्बोधकत्वाच्च साधनमतः स्थानभेदेनोभयमप्यविरुद्धमितिभावः। श्रयाजामित्यादेरर्थंस्त्रिष्ण्यामाहुः स्थायीत्यादि। तदेवोक्तमिति गोष्ठीमध्ये विराजमानेवोक्तमित्यर्थः ॥ ८ ॥

This will also explain the meaning of 'स्त्रीभावो गूढः पुष्टिमार्गे तत्त्वमिति कृष्णपदार्थः कचिद्विदितः'. In order to realise कृष्णरस, स्त्रीभाव is thus essential and hence the remark of मीरा to जीवगोस्वामी that he was to be congratulated (!) in remembering his पुंभाव in वृन्दावन.

It will also help the reader in understanding the significance of the following श्लोक of श्रीविठ्ठलेशः—

> भावैरङ्कुरितं महीमृगदृशामाकल्पमासिञ्चितैः
> प्रेम्णा कन्दलितं मनोरथमयैः शाखाशतैः संभृतम्।
> लौल्यैः पल्लवितं मुदा कुसुमितं प्रत्याशया पुष्पितं
> लीलाभिः फलितं भजे व्रजवनीशृङ्गारकल्पद्रुमम् ॥

A person does not become fit to experience these various stages of love emanating from रसो वै सः ( उद्बोधकं तु हरिणा ), unless the mind is free of all burden and the heart is open to these higher Influences. He thus gets स्वरूपयोग्यता, but even then the pouring in of the Influences depends only on वरण, as is stated in यमेवैष वृणुते तेन लभ्यः। Mental repose is स्थितप्रज्ञस्थिति, described in the second अध्याय of गीता, on attainment of which a man has simply to work as an instrument of परमात्मन्, or a servant of God, and the best servants are those who never forget their Master and His commands for a single moment ( मन्मना भव ). These गोपीजनs were always गोविन्द एव निखिलात्मनि रूढभावाः, and hence their दास्य was best, and therefore they were परं तनुभृतः। This also answers the question as to who are the best of human beings.

श्रीमद्वेदव्यास puts into the mouth of श्रीउद्धव the following verse as regards व्रजवनिताः।

> एताः परं तनुभृतो भुवि गोपवध्वो
> गोविन्द एव निखिलात्मनि रूढभावाः।
> वाञ्छन्ति यं भवभियो मुनयो वयं च
> किं ब्रह्मजन्मभिरनन्तकथारसस्य ॥ भा. १०-४७-५९.

श्रीमद्वल्लभाचार्य's comments on it are as under:—

तनुभृतश्चेदेता एव, नापि ज्ञानिनो नापि लौकिका नापि भक्ताः, तत्र लौकिकास्तु व्यर्थजीवना एव। न रज्ज्वा बद्धः पाशी भवति, स्वाधीनपाश एव तथा। एवं तनुभृतोपि येषां स्वाधीना तनुः। ज्ञानिनां तु ज्ञानप्राप्तिपर्यन्तमेव साधनत्वेन शरीरोपयोगादग्रे व्यर्थ एव देहः, अनपेक्षितं भारवद् गृह्णन्तीति। भक्ता अपि मौढ्याद्देहमेवात्मानं मन्यमानाः तत्रैव पर्यवसितमतयो बहिर्मुखत्वात्तनुरूपा एव न तु तनुभृतः। कालान्तरे परं सत्फलम्, अस्मदादयस्तु भक्ता अपि प्राप्तज्ञाना अपि मन्दभावं प्राप्ता नोत्कर्षेण तनुभृतः। अतः परमुत्कर्षेण एता एव तनुभृतः। नन्वेतादृश्यः सन्ति तनुभृतः लक्ष्मीप्रभृतयः। तत्राह भुवीति। ननु भुव्यप्युत्कटभक्ताः प्रह्लादादयः सन्त्येव तत्राह गोपवध्व

इति । एतादृशीमवस्थां प्राप्य न कोप्येवंविधो जात इत्याश्चर्यम् । किञ्च । गोविन्दे स्वकीयत्वेन ज्ञाते वस्तुतः अखिलात्मनि एवं रूढभावः, अतो देहस्य स्वाधीनस्यैतदेव फलमिति सर्वात्मत्वेन ज्ञात्वापि निर्दोषपूर्वभावनिष्ठा एव । ननु ज्ञानावस्थोत्तरेति, 'आत्मलाभान्न परं विद्यत' इति, एता भगवता ज्ञाननिष्ठा कृता इति च, वस्तुत एवाग्रे देहस्यानुपयोगात्कथमेषा स्तुतिरिति चेत्तत्राह वाञ्छन्ति यमिति, यं भावं भवाद् भीः येषां ते मुमुक्षवः मुनयो मुक्ताः वयं भक्ताः चकारात्सर्वे एव धर्ममार्गपरा अपि । अवश्यं हि विदेहकैवल्यपर्यन्तं सर्वेषां बहिःसंवेदनास्त्येव, जीवन्मुक्तानां तथा श्रवणात् । तत्र लौकिक एव भावः सर्वेषां जायत इति कालावच्छेदेन जन्मवैयर्थ्यमेव । अन्येषां तु वैयर्थ्यं सिद्धमेव । नारदादीनामपि कदाचित् प्राकृतवद् व्यवस्था । अन्यथा लौकिकसमानकार्यं न स्यात्, प्रह्लादस्यापि राज्यादिकरणात् तथावसीयते । बहिःसंवेदने तु एषैवावस्था सर्वशास्त्रपर्यवसिता नातोन्या कचिदप्यस्तीति अवस्थायां विचार्यमाणायामेता एव तनुभृतः । नन्वेतदपेक्षया ये श्रोत्रिया ब्रह्मविदो ब्राह्मणाः वसिष्ठादयः ते महान्तो भविष्यन्तीत्याशङ्क्याह किं ब्रह्मजन्मभिरिति । ब्रह्मभावापन्नानां जन्मभिः शौक्रसावित्रयाज्ञिकैः किं, न किञ्चित् । यद्यपि बहिःसंवेदने तेषां वेदार्थानुष्ठातृत्वं दीर्घसत्रित्वादिरूपमन्तर्निष्ठतायां तु ब्रह्मपरत्वमिति, तथापि कर्मापेक्षया भक्तिरधिका, कर्म हि प्रपञ्चे स्वास्थ्यं सम्पादयति न तु भक्तिः, यो हि दुष्टं मन्यते स दुष्ट इति निर्धारः । तत्तत्प्रकरणे तत्तत्प्रशंसा तु प्रकरणानुरोधिनी, अतः अनन्तकथायामरसस्य ब्रह्मजन्मभिः कर्मोपयोगिभिरपि न किञ्चित् । ननु तथाप्युत्कर्षहेतुः लोके तद्भवतीति युक्त्या बाधेऽपि प्रसिद्ध्यैव उत्तमफलत्वं पर्यवसानविषया कल्प्यत इति चेत्तत्राह अनन्तकथायां रसयुक्तस्य पूर्वोक्तब्रह्मजन्मभिः न कोपि पुरुषार्थः साधनीयः । ततोप्युत्कृष्टस्यैव साधनदशायां च फलस्य सिद्धत्वात् कर्मापेक्षयापि भक्त्यैव ज्ञाने अधिकोपकारकरणाच्च ॥ ५९ ॥

We praise कालिदास, Shakespeare and other poets, for being able to understand and vividly describe the various fine subtle emotions of the human heart, but so long as these emotions emanate from the senses, they are opposed to the मोक्षमार्ग, because all attachment is to be cut asunder by असङ्गशस्त्र.* But when we learn from उपनिषत्s that God is रस as opposed to लौकिकइन्द्रियजन्यविषय, that रस is अलौकिक and नित्य as opposed to विषय which is अनित्य, सविघ्न, अल्प and घातक, we begin to have a glimpse of "नित्य नौतन नित्यलीला श्रुति न पामे पार" "क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः ।" We can then and then only appreciate रासलीला of श्रीमद्भागवत, जयदेव's गीतगोविन्द, नृसिंहमेहेता's बाललीला, सुरत संग्राम, चातुरी षोडशी, दानलीला, राससहस्रपदी, शृङ्गारमाला, and हींडोलापद, श्रीविट्ठलेश्वर's शृङ्गाररसमण्डन, and poems and कीर्तनs of सूरदास, परमानन्ददास and other अष्टसखाs. Mere imagination and passion-play have no deeper foundation, and hence Plato as well as श्रीमद्वल्लभाचार्य have rightly discarded poetry from their philosophy.

तैत्तिरीय is one of the most important उपनिषत्s as it narrates फल. The reader must carefully study it.† From the four पुरुष–अन्नमय, प्राणमय, मनोमय and विज्ञानमय, it leads us finally to the आनन्दमयपरमात्मन्, and the enjoyment of सर्वान् कामान् with this विपश्चित् ब्रह्मन् is the crowning glory of the soul. This रसरूपता is again described in the तामसप्रमेयप्रकरण, viz., 12 to 18 अध्यायs of श्रीमद्भागवत दशमस्कन्ध. This रसरूपता is

---

*Cf. वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलः । &c.

† तैत्तिरीयोपनिषद् with भाष्य by जयगोपालभट्ट is published by Mr. Teliwala. आनन्दमयाधिकरणभाष्य may also be read with advantage.

again clearly described in the verse मल्लानामशनिः ( १०. ४०. १७. ) where all the ten रसs including the भक्तिरस are mentioned. That कृष्ण Himself is this रसरूपफल and परब्रह्म is clear from the three distinguishing characteristics given in श्रीमद्भागवत viz; जृम्भालीला, मृत्साभक्षणलीला and दामोदरलीला. In the first two, He shows all the ब्रह्माण्डs in His mouth, including the sun, the moon, stars etc., which is shown by no other अवतार, it being peculiar to ब्रह्म only, and in the third, He, in the form of a child, could not be bound by any length of ropes, because they were all within Him, He alone being Immeasurable. Here श्रीवल्लभाचार्य says:—( भागवत १०-९. १३-१९ )

न चान्तर्न बहिर्यस्य न पूर्वं नापि चापरम् ।
पूर्वापरं बहिश्चान्तर्जगतो यो जगच्च यः ॥ १३ ॥
तं मत्वात्मजमव्यक्तं मर्त्यलिङ्गमधोक्षजम् ।
गोपिकोलूखले दाम्ना बबन्ध प्राकृतं यथा ॥ १४ ॥
तद् दाम बध्यमानस्य स्वार्भकस्य कृतागसः ।
द्व्यङ्गुलोनमभूत् तेन सन्दधेन्यच्च गोपिका ॥ १५ ॥
यदासीत् तदपि न्यूनं तेनान्यदपि सन्दधे ।
तदपि द्व्यङ्गुलं न्यूनं यद्यदादत्त बन्धनम् ॥ १६ ॥
एवं स्वगेहदामानि यशोदा सन्दधत्यपि ।
गोपीनां सुस्मयन्तीनां स्मयन्ती विस्मिताभवत् ॥ १७ ॥
स्वमातुः स्विन्नगात्राया विस्रस्तकबरस्रजः ।
दृष्ट्वा परिश्रमं कृष्णः कृपयासीत् स्वबन्धने ॥ १८ ॥
एवं प्रदर्शिता ह्यङ्ग हरिणा भक्तवश्यता ।
स्ववशेनापि कृष्णेन यस्येदं सेश्वरं वशे ॥ १९ ॥

शुकोपि तां दूषयन्निव बन्धाभावे परमार्थतो युक्तिं प्रदर्शयति न चान्तरिति, भगवति बन्धाभावो द्वेधापि भवति, भगवत्स्वरूपविचारेण बन्धनसाधनस्वरूपविचारेण च, तत्रादौ स्वरूपं विचारयति । बन्धनं हि कार्यद्वयं सम्पादयति बहिर्निरोधमन्तस्तापं च, तत् तस्यैव भवति यस्यान्तर्बहिर्भावो भवति, भगवांस्तु पूर्णः सर्वं व्याप्य तिष्ठतीति न कस्मादपि भगवानन्तर्भवति, निरवयवत्वाच्च न कोपि तस्य परिच्छेदकः, चकारादन्तःशब्दव्यवहार्यं आकाशोतः स शब्दोपि भगवति न प्रवर्तत इत्युक्तम् । अन्तर्यामिब्राह्मणे सर्वान्तरो भगवानुक्तो न तु भगवतोन्तरं कश्चित् । सर्वान्तरः केनान्तर्भावमापद्येत ? आधारत्वे तु नान्तरभावना, रूपादिषु तथोपलब्धेः । न हि फलस्यान्तःस्वरूपं तिष्ठति बीजवत्, तथा सत्यदृश्यः स्यात्, अतो न केनाप्यंशेन भगवतोन्तरमस्ति, नापि बहिः, व्यापकत्वात्, बहिःस्थित एवाकाशोन्तस्तिष्ठतीति नाकाशाद् बहिरस्ति किञ्चित् । अनेनान्तःकरणे खेदो बहिरावरणं वा नास्तीत्युक्तं । किञ्च बन्धनं हि वेष्टनात्मकं, तद् दिग्विभागे सति भवति, निरवयवस्यानिरूप्यस्य स्वत एव भासमानस्य ज्ञातृज्ञेयभावतिरोधायकस्य केनाप्यंशेन पूर्वभावोपरभावो वा न सम्भवति । अनेनैव दक्षिणोत्तरभावा अपि परिहृताः । सर्वत्र स्थितः पूर्वापरभावमेव न मन्यते, अतः स्वरूपकृता वा दिकृता वान्तरादिधर्मा भगवति न सन्तीति न बन्धसम्भावना । साधनस्वरूपविचारेणापि न भवतीत्याह पूर्वापरमिति रज्ज्वादीनां पूर्वभागे परभागे चायमेव वर्तते, तत्र यशोदैव प्रमाणं, भगवति सर्वं दृश्यती यतः,

सर्वस्यापि भगवान् बहिरपि भवति व्यापकत्वात्, अन्तरपि भवति सर्वान्तरत्वात्, चकारात् स्वरूपमपि । किञ्च जगतो य एतावान्, यतो जायते गच्छति चेति जगत्, यदि भगवानेतावन्न स्यात् कथं जगद् भवेत्? पूर्वभावाभावे न भवेत् परभावाभावे न गच्छेत्, जगतश्चेद् भगवान् बहिर्न भवेद् जगति गच्छति गच्छेद्, यदि सर्वान्तरो न भवेज् जगदिति विशिष्टं सर्वप्रतीतिसिद्धं न भवेत्, अन्तःस्थितभगवद्धर्मैरेव जगतो विवक्षितधर्मवत्त्वात् । किञ्च यो जगत्, न हि स्वात्मना स्वयं बद्धो भवति, तथा सति बन्धकानां वैयर्थ्यापत्तेः । किञ्च जगन्मयोयं सर्वमेव जगद् व्याप्य तिष्ठति, एतदाज्ञयैव जगत् कार्यं करोति, ततः कथमयं स्वबन्धने जगत् प्रेरयेत्? अतो न केनापि प्रकारेण भगवतो बन्धनमस्तीति निश्चिन्ता भक्ताः ॥ १३ ॥ तादृशं योन्यथा विचारयति स निष्फलप्रयासो भवतीति तां दूषयन्निव तस्याप्यज्ञानमाह तमिति, तं पुराणपुरुषोत्तममात्मजं स्वशरीराज्जातं मत्वा दाम्ना बबन्धेतिसम्बन्धः । देहस्तु प्राकृतस्तस्या इति तज्जातः सुतरां प्राकृतो भवति । ननु कचिन् महान्तोपि पुत्रा जायन्ते देवादयोपि ततो लोके कारणवैलक्षण्यस्यापि दृष्टत्वात् कथमात्मजत्वे तथा कर्तुं शक्यत इति चेत् तत्राहाव्यक्तमिति, न केनाप्यंशेन व्यक्तं, ये हि महान्तो भवन्ति ते स्वधर्मान् प्रकटीकुर्वन्ति यथा भरतादयः, भगवांस्तु तथा न करोतीति प्राकृतबुद्धिस्तेषां दृढा, मध्यमावस्थानामेव तथा करणं न तु परमकाष्ठां गतस्य । किञ्च यदि गुप्त एव संस्तूष्णीं तिष्ठेत् तथापि सन्देहः स्यादन्यवाक्येन वा माहात्म्यं जानीयुः, प्रत्युत भगवान् विपरीतधर्मान् बोधयत्यतः कथं प्रतीतिरित्याह मर्त्यलिङ्गमिति, मर्त्यस्यात्यन्तप्राकृतस्य लिङ्गानि यस्मिन्निति, तथैव स्वरूपं गुणांश्चेष्टां च प्रदर्शयतीत्यर्थः । ननु तथाप्यत्यन्ताभिज्ञा यथा नटं परिचिन्वन्ति तथा सर्वविलक्षणानन्तगुणवत्त्वादानन्दमयत्वाच्च कथं न ज्ञायत इत्याशङ्क्याहाधोक्षजमिति, अधोक्षजं ज्ञानं यस्मादिति, न हि भगवान् गुणा वा कस्यचिदपि चक्षुर्गोचरा भवन्ति, इच्छा तु नास्तीत्यवगम्यते विरुद्धप्रदर्शनात् । किञ्चेयं च यशोदा गोपिकातिप्राकृतरूपा, अतोनभिज्ञा कथं जानीयात्? उलूखलोपरि पादं दत्त्वा भगवान् क्रीडति, अग्रेऽपि नाभिर्भवति, अतो भगवान् गोकुलस्थितमुलूखलं स्वाश्रयत्वेन ज्ञापयितुमत्र बन्धनं कारितवान् गोपिकायास्तु बुद्धिर्यथान्यत्र न गच्छतीति । दाम पशूनां बन्धकं, ननूलूखलदामहस्ताधिष्ठितदेवानां कथं तूष्णीम्भावः? तत्राह प्राकृतं यथेति, तेषामपि बुद्धिर्भगवता तथा सम्पादितेति ॥ १४ ॥ अयं देहाकारेण भासमान एव भगवान् सच्चिदानन्दरूप इति गुणोपसंहारन्यायेन “न चान्तर्न बहिर्यस्य” इत्यादिधर्मा अस्यैवेति ज्ञापयितुं बन्धनेप्युपायं वदन् भगवान् स्वामिबद्धो जात इत्याह तद्दामेति, भगवता स्वस्मिन् दोषद्वयं प्रदर्शितं तत्पुत्रत्वमपराधश्च, तदा रज्जुरन्तर्बहिःस्थितं भगवन्तं तिरोहितं मत्वा वेष्टनं कृतवती स्वयं बहिःस्थितान्तःस्थितस्य भगवतः, तदाह तद्दाम बध्यमानस्येति, अन्यथा बहिरपि रज्जुर्न भवेद् वेष्टकमपि न भवेत् । तथापि परितो वेष्टनरूपा न जाता, पूर्वापरयोर्भगवत एव सत्त्वात्, अतो द्व्यङ्गुलं न्यूना जाता । लोकपरिमाणे प्रथमपरिमाणमङ्गुलिः, तत्र प्रथमातिक्रमे कारणाभावादल्पवैलक्षण्ये महतो योजनायामाश्चर्यमपि भवतीति द्व्यङ्गुलोनमेवाभूत् । रज्ज्वाद्यन्तयोर्यो भगवान् स एवायं क्रोडीकृतः, न तु ततः केनापि धर्मेण भिन्न इति ज्ञापयितुमेवमाह व्यापकत्वस्य दर्शनार्थमेव तिरोभावाद् रज्जुस्थूलतायामपि नोदरस्थौल्यं, प्रतिबिम्बादौ तथोपलब्धेः, अतो वैलक्षण्याज्ञानात् तेनान्यदपि दाम तावत्प्रमाणकं सन्दधे योजितवती । चकाराद् विसदृशमपि ततोपि स्थूलम् । नन्वङ्गुलद्वये न्यूने किमित्येतावद् योजितवती?

तत्राह **गोपिकेति**, मौढ्यं तस्या अनुवर्तत इति ॥ १५ ॥ तत किमभूदित्याशङ्कायामाह **यदासीदिति**, उभयोः सम्बन्धे पुनः सैकैव रज्जुर्जाता, तदाह **यदासीदिति**, उभयोः सम्बन्धे यदेकमासीदित्यर्थः, **तदपि** पूर्वोक्तन्यायेनैव **न्यूनमासीद् द्व्यङ्गुलं तेनापि** विशिष्टेन पुनरन्यत् **सन्दधे** तत् तृतीयं, **तदपि द्व्यङ्गुलमेव** न्यूनं, "त्रिवृत्त्या हि देवा" इति, **भगवतो जगदाद्यन्तःस्थितिर्वारत्रयं प्रदर्शिता**। मानुषभावं ततोपि बहुवारं कृतवतीत्यनुवदति **यद्यदाददत्त बन्धनमिति**, यद्यदेव योजनार्थं गृहीतवती तत्तदेव द्व्यङ्गुलेनमभूत् ॥ १६ ॥ सर्वा एव गोप्योङ्गणमध्ये तथा करणाद् द्रष्टुमागताः, ता अद्यापि तथा न निरुद्धा इति तदा **स्मयन्त्यो** जाता गर्विष्ठाः सन्मुखा वा स्वस्यापि भुजबन्धनादिकं भावयिष्यन्त्यः **सुस्मयन्त्यो** जाताः। गृहस्थसर्वदामव्ययीकरणेपि न बन्धनं निवृत्तमित्याहैवमिति पूर्वोक्तन्यायेन सर्वाण्येव **दामानि** योजितवती, यतो **यशोदा यशो ददाति** धति वा, **सन्दधत्यपि** द्व्यङ्गुलन्यूनभावाद् **विस्मिताभवदिति** सम्बन्धः। **यशोदागृह एव भगवता पुत्रत्वमपराधश्च दर्शित इति तद्गृहदामान्येवान्तर्बहिर्भगवत्तिरोभावात् सम्बद्धानि न तु गेहान्तरस्थितानि, अन्यासां तु तदर्थप्रवृत्तिरेव नास्ति, अन्तर्बहिस्तिरोधानाभावात्, रज्जूनामानयनं यशोदाकर्तृकमेव, न हि तादृश्या अन्यः सहायं कर्तुमर्हति**। पूर्वं तु वारद्वयत्रययोजनायां रोषे गते **स्मयन्ती** जाता, ततोपि बहुवारयोजनायां **विस्मिता चाभवत्**, आश्चर्यं प्राप्तवती, ततो रज्जूनामन्वेषणार्थं निर्बन्धेन यत्नं कृतवती ॥१७॥ ततः सामर्थ्याभावे गोपिकानां समक्षं परमलज्जां प्राप्य भग्नमानससङ्कल्पा **मृतप्रायासीत्**। **तदा भगवान् परमकृपालुस्तादृशदुष्टेष्वपि सद् बुद्ध्यायुक्तमपि कृतवानित्याह स्वमातुरिति**, ततो भगवान् **कृपया स्वबन्धन आसीदिति** सम्बन्धः। तत्र कारणत्रयमाह **स्वमातुः खिन्नगात्राया विस्रस्तकबरस्रज** इति। मातुर्हि परितोषः कर्तव्यः, "मातृदेवो भव" "एभ्यो माता गरीयसी"ति वाक्यात्। नापि तस्या अपत्यान्तरमस्ति यो ह्युपस्थितं दुःखं निवारयेत् यत इयं स्वस्यैव मातातो **मातृत्वं** ख्यापयित्वा तस्या दुःखमसहमानेन तथा कृतम्। किञ्च गोकुलवासिनां खेददूरीकरणार्थमागतो भगवान् स कथं **खिन्नगात्रायाः** सर्वाङ्गे जातखेदाया न **परिश्रमं** दूरीकुर्यात्? किञ्च गोकुलवासिनां सर्वसौभाग्यदानार्थमागतः स कथं **विस्रस्ताः कबरात्** केशपाशात् **स्रजो** यस्यास्तादृशीं पश्येत्? अनेन सर्वाभरणानामेव तिरोभावः सूचितः। एवमेतादृश्याः **परिश्रमं दृष्ट्वेत**-स्ततः पर्यटनं खेदः प्रखेदो मुखशोषो महती च ग्लानिरित्यादिः **परि**शब्दार्थः। तत्रापि भगवान् **कृष्णः** सदानन्दोननुभूतदुःखो दुःखितानामसमक्षः परदुःखमपि न पश्यति तदपूर्वं यशोदादुःखं **दृष्ट्वा कृपया** व्याप्तो मात्रर्थे खिन्नगात्रार्थे स्रगभावार्थे च **स्वस्यैव स्वयं बन्धकरूपगुणाङ्गुलत्रयभूतो जातः। द्वाभ्यां पूरितमङ्गुलमात्रं च बन्धनं जातं, तदा स्वस्यैव स्वयमेव बन्धने जात आसीत्**, प्रकरणाद् गृहीत इत्यवक्तव्यत्वान्नोक्तम् ॥ १८ ॥ ननु किमर्थं भगवानेतावत् कृत्वा बन्धनरूपो जात इति चेत् तत्राहैवमिति, **एवमपकारिणि लोके स्वकीयत्वमात्राभिमानेनाप्येतावतीमभूतपूर्वां कृपां करोतीति स्वस्य भक्तवश्यता प्रदर्शिता**। प्रदर्शनस्यापि प्रयोजनमाह **हरिणेति**, स हि सर्वदुःखहर्ता तत्त्वसिद्ध्यर्थमसम्बन्धेन दुःखहन्तृत्वेतिप्रसङ्गात् संसारविलयः स्यादिति **सम्बन्धार्थं** कृपालुतां प्रदर्शयति, **कृपा च सर्वधर्मधर्मिभ्यो बलिष्ठेति वक्तुं भक्तवश्यता शब्देनैवोक्ता**। ननु भक्त्या चेद् धर्मधर्मिणामुपमर्दः क्रियते तदा स्वरूपस्य प्रच्युतत्वात् फलाभावात् प्रदर्शनमपि व्यर्थं स्यादित्याशङ्क्याह **स्ववशेनापीति**, स हि **स्ववश** एव न केनाप्युपमर्दः, अनेन फलसाधकत्वमुक्तम्। फलरूपत्वमाह **कृष्णेनेति**, नन्वेवं कृतेन्यो

महान् ब्रह्मादिर्न मंस्यते ततो माहात्म्यस्य न्यूनभावान्न तथा फलत्वमित्याशङ्क्याह यस्येदं सेश्वरं वशा इति, तत्तदधिष्ठातृदेवतासहितं सर्वं जगद् यस्य वशो, अतो नान्यथाभावनं केनचिदपि कर्तुं शक्यमिति भावः ॥ १९ ॥

Thus the aim of श्रीवल्लभाचार्य is to take the soul into the Presence of God, and to bring back the आनन्द which is तिरोभूत in जीव. For this, जीव has to forget the जगत् in which he is placed and remember his source ब्रह्म or कृष्ण—प्रपञ्चविस्मृतिपूर्वकभगवदासक्ति. This can be achieved by कृष्णसेवा which must be मानसी, the steps leading to मानसी being तनुजा and वित्तजा सेवा. This he has to do अव्यावृत्त, because his body is supported by कृष्ण, who has promised 'योगक्षेमं वहाम्यहम्'. In order that he may get the true फल of his सेवा, he must be free from उद्वेग, प्रतिबन्ध and लौकिकभोग. It is thus that सेवा becomes आधिदैविकी, and he realises कृष्णसाक्षात्कार. He realises also that मोक्षोपि सर्गः, the whole लीलासृष्टि he gets in directcommunion with, and following in the footsteps of 'एताः परं तनुभृतो भुवि गोपवध्वो गोविन्द एव निखिलात्मनि रूढभावाः' he becomes a part and parcel of the रसरूपपरब्रह्म and eternally enjoys indescribable bliss with Him.

Let us hope these stray notes will guide the reader in understanding to a certain extent पुष्टिमार्ग, in which भगवान् Himself is both साधन and फल, and will lead him to an appreciation of the परिशिष्ट. According to the विस्फुलिंग श्रुति, जीव is the अंश of ब्रह्मन्, and it is clear that यो यदंशः स तं भजेत्. This भजनानन्द begins after उद्धार from ब्रह्मानन्द and is the Eternal Sport of the मुक्त soul with परब्रह्मन्, which is आनन्दमय. These souls also are specially elected for His सेवा:—

तस्माज्जीवाः पुष्टिमार्गे भिन्ना एव न संशयः ।
भगवद्रूपसेवार्थं तत्सृष्टिर्नान्यथा भवेत् ॥ १२ ॥
स्वरूपेणावतारेण लिङ्गेन च गुणेन च ।
तारतम्यं न स्वरूपे देहे वा तत् क्रियासु वा ॥ १३ ॥
तथापि यावता कार्यं तावत्तस्य करोति हि । ( पुष्टिप्रवाहमर्यादा ).

In this सेवा he gets अलौकिकसामर्थ्य. He becomes भोक्ता, while परब्रह्म becomes गौण—सोऽश्नुते सह ब्रह्मणा, which idea itself is so very enchanting, and in संयोग and विप्रयोग, in one of the ten stages of रसशास्त्र, going through various अनुभावs and संचारिभावs, he is always in रससमुद्र, सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता.

Though we have given here very long quotations, we are aware that they are quite inadequate to give a clear idea of पुष्टिमार्ग, but if the reader is able to get a glimpse of what these great religious teachers mean to say, and if he is inclined t think and inquire and work on these lines, we have given him an idea of almost all the sources, and in course of time, we may except to see a complete treatise published on the subject.

We again express our gratefulness to God for giving us strength to complete this volume, and with feelings of joy, we offer this fruit of our labour of love at the Lotus Feet of Lord Shri Krishna.

ज्येष्ठाभिषेकः }
१९८५. }

**Dhirajlal Vrajdas Sanklia.**
**Jamnadas Kanji Morparia.**
**Hiralal Mooljee.**
**G. P. Merchant.**
**Purshottam Kanji Morparia.**

# परिशिष्टम् ।

**श्रीगोपेश्वरजिद्भिरष्टसप्ततिपत्राणि भावनात्रयादिकं संकलय्य रश्मौ शोधपत्रेषु निवेशितानि, अनुपलब्धपत्रसप्तादृते तान्यत्र मुद्र्यन्ते।**

**प्रतिमादिष्वावाहनेन सन्निहिते विभूतिरूपे तद्भावनं पूजामार्गे । भक्तिमार्गे तु भक्त्या तत्र प्रकटे तथा ।( भाष्यम् । अ० ४ पा० ३ अ० ४ सू० १६ )।**

यथा पूर्वकाण्डतात्पर्यं ब्रह्मणीत्यज्ञात्वा कर्मण्येव तात्पर्यमवधार्य तात्पर्यभ्रमेण यजतां स्वर्गाद्यनन्तरं पुनरावृत्तिः, तथात्रापि प्रतीकालम्बनानां तात्पर्यभ्रमेण तथोपासनात् तत्तल्लोकभोगोत्तरमावृत्तिः । * अवतारयन्ति एवं ज्ञानेत्यादि । * आवाहनेन सन्निधानं च 'अप्स्वग्नौ हृदये सूर्ये' इत्याद्युक्तस्य नित्यसन्निधानस्याप्युपलक्षकम् । तथा च प्रतिमादिष्वपि शास्त्रप्रामाण्यात् कथञ्चन तत्तद्रूपसन्निधानमेव तत्तत्फलदानादिप्रयोजकं, न तु बुद्धिमात्रम् । ( प्रकाशः ) ।

**अप्रतीकालम्बनान् तथा चेत्यादि** । षडङ्गवेदस्य ज्ञेयत्वेन छन्दोवत्सूत्राणि भवन्तीत्यभियुक्तोक्तेः सूत्रेष्वपि षडङ्गेनाभिधेयनिर्णयादप्रतिकूलस्मरणालम्बनानित्यर्थो भवति, पुराणमते तु वक्ष्यमाणगारुडवाक्याद् देवतादीनित्यर्थो भवति । तथा च श्रौते मते प्रतिकूलत्वं भ्रमविषयत्वमतस्मिन् तत्त्वं तेनोप समीपे स्थित्वा यथायोग्यान्तर्गतस्मरणस्य करणमित्यर्थः । **पूर्वकाण्डेत्यादि** । भक्तेस्तात्पर्यविषयत्वस्य पुरस्तादुक्तत्वेन तद्विषयस्यापि तात्पर्यविषयत्वम्, 'धर्मो यस्यां मदात्मकः' इत्येकादशस्कन्धात् । अभिधा तु हीदमित्थतया धर्मेषु सृष्ट्यादिकर्तृत्वेषु 'ज्ञानशक्तिक्रियाशक्ती सन्दिह्येते परस्थिते' इति भाष्यात्, न मदात्मके धर्मे इति, तथा च 'वेदार्थो रामकृष्णयो'रिति श्रुतेः रामकृष्णसम्बन्धी सृष्ट्यादिकर्तृत्वादिर्वेदार्थ इत्यर्थः । सुबोधिन्युक्तषड्भगेष्वपि शक्तिः । **अवतारयन्तीति** । न्यूनतारूपनिग्रहस्थानरूपदोषाभावाय तथेत्यर्थः । **अप्स्वग्नावित्यादि** । इदं वाक्यं स्मृत्यर्थसारे विष्णोः, 'अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च । शालिग्रामे च चक्राङ्के परे मुद्रासु देवताः । नित्यं सन्ति हिरण्ये च ब्राह्मणेषु च गोषु च' इति ।

**तत्तद्रूपेत्यादि** । अत्र समासः श्रीप्रभूणां श्रीमद्गोपीनाथजितां व्रजराजजितां वा श्लोकानां ग्रन्थे प्रभुध्यानपद्यावतारसेवकदेवीभाग्याभिनन्दनपद्यभजनानन्दानुभवप्रतिबन्धकत्वभातकर्मपरित्यागवत्स्नानसन्ध्याजपहोमब्रह्मयज्ञतर्पणाभ्यवहारपानजीवनप्रकारः, ततः श्रीकृष्णसेवार्थस्नानालौकिकभवनजपनामप्रशंसाप्रातःकृष्णनमनसन्ध्याहोमब्रह्मयज्ञगौणकालिकलौकिकवैदिककर्माभ्यवहारपानतत्फलस्वोच्छिष्टदानविधितद्ग्रहणप्रतिमाभावनास्वरूपवर्णनशृङ्गारस्वरूपवर्णनोत्सवभावनासेवाविधिसेवाश्लोकपञ्चामृतश्लोकसम्बुद्धिपूर्वकनिमन्त्रणयमुनाजिच्छरणमार्गत्रयोदशश्लोकनिरूपके भक्तिमार्गीयरूपसन्निधानस्य फलदानादेश्च । तथा हि । तदर्थं पूर्वं व्यसनरूपभक्तेः **भक्तिमार्गे तु भक्त्या तत्र प्रकट** इति वक्ष्यमाणभाष्यात्सन्निधानकारणीभूताया जन्या विविधा भावा निरूप्यन्ते गोस्वामिभिः **सौन्दर्यमित्यादिना** ।

**सौन्दर्यं निजहृद्गतं प्रकटितं स्त्रीगूढभावात्मकं पुंरूपञ्च पुनस्तदन्तरगतं प्रावीविशत्स्वप्रिये ॥**
**संश्लिष्टावुभयोर्बभौ रसमयः कृष्णो हि तत्साक्षिकं रूपं तत्त्रितयात्मकं परममिध्येयं सदा वल्लभम् ॥१॥**

यद्वल्लभाष्टकादौ रूपं निरूपितं तदेव बुद्धिप्रवेशसौकर्यायात्रोपनिबद्ध्य निरूपितं, 'मद्भक्तपूजाभ्यधिका', 'आचार्यं मां विजानीयात्', 'आचार्यवान् पुरुषो वेद' इत्यादिवाक्येभ्यः । आदौ

---

१ 'अष्टसप्ततिपत्राणि शोधितानि । ब्रह्मनिरूपणमदूषणीयं केनापि' इति ग्रन्थप्रणेतुराज्ञा श्रीहस्ताक्षरेण लिखितास्ति ।

वस्तुनिर्देशात्मकमङ्गलार्थमत्र पुष्टिरूपं स्वयं ज्योतीरूपं ध्यानविषयत्वेनोक्तं भविष्यति । **परं** विशेष्यम् । एतट्टीकायामपि ज्ञेयम् । **परमभिध्येयमिति परं** विशेष्यम् । कथंभूतं परं **तत्त्रितयात्मकमुभयं** साक्षिकं रूपं चेति त्रितयात्मकम् । कथंभूतं साक्षिकं रूपं **वल्लभं** अत्यन्तानुग्रहभाजनरूपम् । वल्लेनाज्ञान-संवरणेन भातीति तं वल्लभम् । सदा वल्लभं नाम यस्येति वा । 'वाचारम्भणं विकारो नामधेय'मित्यन्यत्रेति ज्ञापनाय । कथंभूतं तदुभयं **रसमयो बभौ हीति** । कस्यां सत्यामिति चेन्न; **उभयोः संसृष्टौ** सत्याम् । कथं रसमयत्वमित्यत आहुः **कृष्ण इति** । कृष्णो हि **प्रावीविशत्** । किम् । 'तदेव कदाचित्पर-मसौन्दर्यं स्वगतं (प्रकटं) करिष्यामीति साकारं प्रादुर्भूतं सच्छ्रीकृष्ण' इत्यादिनिबन्धाद्युक्तदिशा साक्षात्पु-ष्टिरसामृतप्रेप्सुव्रजवररत्नकदम्बेषु स्वलावण्यामृतदित्सयानिर्वचनीयानन्दरसमयः श्रीकृष्णः प्रादुर्बभूवेति **सौन्दर्यम्** । कथंभूतं सौन्दर्यम्, **निजस्य** स्वस्य **हृद्गतं** मनोगतं, पुनः कथंभूतं, **स्त्रीपुंभावा-त्मकम्** । अस्ति भावद्वयं भगवति, पुम्भावः स्त्रीभावश्चेति । एवमेव श्रीमुख्यस्वामिन्यामपि भावद्वयम् । तदुक्तं 'यथा हि सर्वभावात्मा कृष्णः सापि च तादृशी' इति श्रीहरिरायैः । ब्रह्मत्वे सर्वभावात्मत्वं 'सत्यं ज्ञानमनन्तमानन्दं ब्रह्म' 'सत्यं विज्ञानमानन्दं ब्रह्मेति' श्रुतिभ्याम् । यद्यपि द्वितीया श्रीयमुनाजित्तत्त्वपरा तथापि तत्पौराणं मतं, श्रौते मते ब्रह्मानन्दत्वं यत्र तत्र श्रुतिप्रवृत्तिः । पुनः कथंभूतं **प्रकटितं**, रसाभासप्रसक्तिः पुंद्वये स्त्रीद्वये चात उभाभ्यां पृथक् स्थितं रूपद्वयं प्रकटितं स्वेच्छया । तद्भावद्वयं श्रीमदाचार्यवर्यस्वरूपम् । **तृतीयं** साक्षिकं रूपं अनुभवितृ । तथा च 'द्वौ सुपर्णौ भवत' इति गोपालतापनीय उक्तौ तावेतौ भवतः[1] । कथंभूतं पुंरूपम् । **चः** समुच्चये । **पुनस्तदन्तरगतं** स्वामि-न्यन्तरगतं भगवद्रूपं स्त्रियाः पूर्वमुक्तत्वात् । क्वेति चेन्न, **स्वप्रिये** । कदेति चेन्न, **सदा** । तादृशं रूपं **ध्येयम्** । 'अग्निश्चकार तत्त्वार्थदीपं भागवते मह'दित्यग्निरूपभावा भक्तिजन्या भक्तिः स्मरणादिरूपा अत्र । अत्र विरहाग्निः स्वयंज्योतीरूपः स्वप्रिये यद्दत्सत्यज्ञानात्मकं तत्रानन्तमानन्दं ब्रह्म पूर्णानन्दरूपं स्वगतभक्तविरहशामकं स्वगतसंयोगश्रीमदाचार्यगतविप्रयोगात्मकं यच्छ्रीकृष्णः प्राविविशत्तत्र विरहोग्निः[3] ज्योतिर्रग्निः हृद्दर्शनाग्निः पूर्णानन्दोप्यानन्दमात्रकरपादमुखोदरादिर्रूपः सर्वेन्द्रियगुणाभासः सर्वेन्द्रियवि-वर्जितश्चातो दर्शनाग्निरूपः श्रीमदाचार्यसूक्ष्मदेहः । गर्भोपनिषदि 'दर्शनाग्नी रूपाणां दर्शनं करोती'ति श्रुतिः । त्रिविधात्मस्त्वात्मोपनिषदुक्तं द्वयमुक्तम् । तृतीयो हि परमात्मान्तरात्मबाह्यात्मसु बाह्यात्मा । गर्भोपनिषदुक्तेषु द्वयमुक्तम् । तृतीये ज्ञानाग्निदर्शनाग्निकोष्ठाग्निषु कोष्ठाग्निस्तद्रूप इतरस्तु विरहाग्निकारणं, तेन कारणविशिष्टो विरहाग्निर्बीजं वृक्षविशिष्टमिव । तथा च भाष्यम् 'सर्वत्र प्रसिद्धोपदेशाद्' इत्यधिकरणस्य ध्यानादिसमाध्यन्तरूपनिदिध्यासनरूपं मनसि सर्वतो निवृत्तव्यापारे स्वयमुपलब्धनिजसुखानुभवरूपं ब्रह्म, इदमेव ब्रह्मज्ञानमिति, स्वयं प्रकाशत्वाद्ब्रह्मैव ब्रह्मज्ञानम् । मनसा तज्जननेपि तथा मनसः सत्यज्ञानात्मकत्वेनाक्षरब्रह्मत्वात् । अत एवाधिकरणसप्तम्यन्तं मनःपदमुक्तम् । 'स मानसीन आत्मे'ति-श्रुतावप्येवम् । एवं सति 'यतो वाच' इत्यस्यां पुष्टिश्रुतौ 'आनन्दं ब्रह्मणो विद्वान्' इत्यनेनाप्युक्तम् । पुष्टिजीवस्य तु ब्रह्मोपनिषदि 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । आनन्दमेतज्जीवस्य यज्ज्ञात्वा मुच्यते बुध' इति । 'सूक्ष्मं प्रमाणतश्चे'ति सूत्रभाष्ये उदाहृता पुष्टिश्रुतिः । एतत्त्रयं ध्यानविषयत्वेनोक्तमितरत्तु ऋतेऽर्थं प्रतीयमानत्वान्माया शरीरादि । यत्तु 'आचार्यचैत्यवपुषा स्वगतिं

१ विप्रयोगप्रधानेच्छयाविर्भूतम् । अन्तर्विप्रयोगे बहिःसंयोगे आविर्भावाङ्गीकारात् सुबोधिन्यादौ । २ कर्मेदम् । ३ सूक्ष्मात्मा । ४ परमात्मा ज्ञानाग्निरूपः तत्र परमात्मा आत्मोपनिषदुक्तो ज्ञानाग्निः गर्भोपनिषदि । ५ पश्यत्यनेनेतिदर्शनं सूक्ष्मात्मा गर्भोपनिषदुक्तः । ६ अन्तर्यामी । ७ आत्मोपनिषदि आत्मत्रैविध्याद् गर्भोपनिषद्यग्नित्रैविध्यादेतत्त्रयम् । ब्रह्मतीत्यग्निः ।

व्यनक्ती'त्यत्र वपुस्तदिदं, यद्'प्याचार्यं मां विजानीया'त्तदपि वपुरात्मा चेदम् । अत्र श्रुतिसूत्रगीताः प्रभूतस्ते वक्तव्याः ।

एवं श्रीमदाचार्यध्यानमुक्त्वा मूलस्वरूपादग्रे निरूपणीयतया समानसूत्रोक्तावताररूप-गोविन्दभजनकर्त्रीध्यानमाहुः अहो इति ।

अहो भाग्यवती देवी यशोदा नन्दगेहिनी ।
गोविन्दमङ्कमारोप्य मुखं चुम्बति सादरम् ॥ २ ॥

'स्त्रीद्वारा पुरुषे भवे'दिति सुबोधिन्यां भगवदाश्रयत्वेन स्त्रिया निरूपणम्, मुक्तिपरमानन्दाभ्यां भजनयोग्यता, 'शुद्धाश्च सुखिनश्चैव ब्रह्मविद्याविशारदा' इति सुबोधिनीकारिकातः । भाग्यवती मुक्तित्वात्, देवी मातृत्वेङ्गीकारात्, तदेवनादिकर्त्री यशोदा । सुबोधिन्यां द्रष्टव्यमेतत् प्रयोजनम् । नन्दः परमानन्दः पुष्टौ निरुद्धत्वात् अतस्तद्गेहं निर्गुणम् । गोविन्दमिति एकादशसुबोधिन्यां 'मन्येऽकुतश्चि'दित्यादिकविवाक्ये गोविन्दभजनम् । मुखमित्यादि भक्तिरसपात्री । व्यभिचारिभावोयम् । ज्ञानकर्ममार्गसाधारण्यात् । लोकोत्तरानुभवैकवेद्यापरिमितानन्दवतीत्यहो आश्चर्यम् । आनुमानिकाधिकरणेऽत्र श्रुतिः, 'मुक्तोपसृप्यव्यपदेशा'दिति सूत्रं, गीता 'जन्म कर्म च मे दिव्यमि'ति ।

'भक्त्या जानाति चाव्यय'मिति श्रुतेर्जातब्रह्मज्ञानाः पञ्चभिः श्लोकैः सप्तविधस्नानेषु पञ्चानां नियतत्वेन मन्त्रवारुणस्नानयोः मन्त्रस्नानकाले मन्त्रस्नानमिच्छन्तो व्यसनावस्थायां स्नानाद्यभावमिच्छन्ति स्म श्रीराध इत्यादिना ।

श्रीराधे प्रियतमदृक्सङ्गमसञ्जातहासरुक्तरलैः ।
भवदीयैः स्नानं मे भूयात्सततं न पाथोभिः ॥ १ ॥

आशीर्लिङ्घटितवाक्याभ्यामिच्छा प्रतीयते 'एकोहं बहु भूयास'मित्यत्र यथा । इयमेव मुख्याशीरिति । ब्राह्मणकर्तैरम्भोभिस्तद्धासरुक्तरलाह्वानकैः स्नानं पञ्चरात्रोक्तप्रकारेण । अत्रेदं ज्ञेयम् । सर्वोत्तममार्गे यथा ब्रह्मभावं गतस्यान्यथाकर्तव्या ( आश्रमधर्माः ) इति दृष्टान्तो भजनानन्दानुभवे त्रयोदशगुणविषये वर्णाश्रमाचारधर्मत्यागे । तत्रेदं वक्तव्यं तृतीयाध्याये चतुर्थचरणे 'अन्तरा चापि तु तद्दृष्टे'रिति सूत्रे पुरुषोत्तमदृष्टेः पुंसोन्तरा फलसिद्धौ व्यवधानरूपा आश्रमधर्माः । 'एतद्ध स्म वै ब्राह्मणा अनूचाना विद्वांसः प्रजां न कामयन्ते, किं प्रजया करिष्यामो येषां नोयमात्मायं लोक' इति श्रुतेः । तत्र दृष्टान्तानुरोधेनान्यथा निरूपणं प्राप्नोति ब्रह्मभावात्पूर्वं भजनानन्दात्पश्चात् । अत्रापि ब्रह्मभूतो मर्क्ति लभेदिति स्वरूपवर्णने वक्ष्यमाणत्वाद्ब्रह्मभावं गतस्याप्यन्यथा निरूप्यन्ते पुष्टौ, अत्र श्रुत्यादि । 'रहस्यं श्रीराधेत्यखिलनिगमानामिव धन'मिति । आथर्वणानां पुरुषबोधिन्यां 'सुषुप्तौ नीलगीः सिद्धा स्वप्ने सिद्धा च रुक्मिणी । लीलायां राधिका सिद्धा नातः साधनपद्धति'रिति, 'यमैरयं चन्द्रमसि स्वधाभिस्तां धारासो अनुदृशा यजन्ते' 'राधोगूर्ता अमृतस्य पत्नी'रिति, 'स्वाभाविकी ज्ञानबलक्रिया चे'ति, 'क्रिया सा राधिका देवी'ति च स्तोत्रादौ । फलाध्याये नित्यलीलासूत्रे यत्र 'स्वाभाविकी ज्ञानबलक्रिया चे'ति श्रुतिः, गीतायां च 'यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा । तत्तदेवावगच्छ त्वं मम तेजोंशसम्भवम्' इति । अत्रैकमेवाद्वितीयं ब्रह्मेत्येकत्र ब्रह्मणि 'स्वामिन्यो गुरव' इति वाक्याद्गुरूपसत्त्या वक्ष्यमाणमिति श्रीराध इति आत्मन्निति विहायोक्तं, तथोक्तं तृतीयाध्यायसूत्रीयार्थसूचितदृष्टान्तानुरोधे, श्रुतौ तावच्छान्दोग्ये पञ्चमे प्रपाठके तृतीये वा मधुविद्यायां 'तद्यत्प्रथमममृतं तद्वसव उपजीवन्त्यग्निना मुखेन न वै देवा अश्नन्ति

१ समान एवब्रामेदादितिसन्नम् । २ उपलक्षणं भजनानन्दप्रतिबन्धावस्थायाः । ३ न पाथोभिर्भूयादिति द्वितीयं वाक्यम् । ४ तृतीयस्कन्धे वाक्यमस्ति । ५ राधा उ गूर्ता गुरैष् गतिहिंसयोर्दिवादिरात्मनेपदी छेद ऐवितत्वाक्त्वादेनेद् ।

न पिबन्त्येतदेव देवा अमृतं दृष्ट्वा तृप्यन्ती'तिवत् कृष्णे व्यसनिन इच्छन्ति । तथा हि प्रथममसृतं रोहितरूपवदमृतं, प्रकृते दृग्रुक् । तत्राग्निर्मुखमत्राग्नय आचार्याः स्वामिन्यो वा गुरुत्वात् । उपजीवन-व्याकरणं 'न वै देवा' इत्यादिना समानमुभयत्र । 'आदित्यादिमतयश्चाङ्ग उपपत्ते'रित्यत्रायमर्थः स्पष्टः । प्रियतमहृक्सङ्गमसञ्जातहासरुक्तरलैर्भवदीयैर्मे स्नानं भूयात् दृग्गोचरैः स्नानाभावजा-तृप्तिविरहो भूयादिति भावः । तत्राग्निमुखा वसवोऽत्राचार्यमुखाः स्वामिन्युपाया वा कृष्णे व्यसनिनः । न चेदमप्रयोजकम् । वेदविरुद्धकरणिनां पाषण्डित्वेनात्रापि पाषण्डित्वापत्त्या तत्परिहारकस्यास्य प्रयोजकत्वात् । भक्तिहंसेपि स्वयमुक्तं 'आधुनिकानामुपदेष्टृणामपि स्नेहाभावेपि तन्मूलभूतानां प्राचामाचार्याणां तद्वत्त्वेन भगवदनुगृहीतत्वेन सर्वोपपत्ते'रिति । यद्वा । 'एवं सति भक्तिमार्गीयभजनप्रकारेषु स्नेह एव नियामकः स्नेहवतां कर्मणि त्रिधिवत्, तद्रहितानां तु तद्वत्कृत उपदेश एव, स च वेदाविरुद्ध एव इति' ज्ञेयमिति । × ×

+ संज्ञाः स्युरिति भूवादयो धातव इति सूत्रस्य । गोविन्दनामस्तोत्रे स्वयं श्रीविट्ठलेश्वराः 'श्रीश्रित्रि-यासितापाङ्गध्यानावस्थितचेतसे । प्राप्ततन्निजरूपाय गोविन्दाय नमो नमः,' इति ।

भावेत्यादि ।

भावात्मकत्वात्तद्रूपं गुणातीतं सदैव हि ।
ध्येयं तद्रूपभावेन शुद्धैर्जीवैर्न चान्यथा ॥ १५ ॥

'सत्यं ज्ञानमनन्तमानन्दं ब्रह्मे'ति सर्वोपनिषच्छ्रुतेश्चतुर्ष्वंशेषु त्रयोंशा 'अग्राह्य'मित्यादिश्रुतौ ग्राह्य-भिन्नग्राह्यसदृशादिभावाश्चाक्षरात्मका अपि तुर्यांशस्तु देव आनन्दात्मा स त्रेधाभावस्तदित्थम् । भावो हि श्रीकृष्णगोपिकारससंयोगभावः, स च सत्ता । भक्तिभावः शृङ्गारभावश्च । भू सत्तायां भावे घञन्तमतः सत्तार्थः । भक्तिरहस्यभजनमित्यादिश्रुतेर्भावो भक्तिः । विभावादिभिरभिव्यक्तः स्थायिभावश्च रत्यात्मा । तद्रूपस्य सत्ताभावात्मकत्वं तद्रूपतां प्राप्तमिति पूर्वोक्तं कादाचित्कम् । भक्तिभावात्मकत्वं च साधनाध्या-यस्य तृतीये पाद उपपन्नसूत्रे स भगवानेव लक्षणमसाधारणो धर्मो यस्य स तल्लक्षण उद्भटभक्तिभावः, स एव पुरुषार्थः, स्वतन्त्रपुरुषार्थरूप इति भाष्यम् । अत्र भगवान् लक्षणेन उद्भटभक्तिभाव इति चेत् 'सर्वाभेदा-दन्यत्रेम' इति सूत्रे 'रसो वै स' इति श्रुत्या 'सर्वरस' इति श्रुत्या च सर्वरसात्मकत्वं ब्रह्मणो निर्णीतमिति भाष्यमस्तु । भक्तिरसो गुरुदेवादिषु रतिः । 'स्फुटं चमत्कारतया वत्सलं च रसं विदु'रिति रससर्वस्वकारः । अयं भावः । आत्मा सार्वदिकं रूपं यस्य स तथोक्तः । भगवान् गोपिकादिभक्ताश्च आलम्बनविभावाः, स्नेहा-नुकूलसङ्कीर्तनाद्युद्दीपनविभावाः । अनुभावाःमन्दिरोद्यानादयः(स्नेहीया विविधाश्चेष्टाः)। सञ्चारिणो वैराग्यप-रितोषादयः । पूर्वोक्ता रतिः स्थायिभावः।'कुर्वन्ति हि त्वयि रतिं कुशला'इति फलप्रकरणे राजसीनां वाक्यात्। यद्वा तत्रैव सात्त्विकीनां वाक्यं 'यत्पत्यपत्यसुहृदामनुवृत्ति'रित्यादि । ततश्चानुवृत्तिः सेवा स्थायी भावः । 'चेतस्तत्प्रवणं सेवे'ति सिद्धान्तमुक्तावल्याः चेतस्तत्प्रवणं सेवा, सा च भक्तिः, भक्तिश्चोपपन्नसूत्रे 'भक्ति-रहस्यभजनं तदिहामुत्रफलभोगनैराश्येनामुष्मिन् मनःकल्पन'मितिगोपालतापिन्युक्तलक्षणा । मनःकल्पनं च मनःसङ्गमनं 'मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये, मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोम्बुधौ, लक्षणं भक्तियोगस्ये'ति श्रीकपिलवाक्यात् । मनसो गतिरावेगः स स्थायिभावः त्रयस्त्रिंशत्सञ्चारिभावेष्वस्य गणना। काव्यप्रकाशे सञ्चारिणः स्थायित्वमपि । तत्र निर्वेदस्य शान्तरसे स्थायित्वमिव । उदाहरणं तु 'ता नाविद'-न्नित्यादिमानसीसेवायाम् । सेवानन्दधर्मरूपता तु भक्त्युत्कर्षवादे । एवमानन्दरूपस्य तनुवित्तजसेवानन्तरं

१ इतः परं सप्तपत्राणि नोपलब्धानि, + अष्टमस्यादिमे संज्ञाः स्युरित्यादिनात्रोपक्रम्यते ।

भवनात् । अक्षरात्मके हृदये मानसीनस्यात्मनः । तत्र च भक्तेर्भवनात् । कामादिति सूत्रे माहात्म्यज्ञानयुतेश्वरत्वेन प्रभौ निरुपधिस्नेहात्मिका विहितेति भक्तिविशेषणादुदाहरणोक्ता सा । माहात्म्यज्ञानं तनुवित्तजा सेवा च सञ्चारिभावास्तत्त्वमस्यादिमहावाक्यार्थाभेदज्ञानं 'अन्तरा'सूत्रे भक्तानामदेयम् । अत्र सेवालक्षणस्य विस्तारिकायां टीकायां रतिलक्षणत्वेपि मनःप्रवणता रतिरित्युक्तया मनःप्रवणता रतिः, चेतःप्रवणता सेवा, तथा च विभावाद्यभिव्यक्तमनश्चेतःप्रवणता सेवा । अत्र व्यभिचारिणो महावाक्यार्थाभेदज्ञानस्य सुषुप्तिप्रतिमस्य चेतसा ग्रहात् सुषुप्तिश्चित्तग्राह्या । चित्तं त्वात्मानमेव सुषुप्तौ पश्यत्यन्यदा तु लीनमिति प्रस्थानरत्नाकरात् । 'सुषुप्त्युत्क्रान्त्योर्भेदेने'त्यत्र प्रथमस्य तृतीयपादे सुषुप्तिस्त्वकामरूपो भगवान् इति भाष्यम् । एवं चाकामरूपः कामरूपश्च भगवान् भक्तिशृङ्गाररसयोरालम्बनविभाव इति स्पष्टो भेदः । अस्यार्थस्य व्यभिचारिभावत्वं व्यतिहारसूत्र उपपादितम् । यद्वा 'आत्मेति तूपगच्छन्ति ग्राहयन्ति चे'ति सूत्रे भक्तिमार्ग इत्यादिभाष्यादात्मेत्युपगमनं कटकाद्युपचाराः साक्षात्कृता भवन्तीति सेवाप्रकरणाद्युक्तदिशा ग्राहणं चेति चेतोमात्रप्रवणता विवक्षितात्मातिरिक्तविषयाभावात् ।

तथा च श्रुतयः 'सत्पुण्डरीकनयन'मित्याद्याः अत्र 'सत्पुण्डरीकनयनं मेघाभं वैद्युताम्बरम् । द्विभुज'मित्यन्तमालम्बनविभावः । 'गानमुद्राढ्य'मितिपाठे उद्दीपनविभावः । ककाराद्यनुकूलो यत्नस्तत्सम्बन्धिनी मुद्रा वेणुवादनसामयिकी मुद्रा तयाढ्यम् । 'वनमालिनमीश्वरं गोपगोपाङ्गनावीत'मित्यत्रापि स्नेहानुकूलाश्चेष्टा बोध्याः । 'गोपगोपाङ्गनावीतमि'त्यत्र गोपाङ्गनावीतमुद्दीपनविभावः । किञ्च 'सुरद्रुमतलाश्रय'मित्यत्र सुरद्रुम उद्दीपनम् । सुरद्रुमो वेदार्थः स्वधर्मत्वेन स्फुट इति निर्धर्मकत्वव्यावृत्तिः । 'निर्धर्मको वा भिन्नो वा निरोधं कुरुते यदि, तदा निरोधो व्यर्थः स्यादि'ति कारिकायाः । 'दिव्यालङ्करणोपेतं रत्नपङ्कजमध्यग'मित्युक्तयालम्बनविभावाः । 'कालिन्दीजलकल्लोलसङ्गिमारुतसेवित'मित्यत्र कालिन्दीयुक्तमारुतौ सञ्चारिणौ 'चिन्तयँश्चेतसा कृष्ण'मित्यत्र चिन्तनं सञ्चारिभावः । 'मुक्तो भवति संसृते'रितीत्यत्राधिकारिणो वैराग्यं सञ्चारिभावो ध्वन्यते । द्वितीयपक्षे उक्तावेगस्य सेवारूपस्य विस्तारिकायां राजगजवर्षादिभिरुत्पत्तेः सरस्वतीतीर्थटीकायामभिरामादिभिरुत्पत्तेरुक्तेः महाराजोपचारकरणं राजा प्रतिमादिर्गजः वर्षं बाल्यं वय आदि एतदादिविभावादिः अभिरामादिर्वा । स च प्रथमपक्षवद्द्वितीयेप्युन्नेयः । भक्तिरसस्य द्वौ भेदौ संयोगो विप्रयोगश्च तत्र संयोगश्चक्षुर्योगः परस्परसंलापाद्यनेकभेदत्वादपरिच्छेद्य इत्येकविध एव गण्यते अभिलाषविरहेर्ष्याप्रवासशापहेतुक इति पञ्चविधो विप्रयोगः ।

ननु मनःप्रवणता रतिः कामः, सोपि ब्रह्मात्ममिष्ठतया भक्तेच्छाविषय इति हि आत्मातिरिक्तविषयाभावात् सुषुप्तिवत् स्नेहोस्तु चेतःप्रवणतात्मकत्वात् । चेतसो मनोभेदत्वात् । अन्यथा सुषुप्तिवदग्रहणदशायां 'मनसैवानुद्रष्टव्य' इतिश्रुते'र्भक्तिरहस्यभजनं तदिहामुत्र फलभोगनैराश्येनामुष्मिन् मनःकल्पन'मिति श्रुतेश्च या मनःप्रणवता तस्या अपलापप्रसङ्गः, सुषुप्तितुल्यत्वेन तस्यात्मनश्चेतःप्रवणविषयत्वादिति चेद्बाढम् । भवता विस्तारिकोक्तमनःप्रवणतात्मकलौकिकरत्या सह भक्तिरत्याः साम्यमुच्यते, तत्तु सर्षपेण स्वर्णाचलस्येव । यतः शृङ्गारे रतिः स्थायी भाव आवेगस्तु व्यभिचारीति कथमनयोः साम्यमिति, ननु कथमावेगः स्थायी भवति भक्तिरसचरमकवृत्तिरूपत्वाद् इति चेत्, सत्यं, विभावाद्युत्तरकालीनस्नेहात्मकस्थायिभावसामयिकलक्षणश्रुत्युक्तमनःकल्पनात्मकस्यावेगस्यापि सम्भवात्तमादाय स्थायित्वोपपत्तेः । संयोगेनैकेषां चक्षुःसंयोगपरस्परसंलापलक्षणवाक्योक्तमनःकल्पनानामपरिच्छेद्यत्वेनैकविधत्वात् संयोगस्यैकविधत्वम् । न च प्रथममुक्तप्रायस्य 'ता नाविदन् मय्यनुषङ्गबद्धधियः स्वमात्मानमदस्तथेदम् । यथा समाधौ मुनयोब्धितोये नद्यः प्रविष्टा इव नामरूपे' इत्यत्र दृष्टान्तप्रतिमस्य दार्ष्टान्तिकस्य स्थायिस्नेहान्तर्भावेऽनुपपत्तिरिति वाच्यम् । तर्हि पूर्णत्वापूर्णत्वाभ्यां धर्माभ्यां रसत्वस्थायित्वप्रयोजकाभ्यां

दृष्टान्तोक्तधर्मस्य पूर्णत्वस्योपपत्तेः स्नेहस्य चरमवृत्तित्वेपि रसत्वमिति । इत्थञ्च स्थायिनः स्नेहस्य विभावान्तर्गतालम्बनविभावः कारणमुद्दीपनविभावश्च तदन्वयव्यतिरेकानुविधानादिति विस्तारिकाया-मनुभावाः कार्यमसति स्नेहे तदभावात् । सञ्चारिणो निर्वेदादयः सहकारिकारणानि न तत्कार्याणि । तेन विनापि सम्भवेन व्यभिचारात् । न चाकारणानि तदुत्तरत्वान् नैयत्यात् । किन्तु स्वसामग्र्या प्रादुर्भवन्ति सन्ति स्नेहस्योपवासकानि भवन्ति । सामग्रीसम्पातेन स्नेहेन स्थायिना सहचरणात् सञ्चारीणि । सहकारीणि तु स्नेहस्यैव रूपस्य । तच्च तद्विचित्रस्मितरुदितकार्याजननायोगेन सामग्रीवैचित्र्यापादकानि । स्नेहो लक्षणश्रुत्युक्तः स्थायिभावः । ननु 'तत्सिद्ध्यै तनुवित्तजे'ति सिद्धान्तमुक्तावल्यां तत्सिद्ध्या इतिपदात् तनुजवित्तजे सेवे, 'माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोधिकः । स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथे'ति पञ्चरात्रान्माहात्म्यज्ञानं च कारणानि । सञ्चारिभावस्तु सहकारिकारणमिति सञ्चारिभावे कुत एतेषां निवेश इति चेत्सत्यम् । भक्तिहंसे नवधाभक्तीनां कर्मज्ञानभक्तिमार्गेषु प्रवेशकथनात्सञ्चारिभावत्वमविवादं; महावाक्यार्थस्य भक्तिमार्गेऽसञ्चारः पूर्वमुक्तः, यद्यपि यस्मात्कर्मादिभ्यो ज्ञानमेव पुरुषार्थसाधनमतस्तज्ज्ञानाय विचारोधिक्रियत इति जिज्ञासाधिकरणभाष्ये महावाक्यार्थमपि ज्ञानपदेन सङ्गृहीतम्, तथापि शाब्दार्थज्ञानं महावाक्यार्थज्ञानं विचारफलमित्येतावदेव, न तु रतिपर्यन्तानुधावनं भागवतमतत्वात् । 'भगवान् ब्रह्म कार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया । तदध्यवस्यत्कूटस्थो रतिरात्मन्यतो भवेत्' इति भागवतम् । तथा च 'प्रदानवत्'सूत्रोक्तं 'यमेवैष वृणुते तेन लभ्य' इति श्रुत्युक्तवरणं कारणं, स्नेहचरमवृत्त्यात्मकसर्वात्मभाव इति भक्तिहेतूपपादितभक्तिकारणमनुग्रहस्तावदुद्दीपनविभावो भक्तनिष्ठो येन केनापि सम्बन्धेन भवतु । भगवदनुगृहीतोयं यतो भक्तो भक्तिमनुभवतीति प्रत्ययात् । 'मानसी सा परा मते'त्युक्तसेवायामपि ह्युद्दीपनविभावरूपानुग्रहस्य मुख्यकारणत्वमिति, तथा च भाष्यं 'विधैव तु निर्धारणादि'ति सूत्रस्य किन्तु 'भगवदनुग्रहेण भक्तसङ्गेन च भक्तौ सत्यामिती'ति साधनाध्याये । अनुग्रहः स्वभाव इति तृतीयस्कन्धसुबोधिन्याम् । अनुग्रहो धर्मान्तरमिति भक्तिहेतौ । उभयेषां मतं पन्थाश्च तल्लक्षणं च विस्तारिकायाम् । चेतस्तत्प्रवणं मनःकल्पनं भक्तिप्रेमस्नेहप्रियत्वं च पर्यायाः । कृष्णगोपिकयोः परस्परस्नेहो भगवन्निष्ठालम्बनविभावे । तत्र निरुपधिप्रियत्वस्य समन्वयाध्याये ब्रह्मधर्मतां निर्णिनाय भगवान् व्यासः । ननु तथापि मनःकल्पनं मनःप्रवणं तच्च रतिरेव पुराणं च सङ्गृहीतं भविष्यतीति चेन्न, अभिलाषप्रतियोगिभेदात्प्रापकभेदादधिकरणभेदाच्च । तदुक्तं भक्त्युत्कर्षवादे 'मुक्तैरप्यभिलषितामत्यन्तानुग्रहात्प्राप्याम् । आनन्दधर्मभूतां रसरूपां नौमि हरिभक्ति'मिति । तत्र तु कामाभिलाषिणः प्रतियोगिनः, कर्मप्रापकं मनोधिकरणमिति ।

एवं स्नेहरूपा रतिर्व्याकृता । कामरूपा द्वितीया रतिः लक्ष्मीकलानिध्योः । नमामि हृदये शेषे लीलाक्षीराब्धिशायिनम्, लक्ष्मीसहस्रलीलाभिः सेव्यमानं कलानिधिम्' इति ह्याचार्योक्तेः । ननु सत्तायां योगो भावशब्दस्य तात्पर्यं रतौ । 'रतिर्देवादिविषया व्यभिचारी तथाञ्जितः भावः प्रोक्त इति । द्वितीयायां रतौ केतिचेन्न आधिभौतिके योग आध्यात्मिकाधिदैविकयोरेकत्वात्तात्पर्यवृत्तिरिति । अञ्जित इत्यस्य न व्यञ्जित इत्यर्थः किन्तु तात्पर्यविषयीकृत इत्यर्थः । वृत्तेर्द्वैविध्यादित्युपपादितमारम्भे रश्मेः । एकदेशविकृतन्यायेनाधिदैविकस्याध्यात्मिकानन्यात्वात् तत्प्रपञ्चस्य भावशब्दतात्पर्यवृत्तिविषयत्वे बाधकाभावात् । ब्रह्मस्वरूपे लौकिकयुक्तभावस्य भूषणत्वाच्च । प्रकृतमनुसर्यते । तथा च विभावाद्यैरभिव्यक्ता रतिः पूर्णा शृङ्गाररसः । रसत्वं च । ब्रह्मास्वादमिवानुभावयन्नलौकिकचमत्कारकारी शृङ्गारादिको रसस्तत्त्वम् ।

१ प्रकर्षेण वनं भक्तिः प्रवणं, वन संभक्तौ धातुः ।

प्रकृतमनुसर्यतेऽधुना, तद्रूपम्, सत्पुण्डरीकनयनमित्याद्युक्तं गोपालतापिनीये किन्तद्रूपमिति प्रश्न एतदुत्तराद् व्याकृताश्चैताः श्रुतयः प्राक् ह्यनुक्रमशः । गुणातीतं गीतायाम् 'नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्यति । गुणेभ्यश्च परं वेत्ति मद्भावं सोधिगच्छती'ति । यद्वा 'निर्गुणं गुणभोक्तृ चे'ति निर्गुणं 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्युक्तं गुणभोक्तृ, 'आनन्दमात्रमिति यद्वदन्तीह पुराविदः' इति वाक्योक्तमेतद्रूपद्वयम् । हि निश्चयेन सदैवेत्याहुः सदैव हीति । अयमर्थः । नात्र ज्ञानविषयं ब्रह्मोच्यते, ज्ञानं च फलात्मकं 'ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्' 'ब्रह्मविदाप्नोति परं' 'तमेव विदित्वातिमृत्युमेती'त्यादि-श्रुतिस्मृत्युक्तम् । ततश्च तृतीयाध्यायस्थ'अम्बुवदग्रहणाद्य'धिकरणोक्तं ब्रह्म प्रतिपिपादयिषितं न भवति । किन्तु प्रवेशानन्तरमत्यन्तानुग्रहे पुष्टिभक्तौ सत्यां भक्तेच्छयोद्गतं रूपं तत्त्वैच्छिकं न तु सदैव हीति । अत्रोच्यन्ते श्रुतिगीतासूत्राणि । तद्रूपमित्यत्र 'तानि परे तथा ह्याह' । 'ता वां वास्तूनि' । 'श्रीमदूर्जितमेव वा तत्तदेवावगच्छ त्वं मम तेजोंशसंभवम्' । अत्रास्फुटं गीताविस्तरे श्रीभागवते 'ता मन्मनस्का मत्प्राणा मदर्थे त्यक्तदैहिकाः । ये त्यक्तलोकधर्माश्च मदर्थे तान् बिभर्म्यहं' मित्युपक्रम्य 'धारयन्त्यतिकृच्छ्रेण प्रायः प्राणान् कथञ्चन' इति श्रीप्रभुवचनमेतत्फलाध्याये 'स्मर्यते चे'ति सूत्र उक्तम् । समाधिभाषाद्वितीयस्कन्ध-वैकुण्ठदर्शनवाक्यानि । गुणातीतमित्यत्र 'तानि पर' इति सूत्र एव प्रकृतिकालाद्यतीत इति वैकुण्ठ-विशेषणम् । तानीत्येव सूत्रम् । गीतोक्ता । तथापि भक्तैच्छिकं रूपमिति स दोषस्तदवस्थ एवेति चे'दविभागो वचना'दिति सूत्रे एतेनापि लीलानित्यत्वं सिद्ध्यति एतद्यथा तथा विद्वन्मण्डने प्रपञ्चितमिति भाष्या-दोषो निर्गच्छतु । विद्वन्मण्डने नित्यलीलावादे प्रपञ्चितमित्यर्थः । किञ्चिदुच्यते स्वबुद्ध्या ब्रह्मसम्मत इति पाठः । अत्र नपुंसकत्वं पुंस्त्वं चोक्तं श्रुतौ व्याहरत्प्राप्तमिति च व्याख्यातश्लोक उभयमुक्तम् । अन्यत्र श्रुत्योररसं सर्वरस इत्यत्र नपुंसकत्वं पुंस्त्वं च रसविलक्षणत्वं रसत्वं चोक्तम् । 'निर्गुणश्च यः सर्वज्ञः सर्वशक्ति'रित्यत्र निर्गुणत्वसगुणत्वे चोक्ते । अत्रोच्यते तृतीयद्वितीयपादे 'वृद्धिह्रासभाक्त्वमन्त-र्भावादुभयसामञ्जस्यादेवम्' 'दर्शनाच्चे'ति सूत्रद्वये । अत्र पूर्वसूत्रे एवं परमार्थतो विरोधः परिहृतः यथाकाशस्य वृद्धिह्रासभाक्त्वं करकादिष्वन्तर्भावात्तथैवोभयसामञ्जस्याद्विभुत्वाल्पत्वयोरैकाधिकरण्येन प्रामाणिकादरणीयत्वात् । ब्रह्मणोप्येवं शरीरादिप्रवेशाद्वृद्धिह्रासभाक्त्वमिति तथा च प्रकृतेपि 'स्वाभाविकी ज्ञानबलक्रिया चे'ति श्रुत्योक्तायां स्वाभाविक्यां शक्तौ निवेशे नपुंसकत्वम् । 'को ह्येवान्या'दित्युक्त आनन्दे प्रवेशे तु पुंस्त्वम् । एवमुभयोरैकाधिकरण्येन प्रामाणिकादरणीयत्वम्, द्वितीयस्मिन् सूत्रे च भगवति सर्वे विरुद्धधर्मा दृश्यन्ते 'नहि दृष्टेऽनुपपन्नं नाम व्याघातात्' तादृशमेव तद्वस्त्वित्यध्यव-साय इत्युक्तम् । स्पष्टौ प्रकृते पुंस्त्वं नपुंसकत्वं च विरुद्धौ धर्मौ रसारसत्वे च । निर्गुणत्वसर्वज्ञत्वसर्व-शक्तिमत्त्वानि विरुद्धधर्माः । प्रकृतोपपादकं भाष्यम् । इति हीति निश्चयेनैतद्रूपं सदैवेति । नूनं सत्यज्ञानादिरूपं गुणातीतं व्रजभक्तवृन्दप्राप्तं च गुणातीतं तद्व्यूहचतुष्टयरूपं छान्दोग्योक्तपरदेव-तादिरूपं च गुणातीतं तथा वाराहपुराणोक्तं श्रीभूमिस्थितं च प्राकृतप्रलये तन्नाशाभावकथनात् । रस शब्दे इति पक्षेपि तादृशमेवेति । सर्वरसमिति श्रुतेः । ध्येयमित्यादि शुद्धैः पापरहितैः मर्यादाभक्त्य-धिकारिभिः 'गतेरर्थवत्त्व'मिति सूत्रेऽस्मिन् मार्गे श्रवणादिभिः पापक्षये प्रेमोत्पत्तिस्ततो मुक्तिरिति भाष्याजीवैः भगवद्रूपसेवार्थं सृष्टैः पुष्टैः पुष्टिप्रवाहमर्यादायामुक्तैस्तद्रूपभावेन तद्रूपत्वेन ध्येयतावच्छेदक-रूपेण त्वतलौ विहाय भावपदोपसन्दानात्तद्रूपश्चासौ भावश्चेति विगृह्य भावप्रधानं निर्देशं चाश्रित्य तद्रूपभावत्वेन ध्येयं भावनौत्कण्ठ्यदशायां व्यभिचारिभावात्मकसततस्मृतिरूपं ध्यानं तद्विषयं कार्यम् । 'तस्माच्छ्रीकृष्णमार्गस्थो विमुक्तः सर्वलोकतः । आत्मानन्दसमुद्रस्थं कृष्णमेव विचिन्तयेत्' इति सिद्धान्तमुक्तावली 'ततः संसारदुःखस्य निवृत्तिर्ब्रह्मबोधन'मित्येवं स्वयमुक्तस्यावान्तरब्रह्मबोधनलक्षण-

फलवतः प्रत्याज्ञां करोति तच चिन्तनमुक्तविधम् । अत्रात्मानन्दो व्रजरत्नात्मक इति श्रीविट्ठलनाथदीक्षितगोस्वामिटीकायामतोत्रात्मानन्दः स पूर्वोक्तः तथा च भावो भक्तिर्भूमा 'आनन्दमात्रमिति यद्वदन्तीह पुराविद' इत्युक्त आत्मनि सत्यज्ञानानन्तानन्दे स्वरूपलक्षणाक्रान्ते यस्य 'यतो वाचो निवर्तन्त' इति श्रुत्युक्तस्य तद्भावात्मकं तस्य भावस्तदात्मकत्वं तस्माद् इति भावात्मकत्वादित्यस्यार्थः । भावात्मकस्य भक्तान् प्रत्येव ज्ञापनात् । अत्र व्याख्यायमानग्रन्थेऽग्रे 'सर्वत्र पश्यद्भिः पुरुषोत्तम'मित्यत्र सर्वत्रपदम् ! एकादश एकोनत्रिंशाध्याये 'लघुस्वमार्गवक्ता चे'ति पुरुषोत्तमसहस्रनाम्नि स्तोत्रे लघुस्वमार्गवक्तृत्वेनोक्तस्य श्रीकृष्णस्य वाक्यभूते 'सर्वं ब्रह्मात्मकं तस्य विद्ययात्ममनीषया । परिपश्यन्नुपरमे'दिति सर्वपदम् । तदपि सर्वे ब्राह्मणा भोजयितव्या इत्यत्र निमन्त्रितब्राह्मणवाचकसर्वपदवद् एतेन व्रजरत्नपदरहितेन सामान्येन ग्रन्थेन भक्तिमार्गस्य निर्गुणत्वं समर्थितम् । स्वाधिकारे तु श्रीगोस्वाम्युक्तो विशेषोपीति । चकार ऐश्वर्यवीर्ययशःश्रीज्ञानवैराग्यशृङ्गारादिवाचकपदानुकर्षकः 'स्वोरमो लुक्' तथा च ऐश्वर्यवीर्ययशःश्रीज्ञानवैराग्यशृङ्गारश्चकारार्थध्येयमित्यनेनान्वेति । एवञ्च तद्रूपमैश्वर्यवीर्ययशःश्रीज्ञानवैराग्यशृङ्गारमपि ध्येयमिति सिद्धम् । अन्यथा नेति अन्यथापदात्तृतीयाया लुक् अन्येन प्रकारेण तद्रूपभावान्येनैश्वर्यत्वाद्यन्येन च प्रकारेण न ध्येयम् । अयं भावः 'योन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चौरेणात्मापहारिणे'ति श्रुतेस्तद्रूपभावाद्यतिरिक्तेन न प्रतिपदनम् । अनेन प्रकारेण तु प्रतिपदनं गोपालतापिनीये श्रूयते ब्राह्मणस्य तथाहि 'मुनयो ह वै ब्राह्मणमूचुः कः परमो देव' इत्यादि तस्योत्तरं 'तदुवाच ब्राह्मणः श्रीकृष्णो वै परमं दैवत'मित्याद्यभिधाय 'गोपवेषमभ्राभं तरुणं कल्पद्रुमाश्रितम्' तदिह श्लोका भवन्ति 'सत्पुण्डरीकनयनं मेघाभं वैद्युताम्बरम् । द्विभुजं मानमुद्राढ्यं वनमालिनमीश्वरम् । गोपगोपाङ्गनावीत'मित्यादि । तद्रूपप्रश्नोत्तरम् 'ब्रह्म जानाति ब्राह्मणः' इति ब्राह्मणपदव्युत्पत्तिः । एवमैश्वर्यभावादि बोध्यं श्रुतिषु हीति 'तदोषधिविद्यायां वैराग्यमित्येवं सप्ताष्टकेषु बोध्यं' नवार्थ्यामुक्तं च । एवं ध्येयमित्यनेन स्मृतिविषयं वस्तूक्तमत्र स्मृतिस्तु सिद्धान्तमुक्तावल्यां संसारदुःखनिवृत्तिर्ब्रह्मबोधनलक्षणा तनुवित्तजसेवावान्तरफलत्वेन निर्दिष्टा ततः सेवाफलाख्यग्रन्थे सेवायाः फलत्रयमुक्तं तेषु तदीयत्वं भगवत्सेवोपयोगिदेहो वैकुण्ठादिष्वित्येवमुक्तं मुख्यमिति । तत्साधनमाहुः लीलेत्यादि ।

लीलारूपैश्च तत्सेव्यं तदीयत्वाय सर्वदा ।
एतत्संसेवनाद् ब्रह्मभूतो भक्तिं लभेत्पुनः ॥ १६ ॥

लीलास्वैश्वर्यवीर्ययशःश्रीज्ञानवैराग्यशृङ्गाररूपाणि, रूपाणि द्वारकानाथजित्सुनुगोविन्दजित्कृतभावनोक्तशकटभञ्जनौत्थानिकलीलादिषु वात्सल्यादिरूपाणि रूपाणि च येषां तैः रूपैः श्रीनवनीतप्रियजिच्छ्रीमथुरानाथजिच्छ्रीविट्ठलनाथजिच्छ्रीद्वारकानाथजिच्छ्रीगोकुलनाथजिच्छ्रीगोकुलचन्द्रमोजिच्छ्रीमदनमोहनजिच्छ्रीबालकृष्णजिदादिरूपैः । चकारेण धर्मिरूपेण श्रीगोवर्द्धननाथजिद्रूपेण तद्ब्रह्म सेव्यम् । तनुवित्तजसेवाविषयं कार्यं तदर्हत्वात् । सेवाविषये ब्रह्मणस्तावद्रूपत्वे साधनाध्यायतृतीयचरणे 'आनन्दादयः प्रधानस्ये'ति सूत्रं स्पष्टत्वाय । पूर्णानन्दैश्वर्यादयः प्रधानस्य धर्मिणः श्रीगोवर्द्धननाथस्य ब्रह्मणो धर्मा इति भाष्यकम् । श्रुतयस्तु सर्ववेदान्तप्रत्ययसूत्रेऽथर्वणोपनिषत्स्था 'गोपवेषमभ्राभं तरुणं कल्पद्रुमाश्रितम्' तदिहश्लोका भवन्ति 'सत्पुण्डरीकनयन'मित्याद्याः ध्वनिताश्चेमास्तत्रैव भाष्ये 'कश्चिद्गोकुलवृन्दाकाननसञ्चरद्गोपरूप'मित्यादौ कश्चित्पदस्य शक्तिः गोपालतापिनीये ध्वनिरुक्तासु

---

१ तात्पर्यम् ।

श्रुतिषु । गीता तावत् त्रयोदशेऽध्याये ज्ञेयं प्रस्तुत्य 'सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुख' मित्यादि 'सर्वेन्द्रियगुणाभास'मित्यादि च । अत्रैश्वर्यादयो भगवत्पदसमानाधिकरणज्ञेयगोपवेशपदाभ्यामुन्नेयाः । तल्लक्षणानि गुणप्रकरणस्य सुबोधिन्यामग्रे च प्रपञ्चनीयानि । सेवायां तावद् । 'गतेरर्थवत्त्वमुभयथान्यथा हि विरोध' इति सूत्रे । अत्र सूत्रेऽस्मिन् मार्गे श्रवणादिभिः पापक्षये प्रेमोत्पत्तिस्ततो मुक्तिरिति भाष्यात् । सहकार्यन्तरविधिपक्षेण तृतीयं 'तद्वतो विध्यादिव'दिति वा सूत्रम् । 'सर्वथापि त एवोभयलिङ्गा'-दिति साधनाध्यायस्थं वा सूत्रम् । ननु सेवात्र दास्यकं तत्कथमत्र श्रवणादिषु प्राथम्यं 'तत्सिद्ध्यै तनु-वित्तजे'त्यत्राहतीति चेन्मैवं 'आत्मेति तूपगच्छन्ति ग्राहयन्ति चे'ति सूत्रस्य भक्तिमार्गेङ्गीकृतास्तु साक्षा-त्प्रकटे पुरुषोत्तमे तद्भजनार्थं उप समीपं गच्छन्तीत्यर्थः एवं श्लेषोक्तिरियमिति ज्ञायते । 'सम्प्रदायानु-वृत्तिरपि भगवदिङ्गितेत्येतादृशाः स्वयं येन मार्गेण फलं प्राप्तास्तं मार्गमन्यानपि ग्राहयन्त्युपदेशै'रिति भाष्यात् । अत्र श्रुतिः'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्च' इति श्रवणादि-भिर्दर्शनमाह तच्च प्रेमद्वारेति ग्राहयति । आचार्यास्तु 'चेतस्तत्प्रवणं सेवा तत्सिद्ध्यै तनुवित्तजे'ति दास्यकं ग्राहयन्ति । अयमप्युपदेशः उपदेशैरिति बहुवचनात्तदुक्तं फलप्रकरणे श्रुतिरूपाभिः 'भवाम दास्य' इति । ननु कथमेवमुपदेशो यावता गोपालतापिनीये एव पञ्चपदमष्टादशार्णमन्त्रस्वरूपमुक्त्वा पठ्यते 'भक्तिरहस्यभजनम्' इत्यादि ततश्च पञ्चपदजपस्य तत्सिद्ध्यै ह्युपदेशोऽस्त्वथवाग्रे 'ते होचुरुपासनमेतस्य परमात्मनो गोविन्दस्याखिलाधारिणो ब्रूही'ति प्रश्नोत्तरीभूतोपासनवाचकवाक्येभ्य उपासनोपदेशो-ऽस्त्विति चेन्न 'उपपन्न' इत्यादिसूत्रेऽष्टादशार्णमन्त्रोपासकस्य मुमुक्षोः सकाशाद्रहस्यभजनकर्तैवोपपन्न उपपत्तियुक्त इति भाष्येणोपासनामार्गीयस्य पञ्चपदजपस्योपासनस्य चान्यमार्गीयत्वात् । नन्वन्यमार्गी-यस्यापि भक्तिमार्गान्तःपातित्वेन भक्तिमार्गीयत्वं भविष्यतीति चेन्न भक्तिमार्गीयसाक्षाद्भगवल्लक्षण-फलातिरिक्तमुक्तिफलत्वेन तदन्तःपातित्वस्यासम्भवात् । तदुक्तं 'तल्लक्षणार्थोपलब्धे'रित्यंशेन । श्रुतिस्ता-वत् 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति 'अनियम' इति सूत्रभाष्योक्त-दिशात्रापि नवधाभक्तीनामुपलक्षणम् । गीता तावद् भक्तियोगाध्याये द्वादशे 'ये तु सर्वाणि कर्माणि मयि सन्न्यस्य मत्पराः । अनन्येनैव योगेन मां ध्यायन्त उपासते । तेषामहं समुद्धर्ता मृत्युसंसार-सागरात् । भवामि नचिरात्पार्थ मय्यावेशितचेतसाम् ॥ मय्येव मन आधत्स्व मयि बुद्धिं निवेशय । निवसिष्यसि मय्येवात ऊर्ध्वं न संशय' इति । 'सततं कीर्तयन्तो मां यतन्तश्चे'त्यादयस्तु तृतीयसूत्रपक्षे एवमवान्तरफले ध्यानं साधनं तत्त्वेन सेवामुपपाद्य तस्या इतरं भक्तितो मुख्यं फलमाहुः तदीयत्वायेति मानसीसेवाया इत्यर्थः । तदुक्तमुपपन्न इति सूत्रभाष्यप्रकाशेऽमुष्यात्मनः कल्पनमिति स्वपाठं भक्ति-रहस्यभजनमित्यत्रोरीकृत्यामुष्यात्मनो वस्तुत एतदीयस्य जीवस्य कल्पनं तदीयत्वसमर्थनमन्तर्बहिःसेवया तदृढीकरणम् । कृपू सामर्थ्ये इति धातुपाठात् । पूर्वलिखितपाठे त्वन्येमुष्मिन् कृष्णाख्ये ब्रह्मणि मनसः सङ्कल्पनं प्रेरणा तन्मयत्वमिति चार्थं वदन्तीति । मानसीसेवायां गीता 'मय्येव मन आधत्स्व मयि बुद्धिं निवेशय । निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः' इति । सूत्रं तु 'यत्रैकाग्रता तत्राविशेषा'-दिति । अत्रैकाग्रता ग्राहकचित्तधारा । यद्वा । साधनाध्यायतुरीयपादस्थं 'अतस्त्वितरज्ज्यायो लिङ्गाच्चे'ति सूत्रं तदीयत्वमेव ज्याय इत्यर्थ इति भाष्यम् । श्रुतिस्तु 'ब्रह्मविदाप्नोति परम्' । स्मृतयो ह्युक्ताः । अन्या अपि 'अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च । निर्ममो निरहङ्कारः समदुःखसुखः क्षमी ॥ सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः । मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः' इति । अत्र सिद्धान्तमुक्ता-वलीस्थ 'ततः संसारदुःखस्य निवृत्ति'रिति सेवावान्तरफलघटनात् । अहन्ताममतात्मको हि संसारः ।

१. संस्कारोद्बोधकत्वे ।

तत्रस्यदुःखस्य 'निर्ममो निरहङ्कार' इत्यनेन निवृत्तिकथनात्। 'भगवदीयत्वेनैव परिसमाप्तसर्वार्था' इति गीताविस्तारश्रीभागवतम् । सर्वदेति सेव्यमित्यनेनान्वेति । 'कृष्णसेवा सदा कार्येति' सिद्धान्तमुक्तावलीवाक्यात् । सर्वदा सेव्यमित्युक्तं तत्र सेव्ये स्वरूपे प्रथमाध्यायद्वितीयपादस्थाऽदृश्यत्वाधिकरणोक्ताक्षराभेदपक्षेऽक्षरसंसेवनमादाय तत्फलमुक्तफलातिरिक्तब्रह्मभावो भवति तेनाक्षरसंसेवनात्मकज्ञानेनाविद्यानिवृत्तिद्वारा जीवीयानन्दस्य प्राकट्यात् । तदुक्तं साधनाध्यायतृतीयचरणेऽ'क्षरधियामि'ति सूत्रे । एतादृशस्य ब्रह्मभूतस्याविर्भूतानन्दांशरूपस्य भक्तिलाभमनुवदन्ति स्म एतदित्यादिना । ब्रह्मभूत आविर्भूतानन्दांशः एतत्संसेवनात् समीपतरवर्तिदास्यकरूपाद्भक्तिं तदीयत्वलक्षणां मानसीसेवारूपां प्रेमलक्षणां लभेदित्यनुवादः पूर्वोक्तस्यार्थस्य लभेतेत्यर्थः । अनुदात्तेतआत्मनेपदानित्यत्वात्परस्मैपदं लभेदिति । ब्रह्मभावानन्तरं मर्यादाभक्तावक्षरधियामित्यादि सूत्रं 'ब्रह्मविदाप्नोति पर'मितिश्रुतिः । 'ब्रह्मभूतः प्रशान्तात्मा न शोचति न काङ्क्षति, समः सर्वेषु भूतेषु मद्भक्तिं लभते परा'मिति गीता । पूर्वोक्तमर्यादाभक्तिफलं पुरुषोत्तमप्रवेश इत्यक्षरधियामित्यादिसूत्रे स्थितं तन्नोक्तं पुष्टिपद्धतित्वेनास्याः परिपाट्याः, तथा सति मर्यादापद्धतिरवान्तरभूता स्यात्तन्निवृत्त्यै तादृशस्याप्राप्तमर्यादाफलस्यात्यन्तानुग्रहे सति पुनर्लीलाप्रवेशसाधनीभूतपुष्टिभक्तिलाभमाहुः पुनरिति अत्यन्तानुग्रहे सतीति शेषः । तस्मिन् सति पुनर्भक्तिं पुष्टिभक्तिं लब्ध्वेत्युत्तरश्लोकेन्वयः । पुष्टिभक्तिरत्यन्तानुग्रहैकसाध्या 'गतेरर्थवत्त्व'सूत्रे निर्दिष्टा, तद्रहितानामपि 'स्वस्वरूपबलेन स्वप्रापणं पुष्टि'रित्युच्यत इति । पुष्टिमार्गेऽङ्गीकृतेस्त्वत्यन्तानुग्रहसाध्यत्वादिति । पुष्टिभक्तेः फलमाहुः ।

भक्तिं लब्ध्वा च विशते कृष्णलीलास्वसंशयम् ।
नातः परतरं किञ्चित्प्राप्यमस्तीह कर्हिचित् ॥ १७ ॥

गीताविचारे तु लीलास्वरूपैश्च तत्सेव्यम् । अष्टादशे 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इति वाक्यात् । तदीयत्वाय । 'असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः । नैष्कर्म्यसिद्धिं परमां सन्न्यासेनाधिगच्छति' इति वाक्यात् । नैष्कर्म्यसिद्धिः गोपालतापिनीये 'भक्तिरस्य भजनं तदिहामुत्र फलभोगनैरास्येनामुष्मिन् मनःकल्पनमेतदेव च नैष्कर्म्य'मिति । सर्वदा 'श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्' 'स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम्' 'सहजं कर्म कौन्तेय सदोषमपि न त्यजेत्, सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः' इति वाक्याभ्याम् । एतत्संसेवनादिति एतत्समीपतरवर्ति एतस्य वा संसेवनं विवेकधैर्याश्रयैरन्तःकरणप्रबोधेन च सेवनम् । तस्मात् 'सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे । समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा । बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य चे'त्यत्र विशुद्धा बुद्धिः 'विवेकस्तु हरिः सर्वं निजेच्छातः करिष्यती'त्युक्तान्तःकरणप्रबोधग्रन्थोक्ता च । धृतिः'त्रिदुःखसहनं धैर्यमामृतेः सर्वतः सदे' ति वाक्योक्ता । 'धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः । योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी'ति वाक्यात् । आत्मानं बुद्धिम् । अग्रे 'शब्दादीन् विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च । विविक्तसेवी लघ्वाशी यतवाक्कायमानसः । ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः' इत्यत्र प्रपञ्चविस्मरणपूर्वकभगवदासक्तिमुक्त्वाऽऽश्रयरक्षणार्थमाहुः 'अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् । विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पत' इति । 'अशक्ये वा सुशक्ये वा सर्वथा शरणं हरिः' इति शान्तः । एतत्संसेवनाद् ब्रह्मभूतः । 'ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षती'ति 'समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्' इति वाक्यादाहुः 'भक्तिं लभेत्पुनरिति । अत्र सूत्रं 'भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यत' इति । श्रुतिस्तावत् 'सोऽश्नुते सर्वान्

कामान् सह ब्रह्मणा विपश्चिते’ति । गीता तावत् ‘सूक्ष्मत्वात्तदविज्ञेय’मिति ज्ञेयनिरूपणे त्रयोदशेऽध्याये । ‘सूक्ष्मं तु प्रमाणतश्च तथोपलब्धे’रिति सूत्रे पुष्टिमार्गीयं तत्त्वं सूक्ष्मं दुर्ज्ञेयमित्यर्थ इति भाष्यम् । नापि सर्वथा दुर्ज्ञेयम् । ‘तानि परे तथा ह्याहे’ति सूत्रे श्रीगोकुले तानि वस्तूनि सन्तीत्युक्तेः । सर्वसामर्थ्यसहितस्य सर्वत्रैवाखिलार्थकृत ईश्वरस्यात्यन्तानुग्रहेण प्राप्तया भक्त्या कृष्णलीलासु प्रवेशोत उक्तमसंशयमिति । स्वभावतो दुष्टस्य जीवस्य जगत्कारणकारणे तत्रापि लीलानिविष्टे प्रवेशो भविष्यति न वेति संशयो भवत्येव तदभावोऽसंशयः क्रियाविशेषणत्वान्नपुंसकत्वम् । सगुणं ब्रह्म सर्वमित्याशङ्क्य परिहरन्ति स्म । नात्र इत्यादि, अतो न सगुणं पूर्वमुपपादितत्वात् । अत्र सूत्रं तृतीयाध्यायद्वितीयपादे ‘परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्य’ इति सूत्रेणातो देशकालवस्तुस्वरूपपरिच्छेदाच्चतुर्विधपरिच्छेदरहितमन्यत्किञ्चिदस्तीति प्रतिपत्तव्यमित्येवं प्राप्ते ‘सामान्यात्त्वि’ति । श्रुतिस्तावत् ‘न तत्समश्चाभ्यधिकश्च दृश्यते’ इति । गीता ‘ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यत’ इति ।

साकारव्यापकं रूपमुपसंहरन्ति स्म एतद्रूपमित्यादि ।

**एतद्रूपं समास्थाय श्रीवल्लभसुनिश्चितम् ।**
**सात्त्विकैर्भगवद्भक्तैः स्थेयं कृत्वा दृढं मनः ॥ १८ ॥**

समीपतरवर्तिब्रह्मरूप उक्तप्रकारेण सम्यङ्नियमपूर्वकं आसमन्तादर्थे शब्दे शङ्काराहित्येन स्थापयित्वा स्वमनसीति शेषः । श्रीवल्लभेत्यादि । भाष्यसमाप्तौ

‘जानीत परमं तत्त्वं यशोदोत्सङ्गलालितम् । तदन्यदिति ये प्राहुरासुरांस्तानहो बुधाः’ ॥
‘नानामतध्वान्तविनाशनक्षमो वेदान्तसिद्धान्तविकाशने पटुः ।
आविष्कृतोयं भुवि भाष्यभास्करो मुधा बुधा धावत नान्यवर्त्मसु’ इति ॥
निबन्धे शास्त्रार्थसमाप्तौ
‘अर्थोयमेव निखिलैरपि वेदवाक्यै रामायणैः सहितभारतपञ्चरात्रैः ।
अन्यैश्च शास्त्रवचनैः सह तत्त्वसूत्रैः निर्णीयते सहृदयं हरिणा सदैव’ ॥
श्रीभागवतार्थसमाप्तौ च
‘श्रीमद्भागवतं समस्तनिगमन्यायैकतत्त्वात्मकम्
नानाभ्रान्तितमःकपाटपिहितं सत्तुष्टये सर्वथा ।
नाभूदित्यवगत्य निश्चितपदैरुद्दीप्तदीपाकृतिं
श्रीमद्भागवतप्रदीपमधुना चक्रे मुदा वल्लभः ॥’
दशमपूर्वार्धसमाप्तौ

‘इत्येवं भगवल्लीला कृष्णविश्वासदायिनी । निरूपितातियत्नेन कृष्णपादाम्बुजाश्रया’ इति ।

अत उक्तं श्रीवल्लभैः सुनिश्चितमिति सूत्रश्रुतिगीताभिर्भाष्यशास्त्रार्थनिबन्धश्रीभागवतप्रदीपदशमपूर्वार्धादिष्विति शेषः । सात्त्विकैरिति । इदं विशेषणं ‘सात्त्विका भगवद्भक्ता ये मुक्तावधिकारिणः । भवान्तसम्भवा दैवात्तेषामर्थे निरूप्यत’ इति निबन्धात् । दृढं मनः कृत्वा स्थेयमिति मनसश्चञ्चलत्वेन ‘लोके तदादरो मुख्यः फलं वैमुख्यतस्तमः’ इत्यत्रानादरेऽन्यत्र कामेऽन्यत्र ‘जीवाः स्वभावतो दुष्टा’ इति तेषामन्यत्र सङ्कल्पे किञ्च बहुष्वाचार्येषु सत्सु किमेतत्सुभणितमुतान्यैराचार्यैः सुभणितमित्येवमत्र विचिकित्सायां च सत्यामदृढं मनो भवति तद्व्यावृत्त्यर्थं दृढमिति विशेषणम् । दृढत्वं च मनसो मनसि मीमांसानिर्णयरूपं ‘असन्दिग्धोपि वेदार्थः स्थूणाखननवन्मतः । मीमांसानिर्णयः प्राज्ञे दुर्बुद्धेस्तु ततो दृय’ मिति भाष्यात् । मीमांसानिर्णयश्च मनसि । ‘कामः सङ्कल्पो विचिकित्सेत्यारभ्य धीर्भीरित्येतत्सर्व

मन एव' इति श्रुतेः । मीमांसानिर्णयवतो निबन्धस्थ 'लोक' इत्यादिवाक्यस्यापि प्रसङ्गादर्शनेन तत्र फलवैमुख्यस्मारणान्मायावादादितः कामनिवृत्तिस्तस्य । 'जीवाः स्वभावतो दुष्टाः' तेषां दोषाणां 'श्रवणादि ततः प्रेम्णा सर्वं कार्यं हि सिद्ध्यती'ति वाक्यान्मीमांसानिर्णयवतः श्रवणाद्यावश्यकमिति निवृत्त्यांन्यत्र सङ्कल्पनिवृत्तिः । 'विप्रतिषेधे पर'मिति सूत्रेण श्रीमदाचार्यभणितं सुभणितमिति निश्चयः । सर्वेभ्य आचार्येभ्यः एषां परत्वात् । तथा च तस्यैव सूत्रस्य वृत्तिः 'तुल्यबलविरोधे परं कार्यं स्या'दिति । अत एव कस्याश्चित् काञ्चित्प्रति वचनं पूर्वं गृहे जारः समायातः पश्चात्पतिस्तावुभौ दृष्ट्वा क्रमे सन्दिहाना 'स्मर सखि पाणिनिसूत्रं विप्रतिषेधे परं कार्य' मिति । एवं विद्वद्युक्तिमुपगच्छतो मीमांसानिर्णयवतो विचिकित्सानिवृत्तिः । अतः पर'मेतत्सर्वं प्रयत्नेन गृहस्थस्य प्रकीर्तित'मिति निबन्ध-सेवाप्रकरणीयवाक्यादत्र गृहिणोपसंहाराधिकरणाद् गृहस्थस्य भक्तिवर्द्धिनीनवरत्नश्रीमद्भागवतरीत्या प्रथमदलानुभवः कर्तव्यः ।

एतावतापि रूपमर्धंवृगलमिति भक्ते रसस्य विरहरूपं द्वितीयं दलमनुभवितव्यमित्याहुः । श्रीकृष्णेत्यादि ।

**श्रीकृष्णविरहानन्दानुभवाय विशेषतः ।**
**श्रुत्युक्तरीत्या सर्वत्र पश्यद्भिः पुरुषोत्तमम् ॥ १९ ॥**

अत्र सन्न्यासनिर्णयः 'विरहानुभवार्थं तु सर्वत्यागः प्रशस्यते' इति निरोधलक्षणग्रन्थोक्तरीत्या स्थेयम् । अत्रो'र्ध्वरेतःसु च शब्दे ही'ति सूत्रे ब्रह्मविदतिरिक्तसङ्गस्य भगवद्विस्मारकत्वेनावश्य-त्याज्यत्वेन श्रुत्या कथनादिति भाष्येण यस्याधिकारिणः सन्न्यासस्य भगवत्सक्तिसङ्गार्थत्वमवदत् । ततो विशिष्टाधिकारिणः स्फूर्तिमाहुः विशेषत इति विशेषात् पूर्वस्माद्विशेषात् । 'बहिस्तूभयथापि स्मृते-राचाराच्चे'ति सूत्रोक्तादित्यर्थः । अतो हेतोः श्रुत्युक्तरीत्या सर्वत्र पुरुषोत्तमं पश्यद्भिः स्थेयं न तु सत्सङ्गमात्रार्थं सन्न्यासं कृत्वा स्थेयमुपासनामार्गीयत्वात् 'सत्सङ्गलब्धया भक्त्या मयि मां य उपा-सिता'इत्येकादशस्कन्धवाक्यात् । अत्र सूत्रं साधनाध्यायीयं 'लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपी'ति 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' 'स एवाधस्तात् स उपरिष्टात् स पश्चात् स पुरस्तात् स दक्षिणतः स उत्तरतः स एवेद९सर्वमित्यथातोऽहङ्कारादेश एवाहमेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादात्मा ( पुरस्तादहं ) दक्षिणतोहमुत्तरतोहमेवेद९सर्वमित्यथात आत्मादेश एवात्मैवाधस्तादात्मो-परिष्टादात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेद९सर्वमिति' श्रुती । गीता तावत्तुरी-याश्रमीणस्य विरहाधिकारात्सन्न्यासयोगाध्यायीया ग्रहीष्यते 'कामक्रोधवियुक्तानां यतीनां यतचेतसाम् । अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मना'मिति । अभितो ब्रह्मनिर्वाणकस्य भक्तस्य सर्वात्मभावोनुमीयतेऽतो विदितात्मनामित्यस्य सर्वैरिन्द्रियैरनुवृत्त्या यतचेतसां विदितात्मनामित्यर्थः । आत्मपदार्थश्च न गौणः किन्तु मुख्य एव । सर्वात्मभावस्य स्वरूपं पूर्वोक्तभूमश्रुत्योक्तम् । द्वितीयश्रुत्या तु तद्वतां स्फूर्तय इति गीतायामपि तथा । अथ पदकृत्यम् । श्रीकृष्णयोर्विरह इति श्रीकृष्णयोः परस्परं विरहस्तयोर्भक्तानां विरहः । भक्तानामपि गुरुभक्तिरावश्यकीति भक्तिरसेपि श्रीरालम्बनम् । अत्र पञ्चाङ्गविप्रलम्भे द्वितीयाङ्गस्य विरहस्य ग्रहणं देशैक्येपि गुर्वादिपारतन्त्र्यं विरहलक्षणम् । 'तादृशस्य विशिष्टरहो विरह' इति सुबोधिन्युक्तलक्षणलक्षितत्वेनानन्दरूपत्वं 'प्रतिषेधादिति चेन्न शारीरादि'ति फलाध्यायसूत्रे दुःखतानिवारणात् प्रवासस्यापेर्ष्याभिलाषाणां दुःखरूपत्वेनाविवक्षितत्वमाहुरानन्देति विरहेणानन्दस्तस्य स्वस्वरूपस्यानुभवस्तस्मा इत्यर्थः । वस्तुतस्तु विप्रलम्भ इति वक्तव्ये विरहपदोपादानं भागवतमतस्य

१. विरलमित्यर्थः ।

परम्पराप्राप्तत्वेन तत्र च 'विरहातुरात्मे'त्युद्धववचनात्तदनुरोधेन । 'नोद्धवोण्वपि मन्न्यून'इति वाक्यादङ्गमपि विरहो विप्रलम्भपर्यायः । उक्तश्रीकृष्णविरहेत्यादिप्रयोजनाय कुत इत्यत आहुः विशेषत इति 'बहिस्तूभयथे'ति सूत्रोक्ताद्विरहानुभवरूपाद्विशेषात् । तादृशानुभवाय स्थेयमित्यन्वयः । स्थितौ प्रकाराकाङ्क्षायां कर्तृविशेषणम् । श्रुत्युक्तरीत्या सर्वत्र पुरुषोत्तमं पश्यद्भिरिति । उक्तश्रुत्या उक्तासर्वात्मभावास्तत्स्फूर्तिश्चेत्येवमुक्ता या रीतिस्तया सर्वत्राधस्तादादिदेशे आत्मादेशे निर्दिष्टे उत्तमं पुरुषमक्षरादुत्तमम् । पश्यद्भिरथात आत्मादेश इत्यादिश्रुत्युक्तसर्वात्मभावजस्फूर्तिविषयं कुर्वद्भिः । नेदं साधनसाध्यं किन्तु भगवत्प्रदानेन सिद्ध्यति । तदुक्तं 'प्रदानवदेवे'ति सूत्रे । सर्वात्मभावस्वरूपं निरोधलक्षणग्रन्थोक्तं यत्र नान्यत्पश्यतीत्यादिनोक्तं लिङ्गभूयस्त्वाधिकरणे निपुणतममुदीरितम् । 'विधैव तु निर्द्धारणा'दितिसूत्रे सर्वात्मभावो विद्या । 'नातः परतरो मन्त्रो नातः परतरः स्तवः । नातः परतरा विद्या तीर्थं नातः परात्पर'मिति निरोधलक्षणग्रन्थान्ते ।

सिद्धमाहुः । अनयेत्यादि

**अनया पुष्टिपद्धत्या ससूत्रश्रुतिगीतया ।**
**ज्ञात्वानन्दमयत्वं हि भजनीयो व्रजाधिपः ॥ २० ॥**

**अनया** प्रत्यक्षगया पुष्टिपर्यन्ता पद्धतिः पुष्टिपद्धतिः मध्यमपदलोपी समासो न तु मर्यादानन्तरं तत्फलं प्रदर्श्योपरता पद्धतिः तया पद्धत्या । सूत्राणि च श्रुतयश्च गीता च सूत्रश्रुतिगीताः सूत्रश्रुतिगीताभिः सहेति ससूत्रश्रुतिगीता तया, सहस्य सादेशः ताश्चोदाहृताः ताश्च निबन्धे 'वेदाः श्रीकृष्णवाक्यानि व्याससूत्राणि चैव हि । समाधिभाषा व्यासस्य प्रमाणं तच्चतुष्टय'मिति चकारो जैमिनिसूत्राणि सङ्गृह्णाति । **पुष्टिपद्धत्या भजनीयः** । किं कृत्वानन्दमयाधिकरणाद्वानन्दमयत्वं **ज्ञात्वा** । **हि** निश्चितोयमर्थः 'एवं विचारचातुर्यवद्भिः सद्भिर्व्रजाधिपे । आनन्दमयतानन्दसन्दोहायावधार्यते' इति श्लोकात् । अत्र सूत्रं 'आनन्दमयोभ्यासात्' श्रुतिस्तावत् 'को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यादेष ह्येवानन्दयाती'ति । गीतात्रयोदशेध्याये 'यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते । सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते' इति । अत्राकाशरूपानन्ददृष्टान्तः । सौक्ष्म्या पुष्टिमार्गीया तत्त्वता सापि दृष्टान्ते दृष्टान्तोक्तौ धर्मौ दार्ष्टान्तिकेपि । यद्वा 'यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रवि'रिति तत्रैव । 'आनन्दमानन्दमयोवसान' इति श्रीभागवते आनन्दमयत्वस्याच्युतत्ववद्भजनीयतावच्छेदकत्वम् । तदर्थमत्रानन्दमयत्वज्ञानस्योक्तिः । **व्रजाधिप** इति । अत्र सूत्रं 'अत एव चानन्याधिपतिरि'ति फलाध्यायतुरीयपादे । श्रुतिः 'सर्वस्याधिपति'रिति । गीताविस्तारः 'मदन्यत्ते न जानन्ति नाहं तेभ्यो मनागपी'ति भागवतम् ।

स्वरूपवर्णनमुपसंहरन्ति इतीत्यादिना ।

**इति स्वरूपसर्वस्वं धारयेद्यः समाहितः ।**
**स बुद्ध्वानन्दरूपं तु मुच्यते सर्वसंशयात् ॥ २१ ॥**

**इति** उक्तप्रकारेण **स्वरूपस्य सर्वं** आत्मात्मीयज्ञातिधनरूपं **स्व** वृतभक्तसर्वात्मभावनन्दादिगोधनादिसमाहितैकाग्रमनाः सम्यगासमन्तादात्मनो हितो हितकारी **यो धारयेत्** मननेन ततः पतनप्रतिबन्धकव्यापारात्मकधृतिं कुर्यात्स **आनन्दरूपं बुद्ध्वा सर्वसंशयात्तु मुच्यते** 'यस्यामतं तस्य मतं मतं यस्य न वेद स'इति श्रुत्युक्तो मन्तुः संशयस्तु वर्तत एव । मतं **स्व**ामतं **स्व** वेति । पूर्वोक्ता श्रुतिः सुबोधिन्यां 'यतो वाचो निवर्तन्त' इति श्रुतिः समानार्थेति प्रोक्तप्रायं 'आसामहो' इत्यत्र ।

सर्वे संज्ञायास्तु उक्तप्रकारं ब्रह्मान्यप्रकारं वा सर्वात्मभावः साधनं ज्ञानादि वा शब्दप्रत्यक्षानुमानोपमानानि प्रमाणं 'वेदाः श्रीकृष्णवाक्यानि व्याससूत्राणि चैव हि, समाधिभाषा व्यासस्य' प्रमाणं वा फलं वा भगवान् वाऽविद्यानिवृत्तिर्वा । आचार्या इमेऽन्ये वाल्मानः । **इति स्वरूपवर्णनम् ।**

स्वरूपस्वरूपं प्रस्तोतुं मङ्गलं स्मरन्ति । जयतीत्यादिना ।

**'जयत्याचार्यपादाब्जरेणुर्यल्लाभतः स्वयम् ।**
**तुरीयं पुरुषार्थं हि प्रीतः कृष्णः प्रयच्छति ॥ १ ॥**

यद्रेणुलाभतः यो यस्य चरणरेणुं वाञ्छति स तद्भवति तद्योग्यो वा भवतीति वा । तथा च यथाऽऽचार्येभ्यः पुष्टिमर्यादाभक्तिमार्गीयमोक्षं प्रयच्छति मोक्षदातृत्वेपि प्रीतस्तत्रापि कृष्णः सदानन्दो न तु विभूतिरूपस्तत्रापि स्वयं न तु धर्मरूपेण तथास्मभ्यमपि मोक्षं दास्यति प्रीतः कृष्णः स्वयम् । किञ्च ते यथाऽदेयदानदक्षास्तथा वयमपि भविष्याम इति भावः । स्पष्टं चेदम् 'आसामहो चरणरेणुजुषामहं स्या'मित्यत्र सुबोधिन्याम् । 'अनुव्रजाम्यहं नित्यं पूयेयेत्यङ्घ्रिरेणुमि'रित्येकादशचतुर्दशे पापाभावे चरणरेणुः कारणमुक्तमेवं च चरणरेणुलाभतः पापाभावः ततः प्रीत इति मर्यादोक्ता। पापाभावस्य भक्तिकारणत्वात् ।

संस्कृतदेहे तुरीयपुरुषार्थसिद्ध्यर्थं साधनमाहुः शब्देत्यादि ।

**शब्दार्थयोर्नित्यता तद्भक्तिरात्यन्तिकी हरौ ।**
**उदेति श्रीवल्लभेतिनामोच्चारणमात्रतः ॥ २ ॥**

श्रीवल्लभेतिनाम प्रतिपादकं श्रीश्रं श्रीश्रं श्रीश्रं श्रीश्रं श्रीश्रं श्रीश्रं श्रियः षट् । षड्श्रीयुक्ताः वल्लभाः श्रीवल्लभास्तेषां नाम **श्रीवल्लभेतिनाम** प्रतिपादकं प्रतिपाद्यंच प्रियत्वरूपश्रीवल्लभत्वविशिष्टम् । एतयोः शब्दार्थयोर्नित्यता तदुच्चारणमात्रतो'अनियमः सर्वासा'मिति सूत्रप्रमाणेनात्यन्तिकी **भक्तिरुदेति** । केति चेन्न हरौ । हरिर्मनो ब्रह्म 'मनसो ह्येव खल्विमानि भूतानि जायन्त' इति प्रथमचरणं प्रतिमारूपमपीति तत्रेत्यर्थः । यद्वा जिज्ञासाधिकरणोक्तनिर्गुणब्रह्मणः सकाशाज्जगदिति प्रथमचरणं प्रतिमारूपमपीति तत्रेत्यर्थः । मानसीसेवारूपात्यन्तिकी भक्तिः । तथा च पञ्चाग्निविद्यासंस्कृतदेहेभ्य इव चरणरेणुसंस्कृतदेहेभ्यः आत्यन्तिक्या भक्त्या तुरीयं पुरुषार्थं स्वयं प्रयच्छतीत्युक्तम् ।

तुरीयं पुरुषार्थं स्वयमुक्तं प्रपञ्चयामासुः आनन्देत्यादिना ।

**'आनन्दमयतानन्दसन्दोहो यत्प्रवेशतः ।**
**आनन्दरूपे भवति स वै श्रीवल्लभः प्रभुः ॥ ३ ॥**

यद् येभ्यः उक्तगुरूपसत्त्यादिमुखद्वारानन्दमयता जीवानां भवति 'आनन्दरूपे प्रवेशतः आनन्दस्य सन्दोहः समूहो भवति जीवीयसच्चिदानन्देष्वानन्दरूपे भवति स श्रीवल्लभः प्रभुः समर्थ इत्यर्थः ।

विभु साकारव्यापकं निरूप्य तद्रूपं निरूपयाम्बभूवुः सिद्धिवेत्यादिना ।

**सिद्धिवा यादृशी प्रोक्ता जीवानां सेवना कृता ।**
**तादृशीं स्वीयशिक्षार्थं दर्शयामास वाक्पतिः ॥ ४ ॥**

**सिद्धिवा** एकादशपञ्चदशाध्याये प्रोक्ता । न चैकोनत्रिंशाध्यायोक्तेति कुतो नोक्तमिति **वाच्यम्** । भाष्ये गोपालतापिनीयश्रुतिप्रोल्लेखा'द्भक्तिरस्य भजनमि'ति श्रुत्युक्तां मुख्यां ग्रहीतुं सिद्धिवे-

१. उत्सवरे । २. आचार्येभ्यः ।

त्याद्युक्तेः । सा पश्चान्मानसिकसाधनत्वादुक्तव्येदानीं संसारदुःखनिवृत्तिब्रह्मबोधनमानसीसेवारूपसिद्धिदा सिद्धान्तमुक्तावल्यां यादृशी प्रोक्ता तस्याः साधनभूतायाः कायिकीत्वात् तावत्तद्विषयीभूतं प्रतिमायाहुः षड्गुणैरित्यादि ।

**षड्गुणैः सहितो धर्मी कृष्णः सेव्यः परः प्रभुः ।**
**गुणाश्च भगवद्रूपाः रूपलीलाविभेदतः ॥ ५ ॥**

**षड्गुणैः सहितो धर्मीति** । अत्र 'आनन्दादयः प्रधानस्ये'ति सूत्रम् । 'गोपवेशमभ्राभं तरुणं कल्पद्रुमाश्रितं तदिह श्लोका भवन्ति सत्पुण्डरीकनयन'मित्यादिश्रुतिः । इयमस्मिन् सर्ववेदान्तप्रत्ययाधिकरणेस्ति, राजविद्याराजगुह्ययोगाध्याये 'ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते । एकत्वेन पृथक्त्वेने'ति तथा 'बहुधा विश्वतोमुखमि'ति गीता । **कृष्णः** सदानन्दः **परः** पुरुषोक्षरात्परः **प्रभुः** सर्वसामर्थ्यसहितः । 'सर्वसामर्थ्यसहित' इतिकृष्णाश्रयात् । **गुणाश्च** पूर्णानन्दैश्वर्यवीर्यादयः । **भगवद्रूपा** इति । सेव्या इत्यन्वयः । 'प्रकाशाश्रयवद्वा तेजस्त्वा'दिति सूत्रम् । 'गोपवेश'मित्यादिश्रुतिः । 'सत्यं ज्ञानमनन्तं ब्रह्म' 'सत्यं ज्ञानमनन्तमानन्दं ब्रह्म' 'अरसं सर्वरसो निर्गुणः सर्वशक्ति'रिति श्रुतयः । शक्तयो हि पूर्णानन्दैश्वर्यवीर्ययशःश्रीज्ञानवैराग्याण्यपि । 'निर्गुणं गुणभोक्तृ चे'ति 'ज्योतिषामपि तज्ज्योति'रिति 'सर्वतः पाणिपादं तत्', इति 'सूक्ष्मत्वात्तदविज्ञेय'मिति, 'सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जित'मिति, 'निर्गुणं गुणभोक्तृ चे'ति यथायोग्यं श्रुतिपदानुकूला गीता । **रूपलीलाविभेदत** इति तज्ज्ञात्वेत्यनेनान्वयः । **रूपाणि** श्रीपञ्चकयुक्तगोवर्धनाधीशैश्वर्यरूपादिरूपाणि । **लीलाः** 'तदेजति तन्नैजति तद्दूरे तद्वन्तिके' इत्यादिश्रुत्युक्ता निष्प्रतियोगिन्यः ।

सप्रतियोगिन्यो बाललीलाद्याः । **तज्ज्ञात्वेत्यादि** ।

**तज्ज्ञात्वा सेवनाकार्येत्येवंरूपविभेदतः ।**
**सेवयामास वागीशो बहुरूपाणि वै हरेः ॥ ६ ॥**

**तद्ब्रह्म** सर्वत्र प्रसिद्धोपदेशाधिकरणोक्तरीत्या प्रथमपादमपीति **ज्ञात्वा** । **किञ्च** 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीते'तिश्रुत्या च ज्ञात्वा । 'त्वया ततं विश्वमनन्तरूपे'ति विश्वप्रदर्शनाध्याये गीतया च ज्ञात्वा । **सेवना कार्येति** हेतोरेवं वक्ष्यमाणप्रकारेणेत्यर्थः । तद्रूपं निरूप्यते । प्रतिमाया जगन्नित्यत्वेन नित्यत्वात् कार्यकारणवस्त्वैक्यमर्षणं प्राप्नोति । तथा च घटः कपालद्वयं संयोगसहितमस्ति कार्यं कारणं च । अत्राभिन्ननिमित्तोपादानो घटः । एवं जगत्कार्यमभिन्ननिमित्तोपादानं ब्रह्माभिन्नं पटवच्च । 'कार्यकारणवस्त्वैक्यमर्षणं पटतन्तुवत्' इति वाक्यात् । तत्रापि साकारब्रह्मणः 'यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्ता'दिति तैत्तिरीयोक्तं भावेन रूपम् । 'नवाम्बुदानीकमनोहराय प्रसन्नराजीवविलोचनाय । वेणुस्वनामोदितगोकुलाय नमोस्तु गोपीजनवल्लभाय' इत्युक्तं तरुणं प्रादेशमात्रं वा जगदन्तर्गतप्रतिकृतिरिति तद्रूपम् । 'कटकाद्युपचाराः साक्षात्कृता भवन्ती'ति निबन्धटीकायाः । न तु 'सदंशेन जडा अपि' इति निबन्धादयोगोलके वह्निरिव ह्युक्तं रूपं व्याप्तम् । भक्तभावेन पूर्वं सदंशत्वेपि कार्यकारणवस्त्वैक्यमर्षणानन्तरं तिरोहितज्ञानानन्दाविर्भावाङ्गीकारेण सदंशमात्रत्वाभावात् । 'सर्वं खल्विदं ब्रह्म' इति छान्दोग्ये नृसिंहतापिनीये च 'सच्चिदानन्दात्मकमिदं सर्वमि'ति च । तथा च भाष्यम् 'भक्तिमार्गे तु भक्त्या तत्र प्रकट' इति भक्तभावेन पूर्वोक्तदिशा न्यूनेन अन्यथा ततो न्यूनेन ततोन्यथेति बोध्यम् । अग्रे स्पष्टम् ।

शिक्षायां हरिः ॐ 'ॐ शन्नो मित्रः शं वरुणः शन्नो भवत्वर्यमा । शन्न इन्द्रो बृहस्पतिः शन्नो विष्णुरुरुक्रमः' । 'नमो ब्रह्मणे नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासी'ति सप्तमिश्रादीनुक्त्वा नमो ब्रह्मण इत्येकत्वपूर्वकं वन्दनभक्तिरुक्ता । ञिमिदा स्नेहने, मेद्यतीति मित्रः 'अमिचिमिदिशसिभ्यः क्त्रः' इति क्त्रन् । व्रियते वृणोति वा, वृञ् वरणे, 'कृवृदारिभ्य उनन्' । इयर्ति अर्यमा, 'श्वन्नुक्षन्पूषन्' इति निपातितः अर्यमा सूर्यः साम वा । इन्दति 'ऋज्रेन्द्रे'त्यादिना रन् । बृहतां पतिः 'तद्बृहतो'रिति सुट्तलोपौ । विष्लृ व्याप्तौ वेवेष्टि 'विशेःकिच्चे'ति नुः । उरु क्रमो यस्य ।

एष्वेकस्य रूपलीलाविभेदतो ज्ञानमाहुः ।

**गोवर्धनाधीशरूपं मूलरूपानुकारतः ।**
**शरणीयं च सेव्यं च भक्तिमार्गानुसारतः ॥ ७ ॥**

**मूलरूपं** ब्रह्मरूपं देवरूपं तुरीयं तत्त्वं तदनुकरणतः अनुकृत्यधिकरणे 'सर्वोपि पदार्थस्तमेवानुकरोति सूर्यं रश्मय इव छाया पुरुषमिवैवं तुरीयं देवं गोवर्धनाधीशरूपमनुकरोती'ति तदनुकारः । कर्मण्युपपदे घञ् । ततस्तसिल् । अत्र मूलरूपे सूत्रं 'पुरुषाश्मवदिति चेत्तथापि,' 'अदृश्यत्वादिगुणको धर्मोक्ते'रिति । श्रुतिस्तावत् । 'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीरा' इति । 'क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते । उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत' इति 'यस्मात्क्षरमतीतोहमक्षरादपि चोत्तमः । अतोस्मि लोके वेदे च प्रथितः पुरुषोत्तमः' इति गीता । **शरणीयमिति** । शरणमार्गो निबन्धे 'जगन्नाथे विठ्ठलेशे श्रीरङ्गे वैङ्कटेऽथवा, यत्र पूजाप्रवाहः स्यात्तत्र तिष्ठेत तत्परः' इत्यत्र स्वाशयप्रकाशनद्वारा स्थितिरूपः । तद्विषयीकार्यम् । **सेव्यमिति** व्याकृतमिदं पदम् । भक्तिमार्गो ह्युत्सवादिनिरूपणे वक्ष्यते तदनुसारस्तदनुसरणं तस्मात् ।

शब्दात्मको भगवान् निबन्धे भावनान्तरे चास्ति । प्रथमद्वितीयस्कन्धौ चरणौ, तृतीयचतुर्थौ जङ्घे, ऊरू, श्रीहस्तः, स्तनभागौ, हृदयम्, शिरः वामश्रीहस्तः क्रमेण ।

**अथ पीठकभावना** । भगवतो भागवतस्य रूपं 'उत्क्षिप्तहस्तः पुरुषो भक्तमाकारयत्युते'ति निबन्धाद्भक्ताकारणाश्रयो भगवान् रसमर्यादया भावनीयः । 'तस्माच्छ्रीकृष्णमार्गस्थ' इति वाक्यात् । 'सर्वरस' इति श्रुतेश्च । तत्र रसो भक्तिः स च 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्ति'रिति सूत्रादालम्बनोक्तावप्युद्दीपने किंचिद्वक्तव्यमपि चानुभावसंचारिभावा वक्तव्याः । तत्र **विहगो** मुनिः 'प्रायो बताम्ब विहगा मुनय' इति, सोनुभावः भक्तिमनुभावयतीति । **द्वितीयविहगोपि** । **मेघः** कालो लीलानुकूलः उद्दीपनश्चेष्टारूपत्वात् । **शेषः** सङ्कर्षणः शय्यादिरूपः । आलम्बनविभावः व्यूहत्वात् । आकार्यभक्तो हि 'सर्वं सर्वमयमि'ति श्रुतेः शेषो द्वितीयः शेषपत्नी । श्रीगोवर्धनस्थाश्रयो भक्ता धर्मार्थकामाश्रयो विभावा आलम्बनविभावाः । गावो गोकुललोकबोधिका उद्दीपनविभावाः । श्रीनृसिंहोऽक्षरः 'प्रभुत्वेन हरेः स्फूर्तौ लोकत्वेन तदुद्भव' इति निबन्धाल्लोकबीजम् । भगवानक्षरस्थ उत्तमः पुरुषः । अधो यमुनाजित् । अन्यच्छ्रीगोवर्धनजिद्धरिदासवर्यः तदुक्तं नित्यलीलावादे विद्वन्मण्डने यावती रसमर्यादा तावन्तोर्था भगवद्रूपा मन्तव्याः अयमेको भक्तिरसः । शब्दात्मको भगवान् इतिपक्षे 'उत्क्षिप्तहस्तः पुरुषो भक्तमाकारयत्युत । दक्षिणेन करेणासौ मुष्टीकृत्य मनांसि नः । वामं करं समुद्धृत्य निह्नुते प्रश्रय चातुरीमि'ति ॥ ११ ॥ सार्ध-

पद्योक्ताकारणार्थमेव निकुञ्जमन्दिरद्वारे स्थितोस्तीति पीठिकाभावना । अथ शब्दार्थयोरौत्पत्तिक-सम्बन्धाद्वक्ष्यमाणरीत्या षड्धर्मादिभावनास्तया रीत्या समष्टिभावनायामपि कृतायां 'जयति जननिवासो देवकीजन्मवाद' इति पद्यसङ्गृहीतनित्यलीलावादोक्तलीलाभावनायामपि विद्वन्मण्ड-नोक्तदिशा सिद्धायां धर्मिनिरूपणात्प्रमेयरूपधर्मिस्फूर्तेर्मूले उक्तत्वाच्छब्दार्थरसरूपगुणो रूपे वेणुगीतम् । अत्र प्रमेयप्रकरणं षड्गुणयुक्तस्वरूपवर्णनेन धर्मिनिरूपणमिति स्वुभयरूपरसभावनायां परिकल्प्यते । वेणुगीतारम्भे 'सगोगोपालकोच्युत' इति । 'अच्युतं पादपद्मैकरूप'मित्यत्राच्युतत्वं भजनीयतावच्छेदकं रूपमुक्तं, सोच्युतः सगोगोपालकः गोगोपालाः पीठकस्थाः । किञ्च 'इत्थं शर-त्स्वच्छजल'मिति वृन्दावनविशेषणात्पीठकस्था श्रीयमुनाजित् । निकुञ्जरूपवृन्दावनद्वारे स्थितो भक्ता-कारणार्थमिति शब्दात्मको भगवान् इति पक्षे पीठिकाभावना । उत्पलाब्जानां माला स्वरूपे वर्तते चूतप्रवालश्लोकोक्ता । तस्याः स्वरूपं योगमाया । गोपालतापिनीये श्रुतिः 'कण्ठं तु निर्गुणं प्रोक्तं माल्यन्ते आद्ययाजया । माला निगद्यते ब्रह्मंस्तव पुत्रैस्तु मानसै'रिति । आद्या मायाजा तया माल्यन्ते माल्यते । कीर्तिमयी सा । कीर्तिमयीं वनमालामिति'बर्हापीड'श्लोकसुबोधिन्याः । 'वृन्दा-वनं सखि भुव' इत्यत्र 'अद्रिसान्वपरतान्यसमस्तसत्त्व'मिति वृन्दावनविशेषणान्निकुञ्जमन्दिरद्वारे तेन गोवर्धनाधीशपदसमानता । अर्थपक्षे रसरूपा विभावाः । 'धन्याः स्म मूढमतय'इत्यादिश्लोके धर्माणा-मैश्वर्यादीनां निरूपणम् । तदग्रे स्फुटिष्यति । 'कृष्णं निरीक्ष्य'त्यत्राप्सरसां स्वरूपं तासां भावने सत्युपयुज्यते । 'गावश्च कृष्णमुखनिर्गते'त्यनेन पीठिकास्थगवां स्वरूपम् । 'प्रायो बताम्ब विहगा' इत्यनेन शुकमयूरस्वरूपम् । 'नद्यस्तदे'त्यत्र श्रीयमुनाजित्स्वरूपम् । 'दृष्ट्वातप' इत्यनेन कन्दराया मेघत्वेन भावने तत्स्वरूपमुक्तम् । 'पूर्णाः पुलिन्द्य' इत्यनेन भक्तत्रयस्य पुलिन्दीत्वेन भावने तत्स्वरूपमुक्तम् । 'हन्तायमद्रि'रित्यनेन सम्पूर्णपीठिकायाः स्वरूपम् । 'गागोपकै'रित्यनेन श्रीगोवर्धने पुलिन्दीषु च कृपोपपत्तिः । इत्यमर्थपक्षे विभावाः । ननु शब्देनैव निर्वाहेऽर्थस्य द्वितीयतया 'एकमेवाद्वितीयं ब्रह्मे'ति श्रुतिविरोध इति चेन्न । शब्दसृष्टेरर्थस्यापि शब्दात्मकत्वात् । किञ्च ब्रह्मणो विरुद्धधर्माधारत्वेन शब्दः पुंस्त्वविशिष्टः ब्रह्मार्थरूपं नपुंसकत्वविशिष्टम् । तथा च श्रुतिः 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जन'मिति । पद्मपुराणे तु'निष्कलो निष्क्रियः शान्तो निरवद्यो निरञ्जन'इति । एतेन छान्दसं नपुंसकत्वं श्रुताविति ज्ञायते । तेन पुंस्त्वनपुंसकत्वविशिष्टं विरुद्धधर्माधारो ब्रह्मरूपमिति । इति पीठिकाभावना समाप्ता ।

अथ गुणप्रकरणे यत्तत् 'निर्धर्मको वा भिन्नो वा निरोधं कुरुते यदि । तदा व्यर्थं समस्तं स्या'दिति षड्गुणवर्णनमाहुः कृष्ण इत्यादि ।

कृष्णः स्वैश्वर्यरूपेण प्रकटो बाललीलया ।
नवनीतादिचौर्येण स सेव्यस्तत्प्रभावतः ॥ ८ ॥

समष्टिरूपेण सेवितोपि व्यष्ट्या धर्मरूपेण । एवं धर्मिरूपस्य सेवायां श्रीनवनीतप्रियजित् दुग्धस्य सर्वप्रतिष्ठाभूतस्य तत्त्वं नवनीतम् । 'पयसि सर्वं प्रतिष्ठित'मिति संहिताश्रुतेः । तदपि शुद्धम् । नवनीते तेजोरूपघृतस्य सत्त्वात् । 'तेजो वै घृत'मिति श्रुतेः स आश्रयः । 'सर्वमत्तुमभ्रियते'ति बृहदारण्य-कात् । भक्तिविशेषाधिकारिणां भक्तानामिच्छातः 'अचलत्वं चापेक्ष्ये'ति सूत्रोक्तायाः । कृष्णः सदानन्दः स्वैश्वर्यरूपेण प्रकटो भवति । तदा बाललीलया युतो भवति । नव-नीतादिचौर्येण रूपेण प्रतिमारूपं च भवति । आदिना रोधादि । इत्युक्तं भवति ।

नवनीतचौर्यं शक्यतावच्छेदकं नवनीतचौर्यविशिष्टनवनीतचोरे शक्तिः । यद्यप्यष्टमी तिथिः रोहिणी-नक्षत्रं वृषराशिरिति न नवनीतचोरपदप्रवृत्तिनिमित्तं नवनीतचौर्यं, तथापि अनुकृतेर्नवनीतचौर्यं शक्यतावच्छेदकं बोध्यम् । सर्वकर्मकर्तृत्वमष्टमीतिथिजातस्य भवतीति चौरकर्मकर्तृत्वमपीति वा, अत एवैकादशसुबोधिन्यां'मूर्त्याभिमतया स्वये'त्यस्य प्रकारसहस्रमध्ये नवनीतचौर्यादिरूपेषु स्वभावो नियामक इति । प्रसिद्धं तु नवनीतप्रियजित्त्वं शक्यतावच्छेदकम् । एवं चोत्सवाध्याये ऐश्वर्य-निरूपके या बाललीला तया नवमेध्याये ज्ञाननिरूपके नवनीतादिचौर्यं तेन च प्रमाणप्रकरणीयाः सर्वा लीलाः प्रसिद्धाः श्रीनवनीतप्रियजितीत्युक्तम्, 'जानीत परमं तत्त्वं यशोदोत्सङ्गलालित'मिति भाष्यात् । ननु मूलरूपानुकारत एव सेव्यो मुख्यत्वादित्याकाङ्क्षायामाहुः प्रतिविधानम् । स सेव्य इत्यादि । भवेदेतदेवं यदि धर्मित्वेनैव भक्तिविषयः स्यात्किन्तु ऐश्वर्यादिरूपा धर्मा अपि नवनीतचौर्यादि-रूपैस्तस्य मूलरूपस्य प्रभावः प्रकृष्टो भावो धर्मस्तस्माद्धेतोः स नवनीतचोररूप ऐश्वर्यधर्मोपि सेव्यः । अन्यथा'प्रकाशाश्रयवद्वा तेजस्त्वा'दित्यत्र निरूपितो भगवतो धर्माभेदो माहात्म्यं जीवा-त्मैक्यं च ज्ञापयन स्नेहमात्रपर्यवसायी स्यात्, एवं तु स्नेहेन धर्मानुवृत्त्याख्यसेवापर्यवसायीति सिद्धा-न्तमुक्तावलीस्थ'कृष्णसेवा सदा कार्ये'ति वाक्यानुगुण्यमेव गुणः । कृष्णो भगवान् । भगवानिव भगा अपि सेव्या इति । अन्यथा युगलगीते'कृष्णे वनं यात'इत्युक्ते सति तल्लीलाः प्रगायन्त्य इति वक्तव्ये'कृष्णलीलाः प्रगायन्त्य' इत्युक्तौ कृष्णपदं व्यर्थं सत् किंचिज्ज्ञापयति कृष्ण इव कृष्णलीला इति अतिप्रयोजनको ग्रन्थः स्यात् । भगा लीलावत् । धर्मी त्वरसः, सर्वरसोयं त्वैश्वर्यधर्मोद्भुतरसः ।

ऐश्वर्यलक्षणम् । ईश्वरस्य भाव ऐश्वर्यमित्यत्र प्रकृतिजन्यबोधे प्रकारस्य महात्मन ईश्वरेण सह भेदसम्बन्धस्याव्युत्पन्नत्वेनालौकिकविषय एव युक्त्यगोचरेऽभेदसंसर्ग आस्थीयते, 'प्रकाशाश्र-यवद्वा तेजस्त्वा'दिति सूत्रभाष्योक्तरीत्या । आस्थिते च प्रकृतिप्रत्ययार्थाभेदे ऐश्वर्यमालम्बनविभावः । तद्गुणातिशया नवनीतचौर्यादय उद्दीपनविभावाः । स्तवकीर्तनाश्रुपातादयोनुभावाः । तनुजवित्त-जसेवामाहात्म्यज्ञानवैराग्यगतिधृतिहर्षादयो व्यभिचारिभावाः । देवादिविषयो विस्मयः स्थायिभावः । अत्राधिकारिणो राजसा नराः, 'मल्लानामशनि'रित्यत्र सुबोधिन्यां स्पष्टम् । वात्सल्यरसो धर्मी इत्येवमुक्तं वात्सल्यरसो वा । अथ परिमाणम् । वैश्वानराधिकरणे गोवर्धनाधीशरूपं मूलरूपानु-कारत इति तरुणमिति गोपालतापिनीयश्रुत्युक्तस्तरुणाकारः स्पष्ट एव नो प्रोच्यते । तत्रापि 'प्रक्षिप्त-हस्तः पुरुषो भक्तमाकारयत्युते'ति भागवतार्थनिबन्धोक्तः श्रीमदाचार्यभावितत्वात् । स चातिरसरूपे यद्वा पुरुषोत्तमयोगाध्याये 'स सर्वविद्भजति मां सर्वभावेन भारते'ति गीता । अत्र गीतायां सर्वभावेन मां भजतीत्यनेन । पूर्वा....भगवद्धर्मधर्मितनुभावरूपमत्र नवतनुत्वनिवेशो परिवृढाष्टकटीकायाम् । ऐश्वर्यरूपं तु बाललीलापदसमभिव्याहारात्र तरुणमिति प्रादेशमात्रं प्रोच्यते । तथा च तत्रैव भाष्यम् । 'शब्दादिभ्योन्तःप्रतिष्ठाना'दित्यादिसूत्रे विरुद्धधर्माणां तत्तद्धर्मोपपत्तिरित्यैश्वर्यमेव भगवतो वर्णितमिति 'आमनन्ति चैन'मिति सूत्रे तस्मात्प्रादेशमात्रो व्यापक इति वैश्वानरो भगवानेवेति सिद्धमिति च । तस्मात्प्रादेशमात्रो व्यापक इति भाष्ये व्यापकत्वांशे 'आनन्दादयः प्रधानस्य' इति सूत्रे लीलापदार्थास्तु ब्रह्मधर्मत्वेन व्यापका उच्यन्ते । व्यापकस्य धर्मिणो अनागन्तुकधर्मस्य व्यापकत्वनियमादिति भाष्यम् । तेन ऐश्वर्यादीनां ऐश्वर्यादय एवं तेषामपीति न भावनीयं पूर्वसूत्रे प्रतिषेधात् । गुणप्रकरणनिबन्धे । ऐश्वर्यादिलक्षणानि । कर्तुमकर्तुमन्यथाकर्तुं समर्थ ईश्वरः । 'येनैतावत्कृतं सर्वं स कृष्णो भगवान्परः । इति दर्शयितुं षड्भिरध्यायैः षड्गुणाङ्गगा'विति षड्गुणप्रयोजनं देवकीवसुदेवादीनामन्त-

बहिरानन्ददानं ज्ञानादिना पुत्रादिभ्यश्चातस्तादृशानामन्तर्बहिर्ज्ञानं पुत्रादिभ्य आनन्दान् यः प्रयच्छति । स ईश्वरः स एवैश्वर्यम् वेणुगीते च 'ईश्वरः पूज्यते लोके मूढैरपि यदा तदा । निरुपाधिकमैश्वर्यं वर्णयन्ति मनीषिणः' इति 'धन्याः स्म मूढमतय' 'इत्यस्य सुबोधिन्यां, तथा अन्यान्यपि । बाललीलायां स्पष्टं तु श्रुत्सवाध्याये आनन्ददानं स्वेन पुत्रेण बहिरानन्ददानमैश्वर्यकार्यम् । तथा ग्रामीणानां मूढानां पूजनं चोत्सवाध्यायनिरूपितबालकस्य श्रीनवनीतरायजितः स्मर्यते । तद्रूपे साकारव्यापकत्वमग्रे शृङ्गारस्वरूपे वर्णिष्यते । परं धर्मिणि अतो धर्मे ऐश्वर्यरूपे । अत्रैवं भक्त्या प्रकटे सर्ववेदान्तप्रत्ययाधिकरणोक्तरीत्या सर्वे धर्मा उपसंहर्तव्याः । तेन धर्मी न निर्धर्मकः नापि भिन्नो निरोधं कुरुत इति सिद्धम् । अत्र अन्यथाकर्तुं समर्थत्वं ज्ञेयम्, अन्यद्वा ज्ञेयम् । अत्र श्रुतिः 'व्रजे स बालको भूत्वा क्रीडते पुरुषोत्तम' इति, 'यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्ता'दिति, 'मूर्त्याभिमतया स्वये'ति श्रीभागवतैकादशे, गीता 'यद्यद्विभूतिमदि'ति, सूत्रं 'अन्तस्तद्धर्मोपदेशा'दिति, सूत्राणां न्यायरूपत्वात् प्रतिकृतावपि प्रवृत्तिः, तथापि श्रीगोवर्धननाथजिदन्तर्गतानां धर्माणां....वादिना....तर्यादीनामित्याशङ्कायामत्र सूत्रं 'सर्वाभेदादन्यत्रेम' इति । श्रुतिस्तु सर्ववेदान्तप्रत्ययाधिकरणविषयवाक्यं 'सत्पुण्डरीकनयन'मित्याद्या 'रसो वै स' इति श्रुतिश्च । गीता तावत् साधनाध्यायस्य श्रुतिसूत्रयोरियम् । 'मयि चानन्ययोगेन भक्तिरव्यभिचारिणी'ति क्षेत्रक्षेत्रज्ञाध्याये साधननिरूपिका ।

**वीर्यरूपेणेति ।**

**वीर्यरूपेण मथुरां गत्वा भक्ताधिमर्दनम् ।**
**कृत्वा गतः स्वप्रिययालिङ्गितो भक्ततापहृत् ॥ ९ ॥**

एवं 'अचलत्वं चापेक्ष्ये'ति सूत्रोक्ताया आधुनिकनित्यलीलाप्रविष्टभक्तेच्छातो वीर्यरूपेण प्रकटो भवति । सर्वरस इति श्रुतेर्वीरस्य गोवर्धनेशस्य भावो भवति । तदा राजसप्रकरणीयमथुरागमनादिलीलायुतो भवति । भक्ततापहृत्त्वेन टिप्पण्युक्तमधुसूदनत्वेन रूपेण प्रतिमारूपं च भवति । अत्र भक्ततापहृत्त्वं मधुसूदनत्वरूपं शक्यतावच्छेदकम् । प्रसिद्धं मथुरेशजित्त्वं शक्यतावच्छेदकम् । गुणाश्च यथासम्भवमुपसंहर्तव्या एव । अतः प्रिययालिङ्गितः । प्रिया कुब्जा । स सेव्य इत्यन्वयः । राजसप्रकरणीयपञ्चचत्वारिंशाध्याये वैराग्यनिरूपणं न वीर्यनिरूपणं अतः कुब्जारूपया प्रियया वीर्यरूपेणालिङ्गित इति सङ्गतं न भवति । तथैव मथुरां गत्वेति मथुरागमनं राजसप्रकरणीयाष्टत्रिंशाध्याये । 'अथापराह्णे भगवान्कृष्णः सङ्कर्षणान्वितः । मथुरां प्राविशद्गोपैर्दिदृक्षुः परिवारित' इति वाक्यात् । अष्टत्रिंशाध्याये च वैराग्यनिरूपणं, न वीर्यनिरूपणम् । अग्रिमाध्याये धर्मिनिरूपणं, न वीर्यनिरूपणम् । तदग्रिमाध्याये चैश्वर्यनिरूपणं, न वीर्यनिरूपणम् । एकचत्वारिंशाध्याये च भक्ताधिमर्दनं, मल्लादिवधस्य कृतत्वेन दर्शनाद्वीर्यनिरूपणम् । अक्षरात्मकत्वेन स्त्रीरूपजीवेषु । अग्रिमाध्याये च मातापितृबन्धविमोचनोग्रसेनराज्यदानादेर्यशोबोधकत्वेन यशोनिरूपणं, न वीर्यस्य निरूपणम् । अग्रिमाध्याये श्रीनिरूपणं, न वीर्यनिरूपणम् । अग्रिमाध्याये ज्ञाननिरूपणं, न वीर्यनिरूपणम् । पञ्चचत्वारिंशे च 'सानङ्गतप्तकुचयोरुरसस्तथाक्ष्णोर्जिघ्रन्त्यनन्तचरणेन रुजो मृजन्ती । दोर्भ्यां स्तनान्तरगतं परिरभ्य कान्तमानन्दमूर्तिमजहादतिदीर्घताप'मिति वाक्याद्भक्तायाः कुब्जायास्तापहृत् ।

१. भावनायां सङ्कर्षणमहावाक्यानीति क्रमः ।

अन्यत्र मथुरां गत्वा वीर्यरूपेण भक्ताधिमर्दनं कृत्वा सान्दीपिनिगुरुं गोपिकाश्च पुत्रद्वारा भ्रमरगीतोक्तज्ञानद्वारा च सान्त्वयित्वा पुनर्मथुरां गत इत्यर्थः । तत्रापि वीर्यरूपेण भक्ताधिमर्दनातिरिक्तलीलाकरणाद्वीर्यरूपेण मथुरां गत्वेत्यादि सङ्गतं न भवति यद्यपि तथापि 'ह्येकं रूपं रसात्पृथ'गिति नैयायिकानां सामानाधिकरण्येन रूपे गुणे एकत्वसङ्ख्या तथा पृथक्त्वरूपो गुणो यथा तथा वैराग्यादिना भक्ताधिमर्दनातिरिक्तं सर्वमुपपद्यताम् । वीर्यलक्षणम् । 'वीर्यं मे दुश्चरं तप' इति वाक्यात्तपः । तत्त्रिविधम् । 'बुद्धिवीर्यं क्रियावीर्यं क्रिया च द्विविधा मते'त्यस्यां कारिकायां बुद्धिवीर्यं बुद्धिरूपतत्त्वान्तरकृतिः सा सुभद्राप्रसङ्गे लोकदोषेण सर्वदा कन्यात्वेनैव स्थितेरयुक्तत्वादुत्पन्नायाः सुभद्रायाश्चौर्यायार्जुनाय दानकृतिः । अस्याः कृतेः स्थितिलीलायामन्तर्भाव उत्पन्नानां तत्तन्मर्यादया पालनात् । वैकुण्ठस्य सुभद्रारूपस्येच्छाशक्त्या विजयाच्च स्थितिलीलारूपा कृतिः । तथा च युगलगीतसुबोधिनी । वीर्याणि जगत्कर्तृत्वादिरूपाणीति । क्रियावीर्यं तु जनकश्रुतदेवगृहयोरेकेनैव रूपेण गमनकृतिः । यद्यप्यन्यथा कर्तुं सामर्थ्यरूपमैश्वर्यमिदं तथापि ह्यन्यथा कर्तुमित्यंशे क्रियावीर्यमत्र कर्तुं कृतिरिति पर्यायः । तुमुनो भावे विधानात् । सामर्थ्यं चैकीभावलक्षणं व्यपेक्षालेक्षणं वा । अन्यथा वैषम्यनैर्घृण्ये स्याताम् । एवं चैकीभावरूपसङ्ख्या ऐश्वर्यम् । कृतिः कर्म वीर्यमिति भेदः । वेणुगीते च 'वीर्यं देवेषु तत्रापि स्त्रीषु तत्रापि कामतः, सान्निध्ये पुरुषाणां च मूर्च्छा तेन ततो महत्' । अत्रापि तत्तन्मर्यादया पालनकर्तृत्वरूपा कृतिर्वीर्यं बोध्यम् । कृतिपदं विहाय वीर्यपदमुपात्तं तत्प्रयोजनं देवेष्वित्यादिनोक्तम् । अत्र वीर्यपदं मुख्यम् । अन्यत्र गौणं यथा पूतनामारणलक्षणवीर्ये एवमग्रेपि सर्वत्रैतादृशविषये बोध्यम् । वीररसस्य विभावादयः । सर्वसामर्थ्यसहितः आलम्बनविभावो मूर्तिः । भक्तानां वीररसभावनमनुचितमिति सर्वसामर्थ्यसहित इति विशेषणम् । वीरप्रकृतिकभक्तनिरोधार्थं वा लीला, तदा विशेषणं न देयम् । उद्दीपनं महाबलकुवलयापीडहननम्, 'लीलयेभो हतो येन सहस्रद्विपसत्त्वभृ'दिति चाणूरवाक्यात् । बालकिशोरोपेक्षणं कृष्णं प्रति स्पर्धा चानुभावौ । 'न बालो न किशोरस्त्व'मिति चाणूरवाक्यात् । गजादपि बलिष्ठत्वस्मरणं व्यभिचारिभावः । 'तस्माद्भवद्भ्यां बलिभिर्योद्धव्यं नानयोत्र वै' इति वाक्याद् उत्साहः स्थायी भावः । परिमाणं तु 'समो मशकेन समो नागेने'त्यादि श्रुत्युक्तम् । प्रादेशमात्रं वा तावतोपि प्रादेशस्य सम्भवादवतारादौ । श्रुतिः 'यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्ता'दिति महानारायणोपनिषत्स्था । सूत्रम् 'अन्तस्तद्धर्मोपदेशा'दिति । न्यायरूपत्वात्, गीता, 'यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा । तत्तदेवावगच्छ त्वं मम तेजोंशसम्भव'मिति । तथापि श्रीगोवर्धननाथजिदन्तर्गतानां सेवादि न तत्प्रभूतानामैश्वर्यादीनामित्याशङ्कायाम् । सूत्रादिकं पूर्वोक्तं सर्वाभेदादित्यादि । गुणोपसंहारक्लेशे तु श्रुतिरन्या । गोपालतापिनीये 'शङ्खचक्रगदापद्मवनमालावृतस्तु वा' इति । अत्र दक्षिणभागमारभ्य शङ्खपद्मगदाचक्राणि बिभ्रन्मधुसूदनो भवति ।

अत्र प्रमेयप्रकरणीयलीलाप्रसिद्धेतिभावनायां द्वारकानाथजित्तनुजगोविन्दजित्कृतायामस्ति तदा कालियदमनक्रियया स्त्रीगोपालवशीकरणाद्वीर्यम्भवति परं मथुरां गत्वेत्यादिविरोधाद्गुणोपसंहारेण योज्यमत्र एवं सर्वत्र । मूलरूपस्येश्वरस्य धर्मैरैश्वर्यादिचरित्रं प्रमेयप्रकरणीयं योज्यमत्र ।

---

१–ब्रह्मद्वारेत्युक्तत्वाज्ज्ञानरूपेण गतः । २–शक्यत्वं सामर्थ्यं प्रपञ्चे अशक्यत्वभानात् । ३–प्रपञ्चे कृतप्रयत्नापेक्षः ।
४–एकीभावेन एको भगवांल्लीलास्थपदार्थश्चेति प्रतीत्या रूप्यते व्यवह्रियत इत्येकत्वमिति तद्रूपा सङ्ख्या ।

**यशोरूपेणेति ।**

**यशोरूपेण भक्तार्तिं हृतवान्स्वप्रयासतः ।**
**सर्वशक्तियुतः प्रेम्णा स सेव्यो विट्ठलेश्वरः ॥ १० ॥**

अश्नुते अश भोजने, अशेर्देवने युट् चेत्यसुन् यशः । पूर्वोक्तप्रकारेण भक्तानामिच्छातो यशोरूपेण प्रकटो भवति । यशोरूपेण प्रेम्णो ज्ञापकविरहात्मकशब्दात्मकस्य योजनेन सात्त्विकभगवद्भक्तानामार्तिः गीतोक्ताधिकाररूपा 'चतुर्विधा भजन्ते मा'मिति फलप्रकरणीयद्वितीयाध्यायोक्ता । तस्य यशोनिरूपकत्वात् तृतीयेध्यायेपि । तत्र च भक्तानामवस्थाद्वये द्वितीयावस्थानुपचिते विरहानुभवो अतो भक्तानामार्तिः । तामार्तिं **स्वप्रयासतः** स्वस्य प्रेम्णा ज्ञापक इत्याद्युक्तः प्रयासः प्रयत्नः प्रमेयबलं ततः सर्वासु शक्तिषु व्रजवनितासु हृदि युतो मिश्रितः । विरहे आन्तरत्वाद्विट्ठलेश्वरस्य । तादृशः सन्नार्तिं हृतवान् । 'आन्तरं तु परं फल'मिति सुबोधिन्याः परत्वावच्छिन्ने फले ये विविधा भावा उत्पद्यन्ते न ते सङ्गमे इति । एतज्ज्ञापितं नयनमुद्रणेन विरहेन्तर्भावे ज्ञानाभावात् । अतोत्र संयुक्तो रतिपतिः वियुक्तस्त्वग्निरूप इति । **स विट्ठलेश्वरः प्रेम्णा** हर्षभावेन **सेव्यः** । 'रतिर्देवादिविषया व्यभिचारी तथाञ्जितः भावः प्रोक्त', इति काव्यप्रकाशात् । अत्र विट्ठलेश्वरत्वं शक्यतावच्छेदकम् । अत्र यशोरूपविट्ठलेश्वर आलम्बनं मन्दिरोत्सवादिकमुद्दीपनम् । हर्षकारणत्वात् । अश्रुपातादयोनुभावाः हर्षकार्यत्वात् । वैराग्यतनुवित्तजसेवादिसञ्चारिभावाः । हर्षः स्थायी भावः । विस्तारिकायां हर्षस्योत्सवादिभिरुत्पत्तिकथनात् । उद्दीपनेपि ह्युत्सवादिकमुपात्तम् । प्रेम्णः सञ्चारिणोस्य हर्षस्य स्थायिभावत्वं शान्तरसे निर्वेदवत् । अस्य दुःखात्मकस्यापि सुखरूपत्वं रसस्यापरिमितलोकोत्तरानन्दरूपत्वेन तदन्तर्गतदुःखस्यापि सुखरूपत्वम् । नखक्षतकृतदुःखस्येव अत्र प्रेमपदमावृत्तं तच्च स्वाश्रयानन्दे लाक्षणिकम् । अतोत्र प्रेमपदेन हर्षो रसः । श्रीकृष्णगोपिकाप्रौढेत्यादिना वक्ष्यते । वैश्वानराधिकरणोक्तं प्रादेशमात्रं परिमाणम् । निबन्धे लौकिकालौकिककर्तृत्वम् । वेणुगीते यशोलक्षणम् । 'समपादाम्बुजं सूक्ष्मं कटिलग्नं भुजद्वयम् । किरीटिनं लसद्वक्षं विट्ठलेशमहं भज' इति शङ्खचूडहननेन स वैराग्ययुतः शङ्खयुतः । मूलरूपनिष्ठं वैराग्यं अपि यशोरूपेपि प्रत्येति । एकं रूपमितिवत् । पीठं तु सर्वात्मभाववद्भक्तहृदयम् । निर्गुणे भगवद्रूपे मूढानां सात्त्विकभगवद्भक्तानां प्रत्यक्षासक्तिवारणं विधाय ज्ञानभक्त्यात्मकं स्वधर्मं तेषु योजयित्वा तज्ज्ञापकविरहात्मकं शब्दात्मकं च योजयित्वा मनसो निवेशनं यत्तत्करणत्वं यशस्त्वं अष्टाविंशतितत्त्वसम्मिते नाम्नि यशसीत्यादिगुणप्रकरणे श्रुतिगीताध्याये कारिकासु लक्षणं वेणुगीतीयलक्षणसंमेलनेन । तदुक्तं वेणुगीते । 'यशो यदि विमूढाना प्रत्यक्षासक्तिवारणात् । स्वधर्मं योजयेत्तेषु तदा भवति नान्यथे'ति । अत्र प्रयोगः । अत्र यशसा, मूढानां भक्तानां प्रत्यक्षासक्तिवारणज्ञानभक्तियोजनोभयद्वारा निर्गुणे भगवद्रूपे मनोनिवेशनं कारयतीति । 'यशः कीर्तिः समाज्ञा च स्तवः स्तोत्रं स्तुतिर्नुति'रित्यमरः । आधारोत्कर्षाधायकगुणवर्णनं स्तुतिः । एतदेवाधारोत्कर्षाधायकसर्वजनाह्लादकगुणवत्त्वम् । गुणवद्गुणवर्णनम् तत्त्वं स्तुतित्वं यशस्त्वमपि । विदा ज्ञानेन ठान् शून्यान् लात्यनुगृह्णाति यः स्वयं स विट्ठलः कथ्यते बुधैः स ईश्वरो विट्ठलेश्वरः पुष्टिरूपमिदम् । शङ्खचक्रगदापद्मश्रिया जुष्टमिति मर्यादारूपम् ।

**विरह इत्यादि ।**

**विरहे भावितप्रेम्णा प्रियया द्वारिकास्थितः ।**
**मार्गतोङ्गीकृतः सेव्यः श्रियेया द्वारिकेश्वरः ॥ ११ ॥**

१–निर्गताः प्रकृतिगुणा यस्मात् । निबन्धलीलायै । २. श्रिया वा इति पाठः ।

उत्तरार्धे एकत्रिंशाध्याये अष्टाविंशे वा स्पष्टोर्थः । तत्र निर्गुणः कृष्णः गुणत्रयाभावः कृष्णश्चेति । त्रिविधभक्तदुःखहर्ता समष्टिव्यष्टिभेदेन इति । यद्वा द्वारिकास्थितः उत्तरार्धप्रथमाध्याये । प्रिया रुक्मिणी तया तद्विरहे भावितः पञ्चाशत्तमे आगतो रुक्मिण्याङ्गीकृतः श्रियश्चेति । अत्र पञ्चाशत्तमे श्रीरूपरुक्मिणीनिरूपणेन श्रीनिरूपणादिति भावः । श्रिया वा इति पाठः । श्रयति हरिमिति श्रीः क्विब्वचीति क्विब्दीर्घौ । यद्वा प्रकृतिपुरुषौ रामकृष्णौ अतो योगेन बन्धूनां द्वारिकास्थापने मनसापि द्वारिकास्थितः प्रियया प्रकृत्या रामरूपया प्रेम्णा विरहाय भावितो मन्त्रितः मनसा आगतः अङ्गीकृतो विरहार्थं बहिर्गमनम् । श्रियेति पूर्ववत् । पद्मगदाचक्रशङ्खाश्चतुर्षु श्रीहस्तेषु माधवष्टिप्पण्युक्तदिशा गदाचक्रे दक्षिणयोरब्जशङ्खौ वामयोर्धारयन् भवति अत इदं रूपान्तरम्। शङ्खगदाद्युदायुधमिति वाक्ये शङ्खगदे आदी ययोस्ते शङ्खगदादिनी पद्मचक्रे उदायुधे यस्येति तद्गुणसंविज्ञानो बहुव्रीहिः । शङ्खपद्मे दक्षिणे गदाचक्रे वामयोर्धारयन् कृष्णो भवति एवमेतानि धारयति यदा शङ्खचक्रगदापद्मक्रमेण कृष्णो भवति तदा तानि हस्तेषु धारयन् वर्तते । यदा शङ्खाब्जचक्रगदा धारयन् नारायणो भवति इतिवत् शङ्खगदयोः आदिनी चक्रपद्मे उदायुधे यस्येति विगृह्य वामपरावृत्तः क्रमः । शङ्खचक्रगदापद्मविराजितमथुराजन्मलीलो वनमालीति प्राप्तम् । श्रीलक्षणं निबन्धे 'हरिरेव श्रियं भुङ्क्ते श्रियं नान्यस्तु कश्चन' इति हरिभोग्यत्वम् । 'श्रियो हि परमा काष्ठा सेवकास्तादृशा यदी'ति वेणुगीते । आश्रयत्वाच्छ्रीधर्मः । परिमाणं प्रादेशमात्रम्, तावत्प्रदेशस्य वामनावतारादौ सम्भवात् । रसस्तु शृङ्गारः । 'रुक्मिणीरमणः कामपिते'ति पुरुषोत्तमसहस्रनाम्नः । भक्तिरसे तु कामो दिदृक्षामात्रं श्रुतिस्तु'यदेकमव्यक्तमनन्तरूप'मिति अनन्तरूपेषु तावत् प्रादेशमात्रं रूपम् । 'अन्तस्तद्धर्मोपदेशा'दिति सूत्रम् । प्रतिकृतेः सूर्यत्वाभावेपि सूत्राणां न्यायरूपत्वेन प्रतिकृतावपि प्रवृत्तेः । गीता 'यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा । तत्तदेवावगच्छ त्वं मम तेजोंशसम्भव'मिति ।

ज्ञानं क्रमप्राप्तं निरूपयितुमादौ गोकुलचन्द्रमसं निरूपयन्ति कदाचिदित्यादि ।

**कदाचित् यमुनातीरे ज्ञानरूपेण वेणुना ।**
**प्रियामाकारयन्सेव्यस्त्रिभङ्गो गोकुलाधिपः ॥ १२ ॥**

अत्र ज्ञानस्वरूपं निरूप्यते, अतो ज्ञाननिरूपके युगलगीते कदाचित् युगलैर्गीतकाले । यमुनातीरे 'तर्हि भग्नगतयः सरितो वै' इति वाक्यात् । ज्ञानरूपेण इति । अत्रापि मूलरूपगुणाः पूर्णानन्दैश्वर्यादयः सामानाधिकरण्येन उपसंहर्तव्या नान्ये तु गुणाः । गुणोपसंहारपादोक्तरीत्या भक्तेच्छया ज्ञानरूपेण प्रकटो भवति । अभेदे प्रकृत्यादिभ्यः उपसङ्ख्यानमिति वार्तिकेन तृतीया । ज्ञानाभिन्नगोकुलाधिप इत्यन्वयः । त्रिभङ्गस्त्रयो भङ्गाः कटिग्रीवाचरणेषु यस्य सः । गोकुलाधिप इति । 'श्रीमद्गोकुलपालक' इति गोकुलाष्टकात् अन्यथा नन्दगोकुले तदीयजनैर्न गीतो भवेत् । युगलगीते 'वामबाहुकृतवामकपोलः' अत्र तु दक्षिणबाहुगतदक्षिणकपोलः । वामपरावृत्तो देवस्त्रीणाम् । स्त्रीणां पुरुषाणां च दक्षिणपरावृत्तो भावोद्बोधको वेणुनाद इति श्रीगोकुलचन्द्रमा इति प्रसिद्धः । आकारयन्सेव्य इति । 'हन्त चित्रमबला' इत्यत्र हन्त अबला इति सम्बोधनं गत्वा दर्शनाभावायेति सुबोधिन्याः आकारयन् न तु सर्वशक्तिसंयुक्तः । अत्र शक्यतावच्छेदकं गोकुलाधिपत्वम्, प्रसिद्धं गोकुलचन्द्रमस्त्वम् । अथ ज्ञानलक्षणम् । क्षमालिङ्गेन स्वभावपरावृत्तिलिङ्गेन च माहात्म्यज्ञानं ज्ञानोत्कर्षश्च सारम् । ज्ञानवान् क्षमावत्त्वाद् भृगूपाख्याने कृष्णवज् ज्ञानोत्कर्षवान् स्वभावपरावृत्तेः

---

१ मधुसूदनः ।

वेणुगीते 'नद्यस्तदा तदुपधार्ये'ति छन्द उक्तनदीवत् इति । गुणप्रकरणे कारिका 'ततः परन्तु ज्ञानस्य निर्णयो हरिमेधसः क्षमा तस्योत्तमं लिङ्गं कृष्ण एव प्रतिष्ठिते'ति 'ज्ञानोत्कर्षस्तदैव स्यात् स्वभावविजयो यदि, हरेश्चरणयोः प्रीतिः स्वसर्वस्वनिवेदनादि'ति ज्ञानलक्षणं वेणुगीते । एवं च भृगूपाख्याने यथा क्षमा तथात्रात्मारामत्वलक्षणस्वभावपरावृत्तावपि ज्ञानोत्कर्षः प्रतीयते । भावस्तु स्मृतिः । उक्तकाव्यप्रकाशात् । रसो भविष्यति शृङ्गाररससंचारिभाववैराग्यवत् । अत्र ऐश्वर्यादीनां पाठक्रमादिव क्षणेन ज्ञानरूपः स्मरणविषयः श्रीगोकुलेन्दुरालम्बनं सदृशादृष्टचिन्ताद्युद्दीपनं वेणुनादप्रभावो देहविस्मरणं नृत्यमोहादि, 'वृन्दावनं सखि भुव' इत्यत्र 'कृष्णं निरीक्ष्य वनितोत्सवचारुवेश'मित्यत्र च निरूपितोऽनुभावः । वैराग्यसेवादयः सञ्चारिणः । स्मृतिः स्थायिभावः । परिमाणं पूर्वोक्तं सेव्य इति पदात्सूत्रादिकं च पूर्वोक्तम् ।

वैराग्यमाहुः । स्वीयेति ।

**स्वीयविद्वेषिवैराग्यलीलयाधारयद्गिरिम् ॥**
**तद्रूपेणार्तिहृत्सेव्यः प्रभुर्गोवर्धनेश्वरः ॥ १३ ॥**

स्वीया गोकुलस्थास्तद्विद्वेषीन्द्रादिस्तत्र वैराग्यं विषयवैतृष्ण्यसंज्ञं नित्यलीलाप्रवेश इन्द्रादिविषयतृष्णा स्यात्तदभावाय वैराग्याय साधनप्रकरणे चतुर्विंशाध्याये कृतापराधेपीन्द्रे प्रसादान्मदत्याजनं लिङ्गं तेन दोषदूरीकरणरूपा लीला तया हेतुभूतया लीलया कृत्वा द्वाविंशोक्तायामेकं रूपमितिवच्छ्रियां मुख्यतया प्रतीतायां श्रीगोवर्धनगिरिमधारयदतो वैराग्यरूपाभिन्नो गोवर्धनेश्वरो भक्तार्तिहृत्प्रभुः सेव्य इति भावः । गोवर्धनयुत ईश्वरः श्रीगोवर्धनमन्यथाकर्तुं समर्थः गोवर्धनेश्वरः गोवर्धनस्य ईश्वरः इति विग्रहे षष्ठी संयोगसम्बन्धे इति युतपदेनोक्तं, न तु मध्यमपदलोपिसमासः वैराग्यरूपेण प्रकटे ईश्वरत्वं एकं रूपमितिवत्प्रलेष्यति । त्रयोविंशे 'यः सप्तहायन' इत्यत्र वेणुं वादयन्निति सुबोधिन्या वेणुवादकः एकत्र करे शङ्खः । मेघतत्त्वापहारेण निर्वीर्या मेघाः कृताः । 'अपां तत्त्वं दरवर' इति वाक्यात् । आधिदैविकसंबन्धेनेन्द्रदत्तजलपानं कृतमिति भावनायाम् । गोवर्धनेश्वरत्वं शक्यतावच्छेदकम् । भावस्तु मतिः । रसो भविष्यति । श्रीमद्गोवर्धनेश्वर आलम्बनम् । गुरूपसत्तिशास्त्रार्थोपदेशाद्युद्दीपनम् । सेवाद्यनुभावः । शमदमेहामुत्रफलभोगनैराश्यमुमुक्षुत्वानि सञ्चारीणि । गुरूपसत्तिः शास्त्रार्थोपदेशमन्त्राद्यैरर्थनिर्धारात्मकमतिः स्थायिभावः । ननु वैराग्यं स्थायिभावः तत्प्रसङ्गादिति चेत्सत्यम् । एकं रूपमिति यत्प्रलेष्यति वैराग्यस्य धर्मिरूपत्वात् । परिमाणं प्रादेशमात्रम् । त्रिभङ्ग इत्यनुवर्तनीयम् । पीठं त्र्यक्षरात्मकं वर्तुलम् । वैराग्यलक्षणं पूर्वोक्तम् । अत्राप्युत्कर्षो वेणुगीते 'उत्कर्षश्चापि वैराग्ये हरेरपि हरिर्यदि । भक्त्या च तादृशत्वं च सा सेवा सेवकोचिते'ति । तादृशत्वं सखित्वम् । तदुक्तं गुणप्रकरणे—'कृष्णो विरक्तः किं वाच्यस्तत्संबन्धात्स्त्रियोऽपि हि । कामैकरसपूर्णाश्च विरक्ताः सर्वथा मता' इति । अत्र भक्त्या हरेरपि हरयोत्र हि स्त्रियः सख्यश्चेति कामैकरसपूर्णासु सर्वथा वैराग्यं विषयवैतृष्ण्यलक्षणम् । सूत्रादिकं पूर्वोक्तम् ।

अन्यत्रोभयोः स्वरूपयोर्ज्ञानवैराग्यवैपरीत्यं देवपदेन शृङ्गाररसत्वेन तुरीयं तत्त्वं निरूपितम् । परं'यतो वाच' इति श्रुतेस्तदेकप्राधान्यं संदिग्धमिति धर्मत्वेन शृङ्गारमाहुः । मदनमित्यादि ॥

**मदनं कामरूपेण स्त्रीभावाद्भावितो हरिः ॥**
**मोहयन्मूलरूपेणावतीर्णः सेव्य एव सः ॥ १४ ॥**

भावितो दैन्येनोत्पादितो हरिः शौरिः श्रीभावान् शृङ्गारभावान् हेलालीलादिहावजनकान् मोहयन् तेषां वैचित्यं कुर्वाणो हि कामरूपेण साक्षान्मन्मथमन्मथरूपेण कामाधिदैविकरूपेण श्रीनिरूपके श्रीप्राधान्येनावतीर्ण एकोनत्रिंशाध्याये यः स एव धर्मिनिरूपके त्रिंशाध्याये 'तत्रातिशुशुभे ताभिर्भगवान्' इति वाक्ये श्रीलक्षणाच्छ्रीरूप एव मूलरूपेणानन्दरूपेण त्रिंशाध्याये 'योगेश्वरेण कृष्णेने'ति कृष्णपदान्मदनं मोहयन्निलेवमवतीर्णो धर्मी सेव्यो न सन्देह इत्यर्थः । 'अपि संराधने प्रत्यक्षानुमानाभ्या'मिति व्याससूत्रात् । 'यतो वाच' इत्यस्या उत्तरार्धे 'आनन्दं ब्रह्मणो विद्वान्' 'इति श्रुतेः' । अन्यथा शोक एवावतिष्ठेदिति भावः । मदनं मोहयन्निति त्रिंशाध्यायसन्दर्भीयमिति मदनमोहनजित्त्वं शक्यतावच्छेदकं न तु श्रीभावमोहनजित्त्वम् श्रीभावान्मोहयन्नित्यस्य वाक्यस्यैकोनत्रिंशाध्यायसन्दर्भीयत्वात् । अत्र भाव उक्तकाव्यप्रकाशाद् रसो भवत्येव । श्रीमदनमोहनजिदालम्बनं स्वामिन्यौ च । उद्दीपनं मंदिरोद्यानादि अनुभावोश्रुपातादिः । संचारिणो वैराग्यादयस्त्रयस्त्रिंशत् । रतिः स्थायी भावः । परिमाणमत्रापि प्रादेशमात्रम् । त्रिभङ्ग इत्यत्राप्यनुवर्तनीयम् । तासां द्वयोः स्वामिन्योर्मध्य एकं स्वरूपं त्रिंशाध्याये वर्तत एव । गोकुलाधीशजित्यप्ययं उभयस्वामिनीमध्यस्थस्वरूपो गुण उपसंहर्तव्यः । धर्मिलक्षणं तु साधनाध्यायद्वितीयचरणेस्त्वेवोभयव्यपदेशाधिकरणेऽतस्त्वेपि विरुद्धाः सर्वे गुणा उपसंहार्याः । एकं रूपमितिवदपि ज्ञेयाः । सूत्रादिकं पूर्वोक्तम् ।

षट्स्वौत्संगिकेषु स्वरूपेषु तेषु चान्यरूपेषु गुणोपसंहारैरनेकलीला अतिदिशन्ति स्म । एवमित्यादिना ।

**एवंविधानेकलीलारूपैस्तद्भावभाविताः ।**
**सेवयेदन्यथा तु स्यादपराधो न तत्फलम् ॥ १५ ॥**

षट्सु स्वरूपेषु प्रथमं श्रीबालकृष्णजित्स्वरूपम् । एवंविधा एवमुक्तपरामर्शे ऐश्वर्यादिभ्यस्तत्कारणलिङ्गज्ञापिका लीला उक्तास्तत्परामर्शेन विधाः प्रकारा यासां ता अनेका लीला अर्थात्तत्सदृश्यो लीलाः यथा प्रमाणप्रकरणीयोत्सवाध्यायप्रतिपाद्या ऐश्वर्यज्ञापकनन्दाद्युत्सवलीला तत्सदृशी प्रपञ्चविस्मृतिपूर्वकभगवदासक्तिजनकत्वेन महापुरुषकर्तृत्वेन भवनाशकत्वेन च वीर्यलीला पूतनामारणलक्षणा । एवं यशःश्रीज्ञानवैराग्यधर्मिणां लिङ्गभूताः कारणभूता ज्ञापिकाश्च या लीलास्ताभी रूप्यन्ते क्रियन्ते लिङ्ग्यन्ते ज्ञाप्यन्ते ये वीर्यादयस्तैरूपैः कृत्वा तासां मूर्तीनां भावैरुक्तै रससंयोगभावविस्मयभाववीरहर्षस्मृतिज्ञानशृङ्गारभावैश्च भाविता उद्बुद्धसंस्कारादिभिर्भावनास्मरणं तद्युक्तः यथायोग्यं पूर्वोक्ता गोवर्धनाधीशादिमूर्तीः षडौत्सङ्गिकमूर्तीश्चान्यामूर्तीश्च सेवयेदित्याज्ञा विधिराज्ञा । अन्यथान्यैः प्रकारैः सेवने तु "योऽन्यथा सन्तमात्मानमन्यथाप्रतिपद्यते । किं तेन न कृतं पापं चौरेणात्मापहारिणे"ति श्रुत्युक्त आत्मापहारलक्षणो दोषरूपोपराधः स्यान्न तु सेवाफलमित्यर्थः । तत्र उत्सङ्गे य कथ्यते स औत्सङ्गिकः श्रीबालकृष्णजित् । शैषिकः प्रत्ययः । यशोलीला प्रसिद्धा शकटभञ्जने यशोनिरूपके सप्तमाध्याये नात्र हि फलप्रकरणे । 'यशोरूपेण कृष्णोत्र प्रकटो बाललीलया । नवनीतादिचौर्येण स सेव्यस्तत्स्वभावतः' ॥ १ ॥ व्याख्यातम् ॥ गोविन्दजित्कृतभावनायामपि यशोलीला पूर्वोक्तात्रोररीकृता । शेषं यशो निरूपणवत् । पञ्चस्वौत्सङ्गिकेषु भावनावां भावना उदिताः । तथाहि श्रीनटवरजिति यशोलीला तृणावर्तभञ्जरूपा सप्तमाध्याये यशोनिरूपके । 'यशोरूपेण कृष्णोत्र प्रकटो बाललीलया । नवनीतादिचौर्येण स सेव्यस्तत्स्वभावतः' । व्याकृतम् । श्रीनवनीतप्रियजित्पार्श्वे श्रीमदनमोहनजित् श्रीबालकृष्णजिच्च स्वस्वत्र । 'मदनं कामरूपेण श्रीभावाद्भावितो हरिः । मोहयन्मूलरूपेणावतीर्णः

सेव्य एव सः' । निरूपितम् । अत्र जृम्भालीलेति भावनायां यशोनिरूपके सप्तमाध्यायेऽस्ति । 'यशोरूपेण कृष्णोऽत्र प्रकटो बाललीलया । नवनीतादिचौर्येण स सेव्यस्तत्प्रभावतः' । अत्र श्रीबालकृष्णजिति जृम्भालीला सत्त्वशुद्धिलीला च । जृम्भालीलाभावने 'यशोरूप' इत्यादिकारिका । सत्त्वशुद्धिलीलानाम चौर्यादिलीला अष्टमाध्यायोक्ता श्रीरूपा । 'स्वश्रीरूपेण श्रीकृष्णः प्रकटो बाललीलया । नवनीतादिचौर्येण स सेव्यस्तत्प्रभावतः' । श्रीनिरूपणे उक्तप्रायम् । गोकुलचन्द्रमोजित्पार्श्वे श्रीबालकृष्णजित्युलूखललीला प्रसिद्धा ज्ञानरूपा । 'एकदा भाण्डस्फोटेन रज्न्यूनतयापि हि । ब्रह्मत्वबोधनाख्यं हि ज्ञानं कुर्वन् स सेव्य उ' । ज्ञाननिरूपणे पूर्वं स्फुटम् । श्रीमदनमोहनजिति नलकूबरमणिग्रीवोद्धारलीला प्रसिद्धा । 'दामोदरेण' 'परमविक्रमिताितिवेपस्कन्धप्रवालविटपा'विितिपदाभ्यां वीर्यरूपा । 'वीर्यरूपेण यमलार्जुनौ गत्वाधिमर्दनम् । कृत्वा च मोचितौ चैव तद्रूपं सेव्यमेव च' । वीर्यनिरूपणे स्पष्टम् । भावनायामप्येवम् । बालस्यात्र मदनमोहनक्रीडानुकरणं न मदनमोहनत्वम् । इति तद्रूपनिरूपणम् ।

त्रिषु साकारव्यापकं तद्रूपं च निरूप्य तत्र स्थितं निरूपयितुं यद्यपि तत्र स्थिता अन्येप्यद्भुतादिरसाः पूर्वमुक्तास्तथापि शृङ्गाररसेनैवान्ये रसतां भजन्त इत्यावश्यकमन्येषु रसेषु रसताजनकं शृङ्गारमङ्गीकुर्वन्तः शृङ्गारेणाविहितभक्त्यात्मकेन यथा ब्रह्मत्वेन स्नेहः पुष्टे भवति न तथाऽविहितेन वात्सल्येन मत्या वा भवतीति गुरुभूताभिर्व्रजसीमन्तिनीभिरादृतम्, अक्षराभिन्नोऽक्षरे प्रतिष्ठित इति अदृश्यत्वाधिकरणेऽक्षरस्यापि ब्रह्मत्वं पुरुषस्यापि तयोः परापरभावः अभेदश्च, एतादृश एव हि ब्रह्मवाद इति भाष्यात्तादृशं शृङ्गारं निरूपयांबभूवुः प्रतिज्ञापूर्वकं मङ्गलाचरणपूर्वकं चाज्ञानां गीतावविदुषां स्वविप्रसम्भवात् शृङ्गारस्वरूपम् । कन्दर्पेत्यादि ।

**कन्दर्पकोटिलावण्यं नत्वा गोपीजनप्रियम् ।**
**शृङ्गाररसरूपं हि यादृक् तादृङ् निरूप्यते ॥ १ ॥**

ननु पुरःस्फूर्तिकं ब्रह्मत्वं तत्र स्थितं रूपं न त्यक्तुं योग्यमतः कुतः शृङ्गाराङ्गीकार इति चेच्छृणु । ब्रह्मत्वं सत्यत्वादिरूपं शृङ्गारे पर्यवसति, श्रीभागवतमते सत्यं परं धीमहीति ब्रह्मणि वेदार्थविस्तारकसति साधौ सत्यपदप्रयोगात्सत्यं लक्ष्मीस्तथा एकादशे 'आसीज्ज्ञानमथो ह्यर्थ एकमेवाविकल्पित'मिति ज्ञानं ब्रह्म तथाऽशने सङ्कर्षणः शेषस्वरूपोऽनन्त इत्यर्थ उक्त एता........वत्त्वं ब्रह्मवादत्वं........द्वितीय....धन....नित्यस्य लीलावादे । ननु शृङ्गारः कामस्तृतीयशास्त्रप्रतिपाद्यः कथं तुरीयरूपे तुरीयशास्त्रप्रतिपाद्ये कामपुरुषार्थ इति चेन्न 'भगवानेव हि फलं' सायुज्यं मोक्ष आनन्दोमृतमिति पर्यायाः । सायुज्यं च युनक्तीति युक् सह युक् सयुक् सयुजो भावः सायुज्यम् । 'सायुज्यं कृष्णदेवेन शीघ्रमेव ध्रुवं फल'मिति निबन्धात् । 'भगवत्सेवोपयोगिदेहो वैकुण्ठादिषु अलौकिकसामर्थ्यं च' पुष्टौ फलम्, तत्र वास्तविकाणुत्वविशिष्टानामक्षरात्मकानां जीवानां ब्रह्मणि योगस्तूष्णीमुतानन्दपदवाच्यत्वमपि सायुज्यपदवाच्यस्येति कोप्यानन्द इति संशये गीता प्रवर्तते 'मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यह'मिति मर्यादामार्गीयमोक्षे मायादिकं गर्भाधानमवसीयत इत्येवम् । अत एव 'सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जित'मिति क्षेत्रक्षेत्रज्ञाध्याय एव ब्रह्मस्वरूपम् । पुष्टिमार्गीयफलयोस्तु 'आनन्दं ब्रह्मणो विद्वान्' इति श्रुत्या स्फुट एवानन्दो रसात्मेति द्वादशाध्याये

१. रसो वै स इति श्रुत्या च सिद्धम् ।

'तं गोरजश्छुरितकुन्तले'त्यत्र धर्मार्थकाममोक्षाणां चतुर्णां धर्मादिसहितानामेव मोक्ष इत्येकवाक्यतेति शृङ्गाररसो निरूपित इति च सुबोधिनीटिप्पण्यां स्फुटेयं 'अतः शृङ्गारस्वरूपं निरूप्यत' इति प्रतिज्ञा । श्रुतिरूपाणां व्रजसीमन्तिनीनामत्र शृङ्गार एव मनोरथान्तप्राप्तेः 'मनोरथान्तं श्रुतयो यथा ययु'रिति वाक्यात् । आनन्दमात्रं पुराविदामिदं रूपमत एव वेणुगीतसुबोधिन्यां 'कृष्णं निरीक्ष्ये'त्यत्र 'तत्क्वणितवेणुविचित्रगीत'मित्यस्य व्याख्याने गीतं शृङ्गारान्तर्गतमिति विचित्रमिति विशेषणेन शृङ्गार एव सर्वरसा इति नाट्यशास्त्रसिद्धान्त इति विचित्रमद्भुतरसवत् । किञ्च अन्यस्य रसत्वमेव न मन्यन्ते यथा महान्तः सुवर्णाभरणान्येवोपकरणानि कुर्वन्तीति सुबोधिन्यां भावनोक्ताः सर्वत्र शृङ्गारभावना । तथा हि

**श्रीगोवर्धननाथीशेषु** भक्तमनोरथेन तामसप्रकरणीयफलप्रकरणोक्तपूर्णानन्दैश्वर्यादयः प्रधाने भावेलिमाः 'उत्क्षिप्तहस्तः पुरुषो भक्तमाकारयत्युते'ति भक्तमनोरथपूरकं रूपमालम्बनविभावः शृङ्गारे शान्तरसे च । ननु कुतः शृङ्गार इति बृहदारण्यके ज्योतिर्ब्राह्मणे तद्वाच्यस्यै'तदात्मकाममाप्तकाममका-म९रूपं तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमेवमेवाय९शारीर आत्मा प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तर'मिति अत्र प्रियस्त्रीदृष्टान्तशारीरात्मप्राज्ञरूपजीव-दार्ष्टान्तिकयोर्दर्शनात् । इदं प्रथमाध्यायतृतीयपादान्ते 'सुषुप्त्युत्क्रान्त्योर्भेदेने'त्यधिकरण उक्तम् । आचार्यमार्गे तु अन्यत्सर्वं भक्तमनोरथहेतुकं भक्तिरसरूपम् । तत्रालम्बनमुक्तम् । उद्दीपनविभावस्त-चेष्टा, अनुभावः भगवता समं संलापादिः, स च भगवच्छय्यादिरूपशेषः पीठस्थः यद्यपि चतुर्भिर्व्यूहै-रेकोत्रालम्बनविभावस्तथापि रामः........पि कृष्णावतारे स दृष्टः अनिष्टशङ्कायाः रसान्तःपातिनो व्यभिचारिभावाः हरिदासनिष्ठाः नृसिंहोऽक्षरावतारः योऽदृश्यत्वाद्यधिकरणे पुरुषोत्तमाधिकरणं तत्रोक्ताभिन्नाक्षरश्चरणारविन्ददौ मुक्तभक्तौ मयूरो, मुक्तजीवः शुकश्च भक्तमुक्तौ त्रयोपि व्रजभक्तानां पुंभावगताः । मेषश्चेष्टारूपः कालः महिषी........क्षे उपवेदादि ऋग्रूपगोम्यः..........पश्चा'दजा गावो महिष्यश्चे'त्यत्र कीर्तनाद् द्वितीयः शेषश्च, भावनीया गावः ऋचः शङ्खश्चेयमुनाजित्तयान्तःकरणीया इति ।

**श्रीनवनीतप्रियजित्सु** गुप्तरसप्रकारो बालभाव एव । निरावृतस्वरूपं रसाधायकमिति कटिवस्त्राणि नो धारणीयानि । वासुदेवव्यूहकार्यस्य मनोरथान्तदान आवश्यकत्वात् । 'जानीत परमं तत्त्वं यशोदोत्सङ्गलालितम् । तदन्यदिति ये प्राहुरासुरांस्तानहो बुधा' इत्यादि ।

**श्रीमथुरेशजित्सु** भुजाचतुष्टयं स्वानन्ददानं वासुदेवव्यूहस्य सायुज्यदातुः सत्त्वात्तत्क्रीडा पूर्वोक्तश्च व्यूहस्तत्सहिता गोपीजनानां भक्तत्वं................................गोचारणं कृत्वा व्रजे यदागच्छति तदा भक्तानां स्वमुखामृतपानं कारयति यत्तत् । द्वितीया स्वानन्ददाने प्रति-बन्धनिवारणं विरहजतापस्योपशमनम् । तृतीया स्वसेवाकारणं मार्गे सन्ध्याभोगस्य स्वीकरणम् । चतुर्थी आधिदैविकभावस्य परम्परोद्बोधनं वने चतुर्दशरसानां या लीला कृता सा, प्रत्येकरसानां स्थायिभावान् प्रकटीकृत्य व्रजभक्तासूद्बोधितेति ।

**श्रीमद्विठ्ठलनाथजित्सु** तामसप्रकरणीयफलप्रकरणद्वितीयाध्यायोक्तलीला प्रसिद्धा तत्र वीर्योक्ते मोक्षप्रसङ्गाद्वासुदेवप्रसङ्गात् वासुदेवचरित्रं बोध्यम् ।

**श्रीद्वारकानाथजित्सु**

'भ्रूवल्लीसंज्ञयादौ सहचरि निकरे वर्जयित्वा स्वकीयाम्
पश्चादागत्य तूष्णीमथ नयनयुगं स्वप्रियाया निमील्य ।

कोऽसीत्येतद्वचनमसकृद्वेणुना भाषमाणः
पातु क्रीडारसपरिचयस्त्वां चतुर्बाहुरुच्चै'रिति ।

**श्रीगोकुलाधीश**जित्सु साधनप्रकरणीयऋषिपत्नीप्रसङ्गः ।

**श्रीगोकुलचन्द्रमो**जित्सु फलप्रकरणीयचतुर्थाध्यायोक्तलीला ।

**श्रीमदनमोहन**जित्सु फलप्रकरणीयप्रथमाध्यायोक्तलीला भावनीया एवं षट्सु औत्स-ङ्गिकेषु गुणोपसंहारेण शृङ्गारलीला भावयितव्या । अष्टस्वरूपाणि धर्मिरूपाणीति भावनायां आनन्द-मनःशरीरजीवशरीरक्रियाप्राणानङ्गाः क्रमश इति केचित् ।

प्रकृतमुच्यते । **कन्दर्पकोटेर्लावण्यं** सम्भोगशृङ्गारो यस्य तं लवणा त्विट् लवणैव लावण्यम् । स्वार्थे ष्यञ् । 'लवणा त्विषी'ति विश्वः । शृङ्गारनिरूपणे विघ्नस्य ध्वंसाय यः कश्चिच्छृङ्गारस्तद्विशिष्ट-रूपस्य मङ्गले कर्तव्यं उपादानमुचितमिति विशेषणम । परकीयास्वेव रस इति विशेष्यमीदृक् ॥ १ ॥

**स्वच्छ** इत्यादि ।

**स्वच्छो मरकतश्यामः स्त्रीपुम्भावात्मकः पटुः ।**
**अनन्यपरतन्त्रश्च रसः शृङ्गार उच्यते ॥ २ ॥**

**स्वच्छः** श्यामरूपेऽयोग्यश्यामरहितो न शुचिर्नाप्युज्ज्वलः । तेन शृङ्गारपदोपादानेपि न पुनरुक्तिः । 'शृङ्गारः शुचिरुज्ज्वलः' इत्यमरः । **मरकत**मणिवच्छ्**श्यामः** । अत्र सुबोधिनी तृतीये षड्विंशेऽध्याये यद्विंदुरित्यत्र 'श्यामश्च गुणः शृङ्गारात्मको भवती'ति । भावत्रयाभिव्यक्तः स्थायी श्याम इति भ्रमं वारयामासुः । **स्त्रीति** स्त्रीपुंरूपो भाव आलम्बनविभाव आत्मा स्वरूपं यस्य आलम्बन-विभावो **मरकतश्याम** इत्यर्थः । **पटु**श्चतुरः । न **परतन्त्र** इति वक्तव्येऽन्यपदसंवलितपदेन स्वेतरपरो व्युदस्यते नित्यलीलायां स्वात्मकपरेषां तत्र इति हृदयम् । **रस** इति । रस आस्वादने । **शृङ्गारः** शृङ्गं प्राधान्यं इयर्ति स शृङ्गारः । कर्मण्यण् । शृङ्गो भावाङ्कुरः । **अनन्यं परं तन्त्रः शृङ्गारो रस** इत्यर्थः ॥ २ ॥

**गाढे**त्यादि ।

**गाढत्वाद्व्यापकत्वाच्च ब्रह्मत्वाच्छ्याम उच्यते ।**

शृङ्गारः श्यामो **गाढत्वा**ज्जलवद् **व्यापकत्वा**न्नीरूपनीलाकाशवत् नीरूपो 'नील आकाश' इति प्रस्थानरत्नाकरे प्रमेयप्रकरणे उपपादितम् । **ब्रह्मत्वा**दानन्दवदित्यनुमानत्रयम् । न च गाढत्वं शुभ्रपाषाणादौ, व्यापकत्वं मनआदौ, ब्रह्मत्वं स्वयंप्रकाशादाविति साध्याभाववद्वृत्तित्वात्साधारणा हेतव इति वाच्यम् । हेतूनां श्यामसमानाधिकरणश्यामत्वसमानाधिकरणान्यतरेण विशेषणीयत्वात् । न चैवमपि पक्षे हेत्वसिद्धिः विशिष्टज्ञाने विशेषणज्ञानस्य कारणत्वेन विशेषणीभूतश्यामाज्ञानप्रयुक्तश्यामसमाना-धिकरणगाढत्वाद्यज्ञानादिति वाच्यम् । श्यामसमानाधिकरणश्यामत्वसमानाधिकरणेत्याभ्यां श्यामे-तरासमानाधिकरणश्यामत्वेतरासमानाधिकरणयोर्विवक्षितत्वात् । भवति च पक्षे श्यामेतराशैत्याद्यस-मानाधिकरणगाढत्वं जलरूपदृष्टान्ते यथा तथा श्यामेतरदुःखासमानाधिकरणगाढत्वं यथा श्यामे-तराश्यामत्वासमानाधिकरणव्यापकत्वमाकाशरूपदृष्टान्ते तथा पक्षेऽपि ।

यथा च श्यामेतरानाह्लादकत्वासमानाधिकरणब्रह्मत्वमानन्दरूपदृष्टान्ते तथा पक्षेपीति परगमन प्रणाडी रसस्याहुः सार्धेन स्त्रीति ।

---

१. महत्तत्त्वसूताहङ्कारसूत्रमनयोनिरूपत्वनिरूपके श्यामत्वं देवहूत्यर्थमेव ।

स्त्रीपुंप्रेमविहारात्मगाथानन्दविभावतः ॥ ३ ॥
प्रादुर्भवति कृष्णात्मा हृदि भावाङ्कुरात्मकः ।
अनिर्वाच्यानन्दरूपानन्दानुभवसाक्षिकः ॥ ४ ॥

स्वगतो रसो भवति यदा रामसीतादयः परस्परानुरागे परस्परं कारणानि तदन्वयव्यतिरेकानुविधानात् । कटाक्षादयः कारणानि । असति रत्यादौ तदभावात् । लज्जाहास्यादीनि सहकारीणि न तत्कार्याणि । तेन विनापि सम्भवेन व्यभिचारात् । न वा कारणानि तदुत्तरत्वान्नैयत्यात् । किन्तु स्वसामग्र्या प्रादुर्भवन्ति सन्ति रत्यादेरुपवासकानि भवन्ति । सामग्रीसंपातेन रत्यादेरेव रूपस्य तत्र तद्विचित्रस्मितरुदितकार्यजननायोगेन सामग्रीवैचित्र्यापादकानि । अत्र विभावादिभिरभिव्यक्तः स्थायिभावो रसः । अयं शृङ्गमियर्तीति शृङ्गारः । शृङ्गो भावाङ्कुरः । अनन्यं परं तत्तत्र शृङ्गमियर्तीति शृङ्गारो रस इति । तथाहि सामाजिकानां सामाजिकरत्यादिवासनाया उद्बोधो हि रसः तस्याश्च रामादयो न कारणानि असन्निहितत्वात् । कटाक्षादीन्यपि न कार्याणि व्यधिकरणत्वात् । तेषामालम्बननिष्ठत्वात् । एवं सहकारिणामपि सामाजिकेष्वभावात् । किं तु तैर्भावनायाः प्रवर्तके सामाजिके बाह्यविषयेभ्यो व्यावृत्ते मनसि ज्ञानसुखात्मको रत्यादिः स्वयं प्रकाशते ज्ञानोपनीता विभावादयोपि तद्विषया इति समूहालम्बनरूपता । विभावनमनुभावनं सहकरणं च तस्य तस्य व्यापारास्तैश्च रत्यादेरीषत्स्फुटतरः स्फुटतमश्च प्रकाशः विभावनमनादिसामाजिकवासनान्तर्लीनरत्यादेर्वासनाया बहिःकरणम् । अनुभावनं तथाभूतस्य रत्यादेरास्वादाङ्कुरयोग्यतानयनम् । सहकरणं तथाभूतस्य तस्यास्वादाङ्कुरप्रादुर्भावनम् । इत्थं व्यापारवैलक्षण्यादित एव कारणादयो विभावादिव्यपदेशात्स्थायिभावो रसः ।

प्रकृतमुच्यते । प्रकृते तु रामसीतावल्लक्ष्मीकलानिध्योः स्त्रीपुंसोः 'वशीकुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथा' इति वाक्यात्प्रेमा । अयं शृङ्गार इति काव्यप्रकाशादौ । कथं शृङ्गारमात्रेण वशीभवेत् । शृङ्गारोऽपि भक्ताभावात्कस्येच्छया भवेत् । तेन प्रेम्णा प्रेमा शृङ्गारः । गौण्या प्रेमपदवाच्यः । 'शृङ्गारः शुचिरुज्ज्वल' इत्यमरे शृङ्गारनामानि त्रीणीति । यः प्रेमपदवाच्यः प्रेमा स प्रेमा च प्रेमा च प्रेमाणौ सरूपैकशेषः विहिताविहितभक्तिरूपौ ताभ्यां ये विहारास्तत्र प्रेम्णोवस्थाद्वयं संयोगविप्रयोगात्मकं तत्रापि विरहे सर्वोपमर्द इति न विहाराः संयोगे परं नवरत्नभागवतभक्तिवार्द्धिनीप्रोक्तं भवति सन्यासे च निरोधलक्षणग्रन्थोक्तं च भवति नोपदेशनं भक्तिमार्गस्य भगवत्सन्निधाने भगवदतिरिक्तस्यानुचितम् । किञ्च 'समुद्विजे भवद्धेतोः कंसादहमधीरधीः' इत्यत्र टिप्पण्यां ज्ञानमार्गीयसामग्र्या भक्तिमार्गसामग्री बलीयसीति निरूपणाद्भक्तिमार्गसामग्रीपूर्वकशृङ्गारविहाराः 'कपटोस्त्री व्याजदम्भोपधयश्छद्म कैतवे' इत्यादि 'मह उद्धव उत्सव' इत्यन्तामरोक्ता नाट्यवर्गे त आत्मनि वाच्यत्वेन यस्यास्तादृशी गाथा 'तददोषा'वित्याद्युक्तलक्षणकाव्यवन् निरोधप्रतिपादकदशमस्कन्धीया शब्दात्मिका तज्ञा ये आनन्दाः श्रवणरूपभजनानन्दाः विषयानन्दविलक्षणाः प्रेम्णा शुद्धानां व्यासाभिमारुतानामतिदुर्लभानां नारायणपराणामवस्थानुकृतिलक्षणनाट्यवतां मुक्तानां मुमुक्षूणां चानन्दाः स्वधर्मप्रेमरूपस्नेहसम्पृक्ताः श्रवणद्वारान्तःप्रविष्टाः तेषां विभावा आलम्बनविभावा मुक्तमुमुक्ष्वादिरूपा भक्त्या तद्रूपा जाता इति उद्दीपनविभावरूपा अप्यालम्बनविभावा जातास्तादृशाः । अत्र विभावव्यञ्जनावृत्तिः । तेषामानन्दानां विभावतः । विशिष्टो भावः प्रेमा विभाव आलम्बनोद्दीपनरूपश्च तत्र प्रादुर्भवति कृष्णात्मेति कृष्णघटितकार्यस्य शृङ्गारस्य वक्ष्यमाणत्वात् प्रेम्णो विभावत इति

पदवाच्याद् ह्यानन्दः कृष्णात्मा सदानन्दसविकल्पकज्ञानरूपः तावतीं मायां दूरीकृत्य प्रादुर्भवति तत्र आत्मस्वरूपं यस्य शृङ्गारस्य । प्रकृते पूर्वोक्तोऽयमेव विभावने व्यञ्जनया विभावपदवाच्यमुक्त-मुमुक्षुरूपोद्दीपनविभावरूपभक्तानां मनोन्तर्लीनरत्यादेरीषत्प्रकाशः अनुभावनेनानुभावपदवाच्यकटाक्ष-भुजक्षेपादिभिः स्फुटतरं प्रकाशमाहुः । **भावेति** अनुभावनं तथाभूतस्य रत्यादेरास्वादाङ्कुरयोग्यता-नयनमनेन व्यापारेणानुभवपदवाच्यकटाक्षभुजक्षेपादिभिः भक्तानां मनोन्तर्लीनरत्यादेः **भावा अङ्कुरा आत्मनि यस्य शृङ्गारस्य**, यद्वा स्फुटतरः प्रकाशः । इत्थं च कृष्णात्मकस्य भावैरनुभावैर्येथेष्टाङ्कुरं स्वादरूपाङ्कुरं आत्मा स्वरूपं विभावात्मकं यस्य । समासान्तः कप् । भावपदं प्रेमाणमन्तरेण न किञ्चिल्लीलास्थमित्यसूसुचत् । उद्यानाद्युद्दीपनविभावानुवादवत् सञ्चारिणामननुवादः । सहकरणेन व्यापारेण तथाभूतस्य रसास्वादाङ्कुरप्रादुर्भावनरूपेण सहकारिपदवाच्यनैराग्यग्लानिशङ्कालस्यदैन्य-चिन्तास्मृतिधृतिव्रीडाचपलताहर्षावेगजडतागर्वविषादौत्सुक्यमनिवितर्कादिभी रत्यादिसामग्रीवैचित्र्या-पादकैः स्फुटतमः प्रकाशो भक्तानां मनोन्तर्लीनरत्यादेः कृष्णात्मकस्य । तदर्थं विशेषणमाहुः **अनि-रिति** । 'यतो वाच' इति श्रुत्युक्तोऽनिर्वाच्यानन्दपदेन रूप्यते यः स **आनन्दस्तस्यानुभवः साक्षी** ज्ञानज्ञेयानामाविर्भावतिरोभावज्ञानात् स्वयमेवमाविर्भावतिरोभावहीनः स्वयंज्योतिः स साक्षी-त्युच्यत इति श्रुतेः स्वयं ज्योतीरूपो यस्य कृष्णात्मकस्य स तथोक्तः । समासान्तः कप् । श्रुतिः । 'समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य' इत्यधिकरणे सूत्राणि च । 'स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम' इति गीता । 'अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्त-मेषूत्तमेषु लोकेष्वि'ति श्रुतिः । 'ज्योतिश्चरणाभिधानादि'ति सूत्रम् । काव्यप्रकाशेपि 'लौकिकप्रत्यक्षा-दिप्रमाणताटस्थ्यावबोधशालिपरिमितयोगिज्ञानवेद्यान्तरसंस्पर्शरहितस्वात्ममात्रपर्यवसितपरिमितेतरयोगि-संवेदनविलक्षणलोकोत्तरस्वसंवेदनगोचर इति प्रत्ययोप्यभिधीयतामि'ति सार्धश्लोकेनोक्तं स्वरूप-मभ्यर्हितत्वाच्छ्रुतीनां 'मनोरथान्तं श्रुतयो यथा ययु'रिति वाक्यात् । गुर्व्यस्तास्तु दशधा स्त्रीपुरुष-भेदेन विंशतिधाऽतो भक्तमनोरथा अपि विंशतिधेत्यन्येषामप्यधिकारः मनोरथान्तप्राप्तिश्च ॥ ३ ॥ ४ ॥

एवं प्रेमा निरूपितः स न शृङ्गारः । संज्ञाभेदात् । संज्ञाभेदाद्भेदो हि पूर्वतन्त्रसिद्धः । शृङ्गार इत्यन्ये । परं रसत्वेन प्रेमा विवक्षितः । रसत्वं च शृङ्गारमन्तरेणान्येषु नास्तीति शृङ्गारनिरूपणं प्रतिज्ञातम् । स चापुष्टो रसाभास इति तत्पोषकावाहुः । **भावाभासेत्यादि** ।

**भावाभासरसाभासौ पोषकौ तस्य सम्मतौ ।**

**रसाभासभावाभासा** अनौचित्यप्रवर्तिताः । 'तदाभासा अनौचित्यप्रवर्तिता' इति काव्यप्रकाशात् । न च रस एव रसाभासः सकलकारणकारणे अनौचित्यप्रवर्तितत्वादिति वाच्यम् । अनौचित्यप्रवर्तकानामनधिकारात् । साधनचतुष्टयस्य शमदमवैराग्यमुमुक्षुत्वरूपस्य ज्ञानद्वारा भक्त्यु-पयोगः 'शमदमाद्युपेतः स्या'दित्यादिसूत्रभाष्य उक्तत्वाच्च । तथा च वैराग्योत्कर्षः शृङ्गारप्रव-र्तकानां न वैराग्यमात्रं 'उत्कर्षश्चापि वैराग्ये हरेरपि हरिर्यदी'ति वेणुगीतकारिकायाः । 'कामादीतरत्र तत्र चायतनादिभ्य' इति सूत्रे भाष्ये कामस्याविहितभक्तित्वेन निरूपणात् । रसाभासभावाभासा यद्यपि भावं निरूप्य रसं निरूप्य क्रमप्राप्तास्तदाभासा लक्षणीया इति वदन्ति सरस्वतीतीर्थास्तथापि ह्यनुभवसाचिव्यात्पोषकाः क्रमप्राप्ता इत्युक्तं **सम्मताविति** ।

पुष्टस्य तस्य रसस्यावस्थाद्वयं पोष्यत्वायाप्याहुः । **संयोग इत्यादि** ।

**संयोगो विरहश्चापि तस्यावस्थाद्वयं मतम् ॥ ५ ॥**

तस्य पुष्टरसस ॥ ५ ॥

अवस्थेत्यादि ।

**अवस्थाद्वयपूर्णो हि स्वकार्यैकरणक्षमः ।**

**अवस्थाद्वयेन पूर्णः** पोषकैर्व्यभिचारिभिश्चोपलक्षणविषया पूर्णः । स्वकार्यं रसकार्यं आनन्दः सकलबन्धनाशरूपं वा स्वात्मकार्यं 'हृद्रोगमाश्वपहिनोत्यचिरेण धीर' इति वाक्यात् । 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इति श्रुतेः ।

एवं सम्भोगविप्रलम्भौ लक्षयित्वा तत्पोषकौ भावाभासरसाभासौ लक्षयाम्बभूवुः । भावोद्बोधमिति ।

**भावोद्बोधं विना भावसम्पत्त्यर्थं तु या कृतिः ॥ ६ ॥**
**हास्यस्पर्शादिरूपा हि भावाभासः स उच्यते ।**
**रसोद्गमक्रिया काचिद्व्याजवाक्यादिसंयुता ।**
**करोत्यानन्दमन्तर्हि रसाभासः स उच्यते ॥ ७ ॥**

श्लोकद्वयेन त्वन्यत्र विरहे रसाभासभावाभासौ श्लोकद्वयेनोदाहृतावित्यत्राप्युदाह्रियेते परं संयोगे । विरहे तु ते एवोदाहर्तव्ये । रतिहासक्रोधादीनां भावानामुद्बोधो रसत्वेन बोधो **भावोद्बोधः** तं **विना** रसता या सञ्जातेति यावत् । **भावः** प्रेमलक्षणा भक्तिः **तत्सम्पत्त्यर्थं तु या कृतिः** । का सेत्यत आहुः । **हास्येति** । हासो हास्यरसस्य स्थायी संयोगे सञ्चारी । यद्यपि सम्भोगस्य परस्परालिङ्गनपरिचुम्बनाद्यनेकभेदत्वादपरिच्छेद्य इत्येक एव गण्यते इति हास्यमपि सम्भोगस्तथापि मुख्यवृत्त्यादरेण सम्यग्योगो गृह्यत इत्यादिपदेनापि संयुक्तपदार्थो ग्रहीष्यत इति परम्परासंयुक्तहास्यं सञ्चार्येव । स्पर्शोऽपि न संयोगः । परम्परासंयोगात्मकस्पर्शस्य विवक्षितत्वेन सञ्चार्येव । तस्मात् हास्यं 'रागादिवैकृताच्चेतोविकासो हासः' स्वार्थे ष्यञ् हास्यम् । **स्पर्शः** । चेतःपतनप्रतिबन्धकव्यापाररूपा धृतिः । तदुक्तं 'सन्तोषो ज्ञानशक्त्यादेर्धृतिरव्यग्रभोगकृ'दिति विस्तारिकायाम् । ननु धृतिः सञ्चारिणी पोषिका भवतु । हास्यं तु स्थायिभावः कथं पोषकमिति चेन् मैवम् । 'स्थायी भावो रसः स्मृत' इत्यस्य विस्तारिकायां रतिहासक्रोधादीनां स्थायिनामपि करुणशृङ्गारवीरादिषु सञ्चारित्वं स्वीकृतं तेष्वस्थिरत्वाद् इत्यादिकृतीनां भावोद्बोधं विना भावसम्पत्त्यर्थत्वादीश्वरे सकलकारणकारणेऽनौचित्यप्रवृत्तत्वेन भावाभासत्वम् ॥ ६½ ॥

एवं च हास्यस्पर्शादीत्यत्रादिपदेन व्रजभक्तानामिव परिचयलक्षणो भावोऽपि 'तौ[1] विना भावाभास एव । **रसोद्गमेत्यादि** । रसः पूर्वोक्तः तस्योद्गमाय **क्रिया** सा पूर्वोक्तानुभावान्तर्गता नियता, तामाहुः **काचिदिति** । न चात्र भावाभावः । 'अवदद्वदतां श्रेष्ठो वाचः पेशैर्विमोहयन्नि'ति वाक्यात् । एवं भगवतोपि व्याजवाक्यादि तत्संयुता क्रिया काचिद्बोध्या । न तु उद्दीपनवैचित्र्यापादिका । तस्याः स्वरूपं **व्याजवाक्यादिसंयुतेति** । आदिपदेन निगूढवस्त्वादि । **अन्तरानन्दं करोतीति** पूर्वानन्दभिन्नं करोतीत्यालम्बननिष्ठाकर्त्री तस्या व्याजवाक्यादिसंयुताया बहूनां नन्दानां विषयस्य शृङ्गारस्य प्रवृत्तेः **स रसाभास उच्यत** इत्यर्थः । कर्तृबहुविषयशृङ्गारप्रवृत्तेराभासत्वमिति तद्विदः । भावोद्बोधं विना इति पूर्वश्लोकोक्तमनुषज्यत एव तेन तादृशभक्तेच्छया प्रवर्तितस्यानन्दसंयोगस्य रसाभासत्वमनौचित्यप्रवर्तितत्वादिति भावः । व्याजवाक्यादेः सञ्चारित्वं औत्सुक्येन्तर्भावाद् गर्वरूपत्वाद्वा अवहित्थत्वाद्वा । तथाहि । 'व्याजोक्तिरछद्मनोद्भिन्नवस्तुरूपनिगूहनम्' । उद्भिन्नत्वम-

1. अभावसम्पत्त्यर्थंभावोद्बोधो विना ।

स्फुटस्य प्रकाशः स्फुटम् । निगूढमपि वस्तुनो रूपं कथमपि प्रतिभिन्नं केनापि व्यपदेशेन यदपह्नूयते सा व्याजोक्तिः । उदाहरणम् ।

शैलेन्द्रप्रतिपद्यमानगिरिजाहस्तोपगूढोल्लस-
द्रोमाञ्चादिविसंष्ठुलाखिलविधिव्यासङ्गभङ्गाकुलः ।
हा शैत्यं तुहिनाचलस्य करयोरित्यूचिवान्सस्मितं
शैलान्तःपुरमातृमण्डलगणैर्दृष्टो हरः पातु व' इति ।

अत्र पुलकवेपथू सात्त्विकरूपतया प्रसृतौ शैत्यकारणतया प्रकाशितत्वादपलापिस्वरूपौ व्याजोक्तिं प्रयोजयत इति । एतादृशव्याजवाक्यादि 'कुर्वन्ति हि त्वयि रतिं कुशलाः स्व आत्मन्, नित्यप्रिये पतिसुतादिभिरार्तिदैः किं'मिति ज्ञानवतीनां दास्यभक्तीच्छूनां मनोज्ञात्मानं प्रति स्फुटदास्यस्यास्फुटं प्रकाशकानां गोपीनां 'त्वत्सुन्दरस्मितनिरीक्षणतीव्रकामतप्तात्मनां पुरुषभूषण देहि दास्य'मित्यनेन । यद्वा एतस्याग्रे प्रिययोगात् 'कितव योषितः कस्त्यजेन्निशि' इत्यनेन व्यपदेशेनापह्नूयत इति कुर्वन्ति हीत्याद्येव रसोद्गमत्वादि 'दोहं हित्वा समुत्सुका' इति वाक्यात् पूर्वं सम्भ्रमोपि द्योतद्वाक्यादनुमीयते तत्संयुता एककार्यकारित्वेन च सम्बन्धेन क्रिया काचिदौत्सुक्यसम्बद्धा तस्याः कार्यत्वेन सम्बद्धमुच्छ्वासादि 'श्वसनेन शुष्यद्बिम्बाधराणी'ति वाक्यात् । तदुक्तं 'कालाक्षमत्वमौत्सुक्यं रम्येच्छारतिसम्भ्रमैः । तत्रोच्छ्वासत्वराश्वासहृत्तापस्वेदविभ्रमा' इति काव्यप्रदीपे । विस्तारिकाकृत्त्वौत्कण्ठ्यमिति पपाठ । कालाक्षमत्वमित्यौत्सुक्यलक्षणं सम्भ्रमलक्षणं विस्तारिकायां 'आवेगः सम्भ्रमो राजगजवर्षादिसम्भव' इति । तथा तादृशव्याजवाक्यादिमधुपेत्यादिनिन्दारूपव्यपदेशस्तेनापह्नुता तत्संयुता एककार्यकारित्वेन च सम्बन्धेन रसोद्गमक्रिया गर्वसम्बद्धा तस्याः कार्यत्वेन सम्बद्धमसूयादि तदुक्तं 'निन्दादितः परावज्ञा गर्वोसूयादिकृद्भवे' दिति विप्रयोगे 'निन्दादितः परावज्ञे'ति गर्वलक्षणम् । तथा तादृशव्याजवाक्यादि 'त्वत्सुन्दरे'त्यादि तत्संयुता रसोद्गमक्रियाऽवहित्थसम्बद्धा लज्जाद्यैर्हर्षाद्याकारगोपनमवहित्थम् । अत्र कामभावेन प्रेमाकारगोपनम् । आकारगोपनं च 'व्यापारान्तरसक्तित्ववदनानमनादय' इति काव्यप्रदीपे । न च त्वत्सुन्दरस्मितेत्यादिकामभावेन प्रेम्णोरव्यभिचारित्वमात्रं क्रियते 'मयि चानन्ययोगेन भक्तिरव्यभिचारिणी'ति गीतातः । न तु प्रेमाकारगोपनमिति शङ्क्यम् । 'अनाविष्कुर्वन्नन्वयादि'ति तार्तीयसूत्रे 'भगवद्भावस्य रसात्मकत्वेन गुप्तस्यैवाभिवृद्धिस्वभावकत्वादाश्रमधर्मैरेव लोके स्वं भगवद्भावमनाविष्कुर्वन्भजेत'इति भाष्यात् । न च कामभावोऽस्वधर्म इति शङ्क्यं 'यत्पत्यपत्यसुहृदा'मित्यत्र स्वधर्मत्वस्योपपादनात् । करोत्यानन्दमन्तर्हीति भावसन्धिवारणाय भावसन्धौ हर्षस्यावेगविरुद्धत्वात् । अतो रसाभास उच्यत इत्यर्थः । उभयमन्यत्र काव्यप्रकाशादौ ।

**अविरुद्धरसाभासः ।**

'स्तुमः कं वामाक्षि क्षणमपि विना यं न रमसे
विलेभे कः प्राणान् रणमखमुखे यं मृगयसे ।
सुलग्ने को जातः शशिमुखि यमालिङ्गसि बलात्
तपःश्रीः कस्यैषा मदननगरि ध्यायसि तु यम्' ।

अत्रानेककामुकविषयो हि पञ्चविधविप्रलम्भान्तर्गताभिलाषो हि पतिव्रतानामनुचितः ।

**भावाभासः ।**

'राकासुधाकरमुखी तरलायताक्षी सा स्मेरयौवनतरङ्गितविभ्रमाङ्गा ।
तत्किं करोमि विदधे कथमत्र मैत्रीं तत्स्वीकृतिव्यतिकरे क इहाभ्युपायः' ।

इति रावणवाक्यं सीतासन्धिकरणे । अत्र चिन्तानौचित्यप्रवर्तिता । औत्सुक्यमौत्कण्ठ्यं विस्तारिकायां 'औत्कण्ठ्यं वाञ्छतः प्राप्तौ कालक्षेपासहिष्णुते'ति लक्षणं यथा

'आलोकमार्गं सहसा व्रजन्त्या कयाचिदुद्वेष्टनवान्तमाल्यः ।
बद्धुं न सम्भावित एव तावत् करेण रुद्धोपि हि केशपाशः' इत्यत्र ।

सम्भ्रमोदाहरणं यथा ।

'अर्घ्यमर्घ्यमिति वादिनं नृपं सोनवेक्ष्य भरताग्रजो यतः ।
क्षत्रकोपदहनार्चिषं ततः सन्दधे दृशमुदग्रतारकाम्,' इति ।

गर्वोदाहरणम् ।

'धृतायुधो यावदहं तावदन्यैः किमायुधैः ।
यद्वाणसिद्धं मन्त्रेण मम तत्केन सेत्स्यति' इत्यत्र ।

अवहित्थोदाहरणम् ।

'एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती' इति ।

भावस्य शान्तिरुदयः सन्धिः शबलता च न रसरूपेङ्गभावादतिरिक्तरूपेणोपयुक्तेति ग्रन्थान्तरादेव ज्ञेया । यथा भावसन्धिः ।

'उत्सिक्तस्य तपःपराक्रमनिधेरभ्यागमादेकतः
तत्सङ्गप्रियता च वीररभसोत्फालश्च मां कर्षतः ।
वैदेहीपरिरम्भ एष च मुहुश्चैतन्यमामीलय-
न्नानन्दी हरिचन्दनेन्दुशिशिरस्पर्धी रुणद्ध्यन्यतः' इति ।

अत्रावेगहर्षयोः सन्धिः तथाहि रामस्य वचनं उद्रिक्तस्य तपसः पराक्रमस्य च निधिभूतस्य परशुरामस्यागमनात् तत्सम्पर्कप्रियत्वं वीररसाधिक्यं चैकतो मां कर्षतः । अनेनावेगाख्यो भाव उदीरितः । एष सीतापरिरम्भश्च अन्यतो मां रुणद्धि । कीदृशः मुहुश्चैतन्यमामीलयन्नित्यादि अनेन हर्षाख्यो भावः इति प्रकृतोपयोगादुदाहृतः भावस्थितिरपि । अङ्गित्वमतिशयचमत्काराधायकत्वे सति तत्र । 'न तत्समश्चाभ्यधिकश्च दृश्यत' इति श्रुतेरङ्गित्वासम्भवाद्भावशान्त्यादेः ।

'स्वेदः स्तम्भोऽथ रोमाञ्चः स्वरभङ्गोथ वेपथुः ।
वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विका मताः' ।

इत्युक्ताः सात्त्विकभावा अनुभावेन्तर्भूताः ॥ ७ ॥

'रसो वै सः' 'एकमेवाद्वितीयं ब्रह्म' इति श्रुतिभ्यां एकमेव पूर्वोक्तं सर्वं ब्रह्म चासंलक्ष्यक्रमत्वं सामान्यं चाश्रितेति साकारव्यापकस्य रूपस्य 'लीलारूपैश्च तत्सेव्य'मित्यनेन सेवोक्ता तद्रूपस्य 'बहुगुणैः सहितो धर्मी कृष्णः सेव्य' इत्यनेन सेवोक्ता तत्र स्थितस्यान्तर्यामिणो मर्यादायां पुष्टौ तु 'प्रदीपवदावेश' इति सूत्रेऽयं प्रवेशो नान्तर्यामित्वेन तस्यैकस्यैव प्रवेशादित्यनेन निषेधः । किं तु बहुधा सन्निवेश इति बहुधानिविष्टस्य भर्तुर्दृढविश्वासतो भजन्नित्यनेन सेवा वक्ष्यमाणा तस्याः फलमवान्तरं प्रेमरूपा मानसी सेवा तस्याः सिद्धिं कुर्यादित्याहुः । श्रीकृष्णेत्यादि ।

श्रीकृष्णगोपिकाप्रौढविलासकथयोद्गतम् ।
रससंयोगभावं हि श्रीकृष्णे साधयेद् ध्रुवम् ॥ ८ ॥

श्रिया सहितस्य सदानन्दस्य द्वात्रिंशत्कलाः वैराग्यसांख्ययोगतपोभक्तिरूपास्तासां च ये प्रौढाः प्रौढत्वं च सकलदर्शनार्थज्ञानपूर्वकनिर्गुणभक्तिमार्गगूढार्थज्ञानवत्त्वमिति शब्दरत्नाऽऽतिसद्ध्यति तादृशा येन केनापि सम्बन्धेन विलासास्तेषां कथया गोपालतापिन्यादिदशमस्कन्धादिनिरूपितया प्रपञ्चविस्मृतिपूर्वकभगवदासक्तिरूपयोद्गतं 'भक्तिरहस्यभजनं तदिहामुत्रफलभोगनैराश्येनामुष्मिन्मनःकल्पनं' 'ता नाविदन्मय्यनुषङ्गबद्धधिय' इति निरूपितमानसीसेवारूपं रससंयोगभावं रसेन विहिताविहितप्रेमशृङ्गारादिना संयोगभावं सायुज्यमिव वर्तमानं श्रीकृष्णे कृष्णाश्रयं साधयेत्सिद्धं कुर्यात् । कदाचिन्मतिसञ्चारिभावप्रधाना 'यत्पत्यपत्यसुहृदामनुवृत्तिरङ्गे'त्यादिवाक्यं व्याहरन्त्यो गुरवः प्रौढाः कुर्वन्तीति हीत्युक्तम् । 'तस्माच्छ्रीकृष्णमार्गस्थो विमुक्तः सर्वलोकतः । आत्मानन्दसमुद्रस्थं कृष्णमेव विचिन्तये'दिति सिद्धान्तमुक्तावल्यां 'तानि परे तथा ह्याहे'ति सूत्रे 'ता वां वास्तूनी'ति श्रुतौ 'सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जित'मिति गीतायां यद्रूपं निरूपितं तदिदं ध्रुवं रूपमित्याहुः ध्रुवमिति शाश्वतम् । 'ध्रुवं तु निश्चिते तर्के निश्चले शाश्वतेऽन्यवदि'ति विश्वः । तदुक्तं सर्वनिर्णयाभासे 'यन्न योगेन साङ्ख्येन दानव्रततपोध्वरैः । व्याख्यास्वाध्यायसंन्यासैः प्राप्नुयाद्यत्नवानपि' 'तस्मात्त्वमुद्धवोत्सृज्य नोदनां प्रतिनोदनाम् । प्रवृत्तं च निवृत्तं च श्रोतव्यं श्रुतमेव च । मामेकमेव शरणमात्मानं सर्वदेहिनाम् । याहि सर्वात्मभावेन यास्यसे ह्यकुतो भयम्' इत्येकादशसर्वस्वं भगवान् स्वयमुक्तवानिति । श्रुत्यन्यसाधारणम् ।

ततश्चेति ।

ततश्चातितरं वृद्धो निमेषाद्यन्तरायकम् ।
विरहं साधयित्वा च पुष्टः स्यात् स्वस्वरूपतः ॥ ९ ॥

प्रेमशृङ्गारादिभावनानन्तरं रससंयोगभावसिद्ध्यनन्तरं चेति क्रमवाचकस्य ततः इति पदस्यार्थः । अतितरं वृद्ध इति । तृतीयाध्यायोपान्त्ये 'अनाविष्कुर्वन्नन्वयादि'ति सूत्रभाष्यं 'गुणस्यैवाभिवृद्धिस्वभावकत्वादि'ति । तर्हि गोपनकरणप्रतिपादकस्य 'आश्रमधर्मै'रेवेति भाष्यस्य विरोध इति चेन्मर्यादायां प्रेमशृङ्गारादीत्यत्रादिपदेनोक्तत्वान्न विरोधगन्धः । रसोऽतितरं वृद्धः निमेषाद्यपि भगवद्दर्शनादौ अन्तरायं यस्मात् तादृशं विरहं साधयित्वा चकारेण तनुवित्तजसेवादिसञ्चारिभावान्साधयित्वा पुष्टः, सञ्चारिणां पोषकत्वात् । स्वस्य निर्विकल्पकज्ञानस्य ब्रह्मणो यत्स्वमात्मा तस्य रूपं विशिष्टज्ञानमव्ययीभूतं ततः सार्वविभक्तिकस्तसिः प्रथमान्तं पदम् । स्वस्वरूपात्मा सन् स्यादित्यर्थः । आश्रमधर्मैर्वृद्धो भवति रसः, वात्सल्यादिभिरतिवृद्धः, शृङ्गारेणातितरं वृद्धः अतितमं तु केन वृद्धो भवतीतीश्वरो वेत्ति । 'यस्यामत' मित्यादिश्रुतेः ।

ननु सकलकारणकारणेऽविद्यावच्छिन्नजीवस्य सेवाद्यर्थमयोग्यता तथा च भाष्यं मुक्तोपसृप्येति सूत्रस्य तेन शरीराद्यध्यासविशिष्टं न ब्रह्मणि योजनीयमितीत्याशङ्क्याहुः एवं चेति ।

एवं चेत्पुष्टतामेति भावात्मा स रसस्तदा ।
श्रीकृष्णभजने योग्यं कुर्याज्जीवं निवेदितम् ॥ १० ॥

एवमित्युक्तपरामर्शे विरहसंयोगवांश्चेद्यदि तदोभयसञ्चारिभिर्वैराग्यादिभिः पुष्टतामेति चेत्

१. अनेनभक्तिमार्गो व्याख्यातो ।
5 परि०

यदीति भाग्यवशेन अत्र निदर्शनमुक्तं शाण्डिल्यर्षिणा 'संयोगे वियोगवृत्तिः प्रेमे'ति सूत्रेण एवं 'वियोगे संयोगवर्तनमपी'ति तद्भाष्ये । निवेदितमिति 'सख्यानन्तरमात्मनिवेदन'मिति सुबोधिन्यां पाठक्रमः 'आत्मनिवेदिनो हि भजनार्हा नेतर' इति नवरत्नटीकायामर्थक्रमः । श्रुतकृताभ्यामात्मनिवेदन-विशेषितत्वाद्वा । सुबोधिन्यां कृतात्मनिवेदिनः । आद्ये स्तुतो रसप्रमेयबलेन पुष्टिभक्तौ, साधनबलेन मर्यादाभक्तौ योग्यं जीवं कुर्यात् । द्वितीये आरम्भदशायां 'धर्मेण पापमपनुदती'ति श्रुतेः पापाभावद्वारा मर्यादाभक्तौ योग्यं जीवं कुर्यात् । तदुक्तं 'प्रदीपवदावेशस्तथा हि दर्शयती'ति सूत्रभाष्ये । 'ननु पूर्णज्ञानक्रियाशक्तिमता ब्रह्मणा तुल्यभावेन तत्रापि प्रधानभावं प्राप्य कामभोगकरणमपूर्णज्ञानक्रियावतो भक्तस्यानुपपन्नमित्याशङ्कायां तत्रोपपत्तिमाहे'ति, अत्र तुल्यभावेनेति सख्यं, प्रधानभावमिति ह्यात्मनिवेदनम्, 'भोगमात्रसाम्यलिङ्गाच्चे'ति सूत्रे स्पष्टमिदम् । आत्मनिवेदनानन्तरं विचिकीर्षितो जीवः । 'निवेदितात्मा विचिकीर्षितो म' इति वाक्यम् । श्रुतिस्तु 'भर्ता सन् भ्रियमाणो बिभर्ती'ति । द्वितीयपक्षे तु भजने 'तपोवैराग्ययोगे तु ज्ञानं तस्य फलिष्यती'ति निबन्धाद्यथासङ्ख्यं देहाध्यासेन्द्रियाध्यासान्तःकरणाध्यासानां आलोचनवैराग्यसाङ्ख्यैर्निवृत्तिमचीक्लृपन्नाचार्याः 'योगयोगे तथा प्रेमे'त्यनेन कारिकांशेन प्रेमयोगाभ्यां प्राणाध्यासस्वरूपविस्मृत्योर्निवृत्तिम् । सिद्धान्तरहस्ये 'ब्रह्मसम्बन्धकरणात्सर्वेषां देहजीवयोः सर्वदोषनिवृत्तिर्हि' इति आत्मनिवेदनस्य योग्यकरणकारणतोक्ता ।

कृष्ण इत्यादि ।

**कृष्णे निवेदनाज्जीवः कृतकृत्यो भवेदिह ।**
**अतः सर्वात्मना कुर्याद्विधित्वेन निवेदनम् ॥ ११ ॥**

'इहैव समवनीयन्ते प्राणा' इति श्रुतेरिह । अतो जीवस्य योग्यत्वात् । सर्वात्मना सर्वपशुपुत्रेन्द्रियादियुक्तेनात्मनान्तःकरणेन सह जीवः कुर्यात् । अथवा 'यस्मिन्नकृते न कोपि पुरुषार्थः सिध्यति तत्सर्वात्मना कृतमात्मनिवेदनं' सुबोधिन्यामयमर्थः यतः कृतकृत्यताफलमुक्तमतः सर्वेषां पृथ्व्यप्तेजोवाय्वाकाशप्रकृतिपुरुषमहत्तत्त्वाहङ्काराणां मध्येऽष्टानां पृथिव्यादीनामात्मा पुरुषान्तर्गतपुरुषः परा काष्ठा तेन हेतुना विधित्वेन आत्मनिवेदनं कुर्यात् । तथा चोक्तं गीतायां 'स सर्वविद्भजति मां सर्वभावेन भारते'त्युक्त्वा 'एतद्बुध्वा बुद्धिमान्स्यात् कृतकृत्यश्च भारत' इति । विधित्वेनेति । विधिर्यथा 'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यादौ लिङर्थः । वाक्यं तु तेन विधिवाक्यमुच्यते, एवं विधित्वमाज्ञानिष्ठमपि आज्ञाघटितार्थरूपात्मनिवेदन उच्यते एवमेव पूर्वमीमांसकानां व्यवहारः । 'इमे विदेहा अयमहमस्मी'ति बृहदारण्यके जनकात्मनिवेदनवाक्यम् । 'इष्टं दत्तं तपो जप्तं वृत्तं यच्चात्मनः प्रियम् । दारान्सुतान् गृहान् प्राणान् यत्परस्मै निवेदनम्' इत्येकादशे वाक्यम् । अत्र शिक्षेदित्यनेनानुकृष्टेनान्वयात्परस्मै इष्टाद्यभिन्नं निवेदनं यत् तत्कर्मकशिक्षानुकूलकृतिविषयिण्या आज्ञायाः प्रतीतिः । अत्र पदार्थसमूहरूपवाक्यार्थैकदेशाज्ञानुकूलपर्वसु सुखसंवेदनरूपा रतिश्चेतस्स्त्रवणास्यमानसीसेवारूपभावरूपाङ्कुरमियर्तीति शृङ्गारलक्षणवाक्योक्तस्त्रीपुंभावात्मकत्वं जीवानां अक्षरत्वादस्त्येव भावाङ्कुरार्थः । यद्वा भावैरनुभावैरित्यादिना पूर्वमुक्तो यः स तथानिष्ठं विधित्वमात्मनिवेदने आरोप्यते । छत्रिणो यान्तीतिवत् । अथवा विधीयते यत् स विधिः 'उपसर्गे घोः कि'रात्मनिवेदनं पूर्वश्रुतिस्मृत्योरत्रात्मनिवेदनशिक्षावाचकलिङ्गादि विधीयते इति प्रत्ययात् । अत्र सूत्रं साधनाध्याये 'अनियमः सर्वासामविरोधः शब्दानुमानाभ्या'मिति । श्रुतिस्तु 'परं ब्रह्म एतद् यो

१. प्रवेश ।

चारयति रसति भजति ध्यायत' इत्यादि । गीताविस्तारस्तु 'केवलेन हि भावेन गोप्यो गावः खगा मृगाः । येऽन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसा' । गीता तु त्रयोदशाध्याये 'मयि चानन्य-योगेन भक्तिरव्यभिचारिणी' । पुरुषोत्तमयोगाध्याये 'स सर्वविद्भजति मां सर्वभावेन भारत' 'इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ । एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारते'ति च ।

भक्तिमार्गविषयं निष्कर्षन्तः फलाय साधननिष्कर्षमाहुः शृङ्ग इति द्वयेन ।

**शृङ्गो भावाङ्कुरः प्रोक्तः शृङ्गारस्तद्गतो रसः ।**
**स वै कृष्णात्मको ज्ञेयः श्रुतिवाक्यानुसारतः ॥ १२ ॥**
**समर्प्य तत्र सर्वं हि दृढविश्वासतो भजन् ।**
**ऐहिके पारलोके च चिन्तां त्यक्त्वा सुखी भव ॥ १३ ॥**

भावाङ्कुरः चेतस्तत्प्रवणाख्यो भावः प्रेमा तस्याङ्कुर आस्वादयोग्यः शृङ्गः प्रभुत्वाद् भगवत्प्रापकत्वात् । ज्ञानस्याक्षरब्रह्मप्रापकत्वात् 'शृङ्गं प्रभुत्वे शिखरे चिह्ने' इति विश्वः । प्रोक्तः ब्राह्मणेन भगवता प्रोक्तः श्रीशुकैः प्रोक्तः व्रजभक्तैः प्रोक्तः । भक्तिरहस्यभजनमित्यादिगोपालतापनीये । 'तस्माद्भारत सर्वात्मा भगवानि'ति द्वितीयस्कन्धे 'कुर्वन्ति हि त्वयि रति'मिति फलप्रकरणे प्रोक्तः । तद्गतः प्रेमास्वादगतः रस आनन्दमयः शृङ्गार इत्यर्थः । शृङ्गं भावाङ्कुरमियर्तीति शृङ्गार इति व्युत्पत्तेः । शृङ्गश्च शृङ्गश्च शृङ्गौ तौ इयर्तीति शृङ्गार इति व्युत्पत्तिरपि शृङ्गारपदस्य । यद्वा शृङ्गगतः शृङ्गारः शृङ्गशृङ्गारः शृङ्गः शृङ्गारः इति प्रयोगत्रयम् । न तु भावास्वादयोग्यता सः, चेतसि भावास्वादो भगवद्गतः स्वधर्मीभूतभावाङ्कुरमाश्रयतया स्वीकुर्वन् तद्गतः विषयितया मानसीसेवां शृङ्गारः स्वीकुर्वन् विषयत्वेन तद्गतो वा । वै निश्चयेन, तद्गतो यतः कृष्णात्मकः । ननु कथं प्रेमप्रियताहार्दस्नेहपदान्य-प्रवर्त्य शृङ्गारपदप्रवृत्तिरिति चेत्सत्यम् । वेदान्ते योगमात्राश्रयणाद् भक्तिमार्गस्य सुबोधिन्यां शृङ्गत्वाच्च लक्षणाप्रसङ्गाच्च । अत्र हेतुः श्रुतीत्यादि 'को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्या'दिति । अत्र मरणोपस्थितिमन्तरा प्राण्यादित्यस्याप्रवृत्तेः विरहः कः प्राण्यात्मकः । किञ्च 'स मानसीन आत्मा जनानां सर्वात्मे'ति वाक्यानि, 'तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेत्' 'भक्त्याहमेकया ग्राह्यः' 'वशीकुर्वन्ति मां भक्त्या' 'कामाद्द्वेष्य' इत्यादीनि । अत्र भक्तिर्मानसीसेवा । कामो दिदृक्षा । तत्र तन्निमित्तं तत्फलकमिति यावद् गृहिणोपसंहाराधिकरणोक्तरीत्या इन्द्रियादिकं सर्वं समर्प्य सर्वात्मभावं कृत्वेति यावद् 'दृढं कृत्वा मन' इत्यत्र दृढपदार्थ उक्तः दृढश्चासौ विश्वासश्च निश्चयात्मकः 'रक्षतीत्येव विश्वास' इति पञ्चरात्रात् तथा कापट्याभावः । ततो भजन् । एतदत्रोक्तं भवति । 'सदा सर्वात्मभावेन भजनीयो व्रजाधिपः । स्वस्यायमेव धर्मो हि नान्यः क्वापि कदाचने'ति चतुःश्लोक्यामुक्तम् । सर्वदा सर्वभावेनेति पाठः । चिन्तां पश्चात्तापरूपामन्तःकरणप्रबोधोक्ताम् । किञ्च । चिन्तां सञ्चारिभावरूपाम् । यथा 'चिन्तामापुर्दुरत्ययाम्' । यद्वा । 'राकासुधाकरमुखी'त्यत्र सीतायाः परवधूत्वात्तत्सन्धिविषयिणी चिन्ताऽनौचित्यप्रवर्तिता रावणस्य । एवं जीवस्यान्यदेवभज-नविषयिणी चिन्ता 'मयि चानन्ययोगेन भक्तिरव्यभिचारिणी'ति क्षेत्रक्षेत्रज्ञनिरूपणाध्यायीयगीताया अनौचित्यप्रवर्तिता नवरत्नोक्तरीत्या वा चिन्तां त्यक्त्वा सुखी भव भजनानन्दवान्भवेत्याज्ञा । दुःखाभावे तु किं वक्तव्यमिति भावः । सर्वात्मभावेन भजनं विद्या । 'विद्यैव तु निर्धारणादि'ति सूत्रात् । सर्वात्मभावस्य विद्यात्वे लिङ्गभूयस्त्वाधिकरणसूत्राणि । सनत्कुमारनारदसंवादश्छान्दोग्यस्थः श्रुतिरूपः । गीता 'अमानित्वमदम्भित्वम्' इत्यादि 'अज्ञानं यदतोन्यथे'त्यन्तम् । अत्र गृहिणोपसंहारा-

धिकरणरूपसूत्राणि । विषयवाक्यं श्रुतिः । 'आचार्यकुलाद्वेदमधीत्य गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान्विदधदात्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्याहिंसन्सर्वाणि भूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते न च पुनरावर्तते' इति । गीता पुरोक्ता । **इति शृङ्गारस्वरूपम् ।**

पूर्वं गृहिणोपसंहाराधिकरणविषयवाक्ये आत्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्येत्युक्तमपुनरावृत्तिमोक्षार्थम् । इदमात्मनि सर्वेन्द्रियप्रतिष्ठापनं ब्रह्मवादे त्वेवम् । उक्तपरामर्शस्तु एकादशे एकोनत्रिंशाध्यायेऽस्ति । 'एतत्ते कथितः सर्वो ब्रह्मवादस्य सङ्ग्रह' इति वाक्यात्तत्रत्यानि पद्यानि प्रस्तूयन्ते ।

श्रीभगवानुवाच ।

कुर्यात्सर्वाणि कर्माणि मदर्थं शनकैः स्मरन् ।
मय्यर्पितमनश्चित्तो मद्धर्मात्ममनोरतिः ॥
देशान्पुण्यानाश्रयेत मद्भक्तैः साधुभिः श्रितान् ।
देवासुरमनुष्येषु मद्भक्ताचरितानि च ॥
पृथक्सत्रेण वा मह्यं पर्वयात्रामहोत्सवान् ।
कारयेद्गीतनृत्याद्यैर्महाराजविभूतिभिः ॥

एतदेव 'समर्प्य तत्र सर्वं ही'त्यादिनोक्तं तत्र नित्योत्सवसेवयोरुत्सवाः प्रोच्यन्त इत्याहुः **उत्सवा इति** । उत्सवाः प्रोच्यन्त इत्यर्थः । महोत्सवमभ्यर्हितत्वादाहुः प्रथमं जन्मेत्यादि । जन्माष्टम्युच्यत इत्यर्थः पूर्वग्रन्थेन तद्रूपं तत्र च स्थितं साकारव्यापकं च ब्रह्मज्ञानमभूत् ततो भगवदाविर्भावानुकूला भक्तेच्छा या जाता तया विज्ञापनात्मकं यत्नमाहुः **येनेत्यादीति विज्ञाप्येत्यन्तम् । येनेति ।**

**येन दुःखेन गोपीनां यशोदानन्दयोस्तथा ।**
**प्रकटोभूत्निरोधार्थं तथा मयि कृपां कुरु ॥ १ ॥**

अत्र 'चतुर्विधा भजन्ते मां जना' इति गीतायामुक्तेषु चतुर्षु आर्तोधिकारी यो भगवत्प्राप्तिविरहमसहमानः । ज्ञानी तु सर्वोत्तमभाववान् 'तस्मान्नास्त्यधिकः परः' अधिकारः, उत्तमोत्तमः सः । इति विज्ञाप्येति वक्ष्यमाणत्वात् । आर्तस्य विवेकाभावात् । 'प्रार्थिते वा ततः किं स्या'दित्यस्य विवेकधैर्याश्रयस्थस्य विवेकबोधकस्य न विरोधः । किञ्च । भगवदाविर्भावे भक्तानां दुःखस्य हेतुत्वेन भक्तिमार्गारम्भदशायामपि विरहानुभवकर्तृफलदशां भावयित्वा स्वस्मिन्दुःखारोपं कृत्वा निरोधस्य पदवीं यियासेत् । भक्तिवर्धिनीनवरत्नश्रीभागवतोक्तमारम्भदशायां क्रियते इति पुरुषोत्तमप्रतिष्ठानाम्नो ग्रन्थादुच्यते । फलदशायां सन्न्यासनिर्णयोक्तकरणावसरे निरोधलक्षणोक्तं क्रियत इति श्रीवल्लभाचार्यग्रन्थसङ्ख्यायां पाठानुक्रमादुच्यते । पूर्वश्लोकार्थः स्फुटः 'उभयो रोधसो'रिति वाक्याद्गोप्यादीनामपि रोधोधिकरणकत्वात् । यद्वा । बृहद्वामनपुराणे पुराविदां ब्रह्म यत्तदज्ञानजं दुःखं, यशोदानन्दयोर्भुवि विश्वेश्वरे हरौ, भक्त्यभावजं दुःखम् । तद्दशमस्कन्धाष्टमाध्याय उक्तम् । अयमर्थः । **येन** ब्रह्माज्ञातं तज्जेन **दुःखेन** प्रयोजकेनानुमोदनेन हेतुना **तथा** । 'ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृत' इति गीतातस्तेन निर्गुणत्वेन परत्वेन वाङ्मनोगोचरातीतत्वेनानन्दमात्रत्वेन प्रकारेण **गोपीनां निरोधार्थं प्रकटोभूत्** । येन दुर्गतितारकपरमभक्त्यभावजेन दुःखेन प्रयोजकेन ब्रह्मादेर्वत्सल-

करणेन हेतुना तथा तेन नन्दयशोदयोर्बालकत्वेन प्रीतिकारकत्वेन प्रकारेण निरोधार्थं प्रकटोभूत् । तथा यथाधिकारं तेन पूर्वोक्तप्रकारेणैव **कृपां** प्रथमस्य चतुर्थचरणस्यानुमानिकाधिकरणोक्ताम-व्यक्तपदवाच्यां अव्यक्तपदस्याक्षरवाचकत्वे तु तूष्णीं कृपां विज्ञानहेतुभूतां कुरु इत्याशीरधीष्टं वा कृपामधीष्टः सत्कारपूर्वको व्यापार इति सिद्धान्तकौमुद्याम्। तेन कृपाविषयिणीच्छा कर्तव्या न तु पुष्टिनिरोधविषयिणी गोपीनन्दादिवत् । तेषां पुष्टिमार्गीयत्वादस्मदादीनां मर्यादामार्गीयत्वात् । कृपया विज्ञानं विज्ञानेनेच्छया निरोधः ।

नीत्यादि ।

**निवेदितात्मभावेन महतां कृपया तथा ।**
**देहि स्वानन्दरूपं स्वदास्यं श्रीपुरुषोत्तम ॥ २ ॥**

**निवेदितो** जीवस्तस्यात्मभावो 'विद्यैव तु निर्धारणादि'ति सूत्रभाष्योक्तरीत्या जीवस्य तनू-करणेन, भावपदेन भगवान् भावसंपृक्तः जीववत् 'ये यथा मां प्रपद्यन्त' इति वाक्यात् । **महतां** कृपा पूर्वोक्तातिरिक्तापि वरणहेतुभूता तथा निवेदितजीवस्यात्मभावरूपप्रकारेणावृतया अनेनानुमानिका-धिकरणोक्तेन योग्यं शरीरं तदधिकरणोक्तमुपलक्षितम्। **देही**ति दानमधीष्टम्। षट्साधनानां देशादी-नामसाधकत्वात् । सर्वात्मभावव्यतिरिक्तस्य दानायोगात् । 'प्रदानवदेवे'ति सूत्रात् । **स्वानन्दरूपं** धर्मशास्त्रे पञ्चदशसु दासेषु नराधमत्वेनोक्तस्य भक्तिशास्त्रे 'तवास्मीति च यो वदेत्। अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं हरे'रित्यभयरूपमोक्षसाधनत्वेनोत्कृष्टत्वेन निरूपितस्य तवाहमित्युपगतस्यानन्देन रूपं स्वरूपं भवति तादृशानन्दव्यावृत्त्यर्थं **स्वानन्दरूप**मिति स्वीयानन्दरूपं भजनानन्दरूपमिति यावत्। **स्वदास्यं** न तु विभूत्यादेः दास्यमपि, प्रकटसत्त्वं तिरोहितचिदानन्दं जगद्वत्, तत्प्रकटानन्दं तिरोहितचित्सत्त्वं **देहि** । तदपि सर्वभावेन निर्गुणभक्तिमार्गीयेणेत्याहुः । **श्रीपुरुषोत्तमे**ति । पुरुषोत्तमयोगाध्याये 'यो मामेवमसंमूढो जानाति पुरुषोत्तमम् । स सर्वविद्भजति मां सर्वभावेन भार-ते'त्यत्र भजतीति भक्तिमार्गः । एवमिति उक्तपरामर्शी, तृतीयाया लुक् । उक्त'मूर्ध्वमूलमधःशाख'मि-त्यादिना वेदविदोश्वत्थमेनमित्यादिना असङ्गशस्त्रेण द्वैधीकृत्य 'ततः पदं तत्परिमार्गितव्यं यस्मिन् गता न निवर्तन्ति भूयः । तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी'ति श्लोकोक्ता पुनरावृत्ति-स्थानमार्गणं तत्परामर्शेन सिद्धान्तमुक्तावल्युक्तेन पुरुषोत्तमं जानाति स सर्ववित् सर्वभावेन मां भजति श्रिया सहितमिति ।

हरे इति ।

**हरे करुणया कृष्ण मदर्थे प्रकटो भव ।**
**अहं यथा निरोधस्य पदवीं याम्यसंशयम् ॥ ३ ॥**

'यो यस्य तस्य दैवत'मिति वचनात् सम्बोधनं **हरे** इति । **करुणये**ति 'कृपाविष्टः साधन'मिति भाष्यम् । निरोधपदव्याः साधनमत्र श्रीभगवान् कृपाविष्टः । **भवे**ति कामचारानुज्ञायां लोट् । ननु किमर्था कामार्था प्राकट्यविषयिणी कामचारानुज्ञा यतो निरोधलक्षणग्रन्थोक्तसाधनैर्निरोधो भवि-ष्यतीत्यत आहुः **पदवी**मिति । यथाचार्याणां **निरोधस्य** पदवी तथा ममापीति कामचारानुज्ञेति भावः । मम निरोधः समजनि न वा पदव्या असञ्जननाद् इत्येवं संशयस्तस्याभावो यथा भवति तथा **यामि** प्राप्नोमि ।

इतीति ।

इति विज्ञाप्य श्रीकृष्णमूर्त्यग्रे प्राञ्जलिः स्थितः ।
यशोदानन्दगोगोपीगोपसङ्गसमन्वितम् ॥ ४ ॥
व्रजं भावनया सिद्धं कृत्वा हृदि विभावयेत् ।
स्वार्थं प्रकटितं कृष्णमानन्दाकारमुत्तमम् ॥ ५ ॥

**इति विज्ञाप्य** आर्तस्याशक्यविज्ञापना, विरहस्य 'अशक्ये वा सुशक्ये वा सर्वथा शरणं हरि' रिति वाक्याद्विवेकाभावो न दोषावह इति पूर्वमुक्तम् । इदं विज्ञापनं अर्धरात्रे श्लोकसार्धाष्टपाठानन्तरम्, **स्वार्थं प्रकटितमिति** भूतप्रयोगात् । न च प्रकटितमित्यत्र पुरुषोत्तमप्रतिष्ठासामयिकं भूतं प्राकट्यं गृह्णीम इति वाच्यम् । कृत्वेति त्त्वान्तकर्तुः जन्माष्टमीदिनपुरुषोत्तमभावुकस्य प्रकटितकर्मकभावना-कर्तृत्वात् । पुरुषोत्तमप्रतिष्ठासामयिकभूतप्राकट्यस्य जन्माष्टम्यन्यदिनपुरुषोत्तमभावुककर्तृकत्वात् । तत्सामयिकप्राकट्यग्रहणायोगात् । 'अत्र कटकाद्युपचाराः साक्षात्कृता भवन्ती'ति सेवाप्रकरणटीकायाम् । तादृशस्तु संयोगभक्तिः सुप्रसिद्धैव साप्यर्धयुगला कथं पुरुषोत्तमाविर्भावं साधुयादतो द्वितीय-मर्धदलमाहुर्हृदि भावनाख्यम् । **यशोदेत्यादि** । ननूक्तेपि विरहे संयोगेपि सुस्थिर एवेति कथं भावनाख्यं द्वितीयदलं संयोगावस्थायामिति चेन्न । विरहावस्थायामेव हृदि प्राकट्यमिति नियमो नास्ति । 'ध्यानाच्चे'ति सूत्रे भाष्ये 'भावनौत्कट्यदशायां व्यभिचारिभावात्मकसततस्मृतिरूपध्याना-दपि हृदि प्रकटः सन्नासीनो भवतीत्यर्थः । 'तेन स्थैर्यमुक्तं भवती'ति भाष्यात् । न च 'भावो भावनया सिद्धः साधनं नान्यदिष्यते' इति सन्न्यासनिर्णयाद्भावनौत्कट्यं विरह एवेति वाच्यम् । 'आत्मानन्दसमुद्रस्थं कृष्णमेव विचिन्तये'दिति सिद्धान्तमुक्तावल्यां संयोगभक्तिसञ्चारिण उपदेशात् । अतोत्र संयोगेपि संयोगसञ्चारिणः सुवचत्वम् । अत्र देवकीवसुदेवादिसमन्वितं व्रजं सिद्धं कृत्वेति नोक्तम्, पुराणाद्युक्तमपि । कृष्णोपनिषदि 'यो नन्दः परमानन्दो यशोदा मुक्तिगेहिनी' । 'देवकी ब्रह्मविद्या' 'निगमो वसुदेव' इति श्रुतिभ्यस्तत्स्वरूपाण्युक्त्वावतीर्णस्य क्रीडा 'वने वृन्दावने क्रीडन् गोपगोपीसुरैः सहे'ति यतो नन्दादिभिरेवाह श्रुतिः । ननु जन्माष्टमीतिसमाख्याप्रामाण्या-ज्जन्मनो वसुदेवगृहत्वाद्विज्ञापनवाक्येषु यशोदानन्देत्यादिवाक्ये च देवकीवसुदेवाद्युल्लेखनेन सन्दर्भं विरचयन्तु गोपगोपीसुरोल्लेखनं क्रीडास्थलेऽन्यत्र भवतु न तु जन्माष्टम्यामिति चेन्न । जन्माष्टमीसमाख्यया प्राप्तावपि, पुराणान्तरेण प्राप्तावपि भागवते मते जन्मनो गोप्यत्वेन वसुदेवगृह-जन्मार्थमुल्लेखनासम्भवात् । 'जन्म गोप्यं भगवत' इति प्रथमस्कन्धात् । जन्माष्टमीसमाख्याया भागवते मते 'वासुदेवस्त्वत्रैवाविर्भूत इति सिद्धान्त' इति सुबोधिन्या नन्दगृहक्रीडास्वपि सम्भवात् । **हृदि कृष्णं भावयेदित्यन्वयः** । सदानन्दम् । जन्माष्टम्यां भावनातः प्रकटितमिति विशेषणम् । तदपि 'परित्राणाय साधूना'मिति गीतातः । **स्वार्थं** स्वीयार्थम् । 'तदपि 'विनाशाय च दुष्कृताम् । धर्मसंस्था-पनार्थाय सम्भवामि युगे युगे' इति वाक्यात्सङ्कर्षणानिरुद्धकार्यार्थं न, किन्तु 'भक्तियोगवितानार्थ'मिति गीताविस्ताराद् भक्तियोगवितानार्थमानन्दाकारम्, तदप्युत्तमं कार्याख्यानाधिकरणोक्तम्, न तु विषयानन्दाकारम् ।

**तत इति ।**

**ततः संपूजयेद्भक्त्या यथालब्धोपचारकैः ।**

संयोगसेवायां दास्यभक्तित्वेन दास्यान्तर्गतानि भक्तिवर्धिनीनवरत्नश्रीभागवतान्यवतार्यन्ते, तत्र

सिद्धान्तरहस्योक्तरीत्या निवृत्तसर्वदोषभक्तिमार्गीयो भक्तिवर्धिन्युदितरीत्या सम्पूजयेत्। भक्तिवर्धिन्युक्तपूजायां सम्यक्त्वं श्रवणादिपूर्वकत्वमेव 'पूजया श्रवणादिभि'रिति भक्तिवर्धिनीवाक्यात्। भक्तिपूर्वकत्वे भक्त्येति वक्ष्यमाणं पुनरुक्तं स्यात्। बालकृष्णजितामासनम्। १। सङ्कल्पः। २। कुङ्कुमाक्षतम्। ३। भक्तिमार्गीयोपचारा मुख्या इति कुङ्कुमतिलकं अक्षतानि च तुलसी। ४। पञ्चामृतस्नानम्। ५। अर्घ्यम्। ६। चन्दनम्। ७। स्नानम्। ८। अङ्गवस्त्रम्। ९। भगवते पीताम्बरम्। १०। श्रीबालकृष्णजिते पीताम्बरम्। ११। अत्राशङ्का आधुनिका रक्ताम्बरं कुतः समर्पयन्तीति नेयमाशङ्का कार्या 'पीताम्बरधरः स्रग्वी'ति वाक्यस्य तामसप्रकरणीयत्वेन लौकिकमुख्यत्वम्। तदुक्तं तामसप्रकरणादौ 'लौकिकं तामसे मुख्य'मिति। तेन पीताम्बरपदेन रक्ताम्बरमुच्यते इति ज्ञापनाय पीताम्बरपदपुरस्कारेण रक्ताम्बरग्रहणम्। प्रमाणं पीताम्बरपदं लौकिकी भाषा तत्समाधिभाषायां 'भावस्तत्राप्यस्मदीय' इत्यलौकिकभावसहकारिकारणेन अर्थान्तरे शक्तमगत्या। भगवते गुञ्जा। १२। माला। १३। चन्दनम्। १४। चन्दनार्कः (चोवा)। १५। चन्दनचूर्णम्। १६। श्रीबालकृष्णजिते गुञ्जा। १७। माला। १८। चन्दनम्। १९। चन्दनार्कः। २०। चन्दनचूर्णम्। २१। भगवते धूपम्। २२। दीपः। २३। जलपात्रे। २४। नैवेद्यम्। २५। अर्घ्यम्। २६। तुलसी। २७। शङ्खोदकम्। २८। आचमनम्। २९। मुखवस्त्रम्। ३०। ताम्बूलीताम्बूलम्। ३१। वेणुः। ३२। नीराजनम्। ३३। त्रयस्त्रिंशदुपचाराः साधुकृताः साधवः साधुकृताः। भक्तिमार्गानुसारेणोपचारा मुख्या इत्यधिकोपचारा न दुष्टाः। 'अपि चेत्सुदुराचारो भजते मामनन्यभाक्। साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः' इति वाक्यात् 'पत्रं पुष्पं फलं तोय'मिति वाक्याच्च। अत उक्तं भक्त्येति। संयोगसेवायां स्थितवतो भक्तिवर्धिनीपूजोदिता भक्तिवर्धिनीश्रवणाद्युच्यते। श्रीभागवतं च लघुस्वमार्गे 'देवासुरमनुष्येषु मद्भक्ताचरितानि' 'कारयेत् मह्यं पर्वयात्रामहोत्सवान्' 'कारयेदि'त्युक्तम्। तत्र महोत्सवस्मरणभक्त्यर्थं नन्दमहोत्सवश्रवणाद्युच्यते, श्रवणादीनि तदानीं भगवतो वक्ष्यमाणान्यपेक्षितानि, तानि समर्प्यन्ते, अथवा 'यद्यदिष्टतम'मिति वाक्यात् स्वेष्टतमानि समर्प्यन्त इति दास्यकरूपता। 'देहि स्वानन्दरूपं स्वदास्य'मिति विज्ञापनावाक्यात्। अतः पूर्वं प्रेङ्खपर्यङ्कसमर्पणम् ततो जलपात्रताम्बूलनैवेद्यक्रीडनकानि भक्तिमार्गानुसारेण समर्पणीयानि। भक्तिवर्धिनीपक्षे लीलास्मरणविषयं समर्पितं सर्वम्। 'प्रेङ्खपर्यङ्कशयन'मिति वाक्यात्। यद्यपि 'लोकवत्तु लीलाकैवल्य'मिति व्याससूत्रात् पूर्वोक्तं न समर्पयेत् कोपि, तथापि सर्वसामर्थ्यसहिताय बालमुकुन्दाय; 'यद्यदिष्ट'मिति वाक्यात् 'पत्रं पुष्प'मिति गीतायाश्च समर्पणीयानि। 'अनाग्रहश्च सर्वत्र धर्माधर्माग्रदर्शन'मिति वाक्यादन्याग्रहेण समर्पणीयानि वा जलपात्रताम्बूलनैवेद्यानि। 'अवाद्यन्त विचित्राणि वादित्राणि महोत्सव' इति वाक्यान् नन्दमहोत्सवे 'मद्भक्ताचरितानी'ति वाक्याद्देवेषु भगवद्भक्ता नन्दादयस्तेषां चरितानीति नाभिनयः प्राप्नोति तथाप्युपासनाशेषभक्तौ 'जन्म कर्म चाभिनयन्मुहु'रिति वाक्यादभितः सर्वतोभिनयः प्राप्नोत्येव एवं च 'नन्दस्त्वात्मज उत्पन्ने' इत्यादि श्रीभागवतोत्सवाध्यायोक्तं सर्वमभिनेयम् यथाशक्तिभावनात्रयं उत्तमाधिकार्यधिकारिकम्। तथा हि। **स्वरूपभावना** भगवतो निःप्रतियोगिकर्मणश्च लीलारूपस्य। **क्रीडाभावना** सप्रतियोगिलीलायाः स्मरणम्। **भावभावनं** नन्दादिदुःखहर्त्रा प्रेरितस्य नन्दादिप्रीत्यनुकूलस्नेहस्य भावना 'तदेजति तन्नैजति' 'वने वृन्दावने क्रीडन्

१. साहित्यम्। २. बालमुकुन्दजिताम्।

गोपगोपीसुरैः सह' इति 'यद्वाचानभ्युदितं येन वागभ्युद्यते' इति यथाक्रमं श्रुतयः । अथ नन्दादीनां भावना नन्दमहोत्सवे स्वरूपभावना 'सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः' इति भाषापरिच्छेदकारिकाया आनन्दसदृशं संपाद्य भावना । क्रीडाम्बिकावनगत्यादि, ब्रह्मणा सह क्रीडाभावना वा । भावः सर्वात्मभावः सेवारूपस्तस्य भावना यथा श्रिया युक्तोऽहं तथा भक्तो मम प्रियः 'मद्भक्ताचरितादि च' इति श्रुतिस्मृतिभ्यां मध्याधिकारे 'भगवद्धर्मनिष्ठातः स्वस्मिन् तद्धर्मशालिता' । एवंविधवाक्यात्प्रेम्णः परमकाष्ठायामुत्तमाधिकारे स्मरणं नन्दादीनां वा कीर्तनानि 'आजु नन्दरायके आनन्द भयो' इत्यादीनि 'नन्दस्त्वात्मज उत्पन्न' इत्यादि च स्मरणमुत्तमाधिकारकृतम् । श्रवणं च पूर्वोक्तानामेव । दास्यभावेनैव, आरात्रिका सेवासम्पूर्णत्वद्योतिका । पूजावत् । रूपकाणि वस्त्राणि चोत्तारणीयानि । अर्धरात्रजन्मनः प्राग् जन्मनो दिनमिति जन्मवर्षात्पञ्चमवर्षमारभ्योत्सवः प्रवृत्तस्तथैव क्रियते । उत्सवान् मङ्गलभोगो महान्, स्नानात्पूर्वं 'पत्रं पुष्पं फलं तोय'मिति वाक्यात् पीताम्बरादिकं समर्प्य पञ्चामृतेन स्नापयेत् । तत्स्वरूपमग्रे वक्ष्यन्ति पञ्चामृतेनेत्यादिना । ततोऽङ्गवस्त्रं ततोऽभ्यङ्गोद्वर्तनादीन् गन्धं च । रसोद्बोधकत्वाच्चारक्तान्याभरणानि श्वेतानि पीतानि हरितानि च विशिष्टानि । 'विशिष्टालङ्कारे उत्सवः सार्वजनीनो भवती'ति सुबोधिन्याः । कमलपत्राञ्जनवेणवः । तदुत्तरं तिलकाक्षतमुपायनं चूर्णनीराजनं सङ्कल्पश्च मार्कण्डेयपूजावत् । अत एव 'सतिलं गुडसम्मिश्र पयोपि समर्पणीयम् । 'सतिलं गुडसम्मिश्रमञ्जल्यर्धं शृतं पयः, मार्कण्डेय महाबाहो पिबाम्यायुःसमृद्धये' इति वचनात् । 'लोकवत्तु लीलाकैवल्य'मिति सूत्रात् । न राजभोगोत्तरम् । 'प्रातरेव प्रकुर्वीत देवतानां च पूजन'मिति मनुस्मरणात् । अस्मदादिकैस्तु सेवानवसर एव । 'आदरादलोप' इति सूत्रात् । नन्दादीनामयं भावः । दासदासीवत्स्थितानामप्ययं कर्तव्यः ।

तथा च भाष्यम् । उपपन्नस्तल्लक्षणसूत्रस्य 'दासीत्वेन दासत्वेन लीलायां सुहृत्त्वेन प्रभुनिकटे स्थितिरुक्ता भवती'ति । अत्र गोपीग्वाला वन्दनभक्तौ शूद्रनमस्कारं निषिद्धं मन्यन्ते तदज्ञानात् । 'ब्रह्मसम्बन्धकरणात् सर्वेषां देहजीवयोः सर्वदोषनिवृत्तिर्हि'ति ब्रह्मसम्बन्धिसमुदायपतितानां सर्वदोषनिवृत्त्या शूद्रत्वाभावात् । तदुक्तं ब्राह्मण्यादिदेवतावादे दशमे, तत एवानुसन्धेयम् ॥ अतः परं उत्सवान्तरवच्छयनारात्रिकपर्यन्तम् । ततो जागरणम्[1] स्कान्दे मार्गशीर्षमाहात्म्ये 'यावद्दिनानि कुरुते जागरं मम सन्निधौ । युगायुतानि तावन्ति वसते मम वेश्मनि' इति साधारणवाक्यम् । अन्यदुक्तम् ।

इयं लीला जन्मनः पञ्चमवर्षात्प्रवृत्ता प्रत्यब्दं नित्यत्वादाविर्भवतीत्याहुः प्रत्यब्दमिति ।
प्रत्यब्दं कार्यमेवं हि लीलानित्यत्वतः सदा ॥ ६ ॥

एवमुक्तपरामर्शेन सदा सर्वस्मिन् काले आशौचकालेऽन्यद्वारा । अशक्तावपि सिद्धान्तमुक्तावलीटीकायां 'नामचिद्विविक्तने'ति श्रुतिप्रामाण्यात्स्वयं नामानि वक्तव्यान्यन्यद्वारैवं कार्यम् ।

वामनजयन्ती । अत्र पूर्वं श्रीस्वामिनीजन्माष्टमी द्रष्टव्या दानैकादश्यपि । 'अन्यान्यपि तथा कुर्यादुत्सवो यत्र वै हरे'रिति सेवाप्रकरणनिबन्धात् । 'रहस्यं श्रीराधेत्यखिलनिगमानामिव धनम्' इति स्वामिन्यष्टकम् । एतत्स्वरूपं 'श्रीराधे' इत्यस्य व्याख्याने उपारम्भे उपपादितम् । हरेरुत्सवस्तु पाद्मोत्तरखण्डे ।

---

१. रक्ताम्बरादिकम् । २. गौरस्य शृङ्गारोद्बोधकत्वादेतासामुत्सवाच्च काश्मीररञ्जितानि वस्त्राणि शुभाया अभ्याविर्भाव हत्युक्त्या कमलश्रीतेरभ्याविर्भावात् रसोद्बोधकत्वाच्च आरक्तानि आभरणानि ।

'वृषभानुरिति ख्यातो गोपो ज्ञातिमतां वरः। तस्य पत्नी महाभागा नाम्ना सौभाग्यसुन्दरी। तावुभौ ब्रह्मसावित्र्यौ स्वांशेन जगतीं गतौ। तयोर्गेहे महालक्ष्मीः प्रादुर्भूता सुरेश्वरी। अयोनिजा विशालाक्षी' इत्युक्त्वाग्रे 'कृष्णस्यानन्दकारिणी'ति वाक्याद् अग्रे च 'मासि भाद्रपदेऽष्टम्यां सौमे मूलर्क्षमण्डित' इति। आसनवस्त्रगन्धालङ्कारपुष्पमालानैवेद्यजलपात्रधूपदीपकुङ्कुमाक्षतनीराजनताम्बूलाचमनमुखवस्त्रताम्बूलानि। स्वामिनीस्वरूपसेवायां पञ्चामृतस्थाने सति विभवे दुग्धस्य स्नानमभ्यङ्गश्च षोडशोपचाराः, पुराणमते त्वावाहनविसर्जने अपि। 'स्थण्डिले तु भवेद् द्वय'मिति वाक्यात्।

> **लोके सर्वं परित्यज्य लीलासिद्धिमचीक्लृपः।**
> **प्रभूपरिकृता दृष्टिस्तथा मयि कृपां कुरु॥ २॥** ममेयं कृतिर्न प्राचाम्।

**दानैकादश्यां** श्रीगोस्वामिरचितदानलीलाभावना।

**वामनजयन्ती।** यथेति।

> **यथा स्वदासवंशीयबलेरर्थार्थसिद्धये।**
> **अङ्गीकृतं तत्सर्वस्वं तथैव कुरु मे प्रभो॥ १॥**

**यथा** याचकत्वेन प्रकारेण, **स्वदासः** प्रह्लादः, **अर्थः** स्वर्गस्तदपेक्षयाधिकोर्थः सुतलं तस्य **सिद्धये**। 'सुतलस्थापितबलिः स्वर्गाधिकसुखप्रद' इति पुरुषोत्तमसहस्रनाम्नःस्तोत्रात्। मध्यमपदलोपिसमासगर्भितषष्ठीतत्पुरुषः। **प्रभो** परिवृढ, परिवृढाष्टकात्। जन्माष्टमीवत् काश्मीररञ्जितवस्त्राणि कुलहीधौतिपदवाच्ये उत्तरीये च, अनुरागार्थबोधकानि रक्ताभरणानि। **कुरु** इति पूर्ववत्। 'तयोर्वा पुनरेवाहमदित्यामास कश्यपात्। उपेन्द्र इति विख्यातो वामनत्वाच्च वामनः' इति वाक्यात् 'आतिथ्येन तु विप्राग्र्ये' इति वाक्यादातिथ्यं कर्तव्यम्। 'अह्नो मध्ये वामनो रामरामौ' इति वाक्याद् राजभोगपदवाच्यानन्तरमासनं सङ्कल्पः कुङ्कुमाक्षते तुलसीपत्राणि पञ्चामृतमर्घ्यं स्नानचन्दने स्नानाङ्गवस्त्रे बालमुकुन्दादेः। मूर्तौ तु परपीडादिसम्भवे पूजा त्याज्येत्याचार्याज्ञातो न कर्तव्या वस्त्रगुञ्जापुष्पमालाचन्दनचन्दनार्कचन्दनचूर्णानि नैवेद्यजलपात्रधूपदीपतुलसीशङ्खोदकाचमनमुखवस्त्रताम्बूलनीराजनाद्युपचाराः।

**विजयदशमी।** अत्रापि पूर्वं पर्वनवकं मन्तव्यम्। अत्र श्रीहरिरायजितां नवविलासैः कीर्तनाभिधैर्भावनाः। भगवतश्चिकीर्षितत्वात्।

**प्रतिबन्धेत्यादि।**

> **प्रतिबन्धासुरं दूरीकृत्य भक्तमनोरथः।**
> **पूरितः स्वप्रियां नीत्वा तथा मेऽस्तु मनोरथः॥ १॥**

**असुरो** रावणः **भक्तो** हनुमान्, 'विष्णुभक्ता हनुमन्तमिदं ब्रुवन्' इति श्रुतिर्हनुमदुपनिषदि। विष्णुभक्ता यं पृच्छन्ति स भक्त एव। **अस्त्वि**त्यभीष्टे लोट्।

इति सत्कारपूर्वकं व्यापारं स्पष्टयाम्बभूवुः **श्रीकृष्णेति**।

> **श्रीकृष्ण पूरयान्तःस्थासुरभावविनाशनात्।**
> **दर्शनं देहि रासस्थस्वप्रियासङ्गतं स्वकम्॥ २॥**

---

१. शाकपार्थिवादिराकृतिगण इत्याधुनिकाः, गणपाठे तु नास्ति। २. अत्रभावश्छान्दसः।

**आसुरभावः** पुरुषोत्तमप्रकरणे शरणमार्गानन्तरमात्मनिवेदनमुक्तं कठिनमितीन्द्रियाणि जुहोतीति श्रुत्युक्तात्मनिवेदनप्रतिबन्धकपदार्थ आसुरभावः । श्रीरामचन्द्रगुणोपसंहारस्तावदेव भक्तमनोरथकाल एव पश्चात्तु मूलस्वरूपमेव विचिन्तयेदित्याहुः **दर्शनमिति** । इदं मूलरूपमिति विद्वन्मण्डने 'श्रुतय ऊचु'रित्यादिना प्रोक्तम् । **देहि**, इति पूर्ववत् ।

**दीपोत्सवः** । अत्रापि पूर्वं रासोत्सवघनत्रयोदशीरूपचतुर्दश्यो मन्तव्याः । रासोत्सवो गोपालतापिनीये विद्वन्मण्डने च, इतरयोर्द्वयोरेक उत्सवः क्वचिद् द्रष्टव्यः, अपरः स्मार्त उत्सवप्रताने ।

**यथेति** ।

**यथा श्रीमन्नन्दकृतदीपावलिविधानकम् ।**
**लौकिकं स्वीकृतं स्वात्मप्रवेशार्थं व्रजेश्वर ॥ १ ॥**

**लौकिकं** हैतुकम् । ननु 'वने वृन्दावने' इति श्रुतौ गोपपदेन नन्दस्यापि सन्नद्धानन्देन क्रीडन्निति वचनव्यक्तेर्न हैतुकं किन्तु वैदिकमिति चेन्न । तौ तु बालभावेनैव भावितवन्ताविति सुबोधिन्याः बालक्रीडानुपयोगिनो दीपदानस्य हैतुकत्वात् । तदपि स्वीकृतं दीपदानं स्प्रष्टुं मनसः स्वस्य च परिस्पन्दात् । **स्वस्य प्राण आत्मा** व्रजो नित्यलीलास्थानं तत्**प्रवेशार्थम्** । यद्वा । स्वस्मिन्नात्मनो मनसः प्रवेशार्थं दीपदानाद्व्रज वारयितुं श्रीनन्दमनोनिरोधो यतः अतः सम्बोधनं **व्रजेति** । व्रजस्य **ईश्वरः** कर्तुमकर्तुमन्यथा कर्तुं समर्थ ईश्वरः । श्रीनन्दनिरोधार्थं हमेलपदवाच्यालङ्कारौ धारणीयौ । श्रीनन्दस्य बालभावेन भावनात् । 'लोकवत्तु लीलाकैवल्यमि'ति सूत्रात् । अत एव सुवर्णाक्तसूत्रवस्त्राणि नो धारणीयानि किन्तु निर्गुणबोधकरूप्याक्तवस्त्राणि धारणीयानि श्रीनन्दस्य ग्रामीणत्वेन निर्गुणनिष्ठत्वात्तत्रानुरागबोधकानि कानिचित् सूथनेति प्रसिद्धं गोकर्णकटिवस्त्रगोक्रीडनवस्त्राण्याभरणानि चान्नकूटदिनधार्याण्यपि । गोकर्णौ शाबरभाष्ये चतुर्थस्य तृतीयाधिकरणे उक्तौ 'गोलक्षणान्यप्येवमेव कर्तरीकर्ण्यः कर्तव्या एवमादीनी'ति ।

तदीयं यथा स्वीकृतं मदीयं तथाङ्गीकुर्वित्याहुः **कृपयेति** ।

**कृपया स्वीयतासिद्ध्यै पूर्वविस्मारणेन हि ।**
**तथा दीपादिकं सर्वमङ्गीकुरु मदर्पितम् ॥ २ ॥**

**पूर्वस्य** स्मार्तस्य स्वशरीरादेर्निर्बन्धाभावमुद्दिश्य कृतस्य मूत्राद्युत्सारादेर्विस्मारणेन किन्तु 'कायेन वाचा मनसे'ति श्लोके विवृतस्य यथोपरुद्धेन पूजादिकरणेऽपचारः स्यादिति बुद्ध्या मूत्राद्युत्सारो न स्वशरीरादेर्निर्बन्धाभावमुद्दिश्येत्याद्युक्तस्य **स्मारणेन** । ननु श्रौतधर्मैर्मोक्षसिद्ध्या इति वक्तव्ये कुतः **कृपया स्वीयतासिद्ध्या** इत्युक्तमिति चेन्न तृतीयाध्यायचतुर्थचरणे 'अतस्त्वितरज्ज्यायो लिङ्गाच्चे'ति सूत्रे 'इतरत्तदीयत्वमेव ज्याय' इति भाष्यात् । मोक्षोपादानापेक्षया स्वीयतोपादानस्य युक्तत्वात् । न च तदीयत्वं भक्तिमार्गान्तर्गतभक्तिमार्गीयोत्कृष्टावस्थारूपं साधनरूपमेवेति कथं मोक्षोपादानापेक्षया स्वीयतोपादानस्य युक्तत्वमिति शङ्क्यम् । अस्याः शङ्कायास्तत्रैव तद्भूतसूत्रे निरासात् । 'मुक्तानामपि सिद्धानां नारायणपरायणः । सुदुर्लभः प्रशान्तात्मे'ति वाक्यं तत्र कृपयेति साधनत्वाय 'कृपाविष्टः साधन'मिति । पूर्वोक्तलौकिकभिन्नालौकिकं **दीपादिकमङ्गीकुर्विति** पूर्ववत् । इदानीमपि तथा दृश्यते । **आदिपदेनापणद्यूतारात्रिकोपायनानि**, महाराजोपचाराणां मुख्यत्वात् । ननु बालभावस्योक्तत्वात्कुतस्तद्विरुद्धमहाराजोपचारा इति चेन्न । विरुद्धधर्माधारत्वाद्भगवतः । 'सर्वसामर्थ्यसहित' इति कृष्णाश्रयात् ।

१. स्पष्टुम् ।

**अन्नकूटः** । विशिष्टालङ्कारविशिष्टनैवेद्यानन्तरं श्रीगोवर्द्धनपूजा तत्रेदं वक्तव्यं **स्वशक्तीति** ।

**स्वशक्तिहृदयाद्रूपं स्वं यथा प्रकटीकृतम् ।**
**तथैव प्रकटीभूय गिरौ पूजां गृहाण मे ॥ १ ॥**

गोपालतापिनीये 'गोवर्द्धनधराय चे'ति श्रुतिस्तस्याः प्रपञ्चः । स्वस्य श्रीपुरुषोत्तमस्य शक्तिर्माया तस्या हृदयं प्राप्य तस्या अपसारणं 'कृष्णायाक्लिष्टकारिणि' इति श्रुतेरक्लिष्टकारितया करोति तेन मायापसारणेन येन प्रकारेण स्वं श्रीगोवर्द्धनाधिदैविकभिन्नं रूपमतिस्थूलं प्रकटीकृतमप्रकटं तद् अतोऽभूततद्भावे च्विः, तथा मायापसारणप्रकारेण । 'तस्मै नमो व्रजजनैः सह चक्र' इत्यस्य सुबोधिन्यां स्पष्टमिदं प्रमेयम् । **गिरीति** ।

**गिरिच्छत्रेण दृक्पातचामरैः स्नेहवारिभिः ।**
**केवलस्वीयताराज्येऽभ्यषिञ्चद्व्रजमीश्वरः ॥ २ ॥**

त्रिभी राजा कदापि स्वावसरे न वियुनक्ति एवं गिर्यादित्रिभिर्व्रजोपि न वियुनक्ति तल्लीलामण्डलत्वात् । **ईश्वरोऽभ्यषिञ्चद्यतः** पातेन्द्रो भगवन्तं सुरभिकृताभिषेकेऽभ्यषिञ्चद् भगवान् स्वस्वरूपामृतपाता व्रजमभ्यषिञ्चद् इन्द्रो हि शृङ्गं वंशीस्थाने स्वसमये तिष्ठति ह्यतः पातृत्वसम्भवः । ईश्वरः अहृथाप्तं निशि शयानं निःसाधनं व्रजं स्वस्वरूपे व्यापकः । मालाकार इव व्रजः सन्नतानुन्नमयनुन्नतान् सन्नमयन्नुत्खातानारोपयन् विगलितान्विसृज्यान् यत्समीचीनं कुर्वाणो पुष्टान् पोषयन् जगति जातान् जागर्ति । जन्माद्यस्य यत इत्यत्र यच्छन्दार्थस्य निर्गुणत्वाद् 'उत्खातान्प्रतिरोपयन् कुसुमितांश्चिन्वं-लघून्वर्द्धयन् कुब्जान् कण्टकितान् बहून्निरसयन् विश्लेषयन्संहतान् । अत्युच्चान्नमयन् नतांश्च शनकैरु-न्मीलयन् भूतले मालाकार इव प्रपञ्चचतुरो राजा चिरं जीवति' । प्रास्ताविकः । तदुक्तं पाद्मो-त्तरखण्डीयवाक्ये सम्बोधनं गोवर्धनकृतच्छत्रेति ।

ततः पीताम्बरं गोक्रीडनार्थं धारयित्वा गोक्रीडनादि कारयित्वान्नकूटसमर्पणे इमे वक्तव्ये **त्वदित्यादि** ।

**त्वदाज्ञप्तस्वयागात्मान्नकूटस्य समर्पणात् ।**
**गोवर्धनाचलाधीश प्रसीद सततं मयि ॥ १ ॥**
**यथेन्द्रयागभङ्गस्य सयागस्य च कारणात् ।**
**नन्दादीनामनन्यत्वं कृतं मयि तथा कुरु ॥ २ ॥**

नन्दं प्रति **त्वदाज्ञप्ते**त्यादि । **अधीशो** नाधिदैविकःकिन्तु स्वरूपमतिस्थूलम् । **सयागस्येन्द्र-यागभङ्गस्ये**त्यत्र विरोध इति चेन्न । यागेन गोब्राह्मणादिप्रतियोगिकेन सहेति **सयागस्तस्येन्द्रयाग-भङ्गस्येति** । प्रतियोगिभेदात् 'तस्माद्गवां ब्राह्मणानामद्रेश्चारभ्यतां मख' इति श्रीभागवतात् । **अनन्यत्वं** नान्यःपूज्यतमो येषां तेऽनन्यास्तेषां भावोऽनन्यत्वम् । तथा च गोपान्प्रति श्रीनन्दवाक्यं त्रयोविंशाध्याये 'इत्यद्धा मां समादिश्य गर्गे च स्वगृहं गते । मन्ये नारायणस्यांशं कृष्णमक्लिष्टकारिण'मिति ॥ १ ॥ २ ॥

**प्रबोधिनी** । अत्रापि पूर्वं भ्रातृद्वितीयागोपाष्टम्यक्षयनवम्यः । भ्रातृद्वितीयायां तद्दिनकीर्तनै-र्भावना 'लोकवत्तु लीलाकैवल्य'मिति सूत्रात् । गोपाष्टम्यां कृष्णोपनिषच्छ्रुत्युक्तगोभिः क्रीडा 'शुक्लाष्टमी कार्तिके तु स्मृता गोपाष्टमी बुधैः । तद्दिने वासुदेवोभूद्गोपः पूर्वं तु वत्सपः' इति पाद्मात् । भावना तद्दिनकीर्तनैः । अक्षयनवमीयुगादिः प्रदक्षिणाप्रधाना । तथैव शिष्टाचारात् । **क्रीडतेति** ।

**क्रीडता योगनिद्राङ्गीकारेण रससागरे ।**
**तत्रस्थाङ्गीकृता मासैः पुमर्थप्रतिपादकैः ॥ १ ॥**

तथाधुनोत्तिष्ठ कृष्ण याहि स्वात्मनिवेदितान् ।
तदङ्गीकृतिमात्रार्थं जगद्रसमयं सृज ॥ २ ॥

अत्रोत्तिष्ठेति भक्तमनोरथार्थमधीष्टे लोट् न प्रार्थने 'प्रार्थिते वा ततः किं स्या'दिति निषेधात् । एतादृशीच्छा लीलाप्राकट्यार्थमतोयमुत्थापनमत्रः मत्रि गुप्तभाषणे इति धातुपाठात् । ननूत्सवप्रताने 'इदं विष्णुर्विचक्रम' इति मत्र उक्तस्तेनास्य बाध इति चेन्न । इच्छायां मत्रार्थज्ञानं कारणमर्थदेवस्तु तिरोहितः 'अपरिज्ञाननष्टेषु मत्रेष्वव्रतयोगिषु । तिरोहितार्थदेवेषु कृष्ण एव गतिर्ममे'ति वाक्यात् । किञ्च सर्वोत्तममार्गे भक्तिरुक्ता तत्र नवधाभक्तिः 'तत्रोपयोगोखिलसाधनानामि'ति वक्ष्यते तादृशभक्तौ गीता द्वादशे भक्तियोगाध्याये मत्राभावो मत्राणां स्वस्वप्रकरणे साधनभक्तितत्साधनेषूपक्षीणशक्तीनामुक्तायां भक्तौ धावनायोगात् । अतः क्रीडतेत्यादिभिर्भगवतः श्रीपुरुषोत्तमस्योत्थापनम्, न मत्रैः प्रमाणाभावात् । ननु मा सन्तु प्रेमानन्तरं स्वव्यसनतः क्रियमाणायां भक्तौ फलात्मिकायां साधनभक्तौ तु पूजायां मत्राः कुतो नेति चेन्न । गीताद्वादशाध्याये भक्त्यध्याये मत्राभावाद् उपासनायाः प्रेमभक्तिसाधनत्वे पूजायां मत्राः सन्तु बाधकाभावात् । 'मत्रस्यापि विधानत' इति सेवाप्रकरणनिबन्धात् । प्रकृतमथोच्यते क्रीडता योगेत्याद्युक्ते द्वितीयस्कन्धनवमाध्यायः । किञ्च वाराहपुराणीयचातुर्मास्यमाहात्म्यचतुर्दशाध्यायसन्दर्भः । श्वेतद्वीपस्वरूपकथनानन्तरम् ।

'श्वेतद्वीपसमीपे तु क्षीराब्धौ शेषमञ्चके ।
चातुर्मास्ये तु सम्प्राप्ते स्वपामि प्रतिवत्सरम् ॥
श्वेतद्वीपस्थिताः सर्वे ये चान्येत्रापि वर्तिनः ।
मद्भक्ता देवताः सर्वास्तत्रस्थाः पूजयन्ति हि ॥
श्रीभूदुर्गात्मिका लक्ष्मीस्त्रिभी रूपैः सदैव तु ।
सेवतेऽनन्तरूपैश्च बहुरूपधरं हि माम् ॥' इति ।

स्वपामीति योगनिद्रा । अथ प्रलयात्मा नारायणोवान्तरप्रलयाधारः इति सुबोधिन्याम् । ननु रससागर इति विरुद्धं तस्य भेदनिबन्धनत्वादत आहुः तत्रस्थेति । तत्रस्था योगनिद्राङ्गीकृता क्रीडायां भेदार्थम् । तदुक्तमिदं 'मायामात्रमनूद्यान्ते प्रतिषिध्य प्रसीदती'त्यत्रैकादशस्कन्धे, 'अन्तरा भूतग्रामवदि'ति सूत्रेऽभेदोन्तरातो भगवानभेदं न ददातीत्युक्तमेवं 'योगमायामुपाश्रित' इत्यत्र सुबोधिन्याम् । अतोत्र 'न यत्र माये'त्यस्य न विरोधः । अत्र निदर्शनमाहुः मासैरिति । चतुर्भिर्मासैः बहुत्वमपेक्षाबुद्धिजन्यं भेदनिबन्धनम् । सङ्ख्यातात्पर्यं वदन्तः शब्दार्थयोरौत्पत्तिकं सम्बन्धमाहुः पुमिति । पुमर्थाश्चत्वारस्तेषां प्रतिपादकाः शब्दात्मका अर्था मासाः रससागरे भक्तेच्छया चतुर्भिः पुमर्थैः क्रीडतीत्युक्तम् । यद्वा मासैश्चेष्टारूपैः कीदृशैः पुमर्थाल्लक्षीकृत्य गतैरित्यर्थः । प्रतिर्लक्षणे पद गतौ अर्थप्रकरणे शब्दगतप्रतिपादकत्वाभावात् तथा योगमायाङ्गीकृतत्वेन रूपेणेत्यर्थः । स्वेति स्वस्मिन्नात्मनि आत्मा निवेदितो यैस्तान् याहि 'प्रदीपवदावेश'सूत्रोक्तरीत्या कामभोगकरणार्थं प्रविश । यतस्त इन्द्रियाणि जुह्वति । स्फुटमात्मनिवेदनाख्ये ग्रन्थ इदम् । तदित्यादि स्वात्मनिवेदितानामङ्गीकृतिरूपाधिकारमात्रार्थं रसमयं सृजेत्यधीष्टम् । किं जगद् गोकुलात्मकं 'रसो वै स' इति श्रुतेः । एतदेव स्वात्मनिवेदितानामधीष्टम् । यतस्त इन्द्रियाणि जुह्वति । अत्र 'अचलत्वं चापेक्ष्ये'ति सूत्रम् । 'भक्त्या जानाति चाव्ययम्' इति श्रुतेर्वक्ष्यमाणस्मृतिस्वारस्यात् । गीता तु तद्विस्ताररूपा स्मृतिः । 'स्मरन्ति चे'ति सूत्र उदाहृता तत्रैव 'अहं भक्तपराधीन' इत्यादिः ।

**मार्गशिरः** । भगवतः श्युत्तमपुरुषस्य भगिनीभावनं पूजनं चाहुः स्वेति ।

**स्वनाथप्रापिकां देवीं सन्तुष्टां कृष्णरूपिणीम् ।**
**भावयित्वात्मभजनीये रूपे पूजयेच्च ताम् ॥ १ ॥**

नन्वन्याश्रयोन्यत्रान्यारोपे भ्रमश्चेति चेन्न । साधनाध्याये सर्ववेदान्तप्रत्ययाधिकरणे 'सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्' 'भेदान्नेति चेदेकस्यामपि' 'स्वाध्यायस्य तथात्वेन समाचारेधिकाराच्च सववच्च तन्नियमः' 'दर्शयति चे'ति सूत्रचतुष्टयसिद्धमुपसंहारसूत्रभाष्य उच्यते आशङ्कामुखेन । ननु पूर्वसूत्रोक्तरीत्या गुणोपसंहारो न कचिदपि प्राप्तावसर इति सिद्धम् ।"दृश्यते चोपसंहारः रामोपनिषत्सु 'यो वै ये मत्स्यकूर्माद्यवतारा' इत्यादिनोक्तावताररूपत्वस्य श्रीरामे 'नमस्ते रघुवर्याय रावणान्तकराय चे'त्यादिषु त इति युष्मच्छन्दविषये श्रीव्रजनाथे श्रीरघुवर्यत्वादेरित्याशङ्क्य तत्प्रयोजकं रूपमाहुः **उपसंहार** इत्यादिना" । उक्तस्थलादिषु य उपसंहारः स त्वर्थस्य पदार्थस्य भगवल्लक्षणस्योभयत्राप्यभेदादित्यर्थः । इत्येकं रूपं द्वितीयम् । **विधिशेषवदिति** विधिशेषोर्थवादस्तद्वत्समानं च भवतीति । प्रकृते 'सङ्कल्पो विदितः साध्व्यो भवतीनां मदर्चना'दिति ब्रह्मवाक्ये मदर्चनपदाद्भगवल्लक्षणार्थभेदः कात्यायन्याः । 'विधिशेषवत्समानं' विधिकल्पितस्य शरीरस्य 'तस्य सेवादिकल्पने'ति श्रुतौ क्रियेतेति विधिं प्रकल्प्य तच्छेषः ॐ यो वै श्रीपन्याप्रकृतिर्भूर्भुवः स्वस्तस्मै वै नमो नम इति अर्थवादस्तत्समानमिदमेव । अथवा वायव्यं श्वेतमालभेतेत्यस्य वायुर्वै क्षेपिष्ठेत्यर्थवादस्तेन समानमिदम् । एवं कृष्णरूपिण्या देव्या उपसंहारे बीजद्वयमप्युपलभामहेऽतो भेदे सिद्धे नान्याश्रयो वाप्यन्यत्रान्यारोपः । ननु पुंस्त्वमुपसंहृत्य पूर्वं भजनं कृतमिदानीं कृष्णरूपिणीत्वं स्त्रीत्वमप्युपसंहृतमिति स्वरूपस्यान्यथात्वमापतितमिति चेन्न । विरुद्धसर्वधर्माश्रयत्वेन न स्वरूपस्यान्यथात्वमित्यस्य 'अन्यथात्वं च शब्दादिति चेन्नाविशषा'दिति सूत्रे सिद्धत्वात् । **स्वनाथप्रापिकां** दुरदृष्टनाशिकां कात्यायनीरूपां संहारिकां शक्तिमग्निरूपाम् । शक्तित्वेन व्यवहारेमेः स्त्रीत्वमतः साधनरूपाम् । अस्या अपि शक्तेरिच्छाशक्तिर्बलीयसीतीच्छया दुरदृष्टनाशप्रतिबन्धेऽसाधनत्वमाशङ्क्याहुः **सन्तुष्टामिति** । सन्तोषोनुद्धर्षः महाभाग्यवती 'अल्पभाग्यत्वे भगवान्नाज्ञापयेत् यशोदायां च जन्म न स्याद्भगवद्दास्यं च न प्राप्नुयात्, त्वया प्रार्थितः प्रियः स्वेच्छामप्येतदनुगुणां करिष्यति अहो महाभाग्यं तव आभिमानिकसम्बन्धेन त्वं पुनर्भगिनी भवसि अत उपकारोपि कर्तव्यः' एतादृश्या महानुद्धर्षः । परिशेषात्प्रमाणरूपां प्रामाणिकः सन्तुष्टो भवतीति । फलप्रमेययोरग्रे स्पष्टत्वात् । न च मन्तव्यं तादृशदोषो न मया परिहर्तुं शक्यत इति यतस्त्वं **देवी** ताम् । महायोगिनी गर्भसङ्कर्षणादिकार्यकारणात् प्रमेयरूपां दिवु क्रीडाव्यवहारेति धातुपाठात् । नन्वाधिदैविकं कथं परिहर्तव्यं कालादिभ्यो बलिष्ठा हि सा प्रतिबन्धकशक्तिस्तत्राहुः **कृष्णरूपिणीमिति** । कृष्णे रूपमस्या अस्तीति कृष्णरूपिणी तामधीश्वरीमित्यर्थः । ईश्वरं भगवन्तमधिकृत्य वर्तते अतोन्तरङ्गा त्वं शक्तिः स्वल्पापेक्षमन्तरङ्गम् । भगवन्मात्रापेक्षा, प्रतिबन्धकशक्तिस्तु बहिरङ्गा बह्वपेक्षत्वं बहिरङ्गत्वम् । भगवत्प्रतिबद्धोभयापेक्षत्वात् । अतः सर्वप्रकारेण त्वं भगवदीयेति **आत्मभजनीये रूपे भावयित्वेत्यर्थः** । न च 'मायेत्यसुराः' 'माया च तमोरूपे'ति श्रुतिभ्यां तमउपासका असुरा इति वाच्यम् । अनीश्वरप्राकृततमउपासकत्व आसुरत्वं न तु हीश्वरदास्यकर्त्र्या आत्मगुणतमोरूपाया उपासकत्व आसुरत्वमिति ।

---

१. पनि स्तुतो भ्वादिरात्मनेपदी सेट् ।

वसन्तः । मकरकर्कटयोर्यदा विकर्तनः सङ्क्रामति तदा पर्वात्मक उत्सवः पूर्वमत्रापि । किञ्च, पौषे श्रीगोस्वाम्युत्सवोपि कृष्णपक्षनवम्याम्, 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ' इति श्वेताश्वतरात् । ननु गोपीनाथजिदुत्सवः कुतो नोक्त इति चेन्न ब्रह्माण्डपुराणे सप्तसप्तत्यध्याये मथुरागोकुलाद्युक्तम् 'तत्राहं मुहुः तं रूपं सर्वलोचनगोचरं, करिष्ये विमलं सौम्य मम भक्तसुखावहम् । विठ्ठलेशेतिविख्यातिं गमिष्ये जगतीतले' इति वाक्येभ्यः ।

काम इति

कामेपि प्रमदाभावकरणं कामसुन्दरम् ।
तदर्थं सेवयेत्कृष्णं कैशोरे वयसि स्थितम् ॥ १ ॥
एवं संसेवितः कामपञ्चम्यां कामदोसि यत् ।
गोपीनां कृपया देहि तथा मे काममद्भुतम् ॥ २ ॥

अद्भुतपदमहिम्ना व्याख्यायते संराधनाभावेन प्रत्यक्षानुमानाभावात् । पुरुषादियोग्यकामोप्यस्तीश्वर इति । 'अपि संराधने प्रत्यक्षानुमानाभ्याम्' इति सूत्रे संराधनस्य कारणत्वात्सर्वधर्मप्रत्यक्षे कामेपि पदेन भूर्भुवःसुवःपदवाच्यलक्ष्म्याः कामोध्यारोपितलक्ष्मीकः लक्ष्म्या रमणस्थानत्वाद् अत उक्तं प्रमदा लक्ष्मीस्तस्या भावो लक्ष्मीत्वं तस्य करणमिति कामात्सुन्दरम् । तदर्थं कामसुन्दरप्रमदाभावकरणार्थं 'कामादीतरत्र तत्र चायतनादिभ्य' इत्यत्रविहितभक्त्यात्मककामस्य भगवत्सम्बन्धान्मुक्तिसाधनत्वमुक्तमिति तत्कामना कार्या, अत्र प्रमदाभावकरणं फलं कामादिनिष्ठं सेवा साधनरूपा देहनिष्ठेति फलसाधनयोर्वैयधिकरण्यं तत्तु दूषणं 'उत्कर्षश्चापि वैराग्ये हरेरपि हरिर्यदी'ति सुबोधिनीकारिकातः स्ववैराग्योत्कर्षार्थं यदि तदा नास्ति फलस्य स्वनिष्ठत्वस्य कृपया देहि तथा मे काममद्भुतमिति वक्ष्यमाणत्वाच्च एवमुक्तपरामर्शेन कामपञ्चम्यां भक्तैः संसेवितो कामः अद्भुतत्वाद् यद् येन प्रकारेण गोपीनां कामदोसि त्वं तेन प्रकारेण सर्वेन्द्रियहोमकर्त्रैर्थं तदिच्छया विकृतलीलत्वेन प्रकारेण मे मह्यमद्भुतं कामं देहीति सत्कारपूर्वको व्यापारः अधीष्टे लोट् इति । अकामो भक्तेच्छया सकाम इत्यद्भुतम् । तथाहि विभावानुभावसञ्चारिणस्तावद् अत्र श्रीकृष्ण आलम्बनम् । तद्गुणातिशयः सच्चिदानन्दरूपत्वाकामत्वकामलक्ष्मीप्रमदाभावकरणलोकोत्तरसौन्दर्यकरणाद्यतिशय उद्दीपनम् । स्तवादयः 'अकामो भगवान्' कामदोसीत्युत्कर्षाधायकगुणवर्णनादयोनुभावाः । सेवनार्थं गतिधृतिहर्षादयः सञ्चारिणः । इति विस्तारिकायामद्भुतरसविवरणे । एभिः कारणादिभिर्विविधेषु पदार्थेषु लोकसीमातिवर्तिषु 'विस्फारश्चेतसो यस्तु विस्मयः स उदाहृत' इति लक्षणवाक्याद्भुतः कामः । शृङ्गारेणैव सर्वे रसा रसभावं प्राप्नुवन्तीति रसयोर्विशेष्यविशेषणत्वम् । अन्योपि विस्मयो गोपीनां कामदोसीत्यत्र गोप्यः आविद्याकला वैराग्यसाङ्ख्ययोगतपोभक्तिरूपास्तासां काम इति ।

दोलोत्सवः । अत्रापि पूर्वं माघी पौर्णिमा युगादिः, फाल्गुनी, सप्तमी, श्रीगोवर्धननाथागमनोत्सवः, शुक्लैकादश्यां निकुञ्जोत्सवः, उद्यानोपवनोत्सवः, फाल्गुनी पूर्णिमा मन्वादिः । अत्र भावना उल्लासादिभिः कीर्तनादिभिश्च कार्या एव ।

प्रियेति ।

प्रियोरूपभावात्मस्तम्भयुग्मसमन्विताम् ।
श्रीकृष्णस्मृतिसौख्यां यद्दोलामारोपयाम्यहम् ॥ १ ॥

**प्रियाबाहुलताभावात्मिकायामनुरागतः ।**
**दोलायां दोलयामि त्वां प्रसीद पुरुषोत्तम ॥ २ ॥**

स्वाधिकारानुसारेणेयं भावना न सर्वजनाधिकारानुसारिणीत्युपरमामः । पुरुषोत्तमप्रकरणे श्रीमदाचार्यैरिन्द्रियहोमः प्रतिपादितः सोपि ग्रन्थान्तरे कस्यचित्पुंसः कृतपुण्यपुञ्जस्य भगवता सह रिंसा समजनीत्यादिनैतादृशरिरंसावतो दासस्य तु निरोधलक्षणग्रन्थोक्तरीत्येन्द्रियहोमस्तथापि स्ववंशे स्थापिताशेषमाहात्म्या आचार्या अतो ग्रन्थे निबन्धः । अन्येषामपि 'यद्यदाचरति श्रेष्ठ' इति न्यायेनेयं भावना 'ईश्वराणां वचस्तथ्यं तथैवाचरितं क्वचिद्' इति न्यायानुसन्धाने तु 'आत्मानन्दसमुद्रस्थं कृष्णमेव विचिन्तयेदि'ति दासभावेन भावनात्रयं, मध्यमाधिकारे तु स्वधर्मबुद्ध्या प्रेम्णे । हीनाधिकारे तु स्कन्दपुराणोक्तं 'त्रिरेव दोलयेद्देवं सर्वपापापनोदनम्' इत्यन्यदप्युत्सवप्रतानेऽस्ति । स्कन्दस्य तामसत्वेऽपि पुराणानां सात्त्विकादिविभागो न प्रवृत्त उत्सवप्रताने ग्रन्थान्तरे आकरे निबन्धलेखे श्रीकल्याणरायैस्तूक्तः । अत्र सूत्रं 'तानि परे तथाह्याहे'ति । श्रुतिः 'ता वां वास्तूनी'ति । गीता त्रयोदशेऽध्याये 'सर्वेन्द्रियगुणाभासमि'ति । श्रीहरिरायाणां कीर्तनं हिन्दोलायाः 'झूली झूली हो पियसङ्ग पावसरितु आनन्दभरी । चरणयुगल दोऊखम्भ भये भुजदाण्डी चारि सिरजुरे मयारएहो लटकन आभूखन बहुरङ्ग' कीर्तनादिभिर्भावनाः ।

**रामनवमी** । अत्रापि द्वितीयापाटपुष्पमण्डिनीसंवत्सरादि पूर्व बोध्यम् । श्रीति ।

**श्रीकृष्णहास्यरूपेण प्रमदाभावकारकः ।**
**तदर्थं प्रकटाय त्वां भजामि रघुनायक ॥ १ ॥**
**यथैवाग्निकुमाराणां भावमुत्पाद्य दत्तवान् ।**
**वरं मे कृपया देहि तथा देव नमोऽस्तु ते ॥ २ ॥**

**श्रीकृष्णस्य हास्यरूपेण** रामतापिनीये 'कामरूपाय रामाय नमो मायामयाय चे'ति श्रुतौ मायामयायेत्यत्र प्राचुर्ये मयट् । रामस्य मायाऽविकारत्वात् । तच्च प्राचुर्यं श्रीकृष्णसत्तांशतो बोधयतीत्युक्तं **श्रीकृष्णहास्येति** । प्रमदाभावस्य कार्यत्वेन वक्ष्यमाणत्वात्तद्बीजशक्तिः श्रीति कायस्य मायामयत्वेन 'पुष्टिं कायेन निश्चय' इत्यत्र कायपदार्थत्वेऽपि प्रमदानां साधारणीनां ग्रहणे प्राप्तेऽपलापप्रसङ्गात् । वाराहे श्रीभागकथनाच्छ्रियाः कृष्णस्येति वा । इन्द्रियमयायेत्यनुक्त्वा मायामयायेत्युक्तं तत्सूचयति प्रमादाभावकार्यं भेदयुतमेव । मायापदवाच्यानीन्द्रियाणि यथा तथा पुराणे गुणा मायापदवाच्याः 'हास्यं जनोन्मादकरी च माये'ति वाक्यान् मायामयायेत्यत्र मायापदसूचितहास्यरूपेणेत्यर्थः । हास्यावतारः श्रीराम इति प्रसिद्धिः । रामतापिनीये मन्त्रसाधनमन्यमार्गपरं मतं नात्रोपयुज्यते । दण्डकारण्यवासिनामृषीणां **प्रमदाभावकारकः** प्रसिद्धम् । यत एतादृशः स्वतः प्रमदाभावकरणार्थं **प्रकटाय** तुभ्यं नम इत्यनुकर्षेणान्वयः । मर्यादापुरुषोत्तमत्वेन ग्रन्थकरणवेलायां प्रकट इति नमनं भगवदाविर्भावे माहात्म्यज्ञानपूर्वकं नमनं कर्तव्यमिति सुबोधिन्याम् । **रघुनायकेति** सम्बोधनं रघूणां नायक इति दासानां दास्ययोग्यं वरान्तरमपि ध्वनितं देयम् । मायामयायेति श्रुतौ मायापदं माङ् माने शब्दे चेति धातुपाठान्माने परिच्छिन्नपरिमाणे शब्दे चास्ति । ततः प्रत्ययः मयट् च । एवं चात्र हास्यं जनोन्मादेति वाक्योपबृंहितश्रुत्या हास्यं मायेति ।

श्रीमत्प्रभूत्सवः । श्रीकृष्णेति ।

श्रीकृष्णान्तरकृष्णास्यरवरूपविहारकृत् ।
तदर्थप्रकटः स्वीयदास्ये मामनुभावय ॥ १ ॥

'यस्य देवे परा भक्तिर्यथा देवे तथा गुरा'विति श्वेताश्वतरश्रुतेरावश्यकः । 'आचार्यं मां विजानीयान्नावमन्येत कर्हिचित् । न मर्त्यबुद्ध्यासूयेत सर्वदेवमयो गुरु'रिति भगवद्वचनात् । अत्रापि 'प्रभौ परिवृढ' इति पाणिनिसूत्रात् परिवृढसमानाधिकरणप्रभुपदोपादानम् । परिवृढाष्टके श्रीपुरुषोत्तमे परिवृढपदप्रयोगः । अतः प्रभूत्सव इत्युक्तम् । आचार्यत्वं च नूतनमार्गप्रवर्तकत्वं 'आचार्यवान् पुरुषो वेद' इति श्रुतेः 'आचार्यचैत्यवपुषा स्वगतिं व्यनक्ति' इति स्मृतेश्च । 'उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः । सरहस्यं तदङ्गं च तमाचार्यं प्रचक्षत' इति आरणश्रुतिर्वेदमार्गाचार्यलक्षणप्रतिपादिका । 'एकं साङ्ख्यं च योगं च वेदारण्यकमेव च । परस्पराङ्गान्येतानि पञ्चरात्रं च कथ्यत' इति भारतात् । आरण्यकमित्यत्र स्वार्थे ष्यञ् कप्रत्ययश्च । आरणमित्यर्थः । सुबोधिन्यामपीयं श्रुतिर्विचारिता श्रीकृष्णस्यानन्दमात्रकरपादमुखोदरादेर्योऽन्तरकृष्णो विरहदलविविधभावात्मा तस्य मूर्त्यात्मकस्यास्ये ये रवाः 'अग्निर्वाग् भूत्वा मुखं प्राविशत्' इति श्रुतेस्तद्रूपा विहाराः तेषां कृत् तदर्थं तादृशविहारार्थं यत्र श्रीकृष्णस्तत्र प्रकटः स्वीय आत्मीये दास्ये तन्निमित्तं मां लक्षीकृत्य भावय स्मर। आचार्येषु भेदबुद्धेस्त्रयस्त्रिंशदपराधेषु गणनाजन्माष्टम्यां यानि श्रुत्यादीनि तान्यत्रापि । यद्वा लिङ्गभूयस्त्वाधिकरणे ब्रह्मत्वेनोपासनाविषयत्वेनेति भाष्ये उपासनात्वेन भक्तित्वेन कार्यकारणभावः सूचित इति मर्यादाभक्तौ जनयितव्यायामुपासनामपेक्षते कारणत्वेन तत्रोपासनाविषये प्राणे श्रुतिः 'प्राण आचार्य' इतीयं श्रुतिः । अप्रतीकालम्बनसूत्रम् । विभूत्यध्याये गीता 'मुनीनामप्यहं व्यास' इति । 'भक्तिमार्गप्रचारैकहृदयो बादरायण' इति भाष्यादाचार्याणामपि भक्तिमार्गप्रचारैकहृदयत्वाद्भक्तिमार्गप्रचारैकहृदयत्वगुणयोगाद्व्यासपदस्य गौणी ।

चन्दनयात्रा ।

कुचकुङ्कुमगन्धाढ्यमङ्गरागमतिप्रियम् ।
श्रीकृष्ण तापशान्त्यर्थमङ्गीकुरु मदर्पितम् ॥ १ ॥

स्पष्टम् । 'तानि पर' इति सूत्रम् । 'ता वां वास्तूनी'ति श्रुतिः प्रपञ्चरूपा वैकुण्ठस्थानोद्भवं मम प्रीतिकरं मद्भक्तैर्ब्रह्मादिभिर्धारितं विष्णुचन्दनं वैकुण्ठस्थानादाहृत्य द्वारकायां मया प्रतिष्ठितं चन्दनं कुङ्कुमादिसहितं विष्णुचन्दनं ममाङ्गे प्रतिदिनमालिप्तं गोपीभिः प्रक्षालनाद्गोपीचन्दनं मदङ्गलेपनं पुण्यं चक्रतीर्थान्तस्थं चक्रसमायुक्तं पीतवर्णं मुक्तिसाधनं भवतीति श्रुतिर्गोपीचन्दनोपनिषदि । पुण्यं प्रथमाधिकारे मर्यादायां प्रेमद्वारा मुक्तिसाधनं पुष्टौ मुक्तिः कर्मसम्बन्धव्यतिरेकेण गृह एवं चतुर्विधपुरुषार्थमनुभवतो भगवदीयत्वरूपा पुष्टिमार्गीयमोक्षविवृतौ श्रीपुरुषोत्तमकृतायां विवृतेयं मुक्तिः । गीतातावद् 'अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यह'मिति राजविद्याराजगुह्ययोगाध्याये नवमाध्याये ।

नृसिंहजयन्ती । श्रीवेति ।

श्रीवारूपं श्रीनृसिंहं स्वभक्त्यतिशयाद्यथा ।
प्रकटीकृतवान् कृष्ण तां भक्तिं वितर स्व मे ॥ १ ॥

---

१. सेवेत ।

ग्रीवया रूप्यते नृसिंहोऽयमिति व्यवह्रियत इति ग्रीवारूपं सर्वो हि शिरसाभिज्ञायते देवदत्तोयं विष्णुमित्रोयमित्यतो विशेषणम्। स्वपदेन प्रह्लादः। सप्तमस्कन्धे स्पष्टम्। वितर स्व हे स्व वितर। तॄ प्लवनतरणयोः भ्वादिपरस्मैपदी। नृसिंहतापिनीयेऽथैष एवाकार इत्यनेन जीवात्मैक्यीकृतात्मरूपाकारमनूद्यास्ततमार्थं आत्मन्येवेत्येवकारेण विशेषणसङ्गतैवकारेणात्ममात्रे तं बोधयित्वा नृसिंहे ब्रह्मणि वर्तत इत्यनेन श्रुत्यंशेनाकारस्यानात्मन्यव्यापकेवतार इति यावत् तमाकारं न बोधयति। अतः श्रुत्या न पुराणोदितरूपबाधः।

ज्येष्ठाभिषेकः। अत्रापि गङ्गाजिद्दशहरा पूर्वं बोध्या। अत्रापि हरेरुत्सवः ज्येष्ठशुक्लदशम्यां प्रयागे श्रीयमुनया समागमो जात इति यमुनासखीत्वात्। पद्मपुराणे मरीचिसर्गे यमुनोवाच 'पृथग्भूत्वा गन्तव्यं हि त्वया सखी'त्यत्र सखीति सम्बोधनात्।

प्रियेति।

प्रियारतिविहारोत्थश्रमवारिसुगन्धिना।
शृङ्गाररसरूपात्मयामुनब्रह्मवारिणा॥ १॥
स्वरूपरसदानार्थं तापानन्तरभावनात्।
प्रियाङ्गरसनीरेण स्वभिषिक्तो भव प्रभो॥ २॥
लातस्तद्रसदानार्थं स्वसृष्टिं कारणात्मिकाम्।
सृष्ट्वा वितर सत्क्रीडां तदास्ये स्वीकुरुष्व माम्॥ ३॥

अत्र पद्मपुराणे मरीचिसर्गे यमुनामाहात्म्ये त्वाष्ट्री ब्रह्मणो वरं लब्ध्वा सूर्यनारायणाद्यमं यमुनां च ससर्ज। तत्र द्रवरूपांशेऽचेतने ब्रह्मामृतमिश्राम्भःपरिक्लिन्नपाणिस्पर्शैः विष्णुप्रवेश ईश्वरैश्वर्याधानं च देवत्रयकार्यं तत उभयोर्जातकर्मादि। ततो 'यमुनाम्बुवपुर्भूत्वा पुण्यतोयाभिगामिनी। वैष्णवीयोगमास्थाय सावतीर्यास्तपर्वतात्। अर्घादिकृतसत्कारा भित्त्वा चाम्बुनिधिं ततः। संप्राप्ता पुष्करद्वीपं पुष्करद्वीपवासिभिः। पूज्यमाना विवेशाशु क्षीराब्धिं तेन सत्कृते'ति। अत्रान्तस्तद्धर्मोधिकरणे सूर्यान्तस्थः परमात्मा प्रतिपादितस्तस्य प्रिया त्वाष्ट्री 'अहं बीजप्रदः पिते'ति गीता। प्रियायाः क्रीडाविहाराश्च तैरुत्थेन श्रमेण यद् वारि तस्य सुगन्धिना सुगन्ध इव सुगन्धोऽस्त्यस्मिन् एतेन चन्दनादि पुष्पादि चोदूघृष्टं सुगन्धजनकं वारिण्युक्तं 'रसो यः परमाधारः सच्चिदानन्दलक्षणः। ब्रह्मेत्युपनिषद्गीतः स एव यमुना स्वयम्। पावनायास्य जगतः सरिद्भूत्वा ससार हे'ति वाक्यैः शृङ्गाररसरूपम्। एतस्य वारिणो मधुरो रस इति चेन्न। तच्छृङ्गाररसरूपमात्मनि स्वरूपे ब्रह्मात्मके यस्य न प्रकटं भक्तेच्छातो विनाऽप्राकट्यात्। नन्वप्रकटस्य तस्य सत्त्वे कोतिग्रह इति चेच्छृणु स एव यमुनेति प्रत्यभिज्ञाशब्द एव। तच्छब्देन ब्रह्मपरामर्शात् तस्य च शृङ्गाररसत्वात्। तादृशं यामुनं ब्रह्म निर्विकल्पकज्ञानं वारि तेन वारिणा॥ १॥

स्वरूपरसः फलप्रकरणे 'ततो रूपं प्रतिष्ठित'मित्युक्तः तद्दानार्थम्। ननु कथमेवं व्याख्यायते यतः सूर्यान्तस्थपरमात्मनो दुहितेति चेन्न। यमुनाम्बुवपुर्भूत्वेत्यनेन वपुरन्तरप्राप्तेः, भूत्वेति पदादंशतः सत्ताया अबाधकत्वात्। 'या माता सा पुनर्भार्या या भार्या जननी हि सा। यः पिता स पुनः पुत्रो यः पुत्रः स पुनः पिते'ति योगतत्त्वोपनिषच्छ्रुतेः ब्रह्मवारिणेत्युक्तेर्न कोऽपि दोषः। स्वरूपरसदानार्थमित्यत्र यमुनाया इत्युच्यते कुत एतद् 'आपो वा' इत्यादिश्रुतेरवान्तरप्रलय-

विषयत्वेन सुबोधिन्यां व्यवस्थापनाद् अत्रापि स्वयं विष्णुः प्रविश्याजीवयद्धि तदित्युक्तम् । तदित्यचेतनं मिथुनं यमयम्यात्मकम् । तापेति स्वयं तापः सा करैस्तप्तेत्युक्तस्तदनन्तरं भगवत्तोषः । 'तुष्यतां मे स भगवानि'ति श्रीभागवते कालिन्दीवाक्यात् तस्य भावनाद् उत्पादनात् तापानन्तरं तोषे स्वरूपरसदानमित्युक्तम् । हे प्रभो परिवृढ सुष्ठ्वभिषिक्तो भवेत्यधीष्टे लोट् । यद्वा कालिन्द्यै स्वरूपरसदानार्थम् । यद्वा यामुनब्रह्मवारिणेत्यत्र कालिन्दीब्रह्मवारिणेत्यर्थः । यामुनेत्यत्र शैषिकप्रत्ययात् । यमुनया गृह्यते रूपान्तरेण कालिन्दीत्वेन तद्यामुनमेतदुभयपक्षे 'अहं देवस्य सवितु'रित्यादिसुबोधिनीसन्दर्भे स्फुटोऽयमर्थ उत्तरार्धे । प्रियेत्यादि 'प्रिया कालिन्दी सैवाङ्गं स्वयं विष्णुः प्रविश्ये'ति वाक्यात् तदेव रसो मधुरः तद्युक्तं नीरं तेन ॥ २ ॥

अभिषेकः स्नानं स्नातस्य भक्तेच्छया लीलाप्राकट्यमाहुः स्नातस्येति । स्वसृष्टिमात्मसृष्टिम् । कारणात्मिकां ब्रह्मात्मिकाम् । सत्क्रीडाममृतक्रीडाम् । तद्दास्ये ब्रह्मदास्ये विस्तृतब्रह्मक्रीडाङ्गीकृतदास्ये । स्वीकुरुष्वेत्यात्मनेपदं स्वीकारफलं भजनानन्दरूपं आत्मगामि प्रतिपादयति । स्वसृष्टिः सर्वातः स्वसृष्टिं विशिषन्ति स्म कारणात्मिकामिति । कारणानि श्रीगोकुले भक्तेच्छया जातानि अथवा दहराधिकरणोक्तपरमात्मन्यवरुद्धानि कारणानि ब्रह्मजीववादनिराकरणसिद्धानि । न स्थानतोपीत्यधिकरणे ब्रह्मस्वरूपं सिद्धम्, 'अपि संराधन' इति सूत्रे फलायितं वा, अरूपवत्सूत्रे सिद्धं वा कारणं प्रस्थानरत्नाकरस्य प्रमेयप्रकरणे 'तच्च ब्रह्म पूर्वं निराकारमेव सच्चिदानन्दात्मकं सर्वभवनसमर्थ'मित्येवं सर्वभवनसामर्थ्योक्तेः, जिज्ञासाधिकरणे निर्गुणमेव ब्रह्म कारणमिति निरुक्तेः । इमानि कारणानि आत्मा स्वरूपं यस्याः । आत्मसृष्टिस्तु वाराहे 'प्रादुर्भावोऽवताराणां मम सृष्टिरितीरिते'ति लक्षणिकोक्ता सापि व्याख्येया । सत्क्रीडायां मृत्युरूपाशननिवृत्तिस्तु न, तद्भिन्नतत्सदृशाशनाया अमृतत्वेनामृतरूपापेक्षितभोगस्य सम्भोगप्राप्तिसूत्रे प्रसाधनात् ॥ ३ ॥

**रथोत्सवः । मन इति ।**

**मनोरथात्मकरथे रथात्मात्मन् हरे मम ।**
**श्रीकृष्णस्योपवेशार्थमधिवासं कुरु प्रभो ॥ १ ॥**

**मनोरथो** भक्तानां ब्रह्मणि प्रचरति तेनात्मा स्वरूपं यस्य तादृशे **मम रथे, हे हरे** प्रपञ्चे वर्तमानानां सर्वदुःखहर्तः । यद्वा रथो देहस्तस्मिन्नात्मा जीवात्मा तस्यात्मा स्वरूपं रथशब्दस्य देहे शक्तिः 'आत्मानं रथिनं विद्धि शरीरं रथमेव त्वि'ति श्रुतौ जीवस्याक्षरात्मककरणसामर्थ्यं द्योतितम् । 'य एवास्मि स सन् यज' इति श्रुतेः । तदपि भावात्मकं तु यद्धाम तद्रूपत्वेन व्यावर्तयामासुः **प्रभो** इति परिवृढ इत्यर्थः पुरुष इति यावत् । तथा च भाष्यम् । अक्षरस्यापि ब्रह्मत्वं पुरुषस्यापि तयोः परापरभावोऽभेदश्चेति अदृश्यत्वाधिकरणे । क्रियासहितसदानन्दरूप**श्रीकृष्णस्योपवेशार्थं अधि** अधिकं प्रभुत्वेन **वासम्** । यद्वा मनोरथात्मकरथविशेषणम् । **अधिवास**मिति वास इत्यर्थः वास इत्यधिवासमव्ययीभावः । **उपवेशार्थ**मुपवेशस्यार्थं प्रयोजनं फलमानन्दं **कुरु** यद्वा योग्यतां कुरु । अधीष्टे लोट् ।

**मनोरथेति ।**

**मनोरथात्मकः कृष्ण कल्पितोयं रथस्तव ।**
**पूरयात्रोपसंविश्य गोपीवन्मन्मनोरथम् ॥ २ ॥**

'उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पने'ति रामपूर्वतापिनीयश्रुतेः कल्पित इत्युक्तम्। 'मनोरथान्तं श्रुतयो यथा ययु'रिति फलप्रकरणे वाक्यान्मनोरथत्वावच्छेदेन मन्मनोरथं पूरयेति सत्कारपूर्वको व्यापारः।

श्रीकृष्णेति।

**श्रीकृष्ण रथमारुह्य सरामेण सुभद्रया।**
**पाहि मां भक्तिदानेन दुःखसंसारसागरात्॥ ३॥**

हे श्रीकृष्ण स पूर्वं मनोरथपूरकत्वेन भावितो **रामेण सुभद्रया** च सह त्वं **रथमारुह्य दुःखसंसारसागरान्मां पाहि**। नन्वियदवधि सेवयैवं दुःखसंसारसागरात् पा रक्षणे रक्षणं कृतमेव 'ततः संसारदुःखस्य निवृत्ति'रिति सिद्धान्तमुक्तावल्याः पुनः कुतः स्मारयसीत्यत आहुः **भक्तिदानेने**ति। सर्वात्मभावोत्र भक्तिः दानपदसमभिव्याहारात् 'प्रदानवदेव तदुक्तमि'ति तार्तीयसूत्रात्। सर्वात्मभावाभावजदुःखं तिष्ठत्येवेत्यंशतोऽपि दुःखसंसारसागरात्पाहीत्यर्थः। हीनाधिकारे तामसस्कन्दोपन्यासेन। सर्वत्र प्रसिद्धरथोत्सव उत्सवप्रताने प्रतिपादित एव, भावनायां भावनापि।

**पवित्रोत्सवः।** अत्रापि पूर्वं षष्ठी पूर्णिमा हिन्दोला श्रावणशुक्लतृतीया वाटिका बोध्याः। तत्र षष्ठीपूर्णिमयोर्भावने विधेये के अपि। हिन्दोलायां दोलोत्सववद् भावना। 'झूली झूली हो पियसङ्ग' इति भाषाकीर्तनाद् अन्यैः कीर्तनैश्च। अत्र तृतीयायामपि कीर्तनाद्भावना। उद्यानेऽपि उल्लासादिभिर्भावना। द्वितीयस्कन्धनवमाध्याये 'प्रेङ्खं श्रिता या····गायती'त्यत्र सुबोधिन्यां हिन्दोलोक्ता।

**अक्षरे लीनतासिद्ध्यै भृशं लक्ष्मीर्यथाकरोत्।**
**दोलिकारोहणं स्वप्रियकर्म गायती तथा॥ १॥**

**प्रतिमुखे मुखान्दोलैरक्षराद्‌भयं कुरु।** मम कृतिरियं न मूलग्रन्थकृताम्।

या कृतेति।

**या कृता वार्षिकी सेवा सा मूलफलदा मता।**
**प्रत्यहं सूत्ररूपेण सैकीभूतानुभावनात्॥ १॥**

मूलं धर्मी प्रत्यहं क्रियमाणा तु तत्तदृत्वन्तर्गततत्तद्दिनसेवाजतोषमुत्पादयन्ती प्रत्यवायाभावे पर्यवस्यति न तु मूले, प्रत्यहं सेवया प्रेमासक्तिव्यसनानां भवनात्। प्रेमत्वेन सेवात्वेन कार्यकारणभावात्। तदुक्तं 'कृष्णसेवा सदा कार्ये'ति सिद्धान्तमुक्तावल्यां तट्टीकायां तदकरणे प्रत्यवायी भवतीति। मानसी सा परा मते'त्यस्य टीका परा फलरूपेति 'मद्भक्तेः कारणं पर'मित्येकादशे एकोनविंशे परमिति फलाव्यभिचारिकारणमतः परा फलाव्यभिचारिकारणमतो वार्षिकी सेवा प्रत्यहं क्रियमाणा सूत्ररूपा मूलफलदवार्षिकीसेवासूचनात्। 'सूचनात्सूत्रमित्याहु'रिति ब्रह्मोपनिषच्छ्रुतेः। न च यज्ञोपवीतसत्र एवेयं प्रवर्तत इति शङ्क्यम्। सूत्रपदादत्रापि समाख्यासत्त्वात्। एवं च प्रत्यहं सूत्ररूपेण 'प्रकृत्यादिभ्य उपसङ्ख्यान'मिति वार्तिकेन तृतीयाऽभेदार्थिका सूत्ररूपेणेत्यत्र तथा च सूत्ररूपा भिन्ना या सेवेत्युक्तम्। ननु सूत्रं कार्पासं सेवानुवृत्तिः क्रियेति यावत् तयोर्द्रव्यकर्मणोः कथमभेद इति चेन्न। 'क्रियाङ्गं तद्धि वै स्मृत'मिति ब्रह्मोपनिषदः क्रियाङ्गस्य क्रियात्वात् तदन्तःपातिनां सूत्राणां तद्रूपत्वात्। ननु सूत्रपदस्य कार्पाससूत्रं शक्यार्थः न क्रियातोत्र कथं सूत्ररूपा, सूत्रपदेन रूप्यत इति सूत्ररूपेति चेन्न। सूत्रपदस्याभिधेयार्थतिरस्कारेण व्यङ्ग्यार्थे तात्पर्यार्थे वा क्रियारूपे प्रवृत्तेः सूचनात्सूत्रमुच्यत इति श्रुतेः।

ज्ञातात्पर्ये वा मया पुमेहो । ननु षष्ट्युत्तरशतत्रयपरैः सज्ञातात्पर्यं कुतो नेति चेन्न । अवाचनिकत्वाद् वा सेवा व्यष्टीभूता सानुभावनाद् अनु पश्चाद् भावनमनुभावनं चानुभावनं चानुभावनं चैतेषां समाहारोनुभावनं एकवद्भावः । तस्मात्समष्टीभूतानुक्रमेणैकदा भावनाविषयीकृतैकीभूतेत्युच्यते । क्रियात्रिक्षणावस्थायिनीत्वपक्षे आहार्यज्ञानविषयत्वं बाधकालीनेच्छाजन्यं ज्ञानमाहार्यम् । अत्र वार्षिकीसेवा नाकृता मूलफलदापि तु कृतेति कृतेत्युक्तम् । नन्वेकं तत्पदं व्यर्थं या प्रत्यहं सूत्ररूपेण व्यष्टीभूतानुभवनादेकीभूता कृता वार्षिकी सेवा सा मूलफलदा मतेत्यन्वयादिति चेन्न । दूरान्वयस्य पूर्वतन्त्रे निषिद्धत्वाद् एवं च या प्रत्यहं सूत्ररूपेणेत्यत्र यच्छब्दानुवृत्तिर्यत्तदोर्नित्यसम्बन्धाज् 'जनुषा पिपर्तने'ति ऋग्वेदश्रुत्या सा मूलफलदा मम ग्रन्थकर्तुर्मता । श्रीमदाचार्याणां तु एकापि सेवा सम्यक् कृता पुरुषार्थपर्यवसायिनी तथापि देहनिष्कृत्यै सम्पूर्णजन्मना पूर्तिंयुक्तं कुरुतेत्यृग्वेदश्रुतिराहेति मतम् ।

एवमेकीभूतसूत्रा वार्षिकी सेवा चैकार्थवाचिका तत्र सूत्रपदं प्रत्यहं सेवानां वार्षिकसेवासूचनरूपं ज्ञापकमित्याहुः पवित्रमिति ।

पवित्रं तज्ज्ञापकं हि प्रेषितं हरिणा ततः ।
अतस्तदारोपणं तु श्रीकृष्णे सन्मतं सदा ॥ २ ॥

पवित्रं षष्ट्यधिकं शतत्रयतन्त्वात्मकं तस्य प्रत्यहसेवानां वार्षिकसेवासूचनरूपस्य ज्ञापकम् । तदुक्तं 'तत्रोत्तमं पवित्रं तु षष्ट्युत्तरशतत्रय'मिति । 'ये त्वां न बहु मन्यन्ते यथा सम्भावितो मया । जपहोमादिजं तेषां फलं त्वामेतु निश्चया'दिति कपर्दिवचनम् । ब्राह्मं च राजसं 'न करोति विधानेन पवित्रारोपणं तु यः । तस्य सांवत्सरी पूजा निष्फला मुनिसत्तम' इति । तथा चैकं सूत्रं न्यूनं चेन्न पवित्रं पूर्णं यथा तयोक्तवाक्याभ्यां पवित्रोत्सवरूपसूत्रं न्यूनं चेन्न वार्षिकी सेवा पूर्णा भवतीति प्रोक्तम् । कपर्दिनो धर्मज्ञभक्तत्वेन निश्चयार्थे हीत्युक्तम् । 'द्वादशैते विजानीमो धर्मं भागवतं भटा' इति धर्मराजवाक्याद्धर्मज्ञत्वं 'ज्ञानेन भजती'त्यथर्वशिरःश्रुतेर्भक्तत्वं कपर्दिनः । हरीति हरिणा क्रोडरूपिणा भक्तानां स्वभावत इष्टं प्रेषितं कृतम् । वाराहे चातुर्मास्यमाहात्म्ये 'पूर्णिमायां ततः कुर्यात्पवित्राणां समर्पणम् । नानावर्णैः पट्टसूत्रैर्निर्मितानि समर्पयेदि'ति वचनात् ततः कारणात्पवित्रं तज्ज्ञापकम् । श्रीकण्ठे आरोपणस्याविवक्षितत्वाच्छ्रीकृष्ण इत्युक्तम् । श्रीकृष्णाश्रय इत्यर्थः । तदाश्रयस्य विशुद्धत्वात् । सतामभृतमिच्छूनां मतम् । सदा सर्वमासेषु 'मुख्यालाभे हि सर्वत्र प्राप्नोतिष्ठते हरि'रिति विष्णुरहस्यवचनात् ।

तदेति ।

तदारोपाद्भक्तिभावा मूले सर्वे समर्पिताः ।

श्रीकृष्णाश्रये पवित्रारोपान्मूले आदिकारणे कटकादिवद् भक्तिभावा दशमोक्ताः । विवेकजिज्ञासायां श्रीहरिधनकृतभावनायां विमृष्टाः ।

त्वत्प्रेति ।

त्वत्प्रेषितं पवित्रं हि मूलसेवाफलात्मकम् ॥ ३ ॥
समर्पयामि तत्प्रीतः कृपयाङ्गीकुरु प्रभो ।

त्वया प्रेषितं त्वत्प्रेषितं मूलसेवैव फलमितरफलानपेक्षणात् । तस्य आत्मा स्वरूपं पूर्वेन [illegible] । 'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् । यत्तपस्यसि कौन्तेय तत्कुरुष्व

मदर्पणं' इति गीतायामाहुः समिति । प्रीतस्त्वङ्गीकुरु इति वचनव्यक्तेः प्रीतेर्भावमाप्तित्वा- त्कुर्विति परस्मैपदं धातोरुभयपदित्वेऽपि प्रभो इति पूर्ववत् ।

समर्पणफलमाहुस्तदिति ।

**तत्समर्पणतो भावसेवायाः फलरूपता ॥ ४ ॥**

भावसेवा 'भावात्मकत्वात्तद्रूपं गुणातीतं सदैव ही'त्यत्र रसो भावो देवादिविषयिण्या रत्याः स्थायिभावत्वात् 'स्थायिभावो रसः स्मृत' इति अङ्गशास्त्रे, भू सत्तायाम् भावे घञ् भावः सत्तातः सदानन्दसेवेत्यर्थः । फलरूपतेतिवचनं प्रत्यहं सेवायाः फलरूपत्वेऽपि पुराणमत एनया सेवया वार्षिकसेवाव्यङ्गत्वपरिहारात् फलसमर्पकत्वेन भावसेवाया वार्षिक्याः फलरूपता नेतरद्ग्राह्यमिति साधनं फलं वा ।

रक्षा । पूतनेति ।

**पूतनायां संस्थितायां गोपिकाभिर्यथा कृतम् ।**
**तथा रक्षाबन्धनं प्रेम्णाङ्गीकुरु कृतं मया ॥ ५ ॥**

ननु शरणमार्गविरुद्धं रक्षाबन्धनम् । शरणमार्गे ब्रह्मणो रक्षकत्वादत्र भक्तानां रक्षकत्वमिति रक्षाकारणधर्माणां ब्रह्मणि स्फूर्तेर्भ्रमत्वशङ्केति चेन्न । दशमस्कन्धषष्ठाध्यायटिप्पण्यां स्नेहभावे ये धर्मा भगवन्निष्ठाः स्फुरन्ति ते तत्र सन्त एव तादृगेकभक्तवेद्या एवेति प्रकथनाद्रक्षाबन्धनकारणधर्माणां भगवति स्फूर्तेर्न भ्रमत्वशङ्केति यथा रक्षा कारणधर्मप्रकारेण तथा पूर्णब्रह्मत्वरूपं फलं ब्रह्मगामीति परस्मैपदमङ्गीकुर्विति । 'लोकवत्तु लीलाकैवल्यम्' इति सूत्राद्रक्षाबन्धनम् ।

एतदनु हिन्दोलोत्तारणम् । पूर्णिमामुक्त्वा 'ततः परं हृषीकेशं यजेत्प्रतिपदादिषु' इति वाराहात् । जन्माष्टमीमभिव्याप्य क्रीडनकार्पणम् । गर्भस्तुतिवत् ।

मालामणिव्यवधायकग्रन्थिवन्नित्यविध्यन्तरोत्सवाननुक्त्वा पृथगुक्तितात्पर्यमाहुः प्रत्यहमिति ।

**प्रत्यब्दमेवं करणादुत्सवानां विधानतः ।**
**श्रीमदाचार्यमार्गोक्तसेवायाः फलरूपता ॥ ६ ॥**

स्नेहानन्तरं स्वव्यसनतः क्रियमाणोत्सवानां विधिप्रयोजकताशून्यानामकरणापत्तेः । एवकारानु- परामर्शेन विधानतः विधानतोपीत्यर्थः । अपेरध्याहारः । विधानतो यथा । 'ततो जन्माष्टमी कृष्ण ममातीव प्रिया हि सा । तस्यां निशीथे कर्तव्यं कृष्णमूर्तेः प्रपूजनमि'ति वाराहे । 'अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते । यष्टव्यमेवेति मनः समाधाय स सात्त्विकः' इति गीतायाम् । श्रीमदिति । सेवोत्सवसेवा । कदाचिद्वक्ष्यमाणसेवायाः फलरूपता । नित्यसेवोत्सवान्ग्राहयत् मार्गवाह्य- देवान्यग्राह्यं निवारितम् ।

जनयत्याशु वैराग्यमिति विषयवैतृष्ण्यसंज्ञवैराग्योक्तेर्भक्तिफलत्वेनात्र सेवात्वेन सेवोक्तेव विशेष- प्रकारेण धनिकसाध्यत्वात् सेवाफलं त्रिभिः प्रपञ्चयामासुः सेत्यादिभिः । सा कायेति ।

**सा कायवाङ्मनोभिश्च दृढप्रेम्णा कृता सती ।**
**दृढमूली लतावच्च वृद्धा कृष्णं फलिष्यति ॥ ७ ॥**

सा सेवा कायेन कृता सेवा भगवत्तोषं 'यद्वृत्त्या तुष्यते हरि'रिति तृतीयस्कन्धात् परं तु कायमात्रेण सेवाऽसम्भवाद् वाङ्मात्रेण सेवा सिद्धान्तमुक्तावलीटीकायामनुक्ता किन्तु तनुवित्ताभ्या- मुक्ताऽतः कायग्रहणं कायवाग्भ्यां सेवायाः फलं पापाभावः 'उभयोरप्यभावे तु प्रपत्तिस्ततो

भवे'दिति निबन्धात्। कायवाङ्मनोभिः सेवायाः फलं संसारदुःखनिवृत्तिः 'ततः संसारदुःखस्य निवृत्ति'-रिति सिद्धान्तमुक्तावल्याः। चकारादनुक्तसमुच्चयार्थकीतनुवित्तजसेवाफलं मानसीसेवा सिद्धान्त-मुक्तावलीटीकायाः। किञ्च तपोवैराग्यसेवायाः फलं ज्ञानं साङ्ख्यं सर्वत्वज्ञानं वा 'तपोवैराग्ययोगे तु ज्ञानं तस्य फलिष्यति' इति निबन्धात्। अपि च तनुवित्ताभ्यां 'भक्तिरहस्यभजनं तदिहामुत्रफल-भोगनैराश्येनामुष्मिन् मनःकल्पनमेतदेव च नैष्कर्म्य'मिति गोपालतापिनीयोक्तमानसीसेवोक्ता, एवं च तनुवित्तजयोर्योगयोगो जातः 'परो हि योगो मनसः समाधि'रिति वाक्यात् तस्याः फलं प्रेम 'योगयोगे तथा प्रेम' इति निबन्धात्। कायवाङ्मनःप्रेमभिः सेवायाः फलं ब्रह्मबोधनं 'ततः संसारदुःखस्य निवृत्तिर्ब्रह्मबोधन'मिति सिद्धान्तमुक्तावल्याः। भक्तिः 'ब्रह्मप्रकृतयस्त्विमा' इति सप्तदशे 'परं ब्रह्माधिगच्छती'ति त्वष्टादशे वाक्याभ्यां तत इत्यस्य कायवाङ्मनोभ्यः कायवाङ्मनःप्रेमभ्य इत्यर्थात् 'यथा भक्त्येश्वरे मनः' इति वाक्याच्छ्रुत्युक्तमनःकल्पनस्य प्रेमसाध्यस्य ग्रहणात् कायवाङ्मनोदृढप्रेमभिः सेवायाः फलं कृतार्थता। 'यदा स्याद्व्यसनं कृष्णे कृतार्थः स्यात्तदैव हि' इति भक्तिवर्धिन्याः। दृढत्वमनुक्रमेण व्यसनावस्थात्वम्। दृढत्वं यर्हि प्रमाणादिचतुष्टयबाधाभावस्तदापि कृतार्थता। 'श्रवणादि ततः प्रेम्णा सर्वं कार्यं हि सिद्ध्यति' इति बालबोधात्। दृढत्वमत्र प्रमाणादिफलं ज्ञेयम्। दृढमूलीति दृढं मूलं श्रद्धालक्षणं यस्याः 'श्रद्धा रतिर्भक्तिरनुक्रमिष्यति' इति वाक्यात्। दृढं बलम्। 'दृढः स्थूलबलयो'रिति सूत्राद् बलं च प्रमाणादिचतुष्टयबाधाभावः। 'श्रद्धाभक्तिज्ञान-योगादवैही'ति श्रुतेश्च तस्याः फलं रतिद्वारा भक्तिः, 'श्रद्धा रतिर्भक्तिरनुक्रमिष्यती'ति वाक्यात्। अनुवृत्त्याख्यसेवाफलं सायुज्यं 'सायुज्यं कृष्णदेवेन शीघ्रमेव ध्रुवं फल'मिति निबन्धात्। भक्तिहेतूक्त-दिशानुग्रहेण मर्यादाभक्तौ फलं भगवत्सेवोपयोगिदेहो वैकुण्ठादिषु। अनुग्रहेण पुष्टिभक्तौ तु अलौकिक-सामर्थ्यं फलम्। पुष्टिभक्तिर्मर्यादाभक्तिश्चानुग्रहेण जातेति मूलमनुग्रहो वा साधनसाध्यत्वाद्घनलता-वद्वृद्धा मर्यादाभक्तिरानिरोधलक्षणग्रन्थोक्तनिरोधम्। पुष्टिभक्तिस्तु आसर्वात्मभावम्। 'पुरुषार्थोतः शब्दादिति बादरायणः' इति 'फलमत उपपत्ते'रिति तार्तीये न्यायसूत्रात् 'प्रदानवदेव तदुक्तम्' इति सूत्रेण तस्य मुख्यभक्तिरूपसर्वात्मभावस्य दानसाध्यत्वेन साधनासाध्यत्वादतः कृष्णं फलिष्यति। ब्रह्मप्राप्तेर्गौणफलरूपाया अत्र निवेश एवं वृद्धा भावैरङ्कुरिता सेवानुग्रहाभिव्यक्त्या सद्रूपेण पुंसु स्थिता महीमृगदृशां बीजरूपा 'बीजं तदुच्यते शास्त्रे दृढं यन्नापि नश्यति' इति भक्तिवर्धिन्याः भक्तिः सत्तारूपं बीजं शृङ्गारसत्तारूपं बीजं लतावद्वृद्धं यथा भावैरङ्कुरिता श्रुतिस्मृतिदशामाकल्पमासञ्चितैः श्रद्धा कन्दलिता मनोरथमयैः शाखाशतेनावृता लौल्यैः पल्लविता मुदा कुसुमिता प्रत्याशया पुष्पिता इति वृद्धा सा फलिष्यति कृष्णं लीलाभिः। चकाराद्भाग्यैरङ्कुरिता महीमृगदृशामाकल्पमासिञ्चितैः प्रेम्णा कन्दलिता मनोरथमयैः शाखाशतैरावृता लौल्यैः पल्लविता मुदा कुसुमिता प्रत्याशया पुष्पिता लीलाभिः फलिता व्रजवनीशृङ्गारकल्पद्रुमरूपा 'कामादितरत्र' इत्यादिसूत्रोक्ता विहितभक्तेरितरत्र कामादिरूपा सेवा गृहीता भक्तिवर्धिन्युक्तदिशा वृद्धा प्रेमासक्तिव्यसनरूपा वा कृतार्थताफलम्।

एतदेवाहुः व्यस्तैरिति।

**व्यस्तैस्तैः सुदृढैर्हीनमध्यमोत्तमभेदतः।**
**कृता जीवैः स्वमार्गस्थैः फलिष्यत्युत्तरोत्तरम्॥ ८॥**

---

१. क्वचित्पुस्तके भावाङ्कुरमिता इत्यपि।

हीनमध्यमोत्तमभेदतो व्यस्तैस्तैः पूर्वोक्तैः प्रकारैः सुहृढैः सुशोभनैराचार्याभिमतैः दृढैः स्वरुचिमननशास्त्राभ्यासकृतैः। व्यासस्तु स्वरुच्या कायवाग्भ्यां कृता हीनाधिकारिणी कायवाङ्मनोभिस्तैः सप्रेमैः कृता मध्यमाधिकारिणी तैः दृढप्रेमसहितैः दृढमूल्युत्तमाधिकारिणी लतावद्वृद्धोत्तमोत्तमाधिकारिणी, अयं भेदो नातिप्रसिद्धोऽनुग्रहसाध्य इत्युत्तमान्तर्गतमात्रो गृहीतः। 'मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगम्' इति वाक्यादुत्तमोत्तमाधिकारिभक्तिरनुग्रहे सति ददातीति। अत्र फलं ब्राह्मणेत्यादिसूत्रोक्तं भगवत्सेवोपयोगिदेहो वैकुण्ठादिषु, अलौकिकसामर्थ्यं तु 'निवेदितात्मा विचिकीर्षितो मे' इति वाक्यादत्यन्तानुग्रहे सति संपादयति। आत्मनिवेदनमात्मनिवेदनपद्धतौ द्रष्टव्यं सप्रकारम्। 'अभि त्वा शूर नोनुमोऽदुग्धा इव धेनव' इत्याद्याः श्रुतयः। त्रिविधं निवेदनम्। आत्मा तु ईश्वरे तस्मात्कृतात्मनिवेदनेन विहाय पुरुषोत्तमं न कोपि भजनीयः शरीरं तु गुरुपुरुषोत्तमयोः कार्ये कल्पनीयं नान्यत्र तथा सर्वं धनादिकमपि। यदा निवेदितं शरीरं गुरुर्विक्रीणाति भुनक्ति वा कथमपि करोति तदा तस्मिन् शरीरे स्वयं स्वामित्वं न करणीयम्। 'विक्रीतस्य पशोः पुत्र न कर्तव्यो यथा व्ययः। न करोति पुनः शिष्यस्तथा जीवे निवेदिते' इति काठिन्यमस्तीत्यनधिकारिणि न देयम्। 'यस्य देवे परा भक्तिः' 'स इतः प्रेत्यानन्दमयमात्मानमुपसङ्क्रामति' परं विशिष्टं चिकीर्षु पुष्टिभक्तत्वादिति प्रतिभाति।

'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन' इति श्वेताश्वतरन्यायादप्रकाशितानां फलानुपयोगमाशङ्क्य प्रकाशार्थं पावित्र्यद्वारा भावजनकरजोभक्तिस्मरणात्मिकां मार्गरूपार्थप्रकाशद्वारा फलोपयोगार्थमाहुः पित्रित्यादि।

> पितृपादरजो जातु ह्युत्तमैर्विस्मृतं न यैः।
> तेषामेव हि मार्गोयं फलिष्यति न चान्यथा॥ ९॥

अन्यथा पितृपादरजोविस्मृतत्वप्रकारेण वर्तमानानां च पुनर्न फलिष्यति तदुक्तं 'यत्पादरजसागत्य यादृग्भावः कृतो मम। तादृशेनैव तद्भावं वर्णयाम्यवशः क्वचिदि'ति भ्रमरगीतटिप्पण्यां स्वानुभव उक्तः। एकादशे चतुर्दशाध्याये 'पूयेयेत्यङ्घ्रिरेणुभि'रिति रजसो महदङ्घ्रिसम्बन्धिनः पावित्र्यं प्रति कारणत्वमुक्तम्।

एवं प्रवृत्त्यर्थं फलमुपपाद्य बाधकसत्त्वे प्रवृत्तिरपि निष्फलातः कालस्य बाधकत्वाभावमनुगुणत्वं विरोधदार्ढ्यं संप्रार्थ्यमपि वदन्तो नमनात्मकविरहदशायां वस्तुनिर्देशात्मकं च मङ्गलं ग्रन्थमध्येऽष्टश्लोक्याहुः श्रीति।

> श्रीवल्लभो जयति भक्तहितैकबन्धु-
> राविश्चकार तनयं किल विट्ठलं यः।
> तस्यैव पादयुगलं सततं नमामि
> प्रेम्णा तदस्तु हृदये मम सर्वदैव॥ १॥

वल्लभपदमारभ्य एव व्याख्यातम्। भक्तानां हितश्चासावेकबन्धुर्मुख्यबन्धुः। विशेषणप्रतिपादनार्थं ज्येष्ठभ्रातरोनुजस्य स्वनामापि गृहीतवन्तः। विदा ज्ञानेन ठान् शून्यान् लातीति पितृप्रवर्तितपथप्रचारसुविचारक इति नाम।

कलिकालस्यबाधकत्वमाहुः श्रीति।

श्रीवल्लभाचार्यमार्गे स्मरणात्सेवनाद्धरेः।

तत्कथाश्रवणाच्चापि न कालो बाधते क्वचित् ॥ २ ॥

स्मरणं सकलशास्त्रनिष्पन्नं भगवद्विषयकमात्मविषयकं च। 'कृष्णमेव विचिन्तये'दिति सिद्धान्तमुक्तावली। सेवनकथाश्रवणे संप्रदायप्रदीपे एताभ्यां हरिं सेवेतेति। कालो न बाधत इति कठवल्ल्यां 'भयादस्याग्निस्तपति भयात्तपति सूर्यः' इत्युपक्रम्य 'मृत्युर्धावति पञ्चम' इति श्रुतेः। 'कालात्मा दिनकृदि'ति ज्योतिषे। यो बिभेति स न बाधते क्वचिद्देशे।

अनुवृत्त्यास्योत्सवसेवायां कालाबाधमुक्त्वा तत्र तस्यानुगुणत्वं तत्र करणं चाहुः वा इति।

वैराग्यप्रेमयोगेन स्मरणादित्रिकात्पुनः।

प्रसीदति हरिः शीघ्रं कालश्चानुगुणो भवेत् ॥ ३ ॥

विचाराङ्गतपआत्मकविचारेण ज्ञानं फलिष्यतीति तपो विहाय वैराग्यमात्रमुक्तम्। ततश्च वैराग्यस्य प्रेमयोगेन जन्यजनकभावः सम्बन्धः वैराग्यजनकेन प्रेमयोगेनेत्यर्थः। प्रेमयोग-वैराग्यात्मकं विचारपर्वत्रयमुक्तम्। साङ्ख्यमपि चतुर्थं पर्वोक्तम्। तस्य योगत्वात्। 'साङ्ख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिता' इति गीतावाक्यात्। स्मरणादित्रिकं प्रेमयोगात्पूर्वं कृतं पुनः स्मरणादित्रिकाद् वैराग्यप्रेमयोगेनेति प्रसादकथनात् स्मरणाद्यावृत्तिः 'आवृत्तिरसकृदुपदेशा'दिति तत्त्वसूत्रात्। हरिः सर्वदुःखहर्ता। काल इति उक्तश्रुतेः। 'कलिं सभाजयन्त्यार्या' इति वाक्याच्च। अत्र कश्चित् 'तस्मादुक्तप्रकारेण दृढविश्वासतो हरिम्। भजेदन्यत्परित्यज्य ततः सिद्धिमवाप्नुयादि'ति श्लोकं लिखन्ति। तत्र हरिं मनोमयमन्यथा दैवतमिति फलश्रुतिविरोधः। सिद्धिहेतुत्वं श्रीयमुनायाः 'सकलसिद्धिहेतु'मिति यमुनाष्टकात्। भगवत्सेवान्तर्गतश्रीयमुनाजित्सेवापि वक्ष्यते समासौ ग्रन्थस्य कारिकात्मकस्य। अन्नमयः प्राणमयो मनोमय इति तृतीयत्वेपि यो यस्य स तस्य दैवतमिति श्लोका-द्व्यर्थं उपनिबद्धः। तथाप्यन्यत्परित्यज्येति विरुध्यते। पुरुषोत्तमभजनस्य सर्वान्प्रत्यविशिष्टत्वात्। 'देवोऽसुरो मनुष्यो वे'ति वाक्यात् सिद्धयोऽणिमाद्याः सर्वात्मभावाद्या वा भगवच्चित्ताभिज्ञता तु साङ्ख्यप्रवचनस्य 'प्रत्ययस्य परचित्तज्ञान'मिति सूत्रात् पातञ्जले योगशास्त्रे साङ्ख्यप्रवचनसूत्रे तृतीयपादेऽस्ति। परमधिकारभेदात्फलानि व्यवस्थितानि। भक्तेः संयोगविप्रयोगाभ्यां भेदस्तत्साधारणो निरोधोऽपि करणत्वेनानुवृत्त्यास्यसेवायां निविशते आत्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्येति छान्दोग्यसमाप्तिश्रुतेः।

अतः श्रीमद्भागवतभक्तिवर्धिनीनवरत्नोक्तं संयोगसेवाकरणं विहाय विप्रयोगसेवाकरणनिरोध-द्वारप्रकारमाहुः व्रज इत्यादि।

व्रजे मधुवने चापि द्वारकायां तथैव च।

गोपीषु कुब्जादिषु च रुक्मिण्यादिषु या कृता ॥ ४ ॥

प्रकटानन्दरूपेण स्वकीया रसरूपता।

प्रकटीकृत्य कृपया तां चेत्कारयते मयि ॥ ५ ॥

तदा निरोधः सुदृढो जायते नान्यथा क्वचित्।

अत्र गोपालतापिनीयकृष्णोपनिषदाद्युक्ताः सर्वाः प्रकृतोपयोगिन्यः सङ्गृहीताः श्रुतयः। द्वारकाया-मिति गोपीचन्दनोपनिषत्स्थद्वारकायां मया प्रतिष्ठितं चन्दनमिति श्रुत्यंशीभूतद्वारकायामिति पदस्यानु

१. सेवाप्रकरणात्सेवायां संयोगनिरोधः सर्वत्रेत्याशयः।

करणम्। तेन 'प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुप' इति पाणिनीयसूत्रं न प्राप्नोति। रसरूपता दशरसरूपता, चकोरे कामवति शृङ्गाररस इव भगवति शृङ्गाररसरूपता। क्रौञ्चे वीर इव भगवति वीररसरूपता। चक्राह्वे करुण इव करुणरसरूपता। भारद्वाजेद्भुत इवाद्भुतरसरूपता। भारद्वाजस्य द्विजन्मत्वात्। बर्हिणि हास्यरस इव हास्यरसरूपता। व्याघ्रसिंहयोर्भयानकवद् भयानकरसरूपता। बलभद्रे संवाहनपदे भक्तिमति बीभत्सरसः हीनाद्धीनभाव उत्तमस्य बीभत्सो भवति, स भक्तिमतां प्रतीयते। वल्गत्सु भक्तेषु रौद्र इव रौद्ररसरूपता। कृतोत्सङ्गोपबर्हणेषु गोपेषु शान्तरस इव तत्र सुप्ते भगवति शान्तरसः। भगवत्पाद-संवाहकेषु भक्तेषु दास्यभक्तिरसः। तद्भगवति दास्यभक्तिरूपता यावद्रससामग्र्या ब्रह्मत्वात् 'रसो वै स' इति श्रुतेः। जीवद्वारा जीवधर्मस्य भगवद्धर्मत्वं वा। एतच्च दशमद्वादशाध्याये 'चकोरक्रौञ्चचक्राह्वे'त्यत्र सुबोधिन्यां स्पष्टम्। गोपीषु भक्तिरससंयोगविप्रयोगरसरूपता। पञ्चाध्याय्यां भ्रमरगीते विरहरसः। कुब्जायां कामरसः। आदिपदोक्तसान्दीपिनिगुरौ भक्तिरसः। रुक्मिण्यादिषु कामरसः। तां प्रकटीकृत्य कृपया मयि कारयते चेदित्यन्वयः। मदिच्छया प्रकटीकृत्य, भक्तेच्छायाः क्रीडाप्राकट्यं प्रति हेतुत्वाद् 'अचलत्व'मिति सूत्रभाष्यात्। कृपया प्रकटानन्दरूपेण मयि सर्वात्मभावस्य आश्रये, कृपाया आनन्दरूपप्राकट्येऽपि कारणत्वात्। कृपया विज्ञानं स्वानन्दप्राकट्ये सति भवतीति प्रथमस्य चतुर्थचरणे 'तदधीनत्वादर्थवदि'ति सूत्रे 'कृपाविष्टः साधनम्, आनन्दरूपः फल'मिति भाष्यात्। कारयत इति ब्रह्मणा सहाहं भक्तः कामलीलाः करोमि ब्रह्मोपाधि-भेदभिन्नं मां भक्तं कारयते कामलीला इत्यस्मच्छन्दोत्तरं द्वितीया प्राप्ता महिम्नः स्वस्याध्यात्मिकादि-त्रितयविदाश्रयत्वविवक्षया निरस्ता। विवक्षातः कारकाणि भवन्तीति युक्तवचनात्। ग्रामे गच्छतीतिवत् सप्तमी मयीति। कारयत इत्यात्मनेपदं तु 'णिचश्चे'ति सूत्रात्। लीलाकरणरूपं फलं प्रयोज्यप्रयोजककर्तृगामि भवत्येव। तदुक्तं स्वामिनीस्तोत्रे उदाहरणं तु 'प्रियतमकरपद्मस्पर्शभावे-क्षणोद्यद्रसभरजवरासामन्दमोदाकुलानाम्। प्रतिपदतलरुग्भिर्गोपसीमन्तिनीनामरुणतरहृदम्भोजन्मने मे नमोस्त्वि'ति। एतत्फलं निरोधसुदार्ढ्यं तच्च तदा भवति यदा निरोधः सुदृढो जायते नान्यथा, अन्ये-षूक्तनिरोधलीलाकारयितृत्वप्रकारातिरिक्तेषु सर्गादिलीलाकारयितृत्वादिषु सत्सु क्वचिदपि निरोधलीला-कारयितृविरहिते मनसि देशे तत्काले च दृढो निरोधो जायते न सुदृढः। शुद्धलीलाऽसाहित्यवद्भगव-द्विषयकत्वेन शोभनघटिकाभिपदार्थाभावादाचार्याभिमतत्वस्य शोभनपदार्थत्वस्याभावात्। एवं तु व्रज इत्यादिना रुक्मिण्यादिष्वित्यन्तेन ग्रन्थेन 'जयति जननिवासो देवकीजन्मवाद' इत्युत्तरार्धान्त्यक-श्लोकोक्तशुद्धलीलाः सङ्गृहीतास्तत्साहित्याच्छोभनघटकाभिपदार्थास्त्वेव।

निरोधस्य सर्वात्मभावरूपकस्य कारणं 'प्रदानवदेवे'ति सूत्रोक्तं भगवत्कृतं प्रदानकं शक्तिस्तु सर्वोऽप्यात्मनो भावो भगवत्येवाधिकृत इति षष्ठीतत्पुरुषगर्भितकर्मधारयादात्मनि सर्वेन्द्रियप्रतिष्ठापने। फलमत्र मोदप्राप्तिः 'ये निरुद्धास्त एवात्र मोदमायान्त्यहर्निशमि'ति निरोधलक्षणवाक्यात्। सेवाफलं तु पृथक्सेवाफलोक्तम्। तत्र सेवायाश्चेतस्तत्प्रवणत्वरूपत्वात्, अत्र सेवाया अनुवृत्तिरूपत्वात्।

एवं ज्ञानात्सुदृढनिरोधेच्छुं प्रति कृपावितरणप्रार्थनां स्मरणात्यागविधिं चाहुः निरोधेत्यादि।

**निरोधेच्छुभिरेतावदेव प्रार्थ्यं हरौ ततः ॥ ६ ॥**

**अक्रूरे श्रुतदेवे च विदुरेऽथोद्धवे च या।**

**कृता दासार्पितकृपा तां कृपां वितर प्रभो ॥ ७ ॥**

---

१. मद् भूयावां मिथू कल्कने तदा मिकेभिति पाठः।

**श्रीमदाचार्यपादाब्जरेणोर्न स्मरणं त्यजेत् ।**
**तस्यागे महती हानिर्मानुष्यं निष्फलं भवेत् ॥ ८ ॥**

ततो ज्ञानानन्तरं ज्ञानाद्धेतोर्वा हरौ, निरोधेच्छुभिः निरोधदार्ढ्येच्छुभिः, श्रुतावात्मनीति सप्तम्या निरोधस्यात्माभिन्नाश्रये बोधनाद्धराविति सप्तमी, युक्तं चैतत्, आश्रयस्य मुख्यत्वात् । प्रार्थ्यमिति 'प्रार्थिते वा ततः किं स्यात्स्वाम्यभिप्रायसंशयादि'ति वाक्यात्प्रार्थना विरुद्धा तथापि 'रतिप्रादुर्भावो भवतु सततमि'ति वाक्ये प्रार्थनायां लोट्स्वीकाराद्रतिप्रार्थना युक्ता । कृपाविस्तारस्य रतित्वात्, रतिः प्रीतिर्यद्यपि तथाप्यत्र रतिः क्रीडा रमु क्रीडायामिति धातुपाठात् प्रार्थ्यम् । अक्रूरे दासार्पितकृपा 'अप्यङ्घ्रिमूल' इति श्लोके पञ्चत्रिंशाध्याये 'मयि दया उत्पत्स्यत' इति सुबोधिन्यां कृपा सा दासार्पिता, 'प्रणतवत्सल' इत्यस्य 'नतिमात्रेणैव कृपा अभिव्यक्ता भवती'ति सुबोधिन्यां च कृपा सा दासार्पिता पञ्चचत्वारिंशाध्याये'अक्रूरभवनं कृष्णः सहरामोद्धवः प्रभुः । किञ्चिच्चिकीर्षया प्रागादक्रूरप्रियकाम्यये'ति वाक्ये प्रभुपदादुक्ता । 'सर्वेषां हि स्वामी सेवकगृहेऽपि सेवकसंमाननार्थं गच्छती'ति सुबोधिन्यां श्रुतदेवे दासार्पितकृपा । उत्तरार्धे सप्तत्रिंशाध्याये मैथिलस्य गृहवासमात्रं श्रुतदेवस्य तु सन्मार्गोपदेश इति तं विहाय श्रुतदेवोपादानम् । तत्र कृपा तु'अद्य नो दर्शनं प्राप्तः परं परमपूरुष' इत्यस्य सुबोधिन्यां दर्शनं चक्षुषाद्यैव शास्त्रतस्तु यः शक्तिभिः सृष्ट्वा आत्मसत्तया प्रविष्टः स कीदृश इति मनोरथ एव स्थितः, न तु कदाचिद्दृष्टः, अद्यैव परं दृष्ट इति तद्दर्शनं तु बुद्ध्या बुद्धिमानयं पदार्थाञ्जानातीति प्रत्ययात्सा च कृपयैव भाष्यप्रामाण्याद् अतः श्रुतदेवे दर्शनानुमितबुद्ध्यनुमिता कृपा या सा दासार्पिता । 'स त्वं शाधि स्वभृत्यान्नः किं देव करवाम ते । एतदन्तो नृणां क्लेशो यद्भवानक्षिगोचर' इत्यत्र सुबोधिन्यां दासत्वात् स्वामिकार्यमेव कर्तव्यमिति । अत आज्ञापयेत्यर्थ इति कथनात् 'देवाः क्षेत्राणी'त्यादिवाक्यादर्चार्चनेऽधिकारो माभूदिति तु न सूच्यते गृहिणोपसंहाराधिकरणभाष्यविरोधाद् अतो ज्ञानिनि कृपामात्रमक्षरोत्तमदर्शनजनकबुद्धिजनकं प्रार्थनीयं प्रार्थयन्ते पुष्टिभक्ताक्रूरदृष्टान्तेन पुष्टिभक्ते कृपा पूर्वं प्रार्थिता भाष्यमर्यादार्थं कृपया विज्ञानं 'बुद्धिर्विज्ञानरूपिणी'ति भगवद्वाक्यात् तेन दर्शनमिति । विदुरे दासार्पितकृपा तृतीयस्कन्धे चतुर्थाध्याये 'इति सह विदुरेण विश्वमूर्ते'रित्यत्रोत्तमाधिकारिणि विदुरे यथा यथा यस्मिन्नवसरे भगवान्पुष्ट्यादिलीलया स्वस्मिन्कृपां कृतवान् एवं विदुरोपि उद्धवं प्रति भगवत्कृपाकथां कथयति स्मेति सुबोधिन्यां कृपा या सा दासार्पिता । 'विष्णोर्भृत्याः स्वभृत्यार्थकृतश्चरन्ती'ति उद्धवं प्रति विदुरवाक्यात् । परमाधिकारिणि भगवद्दर्शनजनकबुद्धिजनिका कृपा प्रार्थिता । उद्धवे दासार्पितकृपा पूर्वोक्तरीत्या स्पष्टा एकादशे च स्पष्टा भगवत्प्रवर्तितपथप्रचारसुविचारके भगवद्दर्शनजनकबुद्धिजनिका कृपा या सा प्रार्थिता । 'भक्त्या जानाति चाव्यय'मिति श्रुतौ भक्त्या ज्ञानकरणत्वेन हेतुत्वेन चोक्तेस्तस्याश्च 'ब्रह्मविदाप्नोति परमि'त्यत्र व्यापारत्वेन तादृक्ज्ञानजनकबुद्धौ कारणत्वात्कृपा भगवद्दर्शने परम्परया निविशते । अर्पितपदेन श्रुतदेवे 'भगवान्भक्तभक्तिमानि'ति वाक्यात्स्नेहेन कृपावितरणे सत्कारपूर्वको व्यापारः, अभीष्टे लोट् । अत एव प्रभो भोः परिवृढ इति सम्बोधनम् । सर्वमिदं 'यस्य देव' इति श्रुतौ गुरुभक्त्यधीनं निरूपितमिति तदाहुः श्रीति । महती हानिर्हि ब्रह्मणः सकाशाज्जीवस्य विभागः सा 'हानौ तूपायने'ति सूत्र उक्ता सा महती ।

प्रभुमुक्तांश्च यो जीवान् सङ्गृह्णाति गुरुः खग ।
नाङ्गीकरोम्यहं मुक्तान् गुरुणा पुष्टिसेवकान् ॥

गुरौ निवेद्यते भक्तिर्यस्मिन्नात्मा निवेदितः ।
तेषामहं न गृह्णामि भक्तिं वै नवलक्षणाम् ॥
गुरोः प्रियतमो यस्तु भजनं मम शासने ।
करोति पारतन्त्र्येण तत्रावेशं करोम्यहम् ॥
नावेशो मम विज्ञेयोऽसमूर्तिर्न तु मामकी ।

अः विष्णुः समूर्तिः मूर्त्या सह । अश्चासौ समूर्तिश्च असमूर्तिः कर्मधारयः । 'विनोद्धव हरेर्भक्त्या भक्तिर्मम विडम्बनम्' । 'गुरुर्भवेद्यथा तात प्रसन्नो मनसा शुभम् । तदुपायं करोत्याशु विवेकी मम वल्लभ' इत्यात्मनिवेदनकाठिन्यबोधकपुराणान्महती । निष्फलं तासां पुरां मानुषी भगवत्प्रिया तत्र तत्त्वाधिगमात् तदभावान्मानुष्यं निष्फिलम् । यतो मानुषो विष्णुर्भवति । 'नावेशो मम विज्ञेयोऽसमूर्तिर्न तु मामकी' त्युक्तवाक्यात् ।

**श्रीमत्प्रभुविरचितसेवाविधिः** । प्रभुपदं श्रीमदाचार्यपरं श्रीमत्प्रभूत्सव इत्याचार्योत्सवे उक्तत्वात् 'चातुर्मास्ये विशेषत' इति वाराहपुराणन्यायेनात्र विशेषत्वात्पूर्वमपुनरावृत्तिसाधकोत्सवानुक्त्वाऽशक्तान्प्रति चातुर्मास्यसेवा 'यस्य शक्तिः सदा नास्ति कर्तुं मम निवेदने' इति वाक्यात् । इदानीं सदा शक्तिमतः प्रति सेवाविधिमाहुः भगवदित्यादि श्रुतिस्तावत् छान्दोग्योपनिषदन्ते 'आचार्यकुलाद्वेदमधीत्य गुरोः कर्मातिशेषेणातिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान्विदधदात्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्याहिंसन्सर्वाणि भूतान्यन्यत्र तीर्थेभ्यः खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते न च पुनरावर्तत' इति । श्रीकृष्णवाक्यानि तावत् पुरुषोत्तमयोगाध्याये 'ऊर्ध्वमूलमधःशाखमि'त्यारभ्य

'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥
यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥
यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥
इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ ।
एतद्बुद्ध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भारत ॥'

इत्युपसंहारात् । श्रीव्याससूत्रं तावत् साधनाध्यायीयसमाप्तौ 'कृत्स्नभावात्तु गृहिणोपसंहार' इति । समाधिभाषा तावत् 'अनर्थोपशमं साक्षाद्भक्तियोगमधोक्षजे । लोकस्याजानतो व्यासश्चक्रे सात्वतसंहिताम्' । सात्वतसंहिता तावत् 'श्रीभगवानुवाच । कुर्यात्सर्वाणि कर्माणि मदर्थं शनकैः स्मरन् । मय्यर्पितमनश्चित्तो मद्धर्मात्ममनोरतिः । देशान्पुण्यानाश्रयेत मद्भक्तैः साधुभिः श्रितान् । देवासुरमनुष्येषु मद्भक्ताचरितानि च । पृथक्सत्रेण वा मह्यं पर्वयात्रामहोत्सवान् । कारयेद्गीतनृत्याद्यैर्महाराजविभूतिभि'रित्येकोनत्रिंशाध्याये ब्रह्मवादसङ्ग्रहरूपा । प्रकृतिस्तु एकादशस्कन्धैकादशाध्यायोक्ता 'लघुस्वमार्गवक्ता चे'ति पुरुषोत्तमसहस्रनाम्न्याचार्याः ब्रह्मवादसङ्ग्रहो लघुः, स्वमार्गः श्रीकृष्णमार्गः । अत्र भाष्यम् । 'भक्तिमार्गो बहुविध' इति कपिलदेववाक्यात् 'केचन भक्ताः स्वगृहेष्वेव स्नेहेन भगवदाकारे विविधोपचारैः सेवां कुर्वन्तस्तयैव निर्वृत्ता

१. हरेर्मम भक्तिर्गुरुभक्त्या विना ।

भुक्तिमपि तुच्छां मन्यन्त' इति । अन्यत्सर्वं तृतीयाध्याय एवोपपादितम् । एवं च 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ती'ति श्रुत्या वेदानुवचनेन ब्राह्मणा ज्ञात्वा वेत्तुमिच्छन्तीति वेदनं तु भक्त्या। व्यापारः कृपा । ततो जानातीच्छति यतत इति लोके न्यायविदो वचनात्कृष्णानुवृत्तिरूपा सेवोक्ता इयमंशत्रयवतीत्यन्यत्र भक्तिरत्नटीकायां विस्तरः । 'यदेव विद्यया करोति श्रद्धयोपनिषदा वा तदेव वीर्यवत्तरं भवती'ति छान्दोग्यश्रुत्यौपनिषदज्ञानस्य कर्मयोगाङ्गता । 'अत एव ब्रह्मविदामेव जनकादीनां कर्मणि सर्वदेवसान्निध्यमन्यथाऽऽभासत्वमेव' । एतच्च जिज्ञासाधिकरण एवोपपादितमेतच्च कर्म 'एकं साङ्ख्यं च योगं च वेदारण्यकमेव च । परस्पराङ्गान्येतानि पञ्चरात्रं च कथ्यत' इति वाक्याद् अगहनकर्मप्रकाशकपञ्चरात्राद्युक्तमित्यवसीयते । शैवान्प्रति तु पाशुपतशास्त्रमिति वेदान्तवेदसाङ्ख्ययोगपञ्चरात्रपशुपतिमतमिति षड्शास्त्राणां विषयाः । अत्र सेवामार्गे भगवदित्यारभ्य मां हि पालयेत्यन्ता नवश्लोकी, हरिर्तुर्येत्यारभ्य भावमुत्तममित्यन्तं श्लोकद्वयं च श्रीमत्प्रभुविरचितसेवाविधिस्त एकादशश्लोकाः सानुपूर्व्याव्याख्याने व्याकरिष्यन्ते । श्रीमत्प्रभुकृतसेवाश्लोकान् सानुपूर्व्या लिखामः । 'प्रातरुत्थाय सविधानं स्नात्वा इत्यादि' इत आरभ्य श्रीगोपीनाथजितां सेवाविधिकृतिरस्ति । सविधानमिति । 'यं मां स्मृत्वा अपूतः पूतो भवती'ति गोपालतापिनीये 'एवं विधिना गोपीचन्दनं यो धारयेद्यस्त्वेतदधीते वे'त्युपक्रम्य 'सर्वेषु तीर्थेषु स्नातो भवती'ति वासुदेवोपनिषदि च श्रुतिभ्याम् । वारुणं स्नानं वेदान्तिनां कुतः प्राप्तम् । उच्यते । 'आचार्यवान्पुरुषो वेद' इति श्रुतेर्वेदनप्राप्तीच्छुं प्रत्याचार्याज्ञाप्राधान्येन वारुणस्य स्नानस्योक्तिरुक्तं तु स्नानं सकलसाधारणम् । तदुक्तं ग्रन्थविशेषे कुम्भनदासादीन्प्रति 'मस्तके जलं निक्षिप्य स्नाया'दिति । विधानं तु भक्तिरत्नटीकायां प्रोक्तमेव परम्परागतं क्रियत एवं पञ्चरात्राद्युक्तस्नानं तु ह्युपनिषदा कर्तुर्विहितम् । एकं साङ्ख्यमिति वाक्यात् । श्रीमदाचार्यान्स्मृत्वेति । अस्मन्मार्गे श्रीमदाचार्यस्मरणं विना तद्वैमनस्येन सेवा परगामिनी भवति । 'विनोद्धव गुरोर्भक्त्या भक्तिर्मम विडम्बनमि'ति वाक्यात् ।

वल्लभाष्टकेन स्मरणं भावनायां, नित्यकृत्ये तथोक्तेः । प्रार्थनादिकमाहुः भगवद्धामेत्यादि ।

**भगवद्धाम भगवन्नमस्तेऽलङ्करोमि तत् ।**
**अङ्गीकुरु हरेरर्थे क्षान्त्वा पादोपसर्पणम् ॥ १ ॥**

भगवन्मन्दिरं प्रार्थयित्वा नमस्कृत्येत्ययं ग्रन्थो हे भगवन् हे भगवद्धाम भगवद्धामत्वेन वाक्यार्थांशेन युक्तं भगवन्निति द्युद्दयत्वाधिकरणोक्तरीत्याऽक्षरमभेदेन संबोध्य प्रभुत्वेन हरेः स्फूर्तौ धामत्वेन तदुद्भवस्याभाव्याद्धामत्वेन वाक्यार्थे बोधस्तदाश्रयत्वेन वक्तुरिच्छाविषयत्वात्प्रार्थना गम्यते धाम्नो भेदानुसन्धाने 'प्रार्थिते वे'त्यस्य न विरोधः । ते तुभ्यं नम इति नमस्कारः । उभाभ्यां गतार्थः । वाक्यार्थबोधाश्रयत्वेन वक्तुरिच्छाविषयत्वं सम्बोधनलक्षणं प्रार्थनागमनाय ज्ञेयं ग्रन्थकर्तुः श्रीगोपीनाथजितो भक्तिमार्गीयत्वेनाग्निपुत्रत्वेऽपि 'ऋषिरग्निकुमारस्त्वि'ति वाक्याद् भ्रातुर्ग्रन्थकर्तु ऋषित्वेऽपि मन्त्रत्वं नास्ति । श्लोकानामाचार्यकर्तृत्वात् । मन्त्रैरेव स्मर्तव्यमिति नियमस्य दशमचतुर्थपादे रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोतीति श्रुत्यां रथघोषेण उपावर्तयमिति बर्हिर्म्यां स्तोत्रमुपाकरोतीति प्राकृतौ बर्हिर्मन्त्रौ बाध्येते एवं बाधात् प्रकृते 'स्वयं परिचरेद्भक्त्ये'ति तृतीयाश्रुत्या भक्त्यबाधात् किन्तु भक्तित्वं तथा च भगवद्धामेत्यादिकीर्तनभक्तिरूपम्, न मन्त्ररूपम्, कारिकातिरिक्तं ग्रन्थमप्यत्रैव बोधाय समग्रं लिखामः ।

अलङ्कारं विवृण्वन्त एव मार्जनादिकं कुर्यादिति ग्रन्थं स्पष्टयांबभूवुः मार्जनादिति ।

**मार्जनात्कृष्णगेहस्य मनोविक्षेपकं रजः ।**

**नाशमेति तदर्थं च मार्जयामि तथास्तु मे ॥ २ ॥**

**मार्जनमलङ्कारः** । ननु 'कुर्यात्सर्वाणि कर्माणि मदर्थ'मित्यादित्रिश्लोकीमन्तरा कुतः सर्वोत्तममार्गे एकादशस्कन्धीयैकादशाध्यायस्थमार्जनादिकमूरीकुरुथेति चेन्न प्रकृतित्वात् । प्राकृतान्यङ्गानि त्रिश्लोक्यां निष्पतन्ति विकृतौ । भक्तिरत्नटीकायां प्रकृतिविकृतिभावः प्रपञ्चितः । चकारान्मानसी सेवा । 'मानसी सा परा मते'ति वाक्यात् । **तथास्तु म** इति मार्जनं मे मम मत्कर्तृकं 'कर्तृकर्मणोः कृती'ति सूत्रेण षष्ठी । तथा मनोरजोनाशकत्वमानसीसेवाजनकत्वाभ्यां प्रकाराभ्यामस्तु । इह कृष्णगेहमार्जनस्य कृष्णगेहस्य रजोनाशकत्वात्कुतः कृष्णगेहमार्जनत्वेन मनोरजोनाशकत्वेन कार्यकारणभावः । उच्यते । गीतायां चतुर्दशेऽध्याये 'मां च योऽव्यभिचारेण भक्तियोगेन सेवते । स गुणान्समतीत्यैतान् ब्रह्मभूयाय कल्पते' इति वाक्ये भक्तियोगसेवात्वेन गुणात्ययत्वेन कार्यकारणभावद्योतनाद् यत् सामान्ययोः कार्यकारणभावस्तद्विशेषयोरपीति नैयायिकोद्घोषादुक्तकार्यकारणभाव इति ।

मार्जनादित्यत्रादिशब्दार्थमाहुः **आत्मन इति** ।

**आत्मनोऽज्ञानरूपस्य दुरितस्य क्षयाय हि ।**

**करोमि सेकोपलेपौ त्वद्गृहे गोकुलेश्वर ॥ ३ ॥**

**आत्मनो** जीवस्य **अज्ञानरूपं** स्वरूपाज्ञानरूपं तस्य **क्षयाय सेकलेपौ**, निबन्धे पञ्चसु विद्यापर्वसु भक्तिपर्वणा स्वरूपाज्ञाननाशोक्तेः। स्वरूपाज्ञानमविद्यायाः पञ्चमं पर्व। 'माया च तमोरूपा' इति श्रुतेः । अज्ञानं तमोगुणस्तस्य क्षयो भक्तियोगेनेत्यत्र गीता पूर्वं निर्दिष्टा ज्ञानत्वेन वा भक्तिरत्राज्ञाननाशकत्वात् । यद्वा आत्मनो मनसः भक्तिस्तनुजा सेवा कार्यकारणभावः पूर्वमुक्तो गीतया तथा चैकादशे 'प्रकृतिवचांसि' 'उद्यानोपवनाक्रीडपुरमन्दिरकर्मणि । सम्मार्जनोपलेपाभ्यां सेकमण्डलवर्तनैः । गृहशुश्रूषणं मह्यं दासवद्यदमायये'ति ।

ततः सिंहासनास्तरणं कुर्यादिति । तत इति क्रमवाचकपदम् । यद्यपि मार्जनाद्यानन्तर्यवाचकं तत इति पदं तथापि तात्पर्येण क्रमवाचकम् । क्रमस्तु पाठमनादृत्य 'लोकवत्तु लीलाकैवल्य' मिति व्याससूत्रात् पश्चादुक्तमपि मार्जनादि पूर्वं कृत्वा प्रवर्तते । प्रकृतौ पूर्वं 'परिचर्यास्तुतिप्रह्वगुणकर्मानुकीर्तन'मित्यनेनोक्ता परिचर्या पश्चात्कर्तव्या आर्थक्रमादत्र मार्जनादि परिचर्यार्थम् । 'सिंहासने समासीनं रामं' इति रामोपनिषच्छ्रुतेः सिंहासनपदम् । 'सिंहासने आस्तरणमिति सप्तमीतत्पुरुषः । अलङ्करणं सिंहासनस्य 'यथा सुन्दरतां याति वस्त्रैराभरणैरपि । अलङ्कुर्वीत सप्रेम तथा स्थानपुरःसरम्'इति सेवाप्रकरणात् ।

अभीष्टमाहुः सिंहासने कीर्तनभक्तिरूपं सिंहेति ।

**सिंहासनं मद्धृत्पद्मरूपं सज्जीकरोम्यहम् ।**

**श्रीगोपीशोपवेशार्थं तथा तद्योग्यतां भज ॥ ४ ॥**

**'तद्रूपस्थैर्यमावहे'**ति चतुर्थचरणं श्रीमत्प्रभुविरचितसेवाविधौ । **सिंहासनं** शेषरूपं 'अग्रतो भविता देव' इत्यत्र सुबोधिन्यां तथोपपादनात् । **मद्धृत्पद्मं** सर्वात्मभाववद्धृत्पद्मं तद्रूपं लिङ्गभूयस्त्वाधिकरणतोदो विहायैतदुपात्तम् । 'सर्वं सर्वमयं' इति तापिनीयश्रुतेः । सिंहासनस्य

हृत्पद्मत्वेन ज्ञानं न भ्रमः । हे तद्रूप हृत्पद्मरूप स्थैर्यं हृत्पद्मत्वेन रूपेणावह प्रापय सिंहासने । पाठान्तरे हृत्पद्मत्वेन रूपेणेति तथेत्यस्यार्थः । योग्यतां सर्वात्मभावबद्धभक्तहृदयं श्रीगोपीशोपवेशयोग्यं पाठे तु सिद्धान्तरहस्ये 'तथा कार्यं समर्प्यैव सर्वेषां ब्रह्मता ततः । गङ्गात्वं सर्वदोषाणां गुणदोषादिवर्णना । गङ्गात्वेन निरूप्या स्यात् तद्वदत्रापि चैव ही'ति ब्रह्मतया योग्यता । यद्वा फलप्रकरणे 'स्वानन्दानुभवार्थं हि योग्यतापि निरूपिते'त्यस्याष्टिप्पण्युक्तदिशा भूर्भुवःसुवो जगत्तद्रूपलक्ष्मीरूपतां भज । लक्ष्मीतुल्यतायां हि भगवद्रमणमिति हि मर्यादेति । ततः पात्राणि सज्जीकुर्यादिति एतावानेव ग्रन्थः स्पष्टः । श्लोकान्तरं श्रीमत्प्रभुविरचितसेवाविधेर्ग्रन्थकर्तुः ।

पानीयेति ।

**पानीयपात्रं हि तथा व्रजनाथाय कल्पितम् ।**
**राधाधरात्मकत्वेन भूयात्तद्रूपमेव तत् ॥ ५ ॥**

अर्थः । प्रकृतौ परिचर्यापदं तत्र चान्यत्र वाराहे चातुर्मासमाहात्म्ये 'सुगन्धिशीतलं वारिं ततो मह्यं निवेदयेदि'ति 'लोकवत्तु लीलाकैवल्यं' इति सूत्रे लोकवल्लीलायामपि । गुहां प्रविष्टावात्मानौ हि तद्दर्शनादित्यत्रर्तं पिबन्ताविति श्रुत्या वारिपानस्यर्तस्य वारित्वेन सिद्ध्या 'सत्यं विज्ञानमानन्दं ब्रह्म' इत्यनया श्रीयमुनाजिदुक्त्या च स्वरूपामृतपानं प्रथमं निर्दिष्टम् । सुवर्णमयपात्रे राधाधराकात्मत्वं 'सर्वं सर्वमय'मिति श्रुत्या तदीयभोगोपि राधाधरात्मकत्व एव 'ऋतं पिबन्तौ' इति श्रुतेः । ऋतं परब्रह्मानन्दम् । तद्रूपमेव तद्भूयादित्याशीर्भोब्राणस्य ग्रन्थकर्तुः । तथा च भाष्यं 'ऋतं सत्यं परं ब्रह्मे'ति ।

श्रीमत्प्रभुविरचितसेवाविधिश्लोकः स्वामिनीति ।

**स्वामिनीकररूपाणि भावस्वर्णमयानि वै ।**
**श्रीकृष्णभोज्यपात्राणि सन्तु ते मत्कृतानि हि ॥ ६ ॥**

अनुभावुकानामपि श्लोको विव्रीयते । श्रिया सह कृष्णः सदानन्दः तस्य भोज्यपात्राणि यानि मत्कृतानि मया ते तुभ्यं सज्जीकृतानि धात्वादिमयानि भावो भावना तेन स्वर्णमयानि स्मरणभक्त्या सर्वमयत्वेपि स्वर्णप्रचुराणि निबन्धे 'अथवा सर्वरूपत्वात्' इत्यत्र वाक्यात्रस्य प्रामाण्योक्तेः । अत आहुर्वा इति । तानि पुनः स्वामिनीकररूपाणि । सन्त्विति सत्कारपूर्वको व्यापारः । अधीष्टे लोट् आशीर्वा । अयमर्थष्टिप्पण्यां फलप्रकरणे लक्ष्मीतुल्यतायां हि भगवद्रमणमिति मर्यादा सा च ब्रह्मानन्दरूपेति । तथा च सिद्धान्तरहस्ये ब्रह्मतोक्त्या तद्रूपत्वमुक्तं जातमित्युक्तमर्यादापि सम्पन्ना । तत्राप्यधिकं तत्रानुप्रविष्टं न तु तद्धानिरिति न्यायेनाधिकप्रवेशः । द्वादशस्वङ्गेषु कराणां पात्रत्वेन तदुक्तिः पिबत्यस्मादात्मेति पात्रं तानि पात्राणि ष्ट्रन् प्रत्ययः । 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः' इति श्रुतेर्दर्शनात् । हीति निश्चयार्थकमव्ययम् ।

ततः शय्यातो विज्ञाप्योत्थापयेदिति तत इति पदं क्रमवाचकं पूर्ववत् । शय्यात इति पदेन मुक्तिसाधनीभूतवक्ष्यमाणवन्दनभक्तावपि दास्यभक्तिवच्छयनमाक्षिप्यते 'लोकवत्तु लीलाकैवल्य'मिति न्यायात् । विज्ञापना भावनोक्ता लोडर्थः । तत्र श्रुतिः । 'वने वृन्दावने क्रीडन् गोपगोपीसुरैः सहे'ति कृष्णोपनिषदि सा यशोदोत्थापनभावनायां गोप्युत्थापनभावनायां च प्रबोधोपि । गोपगोभिरित्यत्र गोपाश्च गोप्यश्च गोपाः 'पुमान् स्त्रिये'त्येकशेषः । उत्थापयेदिति विधिः ।

वन्दनभक्तौ कीर्तनभक्तिमाहुः उदिति ।

**उदेति सविता नाथ प्रियया सह जागृहि ।**
**अङ्गीकुरुष्व मत्सेवां स्वकीयत्वेन मां वृणु ॥ ७ ॥**

हे नाथात्यन्तानुग्रहे स्वैकदेशभक्तविरोधिवारक । सुबोधिन्यां स्वांशेषु कस्यानिवार्यत्वेऽप्यत्यन्तानुग्रहे वारयत्यपि । प्रिययेति यदा स्वामिन्युत्थापनं न यशोदाजित्कृतं तदुत्थापने तदिच्छया ब्रह्मणो बालत्वेन तां प्रति प्रियाविर्भावाभावाद् यशोदाजिद्भावनायां तस्या अपि बालात्वात् । अङ्गीकुरुष्वेति अधीष्टे लोट् । सेवाङ्गीकारफलं कर्तृगामीत्यात्मनेपदम् । मत्सेवामिति दास्यभक्तिरपि वन्दनभक्त्यन्तर्गता । शृणु वरणफलं भगवन्मार्गे रुचिः । स्वकीयत्वेनेति तु मुक्तैः सकाशात् तदीयत्वमेव ज्यायो भजनानन्दानुगुणत्वात् । मुक्तानां मायाविनिर्मुक्तमात्मस्वरूपमेव न तु देहेन्द्रियादिकमप्यस्ति येन भजनानन्दानुभवः स्यात् । ततः सिंहासने उपवेशयेदिति स्पष्टम् ।

महाराजोपचारः उद्धवं प्रति त्रिश्लोक्यां एकत्रिंशे एकादशे 'महाराजविभूतिभि'रिति वाक्याद् उद्धवोपचारः । क्रीडेति ।

**क्रीडात्मसाधनयुत मद्धृद्धामाक्षरात्मकम् ।**
**आस्थाय गोकुलाधीश रमस्व कृपया मयि ॥ ८ ॥**

यावत्पर्यन्तं स्वहृदये न कोऽपि भगवन्तं वेद तावन्न कोऽपि प्रतिमादौ पूजयेदिति सुबोधिन्यां प्रतिमासेवादौ पूर्वं स्वहृदयेऽधीष्टयुक्तम् । क्रीडात्मेति साधनविशेषणादन्यानि साधनानि व्यावर्तितानि । अक्षरात्मके रमणं तृतीयाध्याये 'विद्यैव तु निर्धारणादि'ति सूत्रभाष्ये । कृपयेत्यनेन साधनरूपो भगवानित्युक्तं 'कृपाविष्टः साधन'मिति । सेवायां प्रवृत्तः स्वसेवोपयोगिपदार्थाभावे दुःखी भवत्यतो बुद्धिप्रेरके सत्कारव्यापारः । सिद्धान्तमुक्तावलीटीकायां स्पष्टमिदम् ।

प्रकृतमाहुः भावेति ।

**भावात्मकतया कॢप्तस्वोत्तरीयात्मकासने ।**
**सिंहासने गोकुलेश कृपयोपविश प्रभो ॥ ९ ॥**

व्रजभक्तभावः शृङ्गारात्मा भक्तिर्वा । 'रतिर्देवादिविषया व्यभिचारी तथाञ्जितः, भावः प्रोक्त' इति काव्यप्रकाशात् । तदात्मकतयेत्यर्थः । भक्तिशृङ्गारयोरन्तःपातिवस्तूनां भक्तित्वं शृङ्गारत्वं वा । कृपयेति पूर्ववत् । ततो नमस्कुर्यादिति स्पष्टम् ।

**यादृश इति ।**

**यादृशोऽसि हरे कृष्ण तादृशाय नमो नमः ।**

यादृशः भाष्यादिप्रतिपादितः । 'यतो वाच' इति श्रुतिप्रतिपादितश्च 'यस्यामतं तस्य मत'मिति श्रुतेः । नमो नम इति । 'भगवति जीवैर्नमनातिरिक्तं कर्तुमशक्य'मिति । 'किमासनं ते गरुडासनाय किं भूषणं कौस्तुभभूषणाय । लक्ष्मीकलत्राय किमस्ति देयं वागीश किं ते वचनीयमस्ती'ति निबन्धशास्त्रार्थात् । तथा च श्रुतिर्गोपालतापिनीये 'ॐ नमो विश्वरूपाय विश्वस्थित्यन्तहेतवे । विश्वेश्वराय विश्वाय गोविन्दाय नमो नमः' इत्यादि । श्रीभागवते चादृश्यत्वाधिकरणोक्तरूपमनमच्छुकः 'नमो नमस्तेऽस्त्वृषभाय सात्वतां विदूरकाष्ठाय मुहुः कुयोगिनाम् । निरस्तसाम्यातिशयेन राधसा स्वधामनि ब्रह्मणि 'रंस्यते नम' इति । एतच्च श्रुतात्मनिवेदिना कर्तव्यम् ।

पूर्वं तावच्छरणं गतस्य आत्मनिवेदनं कर्तव्यं । नान्यस्येति 'मुमुक्षुर्वै शरणमनुव्रजे'दिति । गोपालतापिनीयश्रुत्याहुः यादृश इति ।

**यादृशोऽस्मि हरे कृष्ण तादृशं मां हि पालय ॥ १० ॥**

यादृशः शास्त्रादौ निरूपितस्तादृशमणुं पालय त्वं रक्षको भवेत्यभीष्टे लोट् । 'श्रीकृष्णः शरणं ममे'त्युक्तम् । अयं वन्दनभक्तिप्रकारः सुबोधिन्यां दशमस्याष्टमाध्याये । एवं श्रीमत्प्रभुविरचित-सेवाविधिनवश्लोक्युक्तवन्दनभक्तिरित्युक्तं न शरणमार्गः, मार्गाणां त्रित्वात् । 'मार्गास्त्रयो मया प्रोक्ता' इति वाक्यात् । शरणमार्गस्तु पृथगेव 'पृथक् शरणमार्गोपदेष्टे'ति सर्वोत्तमात् । ननु कथं चतुर्थो मार्ग उक्त इति चेन्न । न्यासादेशेष्वित्यस्य विवरणे 'मदितरभजनापेक्षणं वा व्यपोढम्' धनाद्यभावे तु प्रपत्तिमार्गं वक्ष्यन्त्येवेति निबन्धटीकातः ।

'एवमनियमः सर्वासा'मिति सूत्रोक्तवन्दनादिभक्तीनां मध्ये वन्दनभक्तिर्नवश्लोक्या विवृता, अधुना दास्यभक्तिः सिद्धान्तमुक्तावल्युक्ता वितन्यते स्म । हरितुर्यप्रिय इति श्लोकद्वयं मर्यादीकृत्य ग्रन्थकर्तृभिः । तथा च द्वितीयस्कन्धचतुर्थाध्यायसुबोधिनी 'नमो नमस्त' इत्यत्र नमनमात्रेणैव स्वतः पर्यवसाने तदधीनत्वलक्षणे अधिके धर्मे सम्पन्ने स्वसेवामपि कारयतीति वन्दनानन्तरं दास्यं प्रयोजनमिति निरूपितमिति **नमो नम** इति ।

**नमो नमोऽस्तु ते राधे श्रीकृष्णरमणप्रिये ।**
**स्वपादपद्मरजसा सनाथं कुरु मच्छिरः ॥ ११ ॥**

अत्र दास्यभक्तौ वन्दनभक्तिर्नवश्लोक्युक्ता सम्बध्यते । एवं ज्ञानं नत्वा क्रियामनमत् । आरम्भे श्रीराधे इति श्लोके इदं प्रमेयं स्पष्टम् । तनुजा सेवेयम् ।

ततः श्रीमदाचार्यान्नमस्कुर्यादिति स्पष्टं पूर्वमुक्तप्रायम् ।

**चिन्तासमिति ।**

**चिन्तासन्तानहन्तारो यत्पादाम्बुजरेणवः ।**
**स्वीयानां तान्निजाचार्यान्प्रणमामि मुहुर्मुहुः ॥ १२ ॥**

नवरत्नग्रन्थे याः परिहार्याश्चिन्ता उक्तास्तासां **सन्तानस्य हन्तारः यत्पादाम्बुज-सम्बन्धिरेणवः** पादाम्बुजापेक्षया साक्षात्सम्बद्धाः कारणानि । अन्यत्स्पष्टम् । प्रकृतौ 'परिचर्यास्तुति-प्रह्वगुणकर्मानुकीर्तन'मित्यत्र प्रह्वपदेन नमस उक्तेः । णम प्रह्वत्वे शब्दे चेति धातुपाठात् । अत्र सर्वत्र यशोदागोपीगोपोद्धवादिसम्बन्धिनी सेवा महाराजोपचाराश्च ज्ञेयाः । महाराजोपचारास्तूत्तरार्ध-सुबोधिन्यां 'चामरव्यजनशङ्खातपत्रकिरीटासनशय्यामहाराजचिह्नानी'ति । तत्रोत्थापनाक्षिप्तशय्या-शङ्खनादश्च जागरणादिसमय उष्णकाले व्यजनमपि भक्तिमार्गानुसारेणोपचारा मुख्या इत्याहेति । 'यथा सुन्दरतां याति' इत्यस्य निबन्धस्य टीकायाः । तदुक्तं 'देशकालविभागविदि'ति चतुर्थस्कन्धे । अत्रैकश्लोकपर्यन्तमुद्धवादिवत्परिचरणं 'पूर्वं स्नानं प्रकुर्वीत धौतदन्तोऽङ्गशुद्धये' इत्युद्धवं प्रति सप्तविंशे वाक्यात् । नन्दयशोदादीनां श्रीकृष्णे बालभावेन स्नानाद्यसम्भवोप्युच्यते यतः, अग्रे श्लोकद्वयोक्त-मप्युद्धवादिवत्परिचरणं प्रकृतेस्तं प्रत्युपदेशात् । क्रीडेत्याद्येकश्लोकोक्तमप्यन्यभक्तवत् । तदुत्तरश्लोकोक्त-मप्युद्धवादिवत्परिचर्यान्तर्गतत्वात् । अक्रूरवदभिवन्दनं यादृश इत्याद्युक्तम् । 'अक्रूरस्त्वभिवन्दन' इति कस्यचिद्वाक्याद् अकिञ्चनादिवच्छरणमार्गः, न्यासादेशेष्विति वाक्यात् । अग्रेऽपि वन्दन-मक्रूरवत् किञ्च गीतनृत्यादि कारयितव्यम् । मन्दिरे दर्शनाद् 'गीतनृत्यादि पर्वणि स्युक्ता-न्वह'मिति वाक्यात् । भावनायां तु शृङ्गारसमये शयनभोगसमये चोक्तम् ।

ततः पात्रे सामग्रीं संस्थाप्य विज्ञाप्य समर्पयेदिति स्पष्टम् ।

विज्ञापनायाः सम्भोगप्राप्तिसूत्रानुगुणत्वाद्विज्ञापनामाहुः व्रजेति ।

**व्रजस्त्रीकरयुग्मात्मयन्त्रे पात्रं च तन्मयम् ।**
**स्थापितं ते भोजनार्थं योग्यभोज्यान्नसम्भृतम् ॥ १३॥**

**व्रजस्त्रीणां करयुग्मं** तदात्मके **यन्त्रे**, उपासनया शुद्धे चित्ते भरिति पक्षेक्ति रामतापिनीये सर्वात्मकयन्त्रस्य विभूतिविषयत्वं भक्तिहंसोक्तदिशाऽतो गोपालतापिनीयोक्तं यन्त्रं जानीयाद् ध्यान-विषयीभूतं न तु रामतापिनीयोक्तं लेख्यम् । ननु दास्यभक्तौ प्रेमलक्षणाभक्तिकारणत्वात् किमनेन यन्त्रेण पाक्षिकेण सच्चिदानन्दैकरसे भक्तियोगस्तिष्ठतीति तत्रैव श्रुतेरिति चेन्न । यन्त्रमिव यन्त्रमित्युप-चारात् । एतस्योपयोगः पूर्वं 'क्रीडात्मसाधनयुतम्' इत्यत्र निरूपितः । क्रीडात्मसाधनानि यन्त्रे श्रुत्युक्तानि । तास्तु 'ते होचुरुपासनमेतस्य परमात्मनो गोविन्दस्याखिलाधारिणो ब्रूहीति । तानुवाच यत्तस्य पीठं हैरण्यमष्टपलाशमम्बुजं तदन्तरालिकानलास्त्रयुगं तमनु गायत्रीं यथावद्व्यासज्य भूमण्डलं मूलवेष्टितं कृत्वा गवा वेष्टितं कृत्वाङ्गवासुदेवादिरुक्मिण्यादिस्वशक्ती इन्द्रादिवसुदेवादिपाण्ड्यादीनिध्या-यितं यजेत्सन्ध्यासु प्रतिभिरुपचारैस्तेनास्याखिलं भवत्यखिलं भवतीति' भक्तिमार्गे उपासना-निवेशे श्रुतिरत्रैव 'तस्यैवासौ दर्शयेदात्मरूप'मिति । आत्मरूपदर्शनं तु भक्त्यैवेति भक्तिलिङ्गम् । तादृशं यन्त्रं व्रजस्त्रीकरयुग्मात्मकम् । रुक्मिण्यादीत्यत्र आदिपदार्थत्वाद् गोपालतापिनीये गोपीनां चोपलेखात् । तेन चतुष्पाद्यां व्रजस्त्रीकरयुग्मात्मकयन्त्रत्वेन भावना । भ्रमस्तु परास्तः पूर्वम् । **पात्रं च तन्मयं** परं तत्तद्व्यक्तित्वेन भेदमास्थायाधाराधेयभावः । **योग्यस्य** श्रीपुरुषोत्तमस्य **भोज्यान्नैः सम्भृतम्** ।

भुङ्क्ष्वेति ।

**भुङ्क्ष्व भावैकसंशुद्धदधिदुग्धादिमोदकान् ।**
**प्रियं ते नवनीतं च राधया सहितो हरे ॥ १४ ॥**

यद्यपि 'सुखदुःखसाक्षात्कारो भोगः' 'नैवेद्यं तुष्टिद'मिति भोगो जात एव परं पुराणमतम्, श्रुतिस्तु 'सर्वमत्तुमभ्रियत' स्मृतिश्च 'सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्' अन्यापि 'पत्रं पुष्पमि'त्यादि तच्छ्रौतं मतम्, अतोऽधीष्टे लोट् । **भाव**: 'सर्वेषां भ्रष्टता ततः' 'निवेदिभिः समर्प्यैव सर्वं कुर्यादिति स्थिति'रिति सिद्धान्तरहस्यकीर्तनोत्थः तेनैकेन शोधने मुख्येन समीचो भ्रष्टाज्ञानोपयोगित्वेन **शुद्धान् दध्यादिकान्** । मङ्गलभोगे दध्यादिकं स्कान्दे पञ्चदशेऽध्याये मार्ग-शीर्षमाहात्म्ये भगवता 'अथ श्रीमदुद्यानसंवीते'त्यादिना स्वध्यानमुक्त्वोच्यते 'सितामोदहैयङ्गवीनैश्च दध्ना विमिश्रेण दौग्धेन स प्रीणयेत्तम्' इति 'प्रातरेवार्चयेदच्युतं यो नरः प्रत्यहं शश्वदास्तिक्ययुक्तः लभेताचिरेणैव लक्ष्मीं समग्रामिह प्रेत्य शुद्धं परं धाम भूयादि'ति । सिता शर्करा, मोदा मोदकाः, विमिश्रं संधितं नूतनसत्करीरादि, दौग्धं दुग्धं प्रज्ञाद्यण् मलाई । दौग्धं, दुग्धेन निष्पन्नत्वात् । सामान्ये नपुंसकम् । यद्वा सिताहैयङ्गवीनदधिदुग्धानि चत्वारि चतुर्णां व्यूहानां 'नवनीतं दधि क्षीरं घनीभूतं घृतं तथा । अनिरुद्धादिमूर्तीनां चतसृणां क्रमात्प्रियम् । नारायणस्य चत्वारि सर्वेषां शर्करापि चे'ति सप्तदशे वाराहात् । चतुर्व्यूहा व्यष्टयः श्रीनारायणः समष्टिः अन्यदिष्टतमं लोके दधिदुग्धादीत्यादि-पदेन मलाईसन्धितसिताः । **राधयेति** भावनाविषयीभूतया क्वचित्साक्षात् । भोजनाधीष्टं यशोदाजि-ह्वत्परिचरणम् । भावनायां तथोक्तेः ।

**भाषणमिति ।**

**भाषणं मा त्यज प्राणप्रिये गोपवधूपतेः ।**
**त्वन्मुखामोदसुरभि भोज्यं भुङ्क्तेऽधिकं प्रियः ॥ १५ ॥**

---

१. प्रपत्तिभिः प्रतिपत्तिभिः ।

**गोपवधूपतेः प्राणप्रिये** हे राधे यशोदाजिदुक्तिः । तत्र गोपवधूपतेरित्युक्तिः स्नेहेन मुक्तित्वाद्वा । 'यशोदा मुक्तिगेहिनी'ति कृष्णोपनिषच्छ्रुतेः धरात्वाद्वा 'यशोदा सा धराभवत्', इति भागवताद् धराया विरुद्धधर्माश्रयत्वम् । किञ्च ग्रन्थकर्ता श्लोकानुपनिबबन्ध । श्लोकास्तु विज्ञस्यादिष्वेतद्ग्रन्थानां तत्कर्तुस्तूचितमेव । **गोपवधूपते**रिति पदं तदीयत्वाद् 'अहं तदीय इत्येषा तद्वार्ता रूपिता परम्' इति त्रिभङ्गललितस्तोत्रन्यायात् । तत्र हेतुमाहुः **त्वदि**त्यादि । तव **मुखस्यामोदः सुरभि**विशेषः तेन **सुरभी**त्यर्थः । **अधिक**मिति । भक्तमात्रनिवेदितमश्नाति यद्यपि तथापि नाहं भक्षितवानिति वाक्यादानन्दभुगपि ब्रह्मानन्दामोदेन **सुरभि त्वधिकं भुङ्क्ष्व** 'ऋतं पिबन्ता'विति श्रुतेः ।

तदेवाहुः **राधे**ति ।

**राधाधरसुधापातुः किमन्यन्मधुरायितम् ।**
**यन्निवेद्यं तदप्येतन्नामसम्बन्धतो भवेत्** ॥ १६ ॥

**अन्यन्मधुर**वदाचरितं **किम्**, न किमपीति काकुः । ध्वनेर्विकारः काकुः । **एतस्या नामसम्बन्धतो मधुरायितं भवेत्** । यथा 'व्रजस्त्रीकरयुग्मात्मयन्त्रे पात्रं च तन्मय'मिति व्रजस्त्रीनामसम्बन्धः । अयं भावः । सर्वेषां ब्रह्मत्वेऽपि पुनः 'सर्वेषां ब्रह्मता तत' इति सिद्धान्तरहस्ये ब्रह्मताविधानमीदृगिति । 'ऋतं पिबन्ता'विति श्रुतेः ।

एवं विज्ञाप्यात्राङ्गीकारेधीष्टमाहुः **प्रिये**ति ।

**प्रियामुखाम्बुजामोदसुरभ्यन्नमतिप्रियम् ।**
**अङ्गीकुरुष्व गोपीश तदीयत्वान्निवेदनम्** ॥ १७ ॥

ननु प्रियेत्यादिविशेषणेन पूर्वोक्तब्रह्मतानुवादस्तेनैव योग्यतया भुङ्क्ष्वेत्युपपन्ने**ङ्गीकुरुष्वे**त्यङ्गीकारस्य किं प्रयोजनमिति चेन्न । एतादृशब्रह्मत्वेऽपि वरणरूपाङ्गीकारस्यावश्यकत्वात् । तदुक्तं 'विद्यैव तु निर्धारणात्' इति सूत्रभाष्ये 'नायमात्मेति श्रुतिरितरसाधननिषेधपूर्वकं वरणस्य साधनत्वमुक्त्वे'त्यादि । **अङ्गीकुरुष्वे**त्यात्मनेपदेनाङ्गीकारफलं भक्तमनोरथपूर्तिरात्मगामिनी । **तदीयत्वा**दिति स्वस्य योग्यता । **निवेदन**मिति अर्शआद्यच्[1] निवेदितमित्यर्थः ।

'सर्वतोक्षिशिरोमुख'मित्युक्ते कस्मिन्निज आस्य इत्याकाङ्क्षायां नवलास्ये भक्तिमार्गमर्यादयाङ्गीकृतं भोज्यमन्नं भुङ्क्ष्वेत्याहुः **निजे**ति ।

**निजास्यनवलास्येऽस्मिन्भारुभोज्यं मदर्पितम् ।**
**भुङ्क्ष्व श्रीगोकुलाधीश स्वाधिव्याधी निवारय** ॥ १८ ॥

सर्वत आस्येषु **निजे आस्ये** तत्रापि **नवं** भक्तेच्छयाधुना प्रकटं **लास्यं** यत्र तदपि प्रत्यक्षं साक्षात्कृतं तस्मिन् **भुङ्क्ष्व**, न तु धर, 'तत्तदत्तुमभ्रियते'ति बृहदारण्यके सर्वाश्रयस्योक्तेः । अयं तु भक्तिमार्गाश्रयः । भक्तस्त्वाध्यात्मिकादित्रितयविदाश्रयः । अत ऊचुः **स्वाधी**ति । पूर्वोक्तभक्तेच्छया स्वस्यात्मनो निवर्तनीयत्वेन भक्तेच्छाकालिकौ **आधि**र्मनःपीडा **व्याधिः** शरीरस्य तौ **निवारय** । ननु भूम्नि तावशक्यवचनावित्यत आहुः **गवि**ति । **गोकुलस्य** पुष्टिभक्तौ स्वीकृतस्या**धीशः** पुष्टिरक्षकस्तस्य सम्बोधनम् । पुष्टौ क्षुत्पिपासादि ज्ञापयतीति । स्वीयानां आधिव्याधी इति वा । 'उत्कर्षश्चापि वैराग्ये हरेरपि हरिर्यदी'ति सुबोधिनीकारिकाया वैराग्योत्कर्षवतां भक्तानां आधिव्याधी भवतः । लौकिकावाधिव्याधी वा ।

---

१. अर्शआद्यादिराकृतिगण इत्याधुनिकाः ।

दास्यसेवाया मानसीसेवा फलं तस्यै समाधये ध्यानवद्भावनास्ता आहुः यशोदेति।

**यशोदारोहिणीभावाद्बलेन सह बालकैः।**

**भुक्तं यथा बाल्यभावप्राकट्यात्भुङ्क्ष्व मे तथा ॥ १९ ॥**

अत्र तृतीयाध्यायस्थ 'सर्वथापि त एवोभयलिङ्गादि'ति सूत्रे 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः' इति बृहदारण्यकश्रुत्या भावनात्रयम्। तासु प्रथमं लीलाभावना **यशोदारोहिणीभावादिति**। लीलाभावना नाम लीलास्थभक्तानामात्मनिष्ठक्रीडाभावना सप्रतियोगिकक्रीडाभावनेति यावत्, लीलास्था भक्ताः परिगणिताः क्वचिद्भावनायाम्, उभये स्वामिन्यौ, तुर्यप्रिया, श्रीगोवर्धनः, व्रजः श्रीमदाचार्योः श्रीगोस्वामिनः ससबालका इति। अत्र श्रीगोपीनाथजितः श्रीमल्लक्ष्मणजितः अन्येऽपि नित्यलीलाप्रविष्टा उपलक्षणविधया ग्राह्याः। **यशोदारोहिणीभावाद्**बाल्यभावप्राकट्याद् बाल्यभावेऽष्टस्वरूपाणां भावना कर्तव्या यथास्वरूपस्थितिः सा कर्तव्या कश्चिच्छ्यामः कश्चिच्छ्रीनवनीतप्रियजिदादिर्गौरः कश्चिद्गौरश्यामः केचिद्द्विभुजाः केचिच्चतुर्भुजाः। तत्र क्वचिद्भक्ताकारणक्रिया क्वचिन्नवनीतं रोटी च कर्कटीति द्विः खरबूजेति ख्याता। क्वचिच्छङ्खचक्रगदापद्मानि क्वचिच्छङ्खः सच्छिद्रः क्वचिच्छ्रीगोवर्धनः शङ्खश्च सोऽपि निश्छिद्रः क्वचिच्छ्रीहस्तोऽभयकरः क्वचिच्छ्रीहस्तो भयकरः 'अपि संराधनसूत्रा'दनुभवगम्यावित्यादिपदार्थानां भावना। अयं कीदृग्लीलाविशिष्टविग्रह इति स्वरूपभावना। इयं लीला निष्प्रतियोगिनी। 'तदेजति तन्नैजती'ति श्रुत्युक्ता स्वरूपान्तःपातिनी 'प्रकाशाश्रयवद्वा तेजस्त्वा'दिति न्यायात्। ननु बाल्यभावप्राकट्य एकरसत्वहानिः तया च सच्चिदानन्दत्वमनुपपन्नं स्यादिति चेन्न। अस्या आशङ्काया 'व्याप्तेश्चासमञ्जसमि'ति सूत्रे परिहृतत्वात्। यशोदारोहिणीभावात्कारणाद्बाल्यभावप्राकट्यं तस्माच्च **बलेन बालकैश्च** सह यथा **भुक्तं** त्वया तथा बाल्यभावेन प्रकारेण मम नैवेद्यं **भुङ्क्ष्वे**त्यर्थः।

नन्दादिवन्मद्गृहेऽप्यागन्तव्यमिति भक्तिमार्गमर्यादारक्षणार्थमावश्यकमागमनमित्याहुः **सेवे**ति।

**सेवार्थं दत्तगेहस्य निजदासस्य मे प्रभो।**

**आगन्तव्यं भोजनार्थं श्रीकृष्ण कृपया गृहे ॥ २० ॥**

**दत्तगेहस्ये**ति भगवता दत्तं गेहं पूर्वं गेहं नास्ति। ननु तथा च कुत्राश्रमेऽवस्थानं गृहिणो पसंहाराधिकरणे 'धार्मिकान्विदधदि'ति गृहस्थाश्रम उक्तः तत्र कथं तुरीयाश्रमः। सेवाप्रकारो गृहस्थस्य भक्तिवर्धिन्युक्तस्तत्र 'त्यागं कृत्वा यतेद्यस्तु तदर्थार्थैकमानस' इति त्यागे दास्यं कथमिति चेन्न। एकादशे एकोनत्रिंशे त्रिश्लोक्यनन्तरं ज्ञानप्रकारमुक्त्वोवाच भगवानुद्धवं प्रति। 'एतत्ते कथितः सर्वो ब्रह्मवादस्य सङ्ग्रह' इति वचनात्। ननु तथापि गृहं न ग्राह्यं तद्धि वान्ताशनवद्भवतीति चेन्न। 'प्रासं प्रासं भजेन्मुनि'रिति 'सर्वेषां मदुपासनमि'ति वाक्याभ्यां वान्ताशनं स्मार्तानां न ब्रह्मवादिनाम्। एकदण्डिनामित्युक्त्या ब्रह्मोपनिषदि 'आत्मविद्यातपोमूल'मिति श्रुतेः। विद्या सर्वात्मभावः 'विद्यैव तु निर्धारणादि'ति तत्त्वसूत्रात्। विद्यातपसी मूले कारणे प्रापिके यस्य। मूलपदं नित्यं नपुंसकम्। विद्यातपसोर्मूलं वा कारणं विषय इति यावत्। 'एत१ह वा व न तपति किमह१साधु नाकरवं किमहं पापमकरवमि'ति श्रुतेश्च। तथा चैतादृशं गृहं भगवता दत्तम्। 'अनन्याश्चिन्तयन्तो मां नित्ययुक्ता उपासते। तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्' इति वाक्योत्तरं गीतानवमाध्याये राजविद्याराजगुह्ययोगे 'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्। यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्। शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः। संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसी'ति गीतातः संन्यासानन्तरं गृहादिप्राप्तिः पूर्वमुक्ता। ननु वैराग्याभावे कथं संन्यासः सर्वेषामिति चेन्न।

'स्ववंशे स्थापिताशेषस्वमाहात्म्य' इति सर्वोत्तमे श्रीमदाचार्यनाम्नः सर्वेषां तद्वंशजानां वैराग्यसंभवात् । कृपयेति श्रीभगवतः साधनत्वायैतत्पूर्वमुक्तम् । अत्र 'कृष्णस्तु भगवान् स्वयम्' इति यशोदानन्दादिभाववता देवासुरेति वाक्यार्थमनुसन्दधता श्रीकृष्ण एव संबोधितः बलस्तु गोपीवल्लभभोगापसरणानन्तरमाकार्यः ।

सेवार्थं नन्दादयश्च तत्रैवाकार्यन्ते स्म देवकीति ।

**देवकीवसुदेवश्रीबलरोहिणीसंयुतः ।**
**श्रीमन्नन्दयशोदाभ्यां समं मयि कृपां कुरु ॥ २१ ॥**

**देवकी** ब्रह्मविद्या ब्रह्मविद्योपनिषदुक्ता, सर्वात्मभावः पुरुषोत्तमविद्या, **वसुदेवः** शुद्धसत्त्वात्मकः, **श्रीबलः** शेषनागः, **रोहिणी** दया, **श्रीमद्** गोकुलम्, वनम्, वैकुण्ठम्, तत्र **नन्दः** परमानन्दः । श्रीमन्नन्द इति वा स एवार्थः । 'यशोदा मुक्तिगेहिनी' मुक्तिश्च गेहिनी मुक्तिर्भक्तिमार्गीयात्र गृह्यते मय्याश्रये आध्यात्मिकादित्रितयविदाश्रये भक्ते वा । यथायोग्यकाले **कृपां कुरु** । देवक्यादीनां स्वरूपाणि कृष्णोपनिषदि वर्तन्ते ।

निःकिञ्चनस्य 'यद्यदिष्टतमं लोक' इति श्लोकोक्तमर्यादातिक्रमेऽपि ह्यधिकारस्याकिञ्चनाधिक्रियोक्तेत्यत्रोपपादनादाहुः निःकिञ्चनेति ।

**निःकिञ्चनस्य दीनस्य गुणहीनमपि प्रभो ।**
**शुद्धान्नं तत् स्वदत्तत्वाद्भुङ्क्ष्व गोकुलनायक ॥ २२ ॥**

विकृतेः प्रकृतौ 'मच्छरणो मुनि'रिति मुनिविशेषणाच्छरणं भक्तिमार्गे प्रोक्तमतः 'पृथक् शरणमार्गोपदेष्टे'त्यस्य न विरोधः । किञ्च प्रकृतौ 'धर्मान्सन्त्यज्य यः सर्वान्मां भजेत् स च सत्तम' इत्यत्र 'न्यासादेशेषु धर्मत्यजनवचनतोऽकिञ्चनाधिक्रियोक्ता कार्पण्यं वाङ्गमुक्त'मिति श्लोकोक्तप्रकारोऽसूचि । परान्नगणान्नादिभिन्नमन्नं शुद्धान्नम् । वाराहे 'कान्यन्नानि निषिद्धानि तद्भक्ते शोधने च किं'मिति पृथ्वीप्रश्ने श्रीवराहः 'परान्नं नैव भुञ्जीत परपक्वं विशेषतः । तथा गणान्नं शूद्रान्नं स्वयं पक्वमपि त्यजे'दिति षोडशाध्याय उवाच । तत् सिद्धान्तरहस्योक्तरीत्या ब्रह्मात्मकं स्वदत्तं यतिभ्यो दत्तं स्वेन पूर्वमुपपादितं 'पुष्पं पत्रं फलं तोय' मिति श्लोकोक्तमर्यादया भुङ्क्ष्व ।

भोजनफले आहुः भुक्त्वेति ।

**भुक्त्वा दत्त्वातिप्रियेभ्यो भक्तेभ्योऽतिप्रियं सदा ।**
**तदात्मशोधकोच्छिष्टं कृतकृत्यं च मां कुरु ॥ २३ ॥**

**भुक्त्वा** वैराग्योत्कर्षं मयि फलं कुरु 'उत्कर्षश्चापि वैराग्ये हरेरपि हरिर्यदी'ति वाक्यात् । मानसीसेवां प्रति तनुजापूर्तिं कुरु, **तदतिप्रियं** भुक्तमात्मशोधकोच्छिष्टं कुरु, पुरुषोत्तमयोगाध्यायोक्तपदार्थज्ञानात्कृतकृत्यं **च मां कुरु** । 'एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारते'ति गीतातः । **अतिप्रियमात्मशोधकं भक्तेभ्योऽतिप्रियेभ्यो दत्त्वा च कृतकृत्यं मां कुरु** । 'आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां प्रविमोक्ष' इति श्रुतेः ।

केत्याकाङ्क्षायां श्रीविष्णुस्वामिसंप्रदायानुरोधाद्यथा तद्गृहे आगत्य भुक्तं तथा भुक्त्वा कृतार्थं कुर्वित्याहुः श्रीति ।

**श्रीकृष्णान्तरस्वरूप स्वकीयस्य गृहे मम ।**
**आगत्य भोजनं कृत्वा कृतार्थं कुरु मां प्रभो ॥ २४ ॥**

हे श्रिया सहित कृष्ण सच्चिदानन्द हे आन्तरस्वरूप 'आनन्दमय आनन्दभुगि'ति नृसिंहतापिनीयश्रुतेः । यद्यपीयं तृतीयचरणनिरूपणेऽस्ति तथापि तुरीयचरणे 'नित्यानन्दं सदैकरस'मितिश्रुतेरानन्दभुक्त्वमस्त्येव सदैकरसं मन्यन्त इत्यस्य रसत्वेनानेकरसत्वप्राप्त्या तन्निषेधार्थमेकरसावबोधोक्तेः मनु अवबोध इति धातुपाठात् । तर्ह्यानन्दमयः प्राज्ञ इत्यायाति । 'प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखश्चतुरात्मा प्राज्ञ ईश्वरस्तृतीयः पाद' इति श्रुतेः । मैवम् । 'नित्यानन्दं सदैकरस'मिति पूर्वोक्तश्रुतेः, अत एवानन्दमयाधिकरणे 'को ह्येवान्यात् कः प्राण्याद्यदेष आकाश आनन्दो न स्यादि'ति श्रुतिर्मीमांसिता, नतूक्ता श्रुतिर्मीमांसिता । अत एवाहुः स्वकीयस्येति । मदीयजीवविशिष्टो भोगान्भुङ्क्ते यतः । एतच्च विद्यैवेति सूत्रभाष्य उक्तम् । कृतार्थं हृदि भगवत्प्राकट्यवन्तं मां कुरु । एतादृशस्य हृदि भगवत्प्राकट्यं भवतीत्याहेति भाष्यात् तथा च कृतः अर्थो हृदि भगवत्प्राकट्यं येन स तथोक्तः । अत्र श्रुतिः 'ता वां वास्तूनि' 'वने वृन्दावने क्रीडन् गोपगोपीसुरैः सह' । सूत्रं 'तानि परे तथा ह्याह' । गीतात्रयोदशाध्याये 'सर्वेन्द्रियगुणाभासम्' समाधिभाषा 'अनर्थोपशमं साक्षाद्भक्तियोगमधोक्षज' इति । अथवा श्रुत्यादयः 'सर्वथापि त एवे'त्यादिसूत्रस्थाः, समाधिभाषा तु सैव । मङ्गलभोगपर्यन्तं 'गोपगोपीसुरैः सहे'त्यतो नन्दयशोदागोपीमात्रेण सह लीलादि भावनीयम् । ततो जलमर्पयेदिति स्पष्टम् ।

अत्राचार्याज्ञा कुम्भनदासादीन्प्रति प्रियेति ।

**प्रियारतिश्रमपरिमलितं वारि यामुनम् ।**
**समर्पयामि तत्पानं कुरु श्रीकृष्ण तापहृत् ॥ २५ ॥**

वारीत्युक्तं चेदितरस्य स्यादतो यामुनमिति विशेषणं यामुनं सिकताद्यपीति वारीति । तदपि न नापि सेवमानानां भुक्तिमुक्तिदा अपि तु प्रिया या कदाचित् प्रत्यक्षा, तस्या रतिः तत्स्थश्रमणा एकैकस्मिन्पदार्थे दशलीलाविशिष्टो भगवान्वर्तेत इति सुबोधिन्याः । तज्जन्यश्रमेण परिमलवत्कश्चित्पदार्थमितं प्राप्तं तारकादिभ्य इतच्, आधिदैविकसंपृक्तमिति यावत् । मल धारणे भ्वादिरात्मनेपदी सेट् । क्ते रूपमपि प्रियारतिश्रमं परिहातुं धारितमित्यर्थः । तापो ह्याधारे भक्तेच्छया वार्यपनोद्यधर्मरूपः । सर्वधर्मकत्वात् । श्रुतिस्तावत् 'ऋतं पिबन्तावि'ति । सूत्रं 'गुहां प्रविष्टावात्मानौ' इति । 'पुष्पं पत्रं फलं तोयं यो मे भक्त्या प्रयच्छति । तदहं भक्त्युपहृतमश्नामि प्रयतात्मन' इति गीताराजविद्याराजगुह्ययोगाध्याये । गुरुपादुकाजितपूजनं तु पूर्वमेव कर्तव्यम् । मद्भक्तपूजाभ्यधिकेति वाक्यात् । आधिक्यं प्राथम्यम् । तथा च भाष्यम् । गुरौ तु 'शाब्दे परे चे'त्यादिगुर्वभेदेन भगवत्सेवयैव चारितार्थ्यम् । पादुकाजितां भक्तिमार्गीयं पूजनं वेदस्तुतौ वर्तते । घटिकानन्तरं कृत्यमाहुः ततः आचमनं कारयेदिति । 'दत्त्वाचमन'मिति वाक्योक्ताचमनस्य 'पाद्योपस्पर्शार्हणादीनि'त्यत्राप्यादिपदार्थत्वात् ।

कुरुष्वेति ।

**कुरुष्वाचमनं कृष्ण प्रिययामुनवारिणा ।**
**स्नेहात्मदन्तसक्तान्यभावापाकरणात्मकम् ॥ २६ ॥**

आचमनफलस्य शुद्धेः कृष्णगामित्वादात्मनेपदम् । कुरुष्वेति । आङ् मर्यादायां चमु अदने अदनमवधिर्यस्य भावे ल्युट् । आचमनं हस्तादेः प्रक्षालनम् । कृष्ण सदानन्द । स्नेहात्मानो दन्तास्तेषु सक्ताः अन्यभावाः स्नेहग्लानिकारकास्तदपाकरणरूपमाचमनम् । तदुक्तं 'स्नेहकला द्विजानी'ति द्वितीयस्कन्धे । ननु हस्तादेरपि प्रक्षालनं वर्तते किं पुनर्बालभावे सर्वाङ्गप्रक्षालनं भवति । तत्र सक्तान्यभावाः

क इति चेन्न । भक्तिमार्गे स्नेहासक्तान्यभावापाकरणस्येष्टत्वेनान्येषामत्रानिष्टत्वात् । नन्वान्यत्रिकमाचमनं किमात्मकमिति चेन्न । श्रवणः फलत्वेऽपि तद्दर्शनादेरवर्जनीयस्वभावस्य फलत्ववद्दन्तप्रक्षालनेऽन्येषामवर्जनीयप्रक्षालनकत्वाद् अत एव द्वादशस्कन्धोक्तज्योत्स्नात्मकत्वं दन्तानां नोक्तम् । ननु मन्त्रात्मकत्वे विषयस्य विभूतित्वं न तु पूर्णत्वं तथा च भाष्यं स्वाध्यायस्येति सूत्रे मन्त्राद्यधिष्ठातृरूपाणि तु विभूतिरूपाणीतीति चेन्न । एतावद्भुसमाषणमात्रेण मन्त्रत्वाभावात् । 'प्रयोगकरणभूतः शब्दो मन्त्र इत्युक्तं भवती'ति भावार्थपादभाष्ये मन्त्रलक्षणात् । नन्वयमपि भक्तिमार्गीयः प्रयोग इति चेन्न । तथा सति मन्त्राधीनत्वे पूर्णत्वं भज्येत विषयस्य । तथा च सर्वश्लोकार्थावगमानन्तरं प्रयोगः पुनः श्लोकार्थावगमानन्तरं प्रयोग इति नियमाभावः ब्राह्मणवत्प्रयोगात्पूर्वं प्रमितिजनकत्वमात्रम् । ननु साक्षाद्भक्तिर्नास्तीति द्वितीयस्कन्धषष्ठाध्यायसुबोधिन्यां भनक्तु नाम पूर्णत्वमिति वाच्यम् । तस्याः शास्त्रार्थपरत्वात् । 'शास्त्रार्थतो यदि हरिर्भवतामभीष्टस्तत्पद्यताम्र विवृति'मिति समाप्तौ कारिकायाः ।

नन्वयं शास्त्रार्थो न वेति चेन्न । धर्मे शास्त्रार्थपर्यवसानात् । धर्मिणि तद्वच्छास्त्रार्थत्वाभावात् । धर्मास्तु सर्गादयो दशानन्दस्य लीलात्मकाः संनियोगशिष्टन्यायेनाहुः स्नेहादिति ।

स्नेहाद्रतिश्रमजलप्रोञ्छद्राधाकराञ्चलम् ।
स्मृत्वानन्दभरान्नाथ कुरु श्रीमुखमार्जनम् ॥ २७ ॥

गुहां प्रविष्टावित्यधिकरणपरोक्षवाद इति भाष्येणर्तं पिबन्ताविति श्रुतावातपः प्रकटानन्द आतप इति ह्यातपशब्दस्य परोक्षवादः । तद्योग्यो मुखवस्त्रे परोक्षवादः । पूर्वं यामुनं वारि मुखसम्बद्धमिदानीं स्नेहात् स्वमुखाद्धेतोस्तद्रतिश्रमस्य क्रीडाश्रमस्य जलं जातमिति परोक्षवादः । एवमग्रेऽपि । तत्प्रोञ्छद्राधायाः करस्याञ्चलं स्मृत्वा यथा निघण्टव इत्यत्र निगन्तव इति परोक्षवादः । निगमयितार इति प्रत्यक्षवादः निघण्टव इत्यतिपरोक्षवादो निरुक्तौ परेषाम् । एवं प्रकृते वैयाकरणानामक्ष्णः श्रोत्रस्य परो वादः परोक्षवादः । या प्रीतिरविवेकानां विषयेषु सा प्रीतिः प्रत्यक्षा तादृशं शब्दान्तरं स्नेहशब्दस्थाने प्रकल्प्य ब्रह्मण्यक्ष्णः परा मुखरूपाः । भक्तानां तु परोक्षस्यापि प्रत्यक्षम् । सा स्नेहपदवाच्या सैव मुखं 'तस्य प्रियमेव शिर' इति श्रुतेः । न च प्रीतिः परोक्षा मुखं प्रत्यक्षमिति शङ्क्यम् । स्नेहपदस्य परोक्षार्थविवक्षणात् । प्रीतिस्त्वक्ष्णः परोक्षा श्रवणस्य न । रतिर्मनःप्रवणता लौकिकी, चेतस्तत्प्रवणताऽलौकिकी, सा परोक्षा क्रीडा वा । 'रमु क्रीडायाम्' इति धातुपाठात् प्रत्यक्षा, पूर्वोक्ते उभये परोक्षे । यद्यपि स्नेहो रतिरिति पर्यायोऽत्र व्याख्याने तथापि प्रपञ्चविस्मृतिपूर्वकमत्यासक्तिरूपा रतिः । तज्जन्यश्रमः श्रमस्य श्रम आधिदैविकः । यथा चक्षुषश्चक्षुराधिदैविकम् । तज्जन्यं जलं यमुनाजलं 'सत्यं ज्ञानमानन्दं ब्रह्मे'ति श्रुतेः । अत्रापि रतिश्रमजलत्वं परोक्षं, जलं प्रत्यक्षम् । प्रोञ्छनमपि प्रोञ्छनस्य प्रोञ्छनमाधिदैविकम् । राधापि ह्यष्टसिद्धेराधिदैविकी राध संसिद्धाविति धातुपाठात् तस्याः कराञ्चलमप्याधिदैविकम् । तं स्मृत्वा स्नेहादिषु तानारोप्य स्मृत्वा स्वस्वरूपानन्दस्वस्वरूपामृतपानजानन्दौ मिलित्वाऽन्येऽपि तत्कालिकानन्दा मिलिता आनन्दभरो भवत्यस्मात्कारणान्नाथ हे आतप श्रीमुखमार्जनं कुरु तत्सेवाफलं मद्नामि कुरु । अत्र स्वस्मिन् राधात्वारोपो भावनायां यशोदासखीत्वारोपः । तदुभयभक्तमनोरथपूरणाय सज्जातरूपे युक्ततमम् । यथाभक्तमनोरथमाविर्भावात् । अत्र गौण्या निर्वाहः । तदुपपादितमेव चमसवदित्यधिकरणे ।

१. दर्शनश्रवणमनननिदिध्यासनादीनाम् । २. वर्जनीयानां प्रक्षालनं वर्जनीयप्रक्षालनं न तथेषाम् तत्कत्वात् ।
३. स्नेहसम्बन्धवत्त्वेयः स्नेहः तदादिषु पदार्थेषु स्नेहान्मुखस्याचमनजलं प्रोञ्छवाचमनजलं मुखपद्ममिति स्नेहादयः ।

उद्धवभावनया सेवामाहुः ततस्ताम्बूलमर्पयेदिति । 'लोकवत्तु लीलाकैवल्यमि'ति व्याससूत्रादिति भावः । इदमग्रेतनमाकृष्यते ताम्बूलमिति ।

**ताम्बूलं स्वप्रियावक्त्रसौरभ्यरतिसंयुतम् ।**
**गृहाण गोकुलाधीश तत्कपोलाभपाण्डुरम् ॥ २८ ॥**

**स्वस्य** सदानन्दस्य **प्रिया** भक्तियुता ब्रह्मानन्दात्मिका तस्या **वक्त्रे** तदिच्छयाविर्भूतेन **सौरभ्य**ब्रह्मणा **या रतिः** क्रीडाव्याप्तिस्तया **संयुतम्** । **ताम्बूलं** पर्णव्यतिरिक्तमपि पर्णमात्रेऽपि प्रियावक्त्रसौरभ्याभावादेवं व्याख्यातम् । तत्कराद्याभपाण्डुरमित्यनुक्त्वा तत्कपोलाभेत्याद्युक्तं तत्तन्मुखमात्रयोग्यार्थत्वाय हस्तद्वारेति ज्ञेयम् । **गृहाणेति** हस्तव्यापारादानात् । ग्रह उपादाने 'हस्तौ चादातव्यं चे'ति प्रश्नोपनिषच्छ्रुतेः । उपेति लुप्तषष्ठीकं समीपस्थानां पदार्थानां हस्तव्यापारो हस्ताभ्यामादानं यत्तदुपादानम् । **गृहाण, हे गोकुलाधीश** गोकुल एवैतल्लीलाप्रसिद्धेः ।

तत आरात्रिकं कृत्वा स्नानादिशृङ्गारार्थं विज्ञाप्य स्नानादिकं कारयेदिति । 'पाद्योपस्पर्शार्हणादीनुपचारान्प्रकल्पयेदि'ति वाक्यात् । 'सामनीराजनादिभिरि'ति वाक्याद्वा ।

स्नानादिशृङ्गारार्थं यद्वस्त्राद्युत्तारणं तद् विज्ञापयन्ति स्म **रमणेत्यादि** ।

**रमणातिभराद्रात्री वस्त्राण्याभूषणानि हि ।**
**मृगजानि च वस्त्राणि प्रसीदोत्तारयामि ते ॥ २९ ॥**

**रमणमत्र** बालशृङ्गारयोः । 'कामादीतरत्र तत्र चायतनादिभ्य' इति व्याससूत्रात् । अतोऽत्र भावनाद्वयं, यशोदा गोपिकानां च भावभेदेन । ततो बालरमणशृङ्गाररमणयोर**तिभरा**दित्यर्थः । **मृगजानि** मृगजा कस्तूरिका सास्त्येषु अर्शआद्यजित्यच् मृगजानि **वस्त्राणि** । अर्शआदित्वं नास्तीति चेन् मृगो याञ्चा सा च वैकुण्ठादागमने हिरण्यगर्भस्य, श्रीमदाचार्यजिद्गृहे भक्तानां तस्याजाविबोध्यानि अलौकिकानि । भक्तमनोरथपूरकत्वाद् मृगजैव वा वस्त्ररूपा जाता । 'यदस्ति यन्नास्ति तत्सर्वं तत्र वर्तत' इति दहराधिकरणे उक्तम् । **तवोत्तारयामि प्रसीदे**त्यर्थः । 'मदर्चां पाणिना मृजेदि'ति वाक्यात् ।

स्नानादिविज्ञापनामाहुः **प्रियेति** ।

**प्रियाङ्गसङ्गसम्बन्धिगन्धसम्बन्धतो भवेत् ।**
**कदाचित्कस्यचिद् भावो यतः स्नानं समाचर ॥ ३० ॥**

**यतः प्रियाया अङ्गसङ्गस्य सम्बन्धी यो गन्धः** तस्य **सम्बन्धतः कदाचित्**कस्मिंश्चित्काले **कस्यचित्** भगवत्साक्षिकस्य कस्यचित् यदि **भावः** 'पूर्णाः पुलिन्द्य' इति वेणुगीतश्लोकरीत्या श्रीगोवर्धनसत्सङ्गात् कुङ्कुमादिकृतस्मररुक्शान्त्यर्थं भगवदुपास्थितानां पुलिन्दीनां लक्ष्मीप्रवेशवद् भक्तिस्ततः **स्नानं समाचरे**त्यर्थः । ननु भक्तिर्निविशतां मुक्तो भविष्यतीति चेन्न । अयोग्ये भक्तिप्रवेशे भगवद्विषयीकरणं भक्तविद्विष्टमिति पुलिन्दीनां'गा गोपकै'रित्यत्र योग्यत्वनिरूपणाद् अयोग्यानां पुलिन्दीनामिति । 'चलसि यद्व्रजा'दित्यत्र 'शिलतृणाङ्कुरैः सीदतीति नः कलिलतां मनः कान्त गच्छती'त्यनेनाऽयोग्ये शिलतृणादौ भगवत्संबन्धस्य भक्तविद्विष्टत्वम् । भक्तिमार्गमर्यादयैषा विज्ञापना । यद्वा **यत** इत्यन्तं पूर्ववत् । अग्रे ततस्तस्मै भावाय **स्नानं समाचर** । स्नानप्रक्षिप्तगन्धेन भावो भवतीति । यशोदाया भुक्त्वाजागरणार्थं गताया बालभावाच्च न तां प्रति तत्प्रतिकूलभावजननम् । तां प्रत्यन्यभावस्य तिरोभावात् । लीलात्मकत्वाद्भावस्य ।

---

१. सर्वात्मभावभक्तयोः । २. भक्तिः । ३. चेद् यद्यर्थे मनोरमायामिदमपि क्वचिद् द्रष्टव्यम् । ४. जागरितुम् ।

स्नेहेति ।

स्नेहात्मगन्धतैलेन प्रियगन्धातिचारुणा ।
अभ्यक्तो मङ्गलस्नानं कुरु गोकुलनायक ॥ ३१ ॥

स्नेहो गुणस्तदात्मा गन्धो न संभवतीति स्नेहेनात्मा स्वरूपं भगवद्योग्यतारूपं यस्य गन्ध-युक्ततैलस्य तेन तैलेन प्रियो गन्धः प्रियागन्धः पूत्युग्रगन्धव्यतिरिक्तो वा गन्धः प्रियगन्धस्तेन चारुणा मङ्गलदिने स्नानं कुरु ।

स्नेहेति ।

स्नेहात्मगन्धतैलस्य स्नापनाद्गोकुलाधिप ।
वितरात्यन्तिकीं भक्तिं मयि स्नेहात्मिकां विभो ॥ ३२ ॥

भक्तिवर्धिन्यां तनुजासेवाया भक्तिवृद्धिबीजत्वेनोपादानाद् वितरेत्युक्तम् । ननु सेवायाः फलं मानसी सिद्धान्तमुक्तावल्युक्तम् । भक्तिवर्धनस्य फलत्वं कुत इति चेन्न । श्रद्धा भक्तिबीजं 'श्रद्धा रतिर्भक्तिरनुक्रमिष्यती'ति वाक्यात् । सेवा मानसीसेवायाः कारणम् । व्यसनात्मिका तु सेवा भक्तकृतार्थताबीजमिति । आत्यन्तिकीं भक्तिं फलाभिसन्धानरहितां 'मुक्तिं ददाति कर्हिचित् स्म न भक्तियोग'मिति वाक्यान् मुकुन्दाद्भक्तिसत्कारपूर्वको व्यापारो युक्तः । स्नेहात्मिकां भक्तिं वितरेति । विभविति । मुक्तिदातुरपि भक्तिदाने सामर्थ्यं द्योतितम् ।

श्रीति ।

श्रीसुगन्धोद्वर्तनेन निशाश्रमनिवारणात् ।
उद्वर्तितः कृष्ण भक्तिदानेन कुरु मे कृपाम् ॥ ३३ ॥

चतुरसेवकैः सुगन्धयुक्तमुद्वर्तनं कृतं चेच्छ्रीयुक्तं भवतीतरथा तु कृष्णं शुभ्रं वा भवेत् । उद्वर्तनं उबटनेति लोके उच्यते । तत्करण पुस्तकेऽस्ति । तथाहि । सठी, कचूरेति लोके तद्वस्तु सेटक-द्वयम् । कर्पूरा, कपूरकाचरीति प्रसिद्धा सा पादद्वयपरिमिताऽऽनकद्वयमिता च । उशीरं, वरमीति लोके, तत्पादद्वयानकद्वयपरिमितम् । जटिला, भूतकेशी छडीलो इति लोके सा पादद्वयानकद्वयमिता । तालीसपत्रं तमालपत्रं वा, पत्रेति लोके तदपि पादद्वयानकद्वयम् । मुस्ता, मोथा इति लोके सापि पूर्वोक्तमाना । वेसा, वेसवनोसा इति लोके सापि सार्धसेटकैकपादा च । वालम्, वालो इति लोके तदपि सेटकद्वयम् । उक्तसर्वौषधय एकीकृत्य पक्वाः कृत्वा शुष्काः कृत्वा खण्ड्यन्ताम् । पश्चाद् तुगातुगा तवखीरेति लोके सा पादोनसेटकद्वयमिता । चन्दनं घृष्ट्वा कृताः स्थपड्यः सेटकद्वयानकद्वयाः । चन्दनचूर्णं सपादद्वयसेटकमेतानोषधीनेकीकृत्य पिष्ट्वा वस्त्रपूतान्कृत्वोद्वर्तनं कुर्यात् । 'कस्तूर्या चन्दनेनैव कुर्यादुद्वर्तनादिक'मिति स्कान्दे । निशेति आलस्यं स्नानेन निवर्तते श्रमस्तु 'मृत्युः श्रमो भूत्वे'ति श्रुतेर्मृत्युरूपः स उद्वर्तनेन निवर्तते । भक्तीति करणे ल्युट् प्रकृत्यादित्वादभेदे तृतीया । भक्तिदानकरणीभूता कृपा तां कुरु । कृपापदस्यानुग्रहे गौणी । तेनानुमानिकाधिकरणे विज्ञानकरण-त्वेऽपि भक्तिदानकरणत्वं कृपायाः । परस्मैपदार्थ उक्त एव ।

आलस्यदूरीकरणाय स्नानमाहुः दिवेति ।

दिवा त्वद्वनगमनस्मरणात्तापभावतः ।
गोपिकास्पर्शनोष्णेन वारिणा स्नापयाम्यहम् ॥ ३४ ॥

ननूष्णेन वारिणा स्नापयाम्यहमित्येतावता चारितार्थ्ये 'लोकवत्तु लीलाकैवल्यमि'ति

व्याससूत्रात् । तदुक्तं सिद्धान्तरहस्ये 'सर्वेषां ब्रह्मता तत' इति 'निवेदिभिः समर्प्यैव सर्वं कुर्यादिति स्थितिरि'ति च । स्पर्शनान्तं तु परं किमर्थमिति चेन्न । 'ऋतं पिबन्ता'विति श्रुतौ सर्वेषां ब्रह्मतारूपप्रकारस्य प्रस्तावनाङ्गीकारात् । तदुक्तं सिद्धान्तमुक्तावल्यां 'कृष्णसेवा सदा कार्ये'ति । 'तस्माच्छ्रीकृष्णमार्गस्थो विमुक्तः सर्वलोकतः । आत्मानन्दसमुद्रस्थं कृष्णमेव विचिन्तयेदि'ति । तथा च स्नानवारिणि कृष्णविचिन्तनं दिवात्मनो **वने गमनस्य स्मरणात्** यस्तापो विरहतापः सोऽपि **भावो** भक्तिदलं ततो गोपिकास्पर्शनवदुष्णः स्पर्शो यस्य वारिण इति । ननु गोपिकास्पर्शनोष्णत्वचिन्तनं न कृष्णविचिन्तनमिति चेन्न । 'सर्वरस' इतिश्रुत्या कृष्णस्यैव सर्वरूपत्वेनास्य कृष्णविचिन्तनत्वात् । अत्र श्रीभागवतम् 'चन्दनोशीरकर्पूरकुङ्कुमागुरुवासितैः । सलिलैः स्नापयेन्मन्त्रैर्नित्यदा विभवे सती'ति ।

**स्नानेति** ।

**स्नानार्द्रतानिवृत्त्यर्थं प्रोञ्छिताङ्ग विभो मम ।**
**दूरीकुरुष्व गोपीश कृपया लौकिकार्द्रताम् ॥ ३५ ॥**

**प्रोञ्छितान्यङ्गानि** यस्य तस्य संबोधनं **प्रोञ्छिताङ्ग** भोः **कृपया**नुमानिकाधिकरणोक्तया **लौकिकेष्वार्द्रतां** स्नेहात्मिकां **दूरीकुरुष्व** विज्ञानतननाल्लौकिकार्द्रतातननं प्राप्तम् । गीतायां ज्ञाननिरूपणे 'मयि चानन्ययोगेन भक्तिरव्यभिचारिणी'ति वाक्यात् । मयीति विश्वस्मिन् भक्तिः प्राप्ता तामन्यत्र **दूरीकुरुष्व** । आत्मनेपदं तु लौकिकस्नेहदूरीकरणरूपफलस्य 'मदन्यत्ते न जानन्ती'ति पद्योक्तान्यज्ञानाभावे साधनद्वारोक्तस्ववाक्यसत्यकरणेन भगवद्रूपकर्तृगामित्वात् ।

विप्रयोगकालेऽपि वक्ष्यमाणकीर्तनभक्तिसंप्रयोगाय संयोगशृङ्गारावसरे विप्रयुक्तब्रह्मस्वरूपशृङ्गारं वक्तुं विरहे भजनमतिदिशन्ति स्म **गोपिके**त्यादि ।

**गोपिकावद्विप्रयोगे कालक्षेपाय सर्वथा ।**
**कृष्णमूर्तिं प्रियां कृत्वा भजेत्तत्तत्स्वभावतः ॥ ३६ ॥**

**विप्रयोग** इति । ननु कथं विप्रयोगो यावता निबन्धे मूर्तौ कृताः कटकाद्युपचाराः साक्षात्कृता भवन्ती'त्युक्तमिति चेन्न । कृष्णस्य मूर्तिरिति भेदनिर्देशात् । तथा च श्रुतिः 'योऽर्चयेत्प्रतिमां मां चे'ति गोपालतापिनीयस्था । तर्हि निबन्धस्य का गतिरिति चेन्न । विष्णुस्वामिमतपरत्वान्निबन्धस्य, समाप्तौ विष्णुस्वामिमतवर्तिश्रीवल्लभविरचित इति दर्शनात् । तथा च शास्त्रार्थे सुबोधिनीद्वितीयस्कन्धस्य, साक्षाद्भक्तिर्नास्त्येवेति, इत्थं च विष्णुस्वामिमतेन संयोगकाले प्रेमवशाद्विप्रयोगवर्तने **कालक्षेपाय** भजेत् । तदुक्तं शाण्डिल्यर्षिणा 'संयोगे वियोगवृत्तिः प्रेमे'ति सूत्रे । वृत्तिर्वर्तनम् । तद्वद्वियोगे संयोगवर्तनमपि प्रेमेति तद्भाष्यकारः । एवं संयोगे विप्रयोगस्तस्मिन् । चतस्रो घटिकाः शृङ्गारस्य संयोगे विप्रयोगे च यदा कदाचिदधिका न्यूना वा घटिका भवन्ति तदा 'अशक्ये वा सुशक्ये वा सर्वथा शरणं हरिरि'ति वाक्यान्न चिन्ता । अत्रापि पूर्वं मधुपर्को ज्ञेयः । 'दिव्यं पयोदधिमधुघृतखण्डसमन्वितम् । मधुपर्कस्य पात्रे वै दद्यान्मे श्रद्धयार्चक' इति मार्गशीर्षमाहात्म्ये स्कान्दात् । न च स्कान्दस्य तामसत्वेनाप्रामाण्यमिति शङ्क्यम् । तदप्रामाण्यस्य ग्रन्थान्तरे खण्डनात् । बहिर्मुखमुखध्वंसाख्ये ग्रन्थे निपुणतरमुपपादनात् । विविधोपचारेषु मधुपर्कस्यापि निवेशो वा । 'मुख्योपहारैर्विविधैश्च पूज्य' इति रामतापिनीयश्रुतेः । एवं वित्तजसेवाविप्रयोगेऽपि गोपिका यथा विप्रयोगकाले भजन्ति तथा भजेत् । प्रथमान्ताद्वतिः । व्रजरत्ना यां काञ्चिद्धरिमूर्तिं प्रियां कृत्वा भक्तवत्सः 'आनर्चुर्नृप सैकती'मिति वाक्यात् । श्रीमदाचार्यवत् । अत्र 'कृष्णमूर्तिः

सदा भेवा' 'दर्शनं स्पर्शनं स्पष्ट'मिति वाक्ये । अत्र प्रयोगे यत्र मूर्तिकर्मकार्चनवाक्यार्थं कर्तृत्वेन प्रतिपाद्यत्वं तत्र हरिमूर्तिभक्तत्वमिति व्याप्तिः । सर्वथेति सर्वैः प्रकारैस्ते च 'कामादीतरत्रे'ति सूत्रोक्ता ब्रह्मत्वकामुकत्वभयानकत्वद्विष्टत्वसम्बन्धित्वस्नेहविषयत्वभक्तिविषयत्वरूपाः । अत्र द्विष्टत्व-भयानकत्वरूपौ प्रकारौ भक्तिमार्गे चिन्त्यौ । तत्तत्स्वभावत इति तेन श्रीविष्णुना तस्य श्रीपुरुषोत्तमस्य स्वभावस्तस्मात् । 'अलङ्कारप्रियो विष्णुरि'ति श्रीपुरुषोत्तमोऽप्यलङ्कारप्रियः भूमोऽ-प्रियः क्रीडनकानि प्रियाणि श्रीपुरुषोत्तमस्य । यद्वा 'इन्द्रस्य युज्यः सखे'ति श्रुतेरिन्द्रेण समानानि शीलव्यसनानि श्रीपुरुषोत्तमस्येतीन्द्रस्वभावेन श्रीपुरुषोत्तमस्वभावमनुमाय भजेदित्यर्थः ।

ननु 'शैली दारुमयी लौही लेप्या लेख्या च सैकती । मनोमयी मणिमयी प्रतिमाष्टविधा स्मृता' तत्र का मूर्तिः प्रिया कार्येत्याकाङ्क्षायां मनोमयीमाहुः भावेत्यादि ।

**भावोत्थविप्रयोगेऽपि न स्थातुं शक्यते यतः ।**
**अतः स्वहृद्गतैर्भावैर्भूषयेत्तं मनोमयम् ॥ ३७ ॥**

मूर्तिद्वारापि प्रेमलक्षणाभक्त्युत्थविप्रयोगेपीत्यर्थः । हृद्गतैर्मनोगतैः भावैः स्मरणकैः स्मरण-स्यापि भक्तित्वात् । मनोमयमिति यथा 'तोये तोयपुरस्कृतै'स्तथा मनोमयं मनोमयैर्भूषयेदित्यर्थः । 'मनो ब्रह्मेति व्यजानादि'ति श्रुतेः । न त्वानन्दमयं तस्य मूर्तित्वाभावेनाष्टमूर्तिष्वप्रवेशात् । विज्ञान-मयस्य जीवत्वाज् जीवे भजननिषेधात् ।

शृङ्गारे कीर्तनभक्तिमाहुः व्रजेशेति ।

**व्रजेश रसरूपात्मन् शृङ्गारं रचयाम्यहम् ।**
**स्वीकुरुष्व तदीयात्वात्स्वप्रियायत्कृतं निशि ॥ ३८ ॥**

व्रजेश तव शृङ्गारं महाराजोपचाररूपमीशत्वाद्रचयामि स्वीकुरुष्व भक्ताधीनतायाः स्वीकारफलस्य स्वगामित्वादात्मनेपदम् । अन्यथा व्रजेशः कथं स्वीकुर्यात् । अत एव तदीयत्वा-दित्युक्तम् । तदीयत्वं प्राप्याहमित्यर्थः । अयं भक्तः शास्त्रीयोतः 'ऋतं पिबन्तौ' इति श्रुत्यनुरो-ध्यतो निशि स्वप्रियया यत्कृतमिति शृङ्गारविशेषणम् । प्रिया रमा तत्कृतशृङ्गारस्यापि ब्रह्मा-नन्दत्वात् । ननु शास्त्रीयभक्तस्य निरुक्तशृङ्गारोऽनुचितः । फलाध्याये 'सोध्यक्षं तदुपगमादिभ्य' इति सूत्रस्यादिपदा'द्भगवद्वशीकरणसमर्थः स्नेहः प्रभ्वनिश्चितार्थत्यागस्तदनुरूपं भजनं चे'ति भाष्यस्य विरोधादिति चेत्तत्र संबोधनमाहुः रसरूपात्मन्निति । रसरूपमात्मनि यस्य, रसरूपः आत्मा यस्येति वा । ननु नवनीतचोरस्य शृङ्गारे कर्तव्ये कथं निशि स्वप्रियायत्कृतमिति शृङ्गारविशेषणमिति चेन्न । स्वप्रियाङ्गीकारात् । प्रिया माता वा 'आऊ गोपाल शृङ्गार बनाऊं' अस्मात्कीर्तनात् । रसरूपात्मन्नित्यत्र भक्तिरसात्मन्नित्यर्थः ।

गन्धार्पणमाहुः कुचेति ।

**कुचकुङ्कुमगन्धाढ्यमङ्गरागमतिप्रियम् ।**
**श्रीकृष्ण तापशान्त्यर्थमङ्गीकुरु मदर्पितम् ॥ ३९ ॥**

अङ्गरागं सुवासिततैलादि तदप्यतिप्रियं स्वस्य । इतरद्विशेषणं पूर्ववत् । तापोऽङ्गराग-निराकरणीयः पदार्थः । प्रियाविरहतापो वा प्रियास्मारणात् । अङ्गीकुर्विति परस्मैपदमङ्गीकारफलस्य प्रेम्णः परगामित्वात् । जलपात्रमपि बोध्यं ताम्बूलं च । 'वस्त्रोपवीताभरणपत्रस्रग्गन्धलेपनै'रि-त्येकादशस्कन्धीयसप्तविंशाध्यायस्थवाक्यात् ।

वस्त्रार्पणमाहुः प्रियेति ।

**प्रियाङ्गतुल्यवर्णानि वस्त्राणि व्रजनायक ।**
**समर्पयामि कृपया परिधेहि दयानिधे ॥ ४० ॥**

प्रियाङ्गेत्यादिपूर्ववद् ब्रह्मानन्दत्वाय। ननु लोहितशुक्लनीलरूपाणि प्रासानि न परं पीतहरितकपिश-चित्ररूपाणीति चेन्न । त्रिविधरूपभेदत्वादन्येषाम् । तथा च श्रुतिः, 'यदग्ने रौहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्येति यद् धूम्रं तद्वायोरि'त्यार्थवर्णीश्रुतिरित्यनन्तानि रूपाणीति प्रस्थान-रत्नाकरेऽस्ति । वस्त्राणि यथाकालं 'देशकालविभागविदि'ति चतुर्थस्कन्धवाक्ये दैशिकविशेषणात् । कृपयेत्यत्र परिधानकारणं कृपा गृह्यते न विज्ञानकारणं वाक्यं पूर्वमुक्तम् ।

अलङ्कारार्पणमाहुः भूषणेति ।

**भूषणान्यवतारात्मकान्येतान्यर्पयामि ते ।**
**प्रियाङ्गतुल्यकान्तीनि प्रसीद व्रजसुन्दर ॥ ४१ ॥**

अवतारात्मकानि द्वितीयस्कन्धसुबोधिन्यां सप्तमाध्याये यथर्षभावतारो 'लसन् महारत्न-हिरण्मयाङ्गद' इति 'नाभेरसावृषभ' इत्यत्र निरूपितः । हयग्रीवो हि स्फुरन्महारत्नकिरीटकुण्डलरूपः । नृसिंहो भगवान् कौस्तुभरूपः । यो हरिः स वनमाला । वामनो हि कटिमेखलारूपः । नूपुरकङ्कणादीनि मन्वन्तरावताररूपाणि । प्रियाङ्गेत्यादि विशेषणं पूर्ववत् । व्रजसुन्दरेति संबोधनं तदनुरूप-शृङ्गाररूपभजनार्थमुक्तमाघ्यात् ।

प्रियेति ।

**प्रियानासाभूषणस्थबृहन्मुक्ताफलाकृतिम् ।**
**समर्पयामि राधेश गुञ्जाहारमतिप्रियम् ॥ ४२ ॥**

प्रियाणां नासाभूषणानि तत्स्थानि बृहन्ति मुक्ताफलान्यादावन्ते च येषां मणीनां ते तथोक्तास्तेषामिवाकृतिर्यस्य हारस्य तम्। राधेशेति संबोधनं तादृशहारसमर्पणे प्रम्वनिङ्गितत्यागार्थम् ।

मिलितेति ।

**मिलितान्योन्याङ्गकान्तिचाकचक्यसमं विभो ।**
**अङ्गीकुरुष्वोत्तमाङ्गे केकिपिच्छमतिप्रियम् ॥ ४३ ॥**

मिलिता अन्योन्यस्याङ्गकान्तयः पीताङ्गकान्तिः श्यामाङ्गकान्तिश्चोभे मिलिते हरिता कान्तिः लोहिताङ्गकान्तिर्नीलाङ्गकान्तिश्चोभे मिलिते ताम्रवर्णकान्तिस्तयोः कान्त्योः शोभयोः चाकचक्यं भास्वरशुक्लं रूपं तेन समम् । चाकचक्यं लौकिकशब्दानुकरणं दीधितिवाचकम् । अमरकोशादान्य-त्रिको वा शब्दः । केकिनां मयूराणां पिच्छं अङ्गीकुरुष्वेत्यात्मनेपदम्, 'मयूराश्चित्रिता येने'ति स्ववक्त्रनिःसृतमयूरचित्रश्रेष्ठपजवाक्यसत्यत्वरूपम्, अङ्गीकारफलस्य कर्तृगामित्वात् ।

गोपेति ।

**गोपस्त्रीरक्षस्थितं श्रीमच्छृङ्गारात्मकमञ्जनम् ।**
**शोभार्थं मातृवद्दत्तमङ्गीकुरु व्रजाधिप ॥ ४४ ॥**

मातृवदित्यत्र तृतीयान्ताद्वतिः मया दत्तम् । ननु शृङ्गारात्मकमञ्जनं मातृवद्दत्तमित्यनु-चितमिति चेन्न । हे व्रजाधिपेति संबोधनाद् व्रजस्य ग्रामीणाः स्त्रियो न चतुराः नागर्यश्चतुरा-स्तस्याधिप इत्यनौचित्यभावाद् अङ्गीकारफलस्य परगामित्वात्परस्मैपदम् ।

कस्तूरीति ।

**कस्तूरीतिलकं भाले चित्रं चारु कपोलयोः ।**
**दृष्ट्वा प्रियाकृतं हृष्टस्तथा मुदमवाप्नुहि ॥ ४५ ॥**

ननु बालगोपाले कथमिति चेन्न । प्रियापदस्य मातृवाचकत्वमपीति दोषाभावात् ।

मुखेति ।

**मुखाब्जमकरन्दाप्तिलोभेन रसभावतः ।**
**मधुपायितचित्तानि व्रजरत्नानि तानि ते ॥ ४६ ॥**

मुखं भक्तिः साऽब्जं भक्तोष्मापहारित्वात् तस्य **मकरन्द आनन्दः** भजनानन्द इत्यर्थः । तस्याप्तेर्लोभेन । मकरन्दः पुण्यं कर्म वा दास्यमिति यावत् सौरभ्यसाम्यात् । अयमर्थः । बह्वीषु भक्तासु कस्याश्चिन्मनोरथेन मन्मथमन्मथरूपेणात्मन आविर्भावे आत्मनः कपोलरिंसावशादूष्मणि सति कासाञ्चिद्भक्तानां वैराग्योत्कर्षवशात्तच्छान्तचित्तानां **रसभावः** रसः शृङ्गारः स च देवादिविषयो भावः । 'रतिर्देवादिविषये'ति काव्यप्रकाशात् तादृशरसभावतः पाञ्चभौतिकापगमे **मधुपायितानि** मधुपवदाचारयुक्तानि **चित्तानि** येषां व्रजरत्नानामतो 'अन्ते या मतिः सा गति'रिति वाक्याद्दण्डसायुज्यालकाभिन्नसारूप्योभयातिक्रमेण मुखाब्जभक्तावुद्गतकस्तूरीरूपता । अतः कपोलयोश्चित्रं चारु कस्तूरीरूपं **ते** तव **तानि** प्रसिद्धानि **व्रजरत्नानि** तान्यपि मधुपायितचित्तानि नान्यानि । अन्येषां भक्तानामन्यत्रालकादौ प्रवेशात् । वाक्यं तु 'यज्ञोपवीते'त्याद्युक्तमेव । 'तथा स्नानपुरःसर'मिति च ।

मालार्पणं सुमनसामाहुः कृतेति ।

**कुसुमान्यर्पितानीश प्रसीद मयि संततम् ।**
**कृपासंहृष्टदृग्वृष्ट्या तदङ्गीकृतिशोभितः ॥ ४७ ॥**

मालाकारेणार्पितानि 'भक्तिमार्गानुसारेणोपचारा मुख्या' इति निबन्धे दर्शनात् । 'नमः कमलमालिन' इति गोपालतापिनीयश्रुतेः । तदुक्तं स्कान्दे 'जातीपुष्पसहस्रेण यच्छेन्मालां सुशोभनाम्' इति । **कृपया संहृष्टानि** । यद्वा । संहृष्टानां व्रजरत्नानां **दृशि** ज्ञानानि वल्लवीनयनाम्भोजरूपाणि । यद्वा द्वितीयपक्षे नयनाम्भोजरूपाणि वल्लवीनां संहृष्टपदेनोक्तेः । तेषां ज्ञानानां वृष्टिर्व्रजोपरि मोचनं तया तदात्मकमालाङ्गीकृत्या **शोभितः** । तदुक्तं 'वल्लवीनयनाम्भोजमालिन' इति गोपालतापिनीये ।

'वेणुवादनशीलाये'ति श्रुतेर्वेणुवादनमाहुः प्रियेति ।

**प्रियाकारणदौत्यैकभावेनातिप्रियं सदा ।**
**वेणुं धृत्वाधरे कृष्ण पूरय स्वामृतस्वनैः ॥ ४८ ॥**

स्पष्टम् । प्रियाणां व्रजरत्नानामाकारणे, दूतत्वं तदेवैकं मुख्यं **भावो** प्रकृतिजन्यबोधे प्रकारत्वेन । 'धूपदीपोपहाराणि दद्यान्मे श्रद्धयार्चकः' इति वाक्ये उपहारान्तर्गतो वेणुरिति भागवतमार्गः ।

आदर्शार्पणमाहुः प्रियेति ।

**प्रियानत्यात्मकादर्शे विलोक्य वदनाम्बुजम् ।**
**व्रजाधीश प्रमुदितः कृपया मां विलोकय ॥ ४९ ॥**

आदर्शविशेषणं पूर्ववत् । सेवाफलमवान्तरमधीष्टमकार्षुः । कृपया ज्ञानकारणभूतया मां

विलोकय प्रबोधनयुतं कुरु । परस्मैपदं प्रबोधनस्य परगामित्वात् । ब्राह्मी चेद्व्रजते कृष्णं तस्मान्नास्त्यधिकः पर' इति वाक्यात् स्वेच्छयाऽस्मिँल्लोकेऽधीष्टं कृतं प्रबोधनम् ।

एवं शृङ्गारं कृत्वा सिंहासने उपवेश्य सामग्रीमग्रे स्थाप्य व्रजस्त्रीकेत्यादिसार्धपद्येन विज्ञाप्य भाषणमित्यादिपद्यद्वयेन विज्ञाप्यानेन पद्येन समर्पयेद् गोपिकेति ।

**गोपिकाभावतः स्नेहाद्भुक्तं तासां गृहे यथा ।**
**मदर्पितं तथा भुङ्क्ष्व कृपया गोपिकापते ॥ ५० ॥**

गुप्तरसे स्पष्टोऽस्यार्थः । 'न रोधयति मां योग' इत्यारभ्य 'यथा भक्तिर्ममोर्जिता' 'भक्त्याह-मेकया ग्राह्य' इत्येकादशद्वादशाध्याये । अत्र श्रीभागवते मार्गे गोपीवल्लभभोगो न दृश्यते अतः सामान्यतः प्रमाणमुक्तमन्यच्च 'पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति । तदहं भक्त्यु-पहृतमश्नामि प्रयतात्मनः' इति वाक्ये द्रव्यानियम उक्तः । तेन भक्तिहंसोक्तदिशा वेदाविरोधे स्नेहे च सर्वभोगोपपत्तेः । ततो यथावदाचमनं कारयित्वा ताम्बूलमर्पयेत् ।

ततो दुग्धफेनं दुग्धं चार्पयेत् स्वर्णेति ।

**स्वर्णपात्रे पयःफेनपानव्याजेन सर्वतः ।**
**अभ्यस्यति प्राणनाथः प्रियाप्रत्यङ्गचुम्बनम् ॥ ५१ ॥**

स्वर्णपात्रं प्रियाङ्गतुल्यकान्तित्वेन प्रियाङ्गं पयोधररूपं पयआधारपात्रत्वात् 'सर्वकाम' इति श्रुतेः । कस्यचित् सुकृतराशेरात्ममनोज्ञत्वे तेन प्रियाप्रत्यङ्गचुम्बनं त्वया क्रियत इत्युक्ते स्वर्णपात्रे पयःफेनपानं क्रियते मयेति स्वर्णपात्रे पयःफेनव्याजरूपं तेन व्याजेन सर्वतः सर्वं प्रिया-ङ्गाङ्गचुम्बनम् । वीप्सायां प्रतिः । अभ्यस्यति पुनः पुनः कथयति । तथा च सर्वं प्रिया-प्रत्यङ्गचुम्बनं प्राणनाथः स्वर्णपात्रे पयःफेनव्याजेन पुनः पुनः कथयतीत्यर्थः । बालस्तु प्राणनाथः प्रियाया मातुर्भोगरूपं पयोधररूपमङ्गं तस्य चुम्बनं न पानं पानस्य दुग्धकर्मकत्वात् । दुग्धं पिबतीति प्रत्ययात् तत्स्वर्णपात्रे पयःफेनपानव्याजेनाभ्यस्यति यथा पूर्वोक्तो महानभ्यस्यति तथानुकरोति ।

एवं गुहां प्रविष्टाविति सूत्रभाष्योक्तरीत्योक्त्वा संप्रदायप्रदीपोक्तरीत्या श्रीभागवतमार्गेणेति निबन्धोक्तरीत्या श्रीहरिरायजिद्भावनयाहुः गोपेति ।

**गोपार्पितपयःफेनपानं यद्भावतः कृतम् ।**
**मदर्पितपयःफेनपानं तद्भावतः कुरु ॥ ५२ ॥**

मालागुप्तार्योक्तं समर्पणीयं यद्भावतो व्रजे धारोष्णदुग्धत्वेन । किंच तन्मध्ये सूक्ष्मं सुवर्णपात्रं पयोमहापात्रे ज्ञेयम् । ततः पुनराचमनं कारयित्वा ताम्बूलमर्पयेत् । अत्रापि मुखवस्त्रं योचितं देयम् । ततः पायसादिकमर्पयेदिति मूलम्, आदिपदेनोत्सवादौ भोगविशेषः पायसेन सहैव, जलपात्रं वादिपदार्थः धूपदीपतुलसीशङ्खोदकानि च ।

व्रजेति ।

**व्रजस्त्रीकृतशृङ्गारानन्तरं तद्गृहे यथा ।**
**अभोजि पायसं ताभिः सह भुङ्क्ष्व तथैव मे ॥ ५३ ॥**

---

१ वटस्त्रीजन्यावेनाह ।

स्पष्टम् । ततः पुनराचमनं कारयित्वा ताम्बूलमर्पयित्वा आरात्रिकं कुर्यात् । अत्रापि माला ।

**अमङ्गलनिवृत्त्यर्थं मङ्गलावाप्तये तथा ।**

**कृतमारात्रिकं तेन प्रसीद पुरुषोत्तम ॥ ५४ ॥**

तृतीयमारात्रिकमिदं क्वचिल्लुप्तं स दोषो नित्यत्वात्सेवायां नास्ति तदुक्तं पूर्वमीमांसायाम् । ननु स्कान्दे मार्गशीर्षमाहात्म्ये नृसिंहपरिचर्यायां च 'सर्वं संपूर्णतामेति कृते नीराजने सुते'ति सर्वसंपूर्णतावाप्तये 'नीराजनमिदं नाथ प्रीयतां मधुसूदने'ति प्रीत्यवाप्तये चारात्रिकस्य निरुक्तेः कथममङ्गलनिवृत्त्याद्यर्थमिति चेन्न । स्कान्दस्य तामसत्वेन 'तामसा निरयायैवे'ति वाक्यप्रसरात् । सर्वं संपूर्णतामित्यस्य मानसीपूजामन्त्रत्वात् । अतो'अचलत्वं चापेक्ष्ये'ति सूत्राभासोक्तभक्तेच्छयाऽमङ्गलनिवृत्त्याद्यर्थमारात्रिकं साधु, घण्टादीनां वादनं 'सामनीराजनादिभि'रित्यत्रादिपदार्थत्वात् । अश्रुतघटस्थापनापेक्षया पुराणादौ स्मृतस्य घण्टावादनादेर्ज्यायस्त्वात् 'सामनीराजनादिभि'रिति भागवतवाक्यात्सामश्रुतिः । सेवापूर्त्यर्थमिति स्कान्दे । स्पष्टमन्यत् ।

नवनीतचौर्यादीनां प्रेङ्खशायनमाहुः प्रेम्णेति ।

**प्रेम्णा मत्प्रेङ्खशयनदोलने श्रीयशोदया ।**

**सिताद्यमर्पितं भुक्तं भुङ्क्ष्वेदं च तथैव मे ॥ ५५ ॥**

बालानामतिमहतामप्यन्यप्रेङ्खशयनं न दोषाय । प्रेमवशत्वादात्मनस्तदाहुः प्रेम्णा मत्प्रेङ्खेति । वर्तमानेन त्वयेति शेषः । आद्यपदेन त्वक्सहिता मज्जा शीर्षफल, वीणि, खर्जूरिका, द्राक्षादीनि खण्डशकलानि च बदाममीजी गरी चिरोंजीति लोके त्रयाणां पूर्वेषां समाख्याः । अधुना तु नवनीतथपडीस्वल्पमोदकाद्यपि । पिष्टसिताखण्डे च जलभृङ्गारः । इदं चेत्यत्र चकारः समुच्चये । पूर्वोक्तं प्रत्यक्षगमित्यर्थः । इदं सेवायाम् । पूर्वोक्तं गृहे । अन्येषां स्वरूपाणां भावनया शय्यायां शयनं श्रीयशोदादिभावनं च ।

अग्रेतनकृत्यमाहुस्ततोग्रे क्षणं क्रीडार्थमक्षादीन्निवेदयेत् ।

**क्रीडारूपात्मकैरक्षैः क्रीडार्थं स्थापितैः प्रभो ।**

**क्रीडां कुरु महाराज गोपिकाभिश्च राधया ॥ ५६ ॥**

आदिपदेन क्रीडनकानि व्याघ्रबकरी, शतरञ्जिका । क्रीडारूपात्मकैरिति नव सात्त्विकादिभेदाः । सत् चिद् आनन्दाः विभावोऽनुभावः सञ्चारिभावो निर्गुण इति मिलित्वा षोडश क्रीडारूपाणि । धीरा, अधीरा, धीराधीरारूपा अक्षास्त्रयः । अक्षबिन्दवश्चतुर्दश तेषां सङ्ख्यातात्पर्यं षट् तथैकः पञ्च द्वौ च । षट् धर्माः, एको धर्मी, पञ्च महाभूतानि, जीवपरमात्मानौ द्वौ । पट्टिकाखण्डानि षण्णवतिः षोडश शृङ्गाराः पुंसः षोडश स्त्रियाः मिलित्वा द्वात्रिंशच्छृङ्गाराश्चतुःषष्टिकलाः एवं षण्णवतिः । शतरञ्जिकाशयः द्वात्रिंशच्छृङ्गाराः क्रीडनकरूपाः, चतुःषष्टिखण्डानि कलारूपाणि, द्वौ क्रीडाकर्तारौ, द्वौ द्रष्टारौ मिलित्वा शतं जातम् । व्याघ्राजाशयः विंशतिरजानां सात्त्विकादिनवैकादशेन्द्रियभेदेन । व्याघ्राश्चत्वारः पुष्टिमार्गीयधर्मार्थकाममोक्षरूपाः द्वौ चेद् धर्ममोक्षात्मकौ धर्ममोक्षरूपकोटेरर्थकामकोटेरुत्कृष्टत्वात् । द्वात्रिंशत्खण्डानि द्वात्रिंशच्छृङ्गाररूपाणि स्त्रीपुरुषभेदेन । एवं क्रीडारूपाण्यक्षादीनि भक्तेच्छया तत्र तत्र स्थितामिर्गोपीभी राधया च । श्रीहरिरायजितां भावनया वेणुवेत्रे अपि श्रीहस्ते धर्तव्ये ।

मालामुत्तार्य राजभोगसमर्पणमाहुः ततो राजभोगं समर्पयेच्छ्रीमदिति ।

**श्रीमद्राधाङ्गसौगन्ध्यागरुधूपार्पणाद्विभो ।**
**भावात्मकृतसामग्र्यां भोगेच्छां प्रकटीकुरु ॥ ५७ ॥**

अगरुधूपार्पणस्य विशेषणं पूर्ववच्चन्दनधूपार्पणस्योपलक्षकम् । तेन मुक्तः कृतसामग्रीको भवति । 'मुक्तोपसृप्यव्यपदेशात्' इति व्याससूत्रात् । धूपार्पणेन मुक्तत्वं तु तत्त्वसागरे 'कृष्णागरुसमुत्थेन धूपेन श्रीधरालयम् । धूपयेद्वैष्णवो यस्तु स मुक्तो नरकार्णवा'दिति नृसिंहपरिचर्यायाम् । भोगेच्छाकारणत्वेन भक्तान्याज्ञातुरात्मनः । सामग्रीज्ञानार्थं विशेषणम् । भावात्मेति । भावो भक्तिर्दासरूपा तस्यामात्मा स्वरूपं यस्याः कृतसामग्र्याः । तथा च 'मदन्यत्ते न जानन्ति नाहं तेभ्यो मनागपि' इति वाक्ये तत्पदार्थो भक्तत्वावच्छिन्नस्तत्र भक्तत्वं भक्तिरेव । तस्यामात्मा स्वरूपं यस्या इति सामग्र्या आत्मज्ञानविषयत्वम् । ततो जानातीच्छति यतत इति प्रणाड्या भोगेच्छां प्रकटीकुर्वित्युक्तम् ।

**दीपः समर्पितो भोग्यरूपार्थान्नप्रदीपने ।**
**तद्दीपनेन चोद्दीप्तभावो भोजनमाचर ॥ ५८ ॥**

प्रदीपने प्रकाशने । ननु सूर्यप्रभाप्रकाशितेऽन्ने प्रकाशकान्तरदीपापेक्षाभाव इति चेन्न । भूयः प्रकाशदेशान्मन्दिर आगच्छत आत्मनः प्रथममपेक्षाभावे मानाभावात् । उद्दीप्तभावस्तूद्दीप्तस्नेहः 'धूपदीपोपहाराणी'ति श्रीमागवतम् । नारदीयकल्पे तु 'सघृतं गुग्गुलं धूपं दीपं गोघृतदीपितम् । समस्तपरिवाराय हरये श्रद्धयार्पयेदि'त्युक्तम् ।

धूपदीपावुक्त्वोपहाराण्याहुः व्रजेति ।

**व्रजस्त्रीकरयुग्मात्मयत्ने पात्रं च तन्मयम् ।**
**स्थापितं ते भोजनार्थं योग्यभोज्यान्नसम्भृतम् ॥ ५९ ॥**

व्याख्यातम् ।

गुप्तरस इव प्रकारमाहुः स्वर्णेति ।

**स्वर्णपात्रेषु दुग्धादि दध्याद्यं राजतेषु च ।**
**मृत्पात्रेषु रसालाद्यं भोज्यं सद्रोचकादिकम् ॥ ६० ॥**
**राजते नवनीतं च पात्रे हैमे सिता तथा ।**
**यथायोग्येषु पात्रेषु पायसव्यञ्जनादिकम् ॥ ६१ ॥**
**सूपौदनं पोलिकादि तथान्नं च चतुर्विधम् ।**
**भुङ्क्ष्व भावैकसंशुद्धं राधया सहितो हरे ॥ ६२ ॥**

सद्रोचकं सन्धितं तदादिकमादिपदेन निम्बार्द्रकादि । यथायोग्यानि पात्राणि । श्रीपद्मपुराणे 'नैवेद्यपात्रं वक्ष्यामि केशवस्य महात्मनः । हैरण्यं राजतं कांस्यं ताम्रं मृण्मयमेव च । पालाशं पद्मपत्रं वा पात्रं विष्णोरतिप्रियम्' । इति नृसिंहपरिचर्यायाम् । सूपशब्देन 'दारि' इत्युच्यते लोके तद्वाह्यम् । पोलिका रोट्यः आदिपदेन बाट्यः । चतुर्विधमन्नं भोज्यं तण्डुलादि, लेह्यं शिखरिण्यादि, चोष्यमिक्षुदण्डादि, पेयं दुग्धादि । भावैकसंशुद्धं भक्त्यैकसंशुद्धं सिद्धान्तरहस्योक्तरीत्या । नवनीतप्रियजित्स्वरूपे राधाशक्तिर्बाला वा भावनीया । अत्र भावना गुप्तरसे स्फुटैव, उपहाराणीत्यत्र

श्रीभागवते उपहारान्तरमुक्तम्। 'गुडपायससर्पींषि शष्कुल्यापूपमोदकान्। संयावदधिसूपांश्च नैवेद्यं सति कल्पये'दिति 'पच्यन्तां विविधाः पाका' इति श्रीगोवर्धनप्रसङ्गे।

उपहारपदस्य नैवेद्यवदन्यत्रापि वृत्तेराहुः कम्ब्विति।

कम्बुनाम्नातिप्रियश्रीशङ्खान्तर्गतवारिणा।
दृष्ट्यादिदोषाभावाय सामग्री प्रोक्षिता विभो॥ ६३॥

कम्बुर्गलकस्तन्नाम्नातिप्रियः श्रीशङ्खो गलकशङ्खः। तथा च विश्वः 'कम्बुः शम्बूकगजयोर्ग्रीवागलकशङ्खयोः' अमरः 'कम्बुर्ना वलये शङ्खे' इति। कम्ब गतौ मृगय्वादिः। काम्यते वा। एकदेशान्वयः। तदन्तर्गतवारिणा। भक्तिमार्गानुसारेणाहुः दृष्ट्यादिदोषेति। आदिपदेनाघ्रातास्पृश्यतादोषः। तदुक्तं 'नाद्यं तडागजं वापि वापीकूपादिकं च यत्। गाङ्गेयं जायते सर्वं जलं शङ्खे कृतं सुत। त्रैलोक्ये यानि तीर्थानि मम वै याज्ञया सुत। शङ्खे तानि वसन्तीह तस्माच्छङ्खो वरः स्मृत' इति स्कान्दे। याज्ञयेत्यत्र इ आज्ञयेति छेदः। श्रीभागवते च 'अपां तत्त्वं दरवर' इति। यद्वा कम्बुर्वलयस्तन्नाम्ना कम्बुना गृहीतः शङ्खोऽतिप्रियो भवति। राधाशृङ्गारत्वाद्वलयस्यान्यत्पूर्ववत्। प्रायपाठाद् यथाव्रजस्त्रीकरयुग्मात्मेति यन्त्रविशेषणम्। 'व्रजस्त्रीकरयुग्मात्मयन्त्रे पात्रं च तन्मयमि'त्यत्र तथा च वलयस्मारककम्बुपदेन शङ्खाभिधानाद्दत्तं पिबन्ताविति श्रुत्युक्तस्वरूपामृतपानात्मकः शङ्खभोग आत्मनः सिद्धः। न च शङ्खभोगो न वलयभोग इति वाच्यम्। सर्वं सर्वमयमिति श्रुतेर्वलयस्य स्मारकपदप्रयोगे वलयस्यापि भोगाङ्गीकारात्।

प्रक्षिप्तेति।

प्रक्षिप्ता तुलसी तेऽतिप्रियगन्धा तथैव च।
कुरुष्व तेनातितुष्टो भोजनं व्रजनायक॥ ६४॥

अतिप्रियेति। तदुक्तं ब्रह्मपुराणे 'तुलसीदलगन्धेन मालतीकुसुमेन च। कपिलाक्षीरदानेन सद्यस्तुष्यति केशवः' इति। राजसत्त्वेऽपि पुराणस्य समबलत्वं समोत्कर्षः समं प्रामाण्यं परेषाम्। अस्माकं बलोत्कर्षयोः साम्यासहनमिति बहिर्मुखमुखध्वंसे कल्याणरायाः। तथैव भक्तराधास्रग्गन्धत्वे-नैवेत्यर्थः। तेनातितुष्ट इत्यत्रातिपदम्। अतिप्रियेत्यत्रापि। वाक्यं तु गरुडपुराणे भगवतः 'तुलसीं प्राप्य यो नित्यं न करोति ममार्चनम्। तस्य तां प्रतिगृह्णामि न पूजां शतवार्षिकीम्' इति। इदं सात्त्विकं पुराणम्। 'भक्त्या तुतोष भगवान् गजयूथपाय' इति श्रीभागवतम्। एवमुक्तं श्रीगरुडपुराणे 'तुलसीदलसम्मिश्रं हरेर्यच्छति यः सदा। नैवेद्य'मित्यादि 'भाषणं मा त्यजे'ति श्लोकचतुष्टयेन समर्पयेदिति मूलम्। अत्रार्घपात्रेऽर्घो ज्ञेयः। विष्णुरहस्ये 'सौवर्णे रम्यपात्रे तु मणिरत्नविभूषिते। तोयाद्यष्टाङ्गसम्पूर्णे स्वामिनेऽर्घं ददामि ते' इति वचनात्। यद्यपि नृसिंहपरिचर्यायां मानसीसेवायां पादप्रक्षालनानन्तरमनेन वाक्येनार्घ उक्तस्तथा स्कान्दे 'अर्घ्यं दद्यात्ततो वत्स पाद्यमाचमनीयकमिति पादप्रक्षालनमर्घ्यानन्तरमुक्तं तथापि प्रयोगभेदात्पाठक्रममनादृत्य क्रमान्तरेण नैवेद्यसमये बोध्यः। तदित्थम्। 'श्रद्धयोपहृतं प्रेष्ठं भक्तेन मम वार्यपि'। 'गन्धो धूपः सुमनसो दीपोऽन्नाद्यं च किं पुनः।' 'भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते।' इत्येकादशसप्तविंशाध्याये भगवदुपदेशः। तत्र भक्त्या क्रमेण नैवेद्यसमयेऽर्घः। एकत्र सिद्धः शास्त्रार्थोऽपरत्रापि तथेत्यतिदेशस्य निर्बलत्वाद्भगवदुपदेशापेक्षया। पूर्वतन्त्रे पञ्चमस्यैकादशाधिकरणे आचार्येषु ह्यात्मभेदबुद्धेर्महापराधेषु गणनं यद्यपि तथापि लौकिकदृष्टिमतो भक्तस्येच्छया पादुकाजितामुत्सवेषु नित्यदा वा राजभोगसमर्पणं पादुकाजितामाहुः ततः श्रीमदाचार्येषु समर्पयेदिति।

कीर्तनभक्तिमपि तदर्थमाहुः स्वार्थेति ।

स्वार्थप्रकटसेवाख्यमार्गे श्रीवल्लभप्रभो ।
निवेदितस्य मे भोज्यं स्वास्ये कुरु हुताशन ॥ ६५ ॥

'मायावादतमोनिरस्य मधुभित्सेवाख्यवर्त्माद्भुतं, श्रीमद्गोकुलनाथसङ्गमसुधासंप्रापकं तत्क्षणात् । दुःप्रापं प्रकटं चकार करुणारागातिसंमोहनः स श्रीवल्लभमानुरुल्लसति यः श्रीबल्लवीशान्तर' इति स्फुरत्कृष्णप्रेमामृतात्स्वार्थप्रकटसेवाख्यमार्गः । भोज्यं चतुर्विधान्नम् । हुताशन कृष्णवर्त्मन् । पानीयपात्रमपि ज्ञेयम् । घटिकाद्वयं भोगं प्रस्थाप्यानन्तरं कृत्यमाहुः । ततो यथावदाचमनं कारयित्वा ताम्बूलमर्पयेदिति, अत्र मुखवस्त्रं द्रष्टव्यम् । 'मुखवासं सुरभिमत्ताम्बूलाद्यम्' इति श्रीभागवतवाक्यात् । आचार्येभ्योऽपीति ज्ञेयम् । किञ्च 'मद्भक्तपूजाभ्यधिके'ति वाक्यात्सप्तबालकपादुकाजितामपि ताम्बूलान्तं समर्पयेत् । 'पितृदेवो भवे'ति श्रुत्या भक्तः स्वपितृभ्योऽपि पादुकाजिद्द्वारा योग्यं कुर्यात् । 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ' इति श्रुतिः ।

ततो भोजनपात्रस्थले मार्जनं कुर्याद् गोकुलेशेति ।

गोकुलेश तवोच्छिष्टलेपात्पात्रप्रमार्जनात् ।
त्वत्सेवान्तरधर्मेषु रतिर्भवति निश्चला ॥ ६६ ॥

भोजनपात्राणां मार्जनं च कुर्याद् इति फक्किकार्थः । श्लोके उच्छिष्टलेपमालोक्य पात्राणां प्रकृष्टं मृदादिभिर्मार्जनं तस्मात् । त्वत्सेवातोऽन्यधर्माः पात्रप्रमार्जनादयस्तेषु । रतिः पूर्वं वर्तते सेवान्तरधर्मेष्वपि प्रवृत्तत्वात् । इदानीं नित्यदा करणान्निश्चला । अन्तरपदं मध्यवाचि वा ।

ततश्चरणयोस्तुलसीं समर्पयेत् प्रियेति ।

प्रियाङ्गगन्धसुरभितुलसीं ते पदप्रियाम् ।
समर्पयामि मे देहि हरे देहमलौकिकम् ॥ ६७ ॥

तुलसीविशेषणं पूर्ववत् । पदप्रियाम् 'कच्चित्तुलसि कल्याणि गोविन्दचरणप्रिये' इति वाक्यात् । देहमिति । तुलस्याः पदसमर्पिताया अलौकिकदेहदातृत्वं पद्मपुराणे 'सुकृती दुःकृती चापि तुलस्या योऽर्चयेद्धरिम् । देहान्ते दिव्ययानेन विष्णुभक्तैः स नीयत' इति । देहमन्तरा यानेन नयनासंभवात् ।

प्रसीदेति ।

प्रसीद पूजितो भक्त्या तुलस्या प्रियगन्धया ।
निःकिञ्चनाधीश नान्यत्कर्तुं शक्नोमि सर्वथा ॥ ६८ ॥

तुलस्याः गोविन्दचरणप्रियत्वात् प्रसीद । अन्यत्पुष्पमालादि । सर्वथा सर्वैः प्रकारैः देहेन मूल्येनाज्ञया वा । तादृशदेहवान् मूल्यवानाज्ञावांश्च नास्मीति देहादीनां प्रकारता । ननु निः-किञ्चनस्य कथं सेवेति चेन्न । यतो निःकिञ्चनानामधीश 'धर्मान्सन्त्यज्य यः सर्वान्मां भजेत्स च सत्तम' इत्येकादशस्कन्धदशमेऽध्याये । 'न्यासादेशेषु धर्मत्यजनवचनतोऽकिञ्चनाधिक्रियोक्ते'ति । ननु गीता कुतो नोक्ता 'सर्वधर्मान्परित्यज्ये'त्यादिः । गीतायाः प्रकृतित्वाभावात् । एकादशाध्यायस्य लघुस्वमार्गस्यैकोनत्रिंशाध्यायोक्तस्य प्रकृतित्वात् । धनी पुष्पमालाः पुष्पमण्डपादिकं कुर्यादेव । बीटिका-समर्पणमपि । ततः पादपीठादिकमर्पयेत् । आदिपदेन जलपात्रं मुखवस्त्रं दर्पणमुष्णकालश्चेन्मृत्पात्रं जलपूर्णं चन्दनपात्रं च व्यजनानि च सिंहासने उभयपार्श्वयोः स्थापनीयानि । सिंहासनखण्डास्तरणं

दन्तादिक्रीडनकानि तष्टी भूमितूलिका विष्वगास्तरणं शीतकाले, उष्णकाले लम्बतूलिकास्तरणं तूलासनद्वयं पीठकशय्याग्रयोः । वक्रवेत्रद्वयं वा चतुष्टयं वा त्रयं वा कन्दुकद्वयं तच्चतुष्टयं तत्त्रयं वा । 'मुखवासं सुरभिमत्ताम्बूलाद्य'मिति वाक्यीयाद्यपदात् ।

पादपीठसमर्पणे कीर्तनमाहुः हृदिति ।

**हृत्पङ्कजात्मकं स्वर्णपादपीठं समर्पितम् ।**
**पादौ धृत्वा गोकुलेश हृत्तापं समपाकुरु ॥ ६९ ॥**

सर्वात्मभाववद्भक्तानां हृत्पङ्कजात्मकं सर्वात्मभावस्य भगवत्कृतदानसाध्यत्वेनाक्षरात्मकं हृत्पद्मं वा भक्तसाधारणम् । पादयोः पङ्कजत्वेन तापापाकरणसामर्थ्यात्तापमपाकुरु । पादौ धृतौ पादपीठे हृद्भक्तनिष्ठं तस्य तापापाकरणं 'सर्वतः पाणिपादं त'दिति वाक्यात्पादयोः सर्वत्र सत्त्वात् ।

ततः आरात्रिकं कृत्वा विज्ञापयेद् भक्तार्थेति ।

**भक्तार्थाविर्भूतरूप कृष्ण ते चरणाब्जयोः ।**
**सर्वाशुभविनाशार्थं न्यस्तः पुष्पाञ्जलिः शुभः ॥ ७० ॥**

पृथास्तुतौ 'भक्तियोगवितानार्थं कथं पश्येम हि स्त्रियः' 'भक्ताया भुव उद्धारो भारहारान्निरूपित' इत्यादौ भक्तानामर्थे अविर्भूतरूपः कृष्णस्तस्य संबोधनम् । पुष्पाञ्जलिरिति भक्तिमार्गानुसारेण मुख्या उपचारा इति पुष्पाणां मालास्ता उक्ताः श्रद्धालुश्चेत्करोतु कश्चित् कदाचित् ।

अनेन पुष्पाञ्जलिमर्पयेद् अमङ्गलेति ।

**अमङ्गलनिवृत्त्यर्थं मङ्गलावाप्तये तथा ।**
**कृतमारात्रिकं तेन प्रसीद पुरुषोत्तम ॥ ७१ ॥**

व्याकृतम् । अनुक्तमपि नमस्कारमनेन कुर्यात् । 'प्रसीद भगवन्निति वन्देत दण्डवदि'ति वाक्यात् । अत्रापि प्रसीद पुरुषोत्तमेति दर्शनात् । तदुक्तं गरुडपुराणे 'अन्नं चतुर्विधं पुण्यं गुणाढ्यं चामृतोपमम् । निष्पन्नं स्वगृहे यद्वा श्रद्धया कल्पयेद्धरेः । नैवेद्यं परया भक्त्या घण्टाद्यैर्जयनिःस्वनैः । नीराजनैश्चाहरहः पश्चादापोशनं बुधः । अथ भुक्तवते दत्त्वा जलैः कर्पूरवासितैः । आचमनं च ताम्बूलं चन्दनैः करमार्जनम् । पुष्पाञ्जलिं ततः कुर्याद् भक्त्यादर्शं प्रदर्शयेत् । नीराजनं ततः कार्यं कार्पूरं विभवे सती'ति ।

नक्तं शयनार्थं विज्ञापनस्य वक्ष्यमाणत्वान् मध्याह्ने शयनार्थं विजिज्ञपुः पञ्चभिः प्रीत इत्यादिभिः ।

**प्रीतो देहि स्वदास्यं मे पुरुषार्थात्मकं स्वतः ।**
**त्वद्दास्यसिद्धौ दासानां न किञ्चिदवशिष्यते ॥ ७२ ॥**

'तं भजेदि'ति गोपालतापिनीये दास्यमुक्तं तस्य साधनसाध्यत्वेन दानमनुपपन्नमत उक्तं स्वस्यात्मनो दास्यं सर्वात्मभावरूपं निरोधलक्षणग्रन्थोक्तं तत्तु साधनासाध्यं 'मुक्तिं ददाति कर्हिचित्स्म न भक्तियोगम्' 'प्रदानवदेव तदुक्त'मितिस्मृतिसूत्रवाक्याभ्याम् । 'पुरुषभूषण देहि दास्यम्' इति पञ्चाध्याय्याम् । अतः प्रीतो देहि स्वदास्यं म इत्युक्तम् । पुरुषार्थात्मकमिति । तच्च 'अतस्त्वितरज्ज्यायो लिङ्गाच्च' 'तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्य' इति सूत्रद्वये साधनाध्यायोपान्त्य उपपादितम् । श्रीभागवते च 'तयैव परया निर्वृत्या ह्यपवर्गमात्यन्तिकं परमपुरुषार्थमपि स्वयमासादितमपि नो एवाद्रियन्ते भगवदीयत्वेन परिसमाप्तसर्वार्था' इति । अत एवोत्तरार्धं 'सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत । दीयमानं न गृह्णन्ति विना मत्सेवनं जना' इति च

वाक्यम्। 'भक्तिमार्गे हरेर्दास्यं धर्मोर्थो हरिरेव हि। कामस्तस्य दिदृक्षैव मोक्षः कृष्णस्य चेद् ध्रुवम्' इत्याचार्यकारिका।

एतावदिति।

एतावदेव विज्ञाप्यं सर्वथा सर्वदैव मे।
त्वमीश्वरोसीङ्गितं ते क्षुद्रोऽहं न विदामि हि॥ ७३॥

इङ्गिताज्ञाने सेवा न संभवति। भगवदीयत्वस्य च पुष्टिमार्गीयमोक्षत्वादेतावदेव विज्ञाप्यमन्यत्साधनसाध्यमिति। विप्राय गां ददातीत्यत्र स्वानुमतिप्रकाशनवत्। विज्ञापनद्वारा स्वानुमतिः प्रकाशितात्र। गोवत् सर्वात्मभावदास्यं दास्यतीति सर्वथा सर्वेषु साधनसाध्यतदितरेषु प्रकारेषु। सर्वदा सर्वकालेषु आपत्संपत्स्वपि। तत्तत्सेवाकाल इङ्गितं 'इङ्गितं गतिचेष्टयोः' इति विश्वात्। चेष्टायाः कालत्वात्। क्षुद्रोऽल्पोंश इति यावत्। 'क्षुद्रः स्यादधमक्रूरकृपणाल्पेषु वाच्यवत्' इति विश्वात्। विदामीति विदधातुर्लाभे तुदाद्युभयपदी लभ इत्यर्थः। तादृशकाललाभफलं परगामीति परस्मैपदम्।

तुष्टुवुः स्तवैः परमकारुणिक इति।

परमकारुणिको न भवत्परः परमशोच्यतमो नहि मत्परः।
इति विचिन्त्य सदा मयि किङ्करे यदुचितं व्रजनाथ तथा चर॥ ७४॥

पूर्वश्लोकसङ्गतिस्तु प्रसादयुक्तो हि ददातीति प्रसादानन्तरं स्वदास्यदानविज्ञापनम्। स्वदास्ये इङ्गितलाभः कारणमितीङ्गितलाभविज्ञापनं तदनन्तरं वैराग्योत्कर्षात्स्वस्मिन्विचिकीर्षितमधीष्टीक्रियते 'निवेदितात्मा विचिकीर्षितो म' इति वाक्यात्।

किञ्च कियानिति।

कियान्पूर्वं जीवस्तदुचितकृतिश्चापि कियती
भवान् यत्सापेक्षो निजचरणदास्ये बत भवेत्।
अतः स्वात्मानं स्वं निरुपममहत्त्वं व्रजपते
समीक्ष्यास्मन्नेत्रे शिशिरय निजास्याम्बुजरसैः॥ ७५॥

कियान्पूर्वं जीवोऽणुरित्यर्थः। अणूचितकृतिश्चापि कियत्यण्वीत्यर्थः। यस्याः कृतेः सापेक्षो यत्सापेक्षो भवान् साधनसापेक्षो बत इति खेदे भवेत्। मर्यादायां साधनसापेक्षोऽहं भवाम्येवेत्यत आहुर्निजचरणदास्य इति लक्ष्मीवद्भवेदित्यर्थः। चरणदास्ये लक्ष्म्या अधिकारात्। पुष्टिफले दास्य इति चरणपदेन ज्ञाप्यते। व्रजभक्तभावेन भजतः फलं नित्यलीलायां प्रवेश इत्यर्थः। अतस्तादृशफलानुरूपसाधनाभावात् स्वात्मानं निःसाधनजनोद्धारकं 'अह्नधापूतमि'ति वाक्यात्। स्वं महत्त्वं जीवन्मुक्तेऽप्यणुत्वसमानाधिकरणमतोऽनुग्रहमात्रात् तन्निष्ठाकृतिरपि महती पुष्टिफलोपयुक्ता तु निरुपममहती निरुपममहत्त्वं च स्वम्। निजास्यमेवाम्बुजं तस्य रसैरास्वादनैः तदनुभवैरित्यर्थः। विरहस्य 'सेवित' इत्यनेन वक्ष्यमाणत्वाद्विरहतप्ते नेत्रे शिशिरयेत्यधीष्टम्, अधीष्टे लोडिति।

किमित्यधीष्टीक्रियते पुष्टौ प्रवृत्त्यर्थं साधनानां विषमानत्वान्मर्यादायां स्थितेरुत्कर्षायथाशास्त्रं साधनानि विधीयन्तामित्याशङ्कमानं प्रत्याहुर्भगवन्तं स्वदोषानिति।

स्वदोषान् जानामि स्वकृतिविहितैः साधनशतै-
रमेयांस्त्वत्कुं चापडुतरमना यद्यपि विभो।

तथापि श्रीगोपीजनपद्परागाश्रितशिरा-
स्त्वदीयोऽस्मीति श्रीव्रजनृप न शोचामि मुदितः ॥ ७६ ॥

स्वदोषा 'गुणदोषौ शुभाशुभा'विति वाक्यादशुभाः संशोध्या अशुचित्वबहिर्मुखत्वादयस्तान् । ते च जलकूपीटयोनिश्रीभागवतानुसन्धानैः साधनैः संशोध्यन्तां इति चेत्तत्राहुः साधनानां शतं यत्र तादृशैः स्वकृतिविहितैर्वस्तुभिरमेध्यान् मेतुमयोग्यान् आसमन्तात् पुष्टिफलाय पटुतरं साधनं यथा भवति तथा तानमेध्यांस्त्यक्तुं च न शक्नोमि इति शेषः । ननु पुष्टावत्यन्तानुग्रहेतरसाधना-साध्यत्वात्साधनोक्तिर्विरुद्धेति चेन्न । 'संयोगे वियोगवृत्तिः प्रेमे'ति शाण्डिल्यसूत्रभाष्ये वियोगे संयोगवृत्तिरपि गृहीतेति तां वृत्तिमादाय दोषाभावात् । अपटुतरो ह्यनापद्यपीति वा पाठः । तर्हि शोचथ दोषसत्त्वे भक्त्यभावादिति चेद् 'एतᳪह वा व न तपति किमहᳪ साधु नाकरवं किमहं पापमकरवमि'ति श्रुतेरेवंविदं शोको न तपतीत्याहुः तथापीति । श्रीगोपीजना आविद्याकलाः परि-दृश्यमानाः तासामचतुरश्रीगोपीनां पद्परागो धूलिस्तत्पूजितशिराः गोप्यो मेघवद्वर्षन्ति ह्यतस्त-दर्शितलीलेन शिरोधृतं रजोऽतस्त्वदीयोऽस्मीत्यनुमाय पुष्टिर्मय्यस्तीति दोषाणां भक्त्यप्रतिबन्धकत्वं चाज्ञाय प्रमुदितो न शोचामि अतः संबोधनं व्रजनृपेति व्रजस्य निःसाधनस्य नृप ।

एवम्, 'आन्तरं तु परं फल'मिति 'सेवित' इति श्लोके वक्ष्यमाणपरफलार्थमपि विज्ञाप्य प्रास-ङ्गिके मध्याह्नशयनगोचारणेऽधीष्टेऽकार्षुः प्रियेति ।

प्रियासङ्केतकुञ्जीयवृक्षमूलेषु पल्लवैः ।
कृतेषु भावतल्पेषु क्रीडन् गोचारणं कुरु ॥ ७७ ॥

'मुदा चन्द्रावल्याः कुसुमशयनीयादि रचितु'मित्यादि श्रीगोस्वामिग्रन्थे । भावतल्पेष्विति बहुवचनेनेदानीन्तनकृतशय्यामन्दिरतल्पसङ्ग्रहः । कृतमार्जनमन्दिरवस्त्रशय्यामन्दिरे शय्यायाः कृतसेवाया यथाकालं तदुपर्योच्छादिताया दक्षिणपार्श्वे शय्याभोगं तदधोदेशे जलपात्रं च निधाय वामपार्श्वे ताम्बूलतष्टीमालाव्यजनानि चतुष्पट्टिका सूक्ष्मसिंहासनं च स्थापयेत् । 'मुखवासं सुरभिमत्ताम्बूलाद्य'-मिति वाक्ये आदिपदात् । भावनात्रत्या श्रीहरिरायाणाम् । ततश्च 'इति शेषां मया दत्तां शिरस्याधाय सादर' इति वाक्योक्तं मालाताम्बूलादि ग्राह्यम् । पुष्टिमार्गीयं विलासं हृदि स्वाधीष्टमकार्षुः ।

सेवित इति ।

सेवितोऽत्र हरे रन्तुं गृहे मद्धृदयात्मके ।
निमीलयामि दृग्द्वारं विलसैकान्तसद्मनि ॥ ७८ ॥

'तं काचिन्नेत्ररन्ध्रेण हृदिकृत्वे'ति फलप्रकरणे वाक्यम् ।

ततो वस्त्रप्रक्षालनादिकं कुर्याद् वस्त्रेति ।

वस्त्रप्रक्षालनाद्दुष्टसंसर्गजमनोमलम् ।
महत्सेवाबाधरूपं मम कृष्ण निवारय ॥ ७९ ॥

'अकामः सर्वकामो वा मोक्षकाम उदारधीः । तीव्रेण भक्तियोगेन यजेत पुरुषं पर'मिति वाक्याद् दुष्टसंसर्गजमनोमलनिवृत्तिकामनया वस्त्रप्रक्षालनं 'स्वयं परिचरेद्भक्त्या वस्त्रप्रक्षालना-दिभि' रिति सेवाप्रकरणे निबन्धस्य । आदिपदेन पुस्तकावलोकनमहाप्रसादग्रहणशयनव्यवहारादि ।

सायंसेवामाहुः । ततश्चतुर्थप्रहरे प्रसुप्तं प्रबोध्य फलादिकमर्पयेदिति । षड्घटिकात्मके दिने उर्वरिते प्रसुप्तं भगवन्तं प्रबोध्य गावो गोपाश्च व्रजे जिगमिषवोऽतः शीघ्रं जागृहीत्यादिभावनोक्त-प्रकारेण व्रजभक्तसम्बन्धानुकरणेन प्रबोध्य फलमूलकन्दादिकमर्पयेदित्यर्थः ।

समर्पणे कीर्तनभक्तिमाहुर्यथेति ।

**यथा गोवर्धने भुक्तं फलमूलादिकं हरे ।**
**रामेण सखिभिः सार्धं पुलिन्दीभिः समर्पितम् ॥ ८० ॥**
**तथा फलादिकं सर्वं भुङ्क्ष्व भावार्पितं मया ।**
**पुलिन्दीवद्भावदानात् सार्थकं जन्म मे कुरु ॥ ८१ ॥**

**गोवर्धने** श्रीगोवर्धनसमीपे 'वटे गावः सुशेरते' इतिवत्सामीप्ये सप्तमी । **पुलिन्दीभिरिति** । 'पूर्णाः पुलिन्द्य' इत्यत्र व्याख्याने ता अप्युपभुक्ता इत्युक्त्या सान्निध्यात् । 'हन्तायमद्रि'रित्यत्र कन्द-फलमूलादिकं पुलिन्दीभिराहृतं श्रीगोवर्धने स्थितं तदादिभिः समर्पितं प्रकरणाच्च 'उभयाकाङ्क्षा हि प्रकरणम्' प्रमाणमिति पूर्वतन्त्रकाराः । पुलिन्दीनां पूर्णत्वेन फलाद्याहार्याकाङ्क्षा फलादीनामाहारकाकाङ्क्षा एवं च साहचर्यादुभयोरङ्गाङ्गिभावः । **भावार्पितमित्यत्र** भावः क इत्यपेक्षायामाहुः **पुलिन्दीवदिति** । पुलिन्दीनां यथा भावो दत्तः 'पूर्णाः पुलिन्द्य' इत्यत्रोक्तः स्मररूपः स तुभ्यं श्रीराधा-श्रीसखीभ्यां मन्थरगत्या निकुञ्जे नीताय व्रजभक्तैर्दृष्टाय व्रजतरुणीकण्ठे हस्तायोस्थापनभोगं समर्प्य यतो मम जात इति । एतावत्पर्यन्तं जन्म निष्फलं गृहे त्वां सेवमानस्य वने गमनाभावादपूर्णलक्षणमिदानीं तु वनभावनाया अत्र मन्दिर एव कृतत्वात् कुङ्कुमादि मुखादौ तिलकादिरूपेण लेपयि॑त्वोपस्थितस्य स्मरण-रुक्छमनरूपं तादृशकुङ्कुमाद्यर्थेन सह वर्तमानं **सार्थकम्** । ननु कुङ्कुममिदानींतनानां कुङ्कुमतिलकरूपं वैष्णवलिङ्गं न तु तच्छमनाय लक्ष्मीप्रवेशद्वारमिति चेन्न । भावशमनार्थं धारणं भाववतामविरुद्धमिति । एतादृशं **सार्थकं मे** मम **जन्म कुरु** । अत्र किं मानमिति चेन्न । 'एककालं द्विकालं वा त्रिकालं वाऽपि पूजयेत्' इति निबन्धः श्रीभागवतं च 'अथार्हयेदि'ति । वाराहेपि षोडशे च 'ततः सायं प्रकुर्वीत मम पूजां तु भक्तितः । नानाविधानि खाद्यानि फलानि विविधानि च । नवनीतं दधि क्षीरं घनमाज्यं सुगन्धितम् । विकारानैक्षवांश्चापि शर्करादीन् स्वशक्तितः । निवेद्य मां सताम्बूलं दक्षिणां च स्वशक्तितः । ततो नीराजयित्वा तु प्रणम्यापि च भक्तित' इति । अत्र व्यवस्था श्रीमदाचार्याणामाज्ञया विधीयते । 'सेवाकृतिर्गुरोराज्ञा बाधनं वा हरीच्छये'ति नवरत्नात् । विष्णुरहस्ये च 'अविज्ञाय विधानोक्तां हरिपूजाविधिक्रियाम् । कुर्वन्भक्त्या समाप्नोति शतभागं विधानत' इति । शतांशं फलं शतभागम् । तत्र भगवतांश्चाचार्याणां कुम्भनदासादीन् पृच्छतः प्रत्याज्ञा । नानाविधानि खाद्यानि शयनभोगे, उत्थापन-समये तेषां दुःकरत्वाच्च । अतः फलानि विविधानि कन्दमूलफलानि समर्पणीयानि । विकारानैक्षवां-श्चापि शर्करादीनपि, सन्ध्याभोगे शीतलपानकरसादिकं नार्पयेदित्याज्ञया उत्थापने समर्पणीदम् । जल-पात्रं पुनर्भर्तव्यं तदाज्ञात एव । भावनाप्यत्रास्ति महानुभावानाम् । ननु पुराणपाठक्रमो बलीयानाचार्यो-पदेशत इति पाठक्रमोऽस्तु हीति चेन्न । पुराणस्याप्राप्तविधिनापि चारितार्थ्ये श्चाचार्योपदेशस्यानुष्ठान-स्मारणायैवाभिव्यक्तस्य बाधनायासामर्थ्यात् । तदिदं पूर्वतन्त्रे पञ्चमस्य नवमाधिकरणे चिन्तितम् ।

ततो घटिकानन्तरं भोगं विसृज्याचमनमुखवस्त्रताम्बूलमालोत्थितवेणुवेत्रचतुष्पाद्यः समर्प्याः । तदनन्तरं कृत्यमाहुः । ततो व्रज आगच्छन्तं विज्ञापयेद् **बलभद्रादय इति** ।

**बलभद्रादयो गोपा गावश्चाग्रे च पृष्ठतः ।**
**गोपिकावेष्टितो मध्ये रणद्वेणुर्व्रजागमात् ॥ ८२ ॥**
**दिवा विरहजं तापं व्रजस्थानां यथाहृतम् ।**
**तथा मल्लोचने नाथ शिशिरीकुरु संततम् ॥ ८३ ॥**

प्रागेव श्रीगोवर्धननगे वेणुं क्वणन्नारूढस्तदाज्ञया बलभद्रादयो बलभद्रसंबद्धिनो गोपाः गावश्चाग्रे तत्रापि गावः पृष्ठतः । च पुनरात्मनो गोपाः गवां पृष्ठतः सर्वासां स्वयमात्मा कमलहस्त एकाकी वनं दृष्ट्वा स्वगोपेष्वागत्य वने दिदृक्षुभक्तदर्शनार्थं सार्थं त्यक्त्वाऽग्रेऽग्रे गत्वा भक्तान् रहस्स्थलं प्रदर्श्य ताभिर्गोपिकाभिर्वेष्टितो मध्ये रणद्वेणुर्बलभद्रादिसर्वसहितो व्रजस्यागमात् द्विवा विरहजं तापं व्रजस्थानां गोगोपिकानां गृहस्थितानां गोधूलिं दृष्ट्वानेकफलहस्तानाम-मनेकखाद्यहस्तानां जलपात्रचतुष्पादीमुखवस्त्रताम्बूलाभरणाचमनपात्रवस्त्रहस्तानां परस्परं दत्तकरताल-कानां सन्ध्याभोगस्वीकारेण हृतवान् । तापपदस्य नपुंसकत्वे तथैव । तथा नामैवंप्रकारेण मल्लोचने शिशिरीकुरु सन्ततं निरन्तरम् । ततो यत्किञ्चिन्मोदकादि समर्पयेत् । ततो विज्ञापनानन्तरं मोदकादीत्यत्रादिपदेन पूर्वोक्तं व्रजभक्तहस्तगतं सर्वम् ।

कीर्तनमाहुः श्रीति ।

श्रीमन्नन्दयशोदादिप्रेम्णा भुक्तं व्रजे यथा ।
भोजनं कुरु गोपीश तथा प्रेमार्पितं हरे ॥ ८४ ॥

अत्र भावनानुरोधेनार्थाच्छ्रीमन्नन्दयशोदे आदी यासां व्रजभक्तानामित्यतद्गुणसंविज्ञानो बहुव्रीहिः । अत एव गोपीशेति संबोधनम् । तत आरात्रिकं कृत्वा शृङ्गारोत्तारणार्थं विज्ञाप्योत्तार्य पयःफेनं पयो वा समर्पयेत् । ततो व्रजभक्तानीतत्वेन स्मृताचमनमुखवस्त्रताम्बूलसमर्पणानन्तरं सखी-बोधितपुत्रागमनत्यक्तपुत्रविरहया स्वकृतमालार्पितया स्वगृहे नीतपुत्रया पुत्रसंक्रादितोत्तरीयया कृता-रात्रिकं स्मृत्वारात्रिकं कृत्वा उत्तार्येति ।

अत्र कीर्तनमाहुः राधिकेति ।

राधिकाश्लेषान्तरायभूषणोत्तारणात् प्रभो ।
निशि तत्कृतशृङ्गाराङ्गीकारार्थं प्रसीद मे ॥ ८५ ॥

शृङ्गारोत्तारणं तु पूर्वं मुकुटोत्तारणम्, पश्चात् काञ्चनीपदवाच्यकटिवस्त्रोत्तारणम्, एवं क्रमेण यशोदया कृतमेव । तत्कृतशृङ्गार उष्णीषादितिलकतन्मुक्ताफलावलियुगलोरस्थितमुक्तामालानासा-भूषणचिबुकाभरणकर्णफूलकण्ठमालाकराभरणनूपुरमुद्रिकानखभूषणनीवीरचितः । पयःफेनमित्यादि ।

अत्र कीर्तनमाहुः व्रजेति ।

व्रजे स्वानन्दतो दोहं बलेन सह गोपकैः ।
कृत्वा पीतं पयःफेनं तथा पिब व्रजाधिप ॥ ८६ ॥

व्रजे गोस्थाने स्वानन्दतः 'आनन्दभु'गिति श्रुतेः, पीतमित्यनेनान्वयि, स्वयं दोहं कृत्वा गोपकैः शृङ्गारं राभ्युषितं कृत्वा वनसंबन्धिनीं वार्तां पृच्छन्त्या यशोदाया अभिमुखे स्थितात्मभगवन्तं धारोष्णदुग्धपानार्थं विज्ञापकैर्गोपकैस्तथानन्दद्वारकत्वेन प्रकारेण पिब । ननु नाहं पिबामि, आनन्दः पास्यतीति, तत्राहुः व्रजाधिपेति । व्रजस्य स्वीकृतस्याधिप, अहमपि स्वीकृतः, अतः पिब । आचमनमुखवस्त्रताम्बूलानि ततः समर्पणीयानि । अग्रिमां व्यवस्थामाहुः । तमोदीपं निवेद्य निशि दुग्धान्नादि समर्प्य शयनार्थं विज्ञाप्य शयनं कारयेदिति ।

तमोदीपनिवेदने कीर्तनमाहुः वासरीयेति ।

वासरीयवियोगार्तराधिकास्यावलोकने ।
दीपार्पणाद्गोपिकेश प्रसीद करुणानिधे ॥ ८७ ॥

वासरीयवियोगार्तस्य भगवतो राधिकेत्यादि । 'अस्यैव चोपात्तेरूम्मे'ति व्याससूत्रात् । राधिकाया वियोगस्य व्रजागमात् परिहृतत्वाच्च । तमोदीपस्य यत्किञ्चिदिवससत्त्वेऽर्पणस्य श्रीमदाचार्याज्ञाविषयत्वेन निशीत्युत्तरान्वयि फक्किकायाम् ।

निशि दुग्धान्नादिसमर्पणे कीर्तनमाहुर्दुग्धेति ।

**दुग्धान्नादि यथा भुक्तं रोहिण्युपहृतं निशि ।**
**व्रजनायक भोक्तव्यं तथैव हि मदर्पितम् ॥ ८८ ॥**

वाराहीयवाक्येपि विविधानि खाद्यानि भक्तसूपशाकसन्धितलवणपर्पटरूपाणि शयनभोगे वाराहीयवाक्ये 'दधि क्षीरं घनमाज्यं सुगन्धितमि'त्यस्मिन् दधि तक्रलक्षकं क्वथितचणकचूर्णादिमिश्रित तक्रलक्षकं च 'कढी'ति लोके 'क्षीरं घनमाज्यं च सुगन्धितम् । एलाकर्पूरयुतं च पेयं तदि'ति गुसरसात् । क्षीरं च सुगन्धितम् । तत्र दुग्धान्नं यशोदया प्रथमं भोजितमिति दुग्धान्नादीत्युक्तम् । रोहिण्युपहृतमिति । गोष्ठे गते भगवति यशोदा भक्तसूपादिकं शयनभोगार्थमपचत्, ततो रोहिणी पाकरक्षार्थं निरूप्य गोपगोपबालगोपीः पृष्ट्वा गोष्ठं गत्वा भगवन्तमुक्तवती, भोज्यं सम्पाद्य मयागतम्, स्त्रियो गृहे गायन्ति, रोहिणी भोजनकालं प्रतीक्षमाणास्ते इति, ततो भगवन्तमुत्सङ्गे कृत्वा, रामं चैकहस्तेन गृहीत्वा गृहे नीतवती, तदनन्तरं बलं दक्षिणभागे उपवेश्य स्वयं वामभागे उपविवेश, सखी जलपात्रं वामभागेऽधरत्, रोहिणीजित्तु ज्ञात्वा महास्थालीमानीय भगवदग्रे धृतवती, बलं दृष्ट्वा हृष्टवती, तद् रोहिण्युपहृतं तथैव पूर्वोक्तरीत्या रोहिण्युपहृतभोक्तृत्वेन । यशोदाजिद् दुग्धौदनं प्रथममत्याग्रहेण मुखेऽकरोत् । धूपदीपावर्घ्यं च यथादृष्टं कर्तव्यम् । ततो घटिकानन्तरं कृत्यमाहुः । ततस्ताम्बूलाचमनादिकं विधाय, आरात्रिकं कृत्वा, शयनार्थं विज्ञाप्य, शयनं कारयेदिति । आदिपदेन मुखवस्त्रमालाचन्दनस्थलपद्मजलानि, गुलाबजलमिति लोके । 'अर्हयेदि'ति वाक्यात् । 'उपगायन्ती'ति स्मरणाद् गानं स्वस्य अन्यस्य वा शयनार्थमित्यादिपूर्वोक्तानुवादः ।

शयनार्थं विज्ञापने कीर्तनमाहुः 'गृणन्ती'ति स्मरणाद् भावेति ।

**भावात्मकास्मद्धृदयपल्यङ्के शेषरूपके ।**
**रमस्व राधया कृष्ण शयानो रसभावतः ॥ ८९ ॥**

रसभावान् प्राप्येति रसभावत इत्यस्यार्थः । तदुक्तम् 'नमामि हृदये शेषे लीलाक्षीराब्धिशायिनम् । लक्ष्मीसहस्रलीलाभिः सेव्यमानं कलानिधि'मिति दशमसुबोधिन्यारम्भे ।

इदं च कीर्तनीयम्, तदाहुः अयीति ।

**अयि व्रजसखि व्रज व्रजवधूकदम्बाम्बिका-**
**समर्हणफलीभवच्चरणपङ्कजस्यान्तिकम् ।**
**नितम्बमिलदम्बरक्वणितहेमदामाङ्गना-**
**वृतस्य नलिनावलीप्रतिभटप्रभस्य द्रुतम् ॥ ९० ॥**

ननु श्रुतिरूपाणां वृत्तान्तं परित्यज्य ऋषिरूपाणां वृत्तान्तपरिग्रहे किं बीजमिति चेन्न । अत्र भक्तिवर्धिनीनवरत्नश्रीभागवतोक्तरीत्या सेवोपक्रान्ता, भक्तिवर्धिन्यां तु 'गृहे स्थित्वा स्वधर्मतः । अव्यावृत्तो भजेत् कृष्णं पूजया श्रवणादिभि'रित्युक्तम्, पूजायामपि 'भक्तिमार्गानुसारेण उपचारा मुख्या' इति भक्तिमार्गानुसार उक्तः । 'पत्रं पुष्प' मित्यत्र 'कुर्यात सर्वाणि कर्माणी' त्यादिपद्यत्रिके च भक्तिमार्गानुसारिणां प्रपञ्च उक्तः । अत्र च ऋषिरूपाणां वृत्तान्तप्रसक्तिः, न श्रुतिरूपाणाम् । ता

ह्यन्यपूर्वास्तासां त्यागोऽङ्गम् । एतासां तु ह्यत्यागः । 'अत्यागस्त्यागादुत्तम' इति निरूपयितुं साधनप्रकरणे व्रतचर्योक्तेत्यादि 'हेमन्ते प्रथमे मासी' त्यादिपद्येषु । तट्टिप्पण्यादौ च स्फुटम् । अत ऋषिरूपाणां परिग्रहः । तत्र अयीत्यनुनयः । 'अयि प्रश्नानुनययो'रिति विश्वात् । अत्राधिकारः कृतपुण्यपुञ्जानामृषिरूपासजातीयभाववताम् । तथा चोक्तं महाकौर्मे 'अग्निपुत्रा महात्मानस्तपसा स्त्रीत्वमापिरे । भर्तारं च जगद्योनिं वासुदेवमजं विभु'मिति । पद्मपुराणेऽपि 'दण्डकारण्यवासिनामृषीणां श्रीकोसलेन्द्रे रिरंसाभर उक्तः । व्रजसखीति सम्बोधनं व्रजवधूनां कदम्बः सिद्धार्थस्तद्रूपमम्बिकायाः समर्हणं तत्फलीभवच्चरणपङ्कजं तस्यान्तिकं समीपं व्रज । नितम्बो हि कटितटः स्कन्धो वा, तत्र मिलदम्बरं तच्च क्वणितं शब्दयुक्तं हेमदाम हेमरज्जुः कट्याभरणरूपं कराभरणरूपं वा । तत्र ते आलिङ्गनविशेषे । तादृशहेमदामयुक्ताङ्गना-नितम्बमिलदम्बरक्वणितहेमदामाङ्गना तया तामिर्वा वृतस्य । किञ्च नलिनानां कमला-नामावल्यस्तत्सदृशी प्रभा कान्तिर्यस्य पङ्क्तिसादृश्यमङ्गुलिद्वारा । क्रीडायामनेकत्वमप्येकस्या-विरुद्धं योगिवत् ।

एवमष्टविधकामान्तर्गतोऽमर्यादभोगस्तमाहुः निर्भरमिति ।

**निर्भरं क्रीडतोरालि कुञ्जे विगतवाससोः ।**
**अन्योन्यप्रभयैवासीदन्योन्यस्योचितांशुकम् ॥ ९१ ॥**

कौ जायत इति कुञ्जः पृषोदरादिः । अन्योन्यप्रभया 'कोटिसूर्यसमप्रभ' इति पुरुषोत्तम-सहस्रनाम्नि नाम्नश्चिक्रीडिषायाः प्रभानियामकत्वेन प्रभाया उचितांशुकत्वम् । नयनतेजोनुपहारकत्वं तत्तदवयवयोग्यत्वमुचितत्वम् । ततोन्योन्यप्रभयेत्यत्र 'प्रकृत्यादिभ्य उपसङ्ख्यानमि'ति वार्तिकेनाभेदे तृतीया अन्योन्यप्रभाभिन्नमन्योन्यस्योचितांशुकमित्यर्थः ।

श्रमशयनमाहु रतीति

**रतिश्रमशयानयोरलसलोचनाम्भोजयोः**
**कलं किमपि कूजतोरभिमुखं मिथः सस्मितम् ।**
**रताङ्गभरिताङ्गयोर्मिलितजानुसंवाहने**
**पदाम्बुजतलानि मद्धृदि लुठन्तु राधेशयोः ॥ ९२ ॥**

किमप्यनिर्वचनीयम् । रता च रतश्च रतौ तौ चाङ्गभरिताङ्गौ च तयोः । अङ्गो भूषणम् । एतादृशराधेशयोः पदाम्बुजतलानि । मिलितानि जानूनि तेषां संवाहनार्थं निमित्ते सप्तमी चर्मणि द्वीपिनं हन्तीतिवत् । मद्धृदि लुठन्तु लुट लुठ उपघाते भ्वादिः परस्मैपदी सेट् प्रार्थने लोट् । 'प्रार्थिते वा ततः किं स्यादि'त्यस्य रत्यतिरिक्तविषयत्वाद् 'रतिप्रादुर्भावो भवतु सततं श्रीपरिवृढ' इत्यत्र तथा निश्चयात् । दाक्षिण्येन गच्छतु । 'उपसामर्थ्यदाक्षिण्ये'ति विश्वाद्, हन हिंसागत्योरदादिः परस्मैपद्यनिट् ।

अतिदुर्लभत्वात्सन्दिहानाः फलाप्तौ संशयमाहुः केलीति ।

**केलीभ्रान्तशयानश्रीराधाश्रीशपदसरोजानि ।**
**कृपया कृतानि मदुरसि कदानु संलालयिष्येऽहम् ॥ ९३ ॥**

अनु संशये ( अनु संशये चेति ) अनु पश्चाद्वा 'पश्चात् सादृश्ययोरन्वि'ति विश्वकोशे । मत्कर्तृकं संलालनं भविष्यत्कालिकं अनु संदिग्धमित्यर्थः ।

विज्ञापनामाहुः प्रातरिति ।

**प्रातः कुञ्जगृहाद्बहिर्यदि समागत्य स्थिता त्वं भवस्य-**
**म्भोजाक्षि ददासि चर्वितमिदं चाकार्यं हस्तेन तु ।**
**ताम्बूलस्य यदा पुनस्तदिह सच्छिद्रस्य मुक्त्यापि च**
**कार्यं किं सततं प्रसीदसि यदि त्वं स्वामिनीत्थं तदा ॥ ९४ ॥**

**हस्तेनाकार्यं सच्छिद्रस्य** मम । सच् छिद्रं जीवरूपं यस्य देहादिसङ्घस्य । पुष्टिफलस्यात्यन्तानुग्रहसाध्यस्य मुक्तजीवापेक्षाभावेपि मार्गरीत्या ज्ञानिनो मर्यादाभक्तस्य वा पुष्टिभक्त्युक्तेर्न दोषः । **मुक्त्यापि कार्यं च किम्**, न किमपीत्यर्थः । 'तदापीतेः संसारव्यपदेशा'दिति व्याससूत्राद् अपीतेर्मोक्षस्य । **त्वमित्थमहोरात्रं सततं** निरन्तरं **प्रसीदसि** । ननु सायं सेवां विधाय न किञ्चित् कृत्यम्, प्रातः पुनस्ताम्बूलचर्वितग्रहणमिति कथमहोरात्रं सततं प्रसीदसीत्युक्तमिति चेन्न रात्रौ ताम्बूलचर्वितग्रहणानन्दिना स्थितं निद्रा तु सेवायामालस्याभावायेति सततमेवेति । ननु संसारवन्मुक्तेरपि हेयत्वं यत्र तादृशं चेत् पुष्टिमार्गीयं तत्त्वम्, तदा मुक्तेः पुरुषार्थत्वबोधिकायाः श्रुतेः प्रतारकत्वमापततीति तद्बोधकप्रमाणानां तत्स्तुतिमात्रपरत्वमिति चेन्न 'सूक्ष्मं प्रमाणत' इत्यादिसूत्रेऽस्याः शङ्काया निरासात् ।

**एतावती श्रीगोपीनाथजितां पद्धतिरूपा कृतिः ।**

ननु सगुणं ब्रह्मेदम्, न तु निर्गुणमिति चेत् तत्राहुः श्रीति ।

**श्रीवल्लभाचार्यमते फलं तत्प्राकट्यमत्राव्यभिचारिहेतुः ।**
**प्रेमैव तस्मिन् नवधोक्तभक्तिस्तत्रोपयोगोऽखिलसाधनानाम् ॥ ९५ ॥**

निर्गुणं ब्रह्माखिलसाधनान्तर्गतशमाद्युपेतस्याध्यात्मिकचित्तशुद्धिमतो ज्ञानफलमक्षरम्, सगुणं च धारणाश्रयो विराडात्मा, स च 'ततो विराडजायते'ति श्रुतेः पुरुषावतारः । 'अतो ज्यायांश्च पूरुष' इति श्रुतेः । पुरुषस्तु ततो ज्यायान् उभयव्यपदेशाधिकरणोक्तो भक्त्यैकलभ्यः 'यमेवैष वृणुत' इति श्रुतेः । अतो निर्गताः प्राकृता गुणा यस्मात् तन् निर्गुणमितीदं निर्गुणमेव रूपम् । तदुक्तं 'मन्निष्ठो निर्गुणः स्मृतः' इति भगवन्निष्ठस्य निर्गुणत्वे भगवतो निर्गुणत्वे किमु वक्तव्यम् । यत्तु विश्वकोशे प्रकृतिपदं परमात्मनि प्रयुक्तम्, तदपि 'प्रकृतिमगन् किल यस्य गोपवध्व' इत्यत्र प्रकृतिपदस्य स्वरूपपरत्ववत् स्वरूपे प्रयुक्तम् । यद्वा । एतादृशफलप्राप्तिः कुतः साधनादित्याकाङ्क्षायामाहुः श्रीति । **फलं तत्प्राकट्यम्** । 'एतेन स्वरूपस्यैव फलत्वमुक्तं भवतीति मुख्यः सिद्धान्तः सूचितो भवती'त्यादि 'आदित्यादिमतयश्चाङ्ग उपपत्ते'रिति सूत्रभाष्यात् । **प्रेमैवेति** । साधनाध्यायोपान्त्ये 'श्रुतेश्चे'ति सूत्रे 'भक्तिरस्यभजनं तदिहामुत्र फलभोगनैराश्येनैवामुष्मिन् मनःकल्पनमेतदेव च नैष्कर्म्य'मिति श्रुतिरुदाहृता । मनःकल्पनं प्रेमापरपर्यायमित्युक्तं प्राक् । **नवधोक्तेति** वाक्यान्वयाधिकरणे उपपादितम् । **तत्रोपयोगो** नवधाभक्तावुपयोगः । उपासनायाश्चित्तशुद्धिद्वारा भक्तावुपयोगो भाष्ये ज्ञान उपयोगेपि भक्तावेवोपयोगो भक्तेर्ज्ञानव्यापारत्वात् । एवं साङ्ख्यं योगश्च स्वतो मुक्तिसाधकौ भिन्नौ । **अखिलसाधनानां** धर्मादीनामित्यर्थः । एतच्च 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदि'ति सूत्रभाष्ये निरूपितम् ।

'ननूक्तं मर्यादाभक्तिफलं पुष्टिभक्तिफलं केन इत्यपेक्षायां तद्विशेषसर्वात्मभावेनेत्याहुः तत इति ।

**ततो यदिन्दीवरसुन्दराक्षीवृतस्य वृन्दावननन्दिताहेः¹ ।**
**सर्वात्मभावेन सदास्यलास्यमस्यानिशं सानु फलानुभूतिः ॥ ९६ ॥**

---

१. अङ्गेरितिपाठः ।

ततः प्राकट्यानन्तरं **इन्दीवरसुन्दराक्षीवृतस्य वृन्दावननन्दितांह्रेरस्य सर्वात्मभावेन अनिशं सदास्यं लास्यं यत् सानु फलानुभूतिः** । इन्दीवरं कमलं तद्वत् सुन्दरे अक्षिणी यासां ताभिः संवेष्टितस्य तापापहारिभक्तिमार्गीयज्ञानवतीसंवेष्टितस्य 'स्वामिन्यो गुरव' इति वाक्याद्गुरुसंवेष्टितस्य तस्य तापापहारिभक्तिमार्गीयज्ञानवत्त्वात् । एतादृशस्यांह्रेः भक्तिमार्गे भक्तिरूपांह्रेः सेव्यत्वात् । तदुक्तं 'विधिर्वा धारणव'दिति सूत्रभाष्ये । याम्यां पङ्क्त्यां 'हृत्पद्मकर्णिकाधिष्ण्यमाक्रम्यात्मन्यवस्थितम्' समर्चताम् । तयोर्द्वयोरेकस्य वांह्रेः समर्चनद्वारेश्वरार्चनं मर्यादायाम्, पुष्टौ तु 'वृन्दा भक्ति'रिति कृष्णोपनिषत् तयोपलक्षितं वनं **वृन्दावनं** तत्र **नन्दितस्य** समृद्धितस्यांह्रेः । अयमर्थः । वृन्दावने सच्चिदानन्दो भगवान् सेव्यः, तदुक्तं गोपालतापिनीये वृन्दया वृन्दावनमिति द्वादशमं वनमुक्त्वा 'द्वादशी तु भूम्यां तिष्ठति, ता हि ये यजन्ति, ते मृत्युं तरन्ति, मुक्तिं लभन्त' इति श्रुतौ कृष्णमूर्त्युक्तेः । ननु कथं कृष्णमूर्तिलाभ इति चेन्न । तत्र हि रामस्य राममूर्तिः, प्रद्युम्नस्य प्रद्युम्नमूर्तिः, अनिरुद्धस्यानिरुद्धमूर्तिः, कृष्णस्य कृष्णमूर्तिरित्युक्त्वा 'वनेष्वेवं मथुरास्वेवं द्वादशमूर्तयो भवन्ती'त्यत्र तृतीयावृत्तौ द्वादशी कृष्णमूर्तिर्द्वादशमे वृन्दावने सिध्यतीति । एवं च वृन्दावनसमृद्धितोंह्रिद्वारा 'स्वे महिम्नि प्रतितिष्ठती'त्यंह्रिद्वारा वृन्दावनसमृद्धितो भगवान् सेव्यः । विशेषस्तु स्त्रीभिः समृद्धिस्तद्रूपो वेणुगीते । अस्य प्रत्यक्षीकृतस्य 'शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः स्मरन्ति नन्दन्ति तवेहितं जनाः । त एव पश्यन्त्यचिरेण तावकं भवप्रवाहोपरमं पदाम्बुज'मिति वाक्यात् । भगवद्दत्तेन सर्वात्मभावेन पुष्टौ लिङ्गभूयस्त्वाधिकरणोक्तेनानिशं सदा सदास्यं दास्येन सह वर्तमानं लास्यं तौर्यकम् 'लास्यं तौर्यत्रिक' इति विश्वात् । तुर्यमेव तौर्यं तौर्यमिव यथावदज्ञातं वा तौर्यं तौर्यकं देवं 'देवस्तुर्यो विभुः स्मृत' इति मण्डूकोपनिषदः । एतादृशं दास्यं यत् सा अनु मर्यादाभक्तिमनु पश्चात् फलं भजनानन्दस्तस्यानुभूतिः । सर्वात्मभावेनेत्यभेदे तृतीया । सर्वात्मभावस्वरूपं स्वस्मिन् विगाढभावात्मकमिति लिङ्गभूयस्त्वसूत्रभाष्यप्रकाशेऽस्ति । एवं च विगाढभावाभिन्नं यद्दास्यं तेन सह वर्तमानं लास्यं चेत्, लास्यविगाढभावात्मको भजनानन्दो भवत्येव । लास्यमनुभूतिर्भजनानन्दस्येति । 'स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तमे'ति गीतायाः । ननु 'ततो यदिन्दीवरे' त्यादिकं मर्यादायामस्तु, कुतः पुष्टिर्व्याक्रियते इति चेन्न । सर्वात्मभावेनेतिपदात् । नहि सर्वात्मभावः पुष्टिं विहाय भवति । मर्यादायां सर्वात्मभावो निरोधलक्षणग्रन्थोक्त इति चेत्, लास्येनेति पदादित्यस्तु । न हि सर्वात्मभावाभिन्नं लास्यं मर्यादायामस्ति । 'कामस्तस्य दिदृक्षैवे'ति वाक्यात् साधनासाध्यत्वे सति प्रदानसाध्यत्वात् सर्वात्मभावस्य । 'प्रदानवदेव तदुक्त'मिति सूत्रभाष्य एतदुक्तम् । 'यत्र नान्यत् पश्यति, नान्यच्छृणोति, नान्यद्विजानाति, स भूमे'ति । एतेन सर्वात्मभावस्वरूपमेवोक्तं भवती'तिभाष्यम् । कृतात्मनिवेदनो हि पुष्ट्यवधिकारी न तु श्रुतात्मनिवेदनः । अत्रानुफलानुभूतिर्भवत्विति विज्ञापना ।

पुरुषोत्तमप्रकरणे 'अज्ञात्वा पुरुषं पुष्टिमकृतात्मनिवेदनः । धर्मलोपकरो यस्तु स नरो नरकं व्रजेदि'ति वाक्यं तत्राचार्यमुखादज्ञात्वेत्यर्यादाचार्यपादाब्जभजनं कर्तव्यत्वेनाहुः श्रीति ।

**श्रीमदाचार्यपादाब्जं भवेयेषां हृदि स्थिरम् ।**
**सदा श्रीराधिकाकान्तस्तत्र तिष्ठति सुस्थिरः ॥ ९७ ॥**
**अतः पितृपदाम्भोजभजनं सर्वथा मतम् ।**
**उत्तमानामितो नान्या कृतिः काचन विद्यते ॥ ९८ ॥**

**नान्या कृतिः** पौष्टिकानाम्, मार्यादिकीनां त्वन्या कृतिरुपदिष्टात् साधनादन्या कृतिः । **उत्तमानामि**ति विशेषणात् । तथास्त्विति विज्ञापना ज्ञेया ।

किञ्च, विज्ञापनान्तरमाहुः **मानुष्येति** ।

**मानुष्यप्राप्तिसाफल्यं यत्संसारविरागिता ।**
**सात्त्विकत्वस्य साफल्यं श्रीकृष्णस्यानुरागिता ॥ ९९ ॥**

अत्र पूर्वार्धे 'नृदेहमाद्यं सुलभं सुदुर्लभं प्लवं सुकल्पं गुरुकर्णधारम् । मयानुकूलेन नभस्वतेरितं पुमान् भवाब्धिं न तरेत् स आत्महे'ति वाक्यम् । उत्तरार्धे 'सात्त्विका भगवद्भक्ता ये मुक्तावधिकारिणः । भवान्तसम्भवा दैवात् तेषामर्थे निरूप्यत' इति निबन्धवाक्यम् । तथा च मनुष्याणां पूर्वार्धोक्तं सात्त्विकानां तु पूर्वग्रन्थोक्तं भवत्विति विज्ञापनात्र । सात्त्विकानामर्थे ग्रन्थकरणात् ।

मध्ये विज्ञापनायाः षट्श्लोकाः स्नानायोग्यैः स्नानविज्ञापनार्थाश्चिन्त्याः । पञ्चामृतस्नानोपयोगित्वाद् व्याक्रियन्ते । **पञ्चे**ति ।

**पञ्चामृतेन भावात्मरूपेणातिप्रियेण ते ।**
**स्नापयामि ततः स्नात्वा हृदि मे सुस्थिरो भव ॥ १०० ॥**

'अकामः सर्वाकामो वे' ति वाक्याद् हृदि सुस्थिरत्वार्थं कारितं स्नानं सुस्थिरत्वफलकम् । कथं लेह्यखाद्यपेयैः स्नानमिति चेत्तत्राहुः **भावात्मे**ति । भावा वक्ष्यमाणास्तदात्मरूपेण । अत एव **अतिप्रियेण** 'ऋतं पिबन्ता' विति श्रुतेः ।

वक्ष्यमाणभावानाहुः **प्रियेति** ।

**प्रियाहास्यप्रभातुल्यरूपेण पयसा गवाम् ।**
**स्नानं समाचर विभो कम्बुस्थेन व्रजेश्वर ॥ १०१ ॥**

**प्रभा** श्वेतरूपा । कम्बुः शङ्खः । यद्वा । विज्ञापना आहुः षड्भिः **पञ्चे**ति । शयनसमये स्नानं भक्तिमार्गविरुद्धं प्रत्यहं, ग्रहणेऽविरुद्धं तत्राहुः **प्रियेति** । प्रियेति पूर्ववत् । **गवामिन्द्रियाणां पयसा** रसेनास्वादरूपेण **कम्बुर्गजस्तत्स्थेन** स्वात्तेन 'आत्तगजेन्द्रलील' इति वाक्यात् । **स्नानं** ष्णा शुद्धौ अदादिरनिट् । इन्द्रियशुद्धिं **समाचर** । श्रीउराणाजिच्छ्रीमीमसिंहजिद्रूपया वाण्या प्रेरितोऽहं द्वितीयार्थकर्ता । यद्वा । जलस्थलभेदेन क्रीडा द्विधा तत्र स्थलक्रीडामुक्त्वा जलक्रीडां स्नानात्मिकामाहुः **पञ्चे**ति । अत्र पक्षे ततः प्रियाभिः सह त्वां स्नापयामि, त्वं प्रियाभिः सह स्नात्वेति पूर्वश्लोके, द्वितीये च प्रियाभिः सह त्वं नीराणां नीरेण शङ्खस्थेन गाङ्गेनेति **गवां पयसा कम्बुस्थेने**ति पदत्रयार्थो विश्वकोशात् स्नानमितरत् समानम् ।

**राधिके**ति ।

**राधिकास्यामृतकरचन्द्रिकाविशदेन वै ।**
**सरसेन घनेनेह दध्ना स्नानं समाचर ॥ १०२ ॥**

**राधिकाया आस्यं** मुखं तदेवामृतं चन्द्रस्तस्य **करः** प्रत्ययः किरणा वा तत्सम्बन्धिनी **चन्द्रिका** तद्वत् **विशदः** पाण्डुरस्तेन । पूर्वोक्तप्रयोजनायोक्तम् । **सरसेन** सजलेन । अम्लरससहितेन वा कम्बुस्थेनेत्यनुवर्तनीयम् । यद्वा । पूर्वार्धं पूर्ववत् । **दध्ना** श्रीनिवासेन वासेन वा शृङ्गारादिरससहितेन **घनेन** दृढेन **स्नानं** भयजनितचित्तोद्वेगस्य शुद्धिं मार्जनं **समाचर** । नात्र कम्बुस्थेनेत्यनुवर्तनीयम् । जलक्रीडापक्षे बहिःस्नाने शीतं प्रतिबन्धकं भक्तिमार्गे, अतो दध्ना वासेन हेतुना प्रियाभिः सह त्वं स्नानं समाचर । इतरत् समानम् । नात्र कम्बुस्थेनेत्यनुवर्तनीयम् ।

प्रियेति ।

प्रियाधरामृतस्पन्दमधुरेण महाप्रभो ।
शङ्खस्थितेन मधुना स्नात्वा मुदमवाप्नुहि ॥ १०३ ॥

प्रियायाः अधरामृतमधरजलं तस्य स्पन्दः प्रस्रवस्तद्वन्मधुरेण मधुररसवता । उत्तरार्धं स्पष्टम् । यद्वा । पूर्वार्धं पूर्ववत् । शङ्खस्थितेन सुगन्धद्रव्यस्थितेन मधुना जलेन । चन्दनपात्रस्थितेन जलेन स्नात्वा कामानुद्दीपनशुद्धिं विधाय मुदमवाप्नुहि । जलक्रीडापक्षे शङ्खस्थितेन जलेनेत्यर्थः । स्नानयोग्यं जलमिति चेन्न 'समः प्लुषिणे'ति श्रुतेर्विस्फुलिङ्गसाम्येनोपपत्तेः । भक्तेन शङ्खस्थापितेन जलेनेति वा । स्नात्वा अङ्गशुद्धिं विधाय मुदमवाप्नुहि ।

प्रियेति ।

प्रियास्नेहैकरूपेण घृतेन व्रजनायक ।
स्नानं स्नेहात्मकं कृत्वा स्निग्धतां प्रकटीकुरु ॥ १०४ ॥

विशेषणं पूर्ववत् । स्निग्धतां भक्तिमत्तां भक्ततां वा । सुरतान्ते स्नेहो गच्छति स्नानानन्तरं प्रकटीभवत्यत उक्तं प्रकटीकुर्विति । यद्वा विशेषणं पूर्ववत् । घृतेन प्रदीप्तेन निर्वाशितेन पूर्वोक्तसुगन्धद्रव्यप्रदीप्तेन कामेन स्नेहात्मकं स्नेह आत्मनि मनसि यस्मात् स्नानात्तादृशं स्नानं सुरतान्तवैराग्यमार्जनं विधाय स्निग्धतां प्रकटीकुरु । जलक्रीडापक्षे घृतेन जलेनान्यत्पूर्ववत् । तथा च विश्वः 'घृतमाज्ये प्रदीप्ते च सलिले च घृतं स्मृत'मिति ।

प्रियेति ।

प्रियाप्रत्यङ्गसौन्दर्यमाधुर्यसमतां गतम् ।
तया शर्करया स्नात्वा प्रत्यङ्गोच्छूनतां व्रज ॥ १०५ ॥

प्रियायाः प्रत्यङ्गमङ्गमङ्गं सौन्दर्यं स्वार्थे ष्यञ् । सुन्दरं तदेव माधुर्यं प्रियं तत्समतां गतं यथा भवति तथा त्वं प्रत्यङ्गमुच्छूनतामुत्तुङ्गतां व्रज । कया तया प्रसिद्धया शर्करया स्नात्वेत्यर्थः । यद्वा उं शंभुं प्रति पलति गच्छति तादृशोपलारूपशर्करया स्नात्वा तच्छक्तियुक्तत्वेन केवलमन्मथमन्मथत्वमार्जनं विधाय भक्तमाधुर्यं प्रियताख्यं तत्समतां गतं यथा भवति तथा प्रत्यङ्गमुत्तुङ्गतां व्रज । भक्तभक्तियोग्यं रूपं मन्मथमन्मथत्वं तिरोभाव्य प्रकटीकुरु भक्तभक्तिमात्रयोग्यं रूपम् । 'उपला शर्करापि चे'त्यमरः । जलक्रीडापक्षे शर्करया कर्पररूपया कर्परः कटाहोण्डकटाहः 'कर्परः स्यात्कपाले च शस्त्रभेदकटाहयो'रिति विश्वः । 'शर्करा कर्परांशेऽपी'त्यमरः । अण्डकटाहांशो गङ्गा स्वर्गङ्गया प्रियाभिः सह स्नात्वा । अन्यत्स्पष्टम् । एवं शयनार्थं विज्ञाप्य शयनं कारयेदिति ।

एवं स्नानानां रसरूपस्य विज्ञापनपूर्वकशयनमुक्त्वा दैन्येन हरितोषणसाधनेन नवनीतमुखं विज्ञापयन्तः संयोगे वियोगवर्तनं कुर्वन्त आत्मनः शयनस्य कारितत्वाद् आत्मनश्च गोपिकादिभ्यो निजानन्ददानार्थं तद्गृहे गोपिकाप्रार्थितस्य शयनानन्तरं गतत्वाद् विरहे विज्ञापनमाहुः हेति ।

हा नाथ हा रमण हा करुणैकसिन्धो हा कृष्ण हा पतितपावन दीनबन्धो ।
संसारसागरमहोर्मिषु मज्जमानं मामुद्धर प्रणतपालक बालकृष्ण ॥ १ ॥

हा नाथ उपतापक संयोगेपि वियोगवर्तनलक्षणप्रेम्णा, हा विषादं करोमि । 'हा विषाद' इति विश्वात् । नाथ नवनीतयाचक । एवमग्रेपि । रमण रमु क्रीडायाम् । करुणैकसिन्धो । पुष्टिप्राकट्यात् पुष्ट्यानेकविहाररूपरत्नप्राकट्यान् नवनीतमुद्, करुणैकसिन्धुः, स्वरूपानन्ददानात् । कृष्ण सच्चिदानन्द । पतितानामपि पावन, किमुतास्माकम् । दीनबन्धुश्च । संसारोऽहन्ता-

१. स्निग्धानाम् ।

ममतात्मकसंसारः सागरोऽनेकभगवत्सेवोपयोगितदनुपयोगिमात्सर्यदुःखेर्ष्यादिनिधिः । गरेण नरकसाधकेन विषयेण विषेण सह वर्तमानो वा सगरः सगरस्यायं सागरः । तस्येदमित्यणिति सुधायाम् । महोर्मयो गुर्वाद्युपरि क्रोधात्मिका ऊर्मयो मात्सर्यदुःखेर्ष्यादिजा गुर्वाद्यतिरिक्ते क्रोधविषयनिन्दादयः तेषु मज्जमानं मुह्यमानं मामुद्धर सेवोपयोगिसंसारं स्थापय, अन्यं शोषय । किं साधनमिति चेत् तत्राहुः प्रणतेति । प्रणामः साधनम् । मर्यादाभक्तौ प्रेमसाधनत्वेपि वन्दनभक्तावुक्तसाधनत्वं कुरु । 'अकामः सर्वकामो वे'ति वाक्यात् । बालः कृष्णो बालकृष्णः । 'कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचक' इति श्रुतेः । ब्रह्माण्डपुराणे च ।

'बालाय नीलवपुषे नवकिङ्किणीकजालाभिरामजघनाय दिगम्बराय ।
शार्दूलदिव्यनखभूषणभूषिताय नन्दात्मजाय नवनीतमुषे नमस्ते' ।

इति नवनीतचोरविज्ञापना ।

रूपसेवामुक्त्वा अविशेषेण नामसेवां 'आवृत्तिरसकृदुपदेशा' दिति सूत्रेणावृत्त्याख्यां विज्ञापयामासुः श्रीति ।

**श्रीबालकृष्णेतिनाम सकलाभीष्टदं कलौ ।**
**जिह्वाग्रे वर्ततां तेन सदा मे कृतकृत्यता ॥ २ ॥**

श्रीभिः शोभाभिर्बालोचिताभिर्युक्तो बालः पुरुषविधब्राह्मणोक्तोभयलिङ्गवांश्च स कृष्णः सच्चिदानन्द इत्यभिधायकं नाम । ननूभयलिङ्गवत्त्वं न बालस्य, किन्तु 'कारणगुणाः कार्ये समायान्ती'ति प्रवादमूलकः कार्ये एकाकिनि पुरुषे भयं ज्ञापितः पुरुषविधे भयं कारणात्मकमिति चेन्न । कार्ये भयस्य द्वितीयाभिनिवेशकृतत्वेन मायिकत्वे सत्युपपत्तेः 'भीषास्माद्वातः पवते भीषोदेति सूर्य' इत्यादीनां 'भीरपि यद्बिभेती'त्यस्य च विरोधाच्च । न च भयस्य ब्रह्मलिङ्गत्वमसम्भवीति शङ्क्यम् । 'अनुकृतेस्तस्य च' इति सूत्रेऽनुकृतेर्भयसत्त्वात् । न चैकरसत्वविरुद्धं बाल्यपौगण्डादिकं मुक्तसच्चिदानन्दत्वानुपपत्तिसाधकं चेति वाच्यम् । 'व्याप्तेश्च समञ्जस'मिति सूत्रे 'सर्वतः पाणिपादान्तमि'त्यादिश्रुतेः साकारमेव व्यापकमिति भाष्यात् । एवमग्रे सकलेति पदम् । कलाविति । 'कलिं सभाजयन्त्यार्या' इत्यादिवाक्यात् । कृतकृत्यतेति । पुरुषोत्तमयोगाध्याये 'यो मामेवमसम्मूढो जानाति पुरुषोत्तममि'त्यत्र पदजन्यपदार्थोपस्थितेरावश्यकत्वात्पदस्यापि कृतकृत्यतासाधने निवेशेनोक्तं कृतकृत्यतेति 'एतद्बुद्ध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भारते'ति गीतायाः ।

एवं विज्ञाप्य धृतानां शय्यानिकटे भोग्यानांशय्या श्रीगोवर्द्धननाथजिन्नवनीतरायजिदादि भोगानां ताम्बूलमालातष्टीजलपात्रव्यजनादीनां च भोगं विज्ञापयामासुरप्रियमित्यादिपद्यभिः ।

**अप्रियं सप्रियं वापि धनहीनस्य मे प्रभो ।**
**मद्गृहे भोजनार्थाय आगन्तव्यं महाप्रभो ॥ ३ ॥**

अप्रियं सप्रियं वा आगमनं कर्तव्यम्, प्रश्विज्ञिताज्ञानादित्यर्थः । मे मम मत्सम्बन्धिभोजनार्थाय । ननु व्यापकोहमानन्दभुक् भुनज्म्येव गोपिकादिगृहस्थितोपीति चेत्, तत्राहुः मद्गृह इति । एतावत्पर्यन्तं प्रभुत्वं स्थितं मद्गृहागमनानन्तरं तु महाप्रभुर्जातः परिवृढोपि महान्जातः । आचार्योक्तपरिवृढाष्टकात् । तत्रत्य 'परा काष्ठा प्रेम्णः पशुपतरुणीना'मिति वाक्यात् । महत्त्वं च गृहस्थस्य मे उद्धरणसमर्थत्वम् । हे गृहस्थोद्धारक परिवृढ, हे महाप्रभो बालस्तु शयनादावपि शेते इति मद्गृहागमनविज्ञापना । 'चलसि यद्व्रजाच्चारयन् पशून् नलिनसुन्दरं नाथ ते पदम् । शिलतृणाङ्कुरैः सीदतीति नः कलिलतां मनः कान्त गच्छती' ति न्यायेन भक्तमनःकलिलताजननात् ।

आगत्य तूष्णीं न स्थेयम्, किन्तु भक्तिमार्गत्वात् प्रीतिः क्रियतामित्याहुः येति ।

**या प्रीतिर्विदुरार्पिते मुररिपो कुन्त्यर्पिते यादृशी**
**या गोवर्द्धनमूर्ध्नि या च पृथुके स्तन्ये यशोदार्पिते ।**
**भारद्वाजसमर्पिते शबरिकादत्तेऽधरे योषितां**
**या प्रीतिर्मुनिपत्निभक्तरचिते तत्रापि तां तां कुरु ॥ ४ ॥**

**विदुरार्पिते** सेवने विशेषानुल्लेखः श्रीभागवते तृतीयस्कन्धे कथाश्रवणातिरिक्तसेवनाप्रसिद्धेः। तर्हि कथाश्रवणे **विदुरार्पित** इत्यस्तु कथाश्रवणार्पणास्मरणात्। तर्हि विदुरश्रुते इति मूलमस्तु 'इति सह विदुरेण विश्वमूर्तेर्गुणकथया सुधये'ति वाक्ये कीर्तनस्याप्युक्तेः। न च विदुरश्रवणादाविति वक्तव्यमिति शङ्क्यम्। अनर्पितस्यासाधनत्वात्। ननु विदुरमुक्त्या विदुरश्रवणादीनामर्पितत्वमनुमास्यत इति चेन्न। मूलाविरोधादोम्। न च विदुरार्पिते श्रवणादाविति वक्तव्यमिति वाच्यम्। अनुमितार्पणनिवेशे पदक्लिष्टतापत्तेः। न चानुमितार्पणविषयश्रवणादाविति वाच्यम्। शरीरगौरवात्। अतोर्पितत्वेन श्रवणादीनां ग्रहणं युक्तमेव। **कुन्त्यर्पितेऽ**खिलोदये। 'पृथयेत्थं कलपदैः परिणूताखिलोदय'इति वाक्यात्। **या प्रीतिः** 'मन्दं जहास वैकुण्ठो मोहयन्निव मायये'ति वाक्यात्। महिमज्ञानेनैक्यबुद्ध्या लये प्राप्ते ऐक्यप्रतिबन्धकमायामोहेन कुलसम्बन्धजा यद्यपि तथापि भगवान् प्रक्रान्तस्वविचारितमेव मोहं दत्तवान्। अद्भुतकर्मनिरूपणे **तां तां कुर्वि**त्यत्र शाकपत्रे या तां पुनस्तां स्वकुलसम्बन्धजाम्। ब्रह्मबोधप्रतिबन्धानन्तरमपि सिद्धान्तमुक्तावल्युक्तो ब्रह्मबोधः। अद्भुतकर्मत्वाद्भगवतो नात्र मोहदानं विवक्ष्यते। **गोवर्द्धनमूर्ध्नि या प्रीतिः** यया हरिदासप्रीत्या गोवर्धनस्य मूर्ध्नि शिखरे व्रजस्यार्तिं मोचयन् गवां दिनतापात्मिकां चकाम। उत्थापनभोगं भुक्त्वा। **तां प्रीतिं** दासप्रीतिं कुरु। सुदाम्नः **पृथुके** चिपिटे खाद्यभेदे तन्दुले 'पृथुकः पुंसि चिपिट' इत्यमरः। 'चिपिटः खाद्यभेद' इति विश्वः। **तत्र या प्रीतिः** सख्यन्नभोजनप्रीतिः। **यशोदया अर्पिते स्तन्ये** दुग्धे जग्धप्राये सति या प्रीतिर्विश्वदर्शनेन सुविस्मयजनिका। 'विस्मयोद्धतगर्वयोरि'ति विश्वः। 'एकदार्भकमादाये'त्यादिसन्दर्भे सप्तमेध्याये स्पष्टमेतत्। उदासीनत्वश्रुत्या स्नेहो विरुध्यते इति कथमुदासीनस्यात्मनः स्नेह इत्याकाङ्क्षायामुदासीनस्य स्नेहो विरुद्धसर्वधर्माश्रयत्वेन निरूपितः। **स्तन्ये या प्रीतिरि**ति वा 'भगवान्भक्तभक्तिमा'निति वाक्यात्। **भारद्वाजो** व्याघ्राटाख्यो विहङ्गमस्तदर्पिते रावेऽद्भुतरसे तद्वाग्व्यापारो भगवत इति तदर्पितो रावस्तत्र या प्रीतिरद्भुतरसजन्या। अद्भुतरसस्तावत् 'चित्रं महानेष बतावतारः क्व यत्र एषोमिनवैव भङ्गिः। लोकोत्तरं यत्रमहो प्रभावः काप्याकृतिर्नूतन एष सर्गः'। बतेति हर्षे, भङ्गिः प्रकारः, एष सर्गः भारद्वाजशब्दसर्गः। अत्र लोकोत्तरदर्शनादिर्विभावः, नेत्रविकासाद्यनुभावः, हर्षादिर्व्यभिचारी, विस्मयः स्थायिभावोद्भुतरसः। **तां प्रीतिम्**। 'चित्रं महानेष यतावतारः क्व कान्तिरेषाऽकृतसाधनत्वम्। लोकोत्तरं कार्यमनुग्रहश्च कः प्रेम को नूतन एष सर्गः'। पुष्टिमार्गस्यास्य प्रभोर्वचः। कार्यं फलम्, अनुग्रहोनुभावः। **शबरिकाः** पुलिन्द्यः शबरिका पार्वती वा तद्दत्ते कामे। पुलिन्द्यो वेणुगीते। पार्वती पुराणान्तरे। **योषितां** व्रजभक्तानाम**धरे**। 'अधरस्तु पुमानोष्ठ' इति कोशः। स्पष्टोर्थः। तां प्रीतिं कामात्मिकाम्। **मुनिपत्निभक्तरचिते** बहुगुणेत्ते। पत्नीत्यत्र ह्रस्वो व्याकरणान्तराद् यथा परिणूताखिलोदय इत्यत्र णू स्तुतौ व्याकरणान्तरान्न तु छन्दोनुरोधेन णू स्तुतावित्यस्य दीर्घः। यद्वा 'ङ्यापोः संज्ञाछन्दसोर्बहुल'मिति सूत्रे बहुलग्रहणात् संज्ञाभावेपि पत्नीशब्दस्य ह्रस्वः। अत्र महद्दे।

यशोदा यथा शयने भगवन्तं नेष्यन्ती गोपीद्वारा शय्याभोगं धारयति रात्रिर्महती बालगोपालः

क्षुधितो भविष्यतीति शय्यानिकटे भोगं स्थापयेति गोपीमाज्ञापयन्ती तद्द्वारा भोगं धारयति तद्भावेन धृतभोगे प्रीतिं कुर्वित्याहुः **यशोदाया** इति ।

**यशोदायाः स्तन्ये तदनु नवनीते व्रजगवां**
**विहारे दध्यन्ने द्विजयुवतिदत्ते बहुगुणे ।**
**तथा मित्रात्प्राप्ते पृथुकवरमुष्टौ मुरहरे**
**यथा प्रीतिस्तां मे प्रकटय सुनैवेद्यनिचये ॥ ५ ॥**

पूर्वश्लोकव्याख्यानेन व्याख्यातप्रायमेतत् । मित्रात्सुदाम्नः **पृथुकवरमुष्टौ** पृथुकः खाद्यभेदस्तत्सम्बन्धिनी **वरा मुष्टिस्तस्याम्** । यथेति यशोदादत्तत्वेन प्रकारेण उभयत्र स्ववृत्तित्वेन प्रकारेण 'वयं गोवृत्तय' इति वाक्याद् द्विजपत्नीदत्तत्वेन प्रकारेण मित्रदत्तत्वेन प्रकारेण । **सुनैवेद्यं** तथा दत्तम्, तस्य **निचयः** शरदुत्सवादौ ।

प्रीतिकरणं विज्ञाप्य भोजने कृपाकरणे विज्ञापयांबभूवुः **विदुरस्येति** ।

**विदुरस्य गृहे प्रीत्या यथा भुक्तं निजेच्छया ।**
**तथैव भुङ्क्ष्व नैवेद्यं मयि नाथ कृपां कुरु ॥ ६ ॥**

व्याख्यातप्रायम् । यथा भक्तदत्तत्वेन प्रकारेण **निजस्य** भक्तस्येच्छया । **नैवेद्यमिति** मातृचरणैर्नैवेद्यसमर्पणस्य कारितत्वात्प्राधान्येन नैवेद्यस्य ग्रहणम् ।

ताम्बूलतष्टीमालाजलभाजनव्यजनादिभोगं प्रार्थयन्तो 'यज्ञशिष्टामृतभुजो यान्ति ब्रह्मसनातनम्' इति गीतायाः भुक्तशिष्टान्नदानं स्वकीयोभ्योभीष्टं कुर्वन्ति स्म ।

**यथा त्वं गोपिकादिभ्यो निजानन्दं प्रयच्छसि ।**
**तथैव भुक्तशिष्टान्नं भक्तेभ्यो यच्छ पुष्कलम् ॥ ७ ॥**

यशोदया शायितः श्रीगोप्या प्रार्थितो ह्यात्मा सखीशतेन भृङ्गैरावृतो भक्तगेहानुत्थाय गच्छति । तदाभासोक्तताम्बूलादीनां भोगो भवति तद्द्वारा **निजानन्दं** रसस्वरूपानन्दं प्रयच्छति । आदिपदेन कर्मणि यज्ञशेषामृतभोजनाद् ब्रह्म संसिद्धिमास्थितो गृह्यते । तथैव यज्ञशेषामृतत्वेन यज्ञशेषामृतभोगदातृत्वेन वा प्रकारेण 'प्रकाशाश्रयवद्वा तेजस्त्वा'दिति सूत्रेण धर्मात्मकयज्ञस्यापि धर्म्यात्मकत्वं मत्वोक्तम् । तथा च भाष्यम् 'यदेव विद्यया करोति श्रद्धयोपनिषदा वे'ति । एवं च पूजया श्रवणादिकमुक्त्वा आदिपदेनोपनिषदा श्रवणादिभिः पूजेत्युक्तम् । अधुना किञ्चिदुच्यते । ननु 'नह्यन्तोऽनन्तपारस्य कर्मकाण्डस्य चोद्धव । संक्षिप्तं वर्णयिष्यामी'ति प्रतिज्ञाय 'दत्त्वाचमन' मित्यादीनां वाक्यानां श्रीभागवते उक्तत्वात् तैर्दास्यप्रामाणिकीकरणमसङ्गतम्, दास्यार्चनयोर्भेदादिति चेन्न उपासनायामपि भक्तिमार्गानुसारेणोपचारा मुख्या इति 'दत्त्वाचमन-' मित्यादिवाक्यानां पाठादिक्रमानुरोधेनेदशमर्चनं विधाय, तत्रेदृशदास्यभक्तिमार्गानुसरणम् । दास्यभक्तिमार्गानुसरणे सिद्धे दास्यभक्त्यनुसृतै'र्दत्त्वाचमन'मित्यादिवाक्यैर्दास्यप्रामाणिकीकरणं सङ्गतमेव । उभयोरेकमार्गीयत्वेनान्यापेक्षयैतद्ग्रहणस्य ज्यायस्त्वात् । ननु 'लोकवत्तु लीलाकैवल्य' मिति व्याससूत्रेण प्रामाणिकीकरणं सङ्गतमिति चेन्न । 'श्रीभागवतमार्गेण स कथञ्चित् तरिष्यती'ति निबन्धाल्लोकः श्रीभागवतं गृह्यत इत्यदोषात् । न च पञ्चमस्कन्धतृतीयाध्याये 'परिजनानुरागविरचितशबलसंशब्दसलिलसितकिशलयतुलसिदूर्वाङ्कुरैरपि संभृतया सपर्यया किल परम परितुष्यसी'ति लोकः कुतो न गृह्यत इति वाच्यम् । स्थानलीलात्वेन शुद्धलीलात्वाभावात् । अपिपदं सङ्गृहीतपदार्थानां चानियतत्वात् । पूर्वोक्तरीत्याऽनियतत्वे तु ह्यपिपदसङ्गृहीतपदार्थानां सुकरत्वात् । किञ्च,

'आशिष आशासानानामेतदभिसंराधनमात्र'मिति । न च सप्तमेऽध्याये भगवत्परिचर्यानिरूपके 'विविधकुसुमकिशलयतुलसिकाम्बुभिः कन्दमूलफलोपहारैश्च समीहमानो भगवत आराधन'मिति वाक्यं लोकस्तदुक्तप्रकारोऽस्त्विति वाच्यम् । तत्राप्युक्तयैवैकभक्तिमार्गे पदार्थनियमसंभवात् । भक्तिमार्गस्य बहुविधत्वात् स्थानलीलात्वाच्च । वसन्तोत्सवादावस्या अप्यभिनिवेशाच्च । एवं च दास्यपूजापरिचर्याः सहैवानुष्ठिताः । 'सर्वासामविरोध' इति व्याससूत्रात् । दास्यपरिचर्ययोः पर्यायत्वेपि भक्तिमार्गस्य बहुविधत्वात् कश्चिदुपाधिराश्रीयते इति न दोषः । पादसेवनमप्यत्र, पादयोः सेवनं पूर्वं कृत्वा भगवत्सेवने कृते सति भवति । तदुक्तं चतुर्थस्कन्धे 'पद्भ्यां नखमणिश्रेण्या विलसद्भ्यां समर्चताम् । हृत्पद्मकर्णिकाधिष्ण्यमाक्रम्यात्मन्यवस्थित'मिति ध्रुवचरिते 'कारणं पादसेवन'मित्युपक्रम्य श्रवणकीर्तनस्मरणवन्दनभक्तयोऽत्र निविशन्त एव । सख्यं फलम् । आत्मनिवेदनं त्वतिकठिनं कृतं सत्, श्रुतं तु वर्तत एवात्मनिवेदनम् तथा चाविहितभक्तिपक्षे श्रवणादित्रिकेण जनितप्रेम्णा स्वतः क्रियमाणदास्यादिनवकमुक्तमिति सूत्रोक्तसामान्यपक्षोऽत्रोक्त इति भावः । नन्वपेक्षितसमर्पणं दास्यम्, 'पुराणं हृदयं स्मृतम्' इति हृदयेनोरसाऽप्रमाणेन प्रामाणिकीकरणमयुक्तमिति चेन्न । तत्र 'हृदयं मानसोरसो'रिति विश्वादर्थद्वयम्, तत् प्रकृते विरुद्धम्, अतो हृन्मनः 'अयः शुभावहो विधि'रिति कोशाद् द्वयोर्हृदययोरर्थावधृत्य मनःशुभावहो विधिर्हृदयं पुराणं भगवन्मनः शुभावहविधिरूपेण पुराणेन प्रामाणिकीकृतं दास्यमपेक्षितसमर्पणात्मकं जातमेवेति । अथ सेवाप्रकरणे 'यथादिष्टतम' मिति वाक्यात् स्वापेक्षितसमर्पणं विवक्ष्यते तदपि साम्प्रतम्, वाक्यादेव । नन्वपेक्षितसमर्पणं दास्यम्, तदेकेनापीन्द्रियेण भवतीति दास्यरूपा सेवा न सर्वात्मभावरूपेति चेन्न । सर्वैरिन्द्रियैरपेक्षितसमर्पणे बाधकाभावात् सर्वात्मभावरूपा सेवा तथा च सर्वोप्यात्मनोऽन्तःकरणस्य भाव एकादशविधो मनसो वृत्तिरूपः षष्ठीगर्भितकर्मधारयेण सर्वात्मभावपदार्थोऽत्र । तथा च नवमस्कन्धे अम्बरीषप्रसङ्गे 'एवं सदा कर्मकलापमात्मनः परेऽधियज्ञे भगवत्यधोक्षजे । सर्वात्मभावं विदधन्महीमिमां तन्निष्ठविप्राभिहितः शशास ह' इति । एवं पूर्वोक्तपरामर्शेन पूर्वं तु 'स वै मनः कृष्णपदारविन्दयो'रित्यादिवाक्यानि । न च सर्वत्रात्मेति भावो भावना यस्मिन् क्रियाकलाप इति बहुव्रीहिरस्तु, किं षष्ठीगर्भितकर्मधारयेणेति शङ्क्यम् । 'याहि सर्वात्मभावेने'ति वाक्ये बहुव्रीहेरसंभवात् । न चैतद्वाक्यानुरोधेन क्रियाकलापमध्याहृत्य योजनीयम्, सर्वात्मभावेन क्रियाकलापेन याहीति चेन्न । सर्वोप्यात्मनो भावो भगवत्सेवाधिकृत इति 'सर्वात्मभावोऽधिकृतो भवतीनामधोक्षज' इत्यस्य सुबोधिन्यां क्रियाकलापानध्याहारात् । न च सर्वोपि सर्वत्र भगवत्स्फूर्तिलक्षणांशेनाप्यन्यून आत्मनो भाव इति सुबोधिन्या अर्थ इति शङ्क्यम् । सर्वपदस्य सर्वात्मभावघटकत्वेन भगवत्स्फूर्तिपर्यन्तं तस्यार्थाभावात् । 'स वै मनः कृष्णपदारविन्दयो' रित्यादिवाक्योक्तैकादशमनोवृत्तीनां सर्वपदार्थत्वात् । तथा च 'लिङ्गभूयस्त्वा'दिति सूत्रभाष्यम् । 'यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमे'ति । 'एतेन सर्वात्मभावस्वरूपमेवोक्तं भवती'ति । न च 'सर्वभूतेषु मन्मति'रित्येकादश एकोनविंशाध्याये वाक्याच्च सर्वस्मिन्नात्मभावः सर्वात्मभाव इत्यर्थोस्त्विति वाच्यं, प्रकृतेऽसम्भवात् । तादृश्या मतेः 'एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम् । मयि सञ्जायते भक्ति'रिति वाक्ये प्रेमभक्तिकारणत्वेनोल्लेखात् पृथगेव कारणत्वम् । एवमनेकार्थेषु षष्ठीगर्भितकर्मधारयो गृह्यते । न च प्रकृते क्रियाकलापविशेषणत्वेन बहुव्रीहिर्गृह्यतामिति वाच्यम् ॥ स्वमते षष्ठीगर्भितकर्मधारयकस्य सर्वात्मभावस्यैव प्राधान्यात्सर्वात्मभावस्य क्रियाकलापमित्येव विशेषणमस्तु । क्रियाणां कलापः संहतं समूहो यत्रेति । 'सर्वदा सर्वभावेन भजनीयो व्रजाधिप' इति कारिका चतुःश्लोकीस्था तत्र

सर्वभावेन भजनं न सर्वात्मभावेनेति सेवा सर्वभावेन न सर्वात्मभावेनेति सर्वात्मभावरूपा सेवेति व्याहतमिति विचारयति न च तस्मादिति । न च 'तस्माच्छ्रीकृष्णमार्गस्थो विमुक्तः सर्वलोकतः । आत्मानन्दसमुद्रस्थं कृष्णमेव विचिन्तये'दिति सिद्धान्तमुक्तावल्यामेतद्विचिन्तनमिति वाच्यम् । तत्र लघुस्वमार्गस्यैकादशैकोनत्रिंशाध्यायोक्तस्य ग्रहणात् । ननु 'मामेव सर्वभूतेषु बहिरन्तरपावृतम् । ईक्षेतात्मनि चात्मानं यथा खममलाशय' इति वाक्येन बहुव्रीहिरेवास्त्विति चेत्सत्यम् । 'सर्वदा सर्वभावेन भजनीय' इत्याचार्यकारिकायामपि तथात्वेपि श्रीमदाचार्यमतत्वात् । श्रीगोस्वामिनां मते तु 'सदा सर्वात्मभावेन भजनीय' इति कारिकायास्ते तु व्रजरत्नात्मका इति मन्मतिरिति ह्या'त्मानन्दसमुद्रस्थ'मित्यस्य टीकायाश्च सर्वात्मभावे गोस्वामिमताङ्गीकारात् । भाष्येपि सार्धाध्याये तत्प्रणीते प्रदानवत्सूत्रे लिङ्गभूयस्त्वाधिकरणे चैतद्विचारात् । तन्मते षष्ठीगर्भितकर्मधारयेण निर्वाहः, न तु बहुव्रीहिणा । न चाचार्यमतमस्तु गोस्वामिमतात्प्रबलत्वादिति वाच्यम् । सर्वात्मभावविषये ह्याचार्यभाष्याभावात् । भाष्यं तु 'यत्र नान्यत्पश्यती' त्याद्युक्तं षष्ठीगर्भितकर्मधारयं द्योतयति, न तु बहुव्रीहिमिति तेन भाष्येण सर्वं सुस्थम् । एतेन षष्ठीगर्भितकर्मधारयस्याचार्याङ्गीकृतस्य पुष्टिसर्वात्मभावविषयत्वम्, मर्यादायां तु बहुव्रीहिरिति कुचोद्यं निरस्तम् । नापि दास्यरूपा सेवा सर्वभावरूपेति वक्तुं शक्यते । लघुस्वमार्गात् पृथक् सर्वभाववचनाद् एकादशे 'मामेव सर्वभूतेष्वि'त्यादिवचनेभ्यः । तस्मात् सुष्ठु सर्वात्मभावरूपा सेवेति । न च 'आत्मानन्दसमुद्रस्थ' मित्यस्य सर्वभावानन्दसमुद्रस्थमित्यर्थोस्तु । अस्याक्षेपस्य ते त्विति टीकासम्बन्धित्वात् । तत्र ते तु व्रजरत्नात्मका इति मन्मतिरिति स्वमतित्वाच्च । उक्तार्थस्य ज्ञाने सन्निवेशाच्च । 'सर्वदा सर्वभावेने' त्यत्र करणे तृतीया नाभेदे 'प्रकृत्यादिभ्य उपसङ्ख्यानमि'ति वार्तिकेनाभेदासम्भवात् । न च सिद्धान्तमुक्तावल्या आचार्यकृतत्वेन सर्वभावानुरोधेन तनुजा सेवा व्याकर्तव्येति चेन्न । सर्वात्मभावरूपसेवायाः सर्वभावाविरुद्धत्वात् । आत्मनां बाह्याभ्यन्तरपरमात्मनां आत्मोपनिषदुक्तानां निवेदनमात्मनिवेदनम्, सर्वात्मभावस्तु आन्तरमात्रात्मनिवेदनमिति भेदः ।

**अथ शरणमार्गः** पृथगस्ति 'पृथक्शरणमार्गोपदेष्टे'ति सर्वोत्तमात् । स च विवेकधैर्याश्रय इत्याहुः स च निबन्धे सेवाप्रकरणे 'जगन्नाथे विट्ठले च श्रीरङ्गे वेङ्कटेथवा । यत्र पूजाप्रवाहः स्यात् तत्र तिष्ठेत तत्पर' इत्यनया कारिकयोक्तः । तत्र जगन्नाथः पुरुषोत्तमः, विट्ठलो महाविष्णुः श्रीरङ्गोपि, वेङ्कटस्तु वैकुण्ठनाथः, तन्माहात्म्येषु प्रसिद्धाः । पुष्टिमार्गीयक्रीडाविशिष्टा सन्निहिता श्रीयमुनाजित् उद्धिवीर्व्वी 'सत्यं विज्ञानमानन्दं ब्रह्मे'ति श्रुतिप्रतिपादिता पद्मपुराणात् तत्र'ऐहिके पारलोके चे'ति वक्ष्यमाणोपसंहाराच्छरणमार्गं वक्तुं 'सत्यं ज्ञानमनन्तमानन्दं ब्रह्मे'ति सर्वोपनिषदुक्तब्रह्मणो भक्तिमुक्त्वा 'सत्यं विज्ञानमानन्दं ब्रह्मे'ति श्रुत्युक्तब्रह्मणो भक्तिं 'तत्र तिष्ठेत तत्पर' इति निबन्धोक्ततत्परपदवाच्यामुपचक्रमिरे हरितुर्येति । तदर्थं'प्रवृत्तं च निवृत्तं चे'त्युक्तं लघुस्वमार्गस्वरूपमुक्तम्, अधुना तु ।

'यन्न योगेन साङ्ख्येन दानव्रततपोऽध्वरैः ।
व्याख्यास्वाध्यायसन्न्यासैः प्राप्नुयाद् यत्नवानपि ।
तस्मात् त्वमुद्धवोत्सृज्य नोदनां प्रतिनोदनाम् ।
प्रवृत्तं च निवृत्तं च श्रोतव्यं श्रुतमेव च ।
मामेकमेव शरणमात्मानं सर्वदेहिनाम् ।
याहि सर्वात्मभावेन यास्यसे ह्यकुतोभयम् ।

१.–मनः । २. मया स्या अकुतोभयम् ।

इत्येकादशसर्वस्वं भगवान् स्वयमुक्तवान् ।
आत्मानं हि स्वयं वेद तस्मादन्यवचो मृषा'

इति सर्वनिर्णयोपान्त्ये प्रवृत्तनिवृत्तोत्सर्गेण भगवत्सङ्गजसर्वात्मभावेन 'मां याही'त्युक्ते सर्वात्मभावस्य प्रदानसाध्यत्वात् प्रवृत्तनिवृत्तोत्सर्गेण ।

'मत्सङ्गान्मामुपागता'इति श्लोकोक्तमत्सङ्गं निन्धत्वाभावार्थं गुरूणामाहुः वृन्देति ।

**वृन्दारण्यगतं रासरसोन्मत्तमतं गजम् ।**
**बबन्ध गोपबालैका बहु शृङ्खलया निशि ॥ १ ॥**

**रासरसोन्मत्तमतं** रासे रससमूहे भक्तिरसेनोन्मत्तमपि मतं पूजितं संमतम्, वा गोपालतापिनीये 'बल्लवीनयनाम्भोजमालिने नृत्यशालिने नम' इति ब्राह्मणस्य 'श्रीकृष्ण रूक्मिणीकान्त गोपीजनमनोहर । संसारसागरे मग्नं मामुद्धर जगद्गुरो'इति च ब्राह्मणस्य । गजं गजमिवात्तगजेन्द्रलीलम् । एका मुख्या । आत्मवशीकरणसमर्थभक्तिमत्या शृङ्खलया प्रेम्णा 'पराकाष्ठा प्रेम्णः पशुपतरुणीना'मिति परिवृढाष्टकात् । बहु यथा भवति तथा पुष्टिमार्गीयसर्वात्मभावेन बहुरूपम् । मध्ये विरहाङ्गीकारात् । बद्धा । बह्वी च शृङ्खला बहुशृङ्खला तया एकत्वमविवक्षितम् । बहुविलासेन प्रेम्णा ।

हरितुर्यप्रियाभक्तिमाहुः ।

**हरितुर्यप्रिये कृष्णे प्रेम्णा भोज्यं मदर्पितम् ।**
**अङ्गीकुरुष्व कृपया सफलं जन्म मे कुरु ॥ २ ॥**

एतस्या नाम कृष्णा, तस्याः सम्बोधने कृष्णे इति । भोज्यं खाद्यलेह्यचोष्यपेयरूपं वस्त्राभरणमालाधूपदीपजलपात्राचमनमुखवस्त्रताम्बूलयमुनाष्टकपाठानामुपलक्षकम् । भक्तिदानेन वैराग्यरूपफलेन सह वर्तमानं जन्म मम 'जनयत्याशु वैराग्य' मिति वाक्यात् ।

वन्दनं पूजायां न निविशत इत्यत्र भक्तावपि पृथगेवाहुः नम इति ।

**नमस्ते सच्चिदानन्दरसरूपिणि सूरजे ।**
**कुमारीष्विव मे देहि श्रीकृष्णे भावमुत्तमम् ॥ ३ ॥**

पूर्वार्धोक्तं रूपं पद्मपुराणयमुनामाहात्म्ये 'त्रयी रसमयी सौरी ब्रह्मविद्या सुधावहा । नारायणीश्वरी ब्राह्मी धर्ममूर्तिः कृपावती'ति वाक्यात् । सूरो मिहिरस्तज्जे, मे मह्यम्, यद्यप्युत्तमं भावं व्यसनात्मको भावः साधनप्रकरणे 'उत्तमः फलपर्यन्त' इत्यत्र कारिकायां विवृतः, तथापि स न सूर्यजायै दत्तोऽपि तु भवाय दत्तः, अतः सूर्यजादत्तो भावः उत्तमः कुमारीषु फलसहितो भाव उत्तमस्तद्वत् फलसाहित्यं भावे देहीति । यमुनायाः कालिन्दीत्वे तु कलिं द्यतीति व्युत्पत्त्यान्योन्यकलहखण्डनं भगवता सह कलहावखण्डनं कलिकालदोषावखण्डनं च भावं देहीति । तिष्ठेतेत्यात्मनेपदेन 'प्रकाशनस्थेयाख्ययोश्चे'ति सूत्रेण लकारार्थप्रक्रियास्थेन जातेन 'गोपी कृष्णं तिष्ठत' इत्युदाहरणवत् ।

स्वाशयं प्रकाशयांबभूवुः त्वदीयेति ।

**त्वदीयमधुसूक्तिभिर्व्रजजनेशसङ्गाशया**
**मनोजशरपीडिताः कथमपि स्थिता मेऽसवः ।**
**अतः परमये यदि प्रियतमाङ्गसङ्गो भवेत्**
**तदैव मम जीवितं विरहितावशाङ्गीकरम् ॥ १ ॥**

१. मत्सङ्गान्मामित्येकादशीयपाठः ।

'अग्निपुत्रा महात्मानस्तपसा स्त्रीत्वमापिरे । भर्तारं च जगद्योनिं वासुदेवमजं विभु'मिति वाक्यादेवं भावः । वस्तुतस्तु साधनप्रकरणे 'प्रसादरूपा शक्तिः स्त्री भवती'ति सुबोधिन्याः स्त्रीत्वं प्रसादमापिरे । भर्तारं धारकं पोषकं वा । कामाद्धारणमप्रच्युतं भवतीति । काम इच्छा प्रेमेच्छेति स्थितमिति सुधीभिराकलनीयम् । कथमपि हृदि प्रकटेनाकाशरूपानन्देन । आकाशवद्धृदिति प्रत्ययादाकाशरूपानन्दस्य प्रकारता । अये विषादे विरहात् । कथमपि स्थितानामसूनां स्थिति-विचारस्त्वया कर्तव्य इति ।

श्रीयमुनाजिदुक्तावाहुः श्रीति ।

**श्रीगोकुलनाथोऽस्माकमैहिकं पारलौकिकं च ।**
**स्वयमेव जातोस्तीति किमस्माकं विचारणीयमस्ति ॥ २ ॥**

अत्र द्वितीयतुरीयपादयोर्व्यत्ययः, आर्यान्तरत्वात् । 'यस्याः प्रथमे पादे द्वादश मात्रास्तथा तृतीयकेपि । अष्टादश द्वितीये पञ्चदश चतुर्थके सार्ये'ति । अत्रा'स्माकमैहिकं पारलौकिकं च श्रीगोकुल-नाथः स्वयमेव जातोऽस्ती'त्यन्वयात् सखण्डब्रह्मज्ञानं सर्वस्मिन्नात्मभावो यत्र स सर्वात्मभाव इति व्युत्पत्तिकसर्वात्मभावरूपम् ।

एवं च व्रजभक्तानां भ्रमरगीते उद्धवद्वारा ज्ञानोपदेशवदत्रापि स्वयमेव ज्ञानोपदेशं कारयिष्यतीति नास्माकं विचारणीयं किमप्यस्ति । तदुक्तं स्वप्नदर्शनाख्यग्रन्थे 'एवमुरुधास्तं विलपन्ती मूर्च्छिता-हमासं ततश्चिरेण श्रुतिपथागतप्रियवंशीनिनादैर्मन्त्रैरिव विगतमूर्च्छाहमभवमि'ति ।

तर्ह्यस्माभिः कथमपि स्थितानामसूनां स्थितिचिन्ता कार्येत्यत्र नेत्याहुः चिन्तेति ।

**'चिन्ता कापि न कार्या, गोवर्धननाथोऽस्मत्कुल-**
**पतिरस्मद्धितमेव करिष्यति ॥ ३ ॥**

'चिन्ता कापि न कार्या निवेदितात्मभिः कदापि । भगवानपि पुष्टिस्थो न करिष्यति लौकिकीं च गति' मिति नवरत्नात् ।

आशयान्तरं प्रकाशयन्ति स्म ।

**किं ब्रुवाणि सखि प्रेष्ठविरहानलदाहिता ।**
**जीवामीत्येतदेवालं निरपत्रपतास्पदम् ॥ ४ ॥**

हे सखि निरपत्रपतास्पदं यथा भवति तथा जीवामीति यत् तत् तस्मै जीवनायालं 'नमःस्वस्ती'ति सूत्रेण चतुर्थी तस्याः 'अव्ययादाप्सुप' इति सूत्रेण लुक् ।

वेदान्तिनां ज्ञाननिष्ठत्वेन क्रियाकृपाप्रश्नं चक्रुः सखीति ।

**सख्येतल्लेखनीयं त्वयातियत्नेन राधिका ( कान्तः ) ।**
**किं कृपयिष्यत्यथवा मनोरथेनैव जन्मनिर्वाहः ॥ ५ ॥**

हे सखि यमुनाजित् । एतद् वक्ष्यमाणं पत्रे लेखनीयं प्रश्नविषयम् । राधिका क्रिया 'क्रिया सा राधिका देवी'ति वचनात् मनोरथेन इच्छया जन्म आत्मतया शरीरस्वीकारो निर्वाहः निर्गतो वाहाद् वाञ्छाया एतादृशः । 'वाहस्तु मतभेदे वृषेहयो'रिति विश्वः । 'ईहा तूद्यमवाञ्छयो' रिति च विश्वः । किमिति प्रश्ने मनोरथेनैव जन्मनिर्वाहः किमिति प्रश्नः । कृपयिष्यतीत्यत्र कृपा कृपाभावाभावरूपापि सम्भवति अभावज्ञाने प्रतियोगिज्ञानं कारणमिति ।

प्रतियोगिनं कृपाभावं व्यक्तीकुर्वन्ति स्म मदिति ।

**मदन्तःस्नेहवशतो मच्छरीरव्यवस्थितिम् ।**
**जानन्तोपि न जानन्ति तत्तूचिततरं हि वः ॥ ६ ॥**

**ममान्तःस्नेहो** मनोजशरपीडाजन्यविविधभावोपशामकत्वेन आत्मविषयः। **मच्छरीरव्यवस्थितिः** पूर्वोक्ता विरहसामयिकी ताम्। **जानन्तः** 'शरीरेन्द्रियासुहीनानां वैकुण्ठपुरवासिनां' स्त्रीत्वं भगवत्सेवाननुकूलत्वलक्षणं न सम्भवतीति भगवत्सेवानुकूलत्वलक्षणपुंस्त्वविशिष्टास्ता इति पुंस्त्वेन निर्देशः। यूथाभिप्रायेण बहुवचनम्। **न जानन्ति** अग्निकुमारत्वेन भर्तृभावात् ताः प्रत्यज्ञानम्। भक्तेच्छयैतादृशलीलाप्राकट्याद्**उचिततरं वो** युष्माकं भगवता लीलाविशेषेऽङ्गीकृतानाम्।

अन्यथा कुतो न लीलायां प्रविष्टो येन कृपाभावो न भवेदिति चेत्, तत्राहुः **यथेति**।

**यथा नर्तयति स्वामी वस्तुतस्त्वपराधिनम् ।**
**मां तथाहं तु नृत्यामि भृशं क्लिष्टोऽस्मि तेन हि ॥ ७ ॥**

वेदान्तिनामस्माकं नन्दराजकुमारे नवजलदे वर्षति पूर्वोक्त इदं ब्रह्मेति सर्वात्मभावभवनादन्तर्यामिणश्च प्रत्यक्षाद् **यथा नर्तयति** गात्रविक्षेपं कारयति, **स्वामी**, 'अत एव चानन्याधिपति'रितिसूत्रोक्तः श्रीपुरुषोत्तमः। **वस्तुतस्तु** श्रीमदाचार्याज्ञया निरुद्धोऽहं सर्वात्मभावुकः सर्वेन्द्रियादीनां ब्रह्मात्मकानामन्यत्रापकर्षेपि तदाङ्गेङ्गिताकरणाद**पराधिनं माम्**। **तेन** नृत्येन **भृशं क्लिष्टोऽस्मि** तेन 'तानि मृत्युः श्रमो भूत्वोपयेम'इति सप्तान्नब्राह्मणश्रुतेस्तानि वागादीनि, मृत्युः श्रमो भूत्वोपयेमे, राधिकाकृपायां त्वेवं न स्यात्। 'अनभ्यासाच्च वेदानामाचारस्य च लङ्घनान्मृत्युर्विप्रान् जिघांसती'ति। क्रियावेदयोर्गतप्रविवेकाभावात् पदार्थेऽपि। भगवांस्त्वक्लिष्टकर्मा, अयं तु क्लिष्टकर्मा मृत्युः।

तर्हि मृत्युकृतश्रमभयान् नात्रागन्तव्यमित्युक्तावाहुः **त्रपेति**।

**त्रपावैराग्यराहित्याद् भवदार्तिजिहीर्षया ।**
**पुनस्तत्रागताविच्छां करोमि स्नेहयन्त्रितः ॥ ८ ॥**

'सापत्रपाऽन्यतः' सा लज्जान्यतो भवतीभ्य इति, त्रपा विरहे जीवतो मे, तादृशी लज्जा **तद्राहित्यात्, वैराग्यं** विषयवैतृष्ण्यं तदभावात् 'कर्मेन्द्रियाणी'ति तृतीयाध्याये मिथ्याचारत्वं गीतोक्तं परास्तम्, भक्तिमार्गाधिकारश्च सूचितः। 'निर्विण्णानां ज्ञानयोगः कर्मयोगस्तु कामिनाम्। न निर्विण्णो नातिसक्तो भक्तियोगोस्य सिद्धिद' इति वाक्यात्। **पुनस्तत्रागति**फलक**मिच्छा**करणं तत्कर्ताहम्। एतेन रतिमार्गे यत्र पूजाप्रवाहो यमुनादौ तत्राविच्छिन्नस्थितिनियमो निराकृतः। नन्वन्यादृशी लीलास्मत्सम्बन्धिनी तत्र विरुद्धाभिरस्माभिः संकुलितं स्थानं तस्मिन् आगतीच्छा कथं तत्राहुः **भवदिति**। भवतामार्तिर्विरहदुःखं तस्य हरणेच्छा तया प्रकारीभूतया। ननूक्तं विरुद्धा वयं कथमस्माकमार्तिहरणेच्छावान् भवान् इत्यत आहुः **स्नेहयन्त्रित** इति। विरुद्धा भगवदिच्छया क्रीडार्थं यूयं तत्र स्नेहयन्त्रणे किं ब्रुवे यतोहं प्रकृत्या विरुद्धेष्वपि स्नेहयन्त्रितः। गीतायां पञ्चमे 'इहैव तैर्जितः स्वर्गो येषां साम्ये स्थितं मनः। निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः। न प्रहृष्येत् प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम्। स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः' इति।

आशयविषयं वृत्तान्तं प्रकाशयति **परमिति**।

**परं तु तदनुरूपं शरीरं नैव वर्तते ।**
**तथापि यदि पञ्चम्यां स्वास्थ्यं किञ्चिद्भविष्यति ॥ ९ ॥**

**तदा समागमिष्यामि दुःखं मा कुरुत प्रियाः।**

**दुःखं** विरहदुःखम्।

वस्तुतस्तु विरहो नास्तीत्याहुः **सर्वेति**।

**सर्वेशो गोकुलाधीशो शरणा एव सर्वतः॥ १०॥**

**शरणा** इत्यत्र 'शरणं गृहरक्षित्रो'रिति कोशः। 'भवतीनां वियोगो मे न हि सर्वात्मना क्वचित्। आत्मत्वाद् भक्तवश्यत्वात् सत्यवाक्त्वात् स्वभावत' इति वाक्यात्। 'रक्षतीत्येव विश्वासः षड्विधा शरणागति'रिति पञ्चरत्ने।

**अत** इति।

**अतश्चिन्ता न कर्तव्या भवद्भिः कृष्णसात्कृतैः॥ ११॥**

उक्ताद् दृश्यमानात् सन्दर्भाच् **चिन्ता** केच्छा, ईश्वरः क, ययेश्वरं प्रादुर्भावित इति 'उत्कर्ष-श्चापि वैराग्ये' ममेश्वरोऽङ्गीकृतवान् किमुदासीनः क्लिष्टः किं व्यापको वा क्लिष्टः काहम् केश्वर इत्यादि **चिन्ता न कर्तव्या कृष्णसात्कृतैः** कृत्स्ना यूयं कृष्णाः संपद्यन्ते तथा कृताः कृष्णसात्कृताः यतः। अस्मिन्मार्गे 'सच्चिदानन्दता स्वत' इति निरोधलक्षणे। किञ्च।

**श्रीगोकुलजीवनः सर्वं भद्रमेव करिष्यति।**

**श्रीगोकुलस्य** निःसाधनस्य **जीवनो** जीवयिता, यूयं तु कृततपस्काः कुतः सन्देहो जीवनेपि। किञ्च।

**अहं यथा शीघ्रं दर्शनं प्राप्नोमि तथा विधेयं प्रत्यहम्॥ १२॥**

भवन्ती भगवांश्च विसदृशीः लीलाः परित्यज्य चित्तादोषजनकलीलाः कुर्वित्यधीष्टं चित्तदोषेषु भक्त्यभावाद् दर्शनं न प्राप्स्यामि। 'अदूरे विप्रकर्षे वा यथा चित्तं न दुष्यती'ति वाक्यात्। ततः स्वेषु चित्तदोषाजनकलीलारूपं विशेषणं विधेयमिति भावः, तदपि प्रत्यहम्।

उपसंहरति शरणमार्गमैहिकेति।

**ऐहिके पारलोके च सर्वथा शरणं हरिः।**
**संपत्स्वापत्स्वपि सदा शरणं हरिरेव हि॥ १३॥**

स्पष्टम्।

एवं तत्तद्रूपसन्निधानमेव तत्तत्फलदानादिप्रयोजकमित्यर्थः समासेन न तु व्यासेन।

# अथ श्रीहरिरायप्रणीतं भावनात्रयम् ।

निवेदितात्मभिर्नित्यं स्वमार्गीया तु भावना ।
भाव्याभावप्रधानत्वात् तत्प्रकारो निरूप्यते ॥

स्वरूपभावनालीलाभावनाभावभावना इति त्रिविधा भावना, तत्र स्वरूपभावना प्रथमदशायामननुभूते स्वरूपे श्रुतमात्रे योगिवच्चिन्तनम् । विशेषस्तु प्रभुसंदर्शनाभावजनितार्तिसाहित्येन भक्तिमार्गीयत्वं यथाऽऽग्रमहिष्याः यथा वा भगवदाविर्भावात्पूर्वं प्राग्वराणां प्रभ्वाविर्भावमभिकाङ्क्षमाणानां श्रुत्यादिरूपव्रजस्थानामेव ।

ततोऽनुभूते भगवति साक्षात्तद्द्वारा वा लीलासहिते हृदि प्रविष्टे तद्विप्रयोगेण प्रागनुभूतलीलाभावना द्वितीया, सा च किंचित्स्वास्थ्यहेतुः लीलावेशे क्षणमात्रं तदभेदेनानन्दानुभवात् । स्वरूपभावनायां तु स्वरूपानुभवाविर्भाव एव यथा 'नन्दस्त्वात्मज उत्पन्ने' इति । यथा वा लीलादिभावनां विहाय संभूय गुणगाने 'जयति तेऽधिकम्' इत्यादिना स्वरूपाविर्भूतये तद्भावनया कृते स्वरूपाविर्भावः 'तासामाविरभूत्' इति लीलाभावनायां तु तद्रूपतापत्तिः यथा 'क्रीडामय्य एव आताः' एतदर्थस्तु तदासक्त्या देहादिषु सर्वत्र क्रियासु ज्ञानेषु पदार्थेष्वखिलेषु चान्येषामन्यथात्वेन प्रतीतावपि ताः प्रभुलीलामेवासक्तिभ्रमन्यायेन सर्वत्र प्रतियन्ति इति तदात्मकत्वम् । यथा वा लोकेपि—

'परव्यसनिनी नारी व्यग्रापि गृहकर्मणि
तदेवास्वादयत्यन्तः परसङ्गरसायनम्' इति (पञ्चदशी ध्या. दी १४)

तेन तत्क्रियाभावनायां क्रियात्मकत्वमुक्तम् । यथा वा व्रजस्त्रीणामेव 'या दोहने' इत्यत्रोदितम् ।

भावभावना तु भावो हि भावयति नवीनतया रसपरवशं चेतः उत्पादयति स्ववासनया वासितं वा करोतीति भावः प्रेमाख्यो गूढः येन तत्स्वरूपे तल्लीलायां प्रवृत्तिः येन वा स्वरूपलीलादिसंबन्धिसुखानुभवः सर्वोपि क्षुधार्तस्यान्नानुभव इव । स भावः स्वविषयं स्वरूपं लीलां वा प्राप्य तदानन्दं शीतलं जलमिवानुभूय किञ्चिच्छान्तो भवन् न देहेन्द्रियादिकं दाहयति तदभावे देहेन्द्रियादिनूतनताभावेन पूर्णविप्रयोगात्मककेवलभावानुभवो न भवतीति । यथा संयोगतारतम्येन तत्सुखानुभूतितारतम्यं तथा तापतारतम्येन केवलभावानुभवतारतम्यं तापश्च स्वास्थ्यलेशेपि ह्रसति । भगवत्संबन्धि तु सकलं ज्ञानगुणादि तापहारकम् यथा भगवति प्रविष्टानां मुक्तानां सदा तत्संबद्धानामेव संयोगानुभवस्तथा सदा तद्भिन्नानां तदसंबद्धानामेव विप्रयोगात्मककेवलभावानुभावः । ननु विप्रयोगाग्निना तीव्रेण देहादिदाहे कथं सर्वांशेन तदनुभव इति चेन्न विप्रयोगस्यापि स्वरूपात्मकत्वेन तेनैव तद्रक्षणात् । प्रकारस्तु पूर्वदेहान् स्वतापेन मृदून् विधाय तत्स्थितमलादि दूरीकृत्य वह्निसंबन्धेन काष्ठमिव, तेजोमयं विधाय यथा वियोगाग्निनाशो न भवति तदात्मकत्वात् मूर्तिवदधिष्ठानत्वेन तन्निर्माय तत्र भावात्मा बहिःप्रकटसमानाकारः सर्वलीलाविशिष्टः प्रविशतीति । स च विरहात्मा दुःखेनैवानुभूयते सर्वत्र फलानुभव इयमेव व्यवस्था । यत्फलं यथानुभूतियोग्यं तथैवानुभूयते यथा ब्रह्मानन्दः आत्मनैव, स्वर्गो देहाध्यासेन, भजनानन्दोऽलौकिकदेहेन्द्रियाद्यैरपि । लोकेपि नेन्द्रियान्तर्विषयं फलमिन्द्रियान्तरैर्गृह्यते तथा च विरहस्तदैवानुभूतो भवति केवलो यदा स्वरूपलीलाज्ञानगुणस्वास्थ्यवाक्यादिप्रतिबन्धकाप्रतिबद्धः केवलतापात्मको भावो भवति । स एव च कृष्णाख्यं पुष्टिभक्तिः स्वतन्त्रभक्तिर्वा यत्र भावातिरिक्ताखिलनैरपेक्ष्यम् । तस्य च सिद्धौ न प्रकारान्तरं भाति किं तु भावनैव 'भावो भावनया सिद्धः साधनम्' इति वाक्यात् । तस्यात्रेयं रीतिः । आदौ गुरुत्वेन स्वामिनीसमाश्रयः तत्रैव भावः सिद्धः तासामेव च स्वत्वं तद्दत्त एव प्राप्यते इति दानं च न साक्षात् किं तु भावनाद्वारैव । भावना तु पूर्वं ताः स्वसर्वस्वविरहतप्ताः वह्निरूपाः स्वमनसि समानीय तास्वपि यत्तापात्मको भावो भ्रमरगीतादौ प्रोक्तो यत्र सर्वनैरपेक्ष्यं तद्धृदि विधाय स्वास्थ्यहेतु निखिलं प्रभुसंबन्ध्यपि परित्यज्य केवलं तं भावमेव भावयति न स्वरूपं न वा लीलां न वा गुणांस्तदा तेन भावेन तापात्मकेन शोषणं ततस्तेनैव पल्लवता यथा वसन्ते घर्मेणैव वृक्षाणाम् । ततो भावस्य तस्य तस्मिन् नवीनदेहे स्थिरतया स्थितिः ततस्तस्य वैचित्र्यं विकलत्वमस्वास्थ्यं च तद्विधं यथा समुद्रनिमग्नस्य मज्जनोन्मज्जने तथा विरहभावरससमुद्रमग्नस्यापि विकलत्वमस्वास्थ्ये । ततश्चातिविगाढविप्रयोगे कृष्णाख्ये आनन्दमात्रकरपादमुखोदरादिरूपवह्नौ प्रवेशस्ततस्तद्रूपता ततः कदाचित्प्रकटीकरणं तत्क्रियादानार्थम् । लोके तद्रूपेणैव तद्दानं संभवति ।

अथवा भक्त्यात्मकत्वात् सर्वत्र भावबद्धृदयदेशेषु तदेवास्य प्रविष्टमस्ति तदाश्रयेणैव तद्भावनासिद्धिः इयं भावना मुख्यफलासिसाधनं मुख्यं फलं तु विप्रयोगात्मकस्वरूपप्राप्तिः 'मयि ते तेषु चाप्यहम्' इतिवत् स्वस्य तद्रूपता तस्य च लीलाविशिष्टस्य स्वस्मिन् प्रवेशः यथा वह्निः काष्ठे काष्ठं वा वह्नौ तथा भावरूपेण भगवतस्तासु स्थितिस्तासां च भावात्मना भगवति स्थितिः तथा च भावरूपेणैवोतप्रोतपटवत्सततं यथासुखं स्थितिः लीलासृष्टौ भगवद्धृदये तदास्ये वैतस्य फलस्य साधनं तत्तापभावना, तस्य च सर्वत्यागः, तस्य च समर्पणम् । तेन कृतपुण्यपुञ्जानां समर्पितसर्वस्वानामाचार्यचरणाश्रितानां फलसुखभाग्यवतीनां सिद्धप्रेमभावानां परित्यक्ताखिलस्वास्थ्यहेतूनामेव सा सिद्ध्यतीत्यलमधिकनिरूपणेन ।

इति श्रीहरिदासविरचितं भावनात्रयम् ।

---

# परिशिष्टविषयानुक्रमः ।

---

2462